सत्तमः ॥ तदर्पकमिदंपुण्यंकाव्यंसुश्राव्यमुत्तमम् ॥४६॥ श्रवणात्पठनाद्वापि सर्वपापविनाशकृत् ॥ यस्यात्रसुरसेप्रीतिर्वर्ततेभक्तिसंयुता ॥४७॥ सएवकृत कृत्यश्वसर्वशास्त्रार्थकोविदः ॥ तदर्जिततंतुतत्पुण्यं तत्सत्यंसफलंद्विजाः ॥४८॥ यदर्थैश्रवणेप्रीतिरन्यथानहिवर्तते ॥ रामायणपरायेतुरामनामपरायणाः॥४९॥ तएवकृतकृत्याश्वघोरेकलियुगेद्विजाः ॥ नवम्यहनिशृण्वंतिरामायणकथामृतम् ॥५०॥ तेकृतार्थामहात्मानस्तेभ्योनित्यं नमोनमः ॥ रामनामैवनामैवनामैव ममजीवनम् ॥५१॥ संसारविषयांधानांनराणांपापकर्मणाम् ॥ कलौनास्त्येवनास्त्येवनास्त्येवगतिरन्यथा ॥५२॥ सूत उवाच ॥ एवंसनत्कुमारस्तुनारदेन महात्मना ॥ सम्यक्प्रबोधितःसद्यःपरांनिर्वृतिमापह ॥ ५३ ॥ तस्माच्छ्रुत्वातुविप्रेंद्रा रामायणकथामृतम् ॥ प्रयाति परमंस्थानंपुनरावृत्तिवर्जितम् ॥५४॥ घोरेकलियुगेप्राप्तेरामायणपरायणाः ॥ समस्तपापनिर्मुक्तायास्यंतिपरमंपदम् ॥ ५५ ॥ तस्माच्छृणुध्वंविप्रेंद्रारामायणकथामृतम् ॥ नवम्यहनिश्रोतव्यं सर्व पापप्रमोचकम् ॥ ५६ ॥ श्रुत्वाचैतन्महाकाव्यंवाचकंयस्तु पूजयेत् ॥ तस्यविष्णुःप्रसन्नःस्याच्छ्रियासह द्विजोत्तमाः ॥ ५७ ॥ वाचकेप्रीतिमापन्ने ब्रह्म विष्णुमहेश्वराः ॥ प्रीताभवंतिविप्रेंद्रानात्र कार्याविचारणा ॥ ५८ ॥ रामायणवाचकायगावोवासांसि कांचनम् ॥ रामायणपुस्तकं च दद्याद्वित्तानुसारतः ॥ ५९ ॥ तस्यपुण्यफलंवक्ष्येशृणुध्वं सुसमाहिताः ॥ नबाधंतेग्रहास्तस्य भूतवेतालकादयः ॥ ६० ॥ तस्यैवसर्वश्रेयांसिवर्धंतेचरितेश्रुते ॥ नचाग्नि र्बाधतेतस्यचौरादेर्नभयंतथा ॥ ६१ ॥ कोटिजन्मार्जितैःपापैःसद्यएवविमुच्यते ॥ सप्तवंशसमेतस्तुदेहांतेमोक्षमाप्नुयात् ॥६२॥ इत्येतद्वःसमाख्यातंनारदेन प्रभाषितम् ॥ सनत्कुमारमुनयेपृच्छतेभक्तितःपुरा ॥ ६३ ॥ रामायणमादिकाव्यंसर्ववेदार्थसंमतम् ॥ सर्वपापहरंपुण्यंसर्वदुःखनिबर्हणम् ॥ ६४ ॥ समस्त पुण्यफलदंसर्वयज्ञफलप्रदम् ॥ येपठंत्यत्रविबुधाः श्लोकंश्लोकार्धमेववा ॥ ६५ ॥ नतेषांपापबंधस्तु कदाचिदपिजायते ॥ रामार्पितमिदंपुण्यंकाव्यंतुसर्व कामदम् ॥ ६६ ॥ भक्त्याशृण्वंतिगायंतितेषांपुण्यफलंशृणु ॥ शतजन्मार्जितैःपापैःसद्यएवविमोचिताः ॥ ६७ ॥ सहस्रकुलसंयुक्ताःप्रयांतिपरमंपदम् ॥ किंतीर्थैर्गोप्रदानैर्वाकिंतपोभिःकिमध्वरैः ॥ ६८ ॥ अहन्यहनिरामस्यकीर्तनंपरिशृण्वताम् ॥ चैत्रेमाघेकार्त्तिके चरामायणकथामृतम् ॥ ६९ ॥ नवम्यहनि श्रोतव्यंसर्वपापैः प्रमुच्यते ॥ रामप्रसादजनकंरामभक्तिविवर्धनम् ॥ ७० ॥ सर्वपापक्षयकरंसर्वसंपद्विवर्धनम् ॥ यस्त्वेतच्छृणुयाद्वापिपठेद्वासुसमाहितः ॥ सर्वपापविनिर्मुक्तोविष्णुलोकंसगच्छति ॥ ७१ ॥ इति श्रीस्कंदपुराणे उत्तरखण्डे श्रीमद्रामायणमाहात्म्ये नारदसनत्कुमारसंवादे पंचमोऽध्यायः ॥ ५ ॥

॥ इति श्रीवाल्मीकीयरामायणमाहात्म्यं समाप्तम् ॥

॥ श्रीरस्तु ॥

श्रीरघुनन्दनपरब्रह्मणे नमः ।

# श्रीमद्वाल्मीकीयरामायणप्रधानविषयानुक्रमणिका सङ्ग्रहेण प्रकाश्यते ।

## ॥ अथ बालकाण्डानुक्रमणिका ॥

एवं बालकाण्डसर्गाणां प्रधानकथानुक्रमणिका प्रदर्शिता ।

## ॥ अथायोध्याकाण्डानुक्रमणिका ॥

एवमयोध्याकाण्डानुक्रमणिका संपूर्णा ।

## ॥ अथारण्यकाण्डानुक्रमणिका ॥

श्रीसीतालक्ष्मणसमेतस्य प्रविष्टदण्डकारण्यस्य श्रीरामस्य तत्रत्यऋष्याश्रममण्डलदर्शनम्, मुनिभिर्यथोचितं श्रीरामपूजनं च प्रथमे १

अथ वनमध्ये विराधदर्शनं, विराधेन सीताग्रहणपूर्वकं रघुनन्दनवेषनिन्दनपूर्वकं च तन्नामगोत्रादिप्रश्नः, स्वनामकथनं, सीताभयदर्शनदुःखितेन रामेण लक्ष्मणं प्रति त[illegible]खाप्रदर्शनं, लक्ष्मणेन सधैर्यं विराधवधसौलभ्यप्रत्युक्तिश्च द्वितीये २

अथ पुनः पृच्छन्तं विराधं प्रति रामेण स्वनामकुलादिकीर्तनं, ततो रामपृष्टेन विराधेन च स्वमातापितृकथनपूर्वकं स्वस्य ब्रह्मवरलब्धशस्त्रावध्यत्वकथनपूर्वकं च स्वबलगर्वप्रलपनं, ततो राममुक्तसप्तबाणताडितं सीतां भुवि त्यक्त्वा शूलमुद्यम्याभियान्तं विराधं प्रति बाणान् वर्षतो रामलक्ष्मणयोः स्वस्कन्धारोपणपूर्वकं विराधेन वनमध्यगमनं, ताभ्यां गन्तव्यमार्गानुकूलत्वात्तत्सहनं च तृतीये ३

अथ स्नेहाद्रुदन्तीं सीतां दृष्ट्वा रामलक्ष्मणाभ्यां वेगेन विराधबाहुच्छेदनं, तेन च रामपादस्पर्शजनितज्ञानेन स्वपूर्वजन्मवृत्तान्तादिकथनं, शरभङ्गाश्रमोक्तिरूपवाचिककैङ्कर्यकरणं, तस्य स्वर्गप्राप्तिश्च चतुर्थे ४

अथ श्रीरामस्य सभार्यस्य सानुजस्य शरभङ्गाश्रमसमीपे शरभङ्गब्रह्मलोकनिनीषागतसरथसानुचरवासवदूरदर्शनपूर्वकं शरभङ्गाश्रमगमनं, शरभङ्गेण पूजनं, ततः शरभङ्गेण रामस्य सुतीक्ष्णाश्रममार्गोपदेशपूर्वकं रामसान्निधावग्निप्रवेशनेन परमव्योमप्राप्तिश्च पञ्चमे ५

अथ शरभङ्गाश्रममुनिजनैः शरणागतिपूर्वकं रामाय राक्षसोपद्रवनिवेदनं, रामेण तेषां राक्षसवधप्रतिज्ञानं च षष्ठे ६

अथ रामस्य सुतीक्ष्णाश्रमे तत्संदर्शनं, ततः सुतीक्ष्णेन रामाय तत्रत्यमृगोपद्रवकथनं, ततो रामेण मृगवधप्रतिज्ञापूर्वकं तस्मिन्नाश्रमे तद्रात्रौ निवासकल्पनं च सप्तमे ७

अथ सुतीक्ष्णानुज्ञया रामस्याश्रममण्डलदर्शनाय प्रस्थानमष्टमे ८

अथ मुनिजनसान्निधौ रामकृतां निखिलराक्षसवधप्रतिज्ञां श्रुत्वा धर्महानिभीतया सीतयाऽतिप्रेम्णा रामं प्रति निर्वैरनिखिलराक्षसवधनिवर्तनाय सविनयं विज्ञापनं नवमे ९

अथ रामेण सीतां प्रति आर्तरक्षणस्य क्षत्रियधर्मतया शरणागतविरोधिनां स्वविरोधितया स्वाराधनभूतयज्ञकर्मविघटनरूपमहापराधेन च प्रतिज्ञातनिखिलराक्षससंघवधस्यावश्यकर्तव्यत्वेन प्रत्युत्तरकथनं दशमे १०

अथ वनमध्ये स्वसहानुयायिधर्मभृन्नामकमुनिसकाशान्माण्डकर्णिनिर्मितपञ्चाप्सरोनामकसरःप्रभावं श्रुतवता सर्वेष्वपि ऋषीणामाश्रमेषु कंचित्कालं निवासं कृतवता पुनः सुतीक्ष्णाश्रममागतवता रामेण सुतीक्ष्णं प्रत्यगस्त्याश्रमस्थानप्रश्नः, ततः सुतीक्ष्णेनागस्त्यभ्रात्राश्रममार्गेणागस्त्याश्रमगन्तव्यता, तन्मार्गचिह्नादिकथनं, ततस्तेनैव मार्गेण गच्छता लक्ष्मणं प्रति वातापील्वलविध्वंसनरूपागस्त्यकथां कथयताऽगस्त्यभ्रातुराश्रमे एकां रात्रिमुषित्वा प्रातः पुनर्लक्ष्मणं प्रति विन्ध्यस्तम्भनाद्यगस्त्यमहिमानं कथयताऽगस्त्याश्रममागत्य प्रथमतः स्वागमननिवेदनाय लक्ष्मणप्रेषणं चैकादशे ११

अथ शिष्यमुखाद्विदितरामागमनवृत्तान्तेन स्वनियुक्तशिष्यद्वारा आनीयमानस्य स्वाश्रमस्थब्रह्मादिदेवस्थानादीन् सकौतूहलं प्रेक्षमाणस्य श्रीरामस्य ससीतालक्ष्मणस्य सशिष्यगणं प्रत्युत्थितवतेन दत्तपाद्यासनादिकेन वैश्वदेवपूर्वकमातिथ्यं च कृतवताऽगस्त्येन वैष्णवधनुःशरतूणीरासीनां श्रीरामे समर्पणं द्वादशे १२

अथ खरादिवधायागस्त्येनानुज्ञातस्य ससीतस्य सलक्ष्मणस्य रामस्य पञ्चवटीं प्रति प्रयाणं त्रयोदशे १३

अथ रामस्य पञ्चवटीमार्गे स्ववंशक्रमकथनपूर्वकं पितृसखित्वं निवेदितवता जटायुषा सह समागमः, तेन सह पञ्चवटीगमनं च चतुर्दशे १४

अथ पञ्चवट्यां गोदावरीतीरे लक्ष्मणनिर्मिताश्रमे गमेण सीतालक्ष्मणाभ्यां सह कंचित्कालं निवासः कृत इत्याह पञ्चदशे १५

अथ तत्र कदाचित् प्रभातवेलायां गोदावरीं प्रति स्नानाय गमनसमये तदनुगच्छता लक्ष्मणेन रामं प्रति हेमन्तऋतुवर्णनपूर्वकं भरतगुणकथनपूर्वकं च कैकेयीनिन्दनं, तदसहमानेन रामेण मातृनिन्दानिवारणपूर्वकं भरतगुणप्रशंसनं, तद्दर्शनोत्कण्ठाकथनं च ततो गोदावर्यां रामादीनां स्नानादिकृत्यं चाह षोडशे १६

अथाश्रममागत्य तत्र सुखं वसतः श्रीरामस्य यादृच्छिकं शूर्पणखादर्शनं, ततोऽन्योन्यकुलगोत्रज्ञानानन्तरं श्रीरामं प्रति शूर्पणखया भार्यात्वेन स्वाङ्गीकाराभ्यर्थनं चोक्तवान् सप्तदशे १७

अथ रामेण स्वस्य सदारत्वेन दूरस्थदारं लक्ष्मणं भजेति परिहासपूर्वकं लक्ष्मणं प्रति प्रेषितायाः लक्ष्मणेन च स्वस्य रामदासत्वेन दासभार्यात्वमनुचितमिति पुना रामं प्रत्येव प्रेषितायाः स्वापरिग्रहमूलमियमिति मत्या सीतां हन्तुमुद्युक्तायाः तावत् क्रुद्धरामाज्ञप्तलक्ष्मणनिकृत्तकर्णनासायाः शूर्पणखायाः खरसमीपगमनमष्टादशे १८

अथ शूर्पणखया विदितवृत्तान्तेन खरेण रामलक्ष्मणजयाय तत्सकाशं प्रति चतुर्दशराक्षसप्रवरप्रेषणं, तेषां शूर्पणखया सह रामसमीपगमनं चैकोनविंशे १९

अथ चतुर्दशानामपि राक्षसप्रधानानां रामेण वधः, ततोऽतिभीतायाः शूर्पणखायाः पुनः खरसमीपगमनं च प्रत्यपादि विंशे २०

अथ शूर्पणखामुखात् खरस्य स्वप्रेषितचतुर्दशराक्षसवधश्रवणमेकविंशे २१

अथ खरस्य चतुर्दशराक्षससहस्रतदनुगुणनानाविधायुधप्रभृतिपरिकरसहितस्य युद्धाय प्रयाणं द्वाविंशे २२

अथ खरस्य ससैन्यस्य प्रयातस्य दिव्यभौमशारीरमहोत्पातदर्शनेऽपि दर्पात् प्रयाणानिवृत्तिस्त्रयोविंशे २३

अथ राक्षसपराजयहेतून् महोत्पातान् स्वविजयहेतुभूतानि सुनिमित्तानि च दृष्टवता रामेण पर्वतगुहायां सीतारक्षणाय लक्ष्मणप्रेषणं, कवचादिधारणपूर्वकं युद्धाय सन्नद्धतयाऽवस्थानं, राक्षससेनायास्तत्समीपागमनं च चतुर्विंशे २४

अथ रामस्य राक्षसैः साकं तुमुलं युद्धं, ततो रामप्रयुक्तगान्धर्वास्त्रेणानेकसाहस्रराक्षसविचित्रवधश्च पञ्चविंशे २५

अथ रामेण खरत्रिशिरोव्यतिरिक्तानां दूषणप्रभृतिसेनाध्यक्षसहितानां चतुर्दशसहस्रसंख्यानां राक्षसप्रधानानां वधः षड्विंशे २६

अथ त्रिशिरसो वधः सप्तविंशे २७

अथ रामेण खरस्य रथरथाश्वसारथिधनुःप्रभृतिसर्वपरिकरभञ्जनमष्टाविंशे २८

अथ शत्रुविषयेऽपि परमवात्सल्ययुक्ततया श्रीरामेण खरं प्रत्यानुकूल्याभिसंधिजिज्ञासया मृदुपूर्वं परुषोक्तिभिः पापकर्मदुःखोदर्कत्वादिचोदनं, ततः खरस्यातिपापिष्ठतया मातृवधप्रवृत्तोन्मत्तन्यायेन तत्प्रतिक्षेपपूर्वकं रामोपरि गदाप्रक्षेपस्ततो रामेण गदाखण्डनं चैकोनत्रिंशे २९

अथ पूर्वं सर्वदेवसङ्घमर्दनचण्डगदागर्वेणानुकूल्याभावेऽपि इदानीं तद्ध्वंसनदर्शनेन वापि किमस्य विवेकेनानुकूल्यचिकीर्षा जातेति परीक्षिपया पुनरपि श्रीरामेण खरं प्रति न्याय्यवचननिदर्शनं, ततः खरेण पित्तोपहतक्षीरन्यायेन तत्प्रतिक्षेपपूर्वकं सालवृक्षेण रामप्रहरणसमुद्योगस्तावता तं शतशश्छिन्दतः शरसहस्रेण स्वसर्वाङ्गमर्माणि कृन्ततो रामस्यातिसमीपे खरस्याभिपतनं, शरसन्धानावकाशलाभाय तत्क्षण एव रामेण किंचित्पश्चाद्द्वित्रपदक्षेपपूर्वकमतिशीघ्रसंहितेन अगस्त्यदत्तेन बाणवरेण खरहृदयभेदनं, ततः खरवधपरितुष्टमहर्षिगणकृतरामस्तुतिः, देवैर्नभसः कुसुमवर्षाभिष्टवनादिकं, ततो लक्ष्मणपूजितं श्रीरामं गिरिगुहातो लक्ष्मणसाहाय्येन निर्गत्य स्वभर्तृविक्रमानिरीक्षणनिर्भरविस्मयानन्दया जानक्या वीरव्रणश्रमजलरोमाञ्चशबलश्रीरामदिव्यमङ्गलविग्रहस्य गाढालिङ्गनं च त्रिंशे ३०

अथाकम्पनमुखेन जनस्थानस्थापितखरदूषणत्रिशिरःप्रभृतिनिखिलराक्षसवधं श्रीरामकृतं श्रीरामस्यानन्यसाधारणं महिमानं तस्य युद्धेनासाध्यत्वं सीता-

२५

पहारस्यैव तद्व्यसनहेतुत्वं च श्रुतवतो रावणस्य रथेन मारीचाश्रमगमनं, तं प्रति सीतापहारे साहाय्यकरण प्रार्थनं, ततो मारीचेन श्रीरामेण वैरकरणे तव सकलरक्षःकदम्बेन सह विनाशः सिद्धः,अतः किमर्थं लङ्काराज्यसुखं स्वयमेव हातुमिच्छसीति प्रतिबोधनेन पुनर्लङ्कां प्रति निवर्तनं चैकत्रिंशे ३१

अथ खरदूषणत्रिशिरःप्रभृतीन् राक्षसप्रधानान् चतुर्दशसहस्रसंख्याकान् घटिकात्रयेण तृणपूललावं लुवतः श्रीरामस्य विक्रमवैखरीं स्वचक्षुषा प्रत्यक्षितवत्यास्तत एव त्यक्तधृत्यास्त्वरितगत्याः शूर्पणखायाः लङ्कायां पुष्पकविमानोपरि निखिलपरिजनपरिच्छद परिवृतस्य निःसाधारणभुजबलवरबलदुर्ललितस्य दशग्रीवस्य स्ववैरूप्यकरणप्रदर्शनपूर्वकं दर्शनं द्वात्रिंशे ३२

अथ शूर्पणखया जनस्थानस्थितयावद्राक्षसनिःशेष विनाशेऽपि तूष्णीमवस्थानेनातिक्रुद्धया रावणविनिन्दनं त्रयस्त्रिंशे ३३

अथ रावणेन रामस्य नामरूपायुधपराक्रमप्रकारान् पृष्टया शूर्पणखया श्रीरामलक्ष्मणयोर्यावत्स्वभावान् विशेषतोऽचिन्त्यं पराक्रमं च कथितवत्या सीतासौन्दर्यकथनपूर्वकं तज्जिघृक्षोत्पादनं चतुस्त्रिंशे ३४

अथ चिरभाविमृत्युदृढीकृतसीतापहारनिश्चयेन रावणेन प्रच्छन्नतया कामगरथातीतमहार्णवेनातिरमणीयतमसिन्धुराजानूपदर्शनं, तथा तत्रत्यस्य शतयोजनप्रमाणनामाशाखामृतस्य स्वकरगृहीतभक्ष्यार्थमहीप्रमाणगजकच्छमहाबलसुपर्णारोहणमात्रभग्नैकशाखस्य तत्क्षणसावधानगृहीततच्छाखाकृतपापिष्ठतमनिषादग्रामनिर्मूलनशाखाधःप्रदेशनिवासिनानामुनिजनशाखापतनभयमोक्षणरूपदुष्टनिग्रहशिष्टपरिपालनलाभप्रहर्षद्विगुणिताचिन्त्यबलवैभवकृतदुष्प्रेक्षनानावरणरक्षणसुगुप्तमहेन्द्रभवनस्थाय्यमृतकलशाहरण-सुपर्णापदानभूततच्छाखाभङ्गचिह्नस्य सुभद्रनाम्नो न्यग्रोधस्य दर्शनं, ततः क्वाचित् पुण्यतमे देशे आश्रमे मुनिवेषस्य मारीचस्य दर्शनं, तेन रावणपूजनपूर्वकं शीघ्रागमननिमित्तप्रश्नश्च पञ्चत्रिंशे ३५

अथ रावणेन मारीचं प्रति जनस्थानवृत्तान्तकथनपूर्वकं स्वचिकीर्षितसीतापहारे विचित्रमृगरूपेण साहाय्याभ्यर्थनं षट्त्रिंशे ३६

अथ मारीचेनासकृदनुभूतरामपराक्रमेण रावणहितैषिणा लोकातीताचिन्त्यवीर्यादिगुणशेवधिभूतस्य श्रीरामस्य प्राणदयितायाः स्वपातिव्रत्यमाहिम्ना इच्छायां सत्यां सर्वमपि जगत् भस्मीकर्तुं शक्तायाः सीतायाः हरणं तव यावद्राक्षसजातीययुक्तस्य निर्मूलनामोघकारणम् , अतस्तच्चिन्तां मा कुर्वीति रावणं प्रति हितोपदेशः सप्तत्रिंशे ३७

अथ पुनर्मारीचेन पूर्वं स्वेन विश्वामित्रयागवेद्याक्रमणप्रयत्नसमये अतिबालेनाकृतास्त्रेण श्रीरामेण कृतं स्वनिपातनं, स्वसहायभूतस्यावद्राक्षसहननं च निदर्श्य रामविप्रियकरणे सर्वथा तव विनाशः सिद्ध इति रावणं प्रति बोधनमष्टात्रिंशे ३८

अथ पुनर्मारीचः इदानीं रामस्य प्रौढतादशायां स्वयं मृगरूपस्य तादृशराक्षसद्वयसाहितस्य तापसवेषं रामं परिभिभावयिषतः तावदेव राममुक्तशरेण राक्षसद्वयमरणं पश्यतः स्वस्य रामपराक्रमज्ञतया तत्क्षणमेव पलायनेन पलायितं रामशराप्रवृत्तेः कथंचिज्जीवनं, तदाप्रभृति त्यक्तराक्षसव्यापारतया तपोनिष्ठया चावस्थानं, स्वस्य रेफादिनामोच्चारणेऽपि महाभयं च प्रदर्श्य, रावणं न रामवैरे प्रवर्तस्वेत्यबोधयदिति कथा एकोनचत्वारिंशे ३९

अथ मारीचवाक्यं श्रुतवता रावणेन परुषोक्तिभिर्मारीचोक्तप्रत्याख्यानपूर्वकं बलात्कारेण सीतापहारकार्यसाहाय्यनियोजनं चत्वारिंशे ४०

अथ भवितव्यतावशेन सीतापहारबद्धाग्रहस्य रावणस्य वचनं श्रुतवताऽपि मारीचेन पुनरपि मदेकस्य मरणं प्रति न शोचामि किंतु तव सपुत्रमित्रबान्धवपरिवारस्य मरणं प्रत्येव, त्वं च भवितव्यतावशेन मद्वाक्यं नाङ्गीकरोषि, आसन्नमरणजनाः हितं न गृह्णन्ति हीत्यादिरूपेण रावणं प्रति प्रतिवचनमेकचत्वारिंशे ४१

अथ स्वस्य रावणेन वधाद्रामेण वधं श्रेयस्करं मन्वानेन मारीचेन रावणवाक्यमङ्गीकृतवता रावणेन साकं रथेन नानानगरादिनिरीक्षणपूर्वकं दण्डकारण्यस्थरामाश्रमप्रवेशः, तत्र रावणाभ्यर्थनेन क्षणेन विचित्रमृगरूपकरणपूर्वकं रामाश्रमसमीपे गतागतनिवर्तनमृगयूथानुसरणादिविचित्रचेष्टितकरणं, तदैव तस्य तत्र कुसुमापचयार्थमागतया जानक्या अत्याश्चर्यभरिततया निरीक्षणं च द्विचत्वारिंशे ४२

अथ सीताहूतयो रामलक्ष्मणयोस्तादृशविचित्रमृगदर्शनं, तदैव मारीचमायैवेयमिति लक्ष्मणेन कथनं, ततः श्रीरामेण सीतोक्तरीत्या साक्षाच्चित्रमृगत्वेऽपि भवदुक्तरीत्या मारीचमायात्वेऽपि तादृशमृगत्वग्रहणार्थं राक्षसहननार्थं च मया प्रवर्तनीयमेव त्वं तु सीतामाश्रमे स्थित्वा प्रतिक्षणं सर्वतः शङ्कितः सन्नप्रमत्तो रक्षेत्युवाच त्रिचत्वारिंशे ४३

अथैवं लक्ष्मणं संदिश्य सशरचापासितूणीरं निर्गतेन मृगरूपमारीचनानाविधगतिभेदद्दूराकृष्टेन ततः स्वबाणेन मारीचहननसमये स्वस्वरसदृशं मारीचकृतं हा सीते लक्ष्मणेत्येवंरूपं शब्दं च श्रुत्वा किं भविष्यतीति भीतेन रामेण स्वाश्रमाभिमुखतया आगमनं चतुश्चत्वारिंशे ४४

अथ मारीचविसृष्टमार्तस्वरं रामाक्रन्दनं मन्वानया सीतया लक्ष्मणं प्रति रामसमीपगमनचोदनं, तद्राक्षसमायाकृतमिति तूष्णीं स्थितं लक्ष्मणं प्रति तव रामस्य व्यसनमिष्टं यतस्त्वमीदृशसमयेऽपि तूष्णीं तिष्ठसि त्वं तु स्वयमेव वा भरतनियुक्तो वा रामव्यसनसमये मज्जिघृक्षयैव राममनुगतः कथमन्यथा भार्यादिकं विसृज्यैकाकिनो रामानुगमनम्, अहं तु रामं विना क्षणमपि स्थातुं प्राणान् धर्तुं च न शक्नोमि रामादन्यं क्षुद्रं पुरुषं पदापि न स्पृशामि अतो भरतस्य तव च मनोरथो न सिद्ध्यतीत्यादिपरुषभाषणम्, पुनर्लक्ष्मणेन रामस्य निखिललोकवर्तिसमस्तसुरासुरमानुषगन्धर्वकिन्नरपिशाचपतगमृगप्रभृतिभिः संघीभूतैरपि न किंचिदपि कर्तुं शक्यं वृथा शङ्कां त्यज अयं शब्दस्तु मृगरूपस्य मारीचस्यैवेत्यादि प्रतिवचनं, ततो द्विगुणकोपया सीतया पूर्वोक्तरीत्या अतिपरुषभाषणं, गोदावरीपतनविषपानभृगुपतनोद्बन्धनादिकरणवचनं, ततस्तामाश्वास्य किंचित्प्रणम्य स्त्रीणां स्वभावं च विनिन्द्य कथमेकाकिनी वने मया विसर्जनीया किमहं करोमीति बहुशो विचिन्तयता लक्ष्मणेन रामसमीपगमनं पञ्चचत्वारिंशे ४५

अथ रामलक्ष्मणापगमनं प्रतीक्षमाणेन तस्मिन् समये धृतपरिव्राजकवेषेण रावणेन रामाश्रमं सीतासमीपमागतेन सीतालावण्यदर्शनविवशहृदयेन सीतारूपप्रशंसादिपूर्वकं तन्नामभर्तृनामदेशादिप्रश्नः,तदा धर्मज्ञश्रेष्ठजनकवंशजननानिसर्गसिद्धधर्मज्ञानया जानक्या तं ब्राह्मणपरिव्राजकं मन्वानया तस्य रावणस्यार्घ्यपाद्यादिभिः पूजनं च षट्चत्वारिंशे ४६

अथ सीतया परिव्राजकपृष्टस्य उत्तरानुक्तौ स शपेदिति मत्वा स्वकुलगोत्रभर्तृनामादिकथनं, तत्कुलनामादिप्रश्नः, तदवसरलाभत्वरितेन रावणेन स्वकुलनामपौरुषादिप्रकटनपूर्वकं स्वाङ्गीकरणप्रार्थनं, तावता अतिकुपितया सीतया श्रीरामोत्कर्षरावणनिकर्षयोर्नानानिदर्शनप्रदर्शनपूर्वकं रावणं प्रति धिक्कारवचनजातं च सप्तचत्वारिंशे ४७

अथ सीतावचनश्रवणकुपितेन रावणेन स्वकृतं स्वभ्रातृभूतकुबेरविजयपूर्वकं तदीयपुष्पकहरणं, सूर्यचन्द्रेन्द्रप्रभृतिनिखिलदेवसङ्घविद्रवणकरणकिंचित्कोपव्यापारवत्त्वं, स्वभयेन तरुपत्राणामप्यचलनं सरितामपि स्तिमितगमनम् उष्णकिरणस्यापि सूर्यस्य शीतकिरणत्वमित्यादिकं समुद्रपरिखावृतदेवादिदुष्प्रेक्षत्रिकूटशिखरस्थसुवर्णरत्नादिमयदिव्यलङ्कानगरनित्यनिवासनिःसाधारणदिव्यभोगभागित्वमित्यादि चाभिधाय प्रयत्नसंपाद्यं माम् अप्रयत्नेनागतमवश्यमङ्गीकुरु अन्यथा तवातीव परितापो भवितेति कथनं, तच्छ्रवणविवृद्धकोपया सीतया धर्मज्ञकुबेरानुबन्धिनस्तव पापिष्ठतमव्यापारप्रवृत्तिः कथं किं बहुना निखिलराक्षसजातिविनाशायैव तवायं व्यापारः तव पीतामृतस्यापि जीविताशा न कर्तव्येत्यादिरूपेण वचनेन रावणनिर्भर्त्सनं चाष्टचत्वारिंशे ४८

अथातीव कुपितेन तत्क्षण एव त्यक्तपरिव्राजकवेषेण रावणेन नानाधिक्कारवचनपूर्वकं सीतां बलाद् गृहीत्वा रथमारोप्य गमनं, तत्समये सीतायाः नानाविधाक्रन्दनादीनि जनस्थानस्थवृक्षगिरिनदीप्रभृतीनुद्दिश्य स्वहरणस्य रामं प्रति शंसनप्रार्थनं, तत्र कस्मिंश्चिद्वृक्षे स्थितस्य जटायोर्दर्शनं, तं प्रति महता दुःखेन आक्रन्दनपूर्वकं रामाय स्वहरणकथनप्रार्थनं चैकोनपञ्चाशे ४९

अथ सीताशोकाक्रन्दनं श्रुतवतस्तावतैव प्रबुद्धस्य जटायोः प्रथमं रावणं प्रति धर्माधर्मश्रेयस्करत्वदुःखकरत्वादिसामान्यनीतिप्रदर्शनपूर्वकमधर्म्यसीतापहरणान्निवर्तनप्रयत्नस्तेनाप्यनिवृत्तं तं प्रति कटूक्तिभिस्तन्निवर्तनप्रयत्नस्तेनाप्यनिवृत्तं पलायमानं तं प्रति युद्धाय निरोधनं च पञ्चाशे ५०

अथ जटायुश्चिरं रावणेन सह कृतसंग्रामः रावणेन बहुभिर्बाणैरभिहतः पुना रावणस्य धनुःसारथिरथहयादीन् निर्मथ्य किंचित्परिश्रान्तः, तावता अङ्केन सीतामादाय पलायमानं रावणं पुनर्निरुध्य नानाविधपरुषोक्तिभिः संतर्ज्य तस्य शरीरे नखमुखादिभिः सर्वतः परिक्षतिं विधाय तस्य सीतापरिष्वङ्गपापिष्ठतमान् बाहून् दश च तुण्डेनाच्छिद्य तावताऽतिकुपितेन भूतलत्यक्तसीतेन रावणेन खड्गेन निकृत्तपक्षः पपात, तं तादृशावस्थं स्वार्थत्यक्तप्राणं जटायुषं जानकी समीक्ष्य परिष्वज्य रुरोद चेति कथा एकपञ्चाशे ५१

अथ युद्धसमये भूतलत्यक्तां जटायुं मृतमनुशोचन्तीं वृक्षान्दृढं बाहुभ्यामालिङ्ग्य रुदन्तीं जानकीं पुनर्बलाद्गृहीत्वा रावणगमनं, तत्समयेऽतिवेगाकाशगमनेन सीताधृतकुसुमस्रनानाविधनूपुरादिदिव्यभूषणादीनां भूमौ पतनम्, तादृशीं सीतादशां निरीक्ष्य वृक्षगिरिनदीप्रभृतीनां स्थावराणां सिंहव्याघ्रप्रभृतीनां तिरश्चां सीतासंवर्धितानां मृगपोतकानां चानुशोचनं, सीतादशादर्शनेन वनदेवतानां गात्रकम्पनं, सीताहरणसमयसंजातजगद्वैकृतं च द्विपञ्चाशे ५२

अथ रावणेन ह्रियमाणया वाचामगोचरे शोकार्णवे मग्नया जानक्या अतिकरुणमतिपरुषं च रावणं प्रति निन्द्यवचनजालं त्रिपञ्चाशे ५३

अथैवं रावणेन बलाद् ह्रियमाणया कस्यापि स्वानिवर्तनसमर्थस्यादर्शनेन प्रवृद्धभयशोकया सीतया गमनसमये कस्मिंश्चिद्गिरिशृङ्गे पञ्चवानरदर्शनं, तत्र तत्क्षण एव दैवगत्या दृष्टाय रामाय मद्वृत्तान्तं साभिज्ञानमिमे वदेयुरिति प्रत्याशया भिन्नोत्तरीयकाण्डस्यान्तर्निक्षिप्तभूषणस्य तान् प्रति विसर्जनं, सीतापहरणरूपमहासाहसकृत्यकरणजनितचित्तक्षोभेण रावणेन तत्कर्माविदनं, ततो रावणेन सीतां गृहीतवता निस्तीर्णसागरेण लङ्कायामन्तःपुरे सीतास्थापनं, तत्र राक्षसीः प्रति अतिजागरूकतया सीतारक्षणालापनं च चतुष्पञ्चाशे ५४

अथ रावणेन राघवशरानलभस्मीकृतनिखिलराक्षसगुल्मं जनस्थानं प्रति बलीयसां राक्षसानामष्टानां प्रेषणं, ततोऽन्तःपुरं प्रविष्टेन स्वसंपत्प्रदर्शनेन सीतां वशीकर्तुमिच्छता तत एव बलात्सीतां गृहीतवता तस्यै स्वकीयानां नानारत्नखचितविचित्रचित्रप्रासादमण्डपगोपुरवापीकूपोद्यानप्रभृतिभोगस्थानानां प्रदर्शनम्, एतादृशसंपत्समृद्धं मां भजस्वेति प्रार्थनं च पञ्चपञ्चाशे ५५

अथ रावणवाक्यश्रवणकुपितया अतिक्षुद्ररावणाभिमुखभाषणजुगुप्सया तृणं किंचिदन्तरतः कृतवत्या सीतया स्वश्वशुरकुलगरिम्णः स्वभर्तृगतसर्वमङ्गलगुणभूम्नः तत्र च वाङ्मनसागोचरस्य निखिलचराचरात्मकजगत्समूलनिर्मूलनपुनरुत्पादनादिलीलालेशस्य श्रीरामपराक्रमस्य च प्रदर्शनेन तत्प्रतिभटरावणगतदोषराशिप्रदर्शनेन च धिक्करणं, निखिलराक्षसकदम्बसहितस्य तव विनाशः सिद्ध इत्येवमादिशपनं, ततः कुपितेन रावणेन द्वादशमासान्तरे त्वं यदि मद्वशगा न भविष्यसि तदा त्वां तु प्रातरशनार्थं सूदाश्छेत्स्यन्तीति प्रत्युक्त्वा राक्षसीः प्रति सीताया अशोकवनिकानयनपूर्वकं तत्र तर्जनभर्त्सनादिभिः स्ववशीकरणाज्ञापनं, तावता राक्षसीभिरशोकवनिकां नीतायाः सीतायास्तत्कृततर्जनभर्त्सनादिविवृद्धशोकायास्तत्र वासश्च षट्पञ्चाशे ५६

अथ मृगरूपं मारीचं हत्वा प्रतिनिवृत्तेन क्रूर-गोमायुस्वरादिदुर्निमित्तदूयमानमानसेन तत एव नाना-विधचिन्तादन्तुरितान्तःकरणेन रामेण मध्येमार्गं विवर्ण-वदनस्य लक्ष्मणस्य दर्शनं, तत्समागमः. कथं लक्ष्मण ! राक्षसभूयिष्ठे वने सीतामेकाकिनीं विसृज्यागतो-ऽसीत्यादिवचनं, पुनः पुनर्दुर्निमित्तदर्शनेन सीतायाः हरणमरणाद्यन्यतमं सिद्धमिति निश्चितवताऽनुशोचनं च सप्तपञ्चाशे [५७]

अथ लक्ष्मणं प्रति दुर्निमित्तादिभिः सर्वथा सीता नष्टेत्यनेकमुखमाक्रोशता असकृल्लक्ष्मणं पृच्छता अति-दूरधावनकृतश्रमपिपासादिपीडितेन रामेण स्वाश्रम-समीपप्रदेशं स्वाश्रमं क्रीडास्थानानि च शून्यानि दृष्ट्वा अननुभूतपूर्वव्यथाप्रथमावेशश्चाष्टपञ्चाशे [५८]

अथ पूर्वसंगृहीतं विस्तरेण विवक्षुर्मध्येमार्गं समा-गतं लक्ष्मणं प्रति किमर्थं विजने राक्षससेविते वने सीतां विसृज्यागतोऽसीति रामेण प्रश्नः, ततो लक्ष्मणेन आर्तस्वरं श्रुतवत्या तावत् संजातमहाशोकया असकृ-न्मया समाश्वासितयाऽपि मामतीवोग्रैर्मदभिलापेणैव त्वं राममनुगच्छसीत्यादिभिर्वचनैरधिक्षिप्तवत्या सीतयैव प्रेषितोऽहमागच्छामिति लक्ष्मणस्य प्रत्युक्तिः ततो रामेण तथापि क्रुद्धायाः स्त्रिया वाक्यं श्रुत्वा मां निखिलराक्षस-संहरणसमर्थं जानताऽपि भवता तां तादृशवने विसृज्य यदत्रागतं तदपनय एवेति पुनरुक्तिश्चैकोनषष्टितमे [५९]

अथ पुनः पुनर्दुर्निमित्तदूयमानमानसेन रामेण निजाश्रमसमीपादिविचयनपूर्वकं नानाविधवृक्षलतादी-नचेतनानपि पदार्थानाहूयाहूय सीतागतिकथनाभ्यर्थनं, ततस्तेषु निरुत्तरेषु मृगगजशार्दूलाद्यभ्यर्थनं, तेष्वपि निरुत्तरेषु सर्वत्रादर्शनेनात्यन्तमवसादनं, पुनः पुनर्मार्गण-प्रयत्नश्च षष्टितमे [६०]

अथ पुनः पर्णशालादिकं सीतारहितं दृष्ट्वा उच्चैः स्वरेण सीताह्वानपूर्वकं रामस्य नानाविधप्रलापः, ततो लक्ष्मणेन समाश्वासनपूर्वकं पुनः सम्यक् सर्वतो मार्गण-प्रयत्नकरणप्रार्थनं, ततः सर्वतः काननस्य प्रस्रवणा-ख्यस्य पर्वतस्य च सम्यग्विचयनं, तत्र सर्वत्र सीतालाभा-भावेनातीव रामस्य वैक्लव्यपूर्वकमुच्चैः प्रलापः, पुन-र्लक्ष्मणेन सान्त्वनं, तदनादृत्य रामस्य पूर्ववत्प्रलाप-श्चैकषष्टितमे [६१]

अथ पुना रामेण कामपरवशेन सीतामपश्यताऽपि पुरतः पश्यतेव नानाविधपरिदेवनं, सीताव्यसनेन स्व-मरणमपि सिद्धं कृत्वा कैकेय्या मनोरथसिद्धिकथनं, सीतया सहागतस्य स्वस्य तया विना नगरगमनाश-क्यतां गमने जनकदर्शनाशक्यतां स्वस्य मरणेऽप्ययो-ध्यां गत्वा रामेणानुज्ञातस्त्वमयोध्यां पालयेति भरतं प्रति कथय मदुक्त्या कैकेयीसुमित्राकौसल्या अभि-वादय सीतानिमित्तं मद्विनाशं विशेषेण मज्जनन्यै कौस-ल्यायै कथय इति लक्ष्मणं प्रति नियोजनं, तत एता-दृशीं रामदशां दृष्ट्वा लक्ष्मणस्य वाचामगोचरवैक्लव्या-वाप्तिश्च द्विषष्टितमे [६२]

अथ पुनर्लक्ष्मणशोकविवृद्धशोकेन रामेण राज्य-प्रणाशपितृविनाशजननीवियोगबन्धुविप्रयोगवनवासा-दिभिः सीताव्यसनाक्रेडितैश्चिन्त्यमानैरतीव शोक-पारवश्यं, तत्तादृशगुणवन्ति सीतावदनकण्ठबाहुप्रभृती-न्यङ्गानि राक्षसैर्भक्षितानि भवेयुरिति परिदेवनं, गोदा-वरीजलमध्यस्थविशालशिलातलदर्शनेन तत्रानुभूतपूर्वं सीतासरसलीलाविहारवचनादिकं लक्ष्मणसाक्षिकमिदानी-मनुस्मृत्यातीव शोचनं, गोदावरीगमनवनगमनपद्मिनी-गमनादिकमाशङ्क्यातिभीरुतया एकाकितया गमना-संभावनया पुनस्तदभावनिश्चयः, पुनरादित्यवाय्वादीन् प्रति सीतागतिकथनायाभ्यर्थनम्, एवमित्युत्तररहित-शोकार्णवपरिप्लुतं श्रीराममवेक्ष्य स्वशोकमप्यनादृत्य-लक्ष्मणेन समाश्वासनं, तदनादृत्य विमुक्तधैर्येण रामेण पुनर्महादैन्यसमावाप्तिश्च त्रिषष्टितमे [६३]

अथ दीनेन रामेण लक्ष्मणं प्रति गोदावरीविचय-नायाज्ञापनं, ततो लक्ष्मणेन गोदावरीतीरं सर्वं विचित्य क्वापि सीता न दृश्यत इति कथनं, ततो रामेण स्वय-मेव सीतागतिं ब्रूहीति गोदावरीप्रार्थनम्, तावताऽपि रावणभयेन गोदावर्या तूष्णींभावेनावस्थानम्, अथ रामेणातीव जनकादिनिरीक्षणाशक्यतादिकं प्रत्यनु-

शोचता आश्रमभुवि परिचितपूर्वान् मृगान् प्रति सीता-गतिप्रश्नः, ततस्तैर्दक्षिणस्यां दिश्याकाशमुद्वीक्ष्य स्वयं च किंचित् गत्वा तादिङ्गितेन तद्दिशि सीता हृतेति सूचनं, तावदेवातिबुद्धिना लक्ष्मणेन दक्षिणां दिशं प्रति गमने सीताधिगमोपायो दृश्येत, अत इमां दिशं गच्छावेत्यग्रजप्रार्थनं, तथैवोभाभ्यां गमनं, तत्र मार्गे सीताधृतानि पतितानि कुसुमानि दृष्ट्वाऽनुशोचनं, तत्र सन्निहितं प्रस्रवणाख्यं गिरिं प्रति सन्निहितां नदीं सीता-गत्यकथनात्त्वां विध्वंसयामीति वचनम्, अथ तत्र महतो राक्षसपदविन्यासस्य तत इतोवधावनं कृतवत्याः सीतायाः पदन्यासानां च दर्शनं, ततः सर्वथा राक्षसै-र्भक्षितेत्यनुशोचनं, ततस्तत्र महद्धनुर्विशीर्णं तूणीरौ महान्तं रथं रथाश्वान् सारथिं च भग्नान् दृष्ट्वा सर्वथा सुन्दोपसुन्दवत् सीताविषये द्वयोर्विग्रहः समजनि, सर्वथा सीता भक्षितेति निश्चित्य महाशोकपरिणतेन महता कोपेन धर्मं धर्मफलप्रदान् देवान् स्वभ्रादिमादि-गुणांश्च प्रति जुगुप्सनम्, अथ विवृद्धकोपेन निखिल-मपि ब्रह्माण्डं पिण्डीकरिष्यामीति जगन्निर्मूलनाय बाणसंधानं च चतुष्षष्टितमे ६४

अथ लक्ष्मणेन नैकस्यापराधेन सर्वलोकविध्वंसनं युक्तमित्यादिरूपेण संग्रहेण रामसमाधानं पञ्चषष्टितमे ६५

अथ पुनर्लक्ष्मणः त्वं दशरथरचितानन्यसाध्यसुकृत-फलरूपतया निखिललोकदुर्लभकल्याणगुणगणनिधिः समवतीर्णः [illegible] नापि जह्यौ अतस्तादृशस्य तव निरपराधनिखिलजग-दुन्मूलनः कोपो न युक्तः इह लोके ययातिनहुषनल-मांधातृप्रभृतिभिर्महानुभावैरपि वसिष्ठादिभिर्दुर्दशासु किं किं दुःखं नान्वभूयत अतस्तत्त्वबुद्ध्या सम्यग्वि-चार्य स्वापराधिसमुद्धरण एव प्रयतस्व त्वयैव बहुशो ममैवमुपादिष्टम्, समतीतगीष्पतिप्रभृतिकनिखिल-विज्ञानधुरंधरस्य तव केन किमुपदेश्यम् ? अतस्त्वमेव वधानर्हं सात्त्विकं दिव्यं प्राणिजातं मानुषं च ब्राह्मणा-दिकम् आत्मनः सकलजगन्निर्मूलनक्षमं पराक्रमं चावलोक्यापराधिनमेवोद्धर्तुमर्हसीति प्रार्थयामास षट्षष्टितमे ६६

अथ लक्ष्मणवचनप्रतिष्ठापितधैर्येण रामेण तेन साकं किंचिद्दूरगमनं, तत्र रुधिरार्द्रं गृध्रं शयानं दृष्ट्वा तस्यैव सीताभक्षकगृध्ररूपराक्षसविशेषत्वेन संशयः, तद्वधाय तत्समीपगमनं, तावता गृध्रराजेन रावणकृतस्वमारण-सीताहरणकथनम्,तच्छ्रवणेनानन्तदुःखावाप्तिः, लक्ष्मणं प्रति परिदेवनं च सप्तषष्टितमे ६७

अथातिशोकेन रामेण मुमूर्षुं गृध्रराजं प्रति सीता-गतिकथनप्रश्नः, ततस्तेन संग्रहेण रावणकृतसीताहर-णादिकथनम्, सीताहरणमुहूर्तबलेन पुनः सीतामवा-प्स्यसीति कथयित्वा रावणस्थानादिकथनारम्भ एव जटायोः प्राणोत्क्रमणं, तादृशावस्थतद्दर्शनविवशहृद-येन रामेण बहुधा परिदेवनं, ततस्तस्योत्तमगतिप्रार्थन-पूर्वकं संस्कारकरणम्, उदकदानं चाष्टषष्टितमे ६८

अथ रामलक्ष्मणौ पुनः प्रस्थितौ दण्डकारण्यं ततः क्रौञ्चारण्यं चातिक्रम्य मतङ्गाश्रमपूर्वदिग्वनदर्शामयो-मुखीनामकराक्षस्याः शूर्पणखाया इव कर्णनासादि-च्छेदेन निरसनं कृतवन्तौ तादात्विकदुर्निमित्तानि चिन्तयन्तौ अतिबीभत्सभीममहाकलेवरस्य योजना-यतबाहुकस्य कबन्धस्य बाहुपाशबद्धावन्वशोचतामिति कथा एकोनसप्ततितमे ६९

अथ देशकालोचितज्ञेन लक्ष्मणेन रामं प्रति कबन्ध-बाहुद्वयच्छेदनाभ्यर्थनं, तच्छ्रवणकुपितेन कबन्धेन रामलक्ष्मणभक्षणप्रयत्नः, तावद्भ्यां रामलक्ष्मणा-सिभ्यां कबन्धदक्षिणसव्यबाहुच्छेदनं, तावत्स्मृतपूर्व-जन्मवृत्तान्तेन कबन्धेन कौ युवामिति प्रश्नः, लक्ष्मणेन स्वस्वरूपवृत्तान्तादिकथनं, तावताऽतिसंतुष्टेन कबन्धेन अतिसंमोदनपूर्वकं स्वस्य विरूपशरीरप्राप्तिहेतुकथाकथ-नारम्भश्च सप्ततितमे ७०

अथ कबन्धेन पुरा स्वस्य स्वतः सोमसूर्यशक्रादीना-मिव दिव्यरूपवत्त्वं तादृशस्यापि स्वस्य भयंकरराक्षस-रूपपरिग्रहेण ऋषिसंघवित्रासनं, ततः कदाचित्तथैव स्थूलशिरोनामकमुनिधर्षणं, ततः क्रुद्धेन तेनर्षिणा राक्षसरूपमेव तवास्त्विति शापः, ततो याचितेन तेन यदा रामस्त्वद्भुजौ छित्त्वा त्वां दहेत् तदा तव स्वीय-

रूपप्राप्तिरिति शापमोक्षकथनम्, अथ पुनः स्वस्य तादृग्रूपस्यैव स्वकुलद्वेषीन्द्रजयाय पितामहमुद्दिश्य तपःकरणम्, तेन च स्वस्य दीर्घायुःप्रदानं तद्गर्वेण स्वस्य शक्रप्रधर्षणम्, तावत् क्रुद्धेन वासवेन वज्रेण भग्नशिरःसक्थितया करणम्, 'तदा स्वयाचितेन तेन स्वस्यामारणम्, भग्नशिरःसक्थितया आहारसंपादनाय योजनायतबाहुद्वयदानं कुक्षावास्यकल्पनम्, तदाप्रभृति स्वस्य तादृशबाहुद्वयेन स्वपुरस्थयावज्जन्तुग्रहणभक्षणं, शक्रेणापि यदा राम एतौ भुजौ छिन्द्यात्तदा तव स्वर्गप्राप्तिरिति कथनात् स्वस्य सदा रामागमप्रतीक्षणम्, इदानीं भुजद्वयनिकृन्तनेन युवां रामलक्ष्मणावेव एवं महोपकारकयोर्भवतोरहं बुद्धिसाचिव्यं करिष्यामीति कथनं, तावद्रामेण रावणनिलयादिकथनप्रश्नः, पुनः कबन्धेन नाहं रावणं जाने अपि तु अदग्धस्य मम दिव्यज्ञानाभावात् भवद्भ्यामस्य देहस्य दाहे कृते पश्चादुत्पन्नदिव्यज्ञानः सन् भवतो जानकीलाभहेतुभूतं सन्मित्रं कथयामीति कथनं चैकसप्ततितमे ७१

अथ संस्कृतः कबन्धः स्वरूपं प्रत्यापन्नः वालिनिरस्तमृश्यमूकगिरिस्थितं सूर्यपुत्रं सुग्रीवं सखायं कुरु सीतां स विचित्य दास्यतीत्यब्रवीदिति कथा द्विसप्ततितमे ७२

अथ कबन्धेन सुग्रीवस्थानमार्गं दर्शयित्वा गमनं त्रिसप्ततितमे ७३

अथ कबन्धदर्शितमार्गेण रामलक्ष्मणयोः पम्पातीरस्थशबर्याश्रमगमनं, तत्र शबर्या पूजनम्, रामाय शबर्या स्वाचार्यभूतमतङ्गशिष्याश्रमदेवपूजास्थानादिप्रदर्शनम्, ततो रामानुज्ञातया तया आत्मसमाधिबलेन स्वगुरुस्थानभूतपरमपदगमनं च चतुःसप्ततितमे ७४

अथ लक्ष्मणेन शबर्याश्रमतदाचार्यमहिमवृत्तान्तं कथयता सीतामार्गणत्वराविवृद्धसुग्रीवदिदृक्षायुक्तेन श्रीरामेण नानाविधवृक्षगुल्मलतादियुक्तपम्पामार्गवनदर्शनपूर्वकं मार्गमध्यस्थमतङ्गसरसि स्नानपूर्वकं पुनः पम्पातीरसमीपवनदर्शनपूर्वकं च पम्पाप्रवेशः पञ्चसप्ततितमे ७५

एवमारण्यकाण्डानुक्रमणिका समाप्ता ।

---

## अथ किष्किन्धाकाण्डानुक्रमणिका ।

अथ रामस्य सलक्ष्मणस्याऽतिरमणीयपम्पासरोदर्शनं, तत्तादृशरमणीयपुष्करणीदर्शनेनोद्दीपितसीताविरहानलस्य तस्य चित्तक्षोभपूर्वकं लक्ष्मणं प्रति नानाविधवृक्षलतागुल्मरमणीयपुष्पादिवर्णनं, नानाविधहंससारसक्रौञ्चमद्गुमयूरनत्यूहप्रभृतिपक्षिणां मिथुनीभूय चरतां दर्शनेन स्वस्य कामोद्दीपनकथनम्, एतादृशवसन्तऋतुसमये अतिमनोहरमलयमारुतसंचारे कथं सीतां विना मम जीवितधारणमित्यादिरीत्या अतीवावसादनं ततो लक्ष्मणेन भवादृशानामेव मतिरेवं चेत्कथमितरे वर्त्तेरन् प्रियजने अतिस्नेहः महोपद्रवाय भवेत् अतो धैर्यमवलम्ब्य सीताधिगमसाधनप्रयत्नं कुर्वित्याश्वासनं, तावता रामस्य सधैर्यस्य लक्ष्मणेन साकं पम्पामतीत्य ऋश्यमूकसमीपगमनं, तौ द्वौ विलक्षणरूपलावण्यौ महौजसौ सर्वभयंकरशरचापासिधरौ दृष्ट्वा सुग्रीवस्य ससचिवस्य वालिप्रेरितबुद्ध्याऽतीव त्रासश्च प्रथमे १

अथ रामलक्ष्मणौ दृष्ट्वा त्रस्तस्य सुग्रीवस्य तयोः स्वरूपपरिज्ञानार्थं तत्समीपं प्रति हनुमत्प्रेषणं द्वितीये २

अथ सुग्रीवप्रेषितस्य हनुमतो भिक्षुरूपस्य [illegible] समीपगतस्य रामलक्ष्मणरूपलावण्य[illegible] धादिप्रशंसाव्याजेन तयोः कुलगोत्रनामादि[illegible], तावत्तद्वाक्यनैर्दोष्यगुणपौष्कल्य[illegible] श्रीरामेण स्वयं लक्ष्मणं प्रति [illegible] तत्प्रतिवचनकथनाय लक्ष्मणनियोजनं, ततोऽतिचतुरेण रामानुजेन संग्रहेण सुग्रीवदर्शनार्थमेवावयोरागमनमिति प्रत्युक्ति[illegible] तृतीये ३

अथातिनिपुणं सौमित्रिवचनं श्रुतवता तत्क्षण एव सुग्रीवस्य राज्यागमनं सिद्धं मन्वानेन हनुमता सामान्यतः कार्यार्थित्वे दर्शितेऽपि पुनः कुलनामराज्यभ्रंशनिमित्तादिप्रश्नः, तदा नियुक्तेन लक्ष्मणेन पितुर्दश-

रामस्य तस्य ज्येष्ठपुत्रस्य स्वाग्रजस्य रामस्य तद्दास्यैक-निरतस्य स्वस्य च यथोचितं गुणनामादिकथनपूर्वकं श्रीरामस्य राज्यभ्रंशं, स्वेन सीतया च सह वने वासं रक्षसा केनापि तस्या हरणं, तन्नामाद्यपरिज्ञानम्, एतादृशस्य रामस्य विषये सुग्रीवेणैव साहाय्यं कर्तव्यमिति तच्छरणवरणप्रयत्नं चोक्त्वा वचःसमापनं, ततो हनुमता सुग्रीवो युवयोः साहाय्यं करिष्यतीति प्रतिकथनं, ततो लक्ष्मणेन श्रीरामं प्रति सुग्रीवसमीपगमनप्रार्थनं, ततो हनुमता रामलक्ष्मणाभ्यां साकं सुग्रीवसमीपगमनं च चतुर्थे ४

अथ हनुमता ऋश्यमूके राघवौ प्रतिष्ठाप्य समीपस्थमलयागिरिं गतवतः सुग्रीवस्य समीपं गत्वा रामवृत्तान्तमावेद्य तेन साकमृश्यमूकागमनं, ततो रामस्य सुग्रीवेण अग्निप्रदक्षिणपूर्वकसख्यकरणम्, अथ सुग्रीवेण वालिसकाशादभयप्रार्थनं, रामेण वालिवधप्रतिज्ञानं च पञ्चमे ५

अथ सुग्रीवेण श्रीरामं प्रति सीतामानीय दास्यामीति प्रतिज्ञानं, ततः सीतात्यक्ताभरणप्रदर्शनं, ततः श्रीरामेण तद्दर्शनकृतपरिदेवनं, ततस्तेन रावणवासस्थानादिप्रश्नश्च षष्ठे ६

अथ सुग्रीवेण स्वस्य रावणस्थानापरिज्ञानेऽपि रावणं हत्वा सीतामानीय दास्यामीति प्रतिज्ञानं, ततो रामेण सान्त्वनपूर्वकमन्वेषणकरणानयोजनं, ततः पुनर्वालिवधशपथेन सुग्रीवस्य सन्तोषणं च सप्तमे ७

अथ सुग्रीवेण देहादित्यागं कृत्वा मित्रकार्यं कर्तव्यमिति कथनं, ततः श्रीरामेण पुनः शपथपूर्वकं वालिवधप्रतिज्ञानं, ततः सुग्रीवेण स्वीययौवराज्यदारहरणादिकथनं, ततः श्रीरामेण सुग्रीवस्य वालिना साकं वैरकारणप्रश्नः, ततः सुग्रीवेण वैरकारणकथनारम्भश्चाष्टमे ८

अथ सुग्रीवेण पुरा स्वपितृमरणानन्तरं ज्येष्ठतया वालिनो मन्त्रिभी राज्येऽभिषेचनं, ततः कदाचिन्मायाविनाम्नोऽसुरस्य रणाय वाल्याह्वानं, ततः स्वेन साकं वालिनिर्गमनं, वालिभीतस्य मायाविनः बिलप्रवेशनं, ततो वालिना बिलद्वारे स्वनिक्षेपपूर्वकबिलान्तःप्रवेशनं, ततो महतो रक्तप्रवाहस्य दर्शनेनासुरनिर्घोषश्रवणेन च वालिनं मृतं मत्वा बिलद्वारं गण्डशैलेनाच्छाद्य स्वस्य नगरागमनं, ततो मन्त्रिभिः स्वस्य राज्याभिषेचनम्, असुरं निहत्य नगरं प्रत्यागतस्य वालिनो नमस्कारादिपूर्वकमज्ञानकृतमिदमिति सान्त्वनेऽपि प्रसादाकरणं च कथितमिति कथा नवमे ९

अथ पुनः सुग्रीवेण कुपितस्य वालिनः बहुशः सान्त्वनेऽपि प्रसादाकरणं, प्रकृतीरानीय मायाविद्युद्धं राज्यकाङ्क्षया बिले मां रुरोधेत्युक्त्वा मां निर्यासितवानिति कथनपूर्वकमभयप्रार्थनं, ततो रामेण तथैव करिष्यामीति प्रतिज्ञानं, तच्छ्रवणेन सुग्रीवसन्तोषश्च दशमे १०

अथ पुनः सुग्रीवेण वालिविक्रमप्रकारोपक्षेपः, ततः कदाचिद्वालिदुन्दुभ्योर्युद्धं, वालिना तं निहत्य स्रवद्रुधिरप्रवाहस्य तदीयदेहस्य दूरप्रक्षेपणं, ततस्तद्रुधिरबिन्दुभिर्मतङ्गाश्रमदूषणं, क्रुद्धेन मतङ्गेन वालिनः स्वाश्रमप्रवेशे वधोऽस्त्विति शापप्रदानं, तदीयवानराणां च तत्प्रवेशे शैलीभवनशापः, तत्रत्यानां सप्तसालानां पूर्वं वालिना बलेन रन्ध्रीकरणप्रदर्शनं, ततो दुन्दुभिकलेवरस्य एकेन पादेन धनुःशतद्वयदूरं प्रक्षेपप्रार्थनं, रामेण पादाङ्गुष्ठेन दुन्दुभिकायस्य शतयोजनपर्यन्तं प्रक्षेपणं, तावता अतृप्तेन सुग्रीवेण सालभेदनाद्यर्थनं चैकादशे ११

अथ श्रीरामेणैकबाणेन सप्तसालागिरिरसातलानां भेदनं, ततः सुग्रीवेण वालिवधाय रामेण साकं किष्किन्धासमीपगमनं, तदुपकण्ठे रामादीनां वृक्षैरात्मगोपनपूर्वकमवस्थानं, ततो वालिनः सुग्रीवेण द्वन्द्वयुद्धं, वालिसुग्रीवयोराकृत्यादिभिरत्यन्तसादृश्येन भेदाज्ञानाद्रामेण तूष्णीमवस्थानं, तावता सुग्रीवस्य ऋष्यमूकं प्रति पलायनं, ततो वालिसुग्रीवभेददर्शनार्थं सुग्रीवकण्ठे लक्ष्मणेन गजपुष्पलताबन्धनं, ततः पुनः किष्किन्धां प्रति रामादिभिः सह सुग्रीवस्य प्रयाणोपक्रमश्च द्वादशे १२

इति किष्किन्धाकाण्डानुक्रमणिका समाप्ता ।

---

## अथ सुन्दरकाण्डानुक्रमणिका ।

इति सुन्दरकाण्डानुक्रमणिका समाप्ता ।

---



## अथ युद्धकाण्डानुक्रमणिका ॥

वानरसेनायाः सह्याद्रिसमुपतोलनपूर्वकं महार्णवसमीपगमनम्, अथ सुग्रीवाज्ञया नीलेन समुद्रतीरे निवेशितायां वानरसेनायाः समुद्रप्रेक्षणकोलाहलं चाभ्याचष्ट चतुर्थे ४

अथाद्भुततरतरङ्गमृदङ्गरवमहार्णवमहारङ्गसमीक्षणसमुपजातसीतास्मृतेः श्रीरामस्य शोकवचनजातं,लक्ष्मणेन तत्समाधानं चाचख्यौ पञ्चमे ५

अथ लङ्कायां हनुमत्कृतविविधव्यथावेपितहृदयेन रावणेन मन्त्रिणः प्रति मन्त्रप्रकार विवेचनपूर्वकम् आगमिष्यत्ससैन्यरामप्रतिघातोपायरूपाविषयप्रदर्शनपूर्वकं च कर्तव्यहितविचाराय नियोजनं प्रादर्शयत षष्ठे ६

अथ विज्ञातरामशरवेगवैभवैः राक्षसैः पूर्वं रावणकृतादिग्विजयादिनिदर्शनेन रावणप्रशंसापूर्वकमिन्द्रजिन्मात्रेणैव रामजयस्य साध्यताकथनेन निगमनमचीकरत्सप्तमे ७

अथ पुनः प्रहस्तदुर्मुखवज्रदंष्ट्रनिकुम्भैः प्रत्येकं स्वस्ववीर्यश्लाघापूर्वकमेकैकगमनेनैव रामजयस्य साध्यता रावणाय निवेदितेति न्यवेदयदष्टमे ८

अथ निकुम्भरभससूर्यशत्रुसुप्तघ्नयज्ञघ्नमहापार्श्वमहोदराग्निकेतुरश्मिकेत्विन्द्रजित्प्रहस्तविरूपाक्षवज्रदंष्ट्रधूम्राक्षातिकायदुर्मुखान् रामजयं लीलासाध्यं मन्यमानान् गृहीतायुधान् प्रस्थितांश्च दृष्ट्वा निखलपुरुषसारासारविवेकभूषणो विभीषणस्तान्निवार्य रावणाय रामजयस्यासाध्यतां परदारनियोजनस्य हेयतां रामस्य निरपराधत्वं [illegible] रामप्रभावं च निवेद्य सीताप्रतिप्रदानस्यावश्यकर्तव्यतां ज्ञापयामासेति ख्यापयामास नवमे ९

अथ पुनः परस्मिन्नहनि कृतधर्मार्थनिश्चयेन प्रज्ञाताधर्ममार्गदूषणेन विभीषणेन अग्रजसदनं गतेन तस्मै सीतानयनप्रभृति लङ्कायां जातानि नानाविधानि दिव्यभौमभौतिकदुर्निमित्तानि सम्यङ् निवेद्य तच्छान्तितया रामाय सीताप्रदानकर्तव्यतायां पुनरुपदिष्टायां तदानीं तच्छ्रवणजातक्रोधेन रावणेन विभीषणोक्तमार्गस्यायुक्ततामदर्शनपूर्वकं तं विसृज्यान्तःपुरं प्राविश्यतेत्यदर्शयद्दशमे १०

अथ परेद्युर्विभीषणाद्युपदेशजनितचिन्ताव्याकुलहृदयेन रावणेन मन्त्रकरणाय तद्बुचिता सभा मन्त्रिभिः सह प्रविष्टेत्याहैकादशे ११

अथ स्वाभिमतानुसारेण मन्त्रं चिकीर्षू रावणः नगररक्षाविधानपूर्वकं परिषन्मध्ये स्वाभिमतं सीताप्रप्रदाय रामनिरसनं तदुपायचिन्ताकर्तव्यतां च मन्त्रिभ्यः कथयामास, अथ कुम्भकर्णः कुपितः सन् दैवात्त्वं जीवसि यदस्माभिरनालोच्य महावीरेण रामेण वैरमुदपादयः अत इदानीमालोचनाकरणं भुक्तवस्तुसदसद्विचारतुल्यम्, अथापि मत्पराक्रमेण सर्वं समीकरिष्यामीत्यभाणीदित्यवोचद्द्वादशे १२

अथ कुपितं रावणं प्रति महापार्श्वेन सीतां बलात्कारेणानुभवेत्युपदेशं, ततो रावणेन पूर्वं पुञ्जिकस्थलाबलात्कारसंभोगकुपितपितामहशापेन सीताबलात्कारे शिरःकपालं स्फुटीभविष्यति अतः तथा कर्तुं चिन्तयितुमपि न शक्यामिति प्रत्युत्तरदानं चाभ्यधत्त त्रयोदशे १३

अथ तत्र पुनर्विभीषणेन श्रीरामस्य सर्वैरपि दुर्जयताप्रतिपादनपूर्वकं सीताया अप्रदाने निखिलराक्षसविनाशो रावणस्य च विनाशः सिद्ध इति प्रतिपादनपूर्वकं च सीतायाः प्रदानस्यैव सर्वराक्षसक्षेमहेतुता प्रतिपादितेति प्रत्यपादयच्चतुर्दशे १४

अथेन्द्रजिता विभीषणाधिक्षेपणं, ततो विभीषणेन तद्भर्त्सनपूर्वकं पुनः सीताप्रदानस्यैव कर्तव्यतोपदेशनं चोपदिदेश पञ्चदशे १५

अथ परमाप्ततमस्य परमहितमुपदिशतो विभीषणस्य रावणेन निर्भर्त्सनं, ततो विभीषणेन अप्रतीकारदैवसंविधानसंप्राप्तविनश्यदवस्था भवादृशाः कथं हितं गृह्णीयुः अथाप्युच्यते सर्वथा आत्मानं लङ्कां च रक्षेति प्रत्युत्तरप्रदानं च प्रतिपादयामास षोडशे १६

अथैवमुक्तवतो गदापाणेः सचिवचतुष्टयसहितस्य विभीषणस्य मुहूर्तमात्रेणातिक्रान्तसागरस्य राघवसमीपागमनम्, अथैनं सायुधं चतुर्भिः सहागच्छन्तं

प्रेक्ष्य सुग्रीवेणार्तीव शङ्कितेनानुचरैः सह तद्वधाय प्रयत्नं, तावदाकाशस्थस्यैव विभीषणस्यातिदुष्टरावणसंबन्धम्, तद्धितोपदेशप्रतिक्रियारूपतया तत्कृतमवमानं च पुरस्कृत्य परित्यक्तत्याज्यस्य गृहीतग्राह्यस्य परिगृहीतसुग्रीवादिपुरुपकारस्य स्वस्याकिञ्चनस्यानन्यगतिकस्य श्रीराम एव शरणमित्युद्घोषणम्, तच्छ्रुतवता सुग्रीवेण श्रीराममन्निधौ तच्छरणागतिनिवेदनपूर्वकं तस्य रावणानुजतया सद्य एव वध्यता युक्तेति सनीतिवचनम्, अथ तच्छ्रवणसंक्षुब्धमनसा शरणागतरक्षणदीक्षितेन रघुवीरेणाङ्गदजाम्बवच्छरभमैन्दहनुमदादीन् प्रति स्वस्वाभिमतकथनाय नियोजनम्, अथाङ्गदादिभिः शत्रुपक्षाददेशकाले समागतोऽयं विभीषणः सर्वथा परीक्षार्ह एवेति कथनं, ततो हनुमता सुग्रीवन्यायेन राज्याभिलाषेणैवायमागतो विभीषणः परिग्राह्य एवेति निगमितामित्यभ्यधत्त सप्तदशे १७

अथ श्रीरामेण शरणागतसंरक्षणमेव स्वस्य महाव्रतमिति कथितवता स्वप्रेमकलुषितं सुग्रीवहृदयं स्वकीयसर्वशक्ततामदर्शनेन कपोताख्यानकण्डुगाथाप्रदर्शनादिभिश्च निष्कल्मषीकृतवता सुग्रीवं प्रति विभीषणानयनाय नियोजनं चोवाचाष्टादशे १८

अथ विभीषणस्य श्रीरामसमागमं, तदैव श्रीरामनियुक्तेन लक्ष्मणेन विभीषणस्य सर्ववानरमध्ये लङ्काराज्याधिराजतया समुद्रजलेनाभिषेचनम्, अथ सुग्रीवलक्ष्मणाभिमतस्य विभीषणोपदिष्टस्य समुद्रतरणोपायस्य तच्छरणागतिरूपस्य श्रीरामेणाङ्गीकरणं चाकथयदेकोनविंशे १९

अथ शार्दूलाख्येन चारेण समुद्रतीरमागतं ससैन्यं रघुनन्दनं श्रुतवता रावणेन प्रेषितस्य शुकस्य शुकरूपस्य राक्षसस्य रामसेनावकाशमागतस्य सुग्रीवं प्रति रावणोक्तभेदकवचनसमर्पणम्, तावदेव वानरैस्तद्धननाय प्रयत्नं, ततस्तदीयार्तघोषश्रवणद्रुतहृदयेन सदयेन श्रीरामेण तन्मारणहरणं चाह विंशे २०

अथ सागरतीरे त्रिरात्रं दर्भेषु शयितस्य जानकीदयितस्य तावताप्यप्रत्यक्षं समुद्राध्यक्षं देवमुद्दिश्यातिकोपेन सागरोपरि कालानलकल्पानां वेगेनानल्पानां बाणानां प्रयोगं तेन संजातं समुद्रक्षोभं तावल्लक्ष्मणेन रामकोपानलनिर्वापणाय प्रयत्नं चाचीकशदेकविंशे २१

अथ तथाप्यनाविर्भूतं प्रभूतमदमुद्रं समुद्रं प्रति श्रीरामेण ब्रह्मास्त्रमन्त्रितस्य नियमयन्त्रितस्य शरवरस्य धनुषि संधानं, ततः सर्वलोकसंक्षोभं, ततः प्रत्यक्षतामागतेनापां निधिना विधिना राममुपपन्नेन सेतुबन्धनाय नलं नियोजितवता स्वात्मोपरि प्रतिसंहितं ब्रह्मास्त्रं कस्मिंश्चिन्मरुदेशे वियोजितवताऽन्तर्धानम्, ततो वानरैर्नलमुपधाय नानावृक्षलतागुल्मगण्डशैलशिखरशिखरिनिकरपरिकरैः पञ्चभिरहोभिरासुवेलमातिविशालस्य सकललोकक्षेमहेतोः सेतोर्निर्माणम्, अथ हनुमन्तमङ्गदं चाधिरूढाभ्यां रामलक्ष्मणाभ्यां सुग्रीवेण निखिलवानरसेनया च सह तेनैव सेतुना सागरतरणम्, सेनायाः सुवेलाप्रान्ते निवेशनं, तत्तादृशं सेतुबन्धनं निरीक्ष्य विस्मयपरवशैर्निर्जरव्रातैः श्रीरामसंस्तवं च समदर्शयद्द्वाविंशे २२

एवं रामो नलसेतुना तीर्णमहार्णवो महासमरसूचकान् महोत्पातान् दृष्ट्वा चिरप्रार्थिताभीष्टसिद्धिर्भविष्यतीति संतुष्टो दृष्टानि निमित्तानि लक्ष्मणायादर्शयदिति दर्शयामास त्रयोविंशे २३

अथात्युन्नतत्रिकूटशिखरिशिखराग्रभुवि विश्वकर्मणा निर्मितां लङ्कां लक्ष्मणाय संदर्शयता तद्दर्शनजनितसीतादुर्दशास्मरणकन्दलितसमरत्वरेण रघुवरेण बलौघस्य शिरःपक्षपुच्छादिरूपेण विभागपूर्वकं सुग्रीवं प्रति रावणचारभूतशुकमोचनाय नियोजनम्, ततो विमुक्तेन शुकेन रावणसमीपं गतेन वानरसेनाया असाध्यतां सागरेण सेतुबन्धनं तन्मार्गेण तीर्णसमुद्रस्य श्रीरामस्य ससैन्यस्य सुवेलोपान्ते निवेशनं च निवेद्य रामाय सीताप्रदानमेव कर्तव्यमिति रावणाय विज्ञापनं, तावत्परिकुपितेन रावणेन तदधिक्षेपणं चाह चतुर्विंशे २४

अथ पुना रावणप्रहिताभ्यां शुकसारणाभ्यां वानरसैन्यं प्रविष्टाभ्यां विभीषणेन गृहीत्वा वध्यत्वेन रामसमीपं नीताभ्यां तदा यथार्थवचनप्रीतेन श्रीरामेण विभीषणमेव सहायीकृत्य सर्ववानरसेनापरिज्ञानपूर्वकं

मागतेन कुम्भकर्णेन सह रामस्य युद्धम्, अथातिरौद्र-
बीभत्सकुम्भकर्णदर्शनजिहासासंकुचिततद्युद्धलीला-
रसेन श्रीरामेण क्रमेण तद्बाहुद्वयं तदूरुद्वयं च निकृ-
त्तवता तदास्यं चासंख्येयैः शरैः पूरितवता दिव्येन
बाणवर्षेण सकुण्डलस्य तच्छिरसो हरणं चादर्शयत्
सप्तषष्टितमे ६७

अथ कुम्भकर्णं हतं श्रुतवता रावणेन बहुविधं
प्रालप्यतेत्यभ्याचष्टाष्टषष्टितमे ६८

अथ रावणेन महोदरमहापार्श्वाभ्यां साकं प्रेषितानां
तत्कुमाराणां नरान्तकदेवान्तकत्रिशिरोतिकायानां
चतुर्णां युद्धायागमनं, तेषु प्रथमतो नरान्तकस्याति-
जवनतुरगारूढस्य स्वकरालंकारभूतप्रासविक्षेपविध्वस्त-
सप्तशतवानरयूथपस्य तद्भयविद्रवद्वानरसेनासंदर्शन-
समुपजातकोपसुग्रीवप्रेषितेनाङ्गदलसद्बाहुनाऽङ्गदेनैक-
मुष्टिप्रहारविध्वस्तनरान्तकवाहनवाजिनां मुष्ट्यन्तरेण
निष्पेषणं संजगादैकोनसप्ततितमे ६९

अथाङ्गदस्य नरान्तकवधकुपितैर्देवान्तकत्रिशिरो-
महोदरैस्त्रिभिः सह तुमुलं युद्धं समीक्ष्य तत्साह्याया-
गतयोर्नीलहनुमतोर्मध्ये हनुमता मुष्टिप्रहारेण देवान्तक-
प्रमापणम्, अथ नीलेन वृक्षप्रहारेण महोदरहननम्,
अथ हनुमत्त्रिशिरसोर्युद्धम्, तत्र हनुमता स्वहस्त-
तलताडनेन विसंज्ञस्य पतितस्य त्रिशिरसो हस्ताद् गृही-
तेनासिना तच्छिरस्त्रितयकर्तनम्, अथ महापार्श्वस्य
ऋषभाख्यस्य वानरयूथपस्य चायोधनप्रवृत्तिं, तत्रर्ष-
भेण वानरर्षभेण महापार्श्वहस्ताद्गदां गृहीत्वा तयैव
तद्वधं चाभ्यधत्त सप्ततितमे ७०

अथातिकायस्य युद्धप्रवृत्तिम्, अथ तदीयवैलक्षण्य-
दर्शनेन तत्स्वरूपजिज्ञासया रामेण विभीषणं प्रति
प्रश्नम्, ततो विभीषणेनायं रावणाद्धान्यमालिन्यां
जातोऽतिकायनामा महारथो ब्रह्मदत्तवर इत्युत्तरकथ-
नम्, अथातिकायेन स्वाभिमुखागतयूथपजातविध्वंसन-
पूर्वकं रामान्तिकमागतेन युद्धभीषणम्, अथ सौमित्रे-
स्तस्य च शस्त्रास्त्रवृन्दैरायोधनम्, अथावध्यकवचस्य तस्य
ब्रह्मास्त्रेणैव हन्तव्यतां वायुमुखाच्छ्रुतवता लक्ष्मणेन
ब्रह्मास्त्रेणातिकायसंहरणं चाचीकशदेकसप्ततितमे ७१

अथ रावणेन श्रुतातिकायवधादिवृत्तान्तेन स्वप्रेषि-
तानां सर्वेषामपि राक्षसप्रवीराणामपुनर्निवृत्त्या रामपरा-
क्रमः सर्वलोकातिशायीति विचिन्त्य भृत्यानां सर्व-
समयेष्वप्यप्रमादेन नगररक्षणविधानाज्ञापनम्, पुनः
पुत्रव्यसनेनान्तर्गृहप्रवेशं चाह द्विसप्ततितमे ७२

अथातिकायादिपुत्रव्यसनिनं रावणं समाश्वास्य
आभिचारिकं हुत्वा प्रयातेनेन्द्रजिता ब्रह्मास्त्रेण राम-
लक्ष्मणपर्यन्तानां सर्वेषामपि वानरयूथपानां मूर्च्छादि-
पर्यवसायि प्रहरणं प्रादर्शयत् त्रिसप्ततितमे ७३

अथ हनुमता जाम्बवदुपदिष्टक्रमेण हिमवत्पार्श्व-
वर्त्योषधिपर्वतानयनं, तादृशदिव्यौषधिगन्धाघ्राण-
मात्रेण सर्वेषां वानराणां रामलक्ष्मणयोश्च सुप्तबोध-
न्यायेन विशल्यतयोत्थानं चाभ्यधत्त चतुःसप्ततितमे ७४

अथ तदानीमेव रात्रौ प्रथमयामे सुग्रीवसमादिष्ट-
वानरयूथपैरुल्काहस्तैर्लङ्काप्राकारमुत्प्लुत्यान्तःप्रविष्टै-
र्लङ्कादहनं, ततः कुपितेन रावणेन कुम्भनिकुम्भयोः
कुम्भकर्णसुतयोर्यूपाक्षशोणिताक्षप्रजङ्घकम्पनसाहि-
तयोः प्रेषणम्, अथ तैः सह राक्षससेनानिर्गमनम्,
अथ वानरराक्षससेनयोस्तुमुलं युद्धं च प्रादर्शयत्पञ्च-
सप्ततितमे ७५

अथ कम्पनप्रजङ्घयोरङ्गदेन प्रमापणं, शोणिता-
क्षस्य द्विविदेन, मैन्देन यूपाक्षस्य च प्रध्वंसनम्, अथाङ्गद-
मैन्दद्विविदानां जाम्बवत्सुषेणवेगदर्शिनां च कुम्भेन
पराजितानां साह्यायागतेन सुग्रीवेण कुम्भस्य निस्तर्हणं
चाभ्याचष्ट षट्सप्ततितमे ७६

अथ निकुम्भस्य हनुमतश्चायोधनप्रवृत्तिं, तत्र
हनुमता निकुम्भस्य वधं चाह सप्तसप्ततितमे ७७

अथ रावणाज्ञया खरपुत्रो मकराक्षः ससैन्यो
युद्धाय निरगच्छदित्यवोचदष्टसप्ततितमे ७८

अथ मकराक्षः खरपुत्रः खरमारं मारितो रामेणेत्य-
कथयदेकोनाशीतितमे ७९

अथ रावणप्रेरितो रावणिः कृताभिचारिकहोमः
पुनरेत्य रामलक्ष्मणौ सर्वांश्च वानरानाकाशेऽन्तर्हितः
शरशतैरर्दयति स्म, ततश्च तदौष्ट्यमसहमानेन लक्ष्मणेन

अखिलराक्षसविध्वसनाय ब्रह्मास्त्रप्रयोगमनुजिज्ञासितो रामो निरपराधनिखिलराक्षससंहारादनुजं निवर्त्य रावणिमारणोपायमेवाचिन्तयदित्याहाशीतितमे ८०

अथातिकुपितरामलक्ष्मणभयात्त्यक्तयुद्धरङ्गेण पुरीं प्रविश्य निकुम्भिलायां दुर्जयास्त्रबललाभाय होतुकामेन तावत्पर्यन्तं रामलक्ष्मणयोर्युद्धोद्योगं मन्दीकर्तुं काञ्चन मायामारिप्समानेन रामलक्ष्मणयोरतिकुपितत्वेन दुरासदत्वात् सीतास्वरूपज्ञस्यान्यस्याभावाद्धनुमते मायां दर्शयितुं पश्चिमद्वारेण निर्गतेनेन्द्रजिता तत्र हनुमदादिवानरयूथपसन्निधौ मायासीताऽच्छिद्यतेत्याचख्यावेकाशीतितमे ८१

अथेन्द्रजित्कोलाहलदर्शनात् प्रतिनिवृत्तान् यूथपान् समाश्वास्य तैः सह पुना राक्षससेनां विद्राव्य सीताविपत्तिमिन्द्रजिता कृतां रामाय विज्ञापयितुं ससैन्येन हनुमता प्रास्थीयतेत्यकथयद्द्व्यशीतितमे ८२

अथ हनुमन्मुखादिन्द्रजिता कृतां सीताविपत्तिं श्रुत्वा महान्तं शोकमापन्नस्य रामस्य लक्ष्मणेनाश्वासनमदर्शयत्त्र्यशीतितमे ८३

अथागतेन विभीषणेन रामस्येन्द्रजित्प्रयुक्तमोहनव्यापारतत्त्वमुपादिशता तद्वधाय लक्ष्मणप्रेषणप्रार्थनं व्यवृणुत चतुरशीतितमे ८४

पुनः सम्यग्विभीषणवाक्यसमागतधैर्येण रामेण विभीषणहनुमदङ्गदजाम्बवत्प्रमुखऋक्षोवलीमुखसंवृतो लक्ष्मण इन्द्रजिद्वधाय निकुम्भिलां प्रापित्याह पञ्चाशीतितमे ८५

अथ विभीषणसंदर्शितां निकुम्भिलायाः परितः स्थापितां राक्षससेनां लक्ष्मणहनुमदादिभिर्विध्वंसितां श्रुत्वा बहिर्निर्गतेन असमाप्ताभिचारिकहोमकर्मणेन्द्रजिता सह हनुमतो युद्धप्रवृत्तिं, तदा विभीषणेन लक्ष्मणं प्रतीन्द्रजितो विध्वंसनाय विज्ञापनं चादर्शयत् षडशीतितमे ८६

अथ विभीषणेन इन्द्रजिद्धोमस्थानभूतनिकुम्भिलास्थन्यग्रोधमूलसमीपं लक्ष्मणं नीतवता लक्ष्मणाय तत्रत्यमिन्द्रजिद्धोमस्थानं प्रदर्श्य तत्प्रवेशात् पूर्वमेव स जेतव्य इति विज्ञापनं, तदा स्वमर्मोद्घाटनं कुर्वाणं विभीषणं दृष्ट्वाऽतिकुपितेनेन्द्रजिता विभीषणनिन्दनं, तस्य विभीषणेन प्रत्युक्तिं चाभिहितवान् सप्ताशीतितमे ८७

अथ लक्ष्मणेन्द्रजितोरन्योन्यवीरवादपूर्वकं केवलशरैः परस्परं विव्यधनं विवृतवानष्टाशीतितमे ८८

अथ लक्ष्मणेन्द्रजितोः परस्परं शरसहस्रविध्वस्तकवचयोर्महान्तं संप्रहारं प्रकाशितवानेकोननवतितमे ८९

अथ विभीषणेन वानराणामिन्द्रजित्परिवारहननाय प्रोत्साहनं, ततो लक्ष्मणेन्द्रजितोर्महति चलति संप्रहारे लक्ष्मणेनेन्द्रजित्सारथिविध्वंसनम्, तदा प्रमाथिशरभरभसगन्धमादनैरिन्द्रजिद्रथाश्वानां रथेन सह विध्वंसनं च व्याख्यातवान्नवतितमे ९०

अथेन्द्रजिता अन्यं रथमास्थितेन सह तदीयरथान्तरानयनलाघवातिशयविस्मितानां लक्ष्मणविभीषणादीनां पुनर्युद्धे लक्ष्मणेनेन्द्रजित्सारथिहननं, विभीषणेन तद्रथ्यहयविध्वंसनं, ततः पदातिना तेन विभीषणाय प्रयुक्तयोः शक्तिशरवरयोर्लक्ष्मणेन विदलनम्, अथोभयोर्वारुणाद्यस्त्रप्रयोगवारणकौशलविस्मापिताखिलवैमानिकयोर्महति संप्रहारे महानुभावेन रामानुजेन दिव्यबाणेन तत्ताद्दृशस्येन्द्रजितः प्रमापणं च कथितवानेकनवतितमे ९१

अथ विभीषणहनुमज्जाम्बवदादिभिः सह लक्ष्मणस्य श्रीरामसमीपागमनाभिवादनेन्द्रजिद्वधकथनानि, ततः परमानन्दभरितेन श्रीरामेण लक्ष्मणं गाढं निपीड्य मूर्ध्न्युपाघ्राय पुनः पुनः सप्रेमवीक्षणपूर्वकं तस्य विभीषणादीनां च श्लाघनं ततो रामनियुक्तसुषेणचिकित्साविशेषगतवेदनैर्लक्ष्मणादिभिः सर्वैरिष्टजनैः सह श्रीरामस्य प्रहर्षलाभं च प्रकाशितवान् द्विनवतितमे ९२

अथ श्रुतेन्द्रजिद्वधेन रावणेन बहुशो विलापानन्तरं सर्वराक्षसनिधनमूलकारणमियमेव किल अत इमां वधिष्यामीति सीतावधाय सासिनाऽशोकवनिकागमनं, तावत्सुपार्श्वाख्यमन्त्रिप्रवरसूक्त्युपशान्तकोपानलेन पुनर्गृहं प्रत्यागमनं चाचख्यौ त्रिनवतितमे ९३

अथ रावणप्रेषितस्य एकोनत्रिंशल्लक्षाधिकसप्तकोटिसंख्यासंख्यातरथ-विंशतिसहस्राधिकद्वादशलक्षो-

त्तरत्रयोदशकोटिसंख्यासंख्यातकुञ्जर-पष्टिसहस्राधिक-विंशतिलक्षोत्तरदशकोटिसंख्यासंख्यातसारोहतुरंगाशीति-लक्षोत्तरपञ्चचत्वारिंशत्कोट्यधिकशतकोटिसंख्या-संख्यातपदातियुक्तस्य महतो मूलबलस्य रामेणा-प्रतिमशौर्यारामेण कृतं विध्वंसनं विवृतवान् चतुर्नवतितमे ९४

अथ रावणापनयमूलकं सर्वराक्षससङ्घविनाशमधि-कृत्य राक्षसीभिर्व्यलप्यतेत्यमुमर्थमाख्यापितवान् पञ्च-नवतितमे ९५

अथ कर्णारुन्तुदराक्षसीजनविलापसंधुक्षितकोपान-लेन महाबलेन रावणेन महोदरमहापार्श्वविरूपाक्षाख्य-मन्त्रित्रयसहितेनससैन्येन युद्धायोत्तरद्वारतो निर्गम-नम्, तदा रावणनिधनशंसिनामुत्पातानामाविर्भावं, ततस्तानचिन्त्य युद्धभूमिं गतेन रावणेन हरिसैन्यकदनं चावोचत् षण्णवतितमे ९६

अथ रावणमन्त्री विरूपाक्षो विक्षोभितवानरबलो महा-बलेन विपुलग्रीवेण सुग्रीवेण वैवस्वतनगरवास्तव्यतां नीत इत्याह सप्तनवतितमे ९७

अथ रावणमन्त्री महोदरस्तेनैव वानरराजेन महा-सिनाऽधिगलं कदलीलावं व्यलावीत्यभ्यधत्ताष्टनवतितमे ९८

अथ रावणमन्त्री महापार्श्वो रुचिराङ्गदेनाङ्गदेन मुष्टिना निष्पिष्टदेहो नष्टप्राणोऽभवदित्यवोचदेकोनशततमे ९९

अथ रामरावणयोः प्रथमतः साधारणैः शरैरन्योन्य-युद्धकरणं, ततोऽस्त्रैर्युद्धे रावणप्रयुक्तमासुरास्त्रं रामेण पावकास्त्रेण न्यहन्यतेत्याह शततमे १००

अथ रामे रावणास्त्राणि निहत्य किंचिद्विश्राम्यति, लक्ष्मणेन विभीषणसहितेन साश्वं ससारथिं रावण-रथं विध्वंसितवता तत्कोपेन विभीषणोपरि रावणप्रयु-क्तायाः शक्तेश्च छेदनम्, अथातिकुपितेन रावणेन मयनिर्मिताममोघां शक्तिं विभीषणाय प्रयोक्ष्यमाणां दृष्ट्वा लक्ष्मणेन बाणवर्षै रावणस्तम्भीकरणं, तत्कोपेन रावणप्रयुक्तया तयैव शक्त्याऽभिहतस्य लक्ष्मणस्य पतनं, तदानीमतिधैर्येण रामेण हनुमदादीन् लक्ष्मण-रक्षणायादिश्यामितैर्बाणवर्षैर्दशकण्ठविद्रावणं चाभ्या-चष्टैकोत्तरशततमे १०१

अथ रामशोकप्रलापं लक्ष्मणजीवल्लक्षणवचनैः संशमितवता सुषेणेन प्रहितस्य हनुमतः ओषधिपर्व-तानयनं, सुषेणेन तथा लक्ष्मणस्य नस्यप्रदानं, तेन विशल्यतया लक्ष्मणमुत्थितं दृष्टवतो रामस्यानन्दा-वाप्तिं चादर्शयद् द्व्युत्तरशततमे १०२

अथ देवेन्द्रप्रेषितं दिव्यं रथमारूढस्य रामस्य पूर्वं लक्ष्मणविभीषणमथितं रथं विसृज्यान्यं रथमारूढस्य रावणस्य च युद्धप्रवृत्तिं, तदा महत्यस्त्रास्त्रसंयुगे रावणेन मातलिमश्वांश्च ताडितान् दृष्ट्वा रामस्य महाक्रोधा-गमं चाचीकथत्त्र्युत्तरशततमे १०३

अथ रामो रावणेन प्रयुक्तं वज्रसारं महच्छूलमिन्द्र-प्रेषितया मातलिदत्तया शक्त्या विनिर्भिद्य रावण-रथाश्वान् रावणं च बाणगणैर्बिभेदेत्यवोचच्चतुरुत्तर-शततमे १०४

अथ पुना रावणेनानेकसहस्रबाणै रामार्दनं, रामेण च तावता शरजालेन रावणशरान् वारितवता रावणं प्रति निर्भर्त्सननिन्दनपूर्वकं बहुभिर्बाणवर्षैस्तत्ताडनं, तेन रावणं विक्लवं निरीक्ष्य सूतेन तदीयरथस्यान्यत्रापनयनं चाह पञ्चोत्तरशततमे १०५

अथ निवृत्तचित्तमोहेन रावणेन रथापनयनपरि-कुपितेन सूतनिर्भर्त्सनं, ततस्तेन रावणसान्त्वनपूर्वकं पुनस्तन्नियोगेन रथस्य युद्धभूमावानयनं च प्रत्यपादयत् षडुत्तरशततमे १०६

अथ रावणरथापगमलब्धावसरेणागस्त्येन महर्षिणो-पदिष्टेनादित्यहृदयाख्येन स्तोत्रविशेषेण स्तुवन्तं रामं प्रति सहस्रांशोः रावणवधानुग्रहमदर्शयत् सप्तोत्तर-शततमे १०७

अथ रावणसारथिना रणभुवि रथानयनं, रामरथस्य च शत्रुरथं प्रति मातलिना प्रतिनयनं, ततः पुन-र्यथापुरं रामरावणयोः संप्रहारम्. तदानीं रावणमरण-सूचकानां दारुणानामुत्पातानां रामविजयसूचकानां सौम्यशुभनिमित्तानां चाविर्भावं, तादृशनिमित्तदर्शनेन रघुनन्दनस्य परमानन्दलाभं चाकथयदष्टोत्तरशततमे १०८

अथ पुना रामरावणयोर्महाक्रूरयुद्धप्रवृत्तिं, तदा रावणेन रामरथध्वजच्छेदाय शरप्रयोगं, तस्य शरस्य

रामाज्ञया विभीषणेन पुष्पकानयनं चाकथयच्चतुर्विंशत्युत्तरशततमे १२४

अथ रामाज्ञप्तेन विभीषणेन सर्ववानरबहुमानं, ततः स्वेन सहागन्तुमिच्छद्भिः सुग्रीवादिभिर्वानरवृन्दैः ससचिवेन विभीषणेन च सहाङ्कालंकारभूतजनकराजतनयेन सानुजेन श्रीरामचन्द्रेण पुष्पकमधिरूढेनायोध्यां प्रति गमनमुपक्रान्तमित्यदर्शयत् पञ्चविंशत्युत्तरशततमे १२५

अथ पुष्पकस्थेन श्रीरामेण सीतायै लङ्कापुरप्रभृत्ययोध्यापुरपर्यन्तान् प्रदेशान् दर्शयता मध्ये किष्किन्धासमीपगमनसमये सीताप्रार्थनेन सुग्रीवादिवानरपत्नीरपि पुष्पकमारोपितवता यथागतं भरद्वाजाश्रमः संप्राप्त इत्यभ्यधत्त षड्विंशत्युत्तरशततमे १२६

अथ भरद्वाजाश्रमे भरद्वाजमुखादयोध्यास्थमातृभरतादिक्षेमवार्ताश्रवणं, ततस्तेन महर्षिणा प्रार्थितस्य श्रीरामस्य तस्मिन् दिने तत्रावस्थानं, ततो भरद्वाजेन स्वाश्रममारभ्यायोध्यापर्यन्तमार्गवर्तिसर्वपादपानामकालफलमधुकुसुमादिवृद्धिरूपवरदानं चाकथयत्सप्तविंशत्युत्तरशततमे १२७

अथ श्रीरामेण भरतं प्रति स्वागमनवृत्तान्तकथनाय हनुमत्प्रेषणं, हनुमता नन्दिग्रामं गतेन भरताय रामागमनवृत्तान्तकथनं, तच्छ्रवणेन भरतस्य महानन्दावाप्तिं चाहाष्टाविंशत्युत्तरशततमे १२८



अथ [illegible] हनुमता [illegible] प्रभृति पुनर्भरद्वाजाश्रमागमनपर्यन्तवृत्तान्तकथनपूर्वकं श्वः पुष्ययोगेन रामं ससीतं लक्ष्मणादिपरिवारं द्रक्ष्यसीति कथनं, तच्छ्रवणेन भरतस्य परिपूर्णमनोरथत्वेन स्वात्मनि महानन्दावाप्तिं चाचख्यावेकोनत्रिंशदुत्तरशततमे १२९

अथ भरताज्ञया निखिलनगरवीथीगोपुरवेश्माद्यलंकरणपूर्वकं सर्वेषामन्तःपुरजनादीनां नटनर्तकान्तानां राजपरिजनानां नागरिकाणां च श्रीरामसेवार्थं शत्रुघ्ननियुक्तानां नन्दिग्रामप्रवेशम्, अथ सर्वैः साकं श्रीरामसिषेविषया भरतस्य प्रत्युद्यानम्, अथ भरतस्य श्रीरामसमागमम्, अथ श्रीरामस्यातिप्रेम्णाऽङ्कारोपितभरतस्य पुष्पकविमानेन नन्दिग्रामस्थभरताश्रमप्रवेशम्, अथ पुष्पकं धनदाय प्रतिप्रेषितवता श्रीरामेण भरताश्रमे वसिष्ठादिभिः सह यथोचितं पृथगासने समुपवेशनं चावोचत्त्रिंशदुत्तरशततमे १३०

अथ तस्मिन् सदसि भरतेन चित्रकूटे पूर्वं स्वकृतप्रपत्तिसूचकाञ्जलिबन्धपूर्वकं श्रीरामं प्रति राज्याभिषेकाङ्गीकरणप्रार्थनं, ततः श्रीरामेण तदनुमोदनपूर्वकं विशोधितजटेन कृतमङ्गलस्नानेन तादृशैर्भरतलक्ष्मणशत्रुघ्नैः सुग्रीवादिभिश्च सह दिव्यरथेनायोध्याप्रवेशं, तत्र महामाणिक्यमण्डपे दिव्यासिंहासने जाम्बवद्धनुमदादिसमानीतैर्निखिलनदीसमुद्रसम्बन्धिभिः समस्तमाङ्गलिकश्रुतिमन्त्रगणपठनसंभृतवैभवैः रत्नकाञ्चनमयकलशसंभृतैस्तीर्थोदकैः श्रीरामस्य वसिष्ठादिभिर्दिव्याभिषेकं, तत्र श्रीरामेण सर्वेषां विभीषणसुग्रीवाङ्गदहनुमदादीनां संमाननं, तेषां यथागतं स्वस्वनगरगमनम्, अथ भरतं यौवराज्येऽभिषेचितवतः श्रीरामस्य राज्यपरिपालनवैभवं, श्रीरामायणपठनश्रवणादिफलं च विस्तरेण प्रत्य पादयदेकत्रिंशदुत्तरशततमे १३१

इति युद्धकाण्डानुक्रमणिका समाप्ता ।

---

## अथोत्तरकाण्डानुक्रमणिका ।

अथ राक्षसवधानन्तरं प्राप्तराज्यस्य रामस्य समीपे रावणिवधजनितानन्देन विकसितहृदयपुण्डरीका मुनय आगत्य सौमित्रिं प्रतिनन्दितुमारभमाणाः श्रीरामेण रावणकुम्भकर्णादीन् हित्वा कथमिन्द्रजितं प्रशंसथेति पृष्टा इत्यकथयत्प्रथमे सर्गे १

अथ कुम्भसंभवः शक्रजित्प्रभावं वक्तुमुद्युक्तः स्वशापात् पाण्डरीभूतविग्रहां धृतदौहृदलक्षणां तृणबिन्दुतनयां पुलस्त्य उद्वाह्य तस्यां विश्रवसमजीजनदित्यवोचदित्याचष्ट द्वितीये २

अथ विश्रवसो भरद्वाजसुतायां देववर्णिन्यां वैश्रवणोत्पत्तिं, पुनस्तस्य तपःसन्तुष्टेन पितामहेन लोकपालत्वनिध्यधिपतित्वरूपवरद्वयेन साकं पुष्पकप्रदानं,

ततः पित्रा निवेदितलङ्कानिवासं च तेनैव विमानेन पितुः समीपगमनं चावर्णयत्तृतीये ३

अथ श्रीराघवप्रश्नानुगुणं पद्मसम्भवनिर्मितसत्त्वानां राक्षसत्वनामकरणं, तेषु हेतिप्रहेतिसंभवं, हेतेर्विद्युत्केशजननं, विद्युत्केशरताभिलाषिण्या सालकटङ्कटया त्यक्तशिशुरोदनजातघृणापूरितान्तःकरणयोर्गौरीशंकरयोः सांनिध्यं, गौरीप्रीत्यै शंकरेण सुकेशायाकाशगपुरप्रदानं, गौर्या राक्षसानां सद्यो गर्भोत्पत्तिरूपमातृवयःसमानरूपपरिचयदानं च व्याचष्टेत्याह चतुर्थे ४

अथ सुकेशभार्यायां देववत्यां माल्यवत्सुमालिमालिनामुद्भवं, तेषां तपसा सन्तुष्टेन ब्रह्मणा वरप्राप्तिं, विश्वकर्मनिर्मितलङ्कावासं, माल्यवतः सुन्दर्यां वज्रमुष्टिविरूपाक्षदुर्मुखसुप्तघ्नयज्ञकोपमत्तोन्मत्तानामनलायाश्च सम्भवं, सुमालेः केतुमत्यां प्रहस्ताकम्पनविकटकालकार्मुकधूम्राक्षदण्डसुपार्श्वसंह्रादिप्रघसभासकर्णानां राकापुष्पोत्कटाकैकसीकुम्भीनसीनां चोत्पत्तिं, मालेर्वसुदायामनलानिलहरसम्पातीनां विभीषणामात्यानामुद्भवं च प्राचीकथत्पञ्चमे ५

अथ माल्यवदादीनां बाधामसहमानानां देवानां महादेवलब्धमन्त्राराधितत्रियुगलब्धाभयानां जयाय तेषां निशिचराणां युद्धयात्रां, ततो गरुडारूढस्य विष्णोरागमनं, तैः सह युद्धं चाह षष्ठे ६

अथ राक्षसैरभिहन्यमानो विष्णुः शङ्खरवेण रक्षोगणान्विद्राव्य मालिसारथेः शिरश्छेदनपूर्वकं तुरगहननात् विरथीकृतेन मालिना गदयाऽभिहतस्य सुपर्णस्य पृष्ठे तिर्यगास्थितो हेतिराजेन तस्य शिरोऽच्छिनदिति प्राचीकथत्सप्तमे ७

अथ राक्षसानिःशेषीकरणाभिलाषेण वज्रहस्तानुजेन ध्वंसितं स्वबलं निरीक्ष्य माल्यवान् पराङ्मुखवधं मा कार्षीरिदमयुक्तमित्युक्त्वा स्वकरशक्त्या स्वयमेवाभिहतः संमूर्च्छितः पुनर्विष्णुरथपक्षानिलविक्षोभितानीकः सुमालिना सह लङ्कां विहाय सपत्नीकः सपरिच्छदः पातालमगमदित्यकथयदष्टमे ८

अथ कदाचित्पातालान्निर्गत्य महीतले विचरता माल्यवता पुष्पकेण पितरं द्रष्टुमभियान्तं यक्षराजं वीक्ष्यायं प्रभावोऽस्य विश्रवस इति निर्धार्य प्रेषिता कैकसी विश्रवसः समीपमागत्य पादाङ्गुष्ठेन भूमिं लिखन्ती तेन का त्वं किमर्थमागतेति पृष्टा स्वाभिप्रायमनिवेदितवत्यपि पुत्राभिलाषिणीति विज्ञाता निजागमनसमयोचिताः पुत्रा उत्पत्स्येरन्निति तेनोक्ता पुनः प्रसादयन्ती कश्चिद्धर्मिष्ठोऽपि जायेतेत्यनुगृहीतोत्पातैः सह विंशतिभुजं दशग्रीवं कुम्भकर्णं शूर्पणखां धर्मिष्ठं विभीषणं चाजीजनदित्याचष्ट नवमे ९

अथात्युग्रतपसां दशग्रीवकुम्भकर्णविभीषणानां मध्ये दशमुखस्य शिरोहोमसंतुष्टेन ब्रह्मणा मानुषादृते सर्वावध्यत्वरूपवरप्रदानपूर्वकं छिन्नानां शिरसां पुनरुत्पत्तिरूपवरप्रदानम्, विभीषणस्य धर्मेऽचञ्चलबुद्धित्ववरदानं च कुम्भकर्णाननं सरस्वतीप्रवेशान्मोहितेन तेन निद्रावरणं, तथैवानवरतनिद्रत्ववरप्रदानं, तेषां श्लेष्मातकवननिवासं च प्रावोचद्दशमे १०

अथ माल्यवता कुबेराध्युषितलङ्कापहरणाय बोधितेन दशकण्ठेन तदनङ्गीकरणं, पुनः प्रहस्तेन बोधितेनाग्रजाय प्रहस्तप्रेषणं, ततः प्रहस्तवाक्यश्रवणसमनन्तरं यक्षराजः पितृसमीपगमनं, पित्रनुज्ञया लङ्काविसर्जनपूर्वकं कैलासस्थानगमनं, ततो दशग्रीवादीनां लङ्काप्रवेशं चाहैकादशे ११

अथ दशवदनस्य लङ्कायामभिषेचनं, शूर्पणखाविद्युज्जिह्वयोः परिणयं, ततो मृगयार्थं विपिनेऽटमानेन दशकण्ठेन सदुहितृकस्य मयस्य दर्शनं, ततोऽन्योन्यवंशविचारपूर्वकमग्रः पुरस्तान्मन्दोदरीपाणिग्रहणं, कुम्भकर्णेन वैरोचनदौहित्र्या विद्युज्जिह्वायाः पाणिपीडनं, विभीषणेन शैलूषस्य गन्धर्वराजस्य पुत्र्याः सरमायाः पाणिग्रहणं, मन्दोदर्यां मेघनादजननं चाह द्वादशे १२

अथ ब्रह्मशापान्निद्राविष्टस्य कुम्भकर्णस्याग्रजप्रेषितैः शिल्पिभिः शयनगृहनिर्माणम्, वरदानप्राप्तदशवदनकदनदूयमानत्रिभुवनदुःखशमनाय वैश्रवणेन स्वदूतमुखेन स्वस्य तपश्चरणकालसन्निहितगौरीनिरीक्षण-

दग्धेक्षणस्यात्युग्रतपसाऽऽराधिताच्छंकरात्पिङ्गलेक्षणत्वप्राप्तिं, तेन मैत्रीलाभनिदर्शनपूर्वकं दौर्जन्यं त्यक्त्वा लोकमित्रो भवेति प्रतिबोधितस्य दशमुखस्य त्रिलोकजैत्रयात्रामाचष्ट त्रयोदशे १३

अथ महोदरप्रहस्तमारीचशुकसारणधूम्राक्षादिभिः संवृतस्य रजनीचरपतेः कैलासगमनं, तत्र यक्षराक्षसबलयोरायोधनं, तत्र संकोचकण्टकेन मारीचताडनं, पुनर्मारीचेन तोरणदण्डेन यक्षध्वंसनं चाह चतुर्दशे १४

अथ रक्षःसंघनिर्जितयक्षौघवीक्षणातुलरोषेण धनाध्यक्षेण प्रेरितस्य मणिभद्रस्य दशवदनगदाप्रहारेण पार्श्वमौलित्वं, पुनर्मारीचादीनां पलायनं, ततो दशवदनस्य त्र्यम्बकसखेन सद्बुद्धिबोधनं, तदशृण्वता दशाननेन गदाभिहतस्य कुबेरस्य पलायनं, पुष्पकापहरणं चाकथयत्पञ्चदशे १५

अथ दशवदनो धनदं निर्जित्य जयलक्षणं पुष्पकमारूढो मन्त्रिभिः सह कार्त्तिकेयोत्पत्तिस्थानमतिशोभायमानं शरवणमतीत्य किंचिद्दूरं गत्वा पुष्पकं विष्टब्धं वीक्ष्यावरुह्य मारीचसहायो नन्दिना क्रीडमानयोः शिवयोर्निवासभूतः पर्वतोऽयं देवैरपि दुरवगाह्य इति प्रतिषिद्धोऽपि द्वितीयशंकरेणावस्थितेन नन्दिना परिहसितेन मद्रूपसदृशाकारैर्वानरैस्तव कुलनाशो भवितेति शप्तो निजभुजसंचालितकैलासपरिभ्रमणकातरागराजसुताश्लेषपरवशभूतेशपादाङ्गुष्ठविन्यासविमृदितभुजविंशतिः सामगानपूर्वकं [illegible]स्तुतिजातैः शंकरे संतोषिते तेनैव मोचितोऽसावास्मिन् निस्त्रिंशमादायाखिललोकरावकाक्रन्दनेन रावणाभिख्यां वहन् महीतले राज्ञां हिंसाया आजगामेत्याह षोडशे १६

अथ रावणेन हिमवद्गिरिसानौ तपश्चरन्त्याः कस्याश्चिच्चीराजिनधारिण्या नामप्रश्नं, कुशध्वजस्य वेदाध्ययनकाले वचसो वेदमयविंदूत्पन्नत्वाद्वेदवतीसंज्ञालाभकथनं, पुनस्तेन भार्यात्वप्रार्थनं, तदलाभात् केशग्रहणं, तया करेण तद्गृहीतकेशच्छेदनं, तव वधार्थं पुनरुत्पत्स्ये इति शापोत्सर्गपूर्वकमग्निप्रवेशं चाह सप्तदशे १७

अथ रावणेनोशीरदेशे सत्रं कुर्वतो मरुत्तस्य युद्धाह्वानं, तद्यज्ञार्थमागतानामिन्द्रयमवरुणकुबेराणां मयूरवायसहंसकृकलासरूपप्राप्तिं, पुनरनेनाग्रजजयप्रशंसनं, तच्छ्रुतवता मरुत्तेन परिहासकरणपूर्वकं युद्धाभिगमनं, संवर्तमुनिना तन्निरोधनं, जयोद्घोषणपूर्वकं रावणस्यान्यतो गमनं, मयूरवायसहंसकृकलासानामिन्द्रयमवरुणकुबेरैर्वरप्रदानं चाहाष्टादशे १८

अथ रावणस्य भूमण्डलभ्रमणं, तत्रस्थितराज्ञां निर्भर्त्सनपूर्वकमयोध्याधिपस्यानरण्यस्य स्ववंश्येनास्य वधाय शापप्राप्तिं च प्राचीकशदेकोनविंशे १९

अथ रावणस्य भूमिगतसकलमानवहिंसामसहमानस्य नारदस्यागमनं, पुनरनेन यमजयाय रावणप्रेषणम्, तद्वीक्षणाय नारदस्य यमलोकगमनं चाचष्ट विंशे २०

अथ पूर्वमागतेन नारदेन यमनिकटे रावणागमननिवेदनं, तत्काल एव पुष्पकविमानदर्शनम्, आगतेन रावणेन नारकीबाधाविमोचनं, तद्दर्शनकुपितान्तकभृत्यहिंसितस्वसैन्यवीक्षणजनितरोषस्य रावणस्य यमकिङ्करैर्युद्धारम्भं, तैर्विध्वंसितात् पुष्पकादभिहतस्य रावणस्य मूर्च्छितस्य पतनं, पुनरुत्थितेनानेन पाशुपतास्त्रमोक्षणं, तेन यमकिङ्करदहनं चाहैकविंशे २१

अथ रावणबाधितस्वकिङ्करार्तस्वररक्षोजयध्वनिं श्रुतवतो यमस्य युद्धाभिगमनं, सूतानीतस्यातिभीषण्यज्वालामालापरीतस्य पार्श्वयोर्मृत्युकालाभ्यामधिष्ठितस्य रुधिरवर्णवाजियुतस्य पाशतोमरशक्तिप्रभृत्यायुधस्तोमपरिवृतस्य रथस्यारोहणं, मृत्युना रावणवधाय प्रार्थनं, तन्निरोधनपूर्वकं यमेन सर्वजगत्संवर्तकृत्कालदण्डतोलनं, तत्रामरचकितैरमरैः सह परमेष्ठ्यागमनं, यमसमीपे ब्रह्मणाऽमोघस्य कालदण्डस्योपसंहारप्रार्थनपूर्वकं रावणस्य निजवरप्रदानप्रकटनं, यमस्यान्तर्धानं, रावणस्य जयघोषेण यमलोकात् प्रतिनिवर्तनं चाह द्वाविंशे २२

अथ यमलोकादागतेन रावणेन मारीचादीनां समागमं, पुनरनेन रसातलगमनसमये पयोनिधिदर्शनं, भोगवत्यां मणिमतीनगरस्थैर्निवातकवचैः सहास्य संवत्सरान्तमायोधनं, ततः पितामहनियोगेन तैः सह मैत्रीम्, अश्मनगरे कालकेयहननं, तत्रैव शूर्पणखायाः

भर्तुर्विद्युज्जिह्वस्य शिरश्छेदनं, ततः मणिलेन्द्रनील-दर्शनं, तत्र क्षीरोदनिदानं क्षीरं स्रवन्त्याः पशुपति-वृषभमातुश्चन्द्रजनयित्र्याः फेनपानां जीवातोर्वैरारण्याः प्रदक्षिणपूर्वकमनवरतनिष्यन्दमानामन्दतोयधाराकीर्ण-परिसरपाण्डुराभ्रसदृशप्राचेतसालयनिरीक्षणासहिष्णु-दशवदनशरदर्पानबलाध्यक्षवीक्षणसंजनितक्रोधानां वरुणतनयाना युद्धाभिगमनं,तैर्दशमुखस्य युद्धविमुखी-करणं, पुनर्महोदरेण तेषां रथभञ्जनं, ततो रावणेन तेषां पराभवं पुनर्वरुणान्वेषणं, प्रहसेन वरुणमन्त्रिणा वरुणस्य ब्रह्मलोकयात्राकथनम्, अस्य जयघोषेण प्रतिनिवर्तनं चाह त्रयोविंशे २३

अथ रावणेन लङ्कागमनवेलायां पथि देवगन्धर्व-नागयक्षसिद्धनरेन्द्रकन्यापहरणं, तासां स्वजनविश्लेप-दुःखदशाविरर्गलनिर्गताश्रुपरिषिच्यमानात् पुष्पकात् ताभिः लङ्काप्रवेशरामयेऽशुभस्य चकयात्रह्मण्योक्त्या सह भूमौ पतितायाः स्वसुः शूर्पणखया आश्वासनपूर्वकं खरदूषणत्रिशिरःप्रभृतीनां चतुर्दशसहस्राणां राक्षसानां जनस्थानप्रेरणं, तत्र खरेण राज्यपरिपालनं चाह चतुर्विंशे २४

अथ रावणस्य निकुम्भिलागमनं, तत्र प्रवर्तित-यागदीक्षितस्य कृष्णाजिनधरस्य मौनव्रतस्य स्वसुतस्य निरीक्षणं, किमेतदिति प्रश्नं, शुक्रेण माहेश्वरयागकथनं, तल्लब्धस्यन्दनशत्रुमोहिनीमायेषुधिबाणचापास्त्रलाभ-निवेदनं, ततो भ्रात्रा पुत्रेण च सह स्वभवनगमनं, पुष्पकात्तासामपहृतानामवतरणं, विभीषणेन भ्रातुर्गर्हणं, पुनरिन्द्रं जेतुं सपुत्रस्य सकुम्भकर्णस्य सहस्राक्षौहिणी-सैन्यपरीतस्य प्रस्थितस्यास्य मध्येमार्गं स्वयशसा सह स्वसारं कुम्भीनसीमपहृतवतो मधुनाम्नोऽसुरस्य वधार्थं मधुपुरगमनं, तत्र तस्याऽलाभेन तदन्वेषणं, ततः पादपतितायै भर्तृभिक्षार्थिन्यै कुम्भीनस्यै अभय-प्रदानं, तच्छ्रुत्वाऽऽगतेन मधुनेन्द्रजयाय प्रस्थानं, रात्रौ कैलासे सेनानिवेशं चाह पञ्चविंशे २५

अथ पुष्पितानेकानोकहजालमण्डितगन्धर्वकृतरम-णीयगानशोभितपरिसरे कैलासे चन्द्रोदयदर्शनावशे-न्द्रियस्यास्य संभोगाभिलापसमयसमागतायाः रम्भायाः बलात्कारं, तदाकर्णनकुपितनलकूबरशापं, ततःप्रभृत्य-कामयानाबलाबलात्कारनिराकरणं चाह षड्विंशे २६

अथ रावणस्येन्द्रलोकगमनम्, आगतं रिपुं श्रुत्वा महे-न्द्रेण युद्धसहायार्थं विष्णुप्रार्थनं, कालान्तरे तस्य मय्यैव मरणं भविष्यति त्वमेव युध्यस्वेति तेन नियोगं, ततो देवराक्षसबलयोः संकुलयुद्धं, मारीचप्रहस्तमहा-पार्श्वमहोदराकम्पननिकुम्भशुकसारणसंह्रादधूमकेतु-महादंष्ट्रघटोदरजम्बुमालिमहाह्रादविरूपाक्षसुप्तघ्न-महाकायातिकायदेवान्तकनरान्तकसुप्तघ्नयज्ञकोपदुर्मुख-दूषणत्रिशिरःखरप्रभृतिभिः सह युध्यमाने दशग्रीवे सावित्रेण वसुना सुमालिनो वधमभ्याचष्ट सप्तविंशे २७

अथ सावित्रगदाभस्मीकृतसुमालिवीक्षणजाता-मर्षस्य मेघनादस्य जयन्तेन साकं द्वन्द्वयुद्धं, ततो मातामहेन जयन्तहरणं, रुद्रैः कुम्भकर्णशरीरदलनं, रावणेन्द्रयोः परस्परं हेतिभिः प्रहारमप्याहाष्टाविंशे २८

अथ रावणबलस्य दशांश विशेषितत्वं, ततो देव-सेनया रावणाक्रमणं, द्रीक्षणजनितामर्षेण रावणिने-न्द्रग्रहणं, सर्वेषां लङ्कागमनं चाहैकोनत्रिंशे २९

अथ ब्रह्मणो लङ्कागमनमिन्द्रविमोचननैमित्तिक-मिन्द्रजितो माहेश्वरयागे निर्वर्तितेऽमरत्वं, यागासमाप्तौ तत्क्षणमरणमाप्नुयामिति वरप्रार्थनं, तथैव भवत्विति ब्रह्मणाऽङ्गीकरणपूर्वकमिन्द्रविमोचनं, त्रिदिवगमना-शक्तस्येन्द्रस्य विधात्राऽहल्याबलात्कारजनितमुनिशाप-निवर्तनहेतुभूतवैष्णवयागकरणबोधनं, निर्वर्तितवैष्णव-यज्ञेन वज्रिणा त्रिदिवाक्रमणं चोक्तवताऽगस्त्येन राघव-प्रशंसनं चाह त्रिंशे ३०

अथ पृष्टेनागस्त्येन रावणपराजयकथनमारभमाणेन रावणस्य माहिष्मतीपुरगमनं, तत्र वसुरेतःपुत्रस्यार्जु-नस्य जलक्रीडागमनश्रवणान्नर्मदागमनं, तत्र सैकत-वेदिकायां सुवर्णलिङ्गार्चनं चाहैकत्रिंशे ३१

अथ कार्तवीर्यार्जुनभुजसेतुपूरितजलप्रवाहसंप्लावि-तार्धनिर्वर्तितमहादेवपूजोपकरणस्य मन्त्रिभ्यां शुक-सारणाभ्यां विज्ञातवृत्तान्तस्य रावणस्य कार्तवीर्येण बन्धनं, माहिष्मतीनगरप्रवेशं चाह द्वात्रिंशे ३२

अथार्जुनबद्धं रावणं विज्ञाय पुलस्त्येन विमोचनं, तयोरग्निसाक्षिकं सख्यकरणं च न्यवेदयत्त्रयस्त्रिंशे ३३

अथ रावणस्य किष्किन्धागमनम्, तत्र संध्यार्थं वालिनो दक्षिणसमुद्रगमनं श्रुत्वा तत्रारुपष्टपदविन्यासं गत्वा वालिनं ग्रहीतुमुद्युक्तस्यास्य वालिना कक्षपुटे ग्रहणं, पश्चात्पश्चिमसमुद्रयानं, तत उत्तराब्धिगमनं, पूर्वसमुद्रे तेनैव सह विगाह्य संध्यामुपास्य किष्किन्धोपवनसीमनि प्रक्षेपणं, ततः कुत इति प्रश्नमुभयोर्मैत्रीप्रसङ्गम्, किष्किन्धायामेकमासावधि वासं चाख्याचष्ट चतुस्त्रिंशे ३४

अथ श्रीरामेणातिबलशालिनो हनुमतः साचिव्ये सत्यपि सुग्रीवविप्रवासकारणप्रश्नं, पुनः कुम्भसंभवेन केसरिणः क्षेत्रेऽञ्जनायां जगत्प्राणेनास्य जननं, क्षुधितेन शिशुना फलबुद्ध्योदितस्यादित्यस्य जिघृक्षां, सूर्यबिम्बसमीपे सूर्यं ग्रहीतुमागतस्य विधुन्तुदस्य ग्रहणोद्यमनं, तस्य रोदनमभिज्ञायेन्द्रागमनमिन्द्रवाहनस्यैरावतस्यापि जिघृक्षां वीक्ष्य वज्रिणा कुलिशेन शिशुहननं, ततो भगवतो वायोर्जगतां प्राणैः सह शिशुं हृत्वा उदयगुहाप्रवेशं, ततो जगतो निश्चेष्टाव्यापारभीतैरमरैः सह सर्वभूतैः प्रार्थितस्य [illegible] गमनम्, गुहायां वायुना नीतस्य शिशोर्वीक्षणमभिहितमित्याचष्ट पञ्चत्रिंशे ३५

अथ [illegible] हस्तस्पर्शेनोज्जीवनम्, ततः सर्वदिक्पालकैः स्वस्वास्त्रैरवध्यत्वम्, आदित्येन स्वतेजसि शततमांशदानपूर्वकं स्वस्मिन्विद्याभ्यासयोग्यतायै वरप्रदानम्, विश्वकर्मणा स्वसृष्टायुधैरवध्यत्वं, ब्रह्मास्त्रपाशुपतास्त्रैरप्यवध्यत्ववरप्रदानं, तेषामन्तर्धानं, वज्रप्रहारेणास्य हनुमत्संज्ञालाभं, पुनरस्य ऋष्याश्रमध्वंसनजनितऋषिशापेन स्वबलविस्मारणम्, स्तोत्रेण स्वबलस्फुरणानुग्रहप्रसङ्गम्, पुनरनेन हनुमता सूर्योन्मुखेन पृष्ठगमेन ससूत्रवृत्त्यर्थपदानां नवव्याकरणानामध्ययनं चोक्तवता अगस्त्येन गमनानुज्ञायाचनं, दाशरथिना यज्ञायागमनप्रार्थनं चाह षट्त्रिंशे ३६

अथ प्रभाते वन्दिभिर्मागधैर्वैतालिकैर्विरचितस्तोत्रस्य श्रीरामस्य शयनादुत्थानं, ततो निर्वर्तितनित्यकृत्यस्य सभाप्रवेशं, भ्रातृभिः सुग्रीवादिभिर्विभीषणादिभिः कथालापं चाह सप्तत्रिंशे ३७

अथ रामेण भरतेन सार्धं मिथिलायै जनकप्रेषणं, लक्ष्मणेन सह युधाजितो राजगृहाय प्रेषणं, ततः सख्युः प्रतर्दनस्य काश्यै प्रेषणं चाहाष्टात्रिंशे ३८

अथ राज्ञां स्वपुरगमनं, भरतलक्ष्मणशत्रुघ्नैस्तद्दत्तसंमानद्रव्यानयनं, तद्द्रव्याणां सुग्रीवविभीषणयोः समर्पणम्, अङ्गदहनुमतोः प्रशंसापूर्वकं सुग्रीवनिवेदनम्, तयोः स्वाभरणान्यवमुच्यार्पणम्, नीलनलकेसरिकुमुदगन्धमादनसुषेणपनसमैन्दद्विविदजाम्बवद्गवाक्षविनतधूम्रप्रजङ्घसन्नादद[illegible]सुखादीनां प्रशंसापूर्वकं वस्त्राभरणकनकादिभिः संमानं, तैः सह बहुकालयापनं चाहैकोनचत्वारिंशे ३९

अथ सुग्रीवादीनां किष्किन्धायै प्रेषणं, हनुमतोऽभिमतवरप्रदानं. लङ्कायै विभीषणप्रेषणं, हनुमते हारदानम्, [illegible] रामवियोगजनितदुःखपूरितनेत्राणां प्रयाणप्रशंसनं चाह चत्वारिंशे ४०

[illegible] धनदप्रेषितपुष्पकागमनं, पुष्पकविमानेन [illegible] प्रार्थनं, पुना रामेण स्वस्मरणकालसान्निध्यनियोजनपूर्वकं कुबेरं प्रति प्रेषणम्, अमानुषविमानकृतप्रार्थनाविलक्षेण भरतेन रामराज्यप्रजानन्दविषयप्रशंसनं चाहैकचत्वारिंशे ४१

अथ कदाचिच्चम्पकाशोकपुन्नागपनसपाटलिलोध्रकोविदाररसालतालतालतमालकुरबकमरुवकातिन्दुकाश्चनोकहजालमण्डिते पद्मोत्पलकुवलयकुमुदकह्लारनिवहनिबिडितवापीकूपोपकण्ठे धिक्कृतनन्दनचैत्ररथरामणीयके मल्लिकामालतीकुसुमसुरभिगन्धवहवीजिते प्रमदावने जनकतनयया रममाणेन रामेण पुत्रलाभसूचकदौर्हृदसमयेऽस्मिन् तव किमभिलषितामिति पृष्टया तया मुनीनामाश्रमावलोकनापेक्षाकथनं, तथैव श्वो भवित्विति रामेण कथितमित्याचष्ट द्विचत्वारिंशे ४२

अथ विजयमधुमत्तकाश्यपपिङ्गलकुटसुराजकालिय-भद्रदन्तवक्रसुमागधादिपरिहासकथावर्णनसमये रामेण पौरापवादः पुरे यः कश्चिदस्ति वा न वेति पृष्टेन भद्र-नाम्ना चारेण सीताविषयकापवादकथनं, पुनः सत्यमिति सभ्यानामनुवदनं चाह त्रिचत्वारिंशे । ४३

अथानीतानां भ्रातॄणामाश्लेषपूर्वकं रामेण युष्मत्सहाय-संपत्त्या राज्यं परिपालयितास्मि अद्य मया युष्मासु वक्तव्यमस्तीत्युक्तानां भरतलक्ष्मणशत्रुघ्नानां शङ्काकुल-चित्ततामवर्णयच्चतुश्चत्वारिंशे ४४

अथ सीताया आत्मनश्च कुलप्रभाववर्णनं, लङ्कायां सीताया अग्निप्रवेशज्ञापनं, सीताविसर्जनेनापि स्वस्य लोकाराधनवृत्तमनूद्य मुन्याश्रमावलोकनाभिलाप-व्याजेन सीतायास्तमसातीरे लक्ष्मणेन त्यागाय नियोजनं रामस्य स्ववचनप्रत्युत्तरदानाभावाय शपथं चाचष्ट पञ्च-चत्वारिंशे ४५

अथ प्रभाते लक्ष्मणेन सीतायामग्रजाज्ञानिवेदन-पूर्वकं सुमन्त्राधिष्ठितरथारोहणं, मार्गे दुर्निमित्तनिरी-क्षणत्रस्तया सीतया लक्ष्मणे तन्निवेदनं, रात्रौ गोमती-तीरे सर्वेषां वासं, प्रभाते रथारोहणं, मध्याह्ने गङ्गा-तीरे सौमित्रिकृतरोदनाय सीतया समाश्वासनं, गङ्गा-तरणाय तरण्यारोहणं चाह षट्चत्वारिंशे ४६

अथैतेषां गङ्गातरणं, ततो लक्ष्मणस्य दुःखातिरेक-दर्शनेन सीतायाः प्रश्नमनेनाग्रजाभिप्रायनिवेदनपूर्वक-मत्रैव वाल्मीक्याश्रमोपकण्ठे वसेति कथितमित्याह सप्तचत्वारिंशे ४७

अथ सौमित्रिवाक्यश्रवणमूर्च्छितायाः सीतायाः पतनं, पुनर्लब्धसंज्ञाया रोदनं, स्वस्या अरण्यवास-प्रतिज्ञां, पुनर्लक्ष्मणसुमन्त्रयोर्दूरगमननिरीक्षणादिर-चितप्रलापं चाहाष्टचत्वारिंशे ४८

अथ मुनिपुत्रैः सीतारोदनं श्रुतवता वाल्मीकिना स्वाश्रममानीतायाः सीताया ऋषिपत्नीषु समर्पण-मकथयदेकोनपञ्चाशे ४९

अथ सीतारामयोर्दुःखस्मरणसंतप्तमानसस्य लक्ष्म-णस्य दुःखनिवारणाय सुमन्त्रेण पूर्ववृत्तान्तकथनोप-क्रममवर्णयत पञ्चाशे ५०

अथ सुमन्त्रः पुत्रोत्पत्तिं तेषामायुःपरिमाणं च पृच्छते दशरथाय, दुर्वाससाऽत्रिपुत्रेण विष्णुना स्वचक्रेण भृगुपत्न्या हननं, ततः कुपितस्य भृगोः शापं, तद-नङ्गीकरणात् भृगोरेव बाधां, पुनः पादग्रसितस्य तस्य शापाङ्गीकरणात्तव पुत्रत्वेनावतीर्णस्य विष्णोः पत्नी-वियोगमेकादशसहस्रवर्षावधिपरिमितायुःपरिमाणं, कुश-लवयो राज्येऽभिषेकं च कथितमित्याचष्टेत्याहैकपञ्चाशे ५१

अथ रात्र्यामनयोः केशिन्यां वासं, मध्याह्नेऽयोध्या-प्रवेशं, लक्ष्मणेन दूयमानमानसाय रामाय नीतिनिदर्शन-पूर्वकं समाश्वासनं, ततो वीतदुःखस्य रामस्य संतुष्टिं चाह द्विपञ्चाशे ५२

अथ लक्ष्मणवाक्यश्रवणसंतुष्टेन रामेण विरचित-लक्ष्मणप्रशंसनं, त्रिचतुर्दिनावधि कार्याणां स्वस्यादर्शनेन शापभीत्या पूर्वं नृगनाम्नो राज्ञः स्वगोदानजनित-विवादयोर्विप्रयोः कलहनिवृत्त्यर्थमागतयो राजदर्शनमल-भमानयोः शापेन कृकलासताप्राप्तिं, कालान्तरेऽवतरिष्य-माणेन वासुदेवेन शापविमोचनरूपां कथां कथयित्वा कार्यिणां वीक्षणार्थं लक्ष्मणप्रेषणं चाह त्रिपञ्चाशे ५३

अथ नृगः किमकरोदिति लक्ष्मणाक्षिप्तेन रामेण कथितं नृगस्य मन्त्रिषु स्वपुत्रस्य वसो राज्याभिषेक-नियोजनं, तस्य राजधर्मानुशासनं, निदाघवर्षहिमघ्नानां श्वभ्राणां निर्माणं, तत्रास्य प्रवेशं चाह चतुष्पञ्चाशे ५४

अथापरां कथां वक्तुमुद्युक्तेन रामेण कथित-मिक्ष्वाकोर्द्वादशेन पुत्रेण निमिना गौतमाश्रमाभ्याशे वैजयन्तपुरनिर्माणं, तत्र दीर्घसत्राय वसिष्ठवरणं, पुन-रत्र्यङ्गिरसभृगूणां वरणम्, इन्द्रेण पूर्वाहूतस्य वसिष्ठस्य विनाभावाद्राज्ञो गौतमेन यागपूरणमनन्तरमागतेन वसिष्ठेन राज्ञो विदेहत्वशापं, क्रुद्धेन राज्ञाऽपि शापितस्य वसिष्ठस्यापि विदेहत्वप्राप्तिं च निवेदयामास पञ्चपञ्चाशे ५५

अथ विदेहेन वसिष्ठेन पितुर्ब्रह्मणः [illegible] शरीरार्थं स्वस्य [illegible], तेन मित्रावरुणयोः [illegible] प्रवेश्य निवेशनं, क्षीरसागरे वरुणलोक-[illegible] प्राप्तेन मित्रेण पूर्ववृतायाः ऊर्वश्या वरुणेन पुनर्वरणं, तस्या अ(न)ङ्गीकाराद्वरुणेन कुम्भे रेतस उत्सर्जनं, ततो मित्रेणोर्वश्याः पृथिव्यां पुरूरवसप्राप्तये शापोत्सर्गं, तथैव पुरूरवसो नहुषोत्पत्तिं चाह षट्पञ्चाशे ५६

अथ तस्मात्कुम्भात्त्वाहं तव सुत इति मित्रमुक्त्वा-ऽगस्त्यस्य निर्गमनं, ततो मित्रावरुणयोर्वसिष्ठसंभवं, जातमात्रस्य वसिष्ठस्येक्ष्वाकुणा पौरोहित्याय वरणं, निमेर्देहं गन्धतैलादिभिः संरक्ष्य मुनिभिर्यागपूरणं,

तुष्टेन भृगुणा चोदितैर्देवैर्निमेः सर्वप्राणिनेत्रेषु वासाय वरप्रदानम्, ऋषिभिर्मथिताच्चदेहादुत्पन्नस्य मिथिरिति जननाज्जनक इति विचेतसो देहाज्जन्मना वैदेह इति च नाम्नां लाभं, मिथेरावासभूतस्य पुरस्य मिथिलेति नामप्राप्तिं चाह सप्तपञ्चाशे ५७

अथ लक्ष्मणेन निमेरशमस्य हेतुप्रश्नं, रामेण सर्वे ययातितुल्या न भवेयुः, पुरा ययातेर्द्वे भार्ये तयोरेका दैत्यतनया शर्मिष्ठा अन्या शुक्रदुहिता देवयानी तयोः क्रमेण पूरुर्यदुरिति द्वौ पुत्रावास्ताम्, राज्ञः शर्मिष्ठापूर्वां प्रीतिमसहमानयोर्दुहितृदौहित्रयोः प्रीत्यै शुक्रेण ययातिर्जरापीडितशरीरो भवेति शापोऽभूदिति कथितमित्याहाष्टपञ्चाशे ५८

अथ ययातेरुशनःशापप्राप्तां जरां पूरौ विनिमय्य यौवनग्रहणं, राज्ञः प्रार्थनामनङ्गीकुर्वते यदवे राक्षसत्वाय शापदानं, पूरोर्यौवनं पुनर्दत्त्वा राज्याभिषेकं चाहैकोनषष्टितमे ५९

अथ कदाचिद्वसन्तसमये सभायां श्रीरामसान्निध्ये सुमन्त्रेण यमुनातीरवासिनां भार्गवच्यवनादितपस्विनामागमननिवेदनं, पुनर्द्वाःस्थेनान्तःप्रवेशितानामुपायनग्रहणपूर्वकमागमनकारणप्रश्नं, श्रीरामकृतकार्यनिर्वहणसङ्गरश्रवणसंतुष्टैर्विरचितराघवप्रशंसनं चाह षष्टितमे ६०

अथ भार्गवेण ब्रह्मण्यस्य शरण्यस्य देवप्रियस्य लोलापुत्रस्य मधोस्तपसाऽऽराधितेन भगवता शंकरेण स्वशूलप्रदानम्, अथ तेन स्ववंश्यानामपि पारम्पर्येण शूलस्यैवार्थाभ्यर्थनम्, एतच्छूलं तव पुत्रस्यैकस्यैव तिष्ठतु तथापि यदा बहिर्निर्गत्य शूलविरहितो युद्ध्येत तदा स मरिष्यति शूलं मत्समीपमागमिष्यतीति महादेववरप्रदानमपि निवेदितवता तस्य तत्पुत्रस्य लवणस्य दुश्चेष्टितं किं ब्रूमो वयं बाधिताः रावणवधं श्रुत्वा लवणान्तकस्त्वमेवेति मनसि निश्चित्य त्वां शरणं भजाम इति कथितमित्यवोचदेकषष्टितमे ६१

अथ रामेण लवणः किमाहारः किमाचारः कुत्रास्त इति पृष्टैर्मुनिभिर्लवणस्याहारो ह्याहारा मानुषाः सत्त्वानि सर्वाणीति कथितं श्रुतवता लवणवधः कस्यांशोऽयमिति पृष्टयोर्भरतशत्रुघ्नयोः शत्रुघ्नेन लवणो ममैवांश इति प्रार्थितेन रामेण शत्रुघ्नस्य मधुपुराभिषेचननियोजनं चाह द्विषष्टितमे ६२

अथाभिषेचनायाग्रजनियोजितेन शत्रुघ्नेनाग्रजयोः स्थितयोरयमभिषेको मम व्रीडाकरोऽप्यग्रजाज्ञाकैङ्कर्यनिर्वहणे मम दोषो न भवेदिति प्रार्थितेन श्रीरामेण ब्राह्मणैर्वसिष्ठादिभिर्ऋत्विग्भिर्नैगमैर्मन्त्रिभिः कन्याभिश्चाभिषेचितस्य शत्रुघ्नस्य पुरा मधुकैटभवधार्थं भगवता नारायणेन सृष्टस्य शरस्य प्रदानपूर्वकं लवणवधोपायबोधनं चाह त्रिषष्टितमे ६३

अथाग्रजदत्तचतुरङ्गबलमग्रतः प्रस्थाप्य वर्षाकाले लवणे बहिर्निर्गते मधुपुरद्वारं सेनां पृष्ठतः कृत्वा त्वमेक एव निरुन्त्स्वेति रामेण बोधितः शत्रुघ्नः सेनां प्रस्थाप्य मासात् परं सर्वान्नमस्कृत्य प्रयाणोद्युक्तोऽभूदित्याचष्ट चतुःषष्टितमे ६४

अथ साकेतान्निर्गतेन पथि द्विरात्रमुषित्वा वाल्मीकेराश्रमं गतेनानेन शत्रुघ्नेन तत्रत्ययज्ञावभूत वीक्ष्य पृष्टेन वाल्मीकिना युष्माकं पूर्वकेण सुदासपुत्रेण वीरसहेन बाल्य एव मृगयायां शार्दूलरूपिणोर्द्वयोर्निशाचरयोर्निर्मृगीकृतवनयोरन्यतरस्य वधेनावशिष्टो राक्षसो वसिष्ठवेषं धृत्वा सौदासं वसिष्ठ इव सामिषमन्नं याचित्वा महानसे रूपान्तरेण सूदो भूत्वा मानुषमांसं पक्त्वा वसिष्ठाय दापयित्वाऽन्तरधात् तदन्नदानरुष्टेन वसिष्ठेन शप्तेन राज्ञा प्रतिशापाय जलाहरणं, तत्पत्न्या मदयन्त्या निषिद्धेन स्वपादावोक्षणात् कल्माषपादाभिख्यां गतेन पुनः प्रार्थिताद्वसिष्ठाच्छापाविमोचितेन विरचितेयं यज्ञभूमिरिति कथा निदर्शितेत्याह पञ्चषष्टितमे ६५

अथ यस्यां रात्र्यां शत्रुघ्नस्य पर्णशालायां वासः, तस्यामेव रात्र्यां सीताया दारकद्वयप्रसवं, तच्छ्रुतवता वाल्मीकिना येन कुशमुष्टिना लवेन च रक्षाबन्धनं कृतं ताभ्यां कुशलवाभ्यामेव तयोः कुशलवाविति नामकरणं, तयोर्जननं श्रुत्वाऽऽनन्दपरवशस्य शत्रुघ्नस्य मुनिभिः सह प्रयाणं चाह षट्षष्टितमे ६६

अथ शत्रुघ्नेन लवणः कीदृक्प्रभावस्तस्य शूलेन के निहता इति पृष्टेन भार्गवेण च्यवनेन पूर्वं सर्वविजयी युष्मत्कुलकूटस्थो मांधाता स्वरिन्द्रेणार्धासनगतो भूमौ सर्वजेता त्वं न भवसि मधुपुरे लवणासुरस्त्वया न निर्जित इत्युक्तो युवनाश्वसुतो मधुपुरं गत्वा तेन शूलेन ससेनो भस्मीकृतः, त्वं विजयी भविष्यसीत्युत्साहित इत्याह सप्तषष्टितमे ६७

अथ प्रभाते स्वाहारसंग्रहार्थं पुराद्बहिर्लवणगमनं, ततः सायुधस्य शत्रुघ्नस्य यमुनानदीतरणपूर्वकं मधुपुरद्वारनिरोधनम्, अर्धदिवसे बहूनां सत्त्वानां भारमुद्वहता पुरद्वारमागतेन लवणेन शत्रुघ्ननिर्भर्त्सनं, ततो रोषाविष्टस्य लक्ष्मणानुजस्य गात्रादर्चिर्निर्गमनं, दिवि भुवि समानप्रभावस्य दशरथस्य रावणहन्तुर्भ्रातुश्च प्रभावसंकीर्तनेन सह स्वनामसंकीर्तनं चक्रे श्रुतवता स्वमातृष्वसुर्भ्रातुर्दशवदनस्य हननश्रवणातिकुपितेन लवणेनायुधाहरणार्थमवकाशप्रदानाय याचनं, तदनङ्गीकुर्वताऽनेन जीवलोकं सुदृष्टं कुरु प्राणास्तव दुर्लभा इति प्रतिवचनं चाहाष्टषष्टितमे ६८

अथ लवणशत्रुघ्नयोर्द्वन्द्वयुद्धे लवणकरविसृष्टमहातरुताडितस्य मूर्च्छितस्य राघवस्य भूमौ पतनं, तदन्तरेऽस्य स्वायुधाहरणाभिलापं विना भक्ष्योद्वहनं, तदन्तर एवोत्थितेन शत्रुघ्नेन मार्गनिरोधनपूर्वकं संवर्तसमयसमुज्ज्वलत्सूर्यमण्डलसवर्णस्यातिभीषणस्यामोघबाणस्य धारणेन बिभ्यतो लोकान्वीक्ष्य ससंभ्रमं पितामहमुपगतवतां देवानां नारायणबाणप्रभाववर्णनपूर्वकं युद्धवीक्षणार्थं विधातुरागमनम्, तत आकर्णाकृष्टविमोचितस्य बाणस्य लवणोरो भित्त्वा रसातलं प्रविश्य पुनः शत्रुघ्नकरप्रवेशं, तत्क्षण एवाहंपूर्विकया निर्गतयोर्लवणप्राणशूलयोरन्तकान्तकयोः समीपगमनं, ततः शत्रुघ्नशिरसि पुष्पवर्षपतनं, राघवजयनिरीक्षणविकसितहृदयपुण्डरीकाणां देवर्षिसिद्धचारणगन्धर्वाणां जयघोषं चाहैकोनसप्ततितमे ६९

अथ विनिपातितं लवणं वीक्ष्याभ्यागतैः पुरुहूतपुरःसरैर्देवैः शत्रुघ्नाय ससैन्याय धर्मपुरप्रवेशानुज्ञाप्रदानं, ततो विविधपण्योपशोभितापणचत्वरचैत्योद्यानाभिरामायां नानाविधतरुजालशोभिततीरया विकसितकमलकह्लारकुवलयकुमुदषण्डमण्डितया यमुनानद्या समेतायां मधुपुर्यां राघवानुजराज्यकरणं चाह सप्ततितमे ७०

अथ रामदर्शनाभिलाषेण शत्रुघ्नेनायोध्यां प्रति प्रयाणं, मध्येमार्गं वाल्मीक्याश्रमगमनं, ततोऽभिवादितेन वाल्मीकिना लवणवधश्रवणसंतुष्टेन विरचितशत्रुघ्नप्रशंसनम्, अनुगैः सह रामचरितगानाकर्णनपरवशहृदयस्य शत्रुघ्नस्योपकार्याप्रवेशं चाहैकसप्ततितमे ७१

अथ रात्रौ वाल्मीकिशिष्यकृतरामचरितगानश्रवणस्मरणादलब्धनिद्रः शत्रुघ्नः प्रभाते निर्वर्तितनित्यकृत्यो वाल्मीकिमभिवाद्य तेनाश्लिष्य विसर्जितो लब्धानुज्ञश्चायोध्यां प्रविश्य श्रीरामं दृष्ट्वाऽभिवाद्य तेन विरचितकुशलप्रश्नो नाहं मधुपुरीं गन्तुमभिलपाम्यत्रैवार्यसमीपे स्थातुमिच्छामीति रामं संप्रार्थ्यात्र स्थातुं नोचितं सप्तरात्रमिहोषित्वा ततो मधुपुरीं गच्छेति नियोजितोऽथ सप्तरात्रात् परं भरतलक्ष्मणाभ्यां दूरमन्वीयमानो मधुपुरमगमदिति प्रावोचाद्द्विसप्ततितमे ७२

अथ मृतं बालं सुतं राजद्वारि गृहीत्वा पत्नीसहायस्य द्विजवर्यस्य रोदनं, तत्कृतराजगर्हणं चावादीत्त्रिसप्ततितमे ७३

अथ द्विजदुःखसमानदुःखः श्रीरामो वसिष्ठवामदेवमार्कण्डेयमौद्गल्यकाश्यपकात्यायनगौतमजाबालिनारदादिभिर्मन्त्रिभिश्च संमन्त्र्य नारदेन युगधर्मप्रकटनपूर्वकं द्विजबालमरणकारणं शूद्रतपश्चरणं निवेद्य तमन्वेषयेति नियोजित इत्यकथयच्चतुःसप्ततितमे ७४

अथ दाशरथिर्द्विजपुत्रकलेवरसंरक्षणं नियुज्य स्मरणमात्रागतं पुष्पकमारुह्य प्रथमं प्रतीचीं तत उत्तरां पश्चात् प्राचीं चान्विष्य दक्षिणस्यां दिशि शैवलस्योत्तरपार्श्वे दुष्करं तपश्चरन्तं कंचिद्वीक्ष्य तस्य जातिमपृच्छदित्याह पञ्चसप्ततितमे ७५

अथ दाशरथिः सशरीरस्वर्गगमनाय दुष्करं तपश्चरन्तं शम्बुकनामानं शूद्रं विज्ञाय तस्यासिना शिरश्छित्त्वा देवैः पूजितस्तेषु द्विजबालजीवितागमं श्रुत्वा तैः सहागस्त्याश्रमं गत्वाऽगस्त्यमभिवाद्यागस्त्येनापि स्तुतो हस्ताभरणं स्वीकुर्विति प्रार्थितः राज्ञः स्वस्य प्रतिग्रहानर्हतां निवेद्य तेन लोकपालांशत्वेन ब्रह्मणा सृष्टं क्षुपं राजानं दृष्टान्तीकृत्येन्द्रांशत्वेन प्रतिगृहाणेति प्रार्थितो हस्ताभरणं गृहीत्वा तस्यागमनकारणमन्वपृच्छदित्याचष्ट षट्सप्ततितमे ७६

अथ कुम्भसंभवः स्वस्य हस्ताभरणागमनकारणं वक्तुमारभमाणः पुरा निर्मनुष्ये मृगपक्षिविवर्जिते वने कस्मिंश्चित् तपस्तप्तुं गतोऽहं योजनायामं कंचित् सरोवरं तत्र दृष्ट्वा तस्मिन्न सरसि हृष्टपुष्टाङ्गं कंचिच्छवं वीक्ष्य चिन्तयानः पुनराकाशे दिव्यविमानेऽप्सरोभिः सर्वाभरणभूषिताभिर्विरचितनृत्तगीतसुखमनुभवन्तमपि विमानादवरुह्य सरःस्थितं शवं भक्षमाणं स्वर्गिणमालोक्य को भवान् दिव्यपुरुष एतादृशमनर्हमाहारमङ्गीकरोषीति पृष्टो वृत्तं सर्वं वक्तुमथातिष्ठेत्याहेत्यवोचत्सप्तसप्ततितमे ७७

अथ दिव्यपुरुषः स्ववृत्तान्तं वक्तुमारभमाणः पुरा वैदर्भको राजा सुदेव इत्यभूत्, तस्य कलत्रद्वयमतिष्ठत्, तयोरेका श्वेतनामानं मामजनयदन्या मम यवीयांसं सुरथमजनयत्, पितरि स्वर्गते पौरा मामभ्यषिञ्चन्नहं वर्षसहस्राणि राज्यं धर्मतः परिपाल्य विज्ञातायुरनुजं राज्येऽभिषिच्य मृगपक्षिविवर्जितेऽस्मिन्वनेऽस्य सरसः समीपे दुष्करं तपस्तप्त्वा ब्रह्मलोकमभिसंपद्य क्षुत्पिपासातुरो ब्रह्माणं शरणं गत्वा ब्रह्मणा भवान् पूर्वं तपश्चरणकाले शरीरं संरक्षति स्म कस्मैचिद्भिक्षार्थिने यतये भिक्षां न दत्तवान् तस्मात्पाङ्क्तिवञ्चनापुष्टं स्वशरीरं सरोगतं भक्षयेत्युक्तस्तद्विमोचनमगस्त्येनाचिराद्भवितेत्युक्तं यदि भवानगस्त्योऽसि ममाभरणं गृहीत्वा मां तारयेत्यवोचत्, पुनरहमाभरणमगृह्णां शवं चान्तरधात्, श्वेतोऽपि तृप्तो दिवं जगाम तदिदं हस्तभूषणमित्याहेति प्राचीकशदष्टसप्ततितमे ७८

अथ मृगपक्षिविवर्जितस्य वनस्य वृत्तान्तं पृच्छतो राघवस्यागस्त्येन पूर्वं मनोः पुत्रस्येक्ष्वाकोः पुत्रेण शातमिकेन दण्डेन विन्ध्यशैवलयोर्मध्ये पर्वतरोधसि मधुमन्तं नाम पुरं लब्धमित्युक्तमित्याहैकोनाशीतितमे ७९

अथ बहुवर्षगणान् राज्यं पालयतो दण्डस्य स्वगुरोः शुक्रस्याश्रमगमनं, तत्रैकाकिनीं शुक्रपुत्रीमरजां दृष्ट्वा कामपरवशेन तस्या बलात्कारं वेपमानया तया शुक्रागमनप्रतीक्षणं चाहाशीतितमे ८०

अथोशनस आश्रमागमनं, क्षुत्पिपासातुरेणानेन स्वदुहितृनिरीक्षणेनानिवार्यक्रोधेन दण्डः सप्तरात्रेण सभृत्य[illegible]रेण पांसुवर्षेण निर्मनुष्यं मृगपक्षिविवर्जितमरण्यं भवत्विति च शापदानं, तदाप्रभृत्यस्य दण्डकारण्याभिधा जातेति कथनं, सूर्येऽस्तंगतेऽगस्त्येन सन्ध्यानिमित्तं रामप्रेषणं चाहैकाशीतितमे ८१

अथाप्सरोवरसेविते तस्मिन् सरसि विगाह्य सायंसन्ध्यानुष्ठानपूर्वकं श्रीरामस्यागस्त्याश्रमागमनं, कन्दमूलौषधिशाल्यन्नादिभिरातिथ्यं, तत्रैव रात्रियापनं, प्रभाते विरचितकाल्यकृत्येनागस्त्यस्तोत्रमगस्त्येनापि ऋषिनिकटे गमस्तवं, पुनरगस्त्याभिवादनपूर्वकं पुष्पकारोहणमर्धदिवसेऽयोध्यागमनं, गृहमध्यकक्ष्यायां पुष्पकादवरोहणं, पुष्पकविसर्जनं, भरतलक्ष्मणाभ्यां द्वाःस्थप्रेषणं चावोचद्व्यशीतितमे ८२

अथ द्वाःस्थेन कुमारयोरानयनं, तयोरालिङ्गनपूर्वकं रामेण राजसूययागकरणाय बोधनं, भरतेन वश्यानां सर्वेषां राज्ञां सर्वप्रजानां च हिंसामसहमानेन तन्निरोधनमग्रजेनोक्तं पूर्वजेनाङ्गीकृतमित्याह त्र्यशीतितमे ८३

अथ लक्ष्मणेनाश्वमेधयागकरणाय बोधनं, पूर्वं वृत्रे लोकत्रयं स्ववशे कृत्वा कदाचित्तपःकृतमतौ पुत्रं मधुरेश्वरं राज्ये निवेश्य दुष्करं तपः कुर्वति शक्रो विष्णुं शरणं गत्वा वृत्रोऽतीव बलवान् किंच दुष्करं तपश्चरति तद्धननविषयं त्वया विना नान्या गतिरिति प्रार्थितवानिति कथितमित्याह चतुरशीतितमे ८४

अथ वृत्रवधमशेषेण वदेति रामनियोजितेन लक्ष्मणेनेन्द्रप्रार्थनां विष्णुरवनाहं पूर्वं स्नुतस्तस्य हननं कर्तुं मम नोचितं मया विना युष्माकं नान्या गतिस्तस्मादुपायं वच्मि आत्मानं त्रेधा विभज्यैकेनांशेन वज्रमेकेनेन्द्रमन्येन भूतलं प्रविशामि तेन वृत्रं हनिष्यतीन्द्र इति देवानुक्त्वाऽन्तरधात्, ततो देवाः सेन्द्रा यत्र वृत्रस्तपति तत्र गत्वा दुःखिता बभूवुस्तदेन्द्रो वज्रेण वृत्रमहनत्, ततो वासवं ब्रह्महत्याऽन्वव्रजद्देवा विष्णुं स्तुत्वा विष्णुनाऽऽत्मीयाश्वमेधयागकरणाय बोधिता इत्युक्तमित्यकथयत्पञ्चाशीतितमे ८५

अथ ब्रह्महत्यया परीते वासवे विप्रनष्टेन्द्रं लोकं शून्यं ध्वस्तां भूमिं निरानन्दाः प्रजाश्च दृष्ट्वा देवा विष्णूपदिष्टं वैष्णवमश्वमेधं यत्रेन्द्रः स्थितस्तत्र समाचरन्, ततो ब्रह्महत्या दुर्वसा पुरत आगत्य क्व मे स्थानं विधास्यथेत्यवोचत्, ततो देवेभ्यः स्वात्मानं चतुर्धा विभज्यैकेनांशेन पूर्णासु नदीषु चतुरो वार्षिकान्मासान् दर्पघ्नी वसिष्याम्येकेन भूम्यां सदा वसिष्यामीतरेण युवतिषु मासि मासि त्रिरात्रं दर्पघ्नी निवसिष्याम्यन्येन ये ब्राह्मणहन्तारस्तत्र क्रमिष्यामीति वराँल्लब्ध्वाऽगच्छद्देवा इन्द्रं प्रणम्य विज्वरं स्वर्गमानिन्युरिति कथाशेषः पूरितो लक्ष्मणेनाश्वमेधप्रभाव एतादृश इति प्रकाशितश्चेत्युवाच षडशीतितमे ८६

अथ लक्ष्मणेन वृत्रघातचरिते समापिते रामोऽप्येनां कथां वक्तुमारभमाणः पूर्वं कर्दमप्रजापतेः सुत इलो नाम धार्मिष्ठो राजा धर्मेण प्रजाः पालयन् कदाचिन्मृगयां पर्यटन् गुहोत्पत्तिस्थानं गतस्तत्र देव्योमया रममाणेन नारीरूपेण शंभुना स्त्रीभूतं तत्रत्यपुरुषवर्गं दृष्ट्वा

मानुगमात्मानं च स्त्रीकृतं वीक्ष्यातिचकितमतिस्तमेव
वृषभध्वजं तुष्ट्वा पुरुषत्वं विनाऽन्यं वरं वरयेत्युक्तः,
पुनरुमाप्रसादेन मासमेकं पुंस्त्वं मासमेकं स्त्रीत्वं च
प्रतिपद्य मासं पुरुषो भूत्वा पुनर्मासं त्रिलोकसुन्दरीला
नाम पुरन्ध्र्यभूदित्युवाचेत्याह सप्ताशीतितमे ८७

अथ भरतलक्ष्मणयोः कथायां कौतूहलं वीक्ष्य
श्रीरामः कथां पूरयमाणः स्त्रीभूतेला सानुगा तत्र वने
रममाणाऽतिरमणीयं कंचित्सरोवरं वीक्ष्यानुगताभि-
र्विहर्तुकामा जलमध्ये तपन्तं सोमसुतं बुधम पश्यत् सोऽपीमां
दृष्ट्वा कामपरवशो बुद्ध्या विचार्य ताः स्त्रिय आहूय
तासां किंपुरुषसुखानुभवसदृशं किंपुरुषीरूपं प्रादादि-
त्यवादीदिति वर्णयामासाष्टशीतितमे ८८

अथ किंपुरुषोत्पत्तिं श्रुतवतोर्भरतलक्ष्मणयोर्भूयोऽपि
कथां कथयता रामेण विद्रुताः सर्वा दृष्ट्वा बुध इलां
सर्वाङ्गसुन्दरीं मोहपरतशोऽरमयत्, मासे पूर्णे सुप्तोत्थित
इलस्तपन्तं सोऽमसुतं वीक्ष्य मामनुगताः कुत्र गता
इत्यपृच्छत्, सोपि अश्मवर्षेण सर्वे निपातिता इत्यवो-
चत्. इलोऽपि राज्यगमनाय नैच्छत्, बुधेन संवत्सरान्तं
वसेत्युक्तो मासं पुरुषो भूत्वा मासं स्त्री भूत्वा नवमे
मासि पुरूरवसं नाम पुत्रं जनयित्वा बुधाय दत्त्वा
संवत्सरान्ते पुरुषत्वप्राप्तिकाले तेन कथाभिरभिरञ्जित
इति कथितमित्याचष्टैकोननवतितमे ८९

अथ पुंस्त्वं प्राप्त इले बुधाहूतेन संवर्तेन सह च्यव-
नारिष्टनेमिप्रमोदनमोदकरदुर्वासःप्रभृतीनां मुनीना-
मागमनं, तेष्विलवृत्तान्तानिवेदनम्, तेषामन्योन्यं संवदतां
कर्दमस्य पुलस्त्यक्रतुवषट्कारोंकारैः सहागमनमाग-
तानां द्विजानामिलहितैषिणामन्योन्यसंभाषणम्, एतैः
सह कर्दमेन प्रजापतिना महादेवप्रीत्यै अश्वमेधयाग-
करणं. प्रसन्नेन शंभुनेलस्य स्त्रीत्वविमोचनम्, शशि-
बिन्दुनाम्ना पुत्रेणाधिष्ठितं बाह्लिमुत्सृज्यैलेन मध्यदेशे
प्रतिष्ठाननगरे राज्यकरणम्, अन्ते पुरूरवसं
प्रतिष्ठाने प्रतिष्ठाप्य ब्रह्मलोकगमनम्, अश्वमेध एतादृश-
इति रामेण वर्णनं चाचष्ट,नवतितमे ९०

अथ रामप्रेरितेन लक्ष्मणेन वसिष्ठादीनामृषीणा-
मानयनं. रामेणाभिवादनपूर्वकमश्वमेधकरणाय स्वाभि-
प्रायनिवेदनम्, आशीर्वादपूर्वकं तेषामङ्गीकारम्, ततो
रामेण सुग्रीवविभीषणयो राज्ञां चाह्वानाय लक्ष्मण-
नियोजनं, नैमिशारण्ये यज्ञवाटकरणाय नियोजनं,
पुनस्तण्डुलमुद्गमाषतिलसूपस्नेहाज्यादिपूरितयाग-
सामग्रीं पुरस्कृत्य सुवर्णप्रतिकृत्या सीतया मातृभिश्च
सह भरतप्रेषणं, तत्रागच्छतां राज्ञामृषीणामुपकार्या-
निर्माणाय बोधनं चाहैकनवतितमे ९१

अथ सर्वं संस्थाप्य रामेण कृष्णसारमृगवर्णाश्व-
मोचनं. तद्रक्षणायाश्वचर्यायै च ऋत्विग्भिर्बलैश्च सह
लक्ष्मणप्रेषणं, ततो नैमिशे यज्ञवाटदर्शनविकासित-
हृदयपुण्डरीकेण रामेण तत्र निवसतां राज्ञामुपायन-
स्वीकारप्रत्यर्चनापूर्वकमुपकारिकानिवेदनं, सानुगानां
तेषां शत्रुघ्नसहायेन भरतेनान्नदानवस्त्राणां प्रदापनं, ततः
प्रणतैर्वानरैः सुग्रीवेण च विप्राणां परिवेषणम्,
उग्रतपसामृषीणां विभीषणेन प्रजाविधानमेवमहरह-
रुपचीयमानायां यज्ञसमृद्धेः संवत्सरान्तं प्रवर्तनं
चादीपयामास द्विनवतितमे ९२

अथ यज्ञवाटं प्रति सशिष्यस्य वाल्मीकेरागमनम्,
ऋषिवाटनिकट उटजपरिकल्पनं, तत्र फलमूलपूरि-
तानां शकटानां स्थापनम्, राज्ञाऽभ्यर्चितेनार्पिणा कुश-
लवयोस्तत्र तत्रोपविष्टानामृषीणां राज्ञामग्रतस्ताललय-
समन्वितं वीणागानपुरःसरं रामायणमादितो विंशति-
सर्गक्रमेणान्यूनातिरिक्तं प्रतिदिनं यथाक्रमं गायेथाम्,
कौ युवामिति पृष्टौ चेद्वाल्मीकिशिष्याविति ब्रूतामिति
नियोजनं, तन्मनसि निधाय तयोस्तत्र रात्रियापनं चाह
त्रिनवतितमे ९३

अथ तयोर्गानमाधुर्यश्रवणपरवशहृदयेन रामेणा-
हूतानां चतुर्वेदपारगाणां मूर्च्छारोहणादिस्वरलक्षण-
ज्ञानां पुराणज्ञानां सर्वशास्त्रकुशलानां पुरतस्तयोर्गाना-
रम्भे नारदोपदिष्टसंक्षेपगानपूर्वकं यागाभ्यन्तरे विंशति-
सर्गसमापनावसरे रामतुल्ययोरेतयोः रामेण अष्टा-
दशसहस्रसुवर्णदानाय भ्रातरि नियोजिते फलमूलाशिनो-
रावयोर्माऽस्त्विति ताभ्यां तन्निरोधनं, ततो रामेण
ग्रन्थकर्ता कुत्रास्ते किंप्रमाणं का प्रतिष्ठा तस्येति
पृष्टयोः कर्ता वाल्मीकिर्यज्ञसविधमभ्यागतः चतुर्विं-
शतिः श्लोकाः प्रमाणं पञ्चसर्गशतानि काण्डानि षट्
सोत्तराणि यदि गाने युष्माकमिच्छा,विस्रब्धं शृणु-
तेति प्रतिवचनं तथैव श्रुत्वा रामस्य ऋषिभिः सह
कर्मशालागमनं चोवाच चतुर्नवतितमे ९४

अथैवं बहुष्वहस्सु गायतोस्तयोर्ग्रन्थान्तरे सीतापुत्रत्वविज्ञानेन सीताशपथनिमित्तं वाल्मीकये दूतप्रेषणं. मुनिना तथैवाङ्गीकारं, राज्ञामृषीणां तन्निवेदनं, तै रामगुणश्लाघनं, ततस्तेषां विसर्जनं च व्याचष्ट पञ्चनवतितमे ९५

अथ रामाहूतानां वसिष्ठादीनामृषीणां सर्वेषां जनानां दोषप्रथोक्तॄणां च मध्ये वाल्मीकिना सीतानयनपूर्वकं सीताशुद्धिं ज्ञातवता सीतेयं निर्दोषा ममान्तरात्मा मनःषष्ठानि भूतानि च शुद्धां विदन्ति इयमशुद्धा चेदहं जन्मप्रभृत्यनुष्ठीयमानतपःफलं नानुभवामि, शुद्धेति रामोऽपि विज्ञाय लोकापवादं प्रमार्ष्टुकामो भवतीति सीताशुद्धेर्दृढीकरणं चाह षण्णवतितमे ९६

अथ वाल्मीकिनैवमुक्ते ब्रह्मवासवादिसर्वदेवेष्वागतेषु राजभिः पृथ्वीसुरैर्नागरैः शोभितायां सभायां साञ्जलिबन्धे रामे मुनिवाक्यैरेवाकल्मषैर्मम प्रत्ययेऽपि सीताशपथात् सर्वेषां प्रत्यये सति मम प्रीतिरस्तीति निवेदयति दिव्यगन्धयुतस्य वायोः प्रचारं, ततो रामं विना नान्यं मनसा स्मरामि यदि मनसा वाचा वपुषा राममेव समर्चये तदा माधवी मे विवरं दास्यतीति काषायवासिन्या सीतया शपथकरणं.क्षणेन भूतलादुत्थिते नागैर्दिव्यवपुषा धृते कमनीयसिंहासने धृतदिव्यशरीरया भूम्या गृहीतहस्तायाः सीताया उपवेशनम्, आकाशात्पुष्पवृष्टिपतनं, तस्या रसातलप्रवेशं, सर्वजगतां विस्मयं संमोहं चावर्णयत् सप्तनवतितमे ९७

अथ सीताया रसातलप्रवेशा[illegible] श्रीरामेण सकोपेन भूमिं प्रति तव सुतां सीतां जामातुर्मम समीपं नानयेथा यदि शरैः सशैलवनां त्वां विध्वंसयिष्यामीत्युदीरणं. ब्रह्मणा पूर्वकं भावं स्मर सुखं रसातलं प्रविष्टा माता पुनः स्वर्गे त्वया संगमिष्यते एतत्परिषन्मध्ये तवेदं सोत्तरं वाल्मीकिकृतं काव्यं श्रुतं शेषं भविष्यदुत्तरमुत्तमः काव्यनायकस्त्वमेव परमर्षिभिस्त्वमेवापिपूज्यः शृणुष्वावहितो मुनिभिः सहेति कथनं, पुनस्तस्यान्तर्धानं, श्रीरामेण वाल्मीकये श्वो गापयितव्यं भविष्यदुत्तरमिति निवेदनं ततः पर्णशालागमनं चावोचदष्टनवतितमे ९८

अथ प्रभाते सर्वमुनिभिर्भविष्यदुत्तरश्रवणम्, अश्वमेधं समाप्य सीतादुःखं मनसि निधायायोध्यागमनं तत्राश्वमेधशतं काञ्चनमय्या सीतया सहानेकविधयागांश्च विधायानेन स्वर्गगतानां मातॄणामौर्ध्वदैहिककरणं चावोचदेकोनशततमं ९९

अथ युधाजिता गार्ग्यप्रेषणम्, अयोध्यामागतेन गार्ग्येण युधाजिद्दत्तपारितोषिकाहरणं, रामेण प्रत्युत्थानपूर्वकं पारितोषिकस्वीकारं रामप्रश्नानुगुणमुत्तरं दत्त्वा सिंधोरुभयपार्श्वे फलमूलोपशोभितः कश्चिद्देशः शैलूषपुत्रैर्गन्धर्वैराक्रान्तस्तान्निर्जित्य स्ववशे कुरुष्व नान्यैः प्रवेष्टुं शक्यत इति युधाजिताऽभिहितमिति वदतो गार्ग्यस्य वचःश्रवणपरितुष्टेन रामेण ऋषेः पुरत इमौ भरतकुमारौ तक्षपुष्कलौ भरतो गृहीत्वा युधाजिता बलेन च सह गत्वा तान्निर्जित्य तत्र संस्थाप्य मत्समीपमागमिष्यतीत्युभयोरभिषेचनं कृत्वा भरतेन चतुरङ्गबलेन सह प्रेषणं, तेषां केकयनगरप्रापणं चाह शततमे १००

अथ भरतयुधाजितोर्युद्धाय गन्धर्वदेशगमनं, भरतमागतं श्रुत्वा युद्धायागतानां गन्धर्वाणां भरतेन सप्तरात्रं युद्धप्रवर्तनं. ततो भरतेन संवर्तास्त्रेण कामरूपिणां त्रिकोटिगन्धर्वाणां हननं, तक्षपुष्कलयोस्तक्षशिलापुष्कलावतनगर्योः प्रतिष्ठापनं, पञ्चवर्षादनन्तरं भरतस्यायोध्यागमनमग्रजाभिवादनपूर्वकं गन्धर्ववधनिवेदनं चाहैकोत्तरशततमे १०१

अथ लक्ष्मणसुतयोरङ्गदचन्द्रकेत्वोरभिषेचनं, लक्ष्मणानुगतस्याङ्गदस्य कारुपथे पाश्चात्त्यदेशेऽङ्गदीयनगरीप्रवेशं. भरतानुगतस्य चन्द्रकेतोर्मल्लविषये चन्द्रकान्तनगरीप्रवेशं, ततः संवत्सरादनन्तरं भरतलक्ष्मणयोरयोध्यागमनमेवं दश वर्षसहस्राणि सुखेन त्रेताग्निवर्चसामेतेषां धर्मात्प्रजारक्षणमवोचद्द्व्युत्तरशततमे १०२

अथ कस्यचित्कालस्य तापसरूपस्य कालस्यागमनमनेन रामाय लक्ष्मणेन स्वागमननिवेदनं, तापसदूतस्यान्तःप्रवेशनं, रामेणासनादिभिरभ्यर्चनपूर्वकमागमनप्रयोजनप्रश्नं, तेनावयोः संभाषणश्रवणदर्शने कर्तुर्वधायाज्ञां कुर्विति प्रतिवचनं, तथैव रामेण लक्ष्मणस्य नियोजनं, स्वमनीषितं दूतेनाकर्णनं चाभ्याचष्ट त्र्युत्तरशततमे १०३

अथ रामाय स्वागमनकारणनिवेदनायोपक्रममाणस्य दूतस्य तावके पूर्वभावेऽहं सर्वसमाहरः पुत्रः पुरा लोकान् संक्षिप्य महार्णवेऽप्सु शयानस्य भूधरणक्षमं

भोगवन्तं नागराजं माययोत्पाद्य मां च नाभिकमले सृष्टवतो द्वौ मधुकैटभौ जनयित्वा तयोरस्थिकूटाद्रिपरिवृतायां मेदिन्यां मम प्राजापत्यं दत्तवतस्त्वदाज्ञासृष्टदेवादिसंरक्षणायादित्यां पुत्रत्वं गतस्यानन्ताचिन्त्याद्भुतशक्तेः भूमौ रावणं सपुत्रबान्धवं निहन्तुमवतीर्णस्य सहस्राधिकदशवर्षसहस्रायुःपूर्णस्य तव देवलोकागमनेऽभिलाषो यदि सनाथा वयमिति ब्रह्मणा त्वत्सन्निधौ विज्ञापनार्थं प्रेषित इति निवेदनं, लोकसंरक्षणार्थमवतीर्णोऽहं यत एवागतस्तत्र गन्तुं कृतत्वरो भवामीति प्रतिवचनं चाह चतुरुत्तरशततमे १०४

अथ राजद्वारि दुर्वाससोऽभिगमनं, स्वागमनं रामाय निवेदयितुं लक्ष्मणप्रेषणं लक्ष्मणेनाभिवादनपूर्वकं किंकरोऽस्मि महामुने ! साधयेऽहं तवार्थमद्य रामो व्यग्रस्तद्दर्शनायासमयः कालोऽयमिति प्रार्थितस्याप्यस्य शापारम्भमसहमानेन सौमित्रिणा रामायात्रेयागमननिवेदनं, कालविसर्जनं, दुर्वाससो दर्शनाभिवादनपूर्वकमागमनकारणप्रश्नं, वर्षसहस्रसमापिततपसो मम सिद्धमन्नं दातुमर्हसीति तस्य प्रतिवचनोत्तरक्षणे सिद्धान्नोपाहरणं, भुक्त्वा संतुष्टस्यर्षेर्गमनं, दुःखसंतप्तेन रामेण कालवाक्यस्मरणं चाह पञ्चाधिकशततमे १०५

अथ प्रतिज्ञास्मरणदुःखितमग्रजं वीक्ष्य लक्ष्मणेन निजप्रतिज्ञानिर्वहणेन लोकान्पावयेति सहर्षं प्रार्थितेन रामेण मन्त्रिपुरोधसामाकारणं, पुरोधसाऽऽदिष्टेन स्वानुजविसर्जनं, ततो लक्ष्मणेन सरयूगतेन स्नातेन प्राणापानुसमीकरणपूर्वकमिन्द्रियवशीकरणं, तत्समयसमागतैर्देवैः सशरीरस्यास्य स्वर्गप्रापणं चाह षडुत्तरशततमे १०६

अथ लक्ष्मणविरहासहिष्णुना रामेण मन्त्रिणां वसिष्ठस्य पुरतो भरतं राज्येऽभिषिच्य स्वयं वनं गत्वा लक्ष्मणगतिं गमिष्यामीति निवेदनं, तच्छ्रवणमूर्च्छितानां प्रकृतीनामधःपतनम्, मूर्च्छितेन भरतेन कोसलेषूत्तरकोसलेषु च कुशलवयोरभिषेककरणाय शत्रुघ्नाय दूतप्रेषणाय च प्रार्थनं, वसिष्ठेन भूमौ पतितानां प्रकृतीनां निरीक्षणाय रामे निवेदनं, राघवेण तासामभिमतप्रश्नं, ताभिः प्रकृतिभिर्दारैः पुत्रैः सहानुयात्रावरणं, ततः कोसलेषु कुशमुत्तरकोसलेषु लवं चाभिषिच्याङ्के निधाय मूर्ध्न्युपाघ्राय चतुरङ्गबलसहाययोरुभयोः स्वपुराभ्यां प्रेषणं चाह सप्ताधिकशततमे १०७

अथ रामप्रेपितानां दूतानां मथुरागमनं, शत्रुघ्नाय लक्ष्मणत्याग-कुशलवाभिषेचन-स्वर्गगमनोद्यमनादिनिवेदनं, ततः शत्रुघ्नेन स्वपुत्रयोः सुबाहुशत्रुघातिनोर्मथुरायां वैदिशे चाभिषेचनपूर्वकं समांशेन बलप्रदानं, यथाभागं धनप्रदानं, तत एकेन रथेनागतस्य शत्रुघ्नस्यायोध्यायां रामाभिवादनं, रामे स्वानुयात्रानिवेदनं, ततो वानराणामनुगमनाङ्गीकरणं, सुग्रीवप्रार्थनाभ्युपगमं, विभीषणस्य यावच्चन्द्रसूर्यौ तिष्ठतो यावन्मेदिनी वर्तते तावत्सर्वदेवाराध्यं रङ्गनाथमाराधयन् राज्ये प्रजा धारयस्वेति नियोजनं, हनूमतो यावद्रामकथा लोके तावत् सुखं तिष्ठेति नियोजनं, जाम्बवन्मैन्दद्विविदानां कलियुगावधिवर्तनायानुज्ञां, तथैव तैः पञ्चभिरङ्गीकारं चाहाष्टोत्तरशततमे १०८

अथायोध्यावासिभिः सर्वप्राणिभिश्चराचरैर्भरतशत्रुघ्नाभ्यां च पुरो वसिष्ठाधिष्ठिताग्निहोत्रेण साकं पार्श्वयोरधिगताभ्यां श्रीह्रीभ्यां रामस्य महाप्रस्थानिकमाचष्ट नवाधिकशततमे १०९

अथाध्यर्धयोजने सरय्वां श्रीरामेण पादयोर्विन्यस्तयोः सतोर्ब्रह्मागमनं, ब्रह्मणा वैष्णवं शुद्धसत्त्वमाकाशं प्रपद्यस्वेति प्रार्थितेन श्रीरामेणानुगतानां सर्वेषां पुण्यलोकप्राप्तये नियोजनं, ततः सरयूत्यक्तशरीराणामभिगतादिव्यवपुषां ब्रह्मनिदर्शितसान्तानिकलोकप्राप्तिं, वानराणां स्वस्वयोनिषु देवेषु प्रवेशं, सुग्रीवस्य सूर्यमण्डलगमनं, यच्च किंचित्तिर्यगपि मां मनसा स्मरन्मुञ्चति कलेवरं तत्सर्वमपि सान्तानिकं लभेतेत्यनुगृह्णन्नागतान् सान्तानिके स्वर्गे संस्थाप्य भगवतो देवदेवस्य श्रीभूमिनीलासमेतस्याचिन्त्याद्भुतशक्तेर्दिव्यतेजसो नारायणस्य स्वलोकगमनं चावोचद्दशोत्तरशततमे ११०

अथैतदाख्यानं पठितॄणां श्रोतॄणां च फलवैभवमाहैकादशोत्तरशततमे १११

इति उत्तरकाण्डानुक्रमणिका ।

---

इति श्रीमद्वाल्मीकीयरामायणप्रधानविषयानुक्रमणिका समाप्ता ।

॥ श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रपरब्रह्मणे नमः ॥

इह तावत् चतुर्विंशतिसहस्रश्लोके श्रीरामायणे एकैकस्याः सहस्रश्लोक्याः आदिमश्लोके एकैकमक्षरमिति क्रमेण गायत्र्याश्चतुर्विंशत्यक्षराणि श्रीवाल्मीकिमहर्षिणा विन्यस्तानि । त इमे गायत्र्यक्षराङ्किताश्चतुर्विंशतिश्लोका लिख्यन्ते ॥

| कां० | सर्ग० | श्लो० | श्लोके कतमो वर्णः | वर्णविवेकः । | |
|---|---|---|---|---|---|
| १ | १ | १ | १ | त | तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् । नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १ ॥ |
| ” | ३० | १७ | ” | स | स तेन परमास्त्रेण मानवेन समाहतः । सम्पूर्णं योजनशतं क्षिप्तः सागरसम्प्लवे ॥ २ ॥ |
| ” | ६३ | ३ | ” | वि | विश्वामित्रो महातेजा भूयस्तेपे महत्तपः । ततः कालेन महता मेनका परमाप्सराः ॥ ३ ॥ |
| २ | १४ | ३७ | २ | तु | चतुरश्वो रथः श्रीमान् निस्त्रिंशो धनुरुत्तमम् । वाहनं नरसंयुक्तं छत्रं च शशिसन्निभम् ॥ ४ ॥ |
| ” | ४४ | ५ | १ | व | वर्तते चोत्तमां वृत्तिं लक्ष्मणोऽस्मिन् सदाऽनघः । दयावान् सर्वभूतेषु लाभस्तस्य महात्मनः ॥ ५ ॥ |
| ” | ७१ | ३३ | २ | रे | द्वारेण वैजयन्तेन प्राविशच्छ्रान्तवाहनः । द्वास्स्थैरुत्थाय विजयं पृष्टस्तैस्सहितो ययौ ॥ ६ ॥ |
| ” | ९९ | २५ | ३२ | ण | निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुम् । उटजे राममासीनं जटामण्डलधारिणम् ॥ ७ ॥ |
| ३ | १२ | ४ | ३ | यं | ते वयं वनमत्युग्रं प्रविष्टाः पितृशासनात् । द्रष्टुमिच्छामहे सर्वे भगवन्तं निवेद्यताम् ॥ ८ ॥ |
| ” | ४७ | १० | ३ | भ | मम भर्ता महातेजा वयसा पञ्चविंशकः । अष्टादश हि वर्षाणि मम जन्मनि गण्यते ॥ ९ ॥ |
| ४ | ४ | ३ | १४ | ग | ततः परमसन्तुष्टो हनुमान् प्लवगर्षभः । प्रत्युवाच ततो वाक्यं रामं वाक्यविशारदः ॥ १० ॥ |
| ” | ३१ | १ | ३० | दे | स कामिनं दीनमदीनसत्त्वं शोकाभिपन्नं समुदीर्णकोपम् । नरेन्द्रसूनुर्नरदेवपुत्रं रामानुजः पूर्वजमित्युवाच ११ |

| | | | | | |
|---|---|---|---|---|---|
| ५ | १ | १ | ४ | व | ततो रावणनीतायाः सीतायाः शत्रुकर्शनः । इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥ १२ ॥ |
| ” | २७ | १४ | ४ | स्य | ततस्तस्य नगस्याग्रे ह्याकाशस्थस्य दन्तिनः । भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता ॥ १३ ॥ |
| ” | ४६ | ९ | ११ | धी | नावमान्यो भवद्भिश्च हरिर्धीरपराक्रमः । दृष्टा हि हरयः सर्वे मया विपुलविक्रमाः ॥ १४ ॥ |
| ६ | १ | १ | ५ | म | श्रुत्वा हनुमतो वाक्यं यथावदभिभाषितम् । रामः प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् ॥ १५ ॥ |
| ” | २८ | २७ | २५ | हि | यस्तु सव्यमसौ पक्षं रामस्याश्रित्य तिष्ठति । रक्षोगणपरिक्षिप्तो राजा ह्येष विभीषणः ॥ १६ ॥ |
| ” | ५० | ४० | २३ | धि | तेजो वीर्यं बलं चौज उत्साहश्च महागुणः । प्रदर्शनं च बुद्धिश्च स्मृतिश्च द्विगुणं तयोः ॥ १७ ॥ |
| ” | ६८ | १ | २८ | य | कुम्भकर्णं हतं दृष्ट्वा राघवेण महात्मना । राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ १८ ॥ |
| ” | ८१ | १ | ३ | यो | विज्ञाय तु मनस्तस्य राघवस्य महात्मनः । सन्निवृत्याहवात्तस्मात्प्रविवेश पुरीं ततः ॥ १९ ॥ |
| ” | ११२ | २६ | १२ | नः | मरणान्तानि वैराणि निवृत्तं नः प्रयोजनम् । क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥ २० ॥ |
| ७ | १ | १ | २८ | प्र | प्राप्तराज्यस्य रामस्य राक्षसानां वधे कृते । आजग्मुरृषयः सर्वे राघवं प्रतिनन्दितुम् ॥ २१ ॥ |
| ” | २२ | ८ | ४ | चो | ततः प्रचोदयन् सूतस्तानश्वान् रुधिरप्रभान् । प्रययौ भीमसन्नादो यत्र रक्षःपतिः स्थितः ॥ २२ ॥ |
| ” | ४१ | १ | २८ | द | विसृज्य च महाबाहुरृक्षवानरराक्षसान् । भ्रातृभिस्सहितो रामः प्रमुमोद सुखं सुखी ॥ २३ ॥ |
| ” | ७६ | २७ | २६ | या | सुरा हि कथयन्ति त्वामागतं शूद्रघातिनम् । ब्राह्मणस्य तु धर्मेण त्वया जीवापितः सुतः ॥ २४ ॥ |

॥ इति गायत्र्यक्षराङ्कितश्लोकाः समाप्ताः ॥

॥ श्रियै नमः ॥

# श्रीवैष्णवानां श्रीरामायणपठनोपक्रमानुसन्धेयक्रमः ।

प्रथमतः स्वस्वसंप्रदायनिर्वाहकाचार्यानुसन्धानम् । ततः लक्ष्मीनाथेत्यारभ्य प्रणतोऽस्मि नित्यमित्यन्तम् । अनन्तरं श्रीशैलपूर्णविषयं पितामहस्येति श्लोकमारभ्य श्रीभाष्यकारप्रभृतिस्वाचार्यपर्यन्तविषयाः साम्प्रदायिकश्लोका अनुसन्धेयाः ॥

यद्वा श्रीधरादिस्वाचार्यपर्यन्ताः प्रतिव्यक्ति श्लोका अनुसन्धेयाः ॥

ततः, कूजन्तं रामरामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः । शृण्वन् रामकथानादं को न याति परां गतिम् ॥ यः पिबन्सततं रामचरितामृतसागरम् । अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् । रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ अञ्जनानन्दनं वीरं जानकीशोकनाशनम् । कपीशमक्षहन्तारं वन्दे लङ्काभयंकरम् ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् । पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् । बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् । रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् । आजानुबाहुमरविन्ददलायताक्षं रामं निशाचरविनाशकरं नमामि ॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् । अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ ततो यथाशक्ति श्रीकोशोपरि भगवदाराधनं कर्तव्यम् ॥

## ॥ श्रीवैष्णवानां पारायणसमापनक्रमः ॥

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः । प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः । येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी । देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ कावेरी वर्धतां काले काले वर्षतु वासवः । श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् ॥ स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः । गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु ॥

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये । चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ वेदवेदान्तवेद्याय मेघश्यामलमूर्तये । पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गलम् ॥ विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः । भाग्यानां परिपाकाय भव्यरूपाय मङ्गलम् ॥ पितृभक्ताय सततं भ्रातृभिः सह सीतया । नन्दिताखिललोकाय रामभद्राय मङ्गलम् ॥ त्यक्तसाकेतवासाय चित्रकूटविहारिणे । सेव्याय सर्वयमिनां धीरोदाराय मङ्गलम्॥सौमित्रिणा च जानक्या चापबाणासिधारिणे । संसेव्याय सदा भक्त्या स्वामिने मम मङ्गलम् ॥ दण्डकारण्यवासाय खण्डितामरशत्रवे । गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गलम् ॥ सादरं शबरीदत्तफलमूलाभिलाषिणे । सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गलम्॥हनुमत्समवेताय हरीशाभीष्टदायिने । वालिप्रमथनायास्तु महाधीराय मङ्गलम् ॥ श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे । जितराक्षसराजाय रणधीराय मङ्गलम् ॥ आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया । राजाधिराजराजाय रामभद्राय मङ्गलम् ॥ अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः । अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥

मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः । सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ ततः पितामहस्येत्यारभ्य स्वाचार्यान्ताः श्लोका अनुसन्धेयाः ॥

सीताविवाहपट्टाभिषेकसर्गयोस्तु—'इयं सीता मम सुता सहधर्मचरी तव । प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ॥ ' ' अभ्यषिञ्चन् नरव्याघ्रं प्रसन्नेन सुगन्धिना । सलिलेन सहस्राक्षं वसवो वासवं यथा ॥ ' इति श्लोकपठनात् पूर्वं अर्घ्ये विशेषतो भगवदाराधनं च कर्तव्यम् ॥

## ॥ स्मार्त-माध्वादीनां श्रीरामायणपठनोपक्रमानुसंधेयक्रमः ॥

श्रीमहागणपतिध्यानम्—शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ अनन्तरं श्रीमच्छङ्करभगवत्पादादिगुरुपरम्पराऽनुसन्धेया ॥ ॥ ॥

सरस्वतीप्रार्थना—दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण । भासाकुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥

वाल्मीकिनमस्क्रिया—कूजन्तं रामरामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः । शृण्वन् रामकथानादं को न याति परां गतिम् ॥ यः पिबन् सततं रामचरितामृतसागरम् । अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥

हनुमन्नमस्क्रिया—गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् । रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ अञ्जनानन्दनं वीरं जानकीशोकनाशनम् । कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् । पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् । बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ॥ ॥ ॥ ॥

श्रीरामायणप्रार्थना—यः कर्णाञ्जलिसंपुटैरहरहः सम्यक् पिबत्यादराद्वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु । जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं संसारं स विहाय गच्छति पुमान् विष्णोः पदं शाश्वतम् ॥ तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् । रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ वाल्मीकिगिरिसम्भूता रामसागरगामिनी । पुनातु भुवनं पुण्या रामायणमहानदी ॥ श्लोकसारसमाकीर्णं सर्गकल्लोलसंकुलम् । काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना ॥

श्रीरामध्यानक्रमः—वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् । अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ वामे भूमिसुता पुरश्च हनुमान् पश्चात्सुमित्रासुतः शत्रुघ्नो भरतश्च पार्श्वदलयो

वाय्वादिकोणेषु च। सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान् मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम्॥नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै। नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः॥

ततः श्रीकोशोपरि श्रीरामावाहनादिनैवेद्यान्तपूजा विधेया। पारायणावसाने च पुनः पूजा कर्तव्या॥ ७ ॥ ७ ॥

## ॥ स्मार्तादीनां पारायणसमापनक्रमः॥

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः। गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु॥ काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी। देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः॥ अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः। अधनाः सधनाः सन्तु जीवन्तु शरदां शतम्॥ चरितं रघुनाथस्य शतकोटिप्रविस्तरम्। एकैकमक्षरं प्रोक्तं महापातकनाशनम्॥ शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा। स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा॥ रामाय रामभद्राय रामचन्द्राय वेधसे। रघुनाथाय नाथाय सीतायाः पतये नमः॥ यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते। वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम्॥ यन्मङ्गलं सुपर्णस्य विनताऽकल्पयत्पुरा। अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम्॥ मङ्गलं कोसलेन्द्राय महनीयगुणात्मने। चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम्॥अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत्। अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम्॥ त्रीन्विक्रमान् प्रक्रमतो विष्णोरमिततेजसः। यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम्॥ ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ते। मङ्गलानि महाबाहो दिशन्तु तव सर्वदा॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वा प्रकृतिस्वभावात्। करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि॥

श्रीसीताविवाहपट्टाभिषेकसर्गयोस्तु—'इयं सीता मम सुता सहधर्मचरी तव। प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना॥' 'अभ्यषिञ्चन् नरव्याघ्रं प्रसन्नेन सुगन्धिना। सलिलेन सहस्राक्षं वसवो वासवं यथा॥' इति श्लोकपठनात् पूर्वं विशेषतो ध्यानावाहननैवेद्यादिनीराजनान्तसपर्या संविधेया॥७॥

एवं पाठक्रमं ज्ञात्वा ध्यात्वा रामं सशक्तिकम्। कुर्वन् पाठं सावधानमभीष्टं साधयेन्नरः॥

# ॥ अथ श्रीमद्वाल्मीकिरामायणे बालकाण्डम् ॥

श्री-गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्यव्याख्याचतुष्टयालंकृतं

मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृतटिप्पणीसंवलितं च ॥

श्रीमते रामानुजाय नमः ॥ आचार्यं शठकोपदेशिकमथ प्राचार्यपारम्पर्रीं श्रीमल्लक्ष्मणयोगिवर्य्यमुनावास्तव्यनाथादिकान् । वाल्मीकिं सह नारदेन मुनिना वाग्देवतावल्लभं सीतालक्ष्मणवायुसूनुसहितं श्रीरामचन्द्रं भजे ॥ १ ॥ श्रीमत्यञ्जनभूधरस्य शिखरे श्रीमारुतेः सन्निधावग्रे वेङ्कटनाथकस्य सदनद्वारे यतिक्ष्माभृतः । नानादेशसमागतैर्बुधगणै रामायणव्याक्रियां विस्तीर्णां रचयेति सादरमहं स्वप्नेऽस्मि संचोदितः ॥ २ ॥ क्वाहं मन्दमतिर्गभीरहृदयं रामायणं तत्क च व्याख्यानेऽस्य परिश्रमन्नहमहो हासास्पदं धीमताम् । को भारोऽत्र मम स्वयं कुलगुरुः कोदण्डपाणिः कृपाकूपारो रचयत्यदः सपदि मज्जिह्वाग्रसिंहासनः ॥ ३ ॥ वैयर्थ्यं पुनरुक्ततामनुचितारम्भं विरोधं मिथोऽसाधुत्वं च पदप्रबन्धरचनावाक्येषु निःशेषयन् । स्वारस्यं च पदेपदे प्रकटयन् रामायणस्य स्वयं व्याख्यामेष तनोति सज्जनमुदे गोविन्दराजाह्वयः ॥ ४ ॥ पूर्वाचार्य्यकृतप्रबन्धजलधेस्तात्पर्यरत्नावलीर्ग्राहंग्राहमहं शठारिगुरुणा संदर्शितेनाध्वना । अन्यव्याकृतिजातरूपशकलैरायोज्य सज्जीकृतैः श्रीरामायणभूषणं विरचये पश्यन्तु निर्मत्सराः ॥ ५ ॥

## तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् । नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १ ॥

सुस्पष्टमष्टादशकृत्व एत्य श्रीशैलपूर्णाद्यतिशेखरोऽयम् । शुश्राव रामायणसंप्रदायं वक्ष्ये तमाचार्यपरम्परात्तम् ॥ ६ ॥ क्वचित् पदार्थं क्वचिदन्वयार्थं क्वचित्पदच्छेदसमर्थनानि । क्वचित्क्वचिद्गाढनिगूढभावं वक्ष्ये यथापेक्षमवेक्षणीयम् ॥ ७ ॥

अवतारिका—श्रियःपतिरवाप्तसमस्तकामः समस्तकल्याणगुणात्मकः सर्वेश्वरः "वैकुण्ठे तु परे लोके श्रिया सार्द्धं जगत्पतिः । आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह ॥" इत्युक्तरीत्या श्रीवैकुण्ठाख्ये दिव्यलोके श्रीमहामणिमण्डपे श्रीभूमिनीलाभिः सह रत्नसिंहासनमध्यासीनो नित्यैर्मुक्तैश्च निरन्तरपरिचर्यमाणचरणनलिनोऽपि तद्वदेव स्वचरणयुगलपरिचरणार्हानपि तद्धीनान् प्रलये प्रकृतिविलीनान् मधूच्छिष्टमग्नहेमकणसदृक्षान्

श्रीमहेश्वरतीर्थकृता तत्त्वदीपिका ।

परब्रह्मात्मिकां देवीं भुक्तिमुक्तिफलप्रदाम् । प्रणम्य स्तौमि तामेव ज्ञानशक्तिं सरस्वतीम् ॥ कारुण्यामृतनीरमाश्रितजनश्रीचातकानन्ददं शार्ङ्गाखण्डलचापमम्बुजभवोग्रेन्द्रादिबर्हीष्टदम् । चारुस्मेरमुखोल्लसज्जनकजासौदामिनीशोभितं श्रीरामाम्बुदमाश्रयेऽखिलजगत्संसारतापापहम् ॥ प्रणम्य नारायणतीर्थदेशिकान् भवानलार्तामृतपूरनीरदान् । करोति रामायणतत्त्वदीपिकां महेशतीर्थाख्यमुनिर्यथामति ॥ नानाटीकास्थवाक्यानि लिख्यन्तेऽत्र यथामति । सर्वेषां ग्रन्थ

क्षीणज्ञानान् जीवानवलोक्य " एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः । जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ॥ " इत्युक्तरीत्या दयमानमनाः "विचित्रा देहसंपत्तिरीश्वराय निवेदितुम् । पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता ॥" इत्युक्तप्रकारेण महदादिसृष्टिक्रमेण तेषां स्वचरणकमलसमाश्रयणोचितानि करणकलेवराणि दत्त्वा नदीतरणाय दत्तैः प्लवैर्नदीरियानुसारेण सागरमवगाहमानेष्विव तेषु तैर्विषयान्तरप्रवणेषु तेषां सदसद्विवेचनाय ' शासनाच्छास्त्रम् ' इत्युक्तरीत्या स्वशासनरूपं वेदाख्यं शास्त्रं प्रवर्त्यापि तस्मिन्नप्रतिपत्तिविप्रत्तिपत्त्यन्यथाप्रतिपत्तिभिस्तैरनादृते स्वशासनातिलङ्घिनं जनपदं स्वयमेव साधयितुमभियियासुरिव वसुधाधिपतिः स्वाचारमुखेन तान् शिक्षयितुं रामादिरूपेण चतुर्द्धावतितीर्षुरन्तराऽमरगणैः सद्रुहिणैरभ्यर्थितः स्वाराधकस्य दशरथस्य मनोरथमपि पूरयितुं चतुर्द्धावततार । तत्र रामरूपेणावतीर्य रावणं निहत्य पितृवचनपरिपालनादिसामान्यधर्ममन्वातिष्ठत्, लक्ष्मणरूपेण रावणिं निरस्य भगवच्छेषत्वरूपं विशेषधर्मम् , भरतरूपेण गन्धर्वान्निर्वास्य भगवत्पारतन्त्र्यरूपम् , शत्रुघ्नरूपेण लवणासुरं ध्वंसयित्वा भागवतशेषत्वम् । तानिमान् धर्मान् तानीमानि चापदानानि तत्कालमात्रपर्यवसितानि भविष्यन्तीति मन्वानः सर्वलोकहितपरः पितामहो भगवान् ब्रह्मा रामचरित्रपवित्रितं शतकोटिप्रविस्तरं प्रबन्धं निर्माय तं नारदादीनध्याप्य भूलोकेऽपि सन्ततराममन्त्रानुसन्धानसन्धुक्षितहृदयवाल्मीकिमुखेन संग्रहेण प्रवर्त्तयितुं नारदं प्रेषयामास। तदुक्तं मात्स्ये–"वाल्मीकिना च यत्प्रोक्तं रामोपाख्यानमुत्तमम् । ब्रह्मणा चोदितं तच्च शतकोटिप्रविस्तरम् । आहृत्य नारदेनैव वाल्मीकाय निवेदितम् ॥ " इति । वाल्मीकिरपि निखिलवेदान्तविदितपरतत्त्वनिर्दिधारयिषया यदृच्छयोपगतं नारदं पृष्ट्वावगतपरतत्त्वस्वरूपः तदनुप्रसन्नेन विधिना दत्तसकलसाक्षात्कारप्रबन्धनिर्माणशक्तिर्वेदोपबृंहणमारभमाणः तस्यार्थप्रधानसुहृत्संमितेतिहासतां व्यङ्ग्यप्रधानकान्तासंमितकाव्यतां च पुरस्कुर्वन् " काव्यालापांश्च वर्जयेत्" इति निषेधस्यासत्काव्यविषयतां च निर्धारयन् स्वग्रन्थे प्रेक्षावतां प्रवृत्त्यर्थं तदङ्गानि दर्शयति प्रथमतश्चतुःसर्ग्या । तत्र प्रथमसर्गेण विषयप्रयोजने दर्शयति । तत्र च " तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया " इति वेदान्तरहस्यस्य प्रश्नपूर्वकं ज्ञेयत्वविधानात् " नापृष्टः कस्यचिद्ब्रूयात् " इत्यपृष्टोत्तरस्य प्रत्यादिष्टत्वाच्च प्रश्नमाविष्करोत्यादितः पञ्चश्लोक्या ॥

कर्तॄणां लेखकोऽहं न कल्पकः॥ लिखितान्यत्र नैर्यानि लिख्यन्ते तान्यतो मया । ग्रन्थबाहुल्यभीत्यात्र क्वचिच्छब्दसुशोधनम् ॥ निघण्टुकथनं चार्थः पदानां लिख्यतेऽधुना । सीतारामौ समुद्दिश्य विराधखररावणैः॥ उक्तानां परुषोक्तीनां वास्तवार्थोऽत्र वर्ण्यते ॥ ब्रह्मलोकप्रसिद्धं शतकोटिप्रविस्तरं रामचरितं भूलोकवर्तिनां चतुर्णां वर्णानां तापत्रयविमोचनाय संक्षिप्य रचयितुमुद्युक्तः परमकारुणिको ब्रह्मा वाल्मीकिरूपेण भूमौ स्वांशेन समभवत् । तथा च स्कान्दे पार्वतीं प्रति शिववचनम्–

अथ प्रारिप्सितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणाय प्रचयगमनाय च गुरुनमस्कारं देवतानमस्कारं च विदधाति—तपस्स्वाध्यायेति। तत्र "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" "आचार्यवान् पुरुषो वेद" इत्यादिश्रुत्या सदाचार्योपदेशस्यैवातिशयावहत्वात्स्वगुरोराचार्यलक्षणपूर्तिं दर्शयति द्वितीयान्तपदैः। तत्र वेदसंपन्नत्वमाह तपःस्वाध्यायनिरतमिति। तपश्च स्वाध्यायश्च तपःस्वाध्यायौ "अल्पाच्तरम्" इति तपःशब्दस्य पूर्वनिपातः। तपः चान्द्रायणादि, स्वाध्यायो वेदः। "स्वाध्यायो वेदतपसोः" इति वैजयन्ती। तयोर्निरतं निरन्तरासक्तम्। आवश्यकत्वादेतदुभयमुक्तम्। तदाह मनुः—"तपो विद्या च विप्रस्य निःश्रेयसकरं परम्। तपसा कल्मषं हन्ति विद्यया ज्ञानमश्नुते" इति। यद्वा तपो ज्ञानम्। "तप आलोचने" इत्यस्माद्धातोरसुन्प्रत्ययः। श्रुतिश्चात्र भवति "यस्य ज्ञानमयं तपः" इति। योग इति यावत्। स्वाध्यायो वेदः तयोर्निरतम्। "स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमावसेत्। स्वाध्याययोगसम्पत्त्या गमिष्यति परां गतिम्॥" इत्युक्तप्रकारेण सक्तमित्यर्थः। यद्वा तपो वेदः, "तपो हि स्वाध्यायः" इति श्रुतेः। स्वाध्यायो जपः। "स्वाध्यायो वेदजपयोः" इत्युक्तेः। तत्र निरतम्। "स्वाध्यायान्मा प्रमदः। वेदमेव जपेन्नित्यम्" इत्युक्तरीत्या सक्तमित्यर्थः। यद्वा तपो ब्रह्म "ब्रह्मैतदुपास्वैतत्तपः" इति श्रुतेः। तपःप्रधानः स्वाध्यायस्तपःस्वाध्यायः। शाकपार्थिवादित्वान्मध्यमपदलोपी समासः। वेदान्त इति यावत्, तत्र निरतम्। "स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्" इत्युक्तरीत्याध्ययनाध्यापनादिपरमित्यर्थः। यद्वा तपो व्याकरणम्। तथोक्तं वाक्यपदीये—"आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः। प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः॥" इति, तदितरेषामङ्गानामुपलक्षणम्। तत्सहितः स्वाध्यायः तपःस्वाध्यायः तत्र निरतम्, साङ्गवेदाध्यायिनमित्यर्थः। यद्वा तपः स्वं यस्यासौ तपःस्वः, अध्यायो वेदः "इङ् अध्ययने" इत्यस्माद्धातोः "अध्यायन्याय—" इत्यादिना निपातनात्। अतएव "स्वाध्यायोऽध्येतव्यः" इत्यत्र स्वस्य अध्यायः स्वाध्यायः, स्वशाखेत्याचार्यैर्व्याख्यातम्। तत्र निरतोऽध्यायनिरतः। तपःस्वश्चासावध्यायनिरतश्च तपःस्वाध्यायनिरतः इति कर्मधारयः, तम्। यद्वा तपो ब्रह्म, तद्रूपः स्वाध्यायः तपःस्वाध्यायः तस्मिन् निरतम्, सामगानलोलमित्यर्थः। "वेदानां सामवेदोऽस्मि" इति भगवता गीतत्वात्। एवं वेदाध्ययनमुक्तम्॥

"वाल्मीकेर्भवद्ब्रह्मा वाणी वाक्तस्य रूपिणी। चकार रामचरितं पावनं चरितव्रतः॥" इति। एवञ्च ब्रह्मांशभूतो भगवान् प्राचेतसः स्वचिकीर्षितं श्रीरामचरितं गुरुमुखाच्छ्रोतव्यमिति न्यायेन भगवत्कथोपदेशेन स्वगुरुं नारदं प्रतीक्षमाण आस्ते स्म। अथ ब्रह्मनियोगेन समागतं भगवन्तं नारदमभ्यर्च्य वाल्मीकिः कोन्वस्मिन्नित्यादि पप्रच्छ। स च देवर्षिः परमेश्वरकथाप्रश्नमुदितमनाः श्रीरामचरितं संक्षिप्य वाक्यरूपेणोपदिश्य जगाम। तदनु तमसातीरमुपसृत्य चरतो व्याधविद्ध

अथ " यदधीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥" इति केवलाध्ययनस्य निन्दितत्वात्तदर्थज्ञत्वमाह- वाग्विदां वरमिति । वाग् वेदः । "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा" इति वाक्शब्दस्य वेदे प्रयोगात् । तां विदन्ति जानन्तीति वाग्विदः वेदार्थज्ञाः तेषां मध्ये वरं श्रेष्ठम् । निर्द्धारणे षष्ठी । यद्वा वाक् व्याकरणम् । " यश्च व्याकुरुते वाचम् । वाग्योगविद्दुष्यति चापशब्दैः " इत्यादौ व्याकरण पर्यायत्वेन शिष्टैर्व्यवहृतत्वात् । एतदङ्गान्तराणामुपलक्षणम्, षडङ्गविदामग्रेसरमित्यर्थः । एतेन वेदार्थाभिज्ञत्वमर्थसिद्धम् । यद्वा वाग्विदः यावद्विवक्षितार्थप्रतिपादनक्षमशब्दप्रयोगविदः, तेषां वरम् । पूर्वं वेदाध्ययनमुक्तम्, अत्र तदध्यापनम् । यद्वा गोबलीवर्दन्यायेन वाचः वेदव्यतिरिक्तानि शास्त्राणि, तद्विदां वरम् । अनेन चतुर्दशविद्यास्थानवेदित्वमुक्तम् । यद्वा भूमविद्योपक्रमे नारदेनात्मनः सर्वविद्याभिज्ञत्वमुक्तम् । "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद्भगवोऽध्येमि " इति । तदिदमुच्यते वाग्विदां वरमिति । यद्वा वाक् सरस्वती " गीर्वाग्वाणी सरस्वती" इति वचनात् । तया विद्यन्ते लभ्यन्त इति वाग्विदः सरस्वतीपुत्रा मरीच्यादयः । "विद्लृ लाभे" इत्यस्माद्धातोः कर्मणि क्विप् । भगवद्भक्ततया तेषां वरम् । अनेनाभिजात्यमुक्तम् । तपःस्वाध्यायनिरतमित्यनेन विद्योक्ता । समाहितत्वमाह—मुनिपुङ्गवमिति । तेन " अभिजनविद्यासमुदेतं समाहितं संस्कर्त्तारमीप्सेत् " इत्यापस्तंबोक्तमाचार्यलक्षणं ज्ञापितम् । मुनयो मननशीलाः । "मनेरुच्च" इति इन् प्रत्ययः । पुमांश्चासौ गौश्चेति पुंगवः "गोरतद्धितलुकि" इति समासान्तष्टच् प्रत्ययः । श्रेष्ठ इत्यर्थः । "बुधे च पुङ्गवः श्रेष्ठे वृषभे भिषजां वरे । " इति विश्वः । मुनिषु पुङ्गवो मुनिपुङ्गवः । "सप्तमी" इति योगविभागात् नागोत्तमादिवत्समासः, तम् । तपःस्वाध्यायनिरतमित्यनेन वेदार्थस्य श्रवणमुक्तम् । वाग्विदां वरमित्यनेन मननम् । मुनिपुङ्गवमित्यनेन निदिध्यासनम् । यद्वा "तस्माद्ब्राह्मणः पांडित्यन्निर्विद्य बाल्येन तिष्ठासेत् । बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्युक्तक्रमेण त्रिभिरेतैः पदैः पाण्डित्यबाल्यमौनान्युक्तानि । नरस्य सम्बन्धि नारम् "नराच्चेति वक्तव्यम्" इत्यण्, अज्ञानमित्यर्थः । तत् द्यति खण्डयतीति नारदः । "दो अवखण्डने" इत्यस्माद्धातोः "आदेच



क्रौञ्चदर्शनजनितशोकस्य वाल्मीकेर्वदनान्मानिषादेति श्लोक उद्भूत । ततः स्वाश्रममागत्य तमेवानुसन्दधानः सविस्मयमास्त । अथ भगवांश्चतुर्मुख आगत्य " मच्छन्दादेव ते ब्रह्मन् " इत्यभिधाय 'रामचरितं सर्वं विदितं भवतु' इति वरं प्रदाय पद्यैरेव रामायणं कुर्वित्युपदिश्य स्वधाम जगाम । अथ चतुर्विंशत्यक्षर गायत्र्याख्यपरब्रह्मविद्याविलासभूतं रामायणं चतुर्विंशतिसहस्रैः श्लोकैश्चकार । तदिदं व्याक्रियते—तपःस्वाध्यायेत्यादिः गायत्रीवर्णसहितश्लोकसङ्केतः—" चतु

उपदेशेऽशिति" इत्यात्वे सति "आतोऽनुपसर्गे कः" इति कप्रत्ययः। अज्ञाननिवर्तक इत्यर्थः। उक्तं च नारदीये—"गायन्नारायणकथां सदा पापभयापहाम्। नारदो नाशयन्नेति नृणामज्ञानजं तमः॥" इति। यद्वा नारं ज्ञानं तद्ददातीति नारदः। यद्वा नरति सद्गतिं प्रापयतीति नरः परमात्मा। "नॄ नये" इत्यस्माद्धातोः पचाद्यच्। तदुक्तं भारते "नरतीति नरः प्रोक्तः परमात्मा सनातनः" इति। स एव नारः। तं ददात्युपदिशतीति नारदः, तम्। एवमाचार्यलक्षणपूर्तिमुक्त्वा अधिकारित्वसंपूर्तिप्रदर्शनाय शिष्यलक्षणमाह—तपस्वीत्यादिना। तपोऽस्यास्तीति तपस्वी। "तपःसहस्राभ्यां विनीनी" इति मत्वर्थीयो विनिप्रत्ययः। भूमादयो मत्वर्थाः। तदुक्तम् "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥" इति। प्रशस्ततपस्क इत्यर्थः। तेन "तपसा ब्रह्म विजिज्ञासस्व स तपोऽतप्यत स तपस्तप्त्वा आनन्दो ब्रह्मेति व्यजानात्" इति श्रुतं ब्रह्मज्ञानसाधनं तप उक्तम्। यद्वा तपो वेदो व्याकरणं ज्ञानं च, तद्वान्। तपःशब्दानां तन्त्रावृत्त्येकशेषाद्यन्यतमेन अर्थस्मरणे सति एकपदोपात्तकृतिकालादीनामिव अन्वयबोधः सुलभः। तथा च-अधीतसाङ्गसशिरस्कवेदोऽधिगतालपास्थिरफलकेवलकर्मज्ञान इत्युक्तम्। निर्वेदश्च तपः। "तपस्वी तापसे शोच्ये" इति वैजयन्ती। तेन सञ्जातमोक्षाभिलाष इत्युक्तम्, तादृश एव हि ब्रह्मज्ञानाधिकारी। तपस्वीत्यनेन शमदमादिसंपत्तिरपि सिद्धा। यद्वा तपो न्यासः। "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः" इति श्रुतेः। न्यासः शरणागतिः प्रणिपातरूपा, एवं 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया' इत्याद्युक्तानि प्रणिपातपुरःसराणि दर्शितानि। वल्मीकस्यापत्यं वाल्मीकिः। "अत इञ्" इतीञ्प्रत्ययः। नन्वसौ कथं वल्मीकापत्यम्, यतोऽयं भृगुपुत्र एव प्रतीयते। तथा च श्रीविष्णुपुराणे—"ऋक्षोऽभूद्भार्गवस्तस्माद्वाल्मीकिर्योऽभिधीयते" इति। अत्रापि उत्तरकाण्डे वक्ष्यति "भार्गवेणेति संस्कृतौ। भार्गवेण तपस्विना" इति च। अन्यत्र च प्रचेतोऽपत्यत्वमभिधीयते "चक्रे प्रचेतसः पुत्रस्तं ब्रह्माप्यन्वमन्यत" इति। "वेदः प्राचेतसादासीत्" इति च प्रसिद्धम्। अतः कथमस्य वल्मीकापत्यत्वम्? उच्यते—निश्चलतरतपोविशेषेणास्य वल्मीकावृतौ जातायां प्रचेतसा वरुणेन कृतनिरन्तरवर्षेण प्रादुर्भावोऽभूदिति भृगुपुत्रस्यैवास्य प्रचेतसोऽपत्यत्वं वल्मीकापत्यत्वं च सङ्गच्छते। ननु कथं तत्प्रभवत्वमात्रेण तदपत्यत्वम्? मैवम्, 'गोणीपुत्रः

विंशतिसङ्ख्याका गायत्रीवर्णसंयुताः। ये श्लोकाः सन्ति तानत्र विलिखामि यथाक्रमम्॥ श्लोके च प्रतिसाहस्रं प्रथमे प्रथमे क्रमात्। गायत्र्यक्षरमेकैकं स्थापयामास वै मुनिः॥ गायत्र्याख्यीणि चत्वारि द्वे द्वे त्रीण्यथ षट् क्रमात्। चत्वारि सप्तकाण्डेषु स्थापितान्यक्षराणि तु॥" तत्र तादिति गायत्र्याः प्रथमाक्षरम्—तपःस्वाध्यायेति। अत्र तपःशब्देन चित्तप्रसादहेतुभूतं व्रतनियमोपवासादि कर्मोच्यते, "यस्य ज्ञानमयं तपः" इति श्रुतेः। तपःशब्देन ब्रह्मविषयकज्ञानमुच्यते। स्वाध्यायशब्देन

कलशीसुतः' इत्यादिव्यवहारस्य तत्प्रभवेऽपि बहुलमुपलब्धेः । उक्तं च ब्रह्मवैवर्त्ते " अथाब्रवीन्महातेजा ब्रह्मा लोकपितामहः । वल्मीकप्रभवो यस्मा त्तस्माद्वाल्मीकिरित्यसौ ॥" इति । मास्त्वपत्यार्थत्वम्, तथापि वाल्मीकिशब्दस्साधुरेव, गर्हादिषु पठितत्वात् । यद्वा भृगुवंश्यः कश्चित् प्रचेता नाम तस्यायं पुत्रः ऋक्षो नाम । 'चक्रे प्रचेतसः पुत्रः' इति पुत्रत्वाभिधानात् । भार्गवभृगुनन्दनशब्दौ रामे राघवरघुनन्दनशब्दव दुन्नेयौ । वाल्मीकिशब्दः पुत्रत्वोपचारात् । अतएव क्वचित् 'वाल्मीकेन महर्षिणा' इति सम्बन्धमात्रेऽण् प्रयुज्यते । सत्स्वपि नामान्तरेषु वाल्मीकिशब्देनाभिधानं ज्ञानाङ्गशमदमाद्युपेतत्वस्फोरणाय । परिपप्रच्छ परि विशेषेण पृष्टवान् । को न्वस्मिन्नित्यादिवक्ष्यमाणमिति शेषः । तप इति भिन्नं पदं वा ब्रह्मवाचि । नारदं ब्रह्म परिपप्रच्छेत्यर्थः । अतो न द्विकर्मकत्वहानिः । उक्तं हि वृत्तिकृता–" दुह्याच्पच्दण्ड् रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।" इत्यादिना प्रच्छेर्द्विकर्मकत्वम् । परिपप्रच्छेति परोक्षे लिट् । प्रश्नस्य परोक्षत्वं विवक्षितभगवद्गुणानुसन्धानकृत वैचित्यात्, 'सुप्तोऽहं किल विललाप' इतिवत् । विभक्तिप्रतिरूपकमव्ययं वा । स्वविनयव्यञ्जनाय प्रथमपुरुषनिर्देशो वा । " ईश्वरः सर्वभूतानां हृद्देशे ऽर्जुन तिष्ठति" इतिवत् । स्वस्मिन्नन्यत्वमारोप्य परोक्षनिर्देशो वा । अनेन–" परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् " इत्याथर्वणिकी श्रुतिर्गुरूपसदनविषयोपबृंह्यते । तथाहि–तपस्वीत्यनेन " परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् " इत्यस्यार्थोऽदर्शि । अधीतसाङ्गसाशिरस्कवेदोऽधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषो हि तपस्विशब्दार्थो वर्णितः । वाल्मीकिरित्यनेन "सम्यक् प्रशान्तचित्ताय शमान्विताय" इत्यस्यार्थो दर्शितः । स्वाध्यायनिरतमित्यनेन श्रोत्रियपदार्थ उक्तः । " श्रोत्रियं श्छन्दोऽधीते " इति श्रोत्रियशब्दार्थप्रकाशनात् । वाग्विदां वरमित्यनेन विद्वच्छब्दार्थः । मुनिपुङ्गवमित्यनेन ब्रह्मनिष्ठशब्दार्थः । नारदशब्देन गुरुशब्दार्थः । " गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः । अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते" इति तन्निरुक्तिः । परिपप्रच्छेत्यनेन "तद्विज्ञा

फलवदर्थावबोधपर्यन्ताध्ययनमुच्यते । तयोर्निरतम् एकाग्रचित्तम्, अनेन 'तप आलोचने' इति धातोरुत्पन्नेन तपःशब्देन ज्ञानपर्यायेण " सत्यं ज्ञानमनन्तं ब्रह्म " इति ब्रह्मस्मरणात् विशिष्टेष्टदेवतास्मरणरूपं मङ्गलं कृतमित्यनुसन्धेयम् । तपस्वी प्रशस्ततपाः । वल्मीकस्यापत्यं वाल्मीकिः । तदुक्तं ब्रह्मवैवर्ते–" अथाब्रवी न्महातेजा ब्रह्मा लोकपितामहः । वल्मीकप्रभवो यस्मात्तस्माद्वाल्मीकिरित्यसौ ॥ " इति । नारदम्–नरः परमात्मा, तदुक्तम्–" नरतीति नरः प्रोक्तः परमात्मा सना

नार्थं स गुरुमेवाभिगच्छेत् " इत्येतदुपपादितम् । " विधिवदुपसन्नः पप्रच्छ " इति श्रुतेः । अत्र ब्रह्मवाचितपःशब्दप्रयोगेण देवतानमस्काररूपं मङ्गलमाचरितम् । तथोक्तम्–" अ इति भगवतो नारायणस्य प्रथमाभिधानमभिदधता किंनाम मङ्गलं न कृतं " इति । " देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे मङ्गलार्थाः स्युर्लिपितो गणतोऽपि च ॥ " इति । निरन्तरनिरतिशयानन्दरूपं तपो ज्ञानरूपं ब्रह्म स्वाध्याय सुष्ठु ध्यात्वेति वा देवतानमस्कारः। गुरुनमस्कारश्च कृतो भवति । कथम् ? तपःसु निरतं नारदमाध्याय परिपप्रच्छेति । यद्वा परि पूजयित्वेत्यर्थः। "परिः समन्ततोभावव्यातिदोषकथासु च । भाषाश्लेषे पूजने च वर्जने वचने शुभे ॥" इति वचनात् । नारदं संपूज्य पप्रच्छेत्यर्थः। "पराशरं मुनिवरं कृतपौर्वाह्णिकक्रियम् । मैत्रेयः परिपप्रच्छ प्रणिपत्याभिवाद्य च॥" इतिवत् ॥ अस्य श्रीरामायणस्य गायत्र्यक्षरसंख्यानुसारेण चतुर्विंशतिसहस्रग्रन्थसङ्ख्यया प्रवृत्तत्वात् प्रथमसहस्रोपक्रमे तकारः प्रयोक्तव्य इति सत्स्वपि ब्रह्मवाचकेषु शब्दान्तरेषु तपःशब्दस्यैव प्रयोगः । प्रबन्धादौ तकारप्रयोगश्चावश्यकः । तस्य वक्तुर्वाचकस्य च सौख्यकरत्वात् । तथोक्तम् " वस्तुलाभकरो णस्तु तकारः सौख्यदायकः " इति । साहित्यचूडामणौ तु–" तकारो विघ्ननाशकः " इत्युक्तम् । किंच तकारस्य जलं भूतं बृहस्पतिर्देवता । अतः शुभावहोऽनेन प्रबन्धारम्भः । अतएवोक्तं चमत्कारचन्द्रिकायाम्–" वर्णानामुद्भवः पश्चाद्धचक्तिः संख्या ततः परम् । भूतबीजविचारश्च ततो वर्णग्रहा अपि ॥" इत्यारभ्य " एतत्सर्वमविज्ञाय यदि पद्यं वदेत्कविः । केतकारूढकपिवत् भवेत्कण्टकपीडितः ॥ " इति । " कारणात्पञ्चभूतानामुद्भूता मातृका यतः । अतो भूतात्मका वर्णाः पञ्चपञ्च विभागतः । वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात् । पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः सन्धयस्तथा । तत्र स्वरेशः सूर्योऽयं कवर्गेशस्तु लोहितः । चवर्गप्रभवः काव्यष्टवर्गाद्बुधसम्भवः । तवर्गोत्थः सुरगुरुः पवर्गोत्थः शनैश्चरः । यवर्गजोऽयं शीतांशुरिति सप्तग्रहाः क्रमात् ॥" इति । अत्र तपःस्वा इति यगणः, आदिलघुत्वात् । तदुक्तम्–"आदिमध्यावसानेषु यरता यान्ति लाघवम् । भजसा गौरवं यान्ति मनौ तु गुरुलाघवम्॥"इति । यगणप्रयोगश्चार्थकर इत्युक्तं चमत्कारचन्द्रिकायाम्–" करोत्यर्थानादिलघुर्यगणो वायुदैवतः " इति । ननु तपस्तापः सुतरामाधिः स्वाधिस्तयोराये निरतमिति ग्रन्थारम्भे अश्लीलवचनमनुचितम् । तदुक्तम्–" अश्लीलं यदमाङ्गल्यं जुगुप्साव्रीडभीकरम्" इति । मैवम्, प्रसिद्धिविशेषेण तपोवेदयोरेव प्रथमतरं बुद्ध्यारोहेणाश्लीलत्वप्रसङ्गा

तनः " इति । तस्य संबन्धि नारम्, परमात्मविषयकं ज्ञानं ददाति उपदिशतीति नारदः । यद्वा नराणां संबन्धि नारं अज्ञानम् तत् द्यति खण्डयति विज्ञानोपदेशेनेति नारदः । तथा चोक्तं नारदीये–"गायन्नारायणकथां सदा पापभयापहाम् । नारदो नाशयन्नेति नृणामज्ञानजं तमः ॥" इति ॥ १ ॥

भावात् । यथा भगिनीलिङ्गादिप्रयोगेषु । अत्र सर्वत्र प्रायेण पथ्यावक्त्रं वृत्तम् । तदुक्तं वृत्तरत्नाकरे—" युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्त्तितम् " इति । वृत्तविशेषास्तु तत्रतत्र वक्ष्यन्ते । अत्र वृत्त्यनुप्रासः शब्दालङ्कारः, तकारादीनामावृत्तेः । तदुक्तं काव्यप्रकाशे—" वर्णसाम्यमनुप्रासः " इति । विशेषणानां साभिप्रायत्वात् परिकरोनामार्थालङ्कारः । उक्तमलङ्कारसर्वस्वे " विशेषणानां साभिप्रायत्वे परिकरः " इति । तपःस्वाध्यायनिरतत्वादीनां गुरूपसत्तिहेतुज्ञानानुष्ठानप्रतिपादकत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । " हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमलंकृतिः " इति लक्षणात् । अत्र वाल्मीकिनारदयोः स्वरूपकथनेन शिष्याचार्याभ्यामेवंभवितव्यमिति द्योतनात् वाक्यगतवस्तुना वस्तुध्वनिः ॥ १ ॥

तनिश्लोकी—अस्तु कल्याणदं वस्तु सीतारामात्मकं हि नः । यत्पादपद्मभजनाल्लब्धं सारस्वतं मया ॥ शम्पामध्यस्फुरन्नीलतोयदद्युतिविग्रहम् । सीतयालिङ्गितं रामं कलयेऽभीष्टसिद्धये ॥ भक्तप्रतिष्ठा नीलाद्रौ कलिता येन सूरिणा । सर्वतन्त्रस्वतन्त्रं तं परांकुशमुनिं भजे ॥ द्रमिडोपनिषद्व्याख्याकारो रामायणस्य ये श्लोकाः । व्याख्याता

**को न्वस्मिन् सांप्रतं लोके गुणवान् कश्च वीर्यवान् । धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २ ॥**

द्रमिडगिरा तानथ विवृणोमि भाषया दैव्या ॥ रामायणस्य श्लोकानां व्याख्यां द्राविडवाङ्मयीम् । करोति देववाग्रूपामात्रेयाहोबलाह्वयः ॥ तपःस्वाध्यायेत्यस्य श्लोकस्य तनिश्लोकाख्यव्याख्याने श्रीरामानुजीयव्याख्याने चोपन्यस्तानामर्थानां श्रीगोविन्दराजीयव्याख्यानान्तर्भूतत्वान्नात्र तदर्थप्रतिपादकवाक्यानि गृहीतानि, एवमन्यत्रापि ज्ञेयम् ॥ १

कथं परिपप्रच्छेत्याकांक्षायां प्रश्नप्रकारं दर्शयति—को न्वित्यादिश्लोकत्रयेण । " नु: पृच्छायां विकल्पे च " इत्यमरः । अस्मिन् लोके भूलोके सांप्रतमस्मिन् काले " अस्मिन्काले‌ऽधुनेदानीं संप्रत्येतर्हि सांप्रतम् " इति बाणः । लोकान्तरे विष्णोर्विदितत्वात् । अत्रैव कालान्तरे नृसिंहादेः प्रसिद्धत्वाच्च तद्व्यावृत्त्यर्थमेवमुक्तम् । गुणा अस्य सन्तीति गुणवान् । भूमादयो मत्वर्थाः । अस्मिन् लोके अस्मिन् काले को वा सकलकल्याणगुणसम्पन्न इत्यर्थः । एवं सामान्येन गुणसमुदायं पृष्ट्वा विशिष्य तत्तद्गुणाश्रयं पृच्छति-कश्च वीर्यवान् इत्यादिना । यद्वा गुण्यते आवर्त्यते पुनःपुनराश्रितैरनुसन्धीयत इति गुणः सौशील्यम् । " गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु " इति विश्वः । सुशीलं हि नाम महतो मन्दैः सह नीरन्ध्रेण संश्लेषः । तस्याधिक्यं सौशील्यम्, तद्वान् । सौशील्ये गुणशब्दोऽभियुक्तैः प्रयुक्तः । " वशी वदान्यो गुणवानृजुः शुचिः " इति । को वा



को न्विति । गुणवान् अत्र गुणशब्देन दृष्टगुणव्यतिरिक्तप्रशस्ता गुणा उच्यन्ते । प्रश्नप्रतिवचने दृष्टगुणव्यतिरिक्तप्रशस्तगुणप्रतिपादनात । येन स्वयमक्षतस्सन् परान् जयति तद्वीर्यम्, तद्वान् । धर्मज्ञः सामान्यविशेषरूपधर्मज्ञः । कृतज्ञः येन केनचित् स्वस्मै किञ्चिदपि कृतमुपकारं बहुतया जानातीति कृतज्ञः । सत्यवाक्यः

सौशील्यवानित्यर्थः । सर्वत्र प्रश्ने नु इति किंशब्दोऽपि अत्र न प्रयुक्तस्तत्रानुषञ्जनीयः । एकेनैव किंशब्देनोपपत्तावप्यादरातिशयात् पुनःपुनस्तत्प्रयोगः । "प्रदानवदेव तदुक्तम्" इति न्यायेन प्रतिगुणं गुण्यावृत्त्याभिप्रायेण वा लोके गुणसम्बन्धाद्गुण्यतिशयः । इह तु गुणिसम्बन्धाद्गुणातिशय इति द्योतनाय गुणिनः प्रथमं निर्देशः "गुणास्सत्यज्ञान–" इत्युक्तेः । कश्च वीर्यवान् । चकार उक्तसमुच्चये । सत्स्वपि विकारहेतुष्वविकृतत्वं वीर्यम्. 'औषधं वीर्यवत्' इत्यादौ तथा दर्शनात्, तद्वान् । धर्मः अलौकिकश्रेयःसाधनम्, तं सामान्यरूपं विशेषरूपं च जानातीति धर्मज्ञः । चकारोऽनुक्तसमुच्चयार्थः । परिहार्याधर्मज्ञश्चेत्यर्थः । कृतमुपकारं स्वल्पं प्रासङ्गिकमपि बहुतया जानातीति कृतज्ञः । अपकारास्मरणं चशब्दार्थः । वक्ष्यति-- "न स्मरत्यपकाराणां शतमप्यात्मवत्तया । कथंचिदुपकारेण कृतेनैकेन तुष्यति ॥" इति । सत्यं कृच्छ्रेष्वप्यनृतशून्यं वाक्यं वचनं यस्य सः सत्यवाक्यः । तथा वक्ष्यति--"अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन" इति । दृढव्रतः निश्चलसङ्कल्पः । "अप्यहं जीवितं जह्यां त्वां वा सीते सल

चारित्रेण च को युक्तः सर्वभूतेषु को हितः । विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥ ३ ॥

क्ष्मणाम् । न हि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥" इति ॥ २ ॥ तनि०--हेमारविन्दवदाश्रयवैलक्षण्येन निःसीमाभ्यधिकत्वं वक्तुं कान्विति प्रथमं धर्मिनिर्देशः । अस्मिन् एवंविधोऽप्राकृतदिव्यलोके विष्णुर्विदित एव । अत्र क इति सांप्रतं नृसिंहादिः कालान्तरे । एवं च निःसीमाभ्यधिकत्वेन परः अदेशकालविप्रकृष्टतया सुलभश्च । क इति । सौलभ्येऽपि पुष्करपर्णजलव्यावृत्त्यर्थमाह--गुणवानिति । गुणशब्दः सौशील्यवाची, सौशील्यं नाम महतो मन्दैः सह नीरन्ध्रेण संश्लेषः । यद्वा गुणशब्देन हेयगुणव्यतिरिक्तानन्तप्रशस्तगुणा उच्यन्ते । प्रश्नप्रतिवचने हेयगुणव्यतिरिक्तप्रशस्तगुणप्रतिपादनात् । वीर्यवान् स्वस्याविकृतत्वे सति परविकारकारित्वं वीर्यवत्त्वम् । पराक्रमसमुच्चयार्थश्चकारः । धर्मज्ञः "एकतः क्रतवस्सर्वे समग्रवरदक्षिणाः । एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥" इत्याद्युक्तविशेषधर्मज्ञानवान् । चकारेण रक्षणत्यागाद्यधर्मविशेषमत्यन्तहेयतया जानातीत्यर्थः । कृतज्ञः स्वल्पं प्रासङ्गिकमपि आश्रितकृतमुपकारं बहुतया जानातीति तथा । अलसतया कश्चित्तदपि न करोति तथाप्युपकरोतीति चकारार्थः । सत्यवाक्यः कृच्छ्रेष्वप्यनृतवचनरहितः । दृढव्रतः प्रतिज्ञातस्यार्तरक्षणादेस्त्यागं स्वहानिं मनुते ॥ २ ॥

चरित्रमाचारः तदेव चारित्रम् । वायसराक्षसादिवत्स्वार्थेऽण्प्रत्ययः । तेन युक्तः, सर्वदाप्यनुल्लङ्घितकुलाचार इत्यर्थः । सर्वभूतेषु सर्वप्राणिषु विषये ।

सर्वावस्थास्वपि सत्यवचनः । दृढव्रतः फलपर्यन्त प्रारब्धव्रतापरित्यागशीलः ॥ २ ॥ चारित्रेणेति । चरित्रमेव चारित्रं कुलक्रमागताचारः, तेन युक्तः । सर्वभूतेषु को हित इत्यनेन सापराधेष्वपि हितकरणशील इत्युक्तं भवति । विद्वान् विदितसकलवेद्यः । समर्थः अनन्यनिर्वाह्यकार्यनिर्वहणशक्तः । कश्चैक

" भूतं क्ष्मादौ च जन्तौ च न स्त्रियां गुणसत्त्वयोः " इति वाणिः । हितः हितकरः । हितशब्दात् " तत्करोति" इति णिच्, पचाद्यच्, णिलोपे पूर्वरूपे च रूपम् । भूतशब्देन स्वपरतारतम्याभाव उक्तः । सर्वशब्देन सापराधेष्वपि हितकरत्वमुक्तम् । वेत्तीति विद्वान् सर्वशास्त्रज्ञः । " विदेः शतुर्वसुः " । समर्थः सर्वकार्यधुरंधरः । प्रियं दर्शनं यस्यासौ प्रियदर्शनः, एकश्चासौ प्रियदर्शनश्च एकप्रियदर्शनः । अयमिव नान्यो लोके प्रियदर्शनोऽस्तीत्यर्थः । यद्वा एकप्रियदर्शनः एकरूपप्रियदर्शनः । लोके हि कस्यचिद्दर्शनं कदाचित्प्रियं भवति कदाचिदप्रियं च भवति । " तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम् " इति वचनात् । अयं तु न तथा, किंतु " क्षणेक्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः " इत्युक्तरीत्या सदानुभवेऽप्यपूर्ववद्विस्मयमादधान इत्यर्थः । तथैवोत्तरयिष्यति–सदैकप्रियदर्शन इति । " एके मुख्यान्यकेवलाः " इत्युभयत्राप्यमरः ॥ ३ ॥

आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः । कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ ४ ॥

आत्मवानिति । आत्मवान् धैर्यवान् । " आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि " इत्यमरः । अप्रकम्प्यधैर्य इत्यर्थः । जितक्रोधः विधेयकोपः दण्डार्हेष्वेवाहितकोप इत्यर्थः । "क्रोधमाहारयत्तीव्रम्" इति हि वक्ष्यति । द्युतिमान् कान्तिमान् " रूपसंहननं लक्ष्मीं सौकुमार्यं सुवेषताम् । ददृशुर्विस्मिताकारा रामस्य वनवासिनः ॥" इति हि वक्ष्यति । गुणेषु दोषाविष्करणमसूया । "असूया तु दोषारोपो गुणेष्वपि" इत्यमरः । अविद्यमानासूया यस्यासावनसूयकः । "शेषाद्विभाषा" इति कपि "आपोऽन्यतरस्याम्" इति ह्रस्वः । यद्वा असूयकः असूञ् कण्ड्वादौ पठितः । तस्मात् "कण्ड्वादिभ्यो यक् " इति यक्प्रत्ययः । " अकृत्सार्वधातुकयोः" इति दीर्घः । ततो "निन्दहिंस–" इत्यादिना वुञ् । स न भवतीत्यनसूयकः । कस्येति । देवाश्चेति चकारेणासुरादयः समुच्चीयन्ते । जातरोषस्य कस्य संयुगे देवादयः सर्वे बिभ्यतीत्यन्वयः । अतो न "भीत्रार्थानां–" इति किंशब्दात्पञ्चमी । शत्रुविषयः कोपो मित्राणामपि भयमावहतीत्यर्थः । यद्वा चकारोऽप्यर्थः । अनुकूला अपि बिभ्यति, किं पुनः प्रतिकूला इत्यर्थः । यद्वा संयुगे जातरोषस्य कस्य बिभ्यतीत्येवान्वयः । शेषे षष्ठी । "संज्ञापूर्वको विधिरनित्यः" इत्यपादानसंज्ञापूर्वकपञ्चम्यभावः । अत्र श्लोकत्रये समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारः ॥ ४ ॥

प्रियदर्शनः एकमाद्वितीयं प्रियं दर्शनं यस्य सः । प्रियस्य विषयद्वारकत्वात् असदृशावयवाभिरूप्य इत्यर्थः ॥ ३ ॥ आत्मवानिति । आत्मवान वशीकृतान्तःकरणः, यद्वा धृतिमान । जितक्रोधः–अत्र क्रोधशब्दः कामादीनामुपलक्षकः, जितारिषड्वर्ग इत्यर्थः । द्युतिमान् प्रशस्तकान्तिमान । अनसूयकः गुणेषु

अथायं प्रश्नो विजिगीषामूलमिति नारदो मन्येतापीति मन्वानः स्वप्रश्नो जिज्ञासाहेतुक इति दर्शयन् प्रश्नमुपसंहरति–एतदिति । एतत्पूर्वोक्तगुणाश्रयभूतं वस्तु अहं जिज्ञासुः न विजिगीषुः, श्रोतुं न तु क्षेप्तुमिच्छामि, न तु ब्रूहि इति निर्बध्नामि । अहं तावदिच्छामि मयि भवतः प्रसादोऽस्ति चेद्वक्तुमर्हसीति भावः। तत्र हेतुमाह–परमिति । हिर्हेतौ । "हिर्हेताववधारणे" इति बाणः। यस्मात्कारणान्मे परमुत्कृष्टं कौतूहलं विस्मयोऽस्ति तस्मादिच्छामि। यद्वा हिः प्रसिद्धौ । मुखविकासाद्यनुभावैर्मम हर्षस्तव स्पष्ट इत्यर्थः । स्वप्रश्नोत्तरदाने देशिकालाभान्निर्विण्णः । संप्रति भवद्दर्शनेन सञ्जाताभिलाषोऽस्मि, ब्रूहि मत्पृष्टमिति भावः । "आचार्यस्य ज्ञानवत्तामनुमाय शिष्येणोप(स)पत्तिः क्रियते" इति न्यायेन नारदस्य प्रष्टव्यविषयज्ञानसम्भावनामाह–महर्ष इति । ऋषिः ज्ञानस्य पारं गन्ता। " ऋषी गतौ "इत्यस्माद्धातोः "इगुपधात्कित्"इतीन्।गत्यर्थो ज्ञानार्थः। महांश्चासौ ऋषिश्च महर्षिः।

**एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे । महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥ ५ ॥**

"आन्महतः समानाधिकरणजातीययोः" इत्यात्वम् । हेतुगर्भविशेषणम् । महर्षित्वात्त्वमेवंविधं नरं पुरुषं ज्ञातुमर्हसि । ब्रह्मणः सकाशाद्विदितसकलविशेषस्त्वं कथं मे जिज्ञासोर्न वदेरिति भावः । अत्र पूर्वार्धे काव्यलिङ्गमलङ्कारः, उत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुत्वात् । "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमलंकृतिः ।" इति लक्षणात् । उत्तरार्द्धे परिकर इति अनयोः संसृष्टिः । अन्ते चास्येति करणं बोध्यम् । इति परिपप्रच्छेति सम्बन्धः । नन्वयं प्रश्नो वाल्मीकिर्न संगच्छते, तस्य विदितसकलरामवृत्तान्तत्वेन निश्चये संशयायोगात् । वक्ष्यति ह्ययोध्याकाण्डे–" इति सीता च रामश्च लक्ष्मणश्च कृताञ्जलिः । अभिगम्याश्रमं सर्वे वाल्मीकिमभिवादयन् ॥ " इति । कथं रामविषयमध्यवर्त्ती वाल्मीकिस्तद्गुणान्न विजानीयात् ? वक्ष्यति हि–" विषये ते महाराज रामव्यसनकर्शिताः । अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः ॥ " इति । कथं वा " रामो रामो राम इति प्रजानामभवन् कथाः । रामभूतं जगदभूद्रामे राज्यं प्रशासति ॥ " इति पृथग्जनैरपि विदितं रामवैभवं मुनिरेष न जानीयात्, कथं चैतावन्मात्रं सत्यलोकादागतो नारदः प्रष्टुमर्हति, य एवमुत्तरयति ' रामो नाम जनैः श्रुतः ' इति । तत्रोच्यते–नायमापाततो भासमानः प्रश्नार्थः नाप्युत्तरार्थः । अत्र करतलामलकवद्विदितरामवृत्तान्तस्य वाल्मीकेः कुतूहलासंभवात् " बुद्ध्वा वक्ष्यामि " इत्युत्तरवाक्यानुपपत्तेश्च । किन्तु वक्तृबोद्धानुगुण्यात्

दोषाविष्करणमसूया, तद्रहितः । कस्य संयुगे देवाश्च बिभ्यति, चकारादसुरादयश्च ॥ ४ ॥ एतदिति । एतत् उक्तगुणकं नररूपं वस्त्वित्यर्थः ॥ ५ ॥

वेदान्तेषु नानाविद्यासु तत्तद्गुणविशिष्टतयावगम्यमानं परं तत्त्वं किं विष्णुः, उत रुद्रादिष्वन्यतम इति प्रश्नार्थः । तदिदं वाल्मीकेर्हृदयमाकलयन् भगवान्नारदोऽपि रामत्वेनावतीर्णो विष्णुरेव वेदान्तवेद्यः पुरुषः, ब्रह्मादयः सर्वे तद्भ्रुकुटीभटास्तत्परतन्त्राः । सद्ब्रह्मात्मादिशब्दाश्च पर्यवसान वृत्त्यावयववृत्त्या च विष्णुपरा इत्येवमाशयेन सकलवेदान्तोदितगुणजातं रामे योजयन्नुत्तरयतीति सर्वमनवद्यम् ॥ ५ ॥ तनि०—एतत् पूर्वोक्तदेश कालगुणविशिष्टं वस्तु श्रोतुमिच्छामि । परं कौतूहलम् न केवलमुक्तगुणविशिष्टं कौतूहलं न केवलमेतद्देशकालसम्बन्धं नरं, किन्तूभयात्मकं, तस्याश्चर्यरूपतया तच्छ्रवणं कौतूहलम् । हिशब्दः प्रसिद्धौ । सर्वत्राश्चर्यदर्शने कौतूहलं प्रसिद्धम् । उभयं प्रत्येकं मया ज्ञातं श्रुतवेदान्तत्वात् न तत्र कौतूहलम् । नन्वेतादृशं वस्तु कथं मया वक्तुं शक्यत इत्यत्राह-त्वं समर्थोऽसीति । कथं मम सामर्थ्यम् ? तत्राह--महर्ष इति । ऋषयो ह्यलौकिकार्थद्रष्टारः । तत्र महर्षित्वात्तव मत्तोऽपि वेदान्तरहस्यज्ञानमधिकमिति । एवंविधं नरं परमपुरुषम् ॥ ५ ॥ एवं "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इत्युक्तं गुरूपसदनविधिमुपबृंहय्य "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां

**श्रुत्वा चैतत् त्रिलोकज्ञो वाल्मीकेर्नारदो वचः । श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ ६ ॥**

तत्त्वतो ब्रह्मविद्याम्" इत्युक्तं प्रवचनविधिमुपबृंहयति--श्रुत्वेत्यादिना । तत्र "नासंवत्सरवासिने प्रब्रूयात्" इति नियमस्य ज्येष्ठपुत्रव्यतिरिक्त विषयत्वात् वाल्मीकेश्च भृगुपुत्रतया भ्रातृपुत्रत्वात् शुश्रूषानिरपेक्षं प्रीत्योपदिदेशेत्याह--श्रुत्वा चेति । त्रयाणां लोकानां समाहारस्त्रिलोकम् । पात्रादित्वान्न ङीप् । यद्वा त्रित्वविशिष्टो लोकस्त्रिलोकः । "नवरसरुचिराम्" इत्यत्र काव्यप्रकाशे तथैव व्याख्यानात् । यद्वा त्रयो लोका यस्मिन् तत्त्रिलोकमिति ब्रह्माण्डमुच्यते, तज्जानातीति त्रिलोकज्ञः । भूर्भुवःस्वरिति त्रैलोक्यम् । यद्वा विष्णुपुराणोक्तरीत्या कृतकमकृतकं कृतकाकृतकमिति त्रयो लोकाः । महर्लोकपर्यन्ताः कृतकाः । जनोलोकः कृतकाकृतकः । सत्यलोकोऽकृतक इति । यद्वा लोका जनाः "लोकस्तु भुवने जने" इत्यमरः । बद्धनित्यमुक्तास्त्रयो लोकाः । नारदः ब्रह्मपुत्रतया तज्ज्ञानार्हः । एतत्पूर्वोक्तरीत्या व्यङ्ग्यार्थगर्भं वाल्मीकेः स्वाभिमतस्य पुत्रस्य वचः परिपूर्णार्थं वाक्यं श्रुत्वा निशम्य । चकारेण तद्बुद्धित्वा चेत्यर्थः । प्रहृष्टः स्वेनोपदिदिक्षितस्यैव पृष्टत्वेन सन्तुष्टः शतकोटिप्रविस्तररामायणे स्वावगतस्यैवानेन पृष्ट त्वात् रामगुणस्मरणामृतपा[illegible]भादपूर्वशिष्यलाभाद्वा "सोऽहं मन्त्रविदेवास्मि नात्मवित्" इत्युक्तरीत्या सनत्कुमारं प्रति स्वस्योपसर्पणस्मारकत्वाद्वा

श्रुत्वेति । एतत् पूर्वोक्तं प्रश्नजातम् । [illegible] निलोकगोचरज्ञान इत्यर्थः । आमन्त्र्य ऐकाग्र्यसिद्ध्यर्थमभिमुखीकृत्य, प्रहृष्टः कस्य बिभ्यति देवाश्चेति दृष्टदेवादि भीषकत्वगुणसंपत्तेः ब्रह्मादिष्वप्रसक्तोऽयं प्रश्नः सकलगुणविशिष्टसार्वभौमविषयक इत्यवगम्यते, तत्रापि सार्वभौममात्रे पृष्टप्रशस्तसकलगुणसंपत्तेरसम्भवात्सकल

प्रहृष्टः सन् । कर्त्तरि क्तः । रामगुणानुसन्धानजनितं निजवैचित्र्यं व्याजेन परिहर्तुं श्रूयतामित्यामन्त्र्याभिमुखीकृत्य वाक्यमुत्तररूपमब्रवीत् व्यक्तमुक्तवान् ॥ ६ ॥ वक्ष्यमाणस्यासदुत्तरत्वपरिहारायात्मनो वाल्मीकेराशयाभिज्ञत्वमाह—बहव इति । यद्वा वेदान्तोदितगुणानां विष्णोरन्यत्रासम्भवात्तेषां पुरुषशब्दवाच्यत्वासंभवाच्चतुर्मुखसंप्रदायाच्च विष्णावेव परतत्त्वतां परिशेषयन्नाह—बहव इति । बहवो विपुलाः, अनेकगुणविततिमूलभूता इत्यर्थः । अनेनापृष्टानामपि वक्ष्यमाणानां गुणानां निदानमुपदर्शितम् । यद्वा बहवः अपरिच्छिन्ना इत्यर्थः । श्रूयते हि अपरिच्छिन्नत्वं गुणानाम् "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इति । अत्रानन्दस्यैकस्यापरिच्छिन्नत्वोक्तिरितरेषामप्यपरिच्छिन्नत्वप्रदर्शनार्था । उक्तं हि यामुनाचार्यैः—"उपर्युपर्यब्जभुवोऽपि पुरुषान्" इत्यादिना । दुर्लभाः परमपुरुषादन्यत्रासम्भाविताः, अन्येषां "न ब्रह्मा नेशानः" इत्यादिना असम्भाव्यत्वादिवचनादिति भावः । अनेन प्रश्नस्य देवताविशेषनिर्द्धारणपरत्वमात्मनावगतमिति व्यञ्जितम् । चकार उक्तसमुच्चयार्थः

**बहवो दुर्लभाश्चैव ये त्वया कीर्त्तिता गुणाः । मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥ ७ ॥**

अनुक्तसमुच्चयार्थो वा । तेन स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणरूपा इत्युक्तम् । एवकार इतरत्र सर्वात्मना असंभावितत्वमभिव्यनक्ति । य इति वेदान्तप्रसिद्धिरुच्यते । गुणाः वीर्यादयः कीर्तिता इत्यनेन गुणानां प्रश्नकालेऽपि भोग्यतातिशयः सूच्यते । तैर्युक्तः, न तु कल्पित इति निर्गुणवादनिरासः । नरः पुरुषः । "पुरुषाः पूरुषा नराः" इति निघण्टुः । "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" "पुरुषः पुण्डरीकाक्षः" इति श्रुतिस्मृत्यनुगतः पुरुषशब्दोऽनेन प्रत्यभिज्ञाप्यते । श्रूयतां न तु यथाकथंचित्परिकल्प्यताम् । शृण्वित्यनभिधानात् विनयोक्तिरियम् । तात्कालिकं किंचित्प्रकल्प्यत इति भ्रमं वारयति अहं बुद्ध्वा वक्ष्यामीति । मत्पितुर्ब्रह्मणः सकाशात् शतकोटिप्रविस्तररामायणमुखेन विदित्वा वक्ष्यामि । अनेन सम्प्रदायाभिज्ञत्वमात्मनो दर्शितम् । यद्वा, रामगुणानुसन्धानवैचित्र्येण न मे किंचित्प्रतिभाति, क्षणात् बुद्ध्वा वक्ष्यामीत्यर्थः । अतो मध्ये वाक्यान्तरमलङ्काराय । अन्यथा वाक्यगर्भितमिति काव्यदोषः स्यात् । अहं वक्ष्यामि अहंभूत्वा वक्ष्यामि, नेदानीं नारदोऽस्मि, रामगुणश्रवणशिथिलत्वात् । रामगुणमग्नोऽयं नदीप्रवाहमग्न इव अवलम्बनयष्टिमपेक्षते—हे मुन इति । यद्वा, प्रश्नकाले समवधानविशेषमालक्ष्य श्लाघते मुन इति । अथ क्षणात्सन्धुक्षितो नारदो वाक्यशेषं पूरयति तैरिति । नर इत्यनेन परतत्त्वनिर्द्धारणं प्रश्नफलितार्थं द्योतयति । बुद्ध्वा इत्यनेन श्रुतिस्थतत्तच्छब्दार्थो विवृतः ॥ ७ ॥

जगद्रक्षणार्थं नृरूपेणावतीर्णे परमपुरुष एव सम्भवात् दिष्ट्या तद्गुणकीर्तनं लब्धमिति प्रहर्षः ॥ ६ ॥ बहव इति । बुध्वा वक्ष्यामि महापुरुषं निश्चित्य वक्ष्यामि,

तनि०—बहवः पृथग्गुणानां द्वयष्टकत्वेऽपि प्रत्येकमेकैकस्यानेकगुणविततितया राशीकरणादसंख्याताः । दुर्लभाः अनीश्वरे ईश्वरे परमव्योमवासिनि अवतारान्तरे च दुर्लभाः कीर्तिताः । वाचिकव्यापारप्रतिपन्ना अपि दुर्लभाः । एवंविधप्रश्ने अन्यस्य नाधिकार इत्याह—मुन इति । मुनिर्मननशीलः, तेन शशशृङ्गप्रश्नवत् नरे उक्तगुण वैशिष्टयप्रश्नस्य दोषमूलत्वं व्युदस्तम् । उत्तरेऽपि नान्यस्याधिकार इत्याह—अहमिति । ममापि सहसा वक्तुं न शक्यमित्याह—बुद्ध्वेति । यद्वा बुद्ध्वेत्यनेन को न्वस्मिन्नित्यादि प्रश्नवाक्योद्बोधितरामाभिरूप्यगुणानुसन्धानेन विस्मृतलोकत्वं व्यज्यते । तैरसंख्येयैर्गुणैर्युक्तो नरः पुरुषः श्रूयताम् ॥ ७ ॥ अथ वेदान्तोदितगुणानां रामे प्रदर्शनमुखेन रामत्वेनावतीर्णो विष्णुरेव वेदान्तवेद्यं परं तत्त्वमिति दर्शयति—इक्ष्वाकुवंशप्रभव इत्यादिना सर्गशेषेण । तत्र वेदान्तोदितगुणगणानां निधी रामत्वेनावतीर्णो विष्णुरेवेति महावाक्यार्थः । इक्ष्वाकुवंशेत्यारभ्य सत्ये धर्म इवापर इत्यन्ता सार्धैकादशश्लोक्येकान्वया । इक्ष्वाकुर्नाम वैवस्वतमनोर्ज्येष्ठः पुत्रः, तस्य वंशः पुत्रपौत्रादिपरम्परा । प्रभवत्यस्मादिति प्रभवः प्रादुर्भावस्थानम् । इक्ष्वाकुवंशः प्रभवो यस्य सः इक्ष्वाकुवंश

**इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः । नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ॥ ८ ॥**

प्रभवः । जनकादिमहाकुलेषु विद्यमानेषु कुतोऽत्रैव भगवानवतीर्ण इत्यपेक्षायामिक्ष्वाकुपदं प्रयुक्तम् । इक्ष्वाकुर्हि चिरं हरिमाराध्य तन्मूर्तिविशेषं श्रीरङ्गनाथमलभतेति पौराणिकी गाथा । अतस्तत्पक्षपातेन तद्वंशेऽवतीर्ण इति सूचयितुमिक्ष्वाकुपदम् । वंशेत्यनेन गुणवान् क इति पृष्टं सौशील्य मुक्तम् । रमयति सर्वान् गुणैरिति रामः । "रामो रमयतां वरः" इत्यार्षनिर्वचनबलात् कर्तर्यपि कारके घञ् वर्ण्यते । यद्वा, रमन्तेऽस्मिन् सर्वे जना गुणैरिति रामः । "अकर्त्तरि च कारके संज्ञायाम्" इति घञ् । तथा चागस्त्यसंहितायामुक्तम्—"रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयते ॥" इति । नामेति प्रसिद्धौ । चित्रकूटवासिना त्वया विदितो हीत्यर्थः । न केवलं भवता, पामरैरपि विदित इत्याह जनैः श्रुत इति । श्रुतः अवधृतः । "श्रुतं शास्त्रावधृतयोः" इत्यमरः । ताटकाताटकेयवधविश्वामित्राध्वरत्राणाहल्याशापविमोक्षहरधनुर्भङ्गपरशुराम निग्रहसप्ततालवेधवालिवधसिन्धुबन्धमूलबलनिबर्हणादिभिरवधारितनारायणभाव इत्यर्थः । य एवंभूतः स एव नियतात्मा स एव महावीर्य्य इत्येवं प्रतिपदं वक्ष्यमाणं तत्पदमनुषज्यते । रामरूपेणावतीर्णो विष्णुरेव वेदान्तोदिततत्तद्गुणक इति सर्वत्र तात्पर्यार्थः । आदौ स्वरूपनिरूपकधर्म्मानाह



तैर्दुर्लभगुणैर्युक्तो नरः श्रूयतामिति योजना । श्रूयतां प्राप्तकाले लोट् । तस्य श्रवणं ते प्राप्तकालमित्यर्थः ॥ ७ ॥ उक्तप्रशस्तसमस्तगुणविशिष्टत्वेन निश्चित परमपुरुषमुपदिशति—इक्ष्वाकुवंशप्रभव इत्यादि रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति इत्यन्तेन । प्रभवत्यस्मादिति प्रभवः उत्पत्तिस्थानम् । इक्ष्वाकुवंशः

नियतात्मेत्यादिना। नियतात्मा नियतस्वभावः, निर्विकार इति यावत्। "नास्य जरयैतज्जर्यिते न वधेनास्य हन्यते अपहतपाप्मा विजरो विमृत्यु विशोको विजिघत्सोऽपिपासः" इत्यादिश्रुतेः। महावीर्यः अचिन्त्यविविधविचित्रशक्तिकः। "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल क्रिया च" इति श्रुतेः। द्युतिमान् स्वाभाविकप्रकाशवान्। स्वयंप्रकाशः ज्ञानस्वरूप इति यावत्। "विज्ञानघन एव प्रज्ञानघनः" इति श्रुतेः। धृतिमान् निरतिशयानन्दः। "धृतिस्तु तुष्टिः सन्तोषः" इति वैजयन्ती। "आनन्दो ब्रह्म" इति श्रुतेः। सर्वं जगद्वशेऽस्यास्तीति वशी, सर्वस्वामीत्यर्थः। "सर्वस्य वशी सर्वस्येशानः" इति श्रुतेः॥ ८॥ तनि०–अथ नारदः प्रस्तुतधर्मद्वयस्य प्रत्येकवृत्तित्वमनेन ज्ञातम्, एकधर्मिविशेषनिष्ठत्वं त्वज्ञातम्, तदेवोपदेष्टव्य मित्यभिप्रायेणोत्तरमाह। तत्र प्रथमं लोकोत्तराश्रयविषयप्रश्नोत्तरस्य वक्तव्यतया आश्रयस्येतरव्यावर्तकत्वमाह–इक्ष्वाकुवंशप्रभव इति। तपस्समासादितश्रीरङ्गनाथा राधनफलतया तद्वंश एवावतीर्ण इतीक्ष्वाकुग्रहणम्। "वैष्णवो नः कुले जातस्स नः संतारयिष्यति" इत्येकवैष्णवजनिमात्रेण तद्वंशस्य सर्वस्याप्युत्तारः। यत्र तु

**बुद्धिमान्नीतिमान् वाग्ग्मी श्रीमान् शत्रुनिबर्हणः। विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः॥ ९॥**

सर्वे गृह्याराधनीकृतश्रीरङ्गनाथाः तस्मिन्नेव वंशे स एवावतीर्णः। वंशस्य महत्त्वे किं वक्तव्यमिति वंशपदाभिप्रायः। प्रभवत्यस्मादिति प्रभवः उत्पत्तिस्थानम्, इक्ष्वाकुवंशः प्रभवो यस्य स इति बहुव्रीहिः। वंशप्रभव इति वंशस्योत्पत्तिस्थानत्वकथनेन कौसल्यागर्भस्याप्राकृतभगवद्विग्रहप्रवेशनिर्गममात्रहेतुत्वेनोत्पत्तिस्थानत्वमिति कथितम्। तेन "सुग्रीवमारुतिविभीषणपुण्यपादसंचारपूतभवनं प्रविवेश रामः" इतिवत्पवित्रितवंशमवेशो व्यञ्जितः। अथाश्रितवैलक्षण्यमाह राम इति। गुणैः रमयतीति रामः, रमन्ते योगिनोऽस्मिन्निति वा रामः। एवमाश्रितस्य सकलवस्तुविलक्षणत्वं परमव्योमविग्रहवैलक्षण्यं चोक्तम् "स उ श्रेयान् भवति जायमानः" इति श्रुतेः। अवतारवैलक्षण्यं च रामं सत्यपराक्रममिति वक्ष्यति। नामेति प्रसिद्धौ। प्रसिद्धिश्च "तं धीरासः कवय उन्नयन्ति स्वाधियो मनसा देवयन्तः" इत्याद्युक्ता। देवयन्तः स्तुतिशीलाः। न केवलं वैदिकी प्रसिद्धिः, लौकिकी चास्तीत्याह–जनैः श्रुत इति। नियतात्मा असाधारणदिव्यमङ्गलविग्रहः। महावीर्यः–महत्त्वं दोषोपाध्यवधिसमातिशयरहितत्वम्। द्युतिमान्। अतिशायने मतुप्। "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥" इत्युक्तेः। एतेन नीलतोयदमध्यस्थविद्युत्सदृशौ ज्ज्वल्यवत्त्वमुक्तम्। वक्ष्यति च "तं तपन्तमिवादित्यमुपपन्नं स्वतेजसा" इति। धृतिमान् धृतिर्विधरणम् प्रशासनाधीनलोक इत्यर्थः। वशी गुणवशीकृतसर्वजनः हृषीकेशो वा। हृषीकेशः जितेन्द्रियः॥ ८॥ **अथ सृष्ट्युपयोगिगुणानाह–बुद्धिमानित्यादिना। बुद्धिमान् सर्वज्ञः। "यः सर्वज्ञः सर्ववित्" इति श्रुतेः। नीतिमान् प्रभवो यस्य सः तथोक्तः। रमन्तेऽस्मिन्निति रामः, नामशब्दः प्रसिद्धौ। नियतात्मा शिक्षितमनाः। वशी जितेन्द्रियः॥८॥ बुद्धिमानिति। बुद्धिमान् प्रशस्तधीः। बुद्धेः प्राशस्त्यं नाम–"शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा। ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः॥" इत्युक्तगुणविशिष्टत्वम्। नीतिमान् अतिशये प्राशस्त्ये**

मर्यादावान् । श्रुतिरत्र " धाता यथापूर्वमकल्पयत् । एष सेतुर्विधरण एषां लोकानामसंभेदाय " इति । शोभना वागस्यास्तीति वाग्मी । " वाचो ग्मिनिः" इति ग्मिनिप्रत्ययः । कुत्वे जश्त्वे च कृते गकारलाभात् पुनर्गकार उक्तिशोभनत्वज्ञापनायेति न्यासकारः । सर्ववेदप्रवर्तक इत्यर्थः । " यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतिः । श्रीमान् समृद्धोभयविभूत्यैश्वर्यः । " श्रीः कान्तिसंपदोर्लक्ष्म्याम् " इति बाणः । " सर्वमिदमभ्यात्तः" इति श्रुतिः । शत्रून् तद्विरोधिनो निबर्हयति नाशयतीति शत्रुनिबर्हणः । "बर्ह हिंसायाम्" इत्यस्माद्धातोः कर्तरि ल्युट् । "एष भूतपतिरेष भूतपालः " इति श्रुतेः । अथ " य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी । तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद " इत्यन्तरादित्य विद्योदितं सर्वाङ्गसुन्दरविग्रहं दर्शयति-विपुलांस इत्यादिना सार्धश्लोकद्वयेन । विपुलांसः उन्नतस्कन्धः । उन्नतस्कन्धत्वं च महापुरुषलक्षणमिति

**महोरस्को महेष्वासो गूढजत्रुररिन्दमः । आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥ १० ॥**

सामुद्रिकोक्तम्-" कक्षः कुक्षिश्च वक्षश्च घ्राणः स्कन्धो ललाटिका । सर्वभूतेषु निर्दिष्टा उन्नतास्तु सुखप्रदाः॥" इति । महाबाहुः वृत्तपीवरबाहुः । आय तत्वं तु वक्ष्यति आजानुबाहुरिति । "आजानुलम्बिनौ बाहू वृत्तपीनौ महीश्वरः" इति सामुद्रिकलक्षणम् । कंबुग्रीवः शङ्खतुल्यकण्ठः । इन्दुमुखीतिवत् शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । "कम्बुग्रीवश्च नृपतिर्लम्बकर्णोऽतिभूषणः" इति लक्षणम् । "रेखात्रयान्विता ग्रीवा कम्बुग्रीवेति कथ्यते" इति हलायुधः । महत्यौ हनू यस्यासौ महाहनुः । " स्त्रियाः पुंवत् " इत्यादिना पुंवद्भावः । हनुः कपोलोपरिभागः । " अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परो हनुः " इत्यमरः । " मांसलौ तु हनू यस्य भवतस्त्वीषदुन्नतौ । स नरो मृष्टमश्नाति यावदायुः सुखान्वितः ॥" इति लक्षणम् ॥ ९ ॥ महोरस्क इति । महद्विशालमुरो यस्यासौ महोरस्कः । " उरःप्रभृतिभ्यः कप् " इति कप् । लक्षणं तु-" स्थिरं विशालं कठिनमुन्नतं मांसलं समम् । वक्षो यस्य महीपालस्तत्समो वा भवेन्नरः ॥" इति । मांसलत्वं तु वक्ष्यति-पीनवक्षा इति । महान् इष्वासो धनुर्यस्यासौ महेष्वासः । अनेन तदुचितसंहनन

वा मतुप् । वाग्मी प्रशस्तवाक् । श्रीमान् सर्वातिशायिश्रीः " ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम् " इत्युक्तश्रौतश्रीरत्र विवक्षिता । विपुलांसः मांस लोन्नतभुजशिरस्कः । महाहनुः पूरितकपोलोपरिभागवान् ॥ ९ ॥ महोरस्क इति । महद्विशालमुरो यस्य स महोरस्कः, " उरः शिरो ललाटं च " इत्युपक्रम्य " विशालास्ते सुखप्रदाः " इत्युक्तेः । गूढजत्रुः-गूढे निमग्ने जत्रुणी वक्षोंऽसयोस्सन्धिगतौ अस्थिविशेषौ यस्य स तथोक्तः । अरीन् कामादीन् दमयतीत्यरिन्दमः ।

विशेषो लक्ष्यते, अतो न प्रक्रमविरोधः । गूढे मांसलत्वेनाप्रकाशे जत्रुणी अंसद्वयसन्धिगतास्थिनी यस्यासौ गूढजत्रुः । " स्कन्धो भुजशिरोंऽसोऽस्त्री सन्धी तस्यैव जत्रुणी" इत्यमरः । "विषमैर्जत्रुभिर्निःस्वा अतिसूक्ष्मैश्च मानवाः । उन्नतैर्भोगिनो निम्नैर्निःस्वाः पीनैर्नराधिपाः॥" इति लक्षणम् । अरीन् दमयति निवर्त्तयतीत्यरिन्दमः । " संज्ञायां भृतॄवृजिधारिसहितपिदमः " इति खच् । असंज्ञायामप्यार्षः । अरिशब्देन पाप्मा विवक्षितः, अपहतपाप्मेत्यर्थः । अनेनायं विग्रहपरिग्रहो न कर्ममूलः, किन्त्वनुग्रहमूलः, " इच्छागृहीताभिमतोरुदेहः " इति स्मृतेः । अतः न प्रक्रमभङ्गः । जानु ऊरुपर्व, तत्पर्यन्तं विलंबिबाहुराजानुबाहुः । सुष्ठु समं वृत्तं छत्राकारं शिरो यस्यासौ सुशिराः । "समवृत्तशिराश्चैव छत्राकारशिरास्तथा । एकछत्रां महीं भुङ्क्ते दीर्घमायुश्च जीवति ॥" इति लक्षणम् । सुललाटः । ललाटसौष्ठवं प्रोक्तम्—"अर्धचन्द्रनिभं तुङ्गं ललाटं यस्य स प्रभुः" इति । शोभनः विक्रमः पदविक्षेपो यस्यासौ सुविक्रमः, शोभनत्वं च गजादितुल्यत्वम् । तथोक्तं जगद्वल्लभायाम्—" सिंहर्षभगजव्याघ्रगतयो मनुजा मुने । सर्वत्र सुखमेधन्ते सर्वत्र जयिनः

समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् । पीनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्षणः ॥ ११ ॥

सदा ॥ " इति ॥ १० ॥ समः नातिदीर्घो नातिह्रस्वः । तथात्वं च तत्रैवोक्तम्—" षण्णवत्यङ्गुलोच्छ्रायः सार्वभौमो भवेन्नृपः " इति । समानि अन्यूनाधिकपरिमाणानि विभक्तानि अश्लिष्टानि अङ्गानि करचरणाद्यवयवा यस्य स समविभक्ताङ्गः । तानि चोक्तानि सामुद्रिकैः—"भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुकौ । कूर्परौ मणिबन्धौ च जानुनी वृषणौ कटी । करौ पादौ स्फिजौ यस्य समौ ज्ञेयः स भूपतिः॥" इति । स्निग्धः स्नेहयुक्तो वर्णो यस्य सः स्निग्धवर्णः । तत्रोक्तं वररुचिना "नेत्रस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम् । त्वचः स्नेहेन शय्या च पादस्नेहेन वाहनम्" इति । प्रतापवान् तेजस्वी, समुदायशोभासम्पन्न इत्यर्थः । पीनवक्षा मांसलवक्षाः । विशाले पद्मपत्रायते अक्षिणी यस्य सः विशालाक्षः । " बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति षच् । अत्र सामुद्रिकम्—"रक्तान्तैः पद्मपत्राभैर्लोचनैः सुखभोगिनः" इति । लक्ष्मीवान् अवयवशोभायुक्तः । शुभलक्षणः अनुक्तसकललक्षणसंपन्नः॥ ११॥

आजानुबाहुः जानुपर्यन्तदीर्घबाहुः । सुशिराः—" सुशिरस्त्वं वृत्तशिराः " इत्यादिसामुद्रिकशास्त्रोक्तलक्षणलक्षितशिरोविशिष्टत्वम् । सुललाटः—"ललाटे यस्य दृश्यन्ते चतुस्त्रिद्व्येकरेखिकाः " इत्युक्तचतूरेखासौभाग्यविशिष्टललाटत्वम् । सुविक्रमः सुष्ठु विक्रमः पादविन्यासो यस्य सः । विक्रमस्य सौष्ठवं नाम—गजसिंहादिगतिसदृशत्वम् ॥ १० ॥ सम इति । समः—" षण्णवत्यङ्गुलोत्सेधो यः पुमान् स प्रकाशते " इत्युक्तरीत्या अन्यूनातिरिक्तविग्रहपरिमाणः । समविभक्ताङ्गः—समानि अन्यूनातिरिक्तानि विभक्तानि पृथक्कृतानि अङ्गानि अवयवा यस्य स तथोक्तः, अनेनोभयपार्श्वस्थकक्षश्रोत्रबाह्वादीनामङ्गानामुपाङ्गानां च समत्वमुक्तं भवति ।

एवमाश्रितानुभाव्यदिव्यमङ्गलविग्रहशालित्वमुक्त्वा आश्रितरक्षणोपयोगिगुणानाह–धर्मज्ञ इत्यादिना स्वजनस्य च रक्षितेत्यन्तेन। धर्मं शरणागतरक्षणरूपं जानातीति धर्म्मज्ञः। वक्ष्यति–"मित्रभावेन संप्राप्तं न त्यजेयं कथंचन। दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम् ॥" इति। सत्या सन्धा प्रतिज्ञा यस्य स सत्यसन्धः। "प्रतिज्ञाने वधौ सन्धा" इति वैजयन्ती। "अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्। नहि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः॥" इति। प्रजानां प्राणिनां हिते हितकरणे रतः तत्परः। यशस्वी आश्रितरक्षणैककीर्त्तिः। "तस्य नाम महद्यशः" इति श्रुतेः। ज्ञानसंपन्नः "यः सर्वज्ञः सर्ववित्" इत्युक्तरीत्या स्वरूपतः स्वभावतश्च सर्वविषयज्ञानशीलः। शुचिः पावनः परिशुद्धो वा, ऋजुरिति यावत्। वश्यः वशंगतः। "वशं गतः" इति निपातनाद्यत्। आश्रितपरतन्त्र इत्यर्थः। समाधिमान् समाधिः आश्रितरक्षणचिन्ता, तद्वान्। प्रजापतिसमः "मध्ये विरिञ्चिगिरिशं प्रथमावतारः" इत्युक्तरीत्या जगद्रक्षणाय प्रजापतितुल्यतयावतीर्णः। श्रीमान् पुरुषकारभूतया लक्ष्म्या अविनाभूतः। धाता पोषकः।

**धर्म्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः। यशस्वी ज्ञानसंपन्नः शुचिर्वश्यः समाधिमान्। प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः ॥१२॥ रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता। रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ॥१३॥**

"डुधाञ् धारणपोषणयोः" इति धातोस्तृच्। रिपून् शत्रून् निषूदयति निरस्यतीति रिपुनिषूदनः। "सूददीपदीक्षश्च" इति प्रतिषेधस्यानित्यत्वात् "अनुदात्तेतश्च हलादेः" इति युच्, नन्द्यादिपाठाद्वा ल्युः। सुषामादित्वात् षत्वम्। आश्रितविरोधिनिरसनशील इत्यर्थः ॥ १२ ॥ अथावतारैकान्तान् गुणानाह–रक्षितेति। लोके सार्वभौमः स्वकीयजनरक्षण एव यतते, अयं तु न तथा, किंतु सर्वस्य प्राणिजातस्य रक्षिता। ताच्छील्ये तृच्। शेषे षष्ठी। ननु यदि सर्वेषां रक्षिता तर्हि दुष्कृतिनमपि सुखिनमापादयेदित्यत्राह–धर्मस्य परिरक्षितेति। आचरणप्रचारणाभ्यां सर्वधर्मस्य व्यवस्थापयिता। उच्छास्त्रप्रवर्त्तिनोऽपि चिकित्सकन्यायेन अनघ (अलङ्घ) यितेत्यर्थः। स्वस्य स्वकीयस्य शरणागतरक्षणरूपस्य धर्मस्य विशेषधर्मस्य विशिष्य

स्निग्धवर्णः–निर्णिक्तेन्द्रनीलवर्ण इत्यर्थः। प्रतापवान् श्रवणमात्रेण शत्रुहृदयविदारकत्वेन प्रशस्तपौरुषः। लक्ष्मीवान्–अत्र लक्ष्मीशब्देन सर्वोत्तमावयवसौभाग्यमुच्यते। शुभलक्षणः–शुभानि मङ्गलायतनानि लक्षणानि सामुद्रिकशास्त्रोक्तानि यस्य स तथोक्तः ॥ ११ ॥ धर्मज्ञ इति। सत्यसन्धः–सत्या यथार्था सन्धा प्रतिज्ञा यस्य सः। ज्ञानसंपन्नः–सर्वविषयज्ञानसंपन्न इत्यर्थः। शुचिः बाह्याभ्यन्तरशुद्धियुक्तः। वश्यः पित्राचार्यविनीतः। प्रजापतिरिति। श्रीमान् अखण्डितैश्वर्यसंपन्नः। धाता सकलजगद्धारणपोषणसामर्थ्ययुक्तः। रिपुनिषूदनः आश्रितजनानां ये रिपवः तेषां नाशकः ॥ १२ ॥ रक्षिता जीवलोकस्य प्रजानामरिष्टनिरसनपूर्वकेष्टप्रापणस्य

रक्षिता। यद्वा, धर्मस्य तत्तद्वर्णाश्रमधर्मस्य नित्यं समन्ततो रक्षिता। लोके सर्वधर्मप्रवर्तकोऽपि "धर्मोपदेशसमये जनाः सर्वेऽपि पण्डिताः। तदनुष्ठान समये मुनयोऽपि न पण्डिताः॥" इति न्यायेन स्वधर्मानुष्ठाने स्खलति, न तथायमित्याह—स्वस्य धर्मस्य रक्षिता, स्वासाधारणस्य क्षत्रियधर्मस्य रक्षितेत्यर्थः। लोके सर्वरक्षकोऽपि कश्चित्स्वजनरक्षणं कर्त्तुं न प्रगल्भते। "दास्यमैश्वर्य्यभावेन ज्ञातीनां च करोम्यहम्। अर्धभोक्ता च भोगानां वाग्दुरुक्तानि च क्षमे॥" इति भगवताप्युक्तेः। तदपि कर्तुमीहत इत्याह स्वजनस्य च रक्षितेति। स्वजनस्य च, स्वजनस्यापीत्यर्थः। अनेन स्वजन रक्षणस्य दुर्घटत्वं सूचितम्। यद्वा, चस्त्वर्थः। स्वजनस्य शरणागतस्य विशेषेण रक्षिता। विशेषस्तु तदपराधसहिष्णुत्वम्। वक्ष्यति—"मित्रभावेन संप्राप्तं न त्यजेयं कथंचन। दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम्॥" इति। यद्वा, लोके कश्चित्सर्वान् रक्षन् स्वजनं पीडयति, असौ तु स्वजन

वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः। सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान्॥ १४॥

स्यापि रक्षितेत्यर्थः। अथवा स्वावतारप्रयोजनमाह रक्षितेति। गीतं हि—"परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय संभ वामि युगेयुगे॥" इति। स्वजनस्य स्वशेषभूतस्येति सर्वलोकविशेषणं रक्षणहेतुसम्बन्धद्योतनार्थम्। रक्षिता इष्टप्रापकः, अनेन साधुपरित्राणमुक्तम्। चशब्दोऽन्वाचये। रक्षिता च अनिष्टनिवर्त्तकः। अनेनानुषङ्गिकदुष्कृद्विनाश उक्तः। धर्मस्य सामान्यविशेषरूपस्य स्थापनमाहेतरवाक्यद्वयेन। रक्षिता स्वस्य धर्मस्य सीतापरिणयमुखेन स्वाश्रमोचितधर्माणामनुष्ठाता। यद्वा, स्वस्य धर्मः परत्वम्, तस्य रक्षिता। हरधनुर्भङ्गपरशुरामजयादिना हि परत्वं स्थापितम्। यद्वा, धर्मो धनुः—"स्वाम्यस्वभावसुकृतेष्वस्त्री धर्मं तु कार्मुके।" इति बाणः। सदा धनुर्द्धरः। स्वजनस्य च रक्षिता स्वभूतो जनः स्वजनः ज्ञानी "ज्ञानी त्वात्मैव मे मतम्" इति गीतत्वात्, तस्य रक्षिता; आत्मन इव सर्वयोगक्षेमावह इत्यर्थः॥१३॥ अथास्याष्टादशविद्यास्थानाभि ज्ञत्वमाह—वेदेति। विदन्त्यनेन धर्मादिकमिति वेदः। करणे घञ्। स चतुर्विधः। ऋग्यजुःसामाथर्वणभेदात्। वेदस्य किञ्चित्कराणि वेदाङ्गानि तानि

कर्तेत्यर्थः। धर्मस्य परिरक्षिता धर्मस्य परिरक्षणं नाम—तत्तद्धर्मेषु वर्णाश्रमाणां नियोजनम्। रक्षिता स्वस्य धर्मस्य, अत्र धर्मशब्दः यजनाध्ययनदानपरः तत्परिपाल यिता। स्वजनस्य रक्षिता स्वजनस्य आश्रितबान्धवादेः जीवलोकस्य रक्षितेत्यनेनैवाश्रितादिजनरक्षणे सिद्धेपि पुनस्तद्रक्षणकथनं विशेषतो रक्षणद्योतना र्थम्॥ १३॥ वेदवेदाङ्गतत्त्वज्ञः—वेदानां चतुर्णां तदङ्गानां शिक्षादीनां पाठतोऽर्थतश्च तत्त्वमबाधितं स्वरूपं जानातीति तथा। धनुर्वेदे च निष्ठितः अस्त्रशस्त्रादि

च षट् । तथोक्तम्–"शिक्षा कल्पो व्याकरणं निरुक्तं ज्यौतिषां गतिः । छन्दसां विचितिश्चेति षडङ्गानि प्रचक्षते ॥" इति । तत्र शिक्षानाम-अकारादीनां वेदवर्णानां स्थानकरणप्रयत्नस्वरादिबोधिका, यागक्रियाक्रमोपदेशः कल्पः, साधुशब्दव्याख्यानं व्याकरणम् "वर्णागमो वर्णलोपो वर्णविपर्ययः" इत्यादिना निश्चयेनोक्तं निरुक्तम्, कर्मानुष्ठानकालादिप्रतिपादकं शास्त्रं ज्यौतिषम्, छन्दसां पद्यानां शास्त्रं छन्दोविचितिः । वेदाश्च वेदाङ्गानि च वेदवेदाङ्गानि तेषां तत्त्वं तत्त्वार्थः तं जानातीति तथोक्तः । " इगुपधज्ञाप्रीकिरः कः " इति कप्रत्ययः । धनुर्वेदो नाम–धनुर्हस्तमुष्टिस्थितिविशेषाकर्षणविमोक्षणदिव्यास्त्रादिप्रयोगप्रतिपादको ग्रन्थः। चकार इतरोपवेदसमुच्चयार्थः । क्षत्रियो धनुर्वेदप्रधान इति तस्य निर्देशः। ते चोपवेदाश्चत्वारः। तथाहि–" आयुर्वेदो धनुर्वेदो वेदो गान्धर्व एव च । अर्थशास्त्रमिति प्रोक्तमुपवेदचतुष्टयम् ॥" इति । आयुर्वेदो वाहटं वैदिकधर्मानुष्ठानविरोधिरोगनिवर्त्तकौषधादिप्रतिपादकम् । गान्धर्ववेदो भरतशास्त्रं सामगानोपयोगि। अर्थशास्त्रं चाणक्यादिप्रणीतं नीतिशास्त्रं कर्मानुष्ठानेषूपयोग्यर्थसाधनम्, तेषु निष्ठितः।

सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः । सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः ॥ १६ ॥

सर्वशास्त्रार्थतत्त्वज्ञ इति । सर्वशास्त्राणि उपात्तव्यतिरिक्तानि उपाङ्गानि गोबलीवर्दन्यायात् । "धर्मशास्त्रं पुराणं च मीमांसान्वीक्षिकी तथा । चत्वार्येतान्युपाङ्गानि शास्त्रज्ञाः संप्रचक्षते ॥" इति । तत्र धर्मशास्त्रं पूर्वकाण्डोपबृंहणम्, पुराणं वेदान्तोपबृंहणम्, न्यायमीमांसे सर्ववेदसाधारण्यौ तेषामर्थतत्त्वम् अर्थयाथात्म्यम्, निगूढाशयमित्यर्थः । तत् जानातीति तथा । अष्टादशविद्यास्थानतत्त्वज्ञ इत्यर्थः । स्मृतिमान् ज्ञातार्थविषये विस्मरणलेशरहितः । प्रतिभानवान् व्यवहारकाले श्रुतस्याश्रुतस्य वा झटिति स्फुरणं प्रतिभानम्, तद्वान् ॥ १४ ॥ अथ सर्वदा सदुपास्यत्वमाह–सर्वेति । सर्वे लोकाः प्रिया यस्य सः सर्वलोकप्रियः, सर्वेषां लोकानां प्रियः सर्वलोकप्रियः । सर्वलोकप्रियत्वात् सद्भिरभिगन्तव्य इत्यर्थः । साधुः तत्कार्यसाधकः । उण् प्रत्ययः । यद्वा साधुः उचितः, सदभिगमनोचित इत्यर्थः। "साधुस्त्रिषूचिते सौम्ये सज्जने वार्धुषावपि" इति वैजयन्ती। अदीनात्मा अकार्पण्यात्मा।



प्रतिपादकं शास्त्रं धनुर्वेदः तस्मिन्निष्ठितः निष्णातः । सर्वशास्त्रार्थतत्त्वज्ञः–सांख्ययोगतर्कवैशेषिकपूर्वोत्तरमीमांसाव्याकरणानि स्मृतयश्च सर्वशास्त्राणि, सर्वेषामेषामर्थतत्त्वज्ञः । पाठस्यानतिप्रयोजनत्वादर्थविशेषणम् । स्मृतिमान् पूर्वानुभूतार्थाविस्मरणशीलः । प्रतिभानवान्–" प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः " इत्युक्तप्रतिभा प्रतिभानं, तद्वान् ॥ १४ ॥ सर्वलोकप्रियः सर्वलोकानां प्रियः, सर्वे लोकाः प्रिया यस्येति वा । साधुः अपकारिष्वपि उपकारशीलः । अदीनात्मा

अतिगम्भीरप्रकृतिरिति यावत् । विचष्ट इति विचक्षणः । नन्द्यादित्वात् ल्युः "अस्युरप्यनेपीक्षिङः ख्याञ् नेति वाच्यम्" इति ख्याञादेशाभावः । विविधं वक्तीत्यर्थः । अतएव सर्वदा सदुपास्यमानत्वमाह सर्वदेति । सर्वदा अस्त्राभ्यासकालेष्वपि सद्भिः सत्पुरुषैः अभिगतः परिगतः, परिवारित इत्यर्थः । कथमिव ? समुद्रः सिन्धुभिरिव नदीभिरिव । "स्त्री नद्यां ना नदे सिन्धुर्देशभेदेऽम्बुधौ गजे ।" इति वैजयन्ती । सर्वदाभिगतः सद्भिः खुरलीकेलिश्रमविश्रान्त एकान्ते छायामवगाहमाने रामे सन्तः सर्वे तत्तदर्थविशेषश्रवणाय परिवृत्त्य स्थिता इत्यर्थः । तथा च वक्ष्यति-- "ज्ञानवृद्धै र्वयोवृद्धैः शीलवृद्धैश्च सज्जनैः । कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि ॥" इति । अस्त्रयोग्योऽस्त्राभ्यासः । समुद्र इव सिन्धुभिः । एवं सदभिगमनं न रामस्याज्ञातज्ञापनाय, तस्य स्वत एव पूर्णत्वात् । किन्तु स्वेषामेवापूर्वार्थविशेषलाभाय, गत्यन्तराभावादिति भावः । सिन्धवो हि स्वसत्तालाभायैव

## आर्यः सर्वसमश्चैव सदैकप्रियदर्शनः । स च सर्वगुणोपेतः कौसल्यानन्दवर्द्धनः ॥ १६ ॥

समुद्रमभियान्ति, न तु तस्यातिशयापादनाय ॥ १५ ॥ तनि०--सर्वदेति । सद्भिः रामसम्बन्धाल्लब्धसत्ताकैर्वसिष्ठादिभिः सर्वदा सिन्धुभिरभिगतस्समुद्र इव महानदीत्वसिद्धये सिन्धवो यथा समुद्रं परिगताः । एवं स्वसज्जनत्वसिद्ध्यै सन्तः रामगोष्ठीं प्रविशन्तीति सिन्धुभिस्समुद्र इवेति । एकगोष्ठीनिष्ठेषु सत्सु नक्षत्रमध्यगतस्य चन्द्रस्येव रामस्य सर्वापेक्षया निरतिशयतेजिष्ठत्वं गम्यते । सिन्धुभिः अनर्गलप्रवाहाभिः यथा समुद्रः अक्षोभ्यः एवं जाबालिप्रभृतिभिः क्षोभितोऽपि अक्षोभ्य इति व्यञ्जितम् । सर्वदेति कालविशेषे एकदा सिन्धुभिः परिगतस्समुद्रः, अयं तु सर्वदेति वैलक्षण्यम् । सर्वदाभिगत इति प्रयोजनवशेन सताम्भिगमने तैस्सह जल्पवितण्डादि करणे ते चासहास्तथा नाभिगच्छन्ति लोके, रामस्तु तथा न करोतीति ध्वन्यते । वक्ष्यति च-"न विगृह्यकथारुचिः" इति । रत्नाकराभिगतासिन्धूनां तदभिगमनदेश एव कतिपयरत्नसम्बन्धः । एवं गुणाकररामसम्बन्धादेव सतां कतिपयगुणाः प्रकाशयन्त इत्यभिगतपदव्यङ्ग्यम् । लोके राजकुमाराः कदाचिद्विनोदार्थमेकान्तगोष्ठ्यां शृङ्गाररहास्यरसविद्भिः परिगता भवन्ति, अयं तु न तथेति सत्पदव्यङ्ग्यम् । सिन्धुभिस्समुद्र इवेति सतां प्राप्यान्तरराहित्यं श्रीरामस्य सौलभ्यं च व्यज्यते ॥ १५ ॥

एवमभिगमनहेतुभूतं सौलभ्यादिकं विशदयति--आर्य इति । आङ्पूर्वात् 'ऋ गतौ' इत्यस्माद्धातोः कर्मणि ण्यत्प्रत्ययः । अभिगन्तुमर्ह इत्यर्थः ।

अतिव्यसनपरम्परायामपि अक्षुभितान्तःकरणः । विचक्षणः तत्तत्कालकर्तव्यचतुरः सर्वदेति । नदीभिः समुद्र इव सद्भिःमहात्मभिः सर्वदाभिगतः सेवितः सर्वदेत्यनेन नदीनां समुद्रसेवायामिव भक्तानां भगवत्सेवायां कालनियमो नास्तीत्युक्तं भवति। अभिगत इत्यनेन परमप्राप्यत्वमुक्तम्। समुद्रइव सिन्धुभिरित्यनेन सतां प्राप्यान्तरराहित्यं द्योत्यते । प्राप्तानां च सतां तेन ऐक्यं च प्रतीयते ॥१५॥ आर्यः पूज्यः । सर्वसमः सर्वेषु शत्रुमित्रोदासीनेषु वैषम्यरहितः। सदैव (क) प्रियदर्शनः

किं सतामेव ? नेत्याह--सर्वसमः, जातिगुणवृत्त्यादितारतम्यं विना सर्वेषामाश्रयणीयत्वे तुल्यः । अस्य कादाचित्कत्वं वारयत्येवकारः । चकार उक्तसमुच्चयार्थः । किञ्चिदुपदेशाभावेऽपि सौन्दर्यादभिगन्तव्यत्वमाह सदैकप्रियदर्शन इति । सदानुभवेऽपि नवनवतया भासमान इत्यर्थः । अथ "इषुक्षयान्निवर्त्तन्ते नान्तारिक्षक्षितिक्षयात् । मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात् ॥" इति भगवद्गुणानां वर्षायुतेनापि वर्णयितुमशक्यत्वेन सङ्ग्रहेण वदन्नत्तरमुपसंहरति–स चेति । कोसलस्य राज्ञोऽपत्यं स्त्री कौसल्या । "वृद्धेत्कोसलाजादाञ्ञ्यङ्" इति ञ्यङ्प्रत्ययः । "यङश्चाप्" इतिचाप् । तस्या आनन्दं वर्द्धयतीति कौसल्यानन्दवर्द्धनः । चशब्द एवकारार्थः । कौसल्यासुतत्वेनावतीर्णो विष्णुरेव वेदान्तोदितसकलगुणसम्पन्नः परमात्मा, न तु ब्रह्मादिष्वन्यतम इत्यर्थः । दशरथनन्दन इत्यनुक्तिः पुत्रलाभफलस्य कौसल्ययैव लाभात् । अतएव वक्ष्यति–"कौसल्या लोकभर्त्तारं सुषुवे यं मनस्विनी" इति ॥ १६ ॥ अथास्य निस्समाभ्यधिकत्वं वक्तुं लोके प्रकृष्टवस्तूनां तदेकैकगुणसाम्यमाह–समुद्र इवेत्यादिश्लोकद्वयेन । गाम्भीर्यं

समुद्र इव गाम्भीर्य्ये धैर्येण हिमवानिव । विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ॥ १७ ॥

नाम–स्वान्तर्गतपदार्थाप्रकाशकत्वम् । यथा समुद्रः स्वान्तर्गतं रत्नादिकमप्रकाशयन्नेव वर्त्तते तथायमपि स्वीयं परत्वमप्रकटयन्नेवास्त इत्यर्थः । वक्ष्यति–"आत्मानं मानुषं मन्ये" इति । धैर्यं नाम–शोकहेतुसद्भावेऽपि निःशोकत्वम् । तेन हिमवानिव हिमवत्सदृशः । "गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः । अभिभूयमाना व्यसनैर्यथाधोक्षजचेतसः ॥" इति ह्युक्तम् । अत्र वस्तुतः समुद्रादेरुपमानत्वाभावेऽपि प्रतिपत्तॄणामुपमानत्वं सम्भवतीत्येवमुक्तम् । यथा "इन्दुवद्गच्छति सविता" इत्यत्र । विष्णुनेति । वीर्ये विषये विष्णुना सदृशः । विष्णोरर्धत्वेन रामस्य विष्णुसादृश्यं सुवचमेव । "स उ श्रेयान् भवति जायमानः" इत्युक्तत्वेन तदंशस्यापि तत्सदृशत्वं युक्तमेव । सोमवत्प्रियदर्शनः शोकनिवृत्तिपूर्वकमाह्लादकरः ॥ १७ ॥

सदैव सर्वावस्थासु मुहुर्मुहुरनुभवेऽपि अननुभूतपूर्ववत विस्मयनीयप्रियदर्शनः । स इति । सर्वगुणोपेतः उक्तानुक्तसकलगुणसम्पन्नः । कौसल्याया आनन्दं वर्धयतीति तथा ॥ १६ ॥ स च सर्वगुणोपेत इति संक्षेपेणोक्तानन्तगुणेषु कतिपयगुणानाह–समुद्र इत्यादिश्लोकद्वयेन । गाम्भीर्ये अगाधाशयत्वे समुद्रतुल्यः । धैर्यं मनसाप्यधृष्यत्वम् । विष्णुनेति । यद्यप्ययमेव रामो विष्णुः मानुषोपाधिभेदाद्विष्णुनेति सादृश्यम् । यद्वा विष्णुना स्वेनैव वीर्ये सदृशः, उपमानान्तरराहित्यमनेनोक्तम् । सोमवत प्रियदर्शनः–चन्द्रवत्सर्वानन्दकरः ॥ १७ ॥

क्रोधे कालाग्निसदृशः, कालाग्निक्रोधसमक्रोध इत्यर्थः । स्वविषयापराधमेव स्वयं सहते । स्वाश्रितविषयापराधकरणे तु ज्वलज्ज्वलन इव शीतलतरेऽपि हृदये कोपमावहतीत्यर्थः । जले हि कालाग्निर्ज्वलति । क्षमया क्षमारूपसदृशधर्मेण पृथिवीसमः पृथिवीतुल्यक्षमः, स्वस्मिन्नपकारकरणे अचेतनवद्वर्त्तत इत्यर्थः । "न स्मरत्यपकाराणां शतमप्यात्मवत्तया ।" इति वक्ष्यति । त्यागे त्यागविषये धनदेन कुबेरेण समः, तद्वद्दातेत्यर्थः । कुबेरस्य त्यागित्वं "त्यागे च धनदो यथा" इत्यादिवक्ष्यमाणवचनशतसिद्धम् । न च तस्य लुब्धत्वं कुतश्चित्सिद्धम् । "त्यागे सत्यपि धनदवदाढ्यः" इति व्याख्यानं तु प्रक्रमविरुद्धम्, न ह्याढ्यत्वं कश्चिद्गुणः । तथा सति लुब्धत्वमेवास्य सिद्धं स्यात् । सत्ये सत्यवचने अपरः उत्कृष्टवस्त्वन्तररहितः धर्मः धर्मदेवतेव स्थितः, धर्मदेवतेव निरपायसत्यवचन इत्यर्थः । सत्ये अपरो धर्म इव स्थित इति व्याख्याने प्रकृतौपम्ये विरोधः, तस्योत्प्रेक्षारूपत्वात् । क्वचिदुपमा क्वचिदुल्लेखः क्वचिदुत्प्रेक्षेति विजातीयसङ्कर इत्यप्याहुः ॥ १८ ॥ एवं वेदान्तोदितजगत्कारणत्वसर्वज्ञत्वसर्वशक्तित्वसर्वान्तर्यामित्वप्रमुखसमस्तकल्याणगुणाकरं ब्रह्म किं रामत्वेनावतीर्णो विष्णुः, उत ब्रह्मरुद्रादिष्वन्यतम इति वाल्मीकिना वेदोपबृंहणाय पृष्टे वेदान्तोदितगुणानां तदन्येष्वसम्भवात्तस्यैव सम्भवाच्च स एव वेदान्तोदितं परं तत्त्वमित्युपदिष्टम् । तत्र तत्र जगत्कारणप्रकरणेषु प्रयुक्ताः स्वयम्भूशिवादिशब्दाः सद्ब्रह्मादिसामान्यशब्दवदपर्यवसानवृत्त्याऽवयववृत्त्या वा परमात्मपरा इत्यप्यर्थसिद्धम् । एवं वेदान्तसारार्थः सन्दर्शितः । ननु ब्रह्मस्वरूपमिव फलस्वरूपं तदुपायस्वरूपमपि वेदार्थत्वादुपबृंहणीयम्, तदुभयं किमिति न पृष्टं नोपदिष्टं च । मैवम्; परिपप्रच्छेत्यत्र परिणा तदुभयस्वरूपमपि पृष्टमेव । उत्तरे च " प्रजानां च हिते रतः " इत्यादिनोपायत्वं "सदैकप्रियदर्शनः" इत्यादिनोपेयत्वं च तस्यैवेत्युक्तम् । ननु सिद्धस्यैव तस्योपायत्वे

कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः । धनदेन समस्त्यागे सत्ये धर्म इवापरः ॥ १८ ॥

तमेवंगुणसम्पन्नं रामं सत्यपराक्रमम् । ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ॥ १९ ॥

कालाग्नीति । अनेन युद्धादप्यनिवार्यकोपत्वमुक्तम् । क्षमया पृथिवीसमः, अनेन सर्वापराधसहिष्णुत्वमुक्तम् । धनदेनेति । त्यागे सत्यपि धनदेन समः । अनेन अक्षीणकोशत्वं महोदारत्वञ्चोक्तम् । सत्ये धर्म इवापरः-सत्ये सत्यवचने अपरो द्वितीयो धर्म इव धर्माख्या देवतेव ॥ १८ ॥ एवं रामभद्रे सर्वगुणानभिधाय तस्मिन् तद्गुणान् प्रकटयितुं तच्चरितं वक्तुमारभते—तमेवमित्यादिना । इतआरभ्य अयोध्याकाण्डग्रन्थसंग्रहः क्रियते । अतःप्राक्तनश्लोकैर्बालकाण्डार्थः सूचितः । तत्र इक्ष्वाकु

विषमपदविवृतिः—धनं ददतीति धनदाः धनदातारः, तेषाम् इनाः अधिपतयः चिन्तामणिकल्पवृक्षप्रभृतयः, तैः समः ॥ १८ ॥

सर्वमुक्तिप्रसङ्ग इति चेन्न; य उपायोपेयाधिकारी तस्यैव फलं दिशति नानधिकारिण इति व्यवस्थापनात् । अधिकारश्च तत्प्राप्त्यपेक्षासाधनान्तर परित्यागश्चेत्युत्तरग्रन्थे सुव्यक्तम् । ननु वेदोपबृंहणमिदं रामायणमित्युक्तम् । धर्मोऽपि वेदार्थः । स कथं नोपबृंहितः, किञ्च इयता ग्रन्थेन वेदान्तार्थ उपबृंहितः, किमतः परेण ग्रन्थेन ? उच्यते–उक्तानुक्तांश्च कल्याणगुणांस्तच्चरित्रनिदर्शनमुखेन प्रतिपादयितुमुत्तरग्रन्थः पूर्वभागोपबृंहणं च रामायण पुरुषाचारमुखेन हि सामान्यधर्मो विशेषधर्मश्चोपबृंहितः । ननु तथापि कथं बालकाण्डकथा नोपदर्शिता ? मैवम्; तत्र प्रदर्शनीयगुणविशेषाभावात्; न च साप्यत्यन्तमप्रदर्शिता । "इक्ष्वाकुवंशप्रभवः" इत्यवतरणम्, "महावीर्यः" इति ताटकाताटकेयादिवधः, "धनुर्वेदे च निष्ठितः" इति कौशिकाधि गतनिखिलदिव्यास्त्रवत्त्वम्, "श्रीमान्" इति वैदेहीलाभश्चेति बालकाण्डकथासूचनात् । अथायोध्याकाण्डकथां प्रस्तौति–तमेवमित्यादिना । आदौ

प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया । यौवराज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः ॥ २० ॥

श्लोकद्वयमेकान्वयम् । दशसु दिक्षु रथो यस्य स दशरथः । अप्रतिहतरथत्वेन रामाय राज्यं दत्तम्, भीतिदत्तत्वाभावेन पुनरनादातव्यत्वमुक्तम् । मही पतिः अस्वामिदत्तत्वाभाव उच्यते । एवं दातृदोषेण पुनरनाहरणीयत्वमुक्त्वा सम्प्रदानगुणेनाप्याह तमित्यादिना । तं प्रसिद्धम् । एवंगुणसम्पन्नं पूर्वोक्त सर्वगुणसमृद्धम्, सर्वस्य स्वामिभूतमिति यावत् । सत्यपराक्रमममोघपराक्रमम्, सर्वरक्षणशक्तमिति यावत् । ज्येष्ठं जन्मक्रमेणापि राज्यार्हम् । श्रेष्ठगुणैर्युक्तम् नीतिशास्त्रोक्तषाड्गुण्ययुक्तम्, सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः षड्गुणाः कामन्दकोक्ताः । प्रियं प्रीतिविषयम् । अनेन तात्कालिकप्रीतिदान व्यावृत्तिः । सुतं जन्मनैव राज्यार्हम् ॥१९॥ प्रकृतीनां प्रजानां हितैः हितकरणैर्युक्तम्, अनेन सर्वानुकूल्यमुक्तम् । एवंभूतं रामं प्रकृतिप्रियकाम्यया अमा त्यादीनां प्रीतिकरणेच्छया । इच्छायां काम्यच्प्रत्ययः । "अ प्रत्ययात्" इत्यप्रत्ययः । "अजाद्यतष्टाप्" । प्रीत्या स्वप्रीत्या च । चकारोऽर्थसिद्धः । "गामश्वं पुरुषं जगत्" इतिवत् । मन्त्रिवृद्धैरालोचनपूर्वकं कृतत्वादप्रत्याख्येयत्वमुच्यते । "प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे । छन्दःकारण गुह्येषु जन्मामात्यादिमातृषु" इत्युभयत्र वैजयन्ती । युवा चासौ राजा च युवराजः तस्य भावः कर्म वा यौवराज्यम् । ब्राह्मणादित्वात् ष्यञ् । तेन पितरि

वंशप्रभव इति भगवदाविर्भावः सूचितः । महावीर्यः शत्रुनिबर्हण इति च अस्त्रसम्पत्तिताटकावधादिस्सूचितः । लक्ष्मीवानिति सीतापरिणयसंक्षेपः । सत्यपराक्रम मित्यनुवादेन भार्गवलोकप्रतिबन्धादिव्यापारस्संक्षिप्तो वेदितव्यः । एवंगुणसंपन्नम्–प्रशस्तासाधारणकल्याणगुणसंपन्नम्, श्रेष्ठगुणैः–अभिषेकार्हवरिष्ठगुणैश्च युक्तम्, सत्यपराक्रमम्–अमोघपराक्रमम् ॥१९॥ प्रकृतीनां प्राणिनां हितैरिहामुत्र यशस्करैः कर्मभिर्युक्तम्, ज्येष्ठं सुतं रामं प्रकृतिप्रियकाम्यया प्रकृतीनां प्रियं कर्तुमिच्छया, पितरि

राज्यं निर्वहत्येव सर्वनिर्वाहकत्वेनाभिषिक्तः पुत्रो युवराजः, तस्य भावेनेत्यर्थः। संयोक्तुं घटयितुमैच्छत्, तत्संभारान् समभरदित्यर्थः ॥२०॥ एवं पुनरादानायोग्यं रामाय राज्यप्रदानमुक्त्वा अपरिहरणीयमनन्तरभावि कैकेय्या याचनमाह—तस्येति सार्द्धश्लोक एकान्वयः। अथ रामाय राज्यप्रदानेच्छानन्तरं तस्य रामस्याभिषेकः कर्मविशेषः, तस्य संभारानुपकरणानि। "औदुम्बर्यासन्दी तस्यै प्रादेशमात्राः पादाः स्युः" इत्यादीनि "दधिमधुसर्पिरातपवर्ष्या आपः" इत्यन्तानि ब्राह्मणोक्तानि दृष्ट्वा मन्थरामुखेन दर्शन इव ज्ञात्वा। भार्या भर्तुं योग्या, न तु स्वातन्त्र्यार्हा। पूर्वं पूर्वकाले। विभक्तिप्रातिरूपकमव्ययम्। तेन दशरथेन दत्तवरा शम्बरासुरविजयकाले सारथ्यकरणपारितोषिकतया दत्तवरा। याचनहेतुत्वेनेदमुक्तम्। (तच्छब्दस्य दशरथपरामार्शितया शम्बरासुरसमरं सूचितम्। दशसु दिक्षु अप्रतिरुद्धरथो हि सः।) दीव्यतीति देवी। पचाद्यच्। देवडिति टित्त्वेन पाठात् ङीप्। भोगोपकरण

तस्याभिषेकसम्भारान् दृष्ट्वा भार्याथ कैकयी। पूर्वं दत्तवरा देवी  
वरमेनमयाचत ॥ विवासनं च रामस्य भरतस्याभिषेचनम् ॥ २१ ॥

भूतेति व्यामोहमूलोक्तिः। कैकयी केकयानां राजा केकयः। "क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्" इत्यञ्। "जनपदे लुप्"। केकयस्यापत्यं स्त्री कैकयी। "जनपदशब्दात्क्षत्रियादञ्" इत्यपत्यार्थेऽञ्। "टिड्ढाणञ्—" इत्यादिना ङीप्। नन्वञ्प्रत्यये "केकयमित्रयुप्रलयानां यादेरियः" इतीयादेशः किं न स्यात्? उच्यते—"जराया जरसन्यतरस्याम्" इत्यतोऽन्यतरस्यामित्यनुवृत्तेस्तस्य वैकल्पिकत्वात्। न चेयादेशाभाव आर्ष इति वाच्यम्। कैकेयीकैकयीति शब्दभेदप्रकाशिकायामुक्तेः। "प्राक् कैकयीतो भरतस्ततोऽभूत्" इति भट्टिप्रयोगात्। केकयीति पाठे तु—केकयान् जन्मभूमित्वेनाचष्ट इति केकयी। "तदाचष्टे" इति णिजन्तादौणादिके स्त्रियामिकारप्रत्यये टिलोपे णिलोपे च कृते "कृदिकारादक्तिनः" इति ङीषित्याहुः। "पुंयोगादाख्यायाम्" इति वा ङीष्। तत्र योगशब्देनाविशेषाज्जन्यजनकभावोऽपि गृह्यते। केकयशब्दो मूलप्रकृतिरेवोपचारात् तदपत्ये

राज्यं कुर्वत्येव सर्वनिर्वाहकत्वेनाभिषिक्तः पुत्रो युवराजः, तस्य भावो यौवराज्यं तेन। संयोक्तुं संयोजयितुम् महीपतिः दशरथः ऐच्छादिति श्लोकद्वयमेकं वाक्यम् ॥ २० ॥ तस्य-रामस्य अभिषेकसंभारान्-संभ्रियन्त इति संभाराः अभिषेकार्थं संभृतान् दध्यादिमङ्गलद्रव्यविशेषान्, दृष्ट्वा मन्थरावचनाज्ज्ञात्वा, पूर्वं पुरा दत्तौ वरौ यस्यै। इन्द्रसहायार्थं प्रवृत्तदशरथयुद्धकाले दशरथे परप्रयुक्तामासुरीं मायां धवलाङ्गाख्यमुनिदत्तविद्यया वारयन्त्यै कैकेय्यै तुष्टेन दशरथेन दत्तं वरद्वयमिति पौराणिकी प्रसिद्धिः। यद्वा-पूर्वं दत्तवरा देवासुरयुद्धे दशरथस्य सारथ्यमाचरन्त्या कैकेय्या संतुष्टाद्दशरथाद्वरद्वयं लब्धमिति "तत्रापि विक्षतः शस्त्रैः पतिस्ते

वर्त्तते । शार्ङ्गरवादिपाठात् ङीनिति न्यासकारः । कैकयी । एनं दशरथम् । "द्वितीयाटौस्स्वेनः" इत्यन्वादेशे एनादेशः । रामस्य विवासनं भरतस्याभिषेचनं च वरमयाचत अर्थितवती । याचिर्द्विकर्मकः ॥ २१ ॥ स इति ॥ राजा सर्वरञ्जकः, "राजा प्रकृतिरञ्जनात्" इति प्रयोगात् । औणादिकः कनिन्प्रत्ययः । यद्यपि "रजकरजनरजस्सूपसंख्यानम्" इति वचनादत्र नलोपप्रसक्तिर्नास्ति तथापि रजस्साहचर्यादौणादिकस्य तत्र ग्रहणम् । स पूर्वं रामाय दत्तराज्यः, मन्त्रिप्रमुखैरालोचनपूर्वकं प्रतिज्ञातरामाभिषेक इत्यर्थः । दशरथः । धर्मः पाश इव धर्मपाशः । "उपमितं व्याघ्रादिभिः" इति समासः । व्याघ्रादेराकृतिगणत्वात् । तेन संयतो बद्धः सन् सत्यवचनात् स्त्रीविषयवचनसिद्धिहेतोः प्रियं सुतं विवासयामास. "रामो विग्रहवान् धर्मः" इत्युक्तरीत्या प्रथममङ्गीकृतं परमधर्मं परित्यज्यानन्तरं प्रवृत्तं स्त्रीविषयं क्षुद्रधर्ममवलम्बितवानित्यर्थः । एतेन "साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।

स सत्यवचनाद्राजा धर्मपाशेन संयतः । विवासयामास सुतं रामं दशरथः प्रियम् ॥ २२ ॥
स जगाम वनं वीरः प्रतिज्ञामनुपालयन् । पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात् ॥ २३ ॥

वैकुण्ठनामग्रहणमशेषाघविनाशनम् ॥" "आक्रुश्य पुत्रमघवान् यदजामिलोऽपि नारायणेति म्रियमाण उपैति मुक्तिम्" "कामाद्गोप्यो भयात्कंसः" इत्येवं यथाकथञ्चित् भगवन्नामवतां मुक्तिसिद्धौ सर्वदा रामपरायणस्य दशरथस्य कथं न मुक्तिरिति शङ्का दूरोत्सारिता । सिद्धसाधनत्यागात् काशकुशावलम्बनात् धर्मपाशप्रतिबन्धाच्च मुक्तिप्रसङ्गाभावात्; तथा च मुमुक्षुणा दशरथवन्न वर्तितव्यमित्युक्तं भवति ॥२२॥ पितृवचनपरिपालनमवश्यं कर्तव्यम्, एतद्रामाचारमुखेन दर्शयति—स जगामेति । स रामः वीरोऽपि राज्यपरिपालनसमर्थोऽपि कैकेय्याः प्रियकारणात् प्रीतिहेतुभूतात् स्त्रीपारवश्येनोक्तादपीत्यर्थः । पितुर्वचननिर्देशात्, वचनमेव निर्देशः आज्ञा । "आज्ञायामपि निर्देशः" इति बाणः । तस्माद्धेतोः प्रतिज्ञां कैकेयीसमक्षं कृतां प्रतिज्ञामनुपालयंश्च । "लक्षणहेत्वोः क्रियायाः" इति हेत्वर्थे शतृप्रत्ययः । वक्ष्यति—"तद्ब्रूहि वचनं देवि राज्ञो यदभिकांक्षितम् । करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते" ॥



राक्षितस्त्वया । तुष्टेन तेन दत्तौ तु द्वौ वरौ शुभदर्शने ॥" इति मन्थरावचनादवगम्यते । वरामिति जातावेकवचनम् । वरद्वयस्वरूपमाह-विवासनमिति ॥ २१ ॥ स इति । सः दशरथः सत्यवचनाद्धेतोः धर्ममयेन पाशेन संयतः बद्धः सन् प्रियं सुतमपि विवासयामास ॥ २२ ॥ स इति । स रामः वीरः जितेन्द्रियः, अनेकैरपराभुखतया योद्धा वा । कैकेय्याः प्रियकारणात् प्रीतिनिमित्तम् पितुर्वचननिर्देशात् नियोगात्, प्रतिज्ञामनुपालयन् "तद्ब्रूहि वचनं देवि राज्ञो यदभिकांक्षितम् । करिष्ये

भिभाषते " इति स्वप्रतिज्ञापालनार्थं पितृवचनपालनार्थं चेत्यर्थः । वनं दण्डकावनमुद्दिश्य जगाम ॥ २३ ॥ इक्ष्वाकुवंशेत्यादिना समस्तकल्याणगुण परिपूर्णत्वोक्त्या परत्वमुक्तम् । तमेवमित्यादिना अभिषेकप्रवृत्तिनिवृत्तिकथनात् सौलभ्यमुक्तम् । अथ परत्वसौलभ्यानुगुणं समाश्रयणमाह—तं व्रजन्त मिति । यद्वा अथ सिद्धसाधननिष्ठैः लक्ष्मणवत् कैङ्कर्यपरैर्भवितव्यमिति व्यञ्जयन्नाह तं व्रजन्तमिति, सार्द्धश्लोक एकान्वयः । प्रीणातीति प्रियः । रामे प्रीतिमान् । "इगुपधज्ञाप्रीकिरः कः" इति कः । अनेनानुगतिहेतुर्भक्तिरुक्ता । भ्राता "भ्राता स्वा मूर्तिरात्मनः" इति मूर्तिभूतः । विनयसम्पन्नः कैङ्कर्य हेतुविनययुक्तः । विनयः शेषत्वज्ञानम् रामकैङ्कर्यैकरूपाचारो वा । " विनयो धर्मविद्यादिशिक्षाचारप्रशान्तिषु " इति वैजयन्ती । सुमित्रायाः आनन्दं वर्द्धयतीति सुमित्रानन्दवर्द्धनः, "सृष्टस्त्वं वनवासाय" "रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् । अयोध्यामटवीं विद्धि गच्छ तात यथासुखम्॥" इति सुमित्रयैवोक्तत्वात् । दयितः रामस्येष्टतमः । " यमेवैष वृणुते तेन लभ्यः" इत्युक्तरीत्या प्रियतमत्वेन वरणीय इत्यर्थः । लक्ष्मणः कैङ्कर्यलक्ष्मी

तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह । स्नेहाद्विनयसम्पन्नः<br>सुमित्रानन्दवर्द्धनः ॥ भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ॥ २४ ॥

सम्पन्नो भविष्यतीति ज्ञात्वा लक्ष्मण इति वसिष्ठेन कृतनामधेयः, " स तु नागवरः श्रीमान् " " अन्तरिक्षगतः श्रीमान्" इत्युक्तेः । कैङ्कर्यलक्ष्मी वत्त्वं " लक्ष्मणो लक्ष्मिसम्पन्नः " इति वक्ष्यति । " लक्ष्म्या अच्च " इति पामादिगणसूत्रान्मत्वर्थीयो नप्रत्ययः, अकारश्चान्तादेशः । " लक्ष्मीवान् लक्ष्मणः श्रीमान्" इति पर्यायपाठश्च । सुभ्रातुर्भावः सौभ्रात्रम् । भावे अण्, अनुशतिकादित्वात् उभयपदवृद्धिः । रामं विना क्षणमपि जीवनाक्षमत्वं सुभ्रातृत्वम् । वक्ष्यति—"न च सीता त्वया हीना न चाहमपि राघव । मुहूर्त्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ॥" इति । रामस्य लक्ष्मणविरहासहत्वं सुभ्रातृत्वम् । तच्च वक्ष्यति—"न च तेन विना निद्रां लभते पुरुषोत्तमः । मृष्टमन्नमुपानीतमश्नाति न हि तं विना ॥" इति । तदनुदर्शयन् सन् । यद्वा एवं सुभ्रातृभिर्वर्त्तितव्यमिति दर्शयन्निवेति गम्योत्प्रेक्षा । व्रजन्तम् एकान्ते स्वाभिमतसकलकैङ्कर्यप्रधानप्रवृत्तं भ्रातरम् । उपलक्षणमिदम्, " माता पिता

प्रतिजाने च रामो द्विर्नाभिभाषते ॥" इत्येवं कैकेय्याः सन्निधौ पितृवचनपरिपालनविषयां स्वकृतां प्रतिज्ञां परिपालयन् वनं जगाम ॥ २३ ॥ तमिति । प्रियः रामे सहजप्रीतिमान् भ्रातुः रामस्य दयितः इष्टः विनयसंपन्नः लक्ष्मणो भ्राता सौभ्रात्रं सुभ्रातृभावम् अनुदर्शयन् स्नेहात् भक्त्यैवानुजगाम, न पित्रादिनिर्देशात् ॥ २४ ॥

च भ्राता च निवासः शरणं सुहृत् । गतिर्नारायणः" इत्युक्तरूपविषयबन्धः । वक्ष्यति-" अहं तावन्महाराजे पितृत्वं नोपलक्षये । भ्राता भर्ता च बन्धुश्च पिता च मम राघवः ॥" इति । स्नेहात् "बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्द्धनः" इत्युक्तरामभक्तेरेव हेतोरनुजगाम । " येन येन धाता गच्छति तेन तेन सह गच्छति " इतिवदपूर्वोऽयं कश्चिद्वृत्तिविशेष इति ऋषिर्विस्मयते हेति । "ह विस्मये विषादे च " इति वाणः । आशालेशमात्रेण स्वस्मिन्नेवाधिकप्रेमाणं भगवन्तं कुत्रचित् एकान्तस्थले स्वमनोरथानुरूपविशिष्टविषयसकलकैङ्कर्यलाभायानुसरन्नधिकार्यत्र विनिर्दिश्यते ॥ २४ ॥ अथ सीतायाः साधनदशायां पुरुषकारतया फलदशायां प्राप्यतया चान्वयात्तया नित्ययोगं दर्शयति-रामस्येत्यादिश्लोकद्वयेन । रामस्याभिरामस्यापि दयिता अभिरामा नित्यं भार्या हृदि सन्ततं धार्या । बिभर्तेः "ऋहलोर्ण्यत्" इति ण्यत् । प्राणसमा उक्तार्थद्वये हेतुरयम् । हिता चेतनहितपरा । "मित्र

रामस्य दयिता भार्या नित्यं प्राणसमा हिता । जनकस्य कुले जाता देवमायेव निर्मिता ॥ २५ ॥
सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः । सीताप्यनुगता रामं शशिनं रोहिणी यथा ॥ २६ ॥

मौपयिकं कर्तुम्" इत्यादि वक्ष्यति । रामहितपरा वा । वक्ष्यति-" स्मारये त्वां न शिक्षये" इति । जनकस्य कुले जाता, आचारप्रधानेत्यर्थः । देवमायेव निर्मिता । अमृतमथनानन्तरमसुरमोहनार्थं निर्मिता विष्णुमायेव स्थिता । " मायया मोहयित्वा तान् विष्णुः स्त्रीरूपमास्थितः " इत्युक्तेः । यद्वा निर्मिता कृतमूर्तिः देवमाया विष्णोराश्चर्यशक्तिरिव स्थिता,अनेन सौन्दर्यस्य परा काष्ठोक्ता । अथवा निर्मिता कृतावतारा । देवमाया देवस्य विष्णोर्लक्ष्मीः । वक्ष्यति उत्तरकाण्डे-" ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहाम् " इति । इवशब्दो वाक्यालङ्कारे एवकारार्थे वा ॥ २५ ॥ सर्वलक्षणसम्पन्ना सामुद्रिकोक्तैः सर्वैरुत्तमस्त्रीलक्षणैः सम्पन्ना । नारीणामुत्तमा पूर्वोक्तसर्वप्रकारेण सर्वस्त्रीश्रेष्ठा । पुरुषोत्तमरामानुरूपनार्युत्तमेत्यर्थः । वधूर्दशरथस्नुषा अचिरोढा वा । " अचिरोढा वधूः " इति वैजयन्ती । सीता-" सीता लाङ्गलपद्धतिः " तज्जन्यत्वात्तद्व्यपदेशः । अनेनायोनिजत्वोक्तेर्दिव्यलोकवासकालिकसौन्दर्यान्यूनतोक्ता । अपिशब्देन लक्ष्मणानुगतिः समुचीयते । राममनुगता निरवधिकसौन्दर्याकृष्टहृदयतयानुगतवती, रोहिणी यथा ।



रामस्य दयिता इष्टा भार्या निरतिशयप्रेमास्पदा नित्यं हिता हितकारिणी च जनकस्य कुले गृहे यज्ञगृहे जाता आविर्भूता देवमायेव-सुन्दोपसुन्दमोहनार्थं देवैरुत्पादिता सर्वोत्तमसौन्दर्या तिलोत्तमेव । यद्वा असुरव्यामोहनार्थममृतविनियोगसमये स्वानिर्मिता देवस्य विष्णोर्मायावनितेव ॥ २५ ॥ सर्वलक्षणसम्पन्ना-सामुद्रिकशास्त्रोक्तसर्व

यथाशब्द इवार्थः । " यथा तथैवैवं साम्ये " इत्यमरः । रोहिणीनाम चन्द्रस्यासाधारणपत्नी । " वरिष्ठा सर्वनारीणामेषा च दिवि देवता । रोहिणी न विना चन्द्रं मुहूर्त्तमपि दृश्यते ॥ " इति । न केवलं रामसौन्दर्याकृष्टानुगता, किन्तु कलङ्किनं रोहिणीव पातिव्रत्यस्वरूपप्रयुक्ता गतेत्यर्थः । अयमर्थोऽनसूयासमक्षं व्यक्तीभविष्यति ॥ २६ ॥ रामभक्त्यविशेषाल्लक्ष्मणसीतावत् पौराणामप्यनुवृत्तिं दर्शयति—पौरैरिति । पुरे भवाः पौराः । अनेन स्त्रीबालवृद्धाविशेष उक्तः । दूरमनुगतः इत्यनेन विरहासहिष्णुत्वोक्त्या पौराणां परमा भक्तिरुक्ता । " पुनर्विश्लेषभीरुत्वं परमा भक्तिरुच्यते " इति वचनात् । पौरैरित्यनेन तद्देशवास एव रामभक्तिहेतुरित्युक्तम् । पित्रा दशरथेन च । चशब्दोऽन्वाचये । अल्पमनुगत इत्यर्थः । आद्वारं हि तेनानुगतम् । पित्रेत्यनेन पुत्रकृतवात्सल्यादनुगत इत्युक्तम् । एवं परत्वसौलभ्ये दर्शिते । अथ वात्सल्यसौशील्ये दर्शयति—शृङ्गिबेरपुर इति । धर्मौ आश्रितवात्सल्यसौशील्ये आत्मा स्वभावो यस्य सः तथा । आश्रितवात्सल्यसौशील्यस्वभावो रामः शृङ्गिबेरपुरे शृङ्गिणः

पौरैरनुगतो दूरं पित्रा दशरथेन च । शृङ्गिबेरपुरे सूत गङ्गाकूले व्यसर्ज्जयत् ॥
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ २७ ॥

कृष्णसारादयः तेषां बेराणि कृत्रिमशरीराणि । " प्रतिच्छन्दः प्रतिनिधिर्बेरं च प्रतिरूपकम् " इति वैजयन्ती । वञ्चनेन सजातीयमृगग्रहणार्थानि यस्मिन् तत् शृङ्गिबेरम् । तथात्वात् तदाख्ये पुरे गङ्गाकूले, शृङ्गिबेरपुरसन्निहितगङ्गातीर इत्यर्थः । एतेन गङ्गातीरत्वमात्रेण नोद्देश्यत्वम्, किन्तु भक्तसेवितत्वेनेत्युक्तम् । " सा काशीति न चाकशीति—" इत्याद्यभियुक्तोक्तेः । निषादाः प्रतिलोमजातिविशेषाः । "निषादो मृगघाती स्यात् " इति वैजयन्ती । तेषामधिपतिरिति जात्यपकर्ष उक्तः । प्रीणातीति प्रियः तम्, स्वस्मिन् प्रीतिमन्तमित्यर्थः । गूहति गोपयति वञ्चयति परस्वमिति गुहः । इगुपधलक्षणः कप्रत्ययः । तम्, जातितो वृत्तितो गुणतः कुलतश्च हीनमपि स्वस्मिन्नानुकूल्यमात्रेणादरणीयत्वमुक्तम् । निषादाधिपतिमासाद्येत्यनेन सौशील्यमुक्तम् । महतो मन्दैस्सह नीरन्ध्रेण संश्लेषो हि सौशील्यम् । धर्मात्मेत्यनेन महत्त्वमुक्तम् । आसाद्येत्यत्राभिविधिवाचिना आङा अर्थान्नैरन्ध्र्य

स्त्रीलक्षणसंपन्ना, पुरुषाणां रामः उत्तमः नारीणामुत्तमा वधूः स्त्री । 'सीता लाङ्गलपद्धतिः' तदुत्थत्वात् सीतेति निर्दिश्यते ॥२६॥ अथ धर्मात्मा रामः पौरैः पित्रा दशरथेन

मुक्तम् । शृङ्गिबेरपुरे गुहमासाद्येत्यनेन दोषेऽपि भोग्यस्वरूपं वात्सल्यमुक्तम् । सूतं सुमन्त्रम् पारम्पर्येणानुवर्त्तमानमपि व्यसर्जयत् व्यसृजत् । स्वार्थे णिच् । सद्यःप्रसूतवत्सवात्सल्यात् पूर्ववत्सं परिहरन्त्या धेनोरिव वात्सल्यातिशय उक्तः ॥ २७ ॥ स्वस्मिन्नाशालेशमात्रेण जनितं गुहविषयप्रेमातिशयं दर्शयति–गुहेनेति । रामः गुहेन सहितः सन् लक्ष्मणेन सीतया च सहितः । गुहसन्धानानन्तरमेव लक्ष्मणसीताभ्यां नित्यानपायिभ्यां साहित्यमासीत् । ततः पूर्वं सिद्धमपि सदसत्प्रायमासीदित्यर्थः । यद्वा दृष्टान्तार्थं लक्ष्मणसीतासाहित्यकथनम्, तादृशसौहार्दं (स्नेहो) गुहेऽप्यासीदिति भावः । सहितः संहितः । "समोवाहिततततयोः" इति मलोपः । सः रामः लक्ष्मणेन सीतया च सह गुहेन हितः प्रहितः गङ्गां तारित इत्यप्याहुः ॥२८॥ ते वनेन इति श्लोकद्वयमेकान्वयम् । ते रामादयस्त्रय इत्यनेन गुहनिवर्त्तनं द्योतितम् । वनेन वनं गत्वा वनाद्वनं गत्वा । पञ्चम्यर्थे तृतीया, हेतौ तृतीया वा । अनेन नूतनवनावलोकनकुतूहलित्वं नगरप्रवेशस्य स्वाधिकारविरुद्धत्वं च द्योत्यते । यद्वा अवनेन वनं गत्वा अन्योन्यरक्षणेन वनं गत्वेत्यर्थः । वक्ष्यति–

> गुहेन सहितो रामो लक्ष्मणेन च सीतया ॥ २८ ॥ ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ।
> चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ॥ २९ ॥

" अग्रतो गच्छ सौमित्रे सीता त्वामनुगच्छतु । पृष्ठतोऽहं गमिष्यामि त्वां च सीतां च पालयन् । अन्योन्यस्येह नो रक्षा कर्त्तव्या पुरुषर्षभ ॥" इति । यद्वा अवनेन पितृवचनपरिपालनेन हेतुना वनं गत्वा, अवनेन लोकरक्षणेन हेतुना वा । रावणादिदुष्टनिबर्हणमुखेन लोकरक्षणार्थं हि तेषां वनगमनम् । यद्वा " तेवृ देवने " इति धातोर्भावे ल्युट् । तेवनेन देवनेन लीलया अनायासेनेत्यर्थः । मृगयाक्रीडनेन वा । अनयैव व्युत्पत्त्या तेवनं पादसञ्चार इति लभ्यते, सूतविसर्जनानन्तरं रथादवरुह्य पादसञ्चारेण वनं गत्वेत्यर्थः । यद्वा अवनेन सह वनं गत्वा मध्येमध्ये स्थलप्रदेशं वनं च गत्वेत्यर्थः । वनेन जलेन सहितं वनम्, न तु मरुकान्तारमिति वार्थः । " पयः कीलालममृतं जीवनं भुवनं वनम् " इत्यमरः । बहूदकाः विपुलोदकाः अधिकोदका वा । " विपुलानेकयोर्बहुः " इति वैजयन्ती । नौतार्या इत्यर्थः । नदीः गङ्गाम् तीर्त्वा उत्तीर्य । "गङ्गा नदीनाम्" इति नदीमुख्यत्वात् निरुपपदनदीशब्देन



च दूरमनुगतः। गङ्गाकूले वर्तमाने शृङ्गिबेरपुरे स्थितं निषादाधिपतिं प्रियमिष्टम्। गुहमासाद्य रामविसर्जनार्थमागतं गङ्गाकूले व्यसर्जयत् अत्यजत् । गुहमासाद्य गुहेन लक्ष्मणेन सीतया च सहितो रामः सुमन्त्रं व्यसर्जयदिति श्लोकद्वयमेकं वाक्यम् ॥२७॥२८॥ तेवनेनेति । तेवनं पादचारणमिति संप्रदायः । ते त्रयः तेवनेन पादचारेण

गङ्गोच्यते। "जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्" इति बहुवचनम्, पूजायां बहुवचनं वा। "अदितिः पाशान्" इतिवदवयवबहुत्वाभिप्रायेण वा बहुवचनम्। अत्र 'अग्निहोत्रं जुहोति, यवागूं पचति' इतिवदर्थक्रमेण नदीस्तीर्त्वा वनं गत्वेति योजनीयम्। यद्वा अपूर्वकालेऽपि क्त्वाप्रत्ययः 'आस्यं व्यादाय स्वपिति' इतिवत्। यद्यपि "आस्यं व्यादाय स्वपिति संमील्य हसति इत्युपसंख्यानम्" इति वार्त्तिके स्थलद्वयमेवो पात्तम् तथापि न्यासकृता "परावरयोगे च" इति पूर्वसूत्रे चकारात् सर्वत्रायं प्रयोगः सम्भवतीत्युक्तम्। यद्वा ते वनेनेत्यनेन गङ्गातरणमर्थसिद्धम्। नदीशब्दो यमुनापरः। यद्वा नदीः गङ्गायमुनामन्दाकिनीः। मन्दाकिनीनाम चित्रकूटपरिसरे परिसरन्ती स्रवन्ती। सौकर्याय युगपदुक्तम्। यद्वा पूर्वार्द्धे स रामो लक्ष्मणेन सीतया च सह गुहेन हितः प्रहितः, सीतालक्ष्मणरामाः गुहेन गङ्गां तारिता इत्यर्थः। अतः पादसञ्चारेण वनगमनमत्रोक्तम्।

रम्यमावसथं कृत्वा रममाणा वने त्रयः। देवगन्धर्वसङ्काशास्तत्र ते न्यवसन् सुखम्॥ ३०॥

भरद्वाजस्य शासनात् चित्रकूटमनुप्राप्य। प्रजाभरणशीलो भरद्वाजः। इत्थं निरुक्तमृगारण्यके—"एष एव बिभ्रद्वाजः प्रजा वै वाजः ता एष बिभर्त्ति यद्बि भर्त्ति तस्मात् भरद्वाज इत्याचक्षते" इति। यद्वा वाजं रेतः, वाजकरणमित्यादौ तथा प्रयोगात्। बिभ्रद्वाजं भरद्वाजः। नित्यब्रह्मचारीत्यर्थः। "भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवा(पा)स" इति श्रुतेः। तस्य शासनान्नियमनात् चित्रकूटे भवद्भिः स्थातव्यम्, तस्यायमेव मार्ग इत्येवंरूपात्। अनु सदृशम् "पश्चात्सादृश्ययोरनु" इत्यमरः। राजकुमाराणां स्वेषामुचितमित्यर्थः। "सुभगश्चित्रकूटोऽसौ गिरिराजोपमो गिरिः। यस्मिन् वसति काकुत्स्थः कुबेर इव नन्दने॥" इति वक्ष्यति। पश्चाद्भागे वा चित्राणि आश्चर्यावहानि कूटानि शिखराणि यस्यासौ चित्रकूटः तम्। "आश्चर्यालेख्ययोश्चित्रम्" इत्यमरः। प्राप्य गत्वा॥ २९॥ रम्यं रमणीयं जलरामणीयकस्थलरामणीयकादियुक्तम् आवसथं पर्णशालारूपं गृहम्। "धिष्ण्यमोको निवसनं स्थानावसथवास्तु च" इत्यमरः। कृत्वा निर्माय। अत्र पर्णशालानिर्माणे लक्ष्मणस्य साक्षात्कर्तृत्वम्। इतरयोस्तु उचितदेशप्रदर्शनादिना प्रयोजककर्तृत्वम्। "समान कर्तृकयोः पूर्वकाले" इत्यत्र सूत्रे 'गृहैकत्ववदुद्देश्यगतत्वेन द्वित्वस्याविवक्षितत्वादनेकक्रियास्वपि क्त्वाप्रत्ययस्सम्भवति' इति न्यासकारोक्तेः क्त्वा प्रत्ययबाहुल्यम्। तत्र वने चित्रकूटोपान्तवने रममाणाः लीलारसमनुभवन्तः सन्तः सीतारामयोः पुष्पापचयसलिलक्रीडादिकं रतिः। "वैदेहि रमसे कच्चि

वनं गत्वा बहूदका नदीस्तीर्त्वा अनु पश्चात् भरद्वाजस्य शासनात् चित्रकूटं प्राप्य रम्यमावसथं कृत्वा पर्णशालां कृत्वा तत्र रममाणा देवगन्धर्वसङ्काशाः सुखं न्यवस

चित्रकूटे मया सह । पश्यन्ती विविधान् भावान् मनोवाक्कायसंयुतान् ।'' इति हि वक्ष्यति । लक्ष्मणस्य तु विशिष्टविषयकैङ्कर्यलाभजा प्रीतिः । वक्ष्यति "भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते । अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते॥'' इति । त्रया रममाणाः इत्यनेनानन्दहेतुभेदेऽप्यानन्दांशे तौल्य मुच्यते "परमं साम्यमुपैति" "भोगमात्रसाम्यलिङ्गाच्च" इतिवत् । रममाणा इति वर्तमाननिर्देशेन नैरन्तर्यमुक्तम् । वर्तमानार्थकस्याप्यस्य न्यवसन्निति भूतप्रत्ययान्तविशेषणत्वम् । "धातुसम्बन्धे प्रत्ययाः" इत्यनुशासनात् 'अग्निष्टोमयाजी पुत्रस्ते भविता' इतिवत् संभवति । अतएव देवगन्धर्वसङ्काशाः सन्तः, देवगन्धर्वा मनुष्यगन्धर्वेभ्योऽधिकानन्दाः । यद्वा देवी च देवश्च देवौ लक्ष्मीनारायणौ । "पुमान्स्त्रिया" इत्येकशेषः । गानं धारयतीति गन्धर्वः । "एतत्साम गायन्नास्ते" इत्युक्तः सर्वदा सामगानपरो मुक्तः । देवौ च गन्धर्वश्च देवगन्धर्वाः तत्सदृशाः देवगन्धर्वसंकाशाः । निभादित्वादुत्तरपदभूता

चित्रकूटं गते रामे पुत्रशोकातुरस्तथा । राजा दशरथः स्वर्गं जगाम विलपन् सुतम् ॥ ३१ ॥

एव सन्तः सदृशवचनाः।तथाह्यमरः--"स्युरुत्तरपदे त्वमी।निभसंकाशनीकाशप्रतीकाशोपमादयः"इति।ते त एव सन्तः साकेतवासिनः एव सन्तः सुखं न्यवसन् । वक्ष्यति " सुरम्यमासाद्य तु चित्रकूटं नदीं च तां माल्यवतीं सुतीर्थाम् । ननन्द रामो मृगपक्षिजुष्टां जहौ च दुःखं पुरविप्रवासात् ॥" इति । यद्वा त एव सन्तः वनवासिन एव सन्तः, नागरिका अपि चिरं वनचरा इवावसन्नित्यर्थः । सुखग्लान्यादिभिस्तेषां वैदेशिकत्वगन्धोऽपि नाज्ञायतेति भावः । सुखं यथा भवति तथा न्यवसन् । कदाचिदपि दुःखलेशोऽपि नान्वभावीत्यर्थः । अत्र क्रियाभेदात् तच्छब्दद्वयप्रयोग इत्यप्याहुः । ते तीर्त्वा जग्मुरिति क्रियापदमध्याहृत्य केचिद्योजयन्ति । अत्र देवगन्धर्वसंकाशा इति पदगतेनोपमालङ्कारेण किञ्चिद्वस्तु ध्वन्यते—यस्तावत्स्वरूपज्ञानपूर्वकं भगवत्यनुरक्तो भवति तं भगवान् देव्या समागत्य दिव्यं विमानमारोप्यातिवाहिकगणैः सत्कार्य विरजां तीर्त्वा तिल्यकान्तारमासाद्यामानवेनानुज्ञाप्य दिव्यलोके महामणिमण्डपमुपेत्य दिव्यसिंहासनारूढः श्रिया सह मोदमानस्तदुचितसर्वदेशसर्वकालसर्वावस्थोचितसकलविधकैङ्कर्योऽस्मै स्वानन्दसममानन्दं दत्त्वा तेन सह यावत्कालमास्त इति ॥३०॥ एवं लक्ष्मणस्य भगवच्छेषत्ववृत्तिं प्रतिपाद्य भरतस्य पारतन्त्र्यवृत्तिं दर्शयति—भृते तु तस्मिन्नित्यादिना । तदुपोद्घातत्वेनाह--चित्रेति । रामे चित्रकूटं तथा उक्तप्रकारेण गते सति दशरथो राजा पुत्रशोकेन पुत्रादर्शनजदुःखेनातुरः पीडितः सन् सुतम्

त्रिनि योजना ॥ २९ ॥ ३० ॥ रामे चित्रकूटं गते सति तदा पुत्रशोकातुरो राजा पुत्रं स्मृत्वा विलपन् परिदेवनं कुर्वन्नेव स्वर्गं जगाम ॥ ३१ ॥

मुद्दिश्य हा सुतेत्येवं विलपन् प्रलापं कुर्वन् स्वर्गं जगाम ॥ ३१ ॥ मृते त्विति । तस्मिन् दशरथे मृते सति । स्वर्गप्राप्तिरपि नश्वरत्वेनानुपादेयेति मृते इत्युक्तम् । महाबलः राज्यभरणसमर्थः अतएव भरतः। भरत इति राज्यस्य भरणादित्युक्तरीत्या भाववज्ञेन वसिष्ठेन भरत इति कृतनामा वसिष्ठप्रमुखैर्द्विजैः वसिष्ठादिभिर्ब्राह्मणैः । राज्याय राज्यं कर्तुं नियुज्यमानः । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी । राज्यं राजत्वम् । "ये चाभावकर्मणोः" इति प्रतिषेधादनो न प्रकृतिभावः । नैच्छत् नाभ्यलषत् । महाबल इत्यनेन सत्यामेव शक्तौ स्वरूपविरुद्धत्वाद्राज्यं नाङ्गीचकारेत्यवगम्यते । अतएव वक्ष्यति—"राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि । विललाप सभामध्ये जगर्हे च पुरोहितम् । कथं दशरथाज्जातो भवेद्राज्यापहारकः ॥" इति ॥ ३२ ॥ स जगामेत्यर्द्धमेकं वाक्यम् । वीर्येण युक्तो वीरः । वीर्यमत्र शत्रुभूतरागादिजेतृत्वम् । विषयानाकृष्टचित्त

मृते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः । नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ॥ ३२ ॥
स जगाम वनं वीरो रामपादप्रसादकः ॥ ३३ ॥
गत्वा तु सुमहात्मानं रामं सत्यपराक्रमम् । अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ॥ ३४ ॥

इत्यर्थः । यद्वा "एभिश्च सचिवैः सार्द्धं शिरसा याचितो मया । भ्रातुः शिष्यस्य दासस्य प्रसादं कर्तुमर्हसि ॥" इत्युक्तरीत्या चतुरङ्गबलसहितः स भरतः रामपादप्रसादकः । पादशब्दः पूज्यवाची । "पूज्ये तु पादनामाङ्कः" इत्यमरशेषः । प्रसादकः । "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति ण्वुल् । पूज्यं रामं प्रसादयितुमित्यर्थः । यद्वा रामचरणयोः प्रसादकः, रामस्यैव प्रसाद्यत्वेऽपि पादयोः प्रसाद्यत्वोक्तिः शेषभूतव्यवहारानुसारेण । राजानं द्रष्टुमिति वक्तव्ये राजपादौ द्रष्टुमिति हि भृत्यजनो व्यवहरति । वनं जगाम प्राप, वस्तुतो रामस्य कोपाभावेऽपि भरताय राज्यं दत्तमिति बुद्धिं निवर्तयितुमित्यर्थः । "पूजिता मामिका माता दत्तं राज्यमिदं मम । तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ॥" इत्युत्तरत्रापि वक्ष्यति ॥३३॥ गत्वा त्विति । अत्र स इत्यनुषज्यते । स आर्यभावपुरस्कृतः पुरस्कृतः आर्यभावः येन सः । आहिताग्न्यादित्वात् परनिपातः । यद्वा आर्यभावेन स्वस्यार्यभावेन

तस्मिन् दशरथे मृते भरतस्तु वसिष्ठादिभिः राज्याय नियुज्यमानः महाबलः राज्यं कर्तुं समर्थः । सौभ्रात्रात राज्यं नैच्छत ॥३२॥ स जगामेति । वीरः वीर्येण युक्तः । अत्र वीर्यं नाम-अन्तःशत्रुभूतरागादिजेतृत्वम्, विषयानाकृष्टचित्त इत्यर्थः । रामपादप्रसादकः-पादशब्दः पूज्यवाची । पूज्यं रामं प्रसन्नं कर्तुमित्यर्थः ॥३३॥ गत्वेति । गममभिगमं

पुरस्कृतः पूजितः । उचितमनेन क्रियत इति श्लाघित इत्यर्थः । "पूजितः स्यात्पुरस्कृतः" इति बाणः । तथाविधः सन् सुमहान् आत्मा अन्तःकरणं यस्य तम्, सुमहात्मानं स्वतः प्रसन्नहृदयमित्यर्थः । सत्यपराक्रमं सत्ये पराक्रमोऽप्रच्युतत्वं यस्य तं रामम्, गत्वा तु प्राप्य, तु विशेषोस्ति । तस्याग्रे स्थितिरेवालम्, याचनमतिरिच्यत इति भावः । भ्रातरं राममयाचत् प्रार्थयामास, स्वाभीष्टमिति शेषः । याचेर्द्विकर्मकत्वात् स्वरितेत्त्वादुभयपदी । क्रिया भेदाद्रामशब्दस्य न पुनरुक्तता ॥ ३४॥ स्वाभीष्टमेवाह--त्वमेवेति । धर्मज्ञः ज्येष्ठे विद्यमाने न कनिष्ठो राज्यमर्हतीति धर्मं जानन् त्वमेव राजा नान्यः इति रामं वचोऽब्रवीत् । "अकथितं च" इति द्विकर्मकत्वम् । ननु भरतकृता प्रपत्तिः कुतो नाफलत्, अधिकारिवैगुण्याद्वा शरण्यवैगुण्याद्वा ? नाद्यः अपेक्षातिरिक्तस्याभावात् । नान्त्यः, तस्य सर्वगुणपरिपूर्णत्वात्; इत्याशङ्क्य प्रबलप्रतिबन्धकस्य प्रारब्धस्य सद्भावात् न सा फलितेत्याह--रामोऽपीति।

त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् । रामोऽपि परमोदारः
सुमुखः सुमहायशाः । न चैच्छत्पितुरादेशाद्राज्यं रामो महाबलः ॥ ३५ ॥

अपिशब्दः प्रतिविशेषणमन्वेति। रामोऽपि रमयतीति व्युत्पत्त्या स्वरूपरूपगुणैराश्रितचित्तरञ्जनस्वभावोऽपि परमोदारोऽपि स्वपर्यन्तापेक्षितार्थप्रदोऽपि "य आत्मदा बलदा" इति श्रुतेः । सुमुखोऽपि अर्थिजनलाभेन प्रसन्नमुखोऽपि सुमहायशाः अपि "न ह्यर्थिनः कार्यवशादुपेताः ककुत्स्थवंशे विमुखाः प्रयान्ति" इति श्रीविष्णुपुराणोक्तरीत्या महाकीर्तिरपि महाबलोऽपि आश्रितमनोरथपूरणे निपुणोऽपि रामः पितुरादेशात् बलवत्प्रतिबन्धकान्नैच्छत् ।

रामम् आर्यभावपुरस्कृतः विनयपुरस्कृतस्सन् सुमहात्मा सु शोभनः महानात्मा अन्तःकरणं यस्य तम् । अयाचत् स्वाभिलषितमिति शेषः । "सत्सु कार्यवतां पुंसा मलमेवाग्रतः स्थितिः" इति न्यायेन सतामग्रतोऽवस्थानमात्रेण स्वाभिप्राये निवेदितेऽपि दैन्यप्रख्यापनार्थं पुनरयाचदिति भावः ॥ ३४ ॥ अभिलषितमेवाह-त्वमेवेति। धर्मज्ञः सर्वगुणश्रेष्ठे ज्येष्ठे सति कनिष्ठस्य राज्यार्हता नास्तीत्यमुं धर्मं त्वमेव जानासि, अतः त्वमेव राजेति रामं वचोऽब्रवीदिति सम्बन्धः। रामोऽपीति । रामोऽपि रमयतीति व्युत्पत्त्या स्वरूपगुणैराश्रितचित्तरञ्जकत्वस्वभावोऽपि। सुमुखः अर्थिजनलाभेन प्रसन्नमुखः। परमोदारः याचकाभीष्टप्रदाननिरतः,महायशाः-"न ह्यर्थिनः कार्यवशादुपेताः ककुत्स्थवंशे विमुखाः प्रयान्ति" इति श्रीविष्णुपुराणोक्तप्रकारेण प्रसिद्धकीर्तिस्सन्नपि, महाबलः एकशरविमोचनेन सकलराक्षसनिरसनसमर्थः । अपिशब्दः सर्वत्र सम्बध्यते। एवम्भूतोऽपि रामः पितुरादेशान्नियोगात् राज्यं नैच्छदिति योजना । पितुर्वचनगौरवात् भरतेनार्थितं राज्याभिषेकं नैच्छदित्यर्थः॥ ३५॥

चकारात्तदवसाने त्वैच्छदित्यर्थः । आदेशो नियोगः ॥ ३५ ॥ सर्वथा प्रपत्तेर्वैफल्यमनुचितमिति यावत्प्रतिबन्धकानिवृत्ति फलप्रतिनिधिं दिशति स्मेत्याह–पादुके चेति । चस्त्वर्थः । किन्तु भरताग्रजः फलप्रदानोचितसम्बन्धशीलः राज्याय राज्यं कर्तुम् । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी । अस्य भरतस्य पादुके न्यासं स्वप्रतिनिधिं दत्त्वा, रामपादुके राज्यं कुरुतः अहं तयोः परिचारक इति भावयेति दत्त्वेत्यर्थः । पुनः पुनर्भरतं तस्मादेशान्निवर्त्तयामास । पुनःपुनरित्यनेन भरतस्य रामविरहासहिष्णुत्वं द्योत्यते । स्वार्थत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपत्वाभावात् न चतुर्थी, किन्तु सम्बन्धसामान्ये षष्ठी ॥ ३६ ॥ अथ प्रपन्नस्य यावत्प्रारब्धनिवृत्ति शेषिणि वृत्तिं दर्शयन्नाह–स काममिति । स भरतः कामं रामकैङ्कर्यं मनोरथमप्राप्यैव रामपादौ रामस्य पादुके । पादशब्दः पादुकोपलक्षकः । उपस्पृशन् प्रत्यहं सेवमानः सन् रामागमनकांक्षया कदा राम आगमिष्य

पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः । निवर्त्तयामास ततो भरतं भरताग्रजः ॥ ३६ ॥ स काम-
मनवाप्यैव रामपादावुपस्पृशन् । नन्दिग्रामेऽकरोद्राज्यं रामागमनकांक्षया ॥ ३७ ॥ गते तु भरते श्रीमान्
सत्यसन्धो जितेन्द्रियः । रामस्तु पुनरालक्ष्य नागरस्य जनस्य च । तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह ॥ ३८ ॥

तीति प्रत्याशया चतुर्दशवर्षरूपप्रतिबन्धकमुत्तीर्य्य कदा रामकैङ्कर्यं लप्स्य इति मनोरथमभिवर्धयन्नित्यर्थः । रामरहिततन्निवासस्यातिदुःखावहत यायोध्यां विहाय नन्दिग्रामे नन्दिग्रामाख्ये अयोध्यासन्निहिते कुत्रचित् ग्रामे राज्यमकरोत् । तदाज्ञाकैङ्कर्यमकरोत् । परस्मैपदेन स्वस्य तस्मिन् फलत्व निवृत्तिरवगम्यते॥३७॥अयोध्याकाण्डप्रतिपाद्यपितृवचनपरिपालनसिद्धिं निगमयन्नुत्तरकाण्डार्थं प्रस्तौति–गते त्विति।अत्रार्द्धत्रयमेकं वाक्यम्।भरते गते तु विशेषोऽस्ति इति तमवाह-श्रीमान् प्रतिज्ञाभङ्गभयजनितविषादविगमादुत्पन्नकान्तिविशेषः । सत्यसन्धः भरतनिर्बन्धेनाप्यविचाल्यप्रतिज्ञः । "सन्धा

पादुके चेति । भरताग्रजः अस्य-भरतस्य, राज्याय-राज्यं कर्तुम् । अहल्यादृष्टवैभवपादस्पृष्टे पादुके न्यासरूपेण दत्त्वा बहुविधैः सान्त्वैः पुनर्भरतं निवर्तयामासेति सम्बन्धः । राज्यस्य निक्षेपरूपतया स्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनविषयत्वाभावाच्चतुर्थ्या अप्रसक्तेरस्येति सम्बन्धसामान्ये षष्ठी ॥३६॥ स काममिति। स भरतः कामम् अभिषेकार्थं रामप्रत्यानयनलक्षणं मनोरथमनवाप्यैव नन्दिग्रामे रामपादौ रामपादुके अनुदिनमुपस्पृशन नमस्कुर्वन् रामागमनकाङ्क्षया नन्दिग्रामे स्थित्वा राज्यमकरोत् पालयामास ॥ ३७ ॥ गते त्विति । भरते गते सति श्रीमान्-सर्वातिशयकान्तिमान् । सत्यसन्धः सत्यप्रतिज्ञः, जितेन्द्रियः राज्यभोगलौल्यरहितः ।

विषम०—एवंलक्षणस्य भरतस्य च क्रमेण श्रीरामकैङ्कर्यं तत्पारतन्त्र्यं च प्रदर्शितम् । शत्रुघ्नवृत्तान्ताप्रदर्शनेन तस्य भागवतपारतन्त्र्यं सूचितम् ॥ ३७ ॥

प्रतिज्ञा मर्यादा " इत्यमरः । जितेन्द्रियः मातृभरतादिप्रार्थनया... राम: । नगरे भवो नागरः । " तत्र भवः " इत्यण् । तस्य जनस्य, तत्र चित्रकूटे, पुनरागमनमालक्ष्य आलोच्य, चकाराद्दपिविप्रकारदर्शनाच्च तत्प्रदेशं विहाय एकाग्रः पितृवचनपालने दत्तावधानो विरोधिभूयिष्ठदेशत्वेन सावधानो वा दण्डकान् प्रविवेश । हेति विषादे । " एकसर्गोऽनन्यवृत्तिरेकाग्रैकायनावपि " इति वैजयन्ती । सीतालक्ष्मणयोश्च प्रवेशोऽर्थसिद्धः । दण्डकस्य राज्ञो जनपदो दण्डकः । "तस्य निवासः" इत्यण् । " जनपदे लुप् " इति लुप् । शुक्रशापेन वनतां प्राप्तः । कुत्सायां कन् । अवान्तरवनबहुत्वाद्बहुवचनम् । वक्ष्यत्युत्तरकाण्डे–" शप्तो ब्रह्मर्षिणा तेन पुरा वै दण्डको हतः । ततःप्रभृति काकुत्स्थ दण्डकारण्यमुच्यते । तपस्विनः स्थिता यत्र जनस्थानमतोऽभवत् ॥ " इति। दण्डकामिति पाठे–दण्डको नाम राजास्यामटव्यामस्तीति दण्डका । " अर्शआदिभ्योऽच् "

प्रविश्य तु महारण्यं रामो राजीवलोचनः । विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ।
सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ॥ ३९ ॥

इत्यच्प्रत्ययः । ततष्टाप् । क्षिपकादित्वान्नेत्त्वम् ॥ ३८ ॥ एवमयोध्याकाण्डवृत्तान्तसङ्ग्रहेण पितृवचनपरिपालनरूपसामान्यधर्मः, शेषभूतस्य शेषिविषयकैङ्कर्यवृत्तिः, प्रपन्नस्य भगवत्पारतन्त्र्यं च प्रदर्शितम् । शत्रुघ्नवृत्तान्तप्रदर्शनेन तस्य भागवतपारतन्त्र्यं च सूचितम् । अथ ब्राह्मणेषु विशिष्य सत्यप्रतिज्ञत्वप्रतिपादनपरमारण्यकाण्डवृत्तान्तं संगृह्णाति–प्रविश्य त्वित्यादिना । रामो महारण्यं दण्डकारण्यम् प्रविश्य । तु विशेषोऽस्ति तमाह– राजीवलोचनः अपूर्वसंस्थानविपिनावलोकनजनितकुतूहलेन विकसितनयनारविन्दः सन् । तेनैवोत्साहेन विराधं राक्षसं हत्वा तद्वधनमुपहारीकृत्य शरभङ्गं ददर्श । हेत्यैतिह्ये । तदनुज्ञया सुतीक्ष्णं चापीत्येकनिपातः समुच्चयार्थकः। अगस्त्यमगस्त्यभ्रातरं च ददर्श । तथेति समुच्चये ।अगस्त्यभ्राता सुदर्शनाख्यः । तदुक्तं सनत्कुमारसंहितायामगस्त्येन–"यवीयानेष मे भ्राता सुदर्शन इति स्मृतः ।" इति । कुम्भसम्भवस्यागस्त्यस्य भ्राता सहपोषणादिति बोध्यम् ।

रामस्त्विति । नागरस्य जनस्य अयोध्यावासिनो जनस्य, चशब्दाद्भरतस्य च । तत्र चित्रकूटे पुनरागमनमालक्ष्य पितुर्वचनपरिपालने एकाग्रचित्तः सन् दण्डकान् दण्डकाख्यवनं प्रविवेश, अवान्तरवनबाहुल्याद्बहुवचनम् । हेति प्रसिद्धौ ॥ ३८॥ प्रविश्य तु महारण्यमित्यारभ्य आरण्यकाण्डकथासंग्रहः क्रियते। तुशब्दोऽवधारणे। महारण्यं दण्डकाख्यं वनं प्रविश्य तु प्रविश्यैव राजीवलोचनो रामः । राजीवलोचनविशेषणं रामस्य महावनप्रवेशसंभाविनराक्षसयुद्धारम्भार्जितं हर्षं द्योतयति ।



॥१८॥

अगस्त्यं च अगस्त्यभ्रातरमित्यत्र सन्धिकार्याभावो वाक्ये संहिताया अनित्यत्वात् । तथोक्तम्–" संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥" इति ॥ ३९ ॥ तनि०--विराधवधानन्तरमेव शरभङ्गादिदर्शनोक्त्या विराधवधस्य शरभङ्गादिदर्शने " रिक्तहस्तेन नोपेया द्राजानं दैवतं गुरुम् " इत्युक्तमुपायनत्वं व्यज्यते ॥३९॥ अगस्त्येति । अत्र राम इत्यनुषज्यते । रामः परमप्रीतः सन् । जगदेकवीरस्य स्वस्य सदृशायुधजाल लाभात् भृशं सन्तुष्टः सन् अगस्त्यवचनादेव, न तु स्वाभ्यर्थनात् । ऐन्द्रमिन्द्रेण दत्तम् "तस्येदम्" इति सम्बन्धसामान्येऽण् । "दत्तो मम महेन्द्रेण" इति वक्ष्यमाणत्वात् । इदं शरासनादित्रयसाधारणं विशेषणम् । शरा अस्यन्ते क्षिप्यन्तेऽनेनेति शरासनं धनुः । तच्च खड्गं च अक्षयसायकौ समर सीम्नि सहस्रशो विनियोगेऽप्यक्षयशरौ तूणी निषङ्गौ जग्राह स्वीकृतवान् । वचनाज्जग्राहेत्यनेन खड्गादिकमगस्त्यो न स्पृष्टवान् किन्तु निर्दिष्टवानित्यु

अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् । खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ॥ ४० ॥
वसतस्तस्य रामस्य वने वनचरैः सह । ऋषयोऽभ्यागमन् सर्वे वधायासुररक्षसाम् ॥ ४१ ॥

च्यते ॥ ४० ॥ एवं विरोधिनिरसनानुकूल्यदर्शनलब्धावसरमुनिजनाभ्यर्थनमाह–वसत इति । वने शरभङ्गवने तस्य वसतः, तस्मिन्वसतीत्यर्थः । " षष्ठी च " इति योगविभागात् " यस्य च भावेन भावलक्षणम् " इत्यस्मिन्नर्थे षष्ठी । यद्वा षष्ठ्यर्थसम्बन्धसामान्यस्य उक्तविशेषे पर्यवसानम् । "शरभङ्गाश्रमे राममभिजग्मुश्च तापसाः" इति वक्ष्यमाणत्वाच्च शरभङ्गवन इति सिद्धम् । सर्वे वैखानसवालखिल्यादय ऋषयः शरभङ्गाश्रमवासिनो वन चरैश्चित्रकूटपम्पावनप्रभृतिवनवासिभिः सह । वक्ष्यति–" पम्पावननिवासानामनुमन्दाकिनीमपि । चित्रकूटालयानां च क्रियते कदनं महत् ॥ " इति । यद्वा वनचरैः सह वने वसतस्तस्य । " षष्ठी चानादरे " इत्यनादरे षष्ठी । " सविशेषणे हि–" इति न्यायेन तस्य वने वासमनादृत्येत्यर्थः । वक्ष्यति हि–" ते वयं भवता रक्ष्या भवद्विषयवासिनः । नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वर ॥ " इति । यद्वा वने वसतस्तस्य समीपमित्युपस्कार्यम् । आसुराणि असुरप्रकृतीनि रक्षांसि । अनेन " विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः " इत्युक्तविभीषणव्यावृत्तिः । यद्वा असुराश्च रक्षांसि चेति

शरभङ्गनामानं मुनिं ददर्श तथा सुतीक्ष्णादीनपि ददर्श ॥ ३९ ॥ अगस्त्येति । शरासनादि प्रतिगृहाणेत्येवंरूपागस्त्यवचनात् । इन्द्रः परमेश्वरो विष्णुः तस्येम मैन्द्रम् । निजायुधलाभात् परमप्रीतः । अक्षयाः सायकाः ययोस्तौ । तूणी-इषुधी च जग्राह ॥४०॥ वसत इति । सर्वे ऋषयः असुररक्षसां वधाय वनचरैर्वानप्रस्थ

द्वन्द्वः। असुराः कबन्धादयः, तत्र दनुशब्दप्रयोगात्। यद्वा असून्प्राणान् रान्ति गृह्णन्ति इत्यसुराणि. असुराणि तानि च रक्षांसि चेति कर्मधारयः। तेषां वधाय वधं कारयितुं प्रार्थयितुं वा। "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी। अभ्यागमन् अभिमुखतया आगताः। न ह्याभिमुख्यादन्यत् शरणागतिर्नामास्ति। "सत्सु कार्यवतां पुंसामलमेवाग्रतः स्थितिः"। यद्वा असुररक्षसां वने वसतस्तस्य असुररक्षसां वधायाभ्यागमन्नित्युभयत्राप्यन्वयः। काकाक्षिन्यायात् मध्यमणिन्यायाद्वा ॥ ४१ ॥ मुनीनां दुर्दशामालोक्य तद्विरोधिनिरसनं प्रतिज्ञातमित्याह—स तेषामिति। स रामः राक्षसानां वने दण्डकारण्ये तेषामृषीणां तथा प्रतिशुश्राव, यथा तैरर्थितं तथा प्रतिजज्ञ इत्यर्थः। "आश्रवसङ्गरसन्धाः प्रतिश्रवः संश्रवः प्रतिज्ञा च" इति हलायुधः ॥ ४२ ॥ मुनिभिरर्थितो रामेण प्रतिज्ञातश्च कोऽर्थ इत्यत्राह—प्रतिज्ञातश्चेति। रामेण प्रतिज्ञातोऽर्थस्तु. अग्निकल्पानामीषन्न्यूनमग्निसादृश्यं प्राप्तानाम्।

स तेषां प्रतिशुश्राव राक्षसानां तथा वने ॥ ४२ ॥ प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम्।
ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥४३॥ तेन तत्रैव वसता जनस्थाननिवासिनी।
विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥ ४४ ॥

"ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति कल्पप्प्रत्ययः। अतएव दण्डकारण्यवासिनामृषीणाम्। चतुर्थ्यर्थे षष्ठी। संयति युद्धे। "समुदायः स्त्रियां संयत् समित्याजिसमिद्युधः" इत्यमरः। रक्षसां वधः। "कर्तृकर्मणोः कृति" इति कर्मण्यर्थे षष्ठी। प्रतिज्ञातं त्विति पाठे—सामान्ये नपुंसकम्। प्रतिज्ञातं वस्तु वध इत्यर्थः ॥ ४३ ॥ अथ प्रतिज्ञानिर्वाहबीजमुपक्षिपति—तेनेति। तत्रैव जनस्थाने वसता तेन रामेण। जनस्थाने निवसतीति जनस्थाननिवासिनी। "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिः। कामेनेच्छया रूपमस्या अस्तीति कामरूपिणी। शूर्पतुल्या नखा यस्याः सा शूर्पणखा। "पूर्वपदात्

मुनिभिः सह वने वसतस्तस्य रामस्याभ्यागमन्। समीपमिति शेषः। यद्वा अनादरे षष्ठी। हिंसानर्हे रामस्य तापसरूपेणावस्थानमनादृत्य सर्वेश्वरोऽयं दुष्टान संहृत्य अस्मान् रक्षिष्यतीति निश्चित्य राघवं शरणमागता इत्यर्थः ॥ ४१ ॥ स तेषामिति। स रामः राक्षसानां वने-राक्षसावासभूते वने। तेषाम् ऋषीणाम् तथा प्रार्थना-वचनं प्रतिशुश्राव अङ्गीचकारेत्यर्थः ॥ ४२ ॥ अङ्गीकृतमर्थमाह—प्रतिज्ञातश्चेति। रामेण अग्निकल्पानाम्-अग्निसदृशानां दण्डकारण्यवासिनामृषीणाम्। सन्निधाविति शेषः। संयति युद्धे प्राप्तकाले रक्षसां वधः प्रतिज्ञातश्चेति सम्बन्धः ॥ ४३ ॥ तेनेति। तेन रामेण तत्रैव दण्डकारण्यान्तर्भूतपञ्चवट्यामेव वसता। जनस्थाननिवा

संज्ञायामगः" इति णत्वम् । "नखमुखात्संज्ञायाम्" इति ङीष्प्रतिषेधः। शूर्पणखाख्या राक्षसी विरूपिता कर्णनासिकाच्छेदेन वैरूप्यं प्रापिता। "रामस्य दक्षिणो बाहुः" इति लक्ष्मणस्य रामबाहुत्वात् रामस्य विरूपकरणकर्तृत्वोक्तिः। शूर्पनखीति पाठे नसासंज्ञा ॥४४॥ तत इत्यादिसार्द्धश्लोकमेकं वाक्यम् । ततः शूर्पणखावैरूप्यकरणानन्तरम् शूर्पणखावाक्यात् उद्युक्तान् युद्धार्थं सन्नद्धान् । सर्वराक्षसान् चतुर्दशसहस्रसङ्ख्याकप्रधानराक्षसान् तेष्वपि प्रधानं खरं त्रिशिरसं चैव दूषणं चैव राक्षसम्। चैवेति निपातद्वयसमुदायः समुच्चयार्थः । तेषां पूर्वोक्तानां राक्षसानां खरादीनां च पदानुगान् अनुचरांश्च रणे युद्धे निजघान हतवान् । यद्वा खरादीन् तेषां पदानुगान् सर्वराक्षसांश्च निजघानेति योजना ॥४५॥ हतान् राक्षसान् परिसञ्चष्टे—वन इति । तस्मिन्वने निवसता रामेणेत्यनेनासहायत्वं दर्शितम् । जनस्थाननिवासिनामित्यनेनारण्यवर्तित्वेनातिघोरत्वमुक्तम् । रक्षसां चतुर्दशसहस्राणीति यौगपद्यमुक्तम्। निहता

ततः शूर्पणखावाक्यादुद्युक्तान् सर्वराक्षसान् । खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् । निजघान रणे रामस्तेषां चैव पदानुगान् ॥ ४५ ॥ वने तस्मिन्निवसता जनस्थाननिवासिनाम् । रक्षसां निहतान्यासन् सहस्राणि चतुर्दश ॥४६॥ ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्च्छितः। सहायं वरयामास मारीचं नाम राक्षसम् ॥४७॥

नीति निःशेषत्वमुच्यते। सहस्राणीति सङ्ख्यासङ्ख्येययोरभेदेन निर्देशः। चतुर्दशसहस्रसङ्ख्याकानि सैन्यानि वा॥४६॥ एवं रामस्य सत्यप्रतिज्ञत्वे दर्शिते, सीतायाः पुरुषकारत्वं वक्तुं बीजमुपक्षिपति—तत इति । ततः खरादिवधानन्तरं ज्ञातिवधं खरवधम् । खरस्य ज्ञातित्वं स्वमातृष्वसुर्विश्रवसो जातत्वा दित्यारण्यपर्वणि व्यक्तम् । श्रुत्वा अकम्पनशूर्पणखामुखेन ज्ञात्वा । रावणः रौति रावयतीति रावणः । वक्ष्यत्युत्तरकाण्डे—"यस्माल्लोकत्रयं ह्येतद्रावितं भयमागतम् । तस्मात्त्वं रावणो नाम नाम्ना तेन भविष्यसि ॥" इति । यद्वा विश्रवसोऽपत्यं रावणः। शिवादिगणे "विश्रवसो विश्रवणरवण" इति पाठात्

सिनी-जनस्थानं नाम दण्डकारण्ये रावणस्य बलनिवेशस्थानम् । कामरूपिणी-कामेन इच्छया रूपमस्या अस्तीति तथा । शूर्पणखा विरूपिता-कर्णनासाच्छेदेन वैरूप्यं प्रापिता ॥ ४४ ॥ तत इति । ततः शूर्पणखावैरूप्यकरणानन्तरम् । शूर्पणखावाक्यादुद्युक्तान् युद्धार्थं सन्नद्धान् । सर्वराक्षसान् चतुर्दशसहस्रसङ्ख्याकप्रधान राक्षसान् । तेष्वपि प्रधानभूतान्निर्दिशति-खरमिति । तेषां पूर्वोक्तराक्षसानां खरादीनां च पदानुगान् अनुचरांश्च रणे निजघानेति सम्बन्धः ॥ ४५ ॥ हतान् प्रधानान् संचष्टे—वन इति । तस्मिन्निवसता, रामेणेति शेषः॥४६॥ तत इति। ततः खरादिवधानन्तरम् ज्ञातिवधम् अकम्पनशूर्पणखामुखेन श्रुत्वा क्रोधमूर्च्छितः क्रोधेन व्याप्तः

रवणादेशः अण् च । क्रोधमूर्छितः क्रोधेन मूर्छितः मूढः । "मूर्छितो मूढसोच्छ्रायौ" इति वैजयन्ती । न चायं प्रत्ययो मूर्छतेर्निष्ठा मूर्त इति तद्रूपत्वात्, किन्तु मूर्च्छास्य सञ्जातेति मूर्छितः। तारकादित्वादितच् । मारीचं नाम राक्षसं सहायं वरयामास॥४७॥ वार्यमाण इति। अत्रान्ते इतिकरणं द्रष्टव्यम् । स रावणः । हे रावण! ते तेन बलवता खरादिषु दृष्टापदानवता बलीयसा रामेण विरोधो न क्षमो न युक्तः । "क्षमस्त्रिषु हिते योग्ये युक्ते शक्ते पटावपि" इति शब्दरत्नाकरे । इति सुबहुशो मुहुर्मुहुः वार्यमाणोऽभूत् ॥ ४८ ॥ अनादृत्येति । रावणः कालचोदितः कालेन मृत्युना प्रेरितः सन् । तद्वाक्यं मारीचवाक्यमनादृत्य सहमारीचः मारीचसहितः । "तेन सहेति तुल्ययोगे" इति समासः । "वोपसर्जनस्य" इति सहशब्दस्य सभावाभावः । तदा तस्मिन्नेव काले तस्य खरदूषणादिहन्तृत्वेन प्रसिद्धस्य रामस्य आश्रमपदमाश्रमस्थानम् । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । जगाम प्राप॥४९॥

वार्यमाणः सुबहुशो मारीचेन स रावणः । न विरोधो बलवता क्षमो रावण तेन ते ॥ ४८ ॥
अनादृत्य तु तद्वाक्यं रावणः कालचोदितः । जगाम सहमारीचस्तस्याश्रमपदं तदा ॥ ४९ ॥
तेन मायाविना दूरमपवाह्य नृपात्मजौ । जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ॥ ५० ॥
गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् । राघवः शोकसन्तप्तो विललापाकुलेन्द्रियः ॥ ५१ ॥

तेनेति । मायाविना प्रशस्तमृगमायावता । "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः । लोभनीयविचित्रकनकमृगवेषधारिणेत्यर्थः । तेन मारीचेन प्रयोज्येन, नृपात्मजौ दशरथपुत्रौ दूरं यथा भवति तथा अपवाह्य अपसार्य, दृश्यादृश्यतया रामम् रामस्वरतुल्यस्वरेण लक्ष्मणं च दूरं निःसार्येत्यर्थः । मध्ये सीताविमोचनाय प्राप्तं जटायुषं जटायुर्नामकं गृध्रं हत्वा मरणपर्यवसायिनीं हिंसां कृत्वा रामस्य भार्यां नित्यानपायिनीं सीतां जहार हृतवान् । अत्र 'आस्यं व्यादाय स्वपिति' इतिवदपूर्वकाले क्त्वाप्रत्ययः । सीतां हृत्वा जटायुषं जघानेत्यर्थः । अत्र मायानिर्मिता सीतैवापहृता स्वयमग्नावन्तर्हिता, अतएव मायासीतायामग्निप्रविष्टायां निजसीताया उत्थानं यथाकथञ्चित् लोकापवादात्पुनः संत्यागश्चोपपद्यत इत्याहुः ॥ ५० ॥ गृध्रं चेति । मृगरूपमारीचहननं पर्ण

वार्यमाण इति । हे रावण लोकबाधक ! अप्रमेयबलेन तेन रामेण विरोधो न क्षम इति बहुशो वार्यमाणोऽपि स रावणः कालचोदितस्सन् तद्वाक्यमनादृत्य सहमारीचः तस्य-खरदूषणहन्तृत्वेन प्रसिद्धस्य रामस्याश्रमपदं जगामेति योजना॥४८–५०॥ गृध्रं चेति।

सन् । मारीचं नाम राक्षसं सीताहरणे सहायं वरयामासेति योजना॥४७॥

शालायां सीताया अदर्शनेन तदन्वेषणं च चकारेण समुच्चीयते। निहतं मुमूर्षुं गृध्रं जटायुषं दृष्ट्वा तद्वचनान्मैथिलीं सीतां हृतां रावणेनापहृतां श्रुत्वा राघवः शोकेन सन्तप्तः सम्यक् तप्तः सन्। सीताया अदर्शनेन तप्तः, जटायुर्मरणेन सुतरां तप्तः। अत एव व्याकुलेन्द्रियः कलुषितसर्वेन्द्रियः सन् विललाप परिदेवनमकरोत्, "विलापः परिदेवनम्" इत्यमरः। "राज्याद्भ्रंशो वने वासः सीता नष्टा हतो द्विजः। ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम्॥" इति। अत्र राघवमैथिलीशब्दाभ्यां कुलद्वयावद्यकरमिदमपहरणमिति शोकातिशयहेतुरुच्यते। ननु विष्णववतारभूतस्यास्य कथं शोकमोहौ सम्भवत इति? संभवत एव पुरुषधौरेयस्य। यदि हि लोकोत्तरगुणविशिष्टवस्तुविनाशेऽपि तौ न स्यातां तर्हि स कथं पुरुषधौरेयः स्यात्, तच्च कथमतिसुन्दरं स्यात्? तयोरुभयोर्नमस्कार एव स्यात्। वक्ष्यति च महापुरुषगुणमणिवर्णनप्रकरणे—"व्यसनेषु मनुष्याणां भृशं भवति दुःखितः" इति। मारुतिश्च वक्ष्यति—

ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम्। मार्गमाणो वने सीतां
राक्षसं संददर्श ह। कबन्धं नाम रूपेण विकृतं घोरदर्शनम्॥ ५२॥

"दुष्करं कृतवान् रामो हीनो यदनया प्रभुः। धारयत्यात्मनो देहं न शोकेनावसीदति॥" इति॥५१॥ तत इति अर्द्धत्रयमेकं वाक्यम्। तेनैव शोकेन गृध्रहननजनितेनैव शोकेन, सीतापहरणजशोकादप्यधिकेनेत्यर्थः। ततः व्याप्तो रामः गृध्रं तिर्यग्विशेषमपि जटायुषं पितृसखत्वात् शेषिकार्याय त्यक्तप्राणत्वाच्च दग्ध्वा ब्रह्ममेधेन संस्कृत्य, "यत्तु प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः। तत्स्वर्गगमनं तस्य क्षिप्रं रामो जजाप ह॥" इति वक्ष्यमाणत्वात्। मुक्तत्यक्तशरीरत्वाच्चेदं ब्रह्ममेधमर्हतीति। तथोक्तं नृसिंहपुराणे—"मत्कृते निधनं यस्मात्त्वया प्राप्तं द्विजोत्तम। तस्मात्त्वं मत्प्रसादेन विष्णुलोकमवाप्स्यसि॥" इति सामान्यतश्चोक्तम्। यथाग्नेये—"विष्णोः कार्यं समुद्दिश्य देहत्यागो यतः कृतः। ततो वैकुण्ठमासाद्य मुक्तो भवति मानवः॥" इति। आश्वमेधिके च—"प्राणांस्त्यजति यो मर्त्यो मां प्रपन्नोऽपि मत्कृते। बालसूर्यप्रकाशेन व्रजेद्यानेन मद्गृहम्॥" इति। अत्रापि वक्ष्यति—"या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः। अपरावर्तिनां या च या च भूमिप्रदायिनाम्। मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान्॥" इति। अत्रापरावृत्तिः "न च पुन

निहतं कण्ठगतप्राणं श्रुत्वा, गृध्रमुखादिति शेषः। विललाप-पर्यदेवयत्। आकुलेन्द्रियः-आकुलानि शोकपरवशानि इन्द्रियाणि यस्य स तथा॥५१॥ तत इति। ततः प्रलापानन्तरम् तेनैव शोकेन रावणेन सीता हृतेति निवेद्य मृतजटायुर्विषयशोकेनैव उपलक्षितः जटायुषं दग्ध्वा-विधिना संस्कृत्य, सीतां वने मार्गमाणः रूपेण

रावर्त्तंते" इत्युक्ता मुक्तिरेव,न तु युद्धे अपलायनम् । तत्फलस्य स्वतःसिद्धत्वेन तदनुग्राह्यत्वाभावात् । न च संस्काराभावे सुकृतफलस्यानुत्पत्त्या तत्करणेन तदनुग्राह्यत्वमेवेति वाच्यम् । तिरश्चो यज्ञानधिकारेण तस्य तदभावेन तस्य तदनुग्राह्यत्वात् । अङ्गिफलस्यैवाङ्गफलत्वेन उपासनाङ्गानां यज्ञदानादीनामपि मुक्तिरेव फलमित्यभिप्रायेण 'या गतिर्यज्ञशीलानाम्' इत्याद्युक्तम् । यद्वा "इमान् लोकान् कामान् नीकामरूप्यनुसञ्चरन्" इत्यादिश्रुत्युक्तरीत्या मुक्तस्य सर्वलोकसञ्चारसम्भवात् या गतिरित्याद्युक्तं क्रममुक्तिपरमिदं वचनम् । ननु 'आत्मानं मानुषं मन्ये' इति मनुष्यत्वं भावयतः कथं परत्वासाधारणचिह्नं मोक्षप्रदत्वमुच्यत इति चेन्न; "सत्येन लोकान् जयति" इत्युक्तस्य सर्वलोकजयस्य मानुषत्वेऽप्यविरोधात् । एवं जटायुषं दग्ध्वा वने सीतां मार्गमाणः अन्वेषणं कुर्वन् । " मृग अन्वेषणे " इत्यस्माद्धातोः शानच् । "आ धृषाद्वा" इति विकल्पाणिजभावः । रूपेण शरीरेण विकृतं विकारयुक्तम् ।

तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ॥ ५३ ॥ स चास्य कथयामास
शबरीं धर्मचारिणीम् । श्रमणीं धर्मनिपुणामभिगच्छेति राघवम् ॥ ५४ ॥

"येनाङ्गविकारः" इति तृतीया । कुक्षिनिक्षिप्तमस्तकमित्यर्थः । घोरदर्शनं भयङ्करदर्शनम् । कबन्धं कबन्धाकारत्वात्कबन्धनामकं राक्षसं ददर्श । हंति खेदे । अमृतमन्वेषता कालकूटमलम्भीत्यर्थः । यद्यप्ययं दानव एव तथापि राक्षसप्रकृतित्वात्तथोक्तमिति ज्ञेयम् ॥५२॥ तमिति । महाबाहुः कबन्धभुजनिकर्तनक्षमभुजो रामः तं कबन्धं निहत्य तत्प्रार्थनया ददाह दग्धवान्, स च कबन्धो दाहेन हेतुना स्वः स्वर्गं गतः । इदमर्धमेकं वाक्यम् ॥५३॥ स चेति । सः स्वर्गं गच्छन् कबन्धोऽपि, अस्य उपकारस्मृत्या क्षणमाकाशे स्थित्वा, धर्मचारिणीं गुरुशुश्रूषादिधर्माचरणशीलाम्, आचार्याभिमानरूपचरमपर्वनिष्ठामित्यर्थः । "पादमूलं गमिष्यामि यानहं पर्यचारिषम्" इति वक्ष्यमाणत्वात् । धर्मे अतिथिसत्काररूपे निपुणां समर्थां धर्मसूक्ष्मज्ञामित्यर्थः । रामः

विकृतं कबन्धं संददर्शेति संबन्धः ॥५२॥ तमिति । तं कबन्धं निहत्य ददाह च । स च स्वर्गतः स्वर्गं प्राप्तवान्, स्वर्गगमनयोग्यं स्वकीयं गन्धर्वरूपं प्राप्तवानित्यर्थः ॥५३॥ स कबन्धः हे राघव ! शबरीं शबरस्त्रियं धर्मचारिणीम् श्रवणकीर्तनादिभगवद्धर्माचरणशीलाम् धर्मनिपुणाम् सामान्यविशेषरूपधर्मनिपुणाम् श्रमणीं चतुर्थाश्रमं प्राप्ताम् । जितेन्द्रियत्वपूर्वकमोक्षोपयुक्ताचारनिष्ठामित्यर्थः । एवंभूतां भक्तामभिगच्छेति अस्य रामस्य कथयामासेति योजना । प्रथमान्तपाठे त्वयमुत्तरशेषः ॥५४॥



१ राक्षः । राक्षसः । भूमि स पारः ।

समागमिष्यतीति स्वादूनि फलान्यास्वाद्यास्वाद्य परीक्ष्य निक्षिप्तवतीति प्रसिद्धिः । श्रमणीं परिव्राजिकाम् । " चतुर्थमाश्रमं प्राप्ताः श्रमणा नाम ते स्मृताः " इति स्मरणात् । । शबरीं प्रति(वि)लोमस्त्रियम् । तदुक्तं नारदीये–" नृपायां वैश्यतो जातः शबरः परिकीर्तितः । मधूनि वृक्षादानीय विक्रीणीते स्ववृत्तये ॥ " इति । "जातेरस्त्रीविषयात्–" इति ङीप् । अभिगच्छ आभिमुख्येन गच्छेति राघवं कथयामास । राघव इति पाठे–तस्योत्तर श्लोकेनान्वयः । राघवेति पाठे–हे राघव ! शबरीमभिगच्छेति अस्य रामस्य कथयामासेत्यर्थः । अत्र भागवतभक्तिमहिम्ना हीनजातेरप्यभिगन्तव्यत्व मुक्तम् ॥ ५४ ॥ स इति । महातेजाः चरमपर्वनिष्ठजनलिप्सयातिसन्तुष्टः स राघवः शत्रुसूदनः " गमिष्याम्यक्षयान् लोकान् त्वत्प्रसादादरिन्दम " इत्युक्तरीत्या तत्प्राप्तिप्रतिबन्धकनिवर्त्तकः । " सात्पदाद्योः " इति पत्वाभावः । शबरीं नीचत्वसीमाभूमिभूतामभ्यगच्छदिति सौशील्यातिशयोक्तिः ।

सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः । शबर्या पूजितः सम्यग्रामो दशरथात्मजः ॥ ५५ ॥
पम्पातीरे हनुमता सङ्गतो वानरेण ह । हनुमद्वचनाच्चैव सुग्रीवेण समागतः ॥ ५६ ॥

दशरथात्मजः रामः शबर्या सम्यक् पूजितः । षष्टिवर्षसहस्राणि वन्ध्यस्य दशरथस्य प्रसादेऽत्यन्तादरकृतभोजनादप्यतिशयितं तत्कालमात्रसमागत शबरीसमर्पितमृष्टान्नमिति भावः । शरभङ्गादिभिरगस्त्यान्तैः कृतं पूजामात्रम्, शबर्या कृतं तु सम्यक् पूजा, तस्याश्चरमपर्वनिष्ठत्वादिति भावः । उक्तं हि–"मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत् " इति । यद्वा सम्यक् पूजनं परीक्षितरसैः फलैर्भोजनम् । पूजित इत्यत्र "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्त्तमाने क्तः । तथा च शबर्य्येत्यत्र "क्तस्य च वर्त्तमाने " इति कथं न षष्ठीति चेत् ? अत्र केचिदाहुः–आर्षः षष्ठ्यभाव इति । अन्ये तु नायं वर्त्तमाने क्तः किन्तु भूते । तद्योगे च "न लोकाव्यय–" इत्यादिना षष्ठीप्रतिषेधात्तृतीयैवेति । वस्तुतः पूजास्य सञ्जातेति पूजितः । तारकादित्वादि तच् प्रत्ययः । अनेन तृतीया भवत्येव ॥ ५५ ॥ एवं सत्यप्रतिज्ञत्वप्रधानमारण्यकाण्डचरितं संगृह्य मित्रकार्यनिर्वाहकत्वपरां किष्किन्धाकाण्डकथां संगृह्णाति–पम्पेति । पम्पानाम पद्मसरः तस्यास्तीरे तट्कानने इत्युद्दीपकसंनिधानोक्तिः । हनुमता प्रशस्तहनुना, वीरकिणाङ्कितमुखेनेत्यर्थः । वान रेण सङ्गतः संयुक्तः । राम इति शेषः । हेति हर्षे । विरहिजनप्राणापहारिणि पम्पोपवने स्वकामिनीघटकसमागमोऽयं चोरैर्वनेऽपहृतसर्वस्वस्य स्वजन

सोऽभ्यगच्छदिति । स्पष्टमेतत् । शबर्येति । सम्यक् पूजितः यथाविधि अर्घ्यादिफलसमर्पणान्तोपचारेणार्चितः ॥५५॥ पम्पातीर इत्यादिना किष्किन्धाकाण्डकथासंग्रहः

मुखावलोकनवदतीवाश्वासनमिति मुनेर्हर्षः । हनुमता ... तादशायां विजयकिण॥ङ्कितवदनवता पुरुषेण सङ्गमो यदृच्छया सञ्जातः । वानरेणेति विशेषणेन रावणवत्संन्यासिवेषरहिततया स्ववेषेण समागमाद्विश्वसनीयता द्योत्यते । हनुमद्वचनात्सुग्रीवेण समागतः । चैवेति निपातसमुदायस्समुच्चयार्थः । अनुकूलपुरुषकारलाभादुचितमित्रलाभो जात इति भावः ॥ ५६ ॥ अथ सख्यहेतुं रहस्योद्भेदं दर्शयति--सुग्री वायेति । महाबल इत्यनेन वृत्तस्मरणकालिककातर्यगोपनहेतुधैर्यमुच्यते । रामः आदितः जन्मन आरभ्य तत्प्रसिद्धं सर्वं वृत्तं सुग्रीवाय शंसत् । "अनित्य मागमशासनम्" इत्यडभावः । अकथयदित्यर्थः । सीतायाः तद्वृत्तं च रावणहृतत्वादिकं यथावृत्तं वृत्तमनतिक्रम्य । पदार्थानतिवृत्तावव्ययीभावः । तद न्वेषणस्यावश्यकर्त्तव्यतया विशेषेणाशंसत् ॥५७॥ सुग्रीव इति । चापीति निपातसमुदायः समुच्चयार्थः । वानरः सुग्रीवोऽपि रामस्य सम्बन्धि तत्सर्वं पूर्वोक्तं

सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः । आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः ॥ ५७ ॥
सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः । चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ॥ ५८ ॥
ततो वानरराजेन वैरानुकथनं प्रति । रामायावेदितं सर्वं प्रणयाद्दुःखितेन च ॥ ५९ ॥

वृत्तान्तं श्रुत्वा प्रीतः रामस्य प्रयोजनापेक्षित्वान्मामकमपि प्रयोजनं निर्वर्त्तयिष्यतीति सन्तुष्टः सन् । अग्निः साक्षी साक्षाद्द्रष्टा यस्य तदग्निसाक्षिकम् । "शेषाद्विभाषा" इति कप्प्रत्ययः । रामेण सख्यं सखित्वम् । "सख्युर्यः" इति भावार्थे यप्रत्ययः । चकार कृतवान् । वानररामशब्दाभ्यां सख्यस्या सदृशत्वं व्यञ्जितम्, तेन च रामस्य सौशील्यातिशयो व्यज्यते । गुहस्य हीनमनुष्यजातितया तत्सख्यं सौशील्यहेतुः, तत्रापि स्त्रीत्वेन शबर्यभिगमनं ततस्तरां सौशील्यम्, सुग्रीवस्य तिर्यक्त्वेन ततस्तमां सौशील्यमिति भावः ॥५८॥ तत इति । ततः सख्यकरणानन्तरम्, दुःखितेन परमसुहृद्भूतराम

क्रियते । पम्पातीर इति । सङ्गतः राम इत्यनुषज्यते । हेति हर्षे । हनुमदिति । हनुमद्वचनात् सुग्रीवो युष्मत्सङ्गमपेक्षत इत्यादिरूपं हनुमद्वचनम् ॥५६॥ सुग्रीवायेति । महाबलो रामः आदितः जन्मन आरभ्य तत प्रसिद्धम् वृत्तं सीतायास्तद्वृत्तं च रावणहृतत्वादि सर्वम्, सुग्रीवाय विशेषतः विशेषेण यथावृत्तं वृत्तमनतिक्रम्य शंसत । अडभाव आर्षः । महाबल इति विशेषणसामर्थ्यात्सहायमन्तरेण सर्वनिर्वाहकत्वेऽपि लोकरीतिमनुसृत्य सुग्रीवसहायमुद्दिश्य सर्वमकथयदित्यवगम्यते ॥५७॥ सुग्रीव इति । वानरः सुग्रीवोऽपि रामस्य सम्बन्धि तत्सर्वं श्रुत्वा स्वसमानदुःखमहाबलसम्बन्धलाभात् सुप्रीतः सन् रामेण अग्निसाक्षिकमेव-अग्निः साक्षी साक्षाद्द्रष्टा यस्य तत्तथोक्तं सख्यं सखित्वं चकारेति योजना ॥ ५८ ॥ तत इति । वानरराजेन सुग्रीवेण दुःखितेन सुहृत्सन्निधौ स्मृतदुःखेन वैरस्यानुकथनं प्रश्नं प्रति । वालिना

सन्निधानादुद्बुद्धपूर्ववृत्तान्ततया बाष्पं मुञ्चतेत्यर्थः । वानरराजेन सुग्रीवेण । " कर्तृकरणयोस्तृतीया " इति कर्त्तरि तृतीया । वैरस्य वालिविरोधस्य अनुकथनम् अनुकूलकथनं, प्रश्नानुकूलमुत्तरमित्यर्थः । वालिना सह तव कुतो वैरमासीदित्येवं प्रश्नः । तं प्रति वक्तव्यं सर्वं रहस्यप्रकाशरूपं प्रणयात्स्नेहाद् विस्रम्भाद्वा । " प्रणयास्त्वमी । विस्रम्भयाच्ञाप्रेमाणः " इत्यमरः । रामायावेदितम् आ समन्तादुक्तं कार्त्स्न्येनोक्तमित्यर्थः ॥५९॥ प्रतिज्ञातं चेति । चशब्दो भिन्नक्रमः । रामेण च तदा आवेदनानन्तरकाले वालिवधं प्रति प्रतिज्ञातम्, वालिवधप्रतिज्ञा कृतेत्यर्थः । भावे क्तः । वानरः सुग्रीवश्च तत्र ऋश्यमूके वालिनो बलम् " समुद्रात्पश्चिमात् पूर्वं दक्षिणादपि चोत्तरम् । क्रामत्यनुदिते सूर्ये वाली व्यपगतक्लमः ॥ " इत्यादिना वक्ष्यमाणं बलम् उत्साहवर्द्धनाय कथयामास ॥६०॥ सुग्रीव इति । सुग्रीवो राघवे विषये वीर्येण हेतुना नित्यं दर्शनमारभ्य सालभेदनपर्य्यन्तं मुहुर्मुहुः शङ्कित आसीच्च, अयं

**प्रतिज्ञातं च रामेण तदा वालिवधं प्रति । वालिनश्च बलं तत्र कथयामास वानरः ॥ ६० ॥ सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे ॥६१॥ राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् । दर्शयामास सुग्रीवो महापर्वतसन्निभम् ॥६२॥**

वालितुल्यवीर्य्यो नवेति शङ्कितवानित्यर्थः । नित्यशब्दस्य वीप्सापरत्वं महाभाष्ये—" नित्यप्रहसितो नित्यप्रजल्पितः " इति । " मतिबुद्धि–" इत्यादिसूत्रे शङ्कितादयोऽप्यर्थसिद्धाः इति सूचनात् कर्त्तरि निष्ठा ॥ ६१ ॥ राघवेति । तुशब्दो विशेषवाची । न केवलं शङ्कितोऽभूत्, किन्तु प्रत्ययार्थमन्यदर्शयामास चेत्यर्थः । राघवप्रत्ययार्थं रामविषयज्ञानार्थम्, रामबलविज्ञानार्थमित्यर्थः । रामविषयविश्वासजननार्थमिति वा । " प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु " इत्यमरः । दुन्दुभेः दुन्दुभ्याख्यस्य वालिहतस्यासुरस्य उत्तमम् अशिथिलम् अतएव महापर्वतसन्निभम् उत्तममुन्नतं वा कायं कायाकारास्थि दर्शयामास । रामायेति शेषः । वाली एतदस्थि पादाग्रे न्यस्य ऊर्ध्वं क्षिपतीत्युक्त्वा दर्शयामासेत्यर्थः ॥ ६२ ॥

सह तव वैरं कथमभूदित्येवंरूपं प्रतीत्यर्थः । रामाय प्रणयात् प्रत्युत्तरमावेदितम् साकल्येनोक्तमित्यर्थः ॥ ५९ ॥ प्रतिज्ञातमिति । तदा वैरवृत्तान्तश्रवणानन्तरकाले रामेण वालिवधं प्रति उद्दिश्य अवश्यं वालिनं वधिष्यामीति प्रतिज्ञातम् । वालिन इति । तत्र ऋश्यमूके । वानरः सुग्रीवः । वालिनो बलम् अरुणोदयमारभ्य सूर्योदयात्पूर्वमेव चतुस्समुद्राभिगमनादिकं वालिपौरुषं रामस्योत्साहवर्धनार्थमकथयदित्यर्थः ॥ ६० ॥ सुग्रीव इति । अपिच राघवे राघवविषये वीर्येण हेतुना नित्यं शङ्कितः सुग्रीव आसीत्, रामस्य वालिहननसामर्थ्यमस्ति वा न वेति सुग्रीवो नित्यमशङ्किष्टेत्यर्थः ॥ ६१ ॥ राघवेति । राघवबलपरिज्ञानार्थं महापर्वतसन्निभं दुन्दुभेः कायं वालिना हतस्य दुन्दुभिनाम्नोऽसुरस्य देहं रामाय दर्शयामास, इदं शरीरं वालिना एतावद्दूरं क्षिप्तमित्युक्त्वा तद्दर्शयामासेत्यर्थः ॥ ६२ ॥

उत्स्मयित्वेति । महाबलः अपरिमेयबलः । महाबाहुः [illegible] रामः अस्थि प्रेक्ष्य उत् स्मयित्वा कियन्मात्रमेतदित्यनादृत्य स्मित्वा । इडार्षः । पादाङ्गुष्ठेन संपूर्णमन्यूनं दशयोजनम् । पात्रादित्वात्समाहारे ङीबभावः । अत्यन्तसंयोगे द्वितीया । उच्चिक्षेप उद्यम्य चिक्षेप । "व्यवहिताश्च" इति उपसर्गस्य व्यवहितप्रयोगः । वालिना पादेन क्षिप्तम्, रामेण तु पादाङ्गुष्ठेन उत्क्षिप्यते । तेन द्वे धनुःशते, अनेन दशयोजनमिति विशेषः ॥ ६३ ॥ चिरं युद्धपरिश्रान्तेन वालिना आर्द्रं शरीरं प्रक्षिप्तम्, त्वया तु स्वस्थेन शुष्कमित्यनाश्वसन्तं प्रति प्रत्ययान्तरमकरोदित्याह–बिभेदेति । अत्र राम इत्यनुपज्यते । पुनश्च सप्त सालान् सर्जकतरून् तत्समीपस्थं गिरिं रसातलम् अधोलोकेषु षष्ठलोकं च प्रत्ययं विश्वासं जनयन् प्रत्ययजननार्थम् । "लक्षणहेत्वोः–" इति शतृप्रत्ययः । एकेन महेषुणा बिभेद । महेषुणेत्यनेन सुग्रीवकार्यसाधनाय रामेण सप्तपरशुधारणं कृतमिति

उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः । पादांगुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम् ॥ ६३ ॥
बिभेद च पुनस्तालान् सप्तैकेन महेषुणा । गिरिं रसातलं चैव जनयन् प्रत्ययं तदा ॥ ६४ ॥
ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः । किष्किन्धां रामसहितो जगाम च गुहां तदा ॥ ६५ ॥

ध्वन्यते ॥६४॥ तत इति । ततः सालादिभेदनानन्तरं तेनातिमानुषचरित्रेण विश्वस्तः अयमवश्यं वालिहननक्षम इति विश्वासं प्राप्तः, प्रीतमनाः अचिरादेव राज्यं लप्स्य इति सन्तुष्टचित्तः, महाकपिः आत्मानं कपिराजं मन्यमानः स सुग्रीवः रामसहितः सन् तदा तस्मिन्नेव काले किष्किन्धां किष्किन्धाख्यां

उत्स्मयित्वेति । महाबाहुः-बाह्वोर्महत्त्वं नाम–अङ्गुल्येकदेशेन लोकविरोधिसकलदैत्यादिहननशक्तत्वम् । तथा युद्धकाण्डे-" पिशाचान् दानवान् यक्षान् पृथिव्यां चैव राक्षसान् । अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर ॥ " इति । महाबलः अपरिच्छेद्यबलो रामः ज्ञानिनोऽपि मुह्यन्ति किं वनकपिरित्युत्स्मयित्वा उदारमीषद्धास्यं कृत्वा अस्थिनिचयरूपं शरीरं प्रेक्ष्य दशयोजनपरिमितं देशं संपूर्णं यथा तथा पादाङ्गुष्ठेन चिक्षेप क्षिप्तवान् ॥ ६३ ॥ बिभेद चेति । तदानीमार्द्रं शरीरमिदानीं शुष्कमिति सुग्रीवस्य विमर्शे सति पुनः प्रत्ययं विश्वासं जनयन् । हेतौ शतृप्रत्ययः । तदा तस्मिन् काले सप्तसालवृक्षान् गिरिं तत्समीपपर्वतं च रसातलं च । षष्ठो लोको रसातलम् । एकेन महेषुप्रयोगेणैव बिभेद । राम इति शेषः । एकसालमात्रभेदने अस्य वालिना साम्यशङ्का जायते तन्माभूदिति तन्निवृत्त्यर्थमचोदितानामप्यन्यसालगिरिप्रस्थादीनां भेदनमिति मन्तव्यम् ॥६४॥ तत इति । ततः सालभेदनानन्तरं तेन-सालादिभेदनेन, विश्वस्तः-विश्वासं प्राप्तः, सर्वात्मना रामो दर्शनमात्रेण

गुहां गुहावत्पर्वतमध्यवर्त्तिनीं पुरीं जगाम। चकारेण पुनर्गमनं समुच्चीयते ॥ ६५ ॥ ततः किष्किन्धागमनानन्तरम् हरिवरः आत्मनः कपिवरत्वनिश्चय वान्, हेमपिङ्गलः स्वर्णवत्पिङ्गलवर्णः, हर्षप्रकर्षेण निवृत्तवैवर्ण्य इत्यर्थः। सुग्रीवो गर्जितानुगुणकण्ठध्वनिः। अगर्जत् घोषं चकार। महता पूर्वगर्जित विलक्षणेन। तेन नादेन हेतुना हरिवरो वाली गृहान्निर्जगाम ॥६६॥ अनुमान्येति। वाली तदा निर्गमनकाले, ताराम्-अद्य वनादागतेनाङ्गदेन सुग्रीवो राम सहायस्तिष्ठतीति कथितम् अद्य पराजितो निर्गतः पुनरागतः अतस्त्वद्गमनमनुचितमिति वारयन्तीं ताराम्। अनुमान्य धार्मिकाग्रेसरो रामः कथं मामनपरा धिनं हन्यादिति परिसान्त्व्य सुग्रीवेण समागतः, अयुध्यतेत्यर्थः। राघवः महाकुलप्रसूतत्वेन धर्मसूक्ष्मज्ञः तत्र युद्धभूमौ एनं परेण युद्धकृतमपि वालि नम्, तदा परेण युद्धकाले। चाऽवधारणार्थः। एकेनैव शरेण निजघान। द्वितीयशरप्रयोगे तदाभिमुख्येन तद्वधो दुर्लभ इति भावः। युद्धेऽभिमुखस्य बलं

ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः। तेन नादेन महता निर्जगाम हरीश्वरः ॥ ६६ ॥
अनुमान्य तदा तारां सुग्रीवेण समागतः। निजघान च तत्रैनं शरेणैकेन राघवः ॥ ६७ ॥
ततः सुग्रीववचनाद्धत्वा वालिनमाहवे। सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ ६८ ॥
स च सर्वान् समानीय वानरान् वानरर्षभः। दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ ६९ ॥

वालिनमेव गच्छतीति वरप्रसिद्धिः ॥६७॥ तत इति। सुग्रीववचनात्—"वालिनं जहि काकुत्स्थ मया बद्धोऽयमञ्जलिः" इति सुग्रीवप्रार्थनावचनात्। आहवे सुग्रीवस्य युद्धे वालिनं हत्वा। ततः वालिवधानन्तरं राघवः तद्राज्ये वालिराज्ये सुग्रीवमेव प्रत्यपादयत् स्थापयामासेत्यर्थः ॥६८॥ अथ सुग्रीवस्य प्रत्युपकारं दर्शयति—स चेति। वानरर्षभः वानरराजत्वेनाभिषिक्तः स च सुग्रीवोऽपि जनकात्मजां दिदृक्षुः द्रष्टुमिच्छुः सन् सर्वान् नानादेशनिवासिनो

वालिनं हनिष्यतीति विश्वासं प्राप्तः, प्रीतमनाः कपिराज्यमचिरादेव मम हस्तगतं भविष्यतीति सन्तुष्टान्तरङ्ग इत्यर्थः। तदा तस्मिन्नेव काले किष्किन्धां गुहां पर्वतान्तरावकाशे तत्र निर्मितत्वात् किष्किन्धापि गुहाशब्देनोच्यते। जगाम चेति योजना ॥ ६५ ॥ तत इति। सुग्रीवः अगर्जत् सिंहनादं कृतवान्। तेन सिंह नादेन हेतुना हरीश्वरः वाली गृहान्निर्जगाम ॥ ६६ ॥ अनुमान्येति। तदा निर्गमनसमये तारामनुमान्य सुग्रीवं रामसहायमङ्गदमुखादवगत्य युद्धनिर्गमनं वारयन्तीं तारां धर्मज्ञो रामो ममापकारं न करिष्यतीत्यादिसान्त्ववचनैरनुमतिं प्रापय्य सुग्रीवेण सह युद्धाय समागतोऽभवत्, तत्रैनमेकेनैव शरेण निजघान ॥६७॥ तत इति। सुग्रीववचनात्"वालिनं जहि काकुत्स्थ—" इत्येवंरूपात् आहवे वालिनं हत्वा तद्राज्ये वालिराज्ये सुग्रीवमेव प्रत्यपादयत् प्रतिष्ठापितवान् ॥ ६८ ॥ स चेति। स च

वानरान् समानीय आहूय दिशश्चतस्रः प्रति प्रस्थापयामास शीघ्रं सीतां दृष्ट्वागच्छतेति आदिष्टवानित्यर्थः ॥ ६९ ॥ ततः सुन्दरकाण्डकथां संगृह्णाति—तत इति । ततः प्रस्थानानन्तरं बली अपरिच्छेद्यबलः । भूमार्थे मत्वर्थीयः । हनुमान् प्रशस्तहनुः । अन्वर्थसंज्ञेयम् । तथा चेन्द्रो वक्ष्यति—“ मत्करोत्सृष्टवज्रेण हनुस्तस्य तदा क्षतः । नाम्नैष हरिशार्दूलो भविता हनुमानिति ॥ ” इति । आभ्यां पदाभ्यां पूर्वकथाप्रस्तावेन जाम्बवता कृतोत्साहत्वम्, तदुद्भूतनिरवधिकबलवत्त्वञ्च द्योत्यते । सम्पातेः सम्पातिनामकस्य जटायुर्ज्येष्ठस्य पक्षिणो वचनात् । इतः शतयोजनात् परं समुद्रमध्ये लङ्कायां सीता वर्त्तते, तर समुद्रं तां पश्यसीति वचनात् । शतयोजनविस्तीर्णं लवणार्णवं पुप्लुवे, प्लुत्वा ततारेत्यर्थः ॥ ७० ॥ तत्रेति । हनुमान् रावणपालितां लङ्कां पुरीं समासाद्य तत्र लङ्कायामशोकवनिकाम् अन्तःपुरोद्यानं गतां ध्यायन्तीं राममेव नैरन्तर्य्येण स्मरन्तीं सीतां

ततो गृध्रस्य वचनात्सम्पातेर्हनुमान् बली । शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ७० ॥
तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् । ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् ॥ ७१ ॥
निवेदयित्वाभिज्ञानं प्रवृत्तिं च निवेद्य च । समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ ७२ ॥

ददर्श ॥ ७१ ॥ निवेदयित्वेति । ततो हनुमान् अभिज्ञानम् अङ्गुलीयकरूपं रामचिह्नं निवेदयित्वा समर्प्य । अनित्यत्वात्समासेऽपि ल्यबभावः । अत एव न्यासकारः “वा छन्दसीति वक्तव्ये कृत्वापि छन्दसीति वचनमसमासेऽपि ल्यबर्थम् । तेनाचर्य्य देवानागत इति सिद्धम्” इति । अनेन व्यभिचारेण समासे ल्यब्विधेरनित्यत्वं सिद्धमेव । प्रवृत्तिं सुग्रीवसख्यकरणसेनासमूहीकरणप्रभृतिरामागमनवृत्तान्तम् । “वार्त्ता प्रवृत्तिर्वृत्तान्तः” इत्यमरः । चकारात् “नैव दंशान्न मशकान्न कीटान्न सरीसृपान् । राघवोऽपनयेद्गात्रात्त्वद्गतेनान्तरात्मना ॥” इति रामस्य सीतैकपरायणत्वादिकं समुच्चीयते । निवेद्य उक्त्वा च वैदेहीं समाश्वास्य सद्यस्ते कान्तः समागमिष्यतीति सान्त्वयित्वा तोरणमशोकवनिकाबहिर्द्वारं मर्दयामास । “तोरणोऽस्त्री बहिर्द्वारम् ” इत्यमरः ॥ ७२ ॥

वानरर्षभः । जनकात्मजां दिदृक्षुः सर्वान् वानरान् समानीय सर्वा दिशः प्रस्थापयामास ॥ ६९ ॥ तत इति । गृध्रस्य सम्पातेर्वचनात् ‘तस्यां वसति वैदेही’ इत्येवंरूपात् । शतेत्यादिना सुन्दरकाण्डकथासंग्रहः । हनुमान् शतयोजनविस्तीर्णं लवणार्णवमुल्लङ्घितवान् ॥ ७० ॥ तत्रेति । लङ्कां पुरीं समासाद्य तत्र लङ्कायाम् अशोकवनिकाम् अशोकवनिकाख्यरावणप्रमदावनं गतां प्राप्तां राममेव ध्यायन्तीं सीतां ददर्श ॥७१॥ निवेदयित्वेति । अभिज्ञानमङ्गुलीयकरूपं ज्ञापकं निवेदयित्व

पञ्चेति । अग्रे गच्छन्तीत्यग्रगाः, सेनाया अग्रगाः सेनाग्रगाः । "अन्तात्यध्व" इत्यादिसूत्रेऽपि "अन्येष्वपि दृश्यते" इति डप्रत्ययः । तान् पञ्च पिङ्गलनेत्रप्रमुखान्, जम्बुमालिप्रमुखान् सप्त मन्त्रिसुतानपि हत्वा शूरमक्षम् अक्षकुमारं रावणद्वितीयपुत्रं निष्पिष्य चूर्णीकृत्य, ग्रहणम् इन्द्रजित्प्रयुक्तब्रह्मास्त्रेण बन्धनम् । समुपागमत् प्राप्तः ॥७३॥ अस्त्रेणेत्यादिश्लोकद्वयमेकान्वयम् । वीरः सुरासुराप्रधृष्यरावणपालितलङ्काप्रधर्षणादिना प्रख्यातवीर्यः । महाकपिः स्वयमक्षत एवानेकराक्षसहननक्षम इत्यर्थः । पैतामहात् पितामहदत्ताद्वरात् आत्मानं यदृच्छया प्रयत्नं विना अस्त्रेण ब्रह्मास्त्रेण उन्मुक्तं परित्यक्तं ज्ञात्वा यन्त्रिणः आत्मानं रज्जुयन्त्रेण बद्धा इतस्ततः कृषत इत्यर्थः । राक्षसान् मर्षयन्, तदपराधान् क्षममाण इत्यर्थः । मैथिलीं मिथिलराजसुतां सीतामृते विना । कुलप्रभावात्तन्मात्रमदग्ध्वा लङ्कां पुरीं दग्ध्वा रामाय प्रियं सीतादर्शनप्रियमाख्यातुं वक्तुं पुनरायात् ॥७४॥७५॥ सोऽभिगम्येति । अमेयात्मा अपरिच्छेद्य

पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि । शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥ ७३ ॥
अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् । मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान् यदृच्छया ॥ ७४ ॥
ततो दग्ध्वा पुरीं लङ्कामृते सीतां च मैथिलीम् । रामाय प्रियमाख्यातुं पुनरायान्महाकपिः ॥ ७५ ॥
सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् । न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥ ७६ ॥

बुद्धिः । स हनुमान् महात्मानं सीतावियोगज्वरेऽप्यवार्यधैर्यं राममभिगम्य आभिमुख्येन प्राप्य । अनेन हनुमतः कृतकार्यत्वं द्योतितम् । प्रदक्षिणं च कृत्वा । सीता तत्त्वतो यथावत् दृष्टेति न्यवेदयत् अकथयत् । सीता दृष्टेति वक्तुं शक्यत्वेऽपि दृष्टा सीतेत्युक्तिः रामस्य सीतादर्शनजीवनादिविषयसंशयो मा भूदितीति वदन्ति । अन्ये त्वदृष्टेति प्रतिभासेतेति दृष्टेत्युक्तमिति । अपरे तु सन्तोषातिशयप्रकटनाय प्रथमं कृतकार्यनिर्देश इति ॥ ७६ ॥

सुग्रीवसख्यवृत्तान्तं च निवेद्य च वाचा ज्ञापयित्वा वैदेहीं समाश्वास्य तोरणम् अशोकवनिकाबहिर्द्वारं चकारादशोकवनं च मर्दयामास ॥ ७२ ॥ पञ्च सेनेति । पञ्च सेनाग्रगान् सेनापतीन् अक्षं रावणकुमारम्, निष्पिष्य चूर्णीकृत्य, ग्रहणं समुपागमत इन्द्रजित्प्रयुक्तब्रह्मास्त्रेण बन्धनं प्राप्तः ॥ ७३ ॥ अस्त्रेणेत्यादि श्लोकद्वयमेकं वाक्यम् । यदस्त्रस्यामोघतया बन्धनमात्रं पञ्चघटिकानन्तरं तन्मोक्षश्च भवतीति ब्रह्मणा हनूमते वरो दत्तः, अतः पञ्चघटिकानन्तरमेव ब्रह्मास्त्रेणोन्मुक्तमात्मानं ज्ञात्वा, यदृच्छया-कार्यान्तरप्रसङ्गेन रावणदर्शनापेक्षया, यन्त्रिण आत्मानं बद्ध्वा स्थितान् राक्षसान्, वीरः-हन्तुं समर्थोऽपि, मर्षयन्-क्षमं कुर्वन्, ततः-रावणदर्शनव्यापारानन्तरं मैथिलीं सीताम् ऋते तदवस्थानप्रदेशं विना लङ्कां दग्ध्वा रामाय प्रियं प्रियवार्ताम् आख्यातुं वक्तुं पुनरायात् महाकपिरिति योजना ॥ ७४ ॥ ७५ ॥ स इति ।

अथ युद्धकाण्डकथां संगृह्णाति—तत इत्यादि । ततः हनुमद्वाक्यश्रवणानन्तरं सुग्रीवसहितः सन् महोदधेः शतयोजनविस्तीर्णसिन्धोस्तीरं गत्वा आदित्यसंनिभैः शरैः समुद्रं मार्गदाने उदासीनम् क्षोभयामास आपातालमाकुलीचकार ॥७७॥ दर्शयामासेति । सरितां नदीनां पतिः । अनेन रामकोपशान्तये कालीय इव समुद्रः सपत्नीकः समागत इति ध्वन्यते । समुद्रः आत्मानं निजरूपं दर्शयामास, रामायेति शेषः । समुद्रवचनादेव नलं सेतुमकारयच्च नलेन सेतुं कारयामास । "हृक्रोरन्यतरस्याम्" इति प्रयोज्यकर्तुः कर्मत्वम् ॥७८॥ तेनेति । रामस्तेन सेतुना लङ्कां पुरीं गत्वा आहवे युद्धे रावणं हत्वा सीतां प्राप्य अनु पश्चात् परामतिशयितां व्रीडां लज्जामुपागमत् पौरुषनिर्वहणाय रिपुहननपूर्वकं सीता पुनः प्राप्ता । परगृहस्थितां कथम् अङ्गीकरिष्यामीति

ततः सुग्रीवसहितो गत्वा तीरं महोदधेः । समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ॥ ७७ ॥
दर्शयामास चात्मानं समुद्रः सरितां पतिः । समुद्रवचनाच्चैव नलं सेतुमकारयत् ॥ ७८ ॥
तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे । रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ॥ ७९ ॥
तामुवाच ततो रामः परुषं जनसंसदि । अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥ ८० ॥

( लोकापवादशङ्कया ) लज्जितोऽभूदित्यर्थः ॥७९॥ तामिति । ततः व्रीडाप्राप्तेर्हेतोः । " यत्तद्यतस्ततो हेतौ " इत्यमरः । तां तादृशपातिव्रत्यां सीतां जनसंसदि देवादिसभायां परुषं वचनमुवाच । " अकथितं च " इति द्विकर्मकत्वम् । जनसंसदीत्यनेन प्रत्ययोत्पादनार्थं शपथं कुर्विति सूचितम् ।

अमेयात्मा-अपरिच्छेद्यधैर्यः । स हनुमान् महात्मानम् महांश्चासौ आत्मा च तम्, परमात्मानमित्यर्थः । राममभिगम्य प्रदक्षिणं कृत्वा दृष्टा सीतेति तत्त्वतः, सार्वविभक्तिकस्तसिः । तत्त्वं न्यवेदयदित्यर्थः । तत्र सीता दृष्टेति वक्तुं शक्यत्वेऽपि दृष्टा सीतेति पदप्रयोगो रामस्य सीतादर्शनविषयसंशयो मा भूदिति ॥ ७६ ॥ ततः सुग्रीवसहित इत्यारभ्य युद्धकाण्डकथासंग्रहः क्रियते—तत इति । समुद्रं क्षोभयामास-मार्गदाने औदासीन्यात् समुद्रमापातालमाकुलीचकारेत्यर्थः ॥ ७७ ॥ दर्शयामासेति । आत्मानं निजरूपं दर्शयामास समुद्रवचनात् "एष सेतुं महोत्साहः करोतु मयि वानरः । तमहं धारयिष्यामि तथा ह्येष यथा पिता ॥ " इत्येवंरूपसमुद्रवचनादेव नलं सेतुमकारयत, नलेन सेतुं कारयामासेत्यर्थः ॥ ७८ ॥ तेनेति । तेन सेतुना लङ्कां पुरीं गत्वा आहवे युद्धे रावणं हत्वा सीतां प्राप्य अनु पश्चात् परां व्रीडां रक्षोगृहे चिरोषितां पुनर्गृहीतवानिति लोकापवादशङ्कया लज्जामुपागमत् ॥ ७९ ॥ तामिति । ततः अनन्तरम् रामो जनसंसदि-वानरराक्षससभायां परुषम् " दीपो

सती पतिव्रता सीता अमृष्यमाणा रामोक्तपरुषवचनमसहमाना ज्वलनं लक्ष्मणानीतमग्निं विवेश ॥ ८० ॥ "ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम्। बभौ रामः संप्रहृष्टः पूजितः सर्वदैवतैः" इत्येव क्रमः। अन्यस्तु लेखकप्रमादकृतः। तत अग्निप्रवेशानन्तरम्। अग्निवचनात्सीतां विगतकल्मषां करणत्रयेऽपि दोषगन्धरहितां ज्ञात्वा रामः संप्रहृष्टः सन् बभौ सर्वदैवतैः पूजितश्च बभूव। अहो रामस्य धर्मापेक्षितेति स्तुतोऽभूदित्यर्थः ॥ ८१ ॥ कर्मणेति। महात्मनो महास्वभावस्य राघवस्य तेन कर्मणा रावणवधेन सचराचरं स्थावरजङ्गमसहितं सदेवर्षिगणं त्रैलोक्यं त्रिलोकी। स्वार्थे ष्यञ्। तुष्टं सन्तुष्टमासीत्। स्थावरस्य सन्तोषः पल्लवोद्गमादिनावगम्यते। "अन्तःसंज्ञा भवन्त्येते" इति श्रीविष्णुपुराणम् ॥८२॥

ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम्। बभौ रामः संप्रहृष्टः पूजितः सर्वदैवतैः ॥ ८१ ॥
कर्मणा तेन महता त्रैलोक्यं सचराचरम्। सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ॥ ८२ ॥
अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम्। कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥ ८३ ॥

अभिषिच्येति। यद्यपि सीतासमागमात् पूर्वं विभीषणाभिषेकः, तथाप्यत्र क्रमो न विवक्षित इति ज्ञेयम्। रामः। विभीषयतीति विभीषणः। नन्द्यादित्वाल्ल्युः। शत्रुभयंकर इत्यर्थः। तं लङ्कायां चाभिषिच्य। समुद्रतीरेऽभिषेकः समुच्चीयते। यद्वा चोऽवधारणार्थः। अभिषिच्यैव कृतकृत्यः, न तु रावणं हत्वैव। लङ्कायां विभीषणमभिषिच्य, शुद्दिवनं छित्त्वा सहकारं स्थापयित्वेतिवत्। यद्वा चोऽन्वाचये। प्रधानतयापवर्गमनुगृह्यानुषङ्गिकतया राज्येऽभिषिच्येत्यर्थः। "शरीरारोग्यमर्थांश्च भोगांश्चैवानुषाङ्गिकान्। ददाति ध्यायतां पुंसामपवर्गप्रदो हरिः॥" इति वचनात्। अभिषिच्य

नेत्रातुरस्येव प्रतिकूलासि मे दृढम्" इत्यादिकम् उवाच। अमृष्यमाणा–पातिव्रत्यविषयसंशयवचनमसहमाना सीता ज्वलनं ज्वलन्तमग्निं विवेश ॥ ८० ॥ तत इति। अग्निवचनात् "विशुद्धभावां निष्पापां प्रतिगृह्णीष्व" इत्येवंरूपात्, गतकल्मषां स्वयं ज्ञात्वा लोकस्य च तथात्वं प्रत्याय्य। सीतामङ्गीचकारेति शेषः। केचित्तु 'ततोऽग्निवचनात्' इत्यस्मादनन्तरं "बभौ रामः संप्रहृष्टः"इत्यर्धं पाङ्मेव पठित्वा ततः' कर्मणा तेन' इति श्लोकं पठन्ति। तस्मिन् पाठे-विगतकल्मषां सीतां ज्ञात्वा संप्रहृष्टः सर्वदैवतैश्च पूजितो रामो बभूवेति योजना ॥ ८१ ॥ कर्मणेति। राघवस्य महता तेन कर्मणा रावणवधेन सचराचरम् चराचरप्रजासहितं त्रैलोक्यं तुष्टं तुतोष ॥ ८२ ॥ अभिषिच्येति। लङ्कायां लङ्काराज्यपद इत्यर्थः। कृतकृत्यः–" अहं हत्वा दशग्रीवं सप्रहस्तं सबान्धवम्। राजानं त्वां करिष्यामि लङ्कायां राक्षसे

१ कर्मणा तेन महता त्रैलोक्यं सचराचरम्। सदेवर्षिगणं तुष्टं राघवस्य महात्मनः। बभौ रामः संप्रहृष्टः पूजितः सर्वदैवतैः ॥ इति तीर्थीयपाठक्रमः।

तदा रामः अभिषेकात्पूर्वं कथं स्यादिति विवर्णोऽभूत्, अथ रमणीयोऽभूत् तदा रामो रामोऽभूत्। विज्वरः भरतो यथा राज्यं न स्वीकृतवान् तथायमपि चेत् किं कुर्यामिति पूर्वं ज्वरोऽभूत्। स इदानीं निवृत्त इत्यर्थः। यद्वा नागपाशप्रभृतिषु "यन्मया न कृतो राजा राक्षसानां विभीषणः। तच्च मिथ्याप्रलप्तं मां प्रधक्ष्यति न संशयः॥" इति योऽयमन्तस्तापः स इदानीं निवृत्त इत्यर्थः। न केवलं विज्वरः, प्रमुमोदं च प्रकर्षेण मोदं प्राप्तश्च। चक्षिङो ङित्करणादनित्यमनुदात्तेत आत्मनेपदत्वम्। अतोऽत्र परस्मैपदप्रयोगः। अनेन रामस्य रावणवधसीताप्राप्ती आनुषङ्गिकफले। स्वाश्रितविभीषणाभिषेचनमेव परमपुरुषार्थ इत्यवगम्यते। यद्वा वौ पक्षिणि जटायुषि ज्वरो यस्य सः। यथा लोके कस्यचित् पुत्रस्योत्सवे कथञ्चिन्मोदमानोऽपि पिता पूर्वातीतपुत्रस्मरणात् सन्तप्त एव भवति, एवं सर्वलोकपिता स्वामी च विभीषणाभिषेकसमये विनाभिषेकमतीतं जटायुषं स्मरन् किञ्चिदन्तस्तापोपपन्न एव

**देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान्। अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥ ८४ ॥**
**भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः। भरतस्यान्तिकं रामो हनूमन्तं व्यसर्जयत् ॥ ८५ ॥**

सुमुद इत्यर्थः। यद्वा विज्वर इत्यनिष्टनिवृत्तिरुक्ता, प्रमुमोदेतीष्टप्राप्तिः। हेति प्रसिद्धौ, विस्मये वा। हन्त रामस्य सत्यप्रतिज्ञत्वमित्यर्थः ॥ ८३ ॥ तनि०—प्रधानाभिलषितकैङ्कर्यसाम्राज्यलाभेन यदि लङ्कैश्वर्यमनभ्युपगतं स्यात्तदा "अहं हत्वा दशग्रीवं सप्रहस्तं सबान्धवम्। राजानं त्वां करिष्यामि लङ्कायां राक्षसेश्वर ॥" इति कृता प्रतिज्ञा विफला स्यादिति महान् ज्वरः प्रवृत्तः, स इदानीं निवृत्त इति प्रमुमोद ॥ ८३ ॥ देवताभ्य इति। रामः देवताभ्यः रामविजयश्लाघनायागताभ्यः। वरं प्राप्य, तेन वरेण वानरान् रणे मृतान् समुत्थाप्य, सुप्तानिवोत्थाप्य सुहृद्भिः सुग्रीवविभीषणादिभिर्वृतः सन् पुष्पकेण कुबेरं विजित्य रावणेन समानीतेन पुष्पकाख्यविमानेन अयोध्यां प्रति प्रस्थितः॥८४॥भरद्वाजेति।सत्यपराक्रमः सत्यविषयपराक्रमवान्। राम इति क्रियाभेदात् द्विरुक्तिः।



श्वर ॥" इति प्रतिज्ञातस्य कृतत्वात् कृतकृत्यत्वम्, अत एव विज्वरः, विगतमनस्ताप इति यावत्। प्रमुमोद ह प्रकृष्टां मुदमाप ॥ ८३ ॥ देवताभ्य इति। रामः सर्वजगत्कण्टकरावणवधजनितहर्षवशात् रामदिदृक्षया समागताभ्यो देवताभ्यो वरं प्राप्य—" नीरुजो निर्व्रणाश्चैव संपन्नबलपौरुषाः। समुत्थाप्यन्तु हरयः सुप्ता निद्राक्षये यथा ॥" इत्युक्तप्रकारं वरं लब्ध्वा। राक्षसैर्हतान् वानरान् समुत्थाप्य, सुहृद्भिः-सुग्रीवादिभिः संवृतः पुष्पकेण अयोध्यामुद्दिश्य प्रस्थितः जगामेत्यर्थः॥८४॥ भरद्वाजाश्रममिति। रामो भरद्वाजाश्रमं गत्वा भरतस्यान्तिकं प्रति हनूमन्तं व्यसर्जयत्। " चतुर्दशे हि संपूर्णे वर्षेऽहनि रघूत्तम। न द्रक्ष्यामि यदि त्वां तु

भरद्वाजाश्रमं गत्वा भरतस्यान्तिकं समीपं प्रति हनूमन्तं व्यसर्जयत् व्यसृजत् । हनूशब्द ऊकारान्तोऽप्यस्ति । भरद्वाजेनात्र स्थातव्यमिति प्रार्थिते
तद्दिवसेन चतुर्दशवर्षपूर्तेः "पूर्णे चतुर्दशे वर्षे आगमिष्यामि" इति भरतं प्रत्युक्तेः सत्यत्वरक्षणाय हनूमन्तं प्रेरितवानिति भावः ॥ ८५ ॥ पुनरिति ।
रामस्तत्पुष्पकं समारुह्य सुग्रीवसहितः सन् तदागमनकाले आख्यायिकां पूर्ववृत्तकथाम् । "आख्यायिकोपलब्धार्था" इत्यमरः । पुनः पुनः जल्पन्
कथयन् अर्थात् भरतविषयाख्यायिकां सुग्रीवेण जल्पन्निति गम्यते । नन्दिग्रामं भरतस्थानं तदा तस्मिन्नेव काले शीघ्रमित्यर्थः । ययौ प्राप ॥ ८६ ॥
नन्दिग्राम इति । अनघः सम्यगनुष्ठितपितृवचनः । यद्वा "शिरसा याचतस्तस्य वचनं न कृतं मया" इत्युक्तपापरहित इत्यर्थः । यद्वा निरस्तसमस्त
व्यसनः । "दुःखैनोव्यसनेष्वघम्" इति वैजयन्ती । रामः भ्रातृभिः सहितः । "कदान्वहं समेष्यामि भरतेन महात्मना । शत्रुघ्नेन च वीरेण त्वया

पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा । पुष्पकं तत्समारुह्य नन्दिग्रामं ययौ तदा ॥ ८६ ॥
नन्दिग्रामे जटां हित्वा भ्रातृभिस्सहितोऽनघः । रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥ ८७ ॥
प्रहृष्टमुदितो[1] लोकस्तुष्टः पुष्टः सुधार्मिकः । निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ ८८ ॥

च रघुनन्दन॥" इत्युक्तमनोरथपूर्ण इत्यर्थः । नन्दिग्रामे जटां हित्वा शोधयित्वा । उपलक्षणमेतत् । "विशोधितजटः स्नातश्चित्रमाल्यानुलेपनः । महार्ह
वसनो रामस्तस्थौ तत्र श्रिया ज्वलन्॥" इत्युक्तरूपः सीतामनुप्राप्य समीपे प्राप्य । "रामं रत्नमये पीठे सहसीतं न्यवेशयत्" इत्याद्युक्तरीत्या दिव्यसिंहा
सने सीतयाभिषेकं प्राप्येत्यर्थः । राज्यं पुनरवाप्तवान् पितुर्वचनात्पूर्वं प्राप्तं विशिष्य पुनरद्य प्राप्तमित्यर्थः ॥८७॥ रामस्य राज्यप्राप्तिकृतं लोकस्यातिशयं
प्रवेक्ष्यामि हुताशनम् ॥ " इति भरतेन प्रतिज्ञातत्वात् । भरद्वाजाश्रमे पञ्चम्यां चतुर्दशवर्षसमाप्त्यनन्तरं मुनिवचनेन एकदिनविलम्बस्य प्राप्तत्वात्स्वागमनबोध
नाय हनुमद्विसर्जनम् ॥ ८५॥ पुनरिति । अपरेद्युः सुग्रीवसहित इति विभीषणादीनामुपलक्षणम् । तत पुष्पकं समारुह्य पुनराख्यायिकां पूर्ववृत्तविषयकथाम् "अत्र
सीते त्वया दृष्टा तापसी धर्मचारिणी " इत्याद्युक्तप्रकारेण पुनर्जल्पन् कथयन् । सीताया इति शेषः । नन्दिग्रामं ययाविति योजन ॥ ८६॥ नन्दिग्राम इति । रामः
नन्दिग्रामे जटां भरतादिभिः सहितः हित्वा त्यक्त्वा सीतामनुप्राप्य सीतासादृश्यं प्राप्य मुनिवेषत्यागेन सीतामनुरूपः प्राप्येति यावत् । राज्यं पुनरवाप्तवान् पितृ
वचनात्पूर्वं प्राप्तं विशिष्य पुनः अद्य प्राप्त इत्यर्थः ॥ ८७ ॥ एतदन्तं चरितं वृत्तत्वेनोपदिश्य देवर्षिरतःपरमुत्तरकाण्डविषयं भविष्यत्वेनोपदिशति–प्रहृष्टेति । अनेन
रावणवधानन्तरं रामे राज्यं प्रशासति सति वाल्मीकिना रामायणं कृतमित्यनुसन्धेयम् "प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः । चकार चरितं कृत्स्नं विचित्र

१ प्रहृष्टो मुदितः । इति पाठान्तरम् ।

दर्शयति–प्रहृष्टेति । लोकः जनः प्रहृष्टमुदितः । तदानीमासीदिति शेषः । एवमुत्तरत्रापि । प्रहृष्टः संजातरोमाञ्चः । "हृषेर्लोमसु" इति अनिट्त्वविधानात् । मुदित इति तन्मूलसन्तुष्टान्तःकरणत्वमुच्यते । तुष्टः समस्तकामलाभजनितप्रीतियुक्तः । यद्वा " इच्छामो हि महाबाहुं रघुवीरं महाबलम् । गजेन महता यान्तं रामं छत्रावृताननम् ॥" इत्यभिलषितलाभ उच्यते । पुष्टः "विषये ते महाराज रामव्यसनकर्शिताः । अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः ॥" इत्युक्तरामविरहजकार्श्यत्यागात् पुष्टः । सुधार्मिकः सुधर्मः रामभक्तिपूर्वकं कर्म, तच्चरतीति सुधार्मिकः । "धर्म्मं चरति" इति ठक् । "स्त्रियो वृद्धास्तरुण्यश्च" इत्युक्तधर्मफलभागित्यर्थः । निरामयः शारीररोगरहितः । अरोगः मानसव्याधिरहितः । दुर्भिक्षभयवर्जितः । भिक्षाणां व्यृद्धिः दुर्भिक्षम् । व्यृद्धावव्ययीभावः । दुर्भिक्षात् भयं दुर्भिक्षभयं तेन वर्जितः । अनेन पूर्वं सीताविशिष्टरामवियोगे प्रजानामामयादिकमासीत् । तदिदानीं निवृत्तमित्युच्यते ।

**न पुत्रमरणं किञ्चिद्द्रक्ष्यन्ति पुरुषाः क्वचित् । नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ॥ ८९ ॥**

प्रहृष्टेत्यादिरामाभिषेकदर्शनसन्तोषो न वर्णयितुं शक्य इत्याह कविः–प्रहृष्टमुदितो लोकस्तुष्टः पुष्ट इति । अथ प्रीतिकारितकैङ्कर्यसिद्धिं दर्शयति–सुधार्मिक इति । शोभनो धर्मो विशिष्टविषयकैङ्कर्यमेव । अथ कैङ्कर्यविरोधिनिवृत्तिमाह–निरामयो ह्यरोगश्चेति । कैङ्कर्योपकरणसमृद्धिमाह–दुर्भिक्षेति ॥ ८८ ॥ अथ वर्णाश्रमधर्मपरिपालनप्रधानामुत्तरकाण्डकथां संगृह्णाति–न पुत्रेत्यादि । केचिदपि पुरुषाः क्वचित् कुत्रापि देशे किञ्चित् कादाचित्कमपि पुत्रमरणं न द्रक्ष्यन्ति । न द्रक्ष्यन्तीत्यनेन ब्राह्मणपुत्र इव कदाचित्प्राप्तमपि परिहरिष्यतीति भावः । नार्यश्चाविधवाः नित्यं पतिव्रताश्च

पद्मात्मवान् ॥ " इति वक्ष्यमाणत्वात् । " ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः । पुरा यत्तत्र निर्वृत्तं पाणावामलकं यथा ॥ " इत्याद्युपरिवक्ष्यमाणत्वात् । लोकः-सर्वजनः । प्रहृष्टः–संजातरोमाञ्चः । मुदितः-मुदितान्तःकरणः । तुष्टः-सर्वकामलाभजनितसन्तुष्टः, अनेन पूर्वं सर्वकामसंपत्तौ विद्यमानायामपि रामविश्लेषेणा तुष्टस्य " इच्छामो हि महाबाहुं रघुवीरं महाबलम् । गजेन महातयान्तं रामं छत्रावृताननम् ॥" इति प्रार्थितरामाभिषेक एव परमतुष्टिरित्यवगम्यते । पुष्टः–"विषये ते महाराज रामव्यसनकर्शिताः । अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः ॥ " इत्युक्तप्रकारेण रामविश्लेषकर्शितः सर्वोऽपि चेतनवर्गः इदानीं रामसंश्लेषसंवर्द्धितसर्वाङ्गोऽभूदित्यर्थः । सुधार्मिकः–"स्त्रियो वृद्धास्तरुण्यश्च सायं प्रातः समाहिताः । सर्वान् देवान् नमस्यन्ति रामस्यार्थे यशस्विनः ॥ " इति इष्टदेवतानमस्कारादिरूपधर्मस्य फललाभात् सुधार्मिकत्वोक्तिः । निरामयः मनःपीडारहितः । अरोगः व्याधिरहितः । दुर्भिक्षभयवर्जितः–दुर्भिक्षं समृद्धेरभावः, तस्माद्भयं दुर्भिक्षभयम्, तेन वर्जितः ॥८८॥ न पुत्रमरणमित्यादिना उत्तरकाण्डकथासंग्रहः क्रियते–न पुत्रेति । किञ्चिदपि क्वचित्कुत्रापि पुरुषाः पुत्रमरणं न द्रक्ष्यन्ति पितरि जीवति

भविष्यन्ति । यद्वा विविधा धवा यासां ताः विधवा व्यभिचारिण्यः, अव्यभिचरितेऽपि प्रत्ययवत्यनुरागः कासांचित्स्यांत्स नेत्याह पतिव्रता इति । कौसल्यादयस्तु पुत्रवत्तया वृद्धतया च न विधवा इति भावः ॥८९॥ तत्र राज्ये तापत्रयगन्धोऽपि न भविष्यतीत्याह—न चेत्याद्यर्द्धत्रयम् । अग्निजं भयं न किञ्चिन्न भविष्यति । जन्तवः नाप्सु मज्जन्ति । मङ्क्त्वा न मरिष्यन्तीत्यर्थः । एवमाधिदैविकनिवृत्तिरुक्ता । अथाध्यात्मिकादिनिवृत्तिमाह—नापि ज्वरकृतं तथा न चापि क्षुद्भयमिति । न तस्करभयमित्याधिभौतिकोपलक्षणम् ॥ ९० ॥ तनि०—न चाग्निजं भयं किञ्चित पाकोपयोगादधिकमग्निर्न ज्वलति । अनेन "भीषास्मादग्निश्चेन्द्रश्च" इति श्रुतिर्ध्वनिता । नाप्सु मज्जन्ति जन्तवः प्रमादादप्सु मज्जन्तमपि जन्तुमुन्मज्जनेन बहिः क्षिपति ॥ ९० ॥ तत्र रामराज्ये अनिष्टनिवृत्तिमुक्त्वेष्टसिद्धिमाह—नगराणीति । नगराणि धनयुतानि राष्ट्राणि धान्ययुतानि च भविष्यन्ति । अतएव सर्वे नागरिका जानपदाश्च यथा कृतयुगे

> न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः । न वातजं भयं किञ्चिन्नापि ज्वरकृतं तथा । न चापि क्षुद्भयं तत्र न तस्करभयं तथा ॥ ९० ॥ नगराणि च राष्ट्राणि धनधान्ययुतानि च । नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ॥ ९१ ॥ अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः । गवां कोटययुतं दत्त्वा ब्रह्मलोकं प्रयास्यति । असङ्ख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ॥ ९२ ॥

तथा त्रेतायामपि नित्यं प्रमुदिता भविष्यन्ति । "गत्यर्थाकर्मक—" इत्यादिना कर्त्तरि क्तः ॥ ९१ ॥ एवं क्षत्रियासाधारणं प्रजापालनरूपं धर्ममुक्त्वा द्विजातिधर्म्मानाह—अश्वमेधेति, अर्द्धत्रयमेकान्वयम् । महायशाः प्रजापालनलब्धमहाकीर्तिः, अनेन द्रव्यशुद्धिरुक्ता । अश्वमेधशतैः अनेकाश्वमेधैः । "दशवर्षसहस्राणि वाजिमेधमुपाकरोत्" इति वक्ष्यमाणत्वात्। तथा बहुसुवर्णकैः बहुसुवर्णकाख्यक्रतुविशेषैश्च । "सुबहूनि सुवर्णानि यत्रापकरणत्वतः । विन्दते स क्रतुः सद्भिः स्मृतो बहुसुवर्णकः ॥" इति वचनात् । एवमुत्तरक्रत्वनुष्ठानप्रदर्शनेन पूर्वक्रतवोऽग्निष्टोमादयोऽपि ह्यनुष्ठिता इति सिद्धम् ।

पुत्रा न मरिष्यन्तीत्यर्थः ॥ ८९॥ तापत्रयसम्बन्धं निराकरोति—न चाग्निजमिति । आधिदैविकदुःखनिवृत्तिमुक्त्वा आध्यात्मिकं निराकरोति-नापि ज्वरकृतमिति । न तस्करभयमित्यादिनाधिभौतिकं निराकरोति ॥ ९० ॥ नगराणीति । नगराणि पुराणि, राष्ट्राणि-जनपदाः धनधान्ययुतानि भविष्यन्तीत्यनुषङ्गः ॥ ९१ ॥ अश्वमेधशतैरिति । अश्वमेधानां शतैरश्वमेधशतैः, अपरिमिताश्वमेधैरित्यर्थः । इष्ट्वा देवान् पूजयित्वा । बहुसुवर्णकैः-बहुसुवर्णदक्षिणाकैर्यागविशेषैः इष्ट्वा असङ्ख्येयं धनं दत्त्वा ब्रह्मलोकं प्रयास्यति इति योजना । ब्रह्मैव लोकः तं परमात्मस्वरूपं सगुणस्य ब्रह्मणो विष्णोः स्वस्य लोकं वैकुण्ठाख्यं च प्रयास्यतीत्यर्थः ॥ ९२ ॥

ब्रह्मलोकं ब्रह्मणः स्वस्य लोकम् अप्राकृतस्थानं परमपदं प्रयास्यति । अत्र महा
गवां कोटचयुतं दत्त्वा दशसहस्रकोटिपरिमिताः गाः ब्राह्मणेभ्यो दत्त्वा
यशा इत्यनेन यत्किंचिदपवादश्रवणमात्रेण सीतात्यागः सूचितः । दशवर्षसहस्राणि अश्वमेधानुष्ठानकाल इत्युक्त्या सीतां विनैव क्रत्वनुष्ठानस्य वक्ष्य
माणत्वाच्च अभिषेकात्परं स्वल्प एव वर्षसहस्रकाले सीतावियोग इत्यवसीयते। अश्वमेधारम्भश्च- रावणवधरूपपापनिबर्हणार्थतया प्रसक्त इत्यविलम्बितः।
ततः पूर्वमेव सीतावियोगः, प्रथमाश्वमेधे सीताप्रतिरूपकरणात् । प्रतिकृत्यापि यज्ञानुष्ठानस्य प्रामाणिकत्वं वक्ष्यति दर्भशयनप्रकरणादौ ॥ ९२ ॥ एवं
धर्मानुष्ठातृत्वमुक्त्वा धर्मप्रवर्तकत्वमाह—राजेति । अस्मिन् लोके राघवः राजवंशान् क्षत्रियवंशान् शतगुणान् शतगुणित. [ ] स्थापयिष्यति । शतगुणं

चातुर्वर्ण्यं च लोकेऽस्मिन् स्वेस्वे धर्मे नियोक्ष्यति ॥ ९३ ॥

राजवंशाञ्छतगुणान् स्थापयिष्यति राघवः । चातुर्वर्ण्यं च लोकेऽस्मिन् स्वेस्वे धर्मे नियोक्ष्यति ॥ ९३ ॥

दशवर्षसहस्राणि दशवर्षशतानि च । रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति ॥ ९४ ॥

इदं पवित्रं पापघ्नं पुण्यं वेदैश्च संमितम् । यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥ ९५ ॥

पूर्वादित्वात्सर्व
विवृद्धान् राजवंशान् प्रत्येकं राज्यप्रदानेन पालयिष्यतीत्यर्थः । चत्वारो वर्णाश्चातुर्वर्ण्यम् । स्वार्थे ष्यञ् । स्वे स्वे स्वस्ववर्णाश्रमोचिते धर्मे । दशवर्षसहस्राणि
नामत्वविकल्पः । नियोक्ष्यति प्रवर्त्तयिष्यति ॥ ९३ ॥ धर्मसंस्थापनातिशयप्रदर्शनाय राज्यपरिपालनकालबहुत्वं दर्शयति—दशेति । इति प्रयोगादनित्यो ल्यबा
दशवर्षशतानि च । एकादशसहस्रसंवत्सरानित्यर्थः । उपासित्वा उपास्य । "वा छन्दसि" इति वक्तव्ये "त्वापि छन्दसि" ब्रह्मलोकं वैकुण्ठं गमिष्यति ॥ ९४ ॥
देशः । सान्त्वपूर्वं जनानुवर्त्तनेन परिपालयेत्यर्थः । अत्यन्तसंयोगे द्वितीया । राज्यपालने व्यासङ्गाभावो दर्शितः । ब्रह्मणः विष्णोः स्वस्य लोकं वैकुण्ठाख्यं गमिष्यति ॥ ९४ ॥
तनि०—राज्येन खलु रामः स्वयमुपास्यः स्वयमत्यन्तानुकूल्याचरणेन राज्योपासनं चकारेति सौशील्यमुक्तम् । न केवलं
अथैतत्पठनस्य मोक्षसाधनत्वमाह—इदमिति । पूयतेऽनेनेति पवित्रम् । "कर्त्तरि चर्षिदेवतयोः" इति करणे इत्रप्रत्ययः । परिशुद्धिसाधनमित्यर्थः । अनेन प्रायश्चित्तव्यावृत्तिरुक्ता ।
शुद्ध्यापादकम्, किन्तु पापघ्नम् । "अमनुष्यकर्तृके च" इति टक्प्रत्ययः । पुण्यम्-लाङ्गलं जीवनमितिवत् पुण्यसाधनम् । इदं रामचरित्रं संक्षेपरूपं यः पठेत् वेदवत् सनियमं प्रतिदिनं
तद्धि पापमेव निवर्त्तयति । उक्तार्थत्रये हेतुमाह वेदैश्च संमितमिति । सर्ववेदसदृशमित्यर्थः । चातुर्वर्ण्यं च चतुर्वर्णान् स्वे स्वे धर्मे नियोक्ष्यति वर्तयिष्यति ॥ ९३ ॥
राजवंशानिति । राजवंशान् शतगुणान् विवृद्धान् प्रत्येकं राज्यप्रदानेन स्थापयिष्यतीत्यर्थः । इदं पवित्रम् अन्तःकरणशोधकम्, पुण्यं पुण्यसाधनं, वेदैश्च
दशवर्षेति । एकादशवर्षसहस्राणि राज्यमुपासित्वा परिपाल्य ब्रह्मलोकं गमिष्यति ॥ ९४ ॥ इदमिति ।

पठेत् स सर्वपापैः पूर्वोत्तराघैः प्रमुच्यते । तदुक्तं रामोपनिषदि–"ब्रह्महत्यासहस्राणि वीरहत्याशतानि च । स्वर्णस्तेयसुरापानगुरुतल्पायुतानि च । कोटिकोटिसहस्राणि उपपातकजान्यपि । सर्वाण्यपि प्रणश्यन्ति रामचन्द्रस्य कीर्त्तनात् ॥" इति ॥९५॥ एवं रामचरितपाठस्य मोक्षं फलमुक्त्वा आनुषङ्गिकफलोक्तिपूर्वकं तस्य सम्बन्धिसम्बन्धपर्यन्ततामाह–एतदिति । आयुःप्रयोजनमस्यायुष्यम् । "स्वर्गादिभ्यो यद्वक्तव्यः" इति यत्प्रत्ययः । आख्यानमाख्यायिकारूपम् एतद्रामायणं बालरामायणं रामस्यायनं रामायणम् । "अय गतौ" इति धातोर्भावे ल्युट् । रामचरित्तमित्यर्थः । रामः अय्यते प्राप्यते अनेन इति वा रामायणम् । रामः अयनं प्रतिपाद्यो यस्येति वा रामायणम् । "पूर्वपदात्संज्ञायामगः" इति णत्वम् । पठन्नरः वर्णाश्रमादिनियमं विना योऽपि कोऽपि सपुत्रपौत्रः दशपूर्वापरसहित इत्यर्थः । सगणः सभृत्यबन्धुः प्रेत्य आत्यन्तिकशरीरनाशं प्राप्य, स्वर्गे परमपदे । "तस्यां हिरण्मयः कोशः

**एतदाख्यानमायुष्यं पठन् रामायणं नरः । सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥ ९६ ॥ पठन् द्विजो वागृषभत्वमीयात्स्यात् क्षत्रियो भूमिपतित्वमीयात् । वणिग्जनः पण्यफलत्वमीयाज्जनश्च शूद्रोपि महत्त्वमीयात् ॥ ९७ ॥**

**इत्यार्षे श्रीरामायणे आदिकाव्ये बालकाण्डे श्रीरामायणकथासंक्षेपो नाम प्रथमः सर्गः ॥ १ ॥**

स्वर्गो लोको ज्योतिषावृतः" इति तस्मिन्स्वर्गशब्दप्रयोगात् । विमुक्तसर्वपापं प्रति स्वर्गमात्रस्याफलत्वाच्च । महीयते पूज्यते "तं पञ्चशतान्यप्सरसां प्रतिधावन्ति शतं मालाहस्ताः शतं चूर्णहस्ताः" इति श्रुतेः॥९६॥अथ चातुर्वर्ण्यव्यतिरिक्तस्य नाधिकार इति सूचयन् वर्णविशेषनियतानि फलानि दर्शयति–पठन्निति । स्यादित्येतदव्ययं यद्यर्थे । इदं बालरामायणं पठन् द्विजो यदि वागृषभत्वं वाचि श्रैष्ठ्यं वेदवेदाङ्गपारगत्वमीयात् प्राप्नुयात् । "ई गतौ" इत्यस्माद्धातोः लिङ् । पठन् क्षत्रियो यदि भूमिपतित्वं चक्रवर्तित्वमीयात्।पठन् वणिग्जनो यदि पण्यफलत्वमीयात्।पणं मूल्यं तदर्हतीति पण्यं क्रयविक्रयार्हं वस्तु तदेव फलं लाभो यस्य सः पण्यफलः, तस्य भावः पण्यफलत्वम् । "पणो द्यूतादिषूत्सृष्टे भृतौ मौल्ये धनेऽपि च" इत्यमरः । पणशब्दादर्हार्थे यत्प्रत्ययः । "अवद्यपण्य–" इत्यादिना पणतेर्यत्प्रत्ययान्तो निपातो वा। पठन् शूद्रोऽपि जनो यदि महत्त्वं स्वजातिश्रेष्ठत्वमीयात्। यद्वा स्यादित्येतदल्पार्थेऽव्ययम् । स्यात् क्षत्रियः अल्पनृपतिः भूमिपतित्वमखण्डभूमण्डलेश्वरत्वमीयात् । एवमल्पब्राह्मण इत्यादि नेयम् । यद्वा स्याच्छब्दः कथञ्चि

संमितम् तुल्यम्, सर्ववेदार्थप्रतिपादकत्वात्तुल्यत्वम् ॥ ९५ ॥ एतदिति । एतदाख्यानम् आख्यायिकाम् आयुष्यम् आयुर्वृद्धिकरम् एतद्रामायणाख्यं प्रबन्धं पठन् पठनादेव पुत्रपौत्रसहितः इह भोगान् भुक्त्वा प्रेत्य स्वर्गलोके महीयते । "मह पूजायाम्" । तत्र पूजितो मोदत इत्यर्थः ॥९६ ॥ वर्णानां प्रतिनियतफलान्याह–पठन्निति । स्यादिति यद्यर्थकमव्ययम् । पठन् द्विजः स्यात् ब्राह्मणो यदि वागृषभत्वमीयात् प्राप्नुयात, शब्दब्रह्मपारगो भवेत । क्षत्रियः स्यात भूमिपतित्वं साम्राज्य

दर्थे निपातः, "स्यादस्ति स्यान्नास्ति-" इत्यादिसप्तभङ्गीव्याख्याने तथोक्तत्वात्। तथा च कथञ्चित्पठन् शास्त्रोक्तनियमं विनाऽपि पठन्नित्यर्थः। एकदेशं पठन्निति वा। अथवा वाग्वृषभत्वादिकमीयात्। स्याच्च सत्तां लभेत चेति सर्वसाधारणं सत्तालाभरूपं फलम्। "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इति श्रुतेः। काश्चित्-"स्यात्प्रबन्धे चिरातीते" इति वचनात् स्यात्शब्दः प्रबन्धपर इत्याह, तदज्ञानविजृम्भितम्। "स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा" इति वाक्यशेषात् पुराशब्दस्य नानार्थत्वं हि तत्रोच्यत इति। यद्यपि "श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः" इति शूद्रस्येतिहासपुराणयोः श्रावणमात्रं स्मृतिभिरनुज्ञातम्, नतु पठनम्; तथापि पठन्नित्यादिऋषिवचनप्रामाण्यात् "वचनाद्रथकारस्य" इति न्यायेनास्मिन् संक्षेपपाठमात्रेऽधिकारोऽस्तीति सिद्धम्। तथा सहस्रनामाध्यायान्ते च दृश्यते-"य इदं शृणुयान्नित्यं यश्चापि परिकीर्त्तयेत्।" इत्यारभ्य "वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत्। वैश्यो धनसमृद्धः स्यात् शूद्रः सुखमवाप्नुयात्॥" इति। यद्वा वेदोपबृंहणे शूद्रस्य सर्वथानधिकारात् शूद्र इत्यत्र पठन्निति नानुषज्यते, किन्तु शृण्वन्नित्यध्याह्रियते। "शृण्वन् रामायणं भक्त्या" इति श्रवणस्यापि महाफलत्ववचनात्। अत्र संक्षेपे तकारेणोपक्रम्य यादिति समापनात् गायत्रीरूपत्वमस्य गम्यते। अत्र श्लोके उपजातिवृत्तम्। "स्यादिन्द्रवज्रा ततजास्ततो गावुपेन्द्रवज्रा जतजास्ततो गौ। अनन्तरोदीरितलक्ष्मभाजः पादा यदीया उपजातयस्ताः॥" इति लक्षणात्॥९७॥ प्रथमसर्गमुपसंहरति-इतीति। ऋषिणा प्रोक्तमार्षम्। "तेन प्रोक्तम्" इत्यण्। श्रीरामायणे श्रीरामायणाख्ये आदिकाव्ये प्रथमकाव्ये बालकाण्डे संक्षेपोनाम प्रथमः सर्गः, समाप्तः इति शेषः। काव्यलक्षणं सर्गलक्षणं चोक्तं दण्डिना काव्यादर्शे-"नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः। उद्यानसलिलक्रीडामधुपानरतोत्सवैः। विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः। मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि। अलंकृतमसंक्षिप्तं रसभावनिरन्तरम्। सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः। सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम्। काव्यं कल्पान्तरस्थायि जायते सदलंकृति॥" इति॥ ॥ ॥

इति श्रीकौशिकगोविन्दराजकृते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने संक्षेपरामायणं नाम प्रथमः सर्गः॥ १॥



मीयात। वणिग्जनः स्यात पण्यफलत्वं पण्यफलसमृद्धिमीयात। पठन शूद्रः स्यात ब्राह्मणाच्छृण्वन्निति व्याचक्षते। पाठे अनधिकारिणां शूद्राणां श्रवणादेव फलम्; 'शृण्वन्रामायणं भक्त्या' इति स्मरणात। यद्वा पठन् शूद्रो जनः स्यात महत्त्वं सजातीयेषु सर्वोत्तमत्वं पूज्यत्वमीयात। चकारादवान्तरजातिस्समुच्चीयते। चतुर्विंशतिसहस्रश्लोकैः श्रीरामायणं चिकीर्षुर्वाल्मीकिर्गायत्र्या आदिमाक्षरेणोपक्रम्य अन्तिमाक्षरेण निगमनं कृतवान॥ ९७॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीनारायणतीर्थशिष्यमहेश्वरतीर्थकृतौ श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां संक्षेपोनाम प्रथमः सर्गः॥ १॥

श्रीमच्छठारिगुरुणा गुरुणोपदिष्टं रामायणस्य हृदयं सरसं गृहीत्वा । श्रीकौशिकान्वयकुलेन्दुरशेषबन्धुर्गोविन्दराजविबुधो विशदीकरोति ॥ १ ॥
अथ परमकारुणिको वाल्मीकिः " इष्टं हि विदुषां लोके समासव्यासधारणम् " इत्युक्तरीत्या संक्षेपेणोक्तं रामचरित्रं पुनर्विस्तरेण प्रतिपिपादयिषुस्तत्र प्रेक्षावत्प्रवृत्त्यर्थं वक्तृवैलक्षण्यं प्रबन्धवैलक्षण्यं प्रतिपाद्यवैलक्षण्यं चेति वैलक्षण्यत्रयं निदिदर्शयिषुर्वक्तृवैलक्षण्यं तावदादौ दर्शयति—नारदस्येत्यादिना द्वितीयसर्गेण । वक्तृवैलक्षण्यं तु परमाप्तत्वम् । आप्तत्वं च यथार्थदर्शित्वे सति यथार्थवादित्वम्, तस्य परमत्वं तु पितामहवरप्रसादलब्धत्वम्, तदेतदुपदर्शयितुमुपोद्घातत्वेनाह—नारदस्येत्यादि । तुशब्दो वैलक्षण्यपरः । "तु स्याद्भेदेऽवधारणे" इत्यमरः। स च काकाक्षिन्यायेनोभयत्रान्वेति । त्रिलोकज्ञतया इतरविलक्षणस्य नारदस्य शब्दतोऽर्थतश्चेतरवाक्यविलक्षणोत्कर्षम् , तत् पूर्वं संक्षेपरूपेणोक्तम् । वाक्यं संपूर्णार्थप्रतिपादकपदसमूहं प्रश्नानुरूपोत्तरम् श्रुत्वा निशम्य, वाक्ये विशारदो विद्वान् "विद्वत्सुप्रगल्भौ विशारदौ" इत्यमरः । वाक्यविशेषज्ञ इत्यर्थः । धर्मे आत्मा बुद्धिर्यस्यासौ धर्मात्मा धर्मस्वभावो

नारदस्य तु तद्वाक्यं श्रुत्वा वाक्यविशारदः । पूजयामास धर्मात्मा सहशिष्यो महामुनिः ॥ १ ॥
यथावत्पूजितस्तेन देवर्षिर्नारदस्तदा । आपृष्ट्वैवाभ्यनुज्ञातः स जगाम विहायसम् ॥ २ ॥

वा । अत्र प्रकरणात् गुर्वनुवर्तनधर्मज्ञ इत्यर्थः । महामुनिः वेदान्तार्थनिर्णयसम्पत्त्या सर्वोत्कृष्टमुनिर्वाल्मीकिः, सहशिष्यः शिष्यसहितः सन् । "वोपसर्जनस्य" इति पक्षे सहशब्दस्य सभावाभावः । पूजयामास अहो वाक्यवैखरीति तद्वाक्यं श्लाघयामासेति वाक्यविशारदत्वोक्तिभङ्ग्यावगम्यते । महामुनिमिति पाठे वाल्मीकिपदाध्याहारः । तमिति प्रयोक्तव्ये अन्यत्वप्रतीतिकरमहामुनिपदप्रयोगास्वारस्यम् ॥ १ ॥ यथावदिति । देवश्चासौ ऋषिश्च देवर्षिर्नारदः । " नारदाद्याः सुरर्षयः " इत्युक्तेः । तेन वाल्मीकिना यथावत् यथार्हम् पूजितः प्रदक्षिणनमस्कारादिभिरर्चितः सन् । तदा पूजावसाने आपृष्ट्वा आपृच्छ्य । "क्त्वापि छन्दसि" इति ल्यबभावः । अभ्यनुज्ञातः गच्छ त्वमिति वाल्मीकिना कृताभ्यनुज्ञानः विहायसमाकाशं जगाम ॥२॥

नारदस्येति । तद्वाक्यम् प्रश्नानुरूपमुत्तरम् । श्रुत्वा निशम्य। वाक्ये विशारदो विद्वान, वाक्यविशेषज्ञ इत्यर्थः । महामुनिः वाल्मीकिः । पूजयामास तद्वाक्यं श्लाघया

विषम०—महामुनिम्-शतकोटिविस्तररामायणमननशीलम् नारदं पूजयामास ॥ १ ॥

---

१ महामुनिम् इति पाठान्तरम् ।

स इति। तस्मिन्नारदे मुहूर्तम् अल्पकालम् "मुहूर्तमल्पकाले स्यात्" इति निघण्टुः। अत्यन्तसंयोगे द्वितीया। देवलोकं ब्रह्मलोकं गते वाल्मीकि राम भक्तिं ब्रह्मणे कथयितुं प्राप्ते सति, स मुनिर्वाल्मीकिः, तदा नारदगमनोत्तरकाले, जाह्नव्या गङ्गाया अविदूरतः समीपे। सप्तम्यर्थे तसिः। स्थितमिति शेषः। तु गङ्गातोऽपि विलक्षणं तमसातीरं, जगाम माध्याह्निकाभिषेकाय प्राप्तः॥३॥ स त्विति। स मुनिस्तमसाया विलक्षणं तीरमासाद्य, तदा आसादन काले। अकर्दममपङ्कम्। तीर्थं जलावतरणम्। "तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्बुनि पावने। पात्रोपायावतारेषु" इति वैजयन्ती। दृष्ट्वा पार्श्वे स्थितं शिष्यमाह॥४॥ अकर्दममिति। भरद्वाज इति वाल्मीकेः प्रधानशिष्यस्य नाम। हे भरद्वाज! अकर्दममपङ्कम्, अधःप्रदेशे पङ्करहितमित्यर्थः। अन्यत्र पापरहितम्। प्रसन्नाम्बु प्रसन्नसलिलं लोके किञ्चिदधःपङ्करहितत्वेऽपि जलं कलुषमेव भवति. किंचिन्निर्मलोदकत्वेऽप्यधः सपङ्कमेव दृश्यते, न तथेदमिति

स मुहूर्तं गते तस्मिन् देवलोकं मुनिस्तदा। जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः॥ ३॥
स तु तीरं समासाद्य तमसाया मुनिस्तदा। शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम्॥ ४॥
अकर्दममिदं तीर्थं भरद्वाज निशामय। रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा॥ ५॥
न्यस्यतां कलशस्तात दीयतां वल्कलं मम। इदमेवावगाहिष्ये तमसातीर्थमुत्तमम्॥ ६॥
एवमुक्तो भरद्वाजो वाल्मीकेन महात्मना। प्रायच्छत मुनेस्तस्य वल्कलं नियतो गुरोः॥ ७॥

भावः। अन्यत्राम्बुवत्प्रसन्नम्। अतएव रमणीयम्, सन्मनुष्यमनो यथा सत्पुरुषहृदयसदृशमिदं तीर्थं निशामय पश्य। "शमो दर्शने" इति मित्त्वाभावाद्दर्शनार्थोऽयं शब्दः। सन्मनुष्यमनोवत्प्रसन्नाम्ब्विति वा योजना॥५॥ न्यस्यतामिति। हे तात वत्स! कलशः उदपात्रं न्यस्यतां भूमौ स्थाप्यताम्. मम वल्कलं स्नानशाटयर्थो वृक्षत्वक् दीयताम्। किमर्थमित्यत्राह–इदमेवेति। उत्तमम् अकर्दमत्वादिगुणयोगेन जाह्नवीतीर्थात् श्रेष्ठमिदमेव तमसातीर्थमवगाहिष्ये अत्रैव स्नास्यामि, माध्याह्निककालातिक्रमादगत्वा. जाह्नवीमिति शेषः। त्वमप्यत्रैव स्नाहीत्यर्थः॥ ६॥ एवमिति। महात्मना महामनसा वाल्मीकेन



मासेत्यर्थः॥१॥२॥ स मुहूर्तमिति। मुहूर्तमात्रेण देवलोकं गते तस्मिन्नित्यर्थः। अविदूरतः आसन्नम् अकर्दममित्यवतरणप्रदेशस्य पङ्कराहित्यमुच्यते॥३॥४॥ अकर्दममिति। निशामय पश्य। मनसः प्रसन्नमात्रेण सादृश्यं विव[illegible]नम॥५॥ न्यस्यतामिति। इदमेव गङ्गातीर्थमत्यासन्नमपि माध्याह्निककालातिक्रमादगत्वेति शेषः॥६॥ एवमिति।

वाल्मीकिना । "तस्येदम्" इति सम्बन्धमात्रेऽण् । सम्बन्धश्चात्र पुत्रत्वम् । एवं पूर्वोक्तरीत्या उक्तः गुरोर्नियतः परतन्त्रः भरद्वाजः मुनेस्तस्य वाल्मीकेः वल्कलं प्रायच्छत प्रादात् । दाणः यच्छादेशः । छन्दसि बहुलग्रहणादात्मनेपदम् । सम्बन्धसामान्ये षष्ठी । तस्मा इत्यर्थः ॥ ७ ॥ स इति । नियतेन्द्रियः निगृहीतेन्द्रियोऽपि स वाल्मीकिः शिष्यहस्ताद्वल्कलमादाय । विपुलं विशालम् । वनं सर्वतः पश्यन् सन् विचचार । हेति विस्मये, निगृहीतेन्द्रियस्य विपुल वनावलोकनं दैवकृतत्वाद्विस्मयनीयमित्यर्थः ॥ ८ ॥ तस्येति । भगवान् माहात्म्यवान् " भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु " इत्यमरः । शापानुग्रहसमर्थ इत्यर्थः । वाल्मीकिः तत्र वने, तस्य तीर्थस्याभ्याशे समीपे, चरन्तं वर्तमानम् अनपायिनम् अविनाभूतम् । क्षणविरहासहिष्णु

स शिष्यहस्तादादाय वल्कलं नियतेन्द्रियः । विचचार ह पश्यंस्तत्सर्वतो विपुलं वनम् ॥ ८ ॥ तस्याभ्याशे तु मिथुनं चरन्तमनपायिनम् । ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुनिःस्वनम् ॥ ९ ॥ तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः । जघान वैरनिलयो निषादस्तस्य पश्यतः ॥ १० ॥ तं शोणितपरीताङ्गं वेष्टमानं महीतले । भार्या तु निहतं दृष्ट्वा रुराव करुणां गिरम् ॥ ११ ॥ वियुक्ता पतिना तेन द्विजेन सहचारिणा । ताम्रशीर्षेण मत्तेन पत्रिणा सहितेन वै ॥ १२ ॥

क्रौञ्चमिथुनमिति प्रसिद्धम् । चारुनिःस्वनमिति रतिकालिकस्वरोक्त्या रतिर्द्योत्यते । क्रौञ्चयोर्मिथुनं द्वन्द्वम् । पुँल्लिङ्गत्वमार्षम् । ददर्श ॥ ९ ॥ तस्मात्त्विति । पापनिश्चयः रतिसमयेऽपि हननकरणात् क्रूरनिश्चयः । वैरनिलयः सर्वजन्तुविषयसहजशात्रवयुक्तः निषादः तस्मान्मिथुनात्तन्मिथुन मासाद्य । ल्यब्लोपे पञ्चमी । पुमांसमेकमवयवं तस्य पश्यतः तं पश्यन्तं मुनिमनादृत्य । " षष्ठी चानादरे " इत्यनादरे षष्ठी । जघान हतवान् ॥ १० ॥ तमिति । भार्या क्रौञ्ची निहतं व्याधहतम् अतएव महीतले भूतले वेष्टमानं घूर्णमानम् । शोणितपरीताङ्गं रुधिरव्याप्तशरीरं तं क्रौञ्चं दृष्ट्वा करुणां श्रोतुः कारुण्यावहां गिरं रुराव करुणशब्दमकरोत् । ' ओदनपाकं पचति ' इतिवत् । अरोदीत् ॥ ११ ॥ वियुक्तेति । पतिना पत्या । नाभाव आर्षः । सहचारिणा सहचारशीलेन । ताच्छील्ये णिनिः । सहितेनेत्यनेन मनस्सङ्गतिरुच्यत इति न तेन पुनरुक्तिः । ताम्रशीर्षेण रक्तशिरसा । "उत्तमाङ्गं शिरः

प्रायच्छत प्रादात् । नियतः सेवापरः ॥ ७ ॥ ८ ॥ तस्येति । तस्य तीरस्याभ्याशे-समीपवनप्रदेशे, चरन्तम् अनपायिनमविश्लिष्टम् । पुँल्लिङ्गत्वमार्षम् ॥ ९ ॥ तस्मादिति । तस्य पश्यन् इत्यनादरे षष्ठी ॥ १० ॥ ११ ॥ वियुक्तेति । पत्रिणा शोभनपक्षवता सहितेन सङ्गतमनसा, सहचारिणेति पूर्वमुक्तत्वात् सहितेनेति मनःसाहित्यमुच्यते ।

शीर्षम् " इत्यमरः । मत्तेन, रतिपरवशेनेत्यर्थः । पत्रिणा प्रशस्तपक्षेण तेन द्विजेन पक्षिणा । " दन्तविप्राण्डजा द्विजाः " इत्यमरः । भार्या वियुक्ता विरहिता सती करुणां गिरं रुरावेति पूर्वेणान्वयः । वै इति पादपूरणे । "तु हि च स्म ह वै पादपूरणे" इत्यमरः । अत्र विशेषणानि भार्यायाः शोकातिरेकहेतुत्वेन निर्दिष्टानि ॥१२॥ तथेति । तथा शोणितपरीताङ्गमित्याद्युक्तरीत्या निषादेन निपातितम्, हिंसितमित्यर्थः । तं द्विजं दृष्ट्वा स्थितस्य धर्मात्मनः धर्मस्वभावस्य ऋषेर्वाल्मीकेः । करुणैव कारुण्यम् । स्वार्थे ष्यञ् । दया समपद्यत आसीत् ॥१३॥ तत इति । ततः क्रौञ्चीविषयकारुण्यसम्पत्त्यनन्तरं द्विजः सहजकारुण्यस्वभावो मुनिः । रुदतीं क्रौञ्चीं निशाम्य दृष्ट्वा । करुणवेदित्वात् कारुण्यभाक्त्वात् । "विद्ऌ लाभे" इत्यस्मात् णिनिः । अयं रतिकाले हिंसनमधर्म इति मत्वा इदं वक्ष्यमाणं वचनमब्रवीत् ॥ १४ ॥ तदेव वचनमाह–मा निषादेति । हे निषाद ! त्वं शश्वदेव शाश्वत्यः । स्वार्थे अण्, ततो

तथा तु तं द्विजं दृष्ट्वा निषादेन निपातितम् । ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत ॥ १३ ॥
ततः करुणवेदित्वादधर्मोऽयमिति द्विजः । निशाम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत् ॥ १४ ॥
मानिषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ १५ ॥

ङीप् । ताः अनारता इत्यर्थः । समाः संवत्सरान् । "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः" इत्यमरः । अत्यन्तसंयोगे द्वितीया । प्रतिष्ठां क्वचित्स्थानं "प्रतिष्ठा स्थितिमाहात्म्य–" इति वैजयन्ती। मा गमः मा प्राप्नुहि। "आशंसायां भूतवच्च" इति लुङतिदेशात् लुङ्, ऌदित्वादङ्। नायं माङ्, अपि तु माशब्द इति काशिकाकारः, तेनाडागमेऽपि न विरोधः । दुर्घटवृत्तिकारस्तु अमेति पदच्छेदः । हे अम हे अलक्ष्मीक ! इति निषादविशेषणम् । ततो "न माङ्योगे" इत्यडभाव इत्याह । एवं पूर्वार्द्धेन शाप उक्तः, तत्र हेतुरुत्तरार्द्धेनोच्यते–यद्यस्मात्कारणात् क्रौञ्चमिथुनात् क्रौञ्चमिथुनमासाद्य । ल्यब्लोपे पञ्चमी । एकं काममोहितं कामेन मोहं प्रापितम्, रतिक्रीडाविवशमित्यर्थः । एकमवयवमवधीः हिंसितवानसि तस्मात्तद्दुदेव प्रतिष्ठां मागम इति योजना । चतुर्मुखप्रसादेन वाल्मीकिमुखात् प्रथमोदितोऽयं श्लोकः केवलं शापपरो न भवितुमर्हतीति भगवन्मङ्गलाशासनपरतया मङ्गलाचरणपरोऽयं प्राथमिकश्लोक



अस्य श्लोकस्य पूर्वेणान्वयः ॥ १२ ॥ तथेति । समपद्यत-समजायत ॥ १३ ॥ तत इति । करुणवेदित्वात् सञ्जातकारुण्यत्वात् ॥ १४ ॥ मानिषादेति । क्रौञ्चहन्तृप्रत्यक्षदृश्यमाननिषादशापरूपोऽर्थस्तु स्पष्ट एव । मा लक्ष्मीः निषीदत्यस्मिन्निति मानिषादः तत्सम्बोधनम् । हे मानिषाद विष्णो ! यद्यस्माद्धेतोः क्रौञ्चमिथुनात्–

इति पूर्वाचार्या वर्णयन्ति । तथाहि–निषीदन्त्यस्मिन्निति निषादो निवासः। अधिकरणे घञ्। मा लक्ष्मीः,तस्या निषादो मानिषादः श्रीनिवासः, तत्र सम्बुद्धिः हे श्रीनिवास! त्वं शाश्वतीः समाः सर्वकालं प्रतिष्ठां माहात्म्यमगमः गच्छ। लकारव्यत्ययः । यद्यस्मात् क्रौञ्चमिथुनात् राक्षसमिथुनाद्रावण मन्दोन्दरीरूपात् कामेन मन्मथेन मोहितं सीतापहर्तारमेकं रावणमवधीः, रावणं हत्वा कृतत्रैलोक्यत्राणस्त्वं यावत्कालं विजयीभवेत्यर्थः। वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। एवमनेन श्लोकेनेष्टदेवतास्मरणरूपं मङ्गलमाचरितम्। "काव्यार्थसूचनं कैश्चिन्नान्द्यामेव निरूप्यते" इति वचनादस्मिन्नेव श्लोके वक्ष्यमाणकाव्यार्थः संक्षेपेण दर्शितः । तथाहि–"मानिषाद " इत्यनेन सीतापरिणयपर्यवसायिनी बालकाण्डकथोद्बोधिता । " प्रतिष्ठां त्वमगमः " इत्यनेन पितृवचनपरिपालनप्रतिष्ठाभिधायिन्ययोध्याकाण्डकथावेदिता । "शाश्वतीः समाः" इत्यनेन ऋषिगणविषयप्रतिज्ञानिर्वहणेन रामस्य प्रतिष्ठानुवृत्तिमभिदधत्यारण्यकाण्डकथा सूचिता। "क्रुञ्च गतिकौटिल्याल्पीभावयोः"इत्यस्माद्धातोः "ऋत्विक्–"इत्यादिना क्विन्निपातनात् नलोपः संयोगान्तलोपश्च न भवति। क्रुञ्चेव क्रौञ्चः। स्वार्थे अण्। तथा च क्रौञ्चयोः कुटिलयोस्तिरश्चोस्ताराबालिनोर्मिथुनादेकं काममोहितं सुग्रीवभार्यापहर्तारं वालिनमवधीरिति किष्किन्धाकाण्डकथाभिहिता । क्रौञ्चौ अल्पीभूतौ, कृशाविति यावत्। तयोरन्योन्यविरहक्लेशकृशीयसोः सीतारामयोरेकमवयवं सीतारूपमवधीः भृशं पीडितवानसीति सीताविरहदुःखातिशयवर्णनपरा सुन्दरकाण्डकथा बोधिता। क्रौञ्चौ कुटिलौ राक्षसौ, तन्मिथुनादेकं काममोहितं रावणमवधीरिति युद्धकाण्डकथा सूचिता। दण्डकारण्यवासिऋषिपत्नीदर्शनाभिलाषमोहितसीतापीडाभिधानेनोत्तरकाण्डार्थोऽपि संक्षिप्तः । ननु मृगपक्ष्यादिवधस्य व्याधकुलधर्मत्वात् कथमनपराधिनमेनं मुनिः शप्तुमर्हति ? वक्ष्यति राम एव वालिवधप्रस्तावे–"प्रमत्तानप्रमत्तान् वा नरा मांसार्थिनो भृशम् । वध्यन्ति विमुखांश्चापि न च दोषोऽत्र विद्यते॥" इति। सत्यम्; तथापि रतिपरवशतादशायां तद्वधो दोष एवेति मुनेराशयः। सूचयति हि रतिपरवशतां काममोहितमिति पदेन। अतएव भारते पाण्डुं प्रति मुनिः– "अस्वर्ग्यमयशस्यं त्वमनुतिष्ठसि भारत। को हि विद्वान्मृगं हन्याच्चरन्तं मैथुनं वने॥" इति। नन्विदं मलयं गच्छतो मन्दरपथोपवर्णनम्, यदयमात्मनो वैलक्षण्यं परमाप्तत्वं वक्तुमारभ्य स्वचारित्रवर्णनं करोति,ब्रह्मागमनवरप्रदानादेरेव तदर्थं वक्तव्यत्वात्। उच्यते–श्रूयतामवधानेन। "अर्थतः शब्दतो वापि मनाक्काव्यार्थसूचनम्" इति दर्शितरीत्या काव्यार्थसूचनमियता ग्रन्थसन्दर्भेण क्रियते। तथाहि–"अकर्दमम्" इत्यादिना पावनं समुद्रसेतुस्थलमुच्यते। "तस्याभ्याशे" इत्यादिना तत्तीरे मन्दोदर्या सह चरन्तं भोगान् भुञ्जानम् अनपायिनं चतुर्मुखवरप्रदानेन लब्धचिरायुष्कं चारुनिस्वनं रम्यवीणादिविनोदं क्रौञ्चयो राक्षसयोर्मिथुनं ददर्श धर्मबलेनाऽलोकितवान् । " तस्मात् " इत्यादिना पापानिश्चयो निश्चित

रावणपापः, वैरनिलयः हिरण्यकशिपुरावणशिशुपालरूपजन्मत्रयानुसारित्वात्सहजशात्रवः निषीदन्त्यत्र सर्वाणि जगन्तीति निषादो विष्णुः। पुमांसं रावणं जघानेत्युच्यते। "भार्यां तु" इत्यादिना मन्दोदरीप्रलापः। द्विजेन पुलस्त्यवंशत्वात् ब्राह्मणेन, ताम्रशीर्षेण रत्नमुकुटधारित्वात्, पत्रिणा वाहनपरिच्छदादिमता, सहितेन कुम्भकर्णेन्द्रजिदादिसहायसम्पन्नेन। कारुण्यं जुगुप्सा। "जुगुप्सा करुणा घृणा" इत्यमरः। अधर्मोऽयमिति रावणकृतोऽयमधर्म इति एतत्सर्वं रावणवधवृत्तान्तमवलोक्य पौलस्त्यवधाभिधानं तद्विषयप्रबन्धं निरमिमीतेति मानिषादेत्यस्य रामायणार्थसङ्ग्रहपरत्वं चोक्तम्। अथवा अकर्दममित्यादिना गोदावरीतीर्थमुच्यते। तत्तीरे पञ्चवट्यां रामस्य सीतया सह वर्तनं तयोरेकस्याः सीताया रावणेन दुरात्मना हिंसनं पीडनमित्येतत्सर्वं साक्षात्कृत्य विधिचोदितो मुनिः सीतायाश्चरितमिति तद्विषयं प्रबन्धमकरोदित्यर्थः। तस्मिन् पक्षे—अनपायिनमाद्यन्तशून्यम्। चारुनिःस्वनं सर्ववेदान्तप्रवर्तकम्। क्रौञ्चयोः कृशयोः तपस्विनोः सीतारामयोः। पापनिश्चयो वैरनिलयो निषादो लोकहिंसको रावणः सीतामपजहार सा च रुरोद। द्विजेन क्षत्रियेण ताम्रशीर्षेण रत्नमुकुटारुणेन पत्रिणा शरेणोपलक्षितेन सहितेन लोकहितपरेण। अन्यत्सर्वं समानम्। मानिषादेत्याद्यर्थः शापार्थेन दर्शितः॥१९॥

तनि०—हे निषाद! त्वं शाश्वतीः समाः प्रतिष्ठां मागमः। यद्यस्मात् क्रौञ्चमिथुनादेकं काममोहितं स्त्रिया सङ्गतं पुमांसमवधीः। अत्र भूते लङ्। यद्वा हे निषाद! त्वं शाश्वतीः समाः प्रतिष्ठां मा गमः। न गतोऽसीति काकुः। भार्यासहित एकत्र निवासे स्थित्वा सांसारिकसुखं नानुभूतवानित्यर्थः। यद्यस्मात् क्रौञ्चमिथुनादेकं काममोहितमवधीः। एवं दुःसहजीवनादपि स्वहननमेव श्रेय इति भावः। अयं वाल्मीकिबुद्धिपूर्वकवाक्यार्थः। ईश्वरानुग्रहप्रवृत्तश्लोकार्थस्तु व्यङ्ग्यः। मानिषाद लक्ष्मीनिवास! शाश्वतीः समाः अनन्तकालं प्रतिष्ठामगमः विजयीभवेत्यर्थः। यद्यस्मात् क्रौञ्चमिथुनात्। यद्यपि स्वगनगद्वीपभेदेषु क्रौञ्चशब्दो वर्तते, तथापि काममोहितपदमभिव्याहारबलप्राप्तेन काममोहितत्वगुणेन "क्रुञ्च गतिकौटिल्याल्पीभावयोः" इति कुटिलगतिवाचकत्वेन केनचिद्गुणयोगेन च राक्षसपरः। एकं पुमांसं रावणमवधीरिति. एतेन वक्ष्यमाणशास्त्रप्रतिपाद्यप्रधानार्थाक्षेपः। मानिषादेति लक्ष्म्याः प्रथमोपात्तत्वात् "सीतायाश्चरितं महत्" इति प्रधानप्रबन्धनायिकानिर्देशः। "काममोहितमवधीः" इत्यनेन पौलस्त्यवधमित्येवंविति विरोधिरावणनिर्देशः। "काव्यं रामायणं कृत्स्नम्" इति कृत्स्नप्रबन्धस्य व्यङ्ग्यप्रधानत्वात् प्रतिपाद्यानां नानाविधव्यङ्ग्यार्थानां काव्यबीजभूतं श्लोकं सूच्यत्वात्। मानिषादेति शब्दशक्त्युद्भवध्वनिः। मानिषादेति परिवृत्य सोऽयं शब्दः न निषादेति निषादमेति वा प्रयोगे व्यङ्ग्यस्याप्रतीतेः "अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते। संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्" इति लक्षणात्। काममोहितमिति रावणस्य कामनाप्रतीतेरर्थशक्त्युद्भवध्वनिः, क्रौञ्चपदेन कुटिलगतित्वसम्बन्धेन रावणलक्षणतया तस्य मायावादित्वदुर्जयत्वादिप्रयोजनप्रतीतेर्लक्षणामूलव्यङ्ग्यभेदः, शब्दार्थोभयानतिरेकादुभयशक्त्युद्भवध्वनिश्च सूचितः। अर्थद्वयवचनया

श्लेषालङ्कारः । तेन वस्त्वलङ्कारध्वनिरूपानेकध्वनिभेदाः । संलक्ष्यक्रमव्यङ्ग्यभेदास्तु सूच्यन्ते-मानिषादेति नायिकानायकप्रतीतेः शृङ्गाररसः । काममोहितमिति परनारी विषयतया रसाभासध्वनिः । शोकरूपप्रबन्धव्यङ्ग्यतया करुणरसः । अवधीरिति वीररौद्रभयानकाः । कान्ताश्लिष्टक्रौञ्चहिंसादर्शनरूपेण बीभत्साद्भुतहास्यरसाः क्रोधनिर्वेदप्रतीतिरपि ॥ १५ ॥ तस्येति । वीक्षतः तन्मिथुनं वीक्षमाणस्य । " संज्ञापूर्वको विधिरनित्यः " इति वा चक्षिङोऽनुदात्तस्य ङित्करण ज्ञापितानित्यत्वेन वा परस्मैपदम् । एवं मानिषादेत्येवं ब्रुवतः, क्रौञ्चीं दृष्ट्वा मानिषादेत्येवं वदत इत्यर्थः । तस्य वाल्मीकेर्हृदि अस्य शकुनेरेतत्पक्षि निमित्तं शोकार्तेन मया व्याहृतमिदं वाक्यं किं किंरूपमिति चिन्ता बभूव ॥ १६ ॥ चिन्तयन्निति । प्रकर्षेण जानातीति प्रज्ञः ऊहापोहसमर्थः । प्रज्ञ

तस्यैवं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः । शोकार्तेनास्य शकुनेः किमिदं व्याहृतं मया ॥ १६ ॥
चिन्तयन् स महाप्राज्ञश्चकार मतिमान् मतिम् । शिष्यं चैवाब्रवीद्वाक्यमिदं स मुनिपुङ्गवः ॥ १७ ॥
पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः । शोकार्त्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥ १८ ॥

एव प्राज्ञः । "प्रज्ञादिभ्यश्च" इति स्वार्थेऽण् । यद्वा प्रज्ञा धीः । " धीः प्रज्ञा शेमुषी मतिः " इत्यमरः । सास्यास्तीति प्राज्ञः । " प्रज्ञाश्रद्धार्चाभ्यो णः " इति मत्वर्थीयो णः । महांश्चासौ प्राज्ञश्चेति महाप्राज्ञः । मतिमान् शास्त्रज्ञानवान् । स वाल्मीकिः मतिमुत्तरश्लोके वक्ष्यमाणं निश्चयं चकार । स मुनिपुङ्गवः शिष्यमिदं वाक्यमब्रवीच्च । "ब्रूशासु" इत्यादिना द्विकर्मकत्वम् । अयोगव्यवच्छेदक एवकारः ॥ १७ ॥ पादेति । शोकार्तस्य क्रौञ्चीशोके-नार्तस्य मे प्रवृत्तो मत्तः प्रवृत्तोऽयं सन्दर्भ इत्यर्थः । पादबद्धश्चतुर्भिः पादैर्युक्तः । अक्षरसमः प्रतिपादं समाक्षरः । तन्त्री वीणागुणः, लयः तौर्यत्रिकस्यैक कालविरामः । " नाशे संश्लेषणे तौर्यत्रिकसाम्ये भवेल्लयः " इति रत्नमाला । ताभ्यां समन्वितः, तन्त्र्यामारोप्य वाद्यैः सह गातुं शक्य इत्यर्थः । श्लोको

–मन्दोदरीरावणमिथुनात् एकं काममोहितं रावणम् अवधीः हतवानसि तस्मात् शाश्वतीः समाः अनेकसंवत्सरान् । अत्यन्तसंयोगे द्वितीया । प्रतिष्ठाम् अखण्डितै श्वर्यानन्दावाप्तिम्, अगमः प्राप्नुहि । अनेन अत्र " अर्थतः शब्दतो वापि मनाक्काव्यार्थसूचनम् " इत्युक्तेः रामेण कृतरावणवधरूपः काव्यार्थः काव्यादावत्रश्यकर्त व्याशीर्वादश्च सूचित इत्यवगन्तव्यम् ॥ १५ ॥ तस्येति । मिथुनं वीक्षतः पश्यतः ॥ १६ ॥ चिन्तयन्निति । अस्य शकुनेर्हेतोश्चकार मतिमान्मतिं मानिषादेतिवचनं श्लोको भवत्विति सङ्कल्पं चकार ॥ १७ ॥ पादबद्ध इति । तन्त्रीलयसमन्वितः-तन्त्री वीणागुणः, लयस्तालवेणुमृदङ्गादीनामेककालविरामः, ताभ्यां समन्वितः

१–त्यक्ता जीर्णदुकूलवद्वसुमती बद्धोऽम्बुधिर्बिन्दुवद्बाणाग्रेण जरत्कपोतक इव व्यापादितो रावणः । लङ्का कापि विभीषणाय सहसा मुद्रेव हस्तेऽर्पिता श्रुत्वैवं रघुनायकस्य चरितं को वा नरो नाश्चति ॥ इति ।

भवतु श्लोकलक्षणलक्षितत्वात् श्लोकशब्दवाच्यो भवतु।  नान्यथा श्लोकादन्यः केवलपदसन्दर्भो न भवति इति मतिं चकारेति पूर्वेणान्वयः ॥ १८ ॥ तनि०—अक्षरैः प्रतिपादमष्टभिरक्षरैः समः, तेन वर्णाधिक्यादिदोषराहित्यं व्यञ्जितम् ॥१८॥ शिष्यस्त्विति । शिष्यः भरद्वाजः तस्य मुनेर्ब्रुवतः तस्मिन्मुनौ ब्रुवति सति । "यस्य च भावेन भावलक्षणम्" इत्यस्मिन्नर्थे षष्ठी।अनुत्तमं सर्वरामायणार्थसंग्रहरूपत्वेन स्वापेक्षयोत्तमान्तररहितम् । वाक्यं मानिपादेत्यादिकं संहृष्टः सन् प्रतिजग्राह, वाग्विधेयं चकारेत्यर्थः । गुरुर्वाल्मीकिस्तस्य तुष्टोऽभवत्, स्वश्लोकधारणात्तस्मिन् प्रीतोऽभवदित्यर्थः ॥१९॥ स इति । ततः शिष्यविषयसन्तोषानन्तरम् । स मुनिः तस्मिन् तीर्थे "अकर्दममिदं तीर्थम्" इत्यादिना वर्णिते तीर्थे। यथाविधि विधिमनतिक्रम्याभिषेकं माध्याह्निक स्नानं कृत्वा तमेवार्थमवशात् श्लोकोत्पत्तिरूपमेवार्थं चिन्तयन्सन्नुपावर्तत आश्रममागच्छत् । अभिषेकविधिस्तु व्यासस्मृतौ विशेषतो दर्शितः-"ततो

शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्यमनुत्तमम् । प्रतिजग्राह संहृष्टस्तस्य तुष्टोऽभवद्गुरुः ॥ १९ ॥
सोऽभिषेकं ततः कृत्वा तीर्थे तस्मिन् यथाविधि । तमेव चिन्तयन्नर्थमुपावर्तत वै मुनिः ॥ २० ॥
भरद्वाजस्ततः शिष्यो विनीतः श्रुतवान् मुनेः । कलशं पूर्णमादाय पृष्ठतोऽनुजगाम ह ॥ २१ ॥

मध्याह्नसमये स्नानार्थं मृदमाहरेत् । पुष्पाक्षतान् कुशतिलान् गोमयं गन्धमेव च । नदीषु देवखातेषु तटाकेषु सरस्सु च । स्नानं समाचरेन्नित्यं नदी प्रस्रवणेषु च । मृदैकया शिरः क्षाल्य द्वाभ्यां नाभेस्तथोपरि । अधश्चतसृभिः क्षाल्यं पादौ षड्भिस्तथैव च । मृत्तिका च समादिष्टा त्वार्द्रामलकमात्रतः। गोमयस्य प्रमाणं तत् तेनाङ्गं लेपयेत्ततः । लेपयेदथ तीरस्थस्तल्लिङ्गैनैव मन्त्रतः । प्रक्षाल्याचम्य विधिवत्ततः स्नायात्समाहितः । अभिमंत्र्य जलं मन्त्रै रब्लिङ्गैर्वारुणैः शुभैः । आपो नारायणोद्भूतास्ता एवास्यायनं पुनः । तस्मान्नारायणं देवं स्नानकाले स्मरेद्बुधः । प्रेक्ष्य सोङ्कारमादित्यं त्रिर्निमज्जे ज्जलाशये । अथोपतिष्ठेदादित्यमूर्ध्वं पुष्पं जलान्वितम् । प्रक्षिप्यालोकयेद्देवमृग्यजुःसामरूपिणम् ॥ " इत्यादि ॥ २० ॥ तनि०—तमेवार्थं शापापदेशेन प्रवृ त्तस्य वाक्यस्य व्यञ्जितं लोकोत्तरचमत्कारं लक्ष्मीपतिप्रतिष्ठारूपम् ॥२०॥ भरद्वाज इति । ततः मुनेः उपावर्तनानन्तरं विनीतः विनयसंपन्नः श्रुतवान् शास्त्र



तन्त्रीलयसमन्वितः, तन्त्र्यामारोप्य वाद्यैस्सह गातुं योग्य इत्यर्थः । शोकार्तस्येति । श्लोको भवतु श्लोकत्वेन प्रथयताम् ॥ १८ ॥ शिष्य इति । मुनेर्वाक्यं मानि पादेति शापश्लोकम् । प्रतिजग्राह गृहीतवान् ॥ १९ ॥ स इति । तमेव चिन्तयन्नर्थमवशात् श्लोकोत्पत्तिरूपमर्थम् । उपावर्तत-न्यवर्तत ॥ २० ॥ २१ ॥

वान् अवधृतवांन् वा। "श्रुतं शास्त्रावधृतयोः" इत्यमरः। धृतगुरुश्लोक इत्यर्थः। मुनिर्मननवान् भरद्वाजः भरद्वाजाख्यः शिष्यः पूर्णं जलपूर्णं कलशमादाय पृष्ठतः पश्चादनुजगाम, अनुगमनोक्तौ पृष्ठत इत्युक्तिरव्यवधानसूचनार्था ॥ २१ ॥ स इति। स वाल्मीकिः शिष्येण सहाश्रमपदमाश्रमस्थानं प्रविश्य धर्मवित् कृतदेवपूजादिधर्मः उपविष्टः कृतसुखासनः सन्, ध्यानम् अवशोत्पन्नश्लोकविषयचिन्तामास्थितः प्राप्त एव सन् अन्याः कथाः पुराणपारायणानि चकार ॥ २२ ॥ आजगामेति। लोककर्ता लोकस्रष्टा प्रभुः स्वामी चतुर्मुखः वेदचतुष्टयोच्चारणोपयोगिमुखचतुष्कः महातेजाः महाप्रभावो ब्रह्मा, मुनिपुङ्गवं नारदोक्तवैभवं वाल्मीकिं द्रष्टुं कुतूहलात्स्वयमाजगाम। स्वस्थानस्थित एव रामायणप्रवर्तनसमर्थोऽप्यादरातिशयेन स्वयमेवाजगामेत्यर्थः ॥ २३ ॥ वाल्मीकिरिति। अथ ब्रह्मागमनानन्तरम् तं ब्रह्माणं दृष्ट्वा सहसा उत्थाय "ऊर्ध्वं प्राणा ह्युत्क्रमन्ति यूनः स्थविर आगते। प्रत्यु

स प्रविश्याश्रमपदं शिष्येण सह धर्मवित्। उपविष्टः कथाश्चान्याश्चकार ध्यानमास्थितः ॥ २२ ॥
आजगाम ततो ब्रह्मा लोककर्त्ता स्वयं प्रभुः। चतुर्मुखो महातेजा द्रष्टुं तं मुनिपुङ्गवम् ॥ २३ ॥
वाल्मीकिरथ तं दृष्ट्वा सहसोत्थाय वाग्यतः। प्राञ्जलिः प्रयतो भूत्वा तस्थौ परमविस्मितः ॥ २४ ॥
पूजयामास तं देवं पाद्यार्घ्यासनवन्दनैः। प्रणम्य विधिवच्चैनं पृष्ट्वानामयमव्ययम् ॥ २५ ॥

त्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥" इति वचनात् स्वप्राणा उत्क्रामेयुरिति सहसोत्थायेत्यर्थः। परमविस्मितः सन्। वाग्यतः यतवाक्। आहिताग्न्यादित्वात् परनिपातः। प्रयतः नियतमनस्कः। प्रकृष्टः अञ्जलिर्यस्यासौ प्राञ्जलिः स च भूत्वा तस्थौ स्थितवान् ॥ २४ ॥ तनि०—परमविस्मितः—प्रथममतर्कितं नारदागमनम्, ततो लोकोत्तरविषयप्रश्नः, तदनुरूपमुत्तरम्, अतर्कितमेव शकुनमिथुनदर्शनम्, तत्र च करुणारसोदयः। एतत्सर्वं दैवतन्त्रमिति विस्मितः, अनन्तरमतर्कितचतुर्मुखागमनेन परमविस्मितः ॥ २४ ॥ पूजयामासेति। मुनिः तं देवं ब्रह्माणं, पाद्यार्घ्यासनवन्दनैः-पाद्यं पादोदकप्रदानम्, अर्घ्यं अर्घजलसमर्पणम्, वन्दनं स्तुतिः एतैरुपचारैः पूजयामास। एनं ब्रह्माणम्। अन्वादेशे इदम एनादेशः। विधिवत् शास्त्रोक्तरीत्या प्रणम्य अव्ययम् अविच्छिन्नम्,

स प्रविश्येति। ध्यानं क्रौञ्चवधचिन्ताम् एतच्छ्लोकविषयचिन्तां वा॥२२॥आजगामेति। तं मुनिपुङ्गवं शापवाक्यवशात् श्लोक इत्यनूक्तवन्तम्॥२३॥वाल्मीकिरिति। वाग्यतः यतवाक् ॥२४॥ पूजयामासेति।पाद्यार्घ्यासनवन्दनैः,अत्र वन्दनशब्दः स्तुतिपरः। अनामयं कुशलम्,अव्ययं देवम्, अतः प्रणम्येत्यनेन न पौनरुक्त्यम्॥२५॥

अनामयं कुशलं पृष्ट्वा च पूजयामासेति योजना । प्रणामशास्त्रं तु "मनोबुद्ध्यभिमानेन सह न्यस्य धरातले । कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम् । प्रदक्षिणसमेतेन ह्येवंरूपेण सर्वदा । अष्टाङ्गेन नमस्कृत्य ह्युपविश्याग्रतः प्रभोः ॥" इति । यद्वा तमेनं देवं विधिवत्प्रणम्यानामयं पृष्ट्वा च पाद्यार्घ्यासनवन्दनैः पूजयामास । "वदि अभिवादनस्तुत्योः" इति धातुः ॥ २५ ॥ अथेति सार्धश्लोक एकः । अथ पूजानन्तरम् । भगवान् ब्रह्मा परमार्चिते परमं यथा भवति तथा वाल्मीकिनार्चिते ब्रह्मोपवेशार्थं पूजिते, आसने विष्टरे उपविश्य स्थित्वा । महर्षये वाल्मीकये । आसनम् उपवेशनं संदिदेश आज्ञापयामास । सोऽपि ब्रह्मणा समनुज्ञातः सन्, आसने उचितनीचासने उपाविशत् । आसनानुज्ञानं लोकहितार्थमनेन काव्यं कारयितुम् । "वाल्मीकये महर्षये" इत्यत्रायुजि पादे पथ्यावक्त्रस्य गणनियमाभावात्तथा क्रम् । नन्वर्धत्रयकरणम् "ईदृशैः करवाण्यहम्" इत्यनेन विरुध्यते । मैवम्;

अथोपविश्य भगवानासने परमार्चिते । वाल्मीकये महर्षये सन्दिदेशासनं ततः । ब्रह्मणा समनुज्ञातः सोऽप्यु पाविशदासने॥२६॥ उपविष्टे तदा तस्मिन् साक्षाल्लोकपितामहे । तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः ॥२७॥ पापात्मना कृतं कष्टं वैरग्रहणबुद्धिना । यस्तादृशं चारुरवं क्रौञ्चं हन्यादकारणात् ॥२८॥ शोचन्नेव मुहुः क्रौञ्चीमुप श्लोकमिमं पुनः । जगावन्तर्गतमना भूत्वा शोकपरायणः ॥ २९ ॥

लेखकदोषेणार्धान्तरपतनसम्भवात् ॥ २६ ॥ उपविष्ट इति । लोकपितामहे तस्मिन् साक्षात्प्रत्यक्षतया उपविष्टेऽपि तदा तद्गतेन क्रौञ्चहननगतेन मनसा ध्यानमास्थितः तद्विषयचिन्तामकरोत्॥२७॥पापात्मनेति । वैरग्रहणबुद्धिना वैरेण क्रौञ्चग्रहणबुद्धिना पापात्मना पापस्वरूपेण व्याधेन कष्टं कुत्सितं कर्म कृतम् । कथमित्यत्राह--य इति । यो व्याधः तादृशं रतिलालसमित्यग्राह्यत्वोक्तिः । चारुरवं रम्यरतिकूजितं क्रौञ्चम् अकारणात् निष्कारणम् "निमित्त कारणहेतूनां प्रयोगे सर्वासां प्रायदर्शनम्" इत्युक्तेः पञ्चमी । हन्यात् हन्तुं शक्नुयात् । शकि लिङ् ॥२८॥ शोचन्निति । शोकपरायणः क्रौञ्चवधदर्शनेन दुःखपरवशः पुनः क्रौञ्चीं गतमना भूत्वा, क्रौञ्चीं विचिन्त्येत्यर्थः । मुहुः शोचन्नेव वाल्मीकिः इमं मानिषादेत्यादिश्लोकम् अन्तः मनसि उपजगावित्य

अथेति । लोकहितार्थं काव्यं कारयितुमिच्छन् आसनं दत्तवान् ॥ २६ ॥ उपविष्ट इति । तद्गतेन-क्रौञ्चगतेन ॥२७॥ पापात्मनेति । हन्यात हन्तुं शक्नुयात । अकारणात कारणं विना ॥२८॥ शोचन्निति । अन्तर्गतमनाः हृद्गते अवशोत्पन्नश्लोकार्थे एव निवेशितचित्त इत्यर्थः । उपश्लोकम् उपशब्दस्य जगावित्यनेन सम्बन्धः॥२९॥

न्वयः । "व्यवहिताश्च" इत्युपसर्गस्य व्यवहितप्रयोगः॥२९॥ तमिति। ततः मनसि श्लोकपाठश्रवणानन्तरम्, मुनिपुङ्गवं प्रहसन् मन्नियोगेन स्वजिह्वाग्रे ऽवतीर्णां सरस्वतीमयं न जानातीति प्रहसन्नुवाच । मानिषादेत्यस्य श्लोकत्वनिश्चयं द्रढयति–श्लोक इति । त्वया बद्धो मानिषादेत्यादिः श्लोक एव । अत्र श्लोकविषये विचारणा चिन्ता न कार्या ॥ ३० ॥ तनि०–प्रहस्य मन्मुखेन श्रीरामायणप्रवर्तनरूपं भगवदनुग्रहमयं न जानातीति प्रकृष्टं हासं कृत्वा श्लोक एव यशोऽभिव्यञ्जकं पद्यमेव न तु केवलपदसमुदायो नापि केवलनिपादशापरूपार्थश्च ॥ ३० ॥ अकारणकार्योत्पत्तिकृतविस्मयं वारयति–मदिति । हे ब्रह्मन् ! ते इयं सरस्वती मानिषादेत्यादिरूपा मच्छन्दादेव मदभिप्रायादेव, न तु कारणान्तरात् प्रवृत्ता । प्रवर्तनप्रयोजनमाह–रामस्येति । हे ऋषिसत्तम "नानृषिः कुरुते काव्यम्" इत्युक्तरीत्या प्रतिलब्धकाव्यनिर्माणशक्तिक ! सर्वं रामस्य चरितं रामचरितविषयप्रबन्धं कुरु । ईदृशैः श्लोकैरिति शेषः ।

तमुवाच ततो ब्रह्मा प्रहसन् मुनिपुङ्गवम् । श्लोक एव त्वया बद्धो नात्र कार्या विचारणा ॥ ३० ॥
मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती । रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम ॥ ३१ ॥
धर्मात्मनो गुणवतो लोके रामस्य धीमतः । वृत्तं कथय धीरस्य यथा ते नारदाच्छ्रुतम् ॥ ३२ ॥

ईदृशैः करवाण्यहमित्यनुवादात् ॥ ३१ ॥ तनि०–मच्छन्दात् भगवच्छन्दानुवृत्तमत्सङ्कल्पादेव, न तु घुणाक्षरन्यायात् । प्रवृत्ता "स्वयमेवागता वग " इति स्वारसिकतया प्रवृत्ता । इयं रसभावालङ्कारवस्तुभेदभिन्नध्वनिसमुदायाश्रयतया प्रवृत्ता सरस्वती "सृ गतौ" इति धातोरुत्पन्नः सरश्शब्दः प्रवाहे वर्तते । सरोऽस्यास्तीति सरस्वती, तेन अनर्गलप्रवाहतया सर्वतोमुखत्वमुक्तम् । रूढ्या देवताविशेषोक्तिः । वागधिष्ठानदेवतैव जिह्वाग्रे वर्तत इति भावः । सरस्वतीत्यन्तर्वाहिनीत्वप्रतीत्या काव्यस्यानेकध्वनिगर्भितत्वं द्योत्यते । रामस्य रमत इति रमन्तेऽत्रेति च स्वयमानन्दपूर्णतया स्वेतररमयितृत्वेन च प्रसिद्धस्य । एतेन "नायको यदि वर्ण्येत लोकोत्तरगुणोत्तरः" इति प्रसिद्धलोकोत्तरनायकत्वं द्योत्यते । कृत्स्नं चरितं रहस्यप्रकाशात्मकं सर्वं चरितं त्वं कुरु राममन्त्रानुसन्धानजनितजन्मपरिशुद्धिस्त्वमेव कुर्वित्यर्थः । ऋषिसत्तम ! जन्मान्तरसहस्रतपोध्यानादिपरिपक्वकषायतया निष्पन्नभगवद्भक्तिपरीवाहप्रवृत्तरामावताररहस्यज्ञानेन चिकीर्षितप्रबन्धे सामर्थ्यं तवैवास्तीति भावः ॥ ३१ ॥ एवं सामान्येन रामचरितविषयप्रबन्धनिर्माणमनुज्ञाय संक्षेपकरणमादिशति–धर्मात्मन इति । अत्र विशेषणैः प्रबन्धनायकस्य रामस्य नायकगुणाः

तमिति । प्रहसन् मदाज्ञानुसारेणावतीर्णां सरस्वतीं न जानातीति हासं कुर्वन् ॥ ३० ॥ मच्छन्दादिति । मच्छन्दात् मम सङ्कल्पादेव, न तु स्वतः । रामचरितं त्वया प्रबन्धमुखेन प्रवर्तनीयमित्येवंरूपान्मदीयसङ्कल्पादित्यर्थः । रामस्य चरितं कुरु, रामस्य वृत्तं कथयेत्यत्र प्रथमवाक्यस्य रामचरितकरणमात्रपरत्वम्,

दर्शिताः। नायकगुणवर्णनेन हि काव्यं प्रथते। उक्तं हि भोजेन- "कवेरल्पापि वाग्वृत्तिर्विद्वत्कर्णावतंसति। नायको यदि वर्ण्येत लोकोत्तरगुणोत्तरः॥" इति। नायकगुणास्तु- "महाकुलीनतौज्ज्वल्यं महाभाग्यमुदारता। तेजस्विता विदग्धत्वं धार्मिकत्वादयो गुणाः॥" इत्युक्ताः। तत्र धर्मात्मन इत्यनेन धार्मिकत्वमुक्तम्। लोके लोकमध्ये गुणवतः बहुगुणकस्य, अनेन उदारतोक्ता। रामस्येत्यनेन तेजस्वित्वमौज्ज्वल्यं च। धीमत इत्यनेन पण्डितत्वम्, धीरस्येत्यनेन वसुन्धराधुरन्धरत्वरूपं महाभाग्यम्। अन्यद्गुणशब्देन ज्ञेयम्। एवंभूतस्य रामस्य वृत्तं चरित्रं "वृत्तं पद्ये चरित्रे च" इत्यमरः। यथा येन प्रकारेण नारदात्ते त्वया श्रुतं तेन प्रकारेण कथय, संक्षेपेण कथयेत्यर्थः॥ ३२॥ पुनर्विस्तरेण रामचरित्रवर्णनं नियोक्ष्यमाणस्तद्विषयज्ञानलाभमनुगृह्णाति-रहस्यमित्यादिना, श्लोकद्वयमेकवाक्यम्। धीमत इति रहस्यवृत्तसंभवहेतुतयोक्तम्। सुमित्राया अपत्यं पुमान्सौमित्रिः। बाह्वादित्वादिञ्।

रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः। रामस्य सहसौमित्रे राक्षसानां च सर्वशः॥ ३३॥
वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः। तच्चाप्यविदितं सर्वं विदितं ते भविष्यति॥ ३४॥
न ते वागनृता काव्ये काचिदत्र भविष्यति। कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम्॥ ३५॥

सह सौमित्रेः सौमित्रिसहितस्य धीमतस्तस्य रामस्य रहस्यमनितरविदितं च, प्रकाशं सर्वविदितं च, यद्वृत्तं राक्षसानां रावणादीनां च, सर्वशः सर्वप्रकारं रहस्यप्रकाशरूपं यद्वृत्तं तत् वैदेह्याः सीतायाश्च। अपिशब्दाद्भरतादीनां च, प्रकाशं यदि वा रहो रहस्यं वा यद्वृत्तं तच्च सर्वमविदितमपि नारदमुखेनाज्ञातमपि ते विदितं भविष्यतीति योजना॥३३॥३४॥ एवं यथार्थदर्शित्वमनुगृह्य यथार्थवादित्वमनुगृह्णाति-न त इति। अत्र करिष्यमाणे काव्ये ते वाक्काचिदपि, किञ्चिदपि वाक्यमित्यर्थः। अनृता बाधितार्था न भविष्यति। यद्वा वाक् पदम्, कदाचिदपि अनृता दुष्टा न भविष्यति। तेन काव्यदोषत्वेनोक्तपदवाक्यतदर्थदोषशून्यत्वमुक्तम्। अतः रामकथां रामविषयप्रबन्धकल्पनां कुरु। काव्यनिर्माणप्रयोजनमाह-पुण्यां पापहराम्। प्रयोजनान्तरमाह-मनोरमां शब्दश्रवणसमनन्तरमेव विगलितवेद्यान्तरमानन्दं जनयन्तीमित्यर्थः। श्लोकबद्धामित्यनेन गद्यप्रबन्धेभ्यो हर्षचरितजाती



द्वितीयवाक्यस्य नारदोक्तिविशेषपरतेत्यपौनरुक्त्यम्॥ ३१॥ ३२॥ रहस्यं चेति। अनेन तत्करणयोग्यतादानम् तेन मानिषादेतिवदवशान्निस्सृतापि तव वाक्

येभ्यो मिश्रप्रबन्धेभ्यो नाटकादिभ्यश्च व्यावृत्तिरुक्ता ॥३५॥ यशोऽपि काव्यनिर्माणप्रयोजनमित्याह—यावदिति । गिरयः सरितश्च महीतले भूतले यावत् स्थास्यन्ति तावत् रामायणकथा रामायणरूपा कथा लोकेषु सत्सु प्रचरिष्यति । यावत्त्वत्प्रबन्धप्रचारस्तावत्तव यशो भविष्यतीति हृदयम् ॥ ३६ ॥ यशसः स्वतः पुरुषार्थत्वात्तत्फलमाह—यावद्रामेति । किंच त्वत्कृता रामस्य कथा यावत्प्रचरिष्यति तावन्मल्लोकेषु मध्ये यावच्छरीरपातम् अधः भूमौ तदुपरि ऊर्ध्वं च निवत्स्यसि ॥३७॥ इत्युक्त्वेति । तत्रैव आसन एव ॥३८॥ तस्येति । ततः मुनिविस्मयानन्तरम् । सर्वे तस्य वाल्मीकेः शिष्याः मुहुर्मुहुः प्रीयमाणाः सन्तः, इमं मानिषादेति श्लोकं पुनर्जगुः । भृशं विस्मिताः अत्यन्तं विस्मिताः सन्तः । 'अव्ययमात्रस्य समासे तु लोपः' इति मलोपः । प्राहुश्च, अन्योन्यमिदमद्भुतमिति प्राहुश्चेत्यर्थः । आश्रम एव स्थिताभ्यां कुशलवाभ्यां भरद्वाजेन चात्र बहुवचनम्॥३९॥ समेति । यः समाक्षरैरिति विषम

यावत्स्थास्यन्ति गिरयः सरितश्च महीतले । तावद्रामायणकथा लोकेषु प्रचरिष्यति ॥ ३६ ॥
यावद्रामायणकथा त्वत्कृता प्रचरिष्यति । तावदूर्ध्वमधश्च त्वं मल्लोकेषु निवत्स्यसि ॥ ३७ ॥
इत्युक्त्वा भगवान् ब्रह्मा तत्रैवान्तरधीयत । ततः सशिष्यो वाल्मीकिर्मुनिर्विस्मयमाययौ ॥ ३८ ॥
तस्य शिष्यास्ततः सर्वे जगुः श्लोकमिमं पुनः । मुहुर्मुहुः प्रीयमाणाः प्राहुश्च भृशविस्मिताः ॥ ३९ ॥
समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा । सोऽनुव्याहरणाद्भूयः श्लोकः श्लोकत्वमागतः ॥ ४० ॥

वृत्तव्यावृत्तिः । चतुर्भिरित्यर्धसमवृत्तव्यावृत्तिः । पादैश्चतुर्थांशैः महर्षिणा, गीतः उक्तः स श्लोकः अनुव्याहरणात् शिष्यैः पुनः पुनर्व्यवह्रियमाणत्वात् भूयः श्लोकत्वमागतः इति । पूर्वं श्लोकलक्षणलक्षितत्वात् श्लोकत्वं गतः, संप्रति श्लोक्यमानत्वात् पुनः श्लोकत्वं गत इत्यर्थः । शोकः श्लोकत्वमागतः इति पाठे—शोककृतश्लोक एव शोक इत्युच्यत इति ज्ञेयम् । यः श्लोकः महर्षिणा समाक्षरैश्चतुर्भिः पादैर्बद्धः श्लोकः क्रौञ्चीविषयः तादृशश्लोकत्वमागतः, स शोक

नान्यथा भविष्यति, किन्तु सत्यैव भविष्यतीति ध्वनितम् ॥३३—३६॥ यावदिति । तावत् तावत्कालपर्यन्तम् । ऊर्ध्वमधश्च ये मल्लोकाः मया सृष्टाः लोकाः तेषु सर्वलोकेषु अप्रतिहतगतिस्सन् सञ्चरिष्यसि, ततःपरं मुक्तिं प्राप्स्यसीत्यर्थः ॥३७॥३८॥ तस्येति । प्राहुश्च-पठन्ति च, पाठेन आनन्दं चान्वभूवन्नित्यर्थः ॥३९॥ समेति । अनुव्याहरणात्पुनः पुनः पाठात । श्लोकः श्लोकत्वमागत इति श्लोकः श्लोकत्वेन प्रतिबद्धोऽभवत । मुहुर्मुहुः शिष्यैः पठितत्वात श्लोकः श्लोकत्वं प्राप्त इत्यर्थः ॥४०॥

वेगादुत्पन्न इत्यर्थः । कथमवगम्यते ? अनुव्याहरणात् । अनु पश्चात् शोकानन्तरम् उच्चारणात्, शोके सति जातत्वादित्यर्थः॥४०॥ अथ मुनेः कृतिप्रण यनविषयसङ्कल्पमाह–तस्येति । भावितात्मनश्चिन्तितपरमात्मनः, अनेनारम्भकर्तव्यं विघ्नविघातकं मङ्गलं मुनिना आचरितमित्युक्तम्। तस्य वाल्मीकेः इयं बुद्धिर्जाता । इदंशब्दार्थमाह–कृत्स्नमित्यादिना । सर्वं रामायणाख्यं काव्यमीदृशैर्मानिषादेति श्लोकप्रकारैः श्लोकैः। करवाणि इति इयं बुद्धिरित्यन्वयः। ईदृशैरिति प्रायिकाभिप्रायमेतत् ,वृत्तान्तराणामपि तत्रतत्र प्रयोगात् ॥४१॥अथ यथासङ्कल्पं काव्यरचनामाह–उदारेति । कीर्तिरस्यास्तीति कीर्तिमान्। अनेन "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे॥ " इत्यालङ्कारिकोक्तकाव्यप्रयोजनेष्वस्य यश एव प्रधानं प्रयोजनमिति दर्शितम् । काव्यनिर्माणानन्तरं भाविनो यशसः पूर्वभावोक्त्यातिशयोक्तिरुक्ता। उदारा महती धीर्यस्यासौ उदारधीः। "उदारो

तस्य बुद्धिरियं जाता वाल्मीकेर्भावितात्मनः । कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम् ॥ ४१ ॥ उदारवृत्तार्थ पदैर्मनोरमैस्ततः स रामस्य चकार कीर्तिमान् । समाक्षरैः श्लोकशतैर्यशस्विनो यशस्करं काव्यमुदारधीर्मुनिः ॥४२॥

दातृमहतोः" इत्यमरः। तेन कवित्वबीजभूता निपुणतोक्ता। तदुक्तं काव्यप्रकाशे–"शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात् । काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥" इति । मुनिः मननशीलः, अनेन विविक्तसेवित्वमरोचकित्वं चोक्तम् । तदुक्तं वामनेन–"द्वये हि कवयः अरोचकिनः सतृणाऽभ्यवहारि णश्च" इत्यादि। तदा ब्रह्मवरप्रदानानन्तरकाले । अनेन कवित्वहेतुभूता शक्तिरुक्ता । यशस्विनोऽपि रामस्य यशस्करम्। तदुक्तं दण्डिना–"आदिराजयशो विम्बमादर्शं प्राप्य वाङ्मयम् । तेषामसन्निधानेऽपि न स्वयं पश्य नश्यति॥ " इति। इतरकीर्त्यपेक्षया काव्यनायकत्वकृता कीर्त्तिरनुपमेत्यर्थः । काव्यम् कविर्लोकोत्तरवर्णननिपुणः, कवेः कर्म काव्यं, शब्दार्थयुगलम्। तथोक्तम्–"सगुणौ सालङ्कारौ शब्दार्थौ दोषवर्जितौ काव्यम् ।" इति । अत्र काव्य शब्देन काव्यसन्दर्भरूपं महाकाव्यमुच्यते। तल्लक्षणमुक्तं काव्यादर्शे–"सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् । आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् । इतिहासकथोद्भूतमितरद्वासंश्रयम् । चतुर्वर्गफलायत्तं चतुरोदात्तनायकम् । नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः। उद्यानसलिलक्रीडामधुपान रतोत्सवैः । विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः। मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि । अलंकृतमसंक्षिप्तं रसभावनिरन्तरम्। सर्गैरनतिविस्तीर्णैः श्राव्य



नस्येति। ईदृशैः-मानिषादेति श्लोकप्रकारैः ॥ ४१ ॥ उदारवृत्तार्थपदैः प्रसिद्धैः । उदारधीः महाबुद्धिः ॥ ४२ ॥

वृत्तैः सुसन्धिभिः । सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जनम् । काव्यं कल्पान्तरस्थायि जायते सदलङ्कृति ॥" इति । एवम्भूतं काव्यं श्लोकशतैरत्रयन्नैश्चकार श्लोकशब्देन गद्यपद्यमिश्रप्रबन्धेषु स्वग्रन्थस्य पद्यरूपता दर्शिता । शतैरित्यनेन शतकादिक्षुद्रप्रबन्धव्यावृत्तिरुक्ता । बहुवचनार्थं च स्वयमेव विवरिष्यति चतुर्विंशतिसहस्राणीति । कीदृशैः श्लोकशतैः ? उदारवृत्तार्थपदैः-उदाराणि महान्ति वृत्तार्थपदानि येषां तैः । वृत्तानि पथ्यावक्रोपजातिवंशस्थवसन्ततिलकादीनि, तेषामुदारत्वं नाम-तत्तद्रसाभिव्यञ्जकत्वम् । अर्थाः वाच्यलक्ष्यव्यङ्ग्याः, तेषामुदारत्वम्-द्राक्षापाकनारिकेलपाकरसालपाकेषु द्राक्षापाकवत्त्वम् । एतल्लक्षणमुक्तं रुद्रटेन-" द्राक्षापाकः स कथितो बहिरन्तःस्फुरद्रसः" इति । पदानि वाचकलक्षकव्यञ्जकानि, तेषामुदारत्वम्-" या पदानां पराऽन्योन्यं मैत्री शय्येति कथ्यते " इत्युक्तलक्षणशय्यावत्त्वम् । पुनः कीदृशैः ? मनोरमै रमणीयैः. अनेन वैदर्भीगौडीपाञ्चाली चेत्युक्तासु

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् । रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ ४३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे द्वितीयः सर्गः ॥ २ ॥

रीतिषु वैदर्भीरीतिमत्त्वमुक्तम् । तल्लक्षणं चोक्तम्-"बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता । नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते ॥ " इति । समाक्षरैः प्रतिपादं समानाक्षरैः, अनेन विषमवृत्तादिरूपता व्यावृत्ता ॥ ४२ ॥ एवं प्रबन्धनिर्माणमभिधाय कुशलवादिभ्यस्तत्प्रतिपादनं संग्रहेण दर्शयति-तदिति । स्वग्रन्थस्योत्तमकाव्यत्वप्रदर्शनाय निर्दोषत्वमाह उपगतसमाससन्धियोगमिति । समासास्तत्पुरुषादयः; सन्धयः संहिताः, योगः पदव्युत्पत्तिः, उपगताः शास्त्रानुरूपेण प्राप्ताः समाससन्धियोगा यस्मिन् तत्तथोक्तम्; अनेन समासदोषसन्धिदोषपददोषशून्यत्वमुक्तम् । प्रधानमल्लनिबर्हणन्यायेनैतत्सर्वदोषराहित्यस्योपलक्षणम् । अथ काव्यगुणान् प्राधान्येन दर्शयति समेति । समैर्मधुरैरुपनतार्थैर्वाक्यैर्बद्धं रचितम् । तत्र समतालक्षणमुक्तं दण्डिना-" समं बन्धेष्वविषमं ते मृदुस्फुटमध्यमाः " इति । माधुर्यलक्षणं च तेनैवोक्तम्-" मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः । येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः॥" इति । उपनतार्थत्वमर्थव्यक्तिः। तत्स्वरूपं च तेनैवोक्तम्-"अर्थव्यक्तिरमेयत्वमर्थस्य"इति । रघुवंश्या रघवस्तेषु

तदिति । उपगताः सङ्गताः समासाः सन्धियोगाः सन्धिबन्धाश्चास्मिन्निति तथोक्तम् । समैः अन्यूनातिरिक्तैर्मधुरैर्मनोहरैः उपनतार्थैर्वाक्यैः बद्धम्, वस्तुतस्तु समः सर्वोपादानत्वेन सर्वानुगः, मधुरः आनन्दैकरसः, उपनतः नित्यापरोक्षतया प्राप्तः । " यत्साक्षादपरोक्षाद्ब्रह्म " इति श्रुतेः । अर्थः श्रीरामब्रह्मरूपार्थो येषां तैर्वाक्यैः

विषम०-अत्र रघर्गत्यर्थान्निष्पन्नरघुवरशब्देन तस्य सर्वान्तर्यामित्वं ध्वनितम्, तेन तच्चरितस्य स्वर्गमोक्षादिसर्वपुरुषार्थसाधनत्वमुक्तं भवति ॥ ४३ ॥

वरो रामस्तच्चरितं तच्चरितविषयकं मुनिना वाल्मीकिना मया प्रणीतं, मुनिना नारदेन वा प्रणीतम् । दशशिरसो रावणस्य वधमधिकृत्य कृतं ग्रन्थम् "अधिकृत्य कृते ग्रन्थे" इति विहितस्याणो लुप् । निशामयध्वम्—निशामयध्वं निशामयध्वमिति न्यशामयतेत्यर्थः । "क्रियासमभिहारे लोट्लोटो हिस्वौ वा च तध्वमोः" इति तध्वमोर्हिस्वादेशस्य वैकल्पिकत्वात्तध्वमः पाक्षिकः स्वादेशाभावः । "मितां ह्रस्वः" इति विहितस्य ह्रस्वस्य "घटादयो मितः" इति संज्ञापूर्वकत्वात् "संज्ञापूर्वको विधिरनित्यः" इति अनित्यत्वात् ह्रस्वाभावः, किन्तु णिचि दीर्घ एव, अश्रावयदित्यर्थः । शिष्यानिति शेषः । "णिचश्च" इत्यात्मनेपदम् । यद्वा मुनिः रघुवरचरितं चकार तन्निशामयध्वमिति शिष्यान्प्रति परोक्षतयोच्यते । श्रवणेऽपि चरितस्य दर्शन समतया भानान्निशामयध्वमित्युच्यते। "चिरनिर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितम्" इति हि वक्ष्यते। पूर्वश्लोके वंशस्थवृत्तम् "जतौ तु वंशस्थमुदीरितं जरौ"

श्रुत्वा वस्तु समग्रं तद्धर्मात्मा धर्मसंहितम् । व्यक्तमन्वेषते भूयो यद्वृत्तं तस्य धीमतः ॥ १ ॥

उपस्पृश्योदकं सम्यङ्मुनिः स्थित्वा कृताञ्जलिः । प्राचीनाग्रेषु दर्भेषु धर्मेणान्वेषते गतिम् ॥ २ ॥

इति लक्षणात्। अत्र पुष्पिताग्रावृत्तम् "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात्॥४३॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्वितीयः सर्गः ॥ २ ॥ पूर्वस्मिन्सर्गे स्वग्रन्थस्यात्यन्तादरणीयत्वद्योतनाय परमात्मतत्त्वरूपं वक्तृवैलक्षण्यं प्राधान्येनोक्तम् । सम्प्रति तदर्थमेव विषयवैलक्षण्यं दर्शयति । विषयस्य वैलक्षण्यं नाम-सम्यग्ज्ञानावधृतत्वं लोकोत्तरनायकगुणपरिष्कृतत्वं च। तत्र प्रथमं सम्यग्ज्ञानावधृतत्वं विवक्षंस्तद्वस्त्वन्वेषणमाह—श्रुत्वेति । धर्मे आत्मा स्वभावो यस्यासौ धर्मात्मा, इत्यन्वेषणहेतूक्तिः । धर्मसंहितं धर्मसहितम् । "समोवाहिततयोः" इति विकल्पितत्वान्मकारलोपाभावः । समग्रं कृत्स्नम् । तत् नारदोक्तं वस्तु कथाशरीरं श्रुत्वा भूयस्ततोऽधिकं धीमतो रामस्य यद्वृत्तं चरित्रमस्ति तद्व्यक्तं यथा भवति तथा अन्वेषते पर्यालोचयति स्म। "वर्तमानसामीप्ये वर्तमानवद्वा" इति लट्॥१॥ धर्मात्मेत्यनेन सूचितमन्वेषणप्रकारमाह—उपस्पृश्येति । मुनिः सम्यग्यथाशास्त्रमुदकमुपस्पृश्य, आचम्येत्यर्थः। "उपस्पर्शस्त्वाचमनम्" इत्यमरः । प्राचीनाग्रेषु दर्भेषु



बद्धम्। दशशिरसश्च वधम्-दशशिरसो वधप्रतिपादकं दशशिरसो वधोऽस्मिन् काव्ये विद्यत इत्युपचारेण, काव्यं तथोच्यते-रघुवरचरितं काव्यं निशामयध्वम् निरीक्षध्वम्॥४३॥ इति श्रीपरमहंसपरिव्राजकाचार्यश्रीनारायणतीर्थशिष्यमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां द्वितीयः सर्गः॥२॥

श्रुत्वेति। समग्रं वस्तु कृत्स्नं रामचरितम् नारदोक्तं श्रीरामचरितरूपं वस्तु तत्त्वं श्रुत्वा प्रपञ्चेन वक्तुं यथा व्यक्तं भवति तथा अन्वेषते विचारयतिस्म। लडार्षः॥१॥ उप

स्थित्वा निजगुरुमुद्दिश्य कृताञ्जलिः सन्। धर्मेण ब्रह्मप्रसादरूपश्रेयःसाधनेन। गतिं रामादिवृत्तम् अन्वेषते॥२॥ गतिशब्दार्थं विवृण्वन्धर्मेण अन्वेषणफलमाह—रामेति। रामादिभिर्यत्प्राप्तं तत्र विषये तत्त्वतः तत्त्वेन, सम्प्रपश्यति समन्तात्प्रकर्षेण पश्यति, तत्सर्वं विशदतरं पश्यतीत्यनुषज्यते॥३॥ किं प्राप्तम्? तत्राह—हसितमिति। पूर्वोक्तरामादीनां यद्धसितं हासः यच्च भाषितं भाषणम्। भावे क्तः। या च गतिर्गमनं यच्च चेष्टितं चेष्टा, युद्धादिकमिति यावत्। तत्सर्वं धर्मवीर्येण ब्रह्मवरप्रसादशक्त्या यथावृत्तं तत्त्वेन सम्प्रपश्यति। अत्र योगजधर्मस्थानीयत्वात् ब्रह्मप्रसादो धर्मशब्देनोच्यते। स च साक्षात्कारहेतुश्चक्षुरादिवदिति प्रमाणतोऽध्यवसीयते ॥ ४ ॥ नगरनिवासकालिकचरितावलोकनमभिधाय वनवासकालीनवृत्तान्तनिरीक्षणमाचष्टे—स्त्रीति। स्त्री तृतीया यस्य तेन, सीतालक्ष्मणसहितेनेत्यर्थः। वने दण्डकारण्ये चरता सत्यसन्धेन सत्यप्रतिज्ञेन रामेण यत्प्राप्तं तत्सर्वं चान्ववेक्षितं साक्षात्कृतम्, वाल्मीकिनेति शेषः।

रामलक्ष्मणसीताभी राज्ञा दशरथेन च। सभार्येण सराष्ट्रेण यत् प्राप्तं तत्र तत्त्वतः ॥३॥ हसितं भाषितं चैव गतिर्या यच्च चेष्टितम्। तत्सर्वं धर्मवीर्येण यथावत् संप्रपश्यति ॥४॥ स्त्रीतृतीयेन च तथा यत्प्राप्तं चरता वने। सत्यसन्धेन रामेण तत्सर्वं चान्ववेक्षितम् ॥ ५ ॥ ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः। पुरा यत्तत्र निर्वृत्तं पाणावामलकं यथा ॥ ६ ॥ तत्सर्वं तत्त्वतो दृष्ट्वा धर्मेण स महाद्युतिः। अभिरामस्य रामस्य चरितं कर्त्तुमुद्यतः ॥ ७ ॥

धर्मवीर्येणेति सिद्धम् ॥५॥ एवं रामादिवृत्तान्तदर्शनस्य विशदतमत्वमाह—तत इति। ततः अवेक्षणानन्तरम् धर्मात्मा वाल्मीकिः योगं ब्रह्मप्रसादरूपोपायमास्थितः सन्। "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः। तत्र रामादौ पुरा यन्निर्वृत्तं निष्पन्नं तत्सर्वं वृत्तं पाणौ आमलकमिव पश्यति स्म॥६॥ अथ दर्शनफलग्रन्थनिर्माणोद्योगमाह—तदित्यादि, श्लोकद्वयमेकान्वयम्। महाद्युतिः रामगुणानुभवजनितहर्षप्रकर्षकृतद्युतियुक्तः स वाल्मीकिः तत्सर्वं रामवृत्तान्तम् तत्त्वतो धर्मेण पूर्वोक्तेन दृष्ट्वा। अभिरामस्य निरवधिकभोग्यस्य, चरितं चरितविषयप्रबन्धं कर्त्तुमुद्यतः उद्युक्तोऽभूत् ॥ ७ ॥

स्पृश्येति। धर्मेण-चतुर्मुखप्रसादरूपेण, गतिं रामवृत्तम् ॥२॥ रामलक्ष्मणेत्यादि श्लोकद्वयमेकं वाक्यम्। राज्ञा तत्र-राष्ट्रे। तत्त्वतः यद्वृत्तं जातं धर्मवीर्येण चतुर्मुखप्रसादबलेन यथावत् संप्रपश्यति ॥ ३॥४॥ अयोध्यानिवासकाले यद्वृत्तम् तन्निरीक्षणमभिधाय अयोध्यातो निर्गमनानन्तरं वनवासे यद्वृत्तमस्ति तन्निरीक्षणमाह—स्त्रीतृतीयेनेति। द्वितीयो लक्ष्मण इत्यवगम्यते॥५॥ रामवृत्तस्यान्यतोनिरीक्षणमुक्त्वा तस्यैव अत्यक्षानिरीक्षणमाह—तत इति। निर्वृत्तम्-जातम्॥६॥ तदिति।

कीदृशं चरित्रमित्यत्राह-कामार्थेति । कामश्चार्थश्च कामार्थौ, गुणशब्देनाप्राधान्यमुच्यते। अप्रधानाभ्यामर्थकामाभ्यां संयुक्तम्, त्याज्यताप्रदर्शनार्थं तत्र तत्रार्थकामप्रतिपादकमित्यर्थः । धर्मार्थयोर्धर्ममोक्षयोर्गुणोऽतिशयस्तं विस्तृणातीति धर्मार्थगुणविस्तरम् । पचाद्यच् । प्राधान्येन धर्मापवर्गप्रतिपादकमित्यर्थः। "अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने" इति वैजयन्ती । अतएव रत्नाढ्यं समुद्रमिव स्थितम् समुद्रो यथा शङ्खशुक्त्यादियुक्तोऽपि प्राधान्येन रत्नानि वहति तथा स्थितमित्यर्थः । सर्वेषां जनानां श्रुतिगनसी श्रोत्रहृदये हरतीति सर्वश्रुतिमनोहरम्, शब्दमाधुर्याच्छ्रोत्राकर्षकम् अर्थसौष्ठवाच्चित्ताकर्षकमित्यर्थः॥८॥ यथोद्योगं प्रबन्धनिर्माणमाह—स इति । भगवान् स ऋषिः रघुवंशस्य रघुवंशोद्भवस्य रामस्य । चरितं पूर्वं नारदेन महर्षिणा यथा कथितं येन प्रकारेणोक्तं तथा चकार ॥९॥ अथ विस्तरेण ब्रह्मोपदिष्टरीत्या रामचरितनिर्माणं दर्शयति—जन्मेत्यादिना सर्गशेषेण। द्वितीयान्तानां तत्प्रतिपादकपरत्वं

कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरम् । समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम् ॥ ८ ॥
स यथा कथितं पूर्वं नारदेन महर्षिणा । रघुवंशस्य चरितं चकार भगवानृषिः ॥ ९ ॥
जन्म रामस्य सुमहद्वीर्यं सर्वानुकूलताम् । लोकस्य प्रियतां क्षान्तिं सौम्यतां सत्यशीलताम् ॥ १० ॥

बोध्यम् । वाल्मीकिर्भगवान् ऋषिश्चकारेति वक्ष्यमाणे कर्तृक्रिये अनुषञ्जनीये । जन्मेति । जन्मनः सुमहत्त्वं दशरथमहातपोबललभ्यत्वं विष्णोरवतारत्वं च । वीर्यं ताटकाताटकेयादिहननक्षमं बलम् । सर्वानुकूलतां सर्वानुवर्तित्वम्, आर्जवमिति यावत् । लोकस्य प्रियतां प्रेमास्पदत्वम् । क्षान्तिं अपराधसहिष्णुताम् । सौम्यतां रम्यतामनुग्रतां वा । "सौम्यः पुमान् बुधे विप्रे त्रिषु स्यात्सोमदैवते । रम्येऽनुग्रे च " इति रत्नमाला । सत्यशीलतां

(अर्थवित्) अभिरामस्येत्यनेन रामवृत्तकथनस्य रामप्रातत्वं द्योत्यते ॥ ७ ॥ कामार्थेति । कामार्थगुणसंयुक्तम्—कामप्रयोजकगुणसंयुक्तम् । धर्मार्थगुणविस्तरम् धर्मार्थयोरौपयिका ये गुणास्तेषां विस्तरेण प्रतिपादकम् । रत्नाढ्यम्-रत्नतुल्यैः पदैरर्थैराढ्यं संपूर्णम् । सर्वश्रुतिमनोहरम् सर्वाभिः षड्जादिस्वरसम्बन्धिनीभिः कान्ताप्रभावतीप्रभृतिभिः द्वाविंशतिश्रुतिभिर्मनोहरम्, श्रुतिशब्देन नाडीसमुद्भवसुखहेतुर्ध्वनिविशेष उच्यते । यद्वा सर्वश्रुतिमनोहरं सर्वेषां श्रुतीः श्रोत्राणि मनांसि च हरति स्वाभिमुखानि करोतीति तथा । यद्वा सर्वासां श्रुतीनामुपनिषदां मनो हृदयं तात्पर्यं हरति गृह्णाति प्रतिपादयतीति तथा ॥ ८ ॥ स यथेति । रघुवंशस्य-रघुवंशेऽवतीर्णस्य भगवतो रामस्य ॥ ९ ॥ धर्मवीर्येण स्वेन दृष्टं कृत्स्नं रामचरितं प्रतिपादयिष्यन् " इष्टं हि विदुषां लोके समासव्यासधारणम् " इति न्यायेन प्रतिपत्तिसौकर्यार्थं संक्षिप्य प्रतिपादयति—जन्म रामस्येत्यादिना । वीर्यम् स्वयमक्षतस्य पराभिभवनसामर्थ्यम्, सर्वानुकूलतां इष्टानुवर्तनरूपाम् . प्रियतां

नन्यस्वभावताम् । "शीलं स्वभावे सद्वृत्ते" इत्यमरः ॥१०॥ नानेति । विश्वामित्रसमागमे विश्वामित्रेण रामलक्ष्मणयोः संयोगे सति, अन्या रामचरिता दन्याः । नाना-नानाप्रकाराः चित्रकथाः आश्चर्यावहकथाश्च । जानक्याश्चेति चकारेणाहल्यादयः समुच्चीयन्ते । धनुषो हरचापस्य विभेदनं भङ्गं च ॥११॥ रामेति । रामेण परशुरामेण । रामस्य राघवस्य विवादम् । रामेण रामविवादमित्यत्र तृतीयेति योगविभागात्समासः । अतो नैकशेषप्रसक्तिः । दाशरथे गुणान् अयोध्याकाण्डादौ वक्ष्यमाणान् । तथेति समुच्चयार्थः सर्वत्र द्रष्टव्यः । रामस्याभिषेकम् अभिषेकोद्योगम्, कैकेय्या दुष्टभावतां दुष्टहृदयत्वं च ॥१२॥ विघातमिति । अभिषेकस्य रामाभिषेकस्य । विघातं कैकेयीदुष्टहृदयत्वकृतं विघ्नं च रामस्य विवासनं च राज्ञो दशरथस्य शोकेन विलापं प्रलापं

नानाचित्रकथाश्चान्या विश्वामित्रसमागमे । जानक्याश्च विवाहं च धनुषश्च विभेदनम् ॥ ११ ॥ रामरामविवादं च गुणान् दाशरथेस्तथा । तथाभिषेकं रामस्य कैकेय्या दुष्टभावताम् ॥ १२ ॥ विघातं चाभिषेकस्य रामस्य च विवासनम् । राज्ञः शोकविलापं च परलोकस्य चाश्रयम् ॥१३॥ प्रकृतीनां विषादं च प्रकृतीनां विसर्जनम् । निषादाधिपसंवादं सूतोपावर्तनं तथा ॥ १४ ॥ गङ्गायाश्चापि सन्तारं भरद्वाजस्य दर्शनम् । भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम् ॥ १५ ॥ वास्तुकर्म विवेशं च भरतागमनं तथा । प्रसादनं च रामस्य पितुश्च सलिलक्रियाम् ॥ १६ ॥ पादुकाग्र्याभिषेकं च नन्दिग्रामनिवासनम् । दण्डकारण्यगमनं विराधस्य वधं तथा ॥ १७ ॥

च राज्ञः परलोकस्य स्वर्गस्याश्रयमाश्रयणं च ॥१३॥ प्रकृतीनामिति । प्रकृतीनां प्रजानां विषादं दुःखम् । प्रकृतीनां विसर्जनं वञ्चनेन निर्यापणं च । निषादाधिपसंवादं गुहेन सह संभाषणम् । सूतस्योपावर्तनं पुनरागमनं च ॥ १४ ॥ गङ्गायाश्चेति स्पष्टम् ॥१५॥ वास्त्विति । वास्तुकर्म शास्त्रोक्तप्रकारेण यथोचितमन्दिरनिर्माणम् । विवेशं शास्त्रोक्तवास्तुपूजादिपूर्वकं गृहे प्रविश्यावस्थानम् । रामस्य प्रसादनम्, भरतेनेति शेषः । सलिलक्रियां सलिलदानम् ॥१६॥ पादुकेति । पादुकाग्र्ययोः पादुकाश्रेष्ठयोः । श्रैष्ठ्यं धृतत्वात् । अभिषेकं राज्यनियन्तृतया स्थापनम् । नन्दिग्रामे निवासनं निवसनम् ।

त्रि श्लेषासहत्वपर्यवसायिनीं प्रीतिविधेयताम्, क्षान्तिम्-" उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते " इत्युक्तरूपाम्, सौम्यताम् निरतिशयप्रियदर्शनताम् ॥१०॥ ?? ॥ रामेति । अभिषेकम् अभिषेकसामग्रीम ॥१२॥१३॥ प्रकृतीनामिति । प्रकृतीनां वञ्चनापूर्वकं विसर्जनं प्रकृतीर्विसर्जयित्वा गमनम्. निषादाधिपसंवादं गुहेन सह संभाषणम. सूतोपावर्तनम ॥१४॥१५॥ वास्त्विति । वास्तुकर्म-चित्रकूटे गृहनिर्माणम. निवेशनम्-तत्र गृहेऽवस्थानम ॥१६॥ पादुकेति । पादुकाग्र्याभिषेकम् पादुका-

स्वार्थेऽण्। पादुकयोः स्थापनं वा ॥१७॥ दर्शनमिति अनसूयया अत्रिपत्न्या सहास्यां सहासनम्, सीताया इति शेषः। "आस्या त्वासनमासीनम्—" इत्यमरः। यद्यप्येतद्विराधवधात्पूर्वमेव, तथापि अत्र सर्वत्र क्रमो न विवक्षितः, रामायणप्रतिपाद्यसंक्षेपमात्रे तात्पर्यात्। अङ्गरागस्य चन्दनस्य ॥१८॥ अगस्त्येति। शूर्पणख्या इति ङीबत्रार्षः ॥ १९ ॥ खरत्रिशिरसोरिति दूषणादीनामुपलक्षणम्। उत्थानं निर्गमनम् ॥२०॥ मारीचस्येति। एवकारः पादपूरणार्थः। एवमुत्तरत्र सर्वत्र द्रष्टव्यम् ॥२१॥ कबन्धेति। चापीत्येकनिपातः समुच्चयार्थः ॥२२॥ ऋश्येति। ऋश्यमूकस्येति कर्मणि षष्ठी। प्रत्ययोत्पा

दर्शनं शरभङ्गस्य सुतीक्ष्णेनाभिसङ्गमम्। अनसूयासहास्यामप्यङ्गरागस्य चार्पणम् ॥ १८ ॥ अगस्त्यदर्शनं चैव शूर्पणख्याश्च दर्शनम्। शूर्पणख्याश्च संवादं विरूपकरणं तथा॥ १९॥ वधं खरत्रिशिरसोरुत्थानं रावणस्य च ॥२०॥ मारीचस्य वधं चैव वैदेह्या हरणं तथा। राघवस्य विलापं च गृध्रराजनिबर्हणम् ॥२१॥ कबन्धदर्शनं चापि पम्पायाश्चापि दर्शनम्। शबर्या दर्शनं चैव हनूमद्दर्शनं तथा। विलापं चैव पम्पायां राघवस्य महात्मनः ॥ २२ ॥ ऋश्यमूकस्य गमनं सुग्रीवेण समागमम्। प्रत्ययोत्पादनं सख्यं वालिसुग्रीवविग्रहम् ॥ २३ ॥ वालिप्रमथनं चैव सुग्रीवप्रतिपादनम्। ताराविलापं समयं वर्षरात्रनिवासनम् ॥ २४ ॥

दनं सालभेदनादिभिः सुग्रीवस्य विश्वासजननम्। वालिसुग्रीवविग्रहं वालिसुग्रीवयुद्धं वालिसुग्रीवयोर्वैरानुकथनं वा ॥२३॥ वालीति। वालिप्रमथनं वालिवधम्। सुग्रीवप्रतिपादनं सुग्रीवाय राज्यप्रदानमित्यर्थः। ताराविलापं ताराप्रलापम्। समयं शरदि सीतान्वेष्टव्येति रामसुग्रीवयोः सङ्केतम्। "समयः कालसिद्धान्तप्रतिज्ञाशपथेषु च। सङ्केताचारयोश्च" इति रत्नमाला। ताराविलापसमयमिति पाठे "सर्वो द्वन्द्वो विभाषयैकवद्भवति" इत्येकवद्भावः। वर्षरात्रनिवासनं वर्षं वृष्टिस्तद्युक्ता रात्रयो वर्षरात्राः। "रात्राह्नाहाः पुंसि" इति पुंलिङ्गत्वम्, तेषु निवासनं निवसनम्। स्वार्थेऽण्। वर्षदिनेष्वित्यर्थः। रात्रिशब्दस्य

श्रेष्ठयोरभिषेचनम्, नन्दिग्रामनिवासनं नन्दिग्रामे भरतस्य निवसनम् ॥१७॥१८॥ अगस्त्यसकाशाद्धनुषो ग्रहणम् ॥ १९–२२ ॥ ऋश्यमूकस्येति। वालिसुग्रीवविग्रहं तयोर्युद्धम् ॥ २३ ॥ वालिप्रमथनमिति। सुग्रीवप्रतिपादनम्-सुग्रीवस्य राज्यसंस्थापनम्। 'ताराविलापं समयम्' इति पाठे-शरदि दण्डयात्रा कर्तव्येति रामसुग्री



विषम०—उत्थानम्-जानकीहरणोद्योगम् ॥ २० ॥

१ अगस्त्यदर्शनं चैव जटायाराभसगमम्। 'दर्शनं चाप्यगस्त्यस्य धनुषो ग्रहणं तथा।' पंचवटयाश्च गमनं शूर्पणख्याश्च दर्शनम् ॥ इति पाठान्तरम्।

दिवसपरत्वं त्रिरात्रादौ दृष्टम्॥२४॥कोपमिति । राघवसिंहस्य राघवाणां श्रेष्ठस्य । कोपं सुग्रीवविषयकोपं, बलानां सेनानामुपसंग्रहं संमेलनम् । दिशः प्रति वानराणां प्रस्थापनम् । पृथिव्याश्च निवेदनम् पृथिव्याः द्वीपसमुद्रादिसंनिवेशकथनम्॥२५॥ अङ्गुलीयके...ति ।अङ्गुलीयकदानम्,हनुमत इति शेषः। ऋक्षस्य बिलं स्वयंप्रभाबिलम्, तस्य तथा संज्ञा। प्रायोपवेशनं-प्रायाय मरणाय उपवेशनं शयनम्। सम्पातेर्जटायुरग्रजस्य॥२६॥ पर्वतेति। पर्वतारोहणं समुद्रलङ्घनाय महेन्द्रपर्वतारोहणम्। समुद्रवचनाच्चेति चकारेण देवानुज्ञा समुच्चीयते। मैनाकस्य हिमवत्पुत्रस्य गिरेः ॥२७॥ सिंहिकाया इति । सिंहिकाया

कोपं राघवसिंहस्य बलानामुपसंग्रहम् । दिशः प्रस्थापनं चैव पृथिव्याश्च निवेदनम् ॥ २५ ॥ अंगुलीयकदानं च ऋक्षस्य बिलदर्शनम् । प्रायोपवेशनं चैव सम्पातेश्चैव दर्शनम् ॥ २६ ॥ पर्वतारोहणं चैव सागरस्य च लंघनम् । समुद्रवचनाच्चैव मैनाकस्य च दर्शनम् ॥ २७॥ सिंहिकायाश्च निधनं लङ्कामलयदर्शनम् । रात्रौ लङ्काप्रवेशं च एकस्य च विचिन्तनम् ॥ २८ ॥ आपानभूमिगमनमवरोधस्य दर्शनम् । दर्शनं रावणस्यापि पुष्पकस्य च दर्शनम् ॥ २९ ॥ अशोकवनिकायानं सीतायाश्चैव दर्शनम् । अभिज्ञानप्रदानं च सीतायाश्चाभिभाषणम् ॥ ३० ॥ राक्षसीतर्जनं चैव त्रिजटास्वप्नदर्शनम् । मणिप्रदानं सीताया वृक्षभङ्गं तथैव च ॥ ३१ ॥

असुरस्त्रियः । लङ्कामलयस्य लङ्काधारपर्वतैकदेशस्य । "मलयः पर्वतान्तरे। पर्वतांशे प्रियोद्याने" इति रत्नमाला। एकस्य हनुमतः ॥२८॥ आपानेति । आपानभूमिः मद्यपानभूमिः । अवरोधस्यान्तःपुरस्य॥ २९ ॥ अशोकेति । अशोकवनिकायानं हनुमतो अशोकवनिकागमनम् । अभिज्ञानप्रदानं सीतायै अङ्गुलीयकदानम् ॥३० ॥ राक्षसीति । राक्षसीनां तर्जनम्। सीतां प्रतीति शेषः। त्रिजटा विभीषणपुत्री, तस्याः स्वप्नदर्शनं रामश्रेयोविषयस्वप्न

वयोः सङ्केतः ॥२४॥ कोपमिति । उपसंग्रहम्-वानरमेलनम्, पृथिव्याश्च निवेदनं सुग्रीवेण वानरान् प्रति पृथिवीसंस्थानकथनम् ॥२५॥ अङ्गुलीयकदानमिति । प्रायेण अनशनेन वानराणामुपवेशनम् समुद्रसमीपे वासः ॥ २६ ॥ २७॥ सिंहिकाया इति। लङ्कामलयदर्शनम् लङ्काद्वीपस्थमलयगिरिदर्शनमित्यर्थः । एकस्य विचिन्तनम्-एकस्यासहायस्य विचिन्तनम् ॥ २८ ॥ अवरोधस्य अन्तःपुरस्य ॥ २९ ॥ अभिज्ञानप्रदानम् अभिज्ञायतेऽनेनेत्यभिज्ञानम् अङ्गुलीयकम्, अभिषेकाभ्युदयं रामा

---

१ दर्शनम् । राक्षसीतर्जनं चैव छायाग्राहस्य दर्शनम् । सिंहिकायाश्च-इति पाठान्तरम् ।

दर्शनम्। मणिप्रदानं हनुमते चूडामणिप्रदानम्। वृक्षभङ्गम् अशोकवनिकावृक्षभङ्गम् ॥ ३१ ॥ राक्षसीविद्रवम् एकाक्ष्येककर्णीप्रभृतिराक्षसीनां पलायनम्, हनुमद्भयादिति शेषः। किङ्कराणां रावणभटानाम्। वायुसूनोर्हनुमतः। ग्रहणम्, इन्द्रजितेति शेषः। लङ्कादाहेनाभिगर्जनम्, राक्षसानामित्यर्थः ॥३२॥ प्रतिप्लवनं पुनः समुद्रलङ्घनम्। मधूनां मधुवनस्थमधूनां ग्रहणम्, वानरैरिति शेषः। मणिनिर्यातनं रामाय चूडामणिप्रदानम् ॥ ३३ ॥ सङ्गमं चेति। नलसेतोः नलेन बन्धनीयसेतोः प्रतारं प्रतरणम् ॥ ३४ ॥ विभीषणेनेति। वधोपायनिवेदनम् इन्द्रजिदादिवधोपायदर्शनम् ॥ ३५ ॥

राक्षसीविद्रवं चैव किङ्कराणां निबर्हणम्। ग्रहणं वायुसूनोश्च लङ्कादाहाभिगर्जनम् ॥३२॥ प्रतिप्लवनमेवाथ मधूनां हरणं तथा। राघवाश्वासनं चैव मणिनिर्यातनं तथा ॥ ३३ ॥ सङ्गमं च समुद्रेण नलसेतोश्च बन्धनम्। प्रतारं च समुद्रस्य रात्रौ लङ्कावरोधनम् ॥ ३४ ॥ विभीषणेन संसर्गं वधोपायनिवेदनम्। कुम्भकर्णस्य निधनं मेघनादनिबर्हणम् ॥ ३५ ॥ रावणस्य विनाशं च सीतावाप्तिमरेः पुरे। विभीषणाभिषेकं च पुष्पकस्य च दर्शनम् ॥३६॥ अयोध्यायाश्च गमनं भरतेन समागमम्। रामाभिषेकाभ्युदयं सर्वसैन्यविसर्जनम्। स्वराष्ट्ररञ्जनं चैव वैदेह्याश्च विसर्जनम् ॥३७॥ अनागतं च यत्किञ्चिद्रामस्य वसुधातले। तच्चकारोत्तरे काव्ये वाल्मीकिर्भगवानृषिः ॥ ३८ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे तृतीयः सर्गः ॥ ३ ॥

अरेः पुर इति शौर्यातिशयोक्तिः, उत्तरत्र चान्वयः ॥ ३६ ॥ अयोध्यायाश्चेति। रामाभिषेकाभ्युदयं रामाभिषेकमहोत्सवम्। स्वराष्ट्रेत्यर्द्धमधिकम्। वैदेह्याश्च विसर्जनमित्यन्तं चकार भगवान् ऋषिः इति पूर्वेण सम्बन्धनीयम् ॥३७॥ सीताभूप्रवेशप्रभृत्युत्तरकाण्डकथामाह—अनागतं चेति। वाल्मीकिनामा भगवान् ऋषिः रामस्य वसुधातले अनागतं भावि यत्किञ्चिच्चरितमस्ति ब्राह्मणपुत्रजीवनाश्वमेधादिकं तदुत्तरे काव्ये उत्तरकाण्डे चकार प्रति

निवेकोत्सवम्। 'जन्म रामस्य' इत्यादि 'वैदेह्याश्च विसर्जनम्' इत्येतदन्तं 'चकार भगवानृषिः' इति पूर्वेण सम्बन्धनीयम् ॥ ३०–३७ ॥ अनागतं चेति।



२ निबर्हणम्। पञ्चसेनाग्र्यनिधनं सप्तमन्त्रिनिबर्हणम्। त[illegible] ग्रहणं इति पाठान्तरम्।

पादितवान् । यत्किञ्चिदित्यनेन सीताविसर्जनात्पूर्वकालस्य भूयस्त्वमनन्तरकालस्याल्पत्वं च द्योत्यत इत्याहुः । एतदुत्तरकाण्डे विचारयिष्यते ॥३८॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥ पूर्वस्मिन् सर्गे प्रतिपाद्यवैलक्षण्यमुक्तम्, सम्प्रति प्रबन्धवैलक्षण्यं कथ्यते। प्रबन्धस्य वैलक्षण्यं नाम—परमाप्तप्रणीतत्वं पुण्यश्लोकविषयत्वं महाजनपरिगृहीतत्वं प्रबन्धनायकश्लाघितत्वमित्यादि । परमाप्तप्रणीतत्वं पुण्यश्लोकविषयत्वं चानेनोच्यते । प्राप्तराज्यस्य स्वीकृतराजभावस्य । पुरोहितादित्वाद्यक्प्रत्ययः । लोकरक्षणाय रघुकुलेऽवतीर्णस्ये त्यर्थः । रामस्य सकलगुणाभिरामस्य, अनेन प्रतिपाद्यमहिम्ना काव्यस्य आदरणीयतातिशय उक्तः। तदुक्तं भामहेन—"उपश्लोक्यस्य माहात्म्यादुज्ज्वलाः

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः । चकार चरितं कृत्स्नं विचित्रपदमात्मवान् ॥ १ ॥
चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः । तथा सर्गशतान् पञ्च षट्काण्डानि तथोत्तरम् ॥ २ ॥

काव्यसम्पदः" इति । विचित्रपदं आश्चर्यपदसंनिवेशम् । अनेन काव्यस्यात्मभूता रीतिरुक्ता। तदुक्तं वामनेन—"रीतिरात्मा काव्यस्य। विशिष्टपदरचना रीतिः । समग्रैरोजःप्रसादप्रभृतिभिर्गुणैरुदिता वैदर्भी नाम रीतिः" इत्यादिना । यद्वा विविधानां विचित्राणां शब्दार्थालङ्काराणां पदं स्थानं कृत्स्नं चरितं प्रतिपादकग्रन्थसन्दर्भम्, अनेन विज्ञानाद्यनेकफलसुपुरुषचरित्रत्वमुक्तम् । तथोक्तम्—"परिवड्ढइ विण्णाणं सम्भाविज्जइ जसो विसप्पन्दि गुणा । सुव्वइ सुपुरिसचरिअं किंतज्जेण ण हरन्ति कव्वालावा ॥ छा०—परिवर्द्धते विज्ञानं सम्भाव्यते यशो विसर्पन्ति गुणाः । श्रूयते सुपुरुषचरितं किं तत्येन न हरन्ति काव्यालापाः ॥ " इति । भगवान् ब्रह्मप्रसादलब्धदिव्यज्ञानवान् । आत्मवान् प्रबन्धरचनानुकूलयत्नवान् । ऋषिः " नानृषिः कुरुते काव्यम् " इत्युक्त रीत्या काव्यनिर्माणपटुः वाल्मीकिः, चकार परोपकाराय कृतवान् । उदारधीरिति पूर्वमुक्तम् । प्राप्तराज्यस्येत्यनेन रामराज्यकरणकाले रामायणकरण मिति गम्यते । एतज्ज्ञापनायैव पुनरारम्भः ॥ १ ॥ अथ प्रक्षेपभ्रंशसम्भावनापरिहाराय नातिसंकोचविस्तरश्लोकसर्गकाण्डवत्तयात्यन्तादरणीयत्वाय

अनागतं यत्किञ्चिदित्यनेन सीताविसर्जनात्पूर्वकालस्य भूयस्त्वम् अनन्तरकालस्याल्पता द्योत्यते ॥ ३८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिका ख्यायां बालकाण्डव्याख्यायां तृतीयः सर्गः ॥३॥ प्राप्तराज्यस्येति ।सम्बन्धसामान्ये षष्ठी। "ते वयं भवता रक्ष्या भवद्विषयवासिनः" इति ऋषिभिरेवोक्तत्वात् रामस्य विषये वसन् वाल्मीकिरित्यर्थाल्लभ्यते । चरितं चरित्रप्रतिपादकं काव्यम् ॥ १ ॥ चतुर्विंशदिति । शतशब्दः पुन्नपुंसकः । ' चतुर्विंशत्सहस्राणि ' इति श्लोकपरि गणनं तपःस्वाध्यायेत्यारभ्य तद्ब्रह्माप्यन्वमन्यतेत्यन्तस्य श्लोकसमुदायस्य। सर्गशतान् पञ्चेत्येतत् षट्काण्डानामेव, न तु सोत्तराणाम् । तथाहि—श्रीमद्बालकाण्डे—

चाह—चतुर्विंशदिति । ऋषिर्वाल्मीकिः तपःस्वाध्यायेत्यारभ्य तद्ब्रह्माप्यनुमन्यतेत्यन्तेन चिकीर्षिते रामायणाख्ये प्रबन्धे श्लोकानां चतुर्विंशत्सहस्रा ण्युक्तवान् । इकारलोपश्छान्दसः । "पङ्क्तिविंशति–" इति सूत्रे विंशतीत्येव निपातनात् । "आदशतः सङ्ख्याः सङ्ख्येये वर्तन्ते, ततः परं सङ्ख्याने सङ्ख्येये च वर्तन्ते" इति नियमात् । सहस्रशब्दोऽत्र संख्यापरः । चतुर्विंशतिसहस्रसङ्ख्याकश्लोकात्मकारेत्यर्थः । तथेति समुच्चये । पञ्चसर्गशतांश्च कृतवान् । "शतायुतप्रयुताः पुंसि च" इति लिङ्गानुशासनवचनात् पुँल्लिङ्गत्वम् । सर्गशतं पञ्चेति पाठे शतमित्येतत् "पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टि सप्तत्यशीतिनवतिशतम्" इति सूत्रे शतमिति बहुत्वे निपातनात्साधु । षट्काण्डानि उत्तरं च षड्भ्यः उत्तरं सप्तकाण्डं च कृतवान्, परत्वमोक्षप्रद त्वादीनां व्यक्ततया प्रतिपादनेन सर्वोत्तरत्वादुत्तरमिति पृथगुक्तिः । यद्यप्याधुनिके पाठे श्लोकानां सर्गाणां च विपर्यासो दृश्यते तथापि बहुचतुर्युगा न्तरितत्वेन विप्लवो युक्तः । यद्वा सङ्कल्पमात्रपरोऽयं श्लोकः । कृतवान् कर्तुमुद्युक्त इत्यर्थः । ग्रन्थसमाप्तिदशायां क्वापि वृद्धिरुपजातेति न कोऽपि विरोधः । यद्वा अन्यूनाभिप्रायमिदं वचनम्, पञ्चशतसर्गेषु चतुर्विंशतिसहस्रश्लोकेषु च न न्यूनतेत्यर्थः । यद्वा अल्पीयसीमधिकसङ्ख्यामनादृत्य प्रकृष्ट सङ्ख्यया व्यपदेशोऽयम् । यथा "मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः" इत्यमरः । "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते ।" इत्युक्तब्रह्म दिनस्य चतुर्दशमन्वनुसारेण चतुर्दशधा विभागे मन्वन्तरस्यैकसप्तत्याधिक्यात् । वर्तमानसङ्ख्या तु–"बालकाण्डे तु सर्गाणां सप्तसप्ततिरीरिता । अयोध्याकाण्डगास्सर्गाश्शतं चैकोनविंशतिः । आरण्यकाण्डे सर्गाणां पञ्चसप्ततिरीरिता । किष्किन्धाकाण्डगास्सर्गास्सप्तषष्टिरुदीरिताः । सर्गाणां सुन्दरे काण्डे त्वष्टषष्टिरुदीरिता । एकत्रिंशच्छतं सर्गा दृश्यन्ते युद्धकाण्डगाः । दशोत्तरशतं सर्गा उत्तरे काण्ड ईरिताः । ६४७ ॥ अत्र सर्ग शतान् पंच इत्येतत् षट्काण्डानामेव, न तु सोत्तराणाम्, षट्काण्डानीत्येतत्प्रत्यासत्तेः । चतुर्विंशतिसहस्रश्लोकात्मकता तु सप्तकाण्डापेक्षये त्यप्याहुः । "बालकाण्डगताः श्लोकाश्चमरारिप्रकीर्तिताः ( २२५६ ) । अयोध्याकाण्डगाः श्लोकाश्शुकभावाः प्रभाषिताः ( ४४१५ ) । आरण्य काण्डगाः श्लोकाः खगसाराः प्रदर्शिताः ( २७३२ ) । किष्किन्धाकाण्डगाः श्लोका नीरचाराः प्रकीर्तिताः ( २६२० ) । श्लोकास्तु सुन्दरे काण्डे तान नागाः प्रभाषिताः (३००६) । युद्धकाण्डगताः श्लोका निधिर्धाशाः प्रवेदिताः ( ५९९० ) । श्लोकाः स्युरुत्तरे काण्डे वलशगाः प्रभाषिताः ( ३२३४ ) ।



द्विसहस्रादुपरि द्विशतं चाशीतिर्ग्रन्थाः ( २२८० ), श्रीमदयोध्याकाण्डे–चतुस्सहस्राणि चतुःशतानि पञ्चदशग्रन्थाः ( ४४१५ ), श्रीमदारण्यकाण्डे–द्विसहस्रा दुपरि सप्तशतानि द्वात्रिंशद्ग्रन्थाः ( २७३२ ), श्रीमत्किष्किन्धाकाण्डे–द्विसहस्रादुपरि षट्शतानि विंशतिग्रन्थाः ( २६२० ), श्रीमत्सुन्दरकाण्डे–त्रिसहस्रा

श्लोकाः २४२८५३ । तत्रैवमवधातव्यम्—बालकाण्डे त्रिंशे सर्गे "स तेन परमास्त्रेण मानवेन समाहतः" इत्यतः पूर्वमेकं सहस्रम् । त्रिषष्टितमे "विश्वामित्रो महातेजा भूयस्तेपे महत्तपः" इत्यतः पूर्वं द्वे सहस्रे । अयोध्याकाण्डे चतुर्दशे "चतुरश्वो रथः श्रीमान् निस्त्रिंशो धनुरुत्तमम्" इत्यतः पूर्वं त्रीणि सहस्राणि । चतुश्चत्वारिंशे "वर्तते चोत्तमां वृत्तिं लक्ष्मणोऽस्य सदानघः" इत्यतः पूर्वं चत्वारि सहस्राणि । एकसप्ततितमे "द्वारेण वैजयन्तेन प्राविशच्छ्रान्त वाहनः" इत्यतः पूर्वं पञ्चसहस्राणि । एकोनशततमे "उटजे राममासीनं जटामण्डलधारिणम्" इत्यतः पूर्वं षट्सहस्राणि । आरण्यकाण्डे द्वादशे "तं वयं वनमत्युग्रं प्रविष्टाः पितृशासनात्" इत्यतः पूर्वं सप्तसहस्राणि । सप्तचत्वारिंशे "मम भर्ता महातेजा वयसा पञ्चविंशकः" इत्यतः पूर्वं चाष्टौ सहस्राणि । किष्किन्धाकाण्डे चतुर्थे "ततः परमसंहृष्टो हनूमान् प्लवगर्षभः" इत्यतः पूर्वं नवसहस्राणि । एकत्रिंशे "नरेन्द्रसूनुर्नरदेवपुत्रं रामानुजः पूर्वजमित्युवाच" इत्यतः पूर्वं दशसहस्राणि । किष्किन्धाकाण्डसमाप्तावेकादशसहस्राणि । सुन्दरकाण्डे सप्तविंशे "ततस्तस्य नगस्याग्रे" इत्यतः पूर्वं द्वादशसहस्राणि । षट्चत्वारिंशे "नावमान्यो भवद्भिश्च हरिर्धीरपराक्रमः" इत्यतः पूर्वं त्रयोदशसहस्राणि । सुन्दरकाण्डसमाप्तौ चतुर्दशसहस्राणि । युद्धकाण्डे अष्टाविंशे "रक्षोगणपरिक्षिप्तो राजा ह्येष विभीषणः" इत्यतः प्राक् पञ्चदशसहस्राणि । पञ्चाशे "प्रदर्शनं च बुद्धिश्च स्मृतिश्च द्विगुणं तयोः" इत्यतः प्राक् षोडशसहस्राणि । उत्तरभागारम्भे "कुम्भकर्णं हतं दृष्ट्वा राघवेण महात्मना" इत्यतः प्राक् सप्तदशसहस्राणि । अशीत्यन्तेन अष्टादशसहस्राणि । द्वादशशततमे "मरणान्तानि वैराणि" इत्यतः प्राक् एकोनविंशतिस्सहस्राणि । युद्धकाण्डसमाप्तौ विंशतिस्सहस्राणि । उत्तरकाण्डे द्वाविंशे "ततः प्राचोदयत्सूतस्तान् हयान्रुचिरप्रभान्" इत्यतः पूर्वं एकविंशतिस्सहस्राणि । चत्वारिंशत्समाप्त्या द्वाविंशतिस्सहस्राणि । षट्सप्ततितमे "ब्राह्मणस्य च धर्मेण त्वया वै रक्षितस्सुतः" इत्यतः पूर्वं त्रयोविंशतिस्सहस्राणि । ततः प्रबन्धसमाप्त्या चतुर्विंशतिस्सहस्राणीत्याहुः ॥ २ ॥

दुपरि षट् ग्रन्थाः ( ३००६ ), श्रीमद्युद्धकाण्डे—पञ्चसहस्राणि नवशतानि नवतिश्च ग्रन्थाः ( ५९९० ), श्रीमदुत्तरकाण्डे—त्रिसहस्राणि द्विशतं सप्तसप्ततिश्च ग्रन्थाः (३२७७) । अत्र यदेतधिकं सप्तसप्तत्युत्तरद्विशतं तत्त्रिष्टुब्जगत्यादिछन्दोवृत्तानामक्षराधिक्येन जनितम् । सर्गास्तु—श्रीमद्बालकाण्डे सप्तसप्ततिः (७७), श्रीमदयोध्याकाण्डे एकोनविंशत्युत्तरशतम् ( ११९ ), श्रीमदारण्यकाण्डे पञ्चसप्ततिः (७५), श्रीमत्किष्किन्धाकाण्डे सप्तषष्टिः (६७), श्रीमत्सुन्दरकाण्डेऽष्टषष्टिः (६८), श्रीमद्युद्धकाण्डे एकत्रिंशदुत्तरशतम् ( १३१ ), तदेवं पञ्चशतानि सप्तविंशत्सर्गाः । श्रीमदुत्तरकाण्डे तु दशोत्तरशतम् ( ११० ), षट्काण्डानि तयोत्तरमिति उत्तरकाण्डस्य काण्डैः सहाकथनमादरातिशयेन । तथाहि—यद्यप्यत्र काण्डेषु रामस्य परत्वानुसन्धानम् तथापि उत्तरकाण्डे प्राचुर्येण परत्वाभिव्यक्तिः । कोमलानां सर्वेषामपि

अथास्य काव्यस्य महाजनपरिग्रहं वक्तुं पीठिकामारचयति—कृत्वेति । महाप्राज्ञः प्रकर्षेण जानातीति प्रज्ञः। प्रज्ञ एव प्राज्ञः। "प्रज्ञादिभ्यश्च" इति स्वार्थेऽण् प्रत्ययः । यद्वा प्रज्ञा धीः, "धीः प्रज्ञा शेमुषी मतिः" इत्यमरः । सास्यास्तीति प्राज्ञः "प्रज्ञाश्रद्धार्चाभ्यो णः" इति मत्वर्थीयो णप्रत्ययः । महांश्चासौ प्राज्ञश्चेति महाप्राज्ञः, निरतिशयज्ञानसंयुतो वाल्मीकिः सहोत्तरं रामाभिषेकादुत्तरेण वृत्तान्तेन सहितम् । विकल्पात् सहशब्दस्य सभावाभावः। सभविष्य मश्वमेधान्तरभाविवृत्तान्तसहितम्,अश्वमेधपूर्वकाले अस्य काव्यस्य प्रवृत्तत्वात् । तत्काव्यं कृत्वापि एतत्काव्यं प्रभुः समर्थः। "प्रभुः शक्ताधिपौ" इति भास्करः । कः पुरुषः प्रयुञ्जीयात् वाग्विधेयं कुर्यात् इति चिन्तयामास । प्रयुञ्जीयादित्यत्रात्मनेपदाभावोऽनित्यत्वात् । सभविष्यमित्यत्र औणादिके स्यप्रत्यये इण्निमित्तं षत्वम्॥३॥तस्येति । ततः वाल्मीकिचिन्तानन्तरम्,मुनिवेषौ वस्तुतो राजकुमारौ. कुशीलवौ कुशलवौ । ईकारश्छान्दसः । चिन्त

कृत्वापि तन्महाप्राज्ञः सभविष्यं सहोत्तरम् । चिन्तयामास को न्वेतत्प्रयुञ्जीयादिति प्रभुः ॥ ३ ॥
तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः । अगृह्णीतां ततः पादौ मुनिवेषौ कुशीलवौ ॥ ४ ॥
कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ । भ्रातरौ स्वरसम्पन्नौ ददर्शाश्रमवासिनौ ॥ ५ ॥

यमानस्य भावितात्मनश्चिन्तितपरमात्मनः, तदनुकूलशिष्यलाभाय कृतपरमात्मनमस्कारस्येत्यर्थः । तस्य महर्षेः पादौ अगृह्णीताम्, रामायणग्रहणार्थं मन्ववर्तेतामित्यर्थः॥४॥कुशीलवाविति । धर्मज्ञौ गुरुशुश्रूषाधर्मज्ञौ,राजपुत्रौ आसमान्तः वीर्यवन्तौ,यशस्विनौ विद्यान्तराभ्यासजकीर्तियुक्तौ, भ्रातरौ तुल्य स्वरौ, स्वरसम्पन्नौ शारीरवन्तौ, आश्रमवासिनौ स्वाश्रमवासित्वेन स्नेहविषयभूतौ.कुशीलवौ कुशलवौ ददर्श। उपदेशयोग्यावाकलयाञ्चकारेत्यर्थः। अनेन रामाभिषेकानन्तरकाले रामायणकरणं "प्राप्तराज्यस्य रामस्य" इति सर्गादावुक्तम् । अनन्तरं कुशलवोत्पत्तिरिति सूचितम्, एतज्ज्ञात्वैव वाल्मीक्याश्रमं

भगवता सह तल्लोकप्राप्तिश्च अपरोऽतिशयो गम्यते, अतएव सर्वोत्तरत्वात्तस्य उत्तरकाण्डत्वसंज्ञा ॥ २ ॥ कृत्वापीति । भविष्यम्-सीताभूप्रवेशकुपितं श्रीराम मुद्दिश्य ब्रह्मणावशेषं कार्यं शृण्वित्युक्तम्-" प्रविष्टायां तु वैदेह्यां भूतलं सत्यसंसदि " इत्याद्युपदिष्टं काव्यम् । प्रयुञ्जीयात्—पठितुं शक्नुयात् ॥३॥ तस्येति । भावि तात्मनः-शुद्धचित्तस्य ।कुशीलवौ कुशलवौ ॥ ४ ॥ कुशीलवाविति । कुशीलवौ गायकौ । पृषोदरादित्वात्साधुः । कुशलवौ ददर्श । वाल्मीकिरिति शेषः ॥ ५ ॥



विषम०—भविष्येण सहितं यदुत्तरम् तेन सहितम् ॥ ३ ॥ सभविष्यमहोत्तरमिति पाठः ॥

सीता त्यक्ता रामेण ॥५॥ स त्विति । वेदेषु ऋग्यजुःसामाथर्वणलक्षणेषु चतुर्षु विषये, मेधाविनौ मेधा धारणक्षमा बुद्धिः । " मेधा धीर्धारणक्षमा " इति यादवः । तद्वन्तौ "अस्मायामेधास्रजो विनिः" इति मत्वर्थीयो विनिप्रत्ययः । अनेनाक्षरराशिग्रहणफलमध्ययनमुक्तम् । परितो निष्ठा परिनिष्ठा साङ्गाध्ययनं साऽनयोः सञ्जातेति परिनिष्ठितौ । तारकादित्वादितच् । अनेन विशेषणद्वयेनाधीतसाङ्गवेदत्वादापातप्रतिपन्नवेदार्थत्वाच्च तदुपबृंहणापेक्षित्वमुक्तम् । तौ कुशलवौ । प्रभुः स्वतन्त्रो वाल्मीकिः वेदोपबृंहणार्थाय वेदोपबृंहणरूपप्रयोजनाय, वेदोपबृंहणरूपस्वग्रन्थपठनायेत्यर्थः । उपबृंहणं नाम-नानाशास्त्रानुसारेण निर्णीतवेदार्थप्रतिपादको ग्रन्थः । अग्राहयत अगृह्णात् । स्वार्थे णिच् ॥६॥ तनि०—तुशब्देन इतरवैलक्षण्यमुक्तम् । मेधाविनौ ग्रहणधारणसमर्थौ । वेदेषु परिनिष्ठितौ, अनेन स्वरानुगुणार्थज्ञानवत्त्वं सामगानवेदित्वं तदादरेणैव गान्धर्वशास्त्राभ्यासश्च गम्यते । वेदोपबृंहणं-वेदार्थव्यक्तीकरणम् ॥ ६ ॥ काव्यमिति । चरित

स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ । वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥ ६ ॥
काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् । पौलस्त्यवधमित्येव चकार चरितव्रतः ॥ ७ ॥

व्रतः चरितव्रतत्वेन निरतिशयज्ञानो वाल्मीकिः । काव्यं कवेः कर्म । कवयते वर्णयतीति कविः । " कवि वर्णने " इत्यस्माद्धातोरौणादिक इप्रत्ययः । लोकोत्तरवर्णननिपुण इत्यर्थः । यद्यपि " इगन्ताच्च लघुपूर्वात् " इति अणा भवितव्यम्, तथापि " ब्राह्मणादित्वात् ष्यञ् " इति काशिकाकारः । यद्वा तस्मादेव धातोः " ऋहलोर्ण्यत् " इति ण्यत्प्रत्यये आदिवृद्धौ च काव्यमिति रूपम् । दोषवर्जितं गुणालङ्कारसहितम्, शब्दार्थयुगलमित्यर्थः । तदुक्तं काव्यप्रकाशे—" तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि " इति । वेदोपबृंहणत्वेऽपि कान्तासम्मितत्वादस्य काव्यत्वव्यपदेशः । तथाहि—त्रिविधः सन्दर्भः, प्रभुसम्मितः सुहृत्सम्मितः कान्तासम्मितश्चेति । शब्दप्रधानो वेदः प्रभुसम्मितः, अर्थप्रधान इतिहासादिः सुहृत्संमितः, व्यङ्ग्यप्रधानं काव्यं कान्तासंमितम् । महदिति काव्यविशेषणम् । तस्य महत्त्वमुत्तमकाव्यत्वम् । तदप्युक्तं तत्रैव—" इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः " इति । यद्वा महत्काव्यं महाकाव्यम् । तल्लक्षणमुक्तं दण्डिना—" सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् " इत्यादिना । ननु काव्यं नारम्भणीयं " काव्यालापांश्च वर्जयेत् " इति निषेधादित्याशङ्क्याह—रामायणमिति । रमयतीति रामः । " रामो रमयतां

स त्वित्यादिश्लोकद्वयमेकं वाक्यम् । वेदोपबृंहणार्थाय-वेदार्थव्यक्तीकरणाय । सीतायाश्चरितं पौलस्त्यवधमिति यच्चकार तत्काव्यं तावग्राहयतेति योजना ॥ ६ ॥ ७ ॥

वरः " इत्यार्षनिर्वचनात् । यद्वा रमन्तेऽस्मिन् सर्वे जना इति रामः । " अकर्तरि च कारके संज्ञायाम् " इति घञ् । सः अय्यते प्रतिपाद्यते अनेनेति रामायणम् " अय गतौ " इति धातोः कर्मणि ल्युट् । " पूर्वपदात् संज्ञायामगः " इति णत्वम् । समस्तगुणसंपन्नरामविषयत्वान्नास्य निषिद्धत्वम्, किन्तूपादेयत्वमेवेत्यर्थः । तदुक्तं भामहेन–" उपश्लोक्यस्य माहात्म्यादुत्तमाः काव्यसम्पदः " इति । प्रतिपादितं चोद्भटेन–" गुणालङ्कारचारुत्वयुक्तमप्यधिकोज्ज्वलम् । काव्यमाश्रयसंपत्त्या मेरुणेवामरद्रुमः ॥" इति । रुद्रटेनाप्युक्तम्–"उदारचरितनिबन्धनात् प्रबन्धप्रतिष्ठा" इति । निषेधस्त्वसत्काव्यविषय इति भावः । इदं च रामचरितप्रतिपादनमप्राधान्येन, प्राधान्येन तु सीताचरितमेव प्रतिपाद्यत इत्याह कृत्स्नं सीतायाश्चरितमिति । कृत्स्नं रामायणं सीताचरितपरम् । अत एवोक्तं श्रीगुणरत्नकोशे–" श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रे " इति । आभाणकश्च–"प्रातर्द्यूतप्रसङ्गेन मध्याह्ने स्त्रीप्रसङ्गतः । रात्रौ चोरप्रसङ्गेन कालो गच्छति धीमताम् ॥" इति । उपायपुरुषकारयोर्मध्ये उपायस्वरूपं भारते दर्शितम्, पुरुषकारस्वरूपं श्रीरामायणे इति रहस्यपदवी । अतएव " कृपावानविकत्थनः " इत्याद्युक्तलक्षणधीरोदात्तरूपो रामः कुशलवाभ्यां रामायणं श्रुतवान् । रामायणस्य रामैकपरत्वे स्वेनैव सदसि श्रवणं न सङ्गच्छते, सीतापरत्वे तु संगच्छते; विरहिणः कामिनीकथा(चरित)श्रवणस्य स्वाभाव्यात् । एवं व्यञ्जनावृत्त्या सीतारामयोः प्रतिपादनमुक्त्वा शब्दवृत्त्या सिद्धमितिवृत्तमाह पौलस्त्येति । पुलस्त्यस्य गोत्रापत्यं पौलस्त्यः । गर्गादित्वाद्यञ् । तस्य वधः, यस्य फलत्वात्तेन व्यपदेशः । पौलस्त्यवधमधिकृत्य कृतो ग्रन्थः पौलस्त्यवधः । " अधिकृत्य कृते ग्रन्थे " इत्यण् । " लुबाख्यायिकाभ्यः प्रत्ययस्य बहुलम्" इति तस्य लुप् । यद्वाऽणि पुनरादिवृद्धौ तदेव रूपम् । वधप्रधानत्वादितिवृत्तस्य फलेन व्यपदेशः । तथाहि–पञ्च काव्यप्रतिपाद्यानि । तदुक्तम्–"बीजबिन्दुपताकाख्याः प्रकरीकार्यमित्यपि । अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः॥" इति । "आरम्भयत्नप्राप्त्याशानियताप्तिः फलागमः" इति पञ्चावस्थाः । तत्र " स्वल्पोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यते तथा । " तच्च बालकाण्डोक्तं विष्ण्ववतरणसीतापरिणयादि । " वस्तुनः सति विच्छेदे बिन्दुरच्छेदकारणम्" इति । यथा अयोध्याकाण्डे अभिषेकवृत्तान्तेन रावणवधरूपकार्यविच्छेदे प्राप्ते वनवासकरणमच्छेदकारणम् । " यदन्तरानुवृत्तं स्यात्सा पताकेति कीर्त्यते । " यथा सुग्रीववृत्तान्तः । " कथान्तरप्रसङ्गेन प्रकरी स्यात् प्रदेशभाक्" यथा विभीषणादिवृत्तान्तः। "समग्रफलसम्पत्तिः फलयोगो यथोचितः।" यथा रावणवधः । एवंफलत्वात्पौलस्त्यवधमिति निर्देशः। इत्येवेत्यस्यायमर्थः–पौलस्त्यवधव्याजेनाप्रधानरामचरितं प्रधानसीताचरितं कृतवानिति । यच्चकार तद्ग्रापयामासेति योजना, उत्तरश्लोके अगायतामित्यनुवादात् ॥७॥ तनि०–कृत्स्नं सीतायाश्चरितमिति सीतायाः प्रबन्धनायिकात्व

मुक्तम्, तस्यैवोपपादकं रामायणमिति कृत्स्नस्य सीताचरितत्वेऽपि रामायणव्यपदेशः रामचरितस्य तदुपयुक्तार्थत्वज्ञापनार्थः । रमाया इदं चरितं रामम्, तस्यायनमिति वा व्युत्पत्तिः रामशब्दस्य लक्ष्मीपत्यादिशब्दवत्स्त्रीपुरःसरनिर्देशः प्रबन्धस्य लक्ष्मीप्राधान्यज्ञापनार्थः, तेन सीतायाश्चरितमिति सुष्ठूक्तम् । हारिद्रमाक्षिकादिशब्दवदणूप्रत्ययोपपत्ति र्द्रष्टव्या । " हारिद्रभङ्गाय वितीर्णभङ्गम् " इति श्रीहर्षः । महत् नारायणकथाद्यपेक्षया महत्, सापराधेष्वपि रक्षणप्रवणत्वप्रतिपादनान्महत्त्वम् । " मातर्मैथिलि राक्षसी स्त्वयि तदैवार्द्रापराधास्त्वया रक्षन्त्या पवनात्मजाल्लघुतरा रामस्य गोष्ठी कृता । काकं तं च विभीषणं शरणमित्युक्तिक्षमौ रक्षतस्सा नः सान्द्रमहागसः सुखयतु क्षान्तिस्तवा कस्मिकी॥" इत्यभियुक्तोक्तेः । अनेन शरणागतिमन्त्रोपबृंहणत्वमस्य प्रबन्धस्य व्यञ्जितम् । अष्टाक्षरोपबृंहकश्रीभागवतादिषु हि भगवत्प्राधान्यम्, अतएव "नारायणकथा मिमाम्" इति तत्रोक्तम्॥ ७॥ यथोपदेशमगायतामित्याह—पाठ्येत्यादिश्लोकद्वयेन। पाठ्यं पाठः। भावे ण्यत् । केवलोच्चारणविशेषः। तदुक्तं भरतेन—"षडलङ्कार

पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम् । जातिभिः सप्तभिर्बद्धं तन्त्रीलयसमन्वितम् ॥ ८ ॥
रसैः शृङ्गारकारुण्यहास्यवीरभयानकैः । रौद्रादिभिश्च संयुक्तं काव्यमेतदगायताम् ॥ ९ ॥

संयुक्तं कलाकालसमन्वितम् । यत्पठ्यते नाटकादौ तत्पाठ्यमभिधीयते ॥ " इति । गेयं स्वरविशेषसमन्वितं गानम् । भावे यत् । तत्रोभयत्र । मधुरं श्राव्यम्, लोके कानिचित् पद्यानि पाठदशायां मधुराणि, न गानदशायाम् । अपराणि पुनर्गानदशायामेव, न पाठदशायाम्, इदं तूभयत्रापीत्यर्थः । इतःपरं त्रीणि क्रियाविशेषणानि । त्रिभिः प्रमाणैर्गानध्वनिपरिच्छेदकैः त्र्यश्रचतुरश्रमिश्रसंज्ञिकैः द्रुतमध्यविलम्बितैर्वान्वितं विशिष्टम् । सप्तभिर्जातिभि र्बद्धं शुद्धविकृतसङ्कीर्णादिष्वष्टादशसु जातिषु प्रधानभूताभिः सप्तभिर्बद्धम् । तदुक्तं शाण्डिल्येन—" सर्वगीतसमाधारो जातिरित्यभिधीयते । षाड्जी चैवाथ नैषादी धैवती पाञ्चमी तथा । माध्यमी चैव गान्धारी सप्तमी त्वार्षभी मता ॥ " इति । तन्त्रीलयसमन्वितम् तन्त्रीशब्देन तन्त्रीयुक्तवीणा लक्ष्यते, लयशब्देन तालवेणुमृदङ्गादीनामेककालविराम उच्यते, ताभ्यां समन्वितम् ॥ ८ ॥ पुनः काव्यविशेषणमाह—रसैरिति । आदिशब्देन बीभत्साद्भुत शान्ता गृह्यन्ते । रसो नाम स्थायीभावरूपचित्तवृत्त्याभिव्यक्तिः । स्थायीभावश्च नवविधः । तदुक्तम्—" रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्साविस्मयशमाः स्थायीभावाः प्रकीर्तिताः ॥ " इति । तदभिव्यक्तिश्च विभावादिभिः । तदुक्तम्—" विभावैरनुभावैश्च सात्त्विकैर्व्यभि

पाठ्ये गेये चेत्यारभ्य रामदेहात्तथापरावित्यन्तं कुलकम् । पाठ्ये गेये च मधुरम्—पाठ्यं स्वरूपोच्चारणमात्रम्, गेयं स्वरविशेषसमन्वितं गानम्, प्रमाणैस्त्रिभिरन्वितम्

चारिभिः । आनीयमानः स्वादुत्वं स्थायीभावो रसः स्मृतः ॥" इति । विभावादिस्वरूपं सङ्ग्रहेणोक्तम्–" कारणान्यथ कार्याणि सहकारिणि यानि च । रत्यादेः स्थायिनो लोके तानि चेन्नाटचकाव्ययोः ॥ विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः । व्यक्तः शतैर्विभावाद्यैः स्थायीभावो रसः स्मृतः ॥ " इति । तत्र शृङ्गारो द्विविधः । सम्भोगो विप्रलम्भश्चेति । " संयुक्तयोस्तु सम्भोगो विप्रलम्भो वियुक्तयोः " इत्युक्तेः । अस्य शृङ्गारादि सर्वरससंयुक्तत्वं प्रदर्श्यते । तत्र–" रामस्तु सीतया सार्द्धम् " इत्यारभ्य सीतापहरणवृत्तान्तपर्य्यन्तेन संभोगो दर्शितः । ततःपरेण विप्रलम्भः । विकृताचारवाक्याङ्गविकारवेषैर्धूर्तप्रलापैश्च हास्यरसो व्यज्यते, स च शूर्पणखादिवृत्तान्तेन सुगमः । इष्टवियोगादनिष्टसम्बन्धाद्वा करुणः, स च दशरथादिवृत्तान्ते । व्यवसायाविषादासंमोहादिभिर्वीरः, यथा लक्ष्मणादिवृत्तान्ते । पाटनताडनादिभी रौद्रः, यथा रावणादिवृत्तान्ते । विकृतक्रूर

## तौ तु गान्धर्वतत्त्वज्ञौ मूर्च्छनास्थानकोविदौ । भ्रातरौ स्वरसम्पन्नौ गन्धर्वाविव रूपिणौ ॥ १० ॥

दर्शनादिभिर्भयानकः, यथा मारीचादिवृत्तान्ते । कुत्सितदर्शनादिभिर्बीभत्सः, यथा विराधकबन्धादिवृत्तान्ते । विचित्रशिल्पवाक्यादिभिरद्भुतः, यथा रामरावणयुद्धादिषु । शान्तरसः श्रमणीवृत्तान्तादौ । अलं विस्तरेण । अत्र केचित् " शोकः श्लोकत्वमागतः " इत्युक्त्याऽस्मिन्प्रबन्धे शोकरस एव प्राधान्येनोच्यते, अन्ये तदङ्गतयेत्याहुः । अन्ये तु वीर एव प्रधानभूतः " पौलस्त्यवधः " इति काव्यनामकरणात् इत्याहुः । वयं तु ब्रूमः शृङ्गार एव प्रधानरसः, " सीतायाश्चरितं महत् " इत्युक्तेः । तथोक्तम्–" एको रसो भवेदङ्गी वीरशृङ्गारयोर्द्वयोः । अङ्गान्यन्ये रसाः सर्वे तस्य निर्वहणोद्यताः ॥" इति ॥ ९ ॥ अथ कुशलवयोर्गानसामर्थ्यमाह–तौ त्वित्यादिश्लोकद्वयेन । अस्यागायतामिति पूर्वेण सम्बन्धः । गान्धर्वं गानशास्त्रम् । " गान्धर्वं गानशासनम्" इति वैजयन्ती । तस्य तत्त्वं तात्पर्यार्थः, तत् जानीत इति गान्धर्वतत्त्वज्ञौ । मूर्छना वीणादिवादनम् । "वादने मूर्छनानना" इति वैजयन्ती । स्थानानि मन्द्रमध्यताररूपस्वरत्रयोत्पत्तिस्थानानि । यथोक्तं शाण्डिल्येन–" यदूर्ध्वं हृदयग्रन्थेः कपालफलकादधः । प्राणसञ्चरण स्थानं स्थानमित्यभिधीयते । उरः कण्ठश्शिरश्चेति तत्स्वरास्त्रिविधाः स्मृताः । मन्द्रं मध्यं च तारं च नाम तेषां यथाक्रमम् ॥ " इति । तेषु कोविदौ



प्रमाणानि गानध्वनिपरिच्छेदकानि त्र्यश्रचतुरश्रमिश्रसंज्ञिकानि द्रुतमध्यविलम्बितानि वा, जातिभिः सप्तभिर्बद्धम्-जातयस्तु शुद्धसङ्कीर्णविकृतरूपाः अष्टादश, तासु प्रधानभूताभिः षड्जादिभिः सप्तजातिभिर्बद्धम् ॥ ८ ॥ ९ ॥ गान्धर्वतत्त्वज्ञैः–गान्धर्वं नाम पदावस्थिततालपरिच्छेदयुक्तावधानेन प्रयुक्तषड्जादिस्वरसमु

तद्विषयसमीचीनज्ञानयुक्तौ, एतेन गानशास्त्रज्ञानतदनुगुणवीणादिवादनतदनुगुणोच्चारणनिपुणाविति दर्शितम् । भ्रातरावित्यनेन श्राव्यताहेतुसमस्वरत्व मुक्तम् । स्वरसम्पन्नौ शारीरसंयुक्तौ, अतएव रूपिणौ मनुष्यवेषधारिणौ गन्धर्वाविव स्थितौ । रूपलक्षणसम्पन्नौ नाटकलक्षणज्ञौ । गत्यर्था ज्ञानार्थाः । "रूपं स्वभावे शुक्लादौ सौन्दर्ये नाटके पशौ" इति भास्करः। गानकालिकाभिनयप्रकारज्ञावित्यर्थः। मधुरस्वरं यथा भवति तथा भाषितुं शीलमनयोरिति मधुरस्वरभाषिणौ । ताच्छील्ये णिनिः । केवलभाषणकालेऽपि मधुरस्वरौ, किमुत गानकाल इति भावः । उक्तसकलगुणसम्पत्तिमूलं रामपुत्रत्वमाह बिम्बादिति । रामदेहरूपात् बिम्बात् तथा उत्थितौ उद्भूतौ बिम्बौ प्रतिबिम्बाविव स्थितौ । यद्वा प्रतिमानिर्माणार्थं चातुर्येण निर्मिता प्रतिकृतिर्बिम्बः, रामदेहाख्यात् तस्मात् तथा उत्थितौ उत्कीर्णौ अपरौ बिम्बाविव स्थितौ । "प्रतिबिम्बे तत्कृतौ च प्रतिकृत्यां च मण्डले । लाञ्छनेऽपि च बिम्बोऽस्त्री"

रूपलक्षणसम्पन्नौ मधुरस्वरभाषिणौ । बिम्बादिवोत्थितौ बिम्बौ रामदेहात्तथापरौ ॥ ११ ॥ तौ राजपुत्रौ कात्स्न्र्येन धर्म्यमाख्यानमुत्तमम् । वाचोविधेयं तत्सर्वं कृत्वा काव्यमनिन्दितौ ॥ १२ ॥ ऋषीणां च द्विजातीनां साधूनां च समागमे । यथोपदेशं तत्त्वज्ञौ जगतुस्तौ समाहितौ । महात्मानौ महाभागौ सर्वलक्षणलक्षितौ ॥ १३ ॥

इति भास्करः । एवम्भूतौ । कुशलवावेतत्काव्यमगायतामिति सम्बन्धः ॥ १० ॥ ११ ॥ न केवलं तस्याध्ययनं धारणं प्रकाशनं च कृतमित्याह—तावित्यादि सार्द्धश्लोकद्वयमेकान्वयम्। क्रियाभेदात्तच्छब्दावृत्तिः । यद्वा राजपुत्रौ सन्तौ तौ मुनिपुत्रौ, मुनिपुत्रवेषधरावित्यर्थः । अनिन्दितौ यथोपदेशं गानेन निन्दानर्हौ । यथोपदेशं गुरूपदेशमनतिक्रम्य तत्त्वज्ञौ पाठशुद्धिज्ञौ । समाहितौ सावधानौ, कुत्राप्यंशे विस्मृतिरहिताविवत्यर्थः । महात्मानौ महाबुद्धी । महाभागौ एतादृशगुणहेतुभूतमहाभाग्यौ । " भागा भाग्यांशतुल्यांशाः " इति वैजयन्ती । सर्वलक्षणलक्षितौ लक्षितसर्वलक्षणौ, ज्ञातसर्वशब्दलक्षणा

ऽन्वयः । तदाह दत्तिलः-"पदस्थस्वरसङ्घातस्तालेन समितस्तथा । प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते ॥ " इति । मूर्च्छनास्थानकोविदाविति-मूर्च्छना षड्जादिस्वरसंपूर्णता । तदुक्तं शाण्डिल्येन-" यत्रैव सुस्वराः पूर्णा मूर्च्छना सेत्युदाहृता । " इति । स्थानम् ध्वनिविशेषोत्पत्तिस्थानम्, " उरः कण्ठः शिरश्चेति तत्पुनस्त्रिविधं भवेत् । मन्द्रं मध्यं च तारं च नाम तेषां यथाक्रमम् ॥ " इति । बिम्बादिवेति । प्रतिमानिर्माणार्थं चातुर्येण निर्मिताकारविशेषो बिम्बः, तस्माद्रामदेहाद् बिम्बात् रामदेहाख्याद्बिम्बात् उत्थितावुत्कीर्णौ अपरौ बिम्बाविव आकृतिविशेषाविव स्थितौ । अगायतां जगतुः, अभ्यासं चक्रतुः॥ १० ॥ ११ ॥ तौ राजपुत्राविति

वित्यर्थः । तौ कुशलवौ कात्स्न्येंन धर्म्यं धर्मादनपेतम् उत्तममाख्यानं पुरस्कृतकथनरूपं तद्रामायणाख्यं सर्वं काव्यं वाचोविधेयम् आवृत्तिबाहुल्येन वाग्वशवर्ति कृत्वा, ऋषीणां च साधूनां द्विजातीनां च समागमे सदसि जगतुः ॥ १२ ॥ १३ ॥ अथ तस्य काव्यस्य महाजनपरिगृहीतत्वं दर्शयितुमाह--तावित्यादि । तौ कुशलवौ कदाचित् रामाश्वमेधकाले । भावितात्मनां निश्चितधियाम् । समेतानाम् अश्वमेधे संमिलितानाम् । आसीनानां क्रियाकलापावसाने सुखमासीनानाम् ऋषीणां समीपस्थौ सन्तौ इदं काव्यमगायताम् ॥ १४ ॥ सामान्यतः काव्यप्रशंसामाह--तदिति । तत्काव्यं श्रुत्वा परं विस्मयमागताः बाष्पपर्याकुलेक्षणाः सर्वे मुनयस्तौ साधु साध्विति ऊचुः, प्रशशंसुरित्यर्थः ॥ १५ ॥ गातृप्रशंसामाह--त इति ।

तौ कदाचित्समेतानामृषीणां भावितात्मनाम् । आसीनानां समीपस्थाविदं काव्यमगायताम् ॥ १४ ॥
तच्छ्रुत्वा मुनयः सर्वे बाष्पपर्याकुलेक्षणाः । साधुसाध्विति तावूचुः परं विस्मयमागताः ॥ १५ ॥
ते प्रीतमनसः सर्वे मुनयो धर्मवत्सलाः । प्रशशंसुः प्रशस्तव्यौ गायमानौ कुशीलवौ ॥ १६ ॥
अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः । चिरनिर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितम् ॥ १७ ॥

धर्मवत्सलाः, निर्मत्सरा इत्यर्थः । ते सर्वे मुनयः प्रीतमनसः सन्तः गायमानौ अत एव प्रशस्तव्यौ प्रशंसितुमर्हौ कुशलवौ प्रशशंसुः ॥ १६ ॥ काव्यप्रशंसाप्रकारमाह--अहो इति । गीतस्य गानस्य माधुर्यमहो आश्चर्यम् । श्लोकानां तु माधुर्यं विशेषतः अहो आश्चर्यम्, गानतोऽपि श्लोकमाधुर्यम् अतिशयितमित्यर्थः । तमेव विशेषमाह चिरेति । एतत्काव्यप्रतिपाद्यं कथाशरीरं चिरनिर्वृत्तमपि बहुकालान्निष्पन्नमपि, प्रत्यक्षमिव प्रत्यक्षतयानुभूयमानमिव, दर्शितम् अनेन काव्येन बोधितम् । पाकविशेषात्सद्यः सर्वार्थं विशदतरमवगमयतीदं काव्यमित्यर्थः ॥ १७ ॥

सार्धश्लोकमेकं वाक्यम् । सुसमाहितौ तौ काव्यं वाचोविधेयं वाग्वशं कृत्वा एतदगायतामिति सम्बन्धः । सुसमाहितौ तौ राजपुत्रौ तत्र स्वेच्छया अगायतामित्यर्थः ॥ १२ ॥ १३ ॥ अथ कदाचिद्वाल्मीकिनियोगात रामयज्ञवाटगतऋषिसभादिषु ताभ्यां कृतगानप्रकारमाह--तौ कदाचिदिति । तौ कदाचित रामाश्वमेधकाले भावितात्मनां शुद्धचित्तानाम् ॥ १४ ॥ तदिति । तत गानम् ॥ १५ ॥ १६ ॥ अहो इति । चिरनिर्वृत्तमपि चिरातीतमपि ॥ १७ ॥

गातृप्रशंसाप्रकारमाह—प्रविश्येति । सहितौ समलयादियुक्तावित्यर्थः । तावुभौ कुशीलवौ । तदा मुनिजनश्रवणकाले, भावं सुष्ठु प्रविश्य, रतिहासादिभावो यथा प्रकाशितो भवति तथावगाह्येत्यर्थः । स्वरसम्पदा षड्जादिस्वरसम्पदा सम्पन्नम् अतएव मधुरं रमणीयं रक्तं रागयुक्तं च यथा भवति तथा अगायताम् ॥ १८ ॥ प्रशंसाजनितोत्साहौ पुनरतिशयेनागायतामित्याह—एवमिति । तपःश्लाघ्यैः श्लाघ्यतपस्कैः, अनसूयकैरिति यावत् । महात्मभिः महाबुद्धिभिः, विशेषज्ञैरिति भावः । तादृशैरेवमुक्तरीत्या प्रशस्यमानौ श्लाघ्यमानौ तौ संरक्ततरम् अतिशयेन समीचीनरागयुक्तम्

प्रविश्य तावुभौ सुष्ठु तदा भावमगायताम् । सहितौ मधुरं रक्तं सम्पन्नं स्वरसम्पदा ॥ १८ ॥
एवं प्रशस्यमानौ तौ तपःश्लाघ्यैर्महात्मभिः । संरक्ततरमत्यर्थं मधुरं तावगायताम् ॥ १९ ॥
प्रीतः कश्चिन्मुनिस्ताभ्यां संस्थितः कलशं ददौ । प्रसन्नो वल्कले कश्चिद्ददौ ताभ्यां महायशाः ॥ २० ॥
आश्चर्यमिदमाख्यानं मुनिना संप्रकीर्तितम् । परं कवीनामाधारं समाप्तं च यथाक्रमम् ॥ २१ ॥

अत्यर्थं भृशं मधुरं च यथा भवति तथा तावगायताम् । क्रियाभेदात्तच्छब्दावृत्तिः ॥ १९ ॥ अथ प्रीतिकारितयथोचितपारितोषिकप्रदानमाह—प्रीत इति । संस्थितः उत्थितः । "संस्था स्थितौ व्यवस्थायाम्" इति भास्करः । कलशं जलाहरणपात्रम्, प्रीत्यतिशयेनोत्थाय ददावित्यर्थः । महायशाः गानशास्त्रविषयकीर्तिमान्, गीतितारतम्यज्ञ इत्यर्थः ॥ २० ॥ एवं मुनिजनप्रशंसामुक्त्वा तदितरसकलजनप्रशंसामाह—आश्चर्यमित्यादिना, श्लोक

ऋषिकृतप्रशंसानन्तरं पुनस्तयोर्गानप्रकारमाह—प्रविश्येति । भावं प्रविश्य सुष्ठ्वगायतामिति सम्बन्धः । भावपुरस्कारेण काव्यकर्तुरभिप्रायं हृदि निधाय शृङ्गारादिरसाविर्भावो यथा भवति तथा अगायतामित्यर्थः । मधुरं पाठतो गानतश्च, अत एव रक्तं रञ्जनं स्वरसंपदा ॥१८॥ एवमिति । एवमुक्तप्रकारेण तैर्मुनिभिः प्रशस्यमानौ तौ संरक्ततरं समीचीनरागयुक्तम् अगायतामिति सम्बन्धः ॥ १९ ॥ श्रीरामायणश्रवणजनितानन्दानुभवपरवशानां मुनीनां चेष्टामाह—प्रीत इति । संस्थितः-उत्थितः ॥ २० ॥ आश्चर्यमिति । आश्चर्यमित्यादिश्लोकत्रयमेकं वाक्यम् । कवीनामाधारमालम्बनभूतम् यथाक्रमं समाप्तं समाहितम् अभिगीतम् । अभिः पूजार्थे । आयुष्यमायुष्करम्,

१ महायशाः । अन्यः कृष्णाजिनं प्रादाद्यज्ञसूत्रमथापरः । कश्चित्कमण्डलुं प्रादान्मौञ्जीमन्यो महामुनिः ॥ वृसीमन्यस्तदा प्रादात्कौपीनमपरो मुनिः । ताभ्यां ददौ तदा हृष्टः कुठारमपरो मुनिः ॥ काषायमपरो वस्त्रं चीरमन्यो ददौ मुनिः । जटाबन्धनमन्यस्तु काष्ठरज्जुं मुदान्वितः ॥ यज्ञभाण्डमृषिः कश्चित्काष्ठभारं तथापरः । औदुम्बरीं वृसीमन्ये स्वस्ति केचित्तदावदन् ॥ आयुष्यमपरे प्राहुर्मुदा तत्र महर्षयः । ददुश्चैव वरान् सर्वे मुनयः सत्यवादिनः ॥ इत्यधिकः पाठः ॥

त्रयमेकं वाक्यम् । आख्यानं प्रबन्धविशेषः । "कथा त्वाख्यायिकाख्यानम्" इति यादवः । इतिहास इत्यर्थः । मुनिना वाल्मीकिना संप्रकीर्तितं सम्यक् लक्षणवत्तया प्रकर्षेण विस्तरेण कीर्तितं कथितम् । कवीनां परमाधारम्-"काव्यं काव्यस्य लक्षणम्" इत्युक्तरीत्या कवीनां काव्यनिर्माणमूलमित्यर्थः । यथाक्रमं क्रममनतिक्रम्य समाप्तम्, मध्येऽविच्छिन्नमित्यर्थः । यथाकृतमिति पाठे-यथा कर्तुमारब्धं तथा समाप्तमित्यर्थः । इदमाश्चर्यमाश्चर्यावह मित्यर्थः॥२१॥प्रबन्धं प्रशस्य गातारौ प्रशंसति-अभिगीतमिति । हे सर्वगीतेषु कोविदौ समर्थौ! युवाभ्याम् आयुष्यं आयुर्वर्द्धकम्, पुष्टिजनकं सत्यपि आयुषि काइर्ये तस्याकिंचित्करत्वात् पुष्टिकरम्, सर्वाभिः श्रुतिभिः स्वरारम्भकावयवैर्मनोहरम् । तदुक्तम्-"प्रथमश्रवणाच्छब्दः श्रूयते यः स्वमात्रतः । सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा॥" इति । इदं गीतम् अभिगीतं शोभनं गीतम् । अभिः पूजायाम् । यद्वा इदं गीतं सर्वगीतेषु अभिगीतमित्यन्वयः २२

अभिगीतमिदं गीतं सर्वगीतेषु कोविदौ । आयुष्यं पुष्टिजनकं सर्वश्रुतिमनोहरम् ॥ २२ ॥
प्रशस्यमानौ सर्वत्र कदाचित्तत्र गायकौ । रथ्यासु राजमार्गेषु ददर्श भरताग्रजः ॥ २३ ॥
स्ववेश्म चानीय ततो भ्रातरौ च कुशीलवौ । पूजयामास पूजार्हौ रामः शत्रुनिबर्हणः ॥ २४ ॥
आसीनः काञ्चने दिव्ये स च सिंहासने प्रभुः । उपोपविष्टः सचिवैर्भ्रातृभिश्च परंतपः ॥ २५ ॥

प्रशस्यमानाविति । अस्यादावितिशब्दोऽध्याहार्यः । तत्र यज्ञवाटे रथ्यासु राजमार्गेषु च सर्वत्रेत्थं प्रशस्यमानौ तौ कदाचिद्भरताग्रजो रामो ददर्श, भरत मुखेन ददर्शेत्यर्थः ॥ २३ ॥ स्वेति । ततो दर्शनानन्तरं शत्रुनिबर्हणो रामः पूजार्हौ स्वप्रबन्धगातृत्वेन श्लाघार्हौ भ्रातरौ कुशीलवौ । तुल्यवयोरूपादि मत्त्वेनाश्चर्यकरौ । स्ववेश्म स्वशालागृहमानीय । नयतिर्द्विकर्मकः । पूजयामास श्लाघयामास ॥ २४ ॥ अथास्य प्रबन्धस्य प्रबन्धनायकभूतमहापुरुष परिग्रहमाह-आसीन इत्यादिना, द्वयोरेकान्वयः । प्रभुः स्वामी । तदनुरूपतया काञ्चने सौवर्णे दिव्ये स्वर्गाद्दशरथेनानीते सिंहासने आसीनः । सचिवैः



पुष्टिजनकम् अभ्युदयकारणम्, आश्चर्यमाश्चर्यकरम्, इदमाख्यानं श्रीमद्रामायणम् । हे सर्वगीतेषु कोविदौ! युवाभ्यां सर्वश्रुतिमनोहरम्-श्रुतयः कान्ताप्रभृतयः ताभि मनोहरं यथा तथा गीतम् । रथ्यासु राजमार्गेषु एवं सर्वत्र प्रशस्यमानौ गायकौ कुशीलवौ कदाचिद्भरताग्रजः श्रीरामः ततः रथ्यादिषु ददर्शेत्यन्वयः ॥ २१-२४ ॥ आसीन इत्यादि श्लोकत्रयमेकं वाक्यम् । सिंहासने आसीनः स रामः आत्मरूपसम्पन्नौ आत्मसदृशौ तौ कुशलवौ दृष्ट्वा लक्ष्मणादीन् अनयोर्देववर्चसोः विचित्रार्थ

मन्त्रिभिर्भ्रातृभिश्च उपोपविष्टः, परिवृत इत्यर्थः। "प्रसमुपोदः पादपूरणे" इति द्विरुक्तिः। परं शत्रुं तापयतीति परन्तपः। "द्विषत्परयोस्तापेः" इति खच्। "खचि ह्रस्वः" इत्युपधाह्रस्वः। "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः। अनेन व्यासङ्गरहितत्वं सूचितम्। नियतः अश्वमेधे दीक्षितः स रामः रूपसम्पन्नौ भ्रातरौ दृष्ट्वा लक्ष्मणादीनुवाच॥२५॥२६॥ श्रूयतामिति। देववर्चसोः देवतुल्यतेजसोः, रूपसम्पत्तिरपि गीतिरस्यतासामग्रीति भावः। अनयोः कुशीलवयोः सम्बन्धि विचित्रार्थपदम्। इदमाख्यानं श्रूयतामित्युक्त्वेत्युपस्कार्यम्। सम्यग्गायिनौ तावचोदयत्, गानाय प्रेरयामासेत्यर्थः॥२७॥ ताविति। सर्वाणि क्रियाविशेषणानि। मधुरं पाठतो गानतश्च मनोहरम्। रक्तं रागवत्। स्वञ्चितः सुतरां पूजितः आयतो दीर्घः निस्वन आलापो यस्मिन्। तन्त्रीलयवत् तन्त्र्यारोपलयाभ्यां युक्तमत्यर्थं भृशं विश्रुतार्थं विस्पष्टार्थम्॥ २८॥ ह्लादयदिति। सर्वगात्राणि सर्वावयवान् हृदयानि गात्रान्तरवर्तीनि

दृष्ट्वा तु रूपसम्पन्नौ तावुभौ नियतस्तदा। उवाच लक्ष्मणं रामः शत्रुघ्नं भरतं तथा ॥ २६ ॥ श्रूयतामिदमाख्यान मनयोर्देववर्चसोः। विचित्रार्थपदं सम्यग्गायिनौ तावचोदयत् ॥ २७ ॥ तौ चापि मधुरं रक्तं स्वञ्चितायतनिःस्वनम्। तन्त्रीलयवदत्यर्थं विश्रुतार्थमगायताम् ॥ २८ ॥ ह्लादयत् सर्वगात्राणि मनांसि हृदयानि च। श्रोत्राश्रय सुखं गेयं तद्बभौ जनसंसदि ॥ २९ ॥ इमौ मुनी पार्थिवलक्षणान्वितौ कुशीलवौ चैव महातपस्विनौ। ममापि तद् भूतिकरं प्रवक्ष्यते महानुभावं चरितं निबोधत ॥ ३० ॥

मनोधिष्ठानानि मनांसि च ह्लादयत् सुखयत्। श्रोत्राश्रयसुखम्—श्रोत्रं कर्णशष्कुली, तदाश्रयं श्रोत्रेन्द्रियं तत्सुखं तत्सुखकरम्। तत्कुशलवकृतं गेयं गानम्। भावे यत्। जनसंसदि सभायाम्। जनशब्दो मण्डपव्यावृत्त्यर्थः। बभौ प्रचकाशे, अजृम्भतेत्यर्थः॥ २९॥ उक्तमेवार्थं वृत्तान्तरेण सर्गान्ते संगृह्णाति—इमावित्यादिश्लोकद्वयेन। इमौ मुनिवेषावपि पार्थिवलक्षणान्वितौ। कुशीलवावपि गायकावपि महातपस्विनौ महान्तौ तपस्विनौ भवतः। तत्तस्मात् ममापि प्रियाविरहकृशस्यापि, भूतिकरं श्रेयस्करम्, धारकमित्यर्थः। महाननुभावो यस्य तत् महानुभावं चरितम् सीताचरित्रमित्यर्थः। प्रवक्ष्यते

पदं विचित्रा अर्थाः पदानि च यस्मिन् तत् इदमाख्यानं श्रूयतामित्युवाच। गायकौ कुशलवौ च समचोदयत्। गायतामिति शेषः॥२५–२७॥ ताविति। स्वचित्ता यतनिस्वनं स्वेच्छानुरूपस्वरायामं, विश्रुतार्थं प्रसिद्धार्थम्॥ २८॥ ह्लादयदिति। मनसोऽधिष्ठानं हृदयम्। श्रोत्राश्रयसुखं श्रोत्रेन्द्रियसुखम्॥ २९॥ महता प्रबन्धेन

१ गायकौ समचोदयन्। २ स्वचित्तायत। ३ प्रचक्ष्यते। इति च पाठान्तरम्॥

नाभ्यां व्यक्तं पठिष्यते, तन्निबोधत तच्छृणुतेत्यर्थः । अत्र पौराणिकाः—वक्तारौ महात्मानौ वक्ष्यमाणं च मच्चरितं महानुभावम् अतस्तन्निबोधतेत्याहुः । एवं ह्यात्मप्रशंसा स्यात् सा च न युक्ता, अयं हि रामो धीरोदात्तः । तस्य चाविकत्थन इति लक्षणम् । तस्य च स्वविषयप्रबन्धश्रवणं महानुभावत्वोक्तिश्च न कथमप्युपपन्नम् । लोके हि क्षुद्रोऽपि कश्चित्स्वविषयप्रबन्धश्रवणे लज्जते । अतोऽन्यथा योजयन्त्याचार्याः—नायं प्रबन्धो रामचरित्रपरः, किन्तु सीताचरित्रपरः 'सीतायाश्चरितं महत्' इति पूर्वमुक्तत्वात् । "श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रे" इत्यभियुक्तवचनात् । स्त्रीप्रसङ्ग इत्याभाणकश्च । तद्विषयस्तु प्रबन्धो रामेण श्राव्य एव । विरहिणो हि कान्ताचरित्रगाथाः शृण्वन्ति श्रावयन्ति च । अतएव 'ममापि भूतिकरम्' इत्युक्तम् । विरहिणोऽपि

ततस्तु तौ रामवचःप्रचोदितावगायतां मार्गविधानसम्पदा । स चापि रामः परिषद्गतः शनैर्बुभूषयासक्तमना बभूव ह ॥ ३१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुर्थः सर्गः ॥ ४ ॥

मे सत्ताप्रदमित्यर्थः । यद्वा "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इत्युक्तरीत्या ममाप्यतिशयावहमित्यर्थः । महानुभावमित्यस्य च प्रणयिन्यसन्निधानदशायामपि धारकमित्यर्थः । यद्वा महानुभावम् "लघुतरा रामस्य गोष्ठी कृता" इत्युक्तरीत्या स्वविषये निरवधिकापराधकारिराक्षसीरक्षणेन स्वस्मादप्यतिशयितवैभवमित्यर्थः । यद्वा "दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम्" इति मयोक्तम् । अनया तु "न कश्चिन्नापराध्यति" इति । अतो मत्तोऽप्युत्कृष्टचरितमित्यर्थः । यद्वा स्वचरणे निगडं बद्ध्वा देवस्त्रीचरणनिगडविच्छेदकारितया मत्तोऽप्याश्रितरक्षणेऽतिशयितत्वरायुक्तमित्यर्थः । यद्वा पितृत्वप्रयुक्तहितपरतया मयि सापराधविषये कलुषधियि मातृत्वप्रयुक्तवात्सल्येन मामपि क्षमापयन्त्याश्रितत्वेन महानुभावमित्यर्थः ॥ ३० ॥

तनि०—मुनी मननशीलौ । पृथिव्याः पतिः पार्थिवः तस्य लक्षणान्यसाधारणावयवसंस्थानविशेषाः तैरन्वितौ कुशीलवौ गायकौ इमावतिबालौ क्व मुनित्वं क्व राज्यार्हता क्व महातपस्वित्वं क्व गायकत्वं क्वेमे गुणाः क्वातिबालाविमाविति विरोधालङ्कारध्वनिः, गायमानौ चापि महातपस्विनावित्याश्चर्यालङ्कारध्वनिश्च । तपस्विनौ कुशीलवावित्यनेन गानस्य वंशपरम्परागतत्वाभावेन तत्प्रयुक्ताहङ्काराद्यभावः केवलेश्वरप्रसादसिद्धत्वं च व्यञ्जितम् । ममापि भूतिकरम् उभयविभूतिनायकस्यापि भूतिकरं सम्पत्करम्, किमुत अन्येषाम् । यद्वा तदभावे ममापि सत्ता न निर्वहतीत्यर्थः । महानुभावम् महामहिमवत् । ममापि महानुभावमिति, "सो अङ्ग वेद यदि वा न वेद" इत्युक्तरीत्या दुर्विज्ञेयमहिमयुक्तमित्यर्थः ॥ ३० ॥ तत इति । ततः श्रोतृप्रोत्साहनानन्तरं रामस्य वचसा प्रचोदितौ न तु चेष्टयेत्यादरातिशयोक्तिः । तौ कुशीलवौ । उक्तमर्थं श्लोकद्वयेन निगमयति—इमावित्यादि । कुशीलवौ गायकौ तथापि महातपस्विनौ । ममापि भूतिकरं श्रेयस्करं चरित्रम् एनाभ्यां प्रवक्ष्यते तन्निबोधत ॥३०॥ तत

मार्गविधानसंपदा--देशी मार्गश्चेति द्वौ गानप्रकारौ । तत्र मार्गः सार्वत्रिकः, देशी काचित्कः । तयोर्मध्ये मार्गनिर्वाहसामग्र्या अगायताम् । स रामोऽपि शनैः परिषद्भूतः झटित्युत्थाय गमने परिषदोऽप्युत्थानाद्रसभङ्गो भविष्यतीति मन्दंमन्दं सिंहासनादवतीर्य परिषदं प्राप्तः । "एकः स्वादु न भुञ्जीत " इति न्यायादुन्नतसिंहासनावस्थानेन स्वात्मानमेकाकिनं मन्यमानः सभामध्यगतः । बुभूषया अनुबुभूषया, श्रोत्रसुखानुभवेच्छयेत्यर्थः । यद्वा बुभूषया भवितुमिच्छया, कान्ताकथाश्रवणेन स्वसत्तालाभेच्छयेत्यर्थः । सक्तमनाः गानश्रवणासक्तचित्तः बभूव ह । स्वशिष्योक्तप्रबन्धश्रवणे रामः स्वयमेव सादरं प्रसक्त इति मुनिस्तुष्यति । अत्र श्लोकद्वये वंशस्थवृत्तम् । " जतौ तु वंशस्थमुदीरितं जरौ " इति लक्षणात् ॥ ३१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥

इदं च तपःस्वाध्यायेत्यारभ्य सर्गचतुष्टयं महत्परिग्रहसिद्ध्यै उक्तवैलक्षण्यत्रयप्रतिपादनपरत्वेन प्रबन्धोपोद्घातत्वात् श्रीरामायणान्तर्गतं कथाशरीराननुप्रविष्टप्रस्तावनाग्रन्थवत् । ननु रामायणनिर्माणानन्तरभाविनः कथाशरीरस्यास्य कथं तत्पूर्वभावः ? इति चेत् न; अनन्तरभावित्वेऽपि त्रिकालज्ञेन महर्षिणा प्रथमं तन्निर्माणसम्भवात् । नन्वात्मप्रशंसापरमिदं सर्गत्रयं कथमृषिः स्वयमेव वक्तुमर्हति ? इति चेत् न; अन्यापरिज्ञातस्यैतस्य वृत्तान्तस्य प्रेक्षावत्प्रवृत्त्यर्थमादाववश्यं वक्तव्यत्वात् । यद्वा सर्गत्रयमिदं केनाचित् वाल्मीकिशिष्येण रामायणनिर्वृत्त्यनन्तरं निर्माय वैभवप्रकटनाय सङ्गमितम् यथा याज्ञवल्क्यस्मृत्यादौ; तथैव तत्र विज्ञानेश्वरेण व्याकृतम् । नन्वेतस्य सर्गत्रयस्य रामायणादित्वे कुशलवाभ्यां एतद्गाने प्रथमं क्रियमाणे तौ रामेणादावेव स्वपुत्राविति परिज्ञातौ स्याताम्, तथा च तदैव सीतानयनापत्तिः । " बिम्बादिवोत्थितौ बिम्बौ रामदेहात्तथापरौ । तौ राजपुत्रौ " इत्यादिना हि रामपुत्रत्वमनयोः सूच्यते । तस्मादिदमसङ्गतमिति चेन्न; सीतापुत्रत्वादेरत्राकथनात् । रामसादृश्यमात्रस्य राजपुत्रान्तरेष्वपि संभवात् । अयं च प्रबन्धो वेदोपबृंहणरूपो वेदान्तार्थमुपबृंहयति । "प्रायेण पूर्वभागार्थो धर्मशास्त्रेण कथ्यते । इतिहासपुराणाभ्यां वेदान्तार्थः

इति । मार्गविधानसम्पदा, मार्गश्च देशी चेति गानप्रकारौ द्वौ । तत्र मार्गस्सार्वत्रिकः, देशी काचित्कः देशविशेषनैरपेक्ष्येण शास्त्रप्रतिपादितो मार्गस्सार्वत्रिकरागप्रकारः । तयोर्मध्ये मार्गनिर्वाहसामग्र्या अगायताम् । स रामः बुभूषया श्रवणानन्दानुभवेच्छया आसक्तमना बभूवेत्यर्थः ॥ ३१ ॥

इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां चतुर्थः सर्गः ॥ ४ ॥

त्रिषम०--प्राकृतावलम्बि गानं देशी, संस्कृतावलम्बि तु मार्गः । स्वयं श्रवणे चोत्तरोत्तरं लोकानामुपदेशत्वबुद्ध्या श्रवणे प्रवृत्तौ तस्य स्थिरत्वं भवतीति तदाशयः ॥ ३१ ॥

प्रकाश्यते" इति वचनात् । तत्र "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म " इति श्रुतम् । तत्किं जगज्जन्मादिकारणं ब्रह्म विष्णुः उत ब्रह्मरुद्रादिष्वन्यतमः ? इत्यपेक्षायां रामत्वेनावतीर्णो विष्णुरेव वेदान्तवेद्यं परब्रह्मेत्युच्यते । "उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ " इत्युक्तषड्विधतात्पर्यलिङ्गसम्भवात् । तथाहि, उपक्रमं तावत् "को न्वस्मिन् " इत्यादिना वेदान्तोदितसकलगुणसम्पन्नः किं विष्णुरुतान्यो ब्रह्मादिष्वन्यतम इति वाल्मीकिना पृष्टे " इक्ष्वाकुवंशप्रभवो रामः " इत्यादिना रामत्वेनावतीर्णो विष्णुरेवेति नारदेनोक्तम् । उपसंहारे च चतुर्मुखः प्राह—" तवाहं पूर्वके भावे पुत्रः परपुरञ्जय । संक्षिप्य च पुरा लोकान् मायया स्वयमेव हि ॥ महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः । पद्मे दिव्येऽर्कसङ्काशे नाभ्यामुत्पाद्य मामपि । प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम् ॥ " इत्यादिना सर्वजगत्कारणप्रजापतिजनकत्वेन सकलजगत्कारणं ब्रह्म विष्णुरेवेत्युक्तम् । अभ्यासश्च तस्यैव दृश्यते । बालकाण्डे—" एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः । शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः ॥" इति जगत्कारणत्वमुक्तम् । तत उत्तरत्र देवाः—"त्वं गतिः परमा देव सर्वेषां नः परंतप । " इत्याहुः, तेन परत्वासाधारणं सर्वशरण्यत्वमुक्तम् । तत उत्तरत्र—" ततो देवर्षिगन्धर्वाः सरुद्राः साप्सरोगणाः । स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनम् ॥ " इति सर्वस्तुत्यत्वमुक्तम् । ततो विश्वामित्रः—" अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् । वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः ॥ " इति । " वेदाहमेतं पुरुषं महान्तम् । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन " इति श्रुत्युक्तरीत्या महापुरुषत्वं तपोबलं विना तस्य दुर्ज्ञेयत्वं चाह । सीताविवाहे वसिष्ठोऽपि—" अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः । तस्मान्मरीचिः सञ्जज्ञे मरीचेः काश्यपः सुतः ॥" इति सर्वमूलकारणत्वं प्राचीकशत् । परशुरामोऽपि "अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा ॥" इति सर्वाधिकत्वं निदर्शितवान् । अयोध्याकाण्डे—" स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः । अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः ॥ " इति सनातनत्वमुक्तम् । उत्तरत्र " आकाशप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः । " इत्याकाशशब्देन स्वयंप्रकाशत्वं व्यापकत्वं चाह । आरण्यकाण्डे मारीचेन—" अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा " इति परिच्छेदातीतमहिमत्वमुक्तम् । किष्किन्धाकाण्डे तारावचनम्—" त्वमप्रमेयश्च दुरासदश्च जितेन्द्रियश्चोत्तमधार्मिकश्च । अक्षय्यकीर्तिश्च विचक्षणश्च क्षितिक्षमावान् क्षतजोपमाक्षः ॥ निवासवृक्षः साधूनामापन्नानां परा गतिः । आर्त्तानां संश्रयश्चैव यशसश्चैकभाजनम् ॥ ज्ञानविज्ञानसंपन्नो निदेशे निरतः पितुः । धातूनामिव शैलेन्द्रो गुणानामाकरो महान् ॥ " इति ।

अनेन च ज्ञानानन्दादिसमस्तकल्याणगुणाकरत्वमुक्तम् । सुन्दरकाण्डे "ब्रह्मा स्वयम्भूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा । इन्द्रो महेन्द्रः सुरनायको वा त्रातुं न शक्ता युधि रामवध्यम् ॥" इति सर्वसंहर्तृत्वं द्योतितम् । उत्तरत्र "किं वैष्णवं वा कपिरूपमेत्य रक्षोविनाशाय परं सुतेजः । अनन्तमव्यक्तमचिन्त्यरूपं स्वमायया सांप्रतमागतं वा ॥" द्वितीयो वाकारोऽवधारणार्थः । अनेनानन्तरूपत्वमुक्तम् । युद्धकाण्डे—विष्णुरेव कथं जगत्कारणम् ? अन्येषामपि "हिरण्यगर्भस्समवर्तताग्रे" "यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः ।" "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिना तत्त्वश्रवणात् इत्याशङ्क्य तेभ्यः सर्वेभ्यः श्रेष्ठत्वप्रतिपादनाद्धिरण्यगर्भशिवेन्द्रादिशब्दाः रादब्रह्मात्मशब्दवद्विष्णुपरा एवेत्याशयेनोच्यते—"व्यक्तमेष महायोगी परमात्मा सनातनः । अनादिमध्यनिधनो महतः परमो महान् ॥ तमसः परमो धाता शङ्खचक्रगदाधरः । श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ॥" इति । अनेन च परमात्मत्वश्रियःपतित्वादिकमुक्तम् । उत्तरत्र ब्रह्मा—"भवान्नारायणो देवः श्रीमांश्चक्रायुधो विभुः । एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ॥" इत्यादि । अनेन तस्य नारायणशब्दवाच्यत्वमुक्तम् । अपूर्वता च प्रमाणान्तराप्राप्तिः, न हि परतत्त्वस्य विष्णुत्वं प्रमाणान्तरादवगन्तुं शक्यम् । फलं च भगवत्सालोक्यादिकमित्यन्ते सुव्यक्तम् । अर्थवादोपपत्ती च बालकाण्डे दर्शिते । "इमे द्वे धनुषी श्रेष्ठे" इत्यादिनार्थवादमुक्त्वा "जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः । अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा ॥" इत्यादिना ब्रह्मप्रमुखैस्सर्षिगणैर्देवैर्मीमांसापूर्वकं विष्णुरुद्रयोर्मध्ये विष्णोराधिक्यनिर्णयोक्तेरुपपत्तिरुक्ता । न च वाच्यम्—"मेनिरे" इति वचनात् "महाशूरतरस्तथा" इति वरदानकृतमिदमाधिक्यमिति । तथात्वे तस्य रोषानुपपत्तेः । "धनू रुद्रस्य संक्रुद्धः" इति ह्युक्तम् । किं चागस्त्याश्रमे "स तत्र ब्रह्मणः स्थानं विष्णोः स्थानं तथैव च । अग्नेः स्थानं महेन्द्रस्य स्थानं चैव विवस्वतः । सोमस्थानं भगस्थानं स्थानं कौबेरमेव च ॥" इत्यादिना ब्रह्मादीनाम् अगस्त्योपास्यत्वमुक्त्वा रुद्रस्य तदकथनादपूज्यत्वमुच्यते । न चेमान्यगस्त्यपूजकब्रह्मादिस्थानानीति वाच्यम्, असम्भवात् । "अत्र देवाः सगन्धर्वास्सिद्धाश्च परमर्षयः । अगस्त्यं नियताहारं सततं पर्युपासते ॥" इति वचनं ब्रह्मादिव्यतिरिक्तकेवलदेवविषयम् । किञ्च यथा गृहस्थस्य गृहे देवगृहसत्त्वे गृहस्थस्यैव पूजकत्वं स्वरसतः प्रतीयते, एवमेवात्रापि नापलापावकाशः । किञ्च दक्षयज्ञवधे—"यस्माद्भागार्थिनो भागः कल्पितो नैव मे सुराः । वराङ्गानि महार्हाणि धनुषा शातयामि वः ॥" इति रुद्रस्य यज्ञभागाकल्पनादपूज्यत्वादत्र तस्य स्थानानिर्देशः । ननु यदि विष्णुः परा देवता कथं तर्हि तस्य रामत्वेन जन्म ? इति चेन्न; "अजायमानो बहुधा विजायते" इत्युक्तरीत्या लोकानुजिघृक्षाकृतं तदिति चोद्यानवकाशात् । मोक्षप्रदत्वं च परदेवतासाधारणम् । अत्रोच्यते—"या गति

यज्ञशीलानामाहिताग्नेश्च या गतिः । अपरावर्तिनां या च या च भूमिप्रदायिनाम् । मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् ॥" इति । अत्रापरावर्तित्वं पुनरावृत्तिशून्यत्वम्, मुक्तिरिति यावत् । "न च पुनरावर्तते" इति श्रुतेः । न च रणादपलायनमुच्यत इति वक्तुं शक्यते, तस्य स्वतःसिद्धत्वेन तत्फलस्यानुग्राह्यत्वात् । तथा च यज्ञादिफलावधिभूतां मुक्तिं प्राप्नुहीत्यर्थः । अतएव नृसिंहपुराणे–"मत्कृते निधनं यस्मात्त्वया प्राप्तं द्विजोत्तम । तस्मात्त्वं मत्प्रसादेन विष्णुलोकमवाप्स्यसि " इति । एवमुपक्रमादिषड्विधतात्पर्यलिङ्गैर्वेदान्तवेद्यं परतत्त्वं विष्णुरेवेति श्रीरामायणेनोपबृंह्यते । एवमेवान्ते ब्रह्माप्याह–" अस्याः परिषदो मध्ये यद्ब्रवीमि निबोध तत् । एतदेव हि काव्यं ते काव्यानामुत्तमं श्रुतम् ॥ सर्वं विस्तरतो राजन् व्याख्यास्यति न संशयः । आदिकाव्यमिदं राम त्वयि सर्वं प्रतिष्ठितम् । न ह्यन्योऽर्हति काव्यानां यशोभाग्राघवादृते ॥" इति । एवंस्थिते यत्केनचिन्नवीनेन जल्पितं व्यञ्जनावृत्त्या शिवपरं रामायणमिति तदपहास्यमेव, न ह्यन्योऽर्हतीति प्रतिषिद्धरुद्रस्य प्रतिपाद्यकोटयन्तर्भाववचनस्य केवलबालिशप्रलपितत्वात् । यच्च रामेणादित्योपस्थानादिकं कृतं तत्सर्वं विश्वामित्राद्युपासनवन्मनुष्यभावनानुसारेणेति विज्ञेयम् । विशेषतश्च तत्र तत्र वक्ष्यामः । "श्रीविष्णोः प्रथमे काण्डे जगज्जननहेतुता । द्वितीये स्थितिहेतुत्वं तृतीये मोक्षदायिता । चतुर्थे गुणसम्पत्तिः पञ्चमे सर्वहन्तृता । षष्ठे वेदान्तवेद्यत्वं सप्तमे स्रष्टृहेतुता । एवं विष्णुः परं तत्त्वं रामात्मेति सुनिश्चितम् ॥ श्रीशैलपूर्णयतिशेखरेण श्रुताच्च पुराष्टादशधा प्रभिन्नात् । रामायणार्थान् क्रमशः करोमि व्यक्ताञ्छठारातिगुरूपदिष्टान् ॥" गत एकोऽर्थः ॥ १ ॥ द्वितीयस्तु–एवम्भूतं परतत्त्वं केन प्राप्यत इत्याकाङ्क्षायां तत्प्राप्त्युपायभूतां शरणागतिं "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये " इति श्रुतिमुपबृंहयन् वाल्मीकिरस्मिन् रामायणे उपक्रमप्रभृत्युपसंहारान्तमनेकाधिकारिफलविशेषादिप्रदर्शनमुखेनाखिलफलसाधनतया प्रतिपादयति । तथाहि–उपक्रमे तावत् " एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः । शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः ॥" इति सर्वशेषी सर्वेश्वरो रक्षापेक्षाप्रतीक्षो रक्षणसमयो लब्ध इति समुद्भूतोज्ज्वलया रक्षणोपकरणैः सह सन्नद्धोऽभ्येत्य तस्थौ, तदा " देवगन्धर्वयक्षाश्च ततस्त्वां शरणं गताः " इति रावणवधरूपफलार्थं ब्रह्मरुद्रादिदेवगणशरणागतिरुक्ता । ततस्त्रिशङ्कुशुनःशेफादिवृत्तान्तेषु विश्वामित्रादिव्यापारविशेषानुदर्श्य शरणागतरक्षणं परमो धर्मः समर्थकारुणिकविषया शरणागतिः फलाविनाभूतेति प्रदर्शितम् । ततश्च "स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः । सीतामुवाचातियशा राघवं च महाव्रतम् ॥ " इति पुरुषकारपुरस्करणपुरःसरा शरणागतिः कार्येत्युदीरितम् । ततो भरतः " शेष्ये पुरस्ताच्छालाया यावन्मे न प्रसीदति " इति रामाभिषेकफलाय शरणवरण

मकरोत् । अत्र रावणवधाय कृतदेवगणप्रपत्तिफलदानाय निर्गमनात् तदानीं रामस्स्वप्रतिनिधिभूतपादुकाप्रदानेन तत्तत्फलं कृत्वा पश्चात् देवगणमनोरथपूरणानन्तरमात्मानमभ्यषिञ्चत्; अतो न शरणागतिवैफल्यं चोद्यम् । अथ दण्डकारण्यवासिभिर्विरोधिनिरसनाय शरणागतिरनुष्ठिता, "ते वयं भवता रक्ष्या भवद्विषयवासिनः । नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वर ॥" इति । अत्र कोसलजनपदवासिनामिव भगवद्विषयवास एव शरणागतिः । तदनन्तरं "स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः । त्रीन् लोकान् संपरिक्रम्य तमेव शरणं गतः ॥ स तं निपतितं भूमौ शरण्यः शरणागतम् । वधार्हमपि काकुत्स्थः कृपया पर्यपालयत् ॥" इति काकवृत्तान्तेनाग्रतः पतनमेव शरणागतिरित्यदर्शि । तदनु सुग्रीववृत्तान्तेन "कृतापराधस्य हि ते नान्यत् पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ॥" इति शरणागतिरञ्जलिरूपोक्ता । अथ सीतावचनेन "मित्रमौपयिकं कर्तुं रामः स्थानं परीप्सता । वधं चानिच्छता घोरं त्वयासौ पुरुषर्षभः ॥ विदितः स हि धर्मज्ञः शरणागतवत्सलः । तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥" इत्यनेनानुकूल्यमेव शरणागतिरित्यबोधि । उपरि "सोऽहं परुषितस्तेन दासवच्चावमानितः । त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥" इति विभीषणशरणागत्या विरोधिपरित्यागपूर्वकत्वमुक्तम् । "ततः सागरवेलायां दर्भानास्तीर्य राघवः । अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः॥" इति रामशरणागत्या योग्यस्य नायोग्यतान्वेष्टव्या, अयोग्यस्य च न योग्यतेत्युक्तम् । अशुचिभूतलङ्कानिर्गतमात्र एव हि विभीषणश्शरणमवृणोत् । रामशरणागतेः फलाभावः समर्थकारुणिकविषयत्वाभावादित्याहुः । उत्तरत्र "अभियाचाम वैदेहीमेतद्धि मम रोचते । राघवाद्धि भयं घोरं राक्षसानामुपस्थितम् ॥" इति त्रिजटावचनानुमतिमात्रेण हनुमद्भयात् सर्वासां रक्षितत्वकथनादन्यविषयेऽन्येनापि कृता शरणागतिः फलवतीति निदर्शितम् । विभीषणशरणागत्यैव तत्सचिवानां रक्षणात् शरणागतसम्बन्धिनोऽपि भगवत्कटाक्षपात्रभूता एवेति निरणायि । एवमन्यत्रापि द्रष्टव्यम् । एवमुपक्रमप्रभृत्योपसंहारात् प्रतिपादिता शरणागतिरेव सर्वफलप्रदा; सैव मुक्तेरपि हेतुरित्युक्तम् । विशेषस्तु तत्र प्रकरणे प्रपञ्चयिष्यते ॥ २ ॥ अस्य चोपायस्य प्राप्यं भगवत्प्राप्तिपूर्वकं तत्कैङ्कर्यमेवेति रामायणेन प्रतिपाद्यते । तथाहि—उपक्रमे देवजातीयशरणागते रामकैङ्कर्यं प्रधानफलमित्युच्यते, अप्सरःप्रभृतय्ववतीर्य तेरतदनुवर्तनोपदेशात् । रावणवधस्त्वानुषङ्गिकः । लक्ष्मणोऽपि प्रपद्याह—"अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते । भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते॥"इति । तेन सर्वदेशसर्वकालसर्वावस्थोचितसर्वकैङ्कर्यफलमिति व्यञ्जितम् । भरतोऽपि रामकैङ्कर्यायैव तदभिषेकं प्रार्थ्य पादुकाविषयकैङ्कर्यक्रमेण मनीषितमलभत । दण्डकारण्यवासिनां शरणागतेरपि वाचिकादिरूपमेव कैङ्कर्यं फलमित्यवगम्यते । "ते तं सोममिवोद्यन्तं दृष्ट्वा वै धर्म

चारिणः । मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन् दृढव्रताः॥" इत्युक्तेः। सुग्रीवविभीषणादिप्रपत्तेरपि मुख्यं फलं कैङ्कर्यम् अन्यदानुषङ्गिकमिति स्पष्टम्; "अथ हरिवरनाथः प्राप्य सङ्ग्रामकीर्तिं निशिचरपतिमाजौ योजयित्वा श्रमेण । गगनमतिविशालं लङ्घयित्वार्कसूनुर्हरिवरगणमध्ये रामपार्श्वं जगाम ॥" "परित्यक्ता मया लङ्का मित्राणि च धनानि च । भवद्गतं मे राज्यं च जीवितं च सुखानि च॥" इत्यादिना । एवं प्राणार्थिनः काकस्य प्राणप्रदानेन तत्प्रपत्तिः सफला। असत्प्रकृतेरस्य पुनरप्येवं दुरितप्रवृत्तिर्माभूदिति शिक्षणरूपानुग्रहायैकाक्षिनिरसनेनास्त्रं निवर्तयामास; यथा परशुरामं प्रति प्रयुक्तमस्त्रं तस्मिन् प्रातिकूल्यान्निवृत्ते तन्मनीषितविरोधिसुकृतेषु प्रायुङ्क्त, यथा च समुद्रं प्रत्युपात्तमस्त्रं तस्मिन् सानुतापे शरणागते द्विषत्सु आश्रितानां पापकृत्याम्रेडनन्यायेन तद्विरोध्यसुरेषु प्रयुयुजे । रामप्रपत्तिस्त्वाकिञ्चन्यानन्यगतित्वरूपाधिकाररहितेन कृतत्वादल्पज्ञाल्पशक्तिकविषयत्वाच्च निष्फलेति ध्येयम् । "समुद्रं राघवो राजा शरणं गन्तुमर्हति" इति विभीषणोक्तिस्तु स्वप्रपत्तेः फलदर्शनकृता। तस्मादनेन प्रकारेण शरणागतेर्देशकालाधिकारिफलनियमाभावेऽपि विषयनियमोऽस्तीत्युक्तम् । इयं च प्रपत्तिरस्मिन् प्रबन्धे प्रधानतया प्रतिपाद्यते । अतएव "श्रीरामायणं दीर्घशरणागतिः" इत्याभाणकः । तदुपयुक्ततयेतरेषामर्थानां प्रतिपादनम् । तथाहि, समर्थकारुणिकसुशीलविषयिणी शरणागतिः फलदायिनी । तत्र रौद्रधनुर्भङ्गपरशुरामजयसालभेदनसमुद्रबन्धनादिभिरुक्तपरत्वप्रतिपादनैश्च सामर्थ्यं सर्वज्ञत्वादिकं चोक्तम् । सीतावियोगकालिकवृत्तान्तविशेषैः परमकारुणिकत्वम्, गुहशबरीसुग्रीवादिभिर्नीरन्ध्रसंश्लेषेण सौशील्यम्, विश्वामित्राध्वरत्राणदण्डकारण्यवासिमुनिजनरक्षणरावणबाधितेन्द्रादिसकलदेवगणपरिपालनैः निजजनपदजनानामात्मसौन्दर्यशीलादिभिः प्रीतिमुत्पाद्य स्वपदप्राप्तिरूपसाक्षादवतारप्रयोजनभूतमोक्षप्रदानैश्च सर्वरक्षकत्वम्, अतः समर्थपरमकारुणिकसुशीलभगवत्प्रपत्तेः सकलफलसाधनत्वेऽपि अधिकारिविशेषानुष्ठितायास्तस्या भगवत्प्राप्तिपूर्वकतत्कैङ्कर्यरूपमोक्ष एव मुख्यं फलम्, आनुषङ्गिकं फलान्तरमिति सुस्पष्टम् । एवं सर्वत्र द्रष्टव्यम् ॥ ३ ॥ इयं च प्रपत्तिः पुरुषकारेण विना न फलाय भवतीत्यर्थोऽस्मिन्प्रबन्धे प्रधानतया प्रतिपाद्यते । "सीतायाश्चरितं महत्" इति ह्युक्तम् । तस्याश्च विश्लेषत्रयेण कृपापारतन्त्र्यानन्यार्हत्वरूपपुरुषकारधर्मप्रतिपादनात् । तत्सन्निधानेन काकः शिरो लेभे, तदभावान्न रावणः । विभीषणोऽपि "निवेदयत मां क्षिप्रं विभीषणमुपस्थितम्" इति घटकमुखेनैव रामं शरणमवृणुत । रामोऽपि "आनयैनं हरिश्रेष्ठ" इति घटकमुखेनैव विभीषणं विषयीचकार । एवं सुग्रीवोऽपि रामभक्तहनुमन्मुखेन रामं शरणं ययौ, इत्येवं ज्ञातव्यम् ॥ ४ ॥ एवम्भूतोपायाधिकारिस्वरूपं शेषत्वं पारतन्त्र्यं च । तत्र शेषत्वं लक्ष्मणाचारेण प्राचीकशत् "अहमस्यावरो भ्राता गुणैर्दास्यमुपागतः । कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते । कृतार्थोऽहं

भविष्यामि तव चार्थः प्रकल्पते ॥" इत्यादिना ॥ ५ ॥ भरतमुखेन पारतन्त्र्यं प्रकटीकृतम् "विललाप सभामध्ये जगर्हे च पुरोहितम् । राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि ॥" इत्यादिना " सर्वात्मना पर्य्यनुनीयमानो यदा न सौमित्रिरुपैति योगम् । नियुज्यमानो भुवि यौवराज्ये ततोऽभ्यपिञ्चद्भरतं महात्मा ॥" इत्यन्तेन ॥ ६ ॥ श्रीशत्रुघ्नव्यापारेण भागवतपारतन्त्र्यं प्राचीकशत्—" गच्छता मातुलकुलं भरतेन तदानघः । शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥" इत्यादिना ॥ ७ ॥ अस्य चाधिकारिणो ज्ञातव्यमर्थपञ्चकमत्रोच्यते । तथोक्तम्—" प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः । प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च ॥ वदन्ति सकला वेदाः सेतिहासपुराणकाः । मुनयश्च महात्मानो वेदवेदाङ्गपारगाः ॥" इति। तत्र रामप्रस्तावेन परस्वरूपम्, लक्ष्मणादिवृत्तान्तेन प्रत्यगात्मस्वरूपम्, शरणागतिवर्णनेनोपायस्वरूपम्, विभीषणादिकथया भगवत्कैङ्कर्यं रूपफलस्वरूपम्, रावणादिवृत्तान्तेन विरोधिस्वरूपं चोक्तमिति ज्ञेयम् ॥ ८ ॥ अस्याधिकारिण आकिञ्चन्यम् अनन्यगतित्वं चापेक्षितमिति वक्तुं ब्रह्मरुद्रादिदत्तवरस्य रावणस्य वधेन ब्रह्मरुद्रादिदेवतान्तराणाम्, दशरथचरितेन पितुः, कैकेय्यादि (काकादि) वृत्तान्तेन मात्रादेः, विभीषणमेघनादादिवृत्तान्तेन भ्रातृपुत्रादेश्चारक्षकत्वोक्तिः ॥ ९ ॥ अस्य च भगवज्ज्ञानलाभ आचार्यमूल इति हनुमच्चरितेन दर्शितम् । तदेव सुन्दरकाण्डे वक्ष्यामः ॥ १० ॥ अनेन चाधिकारिणा "कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्" इत्युक्तरीत्या शरीरपातावधिकालः प्रतीक्षणीय इति सीताध्यवसायेनोच्यते । "शरैस्तु सङ्कुलां कृत्वा लङ्कां परबलार्दनः । मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥" इति ह्युक्तम् । लङ्कानाम शरीरम्, रावणकुम्भकर्णावहङ्कारममकारौ, इन्द्रजिदादयः कामक्रोधादयः, विभीषणो विवेकः, तत्र रुद्धा सीता चेतनः, तस्य च भगवज्ज्ञानम् हनुमता आचार्येण, तादृशशरीरध्वंसपूर्वकं तदन्तर्निरुद्धचेतनोद्धरणं भगवतैवेति विस्तरो भविष्यति ॥ ११ ॥ अस्य च यावच्छरीरं कर्तव्यविषये रामादिवद्वर्तितव्यम्, न रावणादिवदित्युपदेशश्च यथायोगं क्रियते ॥ १२ ॥ अस्य च वासयोग्यो देशो भगवत्सन्निधिमान् देश एवेति कोसलजनपदस्थजनवृत्तान्तेनोक्तम् ॥ १३ ॥ अस्य च कालक्षेपोऽपि रामायणेनैव, द्वयविवरणरूपत्वात् । अतएव "रामायणं दीर्घशरणागतिः" इत्यभियुक्तैरुक्तम् । "द्वयमर्थानुसन्धानेन सह सदैवं वक्ता" इति च भाष्यकारः । तत्र बालकाण्डेन श्रीमच्छब्दार्थ उक्तः, अयोध्याकाण्डेन नारायणशब्दार्थः, कल्याणगुणानामुपवर्णनात् । आरण्यकाण्डेन "ते तं सोमामिवोद्यन्तम्" इत्यादिना दिव्यमङ्गलविग्रहवर्णनाच्चरणशब्दार्थः । किष्किन्धाकाण्डसुन्दरकाण्डाभ्यां शरणशब्दार्थः । युद्धकाण्डेन प्रपद्य इत्यस्यार्थः । उत्तरकाण्डेन मुक्तिफलकीर्तनादुत्तरखण्डार्थः ॥ १४ ॥ अस्य चाधिकारिणः सदा जप्यं रामायणमेवेति दर्शयितुं गायत्र्यर्थोऽत्र प्रतिपाद्यते । तथाहि—बालकाण्डे वेदप्रसिद्धजगत्प्रसूतिहेतुभूतभगवत्स्वरूपवर्णनात् तत्सवितृशब्दार्थः । अयोध्याकाण्डकिष्किन्धाकाण्डयोः गुणगण

वर्णनात् वरेण्यशब्दार्थः। आरण्यकाण्डे तेजोमयशरीरवर्णनात् भर्गशब्दार्थः। सुन्दरकाण्डे दिव्यमङ्गलविग्रहलक्षणवर्णनात् देवशब्दार्थः। युद्धकाण्डे धीमहिशब्दार्थः शरणागत्युक्तेः। उत्तरकाण्डे मुक्तिफलकीर्तनात्तृतीयपादार्थ इति ॥ १५ ॥ एतेन चाधिकारिणा चार्वाकबौद्धादिदर्शनासच्छास्त्रस्पर्शोऽपि न कार्य इति जाबालिलक्ष्मणवचनतत्प्रत्यादेशादिना निर्णीयते ॥ १६ ॥ महतामपि व्यसनं भवति, अतः संसारे जिहासा कार्येति वैराग्यसंपत्तये नागपाशब्रह्मास्त्रबन्धसीतापहरणराज्यभ्रंशादिना व्यक्तमुक्तम्। विस्तरस्तु तत्रतत्र प्रदर्शयिष्यते, दिङ्मात्रमत्र प्रदर्शितम् ॥ १७ ॥ लोकव्यवहाराय चतुःषष्टिकलार्थोऽपि संग्रहेणात्र प्रतिपाद्यते, "यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्" इति न्यायात्। तथाहि—प्रतिपादितया

सर्वापूर्वमियं येषामासीत्कृत्स्ना वसुन्धरा। प्रजापतिमुपादाय नृपाणां जयशालिनाम् ॥ १ ॥

दिशा वेदार्थो दर्शितः। हनुमद्वचनश्लाघायां "अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया" इत्यादौ शीक्षार्थः। अश्वमेधादिप्रकरणे कल्पसूत्रार्थः। "नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्" इत्यादौ व्याकरणार्थः। एवमन्यत्सर्वमत्र सूक्ष्मबुद्ध्या ज्ञातव्यम्। एवमेतेऽष्टादशार्था आचार्योपदिष्टाः ॥ १८ ॥ तत्र प्रथमं रावणनिबर्हणफलां गीर्वाणगणशरणागतिं दर्शयितुं पीठिकामारचयति वाजिमेधपर्यन्तवृत्तान्तेन। अग्निपुरुषोत्थानमारभ्य रावणवधपर्यन्तो वृत्तान्तस्तत्फलम्। उत्तरकाण्डे स्वावतारप्रयोजनं धर्मस्थापनं मुक्तिप्रदानं च ॥ 'वक्तव्यमन्यत्तात्पर्यं तत्रतत्राभिधीयते। सन्तोऽत्युक्तमनुक्तं च समाधातुमिहार्हथ ॥ नमः शठारिगुरवे नमो वल्मीकजन्मने। नमो नारायणायेदं नमो रामाय विष्णवे ॥'

इत्थं संक्षेपेण "आचार्यवान् पुरुषो वेद। आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इति श्रुत्युक्तरीत्या आचार्यादेव विद्या प्राप्तव्येत्यमुमर्थमभिव्यञ्जयन् स्वेन नारदाद्विदितमर्थं प्राचीकशत्। अथ सर्गत्रयेणाचार्यप्रसादकार्यं सर्ववस्तुसाक्षात्कारस्तद्विषयप्रबन्धनिर्माणचातुर्यं चाभिहितम् ॥

अथ परमकारुणिको भगवान् वाल्मीकिः रामायणाख्यं काव्यमारभमाणः प्रारिप्सितप्रबन्धस्य निर्विघ्नपरिसमाप्त्यर्थं प्रचयगमनार्थं च "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इत्युक्तरीत्या काव्यमुखत्वेनादौ कर्तव्यं वस्तुनिर्देशं कुर्वन् अर्थाद्विषयप्रयोजने च दर्शयन् कर्तव्यं

एवं सर्गचतुष्टयेन उपोद्घातमुक्त्वा "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इत्यालङ्कारिकोक्तेः काव्यमुखे क्रियमाणं वस्तु निर्दिशति—सर्वापूर्वमिति। इयं कृत्स्ना वसुन्धरा प्रजापतिं वैवस्वतमनुमुपादाय आरभ्य येषां नृपाणामधीना पूर्वमासीत्, अविद्यमानः पूर्वो यस्मादपूर्वं सर्वेषां राज्ञामपूर्वम्। प्रथममिति यावत्।

मुनिभावप्रकाशिका—एषामिक्ष्वाकुवंश्यानां नृपाणां कृत्स्ना इयं वसुन्धरा सर्वापूर्वं यथा भवति तथा आसीत्। सर्वेषु इक्ष्वाकुवंश्येषु राजसु अपूर्वं नूतनं यथा तथा आसीत्। तत्र सम्मतिः—"मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः। तथाप्यनन्यपूर्वेव तस्मिन्नासीद्वसुन्धरा ॥" इति ॥ १ ॥

प्रतिजानानः सत्परिग्रहमर्थयते—सर्वापूर्वमित्यादिश्लोकचतुष्टयेन । सर्वेति । कृत्स्ना सप्तद्वीपात्मिका इयं वसुन्धरा भूमिः । जयेन शालन्ते भासन्त इति जयशालिनः तेषाम् । येषां नृपाणां प्रजापतिं मनुम् "मनुः प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ।" इति वक्ष्यमाणत्वात् । उपादाय आरभ्य सर्वापूर्वं सर्वेषामितरेषां राज्ञामपूर्वं दुर्लभं यथा भवति तथा आसीत्, स्वमासीदित्यर्थः ॥ १ ॥ जयशालित्वं कुत्रचिदुदाहृत्य दर्शयति—येषामिति । येषां नृपाणां मध्ये सः प्रसिद्धः सगरः । प्रसिद्धिमेवाह—सागरस्समुद्रः स्वनामाङ्कितः येन सगरेण खानितः षष्ट्या पुत्रसहस्रैरवदारितः । नाम प्रसिद्धौ । किंच यान्तं दण्डयात्रया गच्छन्तं यं षष्टिः पुत्रसहस्राणि पर्यवारयन् परितोऽगच्छन् । इक्ष्वाकुप्रभृतिषु विद्यमानेषु सगरमात्रकीर्तनं तेनाखिलायाः भूमेः पुनरुद्धृतत्वात् । षष्टिरिति पङ्क्तिसूत्रे निपातितः । अत एकवचनस्यापि बहुवचनविशेषणत्वम् ॥ २ ॥ इक्ष्वाकू-

येषां स सगरो नाम सागरो येन खानितः । षष्टिः पुत्रसहस्राणि यं यान्तं पर्यवारयन् ॥ २ ॥

इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम् । महदुत्पन्नमाख्यानं रामायणमिति श्रुतम् ॥ ३ ॥

तदिदं वर्तयिष्यामि सर्वं निखिलमादितः । धर्मकामार्थसहितं श्रोतव्यमनसूयया ॥ ४ ॥

मिति । महात्मनां महाप्रभावानाम् इक्ष्वाकूणामिक्ष्वाकुवंश्यानाम् । "तद्राजस्य बहुषु तेनैवास्त्रियाम्" इति तद्राजप्रत्ययस्य बह्वर्थत्वाल्लुक् । तेषां राज्ञां वंशे वंश्ये रामे विषये रामायणमिति श्रुतं प्रसिद्धं महत् पूजनीयम् इदमाख्यानं कथाप्रबन्धः उत्पन्नम्, ब्रह्मणः प्रसादादिति शेषः । तत्र निमित्तमात्रमहमिति विनयोक्तिः । अत्र वर्णनीयस्य नायकस्य सर्वापूर्वमित्यनेन महाभाग्यत्वं नाम गुण उक्तः । येषामित्यादिश्लोकद्वयेन महाकुलीनत्वम् ॥ ३ ॥ ब्रह्मप्रसादादेवोत्पन्नत्वे तव किं कृत्यम् ? तत्राह—तदिति । तत् ब्रह्मप्रसादोत्पन्नम्, इदं रामायणं वर्तयिष्यामि प्रवर्तयिष्यामि ।

क्रियाविशेषणमेतत् ॥ १ ॥ येषामिति । किञ्च येषां राज्ञां मध्ये सगरो नाम । जात इत्यध्याहारेण योजना । 'सागरो येन खानितः' इति समुद्रस्य सागरशब्दप्रवृत्तिरपि यदधीनेति भावः । यान्तं दिग्विजयार्थं गच्छन्तं यं सगरं षष्टिः पुत्रसहस्राणि पर्यवारयन् ॥ २ ॥ तेषामिक्ष्वाकूणां वंशे रामायणमिति महदाख्यानमुत्पन्नमिति योजना । राममयति ज्ञापयतीति रामायणम् । 'अय पय गतौ' । सर्वे गत्यर्था ज्ञानार्थाः ॥३॥ तदिदमिति । धर्मकामार्थसहितं धर्मकामार्थप्रतिपादकम्, इदं तु अवा

विषम०—तदिदं बुद्धिस्थम् । आदितः आदिमारभ्य निखिलम् उत्तरकाण्डान्तम् । सर्वं वर्णपदच्युतिरहितम्, धर्मकामार्थाः सहिताः यस्मात् तत् । सहिता इत्यत्र कर्तव्याकाङ्क्षाया मोक्षेणेति गम्यते । तेन पुरुषार्थचतुष्टयसाधनं वर्तयिष्यावः गास्यावः । तत् अनसूयता असूयतीत्यसूयन् न असूयन् अनसूयन् स्वस्यान्यस्य चोपतापमकुर्वन्, तेनानसूयता श्रोतव्यमित्यर्थः । "असु उपतापे" इति कण्ड्वादित्वात्तस्य शतरि रूपम् ॥ ४ ॥

१ वर्तयिष्यावः । २मनसूयता इति च पाठान्तरम् ।

धर्मकामार्थसहितं तत्प्रतिपादकं तत्फलकं वा सर्वं रामायणम् आदितः तदवतारदेशात्प्रभृति निखिलमन्यूनं यथा भवति तथा। अनसूयया असूयाभिन्नया, श्रद्धयेत्यर्थः। श्रोतव्यम् न तु स्वयं लिखितपाठेन निरीक्षितव्यम्। ब्रह्मण एवोत्पन्नमिदम्, मम तु तत्प्रवर्तन एवाधिकारः। अतः प्रेक्षावद्भिरत्रासूया न कर्तव्या, किन्तु भक्त्यैव श्रोतव्यमिति भावः। अत्र तेषां वंश इत्यनेन विषय उक्तः, धर्मकामार्थसहितमित्यनेन प्रयोजनमुक्तम्, अनसूययेत्यनेन अनसूयवोऽधिकारिणः, कार्यकारणभावः सम्बन्ध इत्यादि बोध्यम्। अत्र मोक्षस्यापि प्रयोजनत्वं सिद्धम्, "सर्वपापैः प्रमुच्यते" इत्युक्तत्वात् ॥ ४ ॥ अथ रामचरित्रं प्रतिज्ञातं वक्तुं तदवतरणयोग्यदेशवैभवं दर्शयति—कोसल इति। मुदितः सन्तुष्टजनः। 'मञ्चाः क्रोशन्ति' इतिवल्लक्षणा। स्फीतः समृद्धः। "स्फायः स्फी निष्ठायाम्" इति स्फीभावः। प्रभूतानि बहूनि च तानि धनधान्यानि च तद्वान्। कर्मधारयादपि मत्वर्थीयो

कोसलो नाम मुदितः स्फीतो जनपदो महान्। निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥ ५ ॥

अयोध्या नाम नगरी तत्रासील्लोकविश्रुता। मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥ ६ ॥

आयता दश च द्वे च योजनानि महापुरी। श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥ ७ ॥

दृष्टः। यथा "कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने" इत्यादि। प्रभूतधनश्चासौ धान्यवांश्चेति कर्मधारयो वा। अत्र धनधान्यसमृद्धेरुक्तत्वात् स्फीत इति जनसमृद्धिरुच्यते। कोसलो नाम कोसल इति प्रसिद्धः। महान् विस्तीर्णः जनपदो देशः। "नीवृज्जनपदो देशविषयौ" इत्यमरः। सरयूतीरे सरयूनामकनद्या उभयतीरे निविष्टः स्थितः ॥ ५ ॥ तत्रावतारयोग्यनगरं वर्णयति—अयोध्येति, श्लोकत्रयमेकं वाक्यम्। अयोध्येति नगरी तत्र कोसले आसीत् अस्ति। लकारव्यत्ययः। लोके विश्रुता प्रसिद्धा या पुरी मानवानां मनुष्याणाम् इन्द्रेण स्वामिना मनुना स्वयं स्वसङ्कल्पेन निर्मिता नाम ॥ ६ ॥ आयतेति। दश च द्वे च योजनानि द्वादश योजनानि। अत्यन्तसंयोगे द्वितीया। आयता दीर्घा। मण्डलप्रमाणमिदम्। महा

न्तरफलाभिप्रायेणोक्तम्, वस्तुतो मोक्ष एव परमफलम्। सर्वं निखिलं काव्यं प्रतिपाद्यार्थेषु ऐकार्थानुक्तावपि सर्वशब्दप्रयोगसम्भवात् निखिलमित्युक्तम्। वर्तयिष्यामि, श्रोतव्यमिति तव्यप्रत्ययेन रामायणस्य श्रवणविधिः, श्रूयमाणत्वेनाश्रवणे प्रत्यवायसम्भवात्। धर्मकामार्थसहितं धर्मकामार्थप्रदमित्यनेनास्यैव सर्वपुरुषार्थसाधनत्वाच्चान्यत्सर्वं परित्यज्येदमेवात्यादरेण श्रोतव्यमिति तात्पर्यम्। अनसूयया-असूयामकुर्वता, अनेन श्रीरामायणश्रवणे असूयाराहित्यमात्रमेव अधिकारिविशेषणमित्युक्तं भवति ॥ ४ ॥ कोसल इति। परमधार्मिकेक्ष्वाकुवंशराज्यपरिपालनेन प्रभूतधनधान्यवान् अत एव स्फीतः पुष्टः, मुदितः तुष्टः, सरयूतीरे निविष्टः स्थितः जनपदो देशोऽस्तीति शेषः ॥ ५ ॥ अयोध्येत्यादिश्लोकत्रयमेकं वाक्यम्। तत्र सरयूतीरे आयता दश च द्वे च, द्वादशयोजनायतेति यावत्। पुरीमावसया

पुरी मूलनगरम्, उपनगरसाहित्ये त्वनेकयोजनास्तीति भावः। श्रीमती कान्तिमती। त्रीणि योजनानि विस्तीर्णा योजनत्रयवैपुल्यवती। सुष्ठु विभक्ताः उभयपार्श्ववृक्षावलीमत्तया क्लृप्ताः महापथाः नानाजनपदगामिमार्गाः यस्यास्सा ॥ ७ ॥ राजमार्गेणेति। महता आनगरान्तेन सुविभक्तेन ऋजु तया क्लृप्तेन, मुक्तपुष्पावकीर्णेन मुक्तैः असूत्रग्रथितैः पुष्पैरवकीर्णेन। नित्यशः सर्वकालेऽपि। सर्वत्र्यर्थे शस्प्रत्ययः। जलसिक्तेन वर्षासु स्वतएव, अन्यदा मनुष्यैः। राजमार्गेण राजगृहद्वारात् प्रवृत्तेन मार्गेण शोभिता ॥ ८ ॥ अथ नगर्या महाराजाधिष्ठितत्वरूपं गुणमाह—तां त्विति। महच्च तद्राष्ट्रं

राजमार्गेण महता सुविभक्तेन शोभिता। मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ ८ ॥
तां तु राजा दशरथो महाराष्ट्रविवर्द्धनः। पुरीमावासयामास दिवं देवपतिर्यथा ॥ ९ ॥
कवाटतोरणवतीं सुविभक्तान्तरापणाम्। सर्वयन्त्रायुधवतीमुपेतां सर्वशिल्पिभिः ॥ १० ॥
सूतमागधसम्बाधां श्रीमतीमतुलप्रभाम्। उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम् ॥ ११ ॥

च महाराष्ट्रम्। "आन्महतः—" इत्यात्वम्। तद्विवर्द्धयति धर्मेण पालयतीति महाराष्ट्रविवर्द्धनः। कर्तरि ल्युट्। महांश्चासौ राष्ट्रविवर्द्धनश्चेति वा। पूर्वराजभ्योऽधिक इत्यर्थः। दशरथाख्यो राजा दिवं स्वर्गम्, अमरावतीं देवपतिर्यथा इन्द्र इव तां पुरीम्। तु पूर्वनृपवैलक्षण्येन, आवासयामास स्थापयामास। "हेतुमति च" इति णिच् ॥ ९ ॥ वैलक्षण्यमेव दर्शयन्नयोध्यां वर्णयति सर्गशेषेण—कवाटेति। तोरणो बहिर्द्वारालङ्कारदारुबन्धः। प्रशस्तकवाटतोरणयुक्ताम्। प्रशंसायां मतुप्। सुविभक्तं परस्परासंश्लिष्टम् अन्तरं मध्यप्रदेशो येषां तादृशा आपणाः निपद्याः यस्यां सा ताम्। "आपणस्तु निपद्यायाम्" इत्यमरः। सर्वाणि सर्वविधानि यन्त्राणि शिलाक्षेपणीप्रभृतीनि, आयुधानि बाणादयः, लोके यानि यानि यन्त्रायुधानि सन्ति तद्वतीमित्यर्थः। शिल्पिभिश्चित्रकारप्रभृतिभिः उपेतां युक्ताम् ॥ १० ॥ सूतेति। सूताः बन्दिनः। "सूतो ना तक्षिण सारथौ। क्षत्राद्विप्रासुते व्यासशिष्ये पारदबन्दिनोः॥" इति भास्करः। मागधाः राजप्रबोधकाः। "मागधः स्याद्वाग्मी राजप्रबोधकः" इति यादवः। तैः सम्बाधां निरन्तरां श्रीमतीं धनधान्यसमृद्धिमतीम् अतुल

मास वासं कृतवान् ॥९–१०॥ सूतेति। सूतमागधसम्बाधाम्-सूताः स्तोत्रपाठकाः, मागधाः वंशशंसकाः। शतघ्नीनाम-प्राकारसंरक्षणार्थं निर्मितो यन्त्रविशेषः ॥ ११ ॥

प्रभां निरुपमकान्तिम् । अट्टाट्टालशब्दौ पर्यायौ । "स्यादट्टः क्षौममस्त्रियाम्" इत्यमरः । मण्डपोपरिनिर्मितगृहाणीत्यर्थः । उन्नतैरट्टालध्वजैर्युताम् । शतघ्नी प्राकारस्थयन्त्रविशेषः । "शतघ्नी तु चतुस्ताला लोहकण्टकसञ्चिता" इति यादवः । शतशब्दोऽनन्तवचनः । "शतं सहस्रमयुतं सर्वमानन्त्यवाचकम्" इत्युक्तेः । अनेकशतघ्नीसंवृताम् ॥ ११ ॥ वध्विति । सर्वतः पुरीमिति "उभसर्वतसोः—" इति द्वितीया । सर्वत्र पुर्यां वधूनां ये नाटकाः नर्तयितारस्तत्सङ्घैः संयुक्ताम् । आम्राणां चूतानां वनमाम्रवणम् । "प्रनिरन्तः—" इत्यादिना णत्वम्, आहिताग्न्यादित्वात्परनिपातः । आम्रवणरूपोद्यानोपेताम् । सालः प्राकारः, मेखला-मेखलावदावरणभूता यस्यास्ताम् । "प्राकारो वरणः सालः" इत्यमरः । महतीमिति सालद्वारा नगरविशेषणम् ॥ १२ ॥ दुर्गेति । अत्र दुर्गशब्देन विशालतोच्यते । विशालागाधपरिघां दुर्गां स्थलदुर्गभूताम्, अतएवान्यैः शत्रुभिः दुरासदां

वधूनाटकसंघैश्च संयुक्तां सर्वतः पुरीम् । उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ १२ ॥
दुर्गगम्भीरपरिघां दुर्गामन्यैर्दुरासदाम् । वाजिवारणसम्पूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥ १३ ॥
सामन्तराजसंघैश्च बलिकर्मभिरावृताम् । नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥ १४ ॥
प्रासादै रत्नविकृतैः पर्वतैरुपशोभिताम् । कूटागारैश्च सम्पूर्णामिन्द्रस्येवामरावतीम् ॥ १५ ॥

दुराक्रमाम् । वाजिभिर्वारणैश्च सम्पन्नां समृद्धाम्, गोभिरुष्ट्रैः खरैः खरविशेषैश्च तथा, सम्पन्नामित्यर्थः ॥ १३ ॥ सामन्तराजसङ्घैरिति । समन्ताद्भवाः सामन्ताः । "सामन्ता राज्यसन्धिस्थाः" इति वैजयन्ती । तादृशराजसङ्घैः । कीदृशैः ? बलिकर्मभिः बलिः करः, "भागधेयः करो बलिः" इत्यमरः । बलिशब्देन बलिप्रदानमुच्यते तत्कर्म येषां तैः । नानादेशनिवासैः क्रयविक्रयार्थमागतैः वणिग्भिश्च उपशोभिताम् ॥ १४ ॥ प्रासादैरिति । रत्नविकृतैः-रत्नैः विकृतैः विशेषेण कृतैः । प्रासादैः राजगृहैः, पर्वतैः क्रीडापर्वतैः, कूटागारैः वलभिभिः । "कूटागारं तु वलभिः" इत्यमरः । सम्पूर्णां

वध्विति । वधूनाटकसङ्घैश्च-नाटयन्तीति नाटकाः नर्तकाः वधूनां नाटकानां सङ्घैश्च । उद्यानाम्रवणोपेताम्-क्रीडार्थमसाधारणत्वेन निर्मितान्युद्यानानि, आम्रवणानि तु सर्वजनोपभोग्यत्वेन कल्पितानि । सालमेखलाम् प्राकारमेखलाम् ॥ १२ ॥ दुर्गेति । दुर्गगम्भीरपरिघां दुर्गा गम्भीरा परिघा यस्यां नाम् अत एव दुर्गाम् ॥ १३ ॥ सामन्तेति । बलिकर्मभिरिति सामन्तराजसङ्घविशेषणम । बलिकर्मभिः बलिप्रदैरित्यर्थः ॥ १४ ॥ प्रासादैरिति । रत्नविकृतैः रत्ननिर्मितैः । कूटागारैः

अतएव इन्द्रस्येवामरावतीम्, इन्द्रपालिताममरावतीमिव स्थितामित्यर्थः ॥ १५ ॥ चित्रामिति ।  चित्रां नानाराजगृहवतीम् । अष्टौ पदानि स्थानानि यस्य तदष्टापदम्, " अष्टनः संज्ञायाम् " इति दीर्घः । " अष्टापदं शारिफलम् " इत्यमरः । तदाकाराम्, तत्सदृशसंस्थानामित्यर्थः । मध्ये राजगृहं चतुर्दिक्षु राजवीथयः तन्मध्येष्ववकाशाश्चेत्येवंविधसंस्थानामित्यर्थः । वरनारीगणैः सुन्दरस्त्रीगणैः युतां संयुक्ताम् । सर्वरत्नैः समाकीर्णां व्याप्ताम् । तानि तु " गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः । शोणरत्नं रोहितकं पद्मरागोऽरुणोपलः । विद्रुमो ना प्रवालोऽस्त्री वज्रोऽस्त्री हीरकः पुमान् । इन्द्रनीलं महानीलं वैडूर्यं वालवायजम् । कुरुविन्दास्तु कल्माषा रत्नभेदास्तु मौक्तिकम् । माणिक्यं पौष्यकं शङ्खः" इत्यादिनिघण्टुपर्यायोक्तानि । विमानाख्य

चित्रामष्टापदाकारां वरनारीगणैर्युताम् । सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ १६ ॥
गृहगाढामविच्छिद्रां समभूमौ निवेशिताम् । शालितण्डुलसम्पूर्णामिक्षुकाण्डरसोदकाम् ॥ १७ ॥
दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा । नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमाम् ॥ १८ ॥
विमानमिव सिद्धानां तपसाधिगतं दिवि । सुनिवेशितवेश्मान्तां नरोत्तमसमावृताम् ॥ १९ ॥

गृहैः शोभिताम् । " विमानोऽस्त्री देवयाने सार्वभौमिकसद्मनि " इति भास्करः ॥१६॥ गृहगाढामिति । गृहैः कुटुम्बिगृहैः गाढां निबिडाम्, अविच्छिद्रां निर्दूषणाम्, "छिद्रं रन्ध्रे दूषणेऽपि" इति भास्करः । समभूमौ अनिम्नोन्नतप्रदेशे निवेशितां निर्मिताम् । शालयः श्वेततण्डुला व्रीहयः । "शालयः श्वेत तण्डुलाः" इति वैजयन्ती । तेषां तण्डुलैः सम्पूर्णाम् । इक्षुकाण्डस्य इक्षुदण्डस्य यो रसस्तत्तुल्यमुदकं यस्यां ताम् ॥१७॥ दुन्दुभीभिरिति । दुन्दुभीभि र्भेरीभिः । ईकारान्तत्वमार्षम् । मृदङ्गैः मृत् अङ्गं येषां तैः, पणवैः मर्दलैः । तथेति समुच्चये । भृशं नादिताम् पृथिव्याम् अत्यर्थमनुत्तमां श्रेष्ठां तां प्रसिद्धाम् ॥१८॥ विमानमिति । सिद्धानां तपःसिद्धानां पुरुषाणां दिवि स्वर्गे तपसाधिगतं लब्धम् विमानमिव देवयानसमूहमिव स्थिताम् । जातावेकवचनम् ।

कूटाख्यैरगारैः ॥ १५ ॥ चित्रामिति । अष्टापदाकारां द्यूतफलकाकारां स्वर्णाकारां वा । विमानगृहशोभितां विमानतुल्यैर्गृहैरुपशोभिताम् ॥ १६ ॥ गृहेति । गृहगाढां गाढगृहाम्, अच्छिद्रां निरन्तराम्, इक्षुकाण्डरसोदकाम् इक्षुकाण्डरससदृशोदकाम् ॥ १७ ॥ दुन्दुभीभिरिति । भृशं नादिताम् अत्यर्थमनुत्तमामिति भृशात्यर्थशब्दयोः सम्बन्धः ॥ १८ ॥ विमानमिति । सुनिवेशितवेश्मान्ताम् सुष्ठु निवेशिताः वेश्मनामन्ताः प्रदेशाः यस्यां ताम् ॥ १९ ॥

सुनिवेशिताः सुष्ठु निर्मिताः वेश्मान्ताः गृहप्रान्ता यस्यां सा । सर्वतः सम्यक्सुनिर्मितगृहामित्यर्थः । नरोत्तमैः विद्वद्भिः समावृताम् ॥१९॥ ये चेति, श्लोकत्रयमेकान्वयम् । लघुहस्ताः शिक्षिताङ्गाः । "लघुहस्तः सुहस्तश्च कृतास्त्रः कृतपुङ्खकः" इति वैजयन्ती । विशारदाः समर्थाः, उपायज्ञा इति यावत् । तथाभूता अपि ये राजानः विविक्तं विजनम्, असहायमिति यावत् । "विविक्तौ पूतविजनौ" इत्यमरः । अपरापरम् अविद्यमानपरापरम् । परे पित्रादयः, अपरे पुत्रादयः तैर्हीनम्, वंशस्यैकतन्तुमिति यावत् । शब्दवेध्यं शब्देन लक्ष्येण वेध्यम्, एतेन प्रच्छन्नवेधनमुपलक्ष्यते । विततं पलायितं च बाणैश्च न विध्यन्ति न प्रहरन्ति, किंपुनर्यन्त्रादिभिरिति भावः ॥२०॥ सिंहेति । मत्तानां वने स्वदेशे नर्दतां गर्वेण गर्जताम्, सिंहव्याघ्रवराहाणां बलात् मनोबलेन बाहुबलैरपि

ये च बाणैर्न विध्यन्ति विविक्तमपरापरम् । शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥ २० ॥ सिंहव्याघ्रवराहाणां मत्तानां नर्दतां वने । हन्तारो निशितैः शस्त्रैर्बलाद्बाहुबलैरपि ॥ २१ ॥ तादृशानां सहस्रैस्तामभिपूर्णां महारथैः । पुरीमावासयामास राजा दशरथस्तदा ॥२२॥ तामग्निमद्भिर्गुणवद्भिरावृतां द्विजोत्तमैर्वेदषडङ्गपारगैः । सहस्रदैः सत्यरतैर्महात्मभिर्महर्षिकल्पैर्ऋषिभिश्च केवलैः ॥२३॥ इत्यार्षे श्रीरा०वाल्मी० आदिकाव्ये बालकाण्डे पञ्चमः सर्गः ॥५॥

सहकारिभिः निशितैस्तीक्ष्णैः शस्त्रैरायुधैः करणैर्हन्तारः । "शस्त्रमायुधलोहयोः" इत्यमरः ॥२१॥ तादृशानामिति । महारथैः "आत्मानं सारथिं चाश्वान् रक्षन् युद्ध्येत यो नरः । स महारथसंज्ञः स्यात्" इत्युक्तलक्षणैः । तादृशानां तेषां सहस्रैः अभिपूर्णां तां तथात्वेन प्रसिद्धां पुरीम् आवासयामास ॥२२॥ तामिति । अग्निमद्भिः आहिताग्निभिः । गुणवद्भिः शमदमादिगुणवद्भिः । वेदानां षडङ्गानां च पारमन्तमध्ययनेन गच्छन्तीति तथा । "अन्तात्यन्त–" इत्या

ये च बाणैरित्यादि । विविक्तं सहायरहितम् । अपरापरं परे पित्रादयः, अपरे पुत्रादयः तैर्हीनम्, वंशस्यैकतन्तुमिति यावत् । शब्दवेध्यं शब्देन ज्ञात्वा वेद्धुं योग्यम्. अनेन प्रच्छन्नवेधनमुपलक्ष्यते । अपरस्परदर्शिन एव विध्यन्तीत्यर्थः । विततं भीत्या सम्मुखात्पलायितम्, लघुहस्ताः-शीघ्रवेधिनः । ये विविक्तादीन् बाणैर्न विध्यन्ति तैर्महारथैरभिपूर्णामित्युत्तरत्र सम्बन्धः । बलात्-कायबलात् । बाहुबलैरस्त्रशिक्षालब्धभुजबलैः ॥ २०–२२ ॥ तामिति । अग्निमद्भिः आहिताग्निभिः । गुणवद्भिरनसूयादि

मुनि०–य इति । ये अयोध्यावासिनः शूराः बाणैर्विविक्तम् एकान्तस्थम्, पूतमिति वा । " विविक्तौ पूतविजनौ " इत्यमरः । परश्च अपरश्च परापरौ तौ न विद्येते यस्य स तथोक्तः तम् । वंशस्यैकाकितया स्थितं पितृभ्रातृपुत्रादिरहितमित्यर्थः । शब्दवेध्यम् एतेन प्रच्छन्नवे...मुपलक्ष्यते । अपरस्परदर्शन एव विध्यन्तीत्यर्थः । विततं विप्रकीर्णं जनम् । लघुहस्ताः-शीघ्रवेधिनः । विशारदाः समर्थाः ॥ २०–२२ ॥

दिना डप्रत्ययः । सहस्रदैः बहुप्रदैः । सत्ये सत्यवचने रतैः मितैः । महात्मभिः महामतिभिः । केवलैः ऋषिभिरपि । महर्षिकल्पैः वसिष्ठादिमहर्षितुल्यैः । ईषदसमाप्तौ कल्पप्प्रत्ययः । द्विजोत्तमैः आवृतां ताम्, आवासयामासेत्यनुषज्यते । अत्र वंशस्थवृत्ते प्रथमचरणे जगणाभावेनोपजातिवृत्तमिति बोध्यम् । आचार्याः प्राहुः—" तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन " इति श्रुतिरनेनोपबृंह्यते । द्विजोत्तमैः " अष्टवर्षं ब्राह्मण मुपनयीत " इत्युक्तरीत्या कृतोपनयनैः, वेदषडङ्गपारगैः अधीतसाङ्गसशिरस्कवेदैः, अग्निमद्भिरनुष्ठितयज्ञैः, सहस्रदैः यथाशक्तिब्राह्मणसात्कृतद्रव्यैः, महात्मभिः महायत्नैः, कृततपस्कैरित्यर्थः । गुणवद्भिः शमदमाद्युपेतैः " शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वा " इत्युक्तशमदमादिमद्भिः । सत्यरतैः "सत्यस्य सत्यम्" इत्युक्ते ब्रह्मणि भक्तिरूपापन्नज्ञानवद्भिः, केवलैः "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् " इत्युक्तरीत्याना

तस्यां पुर्यामयोध्यायां वेदवित्सर्वसंग्रहः । दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥ १ ॥
इक्ष्वाकूणामतिरथो यज्वा धर्मरतो वशी । महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥ २ ॥

विष्कृतस्वरूपैः । ऋषिभिः "बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्युक्तस्वरूपैः । महर्षिकल्पैः " यत्रर्षयः प्रथमजा ये पुराणाः " इत्युक्तरीत्या सूरिसदृशैः, आवृताम् अवतरिष्यति भगवानत्रेति समागम्य संसेवितां तामावासयामास । यद्वा हे केवल परिशुद्धचित्त ! ऐः त्वमपि वासाय गच्छेति कविराह, तदुपगतेतिवत् ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

एवं भगवदवतारयोग्यदेशो दर्शितः, अथ तद्योग्यं पुरुषं दर्शयति सर्गे षष्ठे—तस्यामित्यादि श्लोकचतुष्टयमेकान्वयम् । दशरथः तस्यां वसन् सन् जगत् अपालयत् । स कीदृशः ? वेदं वेदार्थं वेत्तीति वेदवित्, संगृह्णाति धनप्रदानादिना स्वीकरोतीति सङ्ग्रहः । पचाद्यच् । सर्वेषां शूराणां विदुषां च संग्रहः सर्वसंग्रहः । दीर्घदर्शी दीर्घं चिरकालभाविपदार्थं द्रष्टुं शीलमस्यास्तीति तथा । ताच्छील्ये णिनिः । महातेजाः महाप्रतापः "तेजः पराक्रमे प्राणे वर्चस्य र्चिषि रेतसि" इति रत्नमाला । पुरे भवा जनाः पौराः, जनपदे भवा जानपदाः, ते प्रिया यस्य स तथा ॥१॥ इक्ष्वाकूणामिति । इक्ष्वाकूणां मध्ये अति रथः बहुभिर्महारथैरेको योद्धा रथी । यज्वा विधिनेष्टवान् । धर्मेषु तटाकखननारामप्रवर्तनादिषु रतः । वशी स्वाधीनसर्वजनः । "त्रिष्वधीने वशो वाञ्छा

गुणयुतैः । केवलैः मुख्यैः ॥२३॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां पञ्चमः सर्गः ॥ ५ ॥ तस्यामिति । सर्ववित्

प्रभुत्वार्थानतासु ना" इति भास्करः। महर्षिकल्पः महर्षितुल्यः। राजर्षिः राजरूपकर्षिः। त्रिषु लोकेषु भूर्भुवः स्वर्लोकेषु विश्रुतः प्रसिद्धः ॥ २ ॥ बलवान् चतुरङ्गसेनायुक्तः. अतएव निहतामित्रः निहतशात्रवः। मित्रवान् प्रशस्तमित्रयुक्तः। विजितेन्द्रियः निषिद्धेषु शब्दादिष्वप्रवर्तितेन्द्रियः। धनैः हिरण्यरत्नदिव्याम्बराभरणादिभिः अन्यैः तदपेक्षयान्यैः। संग्रहैः संचयैः, निधिभिरितियावत्। शक्रवैश्रवणोपमः यथाक्रमम् इन्द्रकुबेरोपमः ॥३॥ यथा मनुः वैवस्वतमनुः लोकस्य परिरक्षिता तथा दशरथो राजा तस्यां वसन् जगद्भूलोकम् अपालयत् ॥ ४ ॥ एवं राजगुणाः उक्ताः लोकपालनं चोक्तम्। संप्रति पुरपरिपालनमाह—तेनेति। सत्ये अभिसन्धा अभिप्रायो यस्य तेन त्रिवर्गं धर्मार्थकामान् अनुतिष्ठता अनुसरता पालिता सत्यादिपुरस्सरं त्रिवर्गार्थं पालितेत्यर्थः ॥ ५॥ पालनफलं दर्शयति—तस्मिन्नित्यादिना मानवेन्द्रेण धीमतेत्यन्तेन। हृष्टाः वाससौख्येन प्रीताः. धर्मात्मानः बहुश्रुतं शास्त्रश्रवणं येषां ते बहुश्रुताः। स्वैः स्वैः धनैस्तुष्टाः, परधनानभिलाषिण इत्यर्थः। वीप्सया स्ववर्णस्वाश्रमोचितधनमात्रपरिग्रहः सूच्यते। अलुब्धाः दाने प्राप्ते लोभरहिताः। सत्यवादिनः सत्यवचनशीलाः, आसन्नितिशेषः ॥६॥ नेति। तस्मिन्पुरोत्तमे पुरश्रेष्ठे अल्पसन्निचयः अल्पकोशवान्, अगवाश्वधनधान्यवान् असिद्धार्थः धनादिभिरप्राप्तधर्मार्थकामरूपपुरुषार्थः यः कुटुम्बी स कश्चिन्नासीत्। "माता पिता स्नुषे पुत्रौ पुत्री पत्न्यातिथिः स्वयम्। दशसंख्यः कुटुम्बीति विष्णुनोक्तं द्विजोत्तम ॥" ॥ ७ ॥ कामीति। कामी कामैकपरः पुरुषः अयोध्यायां क्वचित् कोणेऽपि द्रष्टुं न शक्यम्। शक्य

बलवान्निहतामित्रो मित्रवान् विजितेन्द्रियः। धनैश्च संग्रहैश्चान्यैः शक्रवैश्रवणोपमः ॥ ३ ॥ यथा मनुर्महातेजा लोकस्य परिरक्षिता। तथा दशरथो राजा वसन् जगदपालयत् ॥ ४ ॥ तेन सत्याभिसन्धेन त्रिवर्गमनुतिष्ठता। पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥ ५ ॥ तस्मिन् पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः। नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥ ६ ॥ नाल्पसन्निचयः कश्चिदासीत्तस्मिन् पुरोत्तमे। कुटुम्बी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥७॥ कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित्। द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥८॥

सर्वज्ञः। सर्वसंग्रहः सर्वान् संगृह्णाति वशीकरोतीति तथा ॥१॥ इक्ष्वाकूणामिति। वशी नियतेन्द्रियः ॥२-४॥ तेनेति। सत्याभिसन्धेन सत्यप्रतिज्ञेन ॥५॥६॥ नाल्पसन्निचय इति। सतामुत्कृष्टधनानां निचयः सन्निचयः अल्पः सन्निचयो यस्मात्तथा स नास्ति, अगवाश्वधनधान्यवानिति छेदः ॥७॥ कामीति। कामी कामैकपरः।

मिति निपातः । "शक्यमरविन्दसुरभिः" इति कालिदासेनापि प्रयुक्तः । कदर्यो ना द्रष्टुं न शक्यम् । "आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् । लोभाद्यः पितरौ भ्रातॄन् स कदर्य इति स्मृतः ॥" नृशंसः क्रूरोऽपि न द्रष्टुं शक्यम् । "नृशंसो घातुकः क्रूरः" इत्यमरः । अविद्वान् विद्यारहितः । पर लोको नास्तीति यो मन्यते स नास्तिकः । "अस्ति नास्ति दिष्टं मतिः" इति ठक् ॥ ८ ॥ सर्व इति । अयोध्यायां सर्वे नराः सर्वा नार्यश्च धर्मशील त्वादिविशिष्टा भवन्ति । सुसंयताः सुष्टु नियतेन्द्रियाः शीलवृत्ताभ्याम् उदिताः उत्पन्नाः, सहजशीलवृत्ता इत्यर्थः । शीलं सत्स्वभावः, वृत्तमाचारः । "शीलं स्वभावे सद्वृत्ते । वृत्तं पद्ये चरित्रे च" इत्युभयत्राप्यमरः । अमलाः निर्मलमनस्काः ॥ ९ ॥ नाकुण्डली । अयोध्यायां न विद्यते एवमुत्तरत्राप्यन्वयः । अल्पभोगवान् अल्पसुखवान् । "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः । नामृष्टः अनभ्यङ्गस्नान

सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः । उदिताः शीलवृत्ताभ्यां महर्षय इवामलाः ॥ ९ ॥
नाकुण्डली नामकुटी नास्रग्वी नाल्पभोगवान् । नामृष्टो नानुलिप्ताङ्गो नासुगन्धश्च विद्यते ॥ १० ॥
नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक् । नाहस्ताभरणो वापि दृश्यते नाप्यनात्मवान् ॥ ११ ॥
नानाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः । कश्चिदासीदयोध्यायां न च निर्वृत्तसङ्करः ॥ १२ ॥

शुद्धः नानुलिप्ताङ्ग इत्यत्र सुप्सुपेति समासः । चन्दनाद्यननुलिप्ताङ्ग इत्यर्थः । अत्रापि नञनुषज्यते । सुगन्धशब्देन कुङ्कुमकस्तूर्यादिकमुच्यते ॥ १० ॥ नामृष्टेति । मृष्टं पूर्णम्, अन्नाभावप्रयुक्ताल्पभोजनवानयोध्यायां न दृश्यते । एवमुत्तरत्रापि योज्यम् । दाता प्रकरणादन्नदाता । अङ्गदं बाहुभूषणम्, निष्कमुरोभूषणम् । "साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री" इत्यमरः । ते धरतीति अङ्गदनिष्कधृक् । धृगित्येव पाठः । हस्ता भरणं कटकाङ्गुलीयकादि । अनात्मवान् अजितान्तःकरणः ॥ ११ ॥ नेति । आहिताग्निः अजस्राग्निहोत्री । यज्वापि हि कश्चिद्विच्छिन्नाग्निर्भवति । अयज्वा

कदर्यः अतिलोभी, आत्मानं पुत्रादींश्च यो वञ्चयति स कदर्यः । शक्यमिति वस्तुसामान्येन नपुंसकलिङ्गनिर्देशः ॥ ८ ॥ ९ ॥ नाकुण्डलीति । अमृष्टः अनिर्मलशरीरः, शोभनो गन्धः स्वाभाविकशरीरामोदो यस्य । निष्कमुरोभूषणम् ॥ १० ॥ ११ ॥ नेति । अयज्वानाम यागरहितः, आहिताग्निः केवलाग्न्याधानवान । निर्वृत्तः सङ्करः वर्णसङ्करो यस्य ॥ १२ ॥

सोमयागरहितः। क्षुद्रः अल्पविद्यैश्वर्यवान्, तिरस्काराई इति यावत्। निर्वृत्तः अनुष्ठितः सङ्करः परक्षेत्रे बीजावापादिर्येन सः ॥१२॥ स्वकर्मेति। अध्ययनं जपरूपाध्ययनम्। संयताः सङ्कुचिताः ॥ १३ ॥ नेति। अनृतम् असत्यं कायति वक्तीत्यनृतकः। "कै शब्दे" इत्यस्मादात्वे "आतोऽनुपसर्गे कः" इति कप्रत्ययः। श्रुतं श्रवणम्। भाव निष्ठा। बहुप्रकारशास्त्रश्रवणरहित इत्यर्थः। असूयतीत्यसूयकः। "कण्ड्वादिभ्यो यक्" इति यकि धातुसंज्ञायां वुञ्। अशक्तः ऐहिकामुष्मिकार्थसाधनाशक्तः। तदा दशरथराज्यपालनकाले। अनेनायं श्लोको जानपदविषय इति गम्यते, तेनात्र न पौनरुक्त्याशङ्का ॥१४॥

स्वकर्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः। दानाध्ययनशीलाश्च संयताश्च प्रतिग्रहे ॥ १३ ॥
न नास्तिको नानृतको न कश्चिदबहुश्रुतः। नासूयको न वाशक्तो नाविद्वान् विद्यते तदा ॥ १४ ॥
नाषडङ्गविदत्रासीन्नाव्रतो नासहस्रदः। न दीनः क्षिप्तचित्तो वा व्यथितो वापि कश्चन ॥ १५ ॥
कश्चिन्नरो वा नारी वा नाश्रीमान्नाप्यरूपवान्। द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान् ॥ १६ ॥
वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः। कृतज्ञाश्च वदान्याश्च शूरा विक्रमसंयुताः ॥ १७ ॥

नेति। षडङ्गानि-शिक्षा कल्पो व्याकरणं निरुक्तिश्छन्दोविचितिर्ज्योतिषामयनं च। अव्रतः चान्द्रायणादिव्रतरहितः। असहस्रदः अबहुप्रदः। दानाध्ययनेत्यत्र विद्यादानमुक्तम्, अत्र हिरण्यादिदानम्। क्षिप्तचित्तः व्याकुलमनस्कः व्यथितः। व्याध्यादिना पीडितः ॥ १५ ॥ कश्चिदिति। अश्रीमान् कान्तिरहितः। अरूपवान् सौन्दर्यरहितः। नारीपक्षे अश्रीमती अरूपवती अभक्तिमती चेत्यूह्यम्। राजनि दशरथे अभक्तिमान् भक्तिरहितः. भक्तिरधिकमान्यविषयस्नेहः ॥ १६ ॥ वर्णेष्विति। अग्रे भवोऽग्र्यः। "अग्राद्यत्"। ब्राह्मणः स चतुर्थो येषां तेषु वर्णेषु वर्तमानाः नराः। देवतातिथिपूजकाः शूद्राणां देवतापूजा तान्त्रिकमन्त्रेण, अतिथिपूजनं हिरण्यादिदानेन। कृतज्ञाः उपकारज्ञाः। वदान्याः दानशौण्डाः। "वदान्यो दानशौण्डः स्यात्"। ॥५६॥

परिग्रहे–स्वभार्यायां संयताः नियताः ॥१३॥ नेति। अनृतः अनृतवादी ॥१४॥ नेति। क्षिप्तचित्तः विक्षिप्तचित्तः ॥१५॥१६॥ प्रथमं राजानं स्तुत्वानन्तरं ब्राह्मणप्रशंसा

१ परिग्रहे इति तीर्थीयपाठः।

इति विश्वः । शूराः ब्राह्मणेष्वध्ययनशूरत्वम् । विक्रमसंयुताः पराक्रमसंयुताः, ब्राह्मणानां पराक्रमो वादकथासु । आसन्निति शेषः ॥१७॥ दीर्घेति । तस्मिन् पुरोत्तमे सर्वे नराः धर्मं सत्यं च संश्रिताः, अतएव हेतोः दीर्घायुषः स्त्रीभिः पुत्रपौत्रैश्च संयुताः आसन् ॥ १८ ॥ क्षत्रमिति । क्षत्रं क्षत्रियजातिः ब्रह्ममुखं ब्राह्मणप्रधानमासीत्, तदाज्ञानुवर्तीति यावत् । "मुखं निःसरणे वक्त्रे द्वार्युपायप्रधानयोः" इति यादवः । वैश्याः क्षत्रमनुव्रताः क्षत्रस्यानुवर्तिनः । शूद्रास्त्रीन् वर्णानुपचारिणः त्रयाणां वर्णानामुपचारशीलाः सन्तः स्वधर्मनिरता आसन् ॥१९॥ एतत्सर्वं दशरथपालनकृतमित्याह–सेति ॥२०॥ योधाना मिति । अग्निकल्पानां शौर्यातिशयादग्नितुल्यानाम्, पेशलानामकुटिलानाम् । अमर्षिणां पराभिभवासहिष्णूनाम् । कृतविद्यानां शिक्षितशस्त्रास्त्रादिविद्या

दीर्घायुषो नराः सर्वे धर्मं सत्यं च संश्रिताः । सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥ १८ ॥ क्षत्रं ब्रह्ममुखं चासीद्वैश्याः क्षत्रमनुव्रताः । शूद्राः स्वधर्मनिरतास्त्रीन्वर्णानुपचारिणः ॥ १९ ॥ सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता । यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता ॥ २० ॥ योधानामग्निकल्पानां पेशलानाममर्षिणाम् । सम्पूर्णा कृतविद्यानां गुहा केसरिणामिव ॥ २१ ॥ काम्भोजविषये जातैर्बाह्लीकैश्च हयोत्तमैः । वनायुजैर्नदीजैश्च पूर्णा हरिहयोत्तमैः ॥ २२ ॥ विन्ध्यपर्वतजैर्मत्तैः पूर्णा हैमवतैरपि । मदान्वितैरतिबलैर्मातङ्गैः पर्वतोपमैः ॥ २३ ॥

नाम् । योधानां भटानाम् । "पूरणगुण–" इत्यादिना षष्ठी । सा पुरी योधैः सम्पूर्णा, गुहा केसरिभिः सिंहैरिव, तथा दुर्द्धर्षाभूदित्यर्थः ॥२१॥ एवं चतुरङ्गसम्पत्तिषु पदातिसम्पत्तिमुक्त्वा तुरङ्गसम्पत्तिमाह- काम्भोजेति । काम्भोजविषये काम्भोजाख्यदेशे जातैः, बाह्लीकैः बाह्लीकदेशभवैः । "तत्र भवः" इत्यण् । वनायुजैः वनायुदेशजातैः, नदीजैः सिन्धुदेशोद्भवैः, हरेरिन्द्रस्य हयो हरिहयः उच्चैःश्रवास्तद्वदुत्तमैः हरिहयोत्तमैरश्वश्रेष्ठैः सा पूर्णाभवत् ॥२२ ॥ गजसम्पत्तिमाह–विन्ध्येत्यादिना, श्लोकद्वयमेकान्वयम् । मत्तैर्विन्ध्यपर्वतजैर्मातङ्गैः हैमवतैः हिमवति जातैः । "तत्र जातः" इति शैषिकोऽण् । मदान्वितैः अतिबलैः

अग्र्या ब्राह्मणाश्चतुर्था येषां वर्णानां ते अग्र्यचतुर्थाः ॥१७॥१८॥ क्षत्रमिति । क्षत्रं ब्रह्ममुखं ब्राह्मणानुवर्तीत्यर्थः । वैश्याः क्षत्रमनुव्रताः-क्षत्रस्यानुसारिणः, त्रीन् वर्णान् त्रयाणां वर्णानामुपचारिणोऽभवन्निति शेषः ॥१९॥२०॥ योधानामिति । योधैः पूर्णेत्यर्थः । पेशलानां कुशलानां कृतविद्यानामभ्यस्तविद्यानाम् ॥ २१ ॥ काम्भोजेति । वनायुजैः वनायुदेशजातैर्हरिहयोत्तमैः-हरिहयः उच्चैःश्रवाः तद्वदुत्तमैः,

कृता । इदानीं क्षत्रियादयस्त्रयो वर्णाः प्रशस्यन्ते–वर्णेष्वग्र्यचतुर्थेष्वित्यादित्रिभिः श्लोकैः ।

मातङ्गैर्गजैरपि पर्वतोपमैः॥२३॥ ऐरावतकुलीनैः ऐरावतकुलोद्भवैः । "कुलात् खः" । द्विपैश्च महापद्मः पुण्डरीकाख्यो दिग्गजः तस्य कुलं येषां तैः । द्विपैश्च अञ्जनात् वरुणदिग्गजात् निष्पन्नैर्द्विपैरपि, वामनात् यमदिग्गजान्निष्पन्नैः द्विपैरपि सा पूर्णासीत्॥२४॥ भद्रैरित्यादिसार्द्धश्लोक एकान्वयः । भद्राः मन्द्राः मृगाश्चेति गजजातित्रयम् । "भद्रो मन्द्रो मृगश्चेति विज्ञेयास्त्रिविधा गजाः ।" इति हलायुधः । भद्रमन्द्रो भद्रमृगो मृगमन्द्रश्चेति द्विप्रकृतिका सङ्कीर्णजातयस्तिस्रः, भद्रमन्द्रमृगास्त्रिप्रकृतिकाः सङ्कीर्णगजाः । तल्लक्षणमुक्तं वैजयन्त्याम्–"अङ्गप्रत्यङ्गभद्रत्वं संक्षितं भद्रलक्षणम् । पृथुत्वं श्लथता स्थौल्यं संक्षिप्तं मन्द्रलक्षणम् ॥ तनुप्रत्यङ्गदीर्घश्च प्रायो मृगगुणो मतः । भद्रमन्द्रो भद्रमृगो भद्रमन्द्रमृगोऽपि च । मृगमन्द्रादयोप्येवमिति सङ्करजातयः ॥" इति ।

ऐरावतकुलीनैश्च महापद्मकुलैस्तथा । अञ्जनादपि निष्पन्नैर्वामनादपि च द्विपैः ॥ २४ ॥ भद्रैर्मन्द्रैर्मृगैश्चैव भद्रमन्द्रमृगैस्तथा । भद्रमन्द्रैर्भद्रमृगैर्मृगमन्द्रैश्च सा पुरी । नित्यमत्तैः सदा पूर्णा नागैरचलसन्निभैः ॥ २५ ॥ सा योजने च द्वे भूयः सत्यनामा प्रकाशते । यस्यां दशरथो राजा वसन् जगदपालयत ॥ २६ ॥

एवम्भूतैर्नित्यमत्तैरचलसन्निभैः नागैः सा सदा पूर्णाभवत् ॥२५॥ अतिरथमहारथादिशब्दैः रथसम्पत्तिरपि सूचिता । एवं चतुरङ्गबलसम्पत्त्या न नगरमात्रमप्रधृष्यम्, किन्त्वभितो द्वे योजने दुर्गमं इत्याह–सेति । सा नगरी भूयः नगरात् बहिरपि द्वे योजने द्वयोर्योजनयोः । अत्यन्तसंयोगे द्वितीया । सत्यनामा यथार्थनामा अयोध्यानामा । "डाबुभाभ्यामन्यतरस्याम्" इति डाप् । अत्र हेतुमाह यस्यामिति । योजनत्रयविस्तारवत्यां तस्यां मध्ये योजन

नदीजैः सिन्धुनदीसमुद्भवैः ॥ २२–२४ ॥ विन्ध्यहिमवदादिजातानां गजानां सङ्कीर्णानां च सम्पत्तिमाह–भद्रैरिति । भद्रादयो गजविशेषाः । यथाह हलायुधः–"भद्रो मन्द्रो मृगश्चेति विज्ञेयास्त्रिविधा गजाः" इति । भद्रमन्द्रमृगः त्रिप्रकृतिकः सङ्कीर्णो गजः, तथा भद्रमन्द्रो भद्रमृगो मृगमन्द्रश्च ॥ २५ ॥ सा योजनेति ।

**मुनि०**–भद्रैरिति । तल्लक्षणम्–"पञ्चोन्नतं सप्त मृगस्य दैर्घ्यमष्टौ च हस्ताः परिणाहमानम् । एकद्विवृद्धावथ मन्द्रभद्रौ सङ्कीर्णनागोऽनियतप्रमाणः ॥" अत्र पूर्वार्द्धे मृगाख्यस्य गजस्य लक्षणमुक्तम्, मृगाख्यगजप्रमाणात् एकहस्तमात्रवृद्धौ मन्द्राख्यगज इत्युच्यते । मन्द्राख्यगजात् द्विहस्तवृद्धौ भद्राख्यगज इत्युच्यते । भद्राख्यगजात् त्रिहस्तवृद्धौ भद्रमन्द्रमृगाख्यगज इत्युच्यते । भद्रमन्द्रैः भद्राख्यगजस्य औन्नत्यदैर्घ्यपरिणाहादिप्रमाणैर्मन्द्राख्यगजस्य औन्नत्यदैर्घ्यपरिणाहादिप्रमाणैश्च युक्ता गजाः भद्रमन्द्राः, तैः । भद्रमृगैः भद्राख्यमृगाख्ययोर्गजयोः प्रमाणयुक्ता गजा भद्रमृगाः तैः । मृगमन्द्रैः मृगाख्यमन्द्राख्ययोर्गजयोः प्रमाणयुक्ता गजाः मृगमन्द्राः तैः । सङ्कीर्णनागाः इतरगजाः अनियतप्रमाणाः ॥ २३ ॥

द्वयमत्यन्तं योद्धुमशक्येत्यर्थ इत्यप्याहुः ॥२६॥ पालनं चाह्लादनपूर्वकमित्याशयेनाह—तामिति ॥२७॥ सर्गोक्तमर्थं संक्षेपेण सर्गान्ते पुनर्दर्शयति—तामिति। अर्गलं नाम कवाटनिश्चलत्वाय तिर्यङ्निबद्धो दारुविशेषः। "तद्विष्कम्भोऽर्गलं न ना" इत्यमरः। शिवां मङ्गलवतीम्। वंशस्थोपजातिवृत्तम् ॥२८॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥ अथोक्तगुणसम्पन्नस्य दशरथस्य धर्मानुष्ठानसहायसाधिष्ठसचिवसम्पत्तिं दर्शयति सप्तमे—तस्येत्यादि। महात्मनः महामतेः तस्य इक्ष्वाकोः, दशरथस्य तद्वंशजत्वात्तच्छब्दः। मन्त्रज्ञाः कार्यविचारज्ञाः। इङ्गितं पराभिप्रायः तं मुखविकाससङ्कोचव्यङ्ग्यवचनादिभिर्जानन्तीति इङ्गितज्ञाः। अमात्याः अमा राज्ञः सर्वराज्यव्यापारेषु सहभवन्ती

तां पुरीं स महातेजा राजा दशरथो महान्। शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः ॥ २७ ॥ तां सत्यनामां दृढतोरणार्गलां गृहैर्विचित्रैरुपशोभितां शिवाम्। पुरीमयोध्यां नृसहस्रसंकुलां शशास वै शक्रसमो महीपतिः ॥ २८ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षष्ठः सर्गः ॥ ६ ॥

तस्यामात्या गुणैरासन्निक्ष्वाकोस्तु महात्मनः। मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः ॥ १ ॥ अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः। शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥ २ ॥ धृष्टिर्जयन्तो विजयः सिद्धार्थो ह्यर्थसाधकः। अशोको मन्त्रपालश्च सुमन्त्रश्चाष्टमोऽभवत् ॥ ३ ॥

त्यमात्याः। "अव्ययात्त्यप्"। गुणैः वक्ष्यमाणमन्त्रिगुणैः उपेता आसन् ॥ १ ॥ "मन्त्रिणः सप्त वाष्टौ वा प्रकुर्वीत परीक्षितान्" इति मनुनोक्तरीत्याह—अष्टाविति। शुचयः सर्वात्मना स्वामिद्रोहचिन्तारहिताः, नित्यशः राजकृत्येषु तदनुष्ठानेषु अनुरक्ताः तत्पराः, अष्टावमात्या बभूवुः ॥ २ ॥ तेषां नामानि दर्शयति—धृष्टिरिति। धृष्टिः प्रथमोऽभवत् जयन्तो द्वितीयोऽभूत् इति क्रमेण योजयित्वा सुमन्त्रोऽष्टमोऽभवदिति योज्यम् ॥ ३ ॥

सा पुरी अन्तर्द्वयोर्योजनयोर्भूयः सत्यनामा अतिशयेन योद्धुमशक्येत्यन्वर्थनामेत्यर्थः ॥ २६ ॥ २७ ॥ तामिति। दृढतोरणार्गलाम् अर्गलंनाम कवाटावष्टम्भक तिर्यक्स्थापितो दारुविशेषः ॥ २८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां षष्ठः सर्गः ॥ ६ ॥ तस्यामात्या इति। गुणैः प्रज्ञादिभिः मन्त्रज्ञा राजकार्यविचारात्मकं मन्त्रं जानन्तीति तथा। प्रियस्य राज्ञः हिते रताः। इङ्गितज्ञाः मुखविकासादिलिङ्गैः पराभिप्रायवेदिनः ॥ १ ॥ अष्टाविति। शुचयश्चानुरक्ताश्च राज्यकार्येषु नित्यशः इत्यनेन स्वप्रयोजनं विहाय स्वामिकार्यनिरतत्वमुच्यते ॥ २ ॥ ३ ॥

ऋत्विजाविति । वसिष्ठः वामदेवश्च द्वौ ऋषिसत्तमौ ऋत्विजौ पुरोहितौ अभिमतौ प्रथमौ आस्ताम्, तथा अभिमताः अपरे मन्त्रिणः ऋत्विजः जाबालिप्रभृतयश्चासन् ॥४॥ अथ मन्त्रिगुणान् प्रपञ्चयति सर्गशेषेण-विद्येति । विद्यासु आन्वीक्षिकीप्रभृतिषु विनीताः शिक्षिताः, ह्रीमन्तः अकृत्यकरणेषु लज्जावन्तः, कुशलाः नीतौ समर्थाः, नियतेन्द्रियाः अविहितविषयेभ्यो निवृत्ताः, श्रीमन्तः लक्ष्मीसमृद्धाः, महात्मानः महाबुद्धयः, शास्त्रज्ञाः नीतिशास्त्रज्ञाः, दृढविक्रमाः अप्रतिहतपराक्रमाः ॥ ५ ॥ कीर्तिमन्त इति । प्रणिहिताः राजकृत्येष्वप्रमत्ताः, यथावचनकारिणः यथोक्तवन्तस्तथैव कुर्वन्ति, न तु " मनस्यन्यद्वचस्यन्यत् कर्मण्यन्यत् " इति न्यायत इति भावः । तेजःक्षमायशांसि प्राप्ताः । " द्वितीया श्रित-" इत्यादिना समासः । अत्र

ऋत्विजौ द्वावभिमतौ तस्यास्तामृषिसत्तमौ । वसिष्ठो वामदेवश्च मन्त्रिणश्च तथाऽपरे ॥ ४ ॥ विद्याविनीता ह्रीमन्तः कुशला नियतेन्द्रियाः । श्रीमन्तश्च महात्मानः शास्त्रज्ञा दृढविक्रमाः ॥ ५ ॥ कीर्तिमन्तः प्रणिहिता यथावचनकारिणः । तेजःक्षमायशःप्राप्ताः स्मितपूर्वाभिभाषिणः । क्रोधात्कामार्थहेतोर्वा न ब्रूयुरनृतं वचः ॥ ६ ॥ तेषामविदितं किञ्चित् स्वेषु नास्ति परेषु वा । क्रियमाणं कृतं वापि चारेणापि चिकीर्षितम् ॥ ७ ॥ कुशला व्यवहारेषु सौहृदेषु परीक्षिताः । प्राप्तकालं तु ते दण्डं धारयेयुः सुतेष्वपि ॥ ८ ॥

यशः प्रतापक्षमाजन्या प्रथा । कीर्तिमन्त इत्यत्र कीर्तिस्तु मन्त्रज्ञताकृता प्रथा । स्मितपूर्वाभिभाषिण इत्यनेन निर्मत्सरत्वमुच्यते । आसन्, मन्त्रिण इति श्लोकद्वयशेषः । क्रोधादिति अर्द्धमेकान्वयम् । क्रोधाद्वा कामहेतोरर्थहेतोर्वा अनृतमसत्यं वचो न ब्रूयुः ॥ ६ ॥ तेषामिति । तेषां मन्त्रिणां स्वेषु स्वराष्ट्रीयवृत्तान्तेषु परेषु परराष्ट्रीयवृत्तान्तेषु च, कृतं क्रियमाणम्, चिकीर्षितं कर्त्तुमिष्टम्, करिष्यमाणमिति यावत् । यत्किञ्चिदपि वा वृत्तं चारेण चारमुखेन अविदितं नास्ति, सर्वोऽपि स्वराष्ट्रपरराष्ट्रवृत्तान्तभेदस्तैर्ज्ञात इत्यर्थः ॥ ७ ॥ कुशला इति । व्यवहारेषु निश्चितार्थप्रतिपादनेषु

ऋत्विजाविति । प्रधानऋत्विजोर्वसिष्ठवामदेवयोरपि मन्त्रिमध्ये पाठात्, मन्त्रपर्यालोचनायामप्यन्तर्भावो द्योत्यते ॥४॥ विद्येति । विद्याविनीताः विद्यया विनीताः । शास्त्रज्ञाः-शस्त्रप्रयोगप्रतिपादकधनुर्वेदविद् इत्यर्थः । दृढविक्रमाः शास्त्रप्रयोगादिना दृढपराभिभवसामर्थ्यवन्तः । प्रणिहिताः सर्वेष्वपि कार्येषु सावधानाः । कामार्थहेतोः कामहेतोरर्थहेतोर्वेति हेतुशब्दः प्रत्येकं सम्बध्यते ॥ ५ ॥ ६ ॥ तेषामिति । चारेण हेतुना अविदितं किञ्चिन्नास्तीति संबन्धः । स्वेषु नास्ति परेषु वा स्वकीयेषु शत्रुषु वा दूतमुखेन सर्वं जानन्तीत्यर्थः ॥ ७ ॥ कुशला इति । सौहृदेषु मित्रभावेषु । प्राप्तकालम् अवसरप्राप्तं दण्डम् ॥ ८ ॥

कुशलाः समर्थाः । सौहृदेषु विषयेषु परीक्षिताः राज्ञा बहुधा परीक्षितास्ते मन्त्रिणः सुतरपि प्राप्तकालं प्राप्तसापराधत्वलक्षणकालम्, दण्डं धारयेयुः प्रवर्त्तयेयुः ॥ ८ ॥ कोशेति । कोशस्य अर्थनिचयस्य, सङ्ग्रहणे सम्पादने । बलस्य चतुर्विधसैन्यस्य । परिग्रहे अर्थप्रदानेन संरक्षणे च युक्ता अवहिता स्सन्तः अहितं शत्रुमपि, अदूषकम् अनपराधिनं न विहिंस्युः न पीडयेयुः । शकि लिङ् ॥ ९ ॥ वीराश्चेति । वीराः शत्रुनिवारणक्षमाः । नियतोत्साहाः शत्रुजये नित्योत्साहाः । राजशास्त्रं नीतिशास्त्रम् अनुष्ठिताः अनुष्ठितवन्तः, अतएव विषयवासिनाम्-स्वराज्यवासिनाम्, शुचीनां साधूनां नित्यं रक्षितारः, अशुचीनां तु निहन्तार इति च सिद्धम् । ते आसन्नित्यनुषज्यते ॥ १० ॥ ब्रह्मेति । ब्रह्म ब्राह्मणान् क्षत्रं क्षत्रियांश्च अहिंसन्तः विनापराधं तत्स्वमनप हरन्तः । सत्यप्यपराधे पुरुषस्य अपराधिनः, बलाबलम् अपराधतारतम्यं शक्तितारतम्यं वा संप्रेक्ष्य अपराधगुरुत्वे सुतीक्ष्णदण्डाः, अपराधाल्पत्वे मृदु

कोशसंग्रहणे युक्ता बलस्य च परिग्रहे । अहितं वापि पुरुषं न विहिंस्युरदूषकम् ॥ ९ ॥
वीराश्च नियतोत्साहा राजशास्त्रमनुष्ठिताः । शुचीनां रक्षितारश्च नित्यं विषयवासिनाम् ॥ १० ॥
ब्रह्मक्षत्रमहिंसन्तस्ते कोशं समपूरयन् । सुतीक्ष्णदण्डाः संप्रेक्ष्य पुरुषस्य बलाबलम् ॥ ११ ॥
शुचीनामेकबुद्धीनां सर्वेषां संप्रजानताम् । नासीत्पुरे वा राष्ट्रे वा मृषावादी नरः क्वचित ॥ १२ ॥

दण्डाश्च । शक्तत्वे सुतीक्ष्णदण्डाः अशक्तत्वे मृदुदण्डाश्च कोशं समपूरयन् ॥ ११ ॥ अथ मन्त्रिगुणसम्पत्तिफलं दर्शयति—शुचीनामित्यादिश्लोकद्वयेन । शुचीनाम् एकरूपकरणत्रयवताम् । एकबुद्धीनाम् एककण्ठानां सर्वेषां मन्त्रिणां संप्रजानतां राज्यतन्त्रं विचारयताम् । भावलक्षणसप्तम्यर्थे षष्ठी । "षष्ठी चानादरे" इत्यत्र योगविभागेन । सर्वेषु मन्त्रिषु राज्यतन्त्रं विचारयत्स्वित्यर्थः । पुरे वा राष्ट्रे वा क्वचित्कोऽपि मृषावादी असत्यवादी नरो नासीत् ॥ १२ ॥

कोशेति । कोशसंग्रहणे अर्थसंपादने अहितमप्यदूषकम् अनपराधिनम्, न विहिंस्युः, शत्रुमप्यनपराधिनं न दण्डयन्तीत्यर्थः ॥ ९ ॥ वीराश्चेति । राजशास्त्रमनुष्ठिताः-नीतिशास्त्रानुसारिणः ॥ १० ॥ ब्रह्मेति । अभिपूरयन्निति अडभाव आर्षः । पुरुषस्य बलाबलं संप्रेक्ष्य, सुतीक्ष्णदण्डाः " देशकालवयःशक्तीस्संचिन्त्य दण्डकर्मणि " इति वचनात् ॥ ११ ॥ शुचीनामित्यादौ भावलक्षणे सप्तम्यर्थे षष्ठी । एकबुद्धीनामेकमत्यवतां सर्वेष्वमात्येष्वैकमत्यमुपगतेषु सत्सु पुरे राष्ट्रे वा मृषावादी नरो नास्तीति योजना ॥ १२ ॥

कश्चिदिति । किञ्च तत्र पुरराष्ट्रेषु कश्चिन्नरः दुष्टः कुटिलः परदाररतश्च नासीत्, प्रत्युत यद्राष्ट्रं पुरवरं च तत् सर्वं प्रशान्तमेव आसीत् । नगरजनपदवासिनः सर्वेऽप्यन्यायाधर्मरहिता एवासन् इत्यर्थः ॥ १३ ॥ पुनस्तान्विशेषयति—सुवासस इत्यादिना सार्द्धश्लोकत्रयेण । सुवाससः शुभ्रवाससः, सुवेषाः शोभनालङ्काराः, सुशीलिनः सुसद्वृत्ताः, नरेन्द्रस्य स्वामिनः हितार्थं नयचक्षुषा जाग्रतः जागरूकाः, सर्वदा नीतिषु दत्तावधाना इत्यर्थः ॥ १४ ॥ गुराविति । गुरौ गुरुषु । जात्येकवचनम् । गुणगृहीताः गृहीतगुणाः, गुणमात्रग्राहिणो दोषमपश्यन्त इत्यर्थः । पराक्रमे विश्रुतं प्रख्याताः, विदे

कश्चिन्न दुष्टस्तत्रासीत् परदाररतो नरः । प्रशान्तं सर्वमेवासीद्राष्ट्रं पुरवरं च तत् ॥ १३ ॥ सुवाससः सुवेषाश्च ते च सर्वे सुशीलिनः । हितार्थं च नरेन्द्रस्य जाग्रतो नयचक्षुषा ॥ १४ ॥ गुरौ गुणगृहीताश्च प्रख्याताश्च पराक्रमे । विदेशेष्वपि विज्ञाताः सर्वतो बुद्धिनिश्चयात् ॥ १५ ॥ सन्धिविग्रहतत्त्वज्ञाः प्रकृत्या सम्पदान्विताः । मन्त्रसंवरणे शक्ताः श्लक्ष्णास्सूक्ष्मासु बुद्धिषु ॥ १६ ॥ नीतिशास्त्रविशेषज्ञाः सततं प्रियवादिनः ॥ १७ ॥ ईदृशैस्तैरमात्यैश्च राजा दशरथोऽनघः । उपपन्नो गुणोपेतैरन्वशासद्वसुन्धराम् ॥ १८ ॥

शेषु देशान्तरेष्वपि सर्वतः सर्वत्रातीतानागतविषयेषु, बुद्धिनिश्चयात् निश्चयरूपबुद्धेर्हेतोः विज्ञाताः विख्याताः॥१५॥ सन्धीति । सन्धिः सामन्तैः समाधानम्, विग्रहः तैः कलहः, तयोस्तत्त्वं देशकालाद्युचितत्वम् तज्जानन्तीति तथा । उक्तं च मनुना—"यदा त्ववाल्पिका पीडा तदा सन्धिं समाश्रयेत् । अभ्युच्छ्रयो यदात्मानं तथा मन्येत विग्रहम्॥" इति । प्रकृत्या स्वभावेन, सम्पदा ऐश्वर्येण अन्विताः, सम्पदभावे तच्चापलेनान्यथा कुर्युरिति भावः । मन्त्रो राष्ट्रकार्यचिन्ता, तस्य संवरणे बहिरप्रकटने शक्ताः, सम्पत्कार्यमिदम् । सूक्ष्मासु बुद्धिषु सूक्ष्मार्थविशेषविचारेषु श्लक्ष्णाः अपरुषाः, सद्यःप्रतिभावन्त इत्यर्थः ॥ १६ ॥ नीतिशास्त्रेति । नीतिशास्त्रविशेषज्ञाः नीत्या शासनविशेषज्ञाः "ग्रन्थशासनयोः शास्त्रम्" इति भास्करः । सततं राज्ञः प्रियवादिनः, हितवचनस्यैव राज्ञः प्रियत्वात् । आसन्निति पूरणीयम् ॥ १७॥ ईदृशैरिति । ईदृशैः उक्तगुणविशिष्टैः गुणोपेतैः उक्तगुणातिरिक्तगुणोपेतैः तैः अमात्यैः

प्रशान्तम्-निर्बाधम् ॥ १३ ॥ अमात्यानेव विशिनष्टि-सुवासस इति ॥ १४ ॥ गुणेति । गुणागुणगृहीताः गृहीतगुणदोषाः । अयं गुणवान् अयं दोषवानिति ज्ञान

१ गुणागुणगृहीताश्च इति तीर्थीयपाठः ।

उपपन्नः । अनघः व्यसनरहितः । उक्तं मनुना—"दश कामसमुत्थानि तथाष्टौ क्रोधजानि च । व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत्॥" इति । व्यसन स्वरूपं चोक्तम्—"मृगयाक्षो दिवास्वापः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गुणः ॥ पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणे । वाग्दण्डनं च पारुष्यं क्रोधजोऽपि गुणोऽष्टकः॥" इति । दशरथो राजा वसुन्धरां भूमिम् । अन्वशासदिति लुङ् । "सर्तिशास्त्यर्तिभ्यश्च" इत्यङ्॥ १८॥ अवेक्षमाण इति श्लोकद्वयमेकान्वयम् । चारेण चक्षुःस्थानीयेन अवेक्षमाणः स्वपरराष्ट्रवृत्तान्तान् पश्यन् । जात्येकवचनमिदम्. अनेकचारैरित्यन्ववच

अवेक्षमाणश्चारेण प्रजा धर्मेण रञ्जयन् । प्रजानां पालनं कुर्वन्नधर्मं परिवर्जयन्॥ १९॥ विश्रुतस्त्रिषु लोकेषु वदान्यः सत्यसङ्गरः । स तत्र पुरुषव्याघ्रः शशास पृथिवीमिमाम् ॥ २० ॥ नाध्यगच्छद्विशिष्टं वा तुल्यं वा शत्रुमात्मनः । मित्रवान्नतसामन्तः प्रतापहतकण्टकः । स शशास जगद्राजा दिवं देवपतिर्यथा ॥२१॥ तैर्मन्त्रिभिर्मन्त्रहिते नियुक्तैर्वृतोऽनुरक्तैः कुशलैः समर्थैः । स पार्थिवो दीप्तिमवाप युक्तस्तेजोमयैर्गोभिरिवोदितोऽर्कः ॥ २२ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तमः सर्गः ॥ ७ ॥

नात् । यथाह मनुः-" वने वनचराः कार्या श्रमणाटविकादयः । परप्रवृत्तिज्ञानार्थं शीघ्राश्चारपरम्पराः ॥ " इति । धर्मेण दण्ड्यदण्डनादिना प्रजा रञ्जयन् आह्लादयन्, पालनमनिष्टनिवृत्तिपूर्वकेष्टप्रापणम् । अधर्मम् अदण्ड्यदण्डनादि, विश्रुतः दानविक्रमादिभिः प्रसिद्धः । वदान्यः दानशीलः । सत्यसङ्गरः सत्यप्रतिज्ञः । "सङ्गरो ना क्रियाकाले प्रतिज्ञाविपदोर्युधि । " इति यादवः । सः पुरुषव्याघ्रः पुरुषश्रेष्ठः । तत्र अयोध्यायाम्. वसन्निति शेषः ॥ १९ ॥ २० ॥ नाध्यगच्छादिति । विशिष्टमधिकं तुल्यं वा आत्मनः शत्रुं नाध्यगच्छत् न ज्ञातवान् । तत्र हेतुमाह—मित्रवान् नतसामन्तः पादानतसमानसीमाधिपतिकः । प्रतापेन हताः कण्टकाः शत्रवो यस्य स तथा । " वेणौ द्रुमाङ्गे रोमाञ्चे क्षुद्रशत्रौ च कण्टकः ।" इति यादवः । स इति शेषः । उक्तमर्थं सदृष्टान्तमाह—स इति अर्द्धमेकम् ॥ २१ ॥ सर्गार्थं सङ्ग्रहेण दर्शयति—तैरिति । मन्त्रहिते मन्त्रे हितं च नियुक्तैः, कुशलैः बुद्धिकुशलैः, समर्थैः

वन्तः ॥ १५ ॥ सन्धीति । मन्त्रसंवरणे मन्त्ररक्षणे सूक्ष्मासु बुद्धिषु शक्ताः सूक्ष्मार्थविषयेषु निश्चयेषु शक्ताः ॥ १६–१८ ॥ अवेक्षमाण इति । स्वेषु परेषु च वृत्तान्तमितिशेषः ॥ १९ ॥ विश्रुत इति । सत्यसङ्गरः सत्यप्रतिज्ञः ॥ २० ॥ नेति । नाध्यगच्छत् न ज्ञातवान् । प्रतापाहतकण्टकः इति पाठे–प्रतापेन समन्तान्निहतकण्टक इत्यर्थः ॥ २१ ॥ तैरिति । मन्त्रहिते निविष्टैः मन्त्रे हिते च निविष्टैः कुशलैः, सूक्ष्मार्थदर्शननिपुणैः समर्थैस्तत्साधनशक्तैः गोभिर्मयूखैस्तेजोमयैः पराभिभव

कार्यकरणसमर्थैः मन्त्रिभिर्वृतः नृपः । तेजोमयैः, स्वार्थे मयट् । गोभिः किरणैर्युक्तः उदितोऽर्कः बालसूर्य इव दीप्तिमवाप । त्रिष्टुबुपजातिवृत्तम् ॥२२॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥ एवं धार्मिकत्वेन दशरथस्य भगवदवतार योग्यत्वमुक्त्वा अथ तदुपयुक्ततदाराधनोपक्रमं दर्शयत्यष्टमे—तस्येति । उत्तरश्लोकवक्ष्यमाणचिन्ता युक्तेति सूचयितुं राज्ञो विशेषणानि । तप्यमानस्य तपश्चरतः । यद्वा पुत्रोत्पादनानुगुणदृष्टसामग्रीसत्त्वेऽपि पुत्राभावात् परितप्यमानस्य ॥ १ ॥ चिन्तयानस्येति । चिन्तयानस्य पुत्रोत्पत्त्युपायं मार्ग

तस्य त्वेवंप्रभावस्य धर्मज्ञस्य महात्मनः । सुतार्थं तप्यमानस्य नासीद्वंशकरः सुतः ॥ १ ॥
चिन्तयानस्य तस्यैवं बुद्धिरासीन्महात्मनः । सुतार्थी वाजिमेधेन किमर्थं न यजाम्यहम् ॥ २ ॥
स निश्चितां मतिं कृत्वा यष्टव्यमिति बुद्धिमान् । मन्त्रिभिस्सह धर्मात्मा सर्वैरेव कृतात्मभिः ॥ ३ ॥
ततोऽब्रवीदिदं राजा सुमन्त्रं मन्त्रिसत्तमम् । शीघ्रमानय मे सर्वान् गुरूंस्तान् सपुरोहितान् ॥ ४ ॥
ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः । समानयत् स तान् सर्वान् समस्तान् वेदपारगान् ॥ ५ ॥
सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् । पुरोहितं वसिष्ठं च ये चान्ये द्विजसत्तमाः ॥ ६ ॥

माणस्य । मुगभाव आर्षः । एवं वक्ष्यमाणरीत्या न यजामि नायाक्षिपम् ॥ २ ॥ स इत्यादि श्लोकद्वयमेकान्वयम् । कृतात्मभिः पर्याप्तबुद्धिभिः । "क्लीबे कृतं युगेऽपि स्यात् फलपर्याप्तयोरपि ।" इति भास्करः ॥३॥ तान् प्रसिद्धान् ॥४॥ तत इति । त्वरितं तत्क्षण एव । त्वरितविक्रमः त्वरितगमनः समस्तान् संमिलितान् समानयत् राजगृहमिति शेषः ॥५॥ गुरूनेवाह—सुयज्ञमिति । समानयदिति पूर्वेणान्वयः । सुयज्ञादीनां गुरुत्वमार्त्विज्यकरणात् ॥६॥

सामर्थ्यप्रचुरैर्मन्त्रविशेषमेतत ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां सप्तमः सर्गः ॥ ७ ॥ तस्य त्वेवमिति । तप्यमानस्य पुत्रानुगुण्यदृष्टसामग्रीसद्भावेपि पुत्रालाभात्परितप्यमानस्य ॥ १ ॥ चिन्तयानस्येति । चिन्तयानस्य पुत्रोत्पत्त्युपायं मार्गमाणस्य, न यजामि न यक्ष्ये ॥ २ ॥ स इति । निश्चितां निश्चितार्थाम् ॥ ३ ॥ ४ ॥ तत इति । त्वरितविक्रमः त्वरितगमनः । सर्वान् गुरून् तान् समस्तान् वेदपारगांश्च ॥ ५ ॥ ६ ॥

तानिति । अथ गुर्वागमनानन्तरम् । श्लक्ष्णं मधुरम् ॥ ७ ॥ ममेति । लालप्यमानस्य भृशं विलपतः । लापेर्यङन्ताच्छानच् ॥ ८ ॥ तदिति । तत् पुत्रेच्छुत्वात् यष्टुं दीक्षितुम्, शास्त्रदृष्टेन कर्मणा विधिना, प्रकारेणेति यावत् । कर्मणा क्रियाकलापेनेति वा । कामं काम्यमानं यज्ञम् । कथं प्राप्स्यामि, विघ्नभूयस्त्वादिति भावः । अत्र निर्विघ्नयागकरणे । बुद्धिः उपायः, विचार्यताम् ॥ ९ ॥ तत इति । प्रत्यपूजयन् तुष्टुवुः । पार्थिवस्य मुखा च्युतम्, साक्षाद्राज्ञोक्तमित्यर्थः । ऊचुरित्यर्द्धमेकम् । दशरथं वच ऊचुः । "ब्रूभ्रशासु–" इत्यादिना द्विकर्मकत्वम् ॥ १० ॥ सम्भारा इति । ते

तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा । इदं धर्मार्थसहितं वाक्यं श्लक्ष्णमथाब्रवीत् ॥ ७ ॥ मम लालप्य मानस्य पुत्रार्थं नास्ति वै सुखम् । तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ॥ ८ ॥ तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा । कथं प्राप्स्याम्यहं कामं बुद्धिरत्र विचार्यताम् ॥ ९ ॥ ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् । वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखाच्च्युतम् । ऊचुश्च परमप्रीताः सर्वे दशरथं वचः ॥ १० ॥ सम्भाराः सम्भ्रियन्तां ते तुरङ्गश्च विमुच्यताम् ॥ ११ ॥ सर्वथा प्राप्स्यसे पुत्रानभिप्रेतांश्च पार्थिव । यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थ मागता ॥ १२ ॥ ततः प्रीतोऽभवद्राजा श्रुत्वैतद्द्विजभाषितम् । अमात्यांश्चाब्रवीद्राजा हर्षपर्याकुलेक्षणः ॥ १३ ॥ सम्भाराः सम्भ्रियन्तां मे गुरूणां वचनादिह । समर्थाधिष्ठितश्चाश्वस्सोपाध्यायो विमुच्यताम् ॥ १४ ॥

प्रसिद्धाः सम्भाराः यज्ञोपकरणानि यूपपात्रादीनि । सम्भ्रियन्तां सम्पाद्यन्ताम् । तुरङ्गः अश्वमेधीयोऽश्वः ॥ ११ ॥ सर्वथेति । एकपुत्रस्यापुत्रप्राय त्वात् "एष्टव्या बहवः पुत्राः" इति वचनाच्च पुत्रानिति बहुवचनम् । प्राप्स्यस इति कर्मकर्त्तर्यात्मनेपदम् । धार्मिकी "धर्मं चरति" इति ठक् । धर्मा चरणविषयिणीत्यर्थः ॥ १२ ॥ तत इति । हर्षेण हर्षाश्रुणा पर्याकुले व्याप्ते ईक्षणे यस्य सः, हर्षेण व्याकुलदृष्टिमान् । क्रियाभेदाद्राजपदद्वयमिति न विरोधः ॥१३॥ सम्भारा इति । मे गुरूणामित्यन्वयः । इह इदानीं समर्थैः "चतुःशता रक्षन्ति यज्ञस्याघाताय" इत्युक्तरीत्या रक्षणसमर्थैः । अधिष्ठितः

तानिति । धर्मार्थसहितं धर्मप्रयोजनसहितं, श्लक्ष्णं मनोहरम् ॥७॥ ममेति । लालप्यमानस्य भृशं विलपतः ॥८॥ तदहमिति । शास्त्रदृष्टेन शास्त्रोक्तेन, कर्मणा क्रियाकला पेन । बुद्धिरत्रेत्यत्र बुद्धिरुपायपरः निश्चयपरो वा, प्रत्यपूजयन् तुष्टुवुः ॥ ९–११ ॥ सर्वथेति । धार्मिकी-धर्मप्रयोजना ॥ १२ ॥ १३ ॥ सम्भारा इति । अत्र समर्थ

रक्षितः सोपाध्यायः अध्वर्युप्रभृतिऋत्विक्सहितः ॥ १४ ॥ सरय्वा इति । अनेन सरयूदक्षिणतीरे अयोध्येति गम्यते । शान्तयः विघ्ननिवारकाणि कर्माणि, अभिवर्द्धन्ताम् अभिवर्द्धयन्ताम् । अन्तर्भावितण्यन्तोऽयं शब्दः । यथाकल्पं यथाक्रमम् "क्रमस्तु कथ्यते कल्पे" इति भागुरिः । यथाविधि यथाशास्त्रम् ॥१५॥ शक्य इति । अयं यज्ञः अश्वमेधः । सर्वेणापि राजमात्रेणापि । महीं क्षयतीति महीक्षित् । "क्षि निवासगत्योः" इत्यस्मात् क्विप् । तेन प्राप्तुं शक्यः कष्टः क्लेशकरः अनर्थकरो वा । अपराधः अपचारः यदि न भवेत्, प्रमादे सत्यनर्थः सिद्ध एवेति भीत्या क्षुद्रा राजानो न कुर्वन्तीत्यर्थः ॥ १६ ॥ छिद्रमिति । विद्वांसः अश्वमेधस्वरूपाभिज्ञाः । ब्रह्मराक्षसाः अकृतप्रायश्चित्ताप्रतिग्राह्यप्रतिग्रहायाज्ययाजनादिपापैः राक्षसत्वं प्राप्ताः ब्राह्मणाः । यज्ञस्वरूपतदपराधज्ञत्वादत्राश्वमेधे छिद्रमपराधम्, मृगयन्ते अन्वेषयन्ते । "मृग अन्वेषणे" इति धातुः । 'छिद्रं रन्ध्रापराधयोः" इति वैजयन्ती । अपराधदर्शने यज्ञमात्मसात्कृत्य नाशयन्तीति भावः । किं तत इत्यत आह निहतस्य चेति ॥ १७ ॥ फलितमाह–तदिति । विधिपूर्वम् अनपराधं यथा भवति तथा, यथा समाप्यते तथा विधानं यत्नः क्रियताम् । इह करणेषु यज्ञानुष्ठानेषु समर्थाः, यूयमिति शेषः । यूयं समर्थाः खल्विति स्तुतिः ॥ १८ ॥ तथेति । ते सर्वे मन्त्रिणः पार्थिवेन्द्रस्य तद्वाक्यं निशम्य यथा आज्ञतम् आज्ञापितम् । "वा दान्त–" इत्यादिना वैकल्पिक इडभावः ॥

सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् । शान्तयश्चाभिवर्धन्तां यथाकल्पं यथाविधि ॥ १५ ॥ शक्यः प्राप्तुमयं यज्ञः सर्वेणापि महीक्षिता । नापराधो भवेत्कष्टो यद्यस्मिन् क्रतुसत्तमे ॥ १६ ॥ छिद्रं हि मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसाः । निहतस्य च यज्ञस्य सद्यः कर्ता विनश्यति ॥ १७ ॥ तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते । तथा विधानं क्रियतां समर्थाः करणेष्विह ॥ १८ ॥ तथेति चाब्रुवन् सर्वे मन्त्रिणः प्रत्यपूजयन् । पार्थिवेन्द्रस्य तद्वाक्यं यथाज्ञप्तं निशम्य ते ॥ १९ ॥

शब्देन "शतं कवचिनः" इत्यादिकल्पसूत्रोक्तोग्रसूतग्रामण्यादय उच्यन्ते । उपाध्यायशब्देन अध्वर्युप्रभृतयश्चत्वारः प्रधाना ऋत्विज उच्यन्ते ॥ १४ ॥ सरय्वा इति । शान्तयः विघ्ननिवारककर्माणि । यथाकल्पम् यथाक्रमम् "क्रमस्तु कथ्यते कल्पे" इति भागुरिः । यथाविधि शास्त्रानतिक्रमेण ॥ १५ ॥ शक्य इत्यादि । सर्वेण येन केनापि । अपराधः मन्त्रलोपक्रियालोपादिरूपः, कष्टः अनर्थकरः अपराधो यदि न स्यात येन केनापि प्राप्तुं शक्यत इत्यर्थः । अपचारसमुद्भवादनन्य सुलभ इत्यर्थः ॥ १६ ॥ छिद्रं हीति । छिद्रम् अपचारं यज्ञादिषु मन्त्रलोपक्रियालोपादिना राक्षसत्वं प्राप्ता ब्राह्मणा ब्रह्मराक्षसा इत्युच्यन्ते ॥ १७ ॥ तद्यथेति । विधिपूर्वं शास्त्रोक्तप्रकारेण छिद्रान्वेषिणां ब्रह्मराक्षसानामवकाशो यथा न भवेत तथा कर्तव्यमिति भावः । समर्थाः, यूयमिति शेषः ॥ १८ ॥ तथेति । यथाज्ञप्तम्

निपातितः। तथा कुर्म इत्यब्रुवन्, समीचीनो महाराजस्याध्यवसाय इति प्रत्यपूजयंश्च॥१९॥ तथेति। वर्द्धयन्तः, आशीर्भिरिति शेषः। द्विजाः ऋत्विजः। भाविन्यां चैत्रपौर्णमास्यां, तथैव करिष्याम इत्युक्त्वा जग्मुरित्यर्थः ॥२०॥ विसर्जयित्वेति। ऋतुः ऋतुसम्भारः। आप्यतां सम्पाद्यताम् ॥२१॥ इतीति। महाद्युतिरिति प्रीत्यतिशयद्योतनम् ॥२२॥ तत इति। ताः प्रसिद्धाः कौसल्याद्याः पत्नीः यज्ञार्हाः "पत्युर्नो यज्ञसंयोगे" इति पतिशब्दस्य यज्ञफल भोक्तृत्वरूपयज्ञसंयोगे नकारादेशविधानात्। दीक्षां दीक्षाध्यवसायं, विशत गच्छतेत्यर्थः। सुतकारणात् सुतार्थम्। "निमित्तकारणहेतूनां प्रयोगे सर्वासा मिष्टिः" इति पञ्चमी॥२३॥ तासामिति। अतिकान्तेन अत्यन्तमिष्टेन। मुखपद्मानि सुन्दराणि मुखानीत्यर्थः॥२४॥ इति श्रीगोविन्दराजविरचिते श्रीरामा

तथा द्विजास्ते धर्मज्ञा वर्द्धयन्तो नृपोत्तमम्। अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम् ॥ २० ॥ विसर्जयित्वा तान् विप्रान् सचिवानिदमब्रवीत्। ऋत्विग्भिरुपदिष्टोऽयं यथावत् क्रतुराप्यताम् ॥२१॥ इत्युक्त्वा नृपशार्दूलः सचिवान् समुपस्थितान्। विसर्जयित्वा स्वं वेश्म प्रविवेश महाद्युतिः ॥ २२ ॥ ततः स गत्वा ताः पत्नीर्नरेन्द्रो हृदयप्रियाः। उवाच दीक्षां विशत यक्ष्येऽहं सुतकारणात् ॥२३॥ तासां तेनातिकान्तेन वचनेन सुवर्चसाम्। मुखपद्मान्यशोभन्त पद्मानीव हिमात्यये ॥ २४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे अष्टमः सर्गः ॥ ८ ॥

एतच्छ्रुत्वा रहः सूतो राजानमिदमब्रवीत्। ऋत्विग्भिरुपदिष्टोऽयं पुरावृत्तो मया श्रुतः ॥१॥ सनत्कुमारो भगवान् पूर्वं कथितवान् कथाम्। ऋषीणां सन्निधौ राजन् तव पुत्रागमं प्रति ॥ २ ॥

यणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने अष्टमः सर्गः ॥ ८ ॥ अथ भगवदवतारासाधारणकारणं पुत्रेष्टिमुपक्षिपति सर्गत्रयेण—एतच्छ्रुत्वेत्यादि। सूतः सारथित्वेन मन्त्रित्वेन च स्थितः सुमन्त्रः। रहः एकान्ते इदमब्रवीत्, अन्तःपुरमागत्योक्तवानित्यर्थः। अयं अश्वमेधप्रवृत्तिरूपः पुत्रार्थोपायः। ऋत्विग्भिः वसिष्ठादिभिः उपदिष्टः, मया तु पुरावृत्तः इतिहासरूपः यः श्रुतः ॥१॥ कथमित्यत्राह—सनत्कुमार इत्यादि। भगवान् भविष्यज्ज्ञानवत्त्वरूपमाहात्म्यवान्।

आज्ञानतिक्रमेण ॥ १९ ॥ तथा द्विजा इति वर्धयन्तः, आशीर्भिरिति शेषः ॥ २० ॥ विसर्जयित्वेति। क्रतुः क्रतुसम्भारः। आप्यतां समापद्यताम् ॥ २१ ॥ २२ ॥ पत्नीः यज्ञार्हाः ॥ २३ ॥२४॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायाम् अष्टमस्सर्गः ॥८॥ एतच्छ्रुत्वेति। एतत् सुतार्थं

१ क्रतुराप्यताम्। तावनृपं च भवश्च समर्थाः करणेन्विह। इत्यधिकः पाठः।

कथां भविष्यद्विषयिणीम् ॥२॥ कश्यपस्येति । ख्यातो भविष्यतीत्यत्र "धातुसम्बन्धे प्रत्ययाः" इति भूतभविष्यतोः साधुत्वम् ॥३॥ स इति । अन्यं ग्रामग्रामीणादिकम्, न जानाति न ज्ञास्यति ॥ ४ ॥ द्वैविध्यमिति । द्वैविध्यं द्वैधीभावः, स्त्रीसङ्गकृतो भङ्ग इत्यर्थः । लोकेषु प्रथितमित्यत्र ब्रह्मचर्यमित्यनुषङ्गः । यद्वा मेखलाजिनदण्डादिना लोकेषु प्रथितं, विप्रैः स्मर्तृभिः कथितमृतुगमनलक्षणं च ब्रह्मचर्यस्य द्वैविध्यं भविष्यति । आह याज्ञवल्क्यः–"षोडशर्तुनिशाः स्त्रीणां तस्मिन् युग्मासु संविशेत् । ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत्॥"इति ॥५॥ तथाविधस्य द्वितीयब्रह्मचर्यस्य प्रसक्तिं दर्शयति–तस्येत्यादिना । तस्य अग्निं यशस्विनं पितरं चाद्धरं च शुश्रूषमाणस्य प्रथमे ब्रह्मचर्ये वर्तमानस्येत्यर्थः । कालः कतिपयकालः समभिवर्तत । भविष्यदर्थे लङ् ।

कश्यपस्य तु पुत्रोऽस्ति विभण्डक इति श्रुतः । ऋश्यशृङ्ग इति ख्यातस्तस्य पुत्रो भविष्यति ॥३॥ स वने नित्य संवृद्धो मुनिर्वनचरः सदा । नान्यं जानाति विप्रेन्द्रो नित्यं पित्रनुवर्तनात् ॥४॥ द्वैविध्यं ब्रह्मचर्यस्य भविष्यति महात्मनः । लोकेषु प्रथितं राजन् विप्रैश्च कथितं सदा ॥५॥ तस्यैवं वर्तमानस्य कालः समभिवर्तत । अग्निं शुश्रूषमाणस्य पितरं च यशस्विनम् ॥६॥ एतस्मिन्नेव काले तु रोमपादः प्रतापवान् । अङ्गेषु प्रथितो राजा भविष्यति महाबलः ॥७॥ तस्य व्यतिक्रमाद्राज्ञो भविष्यति सुदारुणा । अनावृष्टिः सुघोरा वै सर्वभूतभयावहा ॥८॥

"छन्दसि लुङ्लङ्लिटः" इति सर्वलकारापवादत्वेन लङोऽपि विधानात्, अडभावश्चार्षः॥६॥ एतस्मिन्निति । एतस्मिन् काले तस्य ब्रह्मचर्यदशायाम् । अङ्गेषु अङ्गदेशेषु॥७॥तस्येति । व्यतिक्रमात् धर्मातिक्रमात् । सुदारुणा बहुकालव्यापिनी, सुघोरा तदीयसर्वराष्ट्रव्यापिनी अतएव सर्वभूतभयावहा ॥८॥

हयमेधं करिष्यामीति राजवाक्यम्, सूतः सुमन्त्रः । तत्किमित्यत आह-ऋत्विग्भिरिति । अयमश्वमेधरूपप्रकारः । ऋत्विग्भिर्वसिष्ठादिभिः, पुरावृत्तः इतिहासलक्षणः ॥ १–३ ॥ स वन इति । नान्यं जानातीति भविष्यदर्थे लट् ॥ ४ ॥ द्वैविध्यमिति । द्वैविध्यं ब्रह्मचर्यस्येति द्वैविध्यं विभागः, गृहस्थो भविष्यतीत्यर्थः । लोकेषु प्रथितं ब्रह्मचर्यं द्वैविध्यमित्यनुषङ्गः । यद्वा विवाहात्पूर्वं तत्परं चेति ब्रह्मचर्यद्वैविध्यम् । विवाहात्परं ब्रह्मचर्यं कथं सङ्गच्छत इति चेत्, नियतकालभार्योपगमस्यापि ब्रह्मचर्यरूपत्वात ॥ ५ ॥ तस्येति । कालः समभिवर्तत इति भविष्यदर्थे लङ् ॥ ६ ॥ ७ ॥ तस्येति । व्यतिक्रमात् विधिनिषेधोल्लङ्घनात । सुदारुणा बहुकालव्यापिनी,

अनावृष्ट्यामिति । श्रुतेन वृद्धाः श्रुतवृद्धाः, बहुभ्यो बहुधा श्रुतशास्त्रा इत्यर्थः । प्रवक्ष्यति चेत्यन्वयः ॥ ९ ॥ भवन्त इति । श्रुतधर्माणः "धर्मादनिच् केवलात्" इत्यनिच् । लोकचारित्रवेदिनः लोकाचारज्ञाः, अतः अनावृष्टिमूलस्य मत्पापस्य प्रायश्चित्तं यथा भवेत् तादृशं नियममनुष्ठेयधर्मम्, आदिशन्तु ॥ १० ॥ शुद्धब्रह्मचारिणे कन्याप्रदानमेव परमं प्रायश्चित्तमिति वक्ष्यन्तीत्याह—वक्ष्यन्तीत्यादिना । सर्वोपायैः नानाविधोपायैः ॥ ११ ॥ आनाय्येति । ऋश्यशृङ्गम् इत्यत्र "ऋत्यकः" इति प्रकृतिभावः । आनाय्येति आङ्पसृष्टात् "णीञ् प्रापणे" इत्यस्माद्धेतुमण्ण्यन्ताल्ल्यप् । प्रयच्छ

अनावृष्ट्यां तु वृत्तायां राजा दुःखसमन्वितः । ब्राह्मणान् श्रुतवृद्धांश्च समानीय प्रवक्ष्यति ॥ ९ ॥ भवन्तः श्रुतधर्माणो लोकचारित्रवेदिनः । समादिशन्तु नियमं प्रायश्चित्तं यथा भवेत् ॥ १० ॥ वक्ष्यन्ति ते महीपालं ब्राह्मणा वेदपारगाः । विभण्डकसुतं राजन् सर्वोपायैरिहानय ॥ ११ ॥ आनाय्य च महीपाल ऋश्यशृङ्गं सुसत्कृतम् । प्रयच्छ कन्यां शान्तां वै विधिना सुसमाहितः ॥ १२ ॥ तेषां तु वचनं श्रुत्वा राजा चिन्तां प्रपत्स्यते । केनोपायेन वै शक्यमिहानेतुं स वीर्यवान् ॥ १३ ॥ ततो राजा विनिश्चित्य सह मन्त्रिभिरात्मवान् । पुरोहितममात्यांश्च ततः प्रेष्यति सत्कृतान् ॥ १४ ॥ ते तु राज्ञो वचः श्रुत्वा व्यथिता विनताननाः । न गच्छेम ऋषेर्भीता अनुनेष्यन्ति तं नृपम् ॥ १५ ॥ वक्ष्यन्ति चिन्तयित्वा ते तस्योपायांश्च तत्क्षमान् । आनेष्यामो वयं विप्रं न च दोषो भविष्यति ॥ १६ ॥

देहि । ऋश्यशृङ्गायेति शेषः । सुसत्कृतमित्यानयनक्रियाविशेषणम् । सुसमाहितः, निर्विचार इति यावत् ॥ १२ ॥ तेषामिति । चिन्ताप्रकारमाह केनेति । वीर्यवान् नियतब्रह्मचर्यः ॥ १३ ॥ तत इति । विनिश्चित्य ब्राह्मणं ब्राह्मणा एवानेष्यन्तीति निश्चित्य । ततः तस्माद्देशात् । प्रेष्यति प्रेषयिष्यति । भविष्यदर्थे लट् । "कालसामान्ये लड्वक्तव्यः" इति वचनात् ॥ १४ ॥ ते त्विति । व्यथिताः खिन्नाः अतएव विनताननाः नम्रमुखाः, ऋषेर्विभण्डकात् भीता इत्यनन्तरमितिकरणं बोध्यम् । अनुनेष्यन्ति न वयं गन्तुं शक्ताः किन्तु तदानयन उपायं विचिन्त्य वक्ष्याम इति सान्त्वयिष्यन्ति ॥ १५ ॥ वक्ष्यन्तीति ।

सुघोरा-स्वर्कीयसर्वराष्ट्रव्यापिनी, अतएव सर्वभूतभयावहा ॥ ८–१० ॥ तेषामिति । वीर्यवान्-वशीकृतेन्द्रियः ॥ १३ ॥ तत इति । ततः प्रेष्यति प्रेषयिष्यति ॥ १४ ॥

तत्क्षमान् ऋश्यशृङ्गानयनोचितान् उपायांश्चिन्तयित्वा तान् तस्य राज्ञा वक्ष्यन्ति। एतैरुपायैर्वयं विप्रमानेष्यामः। न च दोषा भविष्यति, ऋश्यशृङ्गस्य ब्रह्मचर्यवैकल्यदोषश्च न भविष्यति। तत्र भवता न शङ्कनीयम्, यथा गणिकासम्पर्को न भवेत् तथा आनेष्याम इत्यर्थः, ऋषिशापदोषो न भविष्यतीतिवार्थः, अनावृष्टिदोषो न भविष्यतीति वा। इति वक्ष्यन्तीति पूर्वेणान्वयः ॥ १६ ॥ सनत्कुमारोक्तं समाप्य स्वयमाह—एवमिति। यथा आनयिष्याम इत्युक्तमेवमानीतः। देवः पर्जन्यश्चावर्षयत। शान्ता रोमपादकन्या च, अस्मै ऋश्यशृङ्गाय। प्रदीयते प्रादीयत। कालसामान्ये लट् ॥१७॥

एवमङ्गाधिपेनैव गणिकाभिर्ऋषेः सुतः। आनीतोऽवर्षयद्देवः शान्ता चास्मै प्रदीयते ॥१७॥ ऋश्यशृङ्गस्तु जामाता पुत्रान् तव विधास्यति। सनत्कुमारकथितमेतावद्व्याहृतं मया ॥ १८ ॥ अथ हृष्टो दशरथः सुमन्त्रं प्रत्यभाषत। यथर्श्यशृङ्गस्त्वानीतो विस्तरेण त्वयोच्यताम् ॥१९॥ इत्यार्षे श्रीरामा० वाल्मी० आदि० बाल० नवमः सर्गः ॥९॥

सुमन्त्रश्चोदितो राज्ञा प्रोवाचेदं वचस्तथा। यथर्श्यशृङ्गस्त्वानीतः शृणु मे मन्त्रिभिः सह ॥ १ ॥ रोमपादमुवाचेदं सहामात्यपुरोहितः। उपायो निरपायोऽयमस्माभिरभिचिन्तितः ॥२॥ ऋश्यशृङ्गो वनचरस्तपःस्वाध्यायने रतः। अनभिज्ञः स नारीणां विषयाणां सुखस्य च ॥ ३ ॥

ऋश्यशृङ्ग इति। जामाता रोमपादस्य दशरथस्यापि वा। दशरथस्यौरसी शान्ता दत्ता रोमपादस्य। सनत्कुमारकथितमेतावत्। एवमङ्गाधिपेनेत्यादि तु मया व्याहृतमित्यर्थः। यद्वा सर्वं सनत्कुमारवचनमेव। अवर्षयत् वर्षयिष्यति। प्रदीयते प्रदास्यते ॥१८॥ अथेत्युत्तरशेषः श्लोकः। अत्र सर्गविच्छेदो लेखकदोषकृत इति प्रतिभाति ॥१९॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने नवमः सर्गः ॥९॥

सुमन्त्र इत्यादि। मे मत्तः, स ऋश्यशृङ्गः यथा मन्त्रिभिरानीतः तथा शृणु। हेति प्रसिद्धौ ॥ १ ॥ रोमेति। निरपायः अव्यभिचारिफलः ॥ २ ॥ ऋश्यशृङ्ग इति। तपःस्वाध्यायने तपःस्वाध्याययोः। "सर्वो द्वन्द्वो विभाषयैकवद्भवति" इत्येकवद्भावः। "अन्येषामपि दृश्यते" इति ते त्विति। न गच्छेम इत्यत्र इतिशब्दो द्रष्टव्यः ॥ १५ ॥ वक्ष्यन्तीति। दोषः-तपोवैकल्यादिरूपः अनावृष्टिरूपदोषो वा ॥ १६ ॥ एवमङ्गाधिपेनेत्यादि सुमन्त्रवचनम्। यथा आनेष्याम इति तैरुक्तम् एवमानीतः। प्रदीयते-प्रादीयतेति भूतार्थे लट् ॥ १७ ॥ ऋश्यशृङ्ग इति। एतावद्व्याहृतम् एतावन्मात्रमेव कथितम्, न समस्तं विशेषतश्च वक्ष्यते ॥ १८ ॥ १९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां नवमः सर्गः ॥ ९ ॥ सुमन्त्रश्चोदित इति।

दीर्घः । तेन पुराणेतिहासादिमुखेनापि न स्त्रीस्वरूपं जानातीति भावः । नारीणामनभिज्ञ इति कर्मणि षष्ठी । विषयाणां शब्दस्पर्शरूपरसगन्धानां सम्बन्धिनः सुखस्य चानभिज्ञश्च भवति ॥ ३ ॥ इन्द्रियेति । नरचित्तप्रमाथिभिः नरचित्ताकर्षकैः, तमिति शेषः । क्षिप्रं शीघ्रमानाययिष्यामः । अध्यवसीयतां निश्चीयताम्, अस्मदुक्तप्रकार इति शेषः ॥ ४ ॥ के इन्द्रियार्थाः, कथं तैरानयनम् ? तत्राह—गणिका इति । गणिकाः वेश्याः । प्रलोभ्य वञ्चयित्वा सत्कृताः अस्माभिः कृतबहुमानाः, ऋश्यशृङ्गेण वा ॥ ५ ॥ श्रुत्वेति । राजा पुरोहितं तथेति प्रत्युवाच । पुरोहितोऽपि मन्त्रिणस्तथेति प्रत्युवाच । ते च मन्त्रिणस्तथा चक्रुः, तेषामेवाधिकारात् वारमुख्याः प्रेषयामासुरित्यर्थः ॥ वारेति अर्द्धमेकम् । वारशब्देन वारस्त्रिय उच्यन्ते, नामैकदेशे नामग्रह

इन्द्रियार्थैरभिमतैर्नरचित्तप्रमाथिभिः । पुरमानाययिष्यामः क्षिप्रं चाध्यवसीयताम् ॥ ४ ॥ गणिकास्तत्र गच्छन्तु रूपवत्यः स्वलंकृताः । प्रलोभ्य विविधोपायैरानयिष्यन्ति सत्कृताः ॥ ५ ॥ श्रुत्वा तथेति राजा च प्रत्युवाच पुरोहितम् । पुरोहितो मन्त्रिणश्च तथा चक्रुश्च ते तदा । वारमुख्यास्तु तच्छ्रुत्वा वनं प्रविविशुर्महत् ॥६॥ आश्रमस्याविदूरेऽस्मिन् यत्नं कुर्वन्ति दर्शने । ऋषिपुत्रस्य धीरस्य नित्यमाश्रमवासिनः ॥ ७ ॥ पितुः स नित्यसन्तुष्टो नातिचक्राम चाश्रमात् ॥८॥ न तेन जन्मप्रभृति दृष्टपूर्वं तपस्विना । स्त्री वा पुमान् वा यच्चान्यत्सर्वं नगरराष्ट्रजम् ॥९॥ ततः कदाचित्तं देशमाजगाम यदृच्छया । विभण्डकसुतस्तत्र ताश्चापश्यद्वराङ्गनाः ॥ १० ॥ ताश्चित्रवेषाः प्रमदा गायन्त्यो मधुरस्वरैः । ऋषिपुत्रमुपागम्य सर्वा वचनमब्रुवन् ॥ ११ ॥

णात् ॥ ६॥ आश्रमस्येति । अस्मिन्वने आश्रमस्याविदूरे । दर्शने ऋष्यशृङ्गदर्शने । यत्नम् अवधानम्, कुर्वन्ति अकुर्वन् । ऋषिपुत्रस्येत्यादिविशेषणत्रयं यत्नस्य कर्तव्यत्वे हेतुः ॥ ७ ॥ उक्तहेतुं विवृणोति—पितुरित्यर्द्धेन । पितुः सकाशान्नित्यसन्तुष्टः । पितृशुश्रूषणैकरत इत्यर्थः ॥ ८ ॥ हेत्वन्तरमाह—न तेनेति । जन्मप्रभृति जन्मारभ्य, नगरजमश्वादि, राष्ट्रजं कुक्कुटादि ॥ ९ ॥ तत इति । यदृच्छया दैववशात् ॥ १० ॥ ता इति । चित्रवेषाः नाना

मे मत्तः ॥ १ ॥ २ ॥ ऋश्यशृङ्ग इति । विषयाणां शब्दादीनां सुखस्य विषयसुखस्य च ॥ ३ ॥ इन्द्रियार्थैरिति । नरचित्तप्रमाथिभिः नरचित्तक्षोभकरैर्हेतुभिः । अध्यवसीयतां निश्चीयताम् ॥ ४–६ ॥ वारमुख्या इति सार्धश्लोकमेकं वाक्यम् । अस्मिन् दर्शने ऋष्यशृङ्गदर्शनस्य बुद्धिस्थत्वाददस्मिन्निति निर्देशः । कुर्वन्ति अकुर्वन् ॥७॥ पितुरिति । पितुः सन्तुष्टः । पितुरिति तृतीयार्थे षष्ठी । विषयान्तरानपेक्ष इति यावत् । नातिचक्राम न निरगात् ॥ ८ ॥ ९ ॥ तत इति । यदृच्छया दैववशात् ॥११॥

ऌङ्कारा: ॥ ११ ॥ कस्त्वमिति । कस्त्वं किंजाति:, कस्य पुत्र इत्यर्थः । किं किमर्थं वर्तसे । इच्छामह इत्यात्मनेपदमार्षम् । भवान् किंजाति: किंनामधेयः कस्य पुत्रः त्वं घोरेऽस्मिन्वने किमर्थं वर्तसे किमर्थमेकश्चरसीति योजना ॥ १२ ॥ अदृष्टेति । यस्मात्कारणात् काम्यरूपाः काम्यमानरूपाः ताः । स्त्रियो वने तेनादृष्टरूपाः तस्मात् हार्दात् दर्शनजस्नेहात्, स्वकं पितरं पित्रादिकम् आख्यातुं मतिर्जाता ॥ १३ ॥ पितेति ! अस्माकमिति मृगाद्यपेक्षया बहुवचनम् । किं तद्द्रोणः पुत्रोऽसि ? नेत्याह—औरस इति । पुरा किल महाभूततदाकाख्ये सरसि उपस्पृशतो विभण्ड

कस्त्वं किं वर्तसे ब्रह्मन् ज्ञातुमिच्छामहे वयम् । एकस्त्वं विजने घोरे वने चरसि शंस नः ॥ १२ ॥ अदृष्टरूपास्ता स्तेन काम्यरूपा वने स्त्रियः । हार्दात्तस्य मतिर्जाता ह्याख्यातुं पितरं स्वकम् ॥ १३ ॥ पिता विभण्डकोऽस्माकं तस्याहं सुत औरसः । ऋश्यशृङ्ग इति ख्यातं नाम कर्म च मे भुवि ॥ १४ ॥ इहाश्रमपदोऽस्माकं समीपे शुभ दर्शनाः । करिष्ये वोऽत्र पूजां वै सर्वेषां विधिपूर्वकम् ॥१५॥ ऋषिपुत्रवचः श्रुत्वा सर्वासां मतिरास वै । तदाश्रम पदं द्रष्टुं जग्मुः सर्वाश्च तेन ताः ॥१६॥ आगतानां ततः पूजामृषिपुत्रश्चकार ह । इदमर्घ्यमिदं पाद्यमिदं मूलमिदं फलम् ॥ १७ ॥ प्रतिगृह्य तु तां पूजां सर्वा एव समुत्सुकाः । ऋषेर्भीतास्तु शीघ्रं ता गमनाय मतिं दधुः ॥ १८ ॥

कस्य उर्वशीं दृष्ट्वा रेतोऽस्खलत् । तन्मृगी जलेन सह पीत्वा गर्भिण्यासीत् । तस्यां जातः ऋश्यमृगतुल्यशृङ्गत्वादृश्यशृङ्गाख्योऽभूदिति पौराणिकी कथा । मे ऋश्यशृङ्गेति नाम ख्यातम् । मे तपोरूपं कर्म च भुवि वनभुवि ख्यातम् ॥ १४ ॥ इहेति । इह वनसमीपे प्रदेशे । अस्माकमाश्रमपदः । पुंस्त्व मार्षम् । अत्र वः पूजां करिष्ये, आगन्तव्यमिति भावः । सर्वेषामिति पुँल्लिङ्गनिर्देशः स्त्रीस्वरूपापरिज्ञानकृतः ॥१५॥ ऋषीति । द्रष्टुं मतिरास, अभूत । अस्तेर्भूभावाभाव आर्षः । तेन सह तदाश्रमपदं जग्मुश्च ॥१६॥ आगतानामिति । आगतानाम्—आश्रमपदमागतानाम्, अन्ते इतिकरणं द्रष्टव्यम् ॥१७॥ प्रतिगृह्येति । समुत्सुकाः तत्संलापसाभिलाषाः ताः सर्वाः तां पूजाम् ऋषिपुत्रदत्तां पूजाम् । प्रतिगृह्य ऋषेर्विभण्डकाद्भीतास्सत्यः शीघ्रं गमनाय मतिं क इति । किं वर्तसे कस्माद्धेतोर्वर्तसे ॥ १२ ॥ अदृष्टरूपा इति । ताः स्त्रियः वने तेन यतोऽदृष्टरूपाः अतः हार्दात् कौतूहलात् ॥ १३ ॥ पितेति । कर्म तपोरूपम् ॥१४॥ इहेति । इह आश्रमपदे इति लिङ्गव्यत्यय आर्षः । ऋश्यशृङ्गस्य स्त्रीस्वरूपापरिज्ञानात् सर्वेषामिति पुँल्लिङ्गनिर्देशः । शुभदर्शना इति सम्बोधनम् ॥१५–१७॥प्रति

दधुः॥१८॥ अस्माकमिति । प्रतिगृहाणेत्यन्वयः । "छन्दसि परेऽपि" इति प्रतीत्यस्योपसर्गस्य धातोरुपरिप्रयोगः । "छन्दोवत्पुराणानि भवन्ति" इति न्यायात् । मा चिरं विलम्बं मा कुरु ॥ १९ ॥ तत इति । अत्रादौ इत्युक्त्वेत्युपस्कार्यम्, स्नेहिजनवत् वशीकारार्थमालिङ्ग्य ॥ २० ॥ तानीति । वने नित्यनिवासिनाम् अनास्वादितपूर्वाणि तैः पूर्वमनास्वादितानि फलानीमानीति मन्यते स्म । अपूर्वरसत्वात् "पूरणगुण-" इति समासप्रतिषेधादेव ज्ञापकात् तृतीयार्थे षष्ठी॥२१॥ आपृच्छ्येति । व्रतचर्यां निवेद्य अस्माभिः किञ्चिद्व्रतमनुष्ठेयमस्तीति व्रतानुष्ठानं निवेद्य, तस्मादपदेशाद्व्याजात् । तस्य पितुर्भीताः

अस्माकमपि मुख्यानि फलानीमानि वै द्विज । गृहाण प्रति भद्रं ते भक्षयस्व च माचिरम् ॥ १९ ॥ ततस्तास्तं समालिङ्ग्य सर्वा हर्षसमन्विताः । मोदकान् प्रददुस्तस्मै भक्ष्यांश्च विविधान् शुभान्॥२०॥ तानि चास्वाद्य तेजस्वी फलानीति स्म मन्यते । अनास्वादितपूर्वाणि वने नित्यनिवासिनाम्॥२१॥आपृच्छ्य तु तदा विप्रं व्रतचर्यां निवेद्य च । गच्छन्ति स्मापदेशात्ताः भीतास्तस्य पितुः स्त्रियः ॥ २२ ॥ गतासु तासु सर्वासु काश्यपस्यात्मजो द्विजः । अस्वस्थहृदयश्चासीद्दुःखं[1] स्म परिवर्तते ॥ २३ ॥ ततोऽपरेद्युस्तं देशमाजगाम स वीर्यवान् । मनोज्ञा यत्र ता दृष्टा वारमुख्याः स्वलंकृताः ॥२४॥ दृष्ट्वैव च तदा विप्रमायान्तं हृष्टमानसाः । उपसृत्य ततः सर्वास्तास्तमूचुरिदं वचः ॥ २५ ॥ एह्याश्रमपदं सौम्य ह्यस्माकमिति चाब्रुवन् । तत्राप्येष विधिः श्रीमान् विशेषेण भविष्यति ॥ २६ ॥

सत्यो गच्छन्ति स्म ॥ २२ ॥ गतास्विति । काश्यपस्य कश्यपपुत्रस्य विभण्डकस्य, अस्वस्थहृदयः कर्षितचित्तः दुःखं यथा भवति तथा परिवर्तते स्म सञ्चरति स्म ॥ २३ ॥ तत इति । ततः अस्वस्थचित्तत्वाद्धेतोः ॥ २४ ॥ दृष्ट्वेति स्पष्टम् ॥ २५ ॥ एहीति । अस्माकमाश्रमपदमेहीति पूर्वेणान्वयः ।

गृह्येति । ऋषेर्भीताः विभण्डकाद्भीताः ॥ १८ ॥ अस्माकमिति । गृहाण प्रतिगृहाण । माचिरमित्यूचुः । अविलम्बेन ऋषेरागमनात्पूर्वमेव भक्षणीयमित्यभिप्रायः ॥ १९–२१ ॥ आपृच्छ्येति । व्रतचर्यां नियमाचरणम् । अपदेशात् व्रतचर्याव्याजात् ॥ २२ ॥ गतास्विति । दुःखात् तासां विश्लेषजात् ॥२३–२५ ॥ एहीति ।

[1] दुःखात् इति तीर्थीयपाठः ।

तत्रापि श्रीमान् समृद्धिमान् एष विधिः सत्कारः स्वदेशत्वाद्विशेषेण भविष्यति इति चाब्रुवन्निति योजना ॥२६॥ श्रुत्वेति। हृदयङ्गमं मनोज्ञम्। खश् प्रकरणे "गमेः सुप्युपसङ्ख्यानम्" इति खश्। निन्युः, नावमारोप्य गङ्गाप्रवाहेणेति शेषः। तथैव भारते प्रतिपादनात् ॥ २७ ॥ तत्रेति। तत्र अङ्गदेश इत्यर्थः ॥२८॥ हर्षेणेति। स्वं विषयं स्वदेशं प्रह्वः विनीतः ॥२९॥ अर्घ्यं चेति । अर्घः पूजा तदर्थमुदकमर्घ्यम्, "पादार्घाभ्यां च" इति यत्प्रत्ययः। न्यायतः शास्त्रक्रमेण। विप्रेन्द्रात् ऋश्यशृङ्गात्। प्रसादं गणिकाभिः प्रलोभ्यानयनकृतकोपनिवृत्तिम् वव्रे। कथं वव्रे? विप्रं त्वां मन्युः कोपो माविशे

श्रुत्वा तु वचनं तासां सर्वासां हृदयङ्गमम्। गमनाय मतिं चक्रे तं च निन्युस्तदा स्त्रियः ॥ २७ ॥ तत्र चानीयमाने तु विप्रे तस्मिन् महात्मनि। ववर्ष सहसा देवो जगत्प्रह्लादयंस्तदा ॥२८॥ हर्षेणैवागतं विप्रं विषयं स्वं नराधिपः। प्रत्युद्गम्य मुनिं प्रह्वः शिरसा च महीं गतः ॥ २९ ॥ अर्घ्यं च प्रददौ तस्मै न्यायतः सुसमाहितः। वव्रे प्रसादं विप्रेन्द्रान्मा विप्रं मन्युराविशत् ॥३०॥ अन्तःपुरं प्रविश्यास्मै कन्यां दत्त्वा यथाविधि। शान्तां शान्तेन मनसा राजा हर्षमवाप सः ॥ ३१ ॥ एवं स न्यवसत्तत्र सर्वकामैः सुपूजितः ॥ ३२ ॥ [ऋश्यशृङ्गो महातेजाश्शान्तया सह भार्यया।] इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे दशमः सर्गः ॥ १० ॥

दिति, माविशत्वित्यर्थः। लकारव्यत्ययः। यद्वा विप्रं विभण्डकं मन्युः पुत्रविश्लेषकृतः कोपः माविशेदिति। एवं प्रसादनादेव विभण्डको न चुकोप पुत्रप्रसादवरणादेव पिता त्रिलोकज्ञस्तुष्यतीति पूर्वमेव मन्त्रिभिर्निर्णीतं चेति बोध्यम्। कथमन्यथा उपायं चिन्तयन्तः प्राज्ञाः अपायमपि न चिन्तयेयुः ॥३०॥ अन्तःपुरमिति। प्रविश्य तेन सहेति सिद्धम्। शान्तेन निर्दुःखेन मनसोपलक्षितः। प्रसादकार्योपदर्शनात् प्रसन्नत्वं सिद्धम् ॥ ३१ ॥ एवमिति। एवं सर्वकामैः सुपूजितः। तत्र रोमपादान्तःपुरे॥३२॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने दशमः सर्गः॥१०॥

एष विधिः पूर्वज्ञैः कृतो भक्षणप्रदानादिरूपसत्कारः। तत्रापि भविष्यतीति चाब्रुवन्निति सम्बन्धः ॥ २६–२८ ॥ वर्षेणेति। प्रह्वः विनीतः ॥ २९ ॥ अर्घ्यं चेति। वव्रे प्रसादमिति गणिकामुखेनायं व्रती अभ्यानीतः, अतश्शपेदिति भीतः ऋश्यशृङ्गात्प्रसादं वव्रे। अनुगृहाणेत्ययाचतेत्यर्थः। प्रसादप्रार्थनायाः फलमाह मेति। विप्रमृश्यशृङ्गं मन्युर्नाविशत। यद्वा माविशदित्यत्र नाविशत्विति लकारव्यत्ययः। इतिशब्दश्चाध्याहार्यः। तथाचेत्थं योजना–विप्रं विभण्डकं मन्युर्नाविशत्विति

एवं दशरथप्रश्नस्योत्तरमुक्त्वा कथाशेषं सुमन्त्रः प्रस्तौति—भूय इत्यादि । देवप्रवरः सनत्कुमारः, कथायां कथाप्रसङ्गे, एवं वक्ष्यमाणरीत्या यथा उक्तवान् तथा शृणु ॥ १ ॥ इक्ष्वाकूणामिति । धार्मिको भविष्यतीत्यन्वयः । सत्यप्रतिश्रवः सत्यप्रतिज्ञः ॥ २ ॥ अङ्गेति । अस्य अङ्ग

भूय एव च राजेन्द्र शृणु मे वचनं हितम् । यथा स देवप्रवरः कथायामेवमब्रवीत् ॥ १ ॥ इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः । राजा दशरथो नाम श्रीमान् सत्यप्रतिश्रवः ॥ २ ॥ अङ्गराजेन सख्यं च तस्य राज्ञो भविष्यति । कन्या चास्य महाभागा शान्ता नाम भविष्यति ॥ ३ ॥ पुत्रस्त्वङ्गस्य राज्ञस्तु रोमपाद इति श्रुतः । अङ्गराजं दशरथो गमिष्यति महायशाः ॥४॥ अनपत्योऽस्मि धर्मात्मन् शान्ताभर्ता मम क्रतुम् । आहरेत त्वयाज्ञप्तः सन्तानार्थं कुलस्य च ॥ ५ ॥

राजस्य ॥ ३ ॥ पुत्र इति । अङ्गस्य राज्ञः अङ्गराजस्य ॥ ४ ॥ अनपत्य इति । अहमनपत्योऽस्मि, तस्मात् मम कुलस्य सन्तानार्थमविच्छेदार्थं विप्रेन्द्रात् ऋश्यशृङ्गादेवं प्रसादं वव्रे, त्वदानयनेन त्वत्पितुर्विभण्डकस्य मयि मन्युर्यथा नोदेति तथा स त्वया प्रार्थनीय इति ऋश्यशृङ्गमेव नराधिपः प्रार्थयामासेति ॥ ३० ॥ अन्तःपुरमिति । अन्तःपुरं प्रविश्य-प्रवेश्य ॥ ३१ ॥×३२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां दशमः सर्गः ॥१०॥ भूय एवेति । देवप्रवरः देवश्रेष्ठः प्रकृतः सनत्कुमार उच्यते । कथायां पूर्वकथायां समाप्तायां सत्यां यथेति यदित्यर्थे तदब्रवीत् ॥१॥ इक्ष्वाकूणामिति । सत्यप्रतिश्रवः सत्यप्रतिज्ञः ॥ २ ॥ अङ्गराजेनेति । अङ्गराजेन तस्य दशरथस्य सख्यं भविष्यति ॥ ३ ॥ तमेवाङ्गराजं विशिनष्टि—पुत्रस्त्विति । अङ्गस्य अङ्गाख्यस्य राज्ञः रोमपाद इति श्रुतः प्रसिद्धः पुत्रः, अस्य शान्तानाम कन्या च भविष्यतीति पूर्वक्रियया प्रत्येकमभिसम्बध्यते । तं रोमपादम् ॥४॥ अनपत्य इति ।

× तिलकम्—एवमिति । ननु गणिकास्पर्शतत्स्पृष्टफलभक्षणादिभिरस्य तपोहानौ कथं तदागमनमात्रेण वृष्टिः, न च स्त्रीत्वाज्ञानान्न तपोहानिः । ईषद्दोषस्तु तपसैव दग्ध इति वाच्यम्, निर्मलब्रह्मचर्येण विदितनिखिलवेदशास्त्रतत्त्वस्य शास्त्रतः स्त्रीस्वरूपज्ञानस्य ब्रह्मचर्ये तत्परिहारज्ञानस्य दुर्निवारत्वात् सर्वथा अज्ञत्वे अनुग्रहशक्त्यभावापत्तेश्चेति चेन्न, निर्मलब्रह्मचर्येण ब्रह्मज्ञतया सर्वत्र ब्रह्मदृष्ट्या च दोषलेशस्याप्यस्पर्शात् प्रारब्धवशात् क्षत्रियस्त्रीसम्बन्धं भाविनं तद्द्वारकं जानन्नेव गणिकाभिस्तथा व्यवजह्रे तासां भयानुत्पत्तये, अत एव न तेनेति नवमश्लोके तथा व्यवहृतवानिति शेषः पूरितोऽस्माभिः । एतत्सर्वं जानन् पितापि तमनुज्ञाय न शप्तवान् राजानमित्येवात्र तत्त्वम् । अनेन तत्त्वज्ञस्य सर्वदोषासम्बन्धो ध्वनितः । ब्रह्मज्ञे दानसङ्कल्पमात्रेण फलसिद्धिरित्यादि सूचितम् ॥ ३२ ॥

शान्ताभर्तारं ऋश्यशृङ्गमाहरेत अनुतिष्ठ, इति वक्ष्यतीति शेषः ॥ ५ ॥ श्रुत्वेति । स रोमपादः मनसा विचिन्त्य, न तु मन्त्रिभिः । पुत्रवन्तं पुत्रप्रदानसमर्थं पुत्रयुक्तं वा ॥ ६ ॥ प्रतिगृह्येति । आहरिष्यति करिष्यतीत्यर्थः । अन्तरात्मना मनसा उपलक्षितः ॥ ७ ॥ तस्मिन् यज्ञे तमेव ऋत्विजं करिष्यतीत्याह– तं चेति श्लोकद्वयमेकवाक्यम् । यष्टुं कामः यस्य स यष्टुकामः । "लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि" इति मकारलोपः । एवम्भूतो राजा तं वरयिष्यति । वरो वरणम् । "तत्करोति" इति णिच् । अल्लोपस्य स्थानिवत्त्वाद्वृद्ध्यभावः ॥८॥ किमर्थम्? यज्ञार्थं पुत्रकामेष्ट्यर्थम्, तद्द्वारा प्रसवार्थं पुत्रार्थम्,

श्रुत्वा राज्ञोऽथ तद्वाक्यं मनसा स विचिन्त्य च । प्रदास्यते पुत्रवन्तं शान्ताभर्तारमात्मवान् ॥ ६ ॥ प्रतिगृह्य च तं विप्रं स राजा विगतज्वरः । आहरिष्यति तं यज्ञं प्रहृष्टेनान्तरात्मना ॥ ७ ॥ तं च राजा दशरथो यष्टुकामः कृताञ्जलिः । ऋश्यशृङ्गं द्विजश्रेष्ठं वरयिष्यति धर्मवित् ॥ ८ ॥ यज्ञार्थं प्रसवार्थं च स्वर्गार्थं च जनेश्वरः । लभते च स तं कामं विप्रमुख्याद्विशांपतिः ॥ ९ ॥ पुत्राश्चास्य भविष्यन्ति चत्वारोऽमितविक्रमाः । वंशप्रतिष्ठानकराः सर्वलोकेषु विश्रुताः ॥ १० ॥ एवं स देवप्रवरः पूर्वं कथितवान् कथाम् । सनत्कुमारो भगवान् पुरा देवयुगे प्रभुः ॥ ११ ॥ स त्वं पुरुषशार्दूल तमानय सुसत्कृतम् । स्वयमेव च राजेन्द्र गत्वा सबलवाहनः ॥ १२ ॥ अनुमान्य वसिष्ठं च सूतवाक्यं निशम्य च । [ वसिष्ठेनाभ्यनुज्ञातो राजा संपूर्णमानसः । ] सान्तःपुरः सहामात्यः प्रययौ यत्र स द्विजः ॥ १३ ॥

तद्द्वारा स्वर्गार्थम् । "नापुत्रस्य लोकोऽस्ति" इति श्रुतेः । कामं काम्यक्रतुम् ॥ ९ ॥ पुत्राश्चेति । अमितविक्रमाः अपरिच्छिन्नपराक्रमाः ॥ १० ॥ एवमिति । पूर्वं पूर्वकाले । विभक्तिप्रतिरूपकमव्ययम् । पुरा पुराणः । देवयुगे कृतयुगे । यद्वा हे देव ! पुरा युगे, कृतयुग इत्यर्थः ॥ ११ ॥ स इति । स त्वं पुत्रार्थी त्वम् सुसत्कृतं सुसत्कारार्हम् । स्वयमेव, न तु पुरोहितादिद्वारा ॥ १२ ॥ अनुमान्येति । अनुमान्य कृतानुमतिकं कृत्वा, अन्यथा मयि स्थिते कथमयमन्यमाह्वयतीति वसिष्ठः कुप्येत, अतः सुमन्त्रोक्तकथोक्तिपूर्वकमनुमान्येत्यर्थः । अनुमान्य वसिष्ठं च सूतवाक्यं निशम्य च इति वचनभङ्ग्या

आहरेत् निर्वहेत् । सन्तानार्थं वंशाविच्छेदार्थम् ॥ ५ ॥ श्रुत्वेति । पुत्रवन्तं पुत्रफलकर्मवन्तं सञ्जातपुत्रं वा । यद्वा तपोमाहात्म्यात्पुत्रकामेष्ट्या पुत्रप्रदानसमर्थत्वात्पुत्रवन्तमित्युक्तिः ॥६॥७॥ तं चेति श्लोकद्वयमेकवाक्यम् । प्रसवार्थं सन्तानार्थम् । कामम् काम्यक्रतुम् ॥ ८–१० ॥ एवमिति । देवयुगे कृतयुगे ॥११॥१२॥ अनु

पुनर्वसिष्ठसन्निधौ सा कथा प्रस्ताविता सुमन्त्रमुखेनैवेति गम्यते। अतो वसिष्ठेनानुमतिः कृतेति मन्तव्यम्। सान्तःपुरतया गमनं जामातृपलालनरीत्या शान्तया सहानयनार्थम्। यत्र रोमपादनगरे॥ १३ ॥ वनानीति। वनादिविलोकनकुतुकित्वं शनैःशनैरित्यनेन द्योत्यते ॥ १४ ॥ आसाद्येति। तं देश मासाद्य, तं ऋषिपुत्रम्। आदौ रोमपाददर्शनात् पूर्वं ददर्श, तस्मिन् भक्त्यतिशयद्योतनार्थम् ॥१५॥ तत इति। राजा रोमपादः, राज्ञो दशरथस्य ॥१६॥

वनानि सरितश्चैव व्यतिक्रम्य शनैःशनैः। अभिचक्राम तं देशं यत्र वै मुनिपुङ्गवः ॥ १४ ॥ आसाद्य तं द्विजश्रेष्ठं रोमपादसमीपगम्। ऋषिपुत्रं ददर्शादौ दीप्यमानमिवानलम् ॥१५॥ ततो राजा यथान्यायं पूजां चक्रे विशेषतः। सखित्वात्तस्य वै राज्ञः प्रहृष्टेनान्तरात्मना ॥ १६ ॥ रोमपादेन चाख्यातमृषिपुत्राय धीमते। सख्यं सम्बन्धकं चैव तदा तं प्रत्यपूजयत् ॥ १७ ॥ एवं सुसत्कृतस्तेन सहोषित्वा नरर्षभः। सप्ताष्टदिवसान् राजा राजानमिद मब्रवीत्॥१८॥ शान्ता तव सुता राजन् सह भर्त्रा विशांपते। मदीयं नगरं यातु कार्यं हि महदुद्यतम्॥१९॥ तथेति राजा संश्रुत्य गमनं तस्य धीमतः। उवाच वचनं विप्रं गच्छ त्वं सह भार्यया॥२०॥ऋषिपुत्रः प्रतिश्रुत्य तथेत्याह नृपं तदा। स नृपेणाभ्यनुज्ञातः प्रययौ सह भार्यया॥२१॥तावन्योन्याञ्जलिं कृत्वा स्नेहात्संश्लिष्य चोरसा। ननन्दतु र्दशरथो रोमपादश्च वीर्यवान् ॥ २२ ॥ ततः सुहृदमापृच्छ्य प्रस्थितो रघुनन्दनः। पौरेभ्यः प्रेषयामास दूतान् वै शीघ्रगामिनः ॥ २३ ॥ क्रियतां नगरं सर्वं क्षिप्रमेव स्वलंकृतम्। धूपितं सिक्तसंमृष्टं पताकाभिरलंकृतम् ॥ २४ ॥

रोमपादेनेति। सम्बन्धकं शान्ताया जनकपितृत्वरूपं सम्बन्धम्। प्रत्यपूजयत्, ऋश्यशृङ्ग इति शेषः ॥१७॥ एवमिति। तेन रोमपादेन सप्ताष्टेति लोक वचनपरिपाटी संख्यानियमोपेक्षा कृता ॥ १८ ॥ शान्तेति। उद्यतम् उद्युक्तम् ॥ १९ ॥ तथेति। तस्य ऋश्यशृङ्गस्य गमनं संश्रुत्य प्रतिज्ञाय ॥ २०॥ ऋषीति। प्रतिश्रुत्य आकर्ण्य। नृपं रोमपादम् ॥२१॥ ताविति। अन्योन्यमञ्जलिमित्यर्थः ॥ २२ ॥ तत इति। सुहृदं रोमपादम् ॥ २३ ॥ क्रियता

मान्येति। अनुमान्य अनुज्ञां प्राप्य ॥ १३–१५ ॥ तत इति। राजा रोमपादः। राज्ञः दशरथस्य ॥ १६ ॥ रोमपादेनेति। तं दशरथम्। प्रत्यपूजयत। ऋश्य

मिति । सिक्तं च संमृष्टं च सिक्तसंमृष्टम् । "पूर्वकाल–" इत्यादिना समासः । स्वलंकृतं पुष्पकदलीकाण्डादिभिः ॥ २४ ॥ तत इति । आगतम् आगतप्रायं, राज्ञा यद्यथा प्रेषितं तत्तथा तदा श्रवणकाल एव चक्रुः ॥ २५ ॥ तत इति । द्विजर्षभं पुरस्कृत्य शङ्खदुन्दुभिनिर्घोषैः सह प्रविवेश ॥ २६ ॥ तत इति । नागराः नगरवासिनः । नरेन्द्रेण दशरथेन । सत्कृत्य नगरालङ्कारादिभिः संमान्य प्रवेश्यमानं तं द्विजं दृष्ट्वा प्रमुदिताः सन्तुष्टाः

ततः प्रहृष्टाः पौरास्ते श्रुत्वा राजानमागतम् । तथा प्रचक्रुस्तत्सर्वं राज्ञा यत्प्रेषितं तदा ॥ २५ ॥ ततः स्वलंकृतं राजा नगरं प्रविवेश ह । शङ्खदुन्दुभिनिर्घोषैः पुरस्कृत्य द्विजर्षभम् ॥ २६ ॥ ततः प्रमुदिताः सर्वे दृष्ट्वा तं नागरा द्विजम् । प्रवेश्यमानं सत्कृत्य नरेन्द्रेणेन्द्रकर्मणा ॥ २७ ॥ अन्तःपुरं प्रवेश्यैनं पूजां कृत्वा विधानतः । कृतकृत्यं तदात्मानं मेने तस्योपवाहनात् ॥ २८ ॥ अन्तःपुरस्त्रियः सर्वाः शान्तां दृष्ट्वा तथागताम् । सह भर्त्रा विशालाक्षीं प्रीत्यानन्दमुपागमन् ॥ २९ ॥ पूज्यमाना च ताभिः सा राज्ञा चैव विशेषतः । उवास तत्र सुखिता कञ्चित्कालं सहर्त्विजा ॥ ३० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकादशः सर्गः ॥ ११ ॥

ततः काले बहुतिथे कस्मिंश्चित्सुमनोहरे । वसन्ते समनुप्राप्ते राज्ञो यष्टुं मनोऽभवत् ॥ १ ॥

आसन् । इन्द्रस्येव कर्म पराक्रमादिकं यस्य सः इन्द्रकर्मा तेन ॥ २७ ॥ अन्तःपुरमिति । उपवाहनात् आनयनात् ॥ २८ ॥ अन्तरिति । भर्त्रा सहागताम् अनेन पूर्वं कन्यात्वदशायामपि कदाचिदागमनं व्यज्यते ॥ २९ ॥ पूज्यमानेति । विशेषतः जनकत्वसम्बन्धात् ऋत्विजा ऋश्यशृङ्गेण पितृगृहत्वात् शान्तायाः प्राधान्यम् ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥ एवं दशरथः सर्वकामसमृद्धोऽपि पुत्रालाभसन्तप्तस्तन्मूलानि पापानि स्वाधिकारानुरूपेणाश्वमेधेन विना न विनश्यन्तीति मन्वानः "सर्वं पाप्पानं तरति



शृङ्ग इति शेषः ॥ १७ ॥ १८ ॥ शान्तेति । उद्यतम् उपक्रान्तमस्ति ॥ १९ ॥ २० ॥ ऋषिपुत्र इति । प्रतिश्रुत्य आकर्ण्य ॥ २१–२६ ॥ तत इति । इन्द्रकर्मणा इन्द्रसदृशकर्मणा ॥ २७ ॥ अन्तःपुरमिति । उपवाहनात आनयनात ॥ २८ ॥ अन्तःपुरस्त्रिय इति । तथागतां तादृशवैभवयुक्ताम् ॥ २९ ॥ ३० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायामेकादशः सर्गः ॥ ११ ॥ तत इति । ततः ऋश्यशृङ्गानयनानन्तरम् । काले बहुतिथे अनल्पे, गत

तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति श्रुत्या "राजसार्वभौमोऽश्वमेधेन यजेत" इति स्मृत्या च विहितमश्वमेधं यष्टुं सङ्कल्प्य तदानीमुद्बुद्धसंस्कारेण सुमन्त्रेणोदीरितवचनाज्जामातृपलालनव्याजेन शान्तया सह ऋश्यशृङ्गमानीय प्राप्तकाले पूर्वं सङ्कल्पितमश्वमेधं कर्तुमारभतेत्याह—ततः काल इत्यादि। ततः ऋश्यशृङ्गानयनानन्तरं, बहुतिथे अनल्पे काले गते। सङ्ख्यासंज्ञाद्बहुशब्दात् पूरणार्थे डटि "बहुपूगगणसङ्घस्य तिथुक्" इति तिथुगागमः। कस्मिंश्चित् मलिम्लुचत्वादिदोषरहिततया विलक्षणे, सुमनोहरे पौर्णमास्याः कालत्वेनातिमनोज्ञे, वसन्ते समनुप्राप्ते आरब्धे. चैत्र्यां पौर्णमास्यामित्यर्थः। राज्ञो दशरथस्य यष्टुं साङ्ग्रहणीमिष्टिं कर्तुं मनः मनोरथः अभूत्। "चैत्र्यां पौर्णमास्यां प्रातरश्वमेधेन यक्ष्ये इति सङ्कल्प्य साङ्ग्रहण्येष्ट्या यजेत" इति स्मरणात्॥ १ अथ साङ्ग्रहणीमिष्टिं कर्तुमृत्विग्वरणे प्राप्ते प्रथममृश्यशृङ्गं ब्रह्मत्वेन वृतवानित्याह—ततः प्रसाद्येति। देववर्णिनं देववर्चसम्॥ २॥ तथेति। स च ऋश्यशृङ्ग

> ततः प्रसाद्य शिरसा तं विप्रं देववर्णिनम्। यज्ञाय वरयामास सन्तानार्थं कुलस्य वै॥ २॥
> तथेति च स राजानमुवाच च सुसत्कृतः। सम्भाराः सम्भ्रियन्तां ते तुरगश्च विमुच्यताम्॥ ३॥
> ततो राजाब्रवीद्वाक्यं सुमन्त्रं मन्त्रिसत्तमम्। सुमन्त्रावाहय क्षिप्रमृत्विजो ब्रह्मवादिनः॥ ४॥
> सुयज्ञं वामदेवं च जाबालिमथ काश्यपम्। पुरोहितं वसिष्ठं च ये चाप्यन्ये द्विजातयः॥ ५॥

श्व॥३॥ अथ "अपदातीनृत्विजः समावहन्त्यासुब्रह्मण्यायाः" इति विहितमध्वर्युप्रभृतिवरणमाह—ततो राजेत्यादिना। अस्याः श्रुतेरयमर्थः—तस्यतस्य गृहे गत्वा सोमप्रवाकवृतानध्वर्युब्रह्महोतॄनाग्नीध्रं च हस्त्यश्वादिकमारोप्य राजगृहमानयन्ति राजपुरुषाः। अनन्तरायाममावास्यायां पूर्ववृता एव ते संज्ञाने ष्टृच्यर्थं पुनर्व्रियन्ते। अथ वैशाख्यां पौर्णमास्यां प्राजापत्यर्षभपश्वर्थं पूर्ववत् सोमप्रवाकवृतौ मैत्रावरुणप्रतिप्रस्थातारौ हस्त्यादिकमारोप्यानयन्ति राजपुरुषाः। अनन्तरायाममावास्यायां तथैव वृतमुद्गातारं हस्त्यादिभिरानयन्ति। अथागामिनि वसन्ते पञ्चदश्यां हस्त्यादिभिः प्रस्तोतारमानयन्ति। त्रैधातवीयार्थं यत्र दीक्षारम्भस्तद्दिवसादूर्ध्वं तृतीयादिष्वहस्स्वन्वहमितरानष्टावृत्विजो हस्त्यादिकमारोप्यानयन्ति ब्राह्मणाच्छंसिनमच्छावाकं नेष्टारं प्रतिहर्तारं ग्रावस्तुतं पोतारं उन्नेतारं सुब्रह्मण्यमिति सोमार्थम्। एवमासुब्रह्मण्याह्वानादपदातीनृत्विज आवहन्तीति। एवं क्रमेण कर्त्तव्यानि ऋत्विग्वरणानि कार्यकरत्वात्सङ्ग्रहेण दर्शयति सुमन्त्रावाहयेति। आवाहय आनय। ऋतौ यजन्तीति ऋत्विजः। ब्रह्मवादिनः वेदपाठकान्॥ ४॥ ऋत्विजः परिगणयति—सुयज्ञ

इति शेषः। सुमनोहरे मलिम्लुचत्वादिदोषरहिते। मनोऽभवत मनोगतं प्रवृत्तम्॥ १॥ ततः प्रसाद्येति। देववर्णिनम् देववर्चसम्। सन्तानार्थम् अविच्छेदार्थम्।

मिति ॥ ५ ॥ तत इति त्वरितविक्रमः त्वरितपदन्यासः ॥ ६ ॥ तानिति । धर्मार्थसहितं धर्मार्थरूपप्रयोजनयुक्तम्, श्लक्ष्णं मधुरम् ॥ ७ ॥ ममेति व्याख्यातम् ॥८॥ तदिति। यष्टुमिच्छामि प्रतिबन्धकदुरितशान्त्यर्थम् । ऋषिपुत्रप्रभावेन ऋश्यशृङ्गकृतयज्ञप्रभावेन, पश्चात्कामान्, पुत्रान् प्राप्स्यामि च ॥ ९ ॥ तत इति । ऋश्यशृङ्गश्चाधागमत्वाद्वसिष्ठप्रमुखा इत्युक्तम् ॥ १० ॥ ऋश्यशृङ्गेत्यादि व्याख्यातप्रायम् ॥ ११ ॥ सर्वथेति । सनत्कुमार वचःश्रवणाच्चतुर इत्युक्तम् ॥ १२ ॥ तत इति । क्रियाभेदान्न राजपदपुनरुक्तिः ॥ १३ ॥ गुरूणामिति । संभ्रियन्तु संभ्रियन्ताम्, आर्षं परस्मै

ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः । समानयत्स तान् सर्वान् समर्थान् वेदपारगान् ॥ ६ ॥ तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा । धर्मार्थसहितं युक्तं श्लक्ष्णं वचनमब्रवीत् ॥ ७ ॥ मम लालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् । तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ॥८॥ तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा । ऋषिपुत्रप्रभावेन कामान् प्राप्स्यामि चाप्यहम् ॥९॥ ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् । वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखाच्च्युतम् ॥ १० ॥ ऋश्यशृङ्गपुरोगाश्च प्रत्यूचुर्नृपतिं तदा । सम्भाराः सम्भ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ११ ॥ सर्वथा प्राप्स्यसे पुत्रांश्चतुरोऽमितविक्रमान् । यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता ॥ १२ ॥ ततः प्रीतोऽभवद्राजा श्रुत्वा तु द्विजभाषितम् । अमात्यांश्चाब्रवीद्राजा हर्षेणेदं शुभाक्षरम् ॥ १३ ॥ गुरूणां वचनाच्छीघ्रं सम्भाराः सम्भ्रियन्तु मे । समर्थाधिष्ठितश्चाश्वस्सोपाध्यायो विमुच्यताम् ॥ १४ ॥

पदम् । अत्र सम्भाराः यज्ञीयाश्वमोचनोपकरणानि " द्वादशारत्नी रशना भवति " इत्युक्त्या द्वादशारत्निपरिमिता मुञ्जारूयतृणविशेषनिर्मिता रशना " चतुष्टय्य आपो भवन्ति " इत्यनुवाकोक्ताः आतपतिवर्ष्याः कूप्याः स्थावरा वहन्त्यश्च इति चतुर्विधा आप इत्यादीनि । समर्थैः " चतुःशता



विप्रमृश्यशृङ्गम् ॥२॥३॥ तत इति । आवाहय मत्समीपं प्रापय । कृतो यजन्तीत्यृत्विजः ॥ ४-७ ॥ मम लालप्यमानस्येत्यादि राज्ञा पूर्वमप्युक्तम्, न तु कृतम् सङ्कल्पमात्रेण अन्तरा सुमन्त्रकथा प्रस्तुता, अतो नानुष्ठितम् । इदानीमनुष्ठानार्थं तत्पुनरप्युपन्यस्यते ॥ ८ ॥ तदिति । ऋषिपुत्रप्रभावेन-ऋषिपुत्रः ऋश्यशृङ्गः, तत्प-

रक्षन्ति " इति श्रूयमाणे राजपुत्राद्यैः अधिष्ठितः रक्षितः । सोपाध्यायः उपाध्यायैश्चतुर्भिः ऋत्विग्भिः सहितः । अश्वो विमुच्यताम् " चत्वार ऋत्विजः समुक्षन्तीत्यारभ्य शतेन राजपुत्रैः सह अध्वर्युः शतेनाराजभिरुग्रैः सहब्रह्मा शतेन सूतग्रामणीभिः सह होता शतेन क्षत्रसङ्ग्रहीतृभिः सहोद्गाता" इति श्रुतेः । संगृहीतं च भट्टभास्करैः—"सन्नाहवन्तः क्षितिपालपुत्राः सन्नद्धसूताः शतमस्य तल्प्याः । गोपायितारः शतमेवमुग्राः सन्नाहिनस्तादृशसूतयुक्ताः । वैश्याः शतं प्रान्तचराः पथि स्युर्वरूथिनस्तैः शतमेव शूद्राः॥"इति॥१४॥अथ "पुण्यनामदेवयजनमध्यवस्यति"इत्युक्तरीत्या यागार्हपुण्यस्थलपरिग्रहं दर्शयति—

सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् । शान्तयश्चाभिवर्द्धन्तां यथाकल्पं यथाविधि ॥ १५ ॥ शक्यः कर्तुमयं यज्ञः सर्वेणापि महीक्षिता । नापराधो भवेत्कष्टो यद्यस्मिन् क्रतुसत्तमे ॥ १६ ॥ छिद्रं हि मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसाः । विघ्नितस्य हि यज्ञस्य सद्यः कर्ता विनश्यति ॥ १७ ॥ तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते । तथा विधानं क्रियतां समर्थाः करणेष्विह ॥ १८ ॥ तथेति च ततः सर्वे मन्त्रिणः प्रत्यपूजयन् । पार्थिवेन्द्रस्य तद्वाक्यं यथाज्ञप्तमकुर्वत ॥ १९॥ ततो द्विजास्ते धर्मज्ञमस्तुवन् पार्थिवर्षभम् । अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम्॥२०॥ गतेष्वथ द्विजाग्र्येषु मन्त्रिणस्तान्नराधिपः । विसर्ज्जयित्वा स्वं वेश्म प्रविवेश महाद्युतिः ॥ २१ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे द्वादशः सर्गः ॥ १२ ॥

पुनः प्राप्ते वसन्ते तु पूर्णः संवत्सरोऽभवत् । प्रसवार्थं गतो यष्टुं हयमेधेन वीर्यवान् ॥ १ ॥

सरय्वा इति । उत्तरं विविक्तमिति तत्परिग्रहः । शान्तयः शान्तिकर्माणि । अभिवर्द्धन्तां प्रवर्तन्ताम्, यथाकल्पं यथाक्रमं, यथाविधि यथाशास्त्रम् ॥१५॥ शक्य इति । कष्टः क्लेशकरः॥१६॥ छिद्रमिति । छिद्रम् अपराधमित्यर्थः॥१७॥ तदिति । यथेति छेदः॥१८॥ तथेति । अकुर्वत साङ्ग्रहणेष्टिप्रभृत्यश्वविमोचनान्तमकुर्वन्नित्यर्थः ॥१९॥ ततो द्विजा इति । अनुज्ञाताः, तेनेति शेषः ॥२०॥ गतेष्विति । स्वं वेश्म, अग्निगृहादन्तःपुरमित्यर्थः ॥२१॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्वादशः सर्गः ॥१२॥ एवं प्रथमवसन्ते चैत्रपौर्णमास्यां साङ्ग्रहणेष्टिं विधाय

भावेन ॥ ९-१४ ॥ यथाकल्पं यथाक्रमम् । यथाविधि यथाशास्त्रम् ॥ १५-२० ॥ गतेष्विति । नराधिपः दशरथः । स्वं स्वकीयम् वेश्म, अग्निगृहादन्तःपुरं प्रविवेश प्रवेशयामास ॥ २१ ॥ इति श्रीमहेश्वरतीर्थकृतायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां द्वादशः सर्गः ॥ १२ ॥ पुनः प्राप्त इति । यस्मिन् वसन्ते

द्वितीयेऽह्नि ब्रह्मौदनमेध्याश्वबन्धनस्नापनप्रोक्षणविमोचनादिकम् "चत्वार ऋत्विजः समुक्षन्ति "इत्युक्तरीत्या कृत्वा "सावित्रमष्टाकपालं प्रातर्निर्वपति" इत्युक्तरीत्या प्रतिदिनं सावित्रादिषु कर्मस्वनुष्ठीयमानेषु संवत्सरे पूर्णे देवयजनंप्रति प्रस्थानं दर्शयति त्रयोदशे–पुनः प्राप्त इत्यादि । पुनर्वसन्ते द्वितीय वसन्ते प्राप्ते संवत्सरः पूर्णोऽभवत्, अमावास्या प्राप्तेत्यर्थः । तत्र भाविन्यां पौर्णमास्यां प्रसवार्थं हयमेधेन यष्टुं हयमेधाख्यं यज्ञं कर्तुम् गतः, देवयजन मितिशेषः । प्रथमसंवत्सरान्तिमामावास्यायां उखासंभरणत्रैधातवीयदीक्षणीयादिकं देवयजन एव हि कर्त्तव्यम् । यथोक्तं भास्करैः–"संवत्सरस्यास्य तु याऽन्तिमामावास्या विधेयामिह दीक्षणीयाम् । त्रैधातवीयां प्रवदन्ति सप्त दिनानि दीक्षाहुतयस्तथाष्टौ॥" इति ॥१॥ एवमेतत्सर्गप्रतिपाद्यं देवयजनगमनं

अभिवाद्य वसिष्ठं च न्यायतः प्रतिपूज्य च । अब्रवीत्प्रश्रितं वाक्यं प्रसवार्थं द्विजोत्तमम् ।
यज्ञो मे क्रियतां विप्र यथोक्तं मुनिपुङ्गव ॥ २ ॥ यथा न विघ्नः क्रियते यज्ञाङ्गेषु विधीयताम् ॥ ३ ॥
भवान् स्निग्धः सुहृन्मह्यं गुरुश्च परमो महान् । वोढव्यो भवता चैव भारो यज्ञस्य चोद्यतः ॥ ४ ॥

सङ्ग्रहेणोक्त्वा पुनस्तद्विस्तरेण वक्तुमुपक्रमते सर्गशेषेण । तत्र ब्रह्मौदनमारभ्य यावदश्वमेधसमाप्ति यजमानस्य स्वातन्त्र्यप्रतिषेधेन स्वयं यज्ञोपकरणसंपाद नाद्ययोगादध्वर्युणैव तस्य सर्वस्य कर्तव्यत्वादध्वर्युत्वेन वृतं वसिष्ठं प्रति प्रार्थयते–अभिवाद्येत्यादिना । तदुक्तं भट्टभास्करैः–"रशनाञ्जनतः पश्चादध्वर्युः परिवीयते । राज्याय स च राजा स्याद्यावत् सन्तिष्ठते क्रतुः ॥" इति । येयं "द्वादशारत्नी रशना भवति मौञ्जी भवति" इत्यश्वबन्धनरज्जुर्विहिता, तस्याः "यदाज्यमुच्छिष्यते तस्मिन् रशनान्युनक्ति" इति यद्ब्रह्मौदनाशिष्टाज्येनाभ्यञ्जनम् विहितं ततः पश्चादित्यर्थः । अर्द्धत्रयमेकान्वयम् । वसिष्ठं अभिवाद्य च न्यायतः शास्त्रतः प्रतिपूज्य च । प्रश्रितं विनययुक्तं वाक्यमब्रवीत् । कथम्? प्रसवार्थं पुत्रार्थम् । आरब्धो मे यज्ञः यथोक्तं शास्त्रोक्तमनतिक्रम्य क्रियताम् ॥२॥ यथेति । यज्ञाङ्गेषु द्रव्यदेवताकर्मादिरूपेषु यथा विघ्नो न क्रियते, राक्षसैरिति शेषः । तथा क्रियतामित्यर्थः ॥३॥ भवानिति । भवान् मह्यं

ऋश्यशृङ्गादिऋत्विजो वृताः तत आरभ्य सम्भारसम्भरणयज्ञभूमिविधानशान्तिकर्मानुष्ठानपूर्वकमश्वं विमुच्य तेन सहैव गच्छद्भिरुद्गात्रध्वर्युहोतृब्रह्माभिः राजपुत्र संगृहीतृसूतग्रामण्युग्राख्यैः प्रत्येकशतसङ्ख्याकैरनुगम्यमानैस्सावित्रादिकर्मसु अनुष्ठीयमानेष्वेव संवत्सरे पूर्णे पुनर्वसन्ते प्राप्त इत्यर्थः । हयमेधेन अश्वमेधेन, प्रस वार्थं प्रसवफलं भावयितुं । गतः गन्तुमुपक्रान्त इत्यर्थः ॥ १ ॥ अभिवाद्येत्यर्धत्रयमेकं वाक्यम् । वसिष्ठमभिवाद्य न्यायतः प्रतिपूज्य च प्रसवार्थमारब्धो यज्ञो यथोक्तं क्रियतामिति प्रश्रितं विनययुक्तं वाक्यमब्रवीदिति सम्बन्धः ॥ २ ॥ यथेति । यज्ञाङ्गेषु द्रव्यदेवताकर्मादिरूपेषु यथा विघ्नो न क्रियते, राक्षसादिभिरिति शेषः । तथा विधीयतां क्रियतामित्यर्थः ॥ ३ ॥ भवानिति । स्निग्धः अविच्छेदस्नेहः । सुहृत् शोभनहृदयः । मह्यमिति षष्ठ्यर्थे चतुर्थी । मया उद्यतो भारः भवता वोढव्य

स्निग्धः अविच्छिन्नस्नेहः सुहृत्, परमः वामदेवादिभ्य उत्कृष्टः, महान् वस्तुतो निरुपमः, गुरुः अतः उद्यतः उपक्रान्तः यज्ञस्य भारो भवतैव वोढव्यः चकारेणार्त्विज्यं च कर्तव्यमित्युच्यते ॥ ४ ॥ तथेति । समर्थितं सम्यक् प्रार्थितम् ॥ ५ ॥ तत इति सार्द्धश्लोकत्रयमेकान्वयम् । यज्ञकर्मसु यज्ञप्रयोगेषु । स्थापत्ये तद्द्रव्यानयनस्वाम्ये । निष्ठितान् पूर्वं राज्ञा नियुक्तान् ॥ ६ ॥ कर्मान्तिकानिति । कर्मणामन्तः समाप्तिः स एषामस्तीति कर्मान्तिकाः । " अत इनिठनौ " इति ठन् । भृतकानित्यर्थः । शिल्पकरान् इष्टकादिनिर्मातॄन् । वर्द्धकीन् तक्ष्णः । स्रुक्स्रुवचमसग्रहयूपादिनिर्मातॄन् । खनकान् वापीकूपादिकृतः, गणकान् लेखकान्, शिल्पिनः चित्रादिकरान्, नटाः रसाभिनयकृतः, नर्तकाः भावाभिनयकृतः, शास्त्रविदः प्रयोगशास्त्र

तथेति च स राजानमब्रवीद्द्विजसत्तमः । करिष्ये सर्वमेवैतद्भवता यत्समर्थितम् ॥५॥ ततोऽब्रवीद्द्विजान् वृद्धान् यज्ञकर्मसु निष्ठितान् । स्थापत्ये निष्ठितांश्चैव वृद्धान् परमधार्मिकान् ॥ ६ ॥ कर्मान्तिकान् शिल्पकरान् वर्द्धकीन् खनकानपि । गणकान् शिल्पिनश्चैव तथैव नटनर्तकान् । तथा शुचीन् शास्त्रविदः पुरुषान् सुबहुश्रुतान् ॥ ७ ॥ यज्ञकर्म समीहन्तां भवन्तो राजशासनात् । इष्टका बहुसाहस्रीः शीघ्रमानीयतामिति ॥ ८ ॥ औपकार्याः क्रियन्तां च राज्ञां बहुगुणान्विताः । ब्राह्मणावसथाश्चैव कर्तव्याः शतशः शुभाः ॥ ९ ॥

विदः ॥ ७ ॥ अथाज्ञापनप्रकारमाह अष्टभिः—यज्ञकर्मेत्यादि । ऋत्विजः प्रत्याह यज्ञकर्मेति । समीहन्तां व्याप्रियन्ताम् । शिल्पकरान् प्रत्याह इष्टकेति । जात्येकवचनम् । इत्यब्रवीदिति पूर्वेणान्वयः ॥ ८ ॥ औपकार्या इति, सतश्लोक एकान्वयः । औपकार्या राजसदनानि । " स्वार्थे ष्यञ् "

इत्यब्रवीदिति द्विजोत्तममिति पूर्वस्यानुषङ्गः ॥ ४ ॥ तथेति । समर्थितम्-प्रार्थितम् ॥ ५ ॥ ततोऽब्रवीदित्यादि । यज्ञकर्मसु यज्ञप्रयोगेषु, स्थापत्ये तत्तद्द्रव्यानयनस्वाम्ये, निष्ठितान् नियुक्तान् । कर्मान्तिकान् कर्मान्तः कर्मस्वरूपं तन्निश्चयो वा तद्वन्तः, कर्मकरानिति यावत् । शिल्पकरान् चित्रकरान् । वर्द्धकीन् त्वष्टॄन् खनकान् वापीकूपनिर्मातॄन् । गणकान् लेखकान् । शिल्पिनः वितानाद्यलङ्कारकान्, नटनर्तकान्-नटान् नाटयितॄन्, नर्तकान् नृत्यकारिणः ॥ ६ ॥ ७ ॥ यज्ञकर्म समीहन्ताम्, निर्वर्तयितुमिति शेषः । इष्टकेति । आनीयतामित्यत्रेतिशब्दः अब्रवीदिति पूर्वेण सम्बध्यते । यद्वा परेण सम्बध्यते यथेष्टकानयनमेवमौपयिकाश्च क्रियन्तामिति । बहुसाहस्राः बहुसहस्रसङ्ख्याकाः आनीयतामिति व्यत्ययेनैकवचनम् ॥ ८ ॥ औपकार्या इत्यादि । औपकार्याः राजसदनानि । बहुगुणान्विताः बहूपकरणयुक्ताः ।

विषम०—स्थापत्यं स्थपतेः रथकारस्य कर्म । तत्र निष्ठितान् प्रवीणान् ॥ ६ ॥

"राजसदनमुपकार्योपकारिका" इत्यमरः। बहुगुणान्विताः औन्नत्यविशालत्वादिबहुगुणान्विताः ब्राह्मणावसथा इति आर्षो लिङ्गव्यत्ययः ॥ ९ ॥ कठिनफलादि भक्ष्यम्। सुनिष्ठिताः वातवर्षादिभिरप्रकम्प्याः ॥ १० ॥ सर्वकामैः स्रक्चन्दनादिभिः उपस्थिताः संयुक्ताः बहु अधिकं विधिवत् यथा विधि सत्कृत्य गन्धादिभिरभ्यर्च्य ॥ ११ ॥ लीलया अनादरेणेत्यर्थः। यथा पूजां प्राप्नुवन्ति तथा कर्तव्यमित्यर्थः ॥ १२ ॥ कामक्रोधवशात् स्नेहद्वेषवशात्। अपिशब्देन लीला समुच्चीयते ॥१३॥ विशेषेण अत्यादरेणेत्यर्थः। यथाक्रमं यथावृद्धम्। ते चेत्यत्र चशब्दो भिन्नक्रमः। ते भोजनेन वसुभिः

भक्ष्यान्नपानैर्बहुभिः समुपेताः सुनिष्ठिताः। तथा पौरजनस्यापि कर्त्तव्या बहुविस्तराः ॥१०॥ आवासा बहुभक्ष्या वै सर्वकामैरुपस्थिताः। तथा जानपदस्यापि जनस्य बहु शोभनम् ॥ ११ ॥ दातव्यमन्नं विधिवत् सत्कृत्य न तु लीलया। सर्ववर्णा यथा पूजां प्राप्नुवन्ति सुसत्कृताः ॥ १२ ॥ न चावज्ञा प्रयोक्तव्या कामक्रोधवशादपि। यज्ञकर्मणि ये व्यग्राः पुरुषाः शिल्पिनस्तथा ॥ १३ ॥ तेषामपि विशेषेण पूजा कार्या यथाक्रमम्। ते च स्युः सम्भृताः सर्वे वसुभिर्भोजनेन च ॥ १४ ॥ यथा सर्वं सुविहितं न किंचित् परिहीयते। तथा भवन्तः कुर्वन्तु प्रीतिस्निग्धेन चेतसा ॥ १५ ॥ ततः सर्वे समागम्य वसिष्ठमिदमब्रुवन्। यथोक्तं तत्सुविहितं न किञ्चित् परिहीयते ॥ १६ ॥ यथोक्तं तत्करिष्यामो न किञ्चित् परिहीयते[1]। ततः सुमन्त्रमानीय वसिष्ठो वाक्यमब्रवीत् ॥ १७ ॥

धनैश्च संभृतास्तृप्ताश्च स्युः ॥१४॥ सर्वमपि यथा सुविहितं सुष्ठु अनुष्ठितं स्यात् किञ्चिदपि न परिहीयते न त्यक्ष्यते प्रीतिस्निग्धेन स्नेहार्द्रेण ॥१५॥ यथोक्तप्रवृत्तिं दर्शयति तत इति। तत् पूर्वोक्तकार्यजातम्। एवमुपकरणनिष्पत्त्यनन्तरं राजाह्वानमाज्ञापयति–तत इत्यादिना ॥ १६ ॥ १७ ॥

सुनिष्ठिताः सुनिर्मिताः। सर्वकामैरुपस्थिताः काम्यमानैस्सर्वपदार्थैरुपेताः। जानपदस्य ग्रामान्तरादागतस्य ॥ ९–११ ॥ लीलया अवज्ञया अनादरेण तु नैव देयमित्यर्थः। सर्ववर्णा इति सर्वे वर्णाः यथा पूजां प्राप्नुवन्ति तथा कर्तव्यमित्यर्थः ॥ १२ ॥ १३ ॥ तेषामपि विशेषेण-तेषां तु विशेषेण कर्तव्यमित्यर्थः। यथाक्रमं यथाहम्। ते चेत्यत्र चशब्दो भिन्नक्रमः। वसुभिर्भोजनेन च यथा संभृताश्च स्युः तथा कर्तव्यमित्यर्थः ॥१४॥ १५॥ तत इत्यादि सार्धश्लोकमेकं वाक्यम्। यथोक्तं यथा

[1] परिहास्यते। इति तीर्थीयपाठः ॥

निमन्त्रयस्व आह्वय ॥ १८ ॥ ब्राह्मणानिति । सर्वदेशेषु स्थितानिति शेषः ॥१९॥ मिथिलेति श्लोकद्वयमेकं वाक्यम् । तं प्रसिद्धं स्वयमेव, न तु दूतमुखेन। पूर्वसम्बन्धिनं चिरन्तनसुहृदं ततः पूर्वोक्तेभ्यो नृपतिभ्यः॥२०॥२१॥ तथेति । स्वयमेव गमने हेतवो विशेषणानि॥२२॥ तथेति । केकयराजानमिति समासान्तविधेरनित्यत्वाट्टजभावः ॥ २३ ॥ अङ्गेति । समानय, त्वमेवेति शेषः ॥ २४ ॥ प्राचीनानिति । प्राचीनान् प्राग्देशवर्तिनः । सिन्धुदेशे

निमन्त्रयस्व नृपतीन् पृथिव्यां ये च धार्मिकाः ॥१८॥ ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्चैव सहस्रशः । समानयस्व सत्कृत्य सर्वदेशेषु मानवान् ॥ १९ ॥ मिथिलाधिपतिं शूरं जनकं सत्यविक्रमम् । निष्ठितं सर्वशास्त्रेषु तथा वेदेषु निष्ठितम् ॥२०॥ तमानय महाभागं स्वयमेव सुसत्कृतम् । पूर्वसम्बन्धिनं ज्ञात्वा ततः पूर्वं ब्रवीमि ते ॥२१॥ तथा काशीपतिं स्निग्धं सततं प्रियवादिनम् । वयस्यं राजसिंहस्य स्वयमेवानयस्व ह ॥ २२ ॥ तथा केकयराजानं वृद्धं परमधार्मिकम्। श्वशुरं राजसिंहस्य सपुत्रं त्वमिहानय॥२३॥ अङ्गेश्वरं महाभागं रोमपादं सुसत्कृतम्। वयस्यं राजसिंहस्य समानय यशस्विनम्॥२४॥प्राचीनान् सिन्धुसौवीरान् सौराष्ट्रेयांश्च पार्थिवान् । दाक्षिणात्यान्नरेन्द्रांश्च समस्तानानयस्व ह ॥ २५ ॥ सन्ति स्निग्धाश्च ये चान्ये राजानः पृथिवीतले । तानानय यथाक्षिप्रं सानुगान् सह बान्धवान् ॥२६॥ वसिष्ठवाक्यं तच्छ्रुत्वा सुमन्त्रस्त्वरितस्तदा । व्यादिशत्पुरुषांस्तत्र राज्ञामानयने शुभान् ॥२७॥

सौवीरदेशे च भवाः सिन्धुसौवीराः । सौराष्ट्रेयान् सुराष्ट्रदेशभवान् । दाक्षिणात्यान् दक्षिणदेशभवान् । आनयस्व, दूतमुखेनेति शेषः ॥२५॥ सन्तीति । यथाक्षिप्रं शैघ्र्यमनतिक्रम्य ॥ २६ ॥ वसिष्ठेति । शुभान् अन्तरङ्गान् ॥ २७ ॥

शास्त्रमुक्तं त्वया यदुक्तं तत् न किंचित् परिहीयते न किंचिल्लुप्यते । यथा न किंचित्परिहास्यते किंचिदपि यथा परित्यक्तं न भवेत् तथा तत्सुविहितं स्वनुष्ठितं करिष्याम इत्यर्थः ॥ १६–१९ ॥ मिथिलाधिपमिति । स्वयमेवानयेति सम्बन्धः । पूर्वसम्बन्धिनं चिरन्तनसम्बन्धिनं ज्ञात्वा ततः पूर्वं तत्पूर्वकं ब्रवीमि राजाह्वान

विषम०—मानवान् चतुर्वर्णातिरिक्तान् सङ्करजातीयान् ॥ १९ ॥

१ सद्वृत्तं देवसङ्काशम् । २ तमिहानय । ३ महेष्वासं । ४ समीपगम् । इति च पाठान्तरम् ॥

स्वयमिति । महीक्षितः वसिष्ठेन विशिष्योक्तान् ॥ २८ ॥ ते चेति । उपलक्षणमेतत् । शिल्पकरादीनां यज्ञे यज्ञनिमित्तं यदुपकल्पितं निर्मितं तत्सर्वं निवेदयन्ति स्म । अवश्यं शिक्षणीयांशं पुनः शिक्षयति–ततः प्रीत इति । अर्धमेकान्वयम् ॥ २९ ॥ अवज्ञयेति । लीलया विनोदेन ॥ ३० ॥ तत इति । ततः दशरथनिर्गमनानन्तरम् रत्नानि श्रेष्ठवस्तूनि मणिमुक्ताप्रवालवस्त्राभरणचन्दनादीनि ॥ ३१ ॥ तत इति । स्पष्टम् ॥ ३२ ॥

स्वयमेव हि धर्मात्मा प्रययौ मुनिशासनात् । सुमन्त्रस्त्वरितो भूत्वा समानेतुं महीक्षितः ॥२८॥ ते च कर्मान्तिकाः सर्वे वसिष्ठाय च धीमते। सर्वं निवेदयन्ति स्म यज्ञे यदुपकल्पितम् । ततः प्रीतो द्विजश्रेष्ठस्तान् सर्वान् पुनरब्रवीत् ॥ २९ ॥ अवज्ञया न दातव्यं कस्यचिल्लीलयापि वा । अवज्ञया कृतं हन्याद्दातारं नात्र संशयः ॥ ३० ॥ ततः कैश्चिदहोरात्रैरुपयाता महीक्षितः । बहूनि रत्नान्यादाय राज्ञो दशरथस्य हि ॥ ३१ ॥ ततो वसिष्ठः सुप्रीतो राजानमिदमब्रवीत् । उपयाता नरव्याघ्र राजानस्तव शासनात् ॥ ३२ ॥ मया च सत्कृताः सर्वे यथार्हं राजसत्तमाः । यज्ञियं च कृतं राजन् पुरुषैः सुसमाहितैः ॥ ३३ ॥ निर्यातु च भवान् यष्टुं यज्ञायतनमन्तिकात् । सर्वकामैरुपहृतैरुपेतं वै समन्ततः ॥३४॥ द्रष्टुमर्हसि राजेन्द्र मनसेव विनिर्मितम् ॥३५॥ तथा वसिष्ठवचनादृश्यशृङ्गस्य चोभयोः । शुभे दिवसनक्षत्रे निर्यातो जगतीपतिः ॥ ३६ ॥

मयेति । यज्ञमर्हति इति याज्ञियम् । “ यज्ञर्त्विग्भ्यां घखञौ ” इति घः । यज्ञाय यत्सम्पाद्यं तत्सर्वं सम्पादितमित्यर्थः ॥ ३३ ॥ निर्यात्विति । अन्तिकात्समीपे । “ दूरान्तिकार्थेभ्यो द्वितीया च ” इति चकारेण पञ्चमी । समीपे उपहृतैः सर्वकामैः सर्वोपकरणैः उपेतम् ॥ ३४ ॥ द्रष्टुमित्यर्धमेकान्वयम् । मनसेवेति क्षिप्रसिद्धत्वे दृष्टान्तः ॥ ३५ ॥ तथेति । वसिष्ठेत्यविभक्तिको निर्देशः । वसिष्ठस्य ऋश्यशृङ्गस्य चोभयोरित्यर्थः । ऋश्यशृङ्गस्य



मुपदिशामीत्यर्थः ॥ २०–२६ ॥ वसिष्ठवाक्यमिति । शुभान् कुशलान् ॥ २७–२९ ॥ अवज्ञयेति । अवज्ञया अनादरेण । लीलया अश्रद्धया ॥ ३० ॥ तत इति । आदाय उपायनार्थम् ॥ ३१ ॥ ३२ ॥ मयापीति । यज्ञियं यज्ञोपयोगि, स्रुक्स्रुवाद्युपकरणजातमित्यर्थः ॥ ३३ ॥ अन्तिकम् अन्तिके स्थितम् । सर्वकामैः सर्वोप

ब्रह्मत्वेन वृतत्वात् तद्वचनमप्यपेक्षितम् । शुभे दिवसे सोमसौम्यवारादौ, शुभे नक्षत्रे रोहिण्यादौ, निर्यातः, गृहात् यज्ञशालां प्रति इत्यर्थसिद्धम् । अत्राहुः–" शङ्खदुन्दुभिमृदङ्गवादनैर्मङ्गलैः पटहकाहलादिभिः । स्वस्तिवादमुखैर्मखक्षितिं ब्राह्मणैश्च सह सम्प्रपद्यते ॥" इति ॥ ३६ ॥ तत इति सार्द्धश्लोकः । आरभन्निति छान्दसः । यज्ञवाटगताः सर्वे यजमानर्त्विगादयः, यथाविधि यथाक्रमं यथाशास्त्रं सर्वे यज्ञकर्मारभन् स्वस्वकर्मारभन्तेत्यर्थः ॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥ पूर्वसर्गान्ते शालाप्रवेशानन्तरमश्वमेधारम्भस्सङ्ग्रहेण दर्शितः । तदनुष्ठानं विस्तरेण दर्शयिष्यन् तस्याश्वागमनपूर्वकत्वात्तदनुवादपूर्वकं यज्ञानुष्ठानं दर्शयति चतुर्दशे–अथेत्यादि । अथ अश्वविमोचनानन्तरम् । तुरङ्गमे प्राप्ते क्रमेण प्राप्ते । तस्मिन्संवत्सरे पूर्णे राज्ञो यज्ञः अभ्यवर्तत प्रावर्तत । अश्वागमन

ततो वसिष्ठप्रमुखाः सर्व एव द्विजोत्तमाः । ऋश्यशृङ्गं पुरस्कृत्य यज्ञकर्मारभंस्तदा । यज्ञवाटगताः सर्वे यथाशास्त्रं यथाविधि ॥ ३७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

अथ संवत्सरे पूर्णे तस्मिन् प्राप्ते तुरङ्गमे । सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत ॥ १ ॥ ऋश्यशृङ्गं पुरस्कृत्य कर्म चक्रुर्द्विजर्षभाः । अश्वमेधे महायज्ञे राज्ञोऽस्य सुमहात्मनः ॥ २ ॥

क्रमस्तु–विमुक्तमश्वं स्वैरं चरन्तं राजपुत्रराजोग्रसूतग्रामणिक्षत्रसङ्ग्रहितारश्चतुःशताः परिपालयन्तो नावर्तयन्तोऽनुचरन्ति । ब्रह्माध्वर्युहोत्रुद्गातारश्चत्वार ऋत्विजस्तं रथकारगृहे समानीय बध्वा तस्य चतुर्षु पदेषु " इह धृतिः स्वाहा " इत्याद्याहुतिचतुष्टयं जुह्वति । तथाहुः–"रथकारगृहेऽश्वस्य वसतः सायमस्य तु । चतुर्षु पत्सु होतव्याश्चतस्रो धृतयः क्रमात् ॥" इति । अथैकादशमासादूर्ध्वं तं सदस्याः समानीय आश्वत्थे व्रजे बध्नन्ति । तथाह आपस्तम्बः–" ऊर्द्ध्वमेकादशान्मासादाश्वत्थे व्रजेऽश्वं बध्नीयात् " इति । ततो द्वादशे मासे शालानिर्माणादिसकलसम्भारान् संभृत्य फाल्गुनामावास्यायामृत्विग्भिः शालां प्रविश्य प्रतिपदमारभ्याश्वमेधं प्रारभन्ते ॥ १ ॥ ऋश्यशृङ्गमिति । अनेन प्रधानार्त्विज्यं ब्रह्मत्वं तस्येति गम्यते ॥ २ ॥

करणैः ॥ ३४ ॥ द्रष्टुमिति । मनसेव विनिर्मितमिति अविलम्बेन लोकोत्तरतया च निर्माणं सूचितं भवति ॥३५॥ तथा वसिष्ठवचनादिति लुप्तविभक्तिको निर्देशः । वसिष्ठस्य ऋश्यशृङ्गस्य चोभयोरिति च सम्बन्धः । यज्ञवाटगता इत्यर्धं भिन्नं वाक्यम् । अत्राप्यारभन्नित्यनुषज्यते । यथाशास्त्रम् वेदोक्तमनतिक्रम्य । यथाविधि-कल्पसूत्रानुसारेण ॥३६॥३७॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां त्रयोदशः सर्गः ॥१३॥ अथेति । एतेन पूर्वोक्त

प्रतिपदमारभ्य सप्तसु दिनेषु कर्तव्यान् "त्रीणि त्रीणि वैश्वदेवानि जुहोति" इति विहितानेकविंशतिहोमान् "पूर्णाहुतिमुत्तमां जुहोति" इति विहितं कर्म विशेषं चाभिप्रेत्याह—कर्म कुर्वन्तीति । याजकाः ऋत्विजः वेदपारं तदर्थावबोधः, तद्गच्छन्तीति वेदपारगाः । कर्म पूर्वोक्तं विधिवत्कुर्वन्ति स्म यथाविधि यथावेदोक्तम्, यथान्यायं यथामीमांसम्, शास्त्रतः कल्पसूत्रानुसारेण । परिक्रामन्ति प्रचरन्ति । "नास्य स्थिते सोमेऽध्वर्युः प्रत्यङ्ङसदोतीयात्" इत्याद्युक्त क्रममतिलङ्घ्य ऋत्विजो न विहरन्तीत्यर्थः॥३॥ अथ सोमक्रयानन्तरं सोमराजाप्यायनकर्मविशेषान् दर्शयति—प्रवर्ग्यमिति । द्विजा ऋत्विजः । प्रवर्ग्यं "देवा वै सत्रमासत" इत्यादिप्रवर्ग्यब्राह्मणोक्तं कर्मविशेषम् । शास्त्रतः विधिमीमांसाकल्पसूत्रानुसारेण. कृत्वा उपसदम् इष्टिविशेषम् । तथैव शास्त्रत एव । कृत्वा, शास्त्रतः उपदेशशास्त्रात् । अधिकम् अतिदेशतः प्राप्तं सर्वं कर्म च चक्रुः । "तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य " इति प्राप्ता द्वादशप्रवर्ग्योपसदश्चक्रु

कर्म कुर्वन्ति विधिवद्याजका वेदपारगाः । यथाविधि यथान्यायं परिक्रामन्ति शास्त्रतः ॥ ३ ॥
प्रवर्ग्यं शास्त्रतः कृत्वा तथैवोपसदं द्विजाः । चक्रुश्च विधिवत्सर्वमधिकं कर्म शास्त्रतः ॥ ४ ॥
अभिपूज्य ततो हृष्टाः सर्वे चक्रुर्यथाविधि । प्रातःसवनपूर्वाणि कर्माणि मुनिपुङ्गवाः ॥ ५ ॥
ऐन्द्रश्च विधिवद्दत्तो राजा चाभिष्टुतोऽनघः । माध्यन्दिनं च सवनं प्रावर्तत यथाक्रमम् ॥ ६ ॥

रित्यर्थः॥४॥अथ सोमप्रयोगं दर्शयति—अभिपूज्येति।बहिष्पवमानादिभिस्तत्तत्कर्मदेवताः अभिपूज्य ततः प्रवर्ग्योपसदनावसाने। प्रातःसवनपूर्वाणि प्रातः सवनमाध्यान्दिनसवनतृतीयसवनानि कर्माणि चक्रुः॥५॥ ऐन्द्र इति । ऐन्द्रः इन्द्रग्रहनिष्ठः सोमांशः, स विधिवदिन्द्राय दत्तः । अनघः पापनिवर्तकः । राजा सोमराजः । अभिष्टुतः स्तोत्रशस्त्रैः स्तुतः । यद्वा ऐन्द्रः इन्द्रदेवताको हविर्भागः । धानाः करम्भः परिवापः पुरोडाशः पयस्येति प्रातःसवनहवींषि । इन्द्राय

एवार्थस्सूच्यते, न पुनः संवत्सरान्तरप्राप्तिरिति ज्ञेयम् ॥ ? ॥ २ ॥ कर्मेति । याजका वेदपारगाः इति । याजका ऋत्विजः, वेदपारगाः वेदस्याधीनस्य पारं फलवदर्थावबोधः तद्गच्छन्तीति तथा । यथाविधि उत्पत्त्यादिविध्यनुसारेण, यथान्यायं-मीमांसाशास्त्रगतन्यायानुसारेण । यथाविधीत्यनेनैव सिद्धे शास्त्रत इत्येतत् यथान्यायत्वविधानार्थम् । तथा च यथाविधि परिक्रामन्ति शास्त्रतो यथान्यायं परिक्रामन्तीति वाक्यभेदेन निर्वोढव्यम् ॥३॥ प्रवर्ग्यमिति । प्रवर्ग्यम्-आराडुपकारक कर्मविशेषः । शास्त्रतः कल्पसूत्रानुसारेण कृत्वा । उपसत् उपसन्नामकर्मविशेषः । पूर्वं प्रकृतौ स्थिततया आदिष्टम्, अधिकं विधिवत् शास्त्रतो विहितं चेत्यर्थः ।

हरिवते धानाः, इन्द्राय पूषण्वते करम्भः, सरस्वते परिवापः, इन्द्राय पुरोडाशः, मित्रावरुणाभ्यां पयस्येति होतव्यानीन्द्रमुद्दिश्यैव "अथ कस्मादे तेषां हविषामिन्द्रमेव यजन्ति" इत्यादिश्रुतेः। माध्यन्दिनसायन्तनसवनयोः पयस्यावर्जमन्यत्सर्वं समानम्। अभिषुत इति पाठे—चतसृषु दिक्षु चतुर्भिः ऋत्विग्भिः पाषाणैरभिहत्य निःसारितसारा सोमलताभूदित्यर्थः। तथा हि सूत्रम्—"सोमं राजानं दृषदि निधाय दक्षिणतो ब्रह्मा पश्चादध्वर्युरुत्तरतो होता प्रागुद्गाता स्थित्वा दृषद्भिरभिहन्यात्" इति। अनघः अंशुस्कन्दनरहितः ॥ ६ ॥ तृतीयेति। तथा शास्त्रप्रकारेण, प्रातःसवनपूर्वाणि इत्युक्तस्यैवायं प्रपञ्चः ॥७॥ न चेति। अहुतं स्खलितम् अन्यथा हुतं वा किञ्चन नाभूत्। सर्वं होमादिकं ब्रह्मवत् मन्त्रवत् दृश्यते स्म। हि यस्मात् क्षेमयुक्तं निर्विघ्नं चक्रिरे। अत्रान्नहोमादिकमश्वमेधीयं सूचितम्, तेषां बहुत्वेन स्खालित्यादिसम्भावनया तत्परिहारस्य वक्तव्यत्वात्। तथाहुर्याज्ञिकाः—

तृतीयसवनं चैव राज्ञोऽस्य सुमहात्मनः। चक्रुस्ते शास्त्रतो दृष्ट्वा तथा ब्राह्मणपुङ्गवाः[1] ॥ ७ ॥

न चाहुतमभूत्तत्र स्खलितं वापि किञ्चन। दृश्यते ब्रह्मवत्सर्वं क्षेमयुक्तं हि चक्रिरे ॥ ८ ॥

न तेष्वहस्सु श्रान्तो वा क्षुधितो वापि दृश्यते। नाविद्वान् ब्राह्मणस्तत्र नाशतानुचरस्तथा ॥ ९ ॥

ब्राह्मणा भुञ्जते नित्यं नाथवन्तश्च भुञ्जते। तापसा भुञ्जते चापि श्रमणा भुञ्जते तथा ॥ १० ॥

"पत्नीसंयजनान्तेऽह्न्यग्निष्टोमे तु संस्थिते। प्रजापतिसमे गीते वीणागाणिकिभिर्नृपे ॥ अस्तं गते सहस्रांशावारुह्याश्वत्थनिर्मिताः। षट्त्रिंशतमथासन्दीस्तावन्तोऽध्वर्यवो वृताः ॥ अप्राकृतैः स्रुवैर्दीर्घदण्डैः खदिरसम्भवैः। सर्वां तां रात्रिमन्नानि दशाज्यादीनि जुह्वति ॥ संख्याहुतीस्ताः सकृदेव हुत्वा परार्द्धपर्यन्तमथ क्रमेण। हुत्वाश्वनामप्रभृतीनि रात्रेश्शेषोक्थ्यसंख्याहुतिभिः समाप्यः ॥" इति ॥८॥ अथ तत्रान्नदानसमृद्धिं दर्शयत्यष्टभिः—न तेष्वित्यादि। यद्यपि क्रीते सोमे यज्ञान्नं न भोज्यम्, तथापि सर्वद्रव्यस्य वसिष्ठसात्कृतत्वेन न दोषः। तेष्वहस्सु यज्ञीयदिनेषु। श्रान्तः पिपासितः। क्षुधितः बुभुक्षितः। न दृश्यते नादृश्यत। अशतानुचरः शतशिष्यरहितः ॥९॥ ब्राह्मणा इति। नाथवन्तः दासाः, शूद्रादय इति यावत्। श्रमणाः दिगम्बराः। "श्रमणा

अधिकमित्यनेनान्यूनत्वं वा ॥ ४ ॥ ५ ॥ ऐन्द्र इति। ऐन्द्रः इन्द्रदेवताको हविर्भागः। राजा सोमलता। अभिष्टुतः स्तोत्रशस्त्रैः स्तुतः ॥ ६ ॥ ७ ॥ न चेति। तत्र यागे। स्खलितं स्कन्नम्। पात्रादिति शेषः। ब्रह्मवत् मन्त्रवत्। क्षेमयुक्तम्-विघ्नरहितं विघ्ननिवारकरक्षोघ्नमन्त्राद्युपेतमित्यर्थः ॥ ८ ॥ न तेष्विति। अशतानुचरः

[1] पुङ्गवाः। आह्वयांचक्रिरे तत्र शक्रादीन् विबुधोत्तमान्। ऋष्यशृङ्गादयो मन्त्रैः शिक्षाक्षरसमन्वितैः। गीतिभिर्मधुरैः स्निग्धैर्मन्त्राह्वानैर्यथार्हतः। होतारो ददुरावाह्य हविर्भागान् दिवौकसाम्। इत्यधिकः ॥

वातवसनाः" इति निघण्टुः । यद्वा "चतुर्थमाश्रमं प्राप्ताः श्रमणा नाम ते स्मृताः।" इति स्मृतिः ॥१०॥ वृद्धा इति । व्याधिताः सञ्जातव्याधयः । अनिशं भुञ्जमानानां भुञ्जानेष्वपि यजमानस्य तृप्तिः, अलंबुद्धिर्नासीदित्यर्थः। यद्वा रस्यतातिशयात् भुक्त्यनन्तरमपि भोजनेच्छा जायत इत्यर्थः॥११॥ दीयतामिति । तथा चक्रुः, ददुरित्यर्थः ॥१२॥ अन्नेति । विधिवत् पाकविध्युक्तक्रमेण सिद्धस्य पक्वस्य । अन्नेति लुप्तषष्ठीविभक्तिकं पदम् । अन्नस्य खाद्यभक्ष्यलेह्यचोष्यभेदभिन्नस्य । कूटा राशयः ॥१३॥ नानेति । सुविहिताः सुतर्पिताः ॥१४॥ अन्नमिति । अन्नं विधिवत् उपचारवत् स्वादु च अनेन तृप्ताः स्म। अहो इदं वर्णितुं न शक्यम् । इति द्विजर्षभाः प्रशंसन्ति प्राशंसन् । तद्राघवः शुश्राव । न तेष्वहःस्वित्यारभ्य प्रशंसाप्रकारः, न तु कविवाक्यम् । अनेन

वृद्धाश्च व्याधिताश्चैव स्त्रियो बालास्तथैव च । अनिशं भुञ्जमानानां न तृप्तिरुपलभ्यते ॥ ११ ॥ दीयतां दीयतामन्नं वासांसि विविधानि च । इति सञ्चोदितास्तत्र तथा चक्रुरनेकशः ॥ १२ ॥ अन्नकूटाश्च बहवो दृश्यन्ते पर्वतोपमाः । दिवसेदिवसे तत्र सिद्धस्य विधिवत्तदा ॥ १३ ॥ नानादेशादनुप्राप्ताः पुरुषाः स्त्रीगणास्तथा । अन्नपानैः सुविहितास्तस्मिन् यज्ञे महात्मनः ॥१४॥ अन्नं हि विधिवत्स्वादु प्रशंसन्ति द्विजर्षभाः । अहो तृप्ताः स्म भद्रं त इति शुश्राव राघवः ॥ १५ ॥ स्वलंकृताश्च पुरुषा ब्राह्मणान् पर्यवेषयन् । उपासते च तानन्ये सुमृष्टमणिकुण्डलाः ॥ १६ ॥

"ब्राह्मणौ वीणागाथिनो गायतः" इत्यारभ्य "इत्यददा इत्ययजथा इत्यपच इति ब्राह्मणो गायेत्" इत्युक्तस्तुतिश्रवणमुक्तम् ॥१५॥ स्वलंकृता इति । ब्राह्मणान् ब्राह्मणेभ्यः पर्यवेषयन्,भक्ष्यान्नपानादीनिति शेषः। सुमृष्टमणिकुण्डलाः उत्तेजितरत्नकुण्डलाः, अन्ये पुरुषाः साहाय्यार्थं तानसेवन्तेत्यर्थः॥१६॥

शतशिष्यरहितः ॥ ९ ॥ ब्राह्मणा इति । नाथवन्त इत्यनेन ब्राह्मणशुश्रूषकाः शूद्रा उच्यन्ते । श्रमणाः-चतुर्थाश्रमं प्राप्ताः ॥ १० ॥ अनिशमिति । न तृप्तिरुपलभ्यते भोज्यपदार्थानां रसातिशयलाभात्तृप्तिर्नाभूदित्यर्थः । यद्वा अनिशं भुञ्जानेष्वपि जनेषु यजमानस्य तृप्तिः अलम्बुद्धिर्नाभूदित्यर्थः ॥ ११ ॥ १२ ॥ अन्नकूटा इति । अत्र अन्नेति लुप्तषष्ठ्यन्तं भिन्नं पदं सिद्धस्येत्यस्य विशेषणम् । सिद्धस्य निष्पन्नस्य ॥ १३ ॥ नानादेशादिति । सुविहिताः सुतरां तर्पिताः ॥ १४ ॥ अन्नं हीति । अहो तृप्ताः स्म इति शब्दं राघवः शुश्राव । हि यस्मात्कारणात् स्वादु विधिवद्दत्तमन्नं द्विजर्षभाः प्रशंसन्तीति सम्बन्धः ॥ १५ ॥ स्वलंकृता इति । ब्राह्मणान्

मुनिभाव०—अनिशमिति । भोज्यपदार्थानां रस्यतातिशयात् अनिशं भुञ्जमानानामपि तृप्तिर्नोपलभ्यत इत्यर्थः । यद्वा दशरथस्य तृप्तिर्नास्ति, अत एव दीयतामन्नमित्युक्तम् ॥ ११ ॥

कर्मान्तर इति । कर्मान्तरे सवनयोरन्तरालकाले । धीराः धीमन्तः, वाग्मिनः पटुवाचः, विप्रा ऋत्विजः परस्परजिगीषया बहून् हेतुवादान् प्राहुः स्म । अनेन ब्रह्मोद्यमुक्तम् । यथा "किं स्विदासीत्पूर्वचित्तिः" इत्यादि होतृब्रह्मणोः प्रश्नप्रतिवचनानि ॥ १७ ॥ अथ "ऊमोर्व्यकाव्याधिदैवत्यानि द्विनाराशंसनं प्रातःसवनं द्विनाराशंसनं माध्यन्दिनं सवनं सकृन्नाराशंसनं तृतीयसवनम्" इति विहितानि त्रिकालकर्माणि दर्शयति—दिवसेदिवस इति । दिवसेदिवसे अश्वमेधाहेषु प्रत्यहं संस्तरे आस्तीर्णबर्हिषि । "संस्तरौ प्रस्तराध्वरौ" इत्यमरः । सर्वकर्माणि ऊमादिदैवत्यकर्माणि । यथाशास्त्रं वृद्धैः प्रचोदिताः सन्तः चक्रुः । "ऊमा ऊर्व्याश्च काव्याश्च पितरः सवनत्रये" । नाराशंसनंनाम सकृद्भक्षिताप्यायितासादितचमसम् ॥ १८ ॥ नेति । अत्र

कर्मान्तरे तदा विप्रा हेतुवादान् बहूनपि । प्राहुः स्म वाग्मिनो धीराः परस्परजिगीषया ॥ १७ ॥ दिवसेदिवसे तत्र संस्तरे कुशला द्विजाः । सर्वकर्माणि चक्रुस्ते यथाशास्त्रं प्रचोदिताः ॥ १८ ॥ नाषडङ्गविदत्रासीन्नाव्रतो नाबहुश्रुतः । सदस्यास्तस्य वै राज्ञो नावादकुशला द्विजाः ॥ १९ ॥ प्राप्ते यूपोच्छ्रये तस्मिन् षड्बैल्वाः खादिरास्तथा । तावन्तो बिल्वसहिताः पर्णिनश्च तथाऽपरे ॥ २० ॥

यज्ञे अषडङ्गवित्कश्चिन्नासीत् । अव्रतश्च कश्चिन्नासीत् । अबहुश्रुतश्च कश्चिन्नासीत् । तस्य राज्ञः सदस्याः सदसि समवेता द्विजाः अवादकुशलाः नासन् ॥ १९ ॥ अथौपवसथ्यदिनकृत्यं पश्वालम्भं वक्तुं यूपोच्छ्रयणप्रकारमाह—प्राप्त इति, श्लोकद्वयमेकान्वयम् । तस्मिन् अश्वमेधे यूपानामुच्छ्रयो यूपोच्छ्रयः । उच्छ्रयः उत्क्षेपणम्, उद्धृत्य स्थापनमिति यावत् । तत्कालोऽत्र लक्ष्यते । "यूपायोच्छ्रीयमाणायानुब्रूहि" इति प्रैषे प्राप्त इत्यर्थः । बिल्वस्य विकारा बैल्वाः । "बिल्वादिभ्योऽण्" इत्यण् । बैल्वा यूपाः षट्, उच्छ्रिता इति शेषः । खादिरस्य विकाराः खादिराः । तथेति समुच्चये । खादिरा यूपाश्च । तावन्तः षडेव । बिल्वसहिता इति खादिराणां बिल्वसमीपवर्तित्वम्, नतु पर्णिसमीपवर्तित्वमित्युच्यते । षट् खादिरा यथा बिल्वसहिता भवन्ति तथोच्छ्रिता इत्यर्थः । अपरे उक्तेभ्योऽन्ये पर्णिनः, पर्णी पलाशः । "पलाशे किंशुकः पर्णी" इत्यमरः । तत्प्रकृतिकाः पर्णिन

पर्यवेषयन् ब्राह्मणेभ्यो भक्ष्यभोज्यादिकं प्रददुरित्यर्थः । अन्ये सुमृष्टमणिकुण्डलाः परिवेषयितारः तान् सहायार्थमसेवन्तेत्यर्थः ॥ १६ ॥ कर्मान्तर इति । विप्राः ऋत्विजः । प्रकृतयागानुष्ठानोपयोगवादांश्चक्रुः ॥ १७ ॥ दिवस इति । संस्तरे यज्ञे ॥ १८ ॥ नाषडङ्गविदिति । व्रतानि प्राजापत्यादीनि ॥ १९ ॥ प्राप्त इति श्लोक

इत्युच्यन्ते। पर्णिनो यूपाः तथा, षट् उच्छ्रिता इत्यर्थः ॥ २० ॥ श्लेष्मातकमय इति। श्लेष्मातकमयः राज्जुदालविकारः एको यूप उच्छ्रितः। देवदारुमयस्तथा देवदारुविकारश्च यूप उच्छ्रितः। अत्रैकत्वमविवक्षितम्, द्वयोः श्रुत्या चोदितत्वात्। "राज्जुदालमग्निष्ठम्मिनोति पौतुद्रवावभितो भवतः" इति श्रुतिः। राज्जुदालः श्लेष्मातकः, पौतुद्रवौ देवदारू। अथमत्र विन्यासक्रमः–राज्जुदालोऽग्निष्ठः। अग्नौ तिष्ठतीत्यग्निष्ठः। अग्निशब्देन अग्निस्थानवेदिरुच्यते। "अर्द्धमन्तर्वेदि मिनुयादर्धं बहिर्वेदि" इति श्रुतेः। स अग्निष्ठः प्रथमयूपः "तानग्निष्ठप्रथमान् क्रमेण छिनत्ति" इति सूत्रात्। तस्य दक्षिणोत्तरपार्श्वयोर्देवदारुयूपौ। तेषां त्रयाणां दक्षिणतस्त्रयो बैल्वा उत्तरतस्त्रयः। तेषां नवानां दक्षिणतस्त्रयः खादिरा उत्तरतस्त्रयः। तेषां पञ्चदशानां दक्षिणतस्त्रयः पालाशाः उत्तरतस्त्रयः। प्रथमं पालाशषट्कमन्ते बिल्वषट्कं वा। सर्वथा खादिरा एव बिल्वसहिताः, न पुनः पालाशाः। तदिम

श्लेष्मातकमयस्त्वेको देवदारुमयस्तथा। द्वावेव तत्र विहितौ बाहुव्यस्तपरिग्रहौ ॥ २१ ॥

कारिताः सर्व एवैते शास्त्रज्ञैर्यज्ञकोविदैः। शोभार्थं तस्य यज्ञस्य काञ्चनालङ्कृता भवन् ॥ २२ ॥

मर्थं ग्रन्थकारो बिल्वसहिता इत्यसूचयत्। आपस्तम्बश्चासूत्रयत्–"राज्जुदालमेकविंशत्यरत्निं संमिनोति पौतुद्रवावभितस्त्रयो बैल्वा दक्षिणतस्त्रय उत्तरतस्त्रयः खादिरा दक्षिणतस्त्रय उत्तरतस्त्रयः पालाशा दक्षिणतस्त्रय उत्तरतः" इति। एवं यूपानामुच्छ्रयणक्रममुक्त्वा तेषामन्तरालप्रदेशविस्तारं दर्शयति द्वाविति। तत्र यूपेषु। द्वौ द्वौ बाहुव्यस्तपरिग्रहौ विहितौ कृतौ। व्यस्तौ बाहू बाहुव्यस्तौ ताभ्यां परिग्रहः स्पर्शो ययोस्तौ। द्वौ द्वौ यूपौ व्यस्तबाहुस्पृश्यौ विहितौ, व्याममानान्तरप्रदेशावित्यर्थः। तथाह धर्मनिर्णयकारः "षण्णवत्यङ्गुलं बाहुदण्डमथोत्तरं तु वा। यूपान्तरालं तन्मात्रमश्वमेधे महाक्रतौ" इति ॥ २१ ॥ यूपनिर्माणमाह–कारिता इति। एते सर्वे यूपाः शास्त्रज्ञैः यज्ञशास्त्रज्ञैः, यज्ञकोविदैः यज्ञप्रयोगकुशलैः। कारिताः

द्वयमेकान्वयम्। प्राप्ते तस्मिन् यज्ञे। यूपोच्छ्रये यूपस्थापने प्राप्ते तावन्तः पूर्वोक्ताः, षट्सङ्ख्याकाः। पर्णिनः पलाशाः बिल्वसहिताः एकेन बिल्वयूपेन सहिताः। श्लेष्मातकमय इति। दिष्टः अश्वमेधे विहितः। श्लेष्मातकमयोऽग्निष्ठ इति पाठे–अग्निष्ठः-अग्न्यभिमुखः तावन्तः बिल्वसहिता इति भेदः। तथा चायमर्थः–अबिल्वो बिल्वादन्यः, यूपयोग्यवृक्षो देवदारुः, तेन सहिताः देवदारुमयस्तथा, तथा देवदारुमयो यूप इत्यर्थः। एवञ्च द्वौ देवदारुयूपौ उभयतः स्थितौ, तयोर्मध्ये श्लेष्मातकयूपा इत्युक्तं भवति। तथा च श्रुतिः "राज्जुदालमग्निष्ठं मिनोति, पौतुद्रवावभितो भवतः" इति। तथा चाश्वमेधकल्पसूत्रम्–"राज्जुदालमेकविंशत्यरत्निं संमिनोति पौतुद्रवावभितस्त्रयो बैल्वा दक्षिणतस्त्रय उत्तरतस्त्रयः, खादिराः दक्षिणतस्त्रय उत्तरतस्त्रयः" एवञ्च षड्बैल्वाः, षट् खादिराः, षट् पालाशाः, पौतुद्रवौ द्वौ, राज्जुदाल

काञ्चनैः काञ्चनपट्टैश्चालंकृताः भवन् । “बहुलं छन्दस्यमाङ्योगेऽपि” इति अडभावः । अलङ्कारोऽपि किं शास्त्रीयः ? नेत्याह–तस्य यज्ञस्य शोभा
र्थमिति । यज्ञभूमेः शोभार्थमित्यर्थः ॥ २२ ॥ तेषां संख्याप्रमाणे दर्शयति–एकविंशतीति । ते यूपाः एकविंशति । “सुपां सुलुक्” इत्यादिना सुलोपः ।
एकविंशत्यरत्नयश्च एकविंशत्यरत्न्युन्नता इत्यर्थः । “एकविंशत्यरत्निरश्वमेधस्य” इति श्रुतेः । “चतुर्विंशत्यङ्गुल्योऽरत्निः” इति सूत्रम् । एकविंश
द्भिरितीकारलोपबहुवचने आर्षे । एकैकमिति सामान्ये नपुंसकम् । एको यूप एकेन वाससेति क्रमेण सर्वेऽपि वासोभिरलङ्कृता इत्यर्थः ॥ २३ ॥

एकविंशति यूपास्ते एकविंशत्यरत्नयः । वासोभिरेकविंशद्भिरेकैकं समलङ्कृताः ॥ २३ ॥
विन्यस्ता विधिवत्सर्वे शिल्पिभिः सुकृता दृढाः । अष्टाश्रयः सर्व एव श्लक्ष्णरूपसमन्विताः ॥ २४ ॥
आच्छादितास्ते वासोभिः पुष्पैर्गन्धैश्च पूजिताः । सप्तर्षयो दीप्तिमन्तो विराजन्ते यथा दिवि ॥ २५ ॥
इष्टकाश्च यथान्यायं कारिताश्च प्रमाणतः । चितोऽग्निर्ब्राह्मणैस्तत्र कुशलैः शुल्बकर्मणि ॥ २६ ॥

यूपस्थापनविशेषमुक्तानुवादपूर्वमाह–विन्यस्ता इति । शिल्पिभिः सुकृताः सुष्ठु कृताः अन्यूनातिरिक्ततया कृता दृढाः सुषिरादिदोषरहिताः अष्टाश्रयः
अष्टकोटयः । “स्त्रियः पाल्यश्रिकोटयः” इत्यमरः । श्लक्ष्णरूपसमन्विताः यूपाभ्यञ्जनेन स्निग्धरूपयुक्ताः सर्व एव विन्यस्ताः स्थापिताः । यद्वा प्राप्ते
यूपोच्छ्रयइत्यादिश्लोकत्रयमेकान्वयम् । शास्त्रज्ञैः कारिता बैल्वादयः सर्वे एते काञ्चनालंकृताः भवन्निति यूपनिर्माणमुक्तम् । एकविंशतीत्यनेन संख्या
प्रमाणे दर्शिते । विन्यस्ता इत्यनेन स्थापनमुच्यते ॥ २४ ॥ यूपान् वर्णयति–आच्छादिता इति । दिवि सप्तर्षय इव ते यूपा विराजन्ते स्म, दीप्तिमात्रे दृष्टान्तः ।
सप्तानां समानां वा ॥ २५ ॥ यूपोच्छ्रयपूर्वभावि चयनमाह–इष्टका इति । शुल्बकर्मणि यज्ञकर्मणि । “शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ ।” इति

यूप एकः सम्भूय एकविंशतियूपा अश्वमेध इति विवेकः । बाहुव्यस्तपरिग्रहौ व्यस्तबाहुपरिग्रहौ प्रसारितोभयबाहुपरिणाहावित्यर्थः ॥ २०–२२ ॥ एकविंशति
यूपा इति । एकविंशत्यरत्नयः–एकविंशत्यरत्निसंमितोच्छ्रयाः । अरत्निर्नाम चतुर्विंशत्यङ्गुलयः ॥ २३ ॥ विन्यस्ता इति । अष्टाश्रयः-अष्टकोटियुक्ताः । श्लक्ष्णम्
स्निग्धम् ॥ २४ ॥ २५ ॥ इष्टका इति । यज्ञकर्मणि चितोऽग्निरित्यत्र अग्निशब्देनाग्न्याधारभूतो देश उच्यते । सब्राह्मणैरिष्टकाभिः चितो बद्ध इत्यर्थः । शुल्बकर्मणीति

१ श्लक्ष्णा रूपसमन्विताः । २ भूपिताः । ३ शिल्पकर्मणि, यज्ञकर्मणि । इत्यपि पाठः ॥

वैजयन्ती । प्रकृते चयनं विवक्षितम् । शुल्बमेकसरा रज्जुः । शुल्बसाध्यं कर्म शुल्बं चयनम्, अत एवाह रुद्रदत्तः–"रज्जूनां विहरणसाधनत्वादेतत्कर्म शुल्बमाचख्युः आचार्याः " इति । तत्र कुशलैः ब्राह्मणैः यथान्यायं यथाशास्त्रम् । प्रमाणतः प्रमाणेन विशिष्टा इष्टकाः कारिताः । अत्र सूत्रम्–"पादमात्रो ऽर्द्धमात्रोऽणुकमात्र ऋजुरेखादक्षिणावृतासव्यावृतारुयालिखिताश्च" इति । अग्निः अग्न्याधारवेदिः । चितः ताभिरिष्टकाभिः कृतचयनः अभूत् ॥ २६ ॥ चयनसंस्थानमाह–स इति । स चित्यः चयननिर्वर्त्योऽग्निः राजसिंहस्य राजश्रेष्ठस्य । अनेन पूर्वमनेकधानुष्ठितक्रतुत्वं सूच्यते । कुशलैः रीतिभेदं विना चयननिर्माणसमर्थैः द्विजैः ब्राह्मणैः ऋत्विग्भिः सञ्चितः सम्यग्यथाशास्त्रं चितः । कथं चित इत्यत्राह–गरुड इति । गरुडः गरुडाकारः पक्षौ पुच्छं च प्रसार्याऽधो वीक्षमाणः प्राङ्मुखं तिष्ठन् गरुड इव स्थितः, "श्येनचितं चिन्वीत" इति श्रुतौ श्येनशब्दो गरुडपर एव, "सुपर्णोऽसि गरुत्मान्" इति मन्त्र

स चित्यो राजसिंहस्य सञ्चितः कुशलैर्द्विजैः । गरुडो रुक्मपक्षो वै त्रिगुणोऽष्टादशात्मकः ॥ २७ ॥
नियुक्तास्तत्र पशवस्तत्तदुद्दिश्य दैवतम् । उरगाः पक्षिणश्चैव यथाशास्त्रं प्रचोदिताः ॥ २८ ॥

लिङ्गात् । यद्वा गरुडः गरुडप्रतिकृतिः । "जीविकार्थे चापण्ये" इति वासुदेवादिवत्प्रतिकृतौ विहितस्य कनो लुप् । रुक्मपक्षः स्वर्णगर्भपक्षः । "सहस्रं हिर ण्यशकलैः प्रतिदिशमग्निं प्रोक्षति" इति सूत्रात् । त्रिगुणः त्रिगुणप्रस्तारः,प्रकृतौ षट्प्रस्तारात्मकस्य चित्याग्नेरश्वमेधे त्रैगुण्यविधानात् । "षट् चितयो भवन्ति " इति श्रुतेः । " त्रिस्तावोऽग्निर्भवतीत्यश्वमेधे विज्ञायते " इति सूत्राच्च । अतएवाष्टादशात्मकः अष्टादशप्रस्तारात्मकः । ननु षट्प्रस्तारा त्मकस्य चित्यस्य त्रैगुण्यविधानेनैव अष्टादशप्रस्तारात्मकत्वं सिद्धम्, किं पुनस्तदुपदेशेन ? उच्यते–त्रिगुण इत्युक्ते पञ्चदशात्मकत्वं प्रतीयते, तैत्तिरीयके " पञ्च चितयो भवन्ति " इति विधानात् । तदिदं वाजसनेयकपक्षावलम्बनं द्योतयितुमष्टादशात्मकत्वोक्तिः । एवम्भूतश्चित इत्यन्वयः ॥२७॥ अथ पूर्वोक्तेषु यूपेषु पशुनियोजनमाह–नियुक्ता इति । यथाशास्त्रं शास्त्रमनतिक्रम्य । प्रचोदिता विहिताः । पशव उरगाः पक्षिणश्च । तत्तद्दैवतमिन्द्रादिदेवता



पाठे–शुल्बमेकसरा रज्जुः । शुल्बानां यज्ञे विहरणसाधनत्वात ॥ २६ ॥ स चित्य इति । चित्यः चयननिर्वर्त्यः स इष्टकाभिश्चितो देश इत्यर्थः । सञ्चितः सम्यक् चितः, संपूर्ण कृत इत्यर्थः । तमेवाह–गरुड इति । गरुडः गरुडाकारेण इष्टकाभिश्चितो देशः । रुक्मपक्षः-रुक्मगर्भपक्षः । त्रिगुणः प्रकृतौ षट्प्रस्तारात्मकस्य चित्याग्नेरश्वमेधे त्रैगुण्यविधानात त्रिगुणः अतएवाष्टादशात्मकः । अष्टादशप्रस्तारात्मक इत्यर्थः ॥ २७ ॥ यथाशास्त्रम्-" इन्द्राय राज्ञे सूकरो वरुणाय राज्ञे कृष्णः"

मुद्दिश्य तत्र यूपेषु नियुक्ता बद्धाः। यूपेष्वित्यारोकाणामुपलक्षणम्। "यूपेषु ग्राम्यान्पशून्नियुञ्जन्ति। आरोकेष्वारण्यान् धारयन्ति" इति श्रुतेः। अत्राशक्यानामुरगादीनां नियोजनं पञ्जरद्वारा। एते च पशवस्तत्तद्देवताश्च "इन्द्राय राज्ञे सूकरः" इत्याद्यनुवाकेषु प्रतिपाद्यन्ते ॥२८॥ तत्र "पर्यग्निकृतानारण्यानुत्सृजन्त्यहिंसायै" इति श्रुतेः आरण्यान् पशून् पर्यग्निकृतानुत्सृज्य ग्राम्याणां पशूनां शामित्रे नियोजनमाह—शामित्रे त्विति। तुशब्देन आरण्येभ्यो वैलक्षण्यमुच्यते। हयः अश्वमेधीयः। ये जलचराः कूर्मादयः ते च तदन्यत्सर्वं च ग्राम्यपशुजातं, तत्र यज्ञे। तदा विशसनकाले ऋत्विग्भिः शामित्रे विशसनकर्मणि शास्त्रतो नियुक्तम् ॥२९॥ यूपनियुक्तानां पशूनां सङ्ख्यामाह—पशूनामिति। तत्र यूपेषु पशूनां त्रिशतं नियतं बद्धम्। तदा राज्ञो दशरथस्य अश्वरत्नोत्तमम् अश्वश्रेष्ठोत्तमं च नियतं त्रिशतमिति प्रधानापेक्षया अधिकानामपि श्रवणात्। तथाह भास्करः—"अश्वमेधपशुसंख्या तु पञ्च

शामित्रे तु हयस्तत्र तथा जलचराश्च ये। ऋत्विग्भिः सर्वमेवैतन्नियुक्तं शास्त्रतस्तदा ॥ २९ ॥
पशूनां त्रिशतं तत्र यूपेषु नियतं तदा। अश्वरत्नोत्तमं तत्र राज्ञो दशरथस्य च ॥ ३० ॥
कौसल्या तं हयं तत्र परिचर्य समन्ततः। कृपाणैर्विशशासैनं त्रिभिः परमया मुदा ॥ ३१ ॥

शतमेकोनविंशतिश्च" इति। अश्वरत्नोत्तर इति पाठे—रत्नोत्तरो रत्नप्रधानोऽश्व इति परनिपातेन योजना। तथाह भास्करः—"सौवर्णान् महिषी मणीन् दशशतानस्यावयत्यावहाद्वावाता वयते मणीन् दशशतान् प्रत्यग्वहाद्राजतान्। प्रत्यक्श्रोणिसहस्रमेव परिवृक्त्यस्यावयेन्मौक्तिकान् सर्वाः शङ्खमणीनथेषु समुपग्रश्नन्त्यविस्रस्तयः॥" इति। आवयति उतान्करोति ॥३०॥ मृताश्वोपचारमाह—कौसल्येति। कौसल्या महिषी तत्र शामित्रप्रदेशे तं मृतं हयं समन्ततः परिचर्य प्रदक्षिणाप्रदक्षिणम् सञ्चार्य। अत्र सूत्रम् "दक्षिणान् केशपक्षानुद्ग्रथ्य सव्यान् प्रग्रथ्य दक्षिणानूरूनाघ्नाना इदं मधिदं मधिवति जपन्त्यः स्त्रियो महिष्यश्चाश्वतूबरगोमृगाणां परिक्रम्य सव्यानुद्ग्रथ्य दक्षिणान् प्रग्रथ्य सव्यानूरूनाघ्नाना सकृद्। [illegible] प्रदक्षिणं परिक्रम्य प्रदक्षिणमन्त्रतो

इत्याद्यनुवाकेषु प्रतिपादिताः ॥ २८ ॥ शामित्र इति। शामित्रे-विशसनकर्मणि ॥ २९ ॥ पशूनां त्रिशतमिति। [illegible] पशूनां त्रिशतं तत्र नियुक्तं तत्तद्दस्तु विनियोजितम्। तत्र-यूपेषु बद्धम् ॥ ३० ॥ कौसल्येत्यादि। तं हयं परिचर्य प्रोक्षणादिभिः संस्कृत्य [illegible] कृपाणैर्विशशासेति। असिभिर्वेधं मुनि०—कृपाणैरायुधैः। त्रिभिर्मन्त्रैः ॥ ३१ ॥

यथापुरस्तान्नवक्लृत्वः सम्पादयन्ति'' इति कृपाणैस्त्रिभिस्त्रिसृभिः सौवर्णीभिः सूचीभिः एनं परमया मुदा निरवधिकश्रद्धया विशशास असिपथान् कल्पया मास, कौसल्येति इतरासामुपलक्षणम् । ''सौवर्णीभिः सूचीभिः पत्न्योऽश्वस्यासिपथान् कल्पयन्ति प्राक्क्रोडात् प्रत्यञ्चीभिः'' इति सूत्रात् । क्रोडं वक्षः ॥३१॥ महिष्याः कर्तव्यान्तरमाह–पतत्रिणेति । तदा विशसनोत्तरकाले कौसल्या धर्मकाम्यया धर्मसिद्धीच्छया । काम्यजन्तादकारप्रत्यये टाप् । सुस्थि तेन सुस्थिरेण चेतसा उपलक्षिता सती, शवस्पर्शकुत्सारहिता सतीत्यर्थः । पतत्रिणा अश्वेन सार्द्धम् एकां रजनीमवसत् । अत्र सूत्रम् ''अम्बे अम्बाल्य म्बिके' इति जपन्ती महिष्यश्वमुपसङ्गम्य 'गणानां त्वा गणपतिं हवामहे' इत्यभिमन्त्र्य 'उत्सक्थ्योर्गृदं धेहि' इति प्रजनने प्रजननं सन्निधायोपविशति । 'सुभगे काम्पीलवासिनी'ति क्षौमेन वाससाध्वर्युर्महिषीमश्वं च प्रच्छाद्य 'वृषावां रेतोधा रेतो दधातु' इति जपत्याभीध्र एतां रात्रिमृत्विजो यजमानं जागर

पतत्रिणा तदा सार्द्धं सुस्थितेन च चेतसा । अवसद्रजनीमेकां कौसल्या धर्मकाम्यया ॥ ३२ ॥
होताध्वर्युस्तथोद्गाता हस्तेन समयोजयन् । महिष्या परिवृत्त्या च वावातामपरां तथा ॥ ३३ ॥
पतत्रिणस्तस्य वपामुद्धृत्य नियतेन्द्रियः । ऋत्विक् परमसंपन्नः श्रपयामास शास्त्रतः ॥ ३४ ॥

यन्ति'' इति ॥ ३२ ॥ तादात्विकदक्षिणामाह–होतेति । तथेत्यनुक्तसमुच्चयार्थः । ब्रह्मा चेत्यर्थः । एते ब्रह्मादयश्चत्वारः प्रधानर्त्विजो महिषीपरि वृत्तिभ्यां सह वावातामपरां पालाकलीं च राज्ञो दक्षिणार्थं परिगृह्य हस्तेन समयोजयन्, रमणवद्धस्तेनागृह्णन्नित्यर्थः । अत्र श्रुतिः ''अम्बे अम्बा ल्यम्बिके इति पत्नीमुदानयति'' इत्यादि । उदानयति हस्तेन गृह्णातीत्यर्थ इति भास्करः । सूत्रं च–''महिषीं ब्रह्मणे ददाति वावातां होत्रे परिवृत्ति मुद्गात्रे पालाकलीमध्वर्यवे'' इति । पश्चात्प्रतिनिधिद्रव्यदानेन निवर्त्येरन् । ''कृताभिषेका महिषी परिवृत्तिरुपेक्षिता । वावाता भोगिनी पात्रप्रदा पाला कली मता ॥'' इति वैजयन्ती ॥ ३३ ॥ पतत्रिण इति । तस्य पतत्रिणः अश्वस्य ''पतत्री पक्षितुरगौ'' इत्यमरः । वपां वपास्थानीयां तेजनीम्. ''नाश्वस्य वपा विद्यते'' इति सूत्रात् ''नान्येषां पशूनां तेजन्या अवद्यन्त्यवद्यन्त्यश्वस्य'' इति श्रुतेश्च । उद्धृत्य आदाय । नियतेन्द्रियः एकाग्रः



चकारेत्यर्थः । यद्वा कौसल्या सौवर्णादिभिः सूचीभिः असिपथा अश्वस्य चकारेत्यर्थः ॥ ३१ ॥ पतत्रिणा अश्वेन ॥ ३२ ॥ होतेत्यादि । कृताभिषेका महिषी । उपेक्षिता

१ अंबे अम्बिकेऽम्बालिके । २ उत्सक्थ्या अवगुदं धेहि । ३ वृषो वाजी । इति वाजसनेयपाठः ॥

परमसंपन्नः परमेण प्रयोगचातुर्येण संपन्नः । ऋत्विक् अध्वर्युः। शास्त्रतः श्रपयामास पपाच । "श्रा पाके" । शास्त्रं च स्वयमेव वक्ष्यति–प्लक्षेति ॥३४॥ अथ वपाहोमं सूचयन्नाह–धूमेति । नराधिपः दशरथः यथाकालं होमकालमनतिक्रम्य । यथान्यायं यथाशास्त्रम् । आत्मनः पापं निर्णुदन् निवर्तयन् सन् वपाया धूमगन्धं जिघ्रति स्म ॥३५॥ वपाहोममुक्त्वा अङ्गहोममाह–हयस्येति । सर्वाणि ब्राह्मणा इत्यत्र [illegible]। सर्वाणीत्यनेन सर्वस्य हुतत्वेन शेषभक्षणं नास्तीत्युक्तम् । अङ्गहोमफलं श्रूयते–"अङ्गे अङ्गे वै पुरुषस्य पाप्मोपश्लिष्टः। अङ्गादङ्गादेवैनं पाप्मनस्तेन मुञ्चति"इति। यजमानस्य सर्वं पापं निवर्तत इत्यर्थः ॥ ३६ ॥ पूर्वं शास्त्रतः श्रपयामासेत्युक्तम्, तदवदानमाह–प्लक्षेति । अन्येषां यज्ञानां सम्बन्धि हविः वपा । प्लक्षशाखासु क्रियते अवदीयते । अश्वमेधस्य यज्ञस्य भागः हविर्भागः । वैतसः वैतसे कटे अवदातव्यो भवति । शैषिकोऽण् । अत्र यज्ञशब्देन पशवो लक्ष्यन्ते । तथा च श्रुतिः–"प्लक्षशा-

धूमगन्धं वपायास्तु जिघ्रति स्म नराधिपः । यथाकालं यथान्यायं निर्णुदन् पापमात्मनः ॥ ३५ ॥ हयस्य यानि चाङ्गानि तानि सर्वाणि ब्राह्मणाः । अग्नौ प्रास्यन्ति विधिवत्समन्त्राः षोडशर्त्विजः ॥ ३६ ॥ प्लक्षशाखासु यज्ञाना मन्येषां क्रियते हविः । अश्वमेधस्य यज्ञस्य वैतसो भाग इष्यते ॥ ३७ ॥ त्र्यहोऽश्वमेधः सङ्ख्यातः कल्पसूत्रेण ब्राह्मणैः । चतुष्टोममहस्तस्य प्रथमं परिकल्पितम् । उक्थ्यं द्वितीयं सङ्ख्यातमतिरात्रं तथोत्तरम् ॥ ३८ ॥

खायामन्येषां पशूनामवद्यन्ति वैतसशाखायामश्वस्य" इति । अत्र वैतसशाखाशब्दो वैतसकटपरः । वेतसस्य शाखा वैतसी । वैतस्यां संस्कृतो वैतसः । "यस्येति च" इति ईकारलोपः । वैतसकटस्तु पश्वासादनार्थः । "वैतसः कटो भवति अप्सु योनिर्वा अश्वः अप्सुजो वेतसः स्व एवैनं योनौ प्रतिष्ठापयति" इति श्रुतेः । "वैतसकटेऽश्वं प्राञ्चमासादयति" इति सूत्राच्च । अतो वैतसकटे वपावदानमिति व्याख्यानं चिन्त्यम् ॥ ३७ ॥ अत्र सवनीयदिनानि कतीत्याकाङ्क्षायामाह–त्र्यह इति । "अश्वमेधस्य त्रीणि सवनीयान्यहानि" इति कल्पसूत्रेण ब्राह्मणैः तन्मूलभूतब्राह्मणवाक्यैश्च

परिवृत्तिः, वावाता भुजिष्या । वावातापरिवृत्तिभ्यां सह महिषीं होत्रादयः अश्वेन समयोजयन्निति सम्बन्धः ॥ ३३ ॥ पतत्रिणः अश्वस्य ॥ ३४–३६ ॥ प्लक्षशाखास्विति 'अन्येषां यज्ञानां यज्ञसम्बन्धिनां पशूनां हविः प्लक्षशाखास्ववधीयते । अश्वमेधस्य अश्वमेधप्रधानपशोः, अश्वस्येत्यर्थः । भागो हविर्भागः वैतस इष्यते । वञ्जुलशाखायां विधायावदातव्येनेष्यत इत्यर्थः ॥ ३७ ॥ त्र्यहोऽश्वमेध इति सार्धश्लोकमेकं वाक्यम् । कल्पसूत्रेण तन्मूलभूतैर्ब्राह्मणवाक्यैश्चेत्यर्थः । तान्येव

अश्वमेधः त्र्यहः सङ्ख्यातः । अश्वमेधस्यानेकाहसाध्यत्वेऽपि सवनीयाहानां प्राधान्यात्तद्व्यहः । त्रीणि अहानि यस्य स त्र्यहः । "अचप्रत्यन्वव-" इत्यत्र योगविभागादच् । इदमर्द्धमेकं वाक्यम् । तान्यहानि परिगणयति–चतुष्टोममिति । त्रिवृत्पञ्चदशः सप्तदश एकविंश इति स्तोमचतुष्टययुक्तत्वादग्निष्टोमश्चतुष्टोम इत्युच्यते । तदनुष्ठानयुक्तत्वात्तद्व्यपदेशः । एकविंशाद्ययुक्तत्वादुक्थ्यमिति ज्योतिष्टोमस्य द्वितीया संस्था, तद्युक्तं द्वितीयमहः, सर्वस्तोमोऽतिरात्रः तद्युक्तमुत्तरमहः, द्वितीयादुत्तरं तृतीयमह इत्यर्थः ॥ २८ ॥ एवमश्वमेधस्य त्र्यहत्वेन त्रयाणां कर्तव्यत्वेऽपि प्रकृतेऽश्वमेधे शास्त्रान्तरदर्शनात् विहिता अन्येऽपि बहवः क्रतवो राज्ञा कारिता इत्याह–कारिता इत्यर्द्धेन ॥ २९ ॥ के ते क्रतव इत्यपेक्षायामाह–ज्योतिष्टोममिति । अतिरात्राविति द्विवचनेन तस्यावृत्तिरुच्यते । विनिर्मितौ अनुष्ठितौ । अन्यत्रापि विभक्तिविपरिणामेनायं शब्द अनुषज्यताम् । उक्तदिनत्रयादुत्तरेष्व

> कारितास्तत्र बहवो विहिताः शास्त्रदर्शनात् ॥ २९ ॥ ज्योतिष्टोमायुषी चैवमतिरात्रौ विनिर्मितौ । अभिजिद्विश्वजिच्चैवमाप्तोर्यामो महाक्रतुः ॥ ४० ॥ प्राचीं होत्रे ददौ राजा दिशं स्वकुलवर्द्धनः । अध्वर्यवे प्रतीचीं तु ब्रह्मणे दक्षिणां दिशम् ॥ ४१ ॥ उद्गात्रे वै तथोदीचीं दक्षिणैषा विनिर्मिता । हयमेधे महायज्ञे स्वयम्भुविहिते पुरा ॥४२॥ क्रतुं समाप्य तु तथा न्यायतः पुरुषर्षभः । ऋत्विग्भ्यो हि ददौ राजा धरां तां क्रतुवर्द्धनः ॥ ४३ ॥

हस्सु ज्योतिष्टोमादयः षट् क्रतवः कारिता इत्यर्थः । शास्त्रान्तरे ज्योतिष्टोमादीनामपि विहितत्वेन षोडशिग्रहणवत्तेषामप्यनुष्ठाने महानभ्युदय इति मन्वानेन राज्ञा तेऽपि कारिता इत्यर्थः । अत्र चयनयूपोच्छ्रयपशुनियोजनवपाहोमचतुष्टोमसवनानि क्रमेण वक्तव्यानीति तत्क्रमेण श्लोकाः पठितव्याः । व्युत्क्रमपाठो लेखकप्रमादकृतः । ऋषिरेव वा क्रममविवक्षन् प्रणिनाय ॥ ४० ॥ अथ दक्षिणादानमाह–प्राचीमिति द्वयमेकम् । स्वकुलस्य इक्ष्वाकुकुलस्य वर्द्धनः, बहुदक्षिणादानं ह्युचितमिक्ष्वाकुकुलस्येति भावः ॥ ४१ ॥ एतावद्दक्षिणादाने किं प्रमाण तत्राह–एषा दक्षिणा विनिर्मिता विहिता, "प्रतिदिशं दक्षिणां ददाति प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुः" इत्यादिसूत्रेणेति शेषः । स्वयम्भूविहिते ब्रह्मनिर्मिते । "प्रजापतिरश्वमेधमसृजत" इति श्रुतेः ॥ ४२ ॥ क्रतुमित्यादिश्लोकद्वयमेकान्वयम् । न्यायतः शास्त्रतः हि यस्माद्राजा ददौ

त्रीण्यहानि दर्शयति–चतुष्टोममित्यादि ॥ २८ ॥ इतरे चाङ्गभूताः क्रतवोऽनुष्ठिता इत्याह-कारिता इति । ( कारितास्तत्र बहवो विहिताः ) शास्त्रदर्शनात् शास्त्रेण चोदितत्वात्, विहिताः वेदविहिताः, बहवः क्रतवः कारिताः अनुष्ठिता इत्यर्थः ॥ २९ ॥ तानेव क्रतून् परिगणयति–ज्योतिष्टोमेति । आयुरायुर्नाम, अतिरात्रा

तस्मादृत्विजोऽब्रुवन्नित्यन्वयः । यद्यपि " महापृथिवी न देया " इति इदं निषिद्धं तथाप्यत्र प्रदेशविशेष एव दत्त इति ज्ञेयम्, प्रतिषेधवदत्र विधे रपि दर्शनात् केसरिदानवद्विकल्पो वा ॥ ४३ ॥ ४४ ॥ न भूम्येति सार्द्धश्लोकः । अशक्तौ हेतुः—रता इति । स्वाध्यायकरणे स्वाध्यायाध्ययने ॥ ४५ ॥ कथं दत्तस्य पुनरपहारस्तत्राह—निष्क्रयमिति । निष्क्रयं मूल्यम्, कृत्स्नपृथिव्या मूल्यं कुतो लभ्यते ? तत्राह किञ्चिदिति । यथोपपन्नमित्यर्थः ॥ ४६ ॥ किञ्चिदित्यस्य प्रपञ्चः—मणीति । मणिरत्नं मणिश्रेष्ठम्, समुद्यतं समुपस्थितम् । एवमिति । नरपतिरेवमुक्तः सन् दशशतसहस्राणि, दशलक्षाणीति यावत् । ददौ ॥ ४७ ॥ दशेत्यर्द्धमेकं वाक्यम् । नृप इत्यस्य पूर्वश्लोकस्थस्यात्रान्वयः । चतुर्गुणं चतुर्दशकोटीरित्यर्थः । अत्र रजतानि प्रतिनिधित्वेन

ऋत्विजश्चाब्रुवन् सर्वे राजानं गतकल्मषम् । भवानेव महीं कृत्स्नामेको रक्षितुमर्हति ॥४४॥ न भूम्या कार्यमस्माकं न हि शक्ताः स्म पालने । रताः स्वाध्यायकरणे वयं नित्यं हि भूमिप । निष्क्रयं किञ्चिदेवेह प्रयच्छतु भवानिति ॥ ४५ ॥ मणिरत्नं सुवर्णं वा गावो यद्वा समुद्यतम् । तत्प्रयच्छ नरश्रेष्ठ धरण्या न प्रयोजनम् ॥ ४६ ॥ एवमुक्तो नरपतिर्ब्राह्मणैर्वेदपारगैः । गवां शतसहस्राणि दश तेभ्यो ददौ नृपः ॥ ४७ ॥ दशकोटीस्सुवर्णस्य रजतस्य चतुर्गुणम् ॥ ४८ ॥ ऋत्विजस्तु ततः सर्वे प्रददुः सहिता वसु । ऋश्यशृङ्गाय मुनये वसिष्ठाय च धीमते ॥ ४९ ॥ ततस्ते न्यायतः कृत्वा प्रविभागं द्विजोत्तमाः । सुप्रीतमनसस्सर्वे प्रत्यूचुर्मुदिता भृशम् ॥ ५० ॥

दत्तानि, न तु दक्षिणात्वेन । अतः—"×तस्माद्रजतश्हिरण्यमदक्षिण्यम् " इति श्रुत्या न विरोधः ॥ ४८ ॥ ऋत्विज इति । सर्वे ऋत्विजः सहिताः सन्तः वसु दक्षिणाप्राप्तं धनम् अंशीकृत्य दानाय ऋश्यशृङ्गाय वसिष्ठाय च ददुः ॥ ४९ ॥ तत इति । न्यायतः शास्त्रतः " यावदध्वर्यवे ददाति " इति द्विवचनेन अतिरात्रस्य द्विरावृत्तिर्गम्यते ॥ ४०–४३ ॥ ऋत्विज इत्यादि । अमूल्यमिमां पृथ्वीं निष्क्रियेण कथं क्रीणीयामित्यत्राह—निष्क्रयं किञ्चिदेवेति । तत्र शास्त्रानुसारेण सदाशिवलिपितानुसारेण चेत्यर्थः । निष्क्रयतेऽनेनेति व्युत्पत्त्या मूल्यमुच्यते ॥ ४४ ॥ ४५ ॥ मणीति । मणिरत्नं मणिश्रेष्ठम् । समुद्यतमुपस्थितम् ॥ ४६ ॥ एवमुक्त इति । नरपतिशब्दो यौगिकः, नृपशब्दो रूढ्यां वर्तते, अतो न पौनरुक्त्यम् । दशकोटीरित्यर्धं पूर्वेण सम्बध्यते ॥ ४७ ॥ ४८ ॥ ऋत्विज इति ।

× यदश्रशीयत तद्रजतं हिरण्यमभवत् तस्माद्रजतश्हिरण्यमदक्षिण्यमश्रुजं हि । यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देयम् । इति श्रुतिः ।

तदर्धं प्रतिप्रस्थात्रे तृतीयं नेष्ट्रे चतुर्थं पुत्रेत्रे एतेनेतरेषां दानमुक्तं भवति " इत्युक्तक्रमेण । ततः ऋश्यशृङ्गवसिष्ठमुखेन प्रविभागं कृत्वा । सुप्रीतमनसः प्रत्यूचुः । सुप्रीतमनस इति विशेषणेन सर्वे वयं प्रीताः स्म इति प्रतिवचनप्रकारोऽवगम्यते ॥ ५० ॥ तत इति । प्रसर्पकेभ्यः यज्ञदर्शनार्थमागतेभ्यः । " यावन्तो वै सदस्यास्ते सर्वे दक्षिण्याः " इति श्रुतेः । जाम्बूनदं जम्बूनदीप्रभवमिति हिरण्यविशेषणम् ॥ ५१ ॥ दरिद्रायेति । हस्ताभरणं याचमानाय कस्मैचित् दरिद्राय, तदेव ददावित्यर्थः ॥ ५२ ॥ तत इति । ततः यथेष्टदक्षिणादानेनेत्यर्थः ॥५३॥ तस्येति । तस्य तस्मै ॥५४॥

ततः प्रसर्पकेभ्यस्तु हिरण्यं सुसमाहितः । जाम्बूनदं कोटिसङ्ख्यं ब्राह्मणेभ्यो ददौ तदा ॥५१॥ दरिद्राय द्विजायाथ हस्ताभरणमुत्तमम् । कस्मैचिद्याचमानाय ददौ राघवनन्दनः ॥५२॥ ततः प्रीतेषु नृपतिर्द्विजेषु द्विजवत्सलः । प्रणाममकरोत्तेषां हर्षपर्याकुलेक्षणः ॥५३॥ तस्याशिषोऽथ विधिवद्ब्राह्मणैः समुदाहृताः । उदारस्य नृवीरस्य धरण्यां प्रणतस्य च ॥५४॥ ततः प्रीतमना राजा प्राप्य यज्ञमनुत्तमम् । पापापहं स्वर्नयनं दुष्करं पार्थिवर्षभैः ॥५५॥ ततोऽब्रवीदृश्यशृङ्गं राजा दशरथस्तदा । कुलस्य वर्द्धनं त्वं तु कर्तुमर्हसि सुव्रत ॥ ५६ ॥ तथेति च स राजानमुवाच द्विजसत्तमः । भविष्यन्ति सुता राजंश्चत्वारस्ते कुलोद्वहाः ॥५७॥ इत्यार्षे श्रीरामायणे बालकाण्डे चतुर्दशः सर्गः ॥१४॥

तत इति । पापं पुत्रोत्पत्तिप्रतिबन्धकदुरितमपहन्तीति पापापहम् । " अपे क्लेशतमसोः " इति हन्तेर्डप्रत्ययः । तमःपर्यायोऽत्र पापशब्दः । स्वर्नयनं पुत्रप्रापणद्वारा स्वर्गप्रापकम् । इतरैः पार्थिवर्षभैः दुष्करम्, न विद्यते उत्तममस्मादित्यनुत्तमं सर्वोत्तमं यज्ञमश्वमेधं प्राप्य प्रीतमनाः, बभूवेति शेषः ॥ ५५ ॥ एवं पुत्रोत्पत्तिप्रतिबन्धकसकलदुरितनिवारणक्षमे भगवदङ्गभूतब्रह्मादिदेवताराधनरूपेऽश्वमेधे निर्वृत्ते साक्षाद्भगवदाराधनं पुत्रप्राप्तिकारणं क्रतुं सुमन्त्रोक्तं मनसि निधाय ऋश्यशृङ्गमर्थयते–तत इति । कुलस्य वर्द्धनं पुत्रोत्पत्तिहेतुभूतं कर्मेत्यर्थः । त्वं तु कर्तुमर्हसीत्यन्ते इतिरध्याहार्यः ॥ ५६ ॥ तथेति । पुत्रीयं कर्म करिष्ये सुताश्च भविष्यन्तीत्युवाचेत्यन्वयः ॥ ५७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥



ददुः पुरो न्यस्तवन्तः ॥ ४९ ॥ ततस्ते न्यायत इति । प्रत्यूचुर्मुदिता भृशम् अत्यन्तं मुदिताः स्म इति प्रत्यूचुः एतदेवालमित्यूचुः ॥ ५० ॥ तत इति । प्रसर्पकेभ्योऽभ्यागतेभ्यः । जाम्बूनदं जम्बूनदीप्रभवम् ॥ ५१-५७॥ इति श्रीमहेश्वरतीर्थ०श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां चतुर्दशः सर्गः ॥ १४॥

अथ दशरथाराधनव्याजेन साधुलोकरक्षणाय भूमाववतितीर्षुर्भगवानानुषङ्गिकदुष्कृद्विनाशाय देवैरभ्यर्थ्यते पञ्चदशे—मेधावीत्यादि। ततः प्रतिज्ञानन्तरम्। मेधावी मेधा धारणक्षमा धीः, तद्वान्। "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः। वेदज्ञः अथर्वणवेदज्ञः स ऋश्यशृङ्गः किञ्चिद् ध्यात्वा किं कर्म कर्तुमत्रोचितमिति क्षणं विचिन्त्य, मेधावितया ततः तदुत्तरक्षण एव लब्धसंज्ञः प्राप्तस्मृतिः सन् तं नृपमिदमुत्तरमब्रवीत्, द्विकर्मको ब्रुविः ॥ १॥ इष्टिमिति। पुत्रीयां पुत्रोत्पत्तिनिमित्तभूताम्, "पुत्राच्छ च" इति छप्रत्ययः। इष्टिं यागविशेषम्। ते पुत्रकारणात् पुत्रनिमित्तम्। "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति पञ्चमी। करिष्यामीत्युक्तवान्। मन्त्रदृष्टेन वेदावगतेन कर्मणा अग्नौ जुहाव च। शास्त्रदृष्टक्रमेण

मेधावी तु ततो ध्यात्वा स किञ्चिदिदमुत्तरम्। लब्धसंज्ञस्ततस्तं तु वेदज्ञो नृपमब्रवीत् ॥ १ ॥ इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात्। अथर्वशिरसि प्रोक्तैर्मन्त्रैः सिद्धां विधानतः ॥ २ ॥ ततः प्रारब्धवानिष्टिं पुत्रीयां पुत्रकारणात्। जुहाव चाग्नौ तेजस्वी मन्त्रदृष्टेन कर्मणा ॥३॥ ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः। भागप्रतिग्रहार्थं वै समवेता यथाविधि ॥ ४ ॥ ताः समेत्य यथान्यायं तस्मिन् सदसि देवताः। अब्रुवन् लोककर्त्तारं ब्रह्माणं वचनं महत् ॥ ५ ॥ भगवन् त्वत्प्रसादेन रावणो नाम राक्षसः। सर्वान्नो बाधते वीर्याच्छासितुं तं न शक्नुमः ॥ ६ ॥ त्वया तस्मै वरो दत्तः प्रीतेन भगवन् पुरा। मानयन्तश्च तं नित्यं सर्वं तस्य क्षमामहे ॥ ७ ॥

एकाम्राहुतिमकरोदित्यर्थः ॥ २ ॥ ३ ॥ एतच्छेषं 'ततो वै यजमानस्य' इत्यादिना वक्ष्यति। मध्ये भगवदवतरणस्य निमित्तान्तरं देवताभ्यर्थनं दर्शयति—तत इत्यादिना। ततः तत्राश्वमेधे, देवादयः यथाविधि यथाक्रमं भागप्रतिग्रहार्थं स्वस्वहविर्भागस्वीकारार्थं, समवेताः संमिलिताः, यज्ञसदसीति शेषः। अनुक्तसमुच्चयार्थेन चकारेण ब्रह्मापि समुच्चीयते॥४॥ ता इति। ताः देवताः तस्मिन्। प्रकृते सदसि अश्वमेधसदसि। यथान्यायं यथाक्रमम्। समेत्य लोककर्तारं स्वस्वामिनं ब्रह्माणं महत् फलद्वारा गुरुतरं वचनमब्रुवन् ॥५॥ भगवन्निति। त्वत्प्रसादेन जनिताद्वीर्यादित्यन्वयः ॥६॥ को मत्प्रसादः कथं

मेधावीति। अतीन्द्रियार्थदर्शी सः। ध्यात्वा दशरथस्य पुत्रसिद्धिः केन कर्मणा भवेदिति विचिन्त्य। लब्धसंज्ञः प्राप्तनिश्चयः ॥१॥ इष्टिमिति। पुत्रीयां पुत्रोत्पत्तिनिमित्तभूतां पुत्रकारणात् पुत्रोत्पादनकारणत्वेन विधानात्। अथर्वशिरसि सिद्धां निष्पन्नाम् विधानतः शास्त्रोक्तप्रकारेण मन्त्रदृष्टेन मन्त्रप्रकाशितेन॥२—६॥ त्वयेति। तं त्वद्दत्तवरम्। तं—

विषम०—चकाराद्ब्रह्मापि समुच्चीयते ॥ ४ ॥ समेत्य अन्तर्द्धानशक्त्या इतरानवलोकमिति शेषः ॥ ५ ॥

भवतां तत्प्रतीकाराशक्तिस्तत्राहुः—त्वयेति । वरः अस्माभिरवध्यत्वरूपः । त वरं । मानयन्तः पूजयन्तः । सर्वं पीडनम् ॥७॥बाधनमेवोपपादयन्ति—उद्वेजयतीत्यादिना । उद्वेजयति भीषयति उच्छ्रितान् उन्नतान् लोकपालान्, त्रिदशराजानम् । समासान्तस्य अनित्यत्वाट्टजभावः । प्रधर्षयितुं तिरस्कर्तुम् । स्थानात्प्रच्यावयितुमित्यर्थः ॥ ८ ॥ ऋषीनिति । असुरान् राहुप्रभृतीन् । अतिक्रामति, पीडयतीति यावत्॥९॥ नैनमिति । एनं रावणं प्रति न प्रतपति मन्दकिरणो भवति, क्रीडापर्वतसञ्चारादिदशायामिति भावः । पार्श्वे, अस्येति शेषः । न वाति पुष्पवाटिकादिषु,पुष्पपतनादिभयादिति भावः । चलोर्मिमाली सदा चञ्चलस्वभावतरङ्गपङ्क्तिमान् न कम्पते, गर्वितोऽप्युच्छलतीति शोषणभयादिति भावः ॥ १० ॥ तदिति । भयादिति भावः । भयं उत्पन्नमिति शेषः । कर्तुं चिन्तयितुम् ॥ ११ ॥ एवमिति । उक्तः, ब्रह्मेति शेषः । चिन्तयित्वा, उपायमिति शेषः । हन्तेत्युपायस्मरणजहर्षे ॥१२॥ अयंशब्दार्थमाह—तेनेति । तत्तथोक्तमित्यन्वयः ॥ १३ ॥ नाकीर्तयदिति । तदा अवध्यत्ववरणावसरे । अवज्ञानात् अवमानात् । मानुषात् मानुषेण । मृत्युः मारकः ॥ १४ ॥ एतदिति । प्रहृष्टाः, यथाकथंचिद्वधोपायसम्भावनयेति भावः ॥ १५ ॥ अथ परमकारुणिको भगवान् "परित्राणाय साधूनां विनाशाय च

उद्वेजयति लोकांस्त्रीनुच्छ्रितान् द्वेष्टि दुर्मतिः । शक्रं त्रिदशराजानं प्रधर्षयितुमिच्छति ॥ ८ ॥ ऋषीन् यक्षान् सगन्धर्वानसुरान् ब्राह्मणांस्तथा । अतिक्रामति दुर्धर्षो वरदानेन मोहितः ॥ ९ ॥ नैनं सूर्यः प्रतपति पार्श्वे वाति न मारुतः । चलोर्मिमाली तं दृष्ट्वा समुद्रोऽपि न कम्पते ॥ १० ॥ तन्महन्नो भयं तस्माद्राक्षसाद्घोरदर्शनात् । वधार्थं तस्य भगवन्नुपायं कर्त्तुमर्हसि ॥ ११ ॥ एवमुक्तः सुरैः सर्वैश्चिन्तयित्वा ततोऽब्रवीत् । हन्तायं विदितस्तस्य वधोपायो दुरात्मनः ॥ १२ ॥ तेन गन्धर्वयक्षाणां देवदानवरक्षसाम् । अवध्योऽस्मीति वागुक्ता तथेत्युक्तं च तन्मया ॥ १३ ॥ नाकीर्तयदवज्ञानात्तद्रक्षो मानुषांस्तदा । तस्मात्स मानुषाद्वध्यो मृत्युर्नान्योऽस्य विद्यते ॥ १४ ॥ एतच्छ्रुत्वा प्रियं वाक्यं ब्रह्मणा समुदाहृतम् । सर्वे महर्षयो देवाः प्रहृष्टास्तेऽभवंस्तदा ॥ १५ ॥ एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः । शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः ॥ १६ ॥

१ जगत्पतिः ॥ वैनतेयं समारुह्य भास्करस्तोयदं यथा । तप्तहाटककेयूरो वन्द्यमानः सुरोत्तमैः ॥ इत्यधिकः पाठः क्वचित् ।

दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगेयुगे ॥" इत्युक्तरीत्या धर्मसंस्थापनादित्रयकृते स्वाराधकदशरथमनोरथपरिपूरणाय चावतितीर्षुराजगामेत्याह—एतस्मिन्निति । एतस्मिन्नन्तरे रक्षापेक्षासमये । अनेन चिरमस्यावसरप्रतीक्षत्वं गम्यते । " सर्वज्ञोऽपि हि देवेशस्सदा कारुणिकोऽपि सन् । संसारतन्त्रवाहित्वाद्रक्षापेक्षां प्रतीक्षते ॥" इति ह्युक्तम् । विष्णुः सर्वान्तर्यामितया व्याप्य वर्तमानः, भोगादप्यासेधनमेव वरमिति स्थित इत्यर्थः । "त्वं मेऽहं मे" इत्यादि । महाद्युतिः रक्षणावकाशलाभसमुदितहर्षप्रकर्षकृतकान्तिविशेषयुक्तः । अनेनेतःपूर्वं संसारिजनदुर्दशावलोकनेन दूयमानमानसत्वमुक्तम् । " स एकाकी न रमेत " इति श्रुतेः । शङ्खचक्रगदापाणिः—आश्रितानां रक्षणापेक्षायां रक्षणोपकरणग्रहणाय विलम्बो माभूदिति सर्वदा तैरुपेतः । " पातु प्रणतरक्षायां विलम्बमसहन्निव । सदा पञ्चायुधीं बिभ्रत्स नः श्रीरङ्गनायकः ॥" इत्यभियुक्तोक्तम् । पीतवासाः आश्रितरक्षणत्वरया बद्धकक्षः । जगत्पतिः—उक्तसकलविशेषहेतुभूतस्वस्वामिभावसम्बन्धवान् । उपयातः वैकुण्ठात् दशरथयज्ञवाटमाजगाम ॥ १६ ॥ तनि०—एतस्मिन्नन्तरे तेषां रक्षापेक्षावसरे । एतस्मिन्नन्तरे क्षणं विलंबितं चेत् त एवागच्छन्ति ततः पूर्वमेव गन्तव्यमिति । एतस्मिन्नन्तरे देवगोष्ठ्यां यदा रक्षाप्रसङ्गो जातस्तदैव ज्ञातमिति सर्वज्ञस्यास्याश्रितरक्षानुकूल्यमार्जवं च व्यञ्जितम् । एतस्मिन्नन्तरे अन्यस्य चेद्रक्षणमनुमतम्, स्वस्य रक्ष्यलाभो न स्यादिति " अतन्द्रितचमूपतिप्रहितहस्तम् " इत्यादिवत् त्वराधिक्यं गम्यते । उपयातः देवानामपि त्वरातिशयेन मध्येमार्गं मेलनं यथा न स्यात्तथोपयातः । यस्य फलापेक्षा स एव फलप्राप्त्यर्थं स्वयमेवागच्छतीत्युपेक्षामकृत्वा उपयातः । रक्षणप्रसङ्गविच्छेदभयेन यावदासनमपरिज्ञात एवोपयातः । " स चापि रामः परिषद्गतः शनैः " इत्यादिवत् । विष्णुरुपयातः । पूर्वमेव तत्र स्थितोऽपि इदानीं विग्रहेणाभिव्यक्तस्सन्नुपयातः । सर्वेश्वरोऽप्युपयात इति सौलभ्यमुक्तम् । एतस्मिन्नन्तरे विष्णुरुपयात इति देवाः विधिशिवादिषु कश्चन रावणहनने प्रार्थयेयुः, तदा ते तद्धननाशक्त्या नोत्तरं ब्रूयुः, तदा तेषामवमतिश्शरणागतारक्षणजन्यमानसखेदश्च स्यातामिति तेषामवमानमानसखेदौ माभूतामित्यविलम्बितमुपयातः । महाद्युतिरुपयात इति " दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भास्सदृशी सा स्याद्भासस्तस्य महात्मनः ॥" इत्याद्युक्तदुःसहाप्रमेयतेजोवत्त्वेऽपि तादृशतेजसस्सर्वजनाह्लादकत्वं व्यज्यते । विष्णुर्महाद्युतिरिति स्वरूपवद्द्युतेरप्यपरिमेयत्वं ध्वनितम् । विष्णुरुपयात इति उपगमनसमकालमेव शिवादीनामवमानभयमिन्द्रादीनां रावणभयं च निवृत्तमिति ध्वनितम् । शंखचक्रगदापाणिः " नैनं सूर्यः प्रतपति " इत्याद्युक्तरीत्या स्वस्वव्यापारेष्वपि सङ्कोचवन्तस्स्वपदभ्रंशशङ्किनो देवास्सभासु निःशङ्कं किल रावणवधोपायमालोचयन्ति । तदानीमेव चेद्रावणस्तत्र आगच्छति तदा सकलदेवशिरश्छेदकः स्यात्, सकललोकशरण्यत्वहानिस्स्वस्य भवेदिति ततः पूर्वमेवायुधादिसकलयुद्धपरिकरयुक्त एवागतः, न तु भोजनपरिकरयुक्त इति । भागप्रतिग्रहार्थत्वं त्वानुषङ्गिकम् । पीतवासाः "तस्य महारजतं वासः" इत्याद्युक्तपीताम्बरयुक्तः ।

जगत्पतिः जगत्पोषकः, जगतः पोषणं नाम अन्योन्यः परिभवनिवारणम् । एवंविधस्योपास्यत्वं शरणागतिमन्त्रोक्तचरणद्वोपलक्षितप्रपत्तव्यविग्रहवैशिष्ट्यं च व्यञ्जितम् ॥ १६ ॥ ब्रह्मणेति । तत्र सदसि ब्रह्मणा समागम्य समाहितः करिष्यमाणरक्षणकृत्ये एकाग्रः तस्थौ । तम् आश्रितरक्षणसन्नद्धम् । सर्वे सुराः ब्रह्मादयः पितामहपुरोगमानित्युपसंहारात् । समभिष्टूय सम्यक् स्तुत्वा । संनताः सम्यक् नताः प्रणताः सन्तः अब्रुवन् ॥ १७ ॥ त्वामिति, अर्द्धमेकं वाक्यम् । हे विष्णो ! लोकानां हितकाम्यया हितेच्छया त्वां नियोक्ष्यामहे उत्साहयिष्यामहे। "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः । "स्मारये त्वां न शिक्षये" इतिवत् । केवलं त्वां प्रोत्साहयिष्यामः । स्वयमेव स्वकीयरक्षणे प्रवृत्तत्वादिति भावः । यदि नियोजनमेवार्थः स्यात् तदा पूर्वश्लोकोक्तम्

ब्रह्मणा च समागम्य तत्र तस्थौ समाहितः । तमब्रुवन् सुराः सर्वे समभिष्टूय संनताः ॥ १७ ॥ त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया ॥ १८ ॥ राज्ञो दशरथस्य त्वमयोध्याधिपतेर्विभोः । धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः ॥ १९ ॥ तस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च । विष्णो पुत्रत्वमागच्छ कृत्वात्मानं चतुर्विधम् ॥ २० ॥ तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् । अवध्यं दैवतैर्विष्णो समरे जहि रावणम् ॥ २१ ॥ स हि देवान् सगन्धर्वान् सिद्धांश्च ऋषिसत्तमान् । राक्षसो रावणो मूर्खो वीर्योत्सेकेन बाधते ॥ २२ ॥ ऋषयस्तु ततस्तेन गन्धर्वाप्सरसस्तथा । क्रीडन्तो नन्दनवने क्रूरेण किल हिंसिताः ॥ २३ ॥

अभिष्टूय सन्नता इत्येतद्विरुद्ध्यते, किंच नियोजनमत्र प्रार्थनमेव । एवमुत्तरत्र भगीरथवचने 'हरस्तत्र नियुज्यताम्' इति वक्ष्यति ॥ १८ ॥ किं नियोज्यमित्यत्राह द्वाभ्याम्–राज्ञ इत्यादि । पितृभावयोग्यत्वपराणि विशेषणानि । तस्येति यजमानो दशरथोऽनेन निर्दिश्यते । ह्रीश्रीकीर्तयो दक्षकन्याः ता उपमा यासां तास्तथा । चातुर्विध्यविधानं रावणरावणिलवणगन्धर्वविनाशाय ॥१९॥२०॥ मम पुत्रभावेन भवतां किं प्रयोजनम् तत्राहुः–तत्रेति । तत्र दशरथभार्यासु । प्रवृद्धं वरबलभुजबलैरभिवृद्धम् । मानुषभावः किमर्थं भजनीयस्तत्राहुः अवध्यं दैवतैरिति । "कृत्यानां कर्तरि वा" इति पक्षे तृतीया ॥२१॥ स किमर्थं हन्तव्यस्तत्राहुः–स हीति । वीर्योत्सेकेन वीर्यकृतगर्वेण ॥ २२ ॥ ऋषय इति । ततः वीर्योत्सेकात् । क्रूरेण तेन रावणेन ऋषयो हिंसिताः ।

–नित्यमिति तद्वरदानरूपं त्वयोक्तं वाक्यम्, सर्वं दौर्जन्यमिति शेषः ॥७–११॥ एवमुक्त इति । हन्तेति हर्षे । वधोपायो मृत्युः ॥१२–१७॥ त्वामिति । नियोक्ष्या

क्रीडन्तः क्रीडन्त्यः। लिङ्गविपर्यय आर्षः। मिथुनद्वया चरतां हिंसनात् क्रूरेणेत्युक्तम्। किलेत्यैतिह्ये ॥ २३ ॥ वधार्थमिति। तस्य वधार्थं वयं मुनिभिः सहायाताः, त्वत्समीपमिति शेषः। सिद्धादयश्चायाताः ततः रावणवधार्थं त्वां शरणमुपायं गताः ॥ २४ ॥ रुद्रादिषु विद्यमानेष्वहमेव किमर्थमर्थ्य इत्यत्राहुः—त्वमिति। हे देव! त्वं नः परमा गतिः उपायः, नान्ये। परान् शत्रून् तापयतीति परंतपः। "द्विषत्परयोस्तापेः" इति खच्। अनेन शत्रुवधसामर्थ्यमुक्तम्। मनः कुरु, अवतरितुमिति शेषः। देवशत्रूणामिति बहुवचनेन रावणशावणिलवणगन्धर्वा

वधार्थं वयमायातास्तस्य वै मुनिभिः सह। सिद्धगन्धर्वयक्षाश्च ततस्त्वां शरणं गताः ॥ २४ ॥ त्वं गतिः परमा देव सर्वेषां नः परन्तप। वधाय देवशत्रूणां नृणां लोके मनः कुरु ॥ २५ ॥ एवमुक्तस्तु देवेशो विष्णुस्त्रिदशपुङ्गवः। पितामहपुरोगांस्तान् सर्वलोकनमस्कृतः। अब्रवीत् त्रिदशान् सर्वान् समेतान् धर्मसंहितान् ॥ २६ ॥ भयं त्यजत भद्रं वो हितार्थं युधि रावणम्। सपुत्रपौत्रं सामात्यं समित्रज्ञातिबान्धवम् ॥२७॥ हत्वा क्रूरं दुरात्मानं देवर्षीणां भयावहम्। दश वर्षसहस्राणि दशवर्षशतानि च। वत्स्यामि मानुषे लोके पालयन् पृथिवीमिमाम् ॥ २८ ॥ एवं दत्त्वा वरं देवो देवानां विष्णुरात्मवान्। मानुषे चिन्तयामास जन्मभूमिमथात्मनः ॥ २९ ॥ ततः पद्मपलाशाक्षः कृत्वात्मानं चतुर्विधम्। पितरं रोचयामास तदा दशरथं नृपम् ॥ ३० ॥

दीनामपि वधोऽर्थितः। अनेनाभिप्रायेण पूर्वं 'कृत्वात्मानं चतुर्विधम्' इत्युक्तम् ॥ २५ ॥ एवमित्यादिसार्द्धश्लोक एकान्वयः। पितामहपुरोगान् ब्रह्मप्रधानान् धर्मसंहितान् शरणागतिरूपधर्मसंयुतान् ॥ २६ ॥ भयमित्यादिसार्द्धश्लोकद्वयमेकान्वयम्। भयं त्यजत वः युष्माकं भद्रमस्तु, यस्मादहं सर्वेषां हितार्थं रावणं हत्वा धर्मसंस्थापनाय दशवर्षसहस्राणि वत्स्यामीति योजना। शङ्खचक्रगदापाणिरुपयात इति हि पूर्वमुक्तम् ॥ २७ ॥ २८ ॥ एवमिति। आत्मवान् सर्वात्मशेषी। मानुषे मनुष्येषु। जात्येकवचनम्। चिन्तयामास यथा देवैराज्ञप्तं तथेति शेषः। जन्मभूमिं जन्मस्थानम् ॥ २९ ॥ तत इति। ततः चिन्तानन्तरं पद्मपलाशाक्षः दशरथगुणस्मरणकृतनयनविकासोक्तिः। यद्वा पद्मपलाशाक्षः सर्वैः स्पृहणीयनयनयुगलः, तथा च सर्व

महे-प्रार्थयामहे ॥१८॥१९॥ विष्णो इति। कृत्वात्मानं चतुर्विधमिति चातुर्विध्यविधानं रावणेन्द्रजिल्लवणगन्धर्ववधादीनां प्रत्येकं देवकार्याणां सद्भावात् ॥२०–२४॥

स्पृहणीयः स्वयमन्यं स्पृहयामास । यद्वा " तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी " इत्युक्तरीत्या परत्वचिह्नपुण्डरीकाक्षत्वयुक्तः । एवञ्च सर्वस्मात् परोऽपि जन्म रोचयामास, यथा जनिमतो जन्महानिरभिलषिता तथा जनिरहितस्यापि जनिरभिलषितेत्यर्थः । दुर्लभं ह्यभिलषितं भवति । कृत्वाऽऽत्मानं चतुर्विधं जन्माभिलाषेऽपि दशरथगुणातिरेकेण चतुर्विधशरीरपरिग्रहमभिलषितवान् । आत्मानं स्वशरीरं चतुर्विधं पायसविभागक्रमेण । पितरं " पिता पुत्रेण पितृमान् योनियोनौ " इत्युक्तरीत्या सर्वपिता स्वपुत्रं कञ्चित्पितरमभिललाष रोचयामास ऐच्छत् । तदा रक्षणोद्योगसमये । दशरथं नृपम् " गुणै र्दशरथोपमम् " इत्युक्तरीत्या जनित्वार्जितैः स्वाभाविकैश्च गुणैः स्वसदृशं देवोक्तं दशरथमेव स्वजन्मभूमित्वेन निश्चितवानित्यर्थः ॥ २० ॥ तत इति । ततः भगवदिच्छानन्तरम्, सरुद्रा इत्यनुवादात् पूर्वं रुद्रोऽपि शरणागत इति सिद्धम् । दिव्यरूपाभिः दिव्यात्मस्वरूपविषयिणीभिः स्तुतिभिः

ततो देवर्षिगन्धर्वाः सरुद्राः साप्सरोगणाः । स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनम् ॥ ३१ ॥ तमुद्धतं रावण मुग्रतेजसं प्रवृद्धदर्पं त्रिदशेश्वरद्विषम् । विरावणं साधुतपस्विकण्टकं तपस्विनामुद्धर तं भयावहम् ॥ ३२ ॥ तमेव हत्वा सबलं सबान्धवं विरावणं रावणमुग्रपौरुषम् । स्वर्लोकमागच्छ गतज्वरश्चिरं सुरेन्द्रगुप्तं गतदोषकल्मषम् ॥ ३३ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

स्तुतिरूपप्रबन्धैः तुष्टुवुः श्लाघयामासुः । मधुसूदनमिति मधुवद्दयमपि निरसनीय इत्याशयेनोक्तम् ॥ ३१ ॥ उक्तमर्थं सर्गान्ते पुनः संगृह्णाति–तमिति । उद्धतं जन्मत एवोद्धतम् । तं प्रसिद्धम् उग्रतेजसं उग्रप्रतापं वरदानेन प्रवृद्धदर्पम् । लोकान् विरावयतीति विरावणम्, सर्वलोकानामाक्रन्दयितारं, तपस्विनां कण्टकं शत्रुम् । "क्षुद्रे शत्रौ च कण्टकः" इति वैजयन्ती । अतएव तपस्विनां भयावहं तं रावणं साधु निःशेषम् उद्धर उन्मूलय ॥ ३२ ॥ तमेवेति । एवकारेण विभीषणव्यवच्छेदः । स्वर्लोकं वैकुण्ठम् । क्वचित्स्वलोकमिति पाठः । चिरं चिरकालस्थायि । अनेन ब्रह्मलोकादिव्यावृत्तिः । सुरेन्द्रेति सम्बोधनम् । गुप्तम् अस्मदादिभिः दुरधिगमम् । " अत्यर्कानलदीप्तं तत् स्थानं विष्णोर्महात्मनः । स्वयैव प्रभया राजन् दुष्प्रेक्ष्यं देवदानवैः ॥" इति



त्वमिति । नृणां लोके मनः कुरु । अवतरितुमिति शेषः ॥ २५ ॥ एवमिति । मानुषे मनुष्येषु ॥ २६–२९ ॥ तत इति । रोचयामास ऐच्छत् ॥३०॥३१॥ तमिति । उग्रते ऽसम दीप्तविक्रमम् । विरावणं विरावयति लोकानिति विरावणः तम् । उद्धर उत्पाटय ॥३२॥ तमेवेति । गतज्वरः-विनिवर्तिताश्रिततापादिः । गतदोषकल्मषः

महाभारतोक्तेः । गतदोषकल्मषं दोषा रागद्वेषादयः, गतानि तद्रूपकल्मषाणि यस्मात्तत्तथा । अनेनेन्द्रलोकादिव्यावृत्तिः । गतज्वरः आश्रितसंरक्षणेन गतव्यथः । अनेन पुनः प्राप्तिपर्यन्तं संसारिविषये कदैते निस्तरिष्यन्तीति चिन्ताकुलत्वमुक्तम् । आगच्छेत्यनेन वैकुण्ठादवतीर्णत्वं गम्यते । अत्र स्वर्लोकपदस्येन्द्रलोकपरत्वे गुप्तत्वगतदोषकल्मषत्वादिविरोधः । अन्तरिक्षादुपरितनलोकमात्रस्य स्वर्गपदवाच्यत्वात् । अतएव हि क्वचिद्ब्रह्मलोकादावपि स्वर्गपदप्रयोगः । “ ब्रह्मलोकं प्रयास्यति ” इत्यत्रापि ब्रह्मणः स्वस्य लोकम् अप्राकृतस्थानम् परमपदमिति व्याख्यातम् । स्वर्लोकमिति सम्यक् पाठः । सुरेन्द्रः विष्वक्सेनः ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥

ततो नारायणो विष्णुर्नियुक्तः सुरसत्तमैः । जानन्नपि सुरानेवं श्लक्ष्णं वचनमब्रवीत् ॥ १ ॥

उपायः को वधे तस्य राक्षसाधिपतेस्सुराः । यमहं तं समास्थाय निहन्यामृषिकण्टकम् ॥ २ ॥

एवमुक्ताः सुराः सर्वे प्रत्यूचुर्विष्णुमव्ययम् । मानुषीं तनुमास्थाय रावणं जहि संयुगे ॥ ३ ॥

स हि तेपे तपस्तीव्रं दीर्घकालमरिन्दम । येन तुष्टोऽभवद्ब्रह्मा लोककृल्लोकपूर्वजः ॥ ४ ॥

एवं मनुष्यलोके दशरथपुत्रत्वेनावतीर्य रावणवधः कर्तव्य इत्युक्तम्, तत्र किं मया उपेन्द्रादिवत् स्वस्वरूपेण स्थातव्यम्, उत प्रकारान्तरेणेति भगवान् बहुमानार्थं पृच्छति—ततइत्यादि । न रिष्यन्ति न नश्यन्तीति नराः, नित्यवस्तूनि । “ अन्येभ्योऽपि दृश्यते ” इति डप्रत्ययः । सुप्सुपेति नगनैकादिवत् समासः । नराणां समूहो नारम् । “तस्य समूहः” इत्यण् । नारमयनं वासस्थानं यस्यासौ नारायणः । “पूर्वपदात्संज्ञायामगः” इति णत्वम् । सर्वान्तर्यामीत्यर्थः । यद्वा नाराणामयनं नारायणः । इध्मव्रश्चनः पलाशशातन इत्यादिवल्ल्युडन्तस्यापि पुंल्लिङ्गत्वम्, एवं सर्वस्मात्परोऽपि सुरसत्तमैः नियुक्त इत्याश्रितपारतन्त्र्यमुच्यते । तादृशो विष्णुः जानन्नपि उत्तरनिश्चयज्ञोऽपि सम्मानार्थं श्लक्ष्णं मधुरं वचनमब्रवीत् ॥ १॥ उपाय इति । आस्थाय स्वीकृत्य यमुपायमास्थाय तं निहन्यां स उपायः क इत्यन्वयः ॥ २ ॥ एवमिति । मानुषीं न तु दैवीम् ॥ ३ ॥ तत्र हेतुमाह—स हीति । लोककृत्त्वे हेतुः

दोषशब्देन रोगादयो लक्ष्यन्ते । सुरेन्द्र हे उपेन्द्र ! अतएव स्वर्लोकमागच्छेति प्रार्थना युज्यते । गुप्तम् त्वत्प्रभावेनेति शेषः ॥ ३३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां० बालकाण्डव्याख्यायां पञ्चदशः सर्गः ॥ १५ ॥ ततो नारायण इति । नियुक्तः प्रार्थितः । जानन्, वधोपायमिति शेषः ॥ १ ॥ देवत्वं विहाय मनुष्यत्वं

१ देवो नियुक्तः । २ रावणस्य दुरात्मनः । ३ मानवं रूपमास्थाय । इति च पाठः ।

लोकपूर्वज इति । लोकशब्दोऽत्र देवादिजनपरः ॥ ४ ॥ सन्तुष्ट इति । मानुषादन्यत्र मानुषं विना । नानाविधेभ्यो भूतेभ्यो भयं नेति वरं प्रददावित्यन्वयः ॥ ५ ॥ अभयं कुतो न दत्तं मानुषेभ्य इत्यत्राह—अवज्ञाता इति ॥ ६ ॥ एवमिति । दर्पितः सञ्जातदर्पः ॥ ७ ॥ प्रकृतमुपसंहरति—तस्मादिति । इतीति । पितरमिति मनुष्यरूपेणावतरितुमिति शेषः ॥ ८ ॥ स चापीति । तस्मिन् काले भगवदवतितीर्षाकाले । पुत्रियामित्यत्र ह्रस्व आर्षः ॥ ९ ॥ स इति । निश्चयं मनुष्यभूत एवावतरिष्यामीति निश्चयम् । आमन्त्र्य साधयामीत्युक्त्वा ॥ १० ॥ अथ पुत्रकामेष्टिफलं भगवतश्चतुर्धावतारं सूचयन्



सन्तुष्टः प्रददौ तस्मै राक्षसाय वरं प्रभुः । नानाविधेभ्यो भूतेभ्यो भयं नान्यत्र मानुषात् ॥ ५ ॥ अवज्ञाताः पुरा तेन वरदाने हि मानवाः ॥ ६ ॥ एवं पितामहात्तस्माद्वरं प्राप्य स दर्पितः । उत्सादयति लोकाँस्त्रीन् स्त्रियश्चाप्यवकर्षति ॥ ७ ॥ तस्मात्तस्य वधो दृष्टो मानुषेभ्यः परंतप । इत्येतद्वचनं श्रुत्वा सुराणां विष्णुरात्मवान् । पितरं रोचयामास तदा दशरथं नृपम् ॥ ८ ॥ स चाप्यपुत्रो नृपतिस्तस्मिन् काले महाद्युतिः । अयजत्पुत्रियामिष्टिं पुत्रेप्सुररिसूदनः ॥ ९ ॥ स कृत्वा निश्चयं विष्णुरामन्त्र्य च पितामहम् । अन्तर्धानं गतो देवैः पूज्यमानो महर्षिभिः ॥ १० ॥ ततो वै यजमानस्य पावकादतुलप्रभम् । प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ॥ ११ ॥ कृष्णरक्ताम्बरधरं रक्ताक्षं दुन्दुभिस्वनम् । स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्धजम् ॥ १२ ॥

प्रजापतिप्रेरितपुरुषेण पायसप्रदानं दर्शयति—ततो वा इति, श्लोकपञ्चकमेकान्वयम् । ततः विष्णोरन्तर्धानानन्तरम् । यजमानस्येति वर्तमाननिर्देशेन द्रव्यत्यागकाल एव प्रादुर्भावः सूचितः । पावकात् आहवनीयात् । भूतं पुरुषविशेषः । स्निग्धाः चिक्कणाः हर्यक्षस्येव तनुजाः लोमानि श्मश्रुप्रवरा मूर्धजाः

प्राप्यैव रावणो हन्तव्य इत्यत्र को हेतुरित्यभिप्रायेण पृच्छति—उपायः क इति ॥ २–४ ॥ सन्तुष्ट इत्यादि । मानुषादन्यत्र नानाविधेभ्यो भूतेभ्यो भयं न भवेदिति वरं ददावित्यन्वयः ॥ ५–७ ॥ तस्मादिति । दृष्टो निश्चितः ॥ ८–१० ॥ तत इत्यादि श्लोकपञ्चकमेकान्वयम् । महद्भूतं पुरुषविशेषः । कृष्णरक्तेति । स्निग्धाः



१ वरदानेन मानवाः । २ गर्वितः । ३ नृपं दशरथं भृशम् । इति च पाठान्तरम् ।

केशाश्च यस्य तत्तथा । समुत्सेधः उन्नतिः । द्दप्तशार्दूलविक्रमं तद्वद्भयङ्करम् । प्रभामण्डलवत्तया दिवाकरसमाकारम्, तैक्ष्ण्यातिशयेन दीप्तानलशिखोपमम् । तप्तजाम्बूनदमयीं द्रुतकनकमयीम् । राजतः रजतविकारः अन्ते उपरि परिच्छदः पिधानपात्रं यस्यास्ताम् । पात्र्यास्स्त्रीलिङ्गत्वेन पत्नीसाम्यम् । मायामयीमिव असम्भावितत्वेनाश्चर्यावहामित्यर्थः । स्वयं प्रगृह्य प्रादुर्भूतमित्यन्वयः । विपुलतरत्वेन हस्तमात्रेण गृहीतुमशक्यत्वात् बाहुभ्यामित्युक्तम् ॥११-१५॥समवेक्ष्येति । दशरथं समवेक्ष्येदमब्रवीत् । कथम् ? इहागतं मां प्राजापत्यं प्रजापतेरागतम् । "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति प्राग्दी

शुभलक्षणसम्पन्नं दिव्याभरणभूषितम् । शैलशृङ्गसमुत्सेधं द्दप्तशार्दूलविक्रमम् ॥१३॥ दिवाकरसमाकारं दीप्तानलशिखोपमम् । तप्तजाम्बूनदमयीं राजतान्तपरिच्छदाम् ॥ १४ ॥ दिव्यपायससम्पूर्णां पात्रीं पत्नीमिव प्रियाम् । प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव ॥१५॥ समवेक्ष्याब्रवीद्वाक्यमिदं दशरथं नृपम् । प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप ॥१६॥ ततःपरं तदा राजा प्रत्युवाच कृताञ्जलिः । भगवन् स्वागतं तेऽस्तु किमहं करवाणि ते ॥ १७ ॥ अथो पुनरिदं वाक्यं प्राजापत्यो नरोऽब्रवीत् । राजन्नर्चयता देवानद्य प्राप्तमिदं त्वया ॥ १८ ॥ इदं तु नरशार्दूल पायसं देवनिर्मितम् । प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्द्धनम् ॥ १९ ॥ भार्याणामनुरूपाणामश्नीतेति प्रयच्छ वै । तासु त्वं लप्स्यसे पुत्रान् यदर्थं यजसे नृप ॥ २० ॥ तथेति नृपतिः प्रीतः शिरसा प्रतिगृह्य ताम् । पात्रीं देवान्नसम्पूर्णां देवदत्तां हिरण्मयीम् ॥ २१ ॥

व्यतीयो ण्यप्रत्ययः । नरं विद्धि ॥१६॥ ततःपरमिति । ततःपरम्, तदनन्तरमिति यावत् । 'प्राजापत्यं च मां विद्धि' इत्युक्त्यनन्तरमित्यर्थः । तदा तदैव ॥१७॥ अथो इति । अथो अथेति पर्यायौ । अर्चयता, अश्वमेधपुत्रकामेष्टिभ्यामिति शेषः ॥१८॥ इदंशब्दार्थमाह—इदं त्विति । देवनिर्मितं देवेन विष्णुना निर्मितम् । धन्यं धनकरम् । स्वर्गादित्वाद्यत् ॥ १९ ॥ भार्याणामिति । अनुरूपाणाम् सवर्णानामित्यर्थः । चतुर्थ्यर्थे षष्ठी ॥ २० ॥ तथेति । देवान्नं देव

हर्यक्षस्य सिंहस्येव तनुजानि लोमानि श्मश्रुप्रवराः मूर्धजाश्च यस्य । " हर्यक्षः केसरी हरिः " इत्यमरः । हर्यक्षस्य राक्षसस्येति वा, समुत्सेधः-उन्नतिः, द्दप्तशार्दूलवत् विक्रमः पदविन्यासो यस्य तत् । राजतान्तपरिच्छदाम्-राजताः रजतनिर्मिताः अन्ते परिच्छदाः रचनाविशेषाः यस्यास्ताम् । मायामयीमिव विचित्रकार्यकरीमिव ॥ ११-१५ ॥ समवेक्ष्येति । प्राजापत्यं प्रजापतिसम्बन्धिनम् । प्रजापतिना प्रेषितमिति यावत् । नरं पुमांसम् ॥ १६ ॥ १७ ॥ अथो इति । अर्चयता यज

निर्मिताम् । देवदत्तां देवप्रेरिताम् ॥२१॥ अभिवाद्येति । अभितः प्रदक्षिणमभिप्रदक्षिणम् ॥२२॥ तत इति । प्राप्य लब्ध्वा ॥२३॥ तत इति । अद्भुतप्रख्यं अद्भुताकारम् । संवर्तयित्वा समाप्य । तत्कर्म पायसप्रदानरूपं कर्म । तत्र अग्नौ ॥२४॥ हर्षेति । हर्षरश्मिभिः हर्षकृतकान्तिभिः । उद्योतम् उद्भूतप्रकाशम् । अन्तःपुरम् अन्तःपुरस्त्रियः । शारदस्य शरदि भवस्य । अभिरामस्य निष्कलङ्कस्य । अयं हर्षः पायसप्रदानकृतः ॥२५॥ स इति । पुत्रीयं पुत्रोत्पत्तिनिमित्तम् ॥ २६ ॥ अथ राज्ञः पत्नीभ्यो विभज्य पायसप्रदानमाह त्रिभिः—कौसल्याया इत्यादि । पायसस्यार्द्धं पायसार्द्धम् । अर्द्धशब्दोऽत्र समांश



अभिवाद्य च तद्भूतमद्भुतं प्रियदर्शनम् । मुदा परमया युक्तश्चकाराभिप्रदक्षिणम् ॥ २२ ॥ ततो दशरथः प्राप्य पायसं देवनिर्मितम् । बभूव परमप्रीतः प्राप्य वित्तमिवाधनः ॥ २३ ॥ ततस्तदद्भुतप्रख्यं भूतं परमभास्वरम् । संवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत ॥ २४ ॥ हर्षरश्मिभिरुद्योतं तस्यान्तःपुरमाबभौ । शारदस्याभिरामस्य चन्द्रस्येव नभोंऽशुभिः ॥ २५ ॥ सोऽन्तःपुरं प्रविश्यैव कौसल्यामिदमब्रवीत् । पायसं प्रतिगृह्णीष्व पुत्रीयं त्विदमात्मनः ॥ २६ ॥ कौसल्यायै नरपतिः पायसार्द्धं ददौ तदा । अर्द्धादर्द्धं ददौ चापि सुमित्रायै नराधिपः । कैकेय्यै चावशिष्टार्द्धं ददौ पुत्रार्थकारणात् ॥ २७ ॥

वचनः । " अर्द्धं समेंऽशके " इत्यमरः । ददौ ज्येष्ठपत्नीत्वादिति भावः । अर्द्धात् पृथक्कृत्य अर्द्धं सुमित्रायै द्वितीयमहिष्यै ददौ, चतुर्थांशमित्यर्थः । अवशिष्टस्य पायसस्यार्द्धमवशिष्टार्द्धम्, अष्टमांशमित्यर्थः । कैकेय्यै तृतीयमहिष्यै ददौ । पुत्रार्थकारणात् पुत्ररूपप्रयोजननिमित्तात् । इदं त्रिष्वपि

मानेन ॥ १८–२३ ॥ तत इति । अद्भुतप्रख्यम् अद्भुतकान्तिम् । संवर्तयित्वा निर्वर्त्य समाप्येत्यर्थः । कर्म पायसदानरूपम् । तत्र-अग्निकुण्डे ॥ २४ ॥ हर्षरश्मिभिः हर्षोद्भूतमुखकान्तिभिः ॥२५॥ स इति । पुत्रीयम् पुत्रोत्पत्तिनिमित्तम् ॥२६॥ कौसल्याया इत्यादि । कैकेय्यै चावशिष्टार्द्धम् अवशिष्टस्य चतुर्थांशस्यार्द्धं प्रददौ ॥२७॥

मुनिभाव०—कौसल्याया इत्यादि । महीपतिः दशरथः कौसल्यायै पायसार्धं पायसस्य अर्धं ददौ । अर्धादर्धम् अवशिष्टार्धादर्धं सुमित्रायै ददौ । अवशिष्टार्धम्, कैकेय्यै ददौ । अवशिष्टार्धम्, अवशिष्टं च तत् अर्धं च तत्पुनरनुचिन्त्य सुमित्रायै ददौ । कौसल्यायै अर्धांशम्, सुमित्रायै चतुर्थभागमष्टमभागं च, कैकेय्यै अष्टमभागं ददावित्यर्थः । जननप्रकारः—" कौसल्याऽजनयद्रामं सर्वलक्षणसंयुतम् । विष्णोरर्धं महाभागं पुत्रमिक्ष्वाकुनन्दनम् । भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः । साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः । " साक्षाद्विष्णोश्चतुर्भागः इत्यत्र चतुर्थांशे भागः चतुर्भागः, अष्टमांश इत्यर्थः ।

दानेष्वन्वेति॥२७॥ प्रददाविति । अनुचिन्त्य कैकेय्यपेक्षया सुमित्रायाः अधिकांशभाक्त्वं भवेदिति विचार्येत्यर्थः। तस्यापि हि कैकेय्यै दाने कैकेयीसुमित्रयोः समांशता स्यात् । तन्न युक्तम् । अन्यथा ज्येष्ठाकनिष्ठावैषम्यं न स्यात् । कैकेयी हि कनिष्ठा "न तेऽम्बा मध्यमा तात गर्हितव्या कथञ्चन" इत्यत्रेतरपत्न्यपेक्षया मध्यमात्वमुक्तम् । वल्लभायामपि कैकेय्यां सम्भोगविषये पक्षपातः, न तु धर्म्यसंविभागे । अतो बहुमानाय ज्यैष्ठ्यक्रमात् भागतारतम्यं कृतम्, अतएव 'सम्मानं मेनिरे' इति वक्ष्यति। ततोऽनेन भागेन रामो विष्णोरर्द्धांशः, लक्ष्मणः पादांशः, भरतशत्रुघ्नौ पादस्यार्द्धांशौ। नन्वेवं सति कथमुत्तरत्र भरतः साक्षाद्विष्णोश्चतुर्भागः, लक्ष्मणशत्रुघ्नौ विष्णोरर्द्धसमन्वितावित्युच्यते ? सत्यम्, 'साक्षाद्विष्णोश्चतुर्भागः' इत्यत्र साक्षाद्विष्णोः विष्णोरर्द्धस्य रामांशस्य चतुर्थो भाग इत्यर्थः । यद्वा चतुर्थस्य भागश्चतुर्भागः, अष्टमांश इत्यर्थः । अर्द्धसमन्विताविर्त्यत्राप्यर्द्धशब्द एकदेशवाची । "भिन्नं शकल

**प्रददौ चावशिष्टार्द्धं पायसस्यामृतोपमम् । अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः ॥ २८ ॥**

खण्डे वा पुंस्यर्द्धोऽर्द्धं समेंऽशके" इत्येकदेशेऽपि पुँल्लिङ्गार्द्धशब्दस्यानुशासनात् । अत्र प्राशनादिक्रमवशात् भरतस्य लक्ष्मणशत्रुघ्नाभ्यां ज्यैष्ठ्यम् । ननु लक्ष्मणस्य भरतात् ज्यैष्ठ्यमंशाधिक्यात् प्रथमप्राशनाच्च । अतएव वक्ष्यति–"ततो लक्ष्मणमासाद्य वैदेहीं च परन्तपः । अभ्यवादयत प्रीतो भरतो नाम चाब्रवीत् ॥ " इति । मैवम्, कैकेय्या एव प्रथमप्राशनं सुमित्राया द्वितीयांशग्रहणविलम्बेन प्राशनविलम्बात्, उत्पत्तिक्रमे तथोक्तेः । 'न संख्ये भरता

अवशिष्टार्द्धम् अवशिष्टमष्टमांशं सुमित्रायै पुनर्ददाविति सम्बन्धः । अर्धशब्दोऽत्र समप्रविभागपरः। अनुचिन्त्य कैकेय्या अपि सुमित्राया अधिकांशभाक्त्वं विचार्य, अत्र कौसल्यायाः सुमित्राकैकेयीभ्याम् अधिकांशदाने ज्येष्ठात्वम्, सुमित्रायाः पादोनार्धांशदाने मध्यमात्वम्, कैकेय्याः प्रेमास्पदत्वेऽपि कनिष्ठात्वमष्टमांशदाने

" अथ लक्ष्मणशत्रुघ्नौ सुमित्राऽजनयत्सुतौ । सर्वार्थकुशलौ वीरौ विष्णोरर्धसमन्वितौ ॥ " अर्धसमन्विताविर्त्यत्र अर्धशब्दः अंशे वर्तते, नियमाभावात्, अंशसमन्विताविर्त्यर्थः । यद्वा कौसल्यायै अर्धं ददौ, सुमित्रायै अर्धादर्द्धम् शेषेऽर्धे अर्धादर्धम्, अष्टमांशमित्यर्थः। कैकेय्यै अवशिष्टार्धम् अष्टमांशं विना अवशिष्टार्धं भागमित्यर्थः । पुनः सुमित्रायै अवशिष्टार्धं शेषमष्टमांशं ददौ । कौसल्यायै अर्धांशम्, सुमित्रायै द्विवारं च चतुर्थांशम्, कैकेय्यै चतुर्थांशं ददावित्यर्थः । जननप्रकारः–कौसल्या विष्णोरर्धं राममजनयत्, कैकेयी साक्षाद्विष्णोश्चतुर्थभागं भरतमजनयत् । विष्णोरर्धसमन्वितौ अंशसमन्वितौ सुतावजनयदित्यर्थः । यद्वा "विष्णो पुत्रत्वमागच्छ कृत्वाऽऽत्मानं चतुर्विधम्" इति देवैरुक्तत्वात् कौसल्यायै पायसार्धं ददौ । सुमित्रायै अर्धादर्धम्, कौसल्यायै यदर्धं दत्तं तस्मादेवार्धं ददावित्यर्थः ; कैकेय्यै अवशिष्टार्धम्, अवशिष्टे अर्धे अर्धं चतुर्थांशं ददावित्यर्थः । सुमित्रायै पुनरवशिष्टार्धम्, अवशिष्टं च तदर्धं च चतुर्थांशं ददावित्यर्थः । कौसल्यायै चतुर्थांशं सुमित्रायै द्विवारमंशं कैकेय्यै चतुर्थांशं ददौ । जननप्रकारः–विष्णोरर्धमित्यत्र पर्लांशे अर्धसमन्वितं राममजनयदित्यर्थः ॥ २६ ॥ २७ ॥

नुजः" इत्युक्तत्वात् । अभिवादनं तु सीतायामेवान्वेति । लक्ष्मणमासाद्य आलिङ्ग्येत्यर्थः । रामानुजत्वव्यवहार आसत्त्याधिक्यात् । एवंसति क्वचित् भरतस्य लक्ष्मणानुजत्वोक्तिः बहुव्रीहिसमासेन समाधेया । भरतानुज इति लक्ष्मणस्याभिधानात् सर्वप्राशनानन्तरमेव सुमित्रया भुक्तमिति । पुराणान्तरविरोधः कल्पभेदेन परिहार्यः । रामादिमूर्तयश्च पायसपरिणामाः, नतु शुक्रशोणितपरिणामाः । तत्प्राशनानन्तरं गर्भधारणवचनात् "न तस्य प्राकृता मूर्तिः" "न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः ।" इत्यादिस्मरणात् । पायसं च भगवतः षाड्गुण्यविग्रह एव । तद्वृद्धिश्च नान्नपानादि

एवं तासां ददौ राजा भार्याणां पायसं पृथक् ॥ २९ ॥ तास्त्वेतत्पायसं प्राप्य नरेन्द्रस्योत्तमाः स्त्रियः । सम्मानं मेनिरे सर्वाः प्रहर्षोदितचेतसः ॥३०॥ ततस्तु ताः प्राश्य तदुत्तमस्त्रियो महीपतेरुत्तमपायसं पृथक् । हुताशनादित्यसमानतेजसोऽचिरेण गर्भान् प्रतिपेदिरे तदा ॥३१॥ ततस्तु राजा प्रतिवीक्ष्य ताः स्त्रियः प्ररूढगर्भाः प्रतिलब्धमानसः । बभूव हृष्टस्त्रिदिवे यथा हरिस्सुरेन्द्रसिद्धर्षिगणाभिपूजितः ॥३२॥ इत्यार्षे श्रीरामायणे बालकाण्डे षोडशः सर्गः ॥१६॥

कृता, किंत्विक्ष्वाकुतेत्यादिकं सर्वमवसेयम् ॥२८॥ उपसंहरति—एवमिति ॥ २९ ॥ ता इति । सम्मानं राजकृतपायसप्रदानक्रमरूपं बहुमानम् । मेनिरे अनुमेनिरे । प्रहर्षोदितचेतसः उदितप्रहर्षमनसः । तारतम्येन दानं पौर्वापर्यं च ज्येष्ठानुक्रमकृतत्वेन सर्वासां सम्मतमेवासीदिति भावः ॥ ३० ॥ वक्तव्येऽपि यज्ञवृत्तान्तशेषे प्रसङ्गात् सौकर्याय नगरप्रवेशानन्तरभाविकथाशेषं संग्रहेण दर्शयति—तत इति । तत् पायसमित्यन्वयः । हुताशनादित्यशब्दौ तत्तेजःपरौ ॥ ३१ ॥ तत इति । प्रतिलब्धमानसः स्वस्थचित्तः ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

कारणम् । वल्लभायां संभोगकर्मणि हि पक्षपातः, न धर्मविभागकर्मणि, अतोऽनेन भरतशत्रुघ्नौ पादस्यार्धम् ॥ २८–३१ ॥ तत इति । प्रतिलब्धमानसः प्रतिष्ठितचित्तः । यद्वा पूर्णमनोरथ इत्यर्थः । सुरेन्द्रेत्यादि राजविशेषणम् । भगवदंशगर्भसम्भवेन तैः पूजितो मनसा स्तुतः ॥ ३२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां षोडशः सर्गः ॥ १६ ॥

विष्णोरन्तर्द्धानानन्तरं कार्यद्वयं प्रवृत्तम्, पायसहस्तस्याग्निपुरुषस्योत्थानं देवान् प्रति ब्रह्मनियोगश्च । तत्र वाचःक्रमवर्तित्वेन प्रथमोपस्थितमग्निपुरुषोत्थानं तत्प्रसक्तं च सर्वमुक्त्वा अथ ब्रह्मनियोगतत्फले दर्शयति सप्तदशे-पुत्रत्वमित्यादि । गते गन्तुं प्रवृत्ते । भगवान् भाविकार्यज्ञः ॥ १ ॥ सत्येति । सह अप्राधान्येन अयन्त इति सहायाः किङ्कराः तान् । कामरूपिणः कपटराक्षसयुद्धक्षमशरीरिणः ॥ २ ॥ उक्तसहायान् विशेषयति त्रिभिः-मायेत्यादि । माया आश्चर्यशक्तिः, तद्विदः । जवे वेगे विषये । नयज्ञान्नीतिज्ञान् । असंहार्यान्, परैरिति शेषः । उपायज्ञान् अनागतविधानज्ञान् । यद्वा नय

पुत्रत्वं तु गते विष्णौ राज्ञस्तस्य महात्मनः । उवाच देवताः सर्वाः स्वयम्भूर्भगवानिदम् ॥ १ ॥ सत्यसन्धस्य वीरस्य सर्वेषां नो हितैषिणः । विष्णोः सहायान् बलिनः सृजध्वं कामरूपिणः ॥ २ ॥ मायाविदश्च शूरांश्च वायुवेगसमान् जवे । नयज्ञान् बुद्धिसम्पन्नान् विष्णुतुल्यपराक्रमान् ॥ ३ ॥ असंहार्यानुपायज्ञान् सिंहसंहननान्वितान् । सर्वास्त्रगुणसम्पन्नानमृतप्राशनानिव ॥ ४ ॥ अप्सरस्सु च मुख्यासु गन्धर्वीणां तनूषु च । सृजध्वं हरिरूपेण पुत्रांस्तुल्यपराक्रमान् ॥५॥ पूर्वमेव मया सृष्टो जाम्बवानृक्षपुङ्गवः । जृम्भमाणस्य सहसा मम वक्त्रादजायत ॥६॥

ज्ञान् युक्तिशालिनः । उपायज्ञान् सामाद्युपायज्ञान् । सिंहसंहननान्वितान् सिंहतुल्यसंस्थानैर्युक्तान् । सर्वास्त्राणां यो गुणः शक्तिस्तेन सम्पन्नान् । अमृतं प्राश्नन्तीत्यमृतप्राशनाः । कर्त्तरि ल्युट् । पीतामृतानिव, मृत्युरहितानित्यर्थः । हरिरूपेण वानररूपेणोपलक्षितान् । प्रायिकाभिप्रायमिदम् । तुल्यपराक्रमान् आत्मसदृशपराक्रमान् ॥३-५॥ देवत्वाविशेषात् भवतापि पुत्रोत्पादनं कार्यमिति मावोचध्वमित्याह-पूर्वमिति । सृष्टः, भाविरामसहायबुद्ध्येति

पुत्रत्वमिति । गते गन्तुमुपक्रान्ते ॥ १-३ ॥ असंहार्यान् परैः संहर्तुमशक्यान् । दिव्यसंहननान्वितान् दिव्यदेहयुक्तान् । सर्वास्त्रगुणसम्पन्नान् अस्त्रप्रयोगोपसंहारादिगुणसंयुक्तान् । अमृतं प्राश्नन्तीति अमृतप्राशनान् । गन्धर्वीणां गन्धर्वपत्नीनाम् । सृजध्वम् । हरिरूपेणेत्यभिधानं "तस्मान्मद्रूपसंयुक्ता मद्वीर्यसमतेजसः । उत्पत्स्यन्ति वधार्थं तु कुलस्य तव वानराः ॥" इति रावणविषयं नन्दिकेश्वरवाक्यं हृदि कृत्वा । तुल्यपराक्रमान् स्वानुरूपपराक्रमान् ॥४॥५॥ पूर्वमेवेति । पूर्वमेव रावण

---

१ दिव्यसंहननान्वितान् । इति तीर्थीयपाठः । २ तनूषु च । यक्षपन्नगकन्यासु ऋक्षविद्याधरीषु च । किन्नरीणां च गात्रेषु वानरीणां तनूषु च ॥ इत्यधिकः पाठः ॥

शेषः। सृष्टिप्रकारमाह—जृम्भमाणस्येति। स इति शेषः। अत्र पार्वतीशापेन स्वक्षेत्रे पुत्रोत्पादनासम्भवादप्सरःप्रभृतयः क्षेत्रतयोक्ताः। गुणवत्पुत्रलाभाय मुख्यास्वित्युक्तम्। अयोनिजत्वेन सद्यःप्रवृद्धत्वसिद्ध्ये तनूष्वित्युक्तम्। नन्दिकेश्वरशापानुसारेण हरिरूपेणेत्युक्तम्। वक्ष्यति हि दिग्विजये रावणंप्रति नन्दी "तस्मान्मद्रूपसंयुक्ता मद्वीर्यसमतेजसः। उत्पत्स्यन्ति वधार्थं हि कुलस्य तव वानराः॥" इति॥ ६॥ ते तथेति। प्रतिश्रुत्य अङ्गीकृत्य। एवं वक्ष्यमाणरीत्या॥ ७॥ ऋषय इति। वनचारिणः वानरान्॥८॥ वानरेन्द्रमिति। महेन्द्राभं महेन्द्रपर्वताभम्। ननु वालिनः कथं रामसहायार्थत्वम्? रामवध्यत्वात्। उच्यते—अङ्गदोत्पादनद्वारा तस्य साहाय्यकरणात्। किंच यदि वाली नोत्पद्येत तदा सर्वेषां वानराणां सहायत्वं न स्यात्, सति च

ते तथोक्ता भगवता तत् प्रतिश्रुत्य शासनम्। जनयामासुरेवं ते पुत्रान् वानररूपिणः॥ ७॥ ऋषयश्च महात्मानः सिद्धविद्याधरोरगाः। चारणाश्च सुतान्वीरान् ससृजुर्वनचारिणः॥ ८॥ वानरेन्द्रं महेन्द्राभमिन्द्रो वालिनमूर्जितम्। सुग्रीवं जनयामास तपनस्तपतां वरः॥९॥ बृहस्पतिस्त्वजनयत्तारं नाम महाहरिम्। सर्ववानरमुख्यानां बुद्धिमन्तमनुत्तमम्॥ १०॥ धनदस्य सुतः श्रीमान् वानरो गन्धमादनः। विश्वकर्मा त्वजनयन्नलं नाम महाहरिम्॥ ११॥ पावकस्य सुतः श्रीमान्नीलोऽग्निसदृशप्रभः। तेजसा यशसा वीर्यादत्यरिच्यत वानरान्॥ १२॥ रूपद्रविणसंपन्नावश्विनौ रूपसम्मतौ। मैन्दं च द्विविदं चैव जनयामासतुः स्वयम्॥ १३॥

वालिनि सुग्रीवविरोधिनि सुग्रीवमैत्र्या वानरसहायसिद्धिः। वालिमैत्र्यां तु रावणः क्षणादेव सीतां दद्यात्। अतः सुग्रीवसख्यनिमित्तत्वाद्वालिनो रामसहायत्वमिति। तपनः सूर्यः॥९॥ बृहस्पतिरिति। सर्ववानरमुख्यानामिति निर्द्धारणे षष्ठी। बृहस्पतिपुत्रत्वादनुत्तमं बुद्धिमन्तम्॥ १०॥ धनदस्येति। कुबेरपुत्रत्वात् श्रीमानित्युक्तम्। महाहरिं सर्वकार्यनिर्माणदक्षम्॥११॥ पावकस्येति। अत्यरिच्यत अतिशयितोऽभूत॥१२॥ रूपेति। रूप

वधार्थं विष्णुरवतरिष्यतीति जाम्बवान् मया सृष्टः। जाम्बवतः सृष्टिप्रकारमाह—जृम्भमाणस्येति॥ ६–८॥ वानरेन्द्रमिति। पूर्वमेव मया सृष्ट इति श्लोकस्थं पूर्वमितिपदमत्राप्यनुषञ्जनीयम्। यथाश्रुतत्वे भगवदवतारसमये वालिसुग्रीवयोरुत्पत्तिरिति। रामसहायसृष्टिप्रकरणे वालिसृष्टिकथनं साक्षाद्रामसहायकत्वाभावेऽपि "आत्मा वै पुत्रनामासि" इति श्रुत्युक्तप्रकारेण तस्यापि स्वपुत्रभूताङ्गदद्वारा सहायकत्वात। अत्यरिच्यत अतिशेते स्म॥ ९–१२॥ रूपद्रविणसम्पन्नौ

मेव द्रविणं धनं तेन सम्पन्नौ अतएव रूपसम्मता रूपेण प्रख्यातौ । ... मानसस्रुष्टिरुच्यते ॥ १३ ॥ वरुण इति । पर्जन्यो वर्षाभिमानिदेवता ॥१४॥मारुतस्येति । वज्रसंहननोपेतः वज्रवदभेद्यशरीरयुक्तः॥१५॥ रुद्रो ब्रह्मणा नियुक्तोऽपि रक्षःपक्षपातित्वान्न कञ्चन सृष्टवान् । एवं प्रधानवानरसृष्टि मुक्त्वा क्षुद्रवानरसृष्टिं सङ्ग्रहेणाह–त इति । रता आसक्ताः ॥ १६ ॥ एवं वानरसृष्टिमुक्त्वा ऋक्षादिसृष्टिं प्राधान्येनाह–मेर्विति । वपुष्मन्तः दृढवपुष्काः अतएव मेरुमन्दरसङ्काशाः । ऋक्षा भल्लूकाः, गोपुच्छा गोलांगूलाः । अभिजज्ञिरे जाताः । क्षिप्रमित्यनेन मानसस्रुष्टिरुच्यते ॥ १७ ॥ यस्येति । रूपं

वरुणो जनयामास सुषेणं नाम वानरम् । शरभं जनयामास पर्जन्यस्तु महाबलम् ॥ १४॥ मारुतस्यात्मजः श्रीमान् हनुमान्नाम वानरः । वज्रसंहननोपेतो वैनतेयसमो जवे ॥ १५॥ ते सृष्टा बहुसाहस्रा दशग्रीववधे रताः । अप्रमेयबला वीरा विक्रान्ताः कामरूपिणः ॥ १६ ॥ मेरुमन्दरसङ्काशा वपुष्मन्तो महाबलाः । ऋक्षवानरगोपुच्छाः क्षिप्रमेवाभि जज्ञिरे ॥ १७ ॥ यस्य देवस्य यद्रूप वेषो यश्च पराक्रमः । अजायत समस्तेन तस्य तस्य सुतः पृथक् ॥ १८ ॥ गोलांगूलीषु चोत्पन्नाः केचित्सम्मतविक्रमाः । ऋक्षीषु च तथा जाता वानराः किन्नरीषु च ॥ १९॥ देवा महर्षिगन्धर्वाः तार्क्ष्या यक्षा यशस्विनः । नागाः किम्पुरुषाश्चैव सिद्धविद्याधरोरगाः ॥ २० ॥

सौन्दर्यम्, वेषः संस्थानविशेषः । तस्य तस्य देवस्य तेन रूपादिना समः सुतः, पृथक् अन्योन्यविलक्षणः अजायत, मुखमात्रे वानराकारत्वेऽपि संस्था नादौ सर्वे पितृतुल्या एवासन्नित्यर्थः ॥ १८ ॥ विजातीयास्वपि वानरोत्पत्तिमाह–गोलांगूलीष्विति । सम्मतविक्रमाः प्रसिद्धविक्रमाः । केचिद्वानरा गोलां गूलीषूत्पन्नाः, केचिद्वानराः ऋक्षीषूत्पन्नाः, केचिद्वानराः किन्नरीषु चोत्पन्ना इति योजना ॥ १९ ॥ उत्पादकस्य वैविध्यमाह–देवा इत्यादिश्लोकत्रय

द्रविणं नाम बलं शौर्यं च । रूपसम्मतौ रूपेण सम्मतौ प्रसिद्धौ ॥ १३ ॥ वरुण इति । पर्जन्यः वृष्ट्यभिमानिदेवता । गन्धमादनसुषेणशरभाणामत्र प्रतिपादितजन्म प्रकार एव वास्तवः । युद्धकाण्डे रावणं प्रति शार्दूलेन "सुषेणश्चात्र धर्मात्मा पुत्रो धर्मस्य वीर्यवान्" इत्यादिना प्रकारान्तरेणोत्पत्तिकथनं तस्य यथावस्थितजन्म परिज्ञानाभावात ॥ १४–१७ ॥ यस्य देवस्येति । रूपं सौन्दर्यं, वेषः संस्थानविशेषः ॥ १८ ॥ १९ ॥ देवा इत्यादि । तार्क्ष्याः तार्क्ष्यवर्गीयाः । नागा महाकुल

१ वानरर्षभम् । इति पाठान्तरम् । २ जवे ॥ सर्ववानरमुख्येषु बुद्धिमान् बलवानपि । इत्यधिकः पाठः ।

मेकान्वयम् । तार्क्ष्याः गरुडादयः । नागा दिग्गजाः, उरगाः वासुक्यादयः । तत्र विष्ण्ववतारकाले ॥ २०–२२ ॥ तेषां प्रभावमाह पञ्चभिः—कामेति । सर्वत्र सर्वे इत्यनुषञ्जनीयम् । सर्वे कामरूपबलोपेता अभवन्नित्येवं योजनीयम् । सर्वास्त्रकोविदाः देवांशत्वेन स्वयंप्रतिभाताशस्त्रप्रहारपरिहारोपायाः, न त्वस्त्रप्रयोक्तारः । 'शिलाप्रहरणाः' इत्युक्तेः । विचालयेयुरित्यादिषु "शकि लिङ् च" इति लिङ् । "कम्पने चलिः" इति णिच्येऽपि ह्रस्वाभावश्छान्दसः । आप्लवेयुः सन्तरेयुः । प्रव्रजतः वेगेन गच्छतः ॥ २३–२७ ॥ अन्येषामपरिच्छेद्यत्वाद्यूथपसङ्ख्यानमाह—ईदृशानामिति । शतं शत

बहवो जनयामासुर्हृष्टास्तत्र सहस्रशः । वानरान् सुमहाकायान् सर्वान् वै वनचारिणः ॥ २१ ॥ अप्सरस्सु च मुख्यासु तथा विद्याधरीषु च । नागकन्यासु च तथा गन्धर्वीणां तनूषु च ॥ २२ ॥ कामरूपबलोपेता यथाकामं विचारिणः । सिंहशार्दूलसदृशा दर्पेण च बलेन च ॥ २३ ॥ शिलाप्रहरणाः सर्वे सर्वे पादपयोधिनः । नखदंष्ट्रायुधाः सर्वे सर्वे सर्वास्त्रकोविदाः ॥ २४ ॥ विचालयेयुः शैलेन्द्रान् भेदयेयुः स्थिरान् द्रुमान् । क्षोभयेयुश्च वेगेन समुद्रं सरितांपतिम् ॥ २५ ॥ दारयेयुः क्षितिं पद्भ्यामाप्लवेयुर्महार्णवम् । नभःस्थलं विशेयुश्च गृह्णीयुरपि तोयदान् ॥ २६ ॥ गृह्णीयुरपि मातङ्गान् मत्तान् प्रव्रजतो वने । नर्दमानाश्च नादेन पातयेयुर्विहङ्गमान् ॥ २७ ॥ ईदृशानां प्रसूतानि हरीणां कामरूपिणाम् । शतं शतसहस्राणि यूथपानां महात्मनाम् ॥ २८ ॥ ते प्रधानेषु यूथेषु हरीणां हरियूथपाः । बभूवुर्यूथपश्रेष्ठा वीरांश्चाजनयन् हरीन् ॥ २९ ॥ अन्ये ऋक्षवतः प्रस्थानुपतस्थुः सहस्रशः । अन्ये नानाविधान् शैलान् काननानि च भेजिरे ॥ ३० ॥

सहस्राणि. शतलक्षाणीत्यर्थः ॥ २८ ॥ प्रधानप्रधानानाह—त इति । ते प्रागुक्ताः सुग्रीवादिसुषेणान्ता यूथपाः । प्रधानेषु हरीणां यूथेषु समूहेषु । यूथपश्रेष्ठाः बभूवुः, वीरान् हरीनजनयंश्च ॥ २९ ॥ तेषां स्थानमाह—अन्य इति । ऋक्षवतः पर्वतविशेषस्य, प्रस्थान् सानूनि ॥ ३० ॥

प्रसूताः सर्वाः ॥२०–२४॥ चालयेयुः चालयितुं शक्नुयुः ॥२५॥ आप्लवेयुः शोषयेयुः ॥२६॥ प्रव्रजतः अनर्गलप्रचारान् । नर्दमानान् शब्दायमानान् ॥२७–२९॥ अन्य

राजयुवराजमन्त्रिणो दर्शयति—सूर्येत्यादिसार्द्धश्लोकेन । सुग्रीवं युवराजं, वालिनं राजानं, नलादीन् मन्त्रिणः ॥ ३१ ॥ तेषां दुःशासनत्वमाह—त इति । तार्क्ष्यो गरुडः ॥ ३२ ॥ सर्वेषां शासितारमाह—तांश्चेति ॥ ३३ ॥ साहाय्यसम्पत्तिपौष्कल्यं दर्शयति—तैरिति । अर्णवः अर्णववद्वीपम् । विविधसंस्थानैः स्थूलसूक्ष्महस्वदीर्घादिविविधदेहसंस्थानवद्भिः । नानाव्यञ्जनलक्षणैः नानात्वाभिव्यञ्जकासाधारणधर्मवद्भिः ॥ ३४ ॥ उक्तमेवार्थं पुनः सर्गान्ते संगृह्य दर्शयति—तैरिति । भीमशरीररूपैः भयङ्करशरीरवेषैः । रामसहायहेतोः रामसाहाय्यार्थम् । भावप्रधानो निर्देशः ॥ ३५ ॥ नन्वस्मिन्सर्गे "धनदस्य

सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् । भ्रातरावुपतस्थुस्ते सर्व एव हरीश्वराः । नलं नीलं हनूमन्तमन्यांश्च हरियूथपान् ॥ ३१ ॥ ते तार्क्ष्यबलसम्पन्नाः सर्वे युद्धविशारदाः । विचरन्तोऽर्दयन् दर्पात्सिंहव्याघ्रमहोरगान् ॥ ३२ ॥ तांश्च सर्वान् महाबाहुर्वाली विपुलविक्रमः । जुगोप भुजवीर्येण ऋक्षगोपुच्छवानरान् ॥ ३३ ॥ तैरियं पृथिवी शूरैः सपर्वतवनार्णवा । कीर्णा विविधसंस्थानैर्नानाव्यञ्जनलक्षणैः ॥ ३४ ॥ तैर्मेघवृन्दाचलकूटकल्पैर्महाबलैर्वानरयूथपालैः । बभूव भूर्भीमशरीररूपैः समावृता रामसहायहेतोः ॥ ३५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तदशः सर्गः ॥ १७ ॥

पुत्रः श्रीमान् वानरो गन्धमादनः । वरुणो जनयामास सुषेणं नाम वानरम् । शरभं जनयामास पर्जन्यस्तु महाबलम् ॥" इत्युच्यते । युद्धकाण्डे तु रावणं प्रति शार्दूलवाक्ये "सुषेणश्चात्र धर्मात्मा पुत्रो धर्मस्य वीर्यवान् । पुत्रा वैवस्वतस्याथ पञ्च कालान्तकोपमाः । गजो गवाक्षो गवयः शरभो इति । ऋक्षवतः पर्वतस्य प्रस्थान् सानून् । अवतस्थुः असेवन्त ॥ ३०–३३ ॥ तैरिति । नानाव्यञ्जनलक्षणैः पराक्रमप्रयुक्तासाधारणधर्मो व्यञ्जनम्, तत्तच्छरीरासाधारणधर्मो लक्षणम् । यद्वा व्यञ्जनं तत्तच्छरीरासाधारणो धर्मः, लक्षणम् तत्तज्जातीयासाधारणो धर्मः । रामसहायहेतोः भीमशरीररूपैः भयजनकशरीराकृतिभिः ॥ ३४ ॥ ३५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां सप्तदशः सर्गः ॥ १७ ॥

मुनि०—नन्वत्र दशरथयज्ञभागार्थमागतेन ब्रह्मणा आदिष्टा देवाः ऋषिविद्याधरोरगचारणाश्च पुत्रान् ससृजुरित्यनेन दशरथयज्ञानन्तरं वालिप्रभृतयो जाता इति द्योत्यते। रामस्य एकचत्वारिंशे वर्षे रावणो हतः । एतन्मध्ये वाली जातो मृतश्चाभवदित्युक्तिश्च न सङ्गच्छते, पुराणान्तरेषु वालिसुग्रीवादयो अमृतमथनादिष्वपि स्थिता इत्युक्तत्वात् कथमिदानीं जाता इत्युक्तमिति चेत्; उच्यते-ब्रह्मा इन्द्रादीन् प्रति सृजध्वमिति नोक्तवान्, पूर्वमेव इन्द्रादिभिः सृष्टत्वात्, किन्तु रामसाहाय्यार्थं बहुवानरसृष्ट्यर्थं चारणऋषिविद्याधरादीन् सामान्यदेवान् सर्वांश्च सृजध्वमित्युक्तवान् अतएव ऋषिसिद्धविद्याधरोरगादयश्च ससृजुरित्युक्तम्।

गन्धमादनः ॥" इति । कथमिदं सङ्गच्छते ? उच्यते—अत्र वाल्मीकिनोक्तमेव तथ्यम् । "न ते वागनृता काव्ये काचिदत्र भविष्यति" इति ब्रह्मवरप्रसादात् । शार्दूलस्तु भ्रान्त्योक्तवान् "रुधिरासिक्तसर्वाङ्गो विह्वलश्चलितेन्द्रियः ।" इति तत्रैवोक्तेः । अत्रेदं शङ्क्यते; ऋष्यशृङ्गेण पुत्रेष्ट्युपक्रमानन्तरं देवादिसंमेलनम्, ततो विष्णोरवतितीर्षा, पुत्रत्वं तु गते विष्णौ वानरोत्पत्तिरित्युक्तम् । तद्विरुध्यते, वालिसुग्रीवयो रावणदिग्विजयकालिकत्वात् । वक्ष्यत्युत्तरकाण्डे "अर्जुनेन विमुक्तस्तु रावणो राक्षसाधिपः" इत्यारभ्य "ततः कदाचित्किष्किन्धां नगरीं वालिपालिताम् । गत्वाह्वयति युद्धाय वालिनं हेममालिनम् ॥" इत्यादिना । तथा च कार्तवीर्यार्जुनकालिको वाली कथं रामसमवयस्कः स्यात् ? किञ्च "भगवन् राक्षसः क्रूरो यदाप्रभृति मेदिनीम् । पर्यटत् किं तदा लोकाः शून्या आसन् द्विजोत्तम ॥ राजा वा राजमात्रो वा किं तदा नात्र कश्चन । धर्षणां येन न प्राप्तो रावणो राक्षसेश्वरः ॥" इति दिग्विजयवृत्तान्ते रामेण पृष्टे अगस्त्येनार्जुनवालिभ्यां परिभव उच्यमानोऽर्जुनवालिनोरेककालत्वमवगमयति । अपि च मयो रावणाय मन्दोदरीप्रदानकाले "द्वौ सुतौ तु मम त्वस्यां भार्यायां संबभूवतुः । मायावी प्रथमस्तावद् दुन्दुभिस्तदनन्तरः ॥" इत्युक्तवान् । तत्र दुन्दुभिर्यौवनमदाद्वरदानाच्च मत्तो वालिना हत इत्युच्यते, अतो वालिनो रावणदिग्विजयकालिकत्वं व्यज्यते । सुग्रीवश्च वालिभयात् परिभ्रमन् दुन्दुभिकलेवरप्रक्षेपकृतमतङ्गशापानन्तरम् ऋश्यमूके प्रत्यतिष्ठत् । अतः सुग्रीवस्यापि वालितुल्यकालत्वं गम्यते । एवं मैन्दद्विविदादयोऽपि चिरकालस्थायिनोऽवगम्यन्ते । वक्ष्यति रावणं प्रति शार्दूलः—"मैन्दश्च द्विविदश्चोभौ ताभ्यां नास्ति समो युधि । ब्रह्मणा समनुज्ञातावमृतप्राशिनावुभौ ॥" इति । तेन तयोरमृतमथनकालवर्तित्वं प्रतीयते । सारणवाक्ये च—"एष गन्धर्वकन्यायामुत्पन्नः कृष्णवर्त्मनः । तदा दैवासुरे युद्धे साह्यार्थं त्रिदिवौकसाम्" इति क्रोधनस्य देवासुरयुद्धे व्यापारकथनात् चिरन्तनत्वम् । तत्प्रायपठितानामन्येषामपि वालिसुग्रीवमन्त्रिप्रभृतीनां सिद्धं चिरकालत्वम् । एवमन्यत्रापि वानरयूथपानामतिचिरस्थायित्वं व्यञ्जनावृत्त्यावगम्यते । अतः कथमेषां रामावतारकालिकत्वमत्रोच्यते ? इति । अत्रास्मद्गुरुचरणाः—यद्यपि पूर्वसर्गान्ते विष्णोर्गर्भप्रवेशमुक्त्वा "पुत्रत्वं तु गते विष्णौ" इत्यारभ्य ब्रह्मानुशासनं कथितम्, तथापि "उवाच देवताः सर्वाः स्वयंभूर्भगवानिदम्" इत्यादिना सामान्येन देवता उद्दिश्य ब्रह्मा सन्दिष्टवान् । "ते तथोक्ता भगवता तत्प्रतिश्रुत्य शासनम् । जनयामासुरेवं ते पुत्रान् वानररूपिणः ॥" इति सामान्येन दैवैर्वानरसृष्टिश्चोक्ता । अथ ब्रह्मणो जाम्बवत्सृष्टिवत् पूर्वसिद्धामिन्द्रादिभ्यो वाल्यादिसृष्टिमनुवदति—"वानरेन्द्रं महेन्द्राभमिन्द्रो वालिन

"वानरेन्द्रं नरेन्द्राभमिन्द्रो वालिनमूर्जितम् । सुग्रीवं जनयामास तपनस्तपतां वरः ॥" इति किमर्थमत्रोक्तमिति चेत्; इन्द्रपुत्रो वाली, सूर्यपुत्रः सुग्रीवः, वायुपुत्रो हनुमानित्यादिप्रकारेणैतस्य पुत्रोऽयमिति सर्वेषां विज्ञानार्थमिति न कश्चिद्विरोधः । तस्मादिन्द्रादयो वालिप्रभृतीन् पूर्वमेव जनयामासुरिति तात्पर्यम् ॥ ३२ ॥ ३३ ॥

भूर्जितम् ” इत्यादिना । अतएव हि वालिनं जनयामासेत्युक्तम्, न तु तदा जनयामासेति । अन्यत्र तु “ बहवो जनयामासुर्हृष्टास्तत्र सहस्रशः ” इति तत्कालवाची तत्रशब्दः प्रयुक्तः । इन्द्रादयः खल्वेवममन्यन्त ब्रह्मनियोगानन्तरं किमपूर्वसर्गेण पूर्वमन्यार्थमुत्पन्ना एव साहाय्यं करिष्यन्तीति । यैस्तु पूर्वं पुत्रा नोत्पादितास्ते पुनस्तदा जनयामासुः । अतएव “ एष गन्धर्वकन्यायामुत्पन्नः कृष्णवर्त्मनः । तदा दैवासुरे युद्धे साह्यार्थं त्रिदिवौकसाम् ॥” इत्यादिना क्रोधनादीनामन्यार्थं सृष्टिरुच्यते । तस्मान्न कोऽपि विरोध इत्याहुः । यद्वा रामावतारकाल एव वाल्यादिजन्म । वालिजयश्च नार्जुनजयाव्यवहितो त्तरकालिकः, ततःशब्दस्यानन्तर्यमात्रपरत्वात् । अतएव “ ततः कदाचित् ” इत्युक्तम् । अगस्त्येनार्जुनवालिविजययोर्युगपत्कथनं रावणजयन्येन, कृष्णः कंसशिशुपालौ जघानेतिवत् । दुन्दुभिश्च वरदानेन सदा युवा मत्तश्च । ततश्च तस्य बहुकालानन्तरमपि वालिना युद्धं सम्भवत्येव । एव मन्यदप्यूह्यम् । सर्वथोपक्रमावगतः क्रमो न बाधितव्यः । दैवासुरे युद्धे साह्यार्थमित्यत्रापि साहाय्यसमर्थ इत्यर्थो बोध्यः । अमृतप्राशिनौ अमृतप्राशितुल्यावित्यर्थः । यद्वा अयं ब्रह्मानुशासनप्रकारः । प्राचीन एव प्रसङ्गादद्य कविनोपवर्ण्यते । पुत्रत्वं तु गते विष्णौ, गन्तुं व्यवसित इत्यर्थः । व्यवसायश्च विष्णोर्ब्रह्मणा विविक्ते प्रार्थनात् । अतएव पूर्वसर्गे “ हन्तायं विदितस्तस्य वधोपायो दुरात्मनः ” इत्युक्तम् । अतएवामुं वृत्तान्तं सनत्कुमारो विदित्वा सुमन्त्रायोवाचेति बोध्यम् । ब्रह्मप्रार्थनं च रावणस्य मानुषादन्यत्र भयं नास्ति, त्वम् ऋश्यशृङ्गेण यक्ष्यमाणस्य दशरथस्य पुत्रो भवेति । अतएव कृतसङ्केततया विष्णुरुपयात इत्युक्तम् । यद्वा “ ततो देवाः सगन्धर्वाः ” इत्यादिकात् पूर्वसर्गात्प्रभृति ब्रह्मलोक वृत्तान्तः । तस्मिन्सदसि ब्रह्मसदसीत्यर्थः । अतएव स्वलोकमागच्छेत्युक्तम् । न तु गच्छेति । तथा चैवं सङ्गतिः—पुत्रकामेष्टिपर्यन्तमुक्त्वा तत्राग्नि पुरुषाविर्भावोपोद्घातत्वेन चिरन्तनवृत्तान्तमुपक्षिपति ततो देवा इत्यादि । तत इति प्रस्तावान्तरारम्भार्थः । अथ “ पितरं रोचयामास तदा दशरथं नृपम् ” इत्यन्ते विष्णुवृत्तान्तेऽभिहिते पुत्रत्वं तु गते अभ्युपगते इति पुत्रत्वाङ्गीकारानन्तरं देवांशवानरोत्पत्तेर्वक्तव्यत्वेऽपि तं वृत्तान्तं तत्रावस्थाप्य “स कृत्वा निश्चयं विष्णुरामन्त्र्य च पितामहम् । अन्तर्द्धानं गतो देवैः पूज्यमानो महर्षिभिः ॥ ” इत्यादिना विष्णुवृत्तान्तमेवा नुक्रम्य गर्भप्रवेशपर्यन्तमुक्त्वा प्रागवस्थापितं देववृत्तान्तमेव “ पुत्रत्वं तु गते ” इत्यादिना पुनः प्रतिपादयति । एतावद्वृत्तान्तकालस्य देवमानेनाल्पत्वेऽपि मनुष्यमानेन बहुवर्षा गताः, रेवतीवरप्रार्थनावत् । अतो भागग्रहार्थं समवेत्य ब्रह्मसदसि गत्वा कार्यं विज्ञाप्य ततोऽश्वमेधभागान् गृहीत्वा गता देवा इति सर्वं समञ्जसम् ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

'कोसलो नाम मुदितः स्फीतो जनपदो महान्' इत्यारभ्य भगवतोऽवतारनिमित्तान्युक्तानि। अथावतारं दर्शयत्यष्टादशे—निर्वृत्ते त्वित्यादि । अत्र 'पुत्रोत्पत्तिं विचिन्तयन्' इत्येवमन्तो ग्रन्थः 'हुताशनादित्यसमानतेजसोऽचिरेण गर्भान् प्रतिपेदिरे तदा' इत्येतच्छेपोऽनूद्यते । निर्वृत्ते समाप्ते



## श्रीरामावतारघट्टः ।

निर्वृत्ते तु क्रतौ तस्मिन् हयमेधे महात्मनः । प्रतिगृह्य सुरा भागान् प्रतिजग्मुर्यथागतम् ॥ १॥ समाप्तदीक्षानियमः पत्नीगणसमन्वितः । प्रविवेश पुरीं राजा सभृत्यबलवाहनः ॥ २ ॥ यथार्हं पूजितास्तेन राज्ञा वै पृथिवीश्वराः । मुदिताः प्रययुर्देशान् प्रणम्य मुनिपुङ्गवम् ॥ ३ ॥ श्रीमतां गच्छतां तेषां स्वपुराणि पुरात्ततः । बलानि राज्ञां शुभ्राणि प्रहृष्टानि चकाशिरे ॥ ४ ॥ गतेषु पृथिवीशेषु राजा दशरथस्तदा । प्रविवेश पुरीं श्रीमान् पुरस्कृत्य द्विजोत्तमान् ॥ ५ ॥ शान्तया प्रययौ सार्धमृश्यशृङ्गः सुपूजितः । अन्वीयमानो राज्ञाथ सानुयात्रेण धीमता ॥६॥ एवं विसृज्य तान् सर्वान् राजा सम्पूर्णमानसः । उवास सुखितस्तत्र पुत्रोत्पत्तिं विचिन्तयन् । ततो यज्ञे समाप्ते तु ऋतूनां षट् समत्ययुः ॥७॥ ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ । नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ॥८॥

हयमेधे, पुत्रेष्टिसहित इति शेषः ॥१॥ समाप्तेति । दीक्षार्थो नियमो दीक्षानियमः । प्रविवेश प्रवेष्टुमुपचक्रमे। आदिकर्मद्योतकः प्रशब्दः ॥२॥ यथेति । मुनिपुङ्गवं वसिष्ठम् ॥ ३ ॥ श्रीमतामिति । शुभ्राणि दशरथदत्तवस्त्रादिभिः ॥४॥ गतेष्विति । द्विजोत्तमान् वसिष्ठादीन् ॥५॥ शान्तयेति । अथ नगरप्रवेशानन्तरम् । सानुयात्रेण सभृत्येन राज्ञा रोमपादेन अन्वीयमानः अनुगम्यमानः ॥६॥ एवमिति । एवम् ऋश्यशृङ्गवत् । तान् द्विजोत्तमान्, सम्पूर्णमानसः सम्पूर्णमनोरथः । तत इत्यर्धमेकम् ॥ ७ ॥ अथ भगवतः प्रादुर्भावं दर्शयति त्रिभिः—ततश्चेत्यादि । ततः अश्वमेधसमाप्त्यपेक्षया पायसोप



प्रासङ्गिकदेवतावतारमुक्त्वा प्रकृतं प्रधानावतारमाह—निर्वृत्त इत्यादि। पुत्रोत्पत्तिं विचिन्तयन्नित्यन्तो वृत्तानुवादः ॥१॥ समाप्तेति । प्रविवेश प्रवेष्टुमुपचक्रमे, उत्तरत्र प्रवेशस्य वक्ष्यमाणत्वात ॥ २ ॥ यथार्हमिति । मुनिपुङ्गवं वसिष्ठम् ॥३-५॥ शान्तयेति । सानुयात्रेण सभृत्येन ॥६॥७ ॥ ततश्चेत्यादि । नावमिके नवम्याम् ।

योगाद्वा । स च वैशाखादौ भवेत् । द्वादशे "तस्य पूरणं–" इति डट् । चैत्री पौर्णमास्यास्मिन्निति चैत्रः । "सास्मिन् पौर्णमासीति" इति संज्ञायामण् । चकारो वारसमुच्चयार्थः । नावमिके नवम्याम् । विनयादित्वात्स्वार्थे ठक् । "तिथयो द्वयोः" इति तिथिशब्दस्य पुँल्लिङ्गस्यापि सम्भवात् ङीवभावः । अदितिर्देवता यस्य तददितिदैवतम्, तस्मात् । देवतान्तात्तादर्थ्ये यक् छान्दसः । नक्षत्रे पुनर्वस्वोरित्यर्थः । "पुनर्वसूनक्षत्रमदितिर्देवता" इति श्रुतेः । पञ्चसु ग्रहेषु स्वोच्चसंस्थेषु सूर्यगुरुशुक्राङ्गारकशनिषु स्वोच्चस्थानस्थितेषु सत्सु । उच्चस्थानलक्षणमुक्तं वराहमिहिरेण "अजवृषभमृगाङ्गनाकुलीरा झष

ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह । प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ॥ ९ ॥
कौसल्याजनयद्रामं सर्वलक्षणसंयुतम्[1] । विष्णोरर्द्धं महाभागं पुत्रमैक्ष्वाकवर्द्धनम्[2] ॥ १० ॥

वणिजौ च दिवाकरादितुङ्गाः" इति । कर्कटे कर्कटकाख्ये लग्ने राश्युदये । "राशीनामुदयो लग्नम्" इत्यमरः । वाक्पतौ बृहस्पतौ । इन्दुना सह प्रोद्यमाने उदयति सति । आर्षमात्मनेपदम् । अत्र प्रोद्यमान इत्युक्तत्वात्पुनर्वसुनक्षत्रस्य कर्कटराशित्वाच्च तत्रेन्दुः स्थित इत्यवगम्यते । कर्कटकस्तु गुरोरुच्चस्थानम्, इन्दुना वर्तमानो गुरुस्तत्र वर्त्तते इति गुरुरुच्चस्थः । चैत्रमासे सूर्यस्य मेषप्रवेशात् सूर्योऽप्युच्चगत एव । बुधः सदा रविसन्निहितः न तदोच्चस्थानस्थः । चन्द्रश्च कर्कटगो नोच्चस्थः । तथा च परिशेषान्मन्दाङ्गारकशुक्रास्तुलामकरमीनसंस्था इति पञ्चानामुच्चस्थत्वम् । नामकीर्तनं विना पञ्चोच्चस्थत्वकीर्तनं तत्फलविशेषप्रतिपादनाय । यथाहुः-" एकग्रहोच्चजातस्य सर्वारिष्टविनाशनम् । द्विग्रहोच्चे तु सामन्तस्त्रिग्रहोच्चे महीपतिः । चतुर्ग्रहोच्चे सम्राट् स्यात् पञ्चोच्चे लोकनायकः ॥" इति । प्रत्येकोच्चफलं चाहुः-" सूर्ये स्वोच्चगते जातस्सेनापत्यमवाप्नुयात् । भौमे स्वोच्चगते जातो वने राजा भविष्यति । गुरौ स्वोच्चगते जातो धनी राज्याधिपो भवेत् । शुक्रे स्वोच्चगते जातो राज्यश्रियमवाप्नुयात् । शनौ स्वोच्चगते जातो राजा (ज्या) धिपसमो भवेत् ।" इति । गुरुचन्द्रयोगफलमुक्तं मिहिरेण–"दृढसौहृदो विनीतः स्वबन्धुसंमानकृद्धनेशश्च । शशिगुर्वोर्गुणशीलः सुरद्विजेभ्यो रतो भवेत् पुरुषः॥" इति । रविबुधयोगफलं च तेनैवोक्तम्-"वेदान्तवित्स्थिरधनो रविज्ञयोः प्रायशो यशोर्थी स्यात् । आर्यः क्षितिपतिदयितः सतां च वलरूप विद्यावान् ॥" चैत्रमासजन्मफलम्–"चैत्रे मधुरभाषी स्यादहङ्कारसुखान्वितः ।" नवमीजन्मफलम्–"दीर्घवैरी भुवि ख्यातो वश्यः शूरश्च पण्डितः ।

---

१ दिव्यलक्षणसंयुतम् । २ महाभागमैक्ष्वाककुलवर्धनम् । इति च पाठान्तरम् ।

निर्भयः सर्वभूतेभ्यो नवम्यां जायते नरः ॥" पुनर्वसुनक्षत्रफलम्–"सहिष्णुर्गूढवृत्तिश्च श्लेष्मलो नाट्यकोविदः । अगृध्नुरल्पसन्तुष्टः शीघ्रगोऽदिति धिष्ण्यजः॥" चतुर्थपादजन्मफलम्–"कान्तप्रियवपुः श्लक्ष्णः सज्जनः प्रियदर्शनः । लक्ष्मीवान् प्रियवादी च आदित्यान्ते प्रजायते॥" उच्चस्थेन बृहस्पतिना समं चन्द्रस्य स्थितिः कर्कटक इति पुनर्वसुचतुर्थपादत्वं सिद्धम्। चैत्रपुनर्वसू शुक्लपक्ष एवेति सिद्धम्। कर्कटकलग्नजन्मफलम्–"कर्कटे लग्नके चन्द्रयुक्ते दृष्टे च भोगवान् । गुरुणा वीक्षिते युक्ते धनाढ्यो बहुभोगवान्॥" तानिमान् फलविशेषान् सूचयितुं मासतिथ्यादिकीर्त्तनम्। तथैवाह जगन्नाथमित्यादिना । जगन्नाथमित्यनेन "पञ्चोच्चे लोकनायकः" इत्युक्तं फलं दर्शितम् । लग्नस्य गुरुयोगफलमाह सर्वलोकनमस्कृतामिति । यथा होराप्रदीपे–"कविः सुगीतः प्रियदर्शनः सुखी दाता च भोक्ता नृपपूजितः शुचिः । देवद्विजाराधनतत्परोऽथ भवेन्नरो देवगुरौ तनुस्थिते ॥" रामं पश्चाद्रामाख्यम् । यद्वा रामं श्यामवर्णम्, " अथोरामौ सावित्रौ " इत्यत्राथश्यामाविति व्याख्यानात् । अनेन कर्कटे कन्यांशे जात इति व्यज्यते । कन्याया बुधांशत्वात् बुधस्य च श्यामत्वात् शुक्रांशत्वाद्वा । यथाह मिहिरः–"रक्तश्यामो भास्करो गौर इन्दुर्नात्युच्चाङ्गो रक्तगौरश्च वक्रः। दूर्वाश्यामो ज्ञो गुरुर्गौरगात्रः श्यामः शुक्रो भास्करिः कृष्णदेहः ॥" इति । सर्वलक्षणसंयुतम्-सर्वलक्षणैः सामुद्रिकोक्तैः पूर्णम् । इदं लग्नचन्द्रफलम् "पूर्णे शीतकरे लग्ने तेजस्वी नित्यगर्वितः" इति होराशास्त्रात् । विष्णोरर्द्धम्-विष्णुमयस्य पायसस्यार्द्धांशपरिणामभूतम् । पुत्रं–पुन्नाम्नो नरकात्त्रायत इति पुत्रः तम् । पुनस्तं विशेषयति ऐक्ष्वाकवर्द्धनमिति । ऐक्ष्वाकस्य दशरथस्य वर्द्धनम् । अनेन लग्नस्य सौम्यग्रहयोगफलं दर्शितम् । यथा–" नरश्चिरायुर्नृपपूजितः सुखी लग्नं भवेत्सौम्ययुतं यथा तथा । लग्ने तथा स्वामिनिरीक्षिते धनी कुशाग्रबुद्धिः कुलकीर्तिवर्द्धनः ॥ " महाभागं महाभाग्ययुक्तम्, अनेन लग्नचन्द्रकृतोऽपि दोषो गुरुयोगात् परिहियत इति सूच्यते । यथाहुः होराप्रदीपे–"जन्मकालिकलग्नांशे चन्द्रः केन्द्रगतो यदि । जातस्य विनयो वित्तं ज्ञानं बुद्धिश्च नैपुणम् ॥ हीनं पणफरस्थेऽस्मिन् मध्यान्येतानि तस्य च । आपोक्लिमस्थचन्द्रश्चेदुत्कृष्टानि भवन्ति हि॥ स्वांशेऽधिमित्रस्य नवांशके वा चन्द्रे तु वाचस्पतिना च दृष्टे। एवंविधे शीतकरे च रात्रौ शुक्रेण दृष्टे धनवान् सुखी स्यात् ॥" एवं केमद्रुमयोगोऽपि नास्तीत्युच्यते । केमद्रुमो नाम-चन्द्रलग्नस्योभयपार्श्वे ग्रहाभावः । न ह्यत्र मिथुने सिंहे वा कश्चित् ग्रहोऽस्ति । तथाह गार्ग्यः–"व्ययार्थोभयगश्चन्द्राद्विना भानुं न चेद्ग्रहः । योगः केमद्रुमो नाम जातः स्यादत्र गर्हितः॥ सन्तानबन्धुजनवस्त्रसुहृद्विहीनो दारिद्र्यदैन्यगददुःखमलैरुपेतः । प्रेष्यः खलः सकललोकविरुद्धवृत्तिः केमद्रुमे भवति पार्थिववंशजोऽपि ॥ " एतत्सर्वमात्मानुभावेन परिहियत इत्युच्यते महाभागशब्देन । यथाह मणिबन्धः–" लग्नात्केन्द्रगते चन्द्रे ग्रहैरेकादिभिर्युते । केमद्रुमफलं न स्यात्केचित्

केन्द्रनवांशके॥" एवं दोषान्तरपरिहारोऽपि। यथा—"अग्रमेषे कलत्रस्थे सुतेशो वा कलत्रगे। मङ्गले वा कलत्रस्थे भार्यानाशं प्रकुर्वते॥" इति ॥८–१०॥ 
कौसल्येति रामावतारो न केवलं यज्ञकृतः, किन्तु कौसल्यातपःकृत इत्याह। कौसल्या तेन शुशुभे। कुतः? पुत्रेण पुत्रत्वेनावतीर्णेन, पुत्रत्वेनावतीर्य स्वमनोरथपूरणादिति भावः। अमिततेजसा "स उ श्रेयान् भवति जायमानः" इत्युक्तरीत्या जन्मलब्धनिरवधिकतेजसा। यथा अदितिः वज्रपाणिना परत्वचिह्नभूतरेखामयवज्रयुक्तपाणितलेन देवानां वरेण उपेन्द्रेण शुशुभे तथा। यथा पूर्वजन्मन्यदितिरनुष्ठितव्रतविशेषैर्विष्णुं पुत्रं लब्धवती तथेयमपी त्यर्थः। यद्वा अमिततेजसा जगत्प्रकाशकादित्यस्य कुलस्यापि प्रकाशकेन, "सूर्यस्यापि भवेत्सूर्यः" इतिवत्। "ततोऽखिलजगत्पद्मबोधायाच्युत भानुना। देवकीपूर्वसन्ध्यायामाविर्भूतं महात्मना॥" इत्युक्ताच्युतभानोरप्यतिशयिततेजसा। देवानां वरेण इन्द्रेण वज्रपाणिनेत्युभयविशेषणम्। वज्र

कौसल्या शुशुभे तेन पुत्रेणामिततेजसा। यथा वरेण देवानामदितिर्वज्रपाणिना॥ ११॥
भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः। साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः॥ १२॥
अथ लक्ष्मणशत्रुघ्नौ सुमित्राजनयत्सुतौ। सर्वास्त्रकुशलौ वीरौ विष्णोरर्द्धसमन्वितौ॥ १३॥

हस्तेन वज्ररेखायुक्तहस्तेन च, अनेनैव साधारणधर्मेणोपमानोपमेयभावः। यद्वा लौकिकानामिन्द्रे श्रेष्ठत्वबुद्ध्या तदनुसारेणोपमा, इषुवद्गच्छति सवितेतिवत्। यद्वा दृष्टिदोषपरिहाराय हीनोपमापि क्रियते। यद्वा अयं श्लोकः पूर्वशेषतया मात्ररिष्टभङ्गेन तदतिशयावहत्वद्योतनाय। तथाहि—मातृकारकश्चन्द्रः, स च वर्द्धिष्णुर्गुरुणा युक्तो मातरमभिवर्द्धयति॥ ११॥ अथ पायसोपयोगक्रमेण कौसल्यानन्तरं कैकेयीप्रसवमाह—भरत इति। साक्षाद्विष्णोः प्रत्यक्षविष्णोः रामस्य चतुर्भागश्चतुर्थांशः, रामस्य विष्णवर्द्धत्वात्। तस्य चतुर्थांशः, विष्णोरष्टमांश इत्यर्थः। यद्वा साक्षाद्विष्णोर्वैकुण्ठवासिनश्चतुर्थांशश्चतुर्थस्यांशः, अष्टमभाग इत्यर्थः। यद्वा साक्षात्प्रत्यक्षभूत इति सौलभ्यमुच्यते। यद्वा साक्षादव्यवधानेन जज्ञे रामादनन्तरं जज्ञ इत्यर्थः। सर्वैः रामसम्बन्धितयोक्तैः गुणैः समुदितः युक्तः॥ १२॥ अथेति। अथ भरतजननानन्तरम्। द्विवचनेन यमलत्वमुच्यते। अर्द्धसमन्वितौ समन्विताद्धौं, पर

—स्वार्थे ठगार्षः। अदितिर्दैवत्ये पुनर्वसौ। पञ्चसु सूर्याङ्गारकशनिगुरुशुक्रेषु स्वोच्चस्थानस्थितेषु। लग्ने राश्युदये। वाक्पतौ बृहस्पतौ। भोग्यमाने उदयं गच्छति सति ॥८–११॥ भरत इति। चतुर्भागः चतुर्थस्य भागः, अष्टमांश इति यावत् ॥१२॥ अथेति। अर्धसमन्वितौ। किञ्चिन्न्यूनार्धसमन्विता

विषम०—अथ भरतजन्मानन्तरं, विष्णोरोङ्कारस्य अर्धौ अर्धांशौ अकारोकारौ विश्वतैजसौ विराड्हिरण्यगर्भौ ताभ्यां समन्वितौ, तदात्मकाविति यावत्। सर्वास्त्रकुशलौ लक्ष्मणशत्रुघ्नौ सुतौ सुमित्रा अजनयदि—

निपातः । अर्द्धशब्दोऽर्द्धशमांशपर्यायः। समन्वितचतुर्थभागाष्टमभागरूपौ। "भित्तं शकलखण्डे वा पुंस्यर्द्धोऽर्द्धं समेंऽशके" इत्यमरः। अन्यथा पायसप्रदान क्रमविरोधः । समन्वितशब्देन युगपद्युक्तत्वमुच्यते ॥ १३ ॥ त्रयाणां जन्मकालमाह—पुष्य इति । पुष्ये पुष्ययुक्ते तिथौ । "नक्षत्रेण युक्तः कालः" इति विहितस्याण्प्रत्ययस्य "लुबविशेषे" इति लुप् । मीनस्य गुरुक्षेत्रत्वात्तज्जन्मफलमाह—प्रसन्नधीरिति । सार्पे सर्पदेवताके नक्षत्रे। "आश्लेषानक्षत्रं सर्पदेवता" इति श्रुतिः । सुमित्रायाः पुत्रौ सौमित्री । बाह्वादित्वादिञ् । कुलीरे कर्कटके । रवौ अभ्युदिते । भरतजननस्योदयात्पूर्वत्वज्ञापनायात्रोदित

पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः । सार्पे जातौ च सौमित्री कुलीरेऽभ्युदिते रवौ ॥ १४ ॥

इत्युक्तम्, अन्यथा चैत्रकर्कटकस्य माध्याह्नकालिकत्वेन विरोधात् । यद्वा उदिते प्रवृद्धे मध्याह्नकाल इत्यर्थः । पञ्चोच्चत्वं गुरुचन्द्रयोगः इत्यादि सर्वत्र समानम् । रामस्य पुनर्वसूनक्षत्रम्, तिथिर्नवमी । भरतस्य पुष्यनक्षत्रम्, दशमी । सौमित्र्योश्च दशमी, आश्लेषा तारेति विशेषः ॥ १४ ॥

वित्यर्थः ॥ १३ ॥ पुष्य इति । सार्पे सर्पदैवत्ये आश्लेषानक्षत्रे । कुलीरे कर्कटकलग्ने । रवौ अभ्युदिते अभ्युदयं प्राप्ते, उच्चस्थ इति यावत् ॥ १४ ॥

त्यन्वयः । उक्तं चाथर्वणवेदे श्रीरामोत्तरतापिनीये प्रणवव्याख्यायाम, तथैते श्लोका भवन्ति—" अकाराक्षरसंभूतः सौमित्रिर्विश्वभावनः । उकाराक्षरसम्भूतः शत्रुघ्नस्तैजसात्मकः। प्राज्ञात्मकस्तु भरतो मकाराक्षरसम्भवः। अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः ॥ " इति । प्रजापतिप्रेषितपायसं तु नित्यसिद्धचिदानन्दविग्रहे नोपादानभावमर्हति । अपि तु भगवदाविर्भावसूचनेन दशरथमनुगृह्णाति । अपि च "लोकवत्तु लीलाकैवल्यम्" इति न्यायानुगृहीतश्रुतिपुराणेतिहासादौ श्रीरामकथा प्रसिद्धैव । श्रुतौ तावत्- " पूर्वापरं चरतो मायमैतौ शिशू क्रीडन्तौ परियातो अध्वरम् । विश्वान्यन्यो भुवनाऽभिचष्ट ऋतूनन्यो विदधज्जायते पुनः ॥ " इति । एतौ श्रीरामलक्ष्मणौ वस्तुतः पुराणपुरुषावेव । मायया मायाभिधस्वशक्त्या, शिशू दशरथराजकुमारौ भूत्वा, अध्वरं विश्वामित्रयज्ञम् अनेकरक्षोविक्षितम, परियातः प्राप्तौ, रक्षणायेत्यर्थः । कथम्भूतौ ? क्रीडन्तौ ताटका सुबाह्वादिवधप्रमुखक्रीडासक्तौ, पुनः कथम्भूतौ ? पूर्वापरं चरतः अग्रजत्वमनुजत्वं प्राप्ताविवत्यर्थः । तयोर्मध्ये अन्यः एकः श्रीरामः, विश्वानि सर्वाणि, भुवना भुवनानि, अभि चष्टे प्रकाशयति, स्वाध्यस्तविश्वप्रकाशहेतुरित्यर्थः । अन्यः लक्ष्मणः ऋतून् विदधत् पुनर्जायते । अयमर्थः—लक्ष्मणस्य शेषावतारत्वात् शेषस्य च कालात्मकत्वस्य " योऽयं कालो मयाख्यातः सोऽनन्तः " इति पुराणादवगतेः । कालस्य चाखण्डदण्डायमानस्य वसन्त प्रमुखर्तुकारणत्वात् ऋतून्विदधदित्युक्तम् । पुनरिति पुनः पुनरित्यर्थः । यदा यदा श्रीरामो जायते तदा तदा शेषात्मा लक्ष्मणोऽपि जायत इति । अथ विष्णुरेव कौसल्यायां श्रीरामरूपेणावतीर्णो गुणैरधिकं विरुरुचे इत्याह श्रुतिः—" नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्य(ग्रे)ग्रम् । भागं देवेभ्यो विदधात्यायन् प्रचन्द्रमास्तिरते दीर्घमायुः" इति । स आदिनारायणः श्रीरामरूपेण जायमानः । नवो नवो भवति सुन्दरतया प्रतिक्षणं नवप्रेक्षणीयो भवतीत्यर्थः । कुत इत्यत आह-चन्द्रमा इति । चन्द्रशब्दाभिलप्य इत्यर्थः । रामे चन्द्रेति व्यपदेशो हि श्रीरामे प्रेक्षणीयतमत्वमेवाहेति भावः । कथम्भूतः ? अह्नां दिनानां केतुः विशेषकः, यानि दिनानि श्रीरघुनाथोपासनयोपयान्ति तानि विशिष्टानीति भावः । यश्च श्रीरामः उषसामग्रं प्रातःकालानामग्रे ब्राह्ममुहूर्तं प्रति चिन्तनीयत्वेन प्राप्नोतीत्यर्थः । तदा श्रीरामस्मृतेर्बहुशो विहितत्वादिति भावः । यश्च जायमानो देवेभ्यो भागं यज्ञभागम्, विदधाति रावणादिकृतप्रतिबन्धशून्यं करोतीत्यर्थः । यश्च आयन्-स्मृतिमागच्छन् स्वभक्तानां दीर्घमायुरित्युपलक्षणम् । संपदः प्रतिरते ददातीत्यर्थः । एवं पुराणादिषु द्रष्टव्यम् । " रामतत्त्वं विजानाति हनुमानथ लक्ष्मणः । तद्विभक्तं तु का शक्तिरितरस्य च कस्यचित् ॥ " इति ॥ १३ ॥

राज्ञ इति । एकत्वेऽपि पृथग्वर्तमानाः । एकस्य चतुर्द्धावस्थाने उपमानमाह—प्रोष्ठेति । प्रोष्ठी गौः तस्येव पादा यासां ताः प्रोष्ठपदाः । "सुप्रात-" इत्यादिसूत्रे अच्प्रत्ययान्तो निपातितः । रुच्या कान्त्या प्रोष्ठपदोपमाः । राज्ञोऽनुरूपाश्चत्वारः पुत्रा जज्ञिरे, यज्ञफलं निर्वृत्तमिति भावः । पृथग्गुणवन्त इति वा, प्रत्येक मनन्यसाधारणगुणवन्त इत्यर्थः । रामस्य सामान्यधर्मरुचिः, लक्ष्मणस्य शेषत्वज्ञानम्, भरतस्य भगवत्पारतन्त्र्यधीः, शत्रुघ्नस्य भागवतपारतन्त्र्यमिति परस्परविलक्षणगुणवन्त इत्यर्थः ॥ १५ ॥ जननकालिकशुभनिमित्तानि दर्शयति—जगुरिति । कलम् अव्यक्तमधुरं यथा भवति तथा जगुः । खात्

राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक् । गुणवन्तोऽनुरूपाश्च रुच्या प्रोष्ठपदोपमाः ॥ १५ ॥ जगुः कलं च गन्धर्वा ननृतुश्चाप्सरोगणाः । देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता ॥ १६ ॥ उत्सवश्च महानासीदयोध्यायां जनाकुलः ॥ १७ ॥ रथ्याश्च जनसम्बाधा नटनर्तकसङ्कुलाः । गायनैश्च विराविण्यो वादनैश्च तथाऽपरैः ॥ १८ ॥ प्रदेयांश्च ददौ राजा सूतमागधवन्दिनाम् । ब्राह्मणेभ्यो ददौ वित्तं गोधनानि सहस्रशः ॥ १९ ॥ अतीत्यैकादशाहं तु नामकर्म तथाऽकरोत् ॥ २० ॥ ज्येष्ठं रामं महात्मानं भरतं कैकयीसुतम् । सौमित्रिं लक्ष्मण इति शत्रुघ्नमपरं तथा ॥ २१ ॥

आकाशात् ॥ १६ ॥ अथ जातकर्मोत्सवमाह—उत्सवश्चेति । अयोध्यायामित्यनेन प्रतिगृहमुत्सवोऽभूदित्युच्यते । जनाकुलः आकुलजनः । इदमर्द्धमेकम् ॥ १७ ॥ रथ्याश्चेति । गायनैः गायकैः, वादनैः वाद्यशिल्पैः, अपरैः सूतमागधवन्दिभिश्च, विराविण्यः शब्दवत्यः रथ्या आसन् ॥ १८ ॥ अथ दानसमृद्धिमाह—प्रदेयानिति । प्रदेयान् पारितोषिकान् । सूतमागधवन्दिनामिति शेषे षष्ठी । सूताः पौराणिकाः, मागधाः वंशावलिकीर्तकाः, वन्दिनः स्तुतिपाठकाः । सूतादीनां प्रदेयान् ददावित्यन्वयः । गोधनानि गोरूपधनानि सहस्रशः सहस्राणि ॥ १९ ॥ अतीत्येति अर्द्धमेकम् । लक्ष्मणजन्मदिनापेक्षया एकादशाहत्वम्, रामजन्मदिनापेक्षया द्वादशदिनं तत् । तदत्यये प्रथमसूतकेनैव निर्वृत्तेन सर्वसूतकनिवृत्तेर्द्वादशाहे नामकरणवचनमुपपन्नमेव । अन्यथा "क्षत्रियस्य द्वादशाहं सूतकम्" इति श्रुतिः । "त्रयोदशे राज्ञां नामकरणम्" इति स्मृतिश्च विरुध्येत । नामकर्म नामकरणम् । तथा जातकर्मवदित्युत्सवातिशयोऽतिदिश्यते ॥ २० ॥ कस्य किं नामाकरोदित्यत्राह—ज्येष्ठमिति । रामं रामनामानम् रमन्ते सर्वे जनाः गुणैरस्मिन्निति

राज्ञ इति । प्रोष्ठपदोपमाः चतुर्णां सादृश्यात् प्रोष्ठपदशब्देन पूर्वोत्तरप्रोष्ठपदरूपाणि चत्वारि नक्षत्राण्युच्यन्ते ॥ १५-१९ ॥ अतीत्यैकादशाहं तु अत्र एकादशाह

व्युत्पत्त्येति भावः । महात्मानं महास्वभावम्, निरवधिकगुणमिति यावत् । अनेन रामपदप्रवृत्तिनिमित्तमुक्तम् । राजा ज्येष्ठपुत्रं रामनामानमकरोत् । कैकयीसुतं भरतनामानमकरोत् । भरत इति राज्यस्य भरणादिति सहस्रानीकोक्तरीत्या । राजनि मृते रामे च वनं गते अराजकराज्यभरणादिति भावः । एवं सौमित्रिं सुमित्रापुत्रं लक्ष्मण इति नामयुक्तमकरोत् । रामकैङ्कर्यलक्षणसम्पद्युक्तत्वाल्लक्ष्मणः । "लक्ष्म्या अच" इति पामादिपाठादि कारस्याकारः मत्वर्थीयो नः । अतएव 'लक्ष्मणो लक्ष्मिसम्पन्नः' इति वक्ष्यति । अपरं सौमित्रिं शत्रुघ्नं शत्रुघ्ननामानमकरोत् । शत्रून् हन्तीति शत्रुघ्नः ॥ २१ ॥ ननु क्षत्रियस्य नामकरणेऽनधिकारात् पुरोहितकर्तृकत्वस्मरणात् कथं दशरथस्य नामकर्मकर्तृत्वम् ? इत्याशङ्क्य पुरोहितद्वारा कर्तृत्व



वसिष्ठः परमप्रीतो नामानि कृतवांस्तदा ॥ २२ ॥ ब्राह्मणान् भोजयामास पौरजानपदानपि । अददद्ब्राह्मणानां च रत्नौघममितं बहु ॥ २३ ॥ तेषां जन्मक्रियादीनि सर्वकर्माण्यकारयत् ॥ २४ ॥ तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः । बभूव भूयो भूतानां स्वयम्भूरिव सम्मतः ॥२५॥ सर्वे वेदविदः शूराः सर्वे लोकहिते रताः । सर्वे ज्ञानोपपन्नाश्च सर्वे समुदिता गुणैः ॥ २६ ॥

मित्यभिप्रेत्याह—वसिष्ठ इति । तदा द्वादशेऽह्नि, अतएवाकारयदिति वक्ष्यति ॥ २२ ॥ नामादि नान्दीकरणमिति नियमान्नामकर्मणि नान्दीकरणमाह—ब्राह्मणानिति । पौरेत्यादि ब्राह्मणविशेषणम् । राज्ञेति शेषः । ब्राह्मणानामिति सम्बन्धसामान्ये षष्ठी । अमितम् असङ्ख्येयं । बहु बहुप्रकारम् ॥२३॥ उक्तानुवादपूर्वकमितरसंस्कारकरणं दर्शयति—तेषामित्यर्द्धम् । आदिशब्देनान्नप्राशनचौलोपनयनादीनि गृह्यन्ते ॥ २४ ॥ उक्तं रामस्य महात्मत्वमुपपादयति—तेषामिति । तेषां सुतानां मध्ये वयसा ज्येष्ठः । केतुरिव ध्वज इव निजकुलप्रकाशकः । पितुर्भूयो रतिकरः सन्तोषकरः, भूतानां स्वयम्भूरिव सम्मतः नित्यप्रेमास्पदं बभूव ॥ २५ ॥ उपनीतानां तेषां वेदाध्ययनादिकमाह—सर्व इति । वेदविदः अधीतवेदाः । "विद्ऌ लाभे" इत्यस्मात् क्विप् । शूरा इत्यनेनाधीतधनुर्वेदत्वमुच्यते । लोकहिते रता इत्यनेन धनुर्वेदाभ्यासकार्यपरत्वम् । वेदार्थज्ञानसिद्धिमाह ज्ञानेति । ज्ञानकार्यगुणसम्पत्तिमाह समुदिता गुणैरिति । गुणैर्दयादिभिः, आसन्निति शेषः ॥ २६ ॥



शब्दः सूतकान्तोपलक्षणम् । अन्यथा क्षत्रियस्य द्वादशेऽहनीति वचनाविरोधात ॥ २०-२३ ॥ तेषामिति । जन्मक्रियादीनि जातकर्मादीनि, नामकरणानन्तरं जात

अथ प्रत्येकमसाधारणान् गुणान् वक्तुमादौ रामगुणानाह—तेषामिति । अपिशब्देनान्येषां रघुवंश्यानामपि मध्य इत्यर्थः । महातेजा महाप्रतापः । सत्यपराक्रमः अमोघवीर्यः । निर्मलश्शशाङ्क इव सर्वलोकस्य इष्टः सर्वदा दर्शनीयः, अभवदिति शेषः ॥ २७ ॥ गज इति । अत्र राम इत्यनुषज्यते । गजस्कन्धे स्थित्वा तत्प्रेरणसम्मतः राम इव गजस्कन्धारोहणादौ न कोऽपि समर्थ इति गजसादिभिः श्लाघित इत्यर्थः । एवमुत्तरत्रापि योज्यम् ॥ २८ ॥ अथ लक्ष्मणगुणविशेषानाह—बाल्यादित्यादिभिश्चतुर्भिः । लक्ष्मीं वर्द्धयतीति लक्ष्मिवर्द्धनः । " ङ्यापोः संज्ञाछन्दसोर्बहुलम् " इति ह्रस्वः । कैङ्कर्य सम्पद्वर्द्धकः लक्ष्मणः रामस्य बाल्यात्प्रभृति बाल्यमारभ्य । प्रभृतियोगेऽपि पञ्चमी प्रयुज्यते । सुस्निग्धः सुतरां स्निग्धः, अङ्कुरात् प्रभृति परिमलेनै-

तेषामपि महातेजा रामः सत्यपराक्रमः । इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः ॥ २७ ॥ गजस्कन्धेऽश्वपृष्ठे च रथचर्यासु सम्मतः । धनुर्वेदे च निरतः पितुः शुश्रूषणे रतः ॥२८॥ बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्द्धनः । रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ॥ २९ ॥ सर्वप्रियकरस्तस्य रामस्यापि शरीरतः । लक्ष्मणो लक्ष्मिसम्पन्नो बहिः प्राण इवापरः ॥३०॥ न च तेन विना निद्रां लभते पुरुषोत्तमः । मृष्टमन्नमुपानीतमश्नाति न हि तं विना॥३१

वोत्पन्नस्तुलसीकाण्ड इव जन्मनःप्रभृति निरवधिकभक्तिसम्पन्नः । यद्वा सुस्निग्धः रामपर्यङ्केण स्वपर्यङ्कायोजने बाल्येऽपि न निद्रातीत्यर्थः । अनेन स्वरूपप्रयुक्तत्वं दास्यस्योक्तम् । अथ गुणकृतत्वमाह—लोकरामस्य लोकान् रमयतीति लोकरामः । ण्यन्तात्कर्मण्यण् । "गुणैर्दास्यमुपागतः" इत्यन्यत्रोक्तम् । तस्य भ्रातुः ज्येष्ठस्येत्यनेन जन्मकृतदास्यमुक्तम् । नित्यशः नित्यं सुस्निग्ध इत्यन्वयः ॥ २९ ॥ सर्वेति । शरीरत इत्युपलक्षणम् । त्रिविधकरणैरपि रामस्य सर्वप्रियकरः । यद्वा स्वशरीरादपि रामस्य प्रियकरः, स्वशरीरमुपेक्ष्यापि प्रियकर इत्यर्थः । यद्वा शरीरतो बहिः स्थितः अपरः प्राण इव स्थितः । यद्वा शरीरतः रामशरीरस्य " सार्वविभक्तिकस्तसिः " इत्युक्तेः । लक्ष्मणस्य दक्षिणबाहुत्वाद्रामसर्वावयवानां सर्वप्रियकर इत्यर्थः । " रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः " इति वक्ष्यमाणत्वात् । अस्मिन् पक्षे अपिशब्देन रामस्य स्वविषयप्रियकरत्वं समुच्चीयते । लक्ष्मिसम्पन्न इत्यनेन लक्ष्मणशब्दार्थ उक्तः ॥ ३० ॥ रामस्य लक्ष्मणेऽनुरागं दर्शयति—न चेति । तेन विना । " पृथग्विनानानाभिस्तृतीयान्यतरस्याम् "

कर्माभिधानं क्रमस्याविवक्षितत्वात् ॥ २४ ॥ तेषां केतुरिति । रतिकरः आनन्दकरः, भूयः अतिशयेन संमतः ॥ २५–२८ ॥ बाल्यादिति । लक्ष्मिवर्द्धनः आर्षो

इति तृतीया। निद्रां न लभते प्राणं विना कथं निद्रां लभेतेत्यर्थः। किञ्च कौसल्यया आनीतं मृष्टान्नं तं विना नाश्नाति। दक्षिणबाहुं विना कथमश्नातीति भावः। पुरुषोत्तमः प्रेमशालिविषये सर्वात्मना विश्लेषासह इत्यर्थः। "क्षणेऽपि ते यद्विरहोऽतिदुःसहः" इति ह्युक्तम् ॥ ३१ ॥ यदा हीति। राघवो रामः यदा हयमारूढः सन् मृगयामाखेटमुद्दिश्य याति तदा तदानीमेव एनं रामं सधनुः सन् पालयन्। अस्थाने भयशङ्कितया पृष्ठतः वेगवद्धयसमीप एवाभ्येति। हिः प्रसिद्धौ ॥ ३२ ॥ अथ भरतशत्रुघ्नयोः परस्परानुरागं दर्शयति—भरतस्यापीति। हि यस्मात् स शत्रुघ्नो लक्ष्मणावरजः, तस्मात्तत्तुल्यप्रकृतिकत्वात् भरतस्यापि प्राणैः प्राणेभ्योऽपि प्रियतर आसीत्। तस्य शत्रुघ्नस्य च भरतः तथा प्रिय आसीत् ॥ ३३ ॥

यदा हि हयमारूढो मृगयां याति राघवः। तदैनं पृष्ठतोऽभ्येति सधनुः परिपालयन् ॥ ३२ ॥ भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हि सः। प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः ॥ ३३ ॥ स चतुर्भिर्महाभागैः पुत्रैर्दशरथः प्रियैः। बभूव परमप्रीतो देवैरिव पितामहः ॥३४॥ ते यदा ज्ञानसम्पन्नास्सर्वे समुदिता गुणैः। ह्रीमन्तः कीर्तिमन्तश्च सर्वज्ञा दीर्घदर्शिनः॥३५॥तेषामेवंप्रभावानां सर्वेषां दीप्ततेजसाम्। पिता दशरथो हृष्टो ब्रह्मा लोकाधिपो यथा॥३६॥ ते चापि मनुजव्याघ्रा वैदिकाध्ययने रताः। पितृशुश्रूषणरता धनुर्वेदे च निष्ठिताः ॥ ३७ ॥

दशरथस्य स्वाराधकस्य मनोरथपरिपूरणमेतदवतारस्य प्रथमप्रयोजनम्। तन्निर्वृत्तिमाह—स चतुर्भिरिति। देवैश्चतुर्भिर्दिक्पालैः ॥ ३४ ॥ पूर्वं लाभकृतप्रीतिरुक्ता। अथ तेषां ज्ञानादिसम्पत्तिकृतप्रीतिविशेषमाह—त इति। श्लोकद्वयमेकान्वयम्। यदा यस्मिन् वयसि ज्ञानं शास्त्रज्ञानम्। ह्रीमन्तः प्रमादात्प्राप्ताकृत्यचिन्तासु लज्जावन्तः। कीर्तिमन्तः ज्ञानकृतप्रथावन्तः। सर्वज्ञाः सकललौकिकप्रज्ञावन्तः। दीर्घदर्शिनः नित्यभाविज्ञानवन्तः आसन्निति शेषः। तदा तेषां पिता हृष्टो बभूव ॥ ३५ ॥ ३६ ॥ पितृप्रीतिं दृष्ट्वा पुनरपि विद्यारतास्ते आसन्नित्याह—ते चापीति। ते चापि पितृशुश्रूषणरता धनुर्वेदे च निष्ठिताः

ह्रस्वः। लोकरामस्य लोकान् रमयतीति तथा ॥ २९ ॥ सर्वप्रियकर इति। रामस्य शरीरतोऽपि स्वशरीरादपि। सर्वप्रियकरः सर्वदा प्रियकर इत्यर्थः। बहिश्चरः प्राण इवासीत् ॥ ३०–३२ ॥ भरतस्यापीति। तथा शत्रुघ्नो भरतस्य प्राणैः प्राणेभ्योऽपि प्रियतरः, तस्य चापि तथा प्रियतर इत्यर्थः ॥ ३३ ॥ स चतुर्भिरिति। देवैः

लालिता अपि वैदिकानां वेदसम्बन्धिनां स्मृतीतिहासपुराणन्यायादीनामध्ययने रता निरताः ॥ ३७ ॥ अथैषां समावर्तनोचितकालप्राप्तिं दर्शयति— अथेति । दारविषयिणी क्रिया दारक्रिया, विवाह इत्यर्थः । चिन्तयामास तुल्यशीलवयोवृत्ताभिजनलक्षणकन्यान्वेषणं कृतवान् । अयमर्थो धर्मात्मेत्यने नावगम्यते ॥ ३८ ॥ इयता प्रबन्धेन भगवदवतारो दर्शितः । अथ भगवदवतारप्रयोजनानि साधुपरित्राणदुष्कृद्विनाशनधर्मसंस्थापनानि दर्शयत्याशास्त्र समाप्तेः । तत्र साधुपरित्राणं प्रधानम्, कर्षकस्य सस्यवृद्धिरिव । दुष्कृद्विनाशस्त्वानुषङ्गिकः, सस्यप्रतिबन्धकतृणोन्मूलनवत् । अतो दुष्कृद्विना शनान्तरीयकं साधुपरित्राणं वक्तुमुपक्रमते विश्वामित्रवृत्तान्तेन, अर्थाद्धर्मसंस्थापनमपि सिध्यतीति बोध्यम् । तस्येति । चिन्तयमानस्य चिन्तयमाने ।

अथ राजा दशरथस्तेषां दारक्रियां प्रति । चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः ॥ ३८ ॥ तस्य चिन्तय मानस्य मन्त्रिमध्ये महात्मनः । अभ्यागच्छन्महातेजा विश्वामित्रो महामुनिः ॥ ३९ ॥ स राज्ञो दर्शनाकांक्षी द्वाराध्यक्षानुवाच ह । शीघ्रमाख्यात मां प्राप्तं कौशिकं गाधिनन्दनम् ॥ ४० ॥ तच्छ्रुत्वा वचनं तस्य राज्ञो वेश्म प्रदुद्रुवुः । सम्भ्रान्तमनसः सर्वे तेन वाक्येन चोदिताः ॥ ४१ ॥ ते गत्वा राजभवनं विश्वामित्रमृषिं तदा । प्राप्त मावेदयामासुर्नृपायैक्ष्वाकवे तदा ॥४२॥ तेषां तद्वचनं श्रुत्वा सपुरोधाः समाहितः । प्रत्युज्जगाम तं हृष्टो ब्रह्माण मिव वासवः ॥ ४३ ॥ तं दृष्ट्वा ज्वलितं दीप्त्या तापसं संशितव्रतम् । प्रहृष्टवदनो राजा ततोऽर्घ्यमुपहारयत् ॥४४॥

स्वयं तत्कार्यसमर्थोऽपि रामवैभवप्रकटनाय तदागमनमिति सूचयति महातेजा इति ॥ ३९ ॥ स इति । कौशिकं कुशिकगोत्रजम् ॥ ४० ॥ तदिति । तेन वाक्येन चोदितास्तच्छ्रुत्वा वेश्म प्रति प्रदुद्रुवुः ॥ ४१ ॥ त इति । ऐक्ष्वाकवे इक्ष्वाकुवंश्याय । क्रियाग्रहणं कर्त्तव्यम् इति संप्रदानत्वम्, अभ्यागतविलम्बासहिष्णव इति भावः ॥ ४२ ॥ तेषामिति । सपुरोधाः पुरोहितसहितः । ब्रह्माणं चतुर्मुखम् ॥ ४३ ॥ तमिति । ज्वलितम् । अकर्मकत्वात् "गत्यर्थाकर्मक—" इति कर्तरि क्तः । संशितव्रतं तीक्ष्णनियमम् । अर्घ्यं पूजार्थोदकम् । उपहारयत, वसिष्ठे

दिक्पालकैः ॥ ३४–३७ ॥ अथ राजेति । सोपाध्यायः सपुरोहितः ॥ ३८ ॥ तस्य चिन्तयमानस्येति भावलक्षणे षष्ठी । महातेजाः महाप्रभावः ॥ ३९–४२ ॥ तेषा

नेति शेषः। अडभाव आर्षः ॥ ४४ ॥ स इति। शास्त्रदृष्टेन कर्मणा, समर्पितमिति शेषः। कुशलम् अपूर्वार्थप्राप्तिम्, अव्ययं तस्याक्षयम् ॥ ४५ ॥ पुर इति। कुशलम् अनुपद्रवम् ॥४६॥ अपीति। दैवं यज्ञादिकम्, मानुषम् अतिथिसत्कारादिकम् ॥ ४७ ॥ वसिष्ठं चेति। समागम्य समीपं गत्वा। ऋषीन् वामदेवादीन्। यथान्यायं यथाक्रमम् ॥ ४८ ॥ त इति। निवेशनं सभाम्। पूजिताः विश्वामित्रेणेति शेषः। यथार्हतः यथान्यायम्। प्रथमार्थे तसिः॥४९॥ अथेति। हृष्टः पुलकितः। "हृषेर्लोमसु" इतीडभावः। परमोदारः परमदाता। अभिपूजयन् स्तुवन् ॥ ५० ॥ यथेत्यादिश्लोकद्वयमेकान्वयम्।

स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्मणा। कुशलं चाव्ययं चैव पर्यपृच्छन्नराधिपम् ॥४५॥ पुरे कोशे जनपदे बान्धवेषु सुहृत्सु च। कुशलं कौशिको राज्ञः पर्यपृच्छत्सुधार्मिकः ॥४६॥ अपि ते सन्नताः सर्वे सामन्ता रिपवो जिताः। दैवं च मानुषं चापि कर्म ते साध्वनुष्ठितम् ॥ ४७ ॥ वसिष्ठं च समागम्य कुशलं मुनिपुङ्गवः। ऋषींश्चान्यान् यथान्यायं महाभागानुवाच ह ॥ ४८ ॥ ते सर्वे हृष्टमनसस्तस्य राज्ञो निवेशनम्। विविशुः पूजितास्तत्र निषेदुश्च यथार्हतः ॥ ४९ ॥ अथ हृष्टमना राजा विश्वामित्रं महामुनिम्। उवाच परमोदारो हृष्टस्तमभिपूजयन् ॥ ५० ॥ यथाऽमृतस्य सम्प्राप्तिर्यथा वर्षमनूदके। यथा सदृशदारेषु पुत्रजन्माप्रजस्य च ॥५१॥ प्रणष्टस्य यथा लाभो यथा हर्षो महोदये। तथैवागमनं मन्ये स्वागतं ते महामुने ॥ ५२ ॥ कं च ते परमं कामं करोमि किमु हर्षितः। पात्रभूतोऽसि मे ब्रह्मन् दिष्ट्या प्राप्तोऽसि धार्मिक ॥ ५३ ॥

अमृतस्य सुधायाः। अनूदके अनुदके "अन्येषामपि दृश्यते" इति दीर्घः। अप्रजस्य अपुत्रस्य। प्रणष्टस्य निध्यादेः। महः पुत्रविवाहाद्युत्सवः। "मह उद्धव उत्सवः" इत्यमरः। तस्योदये। स्वागतम् अचिन्तितोपनतम्, ते आगमनं तथा मन्ये ॥५१॥५२॥ कं चेति। कामम् अभीष्टम्। किमु केन प्रकामिति। समाहितः एकाग्रः ॥ ४३ ॥ तमिति। संशितव्रतम् तीक्ष्णनियमम् अर्घ्यमुपहारयत। वसिष्ठेनेति शेषः ॥४४॥ स इति। अव्ययं राज्याङ्गेषु क्षेमम् ॥४५॥४६॥ अपि ते सन्नता इति। अपिः प्रश्ने। दैवं च मानुषं च कर्म-दैवं कर्म होमदेवतार्चनादिकम्, मानुषं कर्म सामदानभेदादिकम् गजबन्धनादिकं च ॥ ४७ ॥ वसिष्ठं चेति। ऋषीन वामदेवादीन्। यथान्यायं यथार्हम् ॥ ४८ ॥ ४९ ॥ अथेति। हृष्टः पुलकितः प्रणष्टस्य वस्तुन इति शेषः ॥ ५० ॥ ५१ ॥ स्वागतं त इति भिन्नं

रेण, करोमि करवाणि । पात्रभूतः दानयोग्यः । दिष्ट्या शुभादृष्टवशेन । दिष्टचेत्यानन्दद्योतकमव्ययमित्यप्याहुः ॥५३॥ अद्येत्यर्द्धमेकम् ॥ ५४ ॥ पूर्वमिति । राजर्षिशब्देनोपलक्षितः राजर्षिशब्दवाच्य इत्यर्थः । अनु पश्चात् तपसा द्योतितप्रभः सन् ब्रह्मर्षित्वं प्राप्तोऽसि । अतः बहुधा राजर्षित्वेन ब्रह्मर्षित्वेन च पूज्योऽसि ॥ ५५ ॥ तदिति । हे ब्रह्मन् ! तदिदमागमनं मम परमं पवित्रं परममद्भुतं च । हे प्रभो ! तव सन्दर्शनादहं शुभक्षेत्रगतः पुण्यक्षेत्रगतः, त्वद्दर्शनादिदं मत्क्षेत्रं तीर्थभूतं जातमित्यर्थः ॥ ५६ ॥ ब्रूहीति । तुभ्यमिति तृतीयार्थे चतुर्थी । आगमनं प्रति त्वया यत्कार्यं यत्फलं प्रार्थितं तद्ब्रूहि । अहं

अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥ ५४ ॥ पूर्वं राजर्षिशब्देन तपसा द्योतितप्रभः । ब्रह्मर्षित्वमनुप्राप्तः पूज्योऽसि बहुधा मया ॥ ५५ ॥ तदद्भुतमिदं ब्रह्मन् पवित्रं परमं मम । शुभक्षेत्रगतश्चाहं तव सन्दर्शनात्प्रभो ॥५६॥ ब्रूहि यत्प्रार्थितं तुभ्यं कार्यमागमनं प्रति । इच्छाम्यनुगृहीतोऽहं त्वदर्थपरिवृद्धये ॥ ५७ ॥ कार्यस्य न विमर्शं च गन्तुमर्हसि कौशिक । कर्ता चाहमशेषेण दैवतं हि भवान् मम ॥ ५८ ॥ मम चायमनुप्राप्तो महानभ्युदयो द्विज । तवागमनजः कृत्स्नो धर्मश्चानुत्तमो मम ॥५९॥ इति हृदयसुखं निशम्य वाक्यं श्रुतिसुखमात्मवता विनीतमुक्तम् । प्रथितगुणयशा गुणैर्विशिष्टः परमऋषिः परमं जगाम हर्षम् ॥६०॥ इत्यार्षे श्रीरामायणे बालकाण्डे अष्टादशः सर्गः ॥ १८

त्वयानुगृहीतः सन् त्वदर्थपरिवृद्धये इच्छामि, त्वदर्थपरिवृद्धिं कर्तुमिच्छामीत्यर्थः । " रुच्यर्थानां प्रीयमाणः " इति चतुर्थी ॥ ५७ ॥ कार्यस्य विमर्शं कार्यविषयं संशयम् ॥ ५८ ॥ ममेति । अयं त्वदागमनरूपः ॥ ५९ ॥ इतीति । हृदयसुखम् अर्थसौष्ठवाद्धृदयसुखकरम् । श्रुतिसुखं शब्दमार्दवाच्छ्रुतिसुखम् । आत्मवता बुद्धिमता विनीतं विनयवद्यथा भवति तथा उक्तं वाक्यं निशम्य, प्रथितगुणयशाः पृथुतरगुणविषयकीर्तिः, न केवलं कीर्तिमात्रं गुणै

वाक्यम् । कं च ते परमं कामं करोमि किमु हर्षितः, कं परमं कामं किमु केन प्रकारेण करोमीत्यर्थः । दिष्ट्येत्यव्ययमानन्दद्योतकम् ॥ ५२–५४ ॥ पूर्वमिति । राजर्षिशब्देन सहितः ॥ ५५ ॥ तदद्भुतमिति । तदिदं तव सन्दर्शनम् अद्भुतमचिन्तितोपमानत्वादाश्चर्यावहम् । पवित्रं शुद्धिकरम् । शुभक्षेत्रगतः पुण्यक्षेत्रगतः । इदं स्थलं त्वद्दर्शनात्पवित्रं जातमित्यर्थः ॥ ५६ ॥ ब्रूहीति । आगमनं प्रति कार्यं फलभूतं यत्प्रार्थितं तद्ब्रूहि । त्वदर्थपरिवृद्धये त्वत्प्रयोजननिष्पादनाय ॥५७॥ कार्यस्येति । विमर्शम् उरुलाघवचिन्तां कुर्याद्वा नवेति विचारं वा ॥ ५८ ॥ ५९ ॥ इति हृदयेति । प्रथितगुणयशाः प्रसिद्धेन गुणेन प्राप्तं यशो यस्य स तथोक्तः । प्रथितगुण

विंशिष्टः। परमऋषिरित्यत्र "ऋत्यकः" इति प्रकृतिभावः । पुष्पिताग्रावृत्तम् ॥ ६० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने अष्टादशः सर्गः ॥ १८ ॥ अथ विश्वामित्राभ्यर्थनमेकोनविंशे—तच्छ्रुत्वेत्यादि। अद्भुतस्य विस्तरो यस्मिन् तदद्भुतविस्तरम् । हृष्टरोमा पुलकितरोमा ॥ १ ॥ सदृशमिति । नान्यथा न मिथ्योच्यत इत्यर्थः । वसिष्ठेन व्यपदेशः कीर्तिः उपदेशो वा । तृतीयेति योगविभागात् समासः। सोऽस्यास्तीति तथा ॥२॥ यत्त्विति । मे हृद्गतं यत्कार्यं वाक्यं वक्तव्यं तस्य निश्चयं करणाध्यवसायम् कुरुष्व,सत्यप्रतिश्रवः सत्यप्रतिज्ञः ॥३॥

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् । हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ १ ॥ सदृशं राजशार्दूल तवैतद्भुवि नान्यथा । महाकुलप्रसूतस्य वसिष्ठव्यपदेशिनः ॥ २ ॥ यत्तु मे हृद्गतं वाक्यं तस्य कार्यस्य निश्चयम् । कुरुष्व राजशार्दूल भव सत्यप्रतिश्रवः ॥३॥ अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ । तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ ॥ ४ ॥ व्रते मे बहुशश्चीर्णे समाप्त्यां राक्षसाविमौ । मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ । समांस रुधिरौघेण वेदिं तामभ्यवर्षताम् ॥५॥ अवधूते तथाभूते तस्मिन्नियमनिश्चये । कृतश्रमो निरुत्साहस्तस्माद्देशादपाक्रमे ॥ ६ ॥ न च मे क्रोधमुत्स्रष्टुं बुद्धिर्भवति पार्थिव । तथाभूता हि सा चर्या न शापस्तत्र मुच्यते ॥ ७ ॥

हृद्गतं कार्यमाह—अहमित्यादिना । सिद्ध्यर्थं फलार्थम् । नियमं यज्ञदीक्षाम् । आतिष्ठे आस्थितोऽस्मि । तस्य नियमस्य। विघ्नकरौ कामरूपिणौ द्वौ राक्षसौ, स्त इति शेषः ॥ ४ ॥ व्रत इति । व्रते दीक्षारूपे । चीर्णे अनुष्ठिते । विघ्नकरणप्रकारमाह मारीच इति । समांसरुधिरौघेण मांसयुक्तरक्तप्रवाहेण । तां वेदिं यज्ञवेदिम् । अभ्यवर्षताम् अभ्यषिञ्चताम् ॥५॥ अवधूत इति । तथाभूते बहुशश्चीर्णे । नियमनिश्चये व्रतसङ्कल्पे । अवधूते विघ्निते। अपाक्रमे आगतोऽस्मि ॥६॥ तर्हि कुतो न तौ शप्तौ ? तत्राह—न चेति । तत्र हेतुमाह तथेति । सा चर्या यज्ञाचारः । तथाभूता हि शापानर्हकाला हि । अतः तत्र मारीच

गुणैर्विशिष्टः शमदमाद्यात्मगुणैर्विशिष्टः ॥६०॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां अष्टादशः सर्गः ॥१८॥ तच्छ्रुत्वेति । अद्भुतविस्तरम् अद्भुतप्रपञ्चम् ॥ १ ॥ सदृशमिति । एतत्तवैव सदृशम् । नान्यतः नान्यस्येत्यर्थः । तत्र हेतुगर्भं विशेषणम् महावंशेत्यादि । वसिष्ठव्यपदेशिनः वसिष्ठोपदेशवतः ॥ २ ॥ यदिति । कार्यस्य कर्तव्यस्य । निश्चयमङ्गीकारम् ॥ ३ ॥ अहमिति । आतिष्ठे आचरिष्ये ॥ ४ ॥ ५ ॥ अवधूत इति । नियमनिश्चये व्रतसङ्कल्पे।

शब्देन त्रिशङ्कुस्वर्गारोहणनूतनस्वर्गसृष्ट्यादिहेतुभूतो ब्रह्मर्षित्वप्राप्त्यद्गुणो दिक्चतुष्टयनिर्वर्तितचिरकालसम्पादिततपःशक्तिविशेष उच्यते ।

सुबाहोः शापो न मुच्यते ॥ ७ ॥ तत्र मया किं कर्त्तव्यं तत्राह—स्वपुत्रमिति । काकपक्षः बालस्य शिखा, काकपक्षधरमपीत्यर्थः ॥ ८ ॥ बालोऽयं कथं तौ नाशयिष्यति ? तत्राह शक्त इति । मया कर्त्रा तेजसा करणेन । विकर्त्तारः विघ्नकर्तारः, तेषाम् । न केवलं तयोरिति भावः ॥ ९ ॥ श्रेयश्चेति । बहुरूपं बहुविधम् । कीदृक्छ्रेयस्तत्राह—त्रयाणामिति । लोकानां मध्ये ख्यातिं—विश्वामित्राध्वरत्राता अहल्याशापमोक्षदः हरधनुर्भञ्जक इत्येवंरूपां कीर्तिम् ॥ १० ॥ कथं बालस्तन्निरसने प्रभविष्यति ? तत्राह—न चेति । अहमेव तदर्थं यास्यामीत्यत्राह न च ताविति ॥ ११ ॥ तथापि महावीर्यौ तौ

स्वपुत्रं राजशार्दूल रामं सत्यपराक्रमम् । काकपक्षधरं शूरं ज्येष्ठं मे दातुमर्हसि ॥ ८ ॥ शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा । राक्षसा ये विकर्तारस्तेषामपि विनाशने ॥९॥ श्रेयश्चास्मै प्रदास्यामि बहुरूपं न संशयः । त्रयाणामपि लोकानां येन ख्यातिं गमिष्यति ॥ १० ॥ न च तौ राममासाद्य शक्तौ स्थातुं कथञ्चन । न च तौ राघवादन्यो हन्तुमुत्सहते पुमान् ॥ ११ ॥ वीर्योत्सिक्तौ हि तौ पापौ कालपाशवशं गतौ । रामस्य राजशार्दूल न पर्याप्तौ महात्मनः ॥१२॥ न च पुत्रकृतस्नेहं कर्तुमर्हसि पार्थिव । अहं ते प्रतिजानामि हतौ तौ विद्धि राक्षसौ॥ १३॥ अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् । वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः ॥ १४ ॥

कथं जेतुं शक्याविताशङ्क्य पापवशेनासन्नकालौ न रामस्य पर्याप्तावित्याह—वीर्येति । उत्सिक्तौ गर्वितौ। कालः यमः स एव पाशः तद्वशंगतौ ॥१२॥ न चेति । पुत्रकृतं पुत्रत्वकृतम् । हताविति भूतप्रत्ययेन वधस्य सुकरत्वं सूचितम् ॥१३॥ रामस्य परब्रह्मत्वं सूचयन्नाह—अहमिति । अहं बहुगुरूपासनेन लब्धज्ञानः । यद्वा योगबलसाक्षात्कृतपरावरतत्त्वयाथात्म्यः । भवांस्तु केवलकर्मठः । अहं जटावल्कलधारी, त्वं तु क्रोधभराक्रान्तः। अहं सात्त्विक

अपाक्रमे निर्गतोऽस्मि ॥ ६–८ ॥ शक्त इति । विकर्तारः विघ्नकर्तारः । तेषामपि न द्वयोरेवेति भावः । दिव्य तेजो वैष्णवम्, तेन । युक्त इति शेषः ॥९॥ श्रेय इति । बहुरूपं बहुप्रकारम् । लोकानां लोकेषु । येन महत्ताख्यादिना ॥ १० ॥ आसाद्य । युद्धे इति शेषः ॥ ११ ॥ वीर्योत्सिक्तौ दृप्तौ ॥ १२ ॥ नेति । पुत्रकृतं स्नेहं पुत्रत्वेन कृतं स्नेहं कर्तुं नार्हसि, किन्तु परावरवस्तुत्वेन कर्तुमर्हसि । हतौ विद्धीति भूतप्रत्ययेन वधस्य सुकरत्वं सूचितम् ॥१३॥ अहं वेद्मीत्यादिना परत्वमेव विशदयन्ति—

प्रकृतिः, त्वं तु राजसः । अहं 'गर्भभूतास्तपोधनाः' इत्युक्तरीत्या रामस्य गर्भभूतः, त्वं तु रामे गर्भत्वाभिमानी। योगक्रमज्ञानवानहम्, त्वं तु भोगक्रमज्ञः । अहं मोक्षकामेष्टिकृत्, त्वंतु पुत्रकामेष्टिकृत् । अहं धर्ममोक्षपरः, त्वं तु अर्थकामपरः । एतत्सर्वं प्रसिद्धपरामर्शिना अहमित्यनेन सर्वनामशब्देनोच्यते । ननु "सो अङ्ग वेद यदि वा न किलेति वेदस्सन्देग्ध्यनर्घविदमात्मनि रङ्गनाथम् ।" "विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरम्" इत्युक्तरीत्या अपरिच्छिन्नं वस्तु कथं त्वया ज्ञातमित्यत्राह महात्मानम्, अपरिच्छिन्नमहिमतया वेद्मीत्यर्थः । तथा च श्रुतिः " वेदाहमेतं पुरुषं महान्तम् " इति श्रुतौ एतमिति सौलभ्यमुच्यते । पुरुषमिति पराक्रमः, तदुभयमप्याह रामं सत्यपराक्रममिति । परत्वसौलभ्ये हि राज्ञश्छत्रचामरवदसाधारणे । यद्वा "तेजसां हि न वयः समीक्ष्यते" इति बाल्येऽपि निरवधिकवैभवम् । यद्वा महात्मानं "सत्यस्य सत्यम्" इतिवदात्मनो जीवस्याप्यात्मानम् " य आत्मनि तिष्ठन् " इत्यादि श्रुतेः । यद्वा आत्मा देहः " आत्मा जीवे धृतौ देहे " इत्यमरः । अप्राकृतदिव्यमङ्गलविग्रहमित्यर्थः । " न तस्य प्राकृता मूर्तिः " इतिस्मृतेः । यद्वा महात्मानं महास्वभावम् "अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम" इति वक्ष्यमाणत्वात् । यद्वा रामं महात्मानम् अवतारकृतमहास्वभावयुक्तम् " स उ श्रेयान् भवति जायमानः" इतिश्रुतेः । सत्यपराक्रमं-सदैकरूपपराक्रमम् "नाविजित्य निवर्तते" इति वक्ष्यते । यद्वा सत्यपराक्रमं परमार्थपराक्रमम् । यद्वा सत्यात्परानाक्रमतीति तथा " गच्छानुजानामि " इति बहुवारं प्रकृतिसम्बन्धकृतप्रातिकूल्यनिवर्तने यत्नं कृत्वा तथाप्यनुकूलत्वे तान् हन्तीत्यर्थः । यद्वा अयत्नकालेपि शत्रुभयङ्करः "सुखसुप्तः परन्तपः" इति वक्ष्यति । संस्थानविशेषौज्ज्वल्यदर्शनेन शत्रुहृदयविदारक इतिभावः। नाहं कार्यवशेन वदामीत्याह वसिष्ठोपीति। आप्ततमो हि भवतः कुलाचार्यो वसिष्ठः। अपिशब्दो विरोधे,अस्मद्विरोध्यपीत्यर्थः।यद्वा समुच्चये।महातेजाः सरस्वतीवल्लभपुत्रः योगसिद्धज्ञानः। यद्वा यद्वाक्येनाहं ब्रह्मऋषिरभवं सोपीत्यर्थः । यद्वा "[illegible] धर्मं चर" इति तव उपदिश्य स्वयमनुष्ठाता । ननु "यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणा याधिब्रूयात्" इति तव मम च विवादे अस्य त्वयि पक्षपातः स्यादित्राह ये चेति । राजद्वारसम्बन्धरहिततया पक्षपातशून्याः "तस्य धीराः परिजानन्ति योनिम्" इति अवताररहस्यवेदिनः । ये चेमे 'पुलस्त्योऽगस्त्यः' इति प्रसिद्धाचार्यपदनिर्वाहकाः। यद्वा 'गर्भस्थऋषिर्वामदेवः प्रतिपेदे' 'सप्तकल्पस्थितोमुनिः' इत्यादिनोत्तरोत्तरं ब्रह्मविदग्रेसरा वामदेवमार्कण्डेयादयः तिष्ठन्त्येते तव प्रियकराः । केवलपरमैकान्तिनो विजानन्तीत्याह तपसि स्थिताः । कायिकव्यापारादीन् विना सदा तपसि स्थिताः। तानेकैकशो रहसि पृष्ट्वा तैरनुमतं चेत् रामं मे देहीति भावः । तपसि स्थिताः कायक्लेशसहाः। यद्वा ज्ञानयोगनिष्ठाः "तप

आलोचने"। "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः" इत्युक्तन्यासनिष्ठा वा ॥१४॥ यदीति। धर्मलाभं धर्मवृद्धिम्। स्थितं स्थिरम् ॥१५॥ यदि हीति। विसर्जय प्रेषय ॥१६॥ अभिप्रेतमिति। अभिप्रेतं अभीष्टम् आत्मजम्, यज्ञस्य यज्ञाय। दशरात्रं देहि असंसक्तं अविलम्बितमिति क्रियाविशेषणम् ॥ १७॥ नात्येतीति। ममायं यज्ञस्य कालो यथा नात्येति तथा कुरुष्वेत्यन्वयः ॥१८॥ इतीति। धर्मार्थसहितं धर्मार्थपरम् ॥१९॥ स इति। शोकं दुःखं व्यषीदत दुःखितोभूत्, विषण्णमुखोभूदित्यर्थः ॥२०॥ इतीति। हृदयं मनोधिष्ठानम्। अतीव अत्यर्थं व्यथितमनाः। महान्-कुलेन महान्। विचचाल मुमूर्च्छे

यदि ते धर्मलाभं च यशश्च परमं भुवि। स्थितमिच्छसि राजेन्द्र रामं मे दातुमर्हसि ॥ १५॥ यदि त्वनुज्ञां काकुत्स्थ ददते तव मन्त्रिणः। वसिष्ठप्रमुखाः सर्वे राघवं मे विसर्जय ॥ १६ ॥ अभिप्रेतमसंसक्तमात्मजं दातुमर्हसि। दशरात्रं हि यज्ञस्य रामं राजीवलोचनम् ॥ १७ ॥ नात्येति कालो यज्ञस्य यथाऽयं मम राघव। तथा कुरुष्व भद्रं ते मा च शोके मनः कृथाः ॥ १८॥ इत्येवमुक्त्वा धर्मात्मा धर्मार्थसहितं वचः। विरराम महातेजा विश्वामित्रो महामुनिः ॥ १९ ॥ स तन्निशम्य राजेन्द्रो विश्वामित्रवचः शुभम्। शोकमभ्यगमत्तीव्रं व्यषीदत भयान्वितः ॥ २० ॥ इति हृदयमनोविदारणं मुनिवचनं तदतीव शुश्रुवान्। नरपतिरभवन्महांस्तदा व्यथितमनाः प्रचचाल चासनात् ॥ २१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

त्यर्थः। महदितिपाठे—महदत्यर्थं व्यथितमनाः अतीव विदारणमिति सम्बन्धः। वृत्तमुपजातिभेदः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥

महात्मानं परमात्मानम् ॥ १४ ॥ १५ ॥ यदीति। यदि ददते ददीरन् ॥ १६ ॥ अभिप्रेतमिति। यज्ञस्य दशरात्रं दशदिनान्येव, अतः अभिप्रेतम् अभिमतम् आत्मनइष्टं रामसंसक्तमविचारं यथातथा ॥ १७ ॥ नात्येति नातिक्रमिष्यति ॥ १८–२० ॥ इतीति। हृदयमनोविदारणं हृदयं मनसोऽधिष्ठानम्। अतीवेत्येतद्धृदयमनोविदारणमित्यनेन सम्बध्यते। महदत्यर्थं व्यथितमना इति सम्बन्धः॥२१॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व०बालकाण्डव्याख्यायां एकोनविंशः सर्गः ॥१९॥

---

१ स्थिरमिच्छसि। २ ततो रामं विसर्जय। ३ विश्वामित्रमुखोद्गतम्। ४ शोकेन महताविष्टश्चचाल च मुमोह च। लब्धसंज्ञस्ततोत्थाय व्यषीदत भयान्वितः॥ ५ इति स हृदय। इति च पाठान्तरम्।

कौशिकवचनश्रवणाद्दशरथविषादो विंशे–तच्छ्रुत्वेत्यादि । निःसंज्ञ इव चेतनारहित इव, मूर्च्छित इत्यर्थः ॥ १ ॥ " यज्ञविघ्नकरं हन्याम् " इत्युक्त रीत्या निजयज्ञविघ्ननिवर्तकोऽयं भविष्यतीति मत्वा आगत्य प्रार्थयमाने विश्वामित्रे वत्सलो दशरथः प्रेमान्धतया कलुषितहृदयः अहंवेद्मीति तदुक्तमपि मनस्यकुर्वन् रामस्य बाल्यमेव पुरस्कुर्वन्नाह–ऊनेति । ऊनाः असम्पूर्णाः षोडशवर्षा यस्य स तथोक्तः, द्वादशवर्ष इति यावत् । " बालो द्वादशवर्षो यमकृतास्त्रश्च राघवः " इति विशिष्यवक्ष्यमाणत्वात् । परिपूर्णषोडशवर्षो हि युद्धक्षमो भवति । द्वादशवर्षो बालः कथं युद्धाय प्रभवतीति भावः । एवं वयःस्वरूपे विचार्यमाणे नास्य युद्धयोग्यतेत्युक्तम् । राक्षसैस्तु सुतरां नेत्याह–राजीवलोचन इति । पद्मतुल्यनयनः, पद्मं हि रात्रौ मुकुलीभवति, तत्तुल्यतोक्तौ रात्रौ निद्रालसो रामो रात्रिचरैः कथं योद्धुं शक्नोतीतिभावः । मे रामः सदा मदुत्सङ्गपरिवर्तितया मद्विरहासहिष्णुरित्यर्थः । यद्वा पुत्रा

तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम् । मुहूर्तमिव निःसंज्ञः संज्ञावानिदमब्रवीत् ॥ १ ॥
ऊनषोडशवर्षो मे रामो राजीवलोचनः । न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ २ ॥

लाभेन षष्टिवर्षसहस्राणि लालप्यमानस्यातिक्लेशेनोत्पन्नः । रामः " रामो रतिकरः पितुः ", इति रतिकरः सर्वस्वभूतः । अस्य–काकपक्षधरत्वादिवंपयुतो विद्याभ्यासादपि क्रीडनकस्वीकारकुतूहलीति हस्तेन निर्दिशति । युद्धयोग्यतां न पश्यामि, किंतु क्रीडनकस्वीकारयोग्यतामेव पश्यामीत्यर्थः । युद्ध योग्यतां राक्षसशब्दश्रवणमात्रेणैव बिभ्यतां कथं युद्धयोग्यता । सहराक्षसैः मनुष्येणापि युद्धव्यापारमजानतः कथं राक्षसैः युद्धम् । एकेनापि राक्षसेन न योग्यता कुतो बहुभिः । अत्र शङ्क्यते–अत्र दशरथेन पित्रा ऊनषोडशवर्ष इत्युक्तम् । ऊनत्वं च मासेन मासत्रयेण षण्मासैर्वा स्यात्, न त्वेक वर्षद्विवर्षादिभिः । तस्मिन्नेव वर्षे सीताविवाहः । तदनु द्वादशवर्षाण्ययोध्यावासः । " समा द्वादश तत्राहं राघवस्य निवेशने । भुञ्जानामानुषान् भोगान् सर्वकामसमृद्धिनी " इति सीतया वक्ष्यमाणत्वात् । तथाच वनप्रवेशकाले रामस्याष्टाविंशतिवर्षाणीति प्रतिभाति । तदनुपपन्नम्–" मम भर्ता महातेजा वयसा पञ्चविंशकः । अष्टादश हि वर्षाणि मम जन्मनि गण्यते ॥" इति सीतावचनात् । कौसल्यया च वनप्रवेशसमये प्रोच्यते

तच्छ्रुत्वेति । निःसंज्ञ इव निष्प्राण इव ॥ १ ॥ ऊनषोडशवर्ष इति । ऊनषोडशशब्दस्य द्वादशाब्दे पर्यवसानम् । तत्कथम् ? कौशिकयागसंरक्षणार्थमागत रामवयोविशेषमुद्दिश्य " बालो द्वादशवर्षोऽयमकृतास्त्रश्च राघवः " इत्यारण्यकाण्डे रावणं प्रति मारीचेनोक्तत्वात् । योग्यतां क्षमताम् ॥ २ ॥

"दश सप्त च वर्षाणि जातस्य तव पुत्रक । आसितानि प्रकांक्षन्त्या मया दुःखपरिक्षयम् ॥" इति । तस्मात् अष्टाविंशतेः पञ्चविंशतेः सप्तदशानां च कथमविरोध इति । अत्र केचित्, कौसल्यावाक्ये जातस्येति द्वितीयं जन्मोच्यते—क्षत्रियस्यापि द्विजत्वात् । द्वितीयं जन्म च उपनयनम्, तच्च वृद्धेन दशरथेन काम्यपक्षमाश्रित्य गर्भाष्टम एव कृतम् । तथा च द्वितीयजन्मापेक्षया सप्तदशत्वम् । उपनयनात्पूर्वं सप्तवर्षाणीति "वयसा पञ्चविंशकः" इति सीतावचनमप्युपपन्नम् । "ऊनषोडशवर्षः" इत्यत्र पादोनत्वम्, द्वादशवर्ष इत्यन्यत्रोक्तत्वात् । अतः सर्वथा वनप्रवेशकाले पञ्चविंशतिवर्ष एव राम इत्याहुः । अन्ये बहुक्लेशं सहमाना एवं व्याचख्युः—अष्टाविंशतिवर्ष एव वनप्रवेशे रामः । ऊनषोडशवर्ष इति यत्किञ्चिन्मासोनषोडशवर्षवयस्क इत्यर्थः । "बालो ह्यकृतविद्यश्च न च वेत्ति बलाबलम्" इति दशरथवचने बाल्ययौवनसन्धौ बाल इति व्यवहर्तुं शक्य

**इयमक्षौहिणी पूर्णा यस्याहं पतिरीश्वरः । अनया संवृतो गत्वा योद्धाऽहं तैर्निशाचरैः ॥ ३ ॥**

त्वात् । "बाल आषोडशाद्वर्षात्पौगण्डश्चेति कीर्त्यते" इति वचनात् । "बालो द्वादशवर्षोऽयमकृतास्त्रश्च राघवः । अजातव्यञ्जनः श्रीमान् पद्मपत्रनिभेक्षणः ॥" इति मारीचवचनन्तु युद्धभीरुतया भ्रान्तिकृतम् रावणविभीषिकयोक्तं वा, अतएव स्वयं वायव्यास्त्रभग्नोऽप्यकृतास्त्र इत्याह । अजातव्यञ्जनत्वं च निरुदरा कन्येतिवदल्पश्मश्रुत्वम् । "एकवस्त्रधरो धन्वी शिखी कनकमालया" इत्यपि दृढपरिहितोत्तरीयतया सन्नद्धत्वमाह । वयसा पञ्चविंशक इति तु पञ्चविंशतुल्यत्वमाह । इवार्थे कनो विधानात् । तेन नित्ययौवनत्वं ज्ञापयति । देवा हि सदा पञ्चविंशतिवार्षिका इत्युच्यन्ते । कौसल्यावाक्यमपि "गर्भैकादशेषु राजन्यम्" इति विहितोपनयनापेक्षया । तस्मान्न किञ्चिदनुपपन्नमिति । वस्तुतो वयसा पञ्चविंशक इति सीतायाः शापभीतायाः संन्यासिनं प्रति वचनमेव यथार्थम् । दश सप्त च वर्षाणीति कौसल्यावाक्ये तु चकारेण सप्तवर्षाणि समुच्चीयन्ते, तेन जन्मापेक्षयैव पञ्चविंशतित्वसिद्धिः । ननु विवाहानन्तरमेव सम्भोगः श्रूयते "रामस्तु सीतया सार्द्धं विजहार बहुनृतून्" इति । स कथं द्वादशवर्षस्य बालस्य सम्भवति ? सम्भवत्येव, सौकुमार्यातिशयेन प्रौढशरीरतया । अतएव हि देव्याश्च षड्वर्ष एव यौवनारम्भः । "अष्टादश हि वर्षाणि मम जन्मनि गण्यते" इति वनप्रवेशेऽष्टादशत्वम् विवाहकाले सीतायाः षड्वर्षत्वमवगमयतीति सर्वं सुस्थम् ॥ २ ॥ तर्हि तव प्रतिज्ञा व्यर्था स्यात्तत्राह—इयमिति । अक्षो रथावयवः, तस्य ऊहः । तद्योगादिनिः । "ऋन्नेभ्यो ङीप्" इति ङीपि "पूर्वपदात्संज्ञायामगः" इति णत्वम् । "अक्षादूहिन्याम्—" इति वृद्धिः । अक्षौहिणी

स्वरूपमुक्तमादिपर्वणि " एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते । पत्तिं तु त्रिगुणामेकं विदुः सेनामुखं बुधाः । त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते । त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः । स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः । चमूस्तु पृतनास्तिस्रस्ताश्च तिस्रस्त्वनीकिनी । अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः ॥" इति । यस्याहं पतिरिति सन्धिरार्षः । पतिः पालयिता । पातेर्डतिः । ईश्वरः नियन्ता । योद्धा योत्स्ये, लुट् । तैर्यज्ञविघ्नकरैः॥३॥ इम इति । विक्रान्ताः अक्षतविक्रमाः ॥ ४ ॥ अहमिति । गोप्ता, यज्ञस्येति शेषः

इमे शूराश्च विक्रान्ता भृत्या मेऽस्त्रविशारदाः । योग्या रक्षोगणैर्योद्धुं न रामं नेतुमर्हसि ॥ ४ ॥ अहमेव धनुष्पाणि गोप्ता समरमूर्द्धनि । यावत्प्राणान् धरिष्यामि तावद्योत्स्ये निशाचरैः ॥ ५ ॥ निर्विघ्ना व्रतचर्या सा भविष्यति सुरक्षिता । अहं तत्र गमिष्यामि न रामं नेतुमर्हसि ॥६॥ बालो ह्यकृतविद्यश्च न च वेत्ति बलाबलम् । न चास्त्रबलसंयुक्तो न च युद्धविशारदः ॥ ७ ॥ न चासौ रक्षसां योग्यः कूटयुद्धा हि ते भृशम् ॥ ८ ॥ विप्रयुक्तो हि रामेण मुहूर्तमपि नोत्सहे । जीवितुं मुनिशार्दूल न रामं नेतुमर्हसि ॥९॥ यदि वा राघवं ब्रह्मन् नेतुमिच्छसि सुव्रत । चतुरङ्गसमायुक्तं मया च सहितं नय ॥१०॥ षष्टिर्वर्षसहस्राणि जातस्य मम कौशिक । दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि॥ ११॥

सेनानां वा ॥ ५ ॥ निर्विघ्नेति । अहं गमिष्यामि, तेन सुरक्षिता भविष्यतीति योजना ॥६॥ बाल इति । बालः ऊनषोडशवर्षः, अतएव अकृतविद्यः अशिक्षितधनुर्विद्यः । बलाबलं, शत्रूणामिति शेषः । "येषां च विरोधः शाश्वतिकः" इति एकवद्भावः ॥७॥ न चेति । रक्षसां, युद्ध इति शेषः । कूटयुद्धाः कपटयुद्धाः । इदमर्द्धम् ॥८॥ तिष्ठतु रामस्वभावः, मत्स्वभावश्चैवमित्याह–विप्रयुक्तः विश्लिष्टः ॥ ९ ॥ यदीति । चत्वारि अङ्गानि चतुरङ्गानि । " दिक्संख्ये संज्ञायाम् " इति समासः ॥ १० ॥ षष्टिरिति । वर्षसहस्राणि, अतीतानीति शेषः । तदनन्तरं दुःखेन उपवासदीक्षादिक्लेशेन उत्पादितः ॥ ११ ॥



–ह्यमिति । यस्येति पुंल्लिङ्ग आर्षः ।ईश्वरः स्वयं समर्थः । योद्धेत्यत्र अस्मीति शेषः ॥ ३ ॥ इम इति । विक्रान्ताः अक्षतविक्रमाः ॥ ४ ॥ अहमेवेति । गोप्ता, अध्वरस्येति शेषः । प्राणान् धरिष्यामि, जीविष्यामीत्यर्थः ॥ ५–७ ॥ न चेति । कूटयुद्धाः कपटयुद्धाः ॥ ८ ॥ ९ ॥ यदिवेति । चत्वार्यङ्गानि चतुरङ्गानि ॥१०॥ षष्टिरिति ।

चतुर्णामिति। चतुर्णां पुत्राणां मध्ये रामे परमिका प्रीतिः। स्वार्थे कप्रत्ययः। "प्रत्ययस्थात् कात्-" इतीत्। तस्माज्ज्येष्ठत्वादेश्च न नेतुमर्हसीति योजना ॥ १२ ॥ अथ सर्वथा रामनयनमयुक्तमिति वक्तुं योद्धव्यस्वरूपं पृच्छति-किमिति। के च किंनामधेयाः। कथंप्रमाणाः, कीदृशाकारा इत्यर्थः। के रक्षन्ति, के तेषां प्रधाना इत्यर्थः ॥ १३ ॥ कथं चेति। प्रतिकर्तव्यं प्रतिविधेयम् ॥ १४ ॥ सर्वमिति। तेषां रणे कथं मया स्थातव्य

चतुर्णामात्मजानां हि प्रीतिः परमिका मम। ज्येष्ठं धर्मप्रधानं च न रामं नेतुमर्हसि ॥१२॥ किंवीर्या राक्षसास्ते च कस्य पुत्राश्च के च ते। कथंप्रमाणाः के चैतान् रक्षन्ति मुनिपुङ्गव ॥१३॥ कथं च प्रतिकर्तव्यं तेषां रामेण रक्षसाम्। मामकैर्वा बलैर्ब्रह्मन् मया वा कूटयोधिनाम् ॥१४॥ सर्वं मे शंस भगवन् कथं तेषां मया रणे। स्थातव्यं दुष्टभावानां वीर्योत्सिक्ता हि राक्षसाः ॥१५॥ तस्य तद्वचनं श्रुत्वा विश्वामित्रोऽभ्यभाषत ॥ १६ ॥ पौलस्त्यवंशप्रभवो रावणो नाम राक्षसः ॥ १७॥ स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम्। महाबलो महावीर्यो राक्षसैर्बहुभिर्वृतः ॥ १८ ॥ श्रूयते हि महावीर्यो रावणो राक्षसाधिपः। साक्षाद्वैश्रवणभ्राता पुत्रो विश्रवसो मुनेः ॥ १९॥ यदा स्वयं न यज्ञस्य विघ्नकर्ता महाबलः। तेन सञ्चोदितौ द्वौ तु राक्षसौ वै महाबलौ। मारीचश्च सुबाहुश्च यज्ञविघ्नं करिष्यतः॥ २० ॥ इत्युक्तो मुनिना तेन राजोवाच मुनिं तदा। न हि शक्तोऽस्मि संग्रामे स्थातुं तस्य दुरात्मनः ॥ २१ ॥

मिति व्यूहप्रकारप्रश्नः ॥ १५ ॥ १६ ॥ पौलस्त्येति। राक्षसः अस्तीति शेषः ॥ १७ ॥ किंवीर्या इत्यस्योत्तरमाह-स इति ॥ १८ ॥ प्रसिद्धश्चायमित्याह-श्रूयत इति ॥ १९ ॥ यदेति अर्द्धत्रयमेकान्वयम्। यदा यज्ञस्य स्वयं न विघ्नकर्ता, अलक्ष्यत्वादिनेति शेषः ॥ २० ॥ इतीति।

दुःखेनोत्पादितः-व्रतोपवासयज्ञानुष्ठानप्रयासेनोत्पादित इत्यर्थः ॥ ११ ॥ चतुर्णामिति। प्रीतिः परमिका मम। अस्मिन्निति शेषः। धर्मप्रधानं-धर्मः प्रधानं मुख्यं यस्य स तथोक्तः ॥ १२ ॥ किमिति। किंवीर्याः-कीदृशवीर्याः। ते किंनामधेयाः कथंप्रमाणाः कीदृग्विधशरीरप्रमाणाः। एतान् के रक्षन्ति। स्वामित्वेनेति शेषः ॥ १३ ॥ कथमिति। प्रतिकर्तव्यम्-प्रतिविधेयम् ॥ १४-१०. ॥ यदेति। यदा स्वयं यज्ञस्य न विघ्नकर्ता स्वयं विज्ञाय नागच्छति तदा तेन रावणेन

तस्य रावणस्य ॥ २१ ॥ स इति । अल्पभाग्यस्येति, त्वन्नियोगाकरणेनेति शेषः । प्रसादकरणे हेतुः दैवतमिति ॥ २२ ॥ देवेति । रावणसङ्ग्राम वैमुख्यं न दोषाय, सर्वाशक्यत्वादित्याशयः ॥ २३ ॥ स हीति, अर्द्धत्रयम् । वीर्यमादत्ते स्वीकरोति, नाशयतीत्यर्थः । तस्य बलैः मारीचादिभिः॥२४॥ कथमिति । कथमिति प्रश्ने । राक्षसान् प्रतीति शेषः ॥२५॥ अथेति । अथ शत्रुस्वरूपज्ञानानन्तरं सुन्दोपसुन्दयोः सुतौ मारीचसुबाहू, सुन्दपुत्रः मारीचः उपसुन्दपुत्रः सुबाहुः । पुत्रकम्, अनुकम्पायां कन् । अतो न दास्यामीत्युपस्कार्यम् ॥२६॥ मारीच इति । स्पष्टम् ॥२७॥ उत्तरसर्गार्थमन्ते संगृह्णाति

स त्वं प्रसादं धर्मज्ञ कुरुष्व मम पुत्रके । मम चैवाल्पभाग्यस्य दैवतं हि भवान् गुरुः ॥ २२ ॥ देवदानवगन्धर्वा यक्षाः पतगपन्नगाः । न शक्ता रावणं सोढुं किं पुनर्मानवा युधि ॥ २३ ॥ स हि वीर्यवतां वीर्यमादत्ते युधि राक्षसः । तेन चाहं न शक्नोमि संयोद्धुं तस्य वा बलैः । सबलो वा मुनिश्रेष्ठ सहितो वा ममात्मजैः ॥ २४ ॥ कथमप्यमरप्रख्यं संग्रामाणामकोविदम् । बालं मे तनयं ब्रह्मन् नैव दास्यामि पुत्रकम् ॥ २५ ॥ अथ कालोपमौ युद्धे सुतौ सुन्दोप सुन्दयोः । यज्ञविघ्नकरौ तौ ते नैव दास्यामि पुत्रकम् ॥ २६ ॥ मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ । तयो रन्यतरेणाहं योद्धा स्यां ससुहृद्गणः॥२७॥ इति नरपतिजल्पनाद्द्विजेन्द्रं कुशिकसुतं सुमहान् विवेश मन्युः । सुहुत इव समिद्भिराज्यसिक्तः समभवदुज्ज्वलितो महर्षिवह्निः ॥२८॥ इत्यार्षे श्रीरामायणे वालकाण्डे विंशः सर्गः ॥२०॥

इतीति । जल्पनात् असङ्गतोक्तेः । कोपाविष्टत्वे दृष्टान्तमाह सुहुत इति । आदौ समिद्भिः सुहुतः तत आज्यसिक्तो वह्निरिव महर्षिवह्निर्महर्षिश्रेष्ठः उज्ज्वलितस्समभवत् सञ्जातज्वालो बभूव । मुनिपक्षे क्रोधवृद्धिः । पुष्पिताग्रावृत्तम् "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥

संचोदितौ मारीचः सुबाहुश्च यज्ञविघ्नं करिष्यत इति सम्ब[illegible] ॥ २० ॥ २१ ॥ स इति । अल्पभाग्यस्य त्वन्नियोगाकरणेनेति शेषः ॥ २२ ॥ २३ ॥ स हि वीर्यवतामिति । वीर्यमादत्ते स्वीकरोति, नाशयतीत्यर्थः ॥ [illegible] कथमिति । पुत्रकं पुन्नाम्नो नरकात् त्रायत इति पुत्रकम्, अनेन पुत्रतनयशब्दयोर्न पौनरुक्त्यम् ॥ २५ ॥ अथेति । तौ यज्ञविघ्नकरौ युष्मद्यज्ञविघ्नकारिणौ चेति सुतं नैव दास्यामीति सम्बन्धः ॥ २६ ॥ मारीच इति । तयोरन्यतरेण योद्धा स्यामिति काकुः ॥ २७ ॥ उज्ज्वलितः रोषजज्वालाख्यचित्तवृत्तियुक्तः ॥ २८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां विंशः सर्गः॥२०॥

१ पुत्रकम् । तौ हि यक्षस्य कन्यायां जातौ दैत्यकुलोद्वहौ । मारीचश्च । २ ससुहृद्गणः । अन्यथा त्वनुनेष्यामि भवन्तं सह बान्धवः । इत्यधिकः पाठः ।

एवं रामप्रेषणवृत्तान्तव्याकुलं राजानं वसिष्ठः प्रतिबोधयति एकविंशे-तच्छ्रुत्वेति । स्नेहेन पुत्रस्नेहेन पर्याकुलानि स्खलन्ति अक्षराणि यस्मिन् ॥ १ ॥ पूर्वमिति। अर्थं प्रार्थितार्थम्। अयं विपर्ययः प्रतिज्ञाहानिः, राघवाणामस्य कुलस्यायुक्तः॥२॥यदीदमिति। इदं प्रतिज्ञातान्यथाकरणम्। सुखीभवेति व्यङ्ग्योक्तिः ॥३॥ तस्येति । रोषपरीतस्येति षष्ठी सप्तम्यर्थे । भयं पूर्वं कोपेनान्यथाकृतजगदयमद्य किं करिष्यतीति भयम् ॥४॥ त्रस्तेति । त्रस्तरूपम् अतिशयेन

तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलाक्षरम् । समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ॥ १ ॥ पूर्वमर्थं प्रतिश्रुत्य प्रतिज्ञां हातुमिच्छसि । राघवाणामयुक्तोऽयं कुलस्यास्य विपर्ययः ॥ २ ॥ यदीदं ते क्षमं राजन् गमिष्यामि यथागतम् । मिथ्याप्रतिज्ञः काकुत्स्थ सुखी भव सबान्धवः ॥ ३ ॥ तस्य रोषपरीतस्य विश्वामित्रस्य धीमतः । चचाल वसुधा कृत्स्ना विवेश च भयं सुरान् ॥ ४ ॥ त्रस्तरूपं स विज्ञाय जगत्सर्वं महानृषिः । नृपतिं सुव्रतो धीरो वसिष्ठो वाक्यमब्रवीत् ॥५॥ इक्ष्वाकूणां कुले जातः साक्षाद्धर्म इवापरः । धृतिमान् सुव्रतः श्रीमान्न धर्मं हातुमर्हसि ॥ ६ ॥ त्रिषु लोकेषु विख्यातो धर्मात्मा इति राघवः । स्वधर्मं प्रतिपद्यस्व नाधर्मं वोढुमर्हसि ॥ ७ ॥ संश्रुत्यैवं करिष्यामीत्यकुर्वाणस्य राघव । इष्टापूर्तवधो भूयात्तस्माद्रामं विसर्जय ॥ ८ ॥ कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः । गुप्तं कुशिकपुत्रेण ज्वलनेनामृतं यथा ॥ ९ ॥

त्रस्तम् । प्रशंसायां रूपप् । धीरः धीमान् ॥ ५ ॥ इक्ष्वाकूणामिति । त्वमिति शेषः ॥६॥ त्रिष्विति । धर्मात्मा इतीत्यत्र वाक्ये संहिताऽनित्या । स्वधर्मं प्रतिश्रुतनिर्वाहरूपम् ॥ ७ ॥ संश्रुत्येति । एवं करिष्यामीति संश्रुत्य तथाऽकुर्वाणस्येत्यर्थः । इष्टमश्वमेधान्तो यागः । पूर्तं वाप्यादिनिर्माणम् । तदुक्तं "वापीकूपतडागादिप्रतिष्ठासेतुबन्धनम् । अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥" इति । तयोर्वधः निष्फलत्वम् ॥ ८॥ कृतेति । कृतास्त्रं शिक्षितास्त्रं

तच्छ्रुत्वेति । स्नेहेन पुत्रस्नेहेन पर्याकुलानि स्खलन्ति अक्षराणि यस्मिन् ॥ १ ॥ पूर्वमिति । विपर्ययः प्रतिश्रुतार्थत्यागः ॥ २ ॥ यदिति । इदं प्रतिश्रुतार्थाकरणम्, ते क्षमं युक्तं यदि सुखी भवेति व्यङ्ग्योक्तिः ॥ ३ ॥ तस्य कोपपरीतस्येति सप्तम्यर्थे षष्ठी ॥ ४ ॥ त्रस्तेति । त्रस्तरूपम् अतिशयेन त्रस्तम् । जगत् त्रैलोक्यम् ॥ ५ ॥ साक्षाद्धर्म इव, इवशब्द एवार्थे, दृढारोपं रूपकमिदम् ॥ ६ ॥ त्रिष्विति । धर्मात्मेति गुणाभाव आर्षः ॥ ७ ॥ संश्रुत्येति । इष्टापूर्तवधो भूयात्-इष्टं यागदेवतार्चनादिकम्, पूर्तं वापीकूपतटाकादिनिर्माणादिकम् तयोर्वधः निष्फलत्वम् ॥ ८ ॥ कृतास्त्रमिति । कृतास्त्रम् शिक्षितास्त्रम् । न शक्ष्यन्ति न प्रसहिष्यन्ति ॥ ९ ॥

न शक्ष्यन्ति धर्षितुमिति शेषः। ज्वलनेन अग्निचक्रेण। 'अमृतमग्निचक्रेण सुरक्षितम्' इति भारते व्यक्तम् ॥ ९ ॥ राज्ञो भयनिवृत्तये विश्वामित्र माहात्म्यमाह—एष इति। परायणं परमस्थानम्। एतत्सदृशः कोऽपि तपस्वी नास्तीत्यर्थः ॥१०॥ एष इति। अस्त्रानिति पुँल्लिङ्गत्वमार्षम्। सचराचर इत्यनेन सामस्त्यं गम्यते। एनम् एतदवगतमस्त्रसमूहम् ॥११॥ केचनेत्युक्तं प्रपञ्चयति—न देवा इति ॥१२॥ सर्वाविदितं कथमयं वेत्तीत्यत्राह—सर्वेति।

एष विग्रहवान् धर्म एष वीर्यवतां वरः। एष बुद्ध्याधिको लोके तपसश्च परायणम् ॥ १० ॥ एषोऽस्त्रान् विविधान् वेत्ति त्रैलोक्ये सचराचरे। नैनमन्यः पुमान् वेत्ति न च वेत्स्यन्ति केचन ॥ ११ ॥ न देवा ऋषयः केचिन्नासुरा न च राक्षसाः। गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ १२ ॥ सर्वास्त्राणि कृशाश्वस्य पुत्राः परमधार्मिकाः। कौशिकाय पुरा दत्ता यदा राज्यं प्रशासति ॥ १३ ॥ तेऽपि पुत्राः कृशाश्वस्य प्रजापतिसुतासुताः। नैकरूपा महावीर्या दीप्तिमन्तो जयावहाः ॥१४॥ जया च सुप्रभा चैव दक्षकन्ये सुमध्यमे। ते सुवातेऽस्त्रशस्त्राणि शतं परमभास्वरम् ॥१५॥

कृशाश्वः प्रजापतिष्वेकः। परमधार्मिकाः परमधर्मनिष्ठाः, पापिनमस्पृशन्त इत्यर्थः। दत्ताः कृशाश्वेन। प्रशासति प्रशास्ति, अयमिति शेषः ॥१३॥ पितृप्राशस्त्यमुक्त्वा मातृप्राशस्त्यमाह—तेऽपीति। प्रजापतिः दक्षः। तस्य सुतयोः कन्ययोः सुताः ॥ १४ ॥ के प्रजापतिसुते [illegible]—जया चेति। न केवलं विश्वामित्रकृतसंरक्षणेनैवास्य रघुनाथस्य दुष्प्रसहत्वम्, किन्तु स्वरूपपर्यालोचनयापीत्याह—एष विग्रहवानिति। एषः रामभद्रः वीर्यवतां वर इत्यनेन सहजं वीर्यं तस्यैवोक्तं भवति। एष विद्याधिक इत्यनेन सहजज्ञानशक्तिः प्रतिपादिता। परायणं परमप्राप्यम् तपसः विविदिषासाधनत्वात् "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेः। एषोऽस्त्रान विविधान् वेत्तीत्यनेन सर्वेश्वरस्य भूतलावतारसमये तदीयानि दिव्यायुधान्यपि सहैवाग तानीति गम्यते। तथा च वक्ष्यति-"शरा नानाविधाकारा धनुरायतविग्रहम्। अनुव्रजन्ति काकुत्स्थं सर्वे पुरुषविग्रहाः॥" इति। "नैनमन्यः पुमान् वेत्ति" इत्यत्र "सहैव सन्तं न विजानन्ति देवाः" इत्यादिश्रुतिः प्रमाणम्। 'न च वेत्स्यन्ति' इत्यनेन न विदुश्चेति गम्यते। यद्वा एवं सहजप्रभावे वर्णितेऽपि पुत्र बुद्ध्या तिरोहितरघुनाथप्रभावापरिज्ञानात् दशरथस्य प्रत्ययो नोत्पन्नत इति विचार्य राज्ञो भयनिवृत्तिं राघवस्य भविष्यच्छ्रेयःप्राप्तिं च हृदि निधाय गोप्तुर्विश्वामित्रस्यापि रक्षणसामर्थ्यमुपपादयितुमाह एष विग्रहवानित्यादिना। एषः विश्वामित्रः। देवादयोऽपि न वेत्स्यन्तीति योजना ॥ १०–१२ ॥ सर्वास्त्राणीति। प्रशासति प्रशास्तीत्यर्थः। तदा दत्ताः शिवेनेति शेषः ॥ १३ ॥ तेऽपीति। प्रजापतिसुतासुताः प्रजापतिसुते दक्षकन्यके तयोः सुताः ॥ १४ ॥ जयेति। ते सुते सुवाते॥१५॥



---

१ भृशाश्वस्य। २ परमदुर्जयाः। ३ प्रजापतिसुतः समाः। इति च पाठान्तरम्।

सुवाते असुवाताम् । शस्त्राणि विशसनकर्तॄणि । परमभास्वरमिति जात्यभिप्रायेणैकवचनम् ॥१५॥ का कत्यसूयतेत्यत्राह—पञ्चाशतमिति । अमेयान् अपरिच्छेद्यवैभवान् ॥१६॥ सुप्रभेति । संहारान् अन्वर्थसंहारसंज्ञान् । दुर्द्धर्षान् परैरभिभवितुमशक्यान् । दुराक्रामान् अमोघानित्यर्थः ॥ १७ ॥ तानीति । यथावत् कार्त्स्न्येन अपूर्वाणामस्त्राणाम्, सः विदितसकलास्त्रः ॥१८॥ एवमिति श्लोकद्वयं स्पष्टम् ॥१९॥२०॥ इतीति । भास्वराङ्गः भासनशीलः, प्रसन्नमुख इति यावत् । मुमोद मुमुदे । व्यत्ययात्परस्मैपदम् । राघवस्य गमनमभिरुरोच राघवं कुशिकात्मजाय दातुं बुद्ध्याचिन्तयदिति उपस्कार्यम् । पूर्व

पञ्चाशतं सुतांल्लेभे जया नाम परान् पुरा । वधायासुरसैन्यानाममेयान् कामरूपिणः ॥ १६ ॥ सुप्रभाजनयच्चापि सुतान् पञ्चाशतं पुनः । संहारान्नाम दुर्द्धर्षान् दुराक्रामान् बलीयसः ॥ १७ ॥ तानि चास्त्राणि वेत्त्येष यथावत् कुशिकात्मजः । अपूर्वाणां च जनने शक्तो भूयस्स धर्मवित् ॥ १८ ॥ एवंवीर्यो महातेजा विश्वामित्रो महायशाः । न रामगमने राजन् संशयं गन्तुमर्हसि ॥ १९ ॥ तेषां निग्रहणे शक्तः स्वयं च कुशिकात्मजः । तव पुत्रहितार्थाय त्वामुपेत्याभियाचते ॥ २० ॥ इति मुनिवचनात् प्रसन्नचित्तो रघुवृषभश्च मुमोद भास्वराङ्गः । गमनमभिरुरोच राघवस्य प्रथितयशाः कुशिकात्मजाय बुद्ध्या ॥ २१ ॥ इत्यार्षे श्रीरामायणे बालकाण्डे एकविंशः सर्गः ॥ २१ ॥

तथा वसिष्ठे ब्रुवति राजा दशरथः सुतम् । प्रहृष्टवदनो राममाजुहाव सलक्ष्मणम् ॥ १ ॥ कृतस्वस्त्ययनं मात्रा पित्रा दशरथेन च । पुरोधसा वसिष्ठेन मङ्गलैरभिमन्त्रितम् ॥ २ ॥

वत्पुष्पिताग्रावृत्तम् ॥२१॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकविंशः सर्गः ॥२१॥ अथ प्रसन्नहृदयेन राज्ञा रामविसर्जनं द्वाविंशे—तथेत्यादि । सलक्ष्मणं राममिति तयोरविनाभावज्ञानादिति भावः ॥ १ ॥ कृतेत्यादि श्लोकद्वयमेकान्वयम् । पित्रा दश

पञ्चाशतमिति । परान् अन्यान् । असंपिणः अदृश्यरूपान ॥१६॥ सुप्रभेति । दुराक्रामान अमोघान । दीर्घ आर्षः ॥१७॥ तानीति । यथावत कार्त्स्न्येन । अपूर्वाणाम् अस्त्रविशेषाणामिति शेषः ॥ १८–२० ॥ इतीति । कुशिकात्मजाय कुशिकात्मजायेम् गमनं रुरोच ऐच्छत् ॥ २१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायाम् एकविंशः सर्गः ॥२१॥ तथा वसिष्ठ इति । सलक्ष्मणं राममाजुहाव । तयोरविनाभावज्ञानादिति भावः ॥१॥ कृतेत्यादि

१ जया लब्धवरा वरान् । २ अक्षयान् कामरूपिणः । ३ तेनास्य मुनिमुख्यस्य सर्वज्ञस्य महात्मनः । न किंचिदप्यविदितं भूतं भव्यं च राघव । एवं । इति पाठान्तरम् ॥

रथेन, स्वंनति शेषः। कृतस्वस्त्ययनं कृतमङ्गलानुष्ठानम्। मङ्गलैर्मङ्गलसूक्तैः। "स्वस्ति नो मिमीताम्" इत्यादिभिः ॥ २ ॥ ३ ॥ अथ यात्रायां शुभ निमित्तसम्पत्तिं दर्शयति–तत इत्यादि। गतम् अनुगतम् ॥ ४ ॥ पुष्पेति। प्रयाते प्रयातुमुपक्रान्ते। देवदुन्दुभिनिस्वनश्च अवतारप्रयोजनोपक्रमत्वात्, शङ्खदुन्दुभिनिर्घोषो दशरथीयः ॥५॥ विश्वामित्र इति। धन्वी धनुष्मान्। व्रीह्यादित्वादिनिः ॥६॥ कलापिनावित्यादिसार्द्धश्लोक एकान्वयः। कलापिनौ तूणीरधारिणौ "कलापो भूषणे बर्हे तूणीरे संहतावपि" इत्यमरः। शोभयानौ प्रकाशयन्तौ। आने मुगभावश्छान्दसः। विश्वस्य मित्रं विश्वामित्रः "मित्रे

स पुत्रं मूर्ध्न्युपाघ्राय राजा दशरथः प्रियम्। ददौ कुशिकपुत्राय सुप्रीतेनान्तरात्मना ॥ ३ ॥ ततो वायुः सुखस्पर्शो विरजस्को ववौ तदा। विश्वामित्रगतं रामं दृष्ट्वा राजीवलोचनम् ॥ ४ ॥ पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिःस्वनैः। शङ्खदुन्दुभिनिर्घोषः प्रयाते तु महात्मनि ॥ ५ ॥ विश्वामित्रो ययावग्रे ततो रामो महायशाः। काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात् ॥ ६ ॥ कलापिनौ धनुष्पाणी शोभयानौ दिशो दश। विश्वामित्रं महात्मानं त्रिशीर्षाविव पन्नगौ। अनुजग्मतुरक्षुद्रौ पितामहमिवाश्विनौ ॥ ७ ॥ तदा कुशिकपुत्रं तु धनुष्पाणी स्वलंकृतौ। बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती ॥ ८ ॥ कुमारौ चारुवपुषौ भ्रातरौ रामलक्ष्मणौ। अनुयातौ श्रिया दीप्त्या शोभयेतामनिन्दितौ। स्थाणुं देवमिवाचिन्त्यं कुमाराविव पावकी ॥ ९ ॥

चर्षौ" इति विश्वशब्दस्य दीर्घः। श्रुतिश्च–"तस्यों विश्वं मित्रमासीद्यदिदं किञ्च तस्माद्विश्वामित्र इत्याचक्षते" इति। प्रत्येकं तूणीरद्वयधारणाच्छिरोभ्यां च त्रिशीर्षाविवेत्युपमानम्, धनुस्तूणीरशरधरत्वाद्वा। अक्षुद्रौ अनल्परूपवीर्यादिवैभवौ ॥ ७ ॥ तदेत्यादिसार्द्धश्लोकद्वयमेकान्वयम्। बद्धं गोधा

ततः इति। विश्वामित्रं गतम् अनुगतम् ॥ ४ ॥ पुष्पवृष्टि दशरथेन, स्वयमिति शेषः। कृतस्वस्त्ययनं कृतमङ्गलाचरणम्। मङ्गलैः मङ्गलसूक्तैः मन्त्रितम् ॥ २ ॥ ३ ॥ रिति। प्रयाति यातुमुपक्रान्ते, देवदुन्दुभिनिस्वनश्चावताग्प्रयोजनोपक्रमत्वात् ॥ ५ ॥ ६ ॥ कलापिनावित्यादि। कलापिनौ तूणीरधरौ। शोभयानौ प्रकाशयन्तौ। विश्वस्य मित्रं विश्वामित्रः "मित्रे चर्षौ" इति विश्वशब्दस्य दीर्घः। प्रत्येकं तूणीरद्वयधारणात् त्रिशीर्षावित्युपमानम्। "पञ्चशीर्षाविवोरगौ" इति पाठे–तूणीरद्वयं भुजद्वयं शिरश्चेति प्रत्येकं पञ्चकस्य विद्यमानत्वात् पञ्चशीर्षावित्युक्तिः ॥ ७ ॥ तदेत्यादि। गोधा हस्तत्राणम्। पावकी स्कन्दविशाखौ ॥ ८ ॥ ९ ॥

१ अन्तरात्मना। ततो भूयो वसिष्ठेन मङ्गलैरभिमन्त्रितम्। आदाय विप्रो हृष्टोऽभूत् त्रिदशा विज्वराभवन् ॥ ततो। २ धनुर्धरः। ३ दीप्तो। इति पाठान्तरम्।

चर्मकृताङ्गुलित्राणं ययोस्तौ तथा। गोधा हस्तत्राणमित्येके। द्युतिः सामान्यशोभा, श्रीः विशेषशोभा, शोभयेतां व्यत्ययेन लङर्थे लोट्। विश्वामित्रमनुयातौ रामलक्ष्मणौ स्थाणुमनुयातौ कुमाराविवाशोभेतामित्यर्थः। स्थाणुं रुद्रं, पावकी पावकात्प्रादुर्भूतौ स्कन्दविशाखौ "ततोऽभवच्चतुर्मूर्तिः क्षणेन भगवान् प्रभुः। स्कन्दो विशाखः शाकश्च नैगमेषश्च पृष्ठतः॥" इति भारतोक्तेः। अचिन्त्यम् अचिन्त्यवैभवम् ॥८॥९॥ अध्यर्द्धेति। अधिकमर्द्धं यस्मिन् तदध्यर्द्धं, अध्यर्द्धं च तत् योजनं च अध्यर्द्धयोजनम्, सार्द्धयोजनमितियावत्। तावद्दूरगमनेन बालयोः क्षुत्तृट्पीडा माभूदिति तन्निवर्तकविद्याद्वयोपदेशाय

अध्यर्द्धयोजनं गत्वा सरय्वा दक्षिणे तटे। रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ॥ १० ॥ गृहाण वत्स सलिलं माभूत् कालविपर्ययः। मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा ॥११॥ न श्रमो न ज्वरो वा ते न रूपस्य विपर्ययः। न च सुप्तं प्रमत्तं वा धर्षयिष्यन्ति नैर्ऋताः ॥ १२ ॥ न बाह्वोः सदृशो वीर्ये पृथिव्यामस्ति कश्चन। त्रिषु लोकेषु वै राम न भवेत् सदृशस्तव ॥ १३ ॥ न सौभाग्ये न दाक्षिण्ये न ज्ञाने बुद्धिनिश्चये। नोत्तरे प्रतिवक्तव्ये समो लोके तवानघ ॥ १४ ॥ एतद्विद्याद्वये लब्धे भविता नास्ति ते समः। बला चातिबला चैव सर्वज्ञानस्य मातरौ ॥ १५ ॥ क्षुत्पिपासे न ते राम भविष्येते नरोत्तम। बलामतिबलां चैव पठतः पथि राघव ॥ १६ ॥

आह्वयते—रामेति। मधुरां भक्तिपूर्वकोच्चारणात् रामनाम्नः श्रवणानन्दकरत्वाच्च ॥ १० ॥ गृहाणेति। सलिलं गृहाण, शुद्धाचमनं कुर्वित्यर्थः। विपर्ययोऽतिक्रमः, विलम्ब इति यावत्। मन्त्रग्रामं मन्त्रसमष्टिरूपाम्, इदं बलातिबलयोः प्रत्येकं विशेषणम् ॥ ११ ॥ तद्ग्रहणफलमाह—न श्रम इत्यादि। विपर्ययः अन्यथाभावः, भविष्यतीतिशेषः। सुप्तं, त्वामितिशेषः ॥१२॥ न बाह्वोरिति। बलामतिबलां च पठतः, तवेतिशेषः। अस्ति, स्यादित्यर्थः। त्रिष्वित्यत्र सर्वगुणैः निःसीमत्वमुच्यते ॥ १३ ॥ नेति। सौभाग्ये सौन्दर्ये। दाक्षिण्ये सामर्थ्ये। बुद्धिनिश्चये बुद्ध्या कार्यनिश्चये समः, भवतीति शेषः ॥ १४ ॥ सामान्येनोपसंहरति—एतदिति। ते समः नास्ति, न भविता चेत्यर्थः। मातरौ कारणभूते ॥ १५ ॥ क्षुदिति। ते भविष्येते भविष्यतः ॥ १६ ॥

अध्यर्धयोजनम् अर्धाधिकयोजनम्, षट्क्रोशमिति यावत् ॥ १० ॥ गृहाणेति। कालस्य पर्ययः अतिक्रमः। मन्त्रग्रामं मन्त्रसमूहम्। बलातिबलाख्यां विद्यां गृहाणेति सम्बन्धः। विपर्ययः अन्यथाभावः ॥ ११ ॥ न श्रम इति। प्रमत्तं प्रमादयुक्तम्, कार्यान्तरव्यासङ्गादिना असावधानमिति यावत् ॥ १२ ॥ नेति। ज्ञाने सूक्ष्मार्थदर्शने। बुद्धिनिश्चये बुद्ध्या कार्यनिश्चये ॥ १३ ॥ १४ ॥ एतदिति। सर्वज्ञानस्य मातरौ सर्वमन्त्रजन्यज्ञानस्य कारणभूतौ ॥ १५ ॥ क्षुदिति ॥ १६ ॥

---

१ श्रमां। २ गृहाण सर्वलोकस्य गुप्तये रघुनन्दन ॥ विद्या। इति पाठान्तरम्।

विद्येति । अधीयाने त्वयि भवेदिति शेषः । तेजःसमन्विते प्रभावसमन्विते ॥ १७ ॥ प्रदातुमिति । तव प्रदातुं त्वमेव सदृशो नान्य इति योजना ॥१८॥ एतदुपपादयति—काममिति । एते पूर्वोक्ताः सौभाग्यादयः । कामं प्रकामं त्वयि सन्ति । यद्यपि तथापि तपसा सम्भृते लब्धे एते विद्ये । त्वदुपदेशात् बहुरूपे लोके बहुधा विस्तृते भविष्यतः ॥ १९ ॥ तत इति । जलं स्पृष्ट्वा, आचम्येत्यर्थः । भावितात्मनः ध्यातात्मस्वरूपात् ॥ २० ॥ विद्येति । विद्यासमुदितः समुदितविद्यः, लब्धविद्य इति यावत् ॥ २१ ॥ गुर्वीति । गुरुकार्याणि गुरौ कर्तव्यानि पादसंवाहनादीनि, कुशिकात्मजे नियुज्य कृत्वा, त्रयः स्वयं

विद्याद्वयमधीयाने यशश्चाप्यतुलं त्वयि । पितामहसुते ह्येते विद्ये तेजःसमन्विते ॥ १७ ॥ प्रदातुं तव काकुत्स्थ सदृशस्त्वं हि धार्मिक ॥ १८ ॥ कामं बहुगुणाः सर्वे त्वय्येते नात्र संशयः । तपसा सम्भृते चैते बहुरूपे भविष्यतः ॥ १९ ॥ ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः । प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः ॥२०॥ विद्यासमुदितो रामः शुशुभे भूरिविक्रमः । सहस्ररश्मिर्भगवान् शरदीव दिवाकरः ॥२१॥ गुरुकार्याणि सर्वाणि नियुज्य कुशिकात्मजे । ऊषुस्तां रजनीं तत्र सरय्वां सुसुखं त्रयः ॥२२॥ दशरथनृपसूनुसत्तमाभ्यां तृणशयनेऽनुचिते तदोषिताभ्याम् । कुशिकसुतवचोनुलालिताभ्यां सुखमिव सा विबभौ विभावरी च ॥२३॥इत्यार्षे श्रीरामा०बालकाण्डे द्वाविंशः सर्गः॥२२॥

तौ चेति त्रयः । तत्र सरय्वां सरयूतीरे सुसुखमूषुः । यद्वा एतदर्धस्य पूर्वेणान्वयः । कुशिकात्मजे गुरुकार्याणि नियुज्य विद्यासमुदितो रामः शुशुभ इति ॥ २२ ॥ दशरथेति । चतुर्थ्यर्थे "बहुलं छन्दसि" इति षष्ठ्यर्थे चतुर्थी । दशरथपुत्रयोर्विभावरी सुखमिव विबभौ, प्रभातेत्यर्थः । इवशब्दो वाक्यालङ्कारे । अत्र रामाय विद्यादानं लक्ष्मणस्याप्युपलक्षणम् । पश्चाद्रामो वा लक्ष्मणायोपदिदेशेति बोध्यम् । पूर्ववत्पुष्पिताग्रावृत्तम् ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥

विद्येति । विद्याद्वयमधीयाने । त्वयीति शेषः । भवेदित्यध्याहार्यम् । पितामहसुते विद्ये ॥ १७ ॥ प्रदातुमिति । तव त्वमेव सदृशः ॥ १८ ॥ काममिति । एते पूर्वोक्ताः सौभाग्याद्यो गुणाः । तपसा नियमेन । संभृते बहुरूपे बहुफलप्रदे ॥ १९ ॥ २० ॥ विद्यासमुदित इत्यादि सार्द्धश्लोकमेकं वाक्यम् । गुरुकार्याणि गुरुविषयकार्याणि पादोपसंग्रहणादीनि कुशिकात्मजे नियोज्य कृत्वा, विद्यासमुदितः शुशुभे इति सम्बन्धः ॥ २१ ॥ २२ ॥ दशरथेति । नृपसूनुसत्तमाभ्यामिति षष्ठ्यर्थे चतुर्थी । विबभौ विभातेत्यर्थः ॥ २३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां द्वाविंशः सर्गः ॥२२॥

अथैषामङ्गदेशप्राप्तिं पूर्ववृत्तकथनव्याजेन व्यञ्जयति त्रयोविंशे—प्रभातायामित्यादि । पर्णसंस्तरे पर्णमयास्तरणे । पूर्वसर्गान्ते तृणशयनस्योक्तत्वादत्र तृणमिश्रपर्णशयने इति बोध्यम् ॥ १ ॥ उभयप्रबोधनार्थमागतो विश्वामित्रो रामस्य " स मया बोधितः श्रीमान् सुखसुप्तः परंतपः " इत्युक्तरीत्या निद्राकालिकीं श्रियमवलोक्य तदासक्तः सन् स्वागमनकार्यं विस्मृत्य इमं प्रसूतवती कौसल्या किंवा तपस्तप्तवतीति विस्मयते । कौसल्या सुप्रजाः बोधनकाले विस्मितमुखो मुनिरासीत् । शोभना प्रजा पुत्रो यस्याः सा सुप्रजाः । " नित्यमसिच् प्रजामेधयोः " इत्यसिच् । त्वज्जननी कौसल्या सुपुत्रा । यद्वा स्वगतवचनम् । एतज्जननी कौसल्या सुप्रजाः । " कौसल्या शुशुभे तेन पुत्रेणामिततेजसा " इतिवत् । यद्वा कौसल्यायाः सुप्रज इति सम्बोधनम् । कर्मधारयेऽप्यापोंऽसिच् " ढ्रलोपे पूर्वस्य दीर्घोऽणः " इति दीर्घः । " सुपां सुलुक् " इत्यादिना पूर्वसवर्णदीर्घो वा । परशुरामव्यावृत्त्यर्थं

प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः । अभ्यभाषत काकुत्स्थौ शयानौ पर्णसंस्तरे ॥ १ ॥
कौसल्या सुप्रजा राम पूर्वा सन्ध्या प्रवर्तते । उत्तिष्ठ नरशार्दूल कर्त्तव्यं दैवमाह्निकम् ॥ २ ॥

विशेषणम् । कौसल्यादशरथयोरुभयोरपि तपःफलत्वेनावतीर्णत्वेऽपि कथं कौसल्यासुप्रजा इत्युक्तिः ? उच्यते—" माता पुत्रस्य भूयांसि कर्माण्यारभते " इत्युक्तरीत्या " मातृदेवो भव पितृदेवो भव " इतिवत् मातृप्राधान्योक्तेः । " पितुः शतगुणं माता " इति स्मृतेश्च । यद्वा कौसल्यादशरथयोर्महदन्तरमस्ति । दशरथो हि " अहं वेद्मि महात्मानम् " इति परत्वेन निवेद्यमानेऽपि तदकिञ्चित्कृत्य " दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि " इति रामे केवलं पुत्रत्वं मन्वानो वसिष्ठसन्धुक्षितहृदयो रामं प्रेषितवान् । कौसल्या तु केवलवात्सल्यपराऽपि द्रुतं सादरं प्रेषितवती । तदिदं तारतम्यमवलोक्य मुदितहृदयो मुनिराह—कौसल्या सुप्रजा इति । मातृवाक्यं पितृवाक्यं च पालनीयमित्यमुं धर्मं लोके प्रवर्तयितुं स्वयं तदनुष्ठातृत्वेन सुप्रजा इत्युक्तम् । अथ क्रमेण गुणान्तरावगाहान्निस्तीर्य प्रबोधयति रामेत्यादि । रामेत्यनेन स्वापकालिकसौन्दर्यमुच्यते । पूर्वा

प्रभातायामिति । पूर्वसर्गान्ते ' तृणशयने ' इत्युक्त्वा इदानीं ' पर्णसंस्तरे ' इत्युक्तत्वाच्छयनस्योभयात्मकत्वं वेदितव्यम् ॥१॥ कौसल्या सुप्रजा रामेति । हे राम ! त्वां प्रसूतवती कौसल्या सुप्रजाः शोभनपुत्रा । अथवा स्वगतमेतत् । अस्य मातैव सुपुत्रेति । राम पूर्वासन्ध्येत्यारभ्य प्रश्नवचनम् । दैवम् देवताकृत्यम् ॥ २ ॥

---

१ काकुत्स्थं शयानं । इति पाठान्तरम् ।

सन्ध्या प्रवर्तते। पूर्वा सन्ध्या दिवाकरमिव रामदिवाकरं त्वां कौसल्या जनितवतीति भावः। यद्वा मातृवत्पूर्वसन्ध्यामप्युपलालयेति। यद्वा पूर्वा सन्ध्या प्रवर्तते आदित्यस्येव भवतोऽयं विरोधिनिरसनारम्भसमय इति। यद्वा पूर्वा सन्ध्या प्रवर्तते अज्ञानान्धकारो गतः, भगवत्साक्षात्कारो मे जातः, अद्य मे सुप्रभातमिति। यद्वा जगतः सर्वस्य भगवदवतारोत्सवोद्रेककालो जातः। "अद्य मे सफलं जन्म सुप्रभाता च मे निशा। यदुन्निद्राब्जपत्राक्षं विष्णोर्द्रक्ष्याम्यहं मुखम्॥" उत्तिष्ठ निद्राश्रीरवलोकिता, प्रबोधश्रियमप्यवलोकितुमिच्छामि। नरशार्दूल नरश्रेष्ठ, नरश्रेष्ठतया भवतापि सन्ध्योपास्या "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इत्युक्तेः। उत्तिष्ठ नरशार्दूल आश्रितविरोधिनिरसनशीलस्य किं निद्रावकाशोऽप्यस्ति? नरशार्दूल मद्यज्ञनिर्वाहक! उत्थानप्रयोजनमाह कर्तव्यं दैवमाह्निकम्, देवेन सर्वेश्वरेण विहितं नित्यकर्म कर्तव्यम्। यद्वा देवशब्दो भवदर्थकः। भवदीयमाह्निकं भवदाज्ञारूपं कर्म मया

तस्यर्षेः परमोदारं वचः श्रुत्वा नरोत्तमौ। स्नात्वा कृतोदकौ वीरौ जेपतुः परमं जपम्॥ ३॥ कृताह्निकौ महावीर्यौ विश्वामित्रं तपोधनम्। अभिवाद्याभिसंहृष्टौ गमनायाभितस्थतुः॥ ४॥ तौ प्रयातौ महावीर्यौ दिव्यां त्रिपथगां नदीम्। ददृशाते ततस्तत्र सरय्वाः सङ्गमे शुभे॥ ५॥ तत्राश्रमपदं पुण्यमृषीणामुग्रतेजसाम्। बहुवर्षसहस्राणि तप्यतां परमं तपः॥ ६॥ तं दृष्ट्वा परमप्रीतौ राघवौ पुण्यमाश्रमम्। ऊचतुस्तं महात्मानं विश्वामित्रमिदं वचः॥७॥ कस्यायमाश्रमः पुण्यः को न्वस्मिन् वसते पुमान्। भगवन् श्रोतुमिच्छावः परं कौतूहलं हि नौ॥ ८॥

कर्तव्यम्, तत्स्वीकुर्वित्यर्थः। यद्वा दैवं देवाराधनभूतम् आह्निकम्, अह्ना निर्वर्त्यमेकसुत्यात्मकं कर्म यज्ञात्मकम्, कर्तव्यमित्यर्थः॥ २॥ तस्येति। परमोदारम्, परमगम्भीरमित्यर्थः। कृतोदकौ कृतार्घ्यप्रक्षेपौ। यद्वा कृतदेवर्षितर्पणौ। जप्यत इति जपः तम्। गायत्रीमिति यावत्। तस्या एव परमत्वात् "न सावित्र्याः परं जप्यम्" इति वचनात्॥ ३॥ कृतेति। अह्नि भवमाह्निकम्। "कालाट्ठञ्"। कृतप्रातःकृत्यावित्यर्थः। सन्ध्योपासनब्रह्मयज्ञसमिदाधानानि प्रातःकृत्यानि। अभितस्थतुः अभिमुखं स्थितौ॥ ४॥ ताविति। ततः तस्माद्देशात् प्रयातौ। तत्र प्रसिद्धे सरय्वाः सङ्गमे। त्रिपथगां गङ्गां नदीं ददृशाते॥ ५॥ तत्रेति। तत्र गङ्गासरय्वोः सङ्गमे, ददृशाते इत्यनुषज्यते। तप्यतां तपताम्, कर्तरि यत् छान्दसः॥६॥ तामिति स्पष्टम्॥७॥ कस्येति।



१ नृपात्मजौ। २ अग्र्यतेजसाम्, भावितात्मनाम्। ३ वचः। कौतूहलात्तौ धर्मज्ञौ वीर्यवन्तं तपोधनम्। कस्यायं। इति पाठान्तरम्।

वसते वसति ॥ ८ ॥ तयोरिति । प्रश्नमाधुर्यात् प्रहासः । यद्वा मानुषभावनटनात् । यस्यायमाश्रमः स श्रूयतामिति योजना । रामेति सम्बोधनं प्राधान्यात् ॥ ९ ॥ कन्दर्प इति अर्द्धम् । यः काम इत्युच्यते स कन्दर्पः पुरा मूर्तिमानासीत् ॥ १० ॥ तपस्यन्तमिति सार्द्धश्लोकः । तपस्यन्तं तपश्चरन्तम् । "कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" इति क्यङ् । इह आश्रमे तपस्यन्तम् । नियमेन अविच्छेदेन । समाहितं समाधिमन्तम् । कृतोद्वाहं कृतपार्वतीपरिणयम्, गच्छन्तं शुश्रूषणार्थं पार्वतीं प्राप्नुवन्तम्, देवेशं स्थाणुं रुद्रम्, दुर्मेधाः कामो धर्षयामास । कृतोद्वाहमिति क्रियाविशेषणम्, यदा अयं कृतो

तयोस्तद्वचनं श्रुत्वा प्रहस्य मुनिपुङ्गवः । अब्रवीच्छ्रूयतां राम यस्यायं पूर्व आश्रमः ॥ ९ ॥ कन्दर्पो मूर्तिमानासीत् काम इत्युच्यते बुधैः ॥ १० ॥ तपस्यन्तमिह स्थाणुं नियमेन समाहितम् । कृतोद्वाहं तु देवेशं गच्छन्तं समरुद्गणम् । धर्षयामास दुर्मेधा हुंकृतश्च महात्मना ॥ ११ ॥ अवदग्धस्य रौद्रेण चक्षुषा रघुनन्दन । व्यशीर्यन्त शरीरात् स्वात् सर्वगात्राणि दुर्मतेः ॥ १२ ॥ तस्य गात्रं हतं तत्र निर्दग्धस्य महात्मना । अशरीरः कृतः कामः क्रोधाद्देवेश्वरेण हि ॥ १३ ॥

द्वाहो भवति तदा तं पार्वत्यां साभिलाषचित्तमकरोदित्यर्थः । समरुद्गणमित्यपि क्रियाविशेषणम् । तदनुमतिपूर्वकमित्यर्थः । महात्मना हुंकृतश्चासीत् ॥ ११ ॥ अवदग्धस्येति । व्यशीर्यन्त विशीर्णानि । "शॄ हिंसायाम्" इत्यतः कर्तरि श्यन् ॥ १२ ॥ तस्येति । तत्र तदा महात्मना निर्दग्धस्य शरीरं हतम्, अतः कामः

—तस्येति । कृतोदकौ-कृतार्घ्यप्रदानादिकौ । परमं जपं सावित्रीम् ॥ ३–७ ॥ कस्येति । वसते वसति ॥ ८ ॥ कन्दर्पः कुत्सितदर्पः, पुरा मूर्तिमानासीत् । पूर्वं विग्रहविशिष्टोऽभूदित्यर्थः ॥ ९ ॥ १० ॥ तपस्यन्तमित्यादि । कृतोद्वाहं करिष्यमाणोद्वाहम्, नियमेन समाहितम् तपस्यन्तम् तपश्चर्यायुक्तम् अत एव इह आश्रमे तपसः आत्मनः कांक्षितत्वात् गच्छन्तम् आगच्छन्तम् समरुद्गणम् स्थाणुं कामो धर्षयामासेति द्वयोरन्वयः । यद्वा कृतोद्वाहं गच्छन्तम् उद्वाहं कृत्वा गमिष्यन्तम् । वर्तमानसामीप्ये भविष्यति लट् । तावदिहाश्रमे, तपस्यन्तं तपः कुर्वाणं स्थाणुं धर्षयामासेति । हुंकृतः-हुङ्कारेण निराकृतः ॥ ११ ॥ अवदग्धस्येति । व्यशीर्यन्त

**विषम०**—कृतोद्वाहं समाधेः कृतव्युत्थानम् । कालोचितविलासदेशं गच्छन्तम् ॥ ११ ॥

**मुनिभाव०**—तपस्यन्तमिति । सः मरुद्गणमिति पदच्छेदः । सः मन्मथः गच्छन्तमन्तर्बहिः सञ्चरन्तम् मरुद्गणं पञ्चप्राणवायुगणं प्रति, कृतोद्वाहमित्यत्र नियमितवायुगणं बहिर्गच्छन्तं वायुगणमन्तःपूरयन्तम् श्वासनिरोधं कृतवन्तमित्यर्थः । अत एव एवंप्रकारेण नियमेन समाहितं समन्वितं तपस्यन्तं स्थाणुं धर्षयामास । अतएव महात्मना हुंकृतश्च । यद्वा तपसि तपोविषये अन्तं सिद्धिं गच्छन्तं प्राप्तवन्तम् अतएव समरुद्गणं मरुद्गणसहितम्, कृतोद्वाहं कृताभ्युत्थानम्, कृतप्रस्थानमित्यर्थः । स्थाणुं धर्षयामास । यद्वा इह गच्छन्तं कैलासादिह आगतवन्तं तपस्यन्तं तपःकुर्वन्तं कृतोद्वाहं पार्वत्या मनसा कृतप्रायोद्वाहम् । यद्वा गच्छन्तमितस्ततस्सञ्चलन्तं मरुद्गणं प्राणादिवायुगणं प्रति कृतोद्वाहं कृतनियमनं तपस्यन्तं स्थाणुं नियमे नियमविषये न समाहितं समाधिरहितं यथा तथा स कामो धर्षयामास ॥ ११ ॥

अशरीरः कृतः ॥१३॥ अनङ्ग इति। कामस्तदाप्रभृति अनङ्ग इति विख्यातः। सोऽङ्गविषयः अङ्गदेशश्च विख्यातः। तत्र हेतुमाह यत्रेति। यस्मात्कारणादत्र कामोऽङ्गं मुमोच तस्मादयं देशोऽङ्ग इत्युच्यत इत्यर्थः ॥१४॥ तस्येति। तस्य कामस्य स्थाणोर्वा। अयमाश्रमः इमे मुनयः तस्य। पुरा पूर्वकालमारभ्य सन्तानपरम्परया शिष्याः, अतएव धर्मपराः, अतएव च तेषां पापं न विद्यते। पूर्वं रुद्रशिष्या अपि संप्रति तच्छिष्यत्वकृतपापं न विद्यत इत्यर्थः। एतेन प्रश्नद्वयस्याप्युत्तरमुक्तम्। हिमवति तपस्यन्तं कामोऽधर्षयदित्युक्तिः पुराणान्तरे कल्पान्तरमपेक्ष्य ॥ १५ ॥ इहेति। इह अङ्गविषये।

अनङ्ग इति विख्यातस्तदाप्रभृति राघव। स चाङ्गविषयः श्रीमान् यत्राङ्गं प्रमुमोच ह ॥ १४ ॥ तस्यायमाश्रमः पुण्यस्तस्येमे मुनयः पुरा। शिष्या धर्मपरा नित्यं तेषां पापं न विद्यते ॥१५॥ इहाद्य रजनीं राम वसेम शुभदर्शन। पुण्ययोः सरितोर्मध्ये श्वस्तरिष्यामहे वयम् ॥ १६ ॥ अभिगच्छामहे सर्वे शुचयः पुण्यमाश्रमम्। स्नाताश्च कृतजप्याश्च हुतहव्या नरोत्तम ॥ १७ ॥ तेषां संवदतां तत्र तपोदीर्घेण चक्षुषा। विज्ञाय परमप्रीता मुनयो हर्षमागमन् ॥ १८ ॥ अर्घ्यं पाद्यं तथातिथ्यं निवेद्य कुशिकात्मजे। रामलक्ष्मणयोः पश्चादकुर्वन्नतिथिक्रियाम् ॥ १९ ॥ सत्कारं समनुप्राप्य कथाभिरभिरञ्जयन्। यथार्हमजपन् सन्ध्यामृषयस्ते समाहिताः ॥ २० ॥

तरिष्यामहे, गङ्गामिति शेषः ॥१६॥ अभीति। स्नाताः अतएव शुचयो भूत्वा पुण्यमाश्रममभिगच्छामहे। व्यत्ययात्तङ् ॥१७॥ तेषामिति। तेषां संवदतां तेषु संवदत्सु। तपसा दीर्घेण विप्रकृष्टार्थग्रहणसमर्थेन। चक्षुषा ज्ञानेन। विज्ञाय दृष्ट्वा, तेषामागमनं ताटकादिनिरासनिमित्तं, तपोजन्यज्ञानेन विदित्वेत्यर्थः। हर्षं हर्षपुलकम् ॥ १८॥ अर्घ्यमिति। अर्घ्यं पूजार्थमुदकम्, पाद्यं पादार्थमुदकम्, "पादार्घाभ्यां च" इति यत्प्रत्ययः। आतिथ्यम् आचमनीयपूर्वकं भोज्यप्रदानम्। अतिथिक्रियाम् अतिथिपूजाम् ॥ १९ ॥ सत्कारमिति। सत्कारं कुशलप्रश्नादिकं विश्वामित्रात्समनुप्राप्य अभिरञ्जयन् अभ्यरञ्जयन् अतिथिभूतानिति शेषः। क्रमेण सायं सन्ध्यागमे सति, ते तद्वासिनो विश्वामित्रादयश्च। छत्रिन्यायेन ऋषय इत्युक्तम्, समाहिताः अनन्यपराः।



विशीर्णानि गात्राणि अवयवाः ॥ १२ ॥ १३ ॥ अनङ्ग इति। अङ्गविषयः अङ्गदेशः विख्यात इत्यनुषज्यते ॥ १४ ॥ तस्येति। तस्य कामस्य ॥ १५–१७ ॥ तेषां संवदतां तेषु संवदत्सु सत्सु तपोदीर्घेण चक्षुषा विप्रकृष्टार्थग्राहिणा चक्षुषा ज्ञानेन ॥ १८ ॥ १९ ॥ सत्कारमिति। समनुप्राप्य प्रापय्य। अभिरञ्जयन् अभ्यपालयन्

सन्ध्याम् अहोरात्रयोः सन्धिम् । अत्यन्तसंयोगे द्वितीया । यथार्हं यथायोग्यम्, यथाशक्तीति यावत् । " सहस्रपरमां देवीं शतमध्यां दशावराम् " इति वचनात् । अजपन्, गायत्रीमिति शेषः ॥ २० ॥ तत्रेति । आनीताः निद्रायै स्वाश्रमं प्रापिताः । कामाश्रमपदे कामदाहात्कामाश्रमनामकस्य पदे स्थाने ॥ २१ ॥ कथाभिरिति । कथाभिः तदाश्रमवैभवपराभिः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्ड व्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥ एवं कामाश्रमपदं रामचरणनलिनविन्यासेन कृतार्थीकृत्य ताटकावनमपि निष्कल्मषीकर्तुं रामं प्रापयति मुनि

तत्रवासिभिरानीता मुनिभिः सुव्रतैः सह । न्यवसन् सुसुखं तत्र कामाश्रमपदे तदा ॥ २१ ॥ कथाभिरभिरामाभि रभिरामौ नृपात्मजौ । रमयामास धर्मात्मा कौशिको मुनिपुङ्गवः ॥ २२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥ ततः प्रभाते विमले कृत्वाह्निकमरिन्दमौ । विश्वामित्रं पुरस्कृत्य नद्यास्तीरमुपागतौ ॥ १ ॥ ते च सर्वे महात्मानो मुनयः संशितव्रताः । उपस्थाप्य शुभां नावं विश्वामित्रमथाब्रुवन् ॥ २ ॥ आरोहतु भवान्नावं राजपुत्रपुरस्कृतः । अरिष्टं गच्छ पन्थानं माभूत्कालविपर्ययः ॥ ३ ॥ विश्वामित्रस्तथे त्युक्त्वा तानृषीनभिपूज्य च । ततार सहितस्ताभ्यां सरितं सागरङ्गमाम् ॥ ४ ॥

श्चतुर्विंशे–तत इत्यादि । विमले सूर्योदय इत्यर्थः । नद्याः गङ्गायाः ॥ १ ॥ ते चेति । उपस्थाप्य आनाय्य ॥ २ ॥ आरोहत्विति । राजपुत्राभ्यां पुर स्कृतः पूजितः । ताटकावधाभिप्रायेणाहुः अरिष्टमिति । अरिष्टं शुभं यथा भवति तथा । "अरिष्टं पापशुभयोः" इतिहलायुधः । कालविपर्ययः कालविलम्ब इतियावत् ॥ ३ ॥ विश्वामित्र इति । ततार तरितुं प्रवृत्तः । सरितं गङ्गां, सागरं गच्छतीति सागरङ्गमाम् । खश्प्रकरणे "गमेस्सुप्युपसङ्ख्यानम्" इतिखश् ॥ ४ ॥

विश्वामित्ररामलक्ष्मणा इति शेषः ॥ २० ॥ तत्रवासिभिरिति । आनीताः स्वाश्रमं प्रापिताः । कामाश्रमपद इति प्रकरणपर्यालोचनया स्थाण्वाश्रमपद इत्येवोचितं कामाश्रमपद इतीदं दृश्यते । तद्विचारणीयम् ॥ २१ ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां त्रयोविंशः सर्गः ॥ २३ ॥ ततः प्रभात इति । नद्याः भागीरथ्याः ॥ १ ॥ त इति । उपस्थाप्य आनाय्य ॥ २ ॥ आरोहत्विति । अरिष्टं शुभं यथा भवति तथा गच्छेत्यर्थः ॥ ३ ॥ विश्वामित्र

तत इति । अतिसंरम्भेण तरङ्गपरस्परसङ्घट्टजक्षोभेण । वर्द्धितम् अतिप्रवृद्धम् ॥५॥ अथेति । भिद्यमानस्य परस्परं मिलितस्य वारिणः । तुमलः निबिडो ऽयं ध्वनिः । किं वारिसम्भेदकृतः उतान्यकृत इतिप्रश्नः ॥ ६ ॥ राघवस्येति । निश्चयं कारणनिश्चयम् ॥ ७ ॥ अस्य ध्वनेः कारणं वारिसम्भेद एवेति वक्ष्यन् कस्या वारिण इति प्रक्ष्यतीति मत्वा सरय्वा इति वक्तुं सरयूवैभवमाह—कैलासेति । कैलासपर्वते कुबेरभवने । ब्रह्मणा मनसा निर्मितं सरोऽस्ति। तेन मनसा निर्मितत्वेन इदं सरः मानसमित्युच्यते ॥ ८ ॥ तस्मादिति । उपगूहते आवृत्य प्रवहते । अयोध्यायाः पश्चिमभागमारभ्य उत्तरदिग्भागेन पूर्वभागमागत्य अङ्गदेशे गङ्गया सह युज्यते सरयूः, तयोः नद्योः सम्भेदे स्थाण्वाश्रमः, तस्मात् सरयूयुक्तगङ्गातरणदशायां सरयूजलमुन्नतात् भागी

ततः शुश्राव वै शब्दमतिसंरम्भवर्द्धितम् । मध्यमागम्य तोयस्य सह रामः कनीयसा ॥ ५॥ अथ रामः सरिन्मध्ये पप्रच्छ मुनिपुङ्गवम् । वारिणो भिद्यमानस्य किमयं तुमुलो ध्वनिः ॥ ६ ॥ राघवस्य वचः श्रुत्वा कौतूहलसमन्वितः । कथयामास धर्मात्मा तस्य शब्दस्य निश्चयम् ॥ ७ ॥ कैलासपर्वते राम मनसा निर्मितं सरः । ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः ॥ ८ ॥ तस्मात्सुस्राव सरसः साऽयोध्यामुपगूहते । सरःप्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता ॥ ९ ॥ तस्यायमतुलः शब्दो जाह्नवीमभिवर्तते । वारिसंक्षोभजो राम प्रणामं नियतः कुरु ॥ १० ॥ ताभ्यां तु तावुभौ कृत्वा प्रणाममतिधार्मिकौ। तीरं दक्षिणमासाद्य जग्मतुर्लघुविक्रमौ ॥ ११ ॥

रथ्यां पततीति तस्य ध्वनिरिति ज्ञेयम् । सरयूशब्दं निर्वक्ति सर इति । सरसो यातीति सरयूः । पाठान्तरं-सरसो यातीति सरयूः । सकारस्य शकन्ध्वादित्वात्पररूपम्. " ऊङुतः " इति स्त्रीप्रत्यय ऊकारः । कस्मात्सरसः प्रवृत्तेत्यत आह ब्रह्मसरश्च्युतेति ॥ ९ ॥ तस्येति । या गङ्गामभिवर्त्तत गङ्गया संयुज्यते । अयमतुलः शब्दः तस्याः वारिसंक्षोभजः । सन्धिरार्षः । नियतः नियतमनस्कः सन् ताभ्यां नदीभ्यां प्रणामं कुरु। कोऽयं ध्वनिरिति रामेण पृष्टे सरयूवारिसङ्घट्टज इति वक्तव्ये तदुत्पत्तिकथनं नन्तव्यत्वाय ॥ १० ॥ ताभ्यामिति । तीरं दक्षिणमिति नदीसम्भेदे रात्रिमुषित्वा



इति । तत्रार तर्तुमुपक्रान्त इत्यर्थः । सरितं गङ्गाम् ॥ ४ ॥ ५ ॥ अथेति । भिद्यमानस्य संभिद्यमानस्य परस्परं मिलितस्येत्यर्थः । वारिणोऽयं ध्वनिः किं कुत्रत्यः ॥ ६ ॥ राघवस्येति । निश्चयं निश्चितं हेतुम् ॥ ७ ॥ ८ ॥ तस्मादिति । या सुस्राव साऽयोध्यामुपगूहते । आवृणुत इति सम्बन्धः । सरःप्रवृत्तेति सरयूशब्दनिरुक्तिः । तस्यायमिति सन्धिरार्षः। या जाह्नवीमभिवर्तते तया सह सङ्गच्छते । तस्या अयं तुमुलः शब्दः ॥९॥१०॥ ताभ्यामिति । ताभ्यां गङ्गासरयूभ्याम् ॥११॥

प्रातर्दक्षिणाभिमुखा गङ्गां तेरुः। ततो गङ्गादक्षिणतीरे ताटकावनमिति ज्ञेयम् ॥ ११ ॥ स इति। सङ्काशत इति सङ्काशः, घोरसङ्काशं घोररूपमिति यावत्। अविप्रहतम् अक्षुण्णम्, जनसञ्चाररहितमित्यर्थः ॥ १२ ॥ अहो इत्यादिश्लोकत्रयम्। झिल्लिका भूतलाद्यन्तरितकीटविशेषः। भैरवैः भयङ्करैः। श्वापदैः क्रूरमृगैः। शकुन्तैः भासैः। "शकुन्तौ भासपक्षिणौ" इत्यमरः। शकुनैः पक्षिभिः। वाश्यद्भिः कुत्सितं शब्दायमानैः। धवः अश्वकर्णः ककुभः मरुतिन्दुकः पाटलः इदं वनमेतादृशम्। अहो इदं वनं दारुणम्। किंनु किंनामकमित्यन्वयः ॥ १३–१५ ॥ तमिति। एतद्दारुणं वनं यस्य

स वनं घोरसङ्काशं दृष्ट्वा नृपवरात्मजः। अविप्रहतमैक्ष्वाकः पप्रच्छ मुनिपुङ्गवम् ॥ १२ ॥ अहो वनमिदं दुर्गं झिल्लिकागणनादितम्। भैरवैः श्वापदैः पूर्णं शकुन्तैर्दारुणारुतैः ॥१३॥ नानाप्रकारैः शकुनैर्वाश्यद्भिर्भैरवैः स्वनैः। सिंहव्याघ्रवराहैश्च वारणैश्चोपशोभितम् ॥ १४ ॥ धवाश्वकर्णककुभैर्मरुतिन्दुकपाटलैः। सङ्कीर्णं बदरीभिश्च किं न्वेतद्दारुणं वनम् ॥ १५ ॥ तमुवाच महातेजा विश्वामित्रो महामुनिः। श्रूयतां वत्स काकुत्स्थ यस्यैतद्दारुणं वनम् ॥ १६ ॥ एतौ जनपदौ स्फीतौ पूर्वमास्तां नरोत्तम। मलदाश्च करूशाश्च देवनिर्माणनिर्मितौ ॥ १७ ॥ पुरा वृत्रवधे राम मलेन समभिप्लुतम्। क्षुधा चैव सहस्राक्षं ब्रह्महत्या समाविशत् ॥ १८ ॥

प्राणिनः स श्रूयतामिति योजना ॥१६॥ एताविति। स्फीतौ प्रवृद्धधनधान्यौ। मलदाश्च करूशाश्च मलदकरूशनामधेयौ। अवयवबहुत्वाद्बहुवचनम्। मत्स्याः पाञ्चाला इतिवत्। देवनिर्माणेन देवनिर्माणतुल्यनिर्माणेन निर्मितौ, देवलोकसमसंस्थानावित्यर्थः ॥ १७ ॥ मलदकरूशसंज्ञानिमित्तमाह–पुरेत्यादि। वृत्रवधे कृते सति, मलेन अशुचित्वेन क्षुधा बुभुक्षया च समभिप्लुतं व्याप्तम् इन्द्रं ब्रह्महत्या समाविशत्। ब्रह्महत्यावशेन मलक्षुधाविन्द्रस्या

स वनमिति। अविप्रहतप्राणिसञ्चाराभावादविक्षुण्णम् ॥ १२ ॥ अहो इति। झिल्लिकाः कीटविशेषाः, श्वापदैः शार्दूलादिक्रूरमृगैः। शकुन्तैः भासैः। दारुणारुतैर्दारुणारावैः। वाश्यद्भिः कुत्सितं शब्दायमानैः ॥ १३–१६ ॥ एताविति। स्फीतौ समृद्धौ। मलदाश्च करूशाश्चेति बहुवचनम्। अहो दारा इतिवच्छब्दस्वभावकृतम्।

१ गणसंयुतम्। २ कीर्णं। ३ दारुणस्वनैः। ४ बिल्वकिंशुक। इति पाठान्तरम्।

भूतामित्यर्थः ॥१८॥ तमिति । स्नापयन् गङ्गादितीर्थेषु स्नापयन्, पुनर्मन्त्रपूतैः कलशैः कलशोदकैः स्नापयामासुः । तेन स्नापनेनास्येन्द्रस्य मलं चकारात् कारूशं प्रमोचयन् प्रामोचयन्॥१९॥ इहेति । करूशमेव कारूशम् । स्थानप्रमाणात् क्षुधमित्यर्थः॥२०॥ निर्मल इति । शुचिः ब्रह्महत्यातः पूतः ॥२१॥ वरमेवाह—इमाविति । मलं द्यति खण्डयतीति मलदः। "अन्येभ्योपि दृश्यते" इतिखच् । करूशमस्यास्तीति करूशः । अङ्गमलधारिणौ करूशस्याप्युप लक्षणमिदम् । एतौ ममाङ्गमलकरूशधारणान्मलदाः करूशाश्चेति ख्यातिं गमिष्यत इत्यर्थः ॥ २२ ॥ साध्विति । स्पष्टम् ॥ २३ ॥ एताविति । अत

तमिन्द्रं स्नापयन् देवा ऋषयश्च तपोधनाः । कलशैः स्नापयामासुर्मलं चास्य प्रमोचयन् ॥ १९ ॥ इह भूम्यां मलं दत्त्वा दत्त्वा कारूशमेव च । शरीरजं महेन्द्रस्य ततो हर्षं प्रपेदिरे ॥ २० ॥ निर्मलो निष्करूशश्च शुचिरिन्द्रो यदाऽभवत् । ददौ देशस्य सुप्रीतो वरं प्रभुरनुत्तमम् ॥२१॥ इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः । मलदाश्च करूशाश्च ममाङ्गमलधारिणौ ॥ २२ ॥ साधुसाध्विति त देवाः पाकशासनमब्रुवन् । देशस्य पूजां तां दृष्ट्वा कृतां शक्रेण धीमता ॥२३ ॥ एतौ जनपदौ स्फीतौ दीर्घकालमरिन्दम । मलदाश्च करूशाश्च मुदितौ धनधान्यतः॥२४॥ कस्यचित्त्वथ कालस्य यक्षी वै कामरूपिणी । बलं नागसहस्रस्य धारयन्ती तदा ह्यभूत् । ताटका नाम भद्रं ते भार्या सुन्दस्य धीमतः ॥ २५ ॥ मारीचो राक्षसः पुत्रो यस्याः शक्रपराक्रमः ॥ २६ ॥

इत्यादावध्याहार्यम् ॥२४॥ एवं पालनीयत्वाय देशस्य पुण्यत्वमुक्त्वा तस्य दारुणत्वहेतुमाह—कस्यचिदिति अर्द्धत्रयम् । कस्मिंश्चित्काले गते सति । तदा जन्मकाल एव । नागसहस्रस्य गजसहस्रस्य । बलं धारयन्ती ताटकानाम यक्षी अभूत् । ते तुभ्यं भद्रमस्तु, ताटकातो भयं माभूदित्यर्थः ॥ २५॥ मारीच

देवनिर्माणनिर्मितौ देवयत्नेन निर्मितौ ॥ १७ ॥ १८ ॥ तमिन्द्रमिति । देवा ऋषयश्च तमिन्द्रं स्नापयन् गङ्गादिसर्वतीर्थेषु स्नानमकारयन् । अनन्तरं कलशैः स्नापयामासुः, मन्त्रपूतैः कलशोदकैः स्नापयामासुरित्यर्थः ॥ १९ ॥ इहेति । मलं मालिन्यम्, करूशमेव कारूशं क्षुदित्यर्थः । मलधारिणावित्यत्र मलशब्देन कारूशमपि

मुनिभाव०—देवाश्च ऋषयश्च तमिन्द्रं स्नापयन् गङ्गादितीर्थेषु स्नानमकारयन्, अडभाव आर्षः । तदन्ते तं कलशैः स्नापयामासुः मन्त्रपूतैः कलशोदकैः स्नापयामासुरित्यर्थः ॥ १९ ॥

इत्यर्द्धम् ॥ २६ ॥ वृत्तेति । अत्र य इति शेषः । यः प्रजाः नित्यं त्रासयते स मारीचो यस्याः पुत्रः सा यक्षी अभूदिति पूर्वेणान्वयः ॥ २७ ॥ अस्तु ताटका, किं ततः तत्राह—इमाविति ॥ २८ ॥ सेयमिति । आवार्य्य आवृत्य । यतः यस्मिन्मार्गे ताटकायाः वनम् । अतएव मार्गेण गन्तव्यम् ॥ २९ ॥ स्वेति । निष्कण्टकं निरुपद्रवम् ॥ ३० ॥ न हीति । ईदृशम् अतीव पुण्यम्, असह्यया इतरैरजेयया ॥३१॥ एतदिति । यथा येन प्रकारेण । दारुणं यथा

वृत्तबाहुर्महावीर्यो विपुलास्यतनुर्महान् । राक्षसो भैरवाकारो नित्यं त्रासयते प्रजाः ॥२७॥ इमौ जनपदौ नित्यं विनाशयति राघव । मलदांश्च करूशांश्च ताटका दुष्टचारिणी ॥२८॥ सेयं पन्थानमावार्य वसत्यध्यर्द्धयोजने । अत एवं च गन्तव्यं ताटकाया वनं यतः ॥२९॥ स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम् । मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः ॥ ३०॥ न हि कश्चिदिमं देशं शक्नोत्यागन्तुमीदृशम् । यक्षिण्या घोरया राम उत्सादितमसह्यया ॥ ३१॥ एतत्ते सर्वमाख्यातं यथैतद्दारुणं वनम् । यक्ष्या चोत्सादितं सर्वमद्यापि न निवर्तते ॥ ३२ ॥ इत्यार्षे श्रीरामा० वा० आदिकाव्ये बालकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥ अथ तस्याप्रमेयस्य मुनेर्वचनमुत्तमम् । श्रुत्वा पुरुषशार्दूलः प्रत्युवाच शुभां गिरम् ॥ १ ॥ अल्पवीर्या यदा यक्षाः श्रूयन्ते मुनिपुङ्गव । कथं नागसहस्रस्य धारयत्यबला बलम् ॥ २ ॥

च उत्सादितं निर्जनीकृतं यथा चोत्सादनान्न निवर्त्तते तदेतत्सर्वमाख्यातमिति योजना ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥ स्त्रिया अपि सर्वलोकविनाशिन्या वधे न दोष इत्याह पञ्चविंशे—अथेत्यादि । अप्रमेयस्य अप्रमेयप्रभावस्य ॥ १ ॥ अल्पेति । यदा यस्मात्, यदायत्रादयो हेतावपि मुनिभिः प्रयुज्यन्ते । यस्माच्छ्रूयन्ते तस्मात् अबला स्त्री कथं नागसहस्रस्य गृह्यते ॥ २०–२४॥ कस्यचित् कस्मिंश्चित्काले ॥ २५–२८ ॥ सेयमिति । आवृत्य निरुध्य । अत एवेति । यतः यस्मिन्मार्गे ताटकाया वनम् अतस्ताटकानिरासात् पूर्वं गन्तुमशक्यत्वान्न गन्तव्यमित्युक्तिः । अत एव च गन्तव्यामिति पाठे-यतः यस्मिन् मार्गे ताटकाया वनम् अत एवानेनैव मार्गेण गन्तव्यमित्यर्थः ॥२९॥३०॥ न हीति । उत्सादितं विजनीकृतम् । अद्यापि न निवर्तते देशोपप्लवात् । पूर्वस्थितजन इति शेषः ॥ ३१ ॥ ३२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां चतुर्विंशः सर्गः ॥ २४ ॥ अथ तस्येति । अप्रमेयस्य अप्रमेयप्रभावस्य ॥ १ ॥ अल्पेति । यदा यक्षास्सृष्टाः ते तदाप्रभृत्यल्प

१ महाशीर्षो । २ मावृत्य । ३ एव न गंतव्यं । ४ यक्षी श्रूयते इतिपा० । ५ बलम् । इत्युक्तवचनं श्रुत्वा राघवस्यामितौजसः। हर्षयन् श्लक्ष्णया वाचा सलक्ष्मणमरिन्दमम् । इत्यधिकः क्वचित् ।

बलं धारयति ॥ २ ॥ विश्वामित्र इति । येन हेतुना बलोत्तरा भवति तं शृणु । तस्या वरदानकृतं वीर्यं बलमस्ति अतोऽबलापि बलं धारयति ॥ ३ ॥ वरदानप्रकारमाह–पूर्वमित्यादि ॥ ४ ॥ पितामह इति । नाम प्रसिद्धौ ॥ ५ ॥ ददाविति । यक्षाय सुकेतवे ॥ ६ ॥ तामिति । विवर्द्धन्तीं विवर्द्धमानाम् ।

विश्वामित्रोऽब्रवीद्वाक्यं शृणु येन बलोत्तरा । वरदानकृतं वीर्यं धारयत्यबला[1] बलम् ॥ ३ ॥ पूर्वमासीन्महायक्षः सुकेतुर्नाम वीर्यवान् । अनपत्यः शुभाचारः स च तेपे महत्तपः ॥ ४ ॥ पितामहस्तु संप्रीतस्तस्य यक्षपतेस्तदा । कन्यारत्नं ददौ राम ताटकां नाम नामतः ॥ ५ ॥ ददौ नागसहस्रस्य बलं चास्याः पितामहः । न त्वेव पुत्रं यक्षाय ददौ ब्रह्मा महायशाः ॥ ६ ॥ तां तु जातां विवर्द्धन्तीं रूपयौवनशालिनीम् । जंम्भपुत्राय सुन्दाय ददौ भार्यां यशस्विनीम् ॥ ७ ॥ कस्यचित्त्वथ कालस्य यक्षी पुत्रमजायत । मारीचं नाम दुर्द्धर्षं[2] यः शापाद्राक्षसोऽभवत् ॥ ८ ॥ सुन्दे तु निहते राम सागस्त्यं मुनिपुङ्गवम्[3] । ताटका सह पुत्रेण प्रधर्षयितुमिच्छति ॥ ९ ॥ भक्षार्थं जातसंरम्भा गर्जन्ती साऽभ्यधावत ॥ १० ॥ आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवानृषिः । राक्षसत्वं भजस्वेति मारीचं व्याजहार सः ॥ ११ ॥ अगस्त्यः परमक्रुद्धस्ताटकामपि शप्तवान्[4] ॥ १२ ॥

भार्यां ददौ ॥ ७ ॥ कस्यचिदिति । कस्मिंश्चित्काले गते सति । अजायत अजनयत् ॥८॥ शापप्रकारमाह–सुन्दे त्विति । निहते, अगस्त्येनेति शेषः । प्रधर्षयितुं हन्तुम् । इच्छति ऐच्छत् ॥ ९ ॥ भक्षेति । जातसंरम्भा स्वभर्तृवधजनितकोपा अतएव भक्षार्थमभ्यधावत । अर्द्धम् ॥१०॥ आपतन्तीमिति ।

वीर्याः श्रूयन्ते, अबला यक्षी नागसहस्रस्य बलं कथं धारयति केन कारणेन धारयति । पाठान्तरे-यदा यस्माद्यक्षी अल्पवीर्या श्रूयते तस्मादबला नागसहस्रबलं कथं धारयति केन कारणेन धारयति ॥ २ ॥ विश्वामित्र इति । अत्र बलमात्रेऽप्युत्तरत्वेन वक्तव्ये वीर्यस्याभिधानं वीर्यशौर्यादयोऽन्येऽपि गुणाः सन्तीति ज्ञापयितुम् ॥ ३ ॥ वरप्रदानमेव विवृणोति-पूर्वमासीदित्यादिना ॥ ४–६ ॥ तामिति । विवर्द्धन्तीं विवर्द्धमानां, भार्यां भार्यात्वेन ददावित्यर्थः ॥७॥ कस्यचित्त्विति । दुर्धर्षं दुरा

विषम०–तदभिसंहितगुणवता पुत्रेणात्यन्तजनपीडा भवेदिति विचार्य पुत्रं न ददौ ॥ ६ ॥

[1] बलोत्कटा । [2] झर्झ । [3] अगस्त्यमृषिसत्तमम् । [4] आपतन्तीं तु तां दृष्ट्वा पुनस्तस्यास्तमात्मजम् । क्रुद्धः कृशानुसङ्काशो ह्यगस्त्यो भगवानभूत् । राक्षसत्वं । इति पाठान्तरम् ।

स्पष्टम् ॥ ११ ॥ अगस्त्य इत्यर्द्धम् ॥ १२ ॥ पुरुषादीति । पुरुषादी मनुष्यभक्षिणी । त्वमिदं रूपं विहाय पुरुषादीत्यादिविशेषणयुक्ता भव । अथ ते दारुणं क्रूरं रूपं शरीरम् अस्तु ॥१३॥ सैषेति । अगस्त्यचरितम्, तदानीमिति शेषः ॥१४॥ एनामिति । जहि नाशय ॥१५ ॥ न हीति । शापसंस्पृष्टां शापयुक्ताम् ॥१६॥ न हीति । ते त्वया । घृणा जुगुप्सा । कर्तव्यम्, कर्मेति शेषः ॥ १७ ॥ नृशंसमिति । नृशंसं क्रूरकर्म । सदोषं सापवादं कर्म ।

पुरुषादी महायक्षी विरूपा विकृतानना । इदं रूपं विहायाऽथ दारुणं रूपमस्तु ते ॥ १३ ॥ सैषा शापकृतामर्षा ताटका क्रोधमूर्च्छिता । देशमुत्सादयत्येनमगस्त्यचरितं शुभम् ॥ १४ ॥ एनां राघव दुर्वृत्तां यक्षीं परमदारुणाम् । गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम् ॥ १५ ॥ न ह्येनां शापसंस्पृष्टां कश्चिदुत्सहते पुमान् । निहन्तुं त्रिषु लोकेषु त्वामृते रघुनन्दन ॥ १६ ॥ न हि ते स्त्रीवधकृते घृणा कार्या नरोत्तम । चातुर्वर्ण्यहितार्थाय कर्तव्यं राजसूनुना ॥१७॥ नृशंसमनृशंसं वा प्रजारक्षणकारणात् । पातकं वा सदोषं वा कर्तव्यं रक्षता सताम् ॥ १८ ॥ राज्यभारनियुक्तानामेष धर्मः सनातनः । अधर्म्यां जहि काकुत्स्थ धर्मो ह्यस्या न विद्यते ॥ १९ ॥ श्रूयते हि पुरा शक्रो विरोचनसुतां नृप । पृथिवीं हन्तुमिच्छन्तीं मन्थरामभ्यसूदयत् ॥ २० ॥ विष्णुना च पुरा राम भृगुपत्नी दृढव्रता । अनिन्द्रं लोकमिच्छन्ती काव्यमाता निषूदिता ॥ २१ ॥

रक्षता राजपुत्रेण । प्रजारक्षणकारणात्कर्त्तव्यम्॥१८॥ राज्येति। सनातनः नित्यः। अधर्म्याम् अधर्मादनपेताम् । एतदेवाह धर्म इति ॥१९॥ स्त्रीवधस्य कर्तव्यत्वे इतिहासद्वयमाह—श्रूयत इत्यादिना । मन्थरां मन्थराभिधानाम् ॥२०॥ विष्णुनेति । काव्यमाता शुक्रमाता । इयं कथा मत्स्यपुराणे दर्शिता—स्वपुत्रे शुक्रे देवशिक्षार्थं रुद्रसमीपे तपस्यति सति देवपीडिता असुराः शुक्रमातरं भृगुपत्नीं शरणमगच्छन् । सा चासुररक्षणार्थं देवान् हन्तुमुद्युक्ता ।

सदम् ॥ ८ ॥ सुन्द इति । निहते । अगस्त्येनेतिशेषः । प्रधर्षयितुं हन्तुम् ॥ ९ ॥ १० ॥ आपतन्तीमिति । स्पष्टोऽर्थः ॥ ११ ॥ १२ ॥ पुरुषादीत्यादौ राक्षसत्वं भजस्वेति चैतौ शब्दावनुषज्येते । यतः पुरुषादनादिगुणयुक्ता अतो राक्षसत्वं भजस्वेति शप्तवान । विहाय त्यक्त्वा ॥१३॥ सैषेति । अमर्षा असहमाना ॥ १४॥ १५॥ नेति । शापसंस्पृष्टां शापेन व्याप्ताम् ॥१६॥ न हीति । स्त्रीविधकृते स्त्रीवधकरणे । घृणा जुगुप्सा । न कार्या प्रजारक्षणकारणादित्युत्तरेणान्वयः ॥ १७ ॥ नृशंसमिति ।

तां चेन्द्रप्रार्थितो विष्णुरासाद्य तस्याः शिरश्चिच्छेदेति ॥ २१ ॥ एतैरिति । एतैः एतादृशैरित्यर्थः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥ अथ ताटकावधः षड्विंशे—मुनेरित्यादि । अक्लीबं धृष्टम् ॥१॥ पितुरिति । पितुर्वचननिर्देशात् नियोगात्, कौशिकवचनं त्वया कर्तव्यमित्येवंरूपात् पितृवचनगौरवात् । बहुमानाच्च । इति उक्तप्रकारं कौशिकस्य वचनं कर्तव्य

एतैश्चान्यैश्च बहुभी राजपुत्र महात्मभिः । अधर्मसहिता नार्यो हताः पुरुषसत्तमैः ॥ २२ ॥ [ तस्मादेनां घृणां त्यक्त्वा जहि मच्छासनान्नृप । ] इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चविंशः सर्गः ॥२५॥

मुनेर्वचनमक्लीबं श्रुत्वा नरवरात्मजः । राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच दृढव्रतः ॥ १ ॥ पितुर्वचननिर्देशात्पितुर्वचनगौरवात् । वचनं कौशिकस्येति कर्तव्यमविशङ्कया ॥२॥ अनुशिष्टोऽस्म्ययोध्यायां गुरुमध्ये महात्मना । पित्रा दशरथेनाहं नावज्ञेयं च तद्वचः ॥३॥ सोऽहं पितुर्वचः श्रुत्वा शासनाद्ब्रह्मवादिनः । करिष्यामि न सन्देहस्ताटकावधमुत्तमम् ॥ ४ ॥ गोब्राह्मणहितार्थाय देशस्यास्य सुखाय च । तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः ॥ ५ ॥ एवमुक्त्वा धनुर्मध्ये बध्वा मुष्टिमरिन्दमः । ज्याघोषमकरोत्तीव्रं दिशः शब्देन नादयन् ॥ ६ ॥ तेन शब्देन वित्रस्तास्ताटकावनवासिनः । ताटका च सुसंक्रुद्धा तेन शब्देन मोहिता ॥ ७ ॥ तं शब्दमभिनिध्याय राक्षसी क्रोधमूर्च्छिता । श्रुत्वा चाभ्यद्रवद्वेगाद्यतः शब्दो विनिस्सृतः ॥ ८ ॥

मिति मानसव्यापारः ॥२॥ मुनिं प्रत्याह—अनुशिष्ट इति ॥ ३ ॥ सोऽहमिति । श्रुत्वा स्थितः सोऽहमित्यन्वयः ॥४॥ गोब्राह्मणेति । उद्यतः, अहमिति शेषः ॥५॥ एवमिति । स्पष्टम् ॥६॥ तेनेति । सुसंक्रुद्धा प्रकृत्या अतिकोपना । मोहिता किंकर्तव्यमिति सम्भ्रान्ता आसीत् ॥७॥ तमिति । अभिनिध्याय

कर्तव्यं कर्मेति शेषः । सदोषं सापवादम् ॥ १८ ॥ राज्येति । सनातनः नित्यः ॥ १९-२१ ॥ एतैरिति । एतैरेतादृशैः ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां पञ्चविंशः सर्गः ॥ २५ ॥ मुनेर्वचनमिति । अक्लीबं महार्थम् ॥ १ ॥ स्त्रीवधस्यापि त्रिभिर्हेतुभिः कर्तव्यतां प्रतिपादयति—पितुर्वचनेनेति । पितुर्वचननिर्देशादित्यनेन अविचारेण कर्तव्यता गम्यते । पितुर्वचनगौरवात् बहुमानात् । सत्पथप्रवर्तकत्वेनेति शेषः । भगवतः कौशिकस्य वचनमिति हेतोश्च एतन्मया कर्तव्यमिति । कुत इत्यत्राह—अनुशिष्टोऽस्मि इति । कौशिकस्य वचनं कर्तव्यमिति ॥ २-६ ॥ तेनेति । मोहिता व्याकु

आकर्ण्य क्रोधमूर्च्छिता आसीत् श्रुत्वा क्रुद्धा साऽभ्यद्रवच्च॥८॥ तामिति । प्रमाणेन औन्नत्येन॥९॥ पश्येति । भैरवं भयङ्करम् । दारुणं विकृतम्॥१०॥ एनामिति । मायाबलम् अन्तर्द्धानबलम् । विनिवृत्तां पराङ्मुखीम् । एतावतैव गुरुवचनानुष्ठानसिद्धेरिति भावः ॥११॥ न हीति । वीर्यंगतिहननं हस्त

तां दृष्ट्वा राघवः क्रुद्धां विकृतां विकृताननाम् । प्रमाणेनातिवृद्धां च लक्ष्मणं सोऽभ्यभाषत ॥ ९ ॥ पश्य लक्ष्मण यक्षिण्या भैरवं दारुणं वपुः । भिद्येरन् दर्शनादस्या भीरूणां हृदयानि च ॥ १० ॥ एनां पश्य दुराधर्षां मायाबल समन्विताम् । विनिवृत्तां करोम्यद्य हृतकर्णाग्रनासिकाम् ॥ ११ ॥ न ह्येनामुत्सहे हन्तुं स्त्रीस्वभावेन रक्षिताम् । वीर्यं चास्या गतिं चापि हनिष्यामीति मे मतिः ॥ १२ ॥ एवं ब्रुवाणे रामे तु ताटका क्रोधमूर्च्छिता । उद्यम्य बाहू गर्जन्ती राममेवाभ्यधावत ॥ १३ ॥ विश्वामित्रस्तु ब्रह्मर्षिर्हुङ्कारेणाभिभर्त्स्य ताम् । स्वस्ति राघवयोरस्तु जयं चैवाभ्यभाषत ॥१४॥ उद्धून्वाना रजो घोरं ताटका राघवावुभौ । रजोमोहेन महता मुहूर्तं सा व्यमोहयत् ॥१५॥ ततो मायां समास्थाय शिलावर्षेण राघवौ । अवाकिरत्सुमहता ततश्चुक्रोध राघवः ॥ १६ ॥ शिलावर्षं महत्तस्याः शरवर्षेण राघवः । प्रतिहत्योपधावन्त्याः करौ चिच्छेद पत्रिभिः ॥ १७ ॥

पादभञ्जनेन॥ १२ ॥ एवमिति । स्पष्टम् ॥१३॥ विश्वामित्र इति । अस्त्वित्यत्र इतिशब्दोऽध्याहार्यः। अतिमानुषशक्तिं जानन्नपि ताटकायाः क्रौर्यातिशयं दृष्ट्वातिशङ्कया महर्षिर्मङ्गलमाशास्ते ॥ १४ ॥ उद्धून्वानेति । उद्धून्वाना उत्किरन्ती ॥१५॥ तत इति । मायाम् अन्तर्द्धानशक्तिम् ॥१६॥ शिलेति ।

लिता ॥ ७ ॥ तमिति । अभिनिध्याय विचिन्त्य ॥ ८ ॥९॥ पश्येति । भैरवं भयङ्करम् । दारुणं घोरम् । अस्य वपुषः अभीरूणां चेति सम्बन्धः ॥१०॥ एनामिति । विनिवृत्ताम्-विशेषेण निवृत्ताम्, पलायितामिति यावत् ॥ ११ ॥ न हीति । वीर्यं पराभिभवनशक्तिम्, गतिम् आकारादिगतिम् ॥ १२ ॥ १३ ॥ रामलक्ष्मणयोरिति मानुषीं शक्तिं जानन्नपि ताटकायाः क्रौर्यातिशयं दृष्ट्वा अतिशङ्कया महर्षिर्मङ्गलमाशास्ते--विश्वामित्रस्त्विति । अस्त्वित्यत्र इतिशब्दो द्रष्टव्यः ॥ १४ ॥ उद्धून्वा नेति । रजोमोहेन रजोऽन्धकारेण ॥ १५ ॥ तत इति । मायास्त्रं मायानिर्मितास्त्रम् । मायाविद्यामिति यावत् ॥ १६ ॥ शिलावर्षमिति । करौ चिच्छेद पत्रिभिरिति

प्रतिहत्य भङ्क्त्वा करौ चिच्छेद शिलावर्षहेतुत्वात्। पत्रिभिः शरैः ॥१७॥ तत इति। अभ्याशे समीपे। गर्जंतीं गर्जन्तीम्। नुमभाव आर्षः ॥१८॥ कामेति। कामरूपधरा कामरूपधरणशक्ता, अतएवानेकशो रूपाणि कृत्वा मायया अन्तर्द्धानं गता सती भैरवमश्मवर्षं विमुञ्चन्ती मोहयन्तीव विचचार। अर्द्धत्रयम् ॥१९॥ तत इति। श्रीमान् स्वत एव ताटकावधहेतुप्राप्तिकृतहर्षेण कान्तिमान् ॥२०॥ अलमिति। दुष्टचारिणी दुष्टं यथा तथा आचरणशीला, अन्तर्द्धानशक्त्या अश्मवर्षशीलेत्यर्थः। एतेन ऐहिकनाशकत्वमुक्तम्। पारलौकिकनाशकत्वमप्याह—यज्ञविघ्नकरीति। पुरा वर्द्धति वर्द्धिष्यते

ततश्छिन्नभुजां श्रान्तामभ्याशे परिगर्जतीम्। सौमित्रिरकरोत् क्रोधाद्धृतकर्णाग्रनासिकाम् ॥१८॥ कामरूपधरा सद्यः कृत्वा रूपाण्यनेकशः। अन्तर्द्धानं गता यक्षी मोहयन्तीव मायया। अश्मवर्षं विमुञ्चन्ती भैरवं विचचार ह ॥१९॥ ततस्तावश्मवर्षेण कीर्यमाणौ समन्ततः। दृष्ट्वा गाधिसुतः श्रीमानिदं वचनमब्रवीत् ॥२०॥ अलं ते घृणया वीर पापैषा दुष्टचारिणी। यज्ञविघ्नकरी यक्षी पुरा वर्द्धति मायया ॥२१॥ वध्यतां तावदेवैषा पुरा सन्ध्या प्रवर्तते। रक्षांसि सन्ध्याकालेषु दुर्द्धर्षाणि भवन्ति वै ॥२२॥ इत्युक्तस्तु तदा यक्षीमश्मवृष्ट्याभिवर्षतीम्। दर्शयन् शब्दवेधित्वं तां रुरोध स सायकैः ॥२३॥ सा रुद्धा शरजालेन मायाबलसमन्विता। अभिदुद्राव काकुत्स्थं लक्ष्मणं च विनेदुषी ॥२४॥ तामापतन्तीं वेगेन विक्रान्तामशनीमिव। शरेणोरसि विव्याध सा पपात ममार च ॥२५॥ तां हतां भीमसङ्काशां दृष्ट्वा सुरपतिस्तदा। साधुसाध्विति काकुत्स्थं सुराश्च समपूजयन् ॥२६॥

"यावत्पुरानिपातयोर्लट्" ॥२१॥ वध्यतामिति। सन्ध्या पुरा प्रवर्तते प्रवर्तिष्यते तावत् पूर्वमेव वध्यताम्। सन्ध्याप्रवृत्तौ का हानिस्तत्राह रक्षांसीति ॥२२॥ इतीति। अभिवर्षतीम्। अभिवर्षन्तीं शब्दवेधित्वं श्रुतः शब्दो यस्मादुत्पन्नः तद्वेधित्वम् ॥२३॥ सेति। अभिदुद्राव अप्रयोजकमन्तर्द्धानं विहायेत्यर्थः। विनेदुषी नादं कुर्वन्ती ॥२४॥ तामिति। अशनीम्। "सर्वतोऽक्तिन्नर्थादित्येके" इति ङीप् ॥२५॥ तामिति। भीमसङ्काशां भीमरूपाम्।

बहुवचनप्रयोगः। लीलया एकैकस्य बहुधा खण्डनाभिप्रायेण ॥१७॥ ॥१८॥ कामरूपेति। अनेकरूपाणि कृत्वा अन्तर्धानं गता सती भैरवं विचचार हेति सम्बन्धः ॥१९॥ कीर्यमाणौ अस्यमानौ ॥२०॥२१॥ वध्यतामिति। पुरा वर्धेत यावद्वर्धेत तावत्पुरैव वध्यताम्। पुरा सन्ध्या प्रवर्तते प्रवर्तयिष्यते॥२२–२५॥ ता

सुरपतिः सुराश्च समपूजयन् ॥ २६ ॥ उवाचेति । स्पष्टम् ॥ २७ ॥ मुने इति । सर्वे वयमिति शेषः । स्नेहं दर्शय स्नेहकार्यं प्रवर्तय ॥ २८ ॥ एतदेवाह—प्रजापतेरिति ॥ २९ ॥ पात्रेति । अयमिति शेषः । अनुगमने शुश्रूषणे । धृतः स्थिरधीः ॥ ३० ॥ एवमिति । पुरस्कृत्य पूजयित्वा जग्मुः । सन्ध्या सायंसन्ध्या प्रवर्तते स्म ॥३१॥ तत इति । स्पष्टम् ॥ ३२ ॥ इहेति । तत् पूर्वोक्तम् ॥३३॥ विश्वामित्रेति । स्पष्टम् ॥ ३४ ॥ मुक्तेति । मुक्तशापं मुक्तोपद्रवम् ।

उवाच परमप्रीतः सहस्राक्षः पुरन्दरः । सुराश्च सर्वे संहृष्टा विश्वामित्रमथाब्रुवन् ॥२७॥ मुने कौशिक भद्रं ते सेन्द्राः सर्वे मरुद्गणाः । तोषिताः कर्मणानेन स्नेहं दर्शय राघवे ॥ २८ ॥ प्रजापतेः कृशाश्वस्य पुत्रान् सत्यपराक्रमान् । तपोबलभृतो ब्रह्मन् राघवाय निवेदय ॥ २९ ॥ पात्रभूतश्च ते ब्रह्मन् तवानुगमने धृतः । कर्तव्यं च महत्कार्यं सुराणां राजसूनुना ॥ ३० ॥ एवमुक्त्वा सुराः सर्वे जग्मुर्हृष्टा यथागतम् । विश्वामित्रं पुरस्कृत्य ततः सन्ध्या प्रवर्तते ॥३१॥ ततो मुनिवरः प्रीतस्ताटकावधतोषितः । मूर्ध्नि राममुपाघ्राय इदं वचनमब्रवीत् ॥ ३२ ॥ इहाद्य रजनीं राम वसाम शुभदर्शन । श्वःप्रभाते गमिष्यामस्तदाश्रमपदं मम ॥ ३३ ॥ विश्वामित्रवचः श्रुत्वा हृष्टो दशरथात्मजः । उवास रजनीं तत्र ताटकाया वने सुखम् ॥ ३४ ॥ मुक्तशापं वनं तच्च तस्मिन्नेव तदाऽहनि । रमणीयं विबभ्राज यथा चैत्ररथं वनम् ॥३५॥ निहत्य तां यक्षसुतां स रामः प्रशस्यमानः सुरसिद्धसंघैः । उवास तस्मिन् मुनिना सहैव प्रभातवेलां प्रतिबोध्यमानः ॥ ३६॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षड्विंशः सर्गः ॥२६॥

तस्मिन्नहनि । तदैव तत्क्षण एव । चैत्ररथं कुबेरोद्यानम् ॥ ३५॥ निहत्येति । प्रतिबोध्यमानः, मुनिनेति शेषः । कौसल्या सुप्रजा रामेत्येवं प्रबोधितोऽभूदित्यर्थः । उपजातिवृत्तम् ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

मिति । भीमसङ्काशां भयङ्करामित्यर्थः ॥ २६ ॥ २७ ॥ मुने इति । तोषिताः । वयमिति शेषः । स्नेहम् अनुग्रहम् ॥ २८ ॥ प्रजापतेरिति । निवेदय ज्ञापय ॥ २९ ॥ पात्रेति । धृतः नियतः ॥ ३० ॥ एवमुक्त्वेति । प्रवर्तते प्राप्ता ॥ ३१–३४ ॥ मुक्तशापमिति । मुक्तशापं मुक्तोपप्लवम् ॥ ३५ ॥ निहत्येति । प्रभातवेलां प्रतिबोध्यमानः मुनिनेति शेषः ॥ ३६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां षड्विंशः सर्गः ॥ २६ ॥

१ भृशाश्वस्य । २ हनि । चम्पकाशोकपुन्नागमल्लिकाद्यैः सुशोभितम् । चूतैश्च पनसैः पूगैर्नालिकेरैश्च शोभितम् । वापीकूपतटाकैश्च दीर्घिकाभिरलंकृतम । मल्लिकाहेमकूटैश्च मण्डपैरुपशोभितम् । रम० । इ०पा० ।

अस्त्रगणलाभः सप्तविंशे—अथेत्यादि । उष्य उषित्वा । प्रहस्य प्रहर्षेण मन्दहासं कृत्वा ॥ १ ॥ परीति । महायश इति सम्बुद्धित्वान्न दीर्घः । प्रीत्या परमया युक्त इति परितुष्टोऽस्मीत्यस्यानुवादः । सर्वशः सर्वाणि ॥ २ ॥ देवेति । आजौ युद्धे । जयिष्यसि, स्वार्थे णिच् ॥ ३ ॥ तानीति । दण्डचक्रादयश्चक्रभेदाः ॥ ४ ॥ धर्मेति । सार्द्धश्लोकद्वयमेकान्वयम् । शूलवरं शूलश्रेष्ठम् । ब्रह्मशिरः ब्रह्मास्त्रादन्यत् ॥ ५ ॥ ६ ॥ गदे इति । मोदकीशिखरीसंज्ञे ये द्वे गदे

अथ तां रजनीमुष्य विश्वामित्रो महायशाः । प्रहस्य राघवं वाक्यमुवाच मधुराक्षरम् ॥ १ ॥ परितुष्टोऽस्मि भद्रं ते राजपुत्र महायशः । प्रीत्या परमया युक्तो ददाम्यस्त्राणि सर्वशः ॥ २ ॥ देवासुरगणान् वापि सगन्धर्वोरगानपि । यैरमित्रान् प्रसह्याजौ वशीकृत्य जयिष्यसि ॥ ३ ॥ तानि दिव्यानि भद्रं ते ददाम्यस्त्राणि सर्वशः । दण्डचक्रं महद्दिव्यं तव दास्यामि राघव ॥ ४ ॥ धर्मचक्रं ततो वीर कालचक्रं तथैव च । विष्णुचक्रं तथात्युग्रमैन्द्रमस्त्रं तथैव च ॥ ५ ॥ वज्रमस्त्रं नरश्रेष्ठ शैवं शूलवरं तथा । अस्त्रं ब्रह्मशिरश्चैव ऐषीकमपि राघव । ददामि ते महाबाहो ब्राह्ममस्त्रमनुत्तमम् ॥ ६ ॥ गदे द्वे चैव काकुत्स्थ मोदकी शिखरी उभे । प्रदीप्ते नरशार्दूल प्रयच्छामि नृपात्मज ॥ ७ ॥ धर्मपाशमहं राम कालपाशं तथैव च । पाशं वारुणमस्त्रं च ददाम्यहमनुत्तमम् ॥ ८ ॥ अशनी द्वे प्रयच्छामि शुष्कार्द्रे रघुनन्दन । ददामि चास्त्रं पैनाकमस्त्रं नारायणं तथा ॥ ९ ॥ आग्नेयमस्त्रं दयितं शिखरं नाम नामतः । वायव्यं प्रथनं नाम ददामि च तवानघ ॥ १० ॥ अस्त्रं हयशिरो नाम क्रौञ्चमस्त्रं तथैव च । शक्तिद्वयं च काकुत्स्थ ददामि तव राघव ॥ ११ ॥

स्तः ते उभे दास्यामीति सम्बन्धः ॥ ७ ॥ धर्मेति । वारुणमित्यस्य काकाक्षिन्यायेनोभयत्रान्वयः ॥ ८ ॥ अशनी इति । शुष्काशनिरार्द्राशनिरित्यन्वयः । पिनाकिन इदं पैनाकम् ॥ ९ ॥ आग्नेयमिति । आग्नेयम् अग्निदेवताकम् । दयितम्, अग्नेरिति शेषः ॥ १० ॥ अस्त्रमिति । शक्तिद्वयं विष्णुशक्तिः



अथ तामिति ॥१॥ परितुष्टोऽस्मीति । सर्वशः साकल्येन ॥२-६॥ गदे इति । मोदकी शिखरी च प्रदीप्ते द्वे गदे विद्येते ते उभे प्रयच्छामीति सम्बन्धः ॥७-९॥ आग्नेय

रुद्रशक्तिश्चेति ॥ ११ ॥ कङ्कालमिति । स्पष्टम् ॥ १२ ॥ वैद्याधरमिति । वैद्याधरं नन्दनं नामासिरत्नं, महास्त्रमित्यर्थः । असिर्हि विद्याधरास्त्रम् ॥१३॥ गान्धर्वमिति । प्रस्वापनप्रशमने च गान्धर्वे ॥ १४ ॥ दर्पणमिति । विलापयति परिदेवयतीति विलापनम् । मदयतीति मदनम् ॥ १५ ॥ पैशाच

कङ्कालं मुसलं घोरं कापालमथ कङ्कणम् । धारयन्त्यसुरा यानि ददाम्येतानि सर्वशः ॥ १२ ॥ वैद्याधरं महास्त्रं च नन्दनं नाम नामतः । असिरत्नं महाबाहो ददामि नृवरात्मज ॥ १३ ॥ गान्धर्वमस्त्रं दयितं मानवं नाम नामतः । प्रस्वापनप्रशमने दद्मि सौरं च राघव ॥१४॥ दर्पणं शोषणं चैव सन्तापनविलापने । मदनं चैव दुर्द्धर्षं कन्दर्पदयितं तथा ॥ १५ ॥ पैशाचमस्त्रं दयितं मोहनं नाम नामतः । प्रतीच्छ नरशार्दूल राजपुत्र महायशः ॥ १६ ॥ तामसं नरशार्दूल सौमनं च महाबल । संवर्तं चैव दुर्द्धर्षं मौसलं नाम नामतः ॥ १७ ॥ सत्यमस्त्रं महाबाहो तथा मायाधरं परम् । घोरं तेजःप्रभं नाम परतेजोऽपकर्षणम् ॥ १८ ॥ सौम्यास्त्रं शिशिरं नाम त्वाष्ट्रमस्त्रं सुदामनम् । दारुणं च भगस्यापि शीतेषुमथ मानवम् ॥ १९ ॥ एतान् राम महाबाहो कामरूपान् महाबलान् । गृहाण परमोदारान् क्षिप्रमेव नृपात्मज ॥ २० ॥ स्थितस्तु प्राङ्मुखो भूत्वा शुचिर्मुनिवरस्तदा । ददौ रामाय सुप्रीतो मन्त्रग्राममनुत्तमम् ॥ २१ ॥ सर्वसंग्रहणं येषां दैवतैरपि दुर्लभम् । तान्यस्त्राणि तदा विप्रो राघवाय न्यवेदयत् ॥ २२ ॥

मिति । प्रतीच्छ गृहाण ॥ १६ ॥ तामसमिति । मुसलान्मौसलमन्यत् ॥ १७ ॥ सत्यमिति । स्पष्टम् ॥ १८ ॥ सौम्येति । शीतेषुं शीतेषुनामकम् ॥ १९ ॥ एतानिति । कामरूपान् ऐच्छिकशरीरान् ॥२०॥ स्थित इति । मन्त्रग्राममित्यनेन पूर्वोक्तास्त्रप्रदानं नाम तत्तन्मन्त्रप्रदानमित्युक्तं भवति । तेषां

मिति । दयितम्, अग्नेरिति शेषः । शिखरं नाम नामतः शिखरमिति प्रसिद्धम् । प्रथनं मुख्यम् ॥१०॥११॥ कङ्कालादीनि असुरधार्यास्त्राणि ॥१२॥ वैद्याधरमिति । वैद्याधरं विद्याधरदेवताकम् । नन्दनं नाम असिरत्नं महास्त्रं ददामीति सम्बन्धः ॥१३॥ प्रशमनं रिपूणां क्रोधशामकम् ॥१४॥ मदनं शत्रूणां मदजनकम् ॥१५॥ पैशाचमिति ।

१ मोहनं । २ धर्षणं । ३ मानवं । ४ सवर्त । ५ सुदामनं । ६ मानदं । इति पाठान्तरम् ।

कृशाश्वजन्यत्वमधिष्ठातृदेवताद्वारा ॥ २१ ॥ सर्वेति । सर्वसंग्रहणं कात्स्न्येंन संग्रहणम् ॥ २२॥ जपत इति । अस्त्रमन्त्रान् दत्त्वा मन्त्रदेवता अपि रामाज्ञानुवर्तिनीः कारयितुं ताः स्मृत्वा जपतो विश्वामित्रस्याज्ञया राघवम् उपतस्थुः सिषेविरे॥२३॥ ऊचुरिति । राघवेत्यनन्तरमितिकरणं बोध्यम् ॥ २४ ॥ प्रतिगृह्य अस्त्रसेवामङ्गीकृत्य । समालभ्य संस्पृश्य "आलम्भः स्पर्शहिंसयोः" इत्यमरः। मानसाः मनोऽनुसारिणः, चिन्तामात्रे उपस्थिता इति यावत् ।

जपतस्तु मुनेस्तस्य विश्वामित्रस्य धीमतः । उपतस्थुर्महार्हाणि सर्वाण्यस्त्राणि राघवम् ॥ २३ ॥ ऊचुश्च मुदिताः सर्वे रामं प्राञ्जलयस्तदा । इमे स्म परमोदाराः किङ्करास्तव राघवं ॥ २४ ॥ प्रतिगृह्य च काकुत्स्थः समालभ्य च पाणिना । मानसा मे भविष्यध्वमिति तानभ्यचोदयत् ॥ २५ ॥ ततः प्रीतमना रामो विश्वामित्रं महामुनिम् । अभिवाद्य महातेजा गमनायोपचक्रमे॥२६॥इत्यार्षे श्रीरामायणे वाल्मी०आदि०बालकाण्डे सप्तविंशः सर्गः॥२७॥

प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनः शुचिः । गच्छन्नेव च काकुत्स्थो विश्वामित्रमथाब्रवीत् ॥ १ ॥ गृहीतास्त्रोऽस्मि भगवन् दुराधर्षः सुरासुरैः । अस्त्राणां त्वहमिच्छामि संहारं मुनिपुङ्गव ॥ २ ॥

भविष्यध्वं भवत, मानसास्सन्तो मां प्राप्नुतेति वार्थः। "भू प्राप्तौ" इतिधातुः॥२५॥ तत इति। गमनाय गन्तुम् "तुमर्थाच्च भाववचनात्" इति चतुर्थी॥२६॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥ अस्त्रसंहारकप्रतिग्रहोऽष्टाविंशे- प्रतिगृह्येत्यादि । गच्छन् गमिष्यन् । "वर्तमानसामीप्ये वर्तमानवद्वा" इति लट् ॥ १ ॥ गृहीतेति । संहारम् अवगतप्रयोगानामस्त्राणां पुनरुपसंहारम्,

प्रतीच्छ प्रतिगृह्णीष्व ॥१६–२१॥ सर्वेति । सर्वसंग्रहणं कात्स्न्येंन संग्रहणम् ॥२२॥ जपत इति । उपतस्थुः सिषेविरे॥२३॥ सर्वे अस्त्रदेवाः। मुदिताः स्वाधिदैवतरामसम्बन्धेन तुष्टाः ॥ २४ ॥ प्रतिगृह्येति । समालभ्य संस्पृश्य । मानसाः मनोनुसारिणः ॥ २५ ॥ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां सप्तविंशः सर्गः ॥ २७ ॥ प्रतिगृह्येति । गच्छन् गमिष्यन् ॥ १ ॥ गृहीतास्त्र इति । उपसंहारापरिज्ञाने पुनः प्रयोगानर्हतया अप्राप्त

१ राघव । यद्यदिच्छसि भद्रं ते तत्सर्वं करवाम वै । ततो रामः प्रसन्नात्मा तैरित्युक्तो महाबलैः ॥ इत्यधिकः ॥

तत्तदस्त्रमूलमन्त्रवर्तितत्तदस्त्रोपसंहारमन्त्रजातमित्यर्थः । जात्येकवचनम् ॥ २ ॥ एवमिति । धृतिमान् प्रीतिमान् ॥ ३ ॥ सत्यवन्तमित्यादिसप्तश्लोक्येकान्वया । सत्यवदादीनि उपसंहाराणां नामानि ॥ ४–६ ॥ सार्चिर्मालीत्यादिषु प्रथमा द्वितीयार्थे ॥ ७–९ ॥ मम मत्तः ॥ १० ॥ बाढमिति अर्द्धम् । बाढमित्यङ्गी

एवं ब्रुवति काकुत्स्थे विश्वामित्रो महायशाः । संहारं व्याजहाराथ धृतिमान् सुव्रतः शुचिः ॥ ३ ॥ सत्यवन्तं सत्यकीर्तिं धृष्टं रभसमेव च । प्रतिहारतरं नाम पराङ्मुखमवाङ्मुखम् ॥ ४ ॥ लक्ष्यालक्षविषमौ चैव दृढनाभसुनाभकौ । दशाक्षशतवक्त्रौ च दशशीर्षशतोदरौ ॥ ५ ॥ पद्मनाभमहानाभौ दुन्दुनाभसुनाभकौ । ज्योतिषं कृशनं चैव नैराश्यविमलावुभौ ॥ ६ ॥ योगन्धरहरिद्रौ च दैत्यप्रशमनौ तथा । सार्चिर्माली धृतिर्माली वृत्तिमान् रुचिरस्तथा ॥ ७ ॥ पितृसौमनसं चैव विधूतमकरावुभौ । करवीरकरं चैव धनधान्यौ च राघव ॥ ८ ॥ कामरूपं कामरुचिं मोहमावरणं तथा । जृम्भकं सर्वनाभं च सन्तानवरणौ तथा ॥ ९ ॥ कृशाश्वतनयान् राम भास्वरान् कामरूपिणः । प्रतीच्छ मम भद्रं ते पात्रभूतोऽसि राघव ॥ १० ॥ बाढमित्येव काकुत्स्थः प्रहृष्टेनान्तरात्मना ॥ ११ ॥ [ जग्राह मन्त्रग्रामं तेऽप्युपतस्थुश्च राघवम् । ] दिव्यभास्वरदेहाश्च मूर्तिमन्तः सुखप्रदाः । केचिदङ्गारसदृशाः केचिद्धूमोपमास्तथा ॥ १२ ॥

कारे । प्रहृष्टेनान्तरात्मना प्रतिजग्राहेतिशेषः ॥ ११ ॥ मन्त्रस्वीकारानन्तरं मन्त्रदेवतासाक्षात्कारं दर्शयति–दिव्येत्यादिश्लोकद्वयेन । दिव्याः श्लाघ्याः भास्वराश्च देहा येषां ते तथा । मूर्तिमन्तः शरीरकाठिन्यवन्तः "मूर्तिः काठिन्यकाययोः" इत्यमरः । सुखप्रदाः आह्लादकाः । प्रह्वाः नम्राः । अञ्जलि

प्रायत्वात्तज्ज्ञानेच्छा । संहारो नाम–प्रयुक्तस्यास्त्रस्य मन्त्रविशेषेण पुनः स्वाधीनीकरणम् ॥ २ ॥ एवमिति । संहारमुद्दिश्य वाक्यं व्याजहार । धृतिमान धारणशक्तिमान् ॥ ३ ॥ सत्यवन्तमित्यादि । सार्चिर्मालीत्यादि प्रथमान्तेषु यच्छब्दाध्याहारेण तं प्रतीच्छेति योजनीयम् । मम मत्तः ॥ ४–१० ॥ बाढमिति । बाढमित्यङ्गी

---

१ महामुनिः । २ दृष्टं संरंभमेव च । ३ लक्ष्यालक्ष्याविमौ । ४ विनिद्रौ । ५ तथा । शुचिर्बाहुर्महाबाहुर्निष्कुलिर्विरुचिस्तथा । ६ संधान । ७ भृशाश्च । इति पाठान्तरम् ।

पुटाः अञ्जलिपुटयुक्ताः । अर्शआदित्वादच् । प्राञ्जलयः कृताञ्जलयः । मधुरभाषिणः मधुरभाषणशीलाः, केचित्पुरुषाः राममब्रुवन् ॥ १२ ॥ १३ ॥ इम इति अर्द्धम् । स्मेत्यार्षः सलोपः । शाधि आज्ञापय । " शाहौ " इति शास्तेः शादेशः ॥ १४ ॥ मानसा इति । यथेष्टं गम्यतामित्यन्वयः ॥ १५ ॥ अथेति । ते पुरुषाः ॥ १६ ॥ स चेति । तान् उपसंहारमन्त्रान् । श्लक्ष्णं व्यक्तम् ॥१७॥ किं न्विति श्लोकद्वयम् । इतः अस्मिन् प्रदेशे । कौतूहलं

चन्द्रार्कसदृशाः केचित् प्रह्वाञ्जलिपुटास्तथा। रामं प्राञ्जलयो भूत्वाब्रुवन् मधुरभाषिणः ॥१३॥ इमे स्म नरशार्दूल शाधि किं करवाम ते ॥१४॥ मानसाः कार्यकालेषु साहाय्यं मे करिष्यथ। गम्यतामिति तानाह यथेष्टं रघुनन्दनः ॥ १५ ॥ अथ ते राममामन्त्र्य कृत्वा चापि प्रदक्षिणम् । एवमस्त्विति काकुत्स्थमुक्त्वा जग्मुर्यथागतम् ॥ १६ ॥ स च तान् राघवो ज्ञात्वा विश्वामित्रं महामुनिम् । गच्छन्नेवाथ मधुरं श्लक्ष्णं वचनमब्रवीत् ॥ १७॥ किं न्वेतन्मेघसङ्काशं पर्वतस्याविदूरतः । वृक्षषण्डमितो भाति परं कौतूहलं हि मे ॥ १८ ॥ दर्शनीयं मृगाकीर्णं मनोहरमतीव च । नाना प्रकारैः शकुनैर्वल्गुनादैरलङ्कृतम् ॥१९ ॥ निस्सृताः स्म मुनिश्रेष्ठ कान्ताराद्रोमहर्षणात् ॥ २० ॥ अनया त्वव गच्छामि देशस्य सुखवत्तया । सर्वं मे शंस भगवन् कस्याश्रमपदं त्विदम् ॥ २१ ॥

श्रोतुमिति शेषः ॥ १८ ॥ १९ ॥ निस्सृता इति । कान्तारात् ताटकावनात् । रोमहर्षणात् रोमाञ्चकरात्, भयङ्करादिति यावत् । अर्द्धमेकम् ॥ २० ॥ अनयेति । अनया देशस्य सुखवत्तया इदमाश्रमपदमित्यवगच्छामि, कस्येति न जानामि, तत्सर्वं शंस, आदितःप्रभृति वदेत्यर्थः ॥ २१ ॥

कारे । प्रहृष्टेनान्तरात्मना, प्रत्यग्रहीदितिशेषः ॥ ११ ॥ दिव्येत्यादि श्लोकद्वयमेकं वाक्यम् । प्रह्वाञ्जलिपुटाः केचिदित्यनुषज्यते ॥ १२ ॥ १३ ॥ इम इति । शाधि आज्ञापय ॥ १४ ॥ गम्यताम्, इदानीमिति शेषः ॥ १५ ॥ १६ ॥ स च तानिति । तान उपसंहारमन्त्रान् ज्ञात्वा ॥ १७ ॥ मेघसङ्काशं कार्ष्ण्यान्नैबिडयाच्च । वृक्षषण्डं वृक्षसमूहम्. किं वनसम्बन्धि, उत आश्रमसम्बन्धीति प्रश्नः । कौतूहलं, श्रोतुमिति शेषः ॥ १८–२० ॥ अनयेत्यादि । अनया देशस्य सुखवत्तया इद



१ यथागतम् । ततस्तु रामः काकुत्स्थः शासनाद्ब्रह्मवादिनः । लक्ष्मणाय च तान् सर्वान् वरास्त्रान् रघुनन्दनः । संहारान स च संहृष्टः श्रीमांस्तस्मै न्यवेदयत् ॥ इत्यधिकः ।

सम्प्राप्ता इत्यादिश्लोकद्वयम् । ते पूर्वोक्ताः । तव यज्ञस्य विघ्नाय यत्राश्रमपदे सम्प्राप्ताः सा च तव याज्ञिकी क्रिया यत्र रक्षितव्या राक्षसाश्च वध्याः तस्याश्रमस्य को देशः ॥ २२ ॥ २३ ॥ एतदित्यर्धम् ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने अष्टाविंशःसर्गः ॥ २८ ॥ अथ सिद्धाश्रमस्य नित्यं भगवत्सन्निधिमत्त्वेन दिव्यदेशत्वं तत्सन्निधाने पूर्वेषां सिद्धतपस्कत्वं भगवद्देशस्यैव वस्तव्यत्व

सम्प्राप्ता यत्र ते पापा ब्रह्मघ्ना दुष्टचारिणः । तव यज्ञस्य विघ्नाय दुरात्मानो महामते ॥ २२ ॥ भगवंस्तस्य को देशः सा यत्र तव याज्ञिकी । रक्षितव्या क्रिया ब्रह्मन् मम वध्याश्च राक्षसाः ॥ २३ ॥ एतत्सर्वं मुनिश्रेष्ठ श्रोतुमिच्छाम्यहं प्रभो ॥ २४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

अथ तस्याप्रमेयस्य तद्वनं परिपृच्छतः । विश्वामित्रो महातेजा व्याख्यातुमुपचक्रमे ॥ १ ॥ इह राम महाबाहो विष्णुर्देववरः प्रभुः । वर्षाणि सुबहून्येव तथा युगशतानि च । तपश्चरणयोगार्थमुवास सुमहातपाः ॥ २ ॥ एष पूर्वाश्रमो राम वामनस्य महात्मनः । सिद्धाश्रम इति ख्यातः सिद्धो ह्यत्र महातपाः ॥ ३ ॥

मित्येतत्प्रतिपादनमुखेन स्थाणवाश्रमाद्वैलक्षण्यं दर्शयत्येकोनत्रिंशे–अथेत्यादि । अप्रमेयस्य अचिन्त्यवैभवस्य, मानुषभावनया पूर्ववृत्तमज्ञातमिव पृच्छत इत्यर्थः । चतुर्थ्यर्थे षष्ठी ॥ १ ॥ इहेति सार्द्धश्लोकः । तपश्चरणयोगार्थं तपश्चरणफलसिद्ध्यर्थम् । यद्वा तपश्चरणं च योगश्च तदुभयार्थम् । केचिदिह इहशब्दद्वयं पठन्ति । तदा इह वने तत्रापि इह प्रदेश इत्यर्थः ॥ २ ॥ एष इति । वामनस्य वामनरूपेणावतरिष्यतः । पूर्वं विष्णुत्वेन रूपेणेह तप

माश्रमपदमित्यवगच्छामि । कस्येदं सर्वं शंसेत्यन्वयः ॥ २१ ॥ संप्राप्ता इत्यादि । यत्राश्रमपदे तव यज्ञस्य विघ्नाय राक्षसाः संप्राप्ता भवन्ति, सा च याज्ञिकी क्रिया यत्र रक्षितव्या राक्षसाश्च वध्या यत्र तस्याश्रमस्य को देशः, किं स्थानं सर्वं मे शंसेति पूर्वेणान्वयः ॥२२–२४॥ इति श्रीमहेश्वरतीर्थकृतायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायाम् अष्टाविंशः सर्गः॥२८॥ अथ तस्येत्यादि । तस्य रामस्य परिपृच्छतो वचनं श्रुत्वेति शेषः । व्याख्यातुम् उत्तरमिति शेषः ॥१॥ इहेति।

**मुनिभाव०**–इहेति सार्धश्लोकद्वयम् । इह तपःसञ्चरणार्थम् इहोवासेति इहशब्दद्वयस्य निर्वाहः । विष्णुः कारणविष्णुः । बहुयुगशतानि इह वने । तपश्चरणं नाम तपोऽनुष्ठानम्, योगो नाम अष्टाङ्गयोगः, उभयोरपि इहैव सिद्ध्यर्थमुवासेति इहशब्दद्वयस्य निर्वाहः । आदराद्विरुक्तिर्वा । इह स्थितः विष्णुः तपः कृत्वा वामनरूपमास्थाय बलिं जित्वा इन्द्राय लोकान् दत्त्वा इह सिद्धिं सर्वकार्यसिद्धिं प्राप्तः, अत एव

श्चचार, पश्चाद्वामनरूपेणापीति तस्याश्रमस्यातिशयो दर्शितः। विष्णोरत्र तपश्चरणं लोके तपसः प्रवर्त्तनाय, बदरिकाश्रम इव नारायणस्य। सिद्धा
श्रमत्वं निर्वक्ति सिद्ध इति। महातपाः काश्यपः। अत्र हि यस्मात् सिद्धः तपःफलं प्राप्तः तस्मादेष सिद्धाश्रमो नाम ॥३॥ एतस्मिन्निति सार्द्धश्लोकः।
एतस्मिन्काले विष्णोस्तपश्चरणकाले। विरोचनः प्रह्लादसुतः, तस्यापत्यं वैरोचनिः। समरुद्गणान् सवायुगणान्। कारयामास मन्त्रिभिरिति शेषः। तद्रा
ज्यम् इन्द्रराज्यम् ॥४॥ बलेरिति। भावलक्षणे षष्ठी। बलौ यजमाने यागं कुर्वाणे। साग्निपुरोगमाः पुरोगमेनाग्निना सहिताः, अग्निमुखत्वाद्देवानाम्। स्वय

एतस्मिन्नेव काले तु राजा वैरोचनिर्बलिः। निर्जित्य दैवतगणान् सेन्द्रांश्च समरुद्गणान्। कारयामास तद्राज्यं त्रिषु लोकेषु विश्रुतः[1] ॥ ४ ॥ बलेस्तु यजमानस्य देवाः साग्निपुरोगमाः। समागम्य स्वयं चैव विष्णुमूचुरिहाश्रमे ॥ ५ ॥ बलिर्वैरोचनिर्विष्णो यजते यज्ञमुत्तमम्। असमाप्ते[2] क्रतौ तस्मिन् स्वकार्यमभिपद्यताम् ॥ ६ ॥ ये चैनमभि वर्तन्ते याचितार इतस्ततः। यच्च यत्र यथावच्च सर्वं तेभ्यः प्रयच्छति ॥ ७ ॥

मेव समागम्य इहाश्रमे तपश्चरन्तं विष्णुमूचुः ॥५॥ बलिरिति। यज्ञं यजते यज्ञं करोतीत्यर्थः। ओदनपाकं पचतीतिवत्। असमाप्त इति, समाप्तश्चेत् न स
जेतुं शक्य इत्यर्थः। स्वकार्यं देवकार्यम्, आश्रितकार्यस्य स्वकार्यत्वात्तथोच्यते। अभिपद्यताम् अभितः कार्त्स्न्येन सम्पाद्यताम् ॥६॥ ननु कथमसुरस्य
यज्ञानुष्ठानम्? "यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन् साक्षादेव तद्देवतां प्रीणाति" इतिश्रुतेः। ततद्देवध्यानपूर्वकं तत्तन्मन्त्रेण तत्त
इह वने तपश्चरणाय तपश्चरणार्थम् इह प्रदेशे उवासेति इहशब्दद्वयस्य निर्वाहः ॥ २ ॥ ३ ॥ एतस्मिन्निति। समरुद्गणान आवहप्रवहादिवायुगणसहितान।
कारयामास कृतवान ॥ ४ ॥ बलेरिति। यजमानस्य यज्ञं कुर्वाणस्य। अग्निपुरोगमाः पुरोगमेनाग्निना सहिताः ॥ ५ ॥ बलिरिति। स्वकार्यं देवकार्यम् ॥ ६ ॥ ये
सिद्धाश्रमः। "एष पूर्वाश्रमो राम वामनस्य महात्मनः। सिद्धाश्रम इति ख्यातस्सिद्धो ह्यत्र महातपाः ॥" इत्युक्तम् वामनाश्रमः। कथमितिचेत्, इहस्थो विष्णुरेव वामनोऽभवत, विष्णुवामनयोरभेदात वामनाश्रम
इत्युक्तम्। पूर्वाश्रम इत्यत्र वामनस्य पूर्वाश्रमः, विष्णुरूपेण स्थितस्याश्रम इत्यर्थः। यद्वा इह वने विष्णुः साक्षाद्विष्णुरेव, इह-इह वसतां तपसः चरणम् अनुष्ठानं येषां ते तपश्चरणाः, तेषां योगसिद्ध्यर्थम् अष्टाङ्गयोग
सिद्ध्यर्थमुवास, अतएव पूर्वम् ऋषयः विष्णुसन्निधानाद्धेतोः सिद्धाः, अनन्तरमिहस्थो विष्णुः वामनरूपमास्थाय गतः, अनन्तरं विघ्नो जातः, पुनरपि तदागमनात् महातपाः कश्यपः पूर्ववत् सिद्धोऽभवत्,
तस्मात् सिद्धाश्रम इति ॥ २ ॥ ३ ॥

१ विश्रुतः। यज्ञं चकार मतिमानसुरेन्द्रो महाबलिः। इत्यधिकः। २ असमाप्तव्रते। इति पाठान्तरम्।

दुद्देशेन तत्तद्धविःप्रदानस्य यागत्वात्तस्य च देवशत्रोरयोगात् । नच चतुर्थ्यन्तःशब्दो देवतेतिवाच्यम् । अचेतनप्रीणनासम्भवात्, तत्प्रीतिमूलफल सिद्धेश्च; अत एव केवला क्रियैव फलदेति प्रत्युक्तम् । अतोऽर्थवादाद्यनुरोधेन शब्दक्रियातिरिक्ता सचेतना वज्रहस्तत्वादिविशिष्टविग्रहवती देवता । नच विग्रहवत्त्वे युगपदनेकयागसन्निधानासम्भवः । दिव्यशक्तिमत्त्वेन नानाशरीरपरिग्रहसम्भवेन तेषां सर्वयागसान्निध्यस्य सुलभत्वात् । तस्मान्न देवता वैरिणो यागसम्भव इति । उच्यते—नायं बलिना क्रियमाणो यागः इन्द्रादिदेवताराध्यकः, येनोक्तदोषः स्यात् । किन्तु भगवदाराधनभूतः कश्चिद्याग विशेषः । तस्य विष्णुभक्तत्वेन प्रसिद्धत्वात् । तर्हि भक्तयज्ञविघ्नं विष्णुः कथं कुर्यात्? स्वभक्तस्यापि स्वभक्तविरोधित्वं भगवतोऽसह्यम् । ततः पुत्रान्तर

स त्वं सुरहितार्थाय मायायोगमुपागतः । वामनत्वं गतो विष्णो कुरु कल्याणमुत्तमम् ॥ ८ ॥
एतस्मिन्नन्तरे राम कश्यपोऽग्निसमप्रभः । अदित्या सहितो राम दीप्यमान इवौजसा ॥ ९ ॥
देवीसहायो भगवान् दिव्यं वर्षसहस्रकम् । व्रतं समाप्य वरदं तुष्टाव मधुसूदनम् ॥ १० ॥

विरोधिपुत्रशिक्षणवत् स्वाश्रितदेवविरोधिशिक्षणं युक्तमेव । अतएवोक्तम्—" मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत् " इति । तर्हि तस्य धार्मिकस्य कथं निग्रहः स्यात्तत्राह—ये चेत्यादिश्लोकद्वयेन । ये यत्र वस्तुवाहनादिषु यद्वस्तु याचितारः याचिष्यमाणाः सन्तः । इतस्ततः देशाद्देशमभिवर्तन्ते तत्सर्वं तेभ्यः यथावत्सत्कारपूर्वकं प्रयच्छति ॥ ७ ॥ स इति । माया विष्णुत्वाच्छादिका शक्तिः, तस्या योगं सम्बन्धमुपागतः । वामनत्वं वामनरूपत्वं गतः । कल्याणम् अस्मत्कार्यं कुरु । तस्मिन्नौदार्याख्यो महागुणो वर्तते, तेन त्वं वामनवेषो भूत्वा याच्ञापदेशेन तद्राज्यमपहृत्य देहीतिभावः ॥८ ॥ एतस्मिन्निति श्लोकद्वयम् । एतस्मिन्नन्तरे देवप्रार्थनावसरे । कश्यपः अदित्या सहितो व्रतं समाप्य विष्णूद्देशेन कृतं व्रतं समाप्य । वरदं वरदानाय सन्निहितं विष्णुं देवीसहायः सन् तुष्टाव । अत्र रामपदद्वयं रूढ्या योगेन च निर्वाह्यम् । व्रतानुष्ठानकाले वरकाले च देवीसाहित्यद्योतनाय द्विःप्रयोगो देव्याः । अयमत्र क्रमः—"सोऽकामयत बहुस्यां प्रजायेयेति। स तपोऽतप्यत" इत्युक्तरीत्या विष्णुर्जगद्रक्षणचिन्तापरोऽत्र देशे चिरमदृश्य उवास । तद्विदित्वा तमेव पुत्रं लब्धुकामः कश्यपो देव्या सह दिव्यवर्षसहस्रनिर्वर्त्यं विष्णवाराधनरूपं किञ्चिद्व्रतमनुष्ठाय तदन्ते वरदानाय दृश्यमानं विष्णुं तुष्टाव । तस्मिन्ने

चेत्यादि । इतस्ततः आगताः यत्र यागे यच्च यद्वस्तु यथावत यावच्च याचितारः याचिष्यमाणाः, एवमभिवर्तन्ते तेभ्यस्तत्सर्वं तव यथावच्च प्रयच्छतीत्यर्थः ॥७॥८॥ एतस्मि

वावसरे देवाश्चागताः प्रार्थितवन्त इति ॥ ९ ॥ १० ॥ तपोमयमिति । तपोमयं तपःप्रचुरम्, प्राचुर्यं चाराध्यत्वेन । तपसाराध्यमित्यर्थः । तपोराशिं तपोराशिस्वरूपम् । तपःफलदमिति यावत् । तपोमूर्तिं ज्ञानस्वरूपं "तप आलोचने" इतिधातोरसुन्प्रत्ययः । तपात्मकं तपःस्वभावम्, ज्ञानगुणकमित्यर्थः । उक्ताद्धातोः 'घञर्थे कविधानम्'इति कः। पुरुषोत्तमं बद्धमुक्तोभयावस्थाज्जीवाद्विलक्षणम्, त्वां सुतप्तेन अनन्यप्रयोजनतयानुष्ठितेन तपसा आराधनेन । पश्यामि साक्षात्करोमि । सर्वकर्मसमाराध्यं सर्वकर्मफलप्रदं ज्ञानस्वरूपत्वेन समस्तहेयप्रत्यनीकज्ञानानन्दाद्यपरिमितगुणवत्त्वेन च सर्वस्माद्

तपोमयं तपोराशिं तपोमूर्तिं तपात्मकम् । तपसा त्वां सुतप्तेन पश्यामि पुरुषोत्तमम् ॥ ११ ॥ शरीरे तव पश्यामि जगत्सर्वमिदं प्रभो । त्वमनादिरनिर्देश्यस्त्वामहं शरणं गतः ॥१२॥ तमुवाच हरिः प्रीतः कश्यपं धूतकल्मषम् । वरं वरय भद्रं ते वरार्होऽसि मतो मम ॥ १३ ॥ तच्छ्रुत्वा वचनं तस्य मारीचः कश्यपोऽब्रवीत् ॥ १४ ॥ अदित्या देवतानां च मम चैवानुयाचतः । वरं वरद सुप्रीतो दातुमर्हसि सुव्रत ॥ १५ ॥

विलक्षणं त्वां साक्षात्करोमि । एतदेव मे परमप्रयोजनमित्यर्थः ॥११॥ शरीर इति । इदं चेतनाचेतनात्मकं सर्वं जगत् । तव शरीरेऽस्मिन् पश्यामि । एवंनुगीतम्–"पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् । ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान्॥" इति । यद्वा "जगत्सर्वं शरीरम्" इत्युक्तत्वात् शरीरतया पश्यामीत्यर्थः । त्वमनादिः उत्पत्तिरहितः । अनिर्देश्यः एतावानिति परिच्छेत्तुमशक्य इत्यर्थः। अतस्त्वामहं शरणं रक्षितारं गतः ॥ १२ ॥ तमिति स्पष्टम् ॥ १३ ॥ तच्छ्रुत्वेत्यर्द्धम् । मारीचः मरीचिपुत्रः ॥ १४ ॥ अदित्या इति । अदित्या याचमानायाः । देवतानां

त्रिति । अदित्या × सहितो व्रतं समाप्य देव्या तयैव सहितस्तुष्टावेत्यन्वयः ॥ ९ ॥ १० ॥ तप इति । तपोमयं तपःप्रचुरम् । तप आत्मकं तपस्स्वभावम् ॥ ११ ॥ शरीर इति । पश्यामि साक्षात्करोमि । अनिर्देश्यः इदं त्वया निर्देष्टुमशक्य इत्यर्थः ॥ १२ ॥ वरम् अभीष्टम् । वरार्हः दिव्यवर्षसहस्रतपसा वरदानयोग्यः ॥१३ ॥ तदिति । मारीचः मरीचिपुत्रः ॥ १४ ॥ अदित्या इति । अनुयाचत इत्यस्य इतरयोरपि लिङ्गवचनव्यत्ययेन सम्बन्धः ॥ १५ ॥

मुनि०–×यद्वा सः हित इतिच्छेदः । अदित्याः हितः सः तुष्टावेत्यन्वयः ॥ ९ ॥ १० ॥ तपोमयमिति । तपोमयं ज्ञानप्रचुरं, तपोराशिं तेजोराशिम् । " तपो वीर्यमहाशौर्यज्ञानतेजस्सु कीर्त्यते " इति हलायुधः । तपोमूर्तिम् ज्ञानशरीरम् । तपात्मकं ज्ञानस्वरूपम् । छान्दसः सलोपः । एवंविधं पुरुषोत्तमं त्वां सुतप्तेन साङ्गमनुष्ठितेन तपसा पश्यामीत्यर्थः ॥ ११ ॥

याचमानानामित्यूह्यम् ॥ १५ ॥ पुत्रत्वमित्यादिसार्द्धश्लोक एकान्वयः ॥ १६ ॥ देशेऽप्यनुग्रहः क्रियतामित्याह—अयमिति । ते प्रसादात् कर्मणि मत्तपसि सिद्धे सति । त्वयि मे पुत्रत्वं प्राप्त इत्यर्थः । अयं सिद्धाश्रमो नाम भविष्यति तस्मादित आश्रमादुत्तिष्ठ, अवतारायेतिशेषः ॥ १७॥ अथेति । स्पष्टम्॥१८॥ त्रीनिति श्लोकद्वयमेकान्वयम् । क्रमान् पदविक्षेपान् । भिक्षित्वा याचित्वा । प्रतिगृह्य, मानं द्यति खण्डयतीति मानदः, निरभिमानो भिक्षित्वे त्यर्थः । लोकाक्रमणे हेतुः लोकात्मेति । वामनरूपेण याचित्वा सर्वलोकव्यापिशरीरेण क्रान्त्वेत्यर्थः । नियम्य बध्वा । त्रैलोक्यस्यापि पदद्वयक्रान्तत्वेन

पुत्रत्वं गच्छ भगवन्नदित्या मम चानघ । भ्राता भव यवीयांस्त्वं शक्रस्यासुरसूदन । शोकार्त्तानां तु देवानां साहाय्यं कर्तुमर्हसि ॥ १६ ॥ अयं सिद्धाश्रमो नाम प्रसादात्ते भविष्यति । सिद्धे कर्म्मणि देवेश उत्तिष्ठ भगवन्नितः ॥१७॥ अथ विष्णुर्महातेजा अदित्यां समजायत । वामनं रूपमास्थाय वैरोचनिमुपागमत् ॥ १८ ॥ त्रीन् क्रमानथ भिक्षित्वा प्रतिगृह्य च मानदः । आक्रम्य लोकाँल्लोकात्मा सर्वलोकहिते रतः ॥ १९ ॥ महेन्द्राय पुनः प्रादान्नियम्य बलिमोजसा । त्रैलोक्यं स महातेजाश्चक्रे शक्रवशं पुनः ॥ २० ॥ तेनैष पूर्वमाक्रान्त आश्रमः श्रमनाशनः । मया तु भक्त्या तस्यैष वामनस्योपभुज्यते ॥ २१ ॥ एतमाश्रममायान्ति राक्षसा विघ्नकारिणः । अत्रैव पुरुषव्याघ्र हन्तव्या दुष्टचारिणः ॥ २२ ॥ अद्य गच्छामहे राम सिद्धाश्रममनुत्तमम् । तदाश्रमपदं तात तवाप्येतद्यथा मम ॥ २३ ॥ प्रविशन्नाश्रमपदं व्यरोचत महामुनिः । शशीव गतनीहारः पुनर्वसुसमन्वितः ॥ २४ ॥

तृतीयपदालाभात्तदर्थं बध्वेत्यर्थः ॥ १९ ॥ २० ॥ प्रकृतमुपसंहरति—तेनेति । तेन वामनेन । श्रमनाशनः संसारश्रमनिवर्त्तकः । सन्निहितं स्थाणवाश्रमं विहाय भवान् किमर्थमत्र स्थित इत्यत्राह—मया त्विति । मया तु देवतान्तरेषु परत्वबुद्धिरहितेन । भक्त्या विष्णुभक्त्या । तस्य वामनस्य । एष आश्रमः उपभुज्यते आश्रीयते, वामनस्येयं भूमिरिति केवलं तामेवाजिघ्रन्वर्त इत्यर्थः॥२१॥एतमिति स्पष्टम्॥२२॥अद्येति । गच्छामहे गच्छामः । तातेत्युपलालने । तदेतदाश्रमपदं यथा मम तथा तव । स्वमितिशेषः ॥२३॥ प्रविशन्निति । गतनीहारः गतहिमः । पुनर्वसुभ्यां समन्वित इति रामलक्ष्मणसाम्यापेक्षया॥२४॥

याच्यमानमभीष्टं निरूपयति—पुत्रत्वमित्यादि । साहाय्यं बलेश्छलनात्मकम्॥१६॥ अयमिति । सिद्धे कर्मणीति पूर्वेणान्वयः । इतः अस्मिन कार्ये उत्तिष्ठ यतस्व॥१७।१८॥ आक्रम्य त्रिभिः पदैः सर्वान् लोकान् व्याप्य । नियम्य बद्ध्वा । त्रैलोक्यमित्यादि । चक्रे तेन वामनेन तस्य तस्मिन् वामने भक्त्या उपभुज्यते ॥१९—२१॥ द्वितीयश्लोकस्यो

तमिति । उत्पत्योत्पत्येति प्रीत्यतिशयोक्तिः, आगत्यागत्येत्यर्थः । अनेन निरन्तरं तदागमनोक्त्या मुनिबहुत्वमुच्यते ॥२५॥ यथार्हमिति । यथार्हं मुनियोग्यतामनतिक्रम्य ॥ २६ ॥ मुहूर्तमिति । मुहूर्तम् अल्पकालं, विश्रान्ताविवेति मनुष्यभावेनोच्यते ॥ २७ ॥ अद्यैवेति । अद्यैव प्रवेशदिन एव । अयं सिद्धाश्रमः सिद्धः स्यात् । त्वद्यज्ञसिद्ध्या अन्वर्थसिद्धसंज्ञोऽस्तु, सत्यमस्तु वचस्तव । " अत्रैव पुरुषव्याघ्र हन्तव्या दुष्टचारिणः " इति वच इत्यर्थः ।

तं दृष्ट्वा मुनयः सर्वे सिद्धाश्रमनिवासिनः । उत्पत्योत्पत्य सहसा विश्वामित्रमपूजयन् ॥ २५ ॥ यथार्हं चक्रिरे पूजां विश्वामित्राय धीमते । तथैव राजपुत्राभ्यामकुर्वन्नतिथिक्रियाम् ॥ २६ ॥ मुहूर्तमिव विश्रान्तौ राजपुत्रावरिन्दमौ । प्राञ्जली मुनिशार्दूलमूचतू रघुनन्दनौ ॥ २७ ॥ अद्यैव दीक्षां प्रविश भद्रं ते मुनिपुङ्गव । सिद्धाश्रमोऽयं सिद्धः स्यात् सत्यमस्तु वचस्तव ॥ २८ ॥ एवमुक्तो महातेजा विश्वामित्रो महामुनिः । प्रविवेश ततो दीक्षां नियतो नियतेन्द्रियः ॥ २९ ॥ कुमारावपि तां रात्रिमुषित्वा सुसमाहितौ । प्रभातकाले चोत्थाय पूर्वां सन्ध्यामुपास्य च ॥३०॥ स्पृष्टोदकौ शुची जप्यं समाप्य नियमेन च । हुताग्निहोत्रमासीनं विश्वामित्रमवन्दताम् ॥ ३१ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

राक्षसान् सर्वथा हनिष्य इतिभावः ॥ २८ ॥ एवमिति । नियतः निगृहीतान्तःकरणः ॥ २९ ॥ कुमाराविति श्लोकद्वयम् । स्पृष्टोदकौ दत्तार्घ्यौ । नियमेन जप्यं समाप्य । अग्नेर्होत्रं होमः औपासनहोमः । दीक्षामध्ये ' नाग्निहोत्रं न दर्शपूर्णमासाभ्यां यजत इति ' इत्यग्निहोत्रस्य निषिद्धत्वात् मानसमग्निहोत्रमित्येके ॥ ३० ॥ ३१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥ २९ ॥

तत्राह–एतमिति ॥ २२ ॥ अनुत्तमं सर्वोत्कृष्टं । तदेतदाश्रमपदं यथा मम स्वभूतं तथा तवापि, विष्ण्ववतारत्वादिति गूढोऽभिप्रायः ॥ २३–२७ ॥ अद्यैवेति । दीक्षां प्रविश स्वीकुरु । सिद्धः अन्वर्थः ॥ २८ ॥ २९ ॥ कुमाराविति । कुमाराविव स्कन्दविशाखाविव ॥ ३० ॥ ३१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायाम् एकोनत्रिंशः सर्गः ॥ २९ ॥

सुबाहुमारीचप्रभृतिदुष्टनिग्रहस्त्रिंशे—अथ तावित्यादि। देशकालज्ञाविति हेतुगर्भम्। देशकालज्ञत्वादुचिते देशे उचिते काले चाब्रूताम् ॥१॥ भगवन्निति। संरक्षणीयौ निवारणीयौ। धातूनामनेकार्थत्वात् विपरीतलक्षणा वा। यद्वा इष्टप्राप्तिरनिष्टनिवृत्तिश्च रक्षणम्। अत्र अनिष्टनिवृत्तिः-तत्क्षणं स कालः। नातिवर्तेत अज्ञातो नातिक्रामेत् ॥ २ ॥ एवमिति। युयुत्सया योद्धुमिच्छया। प्रशशंसुः प्रोचुः ॥ ३ ॥ अद्येति। रक्षतमिति लोण्मध्यमपुरुषद्विवचनम्। एतद्दिनमारभ्य षड्रात्रपर्यन्तं मुनिर्मौनित्वं गमिष्यति, अतो वयं वदाम इत्यर्थः ॥ ४ ॥ ताविति। षडहोरात्रं षण्णामहोरात्राणां समाहारः षडहोरात्रम्

अथ तौ देशकालज्ञौ राजपुत्रावरिन्दमौ। देशे काले च वाक्यज्ञावब्रूतां कौशिकं वचः ॥ १ ॥ भगवन् श्रोतुमिच्छावो यस्मिन् काले निशाचरौ। संरक्षणीयौ तौ ब्रह्मन्नातिवर्तेत तत्क्षणम् ॥२॥ एवं ब्रुवाणौ काकुत्स्थौ त्वरमाणौ युयुत्सया। सर्वे ते मुनयः प्रीताः प्रशशंसुर्नृपात्मजौ ॥ ३ ॥ अद्यप्रभृति षड्रात्रं रक्षतं राघवौ युवाम्। दीक्षां गतो ह्येष मुनिर्मौनित्वं च गमिष्यति ॥ ४ ॥ तौ च तद्वचनं श्रुत्वा राजपुत्रौ यशस्विनौ। अनिद्रौ षडहोरात्रं तपोवनमरक्षताम् ॥ ५ ॥ उपासाञ्चक्रतुर्वीरौ यत्तौ परमधन्विनौ। ररक्षतुर्मुनिवरं विश्वामित्रमरिन्दमौ ॥ ६ ॥ अथ काले गते तस्मिन् षष्ठेऽहनि समागते। सौमित्रिमब्रवीद्रामो यत्तो भव समाहितः ॥७॥ रामस्यैवं ब्रुवाणस्य त्वरितस्य युयुत्सया। प्रजज्वाल ततो वेदिस्सोपाध्यायपुरोहिता ॥ ८ ॥

तत् ॥५॥ उपासाञ्चक्रतुरिति। उपासाञ्चक्रतुः ऊषतुः। यत्तौ सन्नद्धौ। परमं धनुर्ययोस्तौ परमधन्विनौ। व्रीह्यादित्वादिनिः ॥ ६ ॥ अथेति। काले पञ्चदिनात्मके गते। तस्मिन् प्रधाने अहनि सुत्यादिने। समाहितः एकाग्रचित्तः। अत्राद्यप्रभृति षड्रात्रमित्युक्त्या पूर्वसर्गे तत्पूर्वदिने दीक्षाप्रवेशोक्त्या च सप्तरात्रनिर्वर्त्यः सत्रविशेषोऽयमिति गम्यते ॥७॥ रामस्येति। वेदिप्रज्वलनमुत्पातो राक्षसागमसूचकः। उपाध्यायः विश्वामित्रः। पुरोहिता ऋत्विजः ॥ ८ ॥

अथेति। कौशिकं वचोऽब्रूतामित्यन्वयः ॥ १ ॥ भगवन्निति। संरक्षणीयौ निवारणीयौ। तत्क्षणं स कालः नातिवर्तेत अज्ञानतो नातिक्रामेत ॥ २ ॥ एवमिति। प्रशशंसुः प्रोचुः। एवं विश्वामित्रे पृष्टे दीक्षया तस्य मौनित्वादेषय ऊचुरित्यर्थः ॥ ३ ॥ अद्येति। अद्यापि दीक्षितत्वात मौन्येव, अतःपरमपि षड्रात्रपर्यन्तं मौनित्वं प्राप्स्यतीत्यर्थः ॥ ४ ॥ ५ ॥ उपासांचक्रतुः ऊषतुः। परस्मैपदमार्षम्। यत्तौ सन्नद्धौ ॥६॥ अथेति। तस्मिन्नहनि प्रधानकर्मसम्बन्धिनि ॥ ७ ॥ रामस्येत्यादि। अत्र

विषम०—उपाध्यायो ब्रह्मा। पुरोहित उपद्रष्टा। इदमृत्विगन्तराणामप्युपलक्षणम् ॥ ८ ॥

एतद्विवृणोति—सदर्भेति। चमसं नाम पानपात्रम्। स्रुक् होमपात्रम्। उच्चयः समूहः। कुसुमोच्चयोऽलङ्कारार्थः ॥ ९ ॥ मन्त्रवदिति। ननु रक्षोघ्नमन्त्रजपे क्रियमाणे कथं राक्षसागमनप्रसक्तिः ? न कथंचित्, किन्तु दूरत एवाकाशे मेघवद्रुधिरं ववर्षुः। तदिदमाह आकाश इति। भयानकः भयङ्करः॥ १० ॥ आवार्येति। प्रावृषि वर्षाकाले निर्गतो मेघो यथातथाभ्यधावताम् ॥ ११ ॥ मारीच इति। भीमसङ्काशाः भयंकराः ॥ १२ ॥ सेति। अभिद्रुतः अभि

सदर्भचमसस्रुक्का ससमित्कुसुमोच्चया। विश्वामित्रेण सहिता वेदिर्जज्वाल सर्त्विजा ॥ ९॥ मन्त्रवच्च यथान्यायं यज्ञोऽसौ सम्प्रवर्तते। आकाशे च महान् शब्दः प्रादुरासीद्भयानकः ॥ १०॥ आवार्य गगनं मेघो यथा प्रावृषि निर्गतः। तथा मायां विकुर्वाणौ राक्षसावभ्यधावताम् ॥ ११॥ मारीचश्च सुबाहुश्च तयोरनुचराश्च ये। आगम्य भीमसङ्काशा रुधिरौघमवासृजन् ॥ १२ ॥ सा तेन रुधिरौघेण वेदिर्जज्वाल मण्डिता। सहसाऽभिद्रुतो रामस्तानपश्यत्ततो दिवि ॥ १३ ॥ तावापतन्तौ सहसा दृष्ट्वा राजीवलोचनः। लक्ष्मणं त्वभिसम्प्रेक्ष्य रामो वचनमब्रवीत् ॥ १४ ॥ पश्य लक्ष्मण दुर्वृत्तान् राक्षसान् पिशिताशनान्। मानवास्त्रसमाधूताननिलेन यथा घनान् ॥ १५ ॥ मानवं परमोदारमस्त्रं परमभास्वरम्। चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ॥ १६ ॥

मुखं धावन् ॥ १३ ॥ ताविति स्वष्टम् ॥ १४ ॥ पश्येति। पिशिताशनान् मांसभक्षकान्। एतद्विधूननार्थं मानवास्त्रं प्रयोक्ष्य इति भावः ॥ १५ ॥ मानवमिति। अत्रादावित्युक्त्वेत्युपस्कार्यम्। ननु सर्वराक्षसेष्वस्त्रप्रयोगं प्रतिज्ञाय मारीचोरसि तत्प्रयोगः कथमिति चेन्न; पूर्वश्लोके राक्षसशब्दस्य मारीचमात्र

वेदिप्रज्वलनं राक्षसागमनसूचक उत्पातः। उपाध्यायो विश्वामित्रः पुरोहिता ऋत्विजः। एतच्च उत्तरश्लोकेन विस्त्रियते ॥ ८ ॥ ९ ॥ मन्त्रवदिति। समुत्पन्ने उत्पाते रामो रक्षतीति विश्वासात् यज्ञोऽयं संप्रवर्तत इति सम्बन्धः ॥ १० ॥ आवार्येति। मेघो मेघध्वनिः। कार्ये कारणोपचारः ॥११॥ मारीच इति। अवासृजन् ववर्षुः ॥१२॥ सेति। मण्डिता चिह्निता। अभिद्रुतः अभितः शालां प्रधावन्। तत्रादृष्ट्वा ततो दिवि तानपश्यत् ॥१३॥ आपतन्तौ स्वसंमुखमागच्छन्तौ ॥१४–१६ ॥



१ मण्डिता। दृष्ट्वा वेदिं तथाभूतां सानुजः क्रोधसंयुतः। २ घनान्। करिष्यामि न सन्देहो नोत्सहे हन्तुमीदृशान्। इत्युक्त्वा वचनं रामश्चापे सन्धाय वेगवान्। मानवं। इति पाठान्तरम्।

परत्वात् ॥१६॥ स इति । सागरसंप्लवे समुद्रपूरे। अत्र गायत्र्या द्वितीयाक्षरं सः ॥ १७ ॥ विचेतनमिति । शीतेषुशब्दोऽवयववृत्त्या मानवास्त्रे वर्तते। दृश्य दृष्ट्वा । मारीचस्य प्राणरक्षणं भाविकार्यान्तरसाधनाय ॥ १८ ॥ इमानिति । वधप्रयोजकानि निर्घृणत्वादीनि ॥ १९ ॥ संगृह्येति । अद्भुतं यथातथा

स तेन परमास्त्रेण मानवेन समाहतः । सम्पूर्णं योजनशतं क्षिप्तः सागरसम्प्लवे ॥ १७ ॥ विचेतनं विघूर्णन्तं शीतेषु बलताडितम् । निरस्तं दृश्य मारीचं रामो लक्ष्मणमब्रवीत् ॥ १८ ॥ इमानपि वधिष्यामि निर्घृणान् दुष्टचारिणः । राक्षसान् पापकर्मस्थान् यज्ञघ्नान् रुधिराशनान् ॥ १९ ॥ संगृह्यास्त्रं ततो रामो दिव्यमाग्नेयमद्भुतम् । सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि ॥ २० ॥ शेषान् वायव्यमादाय निजघान महायशाः । राघवः परमोदारो मुनीनां मुद मावहन् ॥२१॥ स हत्वा राक्षसान् सर्वान् यज्ञघ्नान् रघुनन्दनः । ऋषिभिः पूजितस्तत्र यथेन्द्रो विजये पुरा ॥२२॥ अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः । निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत् ॥ २३ ॥ कृतार्थोऽस्मि महाबाहो कृतं गुरुवचस्त्वया । सिद्धाश्रममिदं सत्यं कृतं राम महायशः ॥२४॥ इत्यार्षे श्री० बा० त्रिंशः सर्गः ॥३०॥

चिक्षेप ॥ २० ॥ शेषानिति । निजघान हिंसितवान् ॥२१॥ स इति । पुरा विजये असुरविजये ॥२२॥ अथेति । निरीतिकाः निर्बाधाः ॥ २३ ॥ कृतार्थ इति । गुरुवचः पितृवचः ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

गायत्र्याः स इति द्वितीयाक्षरम् । स तेनेत्यस्य श्लोकस्यादिमाक्षरेण स इत्यनेन संगृह्णाति । संप्लवे पूरे ॥ १७ ॥ विचेतनमिति । दृश्य दृष्ट्वा । विचेतनं चैतन्य रहितम् । अत एव विघूर्णमानं, शीतेषुमिति मानवास्त्रनामान्तरम् ॥ १८–२२ ॥ *पश्येति । शीतेषुं मानवास्त्रम् न व्ययुज्यत, मारीच इति शेषः ॥ अथेति । निरीतिकाः निरुपद्रवाः ॥ २३ ॥ कृतार्थ इति । त्वया हेतुना कृतार्थोस्मीति चान्वयः। सत्यं कृतम् अन्वर्थनामकं कृतमित्यर्थः ॥ २४ ॥ इति श्रीमहेश्वर तीर्थकृतायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां त्रिंशः सर्गः ॥ ३० ॥

---

१ मब्रवीत् । * पश्य लक्ष्मण शीतेषुं मानवं धर्मसंहितम् । मोहयित्वा नयत्येनं न च प्राणैर्व्ययुज्यत । इमा । २ संगृह्य सुमहच्चास्त्रमाग्नेयं रघुनन्दनः । इति पाठान्तरम् ।

एवं कृतार्थौ विश्वामित्रो जनकसुतात्वेनावतीर्णया श्रिया रामं योजयितुं व्याजेन मिथिलाप्रस्थानं प्रस्तौत्येकत्रिंशे–अथेत्यादि । कृतार्थौ कृतविश्वामित्रप्रयोजनौ । प्रहृष्टेन सन्तुष्टेन अन्तरात्मना अन्तःकरणेन उपलक्षितौ ॥ १ ॥ प्रभातायामिति । सहितौ अविनाभूतौ ॥ २ ॥ अभिवाद्येति । मधुरोदारोक्तौ हेतुः मधुरभाषिणाविति ॥ ३ ॥ इमाविति । स्मेति भूतार्थसूचकमव्ययम् । इमौ स्म आज्ञापितं सर्वमनुष्ठितवन्ताविन्त्यर्थः । मुनिशार्दूल

अथ तां रजनीं तत्र कृतार्थौ रामलक्ष्मणौ । ऊषतुर्मुदितौ वीरौ प्रहृष्टेनान्तरात्मना ॥ १ ॥ प्रभातायां तु शर्वर्यां कृतपौर्वाह्णिकक्रियौ । विश्वामित्रं मुनींश्चान्यान् सहितावभिजग्मतुः ॥ २ ॥ अभिवाद्य मुनिश्रेष्ठं ज्वलन्तमिव पावकम् । ऊचतुर्मधुरोदारं वाक्यं मधुरभाषिणौ ॥ ३ ॥ इमौ स्म मुनिशार्दूल किङ्करौ समुपस्थितौ । आज्ञापय यथेष्टं वै शासनं करवाव किम् ॥ ४ ॥ एवमुक्तास्ततस्ताभ्यां सर्व एव महर्षयः । विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन् ॥ ५ ॥ मैथिलस्य नरश्रेष्ठ जनकस्य भविष्यति । यज्ञः परमधर्मिष्ठस्तस्य यास्यामहे वयम् ॥ ६ ॥

ब्रह्मध्यायिषु श्रेष्ठ । अनेन निरवधिकभक्तिमत्त्वं सूचितम् । किङ्करौ "भक्तिक्रीतो जनार्दनः" इत्युक्तरीत्या त्वया क्रीतौ । समुपस्थितौ भक्तं त्वां विना क्षणमपि स्थातुमक्षमौ, "शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः । मां ध्याति पुरुषव्याघ्रस्ततो मे तद्गतं मनः ॥" इतिवत् । आज्ञापय यथेष्टं क्षामकाले अल्पद्रव्याय क्रीतो राजपुत्रः पुनर्निवर्तयितुं नार्हः किल । शासनं करवाव किम्, कर्तव्ये न सङ्कोचः कार्य इत्यर्थः । अनेन स्वभक्ताय स्वान्यं न ददाति आहूय न ददाति स्वयं गत्वैव ददाति स्वात्मानमिष्टविनियोगार्हं करोतीत्युक्तम् ॥ ४ ॥ एवमिति । अत्र विश्वामित्रेण प्रतिवक्तव्ये ऋषिभिर्नियोजनं रामभक्त्यतिरेकेण । पुरस्कृत्य तदनुज्ञां लब्ध्वेत्यर्थः । यद्वा विश्वामित्रप्रमुखा मुनय इत्यर्थः ॥ ५ ॥ मैथिलस्येति । मिथिलाया ईश्वरो मैथिलः "तस्येदम्" इत्यण् । परमधर्मिष्ठः अतिशयेन धर्मवान्, भगवत्कैङ्कर्यरूपत्वेन काम्यनित्याभ्यामुत्कृष्ट इत्यर्थः । अथेति । तत्र यज्ञशालायाम् ॥१॥ अभिजग्मतुः अभिवादनार्थमिति शेषः ॥२॥ मुनिश्रेष्ठम् विश्वामित्रम् ॥३॥४॥ तयोरिति ताभ्यामित्यर्थे ॥५॥ मैथिलस्येति । धर्मिष्ठः



१ एवमुक्ते तयोर्वाक्ये । इति पाठान्तरम् ।

तस्य तस्यकृते ॥ ६ ॥ त्वमिति । गमिष्यसि, यदीति शेषः । धनुरत्नं धनुःश्रेष्ठम् । दीर्घाभाव आर्षः । चकाराद्यज्ञं चेत्यर्थः । तत् प्रसिद्धम् ॥ ७ ॥ तस्य धनूरत्नं कुतः समायातम् ? तत्राह–तद्धीति । मखे सदसि दैवतैर्दत्तमित्यन्वयः ॥ ८ ॥ नास्येति । आरोपणं ज्यारोपणम् ॥ ९ ॥ धनुष इति । जिज्ञासन्तः जिज्ञासमानाः ॥ १० ॥ तदिति । यज्ञं द्रक्ष्यसि तत्र तद्धनुश्च द्रक्ष्यसीत्यन्वयः ॥ ११ ॥ मखे किमर्थं दत्तम् ? तत्राह–तद्धीति । सुनाभं

त्वं चैव नरशार्दूल सहास्माभिर्गमिष्यसि । अद्भुतं धनुरत्नं च तत्र तद्द्रष्टुमर्हसि ॥७॥ तद्धि पूर्वं नरश्रेष्ठ दत्तं सदसि दैवतैः । अप्रमेयबलं घोरं मखे परमभास्वरम् ॥ ८ ॥ नास्य देवा न गन्धर्वा नासुरा न च राक्षसाः । कर्तुमारोपणं शक्ता न कथञ्चन मानुषाः ॥ ९ ॥ धनुषस्तस्य वीर्यं तु जिज्ञासन्तो महीक्षितः । न शेकुरारोपयितुं राजपुत्रा महाबलाः ॥ १० ॥ तद्धनुर्नरशार्दूल मैथिलस्य महात्मनः । तत्र द्रक्ष्यसि काकुत्स्थ यज्ञं चाद्भुतदर्शनम् ॥ ११ ॥ तद्धि यज्ञफलं तेन मैथिलेनोत्तमं धनुः । याचितं नरशार्दूल सुनाभ सर्वदैवतैः ॥ १२ ॥ आयागभूतं नृपतेस्तस्य वेश्मनि राघव । अर्चितं विविधैर्गन्धैर्माल्यैश्चागरुगन्धिभिः ॥ १३ ॥ एवमुक्त्वा मुनिवरः प्रस्थानमकरोत्तदा । सर्षिसंघः सकाकुत्स्थ आमन्त्र्य वनदेवताः ॥ १४ ॥

शोभनमुष्टिबन्धनस्थानम् । दैवतैः दैवतेभ्यः । याचितं दत्तं चेत्यर्थः ॥ १२ ॥ आयागेति । आयागभूतं धनुरुत्सवे प्राधान्येनार्चितं धनुरायाग उच्यते । अत्र विश्वामित्रेणैवानुक्तिः सर्वसम्मतत्वद्योतनाय ॥ १३॥ एवमिति । पूर्वं विश्वामित्रं पुरस्कृत्येत्युक्त्या प्राधान्यात् विश्वामित्र उक्तवानित्यनूद्यते ॥ १४॥

अतिशयितधर्मवान । "चिण्मतोर्लुक्" इति मतुब्लोपः । तत्र तं देशम् ॥६॥ त्वं चैवेति । तत्र यज्ञे । तत् प्रसिद्धम् । चकारोऽनुक्तस्त्रीरत्नसमुच्चयपरः ॥७॥ तद्धीति । सदसि दैवतैर्दत्तम् ॥ ८–१० ॥ तत्र मिथिलायाम् । चकारेण जानकीस्वीकारसमुच्चयः ॥ ११ ॥ तद्धीति । सुनाभं शोभनमध्यम् । सर्वदैवतैः सर्वदैवतेभ्यः॥१२॥

विषम०–पूर्वं पूर्वस्मिन् काले । देवरातारूयप्राचीनजनकस्य यज्ञे सदसि दैवतैर्दक्षयज्ञवधे प्रसादितात् शिवाल्लब्धम् । यज्ञप्रसादितैः शिवसहितैर्दैवतैर्देवरातहस्ते तदप्रमेयबलं धनुर्दत्तम् । अतस्तत्र तिष्ठतीति शेषः॥८॥ अयमत्र धनुरागमनक्रमः–पूर्वं देवास्त्रिपुरवधाय विश्वकर्मणा निर्मितं धनुर्महादेवाय ददुः । तद्भगवतोर्बलाबलपरीक्षानिमित्तकविश्वरोधे विष्णुपदाक्रमैर्जडीकृतम् । देवैः प्रार्थितो महादेवो धनुरिच्छतो देवरातस्य हस्ते न्यस्तवान् । ततःप्रभृति न्यासभावेन वर्तमानं जनकेन स्वयज्ञे स्वत्वेन याच्यमानं देवैस्तस्य यज्ञफलत्वेन दत्तमिति ॥ १३ ॥

स्वस्तीति । जाह्नवीतीरे स्थितं हिमवन्तं गमिष्यामीत्यन्वयः । शिलोच्चयं पर्वतं सिद्धाश्रमाद्धिमवद्गमनं मिथिलामार्गेणेतिज्ञेयम् ॥ १५ ॥ प्रदक्षिणमिति । ततः वनदेवतामन्त्रणानन्तरम् ॥ १६ ॥ तमिति । अनुसारिणम् उत्तरदिगनुसारिणं तम् । प्रायेण बाहुल्येन । ब्रह्मवादिनां शकटीशतमात्रं शकट्यः शकटानि तेषां शतमात्रं शतप्रमाणम् । अन्वयात् अन्वगात् । यद्वा शतमात्रमन्वयात्, इतरत्सर्वं सिद्धाश्रम एव स्थितमित्यर्थः । अत्र शकटीशब्देन

स्वस्ति वोऽस्तु गमिष्यामि सिद्धः सिद्धाश्रमादहम् । उत्तरे जाह्नवीतीरे हिमवन्तं शिलोच्चयम् ॥१५॥ प्रदक्षिणं ततः कृत्वा सिद्धाश्रममनुत्तमम् । उत्तरां दिशमुद्दिश्य प्रस्थातुमुपचक्रमे ॥१६॥ तं प्रयान्तं मुनिवरमन्वयादनुसारिणम् । शकटीशतमात्रं च प्रायेण ब्रह्मवादिनाम् ॥ १७ ॥ मृगपक्षिगणाश्चैव सिद्धाश्रमनिवासिनः । अनुजग्मुर्महात्मानं विश्वामित्रं महामुनिम् ॥ १८ ॥ निवर्तयामास ततः पक्षिसंघान् मृगानपि ॥ १९ ॥ ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे । वासं चक्रुर्मुनिवराः शोणाकूले समागताः ॥२०॥ तेऽस्तंगते दिनकरे स्नात्वा हुतहुताशनाः । विश्वामित्रं पुरस्कृत्य निषेदुरमितौजसः ॥ २१ ॥ रामोऽपि सह सौमित्रिर्मुनींस्तानभिपूज्य च । अग्रतो निषसादाथ विश्वामित्रस्य धीमतः ॥ २२ ॥ अथ रामो महातेजा विश्वामित्रं महामुनिम् । पप्रच्छ नरशार्दूलः कौतूहलसमन्वितः ॥ २३ ॥ भगवन् कस्य देशोऽयं समृद्धवनशोभितः । श्रोतुमिच्छामि भद्रं ते वक्तुमर्हसि तत्त्वतः ॥ २४ ॥

शकट्यारोपिताग्निहोत्रसम्भारादिकमुच्यते ॥ १७ ॥ मृगेति । तद्भक्त्येति भावः ॥ १८ ॥ निवर्तयामासेत्यर्द्धम् । अत्र पक्ष्यादिनिवर्तनेन मुनीनां गमनं द्योतितम् ॥ १९ ॥ त इति । शोणः पुंनदः, स एव शोणेत्यपि व्यपदिश्यते ॥ २० ॥ त इति । शोणे स्नात्वा दिनकरेऽस्तंगते सति हुतहुताशना इत्यन्वयः ॥ २१ ॥ राम इति । अभिपूज्य अभिवाद्य ॥ २२ ॥ अथेति । स्पष्टम् ॥ २३ ॥ भगवन्निति । अयं शोणकूलस्थः ॥ २४ ॥



आयागभूतं धनुः मखेषु प्राधान्येनार्चितं धनुरायागः तद्भूतम् ॥१३॥१४॥ स्वस्तीति । हिमवन्तं गमिष्यामीत्यन्वयः । हिमवतः स्वाश्रमत्वादितिभावः ॥१५॥ प्रदक्षिणमिति । उपचक्रमे गन्तुमिति शेषः॥१६॥ अनुसारिणाम् उक्तदिगनुसारिणाम्, पश्चाद्गामिनां वा । शकटीशतमात्रं शतपरिच्छिन्नशकट्यारोपिताग्निहोत्रसम्भारादि

चोदित इति । निखिलं वृत्तान्तमित्यर्थः ॥२५॥ इति श्रीगोविन्दराजविरचिते श्रीरामा॰ मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकत्रिंशः सर्गः ॥३१॥
एवं शोणकूलदेशवैभवे पृष्टे अयं मद्वंश्यानां देश इति विवक्षन् स्वान्वयं प्रदर्शयति द्वात्रिंशे–ब्रह्मयोनिरित्यादि । ब्रह्मा योनिः कारणं यस्य सः ब्रह्मयोनिः अयोनिजो ब्रह्मपुत्रः । महान् ज्ञानशौर्यादिभिरितरब्रह्मपुत्रविलक्षणः । कौ भूमौ शेत इति कुशः । नारदादिवत् ब्रह्मलोकेऽनवस्थाय प्रजापालने दत्तादर

चोदितो रामवाक्येन कथयामास सुव्रतः । तस्य देशस्य निखिलमृषिमध्ये महातपाः ॥ २५ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

ब्रह्मयोनिर्महानासीत् कुशो नाम महातपाः । अक्लिष्टव्रतधर्मज्ञः सज्जनप्रतिपूजकः ॥ १ ॥ स महात्मा कुलीनायां युक्तायां सुगुणोल्बणान् । वैदर्भ्यां जनयामास सदृशांश्चतुरः सुतान् । कुशाम्बं कुशनाभं च आधूर्तरजसं वसुम् ॥ २ ॥ दीप्तियुक्तान् महोत्साहान् क्षत्रधर्मचिकीर्षया । तानुवाच कुशः पुत्रान् धर्मिष्ठान् सत्यवादिनः ॥ ३ ॥ क्रियतां पालनं पुत्रा धर्मं प्राप्स्यथ पुष्कलम् । ऋषेस्तु वचनं श्रुत्वा चत्वारो लोकसम्मताः । निवेशं चक्रिरे सर्वे पुराणां नृवरास्तदा ॥ ४ ॥ कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत्पुरीम् । कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ॥ ५ ॥ आधूर्तरजसो राम धर्मारण्यं महीपतिः । चक्रे पुरवरं राजा वसुश्चक्रे गिरिव्रजम् ॥ ६ ॥ एषा वसुमती राम वसोस्तस्य महात्मनः । एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥ ७ ॥

तया भूमाववस्थानात् कुश इत्यस्य नाम, अत एव क्षत्रियव्यापारात् क्षत्रियोऽयम् । अक्लिष्टं निर्बाधं व्रतं यस्य सोऽक्लिष्टव्रतः अक्लिष्टव्रतश्चासौ धर्मज्ञश्चेति कर्मधारयः ॥ १॥ स इति सार्द्धश्लोकः । युक्तायाम् अनुरूपायाम्॥२॥ दीप्तीति सार्द्धश्लोकः । क्षत्रधर्मः प्रजापालनम् । पुष्कलं समग्रम् ॥३॥ ऋषेः कुशस्य निवेशं सन्निवेशम् ॥४॥ कुशाम्ब इत्यादिश्लोकद्वयम् ॥५॥६॥ एषेति । एषा शोणकूलस्था । शैलवराः गिरिव्रजसंज्ञामूलाः ॥ ७ ॥

मत।ब्रह्मादीनां यूथमन्वगात् ॥१७–२४॥ चोदित इति । निखिलं वक्तव्यं सर्वम् ॥ २५॥इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायाम् एकत्रिंशः सर्गः ॥ ३१ ॥ ब्रह्मयोनिरिति । अक्लिष्टव्रतः अभङ्गव्रतः ॥१॥ स इति । युक्तायाम्-अनुरूपायाम् ॥२॥३॥ ऋषेरिति । निवेशं सन्निवेशम्॥४॥

सुमागधीति । मगधदेशादागता मागधीति शोण एवोच्यते। आययाविति च्छेदः ॥८॥ सैषेति । पूर्वाभिचरिता पूर्वदेशात् प्रत्यङ्मुखवाहिनी । सुक्षेत्रा उभय पार्श्वत इति शेषः ॥९॥ कुशनाभ इत्यादि । घृतवत्पुरुषं दृष्ट्वा द्रवतीसत्यञ्चतीति घृताची । कुशनाभभार्या घृतवत्पुरुषं कृत्वाञ्चतीति वा । अप्सरसः॥१०॥ तास्त्विति श्लोकद्वयम् । उद्यानभूमिमागम्य शतह्रदा इव स्थिताः । शतह्रदाः विद्युतः । नृत्यमानाः नृत्यन्त्यः वादयन्त्यः, वीणा इति शेषः । आमोदं

सुमागधी नदी रम्या मगधान् विश्रुता ययौ। पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते॥ ८ ॥ सैषा हि मागधी राम वसोस्तस्य महात्मनः। पूर्वाभिचरिता राम सुक्षेत्रा सस्यमालिनी ॥ ९ ॥ कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम् । जनयामास धर्मात्मा घृताच्यां रघुनन्दन ॥१०॥ तास्तु यौवनशालिन्यो रूपवत्यः स्वलंकृताः । उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः ॥ ११ ॥ गायन्त्यो नृत्यमानाश्च वादयन्त्यश्च सर्वशः। आमोदं परमं जग्मुर्वराभरणभूषिताः ॥१२॥ अथ ताश्चारुसर्वाङ्ग्यो रूपेणाप्रतिमा भुवि। उद्यानभूमिमागम्य तारा इव घनान्तरे ॥१३॥ ताः सर्वगुणसम्पन्ना रूपयौवनसंयुताः । दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत् ॥ १४ ॥ अहं वः कामये सर्वा भार्या मम भविष्यथ। मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ ॥ १५ ॥ चलं हि यौवनं नित्यं मानुषेषु विशेषतः। अक्षयं यौवनं प्राप्ता अमर्यश्च भविष्यथ ॥१६॥ तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्मणः। अपहास्य ततो वाक्यं कन्याशतमथाब्रवीत् ॥ १७ ॥

सन्तोषम् । स्वलंकृताः कुसुमचन्दनतिलकादिभिः॥११॥१२॥ अथेति । तारा इव बभुरितिशेषः ॥१३॥ ता इति । सर्वगुणसम्पन्नाः सर्वालङ्कारसम्पन्नाः । सर्वत्र आत्मा स्वरूपं यस्य सः सर्वात्मकः, सर्वत्र सञ्चारीत्यर्थः ॥ १४ ॥ अहमिति । वः भवतीः । मानुषे भवो मानुषः । भावः अनुरागः । त्यज्यतां तथा सति दीर्घमायुरवाप्स्यथ ॥ १५ ॥ चलमिति । नित्यं सर्वदा अक्षयमिति मद्भार्यात्व इतिशेषः ॥ १६ ॥ तस्येति । अक्लिष्टकर्मणः अप्रतिहत

महोदयं महोदयनामकम् ॥ ५-८ ॥ सैषेति । पूर्वाभिचरिता पूर्ववाहिनी ॥ ९ ॥ कुशनाभ इति । घृताच्यामप्सरसि ॥ १० ॥ ११ ॥ गायन्त्य इति । आमोदं सन्तो

कर्मणः । ततः तद्वाक्यश्रवणेन । अपहास्य अथाब्रवीत् ॥१७॥ अन्तरिति । अन्तश्चरसि प्राणरूपेण । भूतानां प्राणिनां प्रभावज्ञाः एवंविधप्रभावज्ञाः । अस्मान् ज्ञातभवत्प्रभावान् ॥ १८ ॥ कुशेति । स्थानात् अधिकारात् । देवं भवन्तम् ॥१९॥ माभूदिति । सः नः पिता ते कालः मृत्युः माभूत् ।

अन्तश्चरसि भूतानां सर्वेषां त्वं सुरोत्तम । प्रभावज्ञाः स्म ते सर्वाः किमस्मानवमन्यसे ॥ १८ ॥ कुशनाभसुताः सर्वाः समर्थास्त्वां सुरोत्तम । स्थानाच्च्यावयितुं देवं रक्षामस्तु तपो वयम् ॥ १९ ॥ माभूत्स कालो दुर्मेधः पितरं सत्यवादिनम् । नावमन्यस्व धर्मेण स्वयं वरमुपास्महे ॥ २० ॥ पिता हि प्रभुरस्माकं दैवतं परमं हि नः । यस्य नो दास्यति पिता स नो भर्ता भविष्यति ॥ २१ ॥ तासां तद्वचनं श्रुत्वा वायुः परमकोपनः । प्रविश्य सर्वगात्राणि बभञ्ज भगवान् प्रभुः[1] ॥ २२ ॥ ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम् । प्रापतन् भुवि सम्भ्रान्ताः सलज्जाः साश्रुलोचनाः ॥ २३ ॥ स च ता दयिता दीनाः कन्याः परमशोभनाः । दृष्ट्वा भग्नास्तदा राजा सम्भ्रान्त इदमब्रवीत् ॥ २४ ॥ किमिदं कथ्यतां पुत्र्यः को धर्ममवमन्यते । कुब्जाः केन कृताः सर्वा वेष्टन्त्यो नाभिभाषथ ॥ २५ ॥

हे दुर्मेधः दुर्बुद्धे ! पितरं नावमन्यस्व । धर्मेण पितृप्रदानरूपेण । वरं स्वयमुपास्महे प्रतीक्षामहे, पिता स्वयं यस्मै दास्यति तं प्रतीक्षामह इत्यर्थः ॥२०॥ उक्तं विवृणोति–पितेति ॥२१॥ तासामिति । बभञ्ज कुब्जीचकार ॥२२॥ ता इति । सलज्जाः शरीरवैरूप्यादितिभावः ॥२३॥ स चेति । सम्भ्रान्तः पर्याप्तम् ॥ १२ ॥ अथेति । उद्यानभूमिमागम्य, विरेजुरिति शेषः ॥ १३–१८ ॥ कुशनाभेति । स्थानात् अधिकारात् । देवमिन्द्रम् ॥ १९ ॥ माभूदित्यादि । सः पिता

**मुनिभा०**–कुशनाभकन्यकाशतं स्वविषयनिरतिशयाभिलाषविशेषाकृष्टचित्तं स्वयमेव प्रतियाचमानं वायुं प्रत्याह-माभूदिति । दुर्मेधः दुर्मते वायो ! धर्मेण गान्धर्वविवाहरूपधर्मेण। स्वयमेव विद्यमानपितृचरणा अपि तद्रहिता इव स्वतन्त्राः सत्यः वरं पतिं यदा उपास्महे भजामः, सः कालः माभूत् तादृशकालविशेषः कदापि नोत्पद्यताम् । तेन सत्यवादिनं पितरं नावमन्यस्व, अस्मत्पितुरवमानं नाचरेत्यर्थः । यद्वा सः अस्मत्पिता ते कालः अन्तकः माभूत, अत एव तं नावमन्यस्व । पितृभक्त्यो वयं न स्वच्छन्दं स्थिताः, अतएव धर्मेण पितृभक्त्यनुरोधनधर्मेण स्वयंवरमुपास्मह इत्यर्थः ॥ १९ ॥ २० ॥

---

[1] प्रभुः । अरत्निमात्राकृतयो भग्नदर्पा भयार्दिताः । इत्यधिकः पाठः ।

कुलचित्तः॥२४॥ किमिति। को धर्ममवमन्यते, बलात्कारं करोतीत्यर्थः। कुब्जाः वक्रशरीराः॥२५॥ एवमिति। पृष्टेति शेषः। विनिश्वस्य व्यथित्वा। समाधिं किंवक्ष्यन्तीति तद्वचनश्रवणावधानम्॥२६॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्वात्रिंशः सर्गः॥३२॥
अथ कुशनाभस्य कन्यावचनं शृण्वतः क्षमाविशेष उच्यते त्रयस्त्रिंशे–तस्येत्यादि। शिरोभिश्चरणौ स्पृष्ट्वा, पादयोः प्रणम्येत्यर्थः ॥ १ ॥ वायुरिति।

एवं राजा विनिश्वस्य समाधिं सन्दधे ततः ॥२६॥ इत्यार्षे श्रीरामायणे आदि० बालकाण्डे द्वात्रिंशः सर्गः ॥३२॥
तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः। शिरोभिश्चरणौ स्पृष्ट्वा कन्याशतमभाषत ॥१॥ वायुः सर्वात्मको राजन् प्रधर्षयितुमिच्छति। अशुभं मार्गमास्थाय न धर्मं प्रत्यवेक्षते ॥२॥ पितृमत्यः स्म भद्रं ते स्वच्छन्दे न वयं स्थिताः। पितरं नो वृणीष्व त्वं यदि नो दास्यते तव ॥ ३ ॥ तेन पापानुबन्धेन वचनं न प्रतीच्छता। एवं ब्रुवन्त्यः सर्वाः स्म वायुना निहता भृशम् ॥ ४ ॥ तासां तद्वचनं श्रुत्वा राजा परमधार्मिकः। प्रत्युवाच महातेजाः कन्याशतमनुत्तमम् ॥ ५ ॥ क्षान्तं क्षमावतां पुत्र्यः कर्तव्यं सुमहत्कृतम्। ऐकमत्यमुपागम्य कुलं चावेक्षितं मम ॥ ६ ॥

प्रधर्षयितुम् अभिभवितुम् इच्छति । वर्तमानसामीप्याल्लट्। अशुभं बलात्काररूपम् ॥ २ ॥ पितृमत्य इति। पितृमत्यः स्म, अतः स्वच्छन्दे स्वातन्त्र्ये किञ्चित्पतिस्वीकारविषये। वयं न स्थिताः अतो नः पितरमेव वृणीष्व। स यदि नः अस्मान्, तुभ्यं दास्यति तदा तव भविष्यामः। ते भद्रमस्तु ॥ ३ ॥ तेनेति। एवं ब्रुवन्त्यो वयम्। अस्माकं वचनं न प्रतीच्छता अनङ्गीकुर्वता। पापानुबन्धेन पापानुसारिणा तेन वायुना निहताः ॥ ४ ॥ तासामिति। अनुत्तमं क्षमावत्त्वात् ॥ ५ ॥ क्षान्तमिति। हे पुत्र्यः! क्षमावतां कर्तव्यं कर्तुमर्हं "कृत्यानां कर्तरि वा" इतिषष्ठी। क्षान्तं क्षमा।

ते कालो मृत्युः माभूत्। तेन तं नावमन्यस्व, धर्मेण पितृप्रदानरूपेण वरं पतिमुपास्महे प्रतीक्षामहे। प्रभुः वायुः ॥२०–२५॥ एवमिति। एवं विनिश्वस्य व्यथित्वा समाधिं सन्दधे, समाधिर्व्यथितस्य मनसः समाधानम्॥२६॥इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां द्वात्रिंशः सर्गः॥३२॥
तस्येति। चरणौ स्पृष्ट्वा नमस्कृत्य ॥ १ ॥ वायुरिति। इच्छति ऐच्छत्। प्रत्यवेक्षते प्रत्यवैक्षत ॥ २ ॥ पितृमत्य इति। स्वच्छन्दे स्वातन्त्र्ये यदि नः अस्मान् दास्यते दास्यति, तर्हि वयं त्वदीयाः ॥ ३ ॥ तेनेति। पापानुबन्धेन पापानुवर्तनहेतुना वचनं न प्रतीच्छता अनङ्गीकुर्वता वायुना निहताः ॥ ४ ॥ ५ ॥ क्षान्त

भावे निष्ठा। कृतम् इदं सुमहत्कर्म, देवे प्रार्थयमानेप्यविकृतचित्तत्वं शरीरं भञ्जयति सति निष्क्रोधत्वं च दुष्करमिति भावः। कुलं चावेक्षितम् कुलानुरूपं कृत्यं कृतमित्यर्थः ॥ ६ ॥ उक्तमर्थं विवृणोति–अलङ्कार इति अर्द्धम्। क्षमा अपराधसहिष्णुत्वम् ॥ ७ ॥ दुष्करमिति। वः तत् क्षान्तं क्षमा। दुष्करं त्रिदशेषु रूपैश्वर्यसंपन्नेषु विशेषतो दुष्करम्। यादृशीति सर्वासामविशेषतः या क्षमा सापि दुष्करेत्यन्वयः। क्षमैव दुष्करा, ततस्त्रिदशेषु दुष्करा, ततोपि सर्वासामविशेषेण क्षमा दुष्करैवेत्यर्थः ॥ ८ ॥ क्षमां प्रशंसति–क्षमेति। क्षमा दानं, दानेन यत्फलं प्राप्नोति तत् क्षमया

अलङ्कारो हि नारीणां क्षमा तु पुरुषस्य वा ॥ ७ ॥ दुष्करं तद्धि वः क्षान्तं त्रिदशेषु विशेषतः। यादृशी वः क्षमा पुत्र्यः सर्वासामविशेषतः ॥८॥ क्षमा दानं क्षमा सत्यं क्षमा यज्ञश्च पुत्रिकाः। क्षमा यशः क्षमा धर्मः क्षमया विष्ठितं जगत् ॥ ९ ॥ विसृज्य कन्याः काकुत्स्थ राजा त्रिदशविक्रमः। मन्त्रज्ञो मन्त्रयामास प्रदानं सह मन्त्रिभिः। देशकालौ प्रदानस्य सदृशे प्रतिपादनम् ॥ १० ॥ एतस्मिन्नेव काले तु चूली नाम महामुनिः। ऊर्ध्वरेताः शुभाचारो ब्राह्मं तप उपागमत् ॥ ११ ॥ तप्यन्तं तमृषिं तत्र गन्धर्वी पर्युपासते। सोमदा नाम भद्रं ते ऊर्मिलातनया तदा ॥ १२ ॥

प्राप्नोतीत्यर्थः। एवमुत्तरत्रापि योज्यम्। धर्मः तटाकारामनिर्माणादिः। क्षमया भूमिसम्बन्धिन्या। जगच्चराचरं विष्ठितं स्थितं भवति ॥ ९ ॥ विसृज्येति अर्द्धत्रयम्। प्रदानं कन्याप्रदानम्। चिन्ताप्रकारमाह–देशइति। प्रदानस्य कन्याप्रदानस्य। उचितौ देशकालौ। सदृशे स्वकुलस्य सदृशे पात्रे प्रतिपादनं च मन्त्रयामासेत्यर्थः ॥ १० ॥ एतस्मिन्निति। एतस्मिन्नेव काले कुशनाभीयकाले, उत्तरत्रान्वयः। ऊर्ध्वरेताः अस्खलितरेताः। ब्राह्मं तपः वैदिकं तपः ब्रह्मोद्देश्यकं वा ॥ ११ ॥ तप्यन्तमिति। तत्र तस्मिन्देशे। तदा तत्काले। तप्यन्तं दाहार्थेऽपि व्यत्यययाच्छयन्। गन्धर्वी जातिवाचित्वात्। पर्यु

मित्यादि। क्षमावतां कर्तव्यं महत् क्षान्तं धैर्यं भवतीभिः कृतम् ॥ ६ ॥ ७ ॥ दुष्करमित्यादि। यत् क्षान्तं तत् दुष्करम्। यादृशी वः क्षमा धृतिः सा दुष्करा त्रिदशेषु विशेषतो दुष्करा। कुतः ? तेषामाभिरूप्यादिकमनीयगुणबाहुल्यात्। सा भवतीभिः कृता। यद्वा परकृतापराधसहिष्णुत्वं क्षमा। अपराधसद्भावेपि शापाप्रदानरूपं चित्तसंयमनं क्षान्तं भवतीभिः कृतम्। स्थानाच्च्यावयितुमित्यादिना तासां शापदानसामर्थ्यं व्यक्तम्। अयं भावः–दुष्करा क्षमा सर्वत्र कर्तव्या, त्रिदशेषु विषये विशेषतः कर्तव्या। सा भवतीभिः कृता ॥ ८ ॥ ९ ॥ विसृज्येति। प्रदानं कन्याप्रदानम्। चिन्ताप्रकारमाह–देशेति। प्रदानस्य प्रदेयस्य कन्याशतस्य सदृशे वरे प्रतिपादनं कर्तव्यमिति ॥ १० ॥ एतस्मिन्निति। ब्राह्म वैदिकम् तपः उपागमत् कृतवान्। ऊर्ध्वरेताः ब्रह्मचारी ॥ ११ ॥ १२ ॥

पासते अशुश्रूषत। मध्येमध्ये भद्रमस्त्विति प्रयोगः शुभोत्तरत्वाय ॥१२॥ सा चेति। काले कियति काले। तुष्टोऽभवत्। ब्रह्मर्षित्वाद्गुरुरित्युक्तिः ॥ १३॥ स चेति। कालयोगेन शुश्रूषापरिपाककालसम्बन्धेन। करोमि कुर्याम् ॥ १४ ॥ परितुष्टमिति। वाक्यकोविदं वाक्ये वचने कोविदं समर्थम् ॥ १५॥ लक्ष्म्येति। ब्राह्म्या लक्ष्म्या ब्रह्मवर्चसेन। समुदितः श्रेष्ठः अतएव ब्रह्मभूतः ब्रह्मतुल्यः महातपा असि। अस्मात्त्वत्तः पुत्रमिच्छामि। 'दीप्यसे परया लक्ष्म्या'

सा च तं प्रणता भूत्वा शुश्रूषणपरायणा। उवास काले धर्मिष्ठा तस्यास्तुष्टोऽभवद्गुरुः ॥ १३ ॥ स च तां कालयोगेन प्रोवाच रघुनन्दन। परितुष्टोऽस्मि भद्रं ते किं करोमि तव प्रियम् ॥ १४॥ परितुष्टं मुनिं ज्ञात्वा गन्धर्वी मधुरस्वरा। उवाच परमप्रीता वाक्यज्ञा वाक्यकोविदम् ॥१५॥ लक्ष्म्या समुदितो ब्राह्म्या ब्रह्मभूतो महातपाः। ब्राह्मेण तपसा युक्तं पुत्रमिच्छामि धार्मिक ॥ १६ ॥ अपतिश्चास्मि भद्रं ते भार्या चास्मि न कस्यचित्। ब्राह्मेणोपगतायाश्च दातुमर्हसि मे सुतम् ॥ १७ ॥ तस्याः प्रसन्नो ब्रह्मर्षिर्ददौ पुत्रमनुत्तमम्। ब्रह्मदत्त इति ख्यातं मानसं चूलिनः सुतम् ॥ १८ ॥ स राजा सौमदेयस्तु पुरीमध्यावसत्तदा। काम्पिल्यां परया लक्ष्म्या देवराजो यथा दिवम् ॥१९॥ स बुद्धिं कृतवान् राजा कुशनाभः सुधार्मिकः। ब्रह्मदत्ताय काकुत्स्थ दातुं कन्याशतं तदा ॥ २० ॥ तमाहूय महातेजा ब्रह्मदत्तं महीपतिः। ददौ कन्याशतं राजा सुप्रीतेनान्तरात्मना ॥ २१ ॥

इतिकोशान्तरे ॥ १६ ॥ अपतिरिति। विधवाप्यपतिर्भवति, तत्राह—भार्येति। उपगतायाः शरणं गतायाः मे। ब्राह्मेण तपोमहिम्ना ॥१७॥ तस्या इति। ब्रह्मणा तपोयोगेन। दत्तो ब्रह्मदत्तः। चूलिनः स्वस्य मानसं मनस्सङ्कल्पजं सुतं ददौ ॥१८॥ स इति। राजा क्षत्रियः क्षत्रजत्वात्। लक्ष्म्या सम्पदा युक्तः। एतस्मिन्नन्तरे पुरीमध्यावसदिति सम्बन्धः॥१९॥ स बुद्धिमिति। तदा ब्रह्मदत्तस्य काम्पिल्याख्यायां पुर्यामावासकाले॥२०॥ तमिति। राजा रञ्जकः॥२१॥

सेति। काले कियति काले ॥१३॥ स चेति। कालयोगेन प्रसादकालयोगेन। किं करोमि किंकरवाणि॥१४॥१५॥ लक्ष्म्येति। ब्राह्म्या लक्ष्म्या समुदितः ब्रह्मभूतो महातपाः त्वम् अतो ब्राह्मेण ब्राह्मशक्तियोगेन युक्तं पुत्रमिच्छामि ॥ १६ ॥ अपतिरित्यादि। पूर्वं चापतिरस्मि, इदानीं न कस्यचिद्भार्यास्मि। नैष्ठिकब्रह्मचारिणीत्यर्थः। अतो ब्राह्मेण धर्मेण उपगतायाः शरणं गतायाः मे सुतं दातुमर्हसि॥१७॥१८॥ स राजा गन्धर्व्याः सोमदायाः क्षत्रियात्वात्। काम्पिल्याम् कम्पिलेन निर्वृत्ताम् ॥१९॥

विषम०—ननु पुत्रप्रार्थना पत्यावुचिता, अत आह—अपतिश्चास्मीति। इतः परमपि अस्मि अहम्। अहमर्थे अस्मीत्यव्ययम्, न कस्यचिद्भार्या भविष्यामीतिशेषः। अथापि नैष्ठिकब्रह्मचारिण्याः उपगतायाः किङ्करत्वं प्राप्ताया मे ब्राह्मेण ब्रह्मसम्बन्धिनोपायेन सुतं दातुमर्हसि। सनकादय इव मानसः पुत्रो देय इति भावः ॥ १७ ॥

यथेति । तासां पाणीन् जग्राह। देवपतिर्यथा देवपतिसदृशः, तत्तुल्यविभव इत्यर्थः ॥ २२ ॥ स्पृष्टेति । ततश्चूलिसूनुना । पाणाविति जात्येकवचनम् । विकुब्जाः विगतकुब्जभावाः शतं कन्या बभुः । विसर्गलोप आर्षः । बभुः कन्याशतमितिपाठः ॥२३॥ स इति । वायुना मुक्ताः, कन्या इति शेषः। परमप्रीतः अनुकूलवरलाभेन परमप्रीतः । हर्षं विकुब्जत्वकृतम् ॥२४॥ कृतेति । प्रेषयामास, काम्पिल्यामिति शेषः ॥२५॥ सोमदेति सार्द्धश्लोकः । सोमदा चूलिपुत्र

यथाक्रमं ततः पाणीञ्जग्राह रघुनन्दन । ब्रह्मदत्तो महीपालस्तासां देवपतिर्यथा ॥ २२ ॥ स्पृष्टमात्रे ततः पाणौ विकुब्जा विगतज्वराः । युक्ताः परमया लक्ष्म्या बभुः कन्या शतं तदा ॥२३॥ स दृष्ट्वा वायुना मुक्ताः कुशनाभो महीपतिः । बभूव परमप्रीतो हर्षं लेभे पुनःपुनः ॥ २४ ॥ कृतोद्वाहं तु राजानं ब्रह्मदत्तं महीपतिः । सदारं प्रेषयामास सोपाध्यायगणं तदा ॥ २५ ॥ सोमदापि सुसंहृष्टा पुत्रस्य सदृशीं क्रियाम् । यथान्यायं च गन्धर्वी स्नुषास्ताः प्रत्यनन्दत । स्पृष्ट्वास्पृष्ट्वा च ताः कन्याः कुशनाभं प्रशस्य च॥२६॥ इत्यार्षे श्री० बा० त्रयस्त्रिंशः सर्गः ॥३३॥ कृतोद्वाहे गते तस्मिन् ब्रह्मदत्ते च राघव । अपुत्रः पुत्रलाभाय पौत्रीमिष्टिमकल्पयत् ॥ १ ॥ इष्ट्यां च वर्तमानायां कुशनाभं महीपतिम् । उवाच परमोदारः कुशो ब्रह्मसुतस्तदा ॥ २ ॥ पुत्र ते सदृशः पुत्रो भविष्यति सुधार्मिकः । गाधिं प्राप्स्यसि तेन त्वं कीर्तिं लोके च शाश्वतीम् ॥ ३ ॥

माता । पुत्रसदृशीं क्रियां दारक्रियाम्, दृष्ट्वेतिशेषः। यथान्यायं यथाक्रमम् । स्नुषाः कन्याः कुशनाभपुत्रीः॥२६॥इ० श्रीगो०श्रीरा० त्रयस्त्रिंशःसर्गः ॥३३॥ एवं प्रासङ्गिकं परिसमाप्य प्रकृतकथाशेषमाह चतुस्त्रिंशे—कृतोद्वाह इत्यादि । अपुत्रः कुशनाभः । पुत्रायेयं पौत्री ताम् ॥ १ ॥ इष्ट्यामिति । कुशः कुशनाभपिता ॥ २ ॥ पुत्रेति । सदृशः, गुणैरितिशेषः । स पुत्रः किंनामकः ? तत्राह—गाधिमिति। गाधिनामानं पुत्रं प्राप्स्यसे, तेन गाधिना । शश्वद्भवा

स इति । दातुं बुद्धिं निश्चयं कृतवान् ॥ २०–२२ ॥ स्पृष्टेति । विकुब्जाः विगतकुब्जभावाः, अस्य ब्रह्मतेजस्सम्पत्तिरेवात्र कारणं विज्ञेयम् । वायुना भग्नाः पूर्वमिति शेषः (वायुना भग्नाः इति पाठः) ॥२३–२५॥ सोमदेति । सदृशक्रियाम् सदृशविवाहम् । सदृशक्रियामित्यस्य प्रत्यनन्दतेति परेण सम्बन्धः॥२६॥इति श्रीमहे० श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ कृतोद्वाह इति । अपुत्रः कुशनाभः ॥ १ ॥ २ ॥ पुत्रेति । तेन गाधिना॥ ३–६ ॥

शाश्वती । भवार्थे अण् । बहिषष्टिलोपवचनादव्ययानां भमात्रे टिलोपः क्वाचित्कः । अत्र न ततो ङीप् । ताम् ॥ ३ ॥ एवमिति । अनेन सदा ब्रह्मलोक वासी कुशः पुत्रानुग्रहार्थं भुवमागत इत्यवगम्यते । सनातनं नित्यम् ॥ ४ ॥ कस्याचिदिति । कस्याचित्कालस्य कस्मिंश्चित्काले गते सति । गाधि रित्येव यथा पित्रोक्तं तथैवेत्यर्थः । जज्ञे घृताच्यां भार्यायाम् ॥५॥ स इति । यतः कुशवंशप्रसूतोऽस्मि अतः कौशिकसंज्ञोऽस्मि । कुशशब्दात् गोत्रा

एवमुक्त्वा कुशो राम कुशनाभं महीपतिम् । जगामाकाशमाविश्य ब्रह्मलोकं सनातनम् ॥ ४ ॥ कस्यचित्त्वथ कालस्य कुशनाभस्य धीमतः । जज्ञे परमधर्मिष्ठो गाधिरित्येव नामतः ॥ ५ ॥ स पिता मम काकुत्स्थ गाधिः परमधार्मिकः । कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन ॥ ६ ॥ पूर्वजा भगिनी चापि मम राघव सुव्रता । नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता ॥ ७ ॥ सशरीरा गता स्वर्गं भर्तारमनुवर्तिनी । कौशिकी परमोदारा प्रवृत्ता च महानदी ॥ ८ ॥ दिव्या पुण्योदका रम्या हिमवन्तमुपाश्रिता । लोकस्य हितकामार्थं प्रवृत्ता भगिनी मम ॥९॥ ततोऽहं हिमवत्पार्श्वे वसामि निरतः सुखम् । भगिन्यां स्नेहसंयुक्तः कौशिक्यां रघुनन्दन ॥ १० ॥ सा तु सत्यवती पुण्या सत्ये धर्मे प्रतिष्ठिता । पतिव्रता महाभागा कौशिकी सरितां वरा ॥ ११ ॥

पत्ये ठक् ॥६॥ पूर्वजेति । पूर्वजा ज्येष्ठा । ऋचीके ऋचीकाख्यमुनय इत्यर्थः ॥७ ॥ सशरीरेति । भर्तारमनुवर्तिनी भर्त्रनुवर्तनधर्मप्रभावादिति भावः । न केवलं स्वर्गगमनमस्याः, महानदीत्वं च जातमित्याह—कौशिकीति ॥८॥ दिव्येति । दिव्या श्लाघ्या । हितमामुष्मिकम्, कामः ऐहिकम् तदुभयार्थं प्रवृत्ता । नदीरूपेण स्वर्गाद्धिमवन्तमुपाश्रितेत्यर्थः ॥ ९ ॥ तत इति । यतो हिमवन्तमाश्रिता तत इत्यर्थः ॥ १० ॥ सत्यवतीनामनिमित्तमाह—सा त्विति ॥११॥

पूर्वजेति । ऋचीके ऋचीकाय । प्रतिपादिता दत्ता ॥ ७ ॥ सशरीरेति । अनुवर्तिनी शुश्रूषमाणा । न केवलं सशरीरतः स्वर्गगमनम्, अपितु अस्या महानदीत्वमपि जातमित्याह—कौशिकीत्यादिना ॥ ८ ॥ दिव्येति । दिव्या अनन्यसाधारणा । हितकामार्थं हितमामुष्मिकं, कामः ऐहिकम् तदर्थम्, यतः सा हिमवन्तमुपाश्रिता अत इत्यर्थः ॥ ९ ॥ १० ॥ इतश्च तत्र वास इत्याह—सा त्विति । सत्ये धर्मे प्रतिष्ठिता तज्जलपानादिना सत्यान्मनो न निवर्तत इति भावः ॥ ११ ॥

एवम्भूतस्य सिद्धाश्रमागमननिमित्तमाह—अहं हीति । नियमात् यागनियमाद्धेतोः । समुपागतः सिद्धाश्रममितिशेषः ॥ १२ ॥ एषेति । मम स्वस्य वंशस्य चोत्पत्तिः प्रसङ्गात्कीर्तिता, यत्त्वया पृष्टं तत् । देशस्य गिरिव्रजदेशस्य वैभवं चोक्तम् ॥ १३ ॥ इतःपरं न प्रष्टव्यमित्याशयेनाह—गत इति । अर्द्धो रात्रेरर्द्धरात्रः । अनपुंसकत्वेपि "अर्द्धं नपुंसकम्" इत्यार्षः समासः । "अह्नः सर्व—" इत्यादिना समासान्तोऽच् । "रात्राह्न—" इति पुंल्लिङ्गता ।

अहं हि नियमाद्राम हित्वा तां समुपागतः । सिद्धाश्रममनुप्राप्य सिद्धोऽस्मि तव तेजसा ॥ १२॥ एषा राम ममोत्पत्तिः स्वस्य वंशस्य कीर्तिता । देशस्य च महाबाहो यन्मां त्वं परिपृच्छसि ॥ १३ ॥ गतोऽर्द्धरात्रः काकुत्स्थ कथाः कथयतो मम । निद्रामभ्येहि भद्रं ते माभूद्विघ्नोऽध्वनीह नः ॥ १४ ॥ निष्पन्दास्तरवः सर्वे निलीना मृगपक्षिणः । नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन ॥ १५ ॥ शनैर्वियुज्यते सन्ध्या नभो नेत्रैरिवावृतम् । नक्षत्रतारागहनं ज्योतिर्भिरवभासते ॥ १६ ॥ उत्तिष्ठति च शीतांशुः शशी लोकतमोनुदः । ह्लादयन् प्राणिनां लोके मनांसि प्रभया विभो ॥ १७ ॥ नैशानि सर्वभूतानि प्रचरन्ति ततस्ततः । यक्षराक्षससंघाश्च रौद्राश्च पिशिताशनाः ॥ १८ ॥

अत्रार्द्धशब्दोऽंशवाची । उक्तं हि—"भित्तं शकलखण्डे वा पुंस्यर्द्धोऽर्द्धं समेंऽशके" इति । यावति रात्रिभागे निद्रा निषिद्धा तावान् गत इत्यर्थः । जागरणे को दोष इत्यत्राह—माभूदिति । श्वो गन्तव्याध्वनि निद्राभावप्रयुक्तालस्यकृतविघ्नो माभूदित्यर्थः । मम कथाः कथयतः । मयि कथां कथयति ॥१४॥ अथ निशामुखं वर्णयति चतुर्भिः—निष्पन्दा इत्यादि । निष्पन्दाः पक्षिसञ्चाराभावादिति भावः । निलीनाः निद्रां प्राप्ता इत्यर्थः । नैशेन सन्ध्यातिरिक्तकालिकेन । सन्ध्या वियुज्यते वियुक्ता । वर्तमानसामीप्ये लट् । नक्षत्रैः अश्विन्यादिभिः, ताराभिः केवलनक्षत्रैश्च गहनं व्याप्तम् । नभः ज्योतिर्भिः

अहमिति । नियमात् अध्वरनियमाद्धेतोः ॥ १२ ॥ एषा इति । 'कुशवंशप्रसूतोऽस्मि' इत्यादिना स्वस्योत्पत्तिः 'ब्रह्मयोनिः' इत्यादिमहाप्रबन्धेन स्ववंशोत्पत्तिः 'एषा वसुमती' इत्यादिना देशस्योत्पत्तिः कीर्तितेत्यर्थः ॥१३॥ गतोऽर्धरात्र इति । अत्र अर्धरात्रशब्देन प्रदोषो लक्ष्यते, अन्यथा 'शनैर्वियुज्यते सन्ध्या' इत्युत्तरत्र तद्वचनं विरुध्येत, कथान्तरश्रवणकौतूहलतदर्थप्रार्थनविरामार्थकालविप्रकर्षं प्रीत्या प्रकाशयति न पुनः परमार्थेनेति । यथाश्रुतार्थग्रहणे तु शनैर्वियुज्यते सन्ध्येत्यत्र भूतार्थे लट् ॥ १४ ॥ १५ ॥ शनैरित्यादि । नक्षत्रतारागहनं नक्षत्रैर्ग्रहैर्गहनम् अत एव नेत्रैरावृतमिव नभः ज्योतिर्भिः उडुभिः तेषां रश्मिभिर्वा अवभासते । नैशानि

ज्योतिष्मद्भिर्नेत्रैरावृतामिवावभासते । उत्तिष्ठतीति " उदोऽनूर्ध्वकर्मणि " इति परस्मैपदम् । तमो नुदतीति तमोनुदः "इगुपधलक्षणः कः" । निशायां प्रभवन्ति नैशानि । "प्रभवति" इत्यण् । भूतानि उलूकादयः । ततस्ततः तत्र तत्र । पौर्णमास्यां यज्ञं समाप्य द्वितीयायां प्रस्थानमिति चतुर्घटिकानन्तरं चन्द्रोदय इति सर्वथार्द्धरात्रशब्दः प्रदोषपर एव ॥ १५-१८ ॥ एवमिति । अभ्यपूजयन् अस्तुवन् ॥ १९ ॥ कुशिकानामिति । गाधेः कुशिक

एवमुक्त्वा महातेजा विरराम महामुनिः । साधुसाध्विति तं सर्वे ऋषयो ह्यभ्यपूजयन् ॥१९॥ कुशिकानामयं वंशो महान् धर्मपरः सदा । ब्रह्मोपमा महात्मानः कुशवंश्या नरोत्तमाः ॥२०॥ विशेषेण भवानेव विश्वामित्रो महायशाः । कौशिकी च सरिच्छ्रेष्ठा कुलोद्योतकरी तव ॥ २१ ॥ इति तैर्मुनिशार्दूलैः प्रशस्तः कुशिकात्मजः । निद्रामुपागमच्छ्रीमानस्तंगत इवांशुमान् ॥२२॥ रामोऽपि सहसौमित्रिः किञ्चिदागतविस्मयः । प्रशस्य मुनिशार्दूलं निद्रां समुपसेवते ॥ २३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

उपास्य रात्रिशेषं तु शोणाकूले महर्षिभिः । निशायां सुप्रभातायां विश्वामित्रोऽभ्यभाषत ॥ १ ॥

इति नामान्तरम् । कुशिकानां तद्गोत्रजानाम् । ब्रह्मोपमाः चतुर्मुखोपमाः ॥२०॥ विशेषेणेति । विश्वामित्रः विश्वामित्रसंज्ञः । भवानेव महात्मेत्यनुषङ्गः । कौशिकी च तव कुलोद्योतकरी कुलप्रकाशकरी॥२१॥ इतीति । प्रशस्तः स्तुतः । "शंसु स्तुतौ" "यस्य विभाषा" इति नेट् । " अनिदितां-" इति नलोपः । श्रीमान् प्रशंसाकृतहर्षजनितश्रीमान् । अस्तङ्गतोऽंशुमानिव तद्वत्परप्रबोधाजनक इत्यर्थः ॥ २२॥ रामोपीति । किञ्चिदागतविस्मयः निद्रापारवश्यादितिभावः । समुपसेवते अध्वश्रमवशात् सम्यक् प्राप्तः ॥२३॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥ अथ स्वपादोद्भवगङ्गावैभवं लोके प्रवर्तयितुं पृच्छति पञ्चत्रिंशे-उपास्येत्यादि । उपास्य स्थित्वा, शयित्वेति

निशायां चरन्तीति तथा ॥ १६-१९ ॥ स्तुतिप्रकारमाह-कुशिकानामित्यादि । ब्रह्मोपमाः ब्रह्मर्षितुल्याः ॥ २० ॥ हे महायशः विश्वामित्र ! यस्तपसा ब्रह्मर्षित्वं प्राप्त इति भावः ॥ २१ ॥ २२ ॥ राम इति । निद्रां समुपसेवते भूतार्थे लट् ॥ २३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां चतुस्त्रिंशः सर्गः ॥ ३४ ॥ उपास्येति । रात्रिशेषम् उपास्य निद्रामुपगम्य । अत्यन्तसंयोगे द्वितीया ॥ १ ॥

यावत् । रात्रिशेषमिति अत्यन्तसंयोगे द्वितीया । सुप्रभातायां, निवृत्तायामिति यावत् । अत्र रात्रिशेषमित्यनुवादात् पूर्वसर्गे गतोऽर्द्धरात्र इत्यत्र निशीथ परत्वं स्वरसमिति गम्यते । यद्वा रात्रिशेषं ब्राह्मे मुहूर्त्ते । उपास्य परमात्मानमिति शेषः । "ब्राह्मे मुहूर्त उत्थाय चिन्तयेदात्मनो हितम्" इतिस्मृतेः ॥ १ ॥ सुप्रभातेति । गमनाय गन्तुम् "क्रियार्थोपपदस्य–" इति चतुर्थी ॥ २ ॥ तदिति । पूर्वाह्णे भवा पौर्वाह्णिकी ताम् ॥३॥ अयमिति । गाधः स्वल्प

सुप्रभाता निशा राम पूर्वा सन्ध्या प्रवर्तते । उत्तिष्ठोत्तिष्ठ भद्रं ते गमनायाभिरोचय ॥ २ ॥ तच्छ्रुत्वा वचनं तस्य कृत्वा पौर्वाह्णिकीं क्रियाम् । गमनं रोचयामास वाक्य चेदमुवाच ह ॥ ३ ॥ अयं शोणः शुभजलो गाधः पुलिन मण्डितः । कतरेण पथा ब्रह्मन् सन्तरिष्यामहे वयम् ॥४॥ एवमुक्तस्तु रामेण विश्वामित्रोऽब्रवीदिदम् । एष पन्था मयोद्दिष्टो येन यान्ति महर्षयः ॥ ५ ॥ एवमुक्ता महर्षयो विश्वामित्रेण धीमता । पश्यन्तस्ते प्रयाता वै वनानि विविधानि च ॥ ६ ॥ ते गत्वा दूरमध्वानं गतेऽर्द्धदिवसे तदा । जाह्नवीं सरितां श्रेष्ठां ददृशुर्मुनिसेविताम् ॥ ७ ॥ तां दृष्ट्वा पुण्यसलिलां हंससारससेविताम् । बभूवुर्मुनयः सर्वे मुदिताः सहराघवाः ॥ ८ ॥ तस्यास्तीरे ततश्चक्रुस्त आवासपरिग्रहम् ॥ ९ ॥ ततः स्नात्वा यथान्यायं सन्तर्प्य पितृदेवताः । हुत्वा चैवाग्निहोत्राणि प्राश्य चामृत वद्धविः ॥ १० ॥ विविशुर्जाह्नवीतीरे शुचौ मुदितमानसाः । विश्वामित्रं महात्मानं परिवार्य समन्ततः[1] ॥ ११ ॥

जलः, अतएव पुलिनमण्डितः सैकतालंकृतः । तथा च नावं विना गन्तुं शक्यते । कतरेण पथा सन्तरिष्यामहे ॥ ४ ॥ एवमिति । उद्दिष्टः गन्तव्यत्वेन निश्चितः ॥ ५ ॥ एवमिति स्पष्टम् ॥ ६ ॥ त इति । जाह्नवीं गङ्गाम् ॥ ७ ॥ तामिति । सारसो हंसविशेषः ॥ ८ ॥ तस्या इति अर्द्धम् । आवासाय परिगृह्यत इत्यावासपरिग्रहः तं, संमार्जनादिना वासस्थानं चक्रुरित्यर्थः ॥ ९ ॥ तत इत्यादि श्लोकद्वयम् । यथान्यायं यथाशास्त्रम्, अघमर्षणसूक्तादि जपपूर्वकमित्यर्थः । पितृदेवता इति ऋषीणामप्युपलक्षणम् । अग्निहोत्राणि अग्नौ होतव्यानि पञ्चमहायज्ञादीनि । अमृतवत् अमृततुल्यम् । हविः यज्ञ

सुप्रभातेति । गमनाय गमनं कर्तुम् ॥२॥३॥ अयमिति । अगाधः गम्भीरः । कतरेण पथा संतरिष्यामहे इत्यर्थः ॥४॥ उद्दिष्टः गन्तव्यत्वेन निश्चितः ॥५–९॥ अमृतवत्

१ समन्ततः । विष्ठिताश्च यथान्यायं राघवौ च यथार्हतः ॥ इत्यधिकः ।

शिष्टमन्नम् "यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्" इतिस्मृतेः। शुचौ दृष्टदोषरहिते भोजनस्थानादन्यत्र ॥ १० ॥ ११ ॥ अथेति । अथ उपवेशानन्तरम्। तत्र देशे। तदा तस्मिन्नेव काले। द्वितीयोऽथशब्दः प्रश्ने। "मङ्गलानन्तरारम्भप्रश्नकात्स्न्येंष्वथो अथ" इत्यमरः। गङ्गां गङ्गावृत्तान्तम् ॥१२॥ त्रैलोक्यमित्यर्द्धम् ॥ १३॥ चोदित इति । वृद्धिं त्रैलोक्यमित्यनेनोक्ताम्, जन्म गङ्गां श्रोतुमित्युक्तम् ॥१४॥ शैलेन्द्र इति । धातूनाम् अयस्ताम्रादीनाम्

अथ तत्र तदा रामो विश्वामित्रमथाब्रवीत् । भगवन् श्रोतुमिच्छामि गङ्गां त्रिपथगां नदीम् ॥ १२ ॥ त्रैलोक्यं कथमाक्रम्य गता नदनदीपतिम् ॥ १३ ॥ चोदितो रामवाक्येन विश्वामित्रो महामुनिः । वृद्धिं जन्म च गङ्गाया वक्तुमेवोपचक्रमे ॥ १४ ॥ शैलेन्द्रो हिमवान्नाम धातूनामाकरो महान् । तस्य कन्याद्वयं राम रूपेणाप्रतिमं भुवि ॥ १५ ॥ या मेरुदुहिता राम तयोर्माता सुमध्यमा । नाम्ना मनोरमा नाम पत्नी हिमवतः प्रिया ॥ १६ ॥ तस्यां गङ्गेयमभवज्ज्येष्ठा हिमवतः सुता । उमा नाम द्वितीयाभून्नाम्ना तस्यैव राघव ॥ १७ ॥ अथ ज्येष्ठां सुराः सर्वे देवतार्थचिकीर्षया । शैलेन्द्रं वरयामासुर्गङ्गां त्रिपथगां नदीम् ॥ १८ ॥ ददौ धर्मेण हिमवांस्तनयां लोकपावनीम् । स्वच्छन्दपथगां गङ्गां त्रैलोक्यहितकाम्यया ॥ १९ ॥

अस्तीति शेषः। कन्याद्वयम् आसीदितिशेषः ॥ १५ ॥ येति । या मेरुदुहिता हिमवतः प्रिया पत्नी मनोरमानाम प्रसिद्धा सा तयोर्मातेत्यन्वयः ॥ १६ ॥ कन्याद्वयस्य नामनी दर्शयति-तस्यामिति ॥ १७ ॥ अथेति । देवतार्थचिकीर्षया देवतार्थसम्पादनेच्छया, प्रयोजनं च स्नानपानादि वक्ष्यमाणसेनापतिजननं वा परदेवतार्चनार्थं वा, अतएव स्वपदेनानुक्तिः ॥ १८ ॥ ददाविति । धर्मेण-याचका न प्रत्याख्येया इति धर्मेण। जलप्रवाहरूपाया नद्याः कथमाकाशे गमनम् ? तत्राह-स्वच्छन्दपथगामिति। स्वच्छन्दः स्वेच्छा तदायत्तः पन्थाः स्वच्छन्दपथः "ऋक्पूरब्धूः-" इत्यादिना अप्रत्ययः समासान्तः।



अमृततुल्यं पञ्चयज्ञाद्यवशिष्टमन्नम्। यद्वा अमृतवत् तत्सदृशं गङ्गाजलं हविश्च प्रागुक्तं प्राश्येत्यर्थः ॥ १०-१३ ॥ वृद्धिं त्रैलोक्यव्याप्तिरूपाम् ॥ १४ ॥ धातूनां स्वर्णादीनाम् ॥१५-१७॥ अथेति । देवतार्थचिकीर्षया देवतार्थश्च कुमारजननादिः । त्रिपथगां स्वर्गभूपातालमार्गगाम् ॥१८॥ ददाविति । धर्मेण स्वसुकृतेन । तनयां तनयात्वं

तं गच्छतीति तथा । मेघजलवद्धारगतिविशेषेणाकाशेऽपि गतिः सम्भवतीति भावः ॥१९॥ प्रतिगृह्येति । त्रिलोकहितकारिणः, देवा इतिशेषः । प्रतिगृह्य स्वीकृत्य । आदाय स्वेष्वन्तर्भाव्य॥२०॥ गङ्गावृत्तान्तप्रसङ्गेन तदनुजावृत्तान्तमप्याह—या चेति । कन्या अरुद्धभर्तृका॥२१॥ उग्रेणेति । अप्रतिरूपाय अनुकूलाय, रुद्रार्थं तपस्यन्तीमुमां प्रसन्नाय तस्मै ददावित्यर्थः ॥२२॥ उपसंहरति—एते इति ॥२३॥ एवं गङ्गोत्पत्तिप्रकारं प्रथमप्रश्नोत्तरमुक्त्वा द्वितीय



प्रतिगृह्य त्रिलोकार्थं त्रिलोकहितकारिणः । गङ्गामादाय तेऽगच्छन् कृतार्थेनान्तरात्मना ॥२०॥ या चान्या शैलदुहिता कन्याऽऽसीद्रघुनन्दन । उग्रं सा व्रतमास्थाय तपस्तेपे तपोधना ॥२१॥ उग्रेण तपसा युक्तां ददौ शैलवरः सुताम् । रुद्रायाप्रतिरूपाय उमां लोकनमस्कृताम् ॥ २२ ॥ एते ते शैलराजस्य सुते लोकनमस्कृते । गङ्गा च सरितां श्रेष्ठा उमा देवी च राघव ॥ २३ ॥ एतत्ते सर्वमाख्यातं यथा त्रिपथगा नदी । खं गता प्रथमं तात गतिं गति मतां वर ॥ २४ ॥ सैषा सुरनदी रम्या शैलेन्द्रस्य सुता तदा । सुरलोकं समारूढा विपापा जलवाहिनी ॥ २५ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

उक्तवाक्ये मुनौ तस्मिन्नुभौ राघवलक्ष्मणौ । अभिनन्द्य कथां वीरावूचतुर्मुनिपुङ्गवम् ॥ १ ॥

प्रश्नोत्तरं त्रिपथगामित्वमुच्यत इत्याह—एतदिति । प्रथमं तावत् खं खात्मिकां गतिं गता । गतिमतां सुन्दरगतिमताम्॥२४॥अथ सुरलोकं च समारूढेत्याह—सैषेति ॥ २५॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चत्रिंशः सर्गः॥३५॥ "भगवन् श्रोतुमिच्छामि गङ्गां त्रिपथगां नदीम्" इति गङ्गायास्त्रिपथगात्वप्रकारे पृष्टे अन्तरिक्षस्वर्गगमनयोः प्रत्युक्तत्वात्तत्र तृतीयपथगमनं कथमित्याशयेन पुनः पृच्छन्तं श्रीरामं प्रत्याह षट्त्रिंशे—उक्तवाक्य इत्यादि। मुनौ उक्तवाक्ये उक्तोत्तरे सति।अत्रोभावित्युक्तेः पूर्वसर्गे रामपदं लक्ष्मणस्याप्युपलक्षणं वेदितव्यम्। कथां पूर्वोक्ताम् ॥१॥

गताम् । स्वच्छन्देन स्वेच्छया कृतः पन्थाः स्वच्छन्दपथः तेन गच्छन्तीम्, अनर्गलामिति यावत ॥ १९ ॥ त्रैलोक्यहितकारिणः, देवा इति शेषः । गच्छन अगच्छन ॥ २०–२३ ॥ एतदित्यादि । त्रिपथगा नदी येन प्रकारेण खं गतिं गता, आकाशमार्गं गतेत्यर्थः ॥ २४ ॥ सेति । विपापा विधूतलोककलमषा, किमु वक्तव्यं स्वय मिति ॥ २५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां पञ्चत्रिंशः सर्गः ॥ ३५ ॥ उक्तवाक्य इति ॥ १ ॥

धर्मेति अर्द्धत्रयम् । धर्मयुक्तं, धर्मफलकश्रवणमित्यर्थः। इदं वृत्तं ज्येष्ठाया दुहितुः वृत्तं त्वया कथितम् । तस्या दिव्यमानुषसम्भवं दिव्यलोके मानुषलोके च सम्भवं विस्तरं वक्तुमर्हसि ॥२॥ त्रीनिति । त्रीन् पथः भूर्भुवःस्वर्मार्गान् । केन हेतुना प्लावयेत् प्लुता । भावयेदित्यपि पाठः । लकारव्यत्ययः। इतरयोः पूर्वसर्ग एवोक्तत्वात्केन हेतुना तृतीयपथं गतेति द्वितीयप्रश्नार्थः ॥ ३ ॥ तृतीयप्रश्नमाह–कथमिति । त्रिपथगा गङ्गा कथं विश्रुता कैः कर्मभिः व्यापारैः

धर्मयुक्तमिदं ब्रह्मन् कथितं परमं त्वया । दुहितुः शैलराजस्य ज्येष्ठाया वक्तुमर्हसि। विस्तरं विस्तरज्ञोऽसि दिव्यमानुषसम्भवम् ॥ २ ॥ त्रीन् पथो हेतुना केन प्लावयेल्लोकपावनी ॥ ३ ॥ कथं गङ्गा त्रिपथगा विश्रुता सरिदुत्तमा । त्रिषु लोकेषु धर्मज्ञ कर्मभिः कैः समन्विता ॥ ४ ॥ तथा ब्रुवति काकुत्स्थे विश्वामित्रस्तपोधनः । निखिलेन कथां सर्वामृषिमध्ये न्यवेदयत् ॥ ५ ॥ पुरा राम कृतोद्वाहो नीलकण्ठो महातपाः । दृष्ट्वा च स्पृहया देवीं मैथुनायोपचक्रमे ॥ ६ ॥ शितिकण्ठस्य देवस्य दिव्यं वर्षशतं गतम् । [ तस्य संक्रीडमानस्य महादेवस्य धीमतः । एवं मन्मथयुद्धे तु तयोर्नासीत्पराजयः ॥ ] न चापि तनयो राम तस्यामासीत्परन्तप ॥७॥ ततो देवाः समुद्विग्नाः पितामहपुरोगमाः । यदिहोत्पद्यते भूतं कस्तत्प्रतिसहिष्यते ॥ ८ ॥

सरिदुत्तमा आसीत् ॥ ४ ॥ प्रथमप्रश्नोत्तरमाहेत्याह–तथेति । काकुत्स्थ इति लक्ष्मणस्याप्युपलक्षणम् । निखिलेन विस्तरेण । सर्वां दिव्यसम्भवां मानुषसम्भवां च ॥ ५ ॥ निखिलेनेत्युक्तं गाङ्गेयसम्भवमाह–पुरेति । कृतोद्वाह इति परपरिग्रहव्यावृत्तिः । दृष्ट्वा स्पृहया महातपोनिधित्वेऽपि कामबाणवशात् तस्यामभिलाषेण । मैथुनाय मिथुनकर्म कर्तुं उपचक्रमे ॥ ६ ॥ शितीति । दिव्यं वर्षशतं गतं, मैथुनेनैवेतिशेषः । तनयः तनयप्रापकरेतोविसर्गः ॥ ७ ॥ तत इति । पितामहपुरोगमाः देवाः समुद्विग्ना भीताः। पाठान्तरे-समुद्युक्ताः उद्योगं चक्रुः। किमर्थम्? इह पार्वत्यां यद्भूतं पुत्रः उत्पद्यते उत्पत्स्यते। वर्तमान



धर्मयुक्तमिति। शैलराजस्य ज्येष्ठाया दुहितुरिदं कथितमित्यन्वयः ॥२॥ त्रीन् पथ इत्यादिना पृष्टस्यैव पुनः प्रश्नो गङ्गाकथाश्रवणकुतूहलातिशयादिति द्रष्टव्यम् ॥ ३ ॥ कर्मभिः व्यापारविशेषैः॥४॥ तथेति । निखिलेन विस्तरेण ॥५॥६॥ शितिकण्ठस्येति । देवस्य क्रीडतः । भावलक्षणे षष्ठी । दिव्यम् अमानुषम् ॥ ७ ॥ तत इति ।

सामीप्ये वर्तमानवत्प्रयोगः । तत् कः प्रतिसहिष्यत इति विचार्य तान्निवर्तनाय समुद्युक्ता इत्यर्थः ॥ ८ ॥ तमेवोद्योगमाह—अभिगम्येति । महादेवमिति शेषः ॥ ९ ॥ देवदेवेति । देवदेवेत्यनेन महादेवशब्दार्थः उक्तः । प्रणिपातेन पादमूलपतनेन ॥ १० ॥ नेति । तेजः तेजस्समुद्भूतं पुत्रं न धारयिष्यन्ति न सहिष्यन्ते, अतो ब्राह्मेण वेदावगतेन तपसा योगेन युक्तः सन्, तदङ्गतया देव्या सह तपश्चर । न तेजः पार्वत्यां मोक्तुमर्हसीति भावः ॥ ११ ॥ त्रैलोक्येति ।

अभिगम्य सुराः सर्वे प्रणिपत्येदमब्रुवन् ॥ ९ ॥ देवदेव महादेव लोकस्यास्य हिते रत । सुराणां प्रणिपातेन प्रसादं कर्तुमर्हसि ॥ १० ॥ न लोका धारयिष्यन्ति तव तेजः सुरोत्तम । ब्राह्मेण तपसा युक्तो देव्या सह तपश्चर ॥ ११ ॥ त्रैलोक्यहितकामार्थं तेजस्तेजसि धारय ॥ १२ ॥ [रक्ष सर्वानिमाँल्लोकान्नालोकं कर्तुमर्हसि ।] देवतानां वचः श्रुत्वा सर्वलोकमहेश्वरः । बाढमित्यब्रवीत् सर्वान् पुनश्चेदमुवाच ह ॥ १३ ॥ धारयिष्याम्यहं तेजस्तेजस्येव सहोमया । त्रिदशाः पृथिवी चैव निर्वाणमधिगच्छतु ॥ १४ ॥ यदिदं क्षुभितं स्थानान्मम तेजो ह्यनुत्तमम् । धारयिष्यति कस्तन्मे ब्रुवन्तु सुरसत्तमाः ॥ १५ ॥ एवमुक्तास्ततो देवाः प्रत्यूचुर्वृषभध्वजम् । यत्तेजः क्षुभितं ह्येतत्तद्धरा धारयिष्यति ॥ १६ ॥ एवमुक्तः सुरपतिः प्रमुमोच महीतले । तेजसा पृथिवी येन व्याप्ता सगिरिकानना ॥ १७ ॥

त्रैलोक्यहितमेव कामः काम्यमानः पुरुषार्थः तदर्थं । तेजः रेतः, तेजसि तेजोमयनिजशरीरे धारय, न मुञ्चेत्यर्थः ॥ १२ ॥ देवतानामिति । सर्वलोकमहेश्वरः सर्वलोकानां परमनियन्ता । सर्वलोकपितामह इति पाठान्तरम् ॥ १३ ॥ बाढमित्यङ्गीकृतांशमाह-धारयिष्यामीति । तेजः अक्षुभितांशम् । उमया उमाप्य क्षुभितं शोणितरूपं तेजो धारयत्वित्यर्थः । पृथिवीशब्देन लोका उच्यन्ते । निर्वाणं सुखम् ॥ १४ ॥ 'पुनश्चेदमुवाच' इत्युक्तमंशं दर्शयति—यदिदमिति । स्थानात् रेतःस्थानहृदयसम्पुटात् । अनुत्तमं दुर्भरं । मे मह्यं ब्रुवन्तु ॥ १५ ॥ एवमिति । धरा सर्वधारणशक्तिमती, अनेन धरा तद्धारणार्थं देवैः प्रार्थितेति सिद्धम् ॥ १६ ॥ एवमिति । सुरपतिः रुद्रः । प्रमुमोच तेज इति सिद्धम् । येन तेजसा पृथिवी व्याप्ता तत्प्रमुमोच ॥ १७ ॥

इह पार्वत्याम् । यद्भूतमुत्पद्यते कस्तत्प्रतिसहिष्यत इति भयोद्विग्नाः भयेन भीत्या उद्विग्नाः ॥ ८–११ ॥ त्रैलोक्येति । तेजस्तेजसि धारय तेजः रेतः, तेजः आत्मा तस्मिन् ॥ १२ ॥ १३ ॥ धारयिष्याम्यहं तेज इति । स्थानादक्षुभितमिति भावः । उमया सह वर्तमान इति शेषः । तेजसि आत्मनि ॥ १४ ॥ यदिदमिति । धार

ततः पृथिव्यां व्याप्तत्वादेव हेतोः । पृथिवी भग्ना भविष्यतीति हुताशनमूचुः । पुनरूचुरित्यनेनाग्नेः प्रवेशभीतत्वं गम्यते, अग्निचारणहेतुतया वायु समन्वित इत्युक्तम् ॥१८॥ तदिति अर्द्धत्रयम् । तत्तेजः अग्निना व्याप्तं सत् श्वेतपर्वतः सञ्जातः। ततः कालपरिपाकेन शरवणं च सञ्जातं । शराणां वनं शरवणम् । "प्रनिरन्तश्शर–" इति णत्वम् । शरवणं विशेषयति–यत्रेति । कृत्तिकानामपत्यं पुमान् कार्तिकेयः । "स्त्रीभ्यो ढक्" । स्तन्यदानात्कृत्तिका

ततो देवाः पुनरिदमूचुश्चाथ हुताशनम् । प्रविश त्वं महातेजो रौद्रं वायुसमन्वितः ॥ १८ ॥ तदग्निना पुनर्व्याप्तं सञ्जातः श्वेतपर्वतः । दिव्यं शरवणं चैव पावकादित्यसन्निभम् । यत्र जातो महातेजाः कार्तिकेयोऽग्निसम्भवः ॥ १९ ॥ अथोमां च शिवं चैव देवाः सर्षिगणास्तदा । पूजयामासुरत्यर्थं सुप्रीतमनसस्ततः ॥ २० ॥ अथ शैलसुता राम त्रिदशानिदमब्रवीत । समन्युरशपत्सर्वान् क्रोधसंरक्तलोचना ॥ २१ ॥ यस्मान्निवारिता चैव सङ्गतिः पुत्रकाम्यया । अपत्यं स्वेषु दारेषु नोत्पादयितुमर्हथ ॥ २२ ॥ अद्यप्रभृति युष्माकमप्रजाः सन्तु पत्नयः । एवमुक्त्वा सुरान् सर्वान् शशाप पृथिवीमपि ॥ २३ ॥ अवने नैकरूपा त्वं बहुभार्या भविष्यसि । न च पुत्रकृतां प्रीतिं मत्क्रोध कलुषीकृता । प्राप्स्यसि त्वं सुदुर्मेधे मम पुत्रमनिच्छती ॥ २४ ॥

पुत्रत्वम् । अग्निना धृत्वा मुक्तत्वादग्निसम्भवः ॥१९॥ अथेति । पूजयामासुः, मैथुनविघ्नकृतकोपशान्त्यर्थमित्यर्थः ॥२०॥ अथेति । अब्रवीदित्येतद्विशिष्यो च्यते अशपदिति ॥२१॥ यस्मादिति । पुत्रकाम्यया मया । सङ्गतिः भर्तृसंयोगो मैथुनरूपः सा यस्मान्निवारिता. तस्मात् यूयमपि स्वेषु दारेषु अपत्यं पुत्रं नोत्पादयिष्यथ ॥२२॥ अद्येति । पूर्वार्द्धेन पूर्वश्लोकपठितमुच्यते । पत्नय इत्यार्षं ह्रस्वत्वम् ॥२३॥ अवन इति सार्द्धश्लोकः । नैकरूपा ऊषरत्वादिरूपेण

यिष्यति धारयितुं शक्नुयात ॥ १५॥१६ ॥ एवमिति । येन तेजसा पृथिवी व्याप्ता तत प्रमुमोच ॥ १७ ॥ तत इति । प्रविश संगृहाण ॥ १८ ॥ तदिति । पुनर्व्याप्तं पुनःपुनः संगृहीतम् ॥ १९ ॥ क्रियमाणामपि पूजामुमा देवी नाङ्गीकरोति स्म, प्रत्युत क्रुद्धैवाभूदित्याह–अथेति ॥ २० ॥ किमवददित्याह–अशपदिति । शापरूपं वचोऽब्रवीदित्यर्थः ॥ २१ ॥ मन्युकारणमाह यस्मादिति । शापस्वरूपमाह अपत्यमित्यादि ॥ २२ ॥ अद्येति । अप्रजाः प्रजोत्पादनशक्तिरहिताः ॥ २३ ॥ २४ ॥

१ नब्रवीत । अप्रियस्य कृतस्याद्य फलं प्राप्स्यथ मे सुराः । इत्युक्त्वा सलिलं गृह्य पार्वती भास्करप्रभा । समन्युः । इति पाठान्तरम् ।

नानाविधा। बहुभार्या बहूनां राज्ञां भार्या। मम पुत्रम् अनिच्छता अनिच्छन्ती त्वं मत्क्रोधेन शापरूपेण कलुषीकृता विपर्यस्तप्रकृतिः सती, पुत्रकृतां प्रीतिं न प्राप्स्यसीति भावः ॥२४॥ तानिति। सुरपतिः रुद्रः। तान्सुरान् स्वकीयशापेन व्रीडितान् लज्जितान्। दृष्ट्वा प्रियाशापस्य दुष्परिहरत्वात् स्वीयशाप दुःखस्य द्रष्टुमशक्यत्वाच्च वरुणपालितां दिशं हिमवतः प्रतीचीं प्रति। गमनायोपचक्राम। परस्मैपदमार्षम् ॥२५॥ स इति। हिमवत्प्रभवे तस्य हिमवतो गिरेरुत्तरपार्श्वभूते शृङ्गे देव्या सह तप आतिष्ठत्, सदा तपोव्रतमसङ्कल्पयदित्यर्थः॥२६॥ ननु 'दुहितुः शैलराजस्य ज्येष्ठाया वक्तुमर्हसि' इति पार्वती

तान् सर्वान् व्रीडितान् दृष्ट्वा सुरान् सुरपतिस्तदा। गमनायोपचक्राम दिशं वरुणपालिताम् ॥ २५ ॥ स गत्वा तप आतिष्ठत् पार्श्वे तस्योत्तरे गिरेः। हिमवत्प्रभवे शृङ्गे सह देव्या महेश्वरः ॥ २६ ॥ एष ते विस्तरो राम शैलपुत्र्या निवेदितः। गङ्गायाः प्रभवं चैव शृणु मे सहलक्ष्मणः॥२७॥इत्यार्षे श्री० बालकाण्डे षट्त्रिंशः सर्गः॥३६॥ तप्यमाने तपो देवे देवाः सर्षिगणाः पुरा। सेनापतिमभीप्सन्तः पितामहमुपागमन् ॥ १ ॥ ततोऽब्रुवन् सुराः सर्वे भगवन्तं पितामहम्। प्रणिपत्य सुराः सर्वे सेन्द्राः साग्निपुरोगमाः ॥ २ ॥

वृत्तान्तमुपेक्ष्य गङ्गावैभव एव मया पृष्टे तद्विहायोपेक्षितमेव पार्वतीवृत्तान्तं किमर्थं कथितवानसीति रामस्य शङ्कां परिहरति—एष इति। शैलपुत्र्याः पार्वत्याः सम्बन्धी कथाविस्तरो निवेदितः। वक्ष्यमाणगङ्गावैभवकथनोपयोगित्वेनोक्तः। गङ्गायाः प्रभवं प्रभावं त्वं शृणु। चः प्राधान्ये ॥२७॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥ अथ प्रतिज्ञातं स्कन्दोत्पादकत्वरूपं दिव्य सम्भववैभवमाह सप्तत्रिंशे—तप्यमान इत्यादि। तप्यमाने तपःकर्मकत्वादात्मनेपदकर्मवद्भावौ। देवसेनापतित्वं विहाय केवलतपःप्रवण इत्यर्थः॥१॥तत

तानिति। उपचक्राम पादन्यासं कृतवान् ॥ २५ ॥ स गत्वेति। उत्तरे गिरौ हिमवति। तस्य पार्श्वे पार्श्वस्थे हिमवत्प्रभवे शृङ्गे तप आतिष्ठदित्यन्वयः ॥ २६ ॥ शैलपुत्र्या इति गङ्गाया विशेषणम्। विस्तरः निवेदितः। प्रभवं कुमारोत्पत्तिं च ॥ २७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां षट्त्रिंशः सर्गः ॥ ३६ ॥ तप्यमान इति। देवे शिवे ॥ १ ॥ तत इति। साग्निपुरोगमाः अग्निना पुरोगमेन सहिताः ॥ २ ॥

इति । अग्निना पुरोगमेन सहिताः साग्निपुरोगमाः । सुराः सर्वे प्रणिपत्य सुराः सर्वे अब्रुवन्निति क्रियाभेदान्न पुनरुक्तिः ॥ २ ॥ यो न इति । भगवता भवता । यः सेनापतिरस्मभ्यमादिकाले दत्तः स इदानीमुमया सह तप्यते । स्मेति प्रसिद्धौ ॥ ३ ॥ यदिति । अनन्तरं सेनापतावन्यपरे सति । अत्र सेनापतिविषये । यत्कार्यं तत्संविधत्स्व आलोचय । तमेवाहूय सैनापत्ये निवेशय, अन्यं वोत्पादयेत्यर्थः ॥ ४ ॥ देवानामिति । सान्त्वयन् उग्रे तपसि वर्त

यो नः सेनापतिर्देव दत्तो भगवता पुरा । तपः परममास्थाय तप्यते स्म सहोमया ॥३॥ यदत्रानन्तरं कार्यं लोकानां हितकाम्यया । संविधत्स्व विधानज्ञ त्वं हि नः परमा गतिः ॥ ४ ॥ देवतानां वचः श्रुत्वा सर्वलोकपितामहः । सान्त्वयन् मधुरैर्वाक्यैस्त्रिदशानिदमब्रवीत् ॥ ५ ॥ शैलपुत्र्या यदुक्तं तन्न प्रजाः सन्तु पत्निषु । तस्या वचनमक्लिष्टं सत्यमेतन्न संशयः ॥ ६ ॥ इयमाकाशगा गङ्गा यस्यां पुत्रं हुताशनः । जनयिष्यति देवानां सेनापतिमरिन्दमम् ॥ ७ ॥ ज्येष्ठा शैलेन्द्रदुहिता मानयिष्यति तत्सुतम् । उमायास्तद्बहुमतं भविष्यति न संशयः ॥ ८ ॥ तच्छ्रुत्वा वचनं तस्य कृतार्था रघुनन्दन । प्रणिपत्य सुराः सर्वे पितामहमपूजयन् ॥ ९ ॥ ते गत्वा पर्वतं राम कैलासं धातुमण्डितम् । अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः ॥ १० ॥

मानस्य तस्य रुद्रस्य निवर्तनमशक्यम्, तत्र नाभिनिवेशः कार्य इति समादधान इत्यर्थः ॥ ५ ॥ अन्यं वोत्पादयेत्यत्र प्रतिवक्ति—शैलेति । शैलपुत्र्या पार्वत्या देवानां पत्निषु प्रजा न सन्त्विति यदुक्तं तद्वचनम् अक्लिष्टम् अमोघम् । मया सत्यमेवोच्यते अत्र संशयो भवद्भिर्न कर्तव्यः ॥ ६ ॥ तर्हि का गतिरित्यत्राह—इयमिति । इयं बुद्धिस्था । अस्तीति शेषः ॥ ७ ॥ कथमिदं गङ्गा संमन्यते, कुतो वोमा न कुप्येत्तत्राह—ज्येष्ठेति । तत्सुतम् अग्नेः सुतं मानयिष्यति, बहुमतिपूर्वं जनयिष्यतीत्यर्थः । तदुमाया बहुमतं स्वज्येष्ठायाः प्रीत्यर्थत्वादिति भावः ॥८॥ तदिति । कृतार्थाः कृतार्थप्रायाः ॥९॥ त इति । दैवत

येन रुद्रेण । सेनापतिः बीजात्मना दत्तः स परममास्थाय परं मौनमङ्गीकृत्य तपस्तप्यते अनुतिष्ठति॥३–५॥ शैलपुत्र्येति । यच्छैलपुत्र्या उक्तं तत्तेन कारणेन न प्रजास्यथ न प्रजनयिष्यथ । पुत्रानिति शेषः । अक्लिष्टम् अमोघम् ॥६॥७॥ ज्येष्ठेति । तत्सुतम् अग्निक्षिप्तं गर्भं । मानयिष्यति धारयिष्यति । उमाया इति, तद्गर्भधारणम् उमाया बहुमतं देवतोद्देशेन स्वकृतशापस्य वैकल्याभावो रुद्रतेजसः स्वज्येष्ठभगिन्या धारणं च अस्या अपि बहुमानहेतुः ॥ ८ ॥९॥ त इति । दैवताः दैवतानि ।



१ येन सेनापतिः । २ पुरा । स न जातो [illegible] वक्षस्यद्रिरिनिबर्हणः । तत्पिता भगवान् शर्वो हिमवच्छिखरेऽग्र वै । तपः । ३ न प्रजास्यथ इति पाठान्तरम् ।

शब्दः पुंल्लिङ्गोऽप्यस्ति । "दैवतानि पुंसि वा" इत्यनुशासनात् । दग्धरुद्रतेजसोऽग्नेः स्थानं कैलासः । पुत्रार्थं पुत्रोत्पादनार्थम् अग्निमूर्त्यन्तरं दग्धरुद्रतेजःस्थम् ॥ १० ॥ देवेति । संविधत्स्व सम्पादय । अस्य विवरणमुत्तरार्द्धम् । प्रथमं सामान्येनोक्तिरग्निहृदयज्ञानाय । महातेज इति सम्बोधनम् । तेजः रेतः ॥ ११ ॥ देवतानामिति । देवताभ्यस्तथेति प्रतिज्ञायाकाशगङ्गां गत्वा हे देवि गर्भं धारय इत्युवाचेतिशेषः । किमर्थमित्यत आह–देवतानामिदं प्रियमिति ॥ १२ ॥ तस्येति । दिव्यं रूपं दिव्यस्त्रीवेषम् । सोऽग्निस्तस्या महिमानं सौन्दर्यातिशयं दृष्ट्वा समन्तात्सर्वावयवेभ्यः अवकीर्यत अवाकिरत् ।

देवकार्यमिदं देव संविधत्स्व हुताशन । शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज ॥ ११ ॥ देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः । गर्भं धारय वै देवि देवतानामिदं प्रियम् ॥ १२ ॥ तस्य तद्वचनं श्रुत्वा दिव्यं रूपमधारयत् । दृष्ट्वा तन्महिमानं स समन्तादवकीर्यत ॥ १३ ॥ समन्ततस्तदा देवीमभ्यषिञ्चत पावकः । सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ॥ १४ ॥ तमुवाच ततो गङ्गा सर्वदेवपुरोहितम् । अशक्ता धारणे देव तव तेजः समुद्धतम् । दह्यमानाग्निना तेन सम्प्रव्यथितचेतना ॥ १५ ॥ अथाब्रवीदिदं गङ्गां सर्वदेवहुताशनः । इह हैमवते पादे गर्भोऽयं सन्निवेश्यताम् ॥ १६ ॥

आर्षः श्यन्प्रत्ययः । हृतवीर्योऽभूत् । "अङ्गारसदृशी नारी घृतकुम्भसमः पुमान् ।" इति न्यायात् ॥ १३ ॥ समन्तत इति । समन्ततः सर्वावयवेषु अभ्यषिञ्चत रेतः सर्वावयवेषु यथा व्याप्तं भवति तथा सिक्तवानित्यर्थः । तेन सर्वस्रोतांसि सर्वावयवाः पूर्णानि व्याप्तानि ॥ १४ ॥ तामित्यर्द्धत्रयम् । तेनाग्निना अग्नितेजसा दह्यमाना अतएव सम्प्रव्यथितचेतना अतिदुःखितचित्ता गङ्गा । सर्वदेवानां पुरोहितम् । "अग्निमीडे पुरोहितम्" इति श्रुतेः । तमग्निमुवाच । कथम् ? हे देव ! तव तेजः समुद्धतं अभिवृद्धं भवति अस्य धारणे अशक्तास्मीति ॥ १५ ॥ अथेति । सर्वदेवानां यत् हुतं तमश्नातीति सर्वदेव

"दैवतानि पुंसि वा" इत्यमरः ॥ १० ॥ देवकार्यमिति । महातेजः इति सम्बोधनम् ॥ ११ ॥ देवतानामिति । इदं प्रियमित्युवाचेति शेषः ॥ १ ॥ तस्येति । अवकीर्यत अवाकिरत । तेज इति शेषः ॥ १३ ॥ समन्तत इति । पावकः तेजोरूपः । अभ्यषिञ्चत व्याप्तवान । स्रोतांसि कर्णनासादीनि । पूर्णानि तेजो महिम्नेति शेषः ॥ १४ ॥ तमित्यादि । अशक्ता धारणे तव तेजसो धारणे अशक्ता । तद्धि तेजस्समुद्धतं । तेनाग्निना तेन तेजसा । संप्रव्यथितचेतनास्मीति शेषः ॥ १५ ॥ अथेति ।

हुताशनः । पादे पर्यन्तपर्वते अग्निदग्धश्वेतपर्वतीकृतरुद्रतेजोराशावित्यर्थः ॥१६॥ श्रुत्वेति । महातेज इति सम्बोधनम् । स्रोतोभ्यः, उत्कृष्येतिशेषः । ॥१७॥ यदिति । अस्याः गङ्गातः । निर्गतं यत् शोणितादि धरणीं गतं तस्मात्तप्तजाम्बूनदप्रभं द्रुतस्वर्णविशेषकान्ति काञ्चनं । अमलं शुभं हिरण्यं रजतं च । अभवदिति वक्ष्यमाणमनुषज्यते । अमलमिति निर्गतविशेषणं वा ॥१८॥ ताम्रमिति । गङ्गातो निर्गतात् तैक्ष्ण्यात् क्षारात् । ताम्रं कार्ष्णायसं चाभ्यजायत । तस्या गङ्गातः, अभवत् निर्गच्छाति स्म । मलं तत्र भूमौ त्रपु सीसकं चाभ्यजायत। कृष्णायसमेव कार्ष्णायसम् ॥१९॥ उपसंहरति—तदेतदिति । तदे

श्रुत्वा त्वग्निवचो गङ्गा तं गर्भमतिभास्वरम् । उत्ससर्ज महातेजः स्रोतोभ्यो हि तदानघ ॥ १७ ॥ यदस्या निर्गतं तस्मात्तप्तजाम्बूनदप्रभम् । काञ्चनं धरणीं प्राप्तं हिरण्यममलं शुभम् ॥ १८ ॥ ताम्रं कार्ष्णायसं चैव तैक्ष्ण्यादेवाभ्यजायत । मलं तस्याभवत्तत्र त्रपु सीसकमेव च ॥ १९ ॥ तदेतद्धरणीं प्राप्य नानाधातुरवर्द्धत ॥ २० ॥ निक्षिप्तमात्रे गर्भे तु तेजोभिरभिरञ्जितम् । सर्वं पर्वतसन्नद्धं सौवर्णमभवद्वनम् ॥ २१ ॥ जातरूपमिति ख्यातं तदाप्रभृति राघव । सुवर्णं पुरुषव्याघ्र हुताशनसमप्रभम् ॥ २२ ॥ तृणवृक्षलतागुल्मं सर्वं भवति काञ्चनम् ॥ २३ ॥ तं कुमारं ततो जातं सेन्द्राः सह मरुद्गणाः । क्षीरसम्भावनार्थाय कृत्तिकाः समयोजयन् ॥ २४ ॥

तत गङ्गातो निर्गतम् ॥ २० ॥ एवं गर्भोत्सर्जनकाले गङ्गातो निर्गतानां शोणितादीनां सौवर्णादिभावमुक्त्वा गर्भतेजोरञ्जनात् केषांचित्स्वर्णभावमाह निक्षिप्तेति । गर्भे गङ्गया निक्षिप्तमात्रे तस्य तेजोभिरभिरञ्जितं व्याप्तं पर्वतसन्नद्धं पूर्वोक्तश्वेतपर्वतसहितम् । सर्वं तद्वनं शरवणम् । सौवर्णं स्वर्णमयं अभवत् ॥२१॥ जातेति । यदा सुवर्णं जातं तदाप्रभृति हुताशनसमप्रभं सुवर्णम्, जातं रूपं यस्येति व्युत्पत्त्या जातरूपमिति विख्यातमभूत् ॥२२॥ उपसंहरति—तृणेति ॥ २३ ॥ एवं गङ्गयोत्सृष्टस्य गर्भस्य पोषणप्रकारमाह—तमिति । ततः गङ्गोत्सर्जनानन्तरम् । जातं तं कुमारं मरुद्गणाः देवगणाः सह युगपत् ।

सर्वदेवहुताशनः सर्वदेवार्थं हुतमश्नातीति तथा । स्रोतोभ्यो हि तदानघेत्युत्तरश्लोकशेषः ॥ १६ ॥ १७ ॥ यदिति । अस्याः स्रोतोभ्यो यन्निर्गतं ( तेजः ) रेतः तस्माद्रेतसः तप्तजाम्बूनदप्रभं काञ्चनं हिरण्यं च अभवत । हिरण्यं रजतम् ॥ १८ ॥ ताम्रमिति । तैक्ष्ण्यात क्षारगुणात । कृष्णायसमेव कार्ष्णायसम् । मलं किट्टं च सीसकम् ॥ १९ ॥ २० ॥ निक्षिप्तेति । अभिरञ्जितम् व्याप्तम् ॥ २१ ॥ जातरूपमिति । सुवर्णं तदाप्रभृति जातरूपमित्युच्यत इत्यन्वयः ॥ २२ ॥ २३ ॥ तमिति ।

क्षीरसम्भावनार्थाय क्षीरेण वर्द्धनप्रयोजनाय कृत्तिकाः समयोजयन् । ण्यन्तत्वाद्विकर्मकत्वम् ॥ २४ ॥ ता इति । कृत्तिकाः अयमस्माकं सर्वासां पुत्रो भवत्विति देवैः सह समयं सङ्केतं कृत्वा निश्चिताः कृतनिश्चयाः सत्यः । जातमात्रस्य तस्य क्षीरं ददुः दातुमुद्युक्ताः ॥२५॥ तत इति । उक्तविशेषणः पुत्रः कार्तिकेयः कृत्तिकापुत्रो भविष्यति इति । ब्रुवन् अब्रुवन् ॥२६॥ तेषामिति । कृत्तिकाः गर्भपरिस्रवे गर्भोदके । स्कन्नं पतितम् । स्नापयन् अस्नापयन् ।

ताः क्षीरं जातमात्रस्य कृत्वा समयमुत्तमम् । ददुः पुत्रोयमस्माकं सर्वासामिति निश्चिताः ॥ २५ ॥ ततस्तु देवताः सर्वाः कार्तिकेय इति ब्रुवन् । पुत्रस्त्रैलोक्यविख्यातो भविष्यति न संशयः ॥ २६ ॥ तेषां तद्वचनं श्रुत्वा स्कन्नं गर्भपरिस्रवे । स्नापयन् परया लक्ष्म्या दीप्यमानं यथानलम् ॥ २७ ॥ स्कन्द इत्यब्रुवन् देवाः स्कन्नं गर्भ परिस्रवात् । कार्तिकेयं महाभागं काकुत्स्थ ज्वलनोपमम् ॥ २८ ॥ प्रादुर्भूतं ततः क्षीरं कृत्तिकानामनुत्तमम् । षण्णां षडाननो भूत्वा जग्राह स्तनजं पयः ॥२९॥ गृहीत्वा क्षीरमेकाह्ना सुकुमारवपुस्तदा । अजयत्स्वेन वीर्येण दैत्यसैन्यगणान् विभुः ॥ ३० ॥ सुरसेनागणपतिं ततस्तमतुलद्युतिम् । अभ्यषिञ्चन् सुरगणाः समेत्याग्निपुरोगमाः ॥ ३१ ॥ एष ते राम गङ्गाया विस्तरोऽभिहितो मया । कुमारसम्भवश्चैव धन्यः पुण्यस्तथैव च ॥ ३२ ॥

गर्भस्रवनिवृत्त्यर्थम् ॥२७॥ स्कन्द इति । स्कन्नत्वात् स्कन्द इत्यन्वर्थनाम, चक्षुरित्यर्थः ॥२८॥ प्रादुर्भूतमिति । ततः स्नापनानन्तरं । षण्णां कृत्तिकानां क्षीरं प्रादुर्भूतम् । तच्च स्तनजं पयः षडाननो भूत्वा जग्राह ॥२९॥ गृहीत्वेति । एकाह्नेति टजभावः समासान्तस्यानित्यत्वात् । एकदिनेन स्तन्यं पीत्वा क्रमेण सुकुमारवपुरपि दैत्यगणानजयत् ॥३०॥ सुरेति । सुरसेनागणपतित्वेनाभ्यषिञ्चन्नित्यर्थः । प्रथममभिषेकस्ततो जय इत्यर्थक्रमः ॥३१॥ एष इति ।

क्षीरसम्भावनार्थाय क्षीरेण सम्भावनं वर्द्धनम् ॥ २४ ॥ ता इति । समयं कृत्वा अस्माकं पुत्र इति समयं कृत्वा क्षीरं ददुरिति सम्बन्धः ॥ २५ ॥ तत इति । ततः समयकरणात् कार्तिकेय इति ब्रुवन् तमिति शेषः । अडागमाभाव आर्षः। इत्यब्रुवन्निति पदद्वयम् । अस्य श्लोकस्यान्ते न संशय इत्युपरि द्रष्टव्यम् । युष्माकं पुत्रः त्रैलोक्यविख्यातो भविष्यतीत्यब्रुवन्नित्यन्वयः ॥ २६ ॥ तेषामिति । गर्भपरिस्रवे स्कन्नं गर्भपरिस्रवेण पतितं स्नापयन, कृत्तिका इति शेषः ॥२७॥ २८ ॥ प्रादुर्भूत मित्यर्द्धमेकं वाक्यम् । अन्यथा उत्तरार्धस्थपयःशब्देन पुनरुक्तिः स्यात ॥ २९ ॥ एवं तदा षड्भिर्मुखैर्यावदपेक्षितं क्षीरं गृहीत्वा एकाह्ना एकदिनेनैव सुकुमारवपु रपि स्वतेजसैव दैत्यसैन्यगणानजयत ॥ ३० ॥ सुरसेनागणपतित्वेन तमभ्यषिञ्चन्नित्यर्थः । ततः-सकलासुरजयाद्धेतोः ॥ ३१ ॥ ३२ ॥

विस्तरः दिव्यसम्भवः। तमेवाह कुमारेति । एवमेतदाख्यानश्रवणफलमुक्तम् धन्य इत्यादिना ॥३२॥ अथ प्रसङ्गात्तद्भक्तिफलमाह–भक्तश्चेति। सलोक एव सालोक्यम् । स्वार्थे ष्यञ्। तस्य भावः सालोक्यता, स्कन्दसमानलोकत्वमित्यर्थः॥३३॥इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥३७॥ एवं दिव्यसम्भवं विस्तरं प्रतिपाद्य मानुषलोकसम्भवविस्तरं वक्तुमुपक्रमतेऽष्टात्रिंशे–तामित्यादि ।

भक्तश्च यः कार्तिकेये काकुत्स्थ भुवि मानवः । आयुष्मान् पुत्रपौत्रैश्च स्कन्दसालोक्यतां व्रजेत् ॥ ३३ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

तां कथां कौशिको रामे निवेद्य कुशिकात्मजः । पुनरेवापरं वाक्यं काकुत्स्थमिदमब्रवीत् ॥ १ ॥ अयोध्याधिपतिः शूरः पूर्वमासीन्नराधिपः । सगरो नाम धर्मात्मा प्रजाकामः स चाप्रजः ॥ २ ॥ वैदर्भदुहिता राम केशिनी नाम नामतः । ज्येष्ठा सगरपत्नी सा धर्मिष्ठा सत्यवादिनी ॥ ३ ॥ अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि । द्वितीया सगरस्यासीत् पत्नी सुमतिसंज्ञिता ॥ ४ ॥ ताभ्यां सह तथा राजा पत्नीभ्यां तप्तवांस्तपः । हिमवन्तं समासाद्य भृगुप्रस्रवणे गिरौ ॥ ५ ॥ अथ वर्षशते पूर्णे तपसाराधितो मुनिः । सगराय वरं प्रादाद्भृगुः सत्यवतां वरः ॥ ६ ॥

रामे रामाय । कौशिकशब्दार्थमाह कुशिकात्मज इति ॥१॥ अयोध्येति । अप्रजः अत एव प्रजाकामः ॥२॥ वैदर्भेति । या वैदर्भदुहिता सा ज्येष्ठपत्न्यासीत् ॥३॥ अरिष्टेति । अरिष्टनेमिः कश्यपः ॥४॥ ताभ्यामिति । भृग्वधिष्ठितं प्रस्रवणं वारिप्रवाहो यस्मिंस्तथा। गिरौ पर्यन्तपर्वते ॥५॥ अथेति । वर्षशते

धन्यत्वपुण्यत्वे विवृणोति–भक्तश्चेति । ऐहलौकिकफलेन धन्यत्वमामुष्मिकेन पुण्यत्वम्, पुत्रपौत्रैश्चेत्यस्य युक्त इति शेषः । स्कन्दसालोक्यतां देहत्यागे व्रजेत ॥ ३३॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां सप्तत्रिंशः सर्गः ॥३७॥ अथ "त्रीन् पथो हेतुना केन" इत्यादिप्रश्नस्योत्तरं वक्तुमुपक्रमते–तां कथामिति । अपरं वाक्यं वक्ष्यमाणं प्रश्नोत्तरम् ॥ १ ॥ अयोध्येति । प्रजाकामः-सन्ततिकामः । स च अप्रजः, अभूदिति शेषः ॥ २ ॥ वैदर्भेति । ज्येष्ठपत्नी आसीदिति शेषः ॥ ३ ॥ अरिष्टनेमिः कश्यपः ॥ ४ ॥ ताभ्यामिति । भृगुप्रस्रवणे भृगुप्रस्रवणाख्ये हिमवतः पादे ॥ ५ ॥ अथ वर्षशते पूर्णे तपस्यत इति शेषः ॥६ ॥ ७॥

पूर्णे, तपस्यत इतिशेषः ॥६॥ अपत्येति । सुबह्वपत्यविषयत्वात्सुमहत्त्वम् । कीर्तिमिति तनेति शेषः ॥७॥ एकेति । जनयितेति लुट् । तातेत्युपलालने ॥८॥ भाषमाणमिति । राजपुत्र्याविति छत्रिन्यायादुक्तम् । सुमतेः कश्यपपुत्रीत्वात् ॥ ९ ॥ एक इति । तव वचः सत्यमस्तु, यस्या एकमिच्छसि तस्या एकः । यस्या बहूनिच्छसि तस्या बहवः सन्त्वित्यर्थः ॥ १० ॥ तयोरिति । अत्र पुत्रविषये । स्वच्छन्दः स्वेच्छा । विधीयतां ज्ञाप्यताम् ॥११॥ तदेव

अपत्यलाभः सुमहान् भविष्यति तवानघ । कीर्तिं चाप्रतिमां लोके प्राप्स्यसे पुरुषर्षभ ॥ ७ ॥ एका जनयिता तात पुत्रं वंशकरं तव । षष्टिं पुत्रसहस्राणि अपरा जनयिष्यति ॥ ८ ॥ भाषमाणं महात्मानं राजपुत्र्यौ प्रसाद्य तम् । ऊचतुः परमप्रीते कृताञ्जलिपुटे तदा ॥ ९ ॥ एकः कस्यास्सुतो ब्रह्मन् का बहून् जनयिष्यति । श्रोतुमिच्छावहे ब्रह्मन् सत्यमस्तु वचस्तव ॥ १० ॥ तयोस्तद्वचनं श्रुत्वा भृगुः परमधार्मिकः । उवाच परमां वाणीं स्वच्छन्दोऽत्र विधीयताम् ॥ ११ ॥ एको वंशकरो वाऽस्तु बहवो वा महाबलाः । कीर्तिमन्तो महोत्साहाः का वा कं वरमिच्छति ॥ १२ ॥ मुनेस्तु वचनं श्रुत्वा केशिनी रघुनन्दन । पुत्रं वंशकरं राम जग्राह नृपसन्निधौ ॥ १३ ॥ षष्टिं पुत्रसहस्राणि सुपर्णभगिनी तदा । महोत्साहान् कीर्तिमतो जग्राह सुमतिः सुतान् ॥ १४ ॥ प्रदक्षिणमृषिं कृत्वा शिरसाभिप्रणम्य च । जगाम स्वपुरं राजा सभार्यो रघुनन्दन ॥१५॥ अथ काले गते तस्मिन् ज्येष्ठा पुत्रं व्यजायत । असमञ्ज इति ख्यातं केशिनी सगरात्मजम् ॥ १६ ॥ सुमतिस्तु नरव्याघ्र गर्भतुम्बं व्यजायत । षष्टिः पुत्राः सहस्राणि तुम्बभेदाद्विनिःसृताः ॥ १७ ॥

विवृणोति—एक इति ॥ १२ ॥ मुनेरिति । जग्राह वरयामास ॥ १३ ॥ षष्टिमिति । सुपर्णभगिनी गरुडभगिनी ॥ १४ ॥ प्रदक्षिणमिति । ऋषिं भृगुम् ॥ १५ ॥ अथेति । व्यजायत प्रसूतवती ॥१६॥ सुमतिरिति । गर्भतुम्बम् वृत्ताकारं गर्भपिण्डम् । कथं ततः पुत्रोदय इत्यत आह षष्टिरिति । तुम्ब

एका जनयिता जनयिष्यति । वंशकरं कुलस्याविच्छेदकरम् ॥ ८ ॥ ९ ॥ एक इति । इच्छावहे इच्छामः । सत्यं निर्णायकम् ॥ १० ॥ तयोरिति । विधीयतां ज्ञाप्यताम् ॥ ११ ॥ एक इति । बहवो वा महाबलाः इत्यनेन वंशकरा इति गम्यते ॥ १२–१६ ॥ सुमतिरिति । गर्भतुम्बं तुम्बफलाकारं गर्भपिण्डं व्यजायत व्यजन

भेदात्, न तु गान्धार्या इव पश्चाद्विभजनीय इत्यर्थः ॥१७॥ घृतेति । धात्र्यः उपमातरः । तान् विभक्ततुम्बान् ॥ १८ ॥ अथेति । दीर्घेण कालेनेति यौवनशालित्वे हेतुत्वात्तृतीया । यौवनशालिन इति पुँल्लिङ्गत्वमार्षम् ॥ १९ ॥ स चेति अर्द्धत्रयम् । ज्येष्ठः असमञ्जः । प्रहसन्, स्थित इतिशेषः ॥ २० ॥ एवमिति । निर्वासितः विवास्यते स्म ॥ २१ ॥ तस्येति । अंशुमान्नाम, आसीदितिशेषः ॥ २२ ॥ तत इति । यजेयमिति निश्चिता मतिः । समभिजायत

घृतपूर्णेषु कुम्भेषु धात्र्यस्तान् समवर्द्धयन्। कालेन महता सर्वे यौवनं प्रतिपेदिरे ॥ १८ ॥ अथ दीर्घेण कालेन रूपयौवनशालिनः । षष्टिः पुत्रसहस्राणि सगरस्याभवंस्तदा ॥१९॥ स च ज्येष्ठो नरश्रेष्ठस्सगरस्यात्मसम्भवः । बालान् गृहीत्वा तु जले सरय्वा रघुनन्दन । प्रक्षिप्य प्रहसन्नित्यं मज्जतस्तान् समीक्ष्य वै ॥ २० ॥ एवं पापसमाचारः सज्जनप्रतिबाधकः । पौराणामहिते युक्तः पुत्रो निर्वासितः पुरात् ॥ २१ ॥ तस्य पुत्रोऽंशुमान्नाम असमञ्जस्य वीर्यवान् । सम्मतः सर्वलोकस्य सर्वस्यापि प्रियंवदः ॥ २२ ॥ ततः कालेन महता मतिः समभिजायत । सगरस्य नरश्रेष्ठ यजेयमिति निश्चिता ॥ २३ ॥ स कृत्वा निश्चयं राम सोपाध्यायगणस्तदा । यज्ञकर्मणि वेदज्ञो यष्टुं समुपचक्रमे ॥२४॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे अष्टात्रिंशः सर्गः ॥३८॥

विश्वामित्रवचः श्रुत्वा कथान्ते रघुनन्दनः । उवाच परमप्रीतो मुनिं दीप्तमिवानलम् ॥ १ ॥

समभ्यजायत ॥ २३ ॥ स इति । यज्ञकर्मणि निश्चयं कृत्वा यष्टुं समुपचक्रमे ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने अष्टात्रिंशः सर्गः॥३८॥ अथ रामेण स्वपूर्वकवृत्तान्तप्रस्तावेन कुतूहलात्पृष्टे सति विश्वामित्रेण तदुत्तरकथनमेकोनचत्वारिंशे–विश्वा

यत ॥ १७ ॥ १८ ॥ अथेति । दीर्घेण यौवनशालित्वहेतुत्वात्तृतीया ॥ १९ ॥ स चेत्यादि । प्रहसन् स्थित इति शेषः ॥ २० ॥ एवमिति । निर्वासितः निष्कासितः । सज्जनप्रतिबाधकः सज्जनपीडकः ॥ २१ ॥ तस्य असमञ्जस्य । एतद्वाची असमञ्जशब्दः अदन्तः सान्तश्चेति बोध्यम् ॥ २२ ॥ तत इति । समभिजायत समभ्यजायत ॥ २३ ॥ २४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायाम् अष्टात्रिंशः सर्गः ॥ ३८ ॥ विश्वामित्रेति । कथान्ते

मित्रेत्यादि । कथान्ते यज्ञोपक्रमकथनानन्तरम् ॥१॥ श्रोतुमिति । इमां यज्ञकथाम् । पूर्वकः मद्वंशकूटस्थः । समुपाहरत् कृतवान् ॥ २ ॥ विश्वामित्र इति । प्रहसन्निव प्रसन्नवदन इत्यर्थः । स्वविवक्षितस्यैव पृष्टत्वात् प्रहासः अजानन्निव पृष्टवानिति वा । विस्तर इति, यज्ञस्येतिशेषः ॥ ३ ॥ शङ्करेति । विन्ध्यपर्वतमासाद्य मध्ये महागिरिनिरोधाभावात् प्राप्य तथा विन्ध्योऽपि हिमवन्तम् । इत्येवं परस्परमासाद्य वीक्षानिरोधाभावात् निरीक्षेते, परस्परम्

श्रोतुमिच्छामि भद्रं ते विस्तरेण कथामिमाम् । पूर्वको मे कथं ब्रह्मन् यज्ञं वै समुपाहरत् ॥ २ ॥ विश्वामित्रस्तु काकुत्स्थमुवाच प्रहसन्निव । श्रूयतां विस्तरो राम सगरस्य महात्मनः ॥३॥ शङ्करश्वशुरो नाम हिमवानचलोत्तमः । विन्ध्यपर्वतमासाद्य निरीक्षेते परस्परम् ॥४॥ तयोर्मध्ये प्रवृत्तोऽभूद्यज्ञः स पुरुषोत्तम । स हि देशो नरव्याघ्र प्रशस्तो यज्ञकर्मणि ॥ ५ ॥ तस्याश्वचर्यां काकुत्स्थ दृढधन्वा महारथः । अंशुमानकरोत्तात सगरस्य मते स्थितः ॥ ६ ॥ तस्य पर्वणि तं यज्ञं यजमानस्य वासवः । राक्षसीं तनुमास्थाय यज्ञीयाश्वमपाहरत् ॥७॥ ह्रियमाणे तु काकुत्स्थ तस्मिन्नश्वे महात्मनः । उपाध्यायगणाः सर्वे यजमानमथाब्रुवन् ॥ ८ ॥ अयं पर्वणि वेगेन यज्ञीयाश्वोऽपनीयते । हर्तारं जहि काकुत्स्थ हयश्चैवोपनीयताम् ॥ ९ ॥

निरीक्षमाणाविव स्थिताविर्त्यथः॥४॥ अस्त्वेवम्, ततः किमित्यत्राह–तयोरिति । हि यस्मात् स देशः यज्ञकर्मणि प्रशस्तः "आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः" इति वचनात् । अतस्तयोर्मध्ये यज्ञः प्रवृत्तोऽभूत् ॥५॥ तस्येति । अश्वचर्याम् अश्वानुचरणम्, मते आज्ञायाम् ॥६॥ तस्येति । तं यज्ञं । यजमानस्य तस्य सगरस्य । यज्ञीयाश्वं यज्ञार्हाश्वम् । राक्षसीं मायामयीं तनुमास्थाय पर्वणि उक्थ्याहे "तिथिभेदे क्षणे पर्व" इति निघण्टुः । अपाहरत् अपहृतवान् ॥ ७ ॥ ह्रियमाण इति । उपाध्यायगणाः ऋत्विग्गणाः ॥ ८ ॥ अयमिति । अपनीयते "वर्तमानसामीप्ये वर्तमानवद्वा" इति लट् ॥९॥

यज्ञोपक्रमकथान्ते ॥ १ ॥ श्रोतुमिति । इमां सगरयज्ञसम्बन्धिनीम् समुपाहरत् कृतवान् ॥ २ ॥ विश्वामित्र इति । प्रहसन्निव विकासितवदनः । अत्र च कारणं स्वाविवक्षितमेव सगरयागवृत्तान्तं स्वपूर्वजवृत्तान्ततया श्रवणकुतूहलातिशयेन पृष्टवान् रामभद्र इति । विस्तर इति यज्ञस्येति शेषः ॥ ३ ॥ शङ्करश्वशुर इति । आसाद्य स्थित इति शेषः । आसन्न इत्यर्थः । निरीक्षेते परस्परमिति । तावुभौ पर्वतौ औन्नत्यातिशयेन परस्परं निरीक्षमाणाविव स्थितावित्यर्थः ॥ ४ ॥ तयोरिति । प्रशस्तः फलातिशयप्रदः ॥ ५ ॥ तस्येति । अश्वचर्याम् अश्वानुचरणम् सगरस्य मते आज्ञायाम् ॥ ६ ॥ तस्येति । पर्वणि उक्थ्याहे । राक्षसीं तनुम् यज्ञविघ्नकरण

यज्ञेति । एतद्यज्ञच्छिद्रं यज्ञापराधः " छिद्रं रन्ध्रापराधयोः " इति वैजयन्ती । सर्वेषां नः अशिवाय भवति । तस्मात् क्रतुर्यथा अच्छिद्रो भवेत्तथैव क्रियताम् ॥ १० ॥ उपाध्यायेति । पार्थिवः सगरः ॥ ११ ॥ गतिमिति । हे पुत्राः ! हि यस्मान्महाक्रतुः मन्त्रपूतैर्महाभागैः आस्थितः अनुष्ठितः । तस्माद्रक्षसां गतिम् आगमनं न पश्यामि, प्रसक्त्यभावादिति भावः ॥ १२ ॥ अतः केन प्रकारेण गतोऽश्व इति विचिनुध्वमित्याह—तदिति ।

यज्ञच्छिद्रं भवत्येतत्सर्वेषामशिवाय नः । तत्तथा क्रियतां राजन् यथाऽच्छिद्रः क्रतुर्भवेत् ॥ १० ॥ उपाध्यायवचः श्रुत्वा तस्मिन् सदसि पार्थिवः । षष्टिं पुत्रसहस्राणि वाक्यमेतदुवाच ह ॥ ११ ॥ गतिं पुत्रा न पश्यामि रक्षसां पुरुषर्षभाः । मन्त्रपूतैर्महाभागैरास्थितो हि महाक्रतुः ॥१२॥ तद्गच्छत विचिन्वध्वं पुत्रका भद्रमस्तु वः । समुद्रमालिनीं सर्वां पृथिवीमनुगच्छत ॥ १३ ॥ एकैकं योजनं पुत्रा विस्तारमभिगच्छत ॥ १४ ॥ यावत्तुरगसन्दर्शस्तावत् खनत मेदिनीम् । तं चैव हयहर्तारं मार्गमाणा ममाज्ञया ॥ १५ ॥ दीक्षितः पौत्रसहितः सोपाध्यायगणो ह्यहम् । इह स्थास्यामि भद्रं वो यावत्तुरगदर्शनम् ॥ १६ ॥ इत्युक्ता हृष्टमनसो राजपुत्रा महाबलाः । जग्मुर्महीतलं राम पितुर्वचनयन्त्रिताः ॥ १७ ॥ [ गत्वा तु पृथिवीं सर्वामदृष्ट्वा तं महाबलाः । ] योजनायामविस्तारमेकैको धरणीतलम् । बिभिदुः पुरुषव्याघ्र वज्रस्पर्शसमैर्नखैः ॥ १८ ॥

यद्वा अहं कर्मव्यग्रः स्थितः, अश्वापहर्तॄणां रक्षसां गतिं गन्तव्यदेशम्, न पश्यामि । विचिनुध्वमित्याह तदिति । समुद्र एव माला आवरणमस्या इति समुद्रमालिनी ताम् । अनुगच्छत अन्वेषध्वम् ॥ १३ ॥ एकेति, अर्द्धमेकम् । प्रथममेकं योजनं विचित्य पश्चाद्योजनान्तरमिति क्रमेण विचिनुध्वमित्यर्थः । यद्वा एक एकं योजनमिति क्रमेण विचिनुध्वमित्यर्थः ॥ १४ ॥ यदि भूतले न दृश्यते तदा कर्तव्यमाह—यावदिति ॥ १५ ॥ मम तु गमनं न युक्तमित्याह दीक्षित इति ॥ १६ ॥ इतीति । यन्त्रिताः नियुक्ताः ॥ १७ ॥ योजनेति । आयामः दैर्घ्यम्, विस्तारः विशालता ।

समर्थाम् । यज्ञीयो यज्ञार्हः ॥ ७ ॥ ८ ॥ अपनीयते अपह्रियते अतो हर्तारमश्वहर्तारं जहि अश्वश्च शीघ्रमुपनीयताम् ॥ ९ ॥ यज्ञच्छिद्रम् यज्ञस्य विघ्नः ॥ १० ॥ ११ ॥ गतिमिति । रक्षसां गतिमागतिनिमित्तम् न पश्यामि प्रसक्त्यभावात् ॥ १२ ॥ तदिति । अनुगच्छत चरत ॥ १३ ॥ १४ ॥ यावदिति । खनतेति यदि भूतले न दृश्यते तर्हीतिशेषः ॥ १५ ॥ दीक्षित इति । इह यज्ञवाटे ॥ १६ ॥ १७ ॥ योजनेति । वज्रस्पर्शसमैः वज्रस्पर्शसमस्पर्शैः नखैः ॥ १८ ॥ १९ ॥

वज्रस्पर्शसमैः वज्रस्पर्शसमस्पर्शैरित्यर्थः ॥ १८ ॥ शूलैरिति । अशनिकल्पैः वज्रतुल्यैः ॥ १९ ॥ नागानां सर्पाणाम् । असुरराक्षसाः पातालवासिनः ॥ २० ॥ योजनानामिति । रसातलं पातालं यथा भवति तथा धरणीं बिभिदुः ॥२१॥ एवमिति । सम्बाधं निबिडम् ॥ २२ ॥ तत इति । रूप ष्टम् ॥ २३॥ त इति । प्रसाद्य स्तुत्वा ॥२४॥ भगवन्निति । तलवासिनः रसातलवासिनः ॥२५॥ अयमिति । यज्ञहरः यज्ञहन्ता । यज्ञहन इतिपाठे—हन्तीति

शूलैरशनिकल्पैश्च हलैश्चापि सुदारुणैः । भिद्यमाना वसुमती ननाद रघुनन्दन ॥ १९ ॥ नागानां वध्यमानानामसुराणां च राघव । राक्षसानां च दुर्द्धर्षः सत्त्वानां निनदोऽभवत् ॥२०॥ योजनानां सहस्राणि षष्टिं तु रघुनन्दन । बिभिदुर्धरणीं वीरा रसातलमनुत्तमम् ॥ २१ ॥ एवं पर्वतसंबाधं जम्बूद्वीपं नृपात्मजाः । खनन्तो नृपशार्दूल सर्वतः परिचक्रमुः ॥ २२ ॥ ततो देवाः सगन्धर्वाः सासुरास्सहपन्नगाः । सम्भ्रान्तमनसः सर्वे पितामहमुपागमन् ॥ २३ ॥ ते प्रसाद्य महात्मानं विषण्णवदनास्तदा । ऊचुः परमसंत्रस्ताः पितामहमिदं वचः ॥ २४ ॥ भगवन् पृथिवी सर्वा खन्यते सगरात्मजैः । बहवश्च महात्मानो हन्यन्ते तलवासिनः ॥ २५ ॥ अयं यज्ञहरोऽस्माकमनेनाश्वोऽपनीयते । इति ते सर्वभूतानि निघ्नन्ति सगरात्मजाः ॥ २६॥ इत्यार्षे श्रीरामायणे बालकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

देवतानां वचः श्रुत्वा भगवान् वै पितामहः । प्रत्युवाच सुसन्त्रस्तान् कृतान्तबलमोहितान् ॥ १॥ यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः । कापिलं रूपमास्थाय धारयत्यनिशं धराम् । तस्य कोपाग्निना दग्धा भविष्यन्ति नृपात्मजाः ॥२॥

हनः । पचाद्यच् ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

देवतानामित्यादि । कृतः अन्तो जननाशो यैस्ते कृतान्ताः सगरपुत्राः ॥ १ ॥ यस्येति, सार्द्धश्लोकः । आस्थाय, य इति शेषः ॥ २ ॥

नागानामिति । दुर्धर्षः दुर्भरः ॥२०॥ योजनानामिति । रसातलं पातालं यथा भवति तथा॥२१–२५॥ अयमिति । हन्तीति हनः । यज्ञस्य हनः । हन्तेः पचाद्यच् ॥२६॥ इति श्रीमहे० विरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायाम् एकोनचत्वारिंशः सर्गः ॥३९॥ देवतानामिति । कृतान्तबलमोहितान् दैवबलमोहितान ॥ १ ॥ यस्येयमित्यादि । यदधीना वसुधा । कापिलमिति, य इति शेषः । "तस्य कोपाग्निना दग्धा भविष्यन्ति नृपात्मजाः" इति तस्यैव स्वाभित्वं

पृथिव्या इति। सनातनः प्रतिकल्पमवश्यम्भावी । दृष्टः निश्चितः । अतो न तत्रापि शोकः कार्य इति भावः । अदीर्घजीविनामिति छेदः । विनाशः दृष्ट इत्यनुषङ्गः ॥३॥ पितामहेति । त्रयस्त्रिंशद्देवाः अष्टौ वसव एकादश रुद्रा द्वादशादित्या अश्विनौ च । इदमुपलक्षणं गन्धर्वादेर्गमनस्यापि ॥ ४ ॥ सगरस्येति । निर्घातः उत्पातविशेषः ॥५॥ तत इति । सर्वे महीं प्रदक्षिणं कृत्वा पितरं गत्वा सर्वे पितरमब्रुवन्॥६॥ परिक्रान्तेति, श्लोकद्वयम् । सत्त्ववन्तो बलवन्तः । करिष्यामेति विसर्गलोपश्छान्दसः ॥ ७ ॥ ८ ॥ तेषामिति । समन्युः अश्वालाभकृतक्रोधवान् ॥ ९ ॥ भूय इति । भूयो निर्भिद्य खनतेत्यन्वयः। निवर्तथ निवर्तध्वम् ॥ १० ॥ पितुरिति । अभिद्रवन् अभ्यद्रवन् ॥ ११ ॥ खन्यमान इति । दिशागजं "वष्टि भागुरिः–" इत्याप । विरूपाक्षं विरूपा

पृथिव्याश्चापि निर्भेदो दृष्ट एव सनातनः । सगरस्य च पुत्राणां विनाशोऽदीर्घजीविनाम् ॥ ३ ॥ पितामहवचः श्रुत्वा त्रयस्त्रिंशदरिन्दम । देवाः परमसंहृष्टाः पुनर्जग्मुर्यथागतम् ॥ ४ ॥ सगरस्य च पुत्राणां प्रादुरासीन्महात्मनाम् । पृथिव्यां भिद्यमानायां निर्घातसमनिःस्वनः ॥५॥ ततो भित्त्वा महीं सर्वे कृत्वा चापि प्रदक्षिणम् । सहिताः सागराः सर्वे पितरं वाक्यमब्रुवन् ॥६॥ परिक्रान्ता मही सर्वा सत्त्ववन्तश्च सूदिताः । देवदानवरक्षांसि पिशाचोरगकिन्नराः ॥७॥ न च पश्यामहेऽश्वं तमश्वहर्तारमेव च । किं करिष्याम भद्रं ते बुद्धिरत्र विचार्यताम् ॥८॥ तेषां तद्वचनं श्रुत्वा पुत्राणां राजसत्तमः । समन्युरब्रवीद्वाक्यं सगरो रघुनन्दन ॥९॥ भूयः खनत भद्रं वो निर्भिद्य वसुधातलम् । अश्वहर्तारमासाद्य कृतार्थाश्च निवर्तथ ॥१०॥ पितुर्वचनमासाद्य सगरस्य महात्मनः । षष्टिः पुत्रसहस्राणि रसातलमभिद्रवन् ॥ ११॥ खन्यमाने ततस्तस्मिन् ददृशुः पर्वतोपमम्। दिशागजं विरूपाक्षं धारयन्तं महीतलम् ॥ १२ ॥

स्वाभाविकम्, इतरेषां तु अभिधानमात्रम् । अतः स एवास्मत्प्रार्थनामन्तरेणापि सागरान् दण्डयिष्यतीत्यभिप्रायः ॥ २ ॥ पृथिव्या इति । सनातनः अवश्यम्भावी, दृष्टो निश्चितः। अदीर्घजीविनामिति च्छेदः । विनाशो दृष्ट इति सम्बध्यते ॥ ३ ॥ पितामहेति । त्रयस्त्रिंशद्देवताः-अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः, अश्विनौ च ॥ ४ ॥ सगरस्येति । निर्घातसमनिस्वनः-निर्घातनिस्वनसमः ॥ ५ ॥ तत इति । अभिप्रदक्षिणम् अभितः सञ्चारम् ॥ ६ ॥ ७ ॥ किंकरिष्यामेति । बुद्धिरुपायः ॥ ८ ॥ ९ ॥ भूय इति । निवर्तथ निवर्तध्वम् ॥ १० ॥ ११ ॥ खन्यमान इति । षष्टियोजनसहस्रपरमपीतिशेषः ॥ १२ ॥ १३ ॥

क्षाख्यम् ॥ १२ ॥ उक्तं विवृणोति–सेति ॥ १३ ॥ यदेति । पर्वणि काले । खेदाद्धेतोः । विश्रमार्थं श्रमशान्त्यर्थम् । चाल्यते चालयति ॥ १४ ॥ तमिति । मानयन्तः पूजयन्तः ॥ १५ ॥ तत इति । तत इत्यस्य विवरणं पूर्वां दिशं भित्त्वेति ॥१६॥ महागजं विशेषयति–महेति । सुमहदित्यार्षम् ॥१७॥ तत इति । दिक्शब्देन देश उच्यते ॥ १८ ॥ पश्चिमायामिति । सौमनसं सौमनसाख्यम् ॥ १९ ॥ तमिति । निरामयं कुशलम् । समुपक्रान्ताः गताः । हैम

सपर्वतवनां कृत्स्नां पृथिवीं रघुनन्दन । शिरसा धारयामास विरूपाक्षो महागजः ॥ १३ ॥ यदा पर्वणि काकुत्स्थ विश्रमार्थं महागजः । खेदाच्चालयते शीर्षं भूमिकम्पस्तदा भवेत् ॥ १४ ॥ तं ते प्रदक्षिणं कृत्वा दिशापालं महागजम् । मानयन्तो हि ते राम जग्मुर्भित्त्वा रसातलम् ॥ १५ ॥ ततः पूर्वां दिशं भित्त्वा दक्षिणां बिभिदुः पुनः । दक्षिणस्यामपि दिशि ददृशुस्ते महागजम् ॥ १६ ॥ महापद्मं महात्मानं सुमहत्पर्वतोपमम् । शिरसा धारयन्तं ते विस्मयं जग्मुरुत्तमम् ॥ १७ ॥ ततः प्रदक्षिणं कृत्वा सगरस्य महात्मनः । षष्टिः पुत्रसहस्राणि पश्चिमां बिभिदुर्दिशम् ॥१८॥ पश्चिमायामपि दिशि महान्तमचलोपमम् । दिशागजं सौमनसं ददृशुस्ते महाबलाः ॥ १९ ॥ तं ते प्रदक्षिणं कृत्वा पृष्ट्वा चापि निरामयम् । खनन्तः समुपक्रान्ता दिशं हैमवतीं ततः ॥ २० ॥ उत्तरस्यां रघुश्रेष्ठ ददृशुर्हिमपाण्डरम् । भद्रं भद्रेण वपुषा धारयन्तं महीमिमाम् ॥ २१ ॥ समालभ्य ततः सर्वे कृत्वा चैनं प्रदक्षिणम् । षष्टिः पुत्रसहस्राणि बिभिदुर्वसुधातलम् ॥ २२ ॥ ततः प्रागुत्तरां गत्वा सागराः प्रथितां दिशम् । रोषादभ्यखनन् सर्वे पृथिवीं सगरात्मजाः ॥ २३ ॥

वतीं हिमवत्सम्बन्धिनीम् ॥ २० ॥ उत्तरस्यामिति । भद्रं भद्राख्यम् । भद्रेण शोभनेन ॥ २१ ॥ समालभ्येति । समालभ्य स्पृष्ट्वा । "आलम्भः स्पर्शहिंसयोः" इत्यमरः ॥ २२ ॥ तत इति । प्रागुत्तराम् ऐशानीं दिशम् । प्रथिताम् अश्वगमनयोग्यतावतीम् । गमनखननक्रियाभेदात्सागरसगरात्मज

यदेति । यदा पर्वणि यस्मिन् काले भवेत् भवति । यद्वा यदापर्वणि यस्मिन् क्षणे । "तिथिभेदे क्षणे पर्व" इत्यमरः ॥ १४–१६ ॥ महापद्ममिति । धारयन्तं पृथिवीमितिशेषः ॥ १७ ॥ प्रदक्षिणं कृत्वा दिग्गजमिति शेषः ॥ १८ ॥ १९ ॥ तमिति । निरामयं कुशलम् ॥ २०–२३ ॥

पदप्रयोगः ॥ २३ ॥ ते त्विति । महात्मानः महाकायाः । कपिलं कपिलावतारम् ॥ २४ ॥ हयं चेति । चरन्तं तृणानि भक्षयन्तम् ॥ २५ ॥ ते तमिति सार्द्धश्लोकः । तं कपिलम् ॥ २६ ॥ अस्माकमिति । दुर्मेध इति सम्बोधनम् ॥ २७ ॥ श्रुत्वेति । स्पष्टम् ॥ २८ ॥ तत इति । अप्रमेयेन अप्रमेयवैभवेन ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

ते तु सर्वे महात्मानो भीमवेगा महाबलाः । ददृशुः कपिलं तत्र वासुदेवं सनातनम् ॥२४॥ हयं च तस्य देवस्य चरन्तमविदूरतः । प्रहर्षमतुलं प्राप्ताः सर्वे ते रघुनन्दन ॥२५॥ ते तं हयहरं ज्ञात्वा क्रोधपर्याकुलेक्षणाः । खनित्रलाङ्गलधरा नानावृक्षशिलाधराः । अभ्यधावन्त संक्रुद्धास्तिष्ठ तिष्ठेति चाब्रुवन् ॥ २६ ॥ अस्माकं त्वं हि तुरगं यज्ञीयं हृतवानसि । दुर्मेधस्त्वं हि सम्प्राप्तान् विद्धि नः सगरात्मजान् ॥ २७ ॥ श्रुत्वा तु वचनं तेषां कपिलो रघुनन्दन । रोषेण महताऽऽविष्टो हुंकारमकरोत्तदा ॥ २८ ॥ ततस्तेनाप्रमेयेन कपिलेन महात्मना । भस्मराशीकृताः सर्वे काकुत्स्थ सगरात्मजाः ॥२९॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चत्वारिंशः सर्गः ॥४०॥

पुत्रांश्चिरगतान् ज्ञात्वा सगरो रघुनन्दन । नप्तारमब्रवीद्राजा दीप्यमानं स्वतेजसा ॥ १ ॥ शूरश्च कृतविद्यश्च पूर्वैस्तुल्योऽसि तेजसा । पितॄणां गतिमन्विच्छ येन चाश्वोऽपवाहितः ॥२॥ अन्तर्भौमानि सत्त्वानि वीर्यवन्ति महान्ति च । तेषां त्वं प्रतिघातार्थं सासिं गृह्णीष्व कार्मुकम् ॥ ३ ॥

पुत्रानिति । नप्तारं पौत्रम् ॥१॥ शूर इति । पूर्वैः पितृभिः । पितॄणां कनिष्ठपितॄणाम् । गतिं मार्गम् । अन्विच्छ अन्वेषय । अश्वो येनापवाहितस्तस्य च गतिं मन्विच्छ ॥ २ ॥ अन्तरिति । अन्तर्भौमानि भूमेरन्तर्जातानि । भूबिलमाश्रितानीत्यर्थः । यानीति शेषः ॥ ३ ॥

त इति । कपिलम्-कपिलरूपधारिणम् ॥२४॥ तस्य कपिलस्य ॥२५॥ ते तं यज्ञहनमिति । हन्तीति हनः, पचाद्यच् । अविचारनः तमेव अश्वापहारद्वारा यज्ञहन्तारं ज्ञात्वेत्यर्थः ॥२६-२९॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां चत्वारिंशः सर्गः ॥ ४० ॥ पुत्रानिति । नप्तारम्-पौत्रम् ॥१॥ शूर इति । गतिं मार्गम् । अन्विच्छ अन्वेषय । येन अश्वोऽपहारितः अपहृतः तस्य च गतिम् ॥२॥ अन्तरिति । अन्तर्भौमानि भूमेरन्तर्जातानि । सत्त्वानि प्राणिनः ॥३॥

अभिवाद्येति । पारगः समाप्तिकरः ॥ ४ ॥ एवमिति । लघुविक्रमः शीघ्रगमनः ॥ ५ ॥ स इति । खातं कलत्रमित्यर्थः ॥ ६ ॥ दैत्येति । अपश्यत अपश्यत् ॥ ७ ॥ स इति । परिपप्रच्छ, क्वास्त इतिशेषः ॥ ८ ॥ दिशेति । आसमञ्ज असमञ्जपुत्र ! इभभाव आर्षः ॥ ९ ॥ तस्येति । समुपचक्रम

अभिवाद्याभिवाद्यांस्त्वं हत्वा विघ्नकरानपि । सिद्धार्थस्सन्निवर्तस्व मम यज्ञस्य पारगः ॥ ४ ॥ एवमुक्तोंऽशुमान् सम्यक् सगरेण महात्मना । धनुरादाय खड्गं च जगाम लघुविक्रमः ॥ ५ ॥ स खातं पितृभिर्मार्गमन्तर्भौमं महात्मभिः । प्रापद्यत नरश्रेष्ठस्तेन राज्ञाऽभिचोदितः ॥ ६ ॥ दैत्यदानवरक्षोभिः पिशाचपतगोरगैः । पूज्यमानं महातेजा दिशागजमपश्यत ॥ ७ ॥ स तं प्रदक्षिणं कृत्वा पृष्ट्वा चैव निरामयम् । पितॄन् स परिपप्रच्छ वाजिहर्तारमेव च ॥ ८ ॥ दिशागजस्तु तच्छ्रुत्वा प्रत्याहांशुमतो वचः । आसमञ्ज कृतार्थस्त्वं सहाश्वः शीघ्रमेष्यसि ॥ ९ ॥ तस्य तद्वचनं श्रुत्वा सर्वानेव दिशागजान् । यथाक्रमं यथान्यायं प्रष्टुं समुपचक्रमे ॥ १० ॥ तैश्च सर्वैर्दिशापालैर्वाक्यज्ञैर्वाक्यकोविदैः । पूजितः सहयश्चैव गन्तासीत्यभिचोदितः ॥ ११ ॥ तेषां तद्वचनं श्रुत्वा जगाम लघुविक्रमः । भस्मराशीकृता यत्र पितरस्तस्य सागराः ॥ १२ ॥ स दुःखवशमापन्नस्त्वसमञ्जसुतस्तदा । चुक्रोश परमार्तस्तु वधात्तेषां सुदुःखितः ॥ १३ ॥

इति सविनयत्वप्रकटनम् ॥ १० ॥ तैश्चेति । वक्तुमर्हं वाक्यं "ऋहलोर्ण्यत्" "चजोः कु घिण्ण्यतोः" इति कुत्वम् । वाक्यकोविदैः कालदेशोचितवक्तव्यार्थज्ञैः । यद्वा परवाक्याशयज्ञैः, स्वयं वाक्यप्रयोगकुशलैश्चेत्यर्थः । सहयः पितामहसमीपं गन्तासीत्यभिचोदितोऽभूत् ॥ ११ ॥ तेषामिति । तस्य अंशुमतः । पितरो यत्र भस्मराशीकृतास्तं देशं जगाम ॥ १२ ॥ स इति । पूर्वमदर्शनाद्दुःखवशमापन्नः, तेषां वधात् वधदर्शनात् । सुदुःखितः परमार्तः भृशं तप्तः । चुक्रोश रुरोद ॥ १३ ॥

अभिवाद्येति । पारगः समाप्तिकरः । अभिवाद्यान् नमस्कारार्हान् । मम यज्ञस्य पारगः पारप्रापकश्च भवेत्यर्थः ॥ ४ ॥ ५ ॥ पितृभिः खातं भूमेरन्तर्विद्यमानं मार्गम् । पितृवृत्तान्तपरिज्ञानाय प्रापद्यत प्राप्तः ॥ ६ ॥ ७ ॥ निरामयं क्षेमम् ॥ ८ ॥ आसमञ्ज-असमञ्जपुत्र ! ॥ ९ ॥ १० ॥ अभिचोदितः बोधितः ॥ ११-१३ ॥

यज्ञीयमिति। शोकः विलापः ॥ १४ ॥ स इति। जलक्रिया तर्पणम् ॥ १५ ॥ विसार्येति । विसार्य समन्तात्प्रसार्य । निपुणां दूरवीक्षणक्षमाम् । अनिलोपमम्, वेगेनेति शेषः ॥ १६ ॥ स चेति। लोकसम्मतः लोकहितः ॥ १७ ॥ कपिलेनेति। हि यस्मात् कपिलेन हताः लौकिकं लोकतः प्राप्तम्

यज्ञीयं च हयं तत्र चरन्तमविदूरतः। ददर्श पुरुषव्याघ्रो दुःखशोकसमन्वितः ॥१४॥ स तेषां राजपुत्राणां कर्तुकामो जलक्रियाम्। सलिलार्थी महातेजा न चापश्यज्जलाशयम् ॥ १५ ॥ विसार्य निपुणां दृष्टिं ततोऽपश्यत् खगाधिपम्। पितॄणां मातुलं राम सुपर्णमनिलोपमम् ॥१६॥ स चैवमब्रवीद्वाक्यं वैनतेयो महाबलः। मा शुचः पुरुषव्याघ्र वधोऽयं लोकसम्मतः ॥१७॥ कपिलेनाप्रमेयेन दग्धा हीमे महाबलाः। सलिलं नार्हसि प्राज्ञ दातुमेषां हि लौकिकम्॥१८॥ गङ्गा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ। तस्यां कुरु महाबाहो पितॄणां तु जलक्रियाम् ॥१९॥ भस्मराशीकृतानेतान् प्लावयेल्लोकपावनी। तया क्लिन्नमिदं भस्म गङ्गया लोककान्तया। षष्टिं पुत्रसहस्राणि स्वर्गलोकं नयिष्यति॥२०॥

सलिलं दातुं नार्हसि। "चण्डालादुदकात्सर्पात् वैद्युताद्ब्राह्मणादपि। दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् । उदकं पिण्डदानं च एतेभ्यो यद्विधीयते। नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ॥" इति स्मृतेः। कपिलो ब्राह्मणः ॥ १८ ॥ गङ्गेति। गङ्गा अस्तीति शेषः ॥ १९ ॥ न केवलं तत्र जलक्रिया, तया सेचनीयं चेत्याह-भस्मेति सार्द्धश्लोकः। यदि प्लावयेत्सेचयेत् तदा तया क्लिन्नं सिक्तं भस्म नयिष्यति नेष्यति ॥ २० ॥

शोकः विलापः ॥ १४ ॥ १५ ॥ विसार्येति। निपुणां विवेचनसमर्थाम्। पितॄणां मातुलम्, सुपर्णभगिनी सुमतिरिति प्रागुक्तत्वात्। अनिलोपमम् वेगेन वायूपमम् ॥ १६ ॥ लोकसंमतः लोकहितः। एतन्मूलकतया सर्वलोकहितकारिण्या गङ्गाया भूलोके अवतरणात् ॥ १७ ॥ हि यस्मात्कपिलेन दग्धाः यतश्च महाबलाः महाबलवत्त्वेन प्रायश्चित्तमर्यादातिक्रान्तपापवन्तः। अतो लौकिकं लोकतः प्राप्तं, सलिलं दातुं नार्हसि ॥ १८ ॥ १९ ॥ भस्मेति। क्लिन्नं सिक्तम्। नयिष्यति नेष्यति अनेन सगरपुत्राणां मन्वाद्युक्तप्रायश्चित्ताविषयत्वं सूचितम्। तत्प्रायश्चित्तविषयाणामपि पापिनां पुद्गलस्य गङ्गाजलस्पर्शः सर्वपापप्रायश्चित्तमिति सूचितम्। अकृतप्रायश्चित्तानामपि महापातकिनामौर्ध्वदैहिककर्मायोग्यानां गङ्गाजलस्पृष्टपुद्गलानां विनापि प्रायश्चित्तान्तरं सकलौर्ध्वदैहिकक्रियायोग्यत्वं च सूचितम् ॥ २० ॥

१ गङ्गामानय भद्रं त देवलोकान्महीतलम्। क्रियतां यदि शक्तोऽसि गङ्गायास्तव तारणम् ॥ इत्यधिकः पाठः।

गच्छेति। संवर्तयितुं समापयितुम् ॥२१॥ सुपर्णेति। आयात् आगच्छत् ॥२२॥ तत इति। वृत्तं पितृवृत्तान्तं सुपर्णवचनं च यथा तथा न्यवेदयदित्यन्वयः ॥ २३ ॥ तच्छ्रुत्वेति। यथाकल्पं यथाक्रमम् ॥२४॥ स्वेति। निश्चयम् उपायम् ॥ २५ ॥ अकृत्वेति। महता कालेन दिवं गत इत्यन्वयः ॥२६॥ इतिश्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥ अथ गङ्गायास्त्रिपथगमन

गच्छ चाश्वं महाभाग तं गृह्य पुरुषर्षभ। यज्ञं पैतामहं वीर संवर्तयितुमर्हसि ॥२१॥ सुपर्णवचनं श्रुत्वा सोऽंशुमानतिवीर्यवान्। त्वरितं हयमादाय पुनरायान्महायशाः ॥ २२॥ ततो राजानमासाद्य दीक्षितं रघुनन्दन। न्यवेदयद्यथा वृत्तं सुपर्णवचनं तथा ॥ २३ ॥ तच्छ्रुत्वा घोरसङ्काशं वाक्यमंशुमतो नृपः। यज्ञं निर्वर्तयामास यथाकल्पं यथाविधि ॥ २४ ॥ स्वपुरं चागमच्छ्रीमानिष्टयज्ञो महीपतिः। गङ्गायाश्चागमे राजा निश्चयं नाध्यगच्छत ॥ २५ ॥ अकृत्वा निश्चयं राजा कालेन महता महान्। त्रिंशद्वर्षसहस्राणि राज्यं कृत्वा दिवं गतः ॥ २६ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

कालधर्मं गते राम सगरे प्रकृतीजनाः। राजानं रोचयामासुरंशुमन्तं सुधार्मिकम् ॥ १ ॥ स राजा सुमहानासीदंशुमान् रघुनन्दन। तस्य पुत्रो महानासीद्दिलीप इति विश्रुतः ॥ २ ॥

हेतुप्रश्नस्य पूर्वप्रकृतस्य साक्षादुत्तरमाह–कालधर्ममित्यादि। जातमात्रस्य कालेनावश्यंप्राप्तव्यो धर्मः कालधर्मः, मरणमिति यावत्। प्रकृतीजना इत्यत्र दीर्घश्छान्दसः। अमात्यवर्गाः। "प्रकृतिः सहजे योनावमात्ये परमात्मनि" इति वैजयन्ती। रोचयामासुः न्यायप्राप्तत्वादैच्छन् ॥१॥ स इति। सः

संवर्तयितुम् समापयितुम् ॥ २१ ॥ २२ ॥ तत इति। वृत्तं पितृवृत्तान्तम् सुपर्णवचनं यथा तथा न्यवेदयत ॥ २३–२५ ॥ अकृत्वेति। निश्चयमुपायम् ॥ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायाम् एकचत्वारिंशः सर्गः ॥ ४१ ॥ कालधर्ममिति। प्रकृतीजनाः अमात्याः। रोचयामासुः ऐच्छन् ॥ १ ॥ २ ॥

सुमहान् राजासीदित्यन्वयः ॥ २ ॥ तस्मिन्निति । तेपे गङ्गावतारणायेतिशेषः ॥ ३ ॥ द्वात्रिंशदिति । स्वर्गं लेभे न तु गङ्गाम् ॥ ४ ॥ दिलीप इति । वधम् अपमृत्युम् । दुःखोपहतया पित्रा दुश्चरे तपसि कृतेऽपि तेषां गतिर्नाभूदित्येवंरूपया । नाध्यगच्छत् नाध्यगच्छत ॥ ५ ॥ निश्चयानधिगममेवाह—



तस्मिन् राज्यं समावेश्य दिलीपे रघुनन्दन। हिमवच्छिखरे पुण्ये तपस्तेपे सुदारुणम् ॥ ३ ॥ द्वात्रिंशच्च सहस्राणि वर्षाणि सुमहायशाः । तपोवनं गतो राम स्वर्गं लेभे तपोधनः ॥ ४ ॥ दिलीपस्तु महातेजाः श्रुत्वा पैतामहं वधम् ।दुःखोपहतया बुद्ध्या निश्चयं नाध्यगच्छत ॥ ५ ॥ कथं गङ्गावतरणं कथं तेषां जलक्रिया । तारयेयं कथं चैनानिति चिन्तापरोऽभवत् ॥ ६ ॥ तस्य चिन्तयतो नित्यं धर्मेण विदितात्मनः । पुत्रो भगीरथो नाम जज्ञे परमधार्मिकः ॥ ७ ॥ दिलीपस्तु महातेजा यज्ञैर्बहुभिरिष्टवान् । त्रिंशद्वर्षसहस्राणि राजा राज्यमकारयत् ॥ ८ ॥ अगत्वा निश्चयं राजा तेषामुद्धरणं प्रति । व्याधिना नरशार्दूल कालधर्ममुपेयिवान् ॥ ९ ॥ इन्द्रलोकं गतो राजा स्वार्जितेनैव कर्मणा । राज्ये भगीरथं पुत्रमभिषिच्य नरर्षभः ॥ १० ॥ भगीरथस्तु राजर्षिर्धार्मिको रघुनन्दन । अनपत्यो महातेजाः प्रजाकामः स चाप्रजः ॥ ११ ॥ मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः ॥ १२ ॥

कथमित्यादिना ॥ ६ ॥ तस्येति । धर्मेण प्रयोजकेन चिन्तयतः ॥ ७ ॥ दिलीप इति । अकारयत् अकरोत् ॥ ८ ॥ अगत्वेति । उपेयिवान् ययौ ॥ ९ ॥ इन्द्रेति । अभिषिच्य इन्द्रलोकं गतः ॥ १० ॥ भगीरथ इति । अनपत्यः अतएव प्रजाकामोऽभूत् । स चाप्रज इत्युत्तरशेषः ॥११॥१२॥

तस्मिन्निति । तपस्तेपे गङ्गाया भूलोकावतरणार्थमिति शेषः ॥ ३ ॥ ४ ॥ दिलीप इति । दुःखोपहतया बुद्ध्या पित्रा दुश्चरे तपसि कृतेपि तेषां गतिर्नाभूदिति । नाध्यगच्छत नाध्यगच्छत् ॥ ५ ॥ निश्चयानधिगममेवाह—कथमित्यादिना ॥ ६ ॥ ७ ॥ दिलीपस्त्विति । अकारयत् कृतवान् ॥ ८ ॥ व्याधिना पितॄणामुद्धरणालाभजन्यदुःखजेन । तद्दिलीपवंशजो रघुपुत्रो दिलीपः कालिदासोक्तोऽन्य एवेति बोध्यम् ॥ ९ ॥ १० ॥ स चाप्रजइत्यस्य मन्त्रिष्वाधायेत्युत्तरेणान्वयः । प्रस्तावाद्राज्यं च मन्त्रिष्वाधाय गङ्गावतरणेच्छुस्तप आतिष्ठत ॥ ११ ॥ १२ ॥

स इति । गोकर्णे हिमवत्पादविशेषे । पञ्चाग्नयः चतुर्षु पार्श्वेष्वग्नय उपरि सूर्यश्च, तेषां मध्ये तपो यस्य सः पञ्चतपाः । मासस्य सकृदाहारो यस्य सः मासाहारः । उभयत्र मध्यमपदलोपी समासः । पृषोदरादित्वात्साधुत्वम् ॥ १३ ॥ तस्येति । तस्य राज्ञो महात्मन इत्युत्तरशेषः ॥ १४ ॥ सुप्रीत इत्यर्द्धम् ॥१५॥ तत इति । अथ उपगमनानन्तरम् ॥१६॥ भगीरथेति । ते तपसा प्रीतः ॥१७॥ तमिति । महातेजाः तपःकृतनिरवधिकतेजाः ॥१८॥

स तपो दीर्घमातिष्ठद्गोकर्णे रघुनन्दन । ऊर्ध्वबाहुः पञ्चतपा मासाहारो जितेन्द्रियः ॥ १३ ॥ तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः । अतीतानि महाबाहो तस्य राज्ञो महात्मनः ॥ १४ ॥ सुप्रीतो भगवान् ब्रह्मा प्रजानां पतिरीश्वरः ॥ १५ ॥ ततः सुरगणैः सार्द्धमुपागम्य पितामहः । भगीरथं महात्मानं तप्यमानमथाब्रवीत् ॥१६॥ भगीरथ महाभाग प्रीतस्तेऽहं जनेश्वर । तपसा च सुतप्तेन वरं वरय सुव्रत ॥१७॥ तमुवाच महातेजाः सर्वलोकपितामहम् । भगीरथो महाभागः कृताञ्जलिरवस्थितः ॥ १८ ॥ यदि मे भगवन् प्रीतो यद्यस्ति तपसः फलम् । सगरस्यात्मजाः सर्वे मत्तस्सलिलमाप्नुयुः ॥ १९ ॥ गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् । स्वर्गं गच्छेयुरत्यन्तं सर्वे मे प्रपितामहाः ॥२०॥ देया च सन्ततिर्देव नावसीदेत्कुलं च नः । इक्ष्वाकूणां कुले देव एष मेऽस्तु वरः परः ॥२१॥ उक्तवाक्यं तु राजानं सर्वलोकपितामहः । प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम् ॥ २२ ॥

यदीति । मे तपस इत्यन्वयः ॥१९॥ न केवलं सलिलाप्तिरन्यच्चेत्याह—गङ्गाया इति । अत्यन्तम् अक्षय्यम् ॥२०॥ दया चेति । इक्ष्वाकूणां कुले जातस्य मे सन्ततिर्देया, यथा नः कुलं नावसीदेत् । एष वरः परः द्वितीयो वरोऽस्त्वित्यन्वयः । तपसे निर्गमदशायामपि हि प्रजाकाम इत्युक्तम् ॥२१॥ उक्तेति । शुभां

स इति । पञ्चतपाः पञ्चानामग्नीनां मध्ये तपो यस्य । मासाहारः मासे गते आहारो यस्य सः ॥१३॥ तस्य राज्ञो महात्मन इत्यस्य सुप्रीत इत्युत्तरेण सम्बन्धः ॥१४–१६॥ भगीरथेति । तपसा पितामहोद्धारप्रवृत्त्या चेति चकारस्यार्थः ॥१७॥१८॥ यदि मे भगवन्नित्यादि । असन्दिग्धे सन्दिग्धवचनं 'वेदाश्चेत्प्रमाणम्' इतिवत । सलिलम्–स्पर्शमात्रेण स्वर्गतिसाधनं सलिलम् ॥१९॥ गङ्गाया इति । स्वर्गं गच्छेयुरत्यन्तमिति । अत्यन्तमक्षय्यम् ॥२०॥ देयेति । इक्ष्वाकूणां कुले जातस्य मे सन्ततिर्देया, यथा नः

शुभहेतुम् । मधुराम् अर्थतो मनोज्ञाम् ॥ २२ ॥ मनोरथ इति । मनोरथः, तावकः इति शेषः ॥ २३ ॥ इयमिति । इयं सन्निहिता । हैमवती हिमवत्सन्निहिता । धारयितुं शक्तः हरः तत्र धारणे नियुज्यतां प्रार्थ्यताम् ॥ २४ ॥ गङ्गाया इति । धारयितुं, शक्तमिति शेषः ॥ २५ ॥ तमिति । आभाष्य 'वत्से

मनोरथो महानेष भगीरथ महारथ । एवं भवतु भद्रं ते इक्ष्वाकुकुलवर्द्धन ॥२३॥ इयं हैमवती गङ्गा ज्येष्ठा हिमवतः सुता । तां वै धारयितुं शक्तो हरस्तत्र नियुज्यताम् ॥२४॥ गङ्गायाः पतनं राजन् पृथिवी न सहिष्यति । तां वै धारयितुं वीर नान्यं पश्यामि शूलिनः ॥ २५ ॥ तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत् । जगाम त्रिदिवं देवस्सह देवैर्मरुद्गणैः ॥२६॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे द्विचत्वारिंशः सर्गः॥४२॥ देवदेवे गते तस्मिन् सोऽङ्गुष्ठाग्रनिपीडिताम् । कृत्वा वसुमतीं राम संवत्सरमुपासत ॥ १॥ अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः । उमापतिः पशुपती राजानमिदमब्रवीत्॥२॥ प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम्। शिरसा धारयिष्यामि शैलराजसुतामहम् ॥ ३ ॥ ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता । तदा साऽतिमहद्रूपं कृत्वा वेगं च दुस्सहम् । आकाशादपतद्राम शिवे शिवशिरस्युत ॥ ४ ॥

राजानं यथाकालमनुगृहाण' इत्युक्त्वेति यावत् । मरुद्गणैः वायुगणैः॥२६॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥ अथ गङ्गाप्लवनेन सागराणां स्वर्गगतिस्त्रिचत्वारिंशे–देवदेव इत्यादि । उपासत उपास्त । शिवमिति शेषः ॥ १ ॥ अथेति । उमापतिरित्यनेनोमया सहागत इत्युच्यते ॥२॥ प्रीत इति । प्रियं करिष्यामीत्येतद्विवृणोति–शिरसेति ॥ ३ ॥ तत इति, अर्द्धत्रयमेकान्वयम् ।

कुलं नावसीदेत एष वरः परो द्वितीयोऽस्त्वित्यन्वयः ॥ २१–२३ ॥ इयमिति । इयं हैमवती गङ्गा । कथमिति चेत, हिमवतः ज्येष्ठा सुता ॥ २४ ॥ गङ्गाया इति । पृथिवी तां धारयितुं न सहिष्यति । तत्र पृथिवीस्थाने हरो नियुज्यताम् प्रार्थ्यताम् ॥ २५ ॥ तमेवमिति । गङ्गामाभाष्य 'अस्य मनोरथं पूरय' इति गङ्गामाभाष्य गङ्गां प्रत्युक्त्वा । देवैः आजानजैः । मरुद्गणैः कर्मदेवैः ॥ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां द्विचत्वारिंशः सर्गः ॥ ४२ ॥ देवदेव इति । उपासत उपास्त । उमापतिमिति शेषः ॥ १–३ ॥ तदेति ईश्वरेण धारणाङ्गीकारे कृते, गर्वादित्यर्थः । शिवे शोभने ॥ ४ ॥ ५ ॥



---

१ सत । ऊर्ध्वबाहुर्निरालम्बो वायुभक्षो निराश्रयः । अचलः स्थाणुवस्थित्वा रात्रिंदिवमरिंदम ॥ २ प्रियम् । तमब्रवीन्नृपवरो गङ्गां धारय वै हर । इत्युक्तो वचनं भर्गः करिष्यामि प्रियं तव ॥ इत्यधिकः ॥

हैमवती हिमवत्कन्या । शिवे शुद्धे । ध्रुवतीति प्रसिद्धौ ॥ ४ ॥ महारूपदुःसहपतनकारणं निमित्तमाह—अचिन्तयदिति । दुर्द्धरा धर्त्तुमशक्या । गृह्य गृहीत्वा ॥ ५ ॥ तस्या इति । वलेपनं गर्वम् । वष्टि भागुरिः—" इत्यल्लोपः । तिरोभावयितुं तिरोहितां कर्तुम् ॥ ६ ॥ सेति । जटामण्डलमेव गह्वरं गुहा यस्मिंस्तत्तथा ॥ ७ ॥ सेति । निर्गमनं जटामण्डलान्निस्सरणमात्रमपि, जटामण्डले मोहिता सञ्जातमोहा ॥ ८ ॥ तत्रेति । अबम्भ्रमत् पुनःपुनरभ्रमत् ।

अचिन्तयच्च सा देवी गङ्गा परमदुर्द्धरा । विशाम्यहं हि पातालं स्रोतसा गृह्य शङ्करम् ॥ ५ ॥ तस्या वलेपनं ज्ञात्वा क्रुद्धस्तु भगवान् हरः । तिरोभावयितुं बुद्धिं चक्रे त्रिणयनस्तदा ॥ ६ ॥ सा तस्मिन् पतिता पुण्या पुण्ये रुद्रस्य मूर्द्धनि । हिमवत्प्रतिमे राम जटामण्डलगह्वरे ॥ ७ ॥ सा कथञ्चिन्महीं गन्तुं नाशक्नोद्यत्नमास्थिता । नैव निर्गमनं लेभे जटामण्डलमोहिता ॥ ८ ॥ तत्रैवाबम्भ्रमद्देवी संवत्सरगणान् बहून् । तामपश्यन् पुनस्तत्र तपः परम मास्थितः ॥ ९ ॥ अनेन तोषितश्चाभूदत्यर्थं रघुनन्दन । विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति ॥ १० ॥ तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे ॥ ११ ॥ ह्लादिनी पावनी चैव नलिनी च तथाऽपरा । तिस्रः प्राचीं दिशं जग्मुर्गङ्गाश्शिवजलाश्शुभाः ॥ १२ ॥ सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी । तिस्रस्त्वेता दिशं जग्मुः प्रतीचीं तु शुभोदकाः ॥ १३ ॥ सप्तमी चान्वगात्तासां भगीरथमथो नृपम् ॥ १४ ॥ भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दन मास्थितः । प्रायादग्रे महातेजा गङ्गा तं चाप्यनुव्रजत् ॥ १५ ॥

यङ्लुगन्ताल्लङ् । आस्थितः राजेति शेषः ॥ ९ ॥ अनेनेति । अनेन तपसा तोषितश्चासीत् विससर्ज च । बिन्दुसरोनाम हिमवति ब्रह्मनिर्मितस्सरोविशेषः ॥ १० ॥ तस्यामित्यर्द्धम् । स्रोतांसि प्रवाहाः ॥ ११ ॥ स्रोतसां नामनिर्देशपूर्वकं गतिभेदमाह—ह्लादिनीति । शुभाः शोभमानाः ॥ १२ ॥ सुचक्षुरिति ॥ महानदीति सर्वविशेषणम् । ॥ १३ ॥ सप्तमीत्यर्द्धम् । तासां मध्ये ॥ १४ ॥ भगीरथोऽपीति । स्यन्दनं रथम् । अन्वव्रजत् अन्वव्रजत । अत्र स्वर्गाकाश

तस्या इति । तस्या वलेपनं गर्वम् ॥ ६ ॥ सेति । जटामण्डलगह्वरे-जटामण्डलेन गह्वरे गम्भीरे । हिमवत्-हिमबिन्दुवत् पतिता ॥ ७।८ ॥ तत्रेति । अबम्भ्रमत-पुनः

भूम्यभिगमनात् त्रिपथगात्वमित्येके, दिक्त्रयगमनादित्यपरे ॥ १५ ॥ एवं 'त्रीन् पथः केन हेतुना' इत्यस्योत्तरमभिधाय 'कर्मभिः कैः समन्विता' इत्यस्य चरितभेदप्रश्नस्योत्तरमाह—गगनादिति । तीव्रशब्दे हेतुरयम्॥१६॥ मत्स्येति । शिंशुमारः अम्बुकरी । "शिंशुमारस्त्वम्बुकरी" इति वैजयन्ती । अन्यैः जलजन्तुविशेषैः ॥१७॥ तत इति । गगनात् रुद्रजटागमनात् । गां भूमिम् ॥ १८ ॥ विमानैरिति । नगराकारैः नगरवद्विपुलैः । पारिप्लवगतैः पारिप्लवं

गगनाच्छङ्करशिरस्ततो धरणिमाश्रिता । व्यसर्पत जलं तत्र तीव्रशब्दपुरस्कृतम् ॥ १६ ॥ मत्स्यकच्छपसङ्घैश्च शिंशुमारगणैस्तदा । पतद्भिः पतितैश्चान्यैर्व्यरोचत वसुन्धरा ॥ १७ ॥ ततो देवर्षिगन्धर्वा यक्षाः सिद्धगणास्तदा । व्यलोकयन्त ते तत्र गगनाद्गां गतां तथा ॥१८॥ विमानैर्नगराकारैर्हयैर्गजवरैस्तदा । पारिप्लवगतैश्चापि देवतास्तत्र विष्ठिताः ॥ १९ ॥ तदद्भुततमं लोके गङ्गापतनमुत्तमम् । दिदृक्षवो देवगणाः समीयुरमितौजसः ॥२०॥ सम्पतद्भिः सुरगणैस्तेषां चाभरणौजसा । शतादित्यमिवाभाति गगनं गततोयदम्॥२१॥ शिंशुमारोरगगणैर्मीनैरपि च चञ्चलैः । विद्युद्भिरिव विक्षिप्तमाकाशमभवत्तदा ॥ २२ ॥ पाण्डरैः सलिलोत्पीडैः कीर्यमाणैः सहस्रधा । शारदाभ्रैरिवाकीर्णं गगनं हंससम्प्लवैः॥२३॥ क्वचिद्द्रुततरं याति कुटिलं क्वचिदायतम् । विनतं क्वचिदुद्धूतं क्वचिद्याति शनैःशनैः ॥२४॥

सम्भ्रमं गतैरिति विमानादिविशेषणम् । तत्र गङ्गापतनप्रदेशे । विष्ठिताः विशेषेण स्थिताः ॥१९॥ तदिति । लोके भूलोके । अमितौजस इत्यनेन प्रधान देवा उच्यन्ते ॥२०॥ सम्पतद्भिरिति । सुरगणैः अमिततेजोभिरिति सिद्धम् । आभाति अभात् ॥२१॥ शिंशुमारेति । आकाशं चञ्चलैः शिंशुमारादिभिः विद्युद्भिरिव विक्षिप्तं व्याप्तम् अभवत् ॥२२॥ पाण्डरैरिति । वेगवशेन सहस्रधा कीर्यमाणैः सलिलोत्पीडैः फेनैः हंससंप्लवैः हंससङ्कुलैः शारदाभ्रैरिव गगन माकीर्णमित्यन्वयः ॥ २३ ॥ क्वचिदिति । अत्र गङ्गेत्यनुषज्यते । द्रुततरमित्यादि क्रियाविशेषणम् । आयतम् ऋजु, विनतं निम्नेन सङ्कुचितम् । उद्धूतं पुनरभ्रमत् । अनेन भगीरथेन अनुव्रजत । अडभाव आर्षः ॥ ९–१८ ॥ विमानैरिति । गगनाकारैः गगनवद्विपुलैरित्यर्थः । पारिप्लवगताः—पारिप्लवं सम्भ्रमम् गताः ॥ १९–२१ ॥ शिंशुमारेति । शिंशुमारः नक्रः । विक्षिप्तैः परितः प्लुतैः॥ २२ ॥ पाण्डरैरिति । कीर्यमाणैः सलिलोत्पीडैः-सलिलसमूहैः । हंससंप्लवैः हंससञ्चारैश्चाकीर्णं व्याप्तम् अभवत् ॥ २३ ॥ क्वचिदिति । आयतम् ऋजु । विनतं नम्रम् । उद्धूतम् ऊर्ध्वमुखम् । एतानि क्रियाविशेषणानि ॥ २४ ॥ २५ ॥

पाषाणस्खलनादिना ऊर्ध्वमुखम् । सर्वत्र व्यत्ययेन भूते लट् ॥ २४ ॥ सलिलेनेति । अभ्याहतं वातव्यावर्तितम्, तरङ्गसलिलेनाभिमुखमाहतमित्यर्थः ॥ २५ ॥ तदिति । शङ्करशिरसि भ्रष्टं पतितमपि ततः भूमितले पतितमपि निर्मलम्, गतं कल्मषं येन तद्गतकल्मषम्, पापापहमित्यर्थः॥२६॥ तत्रेति । पवित्रं पावनम्, तत्र ज्ञापकहेतुमाह भवाङ्गपतितमिति । भवेन रुद्रेण शिरसा धृतत्वात् पवित्रमिति ज्ञात्वा पस्पृशुरित्यर्थः । पवित्रमिति सामान्योक्त्या भवस्यान्येषां च पवित्रमित्युक्तम्, अतएव "हरस्य गात्रसंस्पर्शात् पवित्रत्वमुपागता" इत्यत्रापि हरस्य शुद्धिप्रदत्वमुपागतेत्यर्थः । अन्येऽप्यृषय ऊचुः श्रीमद्भागवते—"यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवः शिवोऽभूत्" इति । भारते—" तदम्बु पतितं दृष्ट्वा दधार शिरसा हरः ।

सलिलेनैव सलिलं क्वचिदभ्याहतं पुनः । मुहुरूर्ध्वमुखं गत्वा पपात वसुधातलम् ॥ २५ ॥ तच्छङ्करशिरोभ्रष्टं भ्रष्टं भूमितले पुनः । व्यरोचत तदा तोयं निर्मलं गतकल्मषम् ॥ २६ ॥ तत्र देवर्षिगन्धर्वा वसुधातलवासिनः । भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ २७ ॥ शापात्प्रपतिता ये च गगनाद्वसुधातलम् । कृत्वा तत्राभिषेकं ते बभूवुर्गतकल्मषाः ॥ २८ ॥ धूतपापाः पुनस्तेन तोयेनाथ सुभास्वता । पुनराकाशमाविश्य स्वान् लोकान् प्रतिपेदिरे॥२९॥ मुमुदे मुदितो लोकस्तेन तोयेन भास्वता । कृताभिषेको गङ्गायां बभूव विगतक्लमः ॥ ३० ॥

पावनार्थं जटामध्ये योग्योऽस्मीत्यवधारणात् ॥" इति । अत्राप्ययोध्याकाण्डे वक्ष्यति—"विष्णुपादोद्भवां दिव्याम् " इति । गङ्गाया विष्णुपादोद्भवत्वेन पवित्रत्वरूपं दिव्यत्वं भवाङ्गात्पतितमिति वार्थः । "द्वितीयाश्रितातीतपतित—" इति द्वितीयासमासविधानात् पञ्चमीसमासानुपपत्तेश्च भवेन धृतत्वात् । अस्माभिरपि धार्यमिति पस्पृशुरित्येवार्थः । यद्वा भवाङ्गपतितत्वात् पवित्रम् न तु पूर्ववदतिपवित्रम्, अतएव पस्पृशुः, न तु सस्नुः । यद्वा यद्यपि भवाङ्गात् पतितं तथापि विष्णुपादोद्भूतत्वात्पवित्रमिति वा "नदी वेगेन शुद्ध्यति" इति न्यायात् । भवसम्पर्कविगमे पवित्रमिति वा पस्पृशुः ॥ २७ ॥ शापादिति । शापाद्धेतोः ॥ २८ ॥ धूतेति । आकाशमाविश्य, आकाशमार्गेणेत्यर्थः ॥ २९ ॥ मुमुद इति । मुदितः मुमुदे, पुनःपुनर्जहर्षेत्यर्थः ॥३०॥

तदिति । शङ्करशिरः-शङ्करशिरसि, भ्रष्टं पतितम् । गतकल्मषं कल्मषापहम् ॥२६॥ तत्रेति । तोयं पस्पृशुः, सस्नुरित्यर्थः ॥२७॥ शापादिति । शापाद्धेतोः गगनात् स्वस्थानात् । गतकल्मषाः शापविमुक्ताः ॥ २८ ॥ २९ ॥ मुमुद इति । मुदितो मुमुदे, पुनःपुनर्जहर्षेत्यर्थः ॥ ३०-३५ ॥

भगीरथ इति । स्पष्टम् ॥ ३१ ॥ देवा इति श्लोकद्वयम् । भगीरथरथानुगां गङ्गामन्वगमन् ॥ ३२ ॥ ३३ ॥ यत इति । यतः यत्र । ततः तत्र ॥ ३४ ॥ ततो हीति । अद्भुतकर्मण इति वक्ष्यमाणगङ्गापानाभिप्रायम् । यज्ञवाटं यज्ञक्षेत्रम् ॥ ३५ ॥ तस्या इति । वलेपनं गर्वम् । परमा

भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः । प्रायादग्रे महातेजास्तं गङ्गा पृष्ठतोऽन्वगात् ॥ ३१ ॥ देवाः सर्षिगणाः सर्वे दैत्यदानवराक्षसाः । गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ ३२ ॥ सर्वाश्चाप्सरसो राम भगीरथरथानुगाम् । गङ्गामन्वगमन् प्रीताः सर्वे जलचराश्च ये ॥ ३३ ॥ यतो भगीरथो राजा ततो गङ्गा यशस्विनी । जगाम सरितां श्रेष्ठा सर्वपापविनाशिनी ॥ ३४ ॥ ततो हि यजमानस्य जह्नोरद्भुतकर्मणः । गङ्गा संप्लावयामास यज्ञवाटं महात्मनः ॥ ३५ ॥ तस्या वलेपनं ज्ञात्वा क्रुद्धो जह्नुश्च राघव । अपिबच्च जलं सर्वं गङ्गायाः परमाद्भुतम् ॥ ३६ ॥ ततो देवाः सगन्धर्वा ऋषयश्च सुविस्मिताः । पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् । गङ्गां चापि नयन्ति स्म दुहितृत्वे महात्मनः ॥ ३७ ॥ ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत् पुनः । तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ॥ ३८ ॥ जगाम च पुनर्गङ्गा भगीरथरथानुगा । सागरं चापि सम्प्राप्ता सा सरित्प्रवरा तदा । रसातलमुपागच्छत् सिद्ध्यर्थं तस्य कर्मणः ॥ ३९ ॥ भगीरथोऽपि राजर्षिर्गङ्गामादाय यत्नतः । पितामहान् भस्मकृतानपश्यद्दीनचेतनः ॥ ४० ॥ अथ तद्भस्मनां राशिं गङ्गासलिलमुत्तमम् । प्लावयद्धूतपाप्मानः स्वर्गं प्राप्ता रघूत्तम ॥ ४१ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

द्भुतमिति क्रियाविशेषणम् ॥ ३६ ॥ तत इति सार्धश्लोकः । दुहितृत्वे नयन्ति स्म, दुहितरमकुर्वन्नित्यर्थः ॥ ३७ ॥ तत इति । ततः दुहितृत्वप्रापणात् । श्रोत्राभ्याम्, नरावयवेषु श्रोत्रस्यातिपावनत्वादितिभावः ॥ ३८ ॥ जगामेत्यर्धत्रयम् । तस्य कर्मणः भगीरथयत्नस्य ॥ ३९ ॥ भगीरथ इति । तस्या इति । परमाद्भुतं यथा भवति तथा ॥ ३६ ॥ तत इति । जह्नुं पूजयन्ति स्तुवन्ति स्म । दुहितृत्वे नयन्ति दुहितृत्वमनयन्निति यावत् ॥ ३७ ॥ तत इति ।

भस्मकृतान् भस्मत्वेन कृतान् ॥ ४० ॥ अथेति । तत्सलिलं प्लावयत् अप्लावयत् । प्राताः सगरपुत्रा इति शेषः ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ पूर्वसर्गान्ते सङ्ग्रहेणोक्तं विस्तृणीते चतुश्चत्वारिंशे—स गत्वे त्यादि । भूमेस्तलं पातालम् । भस्मसात्कृताः सर्वात्मना भस्मस्वभावापत्तये सम्पादिताः । "विभाषासाति कार्त्स्न्ये" इतिसातिः ॥ १ ॥ भस्म

स गत्वा सागरं राजा गङ्गयानुगतस्तदा । प्रविवेश तलं भूमेर्यत्र ते भस्मसात्कृताः ॥ १ ॥ भस्मन्यथाप्लुते राम गङ्गायाः सलिलेन वै । सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥ २ ॥ तारिता नरशार्दूल दिवं याताश्च देववत् । षष्टिः पुत्रसहस्राणि सगरस्य महात्मनः ॥ ३ ॥ सागरस्य जलं लोके यावत् स्थास्यति पार्थिव । सगरस्यात्मजा स्तावत् स्वर्गे स्थास्यन्ति देववत् ॥ ४ ॥ इयं हि दुहिता ज्येष्ठा तव गङ्गा भविष्यति । त्वत्कृतेन च नाम्नाथ लोके स्थास्यति विश्रुता ॥ ५ ॥ गङ्गा त्रिपथगा राजन् दिव्या भागीरथीति च । त्रीन् पथो भावयन्तीति ततस्त्रिपथगा स्मृता ॥ ६ ॥ पितामहानां सर्वेषां त्वमत्र मनुजाधिप । कुरुष्व सलिलं राजन् प्रतिज्ञामपवर्जय ॥ ७ ॥ पूर्वकेण हि ते राजंस्तेनातियशसा तदा । धर्मिणां प्रवरेणापि नैष प्राप्तो मनोरथः ॥ ८ ॥ तथैवांशुमता तात लोकेऽप्रतिम तेजसा । गङ्गां प्रार्थयता नेतुं प्रतिज्ञा नापवर्जिता ॥ ९ ॥

नीति । स्पष्टम् ॥ २ ॥ तारिता इति । तारिताः प्रेतभावान्मोचिताः ॥ ३ ॥ स्वर्गप्राप्तेर्विशेषमाह—सागरस्येति ॥ ४ ॥ इयं चेति । त्वत्कृतेन नाम्ना लोके विश्रुता ॥ ५ ॥ तदेव नामद्वयं दर्शयन् त्रिपथगाशब्दं व्युत्पादयति—गङ्गेति ॥ ६ ॥ पितामहानामिति । प्रतिज्ञां गङ्गासलिलप्रदानेन सागरान् तारयिष्यामीति प्रतिज्ञाम् । अपवर्जय समापय ॥ ७ ॥ पूर्वकेणेति । पूर्वकेण सगरेण ॥ ८ ॥ तथेति । नापवर्जिता न समापिता ॥ ९ ॥

यतो दुहितृत्वमनयन् तस्माद्धेतोः जह्नुसुता जाह्नवीति नामद्वयं समासवृत्त्या तद्धितवृत्त्या च ॥ ३८–४१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ स गत्वेति । भूमेस्तलम् पातालम् ॥ १–४ ॥ इयमित्यादि । दिव्या गङ्गानाम सा त्रिपथगेति भागीरथीति च त्वत्कृतेन नाम्ना विश्रुता स्थास्यति । त्रिपथगाशब्दं निर्वक्ति—त्रीनित्यादिना । यतः त्रीन् पथः स्वर्गादीन् भावयन्ती प्लावयन्ती प्रवर्तते, ततो हेतो स्त्रिपथगेति स्मृता ॥ ५ ॥ ६ ॥ कुरुष्वेति । प्रतिज्ञां गङ्गासलिलप्रदानेन सागरांस्तारयिष्यामीत्येवंरूपाम्, अपवर्जय समापय ॥ ७ ॥ पूर्वकेण-सगरेण ॥ ८–१० ॥

राजर्षिणेति श्लोकद्वयम् । गङ्गां प्रार्थयतापि सा पुनर्नेतुं न शङ्किता, न विचारितेत्यर्थः ॥ १० ॥ ११ ॥ सेति । समतिक्रान्ता निस्तीर्णा ॥१२॥ यच्चेति । आयतनं प्रतिष्ठा ॥१३॥ प्लावयस्वेति । प्लावयस्व स्नानं कुर्वित्यर्थः । सदोचिते सदा स्नानयोग्ये । अन्यासामेव हि नदीनां रजोदोष इति भावः॥१४॥पिता

राजर्षिणा गुणवता महर्षिसमतेजसा । मत्तुल्यतपसा चैवं क्षत्रधर्मस्थितेन च ॥ १० ॥ दिलीपेन महाभाग तव पित्रातितेजसा । पुनर्न शङ्किता नेतुं गङ्गां प्रार्थयतानघ ॥ ११ ॥ सा त्वया समतिक्रान्ता प्रतिज्ञा पुरुषर्षभ । प्राप्तोऽसि परमं लोके यशः परमसम्मतम् ॥ १२ ॥ यच्च गङ्गावतरणं त्वया कृतमरिन्दम । अनेन च भवान् प्राप्तो धर्मस्यायतनं महत् ॥ १३ ॥ प्लावयस्व त्वमात्मानं नरोत्तम सदोचिते । सलिले पुरुषव्याघ्र शुचिः पुण्यफलो भव ॥ १४ ॥ पितामहानां सर्वेषां कुरुष्व सलिलक्रियाम् । स्वस्ति तेऽस्तु गमिष्यामि स्वं लोकं गम्यतां नृप ॥ १५ ॥ इत्येवमुक्त्वा देवेशः सर्वलोकपितामहः । यथागतं तथागच्छद्देवलोकं महायशाः ॥ १६ ॥ भगीरथोऽपि राजर्षिः कृत्वा सलिलमुत्तमम् । यथाक्रमं यथान्यायं सागराणां महायशाः ॥ १७ ॥ कृतोदकः शुची राजा स्वपुरं प्रविवेश ह । समृद्धार्थो नरश्रेष्ठ स्वराज्यं प्रशशास ह ॥ १८ ॥ प्रमुमोद च लोकस्तं नृपमासाद्य राघव । नष्टशोकः समृद्धार्थो बभूव विगतज्वरः ॥ १९ ॥ एष ते राम गङ्गाया विस्तरोऽभिहितो मया । स्वस्ति प्राप्नुहि भद्रं ते सन्ध्याकालोऽतिवर्तते ॥ २० ॥

महानामिति । गम्यतां त्वयापीतिशेषः ॥ १५ ॥ इतीति । यथागतं तथागच्छत् एक एवेत्यर्थः ॥ १६ ॥ भगीरथ इति श्लोकद्वयम् । यथाक्रमं कृतोदकः, अन्येषामपीतिशेषः । प्रशशास ह प्रशशास चेत्यर्थः ॥ १७ ॥ १८ ॥ प्रमुमोदेति । विगतज्वरः निरामय इत्यर्थः ॥ १९ ॥ उपसंहरति—एष इति ।

दिलीपेनेति । गङ्गामानेतुं न शङ्किता न विचारिता । प्रतिज्ञेतिशेषः । चिन्ताविषयमपि न आपितेत्यर्थः ॥ ११ ॥ सेति । सागरादिभिर्दुस्तरा प्रतिज्ञा समतिक्रान्ता निस्तीर्णा ॥१२॥ यच्च गङ्गेति । आयतनम् आयतनसमम् । यद्वा धर्मस्यायतनं धर्मप्राप्यस्थानम् । महत् ब्रह्मलोकरूपम् ॥ १३ ॥ यथास्या ब्रह्मलोकप्रापकत्वं तदाह—प्लावयस्वेति । आत्मानं स्वदेहम् । सदोचिते सिंहकर्कटमध्येऽपि स्नानादिव्यवहारोचिते, भूप्रवहन्नदीनामेव तत्काले भौमत्वमूलरजःसम्बन्धात् स्नानाद्यनर्हत्वम् अनेन स्नानमात्रेण गङ्गा ब्रह्मलोकप्राप्तिकरोति सूचितम् ॥१४–१७॥ कृतोदक इति । अन्येषामपीति शेषः । सागराणां कृत्वा सलिलमिति पूर्वमुक्तत्वात् ॥१८॥१९॥ उपसंहरति—एष इति । स्वस्तिभद्रयोर्ग्रहणं तत्प्रीत्यादरसूचनार्थम् ॥ २० ॥

भद्रं तेस्त्विति वचनपरिपाटी। सन्ध्याकालोऽतिवर्तते, इतः परं न प्रष्टव्यमितिभावः ॥ २० ॥ अथ गङ्गावतारश्रावणफलमाह–धन्यमिति । धनादि प्रदमित्यर्थः। सर्वत्र साधुत्वार्थे यत्प्रत्ययः। इदमाख्यानमित्यनुषज्यते । अर्धत्रयम् ॥ २१ ॥ श्रावयितुः फलमुक्तम्, सम्प्रति श्रोतुः फलमुच्यते इदमिति। गङ्गावतरणं गङ्गावतरणाख्यम्। अर्द्धत्रयम् ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ एवं दशभिः सर्गैर्गङ्गागाङ्गेयसम्भववर्णनव्याजेन धातुमोक्षणगङ्गापूतत्वनिमित्तकं देवतान्तरावरत्वं दर्शितम्। अथ

धन्यं यशस्यमायुष्यं पुत्र्यं स्वर्ग्यमतीव च। यः श्रावयति विप्रेषु क्षत्रियेष्वितरेषु च। प्रीयन्ते पितरस्तस्य प्रीयन्ते दैवतानि च ॥ २१ ॥ इदमाख्यानमव्यग्रो गङ्गावतरणं शुभम्। यः शृणोति च काकुत्स्थ सर्वान् कामानवाप्नुयात्। सर्वे पापाः प्रणश्यन्ति आयुः कीर्तिश्च वर्द्धते ॥२२॥ इत्यार्षे श्री० बालकाण्डे चतुश्चत्वारिंशः सर्गः ॥४४॥

विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः। विस्मयं परमं गत्वा विश्वामित्रमथाब्रवीत् ॥ १ ॥ अत्यद्भुतमिदं ब्रह्मन् कथितं परमं त्वया। गङ्गावतरणं पुण्यं सागरस्यापि पूरणम् ॥ २ ॥ क्षणभूतेव नौ रात्रिः संवृत्तेयं महातपः। इमां चिन्तयतस्सर्वां निखिलेन कथां तव ॥ ३ ॥ तस्य सा शर्वरी सर्वा सह सौमित्रिणा तदा। जगाम चिन्तयानस्य विश्वामित्रकथां शुभाम् ॥ ४ ॥ ततः प्रभाते विमले विश्वामित्रं महामुनिम्। उवाच राघवो वाक्यं कृताह्निकमरिन्दमः ॥ ५ ॥ गता भगवती रात्रिः श्रोतव्यं परमं श्रुतम् ॥ ६ ॥

त्रिभिः सर्गैः महेन्द्रस्यावरत्वमुपपाद्यते–विश्वामित्रेत्यादि ॥ १ ॥ अत्यद्भुतमिति। पूरणं खननेनाभिवर्द्धनम् ॥ २ ॥ क्षणभूतेव नौ रात्रिरिति श्लोकां गता भगवतीत्यर्धात्परमनुसन्धेयः ॥ ३ ॥ तस्येति। क्षणभूतेव जगामेत्यर्थः ॥ ४ ॥ तत इति। विमले प्रभाते सम्यक्प्रभात इत्यर्थः ॥ ५ ॥ गतेत्यर्द्धत्रयम्। भगवती सत्कथायुक्तत्वात् पूज्या ॥ ६ ॥

एतदाख्यानश्रावयितुः फलमाह–धन्यमिति ॥ २१ ॥ अथश्रोतुः फलमुच्यते–इदमिति। अव्यग्रः सावधानमनाः ॥ २२ ॥ इति श्रीमहे० श्रीरामायण० बालकाण्डव्याख्यायां चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ विश्वामित्रेत्यादि। पूरणं गङ्गयेति शेषः ॥ १–५ ॥ गतेति। भगवती रात्रिः गङ्गावतरणानुचिन्तनादिति भावः ॥ ६ ॥

तरामेति अर्द्धत्रयम्। ऋषीणां नौः ऋषितरणार्हा नौः ॥ ७ ॥ तस्येति । स राघवः सर्षिसङ्घः । कारयामास अकरोत्। स्वार्थे णिच् ॥ ८ ॥ उत्तर मिति । ऋषिगणं नौतारणार्थमागतं सम्पूज्य पूजापूर्वकं निवर्त्य । निविष्टाः क्षणं स्थिताः ॥ ९ ॥ तत इति । विशालां प्रतीति शेषः ॥ १० ॥ अथेति । विशालां विशालामाहात्म्यम् ॥ ११ ॥ विशालायां वर्तमानो राजवंशः कतर इति द्वितीयः प्रश्नः ॥ १२ ॥ तस्येति । विशालस्य विशालाख्यनगरस्य ।

तराम सरितां श्रेष्ठां पुण्यां त्रिपथगां नदीम्। नौरेषा हि सुखास्तीर्णा ऋषीणां पुण्यकर्मणाम् । भगवन्तमिह प्राप्तं ज्ञात्वा त्वरितमागता ॥ ७ ॥ तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः । सन्तारं कारयामास सर्षिसङ्घः सराघवः ॥ ८ ॥ उत्तरं तीरमासाद्य संपूज्यर्षिगणं तदा । गङ्गाकूले निविष्टास्ते विशालां ददृशुः पुरीम् ॥ ९ ॥ ततो मुनिवरस्तूर्णं जगाम सहराघवः । विशालां नगरीं रम्यां दिव्यां स्वर्गोपमां तदा ॥ १० ॥ अथ रामो महाप्राज्ञो विश्वामित्रं महामुनिम् । पप्रच्छ प्राञ्जलिर्भूत्वा विशालामुत्तमां पुरीम् ॥ ११ ॥ कतरो राजवंशोऽयं विशालायां महामुने । श्रोतुमिच्छामि भद्रं ते परं कौतूहलं हि मे ॥ १२ ॥ तस्य तद्वचनं श्रुत्वा रामस्य मुनिपुङ्गवः । आख्यातुं तत्समारेभे विशालस्य पुरातनम् ॥ १३ ॥ श्रूयतां राम शक्रस्य कथां कथयतः शुभाम्। अस्मिन् देशे तु यद्वृत्तं तदपि शृणु राघव ॥ १४॥ पूर्वं कृतयुगे राम दितेः पुत्रा महाबलाः । अदितेश्च महाभाग वीर्यवन्तः सुधार्मिकाः ॥१५॥ ततस्तेषां नरश्रेष्ठ बुद्धिरासीन्महात्मनाम् । अमरा अजराश्चैव कथं स्याम निरामयाः ॥ १६॥

पुरातनं कर्म प्रथमपूर्वं वैभवं आख्यातुं समारेभे ॥ १३ ॥ श्रूयतामिति । अस्मिन्देशे यद्वृत्तं तच्छृणु । तच्छेषतया शक्रस्य कथां कथयतो मत्तः सा श्रूयताम् ॥ १४ ॥ पूर्वमिति । पूर्वं कृतयुगे दितेः पुत्रा महाबला आसन् । अदितेः पुत्रा वीर्यवन्तो धार्मिकाश्चासन् ॥ १५ ॥ तत इति । म्रियन्त इति मराः । पचाद्यच् । अमराः मरणरहिताः, अजराः जरारहिताः, तेषां देवासुराणाम् ॥ १६ ॥

तरामेति । भगवन्तमिह प्राप्तं ज्ञात्वा ये प्राप्ताः तेषामृषीणां शेषभूता इयं नौस्त्वरितमागता तराम, अनयेतिशेषः ॥ ७॥ तस्येति । सन्तारं कारयामास, नाविकै रिति शेषः ॥ ८ ॥ उत्तरमिति । संपूज्यर्षिगणमिति । यैर्नौर्नीता तेषां गणं संपूज्य निविष्टाः स्थिताः ॥ ९-११ ॥ कतर इति । विशालायां योऽधिकत्वेन वर्तते अयं राजवंशः कतर इत्यर्थः ॥१२॥ तस्येति । विशालस्य पुरातनमिति विशालो नाम तन्नगरस्य निर्माता राजा तस्य पुरातनं प्राक्तनं वृत्तमिति शेषः ॥१३-१६॥

तेषामिति। रसम् अमृतम् । तत्र क्षीरोदे ॥ १७ ॥ तत इति । योक्त्रं मथनरज्जुं । मन्थानं मथनदण्डम् ॥१८॥ अथेति । धन्वन्तरिरुत्पपात । अप्सराश्च उत्पेतुरिति शेषः । आकारान्तत्वमार्षम् ॥ १९ ॥ अप्स्विति । अप्सरःशब्दं निर्वक्ति—अत्राप्शब्देन तद्विकारभूतं क्षीरमुपलक्ष्यते । अप्सु यन्निर्मथनं तस्माद्यो रसस्तस्माद्रसाद्यत उत्पेतुस्तस्मादप्सरसोऽभवन् । पृषोदरादित्वात्साधुः ॥ २० ॥ षष्टिरिति । तासां प्रधानभूतानाम् ॥ २१ ॥ न ताः

तेषां चिन्तयतां राम बुद्धिरासीन्महात्मनाम् । क्षीरोदमथनं कृत्वा रसं प्राप्स्याम तत्र वै ॥ १७॥ ततो निश्चित्य मथनं योक्त्रं कृत्वा च वासुकिम् । मन्थानं मन्दरं कृत्वा ममन्थुरमितौजसः ॥ १८ ॥ अथ वर्षसहस्रेण सदण्डः सकमण्डलुः । पूर्वं धन्वन्तरिर्नाम अप्सराश्च सुवर्चसः ॥ १९ ॥ अप्सु निर्मथनादेव रसस्तस्माद्वरस्त्रियः । उत्पेतु र्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन् ॥ २० ॥ षष्टिः कोट्योऽभवंस्तासामप्सराणां सुवर्चसाम् । असङ्ख्येयास्तु काकुत्स्थ यास्तासां परिचारिकाः ॥ २१ ॥ न ताः स्म प्रतिगृह्णन्ति सर्वे ते देवदानवाः । अप्रतिग्रहणादेव तेन साधारणाः स्मृताः ॥ २२ ॥ वरुणस्य ततः कन्या वारुणी रघुनन्दन । उत्पपात महाभागा मार्गमाणा परिग्रहम् ॥२३॥

स्मेति । न ताः स्म प्रतिगृह्णन्ति न साधारण्येन प्रतिगृह्णन्ति स्मेत्यर्थः । कुतः अप्रतिग्रहणात्, को वा मम पतिरिति मार्गणाकरणादित्यर्थः । तेनासाधारण्येन परिग्रहाकरणेन ॥ २२ ॥ वरुणस्येति । वरुणस्य समुद्राधिदेवतायाः । वारुणी सुराधिदेवता । परिग्रहं ममयमिति परिग्रहस्य कर्तारम् ॥ २३॥

तेषामिति । रसम् अमृतम् प्राप्स्याम इत्यत्र इतिशब्दो द्रष्टव्यः ॥ १७ ॥ तत इति । योक्त्रम् मथनरज्जुम् ॥ १८ ॥ *अथ देवा महादेवमिति सार्द्धश्लोकमेकं वाक्यम् । प्रादुरासीदित्यर्धमेकं वाक्यम् *॥ अथ वर्षेति । अप्सराः । अजन्तत्वमार्षम् । उत्पेतुरिति शेषः ॥ १९ ॥ अप्स्विति । निर्मथनादप्सु यो रसः तस्माद्रसाद्यत उत्पेतुस्तस्मादप्सरसोऽभवन्नित्यन्वयः ॥ २०-२२ ॥ वरुणस्येति । वारुणी सुराधिदेवता । परिग्रहं केनचित्स्वीकारम् ॥ २३ ॥ २४ ॥

---

१ अथ वर्षसहस्रेण योक्त्रसर्पशिरांसि च । वमन्त्यतिविषं तत्र ददंशुर्दशनैः शिलाः ॥ उत्पपाताग्निसङ्काशं हालाहलमहाविषम् । तेन दग्धं जगत्सर्वं सदेवासुरमानुषम् । *अथ देवा महादेवं शङ्करं शरणार्थिनः । जग्मुः पशुपतिं रुद्रं त्राहित्राहीति तुष्टुवुः । एवमुक्तस्ततो देवैर्देवदेवेश्वरः प्रभुः । प्रादुरासीत्ततोऽत्रैव शङ्खचक्रधरो हरिः । उवाचैनं स्मितं कृत्वा रुद्रं शूलभृतं हरिः ॥ दैवतैर्मथ्यमाने तु यत्पूर्वं समुपस्थितम् । तत्त्वदीयं सुरश्रेष्ठ सुराणामग्रजोऽसि यत् ॥ अग्रपूजामिमां मत्वा गृहाणेदं विषं प्रभो । इत्युक्त्वा च सुरश्रेष्ठस्तत्रैवान्तरधीयत । देवतानां भयं दृष्ट्वा श्रुत्वा वाक्यं तु शार्ङ्गिणः । हालाहलविषं घोरं स जग्राहामृतोपमम् ॥ देवान्विसृज्य देवेशो जगाम भगवान् हरः । ततो देवासुराः सर्वे ममन्थू रघुनन्दन । प्रविवेशाथ पातालं मन्थानः पर्वतोऽनघ । ततो देवाः सगन्धर्वास्तुष्टुवुर्मधुसूदनम् । त्वं गतिः सर्वभूतानां विशेषेण दिवौकसाम् । पालयास्मान्महाबाहो गिरिमुद्धर्तुमर्हसि । इति श्रुत्वा हृषीकेशः कामठं रूपमास्थितः । पर्वतं पृष्ठतः कृत्वा शिश्ये तत्रोदधौ हरिः । पर्वताग्रं तु लोकात्मा हस्तेनाक्रम्य केशवः । देवानां मध्यतः स्थित्वा ममन्थ पुरुषोत्तमः ॥ उदतिष्ठत्सधर्मात्मा आयुर्वेदमयः पुमान् । इत्यधिकः पाठः । २ अप्रतिग्रहणात्ताश्च सर्वाः साधरणाः स्मृताः । इति पाठान्तरम् ।

दितेरिति । स्पष्टम् ॥ २४ ॥ प्रसङ्गात्सुरासुरशब्दौ निर्वक्ति–असुरा इति । तेन सुरायाः परिग्रहणेन सुराः । अर्शआदित्वादजन्तः । पिष्टादिविकृतिरेव सुरा निन्द्या । हृष्टाः पुलकिताः ॥ २५ ॥ उच्चैःश्रवा इति । उत्तमं पूर्वोत्पन्नेभ्यः श्रेष्ठम् ॥ २६ ॥ अथेति । तस्य कृते, अमृतस्य ग्रहणार्थमित्यर्थः । कुलक्षयः उभयपक्षेऽपि सञ्जातविनाशः । तदेवोपपादयति–अदितेरित्यादिना ॥ २७ ॥ एकत इति । अनन्तरमसुरा एकतः एकतामभ्यागमन् बलवृद्धय इति भावः ॥ २८ ॥ यदेति । मोहिनीं काममोहजननीम् । मायाम् आश्चर्यशक्तिम् । आस्थाय अवलम्ब्य । स्वमाययाद्भुतयोषिदाकृतिं परिगृह्य तद्रूपेण तान् वञ्चयित्वा तेभ्योऽमृतमहरदित्यर्थः । यद्वा सर्वमोहकरीमन्तर्द्धानशक्तिमास्थायामृतमाहरदित्यर्थः । पुराणान्तरवृत्तान्तः कल्पभेदेनेतिबोध्यम् ॥ २९ ॥ य इति । अत्र सन्धिरार्षः । ये असुराः अक्षयम् अस्ति जायते परिणमते विवर्द्धते अपक्षीयते विनश्यतीत्युक्तषड्भावविकारैः शून्यम् । पुरुषोत्तमं सर्वपुरुषेपूत्तमम् । विष्णुमभिमुखं गताः अभिमुखतया प्रातिकूल्येन गताः । ते विष्णुना सम्पिष्टाः चूर्णिताः । संविष्टा इतिपाठे-ये असुमभिमुखं गताः शरणागताः देवास्ते युद्धे संविष्टाः आविष्टाः, आप्यायितबला आसन्नित्यर्थः ॥ ३० ॥

दितेः पुत्रा न तां राम जगृहुर्वरुणात्मजाम् । अदितेस्तु सुता वीर जगृहुस्तामनिन्दताम् ॥ २४ ॥ असुरास्तेन दैतेयाः सुरास्तेनादितेः सुताः । हृष्टाः प्रमुदिताश्चासन् वारुणीग्रहणात्सुराः ॥ २५ ॥ उच्चैश्श्रवा हयश्रेष्ठो मणिरत्नं च कौस्तुभम् । उदतिष्ठन्नरश्रेष्ठ तथैवामृतमुत्तमम् ॥ २६ ॥ अथ तस्य कृते राम महानासीत्कुलक्षयः । अदितेस्तु ततः पुत्रा दितेः पुत्रानसूदयन् ॥ २७ ॥ एकतोऽभ्यागमन् सर्वे ह्यसुरा राक्षसैस्सह । युद्धमासीन्महाघोरं वीर त्रैलोक्यमोहनम् ॥ २८ ॥ यदा क्षयं गतं सर्वं तदा विष्णुर्महाबलः । अमृतं सोऽहरत्तूर्णं मायामास्थाय मोहिनीम् ॥ २९ ॥ ये गताभिमुखं विष्णुमक्षयं पुरुषोत्तमम् । सम्पिष्टास्ते तदा युद्धे विष्णुना प्रभविष्णुना ॥ ३० ॥

असुरा इति । तेन सुराया अपरिग्रहेणासुराः । अर्श आदित्वादच्प्रत्ययः ॥ २५–२७ ॥ एकत इति । एकतोऽभ्यागमन् बलवृद्धये इति भावः । वीरेति रामसम्बोधनम् । मोहनम् भयावहम् ॥ २८ ॥ यदेति । मोहिनीं मोहजननीम्, मायामास्थाय स्वमाययाद्भुतयोषिदाकृतिं परिगृह्य ॥ २९ ॥ य इति । अक्षयम् षड्भावविकारशून्यम् । पुरुषोत्तमं क्षराक्षरपुरुषेभ्यः उत्तमम् ॥ ३० ॥

अदितिरिति । दितेः पुत्रान्, अवशिष्टानितिशेषः । यद्वा अदितेरात्मजा आप्यायितबलाः सन्तः तस्मिन् दैतेयादित्ययोर्देवासुरयोर्युद्धे असुरान्निजघ्निरे ॥ ३१ ॥ निहत्येति । चकारादमृतमपीत्यर्थः ॥ ३२ ॥ अस्मिन्सर्गे द्वात्रिंशत् श्लोकाः । अन्ये कल्पिताः । यद्यप्यत्र कालकूटाद्युत्पत्तिरपेक्षिता तथाप्यु त्तरकथाशेषत्वेन सर्वासुरक्षय एव प्रधानतयोपात्त इति बोध्यम् ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्ड

अदितेरात्मजा वीरा दितेः पुत्रान्निजघ्निरे । तस्मिन् युद्धे महाघोरे दैतेयादित्ययोर्भृशम् ॥ ३१ ॥ निहत्य दिति पुत्रांश्च राज्यं प्राप्य पुरन्दरः । शशास मुदितो लोकान् सर्षिसङ्घान् सचारणान् ॥ ३२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥ हतेषु तेषु पुत्रेषु दितिः परमदुःखिता । मारीचं काश्यपं राम भर्त्तारमिदमब्रवीत् ॥ १ ॥ हतपुत्रास्मि भगवंस्तव पुत्रैर्महाबलैः । शक्रहन्तारमिच्छामि पुत्रं दीर्घ तपोर्जितम् ॥ २ ॥ साहं तपश्चरिष्यामि गर्भं मे दातुमर्हसि[1] । ईश्वरं शक्रहन्तारं त्वमनुज्ञातुमर्हसि ॥ ३ ॥ तस्यास्त द्वचनं श्रुत्वा मारीचः काश्यपस्तदा । प्रत्युवाच महातेजा दितिं परमदुःखिताम् ॥ ४ ॥ एवं भवतु भद्रं ते शुचि र्भव तपोधने । जनयिष्यसि पुत्रं त्वं शक्रहन्तारमाहवे ॥ ५ ॥ पूर्णे वर्षसहस्रे तु शुचिर्यदि भविष्यसि । पुत्रं त्रैलोक्यभर्तारं मत्तस्त्वं जनयिष्यसि ॥ ६ ॥

व्याख्याने पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥ विष्णुपक्षविरोधे महानपि यत्नो विफलः स्यादित्याह षट्चत्वारिंशे–हतेष्वित्यादि । मारीचं मरीचिपुत्रम् ॥ १ ॥ हतेति । तपोर्जितं तपसा ऊर्जितं दृढम् । आर्षः सन्धिः ॥ २ ॥ साहमिति । गर्भं पुत्रम् । ईश्वरं त्रैलोक्यनियन्तारम् । ईदृशमितिपाठेऽप्ययमर्थो विवक्षितः । अनुज्ञातुं, तप इति शेषः । भर्त्रनुज्ञां विना तपसि स्त्रिया अस्वातन्त्र्यादितिभावः ॥ ३ ॥ तस्या इति ॥ ४ ॥ एवमिति । शुचिर्भव, यावत्

अदितेरिति । दैतेयादित्ययोः-असुरसुरवर्गयोः ॥ ३१ ॥ ३२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥ हतेष्विति । मारीचं मरीचिब्रह्मपुत्रम् ॥ १–६ ॥

---

१ मर्हसि । बलवन्तं महेष्वासं स्थितिज्ञं समदर्शिनम् । ईश्वरं । इतिपाठान्तरम् ।

पुत्रोत्पत्तीति शेषः ॥५॥ पूर्ण इति । मत्तः मदनुग्रहादित्यर्थः ॥ ६ ॥ एवमिति । ममार्जेत्याश्वासनप्रकारः । ततः मार्जनानन्तरम् । उदरं समालभ्य स्वस्ति पुत्रोत्पत्तिरूपं शुभं भवत्वित्युक्त्वानुगृह्य स काश्यपस्तपसे ययौ ॥ ७ ॥ गत इति । कुशप्लवनं विशालायाः पूर्वस्थानम् ॥ ८ ॥ तप इति । गुणसम्पदा विनयादिसमृद्ध्या ॥ ९ ॥ अग्निमिति । परिचर्याप्रकारः ॥ १० ॥ गात्रेति । मातृत्वात् गात्रसंवहनानि, श्रमापनयनैः व्यजनवीजनादिभि

एवमुक्त्वा महातेजाः पाणिना स ममार्ज ताम् । समालभ्य ततः स्वस्तीत्युक्त्वा स तपसे ययौ ॥ ७ ॥ गते तस्मिन्नरश्रेष्ठ दितिः परमहर्षिता । कुशप्लवनमासाद्य तपस्तेपे सुदारुणम् ॥ ८ ॥ तपस्तस्यां हि कुर्वन्त्यां परिचर्यां चकार ह । सहस्राक्षो नरश्रेष्ठ परया गुणसम्पदा ॥ ९ ॥ अग्निं कुशान् काष्ठमपः फलं मूलं तथैव च । न्यवेदयत् सहस्राक्षो यच्चान्यदपि कांक्षितम् ॥ १० ॥ गात्रसंवहनैश्चैव श्रमापनयनैस्तथा । शक्रः सर्वेषु कालेषु दितिं परिचचार ह ॥ ११ ॥ अथ वर्षसहस्रे तु दशोने रघुनन्दन । दितिः परमसम्प्रीता सहस्राक्षमथाब्रवीत् ॥ १२ ॥ याचितेन सुरश्रेष्ठ पित्रा तव महात्मना । वरो वर्षसहस्रान्ते मम दत्तः सुतं प्रति ॥ १३ ॥ तपश्चरन्त्या वर्षाणि दश वीर्यवतां वर । अवशिष्टानि भद्रं ते भ्रातरं द्रक्ष्यसे ततः ॥ १४ ॥ तमहं त्वत्कृते पुत्रं समाधास्ये जयोत्सुकम् । त्रैलोक्यविजयं पुत्र सह भोक्ष्यसि विज्वरः ॥ १५ ॥ एवमुक्त्वा दितिः शक्रं प्राप्ते मध्यं दिवाकरे । निद्रयापहृता देवी पादौ कृत्वाथ शीर्षतः ॥ १६ ॥

रिति शेषः ॥ ११ ॥ अथेति । दशोने दशवर्षोने ॥ १२ ॥ याचितेनेति । शुश्रूषाकृतप्रीत्यतिशयाद्वैरं विस्मृतवतीति भावः ॥ १३ ॥ तप इति । ततः दशवर्षान्ते ॥ १४ ॥ तमिति । समाधास्ये विगतवैरं भ्रातृस्नेहवन्तमेव करिष्यामीत्यर्थः । त्रैलोक्यविजयं त्वद्भ्रातृकृतमितिशेषः । अमोघभर्त्रनुग्रहेणा प्रतिबन्धसुतोत्पत्तिं मन्वाना ऋजुतया शुश्रूषाफलमुक्तवती ॥ १५ ॥ एवमिति । मध्यं गगनमध्यम् । शीर्षतः शिरसि पादौ कृत्वा, स्थितेतिशेषः ।



एवमुक्त्वेति । पाणिना समालभ्य स्पृष्ट्वा । ममार्ज आश्वासयामास ॥७॥ गत इति । कुशप्लवनं विशालायाः पूर्वस्थानं तपोवनम्॥८॥तप इति । गुणसम्पदा शुश्रूषोपयोगिगुणसमृद्ध्या ॥९॥१० ॥ गात्रेति । सर्वेषु कालेषु परिचचार, तस्या अशुचित्वप्रतीक्षयेति भावः ॥११॥ अथेति । दशोने दशवर्षोने ॥ १२–१५ ॥ एवमिति ।

मध्याह्नशयनपरिग्रहप्रसङ्गाभावेनासन एवोपविशन्त्यास्तस्या निद्रापारवश्येन नम्रं शिरः पादयोः संसक्तमभवदित्यर्थः ॥ १६ ॥ दृष्ट्वेति । पादतः कृतमूर्द्धजां पादौ कृत्वाथ शीर्षत इत्यस्य विवरणम्, अत एव अशुचिं तां दृष्ट्वा शिरःस्थाने कृतौ पादौ शिरःस्पृष्टौ पादाविति मुमोद, तेन जहास च । यद्वा प्राते मध्यं दिवाकर इत्यनेन दिवास्वापरूपाशौचं दर्शितम् । शीर्षतः शिरःस्थाने, शिरःस्थान इत्यनुवादात् । पादतः पादस्थाने । शयनपरि

दृष्ट्वा तामशुचिं शक्रः पादतः कृतमूर्द्धजाम् । शिरःस्थाने कृतौ पादौ जहास च मुमोद च ॥ १७ ॥ तस्याः शरीरविवरं विवेश च पुरन्दरः । गर्भं च सप्तधा राम बिभेद परमात्मवान् ॥ १८ ॥ भिद्यमानस्ततो गर्भो वज्रेण शतपर्वणा । रुरोद सुस्वरं राम ततो दितिरबुध्यत ॥ १९ ॥ मा रुदो मारुदश्चेति गर्भं शक्रोऽभ्यभाषत । बिभेद च महातेजा रुदन्तमपि वासवः ॥ २० ॥ न हन्तव्यो न हन्तव्य इत्येवं दितिरब्रवीत् । निष्पपात ततः शक्रो मातुर्वचनगौरवात् ॥ २१ ॥ प्राञ्जलिर्वज्रसहितो दितिं शक्रोऽभ्यभाषत । अशुचिर्देवि सुप्तासि पादयोः कृतमूर्द्धजा ॥ २२ ॥

ग्रहाभावेऽपि कृष्णाजिनाद्यास्तरणे पादस्थाने शिरः शिरःस्थाने च पादौ कृत्वा सुप्तवतीत्यर्थः । पादोपधाने शीर्षं शीर्षोपधाने पादौ च कृत्वेत्यर्थः । रन्ध्रान्वेषणफलं जातमिति मोदः, वृथागर्वितेयमिति हासः ॥ १७ ॥ तस्या इति । शरीरविवरं योनिविवरम् । आत्मवान् धैर्यवान् ॥ १८ ॥ भिद्यमान इति । शतपर्वणा शतकोटिना ॥ १९ ॥ मा रुद इति । "रुदिर् अश्रुविमोचने" इत्यस्माल्लुङ् । माङ्योगादडभावः ॥ २० ॥ न हन्तव्य इति । न

दिवाकरे मध्यं प्राप्ते सति । शीर्षतः शय्यायां शीर्षस्थाने पादौ कृत्वा निद्रयापहृता निद्रया गृहीतेत्यर्थः । ( अनेन दिवास्वापरूपपापेन शय्यापादस्थाने मस्तककरणेन चाशुचित्वं सूचितम् । केचित्तु उपविष्टाया एव प्रह्वतया पादपर्यन्तं शिरस्सम्बन्धेन शीर्षे पादसम्बन्धः । तेन ब्राह्मणस्य शूद्रस्पर्श इव शिरसः पादस्पर्शेऽशुचित्वं सूचितम् । तपसि स्थितायाश्शय्यासम्बन्धाभावेन पूर्वव्याख्याया अयुक्तत्वादित्याहुः । परे तु भूशयनेऽपि दक्षिणपूर्वदिशोः शिरस्थापनयोग्यतायाः स्मृतिषूक्तेः तद्वैपरीत्येन शयनस्याशुचित्वसूचकत्वमस्यैवेत्याहुः ) ॥१६॥ दृष्ट्वेति । शिरःस्थाने कृतौ पादौ, पादतः पादस्थाने कृतमूर्द्धजां अत एवाशुचिं तां दृष्ट्वा

पुत्रोत्पत्तीति शेषः ॥५॥ पूर्ण इति । मत्तः मदनुग्रहादित्यर्थः ॥ ६ ॥ एवमिति । ममार्जेत्याश्वासनप्रकारः । ततः मार्जनानन्तरम् । उदरं समालभ्य स्वस्ति पुत्रोत्पत्तिरूपं शुभं भवत्वित्युक्त्वानुगृह्य स काश्यपस्तपसे ययौ ॥ ७ ॥ गत इति । कुशप्लवनं विशालायाः पूर्वस्थानम् ॥ ८ ॥ तप इति । गुणसम्पदा विनयादिसमृद्ध्या ॥ ९ ॥ अग्निमिति । परिचर्याप्रकारः ॥ १० ॥ गात्रेति । मातृत्वात् गात्रसंवहनानि, श्रमापनयनैः व्यजनवीजनादिभि

एवमुक्त्वा महातेजाः पाणिना स ममार्ज ताम् । समालभ्य ततः स्वस्तीत्युक्त्वा स तपसे ययौ ॥ ७ ॥ गते तस्मिन्नरश्रेष्ठ दितिः परमहर्षिता । कुशप्लवनमासाद्य तपस्तेपे सुदारुणम् ॥ ८ ॥ तपस्तस्यां हि कुर्वन्त्यां परिचर्यां चकार ह । सहस्राक्षो नरश्रेष्ठ परया गुणसम्पदा ॥ ९ ॥ अग्निं कुशान् काष्ठमपः फलं मूलं तथैव च । न्यवेदयत् सहस्राक्षो यच्चान्यदपि कांक्षितम् ॥ १० ॥ गात्रसंवहनैश्चैव श्रमापनयनैस्तथा । शक्रः सर्वेषु कालेषु दितिं परिचचार ह ॥ ११ ॥ अथ वर्षसहस्रे तु दशोने रघुनन्दन । दितिः परमसम्प्रीता सहस्राक्षमथाब्रवीत् ॥ १२ ॥ याचितेन सुरश्रेष्ठ पित्रा तव महात्मना । वरो वर्षसहस्रान्ते मम दत्तः सुतं प्रति ॥ १३ ॥ तपश्चरन्त्या वर्षाणि दश वीर्यवतां वर । अवशिष्टानि भद्रं ते भ्रातरं द्रक्ष्यसे ततः ॥ १४ ॥ तमहं त्वत्कृते पुत्रं समाधास्ये जयोत्सुकम् । त्रैलोक्यविजयं पुत्रं सह भोक्ष्यसि विज्वरः ॥ १५ ॥ एवमुक्त्वा दितिः शक्रं प्राप्ते मध्यं दिवाकरे । निद्रयापहृता देवी पादौ कृत्वाथ शीर्षतः ॥ १६ ॥

रिति शेषः ॥ ११ ॥ अथेति । दशोने दशवर्षोने ॥ १२ ॥ याचितेनेति । शुश्रूषाकृतप्रीत्यतिशयाद्वैरं विस्मृतवतीति भावः ॥ १३ ॥ तप इति । ततः दशवर्षान्ते ॥ १४ ॥ तमिति । समाधास्ये विगतवैरं भ्रातृस्नेहवन्तमेव करिष्यामीत्यर्थः । त्रैलोक्यविजयं त्वद्भ्रातृकृतमितिशेषः । अमोघभर्त्रनुग्रहेणा प्रतिबन्धसुतोत्पत्तिं मन्वाना ऋजुतया शुश्रूषाफलमुक्तवती ॥ १५ ॥ एवमिति । मध्यं गगनमध्यम् । शीर्षतः शिरसि पादौ कृत्वा, स्थितेतिशेषः ।

एवमुक्त्वेति । पाणिना समालभ्य स्पृष्ट्वा । ममार्ज आश्वासयामास ॥७॥ गत इति । कुशप्लवनं विशालायाः पूर्वस्थानं तपोवनम्॥८॥तप इति । गुणसम्पदा शुश्रूषोपयोगिगुणसमृद्ध्या ॥९॥१० ॥ गात्रेति । सर्वेषु कालेषु परिचचार, तस्या अशुचित्वप्रतीक्षयेति भावः ॥११॥ अथेति । दशोने दशवर्षोने ॥ १२-१५ ॥ एवमिति ।

मध्याह्नशयनपरिग्रहप्रसङ्गाभावेनासन एवोपविशन्त्यास्तस्या निद्रापारवश्येन नम्रं शिरः पादयोः संसक्तमभवदित्यर्थः ॥ १६ ॥ दृष्ट्वेति । पादतः कृत मूर्द्धजां पादौ कृत्वाथ शीर्षत इत्यस्य विवरणम्, अत एव अशुचिं तां दृष्ट्वा शिरःस्थाने कृतौ पादौ शिरःस्पृष्टौ पादाविति मुमोद, तेन जहास च । यद्वा प्राप्ते मध्यं दिवाकर इत्यनेन दिवास्वापरूपाशौचं दर्शितम् । शीर्षतः शिरःस्थाने, शिरःस्थान इत्यनुवादात् । पादतः पादस्थाने । शयनपरि

दृष्ट्वा तामशुचिं शक्रः पादतः कृतमूर्द्धजाम् । शिरःस्थाने कृतौ पादौ जहास च मुमोद च ॥ १७ ॥ तस्याः शरीरविवरं विवेश च पुरन्दरः । गर्भं च सप्तधा राम बिभेद परमात्मवान् ॥ १८ ॥ भिद्यमानस्ततो गर्भो वज्रेण शतपर्वणा । रुरोद सुस्वरं राम ततो दितिरबुध्यत ॥ १९ ॥ मा रुदो मारुदश्चेति गर्भं शक्रोऽभ्यभाषत । बिभेद च महातेजा रुदन्तमपि वासवः ॥ २० ॥ न हन्तव्यो न हन्तव्य इत्येवं दितिरब्रवीत् । निष्पपात ततः शक्रो मातुर्वचनगौरवात् ॥ २१ ॥ प्राञ्जलिर्वज्रसहितो दितिं शक्रोऽभ्यभाषत । अशुचिर्देवि सुप्तासि पादयोः कृतमूर्द्धजा ॥ २२ ॥

ग्रहाभावेऽपि कृष्णाजिनाद्यास्तरणे पादस्थाने शिरः शिरःस्थाने च पादौ कृत्वा सुप्तवतीत्यर्थः । पादोपधाने शीर्षं शीर्षोपधाने पादौ च कृत्वेत्यर्थः । रन्ध्रान्वेषणफलं जातमिति मोदः, वृथागर्वितेयमिति हासः ॥ १७ ॥ तस्या इति । शरीरविवरं योनिविवरम् । आत्मवान् धैर्यवान् ॥ १८ ॥ भिद्यमान इति । शतपर्वणा शतकोटिना ॥ १९ ॥ मा रुद इति । " रुदिर् अश्रुविमोचने " इत्यस्माल्लुङ् । माङ्योगादडभावः ॥ २० ॥ न हन्तव्य इति । न

दिवाकरे मध्यं प्राप्ते सति । शीर्षतः शय्यायां शीर्षस्थाने पादौ कृत्वा निद्रयापहृता निद्रया गृहीतेत्यर्थः । ( अनेन दिवास्वापरूपपापेन शय्यापादस्थाने मस्तककरणेन चाशुचित्वं सूचितम् । केचित्तु उपविष्टाया एव प्रह्वतया पादपर्यन्तं शिरस्सम्बन्धेन शीर्षे पादसम्बन्धः । तेन ब्राह्मणस्य शूद्रस्पर्श इव शिरसः पादस्पर्शेऽशुचित्वं सूचितम् । तपसि स्थितायाश्शय्यासम्बन्धाभावेन पूर्वव्याख्याया अयुक्तत्वादित्याहुः । परे तु भूशयनेऽपि दक्षिणपूर्वदिशोः शिरस्स्थापनयोग्यतायाः स्मृतिषूक्तेः तद्वैपरीत्येन शयनस्याशुचित्वसूचकत्वमस्यैवेत्याहुः ) ॥१६॥ दृष्ट्वेति । शिरःस्थाने कृतौ पादौ, पादतः पादस्थाने कृतमूर्द्धजां अत एवाशुचिं तां दृष्ट्वा

हन्तव्यः। भेदने कृतेऽपि प्राणवियोजनं माकुर्वित्यर्थः॥२१॥ प्राञ्जलिरिति॥२२॥ तदिति। अन्तरमवकाशम्। क्षन्तुमर्हसि 'स्वहिंसापरां गामपि हिंस्यात्' इतिन्यायेन युक्तत्वादितिभावः॥२३॥ इति श्रीगोविन्दराज०श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्चत्वारिंशः सर्गः॥ ४६॥ सप्तधेत्यादि। दुराधर्षं दुर्जयम्॥ १॥ ममेति। अपराधात् प्रमादात्। विफलीकृतः शकलीकृतः॥ २॥ प्रियं त्विति। गर्भविपर्यये

तदन्तरमहं लब्ध्वा शक्रहन्तारमाहवे। अभिदं सप्तधा देवि तन्मे त्वं क्षन्तुमर्हसि॥ २३॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षट्चत्वारिंशः सर्गः॥ ४६॥

सप्तधा तु कृते गर्भे दितिः परमदुःखिता। सहस्राक्षं दुराधर्षं वाक्यं सानुनयाब्रवीत्॥ १॥ ममापराधाद् गर्भोऽयं सप्तधा विफलीकृतः। नापराधोऽस्ति देवेश तवात्र बलसूदन॥ २॥ प्रियं तु कर्तुमिच्छामि मम गर्भविपर्यये। मरुतां सप्त सप्तानां स्थानपाला भवन्त्विमे॥ ३॥ वातस्कन्धा इमे सप्त चरन्तु दिवि पुत्रक। मारुता इति विख्याता दिव्यरूपा ममात्मजाः॥ ४॥ ब्रह्मलोकं चरत्वेक इन्द्रलोकं तथापरः। दिवि वायुरिति ख्यातस्तृतीयोऽपि महायशाः॥ ५॥

उपहतगर्भविषये। प्रियं श्रेयः कर्तुमिच्छामि। तदेव श्रेय आह-मरुतामिति। सप्तानां मरुतां वातस्कन्धानाम् इमे सप्तभागाः स्थानपालाः लोकपालाः भवन्तु। सप्तमरुतश्चोक्ताः-"गगनस्पर्शनो वायुरनिलश्च तथापरः। प्राणः प्राणेश्वरो जीव इत्येते सप्त मारुताः॥" इति। विष्णुपुराणे तु "आवहप्रवहसंवहोद्वहविवहपरिवहपरावहाः सप्तमारुताः" इत्युक्तम्॥ ३॥ वातेति। वातस्कन्धाः वातस्कन्धाभिमानिदेवताः। मरुदभिमानिदेवतात्वान्मारुता इति विख्याताः। त्वत्कृतेन मारुद इत्युच्चारणेन इति विख्याताः। पृषोदरादित्वाद्वर्णव्यत्यय इत्याहुः॥ ४॥ सप्तमरुतः कुत्र वर्त्तन्ते तेषां स्थान



जहास च मुमोद चेत्यन्वयः। तपश्चर्या वृथा गमितेति हासः। रन्ध्रान्वेषणं सफलं जातमिति मोदः॥ १७-२३॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां षट्चत्वारिंशः सर्गः॥ ४६॥ १॥२॥ प्रियमिति। 'मरुतां सप्त सप्तानां स्थानपाला भवन्त्विमे' मरुतामावहादीनां सप्तानां

पाळनं च कथमित्यत्राह–अहेति । दिवि अन्तरिक्षे विष्णुपदाख्ये विष्णुलोके । चरन्त्वित्यनुषङ्गः ॥ ५ ॥ चत्वार इति सार्धश्लोकः ॥ ६ ॥ तस्या इति । दितिगर्भखण्डनेन सहस्राक्षत्वादीनि सिद्धानीतिभावः ॥ ७ ॥ सर्वमिति । यथोक्तमित्यस्य विवरणं विचरिष्यन्तीति ॥ ८ ॥ एवमिति । नः अस्माभि

चत्वारस्तु सुरश्रेष्ठ दिशो वै तव शासनात् । सञ्चरिष्यन्तु भद्रं ते देवभूता ममात्मजाः । त्वत्कृतेनैव नाम्ना च मारुता इति विश्रुताः ॥ ६ ॥ तस्यास्तद्वचनं श्रुत्वा सहस्राक्षः पुरन्दरः । उवाच प्राञ्जलिर्वाक्यं दितिं बलनिषूदनः ॥ ७ ॥ सर्वमेतद्यथोक्तं ते भविष्यति न संशयः । विचरिष्यन्ति भद्रं ते देवरूपास्तवात्मजाः ॥ ८ ॥ एवं तौ निश्चयं कृत्वा मातापुत्रौ तपोवने । जग्मतुस्त्रिदिवं राम कृतार्थाविति नः श्रुतम् ॥ ९ ॥ एष देशस्स काकुत्स्थ महेन्द्राध्युषितः पुरा । दितिं यत्र तपस्सिद्धामेवं परिचचार सः ॥ १० ॥ इक्ष्वाकोस्तु नरव्याघ्र पुत्रः परमधार्मिकः । अलम्बुसायामुत्पन्नो विशाल इति विश्रुतः ॥ ११ ॥ तेन चासीदिह स्थाने विशालेति पुरी कृता । विशालस्य सुतो राम हेमचन्द्रो महाबलः ॥ १२ ॥ सुचन्द्र इति विख्यातो हेमचन्द्रादनन्तरः । सुचन्द्रतनयो राम धूम्राश्व इति विश्रुतः ॥ १३ ॥ धूम्राश्वतनयश्चापि सृञ्जयः समपद्यत । सृञ्जयस्य सुतः श्रीमान् सहदेवः प्रतापवान् ॥ १४ ॥ कुशाश्वः सहदेवस्य पुत्रः परमधार्मिकः । कुशाश्वस्य महातेजाः सोमदत्तः प्रतापवान् ॥ १५ ॥

रित्यर्थः । "क्तस्य च वर्तमाने" इति षष्ठी ॥ ९ ॥ प्रकृतमुपसंहरति–एष इति । स एष इत्यन्वयः । सः इन्द्रः ॥ १० ॥ अथ कतरो राजवंश इति द्वितीयप्रश्नस्योत्तरमाह–इक्ष्वाकोरित्यादिना ॥ ११–१३ ॥ धूम्रेति । सृञ्जयः समपद्यत सृञ्जयनामा आसीत् ॥ १४ ॥ १५ ॥

मम पुत्रकाः इमे सप्तस्थानपालाः स्कन्धरक्षिणो भवन्तु ॥ ३ ॥ वातस्कन्धा इति । वातस्कन्धाः वाताभिमानिन्यो देवताः ॥ ४ ॥ ५ ॥ त्वत्कृतेनेति । यतस्त्वया मारुद इत्युक्तम् अतो मारुता इति संज्ञास्तेषामिति भावः ॥ ६–९ ॥ अस्तु तर्हि किं तत्राह–एष देश इति । यस्य मे मम । विषयं देशं गतः । आवहादीनां नामानि–"आवहः प्रवहश्चैव संवहश्चोद्वहस्तथा । विवहाख्यः परिवहः परावह इति क्रमात् । सप्तैते मारुतस्कन्धा महर्षिभिरुदाहृताः । आवहो वर्तयेद्वायुर्मेघोल्का

सोमदत्तस्येति अर्द्धमेकम् ॥ १६ ॥ "उपान्वध्याङ्वसः" इत्याधारस्य कर्मत्वम् ॥ १७ ॥ कथं कतिपयैरेव पुरुषैरिदानीमिक्ष्वाकुवंश इत्यत्राह-इक्ष्वाकोरिति । विशाला निवास एषां ते वैशालिकाः । कुमुदादित्वात् ठञ् । विशालप्रार्थनामिक्ष्वाकुप्रसादनिमित्तम् ॥ १८ ॥ इहेति । वत्स्यामहे । आर्षमात्मनेपदम् ॥ १९ ॥ सुमतिरिति । प्रत्युद्गच्छत् प्रत्युदगच्छत् ॥२०॥ पूजां नेति ॥२१॥ धन्य इति । विषयं स्थानं दर्शनं च प्राप्त इत्यनुषङ्गः ।

सोमदत्तस्य पुत्रस्तु काकुत्स्थ इति विश्रुतः ॥ १६ ॥ तस्य पुत्रो महातेजाः संप्रत्येष पुरीमिमाम् । आवसत्यमरप्रख्यः सुमतिर्नाम दुर्जयः ॥ १७ ॥ इक्ष्वाकोस्तु प्रसादेन सर्वे वैशालिका नृपाः । दीर्घायुषो महात्मानो वीर्यवन्तः सुधार्मिकाः ॥ १८ ॥ इहाद्य रजनीं राम सुखं वत्स्यामहे वयम् । श्वः प्रभाते नरश्रेष्ठ जनकं द्रष्टुमर्हसि ॥ १९ ॥ सुमतिस्तु महातेजा विश्वामित्रमुपागतम् । श्रुत्वा नरवरश्रेष्ठः प्रत्यगच्छन्महायशाः ॥ २० ॥ पूजां च परमां कृत्वा सोपाध्यायः सबान्धवः । प्राञ्जलिः कुशलं पृष्ट्वा विश्वामित्रमथाब्रवीत् ॥ २१ ॥ धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे विषयं मुनिः । सम्प्राप्तो दर्शनं चैव नास्ति धन्यतरो मया ॥ २२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

पृष्ट्वा तु कुशलं तत्र परस्परसमागमे । कथान्ते सुमतिर्वाक्यं व्याजहार महामुनिम् ॥ १ ॥

मया सदृश इतिशेषः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ अथ रामस्य परमपावनत्वं दर्शयत्यष्टचत्वारिंशे-पृष्ट्वा त्वित्यादि । परस्परेत्यविभक्तिकनिर्देशः । परस्परं कुशलं पृष्ट्वा कथान्ते तदुक्तशान्ते इति योजना ॥ १ ॥



वृष्टिविद्युतः । वर्तयेत्प्रवहश्चैव तथा मार्तण्डमण्डलम् । संवहो मारुतस्कन्धस्तथा शीतांशुमण्डलम् । वर्तयेदुद्वहश्चापि तथा नक्षत्रमण्डलम् । पञ्चमो विवहाख्यश्च तथैव ग्रहमण्डलम् । सप्तर्षिचक्रं स्वर्गङ्गां षष्ठः परिवहस्तथा । परावहस्तथा वायुर्वर्तयेद्ध्रुवमण्डलम् ॥" इति ॥ १०--२२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां सप्तचत्वारिंशस्सर्गः ॥ ४७ ॥ पृष्ट्वेति । सुमतिर्नाम राजा तत्र परस्परसमागमे सति कुशलं पृष्ट्वा कथान्ते महामुनिं

इमावित्यादिपञ्चश्लोकी । इमौ कुमारौ कोऽयं कुमारभाव इति विस्मयते । दृष्टिदोषो माभूदित्याह–भद्रं त इति । देवतुल्य[illegible]ाक्रमौ संस्थानविशेषदर्शनेन नूनमेतौ विष्णुतुल्यपराक्रमाविति मन्यामहे । गजसिंहगती वीरौ शार्दूलवृषभोपमौ । चतुर्गतित्वमुच्यते; [illegible]ांभीर्य गमने गजतुल्यौ, पराभिभवनार्हगमने सिंहतुल्यौ, भयङ्करगमने शार्दूलतुल्यौ; सगर्वगमने वृषभसदृशावित्यर्थः । विशेषेण रावयतः [illegible]त्रूनिति वीरौ, अनुभवितॄणां विरोधिनिवर्तकावित्यर्थः । पद्मपत्रविशालाक्षौ द्रष्टॄणामाकर्षकावयवविशेषौ । नयनसौन्दर्यं हि लावण्यपरमकाष्ठा । खड्गतूणी धनुर्धराविति आभरणकोटौ आयुधकोटौ च एषामन्तर्भावः । अश्विनाविव रूपेण–रूपवत्सु अश्विनौ प्रसिद्धौ । रूपेणासाधारणधर्मेण ताविव

इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ । गजसिंहगती वीरौ शार्दूलवृषभोपमौ ॥ २ ॥ पद्मपत्रविशालाक्षौ खड्गतूणी धनुर्द्धरौ । अश्विनाविव रूपेण समुपस्थितयौवनौ ॥ ३ ॥ यदृच्छयैव गां प्राप्तौ देवलोकादिवामरौ । कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥४॥ भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् । परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः ॥५॥

स्थितौ । समुपस्थितयौवनौ रूपानुरूपं प्रादुर्भवद्यौवनौ । यदृच्छयैव भाग्यवशादेव । देवलोकाद् गां भुवं प्राप्तौ अमरौ कौचिद्देवविशेषाविव स्थितौ, तेजसा देवकुमारतुल्यावित्यर्थः । एतत्तेजोविशेषविलोकनेनैतौ मर्त्यावपि अमर्त्याविति प्रतिभातीतिभावः । कथं पद्भ्याम् इह प्राप्तौ अतीव कोमलाभ्यां पद्भ्यामिह दुर्गमे पथि कथं प्राप्तावित्युदरं परिस्पृशति । किमर्थम् एतद्रूपदर्शनेनैवावाप्तसमस्तकामाविति निश्चिनुमः, कस्य वा पुत्रा वित्यर्थः । यद्वा कस्य पुरुषस्य कतमप्रयोजनाय इह प्राप्तावित्यर्थः । मुने ! सर्वज्ञो भवान् इममर्थं जानात्येवेत्यर्थः । चन्द्रसूर्यावम्बरमिव इमं देशं भूषयन्तौ शैत्यप्रतापाभ्यामुभावपि चन्द्रसूर्यतुल्यौ । अयं लोको विष्णुपदमासीदितिभावः । भूषयन्तौ; निजतेजसेतिभावः । प्रमाणं शरीरौन्नत्यादि, इङ्गितं अन्तर्गतभावसूचकस्मितादि, चेष्टितं गमनभाषणविलोकनादि एतैः परस्परसदृशौ तुल्यपुरुषान्तराभावात् । नरश्रेष्ठावपि दुर्गमे पथि किमर्थं संप्राप्तौ । पूर्वं पद्भ्यां कथं प्राप्तावित्युक्तम्, संप्रति दुर्गमं वनं किमर्थं प्राप्तावित्युच्यते । वरायुधधरौ आयुधश्रेष्ठधनुरादिधरौ, पूर्वमाभरणान्वयेन

विश्वामित्रं प्रति व्याजहार । नयनानन्दकस्य श्रीरामस्य प्रष्टुं योग्यतया परस्परकुशलप्रश्नं संक्षिप्य उवाचेत्यर्थः ॥१॥ इमावित्यारभ्य श्रोतुमिच्छामि तत्त्वत इत्यन्तमेकं वाक्यम् । देवतुल्यपराक्रमौ इन्द्रतुल्यपराक्रमौ । गजसिंहगती गजवद्गम्भीरगमनौ । सिंहवदप्रतिहतगमनावित्यर्थः । शार्दूलवृषभोपमौ–अधृष्यत्वे शार्दूलोपमौ सविलासगमनत्वे वृषभोपमौ । पद्मपत्रविशालाक्षावित्यनेन भाग्यसम्पत्तिस्सूचिता । वीरधर्मं सूचयति–खड्गेति । समुपस्थितयौवनौ प्राप्तयौवनौ । यदृच्छया

खड्गादिकमुक्तम् । इदानीं तान्येवायुधतयोच्यन्ते । यद्वा पूर्वोक्तानां वरायुधत्वमुच्यते । वीरौ वीर्ययुक्तौ । पूर्वं वीरशब्दोऽन्यथा व्याख्यातः । श्रोतुमिच्छामि तत्त्वतः, यद्यपि राजपुत्रौ कस्यचिद्विघ्नस्य शान्तये आगताविति सामान्यतो जानामि तथापि विशेषतो ज्ञातुमिच्छामीत्यर्थः ॥ २-६ ॥

किमर्थं च नरश्रेष्ठौ सम्प्राप्तौ दुर्गमे पथि । वरायुधधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ॥ ६ ॥ तस्य तद्वचनं श्रुत्वा यथावृत्तं न्यवेदयत् । सिद्धाश्रमनिवासं च राक्षसानां वधं तथा ॥ ७ ॥ विश्वामित्रवचः श्रुत्वा राजा परमहर्षितः । अतिथी परमौ प्राप्तौ पुत्रौ दशरथस्य तौ । पूजयामास विधिवत् सत्कारार्हौ महाबलौ ॥ ८ ॥ ततः परमसत्कारं सुमतेः प्राप्य राघवौ । उष्य तत्र निशामेकां जग्मतुर्मिथिलां ततः ॥ ९ ॥ तान् दृष्ट्वा मुनयः सर्वे जनकस्य पुरीं शुभाम् । साधु साध्विति शंसन्तो मिथिलां समपूजयन् ॥ १० ॥ मिथिलोपवने तत्र आश्रमं दृश्य राघवः । पुराणं निर्जनं रम्यं पप्रच्छ मुनिपुङ्गवम् ॥ ११ ॥ श्रीमदाश्रमसङ्काशं किं न्विदं मुनिवर्जितम् । श्रोतुमिच्छामि भगवन् कस्यायं पूर्व आश्रमः ॥ १२ ॥

तस्येति । स्वस्य सिद्धाश्रमनिवासं तत्र स्वयज्ञविघ्नकरराक्षसानामेताभ्यां वधम् चकारादिमौ दशरथकुमारौ हरधनुर्दर्शनाय मिथिलां गच्छत इत्येतत्समुच्चीयते । एतत्सर्वं यथावृत्तमब्रवीदिति योजना ॥ ७ ॥ विश्वामित्रेति सार्द्धश्लोकः ॥ ८ ॥ तत इति । उष्य उषित्वा । ततः प्रातःकाले । मिथिलां प्रति इतिशेषः ॥ ९ ॥ तानिति । तान् मिथिलां प्रति प्रस्थितान् रामादीन् । पूजाप्रकारः साधु साध्विति ॥ १० ॥ मिथिलेति । मिथिलाया उप समीपे वर्तमानं वनं मिथिलोपवनं तस्मिन् । शून्यम् उटजसंस्थानरहितम् । दृश्य दृष्ट्वा ॥ ११ ॥ श्रीमदिति । आश्रमसङ्काशम् आश्रमवद्भासमानम् । किन्विद

स्वेच्छया देवलोकात्संप्राप्तौ भुवमवतीर्णौ । अमराविव स्थितौ चन्द्रसूर्यावम्बरमाकाशमिव इमं देशं भूषयन्तौ । किञ्च प्रमाणेङ्गितचेष्टितैः-प्रमाणं शरीरस्यौन्नत्यम्, इङ्गितं गाम्भीर्यं ,चेष्टितं हर्षामर्षयोरपि निर्विकारत्वम् तैः । परस्परस्य सदृशौ अन्योन्यसदृशौ, न त्वन्योन्ययोस्सदृशोऽस्तीतिभावः । किमर्थं कस्मै प्रयोजनाय । कस्य वा पुत्राविति शेषः । आदरादाश्चर्याच्च पुनः पुनः पृच्छति-किमर्थमिति । दुर्गमे पथि कान्तार इत्यर्थः ॥ २-६ ॥ तस्येति । यथावृत्तं न्यवेदयदित्यनेन दशरथतनयाविमाविति कथितवानित्यवगम्यते । राक्षसानां च तद्वधं स चासौ वधश्चेति तद्वधः, तं लोकप्रसिद्धं वधमित्यर्थः ॥७ ॥ ८॥ तत इति । सुमतेरिति पञ्चमी ॥ ९॥१० ॥ मिथिलेति । दृश्य दृष्ट्वा ॥११॥ श्रीमदिति । आश्रमसङ्काशम् आश्रमवद्भासमानम् तथापि मुनिजनवर्जितम् इदं किन्वित्याश्चर्यम्॥१२॥१३॥

मित्यस्य विवरणं कस्यायमिति ॥ १२ ॥ तदिति ॥ १३ ॥ हन्तेति । अहल्यायामहंतत्कालस्मृतिजसन्तोषे हन्तेति । महात्मना कोपाच्छप्तं प्राप्तशापम् । इदमाश्रमपदं यस्य भवति तं कथयिष्यामि तत्त्वेन शृणु ॥ १४ ॥ गौतमस्येति । दिव्यसङ्काशः दिव्यत्वेन भासमानः ॥ १५ ॥ ॥ स चेति । वर्षपूगान् वर्षसमूहान् ॥१६॥ तस्येति । अन्तरं मुनिरहितकालम् । मुनिवेषधरः गौतमवेषधरः ॥ १७॥ ऋत्विति । ऋतुकालं "षोडशर्तुर्निशास्त्रीणाम्" इत्युक्त

तच्छ्रुत्वा राघवेणोक्तं वाक्यं वाक्यविशारदः । प्रत्युवाच महातेजा विश्वामित्रो महामुनिः ॥ १३ ॥ हन्त ते कथयिष्यामि शृणु तत्त्वेन राघव । यस्यैतदाश्रमपदं शप्तं कोपान्महात्मना ॥ १४ ॥ गौतमस्य नरश्रेष्ठ पूर्वमासीन्महात्मनः । आश्रमो दिव्यसङ्काशः सुरैरपि सुपूजितः ॥ १५ ॥ स चेह तप आतिष्ठदहल्यासहितः पुरा । वर्षपूगाननेकांश्च राजपुत्र महायशः ॥१६॥ तस्यान्तरं विदित्वा तु सहस्राक्षः शचीपतिः । मुनिवेषधरोऽहल्यामिदं वचनमब्रवीत् ॥१७॥ ऋतुकालं प्रतीक्षन्ते नार्थिनः सुसमाहिते । सङ्गमं त्वहमिच्छामि त्वया सह सुमध्यमे ॥१८॥ मुनिवेषं सहस्राक्षं विज्ञाय रघुनन्दन । मतिं चकार दुर्मेधा देवराजकुतूहलात् ॥ १९ ॥ अथाब्रवीत्सुरश्रेष्ठं कृतार्थेनान्तरात्मना । कृतार्थास्मि सुरश्रेष्ठ गच्छ शीघ्रमितः प्रभो ॥ २० ॥ आत्मानं मां च देवेश सर्वदा रक्ष मानद । इन्द्रस्तु प्रहसन् वाक्यमहल्यामिदमब्रवीत् ॥ २१ ॥ सुश्रोणि परितुष्टोऽस्मि गमिष्यामि यथागतम् ॥ २२ ॥ एवं सङ्गम्य तु तया निश्चक्रामोटजात्ततः । स सम्भ्रमात्त्वरन् राम शङ्कितो गौतमं प्रति ॥ २३ ॥

कालम् । अर्थिनः कामाद्भोगार्थिनः । अनृतुकालत्वान्नायमवसर इत्यहल्यया प्रतिषिद्धमित्यवगम्यते । सुसमाहिते सम्यक् ब्रह्मणा निर्मिते ! अतिसुन्दरीत्यर्थः ॥ १८ ॥ मुनीति । सहस्राक्षं विज्ञाय कदाचिदपि मुनिनैवमर्थनाभावादन्यस्यात्र प्रवेष्टुमशक्तेरिन्द्रस्यैवात्मनि बहुकालमभिलाषश्रवणाच्चेतिभावः ॥ १९ ॥ अथेति । कृतार्थेन सन्तुष्टेनेत्यर्थः । अन्तरात्मना मनसा उपलक्षिता ॥ २० ॥ आत्मानमिति । रक्ष अप्रकाशगमनादितिभावः ॥२१॥ सुश्रोणीत्यर्द्धम् ॥ २२ ॥ एवमिति । सः इन्द्रः सम्भ्रमात् भयात् " सम्भ्रमो ह्यादरे भये " इतिनिघण्टुः । शङ्कितः शङ्कावान् ॥ २३ ॥

हन्तेति—हर्षे ॥ १४ ॥ १५ ॥ सचेति । वर्षपूगान् संवत्सरगणान् ॥ १६ ॥ तस्येति । अन्तरम्—अवकाशम् ॥१७॥ ऋतुकालमिति । अर्थिनः सुतार्थिनः । सुसमाहिते

गौतममिति श्लोकद्वयम् । अथ ऽटजान्निष्क्रमणकालएव । परिक्लिन्नं स्नात्वागतमित्यर्थः । तत्र आश्रमे ॥२४॥२५॥दृष्ट्वेत्यर्द्धम् । विवर्णवदनः शुष्कमुखः ॥२६॥ अथेति । मुनिवेषधरं स्ववेषधरम् ॥ २७ ॥ ममेति । स्वभार्यासङ्गमस्य दुःशीलत्वेनावाच्यत्वादिदमित्याह-विफलः विगतवृषणः । "लाभनिष्पत्तिभोगेषु बीजे फाले धने फलम्" इतिनिघण्टुः ॥ २८ ॥ गौतमेनेति ॥२९॥ तथेति ॥३०॥ कथं निवासमात्रस्य शापत्वमिति तद्विवृणोति--वायुभक्षेति । निरा

गौतमं स ददर्शाथ प्रविशन्तं महामुनिम् । देवदानवदुर्द्धर्षं तपोबलसमन्वितम् ॥ २४ ॥ तीर्थोदकपरिक्लिन्नं दीप्यमानमिवानलम् । गृहीतसमिधं तत्र सकुशं मुनिपुङ्गवम् ॥ २५ ॥ दृष्ट्वा सुरपतिस्त्रस्तो विवर्णवदनोऽभवत् ॥ २६ ॥ अथ दृष्ट्वा सहस्राक्षं मुनिवेषधरं मुनिः । दुर्वृत्तं वृत्तसम्पन्नो रोषाद्वचनमब्रवीत् ॥ २७ ॥ मम रूपं समास्थाय कृतवानसि दुर्मते । अकर्तव्यमिदं तस्माद्विफलस्त्वं भविष्यसि ॥ २८ ॥ गौतमेनैवमुक्तस्य सरोषेण महात्मना । पेततुर्वृषणौ भूमौ सहस्राक्षस्य तत्क्षणात् ॥ २९ ॥ तथा शप्त्वा स वै शक्रमहल्यामपि शप्तवान् । इह वर्षसहस्राणि बहूनि त्वं निवत्स्यसि ॥ ३० ॥ वायुभक्षा निराहारा तप्यन्ती भस्मशायिनी । अदृश्या सर्वभूताना माश्रमेऽस्मिन्निवत्स्यसि ॥ ३१ ॥ यदा चैतद्वनं घोरं रामो दशरथात्मजः । आगमिष्यति दुर्द्धर्षस्तदा पूता भविष्यसि ॥ ३२ ॥ तस्यातिथ्येन दुर्वृत्ते लोभमोहविवर्जिता । मत्सकाशे मुदा युक्ता स्वं वपुर्धारयिष्यसि ॥ ३३ ॥

हारा अन्नपानादिरहिता । तप्यन्ती तप्यमाना । भस्मशायिनी भस्मशयना । अत्र बुद्धिपूर्वकव्यभिचारस्य विधीयमानं प्रायश्चित्तं शापापदेशेनोच्यते । एवं व्यक्ततया वाल्मीकिवचने स्थिते शैली भवेति शापो रामपादस्पर्शात् शिलात्वमुक्तिरिति पुराणकथा कल्पान्तरवृत्तमनुसृत्येतिबोध्यम् ॥ ३१ ॥ यदेति । पूता भविष्यसि, तत्पादपरागस्पर्शादितिभावः । एतेन बहुवर्षप्रायश्चित्तकरणमपि भगवत्पादरेणुस्पर्शस्य कलां नार्हतीत्युक्तम् ॥ ३२ ॥ पूतत्वेऽपि पूर्वरूपप्राप्तिस्तत्पादपूजां विना न सम्भवतीत्याह--तस्येति । मत्सकाशे मत्समीपे, स्थितेतिशेषः । स्वं वपुः हृद्यं वपुः । केचिदिदं श्लोकद्वयं सुन्दरि ! ॥ १८-२७ ॥ ममेति । विफलः विगतवृषणः ॥ २८-३१ ॥ शापान्तं कथयति-यदेति । घोरमित्यनेन इदं वनं मुनिवर्जितं भवत्विति गौतमेन शप्तमिति गम्यते, अत एव कोपाच्छप्तं महात्मनेत्युक्तम् । वनं प्रत्यागमिष्यति पादविक्षेपं करिष्यति, तदा श्रीरामचन्द्रपादारविन्दरजःकणस्पर्शादेव पूता भविष्यसीति भावः ॥ ३२ ॥ तस्येति । स्वं वपुर्धारयिष्यसीत्यनेन पद्मपुराणोक्तपाषाणावस्था लभ्यते, तथाच मच्छापपरिप्राप्तपाषाणावस्थां विहाय निजशरीरं

प्रक्षिप्तमित्याहुः। तन्न, 'स्मरन्ती गौतमवचः' इत्याद्युत्तरसर्गवचनविरोधात् ॥ ३३ ॥ एवमिति सार्द्धश्लोकः। तपस्तेपे तच्छापकृतपापप्रायश्चित्तार्थम् ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्यानेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥ अनयोर्द्वयोः शापयोरेकः पूर्वमेव मुक्तः। अपरस्त्वया मोचनीय इत्याशयेनाह एकोनपञ्चाशे--अफल इत्यादि। अग्निपुरोधसः अग्निपुरोगमान्। त्रस्तवदनः त्रस्तशब्देन तत्कार्यं दैन्य

एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीम्। इममाश्रममुत्सृज्य सिद्धचारणसेविते। हिमवच्छिखरे रम्ये तपस्तेपे महातपाः ॥ ३४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

अफलस्तु ततः शक्रो देवानग्निपुरोधसः। अब्रवीत् त्रस्तवदनः सर्षिसङ्घान् सचारणान् ॥ १ ॥ कुर्वता तपसो विघ्नं गौतमस्य महात्मनः। क्रोधमुत्पाद्य हि मया सुरकार्यमिदं कृतम् ॥ २ ॥ अफलोऽस्मि कृतस्तेन क्रोधात् सा च निराकृता। शापमोक्षेण महता तपोऽस्यापहृतं मया ॥ ३ ॥ तस्मात्सुरवराः सर्वे सर्षिसङ्घाः सचारणाः। सुरसाह्यकरं सर्वे सफलं कर्तुमर्हथ ॥ ४ ॥ शतक्रतोर्वचः श्रुत्वा देवाः साग्निपुरोगमाः। पितृदेवानुपेत्याहुः सर्वे सह मरुद्गणैः ॥ ५ ॥

मुच्यते ॥ १ ॥ कुर्वतेति। महात्मनः गौतमस्य तपसः अस्मत्पदच्यवनकारणस्य विघ्नं क्रोधमुत्पाद्य तस्य क्रोधजननमुखेन कुर्वता मया इदं गौतमतपोभङ्गरूपम्। सुरकार्यं कृतं सर्वदेवपदच्यवनार्हं तपो गौतमेन कृतम्, तस्य तपोनाशकमहाक्रोधोत्पादनाय तद्भार्यया तु मया व्यभिचारः कृत इत्यर्थः ॥ २ ॥ अफल इति। तेन गौतमेन। सा अहल्या निराकृता शापमोक्षपूर्वकं त्यक्ता। शापमोक्षेण मयि अहल्यायां च शापदानेन ॥ ३ ॥ तस्मादिति। हे सर्वे सुरवरा इति संबोधनम्। द्वितीयसर्वशब्दस्य सर्वे यूयमिति सम्बन्धः। साह्यं साहाय्यम्। सफलं, मामिति शेषः ॥ ४ ॥ शतक्रतोरिति। पितृदेवान् अग्नि प्राप्स्यसीति भावः। तथा च पाद्मे--" सा ततस्तस्य रामस्य पादस्पर्शान्महात्मनः। अभूत्सुरूपा वनिता समाक्रान्ता महाशिला ॥ " इति ॥ ३३ ॥ ३४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायाम् अष्टचत्वारिंशः सर्गः ॥ ४८ ॥ अफल इति। अफलः अपगतवृषणः। अग्निपुरोगमान् अग्निपुरस्सरान् ॥ १ ॥ इन्द्रः सुरान् वक्ष्यति--कुर्वतेति। सुरकार्यं गौतमतपोभङ्गरूपम् ॥ २ ॥ अस्तु ततः किम्? तत्राह--अफल इति। तेन गौतमेन अफलः अवृषणः कृतोऽस्मि, सा च निराकृता शप्ता, तथापि कथं सुरकार्यं कृतम्, तत्राह शापेति। शापमोचनेन तदीयतपोभङ्गार्थमेव मया अकार्यं कृतमिति भावः ॥ ३ ॥ तस्मादिति। हे सर्वे सुरवराः सर्वे यूयमिति सर्वशब्दद्वयनिर्वाहः ॥ ४ ॥ पितृदेवाः कव्यवाहनादयः, तानुपेत्य हव्यवाहनाग्निमुखेनाहुः। अग्नेस्तु

कव्यवाहनादीन् ॥ ५ ॥ अयमिति । अयमिदानीं यज्ञे युष्मभ्यं नियुज्यमानो मेषः । गृह्य गृहीत्वा ॥ ६ ॥ तदानेऽस्मत्तुष्टिवैकल्यं स्यादित्यत्राह-अफल इत्यर्द्धम् । प्रदास्यतीत्यनुगृह्णन्ति ॥ ७ ॥ दातॄणामपि फलन्यूनता न भवत्वित्यनुगृह्णन्ति-भवतामिति । दास्यन्ति अवृषणमितिशेषः ॥ ८ ॥ अग्नेरिति । अग्निपुरःसराणामित्यर्थः । मेषस्य तदा यूपे नियुक्तस्य मेषस्य वृषणौ ॥९॥ तदेति । तदाप्रभृति वृषणदानात्प्रभृति । दत्तसजातीयत्वाद्वृषणौ विना मेषान्



अयं मेषः सवृषणः शक्रो ह्यवृषणः कृतः । मेषस्य वृषणौ गृह्य शक्रायाशु प्रयच्छथ ॥ ६ ॥ अफलस्तु कृतो मेषः परां तुष्टिं प्रदास्यति ॥ ७॥ भवतां हर्षणार्थं च ये च दास्यन्ति मानवाः ॥ ८ ॥ अग्नेस्तु वचनं श्रुत्वा पितृदेवाः समागताः । उत्पाट्य मेषवृषणौ सहस्राक्षे न्यवेशयन् ॥ ९ ॥ तदाप्रभृति काकुत्स्थ पितृदेवाः समागताः । अफलान् भुञ्जते मेषान् फलैस्तेषामयोजयन् ॥ १० ॥ इन्द्रस्तु मेषवृषणस्तदाप्रभृति राघव । गौतमस्य प्रभावेन तपसश्च महात्मनः ॥ ११ ॥ तदागच्छ महातेज आश्रमं पुण्यकर्मणः । तारयैनां महाभागामहल्यां देवरूपिणीम् ॥ १२ ॥ विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः । विश्वामित्रं पुरस्कृत्य तमाश्रममथाविशत् ॥ १३ ॥

भुञ्जते तेषां सवृषणानाम् । फलैः सवृषणमेषदानफलैरित्यर्थः । अयोजयन् दातॄनितिशेषः ॥ १० ॥ इन्द्रस्त्विवाति । गौतमस्य तपसः प्रभावेन वृषण हान्या मेषवृषणोऽभूदित्यर्थः ॥ ११ ॥ तदिति । तत् त्वदागमनावधित्वादहल्याशापस्येत्यर्थः ॥ १२ ॥ विश्वामित्रेति ॥ १३ ॥

वचनं श्रुत्वेति वक्ष्यमाणत्वात् ॥ ५ ॥ अयमिति । अयं मेषः पि[illegible]तानां भवतां हविष्ट्वेन कल्पितो मेषः ॥ ६ ॥ अफलस्त्विवति । अफलो मेषः । भवतां परां तुष्टिं प्रदास्यति । किञ्च भवतां हर्षणार्थम् अफलमेषपललमिति शेषः । दास्यन्तीति भवतां परां तुष्टिं दास्यन्तीति योजना ॥ ७-९ ॥ तदाप्रभृतीति । यतः पितृदेवाः समागताः सन्तः इन्द्रं प्रति । तेषां फलैः तेषां तस्य मेषस्य फलैः, फलाभ्याम् अयोजयन्, तदाप्रभृति तस्मात्कारणात् अफलान् मेषान् भुञ्जत इति योजना । तेषां फलैरितिबहुवचनमेकवचनत्वे ॥ १० ॥ ११ ॥ तदिति । महातेजः हे राम ! एनां तारय ॥ १२ ॥ १३ ॥

**मुनिभाव०**--तदाप्रभृति इन्द्रवृषणसम्पत्त्यर्थं मेषाण्डकोशग्रहणकालमारभ्य अफलान् मेषान् भुञ्जते, अवयवविशेषविहीनान् मेषान् हविष्ट्वेन स्वीकुर्वन्ति, तथाविधांस्तं फलैस्तेषामयोजयन् । तेषामिति द्वितीयार्थे षष्ठी । निर्वृषणीकृतान् मेषान् स्वानुग्रहलब्धैस्तादृशैरवयवविशेषैः समयोजयन्नित्यर्थः । इन्द्रस्य वृषणसम्पत्त्यर्थं कस्यचिदेव मेषस्य अण्डकोशवियोजनेऽपि वायसादिषु उपनतरामनिग्रहस्येव तद्वियोजनस्य तज्जातीय-

रामसन्निधानमात्रेणाहल्या मुक्तशापा स्वरूपं प्राप्तेत्याह–ददर्श चेति सार्धश्लोकद्वयम् ।  तपसा वाय्वाहारत्वादितपसा । द्योतितप्रभां अतिशयित प्रभाम् । अतएव लोकैर्मानुषैः सुरासुरैरपि समागम्य समीपमागत्य दुर्निरीक्ष्यां दिव्यां अतिमानुषरूपां मायामयीमिव मायानिर्मितामिव स्थिताम् । वृक्ष

ददर्श च महाभागां तपसा द्योतितप्रभाम् । लोकैरपि समागम्य दुर्निरीक्ष्यां सुरासुरैः ॥ १४ ॥ प्रयत्नान्निर्मितां धात्रा दिव्यां मायामयीमिव । सतुषारावृतां साभ्रां पूर्णचन्द्रप्रभामिव । मध्येऽम्भसो दुराधर्षां दीप्तां सूर्यप्रभामिव ॥ १५ ॥ सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह । त्रयाणामपि लोकानां यावद्रामस्य दर्शनम् । शापस्यान्तमुपागम्य तेषां दर्शनमागता ॥ १६ ॥

लताकुसुमान्तर्वर्तित्वेन सतुषारावरणां साभ्रां चन्द्रप्रभामिव स्थिताम् । आवृतशब्द आवरणार्थकः । भावे निष्ठा । स इति भिन्नं पदं वा । मध्य इति अक्षौर्यदुर्निरीक्ष्यत्वाभ्यां प्रतिबिम्बसूर्यप्रभातुल्याम् ॥ १४ ॥ १५ ॥ अदृश्या सा कथमिदानीं दृश्यासीदित्यत्राह सार्धेन–सा हीत्यादि ॥ १६ ॥

ददर्शेत्यादि सार्धश्लोकद्वयमेकान्वयम् । सतुषारावृतामित्यत्र स इति छेदः । स रामो महाभागः अहल्यां ददर्शेत्यन्वयः । अहल्यां विशिनष्टि–तपसेति । तपसा तपोमहिम्ना । द्योतितप्रभां बहिरदृश्यत्वेऽपि अन्तरेव भासमानामित्यर्थः । सुरासुरैस्तद्रूपैः लोकैर्जनैः समागम्यापि दुर्निरीक्ष्यां दिव्याम् अमानुषलावण्यशालिनीमित्यर्थः । मायामयीमिव मायानिर्मितामिव, विस्मयकरीमित्यर्थः । किञ्च मध्य इति अम्भसः लक्षणया जलाधारस्य मेघस्येत्यर्थः । मध्ये स्थितामिति शेषः । दीप्तां सूर्यप्रभामिव दुराधर्षां दुष्प्रापाम् । निबिडजलधरसंभृतां सूर्यप्रभामिव द्रष्टुमशक्यामित्यर्थः ॥ १४ ॥ १५ ॥ सा अहल्या यावद्रामदर्शनं तावद्दुर्निरीक्ष्येति पूर्वेणान्वयः । शापस्येति । शापस्यान्तं, रामदर्शनावधिमिति शेषः । तेषां विश्वामित्रादीनां दर्शनमागता प्राप्ता ॥ १६ ॥

मेषविषयत्वात् सर्वस्या अपि मेषजातेर्विश्लेषितावयवसंयोजनं कृतमिति भावः । यद्वा इन्द्रस्य मेषबीजप्रदानकालानन्तरं श्राद्धकाले पितृदेवाः आगताः अफलान् ये बीजरहितान् मेषान् भुञ्जते । मेषबीजस्य इन्द्राधीनत्वात् । अफलान् भुक्त्वा, तेषां तान् कर्मकर्तॄन् । कर्मणि षष्ठी । फलैः पूर्वं सफलमेषकृतकर्मभिर्यानि फलानि भवन्ति तैः फलैः समयोजयन् । यद्वा तेषां कर्मकर्तॄणां अनुष्ठानमिति शेषः । फलैः कर्मफलैः समयोजयन्नित्यर्थः ॥ १० ॥ ११ ॥

---

१ मिव.। धूमेनापि परीताङ्गीं दीप्तामग्निशिखामिव । इत्यधिकः पाठः ।

राघवौ त्विति । तस्याः वृद्धमुनिपत्न्याः । गौतमवचः 'तस्यातिथ्येन दुर्वृत्ते' इत्यादिकम् । प्रतिजग्राह पूजनीयत्वेनेतिशेषः ॥१७॥ पाद्यमिति । विधिदृष्टेन शास्त्रदृष्टेन । कर्मणा प्रकारेण पाद्यादिकञ्चकारेत्यन्वयः ॥ १८ ॥ पुष्पेति । रामस्येतिशेषः । सम्यगागमः समागमः, नृत्यगीतादिकमिति यावत् ॥१९॥

राघवौ त्वतिथी तस्याः पादौ जगृहतुस्तदा । स्मरन्ती गौतमवचः प्रतिजग्राह सा च तौ ॥ १७ ॥ पाद्यमर्घ्यं तथाऽऽतिथ्यं चकार सुसमाहिता । प्रतिजग्राह काकुत्स्थो विधिदृष्टेन कर्मणा ॥ १८ ॥ पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिःस्वनैः । गन्धर्वाप्सरसां चापि महानासीत्समागमः ॥१९॥ साधुसाध्विति देवास्तामहल्यां समपूजयन् । तपोबलविशुद्धाङ्गीं गौतमस्य वशानुगाम् ॥२०॥ गौतमो हि महातेजा अहल्यासहितः सुखी । रामं सम्पूज्य विधिवत् तपस्तेपे महातपाः ॥ २१ ॥ रामोऽपि परमां पूजां गौतमस्य महामुनेः । सकाशाद्विधिवत् प्राप्य जगाम मिथिलां ततः ॥ २२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

ततः प्रागुत्तरां गत्वा रामः सौमित्रिणा सह । विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ॥ १ ॥

साध्विति । गौतमस्य वशानुगामित्यनेन गौतमस्तदा रामागमनं विदित्वा समागत इत्यवगम्यते॥२०॥ गौतम इति । तेपे तत्रैवाश्रम इति शेषः ॥२१॥ रामोऽपीति । ततः तस्माद्देशात्॥२२॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनपञ्चाशःसर्गः॥४९॥ एवं रामस्य परमपावनत्वमुक्तम् । अथ तस्य सीताविवाहवृत्तान्तं प्रस्तौति श्रियःपतित्वं प्रतिपादयितुं पञ्चाशे–ततः प्रागित्यादि । प्राच्या उत्तरस्याश्च

राघवाविति । तथेत्युत्तरशेषः । सा अहल्या, गौतमवचः–श्रीरामदर्शनानन्तरं तव शापनिवृत्तिर्भविष्यतीति गौतमवाक्यं स्मरन्ती सती तौ रामलक्ष्मणौ प्रतिजग्राह प्रत्युपचचारेत्यर्थः ॥ १७ ॥ पाद्यमिति । सुसमाहिता अप्रमत्तेत्यर्थः । विधिदृष्टेन शास्त्रदृष्टेन ॥ १८ ॥ पुष्पवृष्टिरिति । देवदुन्दुभिनिस्स्वनैः सहेतिशेषः ॥ १९ ॥ २० ॥ गौतम इति । अहल्यासहितः । सुखीत्यनेन योगबलाद्रामागमनं ज्ञात्वा तद्बलादेव झटिति तदाश्रमप्राप्तिर्गौतमस्येति बोध्यम् ॥ २१ ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां एकोनपञ्चाशः सर्गः ॥ ४९ ॥ तत इति । प्रागुत्तरां प्राच्युदीच्यो



१ तु ततस्तस्याः । इति पाठान्तरम् ।

दिशोऽन्तरालं यस्या प्रागुत्तरा ताम्, ऐशानीं दिशमित्यर्थः । ततः तस्मादाश्रमात् । यज्ञवाटं जनकस्येति शेषः ॥ १ ॥ रामस्त्विति । यज्ञसमृद्धिः यज्ञसम्भारसामग्री ॥ २ ॥ तामेवाह—बहूनिति । ब्राह्मणानां सहस्राणीत्यन्वयः । दृश्यन्त इति वक्ष्यमाणमनुषज्यते ॥ ३ ॥ ऋषीति । ऋषिवाटाः ऋषिनिवासाः । विधीयतां कल्प्यताम् । बहुसङ्कुलत्वेनैवमुक्तम् ॥ ४ ॥ रामस्येति । विविक्ते विजने पूते वा । "विविक्तौ पूतविजनौ" इत्यमरः ।

रामस्तु मुनिशार्दूलमुवाच सहलक्ष्मणः । साध्वी यज्ञसमृद्धिर्हि जनकस्य महात्मनः ॥ २ ॥ बहूनीह सहस्राणि नानादेशनिवासिनाम् । ब्राह्मणानां महाभाग वेदाध्ययनशालिनाम् ॥ ३ ॥ ऋषिवाटाश्च दृश्यन्ते शकटीशतसङ्कुलाः । देशो विधीयतां ब्रह्मन् यत्र वत्स्यामहे वयम् ॥ ४ ॥ रामस्य वचनं श्रुत्वा विश्वामित्रो महामुनिः । निवेशमकरोद्देशे विविक्ते सलिलायुते ॥ ५ ॥ विश्वामित्रमनुप्राप्तं श्रुत्वा स नृपतिस्तदा । शतानन्दं पुरस्कृत्य पुरोहितमनिन्दितम् । प्रत्युज्जगाम सहसा विनयेन समन्वितः ॥ ६ ॥ ऋत्विजोऽपि महात्मानस्त्वर्घ्यमादाय सत्वरम् । विश्वामित्राय धर्मेण ददुर्मन्त्रपुरस्कृतम् ॥ ७ ॥ प्रतिगृह्य तु तां पूजां जनकस्य महात्मनः । पप्रच्छ कुशलं राज्ञो यज्ञस्य च निरामयम् ॥ ८ ॥

आयुते युक्ते । यौतेर्मिश्रणार्थात् क्तः ॥ ५ ॥ विश्वामित्रमिति सार्द्धश्लोकः । प्रत्युज्जगाम दीक्षितविमितप्रदेशसीमानमनतिलङ्घयन्नित्यर्थः ॥ ६ ॥ ऋत्विज इति । अर्घ्यमित्यातिथ्यस्योपलक्षणम् । मन्त्रपुरस्कृतमित्यनेन मधुपर्ककरणमुच्यते ॥ ७ ॥ प्रतिगृह्येति । निरामयं निरुपप्लवत्वम् ॥ ८ ॥

रन्तरालम् ॥ १ ॥ २ ॥ साधुत्वे हेतुः—बहूनीति । नानादेशनिवासिनां ब्राह्मणानां बहूनि सहस्राणि । इह जनकस्य यज्ञभूमौ सन्तीति शेषः ॥ ३ ॥ ऋषीति । किञ्च शकटीशतसङ्कुलाः मुनिवाहनभूतानां शकटीनां शतेन सङ्कुलाः ऋषिवाटाः मुनिनिवासस्थानानि दृश्यन्ते, तथा च अधिकः संमर्दोऽस्तीति भावः । फलितमर्थं श्रीरामो विज्ञापयति—विधीयतामिति । देशो निवासस्थानम् । विधीयतां कल्प्यताम् ॥ ४ ॥ रामस्येति । विविक्ते असम्बाधे । सलिलायुते सलिलवति ॥ ५ ॥ विश्वामित्र इति । अनुप्राप्तमागतम् ॥ ६ ॥ विश्वामित्रायेति । धर्मेण धर्मशास्त्रोक्तमार्गेण ॥ ७ ॥ प्रतिगृह्येति । निरामयम् अविकलत्वम् ॥ ८ ॥

विषम०—विश्वामित्रमित्यादिसार्धश्लोकद्वयमेकान्वयम् । ऋत्विजोऽपीत्यत्र पुरस्कृत्येत्यनुकर्षः । महात्मान इति द्वितीयार्थे प्रथमा । धर्मेण धर्मशास्त्रमार्गेण द.ौ । अर्घ्यमिति शेषः । धर्मपुरस्कृतमित्यर्घ्यविशेषणम् । "महाजं वा महोक्षं वा श्रोत्रियायोपकल्पयेत्" इति शास्त्रोक्तेन धर्मसाधनेन पुरस्कृतम्, तत्सहितमिति यावत् ( धर्मपुरस्कृतमितिपाठः ) ॥ ६ ॥ ७ ॥

स इति । तान् अर्घ्यदातॄन् । सोपाध्यायपुरोधसः-उपाध्याया ऋत्विजः, पुरोधाः शतानन्दः तत्सहितांस्तान्, कुशलं पृष्ट्वेत्यर्थः । सर्वैर्जनैः शतानन्दऋत्विगादिभिः । प्रहृष्टवत् सहर्षमित्यर्थः । भावे निष्ठा । यथान्यायं यथाक्रमं पृष्ट्वेत्यन्वयः ॥ ९ ॥ अथेति ॥ १० ॥ जनकस्येति । राजा चेति विश्वामित्रवचनादित्यर्थसिद्धम् ॥ ११ ॥ आसनेष्विति । उपविष्टान् तानितिशेषः ॥ १२ ॥ अद्येति । यज्ञसमृद्धिः समग्रता जातेतिशेषः । सा दैवतैः

स तांश्चापि मुनीन् पृष्ट्वा सोपाध्यायपुरोधसः । यथान्यायं ततः सर्वैः समागच्छत् प्रहृष्टवत् ॥ ९ ॥ अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत । आसने भगवन्नास्तां सहैभिर्मुनिसत्तमैः ॥ १० ॥ जनकस्य वचः श्रुत्वा निषसाद महामुनिः । पुरोधा ऋत्विजश्चैव राजा च सह मन्त्रिभिः ॥ ११ ॥ आसनेषु यथान्यायमुपविष्टान् समन्ततः । दृष्ट्वा स नृपतिस्तत्र विश्वामित्रमथाब्रवीत् ॥ १२ ॥ अद्य यज्ञसमृद्धिर्मे सफला दैवतैः कृता । अद्य यज्ञफलं प्राप्तं भगवद्दर्शनान्मया ॥ १३ ॥ धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव । यज्ञोपसदनं ब्रह्मन् प्राप्तोऽसि मुनिभिः सह ॥ १४ ॥ द्वादशाहं तु ब्रह्मर्षे शेषमाहुर्मनीषिणः । ततो भागार्थिनो देवान् द्रष्टुमर्हसि कौशिक ॥ १५ ॥ इत्युक्त्वा मुनिशार्दूलं प्रहृष्टवदनस्तदा । पुनस्तं परिपप्रच्छ प्राञ्जलिः प्रणतो नृपः ॥ १६ ॥ इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ । गजसिंहगती वीरौ शार्दूलवृषभोपमौ ॥ १७ ॥ पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ । अश्विनाविव रूपेण समुपस्थितयौवनौ ॥ १८ ॥

सफला कृता च । तिष्ठतु यज्ञः, भवद्दर्शनमेव यज्ञफलमित्याह—अद्य यज्ञफलमिति ॥ १३ ॥ धन्य इति ॥ १४ ॥ द्वादशेति । द्वादश अहानि समाहृतानि द्वादशाहं " राजाहःसखिभ्यष्टच् " इति टच् । " न संख्यादेः " इत्यह्नादेशाभावः । द्वादशदिनान्यवशिष्टानि यज्ञस्येति मनीषिणः ऋत्विज आहुः । ततः भागार्थिनो देवानिति द्वादशदिनान्ते सुत्याहोमो भविष्यतीत्यर्थः ॥ १५ ॥ इतीति । प्रहृष्टेति कुतूहलविशेषः सूच्यते ॥ १६ ॥ इमावित्यादिश्लोक

स इति । यथान्यायं यथार्हं तैस्समागच्छत ॥ ९–१२ ॥ अद्येति । यज्ञसमृद्धिर्यज्ञानां बाहुल्यम् ॥ १३ ॥ यज्ञोपसदनम् देवयजनम् ॥ १४ ॥ द्वादशाहमित्यादि । मनीषिणः ऋत्विजः द्वादशाहम् द्वादशदिनानि । शेषं यज्ञशेषम् ॥ १५–१८ ॥

पञ्चकं व्याख्यातम् ॥ १७–२१ ॥ तस्येति । तौ दशरथस्य पुत्राविति न्यवेदयदित्यर्थः ॥ २२ ॥ सिद्धेत्यादित्रयः । अव्यग्रं रक्षःसहस्रावृते मार्गे निर्भयागमनम् । जिज्ञासां सारासारपरीक्षाम् ॥२३–२५॥ इति श्रीगोविन्दराज॰श्रीरामा॰मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चाशः सर्गः॥५०॥



यदृच्छयैव गां प्राप्तौ देवलोकादिवामरौ । कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥ १९ ॥ वरायुधधरौ वीरौ कस्य पुत्रौ महामुने । भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् ॥ २० ॥ परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः । काकपक्षधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ॥ २१ ॥ तस्य तद्वचनं श्रुत्वा जनकस्य महात्मनः । न्यवेदयन्महात्मानौ पुत्रौ दशरथस्य तौ ॥ २२ ॥ सिद्धाश्रमनिवासं च राक्षसानां वधं तथा । तच्चागमनमव्यग्रं विशालायाश्च दर्शनम् ॥२३॥ अहल्यादर्शनं चैव गौतमेन समागमम् । महाधनुषि जिज्ञासां कर्तुमागमनं तथा ॥ २४ ॥ एतत्सर्वं महातेजा जनकाय महात्मने । निवेद्य विरराामाथ विश्वामित्रो महामुनिः ॥ २५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

तस्य तद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः । हृष्टरोमा महातेजाः शतानन्दो महातपाः ॥ १ ॥
गौतमस्य सुतो ज्येष्ठस्तपसा द्योतितप्रभः । रामसन्दर्शनादेव परं विस्मयमागतः ॥ २ ॥

अथाचार्यवैभवस्य ज्ञेयत्वाभिप्रायेण विश्वामित्रचरित्रं प्रस्तौति–तस्य तद्वचनमित्यादिभिः पञ्चदशभिः सर्गैः । तस्येत्यादिद्वौ । हृष्टरोमा सञ्जातरोमाञ्चः । विस्मयमागतः, अहो महिमा रामस्य यन्मे माता कृतार्थीकृतेति विस्मयं प्राप्तोऽभूदित्यर्थः ॥ १ ॥ २ ॥

कथमिति, किमर्थं कस्मै प्रयोजनाय, कस्य वा पुरुषस्य कार्यं साधयितुम् ॥ १९ ॥ भूषयन्ताविति । इङ्गितम्–सूक्ष्माङ्गव्यापारः । चेष्टितं हासादिस्थूलाङ्गव्यापारः ॥ २०–२२ ॥ तच्चेति । अव्यग्रं रक्षस्समाक्रान्तेऽपि मार्गे भयरहितमागमनम् । महाधनुषि जिज्ञासां सारपरीक्षाम् ॥ २३–२५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां पञ्चाशः सर्गः ॥ ५० ॥ तस्येति । हृष्टरोमेत्यतिमानुषश्रीरामदर्शनेनेत्यर्थः ॥ १ ॥ २ ॥

स इति। निषण्णावित्यस्य विवरणं सुखासीनाविति ॥३॥ स्वमातरि रामकृतानुग्रहस्य श्रुतस्य विस्मयावहतया पुनः पृच्छति–अपीत्यादि । अपिः प्रश्ने । ते त्वया । दीर्घं तप उपागता पूर्वोक्तभस्मशायित्वादिलक्षणं तपः प्राप्ता । अनेन पाषाणीभूयस्थितेति पक्षो न वाल्मीकेः ॥ ४ ॥ अपीति। रामे रामविषये । वन्यैः कन्दमूलफलादिभिः । अनेन पूर्वमपि वन्यैरेतस्य जीवनमिति गम्यते । सर्वदे[illegible] पूजार्हं इत्यनेन परत्वं व्यञ्जि

स तौ निषण्णौ सम्प्रेक्ष्य सुखासीनौ नृपात्मजौ । शतानन्दो मुनिश्रेष्ठं विश्वामित्रमथाब्रवी[illegible] ३ ॥ अपि ते मुनिशार्दूल मम माता यशस्विनी । दर्शिता राजपुत्राय तपो दीर्घमुपागता ॥ ४ ॥ अपि रामे महातेजा मम माता यशस्विनी । वन्यैरुपाहरत्पूजां पूजार्हे सर्वदेहिनाम् ॥ ५ ॥ अपि रामाय कथितं यथावृत्तं पुरातनम् । मम मातुर्महातेजो दैवेन दुरनुष्ठितम् ॥ ६ ॥ अपि कौशिक भद्रं ते गुरुणा मम सङ्गता । माता मम मुनिश्रेष्ठ रामसन्दर्शनादितः ॥ ७ ॥ अपि मे गुरुणा रामः पूजितः कुशिकात्मज । इहागतो महातेजाः पूजां प्राप्तो महात्मनः ॥ ८ ॥ अपि शान्तेन मनसा गुरुर्मे कुशिकात्मज । इहागतेन रामेण प्रयतेनाभिवादितः ॥ ९ ॥ तच्छ्रुत्वा वचनं तस्य विश्वामित्रो महामुनिः । प्रत्युवाच शतानन्दं वाक्यज्ञो वाक्यकोविदम् ॥ १० ॥ नातिक्रान्तं मुनिश्रेष्ठ यत्कर्तव्यं कृतं मया । सङ्गता मुनिना पत्नी भार्गवेणेव रेणुका ॥ ११ ॥

तम् ॥५॥ अपीति। हे महातेजः विश्वामित्र ! मम मातुर्विषये दैवेन इन्द्रेण विधिना वा। दुरनुष्ठितं दुरनुष्ठानरूपम्। पुरातनं वृत्तं चरितम् । यथा यथावत् । कथितं चापि कथितं किम् ॥ ६ ॥ अपीति । गुरुणा पित्रा। इतः अस्मादुपस्थिताद्रामसन्दर्शनात्। यद्वा रामसन्दर्शनादितः रामसन्दर्शनादिना । तृतीयार्थे तसिः । पूजा अपिशब्दार्थः ॥ ७ ॥ अपीति । इह अस्मदाश्रमे। आगतः महातेजा गुरुः। महात्मनः रामात् पूजां अहल्यालाभरूपाम् । अपि प्राप्तः ॥ ८ ॥ अपीति । शान्तेन कोपरहितेन मनसोपलक्षितो गुरुः । इह अस्मदाश्रमे। आगतेन प्रयतेन मनःसक्तिरूपयत्नवता । रामेण अभिवादितः किम् ॥ ९ ॥ तच्छ्रुत्वेति ॥ १० ॥ नेति । नातिक्रान्तं मया समयातिक्रमो न कृतः । समये यत्कर्तव्यं तत्कृतम् । तदेवाह सङ्गतेति । नातिक्रान्त

स ताविति । निषण्णौ आसीनौ ॥ ३ ॥ अपीति । अपिः प्रश्ने । ते त्वया ॥४॥५॥ अपि रामायेत्यादि । दैवेन विधिना यदनुष्ठितं मातुः सम्बन्धि यद्वृत्तं रामायापि कथितम् निवेदितम् ॥ ६ ॥ अपीति । रामसन्दर्शनात् रामसन्दर्शनमारभ्य ॥ ७ ॥ अपि म इति । पूजां प्राप्य पूजां स्वीकृत्य ॥८–१०॥ भार्गवेण जमदग्निना॥११॥

मित्यस्य विवरणं यत्कर्तव्यमिति । तस्य विवरणं सङ्गतेति । भार्गवेण जमदग्निना । रेणुका परशुराममातेवेतिभावः ॥ ११ ॥ तदिति ॥ १२ ॥ स्वागत मिति । दिष्ट्या दैवयोगेन ॥ १३ ॥ विश्वामित्रं स्तौति—अचिन्त्येत्यादि । तपसा ब्रह्मर्षिः तपसा प्राप्तब्रह्मर्षिभावः । परमां गतिं तव परमाहितप्रदम् । वेत्सीत्यत्र काकुरनुसन्धेया ॥ १४ ॥ एतदेवाह—नास्तीति । धन्यत्वे हेतुः गोप्तेति । येन कुशिकपुत्रेण ॥ १५ ॥ श्रूयतामिति । बलं तपोबलम् ।

तच्छ्रुत्वा वचनं तस्य विश्वामित्रस्य धीमतः । शतानन्दो महातेजा रामं वचनमब्रवीत् ॥ १२ ॥ स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव । विश्वामित्रं पुरस्कृत्य महर्षिमपराजितम् ॥ १३ ॥ अचिन्त्यकर्मा तपसा ब्रह्मर्षिरतुलप्रभः । विश्वामित्रो महातेजा वेत्स्येनं परमां गतिम् ॥ १४ ॥ नास्ति धन्यतरो राम त्वत्तोऽन्यो भुवि कश्चन । गोप्ता कुशिकपुत्रस्ते येन तप्तं महत्तपः ॥ १५ ॥ श्रूयतामभिधास्यामि कौशिकस्य महात्मनः । यथा बलं यथा वृत्तं तन्मे निगदतः शृणु ॥ १६ ॥ राजाभूदेष धर्मात्मा दीर्घकालमरिन्दमः । धर्मज्ञः कृतविद्यश्च प्रजानां च हिते रतः ॥ १७ ॥ प्रजापतिसुतस्त्वासीत् कुशो नाम महीपतिः । कुशस्य पुत्रो बलवान् कुशनाभः सुधार्मिकः ॥ १८ ॥ कुशनाभसुतस्त्वासीद्गाधिरित्येव विश्रुतः । गाधेः पुत्रो महातेजा विश्वामित्रो महामुनिः ॥ १९ ॥ विश्वामित्रो महातेजाः पालयामास मेदिनीम् । बहुवर्षसहस्राणि राजा राज्यमकारयत् ॥ २० ॥ कदाचित्तु महातेजा योजयित्वा वरूथिनीम् । अक्षौहिणीपरिवृतः परिचक्राम मेदिनीम् ॥ २१ ॥

यथा यादृशम्, वृत्तं चरित्रं च । यथा यादृशं तथा तत्सर्वं मे मत्तः शृणु ॥ १६ ॥ राजेति ॥ १७ ॥ कस्य राज्ञः पुत्र इत्यत्राह—प्रजापतीत्यादिश्लोकत्रयम् । पालयामासेत्यस्य विवरणं बह्विति ॥ १८–२० ॥ कदाचिदित्याद्यष्टौ श्लोकाः । वरूथिनी चतुरङ्गबलम् । योजयित्वा उपस्थाप्य । प्रशान्तत्व

तदिति । भाषितम् व्यक्तमुक्तम् ॥ १२ ॥ स्वागतं त इति । अपराजितम् अविहतप्रभावम् ॥ १३ ॥ अचिन्त्येति । तपसा ब्रह्मर्षिः तपसैव ब्रह्मर्षित्वं प्राप्तः ॥ १४ ॥ १५ ॥ श्रूयतामिति । बलं क्षत्रबलम्, यथा यादृशं, वृत्तं तपोरूपम्, यथा यादृशम् ॥ १६–१९ ॥ अकारयत्-स्वार्थे णिः ॥ २०–२५ ॥

विशेषणाय पुनर्हरिणोपादानम् । अब्भक्षैः अम्मात्रभक्षैः । दान्तैर्नियतमनस्कैः । वालखिल्याः ब्रह्मणो वालजा ऋषयः । वैखानसास्तन्नखजाः, " ये नखास्ते वैखानसाः ये वालास्ते वालखिल्याः " इति श्रुतेः । वसिष्ठाश्रमवैभववर्णनम् एवम्भूतेनापि सम्मानितो विश्वामित्र इति तस्य वैभव

नगराणि च राष्ट्राणि सरितश्च तथा गिरीन् । आश्रमान् क्रमशो राम विचरन्नाजगाम ह ॥ २२ ॥ वसिष्ठस्याश्रमपदं नानावृक्षसुमाकुलम् । नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ २३ ॥ देवदानवगन्धर्वैः किन्नरैरुपशोभितम् । प्रशान्तहरिणाकीर्णं द्विजसङ्घनिषेवितम् ॥ २४ ॥ ब्रह्मर्षिगणसङ्कीर्णं देवर्षिगणसेवितम् । तपश्चरणसंसिद्धैरग्निकल्पैर्महात्मभिः ॥ २५ ॥ अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैस्तथा । फलमूलाशनैर्दान्तैर्जितरोषैर्जितेन्द्रियैः ॥ २६ ॥ ऋषिभिर्वालखिल्यैश्च जपहोमपरायणैः । अन्यैर्वैखानसैश्चैव समन्तादुपशोभितम् ॥ २७ ॥ वसिष्ठस्याश्रमपदं ब्रह्मलोकमिवापरम् । ददर्श जयतां श्रेष्ठो विश्वामित्रो महाबलः ॥ २८ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

स दृष्ट्वा परमप्रीतो विश्वामित्रो महाबलः । प्रणतो विनयाद्वीरो वसिष्ठं जपतां वरम् ॥ १ ॥
स्वागतं तव चेत्युक्तो वसिष्ठेन महात्मना । आसनं चास्य भगवान् वसिष्ठो व्यादिदेश ह ॥ २ ॥

कथनार्थम् ॥ २१–२८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्या० एकपञ्चाशः सर्गः ॥ ५१ ॥
विश्वामित्रसम्मानं द्विपञ्चाशे–स दृष्ट्वेत्यादि । वसिष्ठं दृष्ट्वा, प्रणतः प्रणनाम ॥ १ ॥ स्वागतमिति । उक्तः ऊचे । व्यादिदेश दापयामासेत्यर्थः ॥ २ ॥

अब्भक्षैरिति। अप एव भक्षयन्तीत्यब्भक्षाः, भक्ष्यस्थाने अपामेव स्वीकारात् । आहारान्तरनिवृत्तिरर्थाद्गम्यते । दान्तैर्नियतमनस्कैः । वालखिल्यैः वालखिल्याख्यैः । वैखानसैः वानप्रस्थविशेषैः । जयतां शूराणाम् ॥ २६–२८ ॥ इति श्रीमहेश्वरतीर्थ० बालकाण्डव्याख्यायामेकपञ्चाशः सर्गः ॥५१॥ स इति । प्रणतः कृतप्रणामः ॥ १ ॥ स्वागतमिति । व्यादिदेश ह आज्ञापयति स्म ॥ २–४ ॥

उपविष्टायेत्यादिचत्वारः। फलमूलमिति "जातिरप्राणिनाम्" इत्येकवत्त्वम्। राजसत्तमं प्रतीतिशेषः॥३—६॥कच्चिदित्यादित्रयः।कच्चिदिति कामप्रवेदनेऽव्ययम् "कच्चित्कामप्रवेदने" इत्यमरः। तव कुशलं ममेप्सितमित्यमुमर्थं द्योतयति। राजवृत्तेन चतुर्विधेन उपलक्षितः। यथाहुः—"न्यायेनार्जनमर्थस्य

उपविष्टाय च तदा विश्वामित्राय धीमते। यथान्यायं मुनिवरः फलमूलमुपाहरत् ॥३॥ प्रतिगृह्य च तां पूजां वसिष्ठाद्राजसत्तमः। तपोग्निहोत्रशिष्येषु कुशलं पर्य्यपृच्छत ॥४॥ विश्वामित्रो महातेजा वनस्पतिगणे तथा। सर्वत्र कुशलं चाह वसिष्ठो राजसत्तमम् ॥५॥ सुखोपविष्टं राजानं विश्वामित्रं महातपाः। पप्रच्छ जपतां श्रेष्ठो वसिष्ठो ब्रह्मणः सुतः ॥ ६ ॥ कच्चित्ते कुशलं राजन् कच्चिद्धर्मेण रञ्जयन्। प्रजाः पालयसे वीर राजवृत्तेन धार्मिक ॥ ७ ॥ कच्चित्ते सम्भृता भृत्याः कच्चित्तिष्ठन्ति शासने। कच्चित्ते विजिताः सर्वे रिपवो रिपुसूदन ॥ ८ ॥ कच्चिद्बलेषु कोशेषु मित्रेषु च परन्तप। कुशलं ते नरव्याघ्र पुत्रपौत्रे तवानघ ॥ ९ ॥ सर्वत्र कुशलं राजा वसिष्ठं प्रत्युदाहरत्। विश्वामित्रो महातेजा वसिष्ठं विनयान्वितः ॥ १० ॥ कृत्वोभौ सुचिरं कालं धर्मिष्ठौ ताः कथाश्शुभाः। मुदा परमया युक्तौ प्रीयेतां तौ परस्परम् ॥११॥ ततो वसिष्ठो भगवान् कथान्ते रघुनन्दन। विश्वामित्रमिदं वाक्यमुवाच प्रहसन्निव॥१२॥

वर्द्धनं पालनं तथा। सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्॥" इति। सम्भृताः पोषिताः,तिष्ठन्तीतिशेषः। बलेषु चतुरङ्गबलेषु। कोशेषु अर्थसमूहेषु। पुत्रपौत्र इति गवाश्वप्रभृतित्वादेकवत्त्वम् ॥७—९॥ सर्वत्रेति। सर्वत्र वसिष्ठपृष्टसर्वविषयइत्यर्थः। वसिष्ठं धनिकम् ॥१०॥ कृत्वेति। ताः कथाः अन्योन्यकुशलप्रश्नोत्तररूपाः। प्रीयेतां अप्रीणयताम् ॥ ११ ॥ तत इत्यादित्रयः। प्रहसन्निव प्रसन्नमुख इत्यर्थः। सम्प्रतीच्छ प्रतिगृहाण। उद्यतां चिकीर्षि

वनस्पतिशब्देन वृक्षमात्रम्, न तु विना पुष्पं फलवन्त एतद्विषयेऽपि कुशलं पर्यपृच्छत। सर्वत्र तत्पृष्टसर्वविषये ॥ ५ ॥ जपतां तपस्विनाम् ॥ ६ ॥ कच्चिदिति। कच्चिदित्यव्ययं कामप्रवेदनपरम् तव कुशलं ममेप्सितमित्यमुमर्थं द्योतयति। राजवृत्तेन चतुर्विधेन। यथाहुः—"न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा। सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्" इति। सम्भृताः तोषिताः। बले चतुरङ्गबले। कोशे अर्थसमूहे ॥ ७—९ ॥ सर्वत्रेति। 'वसिष्ठं विनयान्वितम्' इत्यत्र वसिष्ठमतिशयेन वसुमन्तम्, तपोधनसमृद्धमिति यावत्। यद्वा वसिष्ठशब्दो वरिष्ठवचनः ॥ १० ॥ कृत्वेति। कथा अन्योन्यकुशलप्रश्नोत्तरादिरूपाः, परस्परं प्रीयेतां प्रीणयतः स्म ॥ ११ ॥ तत इति। प्रहसन्निव अयं महानतिथिर्लब्ध इति हर्षेण ॥ १२ ॥

ताम् ॥ १२-१४ ॥ एवमिति त्रयः । प्रियवाक्येन आतिथ्यं करिष्यामीत्यनेन वचनेन । आतिथ्यं कृतं तवाश्रमे यद्विद्यते तेन फलमूलेन सुपूजितः इत्यन्वयः । पूजार्हेण त्वयेतिशेषः । मैत्रेण स्नेहयुक्तेन । मत्वर्थीयाजन्तः ॥ १५-१७ ॥ एवं ब्रुवन्तमिति द्वौ । पुनः न्यमन्त्रयत भोजनार्थं प्रार्थनमकरोत् ।

आतिथ्यं कर्तुमिच्छामि बलस्यास्य महाबल । तव चैवाप्रमेयस्य यथार्हं सम्प्रतीच्छ मे ॥ १३ ॥ सत्क्रियां हि भवानेतां प्रतीच्छतु मयोद्यताम् । राजा त्वमतिथिश्रेष्ठः पूजनीयः प्रयत्नतः ॥१४॥ एवमुक्तो वसिष्ठेन विश्वामित्रो महामतिः । कृतमित्यब्रवीद्राजा प्रियवाक्येन मे त्वया ॥ १५ ॥ फलमूलेन भगवन् विद्यते यत्तवाश्रमे । पाद्येनाचमनीयेन भगवद्दर्शनेन च ॥ १६ ॥ सर्वथा च महाप्राज्ञ पूजार्हेण सुपूजितः । गमिष्यामि नमस्तेऽस्तु मैत्रेणेक्षस्व चक्षुषा ॥१७॥ एवं ब्रुवन्तं राजानं वसिष्ठः पुनरेव हि । न्यमन्त्रयत धर्मात्मा पुनः पुनरुदारधीः ॥१८॥ बाढमित्येव गाधेयो वसिष्ठं प्रत्युवाच ह । यथाप्रियं भगवतस्तथास्तु मुनिसत्तम ॥ १९ ॥ एवमुक्तो महातेजा वसिष्ठो जपतां वरः । आजुहाव ततः प्रीतः कल्माषीं धूतकल्मषः ॥ २० ॥ एह्येहि शबले क्षिप्रं शृणु चापि वचो मम । सबलस्यास्य राजर्षेः कर्तुं व्यवसितोऽस्म्यहम् । भोजनेन महार्हेण सत्कारं संविधत्स्व मे ॥२१॥ यस्ययस्य यथाकामं षड्रसेष्वभिपूजितम् । तत्सर्वं कामधुक् क्षिप्रमभिवर्ष कृते मम ॥ २२ ॥

पुनःपुनरित्यत्र न्यमन्त्रयतेत्यनुषज्यते । बहुशः प्रत्युत्तरेऽपि पुनःपुनर्न्यमन्त्रयतेत्यर्थः । गाधेयः गाधिपुत्रः । बाढमित्यस्यैव विवरणं यथेति ॥ १८ ॥ १९ ॥ एवमिति । कल्माषीं चित्रवर्णां, शबलामिति यावत् । "चित्रं किर्मीरकल्माष-" इत्यमरः ॥ २० ॥ एहीति सार्द्धश्लोकः । सबलस्यास्य राजर्षेः सत्कारं कर्तुं व्यवसितोऽस्मि । संविधत्स्व तदुपयोगिवस्तुजातं सम्पादय ॥ २१ ॥ यस्येति । षड्रसेषु यद्यस्ययस्य

संप्रतीच्छ अङ्गीकुरु ॥ १३ ॥ उद्यतां चिकीर्षताम् ॥ १४ ॥ एवमिति । प्रियवाक्येनातिथ्यं कृतम् ॥ १५ ॥ १६ ॥ मैत्रेण स्नेहयुक्तेन ॥ १७ ॥ एवं ब्रुवन्तमिति । न्यमन्त्रयत भोजनार्थं नियमनं कृतवान् ॥ १८ ॥ १९ ॥ एवमुक्त इति । कल्माषीं चित्रवर्णाम् होमधेनुम् ॥ २० ॥ एहीति । सबलस्येति राजर्षेस्सत्कारं कर्तुं व्यवसितः उद्युक्तः । मे मम कृते । संविधत्स्व तदुपयोगिपदार्थजातं संपादय ॥ २१ ॥ यस्ययस्येत्यादि । षड्रसेषु मधुरादिषु । यद्यस्ययस्याभिपूजितम्

मुनिभाव०—कृतमित्यब्रवीद्राजा इत्यत्र तु कृतमित्येतत्पदं राजपदादुपरि वाक्यादौ निवेश्यम् । वसिष्ठेनैवमुक्तो महामतिः विश्वामित्रो राजा । कृतं वाक्येन मे पूजा त्वया कृतैवेत्यब्रवीत् ॥ १५॥

अभिपूजितम् अभिमतम् । तत्सर्वं यथाकामं ममकृते अभिवर्षेत्यन्वयः । "अर्थे कृते च तादर्थ्ये निपातद्वयमव्ययम्" इतिनिघण्टुः ॥ २२ ॥ रसेनेति । रसेन रसायनभेदेन, अन्नेन भक्ष्येण शष्कुलीलाजादिना, पानेन पेयेन पानकरसादिना, लेह्यचोष्येण लेह्येन जिह्वास्वाद्येन क्षौद्रादिना, चोष्येण अधरपुटग्राह्येण दध्यादिना च समन्वितम् । "सर्वो द्वन्द्वो विभाषयैकवद्भवति" इत्येकवद्भावः । अन्नानां शाल्यन्नादीनाम् । निचयं राशिम् ।

रसेनान्नेन पानेन लेह्यचोष्येण संयुतम् । अन्नानां निचयं सर्वं सृजस्व शबले त्वर ॥ २३ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

एवमुक्ता वसिष्ठेन शबला शत्रुसूदन । विदधे कामधुक्कामान् यस्ययस्य यथेप्सितम् ॥ १ ॥

इक्षून् मधूंस्तथा लाजान् मैरेयांश्च वरासवान् । पानानि च महार्हाणि भक्ष्यांश्चोच्चावचांस्तथा ॥ २ ॥

उष्णाढ्यस्यौदनस्यात्र राशयः पर्वतोपमाः । मृष्टान्नानि च सूपाश्च दधिकुल्यास्तथैव च ॥ ३ ॥

अनेन भक्ष्यभोज्यलेह्यचोष्यपेयखाद्यरूपषड्विधाभ्यवहारा दर्शिताः ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥ कामधेनुप्रार्थनं त्रिपञ्चाशे–एवमुक्तेत्यादि । यस्ययस्य यथेप्सितं तथा कामान् कांक्षितान् विदधे ॥ १ ॥ उक्तमेव प्रपञ्चयति–इक्षूनित्यादि । मधूनिति पुँल्लिङ्गत्वमार्षम् । मैरेयाः मद्यविशेषाः मैरेयाख्यानित्यर्थः । "मैरेयमासवो धात्रीधातकीगुडवारिभिः" इति वैजयन्ती । अत्र कृतमिति शेषः । पानानि पानकादीनि, भक्ष्यान् अपूपविशेषान्, उच्चावचान् नानाप्रकारान् । "उच्चावचं नैकभेदम्" इत्यमरः । विदध इत्यनुषज्यते ॥ २ ॥ उष्णेति । आसन्निति शेषः । मृष्टान्नानि इष्टान्नानि, पायसभेदा इति यावत् ॥ ३ ॥

अभिमतं तत्सर्वं यथाकामं ममकृते अभिवर्ष प्रवर्षस्वेत्यर्थः ॥ २२ ॥ रसेनेति । रसेन रसवता अन्नेन भक्ष्येण शष्कुल्यादिना, पानेन पेयेन पानकरसादिना । लेह्येन जिह्वास्वाद्येन क्षौद्रादिना । चोष्येण अधरपुटग्राह्येण दध्यादिना । अन्नानां निचयं शाल्यन्नाज्यादिभोज्यसमूहम् । सर्वमुच्चावचम् । शबले इति धेनुसम्बोधनम् ॥ २३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां द्विपञ्चाशः सर्गः ॥ ५२ ॥ एवमिति । यस्य यस्य यथा यथेप्सितम्, तथा तथा कामान् कांक्षितान् विदधे निर्ममे ॥ १ ॥ इक्षूनिति । उच्चावचान् अनेकविधान् ॥ २ ॥ उष्णेति । उष्णाढ्यस्य उष्णस्पर्शवतः ।

नानेति। नानाविधाः स्वादवो रुच्या रसाः माधुर्यादयो येषां तेषाम्। षाडवाः षड्रसविकृताः भक्ष्यविशेषाः। शैषिकोऽण्। तेषां पूर्णानि तैः पूर्णानीत्यर्थः। "पूरणगुण—" इत्यादिना तृतीयार्थे षष्ठी। गौडानि गुडविकाराः। अत्राप्यासन्निति शेषः ॥ ४ ॥ सर्वमिति। पूर्वमेव हृष्टपुष्टजनायुतं विश्वामित्रबलं सर्वं सुसन्तुष्टमासीदित्यन्वयः ॥ ५ ॥ विश्वामित्र इति। हृष्टः आदरेण, पुष्टः भोजनादिना ॥ ६ ॥ सामात्य इति। अमात्याः कर्मणि सहायाः।

नानास्वादुरसानां च षाडवानां तथैव च। भाजनानि सुपूर्णानि गौडानि च सहस्रशः ॥ ४ ॥ सर्वमासीत्सुसन्तुष्टं हृष्टपुष्टजनायुतम्। विश्वामित्रबलं राम वसिष्ठेनातितर्पितम् ॥ ५ ॥ विश्वामित्रोऽपि राजर्षिर्हृष्टः पुष्टस्तदाभवत्। सान्तःपुरवरो राजा सब्राह्मणपुरोहितः ॥ ६ ॥ सामात्यो मन्त्रिसहितः सभृत्यः पूजितस्तदा। युक्तः परमहर्षेण वसिष्ठमिदमब्रवीत् ॥ ७ ॥ पूजितोऽहं त्वया ब्रह्मन् पूजार्हेण सुसत्कृतः। श्रूयताममभिधास्यामि वाक्यं वाक्यविशारद ॥ ८ ॥ गवां शतसहस्रेण दीयतां शबला मम ॥ ९ ॥ रत्नं हि भगवन्नेतद्रत्नहारी च पार्थिवः। तस्मान्मे शबलां देहि ममैषा धर्मतो द्विज ॥१०॥ एवमुक्तस्तु भगवान् वसिष्ठो मुनिसत्तमः। विश्वामित्रेण धर्मात्मा प्रत्युवाच महीपतिम् ॥११॥ नाहं शतसहस्रेण नापि कोटिशतैर्गवाम्। राजन् दास्यामि शबलां राशिभी रजतस्य वा ॥१२॥

मन्त्रिणः मन्त्रसहायाः ॥ ७ ॥ पूजित इति। पूजार्हेण अस्मदादिभिरिति शेषः। पूजितः बहूकृतः। सुसत्कृतः आतिथ्येन सत्कृतः ॥८॥ गवामिति। शतसहस्रेण निष्क्रयभूतेन। अर्द्धम् ॥ ९ ॥ रत्नं हीति। हि यस्मात् एतत् रत्नं स्वजातिश्रेष्ठम्। "रत्नं स्वजातिश्रेष्ठेऽपि" इत्यमरः। यतः पार्थिवो रत्नहारी तस्माद्धर्मतः न्यायतः ममैषा मे देहीत्यन्वयः ॥१०॥ एवमित्यादि षट्। परित्यागं विश्लेषम् प्राप्तुं नार्हा। आत्मवतः मनस्विनः। कीर्तिरिव। मह्यं

मृष्टान्नानि इष्टान्नानि ॥ ३ ॥ नानेति। नानाविधाः स्वादवो रुच्या रसा माधुर्यादयो येषां तेषां षाडवानां षड्रसकृतभक्ष्यविशेषाणां संपूर्णानि। तैः पूर्णानीत्यर्थः। गौडानि गुडकृतानि। उष्णाढयस्येत्यादिना गौडानि च सहस्रशः इत्यन्तस्य अभूवन्नित्यध्याहृतक्रिययान्वयः ॥४॥ सर्वमिति। पुष्टजनायुतं पुष्टजनाश्रितम् ॥५॥ विश्वामित्र इति। तुष्टः आदरेण। पुष्टः भोजनादिना ॥ ६ ॥ सामात्य इति। सामात्यः—अमात्याः कर्मसहायाः। पूजितः बहूकृतः ॥ ७ ॥ पूजित इति। सुसत्कृतः आतिथ्येन सत्कृतः ॥ ८ ॥ ९ ॥ रत्नं हीत्यादि। यस्मादेतद्रत्नं यतः पार्थिवो रत्नहारी तस्माच्छबलां देहि। धर्मतो न्यायतः। एषा मम मदीया ॥ १० ॥ एवमिति। परित्यागं विश्लेषं प्राप्तुं नार्हा, आत्मवतः मनस्विनः। कीर्तिरिव शबला मह्यं मम। शाश्वती नित्यसम्बन्धा ॥ ११–१३ ॥

मम। शबला शाश्वती नित्यसम्बन्धा ॥११-१२॥ हव्यं देवार्थम्। कव्यं पित्रर्थम्। प्राणयात्रा प्राणाग्निहोत्रम्। अग्निहोत्रं सायं प्रातःकर्तव्यो होमविशेषः। बलिः भूतबलिः। होमः दर्शपूर्णमासादिः। एतत्सर्वम् अस्यां आयत्तम् एतदधीनम्॥१४॥स्वाहाकारः स्वाहेति मन्त्रः, वषट्कारो वषडिति मन्त्रः। विविधाः विद्याः वेदाद्याश्च अस्यामायत्ताः। एतत्पयआदिप्राशनेन चित्तशुद्धेः प्राणतृप्तेर्देहबलादेश्च साध्यत्वात्तदेकमूलत्वम्। अत्रार्थे न संशयः ॥१५॥ सत्येन

न परित्यागमर्हेयं मत्सकाशादरिन्दम। शाश्वती शबला मह्यं कीर्तिरात्मवतो यथा ॥ १३ ॥ अस्यां हव्यं च कव्यं च प्राणयात्रा तथैव च। आयत्तमग्निहोत्रं च बलिर्होमस्तथैव च ॥ १४ ॥ स्वाहाकारवषट्कारौ विद्याश्च विविधास्तथा। आयत्तमत्र राजर्षे सर्वमेतन्न संशयः ॥१५॥ सर्वस्वमेतत्सत्येन मम तुष्टिकरी सदा। कारणैर्बहुभी राजन्न दास्ये शबलां तव ॥१६॥ वसिष्ठेनैमुक्तस्तु विश्वामित्रोऽब्रवीत्ततः। संरब्धतरमत्यर्थं वाक्यं वाक्यविशारदः ॥ १७ ॥ हैरण्यकक्ष्याग्रैवेयान् सुवर्णाङ्कुशभूषितान्। ददामि कुञ्जराणां ते सहस्राणि चतुर्दश॥ १८ ॥ हैरण्यानां रथानां ते श्वेताश्वानां चतुर्युजाम्। ददामि ते शतान्यष्टौ किङ्किणीकविभूषितान् ॥ १९ ॥

वदामीत्यर्थः। कारणैरुक्तैरनुक्तैश्च ॥ १६ ॥ वसिष्ठेनेति। संरब्धतरम् अत्यन्ताभिनिवेशयुक्तम् ॥१७॥ हैरण्येति। हैरण्यानि हिरण्मयानि कक्ष्या ग्रैवेयाणि येषां ते। कक्ष्या मध्यबन्धनार्था रज्जुः। "कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने" इत्यमरः। ग्रैवेयाणि ग्रीवाबन्धनरज्जवः। "ग्रीवाभ्योऽण् च" इति चाङ्क्भ्। सहस्राणीत्यस्य पुँल्लिङ्गविशेषणमार्षम् ॥ १८॥ हैरण्यानामिति। चतुर्युजां चतुर्भिरश्वैर्युक्तानाम्। गमकत्वात्समासः। सङ्ख्यानियमपरत्वान्न

अस्यामित्यादि। हव्यं देवार्थम्। कव्यं पित्रर्थम्। प्राणयात्रा प्राणधृतिः। अग्निहोत्रं प्रतिदिनं सायंप्रातः कर्तव्यो होमविशेषः। बलिः भूतबलिः। होमो दर्शपूर्णमासादिः, एतत्सर्वमस्यामायत्तमेतदधीनम्॥१४॥ स्वाहाकार इत्यादि। स्वाहाकारः स्वाहेति मन्त्रः। वषट्कारः वषडिति मंत्रः। विविधा विद्या वेदत्रयी। दधिपयःप्रभृतीनां हव्यकव्यादीनां तत्साध्यकर्मणां तद्विनियुक्तमंत्राणां च संभवादेतदधीनत्वम्। अत्रार्थे न संशयः सत्येन वदामीतिशेषः। बहुभिरुक्तैरनुक्तैश्च ॥ १५ ॥१६॥ वसिष्ठेनेति। संरब्धतरम् अत्यन्ताभिनिवेशयुक्तम् ॥ १७ ॥ हैरण्यकक्ष्येत्यादि। सहस्रशब्दस्य नित्यनपुंसकत्वान्न सामानाधिकरण्यविरोधः। हैरण्याः हिरण्मयाः कक्ष्याः मध्यबन्धनार्था रज्जुविशेषाः। ग्रैवेयाः ग्रीवाबन्धनरजवश्च येषां ते तथोक्ताः। कुञ्जराणां कुञ्जरान ॥ १८ ॥ हैरण्यानामिति। चतुर्युजाम्—चतुर्भिरश्वैर्युक्तानाम्।

पुनरुक्तिः । किङ्किणीकैर्विभूषितान् ॥ १९ ॥ हयानामिति । देशाः काम्भोजबाह्लीकादयः । कुलजानां गन्धर्वकुलजातानाम् " गन्धर्वकुलजातस्त्वम् " इति पुराणवचनात् ॥ २० ॥ नानेति । नानावर्णैः विभक्तानामन्योन्यविलक्षणानाम् ॥ २१ ॥ यावदिति । यावत्प्रमाणमिच्छसि तावत्प्रमाणं सर्वं ददामि ॥ २२ ॥ एवमिति । हे राजन् । शबलां न दास्यामीत्यन्वयः ॥ २३ ॥ एतदित्यादित्रयम् । अदोमूलाः एतन्मूलाः । प्रलापेन, भवत इति शेषः ।

हयानां देशजातानां कुलजानां महौजसाम् । सहस्रमेकं दश च ददामि तव सुव्रत ॥ २० ॥ नानावर्णविभक्तानां वयःस्थानां तथैव च । ददाम्येकां गवां कोटिं शबला दीयतां मम ॥ २१ ॥ यावदिच्छसि रत्नं वा हिरण्यं वा द्विजोत्तम । तावद्ददामि तत्सर्वं शबला दीयतां मम ॥ २२ ॥ एवमुक्तस्तु भगवान् विश्वामित्रेण धीमता । न दास्यामीति शबलां प्राह राजन् कथंचन ॥ २३ ॥ एतदेव हि मे रत्नमेतदेव हि मे धनम् । एतदेव हि सर्वस्वमेतदेव हि जीवितम् ॥ २४ ॥ दर्शश्च पूर्णमासश्च यज्ञाश्चैवाप्तदक्षिणाः । एतदेव हि मे राजन् विविधाश्च क्रियास्तथा ॥ २५ ॥ अदोमूलाः क्रियाः सर्वा मम राजन्न संशयः । बहुना किं प्रलापेन न दास्ये कामदोहिनीम् ॥ २६ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

कामान् दोग्धुं शीलमस्त्यस्या इति कामदोहिनीम् । " सुप्यजातौ णिनिस्ताच्छील्ये " इति णिनिः ॥ २४–२६ ॥ इति श्रीगोविन्दराजविर० श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

अश्वानां सङ्ख्यानियमार्थं चतुर्युजामितिविशेषणम् । किङ्किणीकविभूषितानिति षष्ठ्यर्थे द्वितीया ॥१९॥ हयानामिति । देशजातानाम्–देशः काम्भोजबाह्लीकादिः । कुलजातानाम् गन्धर्वकुलजातानाम् " गन्धर्वकुलजातस्त्वम् " इति पुराणवचनात् ॥२०–२२॥ एवमिति । हे राजन् ! शबलां न दास्यामीति प्राहेत्यन्वयः ॥२३॥ एतत् शबलारूपं वस्तु ॥ २४ ॥ आप्तदक्षिणा इत्यनेन हव्यादिवद्दक्षिणाप्येतदधीनेति सूचितम् ॥ २५ ॥ क्रियास्तथेत्यस्यैव विवरणम्–अदोमूला इति । सर्वथा दानाभावे हेतुगर्भविशेषणम् । कामदोहिनीम् इच्छाविषयदोहनशीलाम् । काव्यलिङ्गमलङ्कारः ॥ २६ ॥ इति श्रीमहे० श्रीरामा० बालकाण्ड० त्रिपञ्चाशः सर्गः ॥५३॥

अथ बलात्कारकुपितवसिष्ठप्रहितकामधेनोर्बलसृष्टिश्चतुःपञ्चाशे–कामधेनुमित्यादिदशकम् ॥ १॥२ ॥ ह्रियेयम्, कर्मणि संप्रश्ने लिङ्। कथमपि ह्रियेयमित्यर्थः। भृशदुःखिता भृशं दुःखिता। वृत्तिविषये मकारलोपो भृशमादिमान्ताव्ययस्येष्यते ॥३–५ ॥ क्रोशन्ती आर्तस्वरं कुर्वन्ती ॥६॥ राजभृताः राज

कामधेनुं वसिष्ठोऽपि यदा न त्यजते मुनिः। तदास्य शबलां राम विश्वामित्रोऽन्वकर्षत ॥ १ ॥ नीयमाना तु शबला राम राज्ञा महात्मना। दुःखिता चिन्तयामास रुदन्ती शोककर्शिता ॥ २ ॥ परित्यक्ता वसिष्ठेन किमहं सुमहात्मना। याऽहं राजभटैर्दीना ह्रियेयं भृशदुःखिता ॥ ३॥ किं मयाऽपकृतं तस्य महर्षेर्भावितात्मनः। यन्मामनागसं भक्तामिष्टां त्यजति धार्मिकः ॥ ४ ॥ निर्धूय तांस्तदा भृत्यान् शतशः शत्रुसूदन। जगामानिलवेगेन पादमूलं महात्मनः ॥ ५ ॥ शबला सा रुदन्ती च क्रोशन्ती चेदमब्रवीत्। वसिष्ठस्याग्रतः स्थित्वा मेघदुन्दुभिराविणी ॥ ६ ॥ भगवन् किं परित्यक्ता त्वयाहं ब्रह्मणः सुत। यस्माद्राजभृता मां हि नयन्ते त्वत्सकाशतः ॥ ७ ॥ एवमुक्तस्तु ब्रह्मर्षिरिदं वचनमब्रवीत्। शोकसन्तप्तहृदयां स्वसारमिव दुःखिताम् ॥ ८॥ न त्वां त्यजामि शबले नापि मेऽपकृतं त्वया। एष त्वां नयते राजा बलान्मत्तो महाबलः ॥ ९ ॥ न हि तुल्यं बलं मह्यं राजा त्वद्य विशेषतः। बली राजा क्षत्रियश्च पृथिव्याः पतिरेव च ॥ १० ॥

भटाः। त्वत्सकाशतः त्वत्समीपतः ॥७॥८॥ मत्तः मत्सकाशात् ॥९॥ मह्यं मम। तर्हि तपोबलेन किमिति न दण्ड्यते ? तत्राह राजा त्वद्य विशेषत इति।

कामधेनुमिति। न त्यजते नात्यजत्। अन्वकर्षत बलात्कारेण नीतवान् ॥ १॥ परित्यक्तेति। राजभटैः राजभृत्यैः। ह्रियेयम् अपह्रियै ॥ २ ॥ ३ ॥ किमिति। भक्ताम् अनुरक्ताम् ॥ ४ ॥ ५ ॥ शबलेति। क्रोशन्ती आर्तस्वरं कुर्वन्ती। अभितः अभिमुखम् ॥६–८॥ नेति। मत्तः मत्सकाशात् बलान्नयत इति संबन्धः ॥ ९ ॥ नहीत्यादि। मह्यं मम तुल्यं बलं न, तर्हि तपोबलेन किमिति न दण्ड्यते ? तत्राह–राजा त्वद्य विशेषत इति। राजा तपोबलेन न दण्ड्य इति भावः। तदुक्तं

---

१ धार्मिकः। इति सा चिन्तयित्वा तु विनिश्वस्य पुनः पुनः। इत्यधिकः पाठः। २ वसिष्ठस्याभितः। इति तीर्थीयपाठः।

राजा तपोबलेन न दण्ड्य इत्यर्थः ॥ १० ॥ इयमित्यादि पद्ध । सवाजिरथसङ्कुला वाजिसहितरथैस्सङ्कुला । तुभ्यं तव । त्वया त्वत्तः । त्वद्ब्रह्मबलेन त्वन्मन्त्रबलेन सम्भृतां संवर्द्धितप्रभावाम् ॥ ११–१५ ॥ इत्युक्त इत्याद्यष्टौ । आरुजति हिनस्तीत्यारुजम् ॥ १६ ॥ १७ ॥ बलं सैन्यम् ।

इयमक्षौहिणी पूर्णा सवाजिरथसङ्कुला । हस्तिध्वजसमाकीर्णा तेनासौ बलवत्तरः ॥ ११ ॥ एवमुक्ता वसिष्ठेन प्रत्युवाच विनीतवत् । वचनं वचनज्ञा सा ब्रह्मर्षिमतुलप्रभम् ॥ १२ ॥ न बलं क्षत्रियस्याहुर्ब्राह्मणो बलवत्तरः । ब्रह्मन् ब्रह्मबलं दिव्यं क्षत्रात्तु बलवत्तरम् ॥ १३ ॥ अप्रमेयबलं तुभ्यं न त्वया बलवत्तरः । विश्वामित्रो महावीर्यस्तेजस्तव दुरासदम् ॥ १४ ॥ नियुङ्क्ष्व मां महातेजस्त्वद्ब्रह्मबलसम्भृताम् । तस्य दर्पबलं यत्तन्नाशयामि दुरात्मनः ॥ १५ ॥ इत्युक्तस्तु तया राम वसिष्ठस्तु महायशाः । सृजस्वेति तदोवाच बलं परबलारुजम् ॥ १६ ॥ तस्य तद्वचनं श्रुत्वा सुरभिः सासृजत्तदा ॥ १७ ॥ तस्या हुम्भारवोत्सृष्टाः पप्लवाः शतशो नृप । नाशयन्ति बलं सर्वं विश्वामित्रस्य पश्यतः ॥ १८ ॥ बलं भग्नं ततो दृष्ट्वा रथेनाक्रम्य कौशिकः । स राजा परमक्रुद्धः क्रोधविस्फारितेक्षणः । पप्लवान् नाशयामास शस्त्रैरुच्चावचैरपि ॥ १९ ॥ विश्वामित्रार्दितान् दृष्ट्वा पप्लवान् शतशस्तदा । भूय एवासृजत्कोपाच्छकान् यवनमिश्रितान् ॥ २० ॥ तैरासीत्संवृता भूमिः शकैर्यवनमिश्रितैः । प्रभावद्भिर्महावीर्यैर्हेमकिञ्जल्कसन्निभैः ॥ २१ ॥

हुम्भारवः पशूनां हुम्भाशब्दः । उत्सृष्टाः निर्मिताः पप्लवशकयवनादिशब्दाः म्लेच्छजातिविशेषवचनाः । पश्यत इत्यनादरे षष्ठी ॥ १८ ॥ विस्फारितं विवृतम् ॥ १९ ॥ अर्दितान् हिंसितान् ॥ २० ॥ हेमकिञ्जल्कसन्निभैः हेमशब्दश्चम्पकपरः, तस्य कनकाह्वयत्वात् । तत्केसरतुल्यैरित्यर्थः ॥ २१ ॥

किष्किन्धाकाण्डे–" दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च । राजानो वानरश्रेष्ठ प्रदातारो न संशयः ॥ तान्न हिंस्यान्न चाक्रोशेन्नाक्षेपेन्नाप्रियं वदेत् । देवा मानुषरूपेण चरन्त्येते महीतले ॥" इति ॥१०॥ इयमिति । हस्तिध्वजाः हस्तिषु स्थिताः ध्वजाः तैः समाकीर्णा ॥११॥ एवमिति । विनीतवत्-विनीता ॥१२॥ नेति । क्षत्रियस्य बलं न बलम् अल्पबलमाहुः । ब्रह्मन्नित्यादि । ब्रह्मबलं क्षत्रात् क्षत्रियबलात, बलवत्तरम् अधिकतरम् ॥१३॥ अप्रमेयमिति । तुभ्यं तव बलम् । विश्वामित्रो महावीर्योऽपि, त्वया त्वत्तः न बलवान् ॥ १४ ॥ नियुङ्क्ष्वेति । ब्रह्मबलेन संभृताम् वर्धितप्रभावाम् ॥ १५–१७ ॥ तस्या इति । हुम्भारवोत्सृष्टाः हुम्भारवाः

पट्टिशः असिविशेषः ॥ २२ ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुःपञ्चाशः सर्गः ॥५४॥
अथ पुनर्दिव्यास्त्रलाभपूर्वं विश्वामित्रेण वसिष्ठाश्रमसंरोधः पञ्चपञ्चाशे–ततस्तानित्यादि । हे कामधुक् ! योगतः योगमहिम्ना, तिरश्चोऽपि ब्रह्मप्रसादाद्योग

दीर्घासिपट्टिशधरैर्हेमवर्णाम्बरावृतैः । निर्दग्धं तद्बलं सर्वं प्रदीप्तैरिव पावकैः ॥२२॥ ततोऽस्त्राणि महातेजा विश्वामित्रो मुमोच ह । तैस्तैर्यवनकाम्भोजाः पप्लवाश्चाकुलीकृताः ॥२३॥ इत्यार्षे० बालकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥
ततस्तानाकुलान् दृष्ट्वा विश्वामित्रास्त्रमोहितान् । वसिष्ठश्चोदयामास कामधुक्सृज योगतः ॥ १ ॥ तस्या हुम्भारवाज्जाताः काम्भोजा रविसन्निभाः । ऊधसस्त्वथ सञ्जाताः पप्लवाः शस्त्रपाणयः ॥२॥ योनिदेशाच्च यवनाः शकृद्देशाच्छकास्तथा । रोमकूपेषु च म्लेच्छा हारीतास्सकिरातकाः ॥ ३ ॥ तैस्तैर्निषूदितं सर्वं विश्वामित्रस्य तत्क्षणात् । सपदातिगजं साश्वं सरथं रघुनन्दन ॥ ४ ॥ दृष्ट्वा निषूदितं सैन्यं वसिष्ठेन महात्मना । विश्वामित्रसुतानां तु शतं नानाविधायुधम् । अभ्यधावत्सुसंक्रुद्धं वसिष्ठं जपतां वरम् ॥ ५ ॥ हुङ्कारेणैव तान् सर्वान् ददाह भगवानृषिः ॥ ६ ॥ ते साश्वरथपादाता वसिष्ठेन महात्मना । भस्मीकृता मुहूर्तेन विश्वामित्रसुतास्तदा ॥ ७ ॥

शक्तिरस्तीति ज्ञेयम् ॥ १ ॥ तस्या इत्यादि +चत्वारः । ऊधसः स्तनात् ॥ २ ॥ हारीताः किरातजातिविशेषाः ॥३॥४॥ दृष्ट्वेत्यादिपद् । वसिष्ठमभ्यधावत् तस्य सर्वविनाशमूलत्वात् इति भावः । जपतां वरम् इति हुङ्कारेण निरासे हेतुः ॥ ५ ॥ ६ ॥ मुहूर्तेनेति मासेनानुवाकोऽधीतइतिवदुपसर्गे तृतीया ॥ ७॥८॥

गवामनुकरणशब्दास्तैरुत्सृष्टाः निर्मिताः । पप्लवशकयवनादिशब्दाः म्लेच्छजातिविशेषवचनाः ॥ १८–२३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां० बालकाण्डव्याख्यायां चतुःपञ्चाशः सर्गः ॥ ५४ ॥ तत इति । आकुलान् पलायमानान् । हे कामधुक् ! योगतः योगमहिम्ना ॥ १–३ ॥ विश्वामित्रस्य सर्वम् तत्सैन्यम् ॥ ४ ॥ विश्वामित्रसुतानां शतम् ऋषिरेव धेनोर्बलमतोऽयमेव नाशनीय इत्याशयेन वसिष्ठमभ्यधावत् ॥ ५ ॥ हुङ्कारेण तपोबलसंभृतेन, क्षत्रियत्वेपि पृथिवीपतित्वाभावात्तद्वधे

---

+ अनेन व्याख्यानेन श्लोकचतुष्टयसद्भावः प्रतीयते, उपलभ्यन्ते तु त्रय एव श्लोकाः । अन्योऽपि गवेषणीयः ।

निर्वेगः युद्धप्रवृत्तिरहितः । उरग इव निःशक्तिरिति शेषः । उपरक्तः राहुग्रस्तः ॥ ९ ॥ निर्वेदं दुःखम् ॥ १० ॥ स इत्यादिचत्वारः । एकमवशिष्टमिति शेषः । राज्याय राज्यं कर्तुम् । पृथिवीं क्षत्रधर्म्मेण पालयेत्यन्वयः ॥११॥१२॥ दर्शयामास आत्मानमिति शेषः ॥१३॥१४॥ एवमित्यादिचत्वारः ॥१५॥

दृष्ट्वा विनाशितान् पुत्रान् बलं च सुमहायशाः । सव्रीडश्चिन्तयाविष्टो विश्वामित्रोऽभवत्तदा ॥८॥ समुद्र इव निर्वेगो भग्नदंष्ट्र इवोरगः । उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ९ ॥ हतपुत्रबलो दीनो लूनपक्ष इव द्विजः । हतदर्पो हतोत्साहो निर्वेदं समपद्यत ॥ १० ॥ स पुत्रमेकं राज्याय पालयेति नियुज्य च । पृथिवीं क्षत्रधर्म्मेण वनमेवान्वपद्यत ॥ ११ ॥ स गत्वा हिमवत्पार्श्वं किन्नरोरगसेवितम् । महादेवप्रसादार्थं तपस्तेपे महातपाः ॥ १२ ॥ केनचित्त्वथ कालेन देवेशो वृषभध्वजः । दर्शयामास वरदो विश्वामित्रं महाबलम् ॥ १३ ॥ किमर्थं तप्यसे राजन् ब्रूहि यत्ते विवक्षितम् । वरदोऽस्मि वरो यस्ते कांक्षितः सोऽभिधीयताम् ॥ १४ ॥ एवमुक्तस्तु देवेन विश्वामित्रो महातपाः । प्रणिपत्य महादेवमिदं वचनमब्रवीत् ॥ १५ ॥ यदि तुष्टो महादेव धनुर्वेदो ममानघ । साङ्गोपाङ्गोपनिषदः सरहस्यः प्रदीयताम् ॥ १६ ॥ यानि देवेषु चास्त्राणि दानवेषु महर्षिषु । गन्धर्वयक्षरक्षस्सु प्रतिभान्तु ममानघ । तव प्रसादाद्भवतु देवदेव ममेप्सितम् ॥ १७ ॥ एवमस्त्विति देवेशो वाक्यमुक्त्वा गतस्तदा ॥ १८ ॥ प्राप्य चास्त्राणि राजर्षिर्विश्वामित्रो महाबलः । दर्पेण महता युक्तो दर्पपूर्णोऽभवत्तदा ॥ १९ ॥

साङ्गोपाङ्गोपनिषद इत्यकारान्तत्वमार्षम् । अङ्गं सन्निपत्योपकारम् । उपाङ्गं आरादुपकारकम् । उपनिषत् रहस्यमन्त्रः । सरहस्यः उपदेशगम्यार्थसहितः । प्रतिभान्तु तानीति शेषः । ममेप्सितं अन्यदपीति शेषः ॥ १६–१८ ॥ प्राप्येत्यादिसप्त । दर्पपूर्ण इति क्षत्रियत्वादिदर्पयुक्तः । विशेषास्त्रलाभा

अल्पप्रायश्चित्तम्, आततायित्वाच्चेति भावः ॥६–८॥ समुद्र इति । उपरक्तः राहुग्रस्तः ॥९॥ हतेति । निर्वेदं चतुरङ्गबले निष्फलत्वबुद्धिम् ॥१०॥ सपुत्रमिति । एकमवशिष्टम् । क्षत्रधर्मेण पृथिवीं पालयेति, अन्यथा अहमिव भविष्यतीत्याशयः । राज्याय राज्यं कर्तुं नियुज्य ॥११॥१२॥ केनचिदिति । दर्शयामास, आत्मानमिति शेषः ॥१३–१५॥ यदिति । अङ्गं करणम् । उपाङ्गं तदनुग्राहकम् । उपनिषत् वेदान्तः । रहस्यमुपदेशगम्यार्थः । समासान्तः कविप्रयोगतो वेदितव्यः ॥१६–१८॥ प्राप्येति ।

...नीं दर्पपूर्णोऽभूदित्यर्थः॥१९॥२०॥ यैरस्त्रैः। अस्त्रतेजसा स्वतेजसा ॥२१॥ उदीर्यमाणं प्रयुज्यमानम् ॥२२॥ भयात् भयदादस्त्रात्।नानादिग्भ्यः इति ...त्ययेन द्वितीयार्थे चतुर्थी। नानादिग्भ्यः स्वस्वस्थानेभ्य इति वा। आश्रमपदं वनम्। शून्यं निस्तरुगुल्मम्। इरिणम् ऊषरम्॥२३॥२४॥ वसिष्ठे रक्षके

विवर्द्धमानो वीर्येण समुद्र इव पर्वणि । हतमेव तदा मेने वसिष्ठमृषिसत्तमम् ॥ २० ॥ ततो गत्वाश्रमपदं मुमोचास्त्राणि पार्थिवः । यैस्तत्तपोवनं सर्वं निर्दग्धं चास्त्रतेजसा ॥ २१ ॥ उदीर्यमाणमस्त्रं तद्विश्वामित्रस्य धीमतः । दृष्ट्वा विप्रद्रुता भीता मुनयः शतशो दिशः ॥ २२ ॥ वसिष्ठस्य च ये शिष्यास्तथैव मृगपक्षिणः । विद्रवन्ति भयाद्भीता नानादिग्भ्यः सहस्रशः ॥ २३ ॥ वसिष्ठस्याश्रमपदं शून्यमासीन्महात्मनः । मुहूर्तमिव निःशब्दमासीदिरिणसन्निभम् ॥ २४ ॥ वदतो वै वसिष्ठस्य माभैरिति मुहुर्मुहुः । नाशयाम्यद्य गाधेयं नीहारमिव भास्करः॥२५॥ एवमुक्त्वा महातेजा वसिष्ठो जपतां वरः । विश्वामित्रं तदा वाक्यं सरोषमिदमब्रवीत् ॥ २६ ॥ आश्रमं चिरसंवृद्धं यद्विनाशितवानसि । दुराचारोऽसि तन्मूढ तस्मात्त्वं न भविष्यसि ॥ २७ ॥ इत्युक्त्वा परमक्रुद्धो दण्डमुद्यम्य सत्वरः । विधूममिव कालाग्निं यमदण्डमिवापरम् ॥२८॥ इत्यार्षे श्रीरामायणे बालकाण्डे पञ्चपञ्चाशः सर्गः ॥५५॥

विद्यमाने कुतो विद्रवन्तीत्यत्राह—वदत इति। भावलक्षणे षष्ठी अनादरे वा। गाधेयं नाशयामि मा भैरिति वदतो वसिष्ठस्य वचनमनादृत्य विद्रवन्तीति पूर्वेणान्वयः ॥२५॥ एवमित्यादित्रयः। उक्त्वा स्वानिति शेषः ॥२६॥ न भविष्यसि नशिष्यसीति यावत्। उद्यम्य तस्थाविति शेषः ॥ २७॥ २८ ॥ इति श्रीगोविन्दराजविर० श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

पूर्वमेव दर्पयुक्तः तदानीं दर्पपूर्णोऽभवत् ॥ १९ ॥ २० ॥ तत इति । यैरस्त्रैरस्त्रतेजसा स्वकीयतेजसा च निर्दग्धं तानि मुमोचेत्यन्वयः ॥ २१ ॥ उदीर्यमाणं प्रयुज्यमानम् ॥ २२ ॥ वसिष्ठस्येति । भयाद्भयजनकास्त्रात्, नानादिग्भ्यः नानादिशः, व्यत्ययेन द्वितीयार्थे चतुर्थी । इरिणसंनिभम् ऊषरस्थानसंनिभम्, निस्तम्बगुल्मवदित्यर्थः ॥२३॥२४॥ वदतो वसिष्ठस्येति भावलक्षणे षष्ठी ॥ २५–२८ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व०बालकाण्डव्याख्यायां पञ्चपञ्चाशः सर्गः ॥५५॥

अथ सर्वास्त्रबलसम्पूर्णक्षत्रवीर्यादपि ब्रह्मबलं बलीयइत्याह षट्पञ्चाशे—एवमुक्त इत्यादि । तिष्ठतिष्ठेति भयजननार्थोक्तिः ॥ १ ॥ ब्रह्मदण्डमित्यादित्रयो विंशतिः । ब्रह्मदण्डमिति । ब्रह्मदण्डं ब्राह्मणासाधारणं दण्डम् ॥ २ ॥ क्षत्रबन्धो क्षत्रियाधम ! ते दर्पं तव शस्त्रस्य दर्पं च नाशयामीत्यन्वयः । क्षत्रिय



एवमुक्तो वसिष्ठेन विश्वामित्रो महाबलः । आग्नेयमस्त्रमुत्क्षिप्य तिष्ठतिष्ठेति चाब्रवीत् ॥ १ ॥ ब्रह्मदण्डं समुत्क्षिप्य कालदण्डमिवापरम् । वसिष्ठो भगवान् क्रोधादिदं वचनमब्रवीत् ॥ २ ॥ क्षत्रबन्धो स्थितोऽस्म्येष यद्बलं तद्विदर्शय । नाशयाम्यद्य ते दर्पं शस्त्रस्य तव गाधिज ॥ ३ ॥ क्व च ते क्षत्रियबलं क्व च ब्रह्मबलं महत् । पश्य ब्रह्मबलं दिव्यं मम क्षत्रियपांसन ॥ ४ ॥ तस्यास्त्रं गाधिपुत्रस्य घोरमाग्नेयमुद्यतम् । ब्रह्मदण्डेन तच्छान्तमग्नेर्वेग इवाम्भसा ॥ ५ ॥ वारुणं चैव रौद्रं च ऐन्द्रं पाशुपतं तथा । ऐषीकं चापि चिक्षेप कुपितो गाधिनन्दनः ॥ ६ ॥ मानवं मोहनं चैव गान्धर्वं स्वापनं तथा । जृम्भणं मादनं चैव सन्तापनविलापने ॥ ७ ॥ शोषणं दारणं चैव वज्रमस्त्रं सुदुर्जयम् । ब्रह्मपाशं कालपाशं वारुणं पाशमेव च ॥ ८ ॥ पैनाकास्त्रं च दयितं शुष्कार्द्रे अशनी उभे । दण्डास्त्रमथ पैशाचं क्रौञ्चमस्त्रं तथैव च ॥ ९ ॥ धर्मचक्रं कालचक्रं विष्णुचक्रं तथैव च । वायव्यं मथनं चैव अस्त्रं हयशिरस्तथा ॥ १० ॥ शक्तिद्वयं च चिक्षेप कङ्कालं मुसलं तथा । वैद्याधरं महास्त्रं च कालास्त्रमथ दारुणम् ॥ ११ ॥ त्रिशूलमस्त्रं घोरं च कापालमथ कङ्कणम् । एतान्यस्त्राणि चिक्षेप सर्वाणि रघुनन्दन ॥ १२ ॥ वसिष्ठे जपतां श्रेष्ठे तदद्भुतमिवाभवत् ॥ १३ ॥ तानि सर्वाणि दण्डेन ग्रसते ब्रह्मणः सुतः ॥ १४ ॥ तेषु शान्तेषु ब्रह्मास्त्रं क्षिप्तवान् गाधिनन्दनः ॥ १५ ॥ तदस्त्रमुद्यतं दृष्ट्वा देवाः साग्निपुरोगमाः । देवर्षयश्च सम्भ्रान्ता गन्धर्वाः समहोरगाः ॥ १६ ॥

पांसनेत्यनन्तरं वसिष्ठोऽब्रवीदिति अनुकृष्यते ॥३–१२॥ वसिष्ठे जपतां श्रेष्ठ इत्यनेन जपवैभवमिदं ग्रसनमिति द्योतितम् । तत् अस्त्रक्षेपणम् । अद्भुतमिवाभवत् कार्यलेशस्याप्यदर्शनादितिभावः ॥ १३ ॥ अद्भुतमेवाह—तानीति । ग्रसते अग्रसत ॥१४॥१५॥ सम्भ्रान्ता आसन्निति शेषः ॥ १६ ॥



एवमुक्त इति ॥ १ ॥ २ ॥ क्षत्रबन्धो इति । क्षत्रबन्धो क्षत्रियाधम ! क्षत्रियपांसनेत्यतः परमब्रवीदित्यनुकृष्यते ॥ ३–१६ ॥

समुदीरिते प्रयुक्ते ॥ १७ ॥ ब्राह्मेण तेजसा ब्रह्मविद्याभ्यासजनिततेजसा । उपबृंहितेन ब्रह्मदण्डेनेत्यर्थः । अत्र ग्रासक्रियायां न दण्डस्यान्वयः । पुत्रै गर्दभी भारं वहतीतिवत् । अतो न वक्ष्यमाणेन विरोधः ॥ १८ ॥ त्रैलोक्यस्य मोहनं भयान्मूर्च्छाजनकम् । रौद्रं स्मरणेऽपि भयङ्करम् । सुदारुणं दुर्द

त्रैलोक्यमासीत् सन्त्रस्तं ब्रह्मास्त्रे समुदीरिते ॥ १७ ॥ तदप्यस्त्रं महाघोरं ब्राह्मं ब्राह्मेण तेजसा । वसिष्ठो ग्रसते सर्वं ब्रह्मदण्डेन राघव ॥ १८ ॥ ब्रह्मास्त्रं ग्रसमानस्य वसिष्ठस्य महात्मनः । त्रैलोक्यमोहनं रौद्रं रूपमासीत् सुदारुणम् ॥ १९ ॥ रोमकूपेषु सर्वेषु वसिष्ठस्य महात्मनः । मरीच्य इव निष्पेतुरग्नेर्धूमाकुलार्चिषः ॥ २० ॥ प्राज्वलद् ब्रह्मदण्डश्च वसिष्ठस्य करोद्यतः । विधूम इव कालाग्निर्यमदण्ड इवापरः ॥ २१ ॥ ततोऽस्तुवन् मुनिगणा वसिष्ठं जपतां वरम् । अमोघं ते बलं ब्रह्मन् तेजो धारय तेजसा ॥ २२ ॥ निगृहीतस्त्वया ब्रह्मन् विश्वामित्रो महातपाः । प्रसीद जपतां श्रेष्ठ लोकाः सन्तु गतव्यथाः ॥ २३ ॥ एवमुक्तो महातेजाः शमं चक्रे महातपाः ॥ २४ ॥ विश्वामित्रोऽपि निकृतो विनिःश्वस्येदमब्रवीत् ॥ २५ ॥ धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् । एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥ २६ ॥

र्शम् ॥ १९ ॥ एतदेवाह—रोमेति । अग्नेरिव मरीच्यो विस्फुलिङ्गा निष्पेतुरिति योजना ॥ २० ॥ दण्डश्च प्राज्वलत्, पूर्वास्त्रग्रासेनेतिशेषः ॥ २१ ॥ तेजः ब्रह्मास्त्रतेजः । तेजसा महिम्ना । धारय उपशमय ॥ २२ ॥ २३ ॥ शमं कोपशान्तिम् ॥ २४ ॥ निकृतः अपकृतः । तिरस्कृत इति यावत् ॥२५॥ धिगिति । क्षत्रियबलं बलं धिक् निन्द्यं बलमित्यर्थः । " धिगुपर्यादिषु " इतिद्वितीया । ब्रह्मतेजसः ब्राह्मण्यरूपतेजसः बलं बलम्, तदेव प्रशस्तमिति

त्रैलोक्यमिति । समुदीरिते प्रयुक्ते ॥ १७–१९ ॥ रोमकूपेष्विति । अग्नेरिव वसिष्ठस्य रोमकूपेषु रोमकूपेभ्यो मरीच्यो ज्वालाः निष्पेतुः निश्चक्रमुः ॥ २०॥ २१॥ तत इति । तेजो धारय । तेजसेति । तेजो ब्रह्मास्त्रतेजः, तेजसा स्वमहिम्ना धारय उपशमय ॥२२–२४॥ विश्वामित्र इति । विनिकृतः परिभूतः ॥२५॥ धिग्बलमिति ।

यावत् । सर्वास्त्राणि ब्रह्मास्त्राभिन्नानि ॥ २६ ॥ ब्रह्मत्वकारणं ब्राह्मण्यापादकम् । प्रसन्नेन्द्रियमानसः परित्यक्तक्षत्ररोष इत्यर्थः ॥ २७ ॥ इति श्रीगोविन्द राजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥ एवं पशुपतिवितीर्णसरहस्यसर्वास्त्रवैघट्यदर्शनेन रुद्रस्यापरत्वमुपपादितम् । अथ पूर्वप्रस्तुतब्राह्मण्यस्यात्यन्तदुर्लभत्वं दर्शयति नवभिः सर्गैः । तत्र त्रिशङ्कुशरणागत्यनुगुणशक्तिमत्त्वं दर्शयति सप्त

तदेतत् समवेक्ष्याहं प्रसन्नेन्द्रियमानसः । तपो महत् समास्थास्ये यद्वै ब्रह्मत्वकारणम् ॥ २७ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

ततः सन्तप्तहृदयः स्मरन् निग्रहमात्मनः । विनिःश्वस्य विनिःश्वस्य कृतवैरो महात्मना ॥ १ ॥ स दक्षिणां दिशं गत्वा महिष्या सह राघव । तताप परमं घोरं विश्वामित्रो महत्तपः ॥२॥ अथास्य जज्ञिरे पुत्राः सत्यधर्मपरायणाः । हविष्यन्दो मधुष्यन्दो दृढनेत्रो महारथः ॥ ३ ॥ पूर्णे वर्षसहस्रे तु ब्रह्मा लोकपितामहः । अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् ॥ ४ ॥ जिता राजर्षिलोकास्ते तपसा कुशिकात्मज । अनेन तपसा त्वां तु राजर्षिरिति विद्महे ॥ ५ ॥ एवमुक्त्वा महातेजा जगाम सह दैवतैः । त्रिविष्टपं ब्रह्मलोकं लोकानां परमेश्वरः ॥ ६ ॥

पञ्चाशे–ततः सन्तप्तहृदय इत्यादि, श्लोकद्वयमेकान्वयम् । महात्मना वसिष्ठेन । कृतवैरः अनेनास्य तपोनाशमूलं दर्शितम् । ब्रह्मविदपचारो हि सर्वश्रेयो विनाशकः । दक्षिणां शरावत्यपेक्षया । महिष्येत्यनेन भावियाजकत्वानुगुणगार्हस्थ्यं दर्शितम् । महत्तपः परमं यथातथा तताषेत्यन्वयः ॥ १ ॥ २ ॥ कामक्रोधाद्यनुवृत्तिं दर्शयति–अथेति ॥ ३ ॥ अत एव तपसो मन्दफलत्वं दर्शयति–पूर्ण इति ॥४॥ जिता इति । विद्महे आर्षमात्मनेपदम् ॥५॥ एव क्षत्रियबलं धिक् निन्द्यमित्यर्थः । ब्रह्मतेजोबलं बलम्, प्रशस्तं बलमिति यावत् । ब्रह्मत्वकारणं ब्राह्मण्यसंपादकम् ॥ २६ ॥ २७ ॥ इति श्रीमहेश्वरतीर्थ विरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां षट्पञ्चाशः सर्गः ॥ ५६ ॥ ततु इति श्लोकद्वयमेकान्वयम् ॥ १ ॥ २ ॥ 'घोरं तपस्तताप' इत्युक्तम्, तदेवाह–फलमूलाशन इति ॥ ३–५ ॥ एवमुक्त्वेति । दैवतैः सह त्रिविष्टपं स्वर्गं गत्वा तदनु स्वलोकं गतवानित्यर्थः ॥ ६ ॥



१ महत्तपः । फलमूलाशनो दान्तश्चकार परमं तपः । इत्यधिकः ।

मित्यादि चत्वारः । ब्रह्मा ब्रह्मलोकं जगाम, त्रिविष्टपं देवा जग्मुरित्यर्थः ॥ ६ ॥ समन्युः सदैन्यः "मन्युर्दैन्ये क्रतौ क्रुधि " इत्यमरः ॥ ७ ॥ नास्ति मन्ये तपःफलम् । एतन्मात्रं मत्तपः फलं न भवति, ब्राह्मण्यस्यैव मदभिमतत्वादिति भावः ॥ ८ ॥ परमं तपः पूर्वकृततपसोप्यतिशायितं तपः । परमात्मवान् अतिशायितयत्नवान् ॥ ९ ॥ एतस्मिन्निति । विख्यातः, अभूदितिशेषः ॥ १० ॥ तस्येति । सशरीरेण, आत्मनेतिशेषः । परमां गतिं

विश्वामित्रोपि तच्छ्रुत्वा ह्रिया किञ्चिदवाङ्मुखः । दुःखेन महताविष्टः समन्युरिदमब्रवीत् ॥ ७ ॥ तपश्च सुमहत्ततं राजर्षिरिति मां विदुः । देवाः सर्षिगणाः सर्वे नास्ति मन्ये तपःफलम् ॥ ८ ॥ एवं निश्चित्य मनसा भूय एव महा तपाः । तपश्चकार काकुत्स्थ परमं परमात्मवान् ॥ ९ ॥ एतस्मिन्नेव काले तु सत्यवादी जितेन्द्रियः । त्रिशङ्कुरिति विख्यात इक्ष्वाकुकुलवर्द्धनः ॥ १० ॥ तस्य बुद्धिः समुत्पन्ना यजेयमिति राघव । गच्छेयं सशरीरेण देवानां परमां गतिम् ॥ ११ ॥ स वसिष्ठं समाहूय कथयामास चिन्तितम् । अशक्यमिति चाप्युक्तो वसिष्ठेन महात्मना ॥ १२ ॥ प्रत्याख्यातो वसिष्ठेन स ययौ दक्षिणां दिशम्। ततस्तत्कर्मसिद्ध्यर्थं पुत्रांस्तस्य गतो नृपः॥ १३ ॥ वासिष्ठा दीर्घतपस स्तपो यत्र हि तेपिरे । त्रिशङ्कुः सुमहातेजाः शतं परमभास्वरम् । वसिष्ठपुत्रान् ददृशे तप्यमानान् यशस्विनः ॥ १४ ॥

स्वर्गमिति यावत ॥ ११ ॥ स इति । चिन्तितम् सशरीरस्वर्गसाधनयज्ञमित्यर्थः । अशक्यं सशरीरस्वर्गसाधनयज्ञकरणमितिशेषः । अशक्यत्वं च न ऋषेरसामर्थ्यात्, नापि तादृशकर्मविधानाभावात्, "सशरीर एव स्वर्गं लोकमेति" इतिश्रुतेः। किन्तु त्रिशङ्कोस्तादृशस्वर्गप्राप्तिर्नास्तीति पूर्वकल्पवृत्त तज्ज्ञानादिति मन्तव्यम् । उक्तः अभूदितिशेषः॥ १२ ॥ प्रत्याख्यात इति । तत्कर्मसिद्ध्यर्थं सशरीरस्वर्गसाधनकर्मसिद्ध्यर्थम्॥ १३ ॥ वासिष्ठा इति सार्धः ।

विश्वामित्र इति । समन्युः सदैन्यः ॥ ७–९ ॥ एतस्मिन्निति । त्रिशङ्कुरिति विख्यातः, य इति शेषः ॥१०॥ तस्येति । परमां गतिम्–सशरीरस्वर्गगमनम्॥ ११ ॥ १२ ॥ प्रत्याख्यातः निराकृतः । तस्य वसिष्ठस्य ॥ १३ ॥ १४ ॥

विषम०--परमात्मवान् परमात्मध्यानवान् परमर्धारश्च ॥ ९ ॥

यत्र तेपिरे तत्र गत्वेति शेषः। शतं वासिष्ठानिति बहूनां [illegible]  [illegible] सामानाधिकरण्यम् ॥ १४ ॥ स इति सार्द्धः। ह्रिया वसिष्ठप्रत्याख्यानकृतया। महात्मानः सुमहात्मान इति व्यत्ययेन प्रथमा ॥ १५॥ शरणमिति। शरणं रक्षितारम् आगतः "शरणं गृहरक्षित्रोः" इतिवचनात्। रक्षित्रपेक्षया आगतोऽहम्। शरण्यान् शरणसमर्थान्। शरणं प्रपद्ये रक्षितॄन् प्राप्नोमीत्यर्थः। यद्वा शरणागतः प्रत्याख्यात इत्युत्तरेणान्वयः। तर्ह्या



सोऽभिगम्य महात्मानः सर्वानेव गुरोः सुतान्। अभिवाद्यानुपूर्व्येण ह्रिया किञ्चिदवाङ्मुखः॥अब्रवीत्सुमहात्मानः सर्वानेव कृताञ्जलिः॥ १५ ॥ शरणं वः प्रपद्येऽहं शरण्यान् शरणागतः। प्रत्याख्यातोऽस्मि भद्रं वो वसिष्ठेन महात्मना ॥ १६ ॥ यष्टुकामो महायज्ञं तदनुज्ञातुमर्हथ। गुरुपुत्रानहं सर्वान्नमस्कृत्य प्रसादये ॥१७॥ शिरसा प्रणतो याचे ब्राह्मणांस्तपसि स्थितान्। ते मां भवन्तः सिद्ध्यर्थं याजयन्तु समाहिताः। सशरीरो यथाहं हि देवलोकमवाप्नुयाम् ॥ १८ ॥ प्रत्याख्यातो वसिष्ठेन गतिमन्यां तपोधनाः। गुरुपुत्रानृते सर्वान्नाहं पश्यामि कांचन ॥१९॥ इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः। पुरोधसस्तु विद्वांसस्तारयन्ति सदा नृपान् ॥ २० ॥ तस्मादनन्तरं सर्वे भवन्तो दैवतं मम ॥२१॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तपञ्चाशः सर्गः॥५७॥

चार्य एव गन्तव्य इत्यत्राह प्रत्याख्यात इति ॥ १६ ॥ किमर्थं शरणागतिस्तत्राह—यष्टुकाम इति। तत् यज्ञानुष्ठानम् ॥ १७ ॥ शिरसेति सार्द्धः। ब्राह्मणान् ब्रह्मविदः। समाहिताः अवहिताः ॥ १८ ॥ प्रत्याख्यात इति। गुरुपुत्रानृते अन्यां कांचन गतिं यजनोपायं न पश्यामीत्यन्वयः ॥ १९ ॥ इक्ष्वाकूणामिति। पुरोधाः पुरोहितः वसिष्ठः ॥ २० ॥ तस्मादित्यर्द्धम्। तस्मात् वसिष्ठात्। अनन्तरं पश्चात्। तस्यारक्षकत्वे भवन्त एव रक्षका इतिभावः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥



सोभिगम्येति। महात्मानः महात्मनः ॥ १५–१९ ॥ इक्ष्वाकूणामिति। पुरोधाः वसिष्ठः ॥ २० ॥ तस्मादिति। तस्माद्वसिष्ठादनन्तरं पश्चात ॥ २१ ॥ इति श्रीमहेश्वरतीर्थकृतायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां सप्तपञ्चाशः सर्गः ॥ ५७ ॥

गुरुत्यागिनां फलं दर्शयत्यष्टपञ्चाशे—ततस्त्रिशङ्कोरित्यादि । क्रोधसमन्वितमिति शतविशेषणम् ॥१॥ प्रत्याख्यात इति । शाखान्तरम् आश्रयान्तरम् ॥२॥ इक्ष्वाकूणामिति । न शक्यं त्वया इक्ष्वाकुणेतिशेषः । सत्यवादिनः, तस्येतिशेषः ॥ ३ ॥ अशक्यमिति । यं क्रतुमिति शेषः ॥ ४ ॥ बालिश इति । बालिशः

ततस्त्रिशङ्कोर्वचनं श्रुत्वा क्रोधसमन्वितम् । ऋषिपुत्रशतं राम राजानमिदमब्रवीत् ॥ १ ॥ प्रत्याख्यातो हि दुर्बुद्धे गुरुणा सत्यवादिना । तं कथं समतिक्रम्य शाखान्तरमुपेयिवान् ॥२॥ इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमो गुरुः । न चातिक्रमितुं शक्यं वचनं सत्यवादिनः ॥ ३ ॥ अशक्यमिति चोवाच वसिष्ठो भगवानृषिः । तं वयं वै समाहर्तुं क्रतुं शक्ताः कथं तव ॥ ४ ॥ बालिशस्त्वं नरश्रेष्ठ गम्यतां स्वपुरं पुनः । याजने भगवान् शक्तस्त्रैलोक्यस्यापि पार्थिव ॥ ५ ॥ अवमानं च तत्कर्तुं तस्य शक्ष्यामहे कथम् ॥ ६ ॥ तेषां तद्वचनं श्रुत्वा क्रोधपर्याकुलाक्षरम् । स राजा पुनरेवैतानिदं वचनमब्रवीत् ॥ ७ ॥ प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैव च । अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः ॥ ८ ॥ ऋषिपुत्रास्तु तच्छ्रुत्वा वाक्यं घोराभिसंहितम् । शेपुः परमसंक्रुद्धाश्चण्डालत्वं गमिष्यसि ॥ ९ ॥ एवमुक्त्वा महात्मानो विविशुस्ते स्वमाश्रमम्[१] ॥ १० ॥ अथ रात्र्यां व्यतीतायां राजा चण्डालतां गतः । नीलवस्त्रधरो नीलः परुषो ध्वस्तमूर्द्धजः । चित्यमाल्यानुलेपश्च आयसाभरणोऽभवत् ॥ ११ ॥

मूर्खः "मूर्खवैधेयबालिशाः" इत्यमरः ॥ ५ ॥ अवमानमित्यर्द्धम् । तत् असाध्यार्थसाधनरूपम् ॥ ६ ॥ तेषामिति द्वौ । अन्यां गतिं याजकान्तरम् ॥७॥८॥ ऋषीति । घोराभिसंहितं साक्षात्कुलगुरुं ब्रह्मपुत्रं वसिष्ठमतिक्रम्य पुरोहितान्तराश्रयणरूपघोराभिप्राययुक्तमित्यर्थः । गमिष्यसीत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ ९ ॥ एवमित्यर्द्धम् ॥ १० ॥ अत्र चण्डालत्वं न तत्सादृश्यमात्रम्, किन्तु क्षत्रियत्वप्रहाणेन चण्डालत्वजातिप्राप्तिः । ब्राह्मणत्वादिजातेः

तत इति । क्रोधसमन्वितमित्येतदृषिपुत्रशतविशेषणम् ॥ १ ॥ प्रत्याख्यात इति । शाखान्तरम् अवलम्बान्तरम् ॥ २ ॥ ३ ॥ अशक्यमिति चोवाच यं क्रतुमिति शेषः ॥ ४ ॥ बालिश इति । त्रैलोक्यस्यापि त्रिष्वपि लोकेषु ॥ ५–८ ॥ ऋषिपुत्रा इति । घोराभिसंहितं घोराभिप्रायसंयुक्तम् ॥ ९ ॥ १० ॥ परुषः

---

१ स्वमाश्रमम् । तच्छ्रुत्वा घोरसङ्काशमृषिपुत्रस्य भाषितम् । प्राविशत्स्वपुरं राजा चिन्तयामास दुःखितः ॥ इत्यधिकः पाठः ।

कर्ममूलत्वेन तदपाये तदपायादित्याह—अथेत्यादि सार्द्धः । चण्डालतां गतः, वक्षःस्थं यज्ञोपवीतमेव वध्र्यासीदित्यर्थः । नीलवस्त्रधरः कटिस्थपीताम्बरमेव चण्डालार्हनीलवस्त्रं जातमित्यर्थः । नीलः पूर्वं स्थितराजतेज एव नीलवर्णोऽभवदित्यर्थः । एवमुत्तरत्रापि योज्यम् । परुषः रूक्षाङ्गः । ध्वस्तमूर्द्धजः ह्रस्वकेशः । चित्यमाल्यानुलेपः चिता श्मशानम्, तत्र भवं चित्यं तादृशं माल्यम् अनुलेपः चिताभस्मरूपोऽङ्गरागश्च यस्य स तथा । आयसाभरणः

तं दृष्ट्वा मन्त्रिणः सर्वे त्यज्य चण्डालरूपिणम् । प्राद्रवन् सहिता राम पौरा येऽस्यानुगामिनः ॥ १२ ॥ एको हि राजा काकुत्स्थ जगाम परमात्मवान् । दह्यमानो दिवारात्रं विश्वामित्रं तपोधनम् ॥ १३ ॥ विश्वामित्रस्तु तं दृष्ट्वा राजानं विफलीकृतम् । चण्डालरूपिणं राम मुनिः कारुण्यमागतः ॥ १४ ॥ कारुण्यात् स महातेजा वाक्यं परमधार्मिकः । इदं जगाद भद्रं ते राजानं घोररूपिणम् ॥ १५ ॥ किमागमनकार्यं ते राजपुत्र महाबल । अयोध्याधिपते वीर शापाच्चण्डालतां गतः ॥१६॥ अथ तद्वाक्यमाज्ञाय राजा चण्डालतां गतः । अब्रवीत्प्राञ्जलिर्वाक्यं वाक्यज्ञो वाक्यकोविदम् ॥ १७ ॥ प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैव च । अनवाप्यैव तं कामं मया प्राप्तो विपर्ययः ॥ १८ ॥ सशरीरो दिवं यायामिति मे सौम्य दर्शनम् । मया चेष्टं क्रतुशतं तच्च नावाप्यते फलम् ॥ १९ ॥

अयोविकाराभरणः ॥ ११ ॥ तमिति । स्पष्टम् ॥ १२ ॥ एक इति । परमात्मवान् परमधृतिमान् भूत्वा । दह्यमानः, दुःखेनेतिशेषः । विश्वामित्रं वसिष्ठवैरिणं जगाम ॥ १३ ॥ विश्वामित्र इति । विफलीकृतं वासिष्ठविनाशितैहिकामुष्मिकसाधनमित्यर्थः ॥ १४ ॥ कारुण्यादिति । स्ववंशावमानप्रकटनेन रामस्य कोपो भविष्यतीति सान्त्वयति—भद्रं त इति ॥१५॥ किमिति । चण्डालतां गतः, केन हेतुनेतिशेषः॥१६॥ अथेति। आज्ञाय श्रुत्वेत्यर्थः॥१७॥ प्रत्याख्यात इति । तं कामं, यमुद्दिश्य गुर्वाद्युपासनं कृतमित्यर्थः । विपर्ययः विपरीतप्रयोजनो हेतुविशेषः ॥१८॥ कस्ते काम इत्यत्राह—सशरीर इति ।

रूक्षाकारः । ध्वस्तमूर्धजः-खर्वमूर्धजः । चित्यं चिताऽर्हम् । आयसानि अयोमयानि आभरणानि यस्य ॥ ११ ॥ तमिति । त्यज्य त्यक्त्वा ॥ १२ ॥ १३ ॥ विश्वामित्र इति । विफलीकृतं वसिष्ठवासिष्ठैर्विफलीकृतमनोरथम् ॥ १४–१७ ॥ प्रत्याख्यात इति । विपर्ययः जातिभ्रंशः ॥ १८ ॥ सशरीर इति । दर्शनं

सौम्येति सम्बुद्धिः । दर्शनं बुद्धिः । तच्च फलं क्रतुशतफलं सशरीरस्वर्गः ॥ १९ ॥ वसिष्ठप्रत्याख्यानमूलं पापं मयि नास्तीत्याशयेनाह—अनृतमिति । यद्वा ' यज्ञोऽनृतेन क्षरति ' इति वचनात् क्रतुनाशकत्वेनावगतमनृतमपि मयि नास्तीत्याह । मे मया । क्षत्रधर्मेण तत्साक्षितयेत्यर्थः । कृच्छ्रेष्वपि गतः आपद्गतोपि ते पुरत इति शेषः ॥ २० ॥ यज्ञैरिति । पूर्वं सशरीरत्वसाधनक्रतुशतमुक्तम्, अत्र नित्यकर्मेति भिदा । यद्वा पूर्वं क्रतुशतम् इष्टम्, यष्टु

अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन । कृच्छ्रेष्वपि गतः सौम्य क्षत्रधर्मेण ते शपे ॥ २० ॥ यज्ञैर्बहुविधैरिष्टं प्रजा धर्मेण पालिताः । गुरवश्च महात्मानः शीलवृत्तेन तोषिताः ॥२१॥ धर्मे प्रयतमानस्य यज्ञं चाहर्तुमिच्छतः । परितोषं न गच्छन्ति गुरवो मुनिपुङ्गव ॥ २२ ॥ दैवमेव परं मन्ये पौरुषं तु निरर्थकम् । दैवेनाक्रम्यते सर्वं दैवं हि परमा गतिः ॥ २३ ॥ तस्य मे परमार्तस्य प्रसादमभिकांक्षतः । कर्तुमर्हसि भद्रं ते दैवोपहतकर्मणः ॥ २४ ॥ नान्यां गतिं गमिष्यामि नान्यः शरणमस्ति मे । दैवं पुरुषकारेण निवर्तयितुमर्हसि ॥ २५ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

मुपक्रान्तमित्यर्थः । तच्च नावाप्यते तादृशक्रत्वनुष्ठानमनोरथो नावाप्यत इत्यर्थः । शीलवृत्तेन शीलयुक्तवृत्तेन । शीलं सद्गुणः, वृत्तमाचारः ॥२१॥ धर्म इति । प्रयतमानस्येति सप्तम्यर्थे षष्ठी । ममेतिशेषः ॥ २२॥ दैवमिति । अत इत्युपस्कार्यम् । दैवमत्र प्रारब्धफलमदृष्टम् । परं श्रेष्ठम्, पुरुषहिताहित प्रापकमित्यर्थः । पौरुषम् इदानीन्तनधर्मानुष्ठानम् । निरर्थकं प्रारब्धकर्मतिरस्कारानर्हमित्यर्थः । आक्रम्यते अभिभूयते । परमा गतिः, इतरतिर स्कारेणैहिकसुखदुःखादिप्रापकमित्यर्थः ॥ २३॥ तस्येति । प्रसादं दैवानुकूल्यम् ॥२४॥ नेति । गतिं शरणम् । वसिष्ठेन स्वयमाहूतश्चेत्किं करिष्यसी त्यत्राह—नान्यः शरणम् अस्तीति पुरुषकारेण त्वत्प्रसादरूपानुकूल्यकरणेन ॥ २५ ॥ इति श्रीगो० श्रीरा०मणि०बाल०अष्टपञ्चाशः सर्गः ॥ ५८ ॥

सङ्कल्पम् । मयेति । तच्च फलं क्रतुशतफलम् । नावाप्यते न भुज्यते ॥ १९ ॥ अनृतमिति । " यज्ञोऽनृतेन क्षरति " इति वचनात् क्रतुशतनाशकत्वेनावगत मनृतमपि मयि नास्तीति भावः । मे मया कृच्छ्रेष्वपि गतः आपद्गतोऽपि ते पुरतः क्षत्रधर्मेण शपे ॥ २०-२२ ॥ दैवमिति । दैवं भागधेयम् । परमा गतिः प्रधान कारणम् ॥ २३-२५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामयणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायाम् अष्टपञ्चाशः सर्गः ॥ ५८ ॥

जातिचण्डालस्य कदाचित्तद्भावनिवृत्तिरस्ति, नतु कर्मचण्डालस्येत्याह एकोनषष्टितमे–उक्तवाक्यमित्यादि । साक्षाच्चण्डालरूपिणं चण्डालचिह्नधारित्वान्न शास्त्रगम्यचण्डालभाव इत्यर्थः ॥ १ ॥ ऐक्ष्वाकेत्यादि चत्वारः । यज्ञसाह्यकरान् यज्ञसहायकरान् । गमिष्यासि स्वर्गमितिशेषः । अनेनेत्यनेन ऋषिशापकृतरूपस्य ब्रह्मणाप्यवार्यत्वेन जातिचण्डालताभावेन मत्तपोमहिमोपबृंहितयज्ञेन सशरीरः स्वर्गं गमिष्यसीति भावः । हस्तप्राप्तम् अनायासेन

उक्तवाक्यं तु राजानं कृपया कुशिकात्मजः । अब्रवीन्मधुरं वाक्यं साक्षाच्चण्डालरूपिणम् ॥ १ ॥ ऐक्ष्वाक स्वागतं वत्स जानामि त्वां सुधार्मिकम् । शरणं ते भविष्यामि मा भैषीर्नृपपुङ्गव ॥ २ ॥ अहमामन्त्रये सर्वान् महर्षीन् पुण्यकर्मणः । यज्ञसाह्यकरान् राजंस्ततो यक्ष्यसि निर्वृतः ॥ ३ ॥ गुरुशापकृतं रूपं यदिदं त्वयि वर्तते। अनेन सह रूपेण सशरीरो गमिष्यसि ॥ ४ ॥ हस्तप्राप्तमहं मन्ये स्वर्गं तव नराधिप । यस्त्वं कौशिकमागम्य शरण्यं शरणागतः ॥ ५ ॥ एवमुक्त्वा महातेजाः पुत्रान् परमधार्मिकान् । व्यादिदेश महाप्राज्ञान् यज्ञसम्भारकारणात् । सर्वान् शिष्यान् समाहूय वाक्यमेतदुवाच ह ॥ ६ ॥ सर्वानृषिगणान् वत्सा आनयध्वं ममाज्ञया । सशिष्यसुहृदश्चैव सर्त्विजः सबहुश्रुतान् ॥ ७ ॥ यदन्यो वचनं ब्रूयान्मद्वाक्यबलचोदितः । तत्सर्वमखिलेनोक्तं ममाख्येयमनादृतम् ॥ ८ ॥ तस्य तद्वचनं श्रुत्वा दिशो जग्मुस्तदाज्ञया । आजग्मुरथ देशेभ्यः सर्वेभ्यो ब्रह्मवादिनः ॥ ९ ॥ ते च शिष्याः समागम्य मुनिं ज्वलिततेजसम् । ऊचुश्च वचनं सर्वे सर्वेषां ब्रह्मवादिनाम् ॥ १० ॥

सद्योलभ्यम् । तत्र हेतुः यस्त्वमिति ॥ २–५ ॥ एवमिति सार्द्धः । शिष्यान् भृत्यान् ॥ ६ ॥ सर्वानिति । सुहृदः मत्सुहृदः शोभनहृदयान्वा ॥ ७ ॥ यदन्य इति । मद्वाक्यबलेन चोदितः आहूतः यः कश्चनान्यः अनादृतमुपेक्षारूपं चण्डालं याजयतीति निन्दारूपं वा, यद्वाक्यं ब्रूयात् तेनोक्तं तत्सर्वमखिलेन ममाख्येयम् ॥ ८ ॥ तस्येति द्वौ । ब्रह्मवादिनः शिष्याः । ब्रह्मवादिनां वचनमित्यन्वयः ॥ ९ ॥ १० ॥



उक्तवाक्यमिति ॥ १–३ ॥ गुरुशापकृतं गुरुशापेन कृतम् ॥ ४ ॥ हस्तप्राप्यम् अनायासलभ्यम् ॥ ५–७ ॥ यदन्य इति । मद्वाक्यबलेन चोदितः आहूतः अन्योपि यः कश्चन मद्वचनमनादृतम् आदृतमादरः तद्रहितम् अखिलेन सर्वेणाप्युक्तम् । तत्सर्वमाख्येयम् ॥ ८–१० ॥

यदनादरवचनं मुनीनां तदपि वक्तव्यमित्युक्तत्वात्तदपि वदन्ति । श्रुत्वेत्यादि । सर्वदेशेषु स्थिता इति शेषः । महोदयमिति तदाख्यम् ऋषिमित्यर्थः । वासिष्ठशतं च वर्जयित्वेति द्रष्टव्यम् ॥ ११ ॥ वासिष्ठं यदाहेत्यत्र महोदयश्चेत्यपि बोद्धव्यम् । उपसंहारे तथा दर्शनात् ॥ १२ ॥ क्षत्रियो याजको यस्येति । विप्रस्यैव याजनाधिकारात् चण्डालस्य याज्यत्वानधिकारात् तस्य सदसि देवता कथं हविर्भोक्तारः । लुट् । ऋषयश्च कथ

श्रुत्वा ते वचनं सर्वे समायान्ति द्विजातयः । सर्वदेशेषु चागच्छन् वर्जयित्वा महोदयम् ॥ ११ ॥ वासिष्ठं तच्छतं सर्वं क्रोधपर्याकुलाक्षरम् । यदाह वचनं सर्वं शृणु त्वं मुनिपुङ्गव ॥ १२ ॥ क्षत्रियो याजको यस्य चण्डालस्य विशेषतः । कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ॥ १३ ॥ ब्राह्मणा वा महात्मानो भुक्त्वा चण्डालभोजनम् । कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पालिताः ॥ १४ ॥ एतद्वचननैष्ठुर्यमूचुः संरक्तलोचनाः । वासिष्ठा मुनिशार्दूल सर्वे ते समहोदयाः ॥ १५ ॥ तेषां तद्वचनं श्रुत्वा सर्वेषां मुनिपुङ्गवः । क्रोधसंरक्तनयनः सरोषमिदमब्रवीत ॥ १६ ॥ ये दूषयन्त्यदुष्टं मां तप उग्रं समास्थितम् । भस्मीभूता दुरात्मानो भविष्यन्ति न संशयः ॥ १७ ॥ अद्य ते कालपाशेन नीता वैवस्वतक्षयम् । सप्तजातिशतान्येव मृतपाः सन्तु सर्वशः ॥ १८ ॥

मिष्टशिष्टभोक्तार इतिभावः ॥ १३ ॥ पालिता इति क्षेपोक्तिः । अयाज्ययाजयितारः ऋषयः कथं स्वर्गं गमिष्यन्तीतिभावः ॥ १४–१६ ॥ य इति । 'तेषां तेजोविशेषेण प्रत्यवायो न विद्यते' इति न्यायेन चण्डालयाजनमपि जीर्यतीत्यविज्ञाय ये दूषयन्ति ते भस्मीभूता भविष्यन्तीत्यर्थः ॥ १७ ॥ अद्येत्यादिपञ्च । क्षयं गृहम् । सप्तजातिशतानि सप्तजन्मशतानि । मृतपाः शवभक्षकाः । मुष्टिकाः हीनजातिविशेषाः । विकृताः विकृतवचन

श्रुत्वेति । सर्वेषु देशेषु स्थिता इति शेषः । द्विजातयः महोदयं महोदयाख्यं मुनिं वर्जयित्वा आयान्ति आगच्छन्ति, आगच्छन् । केचनेति शेषः ॥ ११ ॥ १२ ॥ क्षत्रियो याजक इति । विप्रस्यैव याजनाधिकारत्वात्, चण्डालस्य विशेषत इति तस्य तत्रानधिकाराद् । कथमिति । सुरर्षयो भोक्तार इति सुराणां देवतात्वेन भोक्तृत्वम्, ऋषीणामृत्विक्त्वेन इष्टशिष्टविभागतया भोक्तृत्वम् । विश्वामित्रेण पालिता इत्याक्षेपोक्तिः । लोकशास्त्रनिन्दितं न कर्तव्यमिति भावः ॥ १३ ॥ १४ ॥ समहोदयाः–महोदयमुनिसहिताः ॥ १५–१७ ॥ अद्य त इति । सप्तजातिशतानि सप्तजन्मशतानि । मृतपाः–शवमांसभक्षकाः शवदाहका वा, मुष्टिकानाम हीन

व्यापारादयः । विरूपाः विकृतवेषाः । अदूष्यम् उत्कृष्टमात्मानम् । महोदयश्चेत्यनेन पूर्वं शप्ता वसिष्ठपुत्रा एवेति गम्यते ॥ १८–२० ॥ प्राणातिपातः बलात्प्राणनाशनम् । निरनुक्रोशतां निर्घृणताम् । वर्तयिष्यति प्राप्स्यति । ननूग्रतपस्वित्वेऽपि क्षत्रियस्य चण्डालयाजनं सर्वथा अन्याय्यमेवेति कथं यथार्थवादिषु शापप्रवृत्तिरितिचेत्, अत्रोत्तरम्–वसिष्ठवैरनिर्यातनकामस्य विश्वामित्रस्य तपःफलमिदमिति ॥ २१ ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

श्वमांसनियताहारा मुष्टिका नाम निर्घृणाः । विकृताश्च विरूपाश्च लोकाननुचरन्त्विमान् ॥ १९ ॥ महोदयश्च दुर्बुद्धिर्मामदूष्यं ह्यदूषयत् । दूषितः सर्वलोकेषु निषादत्वं गमिष्यति ॥ २० ॥ प्राणातिपातनिरतो निरनुक्रोशतां गतः । दीर्घकालं मम क्रोधाद्दुर्गतिं वर्तयिष्यति ॥ २१ ॥ एतावदुक्त्वा वचनं विश्वामित्रो महातपाः । विरराम महातेजा ऋषिमध्ये महामुनिः ॥ २२ ॥ इत्यार्षे० श्रीरामायणे बालकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

तपोबलहतान् कृत्वा वासिष्ठान् समहोदयान् । ऋषिमध्ये महातेजा विश्वामित्रोऽभ्यभाषत ॥ १ ॥ अयमिक्ष्वाकुदायादस्त्रिशङ्कुरिति विश्रुतः । धर्मिष्ठश्च वदान्यश्च मां चैव शरणं गतः । तेनानेन शरीरेण देवलोकजिगीषया ॥ २ ॥ यथाऽयं स्वशरीरेण स्वर्गलोकं गमिष्यति । तथा प्रवर्त्यतां यज्ञो भवद्भिश्च मया सह ॥ ३ ॥

अथ सशरीरस्य त्रिशङ्कोः स्वर्गप्रापणं षष्टितमे–तप इत्यादि ॥१॥ अयमिति सार्द्धः । दायमत्तीति दायादः, पुत्रपौत्रादिः । पचाद्यच् । वंश इति यावत् । तेन पूर्वं क्षत्रियरूपेण । अनेन इदानीं चण्डालरूपेण शरीरेण । देवलोकजिगीषया स्वर्गं स्ववशीकर्तुमिच्छया । मां शरणं गतः ॥२॥ यथेति पञ्च ॥ ३ ॥

जातिविशेषाः । विकृताः विकृतवचनव्यापारादयः । विरूपाः विकृताकाराः ॥ १८ ॥ १९ ॥ महोदय इत्यादि । प्राणातिपातनिरतः प्राणानामतिपातो विनाशः तत्र निरतः । निरनुक्रोशत्वं निष्कृपत्वं वर्तयिष्यति प्राप्स्यति ॥ २०–२२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायाम् एकोनषष्टितमः सर्गः ॥ ५९ ॥ तपोबलहतानिति । वासिष्ठान् वसिष्ठपुत्रान् ॥ १ ॥ अयमिति । यतः इक्ष्वाकुदायादः इक्ष्वाकुवंश्यः धर्मिष्ठो वदान्यश्च अतो

ऊचुः अन्योन्यमितिशेषः ॥ ४ ॥ सम्यक्कार्यमित्यन्वयः ॥ ५ ॥ ६ ॥ समधितिष्ठत स्वस्वार्त्विज्यमितिशेषः ॥ ७ ॥ एवमिति । तास्ताः क्रियाः स्वस्वार्त्विज्यकर्माणि । याजकः अध्वर्युः । स्रुवमुद्यम्येति वक्ष्यमाणत्वात् ॥ ८ ॥ ऋत्विज इति । मन्त्रवदिति क्रियाविशेषणम् । यथाकल्पं कल्पसूत्र

विश्वामित्रवचः श्रुत्वा सर्व एव महर्षयः । ऊचुः समेत्य सहिता धर्मज्ञा धर्मसंहितम् ॥ ४ ॥ अयं कुशिकदायादो मुनिः परमकोपनः । यदाह वचनं सम्यगेतत्कार्यं न संशयः ॥ ५ ॥ अग्निकल्पो हि भगवान् शापं दास्यति रोषितः । तस्मात्प्रवर्त्यतां यज्ञः सशरीरो यथा दिवम् ॥ ६ ॥ गच्छेदिक्ष्वाकुदायादो विश्वामित्रस्य तेजसा । तथा प्रवर्त्यतां यज्ञः सर्वे समधितिष्ठत ॥ ७ ॥ एवमुक्त्वा महर्षयः चक्रुस्तास्ताः क्रियास्तदा । याजकश्च महातेजा विश्वामित्रोऽभवत् क्रतौ ॥ ८ ॥ ऋत्विजश्चानुपूर्व्येण मन्त्रवन्मन्त्रकोविदाः । चक्रुः सर्वाणि कर्माणि यथाकल्पं यथाविधि ॥ ९ ॥ ततः कालेन महता विश्वामित्रो महातपाः । चकारावाहनं तत्र भागार्थं सर्वदेवताः ॥ १० ॥ नाभ्यागमंस्तदाहूता भागार्थं सर्वदेवताः ॥ ११ ॥ ततः क्रोधसमाविष्टो विश्वामित्रो महामुनिः । स्रुवमुद्यम्य सक्रोधस्त्रिशङ्कुमिदमब्रवीत् ॥ १२ ॥ पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर । एष त्वां सशरीरेण नयामि स्वर्गमोजसा । दुष्प्रापं स्वशरीरेण दिवं गच्छ नराधिप ॥ १३ ॥ स्वार्जितं किञ्चिदप्यस्ति मया हि तपसः फलम् । राजन् स्वतेजसा तस्य सशरीरो दिवं व्रज ॥ १४ ॥

मनतिक्रम्य । यथाविधि यथाशास्त्रम् ॥ ९ ॥ तत इति । महता कालेन द्वित्रिर्मन्त्रावृत्त्या सर्वदेवताः प्रतीतिशेषः ॥ १० ॥ नेत्यर्द्धम् । नाभ्यागमन् । अनधिकारिणा अन्यायेन च कृतमकृतमिति न्यायादितिभावः ॥ ११ ॥ तत इति । स्रुवोद्यमनं कोपजचेष्टाविशेषः ॥ १२ ॥ पश्येति सार्द्धः । त्वद भिमतयागस्त्वास्तामितिभावः । एष इत्यर्धमवधानं । ओजसा तपोवीर्येण । दुष्प्रापम् , अन्यैरितिशेषः ॥ १३ ॥ स्वेति । स्वार्जितं सुष्ठार्जितम् ।

यागाधिकारीति भावः ॥ २-६ ॥ समधितिष्ठत प्रारभध्वम् ॥ ७ ॥ एवमुक्त्वेत्यादि । याजकः अध्वर्युः । यथाकल्पं मुख्यकल्पानुसारेण । यथाविधि यथा शास्त्रम् ॥ ८ ॥ ९ ॥ तत इति । तत्र कर्मणि भागार्थं सर्वदेवताः प्रतीति शेषः ॥ १०-१२ ॥ पश्य मे तपसो वीर्यं यागस्तिष्ठत्विति भावः ॥ १३ ॥ तपसः

स्वतेजसा स्वासाधारणप्रभावेन ॥ १४ ॥ उक्तेति । मुनीनां पश्यतां मुनिषु पश्यत्सु सत्सु ॥ १५ ॥ देवेति चत्वारः ॥ १६ ॥ स्वर्गकृतालयः स्वर्गाल याईः ॥ १७ ॥ १८ ॥ आहारयत् अकरोत् ॥ १९ ॥ ऋषीति । सृजन् अभूदितिशेषः । असृजदित्यर्थः ॥ २० ॥ नक्षत्रेति । मुनिमध्ये स्थित एव दक्षिणां दिशमास्थाय तामविकरणं कृत्वा । नक्षत्रमालां सप्तविंशतिनक्षत्रमालाम् । यथोत्तरतो ध्रुवोऽचलस्तिष्ठति, एवं त्रिशङ्कुस्तिष्ठतु, तं परितो यथा

उक्तवाक्ये मुनौ तस्मिन् सशरीरो नरेश्वरः । दिवं जगाम काकुत्स्थ मुनीनां पश्यतां तदा ॥ १५ ॥ देव लोकगतं दृष्ट्वा त्रिशङ्कुं पाकशासनः । सह सर्वैः सुरगणैरिदं वचनमब्रवीत् ॥ १६ ॥ त्रिशङ्को गच्छ भूयस्त्वं नासि स्वर्गकृतालयः । गुरुशापहतो मूढ पत भूमिमवाक्छिराः ॥ १७ ॥ एवमुक्तो महेन्द्रेण त्रिशङ्कुरपतत्पुनः । विक्रोशमानस्त्राहीति विश्वामित्रं तपोधनम् ॥ १८ ॥ तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः । क्रोधमाहारय त्तीव्रं तिष्ठतिष्ठेति चाब्रवीत् ॥ १९ ॥ ऋषिमध्ये स तेजस्वी प्रजापतिरिवापरः । सृजन् दक्षिणमार्गस्थान् सप्तर्षी नपरान् पुनः ॥ २० ॥ नक्षत्रमालामपरामसृजत् क्रोधमूर्च्छितः । दक्षिणां दिशमास्थाय मुनिमध्ये महा यशाः ॥ २१ ॥ सृष्ट्वा नक्षत्रवंशं च क्रोधेन कलुषीकृतः । अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः । देवता न्यपि स क्रोधात् स्रष्टुं समुपचक्रमे ॥ २२ ॥

सप्तर्षिमण्डलं तद्वदत्रापि भवतु, तत्र यथा नक्षत्राणि तद्वदत्रापीत्यर्थः ॥ २१ ॥ सृष्ट्वेति सार्द्धः । नक्षत्रवंशं क्षुद्रनक्षत्रगणम् । द्वितीयार्धान्ते इति सङ्कल्प्येत्यु पस्कार्यम् । अन्यमिन्द्रं करिष्यामि विद्यमानलोकस्यान्यैन्द्रं करिष्यामि । अनिन्द्रको लोको वा स्यात् । इन्द्ररहितं लोकान्तरं वा करिष्यामीत्यर्थः । अतएवाहुराचार्याः—"अन्यैन्द्रकं भुवनमन्यदनिन्द्रकं वा कर्तुं क्षमे कविरभूदयमन्ववाये" इति । अस्मिन्नर्थे इन्द्रं नाशयिष्यामीत्यर्थः । स्यात् सोऽनु चितः, सृष्ट्यन्तरोपक्रमविरोधात् । दैवतान्यपि स क्रोधात्स्रष्टुं समुपचक्रमे इत्यनन्तरविरोधाच्च । अतएवायमर्थो भवितुमर्हति—मया सृज्यमानस्य फलम्-लुकुलम् ॥ १४-१६ ॥ नासि स्वर्गकृतालयः स्वर्गालयार्हो नासीत्यर्थः ॥ १७-१९ ॥ सृजन् दक्षिणमार्गस्थानिति । यत्र त्रिशङ्कुस्तिष्ठति तत्र स्वर्गान्तरं स्रक्ष्यामीति तात्पर्यादिति भावः ॥ २० ॥ २१ ॥ नक्षत्रवंशं नक्षत्रचक्रम् । लोको वा स्यादनिन्द्रक इति । इति प्रज्ञायेति शेषः । इन्द्रश्चेन्मत्सङ्कल्पविघ्नकरः

स्वर्गस्यान्यमिन्द्रं करिष्यामि, अथवा मया सृज्यस्स्वर्गलोकोऽनिन्द्रको वास्तु। तत्र त्रिशङ्कुरेवेन्द्रो भवतु, तत्परिवारान् सृजेयमिति तादृशदेवान् स्रष्टु मुपचक्रम इत्यर्थः ॥ २२ ॥ तनि०-अन्यमिन्द्रं करिष्यामि विद्यमानभुवनस्येन्द्रान्तरं करिष्यामि। लोको वा स्यात्सेन्द्रं लोकान्तरं वा स्यादित्यर्थः। अनिन्द्रकः स्यात् विद्यमानं भुवनं इन्द्ररहितमनायकं वा स्यादित्यर्थः। इदं च "अन्येन्द्रकं भुवनमन्यदनिन्द्रकं वा कर्तुं क्षमे कविरभूदयमन्ववाये" इति वेदान्ताचार्योक्तिस्वारस्याद्युक्तम्॥ २२॥ तत इति। परमसम्भ्रान्ताः स्वप्रतिसृष्टेरतिदुःसहत्वादिति भावः। सानुनयं ससान्त्वम् ॥ २३ ॥ अनुनयमेवाह-अयमित्यादि। नार्हति

ततः परमसम्भ्रान्ताः सर्षिसङ्घाः सुरासुराः। विश्वामित्रं महात्मानमूचुः सानुनयं वचः ॥ २३ ॥ अयं राजा महाभाग गुरुशापपरिक्षतः। सशरीरो दिवं यातुं नार्हत्येव तपोधन ॥ २४ ॥ तेषां तद्वचनं श्रुत्वा देवानां मुनिपुङ्गवः। अब्रवीत् सुमहद्वाक्यं कौशिकः सर्वदेवताः ॥ २५ ॥ सशरीरस्य भद्रं वस्त्रिशङ्कोरस्य भूपतेः। आरोहणं प्रतिज्ञाय नानृतं कर्तुमुत्सहे ॥ २६ ॥ स्वर्गोऽस्तु सशरीरस्य त्रिशङ्कोरस्य शाश्वतः। नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ ॥ २७ ॥ यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः। मत्कृतानि सुराः सर्वे तदनुज्ञातुमर्हथ ॥ २८ ॥ एवमुक्ताः सुराः सर्वे प्रत्यूचुर्मुनिपुङ्गवम् ॥ २९ ॥ एवं भवतु भद्रं ते तिष्ठन्त्वेतानि सर्वशः। गगने तान्यनेकानि वैश्वानरपथाद्बहिः ॥ ३० ॥

अदुष्टत्रैवर्णिकलभ्यत्वात्स्वर्गस्येतिभावः ॥ २४ ॥ तेषामिति चत्वारः ॥ २५ ॥ भद्रं व इति प्रतिसान्त्वम् ॥ २६ ॥ स्वर्गोऽस्त्व अयं त्रिशङ्कुस्थितिदेश एवेतिशेषः। मत्कृतानि मत्सृष्टानि। अतएव मामकानि लोकाः भूरादयः यावद्धरिष्यन्ति स्थास्यन्ति। सर्वशः सर्वप्रकारेण ध्रुवाणि भवन्तु। प्रार्थनायां लोट्। तत् पूर्वोक्तम्। अनुज्ञातुमङ्गीकर्तुम् ॥२७॥२८॥ एवमुक्ता इत्यादिसार्द्धाः पञ्च। सर्वशः सर्वाणि। वैश्वानरपथात् वैश्वानरः ज्योतिः तत्पथात्

तमपि मत्तपःसामर्थ्यात्स्वर्गभ्रष्टं करोमीति भावः। देवतानि देवगणान् ॥ २२ ॥ तत इत्यादि। ततः- इन्द्रादिसर्गोपक्रमात्। स्वर्गोऽस्त्विवति सशरीरस्यास्यैवेत्यन्वयः ॥ २३-२६ ॥ मामकानि मया सृष्टानि। सर्वशः सर्वप्रकारेण। धरिष्यन्ति स्थास्यन्ति। अनुज्ञातुम् अङ्गीकर्तुम् ॥ २७ ॥ २८ ॥ एवमित्यादि। वैश्वानरपथादुत्तरायणमार्गाद्बहिः नक्षत्राणि त्वया निर्मितानीत्यर्थः ॥ २९ ॥ ३० ॥

प्रसिद्धानादिज्योतिश्चक्रमार्गात् । तेषु त्वत्सृष्टेषु । जाज्वलन् अतिशयेन प्रकाशमानः । अवाक्छिराः गुर्वपचारफलप्रकटनायाधोमुखः । अमरसन्निभः तेजसा अमरतुल्यः । तिष्ठतु ध्रुव इवेति भावः । अनुयास्यन्ति स्वर्गनक्षत्राणि ध्रुवमिवेति भावः । स्वर्गलोकगतं यथा स्वर्गलोकगतमिव कृतार्थमित्यन्वयः ॥ २९-३२ ॥ बाढमित्यङ्गीकारद्योतकं वचनम् ॥३३ ॥ यज्ञस्यान्त इत्यनेन विश्वामित्रेण यजमानप्रतिनिधिं कृत्वा यज्ञः समापितः । देवैर्भागश्च गृहीत इति गम्यते ॥ ३४॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

नक्षत्राणि मुनिश्रेष्ठ तेषु ज्योतिष्षु जाज्वलन् । अवाक्छिरास्त्रिशङ्कुश्च तिष्ठत्वमरसन्निभः ॥ ३१ ॥ अनुयास्यन्ति चैतानि ज्योतींषि नृपसत्तमम् । कृतार्थं कीर्तिमन्तञ्च स्वर्गलोकगतं तथा ॥ ३२ ॥ विश्वामित्रस्तु धर्मात्मा सर्वदेवैरभिष्टुतः । ऋषिभिश्च महातेजा बाढमित्याह देवताः ॥ ३३ ॥ ततो देवा महात्मानो मुनयश्च तपोधनाः । जग्मुर्यथागतं सर्वे यज्ञस्यान्ते नरोत्तम ॥ ३४ ॥ इत्यार्षे श्रीरामा० वा० आ० बालकाण्डे षष्टितमः सर्गः ॥ ६०॥

विश्वामित्रो महात्माथ प्रस्थितान् प्रेक्ष्य तानृषीन् । अब्रवीन्नरशार्दूलस्सर्वांस्तान् वनवासिनः ॥ १ ॥ महान् विघ्नः प्रवृत्तोऽयं दक्षिणामास्थितो दिशम् । दिशमन्यां प्रपत्स्यामस्तत्र तपस्यामहे तपः ॥ २ ॥ पश्चिमायां विशालायां पुष्करेषु महात्मनः । सुखं तपश्चरिष्यामो वरं तद्धि तपोवनम् ॥ ३ ॥

अथ शरणागतशुनःशेपरक्षणोचितशक्तिं वक्तुं तपोऽन्तरमाहैकषष्टितमे—विश्वामित्र इत्यादि । तान् स्वाज्ञया समागतान् । वनवासिनः स्वतपोवनवासिनः ॥ १ ॥ महानिति । योऽहं दक्षिणां दिशमास्थितः तस्य मे महान् विघ्नः प्रवृत्त इत्यर्थः ॥ २ ॥ पश्चिमायामिति । विशालायां विशालतपोवन

ज्योतिष्षु प्राचीनेषु । अमरसन्निभः–तेजसा अमरतुल्य इत्यर्थः ॥ ३१ ॥ नृपसत्तममनुयास्यन्ति-अनुसरन्तु, स्वर्गलोकगतं यथा-स्वर्गलोकगतमिव कृतार्थं स्थितमिति शेषः ॥ ३२-३४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां षष्टितमः सर्गः ॥ ६० ॥ विश्वामित्र इत्यादि । तान् स्वाज्ञया यज्ञार्थमागतान् ऋषीन् प्रस्थितान् प्रेक्ष्य स्वतपोवनस्थानब्रवीदिति तच्छब्दद्वयस्य निर्वाहः ॥१ ॥ महानिति । महान् विघ्नः प्रवृत्तः ॥२॥ विशालायाम्

वत्यां पश्चिमायां दिशि वर्तमानेषु पुष्करेषु पुष्करतीर्थेषु, तत्तीरेष्वित्यर्थः। महात्मनः हे महात्मानः ॥ ३ ॥ एवमित्यादि ॥ ४ ॥ ५ ॥ विप्रः पुरोहित इति यावत् ॥ ६ ॥ पशुरिति। दुर्नयात् अनवधानादित्यर्थः। हृतः केनापीति शेषः। प्रणष्टः अदृष्टः। "णश अदर्शने" इतिधातोर्निष्ठा। दोषाः पशुनाशादयः ॥ ७ ॥ प्रायश्चित्तमिति। प्रायश्चित्तम् एतत् पशुनाशनिमित्तकम्। नरं वा आनयस्व, गोभिः क्रीत्वा पशुप्रतिनिधित्वेनेति शेषः।

एवमुक्त्वा महातेजाः पुष्करेषु महामुनिः। तप उग्रं दुराधर्षं तेपे मूलफलाशनः ॥ ४ ॥ एतस्मिन्नेव काले तु अयोध्याधिपतिर्नृपः। अम्बरीष इति ख्यातो यष्टुं समुपचक्रमे ॥ ५ ॥ तस्य वै यजमानस्य पशुमिन्द्रो जहार ह। प्रणष्टे तु पशौ विप्रो राजानमिदमब्रवीत् ॥ ६ ॥ पशुरद्य हृतो राजन् प्रणष्टस्तव दुर्नयात्। अरक्षितारं राजानं घ्नन्ति दोषा नरेश्वर ॥ ७ ॥ प्रायश्चित्तं महद्ध्येतन्नरं वा पुरुषर्षभ। आनयस्व पशुं शीघ्रं यावत् कर्म प्रवर्तते ॥ ८ ॥ उपाध्याय वचः श्रुत्वा स राजा पुरुषर्षभ(भः)। अन्वियेष महाबुद्धिः पशुं गोभिः सहस्रशः ॥९॥ देशान् जनपदांस्तांस्तान् नगराणि वनानि च। आश्रमाणि च पुण्यानि मार्गमाणो महीपतिः ॥ १० ॥ स पुत्रसहितं तात सभार्यं रघुनन्दन। भृगुतुन्दे समासीनमृचीकं संददर्श ह ॥ ११ ॥

यावत्प्रवर्तते प्रवर्तिष्यते। "यावत्पुरानिपातयोः—" इति लट्। तावत् ततःपूर्वमेव। अश्वमेधे पशुविसर्जनानन्तरं कर्मकालस्य व्यवहितत्वादिति भावः। वाकारेण पशुं वान्विष्यानयस्वेति लभ्यते ॥ ८ ॥ उपाध्यायेति। सहस्रशः सहस्रसङ्ख्याभिः। मूल्यभूताभिरितिशेषः ॥ ९ ॥ देशानित्यादि। देशानिति जनपदादिसर्वविशेषणम् ॥ १० ॥ स इति छेदः। भृगुतुन्दे भृगोर्गिरितटस्य तुन्दे अभ्यन्तरे, भृग्वाख्यऋषिवासस्थानप्रदेशे वा ॥ ११ ॥

असम्बाधायामितियावत। पुष्करेषु तीर्थेषु। महात्मनः हे महात्मानः! ॥ ३–५ ॥ तस्येति। विप्रः पुरोहितः ॥ ६ ॥ पशुरिति। हृतः अपहृतः, तव दुर्नयात त्वत्प्रमादात ॥ ७ ॥ प्रायश्चित्तमिति। एतत्पशुनाशनिमित्तं प्रायश्चित्तं महद्दुष्करम्, प्रक्रान्तं कर्म यावत्प्रवर्तते प्रवर्त्तिष्यते, तावत्ततःपूर्वमेव नष्टं वा पशुमन्विष्यानय, तत्प्रतिनिधित्वेन क्रीत्वा नरं वा पशुमानयेत्यर्थः ॥ ८ ॥ गोभिर्मूल्यभूताभिः ॥९॥१०॥ भृगुतुङ्गे भृगुतुङ्गाख्ये पर्वते (भृगु तुङ्ग इति पाठः) ॥ ११ ॥

तमिति, सार्द्ध एकान्वयः । तं शुनिम् । इदं वक्ष्यमाणं वच उवाच (अब्रवीति) [illegible]॥१२॥ गवामिति । पशोः अर्थे प्रयोजनाय, पशुप्रतिनिध्यर्थमित्यर्थः । यदि विक्रीणीषे विक्रीणीथाः । तदा कृतकृत्योऽस्मि कृतार्थः स्याम् ॥१३॥ सर्व इति । परिसृताः सञ्चरिताः । याज्ञीयं यज्ञाय हितम् । "तस्मै

तमुवाच महातेजाः प्रणम्याभिप्रसाद्य च । ब्रह्मर्षिं तपसा दीप्तं राजर्षिरमितप्रभः । पृष्ट्वा सर्वत्र कुशलमृचीकं तमिदं वचः ॥ १२ ॥ गवां शतसहस्रेण विक्रीणीषे सुतं यदि । पशोरर्थे महाभाग कृतकृत्योऽस्मि भार्गव ॥ १३ ॥ सर्वे परिसृता देशा याज्ञीयं न लभे पशुम् । दातुमर्हसि मूल्येन सुतमेकमितो मम ॥१४॥ एवमुक्तो महातेजा ऋचीकस्त्वब्रवीद्वचः । नाहं ज्येष्ठं नरश्रेष्ठ विक्रीणीयां कथंचन ॥ १५ ॥ ऋचीकस्य वचः श्रुत्वा तेषां माता महात्मनाम् । उवाच नरशार्दूलमम्बरीषं तपस्विनी ॥१६॥ अविक्रेयं सुतं ज्येष्ठं भगवानाह भार्गवः । ममापि दयितं विद्धि कनिष्ठं शुनकं नृप । तस्मात्कनीयसं पुत्रं न दास्ये तव पार्थिव ॥१७॥ प्रायेण हि नरश्रेष्ठ ज्येष्ठाः पितृषु वल्लभाः । मातॄणां च कनीयांसस्तस्माद्रक्षे कनीयसम् ॥ १८ ॥ उक्तवाक्ये मुनौ तस्मिन् मुनिपत्न्यां तथैव च । शुनःशेपः स्वयं राम मध्यमो वाक्यमब्रवीत् ॥ १९ ॥ पिता ज्येष्ठमविक्रेयं माता चाह कनीयसम् । विक्रीतं मध्यमं मन्ये राजन् पुत्रं नयस्व माम्॥२०॥ गवां शतसहस्रेण शुनःशेपं नरेश्वरः । गृहीत्वा परमप्रीतो जगाम रघुनन्दन ॥२१॥ अम्बरीषस्तु राजर्षी रथमारोप्य सत्वरः।शुनःशेपं महातेजा जगामाशु महायशाः॥२२॥इत्यार्षे०बालकाण्डे एकषष्टितमःसर्गः॥६१॥

हितम्" इति छः । वृद्धिरार्षी । इतः एतेषु सुतेषु । सार्वविभक्तिकस्तसिः ॥१४॥ एवमिति । कथंचन बहुमूल्येनापि । इतरयोरप्रतिषेधादनुमतिर्गम्यते । "अप्रतिषिद्धमनुमतं भवति " इति न्यायात् । शास्त्रेणापत्यदानविक्रययोर्निषेधेपि मूलावसादे धर्मायापत्यदानवद्यज्ञायापत्यविक्रयो न दोषायेति भावः ॥१५॥१६॥ कनीयसमित्यकरान्तत्वमार्षम् ॥ १७–२२ ॥ इति श्रीगो० श्रीरामा० मणिमञ्जीराख्याने बालकाण्डव्या० एकषष्टितमः सर्गः॥६१॥

इदं वक्ष्यमाणं वचः अब्रवीदिति शेषः ॥ १२ ॥ यदि विक्रीणीषे विक्रीणीथाः तर्हि कृतकृत्योऽस्मीति कृतार्थः स्यामित्यर्थः ॥ १३ ॥ सर्व इति । इतः एतेषु सुतेषु मध्ये एकं सुतम् ॥ १४ ॥ नाहमिति । ज्येष्ठं कथञ्चन महतापि मूल्येन न विक्रीणीयाम्, अनेनेतरयोरप्रतिषेधादनुमतिर्गम्यते 'अप्रतिषिद्धमनुमतं भवति' इति न्यायात् ॥ १५–२२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां तत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां एकषष्टितमः सर्गः ॥ ६१ ॥

अथ शुनःशेपस्य शरणागतिरुच्यते द्विषष्टितमे—शुनःशेपमित्यादि ॥१॥ तस्य विश्रममाणस्य तस्मिन्विश्राम्यति सति । आगम्येत्यत्र "वा ल्यपि" इत्यनु नासिकलोपाभावः पक्षे । मातुलं "ऋचीकाय कौशिकी प्रतिपादिता" इत्युक्तत्वात् ॥२॥ तृष्णया पिपासया, प्राणपरित्राणलोभेन वा । श्रमेण अध्वश्रमेण ।

शुनःशेपं नरश्रेष्ठ गृहीत्वा तु महायशाः । व्यश्राम्यत् पुष्करे राजा मध्याह्ने रघुनन्दन ॥ १ ॥ तस्य विश्रममाणस्य शुनःशेपो महायशाः । पुष्करक्षेत्रमागम्य विश्वामित्रं ददर्श ह । तप्यन्तमृषिभिः सार्द्धं मातुलं परमातुरः ॥ २ ॥ विवर्णवदनो दीनस्तृष्णया च श्रमेण च । पपाताङ्के मुनेराशु वाक्यं चेदमुवाच ह ॥ ३ ॥ न मेऽस्ति माता न पिता ज्ञातयो बान्धवाः कुतः । त्रातुमर्हसि मां सौम्य धर्मेण मुनिपुङ्गव ॥ ४ ॥ त्राता त्वं हि मुनिश्रेष्ठ सर्वेषां त्वं हि भावनः ॥ ५ ॥ राजा च कृतकार्यः स्यादहं दीर्घायुरव्ययः । स्वर्गलोकमुपाश्नीयां तपस्तप्त्वा ह्यनुत्तमम् ॥ ६ ॥ त्वं मे नाथो ह्यनाथस्य भव भव्येन चेतसा । पितेव पुत्रं धर्मात्मंस्त्रातुमर्हसि किल्बिषात् ॥ ७ ॥ तस्य तद्वचनं श्रुत्वा विश्वामित्रो महातपाः । सान्त्वयित्वा बहुविधं पुत्रानिदमुवाच ह ॥ ८ ॥ यत्कृते पितरः पुत्रान् जनयन्ति शुभार्थिनः । परलोकहितार्थाय तस्य कालोऽयमागतः ॥ ९ ॥

मातुलत्वादङ्कपतनम् ॥ ३ ॥ नेति । नास्ति अरक्षकत्वादसत्प्राया इत्यर्थः । धर्मेण धर्मरूपप्रयोजनोद्देशेन ॥ ४ ॥ त्रातेत्यर्द्धम् । भावनः हितप्रापकः ॥ ५ ॥ राजेति । यथा च राजा कृतकार्यः स्यात् अहं च अव्ययः अविनाशः दीर्घायुः अनुत्तमं तपस्तप्त्वा स्वर्गलोकमुपाश्नीयां तथा कुरुष्वेति शेषः ॥ ६ ॥ त्वमिति । भव्येन शुभेन । किल्बिषात् तन्मूलकविपत्तेरित्यर्थः ॥ ७ ॥ तस्येति स्पष्टम् ॥ ८ ॥ यदिति । यस्य प्रयोजनस्य कृते यत्प्रयोजनाय । तादर्थ्येऽव्ययम् । पुत्रान् जनयन्ति । मम युष्माकं च परलोकहितार्थाय धर्माय, तस्य वाक्यकरणस्य । अयं काल आगतः । "जीवतोर्वाक्यकर

॥१॥ तस्य विश्रममाणस्य विश्राम्यतः ॥ २ ॥ विवर्णेति । तृष्णया प्राणपरित्राणलोभेन । अङ्के समीपे ॥ ३॥४॥ त्रातेति । त्वं हि त्राता । भावनः हितप्रापकः ॥ ५ ॥ राजा चेति । राजा च यथा कृतकार्यः स्यात्, अहं च दीर्घायुर्यथा स्यां तथा कुर्वित्यर्थः ॥ ६–८ ॥ यदिति । यत्कृते यस्य प्रयोजनस्य कृते, प्रयोजनं च पितृवाक्यकरणम् "जीवतोर्वाक्यकरणात्" इति स्मृतेः । मम युष्माकं च परलोकहितार्थाय–परलोकहितोऽर्थः प्रयोजनं यस्य तस्मै धर्माय । तस्य वाक्यकरणस्य अयं

णात् ” इति स्मृतेः ॥ ९ ॥ अयमिति । शरणं रक्षणम् । जीवितमात्रेण जीवनप्रदानमात्रेण ॥ १० ॥ स्वनियोगकरणार्थमुपश्लोकयति—सर्वं इति । प्रयच्छतोति बहुवचनेन युष्मासु यः कश्चन भवत्विति सूच्यते ॥ ११ ॥ नाथवानिति । मया रक्षितो नाथवान् भवतु । कृतं स्यादिति शेषः ॥ १२ ॥ मुनेरिति । साभिमानं सगर्वम् । सलीलं सपरिहासम् ॥ १३ ॥ कथमिति । भोजने भोज्ये प्राप्ते तत्परित्यागेन श्वमांसभक्षणमिवाकार्यमित्यर्थः । द्वितीय

अयं मुनिसुतो बालो मत्तश्शरणमिच्छति । अस्य जीवितमात्रेण प्रियं कुरुत पुत्रकाः ॥ १० ॥ सर्वे सुकृतकर्माणः सर्वे धर्मपरायणाः । पशुभूता नरेन्द्रस्य तृप्तिमग्नेः प्रयच्छत ॥ ११ ॥ नाथवांश्च शुनःशेपो यज्ञश्चाविघ्नितो भवेत् । देवतास्तर्पिताश्च स्युर्मम चापि कृतं वचः ॥ १२ ॥ मुनेस्तु वचनं श्रुत्वा मधुष्यन्दादयः सुताः । साभिमानं नरश्रेष्ठ सलीलमिदमब्रुवन् ॥ १३ ॥ कथमात्मसुतान् हित्वा त्रायसेऽन्यसुतं विभो । अकार्यमिव पश्यामः श्वमांसमिव भोजने ॥ १४ ॥ तेषां तद्वचनं श्रुत्वा पुत्राणां मुनिपुङ्गवः । क्रोधसंरक्तनयनो व्याहर्तुमुपचक्रमे ॥ १५ ॥ निस्साध्वसमिदं प्रोक्तं धर्मादपि विगर्हितम् । अतिक्रम्य तु मद्वाक्यं दारुणं रोमहर्षणम् ॥ १६ ॥ श्वमांसभोजिनः सर्वे वासिष्ठा इव जातिषु । पूर्णं वर्षसहस्रं तु पृथिव्यामनुवत्स्यथ ॥ १७ ॥ कृत्वा शापसमायुक्तान् पुत्रान् मुनिवरस्तथा । शुनःशेपमुवाचार्तं कृत्वा रक्षां निरामयम् ॥ १८ ॥ [ इदमाह मुनिश्रेष्ठो विश्वामित्रो महातपाः । ]

इवशब्दो वाक्यालङ्कारे ॥ १४ ॥ तेषामिति ॥ १५ ॥ निःसाध्वसं पितृप्रतिवचनभयरहितम् । धर्मात् जीवतोर्वाक्यकरणरूपधर्मात् । विगर्हितं भ्रष्टम् । इदमुभयं क्रियाविशेषणम् । दारुणं पितृभक्तिरहिततया परुषम् । अतएव रोमहर्षणं रोमाञ्चविकारकरम् ॥ १६ ॥ श्वमांसेत्यादि । अत्रादौ तस्मादित्युपस्कार्यम् । जातिषु मुष्टिकजातिषु ॥ १७ ॥ कृत्वेति । निरामयं निर्भयं यथा भवति तथा । रक्षां मन्त्रितभस्मधूल्यादिप्रक्षेपरूपाम् ॥१८॥



काल आगतः ॥ ९ ॥ अयमिति । जीवितमात्रेण जीवनप्रदानमात्रेण ॥ १०–१२ ॥ मुनेरिति । साभिमानं सगर्वम् । सलीलं सावज्ञम् ॥ १३ ॥ कथमिति । श्वमांसमिव भोजने भोज्ये प्राप्ते तत्परित्यागेन श्वमांसभक्षणमिव अकार्यमित्यर्थः ॥ १४–१६ ॥ श्वमांसेति । जातिषु मुष्टिकजातिषु ॥ १७ ॥ कृत्वेति । निरामयं

पवित्रेति । पाशैः दर्भरशनादिभिः । आसक्तः बद्धः । वैष्णवं विष्णुदेवताकम् "वैष्णवो वै देवतया यूपः" इतिश्रुतेः । वाग्भिः वक्ष्यमाणगाथाद्वय रूपाभिः । अग्निं प्रत्युदाहर स्तुहि, अग्न्यभिमुखोभूत्वा इन्द्रमिन्द्रानुज च स्तुहीत्यर्थः ॥ १९ ॥ गाथे दर्शयति—इमे इति । गाथे इन्द्रोपेन्द्रविषये एका इन्द्रविषया, अन्या उपेन्द्रविषया । ततः गाथाभ्यां । सिद्धिं जीवितसिद्धिम् ॥२०॥ शुनःशेप इत्यादि ॥ २१ ॥ सदः यज्ञवाटमित्यर्थः ॥२२॥२३॥ सद



पवित्रपाशैरासक्तो रक्तमाल्यानुलेपनः । वैष्णवं यूपमासाद्य वाग्भिरग्निमुदाहरं ॥ १९ ॥ इमे तु गाथे द्वे दिव्ये गायेथा मुनिपुत्रक । अम्बरीषस्य यज्ञेऽस्मिंस्ततः सिद्धिमवाप्स्यसि ॥ २० ॥ शुनःशेपो गृहीत्वा ते द्वे गाथे सुसमाहितः । त्वरया राजसिंहं तमम्बरीषमुवाच ह ॥ २१ ॥ राजसिंह महासत्त्व शीघ्रं गच्छावहे सदः । निर्वर्तयस्व राजेन्द्र दीक्षां च समुपाविश ॥ २२ ॥ तद्वाक्यमृषिपुत्रस्य श्रुत्वा हर्षसमुत्सुकः । जगाम नृपतिः शीघ्रं यज्ञवाटमतन्द्रितः ॥ २३ ॥ सदस्यानुमते राजा पवित्रकृतलक्षणम् । पशुं रक्ताम्बरं कृत्वा यूपे तं समबन्धयत् ॥ २४ ॥ स बद्धो वाग्भिरग्र्याभिरभितुष्टाव वै सुरौ । इन्द्रमिन्द्रानुजं चैव यथावन्मुनिपुत्रकः ॥ २५ ॥ ततः प्रीतः सहस्राक्षो रहस्यस्तुतितर्पितः । दीर्घमायुस्तदा प्रादाच्छुनःशेपाय राघव ॥ २६ ॥

स्यानुमते सदस्यानाम् उपद्रष्टृप्रभृतीनाम् अनुमते अनुमतौ, स्थितइतिशेषः । पवित्रैर्दर्भरज्जुभिः। कृतलक्षणं कृतलाञ्छनम् । कृतपशुत्वज्ञापनमित्यर्थः । पशुं कृत्वा उपाकरणादिसंस्कारसंस्कृतं कृत्वा ॥२४॥ सइति । इन्द्रं पशुभोक्तारम् । इन्द्रानुजं यूपदेवं तुष्टाव । इन्द्रानुजं पुरुषकारीकृत्य फलप्रदमिन्द्रं स्तुतवानित्यर्थः ॥ २५ ॥ तत इन्द्रस्यैव फलप्रदत्वमाह—तत इति । प्रीतः स्वस्तुत्या तुष्टः । रहस्यस्तुतितर्पितः स्वस्वामिभूतविष्णुरहस्यस्तुत्या

भयरहितम् ॥ १८ ॥ पवित्रेति । पवित्रपाशैः दर्भरशनादिभिः । वैष्णवं विष्णुसम्बन्धिनं यूपं । यूपस्य वैष्णवत्वम्—"वैष्णवो वै देवतया यूपः" इति श्रुतिप्रसिद्धम् । वाग्भिः आग्नेयीभिः ऋग्भिः अग्निमुदाहर स्तुहि ॥ १९ ॥ इमे इति । गाथे इन्द्रोपेन्द्रप्रकाशके । सिद्धिं जीवितसिद्धिम् ॥ २०-२३ ॥ सदसीति । सदसि यज्ञसदसि । पवित्रैर्दर्भरज्जुभिः । कृतलक्षणं कृतलाञ्छनम् । तं शुनश्शेफम् । पशुं पशुसंसस्कारसंस्कृतं कृत्वा समबन्धयत समयोजयत ॥ २४ ॥ स बद्ध इति । अभितुष्टाव वै सुरावित्युपदेशसमये अग्निं वाग्भिरुदाहर इमे द्वे गाथे गायेथा इति मुनिनोक्तत्वात् । वाग्भिरग्निमभिष्टूय तदनन्तरगाथाद्वयगानेन इन्द्रोपेन्द्रावभि

१ मुदाहर । इन्द्राविष्णू सुरश्रेष्ठौ स्तुहि त्वं मुनिपुत्रक । इत्यधिकः पाठः ।

तोषितः ॥ २६॥ स चेति । समाप्तवान् प्राप्तवान् । ननु 'हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजपुत्र आस' इत्यादिबह्वृचब्राह्मणोक्तेतिहासविरुद्धोऽयं कथमुपपद्यत इतिचेत्, अम्बरीषस्यैव हरिश्चन्द्र इति संज्ञान्तरमित्यविरोधस्य नेयत्वात् ॥ २७ ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥ पुत्रविषयक्रूरशापदानेन क्रोधनिर्जयाभावान्न ब्रह्मर्षित्वसिद्धिरित्याह त्रिषष्टितमे—

स च राजा नरश्रेष्ठ यज्ञस्य च समाप्तवान् । फलं बहुगुणं राम सहस्राक्षप्रसादजम् ॥२७॥ विश्वामित्रोऽपि धर्मात्मा भूयस्तेपे महातपाः। पुष्करेषु नरश्रेष्ठ दशवर्षशतानि च ॥२८॥ इत्यार्षे श्रीरा० बालकाण्डे द्विषष्टितमः सर्गः ॥६२॥ पूर्णे वर्षसहस्रे तु व्रतस्नातं महामुनिम् । अभ्यागच्छन् सुराः सर्वे तपःफलचिकीर्षवः ॥ १ ॥ अब्रवीत् सुमहातेजा ब्रह्मा सुरुचिरं वचः । ऋषिस्त्वमसि भद्रं ते स्वार्जितैः कर्मभिः शुभैः ॥ २ ॥ तमेवमुक्त्वा देवेशस्त्रिदिवं पुनरभ्यगात् ॥ ३ ॥ विश्वामित्रो महातेजा भूयस्तेपे महत्तपः ॥ ४ ॥ ततः कालेन महता मेनका परमाप्सराः । पुष्करेषु नरश्रेष्ठ स्नातुं समुपचक्रमे ॥ ५ ॥ तां ददर्श महातेजा मेनकां कुशिकात्मजः । रूपेणाप्रतिमां तत्र विद्युतं जलदे यथा ॥६॥

पूर्ण इत्यादि । व्रतस्नातं व्रतान्ते स्नातम्, समाप्तपुरश्चरणमितियावत् । तपःफलचिकीर्षवः तपःफलं दातुमिच्छवः ॥ १ ॥ अब्रवीदिति । ऋषिस्त्वमसि पूर्वंतपसा राजर्षिरसि इदानीमृषिरेवासि, अनेन राजपदाप्रयोगेण क्षत्रियत्वविश्लेषः कियान् कृत इतिगम्यते ॥ २ ॥ विश्वामित्रो महातेजा भूयस्तेपे महत्तप इति । अत्र गायत्रीतृतीयाक्षरम् ॥ ३॥४ ॥ अथास्य जितेन्द्रियत्वाभावख्यापनाय कथान्तरं प्रस्तौति—ततः कालेनेत्यादि । अप्सरश्शब्द एकवचनान्तोऽप्यस्ति । देवप्रेषितेतिसिद्धम् ॥ ५ ॥ तामिति । तत्र सरसि स्नान्ती मेनका जलदमण्डलमध्यवर्तिनी विद्युदिव स्थितेति भावः ॥ ६ ॥ ७ ॥

तुष्टावेति वेदितव्यम् । सहस्राक्ष इत्यनेन अग्न्युपेन्द्रयोरुपलक्षणम् ॥ २५ ॥ २६ ॥ स चेति । फलं समाप्तवान् ॥२७॥२८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां द्विषष्टितमः सर्गः ॥ ६२ ॥ पूर्ण इति । व्रतस्नातं व्रतान्ते स्नातम् । तपःफलचिकीर्षवः-तद्दातुकामाः ॥ १ ॥ अब्रवीदिति । ऋषिः त्वमसि, पूर्वतपसा राजर्षिरसि, इदानीमृषिरेवासीतिभावः ॥ २ ॥ ३ ॥ गायत्र्यास्तृतीयाक्षरं विश्वामित्र इत्यस्य श्लोकस्य प्रथमाक्षरेणेत्यनेन संगृह्णाति—विश्वामित्रो महातेजा इति ॥ ४ ॥ ५ ॥ तामिति । विद्युतं जलदे यथा, सरसि स्नान्ती मेनका जलदमण्डलवर्तिनी विद्युदिव स्थितेति

अनुगृहीष्व मत्कामतापं शमयेत्यर्थः ॥८॥९॥ तस्यामिति । पञ्चपञ्चेति दशेत्यर्थः । सुखेन वसन्त्यामित्यन्वयः ॥१०॥ अथेति । सव्रीड इवेत्यत्र इव शब्दो वाक्यालङ्कारे॥११॥बुद्धिरित्यादिद्विकम् । अहोरात्रापदेशेन अहोरात्रतुल्यतया। अन्ते इतिकरणमध्याहार्यम् । इतिबुद्धिरुत्पन्नेत्यन्वयः॥१२॥१३॥

दृष्ट्वा कन्दर्पवशगो मुनिस्तामिदमब्रवीत् ॥ ७॥ अप्सरः स्वागतं तेऽस्तु वस चेह ममाश्रमे। अनुगृह्णीष्व भद्रं ते मदनेन सुमोहितम् ॥ ८॥ इत्युक्ता सा वरारोहा तत्र वासमथाकरोत्[1] ॥ ९॥ तस्यां वसन्त्यां वर्षाणि पञ्चपञ्च च राघव। विश्वामित्राश्रमे राम सुखेन व्यतिचक्रमुः ॥१०॥ अथ काले गते तस्मिन् विश्वामित्रो महामुनिः। सव्रीड इव संवृत्तश्चिन्ताशोकपरायणः ॥ ११ ॥ बुद्धिर्मुनेः समुत्पन्ना सामर्षा रघुनन्दन। सर्वं सुराणां कर्मैतत्तपोपहरणं महत् ॥ १२ ॥ अहोरात्रापदेशेन गताः संवत्सरा दश । काममोहाभिभूतस्य विघ्नोऽयं प्रत्युपस्थितः ॥ १३ ॥ विनिश्वसन् मुनिवरः पश्चात्तापेन दुःखितः। भीतामप्सरसं दृष्ट्वा वेपन्तीं प्राञ्जलिं स्थिताम् ॥ १४ ॥ मेनकां मधुरैर्वाक्यैर्विसृज्य कुशिकात्मजः। उत्तरं पर्वतं राम विश्वामित्रो जगाम ह ॥ १५ ॥ स कृत्वा नैष्ठिकीं बुद्धिं जेतुकामो महायशाः। कौशिकीतीरमासाद्य तपस्तेपे सुदारुणम् ॥ १६ ॥ तस्य वर्षसहस्रं तु घोरं तप उपासतः। उत्तरे पर्वते राम देवतानामभूद्भयम् ॥ १७॥ आमन्त्रयन् समागम्य सर्वे सर्षिगणाः सुराः। महर्षिशब्दं लभतां साध्वयं कुशिकात्मजः ॥१८॥ देवतानां वचः श्रुत्वा सर्वलोकपितामहः। अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम्॥१९॥

विनिश्वसन्नित्यादिद्विकम् । वेपन्तीं वेपमानाम्। मधुरैः त्वया किं कृतम्? कामपरतन्त्रस्य ममैवापराधोऽयमित्येवंरूपैरित्यर्थः। उत्तरं पर्वतं हिमवन्तम् ॥ १४॥ १५॥ स इति। नैष्ठिकीं व्रतसमापनपर्यन्ताम् । जेतुकामः इन्द्रियाणीति शेषः ॥ १६-१९ ॥

भावः ॥ ६-९ ॥ तस्यामिति । पञ्च पञ्च दशेत्यर्थः ॥ १० ॥ ११ ॥ बुद्धिरिति । अहोरात्रापदेशेन-अहोरात्रच्छद्मना अहोरात्रसादृश्येनेति यावत् ॥ १२ ॥ १३ ॥ विनिश्वसन्निति । वेपन्तीम्-वेपमानाम् ॥ १४ ॥ १५ ॥ स इति । नैष्ठिकीं व्रतसमापनपर्यन्ताम्-बुद्धिं व्यवसायात्मिकाम् ॥ १६-२२ ॥

---

[1] करोत् । तपसो हि महाविघ्नो विश्वामित्रमुपागतः । इत्यधिकः पाठः ।

महत्त्वमित्यस्य विवरणम्—ऋषिमुख्यत्वमिति ॥२०—२२॥ ततोऽहं विजितेन्द्रियः यदि महर्षित्वं भवता दत्तं ततोऽहं विजितेन्द्रियश्चास्मीत्यर्थः ॥२३॥ न तावत्त्वं जितेन्द्रियः विकारहेतुसन्निधानेपि यावन्न विकरोषि तावन्तं कालं तव जितेन्द्रियत्वं नास्तीत्यर्थः ॥ २४ ॥ २५ ॥ आकाशसंश्रयः वर्षावरण

महर्षे स्वागतं वत्स तपसोग्रेण तोषितः। महत्त्वमृषिमुख्यत्वं ददामि तव कौशिक ॥ २० ॥ ब्रह्मणस्स वचः श्रुत्वा सर्वलोकेश्वरस्य ह। न विषण्णो न सन्तुष्टो विश्वामित्रस्तपोधनः ॥ २१ ॥ प्राञ्जलिः प्रणतो भूत्वा सर्वलोकपिता महम्। प्रत्युवाच ततो वाचं विश्वामित्रो महामुनिः ॥ २२ ॥ महर्षिशब्दमतुलं स्वार्जितैः कर्मभिः शुभैः। यदि मे भगवानाह ततोऽहं विजितेन्द्रियः ॥२३॥ तमुवाच ततो ब्रह्मा न तावत्त्वं जितेन्द्रियः। यतस्व मुनिशार्दूल इत्युक्त्वा त्रिदिवं गतः ॥ २४ ॥ विप्रस्थितेषु देवेषु विश्वामित्रो महामुनिः। ऊर्ध्वबाहुर्निरालम्बो वायुभक्षस्तपश्चरन् ॥ २५ ॥ घर्मे पञ्चतपा भूत्वा वर्षास्वाकाशसंश्रयः। शिशिरे सलिलस्थायी रात्र्यहानि तपोधनः ॥ २६ ॥ एवं वर्षसहस्रं हि तपो घोरमुपागमत् ॥ २७ ॥ तस्मिन् संतप्यमाने तु विश्वामित्रे महामुनौ। सम्भ्रमः सुमहानासीत् सुराणां वासवस्य च ॥ २८ ॥ रम्भामप्सरसं शक्रस्सह सर्वैर्मरुद्गणैः। उवाचात्महितं वाक्यमहितं कौशिकस्य च ॥२९॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

रहितदेशस्थः ॥ २६ ॥ २७ ॥ सम्भ्रमः किमस्मत्पदं कांक्षत इति अस्थाने भयशङ्का ॥ २८ ॥ अहितं कौशिकस्य चेत्यनेन तद्विषयवैरनिर्यातनार्थं च रम्भाप्रेरणमित्यपि गम्यते ॥२९॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥६३॥



महर्षीति। ततोऽहं विजितेन्द्रियः यदि महर्षित्वं भवता दत्तं ततोऽहं विजितेन्द्रियश्चास्मीत्यर्थः ॥ २३ ॥ तमिति। न तावत्त्वं जितेन्द्रियः, विकारहेतुसन्निधानेपि यावन्न विकरोषि तावन्तं कालं तव जितेन्द्रियत्वं नास्तीति भावः ॥ २४ ॥ २५ ॥ घर्मे ग्रीष्मे। आकाशसंश्रयः अनावृतदेशस्थः ॥ २६–२९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां त्रिषष्टितमः सर्गः ॥ ६३ ॥

अथ रम्भया तपोविघ्नश्चतुःषष्टितमे—सुरकार्यमित्यादि । लोभनं प्रलोभनम् । काममोहेन कामकृतवैचित्त्येन । समन्वितं युक्तम् । इह अस्मिन् काले । कौशिकप्रलोभनरूपं सुमहत् सुरकार्यं कर्त्तव्यमित्यन्वयः ॥ १ ॥ व्रीडिता अशक्यार्थवचननिमित्तलज्जावती ॥ २ ॥ उत्सृजते उत्स्रक्ष्यति । ततः तस्मात्

सुरकार्यमिदं रम्भे कर्तव्यं सुमहत्त्वया । लोभनं कौशिकस्येह काममोहसमन्वितम् ॥ १ ॥ तथोक्ता साप्सरा राम सहस्राक्षेण धीमता । व्रीडिता प्राञ्जलिर्भूत्वा प्रत्युवाच सुरेश्वरम् ॥ २ ॥ अयं सुरपते घोरो विश्वामित्रो महामुनिः । क्रोधमुत्सृजते घोरं मयि देव न संशयः ॥ ३ ॥ ततो हि मे भयं देव प्रसादं कर्तुमर्हसि । एवमुक्तस्तया राम रम्भया भीतया तदा । तामुवाच सहस्राक्षो वेपमानां कृताञ्जलिम् ॥४॥ मा भैषि रम्भे भद्रं ते कुरुष्व मम शासनम् ॥५॥ कोकिलो हृदयग्राही माधवे रुचिरद्रुमे । अहं कन्दर्पसहितः स्थास्यामि तव पार्श्वतः॥६॥ त्वं हि रूपं बहुगुणं कृत्वा परमभास्वरम् । तमृषिं कौशिकं रम्भे भेदयस्व तपस्विनम् ॥७॥ सा श्रुत्वा वचनं तस्य कृत्वा रूपमनुत्तमम् । लोभयामास ललिता विश्वामित्रं शुचिस्मिता ॥ ८ ॥ कोकिलस्य तु शुश्राव वल्गु व्याहरतः स्वनम् । सम्प्रहृष्टेन मनसा तत एनामुदैक्षत॥९॥अथ तस्य च शब्देन गीतेनाप्रतिमेन च । दर्शनेन च रम्भाया मुनिः सन्देहमागतः॥ १०॥

क्रोधोत्सर्जनात् । मे मम । भयं भीतिः । प्रसादं नियोगनिवृत्तिरूपम् ॥ ३ ॥ ४ ॥ मा भैषि रम्भे इत्यत्र आर्षो ह्रस्वः ॥५॥ कोकिल इति । अहं कोकिलो भूत्वा माधवे वसन्ते सति स्थास्यामि॥६॥ रूपं सौन्दर्यम् । बहुगुणं बहवः शृङ्गारचेष्टारूपा गुणा यस्य तथोक्तम् । भेदयस्व चलचित्तं कारय॥७॥ सेति । ललिता सुन्दरी ॥ ८ ॥ वल्गु मनोहरम् । सम्प्रहृष्टेन कोकिलरवश्रवणजसन्तोषवता ॥९॥ अथेति । तस्य कोकिलस्य । गीतेन रम्भाया इत्यनुषज्यते ।

सुरकार्यमिति । लोभनं प्रलोभनम् । कामजनितेन मोहेन आन्ध्येन समन्वितः ॥ १ ॥ २ ॥ अयमिति । उत्सृजते उत्स्रक्ष्यते ॥ ३ ॥ ततः क्रोधात् मे भयं भीतिः ॥ ४ ॥ ५ ॥ कोकिल इति । हृदयग्राही कोकिलः । माधवे वसन्ते सति ॥ ६ ॥ त्वमिति । रूपं सौन्दर्यम् । बहुगुणं लोकोत्तरम् । भेदयस्व प्रलोभयस्व ॥ ७ ॥ ८॥ कोकिलस्येति । वल्गु मनोहरम् ॥९॥ अथेति । तस्य कोकिलस्य शब्देन कूजितेन च रम्भाया गीतेन दर्शनेन च सन्देहम् एतत् किन्निमित्तमिति संशयं

सन्देहं सहस्राक्षप्रेरिता स्वयमागता वेति ॥१०॥ तत् रम्भाप्रलोभनम् । सहस्राक्षस्य कर्मेति विज्ञाय सङ्गीतादिप्रलोभनेन हेतुना निश्चित्य ॥ ११ ॥ शैली शिलाप्रतिमा । दुर्भगे दुष्टप्रयत्ने ! "भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः ॥१२॥ स्वामिपरतन्त्रायाः किमस्याः शापेनेति पश्चात्तापेनानु

सहस्राक्षस्य तत्कर्म विज्ञाय मुनिपुङ्गवः । रम्भां क्रोधसमाविष्टः शशाप कुशिकात्मजः ॥ ११ ॥ यन्मां लोभयसे रम्भे कामक्रोधजयैषिणम् । दशवर्षसहस्राणि शैली स्थास्यसि दुर्भगे ॥ १२ ॥ ब्राह्मणः सुमहातेजास्तपोबलसमन्वितः । उद्धरिष्यति रम्भे त्वां मत्क्रोधकलुषीकृताम् ॥ १३ ॥ एवमुक्त्वा महातेजा विश्वामित्रो महामुनिः । अशक्नुवन् धारयितुं क्रोधं सन्तापमागतः ॥ १४ ॥ तस्य शापेन महता रम्भा शैली तदाभवत् ॥ १५ ॥ वचः श्रुत्वा च कन्दर्पो महर्षेः स च निर्गतः ॥ १६ ॥ कोपेन सुमहातेजास्तपोपहरणे कृते । इन्द्रियैरजितै राम न लेभे शान्तिमात्मनः ॥ १७ ॥ बभूवास्य मनश्चिन्ता तपोपहरणे कृते ॥ १८ ॥ नैव क्रोधं गमिष्यामि न च वक्ष्ये कथञ्चन । अथवा नोच्छ्वसिष्यामि संवत्सरशतान्यपि ॥ १९ ॥ अहं विशोषयिष्यामि ह्यात्मानं विजितेन्द्रियः । तावद्यावद्धि मे प्राप्तं ब्राह्मण्यं तपसार्जितम् । अनुच्छ्वसन्नभुञ्जानस्तिष्ठेयं शाश्वतीः समाः ॥ २० ॥

गृह्णाति—ब्राह्मण इति । ब्राह्मणो ब्रह्मपुत्रो वसिष्ठ इत्याहुः ॥१३॥ सन्तापं शापनिमित्तपश्चात्तापम् ॥१४॥१५॥ वचः रम्भाशापरूपम् । स च इन्द्रश्च ॥१६॥ इन्द्रियैरजितैरिति । उक्तरीत्या कामक्रोधाहतत्वादितिभावः । इन्द्रियैः हेतुभिः आत्मनः मनसः । शान्तिं दुःखोपशमम् ॥ १७ ॥ बभूवेति । मनश्चिन्ता सङ्कल्पः ॥ १८ ॥ नैवेत्यादि । न च वक्ष्ये कथञ्चन मौनमेव करिष्यामीत्यर्थः । नोच्छ्वसिष्यामि केवलं कुम्भकं करिष्यामीत्यर्थः । उच्छ्वासेन खलु क्रोधादयो भविष्यन्तीति भावः ॥१९॥ अहमिति । यावत्पर्यन्तं ब्राह्मण्यं प्राप्तं भविष्यति तावत्पर्यन्तम्, आत्मानं शरीरं शोषयिष्यामि ॥ २० ॥

गतः ॥ १० ॥ ११ ॥ यदिति । शैली शिलारूपा दुर्भगे दुष्टप्रयत्ने ! ॥ १२ ॥ १३ ॥ अशक्नुवन् क्रोधं धारयितुं शमयितुमशक्तः सन्, शस्वा सन्तापं गतः ॥ १४ ॥ १५ ॥ वच इति । महर्षेर्वचः रम्भाशापवचः श्रुत्वा कन्दर्पः स च इन्द्रश्च निर्गतः ॥ १६ ॥ कोपेनेति । अजितैरिन्द्रियैर्हेतुभिः आत्मनः मनसः, शान्तिं दुःखोपशमनम् । न लेभे ॥ १७–१९ ॥ अहमिति । आत्मानं देहम् । तावद्विशोषयिष्यामि यावत् यावता कालेन ब्राह्मण्यं प्राप्तं भविष्यति । अनुच्छ्वसन् उच्छ्वास-

न हीति। मूर्तयः शरीरावयवाः क्षयं न यास्यन्ति, तपःप्रभावादिति भावः॥२१॥ एवमिति। वर्षसहस्रस्य वर्षसहस्रसम्बन्धिनीं वर्षसहस्रानुयायिनीम्। दीक्षाम् अनुच्छ्वासाभोजनसङ्कल्पम् उद्दिश्येति शेषः। अप्रतिमां निस्तुलाम्। प्रतिज्ञां एवमेव सर्वदा करिष्यामीत्यध्यवसायं चकार ॥२२॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुःषष्टितमः सर्गः ॥ ६४ ॥ अथ विश्वामित्रस्य ब्रह्मर्षित्वप्राप्तिः पञ्चषष्टितमे—अथ

न हि मे तप्यमानस्य क्षयं यास्यन्ति मूर्तयः ॥ २१ ॥ एवं वर्षसहस्रस्य दीक्षां स मुनिपुङ्गवः । चकाराप्रतिमां लोके प्रतिज्ञां रघुनन्दन ॥ २२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुःषष्टितमः सर्गः ॥६४॥
अथ हैमवतीं राम दिशं त्यक्त्वा महामुनिः । पूर्वां दिशमनुप्राप्य तपस्तेपे सुदारुणम् ॥ १॥ मौनं वर्षसहस्रस्य कृत्वा व्रतमनुत्तमम् । चकाराप्रतिमं राम तपः परमदुष्करम् ॥ २ ॥ पूर्णे वर्षसहस्रे तु काष्ठभूतं महामुनिम् । विघ्नैर्बहुभिराधूतं क्रोधो नान्तरमाविशत् ॥ ३ ॥ स कृत्वा निश्चयं राम तप आतिष्ठदव्ययम् ॥ ४ ॥ तस्य वर्षसहस्रस्य व्रते पूर्णे महाव्रतः । भोक्तुमारब्धवानन्नं तस्मिन् काले रघूत्तम । इन्द्रो द्विजातिर्भूत्वा तं सिद्धमन्नमयाचत ॥ ५ ॥

हैमवतीमित्यादि ॥ १ ॥ वर्षसहस्रस्य वर्षसहस्रसम्बन्धि, तत्साध्यमित्यर्थः। मौनव्रतं मौनरूपं व्रतम्। कृत्वा सङ्कल्प्येत्यर्थः ॥ २ ॥ काष्ठभूतं काष्ठवदवस्थितम् ॥ आधूतं आकुलीकृतमपि। आन्तरं अन्तरवन्तम्, दृढान्तःकरणवन्तमिति यावत्। यद्वा तं प्रति क्रोधः अन्तरं अवकाशं नाविशत् ॥ ३ ॥ ४ ॥ तस्य पूर्वसङ्कल्पितस्य। वर्षसहस्रस्य सम्बन्धिनि व्रते पूर्णे। तस्मिन् काले पारणकाले। सिद्धं पक्वम्। याचिर्द्विकर्मकः ॥ ५ ॥

मकुर्वन्, शाश्वतीः समाः बहून् संवत्सरान् तिष्ठेयमिति, मनश्चिन्ता मनःसङ्कल्पो बभूवेत्यन्वयः ॥ २० ॥ न हीति। मूर्तयः अवयवाः ॥ २१ ॥ एवमिति। वर्षसहस्रस्य दीक्षां वर्षसहस्रानुवर्तिनीं दीक्षाम् अनुच्छ्वसनादिव्रतसङ्कल्परूपाम्। प्रतिज्ञां प्रतिज्ञाताम् चकार ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां चतुःषष्टितमः सर्गः ॥ ६४ ॥ अथेति। अथ प्रतिज्ञोत्तरम्। हैमवतीं दिशम् उत्तराम् ॥ १ ॥ मौनमिति। वर्षसहस्रस्य वर्षसहस्रस्य सम्बन्धि, तत्साध्यमिति यावत्। मौनं मौनरूपं व्रतम् ॥ २ ॥ पूर्ण इति। काष्ठभूतं काष्ठवदवस्थितम्। आधूतम् आकुलीकृतमपि अन्तरम् अन्तरवन्तम्, धीरमिति यावत्। अर्श आदित्वादच् प्रत्ययः। यद्वा तं प्रति क्रोधः अन्तरमवकाशं नाविशत् ॥ ३ ॥ ४ ॥ तस्येति। अस्मिन् काले व्रतपारणकाले ॥५॥

निश्चितः तपःसिद्धये सर्वथैवान्नं दातव्यमिति निश्चयवानित्यर्थः। निश्चितः अशङ्कित इति वा। निःशेषित इत्यनेन सर्वमन्नमिन्द्रेण याचितमिति गम्यते। अभु-क्त्वेति पुनः पाकार्हतण्डुलासम्पादनादिति भावः॥६॥७॥ आदीपितं तापितम् ॥८॥ तत इत्यादि। तपसा तेजसा तपोरूपाग्निना। मोहिता मूर्च्छिताः।

तस्मै दत्त्वा तदा सिद्धं सर्वं विप्राय निश्चितः। निःशेषितेऽन्ने भगवानभुक्त्वैव महातपाः। न किञ्चिदवदद्विप्रं मौन व्रतमुपस्थितः[1] ॥ ६ ॥ अथ वर्षसहस्रं वै नोच्छ्वसन् मुनिपुङ्गवः ॥ ७ ॥ तस्यानुच्छ्वसमानस्य मूर्ध्नि धूमो व्यजायत। त्रैलोक्यं येन सम्भ्रान्तमादीपितमिवाभवत् ॥ ८ ॥ ततो देवास्सगन्धर्वाः पन्नगासुरराक्षसाः। मोहितास्तेजसा तस्य तपसा मन्दरश्मयः। कश्मलोपहताः सर्वे पितामहमथाब्रुवन् ॥ ९ ॥ बहुभिः कारणैर्देव विश्वामित्रो महामुनिः। लोभितः क्रोधितश्चैव तपसा चाभिवर्द्धते। न ह्यस्य वृजिनं किञ्चिद्दृश्यते सूक्ष्ममप्यथ ॥१०॥ न दीयते यदि त्वस्य मनसा यदभीप्सितम्। विनाशयति त्रैलोक्यं तपसा सचराचरम् ॥११॥ व्याकुलाश्च दिशः सर्वा न च किञ्चित्प्रकाशते। सागराः क्षुभिताः सर्वे विशीर्यन्ते च पर्वताः ॥ १२ ॥

कश्मलोपहताः दुःखोपहताः ॥ ९ ॥ लोभितः लोभकारणैः रम्भादर्शनादिभिः प्रलोभितः। क्रोधितः क्रोधकारणैर्वर्षसहस्रान्तसिद्धकृतान्नयाचनादिभिः क्रोधितः। वृजिनं पापं रागद्वेषादिलक्षणम्। सूक्ष्मं स्वल्पम् ॥१०॥ विनाशयति विनाशयेत्। असावितिशेषः ॥११॥ व्याकुला इत्यादि। न प्रतिजानीमः

तस्मा इति। सिद्धं पक्वम्। निश्चितः अशङ्कितः ॥ ६ ॥ अथेति। नोच्छ्वसत् नोपाश्वसत् ॥ ७ ॥ तस्येति। येन धूमेन आदीपितमिव सन्तप्यमानमिव, संभ्रान्तं व्याकुलितम् ॥ ८ ॥ तत इति। तपसा तेजसा तपोरूपेणाग्निना, मन्दरश्मयः क्षीणतेजस्काः। कश्मलोपहताः मोहाक्रान्ताः ॥ ९ ॥ बहुभिरिति। कारणैर्लोभकारणैः। लोभितः क्रोधितः सन्नपि तपसाभिवर्धते अस्य सूक्ष्ममपि वृजिनं स्खलनं न दृश्यम् ॥ १० ॥ नेति। विनाशयति विनाशयेत् ॥ ११ ॥ व्याकुला इति। नास्तिकः नास्ति परो लोक इति मन्यमानः, कार्याकार्यविवेकशून्यत्वात् न प्रतिजानीमः तत्प्रतीकारं न जानीमः ॥ १२ ॥ १३ ॥



---

१ स्थितः। तथैवासीत्पुनर्मौनमनुच्छ्वासं चकार ह। इत्यधिकः।

प्रतिक्रियामितिशेषः । नास्तिको जायत इति उक्तसंक्षोभवशान्नास्तिक इव कर्मानुष्ठानशून्यो जायत इत्यर्थः ॥ १२ ॥ १३ ॥ उक्तार्थानुवादपूर्वकमनुष्ठेयांश उच्यते संमूढमिवेत्यादि ॥ १४ ॥ बुद्धिमिति । हे देव ब्रह्मन् । अतःपरं विश्वामित्रः नाशे जगत्क्षये यावत् बुद्धिं न कुरुते तावत्प्रसाद्यः अनु

प्रकम्पते च पृथिवी वायुर्वाति भृशाकुलः । ब्रह्मन्न प्रतिजानीमो नास्तिको जायते जनः ॥ १३ ॥ सम्मूढमिव त्रैलोक्यं सम्प्रक्षुभितमानसम् । भास्करो निष्प्रभश्चैव महर्षेस्तस्य तेजसा ॥ १४ ॥ बुद्धिं न कुरुते यावन्नाशे देव महामुनिः । तावत्प्रसाद्यो भगवानग्निरूपो महाद्युतिः ॥ १५ ॥ कालाग्निना यथा पूर्वं त्रैलोक्यं दह्यतेऽखिलम् । देवराज्यं चिकीर्षेत दीयतामस्य यन्मतम् ॥ १६ ॥ ततः सुरगणाः सर्वे पितामहपुरोगमाः । विश्वामित्रं महात्मानं वाक्यं मधुरमब्रुवन् । ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतोषिताः ॥ १७ ॥ ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक । दीर्घमायुश्च ते ब्रह्मन् ददामि समरुद्गणः । स्वस्ति प्राप्नुहि भद्रं ते गच्छ सौम्य यथासुखम् ॥ १८ ॥ पितामहवचः श्रुत्वा सर्वेषां च दिवौकसाम् । कृत्वा प्रणामं मुदितो व्याजहार महामुनिः ॥ १९ ॥ ब्राह्मण्यं यदि मे प्राप्तं दीर्घमायुस्तथैव च । ओङ्कारश्च वषट्कारो वेदाश्च वरयन्तु माम् ॥ २० ॥ क्षत्रवेदविदां श्रेष्ठो ब्रह्मवेदविदामपि । ब्रह्मपुत्रो वसिष्ठो मामेवं वदतु देवताः । यद्ययं परमः कामः कृतो यान्तु सुरर्षभाः ॥ २१ ॥

प्राह्यः ॥ १५ ॥ कालाग्निनेति । पूर्वं प्रलयकाले । कालाग्निना त्रैलोक्यं यथा अदह्यत तथैव त्रैलोक्यमनेन दह्यते धक्ष्यते । अयं देवराज्यं चिकीर्षेतापि अतः अस्य यत् ब्रह्मर्षित्वं मतम्, तदीयतामित्यर्थः ॥ १६ ॥ तत इत्यादि । ततः देवविज्ञापनानन्तरम् ॥ १७ ॥ ब्राह्मण्यमित्यादि । ब्रह्मवचनं प्राधान्येन ॥ १८ ॥ १९ ॥ वरयन्तु अध्यापनयाजनार्हा भवन्तु इत्यर्थः ॥ २० ॥ ब्रह्मानुग्रहेऽपि सजातीयपरिग्रहार्थमाह—क्षत्रेति । क्षत्रवेदाः क्षत्रियाणां शान्ति

संमूढमिव संभ्रान्तमिव स्थितम् । संप्रक्षुभितमानसं व्याकुलीकृतचित्तम् ॥ १४ ॥ बुद्धिमिति । देव ब्रह्मन् ! नाशे त्रैलोक्यनाशने ॥ १५ ॥ कालाग्निनेति । पूर्वं कालाग्निना त्रैलोक्यं यथा अदह्यत इदानीमनेनैव तथा त्रैलोक्यं दह्यत, धक्ष्यत इत्यर्थः । देवराज्यं चिकीर्षेतापि अतः अस्य यत् ब्रह्मर्षित्वं मतं तदीयतामित्यर्थः । ब्रह्मर्षे इत्यादि ॥ १६ ॥ १७ ॥ ब्राह्मण्यमिति । मां वरयन्तु स्वतः एव आयान्तु ॥ १८–२० ॥ क्षत्रेति । क्षत्रवेदः अथर्वणवेदः, ब्रह्मवेदाः इतरवेदाः ॥ २१–२३ ॥

विषम०—ब्रह्माद्यनुग्रहेपि जातिब्राह्मण्याभावाद्वसिष्ठेनानङ्गीकारे व्यर्थमेव सर्वमत आह—क्षत्रेत्यादि ॥ २१ ॥

पुष्ट्यादिप्रयोजना आथर्वणवेदाः । तद्विदां श्रेष्ठः सूर्यवंशानादिपुरोहितत्वादितिभावः । ब्रह्मवेदाः ब्रह्मप्रतिपादका वेदाः, वेदान्ता इत्यर्थः । यद्वा ब्राह्मणमात्रप्रवचनार्हा वेदास्त्रयीरूपाः । एवं वदतु ब्रह्मर्षिरिति वदतु । यदीति । अयं कामः वसिष्ठमुखेन ब्रह्मर्षित्ववादरूपः कामः । यदि कृतः तदैव मद्विषये

ततः प्रसादितो देवैर्वसिष्ठो जपतां वरः । सख्यं चकार ब्रह्मर्षिरेवमस्त्विति चाब्रवीत् ॥२२॥ ब्रह्मर्षिस्त्वं न सन्देहः सर्वं सम्पत्स्यते तव । इत्युक्त्वा देवताश्चापि सर्वा जग्मुर्यथागतम् ॥ २३ ॥ एवं त्वनेन ब्राह्मण्यं प्राप्तं राम महात्मना । एष राम मुनिश्रेष्ठ एष विग्रहवांस्तपः । एष धर्मपरो नित्यं वीर्यस्यैष परायणम् ॥ २४ ॥ एवमुक्त्वा महातेजा विरराम द्विजोत्तमः ॥ २५ ॥ शतानन्दवचः श्रुत्वा रामलक्ष्मणसन्निधौ । जनकः प्राञ्जलिर्वाक्यमुवाच कुशिकात्मजम् ॥२६॥ धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव । यज्ञं काकुत्स्थसहितः प्राप्तवानसि धार्मिक ॥२७॥ पावितोऽहं त्वया ब्रह्मन् दर्शनेन महामुने । गुणा बहुविधाः प्राप्तास्तव सन्दर्शनान्मया ॥२८॥ विस्तरेण च ते ब्रह्मन् कीर्त्यमानं महत्तपः । श्रुतं मया महातेजो रामेण च महात्मना ॥ २९ ॥ सदस्यैः प्राप्य च सदः श्रुतास्ते बहवो गुणाः ॥३०॥ अप्रमेयं तपस्तुभ्यमप्रमेयं च ते बलम् । अप्रमेया गुणाश्चैव नित्यं ते कुशिकात्मज ॥३१॥

कृतकृत्या यान्तु नान्यथेत्यर्थः ॥२१॥२२॥ एवमस्त्वित्यस्य विवरणम्—ब्रह्मर्षिस्त्वमिति । सर्वं ब्राह्मण्यं त्वत्कृतयाजनाध्यापनादिकं च ॥२३॥ अथ शतानन्दवचनम्—एवमित्यादि । तप इत्यकारान्तपुँल्लिङ्गत्वमार्षम् ॥२४–२९॥ सदस्यैरिति । सदः प्राप्य स्थितैः सदस्यैः ॥३०॥ अप्रमेयाः इयत्तया ज्ञातु

एवमिति । तपः इत्ययं शब्दः अकारान्तत्वेन पुँल्लिङ्गोऽप्यस्तीति कृत्वा विग्रहवांस्तपः इति पाठः ॥२४–२९॥ सदस्यैरिति । सदः प्राप्य स्थितैः सदस्यैः ॥ ३० ॥ अप्रमेयमिति । अप्रमेयाः इयत्तया ज्ञातुमशक्याः ॥ ३१ ॥



---

१ यथागतम् । विश्वामित्रोऽपि धर्मात्मा लब्ध्वा ब्राह्मण्यमुत्तमम् । पूजयामास ब्रह्मर्षिं वसिष्ठं जपतां वरम् । कृतकामो महीं सर्वां चचार तपसि स्थितः । २ मुने । विश्वामित्र महाभाग ब्रह्मर्षीणां वरोत्तम । ३ कुशिकात्मज । पितामहस्य च यथा यथा चैव ह्युमापतेः । इत्यधिकः पाठः ।

मशक्याः ॥ ३१ ॥ कथानामिति "पूरणगुण—" इति तृतीयार्थे षष्ठी । तृप्तिः अलंबुद्धिः । स्वागतमिति । त्वदागमनं शुभकृज्जातमित्यर्थः ॥३२—३५॥ स्ववाटं स्वनिवेशम् ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥



एवं स्वमातृशापमोचनघटकत्वकृतोपकारस्मृत्या शतानन्दप्रतिपादितेन प्रासङ्गिकेन विश्वामित्रचरित्रेण उपकारकगुरुवैभवो ज्ञेयः, कामक्रोधौ सर्वदा

तृप्तिराश्चर्यभूतानां कथानां नास्ति मे विभो । कर्मकालो मुनिश्रेष्ठ लम्बते रविमण्डलम् ॥३२॥ श्वःप्रभाते महातेजो द्रष्टुमर्हसि मां पुनः । स्वागतं तपतां श्रेष्ठ मामनुज्ञातुमर्हसि ॥ ३३ ॥ एवमुक्तो मुनिवरः प्रशस्य पुरुषर्षभम् । विससर्जाशु जनकं प्रीतं प्रीतमनास्तदा ॥ ३४ ॥ एवमुक्त्वा मुनिश्रेष्ठं वैदेहो मिथिलाधिपः । प्रदक्षिणं चकाराशु सोपाध्यायः सबान्धवः ॥ ३५ ॥ विश्वामित्रोऽपि धर्मात्मा सरामः सहलक्ष्मणः । स्ववाटमभिचक्राम पूज्यमानो महर्षिभिः ॥ ३६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

ततः प्रभाते विमले कृतकर्मा नराधिपः । विश्वामित्रं महात्मानमाजुहाव सराघवम् ॥ १ ॥ तमर्चयित्वा धर्मात्मा शास्त्रदृष्टेन कर्मणा । राघवौ च महात्मानौ तदा वाक्यमुवाच ह ॥२॥ भगवन् स्वागतं तेऽस्तु किं करोमि तवानघ । भवानाज्ञापयतु मामाज्ञाप्यो भवता ह्यहम् ॥ ३ ॥ एवमुक्तस्तु धर्मात्मा जनकेन महात्मना । प्रत्युवाच मुनिर्वीरं वाक्यं वाक्यविशारदः ॥४॥ पुत्रौ दशरथस्येमौ क्षत्रियौ लोकविश्रुतौ । द्रष्टुकामौ धनुःश्रेष्ठं यदेतत्त्वयि तिष्ठति॥५॥

दुर्निरोधौ, जितकामक्रोध एव ब्राह्मणोत्तमः, ब्राह्मण्यं च न सुलभम्, ब्रह्मविदपचारः सर्वारम्भनिरोधकः इत्यादिर्व्यञ्जितमिति प्रबन्धगतवस्तुना वस्तु ध्वनिः । अथ स्वयमेव समस्तजनरक्षणावसरप्रतीक्षो भगवान् देवशरणागतिं व्याजीकृत्य रावणवधायावतीर्णस्तदवान्तरोपायभूतां वेदवत्यवतारे स्वतः कृतसङ्कल्पां लक्ष्मीं तुल्यशीलवयोवृत्ताभिजनैव कन्या वरणीयेत्यमुमर्थविशेषं प्रवर्तयिष्यन् जनककुलेऽवतार्य तत्परिणयनाय प्रवृत्तस्तत्प्रीणनाय ताटकाताटकेयादिदुष्टवधं कौशिकाध्वरत्राणाहल्याशापमोक्षादिरूपं शिष्टपरिपालनं च विधाय साक्षात्सीतालाभोपायाय यतत इत्याह—ततः

तृप्तिरिति । कथानां श्रवण इति शेषः । तृप्तिः अलंबुद्धिः ॥ ३२ ॥ स्वागतम्-त्वदागमनं स्वागतं जातमित्यर्थः ॥ ३३—३६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां पञ्चषष्टितमः सर्गः ॥ ६५ ॥ तत इति । कृतं कर्म येन सः ॥ १—५ ॥

प्रभात इत्यादिना सर्गद्वयेन ॥ १ ॥ तमिति । राघवौ चार्थ्याविदेरन्वयः । कर्मणा अर्घ्यप्रदानादिना ॥ २–४ ॥ द्रष्टुकामौ, भवत इति शेषः ॥ ५ ॥ अस्य दर्शनादेव कृतकामौ भूत्वा प्रतियास्यत इत्यन्वयः ॥ ६ ॥ ७ ॥ श्रूयतामिति । धनुः यदर्थं यत्प्रयोजनाय । इह अस्मद्गृहे, तिष्ठति । अस्य धनुषः

एतद्दर्शय भद्रं ते कृतकामौ नृपात्मजौ । दर्शनादस्य धनुषो यथेष्टं प्रतियास्यतः ॥६॥ एवमुक्तस्तु जनकः प्रत्युवाच महामुनिम् ॥ ७ ॥ श्रूयतामस्य धनुषो यदर्थमिह तिष्ठति ॥ ८ ॥ देवरात इति ख्यातो निमेष्षष्ठो महीपतिः । न्यासोऽयं तस्य भगवन् हस्ते दत्तो महात्मना ॥ ९ ॥ दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान् । रुद्रस्तु त्रिदशान् रोषात् सलीलमिदमब्रवीत् ॥ १० ॥ यस्माद्भागार्थिनो भागान्नाकल्पयत मे सुराः । वराङ्गाणि महार्हाणि धनुषा शातयामि वः ॥ ११ ॥ ततो विमनसः सर्वे देवा वै मुनिपुङ्गव । प्रसादयन्ति देवेशं तेषां प्रीतोऽभवद्भवः ॥ १२ ॥ प्रीतियुक्तः स सर्वेषां ददौ तेषां महात्मनाम् । तदेतद्देवदेवस्य धनूरत्नं महात्मनः । न्यासभूतं तदा न्यस्तमस्माकं पूर्वके विभो ॥१३॥ अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता मया । क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ॥१४॥

तत्प्रयोजनं श्रूयतामित्यर्थः ॥ ८ ॥ निमेः जनककूटस्थस्य । न्यासः निक्षेपरूपम् ॥ ९ ॥ उक्तमर्थं विवृणोति–दक्षेत्यादिना । आयम्य आकृष्य ॥१० ॥ भागार्थिनः स्विष्टकृदादिभागार्थिनः । मे ममेत्यन्वयः । वराङ्गाणि शिरांसि । अत्र तस्मादित्युपस्कार्यम् । शातयामि छिनद्मि ॥ ११ ॥ विमनसः दीनाः । भवः रुद्रः ॥ १२ ॥ ददौ धनुरितिशेषः । धनूरत्नं धनुःश्रेष्ठम् । पूर्वके देवराते । न्यासभूतं न्यस्तं, देवैरितिशेषः ॥ १३ ॥ अथेति । अथ वृत्तान्तान्तरारम्भे । क्षेत्रं यागभूमिम् । मे कृषतः मयि कर्षतीत्यर्थः । चयनार्थमितिशेषः । 'लाङ्गलं पवीरवमिति द्वाभ्यामृषभेण कृषति' इत्यादिशास्त्रात् । लाङ्गलात्

एतदिति । कृतकामौ प्राप्तकामौ ॥ ६ ॥ ७ ॥ श्रूयतामिति । धनुर्यदर्थं यत्प्रयोजनार्थं तिष्ठति अस्य धनुषः तत् श्रूयतामित्यर्थः ॥ ८ ॥ देवरात इति । तस्य देवरातस्य । अयम् इदं धनुः ॥ ९ ॥ दक्षयज्ञेति । आयम्य आकृष्य ॥ १० ॥ यस्मादिति । वराङ्गाणि शिरांसि ॥ ११ ॥ १२ ॥ प्रीतियुक्त इत्यादि । ददौ तेषामित्यत्र धनूरत्नं कर्म । तदेतदिति । एतद्धनूरत्नम् । अस्माकं पूर्वके देवराते न्यासभूतं न्यस्तम्, देवैरिति विज्ञेयम् ॥ १३ ॥ अथेति । क्षेत्रं यागभूमिं कृषतः कर्षति सति । लाङ्गलादुत्थिता आविर्भूता । क्षेत्रं शोधयता मया लब्धेति नाम्ना सीतेति विश्रुता । सीता लाङ्गलपद्धतिः ततः प्रादुर्भूतेति तथोच्यते ॥ १४ ॥

लाङ्गलपद्धतेरित्यर्थः। उत्थितेति, कन्येतिशेषः। सा च क्षेत्रं शोधयता मया लब्धेति हेतोर्नाम्ना सीतेति विश्रुता आसीत्। सीता लाङ्गलपद्धतिः। सीतायां जातत्वात्सीतेत्युच्यते ॥ १४ ॥ व्यवर्द्धत मत्कृतपोषणादिति शेषः। अतो ममात्मजा। वीर्यं धनुरारोपणं तदेव शुल्कं मूल्यं यस्याः सा वीर्यशुल्का। इति हेतौ। वीर्यशुल्कत्वात्स्थापिता न कस्मैचिद्दत्तेति भावः ॥ १५–१७ ॥ वीर्यजिज्ञासवः धनुःसारजिज्ञासवः। अभवन्निति शेषः ॥ १८ ॥



भूतलादुत्थिता सा तु व्यवर्द्धत ममात्मजा। वीर्यशुल्केति मे कन्या स्थापितेयमयोनिजा ॥ १५ ॥ भूतलादुत्थितां तां तु वर्द्धमानां ममात्मजाम्। वरयामासुरागम्य राजानो मुनिपुङ्गव ॥ १६ ॥ तेषां वरयतां कन्यां सर्वेषां पृथिवीक्षिताम्। वीर्यशुल्केति भगवन् न ददामि सुतामहम् ॥ १७॥ ततः सर्वे नृपतयः समेत्य मुनिपुङ्गव। मिथिलामभ्युपागम्य वीर्यजिज्ञासवस्तदा ॥ १८ ॥ तेषां जिज्ञासमानानां वीर्यं धनुरुपाहृतम्। न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि वा ॥ १९ ॥ तेषां वीर्यवतां वीर्यमल्पं ज्ञात्वा महामुने। प्रत्याख्याता नृपतयस्तन्निबोध तपोधन ॥ २० ॥ ततः परमकोपेन राजानो नृपपुङ्गव। न्यरुन्धन् मिथिलां सर्वे वीर्यसन्देहमागताः ॥ २१ ॥ आत्मानमवधूतं ते विज्ञाय नृपपुङ्गवाः। रोषेण महताविष्टाः पीडयन् मिथिलां पुरीम् ॥ २२ ॥ ततः संवत्सरे पूर्णे क्षयं यातानि सर्वशः। साधनानि मुनिश्रेष्ठ ततोऽहं भृशदुःखितः ॥ २३ ॥

तेषामिति। वीर्यं जिज्ञासमानानां तेषां कृते धनुः उपाहृतं आनीतम्। ग्रहणे धारणे। तोलने भारपरीक्षार्थं हस्तेन चालने॥१९॥ तेषामिति। तन्निबोधेति तदित्यव्ययम्। तस्मात्कारणात् अनन्तरं यद्वृत्तं तन्निबोधेत्यर्थः ॥ २० ॥ वीर्यसन्देहं वीर्यशैथिल्यम् ॥ २१ ॥ मिथिलावरोधे निमित्तान्तरमाह—आत्मानमिति। ते नृपाः। आत्मानं स्वात्मानम्। मया अवधूतं वीर्यशुल्ककरणेन तिरस्कृतं विज्ञाय, पीडयन् अपीडयन् ॥ २२ ॥ साधनानि दुर्गरक्षण

वीर्यशुल्का वीर्यं धनुरारोपणरूपं शुल्कं विवाहे देयं यस्याः ॥ १५–१७ ॥ मिथिलामिति। वीर्यं धनुस्सारं जिज्ञासवः अभवन्निति शेषः ॥ १८ ॥ तेषामिति। वीर्यं जिज्ञासमानानां ग्रहणे धारणे, तोलने तोलनं नाम भारपरीक्षार्थं मुहुर्मुहुरुत्क्षेपणम् ॥ १९ ॥ तेषामिति। तन्निबोध तस्मान्निबोध ॥ २० ॥ तत इति। वीर्यसन्देहं वीर्यशैथिल्यम् ॥ २१ ॥ २२ ॥ तत इति। साधनानि दुर्गरक्षणसाधनानि ॥ २३ ॥

साधनानि ॥ २३ ॥ प्रसादयं प्रासादयम् ॥ २४ ॥ वीर्यसन्दिग्धाः सन्दिग्धवीर्याः । पापकर्मणः पापकर्माणः ॥ २५–२७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥ अथ धनुर्भङ्गादिवृत्तान्तः सप्तषष्टितमे–जनकस्येत्यादि ॥ १ ॥

ततो देवगणान् सर्वान् तपसाऽहं प्रसादयम् । ददुश्च परमप्रीताश्चतुरङ्गबलं सुराः ॥ २४ ॥ ततो भग्ना नृपतयो हन्यमाना दिशो ययुः । अवीर्या वीर्यसन्दिग्धाः सामात्याः पापकर्मणः ॥ २५ ॥ तदेतन्मुनिशार्दूल धनुः परमभास्वरम् । रामलक्ष्मणयोश्चापि दर्शयिष्यामि सुव्रत ॥ २६ ॥ यद्यस्य धनुषो रामः कुर्यादारोपणं मुने । सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ॥२७॥ इत्यार्षे श्रीरामायणे वाल्मी०आदि०बालकाण्डे षट्षष्टितमः सर्गः॥६६॥
जनकस्य वचः श्रुत्वा विश्वामित्रो महामुनिः । धनुर्दर्शय रामाय इति होवाच पार्थिवम् ॥ १ ॥ ततः स राजा जनकः सामन्तान् व्यादिदेश ह । धनुरानीयतां दिव्यं गन्धमाल्यविभूषितम् ॥ २॥ जनकेन समादिष्टाः सचिवाः प्राविशन् पुरीम् । तद्धनुः पुरतः कृत्वा निर्जग्मुः पार्थिवाज्ञया ॥३॥ नृणां शतानि पञ्चाशद्व्यायतानां महात्मनाम् । मञ्जूषामष्टचक्रां तां समूहुस्ते कथंचन ॥ ४ ॥

सामन्तान् कर्मसचिवान् ॥२॥३॥ नृणामिति । व्यायताना दीर्घदेहानां नृणाम् । पञ्चाशत्शतानि पञ्चसहस्राणि । अष्टचक्रां अष्टचक्रवच्छकटारोपितामित्यर्थः । मञ्जूषां धनुष्पेटिकाम् । समूहुः आचकर्षुः । ते च पञ्चसहस्रसङ्ख्याविशिष्टा अपि कथंचन महता प्रयत्नेन समूहुरितियोजना । अन्ये तु

तत इति। वीर्यसन्दिग्धाः सन्दिग्धवीर्याः॥२५–२७॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां षट्षष्टितमः सर्गः ॥६६॥ जनकस्येति । धनुर्दर्शय रामायेति–आरोपयिष्यति सीतां प्रतिग्रहीष्यतीति भावः ॥ १ ॥ सचिवान्–समीपे विद्यमानान् ॥ २ ॥ ३ ॥ नृणामिति । व्यायतानाम् दीर्घदेहानाम्। पञ्चाशच्छतानि पञ्चसहस्राणि । अष्टचक्रां रथाङ्गाष्टकयुक्ताम् । मञ्जूषां धनुःपेटिकाम् । ऊहुः आचकर्षुः । ते पञ्चसहस्रसङ्ख्या



१ सचिवान् । इति तीर्थीयपाठः ।

अष्टचक्राम् अष्टाधश्चक्ररक्षावन्धवतीम्, ऊहुः हस्तैरिति शेष इत्याहुः ॥ ४ ॥ यत्र मञ्जूषायाम् ॥ ५ ॥ इदमिति । यद्धनुर्दर्शनीयमिच्छसि तदिदं धनुः, आनीतमिति शेषः ॥ ६ ॥ तौ चोभाविति । उद्दिश्येति शेषः ॥ ७ ॥ राजभिः पूर्वं सीतार्थिभिः । पूजितम् अहो महासारमैश्वरं धनुरिति श्लाघित



तामादाय तु मञ्जूषामायसीं यत्र तद्धनुः । सुरोपमं ते जनकमूचुर्नृपतिमन्त्रिणः ॥ ५ ॥ इदं धनुर्वरं राजन् पूजितं सर्वराजभिः । मिथिलाधिप राजेन्द्र दर्शनीयं यदिच्छसि ॥ ६ ॥ तेषां नृपो वचः श्रुत्वा कृताञ्जलिरभाषत । विश्वामित्रं महात्मानं तौ चोभौ रामलक्ष्मणौ ॥ ७ ॥ इदं धनुर्वरं ब्रह्मन् जनकैरभिपूजितम् । राजभिश्च महावीर्यैरशक्तैः पूरितुं पुरा ॥ ८ ॥ नैतत् सुरगणाः सर्वे नासुरा न च राक्षसाः । गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ ९ ॥ क्व गतिर्मानुषाणां च धनुषोऽस्य प्रपूरणे । आरोपणे समायोगे वेपने तोलनेऽपि वा ॥ १० ॥ तदेतद्धनुषां श्रेष्ठमानीतं मुनिपुङ्गव । दर्शयैतन्महाभाग अनयो राजपुत्रयोः ॥ ११ ॥ विश्वामित्रः स धर्मात्मा श्रुत्वा जनकभाषितम् । वत्स राम धनुः पश्य इति राघवमब्रवीत् ॥ १२ ॥ महर्षेर्वचनाद्रामो यत्र तिष्ठति तद्धनुः । मञ्जूषां तामपावृत्य दृष्ट्वा धनुरथाब्रवीत् ॥ १३ ॥ इदं धनुर्वरं ब्रह्मन् संस्पृशामीह पाणिना । यत्नवांश्च भविष्यामि तोलने पूरणेऽपि वा ॥ १४ ॥

मित्यर्थः ॥ ८ ॥ नैतदित्यादि । एतद्धनुः सुरगणादयः प्रपूरणादिकं कर्तुं न शक्ता इत्यर्थसिद्धम् ॥ ९ ॥ क्वेति । प्रपूरणे नम्रीकरणे । आरोपणे मौर्व्या संयोजने । समायोगे शरेण योजने । वेपने मौर्व्याकर्षणे । तोलने भारपरीक्षार्थं कम्पने च । मानुषाणां मध्ये क्व पुरुषे गतिः शक्तिः ॥ १० ॥ तथाप्यनयो र्दर्शयेत्याह—तदेतदिति ॥ ११ ॥ १२ ॥ अपावृत्य अपगतावरणं कृत्वा ॥ १३ ॥ १४ ॥

विशिष्टा अपि कथञ्चन महता प्रयत्नेन ऊहुरिति वाक्यभेदः करणीयः ॥ ४ ॥ आयसीम् अष्टलोहनिर्मिताम् । सुरोपममिति जनकविशेषणम् ॥ ५–८ ॥ नैतदित्यादि । अत्र श्लोके उत्तरश्लोकोक्तान् आरोपणादीन् शब्दान् तुमुनन्तान् कृत्वा एतद्धनुः पूरयितुं कर्णान्तमाक्रष्टुम् आरोपयितुं मौर्व्या संयोजयितुम्-शरेण योजयितुम् मौर्वीमाक्रष्टुं वेपयितुं ज्यां विक्षेपयितुं तोलयितुं भारपरीक्षार्थं कम्पयितुं देवादयो न शक्ता इति योजनीयम् ॥ ९ ॥ क्व गतिरिति । मानुषाणां च गतिः आरोपणादिषु शक्तिर्नैवेत्यर्थः ॥ १०–१२ ॥ ब्रह्मर्षेरिति । अपावृत्य विवृतां कृत्वा ( ब्रह्मर्षेरिति पाठः ) ॥ १३–१५ ॥

बाढमित्यादि ॥ १५ ॥ लीलया अप्रयत्नेन ॥१६॥ पूरयामास आकर्णमाकृष्टवान् । ननु उक्तरीत्या महोन्नतस्य धनुषः कथं बालेनारोपणं संभवति ? अग्रस्पर्शाभावादितिचेत्; उच्यते--आश्चर्यशक्तिकस्य रामस्य करस्पर्शादेवावनतं धनुः ॥ १७ ॥ निर्घातेति । तल्लक्षणमुक्तं ज्योतिषे--" वायुना भिहतो वायुर्गगनात्पतति क्षितौ । यदा दीप्तः खगरुतः स निर्घातोतिदोषकृत् " इति । पर्वतस्येव दीर्यतः-पर्वते दीर्यति भिद्यति यथा भूमिकम्पः

बाढमित्यब्रवीद्राजा मुनिश्च समभाषत ॥ १५ ॥ लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः । पश्यतां नृसहस्राणां बहूनां रघुनन्दनः ॥१६॥ आरोपयित्वा धर्मात्मा पूरयामास तद्धनुः । तद्बभञ्ज धनुर्मध्ये नरश्रेष्ठो महायशाः ॥ १७॥ तस्य शब्दो महानासीन्निर्घातसमनिस्वनः । भूमिकम्पश्च सुमहान् पर्वतस्येव दीर्यतः ॥ १८ ॥ निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः । वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ॥ १९ ॥ प्रत्याश्वस्ते जने तस्मिन् राजा विगतसाध्वसः । उवाच प्राञ्जलिर्वाक्यं वाक्यज्ञो मुनिपुङ्गवम् ॥ २० ॥ भगवन् दृष्टवीर्यो मे रामो दशरथात्मजः । अत्यद्भुतमचिन्त्यं च न तर्कितमिदं मया ॥ २१ ॥ जनकानां कुले कीर्तिमाहरिष्यति मे सुता । सीता भर्तार मासाद्य रामं दशरथात्मजम् ॥ २२ ॥

तथा भूमिकम्पश्चासीदित्यर्थः ॥ १८ ॥ १९ ॥ विगतसाध्वस इत्यनेन रामजामातृकताप्रापकं धनुरारोपणमपि न भवेदिति पूर्वं भीतोऽभूदिति गम्यते ॥ २० ॥ अत्यद्भुतमिति । अचिन्त्यम् अन्यत्रादर्शनात्, न तर्कितं मनुष्येष्वसम्भावितत्वात् । अत्यद्भुतं बालेन कृतत्वात् । इदम् ईशधनुरारोपणम् ॥२१॥ जनकानामिति । जनकानाम्--"अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन । मिथिलायां प्रदीप्तायां न मे किञ्चित्प्रदह्यते ॥" इति प्रोक्तनिरतिशयकीर्तिमतामपि । कुले "कुलं तारयते तात सप्त सप्त च सप्त च " इतिवत् । कीर्तिमित्येकवचनेनैकरूपत्वं व्यज्यते । आहरिष्यति सद्यः प्राप

लीलयेति । लीलया अप्रयत्नेनैव ॥ १६ ॥ १७ ॥ तस्येति । निर्घातः अशनिध्वनिः ॥ १८--२१ ॥ जनकानामिति । आहरिष्यति सम्पादयिष्यति ॥२२--२४॥



१ बाढमित्येव तं राजा । २ आरोपयत्स धर्मात्मा सलीलमिव तद्धनुः । इति पाठान्तरम् ।

रिष्यति । सिद्धस्यादानं ह्याहरणम् । सुता सुतश्चेत्स्वार्जितमेव कीर्तिं प्रापयिष्यति । मे सुता स्वसम्बन्धप्रयुक्तातिशयः । सीता जन्मप्रयुक्तातिशयः । भर्तारमासाद्य भर्तृसम्बन्धकृतातिशयः । भर्तारं भरणदक्षम् । "वित्तमिच्छन्ति मातरः" इत्युक्तधनवन्तमित्यर्थः । रामं "रूपमिच्छति कन्यका" इत्युक्तरूपवन्तम् । दशरथात्मजम् "बान्धवाः कुलमिच्छन्ति" इत्युक्तरीत्या बन्धुकांक्षितम् । एवं सर्वसम्मतवरप्राप्त्या कीर्तिमाहरिष्यतीतिभावः ॥२२॥

मम सत्या प्रतिज्ञा च वीर्यशुल्केति कौशिक । सीता प्राणैर्बहुमता देया रामाय मे सुता ॥ २३ ॥ भवतोऽनुमते ब्रह्मन् शीघ्रं गच्छन्तु मन्त्रिणः । मम कौशिक भद्रं ते अयोध्यां त्वरिता रथैः ॥ २४ ॥ राजानं प्रश्रितैर्वाक्यैरानयन्तु पुरं मम । प्रदानं वीर्यशुल्कायाः कथयन्तु च सर्वशः ॥२५ ॥ मुनिगुप्तौ च काकुत्स्थौ कथयन्तु नृपाय वै । प्रीयमाणं तु राजानमानयन्तु सुशीघ्रगाः ॥ २६ ॥ कौशिकश्च तथेत्याह राजा चाभाष्य मन्त्रिणः । अयोध्यां प्रेषयामास धर्मात्मा कृतशासनान् । यथावृत्तं समाख्यातुमानेतुं च नृपं तदा ॥ २७॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

जनकेन समादिष्टा दूतास्ते क्लान्तवाहनाः । त्रिरात्रमुषिता मार्गे तेऽयोध्यां प्राविशन् पुरीम् ॥ १ ॥

सत्या जातेतिशेषः । सीता वीर्यशुल्केति प्रतिज्ञा सत्या जाता । प्राणैः प्राणेभ्यः बहुमता सीता देयेति सीतापदमुभयत्रान्वेति ॥ २३ ॥ भवतोऽनुमते भवदनुमत्या, गच्छन्त्वित्यर्थः ॥ २४ ॥ प्रश्रितैः विनयान्वितैः । सर्वशः सर्वमत्रत्यवृत्तान्तमित्यर्थः ॥ २५ ॥ २६ ॥ आभाष्य आहूय । कृतशासनान् दत्तकल्याणसन्देशपत्रिकानित्यर्थः । नृपं दशरथम् ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥६७॥ अथ जानकीविवाहाय दशरथाह्वानमष्टषष्टितमे—जनकेनेत्यादि। त्रिरात्रमिति। तिस्रो रात्रयस्त्रिरात्रम्, सङ्ख्यादित्वात् राजानमिति । प्रश्रितैः विनयसहितैः ॥ २५ ॥ २६ ॥ कौशिक इति । कृतशासनान् दत्तविवाहसन्देशपत्रिकान् ॥ २७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां सप्तषष्टितमः सर्गः ॥ ६७ ॥ जनकेनेति । क्लान्ता वाहना येषां ते तथा ॥ १–३ ॥

---

१ पुरीम् । राज्ञो भवनमासाद्य द्वारस्थानिदमब्रुवन् । शीघ्रं निवेद्यतां राज्ञे दूतान्नो जनकस्य च । इत्युक्ता द्वारपालास्ते राघवाय न्यवेदयन् । इत्यधिकः पाठः ।

त्यन्तादृचसमासान्तः । अत्यन्तसंयोगे द्वितीया ॥ १ ॥ राजवचनात् जनकोऽस्मानिह प्रेषितवानिति स्वराजसङ्कीर्तनात् ॥ २ ॥ विगतसाध्वसाः दशरथसौजन्येन विज्ञापने निर्भयाः ॥ ३ ॥ मैथिल इत्यादि श्लोकद्वयमेकान्वयम् । मैथिलः मिथिलेश्वरः । पुरस्कृताग्निहोत्रसहितः साग्निहोत्रपुरस्कृतः । आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । पुरस्सरन्तीति पुरस्सरा भृत्याः, तत्सहितम् । एवम्भूतं त्वां कुशलं क्षेमम् अव्ययं अनपायं, योगमिति

ते राजवचनाद्दूता राजवेश्म प्रवेशिताः । ददृशुर्देवसङ्काशं वृद्धं दशरथं नृपम् ॥ २ ॥ बद्धाञ्जलिपुटाः सर्वे दूता विगतसाध्वसाः । राजानं प्रयता वाक्यमब्रुवन् मधुराक्षरम् ॥ ३ ॥ मैथिलो जनको राजा साग्निहोत्रपुरस्कृतम् । कुशलं चाव्ययं चैव सोपाध्यायपुरोहितम् ॥ ४ ॥ मुहुर्मुहुर्मधुरया स्नेहसंयुक्तया गिरा । जनकस्त्वां महाराजा पृच्छते सपुरःसरम् ॥ ५ ॥ पृष्ट्वा कुशलमव्यग्रं वैदेहो मिथिलाधिपः । कौशिकानुमते वाक्यं भवन्तमिद मब्रवीत् ॥ ६ ॥ पूर्वं प्रतिज्ञा विदिता वीर्यशुल्का ममात्मजा । राजानश्च कृतामर्षा निर्वीर्या विमुखीकृताः ॥ ७ ॥ सेयं मम सुता राजन् विश्वामित्रपुरस्सरैः । यदृच्छयागतैर्वीरैर्निर्जिता तव पुत्रकैः ॥ ८ ॥

यावत् । आपृच्छते मद्वचनादितिशेषः । “आङिनुपृच्छयोरुपसङ्ख्यानम्” इति आत्मनेपदम् । अत्र द्वितीयजनकशब्दो विप्रकृष्टजनकशब्दा विस्मरणार्थः ॥ ४ ॥ ५ ॥ कौशिकानुमते कौशिकानुमत्या ॥ ६ ॥ पूर्वमिति । वीर्यशुल्केति मम प्रतिज्ञा भवद्भिर्विदिता । राजानश्च निर्वीर्याः धनुरा रोपणासमर्थाः, विमुखीकृता इत्यपि विदितामित्यन्वयः ॥७॥ सेयमिति । सेयं उक्तरीत्या सर्वैः प्रार्थनीया । मम सुता त्वया सह सम्बन्धार्हस्य मे पुत्री ।

मैथिल इति । साग्निहोत्रपुरस्कृतं साग्निहोत्रं च तत्पुरस्कृतं चेति कर्मधारयः । सपुरस्सरं सपरिकरम् । अत्र वाक्ये द्वितीयजनकशब्दः विप्रकृष्टजनकशब्दाविस्मर णार्थः ॥ ४–६ ॥ पूर्वमिति । वीर्यशुल्केति मम प्रतिज्ञा भवद्भिर्विदिता, राजानश्च निर्वीर्याः धनुरारोपणासमर्थाः । विमुखीकृता इति यावत् । तदपि विदित मित्यर्थः ॥ ७ ॥ सेयमिति । यदृच्छया दैवादागतैः पुत्रकैः । काकपक्षधरैर्णैकेनैव तव पुत्रेण श्रीरामचन्द्रेणेत्यर्थः । मम सुता निर्जिता वीर्यशुल्केन स्ववशीकृता । निर्जिता तव पुत्रकैरित्यत्र कप्प्रत्ययस्याल्पार्थे विधानात् । निर्जेतुरेकत्वादेकवचनेन भाव्यम्, रघुवरेण सहागतत्वादुपचारेण लक्ष्मणस्यापि जेतृत्वे सति

विषम०—पुरस्क्रियन्त इति पुरस्कृता. [illegible]दयः, अग्निहोत्रपदेन तत्साधनऋत्विजः तैः सहित इत्यर्थः ॥ ४ ॥

स्वपुरे तदागमनप्रसक्तिं दर्शयति विश्वामित्रपुरस्सरैरिति ।  [illegible] । पुत्रैः पूजायां बहुवचनम् । जामातृत्वाध्यवसायात् महाराजकुमारत्वाद्वा पूजा । अल्पार्थेन कप्रत्ययेन बाल्यं द्योतितम् ॥ ८ ॥ कथं निर्जितेत्यत्राह–तच्चेति । तच्च ऐश्वरमपि । नेदमैन्द्रजालिकमित्याह महात्मनेति । नेयं पक्षपातोक्तिरित्याह महत्यामिति ॥ ९ ॥ प्रतिज्ञां प्रतिज्ञातं सीताप्रदानम् ॥ १० ॥ ११ ॥ प्रीतिं त्वद्दर्शनप्रीतिं सीताप्रदानप्रीतिं

तच्च राजन् धनुर्दिव्यं मध्ये भग्नं महात्मना । रामेण हि महाराज महत्यां जनसंसदि ॥ ९ ॥ अस्मै देया मया सीता वीर्यशुल्का महात्मने । प्रतिज्ञां कर्तुमिच्छामि तदनुज्ञातुमर्हसि ॥ १० ॥ सोपाध्यायो महाराज पुरोहितपुरस्सरः । शीघ्रमागच्छ भद्रं ते द्रष्टुमर्हसि राघवौ ॥ ११ ॥ प्रीतिं च मम राजेन्द्र निर्वर्तयितुमर्हसि । पुत्रयोरुभयोरेव प्रीतिं त्वमपि लप्स्यसे ॥ १२ ॥ एवं विदेहाधिपतिर्मधुरं वाक्यमब्रवीत् । विश्वामित्राभ्यनुज्ञातः शतानन्दमते स्थितः[1] ॥ १३ ॥ दूतवाक्यं तु तच्छ्रुत्वा राजा परमहर्षितः । वसिष्ठं वामदेवं च मन्त्रिणोऽन्यांश्च सोऽब्रवीत् ॥ १४ ॥ गुप्तः कुशिकपुत्रेण कौसल्यानन्दवर्द्धनः । लक्ष्मणेन सह भ्रात्रा विदेहेषु वसत्यसौ ॥ १५ ॥ दृष्टवीर्यस्तु काकुत्स्थो जनकेन महात्मना । संप्रदानं सुतायास्तु राघवे कर्त्तुमिच्छति ॥ १६ ॥

वा । पुत्रयोः पुत्री च पुत्रश्च तयोः । एकशेषः । प्रीतिं तद्विषयप्रीतिम्, तदुभयकल्याणदर्शनप्रीतिमितियावत् । मत्पुत्र्यां त्वत्पुत्रे चेत्यर्थः । यद्वा स्नुषा च पुत्रीत्येव गृह्यते । यद्वा लक्ष्मणायोर्मिलाप्रदानं सिद्धं कृत्वोच्यते उभयोरिति ॥ १२–१४ ॥ गुप्त इत्यादि । विदेहेषु विदेहानां निवासभूते देशे । "जनपदे लुप्" इतिलुप् । असाविति बुद्धिसन्निकर्षेणोच्यते ॥ १५ ॥ १६ ॥

द्विवचनेन भाव्यम्, प्रयुक्तं बहुवचनम् । एवं मन्यते प्रयोक्ता–सर्व लोकसन्ततसङ्घुष्यमाणसौभ्रात्रातिशयश्रवणवासनाप्रत्ययस्तामितभेदादेकेन कृतमपि सर्वैः कृतमिति संप्रदायः । यद्वा निर्जेतर्येकस्मिन् रामभद्रे बहुवचनप्रयोगस्तु इतरनृपतिदुरारोपशङ्करशरासनभङ्गाद्यमानुषतदीयपौरुषविशेषजनितबहुमानादिति द्रष्टव्यम् ॥ ८ ॥ तच्चेति । तच्च तदपि । पूर्वं दक्षाध्वरध्वंसनसमये । रुद्रेण येन साधनेन पुरन्दरपुरस्सरसुरनिकरपलायनं कृतं तदपीत्यर्थः ॥ ९ ॥ अस्मा इति । प्रतिज्ञां प्रतिज्ञातं सीताप्रदानं कर्तुमिच्छामि तदनुज्ञातुमनुमन्तुमर्हसि ॥ १० ॥ ११ ॥ प्रीतिमिति । प्रीतिं दर्शनजनितामितिशेषः । लप्स्यस एवेति सम्बन्धः ॥ १२–१४ ॥ गुप्त इति ।

[1] स्थितः । इत्युक्त्वा विरता दूता राजगौरवशङ्किताः । इत्याधिकः पाठः ।

 

यदि वो रोचत इति । यौनसम्बन्धयोग्यमिति शेषः । पर्ययः अतिक्रमः ॥ १७ ॥ मन्त्रिण इति । श्वो यात्रेत्यब्रवीदिति तदर्थमुद्युङ्ग्ध्वमितिभावः ॥१८॥ मन्त्रिणः जनकमन्त्रिणः । गुणैः सत्कारातिशयैः । तां रात्रिं तस्यां रात्र्यामित्यर्थः ॥ १९ ॥ इति श्रीगो० श्रीरा० म० बाल० अष्टषष्टितमः सर्गः ॥६८॥

यदि वो रोचते वृत्तं जनकस्य महात्मनः । पुरीं गच्छामहे शीघ्रं माभूत्कालस्य पर्ययः ॥ १७ ॥ मन्त्रिणो बाढमित्याहुः सह सर्वैर्महर्षिभिः । सुप्रीतश्चाब्रवीद्राजा श्वो यात्रेति स मन्त्रिणः ॥ १८ ॥ मन्त्रिणस्तां नरेन्द्रस्य रात्रिं परमसत्कृताः । ऊषुस्ते मुदिताः सर्वे गुणैः सर्वैस्समन्विताः ॥ १९ ॥ इत्यार्षे० बालकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

ततो रात्र्यां व्यतीतायां सोपाध्यायः सबान्धवः । राजा दशरथो हृष्टः सुमन्त्रमिदमब्रवीत् ॥ १ ॥ अद्य सर्वे धनाध्यक्षा धनमादाय पुष्कलम् । व्रजन्त्वग्रे सुविहिता नानारत्नसमन्विताः ॥ २ ॥ चतुरङ्गं बलं चापि शीघ्रं निर्यातु सर्वशः । ममाज्ञासमकालं च यानयुग्यमनुत्तमम् ॥ ३ ॥ वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः । मार्कण्डेयः सुदीर्घायुर्ऋषिः कात्यायनस्तथा ॥४॥ एते द्विजाः प्रयान्त्वग्रे स्यन्दनं योजयस्व मे । यथा कालात्ययो न स्याद्दूता हि त्वरयन्ति माम् ॥५॥ वचनात्तु नरेन्द्रस्य सा सेना चतुरङ्गिणी । राजानमृषिभिः सार्धं व्रजन्तं पृष्ठतोऽन्वगात् ॥६॥ गत्वा चतुरहं मार्गं विदेहानभ्युपेयिवान् । राजा तु जनकः श्रीमान् श्रुत्वा पूजामकल्पयत् ॥ ७ ॥

अथ दशरथस्य मिथिलागमनमेकोनसप्ततितमे–ततो रात्र्यामित्यादि ॥ १ ॥ धनाध्यक्षाः कोशरक्षाधिकृताः । पुष्कलं श्रेष्ठम् । "श्रेयान् श्रेष्ठः पुष्कलः स्यात्" इत्यमरः । सुविहिताः सुसम्पादितकल्याणोचितकर्माणः ॥ २ ॥ यानयुग्यमिति । यानं शिबिकान्दोलिकादि, युग्यं रथादि । सेनाङ्गत्वादेकवद्भावः ॥ ३ ॥ यथा कालात्ययः कालातिक्रमः न स्यात्तथा प्रयान्त्विति योजना ॥ ४–६ ॥ चतुरहं चतुर्ष्वहस्सु । श्रुत्वा दशरथमागतं श्रुत्वा । पूजाम्

विदेहेषु विदेहानां निवासदेशे जनपदे ॥ १५–१८ ॥ मन्त्रिण इति । गुणैर्मन्त्रिगुणैः । समन्विताः नरेन्द्रस्य जनकस्य मन्त्रिणः परमसत्कृताः सन्तः तां रात्रिं तस्यां रात्र्यामूषुरित्यर्थः ॥ १९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां अष्टषष्टितमः सर्गः ॥ ६८ ॥१॥ अद्येति । पुष्कलं श्रेष्ठम् । सुविहिताः सुरक्षिताः ॥ २ ॥ चतुरङ्गमिति । यानयुग्यं यानमान्दोलिकादि, युग्यं वाहनादि ॥ ३–६ ॥ गत्वेति । चतुरहं चतुरहस्सु ॥ ७ ॥

उपघाम् ॥ ७ ॥ राजानमासाद्य मुदितः विवाहः शीघ्रं भावीति हर्षं ययौ ॥ ८ ॥ वीर्यनिर्जितां पुत्रयोर्वीर्येण धनुर्भङ्गादिना सम्भूतामित्यर्थः ॥ ९ ॥ वसिष्ठस्य शतक्रतुसाम्यं पूर्णधर्मत्वेन ॥ १० ॥ विघ्नाः कन्याप्रदानप्रतिबन्धकाः । पूजितत्वे हेतुमाह–राघवैरिति । यत इत्युपस्कार्यम् ॥ ११ ॥ इक्ष्वाकुप्रथमवंश्यत्वेन नरेन्द्राणामिन्द्रत्वम् । यज्ञस्यान्त इति, त्रिचतुरदिनानन्तरभाविनीति शेषः । ऋषिसम्मतं ब्राह्मं विवाहमित्यर्थः ॥१२॥ महीपतिं जनकम्



ततो राजानमासाद्य वृद्धं दशरथं नृपम् । जनको मुदितो राजा हर्षं च परमं ययौ । उवाच च नरश्रेष्ठो नरश्रेष्ठं मुदान्वितः ॥८॥ स्वागतं ते महाराज दिष्ट्या प्राप्तोऽसि राघव । पुत्रयोरुभयोः प्रीतिं लप्स्यसे वीर्यनिर्जिताम् ॥९॥ दिष्ट्या प्राप्तो महातेजा वसिष्ठो भगवानृषिः । सह सर्वैर्द्विजश्रेष्ठैर्देवैरिव शतक्रतुः ॥ १० ॥ दिष्ट्या मे निर्जिता विघ्ना दिष्ट्या मे पूजितं कुलम् । राघवैः सह सम्बन्धाद्वीर्यश्रेष्ठैर्महात्मभिः ॥ ११ ॥ श्वः प्रभाते नरेन्द्रेन्द्र निर्वर्तयितुमर्हसि । यज्ञस्यान्ते नरश्रेष्ठ विवाहमृषिसम्मतम् ॥ १२ ॥ तस्य तद्वचनं श्रुत्वा ऋषिमध्ये नराधिपः । वाक्यं वाक्यविदां श्रेष्ठः प्रत्युवाच महीपतिम् ॥ १३ ॥ प्रतिग्रहो दातृवशः श्रुतमेतन्मया पुरा । यथा वक्ष्यसि धर्मज्ञ तत्करिष्यामहे वयम् ॥ १४ ॥ धर्मिष्ठं च यशस्यं च वचनं सत्यवादिनः । श्रुत्वा विदेहाधिपतिः परं विस्मयमागतः ॥ १५ ॥ ततः सर्वे मुनिगणाः परस्परसमागमे । हर्षेण महता युक्तास्तां निशामवसन् सुखम्[1] ॥ १६ ॥

॥ १३ ॥ प्रतिग्रह इति । कन्यागवादीनां प्रतिग्रहो दातृवश एव, यदा दाता ददाति तदा प्रतिगृह्यते प्रतिग्रहीत्रेति वस्तुस्थितिः । एतत् युष्मदीयं वीर्यशुल्ककन्याप्रदानमपि पूर्वमेव श्रुतम्, अतःपरं कन्याप्रदस्त्वं यथा वक्ष्यसि तथा वयं करिष्यामः ॥ १४ ॥ विस्मयमिति । प्रतिग्रहो दातृवश इत्यादिविनयोक्तेरितिभावः ॥ १५ ॥ परस्परसमागमे सम्भूते सतीति शेषः ॥ १६ ॥

तत इति । राजानमासाद्य मुदितो हर्षं ययौ । विवाहः शीघ्रंभावीति हेतोः ॥ ८ ॥ स्वागतमिति । वीर्यनिर्जितां शौर्यसम्पादिताम् ॥ ९ ॥ १० ॥ दिष्ट्येति । विघ्नाः श्रेयःप्रतिरोधकाः । निर्जिताः निर्गताः ॥ ११ ॥ श्व इति । निर्वर्तयितुं विवाहनिश्चयोपयोगिप्रसङ्गमिति शेषः । यज्ञस्यान्त इति । यज्ञस्य चतुर्दिनावशिष्ट

---

१ सुखम् । अथ रामो महातेजा लक्ष्मणेन समं ययौ । विश्वामित्रं पुरस्कृत्य पितुः पादावुपस्पृशन् ॥ इत्यधिकः पाठः ।

निशाम्य दृष्ट्वा । “ शमो दर्शने ” इति मित्वनिषेधान्न ह्रस्वः ॥ १७ ॥ जनकोऽपीति । यज्ञस्य क्रियाम् अवशिष्टक्रियाम् । सुताभ्यां पुत्र्योः । क्रियामङ्कुरार्पणादिकम् ॥१८॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनसप्ततितमःसर्गः ॥६९॥ अथ जनकेन सम्बन्धार्हत्वायेक्ष्वाकुसन्तानकीर्तनं सप्ततितमे—ततः प्रभात इत्यादि । कृतकर्मा समाप्तयज्ञादिक्रियः ॥ १ ॥ भ्रातेत्यादि । अत्रत्यविशेष

राजा च राघवौ पुत्रौ निशाम्य परिहर्षितः। उवास परमप्रीतो जनकेनाभिपूजितः॥१७॥जनकोऽपि महातेजाः क्रियां धर्मेण तत्त्ववित् । यज्ञस्य च सुताभ्यां च कृत्वा रात्रिमुवास ह॥१८॥ इत्यार्षे० बालकाण्डे एकोनसप्ततितमःसर्गः॥६९॥
ततः प्रभाते जनकः कृतकर्मा महर्षिभिः । उवाच वाक्यं वाक्यज्ञः शतानन्दं पुरोहितम् ॥ १ ॥ भ्राता मम महातेजा यवीयानतिधार्मिकः । कुशध्वज इति ख्यातः पुरीमध्यवसच्छुभाम् ॥ २ ॥ वार्याफलकपर्यन्तां पिबन्निक्षुमतीं नदीम् । साङ्काश्यां पुण्यसङ्काशां विमानमिव पुष्पकम् ॥ ३ ॥

णानां शतानन्दपरिज्ञातानामप्युपदेशः परम्परया दशरथादिश्रोत्रं प्रापयितुम् । वार्याफलकपर्यन्तां दुर्गसंरक्षणार्थं परिखारूपेणावस्थितायाम् इक्षुमत्यां वारिणि आकीर्णाः निखाताः फलकाश्शूलानि येषु ते वार्याफलकाः तादृशाः पर्यन्तप्रदेशा यस्यास्ताम् । वार्यामलकपर्यन्तामितिपाठे—वार्यामलकाः आमलकविशेषास्तत्पर्यन्ताम् । पुण्यसङ्काशां पुण्यतुल्यां, पुण्यवत्स्ववासिनां स्वतएवाभीष्टप्रदामित्यर्थः । पुष्पकं विमानमिव स्थितां साङ्काश्यां पुरीम् । इक्षुमतीं नदीं पिबन्, तज्जलं पिबन्नित्यर्थः । अध्यवसत् अधिवसति । “ उपान्वध्याङ्वसः ” इत्याधारस्य कर्मत्वम् ॥ २ ॥ ३ ॥

स्यान्ते ऋषिसम्मतं विवाहं निर्वर्तयितुमर्हसि ॥ १२–१६ ॥ राजा चेति । निशाम्य दृष्ट्वा ॥ १७ ॥ जनकोपीति । यज्ञस्यावशिष्टाः क्रियाः । सुताभ्यां दुहितृोः । अङ्कुरार्पणादि क्रियाः कृत्वा ॥ १८ ॥ इति श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां एकोनसप्ततितमस्सर्गः ॥ ६९ ॥ तत इति । कृतकर्मा ऋषिभिः कृतप्रातःसवनाद्यनुष्ठानः ॥ १ ॥ भ्रातेत्यादि । इक्षुमतीं नदीं पिबन् तज्जलं पिबन्नित्यर्थः । वार्याफलकपर्यन्तां दुर्गसंरक्षणार्थं परिघारूपेणावस्थितायास्तस्या नद्याः वारिणि आकीर्णाः निखाताः फलकाः शूलानि येषु ते वार्याफलकाः तादृशाः पर्यन्तदेशाः यस्यां ताम् । वार्यामलकपर्यन्तामिति क्वचित्पाठः । वार्या मलकाः आमलकविशेषाः पर्यन्तेषु यस्यास्तां तथोक्ताम् । पुण्यसङ्काशाम् पुण्यशब्देन तत्फलभूतः स्वर्गो लक्ष्यते, तत्सङ्काशां स्वर्गोपमामित्यर्थः । पुष्पकं

यज्ञगोप्ता साङ्काश्ये स्थित्वा यज्ञसामग्रीप्रेषणादिनेति भावः । इमां विवाहकल्याणजन्याम् । भोक्तेति लुट् ॥४॥ नरेन्द्रस्य शासनात् शतानन्दवचनद्वारका-दित्यर्थः । विष्णुम् उपेन्द्रम् ॥ ५ ॥६॥ अध्यरोहत पुरोहितराजानुज्ञयेत्यर्थः ॥७–९॥ औपकार्यं दशरथशिबिरनिवेशम् । उपकार्याशब्दात्स्वार्थे ष्यञ् ।

तमहं द्रष्टुमिच्छामि यज्ञगोप्ता स मे मतः । प्रीतिं सोऽपि महातेजा इमां भोक्ता मया सह ॥४॥ शासनात्तु नरेन्द्रस्य प्रययुः शीघ्रवाजिभिः । समानेतुं नरव्याघ्रं विष्णुमिन्द्राज्ञया यथा ॥ ५ ॥ आज्ञयाथ नरेन्द्रस्य आजगाम कुशध्वजः । स ददर्श महात्मानं जनकं धर्मवत्सलम् ॥ ६ ॥ सोऽभिवाद्य शतानन्दं राजानं चापि धार्मिकम् । राजार्हं परमं दिव्यमासनं चाध्यरोहत ॥ ७ ॥ उपविष्टावुभौ तौ तु भ्रातरावमिततेजसौ । प्रेषयामासतुर्वीरौ मन्त्रिश्रेष्ठं सुदामनम् ॥ ८ ॥ गच्छ मन्त्रिपते शीघ्रमैक्ष्वाकममितप्रभम् । आत्मजैः सह दुर्द्धर्षमानयस्व समन्त्रिणम् ॥ ९ ॥ औपकार्य्यं स गत्वा तु रघूणां कुलवर्द्धनम् । ददर्श शिरसा चैनमभिवाद्येदमब्रवीत् ॥ १० ॥ अयोध्याधिपते वीर वैदेहो मिथिलाधिपः । स त्वां द्रष्टुं व्यवसितः सोपाध्यायपुरोहितम् ॥ ११ ॥ मन्त्रिश्रेष्ठवचः श्रुत्वा राजा सर्षिगणस्तदा । सबन्धुरगमत्तत्र जनको यत्र वर्तते ॥ १२ ॥ स राजा मन्त्रिसहितः सोपाध्यायः सबान्धवः । वाक्यं वाक्यविदां श्रेष्ठो वैदेहमिदमब्रवीत् ॥ १३ ॥ विदितं ते महाराज इक्ष्वाकुकुलदैवतम् । वक्ता सर्वेषु कृत्येषु वसिष्ठो भगवानृषिः ॥ १४ ॥

॥१०–१३॥ विदितमिति । "मतिबुद्धि–" इत्यादिना वर्तमाने क्तः । "क्तस्य च वर्तमाने" इति षष्ठी । त्वया विदितमित्यर्थः । दैवतं परमगुरुरित्यर्थः ॥१४॥

पुष्पकाख्यम्, विमानमिव स्थितामिति भावः । साङ्काश्यां साङ्काश्याख्यां पुरीम् । अध्यवसत् अधिवसति ॥२॥३॥ तमहमिति । यतः स यज्ञगोप्ता मदीययागसंरक्षकत्वेन मतः, अतस्तं द्रष्टुमिच्छामीत्यर्थः । इमां प्रीतिं जानकीपरिणयजनिताम् । भोक्ता भोक्ष्यते ॥४॥ शासनादिति । शासनात्प्रययुः । दूता इति शेषः । विष्णुमुपेन्द्रम् ॥५॥६॥ सोऽभिवाद्येति । पूर्वं शतानन्दम् पश्चाद्राजानमभिवाद्य आसनं चाध्यारोहत ॥७–९॥ औपकार्यमिति । औपकार्यामुपकारिकाम् ॥ १०–१३ ॥ विदितमिति ।

---

१ सह । एवमुक्ते तु वचने शतानन्दस्य सन्निधौ । आगताः केचिदव्यग्रा जनकस्तान्समादिशत् ॥ २ यथा । सांकाश्यां ते समागत्य ददृशुश्च कुशध्वजम् । न्यवेदयन् यथावृत्तं जनकस्य च चिन्तितम् । तद्वृत्तं नृपतिः श्रुत्वा दूतश्रेष्ठैर्महाबलैः ॥ इत्यधिकः पाठः ।

मे वक्ष्यति, कुलमितिशेषः। विश्वामित्रस्य कोपपरिहाराय विश्वामित्राभ्यनुज्ञात इत्युक्तम्। "दशपुरुषविख्यातात्" इति शास्त्रेण यौनसम्बन्धापेक्षितां वंश शुद्धिं वक्ष्यतीत्यर्थः॥१५॥१६॥ अव्यक्तं प्रत्यक्षाद्यगोचरं वस्तु प्रभवः कारणं यस्य सोऽव्यक्तप्रभवः। अव्यक्तं किं नाम, वक्ष्यत्ययोध्याकाण्डे–"आकाश प्रभवो ब्रह्मा" इति। अथ कोऽयमाकाशोऽपि, तमपि वक्ष्यत्युत्तरकाण्डे–"संक्षिप्य हि पुरा लोकान् मायया स्वयमेव हि। महार्णवे शयानोऽप्सु मां त्वं

विश्वामित्राभ्यनुज्ञातः सह सर्वैर्महर्षिभिः। एष वक्ष्यति धर्मात्मा वसिष्ठो मे यथाक्रमम्[1] ॥ १५ ॥ तूष्णीम्भूते दशरथे वसिष्ठो भगवानृषिः। उवाच वाक्यं वाक्यज्ञो वैदेहं सपुरोधसम् ॥ १६ ॥ अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः। तस्मान्मरीचिः संजज्ञे मरीचेः काश्यपः सुतः ॥ १७ ॥ विवस्वान् काश्यपाज्जज्ञे मनुर्वैवस्वतः स्मृतः। मनुः प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ॥ १८ ॥ तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम्। इक्ष्वाकोस्तु सुतः श्रीमान् कुक्षिरित्येव विश्रुतः ॥ १९ ॥ कुक्षेरथात्मजः श्रीमान् विकुक्षिरुदपद्यत। विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान् ॥ २० ॥ बाणस्य तु महातेजा अनरण्यः प्रतापवान्। अनरण्यात्पृथुर्जज्ञे त्रिशङ्कुस्तु पृथोः सुतः ॥ २१ ॥ त्रिशङ्कोरभवत् पुत्रो धुन्धुमारो महायशाः[2]। यौवनाश्वसुतस्त्वासीन्मान्धाता पृथिवीपतिः ॥ २२ ॥

पूर्वमजीजनः। पद्मे दिव्येऽर्कसङ्काशे नाभ्यामुत्पाद्य मामपि। प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम्॥" इत्यादिना। शाश्वतः बहुकालस्थायी। नित्यः द्विपरार्द्धकालं विनाशरहितः। अव्ययः प्रवाहरूपेण प्रतिकल्पमवस्थायी। अस्तीतिशेषः ॥ १७ ॥ वैवस्वतः विवस्वत्पुत्रः प्रजापतिः राजा, आसीदितिशेषः १८–२१ ॥ धुन्धुमारः युवनाश्वापरनामधेयः ॥ २२ ॥ २३ ॥

रामानुजीयम्—धुन्धुमार इत्यादि। धुन्धुमार एव युवनाश्वः, तस्यैवं नामान्तरम् ॥ २२ ॥

भगवान् वसिष्ठः सर्वेषु कृत्येषु। वक्तेति। इक्ष्वाकुकुलस्य दैवतं परमगुरुरिति च विदितं प्रसिद्धम् ॥ १४ ॥ विश्वामित्रेति। यथाक्रमं कुलमिति शेषः ॥ १५ ॥ १६ ॥ अव्यक्तेति। अव्यक्तप्रभवः–अव्यक्तः प्रत्यक्षप्रमाणाद्यगोचरो विष्णुः प्रभवः कारणं यस्य स तथोक्तः ॥ १७ ॥ विवस्वानिति। विवस्वतः पुत्रः मनुरिति



१ यथाक्रमम्। एवमुक्त्वा नरश्रेष्ठो राज्ञां मध्ये महात्मनाम्। २ महायशाः। धुन्धुमारान्महातेजा युवनाश्वो महारथः। इत्यधिकः पाठः।

मध्ये असितवृत्तान्तकथनं सगरवैभवातिशयप्रकटनाय ॥ २४ ॥ प्रतिराजानः प्रतिपक्षाः । शत्रवः शातयितारः । प्रतिराजानेव तान् विशेषयति हैहया इत्यादि ॥२५॥ प्रतियुद्ध्यन् अभिमुखतया युद्धं कुर्वन् । प्रवासितः राज्याद्भ्रंशितः ॥२६॥ भृगुप्रस्रवणे भृगुमहामुनिसान्निध्यवन्निर्झरोपान्तप्रदेशे । इदमेव

मान्धातुस्तु सुतः श्रीमान् सुसन्धिरुदपद्यत । सुसन्धेरपि पुत्रौ द्वौ ध्रुवसन्धिः प्रसेनजित् ॥२३॥ यशस्वी ध्रुवसन्धेस्तु भरतो नाम नामतः । भरतात्तु महातेजा असितो नाम जातवान् ॥२४॥ यस्यैते प्रतिराजान उदपद्यन्त शत्रवः । हैहयास्तालजङ्घाश्च शूराश्च शशिबिन्दवः ॥ २५ ॥ तांस्तु स प्रतियुद्ध्यन् वै युद्धे राजा प्रवासितः ॥ २६ ॥ हिमवन्तमुपागम्य भृगुप्रस्रवणेऽवसत् । असितोऽल्पबलो राजा मन्त्रिभिः सहितस्तदा ॥ २७ ॥ द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति श्रुतम् । एका गर्भविनाशाय सपत्न्यै सगरं ददौ ॥२८॥ ततः शैलवरं रम्यं बभूवाभिरतो मुनिः । भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः ॥ २९ ॥ तत्रैका तु महाभागा भार्गवं देववर्चसम् । ववन्दे पद्मपत्राक्षी कांक्षन्ती सुतमात्मनः ॥ ३० ॥ तमृषिं साभ्युपागम्य कालिन्दी चाभ्यवादयत् ॥ ३१ ॥ स तामभ्यवदद्विप्रः पुत्रेप्सुं पुत्रजन्मनि ॥ ३२ ॥ तव कुक्षौ महाभागे सुपुत्रः सुमहाबलः । महावीर्यो महातेजा अचिरात् सञ्जनिष्यति । गरेण सहितः श्रीमान् मा शुचः कमलेक्षणे ॥ ३३ ॥

पूर्वं भृगुतुन्द इत्युक्तम् ॥२७॥ सगरं गरं विषं तत्सहितं भक्ष्यमित्यर्थः ॥२८॥ तत इति । अभिरतः प्रीतः सन् हिमवन्तमुपाश्रितोऽभूत् स्वदेशवासाभिमानेन प्रीतः सन् तद्वरप्रदानाय सन्निहितोऽभूदित्यर्थः ॥ २९ ॥ ३० ॥ कालिन्दीति सगरमुपयुक्तवत्या नाम । उपागम्य शरणं गत्वा । अभ्यवादयत् शुश्रूषते स्म ॥ ३१ ॥ सः पुत्रेप्सुम् अप्रतिबन्धपुत्रेप्सुम् । पुत्रजन्मनि पुत्रोत्पत्तिविषये ॥ ३२ ॥ गरेण सपत्नीप्रयुक्तेन । मा शुचः गरप्रयोगनिमित्तं शोकं स्मृतः ॥ १८-२४ ॥ यस्यैत इति । यस्य प्रतिराजानः प्रतिपक्षभूता राजानः । हैहयादयः सोमवंश्याः । शत्रवः हिंसकाः । उदपद्यन्त अजायन्त ॥२५॥ तानिति । प्रतियुद्ध्यन् प्रतिपक्षतया युद्ध्यन् । प्रवासितः निष्कासितः राज्याद्भ्रंशितः ॥ २६ ॥ २७ ॥ द्वे इति । सगरं गरसहितं भक्ष्यं ददौ ॥ २८ ॥ तत इति । अभिरतः सन् हिमवन्तमुपाश्रितोऽभूदिति सम्बन्धः ॥२९॥३०॥ तमृषिमिति । कालिन्दी कालिन्द्याख्या ऋषिमुपागम्य शरणं गत्वा अभ्यवादयत् शुश्रूषते स्म ॥३१॥ स तामिति । पुत्रजन्मनि पुत्रजन्मविषये ॥ ३२ ॥ तवेति । गरेण सपत्नीप्रयुक्तेन गरेण तस्य विपत्तिर्न भवतीति गम्यते, जातः स वंशकरो भविष्यति अतः मा शुचः ॥ ३३ ॥

मा कुर्वित्यर्थः ॥ ३३॥ पतिशोकेति । अनेन तदनन्तरमेव देवात् पतिमृत इति गम्यते । तस्मात् च्यवनानुग्रहात् ॥ ३४ ॥ सपत्न्येति । अत्र य इत्यनु सन्धेयम् । जात इत्यनन्तरं तेनेत्यनुसन्धेयम् ॥ ३५ ॥ ३६ ॥ प्रवृद्ध इति । पूर्वं प्रवृद्धाख्यः ततो वसिष्ठशापात् पुरुषादकः राक्षसभूतः, ततः वसिष्ठं

च्यवनं तु नमस्कृत्य राजपुत्री पतिव्रता । पतिशोकातुरा तस्मात् पुत्रं देवी व्यजायत॥३४॥ सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया । सह तेन गरेणैव जातः स सगरोऽभवत् ॥३५ ॥ सगरस्यासमञ्जस्तु असमञ्जात्तथांशुमान् । दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः ॥ ३६ ॥ भगीरथात्ककुत्स्थश्च ककुत्स्थस्य रघुस्सुतः ॥ ३७ ॥ रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः । कल्माषपादो ह्यभवत्तस्माज्जातश्च शङ्खणः ॥३८॥ सुदर्शनः शङ्खणस्य अग्निवर्णः सुदर्शनात् । शीघ्रगस्त्वग्निवर्णस्य शीघ्रगस्य मरुः सुतः । मरोः प्रशुश्रुकस्त्वासीदम्बरीषः प्रशुश्रुकात् ॥३९॥ अम्बरीषस्य पुत्रोऽभून्नहुषः पृथिवीपतिः । नहुषस्य ययातिश्च नाभागस्तु ययातिजः ॥४०॥ नाभागस्य बभूवाज अजाद्दशरथोऽभवत् । अस्माद्दशरथाज्जातौ भ्रातरौ रामलक्ष्मणौ ॥ ४१ ॥ आदिवंशविशुद्धानां राज्ञां परमधर्मिणाम् । इक्ष्वाकुकुलजातानां वीराणां सत्यवादिनाम् ॥ ४२ ॥ रामलक्ष्मणयोरर्थे त्वत्सुते वरये नृप । सदृशाभ्यां नरश्रेष्ठ सदृशे दातुमर्हसि ॥ ४३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

प्रतिशापायोद्धृतजलस्य स्वभार्यानुनयात् स्वपदप्रक्षेपेण कल्माषपादाख्यः ॥ ३७–३९ ॥ नहुषययाती चन्द्रवंश्याभ्यामन्यौ । अत्र पुराणे क्रमवैषम्यं कल्पभेदादिति ज्ञेयम् ॥४०॥४१॥ आदिवंशविशुद्धानाम्, आदित आरभ्य वंशेन विशुद्धानाम् । राज्ञामिति सम्बन्धे षष्ठी ॥४२॥ वरय इति । वरणस्य पुरोहितकृत्यत्वादिति भावः । सदृशे इति ङीबभाव आर्षः ॥ ४३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे० बालकाण्डे सप्ततितमः सर्गः ॥७०॥

च्यवनमिति । तस्मात् च्यवनप्रसादात् ॥३४–३७॥ रघोरिति । प्रवृद्धः प्रवृद्धाख्यः पुरुषादकः राक्षसः वसिष्ठशापादिति भावः । ततः वसिष्ठस्य प्रतिशापप्रदानार्थमुद्धृतस्य जलस्य स्वपत्न्या मदयन्त्या अनुनयेन स्वपादयोरेव विसर्जनात् कल्माषपादश्चाभूदिति भावः ॥ ३८–४१ ॥ आदीति । आदिवंशविशुद्धानाम् आदित आरभ्य विशुद्धवंशानां वीराणां सत्यवादिनामिति सम्बन्धे षष्ठी ॥ ४२ ॥ ४३ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणबालकाण्डव्याख्यायां सप्ततितमः सर्गः ॥ ७० ॥

एवं वसिष्ठेन वरवंशकीर्तनपूर्वकं वधूवरणे कृते जनकः स्ववंशविशुद्धताज्ञापनपूर्वकं कन्याप्रदानं प्रतिजानीते एकसप्ततितमे—एवं ब्रुवाणमित्यादि॥ १॥२॥

एवं ब्रुवाणं जनकः प्रत्युवाच कृताञ्जलिः। श्रोतुमर्हसि भद्रं ते कुलं नः परिकीर्तितम् ॥ १ ॥ प्रदाने हि मुनिश्रेष्ठ कुलं निरवशेषतः। वक्तव्यं कुलजातेन तन्निबोध महामुने ॥२॥ राजाभूत् त्रिषु लोकेषु विश्रुतः स्वेन कर्मणा। निमिः परमधर्मात्मा सर्वसत्त्ववतां वरः ॥३॥ तस्य पुत्रो मिथिर्नाम मिथिला येन निर्मिता। प्रथमो जनको नाम जनकादप्युदावसुः ॥ ४ ॥ उदावसोस्तु धर्मात्मा जातो वै नन्दिवर्द्धनः। नन्दिवर्द्धनपुत्रस्तु सुकेतुर्नाम नामतः ॥ ५ ॥ सुकेतोरपि धर्मात्मा देवरातो महाबलः। देवरातस्य राजर्षेर्बृहद्रथ इति स्मृतः ॥ ६ ॥ बृहद्रथस्य शूरोऽभून्महावीरः प्रतापवान्। महावीरस्य धृतिमान् सुधृतिः सत्यविक्रमः ॥ ७ ॥ सुधृतेरपि धर्मात्मा दृष्टकेतुः सुधार्मिकः। दृष्टकेतोस्तु राजर्षेर्हर्यश्व इति विश्रुतः ॥८॥ हर्यश्वस्य मरुः पुत्रो मरोः पुत्रः प्रतिन्धकः। प्रतिन्धकस्य धर्मात्मा राजा कीर्तिरथः सुतः ॥ ९ ॥ पुत्रः कीर्तिरथस्यापि देवमीढ इति स्मृतः। देवमीढस्य विबुधो विबुधस्य महीध्रकः ॥ १० ॥ महीध्रकसुतो राजा कीर्तिरातो महाबलः। कीर्तिरातस्य राजर्षेर्महारोमा व्यजायत ॥ ११ ॥ महारोम्णस्तु धर्मात्मा स्वर्णरोमा व्यजायत। स्वर्णरोम्णस्तु राजर्षेर्ह्रस्वरोमा व्यजायत ॥ १२ ॥ तस्य पुत्रद्वयं जज्ञे धर्मज्ञस्य महात्मनः। ज्येष्ठोऽहमनुजो भ्राता मम वीरः कुशध्वजः ॥ १३ ॥

सत्त्ववतां बलवताम् ॥३॥ प्रथम इति। मिथिमारभ्यास्माकं जनकसंज्ञेतिभावः ॥ ४-६ ॥ सुधृतिरित्यन्वर्थसंज्ञाज्ञापनार्थं विशेषणद्वयम् ॥ ७-१३ ॥

एवमिति ॥ १ ॥ प्रदान इति। कुलजातेन सत्कुलप्रसूतेन। प्रदाने कन्याप्रदाने विषये कुलं वक्तव्यम् ॥ २ ॥ ३ ॥ तस्येति । प्रथमो जनकः, तत आरभ्य जनकशब्दवाच्याः ॥ ४-१३ ॥

भारं भरणीयं, पोषणीयमिति यावत् ॥ १४ ॥ धुरं राज्यभारम् ॥ १५ ॥ [illegible] कस्मिंश्चित्काले गते । अवरोधकः अवरोद्धुमित्यर्थः । " तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् " इति ण्वुल् ॥ १६ ॥ १७ ॥ तस्य सुधन्वनः । अप्रदानात् सीताधनुषोरप्रदानात् ॥ १८॥१९॥ ते

मां तु ज्येष्ठं पिता राज्ये सोऽभिषिच्य नराधिपः । कुशध्वजं समावेश्य भारं मयि वनं गतः ॥ १४॥ वृद्धे पितरि स्वर्याते धर्मेण धुरमावहम् । भ्रातरं देवसङ्काशं स्नेहात्पश्यन् कुशध्वजम् ॥ १५॥ कस्य चित्त्वथ कालस्य साङ्काश्यादगमत् पुरात् । सुधन्वा वीर्यवान् राजा मिथिलामवरोधकः ॥ १६॥ स च मे प्रेषयामास शैवं धनुरनुत्तमम् । सीता कन्या च पद्माक्षी मह्यं वै दीयतामिति ॥ १७॥ तस्याऽप्रदानाद्ब्रह्मर्षे युद्धमासीन्मया सह । स हतोऽभिमुखो राजा सुधन्वा तु मया रणे ॥ १८ ॥ निहत्य तं मुनिश्रेष्ठ सुधन्वानं नराधिपम् । साङ्काश्ये भ्रातरं वीरमभ्यषिञ्चं कुशध्वजम् ॥ १९॥ कनीयानेष मे भ्राता अहं ज्येष्ठो महामुने । ददामि परमप्रीतो वध्वौ ते मुनिपुङ्गव ॥ २० ॥ सीतां रामाय भद्रं ते ऊर्मिलां लक्ष्मणाय च ॥ २१ ॥ वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम् । द्वितीयामूर्मिलां चैव त्रिर्ददामि न संशयः ॥ २२ ॥ रामलक्ष्मणयो राजन् गोदानं कारयस्व ह । पितृकार्यं च भद्रं ते ततो वैवाहिकं कुरु ॥ २३ ॥

वध्वौ ददामि स्नुषात्वेन ददामि । वसिष्ठेन वरणात्ते ददामीत्युक्तम् ॥ २० ॥ वध्वावित्युक्तं व्यवस्थया दर्शयति—सीतामित्यर्द्धेन ॥ २१ ॥ उक्तमर्थं सनिमित्तमुपपादयति—वीर्येति । वीर्यशुल्कामित्येतदूर्मिलाया अपि विशेषणम् । यद्यपि रामेणैव धनुर्भङ्गः कृतः तथापि तादृशशक्तेर्लक्ष्मणेऽपि दर्शनात्तद्वीर्यमेव ऊर्मिलाया अपि शुल्कमित्यर्थः । ऊर्मिला जनकस्यौरसपुत्री । त्रिः त्रिवारं त्रिभिः करणैर्वा ॥ २२ ॥ गोदानं नाम, विवाहपूर्वसमयनियतं मां त्विति । कुशध्वजं भारं भरणीयमिति यावत् । यद्वा कुशध्वजं भारं राज्यभारं च मयि समावेश्य स्थापयित्वा वनं गत इत्यन्वयः ॥ १४ ॥ वृद्ध इति । धुरं राज्यभारम् ॥ १५ ॥ कस्येति । तस्याप्रदानात् तस्य उभयस्य अप्रदानात् । साङ्काश्यमिति सुधन्वनगरनाम । अवरोधकोऽगमत् अवरोद्धुमागतवानित्यर्थः ॥ १६–२१ ॥ वीर्यशुल्कामिति । त्रिर्ददामि त्रिभिः करणैर्ददामीत्यर्थः ॥ २२ ॥ रामेति । गोदानं विवाहाङ्गभूतम् । वैवाहिकं विवाहकाले कर्तव्यम् । पितृकार्यं



१ संशयः । ददामि परमप्रीतो वध्वौ ते रघुनन्दन । इत्यधिकः पाठः ।

किञ्चित्कर्म । गावः केशाः दोःपादमूलरोमाणि च यत्र लभ्यन्ते तदेतद्गोदानं नाम समावर्तनाख्यं कर्मेत्याहुः । वैवाहिकं पितृकार्यं नान्दीश्राद्धम् ॥२३॥ तृतीये भाविनि फल्गुन्यां फल्गुन्याख्यके । उत्तरे उत्तरनक्षत्रे । वैवाहिकं विवाहप्रयोजनम् । " तदस्य प्रयोजनम् " इति ठक् । दानं गोभूतिलहिरण्यादिदानम् । सुखोदयं सुखोदर्कम्, वधूवरयोरतिशयावहमित्यर्थः । कार्यमिति सामान्योक्त्या यद्यपि कन्यार्थं क्रियत इति सूचितम् । कन्यादाने उत्तर

मघा ह्यद्य महाबाहो तृतीये दिवसे विभो । फल्गुन्यामुत्तरे राजंस्तस्मिन् वैवाहिकं कुरु । रामलक्ष्मणयो राजन् दानं कार्यं सुखोदयम् ॥२४॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकसप्ततितमः सर्गः ॥७१॥

तमुक्तवन्तं वैदेहं विश्वामित्रो महामुनिः । उवाच वचनं वीरं वसिष्ठसहितो नृपम् ॥ १ ॥ अचिन्त्यान्यप्रमेयानि कुलानि नरपुङ्गव । इक्ष्वाकूणां विदेहानां नैषां तुल्योऽस्ति कश्चन ॥ २ ॥ सदृशो धर्मसम्बन्धः सदृशो रूपसम्पदा । रामलक्ष्मणयो राजन् सीता चोर्मिलया सह ॥ ३ ॥

फल्गुन्याः प्रशस्तत्वमुक्तं ज्यौतिषे—" त्रीण्युत्तराण्यपि तथार्कमघानुराधामूलान्त्यसोमकमलोद्भवभान्युडूनि " इति ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जी० बाल० एकसप्ततितमः सर्गः ॥ ७१ ॥ अथ विश्वामित्रेण भरतशत्रुघ्नार्थं कुशध्वजसुतावरणं गोदानकरणं च द्विसप्ततितमे—तमुक्तवन्तमित्यादि । नृपं जनकम् ॥ १ ॥ अचिन्त्यानीत्यादि । अचिन्त्यानि आश्चर्यभूतानि । अप्रमेयानि अपरिच्छेद्यमहिमानि । एषाम् इक्ष्वाकुविदेहानाम् । तुल्यः कश्चन नास्ति यतः अतःकारणादचिन्त्यत्वमप्रमेयत्वं चेति भावः ॥२॥ सदृश इति । सीता ऊर्मिलया सह रामलक्ष्मणयो दीयते इति यत् । अयं धर्मसम्बन्धः धर्मेण सम्बन्धः, यौनसम्बन्ध इतियावत् । सदृशः रूपसम्पदा च सदृशः । यद्वा अयं करिष्यमाणो धर्म

नान्दीमुखम् ॥ २३ ॥ मघेति । अद्य मघानक्षत्रम् आगामिनि तृतीये दिवसे । उत्तरे उत्तरफल्गुन्याख्ये नक्षत्रे । वैवाहिकं विवाहकर्म कुरु । सुखोदयं सुखोदर्कम् ॥२४॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां एकसप्ततितमः सर्गः ॥ ७१ ॥ तमिति । वीरं जनकम् ॥ १ ॥ एषां तुल्यः परस्परव्यतिरेकेणापरो नास्ति ॥२॥ सदृश इति । सीता च ऊर्मिलया सह रामलक्ष्मणयोर्दीयेत इति यत् । अयं धर्मसम्बन्धः सदृशः रूपसम्पदा च सदृशः ॥३॥

तिलकं—यद्यप्युत्तराफाल्गुनी सीताया जन्मर्क्षम् तथापि तदृक्षे प्रथमचरणं विहाय तज्जन्मकालत्वेन तस्याः कन्याराशित्वात् तृतीयैकादशरूपभकूटशुद्धेस्तस्य न दोषः । भकूटशुद्धौ तन्न दुष्टमिति ज्योतिःशास्त्रे प्रसिद्धम् । किञ्च एकनाडीदोषेण च सीतारामयोर्वियोग इति ध्येयम् । फल्गुन्यां पूर्वफल्गुनीनक्षत्रे उत्तरे श्रेष्ठे इति व्याख्याने सीतायाः द्वादशश्चन्द्रो भवति, तत्र विवाहोऽनुचित एव ॥ २४ ॥

सम्बन्धः सदृशः उभयकुलसदृशः रूपसम्पदा च सदृशः तुल्यरूपयोर्विवाह इत्यर्थः । अत्र हेतुमाह रामेति । सीता ऊर्मिलया सह रामलक्ष्मणयोः यतः सदृशीत्यनुषङ्गः । यद्वा सीता ऊर्मिलया सह रामलक्ष्मणयोः चकाराद्रामलक्ष्मणौ च सीतोर्मिलयोः रूपसम्पदा सदृशः । शकारान्ते बहुवचनम् । अतः सदृशो धर्मसम्बन्ध इत्यर्थः ॥ ३ ॥ वक्तव्यश्चेति । अन्यद्वक्तव्यं किञ्चिदस्ति तदपि श्रूयतामित्यर्थः ॥ ४ ॥ ५ ॥ पत्न्यर्थमित्युक्तं

वक्तव्यं च नरश्रेष्ठ श्रूयतां वचनं मम ॥४॥ भ्राता यवीयान् धर्मज्ञ एष राजा कुशध्वजः । अस्य धर्मात्मनो राजन् रूपेणाप्रतिमं भुवि । सुताद्वयं नरश्रेष्ठ पत्न्यर्थं वरयामहे ॥५॥ भरतस्य कुमारस्य शत्रुघ्नस्य च धीमतः । वरयामस्सुते राजंस्तयोरर्थे महात्मनोः ॥६॥ पुत्रा दशरथस्येमे रूपयौवनशालिनः । लोकपालोपमाः सर्वे देवतुल्यपराक्रमाः ॥७॥ उभयोरपि राजेन्द्र सम्बन्धेनानुबध्यताम् । इक्ष्वाकोः कुलमव्यग्रं भवतः पुण्यकर्मणः ॥ ८ ॥ विश्वामित्रवचः श्रुत्वा वसिष्ठस्य मते तदा । जनकः प्राञ्जलिर्वाक्यमुवाच मुनिपुङ्गवौ ॥ ९ ॥ कुलं धन्यमिदं मन्ये येषां नो मुनिपुङ्गवौ । सदृशं कुलसम्बन्धं यदाज्ञापयथस्स्वयम् ॥१०॥ एवं भवतु भद्रं वः कुशध्वजसुते इमे । पत्न्यौ भजेतां सहितौ शत्रुघ्नभरतावुभौ ॥११॥ एकाह्ना राजपुत्रीणां चतसृणां महामुने । पाणीन् गृह्णन्तु चत्वारो राजपुत्रा महाबलाः ॥१२॥

कयोरित्याकांक्षायां तदुपपादयन्नाह–भरतस्येति । भरतस्य शत्रुघ्नस्य च तयोरुभयोरर्थ इत्यन्वयः ॥ ६ ॥ ७ ॥ उभयोरिति । उभयोर्युवयोः सम्बन्धेन कुलद्वयमप्यनुबध्यतामित्यर्थः । भवतः कुलमित्यनुकर्षः । अव्यग्रं निर्दोषम् । अन्योन्यसम्बन्धेनान्योन्यमुत्कर्षं प्राप्नुयादित्यर्थः ॥ ८॥ वसिष्ठस्य मते वसिष्ठानुमत इत्यर्थः ॥ ९ ॥ कुलमिति । यद्यस्मात् । मुनिपुङ्गवौ युवां येषां नः कुलसम्बन्धम् इक्ष्वाकुवंशेन यौनसम्बन्धम् । स्वयं शिष्यमुखं विना आज्ञापयथः, तस्मात्तेषां नः इदं कुलं धन्यं भाग्यशालीति मन्ये ॥१०॥ पत्न्यौ भजेतां पत्नीत्वेन भजेताम् । सहितौ सदा सहचरौ ॥११॥ एकाह्नेति ।



वक्तव्यमिति । किञ्चिदन्यद्वक्तव्यमस्ति तच्छ्रूयताम् ॥ ४-६ ॥ दशरथपुत्रेषु न कस्मिन्नपि वरगुणन्यूनतेत्याह–पुत्रा इति ॥ ७ ॥ उभयोरिति । पुण्यकर्मणो भवतः कुलम्, अव्यग्रम् इक्ष्वाकुकुलं च । उभयोः सम्बन्धेन कुलद्वयमनुबध्यताम् ॥ ८-१२ ॥

एकाह्नत्यजभाव आर्षः । सप्तम्यर्थे तृतीया । चतसृणामिति "छन्दस्युभयथा" इति पक्षे दीर्घः ॥ १२ ॥ उत्तरे फल्गुनीभ्यामुपलक्षितयोर्दिवसयोरुत्तरस्मिन् दिवसे, उत्तरफल्गुन्यामित्यर्थः । यद्वा फल्गुनीभ्यामिति सप्तम्यर्थे चतुर्थी । फल्गुन्यामुत्तरे फल्गुन्याख्ये उतरनक्षत्र इत्यर्थः । प्रशस्ततायां हेतुः भग इति । भगः प्रजापतिः । प्रजोत्पत्तिस्थानयोनिलिङ्गाधिष्ठाता देवता । ननु—" एकस्मिंस्तु गृहे कुर्यादेकामेव शुभक्रियाम् ।

उत्तरे दिवसे ब्रह्मन् फल्गुनीभ्यां मनीषिणः । वैवाहिकं प्रशंसन्ति भगो यत्र प्रजापतिः ॥ १३ ॥
एवमुक्त्वा वचः सौम्यं प्रत्युत्थाय कृताञ्जलिः । उभौ मुनिवरौ राजा जनको वाक्यमब्रवीत् ॥ १४ ॥
परो धर्मः कृतो मह्यं शिष्योऽस्मि भवतोः सदा ॥ १५ ॥ इमान्यासनमुख्यानि आसातां मुनिपुङ्गवौ ।
यथा दशरथस्येयं तथायोध्या पुरी मम । प्रभुत्वे नास्ति सन्देहो यथार्हं कर्तुमर्हथ ॥ १६ ॥

अनेकां यस्तु कुरुते स नाशमधिगच्छति ॥" इति ज्योतिःशास्त्रे एकगृहे अनेकोत्सवनिषेधो दृश्यत इतिचेत्, मतान्तरे एकगृहे भ्रातॄणामेकदोत्सवस्य विहितत्वात् । उक्तं हि दैवज्ञविलासे—" भिन्नोदरोदयवतामुद्वाहे कल्पयेत् पृथग्वेदिम् । एकगृहे जगुरार्या मण्डपमेकं पराशरेणोक्तम् ॥" इति । नन्वेवमपि लक्ष्मणशत्रुघ्नयोः कथमेकदा विवाहः ? " एकमातृप्रसूतानामेकस्मिन्नेव वत्सरे । विवाहं मौञ्जिबन्धं च चूडाकर्म न कारयेत् ॥" इति निषेधादिति चेत्; सत्यम् । एकस्मिन् दिने तु कर्तव्य एव । उक्तं हि दैवज्ञविलासे—" भ्रातृद्वये स्वसृयुगे भ्रातृस्वसृयुगे तथा । समानाश्च क्रियाः कुर्युर्मातृभेदे तथैव च । एकस्मिन् दिवसे त्वेकलग्ने भिन्नांशके तयोः । एकगर्भोदयवतोर्विवाहः शुभकृद्भवेत् ॥ " इति एकोदरयोरप्येकगृहे विवाहकरणवचनं द्रष्टव्यम् ॥ १३ ॥ प्रत्युत्थाय आदरातिशयेनेति भावः ॥ १४ ॥ परो धर्मः कन्याप्रदानरूपः ॥ १५ ॥ इमानीति सार्द्धश्लोक एकान्वयः । मद्भ्रातुर्मम दशरथस्य च यान्यासनमुख्यानि सिंहासनानि तानि युवामासाताम् । पुरुषव्यत्यय आर्षः । विनयाय प्रथमपुरुषो वा । राज्यत्रयमपि युष्मदीयमित्यर्थः । ननु दशरथ

उत्तरे इति । फल्गुनीभ्यां फल्गुन्योः वैवाहिकं प्रशंसन्ति प्रशस्तमिति वदन्ति । यत्र फल्गुनीनक्षत्रे । भगः प्रजापतिर्देवता ॥ १३ ॥ एवमुक्त्वेति । एवमुक्त्वा प्रत्युत्थाय आसनादुत्थाय वाक्यमब्रवीत् ॥ १४ ॥ १५ ॥ इमानीत्यादि । आसनशब्देन दशरथजनककुशध्वजानां राज्यानि लक्ष्यन्ते । भवन्तौ आसनानि आसातां परिपालयेताम् । राज्यत्रयमपि भवदधीनमित्यर्थः । दशरथराज्यं त्वया कथं नियुज्यम् ? इत्यत्राह—यथेति । इयं मिथिला यथा दशरथस्य तथा मम अयोध्या । यथार्हं कर्तुं

 

सिंहासनं कथं त्वया शक्यं दातुम् ? तत्राह यथेति । इयं मिथिला यथा दशरथस्येष्टविनियोगार्हा तथा अयोध्या च मम, तथा च युवयोः प्रभुत्वे सन्देहो नास्ति । अतो यथार्हं यथोचितम्, प्रभुत्वं कर्तुमर्हथ । पूजायां बहुवचनम् । वयं सर्वे भवदधीनाः यूयमेवास्माकं त्रयाणां हितमुपदिश्य यथोचितं प्रकृत

तथा ब्रुवति वैदेहे जनके रघुनन्दनः । राजा दशरथो हृष्टः प्रत्युवाच महीपतिम् ॥ १७॥ युवामसङ्ख्येयगुणौ भ्रातरौ मिथिलेश्वरौ । ऋषयो राजसङ्घाश्च भवद्भ्यामभिपूजिताः ॥ १८ ॥ स्वस्ति प्राप्नुहि भद्रं ते गमिष्यामि स्वमालयम् । श्राद्धकर्माणि सर्वाणि विधास्यामीति चाब्रवीत् ॥ १९ ॥ तमापृष्ट्वा नरपतिं राजा दशरथस्तदा । मुनीन्द्रौ तौ पुरस्कृत्य जगामाशु महायशाः ॥ २० ॥ स गत्वा निलयं राजा श्राद्धं कृत्वा विधानतः प्रभाते काल्यमुत्थाय चक्रे गोदानमुत्तमम् ॥ २१ ॥ गवां शतसहस्राणि ब्राह्मणेभ्यो नराधिपः । एकैकशो ददौ राजा पुत्रानुद्दिश्य धर्मतः ॥ २२ ॥ सुवर्णशृङ्गाः सम्पन्नाः सवत्साः कांस्यदोहनाः । गवां शतसहस्राणि चत्वारि पुरुषर्षभः ॥ २३ ॥ वित्तमन्यच्च सुबहु द्विजेभ्यो रघुनन्दनः । ददौ गोदानमुद्दिश्य पुत्राणां पुत्रवत्सलः ॥ २४ ॥ ससुतैः कृतगोदानैर्वृतस्तु नृपतिस्तदा । लोकपालैरिवाभाति वृतः सौम्यः प्रजापतिः ॥ २५ ॥ इत्यार्षे श्रीरामायणे॰ बालकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

कार्यं कर्तुमर्हथेत्यर्थः ॥ १६ ॥ हृष्ट इति । एवमेकवाक्यवादेनेति शेषः ॥ १७–२० ॥ काल्यं काले कर्तव्यं गोदानं समावर्तनम् ॥ २१ ॥ तदङ्गदानान्याह–गवामित्यादि ॥ २२ ॥ सम्पन्नाः । क्षीरसम्पन्नाः । कांस्यदोहनाः कांस्यमयदोहनपात्राः । सुबहु अन्यद्वित्तं च ॥ २३ ॥ २४ ॥ सौम्यः सुप्रसन्नचित्तः ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्विसप्ततितमः सर्गः ॥ ७२ ॥

मर्हथ वयं सर्वे भवदधीना यथोचितं कर्तुमर्हथेत्यर्थः ॥ १६–२० ॥ स गत्वेति । काल्यं काले कर्तव्यम् ॥ २१ ॥ २२ ॥ सुवर्णेति । याः सुवर्णशृङ्गाः । संपन्नाः क्षीरसम्पन्नाः । कांस्यदोहनाः कांस्यमयानि दोहनपात्राणि यासां तासां गवाम् । चत्वारि शतसहस्राणि स्वरूपेण दत्वा गोदानमुद्दिश्य वित्तं दक्षिणात्वेन ददौ, सुबहु अन्यद्वित्तं च ॥ २३ ॥ २४ ॥ गोदानं तदाख्यं कर्मविशेषम् । “ गोदानं चौलवत्कार्यं षोडशेऽब्दे तदुच्यते । अङ्कोपवेशनं नास्ति श्मश्रूणां मुण्डनं भवेत् । स्नात्वा च वाग्यतस्तिष्ठन्नहरशेषं नगेदथ । आदित्येऽस्तमिते वाचं विसृजेतान्तिके गुरोः । अहं वरं ददामीति दद्याद्गोमिथुनं ततः ॥” इत्याश्वलायनकारिकायाम् । इदं समा

अथ सीताविवाहाद्विसप्ततितमे--यस्मिन्नित्यादि ॥ १ ॥ साक्षात्प्रत्यक्षं मिथो भरतमातुलोऽभवदिति शेषः ॥ २ ॥ केकयाधिपतिः स्वपिता । अनामयं कुशलं



विद्यत इति शेषः ॥ ३ ॥ स्वसुरपत्यं स्वस्रीयः ॥ ४–६ ॥ यज्ञवाटं यज्ञवाटसमीपम् । अत्र यज्ञवाटशब्देनोत्सवशालोच्यते । पूर्वं यज्ञस्यान्त इत्युक्तत्वेन

यस्मिंस्तु दिवसे राजा चक्रे गोदानमुत्तमम् । तस्मिंस्तु दिवसे शूरो युधाजित् समुपेयिवान् ॥ १ ॥ पुत्रः केकय राजस्य साक्षाद्भरतमातुलः । दृष्ट्वा पृष्ट्वा च कुशलं राजानमिदमब्रवीत् ॥२॥ केकयाधिपती राजा स्नेहात्कुशलमब्रवीत् । येषां कुशलकामोऽसि तेषां सम्प्रत्यनामयम् ॥ ३ ॥ स्वस्रीयं मम राजेन्द्र द्रष्टुकामो महीपतिः । तदर्थमुपयातोऽहमयोध्यां रघुनन्दन ॥ ४ ॥ श्रुत्वा त्वहमयोध्यायां विवाहार्थं तवात्मजान् । मिथिलामुपयातांस्तु त्वया सह महीपते । त्वरयाभ्युपयातोऽहं द्रष्टुकामः स्वसुः सुतम् ॥ ५ ॥ अथ राजा दशरथः प्रियातिथिमुपस्थितम् । दृष्ट्वा परमसत्कारैः पूजनार्हमपूजयत् ॥ ६ ॥ ततस्तामुषितो रात्रिं सह पुत्रैर्महात्मभिः । प्रभाते पुनरुत्थाय कृत्वा कर्माणि कर्मवित् । ऋषींस्तदा पुरस्कृत्य यज्ञवाटमुपागमत् ॥ ७ ॥ युक्ते मुहूर्ते विजये सर्वाभरणभूषितैः । भ्रातृभिः सहितो रामः कृतकौतुकमङ्गलः । वसिष्ठं पुरतः कृत्वा महर्षीनपरानपि ॥ ८ ॥

यज्ञस्य समाप्तत्वात् उत्तरसर्गे दशरथानुयानोक्तेश्च ॥ ७ ॥ युक्ते विवाहानुरूपे । विजये विजयावहे न तु विजयाख्ये, तस्यापराह्निकत्वात् । मुहूर्तशब्दस्य वर्तनपूर्वाङ्गम् । "वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा । गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ॥" इति याज्ञवल्क्यस्मृतेः ॥२५॥ इति श्रीमहेश्वरतीर्थविर० श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां द्विसप्ततितमस्सर्गः ॥ ७२ ॥ समुपेयिवान्, दशरथमिति शेषः ॥ १ ॥ २ ॥ केकयाधिपतिरिति । अस्मत्पिता केकयाधीश्वरः स्नेहात्त्वां कुशलमब्रवीत् । न तु भयादिति भावः । येषामस्माकं कुशलकामोसि त्वं तेषामनामयं कुशलं विद्यत इति चाब्रवीत ॥ ३ ॥ स्वस्रीयमिति । मम स्वस्रीयं स्वसुः पुत्रं भरतम् ॥ ४–६ ॥ तत इति । यज्ञवाटं यज्ञवाटसमीपमुपागमत्, उत्तरत्र प्रवेशयामासेति तत्प्रवेशस्य वक्ष्यमाणत्वात् ॥ ७ ॥ युक्त इत्यादि सार्धश्लोकस्य उपागमदिति पूर्वक्रियापदेन सम्बन्धः । युक्ते योग्ये विजयाख्ये । कृतकौतुकमङ्गलः कृतविवाहसूत्रमङ्गलाचारः ॥ ८ ॥

---

१ सुतम् । तस्य त्वं राजशार्दूल प्रीतिं कर्तुमिहार्हसि । तस्य तद्वचनं श्रुत्वा मधुरं मधुराक्षरम् ॥ २ नापि । पितुः समीपमाश्रित्य तस्थौ भ्रातृभिरावृतः ॥ इत्यधिकः पाठः ।

घटिकाद्वयपरत्वे विजयः पूर्वाह्ण एव भवति। पुरतः कृत्वा उपागमदितिशेषः। कृतकौतुकमङ्गलः कृतविवाहसूत्रबन्धनरूपमङ्गलाचारः। "कौतुकं विषयाभोगे हस्तसूत्रे" इत्यमरः॥ ८॥ ९॥ दातारमिति। स्वामितिशेषः॥ १०॥ दातृप्रतिग्रहीतृभ्यामिति। योग इतिशेषः। सर्वार्थाः दानप्रति

वसिष्ठो भगवानेत्य वैदेहमिदमब्रवीत्॥ ९॥ राजा दशरथो राजन् कृतकौतुकमङ्गलैः। पुत्रैर्नरवरश्रेष्ठ दातारमभिकांक्षते॥ १०॥ दातृप्रतिगृहीतृभ्यां सर्वार्थाः प्रभवन्ति हि। स्वधर्मं प्रतिपद्यस्व कृत्वा वैवाह्यमुत्तमम्॥ ११॥ इत्युक्तः परमोदारो वसिष्ठेन महात्मना। प्रत्युवाच महातेजा वाक्यं परमधर्मवित्॥ १२॥ कः स्थितः प्रतिहारो मे कस्याज्ञा सम्प्रतीक्षते। स्वगृहे को विचारोऽस्ति यथा राज्यमिदं तव॥ १३॥ कृतकौतुकसर्वस्वा वेदिमूलमुपागताः। मम कन्या मुनिश्रेष्ठ दीप्ता वह्नेरिवार्चिषः॥ १४॥ सज्जोऽहं त्वत्प्रतीक्षोऽस्मि वेद्यामस्यां प्रतिष्ठितः। अविघ्नं कुरुतां राजा किमर्थमवलम्बते॥ १५॥ तद्वाक्यं जनकेनोक्तं श्रुत्वा दशरथस्तदा। प्रवेशयामास सुतान् सर्वानृषिगणानपि॥ १६॥ ततो राजा विदेहानां वसिष्ठमिदमब्रवीत्। कारयस्व ऋषे सर्वामृषिभिः सह धार्मिक। रामस्य लोकरामस्य क्रियां वैवाहिकीं प्रभो॥ १७॥ तथेत्युक्त्वा तु जनकं वसिष्ठो भगवानृषिः। विश्वामित्रं पुरस्कृत्य शतानन्दं च धार्मिकम्॥ १८॥

ग्रहादयः। विवाह एव वैवाह्यं कृत्वा। स्वधर्मं प्रतिज्ञारूपम्॥ ११॥ १२॥ प्रतिहारः द्वारपालः। किमर्थं द्रुतमागमनं परिह्रियत इतिभावः। यथेति। त्वदीयं राज्यमिव मदीयमपि राज्यं तवैव तथा च मद्गृहमात्रस्य स्वीयत्वे को विचार इत्यर्थः॥ १३॥ कृतकौतुकसर्वस्वाः अनुष्ठितविवाहोपयोगिसर्वमङ्गलाचाराः॥ १४॥ अविघ्नं अविलम्बम्। अवलम्बते विलम्बते॥ १५॥ श्रुत्वेति वसिष्ठप्रेरितपुरुषमुखादित्यर्थः॥ १६॥ तत इति। लोका रमन्तेऽस्मिन्निति लोकरामः। तस्य॥१७॥ तथेत्यादि। प्रपा पानीयशालिका। अभिनवनालिकेरादिपत्ररचितमण्डप इत्यर्थः। सुवर्णपालिकाभिः साङ्कुराभि



पत्य यज्ञवाटान्तरवर्तिनं वैदेहम्॥९॥१०॥ दातेति। दातृप्रतिग्रहीतृभ्यां गुणैः परस्परानुरूपाभ्याम्। विवाह एव वैवाह्यम्। कन्याप्रदानं कृत्वा स्वधर्मं प्रतिज्ञातं धर्मं दातुरनुरूपं धर्मम्॥ ११-१६॥ तत इति। लोकरामस्य लोका अस्मिन् रमन्त इति लोकरामः॥ १७॥ तथेति। प्रपामध्ये मण्डपमध्ये। अलङ्कारेति।

रिति लिङ्गविपरिणामेनानुकृष्यते । छिद्रकुम्भैः करकैः । शङ्खपात्रैः शङ्खरूपपात्रैः । स्रुक्स्रुवौ आज्यहोमसाधनपात्रविशेषौ । अर्घ्याभिपूरितैः अर्घ्यार्थ जलपूरितैः । लाजपूर्णैः पात्रैरित्यनुषज्यते । पात्रीभिः कार्यान्तरोपयुक्तपात्रान्तरैः । अभिसंस्कृतैः हरिद्रालेपनादिसंस्कारवद्भिः । अलञ्चकारेति पूर्वेणान्वयः ॥ १८–२१ ॥ समैः समपरिमाणैः । अत्र पाणिग्रहणात्पूर्वं होमः आभ्युदयिकः ॥ २२ ॥ २३ ॥ अथ सौन्दर्याभिजात्यादिना सीतायाः प्रति

प्रपामध्ये तु विधिवद्वेदिं कृत्वा महातपाः । अलञ्चकार तां वेदिं गन्धपुष्पैः समन्ततः ॥ १९ ॥ सुवर्णपालिकाभिश्च छिद्रकुम्भैश्च साङ्कुरैः । अङ्कुराढ्यैः शरावैश्च धूपपात्रैः सधूपकैः ॥ २० ॥ शङ्खपात्रैः स्रुवैः स्रुग्भिः पात्रैरर्घ्याभिपूरितैः । लाजपूर्णैश्च पात्रीभिरक्षतैरभिसंस्कृतैः ॥ २१ ॥ दर्भैः समैः समास्तीर्य विधिवन्मन्त्रपूर्वकम् । अग्निमाधाय वेद्यां तु विधिमन्त्रपुरस्कृतम् । जुहावाग्नौ महातेजा वसिष्ठो भगवानृषिः ॥ २२ ॥

## श्रीसीताविवाहमहोत्सवघट्टः

ततः सीतां समानीय सर्वाभरणभूषिताम् । समक्षमग्नेः संस्थाप्य राघवाभिमुखे तदा । अब्रवीज्जनको राजा कौसल्यानन्दवर्द्धनम् ॥२३॥ इयं सीता मम सुता सहधर्मचरी तव । प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना॥२४॥

ग्रहार्हतां वदन् प्रतिग्रहमनुजानाति–इयमिति । इयम् अपरिच्छेद्य सौन्दर्यसौकुमार्यलावण्यादिकं प्रत्यक्षेण निर्दिशति । न केवलं प्रत्यक्षं सौन्दर्यादिकम् । प्रत्यक्षदृष्टमप्यनुमानेन बुभुत्समानस्यायोनिजत्वेनानुमेयं चेत्याह–सीता ! 'सीता लाङ्गलपद्धतिः' तज्जन्यतया तथा व्यपदेशः । इयं सीता या सिद्धाश्रमात्प्रभृति धनुर्भङ्गादिना कुतूहलगोचरतामासादिता सेयं सीता । यद्वा सीतादर्शनदशायां विद्युत्स्फुरणसमय इव क्वचिदध्यवयविप्रतिपत्त्यभावेन ससम्भ्रमं रामं प्रत्याह इयं सीतेति । यद्वा " प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा " इत्युक्तरीत्या अनवरतभावनाप्रकर्षेण सर्वत्र सीतायाः प्रतीयमानत्वादाह इयं सीतेति । यद्वा यथा राम आत्मानं मानुषं मन्यते, एवं सीतापि । अतो राघवत्वेभवत्सीतेत्याह इयं सीतेति ।.न केवलं

सुवर्णपालिकाभिः मङ्गलार्थं सुवर्णरचिताभिः । छिद्रकुम्भैः करकैः । शङ्खा इव पात्राणि । लाजपूर्णैश्च पात्रीभिरित्यार्षम् ॥ १८–२१ ॥ समैः समप्रमाणैः ॥ २२ ॥ ॥ २३ ॥ इयं सीतेति । तव भुजवीर्यनिर्जिता तवाभिमुखं स्थिता इयं सीता । मम सुतेत्याभिजात्यकथनम् । सहधर्मचरीति यस्त्वयानुष्ठेयो धर्मस्सोऽनया सह

सौन्दर्यमस्मदपेक्षितम्, किन्त्वाभिजात्यं चेत्यत्राह–मम सुतेति । आचारप्रधानजनककुलजातायाः किं वक्तव्यमाभिजात्यमिति भावः । यद्वा मम सुता 'महता तपसा राम' इतिवत् तुभ्यं दातुं विरचितविविधव्रतोपवासादिकस्य मम कन्येत्यर्थः । अस्त्वियं सुन्दरी भोगार्थी, धर्माचरणार्थमन्यया भवितव्यमिति मन्येतेत्यत्राह–सहधर्मचरी तवेति । भोगार्थेयमेव धर्माचरणार्थापीति भावः । समानो धर्मः सहधर्मः, तं चरतीति सहधर्मचरी । "दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम् ।" इति वक्तुस्तवानुरूपेयम् "न कश्चिन्नापराध्यति" इति वक्तीति भावः । एवं सौन्दर्याभिजात्यधर्माचरणशीलत्वादिमत्त्वेऽपि त्वदनुमत्यभावान्नैनां प्रतिगृह्णामीत्यत्राह–प्रतीच्छ चैनामिति । प्रतीच्छ गृहाण । सीतायाः रामाविनाभूततया तस्याः प्रदानानर्हत्वात् ददामीत्यनुक्तिः । भद्रं ते–स्वतःसिद्धायाः कस्त्वं दातुमिति रामः कुप्येदिति सान्त्वयति । यद्वा निरतिशयकन्यालक्षणशालिन्या अस्याः प्रतिग्रहे भवतः सर्वाणि मङ्गलानि भविष्यन्तीत्यर्थः । यद्वा अनुरूपवधूवरयोः संयोगे दृष्टिदोषो भविष्यतीति मङ्गलमाशास्ते भद्रं त इति । एवं मयानुज्ञाते गान्धर्वराक्षसाभ्यामुद्वहेदिति भीतः प्राह–पाणिं गृह्णीष्वेति । "यदि कामयेत स्त्रीरेव जनयेयमित्यङ्गुलीरेव गृह्णीयात्" इत्याद्युक्तकामव्यावृत्तये पाणिमित्युक्तम् । प्रणयधारायां पादग्रहणमस्तु, सम्प्रति पाणिं गृह्णीष्व पाणिनेति साहित्यकृतशोभाविशेषदर्शनाभिलाषेणोक्तम् । ब्राह्मणस्यैव पाणिग्रहणम्, क्षत्रियादेः शरादिग्रहणं विहितम्; अतः कथमिदं सङ्गच्छत इति न शङ्कनीयम्, तस्यासवर्णविषयत्वात् । आह मनुः–"पाणिग्रहणसंस्कारः सुवर्णासु प्रदृश्यते । असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि । शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया । वासोदशा शूद्रया तु वर्णोत्कृष्टस्य वेदने ॥" इति । अतः सर्ववर्णानामपि सवर्णासु पाणिग्रहोऽस्त्येव ॥ २४ ॥ तनि०–इयं निरतिशयरूपवती । सीतेति जन्मपरिशुद्धिरुच्यते । मम सुतेत्यावासपरिशुद्धिः । तव सौन्दर्यवागुरया सर्वहृदयाकर्षकस्य । सहधर्मचरी नित्यं सहधर्मचारिणी भविष्यतीति कालविशेषविधानाभावात् । नित्यं सहधर्मचारिण्याः किमिदं दानमिति न कोपः कार्य इति प्रसादं याचते–भद्रं त इति । मासोत्सवादिष्वर्चाविग्रहविवाहवदवतारानुगुणविवाहादिकं न विरुध्यत इति हृदयम् । यद्वा मत्तोऽपि प्रेमातिशयस्तवापीति दृष्टिदोषपरिहारार्थं रक्षां करोति भद्रं त इति । पाणिं गृह्णीष्व पाणीनेति तादृशा अवस्थानुभवेन नयनसाफल्यं भजाम इति भावः । आचार्यास्तु प्रकारान्तरेण व्याचक्षते–इयं रूपौदार्यगुणैरहमेव गरीयानिति न तूष्णीं स्थातव्यम् । एनामपि पश्य तुल्यशीलवयोवृत्तामित्याद्युक्तलक्षणवत्त्वात्तवेयमर्हति । अतिशयान्तरमाह सीतेति । अभिजात्या योनिजत्वे अतिशयिते । इयं सीता सुवर्णलता भूमावेव खलूत्पद्यते । हिरण्यवर्णा खल्वियम् । मम सुता "जनकानां कुले कीर्तिमाहरिष्यति मे सुता" इति प्रसिद्धिविषया । सहधर्मचरी त्वदाचरितधर्माणां प्रवर्तयित्री । प्रतीच्छ अत्यादरेण गृहाण । "न च सीता त्वया हीना" इत्यादिवत् "न जीवेयं क्षणमपि" इत्येवंप्रकारेण च

स्थातव्यम् । एनामागतामपरिहारेण स्वीकुरु । पाणिं गृह्णीष्व पाणिना [illegible] कुरु । भद्रं त इति गृहीतपाण्योरुभयोरपि मङ्गलाशासनं करोति । पाणिना प्रणयापराधे पाणिना पादग्रहणं भविष्यति । इदानीं पाणिं गृह्णीष्व । केचिदेवं वर्णयन्ति—इयं त्वद्विश्लेषव्यतिरिक्तकालमात्रसत्तावती । पतिव्रतायाः स्त्रिया भर्तृविरहे सत्तानाश एवेति सिद्धं खलु । इयं "आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या नारी सा स्त्री ज्ञेया पतिव्रता ॥" इति शास्त्रविषयभूतपतिव्रता स्त्रीभ्य

पतिव्रता महाभागा छायेवानुगता सदा । इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा ॥ २५ ॥ साधुसाध्विति देवाना मृषीणां वदतां तदा । देवदुन्दुभिनिर्घोषः पुष्पवर्षो महानभूत् ॥२६॥ एवं दत्त्वा तदा सीतां मन्त्रोदकपुरस्कृताम् । अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ॥२७॥ लक्ष्मणागच्छ भद्रं ते ऊर्मिलामुद्यतां मया । प्रतीच्छ पाणिं गृह्णीष्व माभूत्कालस्य पर्ययः ॥२८॥ तमेवमुक्त्वा जनको भरतं चाभ्यभाषत । गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन ॥२९॥ शत्रुघ्नं चापि धर्मात्मा अब्रवीज्जनकेश्वरः । श्रुतकीर्त्या महाबाहो पाणिं गृह्णीष्व पाणिना ॥३०॥ सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः । पत्नीभिः सन्तु काकुत्स्था माभूत्कालस्य पर्ययः ॥ ३१ ॥

उत्तमा खलु तद्विलक्षणा च । इयं त्वदात्मभूता त्वच्छरीरभूता च सीतानिमित्तन्यूनता तवैव खलु, स्वच्छायादोषः छायावत एव खलु "सुता मातरमङ्गनाः" इति मातृगुणानुवृत्त्या पृथिवीगन्धसारभूतक्षमादिगुणवती च । मम सुतेति न केवलं राजकुमारीत्वेन भोगदानम्, किन्तु हेमारविन्दन्यायेन आश्रितवत्सलत्वलक्षण्यानुगुण्येन विशेषतो भोगदानमिति । एनाम् एवं व्रतनियमैरुत्पन्नाम् । भद्रं ते । "भुङ्क्ष्व स्वशेषमखिलं तव" इतिवत् व्रतनियमादिजन्यतायाः सफलत्वं तवैव । भोग्यवस्तुगुणपौष्कल्यं भोक्तुरेवातिशयितभोगाय । पाणिं गृह्णीष्व पाणिना सीता हस्तं प्रसार्य ग्रहीतुं न जानाति, त्वमेव गृह्णीष्व । पाणिं गृह्णीष्व पाणिनेति "बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः" इत्यादिप्रसिद्धपराक्रमशालिहस्तेन हस्तं गृह्णीष्व ॥ २४ ॥ पतिव्रतेत्यादि । भविष्यतीति शेषः, प्राक्षिपत् रामहस्त इतिशेषः ॥ २५ ॥ शुभनिमित्तमाह—साध्विति । वदतां वदत्सु । पुष्पवर्षः पुष्पवर्षश्च ॥ २६ ॥ २७ ॥ पर्ययः विलम्ब इत्यर्थः । भिन्नमातृकत्वात् भरतात्पूर्वं लक्ष्मणविवाहो न दुष्यति । "पितृव्यपुत्रे सापत्ने परनारीसुतेषु वा । विवाहदानयज्ञादौ परिवेदो न दूषणम् ॥" इति स्मरणात् ॥ २८–३० ॥ पत्नीभिः सहिता

कर्तव्य इत्यर्थः । एनां प्रतीच्छ अङ्गीकुरु । पाणिं गृह्णीष्व पाणिनेति । "गृभ्णामि ते सुप्रजास्त्वाय हस्तम्" इति मन्त्रपूर्वकं पाणिं गृहाणेत्यर्थः ॥ २४ ॥ छायेवानुगता नित्यसम्बन्धा, भवत्विति शेषः । प्राक्षिपत् । रामहस्त इति शेषः ॥ २५–२७ ॥ लक्ष्मणेति । लक्ष्मणागच्छ पाणिं गृह्णीष्वेति भरतात्पूर्वं लक्ष्मणविवाह

इति शेषः। अत्रोदकप्रदानमर्थसिद्धम्। जनकेनानुज्ञामात्रं कृतम्, ज्येष्ठत्वात्। उदकप्रक्षेपणं तु माण्डवीश्रुतकीर्त्योः कुशध्वजेनैव। तदाह याज्ञवल्क्यः– "पिता पितामहो भ्राता सकुल्यो जननी तथा। कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥" इति ॥ ३१ ॥३२॥ अग्निमिति। अत्रैकस्यां वेदिकायां एकस्मिन्नेवाग्नौ वसिष्ठो जुहाव तेनैवमेकमग्निं सर्वे स्वस्वभार्यापाणीन् गृहीत्वा प्रदक्षिणीकृत्य चक्रुरित्युत्तरत्रान्वयः। राजानं जनकम्, यथोक्तेन शास्त्रोक्तप्रकारेण। विधिपूर्वकं कल्पसूत्रपूर्वकम्। विवाहं विवाहकर्म। तदा तस्मिन्काले। चक्रुः स्वसूत्रानुरोधेन प्रत्येकं पाणिग्रहणहोमं चक्रुरित्यर्थः। पूर्वं वसि

जनकस्य वचः श्रुत्वा पाणीन् पाणिभिरस्पृशन्। चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः ॥ ३२ ॥ अग्निं प्रदक्षिणीकृत्य वेदिं राजानमेव च। ऋषींश्चैव महात्मानः सभार्या रघुसत्तमाः। यथोक्तेन तदा चक्रुर्विवाहं विधिपूर्वकम्[१] ॥ ३३ ॥ पुष्पवृष्टिर्महत्यासीदन्तरिक्षात्सुभास्वरा। दिव्यदुन्दुभिनिर्घोषैर्गीतवादित्रनिस्वनैः ॥ ३४ ॥ ननृतुश्चाप्सरस्सङ्घा गन्धर्वाश्च जगुः कलम्। विवाहे रघुमुख्यानां तदद्भुतमदृश्यत ॥३५॥ ईदृशे वर्तमाने तु तूर्योद्घुष्टनिनादिते। त्रिरग्निं ते परिक्रम्य ऊहुर्भार्या महौजसः ॥ ३६ ॥ अथोपकार्यां जग्मुस्ते सभार्या रघुनन्दनाः[२]। राजाप्यनुययौ पश्यन् सर्षिसङ्घः सबान्धवः ॥ ३७ ॥ इत्यार्षे श्रीरामायणे० बालकाण्डे त्रिसप्ततितमः सर्गः ॥७३॥

ष्ठेन होमवचनमाभ्युदयिककर्मपरम्। अग्निप्रतिष्ठापनपूर्वकं विवाहहोमोऽत्रोच्यते। पाणिग्रहणानन्तरमग्निं ब्राह्मणान् दातारं जनकं च प्रदक्षिणीकृत्य स्वकल्पोक्तविधानेन प्रत्येकमग्निं प्रतिष्ठाप्य विवाहहोमांश्चक्रुरित्यर्थः ॥ ३३ ॥ सीताप्रदानकालिकशुभं निमित्तमुक्तम्। अथ सर्वसाधारण्येन विवाहकर्मकालिकशुभनिमित्तानि दर्शयति–पुष्पवृष्टिरिति ॥३४॥ तत् पुष्पवृष्ट्यादिकम् ॥३५॥ अथ लाजहोमपूर्वकं स्वस्वाग्निप्रदक्षिणत्रयं दर्शयति–ईदृश इति। ईदृशे पूर्वोक्तरूपे। तूर्याणां नृत्यगीतवाद्यानाम्। उद्घुष्टेन उद्घोषणेन। निनादिते नादे प्रतिध्वनिरूपे वर्तमाने। अग्निं स्वस्वाग्निं। त्रिःपरिक्रम्य ऊहुः विवाहं निर्वर्तयामासुः ॥३६॥ राजा दशरथः। पश्यन् सभार्यान् पुत्रानित्यर्थः ॥ ३७॥ इति श्रीगोविन्द० श्रीरामा० बाल० त्रिसप्ततितमः सर्गः ॥७३॥

कथनं भिन्नादरत्वान्न विरुद्धवचने। उदकं दातुं निश्चिनाम् ॥ २८–३३ ॥ आत्ममनोरथः फलोन्मुखो जात इति। देवदुन्दुभिनिर्घोषादिर्भूदित्यर्थः ॥ ३४ ३७ ॥

इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां त्रिसप्ततितमः सर्गः ॥ ७३ ॥

१ विधिपूर्वकम। काकुत्स्थैश्च गृहीतेषु ललितेषु च पाणिषु ॥ २ रघुनन्दनाः। श्रीमन्तो दशरथः पुत्रान् पुत्रवतांवरः। इत्यधिकः पाठः।

अथायोध्याप्रस्थाने मध्येमार्गे जामदग्न्यागमनं चतुःसप्ततितमे अथ रात्र्यामित्यादि । आपृष्ट्वा आपृच्छ्य उत्तरपर्वतं स्वावासं हिमवन्तम् ॥ १ ॥ विश्वामित्र इति । आपृष्ट्वा जगामेति क्रियावृत्त्या राजपदावृत्तिः ॥ २–४ ॥ कन्याधनमेव विवृणोति—गवामित्यादि । कम्बलानामित्यत्रापि शतसहस्राणीत्यनुषज्यते । क्षौमकोट्यम्बराणि क्षौमाश्च कोट्यम्बराणि चेति द्वन्द्वः । क्षौमानामपि बहुत्वमर्थसिद्धम्, क्षौमरूपकोटचम्बराणीति वा, कोटचम्बराणि उत्कृष्ट



अथ रात्र्यां व्यतीतायां विश्वामित्रो महामुनिः । आपृष्ट्वा तौ च राजानौ जगामोत्तरपर्वतम् ॥ १ ॥ विश्वामित्रे गते राजा वैदेहं मिथिलाधिपम् । आपृष्ट्वाथ जगामाशु राजा दशरथः पुरीम् ॥ २ ॥ गच्छन्तं तं तु राजानमन्वगच्छन्नराधिपः ॥ ३ ॥ अथ राजा विदेहानां ददौ कन्याधनं बहु ॥ ४ ॥ गवां शतसहस्राणि बहूनि मिथिलेश्वरः । कम्बलानां च मुख्यानां क्षौमकोटचम्बराणि च ॥ ५ ॥ हस्त्यश्वरथपादातं दिव्यरूपं स्वलंकृतम् । ददौ कन्यापिता तासां दासीदासमनुत्तमम् ॥ ६ ॥ हिरण्यस्य सुवर्णस्य मुक्तानां विद्रुमस्य च । ददौ परमसंहृष्टः कन्याधनमनुत्तमम् ॥ ७ ॥ दत्त्वा बहुधनं राजा समनुज्ञाप्य पार्थिवम् । प्रविवेश स्वनिलयं मिथिलां मिथिलेश्वरः ॥ ८ ॥ राजाप्ययोध्याधिपतिस्सह पुत्रैर्महात्मभिः । ऋषीन् सर्वान् पुरस्कृत्य जगाम सबलानुगः ॥९॥ गच्छन्तं तं नरव्याघ्रं सर्षिसङ्घं सराघवम् । घोराः स्म पक्षिणो वाचो व्याहरन्ति ततस्ततः । भौमाश्चैव मृगाः सर्वे गच्छन्ति स्म प्रदक्षिणम् ॥ १०

वस्त्राणीति वा ॥ ५ ॥ हस्तीत्यादिसेनाङ्गत्वादेकवद्भावः । कन्यापिता जनकः । गवाश्वादित्वाद्दासीदासमित्येकवद्भावः ॥ ६ ॥ हिरण्यस्य रजतस्य शतमितिशेषः ॥ ७ ॥ ८ ॥ सबलानुगः बलैश्चतुरङ्गैः अनुगैः किङ्करैश्च सहितः ॥ ९ ॥ नरव्याघ्रं प्रतीति शेषः । घोरा इत्यनेनाशुभसूचकत्वमुक्तम् । पक्षिणः

अथेति । तौ राजानौ दशरथजनकौ ॥१–४॥ गवामिति । कम्बलानामित्यत्र शतसहस्राणीति पूर्वेण संबन्धः । क्षौमान् पट्टवस्त्राणि ददाविति पूर्वेणान्वयः । कोटीति भिन्नं पदम्, सङ्ख्यावाचि । नपुंसकत्वमार्षम् । कोटिक्षौमान् कोट्यम्बराणीति कोटिशब्दस्योभयत्रान्वयः ॥ ५ ॥ हस्त्यश्वरथपादातमिति । "प्राणितूर्यसेनाङ्गानाम्" इत्येकवद्भावः । दिव्यरूपम् अद्भुतरूपम् ॥ ६ ॥ हिरण्यस्येत्यादि । सुवर्णस्य शोभनवर्णस्य, अत्र षष्ठ्यन्तानां पूर्वपठितकोटिशब्देनान्वयः ॥ ७–९ ॥ गच्छन्तं प्रतीति

---

१ पर्वतम् । आशीर्भिः पूरयित्वा च कुमारांश्च सराघवान् ॥ २ सबलानुगः । वाहिनींमहतीं कर्षन् कीर्तिमांश्च यथा तदा ॥ इत्यधिकः पाठः ।

वायसादयः। प्रदक्षिणमिति शुभसूचनम्। अन्तरिक्षे अशुभसूचनम्, भूमौ शुभसूचनमित्यर्थस्य द्योतनार्थं भौमा इतिपदम् ॥ १० ॥ ११ ॥ हृदयमुत्कम्पयितुं शीलमस्येति हृदयोत्कम्पि। इदं किं सुखोदर्कं दुःखोदर्कं वेति मनो विषीदति, शुभाशुभसूचनदर्शनेनोभयत्र निर्णयकारणाभावादिति भावः

तान् दृष्ट्वा राजशार्दूलो वसिष्ठं पर्यपृच्छत ॥ ११ ॥ असौम्याः पक्षिणो घोरा मृगाश्चापि प्रदक्षिणाः। किमिदं हृदयोत्कम्पि मनो मम विषीदति ॥ १२ ॥ राज्ञो दशरथस्यैतच्छ्रुत्वा वाक्यं महानृषिः। उवाच मधुरां वाणीं श्रूयतामस्य यत्फलम् ॥ १३ ॥ उपस्थितं भयं घोरं दिव्यं पक्षिमुखाच्च्युतम्। मृगाः प्रशमयन्त्येते सन्तापस्त्यज्यतामयम् ॥ १४ ॥ तेषां संवदतां तत्र वायुः प्रादुर्बभूव ह। कम्पयन् पृथिवीं सर्वां पातयंश्च द्रुमान् शुभान् ॥ १५ ॥ तमसा संवृतः सूर्यः सर्वा न प्रबभुर्दिशः। भस्मना चावृतं सर्वं सम्मूढमिव तद्बलम् ॥ १६ ॥ वसिष्ठश्चर्षयश्चान्ये राजा चससुतस्तदा। ससंज्ञा इव तत्रासन् सर्वमन्यद्विचेतनम् ॥ १७ ॥ तस्मिंस्तमसि घोरे तु भस्मच्छन्नेव सा चमूः। ददर्श भीमसङ्काशं जटामण्डलधारिणम् ॥ १८ ॥ भार्गवं जामदग्न्यं तं राजराजविमर्दिनम्। कैलासमिव दुर्धर्षं कालाग्निमिव दुस्सहम् ॥ १९ ॥ ज्वलन्तमिव तेजोभिर्दुर्निरीक्षं पृथग्जनैः। स्कन्धे चासाद्य परशुं धनुर्विद्युद्गणोपमम्। प्रगृह्य शरमुख्यं च त्रिपुरघ्नं यथा शिवम् ॥ २० ॥

॥ १२ ॥ १३ ॥ पक्षिमुखाच्च्युतं पक्षिमुखेन सूचितमित्यर्थः। प्रशमयन्ति प्रशमं सूचयन्तीत्यर्थः ॥ १४ ॥ संवदतां संवदत्सु ॥ १५ ॥ भस्मना चावृतमभूदिति शेषः ॥ १६ ॥ १७ ॥ जामदग्न्यमिति। अनन्तरापत्येति यञ्, गोत्रत्वारोपात्। जामदग्न्येयमिति पाठे–"इतश्चानिञः" इति बह्वच्त्वेप्यार्षत्वाड्ढक्। पृथग्जनैः पामरैः विद्युद्गणोपममिति तेजस्वितायां दृष्टान्तः। त्रिपुरघ्नमिति तृन्। "अमनुष्यकर्तृके च" इति हन्तेष्टक् ॥ १८–२० ॥

शेषः। पक्षिणां घोरवाग्व्याहरणमशुभसूचकम्। भौमा इति मृगप्रदक्षिणगमनं शुभसूचकम् ॥१०॥११॥ असौम्या इति। मनो मम विषीदति विरुद्धशकुनदर्शनादिति भावः ॥१२॥१३॥ उपस्थितमिति। मृगाः प्रशमयन्तीति पूर्वमशुभसूचनम्, अतो मृगप्रदक्षिणात्तच्छाम्यतीति भावः ॥१४॥ तेषामिति। उत्पातकथनं संवदताम् ॥१५॥ तमसेति। न प्रबभुः न प्रचकाशिरे ॥१६॥१७॥ तस्मिन्निति। सा चमूरिति भस्मच्छन्नेवाभवदिति शेषः ॥१८॥ भार्गवमिति। दुर्धर्षं परैर्दुरतिक्रमम् ॥१९॥ पृथग्जनैः

होमः मानसः॥२१॥ कच्चिदिति। मनसो विमर्शो नोत्सादयिष्यतीत्यत्र हेतुमाह—पूर्वमिति॥२२–२६॥ इति श्रीगो०श्रीरा०बा०चतुः सप्ततितमः सर्गः॥७४॥ पूर्वमवतारप्रस्तावे जगत्पतित्वेन विष्णोः परत्वमुक्तम्। 'अहं वेद्मि महात्मानम्' इति विश्वामित्रवचनेन पुरुषसूक्तं तत्र मानत्वेन सूचितम्। काश्यप स्तुतौ च 'शरीरे तव पश्यामि जगत्सर्वमिदं प्रभो। त्वमनादिरनिर्देश्यस्त्वामहं शरणं गतः॥' इति सर्वजगत्कारणत्वादिकमुक्तम्। रुद्रस्य च गङ्गाधारण

तं दृष्ट्वा भीमसङ्काशं ज्वलन्तमिव पावकम्। वसिष्ठप्रमुखा विप्रा जपहोमपरायणाः ॥ २१ ॥ सङ्गता मुनयः सर्वे सञ्जजल्पुरथो मिथः। कच्चित्पितृवधामर्षी क्षत्रं नोत्सादयिष्यति ॥ २२ ॥ पूर्वं क्षत्रवधं कृत्वा गतमन्युर्गतज्वरः। क्षत्रस्योत्सादनं भूयो न खल्वस्य चिकीर्षितम् ॥ २३ ॥ एवमुक्त्वार्घ्यमादाय भार्गवं भीमदर्शनम्। ऋषयो राम रामेति वचो मधुरमब्रुवन् ॥ २४ ॥ प्रतिगृह्य तु तां पूजामृषिदत्तां प्रतापवान्। रामं दाशरथिं रामो जामदग्न्यो ऽभ्यभाषत ॥ २५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

राम दाशरथे राम वीर्यं ते श्रूयतेऽद्भुतम्। धनुषो भेदनं चैव निखिलेन मया श्रुतम् ॥ १ ॥ तदद्भुतमचिन्त्यं च भेदनं धनुषस्त्वया। तच्छ्रुत्वाहमनुप्राप्तो धनुर्गृह्य परं शुभम् ॥ २ ॥ तदिदं घोरसङ्काशं जामदग्न्यं महद्धनुः। पूरयस्व शरेणैव स्वबलं दर्शयस्व च ॥ ३ ॥ तदहं ते बलं दृष्ट्वा धनुषोऽस्य प्रपूरणे। द्वन्द्वयुद्धं प्रदास्यामि वीर्यश्लाघ्यस्य राघव ॥४॥ तस्य तद्वचनं श्रुत्वा राजा दशरथस्तदा। विषण्णवदनो दीनः प्राञ्जलिर्वाक्यमब्रवीत् ॥५॥ क्षत्ररोषात् प्रशान्तस्त्वं ब्राह्मणश्च महायशाः। बालानां मम पुत्राणामभयं दातुमर्हसि ॥ ६ ॥

धातुमोक्षणादिवृत्तान्तेन कर्मवश्यत्वेन प्राकृतशरीरवर्तित्वेनाचापरत्वं सूचितम्। सम्प्रत्यल्पशक्तिकत्वेन तस्यापरत्वमाह पञ्चसप्ततितमे—रामेत्यादि। रोपातिरेकेण रामेति द्विःसम्बोधनम्। भेदनं चेति चकारेण ताटकावधादि समुच्चीयते ॥ १ ॥ अचिन्त्यं च भवतीतिशेषः। तच्छ्रुत्वेत्यतःपूर्वमत इत्युपस्कार्यम् ॥ २ ॥ जमदग्नेरागतं जामदग्न्यम्। आगतार्थे यभार्षः ॥ ३ ॥ तत् तदा ॥ ४ ॥ ५ ॥ सम्प्रत्यस्थाने भयशङ्कितया दशरथो रामे

पामरजनैः। प्रतिगृह्येति। राममभ्यभाषतेति इतरानगणयित्वेति भावः ॥ २०–२५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्ड व्याख्यायां चतुस्सप्ततितमः सर्गः ॥ ७४ ॥ रामेति। धनुषो भेदनं चेत्यत्र ताटकावधादि समुच्चीयते ॥ १ ॥ अपरं श्रेष्ठम् ॥ २–७ ॥

प्रेमभराक्रान्तो रामवैभवं ताटकाताटकेयनिरसनादिना जानन्नपि मङ्गलाशासनमाचरयति–क्षत्रेति ॥ ६ ॥ सहस्राक्षे तत्सन्निधावित्यर्थः । निक्षिप्तवान् त्यक्तवानित्यर्थः ॥७॥ महेन्द्रकृतकेतनः महेन्द्रपर्वते कृतनिवासः ॥८॥ 'सर्वविनाशाय सम्प्राप्तः' इत्येतदुपपादयति ॥९॥ न चेति ॥१०॥ लोकाभिविश्रुते



भार्गवाणां कुले जातः स्वाध्यायव्रतशालिनाम् । सहस्राक्षे प्रतिज्ञाय शस्त्रं निक्षिप्तवानसि ॥ ७ ॥ स त्वं धर्मपरो भूत्वा काश्यपाय वसुन्धराम् । दत्त्वा वनमुपागम्य महेन्द्रकृतकेतनः ॥ ८ ॥ मम सर्वविनाशाय सम्प्राप्तस्त्वं महामुने । न चैकस्मिन् हते रामे सर्वे जीवामहे वयम् ॥ ९ ॥ ब्रुवत्येवं दशरथे जामदग्न्यः प्रतापवान् । अनादृत्यैव तद्वाक्यं राममेवाभ्यभाषत ॥ १० ॥ इमे द्वे धनुषी श्रेष्ठे दिव्ये लोकाभिविश्रुते । दृढे बलवती मुख्ये सुकृते विश्वकर्मणा ॥ ११ ॥ अतिसृष्टं सुरैरेकं त्र्यम्बकाय युयुत्सवे । त्रिपुरघ्नं नरश्रेष्ठ भग्नं काकुत्स्थ यत्त्वया ॥ १२ ॥ तदिदं वैष्णवं राम धनुः परमभास्वरम् । समानसारं काकुत्स्थ रौद्रेण धनुषा त्विदम् ॥ १३ ॥ तदा तु देवताः सर्वाः पृच्छन्ति स्म पितामहम् । शितिकण्ठस्य विष्णोश्च बलाबलनिरीक्षया ॥ १४ ॥

लोके सर्वतः प्रसिद्धे । बलवती इति नपुंसकद्विवचनम् । सुकृते प्रयत्नेन निर्मिते ॥ ११ ॥ अतिसृष्टं दत्तम् । युयुत्सवे त्रिपुरवासिभिर्योद्धुमिच्छवे । यत्त्वया भग्नं तत् त्र्यम्बकाय दत्तमिति पूर्वेणान्वयः ॥१२॥ समानसारं समानबलम् ॥१३॥ समानसारत्वे किमिदानीं परीक्ष्यमित्याशङ्क्य रौद्रस्य धनुषो वैकल्यादिति वक्तुं प्रस्तावान्तरमुपक्षिपति–तदेत्यादि । तदा दुष्करत्रिपुरहननानन्तरकाले । बलाबलनिरीक्षया बलाबलनिरीक्षणेच्छया । कोऽनयोर्बलवा

स त्वमिति । महेन्द्रकृतकेतनः, तपश्चरणार्थमिति शेषः ॥ ८–१० ॥ इमे द्वे इति । यत्त्वया भग्नं यच्च मया धृतम् ते द्वे इत्यर्थः । सुकृते प्रयत्नेन निर्मिते ॥ ११ ॥ अतिसृष्टमिति । सुरैरतिसृष्टं विश्वकर्मनिर्मितयोरुभयोरेकं त्रिपुरं हन्तुकामाय त्र्यम्बकाय दत्तमित्यर्थः । त्रिपुरघ्नमिति । यत्त्वया भग्नं तत त्रिपुरघ्नमिति भावः ॥१२॥ तदिदमिति । प्रसिद्धमिदं वैष्णवम् । इदं रौद्रेण धनुषा समानसारमित्यपरं वाक्यम् । समानसारं जृम्भणात्पूर्वं समानसारं भङ्गसमये तु रौद्रं धनुर्न्यूनसारमिति भावः ॥ १३ ॥ तदा तु देवता इति । तदा दुष्करत्रिपुरदहनानन्तरम् । बलाबलनिरीक्षया बलतारतम्यनिरीक्षेच्छया ॥ १४ ॥



१ यत्त्वया । इदं द्वितीयं दुर्धर्षं विष्णोर्दत्तं सुरोत्तमैः । इत्यधिकः पाठः ।

नित्यपृच्छन्नित्यर्थः ॥ १४ ॥ अभिप्रायं त्विति । पूर्वं वराहादिरूपेण भूम्युद्धरणादिकरणेन विष्णुरधिक इति स्तुवतस्त्वत्तः श्रुतम् । अधुना विष्णुमुपसर्जनीकृत्य त्रिपुरहननाद्रुद्रस्याधिकबलत्वं प्रतीयत इत्यभिप्रायमित्यर्थः । सत्यवतां वर इत्यनेन बहुश उपदेशेऽपि नैषां चित्तं समाधत्ते । अतः क्रिययैव बलतारतम्यं दर्शयिष्यामीत्यभिप्रेत्य विरोधं जनयामासेति गम्यते । अहं धन्वी प्रधानः विष्णुस्तु ममोपसर्जन इत्युक्तं रुद्रेणेति विष्णुं प्रत्युक्त्वा शराग्रतया मयावस्थानान्मयैव त्रिपुरहननं कृतमिति विष्णुनोक्तमिति रुद्रं प्रत्युक्त्वा च विरोधजननमित्यवगम्यते ॥ १५ ॥ १६॥ जृम्भितमित्यत्रापि हुङ्कारे

अभिप्रायं तु विज्ञाय देवतानां पितामहः । विरोधं जनयामास तयोः सत्यवतां वरः ॥ १५ ॥ विरोधे च महद्युद्धमभवद्रोमहर्षणम् । शितिकण्ठस्य विष्णोश्च परस्परजिगीषिणोः ॥ १६॥ तदा तु जृम्भितं शैवं धनुर्भीमपराक्रमम् । हुङ्कारेण महादेवः स्तम्भितोऽथ त्रिलोचनः ॥ १७॥ देवैस्तदा समागम्य सर्षिसङ्घैः सचारणैः । याचितौ प्रशमं तत्र जग्मतुस्तौ सुरोत्तमौ ॥ १८॥ जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः । अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा॥ १९॥

णेत्यनुषज्यते । जृम्भितं भग्नमितियावत् । हुङ्कारेण न त्वभिमन्त्रितबाणेन । महादेवः महादेवशब्दो महावृक्षसमाख्यायित इति भावः । त्रिलोचन इत्यनेन तृतीयं लोचनमपि निरर्थकं कृतमिति भावः ॥१७॥ तनि०—न केवलं धनुषो जृम्भणम् ,किन्तु तदाश्रयस्यापीत्याह—हुङ्कारेणेति । महादेव इति विडम्बनगर्भम् । घृतकोशातकीशब्दवदनर्थको महादेवशब्द इत्यर्थः॥ १७॥ याचितौ प्रशमं जग्मतुः। विष्णुः किमनेन बालेन, अनुकम्प्यतामिति याचितस्तन्निग्रहान्निवृत्तः। रुद्रस्तु स्वामितः पराजयो नास्माकं दोषायेति सान्त्वितस्तत्तुल्यत्वाभिमानान्निवर्तित इत्यर्थः ॥ १८ ॥ अथ स्वाभिमतसिद्धिमाह—जृम्भितमिति । तत् विष्णव

अभिप्रायं त्विति । पूर्वं विष्णुरेव शिवाद्बलवानिति श्रुतम्, इदानीं रौद्रेण धनुषा त्रिपुरदहनसमये तु युद्धोपकरणं तेजिष्ठं शरमात्रमभूत्, अतः किमुभौ तुल्यबलौ उत न्यूनाधिकबलौ वेत्येवंरूपमभिप्रायं विज्ञायेत्यर्थः । केनापि निमित्तेन विरोधं जनयामास॥ १५॥ १६॥ तदेति । एकेनैव हुङ्कारेण शैवं धनुः जृम्भितं जडीकृतम् । स्तम्भितः जडीकृतः ॥ १७ ॥ देवैरिति । याचितौ युद्धाद्विरमतमिति याचितौ, प्रशमं युद्धोपशमं जग्मतुः ॥ १८ ॥ जृम्भितमिति । जृम्भितं विष्णुपराक्रमैर्जडीकृतम् धनुः शितिकण्ठं च दृष्ट्वा सकलजगद्व्यापकं विष्णुं शितिकण्ठात्पराक्रमैः ज्ञानशक्त्यादिभिश्च अधिकं सर्वोत्तमं मेनिरे। शितिकण्ठधनुषो वैष्णवं धनुश्चाधिकं

१-तदा । पूजयित्वा ततो विष्णुमामन्त्र्य च पिनाकिनम् । ब्रह्मेन्द्रादीन् पुरस्कृत्य नाकपृष्ठं ययुस्तदा ॥ इत्यधिकः पाठः ।

विष्ठानेन पूर्वं त्रिपुरघ्नम् । जृम्भितं विष्णवधिष्ठानाभावेन जृम्भितं दृष्ट्वा, न त्वीतशाकाभ्युत्क्षा शैवं शिवाभिमानमात्रविषयभूतम् । विष्णुपराक्रमैः । पूजायां बहुवचनम् । हुङ्कारेणेति पूर्वमुक्तेः । आधिक्यावबोधनं न पक्षपातमूलमित्याह सर्षिगणा इति । अतीन्द्रियार्थद्रष्टार ऋषयः, तेषां गणाः वैखा नसवालखिल्यादयः । "भूयसां स्यात् बलीयस्त्वम्" इतिन्यायेन तत् ज्ञानं न पक्षपातमूलं नवा भ्रान्तिमूलमितिभावः । एतेन "एक एव रुद्रो न द्वितीयायतस्थे" इत्यादिश्रुतिः "नकिरिन्द्रत्वदुत्तरः" इत्यादिवदितरापेक्षया श्रेष्ठत्वाभिप्राया । "एको ह वै नारायण आसीत्" इत्यादिश्रुत्युक्तो नारा यणापरपर्यायो विष्णुरेव परं तत्त्वमित्यभिहितम् । एतेन तमउद्रेकेण कदाचिद्रुद्रस्य पराजयो न दोषायेति केनचिदुक्तं प्रत्युक्तम् । तमोभिभवस्यैवापरत्व

धनू रुद्रस्तु संक्रुद्धो विदेहेषु महायशाः । देवरातस्य राजर्षेर्ददौ हस्ते ससायकम् ॥ २० ॥

नियामकत्वात् । इन्द्रजिता रामपराजयस्तु अदृश्यो न शब्दवेधेन वध्य इति धर्मप्रवर्तनाय । धर्मसंस्थापनाय हि तवदतार इत्युक्तम् । अत्र तु स्वरूपत एव रुद्रस्य पराजयः । किञ्च रुद्रपराजयस्य तमःकृतत्वे देवानामधिकत्वबुद्धिर्न स्यादेव । अयं च धनुर्भङ्गो दक्षयज्ञान्त इति बोध्यम् । अन्यथा "दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान्" इत्यादिना दक्षयज्ञान्ते रुद्रो देवानां धनुर्ददावित्युक्तं विरुध्येत । अत्रेदमेव धनुस्त्रिपुरघ्नमित्युक्तत्वादेतद्विरुद्धम् । मेरुधनुष्ट्वं पुराणान्तरोक्तमनादरणीयम् । ननु पूर्वं दक्षयज्ञान्ते रुद्रो देवेभ्यो धनुर्दत्तवानित्युक्तम् । पुनश्च देवराताय रुद्रो दत्तवानित्युक्तम् । विश्वामित्राश्रमे मुनिभिर्यज्ञे मेनिरे । धनुःप्रातिकथनेन "दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान्" इत्यादिना वाक्येन दक्षयज्ञान्ते महादेवो देवानां धनुर्ददावित्युक्तत्वाद्विरोधश्च दक्षयज्ञ एवेति प्रतीयते ॥ १९ ॥ धनू रुद्र इत्यादि । ननु पूर्वं दक्षयज्ञान्ते महादेवो देवानां धनुर्ददावित्युक्तम्, इदानीं तु महादेवो देवरातस्य हस्ते धनुर्ददावित्युच्यते । कथमेतत्सङ्गच्छते ? नास्ति सङ्गतिविरोधः, देवेभ्यो धनुषि दित्सिते तदानीमेतैर्देवैस्सन्निकर्षं गत्वा स्वयं गृहीतुं भीतैरस्मदर्थेऽस्य देवरातस्य देहीति प्रार्थितः सन् तस्य हस्ते दत्तवानिति कृत्वा सङ्गतमेतत्, एवं च सति 'न्यासभूतं तदा न्यस्तम्' इत्यस्यार्थो निष्पद्यते । भवतु नामैतत्सङ्गतम् । यदुक्तं विश्वामित्रयज्ञ संरक्षणान्ते मिथिलां जिगमिषुभिर्मुनिभिर्विश्वामित्रादिभिः 'यज्ञे जनकराजस्य देवैर्दत्तं धनुः' इति तत्कथं सङ्गच्छते ? देवरातैर्देवैर्न्यासतया स्थापितं ततःप्रभृति न्यासरूपतयैवैतस्य वंश्येषु वर्तमानं जनकेन स्वयं यज्ञे स्वत्वेन याचितं देवैस्तस्य यज्ञफलत्वेन दत्तमित्यर्थस्याविरोधनादेतदपि सुसङ्गतम् । अस्तु, अनसूया-समस्यायां सीतया यज्ञे जनकस्य वरुणेन दत्तं धनुरिति वक्ष्यते, तत्तु कथम् ? तत्रापि सङ्गतिरस्त्येव, देवैश्चोदितो वरुणः स्वहस्तेन यज्ञे जनकस्य दत्तवानित्यस्यार्थ स्यानवग्रहात् । तदयमत्र धनुरागतिक्रमः—पूर्वं देवतास्त्रिपुरवधाय विश्वकर्मनिर्मितं धनुर्महादेवाय ददुः, तद्दक्षयज्ञे विरोधे विष्णुजृम्भितं देवैः प्रार्थितो महादेवो देवरातस्य हस्ते दत्तवान्, ततःप्रभृति न्यासभावेन मैथिलेषु वर्त्तमानं तत् स्वत्वेन देवा वरुणेन यज्ञे जनकायादापयन्निति । परशुरामकार्मुकस्य वरुणहस्ते निक्षेपणं दिव्यं देवेष्वेवास्तु किं मनुष्येष्विति विशेषेण तस्य हस्ते निक्षेपणम्, स देवानामायुधानां निधायको दायकश्चेति ॥ २० ॥

जनकाय देवा ददुरित्युक्तम् । अनसूयासमीपे सीतया जनकाय [illegible] दत्तमित्युक्तम् । [illegible]मिदं सङ्गच्छते ? श्रूयताम्; पूर्वं देवास्त्रिपुरवधाय विश्वकर्मणा निर्मितं धनूरुद्राय ददुः । तद्दक्षयज्ञान्ते विरोधे विष्णुहुङ्कारेण जृम्भितं, देवैः प्रार्थितो रुद्रो देवरातस्य हस्ते दत्तवान् । ततःप्रभृति न्यासभावेन मैथिलेषु वर्त

इदं च वैष्णवं राम धनुः परपुरञ्जयम् । ऋचीके भार्गवे प्रादाद्विष्णुः संन्याससमुत्तमम् ॥ २१ ॥ ऋचीकस्तु महातेजाः पुत्रस्याप्रतिकर्मणः । पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः ॥ २२ ॥ न्यस्तशस्त्रे पितरि मे तपोबलसमन्विते । अर्जुनो विदधे मृत्युं प्राकृतां बुद्धिमास्थितः ॥ २३ ॥ वधमप्रतिरूपं तु पितुः श्रुत्वा सुदारुणम् । क्षत्रमुत्सादयन् रोषाज्जातंजातमनेकशः ॥ २४ ॥ पृथिवीं चाखिलां प्राप्य काश्यपाय महात्मने । यज्ञस्यान्ते तदा राम दक्षिणां पुण्यकर्मणे ॥ २५ ॥ दत्त्वा महेन्द्रनिलयस्तपोबलसमन्वितः । श्रुतवान् धनुषो भेदं ततोऽहं द्रुतमागतः ॥ २६ ॥ तदिदं वैष्णवं राम पितृपैतामहं महत् । क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व धनुरुत्तमम् ॥२७॥ योजयस्व धनुश्श्रेष्ठे शरं परपुरञ्जयम् । यदि शक्नोषि काकुत्स्थ द्वन्द्वं दास्यामि ते ततः ॥२८॥ इत्यार्षे॰ वा॰ पञ्चसप्ततितमः सर्गः ॥७५॥

मानं तत्स्वत्वेन देवा वरुणेन जनकायादापयन्निति क्रमः । तेन दक्षयज्ञान्ते धनुर्दानवचनं देवैर्जनकस्य यज्ञफलत्वेन दानवचनं वरुणेन दत्तत्ववचनं च समञ्जसं भवति ॥१९–२२॥ अर्जुनः कार्तवीर्यार्जुनः ॥२३॥ अनेकशः त्रिःसप्तकृत्वः ॥२४–२६॥ तदिदमिति । उत्तमम् अशिथिलमित्यर्थः । पितृपैतामहं पितृपितामहक्रमायातम् । उत्तरपदवृद्धिरार्षी । क्षत्रधर्ममिति ब्राह्मणवन्नशक्त इति मा ब्रूहीत्यर्थः ॥ २७ ॥ यदि शक्नोषि तावतापि न त्वां मुञ्चामि अपि तु ततः अनन्तरम्, द्वन्द्वयुद्धं दास्यामि । वीर्यपरीक्षणार्थमिदमिति भावः ॥२८॥ इति श्रीगो॰ श्रीरामा॰ मणिमं॰ बालकाण्डे पञ्चसप्ततितमः सर्गः ॥७५॥

इदं च वैष्णवमिति । इदं मत्करास्थितं धनुः । वैष्णवं विष्णुसम्बन्धि ॥ २१ ॥ वैष्णवधनुषः स्वहस्तागतिप्रकारमाह–ऋचीक इत्यादि । विष्णुः शितिकण्ठपराजयानन्तरम् ऋचीके न्यासं न्यासरूपेण प्रादादित्यर्थः ॥ २२ ॥ न्यस्तशस्त्र इत्यादि । मत्पितरि न्यस्तशस्त्रे न्यस्तधनुषि तपोबलसमन्विते सति । अर्जुनः कार्तवीर्यः । प्राकृतां तामसीम्, देहात्मबुद्धिमित्यर्थः । देहात्मबुद्ध्युत्पत्तावेव खल्वकृत्यप्रवृत्तिः ॥ २३–२७ ॥ योजयस्वेति । यदि शक्नोषि काकुत्स्थेति । शरसन्धान इति शेषः ॥ २८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

१ समन्वितः । स्थितोस्मि तस्मिंस्तत्यन्वै सुसुखं सुरसेविते । अद्य तूत्तमवीर्येण त्वया राम महाबल ॥ इत्यधिकः ।

अथ जामदग्न्यगर्वनिर्वापणं षट्सप्ततितमे--श्रुत्वेत्यादि । पितुर्गौरवादिति पितुः सन्निधिगौरवादित्यर्थः । यन्त्रिता नियमिता कथा उच्चैः कथनं येन स तथा ॥ १ ॥ श्रुतवानिति ।.पितुरानृण्यं पितृघातिक्षत्रवधेन पितृवैरशुद्धिमास्थितः सन् यत्कर्म त्रिःसप्तकृत्वः क्षत्रवधरूपं कृतवानसि तच्छ्रुतवानस्मि । तदनुरुन्ध्यामहे अनुरुन्ध्मः । अवश्यं शूरेण वैरशुद्धेः कर्तव्यत्वात् । कर्तरि यगार्षः ॥ २ ॥ वीर्येति । वीर्यहीनम् । अतएव क्षत्रधर्मेण प्राप्तधनुर्ग्रहण

श्रुत्वा तज्जामदग्न्यस्य वाक्यं दाशरथिस्तदा । गौरवाद्यन्त्रितकथः पितू राममथाब्रवीत् ॥ १ ॥ श्रुतवानस्मि यत्कर्म कृतवानसि भार्गव । अनुरुन्ध्यामहे ब्रह्मन् पितुरानृण्यमास्थितः ॥ २ ॥ वीर्यहीनमिवाशक्तं क्षत्रधर्मेण भार्गव । अवजानासि मे तेजः पश्य मेऽद्य पराक्रमम् ॥ ३ ॥ इत्युक्त्वा राघवः क्रुद्धो भार्गवस्य शरासनम् । शरं च प्रतिजग्राह हस्ताल्लघुपराक्रमः ॥ ४ ॥ आरोप्य स धनू रामश्शरं सज्यं चकार ह । जामदग्न्यं ततो रामं रामः क्रुद्धोऽब्रवीद्वचः ॥ ५ ॥ ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृतेन च । तस्माच्छक्तो न ते राम मोक्तुं प्राणहरं शरम् ॥ ६ ॥ इमां पादगतिं राम तपोबलसमार्जितान् । लोकानप्रतिमान् वा ते हनिष्यामि यदिच्छसि ॥ ७ ॥

युद्धादौ अशक्तमिव मन्यमानो यस्माद् अवजानासि 'क्षत्रधर्मं पुरस्कृत्य' इत्यादिना अवमानं कृतवानसि तन्नानुरुन्ध्यामहे । "अस्मदो द्वयोश्च" इति चकारादेकस्मिन् बहुवचनम् । अतः तेजःपरपरिभवासहनं पराक्रमम्, स्वशक्त्या पराभिभवनं च पश्य ॥ ३-५ ॥ विश्वामित्रकृतेन विश्वामित्रकृतस्नेहेन । विश्वामित्रभगिन्यां सत्यवत्यामृचीकाज्जातो जमदग्निः तस्य पुत्रः परशुराम इति विश्वामित्रसम्बन्धेनेत्यर्थः ॥ ६ ॥ ते तुभ्यम् । पादयोर्गतिं

श्रुत्वेति । गौरवाद्यन्त्रितकथ इति पितुर्गौरवान्नियमितवचनः । पितृसन्निधानाद्विनीतभाषीत्यर्थः ॥ १ ॥ श्रुतवानिति । हे भार्गव ! यत् क्षत्रवधादि कर्म कृतवानसि तच्छ्रुतवानस्मि । अनुरुन्ध्यामहे अनुसरामः । पितृहन्तॄणां क्षत्रियाणां वधेन वैरनिर्यातनं पितुरानृण्यम् आस्थितं कृतवन्तम् पितृभक्त्या खल्वेतत् क्षत्रियविनाशनं कृतवान् पितुरानृण्यं पुत्राणां कर्तव्यमिति भवत्कृतं क्षत्रविशसनं सहामहे इत्यर्थः । क्षत्रियसाधारण्येन मदवज्ञां न सहामहे इति भावः ॥ २-४ ॥ आरोप्येति । शरं सज्यं मौर्व्या सहितं चकार तस्यां समधत्तेत्यर्थः ॥ ५ ॥ ब्राह्मण इति । विश्वामित्रकृतेन विश्वामित्रार्थं च । अत्र तादर्थ्यवाची कृतशब्दः । विश्वामित्रभगिनी सत्यवती, तस्यामृचीकाज्जातो जमदग्निः, तस्य पुत्रोऽयमिति तत्र विश्वामित्रसम्बन्धं दृष्ट्वेत्यर्थः । तस्मात्कारणद्वयात् ॥ ६ ॥ इमामिति । तपोबलेन समार्जितान्

गमनम् । लोकान् लोकप्राप्तिम् । यदिच्छसि अनयोर्मध्ये यदिच्छसि तद्धन्तव्यमर्थं यदिच्छसीति पाठो युक्तः। उभयथा प्रतिबद्धः कश्चित्तिष्ठेन्न लोकं पीडये दिति रामस्य हृदयम् ॥ ७ ॥ वीर्येण स्वशक्त्या मोघो न पतति लक्ष्यमभित्वा न तूष्णीं पततीत्यर्थः ॥ ८ ॥ वरायुधेत्यादि । रामं तन्महदद्भुतं कर्म च द्रष्टुं समेता इत्यन्वयः ॥ ९ ॥ १० ॥ जडीकृत इति । लोके जने जडीकृते स्तब्धे । निर्वीर्यः निर्गतवैष्णवतेजाः । तथाच पुराणान्तरम्—" ततः

न ह्ययं वैष्णवो दिव्यः शरः परपुरञ्जयः । मोघः पतति वीर्येण बलदर्पविनाशनः ॥ ८ ॥ वरायुधधरं रामं द्रष्टुं सर्षिगणाः सुराः । पितामहं पुरस्कृत्य समेतास्तत्र सङ्घशः ॥ ९ ॥ गन्धर्वाप्सरसश्चैव सिद्धचारणकिन्नराः । यक्ष राक्षसनागाश्च तद्द्रष्टुं महदद्भुतम् ॥ १० ॥ जडीकृते तदा लोके रामे वरधनुर्द्धरे । निर्वीर्यो जामदग्न्योऽसौ रामो राममुदैक्षत ॥ ११ ॥ तेजोऽभिहतवीर्यत्वाज्जामदग्न्यो जडीकृतः । रामं कमलपत्राक्षं मन्दंमन्दमुवाच ह ॥ १२ ॥ काश्यपाय मया दत्ता यदा पूर्वं वसुन्धरा । विषये मे न वस्तव्यमिति मां काश्यपोऽब्रवीत् ॥ १३ ॥ सोऽहं गुरुवचः कुर्वन् पृथिव्यां न वसे निशाम् । कृता प्रतिज्ञा काकुत्स्थ कृता भूः काश्यपस्य हि ॥ १४ ॥ तदिमां त्वं गतिं वीर हन्तुं नार्हसि राघव । मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ १५ ॥

परशुरामस्य देहान्निर्गत्य वैष्णवम् । पश्यतां सर्वदेवानां तेजो राममुपाविशत् ॥" इति । उदैक्षत विस्मित इति शेषः ॥ ११ ॥ उवाच प्रश्नोत्तरमिति शेषः ॥ १२ ॥ काश्यपायेत्यादि । यदाब्रवीत्तदाप्रभृति न वस इत्यन्वयः । गुरुवचः काश्यपवचः । कुर्वन् परिपालयन् । कुत इत्यत्राह कृतेति । हिशब्दः प्रसिद्धौ । यतः सर्वप्रसिद्धतया भूः काश्यपस्य स्वत्वेन कृता त्वद्विषये न वत्स्यामीति प्रतिज्ञा च कृता, तस्मादित्यर्थः ॥ १३ ॥ १४ ॥ तदिमामिति ।

लोकान्। पादयोर्गतिं गतिशक्तिं वा लोकानिति सुकृतस्य फलप्रापणशक्तिं वा हनिष्यामीति भावः । यदिच्छसि उभयोर्मध्ये तद्धनिष्यामीत्यर्थः ॥ ७ ॥ न हीति । यस्माद्वैष्णवः ततो मोघो व्यर्थो न पतति लक्ष्यमभित्वा न निवर्तते ॥ ८ ॥ वरायुधधरं वैष्णवचापधरं तं श्रीरामं महदद्भुतं तत्कर्म च द्रष्टुकामः ॥ ९ ॥ १० ॥ जडी कृत इति । तदा लोके जने जडीकृते स्तब्धीकृते सति, निर्वीर्यः निर्गतं वीर्यं बलं यस्य स तथोक्तः। अनेन परशुरामशरीरान्निर्गत्य वैष्णवं तेजो रामभद्रे संक्रान्त मिति वेदितव्यम् । तथा च नारसिंहपुराणे—" ततः परशुरामस्य देहान्निर्गत्य वैष्णवम् । पश्यतां सर्वदेवानां तेजो राममुपाविशत ॥ " इति ॥ ११–१६ ॥

गतिः गमनम् ॥ १९ ॥ लोकहननं नाम लोकदानप्रतिबन्धः । भूतस्य वा अभूतस्य वा कार्यस्य प्रतिहननमेव रामशरस्यापेक्षितमिति भावः ॥१६॥ अक्षयमिति । अक्षयं निर्विकारम् । मधुहन्तारं विरोधिनिरसनशीलम् । अनेन " न ब्रह्मा नेशानः " इति महोपनिषदुपबृंहिता । परामर्शात् ग्रहणात् ॥ १७ ॥ १८ ॥ इयं त्वया विमुखीकृतिः । व्रीडा लज्जा ॥ १९ ॥ शरमोक्षे सति । अहं दृष्टशरलक्ष्यस्वार्जितलोकगतिः ॥ २० ॥ २१ ॥ हत्य दृष्ट्वा ।



लोकास्त्वप्रतिमा राम निर्जितास्तपसा मया । जहि तान् शरमुख्येन माभूत्कालस्य पर्ययः ॥ १६ ॥ अक्षयं मधुहन्तारं जानामि त्वां सुरोत्तमम् । धनुषोऽस्य परामर्शात् स्वस्ति तेऽस्तु परंतप ॥ १७ ॥ एते सुरगणाः सर्वे निरीक्षन्ते समागताः । त्वामप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ॥ १८ ॥ न चेयं मम काकुत्स्थ व्रीडा भवितुमर्हति । त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ॥ १९ ॥ शरमप्रतिमं राम मोक्तुमर्हसि सुव्रत । शरमोक्षे गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ २० ॥ तथा ब्रुवति रामे तु जामदग्न्ये प्रतापवान् । रामो दाशरथिः श्रीमांश्चिक्षेप शरमुत्तमम् ॥ २१ ॥ स हतान् दृश्य रामेण स्वान् लोकान् तपसार्जितान् । जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमम् ॥ २२ ॥ ततो वितिमिराः सर्वा दिशश्चोपदिशस्तथा । सुराः सर्षिगणा रामं प्रशशंसुरुदायुधम् ॥ २३ ॥ रामं दाशरथिं रामो जामदग्न्यः प्रशस्य च । ततः प्रदक्षिणं कृत्वा जगामात्मगतिं प्रभुः ॥२४॥ इत्यार्षे० बाल० षट्सप्ततितमः सर्गः ॥७६॥

लोकान् हतान् लोकप्राप्तिहेतुकर्माणि विफलीकृतानीत्यर्थः ॥ २२ ॥ २३ ॥ आत्मगतिं स्वस्थानम् ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्सप्ततितमः सर्गः ॥ ७६ ॥

अक्षय्यमिति । अस्य इतरदुरारोपणस्य धनुषः परामर्शादारोपणाद्धेतोः त्वामक्षय्यं केनापि क्षयं पराजयं नेतुमशक्यम्, मधुहन्तारं पुरुषोत्तमं सुरोत्तमं देवदेवं जानामि निश्चिनोमि ।(अक्षय्यमिति पाठः) ॥ १७ ॥ १८ ॥ नेति । यदहं पूर्वं तादृशः, त्रैलोक्यनाथेन त्वया विमुखीकृतः परिभूतः, इयं विमुखीकरणजन्या व्रीडा लज्जा भवितुं नार्हति, स्वामिनः सकाशात् पराजयो न व्रीडामावहतीत्यर्थः ॥ १९–२३ ॥ राममिति । आत्मगतिं यथा पूर्वं विहायसा शीघ्रगमनं गन्तव्यं माहेन्द्रं वा ॥ २४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां षट्सप्ततितमः सर्गः ॥ ७६ ॥



तिलकं–यतः "उतामृतत्वस्येशानः" इति श्रुतिप्रसिद्धं ब्रह्मैव त्वमित्याह–अक्षय्यं अनाद्यन्तम् केनापि पराजयं नेतुमशक्यं च । एवं निश्चये हेतुः–धनुष इति । अस्य वैष्णवस्य इतरदुरारोपस्य परामर्शो ग्रहणाकर्षणादिः ॥ १७

अथ स्वपुरं प्राप्य सीतया रामः सुखमुवासेत्याह सप्तसप्ततितमे—गत इत्यादि । रामे परशुरामे । वरुणाय न्यासत्वेनेति शेषः । अप्रमेयाय अदृश्यायेत्यर्थः ॥१॥ विह्वलं परवशम् । अनेन परशुरामेण कृतां परत्वसूचिकां स्तुतिं वरुणाय धनुर्दानं च दशरथो न ज्ञातवानिति गम्यते ॥ २ ॥ चतुरङ्गिणीति "प्रातिपदिकान्तनुम्—" इत्यादिना णत्वम् ॥ ३ ॥ रामस्येत्यादिश्लोकद्वयमेकान्वयम् । रामस्य वचनं श्रुत्वा विह्वलतया अस्पष्टं वचनं श्रुत्वा ॥४॥



गते रामे प्रशान्तात्मा रामो दाशरथिर्धनुः । वरुणायाप्रमेयाय ददौ हस्ते ससायकम् ॥ १ ॥ अभिवाद्य ततो रामो वसिष्ठप्रमुखानृषीन् । पितरं विह्वलं दृष्ट्वा प्रोवाच रघुनन्दनः ॥ २ ॥ जामदग्न्यो गतो रामः प्रयातु चतुरङ्गिणी । अयोध्याभिमुखी सेना त्वया नाथेन पालिता[1] ॥३॥ रामस्य वचनं श्रुत्वा राजा दशरथः सुतम् । बाहुभ्यां सम्परिष्वज्य मूर्ध्नि चाघ्राय राघवम् ॥ ४ ॥ गतो राम इति श्रुत्वा हृष्टः प्रमुदितो नृपः ॥५॥ पुनर्जातं तदा मेने पुत्रमात्मानमेव च । चोदयामास तां सेनां जगामाशु ततः पुरीम् ॥ ६ ॥ पताकाध्वजिनीं रम्यां तूर्योद्घुष्टनिनादिताम् । सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् ॥ ७ ॥ राजप्रवेशसुमुखैः पौरैर्मङ्गलवादिभिः । सम्पूर्णां प्राविशद्राजा जनौघैः समलंकृताम् ॥ ८ ॥ पौरैः प्रत्युद्गतो दूरं द्विजैश्च पुरवासिभिः । पुत्रैरनुगतः श्रीमान् श्रीमद्भिश्च महायशाः ॥९॥

गतो राम इति श्रुत्वा । क्रमेण पुनः स्पष्टं श्रुत्वेत्यर्थः । हृष्टः पुलकितः ॥ ५ ॥ ६ ॥ रम्यामिति पुनरुक्तिस्तत्तद्विशेषणकृतरमणीयत्वाभिप्रायेण । पताका ध्वजपटः, ध्वजः दण्डः, पताकान्विता ध्वजा अस्यां सन्तीति पताकाध्वजिनीम् । ह्रस्वदीर्घध्वजभेद इत्यप्याहुः । उद्घुष्टमिति भावे निष्ठा । तूर्योद्घोषेण सञ्जातनिनादामित्यर्थः ॥७॥ राजप्रवेशेन सुमुखैः विकसन्मुखैः । मङ्गलम् आशीर्वचनं वक्तुं शीलमेषामस्तीति मङ्गलवादिभिः ॥ ८ ॥ ९ ॥

गत इति । प्रशान्तात्मा प्रशान्तो गतक्रोधः आत्मा मनो यस्य स तथोक्तः ॥१॥ विह्वलं परशुरामभयेन धनुर्दानवृत्तान्तस्य मायया तिरोधानमन्यान् प्रति ॥२–४॥ गत इति । हृष्टः पुलकितो विस्मितो वा ॥५॥६॥ पताकाध्वजिनीमिति । पताकाः श्रेणीकृताः क्षुद्रध्वजाः, इतरे पुनर्महाध्वजाः । रम्यां स्वभावतो रम्याम् । सिक्तराज

---

१ पालिता । संदिशस्व महाराज सेनां त्वच्छासने स्थिताम् । शासनं कांक्षते सेना चातकालिर्जलं यथा ॥ इत्यधिकः पाठः ।

जनः सम्बन्धिजनः। गृहे स्थितैरिति शेषः। काम्यन्त इति कामाः, विषयभोगपरिकराः तैः ॥ १० ॥ वधूनां स्नुषाणाम् । प्रतिग्रहे उपचारे स्वस्वान्तःपुरानयने वा। "वधूर्जाया स्नुषा" इत्यमरः । युक्ता आसक्ताः, आसन्निति शेषः ॥ ११ ॥ जगृहुः अन्तःपुरं प्रावेशयन् ॥ १२ ॥ मङ्गलालापनैः स्वस्तिवाचनैः, शोभिताः । मङ्गलालम्भनैरितिपाठे–आलम्भनं चन्दनचर्चा । देवतायतनानि गृहदेवतानामर्चागृहाणि । प्रत्य

प्रविवेश गृहं राजा हिमवत्सदृशं पुनः । ननन्द सजनो राजा गृहे कामैः सुपूजितः ॥ १० ॥ कौसल्या च सुमित्रा च कैकयी च सुमध्यमा । वधूप्रतिग्रहे युक्ता याश्चान्या राजयोषितः ॥ ११ ॥ ततः सीतां महाभागामूर्मिलां च यशस्विनीम् । कुशध्वजसुते चोभे जगृहुर्नृपपत्नयः ॥ १२ ॥ मङ्गलालापनैश्चैव शोभिताः क्षौमवाससः । देवतायतनान्याशु सर्वास्ताः प्रत्यपूजयन् ॥ १३ ॥ अभिवाद्याभिवाद्यांश्च सर्वा राजसुतास्तदा । रेमिरे मुदिताः सर्वा भर्तृभिः सहिता रहः ॥ १४ ॥ कुमाराश्च महात्मानो वीर्येणाप्रतिमा भुवि । कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः । शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः ॥ १५ ॥ कस्यचित्त्वथ कालस्य राजा दशरथः सुतम् । भरतं कैकयीपुत्रमब्रवीद्रघुनन्दनः ॥ १६ ॥ अयं केकयराजस्य पुत्रो वसति पुत्रक । त्वां नेतुमागतो वीर युधाजिन्मातुलस्तव ॥ १७ ॥ श्रुत्वा दशरथस्यैतद्भरतः कैकयीसुतः । गमनायाभिचक्राम शत्रुघ्नसहितस्तदा ॥ १८ ॥

पूजयन् गन्धपुष्पादिभिरपूजयन् । आयतनपूजामात्रे स्त्रीणामधिकारादिति भावः ॥ १३ ॥ अभिवाद्येति । सर्वा अभिवाद्य सर्वा रेमिर इत्यन्वयः ॥ १४ ॥ वर्तयन्ति अनुवर्तयन्ति स्म ॥ १५ ॥ कस्यचित्त्वथ कालस्य कस्मिंश्चित्काले गते सति ॥ १६ ॥ मातुलस्तवेति । अतो गच्छेति व्यञ्जना

पथां रम्यां कुसुमोत्करादिभिरुपचारैः रम्याम् ॥ ७–१० ॥ कौसल्येति । वधूप्रतिग्रहे वधूनां स्नुषाणां प्रतिग्रहे युक्तास्तत्पराः ॥११॥१२॥ मङ्गलालम्भनैः मङ्गलालङ्करणैः । देवतायतनानि गृहदेवताप्रतिमाः॥१३॥१४॥ कृतदारा इति । पितरं शुश्रूषमाणाः वर्तयन्ति उज्जीवयन्ति, आह्लादयन्तीति यावत् । कृतास्त्राः लब्धास्त्राः॥ 

१ स्वदा । स्वं स्वं गृहमथासाद्य कुबेरभवनोपमम् । गोभिर्धनैश्च धान्यैश्च तर्पयित्वा द्विजोत्तमान् ॥ २ नरर्षभाः । कालेकाले तु नीतिज्ञास्तोषयन्तो गुरुं गुणैः । ३ सुतम् । विनयं देहयोगेन संप्राप्तमिव संस्थितम् । ४ स्तत्र । प्रार्थितस्तेन धर्मज्ञ मिथिलायामहं तथा । ऋषिमध्ये तु तस्य त्वं प्रीतिं कर्तुमिहार्हसि ॥ ५ सुतः। अभिवाद्य गुरुं रामं परिष्वज्य च लक्ष्मणम् । इत्यधिकः पाठः ।

वृत्त्योक्तिः पुत्रविरहकातर्यात् ॥ १७ ॥ १८ ॥ अक्लिष्ट कस्यापि दुःखरहितं यथा भवति तथा कर्तुं शीलमस्त्यस्येति तथा ॥ १९-२१ ॥ परमयन्त्रितः परमम् अत्यन्तं यन्त्रितः श्रुतिस्मृतिमर्यादानतिलङ्घी । गुरुकार्याणि गुरूचितशुश्रूषादिकार्याणि । अन्ववैक्षत परिपालयति स्मेत्यर्थः ॥ २२ ॥ एवमेतादृशेन शीलवृत्तेन । नैगमाः वणिजः ॥ २३ ॥ न केवलं शीलवृत्तेन, किन्तु सर्वैरपि गुणैरित्याशयेनाह–तेषामिति ।

आपृच्छ्य पितरं शूरो रामं चाक्लिष्टकारिणम् । मातृश्चापि नरश्रेष्ठः शत्रुघ्नसहितो ययौ ॥ १९ ॥ गते च भरते रामो लक्ष्मणश्च महाबलः । पितरं देवसङ्काशं पूजयामासतुस्तदा ॥ २० ॥ पितुराज्ञां पुरस्कृत्य पौरकार्याणि सर्वशः । चकार रामो धर्मात्मा प्रियाणि च हितानि च ॥ २१ ॥ मातृभ्यो मातृकार्याणि कृत्वा परमयन्त्रितः । गुरूणां गुरुकार्याणि कालेकालेऽन्ववैक्षत ॥ २२ ॥ एवं दशरथः प्रीतो ब्राह्मणा नैगमास्तदा । रामस्य शीलवृत्तेन सर्वे विषयवासिनः ॥२३॥ तेषामतियशा लोके रामः सत्यपराक्रमः। स्वयम्भूरिव भूतानां बभूव गुणवत्तरः॥२४॥ रामस्तु सीतया सार्द्धं विजहार बहूनृतून्। मनस्वी तद्गतस्तस्या नित्यं हृदि समर्पितः ॥ २५ ॥

तेषां ब्राह्मणादीनां मध्ये ॥ २४ ॥ एवं धर्मपरतां रामस्योक्त्वा धर्माविरुद्धकामाभिरतिं दर्शयति–रामस्त्वित्यादिना श्लोकचतुष्टयेन । रामस्तु तुशब्देन पूर्वस्माद्वैलक्षण्यमुच्यते । पितृशुश्रूषणधर्मप्रवर्तनदेवताराधनादिकं हि पूर्वमुक्तम् । स एवं कर्ता संप्रति वात्स्यायनमभ्यस्य कामतन्त्रपरोऽभूत् । सीतया अयोनिजया "सहयुक्तेऽप्रधाने" इति तृतीया। स्वाभाविकसौन्दर्यसमृद्धचैवावतीर्णापि भोगतन्त्रेतस्यप्रधानाभूदिति रामस्य प्रावण्यातिशयः प्रदर्शितः । विजहार। परस्मैपदेन फलापर्यवसायितोच्यते । "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति विहाररूपक्रियाफलस्य कर्तृगामित्वे

नरर्षभाः रामादयः ॥ १५-२० ॥ प्रियाणि इष्टप्रातिरूपाणि । हितानि अनिष्टनिवर्तकानि ॥ २१ ॥ मातृभ्य इति । अन्ववैक्षत अनुसन्दधे ॥ २२ ॥ एवमिति । एवंविधेन रामस्य शीलवृत्तेन। नैगमाः पौराः, दशरथादयश्च प्रीताः ॥ २३ ॥ तेषामिति । तेषां ब्राह्मणादीनां रामो गुणवत्तरः प्रियतरो बभूव ॥ २४ ॥ राम इति । तद्गतः तद्गतान्तःकरणः । तस्याः सीतायाः हृदि समर्पितः । यद्वा तद्गतः तद्गतमना रामः तां हृदि समर्पयदित्यर्थः ॥ २५ ॥ प्रिया त्विति । सीता रामस्य पितृ

ह्यात्मनेपदमेव भवेत्। तथा च चिरतरविहारोपि भोगोपाधातकलिता नातिशेत इति भावः। बहूनृतून्। अत्यन्तसंयोगे द्वितीया। तया भोगनैरन्तर्यं सूच्यते। बहून् ऋतूनित्युक्तं न तु वत्सरानिति। तेन तत्तदृतूचितभोगोपकरणैर्भोगान् स बुभुज इत्युक्तम्। मनोऽस्यास्तीति मनस्वी। भूमार्थे मत्वर्थीयः। तथा च संश्लेषदशायां सीतासङ्कल्पमप्यातिशय्य भोगस्रोतःप्रवर्तयितेत्यर्थः। नित्यं तद्गतः तस्यां गतः "सप्तमी-" इति योगविभागात्समासः। जातिगुणवदपृथक्सिद्धतया तदेकरसोऽभूदित्यर्थः। सर्वदा तदासक्तचित्तोऽभूदिति भावः। तस्या हृदि नित्यं समर्पितः, सीतापि रामकृततत्तद्व्यापारेण वशीकृता तदायत्तचित्तासीत्। नित्यं सुचिरं भोगेऽपि सद्यःसङ्गतेव निरवधिकप्रेमभारभरिताभूदित्यर्थः॥२५॥नित्यं तद्गत इत्यत्र हेतुमाह-प्रिया त्विति।

प्रिया तु सीता रामस्य दाराः पितृकृता इति। गुणाद्रूपगुणाच्चापि प्रीतिर्भूयोऽभ्यवर्द्धत ॥ २६ ॥
तस्याश्च भर्ता द्विगुणं हृदये परिवर्तते। अन्तर्जातमपि व्यक्तमाख्याति हृदयं हृदा ॥ २७ ॥

तुरवधारणे। पितृकृता दारा इतिहेतोरेव रामस्य सीता प्रियासीत्। तर्हि सीतावैलक्षण्यमकिञ्चित्करम्, नेत्याह-गुणात् भर्तृशुश्रूणादिगुणात्। रूपस्य देहस्य गुणात् सौन्दर्यात्। अपिशब्दोऽनुक्तसमुच्चयार्थः। आभिजात्यादिभिश्च प्रीतिर्भूयोऽभ्यवर्द्धत। रामस्य सीतायामित्यर्थसिद्धम्। अतो बहूनृतून् विजहारेत्यन्वयः ॥ २६ ॥ अथ रामस्येव सीताया अपि रामे निरन्तरानुरागं दर्शयन् तस्या हृदि नित्यं समर्पित इत्युक्तं विवृणोति-तस्याश्चेति। तस्या भर्ता रामश्च। हृदये सीताया हृदये। द्विगुणं यथा भवति तथा परिवर्तते, रामाद्विगुणा प्रीतिः सीताया रामेऽभूदित्यर्थः। यथा रामस्य सीतायां प्रीतिः पितृकृतदारत्वकृता सौन्दर्यकृता च, एवं रामेऽपि सीतायाः प्रीतिर्नोभयकृता, किन्तु भर्तृत्वमात्रकृता। वक्ष्यत्यनसूयां प्रति सीता-"यद्यप्येष भवेद्भर्ता ममार्ये वृत्तवर्जितः। अद्वैधमुपचर्तव्यस्तथाप्येष मया भवेत्॥" इत्यादि। अनेन गुणादित्युक्तरामविषयानुरागो विवृतः। एतादृशानुरागो रामेण कथं विज्ञायत इत्यत्राह अन्तरिति। अन्तर्जातं सीताहृद्गतमपि हृदयगूढभावम्, अनुरागमिति यावत्। हृदा तर्केण, अनुभावैरितियावत्। व्यक्तमाख्याति जानाति। चक्षिङः ख्याआदेशः सार्वधातुकेऽप्यार्षः। तस्य दर्शनार्थत्वं चक्षुरित्यादौ सिद्धम्। परकीयहृदयं कथं व्यक्तीभवतीत्यपेक्षायां

कृता दारा इति गौरवेण प्रिया बभूव। पितृकृतविवाहः श्लाघनीयः। गुणाद्रूपगुणाच्चेति। गुणाच्छन्दानुवर्तनात् रूपगुणात् सौन्दर्यातिशयाच्च प्रीतिर्भूयोऽभ्यवर्द्धत ॥ २६ ॥ तस्याश्चेति। भर्ता रामः, हृदयम् अभिप्रायम्, हृदा मनसा, व्यक्तमाख्याति जानाति। इदमुत्तरश्लोकस्य शेषः। तस्य हृदये मैथिली भूयोपि

तत्रैव सर्वदा परिवर्तमानत्वात् इत्युक्तं पूर्वार्धे ॥ २७ ॥ रामवत् सीतापि रामहृदयं विशेषेण व्यक्तं वेत्तीत्याह—तस्येति । तस्य रामस्य हृदयं सीता भूयो विशेषेण रामादतिरिक्तं जानातीत्यर्थः । रामो यादृशभोगमभिलषति तदिङ्गितेन ज्ञात्वा स्वयं तदनुरूपा भवति, नतु तदतिरिक्तभोग मभिलषते । एवं रामोऽपीति भावः । रामादप्यतिशयेन सीतायाः कान्तेङ्गितपरिज्ञाने हेतुचतुष्टयमाह मैथिलीत्यादि । देशस्वभावाद्वंशस्वभावाच्च सूक्ष्मज्ञा । देवताभिः समेति प्रागल्भ्यमुच्यते । रूपे विषये रूपिणी सर्वैर्दृश्यमानरूपवती श्रीरिव स्थिता । अनेन सहजबुद्धिविशेषो दर्शितः ॥ २८ ॥

तस्य भूयो विशेषेण मैथिली जनकात्मजा। देवताभिः समा रूपे सीता श्रीरिव रूपिणी ॥ २८ ॥
तया स राजर्षिसुतोऽभिरामया समेयिवानुत्तमराजकन्यया ।
अतीव रामः शुशुभेऽतिकामया विभुः श्रिया विष्णुरिवामरेश्वरः ॥ २९ ॥

इत्यार्षे श्रीरामायणे आदिकाव्ये वाल्मीकीये चतुर्विंशत्सहस्रिकायां संहितायां श्रीमद्बालकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥ इति श्रीमद्बालकाण्डः समाप्तः ॥ श्रीरस्तु ॥



एवमनवधिकमन्योन्यानुरागमुपपाद्य तदनुरूपं भोगं दर्शयति—तयेति। राजर्षिसुतः महाराजसुतत्वेन निरवधिकभोगोपकरणवान् । उत्तमराजकन्यया ततोऽप्यधिकतदुपकरणवत्या । रामः रमयिता । अभिरामया ततोऽप्यतिशयेन रमयित्र्या । सः अतिशयितकामः । अतिकामया रामादप्यधिककामये त्यर्थः । तया सीतया । समेयिवान् सम्यगेयिवान् । एकीभावेन संश्लिष्टः स्वयंग्रहाश्लेषविषयीभूतःसन् " लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च । सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिश्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥" इतिवत् । विभुः प्रत्यालिङ्गनादिसमर्थः। अमरेश्वरो विष्णुः आदिविष्णुः। श्रियेव मूर्तिभेदेनोपमानत्वम्। अतीव अतिशयेन शुशुभे रेजे । तुल्यानुरागस्य विशेषेण अतिशयेन । एतदुक्तं भवति—परस्परहृदयान्तर्वर्तनेन परस्परस्वभावमुभौ जानाते इति ॥ २७ ॥ २८ ॥ तया स इति । अभिरामया अभिरूपया अति

अतिशयितस्त्रीकामस्य । भोगसमृद्धिहेतुत्वादिति भावः ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्ड व्याख्याने सप्तसप्ततितमः सर्गः ॥७७॥ वेदे शास्त्रेषु वादेष्यनितरसुलभां कीर्तिमाटीकमानः काव्यालङ्कारनाटचप्रभृतिषु पटुधीः कोऽपि टीकाविधाने । शुद्धान्तःपद्मशुद्धान्तितमधुमथनः शुद्धसत्त्वैकमूर्तिर्गोविन्दार्यो विचार्य्य व्यतनुत विमलां बालकाण्डस्य टीकाम् ॥ श्रीरघुनन्दनपरब्रह्मणे नमः ॥

तनि०—राजर्षिसुत इति उत्तमराजकन्ययेति च अभिजनवृत्तादितौल्यमुक्तम् । अभिरामया सौन्दर्येणातिरमणीयया अतिकामया अतिस्नेहया समेयिवान् । अति संश्लेषेण अभेदं प्राप्तः । यद्वा अतिकामया अतिक्रान्तमन्मथया । तेनाप्राकृतविग्रहवत्तया दिव्यदम्पतिभोग एवात्राभिव्यज्यते ॥ २९ ॥ इति श्री अहोबलाचार्यानुवादिता श्रीमद्बालकाण्डतनिश्लोकीव्याख्या समाप्ता ॥ श्रीरामचन्द्रपरब्रह्मणे नमः ॥

कामया अनुरक्तया भर्तरि अतिस्नेहया तया समेयिवान् सङ्गतः । अमरेश्वरो विष्णुः श्रियेव शुशुभ इति सम्बन्धः ॥ २९ ॥ इति श्रीपरमहंसपरिव्राजकाचार्य श्रीनारायणतीर्थशिष्यश्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां बालकाण्डव्याख्यायां सप्तसप्ततितमः सर्गः ॥ ७७ ॥

महेशतीर्थरचिता रामपादसमर्पिता । श्रीबालकाण्डव्याख्येयं समाप्ता तत्त्वदीपिका ॥

## इति श्रीरामायणे बालकाण्डः समाप्तः ॥

## ॥ इति श्रीमद्वाल्मीकिरामायणे बालकाण्डम् ॥

श्रीभूषणादिव्याख्याचतुष्टयालंकृतं मुनिभावप्रकाशिका–सत्यतीर्थीयादिव्याख्योद्धृतटिप्पणीसंवलितं च ॥

# THE VĀLMĪKĪYA RĀMĀYAṆA

# श्रीमद्वाल्मीकीयरामायणम्

श्री-गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्य-व्याख्याचतुष्टयालङ्कृतम्

## अयोध्याकाण्डम्

क्षेमराज श्रीकृष्णदासेन सम्पादितस्य मुम्बई श्री वेंकटेश्वरस्टीम मुद्रणालयेन प्रकाशितस्य पुनर्मुद्रणम्


# श्रीमद्वाल्मीकीयरामायणम्

# THE VALMIKIYA RAMAYANA

[श्री-गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्यव्याख्या चतुष्टयालङ्कृतं मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृत टिप्पणी संवलितम् च]

द्वितीय खण्ड :: अयोध्याकाण्डम्



NAG PUBLISHERS
11A/U. A. Jawahar Nagar, Delhi-7 (India)

**This publication has been brought out with the financial assistance from the Govt. of India, Ministry of Human Resource Development.**

[If any defect is found in this book please return to the publisher per V. P. P. for postage for free exchange].

NAG PUBLISHERS

(i) 11A/U. A. (Post Office Building), Jawahar Nagar, Delhi-110007

(ii) 8A/U.A. 3, Jawahar Nagar, Delhi-110007

(iii) Jalalpur Mafi (Chunar-Mirzapur) U. P.

I S B N 81-7081-232-1

1990

Price : Rs. 3000.00 (For 7 vols. set)

**PRINTED IN INDIA**

**Published by Nag Sharan Singh for Nag Publishers 11A/U.A., Jawahar Nagar, Delhi-110007**

# ॥ अथ श्रीमद्वाल्मीकिरामायणे अयोध्याकाण्डम् ॥

श्रीभूषणादिव्याख्याचतुष्टयालंकृतं मुनिभावप्रकाशिकादिव्याख्योद्धृतटिप्पणीसंवलितं च ॥

श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरघुनन्दनपरब्रह्मणे नमः ॥ श्रीमते रामानुजाय नमः ॥

श्रावंश्रावं शठारेः शमदमवपुषः फुल्लवक्त्रारविन्दादालोच्यालोच्य वाचा प्रकृतिमधुरया प्रोच्य विद्वज्जनेभ्यः ।
गोविन्दार्यः सुधीशः कुशिककुलमणिर्गूढगाढाशयाढ्यं सम्यक् साकेतकाण्डं सरसजनमुदे सादरं व्याकरोति ॥

प्रथमे काण्डे " एतस्मिन्नन्तरे विष्णुः " इत्यादिना " यतो वा इमानि " इत्यादिश्रुतिप्रतिपादितं जगत्कारणत्वम् "अहं वेद्मि महात्मानम्" इत्यादिना पुरुषसूक्तोक्तमहापुरुषत्वम् " त्वमनादिरनिर्देश्यः " इत्यादिना अचिन्त्यवैभवत्वम् इत्येवं सर्वस्मात्परत्वमुक्तम् " अधिकं मेनिरे विष्णुम् " इत्यादिना तदितरेषामपरत्वं च । सम्प्रति तस्य हेयप्रत्यनीककल्याणैकतानता प्रतिपाद्यते द्वितीयकाण्डेन । अथवा पूर्वं वक्ष्यमाणधर्मानुष्ठानोपयोगि-

**गच्छता मातुलकुलं भरतेन तदानघः । शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥ १ ॥**

तया रामायणपुरुषाणां महाकुलप्रसूतत्वमहागुरुकृपालब्धधनुर्वेदरहस्यत्वतत्संवादभूतताटकाताटकेयादिनिरासहरधनुर्भङ्गवैष्णवचापपरिग्रहप्रभृति गुणाः सहधर्मचारिणीयोगश्च सप्रपञ्चं दर्शिताः । अथ तदनुष्ठिताः पितृवचनपरिपालनादिसामान्यधर्माः भगवच्छेषत्वपारतन्त्र्यभागवताभिमाननिष्ठारूपविशेषधर्माश्च प्रतिपाद्यन्ते । पूर्वकाण्डे लक्ष्मीयोगो दर्शितः । अत्र भूमियोगः प्रदर्शित इत्यपि ब्रुवते । पूर्वं परत्वमुक्तम् अत्र सौलभ्यमित्यप्याहुः । पूर्वं लक्ष्मीविशिष्टं प्राप्यस्वरूपमुक्तम्, प्राप्तृरूपजीवस्वरूपमत्र निरूप्यते । तत्र प्रथममतिरहस्यतयावश्यविज्ञातव्यां लघूपपादनां भागवताभिमाननिष्ठां शत्रुघ्नानुष्ठानमुखेन दर्शयति–गच्छतेति । गच्छता वर्तमाननिर्देशेन शत्रुघ्नगमनस्य भरतगमनेनैककालत्वावगमादसिवसनादिवत्तस्य तदेक

श्रीमदयोध्याकाण्डे व्याख्येयानि व्याक्रियन्ते–गच्छतेति । मातुलकुलं मातुलगृहम्, तदा पितृभ्रात्रनुज्ञानन्तरम् । अनघः सोदरो लक्ष्मणो बलवन्तं राममाश्रितः मयापि महदाश्रयः कर्तव्य इत्येवंविधकलुषबुद्धिरहित इत्यर्थः । नित्यशत्रुघ्नः–नित्यशत्रवः कामादयः तान् हन्तीति तथा । नीतः–मातुलगृहवासजनितसौख्यादिक

**मुनिभावप्रकाशिका**–अनघः जन्मप्रभृति लक्ष्मणो राममिव भरतानुवर्तनेन मातृपितृभ्रातृवियोगदुःखरहितः । नित्यशत्रुघ्नः–नित्यशत्रवः चक्षुःश्रोत्रादीनि इन्द्रियाणि तानि घ्नन्तीति नित्यशत्रुघ्नः, जितेन्द्रिय इति यावत् । दृष्टिचित्तापहारिणि रामे आसक्तं चक्षुरिन्द्रियं निगृह्य भरतेन सह गतत्वाज्जितेन्द्रियत्वं प्रत्यक्षसिद्धम् ॥ १ ॥ **विषम०**–अनघः–अहमपि दाशरथिः मम भ्रात्रनुवर्तनं किमित्येवम् अघं न विद्यते यस्य सः ॥ १ ॥

पारतन्त्र्यं गम्यते । मातुलकुलं मातुलगृहम् । द्वितीयया भरतोद्देश्यस्यैव शत्रुघ्नोद्देश्यत्वावबोधनाच्छेष्युद्देश्योद्देश्यकत्वरूपं पारतन्त्र्यमुच्यते । भगवत्पारतन्त्र्यरूपं भागवतत्वमाह भरतेनेति । भरत इति राज्यस्य भरणादिति सहस्रानीकनिर्वहणात् । रामे वनं गते तदनुसारिणि च लक्ष्मणे राजनि च त्रिदशसदनमुपसेदुषि केवलरामाज्ञया प्राज्यराज्यभारनिर्वाहकरणेनेत्यर्थः । तदा तद्गमनकाल एव । अनेन स्वानुकूलचन्द्रताराबलाद्यनपेक्षणोक्त्या पारतन्त्र्यमेव विशेषितम् । अनघः अस्मिन् प्रकरणे अघशब्देन केवलरामभक्तिरुच्यते, स्वशेषिभूतभरतोद्देश्यताकारेण हि शत्रुघ्नस्य रामभक्तिरुद्देश्या अतएव वक्ष्यति–"नाहं स्वपिमि जागर्मि तमेवार्यं विचिन्तयन्" इति । "जग्राह भरतो रश्मीन् शत्रुघ्नश्छत्रमाददे" इति च । अनिष्टावहस्य पापशब्दवाच्यत्वात् स्वशेषिभरतोद्देश्यत्वाकारं विना रामभक्तेरनिष्टावहत्वात्तस्याघत्वम् " न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्त्तन्ते " इति श्रुतौ सुकृतस्य मुमुक्षोरनिष्टावहत्वेन पाप्मत्वव्यपदेशात् । शत्रुघ्नः शत्रून् लवणासुरादीन् हनिष्यत्ययमिति भाविप्रतिसन्धानेन शत्रुघ्न इतिवसिष्ठेन कृतनामधेयः । नित्यशत्रुघ्नः नित्यशत्रवो ज्ञानेन्द्रियाणि,शरीरे नित्यं सन्निधाय विषयान्तरप्रावण्यरूपविपरीतकार्यकारित्वात्; तान् हन्तीति नित्यशत्रुघ्नः । इन्द्रियनिग्रहवानित्यर्थः । पुंसां दृष्टिचित्तापहारिण्यपि न मग्नेन्द्रियः, रामविषयभक्तिः स्वाधिकारविरुद्धेति तन्निवर्त्तनमस्य कार्य्यमेव । नीत इत्युक्तं न तु ययाविति, तेनाचिद्वत्पारतन्त्र्यमुक्तम् । प्रीतिपुरस्कृतः किं करोमि ज्येष्ठानुवर्त्तनं कनिष्ठेन कार्यमितिविधिपरतन्त्रो न गतः, अपि तु प्रीतिप्रेरितोऽगच्छदित्युक्तम्. तेनाचितो व्यावृत्तिरुक्ता । प्रीतिरेव ह्यचेतनापेक्षया चेतनस्य विशेषः । भगवत्पारतन्त्र्यं तु चेतनाचेतनसाधारणमेव, यद्यत्यन्तसारग्राही पुरुषः स्यात्तदा शत्रुघ्नवद्भागवतपरतन्त्रतया वर्त्तितव्यमिति व्यञ्जितम् । व्यञ्जनावृत्त्याभिमतार्थप्रदर्शनं ह्युत्तमकाव्यकृत्यम् ॥ १ ॥

तनिश्लोकी–मातुलकुलं मातुलगृहम् । " कुलं जनपदे गृहे " इति निघण्टुः । भरतस्य मातुलकुलमुद्देश्यम्, शत्रुघ्नस्य तु भरतः । युधाजित्खलु भरतमेवानेतुमागतः । गच्छतेति वर्तमाननिर्देशेन भरतगमनकाले गन्तव्यमिति मनसि न स्थितम्, न च दशरथेन रामेण वानुज्ञात इति व्यज्यते । भरतेन रामे वनं गते लक्ष्मणे तदनुवर्तिनि दशरथे स्वर्गते अनेनैव रामराज्यं भर्तव्यमिति भाविज्ञानवता वसिष्ठाल्लब्धभरतनामधेयेन. तदा स्वस्यापि राजपुत्रत्वेन नक्षत्रानुगुणमुहूर्तादिकं विचारणीयेऽपि तन्मुहूर्त एव स्वस्यापि सुमुहूर्त इति गतः। अनघः कामादिहेतुकव्यसनरहितः। यद्वा एतदपेक्षया अयोध्यास्थितजनस्सर्वोप्यघवानेव,तस्य रामभक्तिमिश्रभरतभक्तित्वात् । रामभक्तेः पापत्वं स्वोद्देश्यभरतभक्तिविरोधित्वात । अत्रोद्देश्यविरोधित्वमेव हि पापत्वम्, पापापेक्षया पुण्यस्योत्कृष्टत्वेपि स्वोद्देश्यमोक्षविरोधित्वात्खलु पापत्वम् । प्रथमावधिनिष्ठा चरमावधिनिष्ठाविरोधिनी । शत्रुघ्नः जननकाले संहननदर्शनेनायं सकलशत्रुसंहर्ता भविष्यतीति वसिष्ठेन नामकरणं कृतम् । अस्यामनुष्यत्वात "अमनुष्यकर्तृके च" इति ठक् । नित्य-

शत्रुघ्नः नित्यशत्रून् कामादीनन्तःशत्रून् हन्तीति तथोक्तः, इन्द्रियजयवानिति यावत् । न च 'पुंसां चित्तापहारिणम्' इत्युक्तविषये निमग्नेन्द्रियः । तथा तद्दर्शनं भरतप्रीतिफलत्वेन भरतस्यातिपावनत्वबुद्धेः अनघ इत्युक्तम् । अधिकभोग्यत्वं तु नित्यशत्रुघ्न इति तेन न पुनरुक्तिः । नीतः छायावत् स्वयं द्रव्यत्वेपि जातिगुणवत् पारतन्त्र्यं प्राप्तः । प्रीतिपुरस्कृतः ज्येष्ठानुवर्तित्वं विधिप्रेरितत्वं न भवति अपि तु अयोध्यायां भरतकैङ्कर्यं बहुभिर्विभज्य गृह्यते, तत्र चेदेकेनैव मया भोक्तुं शक्यमिति भक्तिप्रेरितः ॥ १ ॥

स तत्र न्यवसद्भ्रात्रा सह सत्कारसत्कृतः । मातुलेनाश्वपतिना पुत्रस्नेहेन लालितः ॥ २ ॥
तत्रापि निवसन्तौ तौ तर्प्यमाणौ च कामतः । भ्रातरौ स्मरतां वीरौ वृद्धं दशरथं नृपम् ॥ ३ ॥

रामभक्तो भरतः कथं तं विहाय मातुलकुले न्यवसदित्यपेक्षायां रामाभिमानविषयभूतशत्रुघ्नसहवासादित्याह–स इति । सः भरतः । तत्र मातुलगृहे । अश्वपतिना मातुलेन युधाजिता । सत्कारसत्कृतः जात्यश्वप्रदानादिना पूजितोऽपि पुत्रस्नेहेन पुत्रविषयस्नेहतुल्यस्नेहेन लालितः । विशिष्टभोजनाच्छादनाभरणप्रदानादिभिरुपलालितोऽपि सन् भ्रात्रा शत्रुघ्नेन सह न्यवसत् भ्रातृस्नेहेनैव तत्र स्थितः, न तु मातुलोपलालनमात्रादितिभावः । यद्वा सः शत्रुघ्नः भ्रात्रा सह लालित इत्यन्वयः । "सहयुक्तेऽप्रधाने" इति तृतीया । अश्वपतिः स्वस्रीयादपि शत्रुघ्नमतिशयेन लालितवानित्यर्थः । अथवा भ्रात्रा सह न्यवसत् रामेण सह न्यवसत्, सदा रामचिन्तया तेन सह वर्तमान इव स्थित इत्यर्थः ॥२॥ तत्रापीति । तत्र सर्वोपलालनभूयिष्ठे मातुलगृहे । निवसन्तावपि कामतः काम्यमानसर्वाभिमतवस्तुभिः । तृतीयार्थे तसिः । तर्प्यमाणौ च सन्तोष्यमाणावपि । वीरौ महोत्साहौ । तौ भ्रातरौ भरतशत्रुघ्नौ । वृद्धं नृपं जीर्णं महीपतिं दशरथं स्मरतां अस्मरताम् "अनित्यमागमशासनम्" इत्यडभावः । दशरथो वृद्धोऽभून्न राज्यभरणे सम्यक् क्षमते अपीदानीं रामं युवराजं कारयेदिति अचिन्तयतामिति भावः ॥ ३ ॥

मनेन विना असत्कल्पमिति धिया नीत इति भावः । प्रीतिपुरस्कृतः–प्रीत्या भरतविषयस्नेहेन पुरस्कृतः, प्रीतिप्रेरित इत्यर्थः ॥ १ ॥ स इति । स भरतः पुत्रस्नेहेन पुत्रस्नेहेनेव ॥ २ ॥ तत्रापीति । अपिना स्थलसौख्यं द्योत्यते । तर्प्यमाणौ चेत्यत्र चकारोऽप्यर्थः । कामतः "सार्वविभक्तिकस्तसिः" कामैः अभिमतपदार्थैरित्यर्थः । स्मरताम् अस्मरताम् । अडभाव आर्षः । शेषत्वाविवक्षाभावात्र षष्ठी । वृद्धं स्मरतामित्यत्र शुश्रूषाकालोऽतीत इति धर्मलोपभिया पितरं स्मृत

राजापीति । महातेजाः सत्पुत्रलाभकृतनिरवधिकतेजस्कः । राजा दशरथः । महेन्द्रवरुणोपमौ तद्वन्निरपायमैत्रीसम्पन्नौ । प्रोषितौ देशान्तरगतौ । निरवधिकप्रीतिविषयभूतौ उभौ भरतशत्रुघ्नौ सुतौ सस्मार, सर्वसंपत्समृद्धस्यापि मे पुत्रद्वयासन्निधानमेव न्यूनतेत्यस्मरदिति भावः । उभाविति स्मृतिविषये तारतम्याभावोक्तिः ॥ ४ ॥ रामलक्ष्मणसन्निधाने कथमितरपुत्रस्मरणमित्यत्राह–सर्व इति । तुशब्द उक्तशङ्कान्यावृत्त्यर्थः । चत्वारः चतुर्धावस्थिताः । पुरुषर्षभाः पुरुषोत्तमाः । सर्वे अविशेषेण तस्य दशरथस्य शरीराद्विनिर्वृत्ताः निष्पन्नाः चत्वारो बाहव इव इष्टाः प्रिया एवासन् । अभूतोपमा । अयोगव्यवच्छेदार्थे एवकारः । लोके कस्यचिच्चतुर्षु बाहुषु सत्सु यथा तस्यैकोपि नाप्रियो भवति, एवं तेषु पुत्रेष्वेकोपि नानिष्टोऽभूदित्यर्थः । उपमाने स्वशरीरविनिर्वृत्तत्वोक्त्या एतेषु राज्ञः स्वशरीरविनिर्वृत्तत्वाभिमानमात्रमित्युक्तम् ॥ ५ ॥ एवं चतुर्णां प्रियत्वाविशेषेऽपि रामे गुणातिरेककृतप्रीतिविशेषोऽस्तीत्याह–तेषामिति । तेषामिति निर्धारणे षष्ठी । भूतानां प्राणिनां मध्ये स्वयम्भूः ब्रह्मेव । तेषां पुत्राणां मध्ये गुणवत्तरः अतिशयेन गुणवान् । महातेजाः तादृग्गुणप्रकाशकनिरवधिकतेजस्कः रामः पितू रतिकरो बभूव । निरतिशयप्रीतिः रतिः ॥ ६ ॥ कथमितरापेक्षया गुणवत्तरत्व

> राजापि तौ महातेजाः सस्मार प्रोषितौ सुतौ । उभौ भरतशत्रुघ्नौ महेन्द्रवरुणोपमौ ॥ ४ ॥
> सर्व एव तु तस्येष्टाश्चत्वारः पुरुषर्षभाः । स्वशरीराद्विनिर्वृत्ताश्चत्वार इव बाहवः ॥ ५ ॥
> तेषामपि महातेजा रामो रतिकरः पितुः । स्वयम्भूरिव भूतानां बभूव गुणवत्तरः ॥ ६ ॥
> स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः । अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः ॥ ७ ॥



6

वन्ताविति तात्पर्यम् ॥ ३–५ ॥ चतुर्णां गुणवत्तयाभिमतत्वमभिधाय रामस्य निरातिशयगुणवत्तया अभिमतत्वमाह–तेषामपि महातेजा इति । भूतानां देवादिभूतानां मध्ये गुणवत्तरः । स्वयम्भूः चतुर्मुखः । पितुः विष्णोः यथा प्रीतिकरो बभूव तथा तेषां चतुर्णां मध्ये गुणवत्तरो रामः पितुः दशरथस्य रतिकरो बभूवेत्यर्थः ॥ ६ ॥ रामस्य अतिमानुषगुणयोगित्वं सहेतुकमाह–स हीत्यादिना । हिशब्दोऽवधारणे । उदीर्णस्य दृप्तस्य रावणस्य वधार्थिभिर्देवैः अर्थितः प्रार्थितः सनातनो नित्यो

**मुनि०**–तेषामिति । भूतानामिन्द्रादीनाम् स्वयंभूः ब्रह्मा पितुः स्वपितुर्विष्णोः ज्येष्ठपुत्रत्वात् यथा प्रीतिकरः तथैव रतिकरः प्रियकरो बभूव । यद्वा रामः पितुः तेषां भ्रातॄणां च प्रीतिकरः स्वयंभूः पितुः विष्णोश्च भूतानां च यथा प्रीतिकरः तथैवेत्यर्थः । विष्णोर्ब्रह्मादिभूतजनकत्वं "यतो वा इमानि भूतानि जायन्ते" इति श्रुत्या "आत्मनः प्रथमं पुत्रं ब्रह्माणमसृजद्विभुः । ततश्चराचरं विश्वं विष्णुर्विश्वजगन्मयः ॥" इत्यानुशासनिकोक्तप्रक्रियया च सिद्धमेव ॥ ६ ॥

मित्यपेक्षायां विष्णोः प्रधानावतारत्वादित्याह–स हीति। हीति "अजायमानो बहुधा विजायते" इतिश्रुतिप्रसिद्धिं द्योतयति। देवैः न ह्यनन्यप्रयोजनैरर्थितः किंतु प्रयोजनान्तरपरैः, न केवलं प्रयोजनान्तरपरैः अपितु "ईश्वरोऽहमहं भोगी" इत्येवं दुरभिमानिभिः, मदोऽपि दीव्यतिधातोरर्थ एव। नरकासुरवधे स्वकार्यनिष्पत्त्यनन्तरं पारिजातनिमित्तं कृष्णेनैव योद्धुमुपक्रान्तैरित्यर्थः। उदीर्णस्य उद्भटस्य। "उदीर्ण उद्भटः" इत्याद्यमरः। नैसर्गिक

**कौसल्या शुशुभे तेन पुत्रेणामिततेजसा। यथा वरेण देवानामदितिर्वज्रपाणिना॥ ८॥**

**स हि रूपोपपन्नश्च वीर्य्यवाननसूयकः। भूमावनुपमः सूनुर्गुणैर्दशरथोपमः॥ ९॥**

गर्वेण सर्वं जगद्विनाशयत इत्यर्थः। वधस्यार्थत्वे हेतुरयम्। रावणस्य यैर्वरो दत्तस्तानेव निलयान्निष्कासयत इत्यर्थः। वधार्थिभिः एकस्य संहारेण राज्यमखिलं सुखेन वर्तिष्यत इतिप्रपन्नैः। आर्थितः प्रार्थितः, नोपासितः। मानुषे लोके यत्र देवा अपि मनुष्यगन्धमसहमानाश्छर्दनपूर्वकं कुत्सयन्तो योजनादुपरि स्थित्वा हविराददते तेपि यस्य मनुष्यस्थानीयाः सोऽस्मिन् मानुषे लोके जातः, हन्त किमिदं सौलभ्यमिति भावः। जज्ञे न नृसिंहादिवदाविर्भूतः। स जज्ञे रामो जज्ञे। लोको हि दशमासान् गर्भेऽवस्थाय जायते, अयं तु "ततश्च द्वादशे मासे" इत्युक्तरीत्या ततोप्यधिककालं गर्भे स्थित्वा जज्ञे। विष्णुः व्यापकं वस्तु व्याप्यैकदेशस्य मत्पुत्रोऽयमित्यभिमान्यमभूत्। सनातनः नित्यवस्त्वेवमात्मानमन्यथाचकार॥ ७॥ न केवलं पितुरेवानन्दकरः मातुरपीत्याह–कौसल्येति। अमिततेजसा अपरिमितपराक्रमेण। तेन रामेण पुत्रेण। कौसल्या देवानां वरेण वज्रपाणिना इन्द्रेण अदिति र्यथा अदितिरिव शुशुभे बभौ। तेन सन्तुष्टासीदित्यर्थः॥८॥ गुणवत्तर इत्युक्तं प्रपञ्चयति–स हीत्यादिना। सः रामः रूपोपपन्नः सौन्दर्ययुक्तः, चकारेण 'रूपौदार्यगुणैः' इत्युक्तौदार्य्यादिकं समुच्चीयते। वीर्यवान् मृगनाभिगन्धवत् स्वयमविकृत एव परेषां विकारकारी अनसूयकः। गुणेषु दोषाविष्करणमसूया अविद्यमाना असूया यस्यासावनसूयकः। भूमावनुपमः सूनुः भूमावेव तत्तुल्यः पुत्रः कौसल्यातिरिक्तायाः कस्याश्चिदपि नास्तीत्यर्थः। दिवि तु

विष्णुः रामरूपस्सन् जज्ञे आविर्बभूव, अतो वक्ष्यमाणगुणाः सर्वे तत्र संभवेयुरिति भावः॥ ७॥ ८॥ स्वभावसिद्धगुणाढ्यत्वं वर्णयति–स हीति। रूपोपपन्नः

**सत्यतीर्थीयम्**–"दशः पक्षी विहङ्गमः" इति हलायुधोक्तेः दशः पक्षी गरुडः स रथो यस्य स दशरथो नारायणः। तस्य तुल्यः "मत्स्यकूर्मवराहाद्यास्समा विष्णोरभेदतः। ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समाऽसमा॥" इति वाराहे॥ ९॥

अदितेर्वज्रपाणिरस्त्येवेति भावः । गुणैराकारेङ्गितचेष्टाभिः दशरथोपमः । दीपादुत्पन्नप्रदीपवत् ॥ ९ ॥ अथ दशरथादाधिक्यमाह-स इति । तुशब्देन दशरथाद्वैलक्षण्यमुच्यते । सः रामः । परुषं परुषवचनं केनचिदुच्यमानोऽपि । उत्तरम् उत्तरवचनं न प्रतिपद्यते, न वदतीत्यर्थः। अपिशब्देन तद्वक्तृत्वप्रसक्ति रेव नास्तीति गम्यते । उत्तराप्रतिपत्तौ हेतुः नित्यं प्रशान्तात्मेति । अक्रोधनस्वभाव इत्यर्थः । न केवलमुत्तराप्रतिपत्तिः किंतु तं परुषवक्तारं प्रति मृदुपूर्वं सान्त्वपूर्वं च भाषते ॥१०॥ अथास्य कृतज्ञत्वमाह–कथञ्चिदिति । कथञ्चित्कृतेन "यथा तथा वापि" इत्युक्तरीत्या कृतेन। यद्वा यादृच्छिकप्रास

स तु नित्यं प्रशान्तात्मा मृदुपूर्वं प्रभाषते । उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते ॥ १० ॥
कथञ्चिदुपकारेण कृतेनैकेन तुष्यति । न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥ ११ ॥
शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः । कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि ॥ १२ ॥

ङ्गिकतया कृतेन । यद्वा प्रयोजनान्तरपरतया कृतेन, कथञ्चित्कृतेन अहृदयतया कृतेन, कथञ्चित्कृतेन पत्रपुष्पाद्यन्यतमेन कृतेन । यद्वा स्वस्मात् किञ्चित्फललाभाय कृतेन । यद्वा "साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा" इत्येवं कृतेन उपकारेण अण्वपि महत्त्वेनाभिमन्यमानस्य भगवतोभि प्रायेणोपकारेणेत्युक्तम् । कृतेन कर्त्तुमीप्सितेन । "आशंसायां भूतवच्च" इति क्तः । एकेन सकृत्कृतेन । तुष्यति सदा प्रीतिं प्राप्नोति । तोषफलस्य कदा चिदपि न क्षय इति भावः। एवमुपकारेण तुष्यन्नपकारेणापि किं कुप्यति ? नेत्याह–न स्मरतीति । अपकाराणां सम्यक्कृतापराधानाम् । शतमपि अस ङ्ख्येयमपि "शतं सहस्रमयुतं सर्वमानन्त्यवाचकम्" इत्युक्तेः । न स्मरति न चिन्तयति, कः पुनः कोपस्यावकाश इति भावः । उभयत्र हेतुमाह आत्मवत्तयेति । वशीकृतमनस्कतयेत्यर्थः । यद्वा आत्मवत्तया ज्ञानवत्तया " उदाराः सर्व एवैते । न कश्चिन्नापराध्यति " इत्येवमध्यवसाय वत्तयेत्यर्थः ॥ ११ ॥ अथास्य गुणवर्द्धकं सत्सङ्गमाह–शीलवृद्धैरिति । शीलं सदाचारः, सज्जनैरिति त्रिष्वप्यनुपज्यते । शीलवृद्धैः सदाचारसम्पन्नैः सज्जनैः कथयन्नास्त । तैस्सह सूक्ष्मतराचारविशेषान् प्रतिपादयन्नास्तेत्यर्थः । ज्ञानवृद्धैः परिपक्वमोक्षविषयिभिः । " मोक्षे धीर्ज्ञानम् " इत्य मरः । तादृशैः सज्जनैः कथयन्नास्त, तैर्वेदान्तरहस्यमुद्घाटयन्नास्तेत्यर्थः । वयोवृद्धैः सज्जनैः कथयन्नास्त क्रमागतसम्प्रदायविशेषान् कथयन्नास्तेत्यर्थः।

लावण्यनिधिः । अनसूयकः–गुणेषु दोषाविष्करणमसूया तद्रहितः ॥ ९ ॥ स चेति । स्वजनेन परुषमुच्यमानोऽपि परुषमुत्तरं न प्रतिपद्यते न प्रयच्छति, किन्तु प्रशान्तात्मा सन् मृदुपूर्वं वचनमिति शेषः । भाषते ॥ १० ॥ ११ ॥ शीलवृद्धैरिति । शीलवृद्धैः सदाचारसम्पन्नैः, वयोवृद्धैः दीर्घायुःसम्पन्नैः, ज्ञानवृद्धैः लौकिक

सज्जनैरिति सामान्योक्त्या ग्रामकुलादितारतम्यं न तेनादृतमित्युच्यते । तृतीयया तेषामप्रधानत्वावगमात्स्वयमेव तेषामर्थविशेषं दर्शयतीति सूचितम् । नित्यमित्यनेन नेदं कादाचित्कमित्युच्यते । विशेषणत्रयान्तचकारेण ज्ञानशीलवयोवृद्धैः शीलज्ञानवृद्धैः ज्ञानवयोवृद्धैः शीलवयोवृद्धैश्चेति समुच्चीयते । नेदं नित्याग्निहोत्रवत् क्वचित्समय इत्याह अस्त्रेति । अस्त्राणां योग्यः अभ्यासः 'योग्यो गुणनिकाभ्यासः' इति वैजयन्ती । तस्यान्तरेषु अव

बुद्धिमान् मधुराभाषी पूर्वभाषी प्रियम्वदः । वीर्यवान्न च वीर्येण महता स्वेन विस्मितः ॥ १३ ॥
न चानृतकथो विद्वान् वृद्धानां प्रतिपूजकः । अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरञ्जते ॥ १४ ॥

काशेष्वपि । अपिशब्देन समयान्तरे तत्कथनं किं पुनर्न्यायसिद्धमित्युक्तम्, सत्सङ्गतिं विना क्षणमपि न तिष्ठतीत्यर्थः ॥१२॥ परायत्तसकलव्यापारत्वमाह— बुद्धिमानिति । बुद्धिमान् प्रशस्तबुद्धिः । कथं सर्वे जनाः सुखं वसेयुरित्येवं सर्वदा लोकसंरक्षणचिन्तापर इत्यर्थः । मधुराभाषी मधुरभाषणशीलः । यद्यद्वक्ति तन्मधुरमेव वदतीत्यर्थः । पूर्वभाषी अतिनीचं प्रत्यपि स्वयमेव पूर्वं भाषमाण इत्यर्थः । प्रियंवदः प्रियवाग्वचनशीलः । "प्रियवशे वदः खच्" इति ताच्छील्ये खच् । "खित्यनव्ययस्य" इति ह्रस्वः । "अरुर्द्विषदजन्तस्य—" इति मुमागमः । शत्रुविषयेपि प्रियवचनशीलः । वीर्यवान् आश्रितविरोधिनिरसन क्षमः । पूर्वं वीर्यवानित्यविकृतत्वमुक्तमिति न पुनरुक्तिः । महता स्वेन वीर्येण न विस्मितः आश्रितसकलविरोधिनिरसने कृतेऽपि "नातिस्वस्थमना ययौ" इत्युक्तरीत्या किं कृतं मयेत्यपर्याप्त एव स्थितः । "गर्वः स्याद्विस्मयो मदः" इत्यमरः । वर्त्तत इति शेषः ॥ १३ ॥ न चेति । स इति शेषः । स रामः अनृतकथो न भवति, कथा प्रबन्धकल्पना अनृता असत्या कथा यस्य सः तथा । कल्पितेतिवृत्तकासत्काव्यालापवर्जित इत्यर्थः । वेत्तीति विद्वान् । विदेः शतुर्वसुः । अनृतकथाभावश्च न तदज्ञानात्, किन्तु तद्वर्ज्यत्वज्ञानादित्यर्थः । वृद्धानां पूर्वोक्तत्रिविधवृद्धानाम् । प्रतिपूजकः प्रत्यु द्गम्यपूजकः । ब्राह्मणप्रतिपूजक इति पाठे—बालवृद्धसाधारण्येन ब्राह्मणमात्रपूजापरः । "दशवर्षश्च ब्राह्मणः शतवर्षश्च क्षत्रियः । पितापुत्रौ स्मृतौ

वैदिकज्ञानपूर्णैः । सज्जनैरिति त्रयाणां विशेष्यम् । अस्त्रयोग्यान्तरेषु अस्त्राभ्यासावकाशेषु । एतादृशैः सज्जनैः सह कथयन्, शास्त्ररहस्यमिति शेषः । आस्त तिष्ठति स्म चेत्यर्थः । अपिशब्देन सज्जनसल्लापानर्हकालेष्वपि तत्सल्लापद्योतनात्सद्भिस्सल्लापः सार्वकालिक इति द्योत्यते ॥ १२ ॥ बुद्धिमानिति । बुद्धिमान् प्रशस्त धीमान् । मधुराभाषी मधुरभाषणशीलः । पूर्वभाषी-आगतान् प्रति प्रथमभाषणेन स्वाभिमुख्यत्वं द्योतयतीत्यर्थः । प्रियम्वदः परहितवचनशीलः । वीर्यवानिति परेषामाश्चर्यकारिणापि स्वकीयवीर्येण स्वयं न विस्मितः, अप्राप्तगर्व इत्यर्थः ॥ १३ ॥ न चेति । न चानृतकथः अनृतवचनो न भवति । अनुरक्तः प्रजाभिरनु

विद्धि ” इत्यापस्तम्बः । प्रजाभिः पण्डितपामराविशेषेण सर्वाभिः प्रजाभिः अनुरक्तः अनुरागविषयीकृतः । तत्र हेतुमाह प्रजाश्चाप्यनुरञ्जते, अनुरञ्ज
यतीत्यर्थः । अन्तर्भावितण्यन्तोऽयम् । स्वयं पूर्वं प्रजा रञ्जयित्वा ततस्ताभिरनुरक्तो भवतीत्यर्थः । चापयः सर्वत्रोक्तगुणसमुच्चयार्थाः ॥ १४ ॥ सानु
क्रोशेति । सानुक्रोशः सदयः “कृपा दयानुकम्पा स्यादनुक्रोशः” इत्यमरः । दया हि नाम परदुःखासहिष्णुत्वम् । जितक्रोधः वशीकृतकोपः । न त्ववशेन
क्रोध उत्पद्यत इत्यर्थः । ब्रह्म वेदः तद्विदन्तीति ब्राह्मणाः । “तदधीते तद्वेद” इत्यण् । प्रत्युद्गम्यपूजकः प्रतिपूजकः । ब्राह्मणानां प्रतिपूजकः इति याज
कादित्वात् षष्ठीसमासः । दीनानुकम्पी दीनेषु विशेषतोऽनुकम्पावान् । विशेषो नाम यत्र दीनो दृष्टः तत्रैव स्थित्वा दानमानादिकरणम् । धर्मज्ञः सामान्य

सानुक्रोशो जितक्रोधो ब्राह्मणप्रतिपूजकः । दीनानुकम्पी धर्मज्ञो नित्यं प्रग्रहवान् शुचिः ॥ १५ ॥
कुलोचितमतिः क्षात्रं धर्मं स्वं बहु मन्यते । मन्यते परया कीर्त्या महत् स्वर्गफलं ततः ॥ १६ ॥
नाश्रेयसि रतो विद्वान्न विरुद्धकथारुचिः । उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा ॥ १७ ॥

विशेषधर्मज्ञः । प्रग्रहवान् नियमवान् । “अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम” इति वक्ष्यति । शुचिः परस्वानाकांक्षी । “योऽर्थे शुचिः स हि शुचिर्न
मृद्वारिशुचिः शुचिः” इति मनुस्मरणात् ॥ १५ ॥ कुलोचितमतिरिति । कुलोचितमतिः इक्ष्वाकुवंशोचितदयादाक्षिण्यशरणागतसंरक्षणादिधर्मैक
प्रवणबुद्धिः । स्वं क्षात्रं धर्मं दुष्टनिग्रहपूर्वकं प्रजापरिपालनरूपम् । बहुमन्यते गौरवेण जानाति । “ श्रेयान् स्वधर्मः ” इति श्रवणात् । परत्वा
पादकधर्मेभ्योपि जनित्वार्जितं क्षत्रधर्मं गौरवेण पश्यतीत्यर्थः । बहुमाने हेतुमाह मन्यत इति । ततः क्षत्रधर्मात् परया कीर्त्या महत् स्वर्गफलं
भवतीति मन्यते जानाति । स्ववर्णस्याश्रमोचितधर्मः कीर्त्तिद्वारा स्वर्गसाधनमिति ज्ञात्वा क्षत्रधर्मं विशिष्यानुतिष्ठतीत्यर्थः ॥ १६ ॥ नेति ।
अश्रेयसि निष्फले कर्मणि । न रतः न सक्तः, कादाचित्कलीलाकर्म न दुष्यतीति भावः । द्यूतादिषु न सक्त इत्यर्थः । तत्र हेतुर्विद्वानिति ।

रञ्जितः, प्रजाश्चाप्यनुरञ्जते अनुरञ्जयतीत्यर्थः । अनेन परस्परानुरागो दर्शितः ॥ १४ ॥ सानुक्रोश इति । सानुक्रोशो दयावान् । दीनानुकम्पी दीनानुकम्पतया
तदभितोषितार्थप्रापक इत्यर्थः । अतः सानुक्रोश इत्यनेन न पौनरुक्त्यम् । प्रग्रहवान् नियमनवान्, दुष्टनिग्राहक इत्यर्थः ॥१५॥ कुलेति । कुलोचितमतिः इक्ष्वाकु
कुलोचितदयादाक्षिण्यशरणागतसंरक्षणादिधर्मैकप्रवणबुद्धिः, क्षात्रधर्मं दुष्टनिग्रहपूर्वकप्रजापरिपालनरूपं परं धर्मं बहु मन्यते, गौरवेण जानीते इत्यर्थः । मन्यत
इति । ततः क्षत्रधर्मात्सञ्जातया कीर्त्या स्वर्गफलं साध्यतया मन्यते जानातीत्यर्थः ॥ १६ ॥ नेति । अश्रेयस्करकर्मणि निषिद्धकर्मणि विरुद्धकथारुचिः, पापकथा

न विरुद्धकथारुचिः धर्मविरुद्धग्राम्यालापादिषु रुचिरहितः । उत्तरोत्तरयुक्तौ लौकिकवैदिकविषयोत्तरोत्तरयुक्तिकक्ष्यायां वाचस्पतिर्यथा बृहस्पतिरिव । वक्ता अप्रतिहतवाग्व्यवहारः ॥ १७ ॥ अरोग इति । " युवा स्यात् साधु युवाध्यायकः आशिष्टो द्रढिष्ठो बलिष्ठः " इत्यादिश्रुत्यर्थोऽनेन प्रतिपाद्यते । अरोगः आधिव्याधिरहितः, अनेन आशिष्ठइत्युक्तमशनसामर्थ्यमाशीर्वादविषयत्वं चोक्तम् । तरुणः युवा । वाग्ग्मी प्रशस्तवाक् । अनेन युवा

अरोगस्तरुणो वाग्ग्मी वपुष्मान् देशकालवित् । लोके पुरुषसारज्ञस्साधुरेको विनिर्मितः ॥ १८ ॥
स तु श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः । बहिश्चर इव प्राणो बभूव गुणतः प्रियः ॥ १९ ॥
सम्यग्विद्याव्रतस्नातो यथावत्साङ्गवेदवित् । इष्वस्त्रे च पितुः श्रेष्ठो बभूव भरताग्रजः ॥ २० ॥

ध्यायक इत्युक्तमुक्तम् । वपुष्मान् प्रशस्तशरीरः, अनेन बलिष्ठ इत्युक्तं कायबलमुक्तम् । देशकालवित् अध्ययनदेशकालज्ञः, अनेन साधुशब्दार्थौ विवृतः । पुरुषसारज्ञः सकृद्दर्शनमात्रेण पुरुषहृदयसर्वस्वज्ञः । " सारो बले स्थिरांशे च " इत्यमरः । लोके एकः अद्वितीयः । साधुरिति विनिर्मितः निश्चितः । " अपकारिषु यः साधुः स साधुरिति कीर्तितः " इत्युक्तसाधुविशेषत्वज्ञापनम् ॥१८॥ स इति । श्रेष्ठैः उत्कैरन्यैश्च गुणैर्युक्तः । पार्थिवात्मजः बहिश्चरः प्राण इव प्रजानां गुणतः गुणैः प्रियो बभूव ॥ १९ ॥ सम्यगिति । केचिद्विद्यामात्रेण स्नाताः, केचिद्व्रतमात्रेण स्नाताः, रामस्तु विद्याव्रताभ्यां स्नातः । "अधीत्य स्नायात्" इतिस्मृत्युक्तरीत्या सम्यग्वेदानधीत्य व्रतानि च कृत्वा कृतसमावर्तन इत्यर्थः । यथावत् तत्त्वतः साङ्गवेदवित् साङ्गवेदार्थज्ञः । अनया पृथगुक्त्या अध्ययनमक्षरराशिग्रहणफलमित्यवगम्यते । इषवः अमन्त्रकाः शराः, अस्त्राणि समन्त्रकाः । सेनाङ्गत्वादेकवद्भावः । इष्वस्त्रविषये पितुर्दशरथात् श्रेष्ठः, दशरथादवराः खल्वितरे धन्विन इति भावः । भरताग्रजः अस्मिन्नर्थे भरतेन निरूपणीयो रामः ।

सक्तो न भवतीत्यर्थः । वाचस्पतिर्यथा बृहस्पतिरिव उत्तरोत्तरयुक्तौ कक्ष्यायां वस्तुतत्त्वपरीक्षायां स्वोक्तार्थनिर्वाहार्थं वक्ता, उत्तरोत्तरप्रमाणोपन्यासचतुर इत्यर्थः ॥ १७ ॥ अरोग इति सत्कर्मानुष्ठानसामर्थ्यं दर्शितम् । देशकालवित् तत्तद्धर्माचरणयोग्यदेशकालज्ञ इत्यर्थः । पुरुषसारज्ञः सकृद्दर्शनमात्रेण पुरुषबलज्ञः । साधुः शिष्टः । क्षीणदोष इति यावत् ॥ १८ ॥ स त्विति । प्राणत्वेन निरूपणात् प्रजानां रामभद्रादधिकमभिमतवस्तु नास्तीति द्योत्यते ॥ १९ ॥ सम्यगिति । " वेदमधीत्य स्नायात् " इति स्मृतेः । अखिलवेदाध्ययनव्रताचरणानन्तरभाविस्नातककर्मयुक्तः । इष्वस्त्रे–इषवो मन्त्रहीनाः, अस्त्राणि मन्त्रपूर्वकाणि । इष्वस्त्र

" महेष्वासे महाप्राज्ञे भरते स्वयमागते " इति रामस्य वचनात् ॥ २० ॥ कल्याणेति । अभिजनः मातृपितृवंशः कल्याणः शोभनः अभिजनो येन स तथा । तत्र हेतुः साधुरिति । निर्दोष इत्यर्थः । अदीनः क्षोभहेतुषु सत्स्वप्यक्षोभ्यान्तःकरणः । सत्यवाक् अतिकृच्छ्रेपि सत्यवचननिरतः । ऋजुः स्वाराध्यः । अभिविनीतः सुशिक्षितः ॥ २१॥ धर्मेति । धर्मकामार्थतत्त्वज्ञः " न पूर्वाह्णमध्याह्नापराह्णानफलान् कुर्यात् " इतिस्मृत्युक्तरीत्या पूर्वाह्णादिषु कालेषु कर्त्तव्यधर्मार्थकामज्ञ इत्यर्थः । स्मृतिमान् ज्ञातार्थविषये विस्मरणरहितः । प्रतिभानवान् " प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः "

कल्याणाभिजनः साधुरदीनः सत्यवागृजुः । वृद्धैरभिविनीतश्च द्विजैर्धर्मार्थदर्शिभिः ॥ २१ ॥
धर्मकामार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् । लौकिके समयाचारे कृतकल्पो विशारदः ॥ २२ ॥
निभृतः संवृताकारो गुप्तमन्त्रः सहायवान् । अमोघक्रोधहर्षश्च त्यागसंयमकालवित् ॥ २३ ॥
दृढभक्तिः स्थिरप्रज्ञो नासद्ग्राही न दुर्वचाः । निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित् ॥ २४ ॥

इति प्रोक्तलक्षणप्रतिभानयुक्तः । लौकिके लौकिकप्रमाणके । समयाचारे साङ्केतिकाचारे । " सङ्केतस्तु समयः" इत्यमरः । कृतकल्पः कृतसंस्थापनः । विशारदः तदाचरणसमर्थः ॥ २२ ॥ निभृत इति । निभृतः विनीतः । "वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः " इत्यमरः । संवृताकारः हृदि स्थितकर्त्तव्यार्थव्यञ्जकेङ्गिताकारगोपनचतुरः । संवृतत्वं गूढत्वं, गुप्तमन्त्रः फलपर्यन्तमन्यैरविदितमन्त्र इत्यर्थः । सहायवान् प्रशस्तमन्त्रयुक्तः । अमोघक्रोधहर्षः फलपर्यवसायिकोपसन्तोषः । त्यागसंयमकालवित् वस्तुत्यागतत्संग्रहणकालवित् ॥ २३ ॥ दृढभक्तिरिति । दृढभक्तिः देवगुर्वादिषु निश्चल

इत्यत्र एकवद्भावः ॥ २० ॥ कल्याणेति । कल्याणाभिजनः कल्याणानां जन्मभूमिः । साधुः वेदप्रामाण्याभ्युपगन्ता । अदीनः क्षोभहेतुसहस्रेष्वपि अक्षोभ्यान्तःकरणः । सत्यवाक्-अतिकृच्छ्रकार्येष्वपि यथार्थवचननिरतः । ऋजुः करणत्रयार्जवयुक्तः । अभिविनीतः शिक्षितः ॥ २१ ॥ धर्मेति । धर्मकामार्थतत्त्वज्ञः-पूर्वाह्णमध्याह्नापराह्णकाले कर्तव्यतया धर्मार्थकामान् जानातीत्यर्थः । प्रतिभानवान् " प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः " इत्युक्ता प्रतिभा, प्रतिभानं तद्वान् । लौकिक इति । लौकिके लोकविदिते । समयाचारे साङ्केतिकाचारे । कृतकल्पः कृतकौशलः, दृढविनीतः ॥२२ ॥ निभृत इति । संवृताकारः-गूढाभिप्रायः गुप्तमन्त्रः फलपर्यन्तमन्यैरविदितमन्त्र इत्यर्थः । त्यागसंयमकालवित्-त्यागस्सत्पात्रदानम् संयमः न्यायेनार्जनम् तयोः कालज्ञः ॥ २३ ॥ दृढेति । दृढभक्तिः आश्रितेषु



मुनि०-धर्म इति । धर्मकामार्थतत्त्वज्ञः-" पूर्वाह्णापराह्णमध्याह्नानफलान् कुर्यात् " इति गौतमधर्मोक्तप्रक्रियया पूर्वाह्णादिकालेषु कर्तव्यतया धर्मार्थकामान् जानातीत्यर्थः ॥ २२ ॥

भक्तिः। स्थिरप्रज्ञः भक्तिजन्याप्रकम्प्यतत्त्वज्ञानः, अतएव नासद्ग्राही नासदर्थग्राही। असज्जनसंग्रहणरहितो वा। न दुर्वचाः न परुषभाषी। निस्तन्द्रिः आलस्यरहितः, सर्वदा शास्त्रपरिशीलनपर इत्यर्थः। अतएवाप्रमत्तः शास्त्रार्थेष्वनवधानरहितः। स्वदोषपरदोषवित् लोके कश्चित् पश्यति परदोषं आत्मदोषं न पश्यति अयं तु न तथा, परदोषवत्स्वदोषं च पश्यत्येव। वक्ष्यति भरतं प्रति "शिरसा याचतस्तस्य वचनं न कृतं मया" इति॥२४॥ शास्त्रज्ञ

शास्त्रज्ञश्च कृतज्ञश्च पुरुषान्तरकोविदः। यः प्रग्रहानुग्रहयोर्यथान्यायं विचक्षणः ॥ २५ ॥
सत्सङ्ग्रहप्रग्रहणे स्थानविन्निग्रहस्य च। आयकर्मण्युपायज्ञः सन्दृष्टव्ययकर्मवित् ॥ २६ ॥

इति। शास्त्रज्ञः साङ्गवेदातिरिक्तविद्यास्थानज्ञः। कृतं कृतान्तं सिद्धान्तं जानातीति कृतज्ञः। अतः कथंचिदुपकारेण कृतेनैकेन तुष्यतीत्यनेन न पुनरुक्तिः। यः प्रसिद्धः। प्रग्रहः मित्रादि पुरुषाणामन्तरं तारतम्यं तत्र कोविदः पण्डितः। पुरुषदर्शनमात्रेणायं साधुरयमसाधुरिति तत्तत्स्वरूपविशेषज्ञ इत्यर्थः। स्वीकारः, अनुग्रहः स्वीकृतपरिपालनम्। तयोः यथान्यायं यथाशास्त्रं विचक्षणः समर्थः, शास्त्रमर्यादामनतिक्रम्य मित्रस्वीकारादिकृदित्यर्थः। "सुप्सुपा" इतिसमासः॥२५॥ सदिति। सतां संग्रहे स्वीकारे प्रग्रहणे परिपालने च, विचक्षण इति शेषः। निग्रहस्य असन्निग्रहस्य च स्थानवित् अवकाशवित्। "अवकाशे स्थितौ स्थानम्" इत्यमरः। आयकर्मणि न्यायप्राप्तधनार्जनकर्मणि। उपायज्ञः पुष्पेभ्यो मधु मधुकर इव अपीडनेन प्रजाभ्यो धनमादातुं

दृढस्नेहः। यद्वा अनुसरणीयवसिष्ठदशरथादिषु दृढानुराग इत्यर्थः। स्थिरप्रज्ञः–स्थिरा विस्मृतिरहिता प्रज्ञा यस्य सः। स्थिरप्राज्ञः इति पाठे—स्थिरः सर्वदा सर्वैरप्यविचाल्यः प्राज्ञः स्वभावो यस्य। नासद्ग्राही–असदर्थग्राही न भवतीति समासः। यद्वा असत्पुरुषपरिग्रहरहितस्वभावः। न दुर्वचाः परोद्रेजकवचनरहितः। स्वदोषपरदोषवित् स्वरन्ध्रपररन्ध्रज्ञः ॥ २४ ॥ कृतज्ञः–परेण आत्मार्थं कृतमुपकारमल्पमपि बहुतया स्वोपकारत्वेन जानातीति तथोक्तः। पुरुषान्तरकोविदः पुरुषतारतम्यज्ञः। यद्वा आन्तरम् अभिप्रायः, परपुरुषगूढाभिप्रायज्ञ इत्यर्थः। प्रग्रहानुग्रहयोर्यथान्यायं विचक्षणः प्रथममात्मीयत्वेन परिग्रहः प्रग्रहः, अनुग्रहो नाम परिगृहीतस्य नैरन्तर्येणानुवर्तनम् तयोर्यथान्यायं युक्तायुक्तविचारानतिक्रमः, तत्र विचक्षणः निपुणः॥ २५ ॥ सत्सङ्ग्रहप्रग्रहणे–सत्सङ्ग्रहे सज्जनस्वीकारे, प्रग्रहणे तत्परिपालने। यथान्यायं विचक्षण इति पूर्वेणान्वयः। एकवद्भावः। यद्वा सत्सङ्ग्रहः-सदाचारः, तस्य प्रग्रहणे अनुष्ठान इत्यर्थः। स्थानविन्निग्रहस्य च दुष्टनिग्रहस्य

मुनि०–य इति। प्रग्रहानुग्रहयोः–प्रग्रहः शरणागतस्य प्रथमस्वीकारः, अनुग्रहो नाम स्वीकृतस्य परिपालनम्, तयोर्यथान्यायं न्यायमनतिक्रम्य विचक्षणः रक्षितुं समर्थः। युक्तायुक्तविचारमनतिक्रम्य करणचतुर इत्यर्थः। सत्सङ्ग्रहः सदाचारः, तस्य प्रकर्षेण ग्रहणे समर्थः। स्थानवित् निग्रहस्य च दुष्टनिग्रहस्य स्थानवित् चकाराच्छिष्टपरिपालने च। यद्वा प्रग्रहः करादीनां प्रग्रहणम्, अनुग्रहः तस्मिन् सावशेषग्रहणम्। कृतागसामपराधानुसारेण बन्धनस्य मोक्षणस्य च यथाशास्त्रमनुष्ठाने निपुणः। सत्सङ्ग्रहप्रग्रहणे–सतां दूरस्थानां सङ्ग्रहे स्वीकारे प्रग्रहणे प्रकर्षेण क्षेत्रदानभूषणादिभिः स्थितिकरणे प्रणये वा विचक्षणः ॥ २६ ॥

चतुर इत्यर्थः। संदृष्टव्ययकर्मवित् "कश्चिदायस्य चार्धेन चतुर्भागेन वा पुनः। पादभागैस्त्रिभिर्वापि व्ययः संशोध्यते बुधैः॥" इत्यादिशास्त्रावगतव्यय मर्मज्ञः॥ २६॥ श्रैष्ठ्यमिति। शास्त्रसमूहेषु वेदवेदाङ्गेषु श्रैष्ठ्यं महातात्पर्यज्ञत्वं प्राप्तः। व्यामिश्रकेषु संस्कृतभाषात्मककाव्यनाटकालङ्कारादिषु च श्रैष्ठ्यं प्राप्त इत्यनुषङ्गः। अर्थधर्मौ संगृह्य सुखतन्त्रः सुखपरतन्त्रः। अर्थधर्मसंग्रहणपूर्वकमेव सुखसेवी, नतु केवलकामपरतन्त्र इत्यर्थः। न चालसः अर्थ

श्रैष्ठ्यं शास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च। अर्थधर्मौ च संगृह्य सुखतन्त्रो न चालसः॥ २७॥ वैहारिकाणां शिल्पानां विज्ञातार्थविभागवित्। आरोहे विनये चैव युक्तो वारणवाजिनाम्॥ २८॥ धनुर्वेदविदां श्रेष्ठो लोकेऽतिरथसम्मतः। अभियाता प्रहर्ता च सेनानयविशारदः। अप्रधृष्यश्च सङ्ग्रामे क्रुद्धैरपि सुरासुरैः॥ २९॥

धर्मसंग्रहे निरालस्यः॥ २७॥ वैहारिकाणामिति। वैहारिकाणां विहारप्रयोजनानां "तदस्य प्रयोजनम्" इति ठक्। शिल्पानां गीतवादित्राणां चित्र कर्मादीनां च विज्ञाता विशेषज्ञः। अर्थविभागवित् "धर्माय यशसेऽर्थाय आत्मने स्वजनाय च। पञ्चधा विभजन् वित्तमिहामुत्र च शोभते॥" इत्युक्त विभागवित्। वारणवाजिनां गजानामश्वानां च। आरोहे आरोहणे, विनये आरुह्य शिक्षणे च युक्तः समर्थः॥ २८॥ धनुरित्यर्धाधिकः। धनुरादिस्व रूपप्रतिपादको वेदो धनुर्वेदः, उपवेदत्वाद्धनुर्वेदस्य वेदत्वम् तद्विदां मध्ये श्रेष्ठः, समर्मधनुर्वेदविदित्यर्थः। लोके सर्वत्र अतिरथानां अप्रतिहतरथ गतीनां सम्मतः पूजितः। "मतिबुद्धि—" इत्यादिना क्तः। "क्तेन च पूजायाम्" इति समासप्रतिषेधाभाव आर्षः। अभियाता शत्रुसमागमानन्तरं

स्थानवित्। समयज्ञः चकाराच्छिष्टानुपालनस्य समयज्ञ इत्यर्थः। आयकर्मणि न्यायप्राप्यधनसम्पादनकर्मणि। उपायज्ञः तद्विषयोपायज्ञः, पुष्पेभ्यो मधु मधुकर इव प्रजाभ्योऽपीडनेनैव धनं सम्पादयितुं चतुर इत्यर्थः। संदृष्टव्ययकर्मकृत् "कश्चिदायस्य चार्धेन चतुर्भागेन वा पुनः। पादभागैस्त्रिभिर्वापि व्ययः सञ्चोद्यते तथा॥" इति शास्त्रदृष्टव्ययकर्मज्ञः॥ २६॥ श्रैष्ठ्यमिति। शास्त्रसमूहेषु न्यायवैशेषिकवेदान्तादिशास्त्रसमूहेषु। व्यामिश्रकेषु संस्कृतप्राकृतादिभाषात्मककाव्य नाटकालङ्कारादिषु श्रैष्ठ्यं श्रेष्ठतां निपुणतां प्राप्त इत्यर्थः। अर्थधर्मौ सङ्गृह्य अनुरुध्य सुखतन्त्रः कामप्रधानः अर्थधर्मापरित्यागेन कामसेवीत्यर्थः। न चालसः कर्तव्यकार्येषु निरुत्साहत्वमालस्यं तद्रहितः॥ २७॥ वैहारिकाणां विनोदार्थानां चित्रकर्मादीनां विज्ञाता। किञ्च अर्थविभागवित् "धर्माय यशसेऽर्थाय आत्मने स्वजनाय च। पञ्चधा विभजन् वित्तमिहामुत्र च शोभते॥" इत्युक्तप्रकारेणार्थविभागवित्। वारणवाजिनामारोहे आरोहणे विनये विविधगतिनयने शिक्षणेपि युक्तः सन्नद्धः॥२८॥ धनुरिति। अभियाता शत्रूणामभिमुखं याता। प्रहर्ता शत्रूणाम्। सेनानयविशारदः सेनानयश्चक्रादिव्यूहन्यासः तत्र विशारदः निपुणः॥२९॥

न प्रहर्त्तुमिच्छति किंतु स्वयमेव यत्र शत्रवस्तत्र गच्छति, तत्रापि न दुर्गप्रदेशावलम्बनेन याति किन्त्वभियाता अभिमुखं याता । प्रहर्त्ता च अभि
गम्य न योधैर्योधयति किन्तु स्वयमेव नासीरे स्थित्वा प्रथमं प्रहरति । सेनानयविशारदः स्वयं प्रहरन्नपि न स्वसेनां छेदयति किन्तु परदुरवगाह
चक्रव्यूहादिविभागेन सेनाप्रापणसमर्थः । अप्रधृष्यश्च प्रधर्षयितुमशक्यः, सर्वथा विजयीत्यर्थः । संग्रामे प्रणत्या तु जेतुं शक्य इत्यर्थः। न केवलं मनुष्यैः,
सुरासुरैः परस्परविरोधं विहाय मिलितैरपि न चोपशान्तैः क्रुद्धैः क्रोधपरवशैः ॥ २९॥ एवं कल्याणगुणपरिपूर्णत्वमुक्तम् । अथ हेयप्रत्यनीकत्व

अनसूयो जितक्रोधो न दृप्तो न च मत्सरी । न चावमन्ता भूतानां न च कालवशानुगः ॥ ३०॥ एवं श्रेष्ठगुणैर्युक्तः
प्रजानां पार्थिवात्मजः । सम्मतस्त्रिषु लोकेषु वसुधायाः क्षमागुणैः । बुद्ध्या बृहस्पतेस्तुल्यो वीर्येणापि शचीपतेः
॥ ३१ ॥ तथा सर्वप्रजाकान्तैः प्रीतिसञ्जननैः पितुः । गुणैर्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः ॥ ३२ ॥ तमेवं
व्रतसम्पन्नमप्रधृष्यपराक्रमम् । लोकपालोपमं नाथमकामयत मेदिनी ॥ ३३ ॥

माह–अनसूय इति । अनसूयः असूयारहितः । जितक्रोधः क्रोधपारवश्यरहितः । न दृप्तः न गर्विष्ठः । न च मत्सरी परसम्पद्विषये द्वेषरहितः "मत्सरो
ऽन्यशुभद्वेषे" इत्यमरः । नच कालवशानुगः सत्त्वरजस्तमःप्रधानकालानुगुणसत्त्वरजस्तमोगुणो न भवति, केवलसत्त्वमूर्त्तिरित्यर्थः ॥ ३० ॥
उक्तगुणोपसंहारपूर्वकं गुणान्तराण्याह–एवमिति । एवम् उक्तप्रकारेण । पार्थिवात्मजः रामः । प्रजानां मध्ये श्रेष्ठैर्लोकोत्तरैर्गुणैर्युक्तः । त्रिषु लोकेषु
सम्मतः पूजितः । क्षमागुणैः क्षमारूपगुणैः । बहुवचनं प्रकारभेदाभिप्रायेण । वसुधायाः भूमेस्तुल्य इति वक्ष्यमाणमनुषज्यते ॥ ३१ ॥ उपसंहरति–
तथेति । तथा पूर्वोक्तरीत्या । सर्वप्रजाकान्तैः स्त्रीबालयुववृद्धानां प्रियैः । पितुः प्रीतिसञ्जननैः, दृष्टान्तार्थमिदम् । पितुरिव सर्वेषां प्रियैरित्यर्थः। एवंभूतै
र्गुणैः रामः स्वतः सुन्दरः स्वतो दीप्तः सूर्योऽंशुभिरिव विरुरुचे बभौ ॥ ३२॥ एवं रामगुणान् प्रदर्श्य तत्कृतं भूम्युपलक्षितसकललोकप्रावण्यं

अनसूय इति । परकृतासूयारहितः, न च मत्सरी परसम्पद्विषये द्वेषरहितः । न चावमन्ता भूतानां प्राणिनामवमानकर्ता न भवति । न च कालवशानुगः कालवशः
कालपारतन्त्र्यम्, तदनुसारी न भवतीत्यर्थः । " दशवर्षसहस्राणि दशवर्षशतानि च । वत्स्यामि मानुषे लोके पालयन् पृथिवीमिमाम् ॥" इति भगवतैव काल
नियमस्योक्तत्वात् ॥ ३० ॥ वसुधायाः क्षमागुणैः क्षान्तिप्रधानैर्गुणैरिति मध्यमपदलोपी समासः । वसुधायास्तुल्य इति परेण सम्बधः । बुद्ध्या बृहस्पतेस्तुल्यो
वीर्येणापि शचीपतेरिति ॥ ३१ ॥ ३२ ॥ तमेवमिति । मेदिनीशब्देन मेदिनीस्थजना लक्ष्यन्ते । यद्वा मेदिनी तदधिष्ठानदेवता, अकामयत सुजनदुर्जनानुग्रहनिग्र

दर्शयति—तमेवमिति । एवङ्गुणसम्पन्नत्ववत्, व्रतसम्पन्नं आश्रितसंरक्षणरूपव्रतसम्पन्नम् । अप्रधृष्यपराक्रमं अकुण्ठपराक्रमम् । सर्वे लोकपाला उपमा यस्य तं रामं मेदिनी नाथं अकामयत भूमेर्नाथत्वोचितोऽभूदित्यर्थः । अथवा एवं बालकाण्डोक्तरीत्या व्रतसम्पन्नं 'रामस्तु सीतया सार्द्धम्' इत्युक्त रीत्या क्रीडारससम्पन्नम् । अप्रधृष्यपराक्रमं विरोधिवर्गं निवर्त्य सात्म्यभोगप्रदम् । लोकान् पालयतीति लोकपालः, समस्तोपभोगसाधनसम्पन्न इत्यर्थः । उप समीपे मा लक्ष्मीः सीतारूपा यस्य सः उपमः । लोकपालश्चासावुपमश्चेति समासः । तं लक्ष्म्या भोगाननुभवन्तं रामं मेदिन्यपि नाथमकामयत,

एतैस्तु बहुभिर्युक्तं गुणैरनुपमैः सुतम् । दृष्ट्वा दशरथो राजा चक्रे चिन्तां परन्तपः ॥ ३४ ॥
अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः । प्रीतिरेषा कथं रामो राजा स्यान्मयि जीवति ॥ ३५ ॥
एषा ह्यस्य परा प्रीतिर्हृदि संपरिवर्तते । कदा नाम सुतं द्रक्ष्याम्यभिषिक्तमहं प्रियम् ॥ ३६ ॥

स्वयंवरेण कण्ठे मालिकां दातुमैच्छदित्यर्थः ॥ ३३ ॥ तनि०—एवं वृत्तसम्पन्नं लोकपालः उपेन्द्रः तस्य स्थितिकर्तृत्वेनावतारात्स उपमा यस्य तं नाथत्वेनाकामयत । मेदिनीशब्देन मेदिनीस्थायिनो जना लक्ष्यन्ते "मञ्चाः क्रोशन्ति" इतिवदिति केचित् । मेदिनी तदधिष्ठानदेवता अकामयत । शिष्टपरिपालनदुष्टनिग्रहयो र्मेदिन्या एव हर्षहेतुत्वात् । तथोक्तम्—"भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ ॥" इति ॥ ३३ ॥ न केवलं लोकस्तं नाथमकामयत राजापीत्याह—एतैरिति । एतैः पूर्वोक्तैः । बहुभिः असङ्ख्येयैः अनुपमैः लोके कुत्राप्येतादृशगुणादर्शनादसदृशैः गुणैः युक्तं सुतं दृष्ट्वा राजा राज्यभरणश्रान्तः । परंतपः शत्रुसंहारव्यग्रः दशरथः । चिन्तां मनोरथं चक्रे ॥ ३४ ॥ तामेव चिन्तां स्पष्टयति अथेत्यादिना स्वर्गमवाप्नुयामित्यन्तेन—अथेति । अथ रामगुणदर्शनानन्तरम् । चिरजीविनः वृद्धस्य, वयोवृद्धस्येति ज्ञानवृद्धव्यावृत्तिः । वृद्धत्वात् प्रीतिरित्युच्यते । एवम्-एवंप्रकारेणेत्यर्थः । मयि जीवति रामः कथं राजा स्यादित्येषा प्रीतिर्बभूव । अत्र कथमित्युक्तिः कैकेयीवरदानकृतविघ्नशङ्काप्रतिसन्धानेन ॥ ३५ ॥ प्रीतेरौत्कट्यमाह—एषेति । अत्रान्ते इतिकरणं द्रष्टव्यम् । द्रक्ष्यामि इत्येषा परा निरतिशया प्रीतिः । अस्य दशरथस्य । हृदि संपरिवर्त्तते सम्यक् अविच्छिन्नमनुवर्त्तते ॥ ३६ ॥

हयोर्मेदिन्या हर्षहेतुत्वादिति ज्ञेयम् ॥ ३३ ॥ ३४ ॥ चिन्ताप्रकारमाह—अथेत्यादि स्वर्गमवाप्नुयामित्यन्तेन । मयि जीवति सत्येव श्रीरामः कथम्-केनोपायेन राजा स्यादित्येषा प्रीतिः चिन्ता । प्रीयते अनया चिन्तयेति व्युत्पत्त्या प्रीतिशब्दस्य चिन्तापरत्वम्, राज्ञो बभूवेत्यन्वयः ॥ ३५ ॥ एषेति । द्रक्ष्यामीत्यत्रेतिकरणं द्रष्टव्यम् ।

अथ रामस्य राजत्वयोग्यतानुसन्धानं दशरथस्य दर्शयति श्लोकत्रयेण—वृद्धिकाम इति। वृद्धिकाम इत्यनेनापूर्वैश्वर्यप्रदत्वमुक्तम्। सर्वभूतान्यनुकम्पयतीति सर्वभूतानुकम्पनः। कर्तरि ल्युट्। अनेन श्रेष्ठैश्वर्यसाधकत्वमुक्तम्। ममात्मज इति शेषः। दाने सन्तापहारित्वे च दृष्टान्तमाह वृष्टिमान् पर्जन्य इवेति। लोके विषये मत्तः प्रियतरः अतिशयेन प्रीतिमान्। प्रीणातीति प्रियः। पचाद्यच्॥ ३७॥ पूर्वं प्रियतरत्वमुक्तम्, अत्र तद्धेतुगुण

वृद्धिकामो हि लोकस्य सर्वभूतानुकम्पनः। मत्तः प्रियतरो लोके पर्जन्य इव वृष्टिमान् ॥ ३७॥ यमशक्रसमो वीर्ये बृहस्पतिसमो मतौ। महीधरसमो धृत्यां मत्तश्च गुणवत्तरः ॥ ३८॥ महीमहमिमां कृत्स्नामधितिष्ठन्तमात्मजम्। अनेन वयसा दृष्ट्वा यथास्वर्गमवाप्नुयाम् ॥ ३९॥ इत्येतैर्विविधैस्तैस्तैरन्यपार्थिवदुर्लभैः। शिष्टैरपरिमेयैश्च लोके लोकोत्तरैर्गुणैः ॥४०॥ तं समीक्ष्य महाराजो युक्तं समुदितैः शुभैः। निश्चित्य सचिवैः सार्द्धं युवराजममन्यत ॥ ४१॥ दिव्यन्तरिक्षे भूमौ च घोरमुत्पातजं भयम्। सञ्चचक्षे च मेधावी शरीरे चात्मनो जराम् ॥४२॥

वत्तरत्वमुच्यते—यमशक्रसम इति। प्रत्येकं साम्यानर्हत्वाद्यमशक्रेत्युक्तम्॥ ३८॥ महीमिति। यथास्वर्गं स्वसदृशं स्वसुकृतानुरूपं स्वर्गमित्यर्थः। यद्वा यथास्वर्गं यथाभूतस्वर्गं 'यस्त्वया सह स स्वर्गः' इत्युक्तरामसौन्दर्यानुभवस्वर्गमित्यर्थः॥ ३९॥ इतीति श्लोकद्वयमेकान्वयम्। इति पूर्वोक्तरीत्या। विविधैस्तैस्तैस्तत्तत्कार्यभेदेन प्रसिद्धैः। अन्यपार्थिवदुर्लभैः सामान्यराजदुर्लभैः। शिष्टैः उक्तव्यतिरिक्तसौशील्यादिभिः अपरिमेयैः असङ्ख्येयैः। कतिपयगुणाः प्रदर्शिताः शिष्टास्त्वपरिमेया इति भावः। लोके लोकोत्तरैर्लोके कुत्राप्येवं लोकोत्तरगुणा न सन्तीत्यर्थः। समुदितैः स्वाभाविकैः शुभैः कल्याणतमैर्गुणैर्युक्तं तं रामं समीक्ष्य महाराजो दशरथः। सचिवैः सार्द्धं निश्चित्य युवराजममन्यत, अयं युवराजो भवेदिति निश्चितवानित्यर्थः॥ ४०॥ ४१॥ अथ सद्यो रामाभिषेककर्त्तव्यताहेतुं स्वविपत्तिसूचकं दुर्निमित्तमात्मनो जरां चालोचितवानित्याह—दिवीति।

प्रीतिः चिन्ता। अस्य दशरथस्य हृदि संपरिवर्तत इत्यन्वयः॥ ३६–३८॥ महीमिति। अनेन वयसा कृत्स्नां महीं अधिष्ठितमात्मजं दृष्ट्वा यथा स्वर्गमाप्नुयामिति प्रीतिः हृदि संपरिवर्तत इति पूर्वेण सम्बन्धः॥ ३९॥ ४०॥ इतीत्यादि। लोकोत्तरैर्गुणैरित्यस्य युक्तमिति पूर्वेण सम्बन्धः। उक्तव्यतिरिक्तसौशील्यादिभिः समुदितैर्मिलितैः॥ ४१॥ दिवीति। उत्पातजम्-आत्मानिष्टसूचकोत्पातसूचितम्। दिव्योत्पातः ग्रहनक्षत्रादिवैकृतम्। अन्तरिक्षोत्पातः-महावातपरिवेषसन्ध्यादिग्धू

दिव्यन्तरिक्षे भूमौ च यान्युत्पातानि तज्जं भयमित्यर्थः । तानि चोक्तानि ज्योतिःशास्त्रे–" स्वर्भानुकेतुनक्षत्रग्रहतारार्कचन्द्रजम् । दिवि चोत्पद्यते यच्च तद्दिव्यमिति कीर्तितम् । वाय्वभ्रसन्ध्यादिग्दाहपरिवेषतमांसि च । खपुरं चेन्द्रचापं च तद्विद्यादन्तरिक्षजम् । भूमावुत्पद्यते यच्च स्थावरं वाथ जङ्गमम् । तदैकदेशिकं भौममुत्पातं परिचक्षते ॥ " इति । भयावहानि घोराणि, दिव्याद्युत्पातानीति फलितार्थः । मेधावी सूक्ष्मदर्शी, राजा संचचक्षे

पूर्णचन्द्राननस्याथ शोकापनुदमात्मनः । लोके रामस्य बुबुधे संप्रियत्वं महात्मनः ॥ ४३ ॥
आत्मनश्च प्रजानां च श्रेयसे च प्रियेण च । प्राप्तकालेन धर्मात्मा भक्त्या त्वरितवान्नृपः ॥ ४४ ॥
नानानगरवास्तव्यान् पृथग्जानपदानपि । समानिनाय मेदिन्याः प्रधानान् पृथिवीपतीन् ॥ ४५ ॥

दृष्टवान् सचिवायोक्तवानिति वा, आत्मनः शरीरे जरां च संचचक्षे । ख्याञभाव आर्षः ॥ ४२ ॥ एवं रामाभिषेके हेतुद्वयमुक्तम्, सर्वलोकप्रियत्वं च हेतुमाह–पूर्णचन्द्राननस्येति । अथ उत्पातदर्शनानन्तरम् । पूर्णचन्द्राननस्य तद्वत्सर्वसन्तापहरस्य । महात्मनः महामतेः रामस्य । लोके विषये संप्रियत्वं कीदृशम् ? आत्मनः स्वस्य शोकापनुदं उत्पातादिभयनिवर्तकं सम्यक् प्रियत्वं बुबुधे अनुसन्दधावित्यर्थः ॥ ४३ ॥ एवमनुसन्धानप्रयोजनमाह–आत्मन इति । आत्मनः प्रजानां च श्रेयसे हितार्थाय प्रियेण च प्रियाय च । चतुर्थ्यर्थे तृतीया । धर्मात्मा धर्मशीलः । धर्मेण प्राणिसंरक्षकः नृपः प्राप्तकालेनोपलक्षितः सन् । भक्त्या प्रीत्या । त्वरितवान् प्राप्तकालत्वं स्वस्य वृद्धत्वं रामयौवनं वसन्तकालो वा ॥ ४४ ॥ नानेति । नानानगरेषु वसन्तीति नानागरवास्तव्याः तान् " वसेस्तव्यत्कर्तरि णिच्च " इति कर्तरि तव्यत्प्रत्ययः । पृथग्जानपदान् जनपदान्तरस्थान् । मेदिन्याः भुवः । प्रधानान् न केवलानवान्तरनृपतीनित्यर्थः । पृथक्क् समानिनायेति वा ॥४५ ॥

मादिः । भौमोत्पातः–स्थावरजङ्गमविकारः, स्थावरविकारः भूकम्पशिलापातवृक्षरक्तस्रवणादिः, जङ्गमविकारः मनुष्यादिजातीयपशुपक्ष्याद्युत्पत्तिः, एतात्रिविधोत्पातजं भयं संचचक्षे कथयामास । सचिवानामिति शेषः । जरादर्शनं च रामाभिषेककारणान्तरमिति मत्वोक्तम्, न तूत्पातत्वेनेति द्रष्टव्यम् ॥४२॥ पूर्णेति । आत्मनः स्वस्य शोकापनुदं सुखावहं लोके महात्मनो रामस्य संप्रियत्वं सर्वानन्दकरत्वम् । बुबुधे ज्ञातवान् ॥४३॥ आत्मन इति । प्रियेण प्रीत्या हेतुना च भक्त्या श्रीरामपरिपालिताः प्रजाः धन्या भवन्त्विति प्रजाविषयभक्त्या च आत्मनः प्रजानां च श्रेयसे नृपो दशरथः, प्राप्तकाले प्राप्तावसरे, त्वरितवान् । रामाभिषेकमिति शेषः ॥४४॥ नाना

नेति। श्रोष्यत इत्यनन्तरमितिकरणं द्रष्टव्यम् । अनानयने हेतुमाह त्वरयेति । दूरवर्त्तित्वादितिभावः । केकयराजानमित्यत्र समासान्तविधे
रनित्यत्वाट्टजभावः ॥ ४६ ॥ तान् वेश्मनानाभरणैरिति। प्रथमं वेश्मनानाभरणैः प्रतिपूज्य पश्चात्तान् ददर्शेत्यर्थः ॥ ४७ ॥ दर्शनप्रकारमेवाह–
अथेति । प्रविविशुः, सभामिति शेषः । शेषाः केकयराजजनकभिन्नाः ॥ ४८ ॥ अथेति । राजवितीर्णेषु राजदत्तेषु । नियताः नियतदेशाधिपत्याः,

न तु केकयराजानं जनकं वा नराधिपः । त्वरया चानयामास पश्चात्तौ श्रोष्यतः प्रियम् ॥ ४६ ॥ तान् वेश्म
नानाभरणैर्यथार्हं प्रतिपूजितान् । ददर्शालङ्कृतो राजा प्रजापतिरिव प्रजाः ॥ ४७ ॥ अथोपविष्टे नृपतौ तस्मिन्
परबलार्दने। ततः प्रविविशुः शेषा राजानो लोकसम्मताः ॥ ४८ ॥ अथ राजवितीर्णेषु विविधेष्वासनेषु च ।
राजानमेवाभिमुखा निषेदुर्नियता नृपाः ॥ ४९ ॥ स लब्धमानैर्विनयान्वितैर्नृपैः पुरालयैर्जानपदैश्च मानवैः ।
उपोपविष्टैर्नृपतिर्वृतो बभौ सहस्रचक्षुर्भगवानिवामरैः ॥ ५० ॥ इत्यार्षे० श्रीमदयोध्याकाण्डे प्रथमः सर्गः ॥१॥
ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः। हितमुद्धर्षणं चैवमुवाच प्रथितं वचः ॥ १ ॥

अन्तरङ्गा वा पादाप्रसारणादिनियमयुक्ता वा ॥ ४९ ॥ स इति । लब्धमानैः प्राप्तबहुमानैः । पुरालयैः नानानगरवासिभिः । उपोपविष्टैः राजवचन
श्रवणादरेण मन्दंमन्दं समीपं प्राप्तैः नृपैः मानवैश्च वृतो नृपतिः । भगवान् महात्म्यवान् । सहस्रचक्षुः इन्द्र इव बभौ ॥ ५० ॥ इति श्रीगोविन्दराज
विरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥ अथ रामाभिषेकस्य सर्वसम्मतत्वं दर्शयति द्वितीये–तत
इत्यादि । ततः राजादिनिवेशानन्तरम् । परिषदं पौरजानपदसमूहम् । आमन्त्र्य अभिमुखीकृत्य । हितं श्रेयस्करम् । उद्धर्षणं उत्कूलहर्षजनकम् । प्रथितं

नगरेति । नानानगरेषु वसन्तीति नानानगरवास्तव्याः ॥ ४५ ॥ नत्विति । पश्चात् प्रियं रामाभिषेकं श्रोष्यत इति विचार्य त्वरया श्व एव अभिषेक्ष्यामीति ।
संभ्रमेणेति शेषः ॥ ४६ ॥ तानिति । वेश्मनानाभरणैः प्रतिपूजितान् रम्यगोगृहभूषणप्रदानादिना स्वेन सत्कृतानित्यर्थः । प्रजापतिः ब्रह्मा ॥ ४७ ॥
अथेति । शेषाः जनककेकयराजव्यतिरिक्ताः । राजवितीर्णेषु राज्ञा दत्तेषु ॥ ४८ ॥ ४९ ॥ स इति । लब्धमानैः लब्धसत्कारैः । उपोपविष्टः सहस्रचक्षुः
इन्द्रः ॥ ५० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां प्रथमः सर्गः ॥ १ ॥ तत इति । परिषदमास्थानमण्डप

प्रकटार्थम् । एवं वक्ष्यमाणरीत्या ॥ १ ॥ प्रथितमुवाचेत्युक्तं विशदयति—दुन्दुभिस्वनकल्पेनेति । दुन्दुभिस्वनकल्पेन भेरीस्वनसदृशेन । ईषदसमाप्तौ कल्पप्प्रत्ययः । गम्भीरेण गम्भीरार्थेन । अनुनादिना दिशः प्रतिध्वनयता । स्वरेण महता-महता स्वरेण नादयन् जीमूत इव मेघ इव स्थितः राजा उवाच । पुनः स्वरः कीदृशः ? राजलक्षणयुक्तेन प्रभावानुरूपेण कान्तेन मृदुना रसयुक्तेन माधुर्यवता ॥ २ ॥ ३ ॥ स्वकृतराज्यपरिपालनस्य पूर्वकृत

दुन्दुभिस्वनकल्पेन गम्भीरेणानुनादिना । स्वरेण महता राजा जीमूत इव नादयन् ॥ २ ॥ राजलक्षणयुक्तेन कान्तेनानुपमेन च । उवाच रसयुक्तेन स्वरेण नृपतिर्नृपान् ॥ ३ ॥ विदितं भवतामेतद्यथा मे राज्यमुत्तमम् । पूर्वकैर्मम राजेन्द्रैः सुतवत्परिपालितम् ॥४॥ सोऽहमिक्ष्वाकुभिः पूर्वैर्नरेन्द्रैः परिपालितम् । श्रेयसा योक्तुकामोऽस्मि सुखार्हमखिलं जगत् ॥ ५ ॥ मयाप्याचरितं पूर्वैः पन्थानमनुगच्छता । प्रजा नित्यमनिद्रेण यथाशक्त्यभिरक्षिताः ॥ ६ ॥

पालनादविशेषं सूचयन्नाह—विदितमिति । अन्ते इतिकरणं द्रष्टव्यम् । उत्तमं विपुलं मे एतद्राज्यं मम पूर्वकैः पूर्वैः राजेन्द्रैः रघुप्रभृतिभिः सुतवत्परिपालितम् । अतिप्रेम्णा सुरक्षितमित्येतद्भवतां विदितं " क्तस्य च वर्तमाने " इति षष्ठी । भवद्भिर्विदितमित्यर्थः ॥ ४ ॥ अस्तु, ततः किमित्यत्राह—सोऽहमिति । सः तद्वंश्योऽहम् । इक्ष्वाकुभिः इक्ष्वाकुवंश्यैः सर्वैः नरेन्द्रैः परिपालितम्, अतएव सुखार्हं अखिलं जगत् राज्यं श्रेयसा सुखेन अधुनापि योक्तुं कामयत इति योक्तुकामः अस्मि । " तुं काममनसोरपि " इति मकारलोपः । योक्तुमिच्छामीत्यर्थः ॥५॥ ननु भवत्कृतं पालनमेवास्माकं श्रेय इत्यत्राह—मयापीति । पूर्वैः राजभिः आचरितं क्षुण्णं पन्थानं मर्यादाम् अनुगच्छता अनुसरता । नित्यं अनिद्रेण जागरूकेण मयापि प्रजाः यथाशक्त्य

गतजनम्, हितमुत्तरत्र श्रेयस्करम् । उद्धर्षणम् आनन्दजनकमित्यर्थः । प्रथितम् अर्थगरिष्ठतया प्रसिद्धमित्यर्थः ॥१॥ दुन्दुभीति । अनुनादिना प्रतिध्वनिना स्वरेण नादयन्, दिश इति शेषः । गम्भीरेण महता स्वरेणोवाचेति पूर्वेण सम्बन्धः ॥२॥ राजेति । राजलक्षणयुक्तेन राजवाक्यानुरूपलक्षणयुक्तेन । माधुर्यरसयुक्तेन नृपति दशरथः, नृपानुवाच ॥ ३ ॥ विदितमिति । मे राज्यं मयेदानीं पाल्यमानं राज्यमित्यर्थः । मम पूर्वकैः राजेन्द्रैर्मन्वादिभिः, यथासुतवत् पुत्रेण तुल्यं परिपालितम् एतत्परिपालनम्, भवतां भवद्भिर्विदितमित्यर्थः ॥ ४ ॥ ततः किम् ? तत्राह—सोहमिति । इक्ष्वाकुभिरिक्ष्वाकुवंश्यैर्नरेन्द्रैः परिपालितं सुखार्हं जगत् श्रेयसा श्रीरामाभिषेकरूपेण योक्तुकामोस्मि ॥ ५ ॥ मत्कृतं परिपालनं भवदनुभवसाक्षिकमित्याह—मयेति । पूर्वैरिक्ष्वाकुप्रभृतिभिराचरितं पन्थानं सन्मार्गं प्रजापरिपालनरूपम् ।

भिरक्षिताः। यथाशक्तीति विनयोक्तिः ॥ ६ ॥ तर्हीदानीमपि तथैव रक्ष्यतामित्यत्राह—इदमिति। कृत्स्नस्य लोकस्य जनस्य हितं चरता कुर्वता मया
इदं शरीरं भवतां प्रत्यक्षं हीति भावः। पाण्डरस्यातपत्रस्य श्वेतस्य छत्रस्य। छायायां जरितं सञ्जातजरं कृतम्, जरापर्यन्तमेकच्छत्रतया पराक्रमनिधि
भूत्वा मया नियमेन लोकहितमाचरितमित्यर्थः ॥ ७ ॥ तर्हि सम्प्रति किं कर्त्तव्यमित्यत्राह—प्राप्य वर्षसहस्राणीति। बहूनि वर्षसहस्राणि षष्टिवर्षसहस्र

इदं शरीरं कृत्स्नस्य लोकस्य चरता हितम्। पाण्डरस्यातपत्रस्य च्छायायां जरितं मया ॥७॥ प्राप्य वर्षसहस्राणि
बहून्यायूंषि जीवतः। जीर्णस्यास्य शरीरस्य विश्रान्तिमभिरोचये ॥८॥ राजप्रभावजुष्टां हि दुर्वहामजितेन्द्रियैः।
परिश्रान्तोऽस्मि लोकस्य गुर्वीं धर्मधुरं वहन् ॥९॥ सोऽहं विश्रममिच्छामि पुत्रं कृत्वा प्रजाहिते। सन्निकृष्टानिमान्
सर्वाननुमान्य द्विजर्षभान् ॥१०॥ अनुजातो हि मां सर्वैर्गुणैर्ज्येष्ठो ममात्मजः। पुरन्दरसमो वीर्ये रामः परपुरञ्जयः॥ ११

परिमितान्यायूंषि प्राप्य जीवतः क्रमेण जीर्णस्यास्य शरीरस्य। विश्रान्तिं राज्यभाराद्विरतिम्। अभिरोचये इच्छामि। एतेन ययातिवद्विषयचापलेन न
राज्याद्विरम्यत इति दर्शितम् ॥ ८ ॥ इतःपरं राज्यवहनाशक्तौ निमित्तमाह—राजेति। राजप्रभावैः शौर्यादिभिः जुष्टां सेवितुमर्हाम्। अजिते
न्द्रियैः विषयपरैः। दुर्वहां तादृशप्रभावरहितैर्वोढुमशक्याम्। गुर्वीं बहुसाधननिर्वाह्याम्। लोकस्य धर्मधुरं धर्मस्थापनरूपभारं वहन्नहं परिश्रान्तो
ऽस्मि ॥ ९ ॥ विवक्षितमर्थं दर्शयति—स इति। सः एवं श्रान्तोऽहं प्रजाहिते प्रजारक्षणविषये। पुत्रं कृत्वा नियम्य। सन्निकृष्टान् अन्तरङ्गभूतान्
इमान् सर्वान् द्विजर्षभान् ब्राह्मणश्रेष्ठान्। अनुमान्य कृतानुमतिकान् कृत्वा। मानयतेर्ण्यन्ताल्ल्यप्। विश्रमं श्रान्तिनिवृत्तिमिच्छामि ॥ १० ॥
कस्ते पुत्रो यौवराज्ये नियोज्योऽभिमतस्तत्राह—अनुजात इति। वीर्य्यें विषये पुरन्दरसमः इन्द्रतुल्यः। तौल्यमेवाह परेषां शत्रूणां पुराणि जयति
स्वाधीनीकरोतीति परपुरञ्जयः। असंज्ञायामपि जेः खजार्षः। रामः रामनामकः मम ज्येष्ठ आत्मजः। सर्वैर्गुणैः शौर्यादिभिः मामनुजातः "अनुर्लक्षणे"

इदमिति। लोकस्य हितं श्रेयः चरता कुर्वता आतपत्रस्य छायायां अनुगच्छता अनुसरता। नित्यमनिद्रेण सदा जागरूकेण। यथाशक्ति-सामर्थ्यानुरूपेण ॥ ६ ॥
जरितं जरान्वितम्, अनेन सर्वकालपर्यटनं व्यज्यते, न तु विषयासक्त्येति भावः। एवं प्रयासेन राज्यमेकच्छत्रमभूदिति तात्पर्यम् ॥ ७ ॥ प्राप्येति। वर्षसह
स्राणि षष्टिवर्षसहस्राणि प्राप्य बहून्यायूंषि वत्सरशतरूपानेकपुरुषायूंषि ॥ ८ ॥ राजेति। राजप्रभावजुष्टां राजतेजसा पालिताम् ॥ ९ ॥ सोऽहमिति। प्रजाहिते
पुत्रं कृत्वा, नियुज्येत्यर्थः। अनुमान्य अनुमतिं प्रापय्य। अनुज्ञाप्येति पाठे—अनुज्ञां कारयित्वेर्थः ॥ १० ॥ अनुजात इति। अनुजातः—अनुसृत्य जातः ॥ ११ ॥

इत्यनुः कर्मप्रवचनीयः । तद्योगान्मामिति द्वितीया । मद्गुणान् सर्वाननुप्राप्य जात इत्यर्थः । ननु 'मत्तश्च गुणवत्तरः । अपरिमेयैश्च लोके लोकोत्तरैर्गुणैः'
इति पूर्वमुक्तम्, कथमिदानीमनुजातो हि मां सर्वैर्गुणैरित्युच्यते पुरन्दरसम इति च । उच्यते—" अन्या मध्यस्थचिन्ता हि विमर्दाभ्यधिकोदया "
इतिन्यायेन पौरमुखेन रामस्य सर्वाभ्यधिकगुणतां वक्तुमेवमुक्तामिति ध्येयम् । अतएव वक्ष्यति " बहवो नृप कल्याणा गुणाः पुत्रस्य सन्ति ते "
इति ॥ ११ ॥ तमिति । तं स्वगुणतुल्यगुणम् । धर्मभृतां धार्मिकाणां वरं पुरुषपुङ्गवम् । पुष्येण नक्षत्रेण युक्तं चन्द्रमिव स्थितं तद्वदत्युज्ज्वलम् ।

तं चन्द्रमिव पुष्येण युक्तं धर्मभृतां वरम् । यौवराज्ये नियोक्तास्मि प्रीतः पुरुषपुङ्गवम् ॥ १२ ॥
अनुरूपः स वै नाथो लक्ष्मीवाल्लँक्ष्मणाग्रजः । त्रैलोक्यमपि नाथेन येन स्यान्नाथवत्तरम् ॥ १३ ॥

पुष्येण चन्द्रमिवेत्युक्तम् । यौवराज्ये नियोक्तास्मि । यद्वा चन्द्रमिव स्थितं तं श्वः पुष्येण यौवराज्ये नियोक्तास्मी
यद्वा पुष्यनक्षत्रेऽभिषेककरणात् पुष्येण चन्द्रमिवेत्युक्तम् । यौवराज्ये नियोक्तास्मि । यद्वा चन्द्रमिव स्थितं तं श्वः पुष्येण यौवराज्ये नियोक्तास्मी
त्यर्थः ॥ १२ ॥ दशरथवचनं वाल्मीकिस्तत्त्वज्ञतया श्लाघते—अनुरूप इति । स रामः अनुरूपः अनुगुणः नाथः, लोकस्येति शेषः । अनुरूपत्वे हेतुः
लक्ष्मीवानिति । अपरिच्छिन्नतेजस्क इत्यर्थः । तत्रापि हेतुर्लक्ष्मणाग्रज इति । "लक्ष्मणो लक्ष्मिवर्द्धनः " इत्युक्तम् । यद्वा अनुरूपत्वे हेतुर्लक्ष्मणाग्रज
इति । लक्ष्मण इव सर्वत्र स्वाश्रिते प्रेमशालीत्यर्थः । अथवा अनुरूप इत्यादि नित्यानपायिन्या लक्ष्म्या विशिष्टः परिजनपर्यन्तो रामः सर्वस्य निरुपा
धिकः शेषी । दशरथस्तु राज्यपालनोपाधिकशेषी । वै इति श्रुत्यादिप्रसिद्धिं द्योतयति "दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः" इत्याद्युक्तेः ।
तस्य निरुपाधिकशेषित्वे निमित्तमाह त्रैलोक्यमिति । त्रयो लोका एव त्रैलोक्यम् । चतुर्वर्णादित्वात्स्वार्थे ष्यञ् । त्रैलोक्यमपि येन नाथेन नाथवत्तरम्
अतिशयेन नाथवत् । रामस्य रक्षकत्वावलोकने कियन्मात्रं त्रैलोक्यमिति भातीत्यर्थः । अथवा अनेन श्लोकेन रामस्य परत्वमुच्यते—सः रामः अनु
रूपो नाथः सहजशेषी जगतः, अन्ये तु कर्मानुगुणतयौपाधिकाः। अनुकूलं रूपं यस्य सोऽनुरूपः। "समः समविभक्ताङ्गः। चन्द्रकान्ताननम्" इत्याद्युक्त
निरुपमसौन्दर्य्यशालिदिव्यमङ्गलविग्रह इत्यर्थः । अनुकूलं स्वरूपं यस्यासावनुरूपः । शतगुणितोत्तरक्रमेण निरतिशयदशाशिरस्कतया ऽभ्यस्यमाना
नन्दरूप इत्यर्थः । " आनन्दो ब्रह्म " इति ह्युक्तम् । अनुगतं रूपं यस्यासावनुरूपः, सर्वव्यापीत्यर्थः । अनुरूपः अनुप्रविष्टचराचरादिकशरीरः, सर्व

रामस्यातिमानुषशक्तियोगं प्रकटयति—तमिति । पुष्येण नक्षत्रेण युक्तं चन्द्रमिव प्रकाशमानं तं रामं यौवराज्ये नियोक्तास्मि नियोक्ष्ये ॥ १२ ॥ अनुरूप इति ।

शरीरीत्यर्थः । अनुरूपः अनुस्यूतरूपः । परव्यूहविभवान्तर्याम्यर्चावताररूपेण नानावतारशालीत्यर्थः । अनुरूपः ओः रुद्रस्य रूपं शरीरं तद्विलक्षण शरीरः । "वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु" इत्याद्युक्तरूपविलक्षणरूपः पुण्डरीकाक्षत्वादियुक्तः । उस्वरूपभिन्न इति त्रिमूर्ति साम्यं च निरस्यते । वीनां पक्षिणां नाथो विनाथः हंसः तत्सम्बन्धी वैनाथः । अण्यादिवृद्धिः । हंसवाहनः चतुर्मुखः तत्सहितः सवैनाथः नाभिपद्मस्थल स्थितचतुर्मुख इत्यर्थः । वैनाथो गरुडवाहनो वा । नाथत्वे हेतुर्लक्ष्मीवानिति । नित्ययोगे मतुप् । " ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" "अप्रमेयं हि तत्तेजो यस्य

अनेन श्रेयसा सद्यः संयोज्यैवमिमां महीम् । गतक्लेशो भविष्यामि सुते तस्मिन्निवेश्य वै ॥ १४ ॥

यदीदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम् । भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम् ॥ १५ ॥

सा जनकात्मजा" "वेदान्तास्तत्त्वचिन्तां मुरभिदुरसि यत्पादचिह्नैस्तरन्ति" इति । पत्नीविशिष्टत्ववत् परिजनविशिष्टत्वमाह लक्ष्मणाग्रज इति । लक्ष्मण शब्दः कैङ्कर्यपरमात्रोपलक्षणार्थः । अग्रज इति तन्निरूप्यत्वोक्त्या आश्रितपारतन्त्र्यमुक्तम् । ननु कथमयमनुरूपो नाथः? ब्रह्मरुद्रादयोऽपि हि सन्ति नाथा इत्यत्राह त्रैलोक्यमपीति । कृतकमकृतकं कृतकाकृतकमित्युक्तं समस्तं जगदित्यर्थः । येन नाथेन नाथवदित्यनेनेन्द्रादिव्यावृत्तिः । तरपा ब्रह्मरुद्रादि व्यावृत्तिः । तन्नाथत्वस्यैतन्मूलत्वात् " युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः । पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम ॥ महादेवः सर्वमेधे महात्मा हुत्वात्मानं देवदेवो बभूव " इत्यादि स्मृतयः तत्र मानम् । त्रैलोक्यं नाथवत्तरं रक्ष्यापेक्षया रक्षकत्वराधिकेत्यर्थः ॥ १३ ॥ अनेनेति । इमां मया चिर कालधृतां महीं तस्मिन् ज्येष्ठे सुते निवेश्य, महीपालनभारं निक्षिप्येत्यर्थः । अनेन तन्निवेशरूपेण श्रेयसा च महीमेवं सद्यः संयोज्य गतक्लेशः गतराज्य भरणक्लेशो भविष्यामि । रामाभिषेकस्य द्वे फले, मह्याः श्रेयो मम विश्रान्तिश्चेति भावः ॥ १४ ॥ यदीति । इदं रामाभिषेकरूपं कार्यं मे राज्यभरण श्रान्तस्य वृद्धस्य मे यद्यनुरूपार्थं उचितप्रयोजनकं चेत् मया वा साधु सुमन्त्रितं यदि सम्यक् विचार्यारब्धं चेदित्यर्थः । तदा भवन्तः मे मह्यम् । अनु

येन लक्ष्मीयुक्तेन नाथेन त्रैलोक्यमपि नाथवत्तरम्, चतुर्मुखेन्द्रादय इव नाथवन्मात्रं न, किन्तु नाथवत्तरम् अनुरूपस्वामिकम् । स लक्ष्मणाग्रजः त्रैलोक्यान्तर्गतानां वो युष्माकम् अनुरूपो नाथः स्यादिति योजना ॥ १३ ॥ अनेनेति । इमां चिरकालधृतां महीं सुते सन्निवेश्य अनेन तन्निवेशरूपेण श्रेयसा महीं सन्नियोज्य गतक्लेशो भविष्यामीति सम्बन्धः ॥ १४ ॥ यदीति । मे इदमभिषेकरूपं कार्यम अनुरूपार्थं भवतामनुकूलार्थं यदि मया साधु सुमन्त्रितं यदि मे तर्हि भवन्तोऽनु

मन्यन्तां अनुमतिं कुर्वन्तु। इदं मे अनुकूलार्थं चेत्कथं वान्यत्करवाणि ॥ १५ ॥ ...... तत् क्रियतामित्यत्राह-यद्यपीति। एषा रामाभिषेकविषया प्रीतिर्यद्य प्यस्ति तथाप्यन्यद्धितमस्ति चेच्चिन्त्यताम्। ननु कस्त्वत्तोधिकदर्शीत्यत्राह अन्येति। मध्यस्थानां रागद्वेषरहितानां चिन्ताविचारः अन्या अन्यादृशी स्वमात्रचिन्तातो विलक्षणा। तदेव वैलक्षण्यमाह विमर्दाभ्यधिकोदयेति। विमर्देन पूर्वापरपक्षसङ्घर्षणेन हेतुना अभ्यधिकोदया अधिकार्थप्रादुर्भावा हि ॥ १६ ॥

यद्यप्येषा मम प्रीतिर्हितमन्यद्विचिन्त्यताम्। अन्या मध्यस्थचिन्ता हि विमर्दाभ्यधिकोदया ॥१६॥ इति ब्रुवन्तं मुदिताः प्रत्यनन्दन्नृपा नृपम्। वृष्टिमन्तं महामेघं नर्दन्त इव बर्हिणः॥ १७ ॥ स्निग्धोनुनादी सञ्जज्ञे तत्र हर्षसमीरितः। जनौघोद्घुष्टसन्नादो विमानं कम्पयन्निव ॥१८॥ तस्य धर्मार्थविदुषो भावमाज्ञाय सर्वशः। ब्राह्मणा जनमुख्याश्च पौरजानपदैः सह ॥१९॥ समेत्य मन्त्रयित्वा तु समतांगतबुद्धयः। ऊचुश्च मनसा ज्ञात्वा वृद्धं दशरथं नृपम् ॥ २०॥

इतीति। इति पूर्वोक्तप्रकारेण। ब्रुवन्तं नृपं दशरथम्। नृपाः परिषद्गता राजानः। वृष्टिमन्तं वर्षुकं महामेघं नर्दन्तः केकाङ्कुर्वन्तः बर्हिण इव मयूरा इव। मुदिताः सन्तः प्रत्यनन्दन् प्राशंसन् ॥ १७ ॥ स्निग्ध इति। तत्र सभायाम्। स्निग्धः स्नेहाभिव्यञ्जकः। अनुनादी प्रतिध्वनिकारी। जनौघोद्घुष्टः जनसमूहोत्पादितः सन्नादः समीचीनशब्दः। विमानं तदास्थानमण्डपविमानं कम्पयन्निव सञ्जज्ञे, न केवलं राजान एव सर्वेऽपि जनाः तच्छ्रुत्वा सन्तुष्टा इत्यर्थः ॥ १८ ॥ तस्येत्यादि श्लोकद्वयमेकान्वयम्। ब्राह्मणाः वसिष्ठाद्याः जनमुख्याः राजानश्च पौरैर्नागरिकैः जानपदैश्च। समेत्य संयुज्य। मन्त्रयित्वा युक्तायुक्तं विचार्य। धर्मार्थविदुषः स्वस्य वार्द्धके युवराजस्थापनं धर्मः प्रजानामर्थसाधनं चेति जानतः तस्य दशरथस्य। भावं वचनमूलतात्पर्यम्। सर्वशः सर्वप्रकारेण, देशकालेङ्गितादिभिः। आज्ञाय आ समन्तात् ज्ञात्वा। समतां साम्यं गताः बुद्धयो येषां ते तथोक्ताः। ऐकमत्यं प्राप्ताः सन्तः

मन्यन्ताम् ममानुज्ञां प्रयच्छत। कथं वा करवाणि, भवतामनुमतिं विनेत्यर्थः. किं करवाणीतिवार्थः ॥१५॥ ननु भवदधिकः को वा हिताहितविचारसमर्थस्तत्राह-यद्यपीत्यादिना। यद्यपि एषा रामाभिषेकविषया चिन्ता मम प्रीतिः प्रिया, तथाप्यतोऽन्यद्धितमस्ति चेद्विचिन्त्यताम्। तथाहि विमर्देन विचारेण अभ्यधिकोदया अधिकफला मध्यस्थानां चिन्ता अन्यादृशी स्वजनचिन्ताविलक्षणा ॥ १६ ॥ इतीति। प्रत्यनन्दन् प्रशंसापूर्वकमङ्गीचक्रुः ॥ १७ ॥ स्निग्ध इति। जनौघोद्घुष्टसन्नादः सम्यङ्नादः यस्य विमानं राज्यस्थानम् ॥ १८ ॥ १९ ॥ तस्येत्यादि। समतागतबुद्धयः समतागताः साम्यमैक्यं गताः बुद्धयो येषां ते ॥ २० ॥ २१ ॥

मनसा च ज्ञात्वा प्रत्येकं स्वस्वहृदयेन निश्चित्य वृद्धं नृपं [illegible] ॥ १९ ॥ २० ॥ वृद्धं नृपमिति कविना सूचितमर्थं दर्शयति–अनेकेति। हे पार्थिव ! त्वं अनेक[illegible]र्षसाहस्रः सहस्राण्येव साहस्राणि। स्वार्थे अण्। अनेकानि वर्षसाहस्राणि यस्य स तथा। वृद्धोऽसीति विशेषणमहिम्ना अति वृद्धोसीति गम्यते। सः [illegible]शवृद्धस्त्वं पार्थिवं पृथिवीशासनार्हं युवराजानं युवराजम्। समासान्तस्यानित्यत्वान्न "राजाहःसखि–" इत्यादिना टच्।

अनेकवर्षसाहस्रो वृद्धस्त्वमसि पार्थिव। स रामं युवराजानमभिषिञ्चस्व पार्थिवम् ॥ २१ ॥

इच्छामो हि महाबाहुं रघुवीरं महाबलम्। गजेन महतायान्तं रामं छत्रावृताननम् ॥ २२ ॥

अभिषिञ्चस्व यथा रामो युवराजो भवति तथाभिषिञ्चेत्यर्थः ॥२१॥ ननु रक्षके मयि विद्यमाने किमर्थं रामाभिषेकोऽपेक्ष्यत इत्याशङ्कायां न हि वयं रक्षणार्थं तमपेक्षामहे किन्तु सौन्दर्यविशेषानुभवार्थमित्याहुः–इच्छाम इति। इच्छाम इति बहुवचनेन सर्वेषामिच्छावैषम्याभाव उक्तः। महाबाहुमिति "आयताश्च सुवृत्ताश्च" इत्युक्तरीत्या सहजबाहुसौन्दर्यं तत्कालाङ्कुशाकर्षणादिव्यापारविशेषश्चोच्यते। (इच्छाम इत्यादि) इच्छामः अभिषेकपट्टबन्धादियुक्ततया स्थितं द्रष्टुमिच्छामः। इच्छामात्रमस्माकम्, कार्यनिर्वहणं भवदधीनम्। इच्छामः अस्माकमिच्छा वर्त्तते 'श्रेयांसि बहुविघ्नानि' इत्येवंविधश्रेयोऽस्माभिर्लभ्यते किम्। इच्छामः अभिषेकः सिद्ध्यतु वा न वा, इच्छा निष्प्रतिबन्धा। सुन्दरवस्तुदर्शने इच्छा प्रवर्त्तते खलु। इच्छामः सर्वप्रकारेण रक्षकत्वाद्वाचा प्रार्थयितुमशक्ता मनसा इच्छामः। भवदभिप्रायज्ञानेन इदानीमिच्छाम इति वदामः। केषांचिदस्ति न केषांचिदिति न, किन्तु सर्वे इच्छामः। हि सर्वलोकप्रसिद्धं खलु। 'जनौघोद्घुष्टसन्नादो विमानं कम्पयन्निव' इति सर्वजनकोलाहलेन तव गृहं विश्लिष्टबन्धं खलु। अकामयत मेदिनी त्वयि निर्वाहके सत्येव भूमिः स्वयम्वरं कृतवती खलु। त्वयि करग्रहं कुर्वति रामकामना न युक्तेति ध्वन्यते। कामुकीनां न मर्यादा खलु। लोकपालोपमं विष्णुसदृशम्। अतएव वृतवती भूमिः। मेदिनी मधुकैटभवसाविस्रगन्धेनोपहता "सर्वगन्धः" इति रामसौगन्ध्येन वासयितुमकामयत कर्पूरचन्दनादिकमिव स्वशेषकोटौ कृतवती। नाथं सौगन्ध्यासौगन्ध्ययोः स्वस्यैव शेषिणो भोग्यतया तद्विप्रवासनानिवर्तनेन स्वशेषरक्षकम्। महाबाहुं बाहुबलस्यालक्ष्या खल्वियम्। 'शक्तस्त्रैलोक्यमप्येकः' इति न केवलं कोसलराज्यं लङ्काराज्यमपि रक्षितुं शक्तिरस्ति। महाबाहुं "आयताश्चेति आजानु इच्छाम इति। विशेषणसामर्थ्यात् कृताभिषेकमिति लभ्यते। महता गजेन शत्रुञ्जयाख्येन आयान्तमागच्छन्तम्। छत्रेण असाधारणेन श्वेतच्छत्रेण आवृताननं रामं

वाहुश्च" इति च महापुरुषलक्षणदर्शनेन न ज्ञायते किम्। विभूतिद्वयनिर्वाहकबाहुः खलु। महाबाहुं 'बाहुच्छायामवष्टभ्य' इति छायास्मद्रक्षणे न पर्य्याप्तता किम्। "ररक्ष धर्मेण बलेन चैव" इति धर्मबलमप्यस्तीत्याहुः रघुवीरम्। 'दीनान् दानेन राघवः' इति प्रसिद्धः खलु। 'आनृशंस्यं परो धर्मः' इति परेषामप्युपदेशपर्य्यन्तं खलु रक्षणम्। रघुवीरं रघ्वपेक्षयास्यैव धर्मिष्ठता ज्ञायते खलु। रघुं प्रति क्षुधार्तस्य मरणे तव पापं न भवतीत्युक्ते तूष्णीं स्थितवान्। अयन्तु "अप्यहं जीवितं जह्याम्" इति खलूक्तवान्। महाबलं मनोबलयुक्तम् "नहि प्रतिज्ञां संश्रुत्य। न त्यजेयं। एतद्व्रतं मम" इति

इति तद्वचनं श्रुत्वा राजा तेषां मनःप्रियम्। अजानन्निव जिज्ञासुरिदं वचनमब्रवीत् ॥ २३ ॥

श्रुत्वैव वचनं यन्मे राघवं पतिमिच्छथ। राजानः संशयोऽयं मे किमिदं ब्रूत तत्त्वतः ॥ २४ ॥

वक्ष्यति। गजेन महातायान्तं गजेन त्वयादत्तकिरीटपट्टबन्धादियुक्तः शत्रुञ्जयेनागच्छति चेत्तदा ज्ञायते। गजेन न रथादिना, मत्तमातङ्गगामिनमिति तद्गमनोपमानगतिमता। महता अत्युन्नतेन सर्वशक्तिमता। आयान्तं महावीथीमध्ये प्रतिगृहाङ्गणमागतम्। आयान्तं "एकः स्वादु न भुञ्जीत" इति पुत्र कलत्रादिभिः सहानुभवरसमास्वादयामः। रामं सौन्दर्यगुणैः सकलमनोरञ्जकम्। छत्रावृताननं दृष्टिदोषपरिहारायान्तरेण छत्रेणावृतमुखम्। दृश्यादृश्यैक देशतया साकल्येन मुखदर्शनाभिलाषमुत्पादयन्तम्। अन्तरङ्गसुहृद्भिर्वातातपपरिम्लानताशङ्कया भ्रूचक्रच्छत्रेणाच्छादितमुखपङ्कजम्। छत्रावृताननं "एकच्छत्रां महीं भुङ्क्ते" इति लक्षणशास्त्रकथितसमवृत्तविशालोत्तमाङ्गत्वव्यञ्जकेन निरङ्कुशप्रशासनवशीकृतनिखिलभूपालवलयतानिरूपकेण छत्रेण पाण्डरेण परभागभावमापन्नेन नितरां प्रकाशितेन्दीवरसदृशमुखं, विशदीकृतमुक्तम्। रघुवीरमिति गजस्कन्धावस्थानसूचितो वीर्यविशेष उच्यते। महाबलं मत्तमातङ्गमपि तृणीकृत्य गमनसमर्थम्। महागजेन शत्रुञ्जयेनायान्तं गच्छन्तमित्यनुभवसाक्षिकः सुषमाविशेषः सूच्यते। रामं स्वसौन्दर्येण गजमलङ्कुर्वाणमिव स्थितम्। छत्रावृताननं वदनप्रभामण्डलेनेव छत्रावरणेन जनितसौन्दर्यम्। एतैरभिषेकानन्तरभाविभिर्विशेषणैरभिषेकः कर्त्तव्य इति व्यञ्जनावृत्त्या प्रार्थ्यते ॥ २२ ॥ इतीति। इति पूर्वोक्तप्रकारेण। तद्वचनं तेषां पौरादीनां वचनं श्रुत्वा तद्वचनभङ्ग्यैव तेषां मनःप्रियं मनः सन्तोषं जानन्नप्यजानन्निव। जिज्ञासुः तन्मुखेनैव ज्ञातुमिच्छुः। इदं वक्ष्यमाणं वचनमब्रवीत् ॥२३॥ श्रुत्वेति। हे राजानः! मे वचनं श्रुत्वैव न तु पूर्वं

इच्छामः प्रार्थयामः ॥ २२ ॥ इतीति। अजानन्निव-रामस्य सर्वातिशायित्वं तदभिषेकस्य सर्वसम्मतत्वं च जानन्नपि अजानन्निव प्रजामुखाज्जिज्ञासुः ॥ २३ ॥ श्रुत्वेति। मद्वचनानन्तरं वचनं विनैव मत्सुतो राजत्वेन वृत इति मम संशयो जायते तन्निवृत्तिर्भवद्भिः कार्येति भावः। हिंसकहस्तापतिताः प्रजाः कदा निस्तारि

परं पर्यालोच्य राघवं रामं पतिं राजानं इच्छथेति यत्, अयं मे संशयः संशयहेतुः । विधेयापेक्षया पुल्लिङ्गता । संशयप्रकारमाह किमिदमिति । इदं राघवाभिषेकप्रार्थनं किम् किंनिमित्तकमिति तत्त्वतो ब्रूत, अत्र निमित्तं याथातथ्येन कथयतेत्यर्थः ॥२४॥ तनि०—यद्यस्मात् कारणात् मे वचनं श्रुत्वैव सकृच्छ्रवणमात्रेणैवेत्यर्थः । राघवं पतिं राजानं इच्छथ । हिंसकहस्तापतिताः कदा निस्तरिष्याम इतिवद्भवतां शीघ्रमाक्रोशः किमर्थमिति भावः । अतः मे अयं बुद्धौ परिवर्तमानः संशयो जातः । इयमिच्छा मत्पालनवैगुण्याद्वा तस्य गुणवत्तरत्वाद्वेति सन्देहो भवतीति भावः। इदं रामस्य राजाशंसनं किंनिमित्तकमित्यर्थः । तत्त्वतो ब्रूत संशयविच्छेदो यथा स्यात्तथा ब्रूत ॥२४॥ पुनः संशयं विशिनष्टि—कथमिति । मयि धर्मेण पृथिवीमनुशासति भवन्तः ममात्मजम् अतिमुग्धं युवराजं द्रष्टुं कथ

कथं नु मयि धर्मेण पृथिवीमनुशासति । भवन्तो द्रष्टुमिच्छन्ति युवराजं ममात्मजम् ॥ २५ ॥
ते तमूचुर्महात्मानं पौरजानपदैः सह । बहवो नृप कल्याणा गुणाः पुत्रस्य सन्ति ते ॥ २६ ॥

मिच्छन्ति ? मयि चिरं स्वसुखनिरभिलाषतया राज्यपरिपालनजागरूके तिष्ठति ममापत्यं पतिमभिलषथ,को वा मेऽपराध इतिभावः ॥२५॥ तनि०—उपक्रान्तकार्यं सम्यग्जातं राजलोक एव त्वरत इत्यतिहृष्टः तं हर्षं गोपयन् तैरेव वाचयितव्यमिति मनसि कृत्वाह—कथमिति । षष्टिर्वर्षसहस्राणि आत्मसुखमनपेक्ष्य युष्मद्रक्षणे यत्कर्तव्यं तदेवान्वेषितम् । बलवान् दुर्बलं यथा न बाधते तथा रक्षितम् । मया किंचिदुक्ते भवानेवेतःपरमनुशाधि क्रमेण रामाभिषेको भविष्यति भवतः प्रियं चेत्तद्वा कर्तव्यमित्यनुक्त्वा किमेवमुच्यत इति प्रष्टुरभिप्रायः ॥ २५ ॥ न ते कश्चिदपराधः किन्तु तव पुत्रस्य गुणानामपराध इत्याहुः—त इति । ते राजानः । पौरजानपदैः सह पण्डितपामराविशेषेण सर्वे ऐकमत्यं प्राप्येत्यर्थः । महात्मानं महाबुद्धिं तं गुणग्राहिणं दशरथं ऊचुः । हे नृपेतिसम्बोधनेन तारतम्यज्ञतोक्ता । ते पुत्रस्य बहवः कल्याणा गुणास्सन्ति । तव तु नृपरिपालनमेको गुण इतिभावः । रामप्रशंसया तस्यासूया माभूदिति ते पुत्रस्येत्युक्तम् । तदतिशयस्सर्वोऽपि त्वत्सम्बन्धकृत इतिभावः । गुणा इति बहुवचनेनैव बहुत्वे सिद्धेऽपि बहव इत्युक्त्या असङ्ख्येयगुणत्वमुक्तम् । पुत्रस्य गुणा इत्यनेन जन्मसिद्धत्वोक्त्या गुणानां स्वाभाविकत्वमुक्तम् । कल्याणाः अखिलहेयप्रत्यनीकाः । आश्रयसम्बन्धेन शुभीभूता वा "गुणाः सत्यज्ञानप्रभृतय उत त्वद्गत

प्याम इतिवद्भवतामाक्रोशः किमर्थमिति तात्पर्यम् ॥ २४ ॥ स्वहर्षं गोपयन् तैरेव वाचयितव्यमिति मनसि कृत्वाह—कथमिति । पृथिवीमनुशासति सति-युष्मद्रक्षणं कुर्वति सति । वयं त्वया सम्यगेव परिपालिताः ॥ २५ ॥ त्वयि दोषलवो नास्तीति तात्पर्यात्तथापि त्वत्पुत्रकल्याणगुणबाहुल्याद्वशीकृतमानसैरस्माभिरेवमुक्त

तया शुभीभूयं याताः" इत्यभियुक्तोक्तेः। अत्र "स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणगणः" इति×यामुनाचार्यवचनमनुसन्धेयम् ॥२६॥ तनि०—शत्रुबाणबाधितो न भवति लोकः किंतु तव पुत्रगुणैर्बद्धः, गुणजितैरस्माभिरेवमुक्तम् न कार्यबुद्धिभिरित्युत्तरमाहुः–त इति। ते अनुभूता रामगुणाः महात्मानं एतादृशपुत्रपितृत्वेन महानुभावं कल्याणाः मङ्गलैकतानाः बहवः असंख्याताः। ते पुत्रस्येत्याश्चर्यवैलक्षण्यम्। गुणाः सन्ति 'सर्वं वाक्यं सावधारणम्' इतिन्यायेन गुणा एव सन्ति। नैकोपि दोष इति व्यञ्जितम् ॥२६॥ के ते गुणा इत्याकांक्षायां तान् वक्तुं प्रतिजानीते–गुणानिति। हे देव हे राजन्! गुणवतः प्रशस्तबहु

गुणान् गुणवतो देव देवकल्पस्य धीमतः। प्रियानानन्दनान् कृत्स्नान् प्रवक्ष्यामोऽद्य तान् शृणु ॥ २७ ॥
दिव्यैर्गुणैः शक्रसमो रामः सत्यपराक्रमः। इक्ष्वाकुभ्योऽपि सर्वेभ्यो ह्यतिरिक्तो विशांपते ॥ २८ ॥
रामः सत्पुरुषो लोके सत्यधर्मपरायणः। साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह ॥ २९ ॥

गुणकस्य देवकल्पस्य देवतुल्यस्य। धीमतः रामस्य। प्रियान् इष्टान्। आनन्दनान् प्रीतिजनकान्। तान् प्रसिद्धान्। कृत्स्नान् गुणान्। अद्य प्राप्तकाले शृणु प्रवक्ष्यामः। गुणवतो गुणानित्यनेन गुणानामनारोपितत्वेन स्वाभाविकत्वमुक्तम्। देवकल्पस्येत्यनेन गुणानां सम्भावितत्वम्। धीमत इत्यनेन गुणानां मध्ये ज्ञानस्य प्राधान्यमुक्तम्, ब्राह्मणा आगता वसिष्ठोप्यागत इत्यत्र वसिष्ठस्येव। प्रियानित्यनेन कल्याणत्वम्, आनन्दनानित्यनेन निरतिशयत्वम्, कृत्स्नानित्यनेनासंख्येयत्वं च विवक्षितम्। एतावत्पर्यन्तं किमर्थं नोक्तामित्यपेक्षायां भवत्प्रश्नकाल एवास्मदुक्तेरवसर इत्यद्येत्यनेन सूचयन्ति प्रवक्ष्याम इति। प्रवचनोक्त्या भगवद्गुणोपदेशेऽधिकारितारतम्यं नास्ति। अजानता जानद्भिः श्रोतव्यमित्येवेति सूचितम्। शृण्वित्यनेन रामगुणश्रवणे निरतिशयानन्दमग्नो भविष्यसि। कथञ्चिन्मनः संस्तभ्य श्रोतव्यमित्युक्तम् ॥ २७ ॥ दिव्यैरिति। दिव्यैः अमानुषैः। गुणैः शौर्यवीर्यादिभिः। शक्रसमः इन्द्रसमः। सत्यपराक्रमः अमोघविक्रमः। इक्ष्वाकुभ्यः इक्ष्वाकुवंश्येभ्यः। सर्वेभ्योतिरिक्तः समधिकः "अतिरिक्तः समधिकः" इत्यमरः। शौर्यादिभिरिति शेषः। राज्ञो मनःप्रीणनाय सम्बोधयन्ति विशांपत इति। विशां प्रजानां पते ॥२८॥ राम इति। लोके राम एव

मित्याहुः-ते तमिति। ते राजानः, कल्याणगुणाः मङ्गलस्वभावाः इतरपुरुषदुर्लभाः बहवो गुणास्सन्तीत्यर्थः ॥२६॥ गुणानिति। प्रियान् शत्रूणामपि प्रीतिजनकान् आनन्दनान् अनिष्टनिवारणपूर्वकेष्टप्रापकत्वेन आनन्दजनकान् शौर्यादीन् ॥२७॥ दिव्यैरिति। दिव्यैः अमानुषैः। इक्ष्वाकुभ्यः इक्ष्वाकुवंशप्रभवेभ्यः ॥२८॥ राम इति।



× वाक्यमिदं भगवद्रामानुजमुनिविरचिते गद्यत्रयेपि विद्यते। 'स्वाभाविकानवधिकातिशयेशितृत्वम्' इति च यामुनाचार्यवचनं प्रतिभाति।

सत्पुरुषः, रिपूणामपि वत्सल इत्यर्थः। सत्यधर्मावेव परायणं परमा गतिर्यस्य सः सत्यधर्मपरायणः। सत्यधर्मैकनिरत इत्यर्थः। किञ्च धर्मः श्रिया तत्फलभूतया संपदा सह रामात्साक्षादव्यवधानेन विनिर्वृत्तः निष्पन्नः, धर्मार्थयोरितरनिरपेक्षतया निर्वाहक इत्यर्थः ॥ २९ ॥ रामनिष्ठगुणसमुदायस्यैकत्रासम्भवादेकैकगुणयोगेन चन्द्रादीन् दृष्टान्तयन्ति—प्रजेति। प्रजासुखत्वे प्रजानां सुखकरत्वे चन्द्रस्य तुल्यः। क्षमागुणविषये वसुधायाः भूमेः तुल्यः। बुद्ध्या बुद्ध्यसाधारणधर्मेण बृहस्पतेस्तुल्यः। वीर्ये विषये शचीपतेः साक्षात्तुल्यः। "साक्षात्प्रत्यक्षतुल्ययोः" इत्यमरः ॥ ३० ॥

प्रजासुखत्वे चन्द्रस्य वसुधायाः क्षमागुणैः। बुद्ध्या बृहस्पतेस्तुल्यो वीर्ये साक्षाच्छचीपतेः ॥ ३० ॥ धर्मज्ञः सत्यसन्धश्च शीलवाननसूयकः। क्षान्तः सान्त्वयिता श्लक्ष्णः कृतज्ञो विजितेन्द्रियः ॥३१॥ मृदुश्च स्थिरचित्तश्च सदा भव्योऽनसूयकः ॥३२॥ प्रियवादी च भूतानां सत्यवादी च राघवः। बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता ॥३३

धर्मज्ञ इति। धर्मं सामान्यविशेषरूपमशेषं जानातीति धर्मज्ञः। सत्या अमोघा सन्धा प्रतिज्ञा यस्यासौ सत्यसन्धः। "सन्धा प्रतिज्ञा मर्यादा" इत्यमरः। शीलवान् शीलं हि नाम महतो मन्दैः सह नैरन्ध्र्येण संश्लेषः तद्वान्। अनसूयकः गुणेषु दोषाविष्करणमसूया तद्रहितः। बहुव्रीहौ कप्। क्षान्तः क्षमावान्। क्षमा अत्राश्रितापराधसहिष्णुत्वम्। क्षमेरूदित्वात् पक्षे नेट्। न केवलं सहिष्णुः अपराधिषु, सान्त्वयिता कुपितान् दुःखितांश्च प्रति सान्त्ववादी। श्लक्ष्णः प्रियंवदः। "समौ श्लक्ष्णप्रियंवदौ" इत्यमरः। कृतज्ञः स्वल्पमपि सकृत्कृतमुपकारं बहुतया जानन्नित्यर्थः। विजितेन्द्रियः विषयचापलरहितः ॥ ३१ ॥ मृदुरिति। मृदुत्वं समाश्रितजनविश्लेषभीरुत्वम्। चित्तस्थैर्यं नाम अतिसङ्कटेप्यङ्गीकृतविषयपरित्यागराहित्यम्। सदा भव्यः कुशलः आश्रिताधीनो वा ॥ ३२ ॥ प्रियवादी "सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्" इत्युक्तरीत्या प्रियवादित्वेपि सत्यवादीत्यर्थः।

धर्मः श्रिया सह राज्यलक्ष्म्या सह रामाद्विनिर्वृत्तः आविर्भूतः ॥२९॥ रामभद्रनिष्ठगुणसमुदायस्य जगत्येकत्र वासासम्भवादेकैकगुणयोगेन चन्द्रादीन् दृष्टान्तयति—प्रजेति। प्रजासुखत्वे प्रजासुखकरत्वे ॥३०॥ धर्मज्ञ इति। अनसूयकः न विद्यते असूया अन्यविषयिणी यस्य सः, उत्तरत्र न विद्यते असूया स्वविषयिणी अन्यकृता यस्य स तथोक्त इति न पुनरुक्तिः। सत्यसन्धः सत्या सन्धा प्रतिज्ञा यस्य सः। सान्त्वयिता कुपितान् दुःखितान् प्रति सान्त्ववचनेन दुःखं प्रशमयिता। श्लक्ष्णः प्रियंवदशीलः ॥३१॥ मृदुरिति। मृदुः सुकरोपास्यः, स्थिराचित्तत्वं नामातिसङ्कटेऽप्यङ्गीकृतपरित्यागराहित्यम् ॥३२॥ प्रियवादी चेति भूतानां प्राणिनां प्रियावादी सत्य

प्रियवादी च, चकारोऽवधारणार्थः । प्रियवाद्येव नतु सत्यमप्यप्रियं वदतीत्यर्थः । 'न ब्रूयात् सत्यमप्रियम्' इति स्मरणात् । भूतानां भवनमात्रोपाधिकानां सर्वेषां जनानां सत्यवादी । सत्यं ब्रूयादिति विहितसत्यवचनः । चकारेण प्रियमप्यसत्यं न वदतीत्यवधार्यते । यद्वा सत्यमिति परलोकहितमुच्यते । "सत्येन लोकान् जयति" इति प्रयोगानुसारात् । प्रियवचनस्य निषिद्धसाधारणत्वाददृष्टविरोधिप्रियं न वदतीत्यर्थः । राघवः रघुराक्षससंवादादिषु प्रियसत्यवचनं प्रसिद्धमिति कुलागतो धर्म इत्यर्थः । एतादृशज्ञानवत्त्वं पुस्तकनिरीक्षणादिना पण्डितंमन्यतया वा न भवती

तेनास्येहातुला कीर्तिर्यशस्तेजश्च वर्द्धते । देवासुरमनुष्याणां सर्वास्त्रेषु विशारदः ॥ ३४ ॥
सम्यग्विद्याव्रतस्नातो यथावत् साङ्गवेदवित् ॥ ३५ ॥

त्याह बहुश्रुतानामिति । बहुभ्य आचार्येभ्यो बहुभिः शास्त्रैः बहुधा बहुप्रकारेण श्रुतमेषामस्तीति तेषाम् । वृद्धानां शीलवयोवृद्धानाम् । ब्राह्मणानां उक्तलक्षणेषु क्षत्रियेषु सत्स्वपि ब्राह्मणानेव ज्ञानार्थमुपास्त इत्यर्थः । प्रियवादीत्यादि । प्रियवादी ग्रीष्मघर्मसन्तप्तस्थले प्रवर्षी बलाहक इव सुशीतलं वचनं वक्तीत्यर्थः । किमीदृशवचनं दिव्यान्तःपुरस्य मातापित्रादीनां वसिष्ठादीनां वा ? नेत्याह-भूतानां सत्तायोगिसकलपदार्थानां च प्रियवादी । किं सर्वत्र प्रियमेव वदति ? नेत्याह-सत्यवादी भूतहितादृष्टार्थवचन इत्यर्थः । प्रियहितवादीतिभावः । किमिदं विरुद्धं द्वयमघटितघटनासामर्थ्या दित्यपेक्षायां न तथा किन्तु कुलप्रभावादित्याह-राघव इति । एवंविधगुणः किं सगर्वो वर्तते ? नेत्याह-बहीति । सम्भावितगुणैरतृप्तस्सन् पुनरप्यातिशयाय ज्ञानिनां प्राङ्गणं गत्वा तिष्ठतीत्यर्थः । यत्किंचिच्छ्रवणमात्रेण तृप्तानां ज्ञानादिवृद्धानां "सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः" इत्युक्तरीत्या बहुभ्यः सारग्रहणं कृतवानित्यर्थः । ब्राह्मणानां "सा विद्या या विमुक्तये" इत्युक्तब्रह्मविद्यानिष्ठानां नतु "विद्याऽन्या शिल्पनैपुणम्" इत्युक्तान्यविद्यानिष्ठानाम् । उपासिता तद्गृहं गत्वानुवर्तयिता नतु स्वगृहे तानानीय श्रोता ॥ ३३ ॥ वृद्धोपासनसिद्धान् गुणानाह-तेनेति । तेन समृद्धोपासनेन । कीर्तिः औदार्यादिगुणनिमित्ता प्रथा, यशः पराक्रमादिनिबन्धना प्रथा । यद्वा कीर्तिः प्रथा । यशस्तत्कारणबलादानादिक्रमम्, तेजः पराभिभवनसामर्थ्यम् ॥ ३४ ॥ सम्यगिति । विद्याव्रतस्नातः । "वेदमधीत्य स्नायात्" इति स्मृतिप्रक्रियया निखिलवेदाध्ययनव्रताचरणानन्तरभाविस्नानकर्म

वादी चेति प्रियरूपसत्यवादी ॥ ३३ ॥ तेनेति । तेन पूर्वोक्तगुणजातेन, कीर्तिः शौर्यादिनिबन्धना प्रसिद्धिः, यशः पराक्रमादिव्यापरजनितप्रसिद्धिरिति

युक्तः । सम्यक् गुरुकुलवासाद्यङ्गसहिततया साङ्गवेदवित् । " शिक्षा व्याकरणं छन्दो निरुक्तं ज्यौतिषं तथा । कल्पश्चेति व्याहृतानि वेदाङ्गानि मनीषिभिः ॥" इत्युक्ताङ्गसहितवेदार्थज्ञः । यथावत् यथासम्प्रदायम् ॥ ३५ ॥ गान्धर्वे च सङ्गीतशास्त्रेऽपि । सामगानोपयुक्तत्वादितिभावः । कल्याणाभिजनः परिशुद्धोभयवंशः । साधुः स्वयं परिशुद्धः । अदीनात्मा क्षोभहेतुष्वप्यक्षोभ्यान्तःकरणः ॥३६॥ द्विजैरिति । धर्मार्थनैपुणैः धर्मार्थप्रतिपादनकुशलैः । स्वार्थे अण्प्रत्ययः । श्रेष्ठैः अभिजनविद्यावृत्तयुक्तैः । अभिविनीतः सर्वतः सुशिक्षितः ॥३७॥ यदेति । ग्रामार्थ इत्यत्र ग्रामेत्यविभक्तिकनिर्देशः । ग्रामस्य नगरस्य

गान्धर्वे च भुवि श्रेष्ठो बभूव भरताग्रजः । कल्याणाभिजनः साधुरदीनात्मा महामतिः ॥ ३६ ॥ द्विजैरभिविनीतश्च श्रेष्ठैर्धर्मार्थनैपुणैः ॥३७॥ यदा व्रजति सङ्ग्रामं ग्रामार्थे नगरस्य वा । गत्वा सौमित्रिसहितो नाविजित्य निवर्त्तते ॥ ३८ ॥ सङ्ग्रामात्पुनरागम्य कुञ्जरेण रथेन वा । पौरान् स्वजनवन्नित्यं कुशलं परिपृच्छति ॥ ३९ ॥ पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च । निखिलेनानुपूर्व्याच्च पिता पुत्रानिवौरसान् ॥ ४० ॥ शुश्रूषन्ते च वः शिष्याः कच्चित् कर्मसु दंशिताः । इति नः पुरुषव्याघ्रः सदा रामोऽभिभाषते ॥ ४१ ॥ व्यसनेषु मनुष्याणां भृशं भवति दुःखितः । उत्सवेषु च सर्वेषु पितेव परितुष्यति ॥ ४२ ॥

वार्थे प्रयोजने निमित्ते नाविजित्य निवर्तते इत्यभिधानात् रामस्य सुबाहुमारीचविषये जेतृत्ववदन्यत्रापि शत्रुविषये जेतृत्वमभूदित्यवगम्यते ॥ ३८ ॥ संग्रामादिति । स्फुटम् ॥३९॥ कुशलप्रश्नप्रकारमाह—पुत्रेष्विति । प्रेष्यः भृत्यः । निखिलेन कात्स्न्र्येन । आनुपूर्व्यात् प्रधानक्रमेण पृच्छतीत्यनुषज्यते ॥४०॥ शुश्रूषन्त इति । दंशिताः सन्नद्धाः "सन्नद्धो वर्मितः सज्जो दंशितः" इत्यमरः ॥ ४१ ॥ सत्पुरुषसम्भावितगुणानभिधाय रामस्य साधारणगुणानाह—व्यसनेष्विति । मनुष्याणां दिव्यान्तःपुरस्थितमातृप्रभृतीनां न भवति किन्तु मनुष्याणाम् आढ्यदरिद्रद्विजादितारतम्यानादरेण मनुष्यजात्याक्रान्तानाम् ।

विवेकः ॥ ३४ ॥ ३५ ॥ गान्धर्व इति । गान्धर्वे सङ्गीतशास्त्रेऽपि । कल्याणेति । अदीनात्मा क्षोभहेतुसहस्रेष्वपि अक्षुभितान्तःकरणः ॥ ३६ ॥ द्विजैरिति । अभिविनीतः शिक्षितः ॥ ३७ ॥ यदेति । ग्रामार्थमित्यत्र ग्रामेत्यविभक्तिकनिर्देशः । ग्रामस्य नगरस्यार्थे प्रयोजनविषये ॥ ३८–४० ॥ शुश्रूषन्त इति । दंशिताः अवहिताः । पुरुषव्याघ्रः पुरुषश्रेष्ठः ॥ ४१ ॥ व्यसनेष्विति । मनुष्याणां प्राणिमात्रस्य व्यसनेषु कृच्छ्रेषु, भृशं भवति दुःखितः साक्षाद्दुःखभाग्भ्योपि

व्यसनेषु अल्पानल्पविचारमन्तरेण व्यसनपदार्थेषु । भृशं व्यसनवती यादृशं तादृशं न किन्तु पङ्कमग्नगज इव स्वमाहात्म्यानुगुणं यावत्सत्ताकं च दुःखितो भवति नतु दिनक्रमेण विस्मरति, इदं दुःखं मत्परिपालनवैगुण्येन खल्वागतमिति नितरां दुःखितो भवति । "ह्रीरेषा तु ममातुला" इति वक्ष्यति । उत्सवेषु पुत्रजननादिषु सर्वेषु पुत्रीजननाद्यनादरविरहेण द्वारि चूतकिसलयमालाबन्धनमुपधीकृत्य प्रवृत्तेष्वित्यर्थः । पितेव पुत्रादीनां पुत्राद्युत्सवेषु यः पितुः परितोषो जायते स द्विविधः । पामराणामर्थलाभलौकिकसहायनिमित्तः, पण्डितानां स्वोत्तारकत्वनिमित्तश्च । एवमुभयविधपरितोषो रामस्या

सत्यवादी महेष्वासो वृद्धसेवी जितेन्द्रियः । स्मितपूर्वाभिभाषी च धर्मं सर्वात्मना श्रितः ॥ ४३ ॥ सम्यग्योक्ता श्रेयसां च न विगृह्यकथारुचिः । उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा ॥ ४४ ॥ सुभ्रूरायतताम्राक्षः साक्षाद्विष्णुरिव स्वयम् । रामो लोकाभिरामोऽयं शौर्यवीर्यपराक्रमैः ॥ ४५ ॥ प्रजापालनतत्त्वज्ञो न रागोपहतेन्द्रियः । शक्तस्त्रैलोक्यमप्येको भोक्तुं किन्नु महीमिमाम् ॥ ४६ ॥

प्यस्ति "प्रनृत्यन्ति पितामहाः । यद्येकोऽपि गयां व्रजेत्" इतिवत् । "मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । बहुजन्मसहस्रान्ते दिष्ट्या यस्तु प्रपद्यते ॥" इति प्रत्याशासम्भवात् । अत्र परिशब्दो वीप्सायां वर्तते । अत्रापि भृशमित्यनुवर्तते ॥४२॥ सत्यवादीति । अतिसङ्कटावस्थायामपि सत्यवचनशीलः । सर्वात्मना धर्मं श्रितः अतिदुर्घटदशायामपि धर्मं न त्यजतीत्यर्थः॥४३॥सम्यगिति । श्रेयसां सम्यग्योक्ता सम्पादकः । न विगृह्यकथारुचिः "न विगृह्यकथां कुर्यात्" इतिनिषिद्धयोर्जल्पवितण्डयोर्निवृत्तरागः । निवृत्तरागत्वं किमवक्तृत्वात् ? नेत्याह उत्तरेति ॥४४॥ उक्तकल्याणगुणानुरूपाकारसौभाग्यमाह– सुभ्रूरिति । शूरस्य भावः शौर्यम्, तच्च मरणनिर्भयत्वम् । "शूरो मरणनिर्भयात्" इतिवचनात् । वीर्यं स्वयमविकृतस्सन् परान् विविधमीरयति विद्रावयतीति वीरः, तस्य भावो वीर्यम् । दुष्प्रवेशचक्रव्यूहादिविशिष्टसैन्ययुक्तान् देवासुरानपि येनोत्साहेनाक्रमति स पराक्रमः ॥ ४५ ॥ प्रजेति ।

अधिकदुःखो भवति । दुःखकर्तृभिः स्वदुःखं विहाय निवारणीयं महद्दुःखं प्राप्नोतीत्यर्थः । पितेवेत्यत्रापि भृशमित्यनुषज्यते । परितुष्यति साक्षाज्जनक इव आनन्दयुक्तो भवतीत्यर्थः ॥ ४२ ॥ ४३ ॥ न विगृह्य कथारुचिः–विगृह्य कलहं कृत्वा जल्पवितण्डात्मककथारुचिर्न भवतीत्यर्थः ॥ ४४ ॥ सुभ्रूरिति । शौर्यवीर्यपराक्रमैः शौर्यं युद्धे निर्भयेन प्रवेशसामर्थ्यम्, वीर्यं स्वस्याविकृतस्यैव परेषां विकारापादकत्वम्, पराक्रमस्तु युद्धे लघुसञ्चारः ॥ ४५ ॥ ४६ ॥

"रामो राज्यमुपासित्वा" इत्युक्तरीत्या प्रजापालनतत्वज्ञः। न रागापहृतेन्द्रियः इन्द्रियचापलरहित इति न समासः। भोक्तुं पालयितुम् ॥४६॥ नेति। नियमात् नियमेन वध्यान् शास्त्रतो वध्यान् हन्त्येव। अवध्ये शास्त्रतः अवध्ये विषये ॥ ४७ ॥ युनक्तीति। यत्र यस्मिन् पुरुषे तुष्यति तं तुष्टोऽसौ अर्थै रभिलषितपदार्थैः युनक्ति योजयति ॥४८॥ शान्तैरिति। शान्तैः शमप्रधानैः सर्वप्रजानां कान्तैः काम्यमानैः। सर्वजनभोग्यैरित्यर्थः। अत एव प्रीतिसञ्ज ननैः। दान्त इति पाठे—यमनियमादिरूपतपःक्लेशसहः। "तपः क्लेशसहो दान्तः" इत्यमरः। दीप्तः ग्रीष्मादिकालिकः ॥४९॥ तमिति। मेदिनी मेदिनीस्थ

नास्य क्रोधः प्रसादश्च निरर्थोऽस्ति कदाचन। हन्त्येव नियमाद्वध्यान्न वध्ये न च कुप्यति ॥४७॥ युनक्त्यर्थैः प्रहृष्टश्च तमसौ यत्र तुष्यति ॥४८॥ शान्तैः सर्वप्रजाकान्तैः प्रीतिसञ्जननैर्नृणाम्। गुणैर्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः ॥४९॥ तमेवङ्गुणसम्पन्नं रामं सत्यपराक्रमम्। लोकपालोपमं नाथमकामयत मेदिनी ॥५०॥ वत्सः श्रेयसि जातस्ते दिष्ट्यासौ तव राघव। दिष्ट्या पुत्रगुणैर्युक्तो मारीच इव काश्यपः॥५१॥ बलमारोग्यमायुश्च रामस्य विदितात्मनः। देवासुरमनुष्येषु सगन्धर्वोरगेषु च ॥५२॥ आशंसते जनः सर्वो राष्ट्रे पुरवरे तथा। आभ्यन्तरश्च बाह्यश्च पौरजानपदो जनः ॥५३॥ स्त्रियो वृद्धास्तरुण्यश्च सायंप्रातः समाहिताः। सर्वान् देवान्नमस्यन्ति रामस्यार्थे यशस्विनः॥ ५४ ॥

जनता ॥ ५० ॥ वत्स इति। तव दिष्ट्या भाग्येन। श्रेयसि श्रेयोनिमित्तम्। वत्सः पुत्रो जातः। पुत्रगुणैर्युक्तः 'पुन्नाम्नो नरकात्त्रायते" इतिव्युत्पत्ति सिद्धपितृतारकगुणैर्युक्तः। मारीचः मरीचेः पुत्रः। काश्यपः कश्यपगोत्रः ॥ ५१ ॥ बलमिति श्लोकद्वयमेकान्वयम्। देवासुरमनुष्येषु सर्वो जनः राष्ट्रे इतरराष्ट्रे पुरवरे इतरपुरवरे च वर्त्तमानो जनः। आभ्यन्तरः अन्तःपुरचारी जनः। पौरजानपदः स्वपुरस्वजनपदस्थो जनश्च। विदितात्मनः प्रसिद्ध शीलस्य रामस्य बलादिकमाशंसते प्रार्थयते। मनुष्यशब्दोऽत्र देवादिसाहचर्याद्दिविचनः ॥५२॥५३॥ स्त्रिय इति। स्त्रियः अतिगम्भीरतया स्व हन्तीति। नियमाद्धन्ति, अवश्यं हन्तीत्यर्थः ॥४७॥ युनक्तीति। यत्र जने तुष्यति तमर्थैर्धनैर्युनक्ति योजयति ॥४८-५०॥ वत्स इति। ते वत्सस्तव दिष्ट्या भाग्येन श्रेयसि अस्माकं हितविषये जातः। पुत्रगुणैः। पुत्रोचितगुणैर्युक्तः। मारीचः मरीचिपुत्रः ॥ ५१ ॥ बलमिति। देवासुरमनुष्येषु पुरवरे वर्तमानस्सर्वोपि जनः राघवस्य बलारोग्यादिकम् आशंसत इति योजना॥५२॥ आशंसते प्रार्थयते। आभ्यन्तरः अत्यन्तसेवकः॥५३॥ स्त्रिय इति। समाहिताः सावधानाः। रामस्यार्थे, रामाभ्युदयविषये।

मुनि०—वत्स इति। ते वत्सः तव दिष्ट्या भाग्येन तवादृष्टेन श्रेयसि जातः, जनानां श्रेयसि जातः। दिष्ट्या पुत्रगुणैर्युक्तः—पुन्नाम्नो नरकात्त्रायत इति व्युत्पत्तेः पितृतारकगुणैर्युक्तः ॥ ५१ ॥

हृदयं व्यक्तमनाविष्कुर्वन्त्यः । वृद्धाः करणपाटवरहिताः, अत्यलसतया सर्वत्रानादरं कुर्वन्त्यः । तरुण्यः यौवनमदान्धतया विवेकशून्याः । सायंप्रात रित्युपलक्षणम्, त्रिसन्ध्यमित्यर्थः । तेन मङ्गलाशासनकालनियमोक्तिः । समाहिताः सावधानाः । अनेन रामगुणगृहीततया स्वारसिकप्रेमकत्वेन समनस्कत्वमुक्तम् । सर्वान् देवानिति प्रेमकलुषिततया न्यूनाधिकविभागमन्तरेण लौकिकवैदिकविभागमन्तरेण च नमस्यन्तीति रामरक्ष्या नेव देवान् रामरक्षकान् मन्यन्त इति प्रेमान्ध्यकाष्ठा दर्शिता । रामस्यार्थे रामस्य बलारोग्यादिप्रयोजनसिद्ध्यैव स्वप्रयोजनं नान्तरीयकमिति

तेषामायाचितं देव त्वत्प्रसादात्समृद्ध्यताम् ॥ ५५ ॥ राममिन्दीवरश्यामं सर्वशत्रुनिबर्हणम् । पश्यामो यौव राज्यस्थं तव राजोत्तमात्मजम् ॥ ५६ ॥ तं देवदेवोपममात्मजं ते सर्वस्य लोकस्य हिते निविष्टम् । हिताय नः क्षिप्रमुदारजुष्टं मुदाभिषेक्तुं वरद त्वमर्हसि ॥५७॥ इत्यार्षे श्रीरामा०वा०आ०अयोध्याकाण्डे द्वितीयः सर्गः ॥२॥

तेषामञ्जलिपद्मानि प्रगृहीतानि सर्वशः । प्रतिगृह्याब्रवीद्राजा तेभ्यः प्रियहितं वचः ॥ १ ॥

तस्यैव प्रयोजनमुद्दिश्य । यशस्विनः देवतान्तरनमस्कारस्य रामप्रयोजनपर्यवसिततत्वात् रामप्रेमपारवश्येन कृतत्वाच्च स्वरूपविरुद्धदेवतान्तर भजनरूपमयशो नास्तीत्यर्थः ॥ ५४ ॥ तेषामिति । आयाचितं रामाभिषेकरूपाभिमतार्थप्रार्थनम् । समृद्ध्यतां सफलं भवतु ॥ ५५ ॥ राममिति । इन्दीवरश्याममिति समुदायशोभोक्ता । सर्वशत्रुनिबर्हणमिति स्वसौन्दर्यातिशयदर्शनमग्नचित्तत्वरूपकामादिशत्रुनिबर्हणमित्यर्थः । पश्यामः द्रक्ष्यामः । " वर्तमानसामीप्ये वर्तमानवद्वा " इति भविष्यदर्थे लट् ॥ ५६ ॥ तमिति । देवेति सम्बुद्धिः । देवदेवः विष्णुः तत्सदृशमिति वा । निविष्टं दत्तावधान मित्यर्थः । उदारजुष्टं औदार्ययुक्तम् । भावप्रधानो निर्देशः । उदारैर्जुष्टं सेवितमिति वा ॥५७॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्ब राख्याने अयोध्याकाण्डव्याख्याने द्वितीयः सर्गः॥२॥ एवं निश्चिताभिषेकस्य सम्भारसम्भरणप्रवृत्तिस्तृतीये–तेषामिति । प्रगृहीतानि प्रकर्षेण गृहीतानि

तेषामिति । आयाचितं प्रार्थनाम् ॥ ५५ ॥ राममिति । पश्यामः समृद्ध्यतां सफलं भवतु ॥ ५६ ॥ तमिति । देवदेवोपमं विष्णुतुल्यम् । हिते श्रेयसि । निविष्टम् अभिनिवेशवन्तम्, हिततत्परमित्यर्थः । उदारैर्गुणैर्जुष्टं युक्तम् ॥५७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्ड व्याख्यायां द्वितीयः सर्गः ॥ २ ॥ तेषामिति । अञ्जलिपद्मानि पद्ममुकुलाकारानञ्जलीन् ॥ १॥ २ ॥

शिरसि बद्धानीत्यर्थः। अञ्जलिरूपाणि पद्मानि अञ्जलिपद्मानि, अञ्जलीनां पद्ममुकुलाकारत्वादत्रत्यपद्मशब्दः पद्ममुकुलपरः। प्रतिगृह्य वीक्षणवचनप्रत्यञ्जलिभिर्यथायोगमञ्जलीनां प्रतिग्रहः ॥ १ ॥ अहो इति। अहोस्मीति सन्धिरार्षः ॥२॥ इतीति। राजा दशरथः। इति पूर्वोक्तरीत्या। तान् प्रार्थनापरान् ब्राह्मणान्। अभ्यर्च्य मधुरवचनैः सम्मान्य। तेषामेवोपशृण्वतां तेषु उपशृण्वत्सु सत्स्वेव वसिष्ठं वामदेवं चेदमब्रवीत् ॥३॥ अभिषेकविषयानिरतिशयादरेण तदुचितकालं प्रशंसति—चैत्र इति। चैत्रः यथेतरेभ्यः प्रधानभूतो रामः तथा मासान्तरेभ्योऽयं मासः। श्रीमान् यथा सर्वसुखावहत्वाद्रामः सर्वेषां

अहोस्मि परमप्रीतः प्रभावश्चातुलो मम। यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थमिच्छथ ॥२॥ इति प्रत्यर्च्य तान् राजा ब्राह्मणानिदमब्रवीत्। वसिष्ठं वामदेवं च तेषामेवोपशृण्वताम् ॥ ३ ॥ चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः। यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम् ॥४॥ राज्ञस्तूपरते वाक्ये जनघोषो महानभूत्। शनैस्तस्मिन् प्रशान्ते च जनघोषे जनाधिपः। वसिष्ठं मुनिशार्दूलं राजा वचनमब्रवीत् ॥५॥ अभिषेकाय रामस्य यत्कर्म सपरिच्छदम्। तदद्य भगवन् सर्वमाज्ञापयितुमर्हसि ॥६॥ तच्छ्रुत्वा भूमिपालस्य वसिष्ठो द्विजसत्तमः। आदिदेशाग्रतो राज्ञः स्थितान् युक्तान् कृताञ्जलीन् ॥७॥ सुवर्णादीनि रत्नानि बलीन् सर्वौषधीरपि। शुक्लमाल्यांश्च लाजांश्च पृथक् च मधुसर्पिषी ॥८॥

राजा तथा सर्वसुखकरत्वादसौ सर्वमासानां राजा। अयं मासः अभिषेकमनोरथसमय एव सन्निहितः। अयं मासः अवतारहेतुरेवाभिषेकहेतुः। पुण्यः रमणीयः पुण्यवर्द्धनो वा। पुष्पितकाननः अस्मत्प्रयत्नालंकृतनगरवैलक्षण्येन स्वयमेवालंकृतवनः। यद्वा रामस्य कनककिरीटधारणसमये स्वयं कुसुममुकुटधारी वनप्रदेशो जातः ॥४॥ राज्ञ इति। वसिष्ठशब्दो वामदेवस्याप्युपलक्षणपरः, वसिष्ठं वामदेवमिति द्वयोः प्रस्तुतत्वात् 'एवं व्यादिश्य विप्रौ तौ' इत्युपरिवक्ष्यमाणत्वाच्च प्राधान्याद्वसिष्ठस्योपादानम्। जनघोषः चिरप्रार्थितरामाभिषेकविषयोऽस्मन्मनोरथः फलित इत्येवंरूपः ॥ ५ ॥ अभिषेकायेति। सपरिच्छदं सोपकरणम् ॥६॥ तदिति। युक्तान् राजकार्यनियुक्तान् सुमन्त्रादीन्। अधिकारिण इतियावत् ॥ ७ ॥ सुवर्णादीनीति। बलीन् उप

इतीति। प्रत्यर्च्य प्रत्यभिनुद्य तेषां समागतानां नृपाणामुपशृण्वतां तेषूपशृण्वत्सु सत्सु। वसिष्ठं वामदेवं च ब्राह्मणांश्च इदं वक्ष्यमाणं वाक्यमब्रवीत् ॥ ३ ॥ ४ ॥ राज्ञ इति। जनघोषः चिरकालप्रार्थितो रामाभिषेकविषयोऽस्मन्मनोरथः फलित इत्येवंरूपो महानभूत्। वसिष्ठमिति वामदेवस्याप्युपलक्षणम् ॥ ५ ॥ सपरिच्छदं सोपकरणम् ॥ ६ ॥ तदिति। युक्तान् अधिकारिण इति यावत् ॥ ७ ॥ सुवर्णेति। बलीन् पूजाद्रव्याणि। पृथक् च मधुसर्पिषी परस्परममिलिते क्षौद्रघृते। अहतानि

हारान्। "करोपहारयोः पुंसि बलिः" इत्यमरः। ओषधयः व्रीहिमुद्गादयः शुक्लमाल्यानि...वचनव्यत्यय आर्षः। पृथक्पृथक् पात्रगृहीते मधुसर्पिषी क्षौद्र घृते। अहतानि "ईषद्धौतं नवं श्वेतं सदशं यन्नधारितम्। अहतं तद्विजानीयाद्दैवे पित्र्ये च कर्मणि॥" इत्युक्तजलप्रक्षालनादिगुणयुक्तानि। चामरव्यजने चामररूपव्यजने। शातकुम्भानां सौवर्णानाम्। हिरण्यशृङ्गं हिरण्यालंकृतशृङ्गम्। समग्रं सम्पूर्णावयवम्। उपस्थापयत प्रापयत। अग्न्यगारं अग्निहोत्र

अहतानि च वासांसि रथं सर्वायुधान्यपि। चतुरङ्गबलं चैव गजं च शुभलक्षणम् ॥ ९ ॥ चामरव्यजने श्वेते ध्वजं छत्रं च पाण्डरम्। शतं च शातकुम्भानां कुम्भानामग्निवर्चसाम् ॥ १० ॥ हिरण्यशृङ्गमृषभं समग्रं व्याघ्रचर्म च। उपस्थापयत प्रातरग्न्यगारं महीपतेः ॥ ११ ॥ यच्चान्यत्किञ्चिदेष्टव्यं तत्सर्वमुपकल्प्यताम् ॥ १२ ॥ अन्तःपुरस्य द्वाराणि सर्वस्य नगरस्य च। चन्दनस्रग्भिरर्च्यन्तां धूपैश्च घ्राणहारिभिः ॥ १३ ॥ प्रशस्तमन्नं गुणवद्दधिक्षीरोपसेचनम्। द्विजानां शतसाहस्रे यत्प्रकाममलं भवेत् ॥ १४ ॥ सत्कृत्य द्विजमुख्यानां श्वः प्रभाते प्रदीयताम्। घृतं दधि च लाजाश्च दक्षिणाश्चापि पुष्कलाः ॥ १५ ॥ सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम्। ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्तामासनानि च। आबध्यन्तां पताकाश्च राजमार्गश्च सिच्यताम् ॥ १६ ॥

गृहम्। अन्यत् गन्धपुष्पादिकम्। एष्टव्यं अपेक्षणीयम् ॥८–१२॥ अन्तःपुरेति। अन्तःपुरस्य राजगृहस्य सर्वस्य नगरस्य द्वाराणि सर्वाणि नगरद्वाराणी त्यर्थः। घ्राणहारिभिः घ्राणद्वारा पुरुषाकर्षकैः॥१३॥प्रशस्तमिति। सहस्रमेव साहस्रम्। शतसाहस्रशब्दोऽपरिमितवचनः। विषयसप्तमी। अलं पर्याप्तं "अलं भूषणपर्याप्तिशक्तिवारणवाचकम्" इत्यमरः। शतसाहस्रविषये प्रकामं अत्यर्थं, पर्याप्तं प्राशस्त्यादिगुणविशिष्टं यदन्नं भवेत्तत्सम्पाद्यतामित्यर्थः॥१४॥ सत्कृत्येति। द्विजमुख्यानां द्विजमुख्येभ्यः सत्कृत्य दीयताम्, तदन्नमिति शेषः। पुष्कलाः संपूर्णाः ॥ १५ ॥ सूर्य इत्यादि। सूर्ये अभ्युदितमात्रे सूर्यो



नूतनानि, चामरव्यजने चमरवालनिर्मिते व्यजने। शातकुम्भानां सौवर्णानाम्। हिरण्यशृङ्गं सुवर्णालङ्कृतशृङ्गम्। समग्रमखण्डम्। उपस्थापयत प्रापयत ॥ ११ ॥ यच्चान्यदिति। एष्टव्यम् अपेक्षणीयम्। मङ्गलद्रव्यमित्यर्थः ॥ १२ ॥ १३ ॥ प्रशस्तमन्नं मृष्टान्नम्। शतसाहस्रशब्दोऽपरिमितवाचिविषयः। तत् अलं पर्याप्तम्। प्रकाममभिमतं भवेत्। दधिक्षीरोपसेचनं दधिक्षीरसंस्कारवत् गुणवत् व्यञ्जनोपेतम् ॥ १४–१६ ॥

दयानन्तरमेव श्वः परेद्युः । स्वस्तिवाचनं भविता तदर्थं ब्राह्मणाश्च निमन्त्र्यन्ताम् आहूयन्ताम् । आसनानि, तेषामिति शेषः । आबध्यन्तां प्रतिगृहमिति शेषः ॥१६॥ सर्व इति । तालैरवचरन्ति जीवन्तीति तालावचराः नर्तकादयः । कक्ष्यां द्वितीयामिति अन्तःकक्ष्यायामभिषेकप्रवृत्तेस्तत्र च ब्राह्मणैर्वस्त व्यत्वादिति भावः ॥१७॥ देवायतनचैत्येषु देवगृहेषु चतुष्पथेषु चेत्यर्थः । अन्नभक्षैः सह वर्त्तन्तइति सान्नभक्षाः । अन्नमोदकहस्ता इतियावत् । माल्य

सर्वे च तालावचरा गणिकाश्च स्वलंकृताः । कक्ष्यां द्वितीयामासाद्य तिष्ठन्तु नृपवेश्मनः ॥ १७ ॥ देवायतनचैत्येषु सान्नभक्षाः सदक्षिणाः । उपस्थापयितव्याः स्युर्माल्ययोग्याः पृथक्पृथक् ॥ १८ ॥ दीर्घासिबद्धा योधाश्च सन्नद्धा मृष्टवाससः । महाराजाङ्गणं सर्वे प्रविशन्तु महोदयम् ॥ १९ ॥ एवं व्यादिश्य विप्रौ तौ क्रियास्तत्र सुनिष्ठितौ । चक्रतुश्चैव यच्छेषं पार्थिवाय निवेद्य च ॥ २० ॥ कृतमित्येव चाब्रूतामभिगम्य जगत्पतिम् । यथोक्तवचनं प्रीतौ हर्षयुक्तौ द्विजर्षभौ ॥ २१ ॥

प्रदानयोग्याः माल्ययोग्याः । मध्यमपदलोपिसमासः । माल्यार्थसाधनानि पृथक्पृथगिति, देवायतनचैत्ययोरिति शेषः । ब्राह्मणैर्देवताः पूजनीया इत्यर्थः ॥ १८ ॥ दीर्घासिबद्धा इति । दीर्घासिबद्धाः बद्धदीर्घासयः । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" इति निष्ठायाः परनिपातः । महानुदयो रामाभिषेकरूपाभ्युदयो यस्मिन् तं महोदयम् ॥ १९ ॥ एवमिति । विप्रौ वसिष्ठवामदेवौ । क्रियाः पुरोहितकर्त्तव्याः । तत्र राजगृहे । व्यादिश्य आज्ञाप्य । यच्छेषं दासीपरिजनाद्यानयनं तदपि पार्थिवाय राज्ञे निवेद्य चक्रतुः ॥ २० ॥ कृतमिति । अथ जगत्पतिं राजानमभिगम्य । यथोक्तवचनम् उक्तवचन

तालावचराः तालैरवचरन्ति जीवन्तीति तालावचराः नर्तकगायकादयः । कक्ष्यां द्वारम् ॥ १७ ॥ देवायतनचैत्येषु देवगृहेषु चैत्येषु रथ्यावृक्षेषु च । सान्नभक्षाः अन्नभक्षैः सह वर्तन्त इति तथा, अन्नमोदकहस्ता इति यावत् । माल्ययोग्याः माल्यप्रदानयोग्याः॥ १८ ॥ दीर्घासिबद्धाः बद्धदीर्घासयः, मृष्टवाससः धौताम्बराः, महोदयम् महान् श्रीरामाभिषेकरूपः उदयो यस्मिन्नित्यङ्गणविशेषणम्॥ १९ ॥ एवमिति । विप्रौ वसिष्ठवामदेवौ । क्रियाः रामाभिषेकोपयोगीनि कार्याणि व्यादिश्य अधिकारिणामाज्ञाप्येत्यर्थः । शेषं यत् कार्यं विहितं तत्पार्थिवाय निवेद्य चक्रतुरिति सम्बन्धः ॥२०॥ कृतमिति । यथोक्तवचनमुक्तवचनमनतिक्रम्य प्रीतौ हर्षयुक्तौ प्रीतिर्मनोगतानन्दः, हर्षः तज्जन्यो रोमाञ्चादिशरीरविकारः । तौ यथोक्तवचनम् उक्तवचनानतिक्रमेण सर्वं कृतमित्यब्रूतामित्यन्वयः ॥ २१ ॥

मनतिक्रम्य कृतमिति प्रीतौ हर्षयुक्तौ । प्रीतिर्मनोगतो हर्षः, मानसप्रीतिजन्यरोमाञ्चादिशरीरविकारो हर्षः तद्युक्तौ । पूर्वश्लोके निवेद्येत्यनेन शेष सम्पादनविषयनिवेदनमुक्तम् । अब्रूतामिति पूर्वोक्तसकलसिद्धिविषयमिति न पुनरुक्तिः ॥ २१ ॥ तत इति । कृतात्मा सुशिक्षितबुद्धिः । शीघ्रागमन हेतुरयम् । "आत्मा जीवे धृतौ बुद्धौ" इत्यमरः ॥ २२ ॥ २३ ॥ अथेति । अथ सुमन्त्रनिर्गमनानन्तरम् । तत्र प्रासादे । समासीनाः सम्यगुपविष्टाः ।



ततः सुमन्त्रं द्युतिमान् राजा वचनमब्रवीत् । रामः कृतात्मा भवता शीघ्रमानीयतामिति ॥ २२ ॥ स तथेति प्रतिज्ञाय सुमन्त्रो राजशासनात् । रामं तत्रानयाञ्चक्रे रथेन रथिनां वरम् ॥ २३ ॥ अथ तत्र समासीनास्तदा दशरथं नृपम् । प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च भूमिपाः॥२४॥ म्लेच्छाचार्याश्च ये चान्ये वनशैलान्तवासिनः । उपासाञ्चक्रिरे सर्वे तं देवा इव वासवम् ॥२५॥ तेषां मध्ये स राजर्षिर्मरुतामिव वासवः । प्रासादस्थो रथगतं ददर्शायान्तमात्मजम् ॥२६॥ गन्धर्वराजप्रतिमं लोके विख्यातपौरुषम् । दीर्घबाहुं महासत्त्वं मत्तमातङ्गगामिनम् ॥२७॥

प्राच्या इत्यादौ "द्युप्राग्–"इत्यादिना यदादयः शैषिका भवार्थाः । म्लेच्छाचार्याः म्लेच्छप्रभवः । अन्तशब्दः प्रदेशवाची । प्राच्येत्यादिना शैलान्त वासिन इत्यन्तेन मूलभृत्यश्रेणिसुहृद्द्विषदाटविकमिति षड्विधबलोपास्यत्वं सार्वभौमचिह्नमुक्तम् ॥ २४–२६ ॥ गन्धर्वराजेत्यादि । गन्धर्वराजप्रतिमं भोगस्रोतःप्रावण्यवेषसौन्दर्येषु गन्धर्वराजौपम्यम् । न केवलं भोगधारारसिकत्वेन वीररसानभिज्ञत्वमित्याह लोके विख्यातपौरुषम् । पौरुषोपयुक्त संहननवत्त्वमाह दीर्घबाहुमिति । न केवलं शिरीषपुष्पसुकुमारबाहुत्वेनान्तःसारराहित्यमित्याह महासत्त्वमिति । तदनुगुणगतिविशेषमाह मत्तमातङ्ग गामिनमिति । सगर्वसलीलगमनं मदालसगमनं वा विवक्षितम् । चन्द्रकान्ताननं चन्द्राननमित्युक्तेप्याह्लादकत्वादिसिद्धेर्निरतिशयाह्लादकत्वं द्योतयितुं

तत इति । कृतात्मा सुशिक्षितबुद्धिः ॥ २२–२६ ॥ गन्धर्वराजेत्यादि श्लोकत्रयमेकं वाक्यम् । गन्धर्वराजप्रतिमं गन्धर्वश्रेष्ठसुन्दरमित्यर्थः । गन्धर्व राजौपम्यात्र केवलं भोगमात्ररसिकत्वम्, किन्तु वीररसाभिज्ञत्वमपीत्याह–विख्यातपौरुषमिति । पौरुषोपयुक्तसंहननवत्त्वमाह-दीर्घबाहुमिति । न केवलं शिरीषकुसुमसुकुमारबाहुत्वेनान्तःसारराहित्यमित्याह-महासत्त्वमिति । तदनुगुणगतिविशेषमाह-मत्तमातङ्गगामिनमिति । सगर्वसलीलगमनं मदालसगमनं वा विवक्षितम् । चन्द्राननमित्यनेनाह्लादकत्वसिद्धे निरतिशयाह्लादकत्वं द्योतयितुं कान्तेत्युक्तम् । तेन प्रत्यवयवशोभावत्त्वं दर्शितम् । रामं विग्रहगुणैः स्वरूपगुणैश्च रमयन्तम् । समुदायशोभावत्त्वमाह-अतीवप्रियदर्शनमिति । रूपौदार्यगुणैः-रूपं विग्रहः, औदार्यमनुभवितृभ्योऽनुभवदानं गुण्यते सदानुसन्धीयत इति गुण इति

कान्तशब्दः । चन्द्रात्कान्ताननमिति विग्रहः । अनेनावयवशोभावत्त्वमुक्तम् । रामं विग्रहगुणैः स्वरूपगुणैश्च रमयन्तम् । समुदायशोभावत्त्वमाह अतीव प्रियदर्शनमिति । निरन्तरदर्शनेपि प्रतिक्षणं नवनवीभूतदर्शनम् । रूपौदार्यगुणैः रूपं विग्रहः, औदार्यं अनुभवितृभ्योनुभवदानम् । " य आत्मदा बलदा " इतिश्रुतेः । गुण्यते सदानुसन्धीयत इति गुणः । " गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु " इति निघण्टुः । तेन सदानुसन्धीयमानं सौशील्यमुच्यते । अहो महानयमस्मादृशेषु क्षुद्रेष्वप्यातिसंश्लेषेण वर्तत इति सर्वदानुसन्धीयमानत्वात् । पुंसामिति कठिनचित्तानामपि किमुत

चन्द्रकान्ताननं राममतीव प्रियदर्शनम् । रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम् ॥ २८ ॥ घर्माभितप्ताः पर्जन्यं ह्लादयन्तमिव प्रजाः । न ततर्प समायान्तं पश्यमानो नराधिपः ॥२९॥ अवतार्य सुमन्त्रस्तं राघवं स्यन्दनोत्तमात् । पितुः समीपं गच्छन्तं प्राञ्जलिः पृष्ठतोऽन्वगात् ॥३०॥ स तं कैलासशृङ्गाभं प्रासादं नरपुङ्गवः । आरुरोह नृपं द्रष्टुं सह सूतेन राघवः ॥३१॥ स प्राञ्जलिरभिप्रेत्य प्रणतः पितुरन्तिके । नाम स्वं श्रावयन् रामो ववन्दे चरणौ पितुः ॥३२॥

स्त्रीणामिति भावः । यद्वा पुंशब्देन स्त्रीपुंससाधारणमात्ममात्रमुच्यते " पुमानेको व्यवस्थितः " इति श्रीविष्णुपुराणे प्रयोगात् । तेन सुरनर तिर्यगादिभेदभिन्नानां स्त्रीपुन्नपुंसकभेदभिन्नानां सर्वेषां दृष्टिचित्तापहार उक्तः । वक्ष्यति रामविरहे स्थावरजङ्गमवस्तुमात्रं परिम्लानमिति । यद्वा पुंसामपि रामं पश्यतां स्त्रीभूत्वाहमनुमनुभवेयमित्यभिलाषो भवति । यथाहुः—" पाञ्चाल्याः पद्मपत्राक्ष्याः स्नायन्त्या जघनं घनम् । याः स्त्रियो दृष्टवत्यस्ताः पुम्भावं मनसा ययुः ॥ " इति । पश्यमान इति निर्निमेषदर्शनमुक्तम् । न ततर्पेति प्रतिक्षणमनुभवेपि नवनवप्रेमास्पदतया न तृप्ति रभूदित्यर्थः ॥ २७–२९ ॥ अवतार्येति । अवतारणं हस्तप्रदानादिना ॥३०॥३१॥ स प्राञ्जलिरिति । अभिप्रेत्य प्राप्य। प्रणतः " दण्डवत् प्रणमेद्भूमा वुपेत्य गुरुमन्वहम् " इत्युक्तप्रक्रियया दण्डवत्प्रणत इत्यर्थः । स्वं नाम श्रावयन् " शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रियस्य च " इतिवचनाद्रामवर्मा

सदानुसन्धीयमानं सौशील्यमुच्यते । महानयमस्मादृशेष्वप्यतिक्षुद्रेष्वतिसंश्लेषेण वर्तत इति सदानुसन्धीयमानत्वात् । पुंसामिति कठिनचित्तानां दृष्टिचित्तापहारिणम्, किमुत स्त्रीणामिति भावः ॥ २७ ॥ २८ ॥ घर्माभितप्ता इति । घर्माभितप्ताः ग्रीष्माभितप्ताः प्रजाः ह्लादयन्तं पर्जन्यमिव स्थितम्, समायान्तम् स्वसमीपमागच्छन्तं रामं नराधिपो दशरथः पश्यमानः सन् न ततर्प तृप्तिं न प्राप्तः, अत्र पश्यमान इत्यनेन निर्निमेषदर्शनमुक्तम् । न ततर्पेत्यनेन प्रतिक्षणमनुभवे नवनव

ऽहमस्मि भो इति श्रावयन्नित्यर्थः ॥ ३२ ॥ अञ्जलौ गृह्य अञ्जलिं प्रगृह्य "सक्थिनि कर्णे वा गृहीत्वा" इति महाभाष्यकारवचनात् । अञ्जलाविति
कर्मणि सप्तमी ॥ ३३ ॥ तस्मै इति । अभ्युदितम् उन्नतम् ॥३४॥ तदिति । आसनवरं प्राप्य तदासनं स्वयैव प्रभया व्यदीपयत् । विमलो रविरुदये मेरुं
प्राप्येव । सूर्यस्य प्रधानमेरुप्राप्तेः साक्षादभावात् अत्र मेरुशब्देनास्ताद्रिसमीपवर्ती सावर्णिमेरुरुच्यते । उदयश्चोत्तरवर्षस्थितसिद्धपुरवासिजनापेक्षया ।

तं दृष्ट्वा प्रणतं पार्श्वे कृताञ्जलिपुटं नृपः । गृह्याञ्जलौ समाकृष्य सस्वजे प्रियमात्मजम् ॥ ३३ ॥ तस्मै चाभ्युदितं सम्यङ्मणिकाञ्चनभूषितम् । दिदेश राजा रुचिरं रामाय परमासनम् ॥३४॥ तदासनवरं प्राप्य व्यदीपयत राघवः । स्वयैव प्रभया मेरुमुदये विमलो रविः ॥ ३५ ॥ तेन विभ्राजता तत्र सा सभाभिव्यरोचत । विमलग्रहनक्षत्रा शारदी द्यौरिवेन्दुना ॥ ३६ ॥ तं पश्यमानो नृपतिस्तुतोष प्रियमात्मजम् । अलंकृतमिवात्मानमादर्शतलसंस्थितम् ॥ ३७ ॥ स तं सस्मितमाभाष्य पुत्रं पुत्रवतां वरः । उवाचेदं वचो राजा देवेन्द्रमिव काश्यपः ॥ ३८ ॥

इयमुदयास्तमयव्यवस्था सूर्यसिद्धान्ते आर्यभट्टे च प्रसिद्धा—"भूवृत्तपादे पूर्वस्यां यवकोटीति विश्रुता । भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा ॥ याम्यायां
भारते वर्षे लङ्का तद्वन्महापुरी । पश्चिमे केतुमालाख्ये रोमकेति च कीर्त्तिता । उदक्सिद्धपुरी नाम कुरुवर्षे प्रतिष्ठिता ॥ उदयो यो लङ्कायां सोऽस्तमयः
सवितुरेव सिद्धपुरे । मध्याह्ने यवकोट्यां रोमकविषये अर्धरात्रं स्यात् ॥ भारतादिषु वर्षेषु तद्वदेव परिभ्रमन् । मध्योदयार्द्धरात्रांस्तु कालान् कुर्यात्प्रद
क्षिणम् ॥" इति ॥ ३५ ॥ तेनेति । विभ्राजता प्रकाशमानेन । विमलग्रहनक्षत्रेति दृष्टान्तबलेन दशरथवसिष्ठादिभिरीषत्प्रकाशितत्वमवगम्यते ॥३६॥
तमिति । पश्यमानः पश्यन् । आदर्शतलसंस्थितमित्यनेन रामस्य मुखनासिकाचरणादिसर्वावयवेन पितृसरूपत्वमावेदितम् ॥३७॥ स इति । सस्मित

प्रेमास्पदतया तृप्तिर्नाभूदिति सूच्यत इति रहस्यम् ॥ २९–३२ ॥ तमिति । अञ्जलौ गृह्य गृहीत्वा तं समाकृष्य, सस्वजे आलिलिङ्ग ॥ ३३ ॥ तदिति । राघवः
आसनवरं प्राप्य स्वयैव प्रभया स्वशरीरकान्त्या तदासनं व्यदीपयत, भासमानं चकारेत्यर्थः ॥ ३४ ॥ तेनेति । सा सभा वसिष्ठदशरथादिभिर्भ्राजितापि तेन
रामेणैव व्यरोचत विशेषेण चकाशे । नक्षत्रादियुक्ता द्यौरिन्दुनेव ॥ ३५ ॥ ३६ ॥ तमिति । अलंकृतमादर्शे स्थितमात्मानं दृष्ट्वा यथा तुष्यति जनः तदा दशरथः
श्रीरामं दृष्ट्वा तुतोषेत्यर्थः ॥ ३७ ॥ आभाष्य रामेति सम्बोध्य ॥ ३८ ॥ ३९ ॥

मिति क्रियाविशेषणम् । आभाष्य रामेति सम्बोध्य ॥ ३८ ॥ रामस्यैव राज्याभिषेकार्हतामभिव्यञ्जयन्नाह—ज्येष्ठायामिति । आत्मजस्सुत औरस स्सुतः ॥ ३९ ॥ यत इति । पुष्ययोगेनेति " प्रकृत्यादिभ्य उपसङ्ख्यानम् " इति तृतीया । पुष्येण चन्द्रमसो योगः पुष्ययोगः । तदुपलक्षितकाल इत्यर्थः । पुष्यनक्षत्रयुक्ते दिवस इत्यर्थः ॥४०॥ कामत इति । कामतः प्रकामं गुणवति, त्वयीतिशेषः । यद्यपि भवान् सर्वगुणसम्पन्नस्तथापि पुत्रस्नेहाद्भवते

जेष्ठायामसि मे पत्न्यां सदृश्यां सदृशः सुतः । उत्पन्नस्त्वं गुणश्रेष्ठो मम रामात्मजः प्रियः ॥ ३९ ॥ यतस्त्वया प्रजाश्चेमाः स्वगुणैरनुरञ्जिताः । तस्मात्त्वं पुष्ययोगेन यौवराज्यमवाप्नुहि ॥ ४० ॥ कामतस्त्वं प्रकृत्यैव विनीतो गुणवानसि । गुणवत्यपि तु स्नेहात्पुत्र वक्ष्यामि ते हितम् ॥४१॥ भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः । कामक्रोधसमुत्थानि त्यजेथा व्यसनानि च ॥ ४२ ॥ परोक्षया वर्त्तमानो वृत्त्या प्रत्यक्षया तथा । अमात्य प्रभृतीः सर्वाः प्रकृतीश्चानुरञ्जय ॥ ४३ ॥

किञ्चिदुपदिशामीत्यर्थः ॥ ४१ ॥ भूय इति । भूयो विनयं सातिशयविनयम् । कामक्रोधसमुत्थानि व्यसनानि " स्त्री द्यूतमृगयामद्यवाक्पारुष्योग्रदण्डताः । अर्थसन्दूषणं चेति राज्ञां व्यसनसप्तकम् ॥" इत्युक्तानि व्यसनानि । अर्थसन्दूषणं पित्रादिसञ्चितार्थस्य नाशनम् । यद्वा " मृगयाक्षो दिवास्वापः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाध्वा च कामजो दशको गुणः ॥" इत्येतानि कामजानि " पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाक्दण्डयोश्च पारुष्यं क्रोधजोऽपि गुणोऽष्टकः ॥" इत्युक्तानि क्रोधजानि च व्यसनानि ॥४२॥ परोक्षयेति । अप्रत्यक्षया वृत्त्या तक्षप्रभृतिकर्मान्तिकानां परोक्षो भूत्वाधिकृतमुखेन यत्कार्याणि संविधत्ते सा परोक्षवृत्तिः । अव्यवधानेनामात्यादीन् यया वृत्त्यानुगृह्णाति सा प्रत्यक्षवृत्तिः, ताभ्यां वर्तमानः सन् अमात्यप्रभृतीः सर्वाः प्रकृतीश्चानुरञ्जयेतिसम्बन्धः । यद्वा परोक्षया चारमुखतः परोक्षानुभवसिद्धया वृत्त्या स्वपरराष्ट्रवृत्तान्तविचारेण सह वर्तमानो भव, तथा प्रत्यक्षया नित्यं यथाकाल

यत इति । पुष्ययोगेन चन्द्रमसः पुष्यनक्षत्रयोगेनोपलक्षितः ॥ ४० ॥ कामत इति । त्वं प्रकृत्या स्वभावत एव कामतः अत्यर्थं गुणवानसि, अतो गुणवति त्वयि न मयोपदेष्टव्यम्, अपि तु स्नेहादित्थं वक्ष्यामीति योजना ॥ ४१ ॥ भूय इति । दशरथोपदेशवाक्ये सर्वत्रान्वयः कार्यः कामेति । कामजानि व्यसनानि-स्त्रीद्यूत मृगयामधुसेवनानि, क्रोधजानि—वाक्पारुष्यदण्डपारुष्यजातानि, त्यजेथाः परिहरेत्यर्थः ॥ ४२ ॥ परोक्षयेति । अमात्यादीनां प्रत्यक्षो भूत्वा यत्कार्याणि संविधत्ते

मास्थानमास्थाय स्वानुभवांसिद्धयथोक्तवृत्तान्तविचारो भव,अमात्यप्रभृतीः सर्वाः प्रकृतीः अमात्यसेनानीपुररक्षिणः पौरजानपदाः सर्वप्रजाश्चानुरञ्जय॥४३॥ कोष्ठागारेत्यादिश्लोकद्वयमेकान्वयम् । कोष्ठागाराणि अयुतनियुताद्दिसङ्ख्यधान्यराशिग्राहीणि कोष्ठरूपतया निर्मितान्यगाराणि । आयुधागाराणि समग्र निजबलापेक्षिताष्टादशविधायुधप्रतिष्ठागाराणि । तैः सह सन्निचयान् निचीयन्ते एष्विति निचयाः । नवरत्नहेमरजतवस्त्राभरणादिसम्पूर्णास्तत्तत्कोशाः

कोष्ठागारायुधागारैः कृत्वा सन्निचयान् बहून् । तुष्टानुरक्तप्रकृतिर्यः पालयति मेदिनीम् ॥ ४४ ॥ तस्य नन्दन्ति मित्राणि लब्ध्वामृतमिवामराः । तस्मात्त्वमपि चात्मानं नियम्यैवं समाचर ॥४५॥ तच्छ्रुत्वा सुहृदस्तस्य रामस्य प्रियकारिणः । त्वरिताः शीघ्रमभ्येत्य कौसल्यायै न्यवेदयन् ॥ ४६ ॥ सा हिरण्यं च गाश्चैव रत्नानि विविधानि च । व्यादिदेश प्रियाख्येभ्यः कौसल्या प्रमदोत्तमा ॥ ४७ ॥ अथाभिवाद्य राजानं रथमारुह्य राघवः । ययौ स्वं द्युतिमद्वेश्म जनौघैः प्रतिपूजितः ॥ ४८ ॥ ते चापि पौरा नृपतेर्वचस्तच्छ्रुत्वा तदालाभमिवेष्टमाशु । नरेन्द्रमामन्त्र्य गृहाणि गत्वा देवान् समानर्चुरभिप्रहृष्टाः ॥ ४९ ॥ इत्यार्षे० श्रीरामायणे श्रीमदयोध्याकाण्डे तृतीयः सर्गः ॥३॥

तान् । तुष्टानुरक्तप्रकृतिरिति उक्तनिचयबलादितिशेषः । मित्राणि सामन्ताः । आत्मानं मनः ॥४४॥४५॥ तादिति । तत् रामाभिषेकप्रस्तावनम् ॥४६॥ सेति । प्रियाख्येभ्यः प्रियं रामाभिषेकमाचक्षत इति प्रियाख्याः । "चक्षिङः ख्याञ्" इति ख्याञादेशः ॥ ४७ ॥ अथेति ॥ ४८ ॥ त इति । आनर्चुः रामाभिषेकविघ्नवारणाय ॥ ४९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥

सा प्रत्यक्षा वृत्तिः, परोक्षया वृत्त्या तक्षप्रभृतिकर्मान्तिकानां परोक्षो भूत्वा अधिकृतपुरुषमुखेन यत्कार्याणि संविधत्ते सा परोक्षा वृत्तिः ॥ ४३ ॥ कोष्ठागारेति । कोष्ठागारं धान्यगृहम्, अन्तर्गृहमिति केचित् । कोष्ठागारायुधागारैस्सह सन्निचयान् सतां प्रशस्तवस्तूनां निचयान् कृत्वा संपाद्येत्यर्थः ॥ ४४–४६ ॥ सेति । प्रियाख्येभ्यः प्रियं रामाभिषेकरूपम् । आचक्षन्त इति प्रियाख्यास्तेभ्यः ॥ ४७ ॥ ४८ ॥ ते चेति । इष्टलाभमिव स्थितं तद्रामाभिषेकप्रस्तावવचनं श्रुत्वा देवान् समानर्चुः । श्रीरामाभिषेको निर्विघ्नो भूयादिति इष्टदेवताराधनं कृतवन्त इत्यर्थः ॥ ४९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां तृतीयः सर्गः ॥ ३ ॥

एवं पूर्वविचारितमपि राममाहूयोक्तमपि रामाभिषेकं पुनर्मन्त्रिभिः कालविशेषनिर्णयपूर्वकं राममाहूय सविशेषमुपदिशति चतुर्थे—गतेष्वित्यादिना। श्लोकद्वयमेकान्वयम्। अभिषेच्य इति निश्चयं चक्र इति सम्बन्धः ॥ १ ॥ २ ॥ अथेति । अन्तर्गृहमाविश्येत्यनेन मन्त्रिणामपि विसर्जनं सिद्धम्। आमन्त्रयामास नियोजयामासेत्यर्थः। आनयेत्यत्र इतिकरणं द्रष्टव्यम् ॥ ३ ॥ प्रतिगृह्येति । आनयितुं आनेतुमित्यर्थः। इडार्षः ॥ ४ ॥ द्वाःस्थैरिति।

गतेष्वथ नृपो भूयः पौरेषु सह मन्त्रिभिः। मन्त्रयित्वा ततश्चक्रे निश्चयज्ञः स निश्चयम् ॥१॥ श्व एव पुष्यो भविता श्वोऽभिषेच्यस्तु मे सुतः। रामो राजीवताम्राक्षो यौवराज्य इति प्रभुः ॥ २ ॥ अथान्तर्गृहमाविश्य राजा दशरथ स्तदा। सूतमामन्त्रयामास रामं पुनरिहानय ॥ ३ ॥ प्रतिगृह्य स तद्वाक्यं सूतः पुनरुपाययौ । रामस्य भवनं शीघ्रं राममानयितुं पुनः ॥ ४ ॥ द्वाःस्थैरावेदितं तस्य रामायागमनं पुनः। श्रुत्वैव चापि रामस्तं प्राप्तं शङ्कान्वितोऽभवत् ॥ ५ ॥ प्रवेश्य चैनं त्वरितं रामो वचनमब्रवीत्। यदागमनकृत्यं ते भूयस्तद्ब्रूह्यशेषतः ॥ ६ ॥ तमुवाच ततः सूतो राजा त्वां द्रष्टुमिच्छति। श्रुत्वा प्रमाणमत्र त्वं गमनायेतराय वा ॥ ७॥ इति सूतवचः श्रुत्वा रामोऽथ त्वरयान्वितः। प्रययौ राजभवनं पुनर्द्रष्टुं नरेश्वरम् ॥ ८ ॥

तस्य सुमन्त्रस्य पुनरागमनं रामाय द्वाःस्थैरावेदितम्। रामश्चापि प्राप्तमागतं सुमन्त्रं श्रुत्वैव शङ्कान्वितोऽभवत्। किमभिषेकविघ्नः कश्चिदासीत् उतान्यः कश्चिदुपप्लवोऽभूदिति शङ्का ॥ ५ ॥ प्रवेश्येति। भूयः पुनः ते यदागमनकृत्यं तद्ब्रूहीति सम्बन्धः ॥ ६ ॥ तमिति। सूतः श्रुत्वा, रामवाक्यमितिशेषः। ततः रामवाक्यश्रवणानन्तरम्। राममुवाच, कथमिति ? हे राम! राजा त्वां द्रष्टुमिच्छति। अत्र दशरथसमीपे। गमनाय इतराय अगमनाय च। त्वं प्रमाणं

गतेष्विति। निश्चयज्ञः—इदं कार्यमस्मिन्नवसरे कर्तव्यमिति निश्चयज्ञ इत्यर्थः। निश्चयं रामाभिषेकविषयनिश्चयम् ॥ १ ॥ श्व इति। 'रामो यौवराज्येऽभिषेच्योऽस्तु' इति निश्चयं चक्र इति पूर्वेण सम्बन्धः ॥ २ ॥ अथेति। आमन्त्रयामास आज्ञापयामास। आनयेत्यनन्तरामितिकरणं द्रष्टव्यम् ॥ ३ ॥ ४ ॥ द्वाःस्थैरिति। तस्य सूतस्य पुनरागमनं द्वाःस्थैरावेदितं विज्ञापितं सूतं प्राप्तं पुनरागतं श्रुत्वैव शङ्कान्वितोऽभवत्, इदानीमेव विसृष्टस्य पुनरागमने किं कारणमिति विचारान्वितोऽभवत् ॥ ५ ॥ ६ ॥ तमिति। ततः रामवाक्यश्रवणानन्तरम्। श्रुत्वा, राजवाक्यमिति शेषः। इतराय आगमनाय वा, त्वं प्रमाणं निर्णेता ॥ ७–११ ॥

कर्त्ता, शीघ्रं गच्छेत्यर्थः । इतरशब्दस्य सर्वनामकार्याभाव आर्षः ॥ ७-९॥ प्रविशन्निति । राघवः पितुर्भवनं प्रविशन्नेव दूरात्प्रणिपत्य कृताञ्जलिः सन् पितरं ददर्श । दूरात्प्रणिपातो विनयातिशयात् ॥ १० ॥ प्रणमन्तमिति । समीपे पुनः प्रणमन्तमित्यर्थः ॥ ११ ॥ रामेति । वृद्धोस्मीत्यनन्तरं दीर्घायुरिति वृद्धत्वविवरणम् । यद्वा ज्ञानवृद्धत्वव्यावृत्तये दीर्घायुरिति । "विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥"

तं श्रुत्वा समनुप्राप्तं रामं दशरथो नृपः । प्रवेशयामास गृहं विवक्षुः प्रियमुत्तमम् ॥ ९ ॥ प्रविशन्नेव च श्रीमान् राघवो भवनं पितुः । ददर्श पितरं दूरात् प्रणिपत्य कृताञ्जलिः ॥१०॥ प्रणमन्तं समुत्थाप्य तं परिष्वज्य भूमिपः । प्रदिश्य चास्मै रुचिरमासनं पुनरब्रवीत् ॥ ११ ॥ राम वृद्धोऽस्मि दीर्घायुर्भुक्ता भोगा मयेप्सिताः । अन्नवद्भिः क्रतुशतैस्तथेष्टं भूरिदक्षिणैः ॥ १२ ॥ जातमिष्टमपत्यं मे त्वमद्यानुपमं भुवि । दत्तमिष्टमधीतं च मया पुरुषसत्तम ॥ १३ ॥ अनुभूतानि चेष्टानि मया वीर सुखान्यपि । देवर्षिपितृविप्राणामनृणोस्मि तथात्मनः ॥ १४ ॥

इत्यन्नादिहीनस्य यज्ञस्य निन्दनादन्नवद्भिरित्यादिविशेषणम् । क्रतुशतैः ज्योतिष्टोमाद्यश्वमेधपर्यन्तयागभेदैः । इष्टं यजनं कृतम् ॥ १२ ॥ जातमिति । इष्टमपत्यम् अभिमतमपत्यम् । इष्टं दत्तम् अभिमतं वस्तु दत्तम् ॥ १३ ॥ देवर्षीति । देवानामनृणः क्रतुशतैः, ऋषीणामनृणोऽध्ययनेन, पितॄणामनृणोऽपत्योत्पादनेन, विप्राणामनृणो दत्तेन, आत्मनोऽनृणः सुखानुभवेन । यद्यपि ब्रह्मचर्यादि ऋणत्रयं श्रुतिसिद्धम् । "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाजयते । ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति । तथापि ऋणपञ्चकमिति मतान्तरम् । यद्वा ऋणत्रयव्यपदेशः प्राधान्यादितरयोरुपलक्षणत्वाद्वा । ननु देवादीनां पञ्चानां कथमुत्तमर्णत्वम् ? अत्राहुः–देवानामिन्द्रियाधिष्ठातॄणां जितेन्द्रियताकारकत्वेनोपकारकत्वात्, ऋषीणां वागुपकारकत्वात्, पितॄणां तनूपकारकत्वात्, विप्राणां कर्माधीनसर्वसंस्कारसाधनेनाघनाशकत्वात्, आत्मनः शरीरेन्द्रियसङ्घातरूपस्य ज्ञानप्रकाशहेतुत्वेनोपकारकत्वाच्च तदप्रत्युपकारः पुरुषस्य ऋणमेव । अन्यत्र चोक्तम्–" अनिषिद्धसुखत्यागी पशुरेव न संशयः " इति ॥ १४ ॥



रामेति । यथेष्टम्–यथावत् । तथा इष्टं कृतम् ॥ १२–१४ ॥

न किञ्चिदिति ॥१९॥ अद्येति । स्पष्टम् ॥ १६ ॥ अपि चेति । अशुभान् अशुभसूचकान् । दारुणान् भयङ्करान् । नीलवर्णस्त्रीपरिष्वङ्गादीन् । उल्का निर्गतज्वालानिर्घातः अमेघाशनिः॥१७॥ अवष्टब्धमिति । नक्षत्रं जन्मनक्षत्रम् । अवष्टब्धम् आक्रान्तम् । अत्रेतिकरणं द्रष्टव्यम् । दैवज्ञाः ज्यौतिषिकाः । "सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि" इत्यमरः । सूर्याङ्गारकराहुभिः ग्रहैरवष्टब्धमित्यावेदयन्तीति सम्बन्धः॥१८॥ दुर्निमित्तफलमाह—प्रायेणेति ।

न किञ्चिन्मम कर्त्तव्यं तवान्यत्राभिषेचनात् । अतो यत्त्वामहं ब्रूयां तन्मे त्वं कर्तुमर्हसि ॥ १५ ॥ अद्य प्रकृतयः सर्वास्त्वामिच्छन्ति नराधिपम् । अतस्त्वां युवराजानमभिषेक्ष्यामि पुत्रक ॥ १६ ॥ अपि चाद्याशुभान् राम स्वप्ने पश्यामि दारुणान् । सनिर्घातादिवोल्का च पततीह महास्वना ॥ १७ ॥ अवष्टब्धं च मे राम नक्षत्रं दारुणै र्ग्रहैः । आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः ॥ १८ ॥ प्रायेण हि निमित्तानामीदृशानां समुद्भवे । राजा हि मृत्युमाप्नोति घोरां वापदमृच्छति ॥ १९ ॥ तद्यावदेव मे चेतो न विमुञ्चति राघव । तावदेवाभिषिञ्चस्व चला हि प्राणिनां मतिः ॥ २० ॥ अद्य चन्द्रोऽभ्युपगतः पुष्यात् पूर्वं पुनर्वसू । श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः ॥२१॥ ततः पुष्येऽभिषिञ्चस्व मनस्त्वरयतीव माम् । श्वस्त्वाहमभिषेक्ष्यामि यौवराज्ये परंतप ॥२२॥

ऋच्छति ऋच्छतिवेत्यर्थः ॥ १९ ॥ तदिति । चेतः त्वामभिषेक्ष्यामीति बुद्धिः । न विमुञ्चति मामितिशेषः । कुतो बुद्धिविमोचनप्रसक्तिरित्यत्राह चला हीति । मात्रन्तरादिप्रार्थनादिभिरिति भावः ॥ २० ॥ अद्येति । पुष्ययोगं पुष्येण चन्द्रस्य योगम् । नियतं अभिषेकनियतम्, प्रशस्तमित्यर्थः । दैवचिन्तकाः ग्रहचारज्ञाः । वक्ष्यन्ते वदन्ति ॥ २१ ॥ तत इति । अभिषिञ्चस्व अभिषिक्तो भव । त्वरयतीवेतीवशब्द एवकारार्थः ॥ २२ ॥

तवाभिषेचनं विना मम कर्तव्यं किमपि नेति भावः ॥१५॥१६ ॥ अपिचेति । अशुभानशुभसूचकानुत्पातान्, सनिर्घाता अशनिपातसहिता उल्कानिर्गतज्वाला । दिशोल्केति सन्धिरार्षः । दिवः अन्तरिक्षात् पतति ॥ १७ ॥ अवष्टब्धम् आक्रान्तम् । दैवज्ञाः ज्योतिर्विदः ॥ १८ ॥ १९ ॥ तदिति । तत्तस्माद्यावदेव मे चेतो न विमुह्यति त्वामभिषेक्ष्यामीत्येवंविधा बुद्धिर्यावन्नोपैति तावदेवाभिषिञ्चस्व अभिषिक्तो भव ॥ २० ॥ अद्येति । पुनर्वसू तन्नामकं नक्षत्रम् । पुष्ययोगं चन्द्रस्य पुष्ययोगं, नियतम् अभिषेकनियतम्, प्रशस्तमित्यर्थः । दैवचिन्तकाः ग्रहचारज्ञाः, वक्ष्यन्ते वदन्तीत्यर्थः ॥ २१ ॥ तत इति । अभिषिञ्चस्व अभिषिक्तो भव ॥ २२ ॥

तस्मादिति । अद्यप्रभृति एतदहरारभ्य निशा उपवस्तव्या । "वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः" इति भोजननिवृत्त्यर्थस्य वसेरकर्मकत्वादत्र सकर्मकत्वमार्षम् । निशायामुपवस्तव्यमित्यर्थः । दर्भप्रस्तरो दर्भास्तरणम् ॥२३॥ सुहृद इति । एवंविधानि अभिषेकादिमहाश्रेयोरूपाणि ॥२४॥ केकयराजाय राज्यशुल्कं दत्त्वा कैकेयीविवाहं कृतवान्, तं वृत्तान्तं हृदिकृत्वाह—विप्रोषित इति । अयं वृत्तान्तः सप्तोत्तरशततमे सर्गे "पुरा भ्रातः पिता नः स मातरं

तस्मात्त्वयाद्यप्रभृति निशेयं नियतात्मना । सह वध्वोपवस्तव्या दर्भप्रस्तरशायिना ॥२३॥ सुहृदश्चाप्रमत्तास्त्वां रक्षन्त्वद्य समन्ततः । भवन्ति बहुविघ्नानि कार्याण्येवंविधानि हि ॥२४॥ विप्रोषितश्च भरतो यावदेव पुरादितः । तावदेवाभिषेकस्ते प्राप्तकालो मतो मम ॥२५॥ कामं खलु सतां वृत्ते भ्राता ते भरतः स्थितः । जेष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः ॥२६॥ किन्तु चित्तं मनुष्याणामनित्यमिति मे मतिः । सतां तु धर्मनित्यानां कृतशोभि च राघव ॥२७॥

ते समुद्वहन् । मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमम् ॥" इति स्पष्टीभविष्यति । प्राप्तकाल इत्यत्रेतिकरणं द्रष्टव्यम् ॥ २५ ॥ काममिति । वृत्ते आचारे ॥ २६॥ अत्यन्तधर्मिष्ठानामपि चेतश्चञ्चलत्वात् । मित्रभेदादिनान्यथा भवतीत्याह किन्त्विति । किन्तु तथापीत्यर्थः । यद्यपि " कामं खलु सतां वृत्ते " इत्याद्युक्तगुणविशिष्टतया स न शङ्कास्पदीभूतः, तथापि मनुष्याणां मनुष्यत्वसाधरण्येन शङ्कितं चित्तम् अनित्यं चञ्चलमिति मे मतिः, मम निश्चयइत्यर्थः । सामान्यप्रयुक्तदोषो विशेषे न संक्रमत इत्याह सतां त्विति । तुशब्दः पक्षव्यावृत्त्यर्थः । धर्मनित्यानां धर्मैकनिरतानां कृतशोभि कृतेन परस्परोपकारेण शोभते नतु भेदं प्राप्नोति । राघव रघुवंशोत्पन्नस्त्वं स्ववंशप्रभावं न जानासि किम् ? अन्ये त्वेवं व्याचक्षते—धर्म

तस्मादिति । वध्वा सह सीतया सह । उपवस्तव्यम् उपोष्यं, निशायामुपवस्तव्यामित्यर्थः ॥ २३ ॥ सुहृद इति । एवंविधानि शुभोदर्काणि ॥ २४ ॥ केकयराजाय राज्यशुल्कं दत्त्वा दशरथः कैकेयीविवाहं कृतवान्, तं वृत्तान्तं हृदि कृत्वाह—विप्रोषित इति । यद्वा भरतस्य साधुवृत्तं जानन्नपि 'तद्यावदेव मे चेतः' इत्यादिना रामस्नेहाद्राजा यथा स्वचित्तमपि शङ्कितवान् तथैव भरतचित्तमपि शङ्कते विप्रोषित इति ॥ २५ ॥ ननु सद्गुणविशिष्टे भरते नैवं शङ्का युक्ता इत्यत आह—काममिति ॥२६॥ तथापि मनुष्याणां चलचित्ततया भरतेपि राज्यलोभो भवेदिति मे मतिः । अनित्यं चञ्चलम् । नन्वसन्मनुष्याणामिव चित्तं चञ्चलम्, न तु सतामित्याशङ्क्य परबोधनादिना सतामपि चित्तस्य चाञ्चल्यप्राप्तिः सम्भावितेत्याह सतां चेति । धर्मनित्यानां धर्मनिरतानाम् । कृतशोभि कृतेन परकृतमित्रभेदादिना शोभितुं शीलमस्यास्तीति कृतशोभि । यद्वा कृतशोभि कृतेनैव कार्येण शोभि, न तु करिष्यमाणेन । अयं भावः—यदिदानीमेव रामाभिषेकः क्रियते तर्हि भरतचित्तस्यापि

नित्यानां धर्मनिरतानां चित्तं कृतशोभि कृतेन परकृतभिक्षभेदादिना शोभितं शीलमस्यास्तीति कृतशोभीति। अपरे त्वाहुः–सतां चित्तं कृतेन कार्येण शोभते नतु करिष्यमाणेन। कृतं कार्यमनुमोदते नतु करिष्यमाणमितिभाव इति ॥ २७ ॥ इतीति। अभिषेचने विषये इत्युक्तः स रामः व्रजेत्यनुज्ञात इति सम्बन्धः ॥ २८ ॥ प्रविश्य चेति। राज्ञोद्दिष्टेऽभिषेचने इति निमित्तसप्तमी। राज्ञोद्दिष्टमभिषेकं कथयितुमित्यर्थः ॥ २९ ॥

इत्युक्तः सोभ्यनुज्ञातः श्वोभाविन्यभिषेचने। व्रजेति रामः पितरमभिवाद्याभ्ययाद्गृहम् ॥२८॥ प्रविश्य चात्मनो वेश्म राज्ञोद्दिष्टेऽभिषेचने। तत्क्षणेन च निर्गम्य मातुरन्तःपुरं ययौ ॥ २९ ॥ तत्र तां प्रवणामेव मातरं क्षौमवासिनीम्। वाग्यतां देवतागारे ददर्शायाचतीं श्रियम् ॥ ३० ॥ प्रागेव चागता तत्र सुमित्रा लक्ष्मणस्तदा। सीता चानायिता श्रुत्वा प्रियं रामाभिषेचनम् ॥ ३१ ॥ तस्मिन् काले हि कौसल्या तस्थावामीलितेक्षणा। सुमित्रयाऽन्वास्यमाना सीतया लक्ष्मणेन च॥ ३२ ॥ श्रुत्वा पुष्येण पुत्रस्य यौवराज्याभिषेचनम्। प्राणायामेन पुरुषं ध्यायमाना जनार्दनम् ॥३३॥ तथा सन्नियमामेव सोऽभिगम्याभिवाद्य च। उवाच वचनं रामो हर्षयंस्तामिदं तदा ॥३४॥

तत्रेति। प्रवणां स्वासाधारणदेवतासक्तचित्ताम्। क्षौमवासिनीं व्रतोपयुक्तक्षौमवस्त्रधराम्। वाग्यतां यतवाचं, मौनवतीमित्यर्थः। श्रियं संपदम्। आयाचतीं प्रार्थयन्तीम्। रामायेतिशेषः ॥ ३० ॥ प्रागिति। प्राक् रामागमनात् पूर्वमेव सुमित्रा प्रियं रामाभिषेचनं श्रुत्वा आगता, लक्ष्मणश्च तदा सुमित्रागमनकाले आगतः। सीता तु परतन्त्रत्वात्स्वयं नागता किन्तु दासीभिरानायिता ॥ ३१ ॥ तस्मिन्निति। तस्मिन् रामागमनकाले। पुत्रस्य पुष्येण यौवराज्याभिषेचनं श्रुत्वा सुमित्रादिभिरन्वास्यमाना। प्राणायामेन प्राणायामपूर्वकम्। पुरुषं पुरुषसूक्तप्रतिपाद्यपुरुषशब्दवाच्यं जनार्दनं नारायणं ध्यायमाना ध्यायन्ती अमीलितेक्षणा तस्थौ ॥ ३२ ॥ ३३ ॥ तथेति। तथा पूर्वोक्तरीत्या। सन्नियमां समीचीननियमाम् ॥ ३४ ॥

हर्षो भवेत् यदि न क्रियते तदा राज्याशा भरतस्य भवेदिति अतस्त्वरितमात्मानमभिषिक्तं कुर्वित्यर्थः ॥ २७ ॥ इतीति। श्वोभाविन्यभिषेचने इत्युक्तः स रामः व्रजेत्यनुज्ञात इति सम्बन्धः ॥ २८ ॥ २९ ॥ तत्रेति। प्रवणां पुरुषोत्तमाराधनतत्पराम्। वाग्यतां वाङ्नियमवतीम्। रामार्थं श्रियं राज्यलक्ष्मीम्। आयाचतीं प्रार्थयन्तीम् ॥ ३० ॥ ३१ ॥ तस्मिन्नित्यादि। ध्यायमाना तस्थाविति पूर्वेण सम्बन्धः। अन्वास्यमाना उपास्यमाना ॥ ३२–३४ ॥

अम्बेति । मे पितुः शासनं यथा तथाभिषेकः श्वो भवितेति सम्बन्धः ॥ ३५ ॥ सीतयेति । सीतया मयापि सह तुल्यतया इयं रजनी एतद्दिनरात्रिः। उपवस्तव्या अस्यां रजन्यामुपवस्तव्यमित्यर्थः। किं त्वयैवोच्यते ? नेत्याह एवमिति ॥३६॥ यानीति । मङ्गलानि मङ्गलकर्माणि ॥३७॥ एतदिति । हर्ष बाष्पकलं वाक्यं हर्षबाष्पेण कलमव्यक्तमधुरं वाक्यं ईषद्वाक्यम् ॥३८॥ वत्सेति । हताः भवन्त्विति शेषः । ज्ञातीन् बन्धून् ॥ ३९ ॥ कल्याण इति ।

अम्ब पित्रा नियुक्तोऽस्मि प्रजापालनकर्मणि । भविता श्वोभिषेको मे यथा मे शासनं पितुः ॥३५॥ सीतयाप्युपवस्तव्या रजनीयं मया सह । एवमृत्विगुपाध्यायैः सह मामुक्तवान् पिता ॥ ३६ ॥ यानि यान्यत्र योग्यानि श्वोभाविन्यभिषेचने । तानि मे मङ्गलान्यद्य वैदेह्याश्चैव कारय ॥ ३७ ॥ एतच्छ्रुत्वा तु कौसल्या चिरकालाभिकांक्षितम् । हर्षबाष्पकलं वाक्यमिदं राममभाषत ॥ ३८ ॥ वत्स राम चिरञ्जीव हतास्ते परिपन्थिनः । ज्ञातीन् मे त्वं श्रिया युक्तः सुमित्रायाश्च नन्दय ॥ ३९ ॥ कल्याणे बत नक्षत्रे मयि जातोऽसि पुत्रक । येन त्वया दशरथो गुणैराराधितः पिता ॥ ४० ॥ अमोघं बत मे क्षान्तं पुरुषे पुष्करेक्षणे । येयमिक्ष्वाकुराज्यश्रीः पुत्र त्वां संश्रयिष्यति ॥ ४१ ॥ इत्येवमुक्तो मात्रेदं रामो भ्रातरमब्रवीत् । प्राञ्जलिं प्रह्वमासीनमभिवीक्ष्य स्मयन्निव ॥ ४२ ॥

कल्याणे अतिशोभने नक्षत्रे मयि जातोऽसि । बतेति सन्तोषे । "खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत" इत्यमरः । मयेतिपाठे–मया हेतुनेत्यर्थः । येन-येन कारणेन ॥४०॥ अमोघमिति । पुष्करेक्षणे पुण्डरीकाक्षे, पुरुषे नारायणे विषये । मे क्षान्तं व्रतोपवासादिक्लेशसहनम् । अमोघं सफलम् । साफल्ये हेतुमाह येयमिति । सा संश्रयिष्यतीतिशेषः ॥ ४१ ॥ इतीति । स्मयन्निव, समन्दस्मित इत्यर्थः । सन्तोषातिशयेनाब्रवीदिति भावः ॥ ४२ ॥

मे पितुः शासनं यथा तथा मे अभिषेकः श्वो भविष्यतीति सम्बन्धः ॥ ३५ ॥ ३६ ॥ मङ्गलानि मङ्गलकर्माणि ॥ ३७ ॥ ३८ ॥ वत्सेति । परिपन्थिनः शत्रवः हता भवन्त्विति शेषः । ज्ञातीन् बन्धून् ॥ ३९ ॥ कल्याण इति । मया जातो जनितः ॥ ४० ॥ अमोघमिति । बतेति हर्षे । पुरुषे परमपुरुषविषये । मे क्षान्तम् व्रतोपवाससहनम् ।अमोघं सफलं जातम् । साफल्ये हेतुमाह येयमिति ॥ ४१ ॥ ४२ ॥

लक्ष्मणेति । द्वितीयमन्तरात्मानं द्वितीयं प्राणम् ॥ ४३ ॥ सौमित्र इति । भोगान् भोग्यपदार्थान् । इष्टान् अभिमतान् । राज्यफलानि अनर्घ्यरत्नवस्त्राभरणादीनि ॥ ४४ ॥ इतीति । सीतां चाभ्यनुज्ञाप्य, मातृभ्यामितिशेषः ॥४५॥ इति श्रीगो० श्रीरा० पीता० अयोध्याकाण्ड० चतुर्थः सर्गः ॥४॥

लक्ष्मणेमां मया सार्द्धं प्रशाधि त्वं वसुन्धराम् । द्वितीयं मेऽन्तरात्मानं त्वामियं श्रीरुपस्थिता ॥ ४३ ॥ सौमित्रे भुङ्क्ष्व भोगांस्त्वमिष्टान् राज्यफलानि च । जीवितं च हि राज्यं च त्वदर्थमभिकामये ॥ ४४ ॥ इत्युक्त्वा लक्ष्मणं रामो मातरावभिवाद्य च। अभ्यनुज्ञाप्य सीतां च जगाम स्वं निवेशनम् ॥ ४५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुर्थः सर्गः ॥ ४ ॥

संदिश्य रामं नृपतिः श्वो भाविन्यभिषेचने । पुरोहितं समाहूय वसिष्ठं चेदमब्रवीत् ॥ १ ॥ गच्छोपवास काकुत्स्थं कारयाद्य तपोधन । श्रीयशोराज्यलाभाय वध्वा सह यतव्रतम् ॥ २ ॥ तथेति च स राजानमुक्त्वा वेदविदां वरः । स्वयं वसिष्ठो भगवान् ययौ रामनिवेशनम् ॥ ३ ॥ उपवासयितु रामं मन्त्रवन्मन्त्रकोविदः । ब्राह्मं रथवरं युक्तमास्थाय सुदृढव्रतः ॥४॥ स रामभवनं प्राप्य पाण्डराभ्रघनप्रभम् । तिस्रः कक्ष्या रथेनैव विवेश मुनिसत्तमः ॥५॥

अथोपवासस्य पुरोहितसङ्कल्पमन्त्रादिसाध्यत्वात्पुरोहितं संदिशति पञ्चमे—संदिश्येति । व्रतोपवासादिकं कुर्वित्यनुज्ञाप्य ॥ १ ॥ गच्छेति । काकुत्स्थमुपवासं कारय । " ह्रक्रोरन्यतरस्याम् " इति विकल्पेन काकुत्स्थशब्दस्य कर्मसं[illegible] ॥ २ ॥ तथेतीति ॥ ३ ॥ ब्राह्मं ब्राह्मणवहनयोग्यम्, युक्तं वाजिभिर्युक्तम्, आस्थाय ययाविति पूर्वेण सम्बन्धः ॥ ४ ॥ स इति । पाण्डराभ्रघनप्रभं पाण्डराभ्रमूर्त्तसदृशप्रभम् । " घनो मेघे मूर्तिगुणे त्रिषु मूर्त्ते निर

दशरथेन स्वस्मिन्निवेशितराज्यभोगं सौभ्रात्रातिशयेन लक्ष्मणायत्तं करोति—लक्ष्मणेति । अन्तरात्मानम् प्राणम् ॥ ४३ ॥ सौमित्र इति । भोगान् भोग्यपदार्थान् । राज्यफलानि अनर्घ्यवस्त्राभरणादीनि । जीवितं राज्यमन्यत्सर्वं च त्वदर्थमेव अभिषेकसमये प्रार्थये, अन्यथा सर्वं निष्प्रयोजनमेवेति भावः ॥ ४४॥ इतीति । अभ्यनुज्ञाप्य सीतां सीतायै अनुज्ञां दापयित्वा । मातृभ्यामिति शेषः ॥४५॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिका० अयोध्याकाण्डव्याख्यायां चतुर्थः सर्गः॥ ४॥ संदिश्य व्रतोपवासादिकं कुर्वित्यनुज्ञाप्य ॥ १–३ ॥ उपवासयितुमिति । ब्राह्मं ब्राह्मणारोहणयोग्यम् । युक्तं सज्जीकृतम् । ययाविति पूर्वेणान्वयः ॥ ४ ॥ स इति ।

न्तरे " इत्यमरः ॥ ५ ॥ तमिति । त्वरन्निव इवशब्दो वाक्यालङ्कारे । मानयिष्यन् माननाद्धेतोः । " लक्षणहेत्वोः क्रियायाः " इति हेत्वर्थे शतृप्रत्ययः ॥ ६ ॥ अभ्येत्येति । रथाभ्याशं रथसमीपम् ॥ ७ ॥ स इति । प्रश्रितं विनीतं " विनीतप्रश्रितौ समौ " इत्यमरः । सम्भाष्य कुशलप्रश्नं कृत्वा । सभा

तमागतमृषिं रामस्त्वरन्निव ससम्भ्रमः । मानयिष्यन् समानार्हं निश्चक्राम निवेशनात् ॥ ६ ॥ अभ्येत्य त्वरमाणश्च रथाभ्याशं मनीषिणः । ततोऽवतारयामास परिगृह्य रथात्स्वयम् ॥ ७ ॥ स चैनं प्रश्रितं दृष्ट्वा सम्भाष्याभिप्रसाद्य च । प्रियार्हं हर्षयन् राममित्युवाच पुरोहितः ॥ ८ ॥ प्रसन्नस्ते पिता राम यौवराज्यमवाप्स्यसि । उपवासं भवानद्य करोतु सह सीतया ॥ ९ ॥ प्रातस्त्वामभिषेक्ता हि यौवराज्ये नराधिपः । पिता दशरथः प्रीत्या ययातिं नहुषो यथा ॥ १० ॥ इत्युक्त्वा स तदा राममुपवासं यतव्रतम् । मन्त्रवत् कारयामास वैदेह्या सहितं मुनिः ॥ ११ ॥ ततो यथावद्रामेण स राज्ञो गुरुरर्चितः । अभ्यनुज्ञाप्य काकुत्स्थं ययौ रामनिवेशनात् ॥ १२ ॥ सुहृद्भिस्तत्र रामोऽपि सहासीनः प्रियम्वदैः । सभाजितो विवेशाथताननुज्ञाप्य सर्वशः ॥ १३ ॥ हृष्टनारीनरयुतं रामवेश्म तदा बभौ । यथा मत्तद्विजगणं प्रफुल्लनलिनं सरः ॥ १४ ॥ स राजभवनप्रख्यात्तस्माद्रा[मनि]वेशनात् । निर्गत्य ददृशे मार्गं वसिष्ठो जनसंवृतम् ॥ १५ ॥ वृन्दवृन्दैरयोध्यायां राजमार्गाः समन्ततः । बभूवुरभिसम्बाधाः कुतूहलजनैर्वृताः ॥ १६ ॥

ज्येति पाठे–कुशलप्रश्नाधीनप्रीतिं जनयित्वेत्यर्थः । " सभाज प्रीतिसेवनयोः " इत्यस्माद्धातोरार्षो ल्यप् । प्रियार्हं प्रियकथनार्हम् ॥ ८–११ ॥ तत इति । काकुत्स्थमभ्यनुज्ञाप्य अनुयान्तं रामं निवर्तस्वेत्युक्त्वा ययौ निर्ययौ ॥ १२ ॥ सुहृद्भिरित्यादि स्पष्टम् ॥ १३–१५ ॥ वृन्दवृन्दैरिति । वृन्दानु

पाण्डराभ्रघनप्रभम् पाण्डराभ्रस्येव घना सान्द्रा प्रभा यस्य तत् । कक्ष्याः द्वाराणि ॥ ५ ॥ तमागतमिति । इवशब्दो वाक्यालङ्कारे । मानयिष्यन् सम्मानाद्धेतोः ॥ ६ ॥ ७ ॥ स चेति । संभाष्य कुशलं पृष्ट्वा । सभाज्येति पाठे–कुशलप्रश्नादिना प्रीतिं जनयित्वेत्यर्थः । अभिप्रसाद्य स्तुतिभिरिति शेषः । प्रियार्हं प्रियकथनार्हम् ॥ ८ ॥ ९ ॥ प्रातरिति । अभिषेक्ता अभिषेक्ष्यति ॥ १०–१५ ॥ वृन्दवृन्दैः वृन्दानुगतानि वृन्दानि येषां तानि तैः सम्भूय स्थितैरित्यर्थः । वृन्दं वृन्दमिति

बद्धानि वृन्दानि येषां ते वृन्दवृन्दाः तैः। कुतूहलजनैः वृता राजमार्गाः अभिसम्बाधा निबिडा बभूवुरिति योजना। वृन्दवृन्दमितिपाठे—वृन्दंवृन्दं यथाभवति तथा, स्थितैरिति शेषः ॥ १६ ॥ जनवृन्देति। जनवृन्दान्येव ऊर्मयः तेषां सङ्घर्षः अन्योन्यघट्टनं, हर्षः आनन्दोद्रेकः ताभ्यां जनितः स्वनोऽस्यास्तीति स्वनवान् तस्य। एतेन सागरोपमा समर्थिता ॥ १७ ॥ सिक्तेति। तदहः तस्मिन्नहनि। वनमालिनी अलङ्कारार्थं विरचितक्रमुककदल्यादिवनपङ्क्ति

जनवृन्दोर्मिसङ्घर्षहर्षस्वनवतस्तदा। बभूव राजमार्गस्य सागरस्येव निस्वनः ॥१७॥ सिक्तसंमृष्टरथ्या हि तदहर्वन मालिनी। आसीदयोध्या नगरी समुच्छ्रितगृहध्वजा ॥ १८॥ तदा ह्ययोध्यानिलयः सस्त्रीबालाबलो जनः। रामा भिषेकमाकांक्षन्नाकांक्षदुदयं रवेः ॥ १९ ॥ प्रजालङ्कारभूतं च जनस्यानन्दवर्द्धनम्। उत्सुकोऽभूज्जनो द्रष्टुं तमयोध्या महोत्सवम् ॥ २० ॥ एवं तं जनसम्बाधं राजमार्गं पुरोहितः। व्यूहन्निव जनौघं तं शनै राजकुलं ययौ ॥ २१ ॥ शुभ्राभ्रशिखरप्रख्यं प्रासादमधिरुह्य सः। समीयाय नरेन्द्रेण शक्रेणेव बृहस्पतिः ॥ २२ ॥

युक्तेति यावत् ॥ १८ ॥ तदेति। सस्त्रीबालाबलः अबलाः बलरहिताः वृद्धा इति यावत्। रामाभिषेकमाकाङ्क्षन्नाकाङ्क्षदुदयं रवेरिति। रामाभिषेकार्थं उदयमाकाङ्क्षदित्यर्थः। श्वो रामाभिषेक इति वार्ता यदा समजनि तदाप्रभृति रामाभिषेकादरातिशयेन आहारनिद्रादिव्यापारान् विहाय परदिवससूर्यो दयमाकाङ्क्षदिति भावः ॥ १९ ॥ प्रजालङ्कारभूतमिति। प्रजालङ्कारभूतं प्रजालङ्करणहेतुभूतं प्रजालङ्कारप्रचुरमिति वा ॥ २० ॥ एवमिति। राजमार्गं पश्यन्निति शेषः। तं जनौघं व्यूहन्निव रामाभिषेकजनितानन्दनिर्भरं जनौघं तत्रतत्र समूहीकुर्वन्निव शनैः राजकुलं राजगृहं ययौ ॥ २१ ॥ २२ ॥

पाठे—क्रियाविशेषणम्। अतिशयेन बृन्दीभवनं यथा भवति तथा। कुतूहलजनैः—रामाभिषेकदर्शनकुतूहलसंपन्नजनैरिति मध्यमपदलोपः। वृताः युक्ताः। अयोध्यायां राजमार्गाः अभिसंबाधाः संमर्दयुक्ताः बभूवुरिति योजना ॥ १६ ॥ जनेति। जनबृन्दोर्मिसंघर्षहर्षस्वनवतः जनबृन्दान्येव ऊर्मयः तेषां संघर्षः अन्योन्यसंघर्षणम्। हर्ष आनन्दोद्रेकः। ताभ्यां स्वनोऽस्यास्तीति स्वनवान्, तस्य राजमार्गस्य निस्वनः ॥ १७ ॥ सिक्तेति। सिक्ता जलासिक्ताः। संमृष्टाः शोधिताः। रथ्या वीथयो यस्यास्सा तथोक्ता। तदहः तस्मिन्नहनि। वनमालिनी कदलीक्रमुकादिविरचितश्रेणीयुक्ता। समुच्छ्रितगृहध्वजा समुच्छ्रितगृहेषु ध्वजा यस्यास्सा तथोक्ता। अयोध्या आसीत् ॥ १८ ॥ तदेति। सस्त्रीबालाबलः अबला बलरहिताः, वृद्धा इति यावत्। जनः रामाभिषेकमाकांक्षन् श्वो रामाभिषेक इति वार्ताश्रवणाद्रवेरुदयमाकांक्ष दित्यर्थः ॥ १९ ॥ प्रजालङ्कारभूतं प्रजालङ्कारहेतुभूतम् ॥ २० ॥ एवमिति। राजमार्गं पश्यन्निति शेषः। व्यूहन्निव विभजन्निव ॥ २१–२३ ॥

तमिति । नृपो दशरथः । राजासनं स्वाधिष्ठितं सिंहासनं हित्वा प्रत्युत्थायेत्यर्थः । पप्रच्छ किं रामस्योपवासः कारित इतीति शेषः । सः वसिष्ठः तस्मै दशरथाय । तत् उपवासकरणम् ॥ २३ ॥ तेनेति । तदा दशरथसमुत्थानकाले । तुल्यं युगपत् ॥ २४ ॥ २५ ॥ तदिति । विदीपयन् तेजो विशेषेण द्योतयन् ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

तमागतमभिप्रेक्ष्य हित्वा राजासनं नृपः । पप्रच्छ स च तस्मै तत् कृतमित्यभ्यवेदयत् ॥ २३ ॥ तेन चैव तदा तुल्यं सहासीनाः सभासदः । आसनेभ्यः समुत्तस्थुः पूजयन्तः पुरोहितम् ॥ २४ ॥ गुरुणा त्वभ्यनुज्ञातो मनुजौघं विसृज्य तम् । विवेशान्तःपुरं राजा सिंहो गिरिगुहामिव ॥२५॥ तदग्र्यरूपं प्रमदागणाकुलं महेन्द्रवेश्मप्रतिमं निवेशनम् । विदीपयंश्चारु विवेश पार्थिवः शशीव तारागणसङ्कुलं नभः॥२६॥ इत्यार्षे० श्रीमदोध्याकाण्डे पञ्चमः सर्गः॥५॥

गते पुरोहिते रामः स्नातो नियतमानसः । सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ॥ १ ॥ प्रगृह्य शिरसा पात्रीं हविषो विधिवत्तदा । महते दैवतायाज्यं जुहाव ज्वलितेऽनले ॥ २ ॥

अथ रामस्याभिषेकसन्नाहं दर्शयति षष्ठे–गत इत्यादि । पुरोहिते गत इत्यसन्निधानकृतराजसगुणनिमित्तकनास्तिक्यव्यावृत्तिः । स्नात इति कायशुद्धिः । नियतमानस इति मनःशुद्धिः । सहपत्न्येति श्रीरङ्गविग्रहानुभवसागरतरणस्य सहायोक्तिः । "पत्युर्नो यज्ञसंयोगे" इति दीक्षानियमस्य पत्नीसहायत्वोक्तिश्च तृतीयया आराधनकाले सीताया उपकरणसमर्पणपरता व्यज्यते । विशालाक्ष्येति रामविग्रहानुभवादपि श्रीरङ्गविग्रहस्य निरतिशयप्रियास्पदत्वेन निर्निमेषानुभव उक्तः । विशालाक्ष्या नारायणमिति सीतानेत्रवागुरानाकृष्टतया सीताया अप्राधान्यम्, नारायणस्य स्वाभीप्सिततमत्वेन प्राधान्यं चोक्तम् । अत्र नारायण इति श्रीरङ्गनायक उच्यते, उत्तरत्र तस्यैव विशेषणाय दानोक्तेः ॥ १ ॥ तनि०–अत्र विशेष्यानुपादानाद्विशालाक्षीशब्दस्य लक्ष्म्यां रूढिप्रायत्वं व्यज्यते । अतएव "ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहम्" इत्यत्र विशालाक्षीशब्देन लक्ष्मीरूपविशेष्यं व्यज्यते । अत्र नारायण इति श्रीरङ्गनायक उच्यते । उपागमदित्यत्र अगमदित्यनेन भगवन्मन्दिरप्रातिकथनादुपशब्देन निवेदनपर्यन्तभगवदाराधनं व्यज्यते ॥ १ ॥ प्रगृह्येति । शिरसा पात्रीं प्रगृह्येति " उपरि हि देवेभ्यो धारयति " तेनेति । तुल्यं तुल्यकालं समुत्तस्थुरित्यन्वयः ॥२४–२६॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां पञ्चमः सर्गः ॥५॥

गत इति । नारायणमुपागमत् उपासाञ्चक्रे ॥ १ ॥ प्रगृह्येति । महते दैवताय नारायणाय ॥ २ ॥

इति श्रुतिरुपबृंहिता। महते दैवताय निरतिशयमहिमवते दैवताय। "तं देवतानां परमं च दैवतम्" इतिश्रुतेः। नारायणायेत्यर्थः। नारायणमुपागमादित्युप क्रमात् ध्यायन्नारायणं देवमित्युत्तरत्रोक्तेश्च। तेन महते दैवतायेति महादेववाचित्वभ्रान्तिर्निरस्ता। न च व्यस्तस्य विभिन्नविभक्त्यन्तस्यैकपदत्वमेका वा शक्तिरस्ति, महादेवशब्दस्याखण्डस्य शिवे शक्तावपि खण्डपदद्वयस्य प्रस्तुतपरदेवतावरुद्धस्याप्रस्तुतान्यदेवतावाचकत्वकल्पनमन्धतामिस्रनिपा

शेषं च हविषस्तस्य प्राश्याशास्यात्मनः प्रियम्। ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे ॥ ३ ॥ वाग्यतः सह वैदेह्या भूत्वा नियतमानसः। श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः ॥ ४ ॥ एकयामावशिष्टायां रात्र्यां प्रतिविबुध्य सः। अलङ्कारविधिं कृत्स्नं कारयामास वेश्मनः ॥ ५ ॥ तत्र शृण्वन् सुखा वाचः सूतमागधवन्दिनाम्। पूर्वां सन्ध्यामुपासीनो जजाप यतमानसः ॥६॥ तुष्टाव प्रणतश्चैव शिरसा मधुसूदनम्। विमलक्षौमसंवीतो वाचयामास च द्विजान् ॥ ७ ॥

तकदुरितादृष्टं विना न शक्यते ॥२॥ शेषमिति। आत्मनः प्रियमाशास्य श्रीरङ्गार्पितहविःशेषं स्वस्यात्यन्तप्रियत्वेनानुसन्धाय। नारायणं श्रीरङ्गनायकं ध्यायन् कुशसंस्तरे कुशमये शयनीये। "शयनीये सप्ततन्तौ संस्तरः परिकीर्तितः" इतिनिघण्टुः। वैदेह्या सहेति उभयोरप्येकशय्यायां जितेन्द्रियत्वं ध्वनितम्। श्रीमति "विमानं प्रणवाकारम्" इत्याद्युक्तवेदत्रयसारभूतप्रणवाकारे। "ऋचः सामानि यजूंषि। सा हि श्रीरमृता सताम्" इति श्रुतेः। विष्णोरायतने श्रीरङ्गधाम्नि। शिश्ये शयनं कृतवान्। नरवरात्मजः स्वस्य साक्षाद्भगवदवतारत्वेपि श्रीरङ्गविग्रहार्चोपसर्जनभावः स्वावतारानुमतक्षत्रिय धर्मानुगुणः ॥ ३ ॥ ४ ॥ एकयामावशिष्टायामिति। अलङ्कारविधिं अलङ्कारविधानम्। "विधिर्विधाने दैवेपि" इत्यमरः ॥५॥ तत्रेति। सूताः सूतकुलोत्पन्नाः पुण्यश्लोकदेवताकीर्त्तकाः, मागधाः मगधदेशोत्पन्नाः वंशावलिकीर्त्तकाः। वन्दिनः स्तुतिपाठकाः। सन्ध्यां सन्ध्याधिदेवतां सूर्यम्। उपासीनः ध्यायन्। नियतमानसः नियतमनस्कः, अनन्यचित्त इतियावत्। जजाप गायत्रीमितिशेषः॥ ६॥ तुष्टावेति। सन्ध्योपासनानन्तरम् मधुसूदनं सूर्यान्त

शेषं हविःशेषविशिष्टम्। प्राश्य भक्षयित्वा। आत्मनः प्रियमाशास्य अनुसन्धाय। कुशसंस्तरे कुशमये शयनीये। विष्णोरायतने गृहार्चाभूतविष्णोरालये ॥ ३॥४ ॥ एकेति। अलङ्कारविधिम् अलङ्कारविधानम् ॥ ५ ॥ तत्रेति। सूतमागधवन्दिनाम्-सूताः पौराणिकाः, मागधाः वंशशंसकाः, वन्दिनः स्तुतिपाठकाः ॥ ६ ॥ तुष्टा

वर्तिनं नारायणं तुष्टाव "मित्रस्य" इत्यादिनेति शेषः। शिरसा प्रणतः दण्डवत्प्रणतः। विमलक्षौमसंवीतइत्यनेन नूतनवस्त्रपरिवृत्त्या प्रातर्गौणस्नान मुक्तम्। वाचयामास स्वस्तिवाचनं कारयामासेत्यर्थः॥ ७॥ तेषामिति। तूर्यघोषानुनादितः तूर्यघोषानुबन्धिनादयुक्तः॥ ८॥ कृतोपवासमिति। प्रमुदितः सन्तुष्टः अभूत्॥९॥ तत इति। पुरीं शोभयितुं चक्रे पुरशोभोत्पादनार्थं संमार्जनालेपनवितानमालिकाबन्धनकर्मादिकमकरोदित्यर्थः॥१०॥

तेषां पुण्याहघोषोऽथ गम्भीरमधुरस्तदा। अयोध्यां पूरयामास तूर्यघोषानुनादितः॥ ८॥ कृतोपवासं तु तदा वैदेह्या सह राघवम्। अयोध्यानिलयः श्रुत्वा सर्वः प्रमुदितो जनः॥ ९॥ ततः पौरजनः सर्वः श्रुत्वा रामाभिषेचनम्। प्रभातां रजनीं दृष्ट्वा चक्रे शोभयितुं पुरीम्॥ १०॥ सिताभ्रशिखराभेषु देवतायतनेषु च। चतुष्पथेषु रथ्यासु चैत्येष्वट्टालकेषु च॥ ११॥ नानापण्यसमृद्धेषु वणिजामापणेषु च। कुटुम्बिनां समृद्धेषु श्रीमत्सु भवनेषु च॥ १२॥ सभासु चैव सर्वासु वृक्षेष्वालक्षितेषु च। ध्वजाः समुच्छ्रिताश्चित्राः पताकाश्चाभवंस्तदा॥ १३॥ नटनर्तकसङ्घानां गायकानां च गायताम्। मनःकर्णसुखा वाचः शुश्रुवुश्च ततस्ततः॥ १४॥

सिताभ्रशिखराभेष्वित्यादि। चैत्येषु बौद्धालयेषु। अट्टालकेषु प्राकारोपरि युद्धार्थं परिकल्पितचतुस्स्तम्भमण्डपेष्विति यावत्। आलक्षितेषु आ समन्ताल्लक्षितेषु समुन्नतत्वात् दूरादप्यक्षिगोचरेष्वित्यर्थः। ध्वजाः सचिह्नाः, पताकाः चिह्नरहिताः। समुच्छ्रिताः बद्धाः॥११-१३॥ नटेति। नटाः नाटकाः अभिनयकर्तारः, नर्तकाः केवलाङ्गहारकृतः। मनःकर्णसुखाः "संश्रवे मधुरं वाक्यम्" इत्युक्तरीत्या श्रवणमात्रेण सुखकराः पश्चान्मनसश्चाह्लादका इत्यर्थः। शुश्रुवुः जना इति शेषः॥ १४॥



वेति। वाचयामास, स्वस्तिवाचनमिति शेषः॥ ७॥ तेषामिति। तूर्यघोषानुनादितः तूर्यघोषानुबन्धनादियुक्तः॥ ८॥ ९॥ तत इति। शोभयितुं चक्रे अलङ्कर्तुं प्रचक्रमे॥ १०॥ सिताभ्रेति। अट्टालकेषु प्राकारोपरि युद्धार्थं परिकल्पितचतुःस्तम्भनिर्मितमञ्चेष्विति यावत्॥ ११॥ १२॥ सभास्विति। आलक्षितेषु आ समन्ताल्लक्षितेषु। उन्नतेषु वृक्षेषु। ध्वजाः सचिह्नाः, पताकाः चिह्नरहिताः॥१३॥नटनर्तकसङ्घानाम्-नटाः नाट्यं कारयितारः, नर्तकाः नाट्यकर्तारः॥१४॥१५॥

रामेति। मिथः अन्योन्यं "मिथोऽन्योन्यम्" इत्यमरः। चत्वरेषु अङ्गणेषु गृहेषु स्त्रीभिः बहिरङ्गणेषु जनैश्च कथाश्चक्रुरिति रामभक्ताश्चक्रिनत्वमुक्तम् ॥१५॥ १६ ॥ कृतपुष्पोपहार इति। कृतपुष्पोपहारः कृतपुष्पबलिः ॥ १७ ॥ प्रकाशकरणार्थमिति। प्रकाशकरणार्थं वितानकञ्चुककदल्यादिसमग्रता जनिततिमिरतिरोहितवस्तुप्रकाशनार्थम्। यद्वा निशागमनशङ्कया प्रकाशकरणार्थम् दीपवृक्षान् वृक्षाकारदीपस्तम्भान्, अभिषेकानन्तरं गजस्कन्धाधि

रामाभिषेकयुक्ताश्च कथाश्चक्रुर्मिथो जनाः। रामाभिषेके सम्प्राप्ते चत्वरेषु गृहेषु च ॥ १५ ॥ बाला अपि क्रीडमाना गृहद्वारेषु सङ्घशः। रामाभिषेकसंयुक्ताश्चक्रुरेवं मिथः कथाः ॥ १६ ॥ कृतपुष्पोपहारश्च धूपगन्धाधिवासितः। राजमार्गः कृतः श्रीमान् पौरै रामाभिषेचने ॥ १७ ॥ प्रकाशकरणार्थं च निशागमनशङ्कया। दीपवृक्षांस्तथा चक्रुरनुरथ्यासु सर्वशः ॥ १८ ॥ अलङ्कारं पुरस्यैवं कृत्वा तत्पुरवासिनः। आकांक्षमाणा रामस्य यौवराज्याभिषेचनम् ॥ १९ ॥ समेत्य सङ्घशः सर्वे चत्वरेषु सभासु च। कथयन्तो मिथस्तत्र प्रशशंसुर्जनाधिपम् ॥ २० ॥ अहो महात्मा राजाऽयमिक्ष्वाकुकुलनन्दनः। ज्ञात्वा यो वृद्धमात्मानं रामं राज्येऽभिषेक्ष्यति ॥ २१ ॥ सर्वे ह्यनुगृहीताः स्म यन्नो रामो महीपतिः। चिराय भविता गोप्ता दृष्टलोकपरावरः ॥ २२ ॥

रूढतयाभिषेकालङ्कारप्रदर्शनार्थं निर्गमनात्पूर्वं यदि कार्यवशान्निशा स्यात्तदा रामालङ्कारप्रदर्शनार्थं दीपवृक्षान्। अनुरथ्यासु रथ्यासु रथ्यासु। विभक्तेर्लुगभाव आर्षः। निशागमनशङ्कया रामस्य प्रकाशकरणार्थं अनुरथ्यासु सर्वशः सर्वप्रकारान् दीपवृक्षान् चक्रुश्च। तथाशब्दश्चार्थः ॥ १८ ॥ अलङ्कारमित्यादिश्लोकद्वयम् ॥ १९ ॥ २० ॥ प्रशंसामेवाह—अहो इत्यादि। सर्वेऽप्यनुगृहीताः स्म, देवेनेतिशेषः। नः अस्मान् गोप्ता भवितेति सम्बन्धः। दृष्ट

बाला इति। रामाभिषवसंयुक्ताः रामाभिषेकार्थं संयुक्ताः मिलिताः। "भवेदभिषवः स्नानम्" इति विश्वः ( अभिषव इति पाठः )॥१६॥१७॥ प्रकाशकरणार्थं निशागमनशङ्कया श्रीरामाभिषेकमहोत्सवे परिसमाप्त एव निशा समेष्यतीति शङ्कया दीपवृक्षान् वृक्षाकारान् दीपस्तम्भान्। अनुरथ्यासु सर्वास्वपि रथ्यासु ॥१८–२१॥ सर्वं इति।

सत्यती०—आकाङ्क्षमाणाः इच्छन्तः। काङ्क्षिधातोश्चानश्। तेन काङ्क्षिधातोः परस्मैपदित्वेन कथमात्मनेपदत्वमिति शङ्कानवकाशः ॥ १९ ॥ दृष्टो ज्ञातो लोको येन स दृष्टलोकः। पराः लोकोत्तमत्वेन प्रसिद्धा ब्रह्मादयः अवरा यस्मादिति परावरः। दृष्टलोकश्चासौ परावरश्चेति वा। परोऽवरश्च लोको दृष्टो येनेति वा। "कडाराः कर्मधारये" इति परनिपातः ॥ २२ ॥

लोकपरावरः दृष्टे ये लोके परावरे उत्कृष्टापकृष्टवस्तुनी येन स तथोक्तः ॥ २१–२४ ॥ एवंविधमिति । श्रुतवृत्तान्ताः श्रुतरामाभिषेकवार्त्ताः । अतएव दिग्भ्यः प्राप्ताः जानपदा जनाः एवंविधं कथयतां पौराणां शुश्रुवुः । एवंविधं वाक्यजातमित्यर्थसिद्धम् ॥२५॥ ते त्विति । पूर्वदिने सकलजनसन्निधौ रामाभिषेकस्य प्रतिश्रुतत्वाद्रामस्य पुरीमिति निर्दिष्टवान्नृपेः ॥ २६ ॥ जनौघैरिति । विसर्पद्भिः नानादेशेभ्य आगच्छद्भिः । उत्पादित इतिशेषः । उदीर्ण

अनुद्धतमना विद्वान् धर्मात्मा भ्रातृवत्सलः । यथा च भ्रातृषु स्निग्धस्तथास्मास्वपि राघवः ॥ २३ ॥ चिरञ्जीवतु धर्मात्मा राजा दशरथोऽनघः । यत्प्रसादेनाभिषिक्तं रामं द्रक्ष्यामहे वयम् ॥ २४ ॥ एवंविधं कथयतां पौराणां शुश्रुवुस्तदा । दिग्भ्योऽपि श्रुतवृत्तान्ताः प्राप्ता जानपदा जनाः॥२५॥ ते तु दिग्भ्यः पुरीं प्राप्ता द्रष्टुं रामाभिषेचनम् । रामस्य पूरयामासुः पुरीं जानपदा जनाः ॥ २६ ॥ जनौघैस्तैर्विसर्पद्भिः शुश्रुवे तत्र निस्वनः । पर्वसूदीर्णवेगस्य सागरस्येव निस्वनः ॥ २७ ॥ ततस्तदिन्द्रक्षयसन्निभं पुरं दिदृक्षुभिर्जानपदैरुपागतैः । समन्ततः सस्वनमाकुलं बभौ समुद्रयादोभिरिवार्णवोदकम् ॥२८॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदीकाव्ये श्रीमदयोध्याकाण्डे षष्ठः सर्गः॥६॥

वेगस्य उज्जृम्भितवेगस्य ॥२७॥ तत इति । इन्द्रक्षयः इन्द्रगृहम् "निवेशः शरणं क्षयः" इत्यमरः। अयोध्यापुरस्यामरावतीसादृश्ये वक्तव्ये तत्सारभूतेन्द्रभवनदृष्टान्तीकरणादयोध्याया अतिरमणीयता द्योत्यते । जानपदैः समन्ततः आकुलमिति सम्बन्धः । समुद्रयादोभिः समुद्रान्तर्वर्त्तितिमितिमिङ्गिलादिजन्तुभिः । "यादांसि जलजन्तवः" इत्यमरः । कर्णावतंसादिपदवदविश्लेषप्रदर्शनाय समुद्रशब्दः । यद्वा समुद्रयादोभिः समुद्रगामिनीभिर्नदीभिः "यादो नपुंसकम्" इति यादःशब्दस्य नदीवाचकत्वेपि नपुंसकत्वं पाणिनीयलिङ्गानुशासनोक्तम् । उदकशब्देन सस्वनत्वमुक्तम् ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥

अनुगृहीताः परमेश्वरेणेति शेषः । दृष्टलोकपरावरः–दृष्टे लोकपरावरे उत्कृष्टापकृष्टवस्तुनी येन सः तथोक्तः ॥ २२–२४ ॥ एवमिति । श्रुतवृत्तान्ताः दिग्भ्यः प्राप्ता जनपदाः जनाः पौराणां कथाः शुश्रुवुरित्यन्वयः ॥ २५ ॥ २६ ॥ जनौघैरिति । उदीर्णवेगस्य उत्कृष्टवेगस्य ॥ २७ ॥ तत इति । इन्द्रक्षयः इन्द्रनिवासः, अमरावतीति यावत् । अयोध्यानगरं समुद्रयादोभिः–समुद्रान्तर्वर्तिभिस्तिमितिमिङ्गलादिजलजन्तुभिः ॥ २८ ॥ इति श्रीमहे० श्रीरामा० तत्त्वदी० षष्ठः सर्गः ॥ ६ ॥

स०–"भूमिविद्युत्सरिल्लतावनिताभिधानानि" इति लिङ्गानुशासनसूत्रे सरिद्वाचिनां शब्दानां स्त्रीत्वमभिधाय "यादो नपुंसकं यादश्शब्दस्सरिद्वाचकोपि क्लीबः स्यात्" इति यादश्शब्दस्य नदीवाचकत्वोक्तेः समुद्रयादोभिः समुद्रसंगतनदीभिरिवेति वा ॥ २८ ॥

अथ रावणवधकाङ्क्षिभिर्देवैराविष्टमन्थरावाक्याद्रामाभिषेकविघ्नः प्रतिपाद्यते—ज्ञातिदासीति । पूर्वसर्गे ' गते पुरोहिते ' इत्यादिना 'तूर्यघोषानुनादितः' इत्यन्तेन पूर्वदिवसे अभिषेकाङ्गभूतव्रतोपवासादिकमाचरतो रामस्य वृत्तान्तमभिधाय 'कृतोपवासं तु तदा' इत्यारभ्य सर्गपर्यन्तेन रामाभिषेकश्रवणजनितानन्दनिर्भराणां पौराणां जानपदानां च जनानां रामाभिषेकदिवसप्राक्तनवृत्तान्तमभिधाय वाचःक्रमवर्त्तित्वादृषिः पूर्वदिवसप्रवृत्तकैकेयीवृत्तान्तं वक्तुमुपक्रमते ज्ञातिदासीत्यादिना । कैकेय्याः ज्ञातिदासी कैकेयीबन्धुदासी " सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः " इत्यमरः । यतोजाता

ज्ञातिदासी यतोजाता कैकेय्यास्तु सहोषिता । प्रासादं चन्द्रसङ्काशमारुरोह यदृच्छया ॥ १ ॥
सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् । अयोध्यां मन्थरा तस्मात्प्रासादादन्ववैक्षत ॥ २ ॥
पताकाभिर्वरार्हाभिर्ध्वजैश्च समलंकृताम् । वृतां छन्दपथैश्चापि शिरःस्नातजनैर्वृताम् ॥ ३ ॥

यत्रकुत्रचिज्जाता । अविज्ञातदेशमातापितृकेत्यर्थः । अतः कैकेय्याज्ञातिदासीत्वमपि स्वोदरप्रपूरणार्थं कृतमित्यवगन्तव्यम् । सहोषिता सहावस्थिता । मन्थरायाः कैकेय्या सहावस्थानमपि हास्यहेतुभूतकुब्जात्वनिबन्धनम् । यदृच्छया स्वैरतया । " यदृच्छा स्वैरता " इत्यमरः । यद्वा यतोजाता यतः कुतश्चिज्जाता । तादृशीनामयोध्यायां जननासम्भवात् । यद्वा तन्नामजातिनिरूपणायोग्यतया तथा निर्देशः । आचार्यास्तु—देवैरेवं स्वकार्यार्थं कैकेयीं भेदयितुं प्रेषितेति देवरहस्यस्य गोप्यतया तथानिर्देश इत्याहुः ॥ १ ॥ सिक्तराजपथामिति । प्रासादादन्ववैक्षत पूर्वश्लोके आरोहणस्योक्तत्वात्प्रासादादित्यस्यान्ववैक्षतेत्यनेन सम्बन्धः। "अधिकरणे चोपसङ्ख्यानम्" इत्यधिकरणे ल्यब्लोपे पञ्चमी। प्रासादे स्थित्वा प्रैक्षतेत्यर्थः ॥२॥ पताकाभिरित्यादि।

पूर्वसर्गे 'गते पुरोहिते रामः' इत्यारभ्य 'पूर्वां सन्ध्यामुपासीनः' इत्यन्तेन ग्रन्थसन्दर्भेण सूर्योदयपर्यन्तं रामवृत्तान्तमनुवर्ण्य संप्रति कैकेय्याः पूर्वदिवसवृत्तान्तमनुसन्धत्ते ज्ञातिदासीत्यादिना । कैकेय्याः ज्ञातीनां बन्धूनां दासी यतोजाता यत्रकुत्रचिज्जाता, अविज्ञातमातापितृकेत्यर्थः । अतोऽस्याः कैकेय्या दासीत्वमपि स्वोदरपूरणार्थं स्वीकृतमित्यवगन्तव्यम् । सहोषिता कैकेय्या सह स्थिता । चन्द्रसंकाशं सुधाधवलितत्वात । प्रासादं हर्म्यम् ॥१॥ सिक्तेति । प्रासादात प्रासादमधिरुह्येत्यर्थः । ल्यब्लोपे पञ्चमी । कृत्स्नामयोध्याम् अन्ववैक्षत । एतच्चाभिषेकदिवसात्पूर्वेद्युर्वृत्तान्तमिति ज्ञेयम् ॥२॥ पताकाभिरिति। वरार्हाभिः श्रेष्ठाभिः । पताकाभिः

१ ,न्क्र.म् । २ प्रकीर्णकमलोत्पलम् । ३ वृतां स्वच्छन्दपथगैः । धृतांजानपदैश्चापि । कृतां छन्नपथैश्चापि । ४ स्वच्छन्दगपथैर्वृताम् इति पाठान्तरम् ।

वराहाभिः श्रेष्ठाभिरित्यर्थः। छन्दपथैर्वृतां स्वच्छन्दगमनयोग्यैर्वीथीभिरावृताम्। शिरःस्नातैः शिरसा स्नातैः, रामोपायनार्थं माल्यमोदकहस्तैः। शुक्लदेवगृहद्वारामिति शुक्लानि सुधाधवलितानि देवगृहद्वाराणि यस्याम्। ब्रह्मघोषाभिनादितां ब्रह्मघोषैः वेदपारायणघोषैः अभिनादिताम्। "वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः। रामाभिषेकस्य तिरश्चामप्यानन्दावहत्वात् 'प्रहृष्टवरहस्त्यश्वां सम्प्रणर्दितगोवृषाम्' इत्युक्तम्। गोवृषाः गोपुङ्गवाः। प्रहृष्टमुदितैः

माल्यमोदकहस्तैश्च द्विजेन्द्रैरभिनादिताम्। शुक्लदेवगृहद्वारां सर्ववादित्रनिस्वनाम् ॥ ४ ॥ संप्रहृष्टजनाकीर्णां ब्रह्मघोषाभिनादिताम्। प्रहृष्टवरहस्त्यश्वां संप्रणर्दितगोवृषाम् ॥ ५ ॥ प्रहृष्टमुदितैः पौरैरुच्छ्रितध्वजमालिनीम्। अयोध्यां मन्थरा दृष्ट्वा परं विस्मयमागता ॥ ६ ॥ प्रहर्षोत्फुल्लनयनां पाण्डरक्षौमवासिनीम्। अविदूरे स्थितां दृष्ट्वा धात्री पप्रच्छ मन्थरा ॥ ७ ॥ उत्तमेनाभिसंयुक्ता हर्षेणार्थपरा सती। राममाता धनं किं नु जनेभ्यः सम्प्रयच्छति ॥ ८ ॥ अतिमात्रप्रहर्षोऽयं किं जनस्य च शंस मे। कारयिष्यति किं वापि संप्रहृष्टो महीपतिः ॥ ९ ॥

प्रहृष्टाः सञ्जातरोमाञ्चादिगात्रविकाराः, मुदिताः मानससन्तोषयुक्ताः तैः। उच्छ्रितेत्यत्र प्रकृतोत्सवकृतध्वजसम्बन्ध उच्यते। ध्वजैश्च समलंकृतामित्यत्र नित्यबद्धध्वजत्वमुक्तम्॥३–६॥प्रहर्षोत्फुल्लनयनामिति। धात्रीम् उपमातरम्। "धात्री स्यादुपमाता" इत्यमरः। प्रहर्षोत्फुल्लनयनामित्यादिविशेषणादियं रामोपमाता ॥७॥ उत्तमेनेति। अर्थपरा सती अर्थपरा सत्यपि। उत्तमेन हर्षेणाभिसंयुक्ता धनं प्रयच्छति किम्। यद्वा अर्थपरा उत्तरोत्तरार्थाभिवृद्ध्यै धनं प्रयच्छति। नामग्रहणस्यासह्यत्वाद्राममातेत्युक्तिः ॥८॥ अतिमात्रेति। जनस्यायमत्यन्तप्रहर्षश्च किं किमर्थम् किंनिमित्तं वा, महीपतिः किं कर्म कारयि

सूक्ष्मध्वजैः। ध्वजैः स्थूलध्वजैः। छन्नपथैःपूरितनिम्नोन्नतप्रदेशैर्मार्गैः तैः। कृताम् अलंकृताम्। छन्दपथैरिति पाठे–छन्दपथानाम उत्सवादिषु जनभूयस्त्वेन स्वैरप्रवेशनिर्गमनार्थं प्राकारादिभङ्गेन ये क्रियन्ते ते ज्ञेयाः। शिरस्स्नातजनैः कृतमङ्गलस्नानजनैः वृतां, माल्यमोदकहस्तैश्च श्रीरामोपासनार्थं माल्यमोदकरूपमङ्गलद्रव्याणि हस्तेषु दधानैरित्यर्थः। शुक्लानि सुधाधवलितानि देवगृहाणां द्वाराणि यस्यां ताम्। ब्रह्मघोषाभिनादिताम् ब्रह्म वेदः। प्रहृष्टाः सञ्जातरोमाञ्चादिगात्रविकाराः, मुदिताः मानससन्तोषयुक्ताः तैः। संप्रणर्दितगोवृषाम्-श्रीरामाभिषेकात्तिरश्चामपि प्रहर्षो जात इत्यर्थः ॥३–६॥ प्रहर्षेति। धात्रीं बालानां स्तन्यप्रदायिनीम् ॥ ७ ॥ उत्तमेनेत्यादि। अर्थपरा धनसंग्रहपरापि कौसल्यायां प्रद्वेषादर्थपरेत्युक्तवती। राममाता जनेभ्यः धनं संप्रयच्छति किंनु किं कारणम् ॥८॥ जनस्य अतिमात्रं प्रहर्षो दृश्यत इति शेषः।

ष्यति ॥ ९ ॥ विदीर्यमाणेति । हर्षेण विदीर्यमाणा अन्तर्गतहर्षौत्कट्याद्देहपोषमुखविकासादिना बहिःप्रसरणात् विदीर्यमाणेवोपलक्षिता । परया मुदा आचचक्षे स्वनिर्भरानन्दसन्दोहपरिवाहस्य पात्रभूता काचिल्लब्धेति परमानन्दयुक्ता सती प्रतिकूलायै तस्यै अकथनीयमप्यकथयादिति भावः । राघवे श्रियं राघवे न्यस्यमानां राज्यलक्ष्मीम् ॥ १० ॥ श्व इति । पुष्येण युक्ते श्वः उत्तरदिने । जितक्रोधमनघमित्यभिषेकोपयुक्तगुणजातोपलक्षणम् ।

विदीर्यमाणा हर्षेण धात्री तु परया मुदा । आचचक्षेऽथ कुब्जायै भूयसीं राघवश्रियम् ॥ १० ॥ श्वः पुष्येण जितक्रोधं यौवराज्येन राघवम् । राजा दशरथो राममभिषेचयिताऽनघम् ॥ ११ ॥ धात्र्यास्तु वचनं श्रुत्वा कुब्जा क्षिप्रममर्षिता। कैलासशिखराकारात् प्रासादादवरोहत ॥ १२ ॥ सा दह्यमाना कोपेन मन्थरा पापदर्शिनी । शयानामेत्य कैकेयीमिदं वचनमब्रवीत् ॥ १३ ॥ उत्तिष्ठ मूढे किं शेषे भयं त्वामभिवर्त्तते । उपप्लुतमघौघेन किमात्मानं न बुध्यसे ॥ १४ ॥ अनिष्टे सुभगाकारे सौभाग्येन विकत्थसे । चलं हि तव सौभाग्यं नद्याः स्रोत इवोष्णगे ॥ १५ ॥ एवमुक्ता तु कैकेयी रुष्टया परुषं वचः । कुब्जया पापदर्शिन्या विषादमगमत्परम् ॥ १६ ॥

यौवराज्येनाभिषेचयिता, यौवराज्यार्थमभिषेचयितेत्यर्थः ॥ ११ ॥ धात्र्या इति । अवरोहत अवारुहत् ॥ १२ ॥ १३ ॥ उत्तिष्ठेति । उपप्लुतं उपहतं अघौघेन अघं दुःखं "अंहोदुःखव्यसनेष्वघम्" इत्यमरः । "ओघो वृन्देऽम्भसां रये" इत्यमरः ॥ १४ ॥ अनिष्ट इति । वस्तुतः राज्ञोऽनिष्टे सुभगाकारे आपाततः सौभाग्यवतीव भासमाने ! असुभगाकार इति वा छेदः । सौभाग्येन हेतुना विकत्थसे ममैव सौभाग्यमस्तीत्यात्मानं श्लाघसे । इयमुक्तिः पूर्वकालिकात्मश्लाघापरेत्यवगन्तव्या । इदानीं मत्सौभाग्यस्य का हानिरित्यत्राह चलं हीति । उष्णं गच्छतीत्युष्णगः ग्रीष्मकालः तस्मिन् । नद्याः स्रोत इव चलं क्षीणमित्यर्थः ॥ १५ ॥ एवमिति । परुषं वच उक्ता "अप्रधाने दुहादीनाम्" इत्यप्रधाने कर्मकारके निष्ठा ॥ १६ ॥

किमत्र कारणम् ॥ ९ ॥ विदीर्यमाणा रोमाञ्चितगात्रा । राघवश्रियं राघवे न्यस्यमानां श्रियं राज्यलक्ष्मीम् ॥ १० ॥ अनघं भ्रातृषु वैषम्यरूपदोषरहितम् ॥ ११–१३ ॥ अघौघेन दुःखपरम्परया उपप्लुतं पीडितमात्मानम् । किं न बुध्यसे किं न जानासि ॥ १४ ॥ अनिष्ट इति । सुभगाकारे शोभनाकारे । अनिष्टे भर्तुरप्रिये । सौभाग्येन पतिवाल्लभ्येन । विकत्थसे आत्मानं वृथा श्लाघसे । उष्णगे उष्णं गच्छतीत्युष्णगे निदाघकाले ॥ १५ ॥ सा विषण्णतरेति । राघवं भेदयन्ती रामं प्रति कैकेय्या विरोधं

 

कैकेयीति । कच्चित् क्षेमम्, मह्यमिति शेषः ॥ १७ ॥ मन्थरेति । क्रोधसंयुक्ता रामाभिषेकाविचारणादिति भावः ॥ १८ ॥ सेति । विषादयन्ती भेदयन्तीति शतृद्वयं हेत्वर्थम् । राज्यश्रियो ज्ञातिगामित्वानिष्टप्रकाशनेन विषादहेतवे सामान्यतः पुत्रत्वप्रयुक्तरामविषयस्नेहभेदनहेतवे चेत्यर्थः ॥ १९ ॥

कैकेयी त्वब्रवीत्कुब्जां कच्चित् क्षेमं न मन्थरे । विषण्णवदनां हि त्वां लक्षये भृशदुःखिताम् ॥ १७ ॥ मन्थरा तु वचः श्रुत्वा कैकेय्या मधुराक्षरम् । उवाच क्रोधसंयुक्ता वाक्यं वाक्यविशारदा ॥ १८ ॥ सा विषण्णतरा भूत्वा कुब्जा तस्या हितैषिणी । विषादयन्ती प्रोवाच भेदयन्ती च राघवम् ॥ १९ ॥ अक्षय्यं सुमहद्देवि प्रवृत्तं त्वद्विनाशनम् । रामं दशरथो राजा यौवराज्येऽभिषेक्ष्यति ॥ २० ॥ सास्म्यगाधे भये मग्ना दुःखशोकसमन्विता । दह्यमानानलेनेव त्वद्धितार्थमिहागता ॥ २१ ॥ तव दुःखेन कैकेयि मम दुःखं महद्भवेत् । त्वद्वृद्धौ मम वृद्धिश्च भवेदत्र न संशयः ॥ २२ ॥ नराधिपकुले जाता महिषी त्वं महीपतेः । उग्रत्वं राजधर्माणां कथं देवि न बुध्यसे ॥ २३ ॥ धर्मवादी शठो भर्त्ता श्लक्ष्णवादी च दारुणः । शुद्धभावेन जानीषे तेनैवमतिसन्धिता ॥ २४ ॥

अक्षय्यमिति । अक्षय्यं अशक्यप्रतीकारम् । त्वद्विनाशनं त्वद्विनाशः । भावे ल्युट् ॥ २० ॥ सेति । दुःखशोकसमन्विता अनभिमतरामाभिषेकश्रवणजनितव्यसनजं दुःखम्, अभिमतभरताभिषेकराहित्यजः शोकः ताभ्यां समन्विता ॥ २१ ॥ ननु मम दुःखादिहेतौ सति कुतस्ते दुःखप्रसक्तिरित्यत्राह–तवेति ॥ २२ ॥ ननु रामाभिषेकमात्रं कथं मे दुःखहेतुरित्यत्राह–नराधिपेति । उग्रत्वं क्रौर्यम् ॥ २३ ॥ ननु मत्प्रियः कथमनिष्टं करिष्यतीत्यत्राह–धर्मवादीति । धर्मवादीव भासमानः । वस्तुतः शठः गूढविप्रियकृत् । श्लक्ष्णवादी कण्ठादुपरि प्रियवचनशीलः । दारुणः क्रूरकर्मकारी । एवम्भूतमेनं

जनयन्तीत्यर्थः ॥ १९ ॥ अक्षय्यमिति । त्वद्विनाशनं त्वद्विनाशकरम् ॥ २० ॥ सेति । दुःखशोकसमन्विता-शोकः प्रलापादिः, दुःखं मनोव्यथा ताभ्यां समन्विता । त्वद्धितार्थं त्वदीयदुःखं परिहर्तुमित्यर्थः ॥ २१ ॥ २२ ॥ नराधिपेति । उग्रत्वं क्रौर्यम् ॥ २३ ॥ धर्मवादीति । वाङ्मात्रेण धार्मिकः, वस्तुतस्तु शठः गूढविप्रियकारी । श्लक्ष्णवादी त्वां प्रति कण्ठादुपरि प्रियवचनशीलः । दारुणः क्रूरहृदयः । शुद्धभावे इति सम्बोधनम् । शुद्धहृदये ! तमेवंविधं न जानीषे, एवं पूर्वोक्तरीत्या तेन दशरथेन

शुद्धस्वभावेनोपलक्षितं जानीषे । तथा न मन्तव्यम्, यतस्त्वेनेवम् अतिसन्धिता वञ्चिता ॥ २४ ॥ शठत्वमेवाह–उपस्थितमिति । उपस्थितं तत्कालो
चिततया भाषितम् । अनर्थकं त्वदर्थनाशनम् । त्वयि सान्त्वम् अनुसरणं प्रयुञ्जानः कौसल्यामर्थेन योजयिष्यति ॥२५॥ अतिसन्धानप्रकारमाह–अप
वाह्येति । अपवाह्य उद्वास्य । कालमर्हतीति काल्यम् । अर्हार्थे यत् । श्वःप्रातरित्यर्थः ॥ २६ ॥ शत्रुरिति । हे बाले मुग्धे ! आगाम्यनर्थानभिज्ञे इति

उपस्थितं प्रयुञ्जानस्त्वयि सान्त्वमनर्थकम् । अर्थेनैवाद्य ते भर्ता कौसल्यां योजयिष्यति ॥ २५ ॥ अपवाह्य स
दुष्टात्मा भरतं तव बन्धुषु । काल्ये स्थापयिता रामं राज्ये निहतकण्टके ॥ २६ ॥ शत्रुः पतिप्रवादेन मात्रेव
हितकाम्यया । आशीविष इवाङ्केन बाले परिहृतस्त्वया ॥ २७ ॥ यथा हि कुर्यात् सर्पो वा शत्रुर्वा प्रत्युपेक्षितः ।
राज्ञा दशरथेनाद्य सपुत्रा त्वं तथा कृता ॥ २८ ॥ पापेनानृतसान्त्वेन बाले नित्यसुखोचिते । रामं स्थापयता
राज्ये सानुबन्धा हता ह्यसि ॥ २९ ॥

यावत् । पतिप्रवादेन पतिव्यपदेशेन । शत्रुः छन्नहृदयः शात्रवः पतिः । त्वया ऋजुप्रकृतिकया मात्रेव सर्पशिशुं पोषयित्र्येव । हितकाम्यया हितप्रापणे
च्छया । आशीविष इव छन्नविषः सर्प इव । अङ्केन उत्सङ्गेन । परिहृतः परिधृत इत्यर्थः । यद्वा अङ्केन परिहृतः अङ्कान्न परिहृतः किन्त्वङ्क एव धृतो
पलालितः । यथा सर्पपोषयित्री बाला सर्पस्यान्तर्विषमज्ञात्वा केवलं हितकाम्ययाङ्के सर्पमुपलालयति तथा त्वमपि बाला भर्तुः कुटिलहृदयमजानती
विश्वस्य तमङ्के उपलालयसीत्यर्थः । यथाङ्कोपलालित आशीविषः कदाचिद्धितपरामपि पोषयित्रीं दशेत्, एवं ते भर्तापि विश्वस्तां त्वामर्थहीनां कार
येत् । अतस्स आशीविष इव नानुसरणीयस्त्वयेति भावः ॥ २७ ॥ एवं गम्यमर्थं विशदयति–यथेति ॥ २८ ॥ पापेनेति । सानुबन्धा पुत्रमित्रादिपारि

अतिसन्धिता अत्यन्तं वञ्चितेत्यर्थः ॥ २४ ॥ उपस्थितः त्वत्समीपे स्थितः । उपस्थितमिति पाठे सान्त्वविशेषणम् । उपस्थितं तत्कालोचितमिति यावत् ।
सान्त्वं प्रियवचनम् । अनर्थकं निरर्थकं फलरहितं त्वयि प्रयुञ्जानः अर्थेन राज्यरूपप्रयोजनेन कौसल्यामेव योजयिष्यति ॥२५॥ अपवाह्येति । भरतं बन्धुष्वपवाह्य
बन्धुदर्शनव्याजेनान्यत्र नीत्वा काल्यं आगामि श्वः प्रातःकाले रामं राज्ये स्थापयिता स्थापयिष्यति ॥ २६ ॥ शत्रुरिति । हे बाले ! पतिप्रवादेन पतिव्यपदेशेन
शत्रुः, मात्रेव हितकाम्यया हितकामनायुक्ततया हिताचरणेन मात्रेव मातृतुल्यया त्वया अङ्केनाशीविषः सर्प इव परिधृत इति योजना । परिहृत इति पाठे–बाले
अपरिहृत इति छेदः । पतिरूपः साक्षाच्छत्रुस्त्वया अपरिहृतः । वस्तुतस्तु त्याज्य एवेति दुर्बुद्धिमुपदिशतीति ज्ञेयम् ॥ २७ ॥ २८ ॥ पापेनेति । सानुबन्धा पुत्र

करसहिता ॥ २९ ॥ सेति । विस्मयदर्शने आश्चर्यावहज्ञानयुक्ते । तत्तत्कालोचितकर्त्तव्यनिरूपणचतुर इत्यर्थः । यद्वा अनेन हितकरणहेतुदशरथवशी करणसाधनसौन्दर्यं सूच्यते ॥ ३० ॥ एवं देवावेशवशाद्विपरीतवाक्यया मन्थरयोक्तापि कैकेयी महाकुलप्रसूततया सत्प्रकृतिः सती रामाभिषेकं स्वहितं मन्यमानाह–मन्थराया इति ॥३१–३३॥ इदं त्विति । एतत्प्रियमाख्यातुः आख्यात्र्यास्ते किंवा करोमीति सम्बन्धः । एतन्मे प्रियमाख्यातमितिपाठे–

सा प्राप्तकालं कैकेयि क्षिप्रं कुरु हितं तव । त्रायस्व पुत्रमात्मानं मां च विस्मयदर्शने ॥ ३० ॥ मन्थराया वचः श्रुत्वा शयाना सा शुभानना । उत्तस्थौ हर्षसम्पूर्णा चन्द्रलेखेव शारदी ॥ ३१ ॥ अतीव सा तु संहृष्टा कैकेयी विस्मयान्विता । एकमाभरणं तस्यै कुब्जायै प्रददौ शुभम् ॥ ३२ ॥ दत्त्वा त्वाभरणं तस्यै कुब्जायै प्रमदोत्तमा । कैकेयी मन्थरां दृष्ट्वा पुनरेवाब्रवीदिदम् ॥३३॥ इदं तु मन्थरे मह्यमाख्यासि परमं प्रियम् । एतन्मे प्रियमाख्यातुः किं वा भूयः करोमि ते ॥ ३४ ॥ रामे वा भरते वाहं विशेषं नोपलक्षये । तस्मात्तुष्टास्मि यद्राजा रामं राज्येऽभिषेक्ष्यति ॥३५॥ न मे परं किञ्चिदितस्त्वया पुनः प्रियं प्रियार्हे सुवचं वचः परम् । तथा ह्यवोचस्त्वमतः प्रियोत्तरं परं वरं ते प्रददामि तं वृणु ॥ ३६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्तमः सर्गः॥७॥

आख्यातं एतत्प्रियमुद्दिश्य ते भूयः किंवा करोमीति सम्बन्धः ॥ ३४ ॥ ननु सपत्नीपुत्रे कथं तवैतादृशी प्रीतिरित्यत्राह–राम इति ॥ ३५ ॥ नेति । हे प्रियार्हे प्रियदानार्हे ! मे इतःपरं रामाभिषेककथनादन्यत् किञ्चित् प्रियं अभिमतम् । परं वचस्त्वया पुनर्न सुवचं वक्तुं शक्यम् । हि यस्मात् कारणात् त्वं तथा सर्वप्रियेभ्योऽधिकं प्रियं रामाभिषेकरूपम् । अवोचः उक्तवती । अतः प्रियोत्तरं प्रीतिविषयेषु श्रेष्ठम् "उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः" इत्यमरः । परं अन्यम् । वरं वरणीयं वस्तुविशेषं ते तुभ्यं प्रदामि । तं वृणु वृणीष्वेति योजना ॥३६॥ इति श्रीगो०श्रीरामा० पीता० अयोध्याकाण्ड० सप्तमः सर्गः ॥७॥

मित्रादिसहिता ॥ २९ ॥ सेति । सा त्वं प्राप्तकालं प्राप्तावसरम् । विस्मयदर्शने अद्भुतदर्शने, तत्कालोचितोपायविचारकुशले इत्यर्थः ॥ ३०–३३ ॥ इदमिति । मे एतत्प्रियं भूयः आख्यातुं ते किंवा करोमीति सम्बन्धः । आख्यातमिति पाठे–आख्यातमेतत्प्रियमुद्दिश्य ते भूयः किं करोमीति सम्बन्धः ॥ ३४ ॥ ३५ ॥ न मे परमिति । हे प्रियार्हे ! मे इतःपरं रामाभिषेकादन्यत् किञ्चित् प्रियमभिमतम् परं वचः श्रेष्ठं वचः त्वया पुनर्न वचं वक्तुमशक्यम् । हि यस्मात्कारणात् त्वं तथा

अथ कुमतिजनसंसर्गवशेन महतामपि कदाचिच्चित्तचलनं स्वाहितमनर्थं बोधयन्नाह—मन्थरेत्यादि । अभ्यसूय असूयां कृत्वा । एनां प्रतीति शेषः । कोपदुःखसमन्विता हितं न शृणोतीति कोपः, आगमिष्यत्यनर्थ इति दुःखम् ॥ १ ॥ हर्षमिति । हे बालिशे अज्ञे ! अस्थाने अनुचितकाले, हर्षं कृतवत्यसि किमिदम् ? अत्र कारणं न जानामि । अस्थानकृतत्वमाह शोकेति ॥२॥ मनसेति । इदं रामाभिषेकरूपं महद्व्यसनं प्राप्य तेनैव हेतुना शोचितव्ये

मन्थरा त्वभ्यसूयैनामुत्सृज्याभरणं च तत् । उवाचेदं ततो वाक्यं कोपदुःखसमन्विता ॥ १ ॥ हर्षं किमिदमस्थाने कृतवत्यसि बालिशे । शोकसागरमध्यस्थमात्मानं नावबुध्यसे ॥२॥ मनसा प्रहसामि त्वां देवि दुःखार्दिता सती । यच्छोचितव्ये हृष्टासि प्राप्येदं व्यसनं महत् ॥ ३ ॥ शोचामि दुर्मतित्वं ते का हि प्राज्ञा प्रहर्षयेत् । अरेः सपत्नी-पुत्रस्य वृद्धिं मृत्योरिवागताम् ॥ ४ ॥ भरतादेव रामस्य राज्यसाधारणाद्भयम् । तद्विचिन्त्य विषण्णास्मि भयं भीताद्धि जायते ॥ ५ ॥

विषये हृष्टासीति यत्,अतोऽहं दुःखार्दिता सती त्वां मनसा प्रहसामि यथोन्मत्तप्रमुदर्शने ॥३॥ एवं बालिशत्वमन्वयमुखेन दर्शयित्वा व्यतिरेकमुखेनापि दर्शयति—शोचामीति । ते दुर्मतित्वं दुष्टबुद्धित्वम् शोचामि । मतेर्दुष्टत्वमनर्थविषयप्रीतिजनकत्वम् । मृत्योरिव सपत्नीपुत्रस्यारेरागतां वृद्धिं का हि प्राज्ञा का वा प्रशस्तबुद्धिः। प्रहर्षयेत् प्रहर्षसाधनं कुर्यात् । "तत्करोति—" इति णिच् । हर्ष इति करणे घञ् प्रत्ययः। लालयेदितिवार्थः॥४॥ उक्तां व्यसनमहत्तां दर्शयति—भरतादिति । राज्यं साधारणं यस्य तस्माद्भरतादेव रामस्य यद्भयं तद्विचिन्त्य विषण्णास्मि । रामस्य भयमस्तु, भरतस्य किमित्यत आह भय
अवोचः तथा सर्वप्रियेभ्योऽधिकं प्रियं श्रीरामाभिषेकरूपमवोचः उक्तवत्यसि अतः प्रियोत्तरं प्रियाख्यानस्योत्तरं पारितोषिकरूपं परमन्यं वरं वरणीयं वस्तुविशेषं ते तुभ्यं प्रददामि । तं वृणु वृणीष्वेति योजना ॥ ३६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां सप्तमः सर्गः ॥ ७ ॥
मन्थरेति । अभ्यसूय असूयां कृत्वा ॥१॥ हर्षमिति । बालिशे मूर्खे ! अस्थाने अप्रहर्षविषये हर्षं कृतवत्यसि, इदं किं चित्रमित्यर्थः । आत्मानं त्वा ॥ २ ॥ मनसेति । यद्यस्मान्महदिदं व्यसनं रामराज्यप्राप्तिरूपां विपदं प्राप्य शोचितव्ये हृष्टासि तस्मात् दुःखार्दिता परमदुःखेन पीडिता अहं त्वां मनसा प्रहसामि ॥३॥ शोचामीति । ते तव । दुर्मतित्वं दुष्टबुद्धित्वम् । मतेर्दुष्टत्वमनर्थविषयप्रीतिजनकत्वम् । मृत्योरिव मृत्युतुल्यस्य सपत्नीपुत्रस्य अरेः शत्रोः श्रीरामस्य आगतां प्राप्तां वृद्धिं राज्यश्रियं का हि प्राज्ञा ऊहापोहसमर्था का हि का वा प्रहर्षयेत् प्रहर्षसाधनं कुर्यात् ॥४॥ भरतादिति । राज्यसाधारणात् राज्यं साधारणं यस्य तस्माद्भरतादेव रामस्य

मिति । यः यस्माद्भीतः स तस्य भयमवश्यमुत्पादयति, व्याघ्रसर्पादिविषये तथा दर्शनादिति भावः ॥५॥ यद्यपि लक्ष्मणशत्रुघ्नयोरपि राज्यं साधारणं तथापि तयोः परतन्त्रत्वान्न भयप्रसक्तिरित्याह—लक्ष्मण इति । सर्वात्मना सर्वप्रकारेण, मनोवाक्कायैरित्यर्थः । अतो रामस्य न लक्ष्मणाद्भयमिति भावः । शत्रुघ्नस्य भरतपरतन्त्रत्वेन न ततः पृथग्भयमित्यर्थः ॥ ६ ॥ भरतादेवेत्यत्र हेत्वन्तरमाह—प्रत्यासन्नेति । प्रत्यासन्नेन सन्निकृष्टेन क्रमेण पुनर्वसुपुष्य

लक्ष्मणो हि महेष्वासो रामं सर्वात्मना गतः । शत्रुघ्नश्चापि भरतं काकुत्स्थं लक्ष्मणो यथा ॥६॥ प्रत्यासन्नक्रमेणापि भरतस्यैव भामिनि । राज्यक्रमो विप्रकृष्टस्तयोस्तावत्कनीयसोः ॥७॥ विदुषः क्षत्रचारित्रे प्राज्ञस्य प्राप्तकारिणः । भयात् प्रवेपे रामस्य चिन्तयन्ती तवात्मजम् ॥ ८ ॥ सुभगा खलु कौसल्या यस्याः पुत्रोऽभिषेक्ष्यते । यौवराज्येन महता श्वः पुष्येण द्विजोत्तमैः ॥ ९ ॥

नक्षत्रजननक्रमेण । भरतस्यैव राज्यं, प्राप्तमिति शेषः । कनीयसोः कनिष्ठयोः । राज्यक्रमः राज्यप्राप्तिक्रमस्तु । विप्रकृष्टः व्यवहितः । सत्यपि पारतन्त्र्ये राज्यविषये सर्वेषामभिलाषस्तुल्यः । यथा भरतस्येतिशङ्कायां प्रथमं रामस्य राज्यं प्राप्तं ततो भरतस्य ततो लक्ष्मणशत्रुघ्नयोः । तथा च प्रथमो द्वितीयं जिघांसति, अतो रामाद्भयं भरतस्यैवेति भावः ॥ ७ ॥ एवं राज्यक्रमो भरतस्य सन्निहितोऽस्तु, तथापि रामे प्रथमप्राप्तिमति विद्यमाने का भरतस्य राज्यशङ्केत्यत्राह—विदुष इति । विदुषः स्वत एव विवेकशालिनः । विशिष्य क्षत्रचारित्रे राजनीतौ । प्राज्ञस्य प्राप्तकारिणः अविलम्बेन कालोचितकर्तव्यार्थकारिणः रामस्य । भयाद्भाव्यनर्थकरणभयात् । तवात्मजम् उक्तवैदुष्यादिरहितम् चिन्तयन्ती प्रवेपे । षष्ठी चात्र सम्बन्धसामान्ये ॥ ८ ॥ कैकेय्या ईर्ष्योत्पादनार्थं कौसल्यासौभाग्यं दर्शयति—सुभगेत्यादिना । सुभगा भाग्यशीला । यौवराज्येनेति हेतौ तृतीया ॥ ९ ॥

भयं यदस्ति तद्भयं विचिन्त्य विषण्णास्मि । कुतः ? हि यस्माद्भयं भीताद्धि जायते । भीतो रामः स्वभयहेतुभूतं भरतं सर्वप्रकारेणापि निराकुर्यादिति भावः ॥ ५ ॥ लक्ष्मणशत्रुघ्नयोरपि राज्यसाधारण्यं किं न स्यादित्याशङ्क्य तयोस्तत्परतन्त्रत्वान्न साधारण्यमित्याह—लक्ष्मणो हीति । सर्वात्मना सर्वप्रकारेण रामं गतः प्राप्तः ॥ ६ ॥ लक्ष्मणशत्रुघ्नयो राज्यसाधारण्याभावे युक्त्यन्तरमाह—प्रत्यासन्नक्रमेणेति । प्रत्यासन्नक्रमेण जन्मप्रत्यासत्तिक्रमेणापि भरतस्यैव राज्यक्रमः सन्निहित इति शेषः । यवीयसोर्लक्ष्मणशत्रुघ्नयोः राज्यक्रमो विप्रकृष्टः, दूरापास्त इत्यर्थः ॥ ७ ॥ विदुष इति । क्षत्रचारित्रे राजनीतिविषये । विदुषः प्राप्तकारिणः अविलम्बेन कालोचितकर्तव्यार्थकारिणः रामस्य भयात् ॥ ८ ॥ कैकेय्या ईर्ष्योत्पादनार्थं कौसल्यासौभाग्यं दर्शयति—सुभगेत्यादिना । यौवराज्येनेति

रामतो भरतस्येव कौसल्यातोऽस्या अनर्थं दर्शयति–प्राप्तामिति । रामाभिषेकेण सुमहतीं श्रियं प्राप्ताम् । प्रतीतां ख्याताम् । " प्रतीते प्रथितख्यातवित्त विज्ञातविश्रुताः" इत्यमरः। हतद्विषं अधरीकृतसपत्नीकाम् । तां कौसल्याम् । उपस्थास्यसि सेविष्यसे॥१०॥ न केवलं तवैकस्या दास्यं किंतु त्वदनुबन्धि जनस्यापीत्याह–एवमिति । तव दास्यं प्राप्तं चेदित्यर्थः ॥११॥ हृष्टा इति । राममहिष्या एकत्वेपि 'रामस्य परमाः स्त्रियः' इति बहुवचननिर्देशः परि

प्राप्तां सुमहतीं प्रीतिं प्रतीतां तां हतद्विषम् । उपस्थास्यसि कौसल्यां दासीवत्त्वं कृताञ्जलिः ॥ १० ॥
एवं चेत्त्वं सहास्माभिस्तस्याः प्रेष्या भविष्यसि । पुत्रश्च तव रामस्य प्रेष्यभावं गमिष्यति ॥ ११ ॥
हृष्टाः खलु भविष्यन्ति रामस्य परमाः स्त्रियः । अप्रहृष्टा भविष्यन्ति स्नुषास्ते भरतक्षये ॥ १२ ॥

चारिकाभिप्रायेण । भरतक्षये भरतस्य दारिद्र्यरूपक्षये सति । नन्वत्र स्त्रीशब्दो भार्यापर एव । 'स्नुषास्ते भरतक्षये' इति स्नुषाशब्दसाहचर्यात् । अत एव सुन्दरकाण्डे सीतयोच्यते–"पितुर्निदेशं नियमेन कृत्वा वनान्निवृत्तश्चरितव्रतश्च । स्त्रीभिश्च मन्ये विपुलेक्षणाभिस्त्वं रंस्यसे वीतभयः कृतार्थः॥" इति"। युद्धकाण्डे च दर्भशयनवर्णने "भुजैः परमनारीणामभिमृष्टमनेकधा" इत्युक्तम् । नहि भुजैर्भुजाभिमर्शो भार्याभ्योन्यत्र सम्भवति। उत्तरकाण्डे चाश्वमेधो पक्रमे "मातरश्चैव सर्वा मे कुमाराः स्त्रीगणानि च। अग्रतो भरतं कृत्वा गच्छन्त्वग्रे समाधिना॥" इतिदर्शितम् । अत्र स्त्रीगणकुमारव्यपदेशो विना सीता तिरिक्तभार्यासद्भावं सम्भवति । किञ्च श्रुतार्थापत्तिरपि रामस्य सीतातिरिक्तधर्मदारसद्भावे प्रमाणम् । न ह्यपत्नीकस्य यज्ञानुष्ठानं सम्भवति भोगदारा न्तरासम्भवेन रामस्यैकदारव्रतत्वं भृगुशापपालनं च । सीताप्रतिकृतिकरणं तु सीतास्नेहबहुमानार्थम् । अत्रोच्यते–रामस्यैकदारव्रतत्वं सर्वसिद्धम् । तच्च पत्न्यन्तरसम्भवे न सङ्गच्छते। न च यज्ञकरणानुपपत्तिः सीताप्रतिकृतिकरणेन तदुपपत्तेः । अत एवोत्तरकाण्डे वक्ष्यति " काञ्चनीं मम पत्नीं च दीक्षार्हां यज्ञकर्मणि । अग्रतो भरतः कृत्वा गच्छत्वग्रे महामतिः ॥" इति सीताप्रतिकृतेर्दीक्षार्हत्वं पत्नीत्वं च । पुनश्चोत्तरत्र " न सीतायाः परां भार्यां वव्रे स रघुनन्दनः । यज्ञेयज्ञे च पत्न्यर्थं काञ्चनी जानकीभवत् ॥ " इति । नहि वचनविरोधे न्यायः प्रवर्तते । अनेन वचनेन प्रत्यक्षश्रुत्यविरुद्धेन विदूरभार्योऽननुकूलभार्यश्च भार्याप्रतिकृतिं कृत्वा श्रौतस्मार्तकर्माणि कुर्यादिति विधिरुन्नीयते । स्मृतिश्च तथाविधा पठ्यते । यथा हेमाद्रौ

हेतौ तृतीया ॥ ९ ॥ प्राप्तामिति । प्रतीतां विश्रुताम् ॥ १० ॥ ११ ॥ हृष्टा इति । रामस्य परमाः स्त्रिय इत्यनेन बहुवचनेन सीतासख्य उच्यन्ते, स्नुषा इत्य

" दूरभार्योऽननुकूलभार्यश्च दर्भपिञ्जूलैर्भार्याप्रतिनिधिं विधाय पार्वणं कुर्यात् " इति । पत्नीकर्त्तव्यानि कर्माण्यध्वर्युर्यजमानो वा कुर्यात् । यथा तस्या मसमर्थायां पत्नीविनाशाभावान्नाग्नेर्विनाशः । यत्तु येन केनचिदुक्तं सीताप्रतिकरणं सीतास्नेहबहुमानार्थमिति तत्तुच्छम् । संत्यक्तभार्यायां स्नेहबहुमानकरणस्यावद्यावहत्वात् । 'मातरश्चैव सर्वा मे कुमाराः स्त्रीगणानि च ।' इत्यत्र मे मातरः भरतादीनां कुमाराः स्त्रियश्चेत्यर्थः । दारान्तरसम्भवेपि तेषां धर्मार्थत्वेन प्रजार्थत्वाभावेन रामस्य कुमाराभावात्तत्सहचरितस्त्रीगणाश्च भरतादीनामेवेति सुव्यक्तम् । एवं च " रामस्य परमाः स्त्रियः । परमनारीणाम् । स्त्रीभिश्च मन्ये " इत्यादिषु भोगप्रसञ्जनेन धर्मदारपरत्वासम्भवात् साधारणादिपरिग्रहशङ्कानवकाशाच्चान्यपरत्वमवसेयम् । परमाः स्त्रिय इति परिचारिकान्तर्भावेन । स्त्रीभिश्च मन्य इति स्वविनाशे स्त्र्यन्तरसम्भावनया । परमनारीणामित्यस्य कविवचनत्वेन श्रीभूम्याद्यभिमर्शविषयत्वाच्चेति दिक् ॥ १२॥ रामस्यैवंविधगुणत्वे हि त्वदुक्ता दोषाः स्युस्तदेव नास्तीति मूले कुठारं निदधातीत्याह—तामिति । अप्रीतामिति पदच्छेदः । क्षोभहेतौ नितरां विद्यमानेप्यक्षोभ्यमनस्कत्वाद्देवीति तामृषिः श्लाघते ॥ १३ ॥ मन्थरोक्तराज्यसाधारण्यं निवर्तयति—धर्मज्ञ इति । दान्तः दमितः । " दान्तस्तु दमिते " इत्यमरः । शिक्षित इत्यर्थः । कृतज्ञः सत्पुत्रसमाचारज्ञ इत्यर्थः ॥ १४ ॥ अथ भरतानर्थशङ्कां परिहरति—भ्रातॄनिति ॥ १५ ॥ राज्यं च भरतस्य क्रमाद्भविष्यतीत्याह—भरत इति । वर्षशतात्परं रामराज्यात्परमित्यर्थः । दशवर्षसहस्राणि रामो राज्यं पालयिष्यतीति कैकेयी न जानाति अतो लोकरीत्या वदतीति ज्ञेयम् । अवाप्तेति लुट् । स्वानन्तरं भरतस्य राज्यलाभाय सम्प्रति तस्मै यौवराज्यं दास्यतीत्यर्थः ॥ १६ ॥

तां दृष्ट्वा परमप्रीतां ब्रुवन्तीं मन्थरां ततः । रामस्यैव गुणान् देवी कैकेयी प्रशशंस ह ॥ १३ ॥

धर्मज्ञो गुरुभिर्दान्तः कृतज्ञः सत्यवाक्छुचिः । रामो राज्ञः सुतो ज्येष्ठो यौवराज्यमतोऽर्हति ॥ १४ ॥

भ्रातॄन् भृत्यांश्च दीर्घायुः पितृवत्पालयिष्यति । सन्तप्यसे कथं कुब्जे श्रुत्वा रामाभिषेचनम् ॥ १५ ॥

भरतश्चापि रामस्य ध्रुवं वर्षशतात्परम् । पितृपैतामहं राज्यमवाप्ता पुरुषर्षभः ॥ १६ ॥

त्राप्येवमेवेति ज्ञेयम् । भरतक्षये भरतगृहे ॥ १२ ॥ तामिति । परमप्रीतामित्यत्र परम् अप्रीतामिति छेदः ॥१३॥ मन्थरोक्तं राज्यसाधारण्यं निवर्तयति—धर्मज्ञ इत्यादिना । गुरुभिर्दान्तः गुरुभिस्सुशिक्षित इत्यर्थः ॥ १४ ॥ १५ ॥ भरत इति । वर्षशतात्परं रामराज्यानन्तरमित्यर्थः । अन्यदा दशवर्षसहस्राणीत्युक्ति

सेति। प्राप्ते उचिते। अभ्युदये रामाभिषेकरूपे शोभने। वर्तमाने प्रत्यासन्ने सति कल्याणे भरताभिषेकरूपे भविष्यति च किमर्थं परितप्यस इति सम्बन्धः ॥ १७ ॥ एवं पुत्रानार्थशङ्कां परिहृत्य स्वानर्थशङ्कां परिहरति—यथेति। मान्यः बहुमान्यः। भूयः भृशम्। अत्रहेतुमाह कौसल्यात इति। अतिरिक्तम् अभ्यधिकं यथा भवति तथा ॥ १८ ॥ माभूद्वर्षशतात्परं भरतस्य राज्यलाभः, तथापि राज्यलाभसौख्यमस्तीत्याह—राज्यमित्यादिना ॥ १९ ॥ २० ॥

सा त्वमभ्युदये प्राप्ते वर्तमाने च मन्थरे। भविष्यति च कल्याणे किमर्थं परितप्यसे ॥ १७ ॥ यथा मे भरतो मान्यस्तथा भूयोऽपि राघवः। कौसल्यातोऽतिरिक्तं च सोऽनुशुश्रूषते हि माम् ॥ १८ ॥ राज्यं यदि हि रामस्य भरतस्यापि तत्तथा। मन्यते हि यथात्मानं तथा भ्रातृंस्तु राघवः ॥ १९ ॥ कैकेय्या वचनं श्रुत्वा मन्थरा भृशदुःखिता। दीर्घमुष्णं विनिश्वस्य कैकेयीमिदमब्रवीत् ॥ २० ॥ अनर्थदर्शिनी मौर्ख्यान्नात्मानमवबुध्यसे। शोकव्यसनविस्तीर्णे मज्जन्ती दुःखसागरे ॥ २१ ॥ भविता राघवो राजा राघवस्यानु यः सुतः। राजवंशात्तु कैकेयी भरतः परिहास्यते ॥ २२ ॥

अनर्थदर्शिनीति। अनर्थदर्शिनी अनर्थमेवार्थत्वेन दर्शनशीलेत्यर्थः। यद्वा अर्थादर्शिनी प्रयोजनानभिज्ञेत्यर्थः। मौर्ख्यात् अविमृश्यकारित्वात्। शोकव्यसनविस्तीर्णे विलापहेतुः शोकः, व्यसनं विपत् "व्यसनं विपदि भ्रंशे" इत्यमरः। यद्वा शोकः इष्टवियोगजं दुःखम्, भरतस्य राज्यभ्रंशेन वनप्रापणजं दुःखमिति यावत्। विपत् स्वस्य सुखाद्भ्रंशः। दुःखसागरे सपत्नीसेवारूपे। मज्जन्ती तथाभूतमात्मानं नावबुध्यसे ॥ २१ ॥ वर्षशतात्पर मित्युक्तभरतराज्यप्राप्तिं निराकरोति—भवितेति। राघवस्यानु राघवानन्तरम्। तस्य यः सुतः स राजा भविष्यति। परिहास्यते निर्वास्यते। गत्यर्थाद्धसे

विरोधात्। अवाप्ता अवाप्स्यति ॥ १६ ॥ सा त्वमिति। अभ्युदये रामाभिषेकरूपे प्राप्ते समासन्ने सति। कल्याणे भरताभिषेकरूपे नियतकाले न भविष्यति सति किमर्थं परितप्यसे ॥ १७ ॥ यथेति। तथापि ततोपि भरतादपि भूयः अतिशयेन राघवो मान्यः। कुतः? कौसल्यात इति ॥ १८ ॥ न केवलं वर्षशतात्पर मिदानीमपि भरतस्य राज्यमस्तीत्याह—राज्यं यदि हीति ॥ १९ ॥ २० ॥ अनर्थदर्शिनीति। शोकव्यसनविस्तीर्णे—विलापहेतुः शोकः। व्यसनं विपत् ॥ २१ ॥ श्रीरामानन्तरमपि भरतस्य राज्यं नास्तीत्याह—भवितेति। राघवो राजा भविता भविष्यति यदि तर्हि राघवस्य यः सुतः स एव राजा भविष्यतीत्यर्थः।

णिजन्तात् कर्मणि लट्॥२२॥ उक्तेऽर्थे हेतुमाह—नहीति। भामिनि कोपने! "कोपना सैव भामिनी" इत्यमरः। अनयः नीतिविरोधः॥२३॥ तस्मादिति। राज्यतन्त्राणि राज्यपरिपालनादिव्यापारान्। "तन्त्रं स्वराष्ट्रव्यापारे" इति वैजयन्ती ॥ २४ ॥ एवं राज्यभ्रंशमुक्त्वा राज्यालाभेऽपि राज्यसुखं भरतस्यास्तीति कैकेय्योक्तं परिहरति—असाविति। अत्यन्तनिर्भग्नः सुतरां प्रच्यावितः। वत्सले पुत्रवत्सले! ॥२५॥ ज्येष्ठे वर्त्तमाने भरतस्य राज्ययोग्यता

न हि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भामिनि। स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत् ॥ २३ ॥ तस्माज्ज्येष्ठे हि कैकेयि राज्यतन्त्राणि पार्थिवाः। स्थापयन्त्यनवद्याङ्गि गुणवत्स्वितरेष्वपि ॥ २४ ॥ असावत्यन्तनिर्भग्नस्तव पुत्रो भविष्यति। अनाथवत् सुखेभ्यश्च राजवंशाच्च वत्सले ॥२५॥ साहं त्वदर्थे सम्प्राप्ता त्वं तु मां नावबुध्यसे। सपतिवृद्धौ या मे त्वं प्रदेयं दातुमिच्छसि ॥२६॥ ध्रुवं तु भरतं रामः प्राप्य राज्यमकण्टकम्। देशान्तरं वा नयिता लोकान्तरमथापि वा ॥२७॥ बाल एव हि मातुल्यं भरतो नायितस्त्वया। सन्निकर्षाच्च सौहार्दं जायते स्थावरेष्वपि ॥२८॥

भावात् किंकुर्म इत्यत्राह—सेति। त्वदर्थे त्वत्पुत्रराज्यभ्रंशपरिहारकथनार्थमित्यर्थः। सपत्निवृद्धाविति "ङ्यापोः—" इतिह्रस्वः। या त्वं सपत्निवृद्धौ प्रदेयं पारितोषिकं दातुमिच्छसि सा त्वं नावबुध्यस इत्यन्वयः ॥ २६ ॥ असावत्यन्तनिर्भग्न इत्युक्तं विवृणोति—ध्रुवमित्यादिना ॥ २७ ॥ रामकर्तृकं भाव्यनिष्टं प्रदर्श्य कैकेयीकृतमप्यनर्थं दर्शयति—बाल इति। मातुल्यं मातुलसम्बन्धिगृहमित्यर्थः। नायितो हि प्रापितः खलु। अनेन का हानिरित्याशङ्क्य हानिमेव दर्शयति—सन्निकर्षादिति। स्थावरेष्वपि वृक्षगुल्मादिस्थावरेष्वपि। सन्निकर्षाच्च अत्यन्तसमीपावस्थानाच्च सौहार्दं जायते अन्योन्य

राजवंशात्परिहास्यते निर्वास्यते। भरतस्य तत्सुतानां च राज्यप्राप्तिशङ्कैव नास्तीति भावः॥ २२ ॥ ननु श्रीरामानन्तरं रामसुतानां भरतसुतानां च राज्यप्राप्तिर्भवत्वित्याशङ्क्य सर्वस्वातन्त्र्ये राज्यं शिथिलं भवेदित्याह—न हीति। अनयः राज्यशैथिल्यरूपः ॥ २३ ॥ तस्मादिति। राज्यतन्त्राणि राज्याङ्गानि हस्त्यश्वादीनि ॥ २४ ॥ असाविति। वत्सले हे पुत्रवत्सले! ॥ २५ ॥ साहमिति। या त्वं सपत्निवृद्धौ सत्यां प्रदेयं पारितोषिकं दातुमिच्छसि, ततो मां नावबुध्यस इति योजना। (अर्हसीति पाठे—अर्हेवाचरसि इच्छसीत्यर्थः)॥ २६ ॥ ध्रुवमिति। नयिता नयिष्यति ॥ २७ ॥ रामकृतं भाव्यनिष्टं प्रदर्श्य कैकेयीकृतमप्यनर्थं प्रदर्श

सत्य०—भामिनि तेजस्विनि! ॥ २३ ॥ विषम०—वत्सले सर्वत्र दयाशीले! ॥ २५ ॥ अर्हसि अर्हेवाचरसि इच्छसीत्यर्थः ॥ २६ ॥

संश्लेषरूपः सुहृद्भावो जायते । राज्ञो रामभरतादिषु किमुत तादृशसान्निकर्षस्त्वया विघटित इति भावः ॥ २८ ॥ भरतस्यासन्निधानेऽपि शत्रुघ्नसन्निधाने भरते प्रीतिः स्यात्तदपि नास्तीत्याह—भरतस्यापीति । अनुवशः विधेयः । समं भरतेन सह । अनुवशत्वमुपपादयति लक्ष्मणो हीति । हि यस्मात् रामं लक्ष्मण इवासौ शत्रुघ्नः भरतं गतः आश्रितः ॥२९॥ स्थावरेष्वपीत्युक्तमुपपादयति—श्रूयते हीति । वनजीविभिः वनोद्भूतकाष्ठजीविभिः । छेत्तव्यः प्राप्त

भरतस्याप्यनुवशः शत्रुघ्नोऽपि समागतः । लक्ष्मणो हि यथा रामं तथासौ भरतं गतः ॥ २९ ॥ श्रूयते हि द्रुमः कश्चिच्छेत्तव्यो वनजीविभिः । सन्निकर्षादिषीकाभिर्मोचितः परमाद्भयात् ॥ ३० ॥ गोप्ता हि रामं सौमित्रिर्लक्ष्मणं चापि राघवः । अश्विनोरिव सौभ्रात्रं तयोर्लोकेषु विश्रुतम् ॥ ३१ ॥ तस्मान्न लक्ष्मणे रामः पापं किंचित्करिष्यति । रामस्तु भरते पापं कुर्यादिति न संशयः ॥ ३२ ॥ तस्माद्राजगृहादेव वनं गच्छतु ते सुतः । एतद्धि रोचते मह्यं भृशं चापि हितं तव ॥ ३३ ॥ एवं ते ज्ञातिपक्षस्य श्रेयश्चैव भविष्यति । यदि चेद्भरतो धर्मात् पित्र्यं राज्यमवाप्स्यति ॥ ३४ ॥

च्छेदनकालः । कश्चित् द्रुमः तस्माच्छेदनरूपात् परमाद्भयात् । इषीकाभिः इषीकाकण्टकबहुलगुल्मैः । सन्निकर्षात् परितः परिवारणरूपात् । मोचित इति श्रूयते हि । जनपरम्परयेति शेषः । स्वयं नित्यान्तःपुरवर्त्तित्वेन तत्साक्षात्काराभावात् श्रूयत इत्युक्तिः ॥ ३० ॥ गोप्तेत्यादि । पापं वधम् ॥ ३१ ॥ ॥ ३२ ॥ तस्मादिति । तस्मात् पापकरणाद्धेतोः । राजगृहात् केकयराजगृहात् । न त्विहागत्य मर्त्तव्यमिति भावः ॥ ३३ ॥ एवमिति । धर्मात् पित्रनुमति

यति—बाल इति । मातुल्यं मातुलगृहम् । नायितः प्रापितः । अनेन का हानिरित्याशङ्क्य हानिमेव दर्शयति—सन्निकर्षादिति । स्थावरेष्वपि तृणगुल्मलतादिष्वपि, सन्निकर्षात् अत्यन्तसन्निधानात् सौहार्दं जायते अन्योन्यसंश्लेषरूपसुहृद्भावो जायते । प्राज्ञेषु रामभरतादिषु सौहार्दं किमु वक्तव्यम् । तादृशसन्निकर्षस्त्वया विघटित इति भावः ॥ २८ ॥ शत्रुघ्ने वा सन्निकृष्टे तदीयस्नेहाद्भरते रामस्य सौहार्दं भवेत्, सोऽप्यसन्निकृष्ट इत्याह—भरतस्येति । लक्ष्मणो हीति । हि यस्मात् ॥ २९ ॥ स्थावरेष्वपि सन्निकर्षाद्धेतोः सौहार्दमिति यदुक्तं तदेवोपपादयति—श्रूयते हीत्यादिना । वनजीविभिः वनोद्भूततृणकाष्ठजीविभिर्व्याधादिभिः । छेत्तव्यः कश्चिद् द्रुमः इषीकाभिः कण्टकप्रचुरवेत्रतृणलतादिभिः । सन्निकर्षाद्धेतोः परमाद्भयात् छेदनरूपभयात् । मोचितः आच्छाद्य रक्षित इति श्रूयते हीति योजना । तस्मात् सन्निकर्षो रक्षणकारणमिति तादृशसन्निकर्षस्त्वयैव परिहृत इति मघट्टिकार्थः ॥ ३०–३२ ॥ तस्मादिति । तस्मात्पापकरणाद्धेतोः राजगृहात् केकयराजगृहादेव । एतद्धीति

सत्य०—राजगृहात्—तन्नामकान्मातुलपुरात् । यद्वा ल्यब्लोपनिमित्ता पञ्चमी । अस्माद्गृहाशां परित्यज्येत्यर्थः ॥ ३३ ॥

श्रेयश्चापि भविष्यति ॥ ३४ ॥ राज्यानवाप्तावनिष्टमाह—स इति । सहजो रिपुः रूपात् । भरतो राज्यं यद्यवाप्स्यति एवं चेत्ते ज्ञातिपक्षस्य बन्धुवर्गस्य श्रेयश्चापि भविष्यति ॥ ३४ ॥ राज्यानवाप्तावनिष्टमाह—स इति । सहजो रिपुः सपत्नीपुत्रत्वात् सहजः शत्रुः, ते स बालः भरतः रामस्य वशे कथं जीविष्यति ॥ ३५ ॥ एवमनर्थपौष्कल्ये तत्परिहाराय कर्त्तव्यमाह—अभिद्रुतमिति । प्रच्छाद्यमानं अभिभूयमानम् ॥ ३६ ॥ दर्पादिति । कथं वैरं न यातयेत् वैरयातनं वैरशुद्धिः तां त्वयि दास्यापादनेन सम्पादयेदित्यर्थः ॥ ३७ ॥ उपसं

स ते सुखोचितो बालो रामस्य सहजो रिपुः । समृद्धार्थस्य नष्टार्थो जीविष्यति कथं वशे ॥ ३५ ॥ अभिद्रुतमिवारण्ये सिंहेन गजयूथपम् । प्रच्छाद्यमानं रामेण भरतं त्रातुमर्हसि ॥ ३६ ॥ दर्पान्निराकृता पूर्वं त्वया सौभाग्यवत्तया । राममाता सपत्नी ते कथं वैरं न यातयेत् ॥ ३७ ॥ यदा हि रामः पृथिवीमवाप्स्यति प्रभूतरत्नाकरशैलपत्तनाम् । तदा गमिष्यस्यशुभं पराभवं सहैव दीना भरतेन भामिनि ॥ ३८ ॥ यदा हि रामः पृथिवीमवाप्स्यति ध्रुवं प्रणष्टो भरतो भविष्यति । अतो हि सञ्चिन्तय राज्यमात्मजे परस्य चैवाद्य विवासकारणम् ॥ ३९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे अष्टमः सर्गः ॥ ८ ॥

एवमुक्ता तु कैकेयी कोपेन ज्वलितानना । दीर्घमुष्णं विनिश्वस्य मन्थरामिदमब्रवीत् ॥ १ ॥

हरति—यदेत्यादिना ॥ ३८ ॥ कैकेय्यनर्थमुक्त्वा भरतानर्थमाह—यदा हीति । राज्यं राज्यकारणम् । परस्य रामस्य ॥ ३९ ॥ इति श्रीगोविन्द० श्रीरामा० पीताम्बरा० अयोध्याकाण्ड० अष्टमः सर्गः ॥ ८ ॥ अथ रामगुणज्ञापि कैकेयी कार्यपरैर्दैवैः क्षुब्धहृदया सती मन्थरावचनमनुमोदितवतीत्याह—एव

अर्धत्रयमेकं वाक्यम् । भरतः धर्मात् राजधर्मात् पित्र्यं राज्यं यद्यवाप्स्यति एतद्धि मह्यं रोचते तवापि भृशं हितम् एवं सति ते तव ज्ञातिपक्षस्य बन्धुवर्गस्य श्रेयश्चैव भविष्यतीत्यन्वयः ॥ ३२–३५ ॥ अभिद्रुतमिति । प्रच्छाद्यमानम् आक्रम्यमाणम् ॥ ३६ ॥ दर्पादिति । सौभाग्यवत्तया पतिवाल्लभ्येन कथं वैरं न यातयेत वैरनिर्यातनं कथं न कुर्यादित्यर्थः ॥ ३७ ॥ ३८ ॥ यदेति । आत्मजे भरते । राज्यं राज्यप्राप्तिकारणम् । सञ्चिन्तयतु परस्य रामस्य विवासकारणं संचिन्तय ॥ ३९ ॥ इति श्रीमहेश्वरतीर्थविर० श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां अष्टमः सर्गः ॥ ८ ॥ एवमुक्तेति । एवमुक्ता मन्थरया पूर्वरीत्या बोधिता ॥ १ ॥

मित्यादि । कोपेन दास्यप्राप्तिश्रवणजकोपेन ॥१॥२॥ मन्थराया अतिकुशलबुद्धियोगं दृष्ट्वा तामेवोपायं पृच्छति—इदमिति । इदं प्रस्तुतकार्योपयोगिसाधनम् । सम्पश्य सञ्चिन्तय ॥ ३ ॥ एवमिति । रामार्थं रामाभिषेकरूपप्रयोजनम् ॥४॥ हन्तेति । हन्तशब्दो हर्षे वर्तते । स्वाभिमतरामविवासनपूर्वकभरताभिषेकोपायप्रश्ननिबन्धनोऽत्र हर्षः वरस्मरणहेतुको वा । मे मत्तः केवलं राज्यं कृत्स्नं राज्यं "निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः" इत्यमरः ॥५॥

अद्य राममितः क्षिप्रं वनं प्रस्थापयाम्यहम् । यौवराज्ये च भरतं क्षिप्रमेवाभिषेचये ॥ २ ॥ इदं त्विदानीं संपश्य केनोपायेन मन्थरे । भरतः प्राप्नुयाद्राज्यं न तु रामः कथञ्चन ॥ ३ ॥ एवमुक्ता तया देव्या मन्थरा पापदर्शिनी । रामार्थमुपहिंसन्ती कैकेयीमिदमब्रवीत् ॥ ४ ॥ हन्तेदानीं प्रवक्ष्यामि कैकेयि श्रूयतां च मे । यथा ते भरतो राज्यं पुत्रः प्राप्स्यति केवलम् ॥ ५ ॥ किं न स्मरसि कैकेयि स्मरन्ती वा निगूहसे । यदुच्यमानमात्मार्थं मत्तस्त्वं श्रोतुमिच्छसि ॥६॥ मयोच्यमानं यदि ते श्रोतुं छन्दो विलासिनि । श्रूयतामभिधास्यामि श्रुत्वा चापि विमृश्यताम् ॥७॥ श्रुत्वैवं वचनं तस्या मन्थरायास्तु कैकयी । किञ्चिदुत्थाय शयनात् स्वास्तीर्णादिदमब्रवीत् ॥ ८ ॥

किमिति । हे कैकेयि ! त्वं उच्यमानं त्वया बहुशः कथ्यमानं आत्मार्थं आत्मप्रयोजनं मत्तः श्रोतुमिच्छसीति यत् अतस्तन्न स्मरसि किम् स्मरन्ती वा निगूहसे किमिति योजना ॥ ६ ॥ मयेति । छन्दः अभिलाषः "छन्दः पद्येऽभिलाषे च" इत्यमरः ॥ ७ ॥ श्रुत्वेति । किञ्चिदुत्थानमादरातिशयात् ।

अद्येति । इतः नगरात् ॥ २ ॥ ३ ॥ एवमुक्तेति । रामार्थं रामाभिषेकप्रयोजनम् । उपहिंसन्ती विघातयन्ती ॥ ४ ॥ हन्तेति हर्षे । कैकेयी स्वमतानुवर्तिनी जातेति हर्षः । ते पुत्रो भरतः केवलं भरत एव यथा येनोपायेन राज्यं प्राप्स्यति तमुपायं मे मत्तः श्रूयताम्, तवोपायज्ञानाभावे मत्सकाशाच्छ्रूयतामित्यर्थः ॥ ५ ॥ किं न स्मरसीति । हे कैकेयि ! यत् यस्मात् मया उच्यमानं आत्मार्थं आत्मप्रयोजनोपायं । मत्तः मत्सकाशादेव । श्रोतुमिच्छसि अतस्तमुपायं न स्मरसि किम् ? स्मरन्ती वा निगूहसे आच्छादयसि किम् ? ॥ ६ ॥ मयेति । हे विलासिनि ! मयोच्यमानं त्वत्प्रयोजनमिति शेषः । ते छन्दः इच्छा यदि ॥ ७ ॥ ८ ॥

विषम०—त्वं प्रपश्य आलोचयेत्यर्थः । तदुपायापरिज्ञानेपि मे मत्तः श्रूयताम् ॥ ५ ॥

उत्थानहेतुर्न शय्यादोष इत्याशयेनाह—स्वास्तीर्णादिति ॥ ८ ॥ कथयेति । कथय त्वं ममोपायमित्यस्य विवरणं केनेत्यादि ॥ ९॥१० ॥ वरं स्मारयितुं पूर्वकथामाह—तवेत्यादि श्लोकद्वयमेकान्वयम् । हे कैकेयि ! देवासुरे देवासुरसम्बन्धिनि युद्धे । तव पतिः देवराजस्य साह्यकृत् साहाय्यकृत्सन् । राजर्षिभिः स्वाश्रितैः सह त्वां चोपादाय दण्डकान् प्रति दक्षिणां दिशं आस्थाय प्राप्य । यत्र तिमिध्वजो वर्तते तद्वैजयन्ताख्यं पुरमगच्छदिति सम्बन्धः ॥ ११ ॥१२ ॥

कथय त्वं ममोपायं केनोपायेन मन्थरे । भरतः प्राप्नुयाद्राज्यं न तु रामः कथञ्चन ॥ ९ ॥ एवमुक्ता तया देव्या मन्थरा पापदर्शिनी । रामार्थमुपहिंसन्ती कुब्जा वचनमब्रवीत् ॥ १० ॥ तव देवासुरे युद्धे सह राजर्षिभिः पतिः । अगच्छत्त्वामुपादाय देवराजस्य साह्यकृत् ॥११॥ दिशमास्थाय वै देवि दक्षिणां दण्डकान् प्रति । वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः ॥ १२ ॥ स शम्बर इति ख्यातः शतमायो महासुरः । ददौ शक्रस्य सङ्ग्रामं देवसङ्घैरनिर्जितः ॥ १३ ॥ तस्मिन् महति सङ्ग्रामे पुरुषान् क्षतविक्षतान् । रात्रौ प्रसुप्तान् घ्नन्ति स्म तरसासाद्य राक्षसाः ॥ १४ ॥ तत्राकरोन्महद्युद्धं राजा दशरथस्तदा । असुरैश्च महाबाहुः शस्त्रैश्च शकलीकृतः ॥१५॥ अपवाह्य त्वया दवि सङ्ग्रामान्नष्टचेतनः । तत्रापि विक्षितः शस्त्रैः पतिस्ते रक्षितस्त्वया ॥ १६ ॥

कस्तिमिध्वजः स कीदृशः स कमपराधं कृतवानित्यत्राह—स इति । देवसङ्घैः अनिर्जितः देवसङ्घान् पराभूय शक्राय युद्धं ददावित्यर्थः ॥ १३ ॥ तस्मिन्निति । क्षताः बाणशूलादिभिः सञ्जातव्रणाः, विक्षताः खड्गपरशुपट्टिशादिभिर्विविधं प्रहृताः तान् रात्रौ सुप्तान् । घ्नन्ति स्मेत्यभिधानात् पुरुषाणां क्षतविक्षतत्वं दिवायुद्धकृतमित्यवगम्यते । राक्षसाः असुराः ॥१४ ॥ तत्रेति । तत्र प्रसुप्तप्रदेशे । तदा रात्रौ ॥१५॥ अपवाह्येति । हे देवि ! नष्टचेतनः मूर्च्छितः ।

महोपायम् अमोघोपायम् ( महोपायमिति पाठः ) वरं स्मारयितुं पूर्वकथामाह—तवेति । श्लोकद्वयमेकं वाक्यम् । हे देवि ! तव पतिः देवासुरे युद्धे देवराजस्य साह्यकृत् सहायभूतस्सन् त्वामुपादाय दक्षिणां दिशमास्थाय आश्रित्य स्थितान् दण्डकान् प्रति अगच्छत् वैजयन्तं पुरं चागच्छत् । तिमिध्वजः शम्बरः ॥ ९–१२ ॥ स इति । सुरैरनिर्जितः देवसङ्घैः सहितस्य शक्रस्य संग्रामं ददौ॥ १३ ॥ तस्मिन्निति । क्षतविक्षतान्-क्षताः शूलादिभिः सञ्जातव्रणाः, विक्षताः खड्गपरशुपट्टसादिभिः विविधं प्रहृताः तान्, रात्रौ प्रसुप्तान् । घ्नन्ति स्मेत्यनेन पुरुषाणां क्षतविक्षतत्वं दिवायुद्धकृतमित्यवगम्यते॥१४॥ तत्रेति । तत्र सुप्तप्रदेशे । तदा प्रहारकाले॥१५॥अपवाह्येति ।

ते पतिः त्वया सारथ्यं कुर्वाणया सङ्ग्रामात्। अपवाह्य अन्यत्र नीत्वा। रक्षितः शीतोपचारैराप्यायितः। तत्र यत्रापवाहितस्तस्मिन् स्थले। शस्त्रैर्विक्षतः पुनर्युद्धे शस्त्रैः विक्षतः सन् त्वया रक्षितः। ततोऽपवाह्य रक्षित इति योजना ॥१६॥ तुष्टेनेत्यर्द्धमेकं वाक्यम्। द्विधा रक्षणात् द्वौ वरौ दत्ताविति भावः ॥ १७ ॥ स इति। इच्छेयमित्यर्हार्थे लिङ्। तेन दशरथेन। तत् वरं तथा इच्छया ददानीत्युक्तम् ॥ १८ ॥ कथमिदं त्वया ज्ञातमित्यत्राह—अनभि



तुष्टेन तेन दत्तौ ते द्वौ वरौ शुभदर्शने ॥ १७ ॥ स त्वयोक्तः पतिर्देवि यदेच्छेयं तदा वरौ। गृह्णीयामिति तत्तेन तथेत्युक्तं महात्मना ॥ १८ ॥ अनभिज्ञा ह्यहं देवि त्वयैव कथिता पुरा। कथैषा तव तु स्नेहान्मनसा धार्यते मया ॥ १९ ॥ रामाभिषेकसम्भारान्निगृह्य च निवर्तय। तौ वरौ याच भर्तारं भरतस्याभिषेचनम्। प्रव्राजनं तु रामस्य त्वं वर्षाणि चतुर्दश ॥ २० ॥ चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम्। प्रजाभावगतस्नेहः स्थिरः पुत्रो भविष्यति ॥ २१ ॥ क्रोधागारं प्रविश्याद्य क्रुद्धेवाश्वपतेः सुते। शेष्वानन्तर्हितायां त्वं भूमौ मलिनवासिनी ॥२२॥ मा स्मैनं प्रत्युदीक्षेथा मा चैनमभिभाषथाः। रुदन्ती चापि तं दृष्ट्वा जगत्यां शोकलालसा ॥ २३ ॥

ज्ञेति ॥ १९ ॥ रामाभिषेकेत्यादिसार्धश्लोक एकान्वयः। निगृह्य बलात्कृत्य, भर्तारमितिशेषः। रामप्रव्राजनभरताभिषेचनरूपौ तौ वरौ याचस्व ॥ २० ॥ चतुर्दशसङ्ख्या किमर्थेत्यत्राह—चतुर्दशेति। प्रजाभावगतस्नेहः प्रजानां भावं अभिप्रायं गतः प्राप्तः स्नेहो यस्य स तथोक्तः। स्थिरः अप्रकम्प्यः ॥२१॥ एवमुपायमुपदिश्य उपायप्रवर्त्तनप्रकारमाह—क्रोधेति। प्रणयकलहादिना क्रुद्धाः स्त्रियो यत्र वसन्ति तत् क्रोधागारम्। अनन्तर्हितायां अनास्तृतायाम् ॥२२॥ मा स्मेति। तं दृष्ट्वा रुदन्ती शोकलालसा च सती एनं मा प्रत्युदीक्षेथाः मा चैनमभिभाषथा इत्यन्वयः। जगत्यां भूमौ, शयानेति शेषः ॥२३॥

नष्टचेतनः मूर्च्छितः। त्वया सारथ्यं कुर्वाणया। अपवाह्य अन्यत्र नीत्वा रक्षितः, तत्रापि तस्मिन् स्थले। शस्त्रैर्विक्षतः पुनर्युद्धे विशेषेण त्वया रक्षित इत्यन्वयः। तत्रापि रक्षित इत्यनेन ततोप्यन्यत्र नीत्वा रक्षित इति ॥ १६–२० ॥ चतुर्दशेति। प्रजाभावगतस्नेहः–प्रजानां भावगतः हृदयगतः स्नेहः स्वविषयक स्नेहः यस्मिन् स तथोक्तः। स्थिरः अप्रकम्प्यः भविष्यति ॥ २१ ॥ क्रोधागारं क्रुद्धाः स्त्रियो यत्र शेरते तत्क्रोधागारम्। मलिनवासिनी मलिनवस्त्रधरा सती अनन्तर्हितायाम् अनावृतायां भूमौ शेष्व शयिता भव ॥ २२ ॥ मा स्मैनमिति। एनं दशरथं मा प्रत्युदीक्षेथाः, न पश्येदित्यर्थः। माभिभाषेथाः सम्भाषणं न कुरु।

एवंकरणे झटिति कार्यसिद्धिर्भविष्यतीत्याह–दयितेति । अत्र दयितात्वविषये । त्वत्कृते त्वत्प्रीतिनिमित्तम् ॥२४॥२५॥ नेति । मन्दस्वभावे अलसस्वभावे ! सौभाग्यबलं सौन्दर्यबलम् ॥ २६ ॥ वरदानव्यतिरिक्तं मण्यादिकं च न स्वीकुर्वित्याह–मणीति । मणयः रत्नानि मुक्ताश्चेत्येकवद्भावः । मणिमुक्तं

दयिता त्वं सदा भर्त्तुरत्र मे नास्ति संशयः । त्वत्कृते स महाराजो विशेदपि हुताशनम् ॥ २४ ॥ न त्वां क्रोधयितुं शक्तो न क्रुद्धां प्रत्युदीक्षितुम् । तव प्रियार्थं राजा हि प्राणानपि परित्यजेत् ॥ २५ ॥ न ह्यतिक्रमितुं शक्तस्तव वाक्यं महीपतिः । मन्दस्वभावे बुध्यस्व सौभाग्यबलमात्मनः ॥ २६ ॥ मणिमुक्तं सुवर्णानि रत्नानि विविधानि च । दद्याद्दशरथो राजा मा स्म तेषु मनः कृथाः ॥ २७ ॥ यौ तौ दैवासुरे युद्धे वरौ दशरथोऽददात् । तौ स्मारय महाभागे सोऽर्थो मा त्वामतिक्रमेत् ॥ २८ ॥ यदा तु ते वरं दद्यात् स्वयमुत्थाप्य राघवः । व्यवस्थाप्य महाराजं त्वमिमं वृणुया वरम् ॥२९॥ रामं प्रव्राजयारण्ये नव वर्षाणि पञ्च च । भरतः क्रियतां राजा पृथिव्याः पार्थिवर्षभः ॥ ३० ॥ चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम् । रूढश्च कृतमूलश्च शेषं स्थास्यति ते सुतः ॥ ३१ ॥

रत्नानि श्रेष्ठवस्तूनि " रत्नं स्वजातिश्रेष्ठेऽपि " इत्यमरः ॥ २७ ॥ यौ ताविति । यत्तच्छब्दप्रयोगः प्रसिद्ध्यतिशयद्योतनार्थः । तौ स्मारय दातव्यत्वेनेतिशेषः । सोऽर्थः रामविवासनभरताभिषेकरूपार्थः । मातिक्रमेत् सर्वथा सिद्ध्यत्येवेत्यर्थः । राज्ञः सत्यप्रतिज्ञत्वादिति भावः ॥ २८ ॥ यदेति । राघवः दशरथः व्यवस्थाप्य सत्ये स्थापयित्वा ॥ २९ ॥ ३० ॥ चतुर्दशेति । रूढः प्रसिद्धः अभिवृद्धो वा, कृतमूलः स्ववशीकृतमूलबल इत्यर्थः । शेषं

जगत्यां भूमौ शोकलालसा तं भर्तारं दृष्ट्वा रुदन्ती भवेति शेषः ॥ २३ ॥ यद्येवं क्रियते तर्हि मम भर्तृपरित्यागरूपोऽनर्थ एव स्यादित्यत आह–दयितेति । सदा सर्वावस्थास्वपि । अत्र अस्मिन्नर्थे ॥ २४–२७ ॥ यौ ताविति । अददादिति छेदः । सोऽर्थ इति छेदः । सोर्थो मा त्वामतिक्रमेत् अस्मच्चिन्तितार्थः । रामविवासनभरताभिषेकरूपोऽर्थः त्वां मातिक्रमेत् मातिक्रमतु, दशरथेन मणिरत्नादिना लोभिता सती प्रक्रान्तं कार्यं ( मध्ये ) न परित्यक्तुमर्हसीति भावः ॥ २८ ॥ यदा त्विति । राघवः दशरथः उत्थाप्य त्वामिति शेषः । ते तुभ्यं वरं दद्याद्यदि तदा महाराजं दशरथं व्यवस्थाप्य सत्ये स्थापयित्वा ॥ २९ ॥ वरमभिनीय दर्शयति–राममिति । अत्र श्लोक इतिकरणं द्रष्टव्यम् । तथा च इति वरं वृणुया इति पूर्वेणान्वयः ॥ ३० ॥ चतुर्दशेति । रूढः लब्धप्रतिष्ठः । कृतमूलः वशीकृतमूलबलः । शेषं चतुर्दश

चतुर्दशवर्षव्यतिरिक्तं पुरुषायुषशेषम् ॥ ३१ ॥ रामप्रव्राजनमिति । रामप्रव्राजनं चेति चकारेण भरताभिषेकः समुच्चीयते ॥३२॥ एवमिति । रामोराम इत्यत्र अराम इति पदच्छेदः । अरामो भविष्यति । इदानीमेव प्रकृतिस्नेहपात्रं न भविष्यतीत्यर्थः । यद्वा रामो भविष्यति एक एव भविष्यतीत्यर्थः ॥ ३३ ॥ येनेति । कृतमूलः रूढमूलः । कृतमूल इत्यस्यैव विवरणं संगृहीतेत्यर्धम् । संगृहीतमनुष्यश्चेत्यत्र भविष्यतीत्यनुषज्यते । संगृहीताः अनु

रामप्रव्राजनं चैव देवि याचस्व तं वरम् । एवं सिद्ध्यन्ति पुत्रस्य सर्वार्थास्तव भामिनि ॥ ३२ ॥ एव प्रव्राजितश्चैव रामोऽरामो भविष्यति । भरतश्च हतामित्रस्तव राजा भविष्यति ॥ ३३ ॥ येन कालेन रामश्च वनात्प्रत्यागमिष्यति । तेन कालेन पुत्रस्ते कृतमूलो भविष्यति । संगृहीतमनुष्यश्च सुहृद्भिः सार्द्धमात्मवान् ॥ ३४ ॥ प्राप्तकालं तु ते मन्ये राजानं वीतसाध्वसा । रामाभिषेकसम्भारान्निगृह्य विनिवर्त्तय ॥ ३५ ॥ अनर्थमर्थरूपेण ग्राहिता सा ततस्तया । हृष्टा प्रतीता कैकेयी मन्थरामिदमब्रवीत् ॥ ३६ ॥ सा हि वाक्येन कुब्जायाः किशोरीवोत्पथङ्गता । कैकेयी विस्मयं प्राप्ता परं परमदर्शना ॥ ३७ ॥

रञ्जिताः । मनुष्याः पौरजानपदाः येन स तथोक्तः। तत्र हेतुरात्मवानिति ॥३४॥ प्राप्तकालमिति । प्राप्तकालम् अभिमतप्रार्थनोचितकालम् । वीतसाध्वसा विगतभया । अमुं कालं प्राप्तकालं मन्ये तेन विनिवर्तयेति सम्बन्धः ॥३५॥ अनर्थमिति । अनर्थं विरुद्धार्थम् । अर्थरूपेण अनुकूलार्थरूपेण । ग्राहिता बोधिता तथैव प्रतीता ज्ञातवती, अतएव हृष्टा सेति प्रतीतेत्यस्योपपादनमेतत् । किशोरी वडवा । उत्पथं अमार्गम् । परमदर्शना, पुरेतिशेषः ॥३६॥ ३७॥

वर्षव्यतिरिक्तपुरुषायुषकालम् । अतः पुनरागमनेपि न रामस्य राज्याशेति तात्पर्यम् ॥ ३१ ॥ ३२ ॥ एवमिति । रामोऽरामो भविष्यतीति स्वयमेक एव भविष्यति । रमयत्यानन्दयतीति रामः । मुनीनामिति शेषः ॥ ३३ ॥ येनेति सार्धश्लोकमेकं वाक्यम् । तेन कालेन चतुर्दशसंवत्सरात्मकेन कालेन । ते तव पुत्रः संगृहीतमनुष्यस्सन् सुहृद्भिस्सार्द्धं कृतमूलो भविष्यतीत्यन्वयः ॥ ३४ ॥ प्राप्तकालमिति । वीतसाध्वसा त्यक्तभया सती त्वं राजानं निगृह्य निर्बन्धेन स्वाधीनं कृत्वा रामाभिषेकसम्भारान्निवर्तय, एतन्निवर्तनं प्राप्तकालं मन्य इत्यर्थः । अभिषेकसम्भारनिवर्तनस्यायमेव काल इत्यर्थः ॥ ३५ ॥ अनर्थमित्यादि श्लोकद्वयमेकान्वयम् । अनर्थं रामविवासनरूपम्, वस्तुतः स्वस्यैव प्रतिकूलमित्यर्थः। अर्थरूपेण अनुकूलार्थरूपेण । ग्राहिता प्रतिबोधिता । प्रतीता तथैव गृहीतार्था, अत एव हृष्टा॥३६॥ सेति।

कुब्ज इति । नाभिजानामीति, एतावत्कालमितिशेषः । पृथिव्यां यावत्यः कुब्जाः सन्ति तासां सर्वासां मध्ये त्वमुत्तमा बुद्धिनिश्चये विषये । अनेन कुब्जानां प्रायेण बुद्धितैक्ष्ण्यमस्तीति द्योतितम् ॥३८॥ त्वमेवेति । समवबुद्ध्येयमिति शाकि लिङ् ॥३९॥ सन्तीति । दुस्संस्थिताः दुःसन्निवेशाः ॥४०॥

कुब्जे त्वां नाभिजानामि श्रेष्ठां श्रेष्ठाभिधायिनीम् । पृथिव्यामसि कुब्जानामुत्तमा बुद्धिनिश्चये ॥ ३८ ॥ त्वमेव तु ममार्थेषु नित्ययुक्ता हितैषिणी । नाहं समवबुद्ध्येयं कुब्जे राज्ञः चिकीर्षितम् ॥ ३९ ॥ सन्ति दुस्संस्थिताः कुब्जा वक्राः परमपापिकाः । त्वं पद्ममिव वातेन सन्नता प्रियदर्शना ॥ ४० ॥ उरस्तेऽभिनिविष्टं वै यावत्स्कन्धात् समुन्नतम् । अधस्ताच्चोदरं शातं सुनाभमिव लज्जितम् ॥ ४१ ॥ परिपूर्णं तु जघनं सुपीनौ च पयोधरौ । विमलेन्दुसमं वक्त्रमहो राजसि मन्थरे ॥ ४२ ॥ जघनं तव निर्घुष्टं रशनादामशोभितम् । जङ्घे भृशमुपन्यस्ते पादौ चाप्यायतावुभौ ॥४३॥ त्वमायताभ्यां सक्थिभ्यां मन्थरे क्षौमवासिनी । अग्रतो मम गच्छन्ती राजहंसीव राजसे॥४४॥

उर इति । ते उरः अभिनिविष्टं अभिनिवेशवत् सत् स्कन्धाभ्यां स्पर्द्धमानं सत् यावत्स्कन्धात् स्कन्धपर्यन्तं समुन्नतमित्युत्प्रेक्षा । अधस्तात् उरसोऽधस्तात् स्थितं सुनाभं शोभननाभि । योगविभागादच् । उदरं उरसः सजातीयस्य उन्नतिं दृष्ट्वा लज्जितामिव शातं कृशम् ॥४१॥ परिपूर्णमिति । परिपूर्णं पृथुलम् ॥ ४२ ॥ जघनमिति । उपन्यस्ते संश्लिष्टे सुसन्निवेशे वा । आयतौ दीर्घौ ॥४३॥ त्वमिति । सक्थिभ्यां ऊरुभ्यां "सक्थि क्लीबे पुमानूरुः"

उत्पथं गता अमार्गं गता किशोरी बडवा, परमदर्शना सुन्दरी । यद्वा परम् अत्यन्तम् अदर्शना विरुद्धदर्शना परं विस्मयं प्राप्ता कैकेयी मन्थरामब्रवीदिति सम्बन्धः ॥ ३७ ॥ कुब्ज इति । श्रेष्ठाभिधायिनीं श्रेष्ठवचनमभिदधाति वक्तीति तथा, हितोपदेशं कुर्वन्तीमित्यर्थः । श्रेष्ठां त्वां नाभिजानामि । श्रेष्ठत्वमेवाह पृथिव्यामिति । बुद्धिनिश्चये उत्तमासि ॥ ३८ ॥ मम हिताचरणेनापि तवोत्तमत्वमित्याह त्वमेवेति । हितैषिणी, भवसीति शेषः । राज्ञः चिकीर्षितं कर्तुमिष्टं रामाभिषेकम् ॥ ३९ ॥ सन्तीति । दुस्संस्थिताः दुष्टावयवसंस्थानाविशेषयुक्ताः त्वं प्रियदर्शना सुन्दरी, त्वं पद्ममिव वातेन सन्नता नम्रासि, यथा सहजसुन्दरं पद्मं वातेन नम्रमपि न निन्द्यते तथा वातोद्रेकात् वक्रतामापन्नापि त्वं न निन्द्यासीति भावः ॥ ४०॥ उर इति । उरः वक्षः । अभिनिविष्टम् अभितः पार्श्वयोर्निविष्टम् । समसन्निवेशम् यावत्संस्थानम्, मध्य इति यावत् । विभक्त्यर्थेऽव्ययीभावः । यावत्स्कन्धात्समुन्नतमिति पाठे–यावत्स्कन्धात् स्कन्धपर्यन्तम् । समुन्नतम् उच्छ्रितम् । अधस्तात् वक्षसोऽधःप्रदेशे स्थितमिति शेषः । सुनाभं शोभननाभि, उदरं च लज्जितमिव शातम्, उरस उन्नतिं दृष्ट्वा व्रीडितमिव कृशमित्यर्थः । अधस्ताच्चैव संशातमिति पाठे–सुनाभशब्देनोदरमुच्यते ॥ ४१ ॥४२॥ जघनमिति । रशनादामशोभितं सत् निर्घुष्टं शब्दायमानम्, उपन्यस्ते समीचीनावयवसंस्थानयुक्ते ॥४३॥ त्वमिति ।

इत्यमरः । उपलक्षणे तृतीया ॥ ४४ ॥ आसन्निति । अन्याः लौकिक्यः मायाः ॥ ४५ ॥ तवेति । स्थगु उरोनिस्सृतोन्नतविकृतावयवविशेषः । रथघोणं नासिकाकाररथावयवविशेषः । " स्मृतिर्व्यतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकालिकी मता ॥ " इत्युक्तविषयविभागेन

आसन् याः शम्बरे मायाः सहस्रमसुराधिपे । सर्वास्त्वयि निविष्टास्ता भूयश्चान्याः सहस्रशः ॥ ४५ ॥ तवेदं स्थगु यद्दीर्घं रथघोणमिवायतम् । मतयः क्षत्रविद्याश्च मायाश्चात्र वसन्ति ते ॥ ४६ ॥ अत्र ते प्रतिमोक्ष्यामि मालां कुब्जे हिरण्मयीम् । अभिषिक्ते च भरते राघवे च वनं गते ॥४७॥ जात्येन च सुवर्णेन सुनिष्टप्तेन मन्थरे । लब्धार्था च प्रतीता च लेपयिष्यामि ते स्थगु ॥ ४८ ॥ मुखे च तिलकं चित्रं जातरूपमयं शुभम् । कारयिष्यामि ते कुब्जे शुभान्याभरणानि च ॥ ४९ ॥ परिधाय शुभे वस्त्रे देवतेव चरिष्यसि ॥ ५० ॥ चन्द्रमाह्वयमानेन मुखेनाप्रतिमानना । गमिष्यसि गतिं मुख्यां गर्वयन्ती द्विषज्जनम् ॥ ५१ ॥

मतेर्बाहुल्यम् । क्षत्रविद्याः राजनीतयः । मायाः विचित्रकुत्सितशक्तयः । अत्र स्थगुनि ॥४६॥४७॥ जात्येनेति । उत्तमस्वर्णजातौ भवं जात्यम् । दिगादित्वात् यत् । सुनिष्टप्तेन सुद्रुतेन सुवर्णेन । लेपयिष्यामि सुवर्णकञ्चुकेनालङ्करिष्यामीत्यर्थः । यद्वा चन्दनसंघृष्टसुवर्णेन सह लेपयिष्यामीत्यर्थः । प्रतीता सन्तुष्टा ॥ ४८ ॥ मुख इति । जातरूपमयं सुवर्णमयम् । चित्रं नानारत्नखचिततया नानावर्णम् । तिलकं तिलकाकारं भूषणम् ॥४९॥५०॥ चन्द्रमिति ।

आयताभ्यां सक्थिभ्यामूरुभ्याम् ॥ ४४ ॥ ४५ ॥ तवेति । स्थगु विस्तृतोन्नतावयवसंनिवेशम्, वक्ष इत्यर्थः । रथघोणं चक्ररन्ध्रसमीपोन्नतप्रदेशः, तद्वदायतम् । पार्श्वयोः समसंनिवेशः मध्ये उन्नतो लोकविलक्षणो वक्षोविशेषः स्थगुशब्दार्थः । ततः किमत आह मतय इति । मतयः " स्मृतिर्व्यतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकालिकी मता ॥ " इत्युक्तविषयविभागेन मतेर्बाहुल्यम् । क्षत्रविद्या राजनीतयः, मायाः विचित्रकुत्सितशक्तयः । अत्र स्थगुनि । वसन्ति तिष्ठन्ति ॥ ४६ ॥ अत्रेति । अत्र ते तव स्थगुनि मालां प्रतिमोक्ष्यामि स्थापयामि ॥ ४७ ॥ किञ्च जात्येनेति । लब्धार्था प्राप्तमनोरथा प्रतीता संतुष्टा जात्येन शुद्धेन सुवर्णेनालंकृतं ते स्थगु चन्दनादिना लेपयिष्यामीत्यर्थः । जात्येन जातौ भवं जात्यम् । तेन सुवर्णेन लेपयिष्यामि, उत्तमसुवर्णकृतेन कञ्चुकेनालङ्करिष्यामीति वार्थः । चन्दनसंघृष्टसुवर्णेन लेपयिष्यामीति वार्थः । जात्यसुनिष्टप्तसुवर्णकृतभूषणेन लेपयिष्यामि गुप्तं करिष्यामीति वार्थः । तथाविधसुवर्णसदृशचन्दनादिना लेपयिष्यामीतिवार्थः ॥ ४८–५० ॥ चन्द्रमिति । चन्द्रमाह्वयमानेन चन्द्रं मुहुः स्पर्द्धमानेन द्विषज्जने गर्वं कुर्वन्ती मुख्यां गतिं गमि

आह्वयमानेन स्पर्द्धमानेन "स्पर्द्धायामाङः" इत्यात्मनेपदम् । मुखेन हेतुना अप्रतिमानना अप्रतिद्वन्द्वमुखी । द्विषज्जनं मत्सपत्नीजनं प्रति । गर्वयन्ती गर्वं कुर्वन्ती । गर्वशब्दात्तत्करोतीति ण्यन्तात् शत्रादि । स्वार्थे णिजित्येके । मुख्यां तृणीकृतसर्वजनाम् । गतिं पादन्यासविशेषम् । गमिष्यसि करिष्यसि ।

तवापि कुब्जाः कुब्जायाः सर्वाभरणभूषिताः । पादौ परिचरिष्यन्ति यथैव त्वं सदा मम ॥ ५२ ॥ इति प्रशस्यमाना सा कैकेयीमिदमब्रवीत् । शयानां शयने शुभ्रे वेद्यामग्निशिखामिव ॥ ५३ ॥ गतोदके सेतुबन्धो न कल्याणि विधीयते । उत्तिष्ठ कुरु कल्याणि राजानमनुदर्शय ॥ ५४ ॥ तथा प्रोत्साहिता देवी गत्वा मन्थरया सह । क्रोधागारं विशालाक्षी सौभाग्यमदगर्विता ॥ ५५ ॥ अनेकशतसाहस्रं मुक्ताहारं वराङ्गना । अवमुच्य वरार्हाणि शुभान्याभरणानि च ॥ ५६ ॥ ततो हेमोपमा तत्र कुब्जावाक्यवशं गता । संविश्य भूमौ कैकेयी मन्थरामिदमब्रवीत् ॥ ५७ ॥ इह वा मां मृतां कुब्जे नृपायावेदयिष्यसि । वनं तु राघवे प्राप्ते भरतः प्राप्स्यति क्षितिम् ॥ ५८ ॥ न सुवर्णेन मे ह्यर्थो न रत्नैर्न च भूषणैः । एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ ५९ ॥ अथो पुनस्तां महिषीं महीक्षितो वचोभिरत्यर्थमहापराक्रमैः । उवाच कुब्जा भरतस्य मातरं हितं वचो राममुपेत्य चाहितम् ॥ ६० ॥

ओदनपाकं पचतीतिवन्निर्देशः ॥ ५१-५२ ॥ गतोदक इति । हे कल्याणि ! कुरु मदुक्तप्रकारमितिशेषः । राजानमनुदर्शय, क्रोधागारमितिशेषः । यद्वा अनुदर्शय प्रतीक्षस्वेत्यर्थः ॥ ५४ ॥ तथा प्रोत्साहितेत्यादि श्लोकत्रयमेकान्वयम् । अनेकशतसाहस्रं बहुमूल्यमिति यावत् "शतमानविंशतिक-" इत्यादिना क्रीतार्थेऽण् ॥ ५५-५७ ॥ इहेति । नृपाय मदुपेक्षकाय ॥ ५८ ॥ ५९ ॥ कैकेयीनिश्चयं द्रढयति-अथो इति । राममुपेत्य राममुद्दिश्य ॥ ६० ॥ ६१ ॥

प्यसि ॥ ५१-५३ ॥ एवं वृथाजल्पेन कालात्ययो मास्त्विति त्वरयति गतेत्यादि । रामाभिषेकानन्तरं वरग्रहणं व्यर्थमित्यर्थः । राजानमनुदर्शय, राजागमनं प्रतीक्षस्वेत्यर्थः । यद्वा राजानमनुदर्शय क्रोधागारमिति शेषः ॥ ५४ ॥ ५५ ॥ अनेकशतसाहस्रं बहुमूल्यम् अवमुच्य त्यक्त्वा ॥ ५६ ॥ हेमोपमा सुवर्णाङ्गी ॥ ५७ ॥ इहेति । हे कुब्जे ! राघवे वनं प्राप्ते सति भरतः क्षितिं प्राप्स्यतीति नृपाय केकयराजाय आवेदयिष्यसि नो चेदिति शेषः । मामिह क्रोधागारे मृतां सतीं वा केकयराजायावेदयिष्यसि । यद्वा मदुपेक्षकाय दशरथायावेदयिष्यसि । यदि मे सांत्वना तदा राघवे वनं प्राप्ते भरतः क्षितिं प्राप्स्यति नतु पक्षान्तरमित्यर्थः ॥ ५८ ॥ ५९ ॥

तथेति । अतिविद्धा अतिदुःखिता निधाय हस्तौ हृदय इति विस्मयाभिनयः । अतिविस्मिता अतिस्निग्धा । कथं मदनिष्टं करिष्यतीति । कुपिता रामाभिषेकप्रवर्त्तकं भर्त्तारमुद्दिश्य कुपितेत्यर्थः ॥ ६२ ॥ ६३ ॥ अहमिति । इतो गच्छतीति वर्तमानसामीप्ये लट् ॥ ६४ ॥ अथेति । मेदिनीमधिशिश्ये

प्रपत्स्यते राज्यमिदं हि राघवो यदि ध्रुवं त्वं ससुता च तप्स्यसे। अतो हि कल्याणि यतस्व तत्तथा यथा सुतस्ते भरतोऽभिषेक्ष्यते ॥ ६१ ॥ तथातिविद्धा महिषी तु कुब्जया समाहता वागिषुभिर्मुहुर्मुहुः । निधाय हस्तौ हृदयेऽतिविस्मिता शशंस कुब्जां कुपिता पुनः पुनः ॥६२॥ यमस्य वा मां विषयं गतामितो निशाम्य कुब्जे प्रतिवेदयिष्यसि। वनं गते वा सुचिराय राघवे समृद्धकामो भरतो भविष्यति ॥ ६३ ॥ अहं हि नैवास्तरणानि न स्रजो न चन्दनं नाञ्जनपानभोजनम्। न किञ्चिदिच्छामि न चेह जीवितं न चेदितो गच्छति राघवो वनम् ॥ ६४ ॥ अथैतदुक्त्वा वचनं सुदारुणं निधाय सर्वाभरणानि भामिनी । असंवृतामास्तरणेन मेदिनीं तदाधिशिश्ये पतितेव किन्नरी ॥ ६५ ॥ उदीर्णसंरम्भतमोवृताननना तथावमुक्तोत्तममाल्यभूषणा। नरेन्द्रपत्नी विमला बभूव सा तमोवृता द्यौरिव मग्नतारका ॥ ६६॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे नवमः सर्गः ॥ ९ ॥

"अधिशीङ्स्थासां कर्म" इतिसप्तम्यर्थे द्वितीया ॥६५॥ उदीर्णेति। उदीर्णः उत्कटः संरम्भः कोपः स एव तमः तेन वृतानना। विमला पूर्वं विमला। तमोवृता नीलाभ्रयुक्ततमोवृता। मग्नतारका अस्तमिततारका ॥६६॥ इति श्रीगो०श्रीरामायणभूषणे पीता०अयोध्याकाण्डव्याख्याने नवमः सर्गः ॥९॥

अथो इति । अत्यर्थमहापराक्रमैः महाक्रूरैर्वचोभिरुपलक्षिता ॥६० ॥ ६१॥ तथेति । कुपिता, राजानं प्रतीति शेषः। अतिविद्धा संतप्ता मुहुर्मुहुः समाहता पीडिता शशंस उवाचेत्यर्थः ॥ ६२ ॥ यमस्येति। अत्र श्लोके इतिपदं केकयराजायेति पदं वा दशरथायेति पदं वा अध्याहार्यम् ॥ ६३ ॥ अहमिति । नाञ्जनपानभोजनमित्यत्रैकवद्भावः । आस्तरणानि चित्रकम्बलादीनि ॥ ६४ ॥ अथेति । अथ मन्थरासमीपे प्रतिज्ञानन्तरम् सर्वाभरणानि निधाय निक्षिप्य, भूमाविति शेषः । पुण्यक्षयात् भूमौ पतिता किन्नरीव मेदिनीं मेदिन्याम् अधिशिश्ये । सप्तम्यर्थे द्वितीया । असंवृतां मृदुतल्पादिना अनाच्छादिताम् ॥ ६५ ॥ उदीर्णेति । तदा शयनकाले, उदीर्णः उद्रिक्तसंरम्भः क्रोध एव तमः तेन वृतमाननं यस्यास्सा तथोक्ता, विमनाः दुर्मनाः मग्नतारका अस्तमिततारका द्यौः आकाशमिव स्थिता ॥ ६६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां नवमः सर्गः ॥ ९ ॥

अथ पूर्वोक्तं कैकेयीक्रोधमविचाल्यत्वसूचनायानुवदन् राज्ञः कैकेयीदर्शनानुनयौ दर्शयति—विदर्शितेति । विदर्शिता विपरीतं बोधिता । दिग्धविद्धा विषलिप्तबाणेन प्रहृता । "विषाक्ते दिग्धलिप्तकौ" इत्यमरः ॥ १ ॥ निश्चित्येति । सा कैकेयी कृत्यं कर्तव्यं पुरोक्तरीत्या मनसा निश्चित्य । सर्वं त्वदुक्तं सम्यगिति मन्थरायै आचचक्षेतिसम्बन्धः ॥ २ ॥ सा दीनेत्यर्धत्रयमेकं वाक्यम् । दीना अत्र स्वोद्योगः फलिष्यति

विदर्शिता यदा देवी कुब्जया पापया भृशम् । तदा शेते स्म सा भूमौ दिग्धविद्धेव किन्नरी ॥ १ ॥ निश्चित्य मनसा कृत्यं सा सम्यगिति भामिनी । मन्थरायै शनैः सर्वमाचचक्षे विचक्षणा ॥ २ ॥ सा दीना निश्चयं कृत्वा मन्थरा-वाक्यमोहिता । नागकन्येव निश्वस्य दीर्घमुष्णं च भामिनी । मुहूर्तं चिन्तयामास मार्गमात्मसुखावहम् ॥ ३ ॥ सा सुहृच्चार्थकामा च तन्निशम्य सुनिश्चयम् । बभूव परमप्रीता सिद्धिं प्राप्येव मन्थरा ॥ ४ ॥ अथ सा मर्षिता देवी सम्यक् कृत्वा विनिश्चयम् । संविवेशाबला भूमौ निवेश्य भ्रुकुटीं मुखे ॥ ५ ॥

नवेति शङ्कया दीना । मार्गं उपायम् । एतदर्धत्रयं निश्चित्येति पूर्वश्लोकात् पूर्वमेव निवेशनीयम् । अर्थसङ्गतिस्वारस्यात् ॥ ३ ॥ सेति । तं निश्चयं 'इह वा मां मृताम्' इत्यादिना पूर्वसर्गान्तोक्तनिश्चयम् । निशम्य श्रुत्वा । सिद्धिं निश्चयफलम् । प्राप्येव प्रीता ॥ ४ ॥ अथेति । पुनः

विदर्शितेति । विपरीतमर्थं ग्राहिता यदाभवत् तदा दिग्धविद्धा दिग्धेन विषाक्तेन बाणेन विद्धा प्रतिहता किन्नरीव ॥ १ ॥ निश्चित्येति । सा स्वयं मनसा कृत्यं मन्थरोपदिष्टं कार्यं निश्चित्य युक्तमेवैतदिति निर्धार्य आवाभ्यामालोचितं सर्वं सम्यगेवेति मन्थरायै शनैराचचक्ष इत्यन्वयः ॥ २ ॥ सा दीनेत्यादि सार्धश्लोक एकान्वयः । दीना स्वोद्योगो भविष्यति वा नवेति निश्चयाभावात् निश्चयं कृत्वा स्वोद्योगः फलिष्यतीति निश्चयं कृत्वा आत्मसुखावहं मार्गं तं निश्चितोपायं मुहूर्तं चिन्तयामास ॥ ३ ॥ सेति । मन्थरा सुहृत् परमार्थभूता । अर्थकामा कैकेयीकार्यपरा । निश्चयं कैकेयी तं कार्यनिश्चयं निशम्य ज्ञात्वा सिद्धिं प्राप्येव परमप्रीता बभूव । संविवेशाबला भूमाविति पुनः संवेशनोक्तिर्भ्रुकुटीकरणविशेषकथनार्थम् ॥ ४ ॥ ५ ॥

**विषम०**—किन्नरी कामरूपप्रधानो जातिविशेषः ॥ १ ॥ **सत्य०**—पापया निकृतिनाम्न्या असुर्या । "अनर्हायास्त्वयाऽऽज्ञप्ता कैकेय्या अपि सद्गतिः । सुत्वा तु भरतं नैषा गच्छेत निरयानिति । तथापि सा यदावेशाच्चकार त्वय्यशोभनम् । निकृतिर्नाम सा क्षिप्ता मया तमसि शाश्वते" इति तात्पर्यनिर्णये नवमे आचार्योक्तिः ॥ १ ॥

संवेशनाभिधानं रोषसूचकभ्रुकुटीकरणमाल्यभूषणापवेधादिविशेषप्रदर्शनार्थम् । भ्रुकुटीं क्रोधजनिताकारविशेषम् ॥५॥ पूर्वं त्यक्तभूषणादीनामौदासीन्येन भूमौ विक्षेपं दर्शयति–तत इति । यान्यप्यविद्धानि तानि भूमिं प्रपेदिरे नतु मञ्जूषिकाम् । क्रोधातिशयसूचनाय भूमावुत्सर्जनम् ॥६॥ व्याकीर्णत्वद्योतनाय तानि वर्णयति–तयेत्यादिना ॥ ७ ॥ क्रोधागार इति । गतसत्त्वा क्षीणबला, विगतासुरितिवार्थः । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु

ततश्चित्राणि माल्यानि दिव्यान्याभरणानि च । अपविद्धानि कैकेय्या तानि भूमिं प्रपेदिरे ॥ ६ ॥ तया तान्यपविद्धानि माल्यान्याभरणानि च । अशोभयन्त वसुधां नक्षत्राणि यथा नभः ॥ ७ ॥ क्रोधागारे निपतिता सा बभौ मलिनाम्बरा । एकवेणीं दृढं बध्वा गतसत्त्वेव किन्नरी ॥८॥ आज्ञाप्य तु महाराजो राघवस्याभिषेचनम् । उपस्थानमनुज्ञाप्य प्रविवेश निवेशनम् ॥९॥ अद्य रामाभिषेको वै प्रसिद्ध इति जज्ञिवान् । प्रियार्हां प्रियमाख्यातुं विवेशान्तः पुरं वशी ॥ १० ॥ स कैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः । पाण्डराभ्रमिवाकाशं राहुयुक्तं निशाकरः ॥ ११ ॥

जन्तुषु" इत्यमरः ॥ ८ ॥ आज्ञाप्येति । आज्ञाप्य सुमन्त्रादीन्नियम्य । अभिषेचनं अभिषेचनसाधनं प्रति । उपस्थानं आस्थानम्, सद इत्यर्थः । अनुज्ञाप्य अनुज्ञां कारयित्वा । यद्वा पञ्चमसर्गे 'गुरुणा त्वभ्यनुज्ञातः' इत्युक्तत्वाद्वसिष्ठ एवोपस्थानशब्देनोच्यते ॥ ९ ॥ अद्येति । रामाभिषेकः अद्य वै इदानीमेव प्रसिद्ध इति जज्ञिवान् । इतःपूर्वं कैकेय्याः श्रोतुमवकाशो नास्तीति ज्ञातवानित्यर्थः । सर्वमस्य वशे वर्तत इति वशी स्वतन्त्रः । अतः स्वयमेव प्रियार्हां कैकेयीं प्रति प्रियमाख्यातुमन्तःपुरं विवेश ॥ १० ॥ स इति । स्वबाधककैकेयीयुक्तत्वाद्राहुयुक्तमित्युक्तम् ॥ ११ ॥

तत इति । अपविद्धानि त्यक्तानि ॥ ६ ॥ ७ ॥ क्रोधागार इति । गतसत्त्वेव गतासुरिव ॥ ८ ॥ आज्ञाप्येति । अभिषेचनम् अभिषेकसाधनम् । प्रतिज्ञाप्य नियम्य सुमन्त्रादीनिति शेषः । उपस्थानं सदः । अनुज्ञाप्य अनुज्ञां कारयित्वा, सभ्यैरनुज्ञात इत्यर्थः ॥ ९ ॥ अद्येति । रामाभिषेकः, अद्यैव इदानीमेव प्रसिद्ध इति जज्ञिवान्, इतःपूर्वं कैकेय्या ज्ञातुमवकाशो नास्तीति ज्ञातवानित्यर्थः । अतः स्वयमेव प्रियार्हां कैकेयीं प्रति प्रियमाख्यातुं अन्तःपुरं विवेश । पञ्चमसर्गे "विवेशान्तःपुरं राजा सिंहो गिरिगुहामिव" इत्युक्तस्यैवान्तःपुरप्रवेशस्य पुनः कथनं कथासङ्गत्यर्थम् ॥ १० ॥ स इति । अत्र गृहस्य कैकेयीयुक्ततया पाण्डराभ्रराहुयुक्ताकाशसादृश्यं द्रष्टव्यम् ॥ ११ ॥

अथ दशरथस्य कैकेयीवचनकर्तव्यत्वाय रामाभिषेकविघ्नमियं करिष्यतीति बुद्धिमुत्पादाय च रतिभावोद्दीपनान्यन्तःपुरे दर्शयति-शुकेत्यादि । चतुर्विध वादित्ररवसंघुष्टं वीणादिचतुर्विधवाद्यरवानुनादितम् "ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्। वंशादिकं तु सुषिरं कांस्यतालादिकं घनम्। चतुर्विध मिदं वाद्यं वादित्रातोद्यनामकम्॥" इत्यमरः । कुब्जादीनां प्रियानुकूल्यहेतुत्वाद्रतिवृद्धिहेतुत्वम् ॥ १२ ॥ लतागृहैः चित्रगृहैश्चोपलक्षितम् । दान्ताः

शुकबर्हिणसंघुष्टं क्रौञ्चहंसरुतायुतम् । वादित्ररवसंघुष्टं कुब्जावामनिकायुतम् ॥ १२ ॥ लतागृहैश्चित्रगृहैश्चम्पकाशोकशोभितैः । दान्तराजतसौवर्णवेदिकाभिः समायुतम् ॥ १३ ॥ नित्यपुष्पफलैर्वृक्षैर्वापीभिश्चोपशोभितम् । दान्तराजतसौवर्णैः संवृतं परमासनैः ॥ १४ ॥ विविधैरन्नपानैश्च भक्ष्यैश्च विविधैरपि । उपपन्नं महार्हैश्च भूषितैस्त्रिदिवोपमम् ॥ १५॥ तत् प्रविश्य महाराजः स्वमन्तःपुरमृद्धिमत् । न ददर्श प्रियां राजा कैकेयीं शयनोत्तमे ॥ १६॥ स कामबलसंयुक्तो रत्यर्थं मनुजाधिपः । अपश्यन् दयितां भार्यां पप्रच्छ विषसाद च॥ १७ ॥ न हि तस्य पुरा देवी तां वेलामत्यवर्त्तत । न च राजा गृहं शून्यं प्रविवेश कदाचन ॥ १८॥ ततो गृहगतो राजा कैकेयीं पर्यपृच्छत । यथापुरमविज्ञाय स्वार्थलिप्सुमपण्डिताम् ॥ १९ ॥

दन्तनिर्मिताः। नित्यपुष्पफलैरिति दोहदविशेषादितिज्ञेयम् ॥१३॥१४॥ विविधैरिति । भक्ष्यैः अपूपादिभिः भूषितैः स्त्रीजनैरितिशेषः । अतएव त्रिदिवोपमम् ॥ १५॥१६ ॥ स इति । कामबलसंयुक्तः उद्दीपनदर्शनादुचितकालत्वाच्चेति भावः । अतएव रत्यर्थं प्रपच्छ क्व गतासीत्येवम्। प्रत्युत्तराभावाद्विषसाद च ॥ १७ ॥ विषादहेतुमाह-न हीति । तां वेलां रतिवेलाम् ॥ १८ ॥ तत इति । कैकेयीं स्वार्थलिप्सुं स्वप्रयोजनपराम् । अविज्ञाय यथापुरं

शुकेति । रुतायुतं रुतयुक्तम् । कुब्जावामनिकायुतम् कुब्जाः गडुलाः । वामनिकाः ह्रस्वाः । दान्ताः हस्तिदन्तैः कृताः ॥ १२-१६ ॥ स इति । कामबलं मन्मथोद्रेकः, तत्संयुक्तः। अत एव रत्यर्थे भार्यामपश्यन् पप्रच्छ । प्रतीहारीमितिशेषः । विषसाद च ॥ १७ ॥ विषादहेतुमेवाह-नहीति । हि यस्मात् पुरा पूर्वं देवी कैकेयी, तस्य दशरथस्य तां वेलाम् आगमनसमयं नात्यवर्तत नातिक्रान्तवती। पूर्वं भर्तुरागमने दिव्यालङ्कारयुक्ता सस्मिता कैकेयी भर्तुरानन्दं जनयन्ती सती तं समयं नातिक्रामति, इदानीं चातिक्रान्तेति विषादः । न चेति । शून्यं कैकेयीरहितं गृहम् ॥ १८ ॥ तत इति । स्वार्थलिप्सुं स्वार्थं भरताभिषेकरूपं लब्धु

यथापूर्वं । पर्यपृच्छत प्रतिहारीमितिशेषः । पूर्वमदर्शनकाले यथा पृच्छति तथापृच्छदित्यर्थः ॥ १९ ॥ २० ॥ प्रातिहार्या इति । भूयः अतिशयेन । अदर्शनविषादादपि क्रोधागारप्रवेशश्रवणादतिशयेन विषसाद लुलितव्याकुलेन्द्रियः लुलितानि घूर्णितानि व्याकुलानि स्वस्वविषयग्रहणासमर्थानि इन्द्रियाणि यस्य स तथोक्तः ॥ २१ ॥ तत्रेति । अतथोचितां भूमिशयनानर्हाम् ॥ २२ ॥ रामाभिषेकसंरम्भे सपत्नीमातुः क्रोधस्तान्निमित्त इति कुतो राजा

प्रतिहारी त्वथोवाच सन्त्रस्ता सुकृताञ्जलिः । देव देवी भृशं क्रुद्धा क्रोधागारमभिद्रुता ॥ २० ॥ प्रतिहार्या वचः श्रुत्वा राजा परमदुर्मनाः । विषसाद पुनर्भूयो लुलितव्याकुलेन्द्रियः ॥ २१ ॥ तत्र तां पतितां भूमौ शयाना मतथोचिताम् । प्रतप्त इव दुःखेन सोपश्यज्जगतीपतिः ॥ २२ ॥ स वृद्धस्तरुणीं भार्यां प्राणेभ्योऽपि गरीयसीम् । अपापः पापसङ्कल्पां ददर्श धरणीतले ॥ २३ ॥ लतामिव विनिष्कृत्तां पतितां देवतामिव । किन्नरीमिव निर्धूतां च्युतामप्सरसं यथा ॥२४॥ मायामिव परिभ्रष्टां हरिणीमिव संयुताम् । करेणुमिव दिग्धेन विद्धां मृगयुना वने॥२५॥

न ज्ञातवानित्यत्राह—स इति । अकुटिलत्वात् व्यामोहाच्च न ज्ञातवानिति भावः ॥ २३ ॥ तद्दर्शनस्य दुस्सहत्वमाह—लतामिवेति । पतितां भूगतां निर्धूताम् " धूञ् कम्पने "। व्याकुलितामितियावत् । च्युतां दिव इतिशेषः ॥ २४॥ मायामिति । वामीमिव परिभ्रष्टामित्यपि पाठः—वामीं वडवां "वाम्यश्ववडवा" इत्यमरः। संयतां वागुरया बद्धाम् । दिग्धेन विषलिप्तबाणेन । " विषाक्ते दिग्धलिप्तकौ " इत्यमरः। मृगयुना व्याधेन । सम्यग्भूगतत्वा

कामाम्, अपण्डिताम् आगामिकार्यानभिज्ञाम् । यथापुरं यथापूर्वम् । अविज्ञाय अदृष्ट्वा । पूर्वं यथा अदर्शनकाले पृच्छति तथा पर्यपृच्छत, प्रतीहारीमितिशेषः ॥१९॥ प्रतिहारीति । प्रतिहारी दौवारिकी, हे देव! देवी क्रुद्धा क्रोधागारमभिद्रुतेत्युवाच ॥ २० ॥ प्रतिहार्या इति । पुनः भूयोधिकं विषसादेति अदर्शनमात्रेण प्रथमं प्राप्तविषादस्य क्रोधागारप्रवेशश्रवणाद्विषादाधिक्यम् । लुलितव्याकुलेन्द्रियः । लुलितानि क्षुभितानि व्याकुलानि चञ्चलानि इन्द्रियाणि यस्य स तथोक्तः ॥ २१ ॥ तत्रेति । तत्र क्रोधागारे, अतथोचिताम् अधश्शयनाद्यनुचिताम् ॥ २२ ॥ स इति । पापसङ्कल्पाम्—पापः रामाभिषेकविघातानुकूलः सङ्कल्पो मनोरथो यस्यास्ताम् ॥ २३ ॥ लतामिति । विनिष्कृत्तां छिन्नाम् । पतितां पुण्यक्षयात्स्वर्गात्परिभ्रष्टाम्, देवतामिव स्थिताम्, च्युतां स्वर्गच्युताम्, मायामिव परिभ्रष्टां परमोहनार्थं प्रयुक्तां मायामिव स्थिताम्, संयतां वागुरादिना बद्धाम्, हरिणीमिव स्थिताम् वने मृगयुना व्याधेन कर्त्रा, दिग्धेन विषलिप्तबाणेन विद्धां प्रहृताम् करेणुं करिणीमिव स्थिताम् भार्यां ददर्शेति पूर्वेणान्वयः ॥ २४ ॥ २५ ॥

श्चर्मोत्कर्षहृत्त्वदयनीयत्वदर्शनीयत्वविलुलितवर्णत्वानिश्चेष्टत्वसन्तापावहत्वानि क्रमाद्धृताद्योपम्यैर्लभ्यन्ते ॥ २५ ॥ महागज इति । अभिसंत्रस्तचेतनः अभितः सम्यक् त्रस्ता चेतना बुद्धिर्यस्य । किमर्थं च्छुः उत रोगग्रस्ता उत क्रुद्धेति त्रासः । कमलपत्राक्षीमिति कामित्वद्योतनम् ॥२६॥२७॥ नेति ।

महागज इवारण्ये स्नेहात्परिममर्श ताम् । परिमृश्य च पाणिभ्यामभिसन्त्रस्तचेतनः ॥२६॥ कामी कमलपत्राक्षीमुवाच वनितामिदम् ॥ २७ ॥ न तेऽहमभिजानामि क्रोधमात्मनि संश्रितम् । देवि केनाभिशप्तासि केन वासि विमानिता ॥२८॥ यदिदं मम दुःखाय शेषे कल्याणि पांसुषु । भूमौ शेषे किमर्थं त्वं मयि कल्याणचेतसि ॥२९॥ भूतोपहतचित्तेव मम चित्तप्रमाथिनी ॥ ३० ॥ सन्ति मे कुशला वैद्यास्त्वभितुष्टाश्च सर्वशः । सुखितां त्वां करिष्यन्ति व्याधिमाचक्ष्व भामिनि ॥ ३१ ॥ कस्य वा ते प्रियं कार्यं केन वा विप्रियं कृतम् । कः प्रियं लभतामद्य को वा सुमहदप्रियम् ॥३२॥ मा रोदीर्मा च कार्षीस्त्वं देवि सम्परिशोषणम् । अवध्यो वध्यतां को वा को वा वध्यो विमुच्यताम् ॥ ३३ ॥ दरिद्रः को भवत्वाढ्यो द्रव्यवान् वाप्यकिञ्चनः ॥ ३४ ॥

आत्मनि त्वयि मयि वा अभिशप्ता परुषिता ॥२८॥ यदिति । पांसुषु शेष इति यत् इदं मम दुःखायेति सम्बन्धः ॥२९॥ भूतोपहतचित्तेव पिशाचग्रस्तचित्तेव ॥ ३० ॥ रोगपक्षं परिहरति–सन्तीति । अभितुष्टाः दानमानादिभिः ॥३१॥ क्रोधपक्षे परिहारमाह–कस्य वेति । कस्येति तृतीयार्थे षष्ठी । केन वा तेऽप्रियं कृतमित्यर्थः । प्रियाप्रियकारिणोः फलमाह कः प्रियमिति ॥३२॥ मारोदीरिति । मारोदीः रोदनं माकार्षीः । सम्परिशोषणं कायक्लेशम् ॥३३॥३४॥

महागज इति । अरण्ये महागजः पूर्वोक्तविशेषणयुक्तां करेणुमिवेत्यनुषज्यते । स्नेहात् तां कैकेयीं परिमृश्य परिस्पृश्य, अभिसंत्रस्तचेतनः किं करिष्यति किं वदिष्यतीत्याभिसंत्रस्ता चेतना धीर्यस्य स तथा । कामी दशरथः । वनितामिदमुवाचेत्यन्वयः ॥ २७ ॥ न तेऽहमिति । हे देवि ! आत्मनि मयि संश्रितं ते तव क्रोधं क्रोधकारणम्, अहं नाभिजानामि केनाभियुक्ता निन्दिता विमानिता निराकृता तत्सर्वं कथयेति भावः ॥ २८ ॥ यदिदमिति । हे कल्याणि ! त्वं पांसुषु शेषे लुठसीति यत् इदं परिवर्तनं मम दुःखाय भवति । कल्याणचेतसि किञ्च अनपकारिणीति यावत् । मयि जीवति सति शेषः । त्वं किमर्थं शेषे शयितासि, भूतोपहतचित्तेव–ग्रहाविष्टचित्तेव ॥ २९ ॥ ३० ॥ सन्तीति । कुशलाः–सर्वव्याधिनिवारणकुशलाः, अभितुष्टाः, मदीयसत्कारैरिति शेषः । सर्वशः–सर्वप्रकारेण, व्याधिमाचक्ष्वेति व्याधिप्रयुक्तं चेच्छयनमिति शेषः ॥ ३१ ॥ कस्य वेत्यादि । त्वया कस्य वा प्रियं कार्यं केन वा विप्रियं कृतम्, पक्षद्वयनिमित्तोपि क्रोधो मास्त्वित्याह–कः प्रियमित्यादि । को वा मत्तः प्रियं लभतां को वा अप्रियं लभताम् ॥ ३२ ॥ परिशोषणम्–कायक्लेशः ॥ ३३ ॥ ३४ ॥

अर्थेच्छापक्षं परिहरति—अहमिति। मम जीवनेनापि हेतुना त्वत्प्रियं व्याहर्तुं नोत्सहे, त्वत्प्रियार्थं जीवितमपि परित्यजामीत्यर्थः। आत्मनि बलं त्वयि विद्यमानं वाल्लभ्यं बलम् ॥३५–३७॥ चक्रं सूर्यस्य रथचक्रम्, आज्ञा वा। प्राचीना इत्यादि प्राचीनादिदेशाः ये सन्तीतिशेषः। तत्र तेषु देशेषु धनधान्यम्



अहं चैव मदीयाश्च सर्वे तव वशानुगाः। न ते किञ्चिदभिप्रायं व्याहन्तुमहमुत्सहे ॥ ३५ ॥ आत्मनो जीवितेनापि ब्रूहि यन्मनसेच्छसि। बलमात्मनि जानन्ती न मां शङ्कितुमर्हसि ॥ ३६ ॥ करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ॥ ३७ ॥ यावदावर्त्तते चक्रं तावती मे वसुन्धरा। प्राचीनाः सिन्धुसौवीराः सौराष्ट्रा दक्षिणापथाः ॥ ३८ ॥ वङ्गाङ्गमगधा मत्स्याः समृद्धाः काशिकोसलाः। तत्र जातं बहुद्रव्यं धनधान्यमजाविकम् ॥ ३९ ॥ ततो वृणीष्व कैकेयि यद्यत्त्वं मनसेच्छसि ॥ ४० ॥ किमायासेन ते भीरु उत्तिष्ठोत्तिष्ठ शोभने। तत्त्वं मे ब्रूहि कैकेयि यतस्ते भयमागतम् ॥ ४१ ॥ तत्ते व्यपनयिष्यामि नीहारमिव रश्मिवान् ॥ ४२ ॥ तथोक्ता सा समाश्वस्ता वक्तुकामा तदप्रियम्। परिपीडयितुं भूयो भर्त्तारमुपचक्रमे ॥४३॥ इत्यार्षे० श्रीरामायणे श्रीमदयोध्याकाण्डे दशमः सर्गः ॥१०॥

यदस्तीति शेषः। ततः तत्र ॥ ३८–४० ॥ किमिति। आयासेन भूशयनायासेन। तत् भयनिमित्तम्। रश्मिवान् सूर्यः ॥ ४१ ॥ ४२ ॥ तथेति। परिपीड यितुं प्रतिज्ञाकरणेन निर्बन्धयितुम् ॥ ४३ ॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने दशमः सर्गः ॥ १० ॥

न ते किञ्चिदित्यादि। ते तव अभिप्रायम्। अभिप्रेतं मनोरथम् किञ्चित् किञ्चिन्मात्रमपि व्याहन्तुम् अहं नोत्सहे, अतः आत्मनो जीवितेनापि यदिच्छसि तद् ब्रूहि। यद्वा आत्मनो जीवितेनापि निजजीवितेनापि हेतुना त्वत्प्रियं व्याहन्तुं नोत्सह इति वार्थः। बलमिति। आत्मनि त्वयि, बलं मामकप्रेमाख्यं बलं जानन्ती सती मां शङ्कितुं नार्हसि, त्वयि मत्प्रेम्णो गरीयस्त्वाच्छङ्का न कार्येत्यर्थः। सुकृतेनापि शपे, किमुतान्यैरिति भावः। यद्वा आत्मनि मयि बलं दुष्करस्यापि संपादनसामर्थ्यं जानन्ती सती मनोरथः सिद्ध्यति वा नवेति शङ्कां कर्तुं नार्हसीतिवार्थः ॥ ३५–३७ ॥ यावदित्यादि। चक्रं भूचक्रम् आज्ञाचक्रं वा सूर्यमण्डलं वा यावदावर्तते, तावती तावद्विस्तीर्णा वसुन्धरा भूमिः, मे मम, आधीनेति शेषः। प्राचीना इत्यादि। ये जनपदाः सन्ति, तत्र तेषु, जातं यद्धनधान्यादिकमस्ति ततः तेषु द्रव्येषु, यत्त्वं मनसेच्छसि तद्वृणीष्वेति योजना ॥ ३८–४१ ॥ तदिति। रश्मिवान् सूर्यः ॥ ४२ ॥ तथोक्तेति। समाश्वस्ता विश्वासं

अथ 'व्यवस्थाप्य महाराजं त्वमिमं वृणुया वरम्' इति मन्थरयोपदिष्टमनुतिष्ठति–तमित्यादिना ॥ १ ॥ नास्मीति। विप्रकृता रोगग्रस्ता। नार्थकामाऽस्मी त्यपि द्रष्टव्यम्। निग्रहानुग्रहपक्षं मनसि कृत्वाह–अभिप्रायः अभिप्रेतोर्थः, अस्तीतिशेषः। त्वया कृतं त्वया प्रतिश्रुतम्। तमिच्छामीति सम्बन्धः ॥ २ ॥ प्रतिज्ञामिति। प्रतिज्ञां प्रतिजानीष्व शपथं कुर्वित्यर्थः ॥३॥ तामित्ति। ईषदुत्स्मितः भवदाज्ञाकारिणि मयि किं शपथेनेति किञ्चिदुद्गतस्मितः। यद्वा

तं मन्मथशरैर्विद्धं कामवेगवशानुगम्। उवाच पृथिवीपालं कैकेयी दारुणं वचः ॥ १ ॥ नास्मि विप्रकृता देव केन चिन्नावमानिता। अभिप्रायस्तु मे कश्चित्तमिच्छामि त्वया कृतम् ॥ २ ॥ प्रतिज्ञां प्रतिजानीष्व यदि त्वं कर्तुमिच्छसि। अथ तद्व्याहरिष्यामि यदभिप्रार्थितं मया ॥ ३ ॥ तामुवाच महातेजाः कैकेयीमीषदुत्स्मितः। कामी हस्तेन संगृह्य मूर्द्धजेषु शुचिस्मिताम् ॥ ४ ॥ अवलिप्ते न जानासि त्वत्तः प्रियतमा मम। मनुजो मनुज व्याघ्राद्रामादन्यो न विद्यते ॥ ५ ॥ तेनाजय्येन मुख्येन राघवेण महात्मना। शपे ते जीवनार्हेण ब्रूहि यन्मनसे च्छसि ॥ ६ ॥ यं मुहूर्त्तमपश्यंस्तु न जीवेयमहं ध्रुवम्। तेन रामेण कैकेयि शपे ते वचनक्रियाम् ॥ ७ ॥

अभिप्रेतकरणमीषत्करमित्युत्स्मितः। यद्वा शङ्कितरोगाद्यभावात् हस्तेन मूर्द्धजेषु संगृह्येति शिरोऽङ्केकृत्येति भावः। स्वाभिमुखीकरणाय वेणीमवलम्ब्ये तिवार्थः ॥ ४ ॥ अवलिप्त इति। अवलिप्ते सौभाग्यगर्विते ! मम त्वत्तः प्रियतमा स्त्रीणां मध्ये त्वत्तः प्रियतमा नास्ति। रामादन्यो मनुजः प्रियतमो न विद्यते इति जानासीति सम्बन्धः ॥ ५ ॥ तेनेति। जीवनार्हेण जीवनादपि पूज्येन ॥ ६ ॥ अस्यैव विवरणम्–यमिति। ते वचनक्रियां तव वचनकरणं प्रापिता, भूयः परिपीडयितुमिति निजभूशयनादिपीडित एव पूर्वं तं भर्तारम् अप्रियवचनेन पुनः परिपीडयितुमुपक्रान्तवतीत्यर्थः ॥ ४३ ॥ इति श्रीमहेश्वरतीर्थ विरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायां दशमः सर्गः ॥ १० ॥ १ ॥ नास्मीति। विप्रकृता अभिभूता, मे कश्चिदभिप्रायोऽभिप्रार्थ नीयोऽस्ति, त्वदेकसंपाद्यः तं त्वया कृतं संपादितमिच्छामीति सम्बन्धः ॥ २ ॥ प्रतिज्ञामिति। कर्तुमिच्छसि यदि तदा प्रतिज्ञामवश्यकर्तव्यताविषयिणीं प्रति जानीष्व। अथ अनन्तरम्। यन्मया प्रार्थितं तद्व्याहरिष्यामि ॥ ३ ॥ तामिति। ईषदुत्स्मितः भवदाज्ञाकारिणि मयि शपथाकाङ्क्षा वृथेति उद्गतस्मितः ॥ ४ ॥ अव लिप्त इति। अवलिप्ते मूढे ! स्त्रीणां मध्ये त्वत्तः प्रियतमा मम न विद्यते नास्ति, पुरुषाणां मध्ये मनुजव्याघ्रात्पुरुषश्रेष्ठाद्रामादन्यो मनुजः प्रियतमो न विद्यत इति न जानासि ? ॥५॥ तेनेति। अजय्येन शत्रूणां जेतुमशक्येन, मुख्येन श्रेष्ठेन, जीवनार्हेण मम जीवनहेतुना ते शपे त्वन्निमित्तं प्रतिजाने, मनसा यदिच्छसि तद्ब्रूहीत्यन्वयः॥६॥ जीवनार्हेणेति प्रियतमत्वं प्रकाशितम्, तदेव प्रियतमत्वं दर्शयति–यमिति। मुहूर्तम् अल्पकालम्। ते तव। वचनक्रियां वचनकरणम्। रामेण

प्रतीतिशेषः ॥ ७ ॥ आत्मनेति । आत्मना स्वदेहेन ।  अन्यैश्च प्रियबन्धुभिश्च । मूल्यभूतैरेतैर्यं रामं वृणे सर्वान् परित्य ज्यापि राममेव परिगृह्णामीति भावः ॥ ८ ॥ भद्रइति । हे भद्रे ! मे हृदयं एतत् एतादृशमनुमृश्य शपथवचनानुसारित्वेन निर्धार्य उद्धरस्व उज्जीवय । एतत् वाङ्मनसयोरैकरूप्यम् । समीक्ष्य सम्यगालोच्य । यत्साधु इष्टं मन्यसे तद्ब्रूहि, त्वदभीष्टकरणमेव मज्जीवनम् । अन्यथा न जीवामीत्यर्थः ॥ ९ ॥

आत्मना वात्मजैश्चान्यैर्वृणे यं मनुजर्षभम् । तेन रामेण कैकेयि शपे ते वचनक्रियाम् ॥८॥ भद्रे हृदयमप्येतदनुमृश्योद्धरस्व मे । एतत्समीक्ष्य कैकेयि ब्रूहि यत्साधु मन्यसे ॥९॥ बलमात्मनि पश्यन्ती न मां शङ्कितुमर्हसि । करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ॥ १० ॥ सा तदर्थमना देवी तमभिप्रायमागतम् । निर्माध्यस्थ्याच्च हर्षाच्च बभाषे दुःसहं वचः ॥ ११ ॥ तेन वाक्येन संहृष्टा तमभिप्रायमागतम् । व्याजहार महाघोरमभ्यागतमिवान्तकम् ॥ १२ ॥

बलमिति । आत्मनि बलं त्वयि विद्यमानं दृष्टिचित्तापहारिसौभाग्यबलम् ॥ १० ॥ सेति । तदर्थमनाः मन्थरोपदिष्टरामविवासनपूर्वकभरताभिषेकरूपार्थमनाः । अभिप्रायमागतं स्वाभिमतशपथं प्राप्तं निर्माध्यस्थ्यात् निर्गतमध्यस्थभावात्, पक्षपातादित्यर्थः ॥ ११ ॥ उक्तमर्थं सविशेष

शप इत्यन्वयः ॥ ७ ॥ आत्मनेति । आत्मना मया वा आत्मजैः पुत्रैः अन्यैः प्राणिभिः आत्मानमितरानात्मजांश्च विहायापि यो वरणीयस्तेन रामेणेत्यन्वयः ॥८॥ भद्र इति । हे भद्रे ! यदेतन्मे हृदयमभिप्रायः सर्वथा त्वद्वचनक्रियाविषयकः । यद्वा हृदयमपि एतत एतादृशम् । वागनुसारीत्यनुमृश्य विचार्य, त्वदभीष्टकथनेन मामुद्धरस्व अस्माद्दुःखादुद्धर । एतदपि एतन्मदुद्धरणमपि कर्तव्यं नवेति च समीक्ष्य विचार्य अतःपरं यत्साधु तव हितं मन्यसे तद्ब्रूहि । अथवा एतत वाङ्मनसयोरैक्यं निरीक्ष्य यत्साधु मन्यस इति वार्थः ॥ ९ ॥ नात्र सिद्ध्यसिद्धिशङ्का कर्तव्येत्याह–बलमिति । आत्मनि त्वयि । बलं मत्प्रेमरूपं बलम् । पश्यन्ती जानन्ती सती मां शङ्कितुं नार्हसि मत्पतिः मदीयं कार्यं करिष्यति वा न वेति सन्देहं माकार्षीरित्यर्थः ॥ १० ॥ सेति । तदर्थमनाः तस्मिन् सङ्कल्पितेऽर्थे मनो यस्याः सा । तमभिप्रायमागतम् आनुकूल्यं प्राप्तं दशरथं निर्माध्यस्थ्यात् स्वपुत्रपक्षपातात हर्षाच्च पतिरपि सर्वं स्वकार्यं करिष्यतीत्यानन्दाच्चेत्यर्थः । दुर्वचं शत्रूणामपि वक्तुमशक्यं वचः बभाषे भाषितुमालोचनं कृतवती ॥ ११ ॥ तेनेति । तेन वाक्येन रामशपथपूर्वकस्य वचनक्रियावाक्येन संहृष्टा । तमभिप्रायं पुत्रराज्यरामप्रव्राजन

---

१ निर्माध्यस्थात्प्रहर्षाच्च । २ दुर्वचं । ३ मात्मनः । इतिपाठान्तरम् ।

माह-तेनेति । तेन वाक्येन शपथपूर्वकं त्वदभिमतं करिष्यामीत्युक्तदशरथवचनेन ॥ १२ ॥ दशरथवाक्यं दृढीकर्तुं नरस्य धर्माधर्मसाक्षिभूता देवताः श्रावयति-यथा क्रमेणेति । क्रमेण प्रियपुत्रसुकृतक्रमेण । यथा शपसि वरं ददासि च तथा तच्छृण्वन्त्विति सम्बन्धः ॥ १३ ॥ चन्द्रादित्याविति । ग्रहाः

यथा क्रमेण शपसि वरं मम ददासि च । तच्छृण्वन्तु त्रयस्त्रिंशद्देवाः साग्निपुरोगमाः ॥ १३॥ चन्द्रादित्यौ नभश्चैव ग्रहा रात्र्यहनी दिशः । जगच्च पृथिवी चैव सगन्धर्वा सराक्षसा ॥ १४ ॥ निशाचराणि भूतानि गृहेषु गृहदेवताः । यानि चान्यानि भूतानि जानीयुर्भाषितं तव ॥१५॥ सत्यसन्धो महातेजा धर्मज्ञः सुसमाहितः । वरं मम ददात्येष तन्मे शृण्वन्तु देवताः ॥ १६ ॥ इति देवी महेष्वासं परिगृह्याभिशस्य च । ततःपरमुवाचेदं वरदं काममोहितम् ॥ १७॥ स्मर राजन् पुरावृत्तं तस्मिन् दैवासुरे रणे । तत्र चाच्यावयच्छत्रुस्तव जीवितमन्तरा ॥ १८ ॥ तत्र चापि मया देव यत्त्वं समभिरक्षितः । जाग्रत्या यतमानायास्ततो मे प्राददा वरौ ॥ १९ ॥ तौ तु दत्तौ वरौ देव निक्षेपौ मृगयाम्यहम् । तवैव पृथिवीपाल सकाशे सत्यसङ्गर ॥ २० ॥

नवग्रहाः । जगत् लोकः । "लोको विष्टपं भुवनं जगत्" इत्यमरः । लोकश्चात्र स्वर्ग एव ॥ १४--१६ ॥ इतीति । परिगृह्य धर्मपाशेन संयम्य । अभिशस्य सर्वा देवताः साक्षित्वेन शृण्वन्त्वित्युद्दिश्य ॥१७॥ स्मरेति । पूर्ववृत्तमेवाह तत्रेति । तत्र रात्रियुद्धे । अन्तरा मध्ये । तव जीवितम् अच्यावयत् अचालयत् । शस्त्रप्रहारादिना मूर्च्छां प्रापितवानित्यर्थः ॥ १८ ॥ तत्रेति । यतमानायाः सारथ्ये यत्नं कुर्वाणायाः ॥ १९ ॥ तौ त्विति । हे पृथवीपाल ! तव

रूपाभिप्रायम् । अभ्यागतम् अकस्मादागतम् अन्तकामिव महाघोरं राज्ञः प्राणहरम् व्याजहार व्याहर्तुं निश्चितवती ॥ १२ ॥ राजप्रतिज्ञाया दुष्करघोरार्थविषयकत्वा द्विफलत्वशङ्कया तत्प्रतिज्ञामशेषसाक्षीकरणेन स्थिरीकरोति-यथा क्रमेणेत्यादि । यथाक्रमेण अतिप्रियपुत्रसुकृतादिपरिग्रहक्रमेण, शपसि शपथं करोषि तत्पूर्वकं वरं मम ददासि च अभीष्टं दातुं निश्चितवानसि नात्र सन्देहः किल, तदेव त्वन्निश्चयं देवादयः शृण्वन्तु ॥१३॥ जगत् परोक्षस्वर्गादिभुवनम्, पृथिवी प्रत्यक्षभुवन देवता इति उक्तप्रकारेण देवी महेष्वासं राजानं परिगृह्य स्वमते स्थाप्य ॥ १४ ॥ १५ ॥ सत्यसन्ध इत्यादिना स्ववचनकृतिस्थैर्यायैवाभिशस्य तमुवाच ॥१६॥१७॥ किमुवाचेत्यत आह-स्मरेति । तत्र रात्रियुद्धे, शत्रुः शम्बरः, तव जीवितमन्तरा प्राणं विना त्वामच्यावयत् प्रच्युतवीर्यमकरोत् । अथवा तत्र रणे। अन्तरा मध्ये। शत्रुः तव जीवितमच्यावयत् अचालयत्, अमेहयदिति वार्थः ॥ १८ ॥ तत्रेति । तत्र रणे, हे देव ! यद्यस्मात् त्वं मया समभिरक्षितः ततः तस्मात् यतमानायाः तव रक्षणे यत्नं कुर्वन्त्याः जाग्रत्या जागरूकायाः मे मम वरौ प्रददाः दत्तवानसि ॥१९॥ तौ तु दत्ताविति । हे पृथिवीपाल ! तव सकाशे निक्षेपरूपेण

सकाशे एव निक्षेपौ निक्षेपत्वेन स्थापितौ । तौ तु वरौ तावेव वरौ । मृगयामि अन्वेषयामि, इच्छामीत्यर्थः ॥ २० ॥ तदिति । वरमिति जात्येकवचनम् ॥ २१ ॥ वाङ्मात्रेणेति । वाङ्मात्रेण पूर्वदत्तवरस्मारकवचनमात्रेण । कैकेय्या स्ववशे कृतः राजा वाङ्मात्रेण मृगशब्दानुकारिणा लुब्धककथितेन । आत्मनो विनाशाय पाशं मृग इव वागुरां मृग इव धर्मपाशं प्रचस्कन्द गतवान् । "स्कन्दिर् गतिशोषणयोः" इतिधातुः । वरप्रदानमङ्गीचका

तत् प्रतिश्रुत्य धर्मेण न चेद्दास्यसि मे वरम् । अद्यैव हि प्रहास्यामि जीवितं त्वद्विमानिता ॥ २१ ॥ वाङ्मात्रेण तदा राजा कैकेय्या स्ववशे कृतः । प्रचस्कन्द विनाशाय पाशं मृग इवात्मनः ॥ २२ ॥ ततःपरमुवाचेदं वरदं काममोहितम् । वरौ यौ मे त्वया देव तदा दत्तौ महीपते ॥ २३ ॥ तौ तावदहमद्यैव वक्ष्यामि शृणु मे वचः ॥ २४ ॥ अभिषेकसमारम्भो राघवस्योपकल्पितः । अनेनैवाभिषेकेण भरतो मेऽभिषेच्यताम् ॥ २५ ॥ यो द्वितीयो वरो देव दत्तः प्रीतेन मे त्वया । तदा दैवासुरे युद्धे तस्य कालोऽयमागतः ॥ २६ ॥ नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः । चीराजिनजटाधारी रामो भवतु तापसः ॥ २७ ॥ भरतो भजतामद्य यौवराज्यमकण्टकम् । एष मे परमः कामो दत्तमेव वरं वृणे ॥ २८ ॥ अद्य चैव हि पश्येयं प्रयान्तं राघवं वनम् ॥ २९ ॥

रेत्यर्थः । यद्वा वागुरां प्राप्तो मृग इव प्रचस्कन्द शोषणं प्राप्त इत्यर्थः ॥ २२ ॥ तत इत्यादि ॥ २३ ॥ ताविति । तौ वरौ वक्ष्यामि तौ वरौ विभज्य प्रदातुं प्रकारं वक्ष्यामीत्यर्थः ॥ २४ ॥ अभिषेकसमारम्भ इति । अभिषेकसमारम्भः अभिषेकसामग्री । य इति शेषः । अभिषेकेण अभिषेकसामग्र्या ॥ २५ ॥ २६ ॥ नवेति । चीरं वल्कलम् ॥ २७ ॥ विलम्बव्यावृत्त्यर्थमाह–भरत इत्यादिना । दत्तमेव, नतु नूतनं किञ्चिदर्थये ॥ २८ ॥ २९ ॥

स्थापितौ तौ वरौ मृगयामि याच इत्यन्वयः ॥ २० ॥ प्रकृतमुपसंहरति–तदिति । तत्तस्मात् धर्मेण मह्यं वरद्वयं दास्यामीति प्रतिश्रुत्य प्रतिज्ञां कृत्वा दास्यसि न चेत् तवैव सकाशे अद्यैव जीवितं प्रहास्यामीति ॥ २१ ॥ वाङ्मात्रेणेति । वाङ्मात्रेण पूर्वदत्तवरस्मारकवचनमात्रेण पाशं वरप्रदानाभ्युपगमसंज्ञम्, प्रचस्कन्द प्रविवेश, विशेषतो वरस्वरूपे अनुक्ते सत्येव तौ वरौ मे धारयसीत्येतावन्मात्र एवाभिहिते अननुकूलवरप्रदानाभ्युपगमसंज्ञं पाशमात्मनो विनाशाय प्राप्तवान् । क इव ? वाङ्मात्रेण गीतेन मृगशब्दानुकरणेन वा वशीकृतः पाशं वागुरां मृग इव ॥ २२ ॥ वरौ यौ म इति । तौ तावदद्यैव वक्ष्यामि मम दातव्यवराविमाविति विभज्य वक्ष्यामि तन्मे वचः शृणु ॥ २३ ॥ २४ ॥ अभिषेकेत्यादि । यः कल्पितः । अनेनेति योजना ॥ २५–२७ ॥ एष इति । दत्तमेव वरं वृणे इति न

सत्यस्यावश्यकर्तव्यत्वमाह-स इति । राजराजः स त्वं सत्यसङ्गरः सत्यप्रतिज्ञः भव । तेन सत्यसङ्गरत्वेन कुलादित्रयं रक्ष । सत्यस्य रक्षकत्वमुपपादयति परत्रेति । नृणां हितं सत्यवचः । परत्रवासे स्वर्गलोकादिवासे । अनुत्तमं अत्यन्तोत्तमसाधनं वदन्ति ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने श्रीमदयोध्याकाण्डव्याख्याने एकादशस्सर्गः ॥ ११ ॥ अथ सत्यपाशबद्धस्य राज्ञः शोकं वर्णयति-तत इति । प्रतताप

स राजराजो भव सत्यसङ्गरः कुलं च शीलं च हि रक्ष जन्म च । परत्रवासे हि वदन्त्यनुत्तमं तपोधनाः सत्यवचो हितं नृणाम् ॥ ३० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकादशः सर्गः ॥ ११ ॥

ततः श्रुत्वा महाराजः कैकेय्या दारुणं वचः । चिन्तामभिसमापेदे मुहूर्तं प्रतताप च ॥ १ ॥ किंनु मे यदि वा स्वप्नश्चित्तमोहोऽपि वा मम । अनुभूतोपसर्गो वा मनसो वाप्युपद्रवः । इति सञ्चिन्त्य तद्राजा नाभ्यगच्छत्तदा सुखम् ॥ २ ॥

मुमूर्च्छेति यावत् ॥ १ ॥ चिन्तां विवृणोति-किं न्विति । किंन्विति सामान्याकारेण चिन्ता स्वदुःखावहस्य रामाभिषेकविघ्नस्य सत्स्वभावया कैकेय्या कथनासम्भवादिदं पारमार्थिकं न भवति स्वप्नो यदि वा । अथवेदानीं निद्राया असंभवाच्चित्तमोहः भ्रमो वा । इदानीं भ्रमकारणाभावादनुभूतोपसर्गो वा । जन्मान्तरानुभूतानामर्थानां उपसर्गः भावना वा । स्मरणमिति यावत् । जन्मान्तरेप्येवंविधावस्थाया असम्भावितत्वादाह मनस उपद्रवो वा । रोगजविकारो वा । उन्माद इति यावत् । प्रतताप चेत्येतदनुवदति इतीति ॥ २ ॥

त्वन्यायेन त्वां निर्बध्नामीदानीम्, न ह्युत्तमर्णेनाधमर्णाद्दणग्रहणं तस्य तत्कालपीडेत्येतावता दोष इत्याशयः ॥ २८ ॥ २९ ॥ इममेवार्थं स्पष्टमुपदिशति-स राजराज इति । राजराजः प्रसिद्धः । त्वं सत्यसङ्गरो भव, तेनैव हेतुना कुलादिकं रक्ष । सत्यसङ्गरत्वमेव स्वजन्मादिरक्षणसाधनमिति कुत इत्यत्राह परत्रेत्यादि । परत्रवासे परलोकविषये हितं वदन्ति ॥ ३० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायाम् एकादशः सर्गः ॥ ११ ॥ तत इति । दारुणम् अशनिपातकल्पं वचः श्रुत्वा नष्टसंज्ञः सन् चिन्तामभिसमापेदे ॥ १ ॥ तामेव चिन्तां दर्शयति-किंनु मे इति । सामान्यविचारः, चित्तमोहः चित्तभ्रान्तिर्वा, अनुभूतोपसर्गः अनुभूतानां पदार्थानामुपसर्गः नाशः, सुषुप्तिरित्यर्थः । मनस उपद्रवः रोगविशेषो वा

प्रतिलभ्येत्यादि श्लोकत्रयमेकान्वयम्। व्यथितः दुःखितः। विक्लवः विह्वलः। "विक्लवो विह्वलः" इत्यमरः। मण्डले अहितुण्डिकयन्त्रमण्डले॥ ३-६ ॥

प्रतिलभ्य चिरात् संज्ञां कैकेयीवाक्यताडितः। व्यथितो विक्लवश्चैव व्याघ्रीं दृष्ट्वा यथा मृगः ॥ ३ ॥ असंवृतायामासीनो जगत्यां दीर्घमुच्छ्वसन्। मण्डले पन्नगो रुद्धो मन्त्रैरिव महाविषः ॥ ४ ॥ अहो धिगिति सामर्षो वाचमुक्त्वा नराधिपः। मोहमापेदिवान् भूयः शोकोपहतचेतनः ॥ ५ ॥ चिरेण तु नृपः संज्ञां प्रतिलभ्य सुदुःखितः। कैकेयीमब्रवीत् क्रुद्धः प्रदहन्निव चक्षुषा ॥ ६ ॥ नृशंसे दुष्टचारित्रे कुलस्यास्य विनाशिनि। किं कृतं तव रामेण पापे पापं मयापि वा ॥ ७ ॥ यदा ते जननीतुल्यां वृत्तिं वहति राघवः। तस्यैव त्वमनर्थाय किंनिमित्तमिहोद्यता ॥ ८ ॥ त्वं मयात्मविनाशार्थं भवनं स्वं प्रवेशिता। अविज्ञानान्नृपसुता व्याली तीक्ष्णविषा यथा ॥ ९ ॥ जीवलोको यथा सर्वो रामस्याह गुणस्तवम्। अपराधं कमुद्दिश्य त्यक्ष्यामीष्टमहं सुतम् ॥ १० ॥ कौसल्यां वा सुमित्रां वा त्यजेयमपि वा श्रियम्। जीवितं वात्मनो रामं न त्वेव पितृवत्सलम् ॥ ११ ॥ परा भवति मे प्रीतिर्दृष्ट्वा तनयमग्रजम्। अपश्यतस्तु मे रामं नष्टा भवति चेतना ॥ १२ ॥ तिष्ठेल्लोको विना सूर्यं सस्यं वा सलिलं विना। न तु रामं विना देहे तिष्ठेत्तु मम जीवितम् ॥ १३ ॥

नृशंस इति। किं पापं कृतमित्यन्वयः। पापम् अपराधः॥ ७॥ यदेति। वृत्तिं शुश्रूषां तस्यैव तदैवेत्यपि बोध्यम्। तस्यैव न तु तत्पुत्रादेः। तदैव न तु कालान्तरे शुश्रूषाभावदशायाम्॥ ८॥ त्वमिति। नृपसुतेत्यत्रेतिकरणं द्रष्टव्यम्॥ ९-१३॥

एतेषां मध्ये का वाऽवस्था मम वर्तेत इत्यर्थः॥ २॥ प्रतिलभ्येत्यादिश्लोकत्रयमेकं वाक्यम्। विक्लवः विह्वलः। असंवृतायामिति। जगत्यां भुवि, मण्डले यन्त्रमण्डले, धिगिति वाचमुक्त्वा भूयः पुनरपि मोहं मूर्च्छाम् आपेदिवान् प्राप्तवान्॥ ३-६॥ नृशंस इति। नृशंसे क्रूरे! दुष्टचारित्रे दुष्टव्यापारे!॥ ७॥ यदेति। जननीतुल्यां स्वजननीतुल्यां वृत्तिं शुश्रूषां वहति करोति, किन्निमित्तं केन निमित्तेन उद्यता॥ ८॥ अयं स्वकृतानर्थ इत्याह—त्वमिति। अविज्ञानात् अविचारात्। नृपसुतेत्यत्रेतिकरणं द्रष्टव्यम्॥ ९॥ जीवलोक इति। सर्वोऽपि जीवलोकः, यदा सर्वदापि योग्यताबलात् रामस्य गुणस्तवमाह, तस्मादिति शेषः। उद्दिश्य व्याजीकृत्य न त्वेव त्यजेयमित्यनुकर्षः॥ १०॥ ११॥ परा उत्कृष्टा। चेतना जीवितम्॥ १२॥ तिष्ठेदिति। लोकः सूर्यं विना तिष्ठेत्, किञ्चित्कालं तिष्ठेदित्यर्थः।

तदलमिति । एष निश्चयः। रामविवासनरूपनिश्चयः । अपि ते चरणाविति । अपिः प्रश्नार्थकः ॥ १४ ॥ १५ ॥ अथेत्यादि श्लोकत्रयमेकान्वयम् । अथेति प्रश्ने । त्वं भरतस्य प्रियाप्रिये विषये मां जिज्ञाससे ज्ञातुमिच्छसि तदिदानीमपि भरतोऽभिषिच्यतामिति यत्तदस्तु तद्वक्तुमुचितम् । त्वया पूर्वं राघवं प्रति "स मे ज्येष्ठः सुतः" इत्यादि यद्व्याहृतं तत् प्रियवादिन्या त्वया सेवार्थं मम मनोरञ्जनार्थं रामकृतशुश्रूषार्थं वा कथितं भवेत्, राम

तदलं त्यज्यतामेष निश्चयः पापनिश्चये । अपि ते चरणौ मूर्ध्ना स्पृशाम्येष प्रसीद मे ॥ १४ ॥ किमिदं चिन्तितं पापे त्वया परमदारुणम् ॥ १५ ॥ अथ जिज्ञाससे मां त्वं भरतस्य प्रियाप्रिये । अस्तु यत्तत्त्वया पूर्वं व्याहृतं राघवं प्रति ॥ १६ ॥ स मे ज्येष्ठः सुतः श्रीमान् धर्मज्येष्ठ इतीव मे । तत्त्वया प्रियवादिन्या सेवार्थं कथितं भवेत् ॥ १७ ॥ तच्छ्रुत्वा शोकसन्तप्ता सन्तापयसि मां भृशम् । आविष्टासि गृहं शून्यं सा त्वं परवशं गता ॥ १८ ॥

विवासनोक्तिस्तेन विरुद्धेत्यर्थः । परीक्षार्थमपि भरतोऽभिषिच्यतामित्येव वक्तुमुचितम् । न तु रामो विवास्यतामित्येतत् पूर्वापरविरोधादितिभावः । रामविवासनोक्तिश्च भरते प्रीतिपरीक्षार्थमेवास्त्वित्यत आह तदिति । तत् रामाभिषेचनं श्रुत्वा शोकसंतप्ता सती मां भृशम् अतिनिर्बन्धेन सन्तापयसि । किञ्च परवशं परबोधनवशं गता सती । शून्यं गृहं क्रोधागारम् । आविष्टासि प्रविष्टासि । इदं सर्वं परीक्षार्थत्वे न संगच्छत इति भावः । शून्यैर्ग्रहैरिति पाठे-शून्यैर्ग्रहैराविष्टा पिशाचादिभिराविष्टेत्यर्थः ॥ १६-१८ ॥

रामं विना जीवितं क्षणमात्रमपि न तिष्ठेत्, स्थातुं न शक्नुयादित्यर्थः ॥ १३ ॥ तदिति सार्धश्लोकमेकं वाक्यम् । एष निश्चयः रामविवासनरूपनिश्चयः ॥१४॥१५॥ अथेत्यादि श्लोकत्रयमेकं वाक्यम् । भरतस्य प्रियाप्रिये स्नेहास्नेहयोर्विषये माम् अथ जिज्ञाससे ज्ञातुमिच्छसि किम् ? अस्तु-जिज्ञासैव भवतु, भरतस्नेहजिज्ञासा कृतेत्येतावता रामगुणातिशयपक्षपातो न मन्दीभवतीत्याशयः । त्वया राघवं प्रति स मे ज्येष्ठसुतः श्रीमान् धर्मज्येष्ठ इति पूर्वं यद्व्याहृतं तत् प्रियवादिन्या त्वया सेवार्थं रामकृतशुश्रूषार्थं कथितं भवेत् । यद्वा मम सेवार्थं मम विच्छेदेन त्वयि वर्तनाय कथितं भवेत् । कुतः ? तच्छ्रुत्वेति । तत् प्रस्तुतं रामाभिषेचनं श्रुत्वा शोकसंतप्ता सती त्वं मां भृशं संतापयसि । तत्र कारणमुत्प्रेक्षते आविष्टेति । परवशं गता सा त्वम् शून्यम् अगोचरं ग्रहं भूतपिशाचादिकम् आविष्टा प्राप्तासि । शून्ये इति पाठे-विवेकशून्ये इति कैकेय्याः संबोधनम् ॥ १६-१८ ॥

कुलानर्थकरं चेदं वचनमित्याह—इक्ष्वाकूणामिति । नयसम्पन्ने एतावत्कालं नीतिशालिनि । यत्र इक्ष्वाकुकुलमध्ये । ते मतिरेवमिदानीं विकृता विपरीता जाता । तत्र कुले । अयं संनिहितः । सुमहाननयः अनर्थः संप्राप्तः । सत्प्रकृतेर्विपरीतबुद्धिः कुलस्यानर्थहेतुरितिभावः ॥ १९ ॥ पूर्वापरपर्यालोचनया त्वद्वचनं न श्रद्धेयं चेत्याह—नहीति । अयुक्तम् अहितमिति यावत् । न श्रद्दधामि इदमहितं विप्रियकरणमिति शेषः ॥ २० ॥ त्वत्प्रीतिविरुद्धं चेदं वचन

इक्ष्वाकूणां कुले देवि सम्प्राप्तस्सुमहानयम् । अनयो नयसम्पन्ने यत्र ते विकृता मतिः ॥ १९ ॥ न हि किञ्चिदयुक्तं वा विप्रियं वा पुरा मम । अकरोस्त्वं विशालाक्षि तेन न श्रद्दधाम्यहम् ॥ २० ॥ ननु ते राघवस्तुल्यो भरतेन महात्मना । बहुशो हि सुबाले त्वं कथाः कथयसे मम ॥ २१ ॥ तस्य धर्मात्मनो देवि वने वासं यशस्विनः । कथं रोचयसे भीरु नव वर्षाणि पञ्च च ॥ २२ ॥ अत्यन्तसुकुमारस्य तस्य धर्मे धृतात्मनः । कथं रोचयसे वास मरण्ये भृशदारुणे ॥२३॥ रोचयस्यभिरामस्य रामस्य शुभलोचने । तव शुश्रूषमाणस्य किमर्थं विप्रवासनम् ॥२४॥ रामो हि भरताद्भूयस्तव शुश्रूषते सदा । विशेषं त्वयि तस्मात्तु भरतस्य न लक्षये ॥ २५ ॥

मित्याह—नन्वित्यादि । ते राघवः भरतेन तुल्यो ननु तुल्यः खलु । अत्र त्वद्वचनमेव प्रमाणमित्याह बहुश इति । बहुश इत्यनेनाहृदयत्वव्यावृत्तिः । सुबाले इत्यकुटिलत्वव्यावृत्तिः ॥ २१ ॥ तस्येति । धर्मात्मन इत्यनेन वनवासहेतुभूताकृत्यराहित्यमुक्तम् । भीरु इति तव च धर्मभीरुत्वं क गतमिति भावः ॥ २२ ॥ रामसौकुमार्यानुचितं चेदमित्याह—अत्यन्तेति ॥ २३ ॥ शुश्रूषादर्शनेनापि रामो न निवासनार्ह इत्याह—रोचयसीति । तव शुश्रूष माणस्येत्यत्र " न लोकाव्यय—" इत्यादिना निषिद्धापि षष्ठ्यार्षी बोध्या ॥ २४ ॥ शुश्रूषमाणस्येत्येतदुपपादयति—रामो हीति ॥ २५ ॥

इक्ष्वाकूणामिति श्लोकद्वयमेकं वाक्यम् । यत्र यस्मिन् नयसम्पन्ने रामे ते यतो विकृता मतिरुत्पन्ना यतश्च तन्मूलो महानयमनयः श्रेष्ठगुणकज्येष्ठपुत्राभिषेक निवृत्तिरूपानर्थस्सम्पद्यते । यतः पुरा पूर्वं मम विप्रियं प्रतिकूलम् अयुक्तं लोकविरुद्धं कार्यं वा नाकरोः तेन कारणेन इदं त्वयोक्तं विप्रियं न श्रद्दधामि सत्यमिति विश्वासं न करोमि, किन्तु भरते मम स्नेहोऽस्ति वा नवेति मनसः परीक्षार्थमेवेदं कृतमिति मन्य इति भावः ॥ १९ ॥ २० ॥ न श्रद्दधामीत्यत्र हेतुमाह—नन्विति । आमन्त्रणे ननुशब्दः । मे महात्मना तेन भरतेन राघवस्तुल्यः, भरत इव प्रेमास्पदीभूत इति मम, सन्निधाविति शेषः । बहुशः कथाः कथयसे अतः त्वया अप्रियमुक्तमिति न विश्वासं करोमीति भावः ॥ २१ ॥ तस्य तथा प्रियस्येत्यर्थः ॥ २२–२५ ॥

न केवलं शुश्रूषैवैवं वचनकारणम् अपितु प्रमाणादिकमपीत्याह–शुश्रूषामिति । गौरवं प्रतिपत्तिः । प्रमाणं पूजा । वचनक्रिया उक्तकरणम् ॥२६॥ परिवादादिकमपि रामविवासकारणं नास्तीत्याह–बहूनामिति । स्त्रीसहस्राणामुपजीविनां च सम्बन्धी परिवादो नोपपद्यते । बहूनामिति विशेषणेन तन्मध्ये एकया एकेन वा स्त्रीपुरुषाविशेषेण परिवादस्तत्सम्बन्धी परिभवविषयवादः अपवादः निन्दा वा राघवे नोपपद्यते न दृश्यते ॥ २७ ॥ अविवासन

शुश्रूषां गौरवं चैव प्रमाणं वचनक्रियाम् । कस्ते भूयस्तरं कुर्यादन्यत्र मनुजर्षभात् ॥ २६ ॥ बहूनां स्त्रीसहस्राणां बहूनां चोपजीविनाम् । परिवादोऽपवादो वा राघवे नोपपद्यते ॥२७॥ सान्त्वयन् सर्वभूतानि रामः शुद्धेन चेतसा । गृह्णाति मनुजव्याघ्रः प्रियैर्विषयवासिनः ॥ २८ ॥ सत्येन लोकान् जयति दीनान् दानेन राघवः । गुरून् शुश्रूषया वीरो धनुषा युधि शात्रवान् ॥ २९ ॥

निमित्तभूतान् भूयो गुणान् दर्शयति–सान्त्वयन्नित्यादि । अनेन वाङ्मनःकायैर्जनरञ्जकत्वमुक्तम् । प्रियैः अभीष्टप्रदानैः गृह्णाति संगृह्णाति ॥२८॥ सत्येनेति । सत्येन भूतहितेन । लोकान् स्वर्गादिवैकुण्ठपर्यन्तान् । जयति स्वाधीनान् करोति । दीनान् दरिद्रान् । दानेन धनप्रदानेन । जयति वशीकरोति । गुरून् शुश्रूषया जयति स्वहितोपदेशप्रवणान् करोति । शात्रवान् शत्रून् । धनुषा धनुःप्रदर्शनमात्रेण न तु बाणप्रयोगेण । युधि युद्धे । नतु कपटवृत्त्या । जयति निरस्यतीत्यर्थः । वीर इति सर्वत्र सम्बध्यते । दयावीरस्त्यागवीरो विद्यावीरः पराक्रमवीर इत्येवम् । चोलमहीपतिः कदाचित्सन्निहितं मध्यमवीथिभट्टारकं प्रति 'आत्मानं मानुषं मन्ये' इति वदन् रामः कथं जटायुषो मोक्षं दत्तवानिति पप्रच्छ । सोपि 'सत्येन लोकान् जयति' इत्युक्त्या महतीं बहुमति

शुश्रूषामिति । शुश्रूषां सेवाम् । गौरवं बहुमानम् । प्रमाणं प्रतिपत्तिः । वचनक्रिया उक्तकरणम् । ते तव । मनुजर्षभात् रामादन्यत्र रामं विना कः भूयस्तरम् अत्यन्तं कुर्यात्, अतस्तदीयवनवासं कथं रोचयसीति भावः ॥ २६ ॥ बहूनामिति । बहूनां स्त्रीसहस्राणां मध्ये एकयापि कृतः परिवादः अकार्यकरणनिमित्तं समूलमयशः, उपजीविनां मध्ये एकेनापि कथितोऽपवादः असूयाकल्पितं निर्मूलमयशः राघवे नोपपद्यते न विद्यत इत्यर्थः ॥ २७ ॥ कुत इत्याह–सान्त्वयन्निति । सर्वभूतानि सर्वप्राणिनः । शुद्धेन चेतसा सान्त्वयन् रामविषयवासिनः स्वदेशस्थान् जनान् प्रियैः इष्टार्थदानैः गृह्णाति स्ववशीकरोतीति योजना ॥२८॥ सत्येनेति । सत्येन लोकान् जयति वशीकरोति । दीनान् दानेन जयति समृद्धान् करोति । गुरून् शुश्रूषया जयति वशीकरोति आनन्दयति ॥ २९ ॥

मवाप्तवानित्यैतिह्यमत्र ज्ञेयम् ॥ २९ ॥ सत्यादीनि च न कादाचित्कानीत्याह–सत्यमिति । तपःप्रभृति गुणषट्कं पूर्वश्लोकेऽर्थसिद्धमनूद्यते–दानं परलोक प्रयोजनम् । तपः शास्त्रविहितभोजननिवृत्त्यादिरूपः । त्यागः ऐहिकप्रयोजनः प्रीत्यर्थः । मित्रता सर्वसुहृत्त्वम् । शौचं स्नानजन्यशुद्धिः । आर्जवं परं चित्तानुवर्त्तित्वम् । विद्या तत्त्वज्ञानम् । गुरुशुश्रूषा गुरोः शुश्रूषा पादसंवाहनादिपरिचर्या ॥ ३० ॥ तस्मिन्निति । आर्जवसम्पन्न इति दानादिसम्पत्तेरप्युप

सत्यं दानं तपस्त्यागो मित्रता शौचमार्जवम् । विद्या च गुरुशुश्रूषा ध्रुवाण्येतानि राघवे ॥ ३० ॥ तस्मिन्नार्जव सम्पन्ने देवि देवोपमे कथम् । पापमाशंससे रामे महर्षिसमतेजसि ॥ ३१ ॥ न स्मराम्यप्रियं वाक्यं लोकस्य प्रियवादिनः । स कथं त्वत्कृते रामं वक्ष्यामि प्रियमप्रियम् ॥ ३२ ॥ क्षमा यस्मिन् दमस्त्यागः सत्यं धर्मः कृतज्ञता । अप्यहिंसा च भूतानां तमृते का गतिर्मम ॥ ३३ ॥ मम वृद्धस्य कैकेयि गतान्तस्य तपस्विनः । दीनं लालप्यमानस्य कारुण्यं कर्तुमर्हसि ॥ ३४ ॥

लक्षणम् । पापं विवासनरूपम् । आशंससे प्रार्थयसि ॥३१॥ नेति । लोकस्य जनमात्रस्य । प्रियवादिनः प्रियवदनशीलस्य, किमुतास्माकमिति भावः । रामस्य सम्बन्धि अप्रियं विवासनविषयं वाक्यं न स्मरामि स्मर्तुमपि नशक्नोमीत्यर्थः । सः तदस्मर्ता अहम् । त्वत्कृते परुषोक्तिमत्स्त्रीकृते । रामं सर्वस्य रमयितारम् । प्रियं रमयितृत्वाभावेपि पुत्रत्वेन प्रियं प्रति कथमप्रियं वक्ष्यामि ॥ ३२ ॥ क्षमेति । यस्मिन् क्षमादयो वर्तन्ते तमृते मम का गतिः को वा रक्षकः ? तादृशं रक्षकं कथं त्यक्ष्यामीति भावः ॥ ३३ ॥ ममेति । गतान्तस्य गतः प्राप्तः अन्तश्चरमकालो येन । तस्य वृद्धत्वेपि प्राप्तचरमकालस्ये

सत्यमिति । सत्यं सत्यवचनम्, दानं सत्पात्रदानम्, त्यागः प्रत्यक्षः ऐहिकप्रयोजनः, देवतोद्देशेन द्रव्यत्यागो वा, मित्रता सत्सु मैत्री, शौचं बाह्याभ्यन्तरशुद्धिः, आर्जवं कपटराहित्यम् । एतानि सर्वाणि राघवे ध्रुवाणि ॥ ३० ॥ तास्मिन्निति । आर्जवसम्पन्ने कपटरूपदोषवर्जिते महर्षिवच्छमादिगुणसम्पन्ने । कथं पापं वनवासात्म कम् । आशंससे प्रार्थयसे ॥ ३१ ॥ न स्मरामीति । लोकस्य प्रियवादिनो रामस्य । अप्रियम् विवासनविषयकं वाक्यम् । न स्मरामि स्मर्तुमपि न शक्नोमि, सोऽहं प्रियं तं रामं त्वत्कृते अप्रियं वनं गच्छेति वाक्यरूपं कथं वक्ष्यामीति योजना । यद्वा अप्रियं वाक्यमिति रामवक्तृकं रामविषयकं वा न स्मरामि । कुतः ? प्रियवादिन इति, त्वत्कृते–त्वद्वचनक्रियासम्पादनार्थम् अप्रियं कथं वक्ष्यामीति योजना ॥ ३२ ॥ क्षमेति । क्षमा अन्तरिन्द्रियनिग्रहः, दमः बहिरिन्द्रियनिग्रहः, धर्मः नित्यकर्मानुष्ठानम् प्राणिनामहिंसा च यस्मिन् रामे वसतीति प्रत्येकमभिसम्बध्यते, तमृते मम का गतिः ? ॥ ३३ ॥ ममेति । गतान्तस्य गतायुषः तपस्विनो

त्यर्थः । तपस्विनः शोचनीयावस्थस्य । लालप्यमानस्य पुनःपुनः कथनशीलस्य । मम मयेत्यर्थः। सम्बन्धसामान्ये षष्ठी ॥३४॥ पृथिव्यामिति । साग रान्तायामित्यनेन कृत्स्नायामिति लभ्यते । यत्किंचिद्धनम् अधिगम्यते लभ्यते तत्सर्वं तव तुभ्यं दास्यामि। मन्युः रामविषयक्रोधः॥३५॥ अञ्जलिमिति । कुर्मि करोमि, अञ्जलिपूर्वकं पादवन्दनं करोमीत्यर्थः । शरणं रक्षितृ । अधर्मः प्रतिज्ञाभङ्गरूपः, रामाभिषेकमनुजानीहीत्यर्थः ॥३६॥ इतीत्यादिश्लोकद्व

पृथिव्यां सागरान्तायां यत्किञ्चिदधिगम्यते । तत्सर्वं तव दास्यामि मा च त्वां मन्युराविशेत् ॥ ३५ ॥ अञ्जलिं कुर्मि कैकेयि पादौ चापि स्पृशामि ते । शरणं भव रामस्य माधर्मो मामिह स्पृशेत् ॥ ३६ ॥ इति दुःखाभिसन्तप्तं विलपन्तमचेतनम् । घूर्णमानं महाराजं शोकेन समभिप्लुतम् ॥ ३७ ॥ पारं शोकार्णवस्याशु प्रार्थयन्तं पुनः पुनः । प्रत्युवाचाथ कैकेयी रौद्रा रौद्रतरं वचः ॥ ३८ ॥ यदि दत्त्वा वरौ राजन् पुनः प्रत्यनुतप्यसे । धार्मिकत्वं कथं वीर पृथिव्यां कथयिष्यसि ॥ ३९ ॥ यदा समेता बहवस्त्वया राजर्षयः सह । कथयिष्यन्ति धर्मज्ञा स्तत्र किं प्रतिवक्ष्यसि ॥ ४० ॥

यमेकान्वयम् । अचेतनं मूर्च्छितम्। घूर्णमानम् इतस्ततो विवर्तमानम् । शोकेन भाविरामविरहस्मरणदुःखेन । समभिप्लुतं सम्यगभिव्याप्तम्॥३७॥पारं अन्तम्, रामाभिषेकमिति यावत् । अथ कृत्स्नम् । इति वचोविशेषणम् । "आरम्भप्रश्नकात्स्न्येष्वथो अथ" इत्यमरः। रौद्रा भयङ्करविकारा । रामाभिषेक निवर्तनविषये यद्यद्वक्तव्यं तत्सर्वमुवाचेत्यर्थः ॥ ३८ ॥ धार्मिकत्वं स्वीयमितिशेषः ॥ ३९ ॥ कथयिष्यन्ति उपकारिण्याः कैकेय्याः किं प्रत्युपकृत

दीनस्य दीनं लालप्यमानस्य प्रलपतः मम कारुण्यं दयां कर्तुमर्हसि ॥ ३४ ॥ पृथिव्यामिति । भूमौ द्रव्यजातयस्तत्सर्वं तव दास्यामि त्वं मन्युं मा विश ॥३५॥ अञ्जलिमिति । कुर्मि करोमि । रामस्य शरणं रक्षित्री भव, अधर्मः सत्यव्यतिक्रमरूपः । इह रामाभिषेकरूपकार्यविषये । मां मास्पृशेत् मास्पृशतु यथा अधर्मप्राप्तिर्न भवति तथा त्वया कर्तव्यमित्यर्थः ॥३६॥ इतीति । अचेतनं मूर्च्छागतम्, घूर्णमानं घूर्णमानशरीरम् ॥३७॥ पारमिति । शोकार्णवस्य, आशु शीघ्रं, पारं निस्तारम्, प्रलपन्तं प्रार्थयन्तम्, रौद्रतरम् अतिदारुणं वचः प्रत्युवाचेति द्वयोरन्वयः ॥ ३८ ॥ यदीति श्लोकद्वयमेकं वाक्यम् । पृथिव्यां यदा राजर्षयः त्वया सह समेता भवन्ति तत्समाजे त्वं त्वदीयं धार्मिकत्वं कथयिष्यसि ते च मद्विषयवरदानादिप्रसङ्गं यदा कथयिष्यन्ति तदा तान् प्रति किं प्रतिवक्ष्यसि किमुत्तरं दास्यसि ?

मिति कदाचिद्धर्मप्रसङ्गे वक्ष्यन्ति । तत्र तदा । किं प्रतिवक्ष्यसि कीदृशं प्रत्युत्तरं दास्यसि ॥४०॥ यस्या इति । प्रसादे सति जीवामि प्रसादेन जीवामी

त्यर्थः । प्रसादमेवाह या चेति । या च मां मूर्च्छितदशायां रणादन्यत्रापनीयाभ्यपालयत् । शिशिरोपचारादिना ररक्षेत्यर्थः । तस्याः मया मिथ्या असत्यं कृतमिति वक्ष्यसि । किमिति काकुः । तस्मादद्य प्रतिज्ञां निर्वहेति भावः ॥४१॥ किल्बिषत्वमिति । किल्बिषत्वम् अपयशोरूपमालिन्यम् । नरेन्द्राणा

यस्याः प्रसादे जीवामि या च मामभ्यपालयत् । तस्याः कृतं मया मिथ्या कैकेय्या इति वक्ष्यसि ॥ ४१ ॥
किल्बिषत्वं नरेन्द्राणां करिष्यसि नराधिप । यो दत्त्वा वरमद्यैव पुनरन्यानि भाषसे ॥ ४२ ॥
शैब्यः श्येनकपोतीये स्वमांसं पक्षिणे ददौ । अलर्कश्चक्षुषी दत्त्वा जगाम गतिमुत्तमाम् ॥ ४३ ॥

मित्यनेन सजातीयेष्वेकेन कृतमपयशः सर्वानपि स्पृशति सर्वे राजान एवंविधा इति । अन्यानि वरदानविरुद्धानि ॥ ४२ ॥ दुष्करस्यापि प्रतिज्ञातस्य कर्त्तव्यत्वं पूर्वचक्रवर्त्त्यनुष्ठानेन दर्शयति–शैब्य इति । शैब्यो राजा श्येनकपोतीये श्येनकपोतयोर्विरोधे प्राप्ते । पक्षिणे श्येनाय । स्वमांसं कपोतमांसप्रतिनिधित्वेन ददौ । इत्थं किल पौराणिकी गाथा–इन्द्राग्नी श्येनकपोतौ भूत्वा शैब्यौदार्यं परीक्षितुं भक्षकभक्ष्यभावमापन्नौ शैब्यसमीपमागतौ । तत्र कपोतोऽभयार्थी शैब्याङ्कमाविवेश । तस्मै च सोऽभयं ददौ । ततः श्येनेन मद्भक्षणं दैवविहितं त्यजेत्युक्ते नाहं त्यजेयम्, अपि तु तत्प्रतिनिधिमांसमेव ददामीत्युक्ते तर्हि त्वन्मांसमेव मे प्रयच्छ नान्यदित्युक्ते स्वमांसमपि सर्वं दत्तवानिति । अलर्कश्च राजर्षिर्ब्राह्मणायान्धाय वरं प्रति

धर्मज्ञेति व्यङ्ग्योक्तिः ॥ ३९ ॥ ४० ॥ न किमपि प्रतिवचनं शक्यमित्याह–यस्या इति । यस्याः कैकेय्याः, प्रयत्ने युद्धे मूर्च्छितदशायां रणादन्यत्र रथापनयनादिप्रयत्ने सति जीवामि, या मामभ्यपालयत् शीतोपचारादिना ररक्ष । तस्याः कैकेय्याः । प्रतिज्ञातं वचनमिति शेषः । मिथ्या असत्यं कृतमिति वक्ष्यसीति सोपहासं वाक्यम् ॥ ४१ ॥ किल्बिषत्वमिति । नरेन्द्राणां किल्बिषत्वम् अपयशोरूपं मालिन्यं करिष्यसि, यस्त्वमद्यैव वरं दत्त्वा पुनरन्यानि भाषसे मिथ्यावादेन त्वया राजकुलं सर्वमयशोग्रस्तं जातमित्याशयः ॥ ४२ ॥ दुष्करस्यापि प्रतिश्रुतस्य परिपालनं दर्शयति–शैब्य इत्यादि । त्वद्वंश्यः शैब्यः । सत्यपरिपालनाय दत्ताभयकपोतरक्षणाय, तन्मांसार्थिने श्येनाय स्वमांसमेव प्रतिनिधित्वेन ददौ, न तु कपोतमिति श्येनकपोतीये आख्याने श्रूयते । तथाहि–इन्द्राग्नी श्येनकपोतरूपौ भूत्वा शैब्यौदार्यजिज्ञासया भक्षकभक्ष्यभावमापन्नौ शैब्यसमीपं गतौ, ततः कपोतः शैब्याङ्कं विवेश, तस्मै च सोऽभयं ददौ । ततः श्येनेन मद्भक्षणं कपोतं त्यजेत्युक्ते–नाहं त्यजेयम् अपितु तत्प्रतिनिधिमांसमेव ददामीत्युक्ते, तर्हि त्वन्मांसमेव प्रयच्छेति प्रतिपादिते स्वमांसमेव सर्वं दत्तवानिति कथा ।

श्रुत्य तन राजचक्षुषा स्वचक्षुःप्रतिसन्धाने अर्थिते स्वचक्षुषी दत्त्वा उत्तमां गतिं जगाम ॥ ४३ ॥ किंच सागरः समुद्रो देवैः प्रार्थितो वेलानतिलङ्घनाय तत्तेभ्यः प्रतिश्रुत्याऽद्यापि वेलां नातिवर्त्तते । तस्मात्त्वमपि पूर्वशैब्यादिवृत्तान्तमनुस्मरन् समयं प्रतिज्ञाम् । अनृतं मिथ्याभूतं माकार्षीः ॥ ४४ ॥ एवं न्यायमुक्त्वा तदनुमोदमानं प्रत्याह-स त्वमिति ॥ ४५ ॥ स्वसिद्धान्तमाह-भवत्विति । मदुक्तो रामविवासनपूर्वको भरताभिषेकः धर्मो वा अधर्मो वा

सागरः समयं कृत्वा न वेलामतिवर्त्तते । समयं मानृतं कार्षीः पूर्वं वृत्तमनुस्मरन् ॥ ४४ ॥ स त्वं धर्मं परित्यज्य रामं राज्येऽभिषिच्य च । सह कौसल्यया नित्यं रन्तुमिच्छसि दुर्मते ॥ ४५ ॥ भवत्वधर्मो धर्मो वा सत्यं वा यदि वानृतम् । यत्त्वया संश्रुतं मह्यं तस्य नास्ति व्यतिक्रमः ॥ ४६ ॥ अहं हि विषमद्यैव पीत्वा बहु तवाग्रतः । पश्यतस्ते मरिष्यामि रामो यद्यभिषिच्यते ॥४७॥ एकाहमपि पश्येयं यद्यहं राममातरम् । अञ्जलिं प्रतिगृह्णन्तीं श्रेयो ननु मृतिर्मम ॥४८॥ भरतेनात्मना चाहं शपे ते मनुजाधिप । यथा नान्येन तुष्येयमृते रामविवासनात् ॥४९॥

भवतु 'रामं प्रव्राजयारण्यम्' इत्यादिमदुक्तं वचनं सत्यं समीचीनं वा अनृतं असमीचीनं वा भवतु, त्वया यन्मह्यं संश्रुतं शपथपूर्वकं दास्यामीति प्रतिज्ञातं तस्य व्यतिक्रमोऽन्यथाभावो नास्तीति योजना ॥ ४६ ॥ व्यतिक्रमे किं करिष्यसीत्यत्राह-अहमिति ॥ ४७ ॥ कौसल्यातोऽप्यधिकं भोगं तव दास्यामीत्यत्र तत्प्राधान्यं न सह इत्याह-एकाहमिति । अञ्जलिं प्रतिगृह्णन्तीं राजमातृत्वेन सर्वेषामिति शेषः । श्रेयः तदा तदपेक्षयेति

यद्वा आहारकांक्षिणः श्येनस्य शरणार्थिनः कपोतस्य विरोधे, अन्यत समानम् । अलर्कश्च राजर्षिः । ब्राह्मणाय याचमानाय वरं प्रतिश्रुत्य तेन-'राजन् ! तव चक्षुषा मम चक्षुः प्रतिसन्धातव्यम्' इति पृष्टे स्वचक्षुर्दत्तवान् । सागरः देवैः प्रार्थितो वेलानतिलङ्घनसमयं तेभ्यः प्रतिश्रुत्य न वेलामतिवर्तते । यद्येवमतः किमत आह-समयमिति । पूर्ववृत्तं शैब्यादीनां वृत्तमनुस्मरन त्वं च समयं वरौ दास्यामीति सङ्केतमनृतं माकार्षीः ॥ ४३-४५ ॥ सिद्धान्तमाह-भवत्विति । मदुक्तरामविवासपूर्वकभरताभिषेकः धर्मो वा समीचीनं वा अधर्मो वा असमीचीनं वा भवतु, त्वया यन्मह्यं संश्रुतं शपथपूर्वकं दास्यामीति, तस्य व्यतिक्रमः अन्यथाभावो नास्तीति योजना ॥ ४६ ॥ विपक्षे बाधकमाह-अहं हीति ॥ ४७ ॥ अञ्जलिं प्रतिगृह्णन्तीमिति । राममातृत्वेन, सर्वलोकानामिति शेषः ॥ ४८ ॥ भरतेनेति । हे मनुजाधिप ! रामविवासनादृते अन्येन रत्नादिना यथाहं न तुष्येयं तथा आत्मना प्राणभूतेन भरतेन ते तव समीप इति शेषः । शपे

शेषः ॥ ४८–५० ॥ श्रुत्वेति । वनवासैश्वर्यरूपं वृतं वरमिति सम्बन्धः ॥ ५१ ॥ नाभ्यभाषतेति । प्रैक्षतानिमिष इति निरन्तरचिन्तावशात् क्रोधाद्वा निर्निमेषप्रेक्षणम् ॥ ५२ ॥ तामिति । दुःखशोकमयीमिति अनुचितभरताभिषेकात् दुःखम्, रामविवासनाच्छोकः ॥ ५३ ॥ स इति । शपथं कृतं

एतावदुक्त्वा वचनं कैकेयी विरराम ह । विलपन्तं च राजानं न प्रतिव्याजहार सा ॥ ५० ॥ श्रुत्वा च राजा कैकेय्या वृतं परमशोभनम् । रामस्य च वने वासमैश्वर्यं भरतस्य च ॥ ५१ ॥ नाभ्यभाषत कैकेयीं मुहूर्तं व्याकुलेन्द्रियः । प्रैक्षतानिमिषो देवीं प्रियामप्रियवादिनीम् ॥ ५२ ॥ तां हि वज्रसमां वाचमाकर्ण्य हृदयाप्रियाम् । दुःखशोकमयीं घोरां राजा न सुखितोऽभवत् ॥ ५३ ॥ स देव्या व्यवसायं च घोरं च शपथं कृतम् । ध्यात्वा रामेति निश्वस्य च्छिन्नस्तरुरिवापतत् ॥ ५४ ॥ नष्टचित्तो यथोन्मत्तो विपरीतो यथातुरः । हततेजा यथा सर्पो बभूव जगतीपतिः ॥ ५५ ॥ दीनया तु गिरा राजा इति होवाच कैकयीम् ॥५६॥ अनर्थमिममर्थाभं केन त्वमुपदर्शिता । भूतोपहतचित्तेव ब्रुवन्ती मां न लज्जसे ॥५७॥ शीलव्यसनमेतत्ते नाभिजानाम्यहं पुरा । बालायास्तत्त्विदानीं ते लक्षये विपरीतवत् ॥ ५८ ॥

स्वेनेति शेषः । निश्वस्येति अशक्यप्रतीकारत्वादिति भावः ॥ ५४ ॥ नष्टचित्त इति । नष्टचित्तः कलुषितहृदयः । उन्मत्तः उन्मादी । विपरीतः सन्निपातादिना विपरीतप्रकृतिः । आतुरः व्याधितः । " व्याधितोऽपटुरातुरः " इत्यमरः । हततेजाः मन्त्रापहृतवीर्यः ॥ ५५ ॥ दीनयेति ॥ ५६ ॥ अनर्थमित्यादि । उपदर्शिता बोधिता ॥ ५७ ॥ शीलव्यसनं सद्वृत्तभ्रंशम्, "व्यसनं विपदि भ्रंशे" इत्यमरः । नाभिजानामि किन्तु शीलमेवाभिजानामि ।

शपथं करोमि ॥ ४९ ॥ ५० ॥ श्रुत्वेति । परमशोभनमित्यत्र अशोभनमिति छेदः । कैकेयीं प्रैक्षत, कोपादिति शेषः ॥ ५१–५३ ॥ स इति । घोरं व्यवसायं कृतं शपथम् । स्वेनेति शेषः । निश्वस्येति अशक्यप्रतिक्रियत्वात् ॥ ५४ ॥ नष्टचित्त इति । विपरीतः सन्निपातादिना विपरीतः । आतुरः व्याधिग्रस्तः । हततेजाः मन्त्रहतवीर्यः तथा बभूव ॥५५॥५६॥ अनर्थमिति । उपदर्शिता बोधिता, भूतोपहतचित्तेव पिशाचाक्रान्तहृदयेव मां प्रति ब्रुवन्ती सती न लज्जसे ॥५७॥ शीलव्यसन

तत्र हेतुमाह बालाया इति । इदानीं प्रौढतायां तत् शीलं विपरीतवत् विपरीतत्ववत् । भावप्रधानो निर्देशः । स्वार्थे वतिर्वा ॥ ५८ ॥ कुत इति । कुतो निमित्तात् ॥ ५९ ॥ एवंविधमित्यस्यैव विवरणम्—राष्ट्र इति । वने राघवमिति आसीनमित्यनुषङ्गः । एतेन भावेन भरताभिषेकरूपेण । विरम मा प्रवर्तिष्ठाः । अनृतेन अनृतपदवाच्येन एतेन वा रामविवासनरूपेण भावेन वा विरमेति सम्बन्धः ॥ ६० ॥ नृशंस इति । नृशंसे निर्दये । तत्र हेतुः पाप

कुतो वा ते भयं जातं या त्वमेवंविधं वरम् ॥ ५९ ॥ राष्ट्रे भरतमासीनं वृणीषे राघवं वने । विरमैतेन भावेन त्वमेतेनानृतेन वा । यदि भर्तुः प्रियं कार्यं लोकस्य भरतस्य च ॥ ६० ॥ नृशंसे पापसङ्कल्पे क्षुद्रे दुष्कृतकारिणि । किन्नु दुःखमलीकं वा मयि रामे च पश्यसि ॥६१॥ न कथञ्चिदृते रामाद्भरतो राज्यमावसेत् । रामादपि हि तं मन्ये धर्मतो बलवत्तरम् ॥ ६२ ॥ कथं द्रक्ष्यामि रामस्य वनं गच्छेति भाषिते । मुखवर्णं विवर्णं तं यथैवेन्दुमुपप्लुतम् ॥ ६३ ॥

सङ्कल्प इति । रामविवासनरूपपापसङ्कल्पे । तत्रापि हेतुः क्षुद्र इति । अल्पमतिके । तत्रापि हेतुः दुष्कृतकारिणीति । जन्मान्तरे पापकारिणीत्यर्थः । दुःखं दुःखनिमित्तम् । अलीकं अप्रियम् । "अलीकं त्वप्रियेऽनृते" इत्यमरः ॥६१॥६२॥ कथमिति । वनं गच्छेति मया भाषिते सति विवर्णं विपरीतवर्णत्वमिति । एतत् इदानीमुत्पन्नं शीलव्यसनं सद्वृत्तिभ्रंशनम् पुरा नाभिजानामि बालायाः ते तव तत् शीलं विपरीतवत् विपरीतं लक्षये जानामि ॥ ५८ ॥ कुतो वेति । कुतो निमित्तात्ते भयं जातं येन भयेनैवंविधं वरं वृणीषे ॥ ५९ ॥ वरमेवाह—राष्ट्र इति । भरतं राष्ट्रे राज्ये आसीनं सन्तम् वने राघवम् आसीनं सन्तं वृणीषे । विरमेति । भर्तुर्दशरथस्य मम लोकस्य जनस्य भरतस्य च यदि प्रियं कार्यं तर्हि एतेन भरताभिषेकरूपेण भावेन अभिप्रायेण, अनृतेन पापजनकेन एतेन भावेन रामाभिषेकविघातविषयकेणाभिप्रायेण च विरम मा प्रवर्तस्व । वाशब्दस्समुच्चये । भरताभिषेकविषयां रामाभिषेकविघातविषयां च बुद्धिं निवर्तयेति भावः ॥ ६०॥ नृशंस इति । दुःखं दुःखसाधनम् । अलीकम् अपराधम् ॥६१॥ व्यर्थश्चेदं मत्क्लेशनमित्याह--न कथञ्चिदिति । रामादृते रामं विना भरतः कथञ्चिदपि राज्यं नावसेत् नाक्रामेत्, अनेन यथाभागशः चतुर्णामेव राज्यमनुमन्यस्वेत्युक्तम् । यद्वा भरतस्याभिषेकं रामस्य केवलवृद्धस्य मम समीपेऽवस्थानं वाऽनुमन्यस्व, नान्यथा त्वत्प्रयोजनमित्युपदेशः । नावसेदित्यत्र हेतुमाह रामादिति । हि यस्मात् भरतं रामादपि धर्मेण बलवत्तरम् अतिशयितधर्मवन्तं मन्य इति योजना ॥६२॥ कथ

सत्य०—अनृतेन ऋतंनाम हरिविरुद्धेन, भावेन अभिप्रायेण ॥ ६० ॥ वनं गच्छेति मया भाषिते उक्ते सत्यपि । त्वं कथं वक्ष्यसि, तस्य त्वदतिप्रियत्वादिति भावः । उपप्लुतमिन्दुं यथा तमिव विवर्णं मुखवर्णं आदर्शादौ कथं द्रक्ष्यामीति सम्बन्धः ॥ ६३ ॥

मापादितम् । रामस्य मुखवर्णम् उपप्लुतं राहुग्रस्तमिव कथं द्रक्ष्यामीति सम्बन्धः ॥६३॥ तामिति । तां बुद्धिस्थां सुकृतां मन्त्रिभिः सह सुष्ठु निश्चिताम् । अथ सुहृद्भिस्सह निश्चितां बुद्धिम् अपावृत्तां अधरोत्तरीकृतां कथं द्रक्ष्यामि अनुभविष्यामि॥६४॥ किमिति । बतेति खेदे । ऐक्ष्वाकः रामः । राज्यमकारयत् किमकरोत् इति मां किं वक्ष्यन्तीतिसम्बन्धः। यद्वा बालः अज्ञः दशरथः घुणक्षतलिपिन्यायेन दैवाच्चिरं राज्यमकरोदिति मां वक्ष्यन्ति किमिति ॥६५॥

तां हि मे सुकृतां बुद्धिं सुहृद्भिः सह निश्चिताम् । कथं द्रक्ष्याम्यपावृत्तां परैरिव हतां चमूम् ॥ ६४ ॥ किं मां वक्ष्यन्ति राजानो नानादिग्भ्यः समागताः । बालो बतायमैक्ष्वाकश्चिरं राज्यमकारयत् ॥ ६५ ॥ यदा तु बहवो वृद्धा गुणवन्तो बहुश्रुताः । परिप्रक्ष्यन्ति काकुत्स्थं वक्ष्यामि किमहं तदा ॥ ६६ ॥ कैकेय्या क्लिश्यमानेन पुत्रः प्रव्राजितो मया । यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति ॥ ६७ ॥

यदेति । यदा श्वःप्रातः वृद्धाः काकुत्स्थं प्रक्ष्यन्ति क्व गतो रामः कुतो नाभिषिक्त इति प्रक्ष्यन्ति, तदाहं किं वक्ष्यामि प्रत्युत्तरम् ॥६६॥ कैकेयीवरप्रदाननिमित्तं प्रव्राजित इत्युच्यतामित्यत्राह–कैकेय्येति । कैकेय्या क्लिश्यमानेन पूर्वदत्तौ वरौ भरताभिषेकरामविवासनरूपेण दातव्यावित्युक्तवत्या कैकेय्या पीड्यमानेन मया प्रव्राजित इत्येतत्सत्यं यदि ब्रवीमि तदा तत् राममभिषेक्ष्यामीति वचनं असत्यं भविष्यति, तद्बाधो न सम्भवति । पूर्वप्रवृत्तत्वादिति

मिति । भाषिते उक्ते सति, मयेति शेषः । उपप्लुतं राहुग्रस्तम् । इन्दुं यथा चन्द्रमिव विपरीतवर्णं कथं द्रक्ष्यामीति ॥ ६३ ॥ तामिति । सुकृतां सम्यक्प्रवर्तितां, अत्र हेतुः–सुहृद्भिस्सह निश्चितां बुद्धिं रामाभिषेकविषयिणीं बुद्धिमपावृत्तां कथं द्रक्ष्यामि ॥ ६४ ॥ किमिति । बालो बतायमिति । बालो मूढः अयमैक्ष्वाकः दशरथः चिरकालं कथं राज्यमकारयत् अकरोदिति नानादिग्भ्यः समागता राजानः मां वक्ष्यन्तीति योजना । बतेति खेदे ॥ ६५ ॥ यदेति । वृद्धाः काकुत्स्थं परिप्रक्ष्यन्ति, परस्परमिति शेषः । रामो दशरथेन किमर्थं निर्वासित इति राममुद्दिश्य यदि वक्ष्यन्ति तदाहं किमुत्तरं दद्याम् ?, उत्तरास्फूर्तेर्मौनमेव भजिष्यामीति परमार्थः ॥ ६६ ॥ ननु कैकेय्या क्लिश्यमानेन मया रामः प्रस्थापित इत्युत्तरं दीयतामत आह–कैकेय्येति । कैकेय्या क्लिश्यमानेन पूर्वं सामान्येन दत्तौ वरौ इदानीं भरताभिषेकरामविवासनरूपेण दातव्यावित्युक्तवत्या कैकेय्या पीड्यमानेन मया रामः प्रस्थापित इत्येत् सत्यं यदि ब्रवीमि तत्पूर्वोक्तं पूर्वैर्गुर्वसिष्ठ

---

१ रामः। इति पाठान्तरम् ।

भावः ॥ ६७ ॥ किमिति । किं मां वक्ष्यति, मत्पुत्रेण ते किमपराद्धमित्येवं वक्ष्यतीति भावः । किं प्रतिवक्ष्यामि, न किमपीत्यर्थः ॥ ६८ ॥ यदेत्यादि श्लोकद्वयमेकान्वयम् । यदा यदा उपतिष्ठति तत्तदुचितकृत्येनोपास्ते तदातदा सत्कारार्हा तव कृते न सत्कृता । तव विप्रियं भविष्यतीति सा न सत्कृतेत्यर्थः । परिचर्याकाले दासीवत्परिचरति न महिषीत्वं पुरस्करोति । द्यूतक्रीडादिसमये सखीव व्यवहरति । धर्मानुष्ठानसमये भार्यावत् भार्य्यया यथा

किं मां वक्ष्यति कौसल्या राघवे वनमास्थिते । किञ्चैनां प्रतिवक्ष्यामि कृत्वा विप्रियमीदृशम् ॥ ६८ ॥ यदा यदा हि कौसल्या दासीवच्च सखीव च । भार्यावद्भगिनीवच्च मातृवच्चोपतिष्ठति ॥६९॥ सततं प्रियकामा मे प्रियपुत्रा प्रियंवदा । न मया सत्कृता देवी सत्कारार्हा कृते तव ॥ ७० ॥ इदानीं तत्तपति मां यन्मया सुकृतं त्वयि । अपथ्यव्यञ्जनोपेतं भुक्तमन्नमिवातुरम् ॥ ७१ ॥ विप्रकारं च रामस्य सम्प्रयाणं वनस्य च । सुमित्रा प्रेक्ष्य वै भीता कथं मे विश्वसिष्यति ॥ ७२ ॥

वर्तितव्यं तथा वर्तते न तु महिषीत्वाभिमानेन जोषमास्त इत्यर्थः। भार्य्यान्तरविवाहसमये भगिनीवत् सोदरीव । उपलालयति शरीरपोषणादिदशायां मातृवद्धितपरा तिष्ठतीतिभावः ॥६९॥७०॥ इदानीमिति । इदानीं त्वद्दौर्जन्यदर्शनकाले त्वयि विषये । मया यत्सुकृतं सुष्ठूपचरितं तत् अपथ्यव्यञ्जनोपेतं दध्याद्युपस्कृतमन्नम् आतुरं व्याधितमिव मां तपति तापयति । अन्तर्भावितण्यर्थोऽयम् । त्वय्युपचाराकरणे सम्प्रति मम ताप एव न भवेत् । एतादृशवाञ्छभ्याभावादितिभावः ॥७१॥ विप्रकारमिति । विप्रकारं विपरीतप्रकारम्, अभिषेकतिरस्कारमित्यर्थः। वनस्येति कर्मणि षष्ठी । भीता मत्पुत्रस्य

वामदेवादिसहितराजसभायामुक्तं रामाभिषेकविषयप्रतिज्ञावाक्यम् असत्यं भविष्यति ॥ ६७ ॥ ६८ ॥ यदा यदेति तत्तदुचितकाल इत्यर्थः । कौसल्या सेवायां दासीव, परमरहस्यकथने सखीव, धर्माचरणे भार्येव, हिताशंसने भगिनीव, मृष्टान्नदाने मातृवच्चोपतिष्ठते सेवत इत्यर्थः ॥ ६९ ॥ ७० ॥ इदानीमिति । इदानीं रामविवासे सति यन्मया त्वयि सुकृतं शोभनं कर्म शुश्रूषालक्षणं कृतं तत् अपथ्यव्यञ्जनोपेतं सत् भुक्तमन्नं यथा आतुरं रोगिणं [illegible]ते तापयति ॥ ७१ ॥ विप्रकारमिति । वनस्य संप्रयाणं प्रयाणात्मकं रामस्य विप्रकारं मया कृतमपकारं प्रेक्ष्य भीता सुमित्रा मे मह्यं कथं विश्वसिष्यति सकललोकानन्दकरमपि रामं त्यक्तुकामस्य दशरथस्य न किञ्चिदकार्यमस्तीति सुमित्रा मयि विश्वासं न करिष्यतीति भावः ॥ ७२ ॥

विप्रकारः किमुतेति भीता । मे माम् ॥ ७२ ॥ कृपणमिति । श्रोष्यतीति यत् तत् कृपणं कष्टम् बतेति योजना ॥ ७३–७६ ॥ सतीमिति । पूर्वं सतीत्वेन ज्ञातां त्वामिदानीमनेन व्यापारेण असतीं सतीं असतीत्वेन स्थितां व्यवस्यामि । कथमिव ? रूपिणीं दृष्टिप्रियां विषसंयुक्तां मदिरां मद्यविशेषं

कृपणं बत वैदेही श्रोष्यति द्वयमप्रियम् । मां च पञ्चत्वमापन्नं रामं च वनमाश्रितम् ॥७३॥ वैदेही बत मे प्राणान् शोचन्ती क्षपयिष्यति । हीना हिमवतः पार्श्वे किन्नरेणेव किन्नरी ॥७४॥ न हि राममहं दृष्ट्वा प्रविशन्तं महावने । चिरं जीवितुमाशंसे रुदन्तीं चापि मैथिलीम् ॥ ७५ ॥ सा नूनं विधवा राज्यं सपुत्रा कारयिष्यसि । न हि प्रव्राजिते रामे देवि जीवितुमुत्सहे ॥ ७६ ॥ सतीं त्वामहमत्यन्तं व्यवस्याम्यसतीं सतीम् । रूपिणीं विषसंयुक्तां पीत्वेव मदिरां नरः ॥ ७७ ॥ अनृतैर्बहु मां सान्त्वैः सान्त्वयन्ती स्म भाषसे । गीतशब्देन संरुद्ध्य लुब्धो मृगमिवावधीः ॥ ७८ ॥ अनार्य इति मामार्याः पुत्रविक्रायिकं ध्रुवम् । धिक्करिष्यन्ति रथ्यासु सुरापं ब्राह्मणं यथा ॥ ७९ ॥

पीत्वा नरः पानानन्तरं तामसतीं दुष्टामध्यवस्यति तथा कार्यकाले त्वामसतीमध्यवस्यामीत्यर्थः ॥ ७७ ॥ अनृतैरिति । अनृतैः सान्त्वैरिष्टवचनैः मां सान्त्वयन्ती सती भाषसे स्म । अतः गीतशब्देन मृगवशीकरणहेतुगानशब्देन संरुध्य मृगं लुब्धः व्याधः इव मामवधीः ॥ ७८ ॥ अनार्य इति ।

कृपणमिति । पञ्चत्वमापन्नं मां, रामं वनमाश्रितं चेत्यप्रियद्वयं वैदेही कृपणं दैन्ययुक्तं यथा तथा श्रोष्यति, बतेति खेदे ॥ ७३ ॥ तदेव सीताकार्पण्यं प्रदर्श्यते—वैदेहीत्यादि । मे मम । रामविवासनादिव्यापारेणेतिशेषः । शोचन्ती प्राणान् क्षपयिष्यति । यद्वा मदर्थम् उपलक्षणमेतत् । रामार्थं शोचन्ती प्राणान् क्षपयिष्यतीति वार्थः । बतेति खेदे ॥ ७४ ॥ सीताया इव ममापि प्राणक्षपणं प्राप्तमित्याह—न हीति ॥ ७५ ॥ सेति । नूनं ध्रुवम् ॥ ७६ ॥ सतीमिति । सतीम् आपातरमणीयसद्वृत्तवतीम्, शुश्रूषादिना सतीत्वेन प्रतीताम् असतीं सतीं पतिमारकत्वेन सर्वथा असतीं भवन्तीं व्यवस्यामि निश्चिनोमि । रूपिणीं चारुरूपतया मदिरां पीत्वा विकारेण विषसंयुक्तेति यथा जानाति तथेत्यर्थः ॥ ७७ ॥ अनृतैरिति । सान्त्वैः इष्टवचनैः । गीतशब्देन गीतध्वनिना ॥ ७८ ॥ अनार्यः पापीति मां पुत्रविक्रायिकं कैकेयीरूपमूल्येन पुत्रं विक्रीतवन्तम्, ग्राम्यसुखार्थं पुत्रं त्यक्तवन्तमित्यर्थः । धिक्करिष्यन्ति विगर्हिष्यन्तीति यावत् ॥ ७९ ॥

---

१ बत मत्प्राणान् । २ प्रवसन्तम् । ३ रामेप्रव्राजिते देवि नाहं जीवितुमुत्सहे इति पाठान्तरम् ।

पुत्रविक्रायिकं पुत्रमूल्येन स्त्रीसुखक्रेतारं माम् आर्यास्सन्तः अयमनार्यः पुत्रविक्रयपापकृदिति धिक्करिष्यन्ति ॥ ७९ ॥ एतादृशदुःखस्याननुभूतत्वाद्र विषादातिशयेन विस्मयते–अहो इति । कृच्छ्रं कष्टं "स्यात् कष्टं कृच्छ्रम्" इत्यमरः । एतादृशदुःखकृच्छ्रे कदाचिदपि मया न प्राप्ते इत्यर्थः । किञ्च यस्मिन् वरप्रदानविषये । तव वाचः क्षमे एवंविधं दुःखं पुराकृतम् । अशुभमिवाशुभफलमिव प्राप्तम् ॥८०॥ सौख्यार्थं कृतं त्वद्रक्षणं स्वनाशाय परिणत

अहो दुःखमहो कृच्छ्रं यत्र वाचः क्षमे तव । दुःखमेवंविधं प्राप्तं पुराकृतमिवाशुभम् ॥ ८० ॥ चिरं खलु मया पापे त्वं पापेनाभिरक्षिता । अज्ञानादुपसम्पन्ना रज्जुरुद्बन्धिनी यथा ॥८१॥ रममाणस्त्वया सार्द्धं मृत्युं त्वां नाभिलक्षये । बालो रहसि हस्तेन कृष्णसर्पमिवास्पृशम् ॥ ८२ ॥ मया ह्यपितृकः पुत्रः स महात्मा दुरात्मना । तं तु मां जीव लोकोऽयं नूनमाक्रोष्टुमर्हति ॥८३॥ बालिशो बत कामात्मा राजा दशरथो भृशम् । स्त्रीकृते यः प्रियं पुत्रं वनं प्रस्था पयिष्यति ॥ ८४ ॥ व्रतैश्च ब्रह्मचर्यैश्च गुरुभिश्चोपकर्शितः । भोगकाले महत्कृच्छ्रं पुनरेव प्रपत्स्यते ॥ ८५ ॥

मिति खिद्यति–चिरमित्यादिना ॥ ८१ ॥ रममाण इति । नाभिलक्षये किंत्वस्पृशमिति योजना ॥ ८२ ॥ मयेति । अपितृकः पितृकृतरक्षणादिरहित इत्यर्थः । आसीदिति शेषः । तं तथाविधं माम् । आक्रोष्टुम् आक्रोशं कर्तुम् ॥८३॥ आक्रोशप्रकारमाह–बालिश इति । बालिशः मूर्खः "मूर्खवैधेय बालिशाः" इत्यमरः ॥ ८४ ॥ व्रतैरिति । व्रतैः काण्डव्रतैः । ब्रह्मचर्यैः मधुमांसवर्जनादिब्रह्मचारिधर्मैः । गुरुभिः गुरुकृतशिक्षादिभिः । भोगकाले

अहो दुःखमिति । कृच्छ्रं कष्टम्, यत्र यस्मिन् वरदानविषये "चीराजिनजटाधारी रामो भवतु तापसः" इत्येतादृशीस्तव वाचः यतः क्षमे, अतः पुरा कृतमशुभमेव अशुभफलमेव एवंविधम् अपरिहार्यत्वेन अवश्यानुभाव्यं दुःखं प्राप्तमिति सम्बन्धः ॥ ८० ॥ सौख्यार्थं कृतं त्वद्रक्षणं स्वविनाशाय परिणतमिति खिद्यते–चिरंखल्वित्यादिना । उपसम्पन्ना कण्ठलग्नेत्यर्थः॥८१॥ बाल इति। बालो हस्तेन कृष्णसर्पं यथा स्पृशति तथा त्वामपि अज्ञानाद् हस्तेन अस्पृशम् अज्ञाना त्वावकपाणिग्रहणं कृतवानस्मीति भावः ॥८२॥ तं त्वित्यादि । महात्मा पुत्रो मया जीवतापि अपितृकः पितृरहितः कृतः, ततः लोको माम् आक्रोष्टुं निन्दितुम् अर्हति ॥ ८३ ॥ आक्रोशप्रकारमेवाह–बालिश इति ॥ ८४ ॥ व्रतैरिति । उपकर्शितः प्रापितकार्श्यः ॥ ८५ ॥

गार्हस्थ्यावस्थायाम् ॥ ८५ ॥ नालमिति । सः पुत्रः वनं प्रव्रजेत्युक्तः सन् द्वितीयं वचनं परिहारवचनं मां प्रति भाषितुं नालम्, किन्तु बाढमित्येव वक्ष्यति । बाढमित्यङ्गीकारोक्तिः ॥ ८६ ॥ यदीति । मे मया वनङ्गच्छेति चोदितो रामः प्रतिकूलं वनं प्रत्यगमनं यदि कुर्यात्तदा मे प्रियं स्यात् । वत्सस्तु तन्न करिष्यति ॥ ८७ ॥ शुद्धभावः शुद्धहृदयः । मे भावं हृदयं न ज्ञास्यति । मां शुद्धतया जानन् मम वचनहृदयं न ज्ञास्यतीतिभावः ।

नालं द्वितीयं वचनं पुत्रो मां प्रतिभाषितुम् । स वनं प्रव्रजेत्युक्तो बाढमित्येव वक्ष्यति ॥८६॥ यदि मे राघवः कुर्याद्वनं गच्छेति चोदितः । प्रतिकूलं प्रियं मे स्यान्न तु वत्सः करिष्यति ॥८७॥ शुद्धभावो हि भावं मे न तु ज्ञास्यति राघवः । स वनं प्रव्रजेत्युक्तो बाढमित्येव वक्ष्यति ॥ ८८ ॥ राघवे हि वनं प्राप्ते सर्वलोकस्य धिक्कृतम् । मृत्युरक्षमणीयं मां नयिष्यति यमक्षयम् ॥ ८९ ॥ मृते मयि गते रामे वनं मनुजपुङ्गवे । इष्टे मम जने शेषे किं पापं प्रतिपत्स्यसे ॥ ९० ॥ कौसल्यां मां च रामं च पुत्रौ च यदि हास्यति । दुःखान्यसहती देवी मामेवानुमरिष्यति ॥ ९१ ॥ कौसल्यां च सुमित्रां च मां च पुत्रैस्त्रिभिः सह । प्रक्षिप्य नरके सा त्वं कैकेयि सुखिता भव ॥ ९२ ॥ मया रामेण च त्यक्तं शाश्वतं सत्कृतं गुणैः । इक्ष्वाकुकुलमक्षोभ्यमाकुलं पालयिष्यसि ॥ ९३ ॥

अतो बाढमित्येव वक्ष्यतीति सम्बन्धः ॥८८॥ राघव इति । सर्वलोकस्य सर्वजनस्य "लोकस्तु भुवने जने" इत्यमरः । धिक्कृतं धिक्करणम् । अक्षमणीयं क्षन्तुमशक्यम्, किन्तु मृत्युर्मां यमक्षयं यमगृहं नयिष्यति ॥८९॥ मृत इति । शेषे कौसल्यादौ । किं पापं कमन्यायं प्रतिपत्स्यसे चिन्तयिष्यसि ॥ ९० ॥ कौसल्यामिति । पुत्रौ लक्ष्मणशत्रुघ्नौ । देवी सुमित्रा ॥ ९१ ॥ कौसल्यामिति । अत्र नरकशब्देन दुःखं लक्ष्यते ॥ ९२ ॥ मयेति । आकुलं क्षुभितं

नालमिति । द्वितीयं वचनं परिहाररूपं प्रतिभाषितुं नोत्सहते स बाढमित्येव वक्ष्यति ॥ ८६ ॥ यदीति । वनं गच्छेति मया भाषिते प्रतिकूलं यदि कुर्यात्तर्हि मे प्रियं स्यात् । वत्सः श्रीरामस्तु प्रतिकूलं न करिष्यति ॥ ८७ ॥ शुद्धभाव इति । शुद्धभावः राघवः मे भावं वनं गच्छेत्येवंरूपम् ॥ ८८ ॥ राघव इति । सर्वलोकस्य धिक्कृतं धिक्कारम् । अक्षमणीयं सोढुमशक्यम् ॥ ८९ ॥ मृत इति । इष्टे मन्मतानुसारिणि जने किंपापं कीदृशं दुःखम्, मनोवागगोचरमिति यावत् । प्रतिपत्स्यसे करिष्यसि ॥ ९० ॥ कौसल्यामित्यादि । पुत्रौ चेति लक्ष्मणशत्रुघ्नौ, देवी सुमित्रा, कौसल्यां मां च रामं च यदि हास्यति तदा दुःखान्यसहती मामेवानुमरिष्यति, रामवियोगेन कौसल्यामरणस्य सम्भावितत्वाल्लक्ष्मणस्य रामनियतसहगमनाच्छत्रुघ्नस्य दैवादद्य भरतेन सहगमनाच्च ताभ्यां मया च रहिता सा मामेवानुमरिष्यतीत्यर्थः ॥ ९१ ॥ कौसल्यामिति । नरके दुःखे ॥ ९२ ॥ मयेति । आकुलं क्षुभितं यथा तथा पालयिष्यसि ॥ ९३ ॥ ९४ ॥

पालयिष्यसि ॥ ९३–९६ ॥ त्वमित्याद्यर्धत्रयमेकान्वयम् । अकीर्त्यादित्रयरूपा त्वं राजपुत्रीवादेन राजपुत्रीव्यपदेशेन मम वेश्मनि न्यवसः । परिभवः महाजनसमक्षं धिक्कारः । अवज्ञा क्षुद्रत्वेन प्रतिपत्तिः ॥ ९७ ॥ ९८ ॥ यस्येति । सूदाः पाचकाः । अहंपूर्वाः अहमहमिकावन्तः । प्रशस्तम् "आयुः

प्रियं चेद्भरतस्यैतद्रामप्रव्राजनं भवेत् । मा स्म मे भरतः कार्षीत् प्रेतकृत्यं गतायुषः ॥ ९४ ॥ हन्तानार्ये ममामित्रे सकामा भव कैकयि । मृते मयि गते रामे वनं पुरुषपुङ्गवे ॥ ९५ ॥ सेदानीं विधवा राज्यं सपुत्रा कारयिष्यसि ॥ ९६ ॥ त्वं राजपुत्रीवादेन न्यवसो मम वेश्मनि । अकीर्त्तिश्चातुला लोके ध्रुवः परिभवश्च मे । सर्वभूतेषु चावज्ञा यथा पापकृतस्तथा ॥ ९७ ॥ कथं रथैर्विभुर्यात्वा गजाश्वैश्च मुहुर्मुहुः । पद्भ्यां रामो महारण्ये वत्सो मे विचरिष्यति ॥ ९८ ॥ यस्य त्वाहारसमये सूदाः कुण्डलधारिणः । अहंपूर्वाः पचन्ति स्म प्रशस्तं पानभोजनम् ॥ ९९ ॥ स कथं नु कषायाणि तिक्तानि कटुकानि च । भक्षयन् वन्यमाहारं सुतो मे वर्त्तयिष्यति ॥ १०० ॥ महार्हवस्त्रसंवीतो भूत्वा चिरसुखोषितः । काषायपरिधानस्तु कथं भूमौ निवत्स्यति ॥ १०१ ॥ कस्यैतद्दारुणं वाक्यमेवंविधमचिन्तितम् । रामस्यारण्यगमनं भरतस्याभिषेचनम् ॥ १०२ ॥

सत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः । रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्विकप्रियाः ॥" इत्युक्तप्रकारेण श्रेष्ठम् ॥ ९९ ॥ स इति । कषायादित्रयरूपं वन्यमाहारं भक्षयन् कथं नु वर्तयिष्यति केनप्रकारेण जीविष्यति ॥ १०० ॥ महार्हेति । महार्हेण अतिश्लाघ्येन वस्त्रेण । संवीतः संवृतः । चिरसुखोषितः चिरकालं सुखास्तरणोषितः। काषायपरिधानः कषायेण रक्तं काषायम् । काषायं परिधानं वस्त्रं यस्य स तथोक्तः ॥ १०१ ॥ कस्येति । रामस्यारण्य

हन्तेत्यर्धं भिन्नं वाक्यम् ॥ ९५ ॥ ९६ ॥ त्वमित्यर्धत्रयमेकं वाक्यम् । राजपुत्रीवादेन राजपुत्रीति व्यपदेशमात्रेण लोके अप्रत्यक्षेप्यकीर्तिः, परिभवः महाजनसमक्षं धिक्कारः, अवज्ञा अवमतिः, यतो न्यवसः अत एतत्सर्वं मे भविष्यतीति भावः ॥ ९७ ॥ ९८ ॥ यस्येति । सूदाः पाचकाः, अहंपूर्वाः अहङ्कारपूर्वाः । प्रशस्तं पानभोजनं सात्विकाहारः ॥ ९९ ॥ स कथञ्चिति । कटुकानि चेत्यत्र कन्दमूलानीति विशेष्यमध्याहार्यम् । वर्तयिष्यति जीविष्यति ॥ १०० ॥ १०१ ॥ कस्येति ।

गमनं भरतस्याभिषेचनमित्येवंविधमेतद्वाक्यं कस्य केनोपदिष्टमित्यर्थः । यद्वा कस्य सह्यमितिशेषः ॥ २ ॥ धिगिति । शठाः गूढविप्रयकारिण्यः । कौसल्यादिषु तदसम्भवादाह न ब्रवीमीति ॥ ३ ॥ अनर्थभाव इति । मन्निमित्तं मत्कारणकं रामे रामनिमित्तकं वा ॥ ४ ॥ परित्यजेयुरिति । कृत्स्नं जगत् गच्छतीति व्युत्पत्त्या जगच्छब्देन जीववर्ग उच्यते । सर्वशब्देन स्थावरजातमुच्यते । कुपितं त्वां प्रतीति शेषः ॥ ५ ॥ अहमिति । अहं पुनः अहं तु

धिगस्तु योषितो नाम शठाः स्वार्थपरास्सदा । न ब्रवीमि स्त्रियः सर्वा भरतस्यैव मातरम् ॥ ३ ॥ अनर्थभावेऽर्थपरे नृशंसे ममानुतापाय निविष्टभावे । किमप्रियं पश्यसि मन्निमित्तं हितानुकारिण्यथवापि रामे ॥ ४ ॥ परित्यजेयुः पितरो हि पुत्रान् भार्याः पतींश्चापि कृतानुरागाः । कृत्स्नं हि सर्वं कुपितं जगत् स्याद्दृष्ट्वैव रामं व्यसने निमग्नम् ॥५॥ अहं पुनर्देवकुमाररूपमलंकृतं तं सुतमाव्रजन्तम् । नन्दामि पश्यन्नपि दर्शनेन भवामि दृष्ट्वा च पुनर्युवेव ॥ १०६ ॥

मत्स्वभावः लौकिकेभ्यो भिन्नः । देवकुमाररूपं नैसर्गसुन्दरम् । अलंकृतम् अलङ्कारैरतिशयितशोभम् । चन्द्रकान्ताननमित्यस्य हृदि विपरिवर्त्तमानत्वात्त मित्युक्तम् । सुतं सौन्दर्याद्यभावेपि सुतत्वप्रयुक्तप्रेमास्पदम् । आव्रजन्तं 'मत्तमातङ्गगामिनम्' इत्युक्तरीत्या गमनकालिकसम्भ्रमविशेषशालिनम् । दर्श

रामस्यारण्यगमनं भरतस्याभिषेककर्मणः फलम् । यद्वा एतद् कस्य क्रूरस्य वाक्यमुपदेशः ॥१०२॥ कैकेय्याः दौर्जन्यं दृष्ट्वा दशरथः स्त्रीमात्रं निन्दति—धिगस्त्विति । योषितो धिगस्तु नाम, स्त्रियो निन्द्या इत्यर्थः । ननु स्त्रीमात्रनिन्दा कथं क्रियते ? साध्वीनां विद्यमानत्वादित्यत आह नेति । सर्वाः स्त्रियो धिगस्त्विति न ब्रवीमि, किन्तु भरतस्यैव मातरं धिगस्त्विति ब्रवीमीमि योजना ॥ १०३ ॥ अनर्थभावे—अनर्थः स्वपरानर्थसाधनभूतः भावः अभिप्रायो यस्याः सा तथा, निविष्टो निवेशितो भावो दुष्टभावो यस्याः सा तथा, अर्थपरे स्वार्थसाधनपरे ! मन्निमित्तं मद्धेतुकम् । किमप्रियम् अपकारं पश्यसि कृत्स्नजगद्धितानुकारिणि रामे वा ॥ १०४॥ परित्यजेयुरिति । कृतानुरागत्वं पुत्रपतिभार्याणां त्यागानौचित्यहेतुः, यथोचितं लिङ्गविपरिणामः पुत्रादिषु योज्यः । अपिशब्दात्पतयश्च कृतानुरागा भार्यास्त्यजेयु रिति योज्यम् । किञ्च रामप्रव्राजनसाधनं त्वद्व्यापारं दृष्ट्वा रामं च त्वद्वशाद्व्यसने निमग्नं दृष्ट्वा सर्वं जगत् त्वां प्रत्येव कुपितं स्यात् ॥ १०५ ॥ अन्ततः स्वस्य रामं विना जीवनव्यतिरेकं दर्शयिष्यन् तदन्वये स्वजीवनानन्वयं दर्शयति—अहमित्यादिना । आव्रजन्तम् आगच्छन्तं पश्यन्नहं दर्शनेन तस्य दूरदर्शनेनापि नन्दामि ।

सत्य०—देवकुमाररूपं देवस्य हरेः कुमारो मारस्तस्य रूपमिव रूपं यस्यासौ तथोक्तः ॥ १०६ ॥

नेन मानसज्ञानेन पश्यन्नपि नन्दामि । दृष्ट्वा पुनः साक्षात्कृत्य तु युवेव भवामि, युववद्धृष्टपुष्टाङ्गो भवामि ॥६॥ विनेति । प्रवृत्तिः सञ्चारः । चेतना बुद्धिः । वज्रधरपक्षे प्रवृत्तिशब्देन जीवनविषयप्रवृत्तिरुच्यते ॥ ७॥ विनाशकामामिति । मोहात् आवासयं, गृह इतिशेषः । सर्पी सर्पजातिः। जातिलक्षणो ङीष् । त्वं मोहादङ्केन धृतासि । तेन अङ्कधारणेन ॥८॥ मयेति । सलक्ष्मणेन रामेण मया च हीनो भरतस्त्वया सह पुरं राष्ट्रं बान्धवांश्च निहत्य प्रशास्तु पुरादि

विनापि सूर्येण भवेत्प्रवृत्तिरवर्षता वज्रधरेण वापि । रामं तु गच्छन्तमितः समीक्ष्य जीवेन्न कश्चित्त्विति चेतना मे ॥ १०७ ॥ विनाशकामामहितामभित्रामावासयं मृत्युमिवात्मनस्त्वाम् । चिरं बताङ्केन धृतासि सर्पी महाविषा तेन हतोऽस्मि मोहात् ॥१०८॥ मया च रामेण च लक्ष्मणेन प्रशास्तु हीनो भरतस्त्वया सह । पुरं च राष्ट्रं च निहत्य बान्धवान् ममाहितानां च भवाभिहर्षिणी ॥१०९॥ नृशंसवृत्ते व्यसनप्रहारिणि प्रसह्य वाक्यं यदिहाद्य भाषसे । न नाम ते केन मुखात्पतन्त्यधो विशीर्यमाणा दशनाः सहस्रधा ॥ ११० ॥

हननरूपं प्रशासनं करोतु । ममाहितानां शत्रूणां च अभिहर्षिणी भवेतिसम्बन्धः ॥१०९॥ नृशंसवृत्त इति । नृशंसवृत्ते क्रूरव्यापारे ! व्यसनप्रहारिणि क्षते प्रहारन्यायेन विपदि प्रहरणशीले ! रामविरहासहनं विपत् तत्र प्रहारः पुनःपुनश्चोदनम् । त्वम् इह देशे । अद्यास्मिन् काले । प्रसह्य पति स्वातन्त्र्यं तिरस्कृत्य । यद्वाक्यं भाषसे तत्र ते मुखात् दशनाः सहस्रधा विशीर्णाः सन्तः केन नाम हेतुना न पतन्तीति सम्बन्धः ॥ ११० ॥

आगतमन्तिके; दृष्ट्वा चिरवृद्धोप्यहं पुनर्युवेव युववद्भवामि हृष्टपुष्टान्तर्बहिःपरिकरो भवामीत्यर्थः ॥ १०६ ॥ विनेति । हिशब्दो यद्यप्यर्थे, सूर्येण विना यद्यपि प्रवृत्तिः सञ्चाररूपा भवेत् । तथा वज्रधरेण अवर्षतापि, प्रवृत्तिर्जीवनरूपा यद्यपि स्यात् तथापि राममितो गच्छन्तं समीक्ष्य कश्चिदपि अननुभूतरामस्वभा वोपि लोको न जीवेदिति मे चेतना धीः, मम जीवनं तु कैमुतिकासिद्धमिति भावः ॥१०७॥ विनाशेति । सर्पी सर्पलक्षणा मोहादङ्केन धृतासि, तेन अङ्कधारणेन हेतुना ॥ १०८ ॥ मयेति । अहितानामभिहर्षिणी ममामित्रेषु स्नेहयुक्ता भवेत्यर्थः ॥ १०९ ॥ नृशंसेति । व्यसनप्रहारिणि आपद्युपद्रवकारिणि । इह देशे अद्य काले प्रसह्य पतिपत्नीभावं तिरस्कृत्य क्रूरं वाक्यं भाषसे यत् अतः ते दशनाः केन नाम हेतुना मुखाद्विशीर्णमाना न पतन्ति । न जाने इति शेषः ॥ ११० ॥



विषम०—मम अहितानां शत्रूणाम्, अभिभाषणशीला भव वार्ताकरणयोग्यबान्धवाभावादिति भावः ॥ १०९ ॥

न किञ्चिदिति। रामः अहितमप्रियं च किञ्चिद्वचो नाह, परुषाणि भाषितु न वेत्ति। ज्ञानपूर्वकत्वात् भाषणस्य कुतस्तत्प्रसक्तिरिति भावः। न केवलं परुषावेदनं प्रत्युताभिरामवादिनि सर्वप्रियभाषिणि। गुणैर्नित्यं संमते रामे कथं नु दोषान् प्रव्राजनहेतून् ब्रवीषि ॥१११॥ प्रताम्येति। प्रताम्य ग्लानिं भज। ताम्यतेर्लोण् मध्यमपुरुषैकवचनम्। प्रज्वल कुपिता भव। प्रणश्य नष्टा भव। सहस्रशः स्फुटिता सती महीं व्रज वा, भृगोः पत वेत्यर्थः। केकय

न किञ्चिदाहाहितमप्रियं वचो न वेत्ति रामः परुषाणि भाषितुम्। कथं नु रामे ह्यभिरामवादिनि ब्रवीषि दोषान् गुणनित्यसम्मते ॥१११॥ प्रताम्य वा प्रज्वल वा प्रणश्य वा सहस्रशो वा स्फुटिता महीं व्रज। न ते करिष्यामि वचः सुदारुणं ममाहितं केकयराजपांसनि ॥११२॥ क्षुरोपमां नित्यमसत्प्रियंवदां प्रदुष्टभावां स्वकुलोपघातिनीम्। न जीवितुं त्वां विषहेऽमनोरमां दिधक्षमाणां हृदयं सबन्धनम् ॥११३॥ न जीवितं मेऽस्ति कुतः पुनः सुखं विनात्मजेनात्मवतः कुतो रतिः। ममाहितं देवि न कर्तुमर्हसि स्पृशामि पादावपि ते प्रसीद मे॥११४॥ स भूमिपालो विलपन्ननाथवत् स्त्रिया गृहीतो हृदयेऽतिमात्रया। पपात देव्याश्चरणौ प्रसारितावुभावसंस्पृश्य यथातुरस्तथा ॥११५॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे द्वादशः सर्गः ॥१२॥

राजानां पांसनि दूषणि ॥१२॥ क्षुरोपमामिति। क्षुरोपमां तद्वत्क्रूराम्। असत्प्रियंवदां मिथ्या प्रियवादिनीम्। प्रदुष्टभावां प्रकर्षेण दुष्टहृदयाम्। अमनोरमामिति पदच्छेदः। सबन्धनं समूलं प्राणरूपमूलसहितम् "प्राणबन्धनं हि सौम्यमनः" इतिश्रुतेः। सदिन्धनमितिपाठे—हृदयमेव सदिन्धनम्। दिधक्षमाणां दग्धुमिच्छन्तीम्। त्वां जीवितुं जीवयितुम्। न विषहे नोत्सहे ॥१३॥ नेति। रतिस्त्वद्विषयेति शेषः। यदेवमत आह ममाहितमिति। आत्मवतः जीवत इत्यर्थः॥१४॥ स इति। अतिमात्रया अमर्यादया स्त्रिया। हृदये गृहीतः तदधीनहृदय इत्यर्थः। भूमिपालोपि तां निग्रहीतुमसमर्थ इत्यर्थः। अनाथवद्विलपन्

न किञ्चिदिति। गुणानित्यसंमते गुणानां नित्यसम्मते ॥ १११ ॥ प्रताम्येति। सहस्रशो वा स्फुटिता महीं व्रज तथापि न ते वचः करिष्यामीति सम्बन्धः ॥ ११२ ॥ क्षुरोपमामिति। असत्प्रियंवदां मिथ्या प्रियवादिनीम्, अमनोरमामिति छेदः। सबन्धनं हृदयं "प्राणबन्धनं हि सौम्यमनः" इति श्रुतेः। त्वां जीवितुं नोत्सह इति सम्बन्धः ॥ ११३ ॥ ११४ ॥ स भूमिपाल इति। अतिमात्रया अतिक्रान्तमर्यादया स्त्रिया हृदये मर्मणि गृहीतः प्रसारितौ प्रणामपरिहारबुद्ध्या अन्यत्र

सत्य०—प्रसारितौ प्रणामं कुर्यादित्यन्यत्र प्रसारितौ ॥ ११५ ॥

त्वां जीवयितुं नोत्सहे ते पादौ स्पृशामि प्रसीदेत्यनवस्थितवचनानि भाषमाणः। प्रसारितावित्यनेनानादर उक्तः। असंस्पृश्येत्यनेन पिस्पृक्षायामेव मूर्च्छा जातेति गम्यते ॥ ११९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥
'न ते करिष्यामि वचः' इत्युक्त्वापि धर्मपाशबद्धतया पश्चात्ततः पुनस्तां सान्त्वयति त्रयोदशे—अतदर्हमित्यादि श्लोकद्वयमेकान्वयम्। अतदर्हं तादृश

अतदर्हं महाराजं शयानमतथोचितम्। ययातिमिव पुण्यान्ते देवलोकात्परिच्युतम् ॥ १ ॥ अनर्थरूपा सिद्धार्था ह्यभीता भयदर्शिनी। पुनराकारयामास तमेव वरमङ्गना ॥ २ ॥ त्वं कत्थसे महाराज सत्यवादी दृढव्रतः। मम चेमं वरं कस्माद्विधारयितुमिच्छसि ॥ ३ ॥ एवमुक्तस्तु कैकेय्या राजा दशरथस्तदा। प्रत्युवाच ततः क्रुद्धो मुहूर्त्त विह्वलन्निव ॥४॥ मृते मयि गते रामे वनं मनुजपुङ्गवे। हन्तानार्ये ममामित्रे सकामा सुखिनी भव ॥ ५ ॥ स्वर्गेपि खलु रामस्य कुशलं दैवतैरहम्। प्रत्यादेशादभिहितं धारयिष्ये कथं बत ॥ ६ ॥

दुःखानर्हम्। अतथोचितम् अधःशयनाद्यनुचितम्। अनर्थरूपा पापरूपा। असिद्धार्था अनिष्पन्नप्रयोजना। अभीता लोकापवादभीतिरहिता। भयदर्शिनी। दशरथस्येति शेषः। यद्वा अभयदर्शिनी दशरथस्य भयमपश्यतीत्यर्थः। तमेव वरं पूर्वदत्तमेव वरमुद्दिश्य महाराजम् आकारयामास सम्बोधयामास। यद्वा दातव्यत्वेन ग्राहयामासेत्यर्थः। वस्तुतस्त्वेकवचनस्वारस्यात् वरं श्रेष्ठं दशरथं स्वाभिमतकथनायाह्वयामासेत्यर्थः ॥ १ ॥ २ ॥ त्वमिति। विधारयितुम् ऋणत्वेन धारयितुं च्यावयितुं वा विशेषेण धारयितुमादातुमितिवार्थः ॥३॥ विह्वलन् मूर्च्छन् ॥ ४॥ ५ ॥ स्वर्ग इति। रामस्य कुशलं प्रति दैवतैः

प्रसारितौ देव्याश्चरणौ असंस्पृश्य आतुरो यथा आतुर इव तथा पपात, दारुणं पपातेत्यर्थः। अनेन चित्तवैवश्यं द्योतितम् ॥ ११५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां द्वादशः सर्गः ॥ १२ ॥ अथ सत्यपाशबद्धत्वेन न ते करिष्यामि वच इति दृढं वक्तुमशक्नुवन् तां पुनरपि प्रसादयति—अतदर्हमिति। अतदर्हं स्त्रीप्रणामानर्हम्। अतथोचितं पूर्वमननुभूततादृग्व्यसनम्, शयानं भूमौ पतितम् ॥ १ ॥ अनर्थरूपेति। अनर्थरूपा पापरूपा, असिद्धार्था अनिष्पन्नप्रयोजना, अभीता जनापवादादभीता, अभयदर्शिनी-दशरथस्य प्राप्तं भयमगणयन्ती। भयदर्शिनीति छेदे रामात् भरतस्य भयदर्शिनी। तमेव वरं पूर्वदत्तवरमेवोद्दिश्य महाराजमाकारयामास सम्बोधयामास ॥ २ ॥ तदेवाह—त्वमिति। सत्यवादी दृढव्रत इति कत्थसे स्वात्मानं श्लाघसे। विधारयितुं विशेषेण धारयितुम् ऋणत्वेन धारयितुम् ॥ ३-५ ॥ रामप्रवासनदुःखेन मृत्वा स्वर्गं गतस्यापि मे सुखं नास्तीत्याह—स्वर्ग इति। स्वर्गेपि दैवतै

प्रत्यादेशादभिहितं धिक्कारपूर्वमभिहितं वाक्यं कथं धारयिष्ये सहिष्ये । मूढः स्त्रीहेतोः कथं गुणवत्पुत्रं त्यक्तवानसीत्यभिहितं श्रुत्वा कथमात्मानं धारयिष्ये । तथा च रामप्रवासने इह परत्र च मम सौख्यं नास्तीत्यर्थः ॥६॥ ननु सत्यप्रतिज्ञत्वनिर्वाहार्थं रामः प्रव्राजित इति वक्तव्यमित्यत्राह—कैकेय्या इति । मयेत्यनन्तरमितिकरणं द्रष्टव्यम् । तदसत्यं भविष्यति 'श्वस्त्वाहमभिषेक्ष्यामि यौवराज्ये परन्तप' इतिरामोद्देशेनोक्तं वाक्यमसत्यं भविष्यतीत्यर्थः ॥७॥

कैकेय्याः प्रियकामेन रामः प्रव्राजितो मया । यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति ॥ ७ ॥ अपुत्रेण मया पुत्रः श्रमेण महता महान् । रामो लब्धो महाबाहुः स कथं त्यज्यते मया ॥८॥ शूरश्च कृतविद्यश्च जितक्रोधः क्षमापरः । कथं कमलपत्राक्षो मया रामो विवास्यते ॥ ९ ॥ कथमिन्दीवरश्यामं दीर्घबाहुं महाबलम् । अभिराममहं रामं प्रेषयिष्यामि दण्डकान् ॥१०॥ सुखानामुचितस्यैव दुःखैरनुचितस्य च । दुःखं नामानुपश्येयं कथं रामस्य धीमतः ॥ ११ ॥ यदि दुःखमकृत्वाद्य मम संक्रमणं भवेत् । अदुःखार्हस्य रामस्य ततः सुखमवाप्नुयाम् ॥ १२ ॥ नृशंसे पापसङ्कल्पे रामं सत्यपराक्रमम् । किं विप्रियेण कैकेयि प्रियं योजयसे मम ॥ १३ ॥

अपरित्यागे हेत्वन्तराणि दर्शयति—अपुत्रेणेत्यादि ॥ ८–१० ॥ सुखानामिति । दुःखैरिति षष्ठ्यर्थे तृतीया ॥ ११ ॥ यदीति । अदुःखार्हस्य रामस्य दुःखमकृत्वा मम संक्रमणं यदि भवेत् ततस्तदा सुखमवाप्नुयाम् । संक्रमणं तृणजलौकान्यायेन देहाद्देहान्तरप्राप्तिः । पञ्चत्वमितियावत् ॥१२॥ नृशंस इति ।

रभिहितं रामस्य कुशलं प्रत्यादेशात् प्रतिषेधात् । ल्यब्लोपे पञ्चमी । कथं बत धारयिष्ये सहिष्ये, इह रामस्य कुशलं प्रतिषिध्य तत्र दैवतैः पृष्टं कथं सहिष्य इत्यर्थः । अथवा स्वर्गेऽपि रामस्य कुशलं प्रति दैवतैः प्रत्यादेशात् प्रत्यादेशं धिक्कारं कृत्वाभिहितं वाक्यम्, कथं बत धारयिष्ये सहिष्ये । बतेति खेदे ॥६॥ ननु सत्यपाशात् प्रत्यादिष्टवानस्मीत्युत्तरं ब्रूहीत्यत्राह—कैकेय्या इति । कैकेय्याः प्रतिश्रुतार्थप्रदानेन मया रामः प्रव्राजितः तत्सत्यं यदि ब्रवीमि तर्हि तद्राममभिषेक्ष्यामीति वचनम् असत्यं भविष्यतीत्यर्थः ॥ ७–१०॥ सुखानामिति । दुःखैरनुचितस्येति षष्ठ्यर्थे तृतीया ॥११॥ सर्वथा रामस्य दुःखाकरणमेव स्वहितमित्याह—यदीति । अदुःखार्हस्य रामस्य दुःखमकृत्वा इह सुखितस्य मम कालान्तरे संक्रमणं लोकान्तरगमनं यदि भवेत् ततः तर्हि स्वर्गेऽपि सुखमवाप्नुयामित्यन्वयः ॥ १२ ॥ नृशंस इति । किमर्थं विप्रियेण अनभिमतदण्डकारण्यगमनेन ॥ १३ ॥ १४ ॥

 

मम प्रियं रामं विप्रियेणानभिमतदण्डकारण्यगमनेन । किं किमर्थं योजयसे ॥ १३ ॥ अकीर्तिरित्यर्धम् । भविष्यतीतिशेषः ॥ १४ ॥ तथेति । तस्य विलपतः तस्मिन् विलपति सतीत्यर्थः ॥ १५ ॥ सा त्रियामेति । अत्रियामा यामत्रयवत्त्वं विहायातिदीर्घेत्यर्थः ॥ १६ ॥ तथेति । आर्तवत् महा

अकीर्त्तिरतुला लोके ध्रुवः परिभवश्च मे ॥ १४ ॥ तथा विलपतस्तस्य परिभ्रमितचेतसः । अस्तमभ्यागमत् सूर्यो रजनी चाभ्यवर्त्तत ॥ १५ ॥ सा त्रियामा तथार्त्तस्य चन्द्रमण्डलमण्डिता । राज्ञो विलपमानस्य न व्यभासत शर्वरी ॥ १६ ॥ तथैवोष्णं विनिश्वस्य वृद्धो दशरथो नृपः । विललापार्त्तवद्दुःखं गगनासक्तलोचनः ॥ १७ ॥ न प्रभातं त्वये च्छामि निशे नक्षत्रभूषणे । क्रियतां मे दया भद्रे मयायं रचितोऽञ्जलिः ॥ १८ ॥ अथवा गम्यतां शीघ्रं नाह मिच्छामि निर्घृणाम् । नृशंसां कैकयीं द्रष्टुं यत्कृते व्यसनं महत् ॥ १९ ॥ एवमुक्त्वा ततो राजा कैकेयीं संयताञ्जलिः । प्रसादयामास पुनः कैकेयीं चेदमब्रवीत् ॥ २० ॥ साधुवृत्तस्य दीनस्य त्वद्गतस्य गतायुषः । प्रसादः क्रियतां देवि भद्रे राज्ञो विशेषतः ॥ २१ ॥

रोगादिना पीडित इव । दुःखं विललाप । शृण्वतां यथा दुःखं भवति तथा विललापेत्यर्थः ॥ १७ ॥ नेति । प्रभातं प्रभातत्वम् । भावे निष्ठा । अत्र प्रक रणे भर्त्सनप्रसादनाभ्यां पुनःपुनः क्रियमाणाभ्यां धर्ममपि त्यक्तुं न शक्नोमि न पुत्रमपीति गम्यते ॥ १८ ॥ अथवेति । निर्घृणां निर्दयां प्रत्युत नृशंसां क्रूराम् ॥ १९ ॥ २० ॥ साधुवृत्तस्येति । त्वद्गतस्य त्वदेकशरणस्येत्यर्थः । गतायुषः अल्पावशेषमतीतायुष इत्यर्थः ॥ २१ ॥

तथेति । या राज्ञः स्वनिवेशप्रवेशकालात्पूर्वं सूर्योऽस्तमगमत् रजनी चाभ्यवर्तत । सा त्रियामा रजनी विलपतस्तस्य राज्ञः न व्यभासत न प्रकाशत, विलापेनैव रात्रिकालो व्यतीत इत्यर्थः । अथ सा शर्वरी व्यभासत विभाता चेत्यावर्त्य योजना ॥ १५ ॥ तथेति । आर्तवत् महारोगादिना पीडित इव दुःखं शृण्वतां यथा दुःखं भवति तथा विललापेत्यर्थः ॥ १६ ॥ १७ ॥ अथ दुःखवशाद्रात्र्या अभ्युष्टिं प्रार्थयते–न प्रभातमिति । भावे निष्ठा । त्वया न प्रभातमिति । त्वत्कर्तृकमप्रभात मिति यावत् । मे मह्यम् प्रभाते सति रामविवासनं भविष्यतीतिभयादिति भावः ॥ १८ ॥ अथवा गम्यतां शीघ्रमिति । रात्र्येति शेषः । स्त्रीदर्शनं रात्र्यामेव भवति तदत्यये प्रजा आयान्ति राज्ञः सकाशम् अतोऽस्या दर्शनपरिहारो भविष्यतीत्याशयः ॥ १९ ॥ २० ॥ साध्विति । त्वद्गतस्य सत्यवशगत्वात्त्वदधीनस्य ।

सत्य०–त्रयो यामा यस्याः सा त्रियामा । आद्यन्तयोरर्धयामयोश्चेष्टाकालत्वेन दिनप्रायत्वात् । यद्वा त्रीन् धर्मादीन् यापयति निरवकाशीकरोति, कामप्रधानत्वात् । अन्तर्भावितण्यर्थाद्यातेः "अर्तिस्तुसुहुसृधृक्षि क्षुभायावापदियक्षिनीभ्यो मन्" इति मन् ॥ १९ ॥

शून्य इति। शून्ये निर्जने प्रदेशे। इदं रामाभिषेचनम्, न समुदाहृतं खलु किंतु सर्वजनसन्निधौ समुदाहृतमित्यर्थः। यद्वा शून्येन दीनेन मयेत्यर्थः॥ २२-२४ ॥ विशुद्धभावस्येति। ताम्रेक्षणस्य, दुःखातिशयेनेतिशेषः। अश्रुकलस्य अश्रुपूर्णस्य। कल्किः कामधेनुः। विचित्रं प्रसादनभर्त्सनसहित

शून्ये न खलु सुश्रोणि मयेदं समुदाहृतम्। कुरु साधु प्रसादं मे बाले सहृदया ह्यसि॥ २२ ॥ प्रसीद देवि रामो मे त्वद्दत्तं राज्यमव्ययम्। लभतामसितापाङ्गे यशः परमवाप्नुहि॥ २३ ॥ मम रामस्य लोकस्य गुरूणां भरतस्य च। प्रियमेतद्गुरुश्रोणि कुरु चारुमुखेक्षणे॥ २४ ॥ विशुद्धभावस्य हि दुष्टभावा ताम्रेक्षणस्याश्रुकलस्य राज्ञः। श्रुत्वा विचित्रं करुणं विलापं भर्तुर्नृशंसा न चकार वाक्यम्॥ २५ ॥ ततः स राजा पुनरेव मूर्च्छितः प्रियामदुष्टां प्रतिकूलभाषिणीम्। समीक्ष्य पुत्रस्य विवासनं प्रति क्षितौ विसंज्ञो निपपात दुःखितः॥२६॥ इतीव राज्ञो व्यथितस्य सा निशा जगाम घोरं श्वसतो मनस्विनः। विबोध्यमानः प्रतिबोधनं तदा निवारयामास स राजसत्तमः॥ २७ ॥
इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे त्रयोदशः सर्गः॥ १३ ॥

त्वात्॥ २५॥ २६॥ इतीति। प्रतिबोधनं शङ्खपटहवीणादिकं प्रतिबोधनसाधनम्। यद्वा वैतालिकैः क्रियमाणं प्रतिबोधनम्॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने श्रीमदयोध्याकाण्डे त्रयोदशः सर्गः॥ १३ ॥

गतायुषः अल्पावशेषमतीतायुषः॥ २१ ॥ शून्य इति। शून्ये निर्जनप्रदेशे इदं रामाभिषेचनं न समुदाहृतं खलु, किन्तु राजसभायामुदाहृतम्। अथवा शून्येन प्रणष्टसर्वाहम्भावेन मया इदमुदाहृतमितिवार्थः॥ २२ ॥ तदेव दर्शयन्नाह-प्रसीदेति। त्वद्दत्तं लभतां त्वया वरबलात् गृहीतमेव राज्यम्, रामप्रीत्यर्थं रामाय देहीत्यर्थः॥ २३ ॥ २४ ॥ विशुद्धेति। अश्रुकलस्य अश्रुपूर्णस्य॥ २५ ॥ तत इति। तद्रात्रेः प्राक् नित्यं प्रियाम् अदुष्टां पतिव्रतां तत्काले दैवात् प्रतिकूलभाषिणीं तां समीक्ष्य पुत्रस्य विवासनं प्रति क्रियमाणं तद्वरं च समीक्ष्य पर्यालोच्य चिरपरिचितप्रेमतवार्त्तां धिक्कर्तुं प्रयासलब्धं पुत्रं च त्यक्तुम् अशक्नुवन् कर्तव्यमूढो मूर्च्छितः, क्षितौ विसंज्ञः पपातेत्यर्थः॥ २६ ॥ इतीति। प्रतिबोधनं बोधनसाधकमङ्गलगीतादिकम्॥ २७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां त्रयोदशः सर्गः॥ १३ ॥

अथ रामविवासननिर्द्धारणं दर्शयति चतुर्दशे–पुत्रेत्यादि ॥ १ ॥ पापमिति । संश्रवं दास्यामीति प्रतिज्ञाम् । संश्रुत्य कृत्वेत्यर्थः । पाकं पचतीतिवन्निर्देशः । पापं प्रतिज्ञाताकरणरूपं पापं कृत्वैव क्षितितले सन्नः अवसन्नः सन् शेषे । किमिदं स्थित्यां मर्यादायां सत्यपरिपालनरूपायां "मर्यादा धारणा स्थितिः" इत्यमरः । स्थातुमर्हसि ॥ २ ॥ इदमेव युक्तमिति दर्शयति–आहुरित्यादिना । सत्यरूपं धर्ममाश्रित्य हि मया प्रचोदितः ॥ ३ ॥

पुत्रशोकार्दितं पापा विसंज्ञं पतितं भुवि । विवेष्टमानमुद्वीक्ष्य सैक्ष्वाकमिदमब्रवीत् ॥ १ ॥ पापं कृत्वैव किमिदं मम संश्रुत्य संश्रवम् । शेषे क्षितितले सन्नः स्थित्यां स्थातुं त्वमर्हसि ॥ २ ॥ आहुः सत्यं हि परमं धर्मं धर्मविदो जनाः । सत्यमाश्रित्य हि मया त्वं च धर्मप्रचोदितः ॥३॥ संश्रुत्य शैब्यः श्येनाय स्वां तनुं जगतीपतिः । प्रदाय पक्षिणे राजन् जगाम गतिमुत्तमाम् ॥ ४ ॥ तथा ह्यलर्कस्तेजस्वी ब्राह्मणे वेदपारगे । याचमाने स्वके नेत्रे उद्धृत्या विमना ददौ ॥५॥ सरितां तु पतिः स्वल्पां मर्यादां सत्यमन्वितः । सत्यानुरोधात्समये वेलां स्वां नातिवर्त्तते ॥६॥

प्राणसङ्कटे कथं सत्यं पालनीयमित्यत्राह–संश्रुत्येत्यादिना ॥ ४ ॥ तथेति । याचमाने ब्राह्मणे । अविमनाः सुप्रसन्नमनाः सन् नेत्रे ददौ । तस्मा इतिशेषः ॥ ५ ॥ सरितामिति । सरितां पतिः समुद्रः । मर्यादां सत्यमन्वितः वेलां नातिवर्त्तत इति मर्यादारूपं सत्यं प्राप्तः सन् । सत्यानुरोधात् स्वकृतसत्यानुवर्त्तनात् । समये सङ्कल्पितकाले । स्वां वेलां स्वल्पामपि नातिवर्तत इतिसम्बन्धः ॥ ६ ॥

अथ कैकेयी मन्निमित्तं राजा वा म्रियतां तन्निमित्तमहं वा म्रिय इति सर्वथा निश्चित्याह–पुत्रेति । सा पापा कैकेयी ॥ १ ॥ पापमिति । मम संश्रवं वरदानप्रतिज्ञां संश्रुत्य अङ्गीकृत्य, तदकरणरूपं पापं कृत्वैव सन्नः विषण्णः सन् शेषे किमिदं न किमपि प्रयोजनम्, अतः स्थित्यां सत्यपरिपालनमर्यादायां स्थातुं त्वमर्हसि ॥ २ ॥ आहुरिति । सत्यं सत्यरूपं धर्मम् आश्रित्य उद्दिश्य मया प्रचोदितः प्रबोधितः ॥ ३ ॥ ननु सत्यपरिपालने प्राणसंशयो जायत इत्याशङ्क्य प्राणादपि सत्यमेव रक्षणीयमिति सदृष्टान्तमाह–संश्रुत्येत्यादि श्लोकद्वयेन ॥ ४ ॥ ५ ॥ सरितामिति । सरितां पतिः सत्यमन्वितः सत्यं प्राप्तः सन् सत्यानुरोधात् स्वकृतसत्योल्लङ्घनभयात् । स्वल्पां सुलङ्घ्यां मर्यादां स्वावधिभूताम् । स्वां वेलाम् । समये वृद्धिकालेपि नातिवर्तते ॥ ६ ॥

सत्य०–मदर्थं राजा म्रियते चेन्म्रियतां प्रवयाः । आरब्धकार्यं तु न त्याज्यमिति निर्णीयाह–पुत्रेत्यादि । विवेष्टमानम् विशब्दोऽत्र विप्रियमित्यादाविव नञर्थे । अचेष्टमानम् ॥ १ ॥

सत्यमिति । सत्यमेव एकपदं ब्रह्म एकं मुख्यम् । " एके मुख्यान्यकेवलाः " इत्यमरः । पद्यत इति पदं परमप्राप्यम्, ब्रह्मेत्यर्थः । यद्वा एकं पदं प्रणवरूपं वाचकं यस्य तत्तथा " ओमित्येकाक्षरं ब्रह्म " इति स्मृतेः । सत्ये धर्मः प्रतिष्ठितः सत्यमेव धर्मस्य परा काष्ठेत्यर्थः । अक्षया वेदाश्च सत्य मेव प्राधान्येन प्रतिपादयन्तीत्यर्थः । परं प्रयोजनं सत्येनैवाप्यते ॥ ७ ॥ सत्यमिति । अत्रादौ तस्मादित्युपस्कार्यम् । धृता स्थिरा । वरदः सर्वेषां सर्व

सत्यमेकपदं ब्रह्म सत्ये धर्मः प्रतिष्ठितः । सत्यमेवाक्षया वेदाः सत्येनैवाप्यते परम् ॥ ७ ॥ सत्यं समनुवर्त्तस्व यदि धर्मे धृता मतिः । स वरः सफलो मेऽस्तु वरदो ह्यसि सत्तम ॥८॥ धर्मस्येहाभिकामार्थं मम चैवाभ्यचोदनात् । प्रव्राजय सुतं रामं त्रिः खलु त्वां ब्रवीम्यहम् ॥९॥ समयं च ममाद्येमं यदि त्वं न करिष्यसि । अग्रतस्ते परित्यक्ता परित्यक्ष्यामि जीवितम् ॥ १० ॥ एवं प्रचोदितो राजा कैकेय्या निर्विशङ्कया । नाशकत् पाशमुन्मोक्तुं बलि रिन्द्रकृतं यथा ॥११॥ उद्भ्रान्तहृदयश्चापि विवर्णवदनोऽभवत् । स धुर्यो वै परिस्पन्दन् युगचक्रान्तरं यथा ॥१२॥ विह्वलाभ्यां च नेत्राभ्यामपश्यन्निव भूमिपः । कृच्छ्राद्धैर्येण संस्तभ्य कैकेयीमिदमब्रवीत् ॥ १३ ॥

वरप्रदः ॥ ८ ॥ धर्मस्येति । अभिकामार्थं प्रीत्यर्थम् । धर्माभिवृद्ध्यर्थमितियावत् । मम प्रियाया इतिशेषः । समनस्कत्वज्ञापनाय त्रिरित्युक्तम् ॥ ९ ॥ समयमिति । समयं रामविवासनं । परित्यक्ता उपेक्षिता ॥१०॥ एवमिति । एवं त्रिर्ब्रवीमीत्येवम् । पाशं सत्यपाशम् । उन्मोक्तुं मोचयितुम् । बलिः महाबलिः । इन्द्रकृतम् इन्द्रद्वारोपेन्द्रकृतं पाशं पदत्रयदानप्रतिज्ञारूपं पदत्रयादानान्निगलं वा ॥ ११ ॥ उद्भ्रान्तहृदय इति । स राजा युगचक्रयोरन्तरं परिस्पन्दन् गच्छन् । धुर्यो यथा अनड्वानिव । उद्भ्रान्तहृदयो विवर्णवदनश्चाभवत् ॥ १२ ॥ विह्वलाभ्यामिति । विह्वलाभ्यां क्षुब्धाभ्याम् । अपश्यन्निव अन्ध इव

सत्यमिति । सत्यम् एकपदम् एकपदरूपं ब्रह्म, प्रणव इति यावत् । परं परब्रह्म ॥ ७ ॥ ८ ॥ धर्मस्येति । धर्मस्य लोकसिद्धिप्रयोजकस्य अभिकामार्थं पालनार्थं क्रियमाणात् ममाभिचोदनात् प्रेरणात् पुत्रं रामं प्रव्राजय एवं त्वामहं खलु त्रिः त्रिवारं ब्रवीमि ॥ ९ ॥ समयमिति । समयं रामविवासनम् । परित्यक्ता निराकृता ॥१०॥ एवमिति । पाशं सत्यपाशम् । उन्मोक्तुं प्रमोचयितुं । बलिः इन्द्रकृतम् उपेन्द्रवामनकृतं पदत्रयप्रतिश्रवरूपम् ॥ ११ ॥ उद्भ्रान्तहृदय इति । सः दशरथः युगचक्रान्तरं परिस्पन्दन् युगचक्रयोरन्तरं प्रविशन् धुर्यः बलीवर्द इव उद्भ्रान्तहृदयः विवर्णवदनश्चाभवत् ॥ १२ ॥ विह्वलाभ्यामिति । संस्तभ्य विह्वलं चित्तमिति शेषः ॥ १३ ॥

स्थितः भूमिपः कृच्छ्रात् लब्धेन धैर्येण संस्तभ्य, दुःखातिशयजनितक्षोभं निरुद्धेत्यर्थः ॥ १३ ॥ य इति । हे पापे ! अग्नौ अग्निसमीपे । सामीप्ये सप्तमी । मन्त्रकृतः मन्त्रसंस्कृतः । यः पाणिर्मया धृतः तं त्यजामि, तत्प्रयुक्तव्यवहारं त्यजामीत्यर्थः । अत एव स्वजं स्वस्मात् जातमपि तव पुत्रं त्वया सह त्यजामि ॥ १४ ॥ प्रयातेति । उदयनं प्रति उदयं प्रतिलभ्य त्वरयिष्यतीति सम्बन्धः ॥ १५ ॥ रामेति । तदर्थं रामाभिषेकार्थम् उप

यस्ते मन्त्रकृतः पाणिरग्नौ पापे मया धृतः । तं त्यजामि स्वजं चैव तव पुत्रं सह त्वया ॥ १४ ॥ प्रयाता रजनी देवि सूर्यस्योदयनं प्रति । अभिषेकं गुरुजनस्त्वरयिष्यति मां ध्रुवम् ॥ १५ ॥ रामाभिषेकसम्भारैस्तदर्थमुपकल्पितैः । रामः कारयितव्यो मे मृतस्य सलिलक्रियाम् ॥ १६ ॥ त्वया सपुत्रया नैव कर्त्तव्या सलिलक्रिया । व्याहन्तास्यशुभाचारे यदि रामाभिषेचनम् ॥ १७ ॥ न च शक्नोम्यहं द्रष्टुं दृष्ट्वा पूर्वं तथासुखम् । हतहर्षं निरानन्दं पुनर्जनमवाङ्मुखम् ॥ १८ ॥ तां तथा ब्रुवतस्तस्य भूमिपस्य महात्मनः । प्रभाता शर्वरी पुण्या चन्द्रनक्षत्रशालिनी ॥ १९ ॥

कल्पितैः रामाभिषेकसम्भारैः रामाभिषेकसामग्रीभिःसह गुरुजनस्त्वरयिष्यतीति पूर्वेण सम्बन्धः । यद्वा अभिषेकसामग्र्येव सलिलक्रियासामग्री भवत्वित्यर्थः ॥ १६ ॥ त्वयेति । व्याहन्तासीति लुण्मध्यमपुरुषैकवचनम् ॥ १७ ॥ न चेति । तथासुखं तादृशसुखयुक्तम् । जनं दृष्ट्वा पुनः हतहर्षं हतहर्षविकारम् । निरानन्दं अतएवावाङ्मुखं जनं द्रष्टुं न शक्नोमि ॥ १८ ॥ तामिति । तस्य ब्रुवतः तस्मिन् ब्रुवतीत्यर्थः । पुण्येत्युक्तिः अनन्तरं रामदर्शन

अथानिष्टाया अनिष्टपुत्रस्य च त्याग एव धर्म इति मत्वाह–यस्त इति । मन्त्रकृतः 'गृभ्णामि' इति मन्त्रेण संस्कृतः, पाणिः पाणिग्रहः, अग्नौ अग्निसन्निधौ यो मया धृतः तं त्यजामि तत्प्रयुक्तं व्यवहारं त्यजामि । किञ्च स्वजं स्वस्माज्जातमपि तव पुत्रं त्वया सह त्यजामि ॥ १४ ॥ महता प्रयत्नेन प्रवर्तितमिदं कार्यं मया अशक्यनिवारणमित्याशयेनाह–प्रयातेति पादत्रयाधिकश्लोक एकान्वयः । उदयनं प्रति उदयं प्रतिलभ्य तदर्थमुपकल्पितैः अभिषेकार्थं संवृत्तैः रामाभिषेकसंभारैः अभिषेकं रामाभिषेकं प्रति मां गुरुजनः त्वरयिष्यति ध्रुवम् अतो रामः कृताभिषेकः कारयितव्यः गुरुजनानुरोधो मया कर्तव्यः, तस्यापि न्यायप्राप्तत्वादित्यर्थः ॥ १५ ॥ १६ ॥ त्वयेति । त्वया रामाभिषेके विघ्निते मम मरणस्यावश्यकत्वात्तदानीं सलिलक्रिया त्वया न कर्तव्येत्याह–मे मृतस्येत्यादि । सलिलक्रियां रामः करोत्विति शेषः । व्याहन्तासि व्याहनिष्यसि यदि तदा त्वया सलिलक्रिया न कर्तव्येति योजना ॥ १७ ॥ न चेति । त्वद्वचनमनुतिष्ठन् अहं पूर्वं रामाभिषेकवेलायां तथासुखं तादृशसुखयुक्तं जनं दृष्ट्वा इदानीं हतहर्षम् अत एव निरानन्दं पुनः द्रष्टुं न शक्नोमीति सम्बन्धः ॥ १८ ॥ तामिति । तथा ब्रुवतः अशक्यानुष्ठानतया ब्रुवत इत्यर्थः ।

सम्भवात् ॥ १९ ॥ तत इति । रोषमूर्च्छिता क्रोधेन व्याप्ता ॥ २० ॥ किमिदमिति । गररुजोपमं विषजनितव्याधिसदृशम् । अङ्गरुजोपममितिपाठे— सर्वाङ्गव्याप्तमहाव्याधिसदृशमित्यर्थः । अङ्गेति सम्बोधनं वा । अक्लिष्टम् अक्लेशं यथा भवति तथा आनाययितुमिति सम्बन्धः ॥ २१ ॥ २२ ॥ स इति ।

ततः पापसमाचारा कैकेयी पार्थिवं पुनः । उवाच परुषं वाक्यं वाक्यज्ञा रोषमूर्च्छिता ॥ २० ॥ किमिदं भाषसे राजन् वाक्यं गररुजोपमम् । आनाययितुमक्लिष्टं पुत्रं राममिहार्हसि ॥ २१ ॥ स्थाप्य राज्ये मम सुतं कृत्वा रामं वनेचरम् । निस्सपत्नां च मां कृत्वा कृतकृत्यो भविष्यसि ॥ २२ ॥ स नुन्न इव तीक्ष्णेन प्रतोदेन हयोत्तमः । राजा प्रचोदितोऽभीक्ष्णं कैकेयीमिदमब्रवीत् ॥ २३ ॥ धर्मबन्धेन बद्धोऽस्मि नष्टा च मम चेतना । ज्येष्ठं पुत्रं प्रियं रामं द्रष्टुमिच्छामि धार्मिकम् ॥ २४ ॥ ततः प्रभातां रजनीमुदिते च दिवाकरे । पुण्ये नक्षत्रयोगे च मुहूर्त्ते च समाहिते ॥ २५ ॥ वसिष्ठो गुणसम्पन्नः शिष्यैः परिवृतस्तदा । उपगृह्याशु सम्भारान् प्रविवेश पुरोत्तमम् ॥ २६ ॥ सिक्तसम्मार्जितपथां पताकोत्तमभूषिताम् । विचित्रकुसुमाकीर्णां नानास्रग्भिर्विराजिताम् ॥ २७ ॥ संहृष्टमनुजोपेतां समृद्धविपणापणाम् । महोत्सवसमाकीर्णां राघवार्थे समुत्सुकाम् ॥ २८ ॥

नुन्नः व्यथितः । प्रतोदेन तोत्रेण । अभीक्ष्णं पुनःपुनः । "पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः" इत्यमरः ॥२३॥ धर्मबन्धेनेति । धर्मबन्धेन धर्मपाशेन । बद्धोस्मीत्यनेन रामविवासनं मनागनुज्ञातम् । द्रष्टुमिच्छामि गमनात्पूर्वमितिशेषः ॥ २४ ॥ तत इत्यादि परमद्विजैरित्यन्तमेकं वाक्यम् । प्रभातां रजनीं प्रभातायां रजन्यां समाहिते सन्निहिते सति ॥ २५ ॥ प्रविवेश पुरोत्तमम् इत्यनेन वसिष्ठो नगरबाह्यसरय्वां स्नानाद्यनुष्ठानं कृत्वा पुरीं प्रविष्टवानित्यवगम्यते ॥ २६ ॥ २७ ॥ समृद्धविपणापणां समृद्धाः विपणाः विक्रय्याः येषां ते समृद्धविपणाः आपणाः निषद्याः यस्यां ताम् । समु

शर्वरी पुण्या निरन्तररामचिन्तासमेतत्वात् ॥ १९ ॥ २० ॥ किमिदमिति । अङ्गरुजोपमं देहजनितव्याधिसदृशम् ॥ २१ ॥ २२ ॥ स इति । नुन्नः व्याधितः, प्रतोदेन तोत्रेण ॥ २३ ॥ धर्मबन्धेनेति । चेतना धीः ॥ २४ ॥ तत इति । प्रभातायां रजन्यां प्रविवेश । पुरोत्तममित्यनेन वसिष्ठः सरय्वां स्नानं कृत्वा प्रविष्टवानित्यवगम्यते ॥ २५ ॥ २६ ॥ सिक्तेत्यादि । समृद्धविपणापणां समृद्धाः क्रयविक्रयपदार्था येषु ते समृद्धविपणा तादृशा आपणा यस्यां ताम् ॥ २७–३३ ॥

त्सुकां समुत्सुकजनाम् ॥ २८–३० ॥ तदिति । तं जनं पौरादिजनम् । व्यतिचक्रामेत्यनेनान्तःपुरद्वारवेदिकां प्राप्त इति गम्यते । विवेश वेदिकाया मिति शेषः ॥ ३१ ॥ स इति । विनिष्क्रान्तम् स्वगृहादिति शेषः । द्वारे अन्तःपुरद्वारे । प्रियदर्शनमित्यनेनाभिषेकार्थमात्मानमलंकृत्यागत इत्युक्तम् ॥ ३२ ॥ तमिति । क्षिप्रमाचक्ष्वेति वसिष्ठः प्रोवाचेतिसम्बन्धः ॥ ३३ ॥ इम इत्यादि । काञ्चनाः काञ्चनमयाः । गङ्गोदकघटाः गङ्गोदकपूर्णघटाः । अत्र

चन्दनागरुधूपैश्च सर्वतः परिधूपिताम् । तां पुरीं समतिक्रम्य पुरन्दरपुरोपमाम् ॥ २९ ॥ ददर्शान्तःपुरं श्रेष्ठं नाना द्विजगणायुतम् । पौरजानपदाकीर्णं ब्राह्मणैरुपशोभितम् । यज्ञविद्भिः सुसम्पूर्णं सदस्यैः परमद्विजैः ॥ ३० ॥ तदन्तःपुरमासाद्य व्यतिचक्राम तं जनम् । वसिष्ठः परमप्रीतः परमर्षिर्विवेश च ॥ ३१ ॥ स त्वपश्यद्विनिष्क्रान्तं सुमन्त्रं नाम सारथिम् । द्वारे तु राजसिंहस्य सचिवं प्रियदर्शनम् ॥ ३२ ॥ तमुवाच महातेजाः सूतपुत्रं विशारदम् । वसिष्ठः क्षिप्रमाचक्ष्व नृपतेर्मामिहागतम् ॥ ३३ ॥ इमे गङ्गोदकघटाः सागरेभ्यश्च काञ्चनाः । औदुम्बरं भद्रपीठमभिषेकार्थमाहृतम् ॥ ३४ ॥ सर्वबीजानि गन्धाश्च रत्नानि विविधानि च । क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः ॥ ३५ ॥ अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः । चतुरश्वो रथः श्रीमान् निस्त्रिंशो धनुरुत्तमम् ॥ ३६ ॥ वाहनं नरसंयुक्तं छत्रं च शशिसन्निभम् । श्वेते च वालव्यजने भृङ्गारश्च हिरण्मयः ॥ ३७ ॥ हेमदामपिनद्धश्च ककुद्मान् पाण्डरो वृषः । केसरी च चतुर्दंष्ट्रो हरिश्रेष्ठो महाबलः ॥ ३८ ॥

आहृतमित्येतद्वचनव्यत्ययेन सम्बध्यते । इमे इति छेदमपि । सागरेभ्य आहृता इमे उदकघटा इत्यध्याहारेण योज्यम् ॥ ३४ ॥ क्षौद्रं मधु ॥ ३५ ॥ 'चतुरश्वो रथः श्रीमान् निस्त्रिंशो धनुरुत्तमम्' इत्यत्र-तु इति गायत्र्याश्चतुर्थाक्षरम् । निस्त्रिंशः खड्गः ॥ ३६ ॥ भृङ्गारः कनकालुका ॥ ३७ ॥ केसरी प्रशस्तकेसरः ।



इमे गङ्गोदकघटा इति । काञ्चनाः जलपूर्णकाञ्चनघटाः । क्षौद्रम् मधु । अत्र गायत्र्याश्चतुर्थाक्षरम् । चतुरश्व इत्यस्य श्लोकस्य द्वितीयाक्षरेण तु इत्यनने संगृह्णाति– "चतुरश्वो रथः श्रीमान् निस्त्रिंशो धनुरुत्तमम् । वाहनं नरसंयुक्तं छत्रं च शशिसन्निभम् ।" इति । निस्त्रिंशः खड्गः । भृङ्गारः कनकालुका । धत्तूरकुसुमसदृश

हरिश्रेष्ठः अश्वोत्तमः ॥ ३८ ॥ ३९ ॥ व्याघ्रतनुः व्याघ्रचर्मेत्यर्थः । नैगमो वणिजः । "नैगमो वणिजो वणिक्" इत्यमरः ॥ ४० ॥ ४१ ॥ समुदिते सम्यग्व्यक्ते ॥ ४२ ॥ ४३ ॥ पूर्वोदितम् अयं सर्वदा अनिवार्य इति राज्ञा पूर्वमुक्तम् ॥ ४४ ॥ स इति । अजज्ञिवान् अज्ञात

सिंहासनं व्याघ्रतनुः समिद्धश्च हुताशनः । सर्ववादित्रसङ्घाश्च वेश्याश्चालंकृताः स्त्रियः ॥३९॥ आचार्या ब्राह्मणा गावः पुण्याश्च मृगपक्षिणः । पौरजानपदश्रेष्ठा नैगमाश्च गणैः सह ॥ ४० ॥ एते चान्ये च बहवः प्रीयमाणाः प्रियम्वदाः । अभिषेकाय रामस्य सह तिष्ठन्ति पार्थिवैः ॥ ४१ ॥ त्वरयस्व महाराजं यथा समुदितेऽहनि । पुण्ये नक्षत्रयोगे च रामो राज्यमवाप्नुयात् ॥ ४२ ॥ इति तस्य वचः श्रुत्वा सूतपुत्रो महात्मनः । स्तुवन्नृपतिशार्दूलं प्रविवेश निवेशनम् ॥४३॥ तं तु पूर्वोदितं वृद्धं द्वारस्था राजसम्मतम् । न शेकुरभिसंरोद्धुं राज्ञः प्रियचिकीर्षवः ॥४४॥ स समीपस्थितो राज्ञस्तामवस्थामजज्ञिवान् । वाग्भिः परमतुष्टाभिरभिष्टोतुं प्रचक्रमे ॥४५॥ ततः सूतो यथाकालं पार्थिवस्य निवेशने । सुमन्त्रः प्राञ्जलिर्भूत्वा तुष्टाव जगतीपतिम् ॥ ४६ ॥ यथा नन्दति तेजस्वी सागरो भास्करोदये । प्रीतः प्रीतेन मनसा तथानन्दघनः स्वतः ॥ ४७ ॥

वान् ॥ ४५ ॥ तत इति । यथाकालं प्रातःकालार्हम् ॥ ४६ ॥ यथेति । भास्करोदयेपि समुद्रवृद्धिरस्त्येव । यद्वा भासः करोतीति व्युत्पत्त्या

हिरण्मयपात्रम् । नरसंयुक्तं वाहनं शिबिकादि । केसरी प्रशस्तकेशरः । चतुर्दंष्ट्रः सञ्जातचतुर्दन्तः । हरिश्रेष्ठः अश्वोत्तमः । व्याघ्रतनुः व्याघ्रचर्म । हेमदामपिनद्धः हेमदामबद्धः । नैगमाः श्रेणीमुख्याः, अध्यापका वा । गणैः स्ववीथिस्थजनैः ॥ ३४–४१ ॥ त्वरयस्व महाराजमिति । समुदिते श्रेयस्करे अहनि यथा रामो राज्यमवाप्नुयात् तथा दशरथं त्वरयस्वेति सम्बन्धः ॥ ४२ ॥४३॥ तमिति । पूर्वोदितम् अयं सदा न निवारणीय इति राज्ञा पूर्वमेवोक्तम् ॥ ४४ ॥ स इति । तामवस्थां यथोक्तरूपाम् अतिघोराम् । अजज्ञिवान् अज्ञातवान् । परमतुष्टाभिः परमतोषहेतुभिः ॥४५॥ तत इति । यथाकालं प्रभूतकालार्हम् ॥ ४६ ॥ यथेति । भास्करोदये भासः करोतीति व्युत्पत्त्या भास्करः पूर्णचन्द्रः । तस्योदये प्रीतेन प्रतिफलितचन्द्रतेजसा प्रीतेन मनसा प्रीतः सागरो यथा नन्दति तथा आनन्दघनः आनन्दपूर्णः सन् स्वतो नन्द तथा आनन्दघन इत्यत्र नन्द आनन्दघन इति तन्त्रेण पदच्छेदः ॥ ४७ ॥

भास्करश्चन्द्रः ॥ ४७ ॥ ४८ ॥ वेदा इति । सहाङ्गविद्याः अङ्गभूतशिक्षादिविद्यासहिताः । ब्रह्माणं बोधयन्ति सृष्ट्युपयोगितत्तदर्थबोधं जनयन्ति । तथाह मनुः—“ नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥ ” इति ॥ ४९ ॥ आदित्य इति । भूतधरां सर्वप्राणिधरां पृथिवीं बोधयति विशेषणद्वारा पृथ्वीबोधनम्, अद्य बोधयामीत्यन्वयः ॥ ५० ॥ उत्तिष्ठेति । कृतकौतुकमङ्गलः कृतं कौतुक

इन्द्रमस्यां तु वेलायामभितुष्टाव मातलिः । सोऽजयद्दानवान् सर्वांस्तथा त्वां बोधयाम्यहम् ॥ ४८ ॥ वेदाः सहाङ्गविद्याश्च यथा ह्यात्मभुवं विभुम् । ब्रह्माणं बोधयन्त्यद्य तथा त्वां बोधयाम्यहम् ॥ ४९ ॥ आदित्यः सह चन्द्रेण यथा भूतधरां शुभाम् । बोधयत्यद्य पृथिवीं तथा त्वां बोधयाम्यहम् ॥ ५० ॥ उत्तिष्ठाशु महाराज कृत कौतुकमङ्गलः । विराजमानो वपुषा मेरोरिव दिवाकरः ॥ ५१ ॥ सोमसूर्यौ च काकुत्स्थ शिववैश्रवणावपि । वरुण श्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते ॥ ५२ ॥ गता भगवती रात्रिः कृतं कृत्यमिदं तव । बुध्यस्व नृपशार्दूल कुरु कार्यमनन्तरम् ॥ ५३ ॥ उदतिष्ठत रामस्य समग्रमभिषेचनम् । पौरजानपदैश्चापि नैगमैश्च कृताञ्जलिः ॥ ५४ ॥ स्वयं वसिष्ठो भगवान् ब्राह्मणैः सह तिष्ठति । क्षिप्रमाज्ञाप्यतां राजन् राघवस्याभिषेचनम् ॥ ५५ ॥

हेतुभूतं मङ्गलाचरणं येन स तथोक्तः, सर्वानन्दोत्पादनाय कृतदेहालङ्कार इत्यर्थः । यद्वा कौतुकम् उत्सवः । कृतोत्सवार्थमङ्गलानुष्ठान इत्यर्थः । मेरोर्दिवा कर इव दिवाकरस्य प्रधानमेरोरुत्थानं मेरुसम्बद्धरथाक्षद्वारेति ज्ञेयम् ॥ ५१ ॥ ५२ ॥ गतेति । सर्वानन्दकररामाभिषेकमहोत्सवोपयुक्तत्वाद्रात्रिर्भ गवतीति स्तूयते ॥ ५३ ॥ उदतिष्ठतेति । “ उदोऽनूर्ध्वकर्मणि ” इत्यात्मनेपदम् । उपस्थितमित्यर्थः । अभिषेचनं अभिषेकसाधनम् । उपतिष्ठतीति



इन्द्रमिति । अस्यां वेलायाम् उदयवेलायाम् ॥ ४८ ॥ ४९ ॥ आदित्य इति । बोधयत्यद्य पृथिवीमिति, उदयास्तमयाभ्यामिति शेषः ॥ ५० ॥ कृतकौतुकमङ्गल कृतानि कौतुके अभिषेकोत्सवे मङ्गलानि येन स तथोक्तः, सर्वानन्दोत्पादनाय कृतदेहालङ्कार इत्यर्थः ॥ ५१ ॥ ५२ ॥ गतेति । तत्र यत्कृत्यं कर्तव्यं रामाभिषेकाय अस्मदादिभिः तदिदं सर्वं कृतम् ॥ ५३ ॥ उदतिष्ठतेति । अभिषेचनम् अभिषेकोपकरणम् समग्रमुदतिष्ठत उपस्थितमित्यर्थः । नैगमैः वणिग्जनैः ॥ ५४–५६ ॥

पाठान्तरम् ॥५४–५७॥ इतीति । सान्त्वपूर्वं सामपूर्वं "साम सान्त्वम्" इत्यमरः । अर्थवदिति निर्देशः । प्रातःकालप्रबोधस्य सर्वविजयहेतुत्वात् ॥५८॥ ततः स राजेत्यादि । सुतं प्रति सन्नहर्षः नष्टहर्षः । भूयो निकृन्तासि कैकेयीवाक्यकृत्तानि मर्माणि भूयोप्यनुचितकालस्तुतिभिर्निकृन्तसीत्यर्थः । अत्र



यथा ह्यपालाः पशवो यथा सेना ह्यनायका । यथा चन्द्रं विना रात्रिर्यथा गावो विना वृषम् ॥ ५६ ॥ एवं हि भवता राष्ट्रं यत्र राजा न दृश्यते ॥ ५७ ॥ इति तस्य वचः श्रुत्वा सान्त्वपूर्वमिवार्थवत् । अभ्यकीर्यत शोकेन भूय एव महीपतिः ॥ ५८ ॥ ततः स राजा तं सूतं सन्नहर्षः सुतं प्रति । शोकरक्तेक्षणः श्रीमान् उद्वीक्ष्योवाच धार्मिकः । वाक्यैस्तु खलु मर्माणि मम भूयो निकृन्तसि ॥ ५९ ॥ सुमन्त्रः करुणं श्रुत्वा दृष्ट्वा दीनं च पार्थिवम् । प्रगृहीताञ्जलिः किञ्चित्तस्माद्देशादपाक्रमत् ॥६०॥ यदा वक्तुं स्वयं दैन्यान्न शशाक महीपतिः । तदा सुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह ॥ ६१ ॥ सुमन्त्र राजा रजनीं रामहर्षसमुत्सुकः । प्रजागरपरिश्रान्तो निद्राया वशमेयिवान् ॥ ६२ ॥ तद्गच्छ त्वरितं सूत राजपुत्रं यशस्विनम् । राममानय भद्र ते नात्र कार्या विचारणा ॥६३॥ स मन्यमानः कल्याणं हृदयेन ननन्द च । निर्जगाम च सम्प्रीत्या त्वरितो राजशासनात् ॥ ६४ ॥ सुमन्त्रश्चिन्तयामास त्वरितं चोदितस्तया । व्यक्तं रामाभिषेकार्थमिहायास्यति धर्मवित् ॥ ६५ ॥ इति सूतो मतिं कृत्वा हर्षेण महता वृतः । निर्जगाम महाबाहू राघवस्य दिदृक्षया ॥ ६६ ॥

इतिशब्दोऽध्याहार्यः ॥ ५९ ॥ करुणं दीनवाक्यम् ॥ ६० ॥ यदेति । मन्त्रज्ञा राजनीत्यनुसारेण स्वकार्योचितविचारज्ञेत्यर्थः ॥६१॥ सुमन्त्रेति । रजनीमिति अत्यन्तसंयोगे द्वितीया । प्रजागरो निद्राक्षयः । विचारणेत्यनन्तरमितिशब्दोध्याहर्तव्यः । इति प्रत्युवाचेत्यन्वयः ॥ ६२ ॥ ६३ ॥ स इति । राज

भविता । लुट् ( भविता इति पाठः ) यत्र राष्ट्रे । राजा भवान् न दृश्यते अतः सन्निधेहीति भावः ॥ ५७ ॥ इतीति । सान्त्वपूर्वम् अर्थवदिव अर्थवदेव सार्थकमेव ॥ ५८ ॥ तत इति । शोकरक्तेक्षणः रोदनेन रक्ताक्षः । भूयो निकृन्तसीति । कैकेयीक्रूरवचःकृत्तमर्माणं पुनरप्यधिकं स्तुतिवाक्यैर्निकृन्तसीति ॥ ५९ ॥ सुमन्त्र इति । अपाक्रमत्, भीत इति शेषः ॥ ६० ॥ यदेति । दैन्यं सत्यपाशबन्धनजं कैकेयीविषयकम् । मन्त्रज्ञा स्वकार्यवक्तव्यविचारज्ञा ॥ ६१ ॥ अत एव मिथ्याप्याह–सुमन्त्रेति । रामहर्षसमुत्सुकः रामाभिषेकसमुत्सुकः ॥ ६२ ॥ ६३ ॥ स इति । स मन्यमानः कल्याणमिति नात्र कार्या विचारणा इति च

शासनादित्युक्तिः राजसम्मतमिति बुद्ध्या ॥ ६४-६६ ॥ सागरह्रदसङ्काशादिति । सागरह्रदः समुद्रान्तर्गतह्रदः । पुरान्तर्वत्यन्तःपुरत्वात्समुद्रस्थह्रदौ पम्यम् । जनसम्बाधं जनैर्निबिडम् ॥ ६७॥ तत इति । पुरस्तादग्रे महीपतीन् विलोकयन् पश्चात् पौरान् ददर्श । महाधनान् उपहारपाणीन् । उपस्थि

सागरह्रदसङ्काशात् सुमन्त्रोऽन्तःपुराच्छुभात् । निष्क्रम्य जनसम्बाधं ददर्श द्वारमग्रतः ॥ ६७ ॥ ततः पुरस्तात् सहसा विनिर्गतो महीपतीन् द्वारगतो विलोकयन् । ददर्श पौरान् विविधान् महाधनानुपस्थितान् द्वारमुपेत्य विष्ठितान् ॥ ६८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे चतुर्दशः सर्गः ॥ १४ ॥
ते तु तां रजनीमुष्य ब्राह्मणा वेदपारगाः । उपतस्थुरुपस्थानं सह राजपुरोहिताः ॥ १ ॥ अमात्या बलमुख्याश्च मुख्या ये निगमस्य च । राघवस्याभिषेकार्थे प्रीयमाणास्तु सङ्गताः ॥ २ ॥ उदिते विमले सूर्ये पुष्ये चाभ्यागतेऽहनि । लग्ने कर्कटके प्राप्ते जन्म रामस्य च स्थिते । अभिषेकाय रामस्य द्विजेन्द्रैरुपकल्पितम् ॥ ३ ॥ काञ्चना जलकुम्भाश्च भद्रपीठं स्वलंकृतम् । रथश्च सम्यगास्तीर्णो भास्वता व्याघ्रचर्मणा ॥ ४ ॥

तान् उपस्थानं सदः कुर्वतः ॥ ६८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुर्दशः सर्गः ॥ १४॥
अथ रामाभिषेकसामग्रीसन्निधानमाह पञ्चदशे-ते त्विति । उष्य उषित्वा । उपस्थानं सदः ॥ १ ॥ निगमस्य पुरस्य " निगमो निश्चये वेदे पुरे पथि वणिक्पथे " इति वैजयन्ती ॥ २ ॥ उदित इति । उपकल्पितम्, अभिषेकार्थद्रव्यजातमिति शेषः ॥ ३ ॥ उपकल्पितमेव प्रपञ्चयति-काञ्चना इत्यादि ।

मायाविन्या तयोक्तविश्वासात् राजशासनात् राज्ञः सम्मतमिति बुद्ध्या ॥ ६४-६८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां चतुर्दशः सर्गः ॥ १४ ॥ राजाज्ञया राजद्वारे मिलितानां राज्ञां परस्परसम्भाषणमाह-ते त्वित्यारभ्य अपश्यन्तोऽब्रुवन् को नु राज्ञो नः प्रतिबोधयेदित्यन्तेन ग्रन्थसन्दर्भेण । तां रजनीं रामाभिषेकोद्युक्तरजनीम् । उष्य उषित्वा । द्वारे पौराः सङ्गताः ॥ १ ॥ २ ॥ उदित इति । अहनि पुष्ये पुष्यनक्षत्रे अभ्यागते सति रामस्य जन्म प्राप्ते स्थिते कर्कटके लग्ने च अहन्यभ्यागते सति रामस्याभिषेकाय द्विजेन्द्रैः उपकल्पितम्, उपकरणजातमिति शेषः ॥ ३ ॥ ४ ॥

अत्र भान्तीत्यनुषज्यते ॥४॥ गङ्गेति । आहृतं, वर्तते इति शेषः । याश्चान्याः सरित इत्यत्र ताभ्यश्चेत्यनुकृष्याहृतमिति पूर्वेण सम्बन्धः । ये च ह्रदाः कूपाः यानि सरांसि । अत्र तु तेभ्य इत्यध्याहारः । आहृतं जलमिति पूर्वेण सम्बन्धः ॥ ५ ॥ प्राग्वाहा इति । प्राग्वाहाः पूर्वाभिमुखप्रवाहाः गोदावरीकावेर्यादयः । ऊर्ध्ववाहाः ऊर्ध्वोद्गतप्रवाहाः नैमिषारण्यस्थब्रह्मावर्त्तरुद्रावर्तादिसरोविशेषाः । ऊर्ध्ववाहाः प्रत्यग्वाहाः इत्यप्याहुः । ऊर्ध्वाद्वहन्तीत्यूर्ध्ववाहाः । निर्झरा

गङ्गायमुनयोः पुण्यात् सङ्गमादाहृतं जलम् । याश्चान्याः सरितः पुण्या ह्रदाः कूपाः सरांसि च ॥ ५ ॥ प्राग्वाहा श्चोर्ध्ववाहाश्च तिर्यग्वाहास्समाहिताः । ताभ्यश्चैवाहृतं तोयं समुद्रेभ्यश्च सर्वशः ॥ ६ ॥ सलाजाः क्षीरिभिश्छन्ना घटाः काञ्चनराजताः । पद्मोत्पलयुता भान्ति पूर्णाः परमवारिणा ॥ ७ ॥ क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः । वेश्याश्चैव शुभाचाराः सर्वाभरणभूषिताः ॥ ८ ॥ चन्द्रांशुविकचप्रख्यं काञ्चनं रत्नभूषितम् । सज्जं तिष्ठति रामस्य वालव्यजनमुत्तमम् ॥ ९ ॥ चन्द्रमण्डलसङ्काशमातपत्रं च पाण्डरम् । सज्जं द्युतिकरं श्रीमदभिषेकपुरस्कृतम् ॥१०॥ पाण्डरश्च वृषः सज्जः पाण्डरोऽश्वश्च संस्थितः । प्रसृतश्च गजः श्रीमानौपवाह्यः प्रतीक्षते ॥ ११ ॥ अष्टौ च कन्या माङ्गल्याः सर्वाभरणभूषिताः । वादित्राणि च सर्वाणि वन्दिनश्च तथा परे ॥ १२ ॥

इतिकेचित् । तिर्य्यग्वाहाः दक्षिणोत्तराभिमुखप्रवाहाः गण्डकीशोणभद्रादयः ॥ ६ ॥ सलाजा इति । क्षीरिभिः अश्वत्थोदुम्बरादिभिः पूर्वं जलकुम्भमात्र मुक्तम् । अत्र तद्विशेष इति न पुनरुक्तिः ॥ ७ ॥ क्षौद्रमिति । क्षौद्रं मधु । सुमनसः कुसुमानि । शुभाचाराः अञ्जनस्रगलङ्करणादिमङ्गलवेषयुक्ताः ॥ ८ ॥ चन्द्रांशुविकचप्रख्यं विकचचन्द्रांशुसंदृशम् । विकचत्वं विस्तृतत्वम् । यद्वा चन्द्रांशव इव विकचा विस्तृता प्रख्या कान्तिर्यस्य तत्तथा । काञ्चनं काञ्चनदण्डम् । सज्जं गन्धपुष्पादिभिरलंकृतम् ॥९॥ चन्द्रमण्डलेति । अभिषेकपुरस्कृतम् । अभिषेकाय पुरस्कृतम् ॥१०॥ पाण्डर इति । प्रसृतः प्रकर्षेण स्रवन्मदः । औपवाह्यः राजवाह्यः "राजवाह्यस्त्वौपवाह्यः" इत्यमरः ॥ ११ ॥ माङ्गल्याः मङ्गलार्हाः । वादित्राणि वीणादिचतुर्विधवाद्यानि ॥ १२ ॥

याश्चेति ताभ्यः जलमाहृतमिति सम्बन्धः ॥५॥ प्राग्वाहा इति । पर्वतघट्टादिना ऊर्ध्ववाहाः तिर्यग्वाहाः॥६॥ सलाजा इति । क्षीरिभिः क्षीरयुक्तैः, पल्लवैरिति शेषः॥७॥८॥ चन्द्रेति । चन्द्रांशुविकचप्रख्यं चन्द्रांशुवद्विकचा प्रख्या यस्य तथोक्तम् । सज्जमुद्युक्तम्, गन्धपुष्पादिभिरलंकृतमित्यर्थः ॥ ९ ॥ चन्द्रमण्डलेति । अभिषेकपुरस्कृतं प्रक्षालितम् ॥ १० ॥ पाण्डर इति । प्रसृतः प्रकर्षेण स्रवन्मदः, औपवाह्यः राजवाह्यः । "राजवाह्यस्त्वौपवाह्यः" इत्यमरः ॥११॥ अष्टौ चेति । वादित्राणि वीणादि

इक्ष्वाकूणामिति। इक्ष्वाकूणां राज्ये अभिषेचनमुद्दिश्य यथा सम्भ्रियेत, वस्तुजातमितिशेषः। तथा जातीयमनर्घरत्नादिवस्तुजातं आदाय ते महीपतयः राजवचनात् राजपुत्राभिषेचनमुद्दिश्य तत्र राजभवनद्वारे समवेताः महीपतिमपश्यन्तः राज्ञः को नु नः प्रतिवेदयेदित्यब्रुवन्निति योजना ॥ १३ ॥ १४ ॥

इक्ष्वाकूणां यथा राज्ये सम्भ्रियेताभिषेचनम्। तथा जातीयमादाय राजपुत्राभिषेचनम् ॥ १३ ॥ ते राजवचनात्तत्र समवेता महीपतिम्। अपश्यन्तोऽब्रुवन् को नु राज्ञो नः प्रतिवेदयत् ॥ १४ ॥ न पश्यामश्च राजानमुदितश्च दिवाकरः। यौवराज्याभिषेकश्च सज्जो रामस्य धीमतः ॥ १५ ॥ इति तेषु ब्रुवाणेषु सार्वभौमान् महीपतीन्। अब्रवीत्तानिदं सर्वान् सुमन्त्रो राजसत्कृतः ॥ १६ ॥ रामं राज्ञो नियोगेन त्वरया प्रस्थितोऽस्म्यहम्। पूज्या राज्ञो भवन्तस्तु रामस्य च विशेषतः ॥ १७ ॥ अयं पृच्छामि वचनात्सुखमायुष्मतामहम्। राज्ञः सम्प्रतिबुद्धस्य यच्चागमनकारणम् ॥ १८ ॥ इत्युक्त्वान्तःपुरद्वारमाजगाम पुराणवित्। सदासक्तं च तद्वेश्म सुमन्त्रः प्रविवेश ह ॥ १९ ॥ तुष्टावास्य तदा वंशं प्रविश्य स विशांपतेः। शयनीयं नरेन्द्रस्य तदासाद्य व्यतिष्ठत ॥ २० ॥

नेति। सज्जः सम्पन्नसाधन इत्यर्थः ॥ १५ ॥ १६ ॥ राममिति। रामं प्रस्थितः, आनेतुमिति शेषः। यस्मात् पूज्यास्तस्मात् आयुष्मतां युष्माकं वचनात् राज्ञः सुखं पृच्छामि। यच्चागमनकारणं दर्शनायानागमनहेतुः तं च। अयमविलम्बेन पृच्छामि ॥ १७ ॥ १८ ॥ पुराणवित् सामन्तराजानुवर्त्तनरूपपुरातनवृत्तान्तज्ञः। सदासक्तं सर्वदा अनिवारितम् ॥ १९ ॥ तुष्टावेति। शयनीयं शयनयोग्यं गृहम् ॥ २० ॥

चतुर्विधवाद्यानि ॥ १२ ॥ इक्ष्वाकूणामिति। इक्ष्वाकूणां राज्ये अभिषेचनमुद्दिश्य यथा संभ्रियेत, वस्तुजातमिति शेषः। तथा जातीयं तादृशमनर्घरत्नादिवस्तुजातम् आदाय ते महीपतयः, राजवचनाद्राजपुत्राभिषेचनमुद्दिश्य, तत्र राजद्वारि समवेताः महीपतिमपश्यन्तः नः राज्ञः को नु प्रतिवेदयेदिति सम्बन्धः ॥१३॥१४॥ नेति। सज्जः सम्पन्नसाधनः॥ १५ ॥ १६ ॥ राममिति। रामं प्रस्थितः, आनेतुमिति शेषः। राज्ञो नियोगेन राममानेतुं यद्यपि प्रस्थितः तथापि भवन्तोपि राज्ञो रामस्य च पूज्या इति कृत्वा भूयो राज्ञः समीपं गत्वा आयुष्मतां युष्माकं वचनात् संप्रतिबुद्धस्यापि राज्ञः आगमनस्य निर्गमनस्यापि कारणं सुखं पृच्छामि ॥ १७ ॥ १८ ॥ इतीति। पुराणवित् चिरकालकथाभिज्ञः। सदासक्तं सततमनिवारितम्। अथवा असक्तम् अनिरोधम् ॥ १९ ॥ तुष्टावेति। शयनीयं शयनगृहम्। आसाद्य व्यति

सत्य०—विशां पतेः विशां प्रजानां पतेः पत्युः। ननु कथं पतेरिति "पतिः समास एव" इति समासे घिसंज्ञाविधानात् इति चेत्? न, पतिरित्याख्यातः पतिः। णौ टिलोपे "अच इः" इत्यौणादिक इः। अयं पतिशब्दः 'पतिः समास एव' इत्यत्र न गृह्यते, लाक्षणिकत्वात् ॥ २० ॥

स इति । अत्यासाद्य अतिशयेन प्राप्य । अतिसमीपं प्राप्येत्यर्थः । तिरस्करणिमन्तरा जवनिकामात्रं व्यवधानं कृत्वेत्यर्थः । राघवं दशरथम् । पुनस्तोत्रकरणं सूतस्य विज्ञापनात्पूर्वं स्तुतेः कुलधर्मत्वात् ॥२१–२४॥ प्रतिबुद्ध्य ज्ञात्वेत्यर्थः ॥२५॥२६॥ कैकेय्युक्तं निद्रापरवशस्य राज्ञोऽनुमतं न वेति न

सोऽत्यासाद्य तु तद्वेश्म तिरस्करणिमन्तरा । आशीर्भिर्गुणयुक्ताभिरभितुष्टाव राघवम् ॥ २१ ॥ सोमसूर्यौ च काकुत्स्थ शिववैश्रवणावपि । वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते ॥२२॥ गता भगवती रात्रिः कृतं कृत्यमिदं तव । बुध्यस्व नृपशार्दूल कुरु कार्य्यमनन्तरम् ॥ २३ ॥ ब्राह्मणा बलमुख्याश्च नैगमाश्चागता नृप । दर्शनं प्रतिकांक्षन्ते प्रतिबुध्यस्व राघव ॥ २४ ॥ स्तुवन्तं तं तदा सूतं सुमन्त्रं मन्त्रकोविदम् । प्रतिबुध्य ततो राजा इदं वचनमब्रवीत् ॥ २५ ॥ राममानय सूतेति यदस्यभिहितोऽनया । किमिदं कारणं येन ममाज्ञा प्रतिहन्यते ॥२६॥ न चैव सम्प्रसुप्तोऽहमानयेहाशु राघवम् । इति राजा दशरथः सूतं तत्रान्वशात् पुनः ॥ २७ ॥ स राजवचनं श्रुत्वा शिरसा प्रतिपूज्य तम् । निर्जगाम नृपावासान्मन्यमानः प्रियं महत् ॥२८॥ प्रपन्नो राजमार्गं च पताकाध्वजशोभितम् । हृष्टः प्रमुदितः सूतो जगामाशु विलोकयन् ॥ २९ ॥

संशयितव्यमित्याह–न चेत्यादिना ॥ २७ ॥ २८ ॥ प्रपन्न इति । हृष्टः रोमाञ्चाञ्चितगात्रः । प्रमुदितः सञ्जातमानसानन्दः ॥ २९ ॥

ष्ठत ॥२०॥ स इति । अत्यासाद्य अतिशयेन समीपं प्राप्य । तिरस्करिणीमन्तरा यवनिकामात्रं व्यवधानं कृत्वा । राघवं दशरथं तुष्टाव ॥२१॥२२॥ कृतकृत्यमिदं तवेति । अनुष्ठेयमनुष्ठितं रामाभिषेकसंभरणं सम्पन्नमित्यर्थः ॥ २३ ॥ निगमो वाणिज्यं तत्सम्बन्धिनो नैगमाः ॥ २४ ॥ स्तुवन्तमिति । प्रतिबुद्ध्य ज्ञात्वा । इदमब्रवीत् ॥ २५ ॥ तदेवाह–राममिति । हे सूत राममानयेति अनयाभिहितोऽसि यत् 'अप्रतिषिद्धमनुमतम्' इति न्यायेन तस्यैव मदाज्ञात्वात् सेयं ममाज्ञा प्रतिहन्यते नानुष्ठीयत इतीदं किंकारणं किंकारणकमित्यर्थः ॥ २६ ॥ न च निद्रापरवशस्य राज्ञ इदमनुमतं वा नवेति संशयितव्यं त्वयेत्याह–न चैवेति । तत्र कैकेयीनिमित्तकार्ये । अन्वशात् अनुशास्ति स्म ॥ २७ ॥ २८ ॥ प्रपन्न इति । हृष्टो रोमाञ्चितगात्रः । मुदितः सञ्जातमानसानन्दः, राजमार्गं विलोकयन्निति

स इति । रामाधिकरणाः राममधिकृत्य प्रवृत्ताः । हृष्टवत् । स्वार्थे वतिः ॥३०॥३१॥ महाकवाटेत्यादि । महाकवाटविहितं निर्मितमहाकवाटम् । वितर्दिशतशोभितं वेदिकाशतशोभितम् । " स्याद्वितर्दिस्तु वेदिका " इत्यमरः । काञ्चनप्रतिमैकाग्रं काञ्चनप्रतिमाभिः एकाग्रं निरन्तरम् । यद्वा काञ्चनप्रतिमाभिः एकानि मुख्यानि अग्राणि शिखराग्राणि यस्मिन् तत्तथोक्तम् । मणिविद्रुमतोरणं मणिविद्रुमप्रचुरबहिर्द्वारयुक्तम् "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः

स सूतस्तत्र शुश्राव रामाधिकरणाः कथाः । अभिषेचनसंयुक्ताः सर्वलोकस्य हृष्टवत् ॥ ३० ॥ ततो ददर्श रुचिरं कैलासशिखरप्रभम् । रामवेश्म सुमन्त्रस्तु शक्रवेश्मसमप्रभम् ॥ ३१ ॥ महाकवाटविहितं वितर्दिशतशोभितम् । काञ्चनप्रतिमैकाग्रं मणिविद्रुमतोरणम् ॥ ३२ ॥ शारदाभ्रघनप्रख्यं दीप्तमेरुगुहोपमम् । मणिभिर्वरमाल्यानां सुमहद्भिरलंकृतम् ॥ ३३ ॥ मुक्तामणिभिराकीर्णं चन्दनागरुधूपितम् । गन्धान्मनोज्ञान् विसृजद्दार्दुरं शिखरं यथा ॥ ३४ ॥ सारसैश्च मयूरैश्च विनदद्भिर्विराजितम् । सुकृतेहामृगाकीर्णं सुकीर्णं भक्तिभिस्तथा ॥ ३५ ॥ मनश्चक्षुश्च भूतानामाददत्तिग्मतेजसा । चन्द्रभास्करसङ्काशं कुबेरभवनोपमम् ॥ ३६ ॥ महेन्द्रधामप्रतिमं नानापक्षिसमाकुलम् । मेरुशृङ्गसमं सूतो रामवेश्म ददर्श ह ॥ ३७ ॥

॥ ३२ ॥ शारदाभ्रघनप्रख्यं शारदाभ्रमूर्तिसदृशम् । " घनो मेघे मूर्तिगुणे त्रिषु मूर्तौ निरन्तरे " इत्यमरः ॥ ३३ ॥ दार्दुरं मलयसंनिकृष्टश्चन्दनोत्पत्तिस्थानभूतो गिरिर्दर्दुरः, तत्सम्बन्धि दार्दुरम् ॥ ३४ ॥ सुकृतेहामृगाकीर्णं द्वारभित्तिस्तम्भादिषु सुष्ठु रचितैः ईहामृगैः वृकैः आकीर्णं "कोकस्त्वीहामृगो वृकः" इत्यमरः । भक्तिभिः सुकीर्णं सुष्ठु रचितम् ॥ ३५ ॥ तिग्मतेजसा तीव्रतेजसा " तिग्मं तीव्रं खरम् " इत्यमरः । अतिशयिततेजसेत्यर्थः ॥ ३६ ॥ रामवेश्म ददर्श हेति पुनर्वचनस्य सामान्योक्तस्य विशेषणविशेषकथनार्थत्वान्न पुनरुक्तिः । भगवतो वाल्मीकेरियं हि शैली ॥ ३७ ॥

सम्बन्धः ॥ २९ ॥ स इति । रामाधिकरणाः राममधिकृत्य प्रवृत्ताः, अभिषेचनसंयुक्ताः अभिषेचनप्रसङ्गयुक्ताः, हृष्टवत् हृष्टोऽभूत ॥ ३० ॥ ३१ ॥ महाकवाटेति । महाकवाटविहितं महाकवाटयुक्तम् । वितर्दिशतशोभितं वेदिकाशतशोभितम् । काञ्चनप्रतिमैकाग्रम् । काञ्चन्यः प्रतिमा यस्मिन् [illegible] काञ्चनप्रतिमम्, एकं मुख्यं अग्रं यस्य तत्तथोक्तम् । मणिविद्रुमतोरणं मणिविद्रुमप्रचुरबहिर्द्वारयुक्तम् । शारदाभ्रघनप्रख्यं शारदाभ्राणामिव घनाः सान्द्राः प्रख्य[illegible] [illegible]ाः यस्मिन् तत्तथोक्तम् । मणिभिर्वरमाल्यानामिति । वरमाल्यानां स्वर्णपुष्पमाल्यानाम् अलङ्कारवर्तिभिः महद्भिः महादीप्तिमद्भिर्मणिभिरलंकृतम् । दर्दुरः मलयसन्निकृष्टचन्दनागिरिः । सुकृतेहामृगाकीर्णं

उपस्थितैरिति । उपादाय उपायनानीति शेषः । समाक्रान्तैः समागतैः ॥ ३८ ॥ उन्मुखैः उत्सुकैः । उदग्रम् उन्नतम् ॥ ३९ ॥ कुब्जकैरातकावृतं किरातानां स्वल्पशरीरकाणां समूहः कैरातकं "पृश्निरल्पशरीरः स्यात्किरातः स च कथ्यते" इति हलायुधः । उपस्थितैः समाकीर्णमित्यादिकमपि

उपस्थितैः समाकीर्णं जनैरञ्जलिकारिभिः । उपादाय समाक्रान्तैस्तथा जानपदैर्जनैः ॥ ३८ ॥ रामाभिषेकसुमुखैरुन्मुखैः समलंकृतम् । महामेघसमप्रख्यमुदग्रं सुविभूषितम् ॥ ३९ ॥ नानारत्नसमाकीर्णं कुब्जकैरातकावृतम् ॥ ४० ॥ स वाजियुक्तेन रथेन सारथिर्नराकुलं राजकुलं विलोकयन् । वरूथिना रामगृहाभिपातिना पुरस्य सर्वस्य मनांसि रञ्जयत् ॥ ४१ ॥ ततः समासाद्य महाधनं महत् प्रहृष्टरोमा स बभूव सारथिः । मृगैर्मयूरैश्च समाकुलोल्बणं गृहं वरार्हस्य शचीपतेरिव ॥ ४२ ॥ स तत्र कैलासनिभाः स्वलंकृताः प्रविश्य कक्ष्यास्त्रिदशालयोपमाः । प्रियान्नरान् राममते स्थितान् बहूनपोह्य शुद्धान्तमुपस्थितो रथी ॥ ४३ ॥ स तत्र शुश्राव च हर्षयुक्ता रामाभिषेकार्थकृता जनानाम् । नरेन्द्रसूनोरभिमङ्गलार्थास्सर्वस्य लोकस्य गिरः प्रहृष्टः ॥ ४४ ॥

रामवेश्मेत्यनेन सम्बध्यते ॥ ४० ॥ स वाजियुक्तेनेति । वरूथिना रथगुप्तिमता । "रथगुप्तिर्वरूथो ना" इत्यमरः । पुरस्य पुरस्थजनस्य । रञ्जयत् अरञ्जयत् ॥ ४१ ॥ तत इति । समाकुलोल्बणम् इतस्ततः समाकुलैर्जनैरुल्बणम् अतिशयेनोल्बणं वा । वरार्हस्य श्रेष्ठवस्त्वर्हस्य, रामस्येति शेषः ॥ ४२ ॥ स इति । अपोह्य अतिक्रम्य । शुद्धान्तम् अन्तःपुरम् ॥ ४३ ॥ स इति । रामाभिषेकार्थकृता रामाभिषेकार्थं प्रयुक्ता इत्यर्थः । अभिमङ्गलार्थाः अभितो मङ्गलप्रतिपादन

सुष्ठु कृतैः ईहामृगैः आकीर्णम् । भक्तिभिः वर्द्धकीनां सूक्ष्मचित्रशिल्पैः सूत्कीर्णं सुष्ठु उत निबिडं कीर्णं व्याप्तम् । तिग्मतेजसा अतिशयितशोभया आददत् आकर्षत् । उपस्थितैः समीपवर्तिभिः । अञ्जलिकारिभिः नमस्कुर्वद्भिः । उपायनानि गृहीत्वा समाक्रान्तैः समागतैः समाकीर्णम् । उन्मुखैः उत्सुकैः उदग्रं प्रशस्तम् । कुब्जकैरातकावृतं कुब्जैः किरातानां स्वल्पशरीराणां समूहैश्चावृतम् । यद्वा कुब्जैः कैरातकैः किरातसमूहैश्चावृतम् ॥ ३२–४० ॥ स वाजियुक्तेनेति । वाजियुक्तेन रथेनेत्यत्र रञ्जयन् समासददित्यध्याहार्यम् । ततस्समासाद्येत्युत्तरश्लोके अनुवादात् । वरूथिना "रथगुप्तिर्वरूथो ना" इत्यमरः ॥ ४१ ॥ तत इति । समाकुलोल्बणम् अतिशयेन समाकुलम् । वरार्हस्य रामस्येति शेषः ॥ ४२ ॥ स इति । व्यपोह्य अतिक्रम्य शुद्धान्तम् अन्तःपुरम् । उपस्थितः प्राप्तः ॥ ४३ ॥ स तत्रेति । प्रहृष्टः

प्रयोजनाः ॥ ४४ ॥ महेन्द्रसद्मप्रतिममिति । वेश्म रामावासभूतं गृहराजम् ॥४५॥ उपस्थितैरिति । कोट्या कोटिसङ्ख्यया । परार्द्धैः परार्द्धसङ्ख्यया च सङ्ख्येयैः, सर्वान्तसङ्ख्या परार्द्धः ॥ ४६ ॥ तत इति । प्रभिन्नं मत्तम् । "प्रभिन्नो गर्जितो मत्तः" इत्यमरः ॥ ४७ ॥ स्वलंकृतानिति । वल्लभान् राजप्रियान् ॥४८॥ तदिति । अद्रिकूटाचलमेघसन्निभम् अद्रिशिखरेण निश्चलमेघेन च सदृशम् । महाविमानोत्तमवेश्मसङ्घवत् महाविमानसहितोत्तमवेश्म

महेन्द्रसद्मप्रतिमं तु वेश्म रामस्य रम्यं मृगपक्षिजुष्टम् । ददर्श मेरोरिव शृङ्गमुच्चं विभ्राजमानं प्रभया सुमन्त्रः ॥४५॥ उपस्थितैरञ्जलिकारकैश्च सोपायनैर्जानपदैश्च मर्त्यैः । कोट्या परार्द्धैश्च विमुक्तयानैः समाकुलं द्वारपथं ददर्श ॥४६॥ ततो महामेघमहीधराभं प्रभिन्नमत्यङ्कुशमप्रसह्यम् । रामौपवाह्यं रुचिरं ददर्श शत्रुञ्जयं नागमुदग्रकायम् ॥ ४७ ॥ स्वलंकृतान् साश्वरथान् सकुञ्जरानमात्यमुख्यान् शतशश्च वल्लभान् । व्यपोह्य सूतः सहितान् समन्ततः समृद्धमन्तःपुरमाविवेश ॥ ४८ ॥ तदद्रिकूटाचलमेघसन्निभं महाविमानोत्तमवेश्मसङ्घवत् । अवार्यमाणः प्रविवेश सारथिः प्रभूतरत्नं मकरो यथार्णवम् ॥४९॥ इत्यार्षे० श्रीरामायणे श्रीमदयोध्याकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

समूहयुक्तम् "विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि" इतिनिघण्टुः ॥ ४९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चदशस्सर्गः ॥ १५ ॥

अतिहृष्टः, रामाभिषेकार्थकृताः रामाभिषेकार्थं प्रयुक्ताः जनानां गिरः शुश्राव । अथवा रामाभिषेकप्रयोजनं कर्म कुर्वन्तीति रामाभिषेकार्थकृताः तेषां गिरः शुश्रावेति योजना । अभिमङ्गलार्थाः अभितो मङ्गलप्रतिपादकः अर्थो यासां गिरां तास्तथा ॥ ४४ ॥ ४५ ॥ उपस्थितैरिति । कोट्या कोटिसङ्ख्यया । परार्धैश्च परार्द्धसङ्ख्यैश्च ॥ ४६ ॥ तत इति । प्रभिन्नं मत्तम्, अत्यङ्कुशम् अतिक्रान्ताङ्कुशम् । शत्रुञ्जयं शत्रुञ्जयाख्यं नागम् । उदग्रकायम् उन्नताग्रशरीरम् ॥ ४७ ॥ ४८ ॥ तददीति । अद्रिकूटेन गिरिशिखरेण निश्चलमेघेन च तुल्यम् । महाविमानेभ्यः देवयानेभ्यः उत्तमानां वेश्मनां सङ्घस्तद्वत् ॥ ४९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां पञ्चदशस्सर्गः ॥ १५ ॥

एवं सुमन्त्रस्य रामोपस्थानमुक्त्वा रामस्य दशरथोपस्थानमाह षोडशे—स तदित्यादि ॥ १ ॥ २ ॥ तनि०—जनाकुलं अभिषेकं द्रष्टुमागतपौरजानपदादि जनसङ्कुलम् अन्तःपुरद्वारं समतीत्य। द्वारस्यातिभोग्यतया क्लेशेन विश्लेषो व्यज्यते ॥ १ ॥ तत्रेति । काषायिणः काषायवस्त्रधारिणः । रामप्रीत्यर्थमलङ्कार कञ्चुकालंकृतानित्यर्थः। वृद्धान् पञ्चनवतिवयस्कान् । ते खल्वन्तःपुरे स्थाप्या भवन्ति । वेत्रपाणीन् यथा रामो धनुर्धृत्वा लोकं रक्षयति तथा

स तदन्तःपुरद्वारं समतीत्य जनाकुलम् । प्रविविक्तां ततः कक्ष्यामाससाद पुराणवित् ॥१॥ प्रासकार्मुकबिभ्रद्भि र्युवभिर्मृष्टकुण्डलैः । अप्रमादिभिरेकाग्रैः स्वनुरक्तैरधिष्ठिताम् ॥ २ ॥ तत्र काषायिणो वृद्धान् वेत्रपाणीन् स्वलंकृतान् । ददर्श विष्ठितान् द्वारि स्त्र्यध्यक्षान् सुसमाहितान् ॥ ३ ॥ ते समीक्ष्य समायान्तं रामप्रियचिकीर्षवः । सह सोत्पतिताः सर्वे स्वासनेभ्यः ससम्भ्रमाः ॥ ४ ॥ तानुवाच विनीतात्मा सूतपुत्रः प्रदक्षिणः । क्षिप्रमाख्यात रामाय सुमन्त्रो द्वारि तिष्ठति ॥ ५ ॥ ते राममुपसङ्गम्य भर्त्तुः प्रियचिकीर्षवः । सहभार्याय रामाय क्षिप्रमेवाचचक्षिरे ॥ ६ ॥ प्रतिवेदितमाज्ञाय सूतमभ्यन्तरं पितुः । तत्रैवानाययामास राघवप्रियकाम्यया ॥ ७ ॥

तेपि वेत्राणि धृत्वा रामं रक्षन्तीति भावः । स्वलंकृतान् रामश्चक्रवर्तिगृहे कृतमज्जनो भुक्त्वा यदा पुनर्दिव्यान्तःपुरमुपयाति तदा चक्रवर्ती वदन्तरङ्गतया च तमुत्सङ्गे निवेश्य परिष्वज्य मूर्ध्न्याघ्राय विसर्जयन्ति तेन कुङ्कुमपङ्कैः कस्तूरिकादिदिव्याङ्गरागैश्चालंकृतान् स्वलंकृतान् रामसीता लङ्कारेभ्यांऽप्ययमलङ्कारोतिशयित इति भावः ॥ ३ ॥ ४ ॥ तानिति । प्रकर्षेण दक्षिणः प्रदक्षिणः । सेवानिपुण इत्यर्थः । "दक्षिणे सरलोदारौ" इत्यमरः । तिष्ठतीत्यत्र इतिकरणं द्रष्टव्यम् । तिष्ठतीत्याख्यातेत्यन्वयः ॥ ५ ॥ ६ ॥ प्रतिवेदितमिति । प्रतिवेदितं द्वाःस्थैः निवेदितं पितुः अभ्य

स इति । प्रविविक्ताम् असम्बाधाम् ॥ १ ॥ प्रासकार्मुकबिभ्रद्भिरिति । प्रासकार्मुकेत्यत्र 'सुपां सुलुक्–' इति द्वितीयाया लुक् । यद्वा प्रासकार्मुकं बिभ्रतीति प्रास कार्मुकबिभ्रतः तैः। द्विर्वचनमार्षम् ॥ २ ॥ तत्रेति । काषायिणः काषायवस्त्रधारिणः ॥ ३ ॥४॥ तानिति । प्रदक्षिणः सेवानिपुणः । क्षिप्रमिति द्वारि तिष्ठतीत्याख्यात वदतेत्यन्वयः ॥ ५ ॥ ६ ॥ प्रतीति । प्रतिवेदितं द्वास्स्थैर्विज्ञापितं सूतं पितुरभ्यन्तरमात्तम् आज्ञाय ज्ञात्वा । तत्रैव सीतया सहावस्थानस्थल एव ॥ ७ ॥ ८ ॥

सत्य०—पुराणवित पुराणाम् अणः गतिः । गत्यर्थादणतेः भावे अकारप्रत्ययः । तं वेत्तीति पुराणवित् । अनेन राजभवनकौशलं सूच्यते ॥ १ ॥ सभार्याय भार्यासहिताय, सभासु आर्याय वा । सभानां सकान्तीनाम् अर्याय स्वामिने वा । ( सभार्याय च । इति पाठः ) ॥ ६ ॥

न्तरम् अन्तरङ्गं। तत्रैव यत्र सीतया सह स्थितः तत्रैवेत्यर्थः। राघवप्रियकाम्यया राघवस्य दशरथस्य प्रियेच्छया। राम इत्यध्याहारः॥७॥तमिति। वैश्रवण सङ्काशं तद्वदनवधिकैश्वर्यसम्पन्नम्। यद्वा यथा वैश्रवणो दाता "कामेश्वरो वैश्रवणो ददातु" इतिश्रुतेः। तथा परिसरवर्तिनां स्वसौन्दर्यानुभवसर्वस्वं ददाती त्यर्थः। उपविष्टं 'सह पत्न्या विशालाक्ष्या नारायणमुपागमत्' इत्युक्तरीत्या भगवद्ध्यानपरतयावस्थितम्। स्वलंकृतं ध्यानानुकूलाञ्जलियुक्तम्। दिव्य

तं वैश्रवणसङ्काशमुपविष्टं स्वलंकृतम्। ददर्श सूतः पर्य्यङ्के सौवर्णे सोत्तरच्छदे ॥ ८ ॥
वराहरुधिराभेण शुचिना च सुगन्धिना। अनुलिप्तं परार्ध्येन चन्दनेन परन्तपम् ॥ ९ ॥
स्थितया पार्श्वतश्चापि वालव्यजनहस्तया। उपेतं सीतया भूयश्चित्रया शशिनं यथा ॥ १० ॥

मालालंकृतं वा तं सूतो ददर्श। उत्कर्षकाष्ठाभूमिभूतं रामं निकर्षसीमाभूमिभूतो ददर्श, कोऽयं भाग्यातिशय इति भावः। पर्यङ्के तादृशैश्वर्य्यसामग्र्यनुरूपापूर्वसंस्थानप्रतिमाविशेषविशिष्टपर्य्यङ्के। अत एव ह्युत्तरत्र "पर्यङ्कमग्र्यास्तरणं नानारत्नविभूषितम्। तमपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि॥" इति सुयज्ञे तत् स्थापयिष्यति। सौवर्णे उपर्य्युपविष्टसदृशे। काञ्चनागिरिः कालमेघमिव रामं भासयतीत्यर्थः। सोत्तरच्छदे पुष्पहासमुकुमाररामदेहानुगुणमृदुतरास्तरणयुक्ते, पर्यङ्कविद्योक्तरीत्या मुक्तानुभाव्यदिव्यवेषमहो सूतोऽन्वभूदिति सौशील्यातिशयोक्तिः॥ ८॥ 'स्रक्चन्दनवनिताः' इत्युक्तभोग्यवस्तुष्वादौ दिव्यमाल्ययोगमुक्त्वा दिव्यचन्दनयोगं दर्शयति–वराहरुधिराभेणेति। वराहरुधिरमतिरक्तवर्णमिति प्रसिद्धम्। तत्सदृशेन कुङ्कुममिश्रतयेतिभावः। सीताकरकमलानुलिप्ततया तत्कान्तिमिश्रत्वमुच्यते। शुचिना सीताकरस्पर्शपूतेन। तत्करस्पर्शकृतशैत्यविशेषं समुच्चिनोति चशब्दः। सुगन्धिना 'सर्वगन्धः' इत्यस्य श्रियोप्यविशेषात्तत्करस्पर्शजनितानिरवधिकगन्धेन। परार्द्ध्येन कान्तानुलिप्ततया श्रेष्ठेन चन्दनेन। अनुलिप्तं पश्चाद् लिप्तम्। अनेन सीताङ्गरागकरणानन्तरत्वं गम्यते। परन्तपम् एतादृशसौन्दर्यानुभवविरोधिनिवर्त्तकम् ॥ ९ ॥ अथाप्राकृतवनितायोगं दर्शयति–स्थितयेति। चापीति निपातः पूर्वोक्तसमुच्चये। पार्श्वतः स्थितया चन्दनानुलिप्तगात्रं कान्तं कृत्वा वालव्यजनं हस्ते कृत्वा पार्श्वे स्थितया सीतया भूयः उपेतं

वराहेति। परार्ध्येन श्रेष्ठेन। भूयइत्यस्य विराजमानमिति शेषः। ददर्शेति पूर्वेण सम्बन्धः। स्थितयेत्यत्र भूयःशब्दप्रयोक्तुरयमभिप्रायः–यः केवल एव सकललोकहृदयानि हरति सः सीतया सहितः किंपुनरिति ॥ ९ ॥ १० ॥

विनयेन पार्श्वतश्चामरमुपवीज्य पुनस्तात्कालिकसुषमाविशेषबलात्कारेण गाढमाश्लिष्टम् । भूय इत्यत्र विराजमानमिति शेष इत्यप्याहुः। तदानीन्तनातिशयं दृष्टान्तमुखेन स्पष्टीकरोति चित्रयेति । चैत्रपौर्णमास्यां चित्राख्यतारकयोपेतम् उदितं शशिनमिव स्थितम् । चित्रयेत्यनेन तत्कृतातिशय उक्तः। उपेतमित्यनेन रक्तवर्णत्वम् शशिनमित्यनेन सीतालिङ्गनोन्मृष्टचन्दनवक्षस्कत्वमुक्तम् । एवम्भूतं ददर्शेति दृष्टिसाफल्यमुक्तम् ॥ १० ॥ शिरसो वाचश्च

तं तपन्तमिवादित्यमुपपन्नं स्वतेजसा । ववन्दे वरदं वन्दी विनयज्ञो विनीतवत् ॥११॥ प्राञ्जलिस्तु सुखं पृष्ट्वा विहारशयनासने । राजपुत्रमुवाचेदं सुमन्त्रो राजसत्कृतः ॥ १२ ॥ कौसल्या सुप्रजा राम पिता त्वां द्रष्टुमिच्छति । महिष्या सह कैकेय्या गम्यतां तत्र मा चिरम् ॥१३॥ एवमुक्तस्तु संहृष्टो नरसिंहो महाद्युतिः । ततः सम्मानयामास सीतामिदमुवाच ह ॥१४॥ देवि देवश्च देवी च समागम्य मदन्तरे । मन्त्रयेते ध्रुवं किञ्चिदभिषेचनसंहितम् ॥ १५ ॥

साफल्यमाह—तमिति । ववन्द इति शिरसः साफल्यमुक्तम् । वन्दीति वाक्साफल्यम् । वरदं स्वानुभवरूपवरप्रदम्, विनीतवत् विनीतो यथा साष्टाङ्गं वन्दते तथेत्यर्थः ॥ ११ ॥ तनि०—आदित्यमित्येकत्वमविवक्षितम् । दिवि सूर्यसहस्रेति वाक्यान्तरानुरोधात् । यद्वा आदित्यमिवेत्युक्ते विवक्षितसिद्धावपि तपन्तमादित्यमिवेत्युक्त्या युगपदुदितरविसहस्रसमुदिततेजःपुञ्जमिव तपन्तमिति लभ्यते । तेनाभूतोपमा व्यज्यते । स्वतेजसेति स्वाभाविकासाधारणतेजसा न त्वन्यकृतेन अन्यसाधारणेन चेत्यर्थः । तपन्तमादित्यमिव तेजसोपपन्नमितिसम्बन्धः । इन्दीवरश्याममिति स्वभावतः श्मामवर्णस्यादित्यवर्णत्वोक्त्या प्रदीपे वर्त्यन्तरस्थितनीलव्यक्तिवत् परितः प्रसृतशुक्लभास्वरतेजःपुञ्जवच्च विग्रहकान्त्योर्व्यवस्थितिर्द्योत्यते । तं वैश्रवणेत्यारभ्य स्वतेजसेत्यन्तेन ध्येयशुभाश्रयाकारविशेषो व्यज्यते ॥ ११ ॥ प्राञ्जलिरिति । विहारशयनासन इति द्वन्द्वैकवद्भावः । विहारः गतिः ॥ १२ ॥ कौसल्येति । सुप्रजाः, त्वयेतिशेषः । यद्वा कौसल्यायाः सुप्रजः सुपुत्र! असिच्प्रत्ययान्तः ॥ १३ ॥ एवमिति । सम्मानयामास, सूतमितिशेषः ॥ १४॥ देवीति । मदन्तरे मदर्थम् । "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये" इत्यमरः । अभिषेचनतमिति । विनीतवत् विनीतः सन् ॥ ११ ॥ प्राञ्जलिरिति । विहारशयनासन इत्येकवद्भावः । राज्ञ एकान्तविहारशयनासनेषु राजसत्कृतः सुमन्त्रः राज्ञ एकान्तविहारादिष्वपि समीपवर्तीत्यर्थः ॥ १२ ॥ कौसल्येति । कौसल्या सुप्रजाः सुपुत्रेण त्वयेति शेषः ॥ १३ ॥ १४ ॥ देवीति । हे देवि ! देवश्च देवी च मातापितरौ । मदन्तरे मदर्थे । अभिषेचनसंहितम् अभिषेकोपयुक्तम् । किञ्चित् किञ्चिद्विचारोपेतम् । ध्रुवं मन्त्रयेते विचारं कुर्वाते ॥ १५ ॥

संहितम् अभिषेचनसम्बन्धि मदर्थं किञ्चिन्मन्त्रयेते विचारयतः ॥१६॥ महिष्या सहेतुकमुक्त्योन्नेयमर्थं दर्शयति—लक्षयित्वेति । सुदक्षिणा सुकुशला अत एव राज्ञोऽभिप्रायं लक्षयित्वा वृद्धत्वात् भरतागमनपर्यन्तं न विलम्बः कार्य इति राजाशयं ज्ञात्वा मत्प्रियकामा सती राजानं प्रति मदर्थं मदभिषेकं सञ्चोदयति । एतदानुकूल्यं त्वत्सौभाग्यफलमित्याह मदिरेक्षण इति ॥ १६ ॥ सन्दिग्धोक्तिजनितां सीताशङ्कां वारयति—सेति । प्रहृष्टा, मयीतिशेषः । हितकामा, लोकस्येतिशेषः । महाराजं भर्तारम् अनुवर्तिनी मे अर्थकामा, भवतीति शेषः ॥ १७ ॥ १८॥ यादृशीति । तत्र अन्तःपुरे । यादृशी परिषत् परिसरवर्ती जनः, तादृशस्तत्तुल्यो दूतः ॥ १९ ॥ हन्तेति । हन्तेति हर्षे । परिवारेण परिचारिकासङ्घेन । रमस्व वृत्तकीर्त्तनेन रता भव ॥ २० ॥ अथ सीता रामस्य सौन्दर्यालंकृतिविशेषानालोक्य किंवा भविष्यतीति कलुषितहृदया तस्मै मङ्गलमाशासानानुव्रजति—पतिसम्मानितेति । पतिसम्मानिता

लक्षयित्वा ह्यभिप्रायं प्रियकामा सुदक्षिणा । सञ्चोदयति राजानं मदर्थं मदिरेक्षणे ॥ १६ ॥ सा प्रहृष्टा महाराजं हितकामानुवर्त्तिनी । जननी चार्थकामा मे केकयाधिपतेः सुता ॥१७॥ दिष्ट्या खलु महाराजो महिष्या प्रियया सह । सुमन्त्रं प्राहिणोद् दूतमर्थकामकरं मम ॥१८॥ यादृशी परिषत्तत्र तादृशो दूत आगतः । ध्रुवमद्यैव मां राजा यौवराज्येऽभिषेक्ष्यति ॥ २९ ॥ हन्त शीघ्रमितो गत्वा द्रक्ष्यामि च महीपतिम् । सह त्वं परिवारेण सुखमास्व रमस्व च ॥ २० ॥ पतिसम्मानिता सीता भर्त्तारमसितेक्षणा । आद्वारमनुवव्राज मङ्गलान्यभिदध्युषी ॥ २१ ॥

अत्र महिष्या सहेतुक्त्या उन्नेयार्थमुन्नयति—लक्षयित्वेत्यादिश्लोकद्वयमेकं वाक्यम् । केकयाधिपतेः सुता स्वस्य हिताय राजसौमुख्यादिप्रयोजनाय । कामम् अत्यन्तं राजानमनुवर्तत इति हितकामानुवर्तिनी जननी मे अर्थकामा मदर्थवृद्ध्यपेक्षिणी सा कैकेयी वृद्धेन मया अविलम्बेन रामाभिषेकः कार्य इति राज्ञोऽभिप्रायम् । लक्षयित्वा आलोच्य सुदक्षिणा समर्था अत एव राज्ञः प्रियकामा हृष्टा सती मदर्थं मदभिषेकं प्रति रञ्जयतीति राजा तं महाराजं चोदयतीति मन्यइत्यन्वयः ॥ १६ ॥ १७ ॥ कुत एवमित्यत आह—दिष्ट्येति । मम अर्थकामं करोतीति तथा सुमन्त्रं प्राहिणोत् ॥ १८ ॥ यादृशीति । तत्र अन्तःपुरे । यादृशी मदर्थैकप्रयोजना परिषत्, तादृशः मदर्थैकप्रयोजनः ॥ १९ ॥ हन्तेति । हन्तेति हर्षे । परिवारेण सखीसङ्घेन सह सुखम् अन्वतिष्ठ रमस्व ॥ २० ॥ पतीति ।

सत्य०—प्रयोजनकामेति प्रयोक्तव्ये यदर्थकामेति पुनः पुनराह, तेन मन्निवृत्तिकामेत्यर्थो रामस्य संमतः । साप्रहृष्टेत्यत्र अप्रहृष्टेति पदमङ्गश्च सम्मत इति ज्ञायते ॥ १७ ॥

पत्या स्वकण्ठादुन्मुच्य दत्तमुक्तामालिकेत्यर्थः । पादपङ्कजस्पर्शपूर्वकं सान्त्वितेति भट्टारकः । तदर्हत्वज्ञापनाय तद्वैलक्षण्यं दर्शयति सीतेति । सीता लाङ्गलपद्धतिः, तज्जत्वात्सीता । अयोनिजाभावेन स्वस्माद्विलक्षणायां तस्यां तादृशी प्रीतिरुचितैवेति भावः । असितेक्षणा रामेण मालायां दत्ताया मियमपि लोचनाभ्यां कुवलयमालां दत्तवती । भर्त्तारमाद्वारमनुवव्राज आत्मानमनवरतं हृदये बिभ्रतो रामस्य विरहासहतया स्वगमनयोग्यदेशपर्य्यन्त

राज्यं द्विजातिभिर्जुष्टं राजसूयाभिषेचनम् । कर्तुमर्हति ते राजा वासवस्येव लोककृत् ॥ २२ ॥
दीक्षितं व्रतसम्पन्नं वराजिनधरं शुचिम् । कुरङ्गशृङ्गपाणिं च पश्यन्ती त्वां भजाम्यहम् ॥ २३ ॥
पूर्वां दिशं वज्रधरो दक्षिणां पातु ते यमः । वरुणः पश्चिमामाशां धनेशस्तूत्तरां दिशम् ॥ २४ ॥

मनुजगाम । मङ्गलान्यभिदध्युषी अभिध्यायन्ती किमस्य सौन्दर्य्यस्य हानिर्भविष्यतीति कलुषितहृदया मङ्गलाशासनपूर्वकमनुवव्राज ॥ २१ ॥ मङ्गला भिध्यानमेव दर्शयति—राज्यमिति । द्विजातिभिः ब्राह्मणैः जुष्टं सेवितं राजसूयाभिषेचनं राजसूययागे योऽभिषेकः 'अथाभिषिच्यते' इत्युच्यमानः तदर्हम् अनेन महाराज्यवत्त्वं गम्यते । कर्त्तुं दातुम् । लोककृत् ब्रह्मा ॥२२॥ दीक्षितमिति । दीक्षितं सकृष्णाजिनम् । नवनीताभ्यक्तं यजमानवेषं द्रष्टुमिच्छामीत्याह व्रतसम्पन्नम् । ऋषिणोपवस्तव्यमित्युक्ते मम सौकुमार्यानुगुणमेवमुक्तमिति मत्वा चतुर्गुणमुपवासं करोति श्रद्धया । तदाह सम्पन्नमिति । वराजिनधरं वस्त्र धारणादप्यजिनधारणस्योत्कर्ष उच्यते । शुचिं कामपि स्त्रियं मास्पृश धर्म्मपत्नीत्वेन सीतास्पर्शे न दोष इति मुनिनोक्तेपि शङ्कया सीतावस्त्रदशास्पर्शेपि स्नानं करोति । कुरङ्गशृङ्गपाणिं च एकवस्त्रधरो धन्वीत्येतदपेक्षया कण्डूयनार्थं कृष्णविषाणकृतशोभातिशय उच्यते । पश्यन्ती त्वां भजाम्यहं भाविफला पेक्षायां कृतायामान्तरालिकफलमर्थसिद्धमेव । अतोऽभिषेकान्तरायविरहो न प्रार्थितः । यथा सावित्री भर्त्तारं दर्शयित्वानेनाहमनेकपुत्रा स्यामित्यर्थित वती । तेन सिद्धं भर्त्तुः पूर्णायुःप्रार्थनम् । तद्वत् पश्यन्तीति हेतौ शतृप्रत्ययः । दर्शनार्थमित्यर्थः । दर्शनार्थं हि भगवन्तं भजन्ते अत इयमपि तथैवाह ॥ २३ ॥ पूर्वामिति । उत्तरां दिशमित्यनन्तरं इति मङ्गलान्यभिदध्युषीति योज्यम् । भर्तृविषयत्वेन न वाचोक्तवतीति भावः ॥ २४ ॥

अभिदध्युषी अभिध्यायन्ती ॥ २१ ॥ राज्यमिति । इदानीं राज्यं राज्यसिद्धिं प्रति द्विजादिभिर्जुष्टं प्रयुक्तम् आभिषेचनं यौवराज्याभिषेचनं कर्तुम् अर्हति कालान्तरे राजसूयार्हमहाराजाभिषेचनमपि करोतु, लोककृत् ब्रह्मा । ततो राजसूययागे दीक्षितत्वादिधर्मकं त्वां भजामि भजिष्ये ॥ २२-२४ ॥

अथेति । कृतकौतुकमङ्गलः अनुष्ठिताभिषेकार्थमङ्गलः॥२५॥ पर्वतादिति । द्वारि प्रथमद्वारि । प्रह्वाञ्जलिपुटम् अञ्जलिपुटोऽस्यास्तीत्यञ्जलिपुटः। मत्वर्थीयोच्प्रत्ययः। प्रह्वश्चासावञ्जलिपुटश्चेति कर्मधारयः। तम्॥२६॥ अथेत्यादिश्लोकद्वयम्। अर्थिनः रामदर्शनार्थिनः अभिषेकार्थिनो वा। वैयाघ्रं व्याघ्रचर्मपरि

अथ सीतामनुज्ञाप्य कृतकौतुकमङ्गलः । निश्चक्राम सुमन्त्रेण सह रामो निवेशनात् ॥ २५ ॥ पर्वतादिव निष्क्रम्य सिंहो गिरिगुहाशयः । लक्ष्मणं द्वारि सोपश्यत् प्रह्वाञ्जलिपुटं स्थितम् ॥ २६ ॥ अथ मध्यमकक्ष्यायां समागम्य सुहृज्जनैः । स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य च ॥ २७ ॥ ततः पावकसङ्काशमारुरोह रथोत्तमम् । वैयाघ्रं पुरुषव्याघ्रो राजतं राजनन्दनः ॥ २८ ॥ मेघनादमसम्बाधं मणिहेमविभूषितम् । मुष्णन्तमिव चक्षूंषि प्रभया सूर्यवर्चसम् ॥ २९ ॥ करेणुशिशुकल्पैश्च युक्तं परमवाजिभिः । हरियुक्तं सहस्राक्षो रथमिन्द्र इवाशुगम् । प्रययौ तूर्णमास्थाय राघवो ज्वलितः श्रिया ॥ ३० ॥ स पर्जन्य इवाकाशे स्वनवानभिनादयन् । निकेतान्निर्ययौ श्रीमान् महेन्द्रादिव चन्द्रमाः ॥ ३१ ॥ छत्रचामरपाणिस्तु लक्ष्मणो राघवानुजः । जुगोप भ्रातरं भ्राता रथमास्थाय पृष्ठतः ॥ ३२ ॥ ततो हलहलाशब्दस्तुमुलः समजायत । तस्य निष्क्रममाणस्य जनौघस्य समन्ततः ॥ ३३ ॥

वृतं "द्वैपवैयाघ्रादञ्" इत्यञ् । राजतं रजतविकारम् । राजन्तमिति च पाठः ॥२७॥२८॥ मेघनादमित्यादि । मेघस्येव नादो यस्य स मेघनादस्तम् । असम्बाधं सम्बाधरहितम् । उचितविस्तारमित्यर्थः ॥ २९ ॥ करेणुशिशुकल्पैरिति । करेणुशिशुकल्पैः कलभसदृशैः ॥ ३० ॥ स इति । आकाशे स्वनवान् नादवान् । पर्जन्य इव मेघ इव । "पर्जन्यौ रसदब्देन्द्रौ" इत्यमरः । अभिनादयन् रथेन दिश इति शेषः । महेन्द्रशब्दः उदयाद्रिपरः ॥३१॥ छत्रचामरपाणिरिति । एकहस्तेन छत्रम् अपरहस्तेन चामरं च धारयन्नित्यर्थः । जुगोप आतपादिभ्यः इति भावः ॥३२॥ तत इति । हलहलाशब्दः कलकला

अथेति । कृतकौतुकमङ्गलः अनुष्ठिताभिषेकार्थमङ्गलः ॥२५॥२६॥ अर्थिनः अभिषेकार्थिनः ॥२७॥ तत इति । वैयाघ्रं व्याघ्रचर्मयुक्तम् ॥ २८ ॥ मेघनादमिति । असम्बाधं विपुलम् ॥ २९ ॥ करेण्विति । करेणुशिशुकल्पैः कलभनिभैः ॥ ३० ॥ स पर्जन्य इति । आकाशे स्वनवान् नादवान् पर्जन्य इव नादयन्, रथस्वनेन दिशो नादयन्नित्यर्थः ॥ ३१ ॥ ३२ ॥ तत इति । हलहलेत्यनुकरणम् । तस्येति सप्तम्यर्थे षष्ठी । तस्मिन्निष्क्रमणकाले ॥ ३३ ॥ ३४ ॥

शब्दः । तस्य निष्क्रममाणस्य तस्मिन्निष्क्रममाणे सति जनौघस्य [illegible] इत्यन्वयः ॥ ३३ ॥ तत इति । हयनागशब्दौ तदारूढपरौ ॥ ३४ ॥ अग्रत इति । रूषिताः लिप्ताः । आशंसवः रामश्रेय आशंसमानाः ॥ ३५ ॥ तत इति । ततः तत्र वीथ्याम् । तदा निर्गमनकाले ॥ ३६ ॥ हर्म्यवाता

ततो हयवरा मुख्या नागाश्च गिरिसन्निभाः । अनुजग्मुस्तदा रामं शतशोऽथ सहस्रशः ॥ ३४ ॥ अग्रतश्चास्य सन्नद्धाश्चन्दनागरुरूषिताः । खड्गचापधराः शूरा जग्मुराशंसवो जनाः ॥ ३५ ॥ ततो वादित्रशब्दास्तु स्तुतिशब्दास्तु वन्दिनाम् । सिंहनादाश्च शूराणां तथा शुश्रुविरे पथि ॥ ३६ ॥ हर्म्यवातायनस्थाभिर्भूषिताभिस्समन्ततः । कीर्य्यमाणः सुपुष्पौघैर्ययौ स्त्रीभिररिन्दमः ॥ ३७ ॥ रामं सर्वानवद्याङ्ग्यो रामपिप्रीषया ततः । वचोभिरग्र्यैर्हर्म्यस्थाः क्षितिस्थाश्च ववन्दिरे ॥ ३८ ॥ नूनं नन्दति ते माता कौसल्या मातृनन्दन । पश्यन्ती सिद्धयात्रं त्वां पित्र्यं राज्यमवस्थितम् ॥ ३९ ॥ सर्वसीमन्तिनीभ्यश्च सीतां सीमन्तिनींवराम् । अमन्यन्त हि ता नार्यो रामस्य हृदयप्रियाम् ॥ ४० ॥ तया सुचरितं देव्या पुरा नूनं महत्तपः । रोहिणीव शशाङ्केन रामसंयोगमाप या ॥ ४१ ॥ इति प्रासादशृङ्गेषु प्रमदाभिर्नरोत्तमः । शुश्राव राजमार्गस्थः प्रिया वाच उदाहृताः ॥ ४२ ॥ स राघवस्तत्र कथाप्रपञ्चाञ्शुश्राव लोकस्य समागतस्य । आत्माधिकारा विविधाश्च वाचः प्रहृष्टरूपस्य पुरो जनस्य ॥ ४३ ॥

यनस्थाभिरिति । हर्म्यवातायनस्थाभिः प्रासादगवाक्षस्थाभिः ॥ ३७ ॥ राममिति । रामपिप्रीषया रामप्रीणनेच्छया । ववन्दिरे तुष्टुवुः । "वदि अभिवादनस्तुत्योः" इति धातुः ॥ ३८ ॥ स्तुतिप्रकारमेवाह–नूनमित्यादि । नन्दतीत्यत्रेतिकरणं द्रष्टव्यम् । तस्य ववन्दिर इति पूर्वेण सम्बन्धः । सिद्धयात्रं सफलगमनं अतएव पित्र्यं राज्यम् । अवस्थितं अधिष्ठितम् ॥ ३९ ॥ उत्तरश्लोकार्थहेतुत्वेनाह–सर्वेति । हि यस्मात्कारणात् । एवं तस्मात् तया सुचरितमित्युक्तरीत्या प्रमदाभिरुदीरिता इति योजना ॥४०–४२॥ स इति । कथाप्रपञ्चान् लौकिककथाविस्तारान् । आत्माधिकाराः आत्मान

अग्रत इति । आशंसवः भद्रमिति शेषः ॥३५॥३६॥ हर्म्येति । वातायनं गवाक्षः ॥३७॥ राममिति । रामपिप्रीषया रामप्रीणनेच्छया । ववन्दिरे अस्तुवन् ॥३८॥ स्तुतिप्रकारमेवाह–नूनमिति । नन्दतीत्यत्रेतिकरणं द्रष्टव्यम् । उपस्थितं प्राप्तवन्तम् । सिद्धयात्रं सफलगमनम् ॥३९ ॥ सर्वेति । हि यस्मात् ता नार्यः सीतां सर्वसीमन्तिनीभ्यो वराममन्यन्त, तस्मात्प्रमदाभिरुदाहृता तया सुचरितमित्यादिवाचः शुश्रावेति सम्बन्धः ॥४०–४२॥ स इति । आत्माधिकाराः आत्मानमधिकृत्य प्रवृत्ताः ॥ ४३ ॥

मधिकृत्य प्रवृत्ताः । पुरः पुरस्य सम्बन्धिनो जनस्य ॥ ४३ ॥ एष इति । श्रियं गमिष्यन् गच्छति श्रियं प्राप्तुं गच्छति ॥ ४४ ॥ लाभ इति । अस्य जनस्यायमेव लाभः यदेष सर्वं राष्ट्रं प्रपत्स्यते अस्मिन् मनुजाधिपे सति कश्चित् जातु कदाचित् । किञ्चनाप्यप्रियं प्रियाभावं दुःखमनिष्टं च न पश्येत् ॥ ४५ ॥ सघोषवद्भिरिति । स्वस्तिकसूतमागधैः स्वस्तिकाः जयजयेतिमङ्गलं प्रयुञ्जानाः, वन्दिनः इत्यर्थः । सूताः ब्राह्मण्यां क्षत्रियाज्जाताः सारथ्ये

एष श्रियं गच्छति राघवोऽद्य राजप्रसादाद्विपुलां गमिष्यन् । एते वयं सर्वसमृद्धकामा एषामयं नो भविता प्रशास्ता ॥ ४४ ॥ लाभो जनस्यास्य यदेष सर्वं प्रपत्स्यते राष्ट्रमिदं चिराय । न ह्यप्रियं किञ्चन जातु कश्चित् पश्येन्न दुःखं मनुजाधिपेऽस्मिन् ॥४५॥ स घोषवद्भिश्च हयैर्मतङ्गजैः पुरस्सरैः स्वस्तिकसूतमागधैः । महीयमानः प्रवरैश्च वादकैरभिष्टुतो वैश्रवणो यथा ययौ ॥ ४६ ॥ करेणुमातङ्गरथाश्वसङ्कुलं महाजनौघप्रतिपूर्णचत्वरम् । प्रभूतरत्नं बहुपण्यसञ्चयं ददर्श रामो रुचिरं महापथम् ॥ ४६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे षोडशः सर्गः ॥ १६ ॥

स्तुतिकर्मणि च नियुक्ताः । " ब्राह्मण्यां क्षत्रियात्सूतः " इत्यमरः । मागधाः क्षत्रियायां वैश्याज्जाताः । राज्ञां प्रबोधनकर्मणि नियुक्ताः " मागधः क्षत्रियाविशोः " इत्यमरः ॥ ४६ ॥ करेण्विति । रामो महापथं ददर्शेत्यन्वयः ॥ ४७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

एष इति । राघवः विपुलां श्रियं गमिष्यन् गच्छतीति योजना । सर्वसमृद्धकामः समृद्धसर्वकामः ॥४३॥ लाभ इति । एष सर्वं राष्ट्रं प्रपत्स्यत इति यत् अयमेव लाभः, अस्मिन् रामे मनुजाधिपे । कश्चन यः कश्चिदपि, किञ्चन स्वल्पमपि अप्रियं प्रियाभावम्, दुःखमनिष्टप्राप्तिं च जातु कदाचिदपि । न पश्येत् न प्राप्नुयात् ॥४४॥४५॥ स घोषवद्भिरिति । स्वस्तिकाः जयजयेतिवादिनो वन्दिन इत्यर्थः । सूताः ब्राह्मण्यां क्षत्रियाज्जाताः, क्षत्रियायां वैश्याज्जाताः मागधाः । एते राज्ञः प्रतिबोधन कर्मणि युक्ताः ॥ ४६ ॥ ४७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां षोडशः सर्गः ॥ १६ ॥

अथ रामस्य राजसमीपगमनं सप्तदशे—स राम इत्यादि । पताकाध्वजसम्पन्नं पताकाः अनामाङ्किताः, तदङ्कितानि ध्वजानि ॥ १ ॥ सगृहैरिति । मध्येन वीथीमध्येन । प्रकृत्यादित्वात्तृतीया ॥ २ ॥ कीदृशं राजमार्गं ययावित्याकांक्षायामाह—चन्दनानामित्यादिना । क्षौमकौशाम्बरस्य क्षौमं

स रामो रथमास्थाय सम्प्रहृष्टसुहृज्जनः । पताकाध्वजसम्पन्नं महार्हागरुधूपितम् । अपश्यन्नगरं श्रीमान्नानाजनसमाकुलम् ॥१॥ स गृहैरभ्रसङ्काशैः पाण्डरैरुपशोभितम् । राजमार्गं ययौ रामो मध्येनागरुधूपितम् ॥२॥ चन्दनानां च मुख्यानामगरूणां च सञ्चयैः । उत्तमानां च गन्धानां क्षौमकौशाम्बरस्य च ॥ ३ ॥ अविद्धाभिश्च मुक्ताभिरुत्तमैः स्फाटिकैरपि । शोभमानमसम्बाधैस्तं राजपथमुत्तमम् ॥ ४ ॥ संवृतं विविधैः पण्यैर्भक्ष्यैरुच्चावचैरपि । ददर्श तं राजपथं दिवि देवपथं यथा ॥५॥ दध्यक्षतहविर्लाजैर्धूपैरगरुचन्दनैः । नानामाल्योपगन्धैश्च सदाभ्यर्चितचत्वरम् ॥ ६ ॥

दुकूलम् । " क्षौमं दुकूलम् " इत्यमरः । कौशाम्बरं कौशेयम् । अविद्धाभिः अकृतरन्ध्राभिः, नूतनाभिरिति यावत् । स्फाटिकैः स्फटिकैः । स्वार्थे अण्प्रत्ययः । तं राजपथं सकलभाग्ययुक्तम् राजमार्गमित्यर्थः । यद्वा प्रथमस्य राजपथपदस्य ददर्शेत्यनेन सम्बन्धः । द्वितीयस्य वक्ष्यमाणेन ययावित्यनेन सम्बन्धः ॥ ३–६ ॥ दध्यक्षतहविरित । अभ्यर्चितचत्वरं प्रतिपूजिताङ्गणम् " अङ्गणं चत्वराजिरे " इत्यमरः ।

स राम इति । पताकाध्वजसम्पन्नम् पताकाभिः नामाङ्किताभिः, ध्वजैः गरुडादिचिह्नितैः ॥१॥ स गृहैरिति । मध्येन उभयश्रेणीमध्यदेशेन ॥२॥ कीदृशं राजमार्गमत आह—चन्दनानामिति । क्षौमकौशाम्बरस्य च क्षौमं दुकूलम्, कौशाम्बरं कौशेयम् ॥३॥ अविद्धाभिः प्रथमोक्तराजपथमित्यस्य ददर्शेत्यनेन सम्बन्धः । द्वितीयोक्तराजपथमित्यस्य उत्तरोक्तेन ययावित्यनेन सम्बन्धः । शोभमानमिति । असम्बाधैः विविच्य स्थापितैः ॥ ४ ॥ पण्यैः क्रयद्रव्यैः ॥ ५ ॥ दधीति । अर्चितचत्वरं

सत्य०—सम्प्रहृष्टसुहृज्जनः सम्प्रहृष्टाः सम्यक्प्रहर्षिताः । अन्तर्णीतण्यर्थोऽयं प्रहृष्टशब्दः । सुहृदः शोभनमनस्काः जनाः येनेति वा । रामस्स इत्यनुक्त्वा उक्त्वा च सराम इति सदा सदार एव रघूदार इति भावमाविश्चकार कविरिति ज्ञेयम् । पताकाध्वजसम्पन्नम्—पताका सौभाग्यं तस्याः ध्वजाः तत्सूचकाः केतवः । " पताका वैजयन्त्यां स्यात्सौभाग्ये नाटकाङ्कयोः " इति मेदनी । " ध्वजः पताका केतुश्च " इति धनञ्जयः । पताकाः अनामाङ्किताः, तदङ्कितानि ध्वजानि तैर्गरुडादिचिह्नैः इत्युभये व्याकरणे निर्मूलभावादालोचनीये । श्रीमान् रामः । नानाजनसमाकुलम्—नानाविधाः अजनाः जनं जन्म न विद्यते जनं येषां ते अजनाः, तदुपलक्षितजरामरणादिरहिताः मुक्तास्तैस्समाकुलं नगरं यथेत्युत्तरादाकृष्यते । प्रादुर्भावार्थाज्जनेः " हलश्च " इति घञि " जनिवध्योश्च " इति वृद्धिनिषेधे जनेतिरूपम् । ' जनं जननम् अर्दयतीति जनार्दनः ' इति गीताभाष्योक्तेः । तथाच मुक्तस्थानं स्वधामेव रामो नगरमिदं ददर्शेति दृष्टान्तदार्ष्टान्तिकतया वा योजना द्रष्टव्या । समन्वितमिति पाठे तु स्पष्टोऽर्थः । नानाजनाश्च ते समनवो मन्त्रजपपराः तैः इतं प्राप्तम । विशेषणविशेष्यत्वस्य कामचारित्वान्न पौर्वापर्यप्रत्युक्तानुपपत्तिः ॥ १ ॥

यथार्हमिति वीक्षणभ्रूक्षेपवचनाञ्जलिप्रणामादिभिरित्यर्थः ॥ ६ ॥ ७ ॥ पितामहैरिति । अद्याभिषिक्तस्त्वं पितामहाद्यैराचरितं तं प्रसिद्धं मार्गं मर्यादामनुपालय ॥ ८ ॥ यथेति । रामे राजनि सति । सर्वे वयं ततः पूर्वस्मात् सुखतरं यथा भवति तथा वत्स्यामः ॥ ९ ॥ अलमिति । भुक्तेन

आशीर्वादान् बहून् शृण्वन् सुहृद्भिः समुदीरितान् । यथार्हं चापि सम्पूज्य सर्वानेव नरान् ययौ ॥ ७ ॥
पितामहैराचरितं तथैव प्रपितामहैः । अद्योपादाय तं मार्गमभिषिक्तोऽनुपालय ॥ ८ ॥
यथा स्म लालिताः पित्रा यथा पूर्वैः पितामहैः । ततः सुखतरं रामे वत्स्यामस्सति राजनि ॥ ९ ॥
अलमद्य हि भुक्तेन परमार्थैरलं च नः । यथा पश्याम निर्यान्तं रामं राज्ये प्रतिष्ठितम् ॥ १० ॥
ततो हि नः प्रियतरं नान्यत् किञ्चिद्भविष्यति । यथाभिषेको रामस्य राज्येनामिततेजसः ॥ ११ ॥

भोजनेन । परमार्थैः परमपुरुषार्थसाधनभूतैः, जपहोमध्यानादिभिरित्यर्थः । राज्ये प्रतिष्ठितं अभिषिक्तम्, पुनः स्वगृहाय निर्यान्तम् । यथा यथावत् पश्याम । प्रार्थनायां लोट् ॥ १० ॥ तत इति । राज्येनाभिषेको राज्यायाभिषेकः । स यथा प्रियतरस्तथा ततोऽन्यत्प्रियतरं किञ्चिन्नास्ति ॥ ११ ॥

पूजिताङ्गणम् । यथार्हं वा यथार्हमेव रक्षणोक्तिभ्रूविक्षेपणवचनाञ्जलिभिर्यथोचितमित्यर्थः ॥ ६ ॥ ७ ॥ पितामहैरिति । आचरितम् अनुष्ठितम्, अभिषिक्तोनुपालयेति वृद्धानां वचनम् ॥ ८ ॥ यथेति । रामे राजनि सति ततोपि सुखतरं वत्स्यामः ॥ ९ ॥ अलमिति । रामं राज्ये प्रतिष्ठितम् अभिषिक्तम् । राजमार्गे निर्यान्तम् अद्य पश्याम यथा साक्षात्कुर्मो यदि एतत्सुखलाभो यदि तदा भुक्तेन ऐहिकविषयेण तज्जन्यसुखेन च तथा परमार्थैः परमैः श्रेष्ठैः अर्थैः स्वर्गादिभिः तज्जन्यसुखैश्च नः अस्माकम् अलं मास्तु ॥ १० ॥ कथमेवमित्यत आह–तत इति । अमिततेजसः रामस्य, राज्येन राज्यप्राप्तिहेतुना । अभिषेको यथा अभिषेक इति यत्

सत्य०–समुदीरितानित्यत्र समुत् इत्यपि पदविभागः । एतेन नित्यमुदो रामस्य सुहृदीरिताशीर्वादश्रवणं तदनुजिघृक्षयेत्युक्तं भवति ॥ ७ ॥ पितृपितृभिः पितामहैः । तत्पितृभिः प्रपितामहैः । पितामहैरितिछेदो वा । पितेति प्रथमा तृतीयार्थे । यः पिता तेनेति शेषो वा । पित्रा दशरथेन । महैरुत्सवैरित्यस्य ययाविति पूर्वेणान्वयः । एतेनोत्तरत्र पित्रेत्यनुवादायोग इति निरस्तम् ॥ ८ ॥ पितामहैः पितामहादिभिः । ‘ फणां च सप्तानाम् ’ इत्यत्रेव बहुवचनमाद्यर्थे, यथा पित्रा लालिताः यथा च पितामहादिभिः तथा त्वया लालितास्सन्तो वत्स्याम इति लालनं त्रितयसाधारणम् । ततः सुखतरमिति विशेषोक्तेः । “ शैला इवोन्नताः सन्तः किन्तु प्रकृतिकोमलाः ” इतिवद्व्यतिरेकालङ्कारः ॥ ९ ॥ भुक्तेन, भावे क्तः । भोजनेन अलम् । परमा अर्था येभ्यस्तैः परमार्थैः इतरविषयैरलम् । “ अलं भूषणपर्याप्तिवारणे च निरर्थके ” इतिविश्वः । भोजनादि निरर्थकमिति भावः । एतेन “नमः स्वस्ति– ” इत्यनेन चतुर्थ्या भाव्यत्वात् कथं तृतीयेति शङ्कानवकाशः । तत्र पर्याप्त्यर्थालंशब्दयोग एव चतुर्थ्याः काशिकादावुक्तेरिति भावः । तत्प्राप्यफलस्य तादृशरामदर्शनेन सिद्धेः । परमार्थैः परमाः प्रमाणानि, वेदान्ता इति यावत् । विचारितैस्तदर्थैरलमितिवार्थः ॥ १० ॥ प्रियतरमित्येतल्लिङ्गव्यत्यासेनाभिषेकपदेनाप्यन्वेति । यथाभिषेकः प्रियतरः तथान्यत्प्रियतरं नास्तीत्यर्थः ।

एता इति । उदासीनः स्तुतिश्रवणेन निर्विकारः । आत्मसम्पूजनीः आत्मसम्पूजाजननीः मनोहर्षजननीर्वा । महापथं राजमार्गम् ॥ १२ ॥ नहीति । कश्चिदपि नरः मनश्चक्षुषी वा तस्मात् अपाक्रष्टुं निवर्तयितुं न शक्नोति किमुत नारीजन इतिभावः । अतिक्रान्ते दूरगतेऽपि किमुत सन्निहित इत्या

एताश्चान्याश्च सुहृदामुदासीनः कथाः शुभाः । आत्मसम्पूजनीः शृण्वन् ययौ रामो महापथम् ॥ १२ ॥
न हि तस्मान्मनः कश्चिच्चक्षुषी वा नरोत्तमात् । नरः शक्नोत्यपाक्रष्टुमतिक्रान्तेऽपि राघवे ॥ १३ ॥
यश्च रामं न पश्येत्तु यं च रामो न पश्यति । निन्दितः स वसेल्लोके स्वात्माप्येनं विगर्हते ॥ १४ ॥

शयः ॥ १३ ॥ यश्चेति । चकारो भिन्नक्रमः । रामं च दर्शनकाल एव परिपूर्णामृतसरसि मज्जयन्तमपि । यस्तु अतिशयितवैलक्षण्यसम्पन्नोपि । न पश्येत् स्तुतिसल्लापसत्काराद्यभावेपि अचेतनाविलक्षणाकारेण चक्षुर्विषयं न करोति । अतएव यं रामोऽपि न पश्यति नरस्याभिमुख्ये हि

ततः अभिषेकजन्यभूमानन्दब्रह्मसाक्षात्कारजन्यसुखात् । प्रियतरं प्रेमातिशयास्पदम् अन्यत् किञ्चित् न भविष्यति ॥ ११ ॥ एता इति । उदासीनः अनुत्सुकः । आत्मसंपूजनीः मनोहर्षजननीः ॥ १२ ॥ न हीति । राघवे अतिक्रान्तेपि दृष्टिपथमतीतेपि सकलजनमनोनयनसंमोहनाकारानुभवजनितेन वासनाबलेन पुरतः परिदृश्यमान इव स्थितात् तस्मान्नरोत्तमात् मनश्चक्षुषी वा अपाक्रष्टुं निवर्तयितुम् कश्चिदपि नरः पुमान्न शक्नोति, नरा अप्येवं नार्यः किमुतेति भावः ॥ १३ ॥ यश्चेति । स्वात्माप्येनं विगर्हते–रामेण सकृदप्यदृष्टं तस्य सान्निध्यासान्निध्ययोः चक्षुर्मनोभ्यामपश्यन्तं च लोका एव न केवलं विगर्हन्ते अपितु स्वात्मापि, स्वय

प्रियतरमिति नपुंसकनिर्देशस्तु अभिषेकेतरसामान्यस्य प्रियतरत्वनिषेधार्थः । राज्येनेति तृतीया हेतौ । राज्ये नामिततेजस इति छेदो वा । नामितानि प्रह्वीकृतानि तेजांसि पराक्रमाः यस्य सः नामिततेजाः । नान्यत्किञ्चिदित्यस्मान्नेत्यनुवर्तते । स न भवतीति न नामिततेजाः अमिततेजास्तस्य । राज्य इति सप्तमी निमित्तार्थे । “ निमित्तात्कर्मयोगे ” इति स्मरणात् । यद्वा आमितं सम्यक्परिमितं तेजो यस्य स तथा स न भवतीति नामिततेजाः, तस्य । नसमासोसाविति नलुट् । “ तेजो धाम्नि पराक्रमे ” इत्यमरः ॥ ११ ॥ उदासीन इत्यनेन साक्षाल्लक्ष्मीस्तुत्यस्येदं कियदिति सूचितं भवति । पूर्वमाशीर्वादानित्युक्त्या इतरेषामाशीर्वादरूपा अपि वाचो भगवति सेवारूपा इति ध्वनयति–आत्मसंपूजनीरित्यनेन । यद्वा नात्मपदेन रामग्रहः किन्तु स्तावकग्रहः । आत्मनः सुहृदः संपूजयन्तीत्यात्मसंपूजिन्यस्ताः । ततश्च भगवत्स्तवनमात्मनां स्वेषां संपूजनरूपमेव भवतीत्युक्तं भवति । यथोक्तं भागवते–“ यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ” ॥ १२ ॥ जनमनोनयनरञ्जने रामे इत्थंभाव आवश्यक इति तदृष्टजननिन्दामुखेन द्रढयति–य इति । यो जनः रामं न पश्येत् नावलोकयेत् । मनोनयनस्य प्रसक्तत्वान्न ध्यायेद्वा । “ पश्यार्थैश्चानालोचने ” इति ज्ञानसामान्येपि दृशेः प्रयोगात् । रामोपि यं जनं न पश्यति एतमुद्धरिष्य इति न ध्यायति, स जनः सर्वलोकेषु निन्दितो भवति । न केवलमेतावत् । अपि तु स्वमनोपि एनं धिगिति विगर्हते । लोकनिन्दालक्षणकिञ्चित्कार्यं विधातुमुपात्तस्य जनस्य पुनः स्वात्मकर्तृकगर्हणरूपवैलक्षिककार्यान्तरं विधातुमुपादानरूपान्वादेशे “ द्वितीयाटौ स्वेनः ” इत्येनादेशः । दृशिरत्र भक्तिपूर्वकदर्शनार्थकः । रामो न पश्यतीत्यत्रापि दृशिः प्रसादपूर्वकदर्शनार्थ इति बोध्यम् । अन्यथा सर्वदा सर्वज्ञस्य

भगवान् कटाक्षयति । सः राममदृष्ट्वा तत्कटाक्षाविषयः निन्दितो वसेत् यावत्कालं निन्दितः स्यात् । लोके निन्दितः स्यात्तं निन्दितुमनर्हः कोपि जनो नास्तीतिभावः । लोके विषयप्रवणः कश्चित्सत्यामपि लोकगर्हायां स्वयं सन्तुष्टो भवति न तथेत्याह स्वात्माप्येनं विगर्हत इति । स्वान्तःकरणमप्येनं विशे

**सर्वेषां हि स धर्मात्मा वर्णानां कुरुते दयाम् । चतुर्णां हि वयस्स्थानां तेन ते तमनुव्रताः ॥ १५ ॥**

षेण गर्हते, रामादर्शनाल्लोकगर्हया चेति भावः ॥ १४ ॥ सर्वेषामिति । सः रामः चतुर्णां वर्णानां सर्वेषामपि जनानाम् । सप्तम्यर्थे षष्ठी । वयः स्थानं मपि दुर्भाग्यं मां धिगिति विगर्हत इत्यर्थः । अथवा यश्च रामं स्वदेशस्थं न पश्येत् यं च स्वदेशस्थम् अत एव रामोपि न पश्यति, सोसावपरोक्षरामब्रह्मा नुभवादृष्टहीन इहामुत्र च लोके सर्वैर्निन्दितो वसेत्, अप्रयासतो भगवदपरोक्षकृतिमात्रेण मुक्तिसम्पादनादृष्टाभावान्नास्य कदापि संसारोत्तार इत्यर्थः । अत एवास्यात्मा अन्तर्यामी भगवानपि एनं विगर्हते, पापिष्ठोऽयं मुक्तिमपि साक्षात्कृत्य न जन्मोद्धृतवानिति वार्थः ॥ १४ ॥ सर्वेषामिति । हि यस्मात् स रामः चतुर्णां वर्णानां सर्वेषां जनानां च । वयःस्थानामिति द्वितीयान्तमेतत् । वयः स्थानं प्रमाणं यस्यास्ताम् वयोऽनुरूपां दयां कुरुते । अथवा वयःस्थानां बाल्यादि

रामस्य यं च रामो न पश्यतीत्युक्तिरयुक्ता स्यात् । कुतो रामदर्शनस्य लोकोत्तरत्वं लोके इत्यतः शृङ्गग्राहिकया दर्शयति–य इति । ई अं न पश्यतीति छेदः । यो रामः । चो हेत्वर्थे । यस्मान्न पश्यति पश्यतीति पश्यो जीवः तद्वदाचरतीति पश्यति, स नेति न पश्यति । तम् अं भगवदात्मकं रामम्, ई लक्ष्मीः, न पश्येत् साकल्येन न जानीयात् । एनम् एतादृशं रामम् यश्चात्मा जनः विगर्हते निन्दति, स सर्वेषु लोकेषु सु सुष्ठु निन्दितः । यमित्यत्र–ई+अम् इति स्थिते यणादेशे यम् इति भवति । " लक्ष्मीरीकार उच्यते " । " अकारो वासुदेवः स्यात् " इत्युभयत्रानेकार्थध्वनिमञ्जरी । " यदा पश्यः पश्यते रुक्मवर्णम् " इत्यादि श्रुतिव्याख्यानावसरे ' पश्यतीति पश्यो जीवः ' इति टीकोक्तेः । " पाघ्रा–" इति शः । यस्माद्दाशरथिर्ज्ञानादिदाननिदानं मानवादीनां तस्मात्तस्मिन्मनोनयनसमासञ्जनं सज्जनानां युक्तमिति वा वक्ति–य इति । चरामम्–चराणां चेतनानां रमातामरसभवभवादीनाम् आ सम्यक् मा सम्पत् प्रतिपत्तिर्वा येन स चरामो रामः तं न पश्येद्यः स किमपि न पश्यति । अतिमूढ इति यावत् । तत्स्वरूपमावर्तितेन तेनैव निरूपयति चराम इति । चरेषु अमः दरिद्रः अज्ञानी च, अत एव सर्वलोकविनिन्दितः । तत्सम्बन्धिनो वा तं स्तुवन्तीत्यत उक्तं स्वात्मेति । स्वकीय आत्मा देही, स्वकीयसर्वोपि जन इति यावत् । अपि स्वत्वे स्तवननिमित्ते सत्यपि । इदमकार्यम् अयमनार्यः स्तेन इति मतिपूर्वकं गर्हयतीति भावः । तुः सर्वत्रार्थे प्रमाणप्रसिद्धिद्योतकः ॥ १४ ॥ श्रीरामदयोदयस्य तत्तद्दानुरूप्यं निरूपयति– सर्वेषु स हीति । सर्वेषु देवदानवादिषु, हि यस्मात् । स रामः । धर्मात्मा धर्मबुद्धिः । धारकत्वाद्दानादिकर्तृत्वाद्वा धर्मात्मा । तेन ते जनाः तमनुव्रताः । " धारकत्वाद्धर्मो भगवान् । पृथिवी धर्ममूर्द्धनि । आततत्वाच्च मातृत्वात् " इत्यादेः । परबुद्धेरप्रत्यक्षत्वात्कथमेतज्ज्ञायत इत्यतः शृङ्गग्राहिकयानुग्राह्यान् ग्राहयति–वर्णानामित्यादिना । चतुर्णां वर्णानां ब्राह्मणादीनाम् । तत्रापि वयस्स्थानाम्, उपरीति शेषः । सप्तम्यर्थे षष्ठी वा । यथासंभवं दयां कुरुते । हीत्येतदर्थस्य सर्वानुभवसिद्धितामाह–वयस्स्थानामिति । दयाविशेषणं वा । वयसा गरुडेन । उपलक्षणया शेषग्रहः । ताभ्यां स्थानं यया सा वयस्स्थाना ताम्, मार्गभूतगरुडशेषाभ्यां प्राप्यमुक्तिस्थानप्रापिका दयेति भावः । यद्वा वयस्स्थोऽतिवृद्धत्वाद्ब्रह्मा, अनो वायुः हिनोति वयस्स्थानाविति हि वयस्स्थाना दया । ' हि गतौ वृद्धौ च ' इति धातुव्याख्यानात् । **सर्वेषां हि** इति पाठे–न केवलं चतुर्णां वर्णानाम्, अपि तु सर्वेषामित्यर्थः । कुरुत इत्यावर्तितं सप्तम्यन्तम् । कुत्सितशब्दकर्तृकम्पादावित्यर्थः । उक्तं च भागवते पञ्चमस्कन्धे–" न जन्म नूनं महतो न सौभगं न वाङ्न बुद्धिर्ना

प्रमाणं यस्यास्तां वयोऽनुरूपां दयाम् । हि यस्मात्कारणात् कुरुते तेन कारणेन ते तमनुव्रता इत्यन्वयः। वयस्थानां वृद्धानामिति वा सर्वविशेषणम् ॥ १५ ॥ चतुष्पथानिति । चतुष्पथान् शृङ्गाटकानि। देवपथान् देवालयान् । चैत्यानि चैत्यवृक्षस्थानानि । आयतनानि सभादीनि च परिहरन् अप्र

चतुष्पथान् देवपथांश्चैत्यान्यायतनानि च । प्रदक्षिणं परिहरन् जगाम नृपतेः सुतः ॥ १६ ॥
स राजकुलमासाद्य मेघसङ्घोपमैः शुभैः । प्रासादशृङ्गैर्विविधैः कैलासशिखरोपमैः ॥ १७ ॥
आवारयद्भिर्गगनं विमानैरिव पाण्डरैः । वर्द्धमानगृहैश्चापि रत्नजालपरिष्कृतैः ॥ १८ ॥

दक्षिणं परिहरन् प्रदक्षिणं यथा भवति तथा जगामेति सम्बन्धः ॥ १६ ॥ स इत्यादि । राजकुलं राजगृहं "कुलं गृहेऽपि" इत्यमरः । वर्द्धमानगृहैः वर्द्ध

वयस्स्थानाम् अज्ञानामपि दयां मुक्तिपर्यन्तामनुग्रहं कुरुत इति वार्थः । तेन कारणेन सर्वे तं हि तमेव अनुव्रताः अनुसृताः ॥ १५ ॥ चतुष्पथानिति । चैत्यानि चैत्यवृक्षस्थानानि । आयतनानि सभादीनि च । प्रदक्षिणं यथा तथा परिहरन् अतिक्रामन् ॥ १६ ॥ स इति । राजकुलं राजगृहम् प्रासादशृङ्गैः प्रासादस्थशिखरैः

कृतिस्तोषहेतुः । तैर्यग्विसृष्टानपि नो वनौकसश्चकार सख्ये बत लक्ष्मणाग्रजः । सुरोसुरो वाथ नरोऽथवानरस्सर्वात्मना यस्सुकृतज्ञमुत्तमम् । भजेत रामं मनुजाकृतिं हरिंय उत्तराननयत्कोसलान् दिवम् ।" इति । केवलं धर्मात्मा चेत् न क्षत्रधर्मा राम इत्यतो नेत्यप्यनेनाह—सर्वेषुसहिधर्मात्मेति । सर्वेषामरीणामिषवः 'शरास्तान् सोढुं शीलमस्यास्तीति सर्वेषुसही, स चासौ धर्मात्माचेत्यर्थः । " सुप्यजातौ—" इति णिनि प्रत्यये साहीति भवितव्यम्, कथं सहीति चेत् ? संज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्यभावः । यद्वा " घञर्थे कविधानम् " इति के सहमस्यास्तीतीनि न वृद्धेः प्रसक्तिरिति बोध्यम् । नन्वेवं तूष्णीमसहिष्णोः शरसहनं न महत्त्वावहमित्यतो वाह—सर्वेषुसहिधर्मात्मेति । सर्वस्य शर्वस्य इषवः क्षेप्तुं यस्मिन् तत्सर्वेषु धनुः तस्य संवारणं निवारणं हापयतीति 'सर्वेषुसाही, ततः कर्मधारयः । हिंसार्थाद्वृत्यर्थाद्वा षर्वेः " धात्वादेष्षस्सः " इति सत्वे बस्य वत्वे सर्व इति भवति । "सर्वो ह्येष रुद्रः । सर्वस्तु शर्वो भगवाञ्शम्भुः कालञ्जरः (नः)शिवः" इति श्रुतिःभानुदीक्षितोदाहृतनामनिधाने । "सः कोपेवारणे" इति विश्वः । धनुर्मनस्को वा ॥ १५॥ देवपथान् देवालयमार्गान् । चैत्यानि यज्ञस्थानानि । अश्वत्थादिमूलबद्धवेदिका वा । आयतनानि देवालयान् । ' चिञ् चयने ' इत्यस्मात् " चित्याग्निचित्ये च " इति निपातनात् क्यचि " ह्रस्वस्य— " इति तुकि पूर्वसूत्रादग्नावित्यनुवर्तनादग्निवाचकचित्यशब्दनिष्पत्तिः । तस्माच्च " तस्येदम् " इत्यणि चैत्यमिति भवति । तेन न पुनरुक्तिः । यद्वा-चैत्यानि वसिष्ठादिगुर्वन्तर्गतभगवद्रूपाणि । यथोक्तं सप्तमाध्यायगीता भाष्योदाहृतस्य " आचार्यचैत्यवपुषा स्वगतिं व्यनंक्षीत् " इत्येकादशस्कन्धश्लोकस्य व्याख्यायां " चैत्यं चित्तस्थम् ' इति प्रमेयदीपिकायाम् । प्रदक्षिणं परिहरन् पूर्वोक्तचतुष्पथादीन् प्रदक्षिणं यथा भवति तथा दक्षिणभागे सन्त्यजन् । नृपतेस्सुत इत्येकं वा पदम् । " षष्ठ्या आक्रोशे " इत्यलुक् । अनेन जगत्पितू रामस्य देशरथसुतत्वायाचुक्रोश कविरिति द्योत्यते ॥ १६ ॥ विविधान् वीन् पक्षिणः दधत इति विविधानि तैः । " विः पक्षिपरमात्मनोः " इतिविश्वः ॥ १७ ॥ वर्धमानगृहैः—दक्षिणद्वाररहितैः । उक्तं चैतन्मत्स्यपुराणे वास्तुप्रस्तावे षडुत्तरद्विशततमाध्याये—" पश्चिमद्वारहीनं तु नन्द्यावर्तं प्रचक्षते । दक्षिणद्वार हीनं तु वर्धमानमुदाहृतम् ॥ " इति । रत्नजालपरिष्कृतैः—रत्नानां जालं समूहस्तेन । यद्वा-रत्नात्मकानि जालानि गवाक्षास्तैः परिष्कृतैः । " जालं गवाक्ष आनाये " इतिविश्वः ॥ १८ ॥

मानलक्षणाधिष्ठानसमेतगृहैः । पृथिव्यां गृहवरम्, पृथिव्यामद्वितीयमित्यर्थः । पितुर्वेश्म पितृवासस्थानम् ॥ १७-१९ ॥ स इति । वाजिभिः रथयुक्तैर्वाजिभिः । पदातिः पादचारी ॥ २० ॥ स इति । शुद्धान्तम् अन्तःपुरम् ॥२१॥ २२॥ इति श्रीगो० श्रीरामा० पीतां० अयो० सप्तदशः सर्गः ॥१७॥



तत्पृथिव्यां गृहवरं महेन्द्रभवनोपमम् । राजपुत्रः पितुर्वेश्म प्रविवेश श्रिया ज्वलन् ॥ १९ ॥ स कक्ष्या धन्विभिर्गुप्तास्तिस्रोऽतिक्रम्य वाजिभिः । पदातिरपरे कक्ष्ये द्वे जगाम नरोत्तमः ॥ २० ॥ स सर्वाः समतिक्रम्य कक्ष्या दशरथात्मजः । सन्निवर्त्त्य जनं सर्वं शुद्धान्तं पुनरभ्यगात् ॥ २१ ॥ ततः प्रविष्टे पितुरन्तिकं तदा जनः स सर्वो मुदितो नृपात्मजे । प्रतीक्षते तस्य पुनर्विनिर्गमं यथोदयं चन्द्रमसः सरित्पतिः ॥ २२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे सप्तदशः सर्गः ॥ १७ ॥

स ददर्शासने रामो निषण्णं पितरं शुभे । कैकेयीसहितं दीनं मुखेन परिशुष्यता ॥ १ ॥ स पितुश्चरणौ पूर्वमभिवाद्य विनीतवत् । ततो ववन्दे चरणौ कैकेय्याः सुसमाहितः ॥ २ ॥ रामेत्युक्त्वा च वचनं बाष्पपर्याकुलेक्षणः । शशाक नृपतिर्दीनो नेक्षितुं नाभिभाषितुम् ॥ ३ ॥

स इति । आसने पर्यङ्के । 'मूर्च्छितो न्यपतत्तस्मिन् पर्यङ्के हेमभूषिते' इत्युत्तरत्र वक्ष्यमाणत्वात् । मुखेनेत्युपलक्षणे तृतीया ॥ १ ॥२॥ रामेति ।

आवारयद्भिः आक्रमद्भिः, वर्द्धमानगृहैः अत्युन्नतनिर्माणायारब्धगृहैः । रत्नजालपरिष्कृतैः नवरत्नसमूहालंकृतैः, एतैः परिवृतं पितुर्वेश्म राजपुत्रः श्रीरामः प्रविवेश ॥ १७-१९ ॥ स इति । वाजिभिः रथयुक्तवाजिभिरित्यर्थः ॥ २०-२२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां सप्तदशः सर्गः ॥ १७ ॥ स इति । आसने पर्यङ्के, मुखेनोपलक्षितम् ॥ १ ॥ स इति । विनीतवत् विनीतः सन् ॥ २ ॥ रामेति । न शशाक।

सत्य०-महेन्द्रसदनस्य उपमा येन तन्महेन्द्रसदनोपमम् । अनेन गृहवरमित्युचितार्थमित्युक्तं भवति ॥ १९ ॥ पदातिः पदगस्सन् । अतिक्रम्येत्यन्वेति ॥ २० ॥

नाभिभाषितुं रामेत्यस्मादधिकमित्यर्थः ॥ ३ ॥ तदिति । अपूर्वम् अदृष्टपूर्वम् । रामोपीत्यपिशब्देन दुःखसहस्रसद्भावेप्यक्षुभितो रामो दशरथविषादस्य स्वहेतुकत्वमाशङ्क्य भयमापन्न इत्यवगन्तव्यम् ॥ ४ ॥ इन्द्रियैरित्यादिश्लोकद्वये दृष्ट्वा भयमापन्न इत्येतदनुकृष्य सम्बध्यते । उपप्लुतं राहु

तदपूर्वं नरपतेर्दृष्ट्वा रूपं भयावहम् । रामोऽपि भयमापन्नः पदा स्पृष्ट्वेव पन्नगम् ॥ ४ ॥ इन्द्रियैरप्रहृष्टैस्तं शोकसन्तापकर्शितम् । निश्वसन्तं महाराजं व्यथिताकुलचेतसम् ॥ ५ ॥ ऊर्मिमालिनमक्षोभ्यं क्षुभ्यन्तमिव सागरम् । उपप्लुतमिवादित्यमुक्तानृतमृषिं यथा ॥ ६ ॥ अचिन्त्यकल्पं हि पितुस्तं शोकमुपधारयन् । बभूव संरब्धतरः समुद्र इव पर्वणि ॥७॥ चिन्तयामास च तदा रामः पितृहिते रतः । किं स्विदद्यैव नृपतिर्न मां प्रत्यभिनन्दति ॥८॥ अन्यदा मां पिता दृष्ट्वा कुपितोऽपि प्रसीदति । तस्य मामद्य संप्रेक्ष्य किमायासः प्रवर्तते ॥ ९ ॥

ग्रस्तम् । उक्तानृतमृषिं यथा ऋषिमिव स्थितम्, निस्तेजस्कमित्यर्थः ॥ ५ ॥ ६ ॥ अचिन्त्यकल्पमिति । अचिन्त्यकल्पम्, असम्भावितमित्यर्थः । उपधारयन् विचारयन् । संरब्धतरः सम्भ्रान्ततरः ॥ ७ ॥ चिन्तयामासेति । किंस्वित् किंवा ॥ ८ ॥ अद्यैवेत्येवकारव्यवच्छेद्यमाह—अन्यदेति । आयासः

रामेत्यक्षरद्वयोच्चारणाभ्यधिकमिति शेषः ॥ ३ ॥ तदिति । अपूर्वम् अदृष्टपूर्वम् । रामोपीत्यपिशब्देन दुःखसहस्रसम्भवेपि अक्षुभितो रामो दशरथविषादस्य स्वहेतुकत्वमाशङ्क्य भयमापन्न इत्यवगम्यते ॥ ४ ॥ इन्द्रियैरिति । इन्द्रियैरित्यादिश्लोकद्वये दृष्ट्वा भयमापन्न इत्येतदनुकृष्य सम्बध्यते । अप्रहृष्टैः खिन्नैः, व्यथितं खिन्नम्, आकुलं सम्भ्रान्तं चेतो यस्य तम् । स्वतेजोविशेषात् अक्षोभ्यमपि क्षुभ्यन्तम् । उपप्लुतं केतुग्रस्तम् ॥ ५ ॥ ६ ॥ अचिन्त्येति । पितुः तं शोकम् अचिन्त्यकल्पम् अत्यन्तासंभाव्यम् अवधारयन् चिन्तयन् आत्मीयत्वेन स्वीकुर्वन्निति वा । संरब्धतरः संक्षुभितः बभूव ॥ ७ ॥ किं स्विदिति । किंस्वित् किमेतत् । अद्यैवेत्येवकारेण व्यवच्छेद्यमुच्यते ॥ ८ ॥ अन्यदेति । अन्यदा पूर्वकाले, परोक्षे मां प्रति कुपितोपि दृष्ट्वा प्रसीदति, तस्य किमायासः प्रवर्तते किमेतदिति सः

सत्य०—पूर्वश्लोकात् ना इत्यनुवर्तते । ना पुरुषः पन्नगं पदा स्पृष्ट्वा यथा भयं प्राप्नोति तथा रामोपि दुःखितत्वेनादृष्टपूर्वं नरपतिरूपं दृष्ट्वा भयमापन्न इत्यर्थः । " भीषास्मात् " इत्यादेः सर्वभीषकस्य रामस्य भयम् अग्निना गर्हयामास कविरिति ज्ञेयम् । अपूर्वमित्येतद्भयपदेनाप्यन्वेति । अपूर्वं भयम् अभयमित्यर्थः । सदा अभयमापन्न इति यतः अतः भयमापन्न इत्यपि गर्हितमित्यर्थः ॥ ४ ॥ शोचतीतिशोकः शोकहेतुः, तज्जनितसन्तापेन कर्शितम् । निश्वसन्तमित्यत्रविशेषणत्वेन प्रसक्तनिश्वासाः बुद्ध्या विवेकेनाभेदसम्बन्धेनोर्मिपदार्थैनान्वीयन्ते । ऊर्मिमालिनं शिखादित्वादिनिप्रत्ययान्तं पदम् । तथा च श्वासोल्लोलकल्लोलैः सहितम् । अत एव क्षुभ्यन्तं चलन्तम् । उक्तमनृतं येन स उक्तानृतः तमिव विद्यमानम् । ऋषिमित्यनेन अनृतोक्तेर्महापापकरत्वमिति मत्वन्तस्य ध्वनयति । अचिन्त्यः कल्पः राज्ञः कदाचिदप्येतादृशशोकादिकं भवति वेत्यादिको यस्य सोऽचिन्त्यकल्पस्ताम् ॥ ५-७ ॥ कुपितः, अन्यस्मा इति शेषः । परोक्षे मह्यं कुपितोपीति व्याख्यातु परोक्षापरोक्षप्रीतिमात्रपात्रत्वाद्रामस्येत्युपेक्ष्या । मां सम्प्रेक्ष्य स्थितस्य ॥ ९ ॥

चित्तक्लेशः । इति चिन्तयामासेत्यन्वयः ॥ ९ ॥ १० ॥ कच्चिदिति । नापराद्धमपराधो न कृतः । अज्ञानात् प्रमादात् ॥ ११ ॥ १२ ॥ शारीर इति । शारीरः सन्तापो व्याधिः । मानसोऽभिताप आधिः । दुर्लभं हीति पुण्यपापारब्धत्वान्मानुषशरीरस्येति भावः ॥ १३ ॥ कच्चिदिति । मातॄणामिति निर्द्धा

स दीन इव शोकार्त्तो विषण्णवदनद्युतिः । कैकेयीमभिवाद्यैव रामो वचनमब्रवीत् ॥ १० ॥ कच्चिन्मया नापराद्ध मज्ञानाद्येन मे पिता । कुपितस्तन्ममाचक्ष्व त्वं चैवैनं प्रसादय ॥ ११ ॥ अप्रसन्नमनाः किं नु सदा मां प्रति वत्सलः । विवर्णवदनो दीनो न हि मामभिभाषते ॥ १२ ॥ शारीरो मानसो वापि कच्चिदेनं न बाधते । सन्तापो वाभितापो वा दुर्ल्लभं हि सदा सुखम् ॥ १३ ॥ कच्चिन्न किञ्चिद्भरते कुमारे प्रियदर्शने । शत्रुघ्ने वा महासत्त्वे मातॄणां वा मम शुभम् ॥ १४ ॥ अतोषयन्महाराजमकुर्वन् वा पितुर्वचः । मुहूर्त्तमपि नेच्छेयं जीवितुं कुपिते नृपे ॥ १५ ॥ यतोमूलं नरः पश्येत् प्रादुर्भावमिहात्मनः । कथं तस्मिन्न वर्त्तेत प्रत्यक्षे सति दैवते ॥ १६ ॥ कच्चित्ते परुषं किञ्चिदभिमानात् पिता मम । उक्तो भवत्या कोपेन यत्रास्य लुलितं मनः ॥ १७ ॥

रणे षष्ठी । कच्चिदिति प्रश्ने । किञ्चिदशुभं न कच्चिदितिसम्बन्धः ॥ १४ ॥ १५ ॥ यत इति । इह जगति । नरः आत्मनो देहस्य । प्रादुर्भावम् उत्पत्तिम् । यतोमूलं यत्कारणकं पश्येत् प्रत्यक्षे दैवते सति सिद्धे तस्मिन् पितारि कथं न वर्त्तेत, तद्वशे एव वर्त्तेतेत्यर्थः ॥ १६ ॥ कच्चित्त इति । ते अभिमानात्

रामः शोकार्तस्सन् वचनमब्रवीदिति सम्बन्धः ॥ ९ ॥ १० ॥ कच्चिदिति । नापराद्धम् अपराधो न कृतः । अज्ञानात् प्रमादात् ॥ ११ ॥ १२ ॥ शारीर इति । शारीरस्सन्तापो व्याधिः, मानसोऽभिताप आधिः एवं न बाधते कच्चित् कुतः प्राणिनां सुखम्, सदा दुर्लभं हीत्यर्थः ॥ १३ ॥ कच्चिदिति । मातॄणां वा विषय इति शेषः । अशुभं न कच्चित् ॥ १४ ॥ अतोषयन्निति । नृपे कुपिते सति किमु वक्तव्यमित्यर्थः ॥ १५ ॥ यत इति । यो नरः । इहात्मनः प्रादुर्भावं शरीरस्य परिग्रहम् । यतोमूलं यन्मूलं यत्कारणकं पश्येत् जानीयात् । अलुगार्षः । सोऽसौ विवेकी, उक्तहेतोरेव प्रत्यक्षे दैवते सिद्धे सति, तास्मिन् पितरि पित्रानुकूल्ये, न कथं वर्तते वर्तेतैवेत्यर्थः ॥ १६ ॥ कच्चिदिति । ते तव कोपेन अभिमानात् गर्वेण वा मम पिता परुषम् उक्तः कच्चित्, यत्र येन मनो लुलितं कलुषितम् ॥ १७ ॥ १८ ॥

विषम०—दीन इव विषण्णवदनद्युतिरिव स रामः । शोकार्त इव वचनमब्रवीदिति सम्बन्धः ॥ सत्य०—विषण्णवदनानां द्युतिर्यस्मात् स विषण्णवदनद्युतिः । तेषां द्युतिरिव द्युतिरितिवार्थः । इवेन दैन्यादिकं देव देवे सर्वथा नास्तीति द्योतयति कविः । अभिवाद्यैवेत्यनेन राजमर्यादा द्योत्यते ॥ १० ॥

तव वाल्लभ्यात्। कोपेन वा मम पिता भवत्या किञ्चित्परुषमुक्तः कच्चित्। यत्र येनास्य मनः लुलितं कलुषितम् ॥ १७॥ एतदिति । किंनिमित्तमित्या व्याचक्ष्वेति पूर्वोक्तस्य सर्वस्य संग्रहः ॥ १८ ॥ एवमिति । एवम् इति । धृष्टं प्रत्यक्षतो रामानिष्टवचनविषयवैक्लव्यरहितम् ॥ १९ ॥ न राजेति ॥२०॥

एतदाचक्ष्व मे देवि तत्त्वेन परिपृच्छतः । किंनिमित्तमपूर्वोऽयं विकारो मनुजाधिपे ॥ १८ ॥ एवमुक्ता तु कैकेयी राघवेण महात्मना । उवाचेदं सुनिर्लज्जा धृष्टमात्महितं वचः ॥१९॥ न राजा कुपितो राम व्यसनं नास्य किञ्चन । किञ्चिन्मनोगतं त्वस्य त्वद्भयान्नाभिभाषते ॥ २० ॥ प्रियं त्वामप्रियं वक्तुं वाणी नास्योपवर्तते । तदवश्यं त्वया कार्यं यदनेनाश्रुतं मम ॥ २१ ॥ एष मह्यं वरं दत्त्वा पुरा मामभिपूज्य च । स पश्चात्तप्यते राजा यथान्यः प्राकृतस्तथा ॥ २२ ॥ अतिसृज्य ददानीति वरं मम विशांपतिः । स निरर्थं गतजले सेतुं बन्धितुमिच्छति ॥२३॥ धर्ममूलमिदं राम विदितं च सतामपि । तत्सत्यं न त्यजेद्राजा कुपितस्त्वत्कृते यथा ॥ २४ ॥ यदि तद्वक्ष्यते राजा शुभं वा यदि वाशुभम् । करिष्यसि ततः सर्वमाख्यास्यामि पुनस्त्वहम् ॥ २५ ॥

त्वद्भयादित्यस्य विवरणम्—प्रियमिति । आश्रुतं प्रतिज्ञातम् ॥ २१ ॥ तत्किमित्यपेक्षायां सामान्यतो दर्शयति—एष इत्यादिना ॥२२॥ अतिसृज्येति । अतिसृज्य प्रतिज्ञाय । गतजले सेतुं बन्धितुमिच्छतीति दानस्य पूर्वमेव कृतत्वात् इदानीं तत्परिहारव्यापारो व्यर्थ इति भावः ॥२३॥ धर्ममूलमिति । इदं जगद्धर्ममूलम् । इदं च सतां विदितं सद्भिर्विदितम् । "क्तस्य च वर्तमाने" इति षष्ठी । तत्तस्मात्सत्यं सत्यरूपधर्मम् । राजा त्वत्कृते त्वत्प्रयोजनाय । मयि कुपितः सन् यथा न त्यजेत् तथा कुर्वित्यर्थः ॥ २४ ॥ तर्हि तद्विशेषतो वक्तव्यमित्यत्राह—यदीति । शुभमशुभं वा तत्प्रतिज्ञातं राजा यत्

एवमिति । सुनिर्लज्जा पत्युरेवं क्लेशकरणं कथं वक्ष्यामीति लज्जारहिता । धृष्टम् प्रत्यक्षतो वनं गच्छेत्येवंवचनकधाष्टर्योपेतं यथा तथा । आत्महितम् स्वपुत्राभिषेक विषयं मनोगतं वचः उवाच ॥ १९ ॥ २० ॥ प्रियमिति । आश्रुतं प्रतिश्रुतम् ॥ २१ ॥ किं तत्राह—एष इति ॥ २२ ॥ अतिसृज्येति । प्रतिश्रुत्य, जले गते सेतुं बन्धितुमिच्छति । दानस्य पूर्वमेव वृत्तत्वात् तत्प्रयुक्तव्यवहारचिन्ता व्यर्थेत्यर्थः ॥ २३ ॥ धर्ममूलमिति । इदं सत्यम् । धर्मस्य मूलमिति सतामपि विदितम्, अतः तत्सत्यं सत्यवचनम् । त्वत्कृते त्वन्निमित्तम् । त्वत्प्रयोजनान्तरायवशात् मयि कुपितो राजा कोपदोषेण यथा न त्यजेत् तथा कुर्विति शेषः ॥ २४ ॥ दशरथ मिव राममपि प्रतिज्ञावाक्यं वाचयितुमुपक्रमते—यदीत्यादिना । राजा यद्वक्ष्यते तत्करिष्यसि यदि, ततः तर्हि राज्ञो विवक्षितमहमेवाख्यास्यामीत्यर्थः ॥ २५ ॥

वक्ष्यति तत् त्वं करिष्यसि यदि तदा राज्ञो विवक्षितमहमेवाख्यास्यामीत्यर्थः ॥ २५ ॥ राजैव कुतो न वदतीत्यत्राह—यदीति । न विपत्स्यते यदि विफलं न भविष्यति चेदित्यर्थः ॥ २६ ॥ एतदिति । व्यथितः गुरुवचनं करिष्यति नवेति सन्देहस्य विषयोऽस्मीति सन्तप्त इत्यर्थः ॥ २७ ॥ व्यथा

यदि त्वभिहितं राज्ञा त्वयि तन्न विपत्स्यते । ततोऽहमभिधास्यामि न ह्येष त्वयि वक्ष्यति ॥ २६ ॥ एतत्तु वचनं श्रुत्वा कैकेय्या समुदाहृतम् । उवाच व्यथितो रामस्तां देवीं नृपसन्निधौ ॥ २७ ॥ अहो धिङ्नार्हसे देवि वक्तुं मामीदृशं वचः । अहं हि वचनाद्राज्ञः पतेयमपि पावके । भक्षयेयं विषं तीक्ष्णं मज्जेयमपि चार्णवे ॥२८॥ नियुक्तो गुरुणा पित्रा नृपेण च हितेन च ॥ २९ ॥ तद्ब्रूहि वचनं देवि राज्ञो यदभिकांक्षितम् । करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ॥३०॥ तमार्जवसमायुक्तमनार्या सत्यवादिनम् । उवाच रामं कैकेयी वचनं भृशदारुणम् ॥३१॥ पुरा देवासुरे युद्धे पित्रा ते मम राघव । रक्षितेन वरौ दत्तौ सशल्येन महारणे ॥ ३२ ॥

मेवाह—अहो इत्यादिना ॥ २८ ॥ नियुक्त इति । गुरुत्वपितृत्वनृपत्वहितपरत्वानि वचनकरणहेतवः । करिष्ये तदित्यनुकर्षः ॥२९॥ तदिति । यत्कार्यमभिकांक्षितं तद्वचनं तद्विषयवचनं ब्रूहि । तत्कार्यं करिष्ये, प्रतिजाने च प्रतिज्ञां करोमि च । रामो द्विर्नाभिभाषते विना प्रतिज्ञया रामो द्विरुक्तिं न यदीति । राज्ञा राजानुमत्या, मया यदभिहितं तत् त्वयि न विपत्स्यते न व्यर्थं भविष्यति यदि ततोऽहमेवाभिधास्यामि । वदतु राजैवेत्यत आह नहीति । त्वदप्रियत्वात्, त्वन्मुखमवलोक्येति शेषः ॥ २६ ॥ एतदिति । व्यथितः गुरुवचनोल्लङ्घनमनया मयि शङ्कितमिति सन्तप्तः ॥ २७ ॥ अहो इति । ईदृशम् यदि करिष्यसीत्यकरणशङ्कावचनमित्यर्थः ॥ २८ ॥ नियुक्त इति । गुरुणा इहामुत्र हितोपदेष्ट्रा ॥ २९ ॥ तद्ब्रूहीति । प्रतिजाने च प्रतिज्ञां करोमि । तदेव स्थिरीक्रियते रामो द्विर्नाभिभाषत इति । प्रथमं यद्वाक्यं वदति तत्परिहारवचनं न कथयतीत्यर्थः ॥ ३० ॥ ३१ ॥ पुरेति । सशल्येन पश्चाच्छल्यापाकरणपूर्वकं मया

सत्य०—ईदृशम् याः रमायाः दृक् यस्मिन् मयि तं माम् । ईदृशं पूर्वोक्तं वचः वक्तुं नार्हसे, अतस्त्वयैवमुक्तं मां धिक् । साक्षान्मङ्गलदेवतापि रमा नित्यं मां कामयते, तादृशस्य मम किमल्पराज्येनेति रामभावमाविश्वकार कविरिति ज्ञेयम् । नार्हसे नार्हसि । "चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदम्" इत्युक्तेरात्मनेपदत्वम् ॥ २८ ॥ न पितृत्वं हिरण्यकशिप्वादिवदित्याह—हितेनेति । तदपि नोग्रसेनादिवदित्याह—नृपेणेति । तदपि न धृतराष्ट्रवदित्याह—गुरुणेति ॥ २९ ॥ राम इति परोक्षोक्त्या स्वस्य यथार्थवादित्वं सार्वजनीनमिति सूचयति ॥ ३० ॥ देवासुरे मत्वर्थीयाच्प्रत्ययान्तोऽयम् । कर्तृत्वसम्बन्धेन देवासुरविशिष्टे युद्ध इत्यर्थः । महारणे देवासुरयुद्धान्तर्गतदेवसहायार्थं गतस्वकर्तृके महारणे इत्यर्थः । तेन न पौनरुक्त्यम् । मम । सम्बन्धसामान्ये षष्ठी । स च प्रकृते कर्तृत्वरूपः । मया रक्षितेन । सशल्येन शङ्कुसहितेन । न तावन्मात्रेण, सशल्येन बाणसहितेनेत्यर्थः । क्षत्रियाणां शरादिधारणेनोदीरणं शपथज्ञापकमिति भावः । "शल्यः शङ्कौ शरे वंशकुडिकायां च तोमरे" इतिविश्वः ॥ ३२ ॥

करोतीत्यर्थः ॥ ३०–३२ ॥ तत्रेति । तत्र वरप्रदाननिमित्तम् ॥ ३३ ॥३४॥ सन्निदेश इति । सन्निदेशे नियमने ॥३५॥ भरत इति । यदेतदभिषेचनम्

तत्र मे याचितो राजा भरतस्याभिषेचनम् । गमनं दण्डकारण्ये तव चाद्यैव राघव ॥ ३३ ॥ यदि सत्यप्रतिज्ञं त्वं पितरं कर्तुमिच्छसि । आत्मानं च नरश्रेष्ठ मम वाक्यमिदं शृणु ॥३४॥ सन्निदेशे पितुस्तिष्ठ यथाऽनेन प्रतिश्रुतम् । त्वयारण्यं प्रवेष्टव्यं नव वर्षाणि पञ्च च ॥ ३५ ॥ भरतस्त्वभिषिच्येत यदेतदभिषेचनम् । त्वदर्थे विहितं राज्ञा तेन सर्वेण राघव ॥ ३६ ॥ सप्त सप्त च वर्षाणि दण्डकारण्यमाश्रितः । अभिषेकमिमं त्यक्त्वा जटाजिनधरो वस ॥ ३७ ॥ भरतः कोसलपुरे प्रशास्तु वसुधामिमाम् । नानारत्नसमाकीर्णां सवाजिरथकुञ्जराम् ॥ ३८ ॥

अभिषेकसाधनम् । त्वदर्थे विहितं तेन सर्वेण राज्ञा भरतोऽभिषिच्येतेति योजना ॥ ३६–३८ ॥

रक्षितेन ॥ ३२ ॥ तत्रेति । तत्र–द्वयोर्वरयोर्मध्ये, एकेन भरतस्याभिषेचनम् अन्येन तव दण्डकारण्यगमनम् ॥ ३३ ॥ यदीति । आत्मानं चेति त्वया मदुक्तकृतेः सशपथं प्रतिज्ञातत्वादित्याशयः ॥ ३४ ॥ सन्निदेश इति । सन्निदेशे नियोगसम्पादने ॥ ३५ ॥ अभिषेचनम् अभिषेकोपकरणम् ॥ ३६–३८ ॥

स०–मया भरतस्याभिषेचनं तवाद्यैव दण्डकारण्ये गमनं चाद्यैव राजा याचितः । गौर्दुह्यते पय इतिवत्प्रधानकर्मत्वाद्राज्ञस्तद्वाचकात्प्रथमा । "गौणे कर्मणि दुह्यादेः" इति वचनात् । कैकेय्याः सत्स्वभावमप्यनयोक्त्या निरूपयति–दण्डकारण्य इति । हे आद्य ! हे दण्डक अखिलशिक्षक ! त्वम् अरेण सहितो ण्यः अरण्यः तस्मिन्, सुधासमुद्रद्वये याचितः या रमया आचितः सम्यक् सम्बद्धः, नित्यावियोगीति यावत् । अततेर्डप्रत्यये अ इति भवति । अस्य विष्णोः स्त्री ई "पुंयोगादाख्यायाम्" इति ङीष् । "अकारो वासुदेवः स्याल्लक्ष्मीरीकार उच्यते" इत्यभिधानात् । ई+आचितः=इति स्थिते यणादेशे याचित इति भवति । तस्य तवेति । पूर्ववत्सर्वम् ॥ ३३ ॥ सत्यप्रतिज्ञं कर्तुमिच्छसीत्यनेन तस्य सामर्थ्याभावान्मत्कार्यं तव हस्ते विन्यस्तमिति ध्वनयति । पितरं सत्यप्रतिज्ञं कर्तुमर्हसीत्यनेनैव रामप्रतिज्ञायाः सत्यत्वलाभेपि "द्विर्बद्धं सुबद्धम्" इति महाभाष्योक्तेः पुनर्वचनं दाढर्यायेत्युक्तं भवति । स्वपुत्रस्याभिलषितं नरश्रेष्ठत्वं पारवश्येन रामे प्रयुक्तम् । यथोक्तं कर्णामृते–"सौमित्रे क्व धनुर्धनुर्धनुरिति व्यग्रा गिरः पान्तु वः" इति । श्रीभागवते पञ्चमे द्वितीये पूर्वचित्तिं प्रति आग्नीध्रवचनम्–"का त्वं चिकीर्षसि च किं मुनिवर्य शैले" इत्यादि । तत्तात्पर्ये च "परिहासप्रलापादिष्वनर्था वाग् भवेत् क्वचित् ।" इत्यादि पूर्ववत्स्वभावानुगुण्यं च ज्ञेयम् ॥३४॥ सन्निदेशे आज्ञायाम् । कैकेय्या राजमर्यादया द्वादशचतुर्विंशत्यादि वर्षपर्यन्तमरण्यं प्रवेष्टव्यमिति वक्तव्ये 'नव वर्षाणि पञ्च च' इति चतुर्दशवर्षोक्तिस्तु रावणस्यायुषां चतुर्दशवर्षाणामेवावशिष्टत्वात् । द्वादशेत्युक्तौ तद्धननादिकमकृत्वैवागन्तव्यमिति भवति । अधिकोक्तौ तु जोषं वस्तव्यमिति भवति । अतश्चतुर्दशेति देवो वादयामासेति ज्ञातव्यम् ॥ ३५ ॥ अभिषेकशब्दस्य घञन्तत्वेपि तद्विशेषणस्येदंशब्दस्य नपुंसकत्वमुपपद्यते । तद्विशेष्यपदार्थस्याभिषेचनस्य नपुंसकत्वात् । यथोक्तम्–"सम्बन्धमनुवर्तिष्यते" इति महाभाष्यव्याख्यानावसरे कैयटेन "सम्बध्यत सम्बन्धम् । कर्मणि घञ् । नपुंसकस्याभिधेयत्वान्नपुंसकनिर्देशः" इति ।

एतेनेति । एतेन वरद्वयप्रदाननिमित्तेन ॥ ३९ ॥ ४० ॥ इतीति । इवशब्देन अन्यान्यपि परुषाणि बहून्युक्तानीति गम्यते । शोकं मुखवैवर्ण्यादि

एतेन त्वां नरेन्द्रोऽयं कारुण्येन समाप्लुतः। शोकसंक्लिष्टवदनो न शक्नोति निरीक्षितुम् ॥ ३९॥ एतत् कुरु नरेन्द्रस्य वचनं रघुनन्दन। सत्येन महता राम तारयस्व नरेश्वरम् ॥ ४०॥ इतीव तस्यां परुषं वदन्त्यां न चैव रामः प्रविवेश शोकम्। प्रविव्यथे चापि महानुभावो राजा तु पुत्रव्यसनाभितप्तः॥ ४१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे अष्टादशः सर्गः ॥ १८ ॥

बाह्यविकारम्। प्रविव्यथे चापि रामविकारादर्शनेनाप्यधिकं विव्यथ इत्यर्थः ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टादशः सर्गः ॥ १८ ॥

एतेनेति । एतेन वरद्वयप्रदाननिमित्तेन ॥ ३९ ॥ ४० ॥ इतीति । शोकं मुखवैवर्ण्यादिबाह्यविकारम् । न प्रविव्यथे च मानसव्यथां च न प्राप्तवान्, राजा तु पुत्रव्यसनं भाविवियोगव्यसनम् ॥ ४१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां अष्टादशः सर्गः ॥ १८ ॥

उपपादितं चैतन्निपुणतरम् " यथार्थज्ञानजनका यथार्था युक्तयः " इत्यनुव्याख्यानसुधाव्याकरणावसरे " उच्यते अनियतलिङ्गानां विशेषणपदानां विशेष्यपदलिङ्गत्वमेव " इति न सर्वत्र नियमः । " अहमेवेदं सर्वोस्मि । अजानता महिमानं तवेदम् " इत्यादौ व्यभिचारात् । सर्वमहिमशब्दयोः पुँल्लिङ्गत्वेपि तद्विशेषणयोरिदंशब्दयोर्नपुंसकत्वात् । किन्तु "क्वचिल्लिङ्गानामर्थधर्मत्वमिति पक्षे विशेष्यपदप्रतिपाद्यार्थलिङ्गत्वमस्ति" इत्यादिना । " नन्वेवं चेत् सर्वत्रातिप्रसङ्ग इतिचेन्न, अभियुक्तप्रयोगे सति निमित्तानुसरणं न तु निमित्तमस्तीति प्रयोगः " इत्यादिना तत्रैव याद्वुपत्ये स्पष्टमुक्तेः । अभियुक्ताग्रेसरश्च भगवान् वाल्मीकिरिति । निरूपितवन्तश्चैवमेव " देवममीवचातनम् " इत्येतद्व्याख्यानभूतायाः "अमीवाद्दुःखतश्च्यावयति" इति टीकायाः व्याख्यानावसरे व्याख्यातारः । यद्वा इदमित्यस्यारण्यमित्यनेनान्वयः । इममिति पाठे तु नानुपपत्तिः ॥ ३७॥ तारयस्व " णिचश्च " इत्यात्मनेपदम् । स्वनरोत्तममिति पदच्छेदं यदि सत्यप्रतिज्ञं त्वं पितरमात्मानं चेत्युभाभ्यां प्रतिज्ञातत्वागमात् अत्रापि निगमनकाले स्वेनात्मना सहितश्चासौ नरेश्वरश्चेत्युत्तरपदलोपि समासे स्वनरोत्तममितिवादोनुगुणो भवति । ततश्च स्वं नरोत्तमं च तारयेत्यर्थः। उत्तरश्लोकादिवेत्याकृष्यते । लोकः येन संक्लिष्टवदनः निरीक्षितुं न शक्नोति स यमात्मा धर्मराजः कुरुनरेन्द्रस्य धृतराष्ट्रस्य वचनमिव ॥ ४० ॥ चशब्द इवार्थे । यथा राजा पुत्रव्यसनाभितप्तः तथा रामो नेति व्यतिरेकदृष्टान्तः । अभितप्त इत्यनेन रामस्य पुत्रत्वं पुन्नामनरकत्रायकत्वं लोकसाधारणं न भवति, अपि तु संसारतारकत्वमस्येति लोकोत्तरसन्तापं सूचयति ॥ ४१ ॥

तदिति । मरणोपममिति लोकदृष्ट्या ॥१॥ एवमिति । इतः अस्मान्नगरात् ॥२॥ इदं त्विति । यद्यप्येतेन कारुण्येन समाप्लुत इत्यनभिनन्दने हेतुरुक्तः । तथापि मत्स्वभावं जानन् किमर्थं नाभिनन्दतीत्याहेति बोध्यम् । यथापुरं यथापूर्वम् ॥३॥ मन्युरिति । मन्युः दैन्यम् । "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः ।

तदप्रियममित्रघ्नो वचनं मरणोपमम् । श्रुत्वा न विव्यथे रामः कैकेयीं चेदमब्रवीत् ॥ १ ॥ एवमस्तु गमिष्यामि वनं वस्तुमहं त्वितः । जटाजिनधरो राज्ञः प्रतिज्ञामनुपालयन् ॥ २ ॥ इदं तु ज्ञातुमिच्छामि किमर्थं मां महीपतिः । नाभिनन्दति दुर्द्धर्षो यथापुरमरिन्दमः ॥ ३ ॥ मन्युर्न च त्वया कार्यो देवि ब्रूमि तवाग्रतः । यास्यामि भव सुप्रीता वनं चीरजटाधरः ॥ ४ ॥ हितेन गुरुणा पित्रा कृतज्ञेन नृपेण च । नियुज्यमानो विस्रब्धः किं न कुर्यामहं प्रियम् ॥ ५ ॥ अलीकं मानसं त्वेकं हृदयं दहतीव मे । स्वयं यन्नाह मां राजा भरतस्याभिषेचनम् ॥६॥ अहं हि सीतां राज्यं च प्राणानिष्टान् धनानि च । हृष्टो भ्रात्रे स्वयं दद्यां भरतायाप्रचोदितः ॥ ७ ॥

ब्रूमि ब्रवीमि ॥४॥ हितेनेति । हितेन हितपरेण । गुरुणेत्यनेन रामस्य तस्मान्मन्त्रविशेषस्वीकारोऽस्तीति गम्यते । कृतज्ञेन स्वकृतवरप्रदानाभिज्ञेन ॥५॥ अलीकमिति । अलीकम् अप्रियम् । मानसं मनसि वर्त्तमानम् ॥६॥ तवाप्रीतिर्भविष्यतीति नोक्तवानित्याशङ्क्याह—अहं हीति । सीतां धनुर्भङ्गकाल इति

तदप्रियमिति । मरणोपमं लोकदृष्ट्या ॥ १ ॥ एवमस्त्विवाति । एवमस्तु भरताभिषेकोऽस्तु, अहं गमिष्यामि ॥ २ ॥ ३ ॥ मन्युरिति । ब्रूमि ब्रवीमि ॥ ४ ॥ हितेनेति । कृतज्ञेन स्वकृतवरप्रदानाभिज्ञेन । विस्रब्धः निर्विशङ्कः ॥ ५ ॥ अलीकमिति । राजा मां स्वयमेव भरतस्याभिषेचनं नाहेति यत् इदमेकम् अलीकं दुःखम् मानसं मनसि वर्तमानं सत् मे हृदयं दहतीवेति सम्बन्धः ॥६॥ कथं सङ्कोचेन विनायमर्थो राज्ञा वक्तुं शक्यत इत्यत्राह—अहं हीति । अप्रचोदित इति भरत

सत्य०—अमित्रघ्न इत्यनेन स्वस्य मध्यायातान्तरायनिवारकत्वेपि स्वसङ्कल्पानुसार्य्येतत्कैकयीवचनमिति मानयामास मातरमिति सूचयति ॥ १ ॥ दुर्द्धर्षः । आर्षः खल् । अतो "भाषायां शासियुधिदृशिधृषि—" इत्यादिना वार्तिकेन युच् ॥३॥ राजा भरतस्याभिषेचनं मां प्रति स्वयं नाहेत्येतत् मानसं मनस्सम्बन्धि यदलीकमप्रियं तन्मे हृदयं मनो दहत्येवेत्यन्वयः । यद्वा हे वमे अवमे ! यद्यपि "अवद्यावमाधमार्वरेफाः कुत्सिते" इति धातोरवतेरमप्रत्ययेऽवम इति भवति । तथाप्यपूर्वकान्माधातोरौणादिके प्रत्यये अपगतावगतिकत्वेन प्रयोजकेन प्रयोज्यं नीचत्वं लक्ष्यत इति नानुपपत्तिः । "वष्टिभागुरिरल्लोपम्" इति स्मरणात् । नीचे कैकेयि ! राजा स्वयं यस्मादेतन्नाह तस्मात्तव मानसं मनसि विद्यमानं जनानामलीकमप्रियं भरतस्याभिषेचनं त्वद्धृदयं दहति । इ विस्मये । आश्चर्यमित्यर्थः ॥६॥ इष्टानित्येतद्यथायोग्यं विपरिणतं सत् सीतामित्यादिनान्वेति ।

भावः ॥ ७ ॥ किं पुनरिति । पित्रा प्रचोदितस्तव प्रियकामार्थं प्रतिज्ञामनुपालयंश्च दद्यामिति किंपुनः ॥८॥ तदिति । इमं राजानं त्वमाश्वासय अश्रूणि मुञ्चतीति यत् इदं किंनु, निर्हेतुकमित्यर्थः ॥ ९ ॥ १० ॥ दण्डकेति । पितुर्वाक्यमविचार्य वनं गच्छेति पित्रा नोक्तमिति विचारमकृत्वेत्यर्थः । समाः

किंपुनर्मनुजेन्द्रेण स्वयं पित्रा प्रचोदितः । तव च प्रियकामार्थं प्रतिज्ञामनुपालयन् ॥ ८ ॥ तदाश्वासय हीमं त्वं किं न्विदं यन्महीपतिः । वसुधासक्तनयनो मन्दमश्रूणि मुञ्चति ॥ ९ ॥ गच्छन्तु चेवानयितुं दूताः शीघ्रजवैर्हयैः । भरतं मातुलकुलादद्यैव नृपशासनात् ॥ १० ॥ दण्डकारण्यमेषोऽहमितो गच्छामि सत्वरः । अविचार्य पितुर्वाक्यं समा वस्तुं चतुर्दश ॥ ११ ॥ सा हृष्टा तस्य तद्वाक्यं श्रुत्वा रामस्य कैकयी । प्रस्थानं श्रद्दधाना हि त्वरयामास राघवम् ॥१२॥ एवं भवतु यास्यन्ति दूताः शीघ्रजवैर्हयैः । भरतं मातुलकुलादुपावर्त्तयितुं नराः ॥१३॥ तव त्वहं क्षमं मन्ये नोत्सुकस्य विलम्बनम् । राम तस्मादितः शीघ्रं वन त्वं गन्तुमर्हसि ॥ १४ ॥

संवत्सरान् ॥११-१३॥ अयं यावद्भरतागमनं विलम्बिष्यते चेन्महाननयः स्यात्, भरतस्य ज्येष्ठभ्रातृभक्तत्वादिति मत्वाह-तव त्विति । उत्सुकस्य भरता

स्नेहेन त्वत्स्नेहेन वा प्रतिज्ञामनुपालयन्निति । हेतौ शतृप्रत्ययः । प्रतिज्ञापालनाद्धेतोश्च ॥ ७ ॥ ८ ॥ तादिति । मद्विषयकनियोगसङ्कोचेन जगतीपतिः मन्दमश्रूणि मुञ्चतीति यत् इदं किन्नु किं कारणम्? निर्हेतुकमित्यर्थः । तत् तस्मात् इदं दशरथमाश्वासयेति योजना ॥ ९ ॥ १० ॥ अनिर्वृत्ते स्वकार्ये कथमाश्वासयामीत्यत आह-दण्डकेति । पितुर्वाक्यमविचार्य युक्तायुक्तविचारमकृत्वैवेत्यर्थः ॥ ११-१३ ॥ तवेति । उत्सुकस्य गमनोत्सुकस्य । विलम्बनं तव गमनविलम्बम् ।

हृष्टःसन् स्वयमेव दद्यात् । तत्रापि मनुजेन्द्रेण स्वयं साक्षात् पित्रा प्रचोदितस्सन् दद्यामिति तु किं पुनर्वाच्यमित्यन्वयः । एतेन त्वदपत्यं मदपत्यं पुरेति त्वदार्थैतसमर्थनं ममापि स मतमिति ध्वन्यते । द्वितीयं प्रचोदित इत्येतत्तृतीयार्थकेन तवेत्यनेनान्वेति । तेन प्रचोदितशब्दयोर्न पौनरुक्त्यम् । तव च प्रियकामार्थमित्यनेन तव प्रियो यः कामः कामावतारो यो भरतस्तदर्थमित्यप्यर्थस्सूचितो भवति । शुभरतो भरत इति मतिमतः श्रीमतो रामस्य सीतां दद्यामित्युक्तिर्न लौकिकरीतिविरुद्धा भवतीति हृष्ट इति कवयता कविनाऽसूचीति नानौचिती आलोचनीया भगवतीति मन्तव्यम् ॥ ७ ॥ ८ ॥ ह्रीमन्तम् अवाच्यमिदं किमिति वच्मीति लज्जायुक्तम् । वसुधासक्तनयन इत्यनेन त्वमेव मत्पुत्रसङ्कोन्मूलनस्य मूलमिति क्षमामीक्षते क्षमानाथ इति ध्वनयाञ्चकार । ( ह्रीमन्तम् इति पाठः ) ॥ ९ ॥ कुलात् गृहात् । मातुलकुलात् न विद्यते तुला यस्य तत् मातुलं अतुलम् तच्च तत्कुलं चेति तस्मादित्यनेनासदृशकुलवासी भरतो न तवानुकूलो भवतीत्यर्थः सूचितो भवति ॥ १० ॥

भिषेकदर्शनोत्सुकस्य गमनोत्सुकस्य वा ॥ १४ ॥ व्रीडान्वित इति । नृपो व्रीडान्वितः सन् स्वयं नाभिभाषत इति यत् एतत् न किञ्चिद्विचारानर्हं व्रीडां विना कारणान्तराभावात् । मन्युः स्वयं नाभिभाषत इत्याग्रहः दैन्यं वा ॥ १५ ॥ १६ ॥ धिगिति । उक्तासत्यवचनं श्रुत्वेतिभावः ॥ १७ ॥ राम

व्रीडान्वितः स्वयं यच्च नृपस्त्वां नाभिभाषते । नैतत्किञ्चिन्नरश्रेष्ठ मन्युरेषोपनीयताम् ॥१५॥ यावत्त्वं न वनं यातः पुरादस्मादभित्वरन् । पिता तावन्न ते राम स्नास्यते भोक्ष्यतेऽपि वा ॥१६॥ धिक्कष्टमिति निश्वस्य राजा शोकपरिप्लुतः । मूर्च्छितो न्यपतत्तस्मिन् पर्यङ्के हेमभूषिते ॥ १७ ॥ रामोप्युत्थाप्य राजानं कैकेय्याभिप्रचोदितः । कशयेवाहतो वाजी वनं गन्तुं कृतत्वरः ॥१८॥ तदप्रियमनार्याया वचनं दारुणोदयम् । श्रुत्वा गतव्यथो रामः कैकेयीं वाक्यमब्रवीत् ॥१९॥ नाहमर्थपरो देवि लोकमावस्तुमुत्सहे । विद्धि मामृषिभिस्तुल्यं केवलं धर्ममास्थितम् ॥२०॥

इति । कृतत्वरः अभूदितिशेषः ॥१८॥१९॥ नेति । लोकमावस्तुं लोके वस्तुम् । "उपान्वध्याङ्वसः" इतिकर्मत्वम् । धर्मम् आस्थितम् आश्रितम् ।

क्षमं युक्तम् न मन्ये ॥ १४ ॥ कुत इत्यत आह—व्रीडान्वित इति । यतोऽयं स्वसत्यस्य पारम्राप्यदर्शनव्रीडान्वितः । यच्च किञ्चिदपि त्वां प्रति नाभिभाषते एतत् अनभिभाषणमुद्दिश्य नान्यत्किञ्चित्कारणं त्वया चिन्त्यम् यत एवमतो हे नरश्रेष्ठ ! मन्युः दैन्यम्, त्वदविलम्बगमनेनापनीयतामित्यर्थः ॥ १९ ॥ इतश्च विलम्बो न युक्त इत्याह—यावदिति ॥ १६ ॥ शोकपरिप्लुतः शोकेन व्याप्तः ॥ १७ ॥ राम इति । कृतत्वरः, बभूवेति शेषः ॥ १८ ॥ तदिति । दारुणोदयम् दारुणोत्तरम् ॥ १९ ॥ नाहमिति । अहम् अर्थपरः धनपरः न किन्तु लोकमावस्तुं जनं संग्रहीतुम् नोत्सह इति वा, किन्तु केवलं धर्ममेवास्थितं विद्धि ॥ २० ॥

विषम०—स्वयं नाभिभाषत इति यत् एतत् अनभिभाषणम् । न किञ्चित् नान्यत्कारणकम् । त्वदविलम्बगमनाभाव एवास्य कारणम् । अत एष मन्युः राज्ञो दैन्यम् । त्वदविलम्बगमनेनापनीयताम् । त्वयेति शेषः ॥१९॥

स०—ऋषिभिः ब्रह्मादिभिस्तुल्यं, बिम्बत्वेन सदृशमित्यर्थः । गत्यर्थस्य ऋषधातोर्ज्ञानार्थत्वात् ज्ञानितमत्वाद्ब्रह्मादीनाम् । विमलं निर्दुष्टम् । आस्थितं सम्यकुस्थितम् । धर्मं धर्मराजमिव । एतेन 'एतत्कुरुनरेन्द्रस्य' इति कैकेय्युक्तस्य धृतराष्ट्रवचनाद्वनं गन्तुमुद्यतं धर्मराजमिव मामपि विद्धीत्यनेनोत्तरयामास राम इति सूचयति । यद्वा नाहमर्थपरः । हि यस्मात् वित् सर्वज्ञः । मद्वचनं न मृषेत्याह—मामृषिभिस्तुल्यमिति । मा न विद्यते मृषा मिथ्यात्वं येषु तानि मामृषाणि भाषणानि तानि सन्ति येषां ते तथा तैर्मामृषिभिर्बलिमान्धात्रादिभिः । "सुप्सुपा" इति मामृषापदयोः समासः । नपुंसकत्वेन ह्रस्वत्वे अत इन् । तैस्तुल्यं मां विद्धीत्यावर्तितेनान्वयः । अहन्तादिसन्नतश्चेत्तथा कुर्यां नाहं तथेत्याह—नेति । अहमर्थपरः अहङ्कारी । यद्वा अर्थपरः अर्थैषणावानित्यर्थः । ना पुमान् । अहमर्थपरः-अहमर्थः अहङ्कारनिवृत्तिस्तत्पर इति वा । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यभिधानात ॥ २० ॥

अनेन राज्याय भरतागमनं प्रतीक्षते राम इति कैकेयीशङ्का वारिता ॥ २० ॥ यदिति । अत्रभवतः पूज्यस्य पितुः कृतमेवेति विद्धीतिशेषः ॥ २१ ॥ न हीति । शुश्रूषा पादसंवाहनादिः । वचनक्रिया वचनकरणम् ॥२२॥२३॥ नेति । गुणम् आर्जवौदार्यादिगुणम् । नाशंससे न जानीष इत्यर्थः । ईश्वरतरा

यदत्रभवतः किञ्चिच्छक्यं कर्तुं प्रियं मया । प्राणानपि परित्यज्य सर्वथा कृतमेव तत् ॥२१॥ न ह्यतो धर्मचरणं किञ्चिदस्ति महत्तरम् । यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ॥ २२ ॥ अनुक्तोप्यत्रभवता भवत्या वचनादहम् । वने वत्स्यामि विजने वर्षाणीह चतुर्दश ॥ २३ ॥ न नूनं मयि कैकेयि किञ्चिदाशंससे गुणम् । यद्राजानमवोचस्त्वं ममेश्वरतरा सती ॥ २४ ॥ यावन्मातरमापृच्छे सीतां चानुनयाम्यहम् । ततोऽद्यैव गमिष्यामि दण्डकानां महद्वनम् ॥२५॥ भरतः पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा । तथा भवत्या कर्तव्यं स हि धर्मस्सनातनः ॥२६॥

अत्यन्तानियन्त्री ॥ २४ ॥ अद्यैव गन्तव्यमित्युक्तम्, तत्र यत्किञ्चिद्विलम्बं याचते—यावदिति । मातरं यावदापृच्छे सीतां चानुनयामि तावदनुज्ञां कुर्विति शेषः । ततः तदनन्तरम् । अद्यैव दिने । दण्डकानां महद्वनं दण्डो नामेक्ष्वाकुसुतस्तस्य राष्ट्रं शुक्रशापात्पांसुवर्षेण विनाशितं सदरण्यमभूत् तद्राष्ट्रं तन्नाम्ना दण्डकमित्युच्यते । "संज्ञायां कन्" इतिकन्प्रत्ययः । प्रदेशभेदात् बहुवचनम् ॥ २५ ॥ भरत इति । धर्मः सनातन इत्यत्र यद्वेति । अत्रभवतः पूज्यस्य पितुः अन्यदपि यत्किञ्चित् मया प्राणानपि परित्यज्य कर्तुं शक्यमस्ति, तत् कृतमेवेति विद्धीत्यर्थः ॥ २१ ॥ निश्चयहेतुमाह—न हीति । शुश्रूषा पादसंवाहनादिलक्षणा । वचनक्रिया वचनकरणम् ॥ २२ ॥ अनुक्त इति । अत्रभवता पूज्येन पित्रा साक्षादनुक्तोपि 'अप्रतिषिद्धमनुमतम्' इति न्यायेन भवत्या वचनादेव केवलमहं वने वत्स्यामि ॥ २३ ॥ न नूनमिति । यत् ममेश्वरतरा सती त्वद्वचनकारिणं मां भरतोऽभिषेक्तव्य इति नियुज्य राजानम् अवोचः अयाचिष्ठाः, अतो मयि गुणम् आर्जवलक्षणम् किञ्चिदपि नाशंससे, न विचारयसीत्यर्थः ॥ २४ ॥ यावदिति । यावन्मातरमापृच्छे सीतां चानुनयामि तावदनुज्ञां कुर्विति शेषः । तावत्पर्यन्तं विलम्ब इति वा । ततोऽनन्तरम् अद्यैव दिने दण्डकानां वनं दण्डका नाम जनपदाः शुक्रशापेन वनमभूत् ॥२५॥२६॥

स० - अत्रभवतः पूज्यस्य पितुः । यद्वा भवतो भवत्याः । सोत्सेकप्रवृत्तिमत्त्वेन "पुँल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती क्वचित्" इत्युक्तेश्च स्त्रिया अपि पुँल्लिङ्गशब्दवाच्यता ॥२१॥ त्वदभिलषितमद्वनवासोपि रक्षोविक्षोभपूर्वकं सज्जनावनहेतुरित्याह—विजन इति । वि विरुद्धं जनं जन्म ययोस्ते विजने रक्षसी रावणकुम्भकर्णरूपे ते । वत्स्यामि हनिष्ये । "वध हिंसायाम्" इत्यस्माल्लृटि स्यप्रत्यये "खरि च" इति चर्त्वे "अतो दीर्घो यञि" इति दीर्घे वत्स्यामीति रूपम् । "वत्सा वत्स्यामि वो रिपुम्" इति संग्रहरामायणप्रयोगात् । इडभाव आर्षः । वधधातुस्तु कौमुद्यां भावकर्मप्रक्रियायां "वध हिंसायां हलन्तः" इति "वधिः प्रकृत्यन्तरः" इति काशिकाप्रतीकं प्रकाश्य "वधहिंसायामिति भूवादौ पाठात्" इति सप्तमाध्यायतृतीयपादीय "जनिवध्योश्च" इति सूत्रव्याख्यानपदमञ्जर्युक्तेः प्रसिद्धोऽस्तीति न तदन्वेषणप्रयासः ॥ २३ ॥

धर्मापेक्षया पुँल्लिङ्गत्वम् ॥ २६ ॥ स इति । बाष्पमशक्नुवन्, निरोद्धुमिति शेषः ॥ २७ ॥ वन्दित्वेति । निष्पपात निर्जगाम ॥ २८–३० ॥

आभिषेचनिकमिति । आभिषेचनिकम् अभिषेकप्रयोजनकम् । भाण्डम् उपकरणजातम् । प्रदक्षिणकरणं "प्रशस्तमाङ्गल्यदेवतायतनचतुष्पथादीन् प्रद

स रामस्य वचः श्रुत्वा भृशं दुःखहतः पिता । शोकादशक्नुवन् बाष्पं प्ररुरोद महास्वनम् ॥२७॥ वन्दित्वा चरणौ रामो विसंज्ञस्य पितुस्तथा । कैकेय्याश्चाप्यनार्याया निष्पपात महाद्युतिः ॥२८॥ स रामः पितरं कृत्वा कैकेयीं च प्रदक्षिणम् । निष्क्रम्यान्तःपुरात्तस्मात् स्वं ददर्श सुहृज्जनम् ॥२९॥ तं बाष्पपरिपूर्णाक्षः पृष्ठतोऽनुजगाम ह । लक्ष्मणः परमक्रुद्धः सुमित्रानन्दवर्द्धनः ॥ ३० ॥ आभिषेचनिकं भाण्डं कृत्वा रामः प्रदक्षिणम् । शनैर्जगाम सापेक्षो दृष्टिं तत्राविचालयन् ॥ ३१ ॥ न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति । लोककान्तस्य कान्तत्वाच्छीतरश्मेरिव क्षपा ॥ ३२ ॥

क्षिणमावर्त्तयेत्" इत्यादिधर्मशास्त्रोल्लङ्घनभयात् नतु तदासक्त्या । दृष्टिं तत्राविचालयन् स्वयं तत्र निरपेक्ष इत्यर्थः । सापेक्षः भरतस्यानेनाभिषेको

स्त्विति प्रार्थनासहितः शनैर्जगाम, तत्र देवतासान्निध्यसम्भवादिति भावः ॥ ३१ ॥ न चेति । लक्ष्मीं मुखविकासम् । राज्यनाशः राज्यभ्रंशः ॥ ३२ ॥

स इति । बाष्पमशक्नुवन् निरोद्धुमिति शेषः ॥२७॥ वन्दित्वेति । निष्पपात निश्चक्राम ॥२८–३०॥ आभिषेचनिकमिति । अभिषेचनप्रयोजनम् । भाण्डम् उपकरणम् ।

आभिषेचनिकभाण्डप्रदक्षिणं "प्रशस्तमाङ्गल्यदेवतायतनचतुष्पथादीन् प्रदक्षिणमावर्तयेत्" इत्यादिधर्मशास्त्रोल्लङ्घनभयात् न तु तदासक्त्या । सापेक्षः

अपगता ईक्षा अपेक्षा, अपेक्षया सहितः सापेक्षः, निरपेक्ष इत्यर्थः । अत एव तत्र आभिषेचनिकभाण्डे दृष्टिमविचालयन् अप्रवर्तयन् जगामेति सम्बन्धः ।

यद्वा सापेक्षः अपेक्षा अधोवीक्षणं तद्युक्तः सापेक्षः । यद्वा सापेक्षः वनं प्रतीति शेषः । स्पष्टमन्यत् ॥ ३१ ॥ न चेति । लक्ष्मीं मुखप्रसादम् । कान्तत्वात् अवि

स०–सुमित्रायाः सुमित्राणां च आनन्दं वर्द्धयतीति **सुमित्रानन्दवर्धनः** । भ्रातरमनातुरो राममनुजगामेति मित्राणि जहृषिर इति भावः ॥ ३० ॥ **सापेक्षः** न विद्यते पः पालको येषां ते अपाः तेषु ईक्षा, तद

वनेच्छेति यावत् । तया सहितः सापेक्षाः । नीरक्षकसद्रक्षणापेक्षो रामः ॥३१॥ कविः पारवश्येन श्रीरामस्वरूपं निरूपयति—**न चास्येति** । महतीं लक्ष्मीं शोभां सम्पदं वा नापकर्षति । कुतः । तत्राप्याह—

अपकर्षतीति । यस्माद्रामः अपकर्षः अनुत्कृष्टजनः अस्वतन्त्रः स इवाचरति न त्वस्वतन्त्रः । स्वतन्त्र इति यावत् । एतेन चन्द्रपक्षे कान्तत्वादिति हेतूक्तिः, रामचन्द्रपक्षे तदनुक्तिरिति न्यूनतेति दोषो नावकाशं लभत

इति भावः । यद्वा यः महतीं लक्ष्मीं स्वभार्यां सम्पदं वा अपकर्षति यत्र गच्छति तत्र नेष्यति तस्य राज्यनाशो नेत्यर्थः । यथोक्तं संग्रहरामायणे "यत्र याति रघुसन्ततिकेतुस्तत्र संपदतुला न विपत्तिः" इत्यादि ।

यस्मादयं राज्यनाशः न विद्यते आशा यस्य स नाशः । निष्काम इति यावत् । राज्ये नाशः राज्यनाशः । नञो बुद्ध्या विवेकेनान्वयः । अथवा व्यधिकरणो बहुव्रीहिः । लोककान्तस्य लोकमनोहरस्य कान्तत्वान्मनो

हरत्वात् शीतरश्मेश्चन्द्रमसः क्षय इव यथा क्षयः लक्ष्मीं नापकर्षति । यद्वा लोककान्तस्य जनमनोहरस्य रामस्य कान्तत्वाद्धेतोः राज्यनाशः लक्ष्मीं नापकर्षति । यथा शीतरश्मेः क्षयः न तथेति व्यतिरेकदृष्टान्तः ॥ ३२ ॥

रामस्य मुखवैवर्ण्यादिशरीरविकाराभावमभिधाय मानसविकाराभावमप्याह—न वनमिति । सर्वलोकातिगस्य तुल्यमानावमानस्य, परमयोगीश्वरस्येत्यर्थः ॥३३॥ प्रतिषिध्येत्यादि । व्यजने वालव्यजने ॥३४॥ धारयन्निति । रामस्य परदुःखासहिष्णुत्वाद्दुःखशब्देन सुहृज्जनदुःखदर्शनजं दुःखमुच्यते ।

न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम् । सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥ ३३ ॥ प्रतिषिध्य शुभं छत्रं व्यजने च स्वलंकृते । विसर्जयित्वा स्वजनं रथं पौरांस्तथा जनान् ॥ ३४ ॥ धारयन् मनसा दुःखमिन्द्रियाणि निगृह्य च । प्रविवेशात्मवान् वेश्म मातुरप्रियशंसिवान् ॥ ३५ ॥ सर्वो ह्यभिजनः श्रीमान् श्रीमतः सत्यवादिनः । नालक्षयत रामस्य किञ्चिदाकारमानने ॥ ३६ ॥ उचितं च महाबाहुर्न जहौ हर्षमात्मनः । शारदः समुदीर्णांशुश्चन्द्रस्तेज इवात्मजम् ॥ ३७ ॥ वाचा मधुरया रामः सर्वं सम्मानयन् जनम् । मातुः समीपं धीरात्मा प्रविवेश महायशाः ॥ ३८ ॥ तं गुणैः समतां प्राप्तो भ्राता विपुलविक्रमः । सौमित्रिरनुवव्राज धारयन् दुःखमात्मजम् ॥ ३९ ॥

अप्रियशंसिवान् अप्रियमभिधातुकामः । क्वसुः समासाभ्यासलोप आर्षः ॥ ३५ ॥ सर्व इति । आकारं विकृताकारम् । श्रीमान् रामाभिषेकार्थं कृतालङ्कारः ॥३६॥ उचितमिति । उचितं योग्यम्, सहजमित्यर्थः ॥३७॥ एतादृशदुर्दशायामपि रमयितृत्वरूपं रामशब्दार्थं प्रकटयति—वाचेति ॥३८॥ तमिति ।

नाशिकान्तियुक्तत्वात् ॥ ३२ ॥ न वनमिति । सर्वलोकातिगस्येव तुल्यप्रियाप्रियस्य योगिन इव ॥ ३३ ॥ प्रतिषिद्ध्येति । व्यजने वालव्यजने ॥ ३४ ॥ धारयन् मनसा दुःखमिति । स्वजनशोकस्मरणजनितमित्यर्थः । न तु तस्य स्वकीयं किञ्चिद्दुःखमस्ति । तदेवाह आत्मवानिति । साक्षात्कृतनित्यनिरतिशयानन्दात्मा । अप्रियशंसिवान् अप्रियमभिधातुकामः ॥ ३५ ॥ सर्वो हीति । अभिजनः अभितो वर्तमानजनः । आकारं विकारम् । नालक्षयत नापश्यत् ॥३६॥ उचितमिति ।

सत्य॰—सर्वलोकातिगस्य मुक्तस्य । चित्तविक्रिया मनोविकारः यथा न लक्ष्यते तथेति योजना । नवनंगन्तुकामस्य नवनं देवैर्नृदेवैश्च क्रियमाणं स्तवनम् । वसुरिव वसुः । "वसुर्धनाधिपे" इति विश्वाद्युक्तेः । धनाधिपमिव विद्यमानं दशरथम् । वसुं धनमुद्दिश्य रावणादिहननेन पुष्पकमुद्धर्तुं धरां च त्यजतः सर्वलोकातिगस्येव चित्तविक्रिया लक्ष्यते ॥ ३३ ॥ समतां प्राप्तः सुखदुःखादिभिस्समत्वं गतः । सौमित्रिः गुणैः शुभधर्मैः । तं रामम् । अनुवव्राज तदेव विशदयति—धारयन्निति । यः गुणैः सत्त्वादिभिः । आत्मजं ब्रह्माणम् । उपलक्षणया सर्वसुपर्वग्रहः । दुःखं-दुःखं सुखं चेत्यर्थः । "दुर्दुःखमिति सम्प्रोक्तं सुखं खमिति चोच्यते" इति गीतातात्पर्योदाहृताभिधानात् । "दुरशोभनदुःखयोः" इति विश्वः । धारयन् समतां प्राप्तः तं सौमित्रिः गुणैरप्रधानैः समतां प्राप्त इति तमनुवव्राजेत्यर्थः । "गुणो मौर्व्यामप्रधाने" इत्यारभ्य "सत्त्वाद्यावृत्तिरज्जुषु" इत्यभिधानात् । यथा विपुलविक्रमो वृषभः गुणैः बह्वयवकरज्जुभिः वक्रगतिं विहाय समतां प्राप्तो भवति तथेत्यर्थः ॥ ३९ ॥

गुणैः सुखदुःखादिभिः । समतां प्राप्तः, समानसुखदुःख इत्यर्थः ॥ ३९ ॥ प्रविश्येति । अर्थविपत्तिं अर्थनाशम् । सुहृज्जनस्य आत्मविपत्तिशङ्कया
प्राणनाशशङ्कया, विक्रियां न जगाम । स्वविक्रियास्फुरणे सुहृज्जनो नश्येदिति शङ्कया स्वविक्रियां राज्यनाशजां नादर्शयदित्यर्थः ॥ ४० ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याख्याने अयोध्याकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥ तस्मिन्निति । आर्तशब्दः

प्रविश्य वेश्मातिभृशं मुदान्वितं समीक्ष्य तां चार्थविपत्तिमागताम् । न चैव रामोऽत्र जगाम विक्रियां सुहृज्जनस्यात्मविपत्तिशङ्कया ॥४०॥इत्यार्षे श्रीरामायणे वाल्मीकीये आदि॰श्रीमदयोध्याकाण्डे एकोनविंशःसर्गः॥१९॥

तस्मिंस्तु पुरुषव्याघ्रे निष्क्रामति कृताञ्जलौ । आर्त्तशब्दो महान् जज्ञे स्त्रीणामन्तःपुरे तदा ॥ १ ॥ कृत्येष्वचोदितः पित्रा सर्वस्यान्तःपुरस्य च । गतिर्यः शरणं चापि स रामोऽद्य प्रवत्स्यति ॥ २ ॥

आर्तानां यादृशः शब्दस्तादृश इत्यर्थः ॥ १ ॥ कृत्येष्विति । अन्तःपुरस्य कृत्येषु कर्त्तव्येषु विषये । गतिः कर्तृत्वेन प्राप्यः । शरणं रक्षिता । " शरणं

उचितं स्वाभाविकम् ॥ ३७–३९ ॥ प्रविश्येति । अर्थविपत्तिम्–अभिषेकविघातम् । आत्मविपत्तिशङ्कया प्राणनाशशङ्कयापि ॥ ४० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां एकोनविंशः सर्गः ॥ १९ ॥ ॥ १ ॥ कृत्येष्विति । यः पित्रा अचोदित एव सर्वस्य

स॰–अतिभृशं मुत् यस्याः सा तथा तया सहितम् । अर्थविपत्तिं राज्याद्यर्थस्य विपत्तिम् । विशरणं विनाशनमितियावत् । सुहृज्जनस्य–लक्ष्मणादेः । **आत्मविपत्तिशङ्कया** स्वप्रयुक्तापत्तिशङ्कया, न च विक्रियां चिन्तां जगामेत्यर्थः । जनस्य–दण्डकारण्यवासिजनस्य । आत्मना स्वत एव अपराधं विनैव आगता या विपत्तिः विरुद्धभूता खरादिसेना तच्छङ्कया सुहृत् शोभनमनस्कस्सन् जगामेत्येष्यन्न्यायेनोक्तिः । यद्वा सुहृज्जनस्य ऋष्यादेरिति ॥४०॥ **सराम** इत्यनेन सती सीतापि पतिमनुगमिष्यतीति भावमाविश्चकार कविरिति ज्ञेयम् । यद्वा नायं मानवो रामः अपितु दानवसूदन इत्यप्याह–**कृत्येष्विति** । पित्रा चतुर्मुखेन, ब्रह्मणापि यः कृत्येष्वचोदितः । पितामहस्यापि ब्रह्मणः पितृत्वमप्यविरुद्धम् । " पितरमस्य मूर्द्धन् " इत्यादिप्रयोगात् । "तथा पितामहाद्याश्च पितरो नाम कीर्तिताः" इत्येतस्य भाष्योक्तेश्च । कृत्येष्वचोदितः सर्वस्वतन्त्र इति यावत् । पित्रा ब्रह्मणा सह । अन्तःपुरस्य देहान्तर्गततत्त्वाभिमानिवर्गस्य । गतिः शरणं च । सोप्यद्य प्रवत्स्यतीति तदिच्छयैव नियामिकेति भावः । कृत्येषु विद्वेषिषु इषून् अञ्चयतीति कृत्येष्वक्त्रेन कृत्येष्वचा पित्रा दशरथेन अन्तःपुरजनस्य गतिः शरणमिति ह्यस्तनएव उदितः उक्तः रामः अद्यप्रवत्स्यतीत्यर्थः । " कृत्यं विद्वेषिकार्ययोः " इति विश्वः । " कृत्यं विद्विषि कार्ये च " इति रभसः ॥ २ ॥

गृहरक्षित्रोः " इत्यमरः ॥ २ ॥ कौसल्यायामिति । युक्तः सावधानः । वर्तते शुश्रूषते ॥ ३ ॥ न क्रुध्यतीति । यः अभिशप्तोऽपि परुषमुक्तोऽपि न क्रुद्ध्यति। क्रोधनीयानि क्रोधहेतुकर्माणि वर्जयन् क्रुद्धान् केवलमाग्रहेण कुपितान् प्रसादयंश्च वर्त्तते, सः इतः अस्माद्देशात्प्रवत्स्यति । हन्तेति शेषः॥४॥

कौसल्यायां यथा युक्तो जनन्यां वर्त्तते सदा। तथैव वर्त्ततेऽस्मासु जन्मप्रभृति राघवः ॥ ३ ॥ न क्रुध्यत्यभिशप्तोऽपि क्रोधनीयानि वर्ज्जयन्। क्रुद्धान् प्रसादयन् सर्वान् स इतोऽद्य प्रवत्स्यति ॥ ४ ॥ अबुद्धिर्बत नो राजा जीवलोकं चरत्ययम्। यो गतिं सर्वलोकानां परित्यजति राघवम् ॥ ५ ॥

अबुद्धिरिति । यः सर्वभूतानां गतिं राघवं परित्यजति स नो राजा अबुद्धिः सन् लोकान् चरति भक्षयति नाशयतीत्यर्थः । " चर गतिभक्षणयोः "

जनस्य अन्तःपुरस्य च कृत्येषु प्रवर्तते, यो गतिः प्राप्यस्य प्राप्तिमार्गः । शरणं प्राप्यं चापि यश्चेत्यर्थः ॥२॥ युक्तः सेवातत्परः ॥३॥ न क्रुध्यतीति । यः अभिशप्तोऽपि श्रुतपारुष्योऽपि न क्रुध्यति। क्रोधनीयानि अन्यक्रोधोत्पादकानि च कर्माणि अनुकम्पया वर्जयन् न क्रुध्यति। क्रोधनीयानि वर्जयन्नित्यनेन स्वस्य क्रोधक्रियाकर्तृत्व कर्मत्वप्रतिषेधः ॥ ४ ॥ अबुद्धिरिति । यो राजा सर्वभूतानां गतिं राघवं परित्यजति स राजा अबुद्धिः दुर्मतिः, जीवलोकं चरति भक्षयति नाशयतीति ॥ ५ ॥

स०–युक्तः शोभनः । "युक्तं शोभनम्" इति कर्मनिर्णयटीकोक्तेः । उपायसम्पन्नो वा । यतो यस्मात् रामात् जन्मप्रभृति सृष्ट्यद्यष्टकम् । अस्मासु अस्मदुपलक्षितसर्वप्रजासु । यथा वर्तते तथा कौसल्यायां जनन्यामपि वर्तते इति सापि न जननी । तथापि तां जननीत्वेन व्यतनोद्राम इति तत्तपोवैपुल्यं रामस्य करुणाकरता च ध्वन्यते ॥३॥ अयं राजा दशरथः अकुशल इति नरपतितरुण्य इतरास्समीरयन्ति–अबुद्धिरिति । नः अस्माकं यो राजा दशरथः सर्वभूतानां गतिं राववं परित्यजति ततोऽबुद्धिस्सन् जीवलोकं चरति । जीवोऽस्यास्तीति जीवः सचासौ लोकश्चेति जीवलोकः, तं जनं चेतनमात्रम्, मूर्खमिति यावत् । चरति गच्छति अनुसरतीति यावत् । यद्वा यो राघवं परित्यजति । रलयोरभेदात् रावत्रं लाघवं मनोहरत्वं स परित्यजतीत्यर्थः । "लघुरगुरौ च मनोज्ञे निस्सारे वाच्यवत्" इति मेदिनी । सदद्दष्टं चेदिष्टसिद्धिः स्यादित्यतो वाह य इति । यो राघवं परित्यजति सः अयं शुभावहं परित्यजति । अतो नायमित्यधिकम् । अथवा योगतिमित्येकं पदम् । योगेन स्वभावसिद्धयोगेन तिः आनन्दो यस्य स योगतिः । "आनन्दं तीति वै वदेत्" इति भागवततात्पर्योक्तेः । प्रसादयन्नित्यनुवर्तते । रत्ययं रतेः अयो दैवं रत्ययो मन्मथः । रतिं अयत इति वा रत्ययस्तम् । योगेनैव कैकेय्यास्सम्बन्धेनैव तिरानन्दो येन तं रत्ययं मन्मथं प्रसादयन्नेव राघवं परित्यजति अतोऽबुद्धिर्बत । फलितमप्यभिलपति–राजेति । राजा चरत्ययं चरति अयो यस्मिन् कर्मणि तद्यथा भवति तथा चरत्ययं गतदैवम् " एहीडादयोऽन्यपदार्थे " इत्यनेन चरत्ययमित्यत्र तिङ् सुपां समासः । अजीवलोकं न विद्यते जीवो यस्मिन् सोऽजीवः स चासौ लोकश्च तं स्वशरीरं चरति आचरति । यद्वा यो रामः ई बलः वबयोरभेदात् । रलयोरभेदात् याः लक्ष्म्याः वरः ईवरः । याः वलं यस्मादिति वा आजिर्गन्ता सचासौ ईवलश्च आजीवलः । यद्वा आज्यां युद्धे बलं यस्यासौ आजीबलः, यः तं परित्यजति सोऽकं दुःखमेव चरतीत्यर्थः । यद्वा राजाजीवलः राज्ञे राजनि वा चन्द्राय चन्द्रे वा " राजा शशाङ्के क्षत्रिये नृपे " इत्यमरः । आजीवलम् आज्यां बलं यस्य सः राजाजीवलो राहुः सः अकं शिरोरहितं यथा भवति तथा चरति येन तं रामं परित्यजति सोऽबुद्धिर्बत । "अज्यतिभ्यां च" इतीणि आजिः । "कृदिकारात्–" इति ङीष् । " आजिर्भवेत्तथाजी च " इति द्विरूपकोशः ।

इतिधातुः ॥ ९ ॥ इतीति । आचुकुशुः निन्दति स्म । चुक्रुशुः रुरुदुः ॥ ६ ॥ स इति । व्यालीयत लज्जादुःखभरेण शय्यायां विलीनोऽभूदित्यर्थः ॥७॥ राम इति । भृशमायस्तः 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः' इत्युक्तगुणवत्तयान्तःपुरार्तस्वनश्रवणेनातिशयेन सञ्जातदुःखः। निश्वसन्निव

इति सर्वा महिष्यस्ता विवत्सा इव धेनवः। पतिमाचुक्रुशुश्चैव सस्वरं चापि चुक्रुशुः ॥ ६ ॥ स हि चान्तःपुरे घोरमार्त्तशब्दं महीपतिः। पुत्रशोकाभिसन्तप्तः श्रुत्वा व्यालीयतासने ॥ ७॥ रामस्तु भृशमायस्तो निश्वसन्निव कुञ्जरः। जगाम सहितो भ्रात्रा मातुरन्तःपुरं वशी ॥८॥ सोऽपश्यत्पुरुषं तत्र वृद्धं परमपूजितम्। उपविष्टं गृहद्वारि तिष्ठतश्चापरान् बहून् ॥ ९ ॥ दृष्ट्वैव तु तदा रामं ते सर्वे सहसोत्थिताः । जयेन जयतां श्रेष्ठं वर्द्धयन्ति स्म राघवम् ॥ १० ॥ प्रविश्य प्रथमां कक्ष्यां द्वितीयायां ददर्श सः। ब्राह्मणान् वेदसम्पन्नान् वृद्धान् राज्ञाभिसत्कृतान् ॥११॥ प्रणम्य रामस्तान् वृद्धांस्तृतीयायां ददर्श सः। स्त्रियो वृद्धाश्च बालाश्च द्वाररक्षणतत्पराः ॥ १२ ॥ वर्द्धयित्वा प्रहृष्टास्ताः प्रविश्य च गृहं स्त्रियः।न्यवेदयन्त त्वरिता राममातुः प्रियं तदा ॥१३॥ कौसल्यापि तदा देवी रात्रिं स्थित्वा समाहिता । प्रभाते त्वकरोत् पूजां विष्णोः पुत्रहितैषिणी ॥ १४ ॥

कुञ्जरः परदुःखस्यापरिहार्यतां मत्वा गुप्तदुःखस्सन्, कुञ्जर इव निश्वसन्नित्यर्थः । वशी स्वायत्तीकृतेन्द्रियः ॥८॥ स इति । पुरुषं द्वारपालाध्यक्षम् ॥९॥ दृष्ट्वेति । जयेन विजयस्वेति जयाशिषा ॥ १०–१२ ॥ वर्धयित्वेति । वर्द्धयित्वा जयाशिषेतिशेषः ॥ १३ ॥ कौसल्येति । रात्रिं रात्रौ " कालाध्वनो

इतीति । महिष्यः पतिमाचुक्रुशुः निनिन्दुः । सस्वरं चापि चुक्रुशुः रुरुदुः ॥६॥ स हीति । आसन एव व्यलीयत दुःखभरेण विलीनोऽभवत् ॥७॥ राम इति । आयस्तः स्वजनदुःखप्राप्तखेदः ॥८॥ स इति । पुरुषं द्वाराध्यक्षम् ॥९॥ दृष्ट्वेति । जयेति विजयी भवेतिशब्देनेत्यर्थः ॥१०–१२॥ वर्द्धयित्वा, जयाशिषेति शेषः ॥ १३ ॥ कौस

" अयः शुभावहो विधिः " इत्यमरश्च । आजीवल्यनेनेति आजीवः वृत्तिस्तस्मिन् लं भयं यस्यासावाजीवलः सोकं यथा भवति तथा । पूर्ववद्दुर्वरितम् । अजीवः शवः तद्वल्ला कान्तिर्यस्य सोजीवलः । शवकान्तिमानित्यर्थः । " आजीवो जीविका वार्ता " इत्यमरः । " कं शिरः कं सुखम् " इति रत्नमाला । " दीप्तौ ला लं भये च प्रकीर्तितम् " इति विश्वः ॥ ९ ॥

रत्यन्तसंयोगे ” इति द्वितीया । समाहिता नियमयुक्ता ॥ १४ ॥ सेति । जुहोति हावयति, अत एव हावयन्तीमिति वक्ष्यति । ब्राह्मणैरितिशेषः ॥१५॥ प्रविश्येत्यादि । देवकार्यनिमित्तमिति द्रव्यजातमिति शेषः ॥ १६ ॥ दधीत्यादि । हविषः हवींषि ॥ १७ ॥ लाजानिति । कृसरं तिलौदनम् । दध्यक्षत

सा क्षौमवसना हृष्टा नित्यं व्रतपरायणा । अग्निं जुहोति स्म तदा मन्त्रवत् कृतमङ्गला ॥ १५ ॥ प्रविश्य च तदा रामो मातुरन्तःपुरं शुभम् । ददर्श मातरं तत्र हावयन्तीं हुताशनम् । देवकार्यनिमित्तं च तत्रापश्यत् समुद्यतम् ॥ १६ ॥ दध्यक्षतं घृतं चैव मोदकान् हविषस्तथा ॥ १७ ॥ लाजान् माल्यानि शुक्लानि पायसं कृसरं तथा । समिधः पूर्णकुम्भाश्च ददर्श रघुनन्दनः ॥ १८ ॥ तां शुक्लक्षौमसंवीतां व्रतयोगेन कर्शिताम् । तर्पयन्तीं ददर्शाद्भिर्देवतां देववर्णिनीम् ॥ १९ ॥ सा चिरस्यात्मजं दृष्ट्वा मातृनन्दनमागतम् । अभिचक्राम संहृष्टा किशोरं वडवा यथा ॥ २० ॥ स मातरमभिक्रान्तामुपसंगृह्य राघवः । परिष्वक्तश्च बाहुभ्यामुपाघ्रातश्च मूर्द्धनि ॥ २१ ॥ तमुवाच दुराधर्षं राघवं सुतमात्मनः । कौसल्या पुत्रवात्सल्यादिदं प्रियहितं वचः ॥ २२ ॥

मित्यारभ्य वाक्यान्तरम्, अतो न क्रियाद्वयविरोधः । पूर्वं देवकार्यनिमित्तमिति द्रव्याणि सामान्येनोक्तानि । अथ विशेषेणेति विवेकः ॥१८॥ तामिति । तर्प्पयन्तीं प्रीणयन्तीम् ॥ १९ ॥ सेति । अभिचक्राम अभिमुखं जगाम । किशोरम् अश्वबालकम् । वडवा अश्वस्त्री ॥ २० ॥ स इति । उपसंगृह्य

ल्येति । रात्रिं सर्वस्यां रात्र्याम् ॥ १४ ॥ सेति । अग्निं जुहोतीति, ब्राह्मणेनेति वेदितव्यम् । तदेवाह हावयन्तीमिति । देवकार्येति । हविषः हवींषि । कृसरं तिलोदनम् ॥ १५–१८ ॥ तामिति । देवतां तर्पयन्तीम् ॥ १९ ॥ सेति । अभिचक्राम अभिमुखं जगाम ॥ २० ॥ स इति । अभिक्रान्तम् आभिमुख्येना

स०–जुहोतिस्म स्वयमेवाजुहोत् । ननु स्त्रीणां वेदाधिकाराभावात्कथं जुहोतीत्युक्तमिति चेन्न । दशरथस्य वैवस्वतमनुत्वेन तत्पत्न्याः कौसल्यायाः मानवीत्वेनोत्तमस्त्रीत्वाद्वेदाधिकारसम्भवात् “ आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके ” इत्यादिस्मृतेः । तदुक्तं वामने “ भविष्यदन्तरे भूत्वा मनुर्वैवस्वतो भवान् । तव वंशे भवाम्यङ्ग रामो दाशरथिः स्वयम् । पुनर्दशरथो भूत्वा त्वमेवासि पिता मम । मद्दत्तपिण्डदानेन मुक्तिस्ते भविता ध्रुवम् ॥” इति ॥ १५ ॥ न केवलं स्वयं जुहोति अपि तु ब्राह्मणैरपीत्याह–हावयन्तीति । जुहोतीति पूर्वमुक्तेः । स्वार्थे वा णिच् ॥ १६ ॥

अभिवाद्य । स्थित इतिशेषः ॥२१॥२३॥ रामानुजीयम्–धर्मं चाप्युचितमित्यत्र धर्मं चोपहितं कुले इतिपाठः ॥ २३ ॥ सत्यप्रतिज्ञमिति । अभिषेक्ष्यतीत्यत्र हेतुः । इदानीमप्यभिषेको नारब्ध इति नाशङ्कनीयमिति भावः । पश्य जानीहि ॥२४॥ दत्तमित्यादि श्लोकद्वयमेकान्वयम् । स राघवः । भोजनेन निमन्त्रितः

वृद्धानां धर्मशीलानां राजर्षीणां महात्मनाम् । प्राप्नुह्यायुश्च कीर्तिं च धर्मं चोपहितं कुले ॥२३॥ सत्यप्रतिज्ञं पितरं राजानं पश्य राघव । अद्यैव हि त्वां धर्मात्मा यौवराज्येऽभिषेक्ष्यति ॥ २४ ॥ दत्तमासनमालभ्य भोजनेन निमन्त्रितः । मातरं राघवः किञ्चिद्व्रीडात्प्राञ्जलिरब्रवीत् ॥ २५ ॥ स स्वभावविनीतश्च गौरवाच्च तदानतः । प्रस्थितो दण्डकारण्यमाप्रष्टुमुपचक्रमे ॥ २६ ॥ देवि नूनं न जानीषे महद्भयमुपस्थितम् । इदं तव च दुःखाय वैदेह्या लक्ष्मणस्य च ॥२७॥ गमिष्ये दण्डकारण्यं किमनेनासनेन मे । विष्टरासनयोग्यो हि कालोऽयं मामुपस्थितः ॥ २८ ॥ चतुर्दश हि वर्षाणि वत्स्यामि विजने वने । मधुमूलफलैर्जीवन् हित्वा मुनिवदामिषम् ॥ २९ ॥

सन् दत्तमासनम् । आलभ्य स्पृष्ट्वा । दण्डकारण्यं प्रस्थितोऽहम् आप्रष्टुं गमनं निमन्त्रयितुम् । उपचक्रमे उद्योगमकार्षमिति मातरमब्रवीदितिसम्बन्धः । यद्वा दत्तमिति भोजनेन निमन्त्रितः भोजनार्थं निमन्त्रितः । भोजनार्थं दत्तमासनमालभ्य तिष्ठन् दत्तासने उपवेशनाभावेपि स्पर्शमात्रं कार्यमित्याग मात् किञ्चिद्व्रीडात् एवं ब्रुवन्त्यै मात्रे कथं मया प्रस्थानं कथनीयामिति लज्जया अब्रवीत् ॥२५॥ किमर्थमासनमुपलभ्य नोपविष्टवानित्यत्राह–स इति । गौरवात् मातरि बहुमानात् । प्रस्थितः प्रस्थातुमुद्यतः । आप्रष्टुम् अनुज्ञां कारयितुम् । उपचक्रमे उपक्रान्तवान् ॥ २६ ॥ अब्रवीदित्युक्तमाह– देवीत्यादि । भयं तवेति शेषः । इदं वक्ष्यमाणं वचनं दुःखाय, तथापि वक्ष्यामीत्यर्थः ॥ २७ ॥ इदंशब्दार्थमाह–गमिष्य इति । अनेन रत्नमयेन । विष्टरेत्यादि । विष्टरो नाम पञ्चविंशतिदर्भनिर्मितस्तापसासनविशेषः । " पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्द्धेन तु विष्टरः " इति स्मृतेः ॥ २८ ॥ चतुर्दशेति । गताम् । उपसंगृह्य अभिवाद्य, स्थित इति शेषः ॥ २१–२३ ॥ सत्यप्रतिज्ञमिति । राजानं पश्य, गत्वेति शेषः । कौसल्यायाः रामस्य राजनिवेशगमनादिव्यापा रानभिज्ञत्वात् राजदर्शननियोगादि ॥ २४ ॥ दत्तमासनमित्यादिश्लोकद्वयमेकं वाक्यम् । राघवः भोजनेन निमन्त्रितः सन् दत्तमासनम् आलभ्य स्पृष्ट्वा, स्वभाव विनीतः गौरवात् मातृत्वप्रयुक्तगौरवाच्च नतः सन् दण्डकारण्यं प्रस्थितः गन्तुमुपक्रान्तोऽहम् । आप्रष्टुं गमनमामन्त्रयितुम् । उपचक्रमे उद्योगमकार्षम्, इति मातरमब्रवी दिति सम्बन्धः ॥२५–२७॥ गमिष्य इति । विष्टरासनं नाम–अविच्छिन्नाग्रपञ्चविंशतिदर्भनिर्मितासनमित्यर्थः॥ २८ ॥ चतुर्दशेति । आमिषशब्देन सूदैः संस्कृतं मांस

मुनिवत् वत्स्यामीति सम्बन्धः । अत्रामिषशब्देन सूदैः संस्कृतं मांसमुच्यते । केवलं मांसस्वीकारस्योत्तरत्र वक्ष्यमाणत्वात् "इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना" इति ॥ २९ ॥ कुत एवमित्यत्राह--भरतायेति ॥ ३० ॥ स इति । सोऽहमित्यर्थः । लघुत्वप्रदर्शनाय षट् चाष्टौ चेत्युक्तम् । चतुर्दशेत्युक्ते हि गौरवं गम्यते । वन्यानि वनसम्बन्धीनि । वानप्रस्थयोग्यकर्माणीति यावत् । आसेवमानः आचरन् । वर्त्तयन् जीवनं कुर्वन् ॥३१॥

भरताय महाराजो यौवराज्यं प्रयच्छति । मां पुनर्दण्डकारण्ये विवासयति तापसम् ॥ ३० ॥ स षट् चाष्टौ च वर्षाणि वत्स्यामि विजने वने । आसेवमानो वन्यानि फलमूलैश्च वर्त्तयन् ॥ ३१ ॥ सा निकृत्तेव सालस्य यष्टिः परशुना वने । पपात सहसा देवी देवतेव दिवश्च्युता ॥ ३२ ॥ तामदुःखोचितां दृष्ट्वा पतितां कदलीमिव । रामस्तूत्थापयामास मातरं गतचेतसम् ॥ ३३ ॥ उपावृत्त्योत्थितां दीनां वडवामिव वाहिताम् । पांसुकुण्ठितसर्वाङ्गीं विममर्श च पाणिना ॥ ३४ ॥ सा राघवमुपासीनमसुखार्त्ता सुखोचिता । उवाच पुरुषव्याघ्रमुपशृण्वति लक्ष्मणे ॥ ३५ ॥ यदि पुत्र न जायेथा मम शोकाय राघव । न स्म दुःखमतो भूयः पश्येयमहमप्रजाः ॥ ३६ ॥ एक एव हि वन्ध्यायाः शोको भवति मानसः । अप्रजास्मीति सन्तापो न ह्यन्यः पुत्र विद्यते ॥ ३७ ॥

सेति । सा पुत्रोक्तं श्रुतवती । सालस्य वृक्षस्य "अनोकहः कुटः सालः" इत्यमरः । परशुनेति हठात् छेदनज्ञापनाय, नगरे तथा छेदनाभावात् वन इत्युक्तम् ॥ ३२ ॥ तामिति । गतचेतसं मूर्च्छिताम् ॥ ३३ ॥ उपावृत्त्येति । उपावृत्त्योत्थितां श्रमनिवृत्त्यर्थं भुवि वेष्टनं कृत्वोत्थिताम् । वाहितां भारवहनं प्रापिताम् ॥३४॥ सेति । असुखार्ता दुःखार्ता ॥३५॥ यदीति । हे पुत्र ! त्वं यदि न जायेथाः, अतः अजननात् । भूयः अतिशयितम् । दुःखम् इष्टपुत्रविश्लेषजम् न पश्येयम् । अप्रजाः वन्ध्या ॥ ३६ ॥ इदमेवोपपादयति—एक इति । अन्यः विश्लेषजः, भूलुण्ठनादिः कायिकश्च । अप्रजास्मीत्यसिजभाव

भक्ष्यभोज्यादिकं लक्ष्यते, "इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना" इति उत्तरत्र केवलमांसस्वीकारस्य वक्ष्यमाणत्वात् ॥२९॥३०॥ स इति । आसेवमानः आचरन् वन्यानि वानप्रस्थयोग्यानि कर्माणि । वर्तयन् जीवनं कुर्वन् ॥ ३१ ॥ सेति । यष्टिः शाखेव पपात ॥ ३२ ॥ ३३ ॥ उपावृत्त्येति । वाहितां पूर्वं भारं प्रापिताम् । उपावृत्त्य श्रमनिवृत्त्यर्थं भुवि वेष्टनं कृत्वा उत्थितां बडवामिव स्थिताम् ॥३४॥ सेति । उपासीनं सेवमानम् ॥३५॥३६॥ यदीति । यदि मम शोकाय न जायेथाः अतस्तर्हि

आर्षः॥३७॥नेति । पतिपौरुषे सत्यपि कल्याणं ज्येष्ठपत्नीत्वोचितग्रामाभरणाद्यैश्वर्यरूपं शुभम् । सुखं वा भर्तृसम्माननादिजनितसौख्यं वा। अपि पुत्र इति अपिःसम्भावनायाम् । पुत्रे सति तद्बलात् पश्येयमिति मया स्थितमित्यर्थः ॥ ३८ ॥ भूतदुःखमुक्त्वा भविष्यद्दुःखमाह–सेति । सा एवं सुख मलभमाना। बहूनीत्युक्तेः पूर्वमपि स्वल्पानि सन्तीति गम्यते। अमनोज्ञानि परुषाणि। परुषाणीत्युक्ते मनोज्ञमिश्रत्वमपि प्रतीयेत। वाक्यानि न तु सूचक

न दृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे। अपि पुत्रे तु पश्येयमिति राम स्थितं मया ॥ ३८ ॥ सा बहून्यमनोज्ञानि वाक्यानि हृदयच्छिदाम्। अहं श्रोष्ये सपत्नीनामवराणां वरा सती ॥३९॥ अतो दुःखतरं किन्नु प्रमदानां भविष्यति। मम शोको विलापश्च यादृशोऽयमनन्तकः ॥४०॥ त्वयि सन्निहितेप्येवमहमासं निराकृता। किं पुनः प्रोषिते तात ध्रुवं मरणमेव मे ॥४१॥ अत्यन्तं निगृहीतास्मि भर्तुर्नित्यमतन्त्रिता। परिवारेण कैकेय्याः समा वाप्यथवा वरा॥४२

पदानि। हृदयच्छिदां भर्तृहृदयवैकल्यकारिणीनाम् । अवराणां स्वेनैव तथा वक्तुमुचितानां सपत्नीनां नतु स्वाधीनानाम्। वरा सती स्वस्याप्यवरत्वे न किञ्चिद्दुःखमितिभावः। क्रोधेन सपत्नीनामिति बहुवचनोक्तिः । तत्र हठात् स्वगृहं मागच्छेत्युक्तिः, कोपेन भर्तृसकाशात् निर्याहीत्युक्तिः, अपुत्रायाः किमुत्सवेनेत्युक्तिः इत्येवमादीनि सपत्नीवाक्यानि बोद्धव्यानि॥३९॥ अत इति। अतः सपत्नीवाक्यश्रवणजाद्दुःखात्। प्रमदानां किं नु दुःखतरम्,तस्मान्मम शोको विलापश्च यादृशः इयत्तया वक्तुमशक्यः। अनन्तकः दुष्पारः॥४०॥ उक्तं दुःखं निदर्शयति–त्वयीति । बलवति त्वयि सन्निहितेऽपि, एवं भवदनुभूतप्रकारेण, निराकृता। त्वयि प्रोषिते किं पुनः अतो मे मरणं ध्रुवमिति योजना ॥ ४१ ॥ अत्यन्तमिति । भर्तुः भर्त्रा निगृहीता अहं अतन्त्रिता अप्रधानीकृतास्मि। "तन्त्रं प्रधाने सिद्धान्ते" इति निघण्टुः। अतः कैकेय्याः परिवारेण दासीजनेन समा कृतास्मि। अथवा विचार्यमाणे अवरा न्यूना

अप्रजा अप्यहम्। भूयः बहुतरम् । एवंविधं दुःखं न पश्येयमिति सम्बन्धः ॥३६॥३७॥ न दृष्टपूर्वमिति। पत्युः पौरुषम् अनुरागतो रञ्जनविशेषः, तस्मिन् सति यत् प्राप्यं कल्याणं प्रशस्तवस्त्राभरणादिजन्यसौभाग्याधिक्यं तथा सुखं वा पतिसंभोगजन्यम् तत् मया न दृष्टपूर्वम्। अथापि पुत्रेऽपि चोत्पन्ने पुत्रनिबन्धनं तदुभयं पतिकर्तृकं पश्येयमिति मया आस्थितमित्यर्थः ॥३८॥ सेति । साहं वरा ज्येष्ठा, अवराणां कनिष्ठानाम् ॥३९॥ अत इति । अतः सपत्नीवाक्यश्रवणात् यादृशः इयत्तया वक्तुमशक्यः। अनन्तकः अपारः ॥ ४० ॥ ४१ ॥ अत्यन्तेति । परिवारेण दासीजनेन समा वा, अथवा अवरा ततोऽपि निकृष्टा वा स्याम्॥ ४२ ॥

कृतास्मि ॥ ४२ ॥ दुःखान्तरमाह—य इति। त्वयि प्रोषिते यः स्वजनः मां सेवते परिचरति। अनुवर्त्तते प्रियोक्तिं करोति। सोऽपि कैकेय्याः पुत्रं भरत मन्वीक्ष्य तद्भयादित्यर्थः। नाभिभाषते नाभिभाषेत ॥४३॥ नित्यक्रोधतयेति। खरवादि परुषवचनशीलम्। तत् पूर्वानुभूतम्। दुर्गता अगतिका ॥४४॥

यो हि मां सेवते कश्चिदथवाप्यनुवर्त्तते। कैकेय्याः पुत्रमन्वीक्ष्य स जनो नाभिभाषते ॥ ४३ ॥
नित्यक्रोधतया तस्याः कथं नु खरवादि तत्। कैकेय्या वदनं द्रष्टुं पुत्र शक्ष्यामि दुर्गता ॥ ४४ ॥
दश सप्त च वर्षाणि तव जातस्य राघव। आसितानि प्रकांक्षन्त्या मया दुःखपरिक्षयम् ॥ ४५ ॥

दशेति। तव जातस्य त्वयि जाते सति। दश सप्त च वर्षाणि दुःखपरिक्षयं प्रकाङ्क्षन्त्या तव यौवराज्येनेति भावः। मया सुखमासितानि आस्थितानि। ननु "ऊनषोडशवर्षो मे रामो राजीवलोचनः" इति विश्वामित्रं प्रति दशरथवचनात् विवाहानन्तरम् "उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने" इत्युपरि सीतया वक्ष्यमाणत्वाच्च रामस्याष्टाविंशतिवर्षाणि वर्त्तन्ते। तत्कथं दश सप्त च वर्षाणीत्युच्यते इति चेत्, नैष दोषः। अत्र जातस्येत्युक्तिः द्वितीयजन्मापेक्षया "गर्भैकादशेषु राजन्यम्" इति बहुवचने गर्भनवममारभ्य क्षत्रियस्योपनयनकालत्वोक्तेः। "वयसा पञ्चविंशकः" इति सीता

अपि च त्वयि प्रोषिते भरते च राजनि कैकेय्याः पुत्रमन्वीक्ष्य यो हीदानीं सेवते कश्चित् अथवाप्यनुवर्तते, मद्दिष्टस्सर्वोपि जनो नाभिभाषते ॥४३॥ अपि च मद्विषये तस्याः नित्यक्रोधतया खरवादिनं परुषवचनशीलम्। लिङ्गव्यत्यय आर्षः। (खरवादिनमितिपाठः) दुर्गता दुर्दशापन्ना ॥४४॥ तव जातस्य त्वयि जाते सति दश सप्त च वर्षाणि दुःखपरिक्षयं प्रकांक्षन्त्या मया सुखमासितानि आस्थितानि। ननु "ऊनषोडशवर्षो मे रामो राजीवलोचनः" इति विश्वामित्रमुद्दिश्य दशरथेनोक्तत्वात् विवाहानन्तरम् "उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने" इत्युपरि सीतया अनसूयां प्रति वक्ष्यमाणत्वाच्च रामस्य अष्टाविंशतिवर्षाणि वर्तन्ते, तत्कथं सप्त दशवर्षाणीत्युच्यत इति चेत्? न; अत्र जातस्येत्युक्तिः "गर्भैकादशेषु राजन्यम्" इत्युक्तोपनयनप्राप्तद्वितीयजन्माविवक्षया, न तु प्रथमजन्मतः। उपनयनकर्मणा द्विजानां द्वितीयजन्मत्वं याज्ञवल्क्येनोक्तम्—"मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात्। अत्रास्य माता सावित्री पिता त्वाचार्य उच्यते॥ ब्राह्मणक्षत्रियविशस्त स्मादेते द्विजातयः॥" इति। यद्वा तव जातस्य त्वयि जाते उपनयनानन्तरं दश सप्त वर्षाणि दुःखपरिक्षयं प्रकाङ्क्षन्त्या मया आसितानि, उपनयनप्रभृति सुताः परिणमन्त इति मातॄणां मनसो निर्वृतिर्भवति। उपनयनं तु 'गर्भैकादशे राजन्यम्' इति सूत्रव्याख्याने गर्भैकादशेष्विति बहुवचनेन गर्भनवम-गर्भदशम-गर्भै कादशानि गृहीतानि। राजवर्यस्य रघुनाथस्य तु गर्भनवमे शुद्धाष्टमे वर्षे उपनयनं कृतम्, अतः उपनयनानन्तरं सप्तदश वर्षाणि जातानि। अत्र विवाहात्पूर्वं

वचनात् वचनान्तरविरोधपरिहारादिकं बालकाण्ड एव कृतम् 'ऊनषोडशवर्षो मे' इत्यत्र ॥ ४५ ॥ तदिति । सहितुं सोढुं चिरं नोत्सहे। जीर्णापि सपत्नी दुर्वाक्यश्रवणदुःखेन जीर्णापि । विप्रकारम् अपकाररूपं दुःखमित्यन्वयः ॥ ४६ ॥ अपश्यन्तीति । कृपणजीविकां दीनजीवनम् । वर्तयिष्यामि कारि

तदक्षयमहं दुःखं नोत्सहे सहितुं चिरम् । विप्रकारं सपत्नीनामेवं जीर्णापि राघव ॥ ४६ ॥ अपश्यन्ती तव मुखं परिपूर्णशशिप्रभम् । कृपणा वर्तयिष्यामि कथं कृपणजीविकाम् ॥ ४७ ॥ उपवासैश्च योगैश्च बहुभिश्च परिश्रमैः । दुःखसंवर्द्धितो मोघं त्वं हि दुर्गतया मया ॥ ४८ ॥ स्थिरं तु हृदयं मन्ये ममेदं यन्न दीर्यते । प्रावृषीव महानद्याः स्पृष्टं कूलं नवाम्भसा ॥ ४९ ॥ ममैव नूनं मरणं न विद्यते न चावकाशोऽस्ति यमक्षये मम । यदन्तकोऽद्यैव न मां जिहीर्षति प्रसह्य सिंहो रुदतीं मृगीमिव ॥ ५० ॥ स्थिरं हि नूनं हृदयं ममायसं न भिद्यते यद्भुवि नावदीर्यते। अनेन दुःखेन च देहमर्पितं ध्रुवं ह्यकाले मरणं न विद्यते ॥ ५१ ॥

ष्यामीत्यर्थः । " आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने " इत्यमरः ॥ ४७ ॥ उपवासैरिति । योगैः देवताध्यानैः । परिश्रमैः व्रतैः। मोघं निष्फलं यथा भवति तथा । दुर्गतया भाग्यरहितयेतियावत् ॥ ४८—५० ॥ स्थिरं हीति । अनेन दुःखेन अर्पितम् आहतम् मम हृदयं न भिद्यते इति यत्

द्वादश, विवाहानन्तरं द्वादश, पञ्चविंशे वनप्रवेश इति विवेकः । कुत एवं संख्यानिर्णय इति चेत्, रामस्य वनप्रवेशसमये पञ्चविंशतिवर्षत्वात् । तथाहि–विश्वामित्रं प्रति दशरथेन ' ऊनषोडशवर्षो मे रामो राजीवलोचनः ' इत्युक्तस्य ऊनषोडशवर्षत्वस्य द्वादशवर्षे पर्यवसानात् । कुतः ? "बालो द्वादशवर्षोयमकृतास्त्रश्च राघवः " इति तदनुरूपेण रावणं प्रति मारीचेनोक्तत्वात्। पाणिग्रहणसमये रामो द्वादशवार्षिकः, सीतयापि रावणसंन्यासिनं प्रति " उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने " इत्युक्तत्वात् " तत्र त्रयोदशे वर्षे राजामन्त्रयत प्रभुः " इति तयैवोक्तत्वाच्च वनवासारम्भमभिप्रेत्य " मम भर्ता महातेजा वयसा पञ्चविंशकः " इत्युक्तत्वाच्च रामस्य वनप्रवेशः पञ्चविंश इति सिद्धम् ॥ ४५ ॥ तदक्षयमिति । एवं जीर्णापि सापत्न्यकथायोग्यवयोबलक्षयं प्राप्तापि । अक्षयं निरवधिकम् । दुःखं सपत्नीनां विप्रकारं निराकरणं च सहितुं सोढुम् चिरं नोत्सहे ॥ ४६.॥ अपश्यन्तीति । कृपणजीविकां कृपणजीवनम् ॥ ४७ ॥ उपवासैरिति । दुःखं यथा तथा मोघं व्यर्थं संवर्द्धितोसि, यदि विप्रवत्स्यसीति शेषः । दुर्गतया भाग्यशून्यया ॥ ४८ ॥ स्थिरं त्विति । यद्यस्मात् न दीर्यते त्वद्विप्रयोगश्रवणेपीति शेषः ॥ ४९ ॥ ५० ॥ स्थिरं हीति । यस्मात्कारणात् मम हृदयं देहं च अनेन दुःखेन अर्पितं व्याप्तमपि न भिद्यते न द्विधा भवति नावदीर्यते न शकलीभवति तस्मात्

अतः स्थिरं हि नाशरहितमेव । देहं च नावदीर्यत इति यत् अतः आयसम् अयोनिर्मितम्, नूनम् । तथाहि; अकाले अविदितकाले मरणं न विद्यते ध्रुवम् ॥ ५१ ॥ इदं त्विति । इदं वक्ष्यमाणं दुःखं तु पूर्वदुःखेभ्यो विलक्षणम् । तदेवाह यदिति । यस्मान्मे अपत्यकारणात् कृतानि व्रतानि दानानि, संयमाः

इदं तु दुःखं यदनर्थकानि मे व्रतानि दानानि च संयमाश्च हि । तपश्च तप्तं यदपत्यकारणात् सुनिष्फलं बीजमिवोप्त मूषरे ॥ ५२ ॥ यदि ह्यकाले मरणं स्वयेच्छया लभेत कश्चिद्गुरुदुःखकर्शितः । गताहमद्यैव परेतसंसदं विना त्वया धेनुरिवात्मजेन वै ॥५३॥ अथापि किञ्जीवितमद्य मे वृथा त्वया विना चन्द्रनिभाननप्रभ । अनुव्रजिष्यामि वनं त्वयैव गौः सुदुर्बला वत्समिवानुकांक्षया ॥ ५४ ॥ भृशमसुखममर्षिता तदा बहु विललाप समीक्ष्य राघवम् । व्यसनमुपनिशाम्य सा महत् सुतमिव बद्धमवेक्ष्य किन्नरी ॥ ५५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे विंशः सर्गः ॥ २० ॥

ध्यानानि च अनर्थकानि जातानि । "सामान्ये नपुंसकम्" इति नपुंसकत्वम् । तप्तं तपश्च ऊषरे उप्तं बीजमिव सुनिष्फलमासीत् । इदन्तु दुःखमित्यन्वयः ॥ ५२ ॥ 'ध्रुवं ह्यकाले मरणं न विद्यते' इत्येतत् सकार्यं दर्शयति—यदि हीति । यदि लभेत तदाहं परेतसंसदं यमसभां गता स्यामित्यन्वयः ॥ ५३ ॥ अथेति । अथापि अकालमरणाभावेपि । किञ्जीवितं कुत्सितजीवितम् वृथा सुदुर्बला, अधीरेतियावत् । अनुकाङ्क्षया वात्सल्येन ॥ ५४ ॥ भृशमिति ।

आयसम् अयसा निर्मितम् । अतः अकाले ईश्वरनिर्मिताद्व्यतिरिक्तकाले । न विद्यते न लभ्यते ॥५१॥ इदं त्विति । व्रतादीनि अनर्थकानि जातानीति यत् तदिदं महद्दुःखम् । अनर्थत्वे दृष्टान्तः—ऊषरे उप्तम् अत एव सुनिष्फलं बीजमिव ॥ ५२ ॥ यदि हीति । कश्चिदपि गुरुदुःखकर्शितः अकाले स्वेच्छया मरणं यदि लभेत तर्ह्यहं त्वया विना परेतसंसदं यमसभाम् अद्यैव गता स्याम्, तत्तु न लभ्यत इति शेषः ॥ ५३ ॥ अथापीति । अथापि मरणासम्भवेपि त्वया विना मे किञ्जीवितं कुत्सितजीवितम् वृथा अभिकाङ्क्षया वात्सल्येन वत्समनु गौरिव त्वया सह वनं व्रजिष्यामि ॥५४॥ भृशमिति । असुखं दुःखम् । अमर्षिता असहमाना । राघवं समीक्ष्य विललाप, अपि च भावि महद्व्यसनं च रामवियोगमूलं सपत्न्यादिसम्पाद्यम् उपनिशाम्य पर्यालोच्य च सत्यपाशबद्धं सुतं राममवेक्ष्य यथोक्तनिमित्तवती

असुखं दुःखम् । अमर्षिता सोढुमशक्ता । व्यसनं रामविश्लेषभवं व्यसनम् । उपनिशाम्य आलोच्य ॥ ५९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायण भूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥ एवमुपक्रान्तस्य पितृवचनपरिपालनस्य स्थैर्यमस्मिन् सर्गे प्रतिपाद्यते–

तथा तु विलपन्तीं तां कौसल्यां राममातरम् । उवाच लक्ष्मणो दीनस्तत्कालसदृशं वचः ॥ १ ॥ न रोचते ममाप्येतदार्ये यद्राघवो वनम् । त्यक्त्वा राज्यश्रियं गच्छेत् स्त्रिया वाक्यवशं गतः ॥ २ ॥ विपरीतश्च वृद्धश्च विषयैश्च प्रधर्षितः । नृपः किमिव न ब्रूयाच्चोद्यमानः समन्मथः ॥ ३ ॥ नास्यापराधं पश्यामि नापि दोषं तथाविधम् । येन निर्वास्यते राष्ट्राद्वनवासाय राघवः ॥ ४ ॥

तथेति । तत्कालसदृशं कौसल्यादुःखकालोचितम् । एतेन वक्ष्यमाणलक्ष्मणवचनं केवलं कौसल्याशोकशान्त्यर्थम्, नतु सहृदयमिति गम्यते ॥ १ ॥ न रोचत इति । ममापि मह्यमपि । स्त्रियाः कैकेय्याः ॥ २ ॥ ननु नाहं कैकेयीवचनात् गच्छामि, किंतु राजवचनादित्याशङ्क्याह–विपरीत इति । विपरीतः विपरीतवयोधर्मा । तत्र हेतुः वृद्धत्वं विषयप्रधर्षितत्वं च । विषयाः शब्दादयः । ननु परिशुद्धं प्रति शब्दादिविषयाः किंकुर्युरित्यत्राह समन्मथ इति । चोद्यमानः कैकेय्येतिशेषः । इवशब्दो वाक्यालङ्कारे ॥३॥ ननु रामदोषादेवास्तु विवासनम् तत्राह नास्येति । अपराधं राजद्रोहम् । दोषं महा

किन्नरीव विललापेत्यर्थः ॥ ५९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां विंशस्सर्गः ॥२०॥ तथा त्विति । तत्कालसदृशं रामवियोगहेतुकौसल्यादुःखप्रतीकारोचितम् ॥ १ ॥ न रोचत इति । गच्छेदिति यत् तन्ममापि न रोचते ॥ २ ॥ विपरीत इति । विपरीतः विपरीत चेतस्कः । समन्मथः मनोभुवा धर्षितः । आकृष्टः चोद्यमानः, स्त्रियेति शेषः । किमिव न ब्रूयात् अयुक्तशतमपि ब्रूयादेव, अतो न श्रद्धेयमिति भावः ॥ ३ ॥ ननु विवासनस्य कथं राजदोषप्रयुक्तता रामदोषप्रयुक्तैव कस्मान्न स्यादित्यत्राह–नेति । अस्य रामस्य येन हेतुना राघवो निर्वास्यते तथाविधं निर्वासनयोग्यम् । अपराधं राजद्रोहम् दोषं । महापातकम् न पश्यामि ॥ ४ ॥

---

१ राघवः । अहं हनिष्ये पितरं वृद्धं कामवशं गतम् । स्त्रिया युक्तं च निर्लज्जं धर्मायुक्तं नृपं यथा ॥ इत्यधिकः पाठः ।

पातकादिकम्।तथाविधं निर्वासनयोग्यम्॥४॥रामानु०—नेति। अपराधं राजद्रोहम्। दोषं महापातकादिदोषम्। तथाविधं निर्वासनयोग्यम्। एतच्छ्लोकानन्तरं न तं पश्यामीति श्लोकः॥४॥ दोषाभावे किं प्रमाणमित्याशङ्क्य न तावच्छब्द इत्याह—नेति। स्वमित्रोपि सुतरां शत्रुरपि। निरस्तोपि केनचिदपराधेन तिरस्कृतोपि। नरः असुरश्चेद्वदेत् परोक्षमपि प्रत्यक्षे का कथेति भावः। दोषं यं कश्चिदपि उदाहरेत् वदेत्। तं लोके कुत्रापि न पश्यामि ॥ ५ ॥ नाप्यनुमानं प्रत्यक्षं

न तं पश्याम्यहं लोके परोक्षमपि यो नरः। स्वमित्रोपि निरस्तोपि योऽस्य दोषमुदाहरेत् ॥ ५ ॥ देवकल्पमृजुं दान्तं रिपूणामपि वत्सलम्। अवेक्षमाणः को धर्मं त्यजेत् पुत्रमकारणात् ॥ ६ ॥ तदिदं वचनं राज्ञः पुनर्बाल्यमुपेयुषः। पुत्रः को हृदये कुर्याद्राजवृत्तमनुस्मरन् ॥ ७ ॥ यावदेव न जानाति कश्चिदर्थमिमं नरः। तावदेव मया सार्द्धमात्मस्थं कुरु शासनम् ॥८॥ मया पार्श्वे सधनुषा तव गुप्तस्य राघव। कः समर्थोऽधिकं कर्तुं कृतान्तस्येव तिष्ठतः ॥ ९ ॥ निर्मनुष्यामिमां सर्वामयोध्यां मनुजर्षभ। करिष्यामि शरैस्तीक्ष्णैर्यदि स्थास्यति विप्रिये ॥ १० ॥ भरतस्याथ पक्ष्यो वा यो वाऽस्य हितमिच्छति। सर्वानेतान् वधिष्यामि मृदुर्हि परिभूयते ॥ ११ ॥

चेत्याह—देवकल्पमिति। देवकल्पम् "ईषदसमाप्तौ—" इत्यादिना कल्पप्प्रत्ययः। देवसमानं नित्यशुद्धमितियावत्। ऋजुं करणत्रयार्जवयुक्तम् प्रजाच्छन्दानुवर्त्तिनं वा। दान्तं दमितम्, गुरुभिः शिक्षितमित्यर्थः। निगृहीतेन्द्रियं वा। रिपूणां कैकेय्यादीनामपि वत्सलम्। धर्मं धर्मस्वरूपम्। पुत्रं कारणे सत्यपि त्यागानर्हसम्बन्धम्। अवेक्षमाणः पश्यन्। यद्वा धर्ममवेक्षमाणः धार्मिकः अकारणात् दोषं विनापि त्यजेत् ॥६॥ तदिति। बाल्यं बालभावम्, कामपारवश्यमित्यर्थः। राजवृत्तं राजनीतिम् ॥ ७ ॥ यावदिति। शास्यत इति शासनं राज्यम्। आत्मस्थं कुरु स्वाधीनं कुर्वित्यर्थः ॥ ८ ॥ मयेति। तवाधिकं कर्त्तुं तव पौरुषादधिकं पौरुषं कर्त्तुमित्यर्थः ॥९॥ निर्मनुष्यामिति। विप्रिये प्रातिकूल्ये ॥१०॥ भरतस्येति। पक्ष्यः सहायभूतो वर्गः ॥ ११ ॥

अस्तु, रामस्याप्यपराध इत्यत्राह—नेति। स्वमित्रोपि सुतरां शत्रुरपि, निरस्तोपि अपकृतोपि। यः नरः परोक्षमपि असन्निधानेपि। अस्य रामस्य दोषं वदेत् तं न पश्यामि ॥ ५ ॥ देवकल्पमिति। देवकल्पं देवसमानम्, ऋजुम् करणत्रयार्जवयुक्तम्। दान्तं दमितम्, गुरुभिः शिक्षितमित्यर्थः। मातॄणां कैकेय्यादीनामपि विषये वत्सलं स्निग्धम्। धर्मं धर्मविग्रहम् ॥६॥ तदिति। बाल्यं बालभावम्, कामपारवश्यमित्यर्थः। राजवृत्तं प्राचीनराजधर्मम्। अनुस्मरन् आलोचयन् ॥७॥ रामं प्रत्याह—यावदिति। इममर्थम् अस्मत्प्रवासनरूपमर्थम्। कश्चिदपि यावदेव न जानाति तावत् ततः पूर्वमेव। शासनं शास्यत इति शासनम् राज्यम्। आत्मस्थम् आत्माधीनं कुरु ॥ ८ ॥ कथमेवं शक्यमित्यत्राह-मयेति। अधिकं कर्तुं तवाज्ञामतिलङ्घ्याभ्यधिकं कर्तुमित्यर्थः ॥ ९ ॥ निर्मानुष्यमिति। विप्रिये प्रातिकूल्ये ॥ १० ॥ भरत

प्रोत्साहित इति। अमित्रभूतो यदि शत्रुपक्षसहायभूतश्चेदित्यर्थः ॥ १२ ॥ स्वोक्तार्थे धर्मशास्त्रं प्रमाणयति–गुरोरिति । अवलिप्तस्य गर्वितस्य ।

प्रोत्साहितोऽयं कैकेय्या स दुष्टो यदि नः पिता। अमित्रभूतो निस्सङ्गं वध्यतां बध्यतामपि ॥ १२ ॥ गुरोरप्यव लिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ १३ ॥ बलमेष किमाश्रित्य हेतुं वा पुरुषर्षभ । दातुमिच्छति कैकेय्यै राज्यं स्थितमिदं तव ॥ १४ ॥ त्वया चैव मया चैव कृत्वा वैरमनुत्तमम् । कास्य शक्तिः श्रियं दातुं भरतायारिशासन ॥ १५ ॥ अनुरक्तोऽस्मि भावेन भ्रातरं देवि तत्त्वतः। सत्येन धनुषा चैव दत्तेनेष्टेन ते शपे ॥ १६ ॥ दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति । प्रविष्टं तत्र मां देवि त्वं पूर्वमवधारय ॥ १७ ॥ हरामि वीर्याद्दुःखं ते तमः सूर्य इवोदितः। देवी पश्यतु मे वीर्यं राघवश्चैव पश्यतु ॥ १८ ॥ [ हनिष्ये पितरं वृद्धं कैकेय्यासक्तमानसम् । कृपणं च स्थितं बाल्ये वृद्धभावेन गर्हितम्॥ * ॥]एतत्तु वचनं श्रुत्वा लक्ष्मणस्य महात्मनः। उवाच रामं कौसल्या रुदन्ती शोकलालसा ॥ १९ ॥

उत्पथम् अमर्यादाम् ॥ १३ ॥ बलमिति । बलं राजत्वप्रयुक्तबलम् । हेतुं वरदानरूपहेतुं वा ॥ १४ ॥ १५ ॥ अनुरक्त इति । दत्तेन दानेन । इष्टेन

स्येति । पक्षे भवः पक्ष्यः । मित्रम् अन्यो वा योऽस्य हितमिच्छति ॥ ११ ॥ प्रोत्साहित इति । प्रोत्साहितः इतः अस्मद्विवासनार्थम् । निस्सङ्गं निर्विचारम् ॥ १२ ॥ स्वोक्तार्थे धर्मशास्त्रं प्रमाणयति–गुरोरिति । अवलिप्तस्य कामाद्यभिभूतस्य। उत्पथम् अपथम् । शासनं दण्डनम् ॥ १३ ॥ बलमिति । तव स्थितं धर्मतः प्राप्तम् इदं राज्यम् अस्मदभिभवसमर्थम्, किं बलम् त्वदीयराज्यहरणे कं वा हेतुमाश्रित्य कैकेय्यै दातुमिच्छति तदुभयमपि नास्तीत्यर्थः ॥ १४॥१५ ॥ ज्ञातित्वाविशेषात् त्वं वा कथं विश्वासनीय इत्यत्राह–अनुरक्त इति । भावम् अन्तराभिप्रायम् ॥ १६–१९ ॥

स०–एष राजा कैकेय्यै तवोपस्थितं क्लृप्तं राज्यं दातुमिच्छति किल । तत्किं बलमाश्रित्य कैकेय्याः स्वस्य वा । अथवा अतीतानागतज्ञत्वं लक्ष्मणस्य कविरवगमयति–बलमित्यादिना । हे पुरुषोत्तम ! एष राजा कैकेय्यै यद्दातुमिच्छति तत्तवैवोपस्थितम् ॥ १४ ॥ देवि ! भवती पश्यतु राघवश्च पश्यतु । देवीति दीर्घे देवी कैकेयी । राघवो दशरथः ॥ १८ ॥ वृद्धमपि बाल्ये मौर्ख्ये स्थितम् अत एव गर्हितम् । वृद्धभावेन त्वय्युद्रिक्तया भक्त्या " भावो भक्तिरिति प्रोक्तः " इति तात्पर्योक्तिः । हनिष्यामि । पदव्यत्ययेन न मम त्वद्भक्त्येकशरणस्य जनकहननहेतुको व्यत्यय इति कविर्भावमाविष्करोति । कृपणः कदर्यः ॥*॥

देवार्चनादिना ॥ १६–१९ ॥ भ्रातुरिति । श्रुतम् वाक्यजातमितिशेषः । परमधार्मिकराममातृत्वाच्चापलं विहाय यदि रोचते इत्युक्तवती ॥ २० ॥

रामानु०–भ्रातुरिति । श्रुतं वाक्यजातमितिशेषः । यदत्रानन्तरं तत्त्वमित्यत्र यदत्रानन्तरं कार्यमिति पाठः सम्यक् । परमधार्मिकराममातृत्वाच्चापलं विहाय यदि रोचते इत्युक्तवती

भ्रातुस्ते वदतः पुत्र लक्ष्मणस्य श्रुतं त्वया । यदत्रानन्तरं कार्यं कुरुष्व यदि रोचते ॥२०॥ न चाधर्म्यं वचः श्रुत्वा सपत्न्या मम भाषितम् । विहाय शोकसन्तप्तां गन्तुमर्हसि मामितः ॥ २१ ॥ धर्मज्ञ यदि धर्मिष्ठो धर्मं चरितु मिच्छसि । शुश्रूष मामिहस्थस्त्वं चर धर्ममनुत्तमम् ॥२२॥ शुश्रूषुर्जननीं पुत्रः स्वगृहे नियतो वसन् । परेण तपसा युक्तः काश्यपस्त्रिदिवं गतः ॥ २३ ॥ यथैव राजा पूज्यस्ते गौरवेण तथा ह्यहम् । त्वां नाहमनुजानामि न गन्तव्य मितो वनम् ॥ २४ ॥ त्वद्वियोगान्न मे कार्यं जीवितेन सुखेन वा । त्वया सह मम श्रेयस्तृणानामपि भक्षणम् ॥२९॥

"यदि शक्नोषि" इतिवत् ॥ २० ॥ पितृवचनपरिपालकस्य रामस्य लक्ष्मणवचनमसह्यमिति ज्ञात्वाह–न चेत्यादिना ॥ २१ ॥ धर्मज्ञेति । "एभ्यो माता गरीयसी" इतिवचनं हृदि निधायाह–शुश्रूष मामिति ॥ २२ ॥ शुश्रूषुरिति । कश्यपपुत्रेष्वेकः स्वगृहे मातृशुश्रूषारूपमहातपसा त्रिदिवं प्राप्त वानिति गम्यते ॥ २३ ॥ यथेति । नानुजानामि अनुज्ञां न करोमि ॥ २४ ॥ २९ ॥

भ्रातुरिति । अत्रावसरे अनन्तरं कर्तव्यं तत्त्वं कार्यं तत् यदि रोचते तत्कुरुष्व ॥ २० ॥ गुरुवचनं कथं वा न कार्यमित्याशङ्क्य, नैतद्गुरुवचनम् किन्तु सपत्न्या चोक्तमित्याह–न चेति । अधर्म्यं सपत्न्या कैकेय्या । भाषितम् उक्तं वचः श्रुत्वा मां विहाय गन्तुं नार्हसि ॥ २१ ॥ "एभ्यो माता गरीयसी" इति वचनं हृदि निधायाह–धर्मज्ञेति । अतिशयेन धर्मवान् धर्मिष्ठः, धर्मं पितृवाक्यकरणरूपं धर्मम् चरितुमिच्छसि ॥ २२ ॥ शुश्रूषुः शुश्रूषणं कुर्वन्, त्रिदिवं गत इत्यनेन इह लोके पूर्वं मातृशुश्रूषाबलेन प्राजापत्यपदं प्राप्तवानित्यवगन्तव्यम् ॥ २३ ॥ यथेति । नानुजानामि अनुज्ञां न करोमि ॥ २४ ॥ त्वद्वियोगादिति । त्वद्वियोगात

स०–काश्यपो गरुडः । मातुरमृतदानेन त्रिदिवं गतः । कर्मविशेषात्प्रतिबद्धं स्वर्गं साधयामास तपसेति कथा भारतोक्तानुसन्धेया ॥२३॥ "पितुःसहस्रं माता तु गौरवेणातिरिच्यते" इति स्मृतेः । किं राजाज्ञां विहाय त्वदाज्ञाकरणे विनिगमकमिति शङ्कानवकाशः ॥२४॥ त्वद्वियोगान्निमित्ताज्जीवितेन किं कार्यम् ? न किमपीत्यर्थः । इन्द्रियापाटवं चेत् किं जीवितेनेत्यतः सुखेनेति । शोभनेन्द्रियवतेत्यर्थः । तृणानां भक्षणं श्रेय इत्यनेन त्वदवियोगेन पशुत्वमपि ममेष्टमपि ध्वन्यते । हे राम ! मातरि मयि एवं वदन्त्यां भवनं विहाय वनं गच्छामीत्येतत्तव वचनं न युक्तमिति सम्बोधयति–असहममेति । मम सहितः सहममः स न भवतीति असहममः । वेत्युक्तेर्न सहस्य स भावः । अकार्यं जीवितेन नित्यजीवनेन । अकार्यं सुखेन नित्यसुखेन । त्वद्वियोगात्–तव विशिष्टयोगस्त्वद्वियोगः तस्माद्धेतोः त्वया सह मम श्रेयः । मे त्वया असहनेत्यर्थः । मातुर्ममैतच्छ्रेयो भवतीति न चित्रमिति दृष्टान्तमुखेनाचष्टे तृणानामपीति । तृणानां तृणजीवानाम् । भक्षणं भस्य स्वयोग्यमुक्तिस्थानस्य क्षण उत्सवो यस्मिन् तच्छ्रेयो भवति किमु ममेत्यर्थः । "भस्त्वभूमिश्च" इति मेदिनी । "कालविशेषोत्सवयोः क्षणः" इत्यमरः ॥ २९ ॥

यदीति । प्रायं प्रायोपवेशनम्, अनशनदीक्षामिति यावत् ॥ २६ ॥ तत इति । निरयशब्देन दुःखं लक्ष्यते । अधर्मात् पिप्पलादविषये कृतादपकारात् । ब्रह्महत्यामिव ब्राह्मणनिमित्तका हिंसा ब्रह्महत्येति व्युत्पत्त्या पिप्पलादोत्पादितकृत्यया समुद्रस्य प्राप्तं दुःखं ब्रह्महत्येत्युच्यते ।

यदि त्वं यास्यसि वनं त्यक्त्वा मां शोकलालसाम् । अहं प्रायमिहासिष्ये न हि शक्ष्यामि जीवितुम् ॥ २६ ॥ ततस्त्वं प्राप्स्यसे पुत्र निरयं लोकविश्रुतम् । ब्रह्महत्यामिवाधर्मात् समुद्रः सरितां पतिः ॥ २७ ॥ विलपन्तीं तदा दीनां कौसल्यां जननीं ततः । उवाच रामो धर्मात्मा वचनं धर्मसंहितम् ॥ २८ ॥ नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम । प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनम् ॥ २९ ॥ ऋषिणा च पितुर्वाक्यं कुर्वता व्रत चारिणा । गौर्हता जानता धर्मं कण्डुनापि विपश्चिता ॥ ३० ॥

पिप्पलादेन कृत्योत्पादनं च " पिप्पलादसमुत्पन्ने कृत्ये लोकभयंकरि । पाषाणं ते मया दत्तमाहारार्थं प्रकल्पितम् ॥" इति प्रसिद्धम् । साक्षात्समुद्र कर्तृकब्रह्महत्याया अश्रवणादेवं व्याख्यातम् । यद्वा शुश्रूषुरित्यत्र काश्यपः पूर्वजन्मनि मातृशुश्रूषां कृत्वा तत्फलत्वेन दिवं गत्वा प्रजापतित्वं च गत वानिति पुराणकथा । उत्तरत्र समुद्रः किल मातृदुःखजननरूपाधर्माद्ब्रह्महत्यां ब्रह्महत्याप्राप्यनरकविशेषान् प्राप्तवानिति पौराणिकी कथा ॥ २७ ॥ २८ ॥ नास्तीति । शक्तिः उत्साहः । पितृवचनस्य त्वद्वचनापेक्षया प्राथमिकत्वादिति भावः ॥ २९ ॥ मद्विपत्तिकरं कथं करिष्यसीत्यत्राह—ऋषिणे

परं मे जीवितादिना न किञ्चित्कार्यम् यदेवमतस्त्वयेति ॥ २५ ॥ यदीति । प्रायं प्रायोपवेशनम्, अनशनदीक्षामिति यावत् ॥ २६ ॥ तत इति । निरयं दुःखम् । समुद्रः अधर्मात् पिप्पलादमुनिविषयकृतापराधात् । ब्रह्महत्यामिव-ब्राह्मणनिमित्तका हिंसा ब्रह्महत्येति व्युत्पत्त्या पिप्पलादोत्पादितकृत्यया समुद्रप्राप्तं दुःखं ब्रह्महत्येत्युच्यते । पिप्पलादेन कृत्योत्पादनं च–" पिप्पलादसमुत्पन्ने कृत्ये लोकभयङ्करि ! " इति वचनात् समुद्रकर्तृकब्रह्महत्याया अश्रवणादेवं व्याख्यातम् ॥ २७ ॥ २८ ॥ पितृवाक्यमतिक्रमितुं शक्तिर्नास्ति, त्वद्वचसः कर्तव्यत्वेपि पितृवचनस्य प्रथमतः प्राप्तत्वेन प्राबल्याद्युगपदनुष्ठानासम्भवाच्च पितृवचनं प्रथमं कर्तव्यम् ॥ २९ ॥ अपि च पितृवाक्यगौरवेण गोवधमातृवधादिकपि पूर्वैर्महात्मभिः कृतम् । अत्र तु पितृवाक्यकरणात्रो दुःखमात्रं मातुरिति कुतः पितृवचनाकरण

स०–कदाचिज्जनन्यै दुद्रोह समुद्रः । तज्जनिताधर्मात् पिप्पलादनिर्मिताभिचारिकक्रियायाः प्रतिमन्त्रणेन निवारणलक्षणहननाद्ब्रह्महत्या समुद्रेण सम्पादिता । तया चानुबभूव दुःखमिति पौराणिकी कथा । " कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा । अक्लेशजननं प्रोक्तमहिंसा त्विह योगिभिः " इति चतुर्थस्कन्धतात्पर्योक्तेः । अत्र प्रतिमन्त्रणेन पिप्पलादक्लेशजननाद्ब्रह्महत्या समुद्रं प्राप्ता ॥ २७ ॥

त्यादिना॥३०—३२॥ एतैरिति । अक्लीबम् अकातरम्, अक्लिष्टमितियावत् ॥३३॥३४॥ नेति । अपूर्वम् अभिनवम् । अभिप्रेतः अङ्गीकृतमित्यर्थः । सर्व सम्मत इतिवार्थः । तेन चन्द्रकृततारागमनादिव्यावृत्तिः । ननु "दृष्टोधर्मव्यतिक्रमः साहसं च पूर्वेषाम्" इति मातृवधादिकं साहसत्वेन निन्दितमिति चेन्न;

अस्माकं च कुले पूर्वं सगरस्याज्ञया पितुः । खनद्भिः सागरैर्भूमिमवाप्तः सुमहान् वधः ॥३१॥ जामदग्न्येन रामेण रेणुका जननी स्वयम् । कृत्ता परशुनाऽरण्ये पितुर्वचनकारिणा ॥ ३२ ॥ एतैरन्यैश्च बहुभिर्देवि देवसमैः कृतम् । पितुर्वचनमक्लीबं करिष्यामि पितुर्हितम् ॥३३॥ न खल्वेतन्मयैकेन क्रियते पितृशासनम् । एतैरपि कृतं देवि ये मया तव कीर्त्तिताः ॥३४॥ नाहं धर्ममपूर्वं ते प्रतिकूलं प्रवर्त्तये । पूर्वैरयमभिप्रेतो गतो मार्गोऽनुगम्यते ॥३५॥ तदेतत्तु मया कार्यं क्रियते भुवि नान्यथा । पितुर्हि वचनं कुर्वन्न कश्चिन्नाम हीयते ॥ ३६ ॥ तामेवमुक्त्वा जननीं लक्ष्मणं पुनरब्रवीत् । वाक्यं वाक्यविदां श्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥ ३७ ॥ तव लक्ष्मण जानामि मयि स्नेहमनुत्तमम् । विक्रमं चैव सत्त्वं च तेजश्च सुदुरासदम् ॥ ३८ ॥ मम मातुर्महद्दुःखमतुलं शुभलक्षण । अभिप्रायमवि(भि)ज्ञाय सत्यस्य च शमस्य च ॥ ३९ ॥

साहसस्य पितृनियुक्तव्यतिरिक्तविषयत्वात् । व्याख्यातृभिस्तदुदाहरणमज्ञानविजृम्भितम् । "पितुः शतगुणं माता गौरवेणातिरिच्यते" इतितु शुश्रूषामात्रे नतु वचनकरणे, पितुरेव नियन्तृत्वात् । अत एव "माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः" इति वचनेनाप्यविरोधः॥ ३५ ॥ तदिति । तत्तस्मात्कारणात् भुवि कार्यं कर्त्तव्यम्, एतत् पितृवचनं मया त्वन्यथा न क्रियत इति सम्बन्धः । हि यस्मात् पितृवचनं कुर्वन् कश्चिन्न हीयते नाम । नामेति प्रसिद्धौ ॥ ३६ ॥ तामिति । पुनः अनन्तरमित्यर्थः ॥ ३७ ॥ ३८ ॥ ममेति । सत्यस्य धर्मस्य अभिप्रायं रहस्यम् । अविज्ञाय मम मातुः अतुलं

मित्याशयेनाह ऋषिणेत्यादि ॥ ३० ॥ अवाप्तः सुमहान् वधः इत्यनेन प्राणानपि परित्यज्य पितृवाक्यं परिपालनीयम्, किमुत कियत्कालवनवासमात्रेणेत्याशयः ॥ ३१ ॥ परशुना स्वयं कृत्तेति स्वहस्तेनैव छिन्नेत्यर्थः ॥ ३२ ॥ एतैरिति । अक्लीबं कातर्यरहितम् ॥ ३३ ॥ ३४ ॥ नेति । अपूर्वं पूर्वैरनाचरितम्, प्रतिकूलं पूर्वाचारविरुद्धम्, उक्तार्थस्यैवान्वयमुखेन प्रतिपादनं पूर्वैरिति । अभिप्रेतः अङ्गीकृतः ॥३५॥ तदेतदिति । तत्तस्मात्कारणात् । कार्यं कर्तव्यत्वेन प्राप्तमेव, एतत् पितृवाक्यकरणं क्रियते नान्यथा अकृत्यं न क्रियत इत्यर्थः। न कश्चिन्नाम हीयत इति मात्रादेः किञ्चिद्दुःखोत्पादनादिति शेषः ॥ ३६ ॥ तामिति । लक्ष्मणं पुनरब्रवीदिति पुनःशब्द आनन्तर्यवाची ॥ ३७ ॥३८॥ मम मातुरिति । त्वद्दुःखं मम मातुर्दुःखमपि जानाम्येव, अथापि मया तु सत्यस्य शमस्य च अभिप्रायं रहस्यम् ज्ञात्वा

महद्दुःखं जायत इतिशेषः । धर्मरहस्यं जानन्नपि त्वं किमर्थमेवं वदसीतिभावः ॥ ३९ ॥ धर्मतत्त्वमाह–धर्मो हीति । लोके पुरुषार्थेषु धर्मः परमः प्राथमिकः प्रधानभूतः । ततः किमित्यत्राह धर्मे सत्यं प्रतिष्ठितमिति । धर्मैकपर्यवसायि सत्यमित्यर्थः। उत्तमं मातृवचनापेक्षया उत्कृष्टम् । एतत् पितृवचनं च धर्मसंश्रितं धर्मैकफलकम् ॥ ४०॥ एवं सत्यवचनं पितृवचनकरणं च द्वयमपि धर्मनिमित्तमित्युक्तम् । तत्र सत्यस्य कर्त्तव्यत्वमाह–संश्रुत्येति ।



धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् । धर्मसंश्रितमेतच्च पितुर्वचनमुत्तमम् ॥ ४० ॥ संश्रुत्य च पितुर्वाक्यं मातुर्वा ब्राह्मणस्य वा । न कर्त्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठता ॥ ४१ ॥ सोऽहं न शक्ष्यामि पितुर्नियोगमतिवर्तितुम् । पितुर्हि वचनाद्वीर कैकेय्याऽहं प्रचोदितः ॥४२॥ तदेनां विसृजानार्यां क्षत्रधर्माश्रितां मतिम् । धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुगम्यताम् ॥ ४३ ॥ तमेवमुक्त्वा सौहार्दाद्भ्रातरं लक्ष्मणाग्रजः । उवाच भूयः कौसल्यां प्राञ्जलिः शिरसा नतः ॥ ४४ ॥

धर्ममाश्रित्य तिष्ठता धर्मरूपफलमिच्छता ॥ ४१ ॥ पितृवचनकरणस्य कर्त्तव्यत्वमाह–सोहमिति । प्रतिज्ञातवानहमित्यर्थः । नियोगम् आज्ञाम् । पितृवचनत्वाभावं परिहरति पितुर्हीति । पितृवचनकरणं सत्यं च एकैकमेव धर्ममूलं कार्यम् किंपुनर्मिलितमिति भावः ॥ ४२ ॥ एवं सत्यरहस्यमुक्त्वा शमस्य तत्त्वमाह–तदिति । अनार्यां दुष्टाम् पितरमपि हत्वा राज्यं कुर्यामित्येवंरूपाम् । क्षत्रधर्माश्रितां केवलशूरधर्माश्रिताम् । रौद्रशाठ्यसहितक्षत्रधर्माश्रितामितिवार्थः । क्षत्रधर्मस्य तथात्वं प्रतिपादितं महाभारते राजधर्मे–“ क्षत्रधर्मो महारौद्रः शठकृत्य इति स्मृतः ” इति । तादृशीं मतिं विसृज

युष्मद्दुःखहेतुत्वेपि सत्ये प्रवर्त्त्यंते । युष्माभिः सत्यादेः रहस्यमविज्ञाय खिद्यत इत्यर्थः । अथवा मयि स्नेहात्सत्यस्य शमस्य च अभिप्रायं तत्त्वम् अभिज्ञाय त्वद् दुःखं त्वयोक्तं दुःखव्यञ्जकवाक्यम् मम मातुः महद्दुःखं दुस्तरदुःखनिमित्तं भवति, अतस्त्वया एवं न वक्तव्यमितिवार्थः ॥३९॥ धर्मोहि । धर्मः परमः सर्वपुरुषार्थेषु उत्तमः । धर्मे सत्यं प्रतिष्ठितं प्रशस्तं कारणम् । एतदुत्तमं प्रधानम् । अहं पितुर्वचनं धर्मसंस्थितं यथा तथा करिष्ये प्रतिजाने च ॥ ४० ॥ पितृवाक्यकरणस्य मया प्रतिश्रुतत्वान्न लङ्घनीयमित्याह–संश्रुत्योति ॥ ४१ ॥ ४२ ॥ तदिति । अनार्याम् अशुभाम् । पितरमपि हत्वा राज्यं करिष्यामीतिलक्षणां बुद्धिं पितृवाक्याकरणैकपराम्, मद्बुद्धिः पितृवाक्यकरणैकपरा, अनुगम्यतामनुवर्त्त्यताम् ॥ ४३ ॥ ४४ ॥

 

किन्तु धर्ममप्याश्रय, मा तैक्ष्ण्यम् । इतःपरमपि क्रौर्यं माश्रय। मद्बुद्धिः मम बुद्धिः। अनुगम्यताम् अनुवर्त्यताम् । लोकायतवत्केवलनीतिर्नाश्रयणीया किन्तु धर्माश्रिता नीतिरित्यर्थः । अस्मिन् हि शास्त्रे धर्मस्थापनमुच्यते, स्थापनं च धर्ममन्तरेण केवलनीतिरेवार्थसाधनमिति लोकायतमतनिरासेन

अनुमन्यस्व मां देवि गमिष्यन्तमितो वनम् । शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ॥४५॥ तीर्णप्रतिज्ञश्च वनात् पुनरेष्याम्यहं पुरीम् । ययातिरिव राजर्षिः पुरा हित्वा पुनर्दिवम् ॥ ४६ ॥ शोकः सन्धार्यतां मातर्हृदये साधु मा शुचः । वनवासादिहैष्यामि पुनः कृत्वा पितुर्वचः ॥ ४७ ॥ त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया । पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ॥ ४८ ॥ अम्ब संहृत्य सम्भारान् दुःखं हृदि निगृह्य च । वनवासकृता बुद्धिर्मम धर्म्यानुवर्त्यताम् ॥ ४९ ॥ एतद्वचस्तस्य निशम्य माता सुधर्म्यमव्यग्रमविक्लवं च । मृतेव संज्ञां प्रतिलभ्य देवी समीक्ष्य रामं पुनरित्युवाच ॥ ५० ॥ यथैव ते पुत्र पिता तथाहं गुरुः स्वधर्मेण सुहृत्तया च । न त्वानुजानामि न मां विहाय सुदुःखितामर्हसि गन्तुमेवम् ॥ ५१ ॥

प्रवर्तनम् । तेन तत्रतत्र लक्ष्मणमुखेन लोकायते प्रवर्तिते उपन्यस्ते तन्निरासेन रामेण धर्मः स्थाप्यत इति रहस्यम् ॥ ४३–४५ ॥ किं ते मद्वचनं न कर्त्तव्यमित्याशङ्क्य प्रथमप्रवृत्तपितृवचनकरणानन्तरं क्रियत इत्याह—तीर्णप्रतिज्ञ इति । ययातिः स्वर्गात् भ्रष्टः पुनः स्वर्गं गत इति महाभारते प्रसिद्धम् ॥ ४६ ॥ ४७ ॥ न केवलं ममैवायं भारः किन्तु युष्माकमपीत्याह—त्वयेत्यादिश्लोकेन ॥ ४८ ॥ अम्बेति । सम्भारान् पूजाद्रव्याणि ॥ ४९ ॥ एतदिति । अव्यग्रम् अनाकुलम् । "व्यग्रो व्यासक्त आकुलः" इत्यमरः । अविक्लवम् अविह्वलम्, दृढनिश्चयप्रतिपादकमित्यर्थः । मृतेव मूर्च्छितेति यावत् ॥ ५० ॥ यथेति । सुहृत्तया स्नेहेन । एवं सुदुःखितामिति सम्बन्धः ॥ ५१ ॥

शापितासि शपथं प्रापितासि, गमननिरोधं माकुर्विति शेषः ॥४५॥ तीर्णेति । पुरा हित्वा पुनर्दिवं स्वर्गात् भूमौ पतितः, पुनर्भूमिं हित्वा दिवं गतो यथा ॥४६॥४७॥ त्वयेति । पितुः राज्ञो दशरथस्य ॥ ४८ ॥ अम्बेति । सम्भारान् अभिषेकसम्भारान्, संहृत्य विसृज्य, निगृह्य निवार्य, वनवासकृता वनवासाय निश्चिता ॥ ४९ ॥ एतदिति । धर्म्यम् अव्यग्रम् धैर्ययुक्तम् । अविक्लवम् अकातरम् । मृतेव मूर्च्छितेव ॥ ५० ॥ यथेति । स्वधर्मेण पोषणादिना, सुहृत्तया शरीरसम्बन्धेन च ॥ ५१ ॥

ननूक्तं राजनियोगस्त्वयाप्यनुवर्तनीय इति तत्राह–किमिति । लोकेन परलोकेन । स्वधया पितृलोकप्राप्तिसिद्ध्या किं प्रयोजनमित्यर्थः । अमृतेन स्वर्गलोकप्राप्तिसिद्धेनामृतेन किं प्रयोजनम् ? कृत्स्नादपि जीवलोकात् आनन्दहेतुभूतमहर्लोकाद्युपरितनलोकान्तर्वर्तिजीववर्गात्, सन्निहितादिति शेषः ॥ ५२॥ एवं मातृकारुण्येपि धर्म एव स्थिरोऽभूदित्याह–नरैरिति । नरैर्गजग्राहिभिः । उल्काभिः साधनैः अपोह्यमानः निवार्यमाणोपि । अध्वानं मार्गम् । अनु

किं जीवितेनेह विना त्वया मे लोकेन वा किं स्वधयाऽमृतेन । श्रेयो मुहूर्त्तं तव सन्निधानं ममेह कृत्स्नादपि जीवलोकात् ॥ ५२ ॥ नरैरिवोल्काभिरपोह्यमानो महागजोऽध्वानमनुप्रविष्टः । भूयः प्रजज्वाल विलापमेनं निशम्य रामः करुणं जनन्याः ॥ ५३ ॥ स मातरं चैव विसंज्ञकल्पामार्त्तं च सौमित्रिमभिप्रतप्तम् । धर्मे स्थितो धर्म्यमुवाच वाक्यं यथा स एवार्हति तत्र वक्तुम् ॥ ५४ ॥ अहं हि ते लक्ष्मण नित्यमेव जानामि भक्तिं च पराक्रमं च । मम त्वभिप्रायमसन्निरीक्ष्य मात्रा सहाभ्यर्दसि मां सुदुःखम् ॥५५॥ धर्मार्थकामाः किल तात लोके समीक्षिता धर्मफलोदयेषु । ते तत्र सर्वे स्युरसंशयं मे भार्येव वश्याभिमता सुपुत्रा ॥ ५६ ॥

प्रविष्टो महागज इव मात्रादिवाक्येन वार्यमाणोपि धर्ममनुप्रविष्टो रामः भूयः प्रजज्वाल संरब्धोऽभूत्, स्वमार्ग एव स्थितोऽभूदित्यर्थः । अत्र नरैरित्युपमानगतबहुवचनेन पुनः सौमित्रिणापि तथैवोक्तमिति गम्यते । अतएव मातरं सौमित्रिं चेति वक्ष्यते ॥५३॥ स इति । तत्र तस्मिन्धर्मसङ्कटे । अतिकृच्छ्रावस्थायाम् एतादृशधर्मैकनिष्णातपुरुषान्तरस्याभावात् स एवार्हतीति वाल्मीकिः स्तौति ॥ ५४ ॥ अहमिति । अभ्यर्दसि व्यथयसि ॥५५॥ 'धर्मो हि

किमिति । त्वया विना इह लोके किं जीवितेन प्राणधारणेन, लोकेन इतरबन्धुजनेन च ? स्वधया पितृलोकप्राप्तिसिद्ध्या । सुधयेति पाठे–देवभोग्येन वस्तुना च । अमृतेन अपुनर्भवेन च किं प्रयोजनम् ? कृत्स्नाज्जीवलोकादपि सर्वलोकस्थितजीवलोकसान्निध्यादपि मुहूर्तमपि तव सान्निधानं श्रेय इत्यर्थः ॥ ५२ ॥ नरैरिति । रात्रौ उल्काभिः अलातैः अपोह्यमानः उत्सार्यमाणः गजः ध्वान्तम् अभिप्रविष्टो भूत्वा भीत्या यथा बृंहितैः प्रजज्वाल ततोऽभूत् । एवं स्वजनन्याः विलापं निशम्य अभ्यधिकं प्रजज्वाल ॥५३॥ स इति । तत्र धर्मसङ्कटे । रामः यथोवाच तथा वक्तुं स एवार्हति, त्रिष्वपि लोकेषु न कोपीति ऋषिः स्तौति ॥५४॥ अहमिति । अभिप्रायं धर्मैकनिष्ठारूपम् । अभ्यर्दसि खिन्नोसि व्यथयसीति वा ॥ ५५ ॥ धर्मस्य सर्वपुरुषार्थमूलत्वादेकस्यैव धर्मस्यानुष्ठाने धर्मार्थकामानां फलप्राप्तिर्भविष्यतीत्यभिसन्धा

परमो लोके' इत्यादिना पूर्वं सङ्ग्रहेणोक्तं प्रपञ्चयति-धर्मेति। तातेति सान्त्वसम्बोधने। किलेति प्रसिद्धौ। लोक इति मोक्षव्यावृत्तिः। धर्मफलोदयेषु धर्मस्य फलभूतानां सौख्यानामुदयेषु प्राप्तिषु। समीक्षिताः उपायत्वेन निश्चिताः ये धर्मार्थकामाः ते सर्वे तत्र धर्मे स्युः। धर्म एवानुष्ठिते सौख्याति शयप्रदानस्वभावाः सर्वे पुरुषार्थाः सिद्ध्यन्तीति भावः। अत्रार्थे मे असंशयं संशयो नास्ति। अर्थाभावेऽव्ययीभावः। उक्तार्थे दृष्टान्तमाह-भार्ये

यस्मिंस्तु सर्वे स्युरसन्निविष्टा धर्मो यतः स्यात्तदुपक्रमेत।
द्वेष्यो भवत्यर्थपरो हि लोके कामात्मता खल्वपि न प्रशस्ता॥ ५७॥

त्यादि। यथा भार्या वश्या अनुकूला सती धर्मं जनयति, अभिमता प्रिया कामम्, सुपुत्रा सती अर्थम्। सुलक्षणसुलग्नप्रभवपुत्रे जाते हि पितुरर्थाः सिद्ध्यन्तीति तथा सर्वपुरुषार्थानां धर्म एव निदानम्। तथाहि; धर्मो हि धर्महेतुरर्थहेतुः काम्यमानस्रक्चन्दनवनितादिहेतुश्च, अतो धर्म एव समाश्रयणीय इति भावः। यद्वा लोके धर्मादयः फलसाधनत्वेन समीक्षिताः शास्त्रादिभिरवगतास्ते सर्वे तत्र फलोदयेषु स्युः समर्थाः स्युः। मे अशंसयं मया निश्चितमित्यर्थः। यथा उक्तगुणविशिष्टा भार्या फलसाधनं तथेति। अस्मिन् पक्षे अध्याहारादिक्लेशो नास्ति उत्तरश्लोकानुरूप्यं च॥ ५६॥ एवं धर्मादीनां फलसाधनत्वं निर्णीतम् तेष्वविशेषादन्यतमस्याश्रयणीयत्वे प्राप्ते आह-यस्मिन्निति। यस्मिन् कर्मणि आश्रीयमाणे। सर्वे अर्थादयस्त्रयः असन्निविष्टाः न प्रविशन्ति, न सम्भवन्तीति यावत्। किन्तु यतो धर्मः यस्माद्धर्म एव स्यात्तदारभेत। अथवा यस्मिन् कर्मणि सर्वे धर्मार्थकामाः असंनिविष्टाः स्युः अविद्यमाना भवेयुः तत् कर्म नोपक्रमेत। यतः यस्मात्कर्मणः धर्मः स्यात् तदुपक्रमेत। प्रथमयोजनायामर्थकामयोः संनिवेशे को दोष इत्यत्राह द्वेष्य इति। तस्मादर्थकामौ परित्यज्य केवलधर्मपरो भवेदित्यर्थः॥ ५७॥

याह-धर्मेति। धर्मफलोदयेषु धर्मफलभूतानां सौख्यानामुदयेषु प्राप्तिषु ये धर्मार्थकामाः समीक्षिताः खलु कारणत्वेन सम्यग् दृष्टाः खलु। मन्वादिभिरिति शेषः। ते सर्वे धर्मार्थकामाः तत्र तस्मिन्नेव धर्मे असंशयं स्युः त्रयोऽप्यनुष्ठिता भवेयुरिति मे मतमिति। अत्र दृष्टान्तः-भार्येति। एकैव भार्या पूर्वकृतपुण्येन लब्धा भर्तुर्वश्या अनुकूला धर्मं जनयति, अभिमता प्रिया कामं जनयति, सुपुत्रा सती अर्थं सम्पादयति॥५६॥ यस्मिन्निति। यस्मिन् कर्मणि सर्वे धर्मार्थकामाः असन्निविष्टाः स्युः अविद्यमाना भवेयुः तत्कर्म नोपक्रमेत। यतः यस्मात् कर्मणः धर्मः स्यात् तदुपक्रमेत "अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः" इति स्मरणात्। कुत

यतो धर्म एव कर्तव्यः अत आह–गुरुरिति । गुरुः धनुर्वेदनीतिशास्त्राद्युपदेशात् । यदिवेत्येकनिपातो वार्थे । अपिचेतिवत् । धर्मं सत्यप्रतिज्ञत्वरूप मवेक्ष्य तत्परिपालनायेत्यर्थः । यत्कार्यं व्यादिशेत् नियुञ्जीत तत्कर्म अनृशंसवृत्तिः को न कुर्यात्, यो न करोति स केवलं नृशंस इतिभावः ॥ ५८ ॥ स इति । सोहम् अनृशंसोऽहं । पितुः प्रतिज्ञां वरदानहेतुकभरताभिषेकमद्विवासनरूपां प्रतिज्ञामकर्तुं न शक्नोमि । अवश्यं कुर्यामित्यर्थः । तत्र हेतुमाह स

गुरुश्च राजा च पिता च वृद्धः क्रोधात् प्रहर्षाद् यदि वापि कामात् । यद्व्यादिशेत् कार्यमवेक्ष्य धर्मं कस्तं न कुर्यादनृशंसवृत्तिः ॥ ५८ ॥ स वै न शक्नोमि पितुः प्रतिज्ञामिमामकर्तुं सकलां यथावत् । स ह्यावयोस्तात गुरुर्नियोगे देव्याश्च भर्त्ता स गतिः स धर्मः ॥ ५९ ॥ तस्मिन् पुनर्जीवति धर्मराजे विशेषतः स्वे पथि वर्त्तमाने । देवी मया सार्द्धमितोऽपगच्छेत् कथंस्विदन्या विधवेव नारी ॥ ६० ॥ सा माऽनुमन्यस्व वनं व्रजन्तं कुरुष्व नः स्वस्त्ययनानि देवि । यथा समाप्ते पुनराव्रजेयं यथा हि सत्येन पुनर्ययातिः ॥ ६१ ॥

हीति । आवयोः मम भरतस्य चेत्यर्थः । नियोगे गुरुः प्रभुरित्यर्थः । देव्याः कौसल्यायाः । तथा च देव्यापि तद्वचनं नातिक्रमणीयमिति भावः । धर्मः अलौकिकश्रेयस्साधनम् ॥ ५९ ॥ देव्याश्चेत्यस्याशयमुद्घाटयति–तस्मिन्निति । धर्मराजे धर्मप्रवर्त्तके । विशेषतः पूर्वराजापेक्षया विशिष्य । स्वे पथि स्वासाधारणे पथि धर्ममार्गे । वर्त्तमाने स्वमर्यादानतिलङ्घिनीत्यर्थः । तस्मिन् गतिभूते भर्तरि जीवति देवी कृताभिषेका महिषी, सहधर्मचारिणीति यावत् । मया पुत्रेण सह । अन्येव या काचित् स्त्रीव । कथंस्वित् कथं वा वनम् अपगच्छेत्, अभर्तृकाया एव पुत्रेण सह वनगमनमुचितमिति भावः ॥ ६० ॥ सेति । सा जीवद्भर्तृका त्वम् । मा माम् । अनुमन्यस्व अनुजानीहि । इतःपूर्वं वनगमनं प्रति सीताभिप्रायस्यापरिज्ञातत्वात् "दीप्तमग्निं मरण्यं वा यदि रामः प्रवेक्ष्यति । प्रविष्टं तत्र मां देवि त्वं पूर्वमुपधारय ॥" इत्युक्त्या लक्ष्मणाभिप्रायस्य ज्ञातत्वाच्च नः इत्येतदावयोरित्यस्मिन्नर्थे

इत्यत आह द्वेष्य इति । अर्थपरः केवलार्थपरः । कामात्मता केवलकामपरता ॥ ५७ ॥ गुरुरिति । गुरुत्वं धनुर्वेदाद्युपदेशात् ॥ ५८ ॥ स इति । इमां सकलां संपूर्णाम् अकर्तुं न शक्नोमि नियोगे प्रभुरिति शेषः । मातुः स्वेन सह गमननिषेधायाह देव्याश्चेति । भर्तृत्वात्स एवास्या गतिः, न तु पुत्रः । सगतिः सधर्म इति पाठे–तेन सगतिः समानगतिरेषा । सहि तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात्तेन सहवास एवास्या धर्मः, न तु मया सह वास इत्यर्थः ॥ ५९ ॥ ६० ॥ सेति ।

वर्त्तते । "अस्मदो द्वयोश्च" इतिद्विवचने बहुवचनादेशादेवं व्याख्यातम् । एवञ्च सति "अनुज्ञातश्च भवता पूर्वमेव यदस्म्यहम्" इतिवक्ष्यमाणलक्ष्मणवचनं चोपपद्यते । स्वस्त्ययनानि शोभनप्राप्तिप्रार्थनानि । समाप्ते चतुर्दशवर्षाचरणीये व्रते समाप्ते । यथा पुनरागच्छेयं तथा स्वस्त्ययनानि कुरुष्व । पुनरागमने निदर्शनमाह यथेति । स्वर्गाच्च्युतो ययातिः यथा सत्येन सत्यवचनेन । अष्टकादिदौहित्रोक्तसत्यवचनेन पुनः स्वर्गमगच्छत्तथेत्यर्थः ।

यशो ह्यहं केवलराज्यकारणान्न पृष्ठतः कर्तुमलं महोदयम् । अदीर्घकाले न तु देवि जीविते वृणेऽवरामद्य महीमधर्मतः ॥ ६२ ॥ प्रसादयन्नरवृषभः स्वमातरं पराक्रमाज्जिगमिषुरेव दण्डकान् । अथानुजं भृशमनुशास्य दर्शनं चकार तां हृदि जननीं प्रदक्षिणम् ॥ ६३ ॥ इत्यार्षे श्रीरामायणे आदि०ः श्रीमदयोध्याकाण्डे एकविंशः सर्गः ॥२१ ॥

तथोक्तं महाभारते—"आतिष्ठस्व रथं राजन् विक्रमस्व विहायसम् । वयमप्यत्र यास्यामो यत्र लोको भविष्यति ॥" इत्यादिना ॥ ६१ ॥ यश इति । केवलराज्यकारणात् धर्मविरहितराज्यहेतोः । महोदयं महाफलम् यशः पृष्ठतः कर्तुम् उपेक्षितुमहं नालं न समर्थोऽस्मि । किञ्च अदीर्घकाले चञ्चले । जीविते प्राणधारणे । निमित्तसप्तमीयम् । तडिद्वच्चञ्चलजीवितनिमित्तम् अवरां तुच्छप्रयोजनभूतां महीम् अधर्मतो न वृणे न स्वीकरोमि ॥६२॥ प्रसादयन्निति । पराक्रमात् 'राम तस्मादितः शीघ्रं वनं गन्तुं त्वमर्हसि' इत्युक्तकैकेयीप्रेरणात् । अनुजं दर्शनं स्वमतम् अनुशास्य प्रदर्श्यैत्यर्थः । शासिर्द्विकर्मकः । हृदि प्रदक्षिणं चकार, प्रदक्षिणं कर्तुं सङ्कल्पितवानित्यर्थः । लोकप्रसिद्धास्त्रयः पुरुषार्थाः, तेषु सर्वमूलत्वादितरयोः सापायत्वाच्च धर्म एवाश्रयणीय इति स्थापितं भवति ॥ ६३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

समाप्ते चतुर्दशवर्षाचरणीयव्रते समाप्त इत्यर्थः ॥ ६१ ॥ यश इति । केवलराज्यकारणात् धर्मविरहितराज्यहेतोः । महोदयं महाफलम् । यशः प्राप्तराज्यं त्यक्त्वा पितृवाक्यपरिपालनं कृतवानित्येवंरूपं यशः । पृष्ठतः कर्तुं तिरस्कर्तुम्, नालं न शक्नोमि । जीविते अदीर्घकाले सति अवरां तुच्छां महीम् अर्थतो न वृण इति सम्बन्धः ॥ ६२ ॥ प्रसादयन्निति । पराक्रमात् "राम तस्मादितश्शीघ्रं वनं गन्तुं त्वमर्हसि" इत्युक्तकैकेयीप्रेरणात् । अनुजं दर्शनं स्वमतं, धर्मरहस्यमित्यर्थः । अनुशास्य उपदिश्य, तां जननीं प्रदक्षिणं कृत्वा हृदि गन्तुं मनश्चकारेत्यर्थः ॥६३॥ इति श्रीमहे०श्रीरामायणतत्त्व०अयोध्याकाण्डव्याख्यायां एकविंशः सर्गः॥२१॥

सत्य०—पराक्रमात् ल्यब्लोपनिमित्ता पञ्चमी । शौर्यमाश्रित्य । दर्शनं धर्मरहस्यम् । हृदि ध्यायन् प्रदक्षिणं चकार । यद्वा पराक्रमात् परस्याः शत्रुभूतायाः सपत्न्याः अक्रमात् ज्येष्ठे सत्यपि कनिष्ठस्य राज्यदापनप्रयत्नरूपात् ॥ ६३ ॥

अथ रामः सौमित्रेः कैकेयीविषयं रोषमुपशमयति—अथेत्यादिश्लोकद्वयमेकं वाक्यम्। सविशेषमन्तरङ्गजनापेक्षया सातिशयम्। अमर्षितं प्राप्तासहनम्। रोषविस्फारितेक्षणं क्रोधविस्तारितनयनम्। आसाद्य अभिमुखीकृत्य। सुहृत्त्वादिविशेषणं कोपेप्यनुपेक्षणीयत्वाय। सत्त्वं सर्वविषयकं स्वं बलम्। धैर्येण धारयन् अप्रकटयन्। आत्मवान् प्रशस्तमनाः, वश्यमनस्क इत्यर्थः॥१॥२॥ निगृह्येत्युपक्रान्तमिति च श्लोकद्वयमेकान्वयम्। रोषं पित्रादि विष

अथ तं व्यथया दीनं सविशेषममर्षितम्। श्वसन्तमिव नागेन्द्रं रोषविस्फारितेक्षणम्॥ १ ॥ आसाद्य रामः सौमित्रिं सुहृदं भ्रातरं प्रियम्। उवाचेदं स धैर्येण धारयन् सत्त्वमात्मवान्॥ २ ॥ निगृह्य रोषं शोकं च धैर्यमाश्रित्य केवलम्। अवमानं निरस्येमं गृहीत्वा हर्षमुत्तमम्॥३॥ उपक्लृप्तं हि यत्किञ्चिदभिषेकार्थमद्य मे। सर्वं विसर्जय क्षिप्रं कुरु कार्यं निरत्ययम्॥४॥ सौमित्रे योऽभिषेकार्थे मम सम्भारसम्भ्रमः। अभिषेकनिवृत्त्यर्थे सोऽस्तु सम्भार सम्भ्रमः॥ ५ ॥ यस्या मदभिषेकार्थे मानसं परितप्यते। माता मे सा यथा न स्यात् सविशङ्का तथा कुरु॥ ६ ॥

यम्। शोकं मद्विषयम्। रोषशोकयोर्निग्रहे हेतुमाह धैर्यमाश्रित्येति। केवलमिति धैर्यनैरन्तर्यमुच्यते। अवमानम् आरब्धाभिषेकत्यागपूर्वकवनगमनम्। निरस्य निजदौर्बल्यकृतत्वाभावान्निवार्य। उत्तमं हर्षं सत्यपरिपालनेन पितरं तारयिष्याम इति बुद्धिजन्यम्। मेऽभिषेकार्थमुपक्लृप्तं सम्पादितं यत्किञ्चिदलङ्कारादिकं तत्सर्वं विसर्जय। निरत्ययं निरपायं, सत्यपरिपालनोपयुक्तं। कार्यं वल्कलधारणादिकं कुरु॥३॥४॥ सौमित्र इति। सम्भारसम्भ्रमः सम्भारसम्पादनविषयोत्साहः। अभिषेकनिवृत्त्यर्थे अभिषेकनिवृत्तिरूपवनवासार्थे। स सम्भारसम्भ्रमोऽस्तु वनवासोचितसाधनसम्पादनविषयो भवत्वित्यर्थः॥५॥ यस्या इति। मदभिषेकार्थे मदभिषेकप्रयोजनविषये। माता कैकेयी सविशङ्का लक्ष्मणेन सम्मन्त्र्य राज्यं पुनः किं रामो ग्रहिष्यतीति शङ्कावती॥ ६ ॥

अथेत्यादिश्लोकद्वयमेकं वाक्यम्। सविशेषम् सातिशयम्, विस्फारितम् आसाद्य अभिमुखीभूय धैर्येण हेतुना सत्त्वं चित्ताविकृतिम् धारयन्नुवाच॥ १ ॥ २ ॥ निगृह्येत्यादिश्लोकद्वयमेकं वाक्यम्। अवमानं पितृनिमित्तं जातम्। उपक्लृप्तं संभृतम्, निरत्ययं नाशरहितम्, निर्विघ्नमिति यावत्। कार्यं वनवासोपयुक्तवल्कलाद्यानयनरूपं कुर्वित्युवाचेतिपूर्वेण सम्बन्धः॥ ३ ॥ ४ ॥ सौमित्र इति। संभारसम्भ्रमः संभारसंपादनोत्सवः। अभिषेकनिवृत्त्यर्थे-अभिषेकनिवृत्तिः अर्थः प्रयोजनं यस्य स तथोक्तः तस्मिन्। सम्भारसम्भ्रमोऽस्तु वनवासोचितसाधनसम्पादनविषयो भवत्वित्यर्थः॥ ५ ॥ यस्या इति। मदभिषेकार्थे मदभिषेकनिवृत्तिनिमित्तं, मानसं

तस्याः कैकेय्याः । शङ्कामयं शङ्कारूपम् । स्वार्थे मयट् । मातुर्वेति वा ॥ ७ ॥ नेति । मातॄणां पितुर्वा विषये कदाचन कृतं बुद्धिपूर्वमपि विप्रियं न स्मरामि । अबुद्धम् अबुद्धिपूर्वकमपि विप्रियं न स्मरामि ॥ ८ ॥ सत्य इति । सत्यः सत्यवचनः । सत्याभिसन्धः सत्यप्रतिज्ञः । सत्यपराक्रमः अमोघपराक्रमः । परलोकभयात् परलोकसम्बन्धिभयहेतोः, परलोकहानेरितियावत् । निर्भयोऽस्तु प्रतिष्ठितसत्यत्वादिति भावः ॥९॥ तस्येति । तस्य

तस्याः शङ्कामयं दुःखं मुहूर्त्तमपि नोत्सहे । मनसि प्रतिसञ्जातं सौमित्रेऽहमुपेक्षितुम् ॥ ७ ॥ न बुद्धिपूर्वं नाबुद्धं स्मरामीह कदाचन । मातॄणां वा पितुर्वाहं कृतमल्पं च विप्रियम् ॥ ८ ॥ सत्यः सत्याभिसन्धश्च नित्यं सत्यपराक्रमः । परलोकभयाद्भीतो निर्भयोऽस्तु पिता मम ॥ ९ ॥ तस्यापि हि भवेदस्मिन् कर्मण्यप्रतिसंहृते । सत्यं नेति मनस्तापस्तस्य तापस्तपेच्च माम् ॥ १० ॥ अभिषेकविधानं तु तस्मात् संहृत्य लक्ष्मण । अन्वगेवाहमिच्छामि वनं गन्तुमितः पुनः ॥ ११ ॥

दशरथस्यापि । अस्मिन्नभिषेककर्मणि । अप्रतिसंहृते अनिवर्तिते सति । सत्यं नेति मम वरदानविषयसत्यं नेति मनस्तापो भवेत्, तस्य तापः मां तपेत् तापयेदित्यर्थः ॥ १० ॥ अभिषेकेति । अन्वक् अनुपदमेव । " अन्वगन्वक्षमनुगेऽनुपदम् " इत्यमरः । इतः अस्मान्नगरात् ॥ ११ ॥

परितप्यते, सा मे माता कौसल्या यथा चेत् सविशङ्का न स्यात् तथा कुरु । पितृवाक्यपरिपालनस्य रामकर्तव्यस्य अल्पकालसाध्यत्वात् तद्विषये त्वया न विषेत्तव्यमित्युपदेशोनेत्यर्थः । यद्वा यस्या इति मे माता कैकेयीति वार्थः । स्पष्टमन्यत् ॥६॥ कुत इत्यत आह–तस्या इति । तस्याः मनसि प्रतिसञ्जातं शङ्कामयं शङ्कारूपं दुःखम् उपेक्षितुं नोत्सहे ॥७॥ न बुद्धीति । मातॄणां पितुर्वा बुद्धिपूर्वम् अबुद्धम् अबुद्धिपूर्वं वा अल्पमपि विप्रियम् कदाचन कदाचिदपि न कृतं न स्मरामि चेति सम्बन्धः ॥८॥ सत्य इति । सत्यः सत्यविशिष्टः । सत्याभिसन्धः वरदानविषये सत्यप्रतिज्ञः । परलोकभयात् परलोकभयहेतोरसत्यात् ॥९॥ तस्येति । तस्मिन् कर्मणि अप्रतिसंहृते अनिवर्तिते । सत्यं नेति अस्मद्वचनं सत्यं भविष्यति वा नवेति तस्यापि मनस्तापो भवेत् तस्य दशरथस्य तापो मां तपेत् तापयेत् ॥१०॥ अभिषेकेति ।



' सत्य०–तस्याः कौसल्यायाः । मनसि प्रतिसञ्जातं शङ्कामयं जीवन्पुनरागमिष्यति नवेति शङ्कात्मकम् । दुःखम् उदीक्षितुम् उपेक्षितुम् ॥ ७ ॥ परलोकभयाद्भीतः परलोकभयम् आतयति प्रापयतीति परलोकमयात् पापं तस्माद्भीतः ॥ ९ ॥

अभिषेचयिता । लुट्॥१२॥मयीति । स्पष्टम् ॥१३॥ बुद्धिरिति । येन मया इयं बुद्धिः वनवासबुद्धिः। प्रणीता शिक्षिता । मनश्च सुसमाहितं स्थिरीकृतम् । तं मां संक्लेष्टुं क्लेशयितुं नार्हामि, अतः प्रव्रजिष्यामि माचिरं मास्तु विलम्बः॥१४॥ पूर्वसर्गे धर्मोऽस्तीत्युक्तम्, अधुना प्रसङ्गाद्धर्मातिरिक्तं दैवं किञ्चिदस्ति फलप्रदमिति दर्शयन् अस्मत्प्रवासे न कैकेयीनिमित्तम्, अतः सा न निन्दितव्येत्याह–कृतान्त इत्यादिना । कृतान्तः दैवम् ।"कृतान्तो यमसिद्धान्तदैवा

मम प्रव्राजनादद्य कृतकृत्या नृपात्मजा । सुतं भरतमव्यग्रमभिषेचयिता ततः ॥ १२ ॥ मयि चीराजिनधरे जटामण्डलधारिणि । गतेऽरण्यं च कैकेय्या भविष्यति मनस्सुखम् ॥ १३ ॥ बुद्धिः प्रणीता येनेयं मनश्च सुसमाहितम् । तं तु नार्हामि संक्लेष्टुं प्रव्रजिष्यामि माचिरम् ॥ १४ ॥ कृतान्तस्त्वेव सौमित्रे द्रष्टव्यो मत्प्रवासने । राज्यस्य च वितीर्णस्य पुनरेव निवर्तने ॥ १५ ॥ कैकेय्याः प्रतिपत्तिर्हि कथं स्यान्मम पीडने । यदि भावो न दैवोऽयं कृतान्तविहितो भवेत् ॥ १६ ॥

कुशलकर्मसु" इति निघण्टुः । दैवं च प्राक्तनादृष्टमित्येके । ईश्वर एवेत्याचार्याः । द्रष्टव्यः कारणत्वेनेति शेषः । वितीर्णस्य दत्तस्य॥१५॥कृतान्त एवेत्येव कारव्यवच्छेद्यमाह–कैकेय्या इति । दैवः देवीसम्बन्धी कैकेयीसम्बन्धी । अयं भावः अयमभिप्रायः । कृतान्तविहितो यदि न भवेत् तदा मम पीडने

अन्वगेव अनुपदं शीघ्रमेव ॥ ११ ॥ ममेति । अव्यग्रम् अव्याकुलम् ॥ १२ ॥ १३ ॥ बुद्धिरिति । येन मन्थरादिजनेन । इयं बुद्धिः अभिषेकत्यागाध्यवसायः । प्रणीता प्रवर्तिता । तस्मिन् मनश्च सुसमाहितं स्थिरीकृतम् । तं जनमपि । संक्लेष्टुं क्लेशयितुम् । नार्हामि न शक्नोमि । किंपुनः पितरौ । अतः प्रव्रजिष्यामीत्यर्थः । यद्वा बुद्धिरिति, येन पित्रा इयं बुद्धिः प्रणीता अथमभिषेकत्यागाध्यवसायः प्रवृत्तः पितुरनुग्रहादेव तदीयसत्यपरिपालनार्थम् अभिषेकत्यागलक्षणाध्यवसायः प्रवृत्त इति भावः । मनश्च सुसमाहितम् यस्य शिक्षोपदेशाभ्यां मनसः सौगुण्यं जातमित्यर्थः । तं तथाविधं पितरं संक्लेष्टुं सत्यपाशेन संक्लेशयितुं नार्हामि माचिरं शीघ्रं प्रव्रजिष्यामि ॥ १४ ॥ एवं प्रवासं निश्चित्य तत्र कैकेय्या निमित्तत्वशङ्कया क्रुद्धस्य लक्ष्मणस्य क्रोधनिवृत्तये आह–कृतान्त इति । कृतान्तः दैवमेव मत्प्रवासने द्रष्टव्यः, कारणत्वेनेति शेषः । वितीर्णस्य प्राप्तस्य राज्यस्य ॥ १५ ॥ कृतान्तस्त्वेवेत्यवधारणांशमाह–कैकेय्या इति । कृतान्तविहितः कृतः अन्तो येनेति व्युत्पत्त्या कृतान्तशब्देन कालः । तेन विहितः भावः अभिप्रायः न भवेद्यदि मम पीडने कैकेय्याः प्रवृत्तिः अध्यवसायः कथं स्यादिति योजना ॥ १६ ॥

कैकेय्याः प्रतिपत्तिः बुद्धिः कथं स्यात् । पीडनमिति लक्ष्मणबुद्ध्या ॥१६॥ रामानु०–कैकेय्या इति । कृतान्तविहितः कृतः अन्तो येनेति व्युत्पत्त्या कृतान्तशब्देन काल उच्यते । तेन विहितः कालचोदित इत्यर्थः। अयं भावः अयमभिप्रायः । दैवः दैवसम्बन्धी न भवेद्यदि मम पीडने कैकेय्याः प्रतिप्रत्तिः कथं स्यादिति योजना॥१६॥ जानासीति । हे सौम्य ! मातृषु मे अन्तरं भेदः "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये" इति निघण्टुः । यथा न भूतपूर्वं तथा जानासि । तस्या अपि कैकेय्या

जानासि हि यथा सौम्य न मातृषु ममान्तरम् । भूतपूर्वं विशेषो वा तस्या मयि सुतेऽपि वा ॥ १७ ॥ सोभिषेक निवृत्त्यर्थैः प्रवासार्थैश्च दुर्वचैः । उग्रैर्वाक्यैरहं तस्या नान्यद्दैवात्समर्थये ॥ १८ ॥ कथं प्रकृतिसंपन्ना राजपुत्री तथागुणा । ब्रूयात् सा प्राकृतेव स्त्री मत्पीडां भर्तृसन्निधौ ॥ १९ ॥ यदचिन्त्यं तु तद्दैवं भूतेष्वपि न हन्यते । व्यक्तं मयि च तस्यां च पतितो हि विपर्ययः ॥ २० ॥

अपि । मयि वा सुते भरते वा विशेषो यथा न भूतपूर्वः तथा जानासि हि ॥ १७ ॥ स इति । सोऽहम् एवमनुभूततद्वात्सल्योऽहम् । वाक्यैरिति हेतौ तृतीया । दैवादन्यत् बुद्धिभेदकारणं न समर्थये न निश्चिनोमि ॥ १८ ॥ कथमिति । प्रकृतिः साधुस्वभावः । "प्रकृतिः पञ्चभूतेषु स्वभावे मूल कारणे" इति निघण्टुः । प्रकृतिसम्पन्ना साधुस्वभावसम्पन्ना । राजपुत्री महाकुलप्रसूता । तथागुणा पूर्वानुभूतदयादिसद्गुणा । सा कैकेयी प्राकृतेव स्त्री दुष्प्रकृतिका दुष्कुला गुणलेशशून्या क्षुद्रा स्त्रीव । भर्तृसन्निधौ न तु यस्य कस्यचित् सन्निधौ, नतु दूत्यादिमुखेन । मत्पीडां मम निरवधिकस्नेह पात्रस्य पीडां, न त्वप्रियमात्रं कथं ब्रूयात् व्यक्तं वदेत् नतु सूचयेत्, तस्माद्दैवमेवात्र कारणमिति ॥ १९॥ यदिति । यदचिन्त्यम् अचिन्त्यप्रभावं दैवं। तदेव सर्वेष्यपि भूतेषु न हन्यते सर्वत्राप्यप्रतिहतफलप्रदानस्वभावं वर्तते व्यक्तम् अत्र संशयो नास्ति । अतएव हि मयि तस्यांच विपर्ययः वैपरीत्यम् ।

दैवकारणकमेव कैकेय्या भाववैपरीत्यमित्यत्र तस्याः सहजभावं स्मारयति–जानासीति । हे सौम्य ! मातृषु मम अन्तरं वैषम्यं यथा न भूतपूर्वम् तस्याः कैकेय्याः सुते भरते मयि च विशेषः वैषम्यं यथा न भूतपूर्वं तथा जानासि किम् ? अतो दैवकृतं वैषम्यमिति निश्चय इति भावः ॥ १७ ॥ अयमेव मम निश्चय इत्याह स इति । सोऽहमभिषेकनिवृत्तिप्रयोजनैर्वाक्यैश्च तस्या एवं प्रवर्तने दैवादन्यन्न किञ्चिदपि समर्थये कारणतया निश्चिनोमि ॥ १८ ॥ दैवमेतस्या भावभेदहेतुरित्याह– कथमिति। प्रकृतिसम्पन्ना न तु स्वभावदारुणा, तथागुणा एतत्क्षणात्प्रागनुभूतताद्दक्परमकल्याणगुणा च भर्तृसन्निधौ च कथं कुर्यात ? यदि न दैवविहता इति शेषः ॥ १९ ॥ इह विषये न केवलं तस्या एव दैववशत्वम्, ममापीत्याह–यदिति । हि यस्मात् यत्कार्यम् अचिन्त्यम् ईदृग्विधमिति चिन्तयितुमशक्यम् भूतेषु न हन्यते

मयि हस्तगतराज्यभ्रंशरूपः, तस्यां पूर्वस्थितवात्सल्यापगमरूपः । पतितः प्राप्तः ॥ २० ॥ एवं प्रबलमपि दैवं पौरुषेण निवर्त्यतामित्यत्राह–क इति । क्रियत इति कर्म कार्यम् । फलरूपकार्यतोऽन्यत्र यस्य ग्रहणं ज्ञानसाधनम् । न दृश्यते कार्यैकानुमेयं यस्य स्वरूपमित्यर्थः । तेन फलात्पूर्वमज्ञायमानेन दैवेन । कः पुमान् योद्धुमुत्सहते, कस्तं निवारयितुं समर्थ इत्यर्थः ॥२१॥ ननु कर्मणोऽन्यत्रेत्युक्तं किं तत्कर्म तत्राह–सुखदुःखे इति । अत्र भयशब्देन

कश्च दैवेन सौमित्रे योद्धुमुत्सहते पुमान् । यस्य न ग्रहणं किञ्चित् कर्मणोऽन्यत्र दृश्यते ॥ २१ ॥ सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ । यच्च किञ्चित्तथाभूतं ननु दैवस्य कर्म तत् ॥२२॥ ऋषयोप्युग्रतपसो दैवेनाभिप्रपीडिताः । उत्सृज्य नियमांस्तीव्रान् भ्रश्यन्ते काममन्युभिः ॥२३॥ असङ्कलिपतमेवेह यदकस्मात् प्रवर्त्तते । निवर्त्यारम्भमारब्धं ननु दैवस्य कर्म तत् ॥ २४ ॥

शान्तिरुच्यते । भवाभवौ उत्पत्तिविनाशौ । यच्च किञ्चित्तथाभूतम् अचिन्त्यकारणकं लोके दृश्यते । तत्सर्वं दैवस्य कर्म कार्यम् ननु हीत्यर्थः ॥ २२ ॥ दैवप्राबल्यमेव द्रढयति–ऋषय इति । ऋषयः विश्वामित्रादयः। नियमान् व्रतोपवासादीन् । काममन्युभिरिति व्यक्तिबहुत्वात् बहुवचनम् । भ्रश्यन्ते, ऋषित्वादिति शेषः॥२३॥ यच्च किञ्चित्तथाभूतमित्येतद्विशदयति–असङ्कलिपतमिति । इह अस्मिन् लोके । आरब्धम् उपक्रान्तम् । आरम्भं कार्यं निवर्त्य असङ्क

मयि विपर्ययो हस्तगतराज्यभ्रंशरूपः तस्यां पूर्वस्थितवात्सल्यापगमरूपः ॥ २० ॥ ननु कथं दैवस्य प्राबल्यम्, तत्सत्त्वे वा किम्मानम् ? इत्यत्राह–कश्चिदिति । यस्य दैवस्य, ग्रहणं ज्ञानसाधनम् कर्मणः कार्यभूतात् फलात् अन्यत्र न दृश्यते तेन दैवेन को वा योद्धुमुत्सहते तद्दैवं को वा निवारयितुं शक्त इत्यर्थः। अयमर्थः–कर्मणोऽन्यत्र न दृश्यत इत्यनेन दैवस्य नित्यानुमेयतया योद्धुमशक्यत्वात्प्राबल्यम् । अत एव तत्सत्त्वे अनुमानं प्रमाणमित्युक्तमिति ॥ २१ ॥ अतो दैवमेव प्रबलम्, पौरुषं काकतालीयमित्याशयेनाह–सुखदुःखे इति । भवाभवौ बन्धमोक्षौ यच्च किञ्चित् तथाभूतम् अचिन्त्यकारणकं कार्यमस्ति तत्सर्वं दैवस्य ननु कर्म कार्यम् ॥ २२ ॥ दैवप्राबल्यमेव द्रढयति–ऋषय इति । ऋषयः विश्वामित्रादयः, नियमान् इष्टान् दृढनियमान् । भ्रश्यन्ते अभिभूयन्ते । काममन्युभिरितिबहुवचनं व्यक्तिबाहुल्यात ॥ २३ ॥ इदानीं प्रारब्धस्य लक्षणमाह–असङ्कलिपतमिति । इह अस्मिन् लोके । आरब्धम् आरम्भम्, उपक्रान्तं कार्यं निवर्त्य असङ्कलिपतमेव यत्कार्यम् अकस्माद्दृष्टहेतुं विना प्रवर्तते तद्दैवस्य

भूतैर्जनैः अन्यथा न क्रियते तद्दैवं तु दैवकृतमेव, अतः व्यक्तं स्पष्टं मयि तस्यां च विपर्ययः पतितः प्राप्तः

लिपतम् अचिन्तितमेव यत्कार्यम् अकस्मात् झटिति प्रवर्त्तते तद्दैवस्य कर्म ॥२४॥ उपदेशफलमाह–एतयेत्यादिश्लोकद्वयेन । तत्त्वया अबाधितया एतया बुद्ध्या । आत्मानम् अन्तःकरणम् । आत्मना स्वयमेव उपदेशं विनेत्यर्थः । संस्तभ्य निश्चलीकृत्य । स्थितस्य मे अभिषेके व्याहृतेपि परितापो न विद्यते । तस्मात् तत्त्वस्यैवंरूपत्वात् । अनुविधाय अनुसृत्य । आभिषेचनिकीम् अभिषेकप्रयोजनिकां क्रियाम् अलङ्करणादि । प्रतिसंहारय निवर्त्तय॥२५॥२६॥

एतया तत्त्वया बुद्ध्या संस्तभ्यात्मानमात्मना । व्याहृतेऽप्यभिषेके मे परितापो न विद्यते ॥२५॥ तस्मादपरितापः संस्त्वमप्यनुविधाय माम् । प्रतिसंहारय क्षिप्रमाभिषेचनिकीं क्रियाम् ॥२६॥ एभिरेव घटैः सर्वैरभिषेचनसम्भृतैः । मम लक्ष्मण तापस्ये व्रतस्नानं भविष्यति ॥२७॥ अथवा किं ममैतेन राजद्रव्यमतेन तु । उद्धृतं मे स्वयं तोयं व्रतादेशं करिष्यति ॥२८॥ मा च लक्ष्मण सन्तापं कार्षीर्लक्ष्म्या विपर्यये । राज्यं वा वनवासो वा वनवासो महोदयः॥२९॥

एभिरिति । तापस्ये तापसयोग्ये कर्मणीत्यर्थः । अभिषेचनसम्भृतैः अभिषेचनाय सम्पादितैः ॥ २७ ॥ घटस्थजलैः तापस्यव्रतस्नाने क्रियमाणेपि राज्यलिप्सया स्नानं कृतवानिति कैकेय्याः शङ्का माभूदिति स्नानं निषेधति–अथवेति । राजद्रव्यमतेन राजद्रव्यत्वेन सम्मतेन । राज्यद्रव्यमयेनेतिपाठे–राज्यार्थमङ्गलद्रव्यप्रचुरेणेत्यर्थः । व्रतादेशं व्रतनियमम् ॥२८॥ मा चेति । राज्यं वा वनवासो वा उभावपि तुल्यौ । विचार्यमाणे वनवास एव महोदयः महाफलः,

कर्म कार्यं नन्विति योजना ॥ २४ ॥ उपदिष्टं बुद्धियोगमुपसंहरति–एतयेति । तत्त्वया यथार्थया । आत्मानमन्तःकरणम् । आत्मना संस्तभ्य स्वेनैव नियम्य । यदि तिष्ठसि तदा मे अभिषेके व्याहृतेपि परितोषो न विद्यते न भवति ॥ २५ ॥ उक्तानुवादपूर्वकं तत्कालकर्तव्यं नियुङ्क्ते–तस्मादिति । तस्मादुपदिष्टबुद्धियोगबलादपरितापस्सन् त्वमपि मामनुविधाय अनुसृत्य । आभिषेचनिकीं क्रियां तत्प्रयोजनिकीं क्रियाम् । अलङ्कारादिकर्म क्षिप्रं प्रतिसंहारय ॥ २६ ॥ एभिरिति । तापस्ये तापसयोग्ये कर्मणि । अभिषेचनसम्भृतैः घटादिस्थजलैः । व्रतस्नानं व्रतसङ्कल्पापेक्षितं स्नानं भविष्यति ॥२७॥ तापस्यव्रतस्नाने क्रियमाणेपि राज्यलिप्सया स्नानं कृतवानिति कैकेय्याः शङ्का माभूदिति स्नानं निषेधति–अथवेति । राज्यद्रव्यमयेन राज्याभिषेकसाधनमङ्गलद्रव्यप्रचुरेणेत्यर्थः । व्रतादेशं व्रताधिकारं करिष्यति ॥ २८ ॥ मा चेति । राज्यं वा वनवासो वेति राज्यं यथावत्पालनेन धर्मसाधनमस्तु वनवासो वा तपस्साधनमस्तु, तथापि तयोर्मध्ये विशेषोस्तीत्याह वनवासो महोदयः, प्रजानां कृत्याकृत्यचिन्ताद्याक्षेपराहित्येन सततं तपःप्रवृत्तिसाधनत्वात् विशिष्य पितृवाक्यपरिपालनप्रयोजनवत्त्वाच्च महोदयः महाभ्युदय

राज्यव्यापारक्लेशाभावात् अपूर्वदर्शनसौख्याच्चेति भावः ॥२९॥ महता ग्रन्थेनोक्तं संग्रहेण दर्शयति–नेति । यवीयसी कनिष्ठा । कानिष्ठ्यं महिषीत्रया
पेक्षया, न तेऽम्बा मध्यमेत्यत्र मध्यमात्वं सर्वराजपत्न्यपेक्षया। दैवाभिपन्ना दैवाविष्टा। तथाप्रभावं तादृशप्रभावयुक्तम्, अप्रतिहतप्रभावमित्यर्थः ॥३०॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥ पूर्वं दैवस्य प्रबलत्वेन राज्यविपर्यये

न लक्ष्मणास्मिन् खलु कर्मविघ्ने माता यवीयस्यतिशङ्कनीया । दैवाभिपन्ना हि वदत्यनिष्टं जानासि दैवं च तथा-
प्रभावम् ॥ ३० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे द्वाविंशः सर्गः ॥ २२ ॥
इति ब्रुवति रामे तु लक्ष्मणोऽधश्शिरा मुहुः । श्रुत्वा मध्यं जगामेव मनसा दुःखहर्षयोः ॥ १ ॥ तदा तु बद्ध्वा भ्रुकुटीं
भ्रुवोर्मध्ये नरर्षभः । निशश्वास महासर्पो बिलस्थ इव रोषितः ॥२॥ तस्य दुष्प्रतिवीक्षं तद्भ्रुकुटीसहितं तदा। बभौ
क्रुद्धस्य सिंहस्य मुखस्य सदृशं मुखम् ॥ ३ ॥ अग्रहस्तं विधुन्वंस्तु हस्तिहस्तमिवात्मनः । तिर्यगूर्ध्वं शरीरे च
पातयित्वा शिरोधराम् ॥ अग्राक्ष्णा वीक्षमाणस्तु तिर्यग् भ्रातरमब्रवीत् ॥ ४ ॥

न संतापः कार्यः । धर्मस्य सर्वश्रेयस्साधनत्वात् तन्मूलभूते पितृवचनकरणसत्ये अवश्यं कर्त्तव्ये मातृवचनं च पश्चात्तनत्वात्पश्चात्पालनीयमित्येतावत्
सयुक्तिकमुपपादितम् । तत्र पौरुषमेव बलं बलीयः ।दैवबलं तु दुर्बलानुसरणीयम्, धर्मश्चार्थकामाविरोधेन कर्त्तव्य इति पूर्वपक्षं पूर्वं संग्रहेण लक्ष्मणवाक्ये
नोक्तं पुनस्तन्मुखेन प्रपञ्चयन् संग्रहेण सिद्धान्तं च दर्शयति–इतीत्यादिना । रामे मुहुः ब्रुवति सति, लक्ष्मणः स्वानभ्युपगमसूचनायाधश्शिरास्सन् श्रुत्वा
दुःखहर्षयोर्मध्यं धर्मे स्थिरोऽभूदिति हर्षं राज्यं त्यक्ष्यतीतिदुःखं च मनसा जगाम न तु वाचा प्रतिपादितवान् । इवशब्देनास्थिरत्वमुच्यते । उत्तरक्षणे
माध्यस्थ्यत्यागस्य वक्ष्यमाणत्वात् ॥१॥ तदेति । तुशब्देन पूर्वावस्थातो विलक्षणावस्था सूच्यते । भ्रुवोर्मध्ये ललाटे भ्रुकुटीं कृत्वेत्यर्थः। बिलस्थः पेटि
काबिलस्थः नतु वल्मीकस्थः। तदानीं रोषासम्भवात् ॥२॥ तस्येति। दुष्प्रतिवीक्षम् अभिमुखतया दुर्निरीक्षं तस्य मुखम्॥३॥ क्रोधविकारं दर्शयति–

साधनम् ॥ २९ ॥ उपदिष्टं परमप्रयोजनं निगमयति–न लक्ष्मणेति । दैवाभिपन्नाः प्रारब्धग्रस्ताः त्वं च दैवं यथाप्रभावं जानासि, अतो नातिशङ्कनीया ॥ ३० ॥
इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां द्वाविंशः सर्गः ॥ २२ ॥ इति ब्रुवतीति । दुःखहर्षयोर्मध्यं जगाम ।
ज्येष्ठस्य धर्मे धैर्यं दृष्ट्वा किञ्चित्प्रहृष्टः राज्यत्यागं दृष्ट्वा दुःखितश्च, एषा दुःखहर्षयोर्मध्यगतिः ॥ १–३ ॥ अग्रहस्तं विधुन्वन्निति । एवं रामेण क्षमापणाय गृहीत

सत्य०–रोषितः अन्येन कोपं प्रापितः । सर्पनिदर्शनेन शेषात्मकताविशेषं कविरवगमयामासेत्यवसेयम् ॥ २ ॥

अग्रहस्तमित्यादिसार्द्धश्लोकः। अग्रं हस्तस्य अग्रहस्तः। एकदेशसमासः। पूर्वापरादिव्यतिरिक्तस्थलेपि क्वचिदस्ति। अग्रं चासौ हस्तश्च अग्रहस्तः। "हस्तशब्दो हस्तावयवे उपचर्यते" इति वामनः। शरीरे उरसि, अध इत्यर्थः। यद्वा शिरोधराम् शरीरे तिर्यगूर्ध्वं चकारादधश्च पातयित्वा क्रोधातिशयेन विविधं शिरोविधूननं कृत्वेत्यर्थः। अग्राक्ष्णा कटाक्षेण तिर्यग्वीक्षमाणस्सन् अब्रवीत् ॥ ४ ॥ अस्थान इति। धर्मदोषप्रसङ्गेन पितृवचनपरि

अस्थाने सम्भ्रमो यस्य जातो वै सुमहानयम्। धर्मदोषप्रसङ्गेन लोकस्यानतिशङ्कया ॥ ५ ॥
कथं ह्येतदसम्भ्रान्तस्त्वद्विधो वक्तुमर्हति। यथा दैवमशौण्डीरं शौण्डीर क्षत्रियर्षभ ॥ ६ ॥

पालनरूपधर्महानिप्रसक्त्या। लोकस्य अनतिशङ्कया अतिशङ्कापरिहाराय मयाऽननुष्ठिते लोको धर्मं त्यजतीति शङ्कापरिहाराय चेत्यर्थः। एवंविधकार्यद्वयार्थं यस्य प्रसिद्धस्य ते जातोऽयं सुमहान् सम्भ्रमः वनगमनत्वरा, अस्थाने अनवकाशे अयुक्त इत्यर्थः। "अवकाशे स्थितौ स्थानम्" इत्यमरः ॥ ५ ॥ तथात्वमेवोपपादयति–कथमित्यादिना। हे शौण्डीर समर्थ! दैवमपि निराकर्त्तुं क्षमेत्यर्थः। क्षत्रियर्षभ क्षत्रियश्रेष्ठ! त्वं अशौण्डीरमशूरम् एतत् दैवं यथा समर्थं वदसि एवमसम्भ्रान्तस्त्वद्विधः कथं वक्तुमर्हति? न कथमपि। अशूरः संभ्रान्तः क्षत्रबन्धुरेवासमर्थं दैवमनुसर्तुमर्हतीत्यर्थः। अस्थान इत्यादिश्लोकद्वयस्यैवं वार्थः–धर्महानिप्रसक्त्या लोकस्यानातिशङ्कया आनतिः पूजा, तद्विषये शङ्कया लोको मामधार्मिष्ठ इति न पूजयेदितिशङ्कयेत्यर्थः। यस्य ते अयुक्तः सुमहान् सम्भ्रमो भ्रान्तिः जातः धर्महानिर्लोकानत्यभावो वा सर्वातिशायिनस्ते किं करिष्यतीति

स्सन्नित्यर्थः। तिर्यगूर्ध्वमिति। शिरोधरां ग्रीवाम् तिर्यगूर्ध्वं शरीरे चकारादधश्च पातयित्वा क्रोधातिशयेन शिरोधूननं कृत्वेत्यर्थः। अग्राक्ष्णा कटाक्षेण तिर्यग्वीक्षमाणः ॥ ४ ॥ अस्थान इति। धर्मदोषप्रसङ्गेन धर्मः पितृवचनपरिपालनम् दोषः तस्याकरणम् प्रसङ्गेन प्राप्त्या, धर्महानिप्रसक्त्येत्यर्थः। हेतुना लोकस्य अनतिशङ्कया पितृवचनमकुर्वन् अस्मान् कथं रक्षिष्यतीतिशङ्का, तदभावोऽनतिशङ्का तया च हेतुना यस्येति सुमहान् सम्भ्रमः वनगमनत्वराजातः, अयमयुक्तः भ्रान्तिमूल एवेत्यर्थः ॥ ५ ॥ तथात्वमेवाह–कथमिति। अशौण्डीरम् असमर्थम् अकिञ्चित्करमेव दैवं प्रबलमिति यथा त्वं वदसि, एवं शौण्डीरः

सत्य०–लोकस्यानतिशङ्कया रामः पितृवचनं नाकरोदिति लोकशङ्का माभूदिति बुद्ध्या। अस्थाने अविषये वनवासादौ। यः सम्भ्रमो जातः अयं धर्मदोषप्रसङ्गेन तद्विरोधप्रसक्त्या अस्थाने अयुक्त इत्यावृत्तेनान्वयः॥ ५॥



१ शौण्डीरः क्षत्रियर्षभः। इति तीर्थीयपाठः।

भावः । भ्रमसद्भावं व्यतिरेकमुखेन द्रढयति—कथमिति ॥ ६ ॥ दैवालम्बनस्य भ्रमत्वमुपपादयति—किमिति । कृपणं " बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः " इत्युक्तरीत्या दुर्बुलैकपरिग्राह्यतया शोच्यम् । अशक्तं शक्तिहीनं पौरुषं तिरस्कृत्य कार्यकरणाक्षमम् । दैवं किन्नाम अभिशंससि अभिष्टौषि । अशक्तत्वादेव न कार्यानुमेयो दैवसद्भावः । असद्भावादेव तदवलम्बनं ते भ्रम इत्यर्थः । एवं दैवकृतस्यानातिलङ्घनीयत्वं परि



किन्नाम कृपणं दैवमशक्तमभिशंससि । पापयोस्ते कथं नाम तयोः शङ्का न विद्यते ॥ ७ ॥ सन्ति धर्मोपधाः श्लक्ष्णा धर्मात्मन् किं न बुध्यसे । तयोः सुचरितं स्वार्थं शाठ्यात् परिजिहीर्षतोः ॥ ८ ॥ यदि नैवं व्यवसितं स्याद्धि प्रागेव राघव । तयोः प्रागेव दत्तश्च स्याद्वरः प्रकृतश्च सः ॥ ९ ॥

हृतम्, पितृवाक्यपरिपालनरूपधर्मदोषप्रसङ्गं परिहरति पापयोरिति । पापयोः कैकेयीदशरथयोर्विषये । ते शङ्का पापित्वशङ्का कथंनाम न विद्यते पापिनौ तौ त्वयि पापं कर्तुमिच्छतः, अतस्तद्वचनाकरणे न धर्महानिरितिभावः ॥ ७ ॥ ननु धर्मिष्ठयोस्तयोः कथं पापित्वशङ्केत्यत्राह—सन्तीति । धर्मः उपधा व्याजो येषां ते धर्मोपधाः । श्लक्ष्णाः धर्माचरणकञ्चुकेन स्वदोषपिधानचतुराः,सन्ति लोक इतिशेषः । हे धर्मात्मन् धर्मैकप्रवणस्वभाव ! शाठ्याद्गूढविप्रियकारित्वात् । स्वार्थम् अभिषेकरूपमस्मत्प्रयोजनं । परिजिहीर्षतोः परिहर्तुमिच्छतोः तयोः कैकेयीदशरथयोः सुचरितं सुष्ठु मन्त्रितं किं न बुध्यसे॥८॥ विपर्ययेऽनिष्टं प्रसञ्जयति—यदीति । हे राघव ! प्रागेव अभिषेकात्पूर्वमेव । एवम् उक्तप्रकारेण । तयोः कैकेयीदशरथयोः । व्यवसितं निश्चयः । यदि

दैवमपि निराकर्तुं समर्थः । कश्चित्त्वद्विधः क्षत्रियर्षभो यद्यसम्भ्रान्तः स्यात्तथासौ कथमेतद्वक्तुमर्हति, न कथमपि ॥ ६ ॥ किन्नामेति । अतः कृपणं दीनं, स्वापेक्षार्थ करणे पुरुषान्तरं प्रार्थयमानमित्यर्थः । अशक्तम् स्वयं पुरतः स्थित्वा यत्किञ्चित्कर्तुमसमर्थम् दैवपदार्थं प्राकृतवद किन्नाभिशंससि । एवं दैवालम्बनवादं प्रतीक्ष्य धर्मदोषप्रसङ्गं परिहरति पापयोरिति । पापात्मनोस्तयोः कैकेयीदशरथयोर्विषये ते कथं नाम शङ्का पापात्मकत्वशङ्का न विद्यते । पापयोस्तयोर्वाक्याकरणे निर्दुष्टस्य ते धर्महानिप्रसक्तिर्नास्तीति भावः ॥ ७ ॥ ननु, धर्मावलम्बनव्यवहारयोस्तयोः कथं पापशङ्काप्रसक्तिः ? तत्राह—सन्तीति । धर्मोपधाः धर्मः उपधा व्याजश्छलो येषां ते, तथा श्लक्ष्णाः धर्माचरणकञ्चुकेन स्वदोषपिधानचतुरास्सन्ति । लोक इति शेषः । हे धर्मात्मन धर्मैकप्रवणस्वभाव ! शाठ्यात् गूढविप्रियकारित्वात् स्वार्थम् अभिषेकमस्मत्प्रयोजनं परिजिहीर्षतोः परिहर्तुमिच्छतोः तयोः कैकेयीदशरथयोः सुचरितं सुष्ठु मन्त्रितं किं न बुध्यस इति योजना ॥ ८ ॥ यदीति । हे राघव ! एवं यदि शाठ्येन त्वदर्थहरणं प्रागेवाभिषेकप्रस्तावात्पूर्वस्मिन् क्षण एव तयोस्ताभ्यां न व्यवसितं न सङ्केतितं यदि स्यात् तर्हि स वरः प्रागेव अस्मात्कालात्पूर्वं

न स्यात् तदा प्रकृतः पूर्वमेव प्रसक्तः स वरश्च प्रागेव दत्तः स्यात्। किंचेति चार्थः। अयंभावः—भरतायावश्यं राज्यं देयम्, रामस्य ज्येष्ठत्वेन तद्विषयोऽभिषेक आरभ्यते तदानीं त्वया वरद्वयं प्रष्टव्यं तद्व्याजेन रामो विवास्यते भरतोभिषिच्यत इति कैकेयीदशरथाभ्यां सङ्केतितम्। अन्यथा सा वरद्वयं किमेतावत्पर्यन्तं न याचेत, अयाचितमपि तत् नीतिज्ञो राजा वा कुतो न पूर्वमेव परिहरेदिति ॥ ९ ॥ अस्तु तथा, ततः किमित्यत्राह—लोकविद्विष्ट

लोकविद्विष्टमारब्धं त्वदन्यस्याभिषेचनम्। नोत्सहे सहितुं वीर तत्र मे क्षन्तुमर्हसि ॥१०॥ येनेयमागता द्वैधं तव बुद्धिर्महामते। स हि धर्मो मम द्वेष्यः प्रसङ्गाद्यस्य मुह्यसि ॥ ११ ॥ कथं त्वं कर्मणा शक्तः कैकेयीवशवर्त्तिनः। करिष्यसि पितुर्वाक्यमधर्मिष्ठं विगर्हितम् ॥ १२ ॥ यद्ययं किल्बिषाद्भेदः कृतोऽप्येवं न गृह्यते। जायते तत्र मे दुःखं धर्मसङ्गश्च गर्हितः ॥ १३ ॥ [ तवायं धर्मसंयोगो लोकस्यास्य विगर्हितः। ]

मिति। लोकविद्विष्टं ज्येष्ठं परित्यज्य कनिष्ठस्याभिषेचनात्। लोकविद्वेषविषयमित्यारम्भक्रियाविशेषणम्। मे तत्र असहनविषये क्षन्तुमर्हसि ॥ १० ॥ यथाकथञ्चित् पितृवचनं कर्त्तव्यमेवेति मन्वानं रामं प्रत्याह—येनेति। इयं ते बुद्धिः येन पितृवचनपरिपालनरूपधर्मेण। द्वैधं भेदम्। आगता प्राप्ता। नाभिषिच्ये वनं प्रवेक्ष्यामीति। यस्य प्रसङ्गात्प्रस्तावात् मुह्यसि अकरणे प्रत्यवायः स्यादिति मोहं प्राप्नोषि, स धर्मो मम द्वेष्यः ॥ ११ ॥ मोहं विशदयति—कथमिति। कर्मणा पौरुषकर्मणा, शक्तः प्रतीकारसमर्थ इत्यर्थः। त्वं कैकेयीवशवर्तित्वादेवाधर्मिष्ठं विगर्हितं च वाक्यं कथं केनप्रकारेण मोहं विना करिष्यसि ॥ १२ ॥ त्वन्मोहादेव मे दुःखमित्याह—यदीति। अयं भेदः अभिषेकविघातात्मा विपर्यासः। किल्बिषात् मृषावरकल्पनात्। कृतोपि

काल एव दत्तश्च भवेत्। हि यस्मात् प्रकृतश्च सः पुरैव प्रवृत्तः स वरः। अयं भावः—पूर्वं यदि वरप्रतिज्ञा तदानीमेव वरदानं युक्तम् इदन्तु विरुद्धम् तदानीं वरप्रक्रमः प्रक्रान्तस्य वरस्य दशरथ एव स्थापनम् अत्रावसरे तस्य विनियोग इति, तस्माद्वरप्रदानं सत्यमिति न मन्य इति ॥ ९ ॥ लोकविद्विष्टमिति। ज्येष्ठं परित्यज्य कनिष्ठस्याभिषेचनाल्लोकद्वेषविषयम्। तत्र मे तद्विषयकं मम प्रतिवचनापराधम् ॥ १० ॥ येनेति। येन पितृवचनपरिपालनरूपधर्मेण द्वैधमागता पूर्वं राज्याङ्गीकारः इदानीं वनगमनाङ्गीकार इत्येवं भेदं प्राप्ता, यस्य प्रसङ्गात् मुह्यसि अकरणे प्रत्यवायः स्यादितिमोहं प्राप्नोषीत्यर्थः। स धर्मो मम द्वेष्यः ॥ ११ ॥ कथमिति। कर्मणा शक्तः प्रतीकारकर्मणा ॥ १२ ॥ यद्ययमिति। अयं भेदः अभिषेककार्यविघातः किल्बिषात् कपटात् कृतोपि, ताभ्यामिति शेषः। एवंविधः किल्बिषकृत इति, यदि यतः कारणात् न गृह्यते, त्वयेतिशेषः। तत्र तस्माद्धेतोः मे दुःखं जायते कपटकृतमप्यर्थं श्रीरामः साधुतया गृह्णातीति मे व्यथा जायते

एवं किल्बिषकल्पित इति यदि न गृह्यते । तत्राग्रहणनिमित्ते । मे दुःखं जायते । धर्मसङ्गश्च एतादृशधर्मसङ्गश्च विगर्हितः ॥ १३ ॥ तस्मात् मनसापि तन्न कर्त्तव्यमित्याह–मनसेत्यादिना ॥१४॥ मम विवासनं दैवकृतम् नतु कैकेयीकृतमिति पूर्वं रामोक्तमनूद्य परिहरति–यद्यपीत्यादिना । तयोः पित्रोः प्रतिपत्तिः अभिषेकविघटनविषया बुद्धिः । दैवी चापि दैवकृतैवेति ते मतम्, यद्यपि तथापि ते त्वया तत् उपेक्षणीयम् । तदपि दैवमपि मम न रोचते ॥ १५ ॥ उपेक्षणीयतायां हेतुमाह–विक्लव इति । विक्लवः कातरः । वीर्यहीन इत्यस्य प्रतियोगितयोक्तं वीरा इति । विक्लव इत्यस्य प्रतियोगितयोक्तं

मनसापि कथं कामं कुर्यास्त्वं कामवृत्तयोः । तयोस्त्वहितयोर्नित्यं शत्र्वोः पित्रभिधानयोः ॥ १४ ॥ यद्यपि प्रतिपत्तिस्ते दैवी चापि तयोर्मतम् । तथाप्युपेक्षणीयं ते न मे तदपि रोचते॥ १५॥ विक्लवो वीर्यहीनो यः स दैवमनुवर्त्तते । वीराः सम्भावितात्मानो न दैवं पर्युपासते ॥ १६ ॥ दैवं पुरुषकारेण यः समर्थः प्रबाधितुम् । न दैवेन विपन्नार्थः पुरुषः सोऽवसीदति ॥१७॥ द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरुषस्य च । दैवमानुषयोरद्य व्यक्ता व्यक्तिर्भविष्यति ॥ १८ ॥ अद्य मत्पौरुषहतं दैवं द्रक्ष्यन्ति वै जनाः । यद्दैवादाहतं तेऽद्य दृष्टं राज्याभिषेचनम् ॥ १९ ॥

संभावितात्मान इति । संभावितः सम्यक् प्रापितः दृढ इतियावत् । आत्मा मनो येषां ते तथा, धीरा इत्यर्थः । नोपासते नाश्रयन्ति ॥ १६ ॥ कुतो नाश्रयन्तीत्यपेक्षायां पौरुषवतो दैवेन प्रयोजनहान्यभावादित्याह–दैवमिति । पुरुषकारेण पुरुषबलेन । दैवं बाधितुम् अतिक्रम्य वर्त्तितुम् यः समर्थः स दैवेन विपन्नार्थः विहतप्रयोजनः सन् नावसीदति न क्लिश्यति ॥ १७ ॥ पुरुषकारापेक्षया दैवस्य दुर्बलत्वे प्रत्यक्षं प्रमाणयति–द्रक्ष्यन्तीति । पौरुषं सामर्थ्यम् । व्यक्तिः प्रबलदुर्बलविवेकः । व्यक्ता स्फुटा भविष्यति ॥ १८॥ तदेव स्पष्टमाह–अद्येति । यद्दैवात् यस्माद्दैवात् । आहतं विघ्नितम् । ते राज्याभिषेचनं दृष्टं तद्दैवं मत्पौरुषहतं द्रक्ष्यन्ति ॥ १९ ॥

इत्यर्थः । किञ्च धर्मसङ्गश्च गर्हितः एवंविधधर्माचरणं लोकविरुद्धमित्यर्थः ॥ १३ ॥ १४ ॥ यद्यपीति । तयोः पित्रोः प्रतिपत्तिः अभिषेकविघटनविषया बुद्धिः दैवी चापि दैवकृतैवेति ते मता, यद्यपि तथापि ते त्वया उपेक्षणीयम् तदपि दैवमपि मे न रोचत इति योजना ॥ १५ ॥ विक्लव इति । सम्भावितात्मानः सर्वलोकोपश्लाघनीययशोवीर्यादिमन्तः ॥ १६ ॥ दैवमिति । पुरुषकारेण पौरुषेण न दैवेनेति । विपन्नार्थः हतप्रयोजनः ॥ १७ ॥ द्रक्ष्यन्तीति । दैवस्य च पौरुषस्य च । पौरुषं शौर्यम् । व्यक्तिः प्रबलदुर्बलविवेकः । व्यक्ता स्फुटा भविष्यति ॥ १८ ॥ अद्येति । अभिषेचनं यद्दैवात् यस्माद्दैवादाहतं विघ्नितं सत् दृष्टं तद्दैवं

अत्यङ्कुशमिति । अत्यङ्कुशम् अतिक्रान्ताङ्कुशव्यापारम् । उद्दामं छिन्नानिगलम् । मदबलोद्धतं मदबलाभ्यां गर्विष्ठम् । प्रधावितं दुर्निवारं स्वच्छन्दगमनं गजमिव दुर्निवारत्वेन त्वदभिमतं दैवं पौरुषेण निवर्तये ॥२०॥ लोकपाला इति । ते प्रसिद्धाः । हे राम! ते तवाभिषेचनमिति वा । न विहन्युः न विहन्तुं शक्ताः । कृत्स्नाः अन्यूनाः॥२१॥ राजत्वं सिद्धवत्कृत्याह–राजन्निति । मिथः रहसि । "मिथोन्योन्यरहस्ययोः" इति वैजयन्ती । तथा त्वां प्रत्युक्तप्रकारेण ॥२२॥

अत्यङ्कुशमिवोद्दामं गजं मदबलोद्धतम् । प्रधावितमहं दैवं पौरुषेण निवर्त्तये ॥ २० ॥ लोकपालास्समस्तास्ते नाद्य रामाभिषेचनम् । न च कृत्स्नास्त्रयो लोका विहन्युः किं पुनः पिता ॥ २१ ॥ यैर्विवासस्तवारण्ये मिथो राजन् समर्थितः । अरण्ये ते विवत्स्यन्ति चतुर्दश समास्तथा ॥ २२ ॥ अहं तदाशां छेत्स्यामि पितुस्तस्याश्च या तव । अभिषेकविघातेन पुत्रराज्याय वर्तते ॥ २३ ॥ मद्बलेन विरुद्धाय न स्याद्दैवबलं तथा । प्रभविष्यति दुःखाय यथोग्रं पौरुषं मम ॥ २४ ॥ ऊर्ध्वं वर्षसहस्रान्ते प्रजापाल्यमनन्तरम् । आर्यपुत्राः करिष्यन्ति वनवासं गते त्वयि ॥ २५ ॥ पूर्वं राजर्षिवृत्त्या हि वनवासो विधीयते । प्रजा निक्षिप्य पुत्रेषु पुत्रवत्परिपालने ॥ २६ ॥

अहमिति । तत्तस्मात् या तवाभिषेकविघातेन द्वारेण पुत्रराज्याय वर्तते प्रवर्तते । तस्याः पितुश्च आशाम् अतितृष्णाम् " आशा दिगतितृष्णयोः " इति वैजयन्ती ॥ २३ ॥ मद्बलेनेति । मद्बलेन विरुद्धाय जनाय । ममोग्रं पौरुषं दुःखाय यथा प्रभविष्यति तथा दैवबलं न स्यात् सुखाय न भवेत् ॥२४॥ न कदाचिदपि भरतस्य राज्यप्राप्तिरस्तीत्याह–ऊर्ध्वमिति । ऊर्ध्वमित्यस्य विवरणं वर्षसहस्रान्त इति । प्रजापाल्यं प्रजापालनम् । स्वार्थे यत्प्रत्ययः । ऊर्ध्वं वर्षसहस्रान्ते त्वयि वनं गते सति वानप्रस्थाश्रमस्थे सति अनन्तरं प्रजापाल्यम् आर्यस्य ते पुत्राः करिष्यन्ति ॥ २५ ॥ मदुक्त

मत्पौरुषहतं जना द्रक्ष्यन्ति ॥ १९ ॥ अत्यङ्कुशमिति । अत्यङ्कुशम् अतिक्रान्ताङ्कुशव्यापारम्, उद्दामम् उत्कृष्टदामम्, विशृङ्खलमित्यर्थः । प्रधावितम् आभिमुख्येनागतम् ॥ २० ॥ २२ ॥ यैरिति । मिथः रहस्ये ॥ २२ ॥ अहमिति । तदाशां तामाशाम् ॥ २३ ॥ मद्बलेनेति । मद्बलेन, विरुद्धाय विरुद्धजनस्य उग्रं मम पौरुषं यथा दुःखाय प्रभविष्यति तथा दैवबलं तस्य न स्यात् तथा सुखाय न प्रभविष्यतीत्यर्थः ॥ २४ ॥ न कदाचिदपि भरतस्य राज्यप्राप्तिरस्तीत्याह–ऊर्द्ध्वमिति । वर्षसहस्रान्ते त्वयि वनवासं प्राप्ते सतीत्यर्थः । प्रजापाल्यं प्रजापालनम् । आर्यपुत्राः आर्यस्य तव पुत्राः, तदानीमपि राज्यपरिपालने नान्यस्यावकाश इत्यर्थः ॥ २५ ॥ स्वोक्तवनवासः अशेषजनसम्मत इत्याह–पूर्वराजर्षिवृत्त्येति । पुत्रवत् प्रजापालननिमित्तम् प्रजाः पुत्रेषु निक्षिप्य पश्चाद्धि वनवासः । पूर्व

एव वनवासः पूर्वसम्मत इत्याह–पूर्वेति । पुत्रेषु प्रजाः पुत्रवत्परिपालने परिपालननिमित्तं निक्षिप्य । पूर्वराजर्षिवृत्त्या तदाचारेण वनवासो विधीयते ॥ २६ ॥ स चेत्यादिश्लोकद्वयमेकान्वयम् । हे राम ! स त्वं राजनि दशरथे एवमनेकाग्रे चलचित्ते अव्यवस्थितचित्ते सति । राज्यविभ्रमशङ्कया राज्यस्य विविधचलनशङ्कया । आत्मनि राज्यं नेच्छसि चेदहं तव राज्यं च रक्षेयम् । कथमिव ? वेला सागरमिव । नोचेद्वीरलोकभाक् माभूवम् । ते

स चेद्राजन्यनेकाग्रे राज्यविभ्रमशङ्कया । नैवमिच्छसि धर्मात्मन् राज्यं राम त्वमात्मनि ॥२७॥ प्रतिजाने च ते वीर माभूवं वीरलोकभाक् । राज्यं च तव रक्षेयमहं वेलेव सागरम् ॥ २८ ॥ मङ्गलैरभिषिञ्चस्व तत्र त्वं व्यापृतो भव । अहमेको महीपालानलं वारयितुं बलात् ॥ २९ ॥ न शोभार्थाविमौ बाहू न धनुर्भूषणाय मे । नासिराबन्धनार्थाय न शरास्तम्भहेतवः । अमित्रदमनार्थं मे सर्वमेतच्चतुष्टयम् ॥ ३० ॥ न चाहं कामयेऽत्यर्थं यः स्यात् शत्रुर्मतो मम । असिना तीक्ष्णधारेण विद्युच्चलितवर्चसा । प्रगृहीतेन वै शत्रुं वज्रिणं वा न कल्पये ॥ ३१ ॥

तुभ्यं प्रतिजाने च ॥ २७ ॥ २८ ॥ मङ्गलैरिति । मङ्गलैः मङ्गलद्रव्ययुक्तैर्जलैः । अभिषिञ्चस्व आत्मानं वसिष्ठादिभिरितिशेषः । तत्र अभिषेककर्मणि । व्यापृतोभव, व्यासक्तचित्तोभवेत्यर्थः । अलं पर्याप्तः । वारयितुं निवारयितुम् ॥ २९ ॥ न शोभार्थावित्यादिसार्द्धश्लोकमेकं वाक्यम् । नेति । आबन्धनार्थाय आपाततो वीरभूषणतया कट्यां बन्धनरूपप्रयोजनायेत्यर्थः । स्तम्भहेतवः केवलं लक्ष्यभूतस्तम्भहेतवः । तूण्यां स्थापनहेतव इति वा ॥३०॥ न चाहमित्यादिसार्धश्लोकः । यः मम अत्यर्थं शत्रुः शातयिता । मतः स्यात्, परीक्षकैरिति शेषः । तमहं न कामये तस्य स्थितिं न सहे इत्यर्थः ।

राजर्षिवृत्त्या तदाचारेण बनवासो विधीयते ॥ २६ ॥ स चेत्यादिश्लोकद्वयमेकं वाक्यम् । हे राम ! राजनि दशरथे, एवमनेकाग्रे चलचित्ते प्रतिकूले सति । राज्यविभ्रमशङ्कया राज्यस्य विविधचलनशङ्कया आत्मनि राज्यं राजत्वं नेच्छसि चेत् नाङ्गीकरोषि चेत् तव राज्यं रक्षेयम् अन्यथा वीरलोकभाक् माभूवमिति ते प्रतिजान इत्यन्वयः ॥ २७ ॥ मङ्गलैरिति । मङ्गलैः मङ्गलद्रव्ययुक्तैः जलैरभिषिञ्चस्व आत्मानम्, वसिष्ठादिभिरिति शेषः । तत्र अभिषेककर्मणिं व्यापृतो भव व्यग्रचित्तो भव । वारयितुं निवारयितुम् । अहम् अलं पर्याप्तः ॥ २९ ॥ त्वदिष्टावरणप्रयोजनायैव मम बाहुवीर्यादिकमित्याह–न शोभनार्थावित्यादिसार्धश्लोकमेकं वाक्यम् । असिः खड्गः आबन्धनार्थाय । आ बध्यत इत्याबन्धनम् अलङ्कारः, तदर्थं न ! तथा स्तम्भहेतवः स्तम्भः तूर्ष्णीभावः ॥३०॥ न चाहमिति । यः शत्रुर्मतः शत्रुत्वेन मम सम्मतः स्यात् तं न कामये, न समत्वेन गणयामीत्यर्थः । इन्द्रोऽपि समो न भवतीत्याह असिनेति । विद्युच्चलितवर्चसा प्रगृहीतेन अनेन खड्गेन छेद

किन्त्वसिना वज्रिणमपि शत्रुं न कल्पये न स्थापयामि, इत्यर्थः । [illegible] । विद्युच्चलितवर्चसा विद्युदिव चलितं निर्गतं वर्चः स्फुलिङ्गरूपं यस्य तेन ॥ ३१ ॥ खड्गेति । खड्गकृतमर्दनेन चूर्णीकृतैर्गहना काननमिव निरन्तरा अतएव दुश्चरा संचारायोग्या च भविता भविष्यति ॥ ३२ ॥ खड्गधारेति । मे खड्गधारया खड्गकोट्या हताः अत एव सविस्फुलिङ्गत्वाद्दीप्यमानाः ज्वलिताः अद्रय इव सविद्युतो मेघा इव च स्थिताः द्विपाः शत्रु

खड्गनिष्पेषनिष्पिष्टैर्गहना दुश्चरा च मे । हस्त्यश्वनरहस्तोरुशिरोभिर्भविता मही ॥ ३२ ॥ खड्गधाराहता मेऽद्य दीप्यमाना इवाद्रयः । पतिष्यन्ति द्विपा भूमौ मेघा इव सविद्युतः ॥ ३३ ॥ बद्धगोधाङ्गुलित्राणे प्रगृहीतशरासने । कथं पुरुषमानी स्यात् पुरुषाणां मयि स्थिते ॥३४॥ बहुभिश्चैकमत्यस्यन्नेकेन च बहून् जनान् । विनियोक्ष्याम्यहं बाणान् नृवाजिगजमर्मसु ॥ ३५ ॥ अद्य मेऽस्त्रप्रभावस्य प्रभावः प्रभविष्यति । राज्ञश्चाप्रभुतां कर्तुं प्रभुत्वं च तव प्रभो ॥ ३६ ॥ अद्य चन्दनसारस्य केयूरामोक्षणस्य च । वसूनां च विमोक्षस्य सुहृदां पालनस्य च ॥ ३७ ॥

गजाः । भूमौ पतिष्यन्ति ॥ ३३ ॥ बद्धेति । गोधा ज्याघातवारणम् । "गोधा तलं ज्याघातवारणे" इत्यमरः । गोधारूपाङ्गुलिरक्षककवचवति मयि स्थिते सति पुरुषाणां मध्ये कश्चित्कथं पुरुषमानी शूरमानी स्यात् । सर्वे स्त्रीप्राया भविष्यन्तीत्यर्थः ॥ ३४ ॥ बहुभिरिति । अहं बहुभिर्बाणैरेकं शूरम् अत्यस्यन् प्रकर्षेण क्षिपन् । "प्रकर्षे लङ्घनेऽप्यति" इत्यमरः । एकेन बाणेन बहून् क्षुद्रान् अत्यस्यन् अनेन प्रकारेण नृवाजिगजानां मर्मसु मर्मस्थलेषु । बाणान्विनियोक्ष्यामि विसर्जयिष्यामि । अतः कथमेको बहून् हनिष्यतीति न चिन्तनीयमितिभावः ॥ ३५ ॥ अद्येति । अस्त्रप्रभावस्य अस्त्रमाहात्म्यस्य । प्रभावः प्रतापः "प्रतापमाहात्म्ययोः प्रभावः स्यात्" इति वैजयन्ती ॥ ३६ ॥ अद्येत्यादिश्लोकद्वयमेकं वाक्यम् । चन्दनसारस्य चन्दनपङ्कस्य । केयूरामोक्षणस्य अङ्गदधारणस्य । "केयूरमङ्गदम्" इत्यमरः । वसूनां धनानां विमोक्षस्य त्यागस्य । सुहृदां पालनस्य शत्रुभ्यो रक्ष

नानुरूपं वज्रिणमपि न कल्पये, किमुतान्यमित्यर्थः॥३१॥खड्गेति। खड्गनिष्पेषनिष्पिष्टैः-खड्गकृतमर्दनेन चूर्णीकृतैरित्यर्थः । गहना काननमिव निरन्तरा । अत एव दुश्चरा ॥३२॥३३॥ बद्धगोधेति । गोधा ज्याघातवारणम् । मयि स्थिते पुरुषमानी आत्मानं पुरुषश्रेष्ठं मन्यमानः शूराभिमानी कथं स्यादित्यर्थः ॥३४॥ बहुभिरिति । अत्यस्यन् प्रकर्षेण क्षिपन् बहुभिर्बाणैरेकं पुरुषम् एकेन बाणेन ॥३५॥ अद्येति । अस्त्रप्रभावस्य अस्त्रमाहात्म्यस्य प्रभावः प्रतापः ॥३६॥ अद्येतिश्लोकद्वयमेकं वाक्यम् ।

नस्य च। अनुरूपौ राजपुत्रत्वेन योग्यावपि इमौ बाहू। हे राम! तत्सर्वं विहाय ते अभिषेचनविघ्नस्य कर्तॄणां निवारणे विषये कर्म करिष्यतः ॥३७॥३८॥ त्वदाज्ञात्वेकावश्यम्भाविनीत्याह—ब्रवीहीति। ब्रवीहि ब्रूहि। वियुज्यतां मया वियोज्यताम् ॥ ३९ ॥ एवं विस्तरेण पूर्वपक्षमुपन्यस्तवन्तं लक्ष्मणं मति-

अनुरूपाविमौ बाहू राम कर्म करिष्यतः। अभिषेचनविघ्नस्य कर्तॄणां ते निवारणे ॥ ३८ ॥ ब्रवीहि कोऽद्यैव मया वियुज्यतां तवासुहृत्प्राणयशः सुहृज्जनैः। यथा तवेयं वसुधा वशे भवेत्तथैव मां शाधि तवास्मि किङ्करः ॥ ३९ ॥ विमृज्य बाष्पं परिसान्त्व्य चासकृत् स लक्ष्मणं राघववंशवर्द्धनः। उवाच पित्र्ये वचने व्यवस्थितं निबोध मामेव हि सौम्य सत्पथे ॥ ४० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे त्रयोविंशः सर्गः ॥२३ ॥ तं समीक्ष्य त्ववहितं पितुर्निर्देशपालने। कौसल्या बाष्पसंरुद्धा वचो धर्मिष्ठमब्रवीत् ॥ १ ॥ अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः। मयि जातो दशरथात् कथमुञ्छेन वर्त्तयेत् ॥ २ ॥

पूर्वं विस्तृतं सिद्धान्तं सङ्ग्रहेणाह—विमृज्येति। बाष्पं रामासंप्रतिजम्। राघववंशवर्द्धनः रघोः सम्बन्धी राघवः। राघवश्चासौ वंशश्चेति विशेषणसमासः। सत्पथे पित्र्ये वचने व्यवस्थितं निश्चलं मां निबोध जानीहि। सर्वथाहं पितृवचनं न त्यजामीत्यर्थः। "जीवतोर्वाक्यकरणात् प्रत्यब्दं भूरिभोजनात्। गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥" इतिस्मरणादितिभावः ॥४०॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥ अथ धर्म्यस्य रामनिश्चयस्यानुमोदनं कौसल्या करोति—तं समीक्ष्येत्यादिना। तं रामं समीक्ष्य निश्चित्य। अवहितं सावधानम्। निर्देशो नियोगः ॥ १ ॥ अदृष्टदुःख इति। उञ्छो नाम—दैवात्प्रकीर्णानां व्रीह्यादिधान्यानामङ्गुल्या एकैकशो ग्रहणम्।

चन्दनसारस्य चन्दनोत्तमस्य केयूरामोक्षणस्य च अङ्गदधारणस्य अनुकूलौ अर्हौ ते अभिषेकस्य विघ्नकर्तॄणां निवारणे विषये हे राम! कर्म करिष्यतः ॥३७॥३८॥ ब्रवीहीति। वियुज्यतां नियुज्यताम् ॥ ३९ ॥ स्त्रीवश्यपितृवचनं न कर्तव्यमित्युक्तवन्तं लक्ष्मणं प्रति सर्वात्मना पितृवचनमनुल्लङ्घनीयमित्युत्तरमाह—विमृज्येति। बाष्पं लक्ष्मणनयनजं विमृज्य पित्रोर्वचने व्यवस्थितं प्रतिष्ठितम् मां निबोध। हे सौम्य! एष. हि सत्पथः समीचीनःपन्थाः "जीवतोर्वाक्यकरणात्प्रत्यब्दं भूरिभोजनात्। गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥" इति न्यायादित्याशयः ॥ ४० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां त्रयोविंशः सर्गः ॥ २३ ॥ तमिति। अवहितं सावधानम्, निर्देशपालने आज्ञापालने मङ्गलभङ्गभीत्या संरुद्धबाष्पा ॥ १ ॥ अदृष्टेति।

कणिशग्रहणं तु शिलमेव । इदं फलमूलाद्याहरणं लक्षयति । वर्त्तयेत् जीवेत् ॥२॥ यस्येति । भृत्याः भटाः । दासाः दास्यकराः । मृष्टानि श्लाघ्यानि ॥३॥ क इति । विवास्यत इतियत् । एतत् कः श्रद्दधेद्गुणवत्पुत्रविवासनस्य असम्भावितत्वात्, श्रद्धेयत्वे वा कस्य भयम् न भवेत्, ममाप्येवं विवासनं भविष्यतीति ॥४ ॥ नूनमिति । सर्वं सुखदुःखादिकम् । आदिशन् प्रदिशन् । कृतान्तः दैवम् । यत्र दैवेनिमित्ते ॥ ५ ॥ अयन्त्वित्यादिश्लोकत्रयमेकं वाक्यम् ।

यस्य भृत्याश्च दासाश्च मृष्टान्यन्नानि भुञ्जते । कथं स भोक्ष्यते नाथो वने मूलफलान्ययम् ॥ ३ ॥ क एतच्छ्रद्दधेत् श्रुत्वा कस्य वा न भवेद्भयम् । गुणवान् दयितो राजा राघवो यद्विवास्यते ॥ ४ ॥ नूनं तु बलवान् लोके कृतान्तः सर्वमादिशन् । लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि ॥ ५ ॥ अयं तु मामात्मभवस्तवादर्शनमारुतः । विलापदुःखसमिधो रुदिताश्रुहुताहुतिः ॥ ६ ॥ चिन्ताबाष्पमहाधूमस्तवादर्शनचित्तजः । कर्शयित्वा भृशं पुत्र निश्वासायाससम्भवः ॥ ७ ॥

अत्र विश्लेषजनितशोकस्याग्निसमाधिरुच्यते । आत्मभवः देहजः अदर्शनमारुतः शोकाग्नेरदर्शनजत्वात् तस्य मारुतत्वनिरूपणम् । विलापदुःखं प्रलापजं दुःखं तदेव समिधा यस्य तस्य तद्वर्धकत्वात् "आपश्चैव हलन्तानाम्" इति समिच्छब्दाट्टाप् । रुदिताश्रूणि रोदनजाश्रूणि, तान्येव हुता क्षिप्ता आहुतिर्यस्य, चिन्ताबाष्पः चिन्तोष्मा स एव महाधूमो यस्य । तवादर्शनेन हेतुना चित्तज इति हेतुमात्रोक्तिः । आगमनचित्तज इति पाठान्तरम् । निःश्वास

उञ्छेन क्षेत्रपतितव्रीह्यादिकणिशग्रहणमुञ्छः, तेन वर्तयेत् जीवेत् । भवानिति शेषः ॥ २ ॥ यस्येति । भृत्या मन्त्रिमुख्याः भर्तुं योग्याः । दासाः भुजिष्याः, दास्य इति यावत् ॥३॥ क इति । एवंविधो राघवो निर्वास्यत इति यत् एतच्छ्रुत्वा राजानं कः श्रद्दधेत् कः श्रद्दध्यात् । कस्य वा भयं न भवेत्? ॥४॥ नूनमिति । सर्वमादिशन् सुखदुःखं प्रयच्छन् कृतान्तो विधिर्बलवान् यत्र दैवे सति त्वं वनं गमिष्यसि ॥५॥ अयं त्वित्यादि श्लोकत्रयमेकं वाक्यम् । आत्मभवः देहजः । अदर्शनस्य शोकाग्निप्रवर्द्धकत्वान्मारुतत्वनिरूपणम् । विलापदुःखसमिधः विलापदुःखान्येव समिधो यस्य सः । रुदिताश्रूण्येव हुताः कृतहोमाः आहुतयो यस्य सः । चिन्ताबाष्प

सत्य०—मामात्मभवस्तवेत्येकं पदम् । मा रमा माश्च आत्मभवो ब्रह्मा ताभ्यां स्तवो यस्यासौ तथोक्तः ॥ ६ ॥ तवागमने चिन्ता यस्य तत् आगमनचिन्तं मनः तस्माज्जायत इति तथा । निश्वासायासयोः संभवो यस्मात्स तथा ( तवागमनचिन्तजः इति पाठः ) ॥ ७ ॥

एवायासः पुरुषप्रयत्नः समिदादिजन्याग्नेः पुरुषप्रयत्नजत्वात्तथा निरूपणम् । त्वया जलस्थानीयेन, विहीनां मां शोक एवाग्निः शोकाग्निः वैतानिकाग्निः । कर्शयित्वा शुष्कीकृत्य । हिमात्यये शिशिरतौं । कक्षं गुल्मम् । चित्रभानुः वन्योऽग्निरिव मां प्रधक्ष्यति भस्मीकरिष्यति ॥६–८॥ कथं हीति । उत्तरा



त्वया विहीनामिह मां शोकाग्निरतुलो महान् । प्रधक्ष्यति यथा कक्षं चित्रभानुर्हिमात्यये ॥ ८ ॥ कथं हि धेनुः स्वं वत्सं गच्छन्तं नानुगच्छति । अहं त्वाऽनुगमिष्यामि पुत्र यत्र गमिष्यसि ॥ ९ ॥ तथा निगदितं मात्रा तद्वाक्यं पुरुषर्षभः । श्रुत्वा रामोऽब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥१०॥ कैकेय्या वञ्चितो राजा मयि चारण्यमाश्रिते । भवत्या च परित्यक्तो न नूनं वर्त्तयिष्यति ॥ ११ ॥ भर्तुः किल परित्यागो नृशंसः केवलं स्त्रियाः । स भवत्या न कर्त्तव्यो मनसापि विगर्हितः ॥ १२ ॥ यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः । शुश्रूषा क्रियतां तावत् स हि धर्मस्सनातनः ॥ १३ ॥ एवमुक्ता तु रामेण कौसल्या शुभदर्शना । तथेत्युवाच सुप्रीता राममक्लिष्टकारिणम् ॥ १४ ॥ एवमुक्तस्तु वचनं रामो धर्मभृतां वरः । भूयस्तामब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १५ ॥ मया चैव भवत्या च कर्त्तव्यं वचनं पितुः । राजा भर्त्ता गुरुः श्रेष्ठः सर्वेषामीश्वरः प्रभुः ॥ १६ ॥

र्द्धादौ तथेत्युपस्कार्यम् ॥ ९ ॥ तथेति । तथा निगदितमिति स्ववाचोप्यविषयत्वं दर्शयति मुनिः ॥ १० ॥ कैकेय्येति । न वर्तयिष्यति न जीविष्यती त्यर्थः ॥ ११ ॥ भर्तुरिति । नृशंसः नृशंसत्वम्, सिद्ध्यतीतिशेषः । मनसापि न कर्त्तव्यः, न चिन्तनीय इत्यर्थः ॥ १२ ॥ यावदिति । सः शुश्रूषा । धर्मा पेक्षया पुँल्लिङ्गत्वम् ॥ १३ ॥ एवमिति । शुभदर्शना धर्म्यबुद्धिरित्यर्थः ॥ १४॥ दार्ढ्यार्थं पुनराहेत्याह–एवमित्यादिना ॥ १५ ॥ मयेति । उत्तरार्द्धादौ स

महाधूमः चिन्तोष्मैव महाधूमो यस्य सः । अदर्शनचित्तजः अदर्शनेन हेतुना चित्तजः । निश्वासायाससम्भवः निश्वासानामायासः आवर्तनं तेन सम्भवो वृद्धिर्यस्य सः । स मां कर्शयित्वा मां प्रधक्ष्यतीति सम्बन्धः ॥६–९॥ यथेति पाठः । यथा निगदितं येन प्रकारेण निगदितम् तद्वाक्यं श्रुत्वा आत्मानुगमनं श्रुत्वेति यावत् ॥१०॥ कैकेय्येति । वञ्चितः परित्यक्तः । न वर्तयिष्यति न जीविष्यति ॥ ११ ॥ भर्तुरिति । केवलं नृशंसः अत्यन्तपापहेतुः, मनसा न कर्तव्यः न चिन्तनीयः । तत्र हेतुः

इत्युपस्कार्यम् । प्राथमिकपितृवचनपरिपालनानन्तरम् ... १६ ॥ ... करिष्यामीत्याह—इमानीति । इमानीत्यलपत्वज्ञापनाय विहृत्येत्यनेन क्लेश राहित्यमुक्तम् ॥१७॥१८॥ एवमनुमतरामवनगमनस्वनगरवर्त्तनापि पुनः सपत्नीस्मरणादनुगमनमर्थयते—आसामिति । वन्यां मृगीमिव यथा वन्या मृगी

इमानि तु महारण्ये विहृत्य नव पञ्च च। वर्षाणि परमप्रीतः स्थास्यामि वचने तव ॥ १७ ॥ एवमुक्ता प्रियं पुत्र बाष्पपूर्णानना तदा। उवाच परमार्ता तु कौसल्या पुत्रवत्सला ॥ १८ ॥ आसां राम सपत्नीनां वस्तुं मध्ये न मे क्षमम्। नय मामपि काकुत्स्थ वनं वन्यां मृगीमिव। यदि ते गमने बुद्धिः कृता पितुरपेक्षया ॥१९॥ तां तथा रुदतीं रामो रुदन् वचनमब्रवीत् ॥ २० ॥ जीवन्त्या हि स्त्रिया भर्त्ता दैवतं प्रभुरेव च। भवत्या मम चैवाद्य राजा प्रभवति प्रभुः ॥ २१ ॥ न ह्यनाथा वयं राज्ञा लोकनाथेन धीमता। भरतश्चापि धर्मात्मा सर्वभूतप्रियंवदः। भवती मनुवर्त्तेत स हि धर्मरतः सदा ॥२२॥ यथा मयि तु निष्क्रान्ते पुत्रशोकेन पार्थिवः। श्रमं नावाप्नुयात्किञ्चिदप्रमत्ता तथा कुरु ॥२३॥ दारुणश्चाप्ययं शोको यथैनं न विनाशयेत्। राज्ञो वृद्धस्य सततं हितं चर समाहिता ॥ २४ ॥ व्रतोपवासनिरता या नारी परमोत्तमा। भर्त्तारं नानुवर्त्तेत सा तु पापगतिर्भवेत् ॥ २५ ॥

वने संतुष्टा वर्त्तते तथाहमपि वर्ते न भवन्तं क्लेशयिष्यामीतिभावः। पितुरपेक्षया पितुरिच्छया ॥१९॥ तामिति। रुदन् 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः' इत्युक्तगुणविशिष्टोऽपि रामो मातृव्यसनं दृष्ट्वा पितृवचनपरिपालनरूपधर्मविघ्नभयाद्धैर्येण स्थितवान्। इदानीं वनगमनानुमतिं लब्ध्वा स्वस्नेह प्रदर्शनेन मातृव्यसनं निवर्त्तयितुं रुदितवानित्यवगम्यते ॥२०॥२१॥ न ह्रीति। राज्ञा, सनाथा इतिशेषः। राज्ञा सनाथाः, वयं न ह्यनाथा इत्यर्थः। सपत्नी मध्यवासदोषं परिहरति भरतश्चापीति ॥२२॥२३॥ दारुण इति। हितं चरेत्यत्र तथेतिशेषः ॥२४॥ पतिशुश्रूषणमेव पत्न्याः परमो धर्म इत्यन्वयव्यतिरे

गर्हितः ॥ १२–१६ ॥ पितृवाक्यकरणानन्तरं त्वच्छुश्रूषामपि करिष्यामीत्याह—इमानीति। विहृत्येत्यनेन वनवासस्य मृगयावल्लीलात्वं दर्शितम्। वचने स्थास्यामि वचनमनुष्ठास्यामि ॥ १७ ॥ १८ ॥ अङ्गीकृतवनवासापि कौसल्या सपत्नीकृतदुःखस्मरणात् पुनश्च राघवानुगमनमभिलषति—आसामिति। आसामित्यत्र राममब्रवी दित्यध्याहारः। पितुरपेक्षया पितुरिच्छया ॥ १९–२१ ॥ अथ सपत्नी मध्ये वस्तुं दुष्कर इति यदुक्तं तत्र परिहारमाह भरत इति ॥ २२–२६ ॥

सत्य०—नयमां न विद्यते यमः अन्तको यस्याः सा ताम्। मृत्युरप्यायातश्चेदुत्तमं नायात इत्यावृत्त्या वान्वयः ॥ १९ ॥ जीवन्त्या हि स्त्रिया भर्ता प्रभुरिति लौकिकसामान्यन्यायोक्तिः। प्रकृते निगमयति—

काभ्यां श्लोकद्वयेन दर्शयति–व्रतेति । पापस्य गतिः फलमिव फलं यस्याः सा तथा ॥२५॥ निर्नमस्कारापि भर्तृभिन्नद्विजादिविषयनमस्काररहितापि॥२६॥ उपसंहरति–शुश्रूषामिति । लोके पुरा दृष्टः पुरातनलोकाचारसिद्ध इत्यर्थः । वेदे श्रुतः वेदानगत इत्यर्थः । स्मृतः स्मृत्यवगतश्चेत्यर्थः ॥२७॥ तूष्णीमव स्थाने एनां दुःखमाक्रमिष्यतीति धिया दुःखविच्छेदनार्थं कालक्षेपसाधनं विधत्ते–अग्नीति । अग्निकार्येषु शान्तिकपौष्टिकहोमेषु । सुमनोभिश्चेत्यत्र चका

भर्तृशुश्रूषया नारी लभते स्वर्गमुत्तमम् । अपि या निर्नमस्कारा निवृत्ता देवपूजनात् ॥ २६ ॥ शुश्रूषामेव कुर्वीत भर्तुः प्रियहिते रता । एष धर्मः पुरा दृष्टो लोके वेदे श्रुतः स्मृतः ॥ २७ ॥ अग्निकार्येषु च सदा सुमनोभिश्च देवताः । पूज्यास्ते मत्कृते देवि ब्राह्मणाश्चैव सुव्रताः ॥ २८ ॥ एवं कालं प्रतीक्षस्व ममागमनकांक्षिणी । नियता नियताहारा भर्तृशुश्रूषणे रता ॥ २९ ॥ प्राप्स्यसे परमं कामं मयि प्रत्यागते सति । यदि धर्मभृतां श्रेष्ठो धारयिष्यति जीवितम् ॥ ३० ॥ एवमुक्ता तु रामेण बाष्पपर्याकुलेक्षणा । कौसल्या पुत्रशोकार्त्ता रामं वचनमब्रवीत् ॥३१॥ गमने सुकृतां बुद्धिं न ते शक्नोमि पुत्रक । विनिवर्त्तयितुं वीर नूनं कालो दुरत्ययः ॥३२॥ गच्छ पुत्र त्वमेकाग्रो भद्रं तेऽस्तु सदा विभो । पुनस्त्वयि निवृत्ते तु भविष्यामि गतक्लमा ॥ ३३ ॥ प्रत्यागते महाभागे कृतार्थे चरितव्रते । पितुरानृण्यतां प्राप्ते त्वयि लप्स्ये परं सुखम् ॥ ३४ ॥

रेण चन्दनताम्बूलादीनि समुच्चीयन्ते, अग्निकार्येषु क्रियमाणेषु सुमनःप्रभृतिभिः देवताब्राह्मणाश्च पूज्या इत्यर्थः ॥ २८ ॥ एवमिति । नियता स्नानादि नियमयुक्ता । नियताहारा मधुमांसादिवर्जनेन शुद्धाहारा ॥ २९ ॥ प्राप्स्यस इति । भर्तृजीवनपुत्रागमनयोः सतोरेव हि परमकामप्राप्तिसम्भव इतिभावः ॥३०॥३१॥ गमन इति । सुकृतां सुदृढामित्यर्थः ॥ ३२ ॥ गच्छेति । गतक्लमा गतक्लेशा ॥ ३३ ॥ प्रत्यागत इति । महाभागे महाभागधेये । आनृण्य

शुश्रूषामिति । श्रुतः श्रुतिभिः, स्मृतः स्मृतिभिः ॥ २७ ॥ स्ववियोगजदुःखविस्मरणार्थं कालक्षेपं विधत्ते–अग्नीति । अग्निकार्येषु शान्तिकपौष्टिकहोमेषु, आहुतिभिः सदा देवताः सुमनोभिः पुष्पैः॥२९॥ प्राप्स्यस इति । धर्मभृतां श्रेष्ठः दशरथः, यदि जीवितं धारयिष्यति॥३०–३३॥ प्रत्यागत इति । आनृण्यताम् अनृणताम् ॥३४॥

भवत्या इति । राजा भवत्याः प्रभुः । भगवन् ! सर्वेश्वरस्य तव राजा कथं प्रभुरित्यत आह–प्रभवतीति । प्रभुवदाचरतीत्यर्थः । अतो न राजप्रभुप्रभवतिपदानां पौनरुक्त्यमिति ध्येयम् ॥ २१ ॥ वेदे श्रुतः प्रसिद्धः, लोके जनविषये स्मृतः स्मृतिसिद्धः । यद्वा वेद ई इति छेदः । एष धर्म इति लोके अहं वेद ई लक्ष्मीर्वेद । न केवलमावाम्, अपितु श्रुतः श्रुतिसिद्धः । स्मृतश्चेत्यर्थः ॥ २७ ॥

ताम् अनृणताम् । स्वार्थे ष्यञ् ॥३४॥ कृतान्तस्येति । आच्छिद्य छित्त्वा, अन्यथाकृत्वेत्यर्थः ॥३५॥ गच्छेति । साम्ना सान्त्वरूपेण ॥३६॥ क्षणमात्रमप्यदर्शनासहिष्णुत्वात् प्रत्यागमनकाल इदानीमेव सम्भवेदिति प्रार्थयते–अपीति । यत् येन चतुर्दशवर्षान्तेन कालेन वनात्प्रत्यागतं त्वां पुनः पश्येयं

कृतान्तस्य गतिः पुत्र दुर्विभाव्या सदा भुवि । यस्त्वां सञ्चोदयति मे वच आच्छिद्य राघव ॥ ३५ ॥ गच्छेदानीं महाबाहो क्षेमेण पुनरागतः । नन्दयिष्यसि मां पुत्र साम्ना वाक्येन चारुणा ॥ ३६ ॥ अपीदानीं स कालः स्यात् वनात् प्रत्यागतं पुनः । यत्त्वां पुत्रक पश्येयं जटावल्कलधारिणम् ॥ ३७ ॥ तथा हि रामं वनवासनिश्चितं समीक्ष्य देवी परमेण चेतसा । उवाच रामं शुभलक्षणं वचो बभूव च स्वस्त्ययनाभिकांक्षिणी ॥ ३८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

साऽपनीय तमायासमुपस्पृश्य जलं शुचिः । चकार माता रामस्य मङ्गलानि मनस्विनी ॥ १ ॥

स काल इदानीमेवापि स्यात् । अपिशब्दः सम्भावनायाम् । " अपिःसम्भावनाप्रश्नगर्हाशङ्कासमुच्चये " इति वैजयन्ती । यत् यत्रेतिवार्थः ॥ ३७ ॥ तथेति । वनवासनिश्चितं निश्चितवनवासम् । परमेण चेतसा, आदरेणेतियावत् । स्वस्त्ययनं मङ्गलम् अभिकाङ्क्षितुं शीलमस्या अस्तीति तथा ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥ तान्येव स्वस्त्ययनानि दर्शयति–सेत्यादि । आयासं क्लेशम् । अपनीय त्यक्त्वा । जलमुपस्पृश्य आचम्येत्यर्थः । "उपस्पर्शस्त्वाचमनम्" इत्यमरः । रोदनस्याशुचिताहेतुत्वात् देवताप्रार्थ

कृतान्तस्येति । वच आच्छिद्य निराकृत्य त्वां सञ्चोदयतीति यत्, वनायेति शेषः । ततो दुर्विभाव्या ॥३५॥ गच्छेति । श्लक्ष्णेन नीरागदोषेण । चारुणा मनोहरेण । साम्ना सान्त्ववचनेन ॥ ३६ ॥ क्षणमात्रमप्यदर्शनासहिष्णुत्वात् प्रत्यागमनकाल इदानीमेव सम्भवेदिति प्रार्थयते–अपीदानीमिति । यस्मिन् काले वनात्प्रत्यागतं त्वां पुनः पश्येयं स काल इदानीमेव स्यात्, शीघ्रं गच्छेति भावः ॥ ३७ ॥ तथेति । परमेण आदरेण स्वस्त्ययनं मङ्गलमभिकाङ्क्षितुं शीलमस्या इति तथा ॥ ३८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां चतुर्विंशः सर्गः ॥ २४ ॥ सेति । आयासं दुःखम् । अपनीय विनीय ।

स०–या मा रमा सा मनस्विन्यपि यस्य मङ्गलानि मङ्ग्यते गम्यते आभ्यामिति मङ्गौ पादौ तौ लान्ति स्वीकुर्वन्ति विषयीकुर्वन्तीति तानि पादसंवाहनादीनि । चकार करिष्यति च । शुचि जलं भूत्वा प्रलये तस्य अतारामस्य अतः प्राप्तः आरामो वनं येनासौ तथोक्तस्तस्य । अनिवर्त्यवनवासबुद्धित्वेन रामस्य प्राप्तेत्युक्तिः । इयं मनस्विनी कौसल्या मङ्गलानि स्वस्त्ययनानि चकारेति तु जलं जडम् अन्नम् । उपस्पृश्य विषयीकृत्येत्यर्थः । " श्रीर्यत्र रूपिण्युरुगायपादयोः " इत्यादेः ॥ १ ॥

नस्य शुचिना कर्त्तव्यत्वादुपस्पर्शनमुक्तम् । अतएव शुचिरित्युच्यते । मङ्गलानि मङ्गलाशासनानि ॥ १ ॥ नेति । शीघ्रं विनिवर्त्तस्व, चतुर्दशवर्षान्त इतिशेषः । सतां क्रमे अभिषेचने ॥२॥ यमिति । पालयसि अप्रच्युतमनुतिष्ठसि । धृत्या प्रीत्या । नियमेन समग्रतया । स वै प्रसिद्धो धर्मः । राघवशार्दूल रघुकुलश्रेष्ठ । अभिरक्षतु अभितो रक्षतु । पुनर्द्धर्मपदप्रयोगात् स एव रक्षत्वित्युच्यते ॥३॥ येभ्य इति । चैत्येषु चतुष्पथेषु । आयतनेषु देवतागृहेषु । ते देवा इति

न शक्यसे वारयितुं गच्छेदानीं रघूत्तम । शीघ्रं च विनिवर्त्तस्व वर्त्तस्व च सतां क्रमे ॥ २ ॥ यं पालयसि धर्मं त्वं धृत्या च नियमेन च । स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु ॥ ३ ॥ येभ्यः प्रणमसे पुत्र चैत्येष्वायतनेषु च । ते च त्वामभिरक्षन्तु वने सह महर्षिभिः ॥४॥ यानि दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता । तानि त्वामभिरक्षन्तु गुणैः समुदितं सदा ॥५॥ पितृशुश्रूषया पुत्र मातृशुश्रूषया तथा । सत्येन च महाबाहो चिरञ्जीवाभिरक्षितः ॥६॥ समित्कुश पवित्राणि वेद्यश्चायतनानि च । स्थण्डिलानि विचित्राणि शैला वृक्षाः क्षुपा ह्रदाः । पतङ्गाः पन्नगाः सिंहास्त्वां रक्षन्तु नरोत्तम ॥७॥ स्वस्ति साध्याश्च विश्वे च मरुतश्च महर्षयः । स्वस्ति धाता विधाता च स्वस्ति पूषा भगोऽर्यमा ॥८॥

सिद्धम् ॥ ४ ॥ यानीति । समुदितं श्रेष्ठम् ॥ ५ ॥ ६ ॥ समिदित्यादिसार्धश्लोक एकान्वयः । वन्याः समित्कुशादयः । प्रमादकृतप्रत्यवायसहिष्णवः सन्तो वनेचरन्तं भवन्तं रक्षन्त्विति वाक्यार्थः । पवित्राणि दर्भग्रन्थयः । वेद्यः अग्निधिष्ण्यानि, स्थण्डिलानि देवपूजास्थलानि तेषामलङ्कारभेदात् संस्थानभेदाच्च वैचित्र्यम् । वृक्षग्रहणं लतादेरप्युपलक्षणम् । क्षुपाः ह्रस्वशाखाशिफायुक्ता वृक्षविशेषाः । "ह्रस्वशाखाशिफः क्षुपः" इत्यमरः । वृक्षविशेषणं वा । ह्रस्वशाखावृक्षेष्वेव प्रायशो देवतास्सन्निदधत इत्यैतिह्यात् । पतङ्गाः पक्षिणः ॥ ७ ॥ स्वस्तीत्यादि । कुर्वन्त्वित्यनुषङ्गः । स्वस्ति धातेत्यादौ करो

जलमुपस्पृश्य आचम्य । मङ्गलानि मङ्गलवचनानि चकार ॥१॥ न शक्यस इति । सतां क्रमे सतां मार्गे ॥२–४॥ यानीति । गुणैः समुदितं सद्गुणसम्पन्नम् ॥५॥६॥ समिदिति । क्षुपाः ह्रस्वशाखाशिफायुक्ताः वृक्षाः " ह्रस्वशाखाशिफः क्षुपः " इत्यमरः । पतङ्गाः पक्षिणः ॥ ७ ॥ स्वस्ति साध्या इति । स्वस्ति कुर्वन्त्विति

स०– पितृशुश्रूषया " पिता मात्रा " इत्येकशेषेण मातृपितृशुश्रूषया । मातृशुश्रूषया ज्ञानिशुश्रूषया ॥ ६ ॥ विष०–समिदादिपदेन तदधिष्ठात्र्यो देवता उपलक्ष्यन्ते ॥ ७ ॥ स०–विधाता सृष्टिकर्ता धाता अब्जयोनिः । पूषा सूर्यः । भगः ऐश्वर्यादिः । अर्य सर्वस्वामिन् राम ! मा प्रमाणम् ॥ ८ ॥

त्वित्यध्याहारः । साध्याः देवताविशेषाः । विश्वे विश्वेदेवाः । मरुतः वायवः । धातृविधातृशब्दौ देवताविशेषवाचकौ । पूषादिशब्दाः द्वादशसङ्ख्याकादित्यावान्तरभेदवाचकाः ॥ ८ ॥९॥ मुहूर्तः दिनस्य त्रिंशो भागः । स्मृतिः ध्यानम् । धृतिः ऐकाग्र्यम्, निष्पन्नयोगइतियावत् । धर्मः श्रुतिस्मृत्युदितः ।

लोकपालाश्च ते सर्वे वासवप्रमुखास्तथा । ऋतवश्चैव पक्षाश्च मासास्संवत्सराः क्षपाः ॥९॥ दिनानि च मुहूर्त्ताश्च स्वस्ति कुर्वन्तु ते सदा । स्मृतिर्धृतिश्च धर्मश्च पातु त्वां पुत्र सर्वतः ॥ १० ॥ स्कन्दश्च भगवान् देवः सोमश्च सबृहस्पतिः । सप्तर्षयो नारदश्च ते त्वां रक्षन्तु सर्वतः ॥ ११ ॥ याश्चापि सर्वतः सिद्धा दिशश्च सदिगीश्वराः । स्तुता मया वने तस्मिन् पान्तु त्वां पुत्र नित्यशः ॥ १२ ॥ शैलाः सर्वे समुद्राश्च राजा वरुण एव च । द्यौरन्तरिक्षं पृथिवी नद्यः सर्वास्तथैव च ॥ १३ ॥ नक्षत्राणि च सर्वाणि ग्रहाश्च सहदेवताः । अहोरात्रे तथा सन्ध्ये पान्तु त्वां वनमाश्रितम् ॥ १४ ॥ ऋतवश्चैव षट् पुण्या मासाः संवत्सरास्तथा । कलाश्च काष्ठाश्च तथा तव शर्म दिशन्तु ते ॥ १५ ॥

यं पालयसीत्यत्र पितृवाक्यपरिपालनज एवोक्त इति न पुनरुक्तिः ॥ १० ॥ स्कन्द इति । स्कन्दः सनत्कुमारः "तं स्कन्द इत्याचक्षते" इति दहरविद्यायां तथाभिधानात् । कुमारो वा ॥ ११ ॥ याश्चापीति । सर्वतः सिद्धाः प्रसिद्धाः ॥ १२ ॥ शैला इति । शैलाः कुलपर्वताः । समुद्रसन्निधानात् शैला वृक्षा इत्यत्र क्षुद्रपर्वताः । राजा कुबेरः । ग्रहाः कुजादयः । सहदेवताः तदभिमानिदेवतासहिताः । अहोरात्रे तदभिमानिदेवते । अतो न पुनरुक्तिः ॥ १३ ॥ १४ ॥ ऋतव इति । ऋतुमासादिशब्दास्तदधिदेवतापराः केचिदाहुः । अस्मिन् प्रकरणे प्रायशः पुनरुक्तयः पुत्ररक्षणविषयप्रेमपारवश्यकृताः

अग्रेण सम्बन्धः । धाता आधारकर्मप्रधानो भगवान् विराट् विष्णुः । विधाता स्रष्टा, स एव सर्गविधायकः प्रजापत्यात्मा । पूषा भगोऽर्यमेति रेवत्यादिनक्षत्रदेवताः । अस्मिन् प्रकरणे पुनरुक्तयः पुत्रप्रेमपारवश्यादित्यवगन्तव्याः ॥ ८–१६ ॥

स०– मेत्युक्तं विवृणोति–श्रुतिश्चेति ॥ १० ॥ तस्मिन् वने कानने अकारप्रश्लेषेण अवने रक्षणविषये । मया स्तुता इत्यनेनान्वयः । नित्यशः सदामोदः यः तं त्वां पान्तु ॥ १२ ॥ ऋतवश्चापि षट्चान्ये इति पाठे–षड्तवश्चान्य इत्यनेन विश्वादिमानसम्बन्धिभ्योऽन्ये ग्राह्याः । देवाद्भिमानेन ये ऋतवो मासास्संवत्सराः कलाः काष्ठाश्चेत्यन्वयः । एवं चेन्न पुनरुक्तिः । अन्यपदस्वारस्यं चेति ज्ञेयम् ॥ १९ ॥

इति । शर्म सुखम् । " शर्मशातसुखानि च " इत्यमरः ॥ १५ ॥ महावन इति । आदित्याः देवाः ॥१६॥ राक्षसानामिति । राक्षसादिसम्बन्धि भयम् । सम्बन्धसामान्ये षष्ठी । तेभ्यो भयमित्यर्थः ॥ १७ ॥ प्लुवगा इति । प्लुवगाः वानराः । दंशाः वनमक्षिकाः । " दंशस्तु वनमक्षिका " इत्यमरः । सरीसृपाः

महावने विचरतो मुनिवेषस्य धीमतः । तवादित्याश्च दैत्याश्च भवन्तु सुखदास्सदा ॥ १६ ॥ राक्षसानां पिशाचानां रौद्राणां क्रूरकर्मणाम् । क्रव्यादानाञ्च सर्वेषां माभूत्पुत्रक ते भयम् ॥ १७ ॥ प्लवगा वृश्चिका दंशा मशकाश्चैव कानने । सरीसृपाश्च कीटाश्च माभूवन् गहने तव ॥ १८ ॥ महाद्विपाश्च सिंहाश्च व्याघ्रा ऋक्षाश्च दंष्ट्रिणः । महिषाः शृङ्गिणो रौद्रा न ते द्रुह्यन्तु पुत्रक ॥ १९ ॥ नृमांसभोजना रौद्रा ये चान्ये सत्त्वजातयः । मा च त्वां हिंसिषुः पुत्र मया संपूजितास्त्विह ॥ २० ॥ आगमास्ते शिवाः सन्तु सिद्ध्यन्तु च पराक्रमाः । सर्वसम्पत्तये राम स्वस्तिमान् गच्छ पुत्रक ॥ २१ ॥ स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यः पुनःपुनः । सर्वेभ्यश्चैव देवेभ्यो ये च ते परिपन्थिनः ॥२२॥ गुरुः सोमश्च सूर्यश्च धनदोऽथ यमस्तथा । पान्तु त्वामर्चिता राम दण्डकारण्यवासिनम् ॥२३॥

गिरिसर्पाः । गहने वने । माभूवन् हिंसका माभूवन्नित्यर्थः ॥ १८ ॥ महाद्विपा इति । ऋक्षाः भल्लूकाः । न ते द्रुह्यन्तु " क्रुधद्रुह– " इत्यादिना चतुर्थी ॥ १९ ॥ नृमांसभोजना इति । सत्त्वजातयः सत्त्वस्य जातिर्जन्म येषु ते सत्त्वजातयः । क्रूरजन्तव इत्यर्थः ॥ २० ॥ आगमा इति । आगम्यन्त इति आगमाः मार्गाः । सर्वसम्पत्तये वन्यफलमूलादिसम्पत्तये ॥ २१ ॥ स्वस्तीति । आन्तरिक्षेभ्यः अन्तरिक्षचारिभ्यः । पार्थिवेभ्यः पृथिवीवर्तिभ्यः सकाशात् । परिपन्थिनः शत्रवः ॥ २२ ॥ गुरुरित्यादि । पृथक्पृथक् मिलिताश्च रक्षन्त्वित्यर्थ इति न पुनरुक्तिः ॥ २३ ॥

राक्षसानामिति । भयं राक्षसादिसम्बन्धि भयम्, तेभ्यो भयमित्यर्थः ॥ १७ ॥ प्लवगा इति । प्लवगाः कपयः, दंशाः वनमक्षिकाः, ऋक्षाः भल्लूकाः । सत्त्वजातयः सत्त्वस्य बलस्य जातिर्जन्म येषु प्राणिषु ते सत्त्वजातयः । शक्तिमन्तः क्रूरजन्तव इत्यर्थः ॥१८–२०॥ आगमा इति । आगमाः आगमनयोग्याः, मार्गा इत्यर्थः । सर्वसम्पत्तय इति । वनवासापेक्षिताः फलमूलादयः, सन्त्विति शेषः ॥ २१ ॥ स्वस्तीति । पार्थिवेभ्यः पृथिव्यां भवाः पार्थिवाः देवेभ्यः सकाशात्ते स्वस्त्य

स०–क्रव्यादानां कृतविकृतपक्वमांसभुजाम् । यथोक्तं काशिकायाम्–" कृतविकृतपक्वशब्दस्य क्रव्यादेशः " इति । शब्दार्णवेपि " क्रव्यादः कृतपक्वमांसभुगुच्यते " इति ॥ १७ ॥ आन्तरिक्षेभ्यः अशन्यादिभ्यः । पार्थिवेभ्यः भूकम्पादिभ्यः । मया अर्चिता इति हेतोः ते परिपन्थिनः । शुक्राद्यास्ते त्वां पान्तु इति वा ॥ २२ ॥

ऋषिमुखाच्युताः निर्गताः। त्वया गृहीताश्चेति शेषः ॥२४॥ सर्वलोकप्रभुरिति । भूतभर्त्ता नारायणः॥२५॥ इतीति । इतीत्यत्र मत्वेतिशेषः॥२६॥२७॥ घृतमिति । उपसम्पादयामास । होमायेतिशेषः ॥ २८ ॥ उपाध्याय इति । शान्तिं सर्वोपद्रवशान्तिम् । अनामयम् आरोग्यञ्च, उद्दिश्येति शेषः । हुत

अग्निर्वायुस्तथा धूमो मन्त्राश्चर्षिमुखाच्युताः । उपस्पर्शनकाले तु पान्तु त्वां रघुनन्दन ॥ २४ ॥ सर्व लोकप्रभुर्ब्रह्मा भूतभर्त्ता तथर्षयः । ये च शेषाः सुरास्ते त्वां रक्षन्तु वनवासिनम् ॥ २५ ॥ इति माल्यैः सुरगणान् गन्धैश्चापि यशस्विनी । स्तुतिभिश्चानुकूलाभिरानर्चायतलोचना ॥ २६ ॥ ज्वलनं समुपादाय ब्राह्मणेन महात्मना । हावयामास विधिना राममङ्गलकारणात् ॥ २७ ॥ घृतं श्वेतानि माल्यानि समिधः श्वेतसर्षपान् । उपसम्पादया मास कौसल्या परमाङ्गना ॥ २८ ॥ उपाध्यायः स विधिना हुत्वा शान्तिमनामयम् । हुतहव्यावशेषेण बाह्यं बलिमकल्पयत् ॥ २९ ॥ मधुदध्यक्षतघृतैः स्वस्ति वाच्य द्विजांस्ततः । वाचयामास रामस्य वने स्वस्त्ययन क्रियाः ॥३०॥ ततस्तस्मै द्विजेन्द्राय राममाता यशस्विनी । दक्षिणां प्रददौ काम्यां राघवं चेदमब्रवीत् ॥३१॥ यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते । वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ३२ ॥ यन्मङ्गलं सुपर्णस्य विनता ऽकल्पयत् पुरा । अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम्॥ ३३ ॥

हव्यावशेषेण हुतहविश्शेषेण । बाह्यं होमस्थानाद्बहिर्भवम् ॥ २९ ॥ मध्विति । मध्वादिद्रव्यदक्षिणाभिर्दत्ताभिः । द्विजान् स्वस्ति वाच्य पुण्याहं वाच यित्वेत्यर्थः । स्वस्त्ययनक्रियाः स्वस्त्ययनक्रियाप्रतिपादकमन्त्रानित्यर्थः ॥ ३० ॥ तत इति । काम्याम् अभीष्टाम् ॥३१॥ यन्मङ्गलमिति । वृत्रनाशे

स्त्विति योजना । ये च ते परिपन्थिनः तेभ्यश्च ॥ २२ ॥ २३ ॥ अग्निरिति । ऋषिमुखाच्च्युताः त्वया गृहीताश्चेति शेषः ॥ २४–२७ ॥ उपसम्पादयामासेति, होमायेति शेषः ॥ २८ ॥ उपाध्याय इति । अनामयमारोग्यम्, उद्दिश्येति शेषः । हुतहव्यावशेषेण हुतानां हव्यानामवशेषेण । बाह्यं होमस्थानाद्बहिर्भवम् । बलिं लोकपालबलिम् ॥ २९ ॥ मध्वित्यादि । स्वस्ति वाच्य स्वस्तिवाचनमुद्दिश्य द्विजान् मध्वादिभिरुपलक्षितान् कृत्वा रामस्य वने स्वस्त्यस्त्वित्येवं स्वस्त्ययन क्रियाः स्वस्त्ययनप्रतिपादकमन्त्रान वाचयामास ॥ ३० ॥ ३१ ॥ यन्मङ्गलमिति । वृत्रनाशे वृत्रनाशनिमित्ते ॥ ३२–३४ ॥

वृत्रनाशनिमित्ते ॥ ३२-३४ ॥ त्रीनिति । विक्रमान् पादविक्षेपान् ॥ ३५ ॥ ऋतव इति । शुभमङ्गलाः मङ्गलानामपि मङ्गलाः, मङ्गलद्रव्याणामप्यतिशयदायका इत्यर्थः ॥ ३६ ॥ इतीति । शेषान् अक्षतानि । गन्धैश्च समालभ्य विलिप्य । "समालम्भो विलेपनम्" इत्यमरः । सिद्धार्थां दृष्टफलाम् । विशल्य

अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् । अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥३४॥ त्रीन् विक्रमान् प्रक्रमतो विष्णोरमिततेजसः । यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् ॥३५॥ ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ते । मङ्गलानि महाबाहो दिशन्तु शुभमङ्गलाः ॥३६॥ इति पुत्रस्य शेषांश्च कृत्वा शिरसि भामिनी । गन्धैश्चापि समालभ्य राममायतलोचना ॥ ३७ ॥ ओषधीं चापि सिद्धार्थां विशल्यकरणीं शुभाम् । चकार रक्षां कौसल्या मन्त्रैरभिजजाप च ॥३८॥ उवाचातिप्रहृष्टेव सा दुःखवशवर्त्तिनी । वाङ्मात्रेण न भावेन वाचा संसज्जमानया ॥३९॥ आनम्य मूर्ध्नि चाघ्राय परिष्वज्य यशस्विनी । अवदत् पुत्र सिद्धार्थो गच्छ राम यथासुखम् ॥ ४० ॥ अरोगं सर्वसिद्धार्थमयोध्यां पुनरागतम् । पश्यामि त्वां सुखं वत्स सुस्थितं राजवर्त्मनि ॥ ४१ ॥

करणीं च अन्तर्गतशल्यनिर्गमनकारिणीं च । ओषधीं मूलिकां मन्त्रैरभिमन्त्र्य रक्षां चकार, रक्षाहेतुत्वेन हस्ते बबन्धेत्यर्थः । पुनर्जजाप च ॥३७ ॥ ३८॥ उवाचेति । अतिप्रहृष्टेव दुःखवशवर्तिन्यपि पुत्रमुखोल्लासार्थमतिसन्तुष्टेव भावयन्तीत्यर्थः । असंसज्जमानया स्खलन्त्येत्यर्थः ॥३९॥ केन प्रकारेणोवाचेत्यत्राह—आनम्येति । आनम्य आनमय्य । सिद्धार्थः सिद्धप्रयोजनः । गच्छेत्यत्रेतिकरणं द्रष्टव्यम् ॥४०॥ अरोगमिति । सर्वसिद्धार्थं सिद्धसर्वप्रयोजनम् ।

त्रीनिति । त्रीन् विक्रमान् पदविक्षेपान् ॥ ३५ ॥ ऋतव इति । शुभमङ्गलाः मङ्गलानामपि मङ्गलाः, मङ्गलद्रव्याणामभ्यतिशयदायका इत्यर्थः ॥ ३६ ॥ इतीति । पुत्रस्य रामस्य शिरसि शेषान् श्वेताक्षतान् कृत्वा गन्धैश्च समालभ्य चन्दनैर्विलिप्य सिद्धार्थां दृष्टवीर्याम् ओषधीं मालिकां, विशल्यकरणीम् अन्तर्गतशल्यनिर्गमनकारिणीं मालिकां च गुलिकीकृत्य शुभां रक्षां चकार, रक्षाहेतुत्वेन हस्ते बबन्धेत्यर्थः । तां मन्त्रैरभिजजाप च ॥३७॥३८॥ उवाचेति । संसज्जमानया अन्तःखेदगद्गदया ॥ ३९ ॥ केन प्रकारेणोवाचेत्यत्राह—आनम्येति । आनम्य गच्छेत्यत्र इतिकरणं द्रष्टव्यम् ॥४०॥ अरोगमिति । सर्वसिद्धार्थं सिद्धसर्वप्रयोजनम् ॥ ४१ ॥

पश्यामि द्रक्ष्यामि ॥ ४१ ॥ प्रणष्टेति । प्रणष्टदुःखसङ्कल्पा सङ्कल्पः मानसं कर्म, वने रामस्य किम्भविष्यतीति चिन्तात्मक इत्यर्थः ॥ ४२ ॥ ॥ ४३ ॥ मङ्गलैरिति । वध्वाः स्नुषायाः सीतायाः । कामान् काम्यमानवस्त्राभरणादीनि ॥ ४४ ॥ ४५ ॥ तदा कौसल्योक्तस्य वाचामगोचरत्वादाह–

प्रणष्टदुःखसङ्कल्पा हर्षविद्योतितानना । द्रक्ष्यामि त्वां वनात् प्राप्तं पूर्णचन्द्रमिवोदितम् ॥ ४२ ॥ भद्रासनगतं राम वनवासादिहागतम् । द्रक्ष्यामि च पुनस्त्वां तु तीर्णवन्तं पितुर्वचः ॥ ४३ ॥ मङ्गलैरुपसम्पन्नो वनवासादिहागतः । वध्वा मम च नित्यं त्वं कामान् संवर्द्ध याहि भो ॥ ४४ ॥ मयार्चिता देवगणाः शिवादयो महर्षयो भूतमहासुरोरगाः । अभिप्रयातस्य वनं चिराय ते हितानि कांक्षन्तु दिशश्च राघव ॥ ४५ ॥ इतीव चाश्रुप्रतिपूर्णलोचना समाप्य च स्वस्त्ययनं यथाविधि । प्रदक्षिणं चैव चकार राघवं पुनःपुनश्चापि निपीड्य सस्वजे ॥ ४६ ॥ तथा तु देव्या स कृतप्रदक्षिणो निपीड्य मातुश्चरणौ पुनःपुनः । जगाम सीतानिलयं महायशास्स राघवः प्रज्वलितः स्वया श्रिया ॥ ४७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

अभिवाद्य च कौसल्यां रामः संप्रस्थितो वनम् । कृतस्वस्त्ययनो मात्रा धर्मिष्ठे वर्त्मनि स्थितः ॥ १ ॥

इतीवेत्यादि । इतीव एवंविधमित्यर्थः । प्रदक्षिणं अनुकूलम् । रक्षामितियावत् ॥ ४६ ॥ तथेति । निपीड्य निपीडनपूर्वकमभिवाद्येत्यर्थः । स्वया स्वतस्सिद्धया ॥ ४७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥ एवं मातरमनुमान्य सीतामनुमानयितुं निर्गच्छति–अभिवाद्येत्यादि श्लोकद्वयमेकं वाक्यम् । वनं संप्रस्थितः वनं गन्तुं प्रवृत्तः । धर्मिष्ठे अतिशयितधर्मे

प्रणष्टेति । प्रणष्टदुःखसङ्कल्पा-सङ्कल्पः मानसं कर्म, वने राघवस्य किं भविष्यतीति चिन्तात्मक इत्यर्थः ॥ ४२ ॥ ४३ ॥ मङ्गलैरिति । मङ्गलैः राजोचितवस्त्राभरणादिभिः । वध्वाः सीतायाः । संवर्द्ध संवर्धय याहि गच्छ भो इति ॥ ४४ ॥ ४५ ॥ प्रदक्षिणं चकारेति । रक्षार्थमेव पुत्रस्य प्रदक्षिणम् ॥ ४६ ॥ तथेति । देव्या कृतप्रदक्षिणः स राघवः तथा च मातुः कृतप्रदक्षिणस्सन् पुनःपुनः मातुश्चरणौ निपीड्येति सम्बन्धः । निपीड्य अभिवाद्येत्यर्थः ॥ ४७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां पञ्चविंशः सर्गः ॥ २५ ॥ अभिवाद्येत्यादि श्लोकद्वयमेकं वाक्यम् । वनं संप्रस्थितः वनं गन्तुं

आममन्थेव विलोडयामासेत्यर्थः । गुणवत्तया पूर्वभाषी प्रियवादी चेत्याद्युक्तगुणविशिष्टतया ॥ १ ॥ २ ॥ वैदेहीति । तत्सर्वम् अभिषेकविघातादिकम् । तपस्विनी रामाभिषेकार्थव्रतोपवासादिनियमविशिष्टा । यौवराज्याभिषेचनम्, वर्तत इति शेषः ॥ ३ ॥ देवकार्यमिति । देवकार्यं देवपूजाम् । कृतज्ञा अभिषिक्तभर्तृविषये पट्टमहिषीभिः गन्धपुष्पादिना कृतपादार्चनादिसमाचारज्ञेत्यर्थः । हृष्टचेतना हृष्टमनस्का । राजधर्माणामभिज्ञा अभिषिक्तराजा

विराजयन् राजसुतो राजमार्गं नरैर्वृतम् । हृदयान्याममन्थेव जनस्य गुणवत्तया ॥२॥ वैदेही चापि तत्सर्वं न शुश्राव तपस्विनी । तदेव हृदि तस्याश्च यौवराज्याभिषेचनम् ॥ ३ ॥ देवकार्यं स्वयं कृत्वा कृतज्ञा हृष्टचेतना । अभिज्ञा राजधर्माणां राजपुत्रं प्रतीक्षते ॥ ४ ॥ प्रविवेशाथ रामस्तु स्वं वेश्म सुविभूषितम् । प्रहृष्टजनसम्पूर्णं ह्रिया किञ्चिदवाङ्मुखः ॥ ५ ॥ अथ सीता समुत्पत्य वेपमाना च तं पतिम् । अपश्यत् शोकसन्तप्तं चिन्ताव्याकुलितेन्द्रियम् ॥ ६ ॥ तां दृष्ट्वा सह धर्मात्मा न शशाक मनोगतम् । तं शोकं राघवः सोढुं ततो विवृततां गतः ॥ ७ ॥

साधारणलक्षणानि श्वेतच्छत्रचामरपुरस्कृतभद्रासनादीनि ज्ञातवती । प्रतीक्षते स्म उक्तलक्षणविशिष्टो भर्ता कदा समागमिष्यतीत्यपेक्षया स्थितवतीत्यर्थः ॥ ४ ॥ प्रविवेशेति । ह्रिया गृहालङ्कारजनप्रहर्षजया ॥ ५ ॥ अथेति । समुत्पत्य स्वासनादुत्थाय वेपमाना, भर्तुर्विगतहर्षत्वावाङ्मुखत्वादिदर्शनात्कम्पमानेत्यर्थः ॥ ६ ॥ तामिति । ततः सोढुमशक्तत्वादेव विवृततां व्यक्तदुःखताम् । एतावत्पर्यन्तं शोकलेशहीनस्य रामस्येदानीं शोकाविर्भावः

प्रवृत्तः । आममन्थेव प्रक्षोभयति स्म । तत्र हेतुः—गुणवत्तया पूर्वभाषिप्रियवादित्वाद्युक्तविशिष्टगुणतया ॥ १ ॥ २ ॥ वैदेहीति । तत्सर्वं रामाभिषेकविघातादिकम् । तपस्विनी अभिषेकार्थव्रतवती तदेव यौवराज्याभिषेचनम् । हृदि, वर्तत इति शेषः ॥ ३ ॥ देवकार्यमिति । देवकार्यं देवपूजाम्, कृतज्ञा अभिषिक्तभर्तृविषये पट्टमहिषीभिः गन्धपुष्पाक्षतादिना कृतपादार्चनादिसमयज्ञेत्यर्थः । राजधर्माणामभिज्ञा अभिषिक्तराजसाधारणलक्षणानि श्वेतच्छत्रचामरपुरस्कृतभद्रासनादीनि ज्ञातवती, प्रतीक्षते स्म, उक्तलक्षणविशिष्टो भर्ता कदा आगमिष्यतीत्याकाङ्क्षया स्थितवतीत्यर्थः ॥ ४ ॥ प्रविवेशेति । ह्रिया सीतायै कथमीदृशमप्रियं कथयामीति लज्जया अवनतमुख इत्यर्थः ॥ ५ ॥ समुत्पत्य स्वासनात् समुत्थाय वेपमाना भर्तुर्विगतहर्षत्वावाङ्मुखत्वादिदर्शनात् कम्पमानेत्यर्थः ॥ ६ ॥ तामिति । विवृततां गतः व्यक्तदुःखतां प्राप्त इत्यर्थः । मयि वनं गते सति, अदुःखार्हा सीता दुःखेन कथं कालं नयिष्यतीति धिया सञ्जातदुःखोऽभूदित्यर्थः । " व्यसनेषु

सीताया भाविदुःखस्मरणेनेति बोध्यम् ॥७॥ विवर्णवदनमिति । प्रस्विन्नं हस्तगतराज्यस्यान्यगामित्वं स्ववनप्रव्राजनं च कथमस्यै निवेदयिष्यामीति शोकेन प्रस्वेदः, अमर्षणं सञ्जातदुःखं नियन्तुमशक्तम् । इदानीं हर्षकाले । इदं दौस्थ्यम् ॥८॥ अद्येति । बार्हस्पतः बृहस्पतिदैवत्यः। उक्तः अभिषेका

विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षणम् । आह दुःखाभिसन्तप्ता किमिदानीमिदं प्रभो॥८॥ अद्य बार्हस्पतः श्रीमानुक्तः पुष्यो नु राघव । प्रोच्यते ब्राह्मणैः प्राज्ञैः केन त्वमसि दुर्मनाः ॥ ९ ॥ न ते शतशलाकेन जलफेननिभेन च। आवृतं वदनं वल्गु छत्रेणापि विराजते ॥ १० ॥ व्यजनाभ्यां च मुख्याभ्यां शतपत्रनिभेक्षणम् । चन्द्रहंसप्रकाशाभ्यां वीज्यते न तवाननम् ॥ ११ ॥ वाग्मिनो वन्दिनश्चापि प्रहृष्टास्त्वां नरर्षभ । स्तुवन्तो नात्र दृश्यन्ते मङ्गलैः सूत मागधाः ॥ १२ ॥ न ते क्षौद्रं च दधि च ब्राह्मणा वेदपारगाः । मूर्ध्नि मूर्द्धाभिषिक्तस्य दधति स्म विधानतः ॥ १३ ॥

र्हत्वेन विहितः । युक्त इतिपाठे–अभिषेकार्हः । श्रीमान् कर्मारब्धवतां श्रीकरः। पुष्यः पुष्यनक्षत्रम् । अद्येति ब्राह्मणैः प्रोच्यते नु प्रोच्यते खल्वित्यर्थः। अन्विति च्छित्वा अनु प्रोच्यत इतिवा सम्बन्धः ॥ ९ ॥ नेति । शतं शलाका यस्य तेन । स्थलस्थत्वेन मालिन्यं व्यावर्त्तयितुं जलपदम् । वल्गु सुन्दरम् । आवृतं सन्न विराजत इति सम्बन्धः ॥ १०॥ व्यजनाभ्यामिति । व्यजनाभ्यां वालव्यजनाभ्याम् । शतपत्रं पद्मम् ॥ ११ ॥ वाग्मिन इति। वन्दिनः स्तुतिपाठकाः । "वन्दिनः स्तुतिपाठकाः" इत्यमरः । मङ्गलैः मङ्गलवचनैः। सूताः पुरावृत्तकथाशंसिनः । मागधाः वंशशंसकाः ॥१२॥ नेति । क्षौद्रं

मनुष्याणां भृशं भवति दुःखितः" इत्युक्तेः ॥ ७ ॥ विवर्णवदनमिति । प्रस्विन्नं हस्तगतराज्यस्यान्यगामित्वं स्वस्य वनप्रव्राजनं च कथमस्यै निवेदयिष्यामीति लज्जया प्राप्तदुःखस्वेदम् अमर्षणं शोकधारणाक्षमम् ॥ ८ ॥ अद्येति । अद्यैव बार्हस्पतः बृहस्पतिदेवताकः, पुष्यः पुष्यनक्षत्रं युक्तः, चन्द्रेणेति शेषः । अनु प्रोच्यते ब्राह्मणैरित्यन्वयः । केनेति अद्य पुष्यः अद्याभिषेको रामस्येति द्विजैरुक्तं, सन्तोषं विहाय दुःखं केन हेतुनेत्यर्थः ॥ ९ ॥ न त इति । शतं शलाकाः यस्मिन् छत्रे तेन छत्रेणावृतं सन्न विराजत इति योजना ॥ १० ॥ व्यजनाभ्यामिति । व्यजनाभ्यां वालव्यजनाभ्याम् ॥ ११ ॥ वाग्मिन इति । वन्दिनः स्तुतिपाठकाः, मङ्गलैः मङ्गलवचनैः, सुताः वंशस्तावकाः, मागधाः वंशशंसिनः ॥ १२ ॥ नेति । क्षौद्रं दधि चेति तीर्थोदकमिश्रितमित्यर्थः । मूर्द्धाभिषिक्तस्य शिरस्स्नातस्य विधानतः यथाविधिनेति ॥ १३ ॥

मधु । मूर्ध्नि न दधाति स्म नाभिषिञ्चन्ति स्मेत्यर्थः ॥ १३ ॥ नेति । प्रकृतयः अमात्यादयः । श्रेणीमुख्याः वीथीप्रधानाः ॥ १४ ॥ चतुर्भिरिति । पुष्यरथः उत्सवाय कल्पितो रथ इत्यर्थः । "असौ पुष्यरथश्चक्रयानं न समराय यत" इत्यमरः । स हि राज्ञामग्रतो नीयते केवलं सम्भ्रमाय ॥१५॥ नेति । कृष्णमेघगिरिप्रभः कृष्णमेघयुक्तगिरिप्रभः । उभयोरुपमानत्वे वैषम्यापत्तिः ॥ १६ ॥ न च काञ्चनचित्रमिति । वीरपुरस्कृतं भद्रासनं

न त्वां प्रकृतयः सर्वाः श्रेणीमुख्याश्च भूषिताः । अनुव्रजितुमिच्छन्ति पौरजानपदास्तथा ॥ १४ ॥ चतुर्भिर्वेगसम्पन्नैर्हयैः काञ्चनभूषितैः । मुख्यः पुष्यरथो युक्तः किं न गच्छति तेऽग्रतः ॥१५॥ न हस्ती चाग्रतः श्रीमांस्तव लक्षणपूजितः । प्रयाणे लक्ष्यते वीर कृष्णमेघगिरिप्रभः ॥ १६ ॥ न च काञ्चनचित्रं ते पश्यामि प्रियदर्शन । भद्रासनं पुरस्कृत्य यातं वीरपुरस्कृतम् ॥ १७ ॥ अभिषेको यथा सज्जः किमिदानीमिदं तव । अपूर्वो मुखवर्णश्च न प्रहर्षश्च लक्ष्यते ॥ १८ ॥ इतीव विलपन्तीं तां प्रोवाच रघुनन्दनः । सीते तत्रभवांस्तातः प्रव्राजयति मां वनम् ॥ १९ ॥ कुले महति सम्भूते धर्मज्ञे धर्मचारिणि । शृणु जानकि येनेदं क्रमेणाभ्यागतं मम ॥ २० ॥ राज्ञा सत्यप्रतिज्ञेन पित्रा दशरथेन च । कैकेय्यै मम मात्रे तु पुरा दत्तौ महावरौ ॥ २१ ॥

पुरस्कृत्य ते यातं गमनं न पश्यामीत्यन्वयः ॥ १७ ॥ अभिषेक इति । यथा अभिषेकः सज्जः सन्नद्धः । इदानीं तथैवेत्यर्थः । तवापूर्वो मुखवर्णो दृश्यते, प्रहर्षश्च न लक्ष्यते किमिदमिति सम्बन्धः ॥ १८ ॥ इतीति । विलपन्तीं विविधं लपन्तीम् । तत्रभवान् पूज्यः । "तत्रभवानत्रभवानितिशब्दो वै प्रयुज्यते पूज्ये "इतिहलायुधः । प्रव्राजयतीत्यनन्तरमितीति शेषः ॥ १९ ॥ महतोऽप्रियस्य श्रवणे सीतायाः किं भविष्यतीति भयात् चित्तदार्ढ्यार्थं विविधगुणकीर्तनेन सम्बोधयति–कुल इत्यादि । इदं प्रव्राजनम् । येन क्रमेण येन मार्गेण ॥ २० ॥ २१ ॥

नेति । प्रकृतयः अमात्यादयः । श्रेणीमुख्याः परिषन्मुख्याः ॥ १४॥ चतुर्भिरिति । पुष्यरथः उत्सवाय कल्पितो रथः न तु समराय, तादृग्रथः निर्जिगमिषो राज्ञोऽग्रे भवति तस्मिन्निच्छायां सत्यामारोहति नोचेत्केवलमग्रे गच्छति ॥ १५ ॥ नेति । तथा हस्ती च कृष्णमेघप्रभो गिरिप्रभश्च ॥ १६ ॥ न चेति । भद्रासनं पुरस्कृत्य ते यातं तवागमनं पश्यामीत्यन्वयः ॥ १७ ॥ अभिषेक इति । यथा यस्मात्सज्जः सन्नद्धः, प्रवृत्त इति यावत् । एवमपि अपूर्वो मुखवर्णश्च लक्ष्यते प्रहृष्टो न लक्ष्यते, इदं किमित्यन्वयः ॥ १८ ॥ इतीति । विलपन्तीमुद्वेगेन पृच्छन्तीम् । तत्रभवान् पूज्यः ॥ १९ ॥ महतः अप्रियस्य श्रवणे सीतायाः दुःखं भविष्यतीति भयाच्चित्तदार्ढ्यार्थं विविधगुणकीर्तनेन सम्बोधयति कुल इति । येन क्रमेण येन हेतुना । इदं प्रव्राजनम् ॥ २० ॥ २१ ॥

तयेति । अद्य नृपोद्यते ममाभिषेके सज्जे सति । प्रचोदितः पूर्वदत्तं वरद्वयम् देहीति प्रकर्षेण प्रेरितः, स समयः त्वदपेक्षितं करिष्यामीतिकृतशपथ इत्यर्थः । “समयाः शपथाचारकालसिद्धान्तसंविदः” इत्यमरः । धर्मेण प्रतिनिर्जितः, कर्तृभूतधर्मेण स्वायत्तीकृत इत्यर्थः ॥ २२ ॥ ततः किमित्यत्राह–चतुर्दशेति । मया पितृचोदितेनेत्यर्थः ॥ २३ ॥ सीताहृदयं ज्ञातुं बुद्ध्युपदेशव्यपदेशेन प्रणयरोषमुत्पादयन्नाह–भरतस्येति । त्वया न

तयाऽद्य मम सज्जेऽस्मिन्नभिषेके नृपोद्यते । प्रचोदितः स समयो धर्मेण प्रतिनिर्जितः ॥ २२ ॥ चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया । पित्रा मे भरतश्चापि यौवराज्ये नियोजितः । सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् ॥ २३ ॥ भरतस्य समीपे तु नाहं कथ्यः कदाचन ॥ २४ ॥ ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम् । तस्मान्न ते गुणाः कथ्या भरतस्याग्रतो मम ॥ २५ ॥ नापि त्वं तेन भर्तव्या विशेषेण कदाचन । अनुकूलतया शक्यं समीपे त्वस्य वर्तितुम् ॥ २६ ॥ तस्मै दत्तं नृपतिना यौवराज्यं सनातनम् । स प्रसाद्यस्त्वया सीते नृपतिश्च विशेषतः ॥ २७ ॥ अहं चापि प्रतिज्ञां तां गुरोः समनुपालयन् । वनमद्यैव यास्यामि स्थिरा भव मनस्विनी ॥ २८ ॥ याते च मयि कल्याणि वनं मुनिनिषेवितम् । व्रतोपवासपरया भवितव्यं त्वयाऽनघे ॥ २९ ॥

कथ्यः न श्लाघनीयः । त्वत्प्रणामागमनदशायामिति शेषः ॥ २४ ॥ २५ ॥ नेति । तेन भरतेन । विशेषेण न भर्तव्या बन्धुसाधारण्येन भरणीयेत्यर्थः । अशनादिभरणं लक्ष्मणशत्रुघ्नभार्याभ्यां विशेषेण न काङ्क्षणीयमितिभावः । अनुकूलतया स्वजनसाधारणतया । शक्यं योग्यम् ॥ २६ ॥ तदनुकूलाचरणं किमर्थमित्यत आह–तस्मा इति । नृपतिना दशरथेन ॥ २७ ॥ अहमिति । गुरोः दशरथस्य । स्थिरा भव मयि स्थिरानुरागा भवेत्यर्थः । तत्र हेतुः मनस्विनीति । दृढमनस्केत्यर्थः ॥ २८ ॥ २९ ॥

तयेति । नृपोद्यते नृपेणोद्युक्ते अभिषेके सज्जे सति । तया अद्य न समयः प्राचीनो वरसङ्केतः, प्रचोदितः प्रवर्तितः । तेन कारणेन धर्मेण धर्ममार्गेणैव प्रतिनिर्जितः स्ववशीकृतः ॥ २२ ॥ अस्तु, प्रकृते किमायातम् ? तत्राह–चतुर्दशेत्यादि ॥ २३ ॥ अथ सीतायाः गृहावस्थापनाय वक्तव्यबुद्धिमुपदिशति—भरतस्येति । त्वया न कथ्यः न श्लाघनीयः ॥ २४ ॥ २५ ॥ नापीति । तेन विशेषेण न भर्तव्या किन्तु बन्धुसाधारण्येन भरणीयेत्यर्थः । अनुकूलतया वर्तितुं शक्यम् न तु प्रातिकूल्येन ॥ २६ ॥ तदनुकूलाचरणं किमर्थमत आह–तस्मा इति । नृपतिना दशरथेन ॥ २७–२९ ॥

काल्यमिति । काल्यम् अहर्मुखे । "प्रत्यूषोऽहर्मुखं काल्यम्" इत्यमरः ॥ ३० ॥ मातेति । धर्ममेवाग्रतः कृत्वा, स्थिताया इति शेषः ॥ ३१ ॥ वन्दितव्या इति । स्नेहः प्रीतिः । प्रणयः सौहृदम् । "प्रणयः स्यात्परिचये याच्भायां सौहृदेपि च" इति वैजयन्ती । भोगः पालनम् । "भोगो राज्ये धने सौख्ये पालनाभ्यवहारयोः" इति वैजयन्ती । मयि स्नेहादित्रयमविशेषेण कुर्वन्ति, अतस्तास्तुल्यतया वन्द्या इति भावः ॥ ३२ ॥ भ्रातृपुत्रसमाविति ।

काल्यमुत्थाय देवानां कृत्वा पूजां यथाविधि । वन्दितव्यो दशरथः पिता मम नरेश्वरः ॥ ३० ॥ माता च मम कौसल्या वृद्धा सन्तापकर्शिता । धर्ममेवाग्रतः कृत्वा त्वत्तः सम्मानमर्हति ॥ ३१ ॥ वन्दितव्याश्च ते नित्यं याः शेषा मम मातरः । स्नेहप्रणयसम्भोगैः समा हि मम मातरः ॥ ३२ ॥ भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशेषतः । त्वया भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥ ३३ ॥ विप्रियं न च कर्त्तव्यं भरतस्य कदाचन । स हि राजा प्रभुश्चैव देशस्य च कुलस्य च ॥ ३४ ॥ आराधिता हि शीलेन प्रयत्नैश्चोपसेविताः । राजानः सम्प्रसीदन्ति प्रकुप्यन्ति विपर्यये ॥ ३५ ॥ औरसानपि पुत्रान् हि त्यजन्त्यहितकारिणः । समर्थान् सम्प्रगृह्णन्ति जनानपि नराधिपाः ॥ ३६ ॥ सा त्वं वसेह कल्याणि राज्ञः समनुवर्तिनी । भरतस्य रता धर्मे सत्यव्रतपरायणा ॥ ३७ ॥

भ्रातृपुत्रसमौ भ्रात्रा पुत्रेण च समौ । प्राणैः प्राणेभ्यः ॥ ३३ ॥ विप्रियमिति । राजत्वेप्यप्रभुत्वमनियन्तृत्वं कस्यचित्सम्भवतीति तद्व्यावृत्त्यर्थं प्रभुरित्युक्तम् । देशपतेरकुलपतित्वदर्शनादाह देशस्य च कुलस्य चेति ॥ ३४ ॥ आराधिता इति । शीलेन अकुटिलवृत्त्या । प्रयत्नैः आलस्यत्यागादिभिः । विपर्यये शीलाद्यभावे ॥ ३५ ॥ औरसानिति । जनान् अबन्धून् ॥ ३६ ॥ सा त्वमिति । सत्यव्रतम् अमोघव्रतम् ॥ ३७ ॥

काल्यमिति । काल्यं सर्वस्मिन्नप्युषसि ॥ ३० ॥ ३१ ॥ वन्दितव्या इति । स्नेहप्रणयसम्भोगैः—प्रणयः अनुनयः सेवा, सम्भोगः अन्नपानादिविशेषप्रदानम् तैः । समाः मे मात्रेति शेषः ॥ ३२ ॥ भ्रातृपुत्रसमौ भ्राता पुत्रेण च समौ, प्राणैः प्राणेभ्यः प्रियतरौ ॥ ३३–३५ ॥ औरसानिति । जनान् बन्धुत्वरहितानपि ॥ ३६–३७ ॥

वि०—माता चेति । वन्दितव्येति शेषः । यतो गुरुजनवन्दनं कुलवधूनां धर्म एवेति पुरस्कृत्य त्वत्तः संमानमर्हतीति सम्बन्धः ॥ ३१ ॥ सत्य०—मात्रेति शेषः । वाक्यभेदान्न पुनरुक्तिः ॥ ३२ ॥

१ विपर्यये । स्पृशन्निव गजो हन्ति जिघ्रन्निव भुजङ्गमः । स्मयन्निव नृपो हन्ति मानयन्निव दुर्जनः ॥ इत्यधिकः ।

अहमिति । व्यलीकम् अप्रियम् । कस्यचिदपि जनस्य यथा व्यलीकं न कुरुषे तथा त्वया वर्तितव्यम्, इदं मम वचश्च कार्यम् । अत्रैव स्थातव्यमिति मम वचश्च कार्यमिति । यद्वा यथा कस्यचिदपि व्यलीकं न कुरुषे तथा इदमपि मम वचस्त्वया कार्यमित्यर्थः ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥ एवं रामायणपुरुषेषु रामकर्तव्यं सामान्यधर्मानुष्ठानं दर्शितम् ।

अहं गमिष्यामि महावनं प्रिये त्वया हि वस्तव्यमिहैव भामिनि । यथा व्यलीकं कुरुषे न कस्यचित्तथा त्वया कार्यमिदं वचो मम ॥ ३८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे षड्विंशः सर्गः ॥ २६ ॥

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी । प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत् ॥ १ ॥ किमिदं भाषसे राम वाक्यं लघुतया ध्रुवम् । त्वया यदपहास्यं मे श्रुत्वा नरवरात्मज ॥ २ ॥

अथ सीतानुष्ठेयं पातिव्रत्यधर्मं संक्षेपेणोपक्षिपति–एवमुक्तेत्यादि । अप्रियवादिन्यपि प्रियार्हा प्रियभाषणार्हा । तदुपरि प्रियवादिनी । तथाप्येवमुक्ता अप्रियमुक्ता । प्रणयादेव सौहृदादेव, न तु वैरात् संक्रुद्धा ॥ १ ॥ किमिति । हे राम ! त्वया लघुतया ध्रुवं निश्चितम् । अत्यन्तनिस्सारमित्यर्थः । " ध्रुवो भभेदे क्लीबन्तु निश्चिते शाश्वते त्रिषु " इत्यमरः । लघुत्वमेवाह यदिति । यद्वाक्यं श्रुत्वा मे स्त्रिया अपि अपहास्यं भवति तद्वाक्यं भाषसे किमिदम् अयमपूर्वप्रकारः इतःपूर्वं न दृष्टचरः । नरवरात्मजेत्यनेनास्यासम्भावितमुच्यते । त्वामिह स्थाप्य वनं गमिष्यामीत्येतद्वचनमेतावत्पर्यन्त

अहमिति । कस्य चिद्व्यलीकम् अप्रियं यथा न कुरुषे न करिष्यसि।त्वया तथा कार्यम् आचरितव्यम्,इदं मम वचः आज्ञापितमेतत् सर्वदा हृदि स्थाप्यमिति भावः ॥३८॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां षड्विंशः सर्गः॥२६॥ एवं रामेण गृहनिवासमुक्ते वनवास एव मम च धर्मतो न्यायप्राप्त इति सीताह–एवमिति । प्रणयादेव स्नेहबलादेव, संक्रुद्धा मत्पृथक्स्थितिमादिशतीत्यमर्षात् ॥ १ ॥ स एवामर्षः प्रदर्श्यते–किमिदमिति । इदं किं भाषसे कुतः लघुतया ध्रुवं लघुत्वेन निश्चितम्, अतितुच्छमिति यावत् । त्वया यद्भाषितं तच्छ्रुत्वा मे अपहास्यं परिहासास्पदं जायते ॥ २ ॥

सत्य०–हे राम ! इदं किं भाषसे । तन्मयि लघुतया लाघवनिमित्तेन न त्वद्गौरवेण । ध्रुवं निश्चयः । कुतः ? हे नरोत्तम ! यद्वाक्यं त्वयैव श्रुत्वाऽपहास्यं किमन्यैरित्यन्वयः ॥ २ ॥

१ नरवरात्मज । वीराणां राजपुत्राणां शस्त्रास्त्रविदुषां नृप । अनर्हमयशस्यं च न श्रोतव्यं त्वयेरितम्॥ इत्यधिकः पाठः ।

मनुसृतायाः प्रणयधारायाः पन्थानं नारोहतीति भावः ॥ २ ॥ कथं मम वाक्यस्य परिहासास्पदत्वमित्यत्राह—आर्यपुत्रेति । भर्तारंप्रति भार्यायाः सम्बोधनमार्यपुत्रेति । भर्तृसम्बन्धिपित्रादयः । स्वानि पुण्यानि स्वकृतपुण्यफलानि । एतत् पापफलस्याप्युपलक्षणम् । भुञ्जानाः अनुभवन्तः । स्वंस्वं स्वस्यैव फलप्रदं भाग्यं शुभाशुभं कर्म । उपासते आचरन्ति । " भाग्यं कर्म शुभाशुभम् " इत्यमरः ॥ ३ ॥ पूर्वोक्ताः सर्वे स्वकीयकर्म

आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषा । स्वानि पुण्यानि भुञ्जानाः स्वंस्वं भाग्यमुपासते ॥ ३ ॥ भर्तुर्भाग्यं तु भार्य्यैका प्राप्नोति पुरुषर्षभ । अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥४॥ न पिता नात्मजो राम न माता न सखीजनः । इह प्रेत्य च नारीणां पतिरेको गतिः सदा ॥ ५ ॥ यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव । अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् ॥ ६ ॥ ईर्ष्यारोषौ बहिष्कृत्य भुक्तशेषमिवोदकम् । नय मां वीर विस्रब्धः पापं मयि न विद्यते ॥ ७ ॥

फलान्यनुभवन्ति । भर्तुरर्द्धशरीरभूता भार्या भर्तृकृतभाग्यफलमेवानुभवतीत्याह—भर्तुरिति । भार्यैका भार्यैव तु भर्तुर्भाग्यं प्राप्नोति, सहाधिकृतत्वात् । यस्मादेवं तस्मादेवाहमपि वने वस्तव्यमित्यादिष्टैव त्वदादेष्टृभिः । आवयोः सहधर्मचारित्वात्त्वदादेशेनैव ममाप्यादेशः सिद्ध इति भावः ॥ ४ ॥ एवं भर्तृसमानभाग्यत्वं स्वगमनहेतुरुक्तः, तदेकगतिकत्वमपि गमनहेतुरित्याह—नेति । प्रेत्य परलोक इत्यर्थः ॥ ५ ॥ फलितार्थमाह—यदीति । अग्रतो गमने हेतुमाह मृद्नन्ती मर्दयन्ती, मृदूकुर्वन्तीत्यर्थः । कुशरूपकण्टकान् ॥ ६ ॥ ईर्ष्येति । परातिशयाक्षमा ईर्ष्या, त्वदनु

आर्यपुत्रेति । पित्रादयः स्वानि पुण्यानि कर्मफलानि भुञ्जानाः भोक्तुं प्रवृत्ताः, स्वं स्वं भाग्यं स्वानुष्ठितं कर्मैव, उपासते उपजीवन्ति न तु पित्राद्यनुष्ठितम्, तत्र तेषां सहाधिकाराभावात् । भर्तुरर्धशरीरभूता भार्या तु कर्मफलभोगे प्रवृत्ता भर्त्रनुष्ठितं कर्मैव उपजीवति । तयोः सहाधिकारादित्यर्थः। अतश्चेति। अतः कारणादेव । अहमपि वने वस्तव्यमित्यादिष्टैव, तव वनगमनादेशादेव " अर्धो वा एष आत्मनो यत्पत्नी " इत्युक्तप्रक्रियया त्वदर्धशरीरभूताया ममाप्यादेश इत्यर्थः ॥४॥ यदेवमतः इह लोके च नारीणां न पित्रादिर्गतिः, पतिरेक एव सदा गतिः अतः, मृद्नन्ती मर्दयन्ती ॥ ५ ॥ ६ ॥ ईर्ष्येति । मया निवर्तिता स्वयं स्त्री च सती

स०—इह लोके नारीणां न विद्यन्ते अरयो येषां ते नारयस्तेषां साधूनां त्वं न केवलं पिता अपि तु आत्मजः । न केवलमात्मजः किन्तु आत्मा स्वामी चेत्यन्वयः । यथोक्तं " माता रामः " इत्यादि ॥ ६ ॥ " पीतशेषं न च पिबेत् " इत्यादेर्यथा पीतोच्छिष्टं जलादि बहिष्कार्यं तथेर्ष्यारोषौ बहिष्कृत्य मां नयेत्यर्थः । यत्तु भुक्तभोगया त्वया किं प्रयोजनमित्यनतार्थं यथा दुष्प्रापपानीयकान्तारयायिना पीतशेषं कम-

वर्तनेन चरितार्थैयं भविष्यतीत्येवंरूपा । अत्रैव सुखमास्वेति मयोक्तापि स्वयमनुगमिष्यामीति ब्रूत इति रोषः । तौ भुक्तशेषं शास्त्रनिषिद्धतयोक्तमुदक मिव बहिष्कृत्य निःशेषं निरस्य । विस्रब्धः निश्शङ्कस्सन् मां नय । वीरेत्यनेन स्त्रियमेकाकी कान्तारं कथं नयेयमिति शङ्का न कर्तव्येत्युक्तम् । पापं मयि न विद्यते भवद्वियोगे जीवनहेतुपापं न विद्यत इत्यर्थः । पापान्तरस्यात्र प्रसक्त्यभावात् ॥ ७ ॥ प्रासादवासं विहाय किमर्थं वनवासं गच्छसीत्य

प्रासादाग्रैर्विमानैर्वा वैहायसगतेन वा । सर्वावस्थागता भर्तुः पादच्छाया विशिष्यते ॥ ८ ॥
अनुशिष्टाऽस्मि मात्रा च पित्रा च विविधाश्रयम् । नास्मि सम्प्रति वक्तव्या वर्तितव्यं यथा मया ॥ ९ ॥

त्राह–प्रासादाग्रैरिति । पञ्चम्यर्थे तृतीया । प्रासादाग्रैः सार्वभौमवासप्रासादाग्रेभ्यः । विमानैर्वा स्वर्लोकादिस्थितविमानाग्रेभ्यो वा । वैहायसगतेन अणिमा द्यष्टैश्वर्यसिद्धिसम्पन्नोचितविहायस्सम्बन्धिगमनाद्वा । सर्वावस्थागता दुरवस्थापन्नापीत्यर्थः । यद्वा सर्वावस्थासु गता अनुगता स्थायिनी, स्वरूपप्राप्तेति यावत् । पादच्छाया पादसेवा । विशिष्यते अतिरिच्यते ॥ ८ ॥ उपदेशानुसारादपि मयानुगन्तव्यमित्याह–अनुशिष्टेति । यथा मया भर्तृविषये कथं वनं गमिष्यामीति ब्रूत इत्यक्षान्तिरीर्ष्या, मद्वचनमुल्लङ्घ्यवर्तीति वा मृष्टमन्नं परित्यज्य फलमूलाभ्यां वर्तनमपेक्षत इति वा रोषः । तौ बहिष्कृत्य त्यक्त्वा विस्रब्धः निश्शङ्कः मां नय । अत्र हेतुगर्भं विशेषणं वीरेति । त्यागप्रयोजकं पापं च मयि न विद्यते । नीतयापि मया ततः सुखमेव । अत्रोभयत्र दृष्टान्तः–भुक्त शेषमुदकमिवेति । दुष्प्रापपानीयकान्तारयायिना जनेन पीतशेषं कमण्डलुनिष्ठं यथोदकमपापमवश्यं नेयमात्मोपकार्येव केवलं तद्वदित्यर्थः ॥ ७ ॥ नित्यसम्बन्धि त्वादपि नाहं परित्याज्येत्याह–प्रासादाग्रैरिति । प्रासादाग्रे स्थितिमता विमानैः यानवता योगबलात् केवलं वैहायसगतेन । मत्वर्थीयाजन्ताः । वैहायसगतिमता तथा सर्वावस्थां गतेनापि, भर्त्रा भर्तुः पादच्छायेव भर्त्रा सह स्त्री सर्वावस्थागता भवतीति विशिष्यते विधीयते । अथवा प्रासादाग्रैरित्यादि पञ्चम्यर्थे तृतीया । प्रासादा ग्रेभ्यः विमानैर्वा स्वर्लोकादिस्थितविमानेभ्यो वा, वैहायसगतेन अणिमाद्यष्टसिद्धिसम्पन्नोचिताविहायस्सम्बन्धिगमनात्, सर्वावस्थागता दुरवस्थापन्नापि । एतेभ्यः भर्तुः पादच्छाया पादसेवा विशिष्यते अतिरिच्यते ॥ ८ ॥ अनुशिष्टास्मीति । विविधाश्रयं विविधार्थम् । अनुशिष्टास्मि भर्तुरनुवर्तिनी भवेति सुशिक्षितास्मि ।

ण्डलुनिष्ठमुदकमवश्यं नेयमेव तथा अहमप्यवश्यं नेयैवेति तीर्थादिप्रलपनं तत्त्वसमुदाहृतप्रमाणपर्यालोचनया पीतशेषकमण्डलूदकस्येव दार्ष्टान्तिकीभूतसीताया अपि दोषित्वप्राप्त्या पापं मयि न विद्यत इति चरस चरणोक्तार्थविरुद्धत्वात् दुष्प्रापपानीयकान्तारयायिन उच्छिष्टोदकानयने दुर्घटजीवनत्ववत् स्वरमणस्य रामस्यापि रामामन्तराऽऽरामगमने तथात्वप्राप्तेश्चाल्पमतिजल्पनमितिकल्पयामः ॥ ७ ॥ **प्रासादाग्रै**रित्याद्या सहयोगे तृतीया 'वृद्धो यूना' इति निर्देशात् । तथा च तैस्सहितस्य भर्तुर्या पादच्छाया **सर्वावस्थागता** तस्याः सकाशाद्विशिष्यते भार्येति शेषः । अगृह्णानः सर्वाङ्गच्छायां गृह्णानश्च पादच्छायां भार्यायाः पति पादैकसेवारतत्वं द्योतयति । वैहायसगतेनेति भावे क्तः । यद्वा छायेत्यस्य आवृत्तिः । तथाच भर्तुः पादच्छाया अविशिष्यते भार्या । पादच्छाया यथा इदानीं नेतव्या इदानीं न नेतव्येति न विशिष्यते तथा भार्यापि छायाप्रतिबिम्बभूतेति अविशिष्यते । "छाया प्रतिबिम्बार्कयोषितोः । वा विकल्पोपमानयोः" इति च विश्वः ॥ ८ ॥ **मया** रमया यथा वर्तितव्यं तथा मात्रा पित्राप्यनुशिष्टास्मि । संप्रति इदानीम् । विविधाश्रयं भरतादिनानाश्रयमुद्दिश्य न वक्तव्या । त्वयेति शेषः ॥ ९ ॥

वर्तितव्यं तथा मात्रा पित्रा च विविधाश्रयं विविधप्रकारमनुशिष्टास्मि । सम्प्रतीदानीं न वक्तव्यास्मि, न शिक्षणीयास्मीति यावत् ॥ ९ ॥
रामानु०—अनुशिष्टेति। मात्रा पित्रा च विविधाश्रयं विविधैर्वर्णैराश्रमिभिश्चाश्रीयत इति विविधाश्रयम्, श्रेयःसाधनत्वेन सर्वैरनुष्ठेयमाचारमिति यावत्। अनुशिष्टास्मि सुशिक्षितास्मि, तस्माद्यथा मया वर्तितव्यम् आचरितव्यं तथा सम्प्रति न वक्तव्यास्मि, पूर्वमेव सर्वं विदितवत्यस्मीत्यर्थः॥९॥ उपदेशफलमाह—अहमित्यादि । दुर्गत्वादिविशेषणविशिष्टमपीत्यर्थः ॥१०॥

अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम् । नानामृगगणाकीर्णं शार्दूलवृकसेवितम् ॥ १० ॥ सुखं वने निवत्स्यामि यथैव भवने पितुः । अचिन्तयन्ती त्रीन् लोकान् चिन्तयन्ती पतिव्रतम् ॥ ११ ॥ शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी । सह रंस्ये त्वया वीर वनेषु मधुगन्धिषु ॥१२॥ त्वं हि कर्तुं वने शक्तो राम सम्परिपालनम् । अन्यस्यापि जनस्येह किंपुनर्मम मानद ॥ १३ ॥ सह त्वया गमिष्यामि वनमद्य न संशयः । नाहं शक्या महाभाग निवर्त्तयितुमुद्यता ॥१४॥ फलमूलाशना नित्यं भविष्यामि न संशयः । न ते दुःखं करिष्यामि निवसन्ती सह त्वया[1] ॥ १५ ॥ इच्छामि सरितः शैलान् पल्वलानि वनानि च । द्रष्टुं सर्वत्र निर्भीता त्वया नाथेन धीमता ॥ १६ ॥

दुःखावहेयं प्रवृत्तिरित्यत्राह—सुखमिति । त्रीन् लोकान् अचिन्तयन्ती त्रैलोक्यैश्वर्यमप्यगणयन्तीत्यर्थः । पतिव्रतं पतिविषयं व्रतम्, पतिशुश्रूषणमित्यर्थः ॥ ११ ॥ शुश्रूषमाणेति । नियता नियमयुक्ता । ब्रह्मचारिणी नियतेन्द्रियेत्यर्थः । कामभोगवर्जिता वा । रंस्ये अपूर्वदर्शनेन सन्तुष्टा भविष्यामीत्यर्थः । मधुगन्धिषु पुष्परसगन्धिषु । "मद्ये पुष्परसे मधु" इति वैजयन्ती ॥ १२ ॥ १३ ॥ सहेति । उद्यता वनगमनोद्युक्ता ॥ १४ ॥ फलमूलाशनेति । दुःखम् अशनपानाभ्यर्थनरूपम् ॥ १५ ॥ १६ ॥

अतः सम्प्रति न वक्तव्या नोपदेष्टव्यास्मि ॥ ९ ॥ १० ॥ सुखमिति । लोकानचिन्तयन्ती त्रैलोक्यैश्वर्यमपि न गणयन्ती । पतिव्रतं पातिव्रत्यम् चिन्तयन्ती अपेक्षमाणा ॥ ११ ॥ शुश्रूषमाणेति । ब्रह्मचारिणी तपश्चरणशीला, नियता नियमयुक्ता, मधुगन्धिषु मकरन्दसुरभिषु ॥ १२ ॥ त्वं हीति । अन्यस्यापि त्वदेकशरणजनान्तरस्यापि ॥ १३ ॥ सहेति । निवर्तयितुं न शक्येति न्यायप्राप्तानुगमनत्वादित्याशयः ॥ १४ ॥ नते दुःखमिति । अन्नपानादिविशेषसम्पादनायेति

सत्य०—हे राम ! त्वमन्यस्यापि परिपालनं कर्तुं वने शक्तः । हे मानद राम ! मम परिपालने शक्त इति किमु वक्तव्यम्। अतोऽत्रैव वस्तव्यमिति मा नद ब्रूहि इत्यावृत्तेनान्वयः ॥ १३ ॥

[1] त्वया । अग्रतस्ते गमिष्यामि भोक्ष्ये भुक्तवति त्वयि । इत्यधिकः पाठः ।

कारण्डवाः जलकुक्कुटाः । "मद्गुः कारण्डवः प्लवः" इत्यमरः ॥१७॥१८॥ एवमिति । व्यतिक्रमं व्यतिक्रान्तम् । वर्षसहस्राणां शतमपि न वेत्स्यामि क्षण मिव नेष्यामि किं पुनश्चतुर्दशसमा इतिभावः । स्वर्गोऽपि न हि मे मतः, त्वया विनेति शेषः ॥ १९ ॥ एतदेव विवृणोति–स्वर्गेऽपि चेति ॥ २० ॥ अह मिति । मृगैः आयुतम् आ समन्ताद्युक्तम् । मृगैः अयुतं नामिश्रितं, मिश्रितमित्यर्थः । "यु मिश्रणामिश्रणयोः" इतिधातुः । अत्रेदमवधेयम्–वने मारीचो

हंसकारण्डवाकीर्णाः पद्मिनीः साधु पुष्पिताः । इच्छेयं सुखिनी द्रष्टुं त्वया वीरेण सङ्गता ॥ १७ ॥ अभिषेकं करिष्यामि तासु नित्यं यतव्रता । सह त्वया विशालाक्ष रंस्ये परमनन्दिनी ॥ १८ ॥ एवं वर्षसहस्राणां शतं वाऽहं त्वया सह । व्यतिक्रमं न वेत्स्यामि स्वर्गोऽपि न हि मे मतः ॥ १९ ॥ स्वर्गोऽपि च विना वासो भविता यदि राघव । त्वया मम नरव्याघ्र नाहं तमपि रोचये ॥ २० ॥ अहं गमिष्यामि वनं सुदुर्गमं मृगायुतं वानरवारणैर्युतम् । वने निवत्स्यामि यथा पितुर्गृहे तवैव पादावुपगृह्य संयता ॥ २१ ॥ अनन्यभावामनुरक्तचेतसं त्वया वियुक्तां मरणाय निश्चिताम् । नयस्व मां साधु कुरुष्व याचनां न ते मयाऽतो गुरुता भविष्यति ॥ २२ ॥

मृगो भविष्यति तत्प्रसङ्गेनावयोर्वियोगः स्यात् तत्र कोवा पुनर्घटकः, कथं त्वं तु मया विना स्थातुं शक्तासीति चिन्तयन्तं रामंप्रति सीता सूचयति वानरवारणैरित्यादि । तथाहि मृगो मारीचः, वानरवारणैः वानरश्रेष्ठैः सुग्रीवादिभिः । पुनर्वनग्रहणात् वनेपि अशोकवनेपि वत्स्यामि पुनस्तवैव पादावुप संगृह्य संयता नियता भविष्यामीति ॥२१॥ अनन्यभावामिति । अन्वयव्यतिरेकाभ्यां स्वानुरक्तेत्युच्यते, अतएव त्वया वियुक्तां मरणाय निश्चितां त्वया वियुक्तत्वे मरणाय निश्चितामित्यर्थः । मां नयस्व । परमार्थस्तु–रावणगृहीतामपि त्वय्येवासक्तचित्ताम् । अथ वेण्युद्ग्रथनेन मरणाय निश्चितां हनुमत्प्रेषणा

भावः ॥१५॥१६॥ हंसेति । कारण्डवाः जलकुक्कुटाः ॥ १७ ॥ १८ ॥ एवमिति । व्यतिक्रमम् अपक्रान्तम् । वर्षसहस्राणां शतं वा न वेत्स्यामि, किमुत चतुर्दशवर्षा णीति भावः । स्वर्गोपि न हि मे मतः, त्वया विनेतिशेषः ॥ १९ ॥ २० ॥ अहमिति । मृगायुतं मृगमिश्रितम् ॥ २१ ॥ अनन्येति । याचनां वनानुगमन याचनाम् । साधु कुरुष्व चरितार्थं सम्पादय, अतः " फलमूलाशना नित्यं भविष्यामि न संशयः । न ते दुःखं करिष्यामि निवसन्ती सह त्वया ॥ " इत्याद्यु

दिकमुखेन नयस्व । याचनां देवकृतरावणवधाभ्यर्थनम् । साधु कुरुष्व । मया कृतात् अतोऽनुगमनात्ते गुरुता भारः न भविष्यति, क्लेशो न भविष्यती त्यर्थः ॥ २२ ॥ तथेति । धर्मवत्सलः कान्ताक्लेशासहिष्णुः । निनीषति नेतुमिच्छति । बह्विति क्रियाविशेषणम् । सन्निवर्त्तने सन्निवर्त्तननिमित्तम् ॥ २३॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥ 'वने निवासस्य च दुःखिताम्'

तथा ब्रुवाणामपि धर्मवत्सलो न च स्म सीतां नृवरो निनीषति । उवाच चैनां बहु सन्निवर्त्तने वने निवासस्य च दुःखितां प्रति ॥२३॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे सप्तविंशः सर्गः ॥२७॥ स एवं ब्रुवतीं सीतां धर्मज्ञो धर्मवत्सलः । न नेतुं कुरुते बुद्धिं वने दुःखानि चिन्तयन् ॥ १ ॥ सान्त्वयित्वा पुनस्तां तु बाष्पदूषितलोचनाम् । निवर्त्तनार्थे धर्मात्मा वाक्यमेतदुवाच ह ॥ २ ॥ सीते महाकुलीनासि धर्मे च निरता सदा । इहाचरस्व धर्मं त्वं मा यथा मनसः सुखम् ॥ ३ ॥ सीते यथा त्वां वक्ष्यामि तथा कार्यं त्वयाबले । वने दोषा हि बहवो वदतस्तान्निबोध मे ॥ ४ ॥ सीते विमुच्यतामेषा वनवासकृता मतिः । बहुदोषं हि कान्तारं वन मित्यभिधीयते ॥ ५ ॥ हितबुद्ध्या खलु वचो मयैतदभिधीयते । सदा सुखं न जानामि दुःखमेव सदा वनम् ॥ ६ ॥

इत्युक्तं विवृणोति–स एवमित्यादिना ॥ १ ॥ २ ॥ सीत इति । मा यथा मनसः सुखं मनसो यथा सुखं भवति तथा माचरेत्यर्थः ॥ ३ ॥ ४ ॥ सीत इति । बहुदोषम् अहिकण्टकादियुक्तत्वात् । कान्तारं महारण्यम् " महारण्ये दुर्गपथे कान्तारं पुंनपुंसकम् " इत्यमरः ॥५॥ हितबुद्ध्येति । हित

क्ताद्धेतोर्मया निमित्तेन, गुरुता भारो न भविष्यति ॥ २२ ॥ तथेति । न निनीषति स्म, नेतुं नैच्छत् सन्निवर्तने सन्निवर्तननिमित्तम् । दुःखितां दुःखित्व ज्ञापनं प्रति ॥ २३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां सप्तविंशः सर्गः ॥ २७ ॥ १ ॥ २ ॥ सीत इति । स्वधर्मं स्ववाक्यपरिग्रहप्रयोजनं स्वकुलधर्मम् इहैव स्थित्वा यथा मनसः सुखं भवति, स्वशक्त्यनुसारेणेत्यर्थः । मां मामुद्दिश्याचर । अथवा धर्ममेवाचर, मनसः यथा सुखं भवति तथा माचरेति वार्थः ॥ ३ ॥ ४ ॥ सीत इति । बहुदोषमिति बहवो दोषाः क्लेशाः यस्मिन्निति बहुदोषम्, कान्तारं दुष्प्रवेशं वनम् । हि यस्मात् बहुदोषमित्यभिधीयते ॥ ५ ॥ हितबुद्ध्येति । हितबुद्ध्याभिधीयते न तु त्वद्धरणादिप्रयासोपाधिनेत्यर्थः । सदा सर्वकालेपि सुखं

सत्य०–बाष्पदूषितलोचनाम् बाष्पक्लिन्नकज्जलादियुक्तलोचनाम् ॥ २ ॥ वसन इति पुल्लिङ्गनिर्देशेन पुरुषस्यैव यदा दुःखबाहुल्यं तदा किमु स्त्रिया इति सूचयति । वसत इति पाठः ॥ ४ ॥ कान्तायाः अर अरमण असुखमिति यावात् । यस्मिंस्तत्कान्तारमिति वनमभिधीयते । कुतः हि यस्मात् बहुदोषः बहुव्रीहिः । कान्तारं दुस्साध्यमार्गमित्यर्थः । " कान्तारं वर्त्म दुर्गमम् " इत्यमरः ॥ ६ ॥

बुद्धया न तु त्वद्धरणक्लेशेन ॥ ६ ॥ महावने विद्यमानान् दोषानाह—गिरिनिर्झरेत्यादि । गिरिनिर्झरसम्भूताः गिरिनिर्झरेषु प्रवृद्धाः । श्रोतुं दुःखाः दुःखकराः । अतो वनं दुःखं दुःखकरम् ॥ ७ ॥ क्रीडमाना इति । शून्ये निर्मानुषे प्रदेशे । विस्रब्धाः निःशङ्काः सन्तः । क्रीडमानाः क्रीडन्तः । अतएव मत्ताः महामृगाः सिंहशार्दूलादयः । अस्मान् दृष्ट्वा अपूर्वदर्शनात्समभिवर्तन्ते हन्तुमभिमुखमागच्छेयुः ॥ ८ ॥ सग्राहा इति । सग्राहाः

गिरिनिर्झरसम्भूता गिरिकन्दरवासिनाम् । सिंहानां निनदा दुःखाः श्रोतुं दुःखमतो वनम् ॥ ७ ॥ क्रीडमानाश्च विस्रब्धा मत्ताः शून्ये महामृगाः । दृष्ट्वा समभिवर्त्तन्ते सीते दुःखमतो वनम् ॥ ८ ॥ सग्राहाः सरितश्चैव पङ्कवत्यश्च दुस्तराः । मत्तैरपि गजैर्नित्यमतो दुःखतरं वनम् ॥ ९ ॥ लताकण्टकसङ्कीर्णाः कृकवाकूपनादिताः । निरपाश्च सुदुर्गाश्च मार्गा दुःखमतो वनम् ॥ १० ॥ सुप्यते पर्णशय्यासु स्वयंभग्नासु भूतले । रात्रिषु श्रमखिन्नेन तस्माद्दुःखतरं वनम् ॥ ११ ॥

सनक्राः । पङ्कवत्यः बहुपङ्काः । मत्तैर्गजैरुपलक्षिताश्च । अत एव दुस्तराः सरितः सन्ति । अतो दुःखतरं पूर्वोक्तदुःखसम्मेलनादतिशयेन दुःखवत् ॥ ९ ॥ यत्र न निर्झरादयस्तेनैव मार्गेण गमिष्याम इत्यत्राह—लता इति । लताः पद्माकर्षिण्यः, कण्टकाः पादवेधकाः । कृकवाकवः वनकुक्कुटास्तैरुपनादिताः तन्नादयुक्ता इत्यर्थः । तन्नादा अप्यश्रुतपूर्वत्वात् भयावहा एव । निरपाः निर्गतजलाः । "ऋक्पूरब्धूः—" इत्यादिना समासान्तः अप्रत्ययः ॥ १० ॥ सुप्यत इति । भूतले न तु पर्यङ्के । तत्रापि पर्णशय्यासु नतु मृदुतूलास्तरणेषु । तत्रापि स्वयं भग्नासु जीर्णतया स्वयमेव पतितासु । रात्रिषु न त्वहःसु । श्रमखिन्नेन फलमूलाद्याहरणश्रमदुःखितेन, वनवासिना सुप्यते अतोऽस्माभिरपि तथा स्वपितव्यमिति भावः ॥ ११ ॥

नास्तीति जानामि निश्चिनोमि ॥ ६ ॥ गिरिनिर्झरेति । गिरिनिर्झरसम्भूताः गिरिनिर्झरेभ्यः सम्भूताः प्रभूताः निनदाः तथा गिरिकन्दरवासिनां सिंहानां निनदाश्च श्रोतुं दुःखाः कष्टाः अतो वनं दुःखं दुःखप्रदम् ॥ ७ ॥ क्रीडमानाश्चेति । विस्रब्धाः निरङ्कुशाः, शून्ये निर्मानुषे समभिवर्तन्ते हन्तुमागच्छेयुरित्यर्थः ॥ ८ ॥ सग्राहा इति । गजैरपि दुस्तराः सरितः इति योजना ॥ ९ ॥ लतेति । कृकवाकूपनादिताः वनकुक्कुटनादयुक्ताः । निरपाः निर्गतोदकाः ॥ १० ॥ सुप्यत इति । स्वयं भग्नासु जीर्णतया स्वयमेव पतितासु पर्णशय्यासु "सान्द्रपर्णेष्वेव शयीत" इत्युक्तेः । श्रमखिन्नेन दिवा फलाद्यानयनश्रमखिन्नेन मया उक्तशय्यायां सुप्यते ॥ ११ ॥

अहोरात्रमिति। अहोरात्रं सायम्प्रातश्च। वृक्षावपतितैः वृक्षात्स्वयं पतितैः फलैः। नियतात्मना नियतमनस्केन, इतरानभिलाषिणेत्यर्थः। वनवासिना सन्तोषः भोजनतृप्तिः कर्त्तव्यः ॥ १२ ॥ उपवास इति । यथाप्राणेन यथाशक्त्या ॥ १३ ॥ १४ ॥ कार्य इति। त्रिरभिषेकश्च नैककाल इत्याह कालेकाल इति। प्रातर्मध्याह्नसायाह्नेष्वित्यर्थः । एतच्च न कतिपयदिनेषु किन्तु प्रतिदिनमित्याह नित्यश इति ॥ १५ ॥ उपहार इति । उप

अहोरात्रं च सन्तोषः कर्त्तव्यो नियतात्मना। फलैर्वृक्षावपतितैः सीते दुःखमतो वनम् ॥१२॥ उपवासश्च कर्तव्यो यथाप्राणेन मैथिलि। जटाभारश्च कर्त्तव्यो वल्कलाम्बरधारिणा॥१३॥ देवतानां पितॄणां च कर्तव्यं विधिपूर्वकम्। प्राप्तानामतिथीनां च नित्यशः प्रतिपूजनम् ॥१४॥ कार्यस्त्रिरभिषेकश्च कालेकाले च नित्यशः। चरता नियमेनैव तस्माद्दुःखतरं वनम् ॥ १५ ॥ उपहारश्च कर्तव्यः कुसुमैः स्वयमाहृतैः । आर्षेण विधिना वेद्यां बाले दुःखमतो वनम् ॥१६॥ यथालब्धेन सन्तोषः कर्त्तव्यस्तेन मैथिलि। यताहारैर्वनचरैर्नित्यं दुःखमतो वनम् ॥१७॥ अतीव वातास्तिमिरं बुभुक्षा चात्र नित्यशः। भयानि च महान्त्यत्र ततो दुःखतरं वनम् ॥ १८ ॥ सरीसृपाश्च बहवो बहुरूपाश्च भामिनि। चरन्ति पृथिवीं दर्पात्ततो दुःखतरं वनम् ॥ १९ ॥ नदीनिलयनाः सर्पा नदीकुटिलगामिनः। तिष्ठन्त्यावृत्य पन्थानं ततो दुःखतरं वनम् ॥ २० ॥

हारो बलिः। "उपहारो बलिर्मतः" इति हलायुधः। आर्षेण ऋषिप्रोक्तेन। विधिना कल्पेन ॥१६॥ यथेति। यथालब्धेन यावल्लब्धेन तेन फलादिना आहारेण सन्तोषः तृप्तिः। यताहारैर्नियताहारैः ॥१७॥ अतीति। अत्र वने वाताश्चातीव बहुलाः। तिमिरञ्च रात्रिष्वतीवास्ति। बुभुक्षा चातीव भवति। भयानि पूर्वोक्तानि ॥१८॥ सरीसृपा इति। सरीसृपाः गिरिसर्पाः। बहुरूपाः पृथुशरीराः ॥१९॥ नदीनिलयना इति। नदीकुटिलगामिनः नदीवत् कुटिल

अहोरात्रमिति। वृक्षावपतितैः वृक्षेभ्यः स्वयमेव पतितैः फलैरेव अहोरात्रं प्रातः सायं च सन्तोषः तृप्तिः कार्यः ॥ १२ ॥ उपवासश्चेति । यथाप्राणेन यथाबलानुसारेण ("तृतीया सप्तम्योर्बहुलम्" इत्युक्तेर्नाम्भावः।) ॥ १३ ॥ १४ ॥ कार्यस्त्रिरिति। नित्यशः प्रतिदिनं कालेकाले प्रातरादिकाले अभिषेकस्त्रिः कार्यः, त्रिषवणस्नानं कर्तव्यमित्यर्थः। नियमेनैव चरता कालक्षेपं कुर्वता ॥ १५ ॥ उपहार इति। उपहारः पूजा। आर्षेण विधिना वानप्रस्थोचितविधानेन ॥१६॥ यथेति। यथाहारैः वनस्थैः यथालब्धेन यादृशं वस्तु यथा प्राप्नोति तेन रूपेणेत्यर्थः ॥ १७ ॥ अतीवेति। तिमिरं, रात्रिष्विति शेषः ॥ १८ ॥ १९ ॥ नदीति। नदीवत्कुटिल

गामिनः॥२०॥ पतङ्गा इति। पतङ्गाः शलभाः। दंशाः वनमाक्षिकाः "दंशस्तु वनमक्षिका" इत्यमरः॥२१॥ द्रुमा इति। कुशकाशयोः शाखाः कुशकाशपर्णान्येव ॥ २२ ॥ कायक्लेशा इति। कायक्लेशाः व्रतोपवासादयः। अरण्यवासे अरण्यरूपवासस्थाने ॥ २३ ॥ क्रोधलोभाविति । भेतव्ये भयहेतुविषये । प्रागुक्तसर्पादौ न भेतव्यम्, भयं न कार्यम् ॥२४॥ तदिति। वनं गत्वाऽलमिति "अलंखल्वोः–" इतिनिषेधार्थालमुपपदे क्त्वा। न गन्तव्यमित्यर्थः ॥२५॥

पतङ्गा वृश्चिकाः कीटा दंशाश्च मशकैः सह। बाधन्ते नित्यमबले सर्वं दुःखमतो वनम् ॥२१॥ द्रुमाः कण्टकिनश्चैव कुशकाशाश्च भामिनि। वने व्याकुलशाखाग्रास्तेन दुःखतरं वनम् ॥ २२ ॥ कायक्लेशाश्च बहवो भयानि विविधानि च। अरण्यवासे वसतो दुःखमेव ततो वनम् ॥ २३ ॥ क्रोधलोभौ विमोक्तव्यौ कर्त्तव्या तपसे मतिः। न भेतव्यं च भेतव्ये नित्यं दुःखमतो वनम् ॥ २४ ॥ तदलं ते वनं गत्वा क्षमं न हि वनं तव। विमृशन्निह पश्यामि बहुदोषतरं वनम् ॥२५॥ वनं तु नेतुं न कृता मतिस्तदा बभूव रामेण यदा महात्मना। न तस्य सीता वचनं चकार तत् ततोऽब्रवीद्राममिदं सुदुःखिता ॥२६॥ इत्यार्षे श्रीरामायणे वाल्मीकीये श्रीमदयोध्याकाण्डे अष्टाविंशः सर्गः ॥२८॥

एतत्तु वचनं श्रुत्वा सीता रामस्य दुःखिता। प्रसक्ताश्रुमुखी मन्दमिदं वचनमब्रवीत् ॥ १ ॥ ये त्वया कीर्त्तिता दोषा वने वस्तव्यतां प्रति। गुणानित्येव तान् विद्धि तव स्नेहपुरस्कृतान् ॥ २ ॥

वनमिति। रामेण वनं नेतुं मतिर्यदा न कृता बभूव तदा सीता तस्य वचनं न चकार नाङ्गीचकार। इदम् उत्तरसर्गे वक्ष्यमाणम्॥२६॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टाविंशः सर्गः॥२८॥ एतदिति। पूर्वसर्गान्ते इदमित्युक्तावपि पुनरिदमित्युक्तिर्विशेषणविशेषाभिधानार्था। प्रसक्ताश्रुमुखी ईषदश्रुमुखीत्यर्थः ॥१॥ य इति। वस्तव्यतां वासित्वम्। तान् दोषान्। तव स्नेहपुरस्कृतान् गुणानित्येव

गामिनः ॥ २० ॥ पतङ्गा इति। पतङ्गाः शलभाः। दंशा वनमक्षिकाः ॥२१॥ द्रुमा इति। व्याकुलशाखाः व्याकुलाग्राश्चेत्युभयत्र क्रमाद्द्रुमकुशविशेषणम् ॥२२॥२३॥ क्रोधलोभाविति। भेतव्ये भयहेतुत्वे भयं न कार्यम् ॥ २४ ॥ तदलमिति। अलं न गन्तव्यम् ॥ २५ ॥ वनं त्विति। रामेण वनं नेतुं मतिर्यदा न कृता तदा सीता तस्य वचनं न चकार ततो हेतोरिदमब्रवीदिति योजना ॥ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायाम् अष्टाविंशः सर्गः ॥२८॥१॥ ये त्वयेति। वने वस्तव्यतां निवासं प्रति ये दोषाः कीर्तिताः। तान् दोषान्। तव स्नेहपुरस्कृतान् स्नेहसम्बन्धान् गुणानेव विद्धि, दोषा अपि

स०—अवस्तव्यनामिति च्छेदः। वस्तव्यं वासः। [illegible] तव्यप्रत्ययः। न विद्यते वस्तव्यं येषां ते अवस्तव्याः तेषां भावस्तत्ता तां प्रति, अवनवासमुद्दिश्येत्यर्थः। एतेन न तत्र आधिक्यशङ्कानवकाशः। गुणान्

विद्धि । प्रेयसा त्वया सह वर्तमानायाः मम कोकिलालापचन्दनमलयमारुतवत् सुखकराम् जानीहीत्यर्थः । अमुमर्थमुपरितनसर्गे कुशकाशेत्यादिश्लोकै र्विवरिष्यति ॥ २ ॥ मृगा इत्यादि । शरभाः अष्टपादमृगाः । सृमराः गवयाः । भये भयहेतौ । अस्मान् दृष्ट्वा अभिमुखमायास्यन्तीत्युक्तवान् रामः । इयं त्वपसर्पेयुरिति तत् [illegible]रिजहार ॥ ३ ॥ ४ ॥ त्वयेति । गुरुजनाज्ञया पित्रोराज्ञया त्वया च सह मया गन्तव्यम् । "अर्द्धो वा एष आत्मनो यत्पत्नी"

मृगाः सिंहा गजाश्चैव शार्दूलाः शरभास्तथा । पक्षिणः सृमराश्चैव ये चान्ये वनचारिणः ॥ ३ ॥ अदृष्टपूर्वरूप त्वात् सर्वे ते तव राघव । रूपं दृष्ट्वापसर्पेयुर्भये सर्वे हि बिभ्यति ॥४॥ त्वया च सह गन्तव्यं मया गुरुजनाज्ञया । त्वद्वियोगेन मे राम त्यक्तव्यमिह जीवितम् ॥ ५ ॥ न च मां त्वत्समीपस्थामपि शक्नोति राघव । सुराणामीश्वरः शक्रः प्रधर्षयितुमोजसा ॥ ६ ॥ पतिहीना तु या नारी न सा शक्ष्यति जीवितुम् । काममेवंविधं राम त्वया मम विदर्शितम् ॥७॥ अथ चापि महाप्राज्ञ ब्राह्मणानां मया श्रुतम् । पुरा पितृगृहे सत्यं वस्तव्यं किल मे वने ॥८॥

इतिश्रुत्युक्तप्रक्रियया जायापत्योरेकात्मत्वात् त्वद्विषयादेश एव मद्विषयादेश इत्यर्थः । त्वद्वियोगेन हेतुना । मे मया ॥५॥ न चेति । अपिशब्दो भिन्न क्रमः । सुराणामीश्वरोपीत्यर्थः ॥ ६ ॥ पतिहीनेति । या नारी पतिहीना पतिवियुक्ता सा जीवितुं न शक्ष्यतीत्येवंविधं त्वया मम कामम् अत्यर्थम् । विदर्शितम् उपदिष्टम् ॥ ७ ॥ अथेति । अथचापि अपिचेत्यर्थः । हे महाप्राज्ञ ! पुरा पितृगृहे वसन्त्या मया ब्राह्मणानां ब्राह्मणेभ्यः ज्योतिर्विद्भ्यः । मे

त्वत्सान्निधिवशाद् गुणतां भजन्त इत्यर्थः ॥ २ ॥ मृगा इति । सृमरः गवयः ॥ ३ ॥ अदृष्टपूर्वेति । ते सर्वे भयावहमृगाः, अदृष्टपूर्वरूपत्वात् अनालोकितैतादृश रूपत्वात् । अदृष्टपूर्वं तावकं रूपं येषां ते तथा, तेषां भावस्तत्त्वं तस्मादपसर्पेयुः ॥ ४ ॥ त्वयेति । गुरुजनाज्ञया " इयं सीता मम सुता सहधर्मचरी तव । छाये वानुगता सदा " इत्येवंरूपया गुरुजनस्याज्ञया, त्वद्वियोगेन हेतुना ॥ ५ ॥ ६ ॥ पतिहीनेति । कामं यथेच्छम् । एवं मदागमननिवारणाद्युक्तेन पूर्वसर्गोक्तं बहुदोष जातं त्वया विदर्शितम् । तथा हि पतिहीनाया नार्या जीवितुमशक्यत्वादहमपि जीविविरोधिनं त्वद्वियोगं सोढुं न शक्नोमीति भावः ॥ ७ ॥ अथ चापीति । विद्धि, मां प्रतीति शेषः । यतोऽहं तव स्नेहपुरस्कृता ॥ २ ॥ अपसर्पेयुः पलायनपरा भवेयुः । कुतः ? यस्मात् तव त्वत्तः सर्वे बिभ्यति । " भीषास्मात " इत्यादेः ॥ ४ ॥ हे राम ! एवंविधं त्वया निदर्शितं भरतमाश्रित्य वर्तस्वेत्यादि तत् कामं स्वेच्छानुसारेणैवोक्तम् । कुतः ? पतिहीना या नारी सा जीवितुं नहि शक्ष्यतीति । यद्वा कामम् एवंविधं जातं भरतत्वेन जातमाश्रित्येति यदुक्तं तत् अयमनिदर्शितं ममतारहितेन निदर्शितम् ॥ ७ ॥ ब्राह्मणानामिति कर्तरि षष्ठी । हे मे रमे ! अवने निमित्तसप्तमी रक्षणार्थम् । पुरा विवाहात्पूर्वं पितृगृहे वस्तव्यम् । अनन्तरं पतिनिकटे वने वस्तव्यमिति सत्यं विप्रैः श्रुतम् ॥ ८ ॥

मया वने वस्तव्यं किलेति सत्यं वचनं मया श्रुतम् ॥ ८ ॥ लक्षणिभ्य इति । लक्षणिभ्यः सामुद्रिकलक्षणज्ञेभ्यः । लक्षणज्ञानमस्त्येषामिति इनिः ॥९॥ आदेश इति । सः ब्राह्मणोक्तः वनवासस्यादेशः आदिष्टो वनवास इत्यर्थः । मया प्राप्तव्यः किल, ललाटलिखितस्यापरित्याज्यत्वादितिभावः । सा

लक्षणिभ्यो द्विजातिभ्यः श्रुत्वाहं वचनं पुरा । वनवासकृतोत्साहा नित्यमेव महाबल ॥९॥ आदेशो वनवासस्य प्राप्तव्यस्स मया किल। सा त्वया सह तत्राहं यास्यामि प्रिय नान्यथा ॥१०॥ कृतादेशा भविष्यामि गमिष्यामि सह त्वया । कालश्चायं समुत्पन्नः सत्यवाग् भवतु द्विजः ॥ ११ ॥ वनवासे हि जानामि दुःखानि बहुधा किल । प्राप्यन्ते नियतं वीर पुरुषैरकृतात्मभिः ॥ १२ ॥ कन्यया च पितुर्गेहे वनवासः श्रुतो मया । भिक्षिण्याः साधुवृत्ताया मम मातुरिहाग्रतः ॥ १३ ॥

एवमादिष्टाहं त्वया सह यास्यामि नान्यथा केवलं स्वेच्छया न यास्यामीत्यर्थः ॥ १० ॥ फलितमाह—कृतादेशेत्यादि । अयं कालः वनवासकालः । द्विजः लक्षणवादी । जातावेकवचनम् ॥११॥ वनवास इति । वनवासे दुःखानि जानामि, तानि अकृतात्मभिः अशिक्षितमनस्कैः । प्राप्यन्ते न तु मादृशैर्जनैरितिभावः ॥ १२ ॥ कन्ययेत्यादिश्लोकद्वयमेकान्वयम् । भिक्षिण्यास्तापस्याः । व्रीह्यादित्वादिनिः । वनवासः श्रुतः भावीति श्रुतः । इह गृहे

अथेति वाक्यालङ्कारे, पुरा पितृगृहे वने वस्तव्यं किलेति ब्राह्मणानां सत्यं सत्यवचनं मया श्रुतम् । अतो मे वन एव वस्तव्यं खलु ॥ ८ ॥ लक्षणिभ्य इति । लक्षणिभ्यः सामुद्रिकलक्षणज्ञेभ्यः ॥ ९ ॥ आदेश इति । सः वनवासस्य आदेशः, आदिष्टवनवास इत्यर्थः । प्राप्तव्यः अवश्यभोग्यः । स ब्राह्मणैरभिहितः वनवासस्य आदेशः मया प्राप्तव्यः । यस्मात्तस्मादेव हि सा श्रुतादेशा सती अहं त्वया यास्यामि नान्यथा एवं सति ॥ १०॥ कृतादेशेति । कृतादेशा कृतब्राह्मणनियोगा भविष्यामि, अतः त्वया सह गमिष्यामि । काल इति । समुत्पन्नः सम्प्राप्तः, वनवासस्येति शेषः । द्विज इति जात्येकवचनम् ॥ ११ ॥ वनवासे अजेयानि दुःखानि सन्तीति जानाम्येव तथापि तद्दुःखानि अकृतात्मभिः अजितेन्द्रियैः विषयलोलुपैः, नतु त्वादृङ्मादृशैर्जनैरित्यर्थः ॥ १२ ॥ कन्ययेत्यादि श्लोकद्वयमेकं वाक्यम् । मम पितुर्गेहे मातुरग्रतः साधुवृत्तायाः भिक्षिण्याः तापस्यास्सकाशात् कन्यया मया वनवासः श्रुतः भावीति श्रुतः, इहास्मिन् गृहे त्वया सह वनवासस्य गमनं

स०—तत्र रमारमणत्वानमम स रमात्वान्न त्यक्तुं योग्याऽहमित्याह—वनवासेषु कमलेषु कृतोत्साहेति ॥ ९ ॥ भिक्षिणी अपभ्रष्टभाषया कोरवञ्जी । साधुवृत्ताया इत्यनेन न प्रतारणार्थं तदुक्तिरिति सूचयति । इह मातुः एतज्जन्मनि जनन्याः । इहेत्यस्यास्मिन् गृह इति तथा अत्रत्यमिहेति उत्तरश्लोकान्वयीति च व्याकरणं चिन्त्यम् । अस्मिन्गृह इतीदंशब्दवोध्यरामगृहस्य तदानीं तदीयत्वाभावात् उत्तरश्लोकान्वयित्वस्य चागतिकगतित्वादिति ॥ १३ ॥

त्वया सह वनवासस्य गमनं लीलार्थं जाह्नवीतीरतपोवनादिगमनं कांक्षितं हि त्वं च बहुविधं प्रसादितो वै प्रसादित एवेति सम्बन्धः ॥ १३ ॥ १४ ॥ कृतक्षणेति । कृतक्षणा कृतोत्सवा । "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः । वनवासस्य वने वासो यस्य इति वनवासः तस्य । शूरस्य तव चर्या परिचर्या । मम मह्यं रोचते ॥ १५ ॥ शुद्धात्मन्निति । शुद्धात्मन् ईर्ष्यादिरहित ! प्रेमभावात् प्रेमस्वभावात् । हिः प्रसिद्धौ । भर्त्तारं

प्रसादितश्च वै पूर्वं त्वं वै बहुविधं प्रभो । गमनं वनवासस्य कांक्षितं हि सह त्वया ॥ १४ ॥ कृतक्षणाहं भद्र ते गमनं प्रति राघव । वनवासस्य शूरस्य चर्या हि मम रोचते ॥ १५ ॥ शुद्धात्मन् प्रेमभावाद्धि भविष्यामि विकल्मषा । भर्त्तारमनुगच्छन्ती भर्त्ता हि मम दैवतम् ॥ १६ ॥ प्रेत्यभावेऽपि कल्याणः सङ्गमो मे सह त्वया ॥ १७ ॥ श्रुतिर्हि श्रूयते पुण्या ब्राह्मणानां तपस्विनाम् । इह लोके च पितृभिर्या स्त्री यस्य महामते । अद्भिर्दत्ता स्वधर्मेण प्रेत्यभावेपि तस्य सा ॥ १८ ॥ एवमस्मात् स्वकां नारीं सुवृत्तां हि पतिव्रताम् । नाभिरोचयसे नेतुं त्वं मां केनेह हेतुना ॥ १९ ॥

त्वामनुगच्छन्ती विकल्मषा विगतकल्मषा भविष्यामि । नन्वत्रैव स्थित्वा कुलदेवतामाराध्य विशुद्धा भवेत्यत्राह भर्त्ता हि मम दैवतमिति ॥ १६ ॥ प्रेत्यभाव इति । प्रेत्यभावेऽपि परलोकेऽपि । त्वया सह सङ्गमः कल्याणः शोभनः ॥ १७ ॥ अत्र प्रमाणमाह—श्रुतिर्हीत्यादिसार्धश्लोकेन । पितृभिरिति बहुवचनं पितामहाद्यपेक्षया । श्रुतिमेवाह इहेति । महामत इत्यनेन न त्वां बोधयामीति सूच्यते । स्वधर्मेण स्वस्ववर्णोक्तब्राह्मादिविवाहविधिना ॥ १८ ॥ एवमिति । एवं पूर्वोक्तश्रुतिरूपप्रबलप्रमाणसद्भावेऽपीत्यर्थः । अस्मान्नगरात् नेतुमित्यनेनान्वयः । यद्वा अस्मात् अद्भिर्दानाद्धेतोः ॥ १९ ॥

विलासार्थं जाह्नवीतीरतपोवनादिगमनं काङ्क्षितं हि, त्वं च बहुविधं प्रसादितो वै प्रसादित एवेति सम्बन्धः ॥ १३ ॥ १४ ॥ कृतक्षणेति । कृतक्षणा प्राप्तावसरा, प्रतीक्षितकालेत्यर्थः । वनवासस्य वने वासो यस्य सः वनवासः । तस्य तव चर्या शुश्रूषा मम रोचते ॥ १५ ॥ शुद्धात्मन्निति । शुद्धात्मन् ! प्रेमस्वभावाद्भर्तारमनुगच्छन्ती अहं विकल्मषा भविष्यामि । कुतः ? भर्ता हि मम दैवतम् ॥ १६ ॥ प्रेत्येति । त्वया सह सङ्गमः प्रेत्यभावेपि परलोकेपि कल्याणः शोभनः ॥ १७ ॥ अत्र प्रमाणमाह—श्रुतिर्हीत्यादिसार्धश्लोकेन । पितृभिरिति बहुवचनं पितामहाद्यपेक्षया । पितृभिर्या स्त्री अद्भिः सह यस्य यस्मै दत्ता सा इह लोके स्वधर्मेण पतिव्रताधर्मेण वर्तमाना प्रेत्यभावेपि तस्यैव भवतीति श्रुतिः ब्राह्मणानां सकाशाच्छ्रूयत इति सम्बन्धः ॥ १८ ॥ एवमिति । श्रुतिस्मृतिन्यायतो नित्यसम्बन्धे सिद्धे सती

भक्तामिति । सुखदुःखयोः समां प्राप्तयोः सुखदुःखयोरेकरूपाम् । समानसुखदुःखिनीं त्वत्समानसुखदुःखाम् ॥ २० ॥ यदीति । आस्थास्ये स्वीकरिष्ये ॥ २१ ॥ एवमिति । याचते अयाचत । विजनं बन्धुजनरहितम् ॥ २२ ॥ एवमिति । गां भुवम् ॥ २३ ॥ चिन्तयन्तीमिति । ताम्रोष्ठीमित्यनेन सान्त्वादिना स्थातुमशक्यत्वमुच्यते ॥२४॥ इति श्रीगोविन्द० श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥२९॥

भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः । नेतुमर्हसि काकुत्स्थ समानसुखदुःखिनीम् ॥२०॥ यदि मां दुःखिता मेवं वनं नेतुं न चेच्छसि । विषमग्निं जलं वाहमास्थास्ये मृत्युकारणात् ॥२१॥ एवं बहुविधं तं सा याचते गमनं प्रति । नानुमेने महाबाहुस्तां नेतुं विजनं वनम् ॥ २२ ॥ एवमुक्ता तु सा चिन्तां मैथिली समुपागता । स्नापयन्तीव गा मुष्णैरश्रुभिर्नयनच्युतैः ॥ २३ ॥ चिन्तयन्तीं तथा तां तु निवर्त्तयितुमात्मवान् । ताम्रोष्ठीं स तदा सीतां काकुत्स्थो बहुसान्त्वयत् ॥२४॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकोनत्रिंशः सर्गः ॥२९॥

सान्त्व्यमाना तु रामेण मैथिली जनकात्मजा । वनवासनिमित्ताय भर्तारमिदमब्रवीत् ॥ १ ॥ सा तमुत्तमसंविग्ना सीता विपुलवक्षसम् । प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम् ॥ २ ॥

सान्त्व्यमानेति । जनकात्मजेतिविशेषणं स्वकुलोचिताचारदार्ढ्यार्थं । वनवासनिमित्ताय वनवास एव निमित्तं प्रयोजनं तस्मै ॥१॥ सेति । उत्तमसंविग्ना उत्तममत्यन्तं कम्पमाना । विपुलवक्षसं शूरमितियावत् । शूरमपि कथं चिक्षेपेत्यत्राह प्रणयादित्यादि । प्रणयात् स्नेहात् । अभिमानात् मदीयोऽयमित्यभि

त्यर्थः । अस्मात् नगरात् । स्वकां स्वीयाम् ॥ १९ ॥ भक्तामिति । सुखदुःखयोस्समां त्वदेकशरणाम्, अत एव समानदुःखिनीं त्वया सह एकसुखदुःखिनीम् ॥२०–२४॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायाम् एकोनत्रिंशः सर्गः ॥ २९ ॥ सान्त्व्यमानेति । वनवासनिमित्ताय वनवास निमित्तानुमतिसिद्ध्यर्थम् ॥ १ ॥ सेति । उत्तमसंविग्ना, अतिभीतेति यावत् । प्रणयात् स्नेहात् अभिमानात् कोपात् परिचिक्षेप वचनमुक्तवती ॥ २ ॥

सत्य०–सा अयाचत ई इतिच्छेदः । ई लक्ष्मीः सीता ॥ २२ ॥ वनवासनिमित्तार्थम्–वनवास एव निमित्तं यस्य रावणहननादेस्स वनवासनिमित्तः, स एवार्थः प्रयोजनं यस्य तं रामम् ॥ १ ॥

मानात् कोपाद्वा । प्रणयकोपादिति सम्पिण्डितोऽर्थः । परिचिक्षेप निनिन्द ॥ २ ॥ किं त्वेति । मां त्यक्त्वा वनं गतं त्वां यदि मे पिता शृणुयात्तदा त्वां ध्रुवेव काचित् पुरुषवेषं धृत्वा मत्कन्यामुपयेमे इति मन्येतेत्यर्थः । हे राम सौन्दर्य्यमात्रेण पराक्रामक ! वैदेहः विदेहवंश्यः "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इतिकर्मप्रधानतया कदाचिदपि पत्नीविरहमसहमान इत्यर्थः । मिथिलाधिपः जनपदस्य सम्यग्रक्षकः । मे पिता । त्वा मामेकां रक्षितुमशक्त्या

किं त्वाऽमन्यत वैदेहः पिता मे मिथिलाधिपः । राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥ ३ ॥
अनृतं बत लोकोऽयमज्ञानाद्यद्धि वक्ष्यति । तेजो नास्ति परं रामे तपतीव दिवाकरे ॥ ४ ॥

मां पत्नीं त्यक्त्वा गतं त्वाम् । प्राप्य ज्ञात्वा । गत्यर्थो ज्ञानार्थः । स्त्रियम् अन्तःस्त्रीस्वभावम् । पुरुषविग्रहं बहिःपुरुषवेषम् । जामातरम् अमन्यत किं मन्यते किम् । अवश्यमित्थं मन्येतेत्यर्थः । स्त्रियं पुरुषविग्रहमिति पुरुषत्वेपि मोहिनीरूपभ्रमकृत्त्वं पूर्वकृतं सूचयतीति प्राहुः ॥ ३ ॥ अनृतमिति । तदेवाह-किं त्वेति । हे राम ! त्वा त्वाम् । पुरुषविग्रहम् आकारमात्रेण पुरुषम् । स्त्रियमेव सन्तं जामातरं प्राप्य किममन्यत, तत त्वं न ज्ञातवानित्यर्थः । यदि जानाति तर्हि मां तुभ्यं न प्रयच्छेदित्याक्षेपशेषः । यद्वा "स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते । स्त्रीप्रायमितरत्सर्वं जगद्ब्रह्मपुरस्सरम् ॥" इति श्रीविष्णुपुराणोक्तेः । वैदेहो मे पिता त्वां जामातरं प्राप्य लोके त्वद्व्यतिरिक्तं पुरुषविग्रहं पुरुषाकृतिं सर्वमपि स्त्रियममन्यत, किं किमर्थममन्यत? एतादृशकातरं त्वां तथामन्वानो भ्रान्त इत्यर्थः । यद्वा किन्त्विवति । रामज अमातरम् प्राप्य स्त्रियं पुरुष विग्रहम् इति पदच्छेदः । हे रामज रमयितुं जात अवतीर्णेति, हे पुरुष क्रीडार्थमवतीर्ण, परमपुरुषेत्यर्थः । अमातरं स्त्रियं मातृव्यतिरिक्तां सपत्नीमातरं कैकेयीं प्राप्य उद्दिश्य वैदेहो मे पिता विग्रहं कलहम् अमन्यत किम् ? नामन्यतैव । कैकेय्या सह एतादृशकलह आयास्यतीति न ज्ञातवानित्यर्थः । तथापि न मां विहाय त्वया वनं गन्तव्यमिति भावः । यद्वा रामजामतरमित्येकं पदम् । पुरुषविग्रहम् पुरुषान् भक्तान् विशेषेण गृह्णाति स्ववशी करोतीति तथा, रामजामातरम् "रमन्ते योगिनोऽनन्ते" इति श्रुतेः आनन्दरूपजामातरं त्वां प्राप्य, वैदेहो मे पिता स्त्रियं स्वस्त्रियम् । स्त्रियमित्युपलक्षणम्, पुत्रमित्रकलत्रादिकमामुष्मिकं च सत्यममन्यत किम् ? किन्तु सर्वं तुच्छमिति ज्ञात्वा परमानन्दपूर्णोऽभूत, एतादृशसर्वानन्दकरस्त्वं मां कथं व्यथयसीति भावः ॥ ३ ॥ अनृतमिति । बतेति खेदे । अयं लोकः तपति दिवाकर इव रामे परं तेजोऽस्तीति अज्ञानादविचाराद्यद्वक्ष्यति तदनृतम् । कुतः ? नास्तीति, अनुपलभ्यमानत्वात्तादृशतेजो

**सत्य०**—वैदेहो जनकः । त्वां जामातरं प्राप्य कीदृशं स्त्रियं क्रियया पुरुषाकारं एतादृशं त्वां किममन्यत तव स्वरूपं न ज्ञातवान् । यदि जानीयात्तर्हि न तुभ्यं प्रयच्छेदित्यर्थः । अथवा जगतो मातेति स्त्रियं पितेति पुरुषविग्रहं " एष स्त्री एष पुरुषः " इति श्रुतिमनेन कटाक्षयत्यन्तरङ्गतः सीतेति ज्ञेयम् । तादृशं त्वां प्राप्य त्वत्स्वरूपं इत्थमिति नामन्यत किं न ज्ञातवान् ॥ ३ ॥ **तपति** तापयितरि । दिवाकरे सूर्य इव । रामे तेज इति नास्ति । लोकोऽज्ञानाद्यस्तीति वक्ष्यति तदनृतं बतेत्यन्वयः । यद्वा त्वमपि न जनकमनोरञ्जिनीति " यादृशो यक्षस्तादृशो बलिः " इति न्यायेन दानं मह्यमिति न वदेत्यप्याह । दिवाकरे तद्विषये । तपती तत्पुत्रीवाहं तत्प्रीतिमतीति । तपति दिवाकरे कियत्तेजः अन्याधीनं च तावत्तथा रामोस्तीति न किन्तु ततः परमधिकं स्वतन्त्रं च । शिष्टं स्पष्टम् । " तमेव भान्तमनुभाति सर्वम् " इत्यादेः ॥ ४ ॥

बतेति खेदे। अयं लोकः तपति दिवाकर इव रामे परं तेजोस्तीति अज्ञानात् यद्वक्ष्यति वदति तदनृतम्। कुतः? नास्ति अनुपलभ्यमानत्वात्तादृशं तेजो नास्त्येवेत्यर्थः। यद्वा अयं लोकः यद्वक्ष्यति यद्वदति, रामे परं तेजोस्तीत्यर्थसिद्धं। तत् अज्ञानात्। अतोऽनृतं बत। तपति दिवाकर इव रामे परं तेजो नास्ति। व्यतिरेकदृष्टान्तः। यद्यस्ति दिवाकर इव उपलभ्येत इतिभावः। यद्वा अज्ञानात् रामस्वरूपाज्ञानात्। लोकोऽयं यद्वदति तदनृतम्। किं वदतीत्यत्राह—

किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्ति ते। यत् परित्यक्तुकामस्त्वं मामनन्यपरायणाम् ॥ ५ ॥
द्युमत्सेनसुतं वीर सत्यवन्तमनुव्रताम्। सावित्रीमिव मां विद्धि त्वमात्मवशवर्तिनीम् ॥ ६ ॥
न त्वहं मनसाप्यन्यं द्रष्टास्मि त्वदृतेऽनघ। त्वया राघव गच्छेयं यथान्या कुलपांसनी ॥ ७ ॥

तेज इति। राम इव तपति दिवाकरे परं तेजो नास्तीति यद्वदति तदनृतमिति पूर्वेणान्वयः॥ ४ ॥ किमिति। किं हि कृत्वा किमकार्यं कृत्वा। विषण्णः "अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्" इत्युक्तावश्यभरणीयविषये विषादप्राप्तिर्न युक्तेतिभावः। ते कालाग्निसदृशक्रोधस्य तव। यत् यस्मात् कारणात् मां परित्यक्तुकामोऽसि तादृशं कारणं नास्तीत्यर्थः। यद्वा किं हि कृत्वा किं मनसि कृत्वा, किंविचार्येत्यर्थः। यद्यस्मात् विषादात् भयाच्च मां परित्यक्तुकामोऽसि ॥ ५ ॥ ६ ॥ न त्विति। हे राघव! अन्या कुलपांसनी यथा कुलपांसनीव। अहं त्वदृते अन्यं मनसापि न द्रष्टास्मि न द्रक्ष्याम्येव।

नास्त्येवेत्यर्थः। यद्वा अज्ञानादाक्षेपं कृतवत्यस्मीति भीत्या लोक एवं वदिष्यतीति स्वापराधं परिहरति अनृतमिति। यन्मामनादाय गच्छसीति श्लोकादावध्याहृत्य योजनीयः। अयं लोकः तपति दिवाकर इव रामे परं तेजो नास्तीति अज्ञानादविचारादनृतं यद्वक्ष्यति तत् बतेति योजना। एतदहं न सह इति भावः॥४॥ किं हीति। किं कृत्वा किमकार्यं कृत्वा। विषण्णोसि "अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्" इत्युक्तावश्यभरणीयविषये विषादो न युक्त इति भावः। मदनुसरणे कालाग्निसदृशक्रोधस्य तव कुतो वा भयमस्ति। यद्यस्मात् मां परित्यक्तुकामोसि तादृशं कारणं नास्तीत्यर्थः॥ ५ ॥ द्युमत्सेन इति कश्चित्। तस्य सुतं सत्यवन्नामकम् अनुव्रतां सावित्रीमिव तस्य पत्नीमिव मां विद्धि ॥ ६ ॥ न त्विति। हे राम! यथा कुलपांसनी अन्यं पश्यति तथा अहं त्वदृते अन्यं



स०—सत्यवन्नामानं पतिं सावित्रीनामिका विवाहात्प्राक् नारदेन अल्पायुः स इति बोधितापि यतो मनसा तं सङ्कल्पितवती अतो नाहं तं त्यक्ष्यामीत्युक्त्वा तमेव सत्यवन्[illegible] एकवत्सरानन्तरं वने मृतं यमेन नीयमानं पतिमनुगम्य यमात्तं मोचयित्वा जीवितं तं पुनर्बाहुभ्यां गृहीत्वा स्वाश्रममागतवतीति भारतवनपर्वोक्ता कथा ज्ञेया ॥ ६ ॥

अतस्त्वया गच्छेयमिति योजना ॥७॥ दृढपातिव्रत्यप्रदर्शनेपि वनगमनासम्मतिं ज्ञात्वा क्रुध्यति—स्वयमिति । कौमारीं कुमारावस्थायामेव परिणताम् । शैलूष इव जायाजीव इव । "शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः" इत्यमरः । परेभ्यः स्वयं दातुमिच्छसि॥८॥ मातरं शुश्रूषस्वेति यदुक्तं तत्र परिहारमाह—यस्येति । यस्य मातृजनस्य पथ्यं हितम् आत्थ । यस्य चार्थे अवरुद्धयसे मां निवारयसे । तस्य जनस्य त्वमेव वश्यः अनुकूलः । विधेयः

स्वयं तु भार्यां कौमारीं चिरमध्युषितां सतीम् । शैलूष इव मां राम परेभ्यो दातुमिच्छसि ॥ ८ ॥ यस्य पथ्यं च रामात्थ यस्य चार्थेऽवरुद्धयसे । त्वं तस्य भव वश्यश्च विधेयश्च सदानघ ॥ ९ ॥ स मामनादाय वनं न त्वं प्रस्थातुमर्हसि । तपो वा यदि वाऽरण्यं स्वर्गो वा मे सह त्वया॥१०॥ न च मे भविता तत्र कश्चित् पथि परिश्रमः । पृष्ठतस्तव गच्छन्त्या विहारशयनेष्विव ॥ ११ ॥

प्रेष्यश्च भव । अहन्तु त्वामनुयास्यामीत्यर्थः। यद्वा यस्य मद्रूपजनस्य पथ्यं चात्थ एतावत्पर्यन्तं यस्य चार्थे अवरुद्धयसे क्लिश्यसि तस्य जनस्य त्वं वश्यो विधेयश्च भव, त्वमेव मद्वचनं शृणिवत्यर्थः। अथवा यस्य भरतस्य पथ्यमात्थ यस्य चार्थे यस्याभिषेकरूपप्रयोजननिमित्ते अवरुद्धयसे निगृहीतोसि तस्य वश्यः इच्छानुसारी विधेयश्च प्रेष्यश्च भवेति सम्बन्धः ॥ ९ ॥ स इति । वश्यो विधेयश्च त्वं तपो वा तपश्चरणं वा । अरण्यम् अरण्यवासो वा । स्वर्गो वा स्वर्गगमनं वा । त्वया सह भवत्विविशेषः ॥१०॥ न चेति । पथि तव पृष्ठतो गच्छन्त्या मे विहारशयनेष्विव विहारः परिक्रमः, उद्यानसञ्चार इतियावत् ।

मनसा न द्रष्टास्मि न द्रक्ष्याम्येव, अतस्त्वया गच्छेयमिति योजना ॥ ७ ॥ दृढपातिव्रत्यप्रदर्शनेपि वनगमनासम्मतिं ज्ञात्वा क्रुद्धयति—स्वयमिति । कौमारीं कुमारावस्थायामेव परिणताम् शैलूष इव जायाजीव इव परेभ्यः अन्येभ्यो दातुमिच्छसि । यद्वा भरताय रामकर्तृकराज्यदानमसहमानाह—हे राम ! भार्यां भर्त्तुं योग्याम् । कुतः सतीम् अनश्वराम् ।कुतः चिरमध्युषितां पितृपितामहाद्यागतां कौमारीं कुमारवयस्येव त्वया प्राप्याम्, यौवराज्यरूपामित्यर्थः । मां राज्यलक्ष्मीं शैलूष इव वेषधारी सन् परेभ्यो भरतादिभ्यो दातुमिच्छसि, इदं तव नोचितमिति भावः ॥८॥ 'भरतस्य समीपे तु नाहं कथ्यः कदाचन ' इति पूर्वमुक्तवतो रामस्योत्तरमाह—यस्येति । यस्य भरतस्य पथ्यं हितम् आत्थ, यस्य चार्थे यस्य भरतस्य अभिषेकरूपप्रयोजननिमित्ते अवरुध्यसे निगृहीतोसि, तस्य वश्यः इच्छानुसारी विधेयश्च नियोज्यश्च भव, नाहं तदिष्टानुवर्तिनी, त्वद्विधेया च वसामीत्यर्थः ॥ ९ ॥ १० ॥ न चेति । विहारशयनेष्विव विहारः परिक्रमः, उद्यानसञ्चार इति यावत् । विहार

सत्य०—यस्य भरतस्य पथ्यं चरां तदनुवर्तिनीम् । आत्थ सम्प्रत्येव कथितवानसि । यस्य चार्थे प्रयोजनविषये । अवरुध्यसे निगृहीतोसि । तस्य भरतस्य भवो रुद्रः वश्यः आधीनो यस्य सः भववश्यस्त्वं विधेयो नियोज्यो भव । पथ्यं चरामित्यत्र मुमागम इव ङीब्रभावश्चार्षः । एतेन वश्यविधेयशब्दयोः पौनरुक्त्यं परिहृतं भवति ॥ ९ ॥ पूर्वमग्रतस्ते गमिष्यामीत्युक्तेरत्र पुनः पृष्ठतस्तव गच्छन्त्या इत्युक्तेश्च कदाचित् पुरतः कदाचित् पृष्ठतश्च गमनमनुचरस्वभाव इति ज्ञायते । तत्राग्रत इत्युक्तिर्गमनलौल्यात् । अत्र पृष्ठत इत्युक्तिर्विहितत्वादिति वा बोध्यम् । अपरिचिते पथि योषितोऽग्रगमनायोग्यत्वात् ॥ ११ ॥

"विहारस्तु परिक्रमः" इत्यमरः ॥११॥ कुशेति । त्वया सह गच्छन्त्या मम तूलाजिनसमस्पर्शाः तूलं तूलपिण्डः, अजिनं कन्दल्याद्यजिनम् "कदली कन्दलीचीनचमूरुप्रियका अपि । समूरुश्चेति हरिणा अमी अजिनयोनयः ॥" इत्यभिधानात् । भवन्तीतिशेषः ॥ १२ ॥ महावातेति । पराद्ध्यं श्रेष्ठं चन्दनं वासितम् , चन्दनचूर्णमित्यर्थः ॥ १३ ॥ शाद्वलेष्विति । शाद्वलेषु बालतृणवत्प्रदेशेषु, शिश्ये त्वया सहेतिशेषः । कुथाः चित्रकम्बलाः । आस्त

कुशकाशशरेषीका ये च कण्टकिनो द्रुमाः । तूलाजिनसमस्पर्शा मार्गे मम सह त्वया ॥ १२ ॥ महावातसमुद्धूतं यन्मामपकरिष्यति । रजो रमण तन्मन्ये पराद्ध्र्यमिव चन्दनम् ॥ १३ ॥ शाद्वलेषु यथा शिश्ये वनान्ते वनगोचर । कुथास्तरणतल्पेषु किं स्यात् सुखतरं ततः ॥ १४ ॥ पत्रं मूलं फलं यत्त्वमल्पं वा यदि वा बहु । दास्यसि स्वय माहृत्य तन्मेऽमृतरसोपमम् ॥१५॥ न मातुर्न पितुस्तत्र स्मरिष्यामि न वेश्मनः । आर्त्तवान्युपभुञ्जाना पुष्पाणि च फलानि च ॥१६॥ न च तत्र गतः किञ्चिद्द्रष्टुमर्हसि विप्रियम् । मत्कृते न च ते शोको न भविष्यामि दुर्भरा ॥ १७ ॥ यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना । इति जानन् परां प्रीतिं गच्छ राम मया सह ॥ १८ ॥

रणानि कौसुम्भोत्तरच्छदाः तैर्युक्तेषु तल्पेषु ॥ १४ ॥ १५ ॥ नेति । मातुरित्यादौ "अधीगर्थदयेशाम्—" इतिषष्ठी । आर्तवानि तत्तदृतुसमुत्पन्नानि ॥ १६ ॥ न चेति । तत्र वने । गतस्त्वं मत्कृते मन्निमित्तम् । किञ्चिद्विप्रियं दुःखं द्रष्टुं नार्हसि ते शोकश्च न भवेत् । अतो दुर्भरा दुःखेन भर्तव्या, न भविष्यामि ॥ १७ ॥ किं बहुनोक्तेन ? निश्चितमेकं संक्षेपतः शृण्वित्याह—य इति । त्वया सह यो वासः स स्वर्गः मे स्वर्गक्षमः । त्वया विना यो वासः सः

शयनेष्विव पथि परिश्रमो मे न भविता न भविष्यतीति योजना ॥ ११ ॥ कुशेति । तूलाजिनसमस्पर्शाः अजिनानि प्रियकादिमृगाजिनानि ॥ १२ ॥ १३ ॥ शाद्वलेष्विति । शाद्वलेषु यथा शिश्ये, त्वया सहेतिशेषः। ततः शाद्वलशयनात् कुथास्तरणतल्पेषु किं स्यादिति योजना । आस्तरणानि कौसुम्भोत्तरच्छदाः॥ १४॥ १५॥ न मातुरिति । न मातुरित्यादौ कर्मणि षष्ठी । आर्तवानि तत्तदृतौ जातानि ॥ १६ ॥ १७ ॥ सिद्धान्तमाह—यस्त्वयेति । त्वया सह यः सः स्वर्गः । त्वया विना यः

सत्य०—यस्त्वयेत्यत्रत्ययुष्मच्छब्दस्य तात्कालीनसम्बोध्यरामत्वविशिष्टे शक्तिः। रामत्वस्यैव शक्यतावच्छेदकत्वम् । तत्कालीनसम्बोध्यत्वस्य चशक्यतावच्छेदकतावच्छेदकत्वम् । विशेषणत्वं च तत्पदजन्यबोधविषयत्वम् । उपलक्षणत्वं च तत्पदजन्यबोधविषयत्वेन शक्यविषयत्वम् । एवं मयेत्यस्मच्छब्दस्य तत्कालीनस्वतन्त्रोच्चारयितृसीतात्वविशिष्टे वस्तुनि शक्तिः । उक्तरीत्या सीतात्वादेरेव विशेषणादित्वाच्छक्यतावच्छेदकत्वादि बोध्यम् । तथा च इदानीं सीतासम्बोध्यरामेण सहवास इति यत् स स्वर्गः । विना तु, यो वासः स निरय इति जानन् राम इदानीं स्वतन्त्रोच्चारयित्र्या सीतया सह प्रीतिं हर्षं गच्छ प्राप्नुहीति उपलक्षणार्थघटित श्लोकार्थः । स्वतन्त्रेति विशेषणान्न मयेत्यस्माद्वाल्मीकेर्बोधः । अनयैव दिशा "महतो न परः पापी" "दासोऽहमिति मां मत्वा" इत्यादयः समाधातव्याः ॥ १८ ॥

निरयः नरकोपमः। त्वत्संश्लेषविश्लेषादन्ये न मे सुखदुःखे स्त इतिभावः। इति एवम्। परां विश्लेषासहां प्रीतिम् जानन् पूर्वमपि बहुशोऽनुभवन् मया सह गच्छ॥१८॥अथेति। अथेति प्रश्ने। एवम् उक्तप्रकारेण। अव्यग्रां वनगमनविषयभीतिरहिताम्। अद्यैव त्वत्सन्निधावेव। द्विषतां भरतादीनां वशं माविशं

अथ मामेवमव्यग्रां वनं नैव नयिष्यसि। विषमद्यैव पास्यामि माविशं द्विषतां वशम् ॥ १९ ॥ पश्चादपि हि दुःखेन मम नैवास्ति जीवितम्। उज्झितायास्त्वया नाथ तदैव मरणं वरम् ॥ २० ॥ इमं हि सहितुं शोकं मुहूर्त्त मपि नोत्सहे। किंपुनर्दशवर्षाणि त्रीणि चैकं च दुःखिता ॥ २१ ॥ इति सा शोकसन्तप्ता विलप्य करुणं बहु। चुक्रोश पतिमायस्ता भृशमालिङ्ग्य सस्वरम् ॥ २२ ॥ सा विद्धा बहुभिर्वाक्यैर्दिग्धैरिव गजाङ्गना। चिरसन्नियतं बाष्पं मुमोचाग्निमिवारणिः ॥२३॥ तस्याः स्फटिकसङ्काशं वारि सन्तापसम्भवम्। नेत्राभ्यां परिसुस्राव पङ्कजाभ्या मिवोदकम् ॥ २४ ॥ तच्चैवामलचन्द्राभं मुखमायतलोचनम्। पर्यशुष्यत बाष्पेण जलोद्धृतमिवाम्बुजम् ॥ २५ ॥ तां परिष्वज्य बाहुभ्यां विसंज्ञामिव दुःखिताम्। उवाच वचनं रामः परिविश्वासयंस्तदा ॥ २६ ॥

न प्राप्नुयाम्। विरहो वा द्विषन्तः ॥१९॥ पश्चादिति। पश्चादपि त्वद्गमनानन्तरमपि। उज्झितायाः त्यक्तायाः। तदैव त्वत्सन्निधानकाल एव ॥२०॥ विष कृतदुर्मरणाद्दुःखेन मरणं ज्याय इत्याशङ्क्याह–इममिति। आदौ दशवर्षाणि, मध्ये त्रीणि वर्षाणि, अन्ते एकवर्षं च तुल्यतया भाति विरहिण्या इत्या वेदयितुं विभज्योक्तिः ॥ २१ ॥ इतीत्यादि। आयस्ता आयासं प्राप्ता, प्रशिथिलगात्रीत्यर्थः। सस्वरं सतारध्वनीत्यर्थः ॥ २२ ॥ सेति। विद्धा ताडिता। वाक्यैः पूर्वं रामोक्तैः। दिग्धैः विषलिप्तैः बाणैः। चिरसंनियतं वार्त्ताप्रसङ्गेन चिरात्सन्निरुद्धम्। अरणिरित्यत्रापि विद्धेत्यनुषञ्जनीयम्॥२३॥ तस्या इति। स्फटिकसङ्काशमित्यनेन विकज्जलतावगमात् चिरविगलितधारत्वमवगम्यते। उदकं मकरन्दरूपं तद्वदुष्णं निर्मलं च ॥ २४ ॥ तदिति। अमलसङ्का शमितिपाठे–अमलतया प्रकाशमानम्। बाष्पेण सन्तापसम्भवेनोष्णेन। अम्बुजपक्षे ऊष्मणेत्यर्थः। "बाष्प ऊष्मा" इत्यमरः॥२५॥ तामिति। विसंज्ञा

सः निरय इत्यर्थः ॥ १८ ॥ १९ ॥ पश्चादपीति। पश्चात् किञ्चित्कालानन्तरम्, तदैव त्वद्विप्रयोगकाल एव ॥ २०॥ २१ ॥ इतीति। आयस्ता आयासं प्राप्ता। सस्वरं सशब्दम् ॥ २२ ॥ सेति। दिग्धैः विषयुक्तैः बाणैः चिरसन्नियतं चिरसन्निरुद्धम् ॥ २३ ॥ २४ ॥ तच्चेति। बाष्पेण शोकाग्निरूपोष्मणा ॥ २५ ॥ तामिति।

मित्यनेन मूर्च्छाभावः सूच्यते । परिविश्वासयन् । सम्यग्विश्वासयन् ॥ २६ ॥ नेति । तव दुःखेन हेतुना प्राप्यं स्वर्गमपि न रोचये । त्वयि दुःखितायां स्वर्गमपि नेच्छामीत्यर्थः । स्वयम्भोः नारायणस्य नतु चतुर्मुखस्य । तस्य मधुकैटभादिभ्यो भयसम्भवात् । आर्षो डुप्रत्ययः । सर्वतः सर्वजन्तुभ्यः ॥२७॥ तवेति । तव विरहदुःखासहिष्णुरपि निर्भयोपि शक्तिमानपि तवान्तराभिप्रायानभिज्ञानादेतावत्पर्यन्तं त्वां वनं नेतुं नेच्छामीति भावः ॥ २८ ॥

न देवि तव दुःखेन स्वर्गमप्यभिरोचये । न हि मेऽस्ति भयं किञ्चित्स्वयम्भोरिव सर्वतः ॥ २७ ॥ तव सर्व मभिप्रायमविज्ञाय शुभानने । वासं न रोचयेऽरण्ये शक्तिमानपि रक्षणे ॥ २८ ॥ यत्सृष्टासि मया सार्द्धं वन वासाय मैथिलि । न विहातुं मया शक्या कीर्तिरात्मवता यथा ॥ २९ ॥ धर्मस्तु गजनासोरु सद्भिराचरितः पुरा । तं चाहमनुवर्त्तेऽद्य यथा सूर्यं सुवर्चला ॥ ३० ॥ न खल्वहं न गच्छेयं वनं जनकनन्दिनि । वचनं तन्नयति मां पितुः सत्योपबृंहितम् ॥ ३१ ॥

यदिति । सृष्टा दैवेनेतिशेषः । आत्मवता शीलवता अतिकृच्छ्रावस्थायामप्यक्षुभितमनस्केन वा । यच्छब्दयोगात्तदिति पूरणीयम् ॥ २९ ॥ इदं पत्न्या सह वनगमनं रागप्राप्तं न भवति अपितु शिष्टाचारसिद्धमित्याह–धर्म इति । धर्मः वानप्रस्थधर्मः। सद्भिः सपत्नीकैः राजर्षिभिः । यथा सूर्यं सुवर्चलेति भिन्न लिङ्गयोरप्यौपम्यमार्षम् । यथा सूर्यं सुवर्चला देवी तद्वन्मामनुवर्त्तस्वेति वार्थः ॥३०॥ न खल्विति । सत्योपबृंहितं पितुर्वचनं मां वनं नयति खलु तत्

परिविश्वासयन् समाश्वासयन्, उज्जीवयन्नित्यर्थः । न देवीति । तव नियोगदुःखेन, प्राप्तमपीति शेषः । स्वयम्भोरिव सर्वतः सर्वेषामायुर्भाग्यं च लिखितुं परिमार्ष्टुं च कर्तुः ब्रह्मणो यथा कुतश्चिदपि भयं नास्ति तद्वदित्यर्थः ॥ २७ ॥ तवेति । सर्वं समग्रम् । अभिप्रायम् अन्तरम् । अविज्ञाय तत एव हेतोः तवारण्ये वासं न रोचये नाङ्गीकृतवानस्मि, इतःप्रागिति शेषः ॥ २८ ॥ यदिति । सृष्टासि निश्चितासि, इदानीमिति शेषः । आत्मवता अक्षुभितमनस्केन योगिनेत्यर्थः ॥२९॥ सर्वात्मना दयितायास्ते सह यानं धर्मश्चेत्याह–धर्मस्त्विति । धर्मो वानप्रस्थधर्मः, सद्भिः सपत्नीकैः राजर्षिभिः यथा सूर्यं सुवर्चला ह्यनुवर्तते तथा मामनुवर्तस्वेति शेषः ॥३०॥ मम तु वनगमनं निश्चितमेवेत्याह–न खल्विति । न गच्छेयमिति न खलु, गच्छेयमेव सर्वथेत्यर्थः । कुतः वचनमिति सत्योपबृंहितं वचनं मां वनं नयति ॥ ३१ ॥



स०–स्वयम्भोरिव सर्वतः स्वयंभोः ब्रह्मणः । आर्षोयं डुः । सर्वतः सर्वजन्तुभ्यः ... रुद्रादिभ्यो ब्रह्मणो यथा भयं नास्ति तथा मम सर्वतोपि भयं नास्तीत्यर्थः ॥ २७ ॥

तस्मात्कारणात् अहं न गच्छेयमिति न अद्यैव गच्छेयमेवेत्यर्थः ॥३१॥ एष इति । पितुर्मातुश्च वश्यतेत्येष एव धर्मः । वश्यता विधेयता । अहं पितृवचनपरिपालनोद्युक्तोऽहं तं व्यतिक्रम्य मातापितृविधेयत्वरूपधर्मं व्यतिक्रम्य अहं जीवितुं नोत्सहे इति सम्बन्धः ॥३२॥ माभूत् पितृवचनकरणं दैवमाराध्यास्माभिरत्रैव स्थातव्यमित्यत्राह—अस्वाधीनमिति । अस्वाधीनम् आराधकानधीनम्, स्वतन्त्रमितियावत् । यद्वा अस्वाधीनं प्रत्यक्षतया अनाज्ञा

एष धर्मस्तु सुश्रोणि पितुर्मातुश्च वश्यता । अतश्च तं व्यतिक्रम्य नाहं जीवितुमुत्सहे ॥ ३२ ॥ अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते । स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम् ॥ ३३ ॥ यत् त्रयं तत् त्रयो लोकाः पवित्रं तत्समं भुवि । नान्यदस्ति शुभापाङ्गे तेनेदमभिराध्यते ॥ ३४ ॥ न सत्यं दानमानौ वा न यज्ञाश्चाप्तदक्षिणाः । तथा बलकराः सीते यथा सेवा पितुर्हिता ॥ ३५ ॥

पयत् । स्वाधीनं प्रत्यक्षतया नियोजयन्तम् । गुरुम् गुरुं चेत्यर्थः । प्रकारैः आराधनप्रकारैः॥३३॥ यदिति । यत् गुर्वादित्रयं तत् त्रयो लोकाः । लोकत्रयमपि तदाराधनसाध्यमित्यर्थः । भुवि तत्समं पवित्रमन्यन्नास्ति । 'गगनं गगनाकारम्' इतिवत् स्वस्य स्वेनौपम्यसम्भवात्तद्व्यावृत्त्यर्थमन्यपदम्, तेन कारणेन इदं गुर्वादित्रयम् । अभिराध्यते ॥३४॥ रामानु०—यत्रेति । यत्रयत्र पूर्वोक्तमातापितृगुरवो वर्तन्ते तत्रतत्र त्रयो लोकाः तत्समं तत्त्रयसमं यत् पवित्रं भुव्यन्यन्नास्ति, तेन कारणेन इदं मातापितृगुरुरूपं त्रयम् अभिराध्यत इति योजना ॥ ३४ ॥ पितृवाक्यस्य सत्यादिवैलक्षण्यमाह—न सत्यमिति । हिता हितकरी । पितुः सेवा यथा बलकरी ।

एष इति । वश्यता विधेयता अहं पितृवचनपरिपालनोद्युक्तः तं व्यतिक्रम्य पितृविधेयत्वरूपं धर्मं व्यतिक्रम्य अहं जीवितुं नोत्सहे इति सम्बन्धः ॥ ३२ ॥ अस्वाधीनमिति । अस्वाधीनम् आराधकानधीनम्, स्वतन्त्रमिति यावत् । प्रकारैः प्रार्थनापरैः ॥ ३३ ॥ यत्र त्रयमिति । यत्र पितृमातृगुरुरूपं त्रयं तत्र त्रयो लोकाः वर्तन्ते मातापितृगुरुशुश्रूषया लोकत्रयान्तर्वर्त्यशेषदेवताद्याराधनफलप्राप्तिर्भवतीत्यर्थः । अतः तत्समं पवित्रं मेध्यं नास्ति तेन कारणेन इदं मातापितृगुरुरूपत्रयमभिराध्यत इति योजना । यद्वा पवित्रं पविः महाभयलक्षणस्संसारः, तस्मात्त्रायत इति पवित्रम्, संसारनिवर्तकमिति यावत् । "पविर्वज्रे महाभये" इत्य

---

१ यत्र त्रयं त्रयो लोकाः । इति तीर्थीयपाठः ।

तथा सत्यादयः न बलकराः न परलोकबलकराः न पारत्रिकाभ्युदयसाधका इत्यर्थः ॥ ३५ ॥ स्वर्ग इति । स्वर्गादीनि गुरुवृत्त्यनुरोधेन, सिध्यन्तीति शेषः। गुरूणां मात्रादीनां वृत्तिः शुश्रूषणं तदनुरोधेन तदनुवर्त्तनेन "अनुरोधोऽनुवर्त्तम्" इत्यमरः। व्यतिरेकेणाप्याह न किञ्चिदिति ॥३६॥ देवगन्ध

स्वर्गो धनं वा धान्यं वा विद्याः पुत्राः सुखानि च। गुरुवृत्त्यनुरोधेन न किञ्चिदपि दुर्लभम्॥३६॥ देवगन्धर्वगोलोकान् ब्रह्मलोकांस्तथा नराः। प्राप्नुवन्ति महात्मानो मातापितृपरायणाः ॥ ३७ ॥ स मा पिता यथा शास्ति सत्यधर्मपथे स्थितः। तथा वर्त्तितुमिच्छामि स हि धर्मः सनातनः ॥३८॥ मम सन्ना मतिः सीते त्वां नेतुं दण्डकावनम्। वसिष्यामीति सा त्वं मामनुयातुं सुनिश्चिता ॥३९॥ सा हि सृष्टानवद्याङ्गी वनाय मदिरेक्षणे। अनुगच्छस्व मां भीरु सहधर्मचरी भव ॥ ४० ॥ सर्वथा सदृशं सीते मम स्वस्य कुलस्य च। व्यवसायमतिक्रान्ता कान्ते त्वमतिशोभनम् ॥४१॥

र्वेति। क्रमेण ब्रह्मलोकं प्राप्नुवन्तीति भावः। नरा इति सर्ववर्णसाधारण्योक्तिः। महात्मानः दृढमनस्काः। मातेति तच्छुश्रूषणैकरता इत्यर्थः ॥ ३७ ॥ स इति। मा माम्। सः स्वतन्त्रः। वर्तितुम् अनुष्ठातुम्। सः वर्त्तनम्। धर्मापेक्षया पुंस्त्वम्॥३८॥ ममेति। सन्ना त्वद्भावापरिज्ञानात् क्षीणा सा त्वं मया सह वसिष्यामीति मामनुयातुं सुनिश्चिता तेन इदानीं ज्ञातासीतिभावः ॥ ३९ ॥ सेति। सृष्टा, दैवेनेतिशेषः ॥ ४० ॥ सर्वथेति। व्यवसायं भर्त्रनुसरणा

भिधानात्। पाठान्तरस्तु यत्त्रयमिति। यत् यत्र पितृमातृगुरुरूपं त्रयं तत् तत्र त्रयो लोका वर्तन्ते ॥ ३३–३६ ॥ स्वर्ग इति। सुखानि च, सिध्यन्तीति शेषः। गुरुवृत्त्यनुरोधेन गुरुचित्तवृत्त्यनुवर्तनेन ॥ ३६–३८ ॥ ममेति। त्वद्भावापरिज्ञानात् त्वां नेतुं पूर्वं मम मतिः सन्ना क्षीणा, यतः वने वसिष्यामीति मामनुयातुं मतिः त्वन्मतिः सुनिश्चिता, अतः पूर्वं सन्ना मे मतिः, इदानीं त्वां वनं नेतुमुद्युक्तेति शेषः। यद्वा हे सीते! सा त्वं वने वसिष्यामीति मामनुयातुं यतः सुनिश्चिता अतः त्वां दण्डकावनं नेतुं मम मतिस्सन्ना उद्युक्तेति योजना ॥ ३९ ॥ सेति। दिष्टा अनुज्ञाता वनाय वनं गन्तुं मामनुगच्छस्व। पाठान्तरस्तु सेति। अतिदिष्टा अनुज्ञाता ॥ ४० ॥ सर्वथेति। व्यवसायं भर्त्रनुसरणानुध्यवसायम् अतिक्रान्ता प्रकर्षेण प्राप्ता ॥ ४१ ॥

स०—देवगन्धर्वाः साक्षाद्देवप्रेष्याः। गोलोकः चन्द्रलोकः नाकलोको वा मातृलोको वा। "स्वर्गे मातरि गौः" इति रत्नमाला। "गौर्नाके वृषभे चन्द्रे" इति विश्वः। "स यदि पितृलोककामो भवति" इति श्रुतेः ॥ ३७ ॥ यतः त्वं अनुयातुं सुनिश्चिता अतस्त्वां नेतुं मम या अमतिः सा सन्ना विशीर्णा ॥ ३९ ॥ व्यवसायं निश्चयम्। अनुक्रान्ता प्राप्तेति यत् तदति शोभनम् ॥ ४१ ॥

ध्यवसायम् । अतिक्रान्ता प्रकर्षेण प्राप्ता । " प्रकर्षे लङ्घने प्यति " इत्यमरः ॥४१॥ आरभस्वेति । वनवासक्षमाः वनवासहिताः । " क्षमं शक्ते हिते त्रिषु " इत्यमरः । क्रियाः दानादिक्रियाः ॥ ४२ ॥ ब्राह्मणेभ्य इति । आशंसमानेभ्यः अर्थयमानेभ्यः ॥ ४३ ॥ भूषणानीति । क्रीडार्थाश्चाप्युप

आरभस्व शुभश्रोणि वनवासक्षमाः क्रियाः । नेदानीं त्वदृते सीते स्वर्गोऽपि मम रोचते ॥ ४२ ॥ ब्राह्मणेभ्यश्च रत्नानि भिक्षुकेभ्यश्च भोजनम् । देहि चाशंसमानेभ्यः सन्त्वरस्व च मा चिरम् ॥ ४३ ॥ भूषणानि महार्हाणि वरवस्त्राणि यानि च । रमणीयाश्च ये केचित् क्रीडार्थाश्चाप्युपस्कराः ॥ ४४ ॥ शयनीयानि यानानि मम चान्यानि यानि च । देहि स्वभृत्यवर्गस्य ब्राह्मणानामनन्तरम् ॥ ४५ ॥ अनुकूलं तु सा भर्तुर्ज्ञात्वा गमनमात्मनः । क्षिप्रं प्रमुदिता देवी दातुमेवोपचक्रमे ॥ ४६ ॥ ततः प्रहृष्टा प्रतिपूर्णमानसा यशस्विनी भर्तुरवेक्ष्य भाषितम् । धनानि रत्नानि च दातुमङ्गना प्रचक्रमे धर्मभृतां मनस्विनी ॥ ४७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये श्रीमदयोध्याकाण्डे त्रिंशः सर्गः ॥३०॥

एवं श्रुत्वा तु संवादं लक्ष्मणः पूर्वमागतः । बाष्पपर्याकुलमुखः शोकं सोढुमशक्नुवन् ॥ १ ॥

स्कराः जातरूपमयकृत्रिमपुत्रिकालीलापाकभाजनादिविचित्रोपकरणानि । ब्राह्मणानामनन्तरं स्वभृत्यवर्गस्य देहीति सम्बन्धः ॥ ४४ ॥ ४५ ॥ अनुकूलमिति । अनुकूलं सम्मतम् ॥ ४६ ॥ तत इति । प्रतिपूर्णमानसा निश्चिन्तेत्यर्थः । अवेक्ष्य आलोच्य । धर्मभृतां धर्मभृद्भ्यः । मनस्विनी निश्चितमनस्का ॥ ४७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

एवं रामेण सीतागमनेऽङ्गीकृते लक्ष्मणस्यानुगमनप्रार्थनमुपक्षिपति—एवमित्यादिना । श्लोकद्वयमेकं वाक्यम् । एवं संवादं पूर्वोक्तं सीतारामयोस्संवादम् ।

आरभस्वेति । वनवासक्षमाः वनवासे हिताः क्रियाः दानादिक्रियाः इदानीमेतद्बुद्धिनिश्चये सतीत्यर्थः ॥ ४२ ॥ ४३ ॥ भूषणानीति । क्रीडार्थाश्चाप्युपस्कराः जातरूपमयकृत्रिमपुत्रिकाद्युपस्करणादीनि ॥ ४४ ॥ शयनीयानीति । ब्राह्मणानामनन्तरं स्वभृत्यवर्गस्य देहीति योजना ॥ ४५ ॥ अनुकूलमिति । आत्मनः स्वस्याः आगमनं भर्तुः अनुकूलम् इष्टम् ॥ ४६ ॥ तत इति । धर्मभृतां धर्मभृद्भ्यः दातुं प्रचक्रम इत्यन्वयः ॥ ४७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां त्रिंशः सर्गः ॥ ३० ॥ एवमित्यादि श्लोकद्वयमेकं वाक्यम् । एवम् उक्तप्रकारम् सीतारामसंवादं श्रुत्वा

पूर्वमागतः कौसल्यागृहाद्रामेण सह पूर्वमेवागतः । शोकम् अर्द्धशरीरभूतायाः सीताया अपि वनानुगमनं कृच्छ्रादप्यङ्गीकृतम् मम कथं तत्सम्भविष्यतीति विचारजं शोकम् ॥ स्वानुवृत्तिरूपप्रयोजनाय सीतापुरुषकारेण रामे शरणागतिं विधत्ते—स भ्रातुरिति । सः रामानुवृत्तिरूपप्रयोजनाय उपायान्तरशून्यः । भ्रातुरित्यवर्जनीयसम्बन्धकथनाच्छरण्यत्वमुक्तम् । चरणौ निपीड्येति शरणागत्युक्तिः । गाढमित्यश्लथत्वोक्त्या महाविश्वास उक्तः ।

स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः । सीतामुवाचातियशा राघवं च महाव्रतम् ॥ २ ॥
यदि गन्तुं कृता बुद्धिर्वनं मृगगजायुतम् । अहं त्वाऽनुगमिष्यामि वनमग्रे धनुर्धरः ॥ ३ ॥
मया समेतोऽरण्यानि बहूनि विचरिष्यसि । पक्षिभिर्मृगयूथैश्च संघुष्टानि समन्ततः ॥ ४ ॥
न देवलोकाक्रमणं नामरत्वमहं वृणे । ऐश्वर्यं वापि लोकानां कामये न त्वया विना ॥ ५ ॥

रघुनन्दनः लक्ष्मणः। अतियशाः आनुकूल्यसङ्कल्पप्रातिकूल्यवर्जनवान् । आदौ सीतां पुरुषकारत्वेन परिगृह्योवाच पश्चात्तत्पुरुषकारेण महाव्रतम् "न त्यजेयं कथंचन। एतद्व्रतं मम" इत्युक्तगुरुतरव्रतयुक्तम् । राघवं रघुराक्षससंवादादिप्रसिद्धकुलधर्मशरणागतरक्षणं च । उवाच शरणागतेः सर्वफलप्रदत्वेन स्वाभिमतफलं विज्ञापयामास । निपीड्येत्यन्तेन द्वयस्य पूर्वखण्डोक्तशरणागतिरनूदिता । राघवमुवाचेत्यनेनोत्तरखण्डोक्तफलप्रार्थनोक्ता । सीतामुवाचेत्युभयत्र पुरुषकारपरिग्रहोक्तिः ॥ १ ॥ २ ॥ कैङ्कर्यप्रार्थनमेवाह—यदीति । यदीत्यनेन रामस्य वनगमनं स्वानभिमतमित्युक्तम् । कैङ्कर्यसाधनमाह धनुर्द्धर इति । धनुर्द्धरत्वे हेतुमाह—मृगेति । अहं त्वा अनु पश्चादग्रे च वनं गमिष्यामि तवाग्रे पश्चाद्वा यत्र दुष्टमृगशङ्का तत्र सावधानो गमिष्यामीत्यर्थः । अतएव 'मया समेतः' इति वक्ष्यति ॥३॥ मया धनुर्द्धरेण मया । त्वदीयं धनुर्वहतेतिवार्थः । बहूनीत्यनेन सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्य्यं प्रार्थनं कृतम् ॥ ४ ॥ अनन्योपायत्ववदनन्यप्रयोजनत्वमाह—नेति । देवलोकाक्रमणम् "देवानां पूरयोध्या" इत्युक्तपरमपदप्राप्तिं त्वया विना न

पूर्वमागतः कौसल्यागृहात् रामेण सह सीतासंवादप्रवृत्तेः पूर्वमेवागतो लक्ष्मणः, शोकम् अर्द्धशरीरभूतायास्सीताया अपि वनानुगमनं कृच्छ्रादङ्गीकृतम्, मम तु कथं सम्भविष्यतीति विरहजं शोकं सोढुमशक्नुवन् । वोढुमशक्नुवन्निति पाठभेदः । भ्रातुश्चरणौ गाढं निपीड्य प्रणम्य सीतां, प्रार्थयन्निति शेषः । स्वाभि

स०—अतियशाम्—अतिशयितज्ञानसुखरूपिणीम् । "यं ज्ञानं समुदाहृतम्" "शं सुखानि च" इति नानार्थध्वनिपदमञ्जर्यमरौ । अतियशा इति पाठे—लक्ष्मणविशेषणम् । सीतामुवाचेत्यनेन वासुदेवप्रसाधनं मुख्यतो रमेति तां प्रतिपूर्ववचनं युक्तमिति सूचयति ॥ २ ॥

वृणे । त्वत्कैङ्कर्य्यविनाकृतं मोक्षमपि न वाञ्छामीत्यर्थः । अमरत्वम् " जरामरणमोक्षाय " इत्युक्तं कैवल्याख्यं मोक्षमपि न वृणे । लोकानामैश्वर्यं त्रिलोकाधिपतित्वम्, ब्रह्मत्वमितियावत् । मोक्षमप्यकामयमानोऽहं कथं कैवल्यादिकं कामयेयेति भावः । यद्वा अवरोहक्रमेण त्रैलोक्यैश्वर्यादिकमपि न कामय इति । अतो न पतत्प्रकर्षदोषः । देवलोकगमनं देवत्वमिन्द्रत्वं वा न कामय इति वाक्यार्थस्तुच्छः ॥ ५ ॥ ६ ॥ अनुज्ञात इति । अनुज्ञातश्च

एवं ब्रुवाणः सौमित्रिर्वनवासाय निश्चितः । रामेण बहुभिः सान्त्वैर्निषिद्धः पुनरब्रवीत् ॥ ६ ॥
अनुज्ञातश्च भवता पूर्वमेव यदस्म्यहम् । किमिदानीं पुनरिदं क्रियते मे निवारणम् ॥ ७ ॥
यदर्थं प्रतिषेधो मे क्रियते गन्तुमिच्छतः । एतदिच्छामि विज्ञातुं संशयोऽयं ममानघ ॥ ८ ॥
ततोऽब्रवीन्महातेजा रामो लक्ष्मणमग्रतः । स्थितं प्राग्गामिनं वीरं याचमानं कृताञ्जलिम् ॥ ९ ॥
स्निग्धो धर्मरतो वीरः सततं सत्पथे स्थितः । प्रियः प्राणसमो वश्यो भ्राता चापि सखा च मे ॥ १० ॥

अनुज्ञात एव । " उपक्लृप्तं च यत्किञ्चिदभिषेकार्थमद्य मे । सर्वं विसर्जय क्षिप्रं कुरु कार्यं निरत्ययम् ॥ " इति वचनात् । अन्यत्र च " तस्मादपरितापः संस्त्वमप्यनुविधाय माम् । प्रतिसंहारय क्षिप्रमाभिषेचनिकीः क्रियाः ॥" इति । अपरत्र च " भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशेषतः । त्वया भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥" इति । भरतशत्रुघ्नयोरेवानुसरणीयत्वोक्तेश्चानुज्ञा सिद्धा ॥७॥ यदर्थमिति । अनुज्ञातत्वेपि प्रतिषेधात् किमद्य मयाऽपराद्धमिति संशयः ॥ ८ ॥ तत इति । स्थितम् अग्रतः स्थितम् । प्राग्गामिनं प्रागेव गन्तुमुद्युक्तम् । वीरं प्राग्गमनोचितवीर्यवन्तम् । याचमानं गमनाज्ञां याचमानम् । कृताञ्जलिं याच्ञाव्यञ्जकाञ्जलियुक्तम् ॥ ९ ॥ स्निग्ध इत्यादिविशेषणानि स्वकार्यकरणार्हतानुगुणानि ॥ १० ॥

मत्प्राप्तौ सीताशरणागतिरेवामोघोपाय इति मत्वा मत्प्रार्थनामपि पुरुषकारत्वेनाङ्गीकुर्वीति सीतां प्रार्थयन् राघवं प्रत्युवाचेत्यर्थः ॥ १-७ ॥ यदर्थमिति । एतदिच्छामि एतत् प्रतिषेधप्रयोजनमित्यर्थः । संशयः बाल्यात्प्रभृति सुस्निग्धं छायावत्परतन्त्रम् मां कं हेतुमुद्दिश्य आर्यो निषेधतीति संशयः ॥ ८-१३ ॥

स०—इतरेषामवश्यः, मम तु विधेयः किङ्करः । स्निग्धः स्नेहयुक्तः ॥ १० ॥

प्रतिषेधनिमित्तमाह—मयेति । कौसल्यादिभरणार्थमेव सर्वं नारितोसि, पूर्वानुज्ञा तु तात्कालिकपरिहारायेतिभावः ॥ ११ ॥ राजैव भरिष्यतीत्यत्राह—अभिवर्षतीति । कामपाशपर्यस्तः पराभिलाषरूपपाशेन संयत इत्यर्थः ॥ १२ ॥ तर्हि भरतो भरिष्यतीत्यपेक्षायां सोपि कैकेयीपरवशो न





मयाद्य सह सौमित्रे त्वयि गच्छति तद्वनम् । को भरिष्यति कौसल्यां सुमित्रां वा यशस्विनीम् ॥ ११ ॥ अभिवर्षति कामैर्यः पर्जन्यः पृथिवीमिव । स कामपाशपर्यस्तो महातेजा महीपतिः ॥ १२ ॥ सा हि राज्यमिदं प्राप्य नृपस्याश्वपतेः सुता । दुःखितानां सपत्नीनां न करिष्यति शोभनम् ॥ १३ ॥ न स्मरिष्यति कौसल्यां सुमित्रां च सुदुःखिताम् । भरतो राज्यमासाद्य कैकेय्यां पर्य्यवस्थितः ॥ १४ ॥ तामार्यां स्वयमेवेह राजानुग्रहणेन वा । सौमित्रे भर कौसल्यामुक्तमर्थमिमं चर ॥ १५ ॥ एवं मम च ते भक्तिर्भविष्यति सुदर्शिता । धर्मज्ञ गुरुपूजायां धर्मश्चाप्यतुलो महान् ॥ १६ ॥ एवं कुरुष्व सौमित्रे मत्कृते रघुनन्दन । अस्माभिर्विप्रहीणाया मातुर्नो न भवेत्सुखम्॥ १७॥ एवमुक्तस्तु रामेण लक्ष्मणः श्लक्ष्णया गिरा । प्रत्युवाच तदा रामं वाक्यज्ञो वाक्यकोविदम् १८

भरिष्यतीत्याशयेनाह—सा हीत्यादि ॥ १३ ॥ १४ ॥ मया वा कथं भर्तुं शक्यमित्यत आह—तामिति । राजानुग्रहणेन राजानुमत्या, तदभावे स्वयमेव वा भरेत्यर्थः । अस्योत्तरं मा वदेत्याह उक्तमर्थमिमं चरेति ॥ १५ ॥ त्वत्कैङ्कर्य्यपरस्य मे किमनेनेत्यत आह—एवमिति । एवम् एवं च सतीत्यर्थः । मम मयीत्यर्थः । गुरुपूजा मातृशुश्रूषणम् ॥ १६ ॥ एवमिति । अस्माभिः आवाभ्यां सीतया चेत्यर्थः । नः नौ । "अस्मदो द्वयोश्च" इति द्विवचनस्य बहुवचनम् ॥ १७ ॥ एवमिति । वाक्यज्ञो वाक्यकोविदमिति "उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा" इत्युक्तवक्तृत्व



भरतो रक्षिष्यतीत्यत आह—न स्मरिष्यतीति । कैकेय्यां पर्यवस्थितः तन्नियोगेन सपत्नीतिरस्कारविषये पर्यवस्थितः प्रतिष्ठितः ॥ १४–१८ ॥

विशेषम्, राममपि प्रतिवचनरचनाचातुर्येण तोषयितुं समर्थ इत्यर्थः ॥ १८ ॥ पूर्वं रामोक्तानुपपत्तिं परिहरति–तवैवेत्यादिना ॥ १९–२१॥ एवं रामोक्तं परिहृत्य प्रस्तुतं स्वाभिमतं कैङ्कर्यं प्रपञ्चयति–कुरुष्वेत्यादि । मां शेषभूतम् । अनुचरं शेषत्वानुगुणकैङ्कर्ययुक्तं कुरुष्व । तत्करणमपि तवैव

तवैव तेजसा वीर भरतः पूजयिष्यति । कौसल्यां च सुमित्रां च प्रयतो नात्र संशयः ॥ १९ ॥
कौसल्या बिभृयादार्या सहस्रमपि मद्विधान् । यस्याः सहस्रं ग्रामाणां सम्प्राप्तमुपजीविनाम् ॥ २० ॥
तदात्मभरणे चैव मम मातुस्तथैव च । पर्याप्ता मद्विधानां च भरणाय यशस्विनी ॥ २१ ॥
कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते । कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते ॥ २२ ॥

प्रयोजनमित्यात्मनेपदाल्लभ्यते । वैधर्म्यं नेह विद्यते इहानुचरत्वकरणे वैधर्म्यं सेव्यसेवकधर्मराहित्यं नास्ति, तव सेव्यधर्मः पर्याप्तः स्वामित्वात् । मम सेवकधर्मश्च पूर्णः स्वाभाविकशेषत्वात् । यद्वा वैधर्म्यं वैपरीत्यसाधकं न विद्यते त्वदुक्तहेतोरन्यथासिद्धेरुक्तत्वादित्याशयः । अनुचरकरणस्य किं प्रयोजनमित्यपेक्षायामाह तवेति । तवार्थः स्वायासं विना फलमूलाद्याहरणं प्रकल्पते सिद्ध्यति । अहं च कृतार्थः लब्धतत्कैङ्कर्यफलो भविष्यामि । यद्वा मां

अथ मातृरक्षायां भरत एवास्त इत्याह–तवैवेति । तवैव तेजसा अप्रमेयबलवैभवरामजनन्यरक्षणे मम महाननर्थो भवेदिति मत्वा भरतः सम्यक् पूजयिष्यतीति ॥ १९ ॥ इदानीं स्वात्मभरणे कौसल्यायाः कस्याप्यपेक्षा नास्तीति दर्शयति–कौसल्येति । कौसल्या सहस्रं मद्विधानपि बिभृयात्, सा स्वात्मानं बिभृयादिति किमु वक्तव्यम् । कुतस्तस्या एवं शक्तिः ? तत्राह यस्या इति । यस्याः प्रसादात् उपजीविनां ग्रामाणां सहस्रं संप्राप्तमभूत । उपजीवनमिति क्वचित्पाठः ॥ २० ॥ २१ ॥ कुरुष्वेति । इह मय्यनुचरे वैधर्म्यं वैपरीत्यसाधकं तद्वाक्योल्लङ्घनजनितजनन्यपोषणाधर्म्यं न विद्यते, कौसल्याया उपजी

**विषम०**–किन्तु सेत्युत्तरश्लोकान्वयि ॥ * ॥ कौसल्या सहस्रं मद्विधानपि बिभृयात्, सा स्वात्मानं बिभृयादिति किमु वक्तव्यम् ॥ २० ॥ **स०**–सुमित्रात्राणार्थमपि न स्थातव्यं मयेत्यत्राह–**ममेति** । मद्विधानां च भरणाय मथ्नन्ति परानिति मथः असन्तः ते न भवन्तीत्यमथः ते च ते विधानेऽश्वाः पूज्याश्च तेषां भरणाय पोषणाय । पर्याप्ता । सर्वभूतदयापरपूज्यसज्जनपालयित्रीयं न सौवमात्ररक्षणपरेति भावः । एतेन सहस्रं मद्विधानित्यनेन न पुनरुक्तिः ॥ २१ ॥

---

१ संशयः । यदि दुष्टो न रक्षेत भरतो राज्यमुत्तमम् । प्राप्य दुर्मनसा वीर गर्वेण च विशेषतः । तमहं दुर्मतिं क्रूरं वधिष्यामि न संशयः । तत्पक्ष्यानपि तान्सर्वांस्त्रैलोक्यमपि किन्तु सा ॥ * ॥ इत्यधिकः पाठः ।

स्वाभाविकशेषभूतं माम् अनुचरं स्वरूपानुरूपशेषवृत्तियुक्तं कुरुष्व। इहास्मिन् जने मयि वैधर्म्यं शेषत्वविपर्यासः नास्ति, अनेन शेषत्वस्य स्वाभाविकत्वं तज्ज्ञानवतः फलं कैङ्कर्यं चेत्युक्तम्। कैङ्कर्याकरणे तव का हानिरित्यत्राह कृतार्थोऽहं भविष्यामीति। अकिञ्चित्कुर्वतः शेषत्वानुपपत्तेरितिभावः। तच्च प्राप्यं कैङ्कर्यं निष्कृष्य दर्शयति तव चेति। चोवधारणे। तवैवार्थः, नतु मम। परार्थकैङ्कर्यस्यैव पुरुषार्थत्वादितिभावः। शेषत्वाध्यवसाय उपायः, अस्वार्थ

धनुरादाय सशरं खनित्रपिटकाधरः। अग्रतस्ते गमिष्यामि पन्थानमनुदर्शयन् ॥ २३ ॥
आहरिष्यामि ते नित्यं मूलानि च फलानि च। वन्यानि यानि चान्यानि स्वाहाराणि तपस्विनाम् ॥ २४ ॥
भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते। अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥ २५ ॥
रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाच तम्। व्रजापृच्छस्व सौमित्रे सर्वमेव सुहृज्जनम् ॥ २६ ॥

शेषिकैङ्कर्यमेव फलमित्युपायोपेयनिष्कर्षोऽनेन कृत इति रहस्यम्। वैधर्म्यं नेह विद्यत इत्युक्तिः ज्येष्ठभ्रातुः पितृसमत्वात्। आवयोः श्रेयश्चास्तीत्याह कृतार्थ इतीति केचिद्व्याचक्षते॥२२॥ रामानु०–कुरुष्वेति। वैधर्म्यं नेह विद्यत इत्युक्तिः ज्येष्ठभ्रातुः पितृसमत्वात्। आवयोः श्रेयश्चास्तीत्याह कृतार्थ इति ॥ २२॥ स्वकृतार्थत्वं प्रपञ्चयति–धनुरिति। धनुराद्यादानं हिंस्रनिवारणाय। खनित्रं मूलकन्दखननसाधनं कुद्दालादि। पिटका। अल्पार्थे कप्रत्ययः। फलमूलाद्याहरणयोग्याल्पकण्डोलः। "कण्डोलपिटौ" इत्यमरः ॥ २३ ॥ एवं मार्गे सम्भावितं कैङ्कर्यमुक्त्वा स्थाने संभावितमाह–आहरिष्यामीति। अन्यानि शाकप्रियालबीजक्षौद्रादीनि। स्वाहाराणि सुखेनाहर्तुं भोक्तुं योग्यानि ॥ २४ ॥ एवं सर्वदेशकर्तव्यकैङ्कर्याण्युक्तानि, कैङ्कर्यस्य विशिष्टविषयस्यैव रस्यत्वाद्विशिष्टविषयत्वमाह–भवांस्त्विति। जाग्रतः स्वपतश्च त इत्यनेन सर्वकालसर्वावस्थोचितकैङ्कर्यमुक्तम्। सर्वं करिष्यामीत्यनेन सर्वविधकैङ्कर्यमुक्तम्। तथा च देवीविशिष्टस्य शेषिणः सर्वदेशसर्वकालसर्वावस्थासु सर्वविधमपि कैङ्कर्यं शेषभूतेन कर्तव्यमितिदर्शितम् ॥ २५ ॥ रामस्त्विति। अनेनानुगमनाज्ञा

वनमस्तीतिदर्शितत्वादितिभावः। कृतार्थः ज्येष्ठभ्रातुः पितृसमत्वेन आपदि तव सेवया कृतार्थो भविष्यामीत्यर्थः। तव चार्थः प्रकल्पते, फलमूलाद्याहरणेन शुश्रूषारूपप्रयोजनं सिद्ध्यतीत्यर्थः॥२२–२४॥भवानिति। सर्वं करिष्यामीति मया कर्तव्यं सर्वमित्यर्थः। स्वपतश्च त इत्यनेन रात्रौ लक्ष्मणस्य निर्निद्रत्वं द्योत्यते॥२५॥राम

स०—चोप्यर्थे। स्वपतोपि जाग्रत इत्यर्थः। एतेन कथमस्वप्नपतेः स्वाप इति शङ्का निरस्ता ॥ २९ ''

व्यञ्जिता ॥ २६ ॥ ये चेत्यादि । जनकस्य राज्ञो यज्ञे महात्मा वरुणः स्वयमेव मह्यं यद्धनुरादिकं ददौ । आचार्यसद्मनि आचार्यस्य गृहे । पूजार्थं निहितं तदेतत्सर्वमायुधमादाय सः आपृष्टसुहृज्जनस्त्वं क्षिप्रमाव्रजेत्यन्वयः । अत्र धनुरादिषु सर्वत्र द्विवचनादावयोर्ददाविति सिद्धम् । बालकाण्डेऽनुक्तोप्ययं वृत्तान्तोऽनुवादात्सिद्धः, यथा सुन्दरकाण्डेऽभिहितं मणिबन्धनम् "मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे । वधूकाले तथा बद्धमधिकं मूर्ध्नि शोभते ॥" इति ।



ये च राज्ञो ददौ दिव्ये महात्मा वरुणः स्वयम् । जनकस्य महायज्ञे धनुषी रौद्रदर्शने ॥ २७ ॥ अभेद्ये कवचे दिव्ये तूणी चाक्षयसायकौ । आदित्यविमलौ चोभौ खड्गौ हेमपरिष्कृतौ ॥२८॥ सत्कृत्य निहितं सर्वमेतदाचार्यसद्मनि । स त्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण ॥ २९ ॥ स सुहृज्जनमामन्त्र्य वनवासाय निश्चितः । इक्ष्वाकुगुरुमागम्य जग्राहायुधमुत्तमम् ॥ ३० ॥ तद्दिव्यं राजशार्दूल सत्कृतं माल्यभूषितम् । रामाय दर्शयामास सौमित्रिः सर्वमायुधम् ॥३१॥ तमुवाचात्मवान् रामः प्रीत्या लक्ष्मणमागतम् । काले त्वमागतः सौम्य कांक्षिते मम लक्ष्मण ॥३२॥ अहं प्रदातुमिच्छामि यदिदं मामकं धनम् । ब्राह्मणेभ्यस्तपस्विभ्यस्त्वया सह परन्तप ॥ ३३ ॥ वसन्तीह दृढं भक्त्या गुरुषु द्विजसत्तमाः । तेषामपि च मे भूयः सर्वेषां चोपजीविनाम् ॥ ३४ ॥

यथा चायोध्याकाण्डेऽनभिहितोपि वायसवृत्तान्तः सुन्दरकाण्डेऽनूद्यते–"स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः । त्रीन् लोकान् संपरिक्रम्य तमेव शरणं गतः ॥" इति । आचार्यो वसिष्ठः । इक्ष्वाकुगुरुमागम्येत्युत्तरत्रानुवादात्, नहीक्ष्वाकुकुलगुरुर्वसिष्ठादन्योस्ति ॥ २७–३१ ॥ तमिति । प्रीत्योवाचेत्यन्वयः ॥ ३२ ॥ कांक्षितत्वमेवाह–अहमित्यादिना ॥ ३३ ॥ वसन्तीति । यच्छन्दोर्थसिद्धः । इह नगरे गुरुभक्त्या ये दृढं वसन्ति नित्यं गुरुशुश्रूषणं कुर्वन्ति

स्त्विति । व्रज अनुव्रज । आपृच्छस्व अनुजानीहि ॥ २६ ॥ ये चेति । वरुणः जनकस्य महायज्ञे धनुरादिकमावयोर्ददौ सत्कृत्य निहितं निक्षिप्तम् आचार्यसद्मनि वसिष्ठसद्मनि । ननु जनकयागे धनुरादिप्रदानस्याश्रवणात कथमत्र सिद्धवदनुवादः क्रियते ? सत्यमेतत; भगवतो वाल्मीकेरियं शैली–प्रस्तुतार्थप्रतिपादनपारवश्यात् यत्र वक्तव्यमर्थं तत्रानुक्त्वा उत्तरत्र केनचिद्व्याजेन सिद्धवदनुवदतीति । यथा बालकाण्डेऽनभिहितं मणिबन्धनं "मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे" इनि सुन्दरकाण्डेऽभिहितवान । अयोध्याकाण्डे वक्तव्यं काकासुरवृत्तान्तं "स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः" इत्यादिना सुन्दरकाण्डे

न्तीत्यर्थः । तेषामपि मे सर्वेषाम् उपजीविनां च । भूयः अतिशयेन नित्यदेयादधिकतया दातुमिच्छामि, तानानयेतिशेषः ॥ २४ ॥ वसिष्ठपुत्रमिति । वसिष्ठपुत्रम् आर्यं द्विजानां प्रवरं सुयज्ञम् । अन्यानपि शिष्टानानय । सुयज्ञं तांश्चाभ्यर्च्याभिप्रयास्यामीत्यर्थः ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने श्रीमदयोध्याकाण्डव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥ एवं निश्चितसीतालक्ष्मणानुयात्रस्य रामस्य

वसिष्ठपुत्रं तु सुयज्ञमार्यं त्वमानयाशु प्रवरं द्विजानाम् । अभिप्रयास्यामि वनं समस्तानभ्यर्च्य शिष्टानपरान् द्विजातीन् ॥ २५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

ततः शासनमाज्ञाय भ्रातुः शुभतरं प्रियम् । गत्वा स प्रविवेशाशु सुयज्ञस्य निवेशनम् ॥ १ ॥ तं विप्रमग्न्यगारस्थं वन्दित्वा लक्ष्मणोऽब्रवीत् । सखेऽभ्यागच्छ पश्य त्वं वेश्म दुष्करकारिणः ॥ २ ॥ ततः सन्ध्यामुपास्याशु गत्वा सौमित्रिणा सह । जुष्टं तत्प्राविशल्लक्ष्म्या रम्यं रामनिवेशनम् ॥ ३ ॥ तमागतं वेदविदं प्राञ्जलिः सीतया सह । सुयज्ञमभिचक्राम राघवोऽग्निमिवार्चितम् ॥४॥ जातरूपमयैर्मुख्यैरङ्गदैः कुण्डलैः शुभैः । सहेमसूत्रैर्मणिभिः केयूरैर्वलयैरपि ॥ ५ ॥ अन्यैश्च रत्नैर्बहुभिः काकुत्स्थः प्रत्यपूजयत् । सुयज्ञं स तदोवाच रामः सीताप्रचोदितः॥६॥

यात्रादानं प्रस्तूयते द्वात्रिंशे–तत इत्यादि । आज्ञाय अङ्गीकृत्य । शुभतरं ब्राह्मणोपकारत्वात् । प्रियम् आत्मनोऽनुगमनाङ्गीकारफलत्वात् ॥ १ ॥ तमिति । अग्न्यगारस्थम् अग्निहोत्रशालास्थम् । दुष्करकारिणः दुष्करकर्मकारिणः । वेश्म अभ्यागच्छ कृत्यं च पश्येत्यर्थः॥२॥ तत इति । सन्ध्योपासनं माध्याह्निकम् अथवा सन्ध्यानियताग्निहोत्रम् । अग्न्यगारस्थमित्युक्तेः ॥ ३ ॥ तमिति । अर्चितं हुतम् ॥ ४ ॥ जातरूपमयैरित्यादि । जातरूपमयैः

उक्तवान् ॥ २७–३४ ॥ वसिष्ठपुत्रं सुयज्ञमानयेत्यनेन मूलप्रभोर्दशरथस्य वसिष्ठपौरोहित्यं 'तत्पुत्रस्य तत्पुत्रः' इति न्यायेन स्वाचार्यस्य सुयज्ञस्य विशिष्यानयननियोगः ॥ ३५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायाम् एकत्रिंशः सर्गः ॥ ३१ ॥

तत इति ॥ १ ॥ तमिति । अग्न्यगारम् अग्निहोत्रशाला वेश्म रामस्याभ्यागच्छ । दुष्करकारिणः प्राप्तराज्यत्यागपूर्वकवनगमनरूपदुष्करकारिणः ॥ २ ॥ तत इति । सन्ध्यां माध्याह्निकीम् ॥ ३ ॥ तमिति । अभिचक्राम प्रत्युत्थानादिकं कृतवान् ॥ ४ ॥ जातरूपेति । अङ्गदमूर्ध्वाकारं पत्रलताचित्रितं बाहुमूलधार्यं भूषणम् । केयूरम् तस्याधोभागे धार्यं वलयाकारं भूषणम् । वलयैः कटकैः [illegible] मुक्तादिमणिभिरित्यर्थः ॥ ५ ॥ सुयज्ञमिति । सीताप्रचोदित इति

स्वर्णमयैः । अङ्गदैः कूर्परोपरिधार्यैः बाहुभूषणैः । सहेमसूत्रैर्मणिभिः हेमसूत्रप्रोतैर्वैदूर्यपद्मरागमुक्तादिमणिभिः । "रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च" इत्यमरः । केयूरैः भुजशिरोव्यापिफणाकारशिखरयुक्तबाहुभूषणैः । अथवा अङ्गदकेयूरयोः स्थूलत्वसूक्ष्मत्वाभ्यां भेदः । वलयैः कटकैः ।



हारं च हेमसूत्रं च भार्यायै सौम्य हारय । रशनां चाधुना सीता दातुमिच्छति ते सखे ॥७॥ अङ्गदानि विचित्राणि केयूराणि शुभानि च । प्रयच्छति सखे तुभ्यं भार्यायै गच्छती वनम् ॥ ८ ॥ पर्यङ्कमग्र्यास्तरणं नानारत्नविभूषितम् । तमपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि ॥९॥ नागः शत्रुञ्जयो नाम मातुलोऽयं ददौ मम । तं ते गजसहस्रेण ददामि द्विजपुङ्गव ॥१०॥ इत्युक्तः स हि रामेण सुयज्ञः प्रतिगृह्य तत् । रामलक्ष्मणसीतानां प्रयुयोजाशिषः शुभाः ॥ ११ ॥ अथ भ्रातरमव्यग्रं प्रियं रामः प्रियंवदः । सौमित्रिं तमुवाचेदं ब्रह्मेव त्रिदशेश्वरम् ॥ १२ ॥ अगस्त्यं कौशिकञ्चैव तावुभौ ब्राह्मणोत्तमौ । अर्चयाहूय सौमित्रे रत्नैः सस्यमिवाम्बुभिः ॥ १३ ॥ तर्पयस्व महाबाहो गोसहस्रैश्च मानद । सुवर्णै रजतैश्चैव मणिभिश्च महाधनैः ॥ १४ ॥

"कटकं वलयोऽस्त्रियाम्" इत्यमरः । रत्नैः भूषणप्रकरणात् भूषणश्रेष्ठैरित्यर्थः । "रत्नं स्वजातिश्रेष्ठेपि" इत्यमरः ॥ ५ ॥ ६ ॥ हारमिति । हेमसूत्रं हेममयं कण्ठसूत्रम् । रशनां च ते भार्यायै सीता दातुमिच्छति । तत्सर्वं हारय दापयेत्यर्थः ॥ ७ ॥ अङ्गदानीति । भार्यायै भार्याधारणार्थम् । तुभ्यं प्रतिग्रहीत्रे । प्रयच्छति । गच्छतीत्यत्र नुमभाव आर्षः ॥ ८ ॥ पर्यङ्कमिति । त्वयि प्रतिष्ठापयितुं तुभ्यं दातुमित्यर्थः ॥ ९ ॥ नाग इति । मातुलो ददाविति दशरथीयशत्रुञ्जयव्यावृत्तिः ॥ १० ॥ इतीति । प्रतिगृह्येत्यनेन न्यासभूतत्वं व्यावर्त्यते ॥११॥ अथेति । त्रिदिशेश्वरम् इन्द्रम् ॥ १२ ॥ अगस्त्यमिति । अगस्त्यम् अगस्त्यपुत्रम् । कौशिकं विश्वामित्रपुत्रम् । रत्नैः श्रेष्ठवस्तुभिः ॥ १३ ॥ रत्नैरर्चनं विवृणोति—तर्पयस्वेति ॥ १४ ॥

सीतया सुयज्ञपत्न्यै दिव्याभरणदानाय सखीत्वात् प्रचोदित इत्यर्थः ॥ ६ ॥ हारमिति । हेमसूत्रम् उरोभूषणविशेषमित्यर्थः ॥ ७ ॥ ८ ॥ पर्यङ्कमिति । त्वयि प्रतिष्ठापयितुम्, तुभ्यं दातुमित्यर्थः ॥ ९ ॥ नाग इति । शत्रुञ्जयो नाम प्रसिद्धं यं गजं मातुलो मम ददौ तं गजं ते ददामि ॥ १०–१६ ॥

वि०—निष्कसहस्रेण निष्कसहस्रदक्षिणया ( तं ते निष्कसहस्रेण इति पाठः ) ॥ १० ॥ स०—रामलक्ष्मणसीतानामित्यत्र लक्ष्मणव्यवधानेन महर्ष्याशिषाविलम्बफलकत्वं द्योतयति ॥ ११ ॥

कौसल्यामित्यादिश्लोकद्वयमेकान्वयम् । तैत्तिरीयाणां तित्तिरिसम्बन्धिशाखाध्येतॄणाम्। आचार्यः अध्यापयिता। अभिरूपः बुधः 'प्राप्तरूपसुरूपाभिरूपा बुधमनोज्ञयोः'' इतिविश्वः ॥ कौशेयानि कृमिकोशोत्थानि । ''कौशेयं कृमिकोशोत्थम्'' इत्यमरः । यावत् यावत्पर्यन्तम् तुष्यति तावत्सम्प्रदापयेति सम्बन्धः ॥१५॥१६॥ सूत इत्यादिसार्धश्लोक एकान्वयः। सूतः सुमन्त्रतुल्यः कश्चिच्चित्ररथनामा। सुचिरोषितः चिरकालमस्मद्गृहे स्थितः। पशुकाभिः।

कौसल्यां च य आशीर्भिर्भक्तः पर्युपतिष्ठति । आचार्यस्तैत्तिरीयाणामभिरूपश्च वेदवित् ॥ १५ ॥ तस्य यानं च दासीश्च सौमित्रे सम्प्रदापय । कौशेयानि च वस्त्राणि यावत्तुष्यति स द्विजः ॥ १६ ॥ सूतश्चित्ररथश्चार्य्यः सचिवः सुचिरोषितः । तोषयैनं महार्हैश्च रत्नैर्वस्त्रैर्धनैस्तथा । पशुकाभिश्च सर्वाभिर्गवां दशशतेन च ॥ १७ ॥ ये चेमे कठ कालापा बहवो दण्डमाणवाः ॥ १८ ॥ नित्यस्वाध्यायशीलत्वान्नान्यत् कुर्वन्ति किञ्चन । अलसाः स्वादुकामाश्च महतां चापि सम्मताः । तेषामशीतियानानि रत्नपूर्णानि दापय ॥ १९ ॥

अल्पार्थे कन्प्रत्ययः। अजादिभिरित्यर्थः॥१७॥ ये चेत्यादि उपाकुर्वित्यन्तमेकं वाक्यम्। कठेन प्रोक्तमधीयते कठाः। कठशब्दात्प्रोक्तार्थे वैशम्पायनान्तेवासित्वाण्णिनिः। तस्य ''कठचरकात्—'' इतिलुक्। ततः ''तदधीते तद्वेद'' इत्यण्। तस्य ''प्रोक्ताल्लुक्'' इति लुक्। कलापिना प्रोक्तमधीयते कालापाः। कलापिशब्दात् प्रोक्तार्थे ''कलापिनोऽण्'' इत्यण्। ''सब्रह्मचारिपीठसर्पि'' इत्यादिना टिलोपः। ततः 'तदधीते' इत्याद्यण्। तस्य प्रोक्ताल्लुक्। कठप्रोक्तशाखाध्यायिनः कलापिप्रोक्तशाखाध्यायिनश्चेत्यर्थः। कठाश्च कालापाश्च कठकालापाः। ''दण्डप्रधानाः माणवाः दण्डमाणवाः'' इति काशिकायाम्। सदा पलाशदण्डधारिणो ब्रह्मचारिण इत्यर्थः। किञ्चन आहारार्थयत्नादिकम्। न केवलं नित्यस्वाध्यायशीलत्वात् किञ्चिन्न कुर्वन्ति किंत्वालस्याच्चेत्याशयेनाह अलसा इति। गोसहस्रप्रदानहेतुत्वेनाह स्वादुकामाश्चेति। रसवत्पदार्थकाङ्क्षिण इत्यर्थः। महतां चापि सम्मताः अतीव साध्वाचारा इत्यर्थः। रत्नपूर्णानि

सूत इति। सार्धश्लोकमेकं वाक्यम्। सूतः सुमन्त्रादन्यः चित्ररथनामकः, सुचिरोषितः चिरकालवृद्धः, पशुकाभिः अजामहिषीप्रभृतिभिः॥१७॥ ये चेति।कठकालापाः कठाः कठसम्बन्धिशाखाध्यायिनः, कालापाः कलापिसम्बन्धिशाखाध्यायिनश्च कठकालापाः। दण्डमाणवाः पलाशदण्डयुक्ता ब्रह्मचारिणः अन्यत् व्रतोपवासादिकं न कुर्वन्ति॥१८॥ कुतः ? नित्येति। स्वादुकामाः मृष्टान्नकामाः, तर्हि कथमेवंविधा दानयोग्या इत्यत आह महतामिति। ''तपो हि स्वाध्यायः'' इति श्रुतेः। नित्य

रत्नालङ्कारपूर्णानि । अशीतियानानीत्युक्त्या दण्डमाणवाश्चाशीतिसङ्ख्याका इतिगम्यते । रत्नवाहानुष्ट्रानिति वा । शालिवाहसहस्रं शालिधान्यवाहकबलीवर्दसहस्रम् । भद्रकान् । अल्पार्थे कन्प्रत्ययः । कर्षणयोग्याननडुह इत्यर्थः । धान्यविशेषानित्यपरे । व्यञ्जनार्थं क्षीरदधिघृतार्थम् । उपाकुरु ददस्वेत्यर्थः ॥१८–२०॥ मेखलीनामिति । मेखला मौञ्जी, तद्वतां ब्रह्मचारिणामित्यर्थः । आर्षो दीर्घः । सहस्रं गोसहस्रम् प्रकृतत्वात् तासाम् ॥२१॥ ममाम्बेत्यन्वयः।

शालिवाहसहस्रं च द्वे शते भद्रकांस्तथा । व्यञ्जनार्थं च सौमित्रे गोसहस्रमुपाकुरु ॥ २० ॥ मेखलीनां महासङ्घः कौसल्यां समुपस्थितः । तेषां सहस्रं सौमित्रे प्रत्येकं सम्प्रदापय ॥ २१ ॥ अम्बा यथा च सा नन्देत् कौसल्या मम दक्षिणाम् । तथा द्विजातींस्तान् सर्वाँल्लक्ष्मणार्चय सर्वशः ॥ २२ ॥ ततः स पुरुषव्याघ्रस्तद्धनं लक्ष्मणः स्वयम् । यथोक्तं ब्राह्मणेन्द्राणामददाद्धनदो यथा ॥ २३ ॥ अथाब्रवीद्बाष्पकलांस्तिष्ठतश्चोपजीविनः । सम्प्रदाय बहुद्रव्यमेकैकस्योपजीवनम् ॥२४॥ लक्ष्मणस्य च यद्वेश्म गृहं च यदिदं मम । अशून्यं कार्यमेकैकं यावदागमनं मम ॥२५॥

दक्षिणां पूर्वोक्तदानाङ्गभूताम् । सर्वशः वस्त्रधान्यादिसर्वप्रकारैः ॥ २२ ॥ तत इति । यथोक्तं रामोक्तमनतिक्रम्य अददात् धनदो यथेति । धनदस्य दातृत्वं 'धनदेन समस्त्यागे' इति बालरामायण एवोक्तम् । ब्राह्मणेन्द्राणामिति चतुर्थ्यर्थे षष्ठी ॥ २३ ॥ अथेति । बाष्पं कलन्ति मुञ्चतीति बाष्पकलाः तान् उपजीविनं प्रति एकैकस्योपजीविनो बहुद्रव्यं सम्प्रदायाब्रवीत् ॥२४॥ अशून्यं कार्य्यं, यथापूर्वं भवद्भिरुपविश्य रक्षणीयमित्यर्थः । एकैकं पृथक्

तपस्वित्वेन महतां सम्मताः । रत्नपूर्णानि धनपूर्णानि अशीतियानानि अशीत्युष्ट्रान् ॥१९॥ शालिवाहेति । शालीन् वहन्तीति शालिवाहाः बलीवर्दाः भद्रकाः कर्षणप्रवीणाः महर्षभाः । व्यञ्जनार्थं दधिघृताद्यर्थम् । उपाकुरु ददस्वेत्यर्थः ॥२०॥ मेखलीनामिति । मेखलाः मेखलिनः ब्रह्मचर्यव्रतिनः। अर्श आदित्वादच् । समवस्थितः । विवाहार्थमिति शेषः । तेषां सहस्रम् गोसहस्रं विवक्षितम् । गवामेव प्रकृतत्वात् । अम्बा कौसल्या,नः अस्माकं दक्षिणां ब्रह्मचारिभ्यो दत्तं यथा नन्देत् तथार्चयेति योजना । प्रथमान्तपाठे दक्षिणा समर्था अम्बा कौसल्या नः अस्माकं यथा स्वाश्रितब्रह्माचारिवर्गस्य विवाहार्थं भिक्षाप्रदानेन नन्देत् तथा दापयेतिवार्थः ॥२१॥२२॥ तत इति । तद्धनम् यथोक्तम्, यथोक्तविभागमित्यर्थः ॥ २३ ॥ अथेति श्लोकद्वयमेकं वाक्यम् । बाष्पगलान बाष्पगद्गदान् । एकैकस्य उपजीवनं जीवनसाधनम् । बहुद्रव्यम् एकैकस्य सम्प्रदाय दत्वा ॥ २४ ॥ लक्ष्मणस्य वेश्म यदिदं मम गृहं च एकैकं प्रत्येकं यावन्ममागमनम् अशून्यं कार्यमित्युपजीविनोऽब्रवीदिति योजना ।

पृथक् ॥ २५ ॥ इतीति । धनाध्यक्षं कोशगृहाधिकृतम् ॥ २६ ॥ तत इति । अस्य रामस्य ॥ २७ ॥ तत इति । बालवृद्धेभ्यः बालेभ्यो वृद्धेभ्यश्चे त्यर्थः ॥२८॥ तत्रेति । तत्र तस्मिन् काले देशे वा । पिङ्गलः पिङ्गलवर्ण इति दारिद्र्यलक्षणोक्तिः । पिङ्गलकेशो वा । गार्ग्यः गर्गमुनिवंश्यः । उञ्छवृत्तिः उञ्छेन एकैकशो धान्यग्रहणेन वृत्तिर्जीवनं यस्य तथा । क्षतवृत्तिरितिपाठे–क्षतेन खननेन जीवनं यस्येत्यर्थः । खननलब्धकन्दमूलादिजीवन इत्यर्थः ।

इत्युक्त्वा दुःखितं सर्वं जनं तमुपजीविनम् । उवाचेदं धनाध्यक्षं धनमानीयतामिति ॥२६॥ ततोऽस्य धनमाजह्रुः सर्वमेवोपजीविनः । स राशिः सुमहांस्तत्र दर्शनीयो ह्यदृश्यत ॥ २७ ॥ ततः स पुरुषव्याघ्रस्तद्धनं सहलक्ष्मणः । द्विजेभ्यो बालवृद्धेभ्यः कृपणेभ्यो ह्यदापयत्॥२८॥ तत्रासीत् पिङ्गलो गार्ग्यस्त्रिजटो नाम वै द्विजः ।उञ्छवृत्तिर्वने नित्यं फालकुद्दाललाङ्गली ॥ २९ ॥ तं वृद्धं तरुणी भार्या बालानादाय दारकान् । अब्रवीद्ब्राह्मणं वाक्यं दारिद्र्ये णाभिपीडिता ॥ ३० ॥ अपास्य फालं कुद्दालं कुरुष्व वचनं मम । रामं दर्शय धर्मज्ञं यदि किञ्चिदवाप्स्यसि ॥ ३१ ॥ स भार्यावचनं श्रुत्वा शाटीमाच्छाद्य दुश्छदाम् । स प्रातिष्ठत पन्थानं यत्र रामनिवेशनम् ॥ ३२ ॥

फालकुद्दाललाङ्गली फल्यते अनेनेति फालः द्वैधीकरणसाधनं कुठारशङ्कुलादिकम् । कुद्दालः खननसाधनम्, खनित्रमितियावत् । लाङ्गलं हलाकारः फलाकर्षणसाधनभूतो दण्डविशेषः तद्वान् । एवं वनवासी कश्चिद्दरिद्रो गृहस्थः दैवात्तत्र नगरे तदानीं सङ्गतोऽभूदितिभावः ॥ २९ ॥ तमिति । दारकान् पुत्रकान् ॥ ३० ॥ अपास्येति । कुद्दालमिति लाङ्गलस्याप्युपलक्षणम् । दर्शयेति भार्यापुत्रसहितमात्मानमित्यर्थः । "गतिबुद्धि–" इत्यादिना द्विकर्मकत्वम् । यदि दर्शयसि तदा किञ्चिदवाप्स्यसीत्यर्थः । किञ्चिदिति स्वभाग्यहान्यपेक्षयोक्तम् ॥ ३१ ॥ स इति । दुश्छदाम् अति

अशून्यं कार्यमित्यस्यायमर्थः–युष्माभिरत्रोपविश्य रक्षणीयमिति ॥ २५ ॥ २६॥ तत इति । अस्य रामस्य ॥ २७॥ तत इति । कृपणेभ्यः भूरि दापयेति शेषः ॥२८॥ तत्रेति । तत्र तस्मिन् काले देशे च पिङ्गलः पिङ्गलवर्णः, गार्ग्यः तद्वंश्यः, क्षतवृत्तिः क्षतेन खननेन लब्धकन्दमूलादिना वृत्तिर्जीवनं यस्य स तथोक्तः । फालकुद्दाल लाङ्गली फालं द्वैधीकरणसाधनं कुठारादि, कुद्दालः खननसाधनं खनित्रम् । लाङ्गलं हलाकारः कर्षणसाधनभूतो दण्डविशेषः, तद्वान् ॥ २९ ॥ ३० ॥ राममिति । सभार्यपुत्रमात्मानमिति शेषः । दर्शयेति द्विकर्मकम् । यदि दर्शयसि तदा सर्वथा किञ्चिदवाप्स्यसि ॥३१॥ स इति। दुश्छदामतिजीर्णत्वादाच्छादयितुमशक्यां यत्र

सत्य०–मम यदि रामं दर्शयसि तर्हि किञ्चिदवाप्स्यसे इत्यन्वयः । अनेन त्रिजटस्य भार्यासाहित्येन रामं प्रति गमनं द्योत्यते । अत एव "ततः सभार्यस्त्रिजटः" इत्युक्तिस्सङ्गच्छते । यद्वा दर्शय स्वात्मानमिति शेषः । आगामिबाधकं तु तत्रैव परिहियते ॥ ३१ ॥ दुश्छदां दुःखेन छादयितुं योग्याम् ॥ ३२ ॥

जीर्णत्वादाच्छादयितुमशक्याम । रामदर्शनार्थमाच्छादनयत्नः । यत्र यन्मार्गाश्रितवीथ्याम् ॥ ३२ ॥ भृग्वङ्गिरेति । अङ्गिरेत्यत्र अकारान्तत्वमार्षम् ॥ ३३ ॥ स इत्यादि । [illegible] कटाक्षयेत्यर्थः ॥ ३४ ॥ तमिति । परिहाससमन्वितं लीलास्मितसमन्वितम्, बहुकुटुम्बिनो दरिद्रस्य अस्य कियती धनाशेति जिज्ञासया [illegible] इत्यर्थः ॥ ३५ ॥ गवामिति । अनेकगोसहस्राणां मध्ये एकमपि सहस्रं न विश्राणितमित्यर्थः । यद्वा असङ्ख्यातानां गवां

भृग्वङ्गिरसमं दीप्त्या त्रिजटं जनसंसदि । आ पञ्चमायाः कक्ष्यायाः नैनं कश्चिदवारयत् ॥ ३३ ॥ स राजपुत्रमासाद्य त्रिजटो वाक्यमब्रवीत् । निर्द्धनो बहुपुत्रोऽस्मि राजपुत्र महायशः । उञ्छवृत्तिर्वने नित्यं प्रत्यवेक्षस्व मामिति ॥ ३४ ॥ तमुवाच ततो रामः परिहाससमन्वितम् ॥ ३५ ॥ गवां सहस्रमप्येकं न तु विश्राणितं मया । परिक्षिपसि दण्डेन यावत्तावदवाप्स्यसि ॥ ३६ ॥ स शाटीं त्वरितः कट्यां सम्भ्रान्तः परिवेष्टय ताम् । आविध्य दण्डं चिक्षेप सर्वप्राणेन वेगितः ॥ ३७ ॥ स तीर्त्वा सरयूपारं दण्डस्तस्य कराच्च्युतः । गोव्रजे बहुसाहस्रे पपातोक्षणसन्निधौ॥३८॥ तं परिष्वज्य धर्मात्मा आ तस्मात् सरयूतटात् । आनयामास ता गोपैस्त्रिजटायाश्रमं प्रति ॥३९॥

मध्ये एकमपि सहस्रं मया न विश्राणितं न दत्तम् । तुभ्यमितिशेषः । अपितु दण्डेन यावत्परिक्षिपसि गवाकीर्णं यावन्तं देशं परिक्षिपसि तावदवाप्स्यसि, तावद्देशस्थं गोजातमवाप्स्यसीत्यर्थः । एकं गोसहस्रमात्रं न दत्तम् अन्यत् सर्वं दत्तमिति नार्थः । 'बहुसाहस्रे' इत्यादि वक्ष्यमाणेन विरोधात् अपिशब्दास्वारस्याच्च ॥ ३६ ॥ स शाटीमिति । कट्यां परिवेष्टनं बलोत्तम्भनाय । आविध्य भ्रामयित्वा । सर्वप्राणेन सर्वशक्त्या । "शक्तिः पराक्रमः प्राणः" इत्यमरः ॥ ३७ ॥ स इति । उक्षणसन्निधौ उक्षसन्निधौ "वष्टिभागुरिः" इत्यादिरीत्या अकारान्तत्वम् ॥ ३८ ॥ तमिति । आ तस्मा

रामनिवेशनं यत्र यस्मिन् पथि रामनिवेशनं प्राप्यते तादृशं पन्थानमास्थाय प्रातिष्ठत प्रस्थितवान् ॥ ३२॥ भृग्विति । दीप्त्या ब्रह्मवर्चसेन ॥ ३३ ॥ निर्द्धन इति । प्रत्यवेक्षस्व मयि कृपां कुरु ॥ ३४ ॥ तमिति । परिहाससमन्वितं लीलास्मितान्वितम् ॥ ३५ ॥ गवामिति । गवामसङ्ख्यातानां गवां मध्ये एकमपि सहस्रं मया न विश्राणितं न दत्तम् । अतो दण्डेन यावत्परिक्षिपसि गवाकीर्णं यावन्तं देशं परिक्षिपसि परिगृह्णासि तावत् तावद्देशस्थं गोजातमवाप्स्यसीत्यर्थः । ब्राह्मणानां गोग्रहण चापल्यप्रदर्शनार्थमेवंरीत्या भगवतोक्तमिति भावः॥३६॥ स इति। तां शाटीं सम्भ्रान्तः सन्तुष्टः सन्। आविध्य भ्रामयित्वा। वेगितः त्वरितः। सर्वप्राणेन सर्वशक्त्या। चिक्षेप मुक्तवान् ॥३७॥ स इति । सः दण्डः । सरयूपारं सरयूतीरम् । तीर्त्वा प्राप्य उक्षाणसन्निधौ वृषसन्निधौ ॥३८॥ तमिति । आ तस्मादित्यभिविधावाकारः, ताः

दित्यत्राभिविधिवाचकस्याङः सरयूतटादित्यनेन सम्बन्धः। आनयामास नाययामासेत्यर्थः ॥३९॥ उवाचेति। परिहासो ह्ययं मम अयं दण्डक्षेपणप्रचोदना। परिहासः विनोदार्थ इत्यर्थः॥४०॥ परिहासमेव विवृणोति—इदमिति। तेजः बलम्। दुरत्ययं निरतिशयमित्यर्थः। यद्वा जिज्ञासितुं ज्ञातुमित्यर्थः। यद्वा

उवाच च ततो रामः तं गार्ग्यमभिसान्त्वयन्। मन्युर्न खलु कर्त्तव्यः परिहासो ह्ययं मम ॥ ४० ॥ इदं हि तेजस्तव यद्दुरत्ययं तदेव जिज्ञासितुमिच्छता मया। इमं भवानर्थमभिप्रचोदितो वृणीष्व किं चेदपरं व्यवस्यति ॥ ४१॥ ब्रवीमि सत्येन न तेऽस्ति यन्त्रणा धनं हि यद्यन्मम विप्रकारणात्। भवत्सु सम्यक् प्रतिपादनेन तन्मया र्जितं प्रीतियशस्करं भवेत् ॥ ४२ ॥ ततः सभार्यस्त्रिजटो महामुनिर्गवामनीकं प्रतिगृह्य मोदितः। यशोबलप्रीति सुखोपबृंहिणीस्तदाशिषः प्रत्यवदन्महात्मनः ॥४३॥ स चापि रामः प्रतिपूर्णमानसो महद्धनं धर्मबलैरुपार्जितम्। नियोजयामास सुहृज्जने चिराद्यथार्हसम्मानवचःप्रचोदितः ॥ ४४ ॥

जिज्ञासितुं मीमांसितुम्। "मानेर्जिज्ञासायाम्" इति मीमांसार्थे जिज्ञासाशब्दप्रयोगात्। इममर्थं दण्डप्रक्षेपणरूपम्। अपरं किञ्चिद्व्यवस्यति अभिलषतिचेत् तद्वृणीष्व ॥४१॥ इदं च पूर्ववन्न परिहासरूपमित्याह—ब्रवीमीति। यन्त्रणा निरोध इत्यर्थः। मम यद्यद्धनमस्ति तत्सर्वं विप्रकारणात् विप्रार्थमेव आर्जितम्, भवत्सु भवादृशेषु विप्रेषु। सम्यक् करणत्रयपूर्वकम् प्रदानेन मम प्रीतियशस्करं भवेत् ॥४२॥ तत इति। मोदित इत्यनेन गोभ्योन्यन्नापेक्षितवानित्यवगम्यते। उपबृंहणीः वर्द्धनीः। तदा गमनकाले। महात्मनः रामस्य ॥ ४३ ॥ स इति। धर्मबलैः धर्मप्रयुक्तपराक्रमैः। नियोजयामास प्रति

गाः त्रिजटाय त्रिजटस्य ॥ ३९ ॥ उवाचेति। परिहासोप्ययं दण्डपरिक्षेपणवचनरूपोऽयं विनोदार्थ इत्यर्थः ॥ ४० ॥ इदमिति। इदं तेजः शक्तिः अतिवृद्धस्यापि सतस्तव जिज्ञासितुं ज्ञातुमित्यर्थः। इममर्थं दण्डप्रक्षेपणरूपार्थमुद्दिश्य प्रचोदितोसि, अपरं गोभ्योऽन्यत् किमपि वरितुं व्यवस्यति चेत् वृणीष्व ॥ ४१ ॥ इदं वचनं नोपचारमात्रमित्याह—ब्रवीमीति। यन्त्रणा इतोप्यधिकवरस्य वरणे सङ्कोचः, ते तव। नास्ति मास्तु। कुतः? मम यद्यद्धनं तद्विप्रकारणात् विप्रप्रयोजनसम्पादनार्थम्। कथं तथात्वमत आह—भवत्सु भवादृशेषु सम्यक् प्रतिपादनेन परिपूर्णप्रदानेन हेतुना मया आर्जितं धनं मे प्रीतियशस्करं प्रीतिकरं यशस्करं च भवेत् ॥४२॥ तत इति। यशोबलप्रीतिसुखोपबृंहणीः यशःप्रभृतीनां विवर्द्धनीः। तदाशिषः तस्य रामस्य आशिषः ॥४३॥ स चेति। धर्मबलैः धर्मप्रयुक्तपराक्रमैः। यथार्हसम्मानवचः

स०—सभार्यः भार्यासहितः। यद्वा आशिषः प्रत्यवदत्। ततः गेहगमनानन्तरं सभार्यो मुदितः हृष्टोऽभूदित्यन्वयः। अतः सभार्य इति नानुपपन्नम् ॥ ४३ ॥

पादयामास। सुहृज्जने विषये यथार्हसम्मानवचःप्रचोदितः। आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । तत्तदौचित्येनाभिहितसम्मानवाक्य इत्यर्थः ॥ ४४ ॥ द्विज इति । द्विजः ब्राह्मणः । सुहृत् द्विजत्वाभावेपि सुहृत् । द्विजत्वसुहृत्त्वाभावेपि भृत्यजनः, तथात्वाभावेपि दरिद्रभिक्षाचरणः । भिक्षां चरतीति भिक्षाचरणः । "कृत्यल्युटो बहुलम्" इति कर्त्तरिल्युट् । कर्मधारयसमासः । तत्र तेषु मध्ये । कश्चिदपि यथार्हसम्माननदान

द्विजः सुहृद्भृत्यजनोऽथवा तदा दरिद्रभिक्षाचरणश्च योऽभवत् । न तत्र कश्चिन्न बभूव तर्पितो यथार्हसम्माननदान सम्भ्रमैः ॥ ४५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

दत्त्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनं बहु । जग्मतुः पितरं द्रष्टुं सीतया सह राघवौ ॥ १॥ ततो गृहीते दुष्प्रेक्षे त्वशोभेतां तदायुधे । मालादामभिराबद्धे सीतया समलंकृते ॥ २ ॥ ततः प्रासादहर्म्याणि विमानशिखराणि च । अधिरुह्य जनः श्रीमानुदासीनो व्यलोकयत् ॥ ३ ॥

सम्भ्रमैः सम्भ्रमस्त्वरा । "आरम्भः सम्भ्रमस्त्वरा" इत्यमरः । न तर्पितो न बभूव । त्वरया क्रियमाणैरपि सम्मानदानैः सर्वेपि तर्पिता बभूवुरित्यर्थः ॥ ४५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने श्रीमदयोध्याकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥ ३२ ॥ पूर्वं पित्रानुज्ञातोऽपि सीतालक्ष्मणयोरनुज्ञापनाय पुनः रामो दशरथसमीपं गच्छति–दत्त्वेत्यादि ॥ १ ॥ तत इति । तदायुधे तयोरायुधे, धनुषी इति यावत् । खड्गादीनामप्युपलक्षणमेतत् । मालादामभिः मालानिचयैरित्यर्थः । अलंकृते चन्दनादिभिरलंकृते ॥ २ ॥ तत इति । प्रासादहर्म्याणि प्रासादो देवतानां भूभुजां चावासः, हर्म्याणि धनिनां मन्दिराणि । "हर्म्यादिर्धनिनां वासः प्रासादो देवभूभुजाम्" इत्यमरः । विमानशिखराणि विमानं सप्तभूमि

प्रचोदितः तत्तदौचित्येनाभिहितसम्मानवाक्य इत्यर्थः ॥ ४४ ॥ द्विज इति । दरिद्रभिक्षाचरणः दरिद्रस्सन् भिक्षाचरणः ॥ ४५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां द्वात्रिंशः सर्गः ॥ ३२ ॥ १ ॥ तत इति । तदायुधे तयोरसाधारणायुधे, धनुषी इत्यर्थः । खड्गादीनामप्युपलक्षणमेतत । मालादामभिः मालानिचयैः । समलंकृते चन्दनादिभिः ॥ २ ॥ तत इति । प्रासादहर्म्याणि प्रासादाः देवानां भूभुजां चावासाः, हर्म्याणि धनिनां

सहितं सद्म " विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि " इति वैजयन्ती । उदासीनः निरुत्सुकः, निर्विण्ण इति यावत् ॥ ३ ॥ नहीति । तस्मात् रथ्यागमनस्याशक्यत्वात् । प्रासादानितिपाठः । प्रासादादितिपाठे ल्यब्लोपे पञ्चमी क्लिष्टा ॥ ४ ॥ दीनत्वे हेतुमाह–पदातिमित्यादिना ॥ ५ ॥ यमिति ।



न हि रथ्याः स्म शक्यन्ते गन्तुं बहुजनाकुलाः । आरुह्य तस्मात् प्रासादान् दीनाः पश्यन्ति राघवम् ॥ ४ ॥ पदातिं वर्जितच्छत्रं रामं दृष्ट्वा तदा जनाः । ऊचुर्बहुविधा वाचः शोकोपहतचेतसः ॥ ५ ॥ यं यान्तमनुयाति स्म चतुरङ्गबलं महत् । तमेकं सीतया सार्द्धमनुयाति स्म लक्ष्मणः ॥६॥ ऐश्वर्यस्य रसज्ञस्सन् कामिनां चैव कामदः । नेच्छत्येवानृतं कर्तुं पितरं धर्मगौरवात् ॥ ७ ॥ या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि । तामद्य सीतां पश्यन्ति राजमार्गगता जनाः ॥ ८ ॥ अङ्गरागोचितां सीतां रक्तचन्दनसेविनीम् । वर्षमुष्णं च शीतं च नेष्यन्त्याशु विवर्णताम् ॥ ९ ॥ अद्य नूनं दशरथः सत्त्वमाविश्य भाषते । न हि राजा प्रियं पुत्रं विवासयितुमिच्छति ॥ १० ॥

एकं मुख्यम् ॥६॥ ऐश्वर्यस्येति । रसज्ञः सङ्कल्पसुखज्ञः । कामिनाम् अर्थकाङ्क्षिणां कामदः अभीष्टधनप्रदः । अनृतम् अनृतवचनम् । कर्तुं धर्मगौरवात् पितृशुश्रूषणवचनकरणविधेयत्वादिरूपधर्मविषयकबहुमानात् ॥७–९॥ अद्येति । सत्त्वं जन्तुं "सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । पिशाचमिति यावत् ।

मन्दिराणि विमानशिखराणि । विमानं सप्तभूमिकं सद्म । उदासीनः निरुत्सुकः, व्यलोकयत् । राममिति शेषः ॥ ३ ॥ न हीति । तस्मात् बहुजनाकुलत्वे रथ्यायां गन्तुमशक्यत्वात् । आरुह्य प्रासादानारुह्य प्रासादात्प्रासादारोहणरूपोपायादेव पश्यन्ति । प्रासादानिति वा पाठः ॥ ४ ॥ दीनत्वे हेतुमाह–पदातिमिति ॥ ५ ॥ ता एवाह यमिति ॥६॥ ऐश्वर्यस्येति । रसज्ञः विषयानुभवचतुरः, पितरम् अनृतम् अनृतवचनयुक्तं कर्तुम् । वचनं धर्मगौरवादितिपाठे–वचनं पितृवचनम् । अनृतं कर्तुम् । धर्मगौरवात् पितृवचनकरणरूपधर्मविषयकबहुमानात् ॥ ७–९ ॥ अद्येति । अद्य प्रयाणानुमत्यर्थदर्शनसमय इत्यर्थः । सत्त्वं जन्तुम्, पिशाचमिति यावत् । आविश्य

स०–सत्त्वं साधुगुणम् । आविश्य आलम्ब्य । भाषते नवनं गच्छेति, रामं प्रतीति शेषः । कुत इत्यत आह–न हीति । यद्वा सत्त्वं कैकेय्यादिरूपपिशाचम् । आविश्यालम्ब्य भाषते वनं गच्छेति, न प्रकृतितः । कुत इत्यत आह नहीति । " सत्त्वं गुणे पिशाचादौ " इति विश्वः ॥ १० ॥

आविश्य प्राप्य ॥ १० ॥ निर्गुणस्यापीति । वृत्तेन केवलं चारित्रमात्रेण । " वृत्तं पद्ये चारित्रे च " इत्यमरः । वृत्तेन केवलमित्युक्तिः दानमानादौ विद्यमानेपि चरित्रप्राधान्यात् ॥ ११ ॥ आनृशंस्यमिति । आनृशंस्यम् अहिंसकत्वम् । अनुक्रोशो दया " कृपा दयानुकम्पा स्यादनुक्रोशः " इत्यमरः । दमः इन्द्रियनिग्रहः । शमः चित्तप्रशान्तिः । " शमश्चित्तप्रशान्तिः स्याद्दम इन्द्रियनिग्रहे " इति निर्वचनात् ॥ १२ ॥ तस्मादिति । तस्मात् षाड्गुण्य

निर्गुणस्यापि पुत्रस्य कथं स्याद्विप्रवासनम् । किंपुनर्यस्य लोकोऽयं जितो वृत्तेन केवलम् ॥ ११ ॥ आनृशंस्यमनुक्रोशः श्रुतं शीलं दमः शमः । राघवं शोभयन्त्येते षड्गुणाः पुरुषर्षभम् ॥ १२ ॥ तस्मात्तस्योपघातेन प्रजाः परमपीडिताः । औदकानीव सत्त्वानि ग्रीष्मे सलिलसंक्षयात् ॥ १३ ॥ पीडया पीडितं सर्वं जगदस्य जगत्पतेः । मूलस्येवोपघातेन वृक्षः पुष्पफलोपगः ॥ १४ ॥ मूलं ह्येष मनुष्याणां धर्मसारो महाद्युतिः । पुष्पं फलं च पत्रं च शाखाश्चास्येतरे जनाः ॥ १५ ॥ ते लक्ष्मण इव क्षिप्रं सपत्न्यः सहबान्धवाः । गच्छन्तमनुगच्छामो येन गच्छति राघवः ॥ १६ ॥

युक्तत्वात् । तस्य रामस्य । उपघातेन हिंसनेन । औदकानि उदकजीवनानि । शैषिकोऽण् ॥ १३ ॥ पीडयेति । अस्य जगत्पतेः रामस्य । पीडया विवासनरूपया । पुष्पफलैरुपगमो यस्य स पुष्पफलोपगो वृक्ष इव " अन्येष्वपि दृश्यते " इतिडप्रत्ययः ॥ १४ ॥ मूलमिति । मनुष्याणां प्राणिनाम् । उपलक्षणमेतत् । धर्म एव सारो यस्य सः धर्मसारः ॥ १५ ॥ त इति । ते वयं सपत्न्यः सपत्नीकाः समासान्तविधेरनित्यत्वेन " नद्यृतश्च " इति कबभावः । येन

प्राप्य भाषते ॥ १० ॥ निर्गुणस्येति । वृत्तेन केवलं चरित्रमात्रेण । पूर्वश्लोकपूर्वार्द्धमर्धान्तरेण व्याख्यायते अद्येति । अद्य वनगमनानुमतिसमये । सत्त्वं सत्त्वगुणम् । आविश्य प्राप्य । भाषते त्वया वनं न गन्तव्यमिति राजा रामं वदिष्यतीत्यर्थः । कुतः ? नहि राजेति सार्धेन । अन्यत्समानम् ॥ ११ ॥ वृत्तमेवाह–आनृशंस्यमिति । आनृशंस्यम् अहिंसकत्वम् । अनुक्रोशो दया । श्रुतम् अनुष्ठानपर्यवसायिशास्त्राध्ययनम् अत एव शीलं सत्स्वभावः, दमः इन्द्रियनिग्रहः। शमः चित्तप्रशान्तिः॥ १२॥ तस्मादिति । यस्मात्सर्वोत्तमः सकलकल्याणगुणाभिरामो रामः तस्मात् तस्य उपघातेन ईषद्धिंसनेन परमपीडिताः ॥ १३ ॥ किञ्च जगत्पालकत्वजगज्जनकत्वादपि तस्योपघातेन जगत्पीडितमित्याह–पीडयेत्यादिश्लोकद्वयेन । पुष्पफलोपगः पुष्पफलान्युपगच्छति प्राप्नोतीति तथा । पुष्पफलसमेत इत्यर्थः । मनुष्याणामित्युपलक्षणम् प्राणिमात्रस्येत्यर्थः । धर्मसारः धर्म एवान्तस्सारो यस्य स तथोक्तः ॥ १४ ॥ १५ ॥ यदेवमतः, त इति ये रामोपघातमसहमानाः ते वयं सपत्न्यः सपत्नीकाः। येन

मार्गेण गच्छति तेनेति शेषः ॥ १६ ॥ उद्यानानीति । उद्यानानि राजगृहोद्यानसदृशक्रीडावनानि । एकदुःखसुखाः समानसुखदुःखाः ॥ १७ ॥ समुद्धृतनिधानानीत्यादि । समुद्धृतनिधानानि सम्यगुद्धृतनिक्षेपाणि । परिध्वस्ताजिराणि भग्नाङ्गणानि "अङ्गणं चत्वराजिरे" इत्यमरः । उपात्तधनधान्यानि अत्र धनशब्देन गवादिकं निक्षिप्तभूषणनिष्कादिकं चोच्यते । साराणि शय्यासनादीनि । दैवतैः गृहदैवतैः । उद्बिलैः उद्भिन्नबिलैः । उदकम् उदकसेचनम् ।

उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च । एकदुःखसुखा राममनुगच्छाम धार्मिकम् ॥ १७ ॥ समुद्धृतनिधानानि परिध्वस्ताजिराणि च । उपात्तधनधान्यानि हृतसाराणि सर्वशः ॥१८॥ रजसाभ्यवकीर्णानि परित्यक्तानि दैवतैः । मूषकैः परिधावद्भिरुद्बिलैरावृतानि च ॥१९॥ अपेतोदकधूमानि हीनसंमार्जनानि च । प्रणष्टबलिकर्मेज्यामन्त्रहोमजपानि च ॥ २० ॥ दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च । अस्मत्त्यक्तानि वेश्मानि कैकेयी प्रतिपद्यताम् ॥ २१ ॥ वनं नगरमेवास्तु येन गच्छति राघवः । अस्माभिश्च परित्यक्तं पुरं सम्पद्यतां वनम् ॥ २२ ॥ बिलानि दंष्ट्रिणः सर्वे सानूनि मृगपक्षिणः । त्यजन्त्यस्मद्भयाद्भीता गजाः सिंहा वनान्यपि ॥ २३ ॥ अस्मत्त्यक्तं प्रपद्यन्तां सेव्यमानं त्यजन्तु च ॥ २४ ॥

हीनसम्मार्जनानि सम्मार्जनहीनानि । दुष्कालेन क्षामक्षोभयुक्तकालेन । भाजनं भाण्डादि ॥ १८-२१ ॥ वनमिति । येन वनेन हेतुना ॥ २२ ॥ बिलानीति । दंष्ट्रिणः सर्प्पाद्याः । अस्मद्भयात् अस्मत्प्रयुक्तभयहेतोः ॥२३॥ अस्मत्त्यक्तमिति । अस्माभिस्त्यक्तं पुरम्, सेव्यमानं वनमित्यर्थसिद्धम् । अत्र

मार्गेणेति शेषः ॥ १६ ॥ एकदुःखसखाः समानसुखदुःखाः ॥ १७ ॥ समुद्धृतेत्यादि । निधानानि निक्षेपाणि । परिध्वस्ताजिराणि भग्नाङ्गणानि । उपात्तधनधान्यानि, अत्र धनशब्देन गवादिकमनिक्षिप्तभूषणनिष्कादिकं चोच्यते ॥ १८ ॥ उद्बिलैः उद्भिन्नबिलैः ॥ १९ ॥ २० ॥ दुष्कालेन क्षामराजक्षोभयुक्तकालेन ॥ २१ ॥ वनमिति । येन वनेन हेतुना ॥ २२ ॥ बिलानीति । दंष्ट्रिणः सर्पाः । सानूनि पर्वतप्रस्ताः ॥ २३ ॥ अस्मत्त्यक्तमिति । [illegible]त्यक्तम्, पुरमिति शेषः । सेव्यमानम् अस्माभिराश्रयमाणम्, वनमितिशेषः । अत्र कर्तारः पूर्वोक्तगजसिंहादयः ॥ २४ ॥

कर्त्तारः पूर्वोक्तदंष्ट्र्यादयः ॥ २४ ॥ तृणेति । तृणमांसफलादानां तृणादाः हरिणादयः, मांसादाः व्याघ्रादयः, फलादाः वायसादयः । व्यालमृगद्विजम् व्यालाः क्रूराः मृगद्विजाः यस्मिंस्तादृशं देशम् । इदमेव नगरं तादृशं भविष्यतीति भावः । निर्वृताः सुखिताः ॥ २५॥ इतीति । श्रुत्वा अवस्थितस्येति



तृणमांसफलादानां देशं व्यालमृगद्विजम् । प्रपद्यतां हि कैकेयी सपुत्रा सह बान्धवैः । राघवेण वने सर्वे सह वत्स्याम निर्वृताः ॥ २५ ॥ इत्येवं विविधा वाचो नानाजनसमीरिताः । शुश्राव रामः श्रुत्वा च न विचक्रेऽस्य मानसम् ॥ २६ ॥ स तु वेश्म पितुर्दूरात् कैलासशिखरप्रभम् । अभिचक्राम धर्मात्मा मत्तमातङ्गविक्रमः॥२७॥ विनीतवीरपुरुषं प्रविश्य तु नृपालयम् । ददर्शावस्थितं दीनं सुमन्त्रमविदूरतः ॥ २८ ॥ प्रतीक्षमाणोऽपि जनं तदार्तमनार्तरूपः प्रहसन्निवाथ । जगाम रामः पितरं दिदृक्षुः पितुर्निदेशं विधिवच्चिकीर्षुः ॥२९॥ तत्पूर्वमैक्ष्वाकसुतो महात्मा रामो गमिष्यन् वनमार्त्तरूपम् । व्यतिष्ठत प्रेक्ष्य तदा सुमन्त्रं पितुर्महात्मा प्रतिहारणार्थम् ॥ ३० ॥ पितुर्निदेशेन तु धर्मवत्सलो वनप्रदेशे कृतबुद्धिनिश्चयः । स राघवः प्रेक्ष्य सुमन्त्रमब्रवीन्निवेदय स्वागमनं नृपाय मे ॥ ३१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

शेषः । न विचक्रे न विकारं प्राप ॥२६–२८॥ प्रतीक्षमाण इति । निदेशं नियोगम् ॥२९॥ तत्पूर्वमिति । तत्पूर्वं तत्प्रथमम् । महात्मा महाधैर्यः । प्रतिहारणार्थं स्वागमननिवेदनार्थम् ॥३०॥ पितुरिति । अस्यान्ते इतिकरणं द्रष्टव्यम् ॥३१॥ इति श्रीगो०श्रीरा०पीता०अयोध्याकाण्डे त्रयस्त्रिंशः सर्गः॥३३॥

तृणेति । तृणमांसफलादानां देशं व्यालमृगद्विजम् । व्यालमृगाः द्विजाः मुनयो यस्मिन् स तथोक्तः, देशं वनम् । तृणमांसफलादानान् पशुव्यालमृगद्विजानिति पाठे–तृणमांसफलानाम् आदानम् एभ्यो वनदेशेभ्यः ते तथा । पशुव्यालमृगद्विजान् पश्वादयश्च येषु ते तथोक्ताः ॥ २५ ॥ इतीति । न विचक्रे विकारं न प्रापितवान् ॥ २६–२८ ॥ प्रतीक्षमाण इति । आर्तं खिन्नम् । निदेशं नियोगम् ॥२९॥ तत्पूर्वमिति । तत्पूर्वं तदारभ्य । आर्तरूपं दुःखरूपम् । महात्मा महाधैर्यः । पितुः प्रतिहरणार्थं स्वागमननिवेदनार्थं सुमन्त्रं प्रेक्ष्य तत्प्रतीक्षां कृत्वा व्यतिष्ठत ॥३०॥३१॥ इति श्रीमहे० श्रीरामायण० अयोध्याकाण्डव्याख्यायां त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

विषम०–तत्पूर्वं सः स्वाकारणार्थागमनकालः पूर्वो यस्यार्तरूपत्ववतः तादृशं तदारभ्यार्तरूपं सुमन्त्रं प्रेक्ष्य । व्यतिष्ठत द्वार्येवेति शेषः ॥३०॥ स०–कृतबुद्धेः शिक्षितबुद्धेः निश्चय इव निश्चयो यस्य स तथा३१॥

पूर्वसर्गान्तोक्तमर्थं वक्ष्यमाणसङ्घटनार्थं सङ्ग्रहेण दर्शयति—तत इति । विशेषणैर्निर्विकारत्वं सूचयते । निरुदरः तनुमध्य इत्यर्थः ॥१॥२॥ उपरक्तमिति । उप

ततः कमलपत्राक्षः श्यामो निरुदरो महान् । उवाच रामस्तं सूतं पितुराख्याहि मामिति ॥ १ ॥ स रामप्रेषितः क्षिप्रं सन्तापकलुषेन्द्रियः । प्रविश्य नृपतिं सूतो निश्वसन्तं ददर्श ह ॥ २ ॥ उपरक्तमिवादित्यं भस्मच्छन्नमिवानलम् । तटाकमिव निस्तोयमपश्यज्जगतीपतिम् ॥ ३ ॥ आलोक्य तु महाप्राज्ञः परमाकुलचेतसम् । राममेवानुशोचन्तं सूतः प्राञ्जलिरासदत् ॥ ४ ॥ तं वर्द्धयित्वा राजानं सूतः पूर्वं जयाशिषा । भयविक्लवया वाचा मन्दया श्लक्ष्णमब्रवीत् ॥ ५ ॥ अयं स पुरुषव्याघ्रो द्वारि तिष्ठति ते सुतः । ब्राह्मणेभ्यो धनं दत्त्वा सर्वं चैवोपजीविनाम् ॥ ६ ॥ स त्वा पश्यतु भद्रं ते रामः सत्यपराक्रमः । सर्वान् सुहृद आपृच्छ्य त्वामिदानीं दिदृक्षते ॥ ७ ॥ गमिष्यति महारण्यं तं पश्य जगतीपते । वृतं राजगुणैः सर्वैरादित्यमिव रश्मिभिः ॥ ८ ॥ स सत्यवादी धर्मात्मा गाम्भीर्यात्सागरोपमः । आकाश इव निष्पङ्को नरेन्द्रः प्रत्युवाच तम् ॥ ९ ॥ सुमन्त्रानय मे दारान् ये केचिदिह मामकाः । दारैः परिवृतः सर्वैर्द्रष्टुमिच्छामि धार्मिकम् ॥ १० ॥

रक्तं राहुग्रस्तम् । विशेषणान्तरकथनार्थं पुनरपश्यदित्युक्तिः ॥ ३ ॥ ४ ॥ तमिति । भयविक्लवया भयेन कातरया । दुःखितोऽयं किंवदेत् इतिभयम् अतएव मन्दया ॥ ५ ॥ अयमित्यादि । सर्वं गृहोपकरणादिकम् ॥ ६–८ ॥ स इति । निष्पङ्कः निर्लेपः ॥ ९ ॥ १० ॥

तत इति । निरुदरः तनुमध्यः ॥ १ ॥ २ ॥ उपरक्तमिति । उपरक्तं राहुग्रस्तम् । कीदृशं ददर्शेत्यपेक्षायामीदृशमपश्यतादिति प्रदर्शनार्थं पुनर्दर्शनाक्रियाप्रयोगः ॥ ३ ॥ आलोक्येति । राममेवानु राममुद्दिश्य ॥ ४ ॥ तमिति । वर्द्धयित्वा सम्पूज्य । भयविक्लवयेति रामो वनप्रयाणोद्युक्त इति राज्ञे कथं निवेदयिष्यामीति भयेन विक्लवा कातरा यस्यास्सा तथोक्ता । अश्लक्ष्णमिति छेदः ॥ ५–८ ॥ स सत्यवादीति । सत्यवादी दशरथः ॥ ९ ॥ सुमन्त्रेति । इह मद्वेश्मनि ये केचन

स०–निरुदरः अल्पोदरः "तनुत्वेऽप्यखिलं भरम्" इत्युक्तेः । निस्सन्देह इति वा । "उदरं संशयः प्रोक्तः परिनिष्ठा तु निश्चयः" इत्यभिधानात् । पूर्वमागमनमामन्त्रयस्वेत्युक्तम् । इदानीं तु मामाख्याहीत्युक्तेर्भेदः । यद्वा मां सीतामागतामाख्याहीत्यर्थः । उपलक्षणया लक्ष्मणं च ॥ १ ॥ हे सुमन्त्र सु शोभनो मन्त्रो गुप्तभाषणं यस्य स तथा तत्सम्बुद्धिः । अनेनाप्तत्वं द्योतयति । मे दारान् कौसल्याम्, राममातृत्वेन मुख्यत्वात्सङ्ख्त उत्कृष्योक्तिः । ये च मामका दाराः तदतिरिक्ताः तानानयेति योजना । पक्षद्वयेपि न मे इत्यधिकम् । द्वितीये पक्षे कौसल्यां परिवार्येत्युत्तरग्रन्थानुकूल्यं चेति ज्ञेयम् ॥ १० ॥

सोन्तःपुरमिति । ह्वयति आह्वयति ॥११॥१२॥ अर्द्धसप्तशता इति । अर्द्धसप्तशताः अर्द्धं सप्तशतस्येति विग्रहः । "अर्द्धं नपुंसकम्" इति समासः । ताम्रलोचनाः सदा रामविवासननिमित्तरोदनादिति भावः ॥१३–१५॥ स इति । उत्पपात उदतिष्ठत् ॥१६॥ स इति । अभिदुद्राव अभिमुखमाजगाम ॥१७॥



सोन्तःपुरमतीत्यैव स्त्रियस्ता वाक्यमब्रवीत् । आर्याह्वयति वो राजा गम्यतां तत्र मा चिरम् ॥ ११ ॥ एवमुक्ताः स्त्रियः सर्वाः सुमन्त्रेण नृपाज्ञया । प्रचक्रमुस्तद्भवनं भर्तुराज्ञाय शासनम् ॥१२॥ अर्द्धसप्तशतास्तास्तु प्रमदास्ताम्रलोचनाः । कौसल्यां परिवार्याथ शनैर्जग्मुर्धृतव्रताः ॥ १३ ॥ आगतेषु च दारेषु समवेक्ष्य महीपतिः । उवाच राजा तं सूतं सुमन्त्रानय मे सुतम् ॥ १४ ॥ स सूतो राममादाय लक्ष्मणं मैथिलीं तदा । जगामाभिमुखस्तूर्णं सकाशं जगतीपतेः ॥१५॥ स राजा पुत्रमायान्तं दृष्ट्वा दूरात् कृताञ्जलिम् । उत्पपातासनात्तूर्णमार्त्तः स्त्रीजनसंवृतः ॥ १६ ॥ सोभिदुद्राव वेगेन रामं दृष्ट्वा विशां पतिः । तमसंप्राप्य दुःखार्त्तः पपात भुवि मूर्च्छितः ॥ १७॥ तं रामोऽभ्यपतत् क्षिप्रं लक्ष्मणश्च महारथः । विसंज्ञमिव दुःखेन सशोकं नृपतिं तदा ॥ १८ ॥ स्त्रीसहस्रनिनादश्च संजज्ञे राजवेश्मनि । हाहा रामेति सहसा भूषणध्वनिमूर्च्छितः ॥ १९ ॥ तं परिष्वज्य बाहुभ्यां तावुभौ रामलक्ष्मणौ । पर्यङ्के सीतया सार्द्धं रुदन्तः समवेशयन् ॥ २० ॥

तमिति । अभ्यपतत् उत्थापनार्थमितिभावः । इवशब्द एवकारार्थः ॥ १८॥ स्त्रीसहस्रनिनाद इति । भूषणध्वनिभिः मूर्च्छितः व्याप्तः ॥१९॥ तमिति ।

मामका दाराः तान् दारान् इहानय ॥ १० ॥ स इति । अतीत्य अतिवेगेन प्राप्य, हे आर्याः! वः युष्मान् राजा दशरथः ह्वयति आह्वयति ॥ ११ ॥ एवमिति । प्रचक्रमुः गच्छन्ति स्म ॥ १२ ॥ अर्द्धेति । अर्धसप्तशताः अर्धं सप्तशतस्येत्येकदेशसमासः । पञ्चाशदधिकशतत्रयसङ्ख्यासङ्ख्येयेत्यर्थः । ताम्रलोचनाः, रामवियोगदुःखात् ॥ १३ ॥ समवेक्ष्य, दारानिति शेषः ॥ १४–१७ ॥ अभ्यपतत् अभ्यागतवान् । विसंज्ञमिव विसंज्ञमेव ॥ १८ ॥ स्त्रीसहस्रेति । भूषणध्वनिमूर्च्छितः भूषणध्वनिभिर्व्याप्तः । मिश्रित इति पाठे–उरश्शिरस्ताडनादिप्रचलद्भूषणानां ध्वनिभिर्मिश्रितः ॥ १९ ॥ तमिति । तया सीतया सार्धं तं परिष्वज्य ते त्रयः

रामलक्ष्मणौ सीतया सार्द्धं तं बाहुभ्यां परिष्वज्य पर्यङ्के समवेशयन्नित्यर्थः ॥ २० ॥ अथेति । मुहूर्त्तस्येतिपाठे—मुहूर्त्तेनेत्यर्थः ॥ २१ ॥ आपृच्छ इति । कुशलेन चक्षुषेतिशेषः । हेतौ तृतीया वा ॥ २२ ॥ लक्ष्मणमिति । सीता चेति तामप्यनुजानीहीति भावः । तौ निवर्त्तयेत्याशङ्क्याह कारणैरिति ।

अथ रामो मुहूर्त्तेन लब्धसंज्ञं महीपतिम् । उवाच प्राञ्जलिर्भूत्वा शोकार्णवपरिप्लुतम् ॥२१॥ आपृच्छे त्वां महाराज सर्वेषामीश्वरोऽसि नः । प्रस्थितं दण्डकारण्यं पश्य त्वं कुशलेन माम् ॥ २२ ॥ लक्ष्मणं चानुजानीहि सीता चान्वेति मां वनम् । कारणैर्बहुभिस्तथ्यैर्वार्यमाणौ न चेच्छतः ॥ २३ ॥ अनुजानीहि सर्वान्नः शोकमुत्सृज्य मानद । लक्ष्मणं मां च सीतां च प्रजापतिरिव प्रजाः ॥ २४ ॥ प्रतीक्षमाणमव्यग्रमनुज्ञां जगतीपतेः । उवाच राजा संप्रेक्ष्य वनवासाय राघवम् ॥ २५ ॥ अहं राघव कैकेय्या वरदानेन मोहितः । अयोध्यायां त्वमेवाद्य भव राजा निगृह्य माम् ॥२६॥ एवमुक्तो नृपतिना रामो धर्मभृतां वरः । प्रत्युवाचाञ्जलिं कृत्वा पितरं वाक्यकोविदः ॥ २७ ॥ भवान् वर्षसहस्राय पृथिव्या नृपते पतिः । अहं त्वरण्ये वत्स्यामि न मे कार्यं त्वयाऽनृतम् ॥ २८ ॥

कारणैः दुःखादिकारणैः । तथ्यैः परमार्थैः । न चेच्छतः अननुगमनमितिशेषः ॥ २३ ॥ अनुजानीहीति । लक्ष्मणं सीतां मां च सर्वान्नः अनुजानीहीत्यन्वयः । "त्यदादीनि सर्वैर्नित्यम्" इत्येकशेषः ॥ २४ ॥ प्रतीक्षमाणमिति । वनवासाय जगतीपतेः स्वस्यानुज्ञां प्रतीक्षमाणमित्यन्वयः ॥ २५ ॥ अहमिति । मोहितः वञ्चित इत्यर्थः ॥ २६ ॥ २७ ॥ भवानिति । वर्षसहस्राय अनेकवर्षाणीत्यर्थः । मे मह्यम् । अनृतम् अनृतवचनम् ॥ २८ ॥

समवेशयन्नित्यन्वयः ॥ २० ॥ २१ ॥ आपृच्छ इति । कुशलेन सौम्येन चक्षुषा मामनुगृहाणेत्यर्थः ॥ २२ ॥ ननु लक्ष्मणसीतयोः कुतो वनवासप्राप्तिः ? न ह्यसौ वरनिर्बन्धस्तयोरत आह कारणैरिति । कारणैः हेतुभिः न चेच्छतः, अत्र स्थातुमिति शेषः ॥ २३ ॥ २४ ॥ प्रतीक्षमाणमिति । वनवासाय जगतीपतेः स्वस्य अनुज्ञाम् अनुमतिं प्रतीक्षमाणं प्रार्थयमानम् राजा उवाचेति सम्बन्धः ॥ २५–२७॥ भवानिति । न मे कार्यस्त्वमानृतः मे मया त्वम् आनृतः ईषदनृतयुक्तोऽपि

वि०—भवान् वर्षसहस्रायुः पृथिव्याः पतिर्भवतु । अतःपरमप्यनेककालं राजा भवेत्यर्थः ॥ स०—हे नृपते ! पृथिव्याः पतिर्भवान् वर्षसहस्रायुः बहुसहस्रवर्षपर्यन्तं जीवितवान् । एतेन बहुकालं राज्यकर्त्तारं त्वां निगृह्य राज्यकरणं न मह्यं रोचते इति । भवान् वर्षसहस्रायुः पृथिव्याः पतिर्भवत्विति व्याख्यानं रामस्य कदाप्यनृतमाषित्वाभावाद्धुत्तरश्लोके व्याख्यानवद्धुपेक्ष्यमित्यप्यसूचितम् ॥ २८ ॥

नवेति। प्रतिज्ञान्ते प्रतिज्ञावसाने ॥ २९ ॥ रुदन्निति। मिथः रहसि। कैकेय्या चोद्यमानः अद्यैव प्रस्थापयेति प्रेर्यमाणः ॥ ३० ॥ श्रेयस इति। श्रेयसे पारलौकिकफलाय। वृद्धये ऐहिकफलाय। गच्छस्व गच्छ। अरिष्टं शुभम् "अरिष्टेति शुभाशुभे" इत्यमरः। अकुतोभयं कुतश्चिदपि



नव पञ्च च वर्षाणि वनवासे विहृत्य ते। पुनः पादौ ग्रहीष्यामि प्रतिज्ञान्ते नराधिप ॥ २९ ॥ रुदन्नार्त्तः प्रियं पुत्रं सत्यपाशेन संयतः। कैकेय्या चोद्यमानस्तु मिथो राजा तमब्रवीत् ॥ ३० ॥ श्रेयसे वृद्धये तात पुनरागमनाय च। गच्छस्वारिष्टमव्यग्रः पन्थानमकुतोभयम् ॥३१॥ न हि सत्यात्मनस्तात धर्माभिमनसस्तव। विनिवर्त्तयितुं बुद्धिः शक्यते रघुनन्दन ॥३२॥ अद्य त्विदानीं रजनीं पुत्र मा गच्छ सर्वथा। एकाहदर्शनेनापि साधु तावच्चराम्यहम् ॥ ३३ ॥ मातरं मां च संपश्यन् वसेमामद्य शर्वरीम्। तर्पितः सर्वकामैस्त्वं श्वः काले साधयिष्यसि ॥३४॥ दुष्करं क्रियते पुत्र सर्वथा राघव त्वया। मत्प्रियार्थं प्रियांस्त्यक्त्वा यद्यासि विजनं वनम् ॥ ३५ ॥

जन्तोर्भयरहितम् ॥ ३१ ॥ नेति। सत्यात्मनः सत्यस्वभावस्य। "आत्मा देहे धृतौ जीवे स्वभावे" इति वैजयन्ती। धर्माभिमनसः धर्माभिनिविष्टमनसः ॥ ३२ ॥ अद्येति। अद्य अस्मिन् दिने इदानीम्, आसन्नामित्यर्थः। साधु सुखं चरामि वसामि ॥ ३३ ॥ मातरमिति। साधयिष्यसि गमिष्यसि। काले प्रातःकाले ॥ ३४ ॥ दुष्करमिति। मत्प्रियार्थं मम परलोकप्रियार्थमित्यर्थः। अन्यथा उत्तरश्लोकविरोधात्। प्रियान् अभि

न कार्यः, तव नरकपातप्रसङ्गादित्याशयः ( कार्यस्त्वमानृतः इति पाठः ) ॥२८॥२९॥ कैकेय्या मिथः रहसि चोद्यमानः, इदानीमेव रामं प्रेषयेति रहसि चोद्यमान इत्यर्थः ॥३०॥ श्रेयसे परलोकहिताय, वृद्धये इह लोकाभ्युदयाय च। अरिष्टं स्वस्त्ययनं ते अस्तु, अतः अव्यग्रस्सन् अकुतोभयं पन्थानं गच्छस्व ॥३१॥ नहीति। सत्यात्मनः सत्यप्रतिष्ठितस्वभावस्य। धर्माभिमनसः धर्माभिनिविष्टमनसः ॥३२॥ अद्येति। अद्य अस्मिन् दिवसे। इदानीं प्रवृत्तां रजनीम् आवस सर्वथा मा गच्छ। किमर्थम् ? एकाहेति। चरामि भोक्ष्यामि तावत् वर्ते च ॥ ३३ ॥ साधयिष्यसि गमिष्यसि ॥ ३४ ॥ दुष्करमिति। मत्प्रियार्थं मम परलोकहितार्थम् ॥ ३५ ॥

स०—प्रतिज्ञान्ते चतुर्दशवर्षानन्तरम्। स्वर्गादागत्य स्थितस्य ते पादौ ग्रहीष्यमीत्यभिप्रायः। यथोक्तमत्रैवोत्तरत्र युद्धकाण्डे—"महादेववचः श्रुत्वा राघवस्सह लक्ष्मणः। विमानशिखरस्थस्य प्रणाममकरोत्पितुः" इति। विहृत्येत्यनेन राक्षसहननादिकं मम विहार इति सूचयति ॥ २९ ॥

मतवर्गान् ॥ ३५ ॥ नेति । छन्नया गूढाभिप्रायया । चलितः स्वाधीनत्वाच्चलनं प्राप्तः । (छुरितइति) पाठान्तरे तु वञ्चित इत्यर्थः । छन्नाग्निकल्पया भस्मच्छन्नाङ्गारतुल्यया ॥ ३६ ॥ वञ्चनेति । या वञ्चना सामान्येन प्रतिश्रुतयोर्वरयोर्भरताभिषेचनत्वद्विवासनरूपविशेषपर्यवसायित्वरूपा । मे मया लब्धा ।

न चैतन्मे प्रियं पुत्र शपे सत्येन राघव । छन्नया चलितस्त्वस्मि स्त्रिया च्छन्नाग्निकल्पया ॥ ३६ ॥ वञ्चना या तु लब्धा मे तां त्वं निस्तर्तुमिच्छसि । अनया वृत्तसादिन्या कैकेय्याऽभिप्रचोदितः ॥ ३७ ॥ न चैतदाश्चर्यतमं यस्त्वं ज्येष्ठः सुतो मम । अपानृतकथं पुत्र पितरं कर्तुमिच्छसि ॥ ३८ ॥ अथ रामस्तथा श्रुत्वा पितुरार्त्तस्य भाषितम् । लक्ष्मणेन सह भ्रात्रा दीनो वचनमब्रवीत् ॥ ३९ ॥ प्राप्स्यामि यानद्य गुणान् को मे श्वस्तान् प्रदास्यति । उपक्रमणमेवातः सर्वकामैरहं वृणे ॥ ४० ॥ इयं सराष्ट्रा सजना धनधान्यसमाकुला । मया विसृष्टा वसुधा भरताय प्रदीयताम् ॥ ४१ ॥ वनवासकृता बुद्धिर्न च मेऽद्य चलिष्यति ॥४२॥ यस्तुष्टेन वरो दत्तः कैकेय्यै वरद त्वया । दीयतां निखिलेनैव सत्यस्त्वं भव पार्थिव ॥ ४३ ॥

तामपि वञ्चनां वृत्तसादिन्या कुलोचिताचारनाशिन्या अनया प्रचोदितस्त्वं निस्तर्तुमिच्छसि समापयितुमिच्छसि । अहो ते गुण इति भावः ॥ ३७ ॥ नचेति । अपानृतकथम् अपगतासत्यवचनम् ॥ ३८ ॥ अथेति । भाषितम् एकाहदर्शनेनापीत्याद्युक्तम् । दीनः एकाहमपि पितृदर्शनसौख्यं न लब्धमिति दीनः ॥३९॥ तर्पितः सर्वकामैरित्यस्योत्तरमाह–प्राप्स्यामीति । गुणान् गुणविशिष्टाभिमतपदार्थान् सर्वकामैरपक्रमणमेव वृणे, सर्वकामप्रतिनिधित्वेन अपक्रमणमेव वरय इत्यर्थः ॥ ४० ॥ इयमिति । विसृष्टा त्यक्ता ॥ ४१ ॥ वनवासेत्यर्द्धमेकं वाक्यम् ॥ ४२ ॥ य इति । अत्र स इत्यध्याहार्यः ।

नैच्छदिति । छन्नया गूढक्रूराभिप्रायया । चलितः भ्रंशितः, त्वदभिषेकमनोरथ इत्यर्थः ॥ ३६ ॥ वञ्चनेति । या वञ्चना सामान्येन प्रतिश्रुतवरयोर्भरताभिषेकत्वद्विवासनविशेषपर्यवसायित्वरूपा, मे मया लब्धा । तां तु तामपि । वृत्तसादिन्या कुलोचितचरित्रनाशिन्या ॥ ३७ ॥ नेति । अपानृतकथम् अपगतासत्यवचनं कर्तुमिच्छसीति यत् नैतदाश्चर्यतमम्, यद्यस्मात् मे ज्येष्ठसुत इति योजना ॥ ३८ ॥ ३९ ॥ 'तर्पितस्सर्वकामैः' इत्युक्तस्योत्तरमाह–प्राप्स्यामीति । गुणान् अभिमतपदार्थान् सर्वकामैरपक्रमणमेव वृणे सर्वकामप्रतिनिधित्वेन अपक्रमणं वरये इत्यर्थः ॥ ४०-४३ ॥

निखिलेन सर्वात्मना । अतस्त्वं सत्यः सत्यवचनो भव ॥ ४३ ॥ अहमिति । निदेशं शासनं "निदेशश्शासनम्" इत्यमरः । वनचरैः तपस्विभिः ॥ ४४ ॥ भव राजा निगृह्य मामित्यस्योत्तरमाह—मा विमर्श इति । मा विमर्शः विचारो माभूत् । आत्मनि मनसि । सुखं प्रियं वा उद्दिश्य राज्यं न कांक्षितम्, अपि तु तव निदेशं तवाज्ञाम् । यथाकर्त्तुमेव यथावत् कर्तुमेवेत्यर्थः ॥४५–४७॥ त्वामहमिति । अहं त्वां सत्यं सत्ययुक्तमिच्छामि ।

अहं निदेशं भवतो यथोक्तमनुपालयन् । चतुर्दश समा वत्स्ये वने वनचरैः सह ॥४४॥ मा विमर्शो वसुमती भरताय प्रदीयताम् । न हि मे कांक्षितं राज्यं सुखमात्मनि वा प्रियम् । यथा निदेशं कर्तुं वै तवैव रघुनन्दन ॥४५॥ अपगच्छतु ते दुःखं माभूर्बाष्पपरिप्लुतः । न हि क्षुभ्यति दुर्द्धर्षः समुद्रः सरितां पतिः ॥ ४६ ॥ नैवाहं राज्यमिच्छामि न सुखं न च मैथिलीम् । नैव सर्वानिमान् कामान् न स्वर्गं नैव जीवितम् ॥४७॥ त्वामहं सत्यमिच्छामि नानृतं पुरुषर्षभ । प्रत्यक्षं तव सत्येन सुकृतेन च ते शपे ॥ ४८ ॥ न च शक्यं मया तात स्थातुं क्षणमपि प्रभो । न शोकं धारयस्वैनं न हि मेऽस्ति विपर्ययः ॥ ४९ ॥ अर्थितो ह्यस्मि कैकेय्या वनं गच्छेति राघव । मया चोक्तं व्रजामीति तत्सत्यमनुपालये ॥ ५० ॥

अनृतम् अनृतयुक्तं नेच्छामि । तव प्रत्यक्षं प्रत्यक्षदैवभूतस्य तव सन्निधौ । सत्येन सुकृतेन च । ते तुभ्यं शप इत्यन्वयः । "श्लाघह्नुङ्स्था—" इत्यादिना चतुर्थी ॥ ४८ ॥ न चेति । स्थातुम् । इह नगर इति शेषः । विपर्ययः संकल्पितवनगमनोद्योगनिवृत्तिः ॥ ४९ ॥ न केवलं त्वदाज्ञापरिपालनार्थ

अहमिति । वनचरैः तपस्विभिः । निदेशं शासनम् ॥४४॥ 'भव राजा निगृह्य माम्' इत्यस्योत्तरमाह—मा विमर्श इति । मा विमर्शः विचारो मास्तु । कथमेवमत आह नहीति । आत्मनि मनसि, सुखं प्रियं वा उद्दिश्य राज्यं न कांक्षितम् अपि तु तव निदेशं तवाज्ञां यथाकर्तुं यथावत्कर्तुमेवेत्यर्थः ॥४५–४७॥ त्वामहमिति । त्वां सत्यं सत्ययुक्तम् इच्छामि । अनृतम् अनृतयुक्तम् नेच्छामि । तव प्रत्यक्षं प्रत्यक्षदैवभूतस्य तव सन्निधौ । सत्येन सुकृतेन च ते तुभ्यं शप [illegible]ति सम्बन्धः ॥ ४८ ॥ न चेति । विपर्ययः सङ्कल्पितवनगमनोद्योगनिवृत्तिः ॥ ४९ ॥ ५० ॥

स०—अहंराज्यम् अहङ्कारतत्त्वाभिमानिरुद्रराज्यं, कैलासाधिपत्यमिति यावत् । "महतश्चतुर्मुखात्" इतिवदभिमान्यभिमानयोरैक्यव्यपदेशः । सुखं वरुणलोकम् "सुखं पुर्यां प्रचेतसः" इति विश्वः । मेदिनीं भूलोकम् । कामान् काम्यान् धनादीन् ॥ ४७ ॥ सत्यं सत्यभाषिणम् । त्वां नानृतम् अननृतमाषिणम् । कर्तुमिच्छामि ॥ ४८ ॥

मेव गच्छामि किन्तु मत्प्रतिज्ञापरिपालनार्थमपीत्याह–अर्थिन इति ॥५०॥ मा चेति । उत्कण्ठाम् उत्कलिकाम् "उत्कण्ठोत्कलिके समे" इत्यमरः । शोकातुरतया स्मरणमितियावत् ॥ ५१ ॥ पितेति । देवतानामपि दैवतमिति स्मृतम् , किमुत मनुष्याणामिति भावः । दैवतमित्येव पिता परमदैवत



मा चोत्कण्ठां कृथा देव वने रंस्यामहे वयम् । प्रशान्तहरिणाकीर्णे नानाशकुननादिते ॥ ५१ ॥ पिता हि दैवतं तात देवतानामपि स्मृतम् । तस्माद्दैवतमित्येव करिष्यामि पितुर्वचः ॥ ५२ ॥ चतुर्दशसु वर्षेषु गतेषु नरसत्तम । पुनर्द्रक्ष्यसि मां प्राप्तं सन्तापोऽयं विमुच्यताम् ॥ ५३ ॥ येन संस्तम्भनीयोऽयं सर्वो बाष्पगलो जनः । स त्वं पुरुष शार्दूल किमर्थं विक्रियां गतः ॥ ५४ ॥ पुरं च राष्ट्रं च मही च केवला मया विसृष्टा भरताय दीयताम् । अहं निदेशं भवतोऽनुपालयन् वनं गमिष्यामि चिराय सेवितुम् ॥ ५५ ॥ मया निसृष्टां भरतो महीमिमां सशैलखण्डां सपुरां सकाननाम् । शिवां सुसीमामनुशास्तु केवलं त्वया यदुक्तं नृपते तथास्तु तत् ॥५६॥ न मे तथा पार्थिव धीयते मनो महत्सु कामेषु न चात्मनः प्रिये । यथा निदेशे तव शिष्टसम्मते व्यपैतु दुःखं तव मत्कृतेऽनघ ॥ ५७ ॥ तदद्य नैवानघ राज्यमव्ययं न सर्वकामान्न सुखं न मैथिलीम् । न जीवितं त्वामनृतेन योजयन् वृणीय सत्यं व्रतमस्तु ते तथा ॥५८॥

मिति मत्वेत्यर्थः ॥ ५२ ॥ ५३ ॥ येनेति । संस्तम्भनीयः निवृत्तबाष्पः करणीयः ॥ ५४ ॥ सद्यःशोकनिवृत्तये पुनःपुनराह–पुरं चेत्यादि । मया निसृष्टं पुरं च दीयतां मया निसृष्टं राज्यं च दीयतामिति प्रत्येकमन्वयः । सेवितुं न पुनरद्यैवागन्तुम् ॥ ५५ ॥ मयेति । शिवामित्यनेन राज्यस्य दुर्भ रत्वान्न त्यजामीति गम्यते । इदं च स्वेच्छया न करोमि किंतु त्वदनुज्ञयैवेत्याह त्वया यदिति ॥ ५६ ॥ नेति । धीयते स्थाप्यते ॥५७॥ तदिति । त्वाम्

मा चेति । उत्कण्ठाम् व्यथाम् ॥ ५१–५३ ॥ येनेति । त्वयेत्यर्थः ॥ ५४ ॥ पुरमिति । केवला कृत्स्ना ॥ ५५ ॥ मयेति । त्वया यदुक्तम्, कैकेय्या इति शेषः ॥ ५६ ॥ नेति । यथा शिष्टसम्मते तव निदेशे । मे मया । मनो धीयते तथा महत्सु कामेषु प्रिये च न धीयते अतः मत्कृते दुःखं व्यपैत्विति योजना ॥ ५७–५९ ॥



स०–महत्सु महात्मसु विषये यथा मनो न दीयते तथा कामेषु विषयेषु,राज्यादिषु न दीयते । यथा च आत्मनः तव मम च प्रिये निदेशे आज्ञायाम्। मनो न दीयते न तथा कामेष्वित्यन्वयः। व्यपैतु गच्छतु ५७

अनृतेन योजयन् सन् राज्यादिकं न वृणीय तव व्रतं यथासत्यं तथास्त्वित्यन्वयः ॥५८॥ मम दुःखं भविष्यतीति त्वया न क्लेष्टव्यमित्याह—फलानीति । निर्वृतिः सुखम् ॥५९॥ एवमिति । एवम् उक्तवन्तमितिशेषः। त्वग्दाहोत्पादकः शोकः । दुःखम् अन्तर्व्यथोत्पादकम् । न चिचेष्ट न चेष्टते स्म ॥६०॥

फलानि मूलानि च भक्षयन् वने गिरींश्च पश्यन् सरितः सरांसि च । वनं प्रविश्यैव विचित्रपादपं सुखी भविष्यामि तवास्तु निर्वृतिः ॥ ५९ ॥ एवं स राजा व्यसनाभिपन्नः शोकेन दुःखेन च ताम्यमानः । आलिङ्ग्य पुत्रं सुविनष्टसंज्ञो मोहं गतो नैव चिचेष्ट किंचित् ॥ ६० ॥ देव्यस्ततः संरुरुदुः समेतास्तां वर्जयित्वा नरदेवपत्नीम् । रुदन् सुमन्त्रोपि जगाम मूर्छां हाहाकृतं तत्र बभूव सर्वम् ॥६१॥ इत्यार्षे श्रीरामायणे० श्रीमदयोध्याकाण्डे चतुस्त्रिंशः सर्गः ॥३४॥ ततो निर्धूय सहसा शिरो निश्वस्य चासकृत् । पाणिं पाणौ विनिष्पिष्य दन्तान् कटकटाप्य च ॥ १ ॥ लोचने कोपसंरक्ते वर्णं पूर्वोचितं जहत् । कोपाभिभूतः सहसा सन्तापमशुभं गतः ॥ २ ॥ मनः समीक्षमाणश्च सूतो दश रथस्य सः । कम्पयन्निव कैकेय्या हृदयं वाक्छरैः शितैः ॥ ३ ॥

देव्य इति । तां 'राम तस्मादितः शीघ्रं वनं गन्तुं त्वमर्हसि' इत्याद्युक्तक्रौर्ययुक्तां कैकेयीम् । हाहाकृतं हाहाशब्दस्य कृतं करणं यस्मिंस्तत्तथा । सर्वं परिचारकादि जनजातम् ॥६१॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥३४॥ सुमन्त्रस्य कैकेयीविषयकोपानुभावं दर्शयति-तत इत्यादि । कटकटाप्य कटकटाशब्दयुक्तान् कृत्वा । कटकटाशब्दात् "तत्करोति"इति ण्यन्ताल्ल्यप् ॥१॥ कोपसंरक्ते कृत्वेतिशेषः । वर्णं देहकान्तिम् । पूर्वोचितं पूर्वाभ्यस्तम्,स्वाभाविकमित्यर्थः। जहत् त्यजन्,कोपरक्ताङ्ग इत्यर्थः। अशुभं तीव्रमित्यर्थः । मनः समीक्ष

एवमिति । शोकः बाष्पः त्वग्दाहोत्पादकः । दुःखम् अन्तर्व्यथोत्पादकम् ॥ ६० ॥ देव्य इति । तां कैकीयीम् । हाहाकृतं हाहाशब्दस्य कृतं करणं यस्मिन् तत्तथा । सर्वं परिचारिकादिजनजातम् ॥ ६१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां चतुस्त्रिंशः सर्गः ॥ ३४ ॥ तत इत्यादि । लोचने कोपसंरक्ते, कृत्वेति शेषः । वर्णं देहकान्तिम् । मनस्समीक्षमाणः कैकेयीविषयस्नेहरहितं जानन्नित्यर्थः ॥ १-४ ॥

स०—व्यसनाभिपन्नः वेः परमात्मनः असनं निरसनम् अभिपन्नः प्राप्तः, रामं वने प्रेषितवानिति यावत् । दुःखेन भ्रान्तरेण । तापेन वहिष्ठेन ज्वरादिना । विनष्टसंज्ञः अव्यक्तापत्यभगवद्बुद्धिः । भूमिं गतः लौकिकं किञ्चिन्न विवेद ॥ ६० ॥

माणः कैकेयीविषयस्नेहरहितं जानन्नित्यर्थः। सूतः सारथिः। आशुगैरिव बाणैरिव स्थितैः। वाक्यवज्रैः वाक्सारैः। मर्माणि मर्मतुल्यान् दोषान्। निर्भिन्दन् प्रकाशयन् ॥ १–४ ॥ यस्या इत्यादि। यस्यास्तव। यया त्वयेत्यर्थः। तवेत्यत्र तस्या इत्युपस्कार्यम् ॥ ५ ॥ पतिघ्नीमिति। अन्ततः पर्यवसान

वाक्यवज्रैरनुपमैर्निर्भिन्दन्निव चाशुगैः। कैकेय्याः सर्वमर्माणि सुमन्त्रः प्रत्यभाषत ॥ ४ ॥ यस्यास्तव पतिस्त्यक्तो राजा दशरथः स्वयम्। भर्त्ता सर्वस्य जगतः स्थावरस्य चरस्य च। न ह्यकार्यतमं किञ्चित्तव देवीह विद्यते ॥५॥ पतिघ्नीं त्वामहं मन्ये कुलघ्नीमपि चान्ततः ॥६॥ यन्महेन्द्रमिवाजय्यं दुष्प्रकम्प्यमिवाचलम्। महोदधिमिवाक्षोभ्यं सन्तापयसि कर्मभिः ॥७॥ मावमंस्था दशरथं भर्त्तारं वरदं पतिम्। भर्तुरिच्छा हि नारीणां पुत्रकोट्या विशिष्यते ॥ ८ ॥ यथावयो हि राज्यानि प्राप्नुवन्ति नृपक्षये। इक्ष्वाकुकुलनाथेऽस्मिंस्तल्लोपयितुमिच्छसि ॥ ९ ॥ राजा भवतु ते पुत्रो भरतः शास्तु मेदिनीम्। वयं तत्र गमिष्यामो यत्र रामो गमिष्यति ॥ १० ॥ न हि ते विषये कश्चिद्ब्राह्मणो वस्तुमर्हति। तादृशं त्वममर्यादमद्य कर्म चिकीर्षसि[1] ॥ ११ ॥

गत्या पतिहननद्वारा सर्वेषां विनाशनादितिभावः ॥ ६ ॥ तत्रैव युक्त्यन्तरमाह–यदिति ॥ ७ ॥ मावमंस्था इत्यादि। भर्तुरिच्छा हि भर्तुरिच्छानुसरणमेव। पुत्रकोट्या इति पञ्चमी। पुत्रानुसरणं त्यक्त्वापि भर्तुरिच्छानुसर्तव्येतिभावः ॥ ८ ॥ यथेति। यथावयः वयःक्रममनतिक्रम्य, ज्येष्ठानुक्रमेणेत्यर्थः। प्राप्नुवन्ति, पुत्रा इतिशेषः। इक्ष्वाकुकुलनाथे, वर्तमान इतिशेषः। तत् पूर्वोक्तराजधर्मद्वयम् ॥९॥ राजेति। शास्तु शास्तु च ॥१०॥ नेति। विषये

यस्या इत्यादि सार्धश्लोकमेकवाक्यम्। स्थावरस्य चरस्य च भर्ता राजा दशरथः तव पतिः यदा त्यक्तः, त्वयेति शेषः। तदा तव अकार्यतमं किञ्चिदपि न विद्यत इति योजना ॥ ५ ॥ ६ ॥ दुष्प्रकम्प्यं कर्मभिः क्रूरव्यापारैः सन्तापयसि, राजानमिति शेषः ॥ ७ ॥ मावमंस्था इति। भर्तुरिच्छा हि भर्तुरिच्छानुसरणमेव ॥ ८ ॥ यथावय इति। नृपक्षये सति, यथावयः वयःक्रममनतिक्रम्य राज्यानि प्राप्नुवन्ति हि। इक्ष्वाकुकुलनाथे दशरथे वर्तमानेपि तत्कुलक्रमागतमाचरणं लोपयितुमिच्छसीति योजना ॥ ९ ॥ १० ॥ नहीति। विषये देशे। तादृशं ब्राह्मणवासानर्हम् ॥ ११ ॥

स०–इक्ष्वाकुकुलनाथे अस्मिन् दशरथे जीवति सति तं सम्प्रदायम्, लोपयितुमिच्छसीत्यन्वयः। यद्वा इक्ष्वाकुकुलस्य नाथनमुपतापनं यया सा तथा तस्यास्सम्बुद्धिः। अस्मिन् पुत्रचतुष्टये यथावयःप्राप्नुवन्ति ॥ ९ ॥

[1] चिकीर्षसि। अयोध्यावासिनःपौरा ये च जानपदा जनाः। नूनं सर्वे गमिष्यामो मार्गं रामनिषेवितम् ॥ त्यक्ताया बान्धवैः सर्वैर्ब्राह्मणैस्साधुभिस्सदा। का प्रीती राज्यलाभेन तव देवि भविष्यति ॥ तादृशं त्वममर्यादं कर्म कर्तुं चिकीर्षसि ॥ इत्यधिकः पाठः।

देशे "नीवृज्जनपदो देशविषयौ" इत्यमरः। ब्राह्मण इति सत्पुरुषमात्रोपलक्षणम्। तत्र हेतुमाह तादृशमिति। तादृशं ब्राह्मणनिर्गमनार्हम्। अमर्यादं ज्येष्ठाभिषेकादिमर्यादाशून्यम् ॥११॥ आश्चर्यमिति। ईदृशम् अमर्यादम्। वृत्तम् आचारम् आचरन्त्या यस्यास्ते मेदिनी न विवृता न विदीर्णा। तस्यास्ते इदमविदारणम् आश्चर्यमिव पश्यामि ॥ १२ ॥ महाब्रह्मर्षीति। महाब्रह्मर्षिभिः वसिष्ठादिभिः। जुष्टाः प्रयुक्ताः। ज्वलन्तः तीव्राः। धिग्वाग्दण्डाः धिगित्येवं

आश्चर्यमिव पश्यामि यस्यास्ते वृत्तमीदृशम्। आचरन्त्या न विवृता सद्यो भवति मेदिनी ॥ १२ ॥
महाब्रह्मर्षिजुष्टा वा ज्वलन्तो भीमदर्शनाः। धिग्वाग्दण्डा न हिंसन्ति रामप्रव्राजने स्थिताम् ॥ १३ ॥
आम्रं छित्त्वा कुठारेण निम्बं परिचरेत्तु यः। यश्चैनं पयसा सिञ्चेन्नैवास्य मधुरो भवेत् ॥ १४ ॥
अभिजातं हि ते मन्ये यथा मातुस्तथैव च। न हि निम्बात् स्रवेत् क्षौद्रं लोके निगदितं वचः ॥ १५ ॥

रूपाः वाग्दण्डाः। रामप्रव्राजने स्थितां स्थिरबुद्धिं त्वां न हिंसन्ति। वाशब्द एवकारार्थः। "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इतिविश्वः ॥१३॥ अथ कैकेयीदशरथावन्यापदेशेन निन्दति—आम्रमिति। आम्रं मधुरफलदं कुठारेण सद्यः बुद्धिपूर्वकं छित्त्वा निम्बं कटुफलकं यः परिचरेत् आलवालादिकरणेन संरक्षेत्। यश्चेत्यपि स एवोच्यते। एनं निम्बम्। पयसा क्षीरेण सिञ्चेत्। अस्य आम्रं छित्त्वा निम्बं पयसा सिञ्चतः, स इतिशेषः। स निम्बः मधुरः मधुरफलदः नैव भवेत्। अनेन सुगुणं रामं वरव्याजेन विवास्य कैकेयीचित्तानुसरणं न युक्तमित्युक्तम्। तेन च सर्वथा कैकेयी कटुरेवेत्युक्तम् ॥१४॥ अभिजातमिति। अभिजातम् अभिजननम्, स्वभाव इति यावत्। ते मातुर्यादृशी तादृशी तवापि प्रकृतिरित्यर्थः। कारणानुसारिकार्यसम्भवे

आश्चर्यमिति। यस्यास्ते ईदृशमतिघोरम् वृत्तमाचरन्त्याः सत्याः मेदिनी सद्यो विवृता विदीर्णा न भवतीति यत् इदमाश्चर्यमिव पश्यामीति योजना ॥१२॥ महाब्रह्मर्षिसृष्टा इति पाठः। महाब्रह्मर्षिसृष्टाः वसिष्ठादिभिः प्रयुक्ताः। धिग्वाग्दण्डाः धिगित्येवंरूपा वाग्दण्डाः। रामप्रव्राजने स्थितां कृतनिश्चयां त्वां न हिंसन्ति वा न हिंसन्त्येव, आश्चर्यमिति शेषः ॥१३॥ अथान्यापदेशेन राजानमनुक्रोशति—आम्रमिति। कुठारेण आम्रं छित्त्वा निम्बं परिचरेत् आलवालादिकरणेन संरक्षेत्। य एनं निम्बं पयसा सिञ्चेद्वा। अस्य निम्बोपचारिणः पुरुषस्य प्रीतये मधुरो मधुररसो न भवेत्। अतो वृथाश्रमाय कैकेय्यनुवर्तनं राज्ञ इत्याशयः ॥ १४ ॥ एवं कोपवचना

विषम०—ते मातुराभिजात्यं प्रशस्तपितृमातृजन्मोचितव्यवहारवत्त्वं यथा तथैव ते तत्र। आभिजात्यमपि हि मन्ये इति व्यङ्ग्योक्तिः ॥ १५ ॥

लौकिकवाक्यं निदर्शयति नहीति । क्षौद्रं मधु । स्रवेदित्यत्र इतिकरणं बोध्यम् ॥ १५॥ कैकेय्याः पतिघ्नीत्वस्वभावो मातृसम्बन्धप्रयुक्त इति प्रस्तावं कृत्वा तन्मातुर्वृत्तान्तं वक्तुमुपक्रमते–तव मातुरित्यादिना । असद्ग्राहम् असदर्थाभिनिवेशम् । पूर्वं यथा येनप्रकारेण श्रुतं तथा विद्मः ॥ १६॥



तव मातुरसद्ग्राहं विद्मः पूर्वं यथा श्रुतम् ॥ १६॥ पितुस्ते वरदः कश्चिद्ददौ वरमनुत्तमम् । सर्वभूतरुतं तस्मात् सञ्जज्ञे वसुधाधिपः। तेन तिर्यग्गतानां च भूतानां विदितं वचः॥ १७॥ततो जृम्भस्य शयने विरुताद्भूरिवर्चसः। पितुस्ते विदितो भावः स तत्र बहुधाऽहसत् ॥ १८॥ तत्र ते जननी क्रुद्धा मृत्युपाशमभीप्सती । हासं ते नृपते सौम्य जिज्ञासामीति चाब्रवीत् ॥ १९॥ नृपश्चोवाच तां देवीं देवि शंसामि ते यदि । ततो मे मरणं सद्यो भविष्यति न संशयः ॥ २० ॥

पितुरिति । कश्चिद्योगी गन्धर्व इति श्रुतम् । तस्माद्वरदानात् रुतं शब्दं " तिरश्चां वाशितं रुतम् " इत्यमरः । सञ्जज्ञे सम्यक् ज्ञातवान् । तेन सर्व भूतरुतज्ञेन राज्ञा। तिर्यग्गतानां तिर्यग्गमनानाम् ॥ १७ ॥ तत इति । जृम्भस्य पिपीलिकाविशेषस्य । शयने शयनसमीपे, पर्यङ्काधःप्रदेश इत्यर्थः । भूरिवर्चस इति पितुर्विशेषणम् । वरलाभेन अधिकतेजस इत्यर्थः । जृम्भविशेषणं वा तदा सुवर्णवर्चस इत्यर्थः। "सुवर्णेऽपि भूरि–"इत्यमरः । सः पिता तत्र रुते विषये बहुधा द्वित्रिः अहसत् ॥ १८ ॥ तत्रेति । तत्र हासविषये । क्रुद्धा मां परिहसतीति क्रुद्धा । हे नृप । ते हासं हासनिमित्तम्। जिज्ञासामि ज्ञातु

न्युक्त्वा मर्मवचनान्याह–आभिजात्यमिति । ते मातुः आभिजात्यं प्रशस्तमातापितृजन्मोचितव्यवहारवत्त्वरूपं यथा तथैव ते तव आभिजात्यमपि हि मन्य इति व्यङ्ग्योक्तिः, कारणानुसारेण कार्यं भवतीति भावः । तदेव दर्शयति नहीति । निम्बात् क्षौद्रं न स्रवेदिति वचो लोके निगदितम्, लोके प्रसिद्धमेव किलेत्यर्थः ( आभिजात्यमिति पाठः ) ॥१५॥ ननु का मम मातुराभिजात्यक्षतिरित्यत्राह–तवेति । असद्ग्राहं घोरपापकर्माभिनिवेशम् । पूर्वं यथा येन प्रकारेण श्रुतं तथा तत संप्रति विद्मः ॥ १६ ॥ तद्वेदनमेव प्रतिपादयति–पितुरिति । कश्चिद्योगी वरं सर्वभूतरुतार्थविज्ञानविषयकम् । तस्मात् उक्तलक्षणवरदानबलात् । वसुधाधिपः सर्वभूतरुतं तत्प्रतिपाद्यभावजातं संजज्ञे जानीते स्म, तेन सर्वभूतरुतार्थज्ञेन राज्ञा । तिर्यग्गतानां पशुपक्ष्यादीनाम् ॥ १७ ॥ ततः किम् ? तत्राह–तत इति । ततः वरप्रभावात् । शयने शयनकाले । भूरिवर्चसः सुवर्णवर्चसः " स्वर्णेऽपि भूरि–" इत्यमरः । जृम्भस्य जृम्भाख्यस्य पक्षिणः पिपीलिकाविशेषस्य वा विरुतात् स्वनात्सकाशात् ते तव पितुः पित्रा भावः जृम्भस्याभिप्रायः विदितः । तत्र तदा । सः केकयः । बहुधा द्वित्रिः अहसदिति योजना ॥ १८ ॥ तत्रेति । तत्र तदा । मृत्युपाशमभीप्सती ते जननी अयं मां परिहसतीति क्रुद्धा सती नृपते ! ते हासं हासकारणं जिज्ञासामीत्यब्रवीदित्यन्वयः ॥१९॥ नृप इति । शंसामि, हासकारण

मिच्छामि ॥ १९ ॥ २० ॥ मातेति । जीव वा मावेत्यनेन कैकेयीमातुः पतिघ्नीत्वमुक्तम् ॥ २१ ॥ प्रिययेति । वरदाय तत्त्वतः कथयामास । अत्यन्त सङ्कटेपि विमृश्यकारी सन् वरदाय कथयामासेत्यर्थः ॥ २२ ॥ तत इति । ध्वंसतां स्वाधिकारात् प्रच्युता स्यात् ॥ २३ ॥ २४ ॥ उक्तमर्थं प्रकृते निग

माता ते पितरं देवि ततः केकयमब्रवीत् । शंस मे जीव वा मा वा न मामपहसिष्यसि ॥२१॥ प्रियया च तथोक्तः सन् केकयः पृथिवीपतिः । तस्मै तं वरदायार्थं कथयामास तत्त्वतः ॥ २२ ॥ ततः स वरदः साधू राजानं प्रत्यभाषत । म्रियतां ध्वंसतां वेयं मा कृथास्त्वं महीपते ॥ २३ ॥ स तच्छ्रुत्वा वचस्तस्य प्रसन्नमनसो नृपः । मातरं ते निरस्याशु विजहार कुबेरवत् ॥ २४ ॥ तथा त्वमपि राजानं दुर्ज्जनाचरिते पथि । असद्ग्राहमिमं मोहात् कुरुषे पापदर्शिनि ॥ २५ ॥ सत्यश्चाद्य प्रवादोऽयं लौकिकः प्रतिभाति मा । पितॄन् समनुजायन्ते नरा मातरमङ्गनाः ॥ २६ ॥ नैवं भव गृहाणेदं यदाह वसुधाधिपः । भर्त्तुरिच्छामुपास्वेह जनस्यास्य गतिर्भव ॥ २७ ॥

मयति–तथेति । दुर्जनाचरिते पथि । स्थितेतिशेषः । असद्ग्राहम् असदर्थाभिनिवेशम् ॥ २५ ॥ सत्य इति । सत्यइति मा मां प्रतिभातीत्यन्वयः । "अभितः परितः–" इत्यादिना प्रतियोगे द्वितीया । पितॄन् समनुजायन्ते । अत्र इतिकरणं द्रष्टव्यम् । पितृसमानलक्षणा जायन्त इत्यर्थः । अङ्गनाः पुत्र्यः ॥ २६ ॥ नेति । नैवं भवेतिपाठः । नेया भवेति पाठे–नेया नेतुं योग्या । विधेया भवेत्यर्थः । वसुधाधिपः यदाह "श्व एव पुष्यो भविता श्वोऽभिषिच्येत मिति शेषः ॥ २० ॥ मातेति । जीव वा, मा वा म्रियस्व वा । हासकारणं मे शंस, तर्हि मां नापहसिष्यसीति ज्ञास्यामीत्यर्थः ॥ २१ ॥ प्रिययेति । वरदाय स्वस्य वरप्रदात्रे योगिने । तदर्थं तयोक्तनिर्बन्धवचनम् । तत्त्वतः याथार्थ्येन ॥ २२ ॥ तत इति । इयं म्रियतां ध्वंसतां निगृह्य निरस्यतां वा असद्ग्राहिण्यास्तस्या वचो मा कृथा इति प्रत्यभाषत ॥ २३ ॥ २४ ॥ तथेति । तथा मातृवत् दुर्जनाचरिते पथि, स्थितेति शेषः । इमं राजानम् । असद्ग्राहम् असत्कार्यग्राहकं कुरुषे ॥ २५ ॥ सत्य इति । समनुजायन्त इत्यत्र इतिकरणं द्रष्टव्यम् । पितृसमानलक्षणा जायन्त इत्यर्थः ॥ २६ ॥ नेयेति । नेया नेतुं योग्या, विधेयेत्यर्थः । वसुधाधिपो यदाह श्वो रामोऽभिषेच्य इति यद्वचनमाह इदं गृहाण । नैवं भवेति पाठे–एवं मातृवदसत्कार्याभिनिवेशिनी न भव । अन्यत्समानम् ॥ २७ ॥

स०–म्रियतां विषपानादिना । ध्वंसतां शस्त्रादिना । माकृथाः, एतदुक्तमिति शेषः ॥ २३ ॥

---

१ प्रत्यभाषत । यदि त्वं शंससे राजन् मरणं ते ध्रुवं भवेत् । इत्यधिकः पाठः ।

मे सुतः" इति यद्वचनमाह इदं गृहाण। अस्य जनस्य पौरजानपदस्य। गतिः शरणमिति सान्त्वोक्तिः॥२७॥ मेति। असद्धर्मं कनिष्ठाभिषेकपूर्वकज्येष्ठविवासनरूपम्। मोपादधाः मा ग्राहय॥२८॥ एवं क्रियमाणे मम वरस्य का गतिरित्याशङ्क्य प्रकारान्तरेण गतिर्भविष्यतीत्याह—नहीति। प्रतिज्ञातं

मा त्वं प्रोत्साहिता पापैर्देवराजसमप्रभम्। भर्तारं लोकभर्तारमसद्धर्ममुपादधाः ॥२८॥ न हि मिथ्या प्रतिज्ञातं करिष्यति तवानघः। श्रीमान् दशरथो राजा देवि राजीवलोचनः ॥२९॥ ज्येष्ठो वदान्यः कर्मण्यः स्वधर्मपरिरक्षिता। रक्षिता जीवलोकस्य बली रामोऽभिषिच्यताम् ॥ ३० ॥ परिवादो हि ते देवि महान् लोके चरिष्यति। यदि रामो वनं याति विहाय पितरं नृपम् ॥३१॥ स राज्यं राघवः पातु भव त्वं विगतज्वरा। न हि ते राघवादन्यः क्षमः पुरवरे वसेत् ॥ ३२ ॥ रामे हि यौवराज्यस्थे राजा दशरथो वनम्। प्रवेक्ष्यति महेष्वासः पूर्ववृत्तमनुस्मरन् ॥ ३३ ॥ इति सान्त्वैश्च तीक्ष्णैश्च कैकेयीं राजसंसदि। सुमन्त्रः क्षोभयामास भूय एव कृताञ्जलिः ॥ ३४ ॥

प्रतिश्रुतम्। वरद्वयं तन्मिथ्या न करिष्यति, राज्याद्प्यधिकमूल्यरत्नभूषणसम्मानादिभिस्सफलं करिष्यतीत्यर्थः॥ २९ ॥ रामस्य राज्याभिषेकार्हता साधनगुणानाह—ज्येष्ठ इति। कर्मण्यः कर्मणि साधुः। सदाचारपर इत्यर्थः। वदान्यः उदारः। स्वधर्मपरिरक्षिता स्वधर्मस्य दुष्टनिग्रहपूर्वकशिष्टपरिपालनरूपक्षत्रियधर्मस्य परिरक्षिता। बली रामोभिषिच्यताम्, त्वयेतिशेषः। अभिषेकानुमतिः क्रियतामित्यर्थः॥ ३० ॥ परिवाद इति। परिवादः अपवादः, दोषवाद इत्यर्थः॥ ३१ ॥ स इति। ते पुरवरे। हि यस्मात्कारणात्। क्षमो राघवादन्यो न वसेत्, अतः स राघवः राज्यं पात्विति सम्बन्धः। यद्वा राघवादन्यः पुरवरे राजतया वसन् भरतः ते न क्षमः न युक्तः, कनिष्ठस्त्वया राज्ये स्थापयितुं न युक्त इत्यर्थः। हितें हितकरणे। न क्षम इति वा ॥ ३२ ॥ राम इति। पूर्ववृत्तम् इक्ष्वाकुकुलक्रमागतवृत्तम् ॥ ३३ ॥ ३४ ॥

मा त्वमिति। असद्धर्मं कनिष्ठाभिषेकपूर्वकज्येष्ठविवासनरूपं। मोपादधाः न ग्राहयेत्यर्थः ॥ २८ ॥ स्वोक्तमनङ्गीकुर्वाणां प्रत्याह—न हीति। मिथ्याप्रतिज्ञातं लीलयैव केवलमुक्तमित्यर्थः। अतो राजीवलोचनो राजा त्वदुक्तं न करिष्यति ॥ २९ ॥ कर्मण्यः कर्मणि साधुः, अतो ज्येष्ठत्वादिगुणको रामोऽभिषिच्यतामिति ब्रूहीति सम्बन्धः ॥३०॥ विपक्षे बाधकमाह—परिवाद इति। परिवादः अपवादः। चरिष्यति ॥३१॥३२॥ रामे हीति। पूर्ववृत्तम् इक्ष्वाकुकुलक्रमागतं वृत्तम् ॥३३॥ इतीति।

नेति। मुखवर्णस्य उग्रमुखवर्णस्य ॥३५॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥३५॥
तत इत्यादि। ततः कैकेयीसम्मत्यभावानन्तरम्। अत्र वरदानविषये ॥ १ ॥ सूतेति। अनुयात्रार्थं प्रतिविधीयतां प्रेष्यताम् ॥ २ ॥ रूपाजीवा इति।

नैव सा क्षुभ्यते देवी न च स्म परिदूयते। न चास्या मुखवर्णस्य विक्रिया लक्ष्यते तदा॥३५॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

ततः सुमन्त्रमैक्ष्वाकः पीडितोऽत्र प्रतिज्ञया। स बाष्पमतिनिश्वस्य जगादेदं पुनःपुनः ॥ १ ॥ सूत रत्नसुसम्पूर्णा चतुर्विधबला चमूः। राघवस्यानुयात्रार्थं क्षिप्रं प्रतिविधीयताम् ॥ २ ॥ रूपाजीवाश्च वादिन्यो वणिजश्च महाधनाः। शोभयन्तु कुमारस्य वाहिनीं सुप्रसारिताः ॥ ३ ॥ ये चैनमुपजीवन्ति रमते यैश्च वीर्यतः। तेषां बहुविधं दत्त्वा तान्यप्यत्र नियोजय ॥४॥ आयुधानि च मुख्यानि नागराः शकटानि च। अनुगच्छन्तु काकुत्स्थं व्याधाश्चारण्यगोचराः ॥ ५ ॥ निघ्नन् मृगान् कुञ्जरांश्च पिबंश्चारण्यकं मधु। नदीश्च विविधाः पश्यन्न राज्यस्य स्मरिष्यति ॥ ६ ॥ धान्यकोशश्च यः कश्चिद्धनकोशश्च मामकः। तौ राममनुगच्छेतां वसन्तं निर्जने वने ॥ ७ ॥

रूपाजीवा वेश्याः। "वारस्त्री गणिका वेश्या रूपाजीवा" इत्यमरः। वादिन्यः परचित्ताकर्षणचतुरवचनाः। सुप्रसारिताः शिबिरदेशे पण्यपदार्थप्रसारणं कुर्वन्तः ॥ ३ ॥ य इति। एनं रामं बहुविधं सुवर्णरत्नवस्त्रादिकम्। अत्र वाहिन्याम् ॥ ४ ॥ आयुधानीति। आयुधानि आयुधधराः। नागराः नगरजाः श्रेष्ठिनः। शकटानि तैलघृतादिप्रापकाणि। व्याधाः वने मार्गदर्शिनः ॥५॥ निघ्नन्निति। राज्यस्येति "अधीगर्थदयेशां कर्मणि" इति षष्ठी ॥६॥ धान्यकोशभूयः अत्यर्थम् ॥ ३४ ॥ नैव सेति। तीक्ष्णैर्वाक्यैः न क्षुभ्यते, सान्त्वैः न परिदूयते न व्यथते ॥ ३५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां पञ्चत्रिंशः सर्गः ॥ ३५ ॥ तत इति। ततः कैकेय्यनङ्गीकारानन्तरम्, अत्र वरदानविषये। प्रतिज्ञया कैकीयीमुद्दिश्य कृतया। इदं वक्ष्यमाणम् ॥ १ ॥ सूतेति। अनुयात्रार्थं सेवार्थम्। प्रतिविधीयतां प्रस्थाप्यताम् ॥ २ ॥ रूपेति। वादिन्यः परचित्ताकर्षकवचनचतुराः, रूपाजीवाः गणिकाः। सुप्रसारिताः शिबिरसन्निवेशे पण्यपदार्थप्रसारणं कुर्वन्तः ॥ ३ ॥ ये चेति। वीर्यतः वीर्यपरीक्षार्थं यैः रमते एनं रामं बहुविधं सुवर्णरत्नादिकम् ॥ ४-७ ॥

इति । कोशो वासस्थानम् । अनुगच्छेतां गोण्युष्ट्रादिमुखेनेति शेषः ॥ ७ ॥ यजन्निति । विसृजत् ददिदितियावत् । दक्षिणाः यज्ञदक्षिणाः ॥ ८ ॥ भरत इति । अयोध्यां पालयिष्यतीति सोपालम्भोक्तिः । सर्वकामैः सह साध्यतां प्रस्थाप्यताम् । इतिशब्दः नियोगसमाप्तिवाचकः ॥ ९ ॥ १० ॥ सेति । मुखेनेत्युपलक्षणे तृतीया ॥ ११ ॥ राज्यमिति । पीतमण्डां "मण्डं दधिभवं मस्तु" इति मण्डशब्दो यथा दधिसारवाचकः

यजन् पुण्येषु देशेषु विसृजंश्चाप्तदक्षिणाः । ऋषिभिश्च समागम्य प्रवत्स्यति सुखं वने ॥ ८ ॥ भरतश्च महाबाहुरयोध्यां पालयिष्यति । सर्वकामैः सह श्रीमान् रामः संसाध्यतामिति ॥ ९ ॥ एवं ब्रुवति काकुत्स्थे कैकेय्या भयमागतम् । मुखं चाप्यगमच्छोषं स्वरश्चापि न्यरुध्यत ॥ १० ॥ सा विषण्णा च सन्त्रस्ता मुखेन परिशुष्यता । राजानमेवाभिमुखी कैकेयी वाक्यमब्रवीत् ॥ ११ ॥ राज्यं गतजनं साधो पीतमण्डां सुरामिव । निरास्वाद्यतमं शून्यं भरतो नाभिपत्स्यते ॥ १२ ॥ कैकेय्यां मुक्तलज्जायां वदन्त्यामतिदारुणम् । राजा दशरथो वाक्यमुवाचायतलोचनाम् ॥ १३ ॥ वहन्तं किं तुदसि मां नियुज्य धुरि माऽहिते । अनार्ये कृत्यमारब्धं किन्न पूर्वमुपारुधः ॥ १४ ॥

तद्वदत्रापि मण्डशब्देन सुरासार उच्यते । साधो इति सहासोक्तिः । निरास्वाद्यतमं निर्गतभोग्यवस्तुयुक्तम् ॥ १२ ॥ कैकेय्यामिति । आयतलोचनामिति दैन्योक्तिमूलसौन्दर्योक्तिः ॥ १३ ॥ वहन्तमिति । हे अहिते अहितकारिणि ! धुरि वरदानहेतुकभरताभिषेचनरामविवासनरूपदुर्वहभारे । नियुज्य तथा वहन्तं मां वत्सतरमिव किं तुदसि व्यथयसि, त्वदाज्ञप्तरामविवासनकारिणं किमर्थं पुनरपि पीडयसीत्यर्थः । किमधुना पीड्यते ? पूर्वमेव भवता दत्तं खल्वित्यत्राह अनार्य इति । हे अनार्ये ! आरब्धं कृत्यं सेनाप्रेषणादिकम् । पूर्वं वरप्रार्थनाकाले किमर्थं नोपारुधः नोपरुद्धवती, न प्रार्थितवतीति यावत् ।

यजन्निति । आप्तदक्षिणाः यथोक्तदक्षिणाः ॥ ८ ॥ भरतश्चेति । पालयिष्यतीति सोपालम्भोक्तिः । संसाध्यतां प्रस्थाप्यतामिति जगादेति सर्गादिश्लोकेनान्वयः ॥ ९ ॥ एवमिति । भयमागतं भयं प्राप्तम् ॥ १० ॥ ११ ॥ राज्यमिति । पीतमण्डां मण्डः सुरान्तर्गतसारांशः । निरास्वाद्यतमं निर्गतास्वाद्यतमं वस्तु ॥ १२ ॥ १३ ॥ वहन्तमिति । हे अहिते ! धुरि वरद्वयहेतुकभरताभिषेकरामाविवासनरूपदुर्वहभारे । नियुज्य नियोज्य । वहन्तम् उक्तार्थमनुष्ठितवन्तम् ।

स॰-माहिते न हितं यस्याः सा तथा तस्यास्सम्बुद्धिः माहिते कैकेयि ! इदानीं यत्कृत्यमारब्धं सर्वसम्पद्युक्ततया रामस्थाननिरोधनरूपं तत्पूर्वमेव किं कुतः नोपारुधः । धातूनामनेकार्थत्वान्न याचितवत्यसि । कृत्यं सवैभवरामप्रवासनरूपं यदिदानीमारब्धं तत्पूर्वं किं नोपारुधः न प्रतिबन्धं कृतवतीति भावः ॥ १४ ॥

वरयाचनाकाले अनुद्घाटितत्वात् सेनाप्रेषणादिकं न निवर्त्तितव्यमिति भावः ॥ १४ ॥ तस्येति । द्विगुणं क्रुद्धा प्रकारान्तरेण मदाभिमतं विघटयतीति बहुतरं क्रुद्धेत्यर्थः ॥ १५ ॥ यद्यपि पूर्वमिदं न वृतं तथाप्यर्थसिद्धमित्याशयेनाह—तवैवेति । उपारुधदिति निष्कासनमेवोच्यते । गन्तुमर्हतीति निर्दे

तस्यैतत् क्रोधसंयुक्तमुक्तं श्रुत्वा वराङ्गना । कैकेयी द्विगुणं क्रुद्धा राजानमिदमब्रवीत् ॥ १५ ॥ तवैव वंशे सगरो ज्येष्ठपुत्रमुपारुधत् । असमञ्ज इति ख्यातं तथाऽयं गन्तुमर्हति ॥ १६॥ एवमुक्तो धिगित्येव राजा दशरथोऽब्रवीत् । व्रीडितश्च जनः सर्वः सा च तं नावबुध्यत ॥ १७॥ तत्र वृद्धो महामात्रः सिद्धार्थो नाम नामतः । शुचिर्बहुमतो राज्ञः कैकेयीमिदमब्रवीत् ॥ १८ ॥ असमञ्जो गृहीत्वा तु क्रीडतः पथि दारकान् । सरय्वाः प्रक्षिपन्नप्सु रमते तेन दुर्मतिः ॥१९॥ तं दृष्ट्वा नागराः सर्वे क्रुद्धा राजानमब्रुवन् । असमञ्जं वृणीष्वैकमस्मान् वा राष्ट्रवर्द्धन ॥२०॥ तानुवाच ततो राजा किंनिमित्तमिदं भयम् । ताश्चापि राज्ञा संपृष्टा वाक्यं प्रकृतयोऽब्रुवन् ॥२१॥ क्रीडतस्त्वेष नः पुत्रान् बालानुद्भ्रान्तचेतनः । सरय्वां प्रक्षिपन् मौर्ख्यादतुलां प्रीतिमश्नुते ॥२२॥ स तासां वचनं श्रुत्वा प्रकृतीनां नराधिपः । तं तत्याजाहितं पुत्रं तासां प्रियचिकीर्षया ॥ २३ ॥ तं यानं शीघ्रमारोप्य सभार्यं सपरिच्छदम् । यावज्जीवं विवास्योयमिति स्वानन्वशात्पिता ॥२४॥ स फालपिटकं गृह्य गिरिदुर्गाण्यलोलयत् । दिशः सर्वास्त्वनुचरन् स यथा पापकर्मकृत् ॥२५

शात् तथायमिति निर्द्धन एवेत्यर्थः ॥ १६ ॥ एवमिति । प्रतिज्ञातातिरिक्तेपि चापलवतीं निन्दति । धिगिति । सा कैकेयी । तं व्रीडितं जनं नावबुध्यत नाजीगणत् ॥ १७ ॥ तत्रेति । महामात्रः प्रधानः । शुचिः अकुटिलः ॥ १८ ॥ असमञ्ज इति । दारकान् बालकान् । तेन प्रक्षेपेण । सशब्दबुद्बुदजननेन हसन् रमत इत्यर्थः ॥ १९ ॥ तमिति । वृणीष्व अत्र नगरे स्थापय ॥ २० ॥ तानिति । भयमित्यनन्तरमितिकरणं द्रष्टव्यम् । प्रकृतयः प्रजाः ॥ २१ ॥ क्रीडत इति । उद्भ्रान्तचेतनः भ्रान्तबुद्धिः ॥ २२ ॥ २३ ॥ तमिति । अन्वशात् अनुशिष्टवान् ॥ २४ ॥ स फालेति । फालं कन्दमूलादिखननसाधनम्

मां भूयः संकटे प्रवेश्य किं तुदसि अभिषेकनिषेधं वरं दत्तवन्तं परिकरप्रदाननिषेधनैष्ठुर्ये च मां निवेश्य भूयः किं क्लेशयसि, मा मास्तु । हे अनार्ये ! आरब्धं किं कृत्यं नोपारुधः सर्वमुपरुद्ध्रवत्येव, पूर्वमभिषेककृत्यमिदानीमानुयात्रिकप्रदानमारब्धं तदप्युपारुध इत्यर्थः ॥ १४ ॥ तस्येति । कैकेयी द्विगुणं क्रुद्धा प्रकारान्तरेण मत्प्रयोजनं नाशयतीति ॥ १५–१७ ॥ तत्रेति । महामात्रः प्रधानः ॥ १८–२४ ॥ सफालेति । गिरिदुर्गाणि परिभ्रममाणः कन्दादिकमलोलयत् सर्वा दिशः

पिटका तद्धारणपात्रम् । एकवद्भावः । गृह्य गृहीत्वा । अलोलयत् कन्दमूलाद्यर्थम् अखनदित्यर्थः । यथा पापकृत्तथाचरन् अलोलयदित्यन्वयः ॥२५॥ इतीति । उपरुध्यते विवास्यते ॥२६॥ न हीति । निरयः निरयहेतुभूतो दोषः ॥२७-२९॥ तदिति । विहतया श्रिया अलम् अभिषेकविघातं मा कुर्वित्यर्थः ।

इत्येनमत्यजद्राजा सगरो वै सुधार्मिकः । रामः किमकरोत्पापं येनैवमुपरुध्यते ॥ २६ ॥ न हि कञ्चन पश्यामो राघवस्यागुणं वयम् । दुर्लभो ह्यस्य निरयः शशाङ्कस्येव कल्मषम् ॥ २७ ॥ अथवा देवि दोषं त्वं कंचित् पश्यसि राघवे । तमद्य ब्रूहि तत्त्वेन ततो रामो विवास्यताम् ॥ २८ ॥ अदुष्टस्य हि सन्त्यागः सत्पथे निरतस्य च । निर्दहेदपि शक्रस्य द्युतिं धर्मनिरोधनात् ॥ २९ ॥ तदलं देवि रामस्य श्रिया विहतया त्वया । लोकतोपि हि ते रक्ष्यः परिवादः शुभानने ॥ ३० ॥ श्रुत्वा तु सिद्धार्थवचो राजा श्रान्ततरः स्वनः । शोकोपहतया वाचा कैकेयीमिदमब्रवीत् ॥ ३१ ॥ एतद्वचो नेच्छसि पापवृत्ते हितं न जानासि ममात्मनो वा । आस्थाय मार्गं कृपणं कुचेष्टा चेष्टा हि ते साधुपथादपेता ॥ ३२ ॥ अनुव्रजिष्याम्यहमद्य रामं राज्यं परित्यज्य सुखं धनं च । सहैव राज्ञा भरतेन च त्वं यथासुखं भुङ्क्ष्व चिराय राज्यम् ॥ ३३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

रक्ष्यः परिहरणीयः । परिवादः निन्दा ॥ ३० ॥ श्रुत्वेति । श्रान्ततरः हीनतरः ॥ ३१ ॥ एतदिति । एतद्वचः सिद्धार्थवचः । कृपणं कुत्सितमित्यर्थः । "कदर्ये कृपणक्षुद्र" इत्यमरः । कुचेष्टेत्येतदुपपादयति चेष्टाहीति ॥ ३२ ॥ ३३ ॥ इति श्रीगो० श्रीरा० पीता० अयो० षट्त्रिंशः सर्गः ॥ ३६ ॥

कन्दाद्यर्थम् अनुचरन्नतिष्ठत ॥ २५ ॥ २६ ॥ नहीति । अगुणं दोषम् । निरयः दुःखम् । कल्मषं मालिन्यम् ॥ २७-२९ ॥ तदिति । त्वया विहतया रामस्य श्रिया ते न किञ्चित्फलम्, तदलं वृथाश्रमेण । हि यस्मात् लोकतः प्राप्तः परिवादः रक्ष्यः परिहार्यः ॥ ३० ॥ ३१ ॥ एतदिति । कृपणं मार्गमास्थाय या कुचेष्टा कृता ते त्वया सेयं चेष्टा साधुपथादपेता हीति सम्बन्धः ॥३२॥३३॥ इति श्रीमहेश्वरतीर्थ०श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां षट्त्रिंशः सर्गः ॥३६॥

महामात्रेत्यादि । महामात्रवचः सिद्धार्थवचः । विनीतवत् विनीत इव । अभ्यभाषत सविनयमाहेत्यर्थः ॥ १ ॥ त्यक्तभोगस्येति । अनुयात्रेण अनुगतबलेन । भोगत्यागेपि सङ्गो वर्तते लौकिकानां, सोपि नास्तीत्याह त्यक्तसङ्गस्य सर्वत इति॥ २॥ य इति । कक्ष्यायाम् इभबन्धनरज्जौ "कक्ष्या प्रकोष्ठे हर्म्यादौ काञ्च्यां मध्येभबन्धने" इत्यमरः ॥३॥ तथेति । ध्वजिन्या सेनया । सर्वाणि त्वया मह्यं दातुमुद्युक्तानि । अनुजानामि प्रददामि । भरतायेति

महामात्रवचः श्रुत्वा रामो दशरथं तदा । अभ्यभाषत वाक्यं तु विनयज्ञो विनीतवत् ॥ १ ॥ त्यक्तभोगस्य मे राजन् वने वन्येन जीवतः । किं कार्यमनुयात्रेण त्यक्तसङ्गस्य सर्वतः ॥ २ ॥ यो हि दत्त्वा गजश्रेष्ठं कक्ष्यायां कुरुते मनः । रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमम् ॥ ३ ॥ तथा मम सतां श्रेष्ठ किं ध्वजिन्या जगत्पते । सर्वाण्येवानुजानामि चीराण्येवानयन्तु मे ॥ ४ ॥ खनित्रपिटके चोभे समानयत गच्छत । चतुर्दश वने वासं वर्षाणि वसतो मम ॥ ५ ॥ अथ चीराणि कैकेयी स्वयमाहृत्य राघवम् । उवाच परिधत्स्वेति जनौघे निरपत्रपा ॥ ६ ॥ स चीरे पुरुषव्याघ्रः कैकेय्याः प्रतिगृह्य ते । सूक्ष्मवस्त्रमवक्षिप्य मुनिवस्त्राण्यवस्तह ॥ ७ ॥ लक्ष्मणश्चापि तत्रैव विहाय वसने शुभे । तापसाच्छादने चैव जग्राह पितुरग्रतः ॥ ८ ॥ अथात्मपरिधानार्थं सीता कौशेयवासिनी । समीक्ष्य चीरं सन्त्रस्ता पृषती वागुरामिव ॥ ९ ॥

शेषः । सर्वाणि कार्याणि सम्यक्जानामीतिवार्थः । चीराणि वल्कलवस्त्राणि । आनयन्तु परिचारका इति शेषः ॥ ४ ॥ खनित्रपिटकेति । खनित्रपिटके खनित्रम् अवदारणम्, पिटकम् अल्पार्थे कन्प्रत्ययः । फलमूलाद्याहरणयोग्याल्पकण्डोलः । "कण्डोलपिटौ" इत्यमरः । वासं वसतः वासं कुर्वत इत्यर्थः ॥ ५ ॥ ६ ॥ स इति । स रामः कैकेय्यास्सकाशात् मुनिवस्त्राणि परिगृह्य तेषु द्वे चीरे उत्तरीयान्तरीयरूपे । सूक्ष्मवस्त्रमवक्षिप्य अवस्तह, आदीधरदित्यर्थः ॥७॥८॥ अथेति । सन्त्रस्ता, अभवदितिशेषः । पृषती मृगी । वागुरां मृगबन्धनिम् "वागुरा मृगबन्धनी" इत्यमरः ॥९॥

महामात्रेति । महामात्रवचः सिद्धार्थवचः ॥ १ ॥ त्यक्तेति । अनुयात्रेण अनुगतबलेन ॥ २ ॥ असङ्गतश्चायमनुयात्रप्रस्थापनवाद इत्याह–यो हीति । कक्ष्यायां गजबन्धनरज्जौ ॥ ३ ॥ तथेति । सर्वाणि वस्तूनि । भरतायैव अनुजानामि मातुः प्रीतये प्रददामि अतः चीराण्येव वल्कलवस्त्राण्येव ॥ ४ ॥ खनित्रपिटके खनित्रमवदारणम्, खननसाधनमित्यर्थः । पिटकं कन्दमूलाद्याहरणयोग्यं कण्डोलम् ॥ ५ ॥ ६ ॥ स इति । स रामः त्रयाणामानीतानि मुनिवस्त्राणि चीराणि कैकेय्याः प्रतिगृह्य सूक्ष्मवस्त्रमवक्षिप्य तेषु द्वे चीरे स्वयम् अवस्त धृतवान ॥ ७ ॥ ८ ॥ अथेति । पृषती मृगी ॥ ९ ॥

सेति । व्यपत्रपमाणा विशेषेण लज्जमाना । कैकेयीकुशचीरे कैकेयीसम्बन्धिनी कुशचीरे । धर्मज्ञा पातिव्रत्यधर्मज्ञा । धर्मदार्शिनी स्वानुष्ठानेन पातिव्रत्यधर्मप्रदर्शिनी । बध्नन्तीतीदमब्रवीदिति सम्बन्धः ॥ १० ॥ ११ ॥ कथमिति । मुमोह स्तब्धा बभूवेत्यर्थः ॥ १२ ॥ तदेव विवृणोति–कृत्वेति

सा व्यपत्रपमाणेव प्रगृह्य च सुदुर्मनाः । कैकेयीकुशचीरे ते जानकी शुभलक्षणा ॥ १० ॥ अश्रुसम्पूर्णनेत्रा च धर्मज्ञा धर्मदर्शिनी । गन्धर्वराजप्रतिमं भर्त्तारमिदमब्रवीत् ॥ ११ ॥ कथं नु चीरं बध्नन्ति मुनयो वनवासिनः । इति ह्यकुशला सीता सा मुमोह मुहुर्मुहुः ॥ १२ ॥ कृत्वा कण्ठे च सा चीरमेकमादाय पाणिना । तस्थौ ह्यकुशला तत्र व्रीडिता जनकात्मजा ॥ १३ ॥ तस्यास्तत् क्षिप्रमागम्य रामो धर्मभृतां वरः । चीरं बबन्ध सीतायाः कौशेयस्यो परि स्वयम् ॥ १४ ॥ रामं प्रेक्ष्य तु सीताया बध्नन्तं चीरमुत्तमम् । अन्तःपुरगता नार्यो मुमुचुर्वारि नेत्रजम् ॥ १५ ॥ ऊचुश्च परमायस्ता रामं ज्वलिततेजसम् । वत्स नैवं नियुक्तेयं वनवासे मनस्विनी ॥ १६ ॥ पितुर्वाक्यानुरोधेन गतस्य विजनं वनम् । तावद्दर्शनमस्यां नः सफलं भवतु प्रभो ॥ १७ ॥ लक्ष्मणेन सहायेन वनं गच्छस्व पुत्रक । नेयमर्हति कल्याणी वस्तुं तापसवद्वने ॥ १८ ॥ कुरु नो याचनां पुत्र सीता तिष्ठतु भामिनी । धर्मनित्यः स्वयं स्थातुं न हीदानीं त्वमिच्छसि ॥ १९ ॥

॥१३–१५॥ ऊचुरिति । एवं त्वमिव इयं सीता वनवासे न नियुक्तेति, पित्रेतियावत् ॥१६॥ पितुरिति । तावत् तवागमनपर्यन्तम् । पितुर्वाक्यानुरोधेन विजनं वनं गतस्य तव दर्शनम् । अस्यां सफलं भवतु, त्वामिवैनां द्रक्ष्याम इति भावः ॥ १७–१९ ॥

सेति । सुदुर्मनाः भर्त्तुरीदृशं वल्कलं प्राप्तमिति । अत एवाश्रुसंपूर्णनेत्रा, कैकेयीकुशचीरे कैकेयीसम्बन्धिनी कुशचीरे ॥ १०–१५ ॥ ऊचुरिति । एवं तद्वत इयं न नियुक्ता ॥ १६ ॥ पितुरिति । वनं गतस्य तव सम्बन्धिन्याः अस्यास्सीतायाः दर्शनं तावत् त्वदागमनपर्यन्तम् । नः अस्माकम् सफलं त्वद्दर्शनं यथा आनन्दकरं तथा भवत्वित्यर्थः । अथवा अस्या दर्शनं दर्शनेन नः अस्माकं जीवितं सफलं भवत्विति वार्थः । गतस्येति सप्तम्यर्थे षष्ठी । त्वयि गते सतीत्यर्थः ॥ १७–१९ ॥

वि० विजनं वनं गतस्य यावदागमनं तावदस्या दर्शनं नोऽस्तु । तेन च नो जीवनं सफलं भवतु ॥ १७ ॥ स०–सहायेन सहायभूतेन लक्ष्मणेन सह अयेन शुभावहादृष्टेन । गच्छेति वा । स्वपुत्रक पुत्रो न भवतीत्यपुत्रः सुष्ठु अपुत्रः स्वपुत्रः तत्त्वेनाज्ञानः स्वपुत्रकः । "अज्ञाते कः" इत्युक्तेः । स्वपुत्रश्चासौ कश्चेति वा । को विष्णुः । गमनानुमतिसूचकपदव्यत्यासोपेतं गच्छस्वेत्येकं वा पदम् ॥ १८ ॥

तासामिति । सीतयेति षष्ठ्यर्थे तृतीया । बबन्धैवेति कैकेय्यमुद्दिश्यात्मानमिति भावः ॥ २० ॥ २१ ॥ अतीति । अतिप्रवृत्ते अतिक्रम्य प्रवर्त्तमाने ! प्रमाणे मर्यादायाम् । "प्रमाणं हेतुमर्यादाशास्त्रयत्तप्रमातृषु" इत्यमरः ॥ २२ ॥ न गन्तव्यमिति । प्रकृतं प्रस्तुतम् । आसनं सिंहासनम् । अनुष्ठा

तासामेवंविधा वाचः शृण्वन् दशरथात्मजः । बबन्धैव तदा चीरं सीतया तुल्यशीलया ॥ २० ॥ चीरे गृहीते तु तया समीक्ष्य नृपतेर्गुरुः । निवार्य सीतां कैकेयीं वसिष्ठो वाक्यमब्रवीत् ॥ २१ ॥ अतिप्रवृत्ते दुर्मेधे कैकेयि कुलपांसनि । वञ्चयित्वा च राजानं न प्रमाणेऽवतिष्ठसे ॥ २२ ॥ न गन्तव्यं वनं देव्या सीतया शीलवर्जिते । अनुष्ठास्यति रामस्य सीता प्रकृतमासनम् ॥ २३ ॥ आत्मा हि दाराः सर्वेषां दारसङ्ग्रहवर्तिनाम् । आत्मेयमिति रामस्य पालयिष्यति मेदिनीम् ॥ २४ ॥ अथ यास्यति वैदेही वनं रामेण सङ्गता । वयमप्यनुयास्यामः पुरं चेदं गमिष्यति ॥ २५ ॥ अन्तपालाश्च यास्यन्ति सदारो यत्र राघवः । सहोपजीव्यं राष्ट्रं च पुरं च सपरिच्छदम् ॥ २६ ॥ भरतश्च सशत्रुघ्नः चीरवासा वनेचरः । वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम् ॥ २७ ॥ ततः शून्यां गतजनां वसुधां पादपैः सह । त्वमेका शाधि दुर्वृत्ता प्रजानामहिते स्थिता ॥ २८ ॥ न हि तद्भविता राष्ट्रं यत्र रामो न भूपतिः ।

स्यति अधिष्ठास्यति ॥ २३ ॥ आत्मेति । दारसङ्ग्रहवर्त्तिनां गृहस्थानाम् । आत्मेयमिति "अर्द्धो वा एष आत्मनो यत्पत्नी" इति श्रुतेरिति भावः ॥ २४ ॥ २५ ॥ अन्तपाला इति । अन्तपालाः राष्ट्रान्तपरिपालकाः दण्डनायकाः । सहोपजीव्यं जीवाजीवरूपधनसहितम् । सपरिच्छदं दासदासीशकटादि

तासामिति । सीतयेति षष्ठ्यर्थे तृतीया । संयोगे वा । तुल्यशीलया अनङ्गीकृतनगरस्थितिकया प्रेरितस्सन् चीरं बबन्धैवेति वार्थः ॥ २० ॥ २१ ॥ अतीति ! अतिप्रवृत्ते अतीतमर्यादे ! सप्रमाणेव सद्वृत्तेव ॥ २२ ॥ रामस्य प्रकृतमासनं प्रस्तुतं पदम्, राज्यमित्यर्थः । अनुष्ठास्यति राज्यं करिष्यति । यावद्रामागमनमित्यर्थः ॥ २३ ॥ कथं स्त्रिया राज्यानुष्ठानमत आह—आत्मेति । रामस्येयमात्मा "अर्द्धो वा एष आत्मनो यत्पत्नी" इति श्रुतेः ॥ २४ ॥ २५ ॥ अन्तपालाः राष्ट्रान्तनिक्षिप्तदण्डनायकाः । सहोपजीव्यम् उपजीव्यदशरथसहितम् । सपरिच्छदं सपरिकरम् ॥ २६–२९ ॥

वि०—तुल्यशीलया अनङ्गीकृतनगरस्थित्या सीतया प्रेरितस्सन् चीरं बबन्धेत्यन्वयः ॥ २० ॥

परिकरयुक्तम् ॥ २६–२९ ॥ नेति । अदत्तां प्रीतिपूर्वकमदत्ताम् ॥ ३० ॥ ३१ ॥ तदिति । पुत्रगर्द्धिन्या पुत्रविषयस्नेहयुक्तया ॥ ३२ ॥ द्रक्ष्यसीति । पादपांश्च तदुन्मुखानिति वृक्षाणां तदुन्मुखत्वं नाम रामविषयस्नेहासक्तत्वम् । तथोपरिष्टात् स्पष्टीभविष्यति " अपिवृक्षाः परिम्लानाः सपुष्पाङ्कुर

तद्वनं भविता राष्ट्रं यत्र रामो निवत्स्यति ॥ २९ ॥ न ह्यदत्तां महीं पित्रा भरतः शास्तुमर्हति । त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ ३० ॥ यद्यपि त्वं क्षितितलाद्गगनं चोत्पतिष्यसि । पितृवंशचरित्रज्ञः सोऽन्यथा न करिष्यति ॥ ३१ ॥ तत्त्वया पुत्रगर्द्धिन्या पुत्रस्य कृतमप्रियम् । लोके हि न स विद्येत यो न राममनुव्रतः ॥ ३२ ॥ द्रक्ष्यस्यद्यैव कैकेयि पशुव्यालमृगद्विजान् । गच्छतः सह रामेण पादपांश्च तदुन्मुखान् ॥३३॥ अथोत्तमान्याभरणानि देवि देहि स्नुषायै व्यपनीय चीरम् । न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्वसनं वसिष्ठः ॥३४ ॥ एकस्य रामस्य वने निवासस्त्वया वृतः केकयराजपुत्रि । विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह राघवेण ॥ ३५ ॥ यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु राजपुत्री । वस्त्रैश्च सर्वैः सहितैर्विधानैर्नेयं वृता ते वरसम्प्रदाने ॥३६॥

कोरकाः ।" इति ॥ ३३ ॥ एवं वासिष्ठो भाव्यर्थमुक्त्वा प्रकृतमाह–अथेत्यादि । व्यपनीय निरस्य । प्रविधीयत इतीति वक्तव्ये प्रविधीयतेति सन्धिरार्षः ॥ ३४ ॥ न प्रविधीयत इत्येतदुपपादयति–एकस्येति । प्रतिकर्मनित्या अलङ्कारनियता । नित्यमलङ्करणयोग्येत्यर्थः ॥ ३५ ॥ यानैरिति ।

न हीति । अदत्तां प्रीतिपूर्वकमदत्तां शास्तुं नार्हति । त्वयि वा स्वपितृनाशिकायाम् । इतःपरं पुत्रवद्वस्तुं नार्हतीत्यनुकर्षः । कुतः ? महीपतेर्दशरथाज्जातो यदि " पितॄन् समनुजायन्ते नराः " इति न्यायादित्याशयः ॥ ३० ॥ पितृवंशचरित्रं ज्येष्ठे जीवति कनिष्ठस्य राज्यानर्हत्वम् ॥३१॥ तदिति । पुत्रगर्द्धिन्या पुत्रवत्सलया ॥३२–३४॥ एकस्येति । प्रतिकर्मनित्या प्रतिकर्म अलङ्कारव्यापारः स नित्यो यस्यास्सा तथा ॥ ३५ ॥ विधानैः उपकरणैः ॥ ३६ ॥



स०–रामं विना इयं न स्थास्यतीत्यप्याह–विभूषितेति । विभौ परमात्मनि उपिता तद्वक्षस्स्थलाश्रिता ॥ ३५ ॥

विधानैः भृङ्गाराद्युपकरणैः ॥ ३६ ॥ तस्मिन्निति । प्रतिकारकामा प्रतिकारं सदृशकरणं कामयमाना, भर्तृसदृशतया वनवासकरणमिच्छन्तीत्यर्थः । विनिवृत्तभावा चीरपरिधानाद्विनिवृत्तभावा न बभूवेति ॥ ३७ ॥ इति श्रीगोविन्दराज० श्रीरामा० पीता० अयोध्याकाण्ड० सप्तत्रिंशः सर्गः ॥ ३७ ॥

तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्रतिमप्रभावे । नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रतिकार कामा ॥ ३७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

तस्यां चीरं वसानायां नाथवत्यामनाथवत् । प्रचुक्रोश जनः सर्वो धिक् त्वां दशरथं त्विति ॥ १ ॥ तेन तत्र प्रणादेन दुःखितः स महीपतिः । चिच्छेद जीविते श्रद्धां धर्मे यशसि चात्मनः ॥ २ ॥ स निश्वस्योष्णमैक्ष्वाकस्तां भार्यामिदमब्रवीत् । कैकेयि कुशचीरेण न सीता गन्तुमर्हति ॥ ३ ॥ सुकुमारी च बाला च सततं च सुखोचिता । नेयं वनस्य योग्येति सत्यमाह गुरुर्मम ॥ ४ ॥ इयं हि कस्यापकरोति किंचित् तपस्विनी राजवरस्य कन्या । या चीरमासाद्य जनस्य मध्ये स्थिता विसंज्ञा श्रमणीव काचित् ॥ ५ ॥ चीराण्यपास्याज्जनकस्य कन्या नेयं प्रतिज्ञा मम दत्तपूर्वा । यथासुखं गच्छतु राजपुत्री वनं समग्रा सह सर्वरत्नैः ॥ ६ ॥

तस्यामित्यादि । त्वां धिगिति दशरथं चुक्रोशेत्यर्थः ॥ १ ॥ तेनेति । श्रद्धाम् आदरम् ॥२–४॥ इयमिति । तपस्विनी पातिव्रत्यतपोयुक्ता । विसंज्ञा मुग्धा । श्रमणीव तपस्विनीव । " श्रमु तपसि खेदे च " इति धातुः ॥ ५ ॥ चीराणीति । अपास्यात् त्यजतु । इयं प्रतिज्ञा सीतायाश्चीरधारणपूर्वकवन

तस्मिन्निति । प्रतिकारकामा प्रतिकारोऽनुकारः भर्तुस्तपोवेषादिभिरनुकारं कामयमाना विनिवृत्तभावा नैव स्म, वनगमनान्निवृत्तभावा न बभूवैवेत्यर्थः ॥ ३७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां सप्तत्रिंशः सर्गः ॥ ३७ ॥ १–४ ॥ इयमिति । श्रमणी तपस्विनी, " श्रमु तपसि खेदे च " इति धातुः ॥ ५ ॥ चीराणीति । अपास्यात् त्यजतु, मम मया न दत्तपूर्वा नानुमतपूर्वा ॥ ६ ॥

स०—कारः आकारः । न परिच्छेदकार्येवेत्यनुव्याख्या व्याख्यासुधायां तथा व्याख्यानात् । कारस्य रामाकारस्य प्रति प्रतिकारम् । चीरधारणादिना रामाकारसादृश्यं कारयतीति तथा ॥ ३७ ॥ समग्रा रामार्धाङ्गत्वाद्रामेण सह वनगमने समग्रत्वं सेत्स्यति ॥ ६ ॥

गमनरूपप्रतिज्ञा। मम मया। तृतीयार्थे षष्ठी। समग्रा वस्त्रालङ्कारसम्पूर्णा। सर्वरत्नैः सर्वश्रेष्ठवस्तुभिः ॥ ६ ॥ अजीवनार्हेणेति। अजीवनार्हेण जीवनानर्हेण। आसन्नमरणेनेति यावत्। मया, नृशंसा क्रूरा। प्रतिज्ञा त्वत्प्रार्थितं करिष्यामीति शपथपूर्विका प्रतिज्ञा। तावत् प्रथमं कृता। त्वया हि दत्तवरद्वयया। बाल्यात् बालिशत्वात्। एतत् प्रतिज्ञानम्। नियमेन भरताभिषेकरामविवासनरूपविषयव्यवस्थया। प्रतिपन्नं निश्चितम्। तत् मत्कृतप्रति

अजीवनार्हेण मया नृशंसा कृता प्रतिज्ञा नियमेन तावत्। त्वया हि बाल्यात् प्रतिपन्नमेतत्तन्मां दहेद्वेणुमिवात्मपुष्पम् ॥ ७ ॥ रामेण यदि ते पापे किञ्चित्कृतमशोभनम्। अपकारः क इह ते वैदेह्या दर्शितोऽथ मे ॥ ८ ॥ मृगीवोत्फुल्लनयना मृदुशीला तपस्विनी। अपकारं कमिह ते करोति जनकात्मजा ॥ ९ ॥ ननु पर्याप्तमेतत्ते पापे रामविवासनम्। किमेभिः कृपणैर्भूयः पातकैरपि ते कृतैः ॥ १० ॥ प्रतिज्ञातं मया तावत्त्वयोक्तं देवि शृण्वता। रामं यदभिषेकाय त्वमिहागतमब्रवीः ॥ ११ ॥

ज्ञानम्। आत्मपुष्पं वेणुमिव मां दहेदिति योजना ॥ ७ ॥ कोपे रामापराधमभ्युपेत्याह—रामेणेति। अशोभनम् अपराधः। इह विवासे। दर्शितः सम्पादित इति यावत् ॥८॥ मृगीति। मृगीवोत्फुल्लनयनेत्यनेन मौग्ध्यमुक्तम्। मृदुशीलेत्यनेन अपराधभीरुत्वमुक्तम् ॥९॥ नन्विति। पर्याप्तं यावदात्मभाविनरकानुभवायालम् ॥ १० ॥ प्रतिज्ञातमिति। अभिषेकाय इहागतं रामं त्वं यदब्रवीः "सप्त सप्त च वर्षाणि दण्डकारण्यमाश्रितः। अभिषेकमिमं त्यक्त्वा जटाचीरधरो वस ॥" इति यदब्रवीः। त्वयोक्तं तच्छृण्वता मया। तावत् रामविवासनमात्रमेव प्रतिज्ञातम्, नतु सीताप्रव्राजनमितिभावः ॥११॥

अजीवनार्हेणेति। अजीवनार्हेण मुमूर्षुणा। नृशंसा क्रूरा। प्रतिज्ञा त्वत्प्रार्थितं करिष्यामीति प्रतिज्ञा। नियमेन शपथपूर्वकम्। तावत् प्रथमम्। कृता त्वया हि, बाल्याद्ज्ञानात्। एतत् सीताप्रव्राजनम्। प्रतिपन्नं प्रारब्धं निश्चितं वा। मया रामस्य प्रव्राजनप्रतिज्ञैव कृता न सीतायाः, त्वयैव केवलमस्याः प्रव्राजनमारभ्यते तदेतत्सीताप्रव्राजनं मां दहेत् नाशयेत् वेणुमात्मपुष्पमिव ॥ ७ ॥ रामेणेति। अशोभनम् अपराधः। वैदेह्या सीतया। ते तव। दर्शितः सम्पादितः ॥ ८ ॥ ९ ॥ नन्विति। ते तव। पर्याप्तं यावदात्मभावि नरकानुभवायालम्, भूयोऽप्यधिकम्, ते त्वया, कृतैरनुष्ठीयमानैः, कृपणैः अनिर्वाच्यदुःखप्रदैः, एभिः सीताप्रव्राजनरूपैः पातकैः। किं किमनुभविष्यसि वा न जानामीत्यर्थः ॥ १० ॥ प्रतिज्ञातमित्यादि। अभिषेकाय मया कृतनिश्चयं पश्चात्त्वत्प्रतिबन्धेन इहागतं रामं प्रति जटाचीरधरो वनं गच्छेति यद्वाक्यमब्रवीः, त्वयोक्तं तच्छृण्वता मया च, तावदेव रामविवासनमात्रमेव प्रतिज्ञातम्, न सीताप्रव्राजनमित्यर्थः ॥ ११ ॥

तदिति । मया प्रतिज्ञातमतिक्रम्य । निरयं नरकं गन्तुमिच्छसि । कुतः ? हि यस्मात् या त्वं मैथिलीमपि चीरवासिनीमीक्षसे वाञ्छसि ॥ १२॥१३॥ एवमिति । सम्प्रस्थितः गन्तुमुद्यतः ॥ १४ ॥ इयमित्यादि । प्रपन्नां प्राप्ताम् । भूयः अतिशयेन । सम्मन्तुं सम्मानयितुम् । ज्येष्ठपत्नीत्वेन पूर्वमेव सम्मानिता । अद्य विशेषेण मद्याच्ञयेतिभावः ॥ १५ ॥१६ ॥ पुत्रशोकमिति । पुत्रशोकं यथा नच्छेत्तथा संमन्तुमर्हसीति पूर्वेण सम्बन्धः । यद्वा उत्तरेणै

तत्त्वेतत् समतिक्रम्य निरयं गन्तुमिच्छसि । मैथिलीमपि या हि त्वमीक्षसे चीरवासिनीम् ॥ १२ ॥ इतीव राजा विपलन् महात्मा शोकस्य नान्तं स ददर्श किंचित् । भृशातुरत्वाच्च पपात भूमौ तेनैव पुत्रव्यसने निमग्नः ॥ १३ ॥ एवं ब्रुवन्तं पितरं रामः संप्रस्थितो वनम् । अवाक्छिरसमासीनमिदं वचनमब्रवीत् ॥ १४ ॥ इयं धार्मिक कौसल्या मम माता यशस्विनी । वृद्धा चाक्षुद्रशीला च न च त्वां देव गर्हते ॥ १५ ॥ मया विहीनां वरद प्रपन्नां शोकसागरम् । अदृष्टपूर्वव्यसनां भूयः सम्मन्तुमर्हसि ॥ १६ ॥ पुत्रशोकं यथा नच्छेत्त्वया पूज्येन पूजिता । मां हि सञ्चिन्तयन्तीयमपि जीवेत्तपस्विनी ॥ १७ ॥

वान्वयः । मां सञ्चिन्तयन्तीयं तपस्विनी अपिजीवेत् यदि जीवेत्तदा त्वया पूजिता सती पुत्रशोकं यथा नच्छेन्न गच्छेत्तथा कुर्वित्यर्थः । न मच्छोकाद्यथा नश्येत्तथा त्वया पूज्येन पूजिता। मां हि सञ्चिन्तयन्तीयं त्वयि जीवेत्तपस्विनी इत्यपि पाठः। पूर्वार्द्धस्य पूर्वेणान्वयः। त्वयि विषये जीवेत् मां चिन्तयन्त्यपि त्वदुपलालनेन जीवेदित्यर्थः। यद्वा मां सञ्चिन्तयन्ती मच्छोकाद्यथा न नश्येत्तथा त्वया पूजीता। त्वयिजीवेदित्येकं वाक्यम्॥१७॥

एतत् मत्प्रवृत्तरामविवासनमभ्यतिक्रम्य अधिकप्रवृत्त्या निरयं गन्तुमिच्छसि। को नाम तदतिक्रम इत्यत आह मैथिलीमिति । या त्वं । हि यस्मात् मैथिलीमपि चीरवासिनीमीक्षसे वाञ्छसि तस्मान्निरयं गन्तुमिच्छसीति सम्बन्धः ॥ १२ ॥ १३ ॥ एवं ब्रुवन्तं सीता यथासुखं गच्छत्विति ब्रुवन्तं । संप्रस्थितः गन्तुं प्रवृत्तः ॥ १४ ॥ १५ ॥ मयेति । प्रधानपत्नीत्वेन भूयोप्यधिकं संमन्तुं संमानं कर्तुम् ॥ १६ ॥ पुत्रशोकमिति । या कौसल्या मयि वनं गते सतीति शेषः। मां सञ्चिन्तयन्ती पुत्रशोकं यथा नच्छेत् न प्राप्नुयात् यथा जीवेत् तथा सम्मन्तुमर्हसीति पूर्वेण सम्बन्धः ॥ १७ ॥

इमामिति । जातगर्धिनीं पुत्रदर्शनकांक्षिणीमित्यर्थः । न्यस्य त्यक्त्वा ॥ १८ ॥ इति श्रीगोविन्द० श्रीरा० पीता० अयो० अष्टत्रिंशः सर्गः ॥ ३८ ॥
रामस्येति । विगतचेतनः अभूदितिशेषः ॥ १-३ ॥ विवत्साः धेनव इतिशेषः । उपस्थितमित्यत्रेतिकरणं द्रष्टव्यम् । इतिमन्य इत्यन्वयः ॥४॥ नेति ।



इमां महेन्द्रोपम जातगर्धिनीं तथा विधातुं जननीं ममार्हसि । यथा वनस्थे मयि शोककर्शिता न जीवितं न्यस्य यमक्षयं व्रजेत् ॥ १८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डेऽष्टत्रिंशः सर्गः ॥३८॥
रामस्य तु वचः श्रुत्वा मुनिवेषधरं च तम् । समीक्ष्य सह भार्याभी राजा विगतचेतनः॥१॥ नैनं दुःखेन सन्तप्तः प्रत्यवैक्षत राघवम् । न चैनमभिसम्प्रेक्ष्य प्रत्यभाषत दुर्मनाः ॥ २ ॥ स मुहूर्तमिवासंज्ञो दुःखितश्च महीपतिः । विललाप महाबाहू राममेवानुचिन्तयन् ॥३॥ मन्ये खलु मया पूर्वं विवत्सा बहवः कृताः । प्राणिनो हिंसिता वापि तस्मादिदमुपस्थितम् ॥ ४ ॥ न त्वेवानागते काले देहाच्च्यवति जीवितम् । कैकेय्या क्लिश्यमानस्य मृत्युर्मम न विद्यते ॥ ५ ॥ योऽहं पावकसङ्काशं पश्यामि पुरतः स्थितम् । विहाय वसने सूक्ष्मे तापसाच्छादमात्मजम् ॥ ६ ॥ एकस्याः खलु कैकेय्याः कृतेऽयं क्लिश्यते जनः । स्वार्थे प्रयतमानायाः संश्रित्य निकृतिं त्विमाम् ॥ ७ ॥ एवमुक्त्वा तु वचनं बाष्पेण पिहितेन्द्रियः । रामेति सकृदेवोक्त्वा व्याहर्तुं न शशाक ह ॥ ८ ॥

काले देहारम्भककर्मा .ना.गकाले ॥ ५ ॥ ६ ॥ एकस्या इति । निकृतिः शाठ्यम् " कुसृतिर्निकृतिः शाठ्यम् " इत्यमरः । निकृतिं संश्रित्य स्वार्थे

इमामिति । जातगर्द्धिनीं पुत्रदर्शनकाङ्क्षिणीम् । न्यस्य त्यक्त्वा ॥ १८॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायाम् अष्टत्रिंशः सर्गः ॥ ३८ ॥ रामस्येति । विगतचेतनः, अभूदिति शेषः ॥ १-४ ॥ कैकेय्या क्लिश्यमानस्यापि मम यतो मृत्युर्न विद्यते तत्प्राप्तिर्न विद्यते, अतः काले अनागते देहाज्जीवितं न च्यवत्येव ॥५॥ य इति । आच्छाद्यतेऽनेनेत्याच्छादः । तापसानामाच्छादो यस्य स तथा । एवम्भूतमात्मजं योऽहं पश्यामि तस्य मे मृत्युर्न विद्यत इति पूर्वेणान्वयः ॥६॥ एकस्या इति । इमां निकृतिं वरलक्षणशाठ्यम् । संश्रित्य आश्रित्य । स्वार्थे प्रयतमानायाः कैकेय्याः कृते कैकेयीनिमित्तं अयं जनः

प्रयतमानाया इत्यन्वयः ॥ ७॥ ८॥ संज्ञां त्विति । नेत्राभ्यामित्युपलक्षणे तृतीया ॥९॥ औपवाह्यमिति । औपवाह्यम् उपवहनमात्रयोग्यम्, युद्धानर्हमित्यर्थः । राजयोग्यमिति वार्थः । युक्त्वा योजयित्वा ॥ १०॥ एवमिति । गुणवतां पुंसां सम्बन्धिगुणानां फलं यदुच्यते तत् एवमेवंविधम् । मन्ये अनतुरूपं मन्ये । एवंशब्दार्थमाह पित्रेति । यस्मात्साधुर्वीरः पित्रा मात्रा च वनं प्रति निर्वास्यते अतो गुणा नार्जनीया एवेति भावः ॥११॥ राज्ञ इति । शीघ्र

संज्ञां तु प्रतिलभ्यैव मुहूर्त्तात् स महीपतिः। नेत्राभ्यामश्रुपूर्णाभ्यां सुमन्त्रमिदमब्रवीत् ॥ ९ ॥ औपवाह्यं रथं युक्त्वा त्वमायाहि हयोत्तमैः। प्रापयैनं महाभागमितो जनपदात्परम् ॥ १० ॥ एवं मन्ये गुणवतां गुणानां फलमुच्यते। पित्रा मात्रा च यत्साधुर्वीरो निर्वास्यते वनम् ॥ ११ ॥ राज्ञो वचनमाज्ञाय सुमन्त्रः शीघ्रविक्रमः। योजयित्वाऽऽययौ तत्र रथमश्वैरलंकृतम् ॥ १२ ॥ तं रथं राजपुत्राय सूतः कनकभूषितम्। आचचक्षेऽञ्जलिं कृत्वा युक्तं परमवाजिभिः॥ १३ ॥ राजा सत्वरमाहूय व्यापृतं वित्तसञ्चये। उवाच देशकालज्ञं निश्चितं सर्वतः शुचिम् ॥ १४ ॥ वासांसि च महार्हाणि भूषणानि वराणि च। वर्षाण्येतानि सङ्ख्याय वैदेह्याः क्षिप्रमानय ॥ १५ ॥ नरेन्द्रेणैवमुक्तस्तु गत्वा कोशगृहं ततः। प्रायच्छत् सर्वमाहृत्य सीतायै सममेव तत् ॥१६॥ सा सुजाता सुजातानि वैदेही प्रस्थिता वनम्। भूषयामास गात्राणि तैर्विचित्रैर्विभूषणैः ॥ १७ ॥

विक्रमः शीघ्रपदविक्षेपः । योजयित्वाययावित्यत्र आययाविति पदच्छेदः ॥१२॥१३॥ राजेति । वित्तसञ्चये कोशगृहे । व्यापृतम् अध्यक्षत्वेन व्यापृतम्, धनाध्यक्षमित्यर्थः । निश्चितं यावदवस्थिततत्तद्वस्तुविषयनिश्चितज्ञानवन्तम् । शुचिं बाह्यान्तरशुद्धियुक्तम् ॥१४॥ वासांसीति । वर्षाण्येतानि सङ्ख्याय गणयित्वा, चतुर्दशवर्षपर्याप्तान्यानयेत्यर्थः ॥ १५ ॥ नरेन्द्रेणेति । प्रायच्छत्, कोशाध्यक्ष इति शेषः । समं युगपत् तत्सर्वमित्यन्वयः ॥ १६ ॥ सुजाता सुजन्मा, अयोनिजेतियावत् । सुजातानि " समः समविभक्ताङ्गः " इतिवत्सामुद्रिकोक्तलक्षणवत्तया उत्पन्नानि ॥ १७ ॥

क्लिश्यत इत्यन्वयः ॥ ७ ॥ ८ ॥ संज्ञामिति । नेत्राभ्यामुपलक्षितः ॥ ९ ॥ औपवाह्यमुपवाहनमात्रोपयुक्तम्, युद्धानर्हमित्यर्थः ॥ १० ॥ एवमिति । साधुः वीरो रामः पित्रा मात्रा च वनं निर्वास्यत इति यत् एवमेव गुणवतां नृणां गुणानां फलमुच्यते शास्त्रेणेति मन्य इति दुःखातिशयोक्तिः ॥ ११ ॥ १२ ॥ तमिति । रथमाचचक्षे रथ उपस्थित इत्युक्तवान् ॥ १३ ॥ राजेति । सर्वतः शुचिम् इहामुत्रानृणम् । वित्तसञ्चये कोशगृहे । व्यापृतं धनाध्यक्षं निश्चितं यावदवस्थितं वस्तु तद्विषयकज्ञानयुक्तम् ॥ १४ ॥ वासांसीति । एतानि वर्षाणि चतुर्दशवर्षाणि ॥१५॥ नरेन्द्रेणेति । समम् एकदैव । प्रायच्छत धनाध्यक्ष इति शेषः ॥ १६ ॥ सेति । सुजाता अयोनिजा,

व्यराजयतेति । अंशुमतः प्रशस्तकिरणस्य ॥ १८ ॥ तामिति । श्वश्रूः कौसल्या । कृपणं क्षुद्रम् । अनाचरन्तीमकुर्वतीम् ॥ १९ ॥ असत्य इति । असत्यः कुलटाः । विनिपातगतं स्वस्थानात्प्रच्युतिं प्राप्तमित्यर्थः । नानुमन्यन्ते न गणयन्ति ॥ २० ॥ एष इति । दुष्यन्ति विकृता भवन्तीत्यर्थः । प्रजहाति । "अदभ्यस्तात्" इत्यदादेशः ॥ २१ ॥ असत्यशीला इति । विरागिणः विरागिण्यः । ङीबभाव आर्षः ॥ २२ ॥ नेति । कुलम् आभि

व्यराजयत वैदेही वेश्म तत् सुविभूषिता । उद्यतोऽंशुमतः काले खं प्रभेव विवस्वतः ॥१८॥ तां भुजाभ्यां परिष्वज्य श्वश्रूर्वचनमब्रवीत् । अनाचरन्तीं कृपणं मूर्ध्न्युपाघ्राय मैथिलीम् ॥ १९ ॥ असत्यः सर्वलोकेऽस्मिन् सततं सत्कृताः प्रियैः । भर्त्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः ॥ २० ॥ एष स्वभावो नारीणमनुभूय पुरा सुखम् । अल्पामप्यापदं प्राप्य दुष्यन्ति प्रजहत्यपि ॥ २१ ॥ असत्यशीला विकृता दुर्ग्राह्यहृदयाः सदा । युवत्यः पापसङ्कल्पाः क्षणमात्राद्विरागिणः ॥२२॥ न कुलं न कृतं विद्यां न दत्तं नापि सङ्ग्रहम् । स्त्रीणां गृह्णाति हृदयमनित्यहृदया हि ताः ॥२३॥

जात्यम् । कृतम् उपकारम् । दत्तं सम्मानपूर्वकवस्त्राभरणादिदानम् । सङ्ग्रहम् अग्निसाक्षिकपाणिग्रहणम् । अनित्यहृदयाः चञ्चलहृदयाः । असतीनां भर्त्तुः कुलादिकं न सन्तोषाय किंतु धनमेवेति भावः । एवं कैकेयी व्याजेन निन्दिता ॥ २३ ॥

सुजातानि सामुद्रिकोक्तलक्षणवत्तया उत्पन्नानि ॥ १७ ॥ व्यराजयतेति । काले प्रातः काले ॥ १८ ॥ तामिति । कृपणं क्षुद्रम् ॥१९॥ असत्य इति । असत्यः कुलटाः । विनिपातगतं कृच्छ्रगतम् ॥ २० ॥ एष इति । भर्तुः अल्पामप्यापदं दारिद्र्यरोगादिलक्षणाम् । प्राप्य दृष्ट्वा । भर्तारं दुष्यन्ति दूषयन्ति ॥२१॥ असत्यशीला इति । असत्यशीलाः असत्यवचनशीलाः । विकृताः विकारोपेतेक्षादिव्यापाराः । क्षणमात्रात् विरागिणः विरागिण्यः अल्पनिमित्ततः क्षणमात्रवैरस्याः, अविश्वसनीयस्नेहा इति यावत् ॥ २२ ॥ नेतिं । कुलं प्रशस्तकुलम् । कृतम् उपकारः । विद्या सद्विद्या । दत्तं दानम् । सङ्ग्रहः सद्ग्रहणम्, न्यायरीत्या आगतस्वीकारः । सर्वमप्येतत् स्त्रीणामसतीनां हृदयं न गृह्णाति तत्पापवृत्तं न प्रतिबध्नाति । "कामातुराणां न भयं न लज्जा" इतिरीत्या कुलाद्युचितकृत्यं पृष्ठीकृत्य कुलाद्यनुचितलोकगर्हित

स०-विकृताः भ्रूविक्षेपादिविकारवत्यः । क्षणमात्रविरागिणः क्षणमात्रे स्नेहरहितपुरुषस्य दुर्ग्राह्यहृदयाः । यद्वा क्षणमात्रविरागिणः तद्वद्द्वियमानाः । अन्तरेणापि वतिं तदर्थोऽवगम्यते । यथोक्तं "बहुगणवतुडतिसङ्ख्या" इति सूत्रव्याख्यानावसरे महाभाष्ये-"स तर्हि वतिनिर्देशः कर्तव्यः न कर्तव्यः । नह्यन्तरेण वतिमतिदेशो गम्यते अन्तरेण वतिमतिदेशो गम्यते । तद्यथा-एष ब्रह्मदत्तः अब्रह्मदत्तं ब्रह्मदत्त इत्याह । तेन मन्यामहे ब्रह्मदत्तवदयं भवति" इति ॥ २२ ॥ स्त्रीणां हृदयं कर्तृ । तथाच स्त्रीणां मनः कुलादिकं न गृह्णाति । इष्टसाधनत्वेनेति शेषः । संग्रह इति पाठे-पूर्वार्द्धोक्तानि पदानि प्रथमान्तानि । हृदयं कर्म । तथा च कुलं स्त्रीणां हृदयं न गृह्णातीत्यादि पृथगन्वयः । पूर्वोत्तरसाहचर्याद्विद्यापि नञन्वेति ॥ २३ ॥

स्थूणानिखननन्यायेन पातिव्रत्यदृढीकरणार्थमसतीनां स्वभावमुक्त्वा सतीनां स्वभावमाह—साध्वीनामिति । शीले कुलोचितचरित्रे । श्रुते गुरुजनकृतोपदेशे । शमे शान्तौ च स्थितानां साध्वीनां पतिव्रतानां स्त्रीणां । परमं पवित्रं परमं पावनम् । पतिरेकः पतिरेव । विशिष्यते उत्कृष्टो भवति ॥२४॥ स इति । स्पष्टम् ॥२५॥ विज्ञायेति । धर्मार्थसंहितं धर्मरूपप्रयोजनसहितम् । अभिमुखे अग्र इत्यर्थः॥२६॥ करिष्य इति । भर्तुः भर्त्तरि विषये । वर्त्तितव्यं शुश्रूषितव्यम् । मे मया । श्रुतं च मातापितृभ्यामितिशेषः ॥ २७ ॥ नेति । समानयितुं समानां कर्तुम् । नालम् अक्षमेत्यर्थः ॥ २८ ॥ नातन्त्रीति । तन्त्री वीणासिरा । शतात्मजा पुत्रशतवती ॥ २९ ॥ मितामिति । मितम् अल्पम् । ऐहिकमात्रमित्यर्थः । अमितस्य ऐहिकामुष्मिकफलस्य ॥ ३० ॥

साध्वीनां हि स्थितानां तु शीले सत्ये श्रुते शमे । स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते ॥ २४ ॥ स त्वया नावमन्तव्यः पुत्रः प्रव्राजितो मम । तव दैवतमस्त्वेष निर्द्धनः सधनोपि वा ॥ २५ ॥ विज्ञाय वचनं सीता तस्या धर्मार्थसंहितम् । कृताञ्जलिरुवाचेदं श्वश्रूमभिमुखे स्थिताम् ॥ २६ ॥ करिष्ये सर्वमेवाहमार्या यदनुशास्ति माम् । अभिज्ञास्मि यथा भर्तुर्वर्त्तितव्यं श्रुतं च मे ॥२७॥ न मामसज्जनेनार्या समानयितुमर्हति । धर्माद्विचलितुं नाहमलं चन्द्रादिव प्रभा ॥ २८ ॥ नातन्त्री वाद्यते वीणा नाचक्रो वर्त्तते रथः । नापतिः सुखमेधेत या स्यादपि शतात्मजा ॥ २९ ॥ मितं ददाति हि पिता मितं माता मितं सुतः । अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ ३० ॥

कृत्ये मोहात्प्रवर्तन्त इत्यर्थः । कुत एवमत आह अनित्यहृदया हि ताः, अव्यवस्थितचित्ता इत्यर्थः ॥२३॥ साध्वीनामिति । साध्वीनां पतिव्रतानाम् । श्रुते गुरुजनोपदेशे स्थिते स्वकुलोचितमर्यादावस्थाने ( एतत्पक्षे-श्रुते स्थिते इति पाठः ) स्थितानां स्त्रीणां परमं परमसुखसाधनम् पतिरेक एव, अतः पतिरेव स्त्रीणां सर्वसाधनेभ्यो विशिष्यते ॥ २४ ॥ ततः किमत आह—स इति । एष रामः ॥ २५ ॥ २६ ॥ करिष्य इति । भर्तुः भर्तरि विषये यथा वर्तितव्यं तथा मे मया श्रुतम्, मन्मातापितृभ्यां चेति शेषः ॥ २७ ॥ न मामिति । असज्जनेन समानयितुं समतया विचारयितुं नाहमलं न समर्था ॥ २८ ॥ नेति । शतात्मजेति बहुव्रीहिः ॥ २९ ॥ मित

सेति । एवंगता एवंविधपातिव्रत्यधर्मं प्राप्ता । श्रेष्ठाश्रुतधर्मपरावरा श्रेष्ठाभ्यो मात्रादिपतिव्रताभ्यः सम्यक्श्रुतसामान्यविशेषरूपधर्मोत्कर्षा । किमवमन्ये भर्त्तारमिति सिद्धम् ॥ ३१ ॥ सीताया इति । शुद्धसत्त्वा सत्त्वगुणाढ्या । दुःखहर्षजं रामारण्यगमनप्रयुक्तं दुःखम्, दृढपातिव्रत्ययुक्त सीतावचःश्रवणजो हर्षः ॥ ३२ ॥ तामिति । अभिक्रम्य प्रदक्षिणीकृत्य ॥ ३३ ॥ अम्बेति । वनवासस्य वनवासकालस्य ॥ ३४ ॥ सुप्ताया इति ।

साहमेवंगता श्रेष्ठाश्रुतधर्मपरावरा । आर्ये किमवमन्येऽहं स्त्रीणां भर्त्ता हि दैवतम् ॥ ३१ ॥ सीताया वचनं श्रुत्वा कौसल्या हृदयङ्गमम् । शुद्धसत्त्वा मुमोचाश्रु सहसा दुःखहर्षजम् ॥ ३२ ॥ तां प्राञ्जलिरभिक्रम्य मातृमध्येऽतिसत्कृताम् । रामः परमधर्मात्मा मातरं वाक्यमब्रवीत् ॥ ३३ ॥ अम्ब मा दुःखिता भूस्त्वं पश्य त्वं पितरं मम । क्षयो हि वनवासस्य क्षिप्रमेव भविष्यति ॥ ३४ ॥ सुप्तायास्ते गमिष्यन्ति नव वर्षाणि पञ्च च । सा समग्रमिह प्राप्तं मां द्रक्ष्यसि सुहृद्वृतम् ॥ ३५ ॥ एतावदभिनीतार्थमुक्त्वा स जननीं वचः । त्रयश्शतशतार्द्धाश्च ददर्शावेक्ष्य मातरः ॥ ३६ ॥

सुप्तायाः एकस्यां रात्रौ सम्प्राप्तस्वापाया इवेत्यर्थः । समग्रं निर्वर्तितपितृवचनं सम्पूर्णमनोरथं वा ॥ ३५ ॥ एतावदिति । अभिनीतार्थं क्रोडीकृतसर्वार्थमित्यर्थः । त्रयश्शतशतार्द्धाश्च त्रयश्शतं त्रिशतं । त्रेस्त्रयसादेशः । शतार्द्धं पञ्चाशत् त्रयश्शतशतार्द्धं प्रमाणं यासां तास्तथोक्ताः । मातरः मातृः । द्वितीयार्थे प्रथमा । अवेक्ष्य वक्तव्यमालोच्य ददर्शेति सम्बन्धः ॥ ३६ ॥

मिति । अमितस्य ऐहिकामुष्मिकसकलसुखस्य । कर्मणि षष्ठी ॥ ३० ॥ साहमिति । एवंगता एवंविधपातिव्रत्यधर्मं प्राप्ता । श्रेष्ठाश्रुतधर्मपरावरा श्रेष्ठाभ्यः पूज्याभ्यः श्वश्रूमातृप्रमुखाभ्यः श्रुतः परावरः सामान्यविशेषरूपो धर्मो यया सा तथा। किमवमन्ये कस्मादवमन्ये॥३१॥सीताया इति । शुद्धसत्त्वा सत्त्वगुणाढ्या॥३२॥तामिति। मातृमध्ये मातृणां मध्ये अतिसत्कृताम्, मातृभिरिति शेषः । अभिक्रम्य प्रदक्षिणीकृत्य ॥ ३३॥ अम्बेति । मां पश्य। वनवासस्य वनवासकालस्य ॥३४॥ सुप्ताया इति । एकस्यां रात्र्यां सुप्तायाश्चतुर्दशघटिका इव चतुर्दशवर्षाणि क्षिप्रमेव गमिष्यन्तीत्यर्थः। चक्षुर्निमील्य स्वल्पकालं दुःखमविगणय्य तिष्ठेत्यर्थः। सा त्वं समग्रं समग्रश्रेयस्कम् सुहृद्वृतं भ्रातृभार्यादिसहितम्॥३५॥ एतावदिति। अभिनीतार्थं निर्णीतार्थम्। त्रयश्शतशतार्धाः त्रयश्शतं त्रिशतं शतार्धं सङ्ख्या यासां ताः। त्रय इति छान्दसः । स

स०—एवंगता इत्थं ज्ञानवती, भर्तैव दैवतमिति ज्ञानवतीतियावत् । भावे क्तः । गत्यर्थानां ज्ञानार्थत्वात् एवं गतं ज्ञानं यस्यास्सा तथा । श्रेष्ठा सत्कुलप्रसूता । श्रुतौ धर्माणां परावरौ यया सा । श्रेष्ठे इति क्वचित्पाठः । तदा कौसल्यासम्बोधनम् ॥ ३१ ॥ अम्ब ! इतःपरं दुःखिता भूत्वा राजानं मा पश्येः । कुतः वनवासस्य सकाशात् तस्य क्षयोपि क्षिप्रं भविष्यतीति यतोऽत इत्यर्थः ॥ ३४॥

ता इति । तथैवार्त्ताः कौसल्येव दुःखिताः ॥ ३७ ॥ संवासादिति । संवासात् एकत्र सहवासात्, चिरपरिचयादित्यर्थः । समनुजानीत क्षान्त मित्यनुज्ञां कुरुतेत्यर्थः । आमन्त्रयामि आपृच्छामि ॥३८॥ वचनमिति । समाहितं समीचीनार्थयुक्तमित्यर्थः ॥३९॥४०॥ मुरजपणवेति । मुरजपणवा



ताश्चापि स तथैवार्ता मातृर्दशरथात्मजः । धर्मयुक्तमिदं वाक्यं निजगाद कृताञ्जलिः ॥ ३७ ॥ संवासात् परुषं किञ्चिदज्ञानाद्वापि यत्कृतम् । तन्मे समनुजानीत सर्वाश्चामन्त्रयामि वः ॥ ३८ ॥ वचनं राघवस्यैतद्धर्मयुक्तं समाहितम् । शुश्रुवुस्ताः स्त्रियः सर्वाः शोकोपहतचेतसः ॥ ३९ ॥ जज्ञेऽथ तासां सन्नादः क्रौञ्चीनामिव निस्वनः । मानवेन्द्रस्य भार्याणामेवं वदति राघवे ॥ ४० ॥ मुरजपणवमेघघोषवद्दशरथवेश्म बभूव यत् पुरा । विलपितपरिदेवनाकुलं व्यसनगतं तदभूत् सुदुःखितम् ॥४१॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० एकोनचत्वारिंशः सर्गः ॥३९॥

अथ रामश्च सीता च लक्ष्मणश्च कृताञ्जलिः । उपसंगृह्य राजानं चक्रुर्दीनाः प्रदक्षिणम् ॥ १ ॥

एव मेघास्तेषां घोषास्तद्वत् । यद्वा मुरजादिसहपाठात् मेघोपि वाद्यविशेषः। मुरजश्च पणवश्च मेघश्च मुरजपणवमेघम् । "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इत्येकवद्भावः । तद्घोषवत् । विलपितपरिदेवनाकुलं विविधानि लपितानि रामगुणकैकेयीदुर्गुणप्रतिपादकवाक्यानि यस्मिंस्तद्विलपितं परिदेवनं रोदन शब्दः तेनाकुलम् । व्यसनगतम् आपद्गतम् अतएव दुःखितमभूत् ॥४१॥ इति श्रीगो० श्रीरा०पीता०अयो०एकोनचत्वारिंशः सर्गः ॥ ३९ ॥ अथेति ।

रामः, त्रयश्शतशतार्धाः मातरो मातॄः । अवेक्ष्य विविच्य ददर्श ॥ ३६ ॥ ताश्चेति । ताश्चापि मातरोपि तं रामं तथैव ददृशुरिति विपरिणामः । अथ दशरथात्मजः आर्ताः मातॄः इदं जगादेत्यन्वयः ॥ ३७ ॥ संवासात् एकत्र सहवासात् । किञ्चित्परुषमुक्तम् अज्ञानाद्वापि यत्कृतं तन्मे समनुजानीत, क्षान्तमित्यनुज्ञां कुरुतेत्यर्थः ॥ ३८ ॥ वचनमिति । समाहितं समीचीनार्थयुक्तम् ॥३९॥४०॥ मुरजेति । मुरजाश्च पणवा मेघाश्च मुरजपणवमेघम् । द्वन्द्वैकवद्भावः । मेघो वाद्यविशेषः । तद्घोषवत् विलपितपरिदेवनाकुलम् विविधानि लपितानि रामगुणकैकेयीदुर्गुणप्रतिपादकवाक्यानि यस्मिन् तद्विलपितम् । परिदेवनं रोदनम्, तेन आकुलम् ॥४१॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां एकोनचत्वारिंशस्सर्गः ॥ ३९ ॥ अथेति उपसङ्गृह्य पादग्रहणपूर्वकं

उपसंगृह्य पादग्रहणपूर्वकं प्रणम्य । दीनाः वृद्धयोर्मातापित्रोः शुश्रूषा न लब्धेति दीनाः ॥ १ ॥ २ ॥ अन्वक्षमिति । अन्वक्षम् अनुपदम् । "अन्वगन्वक्षमनुगेनुपदम्" इत्यमरः ॥ ३ ॥ ४ ॥ सृष्ट इति । सृष्टस्त्वम्, दैवेनेतिशेषः । भ्रातरि गच्छति देव्या सह पुष्पितवनदर्शनपारवश्येन गच्छति सतीत्यर्थः । प्रमादम् अनवधानम् । मा कार्षीः सावधानो भवेत्यर्थः । सृष्ट इति यथा कौसल्या लोकरक्षणार्थं पुत्रं प्रासूत एवं मया सुहृज्जने रामे स्वनु

तं चापि समनुज्ञाप्य धर्मज्ञः सीतया सह । राघवः शोकसम्मूढो जननीमभ्यवादयत् ॥ २ ॥ अन्वक्षं लक्ष्मणो भ्रातुः कौसल्यामभ्यवादयत् । अथ मातुः सुमित्राया जग्राह चरणौ पुनः ॥ ३ ॥ तं वन्दमानं रुदती माता सौमित्रिमब्रवीत् । हितकामा महाबाहुं मूर्ध्न्युपाघ्राय लक्ष्मणम् ॥ ४ ॥ सृष्टस्त्वं वनवासाय स्वनुरक्तः सुहृज्जने । रामे प्रमादं मा कार्षीः पुत्र भ्रातरि गच्छति ॥ ५ ॥ व्यसनी वा समृद्धो वा गतिरेष तवानघ । एष लोके सतां धर्मो यज्ज्येष्ठवशगो भवेत् ॥ ६ ॥

रक्तस्त्वं वनवासाय सृष्टः । वने रामानुवर्तनायोत्पादितः, अतो रामे गच्छति प्रमादं मा कार्षीः । रामगमनसौन्दर्याकृष्टमनस्कतया रक्षणकर्मण्यनवहितो माभूरित्यर्थः। यद्वा रामे वनं गच्छति त्वमत्रैव मा तिष्ठेतिभावः ॥५॥ तनि०—सृष्टस्त्वं नैरपेक्ष्येण रामचरणासक्तः खलु भवान् । मया वक्तव्यं किम् दास्यकरणे चक्षुः-श्रवास्त्वं वनवासाय रामेण सह त्वया वनं गम्यते चेत् मत्तः उत्पत्तिप्रयोजनं लब्धम्, तत्सहायार्थं खलु मयोत्पादितः । स्वनुरक्तः सुहृज्जने सुहृज्जनमात्रे स्वनुरक्तस्त्वम्, ततः सर्वोपजीव्ये रामे अनुरक्तो भव । यद्वा सुहृज्जने रामे भवतः तस्मिन्नतीव प्रीतिरस्ति खलु इदानीं गन्तव्यमिति मया वक्तव्यं किम्? तथापि नियमनीयं किंचिदस्ति रामे प्रमादं माकार्षीः । कोऽयं प्रमाद इत्यत आह पुत्र भ्रातरि गच्छतीति । श्रीरामगमनविशेषे दृष्टिं दत्त्वा रक्ष्यवस्तुभ्रंशं मा कुरु ॥ ५ ॥ रामगमने गन्तव्यतायां निमित्तमाह—व्यस

प्रणम्य । दीनाः वृद्धयोर्मातापित्रोः शुश्रूषा न लब्धेति दीनाः ॥ १ ॥ तमिति । मातृदुःखदर्शनात् शोकसम्मूढः ॥ २ ॥ अन्वक्षमिति । भ्रातुः अन्वक्षम् अनुपदम् ॥ ३ ॥ ४ ॥ सृष्ट इति । सुहृज्जने अत्रत्यसुहृज्जने । स्वनुरक्तोपि त्वं मया वनवासाय सृष्टः अनुमतः स त्वं गच्छेति भ्रातरि रामे प्रमादं मा कार्षीः रामसेवाया मनवधानतां मा कुर्वित्यर्थः ॥ ५ ॥ कनिष्ठस्य ज्येष्ठानुवर्तनं परमधर्म इत्युपदिशन्त्याह—व्यसनीति । राज्याद्यभावे व्यसनी वा राज्यप्राप्त्या समृद्धो वा एष रामः

स०—शोकसंमूढः शोकेन संमोहयति वैचित्यं प्रापयति जनानिति वा । शोकयतीति शोकः । सम्मूढ इत्यत्राप्येवम् । ततः कर्मधारय इति वा ॥ २ ॥ भ्रातुः रामस्य । अन्वक्षं प्रत्यक्षम् अनुपदं वा ॥ ३ ॥

नीति। गतित्वे धर्मशास्त्रानुमतिं दर्शयति एष इति ॥ ६ ॥ ज्येष्ठानुवर्तनादपि परमधर्म कुलोचितं दर्शयति–इदमिति। मृधेषु युद्धेषु। तनुत्यागेनापि रामो रक्षणीय इतिभावः ॥ ७ ॥ लक्ष्मणमिति। संसिद्धं "षिधु गत्याम्" इत्यस्माद्धातोर्निष्ठायां रूपम्। गमनोद्युक्तमित्यर्थः। गच्छगच्छेति वीप्सया सुमित्राया अपि रामानुवर्त्तने महानादरो द्योत्यते ॥ ८ ॥ वनवासे पितृमातृनगरस्मरणे मनश्चाञ्चल्यं भविष्यतीतिधिया तत्रैव प्रतिनिधिं

इदं हि वृत्तमुचितं कुलस्यास्य सनातनम्। दानं दीक्षा च यज्ञेषु तनुत्यागो मृधेषु च ॥७॥ [ज्येष्ठस्याप्यनुवृत्तिश्च राजवंशस्य लक्षणम्।] लक्ष्मणं त्वेवमुक्त्वा सा संसिद्धं प्रियराघवम्। सुमित्रा गच्छगच्छेति पुनःपुनरुवाच तम् ॥ ८ ॥ *रामं दशरथं विद्धि मां विद्धि जनकात्मजाम्। अयोध्यामटवीं विद्धि गच्छ तात यथासुखम् ॥ ९ ॥

कल्पयति–राममिति। यथासुखं गच्छेत्यस्य इत्युवाचेति पूर्वेण सम्बन्धः। रामं दशरथं विद्धि, पितरमवगच्छेत्यर्थः। जनकात्मजां मां विद्धि, मातरं विद्धीत्यर्थः। अटवीमयोध्याम्, तद्वत् भोगस्थानं विद्धि। गच्छ तात यथासुखम् तदनुवर्तनमेव उचितं सुखमित्यर्थः। यद्वा रामं दशरथं विद्धि ते गतिः शरणम्। कुतः? ज्येष्ठवशगो भवेदिति यत् एष एव धर्म इति योजना ॥ ६ ॥ इदं हीति। इदं ज्येष्ठानुर्वतनरूपम्। धर्मान्तरमप्याह दानमिति ॥ ७ ॥ वनवासे पितृमातृनगरस्मरणेन मनश्चाञ्चल्यं भवतीतिधिया तत्रैव पित्रादिप्रतिनिधिं कल्पयति–राममिति। गच्छेत्यस्य उवाचेत्युत्तरेण सम्बन्धः। रामं दशरथं पितरं विद्धि, जनकात्मजां मां मातरं विद्धि, अटवीम् अयोध्यां नगरीं विद्धि। यद्वा रामं दशः पक्षी रथो यस्य तं दशरथं विष्णुं विद्धि। "दशः पक्षी विहङ्गमः" इति हलायुधः। जनकात्मजां मां लक्ष्मीं विद्धि। अटवीम् अयोध्यां योद्धुमशक्याम् विष्णुपुरीं विद्धि। "देवानां पूरयोध्या" इति श्रुतेः। अथवा

**स०–सुमित्रागच्छगछ** इत्यत्र सुमित्रा आगच्छ गच्छेति छेदः। तथाच प्रियराघवं आगच्छ गच्छेति पुनः पुनरुवाच। लोके लोकाः स्वान् प्रति गत्वा आयास्यामीति गत्वा आयाहीति वा वक्तारो न तु गच्छेत्येतन्मात्रवादिन इति एवमुक्तिः। तत्रापि अननुमतं गमनमिति प्रस्तुतस्यापि गमनस्य पश्चादुक्तिः सकलकामितस्य आगमनस्य प्रथमत आगच्छेत्यनेनोक्तिरिति ज्ञेयम् ॥ ८ ॥ दशसु इन्द्रियेषु रथो गमनं यस्य तम्। दशभ्य इन्द्रियेभ्यो रथो गतिः विषयप्राप्तिरिति यावत्। येन तं। "रथ गतौ" इति धातोः। रामं दशरथं विद्धि दशरथस्यावस्थानाभावात्तत्स्थाने रामं जानीहीत्यभिप्रायः। मां जनकात्मजां तामिवारण्यवर्तिनीं विद्धि। पत्यपत्यवियुक्ताया मम भवनवासोपि वनवासतुल्य इति भावः। दशरथं दशसु दिक्ष्वप्रतिहतगतिमद्वायुरूपं हनुमन्तं रामं तमिव रक्षकं विद्धि। हे जनक तात लक्ष्मण! मां रमारूपिणीं सीतां आत्मजां तामिव विद्धि फलजलाहरणादिना तां रक्षेति भावः। आत्मजां स्वयंजातां सीतां एकान्तप्रदेशेपि मामिव विद्धीत्यप्यर्थः। गच्छता रामेण सह अत गच्छेति वा "अत सातत्यगमने" इति धातोः ॥ ९ ॥

* रामं दशरथं विद्धीति श्लोकपाठानन्तरं लक्ष्मणं त्वेवमुक्त्वेतिश्लोकः पठनीय इति महेश्वरतीर्थस्याभिमतः।

दशति मत्स्यकच्छपोरगादीन् दंष्ट्राव्यापारविषयान् करोतीति दशः पक्षी "दंश दशने" इति धातुः। दशनं दंष्ट्राव्यापारः। पचाद्यच्। पृषोदरादित्वा दनुनासिकलोपः। स गरुडः रथो यस्य तम्, विष्णुं विद्धीत्यर्थः। जनकात्मजां मां लक्ष्मीं विद्धि। अटवीमयोध्याम् अपराजिताख्यां वैकुण्ठनगरीं विद्धि। तद्वासस्थानमितिभावः। यद्वा रामं दशरथं च विद्धि, उभयोस्तारतम्यं पश्येत्यर्थः। मां जनकात्मजां च विद्धि, गुणतः आलोचय मदपेक्षया सीतैव

ततः सुमन्त्रः काकुत्स्थं प्राञ्जलिर्वाक्यमब्रवीत्। विनीतो विनयज्ञश्च मातलिर्वासवं यथा ॥ १० ॥

तव हितपरेतिभावः। अयोध्याम् अटवीं च विद्धि एतन्नगरापेक्षया वनमेव तव कैङ्कर्यैकान्तस्थानतयोत्कृष्टमित्यर्थः। यद्वा दशरथं रामम् उपरतं विद्धि, मां जनकस्य पितुरात्मजां विद्धि, कैकेयीविवासिततया पितृगृहवर्तिनीं विद्धीत्यर्थः। अयोध्यामटवीं विद्धि, निर्जनेयं भविष्यतीत्यर्थः। एवं तात्पर्यान्तराण्यूह्यानि ॥९॥१०॥ तनि०-रामं दशरथं विद्धि—सोपाधिकपितारि दशरथे अतिस्नेहं विहाय निरुपाधिकपितारि रामे प्रीतिं कुर्वित्यर्थः। मां विद्धि जनकात्मजां सोपाधिकमातरं मां विहाय निरुपाधिकमातारि सीतायां भक्तिं कुर्वित्यर्थः। अयोध्यामटवीं विद्धि-सोपाधिकाम् अयोध्यां विहाय रामनिवासत्वेन निरुपाधिकप्राप्यदेशे वने प्रीतिं कुर्वित्यर्थः। यद्वा रामं दशरथसमं विद्धि "ज्येष्ठभ्राता पितृसमः" इतिस्मरणात्। जनकात्मजां मातृसमां विद्धि। अटवीम् अयोध्यां तद्वद्भोग्यतमां विद्धि। अथवा रामं दशरथसदृशगुणं विद्धि "गुणैर्दशरथोपमः" इत्युक्तेः। मां विद्धि जनकात्मजां गुणवतीं सीतां मामिव सेव्यां विद्धि। रमणीयवस्तुसम्पन्नतया अटवीमयोध्यावद् भोग्यतमां विद्धि। रामं दशरथं विद्धि-दशरथमिव स्त्रीपरवशं विद्धि। तच्च मृगानुसारित्वादिषु वक्ष्यते। मां विद्धि जनकात्मजाम्-अहं यथा राममनुगच्छेति वदामि एव मेव वदिष्यति। तच्च तत्रैव स्पष्टम्। अटवीमयोध्यां विद्धि-अटवीमपि विहायान्यत्र गच्छेत्, सर्वत्र सावधानो भवेति तात्पर्यम्। यद्वा रामं दशरथमिवातिशूरं विद्धि देवासुरयुद्धे दशरथस्य शौर्यं प्रसिद्धम्। अहं यथा भर्तृविजये अभिनन्दामि जनकात्मजाप्येवमभिनन्दिष्यति। तच्च "तं दृष्ट्वा शत्रुहन्तारम्" इत्यत्र स्पष्टीभविष्यति। मां अयोध्यामटवीं विद्धि-व्याघ्रावासं गुल्ममिव अटवीमयोध्यामिव विद्धि। रामं दशरथं विद्धि-दशरथो यथा रामविश्लेषं न सहते तथा रामो युष्मद्विश्लेषं न सहते। मां



दशरथं रामम् उप[illegible] विद्धि। भर्त्रभावान्मां जनकस्य पितुः आत्मजां पितृगृहवर्तिनीं विद्धि। रामेण सह सर्वेषां निर्गमनात् अयोध्यामटवीं विद्धि। यद्वा रामं दशरथं च विद्धि, परिचारिकापरिचारकयोर्गुर्वोः को वा अनुवर्त्यः? इति विचारय। अयोध्यां विद्धि अटवीं विद्धि, ऐहिकसुखराज्यभोगपारलौकिकज्येष्ठा नुवर्तनधर्मयोः को वा गरीयानिति विचारयेत्यर्थः। लक्ष्मणमिति। संसिद्धं संसादने गमने निश्चयवन्तम्, गमनोद्युक्तमित्यर्थः। प्रियराघवम् प्रियो राघवो यस्य

विद्धि जनकात्मजाम्-अहं यथा भवद्विश्लेषं न सहामि तथा सीता च [illegible] न सहते । अयोध्यामटवीं विद्धि रामविश्लेषेण अयोध्या यथा 'अपभ्रष्टमनुष्या च' इत्याद्यवस्थां प्राप्ता तथा अटव्यपि " अपि वृक्षाः परिम्लानाः " इत्याद्यवस्थां प्राप्नोति । रामं दशरथं विद्धि-दशरथो यथा सम्राड् बभूव तथा रामोपि सम्राड् भविष्यति । मां विद्धि जनकात्मजाम्-अहं यथा सम्राण्महिषी तथा सीतापि भविष्यति । अयोध्यामटवीं विद्धि-अटवी अयोध्यावत् समृद्धपुष्पफला भविष्यति । यद्वा रामं पदातिरिति मावमंस्थाः । दशरथं पुष्पका[illegible]श्चारिणं विद्धि । दश रथाः यस्य, दशसु दिशास्वप्रतिहतो रथो यस्येति च विग्रहः । मां विद्धि जनकात्मजां देवासुरादियुद्धेषु दशरथेन सह यथा अहं सञ्चरा[illegible] सीता रामेण सञ्चरिष्यति । अयोध्यामटवीं विद्धि इदानीमटव्यां यथा नित्यसञ्चारः तथा अयोध्यायां नित्यसञ्चारो भविष्यति । यद्वा दशरथं रामं विद्धि-रामे यथा पितृत्वबुद्धिपूर्तिः तथा [illegible]शरथेऽपि कुरु । " अहं तावन्महाराजे पितृत्वं नोपलक्षये । भ्राता भर्ता च बन्धुश्च पिता च मम राघवः ॥" इत्युक्तरीत्या दशरथे अवज्ञामकृत्वा रामस्य दशरथे [illegible]पितृत्वबुद्धिपूर्तिमनुसृत्य त्वयापि तादृशबुद्धिः कार्या । मां विद्धि जनकात्मजां-दशरथपाणिग्रहणकृतदोषं मनस्यकृत्वा रामसपत्नीमातृत्वप्रयुक्तबहुमानं वानुसृत्य मयि सीतायामिव मातृत्वबुद्धिपूर्तिः कार्या । अयोध्यामटवीं विद्धि " वनं नगरमेवास्तु येन गच्छति राघवः " इत्युक्तरीत्या अयोध्यावमतिर्न कार्या । रामपादुकासनाथत्वेनायोध्याप्युद्देश्यतयानुसन्धेया । यद्वा रामं दशरथं पक्षिरथं गरुडरथमिति यावत् । " दशः पक्षी विहङ्गमः " इति निघण्टुः । जनकात्मजां मां लक्ष्मीं विद्धि " इन्दिरा लोकमाता मा " इतिनिघण्टुः । " सीता लक्ष्मीर्भवान् विष्णुः " इति वक्ष्यति । अटवीमयोध्यां विद्धि देवानां पुरं परमपदाख्यां विद्धि । " देवानां पूरयोध्या " इतिश्रुतेः । यद्वा रामं विद्धि दशरथं विद्धि-सावकाशनिरवकाशयोः को वानुवर्तनीय इति सम्यङ्निश्चिन्वित्यर्थः । मां विद्धि जनकात्मजां विद्धि-दासीपरिजनसहितातद्रहितयोः का वानुवर्तनीयेति विचारय । अयोध्यां विद्धि अटवीं विद्धि-दृष्टफलादृष्टफलयोर्बुद्धिमता किंवा अपेक्षणीयम् । एवं बहुगुणलाभात्तात्कालिकदुःखानुसन्धानं न कर्त्तव्यमित्याह गच्छेति । रामो येनयेन पथा गच्छति तेनतेन पथा " कामरूप्यनुसञ्चरन् " इत्याद्युक्तरीत्या कैङ्कर्यं कर्त्तुं गच्छ । " एतत्साम गायन्नास्ते " इत्युक्तरीत्या परमपदइवैकत्र स्थितिं मा कुरु, राममनुसृत्यानुसृत्य कैङ्कर्यं कुरु । तात भगवत्कैङ्कर्यान्वयबहुमानबुद्ध्या तातेत्युक्तिः । तव माताहं कैकेयीवापकीर्तिं यथा न गच्छामि तथा मां तारय । यथासुखम् " अहं सर्वं करिष्यामि " इत्युक्तरीत्या कैङ्कर्यसुखं करलब्धम् । यद्वा रामस्य यथा सुखं भवति तथा । वक्ष्यति " भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण " इति । यद्वा अयोध्यायां यथासुखं तथा वने च " कामये न त्वया विना " इत्युक्तरामसंश्लेषसुखं खलु त्वयापेक्षितम् । यथासुखं गच्छेत्यस्य इत्यब्रवाचेति पूर्वेण सम्बन्धः ॥ ९ ॥

रथमिति । यत्र यस्मिन् प्रदेशविषये ॥ ११ ॥ चतुर्दशेति । चतुर्दशवर्षेष्वेकदिवसापनयनमपि महान् लाभ इति धिया त्वरयति तान्युपक्रमि
तव्यानीति । देव्यासि चोदितः अद्यैव गच्छ इति कैकेय्या चोदितत्वादित्यर्थः ॥ १२ ॥ तमिति । अलङ्कारं कृत्वा, श्वशुरदत्तवस्त्राभरणादिभिरिति

रथमारोह भद्रं ते राजपुत्र महायशः । क्षिप्रं त्वां प्रापयिष्यामि यत्र मां राम वक्ष्यसि ॥११॥ चतुर्दश हि वर्षाणि वस्तव्यानि वने त्वया । तान्युपक्रमितव्यानि यानि देव्याऽसि चोदितः ॥ १२ ॥ तं रथं सूर्यसङ्काशं सीता हृष्टेन चेतसा । आरुरोह वरारोहा कृत्वालङ्कारमात्मनः ॥ १३ ॥ * अथो ज्वलनसङ्काशं चामीकरविभूषितम् । तमारुरुहतुस्तूर्णं भ्रातरौ रामलक्ष्मणौ ॥ १४ ॥ वनवासं हि सङ्ख्याय वासांस्याभरणानि च । भर्तारमनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ १५ ॥ तथैवायुधजालानि भ्रातृभ्यां कवचानि च । रथोपस्थे प्रतिन्यस्य सचर्म कठिनं च तत् ॥ १६ ॥ सीतातृतीयानारूढान् दृष्ट्वा धृष्टमचोदयत् । सुमन्त्रः संमतानश्वान् वायुवेगसमान् जवे ॥ १७ ॥

शेषः ॥ १३ ॥ एतच्छ्लोकानन्तरमथोज्वलनेति श्लोकः पठितव्यः । अथो इति । ज्वलनसङ्काशम् आयुधपूर्णत्वादिति भावः । वनवासं
हीति श्लोकस्तथैवेति श्लोकस्सीतातृतीयानितिश्लोकश्चैकं वाक्यम् । श्वशुरो दशरथः । सीतायै यानि ददौ तानि च रथोपस्थे प्रतिन्यस्य
तथा भ्रातृभ्यां दत्तान्यायुधजालानि कवचानि सचर्म चर्मपिनद्धम् अल्पकण्डोलं कठिनं तत् खनित्रं च रथमध्ये प्रतिन्यस्य सीतातृतीया
स तथा ॥ ८-१० ॥ रथमिति । यत्र यद्देशप्रापणे । मां वक्ष्यसि नियोजयसि तं देशं क्षिप्रं प्रापयिष्यामि ॥ ११ ॥ कुतः ? यानि चतुर्दशवर्षाणि त्वया वने वस्त
व्यानि तान्यद्यैवोपक्रमितव्यानि आरम्भणीयानि । कुतः ? कैकेय्या अद्यैव गच्छेति हि चोदितोऽसि ॥ १२ ॥ तं रथमिति । हृष्टेन इदानीं पतिसेवा लब्धेत्या
नन्दयुक्तेन चेतसा उपलक्षिता ॥ १३ ॥ अथो इति । रामलक्ष्मणौ रथमारुरुहतुः ॥ १४ ॥ वनवासमिति । श्वशुरो दशरथः ॥ १५ ॥ तथैवेत्यादि श्लोकद्वयमेकं
वाक्यम् । सुमन्त्रो भ्रातृभ्यां रामलक्ष्मणाभ्याम् आनीतान्यायुधजालानि कवचानि । सचर्म चर्मपिनद्धम् । लक्षणया पिटकमित्यर्थः । कठिनं खनित्रं च रथोपस्थे रथमध्ये
प्रतिन्यस्य निक्षिप्य तत् सीतायै दशरथदत्तवस्त्राभरणादिजातं च प्रतिन्यस्य ॥ १६ ॥ रथमारूढान् सीतातृतीयान् दृष्ट्वा अश्वानचोदयदित्यन्वयः । एतत्पक्षे दृष्ट्वा

स०-हृष्टेन चेतसा रक्षोविक्षोभो भविष्यतीति सन्तोषः ॥ १३ ॥ ननु वसनं सासनं यथाऽकारि वितीर्य चीरं वीरस्य तस्याः कथं रथनयनं सम्मतमितिचेन्न, तेवनेन वनगमने मन्थरं गतिः स्यात् स्याद्वान्त
राय इति तदमन्थरतायै समसमीरजवतुरगरथगतिमनुमेने सेति मन्तव्यम् । अत एव " नोत्सुकस्य विलम्बनम् " इति तदुक्तिः ॥ १४ ॥

* ' अथो ' इत्ययं श्लोकः ' तथैवायुध० ' इति श्लोकात्परं ' सीतातृतीयान् ' इति श्लोकात्पूर्वं कचित्पाठो दृश्यते ।

नारूढान् दृष्ट्वा अश्वानचोदयदिति योजना । धृष्टं सधैर्यम् । सम्मतान् श्रेष्ठानित्यर्थः । + यथान्यासमेव वास्तु । तदा तं रथमितिश्लोको वनवासमिति श्लोकः तथैवेतिश्लोकश्चैकं वाक्यम् । सीतात्मानोऽलङ्कारं कृत्वा यानि श्वशुरो ददौ यानि भ्रातृभ्यामानीतानि आयुधजालानि कवचानि सचर्म कठिनं च

प्रतियाते महारण्यं चिररात्राय राघवे । बभूव नगरे मूर्च्छा बलमूर्च्छा जनस्य च ॥ १८ ॥ तत्समाकुलसम्भ्रान्तं मत्त सङ्कुपितद्विपम् । हयशिञ्जितनिर्घोषं पुरमासीन्महास्वनम् ॥ १९ ॥ ततः सबालवृद्धा सा पुरी परमपीडिता । राममेवाभि दुद्राव घर्मार्त्ता सलिलं यथा ॥ २० ॥ पार्श्वतः पृष्ठतश्चापि लम्बमानास्तदुन्मुखाः । बाष्पपूर्णमुखाः सर्वे तमूचुर्भृश निस्वनाः ॥ २१ ॥ संयच्छ वाजिनां रश्मीन् सूत याहि शनैःशनैः । मुखं द्रक्ष्याम रामस्य दुर्दर्शं नो भविष्यति ॥ २२ ॥ आयसं हृदयं नूनं राममातुरसंशयम् । यद्देवगर्भप्रतिमे वनं याति न भिद्यते ॥ २३ ॥

तत्सर्वं रथोपस्थे प्रतिन्यस्यारुरोहेत्यन्वयः ॥ १४–१७ ॥ प्रतियात इति । चिररात्राय चिरकालम् । नगरे मूर्च्छा बभूव नगरस्थस्त्रीबालादिषु दुःखाति शयेन विसंज्ञता बभूवेत्यर्थः । बलमूर्च्छा अश्वगजादिमोहः । जनस्य उत्सवार्थमागतजनपदजनस्य ॥ १८ ॥ तदिति । समाकुलम् अन्तःकरणक्षोभ युक्तम् । सम्भ्रान्तं बाह्येन्द्रियक्षोभयुक्तं, सर्वेन्द्रियक्षोभवत् पौरजनयुक्तमित्यर्थः । मत्तसङ्कुपितद्विपं व्यसनातिशयेन सङ्कुपितमत्तद्विपमित्यर्थः । हयशिञ्जित निर्घोषं परितापातिशयेन ततइतश्चलतां हयानां भूषणरवेण सञ्जातघोषमित्यर्थः । "भूषणानां तु शिञ्जितम्" इत्यमरः । अतएव महास्वनमासीत् ॥ १९ ॥ तत इति । परमपीडिता रामविरहदुःखेनेतिशेषः ॥२०॥ पार्श्वत इति । लम्बमानाः रथैकदेशमाश्रित्येतिशेषः ॥ २१॥२२ ॥ आयसमिति । देव

रथमिति पाठः ॥ १७ ॥ प्रतियात इति । चिररात्राय चिरकालावस्थानाय । नगरी मूर्च्छा नगरस्थस्त्रीबालवृद्धादिषु दुःखातिशयेन नगर्येव विसंज्ञितेव बभूवेत्यर्थः । ( नगरी इति पाठः ) बलमूर्च्छा अश्वगजादिमोहः । जनस्य उत्सवार्थं,समागतजानपदस्य भटादीनां वा मूर्च्छा बभूवेत्यर्थः ॥ १८ ॥ तदिति । तत्पुरं समा कुलम् इतिकर्तव्यतामूढम्, सम्भ्रान्तं रामानुगमनत्वरायुक्तम् । मत्ताः अत एव सङ्कुपिताः द्विपा यस्मिन् तत्तथा । हयानां शिञ्जितानां पर्याकुलप्राणिभूषणशब्दानां च निर्घोषो ध्वनिर्यस्मिंस्तत्तथा । अत एव पुरं महास्वनमासीत ॥ १९ ॥ २० ॥ पार्श्वत इति । तं सुमन्त्रमित्यर्थः ॥ २१ ॥ २२ ॥ आयसमिति । देवगर्भप्रतिमे देवकुमारसदृशे । यद्यस्मात् कारणात् ॥ २३–२५ ॥ स०—देवगर्भप्रतिमे हिरण्यगर्भसदृश इत्यर्थः ॥ २३ ॥

+ यथान्यासम्—तं रथं ॥ वनवासं ॥ तथैवायुध० ॥ अथो ज्वलनसङ्काशं ॥ इति श्लोकक्रमः ।

गर्भप्रतिमे देवकुमारसदृशे ॥२३॥ कृत्यकृत्येति । मेरुमर्कप्रभा यथेति सूर्यस्य प्रादक्षिण्येन मेरुगमनमिति सर्वदा तस्य मेरुसम्बन्धोऽस्त्येव॥२४-२९॥ पितेति । सन्नः अवसन्नतेजा इत्यर्थः ॥ ३० ॥ स इति । अचिन्त्यात्मा इयत्तया परिच्छेत्तुमशक्यधैर्य इत्यर्थः ॥ ३१ ॥ राम इति । याहि तिष्ठेति उभयत्रा





कृतकृत्या हि वैदेही छायेवानुगता पतिम् । न जहाति रता धर्मे मेरुमर्कप्रभा यथा ॥२४॥ अहो लक्ष्मण सिद्धार्थः सततं प्रियवादिनम् । भ्रातरं देवसङ्काशं यस्त्वं परिचरिष्यसि ॥२५॥ महत्येषा हि ते सिद्धिरेष चाभ्युदयो महान् । एष स्वर्गस्य मार्गश्च यदेनमनुगच्छसि ॥ २६ ॥ एवं वदन्तस्ते सोढुं न शेकुर्बाष्पमागतम् । नरास्तमनुगच्छन्तः प्रियमिक्ष्वाकुनन्दनम् ॥ २७ ॥ अथ राजा वृतः स्त्रीभिर्दीनाभिर्दीनचेतनः । निर्जगाम प्रियं पुत्रं द्रक्ष्यामीति ब्रुवन् गृहात् ॥ २८ ॥ शुश्रुवे चाग्रतः स्त्रीणां रुदन्तीनां महास्वनः । यथा नादः करेणूनां बद्धे महति कुञ्जरे ॥ २९ ॥ पिता हि राजा काकुत्स्थः श्रीमान् सन्नस्तदाभवत् । परिपूर्णः शशी काले ग्रहेणोपप्लुतो यथा ॥३०॥ स च श्रीमानचिन्त्यात्मा रामो दशरथात्मजः । सूतं सञ्चोदयामास त्वरितं वाह्यतामिति ॥ ३१ ॥ रामो याहीति सूतं तं तिष्ठेति स जनस्तदा । उभयं नाशकत् सूतः कर्तुमध्वनि चोदितः॥३२॥ निर्गच्छति महाबाहौ रामे पौरजनाश्रुभिः । पतितैरभ्यवहितं प्रशशाम महीरजः॥३३॥ रुदिताश्रुपरिद्यूनं हाहाकृतमचेतनम् । प्रयाणे राघवस्यासीत् पुरं परमपीडितम् ॥३४॥ सुस्राव नयनैः स्त्रीणामास्रमायाससम्भवम् । मीनसंक्षोभचलितैः सलिलं पङ्कजैरिव॥३५॥

चोदयदितिशेषः । उभयं यानं स्थानं च । अध्वनि रामजनाभ्यां चोदितः सन् कर्तुं नाशकत् ॥३२॥ निर्गच्छतीति । अभ्यवहितं सिक्तम् ॥३३॥ रुदिताश्रुपरिद्यूनमिति । हाहाकृतं हाहाकारवत् । मत्वर्थीयलोपः । अचेतनं मूढम् । राघवस्य दशरथस्य । पुरं पुरस्थजनाः॥३४॥ सुस्रावेति । नयनैः नयनेभ्यः।



महतीति । एनमनुगच्छसीति यत् एषा ॥२६-२९॥ पिता हि राजेति । सन्नः खिन्नः ॥३०-३२॥ निर्गच्छतीति । अभ्यवहितम् अवसिक्तमिति यावत् ॥ ३३-३५॥

आयाससम्भवं खेदजनितम् । संक्षोभः उच्छलनम् । सलिलं मकरन्दरूपम् ॥ ३५ ॥ दृष्ट्वेति । एकचित्तगतम् एकचित्ततां गतम् ॥ ३६ ॥ तत इति । प्रेक्ष्य, स्थितानामितिशेषः ॥ ३७ ॥ हा रामेति । हा रामेति परिदेवनप्रकारः । राममातेत्यत्रापि हेत्यनुषञ्जनीयम् । सन्धिरार्षः । राममातरित्यर्थः ।

दृष्ट्वा तु नृपतिः श्रीमानेकचित्तगतं पुरम् । निपपातैव दुःखेन हतमूल इव द्रुमः ॥ ३६ ॥ ततो हलहलाशब्दो जज्ञे रामस्य पृष्ठतः । नराणां प्रेक्ष्य राजानं सीदन्तं भृशदुःखितम् ॥ ३७ ॥ हा रामेति जनाः केचिद्राममातेति चापरे । अन्तःपुरं समृद्धं च क्रोशन्तः पर्यदेवयन् ॥ ३८ ॥ अन्वीक्षमाणो रामस्तु विषण्णं भ्रान्तचेतसम् । राजानं मातरं चैव ददर्शानुगतौ पथि ॥ ३९ ॥ स बद्ध इव पाशेन किशोरो मातरं यथा । धर्मपाशेन संक्षिप्तः प्रकाशं नाभ्युदैक्षत ॥ ४० ॥ पदातिनौ च यानार्हावदुःखार्हौ सुखोचितौ । दृष्ट्वा संचोदयामास शीघ्रं याहीति सारथिम् ॥ ४१ ॥ न हि तत् पुरुषव्याघ्रो दुःखजं दर्शनं पितुः । मातुश्च सहितुं शक्तस्तोत्रार्दित इव द्विपः ॥ ४२ ॥ प्रत्यगारमिवायान्ती वत्सला वत्सकारणात् । बद्धवत्सा यथा धेनू राममाताऽभ्यधावत ॥ ४३ ॥ तथा रुदन्तीं कौसल्यां रथं तमनुधावतीम् । क्रोशन्तीं रामरामेति हा सीते लक्ष्मणेति च ॥ ४४ ॥

जनाः क्रोशन्तः रुदन्तः । पर्यदेवयन् अरुदन् । समृद्धम् अन्तःपुरम् । अन्तःपुरजनश्च पर्यदेवयदिति विपरिणामेनानुषङ्गः ॥ ३८ ॥ अन्वीक्षमाण इति । अन्वीक्षमाणः आक्रोशानुसारेण पश्चात्सामान्यत ईक्षमाणः ॥ ३९ ॥ स इति । किशोरोऽश्वबालः । संक्षिप्तः बद्ध इतियावत् । प्रकाशं नाभ्युदैक्षत अपाङ्गेनाभ्युदैक्षतेत्यर्थः ॥ ४० ॥ ४१ ॥ नहीति । सहितुं सोढुम् । तोत्रार्दितः वैणुकेन पीडितः । "तोत्रं वैणुकम्" इत्यमरः ॥ ४२ ॥ प्रत्यगारमिति । बद्धवत्सा वत्सकारणात् अगारं प्रत्यायान्ती धेनुरिव । वत्सला राममाता अभ्यधावत, रथमितिशेषः ॥ ४३ ॥ तथेत्यादि । नृत्यन्तीमिवेति तद्वदितस्ततः परिभ्रमन्ती

दृष्ट्वेति । एकचित्तगतम् एकचित्तत्वं प्राप्तम् ॥ ३६–३८ ॥ अन्वीक्षमाणः पश्चादीक्षमाणो रामः । पितरं मातरं च ददर्शेति सम्बन्धः ॥ ३९ ॥ स बद्ध इति । किशोरः बालाश्वः, संक्षिप्तः निबद्धः, प्रकाशं नाभ्युदैक्षत, सङ्कुचितदर्शनव्यापारो बभूवेत्यर्थः ॥ ४० ॥ पदातिनाविति । दृष्ट्वा रामः पितराविति शेषः ॥ ४१ ॥ न हीति । पितुः मातुश्च दुःखदं दर्शनं सहितुं न शक्तः, दुःखितौ पितरौ द्रष्टुं न शक्त इत्यर्थः । तोत्रं प्रतोदः (दुःखदमितिपाठः) ॥ ४२ ॥ प्रत्यगारमिति । अगारं प्रति वत्स कारणाव बद्धवत्सा धेनुर्यथा धेनुरिव । राममाता कौसल्या । अभ्यधावत राममिति शेषः ॥ ४३ ॥ ४४ ॥ स०—राममाता इत्यत्र हे राम ! मा अत मा गच्छ । माऽयं न माङ् ॥ ३८ ॥

मित्यर्थः ॥४४॥४५ ॥ तिष्ठेति । सुमन्त्रस्य आत्मा मनः चक्रयोरन्तरेव रथपूर्वपश्चाद्भागस्थितयोश्चक्रयोर्मध्यगतः पुरुष इव बभूव । दशरथरामवचनाभ्या मतिसङ्कटं प्राप्त इत्यर्थः ॥ ४६॥ राजवचनातिक्रमणे महान् दोषो भविष्यतीत्याशङ्कायामाह—नाश्रौषमिति । पुनरागमनानन्तरं राज्ञा किमर्थं मद्वाक्ये न



रामलक्ष्मणसीतार्थं स्रवन्तीं वारि नेत्रजम् । असकृत् प्रैक्षत सतां नृत्यन्तीमिव मातरम् ॥ ४५ ॥ तिष्ठेति राजा चुक्रोश याहियाहीति राघवः । सुमन्त्रस्य बभूवात्मा चक्रयोरिव चान्तरा ॥४६॥ नाश्रौषमिति राजानमुपालब्धोपि वक्ष्यसि । चिरं दुःखस्य पापिष्ठमिति रामस्तमब्रवीत्॥४७॥ रामस्य स वचः कुर्वन्ननुज्ञाप्य च तं जनम् । व्रजतोपि हयान् शीघ्रं चोदयामास सारथिः ॥ ४८ ॥ न्यवर्त्तत जनो राज्ञो रामं कृत्वा प्रदाक्षिणम् । मनसाप्यश्रुवेगैश्च न न्यवर्त्तत मानुषम् ॥ ४९ ॥

स्थितोऽसीति निन्दितोपि नाश्रौषं त्वद्वचनमिति वक्ष्यसि । किमर्थमेवमसत्यवचनम्?तत्राह चिरमिति। दुःखस्य इदानीमनुभूयमानदुःखस्य । चिरं विलम्बः पापिष्ठम् अतिदुस्सहम्॥४७॥ रामस्येति । तं जनं कौसल्यां परिवेष्ट्यागतमवरोधजनम् । अनुज्ञाप्य रामेणानुज्ञां प्रापय्येत्यर्थः॥४८॥ न्यवर्ततेति । राज्ञो जनः राजसम्बन्ध्यवरोधजनः । मानुषं मानुषाणां समूहः । समूहार्थेऽण्प्रत्ययः । मनसा अश्रुवेगैश्च निवृत्तावरोधजनस्य मनसा अश्रुवेगैश्च सह न न्यवर्ततेति

रामलक्ष्मणसीतार्थं तद्वियोगवशादित्यर्थः ॥ ४५ ॥ तिष्ठेति । चक्रयोर्युयुत्सुसेनयोः अन्तरास्थितः पुरुष इव सुमन्त्रस्य आत्मा मनः दशरथरामवचनाभ्यां डोलायितो बभूव ॥ ४६ ॥ राजवचनातिक्रमे महानपराधः स्यादित्यत आह—नेति । उपालब्धोपि मयि तिष्ठ तिष्ठेति पुनःपुनः क्रोशति सति मद्वचनं नाकार्षीरिति राज्ञा निन्दितोपीत्यर्थः । दुःखस्य इदानीमनुभूयमानदुःखस्य। चिरं चिरकालावस्थानं। पापिष्ठमतिदुस्सहमिति कृत्वा राज्ञा उपालब्धोपि नाश्रौषमिति पश्चाद्वक्ष्यसि, अतः शीघ्रं गच्छेति रामः तं सुमन्त्रमब्रवीदिति योजना ॥ ४७ ॥ रामस्येति । तं जनम् अनुव्रजन्तं पौरजनम् अनुज्ञाप्य, रामेणानुज्ञां प्रापय्येत्यर्थः । व्रजतोपि स्वतो गच्छतोपि हयान् पुनः शीघ्रगमनार्थं चोदयामास ॥४८॥ न्यवर्ततेति । राज्ञो जनः राजसम्बन्धी जनः, मानुषं मानुषाणां समूहः, पौरजनश्चेत्यर्थः । रामं प्रदक्षिणं कृत्वा न्यवर्तत, देहमात्रेणेत्यर्थः । अपि तु मनसाप्यश्रुवेगैश्च न न्यवर्ततेति योजना । यद्वा राज्ञो जनः राजसम्बन्धी अवरोधजनः उपजीविनो वा । रामं प्रदक्षिणं कृत्वा न्यवर्तत, देहमात्रेणेति शेषः । किन्तु मनसाप्यश्रुवेगैश्च न न्यवर्तत । मानुषं मानुषाणां समूहो मानुषम्, पौरजन इत्यर्थः । देहेन मनसाप्य

सम्बन्धः॥४९॥ कालोचितकर्तव्यज्ञाः साचिवाः शास्त्रार्थकथनेन राजानं निवर्तयन्ति—यमिच्छेदिति ॥५०॥ तेषामिति। व्यवस्थितः स्थितवान् ॥५१॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४१ ॥ तस्मिन्नित्यादि । कृताञ्जलौ मातृपरि

यमिच्छेत् पुनरायान्तं नैनं दूरमनुव्रजेत् । इत्यमात्या महाराजमूचुर्दशरथं वचः ॥ ५० ॥ तेषां वचः सर्वगुणोपपन्नं प्रस्विन्नगात्रः प्रविषण्णरूपः । निशम्य राजा कृपणः सभार्यो व्यवस्थितस्तं सुतमीक्षमाणः ॥ ५१ ॥
इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥
तस्मिंस्तु पुरुषव्याघ्रे विनिर्याते कृताञ्जलौ। आर्तशब्दोऽथ संजज्ञे स्त्रीणामन्तःपुरे महान् ॥१॥ अनाथस्य जनस्यास्य दुर्बलस्य तपस्विनः । यो गतिः शरणं चासीत् स नाथः क्व नु गच्छति ॥ २ ॥ न क्रुध्यत्यभिशप्तोपि क्रोधनीयानि वर्जयन् । क्रुद्धान् प्रसादयन् सर्वान् समदुःखः क्वचिद्गतः ॥ ३ ॥ कौसल्यायां महातेजा यथा मातरि वर्तते । तथा यो वर्त्ततेऽस्मासु महात्मा क्व नु गच्छति ॥ ४ ॥ कैकेय्या क्लिश्यमानेन राज्ञा सञ्चोदितो वनम् । परित्राता जनस्यास्य जगतः क्व नु गच्छति ॥५॥

वेष्टितं पितरमुद्दिश्य कृताञ्जलौ । अन्तःपुरे स्त्रीणां दशरथेन समागतानामन्तःपुरवासिनीनां स्त्रीणाम् ॥१॥ अनाथस्येति। तपस्विनः शोच्यस्य । गम्यत इति गतिः, प्राप्यइतियावत्। शरणं रक्षिता। "शरणं गृहरक्षित्रोः" इत्यमरः॥२॥ नेति । अभिशप्तः मिथ्याभिशंसनं प्रापितः। क्वचिदित्यस्य न क्रुध्यती

श्रुवेगैश्च न न्यवर्ततेति योजना । यद्वा निवृत्तस्यापि राजजनस्य मनश्चाश्रुवेगश्च न निवृत्ताः । एवं नागरजनः स्वयं न न्यवर्ततेत्यर्थः ॥ ४९ ॥ सचिवाः शास्त्रार्थकथनेन राजानं निवर्तयन्ति—यमिति ॥ ५०॥ तेषामिति । व्यवस्थितः अवस्थितः ॥ ५१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायां चत्वारिंशः सर्गः ॥ ४० ॥ तस्मिन्निति । कृताञ्जलौ मातृपरिवेष्टितं पितरमुद्दिश्य कृताञ्जलौ तस्मिन् रामे निर्याते नगरान्निर्गच्छति सति संजज्ञ इति सम्बन्धः ॥ १ ॥ तदेवाह—अनाथस्येति। गम्यत इति गतिः प्राप्यः । शरणं रक्षिता ॥ २ ॥ न क्रुध्यतीति । अभिशप्तः मिथ्याभिशंसनं प्रापितः । क्रोध

' स०—अजनस्य मुक्तसमूहस्य । जगतः अमुक्तवर्गस्य ॥ ५ ॥

त्यनेन सम्बन्धः ॥३-५॥ अहो इति। निश्चेतनः बुद्धिहीनः। प्रवत्स्यति प्रवासयति ॥६-८॥ नाग्निहोत्राणीति। नाहूयन्त अग्नीनामन्तर्द्धानाद्धोतॄणां व्यस नाचेति भावः। अन्तरधीयत निस्तेजस्कोऽभूदित्यर्थः ॥ ९ ॥ रामानु०—नाग्नीत्यादि। अग्निहोत्राणि नाहूयन्त अग्नीनामन्तर्धानाद्धोतॄणां व्यसनातिशयाच्च नाहूयन्तेत्यर्थः। सूर्यश्चान्तरधीयत सूर्यश्चास्तं गत इति वक्तव्ये अन्तरधीयतेत्यभिधानाद्रामवनगमनव्यसनकर्शितः सन् दिवसशेषे सत्यन्तर्धानं प्राप्तवानित्यवगम्यते। अत्र चकारोऽग्नीनामन्तर्धानं समुच्चिनोति॥९॥

अहो निश्चेतनो राजा जीवलोकस्य सम्प्रियम्। धर्म्यं सत्यव्रतं रामं वनवासे प्रवत्स्यति ॥ ६ ॥ इति सर्वा महिष्यस्ता विवत्सा इव धेनवः। रुरुदुश्चैव दुःखार्त्ताः सस्वरं च विचुक्रुशुः ॥ ७ ॥ स तमन्तःपुरे घोरमार्तशब्दं महीपतिः। पुत्रशोकाभिसन्तप्तः श्रुत्वा चासीत् सुदुःखितः ॥ ८ ॥ नाग्निहोत्राण्यहूयन्त नापचन् गृहमेधिनः। अकुर्वन्नप्रजाः कार्यं सूर्यश्चान्तरधीयत ॥९॥ व्यसृजन् कवलान्नागा गावो वत्सान्न पाययन्। पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनन्दत ॥१०॥ त्रिशङ्कुर्लोहिताङ्गश्च बृहस्पतिबुधावपि। दारुणाः सोममभ्येत्य ग्रहाः सर्वे व्यवस्थिताः ॥११

व्यसृजन्निति। पाययन् अपाययन्। आगमशासनस्यानित्यत्वादडभावः ॥ १० ॥ तनि०—पुत्रमिति। जननी नाभ्यनन्दतेति 'उत्सवेषु च सर्वेषु पितेव परि तुष्यति' इत्याद्युक्तरीत्या पुत्रजननमारभ्य पितृवदङ्कमारोप्य लालयितरि वनं गच्छति किमनेनेति व्यज्यते। प्रथमजमिति गुणवान् ज्येष्ठो रामः किल प्रव्राजितः। अस्य का गतिरिति। लब्ध्वेति षष्टिवर्षसहस्रपर्यन्तमपुत्रेण राज्ञातिक्लेशेन संपादितोऽप्येवं निर्वासितः। व्रतोपवासादिनियमेन बहुकालाल्लब्धो मत्पुत्रः कीदृशो भविष्यतीति ॥ १० ॥ त्रिशङ्कुरिति। त्रिशङ्कुः इक्ष्वाकुकुलकूटस्थः। लोहिताङ्गोऽङ्गारकः। बृहस्पतिबुधयोर्दारुणत्वं दारुणाङ्गारकसंयोगात् क्रूरस्थानगतत्वाद्वा। त्रिशङ्कोर्ग्रहत्वा नीयानि प्रजाक्रोधकराणि ॥ ३–५ ॥ अहो इति। निश्चेतनः बुद्धिहीनः। प्रवत्स्यति प्रवासयति ॥ ६–८ ॥ नाग्निहोत्राणीति। होतॄणां व्यसनातिशयादित्यर्थः। सूर्य श्चान्तरधीयतेति रामव्यसनकर्शितस्सन् दिवसशेषे सत्यपि अन्तर्धानं प्राप्तवानिति गम्यते ॥ ९ ॥ व्यसृजन्निति। व्यसृजन् त्यक्तवन्तः, नाग्निहोत्राण्यहूयन्ते त्यादिनैवमुक्तम्—रामस्य सर्वात्मनामात्मभूतत्वात्तस्य दुःखे सति सर्वस्यापि दुःखं भवति अत एवास्मिन् रामायणे यद्यत्प्रतिपाद्यते तत्सर्वं वास्तवमेवेत्यवगन्तव्यम्। न पाययन् नापाययन् ॥१० ॥ त्रिशङ्कुरिति। लोहिताङ्गः अङ्गारकः, बृहस्पतिबुधावपि। अन्ये ग्रहाः शनिशुक्रादयः। सोममभ्येत्य वक्रगत्या सोमं समाक्रम्य अत

स०—त्रिशङ्कुः त्रिषु द्वादशाष्टमजन्मस्थानेषु शङ्कुरिव शङ्कुः शनैश्चरः। "द्वादशाष्टमजन्मस्थाः शन्यर्काङ्गारका गुरुः" इत्यत्र प्रथमोद्दिष्टत्वादत्रापि तथा शनेर्ग्रहणम्। एतेन त्रिशङ्कोरग्रहत्वात्कथं सोमप्राप्ति रिति शङ्कानवकाशः ॥ ११ ॥

भावेपि च्छत्रिणो गच्छन्तीतिवद्व्यपदेशः। त्रिशङ्कोः सोमप्राप्तिः ऋजुदेशत्वेन ज्ञेया। ननु 'पूर्णे चतुर्दशे वर्षे पञ्चम्यां भरताग्रजः' इति वक्ष्यमाणरीत्या तत्रैव कदाचित्पुष्ययोगसम्भावनया च पञ्चम्यामभिषेक इतिसिद्धम्। तस्मिन्नेव च निर्गतः तथा च कर्कटकस्थे चन्द्रे कथं बुधसमागमः? तस्य सूर्यसमीप

नक्षत्राणि गतार्चींषि ग्रहाश्च गततेजसः। विशाखास्तु सधूमाश्च नभसि प्रचकाशिरे ॥ १२ ॥ कालिकानिलवेगेन महोदधिरिवोत्थितः। रामे वनं प्रव्रजिते नगरं प्रचचाल तत् ॥१३॥ दिशः पर्याकुलाः सर्वास्तिमिरेणेव संवृताः। न ग्रहो नापि नक्षत्रं प्रचकाशे न किञ्चन ॥ १४ ॥ अकस्मान्नागरः सर्वो जनो दैन्यमुपागमत्। आहारे वा विहारे वा न कश्चिदकरोन्मनः॥१५॥ शोकपर्यायसन्तप्तः सततं दीर्घमुच्छ्वसन्। अयोध्यायां जनः सर्वः शुशोच जगतीपतिम् ॥ १६ ॥ बाष्पपर्याकुलमुखो राजमार्गगतो जनः। न हृष्टो लक्ष्यते कश्चित्सर्वः शोकपरायणः ॥ १७ ॥ न वाति पवनः शीतो न शशी सौम्यदर्शनः। न सूर्यस्तपते लोकं सर्वं पर्याकुलं जगत् ॥ १८ ॥

वर्तित्वात्। उच्यते–प्राप्तिरत्र नैकराशिस्थितिः किंतु क्वचित् प्राप्तिः क्वचिद्दृष्टिरिति न दोषः, वक्रगत्या समागम इत्यप्याहुः ॥११॥ विशाखाः इक्ष्वाकुदेशनक्षत्रम्। सधूमा इत्यनेन भाविराजविपत् सूच्यते ॥ १२ ॥ कालिकेति। कालिकानिलवेगेन मेघजालयुक्तप्रभञ्जनवेगेन। "मेघजाले च कालिका" इत्यमरः। प्रचचाल व्यसनातिशयात्प्रकम्पितमभूत् ॥१३॥ दिश इति। ग्रहः जात्येकवचनम्, नवग्रहा इत्यर्थः। नक्षत्रम् अश्विन्यादि। न किंचित् प्रचकाशे सप्तर्षिध्रुवादिकं न प्रचकाश इत्यर्थः॥१४॥ अकस्मादिति। अकस्मात् रामप्रव्राजनव्यतिरिक्तबन्धुविश्लेषणादिकारणं विनेत्यर्थः ॥१५॥ शोकेति।

एव दारुणास्सन्तो व्यवस्थिताः ॥११॥ नक्षत्राणीति। विशाखाः इक्ष्वाकुकुलनक्षत्रं विशाखानक्षत्रादुत्पन्नसूर्यवंशजत्वादिक्ष्वाकोरित्याशयः। नक्षत्राणि गतार्चींषि जातानि। ग्रहाश्च विशाखाः विमार्गस्थाश्च सधूमाश्च अत एव गततेजसः नभसि प्रचकाशिर इत्यनेन राजविपत्सूच्यते ॥ १२ ॥ कालिकानिलवेगेन मेघपङ्क्तिसहितवायुवेगेन उत्थितो महोदधिरिवाभूदिति सम्बन्धः ॥ १३ ॥ ग्रहः जात्येकवचनम्, नवग्रहा इत्यर्थः। नक्षत्रम् अश्विन्यादि न किञ्चन प्रकाशे ॥ १४ ॥ अकस्मात् अकारणात् ॥ १५ ॥ शोकपर्यायसंतप्तः शोकपरम्परासंतप्त इत्यर्थः ॥ १५–१८ ॥

शोकपर्यायसन्तप्तः शोकपरम्परासन्तप्तः॥१६-१८॥ अनर्थिन इति। सुताः स्त्रीणामनर्थिनः मातॄणां स्तन्यं नापेक्षन्त इत्यर्थः। भर्तारः स्त्रीणामनर्थिनः। भ्रातरः अनर्थिनः अन्योन्यमितिशेषः। सर्वं अनुरक्ताः सर्वे ॥ १९ ॥ ये त्विति। शयनं मूर्च्छाशयनमित्यर्थः। येत्वित्यनेन पूर्वेभ्यो वैलक्षण्यमुच्यते। चक्रवर्ती गतिमनुमेने। श्रीकौसल्या मङ्गलाशासनमकरोत्। तथा न भवन्ति सुहृदः। तेषामेकोपि न किंचिदकार्षीत्। रामस्य सुहृदः पित्रोरपि गोप्यं



अनर्थिनः सुताः स्त्रीणां भर्त्तारो भ्रातरस्तथा। सर्वे सर्वं परित्यज्य राममेवान्वचिन्तयन् ॥ १९ ॥ ये तु रामस्य सुहृदः सर्वे ते मूढचेतसः। शोकभारेण चाक्रान्ताः शयनं न जहुस्तदा ॥ २० ॥ ततस्त्वयोध्या रहिता महात्मना पुरन्दरेणेव मही सपर्वता। चचाल घोरं भयशोकपीडिता सनागयोधाश्वगणा ननाद च ॥ २१ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

रामो येभ्यः प्रकाशयति तादृशाः सुशोभनहृदयाः सुहृदः, आत्मानं त्यक्त्वा राममेव रक्षन्त इत्यर्थः। सर्वे त इति तेषु कश्चिदप्यन्यादृशो नास्तीति भावः। यदि सुहृदस्तर्हि पादौ संगृह्य रामो निवर्त्यतामित्यत्राह-मूढचेतसः प्रसन्नबुद्धिभिः कर्तव्यं कथं बुद्धिहीनाः कुर्वन्तीति भावः। ज्ञानभ्रंशस्य हेतुमाह शोकेति। पर्वतेनेव शोकभारेणाक्रान्ताः शयनं न जहुः, पर्वताक्रान्ताः कथमुत्तिष्ठेयुरितिभावः। तदा पारवश्यकाले, न तु स्वयं। स्वबुद्ध्या शयाना ह्युत्तिष्ठन्ति ॥२०॥ तत इति। पुरन्दरेणेव महीति त्रैलोक्याधिपतित्वादुक्तम्। यद्वा पुरन्दरेण गोत्रभिदा हेतुना पर्वतसहिता मही यथा चलति तद्रक्षक रामविश्लेषेण गजाश्वसहितायोध्या भयेन चचालेत्यर्थः ॥२१॥ इति श्रीगोवि० श्रीरामा० पीता० अयोध्याकाण्डव्याख्याने एकचत्वारिंशः सर्गः॥४१॥

अनर्थिनः सुता इति। सुता अनर्थिनोऽनपेक्षिणोऽभवन्। मातापित्रोरिति शेषः। तथा स्त्रीणां भर्तारोऽनर्थिनोऽभवन्, भ्रातरश्चानर्थिनोऽभवन्। भ्रातॄणामितिशेषः। अयमर्थः-वनं गच्छन्तं रामं दृष्ट्वा कौसल्या न निवारितवतीति कृत्वा मातरो निष्प्रयोजना इति सुता जननीरत्यजन्, रामोपि मातरं मुक्त्वा वनं गत इति कृत्वा पुत्रेण नार्थ इति मातरः सुतानत्यजन्। भर्तारः पत्युपद्रवकारिणीं कैकेयीमवेक्ष्य स्वभार्या अत्यजन्। भार्या अपि कौसल्यामुपेक्ष्य तत्पुत्रं वनं गमयन्तं राजानमवेक्ष्य स्वभर्तॄनत्यजन्। भ्रातरोपि भरतं रामराज्यापहारहेतुं मत्वा भ्रातॄनत्यजन्। एवं कनीयांसोपि ज्येष्ठानत्यजन्निति। ततः सर्वे सर्वं परित्यज्य राम एव सर्वेषां नो बन्धुः किमन्यैरिति तमेवान्वचिन्तयन् अचिन्तयन् ॥ १९ ॥ ये त्विति। शयनं मूर्च्छया प्राप्तं भूशयनम् ॥ २० ॥ तत इति। पुरन्दरेण रहितेव सपर्वता मही चचाल। पुरन्दरस्य त्रिलोकपतित्वात्तद्राहित्ये पालकाभावाद्भूमेश्चलनं सिद्धमिति दृष्टान्तत्वम्। ननाद च दुःखाच्चक्रन्देत्यर्थः ॥ २१ ॥ इति श्रीमहेश्वरतीर्थ विरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां एकचत्वारिंशः सर्गः ॥ ४१ ॥

यावत्त्वित्यादि । निर्यतः निर्गच्छतः । तस्य रामस्य सम्बन्धि रजोरूपं रजस्स्वरूपं यावददृश्यत तावन्न सञ्जहार न निवर्तितवान् ॥ १ ॥ यावद्राजेति । पश्यति रजोद्वारेणेतिशेषः । पुत्रदर्शने पुत्रदर्शननिमित्तम् । धरण्यां रजो व्यवर्द्धत मन्निमित्तकेन पुत्रदर्शनेन राजा कश्चित्कालमाप्यायितो भवेदिति मत्वेव रजो व्यवर्द्धतेत्यर्थः । अथवा अस्य देहो व्यवर्द्धत पुत्रदर्शनायोत्थाय स्थित इत्यर्थः ॥ २ ॥ न पश्यतीति । आर्तः पीडितशरीरः । विषण्णः

यावत्तु निर्यतस्तस्य रजोरूपमदृश्यत । नैवेक्ष्वाकुवरस्तावत्सञ्जहारात्मचक्षुषी ॥ १ ॥ यावद्राजा प्रियं पुत्रं पश्यत्यत्यन्तधार्मिकम् । तावद्व्यवर्द्धतेवास्य धरण्यां पुत्रदर्शने ॥ २ ॥ न पश्यति रजोऽप्यस्य यदा रामस्य भूमिपः । तदार्तश्च विषण्णश्च पपात धरणीतले ॥ ३ ॥ तस्य दक्षिणमन्वागात् कौसल्या बाहुमङ्गना । वामं चास्यान्वगात् पार्श्वं कैकेयी भरतप्रिया ॥४॥ तां नयेन च सम्पन्नो धर्मेण विनयेन च। उवाच राजा कैकेयीं समीक्ष्य व्यथितेन्द्रियः ॥ ५ ॥ कैकेयि मा ममाङ्गानि स्प्राक्षीस्त्वं दुष्टचारिणी । न हि त्वां द्रष्टुमिच्छामि न भार्या न च बान्धवी ॥६॥ ये च त्वामनुजीवन्ति नाहं तेषां न ते मम । केवलार्थपरां हि त्वां त्यक्तधर्मां त्यजाम्यहम् ॥ ७ ॥ अगृह्णां यच्च ते पाणिमग्निं पर्यणयं च यत् । अनुजानामि तत्सर्वमस्मिँल्लोके परत्र च ॥ ८ ॥

दुःखितः ॥ ३ ॥ तस्येति । बाहुमन्वागात् उद्धरणार्थमितिभावः । भरतप्रिया प्रियभरता । पार्श्वमित्यनेन कौसल्यावत् बाहुं नालम्बितवतीति गम्यते ॥ ४ ॥ तामिति । नयेन नीत्या । विनयेन सदाचारेण ॥ ५ ॥ कैकेयीति । न भार्या न च बान्धवी, त्वमिति शेषः । न च बान्धवी पत्नीत्व सम्बन्धोपि नास्तीत्यर्थः । अण्णन्तत्वात् ङीप् ॥ ६ ॥ न केवलं त्वयि सम्बन्धाभावः, त्वत्सम्बन्धिष्वपि मम सम्बन्धो नास्तीत्याह—ये चेति । नाहं तेषामिति, प्रभुरिति शेषः । न ते मम शेषभूता इत्यर्थः ॥ ७ ॥ अग्निसाक्षिकमूढा कथं न भार्या स्यामित्यत्राह—अगृह्णामिति । पर्यणयं

यावदित्यादि । निर्यतस्तस्य सम्बन्धि रजसो रूपं यावददृश्यत तावदात्मचक्षुषी न सञ्जहारेति सम्बन्धः ॥१॥ यावद्राजेति । अत्र रजः कर्तृत्वेनानुषज्यते राजा पुत्रं यावत्पश्यति, रथधूलिदर्शनद्वारेति शेषः । तावत् अस्य राज्ञः पुत्रदर्शने पुत्रदर्शननिमित्तं धरण्यां रजो व्यवर्द्धतेव मन्निमित्तेन पुत्रदर्शनेन राजा कश्चित्कालमप्यप्याय्थितो भवेदिति मत्वेव व्यवर्धतेत्यर्थः ॥ २ ॥ रजसोप्यदर्शने तच्छरीरं पतितमभूदित्युच्यते—न पश्यतीत्यादि । रामस्य सम्बन्धि रजः ॥३॥ तस्य दक्षिणमुद्धृत्येति । तस्य दक्षिणं बाहुम् । उद्धृत्य गृहीत्वा, कौसल्या अन्वागात् स्वपुरं प्रति गम्यमानं तमनुससारेत्यर्थः । कैकेयी त्वस्य वामपार्श्वमेव केवलमन्वगात् ॥४॥५ ॥ तदेवाह—कैकेयीति ॥ ६ ॥ ७ ॥ न केवलमैहिकव्यवहारस्य त्यागः, अपि तु पारलौकिकस्यापीत्याह—अगृह्णामित्यादि । यच्च ते पाणिमगृह्णां, यच्च त्वामग्निं पर्यणयं प्रदक्षिण

प्रदक्षिणमनयम् । अनुजानामि परित्यजामीत्यर्थः । इह लोके परत्र च ऐहिकमामुष्मिकं च सर्वं त्वत्सम्बन्धेनागतं त्यजेयमित्यर्थः ॥ ८ ॥ भरत इति । प्रतीतः प्रमुदित इत्यर्थः । पित्रर्थं यदुदकादिकं दद्यात् तद्दत्तं मां मागमत्, नोपतिष्ठेदित्यर्थः ॥ ९ ॥ अथेति । न्यवर्त्तत तेन सहेति

भरतश्चेत् प्रतीतः स्याद्राज्यं प्राप्येदमव्ययम् । यन्मे स दद्यात्प्रीत्यर्थं मां मा तद्दत्तमागमत् ॥ ९ ॥ अथ रेणुसमुध्वस्तं तमुत्थाप्य नराधिपम् । न्यवर्त्तत तदा देवी कौसल्या शोककर्शिता ॥ १० ॥ हत्वेव ब्राह्मणं कामात् स्पृष्ट्वाग्निमिव पाणिना । अन्वतप्यत धर्मात्मा पुत्रं सञ्चिन्त्य तापसम् ॥ ११ ॥ निवृत्त्यैव निवृत्त्यैव सीदतो रथवर्त्मसु । राज्ञो नातिबभौ रूपं ग्रस्तस्यांशुमतो यथा ॥ १२ ॥ विललाप च दुःखार्त्तः प्रियं पुत्रमनुस्मरन् । नगरान्तमनुप्राप्तं बुद्ध्वा पुत्रमथाब्रवीत् ॥ १३ ॥ वाहनानां च मुख्यानां वहतां तं ममात्मजम् । पदानि पथि दृश्यन्ते स महात्मा न दृश्यते ॥ १४ ॥ यः सुखेषूपधानेषु शेते चन्दनरूषितः । वीज्यमानो महार्हाभिः स्त्रीभिर्मम सुतोत्तमः ॥ १५ ॥ स नूनं क्वचिदेवाद्य वृक्षमूलमुपाश्रितः । काष्ठं वा यदि वाश्मानमुपधाय शयिष्यते ॥ १६ ॥

शेषः ॥ १० ॥ हत्वेति । तापसं तापसवेषधारिणम् ॥ ११ ॥ निवृत्त्येति । ग्रस्तस्य राहुग्रस्तस्य ॥१२–१४॥ य इति । वीज्यमानः चामरव्यजनादिभि

मनयम् अग्निसाक्षिकं ते तव पाणिमगृह्णामित्यर्थः । इह लोके परत्र च तत्सर्वमनुजानामीत्यन्वयः । अस्यार्थः–इह लोके तत्सर्वमनुजानामि त्यजामि, इतःपरं त्वया सह क्रीडादिव्यवहारं त्यजामीत्यर्थः। परलोके त्यजामीति इतःपरं परलोकार्थं त्वया सह अग्निहोत्रादिकर्म त्यजामीत्यर्थः ॥८॥ रामप्रव्राजनानन्तरं कैकेयीसम्पादित राज्यलाभेन भरते तुष्टे स्वस्य मरणं निश्चित्याह–भरत इति । भरतः राज्यं प्राप्य, प्रतीतः स्यात् सन्तुष्टः स्याच्चेत्ततो मे मम मरणानन्तरम् स भरतः पित्रर्थं मे यद्दद्यात् तद्दत्तं मां मागमदित्यन्वयः ॥ ९ ॥ अथेति । अथरेणुसमुध्वस्तम्, सम्मार्जितरेणुमित्यर्थः ॥ १० ॥ ११ ॥ निवृत्त्येति । ग्रस्तस्य राहुग्रस्तस्य ॥१२–१८॥

कतक०–अनुजानामीत्यादिसार्धश्लोक एकं वाक्यम् । तत्पूर्वार्द्धे त्यजामीत्यस्यानुकर्षः । तत्तृतीयार्धे 'यन्मे स दद्यात्पित्रर्थं मामतद्दत्तमागमत्' इति पाठः । स दद्याद्यदिति चात्रर्तते । भरतस्त्वया प्रापितं राज्यं प्राप्य प्रतीतः विवेकवान् सन् यत् प्राप्तं राज्यं तत् स पित्रर्थं पितुर्मम प्रीतिसम्पादनाय यदि दद्यात् त्यजेत्, मां च अतद्दत्तं न कृतं तस्मै दत्तं दानं राज्यस्य येन तादृशं मां प्रीत्या पूर्ववदागमत् प्राप्नुयाच्चेत् तदा यत् स मे दद्यात् अस्मिँल्लोके विहारशय्याभोजनादि परत्र च परलोके पिण्डदानादि तत्सर्वमनुजानामि अङ्गीकरोमि, अन्यथा तं त्यजाम्येवेत्यर्थः ॥ स०–प्रतीतः, अहमिति शेषः । अहं यदि प्रतीतः मृतः स्यां तदा भरतः प्रतीतः हृष्टः सादरो वा । एतदव्ययं राज्यं प्राप्य पित्रर्थं यद्दद्यात् तन्मा मां मागतं न प्राप्नोतु । "प्रतीतः सादरे हृष्टे" इति "वाच्यवत्स्यात्प्रतीतं प्रोक्षितेऽपि च" इति च विश्वः ॥ ९ ॥

रितिशेषः। स्त्रीभिः परिचारिकाभिः ॥ १५ ॥ १६ ॥ उत्थास्यतीति। प्रस्रवणात् निर्झरात्, तत्समीपादित्यर्थः। "उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः" इत्यमरः ॥ १७ ॥ द्रक्ष्यन्तीति। अनाथवत् गच्छन्तमित्यन्वयः ॥ १८ ॥ सेति। सुखसदोचिता सुखस्य सदोचिता। कण्टकेष्वाक्रमणं पद

उत्थास्यति च मेदिन्याः कृपणः पांसुकुण्ठितः। विनिश्वसन् प्रस्रवणात् करेणूनामिवर्षभः ॥ १७ ॥ द्रक्ष्यन्ति नूनं पुरुषा दीर्घबाहुं वनेचराः। राममुत्थाय गच्छन्तं लोकनाथमनाथवत् ॥ १८ ॥ सा नूनं जनकस्येष्टा सुता सुखसदोचिता। कण्टकाक्रमणाक्रान्ता वनमद्य गमिष्यति ॥ १९ ॥ अनभिज्ञा वनानां सा नूनं भयमुपैष्यति। श्वापदानर्दितं श्रुत्वा गम्भीरं रोमहर्षणम् ॥ २० ॥ सकामा भव कैकेयि विधवा राज्यमावस। न हि तं पुरुषव्याघ्रं विना जीवितुमुत्सहे ॥ २१ ॥ इत्येवं विलपन् राजा जनौघेनाभिसंवृतः। अपस्नात इवारिष्टं प्रविवेश पुरोत्तमम् ॥ २२ ॥ शून्यचत्वरवेश्मान्तां संवृतापणदेवताम्। क्लान्तदुर्बलदुःखार्त्तां नात्याकीर्णमहापथाम् ॥ २३ ॥

विक्षेपः ॥ १९ ॥ अनभिज्ञेति। श्वापदानर्दितं श्वापदाः व्याघ्रादिहिंस्रपशवः तेषाम् आनर्दितं शब्दम् ॥ २० ॥ २१ ॥ इतीति। अपस्नातः मृतस्नातः। "अपस्नातो मृतस्नातः" इत्यमरः। अरिष्टमशुभम् "अरिष्टे तु शुभाशुभे" इत्यमरः। ननु राममनुगम्य पुनः पुरप्रवेशसमये अपस्नातोरिष्टमिति कथमश्लीलमुक्तम्? सत्यम्; दशरथो हि तदानीं नूनं भयमुपैष्यतीत्यादिना सीताविपत्तिं शङ्कमानस्तद्वारा रामविपत्तिं तन्मुखेन स्वस्यापि विनाशं शङ्कितवान् अत एव सीताद्वारा रामविपत्तिशङ्कया सकामा भव कैकेयीत्युक्तवान्, स्वविनाशाभिप्रायेण विधवा राज्यमावसेत्युपदर्शितवांश्च। तेनापस्नातइवेत्युक्तिः राजबुद्ध्यनुसारादुचितैव ॥ २२ ॥ शून्येत्यादि। शून्यचत्वरवेश्मान्तां निर्जनचतुष्पथगृहद्वाराम्। संवृतापणदेवतां पिहितापणदेवतागृहद्वाराम्।

सा नूनमिति। सुखसदोचिता सुखस्य सदा उचिता ॥ १९ ॥ अनभिज्ञेति। श्वापदानर्दितम् श्वापदानां व्याघ्रादिहिंस्रपशूनाम् आनर्दितं शब्दम् ॥२०॥२१॥ इतीति। अपस्नातः मृतस्नातः। अरिष्टं सूतिकागृहं, तद्वत्कश्मलम् ॥ २२ ॥ तदेव प्रदर्श्यते—शून्येति। शून्याः सम्मार्जनरहिताः चत्वरं चतुष्पथम् वेश्मनामन्ताः मध्यप्रदेशाश्च यस्यां तां तथोक्ताम्। संवृतापणदेवतां पिहितापणदेवतागृहामित्यर्थः। क्लान्ताः दुर्बलाः दुःखार्ताश्च जना यस्यां तथा। नात्याकीर्णः अत्यन्तप्राणि

क्लान्तदुर्बलदुःखार्तां चिन्तातिरेकेण क्लान्ता रामविरहेण निस्सत्त्वाः दुःखार्तांश्च जनाः यस्यां तथा । अनेन सञ्चारक्षमाः सर्वे राममनुगता इति द्योत्यते । नात्याकीर्णमहापथां क्वचित्क्वचित् दृश्यमानजनयुक्तमहापथामित्यर्थः । अवान्तरमार्गास्तु केवलं निर्जना इतिभावः ॥ २३ ॥ २४ ॥



तामवेक्ष्य पुरीं सर्वां राममेवानुचिन्तयन् । विलपन् प्राविशद्राजा गृहं सूर्य इवाम्बुदम् ॥२४॥ महाह्रदमिवाक्षोभ्यं सुपर्णेन हृतोरगम् । रामेण रहितं वेश्म वैदेह्या लक्ष्मणेन च ॥ २५ ॥ अथ गद्गदशब्दस्तु विलपन् मनुजाधिपः । उवाच मृदु मन्दार्थं वचनं दीनमस्वरम् ॥ २६ ॥ कौसल्यायाः गृहं शीघ्रं राममातुर्नयन्तु माम् । न ह्यन्यत्र ममाश्वासो हृदयस्य भविष्यति ॥२७॥ इति ब्रुवन्तं राजानमनयन् द्वारदर्शिनः । कौसल्यायाः गृहं तत्र न्यवेश्यत विनीतवत् ॥ २८ ॥ ततस्तस्य प्रविष्टस्य कौसल्यायाः निवेशनम् । अधिरुह्यापि शयनं बभूव लुलितं मनः ॥२९॥ पुत्रद्वयविहीनं च स्नुषयापि विवर्जितम् । अपश्यद्भवनं राजा नष्टचन्द्रमिवाम्बरम् ॥ ३० ॥ तच्च दृष्ट्वा महाराजो भुजमुद्यम्य वीर्यवान् । उच्चैःस्वरेण चुक्रोश हा राघव जहासि माम् ॥ ३१ ॥

कीदृशं प्राविशदित्यपेक्षयामाह–महाह्रदमिति । अक्षोभ्यं सोरगतया । प्राविशदित्यनुषङ्गः ॥ २५ ॥ अथेति । गद्गदः शब्दो यस्य स तथोक्तः । मृदु उपांशु । मन्दार्थमल्पार्थम्, शब्दप्रपञ्चवदित्यर्थः । अस्वरं कण्ठस्वररहितम् ॥२६॥ कौसल्याया इति । नयन्तु, द्वारदर्शिन इति शेषः । अन्यत्र तद्व्यतिरिक्तस्त्रीगृहे ॥२७॥ इतीति । द्वारदर्शिनः मार्गप्रदर्शकाः द्वारपालकाः । न्यवेश्यत निवेशितः । विनिवत् विनीतार्हम् ॥२८॥ तत इति । लुलितं कलुषितमिति यावत् ॥ २९ ॥ पुत्रेति । नष्टचन्द्रमुपलक्षणमेतत्, चन्द्रनक्षत्रताराहीनमित्यर्थः ॥ ३० ॥ तनि०–दृष्टान्ताविरोधाय नष्टनक्षत्रतारकमित्यध्याहार्यम् ॥ ३० ॥ ३१ ॥

सम्मर्दरहितो महापथो यस्यां ताम् । अनेन सञ्चारक्षमाः सर्वे राममनुगता इति द्योत्यते ॥ २४ ॥ सुपर्णेन हृतोरगमिति रिपूणां निर्भयप्रवेशमात्रे दृष्टान्तः ॥ २५ ॥ अथेति । मृदु मन्दोच्चरितम्, मन्दार्थम् अबुद्धार्थम् । दीनं शोच्यम् । अस्वरं शुद्धकण्ठध्वनिरहितम् ॥ २६ ॥ २७ ॥ द्वारदर्शिनः द्वारपालाः, विनीतवत् विनीताः सन्तः, कौसल्याया गृहमनयन् तत्र तैर्न्यवेश्यन्त । भवार्थे यक् । ते द्वारपाला अपि तत्रैव स्थिता इत्यर्थः ॥ २८ ॥ तत इति । लुलितं कलुषितम् ॥ २९–३१ ॥

सुखिता इति । तं कालं तस्मिन् काले तावत्कालमिति वा ॥ ३२ ॥ अथेति । कालरात्र्यां संहाररात्र्याम् । प्रपन्नायां प्राप्तायाम् ॥ ३३ ॥ राममिति । राममनुगता दृष्टिः, समुद्रगृहीतं पुनः किं निवर्त्तते ? मे दृष्टिः षष्टिवर्षसहस्रं कृतोपवासादिकं निवर्तते अद्यापि न निवर्त्तते तद्दर्शनाभावेपि तन्मातृ त्वद्दर्शनं कर्तुमुचिते कालेपि न निवर्तते । न त्वा पश्यामि कौसल्ये रामदर्शनं विना कैकेयीमुखदर्शनपापनिवृत्तये त्वन्मुखं द्रष्टुमुत्सुकोऽस्मि तदपि न

सुखिता बत तं कालं जीविष्यन्ति नरोत्तमाः । परिष्वजन्तो ये रामं द्रक्ष्यन्ति पुनरागतम् ॥ ३२ ॥
अथ रात्र्यां प्रपन्नायां कालरात्र्यामिवात्मनः । अर्द्धरात्रे दशरथः कौसल्यामिदमब्रवीत् ॥ ३३ ॥
रामं मेऽनुगता दृष्टिरद्यापि न निवर्त्तते । न त्वा पश्यामि कौसल्ये साधु मा पाणिना स्पृश ॥ ३४ ॥

लब्धम् । साधु मा पाणिना स्पृश नित्यानुमेयानीन्द्रियाणि कार्यकल्प्यानि । रूपग्रहणाभावात् चक्षुरिन्द्रियं गतमित्यवगतम् । त्वगिन्द्रियमस्ति नवेति सम्प्रति जानीहि,साधु कैकेय्या कृतसङ्केतो रामं निर्यापितवान् अद्य किंचिदभिनयं करोतीति न मन्येथाः अयमज्ञानादेवं कृतवानिति समनस्कतया स्पृश । यद्वा मां पाणिना स्पृश, राममातृत्वात् तव पाणिस्पर्शनं रामस्पर्शनमिति भावः ॥३४॥ तनि०—पञ्चेन्द्रियाणां प्रत्येकमनन्यार्हशेषत्वमुच्यते-राममिति । रामं गुणसागरं, न निर्वतते समुद्रगृहीतं पुनरायाति किम् ? 'समुद्र इव गांभीर्ये । गुणानामाकरो महान्' इति समुद्रस्थानत्वमुक्तम् । यद्वा रामं मेऽनुगता दृष्टिः-'रामं रमयतां वरम्' इति चेतनाचेतनविभागानादरेण रमयितृत्वगुणस्स खलु, सर्वत्र चक्षुः खलु रूपग्राहकम् । अत्र तु रामे रूपं चक्षुर्ग्राहकम् अनुगतपदार्थदर्शनसमर्थं चक्षुरधुना सञ्चारक्षमं जातम् । "कामरूप्यनुसञ्चरन्" इत्याद्युक्तचेतनकृत्यमचेतनं करोति । देशविशेषे परमपदे क्रियमाणमनुसञ्चरणं संसारचक्रे रामं प्रति क्रियते । यद्वा दृष्टिः राममनुगता ।

सुखिता इति । ये नरोत्तमाः तं कालं तावत्कालपर्यन्तं जीविष्यन्ति ते सुखिताः । अन्योऽन्यं परिष्वजन्तः पुनरागतं रामं द्रक्ष्यन्तीति योजना ॥ ३२ ॥ अथेति । कालरात्र्यां संहाररात्र्याम् ॥ ३३ ॥ न त्वामिति । हे कौसल्ये ! त्वां न पश्यामि, अतस्त्वं मां पाणिना साधु सम्यक् स्पृश, कुतः ? मे दृष्टिः अद्यापि न निवर्तते, तत्कुतः ? राममनुगता " रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि । इति रामपदेनासौ परब्रह्माभिधीयते " इति श्रुतेः । अतः अद्यापि न निवर्तत इति सम्बन्धः । अयं भावः—चक्षुषो रामैकप्रवणत्वभाग्यलाभवत्सर्वेन्द्रियाणां तादृग्भाग्यं यदि लभ्येत तदानीं मदन्यो धन्यो न कोऽपीति मनसि निधाय सर्वेन्द्रियाणां तत्प्रार्थयन्

स०—त्वां न पश्यामि । तत्र हेतुमाह—राममिति । न निवर्तते अतो न पदार्थान्तरं दृश्यते ॥ ३४ ॥

"चक्षुर्देवानामुत मर्त्यानाम्" इति देवमनुष्यादिदृष्टिभूतो रामः पुरतो गच्छति अहं तिष्ठामि वेत्यनुगता दृष्टिः 'दृशिर्प्रेक्षणे' इति निष्पन्ना सारासारविवेकशालिनी विशेषग्रहण शक्ता राममनुगता। मम हितकारिणी स्वहितं न करोति किम्, अस्वतन्त्रा मे दृष्टिः कथमेवं स्वातन्त्र्यं कृतवती शेष्यतिशयाधानं खलूचितं शेषवस्तुनः। यद्वा मे दृष्टिः राम मनुगता मम चिरपरिचिता मां विहाय राममनुगतेत्यभिसारिकासमाधिः। यद्वा मे दृष्टिः, कैकेयीमन्थरादिदृष्टिश्चेदेवं न करोत्येव 'नन्दामि पश्यन्नपि दर्शनेन' इत्येकं चिरपरिचयं सम्पादितवानहं खलु। यद्वा मे दृष्टिः सर्वत्र विषयेषु चपलस्य मे दृष्टिः कथं चापल्यं न गच्छति ? विहाय गतामपि मे दृष्टिरित्यहमनुरक्तिं करोमि। मातरं विहाय पतिमनुसृतायां कन्यायां ममेयमित्यभिमानवत्। ममेन्द्रियं चेन्मामनुसृत्य तिष्ठेत् कथमन्यमनुसरेत्। स्वविषयानुसरणं न दोष इतिचेत्तत्राह—अद्यापि न निवर्तते। अतिक्रान्तेऽपि राघवे इति स्वगोचरातिक्रमेपि न निवर्तते, कैकेयीमुखनिरीक्षणव्रीडया किम् ? यद्वा "न च पुनरावर्तते" इत्युक्तापुनरावृत्तिं प्राप्ता किम् ? अनिवर्तने युक्तिमाह—न त्वा पश्यामीति। पुनरागता चेत्तव दर्शनं मम कथं न स्यात्। त्वां न पश्यामि स्वरेण पुरोवस्थितां निर्दिशामि। "न चक्षुषा पश्यति" इतिश्रुत्या तन्मुखदर्शना लाभेपि तन्मातुस्तव मुखं वा पश्यामीत्यभिलषितम्, तच्च न लब्धम्। राममनुगता दृष्टिः न त्वां पश्यामि, रामे निमग्ना दृष्टिः अन्यं स्पृशति किम्। चक्षुरिन्द्रिय नाशेपि वागिन्द्रियेण प्राणिमीत्याशयेनाह—कौसल्ये इति। 'एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते' इति व्यतिरेककाष्ठाभूतायाः कैकेय्याः। "किंपुनः प्रोषिते तात ध्रुवं मरणमेव मे" इत्यन्वयकाष्ठाभूता खलु त्वम्। कौसल्ये "कौसल्या लोकभर्त्तारं सुषुवे यं मनस्विनी" इति चिरकालप्रार्थनया लोकरक्षणार्थं संपादनं कृतम्। तदिदानीं तव दुःखाय जातं खलु। यद्वा कौसल्ये त्वां न पश्यामि अनर्थकरकैकेयीं पश्यच्च सुतद्दुःखनिवारणाय त्वां न पश्यति किम् ? रामविश्लेषासहनेन सीदन्त्याः दशरथ विश्लेषोपि भविष्यति वेति भीत्या निकटमागतामाह—साध्विति। मम कृत्स्नक्लेशनिवारणाय पाणिना मां संमृज्य आश्वासय। तवादर्शनेन चक्षुरिन्द्रियं गतमिति निश्चिनोमि। तव वाक्यश्रवणेन श्रोत्रेन्द्रियं तिष्ठतीति जानामि। कौसल्ये इत्युक्त्या वागिन्द्रियमपि तिष्ठतीति निश्चिनोमि। गन्धग्रहणाभावेन राममूर्द्धोपाघ्राणाय घ्राणेन्द्रियं गतमिति निश्चिनोमि। महाविषयलाभेन तदितरविषयस्यातितुच्छत्वात्स्पर्शेन्द्रियं गतं वा तिष्ठति वेति निश्चेतव्यम्। तस्करः गृहं प्रविश्य कानिचिद्वस्तूनि गृहीत्वा गमनानन्तरं गृहपति रन्धकारे किं किं गतमिति तत्तद्वस्तु स्पृशन् पत्न्यादीन्पृच्छति तत्समाधिरत्र द्योत्यते। साधु स्पृश-प्रकृतिसम्बन्धकृतं कालुष्यमिदं स्थिरं न भवति अतः अजुगुप्स नेन स्पृश। पाणिना स्पृश अग्निसाक्षिकं प्रीतिपूर्वकं यथा स्पृष्टं तथा स्पृश, रामसंस्पर्शान्वयव्यतिरेकाधीनान्वयव्यतिरेकजीवनं मां तत्प्रतिनिधितया तन्माता त्वं स्पृश। भगवत्स्पर्शालाभे तत्संबन्धिस्पर्शेनापि जीवितुं शक्यम् "वाहि वात यतः कान्ता—" इतिवत्। जन्मान्तरसुकृतवशेन श्रीरामे अतीव परत्वज्ञानमस्तु वा दशरथस्य कौसल्यायाश्च। कथमुभयोः रामपरत्वानुसन्धानपूर्वकसंभाषणमित्युक्तौ ऋषिरेव दशरथादिवचनरीत्या पुनःपुनः परत्वानुसन्धानं करोतीति सम्प्रदायः ॥ ३४ ॥

तमिति । उपोपविश्य शयनसमीपे उपविश्येत्यर्थः ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥ तत इत्यादि ॥१॥ राघव इति । विजिह्मतां विषं कौटिल्यरूपं विषम् । राघवे उप्त्वा निक्षिप्य । निर्मुक्ता मुक्तकञ्चुकी

तं राममेवानुविचिन्तयन्तं समीक्ष्य देवी शयने नरेन्द्रम् । उपोपविश्याधिकमार्तरूपा विनिश्वसन्ती विललाप कृच्छ्रम् ॥ ३५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे द्विचत्वारिंशः सर्गः ॥४२॥

ततः समीक्ष्य शयने सन्नं शोकेन पार्थिवम् । कौसल्या पुत्रशोकार्ता तमुवाच महीपतिम् ॥ १ ॥ राघवे नरशार्दूले विषमुप्त्वा विजिह्मताम् । विचरिष्यति कैकेयी निर्मुक्तेव हि पन्नगी ॥ २ ॥ विवास्य रामं सुभगा लब्धकामा समाहिता । त्रासयिष्यति मां भूयो दुष्टाहिरिव वेश्मनि ॥ ३ ॥ अथ स्म नगरे रामश्चरन् भैक्षं गृहे वसेत् । कामकारो वरं दातुमपि दासं ममात्मजम् ॥ ४ ॥ पातयित्वा तु कैकेय्या रामं स्थानाद्यथेष्टतः । प्रदिष्टो रक्षसां भागः पर्वणीवाहिताग्निना ॥ ५ ॥

" निर्मुक्तो मुक्तकञ्चुकः " इत्यमरः । अनेन क्रौर्यातिशय उक्तः ॥ २ ॥ ३ ॥ अथ स्मेति । अथापि भरते राज्यदानस्यावश्यकत्वेपि । रामो नगरे भैक्षं चरन् सन् गृहे वसेत्, वने विवासनं किमर्थम् ? राज्याभावेपि ममात्मजं भरतस्य दासं दातुं कामकारः इच्छा । वरं वनवासाच्छ्रेष्ठतमः ॥ ४ ॥ पातयित्वेति । रामं स्वस्थानात् यथेष्टतः स्वेच्छया अमर्यादया पातयित्वा त्वया रामाय प्रदेयो राज्यभागः कैकेय्याः प्रदिष्टः । कथमिव आहिताग्निना आदौ तावत् त्वचः तदस्ति नास्ति वेति निश्चेतुं मां स्पृशेति कौसल्यां नियोजयति ॥ ३४ ॥ तमिति । उपोपविश्य शयनसमीपे उपविश्येत्यर्थः ॥ ३५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां द्विचत्वारिंशः सर्गः ॥ ४२ ॥ १ ॥ राघव इति । विजिह्मतां विषं कौटिल्यरूपं विषम्, उप्त्वा निक्षिप्य, निर्मुक्ता मुक्तकञ्चुकी पन्नगीव ॥ २ ॥३॥ अथेति । अन्नमदत्त्वा वरं ममात्मजं कैकेय्या दासमपि दातुं कामकारः मम इष्टाचरणमेव । कुतः ? अथ अन्नरहितदासकरणानन्तरम् । रामः नगरे भैक्षं चरन् गृहे वसेत् स्म । वसेत्खल्विति योजना ॥४॥ पातयित्वेति । पर्वणि आहिताग्निना प्रदिष्टो रक्षोभागत्वेनोप

स०—भिक्षाणां समूहो भैक्षम् । भिक्षादिभ्योऽण् । चरन् अटन् यदि गृहे वसेत् तर्हि वरम् उत्तमम् । ममात्मजमपि दासं दातुं मम कामकारः अपेक्षिताचरणम् । दासस्सन्नपि यदि पुरे वसेद्रामस्तर्हि तदेव ममेष्टम् । तद्वियोगशोकाभावादितिभावः ॥ ४ ॥

पर्वणि देवेभ्यो देयः हविर्भागः पुरोडाशैकदेशः रक्षसामिव, सर्वथानुचितं त्वया कृतमितिभावः ॥ ५ ॥ ६ ॥ वन इति । वने अदृष्टदुःखानाम् अदृष्ट वनदुःखानामित्यर्थः । कैकेय्यानुमते कैकैय्या अनुमते स्थितेनेतिशेषः । सवर्णदीर्घ आर्षः । त्यक्तानां सीतारामलक्ष्मणानाम् ॥ ७ ॥ त इति ।

गजराजगतिर्वीरो महाबाहुर्धनुर्धरः । वनमाविशते नूनं सभार्यः सहलक्ष्मणः ॥६॥ वने त्वदृष्टदुःखानां कैकेय्यानुमते त्वया । त्यक्तानां वनवासाय का न्ववस्था भविष्यति ॥ ७ ॥ ते रत्नहीनास्तरुणाः फलकाले विवासिताः । कथं वत्स्यन्ति कृपणाः फलमूलैः कृताशनाः ॥ ८ ॥ अपीदानीं स कालः स्यान्मम शोकक्षयः शिवः । सभार्य्यं यत्सह भ्रात्रा पश्येयमिह राघवम् ॥ ९ ॥ सुप्त्वेवोपस्थितौ वीरौ कदायोध्यां गमिष्यतः । यशस्विनी हृष्टजना सूच्छ्रित ध्वजमालिनी ॥१०॥ कदा प्रेक्ष्य नरव्याघ्रावरण्यात् पुनरागतौ । नन्दिष्यति पुरी हृष्टा समुद्र इव पर्वणि ॥११॥

रत्नहीनाः श्रेष्ठवस्तुहीनाः । " रत्नं स्वजातिश्रेष्ठेपि " इत्यमरः । प्रवरशय्यासनादिहीना इत्यर्थः । तरुणी च तरुणौ च तरुणाः । " पुमान् स्त्रिया " इत्येकशेषः । फलकाले फलभोगकाले ॥ ८ ॥ अपीति । स कालः वनात्प्रत्यागमनकालः । अपिः संभावनायाम् । इदानीमद्यादिने स्यात् स्यात्किमित्यर्थः । शोकक्षयः शोकक्षयकरः । यत् यस्मिन्काले ॥ ९ ॥ सुप्त्वेति । उपस्थितौ नगरसमीपमागतौ ॥ १० ॥ कदेति । पुरी

कल्पितः पुरोडाश इव कैकेय्या रामं स्थानाद्राज्यात् स्वगृहावस्थानाद्वा, यथेष्टतः यथेच्छं पातयित्वा रक्षसां भागः प्रदिष्टः, प्रक्षिप्त इत्यर्थः । त्वयेति शेषः । यद्वा पातयित्वेति कैकेय्या कर्त्र्या रामः स्वस्थानाद्राज्यात् पातयित्वा भ्रंशयित्वा रक्षसां भागस्सन् यथेष्टतः यथेच्छम्, प्रदिष्टः विनियुक्तः । प्रविद्ध इति पाठे-क्षिप्त इत्यर्थः । अत्र दृष्टान्तमाह पर्वणीति । पर्वणि दर्शपूर्णमासरूपपर्वणि, आहिताग्निना व्रीहिगततुषजालमिति शेषः । रक्षसां भाग इवेति पर्वण्याहिताग्निना व्रीहिगत तुषजालं यथा रक्षोभागत्वेन प्रदिष्टं तथा कैकेय्यापि रामो राक्षसभागत्वेन नियुक्त इति भावः । अत एव दर्शपूर्णमासानुक्रमणिकायां ' रक्षोभ्यः स्वाहा रक्षोभ्य इदं न मम ' इत्युद्देश्यत्यागः ॥ ५ ॥ ६ ॥ वने त्विति । कैकेय्यानुमते, स्थितेनेति शेषः ॥७॥ त इति । तरुणाः तरुणी च तरुणौ च तरुणाः । फलकाले युवावस्थत्वेन राज्यभोगानुभवकाले ॥ ८ ॥ अपीतिं । यत् यस्मिन् काले, सभार्यं राघवं भ्रात्रा सह पुरे पश्येयं मम शोकक्षयकरः स कालः इदानीमपि इदानीमेव स्यादिति योजना ॥ ९ ॥ सुप्त्वैवेति । या यशस्विनी तामयोध्यामिति सम्बन्धः ॥ १०-१३ ॥

पौरजनः ॥ ११-१३ ॥ प्रविशन्ताविति । उदग्रायुधनिस्त्रिंशौ आयुधशब्देनात्र धनुरुच्यते । निस्त्रिंशः खड्गः " खड्गे तु निस्त्रिंशः " इत्यमरः ॥ १४ ॥ कदेति । द्विजातीनां ब्राह्मणानाम् । कन्याः सुमनसः पुष्पाणि फलानि च प्रदिशन्त्यः सत्यः पुरीं कदा प्रदक्षिणम् करिष्यन्ति । अयमौत्तराणां मङ्गला-

कदायोध्यां महाबाहुः पुरीं वीरः प्रवेक्ष्यति । पुरस्कृत्य रथे सीतां वृषभो गोवधूमिव ॥१२॥ कदा प्राणिसहस्राणि राजमार्गे ममात्मजौ । लाजैरवकिरिष्यन्ति प्रविशन्तावरिन्दमौ॥ १३॥ प्रविशन्तौ कदायोध्यां द्रक्ष्यामि शुभकुण्डलौ । उदग्रायुधनिस्त्रिंशौ सशृङ्गाविव पर्वतौ ॥ १४ ॥ कदा सुमनसः कन्या द्विजातीनां फलानि च । प्रदिशन्त्यः पुरीं हृष्टाः करिष्यन्ति प्रदक्षिणम् ॥ १५ ॥ कदा परिणतो बुद्ध्या वयसा चामरप्रभः । अभ्युपैष्यति धर्मज्ञस्त्रिवर्ष इव लालयन् ॥१६॥ निस्संशयं मया मन्ये पुरा वीर कदर्यया । पातुकामेषु वत्सेषु मातॄणां शासिताः स्तनाः ॥ १७ ॥ साहं गौरिव सिंहेन विवत्सा वत्सला कृता । कैकेय्या पुरुषव्याघ्र बालवत्सेव गौर्बलात् ॥ १८ ॥ न हि तावद्गुणै र्जुष्टं सर्वशास्त्रविशारदम् । एकपुत्रा विना पुत्रमहं जीवितुमुत्सहे ॥ १९ ॥

चारः ॥ १५ ॥ कदेति । बुद्ध्या परिणतः, ज्ञानवृद्ध इत्यर्थः । वयसा च अमरप्रभः, पञ्चविंशतिवर्ष इत्यर्थः । अमरा हि सदा पञ्चविंशतिवर्षाः । लालयन् लालनां जनयन् ॥ १६ ॥ निस्संशयमिति । कदर्यया क्षुद्रया । पातुकामेषु स्तन्यपानकामेषु । शातिताः वियोजिता इतियावत् ॥ १७ ॥ साहमिति । बालवत्सा गौरिव वत्सला साहं सिंहेन गौरिव कैकेय्या बलाद्विवत्सा कृतेतिसम्बन्धः ॥ १८ ॥ नहीति । तावद्गुणैर्जुष्टं यावन्तः कल्याणगुणाः सन्ति

प्रविशन्ताविति । उदग्रायुधनिस्त्रिंशौ आयुधं धनुः. निस्त्रिंशः खड्गः ॥ १४ ॥ कदेति । कन्या द्विजातीनां कन्याश्च द्विजातयश्चेति द्वन्द्वः । अत्र कन्यानां सुमनसः पुष्पाणि, द्विजातीनां फलानीति विवेकः । प्रदिशन्तः प्रगृह्णन्तः । हृष्टा भूत्वा रामादयः पुरीं प्रदक्षिणं करिष्यन्ति, पौरजनोत्सजायेति शेषः ॥ १५ ॥ कदेति । बुद्ध्या परिणतः ज्ञानेन वृद्धः, वयसा च अमरप्रभः । अमरा हि नित्यं पञ्चविंशतिवार्षिका एव भवन्ति, तत्सदृश इत्यर्थः । त्रिवर्ष इव मा ललन्निति पाठः । मा मां प्रति ललन् क्रीडां कुर्वन् ॥ १६ ॥ निस्संशयमिति । कदर्यया क्षुद्रया, शातिताः कृत्ताः ॥ १७ ॥ साहमिति । बालवत्सा गौरिव । वत्सला साहं सिंहेन गौरिव कैकेय्या बलाद्विवत्सा कृतेति सम्बन्धः ॥ १८ ॥ न हीति । तावद्गुणैर्जुष्टं यावन्तः कल्याणगुणास्सन्ति तावद्गुणैः जुष्टं युक्तम् ॥ १९ ॥

तावद्भिर्गुणैर्युक्तामित्यर्थः ॥ १९ ॥ नहीति । कल्प्यते दैवेनेति शेषः । कलपत इतिपाठे-विद्यत इत्यर्थः ॥ २० ॥ अयमिति । दीपयते सन्तापयति । उद्धत प्रभः उत्कटकिरणः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

न हि मे जीविते किंचित् सामर्थ्यमिह कल्प्यते । अपश्यन्त्याः प्रियं पुत्रं महाबाहुं महाबलम् ॥२०॥ अयं हि मां दीपयते समुत्थितस्तनूजशोकप्रभवो हुताशनः । महीमिमां रश्मिभिरुद्धतप्रभो यथा निदाघे भगवान् दिवाकरः ॥ २१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ विलपन्तीं तथा तां तु कौसल्यां प्रमदोत्तमाम् । इदं धर्म्ये स्थिता धर्म्यं सुमित्रा वाक्यमब्रवीत् ॥१॥ तवार्ये सद्गुणैर्युक्तः स पुत्रः पुरुषोत्तमः । किं ते विलपितेनैवं कृपणं रुदितेन वा ॥ २ ॥

विलपन्तीमित्यादि । इदं वक्ष्यमाणम् ॥ १ ॥ तनि०-सुमित्रामुखेन श्रीरामस्य परत्वमभिव्यनक्ति-विलपन्तीमित्यादि । इदं वक्ष्यमाणम् । जन्मान्तरसुकृतवशेन तारामन्दोदर्योरिव सुमित्रायाः परत्वज्ञानमस्तीति सम्प्रदायः । वक्तृवैलक्षण्याच्च ध्वनिभेदः । स चालङ्कारिकैरङ्गीकृतः । धर्मे स्थिता सिद्धधर्मे रामे लग्नचित्ता । यद्वा धर्मे जन्मान्तरसुकृते । धर्म्यं विशिष्टधर्मादनपेतम् ॥ १ ॥ सत्पुरुषाचरितं धर्ममाचरन्तं रामं प्रति सन्तोषे कर्त्तव्ये किमर्थो विषादः कृत इति कौसल्यां समाश्वासयति-तवेत्यादिना ॥ २ ॥ तनि०-आर्ये महाभागे ! तव पुत्रः सः वेदान्तवेद्यः पुरुषोत्तमो नारायणः । तत्र हेतुमाह-सद्गुणैर्युक्तः अनितरसाधारणानवधिकातिशयासंख्येयकल्याणगुणैर्युक्तः । ''श्रीपतिः पुरुषोत्तमः'' इति निघण्टुः । तच्छब्दस्य सन्निहितपुरुषोत्तमविशेषणत्वेन वेदान्तप्रसिद्धिद्योतकत्वात्, अतः पुत्रबुद्ध्या न शोच्य

न हीति । कल्प्यते, दैवेनेति शेषः । कलपत इति पाठे-विद्यत इत्यर्थः ॥ २० ॥ अयमिति । अयं मां दीपयते, सन्तापयतीत्यर्थः ॥ २१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ पुत्रविवासजनितशोकेन विलपन्तीं कौसल्यां सुमित्रा समाश्वासयति-विलपन्तीमित्यादिना ॥ १ ॥ कृपणं यथा तथा रुदितेन वा किम् अयुक्तमेवेत्यर्थः । अत्र हेतुः, सद्गुणैर्युक्तः अत एव पुरुषोत्तमः, पुरुषोत्तमस्य न कुत्राप्यपाय इति भावः ॥ २ ॥

इत्याह किं त इति॥ २॥ य इत्यादिश्लोकद्वयमेकं वाक्यम्। प्रेत्यफलोदये आमुष्मिकफलकारणे॥३॥४॥ तनि०—ननु पुरुषोत्तमश्चेत् कथं कर्मप्रावण्यम्? तत्राह—शिष्टैराचिरित इति। अनेन लोकानुग्रहार्थत्वमुक्तम्। प्रेत्यफलोदये दशरथस्य परलोकहिते। लोकानुग्रहार्थत्वं प्रदर्शयति श्रेष्ठ इति। श्रेष्ठाचरणमितरानुग्राहकमितिभावः। "यद्य दाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इतिगीतावचनात्। वक्ष्यति च "कामवृत्तस्त्वयं लोकः कृत्स्नः समुपवर्तते। यद्वृत्ताः सन्ति राजानस्तवृत्तास्सन्ति हि प्रजाः॥" इति ॥४॥

यस्तवार्ये गतः पुत्रस्त्यक्त्वा राज्यं महाबलः। साधु कुर्वन् महात्मानं पितरं सत्यवादिनम् ॥ ३ ॥ शिष्टैराचरिते सम्यक्छश्वत् प्रेत्यफलोदये। रामो धर्मे स्थितः श्रेष्ठो न स शोच्यः कदाचन ॥ ४ ॥ वर्त्तते चोत्तमां वृत्तिं लक्ष्मणोऽस्मिन् सदाऽनघः। दयावान् सर्वभूतेषु लाभस्तस्य महात्मनः ॥ ५ ॥ अरण्यवासे यद्दुःखं जानती वै सुखोचिता। अनुगच्छति वैदेही धर्मात्मानं तवात्मजम् ॥ ६ ॥ कीर्त्तिभूतां पताकां यो लोके भ्रमयति प्रभुः। धर्मसत्यव्रतधनः किं न प्राप्तस्तवात्मजः ॥ ७ ॥

पितृवचनपरिपालके रामे शोको न कार्य इत्युक्त्वा लक्ष्मणसीतयोरपि स्वधर्मनिष्ठत्वात् तद्विषयेपि शोको न कार्यः, अपितु प्राप्तलाभत्वात् सन्तोष एव कार्य इत्याह—वर्तत इत्यादिना। अत्र व इति गायत्र्याः पञ्चमाक्षरम्। वर्तते करोति। वृत्तिं शुश्रूषाम्। अस्मिन् रामे। तस्य लक्ष्मणस्य ॥ ५ ॥ तनि०—शेषस्वरूपानुगुणकैङ्कर्यनिष्ठतया लक्ष्मणोपि न शोच्य इत्याह—उत्तमां निरतिशयपुरुषार्थरूपां वृत्तिं कैङ्कर्यकाष्ठां वर्तते अनुतिष्ठति। अनघः प्रमादरहितः। सर्वभूतेषु दयावान् समत्वबुद्ध्या सर्वत्र कृपामैत्र्यादियुक्तः। तस्य महात्मनः महानुभावस्य। लाभः कैङ्कर्यमेव पुरुषार्थः ॥५॥ अरण्येति। अरण्यवासे यद्दुःखं तद्दुःखं जानती वै जानन्त्येव। तवात्मजमनुगच्छति "स्त्रीणां भर्त्ता हि दैवतम्" इत्युक्तरीत्यानुगच्छतीत्यर्थः ॥ ६ ॥ तनि०—सहधर्मचारिणी च न शोच्येत्याह—वैदेही विदेहवंशोत्पन्ना। अनेन अयोनिजात्वं व्यज्यते। "वैदेहस्तु विदेहतः" इतिपौराणिकोक्तिः ॥ ६ ॥ कीर्तीति। कीर्तिभूतां पताकां कीर्तिरूपं ध्वजम्। भ्रामयति सञ्चारयति

राममुद्दिश्य विलापो न कार्य इत्यत्र हेतुमाह—यस्तवेत्यादि श्लोकद्वयमेकान्वयम्। आर्ये कौसल्ये! यस्तव पुत्रः प्रेत्यफलोदये प्रेत्यफलस्य आमुष्मिकसुखस्य उदयो यस्मिन् स तथा। शश्वच्छिष्टैराचरिते धर्मे पितृवाक्यपरिपालनरूपधर्मे सम्यक् स्थितः सन्, हस्तप्राप्तं राज्यमपि त्यक्त्वा सत्यवादिनं पितरं साधु सिद्धसङ्कल्पं कुर्वन् गतः। वनमितिशेषः। स रामो न शोच्य इत्यन्वयः ॥ ३ ॥ ४ ॥ व इति गायत्र्याः पञ्चमाक्षरं वर्तत इत्यस्यादिमाक्षरेण व इत्यनेन सङ्गृह्णाति वर्तत इति। अस्मिन् रामे उत्तमां वृत्तिं पितृतुल्यप्रतिपत्त्या शुश्रूषाव्यापारम्। वर्तते करोति। अतस्तस्य रामस्य लाभः सुखमित्यर्थः ॥५॥ अरण्येति। अरण्यवासे यद्दुःखमस्ति तज्जानती भर्तुस्तदपनयनार्थं वैदेह्यनुगच्छति, अतो रामस्य न दुःखप्रसङ्ग इति शेषः ॥ ६ ॥ ७ ॥

सर्वभूतविदितप्रख्यातिक इत्यर्थः । तवात्मजः किं श्रेयः [illegible] सर्वं [illegible] श्रेयसो योग्य इत्यर्थः । अतो न शोच्य इति भावः ॥७॥ तनि०—" तस्य नाम महद्यशः " इति श्रुत्यर्थं व्यञ्जयति—कीर्तीति । दमः जितहृषीकत्वम् । व्रतम् आश्रितापरित्यागः ॥ ७॥ तदेतद्धिशिनष्टि—व्यक्तमित्यादि । शौचं त्रिविधकरण शुचित्वम् । माहात्म्यं सर्वोत्तमत्वम् ॥८॥ तनि०—सर्वदेवानां तदाज्ञाकारित्वेन आनुकूल्यमाह—रामस्य उत्तमं माहात्म्यं निस्सीमाभ्यधिकमाहात्म्यं विज्ञाय सन्ताप

**व्यक्तं रामस्य विज्ञाय शौचं माहात्म्यमुत्तमम् । न गात्रमंशुभिः सूर्यः सन्तापयितुमर्हति ॥ ८ ॥ शिवः सर्वेषु कालेषु काननेभ्यो विनिस्सृतः । राघवं युक्तशीतोष्णः सेविष्यति सुखोऽनिलः ॥९॥ शयानमनघं रात्रौ पितेवाभि परिष्वजन् । रश्मिभिः संस्पृशन् शीतैश्चन्द्रमा ह्लादयिष्यति ॥ १० ॥ ददौ चास्त्राणि दिव्यानि यस्मै ब्रह्मा महौ जसे । दानवेन्द्रं हतं दृष्ट्वा तिमिध्वजसुतं रणे ॥ ११ ॥**

यितुं नार्हति, तत्सम्भावनैव नास्तीत्यर्थः । अनेन " भीषोदेति सूर्यः " इतिश्रुत्यर्थ उक्तः ॥ ८ ॥ शिव इति । सर्वेषु कालेषु वसन्तादिकालेषु । युक्तशीतोष्णः तत्तत्कालोचितद्रव्यसंस्पर्शनेन सम्पादितशीतोष्णस्पर्श इत्यर्थः ॥ ९ ॥ " भीषास्माद्वातः पवते" इतिश्रुत्यर्थमभिव्यनक्ति—शिव इत्यनुद्वेगकारित्वेन मान्द्यमुक्तम् । काननेभ्य इति सौरभ्यमुक्तम् । विनिस्सृत इति शैत्यमुक्तम् ॥१०॥ तनि०—परिष्वजन् पितेव चन्द्रमा रश्मिभिः संस्पृशन् ह्लादयिष्यतीत्यन्वयः । एनेन " एतस्य वा अक्षरस्य प्रशासने सूर्याचन्द्रमसौ विधृतौ तिष्ठतः " इति श्रुत्यर्थो व्यञ्जितः ॥ १० ॥ ददाविति । तिमिध्वजः शम्बरः । " वैजयन्तमिति

सुमित्रा जन्मान्तरीयभगवदाराधनजनितसुकृतपरिपाकेन श्रीरामं परमात्मानं मत्वा मनसि निधाय वनेष्वातपादिषु सञ्चरतो रामस्य सूर्यादिबाधा नास्ति, अपितु तत्सेवैव भविष्यतीति कौसल्यामाश्वासयति—व्यक्तं रामस्येत्यादि श्लोकत्रयेण । सूर्यः रामस्य शौचम् अपहतपाप्मत्वादिलक्षणम् । माहात्म्यं सर्वनियन्तृत्वादिलक्षणं च व्यक्तं यथा तथा विज्ञाय, अंशुभिः गात्रं रामदेहं सन्तापयितुं नार्हति । "भीषोदेति सूर्यः" इति श्रुतिप्रामाण्यात् परमात्मभीतस्य सूर्यस्य परमात्मसन्तापकरत्वं च न युक्तमिति भावः ॥ ८ ॥ "भीषास्माद्वातः पवते" इति श्रुत्यनुसारेण भगवद्भीतो वायुरपि सेवां करिष्यतीत्यभिप्रेत्याह—शिव इति ॥ ९ ॥ जगदाह्लादकरस्यापि भगवतः श्रीरामस्य स्वशक्त्यनुसारेण चन्द्रोऽप्याह्लादं करिष्यतीत्याशयेनाह—शयानमिति ॥ १० ॥ ददाविति । ब्रह्मा रणे तिमिध्वजसुतं " वैजयन्तमितिख्यातं

**सत्य०**—तिमिर्ध्वजो ययोस्तौ तिमिध्वजौ सुन्दोपसुन्दौ । तयोस्सुतं दानवेन्द्रं सुबाहुं हतं हतप्रायम् । निश्चितेऽर्थे तथा प्रयोगदर्शनात् । यथोक्तं गीतायामेकादशाध्याये " मयैवैते निहताः पूर्वमेव मया हतांस्त्वं जहि मा व्यथिष्ठाः " इति । दृष्ट्वा योगप्रभावेन निश्चित्य । यथोक्तं बालकाण्डे—" अहं ते प्रतिजानामि हतौ तौ विद्धि राक्षसौ " " अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् " इति । यस्मै महौजसे रामाय ब्रह्मा

ख्यातं पुरं यत्र तिमिध्वजः। स शम्बर इतिख्यातः शतमायो महासुरः ॥" इत्युक्तत्वात् तत्सुतं दानवेन्द्रं हतं दृष्ट्वा यस्मै रामाय दिव्यास्त्राणि ददौ। "यदा व्रजति सङ्ग्रामं ग्रामार्थे नगरस्य वा। गत्वा सौमित्रिसहितो नाविजित्य निवर्त्तते ॥" इत्युक्तत्वात्। कदाचिद्रामो दण्डकारण्यं गत्वा वैजयन्तपुरं

स शूरः पुरुषव्याघ्रः स्वबाहुबलमाश्रितः। असन्त्रस्तोप्यरण्यस्थो वेश्मनीव निवत्स्यति ॥ १२ ॥ यस्येषुपथमासाद्य विनाशं यान्ति शत्रवः। कथं न पृथिवी तस्य शासने स्थातुमर्हति ॥ १३ ॥ या श्रीः शौर्यं च रामस्य या च कल्याणसत्त्वता। निवृत्तारण्यवासः स क्षिप्रं राज्यमवाप्स्यति ॥ १४ ॥ सूर्यस्यापि भवेत् सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुः। श्रियः श्रीश्च भवेदग्र्या कीर्तिः कीर्त्याः क्षमाक्षमा ॥ १५ ॥

निरुध्य दशरथविरोधिभूतं शम्बरसुतं हतवान्, तेन प्रीतो ब्रह्मा रामाय दिव्यास्त्राणि ददावित्यवगम्यते ॥ ११ ॥ तनि०—चतुर्मुखकिञ्चित्कारमाह—ददाविति ॥ ११ ॥ स शूर इति। अरण्यस्थोऽपीत्यन्वयः ॥ १२ ॥ वने रामस्य सौख्यं भवतु, भरतस्य रूढमूलत्वाद्रामस्य राज्यं न सिद्ध्यतीत्याशङ्क्याह—यस्येति ॥ १३ ॥ तनि०—यस्य रामस्य इषुपथं प्राप्य शत्रवो नाशं यान्ति तस्य शासने इयं पृथिवी स्थातुं कथं नार्हति? अर्हत्येव ॥ १३ ॥ येति। रामस्य या श्रीः सर्वलक्षणसम्पन्ना गात्रशोभा। यच्च शौर्यं शूरो जेता, तस्य भावः शौर्यम्। "शूरो वीरश्च विक्रान्तो जेता" इत्यमरः। या च कल्याणसत्त्वता प्रशस्तबलयुक्तता। एतैरसाधारणहेतुभिः स रामः क्षिप्रं राज्यमवाप्स्यतीति सम्बन्धः ॥ १४ ॥ सूर्यस्येत्यादि। सूर्यस्यापि सूर्यो भवेत्

पुरं यत्र तिमिध्वजः। स शम्बर इति ख्यातः शतमायो महासुरः॥" इत्युक्तत्वात् तिमिध्वजशब्देन शम्बर उच्यते। तत्सुतं दानवेन्द्रं हतं दृष्ट्वा यस्मै रामाय दिव्यास्त्राणि ददौ। "यदा व्रजति सङ्ग्रामं ग्रामार्थे नगरस्य वा। गत्वा सौमित्रिसहितो नाविजित्य निवर्तते" इत्यभिधानात्। कदाचिद्रामो दण्डकारण्यं गत्वा वैजयन्तं पुरं निरुध्य दशरथविरोधिभूतशम्बरसुतं हतवान्, तेन प्रीतो ब्रह्मा रामाय दिव्यास्त्राणि ददावित्यवगम्यते ॥ ११–१३ ॥ या श्रीरिति। रामस्य या श्रीः सर्वलक्षणसम्पन्नगात्रशोभा, यच्छौर्यं जेतृत्वं या कल्याणसत्त्वता प्रशस्तबलयुक्तता, एतैरसाधारणहेतुभिः स रामः क्षिप्रं राज्यमवाप्स्यतीतिसम्बन्धः ॥१४॥ सूर्य

ब्राह्मणो विश्वामित्रः अत्यायासेन ब्राह्मण्यं प्राप्तमिति तत्त्वेन कीर्तनम्। दिव्यान्यस्त्राणि ददौ स शूर इत्युत्तरेणान्वयः। महौजस इत्यनेनानुग्रहार्थं स ऋषेरस्त्राण्यवापेति सूचयति। दानवेन्द्रमित्यनेन सुबाहोर्दैत्यकुलोद्भवत्वं ज्ञापयति। यथोक्तं बालकाण्डे "अथ कालोपमौ युद्धे सुतौ सुन्दोपसुन्दयोः। यज्ञविघ्नकरौ तौ ते नैव दास्यामि पुत्रकम्। तौ तु राक्षसकन्यायां जातौ दैत्यकुलोद्भवौ। मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ" इति ॥ ११ ॥

सकलजगत्प्रकाशकस्य सूर्यस्यापि प्रकाशको भवेत् । अग्नेरग्निः दाहकस्याप्यग्नेर्दाहकः । प्रभोः प्रभुः सर्वनियन्तुरपि नियन्ता । श्रियः श्रीः सम्पदोपि सम्पत् । यद्वा कान्तेरपि कान्तिः, कान्तेरप्यतिशयावह इत्यर्थः। क्षमाक्षमा क्षमाया अप्यतिशयोऽनेनेति भावः॥१५॥ दैवतं दैवतानां च दैवतानामपि सकल कार्यनिर्वहणक्षम इत्यर्थः । भूतानां भूतसत्तमः, उत्तमभूतमित्यर्थः । भूतत्वं सत्ता सर्वेषां सत्ता तत्सत्ताधीनेतिभावः । तस्यैवम्भूतस्य सर्वगुणसम्पन्नस्य

दैवतं दैवतानां च भूतानां भूतसत्तमः । तस्य के ह्यगुणा देवि राष्ट्रे वाप्यथवा पुरे ॥ १६ ॥
पृथिव्या सह वैदेह्या श्रिया च पुरुषर्षभः । क्षिप्रं तिसृभिरेताभिः सह रामोऽभिषेक्ष्यते ॥ १७ ॥

देशे वने वा पुरे वा के अगुणाः ? न कोपीत्यर्थः । अगुणः प्रतिबन्धकीभूत इति यावत् ॥ १६ ॥ तनि०–" तमेव भान्तमनुभाति सर्वम् " इति श्रुत्यर्थ मुपपादयति–सूर्यस्य सकललोकप्रकाशकस्यापि प्रकाशकः । सावितृमण्डलान्तर्वर्ती सन् स्फटिकमुकुरान्तःस्थितदीपन्यायेन प्रकाशयतीति परमार्थः । अग्नेरग्निः अग्नेर्वस्तुपरिपाकदाहकत्वादिकं तत्सङ्कल्पाधीनमित्यर्थः । " अहं वैश्वानरो भूत्वा " इत्यादिश्रवणात् । प्रभोः प्रभुः ब्रह्मरुद्रादेः सृष्ट्यादिसामर्थ्यप्रदानेन निर्वाहकः । श्रियः श्रीः ब्रह्मादीनां यत्कटाक्षलेशायत्तमीश्वरत्वम् । नारायणस्यापि यदपाङ्गभूयस्त्वनिबन्धनं परब्रह्मत्वम् तस्या अपि यदाश्रयणात् श्रीत्वं सिध्यतीति स्वस्मिन्नीश्वरत्वपूर्ति निमित्ताया लक्ष्म्या अपि स्वरूपनिर्वाहक इत्यर्थः । कीर्त्याः कीर्तिः "तस्य नाम महद्यशः" इति यत्सम्बन्धान्महत्त्वमनितरसाधारणमितिकृत्वा कीर्त्या अपि कीर्त्यावहः । क्षमाक्षमा सर्वाधारभूतायाः भूमेराधार इत्यर्थः । " यस्मिन् द्यौः पृथिवी चान्तरिक्षम् " इत्यादि श्रुतेः । दैवतानां दैवतमित्यनेन " तं देवतानां परमं च दैवतम् " इति श्रुत्यर्थ उक्तः । भूतानां भूतसत्तमः सत्तामात्रवतां सत्तानिर्वाहकः । एवं कल्याणगुणाकरत्वमभिव्यज्य हेयगुणविरोधित्वं व्यञ्जयति–तस्य क इति । राष्ट्रे वाप्यथवा पुरे इति विभूतिद्वयसम्बन्धेपि अजहत्स्वरूपत्वं व्यञ्जितम् । दोषविरोधित्वम् " अपहतपाप्मा " इत्यादिश्रुतिप्रसिद्धमिति द्योतयितुं हिशब्दप्रयोगः ॥ १६ ॥ पृथिव्येति । सहेत्यत्र स इति पदच्छेदः । स रामः पृथिव्या वैदेह्या श्रिया विजयलक्ष्म्या च एताभिः तिसृभिः सह क्षिप्रमभिषेक्ष्यते हेति सम्बन्धः ॥ १७ ॥



स्येति । सूर्यस्य सकलजगत्प्रकाशकस्यापि, सूर्यः प्रकाशको भवेत् । अग्नेरग्निः सर्वदाहकस्याग्नेरपि दाहकः । प्रभोः प्रभुः सर्वनियन्तुर्ब्रह्मादेरपि नियन्ता । श्रियः श्रीः सम्पदोपि सम्पत् । कीर्त्याः अग्र्या कीर्तिः कीर्तेरपि प्रशस्त्यापादकः । क्षमाक्षमा सर्वाधारभूतायाः भूमेरप्याधारः ॥ १५ ॥ दैवतानां च दैवतं पूज्यः । भूतानां भूतसत्तमः महद्भूतम् । रामस्य परमात्मत्वात्सूर्यस्यापि भवेत्सूर्य इत्यादि श्लोकद्वयेनोक्तं सर्वं वास्तवमेवेत्यवगन्तव्यम् ॥ १६ ॥ पृथिव्येति । सहराम इत्यत्र

दुःखजमिति। अस्य श्लोकस्य पृथिव्या सहेतिपूर्वश्लोकस्थेन स रामोभिषेक्ष्यत इत्यनेन सम्बन्धः॥१८॥ कुशचीरेति। लक्ष्मीरिव स्थिता सीता अनुगतेत्य न्वयः। अनेन राज्यश्रीरन्यन्न परिगृह्णातीति द्योत्यते ॥ १९ ॥ धनुर्ग्रहेति। धनुर्ग्रहवरः धनुर्द्धरश्रेष्ठः ॥ २० ॥ २१ ॥ शिरसेति । एतौ परिदृश्यमान

दुःखजं विसृजत्यास्रं निष्क्रामन्तमुदीक्ष्य यम् । अयोध्यायां जनाः सर्वे शोकवेगसमाहताः ॥ १८ ॥ कुशचीरधरं देवं गच्छन्तमपराजितम् । सीतेवानुगता लक्ष्मीः तस्य किन्नाम दुर्ल्लभम् ॥ १९ ॥ धनुर्ग्रहवरो यस्य बाणखड्गास्त्र भृत्स्वयम् । लक्ष्मणो व्रजति ह्यग्रे तस्य किन्नाम दुर्ल्लभम् ॥ २० ॥ निवृत्तवनवासं तं द्रष्टासि पुनरागतम् । जहि शोकं च मोहं च देवि सत्यं ब्रवीमि ते ॥ २१ ॥ शिरसा चरणावेतौ वन्दमानमनिन्दिते । पुनर्द्रक्ष्यसि कल्याणि पुत्रं चन्द्र मिवोदितम् ॥ २२ ॥ पुनः प्रविष्टं दृष्ट्वा तमभिषिक्तं महाश्रियम् । समुत्स्रक्ष्यसि नेत्राभ्यां क्षिप्रमानन्दजं पयः॥२३॥ मा शोको देवि दुःखं वा न रामे दृश्यतेऽशिवम् । क्षिप्रं द्रक्ष्यसि पुत्रं तं ससीतं सहलक्ष्मणम् ॥ २४ ॥ त्वया ऽशेषो जनश्चैव समाश्वास्यो यदाऽनघे । किमिदानीमिमं देवि करोषि हृदि विक्लवम् ॥ २५॥ नार्हा त्वं शोचितुं देवि यस्यास्ते राघवः सुतः । न हि रामात्परो लोके विद्यते सत्पथे स्थितः ॥ २६ ॥

सर्वलक्षणसम्पन्नौ । उदितं चन्द्रं प्रतिपच्चन्द्रम् ॥ २२ ॥ २३ ॥ मा शोक इति। हे देवि ! रामे अशिवम् अशुभम् न दृश्यते। अतः शोकः प्रलापादिः दुःखं मनोव्यथा वा मा म कार्यमित्यर्थः ॥ २४ ॥ त्वयेति। विक्लवम्, भावप्रधानो निर्देशः ॥ २५ ॥ २६ ॥

सः ह रामः इति पदच्छेदः। सः रामः पृथिव्या वैदेह्या श्रिया विजयलक्ष्म्या च एताभिस्तिसृभिस्सह क्षिप्रमभिषेक्ष्यते हेति सम्बन्धः ॥ १७ ॥ दुःखजमित्यस्य पृथिव्या सहेति पूर्वश्लोकस्थेन रामोऽभिषेक्ष्यत इत्यनेन सम्बन्धः ॥ १८ ॥ तथापि तस्य वने विषयसुखं नास्तीति शोचन्तीं प्रत्याह–कुशचीरेति। कुशचीरधरमपि देवं दीप्यमानं, लक्ष्मीः राजलक्ष्मीः। सीतेव सीतात्मना ॥ १९ ॥ धनुर्ग्रहवरः धनुर्गृह्णन्तीति धनुर्ग्रहाः शूराः तेषां वरः श्रेष्ठः॥ २०–२३ ॥ मा शोक इति। रामे रामविषये। अशिवमशुभं न दृश्यते, अतः शोकः प्रलापादिः। दुःखं मनोव्यथा वा, मा न कार्यमित्यर्थः ॥२४–२६॥

अभिवादयमानमिति । मेघलेखा मेघपङ्क्तिः ॥ २७ ॥ २८ ॥ अभिवाद्यति । अभिवाद्यनमस्यन्तम् अभिवादनपूर्वकं प्रणमन्तम् ॥ २९ ॥ आश्वासयन्तीति । वाक्योपचारे वाक्यैरुपचारविषये ॥ ३० ॥ ३१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ एवं सुमित्रया कौसल्याश्वासनपर्यन्तं कथासङ्घट्टनं परिसमाप्य सम्प्रति रामगमनवृत्तान्तं



अभिवादयमानं तं दृष्ट्वा ससुहृदं सुतम्। मुदाश्रु मोक्ष्यसे क्षिप्रं मेघलेखेव वार्षिकी ॥ २७ ॥ पुनस्ते वरदः क्षिप्र मयोध्यां पुनरागतः । पाणिभ्यां मृदुपीनाभ्यां चरणौ पीडयिष्यति ॥ २८ ॥ अभिवाद्यनमस्यन्तं शूरं ससुहृदं सुतम् । मुदास्रैः प्रोक्ष्यसि पुनर्मेघराजिरिवाचलम् ॥२९॥ आश्वासयन्ती विविधैश्च वाक्यैर्वाक्योपचारे कुशला ऽनवद्या । रामस्य तां मातरमेवमुक्त्वा देवी सुमित्रा विरराम रामा ॥ ३० ॥ निशम्य तल्लक्ष्मणमातृवाक्यं रामस्य मातुर्नरदेवपत्न्याः । सद्यः शरीरे विननाश शोकः शरद्गतो मेघ इवाल्पतोयः ॥ ३१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

अनुरक्ता महात्मानं रामं सत्यपराक्रमम् । अनुजग्मुः प्रयान्तं तं वनवासाय मानवाः ॥१॥ निवर्तितेऽपि च बलात् सुहृद्वर्गे च राजनि । नैव ते संन्यवर्तन्त रामस्यानुगता रथम् ॥ २ ॥ अयोध्यानिलयानां हि पुरुषाणां महायशाः । बभूव गुणसम्पन्नः पूर्णचन्द्र इव प्रियः ॥ ३ ॥

प्रस्तौति—अनुरक्ता इत्यादि ॥ १ ॥ निवर्तित इति । सुहृद्वर्गे राजसुहृद्भूतावरोधवर्गे । राजनि च सचिवसहिते राजनि च । ते पौरजनाः ॥ २ ॥ ३ ॥

अभिवादयमानमिति । मेघलेखा मेघपङ्क्तिः ॥ २७ ॥ २८ ॥ अभिवाद्यनमस्यन्तं प्रवरोच्चारणपूर्वकं नमस्यन्तम् ॥ २९ ॥ आश्वासयन्तीति । वाक्योपचारे वाक्यरूपोपचारे । कुशला ॥ ३० ॥ ३१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायां चतुश्चत्वारिंशः सर्गः ॥४४॥१॥ निवर्तित इति । ते पौराः ॥ २ ॥ ३ ॥

स इति । याच्यमानः निवर्तस्वनिवर्त्तस्वेति प्रार्थ्यमानः । सत्यं सत्यप्रतिज्ञम् ॥ ४ ॥ अवेक्षमाण इति । स्वाः प्रजा इव स्वान्यपत्यानीव ॥ ५ ॥ स्वेन पितृवचनपरिपालनस्यावश्यकर्त्तव्यत्वात् प्रजानुरागेण ताभ्यो हितमुपदिशति—या प्रीतिरित्यादिना ॥ ६–८ ॥ स हीति। हि यस्मात् कारणात् भरतो

स याच्यमानः काकुत्स्थः स्वाभिः प्रकृतिभिस्तदा । कुर्वाणः पितरं सत्यं वनमेवान्वपद्यत ॥ ४ ॥ अवेक्षमाणः सस्नेहं चक्षुषा प्रपिबन्निव । उवाच रामः स्नेहेन ताः प्रजाः स्वाः प्रजा इव ॥ ५ ॥ या प्रीतिर्बहुमानश्च मय्ययोध्या निवासिनाम् । मत्प्रियार्थं विशेषेण भरते सा निवेश्यताम् ॥६॥ स हि कल्याणचारित्रः कैकेय्यानन्दवर्द्धनः । करिष्यति यथावद्वः प्रियाणि च हितानि च ॥ ७ ॥ ज्ञानवृद्धो वयोबालो मृदुर्वीर्यगुणान्वितः । अनुरूपः स वो भर्त्ता भविष्यति भयापहः ॥ ८ ॥ स हि राजगुणैर्युक्तो युवराजः समीक्षितः । अपि चापि मया शिष्टैः कार्यं वो भर्तृशासनम् ॥ ९ ॥ न च तप्येद्यथा चासौ वनवासं गते मयि । महाराजस्तथा कार्यो मम प्रियचिकीर्षया ॥१०॥ यथायथा दाशरथिर्धर्म एव स्थितोऽभवत् । तथातथा प्रकृतयो रामं पतिमकामयन् ॥ ११ ॥

वः युष्माकं युवराजः समीक्षितः, राज्ञेति शेषः । अतो मया शिष्टैरवशिष्टैः लक्ष्मणशत्रुघ्नादिभिः सर्वैरपि भर्तृशासनं कार्यम् । अपि चेति वक्तव्यान्तर समुच्चये ॥ ९ ॥ नेति । मयि वनं गते सति असौ महाराजः यथा न सन्तप्येत् मम प्रियचिकीर्षया तथा कार्यः ॥ १० ॥ यथेति । धर्मे पितृवचनपरि पालनरूपे धर्मे । तथातथा प्रकृतयो रामं पतिमकामयन् आदौ राजा ज्येष्ठं भवन्तमेव अस्मद्रक्षणार्थं युवराजत्वेन कल्पितवान् । अयमर्थो भवता

स इति । याच्यमानः निवर्तस्वेति प्रार्थ्यमानः । सत्यं सत्यवन्तम् ॥ ४ ॥ स्वाः प्रजाः इव स्वपुत्रानिव ॥ ५ ॥ अयोध्यानिवासिनां युष्माकमिति शेषः ॥ ६ ॥ स हीति । प्रियाणि इह लोके सुखकराणि, हितानि परलोकार्थमनुष्ठेयानि, वर्णाश्रमाचारादीनि ॥ ७ ॥ वयोबालोऽपि ज्ञानादिना वृद्धः । मृदुरपि वीर्यगुणान्वितः ॥८॥ स हीति । हि यस्मात् भरतः, वः युष्मदर्थम् युवराजः समीक्षितः निश्चितः, राज्ञेति शेषः । अतो मया शिष्टैरपि लक्ष्मणशत्रुघ्नादिभिः सर्वैरपि भर्तुः राज्ञः शासनं नियोगः कार्यमिति सम्बन्धः ॥ ९ ॥१०॥ यथायथेति । धर्ममेवास्थितोऽभवत् धर्ममेव परिगृह्णाति । धर्मे पितृवाक्यपरिपालनरूपे वा, रामं पतिमकामयन् ॥११॥

अभिवादयमानमिति । मेघलेखा मेघपङ्क्तिः ॥ २७ ॥ २८ ॥ अभिवाद्येति । अभिवाद्यनमस्यन्तम् अभिवादनपूर्वकं प्रणमन्तम् ॥ २९ ॥ आश्वासयन्तीति । वाक्योपचारे वाक्यैरुपचारविषये ॥ ३० ॥ ३१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ एवं सुमित्रया कौसल्याश्वासनपर्यन्तं कथासङ्घट्टनं परिसमाप्य सम्प्रति रामगमनवृत्तान्तं

अभिवादयमानं तं दृष्ट्वा ससुहृदं सुतम् । मुदाश्रु मोक्ष्यसे क्षिप्रं मेघलेखेव वार्षिकी ॥ २७ ॥ पुनस्ते वरदः क्षिप्रं मयोध्यां पुनरागतः । पाणिभ्यां मृदुपीनाभ्यां चरणौ पीडयिष्यति ॥ २८ ॥ अभिवाद्यनमस्यन्तं शूरं ससुहृदं सुतम् । मुदास्रैः प्रोक्ष्यसि पुनर्मेघराजिरिवाचलम् ॥२९॥ आश्वासयन्ती विविधैश्च वाक्यैर्वाक्योपचारे कुशलाऽनवद्या । रामस्य तां मातरमेवमुक्त्वा देवी सुमित्रा विरराम रामा ॥ ३० ॥ निशम्य तल्लक्ष्मणमातृवाक्यं रामस्य मातुर्नरदेवपत्न्याः । सद्यः शरीरे विननाश शोकः शरद्गतो मेघ इवाल्पतोयः ॥ ३१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

अनुरक्ता महात्मानं रामं सत्यपराक्रमम् । अनुजग्मुः प्रयान्तं तं वनवासाय मानवाः ॥१॥ निवर्तितेऽपि च बलात् सुहृद्वर्गे च राजनि । नैव ते संन्यवर्तन्त रामस्यानुगता रथम् ॥२॥ अयोध्यानिलयानां हि पुरुषाणां महायशाः । बभूव गुणसम्पन्नः पूर्णचन्द्र इव प्रियः ॥ ३ ॥

प्रस्तौति—अनुरक्ता इत्यादि ॥ १ ॥ निवर्तित इति । सुहृद्वर्गे राजसुहृद्भूतावरोधवर्गे । राजनि च सचिवसहिते राजनि च । ते पौरजनाः ॥ २ ॥ ३ ॥

अभिवादयमानमिति । मेघलेखा मेघपङ्क्तिः ॥ २७ ॥ २८ ॥ अभिवाद्यनमस्यन्तं प्रवरोच्चारणपूर्वकं नमस्यन्तम् ॥ २९ ॥ आश्वासयन्तीति । वाक्योपचारे वाक्यरूपोपचारे । कुशला ॥ ३० ॥ ३१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायां चतुश्चत्वारिंशः सर्गः ॥४४॥ १॥ निवर्तित इति । ते पौराः ॥ २ ॥ ३ ॥

स इति। याच्यमानः निवर्तस्वनिवर्त्तस्वेति प्रार्थ्यमानः। सत्यं सत्यप्रतिज्ञम् ॥ ४ ॥ अवेक्षमाण इति। स्वाः प्रजा इव स्वान्यपत्यानीव ॥ ५ ॥ स्वेन पितृवचनपरिपालनस्यावश्यकर्त्तव्यत्वात् प्रजानुरागेण ताभ्यो हितमुपदिशति—या प्रीतिरित्यादिना ॥ ६–८ ॥ स हीति। हि यस्मात् कारणात् भरतो

स याच्यमानः काकुत्स्थः स्वाभिः प्रकृतिभिस्तदा। कुर्वाणः पितरं सत्यं वनमेवान्वपद्यत ॥ ४ ॥ अवेक्षमाणः सस्नेहं चक्षुषा प्रपिबन्निव। उवाच रामः स्नेहेन ताः प्रजाः स्वाः प्रजा इव ॥ ५ ॥ या प्रीतिर्बहुमानश्च मय्ययोध्यानिवासिनाम्। मत्प्रियार्थं विशेषेण भरते सा निवेश्यताम् ॥६॥ स हि कल्याणचारित्रः कैकेय्यानन्दवर्द्धनः। करिष्यति यथावद्वः प्रियाणि च हितानि च ॥ ७ ॥ ज्ञानवृद्धो वयोबालो मृदुर्वीर्यगुणान्वितः। अनुरूपः स वो भर्त्ता भविष्यति भयापहः ॥ ८ ॥ स हि राजगुणैर्युक्तो युवराजः समीक्षितः। अपि चापि मया शिष्टैः कार्यं वो भर्तृशासनम् ॥ ९ ॥ न च तप्येद्यथा चासौ वनवासं गते मयि। महाराजस्तथा कार्यो मम प्रियचिकीर्षया ॥ १० ॥ यथायथा दाशरथिर्धर्म एव स्थितोऽभवत्। तथातथा प्रकृतयो रामं पतिमकामयन् ॥ ११ ॥

वः युष्माकं युवराजः समीक्षितः, राज्ञेति शेषः। अतो मया शिष्टैरवशिष्टैः लक्ष्मणशत्रुघ्नादिभिः सर्वैरपि भर्तृशासनं कार्यम्। अपि चेति वक्तव्यान्तरसमुच्चये ॥ ९ ॥ नेति। मयि वनं गते सति असौ महाराजः यथा न सन्तप्येत् मम प्रियचिकीर्षया तथा कार्यः ॥ १० ॥ यथेति। धर्मे पितृवचनपरिपालनरूपे धर्मे। तथातथा प्रकृतयो रामं पतिमकामयन् आदौ राजा ज्येष्ठं भवन्तमेव अस्मद्रक्षणार्थं युवराजत्वेन कल्पितवान्। अयमर्थो भवता

स इति। याच्यमानः निवर्तस्वेति प्रार्थ्यमानः। सत्यं सत्यवन्तम् ॥ ४ ॥ स्वाः प्रजाः इव स्वपुत्रानिव ॥ ५ ॥ अयोध्यानिवासिनां युष्माकमिति शेषः ॥ ६ ॥ स हीति। प्रियाणि इह लोके सुखकराणि, हितानि परलोकार्थमनुष्ठेयानि, वर्णाश्रमाचारादीनि ॥ ७ ॥ वयोबालोऽपि ज्ञानादिना वृद्धः। मृदुरपि वीर्यगुणान्वितः ॥८॥ स हीति। हि यस्मात् भरतः, वः युष्मदर्थम् युवराजः समीक्षितः निश्चितः, राज्ञेति शेषः। अतो मया शिष्टैरपि लक्ष्मणशत्रुघ्नादिभिः सर्वैरपि भर्तुः राज्ञः शासनं नियोगः कार्यमिति सम्बन्धः ॥ ९ ॥१०॥ यथायथेति। धर्ममेवास्थितोऽभवत् धर्ममेव परिगृह्णाति। धर्मे पितृवाक्यपरिपालनरूपे वा, रामं पतिमकामयन् ॥११॥

अस्माभिश्च कर्त्तव्य इति राममेव पुनःपुनः पतिमकामयन्तेत्यर्थः ॥ ११ ॥ बाष्पेणेति । सौमित्रिणा सहेत्यनेन रामस्येव लक्ष्मणस्यापि गुणपौष्कल्य मस्तीति द्योत्यते। गुणैरेव गुणैः पाशैरिति श्लिष्टरूपकम् ॥१२॥ त इति । त्रिविधमिति क्रियाविशेषणम् । ओजसा तपोबलेन। वयसा प्रकम्पं चञ्चलं

बाष्पेण पिहितं दीनं रामः सौमित्रिणा सह । चकर्षेव गुणैर्बद्ध्वा जनं पुरनिवासिनम् ॥ १२ ॥ ते द्विजास्त्रिविधं वृद्धा ज्ञानेम वयसौजसा । वयःप्रकम्पशिरसो दूरादूचुरिदं वचः ॥ १३ ॥ वहन्तो जवना रामं भो भो जात्या स्तुरङ्गमाः । निवर्त्तध्वं न गन्तव्यं हिता भवत भर्त्तरि ॥ १४ ॥ कर्णवन्ति हि भूतानि विशेषेण तुरङ्गमाः । यूयं तस्मान्निवर्त्तध्वं याचनां प्रतिवेदिताः ॥ १५ ॥ धर्मतः स विशुद्धात्मा वीरः शुभदृढव्रतः । उपवाह्यस्तु वो भर्त्ता नापवाह्यः पुराद्वनम् ॥ १६ ॥ एवमार्तप्रलापांस्तान् वृद्धान् प्रलपतो द्विजान् । अवेक्ष्य सहसा रामो रथादवततार ह ॥ १७॥ पद्भ्यामेव जगामाथ ससीतः सहलक्ष्मणः । सन्निकृष्टपदन्यासो रामो वनपरायणः ॥ १८ ॥

शिरो येषां ते तथा ॥ १३ ॥ १४ ॥ कर्णवन्तीति । याचनां प्रतिवेदिताः प्रार्थनां ज्ञापिताः । अस्माभिरितिशेषः ॥ १५ ॥ धर्म इति । उपवाह्यः पुरसमीपे वाह्यः ॥ १६ ॥ एवमिति । आर्तप्रलापान् प्रलपतः आर्तवाक्यानि प्रयुञ्जानानित्यर्थः ॥ १७ ॥ पद्भ्यामिति । सन्निकृष्टपदन्यासः पद्भ्यां जगामेति ब्राह्मण वाक्यश्रवणानन्तरं रथगमने दोषो भवतीति प्रतिनिवृत्त्य ब्राह्मणाश्वासने व्रतभङ्गो भवतीति धिया रथादवतीर्य तदागमनपर्यन्तं मन्दंमन्दं जगामे

बाष्पेण पिहितं पिहितलोचनम् । गुणैः रज्जुभिरेव स्वगुणैर्बद्ध्वा ॥ १२ ॥ त इति । ओजसा तपोबलेन, एवं त्रिविधं यथा तथा वृद्धाः, तेषां मध्ये वयःप्रकम्पशिरसः अतिवृद्धत्वादेव आरादनुधावनाशक्त्या दूरादिदं वक्ष्यमाणमूचुः ॥ १३ ॥ रामस्य परमकरुणामुत्पादयितुं तुरङ्गान् प्रत्याहुः—वहन्त इति । वहन्तः रथेन प्रापयन्तः । हिता भवत, भर्तारं वनं न नयतेति यावत् । ब्राह्मणयाच्ञामतिक्रम्य युष्मद्गमनं भर्तुरहितमिति भावः ॥ १४ ॥ एवं प्रार्थितानां तेषां वेगगमनदुःखादाहुः—कर्ण वन्तीति । विशेषेण यूयं कर्णवन्त इत्यनुकर्षः । तस्माद्भवद्भिर्वनं न गन्तव्यम्, अपितु याचनामस्मदीयां प्रतिवेदिताः ज्ञातवन्तः निवर्तध्वम् ॥ १५ ॥ धर्मत इति । धर्मात् उपवाह्यः पुरसमीपं प्रापणीयः । वः युष्माभिः, नतु पुराद्वनम् अपवाह्यः अपनीय प्रापणीयः ॥ १६ ॥ एवमिति । प्रलपतः आर्तवाक्यानि प्रयुञ्जानान् ॥१७॥ पद्भ्यामिति । पद्भ्यां जगाम, ब्राह्मणवाक्यश्रवणानन्तरं रथगमने दोषो भवतीति प्रतिनिवृत्त्य ब्राह्मणाश्वासने व्रतभङ्गो भवतीति च भयाद्रथादवतीर्य तदागमन

त्यर्थः ॥ १८ ॥ रथादवतीर्य किमर्थं पादगमनं कृतवानित्याशङ्क्याह—द्विजातीनिति । रथेन द्विजातीन् परिमोक्तुं न शशाक रथेनोपलक्षितः सन् साव रोधं दशरथमिवाञ्जल्यादिना द्विजातीन् निवर्त्तयितुं न शशाकेत्यर्थः । घृणाचक्षुः दयार्द्रचक्षुरित्यर्थः ॥१९॥ गच्छन्तमिति । गच्छन्तमेव बहुशो निवृत्ति हेतुप्रदर्शनेपि पितृवचनचिकीर्षया गच्छन्तमेवेत्यर्थः ॥ २० ॥ दुःखप्रलापादिनाप्यनिवृत्तं रामं सह वनगमनलक्षणं महाभारमारोप्य निवर्तयितुमुद्यु

द्विजातींस्तु पदातींस्तान् रामश्चारित्रवत्सलः । न शशाक घृणाचक्षुः परिमोक्तुं रथेन सः ॥ १९ ॥ गच्छन्तमेव तं दृष्ट्वा रामं सम्भ्रान्तचेतसः । ऊचुः परमसन्तप्ता रामं वाक्यमिदं द्विजाः ॥२०॥ ब्राह्मण्यं कृत्स्नमेतत्त्वां ब्रह्मण्यमनुगच्छति । द्विजस्कन्धाधिरूढास्त्वामग्नयोऽप्यनुयान्त्यमी ॥२१॥ वाजपेयसमुत्थानि छत्राण्येतानि पश्य नः । पृष्ठतोऽनुप्रयातानि मेघानिव जलात्यये॥२२॥ अनवाप्तातपत्रस्य रश्मिसन्तापितस्य ते। एभिश्छायां करिष्यामः स्वैश्छत्रैर्वाजपेयिकैः ॥२३॥ या हि नः सततं बुद्धिर्वेदमन्त्रानुसारिणी । त्वत्कृते सा कृता वत्स वनवासानुसारिणी ॥२४॥

ञ्जते—ब्राह्मण्यमित्यादिना । ब्राह्मण्यं ब्राह्मणसमूहः "ब्राह्मणमाणववाडवाद्यत्" इति यत्प्रत्ययः । ब्रह्मसु ब्राह्मणेषु साधुः ब्रह्मण्यः तम् । अग्नयः अरण्यारोपिताः, केवलानां द्विजस्कन्धाधिरूढत्वासम्भवात् ॥ २१ ॥ वाजपेयेति । वाजपेयसमुत्थानि वाजपेयानुष्ठानसम्भृतानि । जलात्यये शरदि ॥२२॥ अनवाप्तेति । वाजपेयिकैः वाजपेयप्राप्तैः । "यावज्जीवं न कश्चन प्रत्यवरोहेत् बृहस्पतिसवेन वा प्रत्यवरोहणीयेन यजेत श्वेतच्छत्री भवतीति विज्ञायते" इतिवाजपेययाजिनां श्वेतच्छत्रधारणविधानादिति भावः॥२३॥ अस्माकं बुद्धिरेतावन्तं कालं निश्चिन्ततया मन्त्रविषयाभूत् । इदानीं त्वत्कृत

पर्यन्तं सन्निकृष्टपदन्यासो भूत्वा वनपरायण एव शनैर्जगाम, नतु निवृत्तो नापि स्थित इत्यर्थः ॥ १८ ॥ कुतो हेतोरित्यत आह—द्विजातीनिति । रथेन परिमोक्तुं न शशाक रथेनोपलक्षितः सन् द्विजातीन्निवर्तयितुं न शशाक । ब्राह्मणेष्वतिविश्वासात् रथारूढस्सन् ब्राह्मणान्निवर्तयितुं नोचितमित्यमन्यतेत्यर्थः ॥ १९ ॥ गच्छन्तमेव प्रार्थनानन्तरमपि गच्छन्तमित्यर्थः ॥ २० ॥ दुःखप्रदर्शनेन प्रलापादिनाप्यनिवृत्तं रामं सहवनगमनलक्षणं महाभारमारोप्य निवर्तयितुमुद्युञ्जते—ब्राह्मण्यमिति । ब्राह्मण्यं ब्राह्मणसम्बन्धि सकलमन्त्रतन्त्रज्ञानयोगानुष्ठानरूपमस्मदीयं कर्म, ब्राह्मणसमूहो वा । द्विजस्कन्धेति । पात्रारणिभरणद्वारेणेतिशेषः ॥ २१ ॥ वाजपेयेति । मेघानिव जलात्यय इति शरदि मेघवत्पाण्डराणीत्यर्थः ॥ २२ ॥ अनवाप्तेति । वाजपेयिकैः वाजपेययागप्राप्तानि वाजपेयिकानि तैः ॥ २३ ॥ या हीति । वेदमन्त्रानु

वनवासविषयाभूदिति रामे महान्तं भारमारोपयन्ति–या इत्यादिना ॥ २४ ॥ ब्राह्मणानां धनभूतं वेदं परित्यज्य सहधर्मचारिदारसंरक्षणमप्यकृत्वा कथमस्माभिः सह गम्यत इत्याकाङ्क्षायामाह–हृदयेष्विति। नः परं धनम् उत्कृष्टधनभूता ये वेदास्ते हृदयेष्वेव तिष्ठन्ति, अनुच्चारणे तेषां न कापि हानिरिति

हृदयेष्वेव तिष्ठन्ति वेदा ये नः परं धनम्। वत्स्यन्त्यपि गृहेष्वेव दाराश्चारित्ररक्षिताः ॥ २५ ॥
न पुनर्निश्चयः कार्यस्त्वद्गतौ सुकृता मतिः। त्वयि धर्मव्यपेक्षे तु किं स्याद्धर्ममपेक्षितुम् ॥ २६ ॥
याचितो नो निवर्तस्व हंसशुक्लशिरोरुहैः। शिरोभिर्निभृताचार महीपतनपांसुलैः ॥ २७ ॥

भावः। चारित्रेण पातिव्रत्येन रक्षिता दाराश्च गृहेष्वेव तिष्ठन्ति। चारित्राणामेव तद्रक्षकत्वान्नास्मद्रक्ष्यास्त इतिभावः ॥ २५ ॥ अद्य मत्प्रार्थनया निवर्त्तध्वमित्यत्राह–नेति। त्वद्गतौ त्वन्निवर्त्तनरूपगतौ। मतिः सुकृता सुष्ठु कृता। निश्चयः वनगमननिश्चयः। पुनर्न कार्यः, त्वयेति शेषः। त्वयि धर्मव्यपेक्षे पितृवचनपरिपालनरूपधर्मसापेक्षे सति। अस्माभिः धर्ममपेक्षितुं पालयितुं किंनिमित्तं स्यात्, त्वयि वनं गतेऽस्माभिर्धर्म एव त्यक्तव्य इति भावः। यद्वा त्वयि धर्मपरायणे त्वयि तु धर्मव्यपेक्षे सति ब्राह्मणप्रार्थनाकरणरूपधर्मनिरपेक्षे सति किंभूतं धर्ममपेक्षितुं स्यात् न किमपीत्यर्थः॥२६॥ ज्ञानवयस्तपोवृद्धा अपि द्विजा विश्लेषासहिष्णुतया प्रणामेनापि निवर्त्तयितुमुद्युञ्जते–याचित इति। हे निभृताचार निश्चलधर्मानुष्ठान! हंसशुक्लशिरोरुहैः पलितकेशैः। महीपतनपांसुलैः कृतसाष्टाङ्गप्रणामैः। नः अस्माकम् शिरोभिर्याचितो निवर्त्तस्व। वृद्धब्राह्मणानां क्षत्रियकुमारप्रणामः परत्वबुद्ध्या ॥२७॥

सारिणी तदभ्यासानुसरणशीला। त्वत्कृते त्वन्निमित्तम्। वनवासानुसारिणीकृता वेदमन्त्राभ्यासादिकं परित्यज्य वनवासोन्मुखीकृतेत्यर्थः ॥ २४ ॥ नस्त्वया सह वनगमने न काप्यनुपपत्तिरित्याहुः–हृदयेष्विति । चारित्रं पातिव्रत्यम् ॥ २५ ॥ न पुनरिति। त्वद्गतौ त्वन्निवर्तनरूपगतौ । मतिः सुकृता सुष्ठु निश्चिता । निश्चयः वनगमननिश्चयः। पुनर्न कार्यः, त्वयेति शेषः। त्वयि धर्मपरायणे त्वयि धर्मव्यपेक्षे सति ब्राह्मणप्रार्थनाकरणरूपधर्मनिरपेक्षे सति । इतोऽधिकम् किम् किम्भूतम् धर्ममुपेक्षितं स्यात् न किमपीत्यर्थः। इतः परं ब्राह्मणप्रार्थनाया अप्यधिकं कं धर्मं साधयिष्यसीति भावः ॥ २६ ॥ तथापि गच्छन्तं प्रत्याहुः–याचित इति। हंसशुक्लशिरोरुहैः पलितकेशैः। शिरोभिः महीपतनपांसुलैः साष्टाङ्गप्रणामेन महीपतनपांसुलैः रजोव्याप्तैर्देहैश्च याचितो निवर्तस्व । निभृताचार निश्चलधर्मानुष्ठान! ॥२७॥

बहूनामिति। ये द्विजा इहागतास्तेषां ये यज्ञाः विततः विस्तृताः, सम्भृतसम्भारा इतियावत्। तेषां यज्ञानां समाप्तिस्तव निवर्त्तने आयत्ता, त्वन्निवर्त्तनाधीनेत्यर्थः। एवं न कृतश्चेत्सर्वे यज्ञास्त्वयैव विघ्निताः स्युरितिभावः ॥२८॥ न केवलं वयमेव, तिर्यक्स्थावराण्यपि त्वन्निवृत्तिमपेक्षन्त इत्याह—भक्तिमन्तीति।

बहूनां वितता यज्ञा द्विजानां य इहागताः। तेषां समाप्तिरायत्ता तव वत्स निवर्त्तने ॥२८॥ भक्तिमन्ति हि भूतानि जङ्गमाजङ्गमानि च। याचमानेषु राम त्वं भक्तिं भक्तेषु दर्शय ॥ २९ ॥ अनुगन्तुमशक्तास्त्वां मूलैरुद्धतवेगिनः। उन्नता वायुवेगेन विक्रोशन्तीव पादपाः ॥३०॥ निश्चेष्टाहारसञ्चारा वृक्षैकस्थानविष्ठिताः। पक्षिणोऽपि प्रयाचन्ते सर्वभूतानुकम्पिनम् ॥३१॥ एवं विक्रोशतां तेषां द्विजातीनां निवर्त्तने। ददृशे तमसा तत्र वारयन्तीव राघवम् ॥३२॥

भक्तिं स्नेहम्। दर्शय सफलयेत्यर्थः॥ २९ ॥ अनुगन्तुमिति। मूलैः पादस्थानीयैस्त्वामनुगन्तुमशक्ताः। उद्धतवेगिनः प्रतिहतवेगिनः। वायुवेगेन उन्नताः ऊर्ध्वबाहव इव स्थिता इति भावः। पादपाः विक्रोशन्तीव, क्रन्दन्तीव वायुवेगोत्थशब्दैरितिभावः। उद्धतवेगिभिरित्यपि पाठः ॥३०॥ निश्चेष्टेति। चेष्टा चलनादिकम् आहारः सञ्चाराश्च येभ्यो निर्गतास्ते तथोक्ताः। प्रयाचन्ते प्रार्थयन्ते, निवृत्तिमितिशेषः। एवं तिर्यक्स्थावराणामपि खेदो रामस्य सर्वशरीरित्वात् शरीरिणो वैपरीत्ये हि शरीरव्यथा दृष्टा ॥ ३१ ॥ एवमिति। निवर्तने विषये। यद्वा द्विजातीनामिति सम्बन्धसामान्ये षष्ठी। द्विजातिभिः प्रार्थ्य

बहूनामिति। ये द्विजाः इहागताः, तेषां ये यज्ञाः विस्तृताः, सम्भृतसम्भारा इत्यर्थः। तेषां यज्ञानां समाप्तिः तव निवर्तने आयत्ता त्वन्निवर्तनाधीनेत्यर्थः। एवं न कृतं चेत् सर्वे यज्ञाः त्वयैव विघ्निताः स्युरिति भावः ॥ २८ ॥ न केवलं वयमेव, तिर्यक्स्थावराण्यपि त्वन्निवृत्तमाकाङ्क्षन्त इत्याहुः—भक्तीत्यादि। भक्तिं स्नेहं दर्शय, निवृत्त्येति शेषः ॥२९॥ अनुगन्तुमिति। मूलैर्हेतुभिः। उद्धतवेगिनः अत्यन्तहतवेगवन्तः, अत एव त्वामनुगन्तुमशक्ताः वायुवेगेन हेतुना विक्रोशन्तीवेति सम्बन्धः। अयं भावः—पुरवासिनां रामानुयानभाग्यमवलोक्य स्वयमपि तदर्थमुद्युक्ताः मूलैर्हेतुभिर्हतगमनवेगाः पुरजनैरिवास्माभिः रामानुयानभाग्यं न लब्धमिति वायुवेगेन हेतुना विक्रोशन्तीति ॥ ३०॥ निश्चेष्टाहारसञ्चाराः चेष्टया गात्रसञ्चालनादिना आहारार्थं सञ्चाराः येभ्यो निर्गताः। प्रयाचन्ते प्रार्थयन्ते, वृक्षरूपे एकस्मिन्नेव स्थाने विष्ठिताः न तु भुवमवरोहन्त्यहारार्थमपीत्यर्थः ॥ ३१ ॥ एवमिति। रामनिवर्तने द्विजातीनां विक्रोशतां सतां राघवं वारयन्ती तमसा ददृशे दृष्टेति

मानरामनिवर्त्तन इत्यर्थः ॥३२॥ तत इति । संपरिवर्त्त्य अध्वश्रमानिवृत्त्यर्थं परिवेष्टनं कारयित्वा अचारयत् भक्षितयवसानकरोत् ॥३३॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥ सीतामुद्दीक्ष्य लक्ष्मणं प्रति कथनं वक्ष्य

ततः सुमन्त्रोऽपि रथाद्विमुच्य श्रान्तान् हयान् सम्परिवर्त्त्य शीघ्रम् । पीतोदकांस्तोयपरिप्लुताङ्गानचारयद्वै तमसाविदूरे ॥ ३३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥
ततस्तु तमसातीरं रम्यमाश्रित्य राघवः । सीतामुद्वीक्ष्य सौमित्रिमिदं वचनमब्रवीत् ॥ १ ॥ इयमद्य निशा पूर्वा सौमित्रे प्रहिता वनम् । वनवासस्य भद्रं ते स नोत्कण्ठितुमर्हसि ॥२॥ पश्य शून्यान्यरण्यानि रुदन्तीव समन्ततः । यथानिलयमायद्भिर्निलीनानि मृगद्विजैः ॥ ३ ॥

माणस्यानुत्कण्ठाकारणस्य सीताविषयेपि तुल्यत्वज्ञापनाय ॥ १ ॥ इयमिति । वनवासस्य पूर्वा प्रथमा । अद्येयं निशा इदानीमुपस्थिता रात्रिः । प्रहिता गतप्राया । अतः स त्वम् उत्कण्ठितुं नार्हसि । सीतामुद्वीक्ष्य सौमित्रिमब्रवीदित्यस्यैवं वाभिप्रायः–अतिसुकुमारी सीता कथं पद्भ्यामेव वनं गच्छेदिति नोत्कण्ठितुमर्हसीति ॥२॥ पश्येति । शून्यानि निष्प्रभाणि । यथानिलयं यथास्थानम् । आयद्भिरागच्छाद्भिः । मृगद्विजैर्निलीनानि । व्याप्तानि तात्कालिक

सम्बन्धः। यद्वा द्विजातीनां निवर्तने । सम्बन्धसामान्ये षष्ठी । द्विजातिभिः प्रार्थ्यमानरामनिवर्तन इत्यर्थः॥३२॥ तत इति । संपरिवर्त्त्य अध्वश्रमनिवृत्त्यर्थं भुवि परिवेष्टनं कारयित्वा अचारयत् भक्षितयवसानकरोत्॥३३॥इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां पञ्चचत्वारिंशः सर्गः ४५
तत इति । सीतामुद्वीक्ष्य सौमित्रिमब्रवीदित्यनेन सीतोद्देशेनाप्यवोचदित्यवगम्यते ॥ १ ॥ इयमिति । वनवासस्य वनवाससम्बन्धिनीनां निशानां मध्य इत्यर्थः । पूर्वा प्रथमा । अद्य इयं निशा इदानीमुपस्थिता रात्रिः । वनं प्रहिता वने प्राप्ता, वनवासदिनेष्वेको दिवसो गतप्राय इत्यर्थः । अतः स त्वम् उत्कण्ठितुं गृहसौख्यादिवाञ्छां कर्तुं नार्हसि ॥ २ ॥ पश्येति । यथा यथायोगं स्वस्वनिलयमायद्भिर्मृगद्विजैः निलीनानि अन्तर्लीनतया व्याप्तानि अत एव शून्यानि रुदन्तीव खिन्नानीव

स०–वनवासस्य पूर्वा निशा प्राथमिकी रात्रिरियं प्रहिता प्राप्ता । अत इयं सीता अवनं रक्षणं अर्हतीति शेषः । उत्कण्ठितुं गृहादि चिन्तां कर्तुम् । यद्वा अद्येयं पूर्वा निशा अद्य च प्रहितायाः प्राप्तायाः सीतायाः अवनं भद्रं यतः तेन इह रक्षणविषये उत्कण्ठितुं उत्साहं कर्तुम् ॥ २ ॥

तच्छन्दैः रुदन्तीव । निष्प्रभत्वेन रोदनोत्प्रेक्षा ॥ ३ ॥ वनरोदनोत्प्रेक्षया उद्बुद्धसंस्कारो नगरवृत्तान्तं स्मरति–अद्येति । स्त्रीपुंसेति " अचतुरविचतुरसुचतुरस्त्रीपुंस-" इत्यादिना निपातनादकारान्तत्वम् ॥४॥ शोचनहेतुमाह–अनुरक्ता इति । गुणैर्हेतुभिः राजानं प्रत्यनुरक्ता हि राजानामित्युपादान

अद्यायोध्या तु नगरी राजधानी पितुर्मम । सस्त्रीपुंसागतानस्मान् शोचिष्यति न संशयः ॥ ४ ॥ अनुरक्ता हि मनुजा राजानं बहुभिर्गुणैः । त्वां च मां च नरव्याघ्र शत्रुघ्नभरतौ तथा ॥ ५ ॥ पितरं चानुशोचामि मातरं च यशस्विनीम् । अपि वाऽन्धौ भवेतां तु रुदन्तौ तावभीक्ष्णशः ॥ ६ ॥ भरतः खलु धर्मात्मा पितरं मातरं च मे । धर्मार्थकामसहितैर्वाक्यैराश्वासयिष्यति ॥ ७ ॥ भरतस्यानृशंसत्वं विचिन्त्याहं पुनःपुनः । नानुशोचामि पितरं मातरं चापि लक्ष्मण ॥८॥ त्वया कार्यं नरव्याघ्र मामनुव्रजता कृतम् । अन्वेष्टव्या हि वैदेह्या रक्षणार्थे सहायता ॥ ९ ॥ अद्भिरेव तु सौमित्रे वत्स्याम्यद्य निशामिमाम् । एतद्धि रोचते मह्यं वन्येऽपि विविधे सति ॥ १० ॥ एवमुक्त्वा तु सौमित्रिं सुमन्त्रमपि राघवः । अप्रमत्तस्त्वमश्वेषु भव सौम्येत्युवाच ह ॥ ११ ॥

मौद्धत्यपरिहाराय ॥ ५ ॥ पितरमिति । रुदन्ताविति सन्ततरोदनवशेनान्धौ स्यातामित्यर्थः ॥ ६ ॥ एवमपि काचित्प्रत्याशास्तीत्याह–भरत इति ॥ ७ ॥ ८ ॥ त्वया चोदितमेव कृतमित्याह–त्वयेति । कार्यम् अवश्यकर्त्तव्यम् । तत्र हेतुः अन्वेष्टव्येति ॥ ९ ॥ अद्भिरिति । अद्भिरेव वत्स्यामि अप एवाहारीकृत्य वत्स्यामि । वनवासोपक्रमदिवसत्वादस्य पुण्यक्षेत्रत्वाच्चोपवासः । एतद्धि रोचते नान्यत्, अनुरक्तजनदुःखस्मरणादितिभावः ॥१०॥११॥

चारण्यानि वर्तन्ते तानि पश्य ॥ ३ ॥ अद्येति । सस्त्रीपुंसा स्त्रीपुरुषसहिता । 'अचतुर–' इत्यादिना अकारान्तता ॥ ४ ॥ कुतः अनुरक्ता इति । बहुभिर्गुणैर्हेतुभिः अनुरक्ताः ॥ ५ ॥ पितरमिति । अभीक्ष्णशः मुहुर्मुहुः रुदन्तौ तौ पितरौ रोदनवशादन्धौ भवेतां वापि किम् इति पितरं मातरं चानुशोचामीत्यन्वयः ॥ ६ ॥ अथापि तदनुशोचने न काचिच्चिन्तेत्याह–भरत इति ॥ ७ ॥ भरतस्येति । अनृशंसत्वम् अक्रौर्यम् ॥ ८ ॥ अथ लक्ष्मणानुगमनेन सन्तुष्ट आह–त्वयेति । मामनुव्रजता त्वया, कार्यं कर्तव्यमेव कृतम् । हि यस्मात् । वैदेह्या रक्षणार्थे सहायता अन्वेष्टव्या सम्पादनीया ॥९॥ अद्भिरिति । अत्र तमसातीरे, अद्भिरेव अप एव आहारीकृत्य वत्स्यामीत्यर्थः । वनवासोपक्रमदिवसत्वात्तमसातीरस्य पुण्यक्षेत्रत्वाच्चोपवासः कार्य इति भावः ( वत्स्याम्यत्रेति पाठः ) ॥ १० ॥ ११ ॥

स०–अद्भिरेवेति । अनेन स्वपितुरल्पजीवित्वात्तदुद्देशेन तीर्थोपवासः कृत इति ध्वन्यते ॥ १० ॥

स इति । प्रभूतयवसान् पर्याप्ततृणान् "यवसं तृणमर्जुनम्" इत्यमरः । प्रत्यनन्तरः प्रतिगतमनन्तरकृत्यं येन स तथोक्तः । अवगतानन्तरकार्य इत्यर्थः । सन्निहित इत्यर्थ इत्येके ॥ १२ ॥ उपास्येति । उपासनं नमस्कारः । सूतजातेरपि नमस्कारमात्रं सम्भवति ॥ १३ ॥ तामिति । वृक्षदलैः सौमित्रिणा

सोऽश्वान् सुमन्त्रः संयम्य सूर्येऽस्तं समुपागते । प्रभूतयवसान् कृत्वा बभूव प्रत्यनन्तरः ॥ १२ ॥ उपास्य तु शिवां सन्ध्यां दृष्ट्वा रात्रिमुपस्थिताम् । रामस्य शयनं चक्रे सूतः सौमित्रिणा सह ॥ १३ ॥ तां शय्यां तमसातीरे वीक्ष्य वृक्षदलैः कृताम् । रामः सौमित्रिणा सार्द्धं सभार्यः संविवेश ह ॥ १४ ॥ सभार्यं सम्प्रसुप्तं तं भ्रातरं वीक्ष्य लक्ष्मणः । कथयामास सूताय रामस्य विविधान् गुणान् ॥ १५ ॥ जाग्रतो ह्येव तां रात्रिं सौमित्रेरुदितो रविः । सूतस्य तमसातीरे रामस्य ब्रुवतो गुणान् ॥ १६ ॥ गोकुलाकुलतीरायास्तमसाया विदूरतः । अवसत्तत्र तां रात्रिं रामः प्रकृतिभिः सह ॥ १७ ॥ उत्थाय तु महातेजाः प्रकृतीस्ता निशाम्य च । अब्रवीद्भ्रातरं रामो लक्ष्मणं पुण्यलक्षणम् ॥ १८ ॥ अस्मद्व्यपेक्षान् सौमित्रे निरपेक्षान् गृहेष्वपि । वृक्षमूलेषु संसुप्तान् पश्य लक्ष्मण साम्प्रतम् ॥ १९ ॥ यथैते नियमं पौराः कुर्वन्त्यस्मन्निवर्त्तने । अपि प्राणानसिष्यन्ति न तु त्यक्ष्यन्ति निश्चयम् ॥ २० ॥

सार्द्धं सूतेन कृतां वीक्ष्य इत्यन्वयः ॥ १४ ॥ १५ ॥ जाग्रत इति । तां रात्रिमिति अत्यन्तसंयोगे द्वितीया । सर्वां रात्रिं जाग्रतः सूतस्य सूताय । रामस्य गुणान् कालक्षेपार्थं ब्रुवतः सौमित्रेः सौमित्रौ ब्रुवति सति । रविरुदितः उदितुमारब्धः, उषःकालोऽभूदित्यर्थः । यद्वा उदयपर्यन्तं गमनकालेऽपि गुणानब्रवीदितिभावः ॥ १६ ॥ पूर्वकथाशेषं प्रस्तौति—गोकुलेति । विदूरतः अदूरतः । प्रकृतिभिः पौरश्रेणिभिः । "राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च" इत्यमरः ॥ १७ ॥ उत्थायेति । निशाम्य दृष्ट्वा ॥ १८ ॥ अस्मदिति । अस्मद्व्यपेक्षान् अस्मास्वेव विशेषेणापेक्षावतः ॥ १९ ॥ यथेति । पौराः अस्म

सोऽश्वानिति । संयम्य बद्ध्वा, प्रभूतयवसान समृद्धग्रासवतः कृत्वा । प्रत्यनन्तरः प्रत्यासन्नः ॥ १२ ॥ उपास्येति । शयनं शयनस्थलं चक्रे ॥ १३ ॥ तामिति । सौमित्रिणा सार्धं सौमित्रिंहस्ते गृहीत्वा शय्यां वीक्ष्य सभार्यः संविवेशेति सम्बन्धः । यद्वा वृक्षदलैः सौमित्रिणा सार्धं सूतेन कृतां तां शय्यां वीक्ष्येति सम्बन्धः । वृतामित्यपि वा पाठः ॥ १४ ॥ १५ ॥ जाग्रत इति । उदितो रविः अरुणोदयकालो जात इत्यर्थः ॥ १६ ॥ १७ ॥ निशाम्य अवलोक्य, निद्राणा इति शेषः ॥ १८ ॥ अस्मद्व्यपेक्षान् अस्मास्वेव विशेषेणापेक्षावतः । अत एव गृहेषु निरपेक्षान् अपेक्षारहितान् ॥ १९ ॥ यथेति । यथा वयमेतेषां निवृत्तौ नियमं कुर्मः तथैवास्मन्निवर्तने नियमं कुर्वन्ति

न्निवर्त्तने यथा येन प्रकारेण नियमं कुर्वन्ति तेन प्रकारेण प्राणानपि असिष्यन्ति त्यक्ष्यन्ति। निश्चयं तु निवर्तननिश्चयं तु न त्यक्ष्यन्तीति सम्बन्धः ॥२०॥ यावदिति। यावदेव यावत्येव काले। तावदेव तावत्येवकाले। लघु क्षिप्रम्। रथमारुह्य गच्छाम। "लघुक्षिप्रमरं द्रुतम्" इत्यमरः ॥ २१ ॥ अत इति।

यावदेव तु संसुप्तास्तावदेव वयं लघु। रथमारुह्य गच्छाम पन्थानमकुतोभयम् ॥ २१ ॥ अतो भूयोऽपि नेदानी मिक्ष्वाकुपुरवासिनः। स्वपेयुरनुरक्ता मां वृक्षमूलानि संश्रिताः ॥ २२ ॥ पौरा ह्यात्मकृताद्दुःखाद्विप्रमोक्ष्या नृपा त्मजैः। न ते खल्वात्मना योज्या दुःखेन पुरवासिनः ॥२३॥ अब्रवील्लक्ष्मणो रामं साक्षाद्धर्ममिव स्थितम्। रोचते मे तथा प्राज्ञ क्षिप्रमारुह्यतामिति ॥२४॥ अथ रामोऽब्रवीच्छ्रीमान् सुमन्त्रं युज्यतां रथः। गमिष्यामि ततोऽरण्यं गच्छ शीघ्रमितः प्रभो ॥ २५ ॥ सूतस्ततः संत्वरितः स्यन्दनं तैर्हयोत्तमैः। योजयित्वाथ रामाय प्राञ्जलिः प्रत्य वेदयत् ॥ २६ ॥ अयं युक्तो महाबाहो रथस्ते रथिनां वर। तमारोह सुभद्रं ते ससीतः सहलक्ष्मणः ॥ २७ ॥ तं स्यन्दनमधिष्ठाय राघवः सपरिच्छदः। शीघ्रगामाकुलावर्त्तां तमसामतरन्नदीम् ॥ २८ ॥ स संतीर्य्य महाबाहुः श्रीमान् शिवमकण्टकम्। प्रापद्यत महामार्गमभयं भयदर्शिनाम् ॥ २९ ॥

इक्ष्वाकुपुरवासिनः मामनुरक्ताः इदानीमिव भूयः पुनर्वृक्षमूलानि संश्रिताः न स्वपेयुः अतो रथमारुह्य गच्छामेति पूर्वेण सम्बन्धः ॥ २२ ॥ पौरा इति। आत्मकृतात् स्वकृतात्। आत्मना स्वेन ॥ २३–२६ ॥ अयमिति। युक्तः सज्जः ॥ २७ ॥ तमिति। सपरिच्छदः धनुःकवचादिसहितः। आकु लावर्त्ताम् आवर्त्ताकुलाम् ॥२८॥ स संतीर्येति। महामार्गं प्रापद्यत जलस्थितरथादवतीर्य पद्भ्यामेव महामार्गं प्रापदित्यर्थः। भयदर्शिनां श्वापदादीनाम्। स्म, अत एव एते प्राणान्वा नशिष्यन्ति त्यक्ष्यन्ति, निश्चयमस्मन्निवर्तनरूपनिश्चयं न त्यक्ष्यन्तीति सम्बन्धः ॥ २० ॥ यावदिति। सुप्ता एते। यावत् यावत्पर्य न्तम्। नोत्थिता भवेयुरिति शेषः। तावद् तावत्पूर्वमेव। लघु क्षिप्रम्। रथमारुह्य गच्छामेत्यर्थः ॥ २१ ॥ अत इति। इक्ष्वाकुपुरवासिनो मामनुरक्ताः, इदानीमिव भूयोपि पुनरपि, वृक्षमूलानि संश्रिताः न स्वपेयुः, अतो गच्छामेति पूर्वेण सम्बन्धः ॥ २२ ॥ पौरा इति। आत्मकृतात् आत्मनिमित्तात् स्वैः कृतादित्यर्थः। दुःखात् आत्मना आत्महेतुना, दुःखेन न योज्याः पौरा इति सम्बन्धः ॥ २३ ॥ २४ ॥ अथेति। अतस्तस्माद्रथादरण्यं गच्छामि। शीघ्रं गच्छ, रथसंयोजनायेति शेषः ॥२५॥ ॥ २६ ॥ अयमिति। युक्तः सज्जः ॥ २७ ॥ तमिति। परिच्छदः धनुःकवचादिलक्षणः ॥ २८ ॥ स सन्तीर्येति। सन्तीर्य परपारसमीपजलस्थितरथादवतीर्येत्यर्थः।

अभयं तत्सम्बन्धिभयरहितमित्यर्थः ॥ २९ ॥ मोहनार्थमिति । मोहनं वञ्चनम् । ननु सदयस्य रामस्य स्वविरहासहिष्णूनां स्वस्मिन्निरतिशयप्रेम भाजां वञ्चनमनुचितम् । उच्यते—नेदं वञ्चनम् । व्रणचिकित्सान्यायेन नागरिकाणामुन्मस्तकानन्देन सत्ता न भवेदिति सुसात्म्यानुभवप्रदानार्थं वनवास

मोहनार्थं तु पौराणां सूतं रामोऽब्रवीद्वचः । उदङ्मुखः प्रयाहि त्वं रथमास्थाय सारथे ॥ ३० ॥ मुहूर्तं त्वरितं गत्वा निवर्तय रथं पुनः । यथा न विद्युः पौरा मां तथा कुरु समाहितः ॥ ३१ ॥ रामस्य वचनं श्रुत्वा तथा चक्रे स सारथिः । प्रत्यागम्य च रामस्य स्यन्दनं प्रत्यवेदयत् ॥ ३२ ॥ तौ संप्रयुक्तं तु रथं समास्थितौ तदा ससीतौ रघुवंशवर्द्धनौ । प्रचोदयामास ततस्तुरङ्गमान् स सारथिर्येन पथा तपोवनम् ॥ ३३ ॥ ततः समास्थाय रथं महारथः ससारथिर्दाशरथिर्वनं ययौ । उदङ्मुखं तं तु रथं चकार स प्रयाणमाङ्गल्यनिमित्तदर्शनात् ॥ ३४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

व्याजेन विश्लेषस्य सङ्कल्पिततया हितव्यापारत्वेन वञ्चनत्वासम्भवात् । यदि रामस्य तथा सङ्कल्पो न भवेत्तर्हि कथं निश्शेषसर्वजननिद्राकरणम्, सुमन्त्रलक्ष्मणवत्तेष्वेकस्यापि निर्निद्रत्वापत्तेः । मोहनमेवाह उदङ्मुख इत्यादि । पौराणां मोहनार्थमुदङ्मुखः प्रयाहि अयोध्यां प्रति रामो निवृत्त इति पौराणां भ्रान्तिमुत्पादयितुमुदङ्मुखो याहीत्यर्थः । स्वस्य रथेनोदङ्मुखं गत्वा मार्गान्तरेण वनगमनस्य कर्तुं शक्यत्वेपि अयोध्याभिमुखगमने व्रतभङ्गः स्यादिति धिया सुमन्त्रमभिमुखो याहीत्युक्तवान् । तथा कुर्विति पौराणां मोहनार्थं सूतमब्रवीदितिसम्बन्धः ॥ ३० ॥ ३१ ॥ रामस्येति । प्रत्यागम्येति मार्गान्तरेण प्रत्यागम्येत्यर्थः ॥ ३२ ॥ ताविति । सम्प्रयुक्तं सम्यगानीतं रथं समास्थितौ, अभूतामिति शेषः । येन पथा तपोवनं प्राप्यते तेन प्रचोदयामास ॥ ३३ ॥ तत इति । सः सुमन्त्रः । प्रयाणमाङ्गल्यनिमित्तदर्शनात् प्रयाणानुकूलमङ्गलसूचकनिमित्तदर्शनाद्धेतो रथमुदङ्मुखं चकार

पद्भ्यामेव महामार्गं प्रपन्नेत्यर्थः । भयदर्शिनां भयशङ्किनाम् ॥ २९ ॥ मोहनार्थमिति । पौराणां मोहनार्थं त्वमेव रथमास्थाय न तु वयम् । उदङ्मुखः प्रयाहि अयोध्यां प्रति रामभद्रो निवृत्त इति पौराणां भ्रान्तिमुत्पादयितुमुदङ्मुखो याहीत्यर्थः । स्वस्याप्युदङ्मुखगमने व्रतभङ्गः स्यादितिधिया । सुमन्त्र ! त्वमेक एव रथमास्थाय किञ्चिद्दूरं गत्वा पुनरागच्छेत्युक्तवान् ॥ ३० ॥ ३१ ॥ रामस्येति । प्रत्यागम्य मार्गान्तरेण प्रत्यागम्य ॥ ३२ ॥ ताविति । सम्प्रयुक्तं सम्यगानीतं रथं समास्थितौ समारूढौ, अभूतामिति शेषः । येन पथा तपोवनं गम्यते तेन पथा स सुमन्त्रः तुरङ्गमान् चोदयामासेत्यन्वयः ॥ ३३ ॥ तत इति । पूर्वोक्तनिगमन

निमित्तस्वीकारार्थमुदङ्मुखं चकारेत्यर्थः। ततः निमित्तस्वीकारानन्तरम्। रथमास्थाय वनं ययावितिसम्बन्धः। प्रयाणे दक्षिणपादोद्धारवत् उदङ्मुख गमनं मङ्गलायेतिभावः ॥ ३४ ॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥

प्रभातायां तु शर्वर्यां पौरास्ते राघवं विना। शोकोपहतनिश्चेष्टा बभूवुर्हतचेतसः ॥ १ ॥ शोकजाश्रुपरिद्यूना वीक्षमाणास्ततस्ततः। आलोकमपि रामस्य न पश्यन्ति स्म दुःखिताः ॥२ ॥ ते विषादार्तवदना रहितास्तेन धीमता। कृपणाः करुणा वाचो वदन्ति स्म मनस्विनः ॥ ३ ॥ धिगस्तु खलु निद्रां तां ययापहृतचेतसः। नाद्य पश्यामहे रामं पृथूरस्कं महाभुजम् ॥ ४ ॥ कथं नाम महाबाहुः स तथा वितथक्रियः। भक्तं जनं परित्यज्य प्रवासं राघवो गतः ॥ ५ ॥ यो नः सदा पालयति पिता पुत्रानिवौरसान्। कथं रघूणां स श्रेष्ठस्त्यक्त्वा नो विपिनं गतः ॥६॥ इहैव निधनं यामो महाप्रस्थानमेव वा। रामेण रहितानां हि किमर्थं जीवितं हि नः ॥ ७ ॥

अथ पौरवृत्तान्तं दर्शयति–प्रभातायामित्यादि। शोकोपहतनिश्चेष्टाः शोकोपहतत्वान्निश्चेष्टाः। हतचेतसः मूढाः ॥ १ ॥ शोकजेति। शोकजाश्रुभिः परिद्यूनाः परिक्लान्ताः। आलोकमपि रामस्य रामसम्बन्ध्यालोकमपि। आलोक्यत इत्यालोकः तम्। आलोकसाधनं रथरेण्वादिकमपीत्यर्थः ॥ २ ॥ त इति। विषादार्तवदनाः दुःखेन म्लानमुखाः। कृपणाः दीनवेषाः। करुणा वाचः दीनवचांसि। वदन्ति स्म, अन्योन्यमितिशेषः ॥ ३ ॥ ॥ ४ ॥ कथमिति। अवितथक्रियः अमोघानुवृत्तिः ॥ ५ ॥ ६ ॥ इहैवेति। इहैव निधनं प्रायोपवेशनेन मरणम्। महाप्रस्थानं मरणदीक्षापूर्वकमुत्तरा

श्लोकः। सः सुमन्त्रः। प्रयाणमाङ्गल्यनिमित्तदर्शनात् प्रयाणानुकूलमङ्गलसूचकनिमित्तदर्शनाद्धेतोः। तं रथमुदङ्मुखं चकार। निमित्तस्वीकारार्थमुदङ्मुखं चकारेत्यर्थः। ततः निमित्तस्वीकारानन्तरम्। ससारथिः सारथिसहितः दाशरथिः रथं समास्थाय दक्षिणाभिमुखतया वनं ययावित्यन्वयः ॥ ३४ ॥ इति श्रीमहेश्वरतीर्थविरविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां षट्चत्वारिंशः सर्गः ॥ ४६ ॥ प्रभातायामिति। शोकेनोपहताः अत एव निश्चेष्टाश्च तथा ॥ १ ॥ शोकेति। शोकजाश्रुभिः परिद्यूनाः क्लिन्नाः। रामस्यालोकमपि रामसम्बन्ध्यालोकसाधनं रथरेण्वादिकमपि ॥ २ ॥ ३ ॥ विषयाविष्टचित्तानां भगवतः श्रीरामस्य दर्शनं दूरापास्तमिति द्योतयन्त इवाहुः-धिगस्तु खल्विति ॥ ४ ॥ कथमिति। अवितथक्रियः अमोघक्रियः ॥ ५ ॥ ६ ॥ इहैवेति। निधनं प्रायोपवे

भिमुखगमनम् । हिः प्रसिद्धौ ॥ ७ ॥ सन्तीति । प्रविशामोथेति अथवेत्यर्थः ॥ ८ ॥ किं वक्ष्याम इति । किमपि वक्तुं शक्यमित्यर्थः । तदेव विवृणोति महाबाहुरित्यादिना । नीतः वनमिति शेषः॥९–१२॥ तत इति। मार्गानुसारेण किंचित् किंचिद्दूरम् । मार्गनाशात् रथमार्गादर्शनात्। तच्च वीरुत्तृणपटल

सन्ति शुष्काणि काष्ठानि प्रभूतानि महान्ति च। तैः प्रज्वाल्य चितां सर्वे प्रविशामोऽथ पावकम् ॥ ८ ॥ किं वक्ष्यामो महाबाहुरनसूयः प्रियंवदः । नीतः स राघवोऽस्माभिरिति वक्तुं कथं क्षमम् ॥ ९ ॥ सा नूनं नगरी दीना दृष्ट्वास्मान् राघवं विना । भविष्यति निरानन्दा सस्त्रीबालवयोधिका ॥ १० ॥ निर्यातस्तेन वीरेण सह नित्यं जितात्मना । विहीनास्तेन च पुनः कथं पश्याम तां पुरीम् ॥ ११ ॥ इतीव बहुधा वाचो बाहुमुद्यम्य ते जनाः । विलपन्ति स्म दुःखार्ता विवत्सा इव धेनवः ॥ १२ ॥ ततो मार्गानुसारेण गत्वा किञ्चित्क्षणं पुनः । मार्गनाशाद्विषादेन महता समभिप्लुताः ॥ १३ ॥ रथस्य मार्गनाशेन न्यवर्तन्त मनस्विनः । किमिदं किं करिष्यामो दैवेनोपहता इति ॥१४॥ ततो यथागतेनैव मार्गेण क्लान्तचेतसः । अयोध्यामगमन् सर्वे पुरीं व्यथितसज्जनाम् ॥ १५ ॥ आलोक्य नगरीं तां च क्षयव्याकुलमानसाः । अवर्तयन्त तेऽश्रूणि नयनैश्शोकपीडितैः ॥ १६ ॥

पिहितप्रदेशे रथचारणादितिज्ञेयम् । समभिप्लुताः व्याप्ता इत्यर्थः॥१३॥ रथस्येति । दैवेनोपहता इति प्रलपन्त इति शेषः॥१४॥१५॥ आलोक्येत्यादि

शेन मरणम् । महाप्रस्थानं मरणदीक्षापूर्वकमुत्तराभिमुखगमनम् ॥ ७ ॥ ८ ॥ किमिति । नीतः प्रापितः । वनमिति शेषः । अस्यायमर्थः–रामवृत्तान्तं पृच्छन्तं जनं प्रति अस्माभिः राघवो वनं नीत इति वक्तुं कथं क्षमम् ? अन्यद्वा किं वक्ष्याम इति ॥ ९–१२ ॥ तत इति । मार्गानुसारेण रथमार्गानुसारेण । किञ्चित्क्षणं किञ्चित् कालम् । मार्गनाशात् रथमार्गादर्शनात् । पुनः महता विषादेन समभिप्लुताः ॥ १३ ॥ रथस्येति । मार्गनाशेन हेतुना दैवेनोपहता इति, प्रलपन्त इति शेषः । किमिदमितः परं किं करिष्याम इति न्यवर्तन्तेत्यन्वयः ॥ १४ ॥ १५ ॥ आलोक्येति । क्षयव्याकुलमानसाः क्षयं गृहं प्रति व्याकुलानि व्यथितानि गन्तव्यं न वेत्येवं



विषम०–व्यथितसजनाम्–व्यथिताः सज्जनाः यस्यां ताम् । सत्पदेन कैकेय्या व्यावृत्तिः ॥ १९ ॥ सत्यतीं०–क्षयव्याकुलमानसाः क्षये गृहे व्याकुलमानसाः । क्षयो व्याकुलो यस्मिन् रामे तस्मिन् मनो येषां ते इति वा ॥ १६ ॥

श्लोकद्वयमेकं वाक्यम् । अन्त इतिकरणं बोध्यम् । क्षयव्याकुलमानसाः सम्मार्जनलेपनादिक्षयेण व्यथितमनस्काः । अवर्त्तयन्त अमुञ्चन् ॥ १६–१८ ॥ ते तानीति । दुःखेन सहितं स्वजनं वा पौरजनं वा । न प्रजज्ञुः नाज्ञासिषुः ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने

एषा रामेण नगरी रहिता नातिशोभते । आपगा गरुडेनेव ह्रदादुद्धृतपन्नगा ॥ १७ ॥ चन्द्रहीनमिवाकाशं तोयहीन मिवार्णवम् । अपश्यन्निहतानन्दं नगरं ते विचेतसः ॥ १८ ॥ ते तानि वेश्मानि महाधनानि दुःखेन दुःखोपहता विशन्तः । नैव प्रजज्ञुः स्वजनं जनं वा निरीक्षमाणाः प्रविनष्टहर्षाः ॥ १९ ॥ इत्यार्षे श्रीमदयोध्याकाण्डे सप्तचत्वारिंशःसर्गः ४७

तेषामेवं विषण्णानां पीडितानामतीव च । बाष्पविप्लुतनेत्राणां सशोकानां मुमूर्षया ॥ १ ॥ अनुगम्य निवृत्तानां रामं नगरवासिनाम् । उद्गतानीव सत्त्वानि बभूवुरमनस्विनाम् ॥ २ ॥ स्वंस्वं निलयमागम्य पुत्रदारैः समावृताः । अश्रूणि मुमुचुः सर्वे बाष्पेण पिहिताननाः ॥ ३ ॥ न चाहृष्यन्न चामोदन् वणिजो न प्रसारयन् । न चाशोभन्त पुण्यानि नापचन् गृहमेधिनः ॥ ४ ॥

अयोध्याकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ तेषामित्यादि । मुमूर्षया मर्तुमिच्छयोपलक्षितानाम् ॥१॥ सत्त्वानि प्राणाः । "द्रव्यासुव्यवसायेषु सत्त्वम्" इत्यमरः । उद्गतानीव बभूवुः मुमूर्छुरित्यर्थः । अमनस्विनां धैर्यहीनानाम् ॥ २ ॥ ३ ॥ नेति । न चाहृष्यन् सुहृद्दर्शनेनापि हर्ष

रूपचिन्तायुक्तानि मनांसि येषां ते तथा । अवर्तयन्त अमुञ्चन् ॥ १६ ॥ एषेति । नातिशोभत इत्यश्रूण्यवर्तयन्तेति पूर्वेण सम्बन्धः ॥ १७ ॥ १८ ॥ ते तानीति । ते पौराः । महाधनानि अमूल्यानि तानि वेश्मानि, स्वस्ववेश्मानीत्यर्थः । विशन्तोपि दुःखेन सहितं स्वजनं वा जनम् अन्यजनं वा निरीक्षमाणा अपि दुःखेनोपहतास्सन्तः, स्वपरवेश्मविवेकं स्वजनान्यजनविवेकं च नैव प्रजज्ञुः, न प्रापुरित्यर्थः ॥ १९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ तेषामित्यादि श्लोकद्वयमेकं वाक्यम् । मुमूर्षया उपलक्षितानाम् । सत्त्वानि असवः । उद्गतानि उत्क्रान्तानीव बभूवुः ॥ १ ॥ २ ॥ स्वं स्वमिति । बाष्पेण पिहिताननाः अश्रुव्याप्तमुखा इत्यर्थः ॥ ३ ॥ नचेति । हर्षो बाह्यसन्तोषः, आमोदः आन्तरसन्तोषः ॥ ४ ॥

स०–गरुडेन ह्रदादुद्धृतपन्नगा आपगा नदी यथा न शोभते तद्वत्, तस्य तद्भूषणत्वात् । यद्वा व्यतिरेकदृष्टान्तः । यमुनादौ तथा दृष्टेः ॥ १७ ॥ चन्द्रहीनमित्याद्यभूतोपमालङ्कारः ॥ १८ ॥ अमोदन्निति पदव्यत्यासेन रामपदव्यत्यासेनायं खेद इति द्योत्यते ॥ ४ ॥

न प्रापुः । न चामोदन् अपूर्ववस्तुलाभेपि मोदं न प्रापुः । प्रसारयन् प्रासारयन्, पण्यानीतिशेषः । पुण्यानि पुण्यफलभूतपुत्रकलत्रादीनि । नापचन्निति गृहमेधिनः गृहस्थाः । तेषां पचिक्रियासम्बन्धस्त्वर्धशरीरभूतपत्नीद्वारा ॥ ४ ॥ नष्टमिति । नष्टं चिरकालनष्टं रत्नादिकम् ।

नष्टं दृष्ट्वा नाभ्यनन्दन् विपुलं वा धनागमम् । पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनन्दत ॥ ५ ॥ गृहेगृहे रुदन्त्यश्च भर्तारं गृहमागतम् । व्यगर्हयन्त दुःखार्त्ता वाग्भिस्तोत्रैरिव द्विपान् ॥ ६ ॥ किं नु तेषां गृहैः कार्य्यं किं दारैः किं धनेन वा । पुत्रैर्वा किं सुखैर्वापि ये न पश्यन्ति राघवम् ॥ ७ ॥ एकः सत्पुरुषो लोके लक्ष्मणः सह सीतया । योऽनु गच्छति काकुत्स्थं रामं परिचरन् वने ॥ ८ ॥ आपगाः कृतपुण्यास्ताः पद्मिन्यश्च सरांसि च । येषु स्नास्यति काकुत्स्थो विगाह्य सलिलं शुचि ॥ ९ ॥ शोभयिष्यन्ति काकुत्स्थमटव्यो रम्यकाननाः । आपगाश्च महानूपाः सानुमन्तश्च पर्वताः ॥ १० ॥

धनागमं निध्यादिलाभम् ॥ ५ ॥ गृहेगृहइति । रुदन्त्यः सर्वाः स्त्रियः । भर्तारं स्वस्वभर्त्तारम् । व्यगर्हयन्त किमर्थं भवद्भिरागतमित्येवं निन्दन्ति स्म । तोत्रैः अङ्कुशैः ॥ ६ ॥ गर्हां विशदयति–किं न्वित्यादिश्लोकेन । इति व्यगर्हयन्तेत्यन्वयः ॥ ७ ॥ एक इति । सीतया सह रामं सीतासहितं राम मित्यर्थः ॥ ८ ॥ ९ ॥ शोभयिष्यन्तीति । रम्यकाननाः तत्रतत्र रम्यवृक्षराजियुक्ताः । महानूपाः रम्यकच्छप्रदेशाः । "जलप्रायमनूपं स्यात्पुंसि कच्छः"

नष्टं चिरकालनष्टं धनादिकम् । धनागमं धनलाभम् ॥५॥६॥ये रामं न पश्यन्ति तेषां गृहादिभिः किमिति सम्बन्धः । अयं भावः–संसारसागरान्निरवधिककरुणया सकल जगदुद्धरणाय नररूपेणावतीर्य स्वदेशे स्वपुरे चावस्थितं भगवन्तं श्रीरामं परमादरेणापश्यन्तो ये पुत्रदारादिषु रमन्ते ते पापिष्ठाः पुनः पुनस्संसरन्तीति ॥७॥वने रामं परिचरन् योऽनुगच्छति स सत्पुरुषः भाग्यपुरुषः । सा सीतापि भाग्यवतीत्यर्थः ॥८॥ आस्तां तावत्सीतालक्ष्मणयोर्भाग्यानुवर्णनम्; कस्तद्वर्णयितुं शक्तः–अचेतना अप्यापगादयः सुभाग्या इत्याहुः–आपगा इति॥९॥शोभयिष्यन्तीति।रम्यकाननाः चारुवृक्षसङ्घाः अनूपाः जलप्रायतीरप्रदेशः१०॥११॥विचित्रकुसुमैः आपीडः शिरो



सत्य०– गृहमागतं, रामं विहायेति शेषः ॥ ६ ॥ आपगाः नद्यः । कीदृश्यः ? पद्मिन्यः सर्ववत्यः । "पद्मं स्यात्पद्मगे" इति विश्वः ॥ ९ ॥

इत्यमरः ॥ १० ॥ काननमिति । नैनं शक्ष्यन्त्यनर्चितुम् अर्चितुं शक्ष्यन्त्येवेत्यर्थः ॥ ११ ॥ विचित्रेति । विचित्रकुसुमापीडाः विचित्रपुष्पशेखराः । मञ्जरीत्यत्र छान्दसो ह्रस्वः । दर्शयिष्यन्ति, आत्मानमितिशेषः । नगाः वृक्षाः ॥ १२ ॥ अकाल इति । दर्शयिष्यन्ति वृक्षलतादिद्वारेतिभावः । अनु

कानन वापि शैलं वा यं रामोऽभिगमिष्यति । प्रियातिथिमिव प्राप्तं नैनं शक्ष्यन्त्यनर्चितुम् ॥ ११ ॥ विचित्रकुसुमा-पीडा बहुमञ्जरिधारिणः । राघवं दर्शयिष्यन्ति नगा भ्रमरशालिनः ॥ १२ ॥ अकाले चापि मुख्यानि पुष्पाणि च फलानि च । दर्शयिष्यन्त्यनुक्रोशाद्गिरयो राममागतम् ॥ १३ ॥ प्रस्रविष्यन्ति तोयानि विमलानि महीधराः । विदर्शयन्तो विविधान् भूयश्चित्रांश्च निर्झरान् । पादपाः पर्वताग्रेषु रमयिष्यन्ति राघवम् ॥ १४ ॥ यत्र रामो भयं नात्र नास्ति तत्र पराभवः । स हि शूरो महाबाहुः पुत्रो दशरथस्य च ॥ १५ ॥ पुराभवति नो दूरादनुगच्छाम राघवम् ॥ १६ ॥ पादच्छाया सुखा भर्तुस्तादृशस्य महात्मनः । स हि नाथो जनस्यास्य स गतिः स परायणम् ॥ १७ ॥ वयं परिचरिष्यामः सीतां यूयं तु राघवम् । इति पौरस्त्रियो भर्तॄन् दुःखार्तास्तत्तदब्रुवन् ॥ १८ ॥

क्रोशात् आदरादित्यर्थः ॥ १३ ॥ १४ ॥ यत्रेति । यत्र देशे रामो वर्त्तते अत्र भयं नास्ति । तत्र पराभवोपि नास्ति ॥ १५ ॥ पुरेति । दूरात् पुराभवति भविष्यति । ततः पूर्वमेवानुगच्छाम इत्यर्थः । "यावत्पुरानिपातयोर्लट्" इतिलट् ॥ १६ ॥ पादच्छायेति पादसेवा लक्ष्यते । सुखा सुखसाधनभूता ।

भूषणं येषां ते । बह्वीः मञ्जरीः पुष्पस्तवकान् धर्तुं शीलमस्त्येषामिति । छान्दसो ह्रस्वः । नगाः वृक्षाः । राघवं दर्शयिष्यन्ति । अयं भावः—नगाः रामं परमात्मानं मत्वा स्वनिष्ठभ्रमरझङ्काररूपमन्त्रोच्चारणपूर्वकं स्वशाखाकरोद्धृतमञ्जरीरूपपुष्पाञ्जलिभिः राघवमर्चिष्यन्तीति ॥ १२ ॥ अकाल इति । गिरयो दर्शयिष्यन्ति, स्वनिष्ठवृक्षद्वारेति शेषः ॥ १३ ॥ पादपा इति । रमयिष्यन्तीति । स्वमूलाकीर्यमाणपल्लवकुसुमरचितशय्यासु सीतासमेतं रामं रमयिष्यन्तीत्यर्थः ॥ १४ ॥ यत्रेति । रामः वसतीति शेषः । तत्र हेतुः स हि शूर इति ॥ १५ ॥ पुरेति । राघवो नोऽस्माकम् । अदूरात् पुराभवति आसन्नो भविष्यतीत्यर्थः । "यावत्पुरा—" इत्यादिना भविष्यदर्थे लट् । अतो राघवमनुगच्छामेति प्रार्थनायां लोट् ॥ १६ ॥ यं राममनुगच्छेम महात्मनस्तादृशस्य, पादच्छाया छायेत्यनुग्रहहेतुभूता सेवा लक्ष्यते । श्रीरामचन्द्रपादसेवैव नः सुखा परमसुखसाधनभूता । सः रामः गतिः शरणं परायणं सर्वप्रकारेणाधारभूतः ॥ १७ ॥ वयमिति । स्त्रिय इत्यर्थः । यूयं पुरुषा इत्यर्थः ।

गम्यत इति गतिः प्राप्यः। परायणं परमयनम् । सर्वप्रकारेणाधारभूत इत्यर्थः॥१७-१९॥ को न्वनेनेति। अप्रतीतेन अप्रशस्तेन, सतामयोग्येनेतियावत् । उत्कण्ठया शोकस्मरणेन सहितः सोत्कण्ठः, कृतः सोत्कठः सोत्कण्ठितः तादृशो जनो यस्य तेन । अमनोज्ञेन उद्वेगकारिणा। हृतचेतसा चित्तनाशकेन



युष्माकं राघवोऽरण्ये योगक्षेमं विधास्यति। सीता नारीजनस्यास्य योगक्षेमं करिष्यति ॥१९॥ को न्वनेनाप्रतीतेन सोत्कण्ठितजनेन च । सम्प्रीयेतामनोज्ञेन वासेन हृतचेतसा ॥२०॥ कैकेय्या यदि चेद्राज्यं स्यादधर्म्यमनाथवत् । न हि नो जीवितेनार्थः कुतः पुत्रैः कुतो धनैः ॥ २१ ॥ यया पुत्रश्च भर्ता च त्यक्तावैश्वर्यकारणात् । कं सा परिहरेदन्यं कैकेयी कुलपांसनी ॥२२॥ कैकेय्या न वयं राज्ये भृतका निवसेमहि । जीवन्त्या जातु जीवन्त्यः पुत्रैरपि शपामहे ॥२३॥ या पुत्रं पार्थिवेन्द्रस्य प्रवासयति निर्घृणा । कस्तां प्राप्य सुखं जीवेदधर्म्यां दुष्टचारिणीम् ॥२४॥ उपद्रुतमिदं सर्वमनालम्बमनायकम् । कैकेय्या हि कृते सर्वं विनाशमुपयास्यति ॥ २५ ॥

अनेन वासेन, नगरणेत्यर्थः । को नु जनः संप्रीयेत न कोपीत्यर्थः। तस्मादयं वासस्त्याज्य इतिभावः ॥२०॥ कैकेय्या इति । अधर्म्यं धर्मादपेतमित्यर्थः। अनाथवत् नाथशून्यम् । भाविप्रतिसन्धानेनेदमुक्तम् । कुत इति पुत्रधनकृतपुरुषार्थस्य जीवितमूलत्वादित्यर्थः ॥ २१ ॥ ययेति । पुत्रो रामः परिहरेत् विपद्य इतिशेषः । रक्षेदितियावत् ॥ २२ ॥ कैकेय्या इति । जीवन्त्याः कैकेय्याः राज्ये भृतकाः भृतिभुजः "भृतको भृतिभुक्" इत्यमरः । कैकेयीजीवनपर्यन्तं न तस्या राज्ये निवसेमहीति जीवन्तीशब्दस्य भावः ॥ २३ ॥ २४ ॥ उपद्रुतमिति । कैकेय्याः कृते कैकेयीनिमित्तम् ॥ २५ ॥

योगक्षेमम् अप्राप्तद्रव्यस्य प्राप्तिर्योगः, प्राप्तस्य रक्षणं क्षेमम् ॥ १८ ॥ १९ ॥ अनेन वासेन को नु संप्रीयेतेतियोजना । अप्रतीतेन असुखेन । शोकस्मरणम् उत्कण्ठा, उत्कण्ठास्य सञ्जाता उत्कण्ठितः, उत्कण्ठितश्चासौ जनश्च उत्कण्ठितजनः, तेन सहितः सोत्कण्ठितजनः तेन सोत्कण्ठितजनेन। वासेन अयोध्यावासेन । हृतचेतसा चित्तनाशकेन ॥ २० ॥ कैकेय्या इति । कैकेय्या राज्यं यदि अधर्म्यम् अधर्मोपेतम् । अनाथवत् नाथरहितं स्यात्, तस्मिन् राज्ये नः अस्माकम् जीवितेनाप्यर्थो नहि, कुतः पुत्रैः कुतो धनैरित्यन्वयः ॥ २१ ॥ ययेति । पुत्रो रामः, सा कं वा परिहरेत् रक्षेत् । यद्वा त्यागात्परिहरेत्, सर्वानपि परित्यजेदित्यर्थः । भर्तृपुत्रत्यागकारिण्यास्तस्या इतरत्यागः कियानिति भावः ॥ २२ ॥ कैकेय्या इति । जीवन्त्याः कैकेय्या राज्ये तस्याः भृतकाः भृत्यभूता जीवन्त्यः सत्यः न निवसेमहि । इममर्थं प्रति

विनाशप्रकारमुपपादयन्ति—न हीति । विलापो विनाशः ॥ २६ ॥ त इति । ते यूयम् । आलोड्य अमुमर्थमालोच्य । सुदुर्गताः सुदरिद्राः, रामरूपधन हीना इत्यर्थः । अश्रुतिं यत्र गते नामापि न श्रूयते तं देशमित्यर्थः ॥ २७ ॥ पितृवचननिर्देशेन कैकेयीप्रियचिकीर्षया च क्रियमाणे प्रव्रजने को दोष

न हि प्रव्रजिते रामे जीविष्यति महीपतिः । मृते दशरथे व्यक्तं विलापस्तदनन्तरम् ॥ २६ ॥ ते विषं पिबतालोड्य क्षीणपुण्याः सुदुर्गताः । राघवं वानुगच्छध्वमश्रुतिं वापि गच्छत ॥ २७ ॥ मिथ्या प्रव्राजितो रामः सभार्यः सह लक्ष्मणः । भरते सन्निसृष्टाः स्मः सौनिके पशवो यथा ॥ २८ ॥ पूर्णचन्द्राननः श्यामो गूढजत्रुररिन्दमः । आजानु बाहुः पद्माक्षो रामो लक्ष्मणपूर्वजः ॥ २९ ॥ पूर्वाभिभाषी मधुरः सत्यवादी महाबलः । सौम्यश्च सर्वलोकस्य चन्द्र वत्प्रियदर्शनः ॥ ३० ॥ नूनं पुरुषशार्दूलो मत्तमातङ्गविक्रमः । शोभयिष्यत्यरण्यानि विचरन् स महारथः ॥ ३१ ॥ तास्तथा विलपन्त्यस्तु नगरे नागरस्त्रियः । चुक्रुशुर्दुःखसन्तप्ता मृत्योरिव भयागमे ॥ ३२ ॥ इत्येवं विलपन्तीनां स्त्रीणां वेश्मसु राघवम् । जगामास्तं दिनकरो रजनी चाभ्यवर्त्तत ॥ ३३ ॥

इत्यत्राह—मिथ्याप्रव्राजित इति । मिथ्याप्रव्राजितः कपटेन प्रव्राजितः । सन्निसृष्टाः निक्षिप्ताः, राज्ञेति शेषः । सौनिके पशुमारके ॥ २८ ॥ विश्लेषासहि ष्णुतया रामस्त्वकार्यं कृतवानित्यभिधाय तद्गुणकीर्तनेनाप्यायनं कुर्वन्ति—पूर्णेत्यादिना । गूढजत्रुः गूढे निमग्ने जत्रुणी अंससन्धी यस्य स तथोक्तः । "स्कन्धो भुजाशिरोंऽसोऽस्त्री सन्धी तस्यैव जत्रुणी" इत्यमरः । पूर्वाभिभाषी स्वसौहार्दभव्यत्वप्रदर्शनाय सर्वत्र पूर्वभाषणशीलः ॥२९–३१॥ ता इति । मृत्योर्भयागमे मरणसमये ॥ ३२ ॥ इतीति । विलपन्तीनां विलपन्तीषु सतीष्वित्यर्थः । राघवमुद्दिश्येति शेषः ॥ ३३ ॥

शपामहे ॥ २३–२५ ॥ विलापः नाशः ॥ २६ ॥ ते [illegible] । ते यूयं पुरुषाः, सस्त्रीका इति शेषः । विषमालोड्य विषं पेषयित्वा अश्रुतिं वापि गच्छत न विद्यते श्रुतिः युष्मन्नामग्रहणं यस्मिन् देशे तं देशं गच्छतेत्यर्थः ॥ २७ ॥ मिथ्येति । मिथ्याप्रव्राजितः मिथ्यावरकल्पनया प्रव्राजितोऽभूत् । कैकेय्या वशगे भरते राजनि सति । सौनिके पशुमारकसमीपे, पशवो यथा निश्चितमरणास्तिष्ठन्ति सन्निविष्टाः स्मः ॥ २८ ॥ विश्लेषासहिष्णुतया रामस्त्वकार्यं कृतवानित्यभिधाय तद्गुणकीर्त नेनाप्यायनं कुर्वन्ति—पूर्णचन्द्रानन इत्यादिना ॥ २९ ॥ पूर्वाभिभाषी स्वसौहार्दभव्यत्वप्रदर्शनाय सर्वत्र पूर्वभाषणशीलः ॥ ३० ॥ ३१ ॥ ता इति । मृत्योर्हेतोः भया गमे सति यथा ॥ ३२ ॥ इतीति । विलपन्तीनां प्रलपन्तीषु सतीषु, दिनकरोऽस्तं जगाम । सूर्यास्तमयानन्तरं रजनी चाभ्यवर्ततेति, अनेन पौरस्त्रीदुःखासहिष्णु

नष्टेति । नष्टज्वलनसम्पाता नष्टाग्निप्रणयना । प्रशान्ताध्यायसत्कथा अध्यायो वेदः, सत्कथा पुराणादिः निवृत्तवेदाध्ययनपुराणपाठेत्यर्थः ॥३४॥ उपशान्तेति । उपशान्तवणिक्पण्या उपशान्तानि वणिजां पण्यानि यस्यां सा पण्यकल्पनाशून्येत्यर्थः ॥३५॥ तथेति । सुतैः सुतेभ्यः । पञ्चम्यर्थे तृतीया ।

नष्टज्वलनसम्पाता प्रशान्ताध्यायसत्कथा । तिमिरेणाभिलिप्तेव सा तदा नगरी बभौ ॥३४॥ उपशान्तवणिक्पण्या नष्टहर्षा निराश्रया । अयोध्या नगरी चासीन्नष्टतारमिवाम्बरम् ॥ ३५ ॥ तथा स्त्रियो रामनिमित्तमातुरा यथा सुते भ्रातरि वा विवासिते । विलप्य दीना रुरुदुर्विचेतसः सुतैर्हि तासामधिको हि सोऽभवत् ॥ ३६ ॥ प्रशान्तगीतोत्सवनृत्तवादना व्यपास्तहर्षा पिहितापणोदया । तदा ह्ययोध्या नगरी बभूव सा महार्णवः संक्षपितोदको यथा ॥३७॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

रामोऽपि रात्रिशेषेण तेनैव महदन्तरम् । जगाम पुरुषव्याघ्रः पितुराज्ञामनुस्मरन् ॥ १ ॥

भ्रातृभ्यश्चेत्यपि द्रष्टव्यम् ॥ ३६ ॥ प्रशान्तेति । पिहितापणोदया पिहितः आपणोदयः आपणस्थवस्तुसमृद्धिर्यस्याः सा तथोक्ता । आपणोदयस्य पिहितत्वमापणाविधानात् । संक्षपितोदकः संशोषितोदक इत्यर्थः ॥३७॥इति श्रीगो०श्रीरा०पीता० अयोध्याकाण्डव्याख्यानेऽष्टचत्वारिंशःसर्गः॥४८॥ अथ रामवृत्तान्तं प्रस्तौति–रामोपीति । तेनैव रात्रिशेषेण येन रात्रिशेषेण पौरान् विहाय गतस्तेनैव । महदन्तरं महावकाशम् । महद्दूरमितियावत् ॥१॥

तथा अस्तमयानन्तरम् अस्तमयात्पूर्वं च भानोः पूर्वगत्यपेक्षया अतिवेगगमनं द्योत्यते ॥ ३३ ॥ नष्टेति । नष्टो ज्वलनानां सम्पातो होमाद्यर्थमुद्बोधो यस्यां सा । प्रशान्तान्यध्ययनानि सत्कथाः पुण्यकथाश्च यस्यास्सा ॥ ३४ ॥ उपशान्तेति । निराश्रया रामाश्रयराहित्यान्निराश्रया ॥ ३५ ॥ तथेति । सुतैः सुतेभ्यः । स रामः तासामधिकोऽभवत् । अतो रामनिमित्तं रुरुदुरिति सम्बन्धः ॥ ३६ ॥ प्रशान्तेति । प्रशान्तं गीतोत्सवनृत्तवाद्यतौर्यत्रिकं यस्यां सा । पिहितः आपणानां पण्यवस्तूनाम् उदयः प्रसारणं यस्यां सा । संक्षपितोदकः क्षीणोदको यथा ॥ ३७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायाम् अष्टचत्वारिंशः सर्गः॥ ४८ ॥ रामोपीति । तेनैव रात्रिशेषेण येनैव रात्रिशेषेण पौरान् विहाय गतः तेनैव । महदन्तरम् महावकाशम्, महद्दूरमिति यावत्॥१॥

तथेति । गच्छतः गच्छति सति । व्यपायात् निरगात् । विषयान्तम् उत्तरकोसलदक्षिणावधिम् ॥ २ ॥ ग्रामानिति । विकृष्टसीमान्तान् विशेषेण कृष्ट सीमान्तान्, बीजावापार्थं सज्जीकृतक्षेत्रानित्यर्थः । शनैरिव ययौ उत्तमाश्वानां गतिचातुर्यात् पुष्पितवनरामणीयकदर्शनपारवश्याच्चातिशीघ्रमपि

तथैव गच्छतस्तस्य व्यपायाद्रजनी शिवा । उपास्य स शिवां सन्ध्यां विषयान्तं व्यगाहत ॥ २ ॥ ग्रामान् विकृष्ट सीमान्तान् पुष्पितानि वनानि च । पश्यन्नतिययौ शीघ्रं शनैरिव हयोत्तमैः । शृण्वन् वाचो मनुष्याणां ग्रामसंवास वासिनाम् ॥ ३ ॥ राजानं धिग् दशरथं कामस्य वशमास्थितम् । हा नृशंसाद्य कैकेयी पापा पापानुबन्धिनी ॥४॥ तीक्ष्णा सम्भिन्नमर्यादा तीक्ष्णकर्मणि वर्त्तते ॥ ५ ॥ या पुत्रमीदृशं राज्ञः प्रवासयति धार्मिकम् । वनवासे महाप्राज्ञं सानुक्रोशं जितेन्द्रियम् ॥६॥ कथं नाम महाभागा सीता जनकनन्दिनी । सदा सुखेष्वभिरता दुःखान्यनुभविष्यति ॥ ७ ॥ अहो दशरथो राजा निःस्नेहः स्वसुतं प्रियम् । प्रजानामनघं रामं परित्यक्तुमिहेच्छति ॥ ८ ॥ एता वाचो मनुष्याणां ग्रामसंवासवासिनाम् । शृण्वन्नतिययौ वीरः कोसलान् कोसलेश्वरः ॥ ९ ॥

गमनं शनैरिव जानन् ययावित्यर्थः । ग्रामसंवासवासिनां ग्रामाः महाग्रामाः संवासा अल्पग्रामाः तेषु वासिनाम् । शृण्वन्नतिययाविति पूर्वेण सम्बन्धः ॥ ३ ॥ वाच एव प्रपञ्चयति—राजानमित्यादि । पापा पापस्वभावा । पापानुबन्धिनी नैरन्तर्येण पापकारिणीत्यर्थः । तीक्ष्णा क्रूरा । वनवासे

तथैवेति । गच्छतः सतः, व्यपायात् निरगात् । विषयान्तं कोसलदेशान्तम् ॥ २ ॥ ग्रामानिति । विकृष्टसीमान्तान् विशेषेण कृष्टाः सीमान्ताः येषु । बीजावापार्थं आसीमान्तं सज्जीकृतक्षेत्रानित्यर्थः । पश्यन् शनैरिव शीघ्रम् अति अतिक्रम्य ययौ । उत्तमाश्वानां गतिचातुर्यात्पुष्पितवनरमणीयदेशदर्शनपारवश्याच्च अतिशीघ्रमपि गमनं शनैरिव प्रत्यभादित्यर्थः । ग्रामसंवासवासिनां ग्रामाः महाग्रामाः, संवासाः स्वल्पग्रामाः तेषु निवासिनां मनुष्याणां वाचः शृण्वन् अतिययाविति पूर्वेण सम्बन्धः । शृण्वन्वाचो मनुष्याणामित्युक्तम् ता एवाह—राजानं धिगित्यादिसार्धैः पञ्चभिः । आस्थितं प्राप्तम् । पापानुबन्धिनी पापसम्बन्धिनी । तीक्ष्णा क्रूरा । सम्भिन्नमर्यादा खण्डितमर्यादा । ईदृशं कल्याणगुणैकतानम् । सानुक्रोशं सदयम् ॥ ४–७ ॥ अहो इति । प्रजानां पुत्राणां मध्ये प्रियम् । अनघं निर्दुष्टम् । यद्वा प्रजानां प्राणिनां प्रियं स्वसुतं रामं परित्यक्तुमिच्छतीति वा सम्बन्धः ॥ ८ ॥ एता इति । एताः पूर्वोक्ता वाचः शृण्वन् कोसलान् कोसलदेशानतिययौ ॥ ९ ॥

वनवासनिमित्तं प्रवासयतीत्यन्वयः । अतिययौ अतिक्रम्य ययौ ॥ ४–९ ॥ तत इति । अगस्त्याध्युषितां दिशं दक्षिणां दिशम् ॥ १० ॥ गत्वेति । गोयु तानूपां गोयुक्तकच्छप्रदेशाम् । सागरंगमामिति " गमेः सुप्युपसङ्ख्यानम् " इति खचि मुम् ॥ ११ ॥ १२ ॥ स इति । महीं कोसलदेशम् । राष्ट्रावृताम् अवान्तरजनपदावृताम् । यद्यपि " इक्ष्वाकूणामियं भूमिः सशैलवनकानना " इति भूमिमात्रमिक्ष्वाकोरेव तथापि तस्य जन्मभूमिरियम् । इतरजन

ततो वेदश्रुतिं नाम शिववारिवहां नदीम् । उत्तीर्याभिमुखः प्रायादगस्त्याध्युषितां दिशम् ॥ १० ॥ गत्वा तु सुचिरं कालं ततः शिवजलां नदीम् । गोमतीं गोयुतानूपामतरत् सागरंगमाम् ॥ ११ ॥ गोमतीं चाप्यतिक्रम्य राघवः शीघ्रगैर्हयैः । मयूरहंसाभिरुतां ततार स्यन्दिकां नदीम् ॥ १२ ॥ स महीं मनुना राज्ञा दत्तामिक्ष्वाकवे पुरा । स्फीतां राष्ट्रावृतां रामो वैदेहीमन्वदर्शयत् ॥ १३ ॥ सूत इत्येव चाभाष्य सारथिं तमभीक्ष्णशः । हंसमत्तस्वरः श्रीमानुवाच पुरुषर्षभः ॥ १४ ॥ कदाहं पुनरागम्य सरय्वाः पुष्पिते वने । मृगयां पर्यटिष्यामि मात्रा पित्रा च सङ्गतः ॥ १५ ॥ राजर्षीणां हि लोकेऽस्मिन् रत्यर्थं मृगया वने । काले वृतां तां मनुजैः धन्विनामभिकांक्षिताम् ॥ १६ ॥

पदस्थाः करदा इति बोध्यम् ॥१३॥ सूत इतीति । सूत इतीत्यत्र गुणाभावो वाक्यसन्धेरनित्यत्वात् । हंसमत्तस्वरः हंसस्येव मत्तः कलः स्वरो यस्य स तथा ॥ १४ ॥ भाविपितृवियोगसूचकमौत्कण्ठ्यमाह–कदेति । पर्यटिष्यामि चरिष्यामि ॥ १५ ॥ ननु " स्त्रीद्यूतमृगयामद्यवाक्पारुष्योग्रदण्डताः । अर्थस्य दूषणं चेति राज्ञां व्यसनसप्तकम् ॥" इति निन्दिता मृगया कथं काङ्क्ष्यत इत्याशङ्क्य हिंस्रमृगनिवृत्त्यर्था कादाचित्का न गर्हिता किंतु निर न्तरैव, यथा राजसूये "तस्याः सभायामध्ये अधिदेवनमुद्धत्यावोक्ष्याक्षान्तं निर्वपेत्" इति विहितं द्यूतमित्याह–राजर्षीणामिति । हि यस्मात्कारणात् ।

शिववारिवहां शिवानि मनोज्ञानि वारीणि वहतीति तथा ॥ १० ॥ गत्वेति । गोयुतानूपां गोभिर्युक्तान्यनूपानि जलप्रायप्रदेशा यस्यां सा तथा ॥ ११ ॥ गोमती मिति । स्यन्दिकां स्यन्दिकाख्याम् ॥ १२ ॥ स महीमिति । स रामः महीं स्यन्दिकानदीमर्यादम्, कोसलदेशमित्यर्थः । राष्ट्रावृताम् अवान्तरजनपदावृताम् । वैदेही मन्वदर्शयदिति सम्बन्धः ॥ १३ ॥ सूत इतीति । आभाष्य सम्बोध्य । हंसमत्तस्वरः मत्तहंसस्वरः ॥ १४ ॥ १५ ॥ मृगया किं शिष्टाचरितेत्यत्राह–राजर्षीणा मित्यादिना । हि यस्मात्कारणात् राजर्षीणां वने मृगया रत्यर्थम्, अस्तीतिशेषः । काले मृगयायोग्यकाले, श्राद्धादिकाल इत्यर्थः । मनुजैः सदाचारपरैः, वृतां

राजर्षीणां वने मृगया रत्यर्थमस्तीति शेषः। काले श्राद्धादिकाले। मनुजैः सदाचारपरैः। वृतां स्वीकृताम्। धन्विनामभिकाङ्क्षितां चललक्ष्यवेधनार्थं धन्विभिरभिकाङ्क्षिताम् तां मृगयां नात्यर्थमभिकाङ्क्षामि किंचित् काङ्क्षामीत्यर्थः। रतिः क्रीडा ॥१६॥१७॥ स इति। ऐक्ष्वाकः "दाण्डिनायन—" इत्यादिना

नात्यर्थमभिकांक्षामि मृगयां सरयूवने। रतिर्ह्येषातुला लोके राजर्षिगणसम्मता ॥१७॥ स तमध्वानमैक्ष्वाकः सूतं मधुरया गिरा। तं तमर्थमभिप्रेत्य ययौ वाक्यमुदीरयन्॥१८॥ इत्यार्षे० श्रीमदयोध्याकाण्डे एकोनपञ्चाशः सर्गः॥४९

विशालान् कोसलान् रम्यान् यात्वा लक्ष्मणपूर्वजः। अयोध्याभिमुखो धीमान् प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥ आपृच्छे त्वां पुरिश्रेष्ठे काकुत्स्थपरिपालिते। दैवतानि च यानि त्वां पालयन्त्यावसन्ति च ॥२॥ निवृत्तवनवासस्त्वामनृणो जगतीपतेः। पुनर्द्रक्ष्यामि मात्रा च पित्रा च सह सङ्गतः ॥ ३ ॥

निपातनात्साधुः। स रामः सूतं प्रति तं तमर्थं राजगुणादिरूपम्। अभिप्रेत्य हृदये कृत्वा। मधुरया गिरा वाक्यमुदीरयन् सन् अध्वानं ययौ। असुमर्थमुत्तरत्र दशरथं प्रति सूतो व्यक्तीकरिष्यति ॥ १८ ॥ इति श्रीगो० श्रीरामा० पीताम्बरा० अयोध्याकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥ विशालानिति। कोसलान् यात्वा अन्तपर्यन्तदक्षिणकोसलान् यात्वेत्यर्थः ॥ १ ॥ निर्गमनावसरे शिष्टाचारप्राप्तस्य पुरदेवतानमस्कारस्य कार्यसङ्कटेनाकृतत्वादिदानीमयोध्याराज्यसीमान्ते स्थित्वा आरब्धस्य चतुर्दशवर्षावधिकव्रतस्य निर्विघ्नपरिसमाप्त्यर्थं पुरदेवतानमस्कारपूर्वकमभ्यनुज्ञां प्रार्थयते—आपृच्छ इत्यादिना। यानीति तान्यप्यापृच्छ इत्यर्थसिद्धम् ॥ २ ॥ ३ ॥

स्वीकृताम्। धन्विनामभिकाङ्क्षितां लक्ष्यवेधनार्थं धन्विभिरभिकाङ्क्षितामित्यर्थः। तां नात्यर्थमभिकाङ्क्षामि किञ्चित्काङ्क्षामीत्यर्थः। यद्वा मृगयायाः स्त्रीद्यूतादिसप्तव्यसनान्तःपातित्वेन निषिद्धत्वात्कथं मृगयां पर्यटसीत्यत आह राजर्षीणामिति। राजर्षीणामस्मिंल्लोके रत्यर्थं या मृगया अस्ति। हि प्रसिद्धौ। तां पर्यटिष्यामीति पूर्वेण सम्बन्धः। कीदृशीम्? काले वृताम्। अन्यत्समानम्। तथापि सदा मृगयापर्यटने राज्यपालनरूपस्वधर्मनाशः स्यादत आह—नात्यर्थमिति। अत्यर्थं सदा नाभिकाङ्क्षामि यतः एषा काचित्कमृगया, राजर्षिगणसम्मता रतिः क्रीडा ॥ १६ ॥ १७ ॥ स इति। तं तमर्थं पूर्वोक्तार्थम् अभिप्रेत्य विषयीकृत्य वाक्यमुदीरयन् तमध्वानं मार्गम् ययाविति सम्बन्धः ॥ १८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां एकोनपञ्चाशः सर्गः ॥ ४९ ॥ विशालानिति। यात्वा गत्वा। स्वदेशान्तमिति शेषः ॥१॥ आरब्धस्य व्रतस्य निर्विघ्नेन समाप्त्यर्थं निर्गमनसमये शिष्टाचारप्राप्तपुरदेवतानमस्कारस्य कार्यसङ्कटेनाकृतत्वात् स्वदेशान्ते स्थित्वा पुरीमनुज्ञां याचते—आपृच्छ इत्यादि द्वाभ्याम्। त्वां दैवतानि च आपृच्छे प्रार्थये ॥ २ ॥ प्रार्थनाप्रकारमेवाह—निवृत्तेति ॥ ३ ॥

तत इति । भुजोद्यमनं रथवेगेन दूरगमनात्, अश्रुपूर्णमुखत्वं तदश्रुदर्शनात् । जनं दर्शनार्थमागतम् ॥ ४ ॥ अनुक्रोश इति । अनुक्रोशः आदरः । दया अनुकम्पा । यथार्हं स्वामित्वानुगुणम् । वः युष्माभिः । कृतः कृता चेत्यपि द्रष्टव्यम् । दुःखस्य अनुभूयमानस्य दुःखस्य । चिरं चिरकालु विशिष्टत्वम् । पापीयः अशोभनम् । मद्दर्शने भवतां दुःखमभिवर्द्धते अतो गम्यताम्, अर्थसिद्धये गृहकृत्यादिकरणाय ॥ ५ ॥ त इति । व्यतिष्ठन्त

ततो रुधिरताम्राक्षो भुजमुद्यम्य दक्षिणम् । अश्रुपूर्णमुखो दीनोऽब्रवीज्जानपदं जनम् ॥ ४ ॥ अनुक्रोशो दया चैव यथार्हं मयि वः कृतः। चिरं दुःखस्य पापीयो गम्यतामर्थसिद्धये॥५॥ तेऽभिवाद्य महात्मानं कृत्वा चापि प्रदक्षिणम् । विलपन्तो नरा घोरं व्यतिष्ठन्त क्वचित्क्वचित्॥६॥ तथा विलपतां तेषामतृप्तानां च राघवः। अचक्षुर्विषयं प्रायाद्यथार्कः क्षणदामुखे ॥७॥ ततो धान्यधनोपेतान् दानशीलजनाञ्छिवान् । अकुतश्चिद्भयान् रम्यांश्चैत्ययूपसमावृतान् ॥८॥

रामदर्शनाशया शीघ्रं न जग्मुरित्यर्थः ॥ ६ ॥ तथेति । विलपतामित्यनादरे षष्ठी । अचक्षुर्विषयं चक्षुर्विषयताभावम् । क्षणदामुखे निशामुखे ॥ ७ ॥ दुस्त्यजामपि राज्यश्रियं तृणीकृत्य गतवान् राम इति द्योतयितुमृषिः कोसलानभिवर्णयति–तत इत्यादिना । धनधान्ययोः प्रयोजनमाह

जानपदं जनं स्वदर्शनार्थं तत्रागतं जनम् । अश्रुपूर्णमुखो दीन इत्यस्यायं भावः–' व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ' इत्युक्तेः दुःखितजनान् दृष्ट्वा तेषां दुःखनिवारणाय स्वयमप्यश्रुपूर्णमुखोऽभूदिति ॥ ४ ॥ अनुक्रोशः आदरः । दया कारुण्यम् । यद्वा अनुक्रोशो जुगुप्सा, जुगुप्सनीयान् कैकेयीप्रभृतीन्प्रति जुगुप्सा । मयि दया च यथार्हं वो युष्माभिः कृतः । दुःखस्य चिरं दीर्घकालानुभवः पापीयः अशोभनम् असह्यतरं वा, अतो युष्माभिः गम्यताम् । अर्थसिद्धये प्रकृतार्थसिद्धये वयं गच्छाम इति शेषः । यद्वा यथार्हं यथायोग्यम् । मयि कृतो योऽनुक्रोशोऽनुतापो दया च, पापीयः तदिदं सर्वं वः युष्माकं दुःखस्य चिरं बहुकालानुभवाय सम्पन्नम्, अतः किं कुर्मः, इदानीं गम्यताम्, वयमर्थसिद्धये प्रकृतार्थसिद्धये साधयाम इत्यर्थः । अवतारप्रयोजनं रावणवधादिकमिति कटाक्षः ॥ ५ ॥ ६ ॥ तथेति । अतृप्तानां दर्शनतृप्तिरहितानाम् । क्षणदामुखे सायंकाले ॥ ७ ॥ रामः स्वदुस्त्यजां राज्यश्रियं तृणीकृत्य गत इति द्योतयितुं कोसलदेशमनुवर्णयति–तत इति ।

सत्य०–तत् मदनुग्रहकरणं चिरं दुःखस्य हेतुरिति पापीयः । लोके बहुदिनसहवासिजनविरहे दुःखस्य दर्शनात्, अतो भवद्भिरर्थसिद्धये स्वप्रयोजनार्थं गम्यताम् ॥ ५ ॥

दानेति। चैत्ययूपसमावृतान् चैत्यानि देवतायतनानि यूपाः सर्वतोमुखादियागप्रख्यापकाः यूपाकारत्वेन स्थापिताः स्तम्भाः। उद्यानानि पुष्पवाटिकाः। सम्पन्नाः सम्पूर्णाः गोकुलैराकुलं निबिडं यथा भवति तथा सेवितान् । नरेन्द्राणां लक्षणीयान् एकैकशो नगरसदृशत्वेन लक्षयितुं योग्यान् । कोस

उद्यानाम्रवणोपेतान् सम्पन्नसलिलाशयान्। तुष्टपुष्टजनाकीर्णान् गोकुलाकुलसेवितान् ॥९॥ लक्षणीयान् नरेन्द्राणां ब्रह्मघोषाभिनादितान् । रथेन पुरुषव्याघ्रः कोसलानत्यवर्त्तत ॥१०॥ मध्येन मुदितं स्फीतं रम्योद्यानसमाकुलम् । राज्यं भोग्यं नरेन्द्राणां ययौ धृतिमतां वरः ॥ ११ ॥ तत्र त्रिपथगां दिव्यां शिवतोयामशैवलाम् । ददर्श राघवो गङ्गां पुण्यामृषिनिषेविताम् ॥१२॥ आश्रमैरविदूरस्थैः श्रीमद्भिः समलंकृताम् । काले सरोभिर्हृष्टाभिः सेविताम्भोह्रदां शिवाम् ॥ १३ ॥ देवदानवगन्धर्वैः किन्नरैरुपशोभिताम् । नानागन्धर्वपत्नीभिः सेवितां सततं शिवाम् ॥१४॥ देवाक्रीडाशताकीर्णां देवोद्यानशतायुताम् । देवार्थमाकाशगमां विख्यातां देवपद्मिनीम् ॥ १५ ॥

लान् कोसलदेशस्थग्रामान् ॥ ८–१० ॥ मध्येनेति । मध्येन मार्गेण भोग्यस्यापि राज्यस्य त्यागमृषिर्विस्मयते धृतिमतां वर इति ॥११॥ तत्रेत्यादि । तत्र कोसलाद्दक्षिणदेशे त्रिभिः पथिभिर्गच्छतीति त्रिपथगा ताम्, स्वर्गमर्त्यपाताललोकगामिनीमित्यर्थः । शिवतोयाम् अच्छतोयाम् ॥१२॥ आश्रमैरित्यादि । श्रीमद्भिः धर्मसमृद्धिमद्भिः । काले क्रीडाकाले उचितकाले वा । सेवितानि प्राप्तानि अम्भांसि येषां तादृशा ह्रदाः यस्यां सा । शिवां क्रीडार्थं सेवनेपि पावनाम् ॥१३॥ नानागन्धर्वपत्नीभिः गन्धर्वाणां नानात्वं देवगन्धर्वमनुष्यगन्धर्वभेदात् सेविताम्। शिवामिति पूर्ववत्। सेवितृभेदेप्येकरूपपावनत्वकथनान्नानर्थक्यम् ॥ १२ ॥ देवाक्रीडाः देवार्हक्रीडापर्वताः। देवोद्यानानि देवार्होद्यानानि। देवार्थमाकाशगमां देवपूजनार्थमाकाशं प्राप्ताम् । देव

चैत्यानि देवतायतनानि। यूपाः यागीयपशुबन्धनस्तम्भाः ॥ ८ ॥ गोकुलैराकुलतया निबिडतया सेवितान् ॥ ९ ॥ लक्षणीयान् एकैकशो नगरसदृशत्वेन नरेन्द्राणां नरेन्द्रैः लक्षितुं योग्यानित्यर्थः। कोसलान कोसलदेशस्थग्रामान् ॥ १० ॥ मध्येनेति। राज्यं मध्येन ययौ, मध्यगत्यवलम्बेन ययावित्यर्थः ॥ ११ ॥ १२ ॥ काले क्रीडाकाले ॥ १३ ॥ १४ ॥ देवानामाक्रीडाः क्रीडापर्वताः, तेषां शतैराकीर्णां व्याप्ताम्, तीर इति शेषः। देवार्थं देवप्रयोजनार्थम्। आकाशगमाम् आकाशं प्राप्ताम्।

पद्मिनीं देवार्हाम्भोजयुक्तामित्यर्थः ॥ १५ ॥ गङ्गां स्त्रीत्वेन रूपयति—जलाघातेत्यादिना । जलाघातः शिलासु जलपतनं तेन तच्छब्दो लक्ष्यते स एवाट्टहासः सघोषहासः तेनोग्राम् । फेनमेव निर्मलहासः तद्वतीम् । वेणीकृतजलां निम्नोन्नतशिलापतनेन वेण्याकारतया कृतजलाम् ॥१६॥ क्वचिदगाध

जलाघाताट्टहासोग्रां फेननिर्मलहासिनीम् । क्वचिद्वेणीकृतजलां क्वचिदावर्त्तशोभिताम् ॥ १६ ॥ क्वचित्स्तिमितगम्भीरां क्वचिद्वेगजलाकुलाम् । क्वचिद्गम्भीरनिर्घोषां क्वचिद्भैरवनिस्वनाम् ॥ १७ ॥ देवसङ्घाप्लुतजलां निर्मलोत्पलशोभिताम् । क्वचिदाभोगपुलिनां क्वचिन्निर्मलवालुकाम् ॥ १८ ॥ हंससारससंघुष्टां चक्रवाकोपकूजिताम् । सदामत्तैश्च विहगैरभिसन्नादितान्तराम् । क्वचित्तीररुहैर्वृक्षैर्मालाभिरुपशोभिताम् ॥ १९ ॥ क्वचित्फुल्लोत्पलच्छन्नां क्वचित्पद्मवनाकुलाम् । क्वचित्कुमुदषण्डैश्च कुड्मलैरुपशोभिताम् ॥ २० ॥ नानापुष्परजोध्वस्तां समदामिव च क्वचित् । व्यपेतमलसङ्घातां मणिनिर्मलदर्शनाम् ॥ २१ ॥ दिशागजैर्वनगजैर्मत्तैश्च वरवारणैः । देवोपवाह्यैश्च मुहुः सन्नादितवनान्तराम् ॥ २२ ॥ प्रमदामिव यत्नेन भूषितां भूषणोत्तमैः । फलैः पुष्पैः किसलयैर्वृतां गुल्मैर्द्विजैस्तथा ॥ २३ ॥

स्थले स्तिमितगम्भीरां निश्चलगम्भीराम् । गम्भीरनिर्घोषो मृदङ्गादेरिव भैरवो निस्वनोऽशन्यादेरिव ॥ १७ ॥ आभोगपुलिनां परिपूर्णतायुक्तपुलिनां विशालसैकतामित्यर्थः । "आभोगः परिपूर्णता" इत्यमरः । निर्मलवालुकां निर्मलसिकताम् ॥ १८ ॥ सारसो हंसविशेषः । विहगैः हंसादिभिन्नैः पक्षिविशेषैः ॥ १९ ॥ क्वचित् फुल्लोत्पलच्छन्नामिति पूर्वमुत्पलशोभोक्ता, अत्र तच्छन्नत्वमिति विशेषः । कुड्मलैः कह्लारादिकुड्मलैः । नानापुष्परजोभिः ध्वस्तां वर्णान्तरं प्राप्तामित्यर्थः । एवं रक्तवर्णत्वात् समदामिव स्थिताम् । व्यपेतमलसङ्घाताम् अतएव मणिनिर्मलदर्शनां वैडूर्यमणिवन्निर्मलदर्शनाम् ॥२०॥२१॥ वरवारणैः राजगजैः । देवोपवाह्यैः देवानां वाहनभूतैः । फलैः पुष्पैः किसलयैरेव भूषणोत्तमैरिति व्यस्तरूपकम् । यद्वा फलपुष्पा



देवपद्मिनीं देवभोग्यहेमपद्मिनीम् ॥१५॥ गङ्गां स्त्रीत्वेन वर्द्धयति—जलेति । शिलादिपतनस्थले योऽयं जलघातः स शब्दः तद्रूपेणाट्टहासेनोग्राम् ॥१६॥१७॥ आभोग

दिभिर्वृताम् अत एव भूषितां प्रमदामिव स्थितामितिवार्थः। द्विजैः पक्षिभिः। शिंशुमारैः नक्रविशेषैः। यद्वा शिंशुमारैः जलकपिभिः। "शिंशुमार स्त्वम्बुकपिः" इति वैजयन्ती। अत्र विष्णुपादच्युतामित्युक्त्या बालकाण्डे हिमवत्प्रभवत्वं तत्र प्रादुर्भावमात्रेणेति ज्ञेयम् ॥ २२–२४ ॥ सारस

**शिंशुमारैश्च नक्रैश्च भुजङ्गैश्च निषेविताम्। विष्णुपादच्युतां दिव्यामपापां पापनाशिनीम्[1] ॥ २४ ॥ समुद्रमहिषीं गङ्गां सारसक्रौञ्चनादिताम्। आससाद महाबाहुः शृङ्गवेरपुरं प्रति ॥ २५ ॥ तामूर्मिकलिलावर्तामन्ववेक्ष्य महारथः। सुमन्त्रमब्रवीत् सूतमिहैवाद्य वसामहे॥२६॥ अविदूरादयं नद्या बहुपुष्पप्रवालवान्। सुमहानिङ्गुदीवृक्षो वसामोऽत्रैव सारथे ॥२७॥ द्रक्ष्यामः सरितां श्रेष्ठां सम्मान्यसलिलां शिवाम्। देवदानवगन्धर्वमृगमानुषपक्षिणाम् ॥ २८ ॥ लक्ष्मणश्च सुमन्त्रश्च बाढमित्येव राघवम्। उक्त्वा तमिङ्गुदीवृक्षं तदोपययतुर्हयैः ॥ २९ ॥**

क्रौञ्चनादितां सरो निवासो येषां ते सारसाः पक्षिविशेषाः "सोऽस्य निवासः" इत्यण्। अतो हंससारससंघुष्टामित्यनेन न पौनरुक्त्यम्। शृङ्गवेरपुरं प्रति गङ्गामाससाद शृङ्गवेरपुरं प्रति गच्छन् गङ्गामाससादेत्यर्थः। यद्वा शृङ्गवेरपुरं प्रति शृङ्गवेरपुरसमीपे गङ्गामाससादेत्यर्थः ॥ २५ ॥ तामिति। ऊर्मिकलिलावर्ताम् ऊर्मिमिश्रावर्ताम् ॥ २६ ॥ अविदूरादिति। अविदूरात्समीपे इङ्गुदीवृक्षस्तापसतरुः ॥ २७ ॥ द्रक्ष्याम इति। सम्मान्येत्यस्य देवेत्यादिना सम्बन्धः ॥ २८ ॥ लक्ष्मण इति। बाढमित्यङ्गीकारे ॥ २९ ॥

पुलिनां विस्तारपुलिनाम् ॥ १८–२३ ॥ शिंशुमारः जलकपिः। "शिंशुमारस्त्वम्बुकपिः" इति वैजयन्ती। नक्रैः मकरैः ॥ २४ ॥ शृङ्गिबेरपुरं प्रति शृङ्गिबेरपुर मुद्दिश्य गच्छन् गङ्गामाससादेति सम्बन्धः ॥ २५ ॥ तामिति। ऊर्मिभिः कलिलाः सम्पृक्ताः आवर्ताः यस्यां तां पूर्वोक्तां गङ्गाम्, अन्ववेक्ष्य आसाद्य। इह गङ्गातीरे। अद्य वसामह इति सुमन्त्रमब्रवीदिति योजना ॥ २६ ॥ अविदूरादिति। इङ्गुदीवृक्षः तापसतरुः ॥ २७–२९ ॥

**विषम०**—देवादीनां सम्मान्यं सलिलं यस्यास्ताम्। अनेन गङ्गाजलं प्रवाहादन्यत्रानीतमपि सकलपापक्षयसमर्थमिति ध्वनितम् ॥ २८ ॥

---

१ पापनाशिनीम्। तां शङ्करजटाजूटाद्भ्रष्टां सागरतेजसा। इत्यधिकः पाठः।

राम इति। अभियाय प्राप्य ॥ ३० ॥ ३१ ॥ तत्रेत्यादि। तत्र देशे राजा तद्देशाधिपतिः आत्मसमः प्राणसमः। निषादजात्यः निषादजातौ भवः। दिगादित्वाद्यत्। बलवान् चतुरङ्गबलवान्। स्थपतिः निषादाधिपतिः। "स्थपतिः पुनः। स्थापत्येऽधिपतौ ताक्ष्णि" इति वैजयन्ती। ननु "हीनप्रेष्यं हीनसख्यं हीनगेहनिवेषणम्" इत्युपपातकपरिगणितं हीनजातिसख्यं महाकुलप्रसूतस्य रामस्य कथमुपपद्यत इति चेत्, सत्यम्; "निषादस्थपतिं

रामोऽभियाय तं रम्यं वृक्षमिक्ष्वाकुनन्दनः। रथादवातरत्तस्मात् सभार्यः सहलक्ष्मणः ॥ ३० ॥ सुमन्त्रोप्यवतीर्य्यास्मान्मोचयित्वा हयोत्तमान्। वृक्षमूलगतं राममुपतस्थे कृताञ्जलिः ॥ ३१ ॥ तत्र राजा गुहो नाम रामस्यात्मसमः सखा। निषादजात्यो बलवान् स्थपतिश्चेति विश्रुतः ॥ ३२ ॥ स श्रुत्वा पुरुषव्याघ्रं रामं विषयमागतम्। वृद्धैः परिवृतोऽमात्यैर्ज्ञातिभिश्चाप्युपागतः॥ ३३॥ ततो निषादाधिपतिं दृष्ट्वा दूरादुपस्थितम्। सह सौमित्रिणा रामः समागच्छद्गुहेन सः॥ ३४॥ तमार्तः संपरिष्वज्य गुहो राघवमब्रवीत्। यथायोध्या तथेयं ते राम किं करवाणि ते॥ ३५॥

याजयेत्" इति निषादाधिपतेर्यज्ञसम्बन्धश्रवणात् अत्यन्तानुचितं न भवतीत्यनुमन्तव्यम्। वस्तुतस्तु—"न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः। सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने॥" इत्युक्तरीत्या रामभक्तोऽयमत्युत्तम एव गुहस्य भगवत्प्रियत्वं 'गुहेन सहितो रामो लक्ष्मणेन च सीतया' इतिदर्शितम्॥ ३२॥ ३३॥ तत इति। दूरादुपस्थितं दृष्ट्वा समागच्छदित्यनेन प्रत्युत्थानाभिगमनोक्तिः। लक्ष्मणेन सह समागच्छत् लक्ष्मणवत्तस्मिन् भ्रातृत्वबुद्धिमकरोदित्यर्थः। समित्येकीभावे ॥ ३४ ॥ तमिति। आर्तः धृतवल्कलदर्शनेन सन्तप्तः। अनेन रामस्य पूर्वमेव मृगयाव्यापारादिना सख्यमस्तीति

अभियाय प्राप्य ॥ ३० ॥ ३१ ॥ तत्र राजेति। आत्मसमः सखा निषादजात्यः उत्पन्नः, स्थपतिः निषादाधिपतिः ॥ ३२ ॥ ३३ ॥ तत इति। समागच्छत सङ्गतोऽभूत् ॥ ३४ ॥ तमिति। आर्तः धृतवल्कलदर्शनेन तप्तः ॥ ३५–३७ ॥

वि०—ननु परमधर्मज्ञो रामः हीनजातिनिषादेन सह सख्यं कथं कृतवानिति तु न भ्रमितव्यम्। निषादानां भगवदवतारभूतपृथुराजजनकब्राह्मणमथितवेनशरीरोद्भवत्वेन क्षत्रियत्वात्। अत एव निषादस्थपत्यधिकरणे-"निषादस्थपतिं याजयेत्" इति श्रुत्या निषादस्थपतीनां याजनाधिकारः सङ्गच्छते। प्रपञ्चितं चैतन्निषादस्थपत्यधिकरणे मीमांसकैः। अत एव रामभोजनार्थं निषादकर्तृकौदनानयनं न विरुद्ध्यते। धर्मशास्त्रे हीनप्रकरणे निषादपरिगणनं तु निषादविलोमजातानामिति न विरोधः। तत्र निषादत्वव्यवहारस्तु भाक्त इति दिक् ॥ ३२ ॥

गम्यम् । इयमस्मत्पुरी ॥३५॥३६॥ तत इति । आद्यशब्देन पेयादिकमुच्यते । पृथग्विधं मांसादिभेदेन बहुविधम् ॥ ३७ ॥ स्वागतमिति । इयं मही अटवीराज्यम् ॥ ३८ ॥ भक्ष्यमिति । भक्ष्यं खाद्यं व्यञ्जनादि । भोज्यम् अन्नम् । पेयं पानकादि । लेह्यं रसायनादि । खादनं घासः ॥ ३९ ॥ गुहमिति ।

ईदृशं हि महाबाहो कः प्राप्स्यत्यतिथिं प्रियम् ॥३६॥ ततो गुणवदन्नाद्यमुपादाय पृथग्विधम् । अर्घ्यं चोपानयत् क्षिप्रं वाक्यं चेदमुवाच ह ॥३७॥ स्वागतं ते महाबाहो तवेयमखिला मही । वयं प्रेष्या भवान् भर्त्ता साधु राज्यं प्रशाधि नः॥३८॥ भक्ष्यं भोज्यं च पेयं च लेह्यं चेदमुपस्थितम् । शयनानि च मुख्यानि वाजिनां खादनं च ते॥३९॥ गुहमेवंब्रुवाणं तु राघवः प्रत्युवाच ह । अर्चिताश्चैव हृष्टाश्च भवता सर्वथा वयम् । पद्भ्यामभिगमाच्चैव स्नेहसन्दर्शनेन च ॥४०॥ भुजाभ्यां साधु पीनाभ्यां पीडयन् वाक्यमब्रवीत् ॥४१॥ दिष्ट्या त्वां गुह पश्यामि ह्यरोगं सह बान्धवैः । अपि ते कुशलं राष्ट्रे मित्रेषु च धनेषु च॥४२॥ यत्त्विदं भवता किञ्चित् प्रीत्या समुपकल्पितम् । सर्वं तदनुजानामि न हि वर्त्ते प्रतिग्रहे ॥४३॥ कुशचीराजिनधरं फलमूलाशिनं च माम् । विद्धि प्रणिहितं धर्मे तापसं वनगोचरम् ॥४४॥

अर्चितत्वेपि केचिन्न तन्मात्रेण तुष्यन्ति न तथा वयमित्याह—हृष्टाश्चेति । स्नेहसन्दर्शनेन राज्यं प्रशाधीति वाक्यकृतेन स्नेहप्रदर्शनेन ॥४०॥ भुजाभ्या मिति । साधु पीडयन् सम्यगालिङ्गन् पीनाभ्यामित्यनेन सुखहेतुत्वमुच्यते ॥४१॥४२॥ यत्त्विति । अनुजानामि मम सर्वं सम्यक्कृतमित्यनुजानामि । प्रतिग्रहे न वर्त्ते प्रतिग्रहधर्मं नाश्रितवानस्मीतिभावः ॥४३॥ राज्यान्नाद्यपरिग्रहे हेतुं दर्शयति—कुशचीराजिनधरमिति । कुशं पवित्रमेखलादिरूपम् । चीरं वल्कलम् । अजिनं कृष्णाजिनम् । धर्मे प्रणिहितं पितृवाक्यपरिपालनादिधर्मे सावधानम् । वनं गोचरः सञ्चारविषयो यस्य तम् ॥ ४४ ॥

स्वेष्टदेवं श्रीरामं स्वपुरमागतमालोक्य परमानन्दनिर्भरो गुहः स्वकीयं सर्वस्वं श्रीरामाय निवेदयति—स्वागतमिति । प्रशाधि स्वीकुरु ॥ ३८ ॥ भक्ष्यमिति । एतत्सर्वमनुगृहाणेति श्रीरामं प्रार्थयामासेति शेषः ॥ ३९ ॥ गुहमिति सार्धश्लोकमेकं वाक्यम् । पद्भ्यामभिगमाच्च स्नेहसन्दर्शनेन च अर्चिता इति प्रत्युवाचेत्यन्वयः ॥ ४० ॥ भुजाभ्यामित्यादि सार्धश्लोकमेकं वाक्यम् । हे गुह ! ते राष्ट्रे मित्रेषु धनेषु च कुशलमपि कुशलं किमिति च । बान्धवैः सह अरोगं त्वां दृष्ट्वा दैवेन पश्यामीति च पीनाभ्यां भुजाभ्यां गुहं साधु सम्यक् पीडयन् आश्लिष्यन् वाक्यमब्रवीदितियोजना ॥ ४१ ॥ ४२ ॥ यत्त्विति । अनुजानामि प्रतिददामि ॥ ४३ ॥ तत्र हेतुमाह—कुशचीरेति । तापसं विद्धीति सम्बन्धः ॥ ४४ ॥

अश्वानामिति । अश्वानां खादनेन ग्रासेन अर्थी प्रयोजनवान्, अश्वानाम् एव प्रयोजनमित्यर्थः । अत्र अस्मिन्समये ॥ ४५ ॥ एते हीति । सुविहितैः पोषितैः ॥ ४६ ॥ अश्वानामिति । स गुहस्तत्रैव तदानीमेव । पुरुषान् स्वभृत्यान् प्रति । अश्वानां खादनं प्रतिपानं क्षीरादिकञ्च त्वरितं दीयता

अश्वानां खादनेनाहमर्थी नान्येन केनचित् । एतावतात्र भवता भविष्यामि सुपूजितः ॥ ४५ ॥ एते हि दयिता राज्ञः पितुर्दशरथस्य मे । एतैः सुविहितैरश्वैर्भविष्याम्यहमर्चितः ॥४६॥ अश्वानां प्रतिपानं च खादनं चैव सोन्व शात् । गुहस्तत्रैव पुरुषांस्त्वरितं दीयतामिति ॥ ४७ ॥ ततश्चीरोत्तरासङ्गः सन्ध्यामन्वास्य पश्चिमाम् । जलमेवा ददे भोज्यं लक्ष्मणेनाहृतं स्वयम् ॥४८॥ तस्य भूमौ शयानस्य पादौ प्रक्षाल्य लक्ष्मणः । सभार्यस्य ततोऽभ्येत्य तस्थौ वृक्षमुपाश्रितः ॥४९॥ गुहोपि सह सूतेन सौमित्रिमनुभाषयन् । अन्वजाग्रत्ततो राममप्रमत्तो धनुर्द्धरः॥५०॥ तथा शयानस्य ततोऽस्य धीमतो यशस्विनो दाशरथेर्महात्मनः । अदृष्टदुःखस्य सुखोचितस्य सा तदा व्यतीयाय चिरेण शर्वरी ॥ ५१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

मित्यन्वशात् ॥ ४७ ॥ तत इति । उत्तरासङ्गः उत्तरीयम् । अन्वास्य उपास्य । अनेन स्नानमाक्षिप्यते । भोज्यमाहारम् ॥ ४८ ॥ तस्येति । शय्याकाले पादप्रक्षालनं राज्ञोपचाराद्वा स्वशेषवृत्त्यनुरूपत्वाद्वा । यद्वा प्रक्षालनं रामकर्तृकम्, तदाचमनस्याद्युपलक्षणम् । प्रक्षाल्याचम्य शयानस्य शयाने सती त्यर्थः । भावलक्षणे षष्ठी । ततस्तस्मात् शयनप्रदेशात् । अभ्येत्य गुहाभिमुखमेत्य वृक्षमेवोपाश्रितस्तस्थौ ॥४९॥ गुहोऽपीति । सौमित्रिमनु भाषयन् राम गुणान् प्रस्तुत्य सौमित्रिं वाचयन्नित्यर्थः । अन्वजाग्रत् जाग्रतं सौमित्रिमन्वजाग्रत्, किमर्थम् ? राममुद्दिश्य रामं संरक्षितुमित्यर्थः । धनुर्द्धर इत्यनेन लक्ष्मणे प्यतिशङ्का गुहस्य द्योत्यते ॥ ५० ॥ ५१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

अश्वानामिति । अत्र भवता पूज्येन ॥ ४५ ॥ समाहितैः तृप्तैः ॥ ४६ ॥ ४७ ॥ चीरोत्तरासङ्गः चीरं वल्कलम्, उत्तरासङ्गः उत्तरीयं यस्य सः ॥ ४८ ॥ ४९ ॥ गुहः सूतेन सह सौमित्रिमनुभाषयन् रामगुणान् प्रस्तुत्य सौमित्रिं वाचयन् राममनु रामं लक्ष्यीकृत्य अजाग्रत ॥ ५० ॥ ५१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामा यणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां पञ्चाशः सर्गः ॥ ५० ॥

सत्य०—जलमेवेत्यनेन तीर्थनिमित्तोपवासोयमिति सूचयति । साक्षाद्ब्रह्मसान्निध्यलाभे जीवत्पितृकाणामपि पुराणादावुपवासस्योक्तः । यद्वा रामस्य सर्वज्ञत्वेन सत्वरविनश्यत्पितृज्ञानादुपवास इति सूचयति ॥ ४८ ॥ शयानस्य शेतुकामस्येति फलितोर्थः ॥ ४९ ॥

तं जाग्रतमित्यादि । अदम्भेन अकृत्रिमेण । अर्थाय रक्षणाय । सन्तापसन्तप्तः रामदुर्दशादर्शनसन्तापेन सन्तप्तः । राघवं लक्ष्मणम् ॥ १ ॥ इयमिति । प्रत्याश्वसिहि विश्रान्तो भवेति यावत् ॥ २ ॥ अयं जनः वनचारित्वेन क्लेशसहो जनः ॥ ३ ॥ ४ ॥ रामानु०—नहीति । ब्रवीम्येव च ते सत्यमित्यत्र ब्रवीम्येतदहं सत्य

तं जाग्रतमदम्भेन भ्रातुरर्थाय लक्ष्मणम् । गुहः सन्तापसन्तप्तो राघवं वाक्यमब्रवीत् ॥ १ ॥ इयं तात सुखा शय्या त्वदर्थमुपकल्पिता । प्रत्याश्वसिहि साध्वस्यां राजपुत्र यथासुखम् ॥ २ ॥ उचितोऽयं जनः सर्वः क्लेशानां त्वं सुखोचितः । गुप्त्यर्थं जागरिष्यामः काकुत्स्थस्य वयं निशाम् ॥ ३ ॥ न हि रामात्प्रियतरो ममास्ति भुवि कश्चन । ब्रवीम्येतदहं सत्यं सत्येनैव च ते शपे ॥ ४ ॥ अस्य प्रसादादाशंसे लोकेऽस्मिन् सुमहद्यशः । धर्मावाप्तिं च विपुलामर्थावाप्तिं च केवलाम् ॥ ५ ॥ सोऽहं प्रियतमं रामं शयानं सह सीतया । रक्षिष्यामि धनुष्पाणिः सर्वतो ज्ञातिभिः सह ॥ ६ ॥ न हि मेऽविदितं किञ्चिद्वनेऽस्मिंश्चरतः सदा । चतुरङ्गं ह्यपि बलं सुमहत् प्रसहेमहि ॥ ७ ॥ लक्ष्मणस्तं तदोवाच रक्ष्यमाणास्त्वयानघ । नात्र भीता वयं सर्वे धर्ममेवानुपश्यता ॥ ८ ॥ कथं दाशरथौ भूमौ शयाने सह सीतया । शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा ॥ ९ ॥

मिति पाठः साधुः ॥ ४ ॥ अस्येति । आशंसे प्रार्थये । केवलामर्थावाप्तिम् अर्थावाप्तिमेवेत्यर्थः । केचित्तु केवलमिति पठित्वा केवलं प्रसादादिति योजयन्ति ॥५॥ स इति । सर्वतः सर्वदिक्षु ॥ ६ ॥ न हीति । अविदितमिति पदच्छेदः । किंचित् विरोध्यागमनस्थानम् । बलं परकीयम् । प्रसहेमहीत्येतदात्मनि बहुवचनं जात्यपेक्षया ॥ ७ ॥ ८ ॥ भीत्यभावे किमर्थं जागरणमित्याह—कथमिति । निद्रा न लभ्यत इतिभावः । जीवितम् आश्वासनम् । निद्रैव तमिति । भ्रातुरर्थाय भ्रातुः सेवायै । अदम्भेन अकौटिल्येन, विश्वासेनेति यावत् । सन्तापसन्तप्तः रामदुर्दशादर्शनसन्तापेन पीडित इत्यर्थः । राघवं लक्ष्मणम् ॥ १ ॥ इयमिति । प्रत्याश्वसिहि विश्रान्तो भव ॥ २ ॥ अयं जनः आटविकोऽहम् ॥ ३ ॥ ४ ॥ अस्येति । आशंसे प्रार्थये । अस्य प्रसादादेव केवलमिति योजना ॥ ५ ॥ ६ ॥ नहीति । अविदितम् अज्ञातम् । किंच चतुरङ्गमिति । प्रसहेमहि परकीयामिति शेषः ॥ ७ ॥ लक्ष्मण इति । अत्र देशे ॥ ८–१० ॥

स०—अदम्भेन अतल्पस्थित्या । " दम्भस्तु कैतवे तल्पे " इतिविश्वः ॥ १ ॥ श्लोकाद्वयमेकान्वयम् । ( लक्ष्मणस्तु ततोवाच इति पाठः ) हे तत आज्ञयाप्यातगुह ! अत्रारण्ये भीताः सन्तः वयं त्वया न रक्ष्यमाणा इति न, किन्तु धर्ममेवानुपश्यता मया निद्रा लब्धुं कथं शक्या । यद्वा त्वया न रक्ष्यमाणाः यतो रामेण रक्ष्यमाणाः तस्मान्नात्र भीताः ॥ ८ ॥ ९ ॥

न लभ्यते जीवितसुखानां का कथेतिभावः ॥ ९ ॥ य इति । प्रसहितुमिति "तीषसह–" इत्यादिना पाक्षिक इट् । संविष्टं शयानम् ॥१०॥ य इति । मन्त्रतपसा मन्त्रयुक्ततपसा,मन्त्रतपोभ्यामित्यर्थः । परिश्रमैः यज्ञादिभिः । एकः मुख्यः । "एके मुख्यान्यकेवलाः" इत्यमरः । सदृशलक्षणः स्वसदृश



यो न देवासुरैः सर्वैः शक्यः प्रसहितुं युधि । तं पश्य सुखसंविष्टं तृणेषु सह सीतया ॥ १० ॥ यो मन्त्रतपसा लब्धो विविधैश्च परिश्रमैः । एको दशरथस्येष्टः पुत्रः सदृशलक्षणः ॥११॥ अस्मिन् प्रव्राजिते राजा न चिरं वर्तयिष्यति । विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति ॥ १२ ॥ विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः । निर्घोषोपरतं चातो मन्ये राजनिवेशनम् ॥ १३ ॥ कौसल्या चैव राजा च तथैव जननी मम । नाशंसे यदि जीवन्ति सर्वे ते शर्वरीमिमाम् ॥ १४ ॥ जीवेदपि हि मे माता शत्रुघ्नस्यान्ववेक्षया । तद्दुःखं यत्तु कौसल्या वीरसूर्विनशिष्यति ॥१५॥ अनुरक्तजनाकीर्णा सुखा लोकप्रियावहा । राजव्यसनसंसृष्टा सा पुरी विनशिष्यति ॥ १६ ॥ कथं पुत्रं महात्मानं ज्येष्ठं प्रियमपश्यतः । शरीरं धारयिष्यन्ति प्राणा राज्ञो महात्मनः ॥ १७ ॥ विनष्टे नृपतौ पश्चात्कौसल्या विनशिष्यति । अनन्तरं च मातापि मम नाशमुपैष्यति ॥ १८ ॥

लक्षणः ॥ ११ ॥ अस्मिन्निति । वर्तयिष्यति जीविष्यति । विधवा पतिरहिता ॥ १२ ॥ विनद्येति । उपरताः भविष्यन्तीतिशेषः । अतएव निर्घोषोपरतम् उपरतनिर्घोषं भविष्यतीति मन्ये ॥ १३ ॥ कौसल्येति । सर्वे जीवन्ति जीविष्यन्तीति नाशंसे, यदि जीवन्ति इमां शर्वरीमेव ॥ १४ ॥ शत्रुघ्नस्यान्ववेक्षया शत्रुघ्नस्नेहेनेत्यर्थः । पुनःपुनर्दर्शनेन वा । वीरं पुत्रं सूत इति तथा कौसल्या विनशिष्यतीति यद्दुःखं तद्दुस्सहमित्यर्थः ॥ १५ ॥ राजव्यसनसंसृष्टा

य इति । मन्त्रो गायत्र्यादिः । तपः कृच्छ्रादिः । पराक्रमैः परेषां महतां आक्रमैः आगमैः, आशीर्भिरित्यर्थः । एको मुख्यः । सदृशं लक्षणं यस्य स तथा ॥११॥१२॥ विनद्येत्यादि । श्रमेणोपरता भविष्यन्तीति शेषः । अतः निर्घोषरतम् उपरतनिर्घोषं भविष्यतीति मन्ये ॥ १३ ॥ कौसल्येति । ते सर्वे जीवन्ति जीविष्यन्तीति नाशंसे, यदि जीवन्ति इमां शर्वरीमेव ॥ १४ ॥ जीवेदपीति । जीवेदपि एतद्भ्रात्र्याः परमपीति शेषः । मातैव जीविष्यति । वीरसूः वीरं पुत्रं सूत इति तथा । कौसल्या विनशिष्यतीति यत् तदेव मम दुःखम् ॥ १५ ॥ अनुरक्तेति । संसृष्टा युक्ता ॥ १६–१८ ॥

राजमरणनिमित्तव्यसनसंयुक्तेत्यर्थः ॥ १६–१८ ॥ अतिक्रान्तामिति । मे पिता राज्ये राममनिक्षिप्य अतएव मनोरथमनवाप्य विनशिष्यतीति यत् तस्मात् अतिक्रान्तमतिक्रान्तं सर्वं प्रयोजनमतीत्य गतमित्यर्थः । अथवा अतिक्रान्तमतिक्रान्तं मनोरथमनवाप्य पुनःपुनर्वर्धमानं मनोरथमन

अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथम् । राज्ये राममनिक्षिप्य पिता मे विनशिष्यति ॥ १९ ॥ सिद्धार्थाः पितरं वृत्तं तस्मिन् कालेप्युपस्थिते । प्रेतकार्येषु सर्वेषु संस्करिष्यन्ति भूमिपम् ॥ २० ॥ रम्यचत्वरसंस्थानां सुविभक्तमहापथाम् । हर्म्यप्रासादसम्पन्नां गणिकावरशोभिताम् ॥ २१ ॥ रथाश्वगजसम्बाधां तूर्यनादविनादिताम् । सर्वकल्याणसम्पूर्णां हृष्टपुष्टजनाकुलाम् ॥ २२ ॥ आरामोद्यानसम्पन्नां समाजोत्सवशालिनीम् । सुखिता विचरिष्यन्ति राजधानीं पितुर्मम ॥ २३ ॥

वाप्य रामो जातः वर्धिष्यते उद्वाहं करिष्यति राज्यं प्राप्स्यतीत्येवमभिवृद्धं मनोरथमित्यर्थः । मनोरथातिक्रान्तिमेवाह राज्ये राममनिक्षिप्येति ॥ १९ ॥ सिद्धार्था इति । तस्मिन् काले मरणकाले उपस्थिते । प्रेतकार्येष्वप्युपस्थितेषु । वृत्तम् अतीतम्, मृतमितियावत् । "वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तुले" इत्यमरः । भूमिपं पितरम् । सिद्धार्थाः कृतार्थाः संस्करिष्यन्ति । वयं त्वकृतार्था इतिभावः ॥ २० ॥ रम्यचत्वरसंस्थानामिति । रम्यचत्वरसंस्थानां रमणीयाङ्गणसंस्थानाम् । सुविभक्तमहापथां गृहपङ्क्तिभिः सम्यक्विभक्तराजमार्गाम् । हर्म्यप्रासादसम्पन्नां हर्म्यैर्धनिनां वासैः, प्रासादैर्देवभूभुजां वासैश्च सम्पूर्णाम् । "हर्म्यादिर्धनिनां वासः प्रासादो देवभूभुजाम्" इत्यमरः । रथाश्वगजसम्बाधाम्, सम्बाधां निबिडाम् । नादितां सञ्जात

अतिक्रान्तमिति । मे पिता पुनरागतं रामं राज्ये अनिक्षिप्य अत एव मनोरथमप्यनवाप्य विनाशिष्यति यस्मात् तस्मात् अतिक्रान्तमतिक्रान्तं सर्वं प्रयोजनमत्यर्थमतीत्य गतमित्यर्थः ॥ १९ ॥ सिद्धार्था इति । तस्मिन् काले अवसानकाले ह्युपस्थिते प्राप्ते सति वृत्तं मृतं पितरं सर्वेषु प्रेतकार्येषु, संस्करिष्यन्ति ते सिद्धार्थाः भाग्यवन्त इति योजना ॥ २० ॥ रम्येति । चत्वरं गृहाङ्गणम् । हर्म्याणि धनिनां वासः । प्रासादाः देवभूभुजां च वासाः । सम्बाधां सङ्कुलाम् । समाजोत्सव

स०—अतिक्रान्तमतिक्रान्तमिति विलपन्निति शेषः । पुनरागतं रामं राज्ये अनिक्षिप्य विनशिष्यति ॥ १९ ॥ ये भरतशत्रुघ्नौ इतरपत्नीपुत्राः । राघवं दशरथं संस्करिष्यन्ति त एव सिद्धार्थाः ॥ २० ॥

नादाम् । सर्वकल्याणसम्पूर्णां सर्वैः पुत्रजन्मोत्सवप्रभृतिभिः सम्पन्नाम् । आरामोद्यानसम्पन्नाम् आरामाः उद्यानानि च उपवनानि राज्ञः क्रीडार्हवनानि च । समाजोत्सवशालिनीं समाजैः सङ्घैः क्रियमाण उत्सवः समाजोत्सवः, देवोत्सव इत्यर्थः ॥ २१–२३ ॥ अपीति । अपिः सम्भावनायाम् ॥ २४ ॥ अपिसत्यप्रतिज्ञेनेति । सत्यप्रतिज्ञेन, पित्रेतिशेषः । अस्मिन् रामे । प्रविशेमहीत्याशंसायां लिङ् ॥२५॥ परिदेवयमानस्येति । परिदेवयमानस्येत्यादौ

अपि जीवेद्दशरथो वनवासात् पुनर्वयम्। प्रत्यागम्य महात्मानमपि पश्येम सुव्रतम् ॥ २४ ॥ अपि सत्य प्रतिज्ञेन सार्द्धं कुशलिना वयम् । निवृत्तवनवासेऽस्मिन्नयोध्यां प्रविशेमहि ॥ २५ ॥ परिदेवयमानस्य दुःखार्त्तस्य महात्मनः । तिष्ठतो राजपुत्रस्य शर्वरी सात्यवर्तत ॥२६॥ तथा हि सत्यं ब्रुवति प्रजाहिते नरेन्द्रपुत्रे गुरुसौहृदाद् गुहः । मुमोच बाष्पं व्यसनाभिपीडितो ज्वरातुरो नाग इव व्यथातुरः ॥ २७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

सम्बन्धसामान्ये षष्ठी । एवमितिशेषः ॥ २६ ॥ तथेति । सत्यं वास्तवम् नरेन्द्रपुत्रे लक्ष्मणे । गुरुसौहृदात् गुरुषु पित्रादिषु सौहृदात् स्नेहात् । ज्वरातुरो नागो गज इव व्यथातुरो गुह इत्यन्वयः ॥ २७ ॥ इति श्रीगोविन्द० श्रीरा०भूष० पीता० अयोध्याकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

शालिनीं उत्सवसमूहशालिनीं राजधानीं सुखिता भाग्यवन्तो भरतादय इतिशेषः ॥२१–२३॥ अपीति । दशरथो जीवेदपि जीवेद्यदि पश्यामः द्रक्ष्याम इत्यर्थः। यद्वा दशरथो जीवेदपि जीवेत्किम् । सम्प्रश्ने लिङ् । सुव्रतं दशरथम् अपि पश्यामः द्रक्ष्यामः किमित्यर्थः ॥ २४ ॥ अपीति । सत्यप्रतिज्ञेन रामेण सार्धं वनवासे निवृत्ते सति अयोध्यां प्रविशेमहि प्रवेक्ष्यामः किमित्यर्थः ॥ २५ ॥ परिदेवनं प्रलापः । राजपुत्रस्य लक्ष्मणस्य । तिष्ठतो जाग्रतः सतः अत्यवर्तत अतीत्य गता ॥ २६ ॥ तथा हीति । गुरुसौहृदात् गुरौ रामे सौहृदात् स्नेहात् । तथा सत्यं वास्तवं ब्रुवति सति । अथवा गुहोपि रामे गुरुसौहृदात् अतिस्नेहात् ज्वरातुरः, अतएव व्यथातुरः । नागः गजः ॥ २७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायाम् एकपञ्चाशः सर्गः ॥ ५१ ॥



स०—सत्यप्रतिज्ञेन रामेण । वयं भरतादिभिस्साहित्यविवक्षणाद्बहुवचनम् ॥ २५ ॥

प्रभातायामिति । पृथुवक्षा इत्युत्साहातिरेकोक्तिः । महायशा इति धर्मव्यतिक्रमाभावः सूचितः । सौमित्रिमिति " रामं दशरथं विद्धि " इत्यादिनो क्तार्थानुष्ठायित्वं सूचितम् । शुभलक्षणमित्यनेन स्वभक्तिरुक्ता ॥ १ ॥ भास्करोदयकालइति । भास्करशब्दोऽयं तत्सम्बन्ध्यरुणवाची । गता गतप्राया ।

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः । उवाच रामः सौमित्रिं लक्ष्मणं शुभलक्षणम् ॥ १ ॥ भास्करोदयकालोऽयं गता भगवती निशा । असौ सुकृष्णो विहगः कोकिलस्तात कूजति ॥ २ ॥ बर्हिणानां च निर्घोषः श्रूयते नदतां वने । तराम जाह्नवीं सौम्य शीघ्रगां सागरङ्गमाम् ॥ ३ ॥ विज्ञाय रामस्य वचः सौमित्रिर्मित्रनन्दनः । गुहमामन्त्र्य सूतं च सोऽतिष्ठद्भ्रातुरग्रतः ॥४॥ स तु रामस्य वचनं निशम्य प्रतिगृह्य च । स्थपतिस्तूर्णमाहूय सचिवानिद मब्रवीत् ॥ ५ ॥ अस्य वाहनसंयुक्तां कर्णग्राहवतीं शुभाम् । सुप्रतारां दृढां तीर्थे शीघ्रं नावमुपाहर ॥ ६ ॥

भगवती कामवर्धिनी । " भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु " इत्यमरः । सुकृष्णो विहगः भरद्वाजः । कोकिलः कोकिलश्चेत्यर्थः ॥ २ ॥ वने नदतामिति नगरस्थक्रीडामयूरव्यावृत्तगम्भीरध्वनिरुक्ता । शीघ्रगामिति नावं विना दुस्तरत्वोक्तिः । सागरङ्गमामिति महत्त्वोक्तिः ॥ ३ ॥ वचो विज्ञाय नदीतरणसाधनं शीघ्रमानेतव्यमित्येवंरूपं वचनतात्पर्यं ज्ञात्वा गुहं सूतं चामन्त्र्य युवाभ्यामपि रामवचनतात्पर्यं ज्ञातं किमिति सम्बोध्य भ्रातुरग्रतो ऽतिष्ठत् ॥ ४ ॥ स त्विति । प्रतिगृह्य शिरोनतिपूर्वकं तथैव करिष्यामीत्यङ्गीकृत्य ॥ ५ ॥ अस्येति । अस्य रामस्य । वाहनसंयुक्तां वाह्यते नीयतेऽनेनेति वाहनमरित्रादि तेन संयुक्ताम् । कर्णग्राहवतीं कर्णमरित्रं गृह्णातीति कर्णग्राहः कर्णधारः तद्वतीम् । "कर्णं श्रोत्रमरित्रं च" इति निघण्टुः । सुप्रतारां सुष्ठु तार

॥ १–३ ॥ विज्ञायेति । वचो विज्ञाय नदीतरणसाधनं शीघ्रमानेतव्यमित्येवंरूपं रामवचनतात्पर्यं ज्ञात्वा । गुहं सूतं चामन्त्र्य युवाभ्यामपि रामवचनतात्पर्यं ज्ञातं किमिति सम्बोध्य यथापूर्वं भ्रातुरग्रतोऽतिष्ठदिति सम्बन्धः ॥ ४॥५ ॥ अस्येति । अस्यवाहनसंयुक्ताम् अस्य जलं निरस्य नावं तीरं वाहयति प्रापयतीत्यस्यवाहनम् अरित्रमिति यावत । तत्संयुक्ताम् । यद्वा अस्य रामस्य वाहनसंयुक्ताम् । वाह्यते नीयते नौरनेनेति वाहनमरित्रादि, तद्युक्ताम् । कर्णग्राहवतीं कर्णधारवतीम् ।

सत्य०—भगवती पूज्या, भैर्नक्षत्रैर्गच्छतीति भगः चन्द्रः तद्वती वा । सुकृष्णः अत्यन्तं नीलः विहगः काकः कोकिलस्तत्पालितः । प्रातःकाले काकशब्दस्यैव प्रसिद्धत्वात् । प्रातर्निन्द्यत्वान्न तन्नाम जग्राह । पुरतस्सम्पाद्यापराधत्वेन वा तदग्रहणम् ॥ २ ॥ अनेककर्मसु कौशलविवक्षया सचिवानिति बहुवचनम्, अतो नावमुपाहरेत्येकवचनं गुहामात्यो महानिति च न विरुध्यते ॥ ५ ॥

यितुं समर्थाम् । दृढां सुश्लिष्टसन्धिबन्धाम् । तीर्थे अवतारमार्गे । उपाहरेत्येकवचनं सचिवगणाभिप्रायेण ॥ ६-८ ॥ तवेति । नौरियमिति उपस्थितेति शेषः ॥९॥ अथेति । आरोप्यतामिति खनित्रपिटकवैदेहीवस्त्राभरणादिकमिति शेषः ॥१०॥ तत इति । तौ राघवौ । सन्नह्य कवचौ धृत्वा, कलापान् तूणी

तं निशम्य गुहादेश गुहामात्यगणो महान् । उपोह्य रुचिरां नावं गुहाय प्रत्यवेदयत् ॥७॥ ततः स प्राञ्जलिर्भूत्वा गुहो राघवमब्रवीत् । उपस्थितेयं नौर्देव भूयः किं करवाणि ते ॥ ८ ॥ तवामरसुतप्रख्य तर्तुं सागरगां नदीम् । नौरियं पुरुषव्याघ्र तां त्वमारोह सुव्रत ॥ ९ ॥ अथोवाच महातेजा रामो गुहमिदं वचः । कृतकामोऽस्मि भवता शीघ्रमारोप्यतामिति ॥ १० ॥ ततः कलापान् सन्नह्य खड्गौ बद्ध्वा च धन्विनौ । जग्मतुर्येन तौ गङ्गां सीतया सह राघवौ ॥ ११ ॥ राममेवं तु धर्मज्ञमुपगम्य विनीतवत् । किमहं करवाणीति सूतः प्राञ्जलिरब्रवीत् ॥ १२ ॥ ततोऽब्रवीद्दाशरथिः सुमन्त्रं स्पृशन् करेणोत्तम दक्षिणेन । सुमन्त्र शीघ्रं पुनरेव याहि राज्ञः सकाशे भव चाप्रमत्तः ॥ १३ ॥ निवर्तस्वेत्युवाचैनमेतावद्धि कृतं मम । रथं विहाय पद्भ्यां तु गमिष्यामो महावनम् ॥ १४ ॥

रान् खड्गौ च बद्ध्वा धन्विनौ जनाः येन मार्गेण गङ्गां प्राप्नुवन्ति तेन मार्गेण जग्मतुः ॥ ११ ॥ राममिति । धर्मज्ञं भृत्यधर्मज्ञम् । विनीतवत् सविनयमिति क्रियाविशेषणम् ॥ १२ ॥ तत इति । उत्तमेति सम्बोधनम् ॥ १३ ॥ याहीति सामान्येनोक्तं सोपपत्तिकमाह–निवर्तस्वेति । मम एतावत् कृतं हि गङ्गातीरपर्यन्तं रथेन प्रापणं कृतं हि । हीति राजाज्ञाद्योतनम् । अतःपरं यानं विहाय पद्भ्यामेव महावनं गमिष्यामः । अतस्त्वं निवर्तस्वेत्येवमुवाच ॥ १४ ॥

सुप्रतारां सुष्ठु प्रतारयितुं क्षमाम् । दृढां सुश्लिष्टसम्बन्धिबन्धाम् । तीर्थे अवतरणमार्गे, उपाहरेत्येकवचनं सचिवगणाभिप्रायेण ॥ ६ ॥ तं निशम्येति । उपोह्य समीपं प्रापय्येत्यर्थः ॥ ७ ॥ उपस्थिता प्राप्ता ॥ ८ ॥ ९ ॥ अथेति । आरोप्यतां खनित्रपिटकवैदेहीवस्त्राभरणादिकमिति शेषः ॥ १० ॥ ततः कलापानित्यादिश्लोकद्वयमेकं वाक्यम् । तौ राघवौ । सन्नह्य कवचौ धृत्वा, कलापान् तूणीरान् खड्गौ च बध्वा । येन यस्मात्कारणात् रथनिरपेक्षौ गङ्गां जग्मतुः तस्माद्राममुपगम्य सूतः प्राञ्जलिरब्रवीदिति योजना ॥ ११-१३ ॥ पुनर्याहीति सामान्येनोक्तं सोपपत्तिकमाह–निवर्तस्वेति । मम एतावत्कृतं हि गङ्गातीरपर्यन्तं रथेन प्रापणं कृतम्, यानं विहाय

आत्मानमिति । अवेक्ष्य बुद्ध्वा । आर्त्तः अनुगमनेऽभ्यनुज्ञा न कृतेति दुःखितः ॥ १५ ॥ नातिक्रान्तमिति । तव सभ्रातृभार्यस्य वने प्राकृतवत् क्षुद्रस्येव योऽयं वासः तदिदं लोके केनचिदपि पुरुषेण नातिक्रान्तं नाङ्गीकृतम्, सर्वासम्मतोऽयं तव वने वास इत्यर्थः । किंपुनर्ममेति भावः ॥१६॥ न मन्य इति ।

आत्मानं त्वभ्यनुज्ञातमवेक्ष्यार्तः स सारथिः । सुमन्त्रः पुरुषव्याघ्रमैक्ष्वाकमिदमब्रवीत् ॥ १५ ॥ नातिक्रान्तमिदं लोके पुरुषेणेह केनचित् । तव सभ्रातृभार्यस्य वासः प्राकृतवद्वने ॥ १६ ॥ न मन्ये ब्रह्मचर्येऽस्ति स्वधीते वा फलोदयः । मार्दवार्जवयोर्वापि त्वां चेद्व्यसनमागतम् ॥ १७ ॥ सह राघववैदेह्या भ्रात्रा चैव वने वसन् । त्वं गतिं प्राप्स्यसे वीर त्रील्लोँकांस्तु जयन्निव ॥ १८ ॥ वयं खलु हता राम ये त्वयाप्युपवञ्चिताः । कैकेय्या वशमेष्यामः पापाया दुःखभागिनः ॥ १९ ॥ इति ब्रुवन्नात्मसमं सुमन्त्रः सारथिस्तदा । दृष्ट्वा दूरगतं रामं दुःखार्त्तो रुरुदे चिरम् ॥ २० ॥

त्वां ब्रह्मचर्यस्वाध्यायमार्दवार्जवयुक्तं त्वां व्यसनमागतं चेत् ब्रह्मचर्य्ये अधःशयनादिलक्षणे अध्ययनकालकृते । स्वधीते स्वाध्यायाध्ययने । मार्दवे दयालुत्व इति यावत् । आर्जवे अकौटिल्ये च । फलोदयः फलसिद्धिर्नास्तीति मन्ये, यदि ब्रह्मचर्यादिकं फलदं स्यात् तत् त्वयि दृश्येत, न दृश्यते प्रत्युत वनवास एव दृष्टः । अतो न तत् फलदमिति मन्ये इतिभावः । खेदातिशयादेवमुक्तम् ॥ १७ ॥ सहेति । त्रीन् लोकान् जयन्निव विष्णुरिवेत्यर्थः । गम्यत इति गतिः । कीर्तिः तां प्राप्स्यसे, अतुलां कीर्तिं प्राप्स्यस इत्यर्थः । सुमन्त्रः पुरवासिष्वात्मानमन्तर्भाव्य वदति ॥ १८ ॥ वयमिति । वयं त्वामनुगता वयं त्वयाप्युपवञ्चिताः खलु रात्रौ निद्रासमये अविदितगमनेन उपवञ्चिता एव । अपिशब्दादभिषेकविघटनेन कैकेय्यापि वञ्चिता इति द्योत्यते । उपवञ्चिताः समीपे वञ्चिताः । वनं प्रापय्यमाना इव त्यक्ता इतिवार्थः । अतएव पापायाः कैकेय्या वशं दुःखभागिनः सन्तः एष्यामः, अतो वयं हता इत्यन्वयः ॥ १९ ॥ २० ॥

पद्भ्यां महावनं गमिष्यामि, अतस्त्वं निवर्तस्वेत्येवमुवाचेति सम्बन्धः ॥ १४ ॥ आत्मानमिति । अभ्यनुज्ञातं प्रतिनिवृत्त्या इति शेषः ॥ १५ ॥ नातिक्रान्तमिति । यदा सभ्रातृभार्यस्य तव त्वद्विधस्यापि प्राकृतवत् क्षुद्रस्येव येन दैवेन वने वासः कृतः तदा । इदं दैवकृतम् । इह लोके केनाचित्पुरुषेणापि । नातिक्रान्तं न लङ्घितम् । लङ्घितुमशक्यमित्यर्थः ॥ १६ ॥ न मन्य इति । त्वद्विश्लेषदुःखात् ब्रह्मचर्यादीनां फलं नास्तीत्युक्तम् । वस्तुतस्तु त्वं गतिमिति, हे राघव ! वने वसन् त्रीन् लोकांस्तु जयन्निव पितृसत्यपालनेन जयन्नेव वशीकुर्वन्नेव त्वं गतिं मुक्तिं प्राप्स्यसे नात्र सन्देहः ॥ १७ ॥ १८ ॥ वयमिति । रात्रौ केचन निद्रासमये अविदितगमनेन, अहं तु बलान्निवर्तनेन, एवं सर्वे वयं वञ्चिताः त्यक्ताः ॥ १९ ॥ इतीति । आत्मसमं भृत्यस्य स्वस्योचितमिति क्रियाविशेषणम् । आत्मसमं प्राणसममिति

तत इति । रोदनस्याशुचिताहेतुत्वात् स्पृष्टोदकम् आचान्तम्, अतएव शुचिम् ॥ २१–२२ ॥ गुरवः स्वामिनश्च न नियम्याः अपितु सर्वप्रकारेणा नुवर्त्तनीया इत्याशयेनाह–यद्यदिति । विकाङ्क्षा अनादरः तदभावेन, आदरेणेत्यर्थः ॥ २४ ॥ एतदिति । एतच्छब्दार्थमाह यदेषामिति । प्रशासतीति



ततस्तु विगते बाष्पे सूतं स्पृष्टोदकं शुचिम् । रामस्तु मधुरं वाक्यं पुनःपुनरुवाच तम् ॥ २१ ॥ इक्ष्वाकूणां त्वया तुल्यं सुहृदं नोपलक्षये । यथा दशरथो राजा मां न शोचेत्तथा कुरु ॥२२॥ शोकोपहतचेताश्च वृद्धश्च जगतीपतिः । कामभारावसन्नश्च तस्मादेतद्ब्रवीमि ते ॥ २३ ॥ यद्यदाज्ञापयेत्किञ्चित् स महात्मा महीपतिः । कैकेय्याः प्रियकामार्थं कार्यं तदविकांक्षया ॥ २४ ॥ एतदर्थं हि राज्यानि प्रशासति नरेश्वराः । यदेषां सर्वकृत्येषु मनो न प्रतिहन्यते ॥ २५ ॥ यद्यथा स महाराजो नालीकमधिगच्छति । न च ताम्यति दुःखेन सुमन्त्र कुरु तत्तथा ॥ २६ ॥ अदृष्टदुःखं राजानं वृद्धमार्यं जितेन्द्रियम् । ब्रूयास्त्वमभिवाद्यैव मम हेतोरिदं वचः ॥ २७ ॥ नैवाह मनुशोचामि लक्ष्मणो न च मैथिली । अयोध्यायाश्च्युताश्चेति वने वत्स्यामहेति च ॥ २८॥ चतुर्दशसु वर्षेषु निवृत्तेषु पुनःपुनः । लक्ष्मणं मां च सीतां च द्रक्ष्यासि क्षिप्रमागतान् ॥ २९ ॥

अभ्यस्तत्वाददादेशः । सर्वकृत्येषु कामात् क्रोधाद्वा प्रवृत्तेष्वित्यर्थः ॥ २५ ॥ यदिति । अलीकमप्रियम् । "अलीकं त्वप्रियेऽनृते" इत्यमरः ॥ २६ ॥ अदृष्टदुःखमिति । मम हेतोः मदर्थं । मम प्रतिनिधित्वेनेत्यर्थः ॥ २७ ॥ स्वविश्लेषजनितदुःखेन राजा न निर्वहेदिति भिया तदाश्वासकानि वाक्या न्याह–नैवाहमिति । लक्ष्मणो न च मैथिलीत्यत्र शोचतीति विपरिणामः कर्त्तव्यः । वत्स्यामहेत्यत्र आर्षः सन्धिः ॥ २८ ॥ चतुर्दशस्विति । पुनःपुन

रामपरं वा । दूरगतं दृष्ट्वा निश्चित्येत्यर्थः ॥ २० ॥ तत इति । स्पृष्टोदकम् आचान्तम् ॥ २१ ॥ २२ ॥ शोकेति । कामभारावसन्नः कामवेगेन पीडितः यस्मात् तस्मात् । एतत् वक्ष्यमाणं ब्रवीमीति योजना ॥ २३ ॥ यद्यदिति । अविकाङ्क्षया अविशङ्कया । कार्यम् अनुष्ठेयम् ॥२४॥२५॥ यद्यथेति । यत्कार्यं प्रति यथा अलीकमप्रियम् । नाधिगच्छति दुःखेन न ताम्यति ग्लानिं न प्राप्नोति तत्कार्यं तथा कुर्विति सम्बन्धः ॥ २६ ॥ २७ ॥ नेति । वत्स्यामहेति सन्धिरार्षः ॥ २८ ॥ चतुर्दशस्विति । पुनः

द्रक्ष्यसि "नित्यवीप्सयोः" इति द्विवचनम् । आदरातिशयेन सदा द्रक्ष्यसीत्यर्थः ॥२९॥ एवमित्यादि । राजानं मे मातरम् अन्याः देवीः सहिताः कौसल्यया सह वर्तमानाः कैकेयीं च पुनःपुनरेवमुक्त्वा अथ कौसल्यामारोग्यं पादाभिवन्दनं च ब्रूहीत्यन्वयः । आर्यस्य शास्त्रोदितज्येष्ठानुवर्त्तनरूपपरम

एवमुक्त्वा तु राजानं मातरं च सुमन्त्र मे । अन्याश्च देवीः सहिताः कैकेयीं च पुनःपुनः ॥ ३० ॥ आरोग्यं ब्रूहि कौसल्यामथ पादाभिवन्दनम् । सीताया मम चार्यस्य वचनाल्लक्ष्मणस्य च ॥ ३१ ॥ ब्रूयाश्च हि महाराजं भरतं क्षिप्रमानय । आगतश्चापि भरतः स्थाप्यो नृपमते पदे ॥ ३२ ॥ भरतं च परिष्वज्य यौवराज्येऽभिषिच्य च । अस्मत्सन्तापजं दुःखं न त्वामभिभविष्यति ॥ ३३ ॥ भरतश्चापि वक्तव्यो यथा राजनि वर्त्तसे । तथा मातृषु वर्तेथाः सर्वास्वेवाविशेषतः ॥ ३४ ॥ यथा च तव कैकेयी सुमित्रा च विशेषतः । तथैव देवी कौसल्या मम माता विशेषतः ॥ ३५ ॥ तातस्य प्रियकामेन यौवराज्यमवेक्षता । लोकयोरुभयोः शक्यं नित्यदा सुखमेधितुम् ॥३६॥ निवर्त्यमानो रामेण सुमन्त्रः शोककर्शितः । तत्सर्वं वचनं श्रुत्वा स्नेहात् काकुत्स्थमब्रवीत् ॥ ३७ ॥

धर्मवेदित्वात् लक्ष्मणस्यार्यत्वोक्तिः। कौसल्यां प्रत्येव पादाभिवन्दनकथनम् अन्यत्र निषेधात् । "आचार्यवदाचार्यदारे वृत्तिः पादसंवाहनवर्जम्" इति निषेधस्य सपत्नीमातृष्वपि तुल्यत्वात् ॥ ३० ॥ ३१ ॥ ब्रूया इति । नृपमते राज्ञामभिमते । पदे यौवराज्य इत्यर्थः । अभिषिच्य स्थितमितिशेषः । नाभिभविष्यतीत्यत्रेतिकरणं द्रष्टव्यम् । अस्य ब्रूया इत्यनेन सम्बन्धः ॥ ३२ ॥ ३३ ॥ भरतइत्यादिश्लोकेनोक्तमर्थं विवृणोति—यथेति । सुमित्रोक्तिः शत्रुघ्नपक्षपातात् । अवेक्षता अङ्गीकुर्वता त्वयेतिशेषः । नित्यदा सर्वदा । छान्दसो दाप्रत्ययः । इति भरतश्चापि वक्तव्य इति पूर्वेणान्वयः ॥ ३४–३७ ॥

पुनः पुनरागतानस्मान् पुनस्त्वं द्रक्ष्यसीति द्वयोः पुनश्शब्दयोस्सम्बन्धः ॥ २९ ॥ एवमिति । सहिताः मम मात्रेति शेषः । कैकीयीं च आरोग्यं ब्रूहीति सम्बन्धः । स्वमातुः पादाभिवन्दनमादिशति—कौसल्यामिति । सीतायाः मम च आर्यस्य विदुषो लक्ष्मणस्य च वचनात्पादाभिवन्दनं ब्रूया इत्यन्वयः । यद्वा ब्रूहीति पूर्वेण सम्बन्धः ॥ ३० ॥ ३१ ॥ स्वविश्लेषजदुःखनिवृत्तये सुमन्त्रे स्वातन्त्र्यमारोप्याह महाराजमित्यादि । महाराजं त्वत्पूर्वं नृपमते दशरथानुमते भरतमभिषिच्य अभिषेचयसि चेत् तर्हीदं दुःखं त्वां नाभिभविष्यतीति सम्बन्धः । यद्वा दशरथं प्रति वक्तव्यमिति सुमन्त्रं प्रत्याह ब्रूया इति ॥ ३२–३५ ॥ तातस्येति । तातस्य प्रियकामेन यौवराज्यमपेक्षता अङ्गीकुर्वता उभयोरिह परयोः सुखमेधितुं शक्यम्, जनानामिति शेषः । यद्वा यौवराज्यमपेक्षता त्वया उभयोर्लोकयोः तातस्य दश

यदिति । अहमविक्लवः धृष्टस्सन् यद्वाक्यं ब्रूयां तन्नोपचारेण किंतु स्नेहात् । तद्वाक्यं त्वं तावत् साकल्येन क्षन्तुमर्हसीति सम्बन्धः । ( पाठभेदः । तवस्नेहादविक्लवो निर्भयः यद्वचः उपचारेण न ब्रूयाम् । सेवाधर्मं विहाय ब्रूयाम् । तद्वाक्यं भक्तिमानितिहेतोः क्षन्तुमर्हसि ) ॥ ३८ ॥ कथमिति ।

यदहं नोपचारेण ब्रूयां स्नेहादविक्लवः । भक्तिमानिति तत्तावद्वाक्यं त्वं क्षन्तुमर्हसि ॥ ३८ ॥ कथं हि त्वद्विहीनोऽहं प्रतियास्यामि तां पुरीम् । तव तावद्वियोगेन पुत्रशोकाकुलामिव ॥३९॥ सराममपि तावन्मे रथं दृष्ट्वा तदा जनः । विना रामं रथं दृष्ट्वा विदीर्य्येतापि सा पुरी ॥ ४० ॥ दैन्यं हि नगरी गच्छेद्दृष्ट्वा शून्यमिमं रथम् । सूतावशेषं स्वं सैन्यं हतवीरमिवाहवे ॥४१॥ दूरेपि निवसन्तं त्वां मानसेनाग्रतः स्थितम् । चिन्तयन्त्योऽद्य नूनं त्वां निराहाराः कृताः प्रजाः ॥ ४२ ॥ दृष्टं तद्धि त्वया राम यादृशं त्वत्प्रवासने । प्रजानां सङ्कुलं वृत्तं त्वच्छोकक्लान्तचेतसाम् ॥४३॥

तवतावद्वियोगेनेतिपाठः । तव तातेतिपाठे—तात स्वामिन्नित्यर्थः । वृद्धत्वाद्वत्सेति सम्बोधनं वा । पुत्रवियोगजः शोकः पुत्रशोकः तेनाकुलामिव स्थितां पुरीमित्यन्वयः ॥ ३९ ॥ स राममिति । पूर्वं सरामं रथं दृष्ट्वा इदानीं रामं विना स्थितं रथं दृष्ट्वा जनः सा पुर्यपि विदीर्येत दुःखेन भिद्येत । पुरीशब्दोऽत्र जनव्यतिरिक्तपश्वादिपरः ॥ ४० ॥ दैन्यमिति । आहवे हतवीरं हतं वीरं दृष्ट्वा स्वसैन्यमिव सूतावशेषं शून्यं रामरहितं रथं दृष्ट्वा नगरी दैन्यं गच्छेत् ॥ ४१ ॥ दूर इति । प्रजाः अयोध्यावासिन्यः । दूरे निवसन्तमपि त्वां मानसेनाग्रतः स्थितं त्वां चिन्तयन्त्यः भावनाप्रकर्षेण पुरतः स्थितमिव पश्यन्त्यः निराहाराः कृताः, आहारेऽप्यादरं न कुर्वन्तीत्यर्थः ॥ ४२ ॥ अत्रार्थे पूर्वानुभवं प्रमाणयति—दृष्टमिति । त्वत्प्रवासने प्रजानां यादृशं सङ्कुलं

रथस्य सुखमेधितुं संवर्धयितुं शक्यमिति सम्बन्धः ॥ ३६–३९ ॥ स राममिति । स रामं तावत्प्रथमं दृष्ट्वा तदा स्थितो यो जनः या पुरी च स जनः सा पुरी च पश्चाद्विना रामं रथं दृष्ट्वा विदीर्येतापि । अपिः सम्भावनायाम् ॥ ४० ॥ दैन्यमिति । हतवीरं हतरथिनं रथं दृष्ट्वा स्वसैन्यमिव स्वसेनेव ॥ ४१ ॥ दूर इति । अग्रतः पुरतः स्थितं वनप्रयाणोन्मुखं त्वाम् अत एव मानसेन दूरे निवसन्तं चिन्तयन्त्यः प्रजाः निराहाराः कृताः । अद्य त्यक्त्वा वनं गतं त्वां चिन्तयन्त्यः मरिष्यन्ति नूनमित्यर्थः ॥ ४२ ॥ मत्प्रवासनमात्रेण कथं तेषां मरणशङ्केत्यत आह—दृष्टमिति । प्रजानां यादृशं सङ्कुलं दुःखप्रलापः वृत्तं जातं तत्त्वया दृष्टम् ॥ ४३ ॥

वृत्तं संक्षोभो जातः तादृशं त्वया दृष्टं हि ॥ ४३ ॥ आर्तनाद इति । ततः प्रवासकालिकनादादित्यर्थः ॥ ४४ ॥ यदि प्रियं ब्रूयां तदसत्यं भवति यदि च सत्यं ब्रूयां तदप्रियं भवति अतः कौसल्यां प्रति किमपि वक्तुं न शक्यमित्यभिप्रायेणाह—अहमित्यादिना । देवीमहं किं वा वक्ष्यामि न किमपि

आर्तनादो हि यः पौरैर्मुक्तस्त्वद्विप्रवासने । सरथं मां निशाम्यैव कुर्युः शतगुणं ततः ॥ ४४ ॥ अहं किं चापि वक्ष्यामि देवीं तव सुतो मया । नीतोऽसौ मातुलकुलं सन्तापं मा कृथा इति ॥ ४५ ॥ असत्यमपि नैवाहं ब्रूयां वचनमीदृशम् । कथमप्रियमेवाहं ब्रूयां सत्यमिदं वचः ॥ ४६ ॥ मम तावन्नियोगस्थास्त्वद्बन्धुजनवाहिनः । कथं रथं त्वया हीनं प्रवक्ष्यन्ति हयोत्तमाः ॥ ४७ ॥ तन्न शक्ष्याम्यहं गन्तुमयोध्यां त्वदृतेऽनघ । वनवासानुयानाय मामनुज्ञातुमर्हसि ॥ ४८ ॥ यदि मे याचमानस्य त्यागमेव करिष्यसि । सरथोऽग्निं प्रवेक्ष्यामि त्यक्तमात्र इह त्वया ॥ ४९ ॥ भविष्यन्ति वने यानि तपोविघ्नकराणि ते । रथेन प्रतिबाधिष्ये तानि सत्त्वानि राघव ॥ ५० ॥

वक्तुं शक्नोमीत्यर्थः । तदेवोपपादयति तवेत्यादिना । तवासौ सुतो मया मातुलकुलं नीतः तस्मात् सन्तापं मा कृथा इतीदृशमसत्यंवचनमप्यहं नैव ब्रूयाम् , असत्यवचनप्रतिषेधादितिभावः । सत्यमेव वदेत्यत्राह कथमिति । अप्रियमिदं वनप्रापणरूपं सत्यं वचनं कथं ब्रूयाम् । देव्या हानिप्रसङ्गादिति भावः ॥ ४५ ॥ ४६ ॥ ममेति । त्वद्बन्धुजनाः त्वद्वंश्याः। यद्वा त्वं त्वद्बन्धुभूतसीतालक्ष्मणरूपजनौ च त्वद्बन्धुजनाः तद्वाहिनः प्रवक्ष्यन्ति वोढारो भविष्यन्ति । वहेर्लृटि रूपम् ॥ ४७ ॥ ४८ ॥ यदीति । त्यक्तमात्रः तत्क्षण एव त्यक्तः ॥ ४९ ॥ भविष्यन्तीति । रथेन साधनेन प्रतिबाधिष्ये अहमेव

आर्तेति । सरथं भवद्विरहितरथयुक्तमित्यर्थः ॥ ४४ ॥ किञ्च त्वद्वियोगदुःखितां त्वन्मातरं प्रति तव वनवासस्थितिर्वक्तुमशक्या, अपि तु तस्याः दुःखनिवृत्तये असत्यमप्यहं ब्रूयामित्याह—अहमित्यादिश्लोकद्वयेन । किं चाहं तव देवीं मातरं प्रति अहमेवमपि वक्ष्यामि, कथं तवासौ सुतो मया मातुलकुलं कोसलदेशं नीतः नतु वनम्, अतो मा सन्तापं कृथा इति असत्यमीदृशं वचनमेवाहं ब्रूयां सत्यमपीदं वचः वननयनवचनं कथमेवाहमप्रियं ब्रूयाम् " सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात सत्यमप्रियम् " इति स्मरणादित्याशयः । यद्वा कौसल्यां प्रति किं वक्ष्यामीत्यभिप्रायेणाह अहमित्यादि। देवीं कौसल्याम् । अहं किञ्चापि वक्ष्यामि न किञ्चिदपि वक्ष्यामि । कुतस्तव सुतो मातुलकुलं नीत इति ईदृशमसत्यमपि न ब्रूयां तर्हि सत्यं ब्रूहीति चेत् सत्यमपीदमप्रियं वचः कथं ब्रूयामिति सम्बन्धः ॥४५॥४६॥ ममेति । त्वद्बन्धुजनवाहिनः त्वां त्वद्बन्धुजनं सीतासौमित्रिरूपम् । वहनशीलाः मम नियोगस्थाः मदधीनाः, कथं प्रवक्ष्यन्ति वहिष्यन्ति ॥ ४७–५० ॥

रथीभूत्वा निवर्त्तयिष्यामीत्यर्थः। तानि सत्त्वानीति पाठः। सर्वाणीति पाठे—सत्त्वानीति शेषः॥ ५० ॥ त्वदिति। त्वत्कृते त्वन्निमित्तम्। रथचर्याकृतं सुखं मया नावाप्तम्। राज्याभिषिक्तत्वद्रथचर्याकृतसुखं मया भाग्यहीनेन न लब्धम्, तथापि त्वत्कृतेन त्वत्साहाय्यकरणेन वनवासकृतमपि सुखम् आशंसे इच्छामि। राज्ये रथचर्याकृतसुखाभावेपि वने सारथित्वेन परिचर्याकरणकृतं वापि सुखं मम भवत्विति भावः। यद्वा त्वत्कृतेन त्वया कृतेना

त्वत्कृतेन मयावाप्तं रथचर्याकृतं सुखम्। आशंसे त्वत्कृतेनाहं वनवासकृतं सुखम् ॥५१॥ प्रसीदेच्छामि तेऽरण्ये भवितुं प्रत्यनन्तरः। प्रीत्याभिहितमिच्छामि भव मे प्रत्यनन्तरः॥ ५२ ॥ इमे चापि हया वीर यदि ते वनवासिनः। परिचर्यां करिष्यन्ति प्राप्स्यन्ति परमां गतिम्॥ ५३ ॥ तव शुश्रूषणं मूर्ध्ना करिष्यामि वने वसन्। अयोध्यां देवलोकं वा सर्वथा प्रजहाम्यहम् ॥५४॥ न हि शक्या प्रवेष्टुं सा मयायोध्या त्वया विना। राजधानी महेन्द्रस्य यथा दुष्कृतकर्मणा ॥५५॥ वनवासे क्षयं प्राप्ते ममैष हि मनोरथः। यदनेन रथेनैव त्वां वहेयं पुरीं पुनः॥ ५६ ॥ चतुर्दश हि वर्षाणि सहितस्य त्वया वने। क्षणभूतानि यास्यन्ति शतसङ्ख्याऽन्यतोऽन्यथा ॥ ५७ ॥

नुग्रहेणेत्यर्थः। रथचर्य्याकृतं रथप्रेरणकृतं सुखं मया अवाप्तम्। एवं त्वत्कृतेनानुग्रहेण वनवासकृतं सुखमप्यहमाशंस इति॥ ५१ ॥ प्रसीदेति। प्रत्यनन्तरः समीपवर्ती। मे प्रत्यनन्तरो भवेति प्रीत्याभिहितमिच्छामि। त्वत्कर्तृकमभिधानमिच्छामीत्यर्थः। क्रियतामिति मां वदेतिवत्॥ ५२ ॥ इम इति। परमां गतिं स्वामिशुश्रूषणादितिभावः॥ ५३ ॥ तवेति। मूर्ध्नेत्यस्य सोपचारमिति फलितार्थः। सर्वथा सर्वप्रकारेण॥ ५४ ॥ नहीति। महेन्द्रस्य राजधानी स्वर्गः॥ ५५ ॥ वनवास इति। वनवासे क्षयं प्राप्ते वनवासे समाप्ते सतीत्यर्थः। वहेयमितियत् अयं मे मनोरथ इति सम्बन्धः॥५६॥ चतुर्दशेति। त्वया सहितस्येति ममेति शेषः। क्षणभूतानि क्षणतुल्यानि, अतोऽन्यथा त्वद्विरह इत्यर्थः। शतसङ्ख्यानि भवेयुरितिशेषः। शतगुणि

त्वत्कृतेनेति। त्वया कृतानुग्रहेण। रथचर्याकृतं रथप्रेरणकृतं सुखमवाप्तम्। वनवासकृतं सुखमाशंसे। अस्यायं भावः—त्वमस्मिन् कुले अवतरिष्यसीति ज्ञात्वैव मन्त्रि प्रधानोप्यहं त्वद्रथचर्यासेवाभाग्यं मम भविष्यतीति निन्द्यमपि सूतकृत्यं मया अङ्गीकृतम्, तेन भाग्यवशात्त्वत्सेवासुखं प्राप्तमेव, इतःपरं वनवासकृतं सुखं वनवासेपि त्वत्सेवाकृतं सुखं आशंसे प्रार्थये इति ॥५१॥ प्रसीदेति। अरण्ये ते प्रत्यनन्तरः प्रत्यासन्नः अनुकूलो भवितुमिच्छामि त्वं मे प्रत्यनन्तरो भवेति त्वदभिहितं त्वदुक्त मिच्छामीति सम्बन्धः ॥५२–५५॥ वनवास इति। वनवासे वनवासयोग्यकाले क्षयं प्राप्ते पुरीं वहेयं प्रापयेयमिति यत् एष मे मनोरथ इति योजना॥ ५६ ॥ ५७॥

तानि भविष्यन्तीतिभावः ॥ ५७ ॥ भृत्येति । हे भृत्यवत्सल ! भक्तं भृत्यम् । अत एव स्थित्यां मर्यादायां स्थितम् । अस्खलितमर्यादम् अतएव भर्तृपुत्रगते स्वामिपुत्रेण त्वया गते पथि वनगमने तिष्ठन्तं निश्चितत्वदनुगमनं मां त्वं हातुं नार्हसि ॥ ५८–६० ॥ नगरीमित्यादिश्लोकत्रयमेकान्वयम् ।

भृत्यवत्सल तिष्ठन्तं भर्तृपुत्रगते पथि । भक्तं भृत्यं स्थितं स्थित्यां त्वं न मां हातुमर्हसि ॥ ५८ ॥ एवं बहुविधं दीनं याचमानं पुनःपुनः । रामो भृत्यानुकम्पी तु सुमन्त्रमिदमब्रवीत् ॥ ५९ ॥ जानामि परमां भक्तिं मयि ते भर्तृवत्सल। शृणु चापि यदर्थं त्वां प्रेषयामि पुरीमितः ॥ ६० ॥ नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी । कैकेयी प्रत्ययं गच्छेदिति रामो वनं गतः॥६१॥ परितुष्टा हि सा देवी वनवासं गते मयि। राजानं नातिशङ्केत मिथ्यावादीति धार्मिकम् ॥ ६२ ॥ एष मे प्रथमः कल्पो यदम्बा मे यवीयसी । भरतारक्षितं स्फीतं पुत्रराज्यमवाप्नुयात् ॥ ६३ ॥

रामो वनं गत इति कैकेयी प्रत्ययं विश्वासं गच्छेत् । धार्मिकं राजानं मिथ्यावादीति नातिशङ्केत । भरतारक्षितं भरतेन आ समन्तात् रक्षितं पुत्रराज्यम् अवाप्नुयादिति च यत्, एषः मे प्रथमः कल्पः कर्तव्येषु प्रयोजनेषु मुख्यः । "मुख्यः स्यात् प्रथमः कल्पः" इत्यमरः ॥ ६१–६३ ॥

भृत्येति । भर्तृपुत्रगते पथि राजपुत्राश्रिते पथि यथा भृत्येन स्थातव्यं तथा त्वद्विषये तिष्ठन्तम् तथा स्थित्यां स्थितमिति मन्त्रिणा राजनि राजकार्ये च तथा स्थातव्यम्, तस्यामेव स्थित्यां सदा स्थितम्, कदाप्यपराधरहितमिति यावत् ॥ ५८–६० ॥ नगरीमिति । रामो वनं गत इति कैकेयीप्रत्ययं गच्छेदिति योजना ॥ ६१ ॥ ६२ ॥ एष इति । अम्बा भरतारक्षितं भरतेनारक्षितम् अनुमन्ताद्रक्षितं पुत्रराज्यं तज्जसुखमवाप्नुयादिति यत् एष मे प्रथमः कल्पः मुख्यं प्रयोजनमिति

सत्य०—दीनमिति क्रियाविशेषणम्। अनुकम्पशब्दोऽकारान्तोऽप्यस्ति । "भक्तानुकम्पादतिशुद्धसंविदात्रे" इत्यत्र तथोक्तेः । एवं च "अत इनिठनौ" इत्यनेन भृत्यानुकम्पीति साधुः । शिखादेराकृतिगणत्वेन तत्स्थत्वाद्वा आर्षत्वाद्वा साधुरित्याहुः । भृत्यानुकम्पस्त्विति पाठे तु न कश्चिद्दोषः ॥ ५९ ॥ विपरीते त्वद्गमनाभावे मयि वनवासं गतेपि । नेति न गत इति तुष्टिहीना सा कैकेयी धार्मिकं राजानं मिथ्यावादीति अतिशङ्केत अतस्त्वया गन्तव्यमिति भावः । यद्वा विपरीते सुमन्त्रस्य तत्र स्थित्यपेक्षया विपरीते अयोध्यां प्रति गमने। तुष्टिहीनेति वस्तुस्थितिकथनम् । मयि वनवासं गते सति धार्मिकं राजानं मिथ्यावादीति नातिशंकेतेति यथास्थानमेव नञोऽन्वयः ॥ ६२ ॥ एषः राजविषये शङ्काभावरूपः । प्रथमः कल्पः त्वद्गमने प्रथमं प्रयोजनम् । प्रयोजनान्तरं चाह—यदिति । मे यवीयसी अम्बा भरतेन आरक्षितं सम्यग्रक्षितं पुत्रराज्यं अवाप्स्यते प्राप्नोति । भरतागमनस्यापि त्वद्गमनाधीनत्वादिति भावः ॥ ६३ ॥

ममेति । यानर्थान् सन्दिष्टोसि तानर्थान् दशरथादीनुद्दिश्य तथातथा ब्रूया इति सम्बन्धः ॥ ६४ ॥ इतीति । हेतुमत् युक्तिमत् । नेदानीमित्यनेन इह वस्तव्यमिति गुहप्रार्थनं द्योतितम् । मे सजने सजनप्रदेशे अयं वासो न योग्यः । तद्गतो विधिः आश्रमवासगतः तद्विषय इत्यर्थः । विधिः

मम प्रियार्थं राज्ञश्च सरथस्त्वं पुरीं व्रज । सन्दिष्टश्चासि यानर्थांस्तांस्तान् ब्रूयास्तथातथा ॥ ६४ ॥ इत्युक्त्वा वचनं सूतं सान्त्वयित्वा पुनःपुनः । गुहं वचनमक्लीबो रामो हेतुमदब्रवीत् ॥ ६५ ॥ नेदानीं गुह योग्योऽयं वासो मे सजने वने । अवश्यं ह्याश्रमे वासः कर्त्तव्यस्तद्गतो विधिः ॥६६॥ सोऽहं गृहीत्वा नियमं तपस्विजनभूषणम् । हितकामः पितुर्भूयः सीताया लक्ष्मणस्य च । जटाः कृत्वा गमिष्यामि न्यग्रोधक्षीरमानय ॥ ६७ ॥ तत्क्षीरं राजपुत्राय गुहः क्षिप्रमुपाहरत् । लक्ष्मणस्यात्मनश्चैव रामस्तेनाकरोज्जटाः ॥ ६८ ॥

पितृनियमनम् । सोऽहं " सप्त सप्त च वर्षाणि दण्डकारण्यमाश्रितः । अभिषेकमिमं त्यक्त्वा जटाजिनधरो वस ॥" इति कैकेय्या नियुक्तोऽहम् । तपस्विजनभूषणं तपस्विजनातिशयावहम् । नियमम् अधःशयनादिकम् । गृहीत्वा अङ्गीकृत्य । पितुः सीताया लक्ष्मणस्य च भूयो हितकामः अतिशयेन परलोकसाधनपुण्यकामः सन् । जटाः कृत्वा गमिष्यामि तदर्थं न्यग्रोधक्षीरमानय । जटाकरणस्य सीतालक्ष्मणयोः प्रियत्वाभावेपि हितत्वमस्त्येव तयोरपि तेन धर्मातिशयात् । रामजटाकरणे हि सहधर्मचारिण्याः सीताया अपि धर्मः सिद्धः । लक्ष्मणस्य च तदनुरोधेन जटाकरणाद्धर्मः । यद्वा हितकामः न तु प्रियकाम इत्यर्थः ॥६५–६७॥ तत्क्षीरमिति । लक्ष्मणस्य चेति । तेनापि भ्रातृवदवस्थानस्य सङ्कल्पितत्वादितिभावः । अकरोदिति

योजना ॥ ६३ ॥ ममेति । सन्दिष्टः उपदिष्टः ॥ ६४ ॥ ६५ ॥ नेति । सजने वने मे अयं वासो न योग्यः, किन्तु आश्रमे जनपदरहिते वासो योग्यः । तद्गतो विधिः आश्रमवासोचितजटाधारणादिरिदानीं कर्तव्य इत्यन्वयः ॥ ६६ ॥ सोहमित्यादिसार्धश्लोकमेकं वाक्यम् । सीतायाः लक्ष्मणस्य च हितकामोऽहं पितुर्भूयः अतिशयेन हितकामस्सन् वन्याहाराधश्शयनादिनियमं गृहीत्वा जटाः कृत्वा गमिष्यामि । तदर्थं न्यग्रोधक्षीरमानयेति गुहमब्रवीदिति पूर्वेण सम्बन्धः । यद्वा सीताया

सत्य०—तद्गतः आश्रमवासायोग्यः । विधिः जटाजूटबन्धादिश्च कर्तव्यः ॥ ६६ ॥ सीतालक्ष्मणस्य पितुश्च हितकामः । यद्यपि पितुरित्यादौ चतुर्थ्या भवितव्यम् । तथाप्यभिहितहितस्य हितत्वेनाभिप्रेणनाभावात् षष्ठ्युपपत्तिः । अत एव यत्तु सीताया हितकाम इति तन्न जटाधारणेन सीताया हिताप्रसिद्धेरिति व्याख्यानान्तरं दूषयता नागोजिभट्टेन सीताया अनुमत्येति यदध्याहृत्य व्याख्यातं तत्परास्तम् । अस्मदुक्तरीत्या सीताहिताप्रसिद्धेर्भूषणत्वात् । जटाधारणं दशरथहितमिति मत्वा सीताहिताप्रसिद्धेरिति वक्तुर्लोकोत्तरप्रज्ञत्वात् ॥ ६७ ॥

लक्ष्मणे प्रयोज्यकर्तृत्वं बोध्यम् ॥ ६८ ॥ ऋषिः खियाति—दीर्घबाहुरिति । जटिलत्वं जटावत्त्वम् । तुन्दादित्वादिलच् ॥ ६९ ॥ तस्यामप्यवस्थायां दर्शनीयतमत्वमाह—तावित्यादिश्लोकेन ॥७०॥ तत इति । विखना नाम ब्रह्मनखोत्पन्नः कश्चिन्मुनिः "ये नखाः ते वैखानसाः । ये वालास्ते वालखिल्याः"

दीर्घबाहुर्नरव्याघ्रो जटिलत्वमधारयत् ॥ ६९ ॥ तौ तदा चीरवसनौ जटामण्डलधारिणौ । अशोभेतामृषिसमौ भ्रातरौ रामलक्ष्मणौ ॥ ७० ॥ ततो वैखानसं मार्गमास्थितः सहलक्ष्मणः । व्रतमादिष्टवान् रामः सहायं गुह मब्रवीत् ॥ ७१ ॥ अप्रमत्तो बले कोशे दुर्गे जनपदे तथा । भवेथा गुह राज्यं हि दुरारक्षतमं मतम् ॥ ७२ ॥ ततस्तं समनुज्ञाय गुहमिक्ष्वाकुनन्दनः । जगाम तूर्णमव्यग्रः सभार्यः सहलक्ष्मणः ॥ ७३ ॥ स तु दृष्ट्वा नदीतीरे नाव मिक्ष्वाकुनन्दनः । तितीर्षुः शीघ्रगां गङ्गामिदं लक्ष्मणमब्रवीत् ॥ ७४ ॥

इत्युक्तेः । सिंहादिशब्दवद्वर्णविपर्ययः । तेन प्रोक्तं वैखानसम् । प्रोक्तार्थे अण् । मार्गं धर्ममित्यर्थः । वानप्रस्थधर्ममितियावत् । आस्थितः आश्रितः । व्रतं ब्रह्मचर्यादिनियमम् । आदिष्टवान् अङ्गीकृतवान् । नन्वत्र सर्वो वानप्रस्थधर्मोऽङ्गीकृतः उत यः कश्चित् ? नाद्यः—तस्य पुनर्गार्हस्थ्यग्रहणायोगात् "आरूढपतितो हि सः" इत्युत्तराश्रमप्राप्तस्य पुनः पूर्वाश्रमावरोहो हि निन्दितः । न द्वितीयः—गृहस्थस्य वनस्थासाधारणजटाधारणादिकरणे शाखा रण्डवदाश्रमरण्डतापत्तेः । मैवम्, पितृनियोगकृतसाङ्कल्पिकनियमविशेषस्य युधिष्ठिरादिसंन्यासधर्मवदविरुद्धत्वात् । उक्तं हि मनुना—"सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्" इति । सहायं गङ्गावतरणसहायम् । सखायमिति च पाठः ॥ ७१ ॥ अप्रमत्त इति । बले चतुरङ्गबले । कोशे अर्थौघे । "कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः" इत्यमरः । दुरारक्षं दुःखेन आ समन्तात् रक्षितुं शक्यम् (पाठभेदः । दुःखेन आरक्षा रक्षणं यस्य तद्दुरारक्षम् । अतिशयेन दुरारक्षं दुरारक्षतमम् । भवेथा इत्यार्षमात्मनेपदम्) ॥ ७२ ॥ तत इति । अव्यग्रः अव्यासक्तः "व्यग्रो व्यासक्त आकुलः"

लक्ष्मणस्य च अनुमत्येति शेषः । अन्यत्समानम् ॥ ६७–७० ॥ तत इति । वैखानसं मार्गं वानप्रस्थधर्ममास्थितः प्राप्तस्सन् । व्रतं वानप्रस्थव्रतमादिष्टवान् अङ्गीकृतवान् । अस्य श्लोकस्य चतुर्थपादस्सूत्तरश्लोकेन सम्बध्यते ॥ ७१ ॥ अप्रमत्त इति । दुरारक्षतमं दुःखेन रक्षितुं योग्यतमम् ॥ ७२–७४ ॥

 

इत्यमरः ॥ ७३ ॥ ७४ ॥ आरोहेति । स्थितामिमां नावं परिगृह्य सीतां शनैरारोपय । अन्वक्षम् अनुपदं त्वं चारोहेति सम्बन्धः । यद्वा त्वं प्रथममारोह अन्वक्षं मनस्विनीं सीतां परिगृह्य कराग्रयोर्गृहीत्वा आरोपयेत्युपचारोक्तिः। मनस्विनीमिति निन्दायां मतुप् । भीरुमिति यावत् । पूर्वारोहणेऽसौ बिभीया

आरोह त्वं नरव्याघ्र स्थितां नावमिमां शनैः । सीतां चारोपयान्वक्षं परिगृह्य मनस्विनीम् ॥ ७५ ॥ स भ्रातुः शासनं श्रुत्वा सर्वमप्रतिकूलयन् । आरोप्य मैथिलीं पूर्वमारुरोहात्मवांस्ततः ॥ ७६ ॥ अथारुरोह तेजस्वी स्वयं लक्ष्मणपूर्वजः । ततो निषादाधिपतिर्गुहो ज्ञातीनचोदयत् ॥ ७७ ॥ राघवोऽपि महातेजा नावमारुह्य तां ततः । ब्रह्मवत् क्षत्त्रवच्चैव जजाप हितमात्मनः ॥७८॥ आचम्य च यथाशास्त्रं नदीं तां सह सीतया । प्राणमत् प्रीतिसंहृष्टो लक्ष्मणश्चामितप्रभः ॥ ७९ ॥ अनुज्ञाय सुमन्त्रं च सबलं चैव तं गुहम् । आस्थाय नावं रामस्तु चोदयामास नाविकान् ॥ ८० ॥ ततस्तैश्चोदिता सा नौः कर्णधारसमाहिता । शुभस्फ्यवेगाभिहता शीघ्रं सलिलमत्यगात् ॥ ८१॥

दितिभावः ॥ ७५ ॥ लक्ष्मणस्तु निपुणतया प्रथमं सीतामारोप्य पश्चात्स्वयमारूढ इत्याह—स भ्रातुरिति । अप्रतिकूलयन् यथातथावाप्यारोहणशासन मनुतिष्ठन् । आत्मवान् रामाशयज्ञ इत्यर्थः । पूर्वं मनस्विनीमित्युक्तम्, इदानीमात्मवानित्युक्तम् । उभाभ्यामारोपणे दोषशङ्काराहित्यं चोक्तम् ॥ ७६ ॥ अथेति । ज्ञातीन् बन्धून् अचोदयत् नौः पारं नीयतामित्यचोदयत् ॥ ७७ ॥ राघव इति । ब्रह्मवत्क्षत्रवदित्यर्हार्थे वतिप्रत्ययः । ब्राह्मणार्हं क्षत्रियार्हम् । आत्मनो हितं जजाप " दैवीं नावम् " इत्यादिब्रह्मक्षत्रसाधारणमन्त्रं जजापेत्यर्थः । यद्वा ब्रह्मक्षत्रशब्दयुक्तं मन्त्रं जजापेत्यर्थः । स च मन्त्रः सुत्रामाण मित्यादिः । तत्र ह्यरिष्टनेमिः पृतनाजिदिति ब्रह्मक्षत्रशब्दौ श्रुतौ ॥ ७८ ॥ पूर्वोक्तं नावारोहणं विवृण्वन्नाह—आचम्येत्यादिना ॥ ७९ ॥ ८० ॥ तत इति ।

आरोहेति । नावं परिगृह्य सीतामादाय अन्वक्षं पश्चात् त्वमप्यारोहेति सम्बन्धः ॥ ७५ ॥ स इति । अप्रतिकूलयन् अनुकूलयन् ॥ ७६ ॥ ७७ ॥ राघव इति । ब्रह्मवत् क्षत्रवत् । अर्हार्थे वतिः । ब्राह्मणक्षत्रियार्हं नावारोहणमन्त्रमात्मनो हितमुद्दिश्य जजापेत्यन्वयः । " सुत्रामाणमृचा नावमारोहेदप उत्तरेत् " इति क्षत्रिया धिकारेण स्मरणात् । " दैवीं नावम् " इत्यादिब्रह्मक्षत्रसाधारणं मन्त्रं जजापेत्यर्थः ॥ ७८–८० ॥ तत इति । कर्णधारसमाहिता नाविकेन सज्जीकृता । स्फ्यम्

कर्णधारसमाहिता समाहितकर्णधारा । शुभस्फ्यवेगाभिहता शुभानां स्फ्यानामरित्राणां वेगेनाभिहता प्रणुन्ना ॥८१॥८२॥ पुत्र इति । निदेशं चतुर्दश वर्षावधिकवनवासविषयनियोगम् । पारयित्वा निर्विघ्नं परिसमाप्य । उष्य उषित्वा । प्रत्यागमिष्यति, यदेति शेषः ॥ ८३ ॥ ८४ ॥ तत इति । ततः

मध्यं तु समनुप्राप्य भागीरथ्यास्त्वनिन्दिता । वैदेही प्राञ्जलिर्भूत्वा तां नदीमिदमब्रवीत् ॥ ८२ ॥ पुत्रो दशरथस्यायं महाराजस्य धीमतः । निदेशं पारयित्वेमं गङ्ग त्वदभिरक्षितः ॥ ८३ ॥ चतुर्दश हि वर्षाणि समग्राण्युष्य कानने । भ्रात्रा सह मया चैव पुनः प्रत्यागमिष्यति ॥ ८४ ॥ ततस्त्वां देवि सुभगे क्षेमेण पुनरागता । यक्ष्ये प्रमुदिता गङ्गे सर्वकामसमृद्धिनी ॥८५॥ त्वं हि त्रिपथगा देवि ब्रह्मलोकं समीक्षसे । भार्या चोदधिराजस्य लोकेऽस्मिन् संप्रदृश्यसे ॥ ८६ ॥ सा त्वां देवि नमस्यामि प्रशंसामि च शोभने । प्राप्तराज्ये नरव्याघ्रे शिवेन पुनरागते ॥ ८७ ॥ गवां शतसहस्रं च वस्त्राण्यन्नं च पेशलम् । ब्राह्मणेभ्यः प्रदास्यामि तव प्रियचिकीर्षया ॥ ८८ ॥ सुराघटसहस्रेण मांसभूतौदनेन च । यक्ष्ये त्वां प्रयता देवि पुरीं पुनरुपागता ॥ ८९ ॥ यानि त्वत्तीरवासीनि दैवतानि वसन्ति च । तानि सर्वाणि यक्ष्यामि तीर्थान्यायतनानि च ॥ ९० ॥

तदा । सुभगे सुकीर्ते । "भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः । क्षेमेण कुशलेन सह । यक्ष्ये पूजयिष्यामि । सर्वकामसमृद्धिनीति व्रीह्यादित्वादिनिः ॥ ८५ ॥ त्वमिति । ब्रह्मलोकं समीक्षसे ब्रह्मकमण्डल्वां द्रवीभूतधर्मरूपतया स्थित्वा ब्रह्मप्रक्षालितविष्णुपादोद्भवत्वादिति भावः । अत एव विष्णुपादोद्भवामिति पूर्वमुक्तम् ॥ ८६ ॥ सेति । प्रशंसामि स्तौमि । शिवेन क्षेमेण । पेशलं रम्यम् । तव प्रियचिकीर्षया ब्राह्मणमुखेन हि देवतानां ग्रहणमितिभावः ॥८७॥८८॥ सुराघटसहस्रेणेति । मांसभूतौदनेन मांसरूपान्नेनेतियावत् ॥८९॥ यानीति । तीर्थानि मणिकर्णिकादीनि । आयतनानि काश्या अरित्रम्, तेन वेगादभिहता प्रणुन्ना ॥ ८१–८९ ॥ यानीति । यानि तीर्थानि प्रयागादीनि, आयतनानि काश्यादीनि ॥ ९०–९३ ॥

स०—त्रिपथगे त्रीन् पथान् गच्छतीति त्रिपथगा । "वाटः पथश्च मार्गश्च" इति त्रिकाण्डशेषामरः । यद्वा त्रयाणां पथां समाहारस्त्रिपथं भूर्भुवस्सुवराख्यं तेन गच्छतीति तथा तस्याः सम्बुद्धिः । ब्रह्मलोकं सत्यलोकम् ( त्वं हि त्रिपथगे देवि इति पाठः ) ॥ ८६ ॥

दीनि ॥ ९०–९३ ॥ भवेति सावधान इति शेषः । अदृष्टे अदृष्टपूर्वे । नः आवयोः "अस्मदो द्वयोश्च" इतिबहुवचनम् । तावच्छब्दः साकल्यार्थकः । अन्योन्यस्य साकल्येन रक्षा कर्त्तव्येतिसम्बन्धः ॥ ९४–९६ ॥ यत्नस्यावश्यकर्त्तव्यत्वे युक्तिमाह–नहीति । अतिक्रान्ता अतिक्रान्तकाला । काचन क्रिया न

पुनरेव महाबाहुर्मया भ्रात्रा च सङ्गतः । अयोध्यां वनवासात्तु प्रविशत्वनघोऽनघे ॥ ९१ ॥ तथा सम्भाषमाणा सा सीता गङ्गामनिन्दिता । दक्षिणा दक्षिणं तीरं क्षिप्रमेवाभ्युपागमत् ॥ ९२ ॥ तीरं तु समनुप्राप्य नावं हित्वा नरर्षभः । प्रातिष्ठत सह भ्रात्रा वैदेह्या च परंतपः ॥ ९३ ॥ अथाब्रवीन्महाबाहुः सुमित्रानन्दवर्द्धनम् । भव संरक्षणार्थाय सजने विजनेऽपि वा ॥ ९४ ॥ अवश्यं रक्षणं कार्यमदृष्टे विजने वने । अग्रतो गच्छ सौमित्रे सीता त्वामनु गच्छतु ॥ ९५ ॥ पृष्ठतोऽहं गमिष्यामि त्वां च सीतां च पालयन् । अन्योन्यस्येह नो रक्षा कर्त्तव्या पुरुषर्षभ ॥ ९६ ॥ न हि तावदतिक्रान्ता सुकरा काचन क्रिया । अद्य दुःखं तु वैदेही वनवासस्य वेत्स्यति ॥ ९७ ॥ प्रनष्टजनसम्बाधं क्षेत्रारामविवर्जितम् । विषमं च प्रपातं च वनं ह्यद्य प्रवेक्ष्यति ॥ ९८ ॥ श्रुत्वा रामस्य वचनं प्रतस्थे लक्ष्मणोऽग्रतः । अनन्तरं च सीताया राघवो रघुनन्दनः ॥ ९९ ॥ गतं तु गङ्गापरपारमाशु रामं सुमन्त्रः प्रततं निरीक्ष्य । अध्वप्रकर्षाद्विनिवृत्तदृष्टिर्मुमोच बाष्पं व्यथितस्तपस्वी ॥ १०० ॥

सुकरा हि पुनः सन्धातुं न शक्या हीत्यर्थः । तस्मात्काले सावधानतयास्माभिः स्थातव्यमिति भावः । सम्बाधः सम्मर्दः । क्षेत्रं शाल्यादिवृद्धिस्थलम् । विषमं निम्नोन्नतप्रदेशयुक्तम् । प्रपतन्त्यस्मिन्निति प्रपातः गर्तः । हि यस्मादद्य प्रवेक्ष्यति तस्माद्दुःखं वेत्स्यतीति सम्बन्धः । इति सुमित्रानन्दवर्द्धनमब्रवीदित्यन्वयः ॥ ९७–९९ ॥ गतमिति । गङ्गापरपारं गङ्गायाः अपरं पारम् । प्रततं नीरीक्ष्य अविच्छिन्नं निरीक्ष्येत्यर्थः । तपस्वी सन्तापयुक्तः । "तप सन्तापे" इतिधातुः । प्रतपन्निति पाठे–तापवानित्यर्थः । तपस्वी शोचनीयः । अध्वप्रकर्षात् मार्गविप्रकर्षात् । विनिवृत्तदृष्टिः विनिवृत्तदृष्टिव्यापारः ॥ १०० ॥



अथेति । संरक्षणार्थाय, सीताया इति शेषः ॥ ९४–९६ ॥ नहि तावदिति । असुकरेति पदच्छेदः । असुकरा दुष्करा । काचन क्रिया तावत् पूर्वं नातिक्रान्ता इतः प्रभृति दुष्करः, क्रियारम्भ इति यावत् । अद्येत्यादिसार्धश्लोकमेकं वाक्यम् ॥ ९७ ॥ प्रनष्टेति । विषमं निम्नोन्नतम् । प्रपातं गर्तादि । यस्मादद्यैव हि वनं प्रवेक्ष्यति

स इति । वत्सान् वत्सदेशान् । मत्स्यानिति पाठो लेखकप्रमादकृतः । इत्थं हि देशव्यवस्था दृश्यते—गङ्गायमुनयोर्मध्ये प्रयागप्रदेशो वत्सदेशः । ततः पश्चिमभागे पाञ्चालः । यमुनादक्षिणतीरे शूरसेनदेशः । तस्मात्पश्चिमतो मत्स्यदेश इति । सलोकपालप्रतिमप्रभाववानितिपाठः । अन्यथा वृत्तभङ्गः

स लोकपालप्रतिमप्रभाववांस्तीर्त्वा महात्मा वरदो महानदीम् । ततः समृद्धाञ्छुभसस्यमालिनः क्रमेण वत्सान् मुदितानुपागमत् ॥ १०१ ॥ तौ तत्र हत्वा चतुरो महामृगान् वराहमृश्यं पृषतं महारुरुम् । आदाय मेध्यं त्वरितं बुभुक्षितौ वासाय काले ययतुर्वनस्पतिम् ॥ १०२ ॥ इत्यार्षे० श्रीरामायणे श्रीमदयोध्याकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥
स तं वृक्षं समासाद्य सन्ध्यामन्वास्य पश्चिमाम् । रामो रमयतां श्रेष्ठ इति होवाच लक्ष्मणम् ॥ १ ॥ अद्येयं प्रथमा रात्रिर्याता जनपदाद्बहिः । या सुमन्त्रेण रहिता तां नोत्कण्ठितुमर्हसि ॥ २ ॥

स्यात् ॥ १०१ ॥ ताविति । चातुर्विध्यमेवाह—वराहमित्यादि । ऋश्यादयो हरिणभेदाः । ऋश्यं पृषतं महारुरुं च आदाय, स्वीकृत्येत्यर्थः । मेध्यामिति ऋश्यादि सर्वविशेषणम् । काले सायंकाले । त्वरितत्वोक्तिः सायंकालत्वात् बुभुक्षितत्वाच्च । द्विवचनेन सीतां कुत्रचिद्वनस्पतिमूले निक्षिप्य मृगग्रहणार्थं गत्वा पुनरागताविति गम्यते ॥ १०२ ॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥
स तमित्यादि । अत्र मृगमांसादनमस्तमयात् प्रागर्थसिद्धम् । अन्वास्य उपास्य ॥ १ ॥ अद्येति । याता प्राप्ता । अद्येत्यस्य नोत्कण्ठितुमर्हसीत्यनेना

तस्मात्कारणाद्वनवासस्य दुःखं वेत्स्यतीति सम्बन्धः ॥ ९८–१०० ॥ स इति । वत्सान् वत्सदेशान् ॥ १०१ ॥ तत्रेति । ऋश्यादयो हरिणभेदाः । काले सायङ्काले ॥ १०२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां द्विपञ्चाशः सर्गः ॥ ५२ ॥ ॥ १ ॥ अद्येति । जनपदाद्बहिः अस्मज्जनपदाद्बहिर्देशे । अद्येयं रात्रिर्याता आयाता प्राप्ता, केवलं वनवासरात्रिषु प्रथमा । या चेयं सुमन्त्रेण च रहिता, तामिमां प्राप्य । उत्कण्ठितुं शोकस्मरणं कर्तुं नार्हसि ॥ २ ॥

स०—याता आयाता । उपसर्गाणां धातुलीनार्थबोधकत्वस्य "गम्यते अवगम्यते चरणाभिधानात् विचरणाभिधानात्" इत्यादौ दर्शनात् । तां रात्रिम् । "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । उत्कण्ठितुं गृहदारादिस्मरणेन चित्तं व्याकुलीकर्तुं नार्हसि ॥ २ ॥

न्वयः। उत्कण्ठा दुःखस्मरणं तां प्रतीतिशेषः ॥ २ ॥ जागर्तव्यमिति। योगक्षेमं पालनमितियावत्। आवयोर्वर्तते, अस्मदधीनमित्यर्थः ॥ ३ ॥ रात्रिमिति। कथञ्चिदेवेमामिति। प्राथमिकत्वादिति भावः। इमां शय्यासम्पादनात् पूर्वमेव प्राप्तां स्वयमार्जितैः, तृणपर्णैरितिशेषः। उपावर्त्तामहे शयिष्यामहे। वर्तमानसामीप्ये वर्तमानवद्भावः ॥ ४ ॥ स इति। संविश्य शयनं सङ्कल्प्योषित्वा। शयनस्य सर्गान्ते वक्ष्यमाणत्वात्। कथाः वार्ताः ॥ ५ ॥ ध्रुवमिति। कृतकामा फलितेच्छा ॥ ६ ॥ सा हीति। राज्यकारणात् राज्यस्थैर्यकारणात्। ननु "न तेऽम्बा मध्यमा तात गर्हितव्या कथञ्चन। तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु ॥" इतिवदतो रामस्य सर्वपुरुषार्थनिस्पृहस्य कथमेवंविधाः कैकेयीनिन्दाप्रधानाः स्वालाभगर्भा उक्तयो युज्यन्ते ? उच्यते–'अयोध्यामित एव त्वं काल्ये प्रविश लक्ष्मण' इति वक्ष्यति। अतस्तन्मतमनुवर्तितुमेवमुक्तमिति ज्ञेयम् ॥ ७ ॥ ८ ॥ इदमिति। व्यसनं मदीयं मतिविभ्रमम्। अर्थधर्मौ विहाय कामैकसेवित्वम्। ( पाठभेदः। व्यसनं मदीयम्। अनेन धर्मस्याप्राधान्यमुक्तम्। मतिविभ्रमम् अतिनिस्पृहत्वम्। अनेनार्थाप्राधान्यमुक्तम्) ॥ ९ ॥ कामस्य गरीयस्त्वमुपपादयति–क इति। छन्दानुवर्तिनं स्वेच्छानुवर्तिनम् ॥ १० ॥ ११ ॥

जागर्त्तव्यमतन्द्रिभ्यामद्यप्रभृति रात्रिषु। योगक्षेमं हि सीताया वर्तते लक्ष्मणावयोः ॥ ३ ॥ रात्रिं कथञ्चिदेवेमां सौमित्रे वर्तयामहे । उपावर्तामहे भूमावास्तीर्य स्वयमार्जितैः ॥ ४ ॥ स तु संविश्य मेदिन्यां महार्हशयनोचितः। इमाः सौमित्रये रामो व्याजहार कथाः शुभाः ॥ ५ ॥ ध्रुवमद्य महाराजो दुःखं स्वपिति लक्ष्मण। कृतकामा तु कैकेयी तुष्टा भवितुमर्हति ॥ ६ ॥ सा हि देवी महाराजं कैकेयी राज्यकारणात्। अपि न च्यावयेत् प्राणान् दृष्ट्वा भरतमागतम् ॥७॥ अनाथश्च हि वृद्धश्च मया चैव विनाकृतः। किं करिष्यति कामात्मा कैकेयीवशमागतः ॥८॥ इदं व्यसनमालोक्य राज्ञश्च मतिविभ्रमम्। काम एवार्थधर्माभ्यां गरीयानिति मे मतिः ॥९॥ को ह्यविद्वानपि पुमान् प्रमदायाः कृते त्यजेत्। छन्दानुवर्तिनं पुत्रं ततो मामिव लक्ष्मण ॥ १० ॥ सुखी बत सभार्यश्च भरतः केकयीसुतः। मुदितान् कोसलानेको यो भोक्ष्यत्यधिराजवत् ॥ ११ ॥

जागर्तव्यमिति। सीताया योगक्षेमौ आवयोर्वर्तेते, सीताया योगक्षेमावस्मदायत्तावित्यर्थः ॥ ३ ॥ रात्रिमिति। कथञ्चिदेवेमामिति उटजादिनिर्माणाभावात् स्वयमार्जितैः तृणपर्णादिभिरिरिति शेषः ॥ ४ ॥ इमाः कथाः गिरः ॥ ५ ॥ ६ ॥ सा हीति। कैकेयी भरतं दृष्ट्वा राज्यकारणान्महाराजपदाभिषेककारणान्महाराजं प्राणात्र

स हीति । मुखमेकम् अद्वितीयम्, प्रधानभूत इत्यर्थः ॥१२॥ प्रसङ्गात् केवलं कामं निन्दति—अर्थधर्मांविति । दशरथो यथा, व्यसनीतिशेषः ॥१३॥ मन्य इति । सम्प्रातेत्यत्रेतिकरणं बोध्यम् ॥१४॥ अपीति । कैकेयी न सम्प्रबाधेत इत्यत्र काकुः । मत्कृते मत्सम्बन्धादित्यर्थः ॥ १९ ॥ मा स्मेति । इत एव

स हि सर्वस्य राज्यस्य मुखमेकं भविष्यति । ताते च वयसातीते मयि चारण्यमास्थिते ॥ १२ ॥ अर्थधर्मौ परित्यज्य यः काममनुवर्तते । एवमापद्यते क्षिप्रं राजा दशरथो यथा ॥ १३ ॥ मन्ये दशरथान्ताय मम प्रव्राजनाय च । कैकेयी सौम्य सम्प्राप्ता राज्याय भरतस्य च ॥ १४ ॥ अपीदानीं न कैकेयी सौभाग्यमदमोहिता । कौसल्यां च सुमित्रां च सम्प्रबाधेत मत्कृते ॥१५॥ मा स्म मत्कारणाद्देवी सुमित्रा दुःखमावसेत् । अयोध्यामित एव त्वं काल्ये प्रविश लक्ष्मण॥१६॥ अहमेको गमिष्यामि सीतया सह दण्डकान् । अनाथाया हि नाथस्त्वं कौसल्याया भविष्यसि ॥ १७ ॥ क्षुद्रकर्मा हि कैकेयी द्वेष्यमन्याय्यमाचरेत् । परिदद्या हि धर्मज्ञे भरते मम मातरम् ॥१८॥ नूनं जात्यन्तरे कस्मिन् स्त्रियः पुत्रैर्वियोजिताः । जनन्या मम सौमित्रे तस्मादेतदुपस्थितम् ॥ १९ ॥ मया हि चिरपुष्टेन दुःखसंवर्द्धितेन च । विप्रायुज्यत कौसल्या फलकाले धिगस्तु माम् ॥ २० ॥ मा स्म सीमन्तिनी काचिज्जनयेत् पुत्रमीदृशम् । सौमित्रे योऽहमम्बाया दद्मि शोकमनन्तकम् ॥ २१ ॥ मन्ये प्रीतिविशिष्टा सा मत्तो लक्ष्मण शारिका । यस्यास्तच्छ्रूयते वाक्यं शुक पादमरेर्दश ॥ २२ ॥

समीपप्रदेशादेव ॥१६॥ नाथः रक्षकः ॥ १७ ॥ क्षुद्रकर्मेति । "डाबुभाभ्याम्—" इतिडाप् । द्वेष्यं द्वेषार्हम् । स्वकृतद्वेषोचितमित्यर्थः । अन्याय्यम् अवमानमित्यर्थः । द्वेषादिति च पाठः । परिदद्याः, परिदानं नाम रक्ष्यतया प्रदानम् ॥ १८ ॥ कस्मिंश्चित् जात्यन्तरे कस्मिंश्चित् जन्मनि । एतत् पुत्रवियोजनम् ॥ १९ ॥ मयेति । फलकाले पुत्रोत्पत्तिफलस्य मातृशुश्रूषणस्य काले ॥ २० ॥ २१ ॥ अम्बया वर्द्धिततिर्यग्जन्तुकृतप्रीतिमात्रमपि न च्यावयेदपि न च्यावयेत् किमिति सम्बन्धः ॥७–११॥ स हीति । राज्यस्य मुखमेकं सर्वस्मिन् राज्ये एक एव राजा भविष्यतीत्यर्थः ॥ १२–१७ ॥ क्षुद्रकर्मा हीति । द्वेष्यं द्वेषार्हम् । स्वकृतद्वेषोचितमित्यर्थः । द्वेषादिति वा पाठः । भरते मम मातरं परिदद्याः, समर्पयेत्यर्थः॥१८–२१॥ सर्वथा मम जननं मदम्बाया अप्रयोजनमित्याह—

मया कृतमित्याह–मन्य इति । हे लक्ष्मण ! सा पूर्वमावाभ्यामनुभूता शारिका । मत्तः अस्मदपेक्षया प्रीतिविशिष्टेति मन्ये प्रीत्याधिकेति मन्ये । मदपे
क्षया अधिकां प्रीतिं कौसल्याया जनयतीत्यर्थः । यद्वा मदपेक्षया कौसल्यायामधिकप्रीतियुक्तेत्यर्थः । उभयत्र हेतुमाह–यस्या इति । यस्याः शारिकायाः ।
हे शुक ! अरेः अरिभूतस्य बिडालस्य पादं दश खण्डय इति । तत् अनुभूतसदृशं प्रीतिसञ्जननं वाक्यं श्रूयते, अम्बयेतिशेषः । लोके हि काचित्पोषिता
शारिका समीपवर्त्तिनं शुकं प्रति बिडालं दशदशेति कूजन्ती दृश्यते । यद्वा अरेः कौसल्याशत्रोः पादं दशेति वाक्यं श्रूयते । पोषितत्वाविशेषेपि
शारिकावदरिनिवर्त्तनवाचमप्यनुक्तवतो मम जन्म धिगित्यर्थः । अत्र प्रकरणबलेन भगवद्भजनादप्याचार्यसमाश्रयणस्य सुकरोपायत्वं दर्शितं भवति ।

शोचन्त्या अल्पभाग्याया न किञ्चिदुपकुर्वता । पुत्रेण किमपुत्राया मया कार्यमरिन्दम ॥ २३ ॥

"न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥" इत्युक्तेः । तथाहि–शारिकेत्यनेन ज्ञानकर्मरूपपक्षद्वयवाना
चार्यो लक्ष्यते । स्त्रीलिङ्गेन "स्त्रीप्रायमितरत्सर्वम्" इत्युक्तं भगवत्पारतन्त्र्यमुच्यते । आचार्यो भगवदपेक्षया मोक्षानन्दजननेऽधिकसुकरोपाय इत्यर्थः ।
" पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम् ॥" इतिवचनात् । कोयमाचार्य इत्यत आह–यस्या इति ।
यस्या इति पञ्चमी । यस्मात् तत् गुरुपरम्परया प्राप्तं वाक्यं रहस्यमन्त्ररूपं श्रूयते । कीदृशं वाक्यमित्यत्राह शुकेति । हे शुक ! शुकसमानवर्ण भगवन् !
अरेः विरोधिभूतस्य संसारस्य पादम् आधारम्, संसारबीजभूताहङ्कारममकारावित्यर्थः । " अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः । अविद्या
तरुसम्भूतिबीजमेतद्द्विधा स्थितम् ॥" इत्युक्तेः । दश निवर्त्तयेत्यर्थः । एवंरूपं वाक्यं यत्सकाशात् श्रूयते स मत्तः श्रेष्ठ इति सम्बन्धः । प्रकरणेना
प्ययमर्थोऽभिव्यज्यते । तथाहि–अयोध्यापुरपर्यायाद्वैकुण्ठान्निर्गत्य विरजां तीर्त्वा संसारकाननं प्रविश्य " द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि
षस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति" इति वेदान्तोक्तप्रक्रियया शरीराख्यमेकं वृक्षं जीवेन सहास्थाय "ऋतं पिबन्तौ सुकृ
तस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये " इत्युक्तरीत्या कर्मफलं भोजयन् स्वानुभवालाभक्लिष्टसूरिजनोत्कण्ठया वर्त्तमानः संसारिषु स्वागमनप्रयोजना
लाभेन चरमोपायनिष्ठामेव परमोपायं निश्चिकायेत्युच्यते ॥ २२ ॥ शोचन्त्या इति । अल्पभाग्यायाः अतएव अपुत्रायाः पुत्रकृतप्रयोजनरहितायाः ।
मन्य इति । हे शुक ! अरेः अस्मच्छत्रुभूतस्य बिडालस्य पादं दश दंशनं कुरु । इत्येवंरूपं तत्तादृशं प्रियजनकं
मन्य इति । हे लक्ष्मण ! यस्याः मातृवर्द्धितशारिकायाः । हे शुक ! अरेः अस्मच्छत्रुभूतस्य बिडालस्य पादं दश दंशनं कुरु । इत्येवंरूपं तत्तादृशं प्रियजनकं
वाक्यं श्रूयते । अम्बयेति शेषः । सा शारिका मत्तः प्रीतिविशिष्टा प्रीतिप्रदानेन प्रीतिजनेन मत्तोऽधिकतरा । अम्बाया इति शेषः । अम्बया वर्द्धिततिर्यग्जाति
शारिकाकृतप्रीतिदानमात्रमपि मातुर्न कृतमिति भावः ॥ २२ ॥ शोचन्त्या इति । अपुत्रायाः पुत्रकृतप्रयोजनरहितायाः ॥ २३ ॥ २४ ॥

अतएव शोचन्त्याः अम्बायाः किञ्चिदपि नोपकुर्वता मया पुत्रेण किं कार्यं किं प्रयोजनम् ॥ २३ ॥ न केवलं प्रयोजनालाभः प्रत्युत दुःखितैवेत्याह—अल्पभाग्येत्यादिश्लोकेन ॥ २४ ॥ तर्हि मातृदुःखनिवारणाय राज्यमाक्रम्यतामित्यत्राह—एक इत्यादिश्लोकद्वयेन । तरेयं तरितुं शक्नुयाम् । आक्र

अल्पभाग्या हि मे माता कौसल्या रहिता मया । शेते परमदुःखार्त्ता पतिता शोकसागरे ॥ २४ ॥ एको ह्यह मयोध्यां च पृथिवीं चापि लक्ष्मण । तरेयमिषुभिः क्रुद्धो ननु वीर्यमकारणम् ॥२५॥ अधर्मभयभीतश्च परलोकस्य चानघ । तेन लक्ष्मण नाद्याहमात्मानमभिषेचये ॥ २६ ॥ एतदन्यच्च करुणं विलप्य विजने वने । अश्रुपूर्णमुखो रामो निशि तूष्णीमुपाविशत् ॥ २७ ॥ विलप्योपरतं रामं गतार्चिषमिवानलम् । समुद्रमिव निर्वेगमाश्वासयत लक्ष्मणः ॥ २८ ॥ ध्रुवमद्य पुरी राजन्नयोध्याऽऽयुधिनां वर । निष्प्रभा त्वयि निष्क्रान्ते गतचन्द्रेव शर्वरी ॥ २९ ॥

मितुं शक्नुयामित्यर्थः । तर्हि किमर्थं तथा न कृतमित्यत आह ननु वीर्यमकारणमिति । धर्महानिकरे कृत्ये वीर्यं साधकत्वेन नावलम्बनीयं खल्वि त्यर्थः ॥ २५॥ वीर्यस्यानवलम्बने हेतुमाह—अधर्मेति । अधर्मभयभीतः अधर्मादुत्पन्नं भयं लोकापवादः तस्माद्भीतः परलोकस्य नाशात् भीत इति शेषः । अहमिति च शेषः । तेनाधर्मपरलोकभीतत्वेन हेतुना ॥ २६ ॥ एतदिति । एतत्पूर्वोक्तमर्थजातम् । अन्यदित्यनेन तादात्विकविलापस्य वाचामगोचरत्वमुक्तम् । विजने वन इति शोकहेतुत्वोक्तिः । उपाविशत् अतिष्ठदित्यर्थः ॥ २७ ॥ विलप्येति । विलप्योपरतमित्यनेन मध्ये समाश्वासानर्हत्वोक्तिः ॥ २८ ॥ ध्रुवमिति । आयुधिनाम् आयुधवतां वर, शूरेत्यर्थः । निष्प्रभा भवेदिति शेषः ॥ २९ ॥

एक इति । तरेयं तरितुं शक्नुयाम् । जयेयमित्यर्थः ॥ २५ ॥ अधर्मेति । अधर्मभयात् पितृवाक्याकरणरूपाधर्मभयात् । परलोकस्य चेति नाशाद्भीत इति शेषः ॥ २६ ॥ एतदिति । अश्रुपूर्णमुख इत्यस्यायं भावः—श्रीरामस्य परमकरुणाशालित्वेन स्वानुरक्तजनदुःखासहिष्णुत्वादश्रुपूर्णमुखत्वम् ननु वस्तुतः । "व्यसनेषु मनुष्याणां भृशं भवति दुःखितः" इत्युक्तेरिति ॥ २७ ॥ २८ ॥ ध्रुवमिति । आयुधिनामिति पदच्छेदः ॥ २९ ॥

स०—मया पितुराज्ञाया अकरणे सर्वेऽप्येवमेव कुर्युः ततश्च तेषामधर्मो भवेत् अतः अधर्मभयभीतश्च लोकस्याधर्मप्राप्तिभयाद्भीतोहम् । परकीयजनस्य सकाशाद्भीत इति बुद्ध्या विवेकेनान्वयः । रामः पितुराज्ञां नाकार्षीदिति लोकापवादभीतश्चेत्यर्थः ॥ २६ ॥ विलप्य लोकविडम्बनार्थं विलापं कृत्वा । तदानीमपि निशाचरसञ्चाराद्विडम्बो युक्तः ॥ २७ ॥

नैतदिति । परितप्यस इति यदिदमस्ति एतत् परिदेवनम् नौपयिकं न युक्तम् । "युक्तमौपयिकम्" इत्यमरः । "उपायाद्ध्रस्वत्वं च" इतिठक् । आकारस्य ह्रस्वश्च । अयुक्तत्वमेवाह–विषादयसीति । पुरुषर्षभेत्यनेन पुरुषधौरेयस्य तव नैतद्युक्तम् । अनेन विलापो न युक्त इत्यर्थः ॥३०॥ 'अयोध्यामित एव

नैतदौपयिकं राम यदिदं परितप्यसे । विषादयसि सीतां च मां चैव पुरुषर्षभ ॥ ३० ॥ न च सीता त्वया हीना न चाहमपि राघव । मुहूर्त्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ ॥ ३१ ॥ न हि तातं न शत्रुघ्नं न सुमित्रां परंतप । द्रष्टुमिच्छेयमद्याहं स्वर्गं वापि त्वया विना ॥ ३२ ॥ ततस्तत्र सुखासीनौ नातिदूरे निरीक्ष्य ताम् । न्यग्रोधे सुकृतां शय्यां भेजाते धर्मवत्सलौ ॥ ३३ ॥

त्वं काल्ये प्रविश लक्ष्मण' इति यदुक्तं तत्रोत्तरमाह–न च सीतेति । त्वया हीना सीता च न जीवतीत्यर्थः। त्वद्विहीनोऽहमपि न च । च एवकारार्थः। अहमपि न जीवाम्येवेत्यर्थः। दृष्टान्तार्थं सीताग्रहणम् । यद्वा 'सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत्' इति सीतापुरुषकारेण शरणागतिकरणात् स्वस्य शरणागतिफलाभावे पुरुषकारभूता सीतापि नेति भावः । अपि जीवावः यदि जीवावः तदा जलादुद्धृतौ मत्स्याविव मुहूर्त्तं स्वल्पकालं जीवावः, यथा जलोद्धृतौ मत्स्यौ यावज्जलसंसर्गं जीवित्वा तद्विलये विनश्यतः तथा आवामपि त्वद्वचनहृदयज्ञानपर्यन्तमिति भावः । तथा वक्ष्यति सुन्दरकाण्डे–" न चास्य माता न पिता न चान्यः स्नेहाद्विशिष्टोऽस्ति मया समो वा । तावद्ध्यहं दूत जिजीविषेयं यावत्प्रवृत्तिं शृणुयां प्रियस्य ॥" इति ॥३१॥ अथ नोत्कण्ठितुमर्हसीत्युक्तस्योत्तरमाह–नहि तातमित्यादिश्लोकेन ॥३२॥ तत इति । ततः लक्ष्मणवचनानन्तरम् । तत्र पूर्वाश्रितवृक्षमूले भुक्तिस्थाने । सुखासीनौ

नैतदिति । हे राम ! मां च सीतां च विषादयसीति यत् इदं च, हे पुरुषर्षभ ! त्वं परितप्यस इति यत् एतच्च तव नौपयिकं न युक्तमिति सम्बन्धः । पुरुषर्षभस्य न तापो युक्तः। रामस्य विषादयितृत्वं च न युक्तमिति भावः ॥ ३० ॥ सीतावदहमप्यवर्जनीय इति वक्तुमात्मनः सीतासाधर्म्यमाह–न चेति । अत्र नकारद्वयं तृतीयनकारस्याप्युपलक्षणम् । हे राघव ! त्वया हीना सीता च त्वया हीनोऽहं च । एतावुभावावामपि जलादुद्धृतौ मत्स्याविव मुहूर्तमपि न जीवाव इति सम्बन्धः । अनेन श्रीरामवियोगभिया लक्ष्मणेन स्वदैन्यं प्रदर्शितम् ॥ ३१ ॥ नन्वेवमाग्रहो न कार्यः, पित्रादिसंरक्षणार्थमवश्यं गन्तव्यमिति वदन्तं प्रत्याह–नहीति । हे परंतप ! त्वया विना तातं शत्रुघ्नं सुमित्रां च अद्य प्राप्तं स्वर्गं वा द्रष्टुमपि नेच्छेयम् मनसापीति शेषः । किमुत गत्वा संरक्षितुमिति भावः ॥ ३२ ॥ तत इति । ततो लक्ष्मणवचनानन्तरम् । तत्र तस्मिन्नेव न्यग्रोधमूले सुखासीनौ सीतारामौ न्यग्रोधे न्यग्रोधमूले सुकृतां लक्ष्मणेन सम्यग्रचितां शय्यां निरीक्ष्य

सुखोपविष्टौ। सुखासीना च सुखासीनश्च सुखासीनौ। सर्वत्र "पुमान् स्त्रिया" इत्येकशेषः। सीतारामौ न्यग्रोधे न्यग्रोधमूले। सुकृतां लक्ष्मणेन सुष्ठु कृतां शय्यां निरीक्ष्य तां भेजाते इतिसम्बन्धः॥३३॥ स लक्ष्मणस्येति। उत्तमं च तत् पुष्कलं च उत्तमपुष्कलम्। अतीव भ्रातृस्नेहपुरस्कृतत्वादुत्तमं वक्तव्यस्य

स लक्ष्मणस्योत्तमपुष्कलं वचो निशम्य चैवं वनवासमादरात्। समाः समस्ता विदधे परंतपः प्रपद्य धर्मं सुचिराय राघवः ॥३४॥ ततस्तु तस्मिन् विजने वने तदा महाबलौ राघववंशवर्द्धनौ । न तौ भयं सम्भ्रममभ्युपेयतुर्यथैव सिंहौ गिरिसानुगोचरौ ॥ ३५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये श्रीमदयोध्याकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

ते तु तस्मिन् महावृक्ष उषित्वा रजनीं शिवाम्। विमलेऽभ्युदिते सूर्ये तस्माद्देशात् प्रतस्थिरे ॥१॥ यत्र भागीरथीं गङ्गां यमुनाभिप्रवर्त्तते। जग्मुस्तं देशमुद्दिश्य विगाह्य सुमहद्वनम् ॥ २ ॥ ते भूमिभागान् विविधान् देशांश्चापि मनोरमान्। अदृष्टपूर्वान् पश्यन्तस्तत्रतत्र यशस्विनः ॥ ३ ॥

सर्वस्योक्तेः पुष्कलं पूर्णार्थं लक्ष्मणस्य वचः आदरान्निशम्य चिराय धर्मं वानप्रस्थधर्मम् अधःशयनादिकं प्रतिपद्य। समस्ताः समाः वनवासम्। अत्यन्त संयोगे द्वितीया। विदधे लक्ष्मणेन सह विधातुमैच्छदित्यर्थः। अन्यथा भूतार्थासम्भवः। कविनाप्यादौ तथा वक्तुमयुक्तम्। लक्ष्मणस्य समस्ताः समाः प्रत्य नुमतिं विदध इति केचिदाहुः ॥ ३४ ॥ तत इति। भयं व्याघ्रादिभ्यः। सम्भ्रमं व्याकुलत्वं भयहेतुशङ्कया इतस्ततो निरीक्षणमिति यावत् ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥ ते त्विति। महावृक्षे महावृक्षमूले। सामीप्ये सप्तमी। विमलेऽभ्युदिते स्पष्टमुदित इत्यर्थः॥१॥ यत्रेत्यादिश्लोकद्वयमेकान्वयम्। भूमिभागान् वनप्रदेशान्। देशान् वत्सदेशावान्तरदेशान्।

तां भेजाते इति सम्बन्धः ॥ ३३ ॥ स इति। लक्ष्मणस्य वनवासं प्रत्यादरेणोच्यमानम् अत एवोत्तमपुष्कलमत्यन्तश्रेष्ठं वचो निशम्य स्वयं चिराय धर्मं प्रपद्य स्वीकृत्य लक्ष्मणस्य समाप्ताः समाः प्रत्यनुमतिं विदधे च। वनवासायेति शेषः ॥ ३४ ॥ तत इति । सम्भ्रमम् इतस्ततोऽन्वीक्षणादिरूपम् ॥ ३५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां त्रिपञ्चाशः सर्गः ॥ ५३ ॥ १ ॥ यत्रेति। गङ्गामभि यमुना प्रवर्तत इति योजना। तं देशं प्रयागदेशम् ॥ २ ॥ त इति। ते पश्यन्तो जग्मुरिति पूर्वेणान्वयः ॥ ३ ॥

स०—धर्मं स्वशुश्रूषणरूपम्। प्रपद्याङ्गीकृत्य। समस्ताः समाः चतुर्दशवर्षाणि वनवासं प्रति विदधे, लक्ष्मणं सम्मतमकरोदित्यर्थः ॥ ३४ ॥

एतदेवनानात्वमाह तत्रतत्रेति । यशस्विन इत्यनेन तत्तद्देशीयैराचितत्वमुक्तम् ॥ २ ॥ ३ ॥ यथाक्षेमेणेति । यथाक्षेमेण क्षेमानतिक्रमेण । "यथा सादृश्य" इति पदार्थानतिवृत्तावव्ययीभावः । " तृतीयासप्तम्योर्बहुलम् " इत्यलुक् । क्षेमहेत्ववधानमनतिक्रम्येत्यर्थः । निवृत्तमात्रे अर्द्धमण्डलकाल इत्यर्थः ॥ ४ ॥ प्रयागमिति । प्रयागमभितः प्रयागस्याभितः । "अभितः परितः–" इत्यादिना द्वितीया । केतुं ध्वजीभूतं धूममितिसम्बन्धः । अतः सन्निहितो मुनिरिति



यथाक्षेमेण गच्छन् स पश्यंश्च विविधान् द्रुमान् । निवृत्तमात्रे दिवसे रामः सौमित्रिमब्रवीत् ॥४॥ प्रयागमभितः पश्य सौमित्रे धूममुन्नतम् । अग्नेर्भगवतः केतुं मन्ये सन्निहितो मुनिः ॥ ५ ॥ नूनं प्राप्ताः स्म सम्भेदं गङ्गायमुनयोर्वयम् । तथा हि श्रूयते शब्दो वारिणो वारिघट्टितः ॥६॥ दारूणि परिभिन्नानि वनजैरुपजीविभिः । भरद्वाजाश्रमे चैते दृश्यन्ते विविधा द्रुमाः ॥ ७ ॥ धन्विनौ तौ सुखं गत्वा लम्बमाने दिवाकरे । गङ्गायमुनयोः सन्धौ प्रापतुर्निलयं मुनेः ॥ ८ ॥ रामस्त्वाश्रममासाद्य त्रासयन् मृगपक्षिणः । गत्वा मुहूर्त्तमध्वानं भरद्वाजमुपागमत् ॥ ९ ॥ ततस्त्वाश्रममासाद्य मुनेर्दर्शनकांक्षिणौ । सीतयानुगतौ वीरौ दूरादेवावतस्थतुः ॥ १० ॥

मन्ये ॥५॥ नूनमिति । सम्भेदं सङ्गमम् " सम्भेदः सिन्धुसङ्गमः " इत्यमरः । वारिघट्टितो वारिणः शब्दः वारिजनितो वारिशब्दः । वारिणोरन्योन्यघट्टनजः शब्द इत्यर्थः ॥ ६ ॥ दारूणीति । वनजैरुपजीविभिः वनोत्पन्नैः फलमूलकाष्ठाद्युपजीविभिः दारूणि इत्यत्रापि दृश्यन्त इत्यनुषज्यते ॥ ७ ॥ धन्विनाविति । लम्बमाने अस्तगिरौ लम्बमान इव दृश्यमाने सन्धौ सङ्गमे वर्तमानं निलयम् आश्रमं तत्समीपप्रदेशं प्रापतुः ॥ ८ ॥ राम इति । त्रासयन् अपूर्वदर्शनेन त्रासं जनयन् । मुहूर्तं मुहूर्तगम्यम् । भरद्वाजं भरद्वाजसमीपम् ॥ ९ ॥ तत इति । दूरादेवावतस्थतुः सायन्तनसमयत्वादग्निहोत्रावसानं

यथाक्षेमेण, मार्गेणेति शेषः । निवृत्तमात्रे अर्धमण्डलकाले ॥ ४ ॥ प्रयागमभितः प्रयागस्याभितः । अग्ने भगवतोऽग्नेः केतुं लिङ्गं धूमं पश्य, अतोऽत्र मुनिर्भरद्वाजः सन्निहित इति मन्ये इति सम्बन्धः ॥ ५ ॥ नूनमिति । सम्भेदं गङ्गायमुनयोः सङ्गमम् ॥६॥७॥ धन्विनाविति । तौ रामलक्ष्मणौ । निलयम् आश्रमम् तत्समीपवनप्रदेशं प्रापतुः ॥ ८ ॥ रामस्त्विति । रामस्तु लक्ष्मणेन सहेति शेषः । आश्रमं पूर्वोक्ताश्रमसमीपम् । आसाद्य प्राप्य ततः मुहूर्तमध्वानं गत्वा भरद्वाजं भरद्वाजाश्रममुपागमत ॥९॥ तत इति । आश्रमं तु भरद्वाजाश्रममासाद्य उपागम्य । दूरादेव, उटजस्येति शेषः । अवतस्थुरितिश्लोकत्रयस्याप्येकवाक्यतया योजना ॥ १० ॥

प्रतीक्षमाणाववतस्थतुरित्यर्थः ॥ १० ॥ स प्रविश्येत्यादिश्लोकद्वयम् । प्रविश्य दैवान्निर्गतशिष्यमुखेनेतिशेषः । संशितव्रतं तीक्ष्णव्रतम् । एकाग्रम् एकप्रधानम्, ध्यानपरमिति यावत् । तपसा तपोवैभवेन । लब्धचक्षुषं लब्धज्ञानम् । अतीतानागतवर्तमानयावदर्थगोचरज्ञानयुक्तमित्यर्थः । दृष्ट्वैव दर्शनो

स प्रविश्य महात्मानमृषिं शिष्यगणैर्वृतम् । संशितव्रतमेकाग्रं तपसा लब्धचक्षुषम् ॥ ११ ॥ हुताग्निहोत्रं दृष्ट्वैव महाभागं कृताञ्जलिः । रामः सौमित्रिणा सार्द्धं सीतया चाभ्यवादयत् ॥१२॥ न्यवेदयत चात्मानं तस्मै लक्ष्मण पूर्वजः । पुत्रौ दशरथस्यावां भगवन् रामलक्ष्मणौ ॥ १३ ॥ भार्या ममेयं वैदेही कल्याणी जनकात्मजा । मां चानु याता विजनं तपोवनमनिन्दिता ॥ १४ ॥ पित्रा प्रव्राज्यमानं मां सौमित्रिरनुजः प्रियः । अयमन्वगमद्भ्राता वनमेव दृढव्रतः ॥१५॥ पित्रा नियुक्ता भगवन् प्रवेक्ष्यामस्तपोवनम् । धर्ममेव चरिष्यामस्तत्र मूलफलाशनाः ॥१६॥ तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः । उपानयत धर्मात्मा गामर्घ्यमुदकं ततः ॥१७॥ नानाविधानन्नरसान् वन्यमूलफलाश्रयान् । तेभ्यो ददौ तप्ततपा वासं चैवाभ्यकल्पयत् ॥१८॥ मृगपक्षिभिरासीनो मुनिभिश्च समन्ततः । राममागतमभ्यर्च्य स्वागतेनाह तं मुनिः ॥ १९ ॥

त्तरकालमेवेत्यर्थः ॥ ११ ॥ १२ ॥ न्यवेदयतेत्यादिश्लोकद्वयमेकान्वयम् । सीतालक्ष्मणयोः सर्वात्मना परतन्त्रत्वादात्मानमित्यनेन तयोरपि ग्रहणम् । कल्याणी पतिव्रतेत्यर्थः । अनुयातेति न्यवेदयतेतिसम्बन्धः ॥ १३–१५ ॥ पित्रेति । धर्मं पितृवचनपरिपालनरूपम् ॥ १६ ॥ तस्येति । गां मधुपर्का ङ्गभूतमहोक्षम् । तथा च स्मृतिः—"गोमधुपर्कार्हौ वेदाध्यायी आचार्य ऋत्विक् स्नातको राजा वा धर्मयुक्तः" इति । अर्घ्यं पूजाविधेरङ्गम् । अन्नरसान् अदनीयरसान्, रसप्रधानान् पदार्थविशेषानित्यर्थः । वन्यमूलफलाश्रयान् वन्यमूलफलप्रकृतिकान् ॥ १७ ॥ १८ ॥ मृगपक्षिभिरिति । मृगपक्षिभि स इति । प्रविश्य उटजमिति शेषः । तपसा लब्धचक्षुषं त्रैकालिकसर्वजगद्वृत्तान्ताभिज्ञम् ॥११॥१२॥ न्यवेदयत चात्मानमित्यारभ्य तत्र मूलफलाशना इतिपर्यन्तं स्ववृत्तान्तपूर्वकमात्मानं भरद्वाजाय न्यवेदयतेति सम्बन्धः ॥१३–१६॥ तस्येति । गां मधुपर्काङ्गभूतं महोक्षं अर्घ्यं पूजाविधेरर्हं गन्धादि ॥१७॥ वन्यमूलफलाश्रयान् वन्यमूलफलप्रकृतिकान् ॥ १८ ॥ मृगपक्षिभिस्सह राघवमभ्यर्च्य आसीन इति योजना । मृगपक्षिभिस्सहाभ्यर्च्येत्यस्यायं भावः—मुनिप्रभावात्तिर्यञ्चो न, राममीश्वरं

रासीनो मुनिभिश्चेत्यनेन मुनिवैभवात्तिर्यञ्चोऽपि मुनिनिर्विशेषं सञ्जातविश्वासाः सेवन्त इति गम्यते। स्वागतेनाह स्वागतमाहेत्यर्थः। यद्वा मृगपक्षिभिः सहेतिशेषः। स्वागतेनाभ्यर्च्यैति सम्बन्धः ॥ १९ ॥ मुनिराहेत्येतद्विवृणोति–प्रतिगृह्येति ॥ २० ॥ चिरस्य चिरम् ॥ २१–२३ ॥ भगवन्नित्यादि।

प्रतिगृह्य च तामर्चामुपविष्टं स राघवम्। भरद्वाजोऽब्रवीद्वाक्यं धर्मयुक्तमिदं तदा ॥२०॥ चिरस्य खलु काकुत्स्थ पश्यामि त्वामिहागतम्। श्रुतं तव मया चेदं विवासनमकारणम् ॥ २१ ॥ अवकाशो विविक्तोऽयं महानद्योः समागमे। पुण्यश्च रमणीयश्च वसत्विह भवान् सुखम् ॥ २२ ॥ एवमुक्तस्तु वचनं भरद्वाजेन राघवः। प्रत्युवाच शुभं वाक्यं रामः सर्वहिते रतः ॥ २३ ॥ भगवन्नित आसन्नः पौरजानपदो जनः। सुदर्शमिह मां प्रेक्ष्य मन्ये ऽहमिममाश्रमम् ॥ २४ ॥ आगमिष्यति वैदेहीं मां चापि प्रेक्षको जनः। अनेन कारणेनाहमिह वासं न रोचये ॥ २५ ॥ एकान्ते पश्य भगवन्नाश्रमस्थानमुत्तमम्। रमेत यत्र वैदेही सुखार्हा जनकात्मजा ॥ २६ ॥

इतः एतदाश्रमापेक्षया। इह आश्रमे। सुदर्शं सुखेन द्रष्टुं शक्यम्। प्रेक्ष्य ज्ञात्वा। वैदेहीं मां च प्रेक्षको जनः इममाश्रममागमिष्यतीत्यहं मन्ये। अनेन कारणेन इह वासं न रोचय इत्यन्वयः। मां प्रेक्षक इत्यत्र "अकेनोर्भविष्यदाधमर्ण्ययोः" इति षष्ठीप्रतिषेधः। एकान्ते पौरजनाविदिते। पश्य मत्वा मुनिनिर्विशेषास्सन्तः सेवन्त इति ॥ १९ ॥ २० ॥ चिरस्येति। चिरस्य चिरकालस्य। इहाश्रमे त्वां पश्यामि। अयं भावः–चक्षुराद्यगोचरं त्वामेव मनसि सततमनुसन्दधानोऽहं चिरकालस्य इह मम पुरतः चक्षुषा पश्यामीत्याश्चर्यम्, अतो मम भाग्यं किं वर्ण्यत इति। लौकिकदृष्टिमनुसृत्याह श्रुतमिति ॥ २१–२३ ॥ भगवन्निति। इत आसन्नः एतदाश्रमस्यासन्नवर्ती। पौरजानपदो जनः। मां सुदर्शं सुखेन द्रष्टुं शक्यं प्रेक्ष्य ज्ञात्वा। वैदेहीं मां च प्रेक्षको जनः इममाश्रममागमिष्यती त्यहं मन्ये, अनेन कारणेनेह वासं न रोचय इति सम्बन्धः ॥ २४ ॥ २५ ॥ एकान्त इति। यत्र यस्मिन्नाश्रमस्थाने तं पश्येति सम्बन्धः। भगवन्नित्यादिश्लोकत्रयस्य वास्तवार्थस्तु–भगवन् सर्वज्ञ! रावणवधार्थं गूढतयावतीर्णं मां यद्येवं प्रकटीकरोषि तदा सर्वोपि जनः मां सुदर्शं सुष्ठु द्रष्टुं योग्यं सुदर्शं विष्णुं च "दृश्यते त्वग्र्यया" इति श्रुतेः। वैदेहीं मां च लक्ष्मीं च ज्ञात्वा प्रेक्षकः दिदृक्षुःसन् इह आगमिष्यति। तेनैवंविधप्रकटवासं प्रकटावस्थानं न रोचये अतो यत्र परमानन्दैकताने मयि वैदेही रमते "यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्गविमृग्यमाणया" इत्यादिरीत्या सर्वैराश्रयणीयापि लक्ष्मीः अनवरतानुभवेप्यप्राप्तब्धानुभवेव नित्यानु रक्ता भवति तम् आश्रीयत इति आश्रयं जगत् तस्य स्थानम् आधारभूतं सर्वोत्तमं स्वरूपगुणविभवैर्ब्रह्मरुद्रादिभ्यः श्रेष्ठतमं मां ममातिप्रियतमस्त्वमेवैकान्ते पश्य गुह्याद्गुह्यतमं मत्स्वरूपं न प्रकटयेति रहस्योपदेशः। (रमते यत्र वैदेही इति पाठः)॥ २६ ॥

चिन्तय ॥ २४-२६ ॥ एतदिति । अर्थग्राहकम् अर्थबोधकं यथा भवति तथा । यद्वा अर्थग्राहकं बह्वर्थवत् अब्रवीत् ॥ २७ ॥ दशक्रोश इत्यादि । यस्मिन् गिरौ निवत्स्यसि स गिरिरितो दशक्रोशः, दशक्रोशावस्थित इत्यर्थः । गन्धमादनसन्निभः गन्धमादनपर्वतसन्निभः । अतीतानागतवर्त्तमानज्ञो

एतच्छ्रुत्वा शुभं वाक्यं भरद्वाजो महामुनिः । राघवस्य ततो वाक्यमर्थग्राहकमब्रवीत् ॥२७॥ दशक्रोश इतस्तात गिरिर्यस्मिन्निवत्स्यसि । महर्षिसेवितः पुण्यः सर्वतः सुखदर्शनः ॥२८॥ गोलाङ्गूलानुचरितो वानरर्क्षनिषेवितः । चित्रकूट इति ख्यातो गन्धमादनसन्निभः ॥२९॥ यावता चित्रकूटस्य नरः शृङ्गाण्यवेक्षते । कल्याणानि समाधत्ते न पापे कुरुते मनः ॥३०॥ ऋषयस्तत्र बहवो विहृत्य शरदां शतम् । तपसा दिवमारूढाः कपालशिरसा सह ॥ ३१ ॥

महर्षिः गोलाङ्गूलानुचरितो वानरर्क्षनिषेवित इति केवलत्रिवर्गाभिधानेन एतत्सजातीया एव रामस्य सहाया अपि भविष्यन्तीति सूचितवानिति गम्यते ॥ २८ ॥ २९ ॥ यावतेति । नरः यावता दूरेण चित्रकूटस्य शृङ्गाण्यवेक्षते तावता कल्याणानि पुण्यकर्माणि समाधत्ते प्राप्नोति । यद्वा समाधत्ते आचरति पापे मनो न कुरुते, तत्र वसन् किमुतेति भावः । यद्वा यावता कालेन ॥३०॥ ऋषय इति । तत्र चित्रकूटे । शरदां शतं तपसा विहृत्य क्रीडन्त इव महत्तपः परिसमाप्येत्यर्थः । कपालशिरसा सह दिवमारूढाः तपश्चरणेन निरन्तरकपालासनेन प्रक्षीणत्वक्शिरोरुहतया कपालावशिष्टशिरसा सह दिवमारूढा इत्यर्थः । कपालशिरसेत्येतच्छरीरोपलक्षणम् । सशरीराः स्वर्गं गता इत्यर्थः । यद्वा कपालशिरा इति कस्यचिदृषेः संज्ञा । कपालशिरसा कपालरूपशिरोयुक्तेनेत्यध्याहृतशरीरपदविशेषणमित्येके । कपालमात्रावशिष्टं शिरो यस्मिन्निति तपोविशेषणमित्येके ॥ ३१ ॥

अर्थग्राहकं परमार्थबोधकम् । राघवस्य राघवत्वेनाभिनयं चिकीर्षतः श्रीविष्णोः । एतत्पूर्वोक्तं वाक्यं श्रुत्वा मुनिर्वाक्यमब्रवीदिति सम्बन्धः ॥२७॥ श्रीरामोक्तमङ्गीकृत्य रामेणाश्रमस्थानं पृष्ट इव रामस्य वासार्थं स्थानं कथयति–दशक्रोश इति। यस्मिन् गिरौ त्वं निवत्स्यसि स गिरिः। इतोऽस्मदाश्रमाद्दशक्रोशः, दशक्रोशावस्थित इत्यर्थः ॥२८॥२९॥ यावता यदा शृङ्गाण्यवेक्षते तदैवेति योजना॥३०॥ शरदां शतं तपसा विहृत्य क्रीडन्त इव,तपः परिसमाप्येत्यर्थः। कपालशिरसासह दिवमारूढाः। तपश्चरणे निरन्तरकपालासनेन क्षिप्रक्षीणत्वक्च्छिरोरुहतया कपालावशिष्टशिरसासह सर्वे दिवमारूढाः, कपालशिरसेत्येतच्छरीरस्याप्युपलक्षणम्। सशरीराः स्वर्गं

कतक०–केचित्तु कपालशिरसेति शरीरोपलक्षणम् । सशरीराःस्वर्गं गता इत्याहुः । तन्न; धर्मपुत्रादीनामपि कियद्दूरमेव धर्मवैभवदर्शनायैतच्छरीरेण गमनम्, ततस्तन्निरासपूर्वकमेव स्वर्गगमनश्रवणात् ॥ ३१ ॥

प्रविविक्तमिति । प्रविविक्तं प्रकर्षेण विजनम् ॥ ३२ ॥ स राममिति । सर्वकामैः प्रतिजग्राह अतिथियोग्यसत्कारैर्वशीकृतवानित्यर्थः । (पाठभेदः । प्रतिजग्राह उपचचार) ॥३३॥ तस्येति । प्रपन्ना प्राप्ता ॥३४-३६॥ शर्वरीमिति । वसतिमनुजानातु पूर्वोक्तां वसतिं प्रतिगन्तुमनुज्ञां करोत्वित्यर्थः ॥३७॥

प्रविविक्तमहं मन्ये तं वासं भवतः सुखम् । इह वा वनवासाय वस राम मया सह ॥ ३२ ॥ स रामं सर्वकामैस्तं भरद्वाजः प्रियातिथिम् । सभार्यं सह च भ्रात्रा प्रतिजग्राह धर्मवित् ॥ ३३ ॥ तस्य प्रयागे रामस्य तं महर्षिमुपेयुषः । प्रपन्ना रजनी पुण्या चित्राः कथयतः कथाः ॥ ३४ ॥ सीतातृतीयः काकुत्स्थः परिश्रान्तः सुखोचितः । भरद्वाजाश्रमे रम्ये तां रात्रिमवसत्सुखम् ॥ ३५ ॥ प्रभातायां रजन्यां तु भरद्वाजमुपागमत् । उवाच नरशार्दूलो मुनिं ज्वलिततेजसम् ॥ ३६ ॥ शर्वरीं भगवन्नद्य सत्यशील तवाश्रमे । उषिताः स्मेह वसतिमनुजानातु नो भवान् ॥ ३७ ॥ रात्र्यां तु तस्यां व्युष्टायां भरद्वाजोऽब्रवीदिदम् । मधुमूलफलोपेतं चित्रकूटं व्रजेति ह ॥ ३८ ॥ वासमौपयिकं मन्ये तव राम महाबल । नानानगगणोपेतः किन्नरोरगसेवितः ॥ ३९ ॥ मयूरनादाभिरुतो गजराजनिषेवितः । गम्यतां भवता शैलश्चित्रकूटः स विश्रुतः । पुण्यश्च रमणीयश्च बहुमूलफलायुतः ॥४०॥ तत्र कुञ्जरयूथानि मृगयूथानि चाभितः । विचरन्ति वनान्तेऽस्मिन् तानि द्रक्ष्यसि राघव ॥ ४१ ॥ सरित्प्रस्रवणप्रस्थान् दरीकन्दरनिर्दरान् । चरतः सीतया सार्द्धं नन्दिष्यति मनस्तव ॥ ४२ ॥

रात्र्यामिति । व्रजेत्यब्रवीदित्यन्वयः । हेति पादपूरणे हर्षे वा ॥ ३८ ॥ वासमिति । तत्रेति शेषः । औपयिकं युक्तम् । "युक्तमौपयिकम्" इत्यमरः । नानानगगणोपेतः नानावृक्षनिचयोपेतः ॥ ३९-४१ ॥ सरित्प्रस्रवणप्रस्थानिति । सरितो नद्यः प्रस्रवणानि तनुतरजलप्रवाहाः प्रस्थाः



गताः । यद्वा कपालशिरा इति कस्यचिद्दषेः संज्ञा ॥३१॥३२॥ स राममिति । सर्वकामैः प्रतिजग्राह अतिथियोग्यसत्कारैर्वशीकृतवान् ॥३३-३६॥ शर्वरीमुषिताः स्म अतःपरं वसतिं त्वदुपदिष्टचित्रकूटगमनवासं प्रत्यनुजानातु अनुज्ञां प्रयच्छेत्यर्थः ॥ ३७-४१ ॥ सरिदिति । (निर्झरानितिपाठः) । सरितो नद्यः। प्रस्रवणानि तनुतर

सानवः स्तान् । दरीकन्दरनिर्दरान् दर्यः पाषाणसंश्लेषस्थानानि कन्दराः गुहाः । निर्दराः विदीर्णपाषाणसन्धयः तान् ॥ ४२ ॥ प्रहृष्टेति । कोयष्टिकाः टिट्टिभकाः । "कोयष्टिकष्टिट्टिभकः" इत्यमरः ॥४३॥ इति श्रीगोविन्द० श्रीरा० पीता०भूष० अयोध्याकाण्डव्याख्याने चतुःपञ्चाशः सर्गः ॥५४॥

प्रहृष्टकोयष्टिककोकिलस्वनैर्विनादितं तं वसुधाधरं शिवम् । मृगैश्च मत्तैर्बहुभिश्च कुञ्जरैः सुरम्यमासाद्य समावसा श्रमम् ॥ ४३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

उषित्वा रजनीं तत्र राजपुत्रावरिन्दमौ । महर्षिमभिवाद्याथ जग्मतुस्तं गिरिं प्रति ॥ १ ॥ तेषां चैव स्वस्त्ययनं महर्षिः स चकार ह । प्रस्थितांश्चैव तान् प्रेक्ष्य पिता पुत्रानिवान्वगात् ॥ २ ॥ ततः प्रचक्रमे वक्तुं वचनं स महामुनिः । भरद्वाजो महातेजा रामं सत्यपराक्रमम् ॥ ३ ॥ गङ्गायमुनयोः सन्धिमासाद्य मनुजर्षभौ । कालिन्दीमनुगच्छेतां नदीं पश्चान्मुखाश्रिताम् ॥ ४ ॥ अथासाद्य तु कालिन्दीं शीघ्रस्रोतसमापगाम् । तस्यास्तीर्थं प्रचरितं पुराणं प्रेक्ष्य राघवौ ॥ ५ ॥ तत्र यूयं प्लवं कृत्वा तरतांशुमतीं नदीम् । ततो न्यग्रोधमासाद्य महान्तं हरितच्छदम् ॥ ६ ॥

उषित्वेत्यादि ॥१॥ तेषामिति । तेषां प्रस्थातुमुद्युक्तानाम् । अन्वगादिति पाठः । अन्वशादितिपाठे–अनुशिष्टवान् मार्गोपदेशमकरोदित्यर्थः ॥२॥ तदेव विवृणोति–तत इति ॥ ३ ॥ गङ्गायमुनयोरिति । प्रथमं गङ्गायमुनयोः सन्धिमासाद्य पश्चात् पश्चान्मुखाश्रितां गङ्गाजलवेगाभिहत्या किंचित्पश्चान्मुख प्रवाहं प्राप्तां कालिन्दीं नदीम् । अनुगच्छेताम् अनुसृत्य गच्छेतां पश्चिमाभिमुखौ भूत्वा गच्छेतां, भवन्ताविति शेषः । (पाठभेदः अभिगच्छेताम् अभिमुखं गच्छेताम्, कालिन्द्या अभिमुखीभूय गच्छेतामित्यर्थः) ॥४॥ शीघ्रस्रोतसमित्यनेन गङ्गाजलवेगप्रतिहतिस्तिमितजलव्यतिरिक्तप्रदेश उच्यते । तीर्थम् अवतरणप्रदेशम् । प्रचरितं गमनागमनाभ्यामतिक्षुण्णमित्यर्थः । आंशुमतीम् अंशुमतः सूर्यस्यापत्यभूताम् । ततः तरणानन्तरम् । न्यग्रोधं तीरस्थम् ।

जलप्रवाहाः, प्रस्थाः सानवः तान् । दरीकन्दरनिर्झरान् दरी पाषाणनिर्भेदः, कन्दराः गुहाः, निर्झराः घनप्रवाहाः तान् ॥४२॥ कोयष्टिकः टिट्टिभकः ॥ ४३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां चतुःपञ्चाशः सर्गः ॥ ५४ ॥ १–३ ॥ गङ्गायमुनयोः सन्धिं सङ्गमतीर्थं प्राप्य पश्चान्मुखाश्रितां गङ्गाजलवेगाभिहत्या किञ्चित्पश्चान्मुखं प्राप्ताम् ॥४॥ अथेति । तीर्थम् अवतरणप्रदेशः । प्रचलितं गमनागमनाभ्यामतिक्षुण्णमित्यर्थः ॥५॥ तत्रेति ।

हरितच्छदं श्यामलपत्रम् । अतएव श्यामं श्यामनामकं वृक्षैः सह विवृद्धम् । यद्वा वृक्षैः श्यामं वृक्षसहितत्वात् विशेषेण श्यामलम् । वृक्षैरित्युपलक्षणे तृतीया । आशिषः मनोरथान् । प्रयुञ्जीत प्रार्थयेत् ॥ ५ ॥ ६ ॥ वसेद्वा अतिक्रमेत वा सीतेतिशेषः । श्रान्ता चेत् किंचित्कालं वसेत्, नोचेदतिक्रमेते

विवृद्धं बहुभिर्वृक्षैः श्यामं सिद्धोपसेवितम् । तस्मै सीताञ्जलिं कृत्वा प्रयुञ्जीताशिषः शिवाः ॥ ७ ॥ समासाद्य तु तं वृक्षं वसेद्वातिक्रमेत वा । क्रोशमात्रं ततो गत्वा नीलं द्रक्ष्यथ काननम् ॥ ८ ॥ पलाशबदरीमिश्रं रम्यं वंशैश्च यामुनैः । स पन्थाश्चित्रकूटस्य गतः सुबहुशो मया । रम्यो मार्दवयुक्तश्च वनदावैर्विवर्जितः । इति पन्थानमावेद्य महर्षिः संन्यवर्तत ॥९॥ अभिवाद्य तथेत्युक्त्वा रामेण विनिवर्तितः ॥ १० ॥ उपावृत्ते मुनौ तस्मिन् रामो लक्ष्मणमब्रवीत् । कृतपुण्याः स्म सौमित्रे मुनिर्यन्नोऽनुकम्पते ॥ ११ ॥ इति तौ पुरुषव्याघ्रौ मन्त्रयित्वा मनस्विनौ । सीतामेवाग्रतः कृत्वा कालिन्दीं जग्मतुर्नदीम् ॥ १२ ॥ अथासाद्य तु कालिन्दीं शीघ्रस्रोतोवहां नदीम् । चिन्तामापेदिरे सर्वे नदीजलतितीर्षवः ॥ १३ ॥

त्यर्थः ॥ ७ ॥ ततः दक्षिणतटस्थन्यग्रोधात् । यामुनैः यमुनासम्बन्धिभिः, यमुनातीरजैरित्यर्थः ॥ ८ ॥ सः काननम्, पथिशब्दापेक्षया पुल्लिङ्गत्वम् । मार्दवयुक्तः सूक्ष्मसिकतावत्त्वात् । वनदावैर्वनाग्निभिः । "दवदावौ वनारण्यवह्नी" इत्यमरः । तथाप्यत्र दावशब्दोऽग्निमात्रपरः । "विशिष्टवाचकानाम्" इति न्यायात् ॥ ९ ॥ अभिवाद्येत्यर्द्धेन महर्षिं विशेषयति । तथैव गमिष्याम इत्युक्त्वा अभिवाद्य त्वमाश्रमं गच्छेति रामेण विनिवर्त्तितो महर्षिः न्यवर्ततेति सम्बन्धः ॥ १०–११ ॥ इतीति । मन्त्रयित्वा पूर्वोक्तरीत्या कृतार्थतामनुसन्धाय ॥ १२ ॥ १३ ॥

अंशुमतीं सूर्यतनयाम् ॥ ६ ॥ वृक्षैरुपलक्षितं श्यामं श्यामनामकम् । आशिषः प्रयुञ्जीत अस्माकं शीघ्रं पुनरागमनं भवत्विति सीता वृक्षं प्रार्थयेत् । ततः तत्र वसेद्वा अतिक्रमेत वेति सीताभिप्रायेणैकवचनम् ॥ ७ ॥ ८ ॥ पलाशेति । यामुनैः यमुनातीरजैः ॥ ९ ॥ मार्दवयुक्तः कण्टकपाषाणादिरहितः । वनदावैः अरण्याग्निभिः, अतस्तेनैव मार्गेण गन्तव्यमित्यभिप्रायः ॥१०॥११॥ इतीति । मन्त्रयित्वा मुनिकृतकृपामनुसन्धाय ॥ १२ ॥ १३ ॥

सत्य०—सीताम् अग्रतः लक्ष्मणस्तु प्रान्ते कृतवान् । रामस्तु अग्रतः पुरस्तात् कृतवान् मिलित्वा उभावपि सीतामग्रतः कृत्वेतियुक्तम् । " अग्रं प्रान्ते पुरस्ताच्च प्रधाने प्रथमोर्ध्वयोः " इति विश्वः । एतेन यथाश्रुतार्थग्रहणे रामलक्ष्मणयोरपि पुरस्तात्सीता गच्छतीत्युक्तमासीत् । एवं च "अग्रतो गच्छ सौमित्रे" इत्यादिविरोध इति परास्तम् । उक्तरीत्याग्रशब्दस्योभयार्थकत्वेन विरोधाभावात् ॥ १२ ॥

तौ काष्ठसङ्घाटमिति । काष्ठसङ्घाटः काष्ठनिचयः । उशीरैः वीरणतृणमूलैः । "मूलेऽस्योशीरमस्त्रियाम्" इत्यमरः ॥ १४ ॥ १५ ॥ तत्रेति । अचिन्त्याम् अचिन्त्यसौन्दर्याम् । कान्तकरग्रहादावश्यकत्वाच्चेषल्लज्जावतीम् ॥१६॥ पार्श्व इति । तत्रैव वैदेह्याः पार्श्वे कठिनकाजं कठिनकं कन्दमूलखननसाधनमाय

तौ काष्ठसङ्घाटमथो चक्रतुस्सुमहाप्लवम् । शुष्कैर्वंशैः समास्तीर्णमुशीरैश्च समावृतम् ॥ १४ ॥ ततो वेतसशाखाश्च जम्बूशाखाश्च वीर्यवान् । चकार लक्ष्मणश्छित्त्वा सीतायाः सुखमासनम् ॥ १५ ॥ तत्र श्रियमिवाचिन्त्यां रामो दाशरथिः प्रियाम् । ईषत्संलज्जमानां तामध्यारोपयत प्लवम् ॥ १६ ॥ पार्श्वे च तत्र वैदेह्या वसने भूषणानि च । प्लवे कठिनकाजं च रामश्चक्रे सहायुधैः ॥ १७ ॥ आरोप्य प्रथमं सीतां सङ्घाटं परिगृह्य तौ । ततः प्रतेरतुर्यत्तौ वीरौ दशरथात्मजौ ॥ १८ ॥ कालिन्दीमध्यमायाता सीता त्वेनामवन्दत । स्वस्ति देवि तरामि त्वां पारयेन्मे पतिर्व्रतम् ॥ १९ ॥ यक्ष्ये त्वां गोसहस्रेण सुराघटशतेन च । स्वस्ति प्रत्यागते रामे पुरीमिक्ष्वाकुपालिताम् ॥२०॥ कालिन्दीमथ सीता तु याचमाना कृताञ्जलिः । तीरमेवाभिसम्प्राप्ता दक्षिणं वरवर्णिनी ॥ २१ ॥ ततः प्लवेनांशुमतीं शीघ्रगामूर्मिमालिनीम् । तीरजैर्बहुभिर्वृक्षैः सन्तेरुर्यमुनां नदीम् ॥ २२ ॥ ते तीर्णाः प्लवमुत्सृज्य प्रस्थाय यमुना वनात् । श्यामं न्यग्रोधमासेदुः शीतलं हरितच्छदम् ॥ २३ ॥ न्यग्रोधं तमुपागम्य वैदेही वाक्यमब्रवीत् ॥ २४ ॥

साग्रं दारु, आजम् अजचर्म पिनद्धं पिटकम् । द्वन्द्वैकवद्भावः । चक्रे स्थापितवानित्यर्थः ॥१७॥ आरोप्येति । सङ्घाटं प्लवम् । यत्तौ प्लवचालने यतमानौ ॥१८॥ कालिन्दीमध्यमित्यादि । मे पतिः । व्रतं वनवाससङ्कल्पम् । पारयेत् समापयेत् । त्वामुद्दिश्य गोसहस्रेण गोसहस्रप्रदानेन सुराघटशतेन च नैवेद्येन । स्वस्ति यथा भवति तथा प्रत्यागते सति गोसहस्रप्रदानेन सुराघटशतेन च त्वां यक्ष्य इत्यादि याचमाना तीरं प्राप्तेत्यन्वयः ॥ १९–२१ ॥ तत इति । वृक्षैरिति उपलक्षणे तृतीया ॥ २२ ॥ ते तीर्णा इति । यमुनावनात् यमुनातीरवनात् ॥ २३ ॥ २४ ॥

ताविति । काष्ठसङ्घाटं काष्ठनिचयं प्लवं चक्रतुः । उशीरैः नलदैः ॥ १४–१६ ॥ पार्श्व इति । कठिनकाजम् । द्वन्द्वैकवद्भावः । कठिनकं खनित्रम्, आजं अजचर्म पिनद्धं पिटकम् ॥१७॥ आरोप्येति । सङ्घाटं प्लवम् ॥१८॥ पतिः व्रतं चतुर्दशवर्षावधिकं व्रतम् । पारयेत् समापयेदित्यर्थः ॥१९–२१॥ वृक्षैरुपलक्षिताम् ॥२२–२४॥

नमस्त इत्यादि । पर्यगच्छत् प्रदक्षिणं चकार ॥ २५ ॥ अवलोक्येति । अवलोक्य, सीतायाः श्रान्त्यश्रान्ती परीक्ष्येत्यर्थः । आयाचन्तीं मनोरथान् प्रार्थयन्तीम् ॥२६॥ सीतामादायेति । भरताग्रजेति बहुव्रीहिः । अग्रतो गच्छेत्यनेन सीतायाः पुरतो गच्छेत्युक्तम् ॥ २७ ॥ अग्रतो गमनफलमाह–

नमस्तेऽस्तु महावृक्ष पारयेन्मे पतिर्व्रतम् । कौसल्यां चैव पश्येयं सुमित्रां च यशस्विनीम् । इति सीताऽञ्जलिं कृत्वा पर्यगच्छद्वनस्पतिम् ॥२५॥ अवलोक्य ततः सीतामायाचन्तीमनिन्दिताम् । दयितां च विधेयां च रामो लक्ष्मणमब्रवीत् ॥२६॥ सीतामादाय गच्छ त्वमग्रतो भरताग्रज । पृष्ठतोऽहं गमिष्यामि सायुधो द्विपदां वर ॥२७॥ यद्यत्फलं प्रार्थयते पुष्पं वा जनकात्मजा । तत्तत् प्रदद्या वैदेह्या यत्रास्या रमते मनः ॥२८॥ गच्छतोस्तु तयोर्मध्ये बभूव जनकात्मजा । मातङ्गयोर्मध्यगता शुभा नागवधूरिव ॥२९॥ एकैकं पादपं गुल्मं लतां वा पुष्पशालिनीम् । अदृष्टपूर्वां पश्यन्ती रामं पप्रच्छ साऽबला ॥ ३० ॥ रमणीयान् बहुविधान् पादपान् कुसुमोत्कटान् । सीतावचनसंरब्ध आनयामास लक्ष्मणः ॥ ३१ ॥ विचित्रवालुकजलां हंससारसनादिताम् । रेमे जनकराजस्य तदा प्रेक्ष्य सुता नदीम् ॥३२॥ क्रोशमात्रं ततो गत्वा भ्रातरौ रामलक्ष्मणौ । बहून् मेध्यान् मृगान् हत्वा चेरतुर्यमुनावने ॥ ३३ ॥ विहृत्य ते बर्हिणपूगनादिते शुभे वने वानरवारणायुते । समं नदीवप्रमुपेत्य सम्मतं निवासमाजग्मुरदीनदर्शनाः ॥३४॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

यद्यत्फलमित्यादिश्लोकेन ॥ २८॥२९॥ एकैकमिति । पप्रच्छ केषां संज्ञेति पृष्टवतीत्यर्थः ॥ ३० ॥ रमणीयानिति । पादपानित्यनेन स्तबकविशिष्टाः पादपावयवा उच्यन्ते । सीतावचनसंरब्धः सीतावचनेन त्वरितः ॥३१॥ विचित्रवालुकजलामिति । नदीं यमुनाम् । सुदूरं तत्तीरे गमनात्तद्दर्शनम् ॥ ३२ ॥ क्रोशमात्रमिति । मेध्यान् शुचीन् भक्ष्यानिति यावत् । चेरतुः भक्षितवन्तौ । " चर गतिभक्षणयोः " ॥ ३३ ॥ विहृत्येति । पूगः समूहः । समम्



पर्यगच्छत् प्रदक्षिणं चकार ॥२५॥२६॥ सीतामिति । भरताग्रजेति बहुव्रीहिः ॥ २७-२९॥ एकैकमिति । पप्रच्छ एषां नाम किमिति पप्रच्छ ॥३०॥ रमणीयानिति । पादपान् । स्तबकविशिष्टपादपावयवान् । सीतावचनसंरब्धः सीतावचने त्वरा यस्य सः तथा ॥ ३१ ॥ ३२ ॥ क्रोशेति । चेरतुः भक्षितवन्तौ ॥ ३३ ॥ विहृत्येति ।

अनिम्नोन्नतम् । नदीवप्रं नदीतीरम् । संमतं निवासं सीताभिमतं वासस्थानम् ॥३४॥ इति श्रीगो० अयोध्याकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥५५॥ अथेति । अनन्तरं स्वप्रबोधानन्तरम् । अवसुप्तम् ईषत्सुप्तमित्यर्थः ॥ १ ॥ सौमित्र इति । वन्यानां शुकपिकशारिकादीनाम् । वल्गु सुन्दरम् । कालः

अथ रात्र्यां व्यतीतायामवसुप्तमनन्तरम् । प्रबोधयामास शनैर्लक्ष्मणं रघुनन्दनः ॥ १ ॥ सौमित्रे शृणु वन्यानां वल्गु व्याहरतां स्वनम् । सम्प्रतिष्ठामहे कालः प्रस्थानस्य परन्तप ॥ २ ॥ स सुप्तः समये भ्रात्रा लक्ष्मणः प्रतिबोधितः । जहौ निद्रां च तन्द्रीं च प्रसक्तं च पथि श्रमम् ॥ ३ ॥ तत उत्थाय ते सर्वे स्पृष्ट्वा नद्याः शिवं जलम् । पन्थानमृषिणाऽऽदिष्टं चित्रकूटस्य तं ययुः ॥४॥ ततः सम्प्रस्थितः काले रामः सौमित्रिणा सह । सीतां कमलपत्राक्षीमिदं वचनमब्रवीत् ॥ ५ ॥ आदीप्तानिव वैदेहि सर्वतः पुष्पितान्नगान् । स्वैः पुष्पैः किंशुकान् पश्य मालिनः शिशिरात्यये ॥ ६ ॥ पश्य भल्लातकान् फुल्लान्नरैरनुपसेवितान् । फलपत्रैरवनतान्नूनं शक्ष्यामि जीवितुम् ॥ ७ ॥

प्राप्त इति शेषः ॥ २ ॥ स इति । समये प्रबोधनसमये । तन्द्रीं जाड्यम् । जहौ तदाप्रभृतीति शेषः । पथि श्रमं तत्कृतोपचारमित्यर्थः ॥ ३ ॥ तत उत्थायेति । नद्याः कालिन्द्याः । स्पृष्ट्वेत्युपलक्षणं प्रातःकालिकस्नानादिकृत्यानाम्, तं पन्थानं पलाशवनरूपम् ॥ ४ ॥ ५ ॥ आदीप्तानिति । आदीप्तानिव आ समन्ताज्ज्वलत इव । नगान् वृक्षान् । स्वैः पुष्पैः मालिनः मालावत इव स्थितान् । शिशिरात्यये वसन्तसमये ॥ ६ ॥ पश्येति । भल्लातकान् वीरवृक्षान् । फुल्लान् फुल्लपुष्पान् । अनुपसेवितान् दुर्गमत्वादितिभावः । जीवितुं शक्ष्यामि एवमादिजीवनसाधनस्य विद्यमानत्वादिति भावः ॥ ७ ॥

नदीवप्रं नदीतीरम् ॥ ३४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां पञ्चपञ्चाशः सर्गः ॥ ५५ ॥ अथेति । अनन्तरं रामप्रबोधानन्तरमपि । अवसुप्तम् ईषत्सुप्तम् ॥ १ ॥ सौमित्र इति । वन्यानां शुकपिकादीनां स्वनं शृणु । प्रस्थानस्य प्रयाणस्य कालो जातः । अतस्सम्प्रतिष्ठामहे संप्रतिगच्छाम इति योजना ॥ २ ॥ स इति । समये प्रबोधनसमये ॥ ३ ॥ तत इति । जलं स्पृष्ट्वा स्नानाद्यनुष्ठानं कृत्वा ॥ ४ ॥ ५ ॥ आदीप्तानिति । आदीप्तानिव आ समन्ताज्ज्वलत इव । मालिनः श्रेणीभूतान् । शिशिरात्यये वसन्ते । यद्वा स्वैः पुष्पैः । मालिनः मालावत इव स्थितान् ॥ ६ ॥ पश्येति । जीवितुं शक्ष्यामि जीवनसाधनसमृद्धिलाभादिति भावः ॥ ७ ॥

द्रोणप्रमाणानि द्रोणम् आढकद्वयम्, तत्प्रमाणानि तत्प्रमाणमधुपूरितानि। मधूनि कुर्वन्तीति मधुकार्य्यः। कर्म्मण्यण् ङीप्। ताभिः मधुमक्षिकाभिरिति यावत्। सम्भृतानि निर्मितानि। नगेनगे वृक्षेवृक्षे। लम्बमानानि मधूनि मधुपटलानि पश्य॥ ८॥ एष इति। नत्यूहः दात्यूहः। वनोद्देशे वनप्रदेशे।



पश्य द्रोणप्रमाणानि लम्बमानानि लक्ष्मण। मधूनि मधुकारीभिः सम्भृतानि नगेनगे॥ ८॥ एष क्रोशति नत्यूह स्तं शिखी प्रतिकूजति। रमणीये वनोद्देशे पुष्पसंस्तरसङ्कटे॥ ९॥ मातङ्गयूथानुसृतं पक्षिसङ्घानुनादितम्। चित्रकूटमिमं पश्य प्रवृद्धशिखरं गिरिम्॥ १०॥ समभूमितले रम्ये द्रुमैर्बहुभिरावृते। पुण्ये रंस्यामहे तात चित्रकूटस्य कानने॥ ११॥ ततस्तौ पादचारेण गच्छन्तौ सह सीतया। रम्यमासेदतुः शैलं चित्रकूटं मनोरमम्॥१२॥ तं तु पर्वतमासाद्य नानापक्षिगणायुतम्। बहुमूलफलं रम्यं सम्पन्नं सरसोदकम्॥१३॥ मनोज्ञोऽयं गिरिः सौम्य नानाद्रुमलतायुतः। बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे॥ १४॥ मुनयश्च महात्मानो वसन्त्यस्मिन् शिलोच्चये। अयं वासो भवेत्तावदत्र सौम्य रमेमहि॥ १५॥ इति सीता च रामश्च लक्ष्मणश्च कृताञ्जलिः। अभिगम्याश्रमं सर्वे वाल्मीकिमभिवादयन्॥ १६॥

पुष्पसंस्तरसङ्कटे पुष्पमयास्तरणेन निबिडे॥ ९॥ मातङ्गयूथानुसृतमिति। मातङ्गयूथानुसृतं गजकुलैर्व्याप्तम्। प्रवृद्धशिखरम् उन्नतशिखरम्॥ १०–१२॥ तं त्वित्यारभ्य अभिवादयन्नित्यन्तमेकं वाक्यम्। तं त्विति। सरसोदकं स्वादूदकम्। स्वाजीवः शोभनः आजीवो जीविका यस्मिन् स तथोक्तः। शिलोच्चये पर्वते। इति इतिनिश्चित्य। आश्रमं वाल्मीकीयम्। अभिवादयन् अभ्यवादयन्। तदानीं चित्रकूटे वाल्मीकेर्वासः, भरतागमनानन्तर

पश्येति। आढक(चतुष्टयं)द्वयं द्रोणं तावत्प्रमाणमधुपूर्णानि मधुपटलानि। मधुकारीभिः मधुमक्षिकाभिः॥८॥ एष इति। नत्यूहः दात्यूहः। वनोद्देशे वनप्रदेशे। पुष्पसंस्तरसङ्कटे पुष्पैः संस्तर आच्छादनं तेन सङ्कटे निबिडे॥ ९–१२॥ सरसोदकं स्वादूदकसहितम्॥ १३॥ मनोज्ञ इति। स्वाजीवः सुखेन जीवितुं शक्यः॥ १४॥ मुनय इति। अयं वासो भवेत् वासयोग्यो भवेत्। तावत्तस्माद्रमेमहि इति वाल्मीकिमभिवादयन् अभ्यवादयन्। वाल्मीकिः प्राप्त

मृषिनिर्गमनकथनात्ततःप्रभृति तमसातीर इति ज्ञेयम् । अतो न बालकाण्डकथाविरोधः ॥ १३–१७॥ तत इत्यादिश्लोकद्वयमेकं वाक्यम् । यथान्यायं यथाक्रमम् । आत्मानमृषये संनिवेद्य अमुकस्य पुत्रोऽहम् अयं मद्भ्राता इयं मद्भार्या एतादृशकार्यार्थमागता वयमित्येवमुक्त्वा । वराणि जम्बूप्रभृ

तान् महर्षिः प्रमुदितः पूजयामास धर्मवित् । आस्यतामिति चोवाच स्वागतं तु निवेद्य च ॥१७॥ ततोऽब्रवीन्महा बाहुर्लक्ष्मणं लक्ष्मणाग्रजः । संनिवेद्य यथान्यायमात्मानमृषये प्रभुः ॥१८॥ लक्ष्मणानय दारूणि दृढानि च वराणि च । कुरुष्वावसथं सौम्य वासे मेऽभिरतं मनः ॥ १९ ॥ तस्य तद्वचनं श्रुत्वा सौमित्रिर्विविधान् द्रुमान् । आजहार ततश्चक्रे पर्णशालामरिन्दमः ॥ २० ॥ तां निष्ठितां बद्धकटां दृष्ट्वा रामः सुदर्शनाम् । शुश्रूषमाणमेकाग्रमिदं वचनमब्रवीत् ॥२१॥ ऐणेयं मांसमाहृत्य शालां यक्ष्यामहे वयम् । कर्त्तव्यं वास्तुशमनं सौमित्रे चिरजीविभिः॥२२॥

तीनि गृहनिर्माणार्हाणि । तिन्त्रिणीमधूकादेस्त्याज्यत्वात् । आनय आवसथं कुरुष्वेति लक्ष्मणमब्रवीदिति सम्बन्धः ॥ १८–२० ॥ तामिति । निष्ठितां निश्चलां वातादिना चालयितुमशक्यां भित्तिसहितां परिनिष्पन्नाम् । बद्धकटां कुडयार्थे कल्पितास्तरणां बद्धबाह्यावरणां वा । "कटे वर्षावरणयोः" इति धातुः । सुदर्शनां शोभनदर्शनाम् । शुश्रूषमाणं परिचर्यां कुर्वन्तम् । एकाग्रम् इतःपरं किंवा आज्ञापयिष्यतीति सावधानम् ॥ २१ ॥ ऐणेयमिति । ऐणेयम् एणसम्बन्धि । एणाड्ढञ् आर्षः । शालां शालाधिष्ठात्रीस्तत्तद्दिग्वासिनीर्देवताः । तास्तु 'शय्यादेशे कामलिङ्गेन देहल्यामन्तरिक्षलिङ्गेन' इत्यादिनगरखण्डप्रतिपाद्याः । तादृशयागार्थं पूर्वं वास्तुशमनं वास्तुशान्तिः गृहप्रवेशाङ्गं कर्म कर्तव्यम्, गृहदेशे वर्तमानभूतपिशाचादीनां शमनं कर्तव्य मित्यर्थः । कर्तव्यं चिरजीविभिरित्यनेन अकरणे आयुःक्षयो दर्शितः । तदुक्तं ब्रह्माण्डपुराणे "न च व्याधिभयं तस्य न च बन्धुजनक्षयः । जीवेद्

राज्ये रामे यदा काव्यं करिष्यति तदा तस्य तमसातीराश्रमे वासः, ततः प्राक् चित्रकूटाश्रमे वासः ॥ १५ ॥ १६ ॥ तानिति । स्वागतं रामं प्रति स्वागतप्रश्नं निवेद्य विज्ञाप्य ॥ १७ ॥ तत इति । आत्मानं सन्निवेद्येति । अमुकस्य पुत्रः अमुकहेतोरिहागतवानस्मीत्युक्त्वेत्यर्थः ॥ १८–२० ॥ तामिति । निष्ठितामन्तर्बहिः प्राकारभित्त्या सुप्रतिष्ठितां बद्धकटाम् । छान्दसोवर्णलोपः । बद्धकवाटाम् ॥ २१ ॥ ऐणेयमिति । ऐणेयम् एणविकारम् । शालां शालाधिष्ठातृदेवतां यक्ष्यामहे । किमर्थमत आह कर्तव्यं वास्तुशमनमिति । वास्तुशब्दो गृहापरपर्यायः । "धिष्ण्यं धाम निकेतनं च सदनं वस्त्यं च वास्तु क्षयः" इति निघण्टुः । वास्तु

१ च । राघवं प्रीतिसंयुक्तमिदं वचनमब्रवीत् । ज्ञातं मया रघुश्रेष्ठ त्वदागमनकारणम् ॥ अत्र वासमृषीणां च सकाशे रोचये प्रभो । इति तेन समाज्ञप्तः प्रीयमाणो महारथः । तथेति प्रतिजग्राह ऋषिणोक्तं कृताञ्जलिः ॥ इत्यधिकः पाठः ॥

वर्षशतं स्वर्गकल्पमेवं वसेन्नरः॥" इति ॥२२॥ कथं कर्त्तव्यमित्यपेक्षायामाह कर्त्तव्य इति । शास्त्रदृष्टः शास्त्रेषु निर्णीतः विधिः प्रकारः कर्त्तव्यः। धर्मं तदनुकूलधर्मशास्त्रम् । अनुस्मर अवधेहीत्यर्थः ॥ २३ ॥ २४ ॥ ऐणेयमिति । श्रपयस्व पच । अयं मुहूर्तः ध्रुवः स्थिरः । अयं शोभनतिथिनक्षत्रयुक्तो

मृगं हत्वानय क्षिप्रं लक्ष्मणेह शुभेक्षण । कर्त्तव्यः शास्त्रदृष्टो हि विधिर्धर्ममनुस्मर ॥ २३ ॥ भ्रातुर्वचनमाज्ञाय लक्ष्मणः परवीरहा । चकार स यथोक्तं च तं रामः पुनरब्रवीत् ॥२४॥ ऐणेयं श्रपयस्वैतच्छालां यक्ष्यामहे वयम् । त्वर सौम्य मुहूर्तोऽयं ध्रुवश्च दिवसोऽप्ययम् ॥२५॥ स लक्ष्मणः कृष्णमृगं हत्वा मेध्यं प्रतापवान् । अथ चिक्षेप सौमित्रिः समिद्धे जातवेदसि ॥ २६ ॥ तं तु पक्वं समाज्ञाय निष्टप्तं छिन्नशोणितम् । लक्ष्मणः पुरुषव्याघ्रमथ राघवमब्रवीत् ॥ २७ ॥ अयं कृष्णः समाप्ताङ्गः शृतः कृष्णमृगो यथा । देवतां देवसङ्काश यजस्व कुशलो ह्यसि ॥ २८ ॥ रामः स्नात्वा तु नियतो गुणवाञ्जप्यकोविदः । सङ्ग्रहेणाकरोत् सर्वान् मन्त्रान् सत्रावसानिकान् ॥२९॥

दिवसो वासरश्च ध्रुवः, स्थिर इत्यर्थः । (पाठभेदः । अयं सौम्यमुहूर्तः शुभमुहूर्तः । अयं दिवसश्च ध्रुवः यजमानस्थैर्यकारी) ॥ २५ ॥ स इति । समिद्धे सम्यग्दीप्ते । जातवेदसि अग्नौ । चिक्षेप पपाचेत्यर्थः ॥ २६ ॥ तामिति । निष्टप्तं सोष्णं छिन्नशोणितं क्षीणशोणितम् ॥ २७ ॥ अयमिति । कृष्णः कृष्णमृगः । समाप्ताङ्गः परिपूर्णावयवः । शृतः पक्वः । कृष्णमृगो यथा पूर्णावयवत्वात् पाकतः श्यामत्वाच्च पूर्वावस्थ इव दृश्यत इत्यर्थः । कुशलोसि यजने समर्थोसि ॥ २८ ॥ राम इति । गुणवान् प्रायत्यादिगुणवान् । जप्यकोविदः जप्यमन्त्रेषु समर्थः । सङ्ग्रहेण सङ्क्षेपेण । सत्रावसानिकान् सत्रं वास्तुयागः यैर्मन्त्रै

शब्देन गृहाधिष्ठितशिखिपर्जन्यप्रभृतिपञ्चचत्वारिंशद्देवता उच्यन्ते । तासां शमनं होमनैवेद्यबलिभिः पूजनम् ॥ २२ ॥ बोधायनेनोक्तां यज्ञार्थपशुवधदोषशङ्कां निर्वर्तयति कर्तव्य इति । शास्त्रदृष्टः शास्त्रचोदितो विधिः कर्तव्य एव । तं धर्ममेवानुस्मर नात्र हिंसादिदोषप्रसङ्गः । यज्ञविनियुक्तपशूनामुत्तमलोकभागित्वेन वधस्य तेषामनुग्रहत्वाच्च "न वा उवेतन्म्रियसे नरिष्यसि देवाँ इदेषि पथिभिः सुगेभिः । यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवः सविता दधातु" इति हि श्रूयते । "तस्माद्यज्ञे वधोऽवधः" इति च स्मर्यते ॥ २३-२६ ॥ तं त्विति । निष्टप्तं नितरां तप्तम् । छिन्नशोणितम् उपरतशोणितनिष्यन्दम् ॥ २७ ॥ अयमिति । कृष्णः कृष्णमृगः । समाप्ताङ्गः अन्यूनाङ्गः । कृष्णमृगो यथा नीलमृगो यथा अवैकल्यदग्धत्वात् कृष्णवर्णो मृग इव दृश्यत इत्यर्थः । शृतः पक्वः । देवतां शालाधिदेवताम् ॥ २८ ॥ राम इति । सत्रावसानिकान् गृहप्रवेशनियुक्तान् मंत्रान् गृहीत्वा संग्रहेण वास्तुशान्त्यादिकमकरोत् ॥ २९ ॥

रवसीयते परिसमाप्यते ते सत्रावसानाः, सत्रावसाना एव सत्रावसानिकाः । विनयादेराकृतिगणत्वात् स्वार्थे ठक् । छान्दसो वृद्ध्यभावः । अकरोत् यावता वास्तुशान्तिकर्म समाप्यते तावन्मन्त्रान् जजापेत्यर्थः । मन्त्रजपपूर्वकं कर्म्माण्यकरोदित्यर्थः ॥ २९ ॥ इष्ट्वा देवगणानिति । देवगणान् वास्तु

इष्ट्वा देवगणान् सर्वान् विवेशावसथं शुचिः । बभूव च मनोह्लादो रामस्यामिततेजसः ॥ ३० ॥ वैश्वदेवबलिं कृत्वा रौद्रं वैष्णवमेव च । वास्तुसंशमनीयानि मङ्गलानि प्रवर्तयन् ॥ ३१ ॥ जपं च न्यायतः कृत्वा स्नात्वा नद्यां यथा विधि । पापसंशमनं रामश्चकार बलिमुत्तमम् ॥ ३२ ॥ वेदिस्थलविधानानि चैत्यान्यायतनानि च । आश्रमस्यानुरूपाणि स्थापयामास राघवः ॥ ३३ ॥ वन्यैर्माल्यैः फलैर्मूलैः पक्वैर्मांसैर्यथाविधि । अद्भिर्जपैश्च वेदोक्तैर्दर्भैश्च ससमित्कुशैः ॥३४॥ तौ तर्पयित्वा भूतानि राघवौ सह सीतया । तदा विविशतुः शालां सुशुभां शुभलक्षणौ ॥३५॥

देवताः। ह्लादः तुष्टिः॥३०॥ वैश्वदेवबलिमिति । वैश्वदेवबलिं वैश्वदेवबलिहरणे । रौद्रं रुद्रदेवताकम् । वैष्णवं विष्णुदेवताकं च यागम्। वास्तुसंशमनीयानि गृहारिष्टशामकानि । मङ्गलानि मङ्गलकराणि पुण्याहवाचनशान्तिजपादीनि । स्नात्वेति पुनःस्नानकरणं "ततः सर्वौषधीस्नानं यजमानस्य कारयेत" इति स्मरणादित्याहुः। वस्तुतस्तु रौद्रयागकरणात् पुनःस्नानम् । रौद्रकर्मकरणे अपउपस्पृश्येति विधानादिति ज्ञेयम् । पापसंशमनं पापशब्देन पापप्रधानानि दिवाचरनक्तंचराणि क्रूरभूतान्युच्यन्ते । तेषां संशमनम् । यद्वा पापसंशमनं "पञ्च सूना गृहस्थस्य" इत्याद्युक्तरीत्या सूनारूपपापशमनम् । वैश्वदेवबलिमित्यत्र भूतबलिमात्रोक्तिः। अत्र तद्व्यतिरिक्तः पित्रादिविषयः । यद्वा पूर्वं वैश्वदेवरूपबलिमित्यर्थः । अत्र सर्वभूतबलिः । यद्वा पूर्वोक्तस्य सर्वस्योपसंहारः ॥ ३१॥३२॥ वेदीति । वेदिस्थलविधानानि बलिहरणादिवेदिस्थलसंस्थानानि । "वेदिः परिष्कृता भूमिः" इत्यमरः । चैत्यानि गन्धर्वाद्यावासस्थानानि । आयतनानि विष्ण्वाद्यावासस्थलानि । (पाठभेदः। चैत्यानि देवतास्थानानि । आयतनानि अग्न्यगाराणि । अनुरूपाणि आश्रमस्यानुरूपाणि

इष्ट्वेति । देवगणान् पूर्वोक्तगृहाधिष्ठितपञ्चचत्वारिंशद्देवगणान्॥ ३०॥ एवं गृहाधिष्ठितदेवतापूजाद्युक्त्वा पुनः स्नानपूर्वकं वैश्वदेवादिप्रकारमाह—वैश्वदेवेत्यादिश्लोकद्वयेन। वास्तुसंशमनीयानि वास्तुदोषसंशमनार्थानि गर्भन्यासादीनि । मङ्गलानि पुण्याहवाचनादीनि च चकारेति सम्बन्धः ॥ ३१ ॥ ३२ ॥ वेदिस्थलेति । वेदिस्थलानां बलिहरणवेदिस्थलानाम् अष्टदिग्वर्तिनामपि विधानानि । चैत्यं गणपत्याद्यायतनम्, आयतनं विष्ण्वादेः । अनुरूपाणीति सूक्ष्ममार्गेण स्थापयामास, तत्तद्देवतानां तत्र

सूक्ष्माणीत्यर्थः । स्थापयामास मन्त्रतस्तत्तद्देवतानां तत्रतत्रावस्थानं कल्पितवानित्यर्थः) ॥ ३३-३५ ॥ तामिति । वृक्षपर्णच्छदनां वृक्षपर्णरूपाच्छादनपटलयुक्ताम् । यथाप्रदेशं शास्त्रोक्तप्रदेशमनतिक्रम्य । "आग्नेय्यां पाकशाला" इत्यादिशास्त्रम् । सुधर्मां देवसभाम् "स्यात्सुधर्मा देवसभा" इत्य

तां वृक्षपर्णच्छदनां मनोज्ञां यथाप्रदेशं सुकृतां निवाताम् । वासाय सर्वे विविशुः समेताः सभां यथा देवगणाः सुधर्माम् ॥ ३६ ॥ अनेकनानामृगपक्षिसङ्कुले विचित्रपुष्पस्तबकैर्द्रुमैर्युते । वनोत्तमे व्यालमृगानुनादिते तदा विजह्रुः सुसुखं जितेन्द्रियाः ॥ ३७ ॥ सुरम्यमासाद्य तु चित्रकूटं नदीं च तां माल्यवतीं सुतीर्थाम् । ननन्द हृष्टो मृगपक्षिजुष्टां जहौ च दुःखं पुरविप्रवासात् ॥ ३८ ॥ इत्यार्षे० श्रीमदयोध्याकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

कथयित्वा सुदुःखार्तः सुमन्त्रेण चिरं सह । रामे दक्षिणकूलस्थे जगाम स्वगृहं गुहः ॥ १ ॥
भरद्वाजाभिगमनं प्रयागे च सहासनम् । आगिरेर्गमनं तेषां तत्रस्थैरभिलक्षितम् ॥ २ ॥

मरः ॥ ३६ ॥ अनेकेति । पुष्पस्तबकपदं कर्णावतंसादिपदवन्निर्वाह्यम् । व्यालाः सर्पाः गजा वा । जितेन्द्रिया इत्यनेन विहारो ग्राम्याभिन्नजलक्रीडापुष्पापचयादिरिति सूच्यते ॥ ३७॥ सुरम्यमिति । तां प्रसिद्धाम् । सुतीर्थां शोभनजलावतरणप्रदेशाम् । हृष्टः पुलकितः । पुरविप्रवासात् जनितमिति शेषः ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

एवं रामस्य चित्रकूटगमनपर्यन्तवृत्तान्तमभिधाय गुहसुमन्त्रादिवृत्तान्तमृषिः प्रस्तौति-कथयित्वेति । गुहो रामे दक्षिणकूलस्थे सति सुदुःखार्तस्सन् सुमन्त्रेण सह चिरं कथयित्वा यावद्रामोऽक्षिपथमतिक्रामति तावत्पर्यन्तं तत्रैव स्थित्वा रामगुणान् कथयित्वेत्यर्थः । स्वगृहं जगाम तेन सह स्वगृहं जगामेत्यर्थः ॥ १ ॥ भरद्वाजाभिगमनमिति । तेषां रामादीनाम् । भरद्वाजाभिगमनं भरद्वाजसेवनम् । प्रयागे भरद्वाजेन सहासनम् । आगिरेश्चित्रकूट

तत्रावस्थानं कल्पयामासेत्यर्थः ॥ ३३-३५ ॥ तामिति । वृक्षपर्णच्छदनां वृक्षपर्णैः कृतं छदनम् आच्छादनं यस्याः सा तथा ॥ ३६-३८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायाम् षट्पञ्चाशः सर्गः ॥ ५६ ॥

रामे दक्षिणकूलस्थे सति, दुःखार्तस्सन् सुमन्त्रेण सह चिरं कथयित्वा रामभद्रो दृष्टिपथं यावदतिक्रामति तावत्पर्यन्तं तत्रैव स्थित्वा रामगुणान् कथयित्वा स्वगृहं जगाम, तेन सह स्वगृहं जगामेत्यर्थः ॥१॥ तेषां रामादीनाम् । भरद्वाजाभिगमनं भरद्वाजमुद्दिश्य गमनम् । प्रयागे तेन सहासनम्, आगिरेर्गमनम् आचित्रकूटाद्गमनम् ।

पर्यन्तं गमनं च तत्रस्थैः शृङ्गिबेरपुरस्थैश्चारैरभिलक्षितं निवेदितम्, सुमन्त्रेण सम्यग्विदितामित्यर्थः । गङ्गोत्तरणदिवसनिशा वनस्पतिमूले, द्वितीया भरद्वाजाश्रमे, तृतीया यमुनातीरे, चतुर्थेऽहनि चित्रकूटगमनम्, पञ्चमे पुनरागम्य चारैर्निवेदनम् ॥ २ ॥ अनुज्ञात इति । अथ रामवृत्तान्तश्रवणानन्तरम् ।

अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान् । अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः ॥३॥ स वनानि सुगन्धीनि सरितश्च सरांसि च । पश्यन्नतिययौ शीघ्रं ग्रामाणि नगराणि च ॥४॥ ततः सायाह्नसमये तृतीयेऽहनि सारथिः । अयोध्यां समनुप्राप्य निरानन्दां ददर्श ह ॥५॥ स शून्यामिव निःशब्दां दृष्ट्वा परमदुर्मनाः । सुमन्त्रश्चिन्तयामास शोकवेगसमाहतः ॥ ६ ॥ कच्चिन्न सगजा साश्वा सजना सजनाधिपा । रामसन्तापदुःखेन दग्धा शोकाग्निना पुरी ॥ ७ ॥ इति चिन्तापरः सूतो वाजिभिः शीघ्रपातिभिः । नगरद्वारमासाद्य त्वरितः प्रविवेश ह ॥ ८ ॥ सुमन्त्रमभियान्तं तं शतशोऽथ सहस्रशः । क्व राम इति पृच्छन्तः सूतमभ्यद्रवन्नराः ॥ ९ ॥

अनुज्ञातः, गुहेनेतिशेषः । गाढदुर्मनाः अत्यन्तदुर्मनाः ॥ ३ ॥ स वनानीति । ग्रामाणि ग्रामान् ॥ ४ ॥ तत इति । ततः ग्रामनगरातिक्रमणानन्तरम् । तृतीयेऽहनि शृङ्गिबेरपुरान्निर्गमापेक्षया तृतीयदिवसे । यद्वा अहनि तृतीये सायाह्नसमये । अह्नः तृतीयकालभूते सायाह्नकाले । अयोध्यां समनुप्राप्य निरानन्दां तां ददर्श ॥ ५–७ ॥ इतीति । त्वरितः प्रविवेश । नगरं जनसञ्चारशून्यं निःशब्दं वर्तते । राजा कामवस्थां प्राप्त इति ज्ञातुं त्वरितः

तत्रस्थैः शृङ्गिबेरपुरस्थैः । गुहप्रेक्षितैश्चारैर्हेतुभिरुपलक्षितम्, सुमन्त्रेण सम्यग्वेदितमित्यर्थः । तत्रस्थैरुपलक्षितमिति शृङ्गिबेरपुरे स्थित्वा चारान् प्रेषयित्वा तत्र स्थितेभ्यस्तेभ्यः प्रथमेऽहनि गङ्गामुत्तीर्य वृक्षमूले न्यवसन्, द्वितीयेऽहनि भरद्वाजाश्रमेऽवसन्, तृतीयेऽहनि यमुनातीरवने ऊषुः, चतुर्थेऽहनि चित्रकूटं गमिष्यन्तीति गुहप्रेरितचारैः कथितं सुमन्त्रेण विदितमित्यर्थः ॥२॥ अनुज्ञात इति । अथ रामवृत्तान्तपरिज्ञानानन्तरम् । अनुज्ञातः गुहेनेति शेषः ॥३॥४॥ तत इति । तृतीयेऽहनि तृतीये सायाह्नसमये अह्नस्तृतीयभागभूते सायाह्नकाले सारथिः सुमन्त्रः अयोध्यां समनुप्राप्य निरानन्दां ददर्शेति सम्बन्धः । यद्वा ततः शृङ्गिबेरपुरात् निर्गमनदिवसस्य

ति०—गङ्गोत्तरणतृतीयदिवसे भरद्वाजाश्रमात्प्रतिनिवृत्तदूतमुखात्तावत्पर्यन्तं तद्वृत्तं ज्ञात्वा तद्दिन एव शृङ्गिबेरपुरात्सुमन्त्रस्य प्रतिनिवृत्तिरिति बोध्यम् । अत एव " रामस्य निर्गमदिनाद्दिने षष्ठेऽर्धरात्रके । हाहा लक्ष्मण हा सीते हा रामेति मृतो नृपः॥" इति पाद्मवचनं सङ्गच्छते । दिनद्वयेन शृङ्गिबेरपुरे रामागमनम् । तद्द्वितीयदिने गङ्गोत्तरणम् । तदादिदिनत्रयं सुमन्त्रस्य तत्र स्थितिः । तत्र तृतीयदिवसे मध्याह्ने प्रयागत आगतचारेभ्यो रामवृत्तान्तं लब्ध्वा ततः प्रस्थाय मध्येऽवस्थानम् । ततः षष्ठे अपराह्णे अयोध्याप्रवेशः सुमन्त्रस्य । तदर्धरात्रे राज्ञो मरणम् ॥ ९ ॥

प्रविष्टवानित्यर्थः ॥ ८ ॥ ९ ॥ तेषामिति । गङ्गायां गङ्गातीरे । निवृत्तोऽस्मीति तेषां शशंसेति सम्बन्धः ॥ १० ॥ त इति । ते रामादयः ॥ ११ ॥ शुश्रावेति । वृन्दंवृन्दं च तिष्ठतां सङ्घशः तिष्ठताम् । हता इति ये वयम् इह अस्मिन् रथे राघवं न पश्यामः इति अस्माद्धेतोः ते हताः स्मेति

तेषां शशंस गङ्गायामहमापृच्छ्य राघवम् । अनुज्ञातो निवृत्तोऽस्मि धार्म्मिकेण महात्मना ॥ १० ॥ ते तीर्णा इति विज्ञाय बाष्पपूर्णमुखा जनाः । अहो धिगिति निश्वस्य हा रामेति च चुक्रुशुः ॥ ११ ॥ शुश्राव च वचस्तेषां वृन्दंवृन्दं च तिष्ठताम् । हताः स्म खलु येनेह पश्याम इति राघवम् ॥ १२ ॥ दानयज्ञविवाहेषु समाजेषु महत्सु च । न द्रक्ष्यामः पुनर्जातु धार्मिकं राममन्तरा ॥ १३ ॥ किं समर्थं जनस्यास्य किं प्रियं किं सुखावहम् । इति रामेण नगरं पितृवत्परिपालितम् ॥ १४ ॥

सम्बन्धः ॥१२॥ दानयज्ञविवाहेष्विति । दानादिषु अन्तरा मध्ये नायकमणिवत् वर्तमानं रामम् पुनः जातु कदाचिदपि न द्रक्ष्यामः किमिति काकुः । येन केनापि दाने क्रियमाणे रामः स्वयं तत्र गत्वा तिष्ठति । किमर्थम् ? देशे काले पात्रे च दापयितुम् । यज्ञेऽपि गच्छति । किमर्थम् ? न्यायार्जितधनैः कारयितुं तत्तत्कर्मसन्देहविच्छेदविस्मृतज्ञापनादिकं कर्तुं च । विवाहे च मध्ये गच्छति । किमर्थम् ? उभयवर्गसङ्घटनायासंमतानामभिमतद्रविणप्रदानाय अस्खलितं कर्मणामनुष्ठापनाय च । समाजेषु महत्सु अन्यत्रापि महासदस्सु,दीर्घसत्रेष्वपीत्यर्थः । यत्रकुत्राप्यदृष्टकार्येष्विति वा । अत्र सर्वत्र हेतुर्धार्मिकमिति ॥१३॥ किमिति ।अस्य जनस्य किं समर्थं किं क्षेमंकरं वस्तु किंप्रियं किं सुखावहमिति, रामेण तत्तदभिमतवस्तुप्रदात्रा रामेण पित्रेव नगरं परिपालितम् । नगर

तृतीयेऽहनि सायाह्नसमये सारथिरयोध्यां प्राप्य तां ददर्शेति सम्बन्धः । रामस्य भरद्वाजाश्रमावस्थानदिवसे भरद्वाजाश्रमाच्चारागमनानन्तरं सारथिस्तस्मिन्नेव दिवसे शृङ्गिवेरपुरान्निर्गत्य तृतीयेऽहनि सायाह्ने अयोध्यां प्राप्य तां निरानन्दां ददर्शेति सम्बन्धः ॥ ५-११ ॥ शुश्रावेति । ये वयम् । इहास्मिन् रथे राघवं न पश्यामः ते हताः स्मेति तेषामिति ईदृशं वचनं शुश्रावेति सम्बन्धः ॥ १२ ॥ दानेति । दानयज्ञादिषु अन्तरा मध्ये धार्मिकं रामं जातु पुनः न द्रक्ष्याम इति तेषां वचः शुश्रावेति पूर्वेण सम्बन्धः ॥ १३ ॥ किमिति । अस्य जनस्य इतःपरं किं समर्थं किमुचितं किं सुखावहं वस्तु किमिति पित्रेव रामेण परिपालितं

शब्देन नगरस्थजना लक्ष्यन्ते। इति वचः शुश्रावेति पूर्वेण सम्बन्धः ॥ १४ ॥ वातायनगतानामिति । अन्वन्तरापणं शुश्राव । उभयपार्श्व स्थानामापणानां मध्येमध्ये शुश्रावेत्यर्थः । विभक्त्यर्थेऽव्ययीभावः ॥ १५ ॥ स राजमार्गमध्येनेति । पिहिताननः जनदर्शनाक्षमतया ॥ १६ ॥ सो

वातायनगतानां च स्त्रीणामन्वन्तरापणम् । रामशोकाभितप्तानां शुश्राव परिदेवनम् ॥ १५ ॥ स राजमार्गमध्येन सुमन्त्रः पिहिताननः । यत्र राजा दशरथस्तदेवोपययौ गृहम् ॥ १६ ॥ सोऽवतीर्य्य रथाच्छीघ्रं राजवेश्म प्रविश्य च । कक्ष्याः सप्ताभिचक्राम महाजनसमाकुलाः ॥ १७ ॥ हर्म्यैर्विमानैः प्रासादैरवेक्ष्याथ समागतम् । हाहाकार कृता नार्यो रामादर्शनकर्शिताः ॥ १८ ॥ आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः । अन्योन्यमभिवीक्षन्तेऽव्यक्तमार्त्ततराः स्त्रियः ॥ १९ ॥ ततो दशरथस्त्रीणां प्रासादेभ्यस्ततस्ततः । रामशोकाभितप्तानां मन्दं शुश्राव जल्पितम् ॥ २० ॥ सह रामेण निर्यातो विना राममिहागतः । सूतः किंनाम कौसल्यां शोचन्तीं प्रतिवक्ष्यति ॥ २१ ॥ यथा च मन्ये दुर्जीवमेवं न सुकरं ध्रुवम् । आच्छिद्य पुत्रे निर्याते कौसल्या यत्र जीवति ॥ २२ ॥

ऽवतीर्येति । राजनिर्गमाभावेन महाजनसङ्कुलत्वम् ॥ १७ ॥ हर्म्यैरिति । हर्म्यैर्धनिनां वासैः । विमानैः सप्तभूमिगृहैः । "विमानोऽस्त्री देवयाने सप्तभूमि गृहेऽपि च" इति वैजयन्ती । प्रासादैः महाराजार्हगृहविशेषैः । उपलक्षिताः नार्यः समागतं रामेण विना समागतं सुमन्त्रमवेक्ष्य हाहाकारकृताः कृत हाहाकाराः, बभूवुरिति शेषः ॥१८॥ आयतैरिति । अव्यक्तम् अस्पष्टमिति क्रियाविशेषणम् ॥ १९ ॥ २० ॥ सह रामेणेत्यादिश्लोकत्रयमेकं वाक्यम् । यत्रेति विभक्तिप्रतिरूपको निपातः प्रथमार्थे वर्त्तते । यथा "क इत्था वेद यत्र सः" इत्यत्र यथा येन प्रकारेण । अस्मज्जीवितं दुर्जीवं दुःखेन

नगरम् इति चिन्ताकुलं बभूवेति शेषः ॥ १४ ॥ वातायनेति । अनु अनन्तरम् वातायनगतानां स्त्रीणां परिदेवनं च अन्तरापणम् आपणमध्ये गच्छन् शुश्रावेति सम्बन्धः ॥ १५ ॥ १६ ॥ स इति । कक्ष्याः द्वाराणि ॥ १७ ॥ हर्म्यैरिति । हर्म्यैः धनिकगृहैः । विमानं सप्तभौमसद्म, एतैरुपलक्षितामयोध्यां समागतं सुमन्त्रमवेक्ष्य हाहाकारः कृतो याभिस्तास्तथा नार्यो बभूवुरिति शेषः ॥ १८ ॥ आयतैरिति । अव्यक्तं क्रियाविशेषणमेतत् । अन्योन्यमभिवीक्षन्ते, इति कर्तव्यतामौढ्यादिति शेषः ॥ १९ ॥ तत इति । प्रासादेभ्य इति सुमन्त्रस्य राजवेश्मप्रविष्टत्वेन ततोवतीर्णानामिति शेषः । मन्दं जल्पितमिति राजसान्निध्यत्वा न्मन्दत्वम् ॥२०॥ अथ राममातॄणां दुःखप्रलापः—यथेति । यत्रेति विभक्तिप्रतिरूपको निपातः। कौसल्या पुत्रे निर्याते सति यथा आच्छिद्य प्रसह्य जीवति यत्र जीवतीति

सत्य०—यथा तस्याः एवं ममापि जीवनं न सुकरं ध्रुवं मन्ये ॥ २२ ॥

जीवनार्हं मन्ये, एवमेव कौसल्या, पुत्रे निर्याते सति आच्छिद्य प्रसह्य जीवति यत्र जीवतीति यत् तत् न सुकरं दुस्सम्पादं ध्रुवं मन्य इत्येकैकव्यक्त्य पेक्षया एकवचनम्, विभक्तिप्रतिरूपकमव्ययं वा । निशामयन् निशमयन् । दीर्घश्छान्दसः । शृण्वन्नित्यर्थः ॥ २१-२३ ॥ स प्रविश्येति । परिद्यूनं क्षीणम् । "दिवो विजिगीषायाम्" इतिनिष्ठानत्वम् । पाण्डर इति विशेषणाद्राजलक्ष्मीर्नास्तीत्युच्यते ॥ २४ ॥ २५ ॥ स तूष्णीमिति ।

सत्यरूपं तु तद्वाक्यं राज्ञः स्त्रीणां निशामयन् । प्रदीप्त इव शोकेन विवेश सहसा गृहम् ॥ २३ ॥ स प्रविश्याष्टमीं कक्ष्यां राजानं दीनमातुरम् । पुत्रशोकपरिद्यूनमपश्यत् पाण्डरे गृहे ॥२४॥ अभिगम्य तमासीनं नरेन्द्रमभिवाद्य च । सुमन्त्रो रामवचनं यथोक्तं प्रत्यवेदयत् ॥ २५ ॥ स तूष्णीमेव तच्छ्रुत्वा राजा विभ्रान्तचेतनः । मूर्च्छितो न्यपतद्भूमौ रामशोकाभिपीडितः ॥ २६ ॥ ततोऽन्तःपुरमाविद्धं मूर्च्छिते पृथिवीपतौ । उद्धृत्य बाहू चुक्रोश नृपतौ पतिते क्षितौ ॥२७॥ सुमित्रया तु सहिता कौसल्या पतितं पतिम् । उत्थापयामास तदा वचनं चेदमब्रवीत् ॥ २८ ॥ इमं तस्य महाभाग दूतं दुष्करकारिणः । वनवासादनुप्राप्तं कस्मान्न प्रतिभाषसे ॥ २९ ॥ अद्येममनयं कृत्वा व्यपत्रपसि राघव । उत्तिष्ठ सुकृतं तेऽस्तु शोके न स्यात् सहायता ॥ ३० ॥

तूष्णींभावे हेतुः विभ्रान्तचेतन इति ॥ २६ ॥ तत इति । आविद्धं शोकेनाभिहतम्, अभूदितिशेषः । मूर्च्छिते आविद्धमासीत् पतिते बाहू उद्धृत्य चुक्रोशेति विशेषः ॥ २७ ॥ २८ ॥ इममिति । दूतं सन्देशहरम् । दुष्करकारिणः दुष्करकार्य्यकारिणः ॥ २९ ॥ अद्येममिति । इममनयं पुत्रविवासनम् । सुकृतं शोभनम् । शोके विषये सहायता न स्यात्, शोकानुवर्तनं मा कृथा इत्यर्थः ॥ ३० ॥

यत् एतद्दुर्जीवं दुष्करजीवं ध्रुवं निश्चितम् । एवमेवंविधम् जीवनं सुकरं न मन्ये । एवंविधजीवनमन्यैः कर्तुमशक्यमिति मन्ये इत्यर्थः । मन्ये इत्येकैकव्यक्त्यपेक्षया एकवचनम् । सत्यरूपं परमार्थभूतं निशामयन् शृण्वन् ॥ २१-२३ ॥ परिम्लानं क्षीणम् ॥ २४ ॥ अभिगम्येति । यथोक्तं प्रत्यवेदयत् विस्तरेण प्रतिपादनमाराद् भविष्यतीत्यर्थः ॥ २५ ॥ २६ ॥ तत इति । आविद्धं दुःखाभिभूतं सत् ॥२७-२९॥ अद्येति । एवमनयं दुस्साधनमन्याय्यं कृत्वा व्यपत्रपसि लज्जां प्राप्नोषि । सुकृतं

स०-मूर्च्छिते सर्वोच्छ्रिते रामे अपृथिवीपतौ सति क्षितौ नृपतौ पतिते च सतीति वा ॥ २७ ॥

व्यसनानुशयकृततूष्णींभावे हेत्वन्तरं कल्पयति–देवेति । कैकेयी, सेति शेषः । विस्रब्धं सविश्वासम्, निःशङ्कमिति यावत् ॥ ३१ ॥ सेति । बाष्पेण विप्लुतं विलुप्तं सगद्गदं यथा भवति तथा भाषिणी ॥ ३२ ॥ एवमिति, पतितमिति शेषः ॥ ३३ ॥ तत इति । समीक्ष्य श्रुत्वा । पुनरेव सङ्कुलं

देव यस्या भयाद्रामं नानुपृच्छसि सारथिम् । नेह तिष्ठति कैकेयी विस्रब्धं प्रतिभाष्यताम् ॥ ३१ ॥ सा तथोक्त्वा महाराजं कौसल्या शोकलालसा । धरण्यां निपपाताशु बाष्पविप्लुतभाषिणी ॥ ३२ ॥ एवं विलपतीं दृष्ट्वा कौसल्यां पतितां भुवि । पतिं चावेक्ष्य ताः सर्वाः सुस्वरं रुरुदुः स्त्रियः ॥ ३३ ॥ ततस्तमन्तःपुरनादमुत्थितं समीक्ष्य वृद्धास्तरुणाश्च मानवाः । स्त्रियश्च सर्वा रुरुदुः समन्ततः पुरं तदासीत् पुनरेव सङ्कुलम् ॥ ३४ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

प्रत्याश्वस्तो यदा राजा मोहात् प्रत्यागतः पुनः । अथाजुहाव तं सूतं रामवृत्तान्तकारणात् ॥ १ ॥ अथ सूतो महाराजं कृताञ्जलिरुपस्थितः । राममेवानुशोचन्तं दुःखशोकसमन्वितम् ॥ २ ॥ वृद्धं परमसन्तप्तं नवग्रहमिव द्विपम् । विनिश्वसन्तं ध्यायन्तमस्वस्थमिव कुञ्जरम् ॥ ३ ॥ राजा तु रजसा धूतं ध्वस्ताङ्गं समुपस्थितम् । अश्रुपूर्णमुखं दीनमुवाच परमार्तवत् ॥ ४ ॥

रामगमनकाल इव व्याकुलमासीत् ॥ ३४ ॥ इति श्रीगोविन्दराज० श्रीरामायणभूष० पीता० अयोध्याकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥ प्रत्यागतः सूतस्याभिमुखागतः ॥ १ ॥ अथेत्यादिश्लोकद्वयमेकं वाक्यम् । नवग्रहं सद्योगृहीतम् । अस्वस्थं व्याधिग्रस्तम् ॥ २ ॥ ३ ॥ रजसा ध्वस्ताङ्गं

सत्यपरिपालनरूपं पुण्यमस्तु । शोके शोकविषये सहायता नास्ति, शोकानुवर्तनं मा कृथा इत्यर्थः ॥ ३० ॥ देवेति । विस्रब्धं निश्शङ्कम् ॥ ३१ ॥ बाष्पविप्लुतभाषिणी गद्गदभाषिणी ॥ ३२–३४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां सप्तपञ्चाशः सर्गः ॥ ५७ ॥

प्रत्याश्वस्त इति । मोहात् मूर्च्छायाः । प्रत्याश्वस्तः उपचारैरुद्बोधितः राजा । यो रामसकाशात्प्रत्यागतः । तं सूतम् । रामवृत्तान्तकारणात् रामवृत्तान्तं प्रष्टुम् ॥ १ ॥ अथेत्यादिश्लोकद्वयमेकं वाक्यम् । नवग्रहं नवो नूतनो ग्रहो ग्रहणं यस्य तम् । अस्वस्थं व्याधिग्रस्तम् । महाराजमुपस्थितः समीपे तस्थाविति योजना ॥ २ ॥ ३ ॥ राजेति ।

धूसरिताङ्गम् । धूतं कम्पितम् । परमार्तवत् परमार्त इव, दीन इत्यर्थः ॥४॥ पूर्वसर्गे यथोक्तमित्युक्तं विवरीतुं प्रश्नमवतारयति-क्वनु वत्स्यतीत्यादिना ॥५॥ दुःखमित्येतत् क्रियाविशेषणम् । शयनोचितः महार्हशयनोचितः ॥६॥७॥ व्यालैरजगरादिभिः । मृगैः सिंहव्याघ्रादिदुष्टमृगैः । उपस्थितौ उपाश्रितौ । आसित

क्वनु वत्स्यति धर्मात्मा वृक्षमूलमुपाश्रितः । सोऽत्यन्तसुखितः सूत किमशिष्यति राघवः ॥ ५ ॥ दुःखस्यानुचितो दुःखं सुमन्त्र शयनोचितः । भूमिपालात्मजो भूमौ शेते कथमनाथवत् ॥ ६ ॥ यं यान्तमनुयान्ति स्म पदातिरथकुञ्जराः । स वत्स्यति कथं रामो विजनं वनमाश्रितः ॥७॥ व्यालैर्मृगैराचरितं कृष्णसर्पनिषेवितम् । कथं कुमारौ वैदेह्या सार्द्धं वनमुपस्थितौ ॥८॥ सुकुमार्या तपस्विन्या सुमन्त्र सह सीतया । राजपुत्रौ कथं पादैरवरुह्य रथाद्गतौ ॥ ९ ॥ सिद्धार्थः खलु सूत त्वं येन दृष्टौ ममात्मजौ । वनान्तं प्रविशन्तौ तावश्विनाविव मन्दरम् ॥ १० ॥ किमुवाच वचो रामः किमुवाच च लक्ष्मणः । सुमन्त्र वनमासाद्य किमुवाच च मैथिली ॥११॥ आसितं शयितं भुक्तं सूत रामस्य कीर्तय । जीविष्याम्यहमेतेन ययातिरिव साधुषु ॥ १२ ॥ इति सूतो नरेन्द्रेण चोदितः सज्जमानया । उवाच वाचा राजानं सबाष्पपरिरब्धया ॥ १३ ॥

मित्यादौ भावे निष्ठा ।८-११। आसितं आसनम् । शयितं शयनम् । भुक्तं भोजनं च कीर्तय। एतेन रामसम्बन्ध्यासनादिकीर्तनेन अहं साधुषु ययातिरिव जीविष्यामि । ययातिः सत्सु पतेयमितीन्द्रं प्रार्थ्य स्वर्गाद्भ्रष्टः साधुसमागमं प्राप्य यथा निवृत्तदुःखोऽभूत् तद्वदहमपि निवृत्तदुःखो भविष्यामीत्यर्थः ॥१२॥ इतीति।

रजसा ध्वस्ताङ्गं धूलिपरीताङ्गम् । परमार्तवत् परमदीनस्सन् ॥ ४ ॥ क्व न्विति । वत्स्यति वसति । अशिष्यति अश्नाति ॥ ५ ॥ दुःखस्येति दुःखं यथा तथा ॥ ६ ॥ ७ ॥ व्यालैरिति । व्यालैरजगरैः । मृगैः व्याघ्रादिभिः । उपस्थितौ उपश्रितौ ॥ ८-११ ॥ आसितमिति । आसितादयो भावे निष्ठाः । एतेन रामसम्बन्ध्यासनादिव्यापारश्रवणेन । ययातिरिव साधुष्विति स्वर्गात्पतन् ययातिः 'मुनिसाधुषु पातय' इतीन्द्रं प्रार्थयित्वा यथा साधुषु पतितः एवं स्वर्गतुल्यराज्यान्निर्गत्य साधूनामाश्रमेषु स्थितस्य रामस्य भोजनादि कीर्तय, तेन जीविष्यामीति योजना ॥ १२ ॥ इतीति । सः सूतः सज्जमानया स्खलन्त्या बाष्पपरिरब्धया कण्ठ

सत्य०-पदानयश्च रथाश्च पदातिरथम् । सेनाङ्गत्वाद्द्वन्द्वैकवद्भावः । तेन सहिताश्च ते कुञ्जराश्चेति तथा ॥ ७ ॥ साधुषु मध्ये यथा ययातिः शुक्रशापप्राप्तजरया जीवितवान् तथाऽहमपि बलीपलितकार्कश्यविशिष्टोपि रामवार्ताश्रवणेन जीविष्यामीत्यर्थः ॥ १२ ॥ वाचेत्येतद्देहलीदीपन्यायेनोभयत्र सम्बध्यते । नरेन्द्रेण शुचा सज्जमानया स्खलन्त्या वाचा चोदितः स सूतः ॥ १३ ॥

बाष्पपरिरुन्धया कण्ठगतबाष्परुद्धयेत्यर्थः। अतएव सज्जमानया स्खलन्त्या "षस्ज गतौ" इति धातुः। धातोरनेकार्थत्वादत्र स्खलनार्थकः ॥१३॥१४॥ सूतेति। वन्द्यौ वन्दनीयौ ॥ १५ ॥ अन्तःपुरम् आरोग्यमभिवादनं च वाच्यम्। ब्रूञो द्विकर्मकत्वादप्रधानकर्मण्यन्तःपुरे प्रथमा। कृताभिहितत्वात्।

अब्रवीन्मां महाराज धर्ममेवानुपालयन्। अञ्जलिं राघवः कृत्वा शिरसाभिप्रणम्य च ॥ १४ ॥ सूत मद्वचना त्तस्य तातस्य विदितात्मनः। शिरसा वन्दनीयस्य वन्द्यौ पादौ महात्मनः ॥ १५ ॥ सर्वमन्तःपुरं वाच्यं सूत मद्वचनात्त्वया। आरोग्यमविशेषेण यथार्हं चाभिवादनम् ॥१६॥ माता च मम कौसल्या कुशलं चाभिवादनम्। अप्रमादं च वक्तव्या ब्रूयाश्चैनामिदं वचः ॥ १७ ॥ धर्म्मनित्या यथाकालमग्न्यगारपरा भव। देवि देवस्य पादौ च देववत् परिपालय ॥ १८ ॥ अभिमानञ्च मानञ्च त्यक्त्वा वर्त्तस्व मातृषु। अनु राजानमार्यां च कैकेयीमम्ब कारय ॥ १९ ॥ कुमारे भरते वृत्तिर्वर्त्तितव्या च राजवत्। अर्थज्येष्ठा हि राजानो राजधर्ममनुस्मर ॥ २० ॥

एवमुत्तरश्लोकेऽपि ॥ १६ ॥ अप्रमादं धर्मे भर्त्तरि च। इदं वक्ष्यमाणम् ॥ १७ ॥ अभिमानं गर्वं "गर्वोऽभिमानोऽहङ्कारः" इत्यमरः। कुलाभिमान मित्यर्थः। मानः चित्तसमुन्नतिः। जेष्ठपत्नीत्वनिबन्धनां चित्तसमुन्नतिमित्यर्थः। अनु राजानमार्यां च कारय, अनुकारयेत्यर्थः। "व्यवहिताश्च" इति व्यवहितप्रयोगः। अन्विति तुल्यार्थे। "पश्चात्सादृश्ययोरनु" इत्यमरः। राजानं कैकेयीं च तुल्यमनुवर्तस्वेत्यर्थः। राजवत् राज्ञीव। वृत्ति र्वर्तितव्या, उपचारः कर्त्तव्य इत्यर्थः। अर्थज्येष्ठाः अर्थेनैव ज्येष्ठाः न तु वयसेत्यर्थः ॥ १८–२० ॥

गतबाष्पनिरुद्धया ॥ १३ ॥ अब्रवीदित्यादिश्लोकद्वयमेकं वाक्यम्। हे महाराज ! राघवो धर्ममेवानुपालयन् भूत्वा मामब्रवीत्। वक्ष्यमाणं वच इति शेषः ॥ १४ ॥ किमिति ? हे सूत ! शिरसा वन्दनीयस्य मे तातस्य मद्वचनात् मत्प्रतिनिधित्वेन अञ्जलिं कृत्वा शिरसाभिप्रणम्य पादौ च वन्द्याविति योजना ॥ १५ ॥ किञ्च सर्वमिति। मद्वचनात् सर्वमन्तःपुरमारोग्यमभिवादनं च वाच्यमिति ॥ १६ ॥ मातेति। किञ्च मम माता कौसल्यापि वक्तव्या, इति च एनां कौसल्यां ब्रूयाः ॥१७॥ किमिति ? धर्मनित्येत्यादि। अभिमानो गर्वः स्वगुणोत्कर्षबुद्धिः, मानः परस्यानानुवृत्तिः। अनु राजानं राज्ञः पश्चात् कैकेयीमार्यां श्लाघ्यां कारय ॥१८॥१९॥ कुमार इति। भरते राजवद्वृत्तिः वर्तितव्या सम्पादनीया। कथमुभयमित्यत आह अर्थज्येष्ठा इति। हि यस्मात् अर्थज्येष्ठाः सन्तो राजानः भवन्ति अतः भरतस्य राज

भरत इति । भरतः कुशलं वाच्यः, त्वयेति शेषः । वाच्यो मद्वचनेन च मयोक्तमित्यपि वाच्य इत्यर्थः । यद्वा भरतो मद्वचनेन कुशलं वाच्यः। सर्वास्वेव मातृषु। यथान्यायं यथाक्रमम् । वृत्तिं वर्तस्व वृत्तिं कुरु, शुश्रूषस्वेत्यर्थः । इति वाच्यश्चेति द्वितीयवाच्यपदान्वयः॥ २१ ॥ वक्तव्य इति । राज्यस्थं

भरतः कुशलं वाच्यो वाच्यो मद्वचनेन च । सर्वास्वेव यथान्यायं वृत्तिं वर्त्तस्व मातृषु ॥ २१ ॥ वक्तव्यश्च महाबाहुरिक्ष्वाकुकुलनन्दनः। पितरं यौवराज्यस्थो राज्यस्थमनुपालय ॥२२॥ अतिक्रान्तवया राजा मा स्मैनं व्यवरोरुधः। कुमारराज्ये जीव त्वं तस्यैवाज्ञाप्रवर्तनात् ॥ २३ ॥ अब्रवीच्चापि मां भूयो भृशमश्रूणि वर्तयन् । मातेव मम माता ते द्रष्टव्या पुत्रगर्द्धिनी ॥ २४ ॥ इत्येवं मां महाराज ब्रुवन्नेव महायशाः । रामो राजीवताम्राक्षो भृशमश्रूण्यवर्तयत् ॥ २५ ॥ लक्ष्मणस्तु सुसंक्रुद्धो निश्वसन् वाक्यमब्रवीत् । केनायमपराधेन राजपुत्रो विवासितः ॥ २६ ॥ राज्ञा तु खलु कैकेय्या लघु त्वाश्रित्य शासनम् । कृतं कार्य्यमकार्यं वा वयं येनाभिपीडिताः ॥ २७ ॥

प्रधानराज्यस्थम् । मा व्यवरोरुधः अवरुद्धं मा कार्षीः। अतिक्रान्तवयस्कत्वादिति तत्र हेतुः। कुमारराज्ये यौवराज्ये । जीव भोगान् भुङ्क्ष्वेत्यर्थः। इति च वक्तव्य इत्यन्वयः ॥२२॥२३॥ अब्रवीदिति । अश्रूणि वर्तयन् करिष्यमाणमातृविषयपीडास्मरणादिति हृदयम् । स्वस्य मातृविषयशुश्रूषाया अलाभाद्वा अश्रुवर्तनम् । मम माता स्वमातेव त्वया द्रष्टव्या इति भरतमुद्दिश्य मां ब्रुवन्नेव भृशमश्रूण्यवर्त्तयत् । शोकजनितरक्तिमानमाह राजीवताम्राक्ष इति । अनन्तरमश्रुमोचनं ततो वक्तव्यस्यानुचितत्वात्, अमुमाशयमुत्तरत्र सीतापहरणानन्तरमुद्घाटयिष्यति ' सुप्तप्रमत्तकुपितानां वचनैर्भावज्ञानं द्रष्टव्यम् ' इतिन्यायेन ॥ २४ ॥ २५ ॥ लक्ष्मणस्त्विवति । तुशब्देन रामवन्न सर्वथा हृदयं जुगोपेत्युक्तम् ॥२६ ॥ राज्ञेति । येन विवासनेन वयमभिपीडिताः

दत्तार्थज्येष्ठत्वात्तस्य वैमुख्यनिवृत्तये राजधर्ममनुस्मरेति च ॥ २० ॥ भरत इति । किञ्च भरतो मद्वचनेन कुशलं वाच्यः । सर्वास्वपि मातृषु यथान्यायम् वृत्तिं वर्तस्वेति च वाच्य इति योजना ॥ २१ ॥ वक्तव्य इत्यादिश्लोकद्वयमेकं वाक्यम् । राज्यस्थं प्रधानराज्यस्थम् ॥ २२ ॥ अतिक्रान्तेति । एनं दशरथं मा व्यवरोरुधः । कुमारराज्ये यौवराज्ये । तेनैवाज्ञाप्रवर्त्तनात् जीव, इति वक्तव्य इति पूर्वेण सम्बन्धः ॥ २३ ॥ अब्रवीदिति । पुत्रगर्द्धिनी पुत्राभिकाङ्क्षिणी । हे भरत ! मम माता ते तव मातेव द्रष्टव्या ॥२४॥ उपसंहरति–इतीति । इत्येवंप्रकारेण मां ब्रुवन्नेव । अश्रूण्यवर्तत इति पाठः व्यसृजत ॥२५॥ लक्ष्मणस्त्विवति वाक्यमब्रवीत । तदेवाह–केनायमपराधेन इत्यारभ्य सार्धसप्तश्लोकैः । राज्ञा त्विति । येन रामविवासनेन वयमभिपीडिताः तद्विवासमम् अकार्यं तु अकार्यमेव ॥ २६ ॥ राज्ञा तु कैकेय्याः लघु

तद्विवासनम् अकार्यं तु अकार्यमेव । राज्ञा तु कैकेय्याः लघु शासनमाश्रित्य कार्यं वा कार्यमिव कृतं खलु। यद्वा राज्ञा खलु लघु तुच्छं कैकेय्याः शासन माश्रित्याकार्यमेव कार्यं कृतम्, येन कार्येण वयमभिपीडिताः॥२७॥ प्रतिज्ञातार्थप्रदानस्य कथमकार्यत्वम्? तत्राह–यदीति। रामः प्रव्राजितो यदि प्रव्राजित इति यत्। एतत् लोभकारणकारितं वरदाननिमित्तं वा कैकेय्याः प्रतिश्रुतवरदाननिमित्तं वा। सर्वथा दुष्कृतं कृतम्, वरदानसमये वरद्वयस्य भरताभि

यदि प्रव्राजितो रामो लोभकारणकारितम् । वरदाननिमित्तं वा सर्वथा दुष्कृतं कृतम् ॥ २८ ॥
इदं तावद्यथाकाममीश्वरस्य कृते कृतम् । रामस्य तु परित्यागे न हेतुमुपलक्षये ॥ २९ ॥
असमीक्ष्य समारब्धं विरुद्धं बुद्धिलाघवात् । जनयिष्यति सङ्क्रोशं राघवस्य विवासनम् ॥ ३० ॥

षेकरामनिष्कासनरूपेण विनियोगाभावात् । यदिशब्दस्वारस्यानुरोधेनेत्थं वा योजनीयम्–लोभकारणकारितमिति क्रियाविशेषणम् । रामः लोभकारण कारितं वा वरदाननिमित्तं वापि यदि प्रव्राजितः तथापि सर्वथा दुष्कृतम् अकार्यं राज्ञा कृतम्, न राज्यं दास्यामीति प्रतिज्ञातुं शक्यत्वात्; ज्येष्ठपुत्रविवा सनस्यानुचितत्वाच्चेतिभावः। "न त्वेकपुत्रं दद्यान्नत्वेव ज्येष्ठपुत्रम्" इति हि स्मर्यते। लोभकारणकारित इतिपाठे–रामविशेषणम्। लोभरूपकारणेन प्रेरित इत्यर्थः ॥२८॥ इदमिति । रामस्य परित्यागे हेतुं नोपलक्षये, किन्तु ईश्वरस्य कृते स्वतन्त्रव्यापारे स्थितेन राज्ञेति शेषः। इदं रामप्रव्राजनं यथाकामं तावत् यथेच्छमेव कृतम्। यद्वा इदं रामविवासनम् ईश्वरस्य कृते ईश्वरप्रयोजनाय। यथाकामं कृतं केवलमीश्वरप्रेरणेन शास्त्रमनवेक्ष्य कृतमित्यर्थः। हि यस्माद्रामस्य परित्यागे हेतुं नोपलक्षये। परित्यागहेतुदोषसद्भावे हि पुत्रविवासनं शास्त्रीयं स्यात्। अयं चोपसंहारश्लोकः ॥ २९ ॥ यथेष्टकरणं चेत्

तुच्छं शासनमाश्रित्य कार्यं वा कार्यमिव कृतं खल्विति योजना ॥ २७ ॥ यदीति । रामः प्रव्राजितो यदि प्रव्राजित इति यत् एतत्प्रव्राजनं लोभकारणकारितं वा, अन्यायेन परद्रव्यापहरणेच्छा लोभः। स एव कारणं हेतुः तेन कारितं लोभहेतुना कैकेयी राज्ञा अकारयद्वा वरदाननिमित्तं वा कैकेय्यै प्रतिश्रुतवरदाननिमित्तं वा भवतु, सर्वथा पक्षद्वयेपि दुष्कृतं कृतम्। वरदानसमये वरद्वयस्य भरताभिषेकरामविवासनरूपेण विनियोगाभावाद्दुष्कृतत्वोक्तिः। दैवप्रेरणया युष्मत्त्यागादश रथो नोपालभ्य इत्याशङ्क्य दैवप्रेरितेनापि दोषसद्भावे त्यागः कार्यः ॥ २८ ॥ स च दोषोऽस्मिन् रामे न दृश्यत इत्याह–इदमिति । इदं तावन्मत्पीडनमीश्वरस्य कृतौ दैवप्रेरणायां सत्यां यथाकामं यथेच्छकृतं भवतु तथाप्येतावता अनपराधिनो रामस्य परित्यागे हेतुभूतमपराधं नोपलक्षये, दैवप्रेरितोपि केनचिद्दोषेण हेतुना परित्यजति स दोषोऽस्मिन्नास्तीत्यर्थः ॥ २९ ॥ असमीक्ष्येति । बुद्धिलाघवात् अविवेकात् असमीक्ष्य उचितानुचितमनवेक्ष्य समारब्धं विरुद्धं सर्वलोकविरुद्धम्।

कथमनुतप्तवान् राजेत्यत्राह–असमीक्ष्येति । विरुद्धम् अत एव असमीक्ष्य अनालोच्य बुद्धिलाघवात् समारब्धं कृतम् । राघवस्य विवासनं संक्रोशं दुःखम् । जनयिष्यति जनयति, अतो राज्ञोनुताप इतिभावः ॥ ३० ॥ पिता कथं निन्द्य इत्यत्राह–अहमिति । 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं

अहं तावन्महाराजे पितृत्वं नोपलक्षये । भ्राता भर्त्ता च बन्धुश्च पिता च मम राघवः ॥ ३१ ॥
सर्वलोकप्रियं त्यक्त्वा सर्वलोकहिते रतम् । सर्वलोकोऽनुरज्येत कथं त्वाऽनेन कर्मणा ॥ ३२ ॥
सर्वप्रजाभिरामं हि रामं प्रव्राज्य धार्म्मिकम् । सर्वलोकं विरुध्द्येमं कथं राजा भविष्यसि ॥ ३३ ॥
जानकी तु महाराज निश्वसन्ती मनस्विनी । भूतोपहतचित्तेव विष्ठिता विस्मिता स्थिता ॥ ३४ ॥

प्रतिपन्नस्य परित्यागो विधीयते ॥' इतिवचनादिति भावः । भ्राता राघव एव मम पिता "ज्येष्ठो भ्राता पितृसमः" इत्युक्तेः । तस्य पितृत्वाभावेपि भर्तृत्व मस्त्येवेत्याशङ्क्याह भर्ता चेति । स्वामीत्यर्थः । किंबहुना बन्धुः सर्वविधोऽपि राघव एव । एतेन परमैकान्तिभिः प्राकृतपित्रादयः परित्याज्याः भगवा नेव निरुपाधिकः पिता भर्ता बन्धुश्चेत्युक्तं भवति ॥ ३१ ॥ कथं मुख्यं पितरं विहाय गौणमनुवर्तसे ? तत्राह–सर्वलोकप्रियमिति । अनेन कर्मणा प्रियपुत्रप्रव्राजनरूपक्रूरकर्मणा । सर्वलोकाहिते रतं सर्वलोकाप्रियं रामं त्यक्त्वा अनेन कर्मणोपलक्षितं सर्वलोकाहिते रतं सर्वलोकाप्रियमित्यर्थः । त्वा त्वां प्रति । सर्वलोकः कथमनुरज्येत ? कश्चिद्भरततुल्योऽनुरज्यताम्, नतु सर्वोपीति भावः । सर्वलोकनिरुपाधिकबन्धुं त्यक्त्वा सोपाधिकबन्धुं त्वां कथ माश्रयेयमिति हृदयम् ॥३२॥ अनेनेत्युक्तं प्रपञ्चयति–सर्वप्रजाभिराममिति । कथं राजा भविष्यसीत्येवं राजानं ब्रूहीत्यब्रवीदिति पूर्वेणान्वयः । सुमन्त्र प्रेषणवेलायां लक्ष्मणादिवाक्याश्रवणेप्यत्र सिद्धवदनुवादसामर्थ्यात् तदानीमेवमुक्तमित्यवगन्तव्यम् ॥ ३३ ॥ जानकी त्विति । तुशब्देन लक्ष्मणा द्वैषम्यमुच्यते । लक्ष्मणो रामशोकविकारमालक्ष्य हृदयनिहितं वचसोद्घाटितवान् । सीता तु न तथेति मयोच्यमानं सीताशोकानुभावमाकर्ण्य क्षुब्ध

विवासनं रामविवासनं कर्तृ राघवस्य दशरथस्य संक्रोशं निन्दां जनयिष्यति ॥ ३० ॥ " गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥" इति वचनार्थं हृदि निधायाह–अहं तावदिति । भर्ता स्वामी ॥ ३१ ॥ अन्यदप्याह–सर्वलोकेत्यादि । सर्वलोकप्रियं त्यक्त्वा स्थितं त्वां अनेन क्रूर कर्मणा सर्वलोकः कथमनुरज्येत ॥ ३२ ॥ सर्वेति । कथं राजा भविष्यसीत्येवं राजानं ब्रूहीति शेषः ॥ ३३ ॥ जानकीति । विस्मृता विस्मृतसर्वप्रयोजना । अस्मिता

हृदयेन त्वया न भवितव्यमिति द्योतयितुं महाराजेति सम्बोधनम् । हृदयस्थशोकातिरेकेण । निश्वसन्ती मनस्विनी गम्भीरमनस्का । भूतोपहतचित्तेव विष्ठिता स्तिमिता । विस्मिता विस्मितेवोत्फुल्लनयना स्थिता॥३४॥ अदृष्टपूर्वव्यसनेति । अदृष्टपूर्वव्यसना अननुभूतपूर्वव्यसना । तत्र हेतुः राजपुत्रीति ।

अदृष्टपूर्वव्यसना राजपुत्री यशस्विनी । तेन दुःखेन रुदती नैव मां किञ्चिदब्रवीत् ॥ ३५ ॥ उद्वीक्षमाणा भर्तारं मुखेन परिशुष्यता । मुमोच सहसा बाष्पं मां प्रयान्तमुदीक्ष्य सा ॥ ३६ ॥ तथैव रामोऽश्रुमुखः कृताञ्जलिः स्थितो भवल्लक्ष्मणबाहुपालितः । तथैव सीता रुदती तपस्विनी निरीक्षते राजरथं तथैव माम् ॥ ३७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

* [ इति ब्रुवन्तं तं सूतं सुमन्त्रं मन्त्रिसत्तमम् । ब्रूह्यशेषं पुनरिति राजा वचनमब्रवीत् ॥ १ ॥ तस्य तद्वचनं श्रुत्वा सुमन्त्रो बाष्पविक्लवः । कथयामास भूयोऽपि रामसन्देशविस्तरम् ॥२॥ जटाः कृत्वा महाराज चीरवल्कलधारिणौ । गङ्गामुत्तीर्य्य तौ वीरौ प्रयागाभिमुखौ गतौ ॥ ३ ॥ अग्रतो लक्ष्मणो यातः पालयन् रघुनन्दनम् । अनन्तरं च सीताथ राघवो रघुनन्दनः । तांस्तथा गच्छतो दृष्ट्वा निवृत्तोस्म्यवशस्तदा ॥ ४ ॥ ]

यशस्विनीति तदानीमप्यनुदितकैकेयीनिन्दात्वेन कीर्तिमती । तेन दुःखेन भर्तृदुःखदर्शनजदुःखेन । रुदती रोदनानुभाववती सती मां किञ्चिदपि नैवाब्रवीत्, केनचित्सम्भाषणस्याप्यसह्यत्वात् ॥ ३५॥ उद्वीक्षमाणेति । ततो भर्तारमश्रुमुखमुद्वीक्षमाणा सती परिशुष्यता मुखेन उपलक्षिता मां प्रयान्तमुद्वीक्ष्य सहसा बाष्पं मुमोच । रथे गते कथं पद्भ्यामेव क्रूरं कान्तारं चरिष्यति राम इति हृदयं धारयितुमशक्ता अश्रूणि मुमोचेत्यर्थः ॥ ३६ ॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टपञ्चाशः सर्गः ॥ ५८ ॥

स्मितरहिता विष्ठिता स्थिता ॥३४–३६॥ तथैवेति । लक्ष्मणबाहुपालितः लक्ष्मणेन शुश्रूषमाणः ॥ ३७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायाम् अष्टपञ्चाशः सर्गः ॥ ५८ ॥

* एते सार्धचत्वारः श्लोका व्याख्यातृभिः परित्यक्ताः अपि बहुषु कोशेषूपलभ्यमानत्वात्कुण्डलीकृत्याङ्किताः ।

ममेति । मम वर्त्मनि मत्सम्बन्धिनि मार्गे । न प्रावर्तन्त, नववियोगक्लेशादिति भावः ॥ १ ॥ उभाभ्यामिति । राजपुत्राभ्यामिति चतुर्थी । तद्दुःखं तादृशं दुःखम् ॥२॥ गुहेन सार्धं तत्स्नेहितजनसन्दर्शनमपि क्लेशावहमिति भावः । तत्रैव ननु वर्त्मनि । दिवसानिति बहुवचनेन कपिञ्जलाधिकरणन्यायेन त्रित्व

मम त्वश्वा निवृत्तस्य न प्रावर्तन्त वर्त्मनि । उष्णमश्रु प्रमुञ्चन्तो रामे सम्प्रस्थिते वनम् ॥ १ ॥
उभाभ्यां राजपुत्राभ्यामथ कृत्वाहमञ्जलिम् । प्रस्थितो रथमास्थाय तद्दुःखमपि धारयन् ॥ २ ॥
गुहेन सार्धं तत्रैव स्थितोऽस्मि दिवसान् बहून् । आशया यदि मां रामः पुनःशब्दापयेदिति ॥ ३ ॥
विषये ते महाराज रामव्यसनकर्शिताः । अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः ॥ ४ ॥

सिद्धिरित्येके । वस्तुवस्तु वनस्पतिमूले एकदिनं भरद्वाजाश्रमे द्वितीयं यमुनातीरे तृतीयं चतुर्थे चित्रकूटप्रवेशः पञ्चमे गुहचारैस्तत्सर्वं निवेदितं षष्ठे सूतनिर्गमः । यद्वा द्वितीयदिने भरद्वाजाश्रमे रामस्य चित्रकूटगमनव्यवसायात् । तृतीयदिने चारैर्निवेदनं चतुर्थे सूतनिर्गमः अतः त्रीन् दिवसान् गङ्गाकूले स्थितोस्मीत्यर्थः । बहूनिति विशेषणात् रामवियोगेन एकैकस्य दिवसस्य कल्पवत् प्रतिभानमिति दर्शितम् । पुनःशब्दापयेत् पुनराह्वयेत् । वनचरमुखेनेति हृदयम् । शब्दशब्दाण्णौ तत्कृतापुगन्तोप्ययमस्ति । अतोऽङ्कापयतीत्यादिवत् सिद्धम् ॥ ३ ॥ अथ रामस्य सर्वान्तर्यामितादात्म्यं सूचयितुं सर्वेषां रामविरहक्लेशं वर्णयति । यद्वा कैकेयीप्रियार्थमवि [illegible] सहसाकृतं कार्यं सर्वक्षोभनिमित्तमभूदित्याह–विषय

मम त्वश्वा इति । मम मया नियमिते मार्गे अश्वा न प्रावर्तन्त न न्यवर्तन्त । अयं भावः–शतधृतिभवशतमखमुखविबुधदुर्लभा श्रीरामसेवा अस्माभिर्भाग्य वशाल्लब्धा, सा निर्दयेन दैवेन विघटिता इतःपरं किं करिष्यामः ? अस्माकं व्यर्थं जीवनं किमर्थमित्यन्तदुःखेनाश्रु विमुञ्चन्तः । मयि अतिकठिनहृदये प्रतिनिवृत्तेप्यश्वा न न्यवर्तन्त । तथापि मया कथञ्चिन्निवर्तिता इति ॥ १ ॥ उभाभ्यामिति । तद्दुःखं तादृशं दुःखम् ॥ २ ॥ गुहेनेति । पुनःशब्दापयेत् आह्वापयेदिति शङ्कया गुहेन सार्धं बहून् दिवसान् स्थितोऽस्मीतिसम्बन्धः । अयमर्थः–सीताराम[illegible]लक्ष्मणैः सह गङ्गां प्राप्य गुहेन सह स्थितदिवसस्त्वेकः, रामस्य गङ्गोत्तरणानन्तरं वटमूलावस्थानदिवसस्त्वेकः, रामस्य भरद्वाजाश्रमप्राप्तिदिवसे भरद्वाजा[illegible]यावत्स्वप्रेषितचारागमनं तावद्दिवसस्त्वेकः, एवमाहत्य त्रिदिवसाः । अतो बहुत्वस्य त्रित्वे पर्यवसानात् स्थितोऽस्मि दिवसान् बहूनित्यस्याविरोधः । [illegible] रामस्य भरद्वाजाश्रमप्राप्तिदिवसे भरद्वाजाश्रमाच्चारा गमनानन्तरं तस्मिन्नेव दिवसे शृङ्गिबेरपुरान्निर्गत्य तृतीयदिवससायङ्काले सुमन्त्रस्यायोध्याप्रवेशसम्भवात् " ततः सायाह्नसमये " इति पूर्वसर्गोक्त स्याप्यविरोध इति सर्वं समञ्जसम् ॥ ३ ॥ कैकेयीनिमित्तं रामविवासनं सर्वक्षोभकरमभूदित्याह–विषय इति । विषये देशे । सपुष्पाङ्कुरकोरकाः पुष्पाण्यभिनवविक

इत्यादि। विषये देशे। "देशविषयौ तूपवर्तनम्" इत्यमरः। अपिशब्देन लतादयः समुच्चीयन्ते। व्याध्यादिना एकदेशग्लानिं व्यावर्तयितुं सपुष्पेत्यादि। सपुष्पाङ्कुरकोरकाः पुष्पाणि अभिनवविकासितानि, अङ्कुराः शाखासु नवपल्लवोद्भेदाः, कोरकाः कलिकाः "कलिका कोरकः पुमान्" इत्यमरः। तैः सहिता वृक्षा अपि परिम्लानाः, कठिनकोमलविभागमन्तरेणापि सर्वमेकदैव परिम्लानमभूदित्यर्थः ॥ ४ ॥ उपतप्तोदका इति। अकात्स्न्येनोप

उपतप्तोदका नद्यः पल्वलानि सरांसि च। परिशुष्कपलाशानि वनान्युपवनानि च ॥ ५ ॥
न च सर्पन्ति सत्त्वानि व्याला न प्रचरन्ति च। रामशोकाभिभूतं तन्निष्कूजमभवद्वनम् ॥ ६ ॥
लीनपुष्करपत्राश्च नरेन्द्र कलुषोदकाः। सन्तप्तपद्माः पद्मिन्यो लीनमीनविहङ्गमाः ॥ ७ ॥

तप्तत्वव्युदासायोदकपदम्, तेनातपकार्योपतापव्यावृत्तिः। पल्वलानि सरांसि च। पल्वलानीति दृष्टान्तार्थम्। एवं वनानीत्यपि। अनेनाल्पाधिक विभागमन्तरेण परितप्तत्वं द्योत्यते। उपतप्तोदका इतिपदं लिङ्गविपरिणामेन पल्वलादौ योजनीयम्। वनानि सन्ततजलसेकमन्तरेण प्रवृद्धानि कठिनाकाराणि। उपवनानि जलसेकेन प्रवृद्धान्यतिकोमलानि। परिशुष्कपलाशानि एकरूपेण शुष्कपत्राणि "पत्रं पलाशम्" इत्यमरः ॥ ५ ॥ नेति। न सर्पन्ति न गच्छन्ति किन्तु स्तब्धतया तिष्ठन्ति। सत्त्वानि जन्तवः। व्यालाः हिंस्रपशवः सर्वदा संचारस्वभावा गजा वा। न प्रचरन्ति आहारार्थमपि न सञ्चरन्तीत्यर्थः। गमनवच्छब्दोऽपि नास्तीत्याह निष्कूजमिति। निष्कूजं निश्शब्दम् ॥ ६ ॥ लीनपुष्करपत्राः ग्लान्यतिशयेन जलान्तर्विलीनपद्म

सितानि, अङ्कुराः शाखासु नवपल्लवोद्भेदाः, कोरकाः पुष्पमुकुलानि तैः सहिता वृक्षा अपि परिम्लानाः। अयं भावः—रामस्य जगदुपादानकारणत्वेन सर्वात्मकत्वा द्रामैकजीविनः कुसुमकिसलयकोरकसहिता वृक्षादयः छेदनानन्तरं प्ररोहणशीला अपि रामादर्शनव्यसनकर्शिताः छेदनं विनापि परिम्लानाः सद्य एव शुष्कप्राया बभूवुः, किम्पुनर्मनुष्यादय इति ॥ ४ ॥ उपतप्तेति। पल्वलानि सरांसि च तप्तोदकानि, अनेनाल्पाधिकभागमन्तरेण परितप्तत्वं द्योत्यते। वनानि सन्ततजलसेक मन्तरेण प्रवृद्धानि कठिनाकाराणि, उपवनानि जलसेकप्रवृद्धान्यतिकोमलानि। परिशुष्कपलाशानि एकरूपेण परिशुष्कपत्राणि ॥ ५ ॥ न चेति। व्यालाः हिंस्राः पशवः न प्रचरन्ति आहारार्थमपि न सञ्चरन्तीत्यर्थः। वनं निष्कूजम्, वनपक्षिणोऽपि न कूजन्तीत्यर्थः ॥ ६ ॥ लीनेति। लीनपुष्करपत्राः सङ्कुचितपद्मपत्राः पद्मिन्यः

पत्राः लीनाः सञ्चाररहिताः विहङ्गमाः जलकाकादयः॥७॥ जलजानीति। माल्यानि पुष्पाणि। "माल्यं पुष्पे पुष्पदाम्नि" इतिवैजयन्ती। यथापुरं यथा पूर्वम्। अल्पगन्धीनीति मत्वर्थीय इनिः। स्वभावस्य दुस्त्यजत्वादल्पत्वम्। फलानि रसालपनसादीनि ॥८॥ अत्रेति। उद्यानानि आक्रीडाः "पुमा

जलजानि च पुष्पाणि माल्यानि स्थलजानि च। नाद्य भान्त्यल्पगन्धीनि फलानि च यथापुरम् ॥ ८ ॥ अत्रो द्यानानि शून्यानि प्रलीनविहगानि च। न चाभिरामानारामान् पश्यामि मनुजर्षभ ॥ ९ ॥ प्रविशन्तमयोध्यां मां न कश्चिदभिनन्दति। नरा राममपश्यन्तो निश्वसन्ति मुहुर्मुहुः॥१०॥ देव राजरथं दृष्ट्वा विना राममिहागतम्। दुःखादश्रुमुखः सर्वो राजमार्गगतो जनः ॥ ११ ॥ हर्म्यैर्विमानैः प्रासादैरवेक्ष्य रथमागतम्। हाहाकारकृता नार्यो रामादर्शनकर्शिताः ॥१२॥ आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः। अन्योन्यमभिवीक्षन्तेऽव्यक्तमार्ततराः स्त्रियः॥१३॥ नामित्राणां न मित्राणामुदासीनजनस्य च। अहमार्ततया किञ्चिद्विशेषमुपलक्षये ॥ १४ ॥

नाक्रीड उद्यानम्" इत्यमरः। शून्यानि निर्जनानि। प्रलीनाः नीडेषु मूर्च्छिताः विहगाः शुकपिकशारिकादयः येषु तानि तथोक्तानि। आरामान् कृत्रिम वनानि "आरामः स्यादुपवनं कृत्रिमं वनमेव यत्" इत्यमरः। न चाभिरामान् किन्तु निःश्रीकान् पश्यामीत्यर्थः॥९॥१०॥ देवराजरथमिति। देवराज रथमित्यत्र देवेति सम्बोधनम् ॥ ११ ॥ हर्म्यैरित्यादिश्लोकद्वयमेकान्वयम्। हाहाकारकृताः कृतहाहाकाराः। आयतैरित्यश्रुवेगातिशयोक्त्यर्थः। निरञ्जनत्वं द्योतयितुं विमलैरित्युक्तम्। अभिवीक्षन्तेऽव्यक्तमित्यत्र अव्यक्तमिति पदच्छेदः ॥ १२ ॥ १३ ॥ नामित्राणामिति। उदासीनेत्यत्रापि नञ नुषज्यते। अमित्राणां तवेतिशेषः। रामस्यामित्रप्रसङ्गाभावात्। यद्वा पौरजनस्यामित्राणां पौरजनस्य मित्राणाञ्च उदासीनजनस्य उदासीनजना

सरस्यः ॥ ७ ॥ जलजानीति। माल्यानि पुष्पाणि यथापुरं यथापूर्वम् ॥ ८ ॥ अत्रेति। उद्यानानि आक्रीडान् आरामान् कृत्रिमवनानि ॥ ९ ॥ १० ॥ देवेति। देव राजेत्यत्र देवेति सम्बुद्धिः। अश्रुमुखः अभूदिति शेषः ॥ ११ ॥ हर्म्यैरिति। हर्म्यादिभिरवेक्ष्येति तेषु स्थित्वावेक्ष्येत्यर्थः। हाहाकारकृताः कृतहाहाकाराः, बभूवु रिति शेषः ॥ १२ ॥ आयतैरिति। अव्यक्तमिति छेदः ॥ १३ ॥ नेति। आर्ततया रामप्रवासजनितार्तत्वेन हेतुना। अमित्राणामन्योन्यशत्रूणां विशेषं नोपलक्षये। मित्राणामन्योन्यमित्राणां च विशेषं नोपलक्षये, अत एवोदासीनजनस्य च विशेषं नोपलक्षय इति सम्बन्धः। अनयोः शत्रुत्वमनयोर्मित्रत्वमयमुदासीन इति बोधो

पेक्षया आर्ततया हेतुना विशेषं नोपलक्षये। कुत्रचित्पुरुषे मित्राणि च न स्वकार्य्याणि कुर्वन्ति नापि शत्रवोपीति भावः ॥ १४ ॥ अप्रहृष्टमनुष्येत्यादि श्लोकद्वयमेकान्वयम् । विनिश्वसितनिस्वना दीर्घनिश्वासस्वनयुक्ताः । यद्वा विनिश्वसितस्येव निस्वनो यस्याः सा। व्याधिविशेषोपरुद्धनिश्वास

अप्रहृष्टमनुष्या च दीननागतुरङ्गमा। आर्तस्वरपरिम्लाना विनिश्वसितनिस्वना ॥१५॥ निरानन्दा महाराज राम प्रव्राजनातुरा। कौसल्या पुत्रहीनेव अयोध्या प्रतिभाति मा॥१६॥ सूतस्य वचनं श्रुत्वा वाचा परमदीनया। बाष्पोपहतया राजा तं सूतमिदमब्रवीत् ॥१७॥ कैकेय्या विनियुक्तेन पापाभिजनभावया। मया न मन्त्रकुशलैर्वृद्धैः सह समर्थितम् ॥१८॥ न सुहृद्भिर्न चामात्यैर्मन्त्रयित्वा च नैगमैः। मयायमर्थः सम्मोहात् स्त्रीहेतोः सहसा कृतः ॥ १९ ॥

जनवदविरतहाहाकारयुक्तेत्यर्थः। सन्निहितत्वेन कौसल्यां दृष्टान्तीकरोति। पुत्रहीना पुत्रवियुक्ता। एतावता प्रबन्धेन रामस्य सर्वात्मकता ऋषिणाऽनुसंहितेति प्रबन्धगतवस्तुध्वनिः ॥ १५–१७ ॥ सुमन्त्रे पृष्टस्योत्तरमभिधाय ततोधिकं राज्यपुरुषक्षोभादिकं कथयति सति तन्ममाकृत्यकरणद्योतनार्थमिति बुद्ध्वाङ्गीकारेणोत्तरमाह–कैकेय्येति। विनियुक्तेन "प्रतिज्ञां प्रतिजानीष्व यदि त्वं कर्तुमिच्छसि। अथ तद्व्याहरिष्यामि यदभिप्रार्थितं मया॥" इत्युक्तक्रमेण विशेषेण नियोगं प्रापितेनेत्यर्थः। पापाभिजनभावया पापविषयजन्मभूम्यभिप्राययुक्तया। यद्वा पापो योऽभिजनभावः कुलक्रमागतोऽभिप्रायः स यस्यास्तया "कुलेप्यभिजनो जन्मभूमौ" इत्यमरः। "शंस मे जीव वा मा वा न मामुपहसिष्यसि" इत्युक्तवत्या मात्रा तुल्यस्वभावयेत्यर्थः। न समर्थितं न विचारितम् ॥ १८ ॥ न सुहृद्भिरिति। निगमः पुरं "पुरं वणिक्पथो वेदो निगमः" इत्यमरः। तत्र भवा नैगमाः तैः।

न ज्ञायते। उपकारापकारतदुभयनिवृत्तिभिर्हि तेषां भेदज्ञानमिति भावः ॥ १४ ॥ अप्रहृष्टेति। विनिश्वसितनिस्वना दीर्घनिश्वासस्वनयुक्ता ॥ १५–१७ ॥ सुमन्त्रः पृष्टस्योत्तरमभिधाय ममाकृत्यकरणद्योतनार्थं ततोऽधिकं कथयतीति बुद्ध्वा अङ्गीकारेणोत्तरमाह–कैकेय्येति। विनियुक्तेन, रामं प्रव्राजयेति शेषः। पापाभिजनभावया पापानां जन्मभूम्यभिप्रायया "कुलेष्वभिजनो जन्मभूमौ" इत्यमरः ॥ १८ ॥ नेति। नैगमैः वेदशास्त्रविद्भिः ॥ १९–२१ ॥

सत्य०–नैगमैः वेदविचारकुशलैः सह वर्तन्त इति सनैगमाः तैः। यद्वा सनैगमैः सनगरस्थैः। "नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि च" इति विश्वः। सुहृद्भिर्न सुहृद्भिरिव। "नञभावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे। ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः ॥" इति विश्वः। एवं च तैरिवामात्यैर्न च मन्त्रयित्वेत्यर्थः। न सुहृद्भिः शत्रुभिरपि अयमर्थः सहसा अकृतः। मया तु कृत इति न समासमङ्गीकृत्येत्थं व्याख्येयम्। (सनैगम इति पाठः) ॥ १९ ॥

अत्रापि नेत्यनुषज्यते । अयमर्थः रामप्रवासनरूपार्थः । सुहृद्भिर्मन्त्रयित्वा न कृतः अमात्यैश्च मन्त्रयित्वा न कृतः नैगमैश्च मन्त्रयित्वा न कृतः किन्तु स्त्रीहेतोः सम्मोहात् सहसा कृतः ॥ १९ ॥ भवितव्यतयेति । अथवा इदं व्यसनं यदृच्छया दृष्टहेतुं विना भवितव्यतया पापेन प्राप्तमिति



भवितव्यतया नूनमिदं वा व्यसनं महत् । कुलस्यास्य विनाशाय प्राप्तं सूत यदृच्छया ॥ २० ॥ सूत यद्यस्ति ते किञ्चिन्मया तु सुकृतं कृतम् । त्वं प्रापयाशु मां रामं प्राणाः संत्वरयन्ति माम् ॥ २१ ॥ यद्यद्यापि ममैवाज्ञा निवर्त्तयतु राघवम् । न शक्ष्यामि विना रामं मुहूर्त्तमपि जीवितुम् ॥२२॥ अथवापि महाबाहुर्गतो दूरं भविष्यति । मामेव रथमारोप्य शीघ्रं रामाय दर्शय ॥ २३ ॥ वृत्तदंष्ट्रो महेष्वासः क्वासौ लक्ष्मणपूर्वजः । यदि जीवामि साध्वेनं पश्येयं सीतया सह ॥ २४ ॥ लोहिताक्षं महाबाहुमामुक्तमणिकुण्डलम् । रामं यदि न पश्येयं गमिष्यामि यमक्षयम् ॥ २५ ॥ अतो नु किं दुःखतरं योहमिक्ष्वाकुनन्दनम् । इमामवस्थामापन्नो नेह पश्यामि राघवम् ॥ २६ ॥ हा राम रामानुज हा हा वैदेहि तपस्विनि । न मां जानीत दुःखेन म्रियमाणमनाथवत् ॥ २७ ॥ स तेन राजा दुःखेन भृशमर्पितचेतनः । आवगाढः सुदुष्पारं शोकसागरमब्रवीत् ॥ २८ ॥

सम्बन्धः ॥ २० ॥ सूतेति । ते तुभ्यं सुकृतमुपकारः । संत्वरयन्ति निर्जिगमिषन्तीत्यर्थः ॥ २१ ॥ यदीति । अद्यापि अस्यां विपद्यपि, ममैवाज्ञा यदि प्रवर्तते तदा राघवं निवर्तय । तुशब्दोऽवधारणे ॥ २२॥२३॥ वृत्तदंष्ट्रः इति । वृत्तदंष्ट्रः कुन्दकुड्मलाकारदंष्ट्रः । यदि पश्येयं जीवामीति सम्बन्धः ॥२४॥ लोहिताक्षमिति । आमुक्तमणिकुण्डलं धृतरत्नकुण्डलम् ॥ २५ ॥ अतो न्विति । न पश्यामीति यत् अतः अदर्शनात् दुःखतरं किं नु किमपि दुःखतरं नास्तीत्यर्थः ॥ २६ ॥ २७ ॥ स तेनेति । दुःखेन तप्तायःपिण्डस्थानीयेन अर्पितचेतनः व्याप्तचित्तः । अवगाढः प्रविष्टः ॥ २८ ॥

यदीति । निवर्तयतु, भवानिति शेषः ॥ २२ ॥ २३ ॥ वृत्तेति । वृत्तदंष्ट्रः कुन्दकुड्मलाकारदंष्ट्रः । लक्ष्मणपूर्वजः क्व असावयं मुमूर्षुः क्वेत्यनुकर्षः । मुमूर्षोर्मम रामस्य दर्शनं दुर्लभमित्यर्थः । यदि पश्येयं तदा जीवामि, जीवेयमित्यर्थः ॥ २४ ॥ २५ ॥ अत इति । न पश्यामीति यत् अतो दुःखतरं किन्नु ॥ २६ ॥ २७ ॥ स इति-। अवगाढः प्रविष्टः ॥ २८ ॥

अनुभूयमानस्वशोकस्यापरिमेयत्वात्तं सागरत्वेन रूपयति–रामशोकमहाभोग इत्यादिना। रामशोक एव महान् आभोगो वैपुल्यं यस्य स तथा। सीता विरहरूपं पारं गच्छतीति तथा। अश्रुवेगस्य प्रभवो मूलहेतुः। सागरो हि वर्षस्य निदानं महाग्रहः महाग्राहः। अनेन कुब्जावाक्यमेव रामप्रवासनमूल मिति राज्ञा ज्ञातमित्यवगम्यते। नृशंसायाः कैकेय्याः वर एव वेला जलवृद्धिर्यस्य। रामप्रव्राजनमेवायतमायामो दैर्घ्यं यस्य स तथा॥२९–३१॥सागरत्व

रामशोकमहाभोगः सीताविरहपारगः। श्वसितोर्मिमहावर्त्तो बाष्पफेनजलाविलः॥ २९॥ बाहुविक्षेपमीनौघो विक्रन्दितमहास्वनः। प्रकीर्णकेशशैवालः कैकेयीवडवामुखः॥३०॥ ममाश्रुवेगप्रभवः कुब्जावाक्यमहाग्रहः। वरवेलो नृशंसाया रामप्रव्राजनायतः॥३१॥ यस्मिन् बत निमग्नोऽहं कौसल्ये राघवं विना। दुस्तरो जीवता देवि मयायं शोकसागरः॥३२॥ अशोभनं योऽहमिहाद्य राघवं दिदृक्षमाणो न लभे सलक्ष्मणम्। इतीव राजा विलपन् महायशाः पपात तूर्णं शयने स मूर्च्छितः॥ ३३॥ इति विलपति पार्थिवे प्रणष्टे करुणतरं द्विगुणं च रामहेतोः। वचनमनुनिशम्य तस्य देवी भयमगमत् पुनरेव राममाता॥ ३४॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकोनषष्टितमः सर्गः॥ ५९॥

रूपणप्रयोजनमाह–यस्मिन्नित्यादिश्लोकेन॥३२॥ अशोभनमिति। न लभ इति यत् इदमशोभनमित्यन्वयः। कविनापि वक्तुमशक्यत्वादिवेत्युक्तम्॥३३॥ इतीति। इति उक्तप्रकारेण। रामहेतोः करुणतरं यथातथा द्विगुणं विलपति पार्थिवे प्रणष्टे मूर्च्छिते सति। देवी पुनरेव भयमगमत् पूर्वं रामस्य किं भविष्यतीति इदानीं भर्तुरपि किंभविष्यतीति भयमगमदित्यर्थः॥ ३४॥ इति श्रीगोविन्द० श्रीरामा० पीता० अयोध्या० एकोनषष्टितमः सर्गः॥५९॥

रामेत्यादि। सीताविरहपारगः सीताविरहरूपं पारं गच्छतीति तथा॥ २९॥ ३०॥ वरवेलः वर एव वेला यस्य सः॥ ३१–३४॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां एकोनषष्टितमः सर्गः॥ ५९॥

कतक०–वर एव वेला मर्यादा यस्य। यतो रामप्रव्राजनात्समुद्रात् कालकूटमिव जाता॥ ३१॥

तत इति। भूतोपसृष्टेव धरण्यां वेपमाना भूतगृहीतेव भूमौ पतित्वा विवर्तमानेत्यर्थः । गतसत्त्वेव गतप्राणेव। "द्रव्यासुव्यवसायेषु सत्वमस्त्री तु जन्तुषु" इत्यमरः ॥ १ ॥ २ ॥ निवर्तयेति। अथ तान्नानुगच्छामि तान्नानुगच्छामि चेत् ॥ ३ ॥ बाष्पवेगेति । सज्जमानया विक्लवया ॥ ४ ॥ त्यजेति। मोहं रामस्य किं भविष्यतीत्यज्ञानम् । सम्भ्रमं व्याकुलत्वम् । सन्तापं शोकजनितदेहसन्तापम्, रामो दुःखितो भविष्यतीति सन्तापमित्यर्थः । यस्माद्राघवः

ततो भूतोपसृष्टेव वेपमाना पुनःपुनः । धरण्यां गतसत्त्वेव कौसल्या सूतमब्रवीत् ॥ १ ॥ नय मां यत्र काकुत्स्थः सीता यत्र च लक्ष्मणः । तान् विना क्षणमप्यत्र जीवितुं नोत्सहे ह्यहम् ॥ २ ॥ निवर्तय रथं शीघ्रं दण्डकान्नय मामपि। अथ तान्नानुगच्छामि गमिष्यामि यमक्षयम् ॥३॥ बाष्पवेगोपहतया स वाचा सज्जमानया । इदमाश्वासयन् देवीं सूतः प्राञ्जलिरब्रवीत्॥४॥ त्यज शोकञ्च मोहञ्च सम्भ्रमं दुःखजं तथा। व्यवधूय च सन्तापं वने वत्स्यति राघवः ॥ ५ ॥ लक्ष्मणश्चापि रामस्य पादौ परिचरन् वने । आराधयति धर्मज्ञः परलोकं जितेन्द्रियः ॥ ६ ॥ विजनेऽपि वने सीता वासं प्राप्य गृहेष्विव । विस्रम्भं लभतेऽभीता रामे संन्यस्तमानसा ॥ ७ ॥ नास्या दैन्यं कृतं किञ्चित् सुसूक्ष्ममपि लक्ष्यते। उचितेव प्रवासानां वैदेही प्रतिभाति मा ॥ ८ ॥ नगरोपवनं गत्वा यथा स्म रमते पुरा। तथैव रमते सीता निर्जनेषु वनेष्वपि ॥ ९ ॥

सन्तापं व्यवधूय वत्स्यति तस्माच्छोकादिकं त्यजेत्यन्वयः ॥ ५ ॥ लक्ष्मण इति। परलोकमाराधयति परलोकं साधयति "राध साध संसिद्धौ" इति धातुः ॥६॥ विजन इति। लभतेभीतेत्यत्र अभीतेति पदच्छेदः। विस्रम्भं प्रणयम् "विस्रम्भः प्रणयेपि च "इत्यमरः ॥ ७ ॥ नास्या इति । कृतं वनवास कृतम् । किञ्चिदित्यस्य विवरणं सुसूक्ष्ममिति । प्रवासानामुचितेव प्रवासानां योग्येव । अभ्यस्तवनवासप्रयासेवेत्यर्थः ॥ ८ ॥ ९ ॥



तत इति । भूतोपसृष्टेव भूताविष्टेव । गतसत्त्वेव गतासुरिव धरण्यां स्थितेति शेषः ॥ १-३ ॥ बाष्पेति । वाचा उपलक्षिताम् । सः सूतः ॥ ४ ॥ ५ ॥ लक्ष्मण इति । परलोकमाराधयति परलोकं साधयति ॥ ६ ॥ विजन इति । अभीतेति पदच्छेदः । विस्रम्भं प्रणयम् ॥ ७-९ ॥

बालेति। क्रीडैकरसत्वाद्बालादृष्टान्तः, दुःखापरिज्ञाने वा बालादृष्टान्तः। अबालचन्द्रनिभाननेतिच्छेदः। रामे अधीनात्मा आसक्तचित्तेत्यर्थः। यद्वा रामारामे रामरूपारामे ॥ १० ॥ तद्गतमिति। यद्यस्मात्कारणात्। अस्याः सीतायाः हृदयम्। तद्गतं रामगतम्। जीवितं च तदधीनम्। तस्माद्वनं रामसहितम् अयोध्या भवेत्। रामहीना अयोध्यापि तथा वनं भवेदित्यर्थः ॥ ११ ॥ पथीत्यादिना सीताया उल्लास उच्यते। दृष्ट्वेति सर्वं

बालेव रमते सीताऽबालचन्द्रनिभानना। रामारामे ह्यधीनात्मा विजनेऽपि वने सती ॥ १० ॥ तद्गतं हृदयं ह्यस्या स्तदधीनं च जीवितम्। अयोध्यापि भवेत्तस्या रामहीना तथा वनम् ॥ ११ ॥ पथि पृच्छति वैदेही ग्रामांश्च नगराणि च। गतिं दृष्ट्वा नदीनाञ्च पादपान् विविधानपि ॥ १२ ॥ रामं वा लक्ष्मणं वापि पृष्ट्वा जानाति जानकी। अयोध्याक्रोशमात्रे तु विहारमिव संश्रिता ॥ १३ ॥ इदमेव स्मराम्यस्याः सहसैवोपजल्पितम्। कैकेयीसंश्रितं वाक्यं नेदानीं प्रतिभाति मा ॥ १४ ॥

त्रान्वेति। रामं लक्ष्मणं वा पृच्छति पृष्ट्वा जानाति च। अयोध्यायाः क्रोशमात्रे विहारं क्रीडां संश्रितेव स्थिता। यद्वा विहरन्त्यस्मिन्निति विहारः तम्। अधिकरणे घञ्। उद्यानमित्यर्थः ॥ १२ ॥ १३ ॥ अयोध्यानिर्गमकालिकं कैकेयीविषयकं सीतायाः परुषं वचनं कौसल्यायाः प्रियमिति वक्तुमुप क्रम्य तस्य वृद्धयोर्जीवननिराशाहेतुत्वं मत्वा नोचितमिदं वक्तुमित्यस्मरणव्याजेनोपारमतेत्याह—इदमेवेत्यादि। अस्याः सीतायाःसम्बन्धि इदमेव स्मरामि प्रस्तुतवृत्तान्तमेव स्मरामि। कैकेयीसंश्रितं कैकेयीमुद्दिश्य प्रवृत्तं सहसा उपजल्पितं हठात्सीतयोक्तं वाक्यम्। इदानीं मा मां प्रति न भातीति सूतः प्रमादात् इदं गोपनीयमित्यवधानाभावात् पर्युपस्थितं सीतावचनत्वेन वक्तुमुपक्रान्तं तद्वाक्यं ध्वंसयित्वा प्रच्याव्य देव्याः ह्लादनम् आह्लादनकरम् उपक्रान्तवाक्यवद्देव्यास्सन्तापाहेतुभूतं मधुरं वचनमब्रवीदिति पदयोजना। सहसा त्वरया। उपजल्पितम् अक्रमेणोक्तमित्यस्मरणहेतूपदर्शनम्। कैकेयी-संश्रितमित्युपक्रान्तांशः इदं स्मरामीति पुनः स्मरेति चोदनावकाशप्रदानम्, इदानीं भवदुःखदर्शनसमये मा मांप्रति न भातीति ध्वंसनप्रकारः ॥१४॥

बालेति। अबालचन्द्रनिभाननेति पदच्छेदः। बालेव रामे रमते ॥ १० ॥ तद्गतमिति। यतस्तस्या हृदयं तद्गतं रामगतम् तस्मात्कारणात् यथारामयुक्तं वनम प्ययोध्या तथा रामहीनाप्ययोध्या वनं भवेत् ॥ ११ ॥ परिपृच्छतीति। उद्यानमिव वनमाश्रिता वैदेही ग्रामादीनि दृष्ट्वा रामं वा लक्ष्मणं वा परिपृच्छति पृष्ट्वा जानातीति सम्बन्धः ॥ १२ ॥ १३ ॥ इदमेवेति। अस्याः सीतायाः सम्बन्धि, इदमेव प्रस्तुतवृत्तान्तजातमेव स्मरामि। कैकेयीसंश्रितं कैकेयीमुद्दिश्य प्रवृत्तं

ध्वंसनहेतुं कविरनुवदति—ध्वंसयित्वा तु तद्वाक्यं प्रमादात् पर्युपस्थितमिति । ह्लादनमित्यनेनोपस्थितवचनस्य तापहेतुत्वं द्योत्यते । ननु कैकेयीनिन्दा रूपत्वेऽपि देव्यास्तापकारणमवश्यं गोपनीयम् । कीदृशं तद्वाक्यं स्यात्किंचिदिदमित्युक्तौ तत्र किं प्रमाणं स्यात्? उच्यते—अवधेहि, एवंविधं हि कार्य वशात् गुप्तं कुत्रचित्कविर्न विवृणोति चेत् सर्वज्ञोपि तत्कथमिदमित्यभिदध्यात् । अत्रेमं च प्रमादादुपस्थितं ध्वंसितं वृद्धयोः सन्तापकरं कैकेयीविषयकं वृत्तान्तं कविरुत्तरत्र व्यक्तीकरिष्यति । युद्धकाण्डे सीतामधिकृत्य " विजगर्हेऽत्र कैकेयीं क्रोशन्ती कुररी यथा " इत्युक्त्वा कैकेयीविषयकं सीता

ध्वंसयित्वा तु तद्वाक्यं प्रमादात् पर्युपस्थितम् । ह्लादनं वचनं सूतो देव्या मधुरमब्रवीत् ॥ १५ ॥
अध्वना वातवेगेन सम्भ्रमेणातपेन च । न विगच्छति वैदेह्याश्चन्द्रांशुसदृशी प्रभा ॥ १६ ॥

वचनमेवाह "सकामा भव कैकेयि हतोऽयं कुलनन्दनः" इति । इदं सीताहृदयम् । कैकेय्याः राज्यलाभेनैवाभीष्टसिद्धेः । रामविवासनाभ्यर्थनस्येदमाकूतम् । रामविवासने हि तद्वियोगं क्षणमपि सोढुमक्षमा सीताप्येनमनुगच्छेत् सा च लोकोत्तरसुन्दरी केनाप्यपह्रियेत तस्यां च हृतायां रामः स्वतएव नश्येत् ततो मे राज्यं सुप्रतिष्ठितं स्यात्, अन्यथा लब्धेनापि राज्येन न किञ्चित्प्रयोजनम्, यतो रामगुणपरवशः सर्वोपि जनः तद्विधेयः स्यात् तस्माद्रामोपि विनाशाय विवासनीय इति । इदमेव सीतोक्तं रामोप्यारण्यकाण्डे 'सुप्तप्रमत्तकुपितानां वचनैर्भावज्ञानं दृष्टम्' इतिन्यायेन वक्ष्यति " कच्चित्सकामा कैकेयी सुखिता सा भविष्यति । या न तुष्यति राज्येन पुत्रार्थे दीर्घदर्शिनी ॥" अन्यत्रच " यदभिप्रेतमस्मासु प्रियं वरवृतं च यत् । कैकेय्यास्तत्सुसंवृत्तं क्षिप्रमद्यैव लक्ष्मण॥" इति । इममेवार्थं पूर्वसर्गान्ते सूचितवान्—"जानकी तु महाराज निश्वसन्ती तपस्विनी । भूतोपहतचित्तेव विष्ठिता विस्मिता स्थिता । अदृष्टपूर्वव्यसना राजपुत्री यशस्विनी । तेन दुःखेन रुदती नैव मां किञ्चिदब्रवीत् । उद्वीक्षमाणा भर्तारं मुखेन परिशुष्यता । मुमोच सहसा बाष्पं मां प्रयान्तमुदीक्ष्य सा ॥" इति । अत्र रोदनमवचनं परिशुष्यता मुखेन भर्तृवीक्षणं पुनः सुमन्त्रवीक्षणं बाष्पमोचनं च कुर्वन्त्या पूर्वोक्तार्थस्मरणम्, तत एव स्तब्धता, भर्तृमुखवीक्षणेन वक्तुमनर्हत्वज्ञानं बाष्पमोचनेन सूतवीक्षणेन च श्वश्रूं प्रत्यकथनीयत्वद्योतनं चेति व्यज्यते । तत्र सीतयोक्तं प्रामादिकमिति जुगोप । अत्र तु स्वस्यैव प्रमादोत्थं व्याजेन परिहृतवान् ॥ १५ ॥ अध्वनेति । अध्वना अध्वगमनेन ।

सहसा जल्पितं हठात्सीतयोक्तं वाक्यमिदानीं मा मां न प्रतिभातीति सूतः प्रमादात्पर्युपस्थितं तद्वाक्यं ध्वंसयित्वा देव्याः कौसल्यायाः ह्लादनं ह्लादकरम् वचन

सम्भ्रमेण व्याघ्रादिदर्शनजन्यव्याकुलत्वेन । न विगच्छति न विकरोति ॥ १६ ॥ सदृशमिति । शतपत्रस्य पद्मस्य । पूर्णचन्द्रोपमप्रभं पूर्णचन्द्रसदृश प्रभम् । वदान्यायाः वल्गुवाचः । "वदान्यो वल्गुवागपि" इत्यमरः । न विकम्पते न विचलति । स्वाभाविकप्रभां न जहातीत्यर्थः ॥ १७ ॥ अलक्तेति । अद्यापि वनगमनेऽपि ॥ १८ ॥ नूपुरेति । तद्रागात् भूषणविषयस्नेहात् । न्यस्तभूषणा चरणाद्यवयवेष्वर्पितभूषणा । वैदेही नूपुरोद्घुष्ट हेलेव नूपुरोत्पन्नस्वनानुकारिलीलायुक्तेव । खेलं सलीलं गच्छति । सीतायाः सर्वदा साभरणत्वं 'मन्ये साभरणा सुप्ता सीतास्मिन् शयनोत्तमे' इत्यु

सदृशं शतपत्रस्य पूर्णचन्द्रोपमप्रभम् । वदनं तद्वदान्याया वैदेह्या न विकम्पते ॥ १७ ॥ अलक्तरसरक्ताभा वलक्तरसवर्जितौ । अद्यापि चरणौ तस्याः पद्मकोशसमप्रभौ ॥ १८ ॥ नूपुरोद्घुष्टहेलेव खेलं गच्छति भामिनी । इदानीमपि वैदेही तद्रागान्न्यस्तभूषणा ॥ १९ ॥ गजं वा वीक्ष्य सिंहं वा व्याघ्रं वा वनमाश्रिता । नाहारयति सन्त्रासं बाहू रामस्य संश्रिता ॥ २० ॥

क्तत्र भरतवचनादवगम्यते । यद्वा तद्रागात् रामेण सह गमनकौतुकात् । न्यस्तभूषणा उत्सृष्टनूपुरापि नूपुरोत्कृष्टहेलेव नूपुरसञ्जितविलासेव (नूपुरोत्कृ ष्टहेलेवेति पाठः) ॥१९॥ गजमिति । गजं दर्शनमात्रेण भीषणमहाकायं वीक्ष्य न तु श्रुत्वा, सिंहं तमपि तृणाय मत्वा । व्याघ्रं वा जन्तुमात्रहिंसकतया सिंहादप्यतिक्रूरं सिंहदर्शनादपि व्याघ्रदर्शनमतिक्रूरमिति न तत्प्रकर्षः । वनमाश्रिता विनापि सिंहादीन् स्वतएव भयङ्करं प्रदेशमवगाहमानापि । नाहार यति नारोपयति । आहारयतेरारोपार्थकत्वात् भयभावनामात्रमपि न करोतीत्यर्थः । नाहारयति सन्त्रासं स्त्रीत्वप्रयुक्तस्वाभाविकभीतिरपि निर्गता । तत्र

मब्रवीदिति योजना ॥ १४-१६ ॥ वदान्यायाः वल्गुवाचः "वदान्यो वल्गुवागपि" इत्यमरः । न विकम्पते म्लानतां न यातीत्यर्थः ॥ १७ ॥ १८ ॥ नूपुरेति । नूपुरोद्घुष्टहेला हेला विलासः खेलं कान्तम् । तद्रागात् गमनाभिनिवेशात् । गमनाभिनिवेशस्य विरोधीनि भूषणान्यधारयन्त्यपि भूषणसमृद्धविलासेव खेलं गच्छती त्यर्थः । यद्वा इदानीमपि गमनवेलायामपि तद्रागाद्भूषणविषयस्नेहात् न्यस्तभूषणा चरणाद्यवयवेष्वर्पितभूषणा वैदेही नूपुरोद्घुष्टखेलेव नूपुरादिशिञ्जितविलास युक्तैव । इव एवार्थे । खेलं कान्तं यथा तथा गच्छतीत्यर्थः । अनेन सीतायाः सदा साभरणत्वमुक्तम् । 'मन्ये साभरणा सुप्ता' इति भरतवचनात् ॥ १९ ॥ २० ॥

स०- या खे आकाशे । अलं गच्छति हंसी संवेयं भामिनी नूपुरोत्कृष्टलीला । तद्रागेण रामस्नेहेन । अन्यस्तभूषणा अत्यक्तरामप्रियालङ्कारवती ॥ १९ ॥

हेतुमाह बाहू रामस्य संश्रिता । परिघान्तर्गताः किं बिभ्यतीति भावः ॥ २० ॥ न शोच्या इति । ते रामादयः । आत्मानः वयम् । इदं चरितं पितृवचन परिपालनरूपं चरित्रम् शाश्वतम् आचन्द्रार्कम् ॥ २१ ॥ विधूयेति । महर्षियाते महर्षिभिः प्राप्ते ॥ २२ ॥ तथापीत्युक्तं विवृणोति—सूतेनेत्यादिना । सुयुक्तवादिना सूतेन तथा निवार्यमाणापि सुतशोककर्शितत्वात् देवी प्रियेत्यादिकूजितान्न विरराम ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामा०

न शोच्यास्ते न चात्मानः शोच्यो नापि जनाधिपः । इदं हि चरितं लोके प्रतिष्ठास्यति शाश्वतम् ॥ २१ ॥ विधूय शोकं परिहृष्टमानसा महर्षियाते पथि सुव्यवस्थिताः । वनेरता वन्यफलाशनाः पितुः शुभां प्रतिज्ञां परिपालयन्ति ते ॥ २२ ॥ तथापि सूतेन सुयुक्तवादिना निवार्यमाणा सुतशोककर्शिता । न चैव देवी विरराम कूजितात् प्रियेति पुत्रेति च राघवेति च ॥२३॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदि० श्रीमदयोध्याकाण्डे षष्टितमः सर्गः ॥६०॥

वनं गते धर्मपरे रामे रमयतां वरे । कौसल्या रुदती स्वार्ता भर्तारमिदमब्रवीत् ॥ १ ॥ यद्यपि त्रिषु लोकेषु प्रथितं ते महद्यशः । सानुक्रोशो वदान्यश्च प्रियवादी च राघवः ॥ २ ॥ कथं नरवरश्रेष्ठ पुत्रौ तौ सह सीतया । दुःखितौ सुखसंवृद्धौ वने दुःखं सहिष्यतः ॥ ३ ॥

भूषणे० पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥ वनमिति । स्वार्ता सुतरामार्ता ॥ १ ॥ यद्यपीति । राघवः दशरथः । सानुक्रोशः वदान्यश्च प्रियवादी चेति ते महद्यशः त्रिषु लोकेषु प्रथितम् । यद्यपि तथापि अतिशयितापयशस्करं कृत्यं कृतमिति वाक्यशेषः । तथापि दुःखितौ मार्गे दुःखितौ तौ वने कथं दुःखं सहिष्यत इति वक्ष्यमाणेनान्वयो वा । यद्वा वार्द्धके नानाव्रतोपवासादिमहाप्रयासलब्धं ज्येष्ठमपि पुत्रमभिषेककाले त्यक्त्वापि प्रतिज्ञां निरूढवानिति ते महद्यशस्त्रिषु लोकेषु यद्यपि प्रथितं भवति । राघवश्च वदान्यतया दयया प्रियवचनशीलतया महां वाचा पूर्वं दत्तं राज्यं न त्यजामीतिवक्तुमक्षमतया च राज्यं दत्तवान् अतस्तस्यापि महद्यश इति युवयोरिदं युक्तमस्तु, तथापि तौ कथं दुःखं



इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां षष्टितमः सर्गः ॥ ६० ॥ वनमिति । स्वार्ता सुतरामार्ता ॥ १ ॥ यद्यपीति । राघवो दशरथः । सानुक्रोशः सदयः । वदान्यः बहुप्रदः । प्रियवादी चेति ते महद्यशः त्रिषु लोकेषु प्रथितं प्रसिद्धं यद्यपि तथापि ततोप्यतिशयितापयशस्करं कृत्यं

नेति । ते रामादयः । आत्मानो वयम् । इदं चरितं पितृवचनपरिपालनरूपम् ॥ २१ ॥ विधूयेति । महर्षियाते महर्षिभिर्याते प्राप्ते ॥ २२ ॥ २३ ॥

सहिष्यत इति योजना ॥ २ ॥ ३ ॥ सा नूनमिति । तरुणी आरब्धयौवना । श्यामा यौवनमध्यस्था । एतत्पदद्वयोपादानेनेषन्न्यूनयौवनमध्यं प्रातेत्यवगम्यते । ( पाठभेदः । श्यामा तरुणी यौवनमध्यस्था तरुणी नतु यौवनारम्भस्था तरुणीत्यर्थः ) ॥ ४ ॥ भुक्त्वाशनमिति । सूपदंशान्वितं

सा नूनं तरुणी श्यामा सुकुमारी सुखोचिता । कथमुष्णञ्च शीतञ्च मैथिली प्रसहिष्यते ॥ ४ ॥ भुक्त्वाशनं विशालाक्षी सूपदंशान्वितं शुभम् । वन्यं नैवारमाहारं कथं सीतोपभोक्ष्यते ॥ ५ ॥ गीतवादित्रनिर्घोषं श्रुत्वा शुभमनिन्दिता । कथं क्रव्यादसिंहानां शब्दं श्रोष्यत्यशोभनम् ॥ ६ ॥ महेन्द्रध्वजसङ्काशः क्वनु शेते महाभुजः । भुजं परिघसङ्काश मुपधाय महाबलः ॥ ७ ॥ पद्मवर्णं सुकेशान्तं पद्मनिश्वासमुत्तमम् । कदा द्रक्ष्यामि रामस्य वदनं पुष्करेक्षणम् ॥ ८ ॥ वज्रसारमयं नूनं हृदयं मे न संशयः । अपश्यन्त्या न तं यद्वै फलतीदं सहस्रधा ॥ ९ ॥ यत्त्वयाऽकरुणं कर्म व्यपोह्य मम बान्धवाः । निरस्ताः परिधावन्ति सुखार्हाः कृपणा वने ॥ १० ॥

शोभनव्यञ्जनसहितम् । नैवारं नीवारसम्बन्धिनम् ॥ ५ ॥ क्रव्यादाः मांसभक्षकाः ॥ ६ ॥ महेन्द्रध्वजसङ्काश इति । महेन्द्रध्वजोनाम—इन्द्रधनुः कदाचित् ध्वजाकारेण परमाभ्युदयनिमित्ततया प्रतिभातीत्याहुः ॥ ७ ॥ पद्मवर्णमिति । पद्मवर्णं पद्मपत्रवर्णम् । पद्मनिश्वासं पद्मगन्धिनिश्वासम् ॥ ८ ॥ वज्रसारमयमिति । न फलति न स्फुटति । " ञिफला विशरणे " इति धातुः ॥ ९ ॥ यत्त्वयेति । त्वया निरस्ताः मम बान्धवाः रामादयः । व्यपोह्य नगरं त्यक्त्वा वने परिधावन्तीति यत् एतत् अकरुणं कर्म, करुणाराहित्येन कृतं कर्मेत्यर्थः ॥ १० ॥

कृतमिति वाक्यशेषः । इत्यब्रवीदिति पूर्वेण सम्बन्धः ॥२॥३ ॥ सेति । तरुणी अतिक्रान्तकौमारावस्था । श्यामा यौवनमध्यस्था, एतत्पदद्वयोपादानेन किञ्चिन्न्यून यौवनमध्यं प्रातेत्यवगम्यते ॥ ४ ॥ भुक्त्वेति । सूपदंशान्वितं शोभनव्यञ्जनसमेतम् । नैवारं नीवारसम्बन्धिनम् ॥५—७॥ पद्मवर्णमिति । पद्मवर्णं पद्मदलवर्णम् । पद्मनिश्वासं पद्मगन्धिनिश्वासम् ॥ ८ ॥ ९ ॥ यत्त्वयेति । मम बान्धवाः रामादयः । व्यपोह्य राज्याद्भ्रंशयित्वा अनादृत्य वा त्वया निरस्ताः वने परिधावन्तीति यत् तदकरुणं कर्म शोचनीयं कर्मेत्यर्थः । करुणाराहित्येन त्वया कृतमिति भावः ॥ १० ॥

चतुर्दशवर्षानन्तरं रामो राज्यं प्राप्स्यतीत्याशङ्क्य परिहरति–यदीति । पञ्चदशे वर्षे राघवो यदि पुनरेष्यति तथापि राज्यं कोशश्च जह्यात् त्यजेत् । कुतः ? यस्मात् कारणात् भरतेनोपभुज्यते भरतेनोपभुक्ततया तेन पुनर्दत्तमपि राज्यं रामस्त्यजेदित्यर्थः । भरतो नोपलक्ष्यत इति

यदि पञ्चदशे वर्षे राघवः पुनरेष्यति । जह्याद्राज्यञ्च कोशञ्च भरतेनोपभुज्यते ॥ ११ ॥
भोजयन्ति किल श्राद्धे केचित् स्वानेव बान्धवान् । ततः पश्चात्समीक्षन्ते कृतकार्या द्विजर्षभान् ॥ १२ ॥
तत्र ये गुणवन्तश्च विद्वांसश्च द्विजातयः । न पश्चात्तेऽभिमन्यन्ते सुधामपि सुरोपमाः ॥ १३ ॥
ब्राह्मणेष्वपि तृप्तेषु पश्चाद्भोक्तुं द्विजर्षभाः । नाभ्युपैतुमलं प्राज्ञाः शृङ्गच्छेदमिवर्षभाः ॥ १४ ॥

पाठान्तरम् । राज्यं कोशं च भरतो जह्यात् इदं तु नोपलक्ष्यते यद्रामः पुनर्भरतदत्तं राज्यं प्रतिगृह्णीयादिति । यद्वा यदि राघवः पुनरेष्यति । तदा भरतः राज्यं कोशं च जह्यादिति नोपलक्ष्यते । करस्थराज्यत्यागस्यासम्भावितत्वादित्यर्थः । भरतो यदि भोक्ष्यत इति च पाठः ॥ ११ ॥ भरतेनोपभुक्ततया पुनर्दत्तमपि राज्यं रामो न भोक्ष्यत इत्यत्र दृष्टान्तमाह–भोजयन्तीत्यादिना । किलेति वार्तायाम् । लोके केचित् ब्राह्मणाः विद्यागुण वयोभ्यधिकेषु विप्रेषु विद्यमानेषु दक्षिणाविशेषप्रापणलोभेन स्वानेव बान्धवान् श्राद्धे भोजयन्ति । ततः पश्चात्तदनन्तरं कृतकार्याः कृतश्राद्धकार्य्याः सन्तः श्राद्धावसाने द्विजर्षभान् पूर्वभुक्तविप्रापेक्षया विद्यावृत्तवयोभिः श्रेष्ठान् समीक्षन्ते इष्टपङ्क्तौ भोजयितुमिच्छन्ति । तत्र तदानीं ये गुणवन्तः वृत्तवन्तो विद्वांसः विद्यावन्तः सुरोपमाः देववत्पूज्यतमाः वृद्धाः द्विजातयः ते पश्चादिष्टपङ्क्तौ सुधामपि अमृततुल्यान्नमपि नाभिमन्यन्ते नाद्रियन्ते ॥ १२ ॥ १३ ॥ ननु कुतो नाद्रियन्ते ब्राह्मणशेषभोजने शूद्रशेषवन्निषेधाभावादित्यत्राह–ब्राह्मणेष्वित्यादिना । तृप्तेष्वपि ब्राह्मणेषु पूर्वभुक्तानां ब्राह्मणत्वेपीत्यर्थः । प्राज्ञाः

भरतः राज्यं कोशं च जह्यादिति नोपलक्ष्यत इति सम्बन्धः॥११॥ भरतो राज्यं जह्याच्चेदपि रामस्तु न प्रतिगृह्णीयादिति सदृष्टान्तमाह–भोजयन्तीत्यादिश्लोकत्रयेण। केचित् श्राद्धकर्तारो ब्राह्मणाः द्विजर्षभान् द्विजश्रेष्ठान् निमन्त्र्य, तान् त्यक्त्वा अनिमन्त्रितान् स्वान् बान्धवानेव पूर्वं भोजयन्ति, ततः कृतकार्याः श्राद्धकर्तारः तान् निमन्त्रितान् द्विजर्षभान् पश्चाद्भोक्तुं समीक्षन्ते भोजयितुं विचारयन्ति किल, ये निमन्त्रिताः सुरोपमाः गुणवन्तः विद्वांसः द्विजातयः ते तत्र श्राद्धे सुधामपि सुधासदृश मपि पश्चादनिमन्त्रितबन्धुभोजनानन्तरं, नाभिमन्यन्ते भोक्तुं नेच्छन्ति । ब्राह्मणेषु बान्धवब्राह्मणेषु तृप्तेष्वपि प्राज्ञा निमन्त्रिता द्विजर्षभाः वृषभाः स्वशृङ्गच्छेदमिव पश्चाद्भोक्तुमभ्युपैतुं च । नालं न समर्थाः। अनिमन्त्रितबन्धुभोजनानन्तरं निमंत्रिता द्विजर्षभाः भोजनं न करिष्यन्तीति भावः। स्वधामपीति पाठे–स्वधां श्राद्धम्॥१२–१४॥

द्विजर्षभाः ऋषभाः शृङ्गच्छेदमिव निजावमानहेतुं पश्चाद्भोक्तुमिच्छाम् अभ्युपैतुम् नालम्, न क्षमन्त इत्यर्थः। यद्वा शृङ्गमग्रं शृङ्गेच्छेदो यस्य तत् शृङ्गच्छेदं छिन्नाग्रं तृणम्। यथा वृषभा वृषभान्तरजग्धाग्रं तृणं भोक्तुं नालम्, तद्वदित्यर्थः। शृङ्गच्छेदमिति वृषभभक्षिताग्रतृणनामेत्यप्याहुः॥१४॥ उक्तमर्थं

एवं कनीयसा भ्रात्रा भुक्तं राज्यं विशाम्पते। भ्राता ज्येष्ठो वरिष्ठश्च किमर्थं नावमंस्यते॥ १५॥
न परेणाहृतं भक्ष्यं व्याघ्रः खादितुमिच्छति। एवमेव नरव्याघ्रः परलीढं न मन्यते॥ १६॥
हविराज्यं पुरोडाशः कुशा यूपाश्च खादिराः। नैतानि यातयामानि कुर्वन्ति पुनरध्वरे॥ १७॥
तथा ह्यात्तमिदं राज्यं हृतसारां सुरामिव। नाभिमन्तुमलं रामो नष्टसोममिवाध्वरम्॥ १८॥

दार्ष्टान्तिके योजयति—एवमित्यादिना। एवं पूर्वोक्ताद्विजर्षभवत्। कनीयसा कनिष्ठेन। विशांपते हे प्रजानाथ। वरिष्ठः गुणैः श्रेष्ठः। किमर्थं नावमंस्यते कस्मै प्रयोजनाय न तिरस्करिष्यति। सर्वात्मना तिरस्करिष्यत्येवेत्यर्थः॥१५॥ न परेणेति। परेण अन्येन वृकगोमाय्वादिना आहृतं भक्षितशेषत्वेनानीतम्। परलीढं परेणास्वादितम्। परभुक्तशेषमिति यावत्। न मन्यते न बहुमन्यते॥१६॥ हविरिति। हविः चरुप्रमुखम्, पुरोडाशाः पिष्टादिविकाराः। खादिरा इत्येतत् पालाशादीनामुपलक्षणम्। यातयामानि परिभुक्तानि यागे विनियुक्तानीति यावत्। "जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्" इत्यमरः। अध्वरे यागान्तरे। पुनर्न कुर्वन्ति न विनियुञ्जते। "मन्त्राः कृष्णाजिनं दर्भाः" इत्याद्ययातयामत्वबोधकवचनेषु दर्भादिशब्दाः कुशादिव्यतिरिक्तपराः॥१७॥ तथेति। आत्तम् उपभुक्तपूर्वम्। हृतसारां गृहीतसारांशाम्। अभिमन्तुम् अभिलषितुम्। नष्टसोममिवाध्वरमिति अन्येन सोमपाने कृते सत्ररूपमध्वरं

एवमिति। एवं पूर्वोक्तद्विजर्षभवत्। किमर्थं नावमंस्यते, सर्वात्मना तिरस्करिष्यत्येवेत्यर्थः॥ १५॥ नेति। परेण वृकादिना, आशितं भक्षितशेषत्वेन स्थापितं परलीढं परेण आस्वादितम्, परभुक्तमिति यावत्॥ १६॥ हविरिति। हविः चरुप्रमुखम्। खादिरा इत्येतत् पालाशादीनामप्युपलक्षणम्। यातयामानि परिभुक्तानि, यागे विनियुक्तानीति यावत्। "जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्" इत्यमरः। अध्वरे यागान्तरे। पुनर्न कुर्वन्ति न विनियुञ्जते॥१७॥ तथेति।

१ सोमाभिवाध्वरम्। न चेमां धर्षणां रामः संगच्छेदित्यमर्षणः। दारयेन्मन्दरमपि स हि क्रुद्धः शितैः शरैः॥ त्वां तु नोत्सहते हन्तुं महात्मा पितृगौरवात्। ससोमार्कग्रहगणं नभस्ताराविचित्रितम्॥ पातयेद्यो दिवं क्रुद्धः सत्वान्न व्यतिवर्तते। प्रक्षोभयेद्दारयेद्वा महीं शैलशताचिताम्॥ इत्यधिकः पाठः।

तदक्षमतायां यथान्यो नाभिलषति तद्वदित्यर्थः ॥१८॥ नैवंविधमिति । वालधेः पुच्छस्य अवमर्शनम् अवमत्यस्पर्शनम् ॥ १९ ॥ ननु वयं किं कुर्मः पौरुषधर्मबलाभ्यां हीनः स्वयमेव गत इत्यत्राह—नैतस्येति । सहिताः मिलिताः लोकाः चतुर्दशभुवनस्थाः सुरासुरादयः । महामृधे महायुद्धे ।

नैवंविधमसत्कारं राघवो मर्षयिष्यति । बलवानिव शार्दूलो वालधेरवमर्शनम् ॥ १९ ॥ नैतस्य सहिता लोका भयं कुर्युर्महामृधे । अधर्मं त्विह धर्मात्मा लोकं धर्मेण योजयेत् ॥ २० ॥ नन्वसौ काञ्चनैर्बाणैर्महावीर्यो महा भुजः । युगान्त इव भूतानि सागरानपि निर्दहेत् ॥ २१ ॥ स तादृशः सिंहबलो वृषभाक्षो नरर्षभः । स्वयमेव हतः पित्रा जलजेनात्मजो यथा ॥ २२ ॥ द्विजातिचरितो धर्मः शास्त्रदृष्टः सनातनः । यदि ते धर्मनिरते त्वया पुत्रे विवासिते ॥ २३ ॥ गतिरेका पतिर्नार्या द्वितीया गतिरात्मजः । तृतीया ज्ञातयो राजंश्चतुर्थी नेह विद्यते ॥ २४ ॥

एतस्य रामस्य भयं न कुर्युः, भयं कर्तुं न शक्नुयुरित्यर्थः । किन्तु अधर्मम् अधर्ममार्गस्थं लोकं जनं धर्मेण योजयेत् । "चातुर्वर्ण्यञ्च लोकेऽस्मिन् स्वेस्वे धर्मे नियोक्ष्यति" इत्युक्तो रामः स्वयमधर्मं कथं कुर्यादित्यर्थः ॥ २० ॥ नन्विति । युगान्तः युगान्तकालः । भूतानि पञ्चमहाभूतानि ॥ २१ ॥ स तादृश इति । तादृशः अवाङ्मनसगोचरपराक्रमयुक्तः । जलजेन मत्स्येन । मत्स्यो ह्यात्मजानेव भक्षयतीति प्रसिद्धम् ॥ २२ ॥ इयता प्रबन्धेनोक्त मुपसंहरति—द्विजातिचरित इति । धर्मनिरते पुत्रे त्वया विवासिते सति । द्विजातिचरितः शिष्टत्रैवर्णिकाचरितः शास्त्रदृष्टः सनातनो धर्मः ते यदि अस्ति किमित्यर्थेऽव्ययमिदम् ॥ २३ ॥ एवं राजकृतानीत्या स्वहानिमाह—गतिरित्यादि । एका मुख्या, प्रथमेत्यर्थः । द्वितीया भर्त्रभावे गतिरित्यर्थः । ज्ञातयः पित्रादयः तृतीया भर्तृपुत्राभावे गतिरित्यर्थः । चतुर्थी स्वातन्त्र्यरूपा । तथाच स्मृतिः "पिता रक्षति कौमारे भर्ता रक्षति यौवने । वार्द्धके

आत्तम् उपभुक्तपूर्वम् । हृतसारां गृहीतसाराम् । अभिमन्तुम् अभिलषितुम् ॥ १८ ॥ नैवमिति । वालधेः पुच्छस्य । अभिमर्शनम् अवमत्यस्पर्शनम् ॥ १९ ॥ नैतस्येति । सहिताः सङ्घीभूय वर्तमानाः, लोकाः चतुर्दशभुवनस्थसुरासुरादयः । भयं न कुर्युः भयं कर्तुं न शक्नुयुः । तर्ह्येतादृशो रामः किमर्थमाक्रम्य राज्यं न स्वीकृतवानित्याशङ्क्य परिहरति—अधर्मं त्विति । अधर्मम् अधर्ममार्गस्थम् लोकं जनं धर्मेण योजयेत्, धर्मप्रवर्तको रामः राज्यापहरणरूपमधर्मं कथं कुर्यादिति भावः ॥ २० ॥ रामे अशक्तिशङ्का न कार्येत्याह—नन्वित्यादि श्लोकद्वयेन । युगान्तः युगान्तकालाग्निरिव । भूतानि पञ्चमहाभूतानि । सागरानपि निर्दहेत् ॥ २१ ॥ स इति । जलजेन मत्स्येन ॥ २२ ॥ द्विजातीति । धर्मनिरते पुत्रे त्वया विवासिते सति शास्त्रदृष्टः द्विजातिचरितः सनातनो धर्मः ते तव यदि स्यात् तद्विवासन युक्तः सोऽपि धर्मो न दृश्यत इति भावः । यद्वा नकारोऽत्राध्याहर्तव्यः । तेधर्मनिरत इत्यत्र अधर्मनिरत इति छेदः । शास्त्रदृष्टो द्विजातिचरितो राजर्षिभिराचरित

तनयो रक्षेन्न स्त्री स्वातन्त्र्यमर्हति ॥" इति ॥ २४ ॥ तत्रेति । तत्र तासु गतिषु त्वं भर्ता न भवसि, सपत्नीपरतन्त्रत्वात् । मे ज्ञातिरपि नास्ति । दूरस्थत्वादितिभावः । न वनं गन्तुमिच्छामि सभर्तृकत्वात् । निहता अस्मीति शेषः ॥ २५ ॥ रामानु०-तत्रेति । तत्र गतित्वेन परिगणितेषु त्वं मे नास्ति । अस्तीतिविभक्तिप्रतिरूपकमव्ययम् । मे नास्तीतिपाठः सम्यक् ॥ २५ ॥ न केवलमहमेका हता अन्येपीत्याह-हतमिति । राज्यं कोसलराज्यम् । राष्ट्राणि अन्यानि

तत्र त्वं चैव मे नास्ति रामश्च वनमाश्रितः । न वनं गन्तुमिच्छामि सर्वथा निहता त्वया ॥ २५ ॥ हतं त्वया राज्यमिदं सराष्ट्रं हतस्तथात्मा सह मन्त्रिभिश्च । हता सपुत्रास्मि हताश्च पौराः सुतश्च भार्या च तव प्रहृष्टौ ॥२६॥ इमां गिरं दारुणशब्दसंश्रितां निशम्य राजापि मुमोह दुःखितः । ततः स शोकं प्रविवेश पार्थिवः स्वदुष्कृतं चापि पुनस्तदा स्मरन् ॥ २७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमदयोध्याकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥ एवं तु क्रुद्धया राजा राममात्रा सशोकया । श्रावितः परुषं वाक्यं चिन्तयामास दुःखितः ॥ १ ॥ चिन्तयित्वा स च नृपो मुमोह व्याकुलेन्द्रियः । अथ दीर्घेण कालेन संज्ञामाप परन्तपः ॥ २ ॥ स संज्ञामुपलभ्यैव दीर्घमुष्णञ्च निश्वसन् । कौसल्यां पार्श्वतो दृष्ट्वा पुनश्चिन्तामुपागमत् ॥ ३ ॥

त्वन्मित्रपालितानि । सुतः भरतः । तत्रैव तव सुताभिमानात् । भार्या कैकेयी, तद्वचनकरणात् ॥२६॥ इमामिति । प्रविवेश तत्र मग्न इत्यर्थः । दुष्कृतं स्मरन् एतादृशदुःखस्य निदानभूतं किं कर्म पूर्वं कृतमिति स्मरन्नित्यर्थः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकषष्टितमः ॥ ६१ ॥ एवमिति । चिन्तयामास अनया सत्यमेव कथितम् मया चान्यैरकृतपूर्वं महदकृत्यं कृतं किमतः परं करोमीति चिन्तयामासेत्यर्थः ॥ १ ॥ २ ॥ स संज्ञामिति । पुनश्चिन्तामुपागमत् " अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते " इतिन्यायेन प्रियपुत्र स्सनातनो धर्मस्ते पुत्रे यदि न स्यात् तर्ह्यधर्मनिरते तस्मिन् त्वया विवासिते तद्युक्तं भवेत् न चैवमिति भावः ॥२३॥२४॥ तत्रेति । तत्र गतित्वे परिगणितेषु त्वं मे नास्ति ॥२५॥२६॥ इमामिति । स्वदुष्कृतम् अस्मरत् एतादृशदुःखस्य निदानभूतं किं दुष्कृतं पूर्वं कृतमिति सस्मारेत्यर्थः ॥२७॥ इति श्रीमहेश्वर० श्रीरामायण० अयोध्याकाण्डव्याख्यायां एकषष्टितमः सर्गः ॥ ६१ ॥ एवमिति । चिन्तयामास अनया कथितं सर्वं सत्यमेव । अन्यैरकृतपूर्वम् अकृत्यं मया कृतमिति हृदि विचारयामासेत्यर्थः ॥ १ ॥ २ ॥ स इति । पुनश्चिन्तामुपागमत् "अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते " इति न्यायेन प्रियपुत्रविश्लेषजं महद्दुःख

विश्लेषजं महद्दुःखमनुभवामि। एतद्धेतुभूतं किं कर्म कृतमिति पुनश्चिन्तां प्राप्तवानित्यर्थः॥३॥ तस्येति। दुष्कृतं कर्म मुनिकुमारवधरूपं कर्म प्रत्यभात् प्रतीतमभूत्। शब्दवेधिना शब्देन लक्ष्येण वेद्धुं शीलमस्यास्तीति शब्दवेधी, राजा बाणो वा॥४॥अमना इति। अमनाः अस्वस्थचित्तः, क्षुभितान्तः-

तस्य चिन्तयमानस्य प्रत्यभात् कर्म दुष्कृतम्। यदनेन कृतं पूर्वमज्ञानाच्छब्दवेधिना ॥ ४ ॥ अमनास्तेन शोकेन रामशोकेन च प्रभुः। द्वाभ्यामपि महाराजः शोकाभ्यामन्वतप्यत ॥ ५ ॥ दह्यमानः स शोकाभ्यां कौसल्यामाह भूपतिः। वेपमानोऽञ्जलिं कृत्वा प्रसादार्थमवाङ्मुखः ॥६॥ प्रसादये त्वां कौसल्ये रचितोऽयं मयाञ्जलिः। वत्सला चानृशंसा च त्वं हि नित्यं परेष्वपि ॥ ७ ॥ भर्ता तु खलु नारीणां गुणवान्निर्गुणोऽपि वा । धर्मं विमृशमानानां प्रत्यक्षं देवि दैवतम् ॥ ८ ॥ सा त्वं धर्मपरा नित्यं दृष्टलोकपरावरा। नार्हसे विप्रियं वक्तुं दुःखितापि सुदुःखितम् ॥ ९ ॥ तद्वाक्यं करुणं राज्ञः श्रुत्वा दीनस्य भाषितम्। कौसल्या व्यसृजद्बाष्पं प्रणालीव नवोदकम् ॥ १० ॥ सा मूर्ध्नि बध्वा रुदती राज्ञः पद्ममिवाञ्जलिम्। सम्भ्रमादब्रवीत् त्रस्ता त्वरमाणाक्षरं वचः ॥ ११ ॥

करण इत्यर्थः। तेन मुनिकुमारवधजनितेन ॥ ५ ॥ दह्यमान इति। अवाङ्मुखः अवनतमुखः स्वकृतकौसल्याविषयाप्रियजन्यया लज्जया भीतया चेति भावः ॥६॥ प्रसादय इति। परेष्वपि प्रतिकूलेष्वपि ॥७॥८॥ सा त्वमिति। दृष्टलोकपरावरा दृष्टौ लोके जने परावरौ उत्कर्षापकर्षौ यया सा तथोक्ता। सुदुःखितं मां प्रतीतिशेषः ॥ ९ ॥ तद्वाक्यमिति। प्रणाली प्रासादादिषु दार्वादिनिर्मितजलनिर्गममार्गः। "द्वयोः प्रणाली पयसः पदव्याम्" इत्यमरः। नवोदकं वर्षजलम् ॥ १० ॥ सेति। राज्ञः अञ्जलिं पद्ममिव मूर्ध्नि बध्वा पाणिभ्यां गृहीत्वा। मूर्ध्नि बद्धेत्यर्थः। त्रस्ता धर्माद्भीता ॥ ११ ॥

मनुभवामि, एतद्धेतुभूतं किं कर्म कृतमिति पुनश्चिन्तामापेत्यर्थः ॥ ३ ॥ तस्येति। प्रत्यभात् प्रतीतमभूत्। दुष्कृतं कर्म मुनिकुमारवधरूपं कर्म। शब्दवेधिना शब्देन लक्ष्येण वेद्धुं शीलमस्यास्तीति शब्दवेधी तेन ॥ ४ ॥ अमना इति। अमनाः क्षुभितान्तःकरणः। तेन मुनिकुमारवधरूपेण शोकेन ॥ ५ ॥ ६ ॥ प्रसादय इति। परेष्वपि प्रतिकूलेष्वपि ॥ ७ ॥ ८ ॥ सा त्वमिति। दृष्टलोकपरावरा दृष्टौ लोके जने परावरौ उत्कर्षापकर्षौ यया सा ॥ ९ ॥ तदिति। प्रणाली जलनिर्गममार्गः। नवोदकम् ॥ १० ॥ सेति। राज्ञः अञ्जलिं पद्ममिव मूर्ध्नि बद्ध्वा पाणिभ्यां गृहीत्वा, मूर्ध्निबद्धेत्यर्थः ॥ ११ ॥

प्रसीदेति । भूमौ निपतितास्मि प्रणतास्मीत्यर्थः । कुतः ? यतः ते याचिता त्वया याचिताहं हतास्मि अतः त्वयाहं हन्तव्या नहि संहर्तव्या नहि । एत दपराधशान्तये मम प्रहार एव त्वया कर्तव्यो न संहारो दास्या इवेत्यर्थः ॥ १२ ॥ नैषेति । श्लाघनीयेन स्वयंप्रसाद्येन पत्या लोके या संप्रसाद्यते सा

प्रसीद शिरसा याचे भूमौ निपतितास्मि ते । याचितास्मि हता देव हन्तव्याहं नहि त्वया ॥१२॥ नैषा हि सा स्त्री भवति श्लाघनीयेन धीमता । उभयोर्लोकयोर्वीर पत्या या सम्प्रसाद्यते ॥१३॥ जानामि धर्मं धर्मज्ञ त्वां जाने सत्य वादिनम् । पुत्रशोकार्तया तत्तु मया किमपि भाषितम् ॥१४॥ शोको नाशयते धैर्यं शोको नाशयते श्रुतम् । शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥ १५ ॥ शक्य आपतितः सोढुं प्रहारो रिपुहस्ततः । सोढुमापतितः शोकः सुसूक्ष्मोपि न शक्यते[1] ॥१६॥ वनवासाय रामस्य पञ्चरात्रोऽद्य गण्यते । यः शोकहतहर्षायाः पञ्चवर्षोपमो मम ॥१७॥

स्त्री उभयोर्लोकयोर्न भवति । ऐहिकामुष्मिकसुखभागिनी न भवतीत्यर्थः ॥ १३ ॥ जानामीति । किमपि अविचारितम् अनुचितं च तत् क्षन्तव्य मिति शेषः ॥ १४ ॥ १५ ॥ शक्य इति । आपतितः हठात्प्राप्तः ॥१६॥ शोकस्य नूतनत्वादशक्यत्वमाह—वनवासायेति । वनवासाय वने वासं कर्तुम् । प्रस्थितस्य रामस्य पञ्चरात्रोद्य गण्यते वने पञ्चरात्रो वासो गण्यते । अत्र केचित्—प्रथमायां रात्रौ तमसातीरे, द्वितीयरात्रौ जाह्नवीतीरे, तृतीयरात्रौ गङ्गा दक्षिणकूलस्थे वनस्पतौ, चतुर्थरात्रौ प्रयागे, पञ्चमरात्रौ यमुनातीरे । ततः सुमन्त्रः षष्ठदिवसे रामश्चित्रकूटं गमिष्यतीति वृत्तान्तं ज्ञात्वा तदहस्सायाह्न समये अयोध्यां प्राप्तवान् ततोऽत्र पञ्चरात्रगणनमुपपद्यत इत्यूचिरे । अन्ये त्वाहुः—गङ्गातरणपर्यन्तं वनवासत्वाभावात् ततःपरं वनस्पतिभरद्वाजाश्रम

प्रसीदेति । भूमौ निपतितास्मि प्रणतास्मि । यतः ते याचिता त्वया याचितास्मि, अतोऽहं न क्षन्तव्येति योजना ॥१२॥ कुत एवमत आह—नैषेति । उभयोर्लोकयो र्मध्ये । श्लाघनीयेन पत्या या संप्रसाद्यते प्रार्थ्यते नैषा स्त्री भवतीति योजना ॥१३॥ जानामीति । मया यत्किमपि भाषितं तत्क्षन्तव्यमिति शेषः ॥१४॥१५॥ शक्य इति । आपतितः हठात्प्राप्तः ॥ १६ ॥ वनवासायेति । पञ्चरात्रोऽद्य गण्यते—पञ्चरात्रः पञ्च रात्रयो गण्यन्ते, प्रथमा रात्रिस्तमसातीरे, द्वितीया गुहपुरे, तृतीया गङ्गादक्षिणकूलस्थवनस्पतिमूले, चतुर्थी प्रयागे, पञ्चमी यमुनावने, षष्ठी चित्रकूटे । षष्ठ्यामेव चायोध्यां सुमन्त्रः प्राप्तः, पूर्वमेवं पञ्च रात्रयो गण्यन्ते ॥१७॥१८॥

---

१ शक्यते । धर्मज्ञाः श्रुतिमन्तोऽपि च्छिन्नधर्मार्थसंशयाः । यतयो वीर मुह्यन्ति शोकसंमूढचेतसः ॥ इत्यधिकः पाठः ।

यमुनातीरचित्रकूटेषु चतस्रो रात्रयः चतुर्थ्यां सुमन्त्रस्य निर्गमः पञ्चम्यामिदं वचनमिति, एवंसत्यद्यपदस्वारस्यमिति । ननु सप्तपञ्चाशे सर्गे "भरद्वाजाभिगमनं प्रयागे च सहासनम् । आगिरेर्गमनं तेषां तत्रस्थैरभिलक्षितम् । अनुज्ञातः सुमन्त्रोथ योजयित्वा हयोत्तमान् ॥" इत्याद्यनन्तरं "ततः सायाह्नसमये

तं हि चिन्तयमानायाः शोकोऽयं हृदि वर्द्धते । नदीनामिव वेगेन समुद्रसलिलं महत् ॥ १८ ॥ एवं हि कथयन्त्यास्तु कौसल्यायाः शुभं वचः । मन्दरश्मिरभूत् सूर्यो रजनी चाभ्यवर्तत ॥ १९ ॥ तथा प्रसादितो वाक्यैर्देव्या कौसल्यया नृपः । शोकेन च समाक्रान्तो निद्राया वशमेयिवान् ॥ २० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

तृतीयेऽहनि सारथिः । अयोध्यां समनुप्राप्य निरानन्दां ददर्श ह ॥" इत्युक्त्या अयोध्यानिर्गमदिवसमारभ्य षष्ठेऽहनि किल रामस्य चित्रकूटप्रवेशः अथ चारेभ्यः सप्तमे अष्टमे वा सूतस्य तद्वृत्तान्तश्रवणं ततस्तृतीयेहनि सूतस्यायोध्याप्रवेशः तत्कथं पञ्चरात्रय इति परिगण्यते ? उच्यते-तृतीयेऽहनीत्यत्र अह्नस्तृतीयभाग इत्यर्थः । आगिरेर्गमनमित्यत्र गमनोद्योगमित्यर्थः । तथाच "गुहेन सार्धं तत्रैव स्थितोऽस्मि दिवसान् बहून् । आशया यदि मां रामः पुनःशब्दापयेदिति" इत्यत्र बहूनित्युक्त्या दिनत्रयं शृङ्गिबेरपुरे सूतस्य वासः । चतुर्थे दिने ऋजुमार्गेण दिवारात्रमागतचारमुखात् रामस्य चित्रकूटप्रवेशोद्योगं निशम्य तद्दिवससायंकाले वेगेनायोध्याप्रवेशः, तस्मिन् दिने कौसल्याह पञ्चरात्रोद्यगण्यत इति, अतो न किंचिदनुपपन्नम् ॥१७॥ तमिति। नदीवेगेन समुद्रवृद्धिरिति लोकवादः ॥ १८ ॥ एवमिति । कथयन्त्याः कथयन्त्यामित्यर्थः । शुभं वचः अतिदुःखितावस्थायामपि पत्यनुनयपरत्वात् वचसः शुभत्वम् ॥ १९ ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

एवमिति । कथयन्त्यां सत्यामित्यर्थः । शुभं वचः अतिदुःखितायामपि पत्यनुनयपरत्वाद्वचसः शुभत्वम् ॥ १९ ॥ २० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां द्विषष्टितमः सर्गः ॥ ६२ ॥

स०-समुद्रसलिलं समुद्रद्वारि विद्यमानम् । यथोक्तं गीताभाष्ये-" अस्ति चेषत्समुद्रेपि द्वारि " इत्यादि ॥ १८ ॥

प्रतिबुद्ध इत्यादि ॥ १ ॥ रामलक्ष्मणयोरिति । रामलक्ष्मणयोर्विवासात् उपसर्गः महोपद्रवः पुत्रशोकरूपः । आसुरम् असुरसम्बन्धि तमः राहुः ॥ २ ॥ सभार्य इति । विवक्षुः, अभूदितिशेषः। असितापाङ्गामित्यनेन निवृत्तक्रोधत्वमुक्तम् ॥३॥ स राजेति । रजनीमिति सप्तम्यर्थे द्वितीया । षष्ठीं रजनीं,प्राप्येति

प्रतिबुद्धो मुहूर्तेन शोकोपहतचेतनः । अथ राजा दशरथः स चिन्तामभ्यपद्यत ॥ १ ॥ रामलक्ष्मणयोश्चैव विवासाद्वासवोपमम् । आविवेशोपसर्गस्तं तमः सूर्यमिवासुरम् ॥ २ ॥ सभार्ये निर्गते रामे कौसल्यां कोसलेश्वरः । विवक्षुरसितापाङ्गां स्मृत्वा दुष्कृतमात्मनः ॥ ३ ॥ स राजा रजनीं षष्ठीं रामे प्रव्राजिते वनम् । अर्धरात्रे दशरथः संस्मरन् दुष्कृतं कृतम् ॥ ४ ॥ स राजा पुत्रशोकार्तः स्मृत्वा दुष्कृतमात्मनः । कौसल्यां पुत्रशोकार्तामिदं वचनमब्रवीत् ॥ ५ ॥ यदाचरति कल्याणि शुभं वा यदि वाऽशुभम् । तदेव लभते भद्रे कर्ता कर्मजमात्मनः ॥ ६ ॥ गुरुलाघवमर्थानामारम्भे कर्मणां फलम् । दोषं वा यो न जानाति स बाल इति होच्यते ॥ ७ ॥

शेषो वा । संस्मरन् स्थित इति शेषः ॥ ४ ॥ ५ ॥ स्मृतमात्मदुष्कृतं वक्तुं तदनुकूलां लोकस्थितिं दर्शयति—यदिति । कल्याणीति सान्त्वोक्तिः । लोके पुरुषः शुभं वा अशुभं वा यदाचरति परस्य कर्मजं परशुभाशुभप्रापकपुण्यापुण्यात्मककर्मजम्, तदेव शुभं वा अशुभं वा फलम् आत्मनोपि लभते । तथाच ऋषेः पुत्रवियोगकरणेन ममापि पुत्रवियोगः प्राप्त इति भावः ॥ ६ ॥ अन्यामपि लोकस्थितिमाह—गुरुलाघवमिति । कर्मणामारम्भे आरम्भसमये । अर्थानां फलानां गुरुलाघवं गुरुत्वं लघुत्वं च फलं दोषं वा फलं फलहानिं वा । यद्वा सुखरूपतां दुःखरूपतां वा । यो न जानाति सः बालः अज्ञ इत्युच्यते । अल्पफलकं बहुकर्मनिष्फलं च कर्मारभमाणो बुद्धिहीनः बहुफलकमल्पं कर्म सफलं कर्म चारभमाणः सुबुद्धिरित्यर्थः । तथाचात्मविनोद

॥ १ ॥ रामेति । रामलक्ष्मणयोर्विवासादुपसर्गः तं विवेश, पुत्रशोकरूपमहोपद्रवः दशरथं विवेशेत्यर्थः । आसुरं तमः राहुः ॥ २ ॥ सभार्य इति । विवक्षुः अभूदिति शेषः ॥ ३ ॥ स इति । षष्ठीं षष्ठ्यामित्यर्थः । संस्मरन् स्थित इति शेषः ॥ ४ ॥ ५ ॥ यदिति । तदेव कर्मजं दोषकर्मोत्पन्नं फलम् ॥ ६ ॥ गुर्विति । कर्मणामारम्भे समारम्भसमये । अर्थानां फलानां गुरुलाघवं गुरुत्वं लघुत्वं च, तेषामेवार्थानां फलं सुखरूपत्वम् । दोषं वा दुःखत्वं च यो न विजानाति

स०—गुरु गौरवम् । अर्थानां पुरुषार्थसाधकानाम् । कर्मणामारम्भे फलं प्रति साधनेषु गौरवं लाघवं च तथा दोषम् । वाशब्दाद्गुणसंग्रहः । अर्थानां साधनानामिति वा ॥ ७ ॥

रूपाल्पफलं पुत्रवियोगरूपमहाफलहानिकरं मृगयाकर्म कुर्वन्नहमज्ञ एवास्मीति भावः ॥ ७ ॥ फलतारतम्यविचारमन्तरेण कर्मणि प्रवृत्तस्योक्तं बालिशत्वं दृष्टान्तमुखेन विवृणोति—कश्चिदिति । लोके कश्चित्पुरुषः पुष्पं दृष्ट्वा फले गृध्नुः साभिलाषः सन् अधिकवर्णमहापुष्पवत्त्वात् तदनुगुणमहाफलं

कश्चिदाम्रवणं छित्त्वा पलाशांश्च निषिञ्चति । पुष्पं दृष्ट्वा फले गृध्नुः स शोचति फलागमे ॥ ८ ॥ अविज्ञाय फलं यो हि कर्मत्वेवानुधावति । स शोचेत् फलवेलायां यथा किंशुकसेचकः ॥ ९ ॥ सोऽहमाम्रवणं छित्त्वा पलाशांश्च न्यषेचयम् । रामं फलागमे त्यक्त्वा पश्चाच्छोचामि दुर्मतिः ॥ १० ॥ लब्धशब्देन कौसल्ये कुमारेण धनुष्मता । कुमारः शब्दवेधीति मया पापमिदं कृतम् ॥ ११ ॥

भविष्यतीति साभिलाष इत्यर्थः । आम्रवणं चूतवनम् । अल्पनिर्वर्णपुष्पकम् । छित्त्वा पलाशोपरोधपरिहारार्थं छित्त्वा । पलाशांश्च किंशुकानेव निषिञ्चति जलसेचनादिना पोषयति सः फलागमे फलप्राप्तिकाले सति । अनुपभोग्यफलदर्शनात् शोचति ॥ ८ ॥ दृष्टान्तोक्तं दार्ष्टान्तिके दर्शयति—अविज्ञायेति । भाविफलमविज्ञाय कर्मत्वेवानुधावति कर्मैवानुसरति तदनुकूलहिंसां तु न पश्यतीत्यर्थः ॥ ९ ॥ एवं सदृष्टान्तमुक्तस्य प्रकृतोपयोगं दर्शयति—सोहमिति । आम्रवणच्छेदनपूर्वकपलाशसेचकतुल्योहमित्यर्थः । आम्रवणं छित्त्वेत्यनेन अभिषेकविघातपूर्वकरामविवासनं लक्ष्यते । पलाशांश्च न्यषेचयमित्यनेन कैकेयीप्रियकरणं लक्ष्यते ॥ १० ॥ एतद्दुःखानुभवस्य निदानं वक्तुमुपक्रमते—लब्धशब्देनेति । कुमारः शब्दवेधीति लब्ध

स बाल इत्युच्यते ॥ ७ ॥ बालिशत्वमेव दृष्टान्तमुखेनाह—कश्चिदित्यादिना । आम्रवणं चूतवनं छित्त्वा सूक्ष्मतरपुष्पं चूतवनाविसूक्ष्मतरफलमेव जनयेदिति भ्रान्त्या छित्त्वेत्यर्थः । पुष्पं दृष्ट्वा वर्णेन आपातरमणीयं पृथुतरं पुष्पं दृष्ट्वा । फलेगृध्नुः एतदनुरूपं महत्फलं भविष्यतीति फललिप्सुस्सन् । पलाशान्निषिञ्चति पलाशतरुरोपणं कृत्वा तेषां जलं निषिञ्चतीत्यर्थः । स फलागमे अनुभोगप्राप्तिसमये अनुशोचति पश्चात्तप्यति स्वोत्प्रेक्षितफलाभावादिति भावः ॥ ८ ॥ अविज्ञायेति । यः फलं भाविफलम् अविज्ञाय अविचार्य, कर्मत्वेव कर्मैव तु अनुधावति अनुतिष्ठति । यः फलवेलायां फलानुभवकाले शोचेत् तप्येदित्यर्थः ॥ ९ ॥ सामान्येनोक्तमर्थं स्वात्मन्यविचार्यकारिणि विशेषेण योजयति—सोऽहमिति । आम्रवणशब्देन शुभकर्मोपलक्ष्यते, पलाशशब्देनाशुभकर्म, आम्रवणं छित्त्वा रामाभिषेकरूपं शुभकर्म त्यक्त्वेत्यर्थः । पलाशांश्च न्यषेचयम् दुःखरूपमागामिफलमनपेक्ष्य कैकेयीप्रियकरणरूपमशुभं कर्माचरम्, तस्याशुभकर्मणः फलागमे फलानुभवकाले रामं त्यक्त्वा अशुभकर्मफलत्वेन रामवियोगं प्राप्य पश्चाच्छोचामि, रामत्यागरूपफलमनुभूय शोचामीत्यर्थः ॥ १० ॥ एतद्दुःखानुभवस्य निदानं वक्तुमुपक्रमते—

शब्देन प्राप्तख्यातिना मया। इदं वक्ष्यमाणं पापं मुनिकुमारवधरूपं कर्म कृतमितिसम्बन्धः। यद्वा लब्धशब्देन लब्धगजतुल्यमुनिपुत्रशब्देन मया शब्द वेधी कुमार इत्यभिमानेन इदं वक्ष्यमाणं मुनिकुमारवधरूपं पापं कृतम् ॥ ११ ॥ शुभं वा अशुभं वा पुरुषकृतं कर्म लोकान्तरे जन्मान्तरे वा फलाय

तदिदं मेऽनुसंप्राप्तं देवि दुःखं स्वयंकृतम्। सम्मोहादिह बालेन यथा स्याद्भक्षितं विषम् ॥ १२ ॥ यथान्यः पुरुषः कश्चित् पलाशैर्मोहितो भवेत्। एवं ममाप्यविज्ञातं शब्दवेध्यमयं फलम् ॥ १३ ॥ देव्यनूढा त्वमभवो युवराजो भवाम्यहम्। ततः प्रावृडनुप्राप्ता मदकामविवर्धनी ॥ १४ ॥ उपास्य हि रसान् भौमांस्तप्त्वा च जगदंशुभिः। परेताचरितां भीमां रविराविशते दिशम् ॥ १५ ॥

भवेत् मत्कृतकर्मणस्त्वत्युत्कटत्वादिहैव तत्फलं प्राप्तमित्याह—तदिदमिति। इह लोके बालेन संमोहात् भक्षितं विषं यथा दुःखरूपं स्यात्तथैव स्वयं कृतम् तदिदं दुष्कृतं मे दुःखरूपम् अनुसंप्राप्तं जातमित्यर्थः ॥ १२ ॥ उक्तमर्थं संग्रहेण दर्शयन्नुपसंहरति—यथान्य इत्यादिना। अन्यः प्राकृतः कश्चित् पलाशैः पलाशपुष्पैः। "फले लुक्"। यथा मोहितो भवेत् यादृशं पुष्पं तादृशं फलं भविष्यतीति मोहं प्राप्तो भवेत्। एवं ममापि मयापि शब्दो वेध्यो लक्ष्यं यस्य स शब्दवेध्यः शरः शब्दवेध्यमयं शब्दवेध्यविकारभूतं तद्धेतुकमित्यर्थः। फलमविज्ञातं शब्दवेधित्वख्यातिमात्रमेव जानता मया भाव्यनर्थफलं न विज्ञातमित्यर्थः ॥ १३ ॥ एतादृशशब्दवेधनं कदा प्राप्तमित्याकाङ्क्षायामाह–देवीत्यादिना। अनूढा अकृतविवाहा। युवत्वे सति राजा युव राजः भवामि अभवम्। प्रावृट् वर्षाकालः ॥ १४ ॥ उपास्येति। उपास्य गृहीत्वा। रसान् जलानि। जगद्भूमिम्। परेताचरितां प्रेताचरिताम् अतएव भीमां

लब्धशब्देनेत्यादिना। कुमारः शब्दवेधीति लब्धशब्देन प्राप्तख्यातिना मया इदं वक्ष्यमाणं पापं मुनिकुमारवधरूपं कर्म कृतमिति सम्बन्धः ॥ ११ ॥ १२ ॥ यथेति। पलाशैः पलाशपुष्पैः। यथान्यः कश्चित् मोहितो भवेत् यादृशं पुष्पं तादृशं फलं भविष्यतीति मोहं प्राप्तो भवेत्; एवं मयापि शब्दवेध्यमयं शब्दो वेध्यं लक्ष्यं शब्दवेध्यं तन्मयं शब्दवेध्यविकारं शब्दलक्ष्यहेतुकमित्यर्थः। शब्दवेद्यमयमिति पाठे–शब्दस्य वेद्यं वेदनं तद्धेतुकं शब्दवेद्यमयं फलमवि ज्ञातम्। एतदुक्तं भवति–यथा कश्चित्पुरुषः किंशुकस्य शोभनानि पुष्पाणि दृष्ट्वा मोहितः फलान्यप्येवमेव शोभनानि भवेयुरिति बुद्ध्या फललोभेन तं वर्द्धयन् तस्य निरुपयोगं फलं न विज्ञातवान् एवमहं च शब्दवेध्यस्य लोकविख्यातिकरं यशोतिशयं दृष्ट्वा अस्य फलमप्येवमेव लोकपूज्यतमामिति मत्वा तच्छब्दवेधनं मुहुरभ्यस्यन् तस्याशुभं फलं न विचारितवानिति ॥ १३ ॥ एतादृशशब्दवेधनं कदा प्राप्तमित्याकाङ्क्षायामाह–देवीति। अनूढा अमौढेत्यर्थः ॥ १४ ॥ उपास्य सेवित्वा।

दिशं दक्षिणामित्यर्थः । आविशते आविशते स्म ॥ १५ ॥ उष्णमिति । स्निग्धाः शीतलाः । भेकाः मण्डूकाः । सारङ्गा हरिणाश्चातका वा ॥ १६ ॥ क्लिन्नपक्षोत्तरा इति । क्लिन्नपक्षोत्तराः सिक्तपक्षोपरिभागाः । अतएव स्नाता इव स्थिताः । वृष्टिवातावधूताग्रान् वृष्टिवाताभ्यां कम्पिताग्रानपि पादपान् ।

उष्णमन्तर्दधे सद्यः स्निग्धा ददृशिरे घनाः । ततो जहृषिरे सर्वे भेकसारङ्गबर्हिणः ॥ १६ ॥ क्लिन्नपक्षोत्तराः स्नाताः कृच्छ्रादिव पतत्रिणः । वृष्टिवातावधूताग्रान् पादपानभिपेदिरे ॥ १७ ॥ पतितेनाम्भसा च्छन्नः पतमानेन चासकृत् । आबभौ मत्तसारङ्गस्तोयराशिरिवाचलः ॥ १८ ॥ पाण्डुरारुणवर्णानि स्रोतांसि विमलान्यपि । सुस्रुवुर्गिरिधातुभ्यः सभस्मानि भुजङ्गवत् ॥ १९ ॥ तस्मिन्नतिसुखे काले धनुष्मानिषुमान् रथी । व्यायामकृतसङ्कल्पः सरयूमन्वगां नदीम् ॥ २० ॥ निपाने महिषं रात्रौ गजं वाभ्यागतं नदीम् । अन्यं वा श्वापदं कञ्चिज्जिघांसुरजितेन्द्रियः ॥ २१ ॥

कृच्छ्रात् क्लिन्नपक्षत्वेन यत्नात् अभिपेदिरे आरूढाः ॥ १७ ॥ पतितेनेति । पतितेन पतमानेन च निरन्तरेणेत्यर्थः । अम्भसा वर्षजलेन छन्नः मत्तसारङ्गः मत्तगजः । "सारङ्गो हरिणे भृङ्गे चातके शबले गजे" इति निघण्टुः । अचलो गिरिः । अचलो निश्चलः निस्तरङ्गः तोयराशिः समुद्र इवाबभौ । अचलपदस्यावृत्त्या एकस्य गिरिपदस्य विशेष्यत्वम्, अन्यस्य तोयराशिविशेषणत्वमिति ध्येयम् ॥ १८ ॥ पाण्डुरारुणवर्णानीति । गिरिधातुभ्यो हेतुभ्यः विमलान्यपि स्रोतांसि पाण्डुरारुणवर्णानि पाण्डुरधातुसंयोगात् पाण्डुरवर्णानि अरुणधातुसंयोगात् अरुणवर्णानि । सभस्मानि दावानलभस्मसहितानि । भुजङ्गवत् नानावर्णयुक्तसर्पा इव कुटिलानि सुस्रुवुः ॥ १९ ॥ तस्मिन्नित्यादिश्लोकद्वयमेकं वाक्यम् । व्यायामकृतसङ्कल्पः मृगयाविहारे रसान् जलानि । परेताचरितां दिशं दक्षिणां दिशम्, दक्षिणायनमित्यर्थः ॥ १५ ॥ उष्णमिति । भेका मण्डूकाः । सारङ्गाः हरिणाः चातका वा ॥ १६ ॥ क्लिन्नपक्षेति । क्लिन्नपक्षोत्तराः सिक्तपक्षोपरिभागाः, अत एव स्नाता इव कृच्छ्रात् यत्नात् ॥ १७ ॥ पतितेनेति । मत्तसारङ्गः मत्तगजः ॥ १८ ॥ पाण्डुरेति । पाण्डुरधातुसंयोगात् पाण्डुरवर्णानि, अरुणधातुसंयोगादरुणवर्णानि । सभस्मानि दवानलकृतभस्मसहितानि । भुजङ्गवत् नानावर्णयुक्तसर्पा इव । गिरिधातुभ्य इति हेतौ पञ्चमी ॥ १९ ॥ तस्मिन्नित्यादिश्लोकद्वयमेकं वाक्यम् । व्यायामकृतसङ्कल्पः मृगयाविहारकृतसङ्कल्प इत्यर्थः ॥ २० ॥ निपाने निपीयतेऽस्मिन्निति निपानं तस्मिन् ।

स०—कृच्छ्रात् कृच्छ्रव्रतमुद्दिश्य स्नाता इव विद्यमानाः ॥ १७ ॥

१ भुजङ्गवत् । आकुलारुणतोयानि स्रोतांसि विमलान्यपि । उन्मार्गजलवाहीनि बभूवुर्जलदागमे ॥ २ रजितेन्द्रियः । तस्मिंस्तत्राहमेकान्ते रात्रौ विवृतकार्मुकः । तत्राहं संवृतं वन्यं हतवांस्तीरमागतम् ॥ अन्यं चापि मृगं हिंस्रं शब्दं श्रुत्वाभ्युपागतम् ॥ इत्यधिकः पाठः ।

कृतसङ्कल्प इत्यर्थः। निपीयते अस्मिन्निति निपानम् नद्यवतारस्थलं तस्मिन्। श्वापदं व्याघ्रादिदुष्टमृगम् ॥ २० ॥ २१ ॥ अथान्धकार इति। पूर्यत इति शत्रन्तत्वमार्षम् ॥ २२ ॥ ततोऽहमिति। गजप्रेप्सुः गजरूपवेध्यं प्राप्तुमिच्छुः, हननेच्छुरित्यर्थः। शब्दंप्रति शब्दं लक्ष्यं कृत्वा।

अथान्धकारे त्वश्रौषं जले कुम्भस्य पूर्यतः। अचक्षुर्विषये घोषं वारणस्येव नर्दतः ॥ २२ ॥ ततोऽहं शरमुद्धृत्य दीप्तमाशीविषोपमम्। शब्दं प्रति गजप्रेप्सुरभिलक्ष्य त्वपातयम् ॥ २३ ॥ अमुञ्चं निशितं बाणमहमाशीविषोपमम्। तत्र वागुषसि व्यक्ता प्रादुरासीद्वनौकसः। हाहेति पततस्तोये बाणाभिहतमर्मणः ॥ २४ ॥ तस्मिन्निपतिते बाणे वागभूत्तत्र मानुषी। कथमस्मद्विधे शस्त्रं निपतेत्तु तपस्विनि ॥ २५ ॥ प्रविविक्तां नदीं रात्रावुदाहारोऽहमागतः। इषुणाभिहतः केन कस्य वा किं कृतं मया ॥ २६ ॥ ऋषेर्हि न्यस्तदण्डस्य वने वन्येन जीवतः। कथं नु शस्त्रेण वधो मद्विधस्य विधीयते ॥ २७ ॥ जटाभारधरस्यैव वल्कलाजिनवाससः। को वधेन ममार्थी स्यात् किं वास्यापकृतं मया ॥ २८ ॥ एवं निष्फलमारब्धं केवलानर्थसंहितम्। न कश्चित् साधु मन्येत यथैव गुरुतल्पगम् ॥ २९ ॥

अभिलक्ष्य शब्दकर्तृभूतो गज एतावन्मात्रे तिष्ठतीति लक्षीकृत्येत्यर्थः, शरमपातयमितिसम्बन्धः ॥ २३ ॥ अमुञ्चमिति। यत्र बाणममुञ्चं तत्र वनौकसः वनम् ओकः स्थानं यस्य तस्य, तपस्विन इतियावत्। व्यक्ता वाक् प्रादुरासीदिति सम्बन्धः ॥ २४ ॥ विशिष्यवागुदितेत्याह—तस्मिन्नित्यादि अस्मद्विधे अजातशत्रौ। प्रविविक्तां प्रकर्षेण निर्जनाम्। रात्रौ अपररात्रौ। उदकमाहारयतीत्युदाहारः "मन्थौदन—" इत्यादिना उदकशब्दस्योदादेशः। यद्यपि हारशब्दे परे उदादेशो विहितः तथापि "एकदेशविकृतमनन्यवद्भवति" इति दीर्घः छान्दसो वा। किंकृतं किमनिष्टं कृतम् ॥ २५ ॥ २६ ॥ न्यस्तदण्डस्य उपरतवाङ्मनःकायसम्बन्धिपरहिंसस्य। "दण्डोऽस्त्री शासने राज्ञां हिंसायां दमसैन्ययोः" इतिविश्वः। अर्थी प्रयोजनवान् ॥ २७ ॥ २८ ॥ गुरु

अवतीर्य जलपानयोग्यप्रदेश इति यावत्। श्वापदं व्याघ्रादिकम् ॥ २१ ॥ अथेति। पूर्यतः शत्रन्ततवमार्षम् ॥ २२ ॥ तत इति। गजप्रेप्सुः गजं प्राप्तुमिच्छुः हननेच्छुरित्यर्थः। शब्दं प्रति शब्दं लक्ष्यम् कृत्वा अभिलक्ष्य, लक्ष्यं गजमभिमुखीभूय शरमपातयमिति सम्बन्धः ॥ २३ ॥ अमुञ्चमिति। यत्र बाणममुञ्चं तत्र वनौकसस्तपस्विनः। व्यक्ता वाक् प्रादुरासीदिति सम्बन्धः ॥ २४ ॥ कथमिति। अस्मद्विधे अजातशत्रौ ॥ २५ ॥ प्रविविक्तां निर्जनाम्। अपररात्रौ उदकमाहरतीत्युदाहारः ॥ २६ ॥ न्यस्तण्डस्य त्यक्तपरपीडस्य ॥ २७ ॥ २८ ॥ एवमिति। गुरुतल्पगं गुरुदारगम् ॥ २९–३१ ॥

तल्पगं गुरुदारगम् । "तल्पं शय्याट्टदारेषु" इत्यमरः ॥ २९–३१ ॥ हत इत्येतन्मातापितरावित्यत्र वचनविपरिणामेन योजनीयम् । सर्वे निहता इत्युक्तिर्मातापितृजीवनहेतुभूतस्य स्वस्य वधात् । अकृतात्मना अनिश्चितबुद्धिना । इति वागभूदिति पूर्वेणान्वयः ॥३२॥ तामिति । सशरं चापमित्यनेन

नाहं तथानुशोचामि जीवितक्षयमात्मनः । मातरं पितरं चोभावनुशोचामि मद्वधे ॥ ३० ॥ तदेतन्मिथुनं वृद्धं चिरकालभृतं मया । मयि पञ्चत्वमापन्ने कां वृत्तिं वर्तयिष्यति ॥ ३१ ॥ वृद्धौ च मातापितरावहं चैकेषुणा हतः । केन स्म निहताः सर्वे सुबालेनाकृतात्मना ॥ ३२ ॥ तां गिरं करुणां श्रुत्वा मम धर्मानुकांक्षिणः । कराभ्यां सशरं चापं व्यथितस्यापतद्भुवि ॥ ३३ ॥ तस्याहं करुणं श्रुत्वा निशि लालपतो बहु । सम्भ्रान्तः शोकवेगेन भृशमासं विचेतनः ॥ ३४ ॥ तं देशमहमागम्य दीनसत्त्वः सुदुर्मनाः । अपश्यमिषुणा तीरे सरय्वास्तापसं हतम् ॥ ३५ ॥ अवकीर्णजटाभारं प्रविद्धकलशोदकम् । पांसुशोणितदिग्धाङ्गं शयानं शल्यपीडितम् ॥ ३६ ॥ स मामुद्वीक्ष्य नेत्राभ्यां त्रस्तमस्वस्थचेतसम् । इत्युवाच ततः क्रूरं दिधक्षन्निव तेजसा ॥ ३७ ॥

शरे मुक्तेपि हस्तलाघवाच्छरान्तरं धनुषि संहितवानित्यवगम्यते । करुणां गिरं श्रुत्वा करुणाजनकं वचः श्रुत्वा, स्थितस्येति शेषः ॥३३॥ तस्येति । लालपत इति यङ्लुगन्ताच्छतृप्रत्ययः । प्रलपत इत्यर्थः । विलपनमित्यर्थसिद्धम् ॥३४॥ तमिति । दीनसत्त्वः दीनहृदयः । सुदुर्मनाः अत्यन्तदुःखितमनाः । प्रविद्धकलशोदकं पर्यस्तकलशोदकमित्यर्थः । नतु ध्वस्तकलशोदकमिति । "ततस्तं घटमादाय पूर्णं परमवारिणा" इति वक्ष्यमाणविरोधात् । पांसुशोणितदिग्धाङ्गं पांसुविशिष्टशोणितेन लिप्ताङ्गम् । शल्यपीडितं शराग्रपीडितम् ॥३५॥३६॥ स मामुद्वीक्ष्येति । त्रस्तं भीतम् अतएवास्वस्थचेतसं

वृद्धाविति । हत इत्येतत् मातापितरावित्यत्र वचनविपरिणामेन योजनीयम् । सर्वे निहता इत्युक्तिः मातृपितृजीवनहेतुभूतस्य स्वस्य वधात् ॥ ३२ ॥ ३३ ॥ तस्येति । करुणं श्रुत्वा करुणजनकं वचः श्रुत्वेत्यर्थः ॥ ३४ ॥ ३५ ॥ अवकीर्णेति । प्रविद्धकलशोदकं पर्यस्तकलशोदकम् ॥ ३६–३९ ॥

व्याकुलचित्तम् ॥३७॥ किं तवेति । जिहीर्षुः आहर्तुमिच्छुः । गुर्वर्थं मातापितृनिमित्तम् ॥ ३८ ॥ ३९ ॥ ताविति । आशाकृतां पुत्रो मे जलमाहरिष्यतीत्याशासहिताम् । तृष्णां पिपासाम् । कष्टां दुःसहाम् ॥४०॥ न नूनमिति । तपसः श्रुतस्य वेत्यत्र मामकस्येति विशेषणं देयम् ॥ ४१ ॥ जानन्निति ।

किं तवापकृतं राजन् वने निवसता मया । जिहीर्षुरम्भो गुर्वर्थं यदहं ताडितस्त्वया ॥ ३८ ॥ एकेन खलु बाणेन मर्मण्यभिहते मयि । द्वावन्धौ निहतौ वृद्धौ माता जनयिता च मे ॥ ३९ ॥ तौ कथं दुर्बलावन्धौ मत्प्रतीक्षौ पिपासितौ । चिरमाशाकृतां तृष्णां कष्टां सन्धारयिष्यतः ॥ ४० ॥ न नूनं तपसो वास्ति फलयोगः श्रुतस्य वा । पिता यन्मां न जानाति शयानं पतितं भुवि ॥४१॥ जानन्नपि च किं कुर्यादशक्तिरपरिक्रमः । भिद्यमानमिवाशक्तस्त्रातुमन्यो नगो नगम् ॥४२॥ पितुस्त्वमेव मे गत्वा शीघ्रमाचक्ष्व राघव । न त्वामनुदहेत् क्रुद्धो वनं वह्निरिवैधितः ॥ ४३ ॥ इयमेकपदी राजन् यतो मे पितुराश्रमः । तं प्रसादय गत्वा त्वं न त्वां स कुपितः शपेत् ॥४४॥ विशल्यं कुरु मां राजन् मर्म मे निशितः शरः । रुणद्धि मृदु सोत्सेधं तीरमम्बुरयो यथा ॥ ४५ ॥ सशल्यः क्लिश्यते प्राणैर्विशल्यो विनशिष्यति । इति मामविशच्चिन्ता तस्य शल्यापकर्षणे ॥४६॥ दुःखितस्य च दीनस्य मम शोकातुरस्य च । लक्षयामास हृदये चिन्तां मुनिसुतस्तदा ॥ ४७ ॥

अपरिक्रमः असञ्चारः, पङ्गुरिति यावत् । भिद्यमानं वातादिनेति शेषः ॥ ४२ ॥ पितुरिति । राघवेतिसंबोधनात् सरयूतीरे बहुशो मृगयापर्यटनेन पूर्वमेव दशरथं ज्ञातवानित्यवगम्यते । न त्वामनुदहेदिति अन्यथा दहेदिति भावः ॥ ४३ ॥ इयमिति । एकपदी एकपदन्यासमात्रयुक्ता सरणिरित्यर्थः । "वर्तन्येकपदी" इत्यमरः । यतः यत्रैकपद्याम् ॥४४॥ विशल्यमिति । मर्म रुणद्धि पीडयतीत्यर्थः । मृदु सिकतामयम् । सोत्सेधम् औन्नत्यवत् । अम्बुरयः नदीवेगः ॥ ४५ ॥ ४६ ॥ दुःखितस्येति । दुःखितस्य महदकृत्यं प्राप्तमिति दुःखितस्य । शोकातुरस्य ब्रह्महत्या भविष्यतीति भिया शोकेन पीडि

ताविति । आशाकृतां जलमानेष्यतीत्याशासहितां तृष्णां पिपासाम् ॥ ४० ॥ ४१ ॥ जानन्निति । अपरिक्रमः सञ्चाराक्षमः ॥ ४२ ॥ पितुरिति । वनं वह्निरिति वैषम्यदृष्टान्तः ॥ ४३ ॥ इयमिति । एकपदी सरणिः ॥ ४४ ॥ विशल्यमिति । सोत्सेधम् उन्नतसहितं मृदु तीरं रुणद्धि पीडयति ॥ ४५–४७ ॥

तस्य ॥ ४७ ॥ ताम्यमान इति । क्षयं गतः नाशं प्राप्तुमुपक्रान्तः ॥४८॥ संस्तभ्येत्यादिश्लोकद्वयस्य इति मामुवाचेत्यनेनान्वयः । स्थिरचित्तो भवाम्यहमित्यत्र स्थिरचित्तो भवानघेति च पाठः । शूद्रायां वैश्येन जातः करण इत्यर्थः । "शूद्राविशोस्तु करणः" इत्यमरः ॥४९॥५०॥ इतीति । विघूर्णतः

ताम्यमानः स मां कृच्छ्रादुवाच परमार्तवत् । सीदमानो विवृत्ताङ्गो वेष्टमानो गतः क्षयम् ॥ ४८ ॥ संस्तभ्य शोकं धैर्येण स्थिरचित्तो भवाम्यहम् । ब्रह्महत्याकृतं पापं हृदयादपनीयताम् ॥ ४९ ॥ न द्विजातिरहं राजन् माभूत्ते मनसो व्यथा । शूद्रायामस्मि वैश्येन जातो जनपदाधिप॥५०॥ इतीव वदतः कृच्छ्राद्बाणाभिहतमर्मणः । विघूर्णतो विचेष्टस्य वेपमानस्य भूतले ॥ ५१ ॥ तस्य त्वानम्यमानस्य तं बाणमहमुद्धरम् । स मामुद्वीक्ष्य सन्त्रस्तो जहौ प्राणांस्तपोधनः ॥ ५२ ॥ जलार्द्रगात्रं तु विलप्य कृच्छ्रान्मर्मव्रणं सन्ततमुच्छ्वसन्तम् । ततः सरय्वां तमहं शयानं समीक्ष्य भद्रेऽस्मि भृशं विषण्णः॥५३॥ इत्यार्षे श्रीरामायणे वाल्मी० श्रीमदयोध्याकाण्डे त्रिषष्टितमः सर्गः॥६३॥

कदाचिदतीव वेपमानस्येत्यर्थः । विचेष्टस्य कदाचिदिति शेषः । वेपमानस्य कदाचिदीषत्कम्पमानस्येत्यर्थः । आनम्यमानस्य व्यथया सङ्कुचिताङ्गस्येत्यर्थः । नानद्यमानस्येति पाठे—अतिशयेन नदत इत्यर्थः । उद्धरम् उदहरम् । अडभावोऽनित्यत्वात् ॥ ५१ ॥ ५२ ॥ जलार्द्रगात्रमिति । अयं श्लोकः प्रथमदृष्टानुवादः । मर्मणि प्राणस्थाने व्रणः यस्य तम् । सरय्वां सरयूतीरे । विषण्णोस्मि विषण्णोऽभवम् ॥५३॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥ ६२ ॥

ताम्यमान इति । ताम्यमानः ग्लानिं प्राप्यमानः परमार्तवत् परमार्तियुक्तः ॥ ४८ ॥ संस्तभ्येति । धैर्येण शोकं संस्तभ्य स्थिरचित्तो भवामि, मम चित्तमोहो नास्तीत्यर्थः । अतः ब्रह्महत्याकृतं ब्रह्महत्यया प्राप्तं पापम् ॥ ४९ ॥ न द्विजातिरिति । शूद्रायां वैश्येन जातः करणः । " शूद्राविशोस्तु करणः " इत्यमरः ॥ ५० ॥ इतीवेत्यादिसार्धश्लोकमेकं वाक्यम् । आनम्यमानस्य व्यथया सङ्कुचिताङ्गस्येत्यर्थः । उद्धरम् अडभाव आर्षः ॥ ५१ ॥ ५२ ॥ जलार्द्रगात्रमित्ययं श्लोकः प्रथमदृष्टावस्थानुवादकमिति मन्तव्यम् ॥ ५३॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां त्रिषष्टितमः सर्गः ॥ ६३ ॥

वधमिति । विलपन्नेव मध्ये स्वपुत्रं विलपन्नेव ॥ १ ॥ तदिति । सङ्कुलेन्द्रियः व्याकुलेन्द्रियः । सुकृतं सुष्ठु कृतम्, मुनिकुमारवचनमितिशेषः । इत्यचिन्तयमित्युपस्कार्यम् । यद्वा अस्य वधज्ञापनाज्ञापनयोः किं शुभोदर्कं भवेदित्यचिन्तयमित्यर्थः ॥ २ ॥ तत इति । ततः मुनिकुमारोक्तज्ञापनमेव

वधमप्रतिरूपं तु महर्षेस्तस्य राघवः। विलपन्नेव धर्मात्मा कौसल्यां पुनरब्रवीत् ॥ १ ॥ तदज्ञानान्महत्पापं कृत्वाहं सङ्कुलेन्द्रियः। एकस्त्वचिन्तयं बुद्ध्या कथं नु सुकृतं भवेत् ॥ २ ॥ ततस्तं घटमादाय पूर्णं परमवारिणा। आश्रमं तमहं प्राप्य यथाख्यातपथं गतः ॥ ३ ॥ तत्राहं दुर्बलावन्धौ वृद्धावपरिणायकौ। अपश्यं तस्य पितरौ लूनपक्षाविव द्विजौ ॥ ४ ॥ तन्निमित्ताभिरासीनौ कथाभिरपरिक्रमौ। तामाशां मत्कृते हीनावुदासीनावनाथवत् ॥ ५ ॥ शोकोपहतचित्तश्च भयसन्त्रस्तचेतनः। तच्चाश्रमपदं गत्वा भूयः शोकमहं गतः ॥ ६ ॥ पदशब्दं तु मे श्रुत्वा मुनिर्वाक्यमभाषत। किं चिरायसि मे पुत्र पानीयं क्षिप्रमानय ॥ ७ ॥

श्रेयस्करमिति निश्चयानन्तरम् । यथाख्यातपथं प्राप्य आश्रमं गत इति सम्बन्धः ॥ ३ ॥ तत्रेत्यादि । परितो नयति संचारयतीति परिणायकः । तद्रहितौ तन्निमित्ताभिः पुत्रविषयाभिः कथाभिः उपलक्षितौ । अपरिक्रमौ पङ्गुभूतौ । मत्कृते मन्निमित्तं तामाशां हीनौ जलानयनाशारहितौ पुत्रविषयाशारहितौ वा । उदासीनौ प्रयत्नशून्यौ । तस्य पितरावपश्यमिति सम्बन्धः ॥ ४ ॥ ५ ॥ शोकोपहतचित्त इति । पुत्रवधेन पूर्वमेव शोकोपहतचित्तः भूयः शोकं गतः तद्दर्शनादतिशयितशोकं गतः ॥ ६ ॥ पदशब्दमिति । पदशब्दं चरणविन्यासजशब्दम् । चिरायसि विलम्बसे "तत्करोति"

वधमिति । वधं प्रलपन् कौसल्यामिदमब्रवीदिति सम्बन्धः ॥ १ ॥ तदिति । भवेदित्यत्रेतिकरणं द्रष्टव्यम् । अचिन्तयम् अस्य वधज्ञापनाज्ञापनयोः किं शुभोदर्कं भवेदित्यचिन्तयमित्यर्थः ॥ २ ॥ ततस्तमिति । ततः मुनिकुमारोक्तज्ञापनमेव श्रेयस्करमिति निश्चयानन्तरम् । यथाख्यातपथं मुनिकुमारोपदिष्टमार्गं प्राप्य आश्रमं गत इत्यन्वयः, उत्तरश्लोकेनैकवाक्यं वा । यथाख्यातपथं गतः सन् आश्रमं प्राप्य तत्र वृद्धावपश्यमिति सम्बन्धः । परितोनयतीति परिणायकः तद्रहितौ, तन्निमित्ताभिः पुत्रविषयाभिः कथाभिरुपलक्षितौ अपरिक्रमौ सञ्चाराक्षमौ । मत्कृते मन्निमित्तम् । तामाशाम् । हीनौ पुत्रविषयाशारहितौ । उदासीनौ प्रयत्नशून्यौ तस्य पितरावपश्यमिति सम्बन्धः ॥ ३–६ ॥ पदशब्दमिति । किं चिरायसि विलम्बसे ॥ ७ ॥

इति णिच् ॥ ७ ॥ यन्निमित्तं किंनिमित्तमित्यर्थः । यद्वा यन्निमित्तं त्वया सलिले क्रीडितम् इदं ब्रूहीतिशेषः । यन्न दत्तमिति पाठे–इदानीं पानीयं न दत्तमिति यत् तस्मात्त्वया सलिले क्रीडितमित्यन्वयः । उत्कण्ठिता शोकस्मरणवत्यभूत् ॥ ८ ॥ व्यलीकम् अप्रियम् । अलीकमितिपाठे–अलीकम

यन्निमित्तमिदं तात सलिले क्रीडितं त्वया । उत्कण्ठिता ते मातेयं प्रविश क्षिप्रमाश्रमम् ॥ ८ ॥ यद्व्यलीकं कृतं पुत्र मात्रा ते यदि वा मया । न तन्मनसि कर्तव्यं त्वया तात तपस्विना ॥ ९ ॥ त्वं गतिस्त्वगतीनां च चक्षुस्त्वं हीनचक्षुषाम् । समासक्तास्त्वयि प्राणाः किं त्वं नो नाभिभाषसे ॥ १० ॥ मुनिमव्यक्तया वाचा तमहं सज्जमानया । हीनव्यञ्जनया प्रेक्ष्य भीतोभीत इवाब्रवम् ॥ ११ ॥ मनसः कर्मचेष्टाभिरभिसंस्तभ्य वाग्बलम् । आचचक्षे त्वहं तस्मै पुत्रव्यसनजं भयम् ॥ १२ ॥ क्षत्त्रियोऽहं दशरथो नाहं पुत्त्रो महात्मनः । सज्जनावमतं दुःखमिदं प्राप्तं स्वकर्मजम् ॥ १३ ॥ भगवंश्चापहस्तोऽहं सरयूतीरमागतः । जिघांसुः श्वापदं कञ्चिन्निपाने चागतं गजम् ॥ १४ ॥

पराधः 'अलीकमपराधः' इतिहलायुधः ॥ ९ ॥ त्वमिति । नः अस्मान् इति मुनिर्वाक्यमभाषतेत्यन्वयः ॥ १० ॥ मुनिमिति । सज्जमानया स्खलन्त्या । हीनव्यञ्जनया अस्पष्टाक्षरया । "व्यञ्जनं श्मश्रुनिष्ठानचिह्नेष्ववयवेऽक्षरे" इति वैजयन्ती । अव्यक्तया वाचा अब्रवमिति सम्बन्धः । भीतोपि सन् भीतः भीतोभीतः, अत्यन्तभीत इत्यर्थः (पाठभेदः । भीतोऽपि सन्नभीत इवाब्रवम् ।) इवशब्दो वाक्यालङ्कारे ॥ ११ ॥ उक्तमेव विशदं दर्शयति–मनस इति । मनसः कर्म ऊहापोहात्मकम् । चेष्टाः इन्द्रियनियमनरूपव्यापाराः ताभिर्वाग्बलम् अभिसंस्तभ्य स्खलितां वाचं बलाद्दृढीकृत्येत्यर्थः । तस्मै भयमाचचक्ष इतिसम्बन्धः । यद्वा वाग्बलमभिसंस्तभ्य लज्जाभीतिप्रभृतिभिः मन्दवचनोभूत्वेत्यर्थः । आचचक्षे इति लिडुत्तमपुरुषैकवचनम् ॥ १२ ॥ क्षत्त्रिय इति । महात्मनः, तवेतिशेषः । सज्जनावमतं सज्जनावमतिविषयभूतम्, सत्पुरुषगर्हितमित्यर्थः ॥ १३ ॥ भगवन्निति । निपाने जलावतारे । इदं पानीयं यद्यस्मान्न दत्तं तस्मात्त्वया सलिले क्रीडितमिति । यन्निमित्तमिति पाठे–यन्निमित्तं त्वया सलिले क्रीडितमिदं ब्रूहीति शेषः ॥ ८ ॥ यदिति । व्यलीकमप्रियम् । अलीकमिति पाठे–अपराधः ॥ ९ ॥ १० ॥ मुनिमिति । सजमानया स्खलन्त्या । हीनव्यञ्जनया अस्पष्टाक्षरया अतएवाव्यक्तया वाचाब्रवमिति सम्बन्धः ॥ ११ ॥ मनस इति । मनसः कर्म इतस्ततः परिधावनम् । वाग्बलम् उच्चारणशक्तिः तदुभयं चेष्टाभिः शरीरव्यापारैः सह । संस्तभ्य संनियम्य । मनोवाक्कायान स्थिरीकृत्येति यावत् । तस्मै भयमाचचक्ष इति सम्बन्धः ॥ १२ ॥ क्षत्त्रिय इति । सज्जनावमतं सज्जनावमतिविषयम्, सज्जनगर्हितमित्यर्थः ॥ १३ ॥ भगवन्निति । श्वापदम्

आगतं गजं श्वापदं हिंस्रशार्दूलादिकं च जिघांसुः चापहस्तोऽहं सरयूतीरमागतः ॥ १४ ॥ तत्रेति । पूर्यतः पूर्यमाणस्य । अयं शब्दहेतुः पदार्थः द्विप इति मत्वा अयं तव सुतः मया अभिहतः ॥ १५–१८ ॥ स इति । उद्धृतेन बाणेन हेतुना अन्धौ पितरौ मातापितराविति भवन्तावेव शोचन् विलप्य

तत्र श्रुतो मया शब्दो जले कुम्भस्य पूर्यतः । द्विपोऽयमिति मत्वाऽयं बाणेनाभिहतो मया ॥ १५ ॥ गत्वा नद्या स्ततस्तीरमपश्यमिषुणा हृदि । विनिर्भिन्नं गतप्राणं शयानं भुवि तापसम् ॥ १६ ॥ भगवन् शब्दमालक्ष्य मया गजजिघांसुना । विसृष्टोऽम्भसि नाराचस्ततस्ते निहतः सुतः ॥ १७ ॥ ततस्तस्यैव वचनादुपेत्य परितप्यतः । स मया सहसा बाण उद्धृतो मर्मतस्तदा ॥ १८ ॥ स चोद्धृतेन बाणेन तत्रैव स्वर्गमास्थितः । भवन्तौ पितरौ शोच न्नन्धाविति विलप्य च ॥ १९ ॥ अज्ञानाद्भवतः पुत्रः सहसाभिहतो मया । शेषमेवङ्गते यत्स्यात्तत्प्रसीदतु मे मुनिः ॥ २० ॥ स तच्छ्रुत्वा वचः क्रूरं मयोक्तमघशंसिना । नाशकत्तीव्रमायासमकर्तुं भगवानृषिः ॥ २१ ॥ स बाष्पपूर्ण वदनो निश्वसन् शोककर्शितः । मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ २२ ॥ यद्येतदशुभं कर्म न त्वं मे कथयेः स्वयम् । फलेन्मूर्द्धा स्म ते राजन् सद्यः शतसहस्रधा ॥२३॥ क्षत्त्रियेण वधो राजन् वानप्रस्थे विशेषतः । ज्ञानपूर्वं कृतः स्थानाच्च्यावयेदपि वज्रिणम् ॥ २४ ॥

च स्वर्गमास्थितः ॥ १९ ॥ अज्ञानादिति । एवंगते एवंप्राप्ते सति । यच्छेषं कर्तव्यं स्यात् शापानुग्रहादिकं तत्प्रति मे मयि प्रसीदतु, शापोवाऽनुग्रहो वा यः कर्तव्यस्तं करोत्वित्यर्थः ॥ २० ॥ स इति । अघशंसिना दुःखशंसिना । आयासं व्यसनम् अकर्तुं नाशकत्, कृतवानेवेत्यर्थः ॥ २१ ॥ २२ ॥ यदीति । स्मेति वाक्यालङ्कारे । फलेत् विशीर्येत् । "ञिफलाविशरणे" इतिधातुः । मच्छापेनेतिशेषः ॥ २३ ॥ क्षत्त्रियेण पालकेन वानप्रस्थे अज्ञानतः

उग्रसत्त्वम् । निपाने जलपानस्थाने ॥ १४ ॥ तत्रेति । पूर्यतः पूर्यमाणस्य । द्विपोऽयमिति मत्वा अयं शब्दाश्रयो द्विप इति मत्वा । अयं तव सुतः बाणेनाभिहत इत्यन्वयः ॥ १५–१८ ॥ स चेति । उद्धृतेन बाणेन हेतुना । अन्धौ मातापितरौ इतिं भवन्तावेव शोचन् विलप्य स्वर्गमास्थित इति सम्बन्धः ॥१९॥ अज्ञानादिति ।

कृतो वधः वज्रिणमिन्द्रमपि स्थानात् च्यावयेत्। ज्ञानपूर्वं कृतः ज्ञानकृतस्तु विशेषतश्च्यावयेत्। अविलम्बो विशेषः ॥२४॥ सप्तधेत्युपलक्षणं बहुधेत्यर्थः। ब्रह्मवादिनि परमात्मज्ञे । ब्रह्मचारिणीति पाठे—चरतेर्गत्यर्थत्वात् "सर्वे गत्यर्था ज्ञानार्थाः" इति न्यायेन ब्रह्म तत्त्वं चरितुं ज्ञातुं शीलमस्यास्तीति ब्रह्मचारी तस्मिन्। "ज्ञाने तत्त्वे तपोध्यात्मवेदेषु ब्रह्म चोच्यते" इति निघण्टुः॥२५॥ यस्मात् कारणात् इदं दुष्कृतमज्ञानात्कृतं तेन त्वं जीवसि अपि च

सप्तधा तु फलेन्मूर्द्धा मुनौ तपसि तिष्ठति । ज्ञानाद्धि सृजतः शस्त्रं तादृशे ब्रह्मवादिनि ॥ २५ ॥ अज्ञानाद्धि कृतं यस्मादिदं तेनैव जीवसि। अपि ह्यद्य कुलं न स्यादिक्ष्वाकूणां कुतो भवान् ॥ २६ ॥ नय नौ नृप तं देशमिति मां चाभ्यभाषत। अद्य तं द्रष्टुमिच्छावः पुत्रं पश्चिमदर्शनम् ॥ २७ ॥ रुधिरेणावसिक्ताङ्गं प्रकीर्णाजिनवाससम् । शयानं भुवि निस्संज्ञं धर्मराजवशङ्गतम् ॥ २८ ॥ अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ। अस्पर्शयमहं पुत्रं तं मुनिं सह भार्यया ॥ २९ ॥ तौ पुत्रमात्मनः स्पृष्ट्वा तमासाद्य तपस्विनौ। निपेततुः शरीरेऽस्य पिता चास्येदमब्रवीत् ॥३०॥ नाभिवादयसे माऽद्य न च मामभिभाषसे। किं नु शेषे च भूमौ त्वं वत्स किं कुपितो ह्यसि ॥३१॥ न त्वहं ते प्रियः पुत्र मातरं पश्य धार्मिक। किन्नु नालिङ्गसे पुत्र सुकुमार वचो वद ॥ ३२ ॥ कस्य वाऽपररात्रेऽहं श्रोष्यामि हृदयङ्गमम्। अधीयानस्य मधुरं शास्त्रं वान्यद्विशेषतः ॥ ३३ ॥

अद्य ज्ञानपूर्वकत्वे वधस्य राघवाणां कुलं न स्यात् भवान् कुतः स्यात् जीवेत्, इति मामुवाचेत्यन्वयः ॥ २६ ॥ नयेत्यादिश्लोकद्वयमेकं वाक्यम् । धर्मराजवशं गतं पुत्रं द्रष्टुमिच्छावः अतः नौ तं देशं नयेति मामभ्यभाषतेति सम्बन्धः ॥ २७ ॥ २८ ॥ अथेति । अहं तौ नीत्वा अहं तमस्पर्शयामिति सम्बन्धेनाहंशब्दद्वयावैयर्थ्यम् ॥ २९–३१ ॥ न त्विति । अहं ते प्रियः न तु चेत् मातरं पश्येत्यन्वयः ॥ ३२ ॥ कस्येति । हृदयङ्गमं मनोहरस्वरम्

मे एवं गते प्रमादादेवं प्राप्ते सति । शेषमनन्तरकर्तव्यं यत्स्यात् तत्प्रसीदतु तदुद्दिश्याज्ञापयत्वित्यर्थः ॥ २०–२४ ॥ सप्तधेति । ब्रह्मवादिनि ब्रह्म वक्तुं शीलमस्यास्तीति तथा तस्मिन् ॥ २५ ॥ अपि ह्यद्येति । राघवाणां कुलमपि न स्यात्, ज्ञानपूर्वकं चेदिति शेषः । कुतो भवान् किं पुनर्भवानित्यर्थः ॥ २६ ॥ नयेत्यादिश्लोकद्वयमेकं वाक्यम् । धर्मराजवशंगतम् अतएव पश्चिमदर्शनम् अन्त्यदर्शनं पुत्रं द्रष्टुमिच्छावः, नौ तं देशं नयेति मामभ्यभाषतेति सम्बन्धः ॥ २७ ॥ २८ ॥ अथाहमिति । अहं तौ नीत्वा अहं तमस्पर्शयमिति सम्बन्धः ॥ २९–३१ ॥ न त्विति । अहं ते प्रियो न चेत् मातरं पश्येति सम्बन्धः ॥ ३२ ॥ कस्येति । हृदयङ्गमं मनो

अधीयानस्य पठतः । अन्यद्वा इतिहासपुराणादिकं वा ॥ ३३ ॥ क इति । सन्ध्यामुपास्य नमस्कारपूर्वकं तान्त्रिकं सन्ध्यावन्दनं कृत्वेत्यर्थः । हुतहुताशनः कृतहोमः । ननु वैश्यात् शूद्रायां जातो हि करणः तस्य कथं होमाधिकार इति ? मैवम्—" नमस्कारेण मन्त्रेण पञ्चयज्ञान् समापयेत् " इति चतुर्थ

को मां सन्ध्यामुपास्यैव स्नात्वा हुतहुताशनः । श्लाघयिष्यत्युपासीनः पुत्रशोकभयार्दितम् ॥ ३४ ॥ कन्दमूलफलं हृत्वा को मां प्रियमिवातिथिम् । भोजयिष्यत्यकर्मण्यमप्रग्रहमनायकम् ॥ ३५ ॥ इमामन्धां च वृद्धां च मातरं ते तपस्विनीम् । कथं वत्स भरिष्यामि कृपणां पुत्रगर्धिनीम् ॥ ३६ ॥ तिष्ठ मां मागमः पुत्र यमस्य सदनं प्रति । श्वो मया सह गन्तासि जनन्या च समेधितः ॥ ३७ ॥ उभावपि च शोकार्तावनाथौ कृपणौ वने । क्षिप्रमेव गमिष्याव स्त्वयाऽहीनौ यमक्षयम् ॥ ३८ ॥ ततो वैवस्वतं दृष्ट्वा तं प्रवक्ष्यामि भारतीम् । क्षमतां धर्मराजो मे बिभृयात्पितरावयम् ॥ ३९ ॥ दातुमर्हति धर्मात्मा लोकपालो महायशाः । ईदृशस्य ममाक्षय्यामेकामभयदक्षिणाम् ॥ ४० ॥

वर्णस्यापि पञ्चमहायज्ञाधिकारः स्मर्यते ततोऽप्यधिकस्य करणस्य स्वोचितमन्त्रैर्होमाधिकारस्य कैमुत्यन्यायसिद्धत्वात् । श्लाघयिष्यति उपचरिष्यतीत्यर्थः ॥ ३४ ॥ कन्दमूलफलमिति । कन्दं जलोद्भवानां पद्मादीनाम्, मूलं स्थलोद्भवानाम् । अकर्मण्यं कर्मानुष्ठानाक्षमम् । अप्रग्रहं नीवारादिसङ्ग्रहरहितम् । अनायकम् अनाथं रक्षकरहितं यष्टिं गृहीत्वा मार्गदर्शकरहितमितिवार्थः ॥ ३५ ॥ ३६ ॥ तिष्ठेति । तिष्ठमां मांप्रति तिष्ठ । मागमः मा गच्छ । समेधितः सहित इत्यर्थः ॥ ३७ ॥ ३८ ॥ तत इति । वैवस्वतं यमम्, धर्मराजः क्षमतां मत्पुत्रस्य स्वपरिसरागमनविलम्बं सहताम् । मे हरस्वरम् । अधीयानस्य पठतः । अन्यद्वा इतिहासपुराणादिकम् ॥ ३३ ॥ को मामिति । सन्ध्यामुपास्य नमस्कारपूर्वकं तान्त्रिकसन्ध्यावन्दनं कृत्वेत्यर्थः । हुतहुताशनः हुतहोमः " नमस्कारेण मन्त्रेण पञ्चयज्ञान् समापयेत् " इत्युक्तेः । चतुर्थवर्णादधिकस्य करणस्य होमाधिकारोऽस्तीत्यवगम्यते । श्लाघयिष्यति उपचरिष्यति । उपासीनः उप समीपे आसीनः ॥ ३४ ॥ कन्देति । कन्दं जलोद्भवानां पद्मादीनां, मूलं स्थलोद्भवानाम् । अकर्मण्यं कर्मानुष्ठानाक्षमम् । अप्रग्रहं नीवारादिसङ्ग्रहरहितम् ॥ ३५ ॥ ३६ ॥ तिष्ठेति । मामुद्दिश्य तिष्ठ । मागमः मा गच्छ । समेधितः सहित इत्यर्थः ॥ ३७ ॥ ३८ ॥ तत इति । मे अयं मत्सम्बन्ध्ययम् पुत्रः पितरौ बिभृयादिति तं वैवस्वतं दृष्ट्वा भारतीं वाचं प्रवक्ष्यामि । धर्मराजः क्षम्यतामिति सम्बन्धः ॥ ३९ ॥ दातुमिति । लोकपालो यमः । ईदृशस्यानाथस्येत्यर्थः ॥ ४० ॥

कतक०—यतोऽयं मे पुत्रः पितरौ बिभृयात् अतोऽस्य धर्मराजो भवान् । क्षमता शस्त्रघातजन्यदुर्मरणजनकं पापं क्षमताम् एवं मया प्रार्थितो दुर्मरणजां दुर्गतिं दूरीकृत्य त्वां स्वर्गं नयिष्यति । ईदृशस्य तपस्विनो मम एकां पुत्रतारणरूपामभयदक्षिणां लोकपालत्वाद्दातुमर्हतीत्यर्थः ॥ ४० ॥

मत्सम्बन्धी अयं पुत्रः पितरौ बिभृयादिति भारतीं प्रवक्ष्यामीति सम्बन्धः ॥ ३९ ॥ ४० ॥ राज्ञा स्वहस्तकृतं हननं पूर्वकृतस्य पापस्य प्रायश्चित्तत्वेन प्राप्तमिति मत्वा वदति–अपाप इति । पापकर्मणा राज्ञा यदा निहतः तदैवापापोसि, तेन अपापत्वेन हेतुना। सत्येन मम सत्येन शस्त्रयोधिनां ये लोका



अपापोऽसि यदा पुत्र निहतः पापकर्मणा। तेन सत्येन गच्छाशु ये लोकाः शस्त्रयोधिनाम् ॥ ४१ ॥ यान्ति शूरा गतिं यां च सङ्ग्रामेष्वनिवर्तिनः । हतास्त्वभिमुखाः पुत्र गतिं तां परमां व्रज ॥ ४२ ॥ यां गतिं सगरः शैब्यो दिलीपो जनमेजयः । नहुषो धुन्धुमारश्च प्राप्तास्तां गच्छ पुत्रक ॥ ४३ ॥ या गतिः सर्वसाधूनां स्वाध्यायात्तपसा च या । या भूमिदस्याहिताग्नेरेकपत्नीव्रतस्य च ॥ ४४ ॥ गोसहस्रप्रदातॄणां या या गुरुभृतामपि । देहन्यासकृतां या च तां गतिं गच्छ पुत्रक ॥ ४५ ॥ न हि त्वस्मिन् कुले जातो गच्छत्यकुशलां गतिम् । स तु यास्यति येन त्वं निहतो मम बान्धवः ॥ ४६ ॥

स्तान् आशु गच्छेति योजना । नन्वस्य तपस्विनो ब्रह्मलोकप्राप्तिरेव वक्तव्या शस्त्रहननमात्रेण शस्त्रयोधिनां लोकं प्राप्यत्वेन वदति, एतत्कथमुपपद्यते ? उच्यते–" द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ " इति शस्त्रयोधिनामुत्कृष्टलोकप्राप्तिश्रवणान्न दोषः ॥ ४१–४३ ॥ या गतिरिति । एकपत्नीव्रतस्येति इदं च व्रतमनुकूलायां पुत्रिण्यां पत्न्यां बोध्यम् ॥ ४४ ॥ गोसहस्रप्रदातॄणामिति । या येति एकस्य यच्छब्दस्य पूर्वेणान्वयः । गुरुभृतां गुरुशुश्रूषाकारिणां देहन्यासकृतां महाप्रस्थानादिनेतिशेषः । यद्वा परलोकप्राप्तिसङ्कल्पपूर्वकं गङ्गायमुनासङ्गमादौ जलेऽग्नौ वा तनुं त्यजतामित्यर्थः ॥ ४५ ॥ नेति । अस्मिन्कुले तपोनिष्ठानामस्माकं कुले जातः । अकुशलाम् अशुभां गतिं न गच्छेत्

राज्ञा स्वहस्तकृतं हननं स्वपुत्रेण पूर्वकृतपापस्य प्रायश्चित्तत्वेन प्राप्तमिति मत्वा वदति–अपापोऽसीति । पापकर्मणा राज्ञा यदा निहतः, तदैव अपापोऽसि । तेन अपापत्वहेतुना । सत्येन मम सत्येन च, शस्त्रयोधिनां ये लोकाःताननुगच्छेति योजना ॥ ४१–४४ ॥ गोसहस्रेति । देहन्यासकृतां परलोकप्राप्तिसाधनत्वेन गङ्गायमुनासङ्गमादौ जले वाग्नौ वा तनुं त्यजताम् ॥४५॥ नहीति । अस्मिन् कुले तपोनिष्ठानामस्माकं कुले मम बान्धवः पुत्रो येन राज्ञा त्वं हतः स एव यास्यति॥४६

अपितु मम बान्धवः पुत्रः त्वं येन निहतः स एवाकुशलां गतिं यास्यति ॥ ४६ ॥ एवमिति । उदकं संस्कारपूर्वोदकक्रियाः ॥ ४७ ॥ स त्विति । शक्रेण सह स्वर्गमध्यारुहदित्यनेन मुनिपुत्रं स्वर्गं नेतुं शक्रः समागत इति गम्यते ॥ ४८ ॥ सङ्क्षेपेणोक्तं स्वर्गारोहणं विवृणोति–आबभाष इति । तापसः

एवं स कृपणं तत्र पर्यदेवयतासकृत् । ततोऽस्मै कर्तुमुदकं प्रवृत्तः सह भार्यया ॥ ४७ ॥ स तु दिव्येन रूपेण मुनिपुत्रः स्वकर्मभिः । स्वर्गमध्यारुहत् क्षिप्रं शक्रेण सह धर्मवित् ॥ ४८ ॥ आबभाषे च तौ वृद्धौ सह शक्रेण तापसः । आश्वास्य च मुहूर्तं तु पितरौ वाक्यमब्रवीत् ॥ ४९ ॥ स्थानमस्मि महत्प्राप्तो भवतोः परिचारणात् । भवन्तावपि च क्षिप्रं मम मूलमुपैष्यतः ॥ ५० ॥ एवमुक्त्वा तु दिव्येन विमानेन वपुष्मता । आरुरोह दिवं क्षिप्रं मुनिपुत्रो जितेन्द्रियः ॥ ५१ ॥ स कृत्वा तूदकं तूर्णं तापसः सह भार्यया । मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥५२॥ अद्यैव जहि मां राजन् मरणे नास्ति मे व्यथा । यच्छरेणैकपुत्रं मां त्वमकार्षीरपुत्रकम् ॥ ५३ ॥ त्वया तु यदविज्ञानान्निहतो मे सुतः शुचिः । तेन त्वामभिशप्स्यामि सुदुःखमतिदारुणम् ॥ ५४ ॥ पुत्रव्यसनजं दुःखं यदेतन्मम साम्प्रतम् । एवं त्वं पुत्रशोकेन राजन् कालं करिष्यसि ॥ ५५ ॥

शक्रेण सह तौ वृद्धौ आबभाषे । आभाषणेपि वृद्धयोरश्रवणात् पुनराहेत्याह आश्वास्य चेति ॥ ४९ ॥ स्थानमिति । मूलं समीपम् । " आद्ये शिफायां नक्षत्रे मूलं कुञ्जसमीपयोः " इति निघण्टुः ॥ ५० ॥ एवमिति । वपुष्मता प्रशस्ताकारेण । प्रशंसायां मतुप् ॥ ५१ ॥ ५२ ॥ अद्येति । जहि प्राणान् मोचय । " हन्तेर्जः " इति जादेशः । कथं मारणं दुःखाकरत्वादित्यत्राह–मरणे नास्ति मे व्यथेति । व्यथाभावहेतुमाह यदिति । अतोपि किं व्यथाऽस्तीति भावः ॥ ५३ ॥ त्वयेति । अभिशप्स्यामि नतु भस्मीकरोमीति भावः । सुदुःखमतिदारुणमिति क्रियाविशेषणम् ॥ ५४ ॥ पुत्रव्यसनजमिति ।

एवमिति । उदकं संस्कारपूर्वकोदकक्रियाम् ॥ ४७ ॥ स त्विति । शक्रेण सह स्वर्गमध्यारुहदित्यनेन मुनिपुत्रं स्वर्गं नेतुं शक्रः समागत इत्यवगम्यते ॥ ४८ ॥ सङ्क्षेपेणोक्तं स्वर्गारोहणं विवृणोति–आबभाष इत्यादिना । आबभाष इत्यस्य प्रपञ्चार्थः आश्वास्येत्यादि । यद्वा तापसः तौ वृद्धौ आश्वास्य आबभाषे, पितरौ वाक्यमब्रवीदित्येतत् भवन्तावपि मम मूलमुपैष्यत इत्यनेनोत्तरेण सम्बध्यते ॥ ४९ ॥ स्थानमिति । मूलं समीपम् ॥ ५० ॥ एवमिति । वपुष्मता प्रशस्ताकारेण ॥५१॥५२॥ अद्यैवेति । जहि प्राणान्मोचय ॥ ५३ ॥ त्वयेति । सुदुःखमतिदारुणमिति च क्रियाविशेषणम् ॥ ५४ ॥ पुत्रेति । यत् यस्मान्मम एतत् मरणपर्यवसायि पुत्रव्यसनं

यद्यस्मात्कारणात् मम एतन्मरणपर्यवसायिपुत्रव्यसनजं दुःखम्, अभूदिति शेषः। एवं पुत्रशोकेन कालं करिष्यसि, मृत्युं प्राप्स्यसीत्यर्थः। "कालो मृत्यौ च समये" इति वैजयन्ती ॥ ५५ ॥ अज्ञानादिति। ब्रह्महत्या बहुपातकमित्यर्थः। अन्यथा वैश्यात् शूद्रायां जातस्य करणाख्य

अज्ञानात्तु हतो यस्मात् क्षत्रियेण त्वया मुनिः। तस्मात्त्वां नाविशत्याशु ब्रह्महत्या नराधिप ॥ ५६ ॥ त्वामप्येताद‍ृशो भावः क्षिप्रमेव गमिष्यति। जीवितान्तकरो घोरो दातारमिव दक्षिणा ॥ ५७ ॥ एवं शापं मयि न्यस्य विलप्य करुणं बहु। चितामारोप्य देहं तन्मिथुनं स्वर्गमभ्ययात् ॥ ५८ ॥ तदेतच्चिन्तयानेन स्मृतं पापं मया स्वयम्। तदा बाल्यात् कृतं देवि शब्दवेध्यनुकर्षिणा ॥ ५९ ॥ तस्यायं कर्मणो देवि विपाकः समुपस्थितः। अपथ्यैः सह सम्भुक्तो व्याधिमन्नरसो यथा ॥ ६० ॥

सङ्करजातित्वेन ब्रह्महत्याप्रसक्त्यभावात् ॥ ५६ ॥ त्वामिति। एताद‍ृशः पुत्रशोकरूपः। भावः स्वभावः। दातारमिव दक्षिणा यथा विप्राय दक्षिणा दत्ता दातारं स्वसद‍ृशफलं प्रापयति तथेत्यर्थः। पुत्रशोकातिशयेन इह जन्मन्येव फलमनुभविष्यसीति धिया क्षिप्रमित्युक्तवान्। दक्षिणाशब्देन दक्षिणाहेतुकं सुकृतं लक्ष्यते ॥ ५७ ॥ एवमिति। देहमित्येकवचनेन चितारोहणकाले देहयोर्गाढबद्धत्वं लक्ष्यते ॥ ५८ ॥ तदिति। शब्दवेध्यनुकर्षिणा शब्दवेधिनं बाणं प्रयुञ्जानेन। यद्वा शब्दवेधिनं बाणं मुक्त्वा पुनस्तच्छरीरप्रोतशल्यमनुकृष्टवतेत्यर्थः। चिन्तयानेन मरणपर्यवसायी पुत्रशोकः प्राप्तः अस्य किंनिदानमिति चिन्तयानेन। एतत् पापं स्मृतं मुनिकुमारवधरूपं पापं स्मृतिविषयमभूदित्यर्थः ॥ ५९ ॥ तस्येति। अपथ्यैः व्याधि

दुःखमभूदिति शेषः। एवं पुत्रशोकेन कालं करिष्यति मृत्युं प्राप्स्यसीत्यर्थः ॥ ५५ ॥ अज्ञानादिति। त्वां ब्रह्महत्या नाविशति हननस्याज्ञानमूलत्वात्तस्य करणत्वाच्चेति भावः ॥ ५६ ॥ त्वामिति। एताद‍ृशः पुत्रशोकरूपः। पुत्रशोकातिशयेन इहैव कर्मफलमनुभविष्यामीति धिया क्षिप्रमित्युक्तवान्। दक्षिणाशब्देन दक्षिणाहेतुकं सुकृतं लक्ष्यते ॥ ५७ ॥ ५८ ॥ तदिति। एतच्चिन्तयानेन मरणपर्यवसायिपुत्रशोकः प्राप्तः, अस्य कारणं किमिति चिन्तयानेनेत्यर्थः। तदा बाल्यात् शब्दवेध्यानुशिक्षिणा शब्देन वेद्धुं योग्यं शब्दवेध्यं वेध्यमनुशिक्षितुं शीलमस्यास्तीति शब्दवेध्यानुशिक्षितेन मया कृतं तत्पापं मुनिकुमारवधरूपं स्मृतं स्मृतिविषयमभूदित्यर्थः (शब्दवेध्यानुशिक्षिणा इति पाठः) ॥ ५९ ॥ तस्येति। विपाकः फलम्। अपथ्यैः व्याधिवर्धकव्यञ्जनैस्सह अन्नरसे सम्भुक्ते व्याधिर्यथा ॥ ६० ॥

विवर्धकैः व्यञ्जनैः सह सम्भुक्तः अन्नरसः व्याधिमुल्बणयन्नीति शेषः । समुपस्थितो भवति बाधकत्वेन प्राप्तो भवति । अपथ्यैः सह सम्भुक्ते व्याधिरन्नरसे यथेति च पाठः ॥ ६० ॥ तस्मादिति । उदारस्य शापप्रदातुः । उदारत्वोक्तिरपुत्रस्य पुत्रसम्पादनपरत्वात् । यद्वा उदारस्य महतः "उदारो दातृ

तस्मान्मामागतं भद्रे तस्योदारस्य तद्वचः । *यदहं पुत्रशोकेन सन्त्यक्ष्याम्यद्य जीवितम् ॥ ६१ ॥ चक्षुर्भ्यां त्वां न पश्यामि कौसल्ये साधु मा स्पृश । इत्युक्त्वा स रुदंस्त्रस्तो भार्यामाह च भूमिपः ॥ ६२ ॥ एतन्मे सदृशं देवि यन्मया राघवे कृतम् । सदृशं तत्तु तस्यैव यदनेन कृतं मयि ॥ ६३ ॥ दुर्वृत्तमपि कः पुत्रं त्यजेद्भुवि विचक्षणः । कश्च प्रव्राज्यमानो वा नासूयेत्पितरं सुतः ॥ ६४ ॥ यदि मां संस्पृशेद्रामः सकृदद्य लभेत वा । यमक्षयमनुप्राप्ता द्रक्ष्यन्ति नहि मानवाः ॥६५॥ चक्षुषा त्वां न पश्यामि स्मृतिर्मम विलुप्यते । दूता वैवस्वतस्यैते कौसल्ये त्वरयन्ति माम् ॥६६॥ अतस्तु किं दुःखतरं यदहं जीवितक्षये । नहि पश्यामि धर्मज्ञं रामं सत्यपराक्रमम् ॥६७॥

महतोः" इत्यमरः । वचो मामागतं शापरूपवचनार्थो मां प्राप्त इत्यर्थः ॥ ६१ ॥ चक्षुर्भ्यामिति । मा माम् ॥ ६२ ॥ इत्युक्त्वा स रुदंस्त्रस्तो भार्यामाह च भूमिप इत्यर्द्धानन्तरम् एतन्मे सदृशं देवि यन्मया राघवे कृतम् । सदृशं तत्तु तस्यैव यदनेन कृतं मयि । इतिक्रमः ॥ ६३ ॥ एतदर्थद्वयं क्रमेणोपपादयति—दुर्वृत्तमित्यर्धद्वयेन ॥ ६४ ॥ यदीति । रामः सकृदप्यद्य मां संस्पृशेत् लभेत वा चक्षुर्विषयतां प्राप्नुयाद्वा तदा जीवेयमिति गम्यमानत्वात्तदनुक्तिः । किमर्थमेवमर्थनं करोषीत्यत्राह—यमेति । यमक्षयं यमगृहमनुप्राप्ताः मानवाः बान्धवान्न द्रक्ष्यन्ति हीत्यर्थः । तस्माज्जीवनकाल एव दर्शन

तस्मादिति । उदारस्य महतः वचः, ममागतं शापरूपवचनार्थो मां प्राप्त इत्यर्थः ॥ ६१ ॥ ६२ ॥ एतन्म इति । मया राघवे विवासनरूपं कर्म कृतम् एतन्मे सदृशम् । अनेन रामेण यत्कृतं कैकेयीबोधितमद्वाक्यात्प्रव्राजनं तत् तस्यैव सदृशम् । यद्वा तत्तु पुत्रशोकेन जीवितस्य त्यजनं तस्यैव शापकर्मण एव सदृशम्, यदनेन मुनिना मयि कृतं तस्य शापस्यानुरूपमेव तदिदं मरणमित्यर्थः ॥६३॥ तदेव समर्थयति—दुर्वत्तमिति । यद्वा एतन्मे सदृशमित्यादिसार्धश्लोकमेकं वाक्यम् । अनेन मुनिना मयि यत्कृतं तस्य शापस्य एतत्पुत्रविवासनरूपं कर्म सदृशम् अन्यथा विचक्षणः को वा दुर्वृत्तमपि पुत्रं त्यजेत्, प्रव्राज्यमानः को वा पुत्रः

* यदहम् इत्यारभ्य द्रक्ष्यन्ति नहिमानवाः इत्यन्तश्लोकानां पौर्वापर्यं केषुचित्पुस्तकेष्वित्थं दृश्यते—इत्युक्त्वा । यदहम् । चक्षुर्भ्याम् । यमक्षयम् । यदि माम् । एतन्मे । सदृशं तत्तु । कश्च प्रव्राज्यमानः । इति ।

मपेक्ष्यत इतिभावः ॥ ६५–६७ ॥ तस्येति । अप्रतिकर्मणः प्रतिक्रियारहितस्य । स्तोकम् अल्पम् । "स्तोकाल्पक्षुल्लकाः" इत्यमरः ॥ ६८ ॥ नेति । मनुष्याः जरायुक्ताः न भवन्ति किन्तु देवाः नित्ययौवनाः " अहं पुनर्देवकुमाररूपमलंकृतं तं सुतमात्रजन्तम् । नन्दामि पश्यन्नपि दर्शनेन

तस्यादर्शनजः शोकः सुतस्याप्रतिकर्मणः । उच्छोषयति मे प्राणान् वारि स्तोकमिवातपः ॥ ६८ ॥ न ते मनुष्या देवास्ते ये चारुशुभकुण्डलम् । मुखं द्रक्ष्यन्ति रामस्य वर्षे पञ्चदशे पुनः ॥६९॥ पद्मपत्रेक्षणं सुभ्रु सुदंष्ट्रं चारुनासिकम् । धन्या द्रक्ष्यन्ति रामस्य ताराधिपनिभं मुखम् ॥ ७० ॥ सदृशं शारदस्येन्दोः फुल्लस्य कमलस्य च । सुगन्धि मम नाथस्य धन्या द्रक्ष्यन्ति तन्मुखम् ॥ ७१ ॥ निवृत्तवनवासं तमयोध्यां पुनरागतम् । द्रक्ष्यन्ति सुखिनो रामं शुक्रं मार्गगतं यथा ॥७२॥ कौसल्ये चित्तमोहेन हृदयं सीदतीव मे । वेदये न च संयुक्तान् शब्दस्पर्शरसानहम् ॥ ७३ ॥ चित्तनाशाद्विपद्यन्ते सर्वाण्येवेन्द्रियाणि मे । क्षीणस्नेहस्य दीपस्य संसक्ता रश्मयो यथा ॥ ७४ ॥ अयमात्मभवः शोको मामनाथमचेतनम् । संसादयति वेगेन यथा कूलं नदीरयः ॥ ७५ ॥

भवामि दृष्ट्वा च पुनर्युवेव ॥" इति हि पूर्वमुक्तवान् । चारुशुभकुण्डलं तन्मुखसंयोगात् कुण्डलमतीवशोभां प्राप्तमित्युच्यते ॥ ६९–७१ ॥ निवृत्तवनवासमिति । मार्गगतं शुक्रं यथा मौढ्यं विहाय स्वस्थानगतं शुक्रमिव ॥ ७२ ॥ कौसल्य इति । चित्तमोहेन चित्तस्य मोहो दुःखातिशय प्राप्ता मूर्च्छा, तयेत्यर्थः । "मूर्छा तु कश्मलं मोहः" इत्यमरः । हृदयं मनसोधिष्ठानम् । सीदतीव विशीर्यतीव । संयुक्तान् इन्द्रियसंयुक्तान् । न वेदये न जाने ॥ ७३ ॥ हृदयविशरणेन शब्दाद्यज्ञाने हेतुमाह–चित्तनाशादिति । संसक्ताः दीपाविनाभूताः यथा स्नेहनाशकृतदीपनाशाद्रश्मिनाशः ।

पितरं नासूयेत तस्मात्पुत्रप्रव्राजनं प्रव्राज्यमानपुत्रस्यानसूयाकरणं च शापेन विना कथं घटत इत्यर्थः ॥ ६४–७१ ॥ निवृत्तेति । मार्गगतं शुक्रं यथा मौढ्यं विहाय स्वोच्चमार्गगतं शुक्रमिव ॥ ७२ ॥ कौसल्य इति । चित्तमोहेन चित्तमोहः दुःखातिशयप्राप्ता मूर्च्छा । हृदयं मनोधिष्ठानम् । सीदतीव विशीर्यतीव ॥ ७३–७५ ॥

कतक०–शुकं मार्गगतं यथा इति पाठः । हस्तात्पञ्जराद्वाऽन्यदेशगतं पुनश्च मार्गं यथास्थानं गतं प्राप्तं शुकं क्रीडाशुकमिवेत्यर्थः ॥ स०–शुकमिति पाठे–शुकं पञ्जरादुत्पत्य पुनरागतम् । अवधूतत्वेनाशक्य दर्शनं कदाचिद्दृष्टपुण्यविशेषेण मार्गगतं व्यासपुत्रमिति वार्थः ॥ ७३ ॥

एवं शरीरशैथिल्यकृतचित्तनाशादिन्द्रियनाश इति सूचितम् ॥ ७४ ॥ ७५ ॥ हेति । आयासनाशन दुःखनाशन ॥ ७६–७९ ॥ इति श्रीगोविन्दराज विरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुःषष्टितमः सर्गः ॥ ६४ ॥ अथेत्यादिश्लोकद्वयमेकवाक्यम् । रात्र्यां रात्रिशेषे ।

हा राघव महाबाहो हा ममायासनाशन । हा पितृप्रिय मे नाथ हाद्य क्वासि गतः सुत ॥ ७६ ॥ हा कौसल्ये नशिष्यामि हा सुमित्रे तपस्विनि । हा नृशंसे ममामित्रे कैकेयि कुलपांसनि ॥ ७७ ॥ इति रामस्य मातुश्च सुमित्रायाश्च सन्निधौ। राजा दशरथः शोचञ्जीवितान्तमुपागमत् ॥ ७८ ॥ यदा तु दीनं कथयन्नराधिपः प्रियस्य पुत्रस्य विवासनातुरः । गतेऽर्धरात्रे भृशदुःखपीडितस्तदा जहौ प्राणमुदारदर्शनः ॥ ७९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

अथ रात्र्यां व्यतीतायां प्रातरेवापरेऽहनि । वन्दिनः पर्युपातिष्ठंस्तत्पार्थिवनिवेशनम् ॥ १ ॥ सूताः परमसंस्कारा मङ्गलाश्चोत्तमश्रुताः । गायकाः स्तुतिशीलाश्च निगदन्तः पृथक् पृथक् ॥ २ ॥ राजानं स्तुवतां तेषामुदात्ताभिहिताशिषाम् । प्रासादाभोगविस्तीर्णः स्तुतिशब्दो ह्यवर्तत ॥ ३ ॥

परमसंस्काराः व्याकरणाद्युत्तमसंस्कारयुक्ताः श्रेष्ठालङ्कारयुक्ता वा । वन्दिन इति पूर्वमुक्तत्वात् सूताः वंशावलिकीर्त्तकाः । मङ्गलाः मङ्गलपाठकाः । उत्तमं श्रुतं गान्धर्वशास्त्रश्रवणं येषां ते उत्तमश्रुताः । एतद्विशेषणद्वयं गायकमात्रविशेषणम् । अन्यत्सर्वविशेषणम् सर्वत्र पर्युपातिष्ठन्निति क्रियापदम् ॥ १ ॥ २ ॥ राजानमिति । उदात्ताभिहिताशिषाम् उदात्तेन उच्चैःस्वरेण अभिहिताः प्रयुक्ताः आशिषो यैस्तेषाम् । प्रासादाभोगविस्तीर्णः

॥ ७६–७९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां चतुःषष्टितमः सर्गः ॥ ६४ ॥ अथेत्यादिश्लोकद्वयमेकं वाक्यम् । परमसंस्काराः व्याकरणादिशिक्षावन्तः परमालङ्कारा वा । मङ्गलाः मङ्गलपाठकाः ॥ १ ॥ २ ॥ राजानमिति । प्रासादाभोगविस्तीर्णः प्रासादेषु आभोगः परिपूर्णता तया विस्तीर्णः । स्तुतिशब्दो ह्यवर्तत प्रासादेषु सर्वत्र पूर्णतया स्तुतिशब्दो व्याप्त इति भावः ॥ ३ ॥

प्रासादेषु आभोगः परिपूर्णता तया विस्तीर्णः "आभोगः परिपूर्णता" इत्यमरः ॥ ३ ॥ तत इति । स्तुवतां स्तुवत्सु सत्सु । पाणिवादकाः ताल गत्या विविधं पाणिभ्यां वादयन्तीति पाणिवादकाः । अपदानानि वृत्तान्यद्भुतकर्माणि । पाणिवादानवादयन् पाणिवादानकुर्वन्नित्यर्थः ॥ ४ ॥ तेनेति ।

ततस्तु स्तुवतां तेषां सूतानां पाणिवादकाः । अपदानान्युदाहृत्य पाणिवादानवादयन् ॥ ४ ॥ तेन शब्देन विहगाः प्रतिबुद्धा विसस्वनुः । शाखास्थाः पञ्जरस्थाश्च ये राजकुलगोचराः ॥ ५ ॥ व्याहृताः पुण्यशब्दाश्च वीणानां चापि निस्वनाः । आशीर्गेयं च गाथानां पूरयामास वेश्म तत् ॥६॥ ततः शुचिसमाचाराः पर्युपस्थानकोविदाः । स्त्रीवर्ष धरभूयिष्ठा उपतस्थुर्यथापुरम् ॥ ७ ॥ हरिचन्दनसंपृक्तमुदकं काञ्चनैर्घटैः । आनिन्युः स्नानशिक्षाज्ञा यथाकालं यथाविधि ॥ ८ ॥ मङ्गलालम्भनीयानि प्राशनीयान्युपस्करान् । उपनिन्युस्तथाप्यन्याः कुमारीबहुलाः स्त्रियः ॥९॥

शाखास्थाः गृहारामवृक्षशाखासु वर्तमानाः । राजकुलगोचराः राजगृहे दृश्यमानाः विहगाः शुकादयः ॥ ५ ॥ व्याहृता इति । व्याहृताः ब्राह्मणैरुक्ताः । पुण्यशब्दाः पुण्यपुरुषक्षेत्रतीर्थकीर्त्तनादिरूपाः । पूरयामासुरिति विपरिणामेन योजनीयम् । गाथानां दशरथविषयप्रबन्धविशेषाणां सम्बन्धि आशीर्गेयं आशीर्वादरूपगानम् ॥ ६ ॥ तत इति । पर्युपस्थानकोविदाः कालोचितपरिचर्याविचक्षणाः । स्त्रीवर्षधरभूयिष्ठाः अन्तःपुराध्यक्षस्त्रीभिः वर्षधरैः षण्ढैश्च समृद्धाः, परिचारका इति शेषः ॥ ७ ॥ हरिचन्दनसंपृक्तमिति । हरिचन्दनसंपृक्तं हरिचन्दनसंमिश्रम् । स्नानशिक्षाज्ञाः स्नानप्रकारज्ञाः यथाविधि यथा नियमम् ॥ ८ ॥ मङ्गलालम्भनीयानीति । मङ्गलालम्भनीयानि मङ्गलरूपानुलेपनानि तैलोद्वर्तनादीनि । स्पर्शनीयानि गवादीनीत्येके । प्राशनीयानि

तत इति । स्तुवतां स्तुवत्सु सत्सु । पाणिवादकाः तालगतया विविधं पाणिनैव वादयन्ति ये ते पाणिवादकाः । अपदानानि वृत्ताद्भुतकर्माणि राजभिः कृताद्भुतचरित्राणीत्यर्थः ॥ ४ ॥ तेनेति । शाखास्था गृहारामवृक्षे शाखासु वर्तमानाः । राजकुलगोचराः राजगृहे दृश्यमानाः ॥ ५ ॥ व्याहृता इति । पुण्य शब्दाः हरिनारायणादिपुण्यशब्दाः । यद्वा पुण्यश्लोकपुरुषाणां कीर्तनानि । आशीर्गेयम् आशीरूपं गानम् । गाथानां राज्ञां चरित्रप्रतिपादकश्लोका गाथाः तासाम् । पूरयामासेत्येतत यथायोगं वचनविपरिणामेन योजनीयम् ॥ ६ ॥ तत इति । पर्युपस्थानकोविदाः कालोचितपरिचर्याविचक्षणाः । स्त्रीवर्षधर भूयिष्ठाः अन्तःपुराध्यक्षस्त्रीभिः वर्षधरैः षण्ढैश्च भूयिष्ठाः समृद्धाः, परिचारिका इति शेषः । यथापुरं यथापूर्वम् ॥ ७ ॥ हरिचन्दनेति । स्नानशिक्षाज्ञाः स्नान विधिज्ञाः ॥ ८ ॥ मङ्गलेति । मङ्गलालम्भनीयानि मङ्गलरूपानुलेपनानि तैलोद्वर्तनादीनि प्राशनीयान दन्तधावनानन्तरं गण्डूषत्वेन प्राशनीयान् सम्पिष्टतिलनालि

दन्तधावनानन्तरं गण्डूषत्वेन प्राशनीयानि सम्पिष्टतिलनारिकेलजीरकादिद्रव्याणि औषधविशेषानितिवार्थः, गङ्गादितीर्थोदकानीतिवार्थः, अनुदिन मखिलदुरितहरणायाखिलकर्मणामधिकारापादनाय च प्राशनीयानि कुलाराधनभूतश्रीरङ्गनाथचरणारविन्दसमर्पिततीर्थोदकतुलस्यादीनीति वार्थः ।

सर्वलक्षणसम्पन्नं सर्वं विधिवदर्चितम् । सर्वं सुगुणलक्ष्मीवत्तद्बभूवाभिहारिकम् ॥ १० ॥
तत्तु सूर्योदयं यावत्सर्वं परिसमुत्सुकम् । तस्थावनुपसम्प्राप्तं किंस्विदित्युपशङ्कितम् ॥ ११ ॥
अथ याः कोसलेन्द्रस्य शयनं प्रत्यनन्तराः । ताः स्त्रियस्तु समागम्य भर्तारं प्रत्यबोधयन् ॥ १२ ॥
तथाप्युचितवृत्तास्ता विनयेन नयेन च । न ह्यस्य शयनं स्पृष्ट्वा किञ्चिदप्युपलेभिरे ॥ १३ ॥

तीर्थोदकभाजनावरणपेटिकादेरेव परिचारकैरानयनं ज्ञेयम् । उपस्करान् दर्पणवस्त्राभरणकुसुमादीनि । कुमारीबहुलाः कुमारीप्रायाः । स्त्रियः इति द्वितीया । वारयोषित इति यावत् ॥ ९ ॥ सर्वलक्षणसम्पन्नमिति । आभिहारिकं राज्ञे प्रातर्यदाहर्तव्यं मङ्गलार्थमानेतव्यम् । तत्सर्वं सर्वलक्षणसम्पन्नत्वादिधर्मविशिष्टं बभूव । सुगुणं च तत् लक्ष्मीवच्चेति समासः ॥ १० ॥ तदिति । तत् पूर्वोक्तं परिजनजातम् । सूर्योदयंयावत् सूर्योदयात् पूर्वमेव । परिसमुत्सुकं राजसेवासमुत्सुकम् । अनुपसंप्राप्तम् अनागतं राजानं प्रति किंस्विदित्युपशङ्कितं सत् तस्थौ । राजा नागतः तस्य किंवा स्यादिति शङ्कासंयुक्तं तस्थावित्यर्थः ॥ ११ ॥ अथेति । याः कौसल्यादिव्यतिरिक्ताः । शयनं प्रत्यनन्तराः शयनसन्निकृष्टा इत्यर्थः । प्रत्यबोधयन् प्रबोधनोचितसविनयमृदुवाक्यैः प्राबोधयन्नित्यर्थः ॥ १२ ॥ तथेति । तथापि बोधयित्वापि । उचितवृत्ताः स्पर्शनादिव्यापारोचिताः । विनयेन प्रश्रयेण नयेन युक्त्या च अस्य शयनं शयनस्थानं स्पृष्ट्वा किंचिदपि निद्रालक्षणम् उच्छ्वासादिकम् । न लेभिरे न ज्ञातवत्यः ॥ १३ ॥

केरजीरकादिद्रव्यविशेषान् । उपस्करान् दर्पणवस्त्राभरणानि । कुमारीबहुलाः कुमार्यः बहुला यासु ताः ॥९॥ सर्वलक्षणेति । सर्वं विधिवदर्चितं यथायोग्यं बहूकृतं सुगुणलक्ष्मीवत् सुगुणवल्लक्ष्मीवच्च । आभिहारिकम् अभिहारः अभिग्रहणं राजस्वीकारजन इति यावत् ॥ १० ॥ तदिति । तत् पूर्वोक्तं परिजनजातम् । अनुपसम्प्राप्तम् अनागतं राजानं प्रति शङ्कितमभूदिति पूर्वेण सम्बन्धः ॥ ११ ॥ अथेति । याः कौसल्यादिव्यतिरिक्ताः शयनं प्रत्यनन्तराः शयनस्य सन्निकृष्टा इत्यर्थः । प्रत्यबोधयन् राजप्रतिबोधनोचितमृदुविनयवाक्यैः प्राबोधयन्नित्यर्थः ॥ १२ ॥ तथापीति । उचितवृत्ताः उचितव्यापाराः । विनयेन प्रश्रयेण । नयेन नीत्या च । किञ्चि

एतदेवोपपादयति—ता इति । स्वप्नशीलज्ञाः स्वापस्वभावज्ञाः । ताः पूर्वोक्ताः स्त्रियः । चेष्टासचलनादिषु चेष्टा हस्तपादादिचलनम्, सञ्चलनं हृदयादि स्पन्दनम्, आदिशब्देन निश्वासादिकं गृह्यते । तेषु किंचिन्नोपलेभिरे इत्यनुषङ्गेण सम्बन्धः । वेपथुना कम्पेन । परीताः व्याप्ताः ताः स्त्रियः राज्ञः प्राणेषु



ताः स्त्रियः स्वप्नशीलज्ञाश्चेष्टासञ्चलनादिषु । ता वेपथुपरीताश्च राज्ञः प्राणेषु शङ्किताः । प्रतिस्रोतस्तृणाग्राणां सदृशं संचकाशिरे ॥ १४ ॥ अथ संवेपमानानां स्त्रीणां दृष्ट्वा च पार्थिवम् । यत्तदाशङ्कितं पापं तस्य जज्ञे विनिश्चयः ॥ १५ ॥ कौसल्या च सुमित्रा च पुत्रशोकपराजिते । प्रसुप्ते न प्रबुध्येते यथाकालसमन्विते ॥ १६ ॥ निष्प्रभा च विवर्णा च सन्ना शोकेन सन्नता । न व्यराजत कौसल्या तारेव तिमिरावृता ॥ १७ ॥ कौसल्यानन्तरं राज्ञः सुमित्रा तदनन्तरम् । न स्म विभ्राजते देवी शोकाश्रुललितानना ॥ १८ ॥

शङ्किताः सत्यः प्रतिस्रोतस्तृणाग्राणां नदीप्रवाहाभिमुखवेतसादितृणाग्राणाम् । सदृशं तुल्यम् यथातथा संचकाशिरे, संचकम्पिर इत्यर्थः ॥ १४ ॥ अथेति । यत्पापं मरणरूपमाशङ्कितं तस्य निश्चयस्तदा जज्ञ इति सम्बन्धः ॥ १५ ॥ कौसल्येति । पुत्रशोकेन पराजिते आक्रान्ते अतएव यथाकालसमन्विते मृते इव प्रसुप्ते न प्रबुध्येते ॥ १६ ॥ निष्प्रभेति । निष्प्रभा निःश्रीका । विवर्णा पूर्ववर्णाद्विपरीतवर्णा । शोकेन सन्ना कृशा । सन्नता कार्श्येन नम्रा । तिमिरावृता उत्पातकालोत्थधूमस्तिमिरं तेनावृता तारेव तारकेव न व्यराजत ॥ १७ ॥ कौसल्यानन्तरमिति । प्रथमं राजा न विभ्राजते स्म । राज्ञोऽनन्तरं कौसल्या शोकाश्रुललितानना सती न विभ्राजते स्म । तदनन्तरं देवी तथाविधा सुमित्रा न विभ्राजते स्म, मृतादृशरथाज्जीवन्त्योः

दपि स्वापलक्षणम् ॥ १३ ॥ ता इति । स्वप्नशीलज्ञाः निद्रास्वभावज्ञाः । ताः पूर्वोक्ताः स्त्रियः । चेष्टासञ्चलनादिषु चलनं सञ्चलनं हृदयनाभ्यादिस्पन्दनम्, आदिशब्देन श्वासादिकं गृह्यते, तेषु किञ्चिन्नोपलेभिरे इत्यनुषङ्गेण सम्बन्ध्यते । ताः तादृश्यः स्त्रियः । प्रतिस्रोतस्तृणाग्राणां स्रोतोभिमुखवर्तमानतृणाग्राणां सदृशं संचकाशिरे चकम्पिर इत्यर्थः ॥ १४ ॥ अथेति । यत्पापं मरणरूपं पापमाशङ्कितं तस्य निश्चयः तदा जज्ञ इति सम्बन्धः ॥ १५ ॥ कौसल्येति । कालसमन्विते मृते इव न प्रबुध्येते ॥ १६ ॥ १७ ॥ मृतादृशरथात् जीवन्त्योः कौसल्यासुमित्रयोर्विशेषो नास्तीत्याह—कौसल्येति । अत्र सुप्तेतिपदमध्याहर्तव्यम् । राज्ञः अनन्तरं समीप इत्यर्थः । सुप्ता कौसल्या न स्म विभ्राजते । तदनन्तरं तस्याः कौसल्यायाः अनन्तरं समीपे सुप्ता देवी सुमित्रापि न स्म विभ्राजत इति सम्बन्धः । उभे अपि मृते

कौसल्यासुमित्रयोर्विशेषो नासीदित्यर्थः ॥ १८ ॥ ते इति । सुते ते उभे देव्यौ च दृष्ट्वा । सुतमेव सन्तमुद्गतप्राणं तं नृपं च अन्तःपुरम् अन्तःपुरजनः अदृश्यत अपश्यत् ॥ १९ ॥ २० ॥ तासामिति । सहसोद्गतचेतने सहसोत्पन्नप्रबोधे ॥ २१–२३ ॥ नृप इति । शान्तगुणे शान्तदेहोष्णस्पन्दनादि

ते च दृष्ट्वा तथा सुप्ते उभे देव्यौ च तं नृपम् । सुप्तमेवोद्गतप्राणमन्तःपुरमदृश्यत ॥ १९ ॥ ततः प्रचुक्रुशुर्दीनाः सस्वरं ता वराङ्गनाः । करेणव इवारण्ये स्थानप्रच्युतयूथपाः ॥ २० ॥ तासामाक्रन्दशब्देन सहसोद्गतचेतने । कौसल्या च सुमित्रा च त्यक्तनिद्रे बभूवतुः ॥ २१ ॥ कौसल्या च सुमित्रा च दृष्ट्वा स्पृष्ट्वा च पार्थिवम् । हा नाथेति परिक्रुश्य पेततुर्धरणीतले ॥ २२ ॥ सा कोसलेन्द्रदुहिता वेष्टमाना महीतले । न बभ्राज रजोध्वस्ता तारेव गगनाच्च्युता ॥ २३ ॥ नृपे शान्तगुणे जाते कौसल्यां पतितां भुवि । अपश्यंस्ताः स्त्रियः सर्वा हतां नागवधूमिव ॥ २४ ॥ ततः सर्वा नरेन्द्रस्य कैकेयीप्रमुखाः स्त्रियः । रुदन्त्यः शोकसन्तप्ता निपेतुर्गतचेतनाः ॥२५॥ ताभिः स बलवान्नादः क्रोशन्तीभिरनुद्रुतः । येन स्थिरीकृतं भूयस्तद्गृहं समनादयत् ॥ २६ ॥

गुणे ॥ २४ ॥ २५ ॥ ताभिरिति । स नादः कौसल्याप्रभृतीनां नादः । क्रोशन्तीभिस्ताभिः पश्चात्प्रविष्टकैकेयीप्रभृतिभिः अनुद्रुतः अनुसृतोऽभूत् । येन अनन्तरक्रोशानुद्रुतेन पूर्वनादेन स्थिरीकृतं व्याप्तं तत्सर्वं गृहं समनादयत् महान्तं प्रतिध्वनिमजनयादित्यर्थः ॥ २६ ॥

इव प्रतिभात इति सम्बन्धः । उभे अपि मृते इव प्रतिभात इति भावः ॥ १८ ॥ ते चेति । अन्तःपुरं कर्तृ । सुप्तं नृपं सुप्ते देव्यौ च दृष्ट्वा नृपं तं दशरथमुद्गतप्राणं अदृश्यत । ते देव्यावपि तथा उद्गतप्राणे इत्यर्थः । अदृश्यत अपश्यत् कर्तरि यक् । जज्ञ इत्यर्थः । यद्वा अन्तःपुरस्य कर्तृत्वं कर्मत्वं च । तथाचायमर्थः–अन्तःपुरं स्वमात्मानं उद्गतप्राणमदृश्यत । अन्यत्समानम् ॥१९॥२०॥ तासामिति । सहसोद्गतचेतने उत्पन्नप्रबोधे ॥२१–२३॥ नृप इति । शान्तगुणे गतप्राण इत्यर्थः ॥२४॥२५॥ ताभिरिति । ताभिः कैकेयीप्रभृतिभिः । पश्चादन्तःपुरं प्रविष्टाभिः प्रथमप्रविष्टानां स्त्रीणां नादः अनुद्रुतः अभिसंवर्द्धितः अभूदित्यर्थः । येन नादेन स्थिरीकृतं मुखरितं तद्गृहं कर्तृ, भूयोऽत्यर्थं समनादयत् अनददित्यर्थः । यद्वा येन नादेन गृहं स्थिरीकृतं पूर्वं पूरितं क्रोशन्तीभिः पश्चात्प्रविष्टकैकेय्यादिभिः अनुद्रुतः अभि

तदित्यादि । पर्युत्सुकजनाकुलं पूर्वं पर्युत्सुकजनाकुलं सद्म नरदेवस्य दिष्टान्तमीयुषः नरदेवे मरणं प्राप्ते सति । समुत्त्रस्तसंभ्रान्तं समुत्त्रस्तम् उद्विग्नं संभ्रान्तम् अनवस्थितं च इत्येवमादिविशेषणयुक्तं बभूवेति सम्बन्धः ॥ २७ ॥ २८ ॥ अतीतमिति । आज्ञाय सम्यक् ज्ञात्वा । पत्नयः पत्न्यः । बाहू

तत्समुत्त्रस्तसम्भ्रान्तं पर्युत्सुकजनाकुलम् । सर्वतस्तुमुलाक्रन्दं परितापार्तबान्धवम् ॥२७॥ सद्यो निपतितानन्दं दीनविक्लवदर्शनम् । बभूव नरदेवस्य सद्म दिष्टान्तमीयुषः॥२८॥ अतीतमाज्ञाय तु पार्थिवर्षभं यशस्विनं सम्परिवार्य पत्नयः । भृशं रुदन्त्यः करुणं सुदुःखिताः प्रगृह्य बाहू व्यलपन्ननाथवत् ॥ २९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

तमग्निमिव संशान्तमम्बुहीनमिवार्णवम् । हतप्रभमिवादित्यं स्वर्गस्थं प्रेक्ष्य पार्थिवम् ॥ १ ॥ कौसल्या बाष्पपूर्णाक्षी विविधं शोककर्शिता । उपगृह्य शिरो राज्ञः कैकेयीं प्रत्यभाषत ॥ २ ॥ सकामा भव कैकेयि भुङ्क्ष्व राज्यमकण्टकम् । त्यक्त्वा राजानमेकाग्रा नृशंसे दुष्टचारिणि ॥ ३ ॥ विहाय मां गतो रामो भर्ता च स्वर्गतो मम । विपथे सार्थहीनेव नाहं जीवितुमुत्सहे ॥ ४ ॥

प्रगृह्य परस्परं बाहू गृहीत्वेत्यर्थः ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीता० अयोध्याकाण्डव्याख्याने पञ्चषष्टितमःसर्गः ॥ ६५ ॥
तमित्यादि । राज्ञः शिर उपगृह्य अङ्के कृत्वेत्यर्थः ॥१–३॥ विहायेति । विपथे दुर्मार्गे । सार्थहीना सहायभूतपथिकसङ्घरहितेत्यर्थः ॥ ४ ॥

वर्द्धितः स नादस्तद्गृहं भूयो भृशं समनादयदित्यन्वयः ॥ २६ ॥ तदिति श्लोकत्रयमेकं वाक्यम् । पर्युत्सुकजनाकुलं पूर्वं पर्युत्सुकजनेनाकुलं निबिडं सद्म नरदेवस्य दिष्टान्तमीयुषः, नरदेवे मरणं प्राप्ते सति संत्रस्तं उद्विग्नं सम्भ्रान्तमनवस्थितमिति एवमादिविशेषणयुक्तं बभूवेति सम्बन्धः ॥ २७ ॥ २८ ॥ अतीतमिति । अतीतं मृतम् । पत्नयः पत्न्यः । बाहू प्रगृह्य परस्परं बाहू गृहीत्वा ॥ २९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां पञ्चषष्टितमः सर्गः ॥ ६५ ॥ तमित्यादि । राज्ञः शिर उद्गृह्य अङ्के कृत्वेत्यर्थः ॥१–३॥ विहायेति । विपथे दुर्गमार्गे । सार्थहीना सहायभूतपथिकसङ्घ

स०–अनाथवत् स्वार्थे वतिः । अथवा जगद्रक्षके रामे सति अनाथत्वाभावात्तथोक्तिः ॥ २९ ॥ स०–अम्बुहीनम् अगस्त्यपानकाले ॥ १ ॥

भर्तारमिति । त्यक्तधर्मणः त्यक्तधर्मायाः " धर्मादनिच् केवलात् " इत्यनिच् ॥ ५ ॥ नेति । लुब्धः अर्थलिप्सुः । किम्पाकं कुत्सितपाकम्, विषमिश्र पाकमित्यर्थः । किम्पाको नाम-काकमर्दनामकविषफलविशेष इति केचित् । कुब्जानिमित्तं कुब्जाहेतोः । "निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्"

भर्तारं तं परित्यज्य का स्त्री दैवतमात्मनः । इच्छेज्जीवितुमन्यत्र कैकेय्यास्त्यक्तधर्मणः ॥ ५ ॥ न लुब्धो बुद्ध्यते दोषान् किम्पाकमिव भक्षयन् । कुब्जानिमित्तं कैकेय्या राघवाणां कुलं हतम् ॥ ६ ॥ अनियोगे नियुक्तेन राज्ञा रामं विवासितम् । सभार्यं जनकः श्रुत्वा परितप्स्यत्यहं यथा ॥ ७ ॥ स मामनाथां विधवां नाद्य जानाति धार्मिकः । रामः कमलपत्राक्षो जीवनाशमितो गतः ॥ ८ ॥ विदेहराजस्य सुता तथा सीता तपस्विनी । दुःखस्यानुचिता दुःखं वने पर्युद्विजिष्यति ॥ ९ ॥

इति हेतौ प्रथमा ॥ ६ ॥ अनियोग इति । अनियोगे वरप्रदानसमये वरस्य विशेषनिर्देशाभावे सति । नियुक्तेन इदानीं भरताभिषेकरूपे रामविवासनरूपे च कैकेय्या नियुक्तेन अनुचितनियोगे ।नियुक्तेनेतिवार्थः । जनको वैदेहः ॥ ७ ॥ स इति । इतः अत्र देशे राज्ञा जीवनाशं गतः प्राप्तः । स रामः अनाथां पुत्रविरहेण रक्षकान्तररहितां विधवां मां न जानाति ॥ ८ ॥ विदेहराजस्येति । तपस्विनी शोचनीया । दुःखमितिक्रियाविशेषणम् । पर्युद्विजिष्यति भयं

रहितेत्यर्थः ॥ ४ ॥ भर्तारमिति । त्यक्तधर्मणः त्यक्तधर्मायाः ॥ ५ ॥ कथमेवं साहसं कृतवतीत्याशङ्क्य लुब्धायास्तस्या अकार्यमस्तीति सदृष्टान्तमाह–न लुब्ध इति । लुब्धः अर्थलिप्सुः । किम्पाकं विषमिश्रपाकम् । यद्वा किम्पाकं कुत्सितपाकम्, अभक्ष्यमिति यावत् । भक्षयन् जनः दोषान्न जानातीव कुब्जानिमित्तं राघवाणां कुलं कैकेय्या हतमिति सम्बन्धः ॥ ६ ॥ अनियोगेति । अनियोगे वरदानसमये वरस्य विशेषनिर्देशाभावेपि, विनियुक्तेन इदानीं भरताभिषेकरूपे रामविवासन रूपे च विशेषे कैकेय्या नियुक्तेन । जनकः वैदेहः ॥ ७ ॥ स मामिति । राघवः रघुवंशजः । इतः जीवन्नेव नाशं गतः अदर्शनं गतः । रामो मां विधवां न जानातीति सम्बन्धः । यद्वा जीवनाशमिति पाठे–जीवनाशं, राज्ञ इति शेषः । मां विधवां च रामो न जानातीति सम्बन्धः ॥ ८ ॥ विदेहेति । पर्युद्विजिष्यति भयं

सत्य०–लुब्धः वञ्चितः । किंपाकं धत्तूरादिफलम् भक्षयन् यथा न बुध्यते तथा राजा दोषान्न बुद्ध्यत इति केचित् । किंपाकः पलाशं वा । तद्भक्षणे क्षणेन उदरशूलेति भिषजः । " किंपाको महाकाल पलाशयोः " इति मेदिनी ॥ ६ ॥

प्राप्स्यतीत्यर्थः ॥ ९ ॥ नदतामिति । नदतां नदत्सु । निशम्य नादमित्यर्थसिद्धम् ॥ १० ॥ वृद्ध इति । अल्पपुत्रः दुहितृमात्रपुत्रः । सोपि जनकोपि ॥ ११ ॥ साहमिति । दिष्टान्तं मरणम् । पतिव्रता "आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥"

नदतां भीमघोषाणां निशासु मृगपक्षिणाम् । निशम्य नूनं सन्त्रस्ता राघवं संश्रयिष्यति ॥१०॥ वृद्धश्चैवाल्पपुत्रश्च वैदेहीमनुचिन्तयन् । सोऽपि शोकसमाविष्टो ननु त्यक्ष्यति जीवितम् ॥११॥ साहमद्यैव दिष्टान्तं गमिष्यामि पतिव्रता । इदं शरीरमालिङ्ग्य प्रवेक्ष्यामि हुताशनम् ॥१२॥ तां ततः संपरिष्वज्य विलपन्तीं तपस्विनीम् । व्यपनीय सुदुःखार्तां कौसल्यां व्यावहारिकाः॥१३॥ तैलद्रोण्यामथामात्याः संवेश्य जगतीपतिम् । राज्ञः सर्वाण्यथादिष्टाश्चक्रुः कर्माण्यनन्तरम् ॥ १४ ॥ न तु सङ्कलनं राज्ञो विना पुत्रेण मन्त्रिणः । सर्वज्ञाः कर्तुमीषुस्ते ततो रक्षन्ति भूमिपम् ॥ १५ ॥ तैलद्रोण्यां तु सचिवैः शायितं तं नराधिपम् । हा मृतोऽयमिति ज्ञात्वा स्त्रियस्ताः पर्यदेवयन् ॥ १६ ॥

इत्युक्तपातिव्रत्यविशिष्टा ॥ १२ ॥ तामिति । व्यावहारिकाः व्यवहारे बाह्याभ्यन्तरसकलराजकृत्ये नियुक्ताः । "तत्र नियुक्तः" इतिठक् । अमात्या इत्यर्थः । कौसल्यां भर्त्रालिङ्गनाद्व्यपनीय विमोच्य । अन्यतोपनीयेत्यर्थः । तैलद्रोण्यां तैलपूरितकटाहे । जगतीपतिं भूपतिं संनिवेश्य राज्ञोऽनन्तरकर्तव्यानि सर्वाणि कर्माणि दुःखापनोदनादीनि चक्रुः । अपनिन्युरिति पाठे—व्यावहारिकाः व्यवहारविदो लौकिकाः । अपनिन्युरित्येकं वाक्यम् । तैलद्रोण्यामित्यारभ्य वाक्यान्तरम् । आदिष्टाः राजकृत्येष्वादिष्टाः अमात्याः कर्माणि प्रजाशासनादीनि चक्रुः ॥ १३ ॥ १४ ॥ संस्कारं कुतो न चक्रुरित्यत्राह—न त्विति । सर्वज्ञाः सर्वधर्मज्ञाः अतो न धर्मलोप इति भावः । अनेन गम्यते तैलमिश्रत्वे शवस्य पर्युषितत्वदोषो नास्तीति । सङ्कलनं संस्कारम् ॥ १५ ॥ तैलद्रोण्यामिति । तैलद्रोण्यां शायितं नृपं ज्ञात्वा । तत्र निवेशकाले राजदर्शनाभावात् हा मृतोऽयमिति भूयोऽपि पर्यवारयन्



प्राप्स्यति ॥ ९ ॥ नदतामिति । निशम्य, नादमिति शेषः ॥ १० ॥ वृद्ध इति । अल्पपुत्रः कन्यामात्रपुत्रः । सोपि जनकोपि ॥ ११ ॥ साहमिति । दिष्टान्तं मरणम् ॥ १२ ॥ तामिति । व्यावहारिकाः अन्तःपुराध्यक्षस्त्रियः ॥१३॥ तैलेति । आदिष्टाः आज्ञप्ताः । वसिष्ठादिभिरिति शेषः । कर्माणि पौरकार्याणि ॥ १४ ॥ न त्विति ।

न्नित्यर्थः ॥ १६ ॥ बाहूनिति । नेत्राणां प्रस्रवणं वारिप्रवाहो येषु तथा ॥ १७–२० ॥ त्वयेति । विदूषिताः राज्यगर्वात् तिरस्कृताः ॥ २१–२४ ॥ बाष्पपर्याकुलजनेति । शून्यचत्वरेति संमार्जनानुलेपनबल्यादिशून्यचत्वरादियुक्तेति यावत् । यथापुरं यथापूर्वम् ॥ २५ ॥ गते त्विति । शोकात्

बाहूनुद्यम्य कृपणा नेत्रप्रस्रवणैर्मुखैः । रुदन्त्यः शोकसन्तप्ताः कृपणं पर्यदेवयन् ॥१७॥ हा महाराज रामेण सततं प्रियवादिना । विहीनाः सत्यसन्धेन किमर्थं विजहासि नः ॥ १८ ॥ कैकेय्या दुष्टभावाया राघवेण वियोजिताः । कथं पतिघ्न्या वत्स्यामः समीपे विधवा वयम् ॥ १९ ॥ स हि नाथः सदास्माकं तव च प्रभुरात्मवान् । वनं रामो गतः श्रीमान् विहाय नृपतिश्रियम् ॥ २० ॥ त्वया तेन च वीरेण विना व्यसनमोहिताः । कथं वयं निवत्स्यामः कैकेय्या च विदूषिताः ॥ २१ ॥ यया तु राजा रामश्च लक्ष्मणश्च महाबलः । सीतया सह संत्यक्ताः सा कमन्यं न हास्यति ॥ २२ ॥ ता बाष्पेण च संवीताः शोकेन विपुलेन च । व्यवेष्टन्त निरानन्दा राघवस्य वरस्त्रियः ॥ २३ ॥ निशा चन्द्रविहीनेव स्त्रीव भर्तृविवर्जिता । पुरी नाराजतायोध्या हीना राज्ञा महात्मना ॥ २४ ॥ बाष्पपर्याकुलजना हाहाभूतकुलाङ्गना । शून्यचत्वरवेश्मान्ता न बभ्राज यथापुरम् ॥ २५ ॥ गते तु शोकात् त्रिदिवं नराधिपे महीतलस्थासु नृपाङ्गनासु च । निवृत्तचारः सहसा गतो रविः प्रवृत्तचारा रजनी ह्युपस्थिता ॥ २६ ॥ ऋते तु पुत्राद्दहनं महीपते र्न रोचयन्ते सुहृदः समागताः । इतीव तस्मिन् शयने न्यवेशयन् विचिन्त्य राजानमचिन्त्यदर्शनम् ॥ २७ ॥

पुत्रशोकात् । निवृत्तचारः निवृत्तकिरणप्रचारः । मत इति अस्तमितिशेषः । प्रवृत्तचारा प्रवृत्ततमःप्रचारा ॥ २६ ॥ ऋते त्विति । समागताः सुहृदः

सङ्कलनं दहनादिक्रियाम् ॥ १५ ॥ १६ ॥ बाहूनिति । नेत्रप्रस्रवणैर्मुखैरुपलक्षिताः ॥ १७–२२ ॥ ता बाष्पेणेति । राघवस्य दशरथस्य ॥ २३ ॥ २४ ॥ यथापुरं यथापूर्वम् ॥ २५ ॥ गते त्विति । शोकात् निवृत्तचारः निवृत्तकिरणसञ्चारः । गतः अस्तमिति शेषः ॥२६॥ ऋते त्विति । तस्मिन् शयने तैलद्रोण्याम् ॥ २७ ॥ २८ ॥

स०–निवृत्तचारः नितरां वृत्तः प्रवृत्तः चारः अपसर्पणं यस्य स तथा । निवृत्तगतिरिति वा । “ चारः प्रवालकक्षे स्याद्गतौ बन्धापसर्पयोः ” इति विश्वः ॥ २९ ॥

बान्धवाः पुत्रादृते महीपतेर्दहनं न रोचयन्ते । अनेनातिबलपराक्रमयुक्तसत्पुत्रसद्भावेप्यस्मिन् काले दैववशादेकोप्यसन्निहितः तूष्णीमवस्थानमयुक्तम् अतो येन केनापि प्रकारेण संस्कारः कर्तव्य इति कैश्चिद्यत्नः कृत इति गम्यते । तस्मिन् शयने पूर्वोक्ततैलद्रोण्याम् ॥ २७ ॥ गतप्रभेति ।

गतप्रभा द्यौरिव भास्करं विना व्यपेतनक्षत्रगणेव शर्वरी । पुरी बभासे रहिता महात्मना न चास्रकण्ठाकुलमार्गचत्वरा ॥२८॥ नराश्च नार्यश्च समेत्य सङ्घशो विगर्हमाणा भरतस्य मातरम् । तदा नगर्यां नरदेवसंक्षये बभूवुरार्ता न च शर्म लेभिरे ॥२९॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे षट्षष्टितमः सर्गः ॥६६॥
आक्रन्दितनिरानन्दा सास्रकण्ठजनाकुला । अयोध्यायामवतता सा व्यतीयाय शर्वरी ॥१॥ व्यतीतायां तु शर्वर्यामादित्यस्योदये ततः । समेत्य राजकर्तारः सभामीयुर्द्विजातयः ॥२॥ मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च काश्यपः । कात्यायनो गौतमश्च जाबालिश्च महायशाः ॥३॥ एते द्विजाः सहामात्यैः पृथग्वाचमुदीरयन् । वसिष्ठमेवाभिमुखाः श्रेष्ठं राजपुरोहितम् ॥४॥ अतीता शर्वरी दुःखं या नो वर्षशतोपमा । अस्मिन्पञ्चत्वमापन्ने पुत्रशोकेन पार्थिवे ॥५॥

व्यपेतनक्षत्रगणा चन्द्रादिसकलतेजोहीना । रामादिसकलराजरहितस्योपमा । आस्रकण्ठैः कण्ठस्तम्भितबाष्पैः आकुलानि मार्गचत्वराणि यस्याः सा तथोक्ता ॥ २८ ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥
अथाराजकदोषवर्णनम्–आक्रन्दित निरानन्देति । आक्रन्दितेन हेतुना निरानन्दा । अवतता दीर्घा, दुःखवशादतिदीर्घभूतेत्यर्थः ॥ १ ॥ व्यतीतायामिति । राजकर्तारः राजाभिषेककार्यकर्तारः ॥२–४॥ अतीतेति । अस्मिन् पार्थिवे पुत्रशोकेन पञ्चत्वमापन्ने सति । या शर्वरी नः अस्माकं वर्षशतोपमा

नराश्चेति । नरदेवसङ्क्षये नगर्यां तदा नरा नार्यश्च सङ्घशः समेत्य भरतस्य मातरं विगर्हमाणा आर्ता बभूवुः । न शर्म लेभिरे चेति सम्बन्धः ॥ २९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामा०अयोध्याकाण्डव्याख्यायां षट्षष्टितमः सर्गः ॥६६ ॥ आक्रन्दितेति । आक्रन्दितेन रोदनेन निरानन्दा। सास्रकण्ठजनाकुला विलापास्रकण्ठजनैः क्षुब्धा । शर्वरी अयोध्यायां तता विस्तृता दुःखवशाद्दीर्घभूता व्यतीयाय ॥ १ ॥ व्यतीतायामिति । राजकर्तारः राजाभिषेककर्तारो द्विजातयः ॥२॥ एत इति । द्विजाः उदीरयन् । अडभाव आर्षः ॥ ३ ॥ ४॥ अतीतेति । पुत्रशोकेनास्मिन् पार्थिवे पञ्चत्वमापन्ने सति । दुःखं यथातथा वर्षशतोपमा शर्वरी अतीतेति

आसीत् । सा शर्वरी दुःखं यथा तथा अतीता ॥ ५ ॥ ६ ॥ उभाविति । राजगृहे राजगृहनामनि पुरे, वर्तेते इतिशेषः ॥ ७ ॥ इक्ष्वाकूणामिति निर्धारणे षष्ठी । रामादीनां चतुर्णां मध्ये इत्यर्थः । अद्यैव राजाविधाने दोषः—अराजकं हीति ॥ ८ ॥ अराजकत्वस्य विनाशहेतुत्वं प्रपञ्चयति—नाराजक

स्वर्गतश्च महाराजो रामश्चारण्यमाश्रितः । लक्ष्मणश्चापि तेजस्वी रामेणैव गतः सह ॥ ६ ॥ उभौ भरतशत्रुघ्नौ कैकयेषु परन्तपौ । पुरे राजगृहे रम्ये मातामहनिवेशने ॥ ७ ॥ इक्ष्वाकूणामिहाद्यैव कश्चिद्राजा विधीयताम् । अराजकं हि नो राष्ट्रं न विनाशमवाप्नुयात् ॥ ८ ॥ नाराजके जनपदे विद्युन्माली महास्वनः । अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥ ९ ॥ नाराजके जनपदे बीजमुष्टिः प्रकीर्यते । नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥ १० ॥ नाराजके धनं चास्ति नास्ति भार्याप्यराजके । इदमत्याहितं चान्यत् कुतः सत्यमराजके ॥ ११ ॥ नाराजके जनपदे कारयन्ति सभां नराः । उद्यानानि च रम्याणि हृष्टाः पुण्यगृहाणि च ॥ १२ ॥ नाराजके जनपदे यज्ञशीला द्विजातयः । सत्त्राण्यन्वासते दान्ता ब्राह्मणाः संशितव्रताः ॥ १३ ॥

इत्यादिना । विद्युन्मालीत्यादिविशेषणैर्महावर्षो दुर्लभ इतिभावः । दिव्येनेत्यनेन शिलावर्षस्तु भविष्यतीति भावः ॥ ९ ॥ नेति । बीजमुष्टिः न प्रकीर्यते फललाभनिश्चयाभावादिति भावः । भार्या वशे न वर्तते व्यभिचारे शिक्षकाभावादिति भावः॥ १० ॥ नाराजक इति । धनं नास्ति चोरभयादिति भावः । भार्या नास्ति बन्धुनिग्रहादितिभावः । इदं वक्ष्यमाणम् । अन्यत् पूर्वोक्तभयादन्यत् । अत्याहितं महाभीतिरस्ति । "अत्याहितं महाभीतिः" इत्यमरः । तदेवाह कुत इति । सत्यं क्रयविक्रयादिलक्षणम् ॥ ११ ॥ सभां न कारयन्ति मनस्स्वास्थ्याभावात् । उद्यानानि न कारयन्ति छेदनभयात् । पुण्यगृहाणि देवतायतनादीनि न कारयन्ति दुर्गनिर्माणभयादिति भावः ॥ १२ ॥ ब्रह्म वेदः तदध्येतारो ब्राह्मणाः । "तदधीते तद्वेद" इत्यण् । सम्बन्धः ॥ ५ ॥ ६ ॥ उभाविति । कैकयेषु केकयदेशेषु । राजगृहे राजगृहनाम्नि पुरे, वर्तते इति शेषः ॥ ७ ॥ इक्ष्वाकूणामिति । इक्ष्वाकूणां मध्ये ॥ ८ ॥ ९ ॥ नाराजक इति । बीजमुष्टिर्न प्रकीर्यते बीजावापो न क्रियत इत्यर्थः ॥ १० ॥ इदमत्याहितं च नास्ति "अत्याहितं महाभीतिः" इत्यमरः । अराजके सति अमार्गवर्तिनां न कुत्रापि भयशङ्केति भावः । पुण्यगृहाणि पुण्यसम्पादकानि सत्रगृहाणि, मठादीनि वा॥ ११ ॥ १२ ॥ सत्राणि दीर्घसत्राणि । नान्वासते न कुर्वन्तीत्यर्थः॥ १३ ॥

कतक०—' राजकं सद्भि राष्ट्रं नो नाशं नावाप्नुयाद्यथा ' इति पाठः । नः अस्माकम् राष्ट्रं राजकं राजयुतं सत् । नाशं नाप्नुयाद्यथा तथा कश्चिद्राजा विधीयतामित्यन्वयः । हिर्वाक्यालङ्कारे ॥ ८ ॥

सत्राणि महायज्ञान् । यत्र सर्वे यजमानाः सर्वे ऋत्विजः । नान्वासते नानुतिष्ठन्ति, विघ्नभयात् ॥ १३ ॥ यज्वनः यज्वानः । वसुसम्पन्ना अपि धन सम्पन्ना अपि । आप्तदक्षिणाः भूरिदक्षिणाः । न विसृजन्ति न दिशन्ति । आढयत्वव्यञ्जनेन दण्डभयादितिभावः ॥ १४ ॥ नटाः नाट्याभिनयसमर्थाः, नर्तकाः नर्तनमात्रसमर्थाः, प्रभूताः बहुलाः नटनर्तका येषु ते तथोक्ताः । उत्सवा देवतोत्सवाः । समाजाः तीर्थयात्राः । एतदुभयाभावे राष्ट्रहानिरित्यभि

नाराजके जनपदे महायज्ञेषु यज्वनः । ब्राह्मणा वसुसम्पन्ना विसृजन्त्याप्तदक्षिणाः ॥ १४ ॥ नाराजके जनपदे प्रभूत नटनर्तकाः । उत्सवाश्च समाजाश्च वर्धन्ते राष्ट्रवर्धनाः ॥ १५ ॥ नाराजके जनपदे सिद्धार्था व्यवहारिणः । कथाभिरनुरज्यन्ते कथाशीलाः कथाप्रियैः ॥ १६ ॥ नाराजके जनपदे उद्यानानि समागताः । सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः ॥ १७ ॥ नाराजके जनपदे वाहनैः शीघ्रगामिभिः । नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः ॥ १८ ॥ नाराजके जनपदे धनवन्तः सुरक्षिताः । शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥ १९ ॥ नाराजके जनपदे बद्धघण्टाविषाणिनः । अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः ॥ २० ॥

प्रायेणाह राष्ट्रवर्धना इति ॥ १५ ॥ व्यवहारिणः कमप्यर्थमुद्दिश्यान्योन्यं विवदमानाः । सिद्धार्थाः लब्धप्रयोजनाः । न भवन्ति निरूपणनियमन कर्तुरभावादुत्कोचप्रायत्वाच्चेति भावः । यद्वा व्यवहारिणः क्रयविक्रयरूपेण व्यापारेण जीवन्तः । कथाशीलाः इतिहासपुराणादिकथावदनशीलाः । कथाप्रियैः कथासु तत्परैः श्रोतृभिः । कथाभिः हेतुभिः । नानुरज्यन्ते अनुरक्ता न क्रियन्ते । श्रोतॄणां स्वास्थ्याभावादिति भावः । यद्वा कथाशीलाः वाव दूकाः कथाभिः वादजल्पवितण्डाभिः । कथाप्रियैः सामाजिकैः सह । नानुरज्यन्ते न तुष्यन्ति । तत्पारितोषिकादिप्रदराजाभावात् ॥ १६ ॥ समा गताः सङ्घीभूताः । न यान्ति पुष्पापचयाद्यर्थं सखीभिः सह न यान्ति । चोरभयादिति भावः ॥ १७ ॥ शीघ्रगामिभिर्वाहनैः रथैरित्यर्थः । न निर्यान्ति परिभवशङ्कयेति भावः ॥ १८ ॥ विवृतद्वारा न शेरते किन्तु बद्धकपाटा एव ॥ १९ ॥ विषाणिनः प्रशस्तदन्ताः । षष्टिहायनाः

यज्वनः यज्वानः ॥ १४ ॥ उत्सवाः देवताद्युत्सवाः । समाजः परिषदः यात्रा इत्यर्थः ॥ १५ ॥ व्यवहारिणः कमप्यर्थमुद्दिश्य अन्योन्यं विवदमानाः । सिद्धार्था निर्णीतार्था न भवन्ति । यद्वा व्यवहारिणः क्रयविक्रयरूपेण व्यापारेण ये जीवन्ति ते व्यवहारिणः सिद्धार्था निष्पन्नप्रयोजना न भवन्ति । किञ्च कथाशीलाः इतिहास

षष्टिवर्षाः ॥ २० ॥ नेति । अस्यतां क्षिपताम् । उपासने अभ्यासे "स्यादुपासनमभ्यासः" इत्यमरः । तलनिर्घोषः ज्याकरतलनिर्घोषः ॥ २१ ॥ क्षेमं क्षेमावहम् । बहुपण्यैः समाचिताः समृद्धाः । यद्वा पण्यानां क्रय्यद्रव्याणां समाचिताः दशभाराः । "आचितो दशभारः स्यात्" इत्यमरः ।

नाराजके जनपदे शरान् सततमस्यताम् । श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ॥ २१ ॥ नाराजके जनपदे वणिजो दूरगामिनः । गच्छन्ति क्षेममध्वानं बहुपण्यसमाचिताः ॥ २२ ॥ नाराजके जनपदे चरत्येकचरो वशी । भावयन्नात्मनात्मानं यत्र सायंगृहो मुनिः ॥ २३ ॥ नाराजके जनपदे योगक्षेमं प्रवर्तते । न चाप्यराजके सेना शत्रून् विषहते युधि ॥ २४ ॥ नाराजके जनपदे हृष्टैः परमवाजिभिः । नराः संयान्ति सहसा रथैश्च परिमण्डिताः ॥ २५ ॥ नाराजके जनपदे नराः शास्त्रविशारदाः । संवदन्तोऽवतिष्ठन्ते वनेषूपवनेषु च ॥ २६ ॥ नाराजके जनपदे माल्यमोदकदक्षिणाः । देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः ॥ २७ ॥ नाराजके जनपदे चन्दनागरुरूषिताः । राजपुत्रा विराजन्ते वसन्त इव शाखिनः ॥ २८ ॥

बहवः पण्यसमाचिताः येषां ते तथोक्ताः ॥ २२ ॥ एकोऽसहायश्चरतीत्येकचरः । वशी जितेन्द्रियः । आत्मना अन्तःकरणेन । आत्मानं परमात्मानम् । भावयन् चिन्तयन् । यत्र सायंगृहः यस्मिन्प्रदेशे सायङ्कालो भवति तत्र गृहं निवासो यस्य तथा सन्न चरति अन्नप्रदात्रभावादिति भावः ॥ २३ ॥ योगक्षेमम् अलब्धलाभो योगः, लब्धस्य परिपालनं क्षेमः, योगश्च क्षेमश्च योगक्षेमम् । द्वन्द्वैकवद्भावः । विषहते जयति ॥ २४ ॥ परिमण्डिताः भूषिताः ॥ २५ ॥ संवदन्तः व्याकुर्वन्तः । वनेषु मुनीनामावासभूतवनेषु ॥ २६ ॥ कल्प्यन्ते सम्पाद्यन्ते ॥ २७ ॥ रूषिताः

पुराणकथावदनशीलाः । कथाप्रियैः कथा प्रिया येषां तैः जनैः, कथाभिर्नानुरज्यन्ते वक्तृश्रोतॄणां स्वास्थ्याभावादिति भावः ॥ १६-२० ॥ उपासने अभ्यासे ॥२१॥ बहुपण्यसमाचिताः बहुक्रयार्हवस्तुसहिताः ॥२२॥ वशी जितेन्द्रियः । एकचरः यतिः "अष्टौ मास एकाकी यतिश्चरेत्" इति श्रुतेः । आत्मना मनसा यत्र सायं गृहं यस्मिन् प्रदेशे सायंकालो भवति तत्र गृहं निवासो यस्य सः तथा ॥ २३ ॥ योगक्षेमम् अलब्धस्य लाभो योगः, तस्य पालनं क्षेमः । योगश्च क्षेमश्च योगक्षेमम् ।

लिप्ताः ॥२८॥ यथेति । तथा राष्ट्रमिति न शोभत इतिशेषः ॥२९॥ ध्वज इति । ध्वजो रथस्येत्यादिदृष्टान्तार्थं वचः । प्रज्ञानं ज्ञापकम् । ज्ञानं लिङ्गम् । ध्वजः प्रकाशकः । इतः अस्माल्लोकात्प्रेत्य देवत्वं गत इत्यर्थः ॥ ३०॥३१ ॥ ये हीति । सम्भिन्नमर्यादाः उल्लङ्घितस्वस्वजातिवर्णाश्रममर्यादाः । अतएव

यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनम् । अगोपाला यथा गावस्तथा राष्ट्रमराजकम् ॥ २९ ॥ ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं विभावसोः । तेषां यो नो ध्वजो राजा स देवत्वमितो गतः ॥ ३० ॥ नाराजके जनपदे स्वकं भवति कस्यचित् । मत्स्या इव नरा नित्यं भक्षयन्ति परस्परम् ॥ ३१ ॥ ये हि सम्भिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः । तेऽपि भावाय कल्पन्ते राजदण्डनिपीडिताः ॥ ३२ ॥ यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते । तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥३३॥ राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् । राजा माता पिता चैव राजा हितकरो नृणाम् ॥३४॥ यमो वैश्रवणः शक्रो वरुणश्च महाबलः । विशेष्यन्ते नरेन्द्रेण वृत्तेन महता ततः॥३५॥

पूर्वं राजदण्डनिपीडिताः ये नास्तिकास्ते इदानीं छिन्नसंशयाः राजदण्डशङ्कारहिताः सन्तः, भावाय सद्भावाय प्रभावाय वा । कल्पन्ते समस्तदैष्टिकपीडासमर्था भवन्तीत्यर्थः ॥ ३२ ॥ यथेति । दृष्टिः शरीरस्य यथा प्रवर्तते हितसाधकत्वेनाहितनिवारकत्वेन च सदैव प्रवर्तते । सत्यधर्मयोः प्रभवः कारणं राजापि राष्ट्रस्य तथा प्रवर्तत इत्यर्थः ॥ ३३ ॥ राजेति । कुलवतां क्षेत्रबीजशुद्धिमताम् । कुलं कुलाचारप्रवर्तकः ॥ ३४ ॥ यम इति । नरेन्द्रेण महता वृत्तेन सर्वप्रकाररक्षणरूपचरित्रेण । विशेष्यन्ते अधःक्रियन्ते । यकि गुणश्छान्दसः । यमस्य दण्डनमात्रम्, कुबेरस्य धनदत्वमेव, इन्द्रस्य पालन

द्वन्द्वैकवद्भावः । संवदन्तः व्याकुर्वन्तः । वनेषु ऋषीणां निवासेषु ॥ २४-२९ ॥ प्रज्ञानं ज्ञापकम् ध्वजः प्रकाशत इत्यर्थः । यो नो ध्वजः लक्षणम् ॥३०॥३१॥ एवमराजके दोषानभिधाय सराजके गुणानाह–ये त्विति । सम्भिन्नमर्यादाः त्यक्तमर्यादाः । छिन्नसंशयाः कृत्याकृत्यविचारशून्याः । राजदण्डनिपीडिताः । भावाय साधुत्वाय कल्पन्ते योग्या भवन्ति । नृपे सतीति शेषः ॥ ३२ ॥ यथेति । दृष्टिः चक्षुर्नित्यं शरीरस्य प्रवर्तते हितसाधनत्वेनाहितनिवर्तकत्वेन चेति शेषः । तथा नरेन्द्रः राष्ट्रस्य धर्माधर्मयोः प्रभव उत्पत्तिस्थानं प्रवर्तकस्सन्नित्यर्थः । प्रवर्तत इति सम्बन्धः ॥ ३३ ॥ राजेति । राजा सत्यं धर्मश्च तयोः प्रवर्तक इत्यर्थः । कुलं कुलाचारप्रवर्तकः ॥ ३४ ॥ यम इति । नरेन्द्रेण महता वृत्तेन सर्वप्रकाररक्षणरूपचरित्रेण यमादयो विशेष्यन्ते अधःक्रियन्ते । यमस्य दण्डमात्रत्वम्, कुबेरस्य धनप्रदान

मेव, वरुणस्य सदाचारनियमनमेव । एतद्गुणचतुष्टययुक्तत्वान्नरेन्द्रेण यमादयो व्यावर्त्यन्त इत्यर्थः । यद्वा यतो महता वृत्तेन युक्तः ततो हेतोः एकैक दिग्वर्तिप्रजारक्षकयमादिभ्यः विशेष्यते अतिशयते ॥३५॥ अहो इति । साध्वसाधुनी लोके विभजन् व्यवस्थापयन् । राजा न स्याच्चेत् । इदम् अराज

अहो तम इवेदं स्यान्न प्रज्ञायेत किञ्चन । राजा चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥ ३६ ॥ जीवत्यपि महाराजे तवैव वचनं वयम् । नातिक्रमामहे सर्वे वेलां प्राप्येव सागरः ॥ ३७ ॥ स नः समीक्ष्य द्विजवर्य वृत्तं नृपं विना राज्यमरण्यभूतम् । कुमारमिक्ष्वाकुसुतं वदान्यं त्वमेव राजानमिहाभिषिञ्च ॥ ३८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

तेषां हि वचनं श्रुत्वा वसिष्ठः प्रत्युवाच ह । मित्रामात्यगणान् सर्वान् ब्राह्मणांस्तानिदं वचः ॥ १ ॥

यदसौ मातुलकुले पुरे राजगृहे सुखी । भरतो वसति भ्रात्रा शत्रुघ्नेन समन्वितः ॥ २ ॥

कत्वम् । अहो तम इव स्यात् । यतः किंचन कर्तव्याकर्तव्यं न प्रज्ञायेत । यद्वा साध्वसाधुनी विभजन् राजा लोके न भवेत् चेत् इदं जगत् किञ्चन किञ्चिदपि । न प्रज्ञायेत न प्रतीयेत किंतु तम इव स्यात् सूर्याभाव इव तमोरूपमेव स्यात् ॥ ३६ ॥ जीवतीति । महाराजे जीवत्यपि वयं तव वचनं नातिक्रमामहे इदानीं किमुतेति भावः ॥३७॥ स इति । हे द्विजवर्य वसिष्ठ ! सः त्वम् । नः अस्माकम् । वृत्तम् अराजकत्वप्रमुषितं सर्वं कृत्यं समीक्ष्य नृपं विना राज्यमरण्यभूतं स्यादित्यपि समीक्ष्य इक्ष्वाकुसुतं दशरथतनयम् अभिषिञ्चेति योजना ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अ० सप्तषष्टितमः सर्गः ॥ ६७ ॥ तेषामित्यादि । मित्रामात्यगणान् मित्रभूतामात्यगणान् सुमन्त्रादीन् । ब्राह्मणान् मार्कण्डेयादीन् ॥१॥ यदित्यादि । राजगृहे राजगृहाख्ये पुरे । यद्यस्मात् वसति तत्तस्मात् जवनाः वेगवन्तः दूताः गच्छन्त्विति सम्बन्धः । किं समीक्षामहे किं विचा

त्वमेव, इन्द्रस्य पालनमेव, वरुणस्य सदाचारनियमनमेव । एतद्गुणचतुष्टययुक्तत्वान्नरेन्द्रेण यमादयो व्यावर्तन्त इत्यर्थः ॥ ३५ ॥ अहो इति । साधु असाध्विति विभजन् व्यवस्थापयन् राजा लोके न भवेच्चेत् इदं जगत् । किञ्चन किञ्चिदपि । न प्रज्ञायेत न प्रतीयेत किन्तु तम इव स्यादित्यर्थः ॥ ३६ ॥ ३७ ॥ स न इति । संवृत्तं राज्यस्थापननिष्कासनरूपसामर्थ्यं नृपं विनारण्यभूतं राज्यं च समीक्ष्य इक्ष्वाकुसुतम् इक्ष्वाकुवंशकुमारं अभिषिञ्चेति सम्बन्धः ॥३८॥ इति श्रीमहेश्वरतीर्थ० श्रीरामा० अयोध्याकाण्डव्याख्यायां सप्तषष्टितमःसर्गः॥६७॥१॥ यदित्यादिश्लोकद्वयमेकं वाक्यम् । यो राजगृहे राजगृहाख्ये पुरे यद्यस्मात् वसति तत्तस्मात् । जवनाः

रयामः । राज्ञैव भरताय राज्यस्य दत्तत्वादितिभावः ॥ २ ॥ ३ ॥ तथैवामात्या अनुजानन्ति गच्छन्त्विवति ॥ ४ ॥ एहीति । सिद्धार्थविजयजयन्ताशो काख्या मन्त्रिसमाननामानो दूताः नतु मन्त्रिणः । मन्त्रिव्यतिरिक्तनन्दनशब्दसहपाठात् । 'पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः' इत्युपरि वक्ष्य

तच्छीघ्रं जवना दूता गच्छन्तु त्वरितैर्हयैः । आनेतुं भ्रातरौ वीरौ किं समीक्षामहे वयम् ॥ ३ ॥ गच्छन्त्विवति ततः सर्वे वसिष्ठं वाक्यमब्रुवन् । तेषां तद्वचनं श्रुत्वा वसिष्ठो वाक्यमब्रवीत् ॥ ४ ॥ एहि सिद्धार्थ विजय जयन्ताशोकनन्दन । श्रूयतामितिकर्तव्यं सर्वानेव ब्रवीमि वः ॥ ५ ॥ पुरं राजगृहं गत्वा शीघ्रं शीघ्रजवैर्हयैः । त्यक्तशोकैरिदं वाच्यः शासनाद्भरतो मम ॥ ६ ॥ पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः । त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥७॥ मा चास्मै प्रोषितं रामं मा चास्मै पितरं मृतम् । भवन्तः शंसिषुर्गत्वा राघवाणामिमं क्षयम् ॥ ८ ॥ कौशेयानि च वस्त्राणि भूषणानि वराणि च । क्षिप्रमादाय राज्ञश्च भरतस्य च गच्छत ॥ ९ ॥ दत्तपथ्यशना दूता जग्मुः स्वं स्वं निवेशनम् । केकयांस्ते गमिष्यन्तो हयानारुह्य सम्मतान् ॥ १० ॥

माणत्वाच्च । इतिकर्तव्यं कार्यकलापम् ॥ ५ ॥ पुरमिति । त्यक्तशोकैः, भवद्भिरितिशेषः । इदं वक्ष्यमाणं वचनं मम शासनात् भरतो वाच्यः ॥६॥ पुरोहित इति । मन्त्रिणः प्राहुरिति विपरिणामः । अत्ययः कालातिपातः । तं प्राप्तमात्ययिकम् । "विनयादिभ्यष्ठक्" इतिठक् । तादृशं कृत्यमस्ति अतस्त्वरमाणो निर्याहीति वाच्य इत्यनुकर्षः । यद्वा अत्ययः कृच्छ्रं तत्र भवमात्ययिकम् । "अत्ययोऽतिक्रमे कृच्छ्रे" इत्यमरः । कृत्यमस्तीतिशेषः ॥ ७ ॥ मा चेति । मा शंसिषुरित्यन्वयः । राघवाणां क्षयम् अपचयम्, तेजःक्षयमित्यर्थः । "निलयापचयौ क्षयः" इत्यमरः ॥ ८ ॥ कौशेयानीति । कौशेयानि पट्टवस्त्रविशेषान् । राज्ञः केकयराजस्य ॥ ९ ॥ दत्तपथ्यशना इति । दत्तपथ्यशनाः दत्तमार्गाशनहेतुभूतद्रव्या इत्यर्थः । स्वनिवेशगमनं

वेगवन्तः दूताः गच्छन्त्विवति सम्बन्धः । किं समीक्षामहे किं विचारयामः॥२–४॥ सिद्धार्थादयो मन्त्रिसमाननामानो दूताः, न मन्त्रिणः॥५॥६॥ आत्ययिकम् अत्ययः अतिक्रमः तत्रभवमात्ययिकम्, अतिक्रमजन्यं कृत्यमस्तीत्यर्थः । "अत्ययोऽतिक्रमे कृच्छ्रे" इत्यमरः॥७॥८॥ कौशेयानीति । राज्ञः केकयराजस्य ॥९॥ दत्तपथ्यशनाः

स०–त्वया आत्ययिकं अतिक्रमणयोग्यं कृत्यमस्ति । त्वदागमनैकाधीनप्रयोजनमस्तीति यावत् ॥ ७ ॥ शंसिषुरिति "माङि लुङ्" इति लुङ् सर्वलकारापवादः । अत एवाडभावः । इतः कैकेयीनिमित्तं क्षयम अनर्थम् । राघवाणां क्षयं विलापम् "विलापापचयौ क्षयौ" इति नि[illegible] ॥ ८ ॥

स्त्रीप्रभृतीनां स्वप्रयाणं कथयितुम् । सम्मतान् जवनत्वेनाध्वश्रमसहत्वेन च सम्मतान् ॥ १० ॥ तत इति । प्रास्थानिकं प्रस्थानप्रयोजनकम् । अनन्तरं कार्यशेषं पाथेयादिकं च कृत्वा पुनर्वसिष्ठेनाभ्यनुज्ञानं स्वविलम्बस्यालपत्वं द्योतयितुम् ॥ ११ ॥ न्यन्तेनेति । अपरतालस्य अपरतालो

ततः प्रास्थानिकं कृत्वा कार्यशेषमनन्तरम् । वसिष्ठेनाभ्यनुज्ञाता दूताः सन्त्वरिता ययुः ॥ ११ ॥
न्यन्तेनापरतालस्य प्रलम्बस्योत्तरं प्रति । निषेवमाणास्ते जग्मुर्नदीं मध्येन मालिनीम् ॥ १२ ॥
ते हस्तिनपुरे गङ्गां तीर्त्वा प्रत्यङ्मुखा ययुः । पाञ्चालदेशमासाद्य मध्येन कुरुजाङ्गलम् ॥ १३ ॥
सरांसि च सुपूर्णानि नदीश्च विमलोदकाः । निरीक्षमाणास्ते जग्मुर्दूताः कार्यवशाद्द्रुतम् ॥ १४ ॥

नाम गिरिः तस्य न्यन्तेन नितरामन्तेन, चरमप्रदेशेनेत्यर्थः । "अन्तो जघन्यं चरमम्" इत्यमरः । प्रलम्बस्य प्रलम्बाख्यगिरेः । उत्तरं प्रति उत्तरभागमुद्दिश्य । तयोर्मध्येन मालिनीं नदीं निषेवमाणा जग्मुः । अपरतालः पुरस्ताद्दक्षिणोत्तरायतः, प्रलम्बः पश्चाद्भागे दक्षिणोत्तरायतः पूर्वापरायतश्चेति पर्वतसंनिवेशः । प्रथममयोध्यायाः पश्चिमाभिमुखं निर्गच्छन्तः तयोर्मध्येन उदङ्मुखाः कियन्तमध्वानं मालिनीतीरमार्गेण गत्वा ततः प्रलम्बस्योत्तरभागेन पश्चिमाभिमुखा जग्मुरित्यर्थः ॥ १२ ॥ ते हस्तिनपुर इत्यादिश्लोकद्वयमेकं वाक्यम् । हस्तिनपुरे हस्तिनपुरसमीपे । गङ्गां तीर्त्वा प्रत्यङ्मुखाः सन्तः जग्मुः, ते दूताः मध्येन कुरुजाङ्गलं कुरुजाङ्गलस्य मध्यमार्गेण । "एनपा द्वितीया" इति द्वितीया । कुरुदेशैकदेशो

दत्तमार्गाशनहेतुभूतद्रव्याः । सम्मतान् ॥ १० ॥ प्रास्थानिकं प्रस्थानयोग्यद्रव्यम्, निक्षिप्येत्यर्थः । कार्यशेषमुद्दिश्येति शेषः ॥ ११ ॥ न्यन्तेनेति । अपरतालस्य अपरतालनामा गिरिः तस्य न्यन्तेन नितरामन्तो न्यन्तः चरमप्रदेशः पश्चिमभाग इत्यर्थः । तेन प्रलम्बस्य अपरतालपर्वतात्पश्चिमभागस्थस्य प्रलम्बाख्यगिरेः उत्तरं प्रति उत्तरभागमुद्दिश्य तयोर्मध्येन मालिनीं मालिन्याख्यां नदीं निषेवमाणा जग्मुः । अपरतालः पुरस्ताद्दक्षिणोत्तरायतः, प्रलम्बस्तु पश्चिमभागे दक्षिणोत्तरायतः पूर्वापरायातश्च । एवं पर्वतसन्निवेशप्रकारः—प्रथममयोध्यायाः पश्चिमाभिमुखं निर्गच्छन्तः दक्षिणोत्तरान्योन्यपूर्वापरस्थयोरपरतालप्रलम्बयोर्मध्येन मालिनीं नाम नदीं निषेवमाणा उदङ्मुखाः कियन्तं दूरं गत्वा ततः प्रलम्बस्योत्तरभागेन पश्चिमाभिमुखा जग्मुरित्यर्थः ॥ १२ ॥ ते हस्तिनपुर इत्यादि श्लोकद्वयमेकं वाक्यम् । ते पाञ्चालदेशमासाद्य हस्तिनपुरे गङ्गां तीर्त्वा प्रत्यङ्मुखा ययुः । ते दूताः कुरुजाङ्गलमध्येन कुरुजाङ्गलयोर्मध्यमार्गेण सरांसि नदीश्च निरीक्षमाणाः कार्यवशात् द्रुतं जग्मुरिति योजना ॥ १३ ॥ १४ ॥

जाङ्गलः हस्तिनपुरस्य कुरुदेशस्थत्वात्तदन्तर्गतजाङ्गलाख्यदेशमध्येन पाञ्चालदेशमासाद्य तत्रदेशे सरःप्रभृतीन्निरीक्षमाणा जग्मुः ॥१३॥१४॥ त इति। शरदण्डां शरदण्डाख्यां नदीम्। उपातिजग्मुः उपगम्यातीत्य जग्मुः ॥ १५ ॥ निकूलवृक्षमिति। निकूलवृक्षं शरदण्डायाः पश्चिमकूलस्थं पुण्यवृक्षम्।

ते प्रसन्नोदकां दिव्यां नानाविहगसेविताम्। उपातिजग्मुर्वेगेन शरदण्डां जनाकुलाम् ॥ १५ ॥ निकूलवृक्षमासाद्य दिव्यं सत्योपयाचनम्। अभिगम्याभिवाद्यं तं कुलिङ्गां प्राविशन् पुरीम् ॥ १६ ॥ अभिकालं ततः प्राप्य ते बोधिभवनाच्च्युताम्। पितृपैतामहीं पुण्यां तेरुरिक्षुमतीं नदीम् ॥ १७ ॥ अवेक्ष्याञ्जलिपानांश्च ब्राह्मणान् वेदपारगान्। ययुर्मध्येन बाह्लीकान् सुदामानं च पर्वतम् ॥ १८ ॥ विष्णोः पदं प्रेक्षमाणा विपाशां चापि शाल्मलीम्। नदीर्वापीस्तटाकानि पल्वलानि सरांसि च ॥ १९ ॥ पश्यन्तो विविधांश्चापि सिंहव्याघ्रमृगद्विपान्। ययुः पथातिमहता शासनं भर्तुरीप्सवः ॥ २० ॥

दिव्यं देवाधिष्ठानवत्। सत्यमुपयाचनं प्रार्थनं यस्मादित्यन्वर्थनाम सत्योपयाचनमिति, अर्थितार्थप्रदमित्यर्थः। अभिवाद्यं सर्वनमस्कार्यम्। अभिगम्य प्रदक्षिणीकृत्य, कुलिङ्गां पुरीं प्राविशन् ॥ १६ ॥ अभिकालमिति। अभिकालं तदाख्यग्रामम्। कुलिङ्गासाहचर्यात् बोधिभवनात् तदाख्यात् पर्वतात् नदीमूलत्वोक्तेः। पितृपैतामहीं दशरथवंश्यानुभूताम्, तत्तीरप्रदेशग्रामा इक्ष्वाकूणामिति भावः ॥ १७ ॥ अवेक्ष्येति। अञ्जलिपानान् अञ्जलिप्रमाणजलमात्राहारान्। ब्राह्मणान् इक्षुमतीतीरवासिनः। मध्येन बाह्लीकान् बाह्लीकदेशानां मध्येन। "एनपा द्वितीया"। सुदामानं सुदामाख्यम् ॥१८॥ विष्णोः पदमित्यादि। विष्णोः पदं विष्णोः पदाङ्कितं स्थानम्। इदं च स्थानं सुदामाख्यपर्वतवर्तिसान्निध्यात। विपाशां सुदामपर्यन्तनदीम्। शाल्मलीं

त इति। शरदण्डां शरदण्डाख्यां नदीम् ॥१५॥ निकूलेति। निकूलवृक्षं शरदण्डाया उत्तरकूलसमीपस्थवृक्षम्। अस्य सत्योपयाचनमित्युक्तिः अर्थितार्थप्रदातृत्वात ॥१६॥ (तेजोभिभवनादिति पाठः) अभिकालतेजोभिभवनौ ग्रामौ। पितृपैतामहीं इक्ष्वाकुवंश्यैरनुभूताम् ॥१७॥ अवेक्ष्येति। अञ्जलिपानान् अञ्जलिप्रमाणकजलमात्राहारान्। बाह्लीकानां बाह्लीकदेशस्थजनपदान् ॥ १८ ॥ विष्णोरिति। विष्णोः पदं विष्णुपदाङ्कितं स्थानविशेषम्। विपाशशाल्मल्यौ नद्यौ ॥१९॥२०॥

तत्तीरवर्तिशाल्मलीवृक्षम् । अत्र मार्गविशेषवर्णनं पुण्यभूमित्वेन नराणां सेवनीयत्वद्योतनार्थम् ॥ १९ ॥ २० ॥ त इति । विकृष्टेन विप्रकृष्टेन अतिदूरेणेत्यर्थः । गिरिव्रजमिति केकयपुरस्य नामान्तरम् । शीघ्रशब्दसान्निध्येन अञ्जसाशब्देन मानसत्वरोच्यते । अञ्जसा आर्जवेनेतिवार्थः ॥ २१ ॥ भर्तुरिति । भर्तुः

ते श्रान्तवाहना दूता विकृष्टेन पथा ततः । गिरिव्रजं पुरवरं शीघ्रमासेदुरञ्जसा ॥ २१ ॥ भर्तुः प्रियार्थं कुलरक्षणार्थं भर्तुश्च वंशस्य परिग्रहार्थम् । अहेडमानास्त्वरया स्म दूता रात्र्यां तु ते तत्पुरमेव याताः ॥ २२ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

यामेव रात्रिं ते दूताः प्रविशन्ति स्म तां पुरीम् । भरतेनापि तां रात्रिं स्वप्नो दृष्टोऽयमप्रियः ॥ १ ॥
व्युष्टामेव तु तां रात्रिं दृष्ट्वा तं स्वप्नमप्रियम् । पुत्रो राजाधिराजस्य सुभृशं पर्यतप्यत ॥ २ ॥

दशरथस्य । प्रियार्थं शीघ्रानीतभरतकृतौर्द्ध्वदैहिकादिना दशरथस्य परलोकप्राप्तिहेतुत्वात् । कुलरक्षणार्थं सनाथीकरणेन कुलजातानां संरक्षणार्थम् । भर्तुर्वंशस्य इक्ष्वाकुवंशस्य । परिग्रहार्थं प्रतिष्ठार्थम् । यद्वा भर्तुर्वंशो भरतादिः तस्य परिग्रहार्थं प्रतिष्ठार्थम् । पित्रौर्द्ध्वदैहिककर्मनिर्वर्तनेन सज्जनपरिग्रहार्थं वा । अहेडमानाः "हेडृ अनादरे" इत्यस्माद्धातोः शानच् । अनादरमकुर्वाणाः,सादरा इति यावत् । अतएव त्वरया युक्ताः दूताः रात्र्यामेव अस्तमयानन्तरमपि कियत्कालं गत्वा रात्र्यामेव तत्पुरं याताः ॥ २२ ॥ इति श्रीगोविन्दराज० श्रीरामायणभू० पीता० अयो० अष्टषष्टितमः सर्गः ॥ ६८ ॥ यामिति । यामेव यस्यामेव । सप्तम्यर्थे द्वितीया छान्दसी । तां तस्याम् । अयं वक्ष्यमाणः ॥ १ ॥ व्युष्टामिति । व्युष्टां प्रभातायां सत्यामित्यर्थः ।

त इति । विकृष्टेन विप्रकृष्टेन । अतिदूरेणेत्यर्थः । गिरिव्रजमिति केकयपुरस्य नामान्तरम् । शीघ्रशब्दसन्निधानादञ्जसाशब्देन मानसत्वरोच्यते ॥२१॥ भर्तुरिति । भर्तुर्दशरथस्य प्रियार्थं शीघ्रानीतभरतकृतौर्ध्वदैहिकादिना दशरथस्य परलोकप्राप्तिहेतुत्वात् । भर्तुर्दशरथस्य वंशस्य भर्तुर्वंशो भरतादिः तस्य लोकेन प्रतिग्रहार्थः । अहेडमानाः "हेडृ अनादरे" इति धातोः शानच् । अनादरमकुर्वाणाः, सादरा इति यावत् ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां अष्टषष्टितमः सर्गः ॥ ६८ ॥ यामित्यादि श्लोकद्वये वर्तमाना द्वितीयान्तरात्रिशब्दाः सप्तम्यर्थप्रतिपादकाः । अयं वक्ष्यमाणः ॥ १ ॥ व्युष्टामिति । व्युष्टायां प्रभातायां सत्यामित्यर्थः ॥ २ ॥

प्रभातस्वप्नः सद्यःफलद इति द्योतयितुमिदमुक्तम् ॥ २ ॥ तप्यमानमिति । वयस्याः सुहृदः । आयासं मनःखेदम् ॥ ३ ॥ वादयन्तीति । शान्तिं भरतस्य दुःखशान्तिमुद्दिश्य वादयन्ति, वीणादिकमिति शेषः । लासयन्ति लास्यं सुकुमारनृत्तम्, नाटकानि संस्कृतप्राकृतपैशाचमागधादिमिश्रगद्यपद्य

तप्यमानं समाज्ञाय वयस्याः प्रियवादिनः । आयासं हि विनेष्यन्तः सभायां चक्रिरे कथाः ॥ ३ ॥ वादयन्ति तथा शान्तिं लासयन्त्यपि चापरे । नाटकान्यपरे प्राहुर्हास्यानि विविधानि च ॥ ४ ॥ स तैर्महात्मा भरतः सखिभिः प्रियवादिभिः । गोष्ठीहास्यानि कुर्वद्भिर्न प्राहृष्यत राघवः ॥ ५ ॥ तमब्रवीत्प्रियसखो भरतं सखिभिर्वृतम् । सुहृद्भिः पर्युपासीनः किं सखे नानुमोदसे ॥ ६ ॥ एवं ब्रुवाणं सुहृदं भरतः प्रत्युवाच ह । शृणु त्वं यन्निमित्तं मे दैन्यमेतदुपागतम् ॥ ७ ॥ स्वप्ने पितरमद्राक्षं मलिनं मुक्तमूर्द्धजम् । पतन्तमद्रिशिखरात् कलुषे गोमयह्रदे ॥ ८ ॥ प्लवमानश्च मे दृष्टः स तस्मिन् गोमयह्रदे । पिबन्नञ्जलिना तैलं हसन्नपि मुहुर्मुहुः ॥ ९ ॥ ततस्तिलौदनं भुक्त्वा पुनःपुनरधःशिराः । तैलेनाभ्यक्तसर्वाङ्गस्तैलमेवावगाहत ॥ १० ॥ स्वप्नेऽपि सागरं शुष्कं चन्द्रं च पतितं भुवि । उपरुद्धां च जगतीं तमसेव समावृताम् ॥ ११ ॥ औपवाह्यस्य नागस्य विषाणं शकलीकृतम् । सहसा चापि संशान्तं ज्वलितं जातवेदसम् ॥ १२ ॥

रूपाणि । हास्यानि हासजनकवाक्यानि ॥४॥ स तैरिति । गोष्ठीहास्यानि गोष्ठी सभा, सभ्यहास्यानीत्यर्थः ॥५॥ तमिति । प्रियसखः अन्तरङ्गसुहृत् । "राजाहस्सखिभ्यष्टच्" इतिटच् ॥६–८॥ प्लवमान इति । प्लवमानः मण्डूकवत् ॥९॥ तत इति । तिलमिश्र ओदनः तिलौदनः ॥१०॥ स्वप्नेऽपीति । तमसा समावृतामिव । उपरुद्धां तिरोहिताम् । औपवाह्यस्य राजवाह्यस्य "औपवाह्यो राजवाह्यः" इतिहलायुधः । नागस्य गजस्य । जातवेदसा अग्निना ।



तप्यमानमिति । आयासं मनःखेदम् ॥ ३ ॥ वादयन्तीति । वयस्याः शान्तिं मनःखेदशान्तिमुद्दिश्य वादयन्ति । करतालवेणुमृदङ्गादीनीति शेषः । लासयन्ति स्त्रीः नाटयन्ति । नाटकानि संस्कृतप्राकृतमागधादिमिश्रगद्यपद्यरूपाणि । हास्यानि हासजनकरूपवाक्यानि ॥ ४–१० ॥ स्वप्नेपीति । तमसा समावृतामिव । उप

अवतीर्णामिति। अवतीर्णाम् अधःपतितां पश्यामीति सर्व[illegible] । वर्तमानसामीप्ये वर्तमानवत्प्रयोगः ॥ ११–१३ ॥ पीठ इति। कृष्णाश्च पिङ्गलाश्च कृष्णपिङ्गलाः ॥१४–१६ ॥ उक्तस्वप्नदर्शनफलमाह—एवमित्यादिना। इमां रात्रिम् अस्यां रात्रौ। अहं मरिष्यामीति विपरिणामः कार्यः ॥ १७ ॥ नर

अवतीर्णां च पृथिवीं शुष्कांश्च विविधान् द्रुमान्। अहं पश्यामि विध्वस्तान् सधूमांश्चापि पर्वतान् ॥ १३ ॥ पीठे कार्ष्णायसे चैनं निषण्णं कृष्णवाससम्। प्रहसन्ति स्म राजानं प्रमदाः कृष्णपिङ्गलाः ॥ १४ ॥ त्वरमाणश्च धर्मात्मा रक्तमाल्यानुलेपनः। रथेन खरयुक्तेन प्रयातो दक्षिणामुखः ॥ १५ ॥ प्रहसन्तीव राजानं प्रमदा रक्तवासिनी। प्रकर्षन्ती मया दृष्टा राक्षसी विकृतानना ॥ १६ ॥ एवमेतन्मया दृष्टमिमां रात्रिं भयावहाम्। अहं रामोऽथवा राजा लक्ष्मणो वा मरिष्यति ॥ १७ ॥ नरो यानेन यः स्वप्ने खरयुक्तेन याति हि। अचिरात्तस्य धूमाग्रं चितायां सम्प्रदृश्यते ॥ १८ ॥ एतन्निमित्तं दीनोऽहं तन्न वः प्रतिपूजये। शुष्यतीव च मे कण्ठो न स्वस्थमिव मे मनः ॥ १९ ॥ न पश्यामि भयस्थानं भयं चैवोपधारये। भ्रष्टश्च स्वरयोगो मे च्छाया चोपहता मम ॥ २० ॥ जुगुप्सन्निव चात्मानं न च पश्यामि कारणम् ॥ २१ ॥ इमां हि दुःस्वप्नगतिं निशाम्य तामनेकरूपामवितर्कितां पुरा। भयं महत्तद्धृदयान्न याति मे विचिन्त्य राजानमचिन्त्यदर्शनम् ॥ २२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

इति। धूमाग्रं धूमशिखा ॥ १८॥ एतदिति। एतन्निमित्तम् उक्तस्वप्नदर्शनहेतुना ॥ १९॥ नेति। भयस्थानं भयकारणम्। अथ च भयमुपधारये अवशतो बिभेमि। छाया कान्तिः। "छाया त्वनातपे कान्तौ" इति वैजयन्ती ॥ २० ॥ जुगुप्सन्निति। जुगुप्सन्निव अस्मीति शेषः। कारणं जुगुप्साकारणम् ॥ २१॥ इमामिति। तामिमां दुःस्वप्नगतिं दुःस्वप्नभेदम्। अवितर्कितां पूर्वमविचारिताम्, अमोघामितिभावः। पूर्वचिन्ताकृतत्वे हि वैफल्यम्।

रुद्धां तिरोहिताम्। औपवाह्यस्य राजवाह्यस्य। अवदीर्णां विदारिताम् ॥ ११–१६ ॥ एवमिति। इमां रात्रिम्। अस्यां रात्र्यामित्यर्थः ॥ १७–१९ ॥ नेति। छाया कान्तिः ॥ २० ॥ जुगुप्सन्निति। आत्मानं जुगुप्सन्निव कारणं विनेति सम्बन्धः ॥ २१ ॥ इमामिति। पुरा न वितर्कितां पूर्वमविचारिताम् ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामयणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां एकोनसप्ततितमः सर्गः ॥ ६९ ॥

अचिन्त्यदर्शनम् असम्भाव्यदर्शनम् । अत्र सर्गे "अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति खैर्वराहैः" इत्यादिश्रुतिरुपबृंहिता । स्वप्नश्च पूर्वचिन्तापुरस्कृतो न फलति । प्रत्यूषे च फलति सद्यः । यामविलम्बात्फलविलम्बः । फलं च द्रष्टुः दृष्टस्य तत्सम्बन्धिनो वा भविष्यतीत्यादिक मुक्तम् ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोनसप्ततितमः सर्गः ॥ ६९ ॥

भरते ब्रुवति स्वप्नं दूतास्ते क्लान्तवाहनाः। प्रविश्यासह्यपरिघं रम्यं राजगृहं पुरम् ॥१॥ समागम्य तु राज्ञा च राजपुत्रेण चार्चिताः । राज्ञः पादौ गृहीत्वा तु तमूचुर्भरतं वचः ॥ २ ॥ पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः । त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥ ३ ॥ इमानि च महार्हाणि वस्त्राण्याभरणानि च । प्रतिगृह्य विशालाक्ष मातुलस्य च दापय ॥ ४ ॥ अत्र विंशतिकोटयस्तु नृपतेर्मातुलस्य ते। दशकोटयस्तु संपूर्णास्तथैव च नृपात्मज ॥ ५ ॥ प्रतिगृह्य तु तत्सर्वं स्वनुरक्तः सुहृज्जने । दूतानुवाच भरतः कामैः संप्रतिपूज्य तान् ॥ ६ ॥

भरत इति । असह्यपरिघं परैरप्रधृष्यपरिघम् । राज्ञा केकयराजेन । राजपुत्रेण युधाजिता । अर्चिताः आनीतोपायननिरीक्षणेन संमानिताः । राज्ञः भरतस्य। भरतस्य परमप्रकृतत्वात् तमिति निर्देशः ॥ १॥२॥ पुरोहित इति । आत्ययिकं दुष्करम् । अत्ययः कृच्छ्रम् "अत्ययोऽतिक्रमे कृच्छ्रे मरणे दण्डदोषयोः" इतिवैजयन्ती । त्वया कृत्यं कर्तव्यम् अतो निर्याहीत्यन्वयः॥३॥ इमानीति। विशालाक्षेति विभूषणावलोकनजानितविस्मयोत्फुल्लाक्षत्वमाह । मातुलस्य च दापयेति समुच्चयात् प्रथमं मातामहस्य दापय अथ मातुलस्य दापयेत्यर्थः ॥४॥ अत्रेति। अत्र वस्त्रभरणादिमहार्हवस्तुजाते। नृपतेः विंशतिकोट्यः विंशतिकोटिमूल्यानि वस्त्राभरणादीनि । मातुलस्य दशकोट्यः दशकोटिमूल्यानि । संपूर्णा अन्यूना इत्युभयविशेषणम् । तथैव तदर्हमेव। अन्यथा राजतुल्यतया राजपुत्रदाने तस्य बहुमान एव न भवतीति भावः ॥ ५ ॥ प्रतिगृह्येति। सुहृज्जने मातुलादौ स्वनुरक्तः प्रदाप्येति शेषः। कामैः



भरत इति । राज्ञा केकयराजेन । राजपुत्रेण युधाजिता ॥ १ ॥ २ ॥ पुरोहित इति । आत्ययिकम् अत्ययः कृच्छ्रं तत्र भवमात्ययिकम् । कृत्यं कर्तव्यम् अस्तीति शेषः ॥ ३ ॥ इमानीति । मातुलस्य चकारान्मातामहस्यापीत्यर्थः ॥ ४ ॥ अत्रेति । अत्र वस्त्राभरणादिमहार्हवस्तुसमूहे । नृपतेर्विंशतिः कोटयः विंशतिकोटिमूल्यानि वस्त्राभरणानि । मातुलस्य दशकोटयः दशकोटिवस्त्राभरणानि ॥ ५ ॥ प्रतिगृह्येति । कामैः अभिमतवस्तुजातैः ॥ ६-११ ॥

अभीष्टान्नपानादिभिः ॥६॥ कच्चिदिति । अरोगता आरोग्यम् । आरोग्यतेति पाठे–स्वार्थे ष्यञ् ॥७॥ आर्येति । आर्या ज्येष्ठमातृत्वेन पूज्या । धर्मनिरता धर्मानुष्ठानपरा । धर्मज्ञा ज्ञात्वानुष्ठानमितिन्यायेन अनुष्ठानमूलज्ञानयुक्ता । धर्ममेव जनेषु पश्यतीति धर्मदर्शिनी, गुणग्राहिणी न दोषदर्शिनीत्यर्थः ।

कच्चित् सुकुशली राजा पिता दशरथो मम । कच्चिच्चारोगता रामे लक्ष्मणे च महात्मनि ॥७॥ आर्या च धर्मनिरता धर्मज्ञा धर्मदर्शिनी । अरोगा चापि कौसल्या माता रामस्य धीमतः ॥ ८ ॥ कच्चित् सुमित्रा धर्मज्ञा जननी लक्ष्मणस्य या । शत्रुघ्नस्य च वीरस्य साऽरोगा चापि मध्यमा ॥ ९ ॥ आत्मकामा सदा चण्डी क्रोधना प्राज्ञमानिनी । अरोगा चापि मे माता कैकेयी किमुवाच ह ॥१०॥ एवमुक्तास्तु ते दूता भरतेन महात्मना । ऊचुः सप्रश्रयं वाक्यमिदं तं भरतं तदा ॥ ११ ॥ कुशलास्ते नरव्याघ्र येषां कुशलमिच्छसि । श्रीश्च त्वां वृणुते पद्मा युज्यतां चापि ते रथः ॥ १२ ॥ भरतश्चापि तान् दूतानेवमुक्तोऽभ्यभाषत । आपृच्छेऽहं महाराजं दूताः सन्त्वरयन्ति माम् ॥ १३ ॥

अप्यरोगेत्यन्वयः । अपिः प्रश्ने । धीमत इत्यनेन पुत्रकृतातिशय उच्यते ॥८॥ कच्चिदिति । सेति धर्मज्ञत्वस्मरणाभिनयः । मध्यमेत्यनेन "न तेऽम्बा मध्यमा तात" इत्यत्र कैकेय्या मध्यमात्वमितरव्यपेक्षया ॥ ९ ॥ आत्मकामेति । आत्मानं कामयत इति आत्मकामा, स्वप्रयोजनपरेत्यर्थः । प्रज्ञैव प्राज्ञा प्राज्ञामात्मानं मन्यत इति प्राज्ञमानिनी । "मनः" इति णिनिः । "क्यङ्मानिनोश्च" इतिपुंवद्भावः । चण्डी उग्रा । क्रोधना क्रोधवती । मे माता अप्यरोगा कैकेयी किमुवाच स्वबन्धुविषये किमुवाचेत्यर्थः । दुःस्वप्नदर्शनदूतागमनाभ्यां कैकेय्या किञ्चित्कृतं भवेदित्यूहितवान् भरत इति सूचयत्यात्मकामेत्यादिभिः ॥१०॥ एवमिति । महात्मना महाबुद्धिना । एतेनायोध्यावृत्तान्तोऽनेन ज्ञात इति सूचितम् । सप्रश्रयं सविनयम् । अनेन सर्वात्मना अयोध्यावृत्तान्तगोपनं सूच्यते । तदेत्यनेन किञ्चित् विलम्बोक्तौ भरतोऽन्यथा मन्येतेति झटित्युत्तरमुक्तमित्युच्यते ॥११॥ कुशला इति । कुशला इति सामान्योक्तिः प्रत्येकोक्त्या सन्देहानुत्पादाय । श्रीः लक्ष्मीः । पद्मा पद्महस्ता । अर्श आद्यच् । राज्यश्रीरिति हार्दो भावः । अमङ्गल्यव्यावृत्ति भरतप्रत्याय्या ॥ १२ ॥ भरत इति । एवमुक्तो भरतः दूताः मां संत्वरयन्तीति महाराजमापृच्छ इति तान् दूतानभ्यभाषतेति योजना ॥ १३ ॥

कुशलास्त इति । पद्मा पद्महस्ता । अर्शाद्यच् । श्रीः त्वां वृणुते इति लक्ष्मीवरणोक्तिः अमङ्गलव्यावृत्त्यर्था न तु राज्यश्रीप्राप्तिपरा । राजमरणादिकं न वक्तव्यमिति वसिष्ठेनोक्तत्वात् ॥ १२ ॥ भरतश्चेति । एवमुक्तो भरतः दूता मां त्वरयन्तीति महाराजमापृच्छ इति तान् दूतान् अभ्यभाषतेति सम्बन्धः ॥ १३ ॥ १४ ॥

एवमिति । दूतैः सञ्चोदितो भरतः तान् दूतानेवमुक्त्वा मातामहं वाक्यमुवाच ॥ १४ ॥ राजन्निति । मे मां । यदा स्मरिष्यसि यदा आगन्तव्यमिति स्मरिष्यसि तदैष्यामि, आगन्तव्यमिति भवत्स्मरणं यदा जानामि तदा आगमिष्यामीत्यर्थः । मे इत्यत्र "अधीगथर्दयेशाम्–" इतिषष्ठी ॥ १५ ॥

एवमुक्त्वा तु तान् दूतान् भरतः पार्थिवात्मजः । दूतैः सञ्चोदितो वाक्यं मातामहमुवाच ह ॥ १४ ॥ राजन् पितु र्गमिष्यामि सकाशं दूतचोदितः । पुनरप्यहमेष्यामि यदा मे त्वं स्मरिष्यसि ॥ १५ ॥ भरतेनैवमुक्तस्तु नृपो मातामहस्तदा । तमुवाच शुभं वाक्यं शिरस्याघ्राय राघवम् ॥ १६ ॥ गच्छ तातानुजाने त्वां कैकेयी सुप्रजास्त्वया । मातरं कुशलं ब्रूयाः पितरं च परंतप ॥ १७ ॥ पुरोहितं च कुशलं ये चान्ये द्विजसत्तमाः । तौ च तात महेष्वासौ भ्रातरौ रामलक्ष्मणौ ॥ १८ ॥ तस्मै हस्त्युत्तमांश्चित्रान् कम्बलानजिनानि च । अभिसत्कृत्य कैकेयो भरताय धनं ददौ ॥ १९ ॥ रुक्मनिष्कसहस्रे द्वे षोडशाश्वशतानि च । सत्कृत्य कैकयीपुत्रं केकयो धनमादिशत् ॥ २० ॥ तथामात्यानभिप्रेतान् विश्वास्यांश्च गुणान्वितान् । ददावश्वपतिः क्षिप्रं भरतायानुयायिनः ॥ २१ ॥ ऐरावतानैन्द्र शिरान्नागान्वै प्रियदर्शनान् । खरान् शीघ्रान् सुसंयुक्तान् मातुलोऽस्मै धनं ददौ ॥ २२ ॥

भरतेनेत्यादि रामलक्ष्मणावित्यन्तं स्पष्टम् ॥ १६–१८ ॥ तस्मा इति । अस्यादावित्युक्त्वेत्युपस्कार्यम् । तस्मै भरताय अभिसत्कृत्य ददौ श्लाघापूर्वं ददावित्यर्थः ॥ १९ ॥ रुक्मनिष्कसहस्र इति । निष्काः वक्षोभूषणानि । " निष्कोऽस्त्री हेम्नि दीनारे साष्टे कर्षशते पले । वक्षोविभूषणे कर्षे " इति वैज यन्ती । धनम् उक्तरूपम् । आदिशत् आदाय गच्छतेति भृत्यानाज्ञापयामास ॥ २० ॥ तथेति । अमा सह प्राणांस्त्यजन्तीत्यमात्यास्तान् । अभिप्रेतान् सहायभूतानित्यर्थः । विश्वास्यान् विश्वसनीयान् । अश्वपतिः केकयः ॥ २१ ॥ मातामहकृतसत्कारप्रकारमुक्त्वा मातुलकृतसत्कारप्रकारमाह–ऐरा

राजन्निति । मे मां यदा स्मरिष्यसि, आगन्तव्यमिति शेषः ॥ १५–१७ ॥ तौ चेति । कुशलं ब्रूया इति पूर्वेण सम्बन्धः ॥ १८ ॥ तस्मादिति । तस्मै भरताय धनं ददावितिसम्बन्धः ॥ १९ ॥ रुक्मेति । रुक्मनिष्काणि वक्षोभूषणानि कण्ठभूषणानि वा ॥ २० ॥ तथेति । अश्वपतिः केकयराजः ॥ २१ ॥ ऐरावतानित्यादि ।

वतानित्यादिना । ऐरावतान् इरावतपर्वतभवान् । ऐन्द्रशिरान् इन्द्रशिराख्यपर्वतभवान् । शीघ्रान् वेगवतः । सुसंयुक्तान् परिचितान् ॥ २२ ॥ अन्तःपुर इति । मातुल इत्यनुषज्यते ॥ २३–२५ ॥ स इति । स्ववेश्म व्यतिक्रम्येत्यनेन स्ववेश्मप्रवेशोऽर्थसिद्धः । तथा च राज्ञा मातुलेन च स्वगृह एव कृत

अन्तःपुरेऽतिसंवृद्धान् व्याघ्रवीर्यबलान्वितान् । दंष्ट्रायुधान् महाकायान् शुनश्चोपायनं ददौ ॥ २३ ॥ स दत्तं केकयेन्द्रेण धनं तन्नाभ्यनन्दत । भरतः केकयीपुत्रो गमनत्वरया तदा ॥ २४ ॥ बभूव ह्यस्य हृदये चिन्ता सुमहती तदा । त्वरया चापि दूतानां स्वप्नस्यापि च दर्शनात् ॥ २५ ॥ स स्ववेश्म व्यतिक्रम्य नरनागाश्वसंवृतम् । प्रपेदे सुमहच्छ्रीमान् राजमार्गमनुत्तमम् ॥ २६ ॥ अभ्यतीत्य ततोऽपश्यदन्तःपुरमुदारधीः । ततस्तद्भरतः श्रीमानाविवेशानिवारितः ॥ २७ ॥ स मातामहमापृच्छ्य मातुलं च युधाजितम् । रथमारुह्य भरतः शत्रुघ्नसहितो ययौ ॥ २८ ॥ रथान् मण्डलचक्रांश्च योजयित्वा परःशतम् । उष्ट्रगोश्वखरैर्भृत्या भरतं यान्तमन्वयुः ॥ २९ ॥

सत्कारो मातामह्यादिदर्शनार्थमन्तःपुरं गतवानिति बोध्यम् । अथवा भरतस्य दुःस्वप्नदर्शनदुःखदूतागमनवृत्तान्तश्रवणेन केकयमातुलौ स्वगृहमेवा गताविति द्रष्टव्यम् । सुमहच्छ्रीमान् सुमहाश्रीमान् ॥ २६ ॥ अभ्यतीत्येति । राजमार्गमिति शेषः ॥ २७ ॥ स इति । मातामहं स्वेनैव सहान्तःपुरमागतं मातुलं च तथाभूतम् ॥ २८ ॥ रथानिति । मण्डलचक्रान् वर्तुलचक्रयुक्तान् । परःशतं शतात्परान् "पङ्क्तिविंशति–" इत्यादिसूत्रे निपातनादेकवचनम् । रथानुष्ट्रादिभिः संयोज्य भृत्याः यान्तं भरतमन्वयुः ॥ २९ ॥

ऐरावतान् ऐरावतकुलोद्भवान् । ऐन्द्रशिरान् प्रशस्तगजोत्पत्तिहेतुभूतेन्द्रशिरनामकदेशोद्भवान् ॥ २२–२५ ॥ स स्ववेश्मेति । स्ववेश्माभ्यतिक्रम्येत्यस्मादनुवादात्स्ववेश्मप्राप्तिरनुक्तापि अनुमेया । अयमत्र क्रियाक्रमः—मातामहमातुलाभ्यां दत्तं धनं गृहीत्वा स्ववेश्म प्रविश्य तत्र गमनसंविधानं कृत्वा निर्गत्य पुनश्च राजभवनं गत्वा तौ दृष्ट्वा ततो निष्क्रम्य बहिर्निर्गत इति ॥ २६–२८ ॥ रथानिति । मण्डलचक्रान् मण्डलानि मण्डलाकाराणि मण्डलाकारतया योजितानि चक्राणि येषां तान् रथान् । योजयित्वा मेळयित्वा । उष्ट्रगोश्वबलैः सह भृत्या ययुरिति सम्बन्धः ॥ २९ ॥

**कतक०**—मण्डलाकारतया रथप्रवर्तनसाधकं चक्रं मण्डलचक्रम् । चतुर्दिक्चक्रमध्यस्थं तद्येषां तान् । काश्यादौ च तयेदानीं प्रसिद्धम् ॥ २९ ॥

बलेनेति । महात्मा महाधैर्यो भरतः। आर्यकस्य मातामहस्य । बलेन गुप्तः आत्मसमैः स्वप्रभावसदृशैः । अमात्यैः सह शत्रुघ्नमादाय अपेतशत्रुः निष्कण्टकः सन् इन्द्रलोकात् सिद्धो देवजातिरिव गृहाद्ययौ॥३०॥ इति श्रीगो० श्रीरामायणभूषणे पीता०अयोध्याकाण्डव्याख्याने सप्ततितमः सर्गः॥७०॥



बलेन गुप्तो भरतो महात्मा सहार्यकस्यात्मसमैरमात्यैः । आदाय शत्रुघ्नमपेतशत्रुर्गृहाद्ययौ सिद्ध इवेन्द्रलोकात् ॥ ३० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

स प्राङ्मुखो राजगृहादभिनिर्याय राघवः । ततः सुदामां द्युतिमान् सन्तीर्यावेक्ष्य तां नदीम् ॥ १ ॥ ह्लादिनीं दूरपारां च प्रत्यक्स्रोतस्तरङ्गिणीम् । शतद्रूमतरच्छ्रीमान् नदीमिक्ष्वाकुनन्दनः ॥ २ ॥ एलाधाने नदीं तीर्त्वा प्राप्य चापरपर्पटान् । शिलामाकुर्वतीं तीर्त्वा आग्नेयं शल्यकर्त्तनम् ॥ ३ ॥ सत्यसन्धः शुचिः श्रीमान् प्रेक्षमाणः शिलावहाम् । अत्ययात् स महाशैलान् वनं चैत्ररथं प्रति ॥ ४ ॥

स प्राङ्मुखइत्यादि । अत्र दूता ऋजुदुर्गमार्गेण त्वरितं गिरिव्रजमागताः । भरतस्तु चतुरङ्गबलयुक्ततया वक्रमपि महामार्गमाश्रित्य ययौ । अतो नदीपर्वतादिभेदकीर्त्तनमिति बोध्यम् । सुदामां सुदामाख्यां नदीम् । अवेक्ष्य तां सन्तीर्य दूरेपारं परतीरं यस्यास्तां दूरपाराम्, विशालामित्यर्थः । ह्लादिनीं ह्लादिन्याख्यां नदीं सन्तीर्य शतद्रूं शतद्र्वाख्यां प्रत्यक्स्रोतस्तरङ्गिणीं पश्चिमाभिमुखप्रवाहतरङ्गयुक्तां च नदीमतरत् ॥ १ ॥ २ ॥ एलाधानइति । एलानामेलकानाम् आधानमुत्पत्तिस्थानं तद्वत्त्वादेलाधानाख्ये नगरे । नदीं पूर्वोक्तां शतद्रूं तीर्त्वेत्यनुवादः । अपरपर्पटान् पर्पटानामदूरभवो ग्रामः पर्पटाः। पर्पटा ओषधिविशेषाः । "अदूरभवश्च" इति प्राप्तस्याणः "वरणादिभ्यश्च" इति लुप् । लुपि युक्तवद्व्यक्तिवचनता । पूर्वपर्पटाः अपरपर्पटाश्चेति ग्रामद्वयमस्ति । तत्रापरपर्पटान् विश्रान्त्यर्थं प्राप्य शिलामाकुर्वतीं शिलामासमन्तात्कुर्वतीं शिलाकर्षणस्वभावाम् अतएव शिलावहामित्य

बलेनेति । आर्यकस्य केकयराजस्य ॥३०॥ इति श्रीमहेश्वरतीर्थतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां सप्ततितमः सर्गः ॥७०॥ स इति । सुदामां सुदामाख्याम् । ह्लादिनीं दूरपाराम् विस्तृतप्रवाहां तत्संज्ञिकाम् । प्रत्यक्स्रोतस्तरङ्गिणीं पश्चिमप्रवाहां तरङ्गयुक्तां च । तरङ्गयुक्तपश्चिमप्रवाहामित्यर्थः । शतद्रुं तत्संज्ञिकां नदीम् ॥ १ ॥ २ ॥ एलाधान इत्यादि । एलाधाने एलाधानग्रामे । अपरपर्पटान् अपरपर्पटाख्यदेशविशेषान् । शिला

न्वर्थसंज्ञां नदीं तीर्त्वा तस्या आग्नेय्यां दिशि भवमाग्नेयम् । शल्यं हृदयशल्यं दुःखं कर्त्तयतिं छेदयतीति शल्यकर्त्तनं नाम नगरं प्रेक्षमाणः सन् अत्ययात् । सत्यसन्धः शुचिरित्याभ्यां तत्रत्यजनेभ्य ईतिवारणं प्रतिज्ञाय तथैव कृतवानित्युच्यते । ( पाठभेदः । भीतिवारणं प्रतिज्ञाय ) चैत्ररथं

सरस्वतीं च गङ्गां च युग्मेन प्रत्यपद्यत । उत्तरं वीरमत्स्यानां भारुण्डं प्राविशद्वनम् ॥ ५ ॥ वेगिनीं च कुलिङ्गाख्यां ह्लादिनीं पर्वतावृताम् । यमुनां प्राप्य सन्तीर्णो बलमाश्वासयत्तदा ॥ ६ ॥ शीतीकृत्य तु गात्राणि क्लान्तानाश्वास्य वाजिनः । तत्र स्नात्वा च पीत्वा च प्रायादादाय चोदकम् ॥ ७ ॥ राजपुत्रो महारण्यमनभीक्ष्णोपसेवितम् । भद्रो भद्रेण यानेन मारुतः खमिवात्ययात् ॥ ८ ॥

चैत्ररथतुल्यत्वात्तदाख्यं वनं प्रति उद्दिश्य महाशैलानत्ययात् तद्दर्शनकुतूहलेन महापर्वतानत्यगादित्यर्थः ॥३॥४॥ सरस्वतीमिति । सरस्वतीं तदाख्यां नदीम् । गङ्गां गङ्गाख्यां काञ्चिन्नदीं पश्चिमसमुद्रगामिनीं गङ्गास्रोतोभेदं वा । युग्मेन सङ्गमेन प्रत्यपद्यत ययौ । यद्वा युग्मेन द्वन्द्वतया पार्श्वद्वये प्रवहन्तीमिति शेषः । वीरमत्स्यानां वीरमत्स्याख्यदेशानाम् । उत्तरं भारुण्डं भारुण्डाख्यं वनं प्राविशत् ॥५॥ रामानु०—सरस्वतीमिति । गङ्गां 'सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी । तिस्रस्त्वेता दिशं जग्मुः प्रतीचीं च शुभोदकाः ॥' इति बालकाण्डोक्तप्रकारेण गङ्गाभेदः सिन्धुरुच्यते । यमुनातरणानन्तरं भागीरथीतरणस्य वक्ष्यमाणत्वात् । युग्मेन सङ्गमेन प्रतिपद्य वीरमत्स्यानामुत्तरप्रदेशान् भारुण्डवनं च प्राविशदिति सम्बन्धः । उत्तरं वीरमत्स्यानामितिपाठे—उत्तरमित्येतत् भारुण्डवनस्य विशेषणम् ॥ ५ ॥ वेगिनीमिति । वेगिनीं वेगयुक्ताम् । ह्लादिनीं सन्तोषकारिणीम् । पर्वतैरावृतां कुलिङ्गाख्यां नदीं यमुनां प्राप्य सन्तीर्ण इत्यर्थः । यमुनासमीपे सन्तीर्णः अन्यत्रातिवेगत्वादन्यत्र पर्वतावृतत्वाच्चेति भावः । आतपखिन्नं बलं मध्याह्ने आश्वासयत् ॥ ६ ॥ आश्वासनप्रकारमाह—शीतीकृत्येति । तत्र कुलिङ्गायमुनासम्भेदे । दूरगमनेन क्लान्तान् वाजिनः कञ्चित्कालं छायास्वाश्वास्य तेषां गात्राणि शीतीकृत्य आर्द्रपृष्ठानि कृत्वा । स्वयं स्नात्वा उदकं च पीत्वा उत्तरत्र गन्तव्यदेशस्य निर्जलदेशत्वात्तत्र पानार्थमुदकमादाय च प्रायात् ॥ ७ ॥ राजपुत्र इति । राजपुत्रत्वेन भद्रः मङ्गलाचारयुक्तः । अनभी

माकुर्वतीं शिलामासमन्तात्कुर्वतीम्, शिलाकर्षणस्वभावामित्यर्थः । नदीम् आग्नेयं शल्यकर्तनमिति ग्रामद्वयम् । शिलावहं सम्प्रेक्षमाणः चैत्ररथं नाम वनं लक्ष्यीकृत्य महाशैलानत्ययात् ॥ ३ ॥ ४ ॥ सरस्वतीमिति । गङ्गां सिन्धुमित्यर्थः । युग्मेन सङ्गमेन प्रतिपद्य वीरमत्स्यानामुत्तरान् उत्तरप्रदेशान् । उत्तरमिति पाठे वनस्य विशेषणम् । भारुण्डं भारुण्डाख्यं वनं प्राविशदिति सम्बन्धः ॥ ५ ॥ ६ ॥ शीतीकृत्येति ! जलावगाहनादिना शीतीकृत्य ॥ ७ ॥ राजपुत्र इति । अनभीक्ष्णोप

क्ष्णोपसेवितम् अत्यन्तं जनैरनुपसेवितं महारण्यत्वादप्रहतामित्यर्थः । महारण्यं दुर्गमं वनं भद्रेण भद्रगजरूपेण यानेन अरण्यसंचारनिपुणो भद्रजातीयः । मारुतः खमिवात्ययात् अतिवेगेनातिक्रान्तवान् । भूमौ हि मारुतः पर्वतादिना मन्दीभवति ॥ ८ ॥ भागीरथीमिति । अंशुधाने नगरे दुष्प्रतरां

भागीरथीं दुष्प्रतरामंशुधाने महानदीम् । उपायाद्राघवस्तूर्णं प्राग्वटे विश्रुते पुरे ॥ ९ ॥ स गङ्गां प्राग्वटे तीर्त्वा समायात् कुटिकोष्ठिकाम् । सबलस्तां स तीर्त्वाथ समायाद्धर्मवर्द्धनम् ॥ १० ॥ तोरणं दक्षिणार्द्धेन जम्बूप्रस्थमुपागमत् । वरूथं च ययौ रम्यं ग्रामं दशरथात्मजः ॥ ११ ॥ तत्र रम्ये वने वासं कृत्वाऽसौ प्राङ्मुखो ययौ । उद्यानमुज्जिहानायाः प्रियका यत्र पादपाः ॥ १२ ॥ सालांस्तु प्रियकान् प्राप्य शीघ्रानास्थाय वाजिनः । अनुज्ञाप्याथ भरतो वाहिनीं त्वरितो ययौ ॥ १३ ॥ वासं कृत्वा सर्वतीर्थे तीर्त्वा चोत्तानिकां नदीम् । अन्या नदीश्च विविधाः पार्वतीयैस्तुरङ्गमैः ॥ १४ ॥

भागीरथीं विश्रुते तरणस्थलत्वेन प्रसिद्धे प्राग्वटे पुरे उपायात् आगच्छत् । तत्तरणार्थमितिशेषः ॥ ९ ॥ स इति । सबलः स भरतः प्राग्वटे तत्समीपे गङ्गां तीर्त्वा कुटिकोष्ठिकां नदीं समायात् । सः तां तीर्त्वा धर्मवर्द्धनं ग्रामं समायात् प्राप ॥ १० ॥ तोरणमिति । तोरणं दक्षिणार्द्धेन तोरणग्रामस्य दक्षिणभागेन जम्बूप्रस्थं ग्रामम् उपागमत् । ततो वरूथाख्यं ग्रामं ययौ ॥ ११ ॥ तत्रेति । तत्र तत्समीपे रम्ये वने । वासं रात्रिवासं कृत्वा । प्रभाते प्राङ्मुखः सन् उज्जिहानायाः नगर्याः उद्यानं ययौ, यत्र उद्याने प्रियकाः बन्धूकाः कदम्बा वा सन्ति ॥ १२ ॥ सालानिति । सालान् वृक्षान् "अनोकहः कुटः सालः" इत्यमरः । पूर्वोक्तवनस्थान् प्रियकवृक्षान् । प्राप्य शीघ्रान् वाजिनः आस्थाय रथे बद्ध्वा वाहिनीमनुज्ञाप्य त्वरितो ययौ । उज्जिहानायाः परं स्वदेशत्वान्निर्भयं मन्दमागम्यतामिति सेनामनुज्ञाप्य स्वयं त्वरितो ययौ ॥ १३ ॥ वासमिति । सर्वतीर्थे ग्रामे वासम् एकरात्रिवासं

सेवितं जनैरनुपसेवितमित्यर्थः । भद्रेण यानेन भद्रजातीयेन गजेन ॥ ८ ॥ अंशुधाने अंशुधानाख्यदेशे । प्राग्वटे पुरे भागीरथीमुपायात् प्राप्तवान् । अपश्यदिति वा पाठः ॥ ९ ॥ स गङ्गां तीर्त्वेत्यस्यानुवादः–कुटिकोष्ठिकां नदीम् । धर्मवर्धनं धर्मवर्धनग्रामम् ॥ १० ॥ तोरणमिति । तोरणं दक्षिणार्धेन । तोरणग्रामस्य दक्षिणभागेन जम्बूप्रस्थाख्यं ग्रामं वरूथं ग्रामम् ॥ ११ ॥ तत्रेति । उज्जिहानायाः उज्जिहानाख्यायाः पुर्याः उद्यानं ययौ । यत्र उद्याने । प्रियकाः कदम्बाः ॥ १२ ॥ १३ ॥ वासं कृत्वेति । पार्वतीयैः पर्वतोत्पन्नैः हस्तिपृष्ठकमासाद्य गजपृष्ठमारुह्य कुटिकामत्यवर्तत । अनेन शनैरागन्तव्यमिति सेनाया अनुज्ञा दत्ता । तथाप्यनुजीविनः केचन

कृत्वा। (पाठभेदः। सर्वतीर्थे सर्वतीर्थाख्ये ग्रामे) उत्तानिकाम् उन्नतजलत्वेन तदाख्याम्। अन्याः नदीः स्वल्पजलाः पार्वतीयैः पर्वतदेशोत्पन्नैः तुरङ्गमैः रथाश्वैः तीर्त्वेत्यनुषङ्गः। हस्तिपृष्ठवदुन्नतत्वात् हस्तिपृष्ठकाख्यं ग्राममासाद्य कुटिकां नदीमत्यवर्त्तत हस्तिपृष्ठकसमीपे कुटिकामतरदित्यर्थः।

हस्तिपृष्ठकमासाद्य कुटिकामत्यवर्त्तत। ततार च नरव्याघ्रो लौहित्ये स कपीवतीम् ॥ १५ ॥ एकसाले स्थाणुमतीं विनते गोमतीं नदीम्। [व्यपायाद्राघवस्तूर्णं तीर्त्वा शोणां महानदीम्।] कलिङ्गनगरे चापि प्राप्य सालवनं तदा। भरतः क्षिप्रमागच्छत् सुपरिश्रान्तवाहनः ॥ १६ ॥ वनं च समतीत्याशु शर्वर्य्यामरुणोदये। अयोध्यां मनुना राज्ञा निर्मितां संददर्श ह ॥ १७ ॥ तां पुरीं पुरुषव्याघ्रः सप्तरात्रोषितः पथि। अयोध्यामग्रतो दृष्ट्वा सारथिं वाक्यमब्रवीत् ॥ १८ ॥ एषा नातिप्रतीता मे पुण्योद्याना यशस्विनी। अयोध्या दृश्यते दूरात् सारथे पाण्डुमृत्तिका ॥ १९ ॥ यज्वभिर्गुणसम्पन्नैर्ब्राह्मणैर्वेदपारगैः। भूयिष्ठमृद्धैराकीर्णा राजर्षिपरिपालिता ॥ २० ॥

लौहित्ये लोहितमृत्त्वाल्लौहित्यनाम्नि नगरे। कपीवतीं बहुकपिमत्त्वात्तन्नाम्नीं नदीम्। "अन्येषामपि दृश्यते" इति दीर्घः ॥१४॥१५॥ एकसाल इति। एकसाले एकसालादूरभवत्वादेकसालाख्ये ग्रामे। स्थाणुमतीं सन्ततजलप्रवाहेण स्थाणुभूतवृक्षत्वात् स्थाणुमतीं नाम नदीम्। निम्नप्रदेशत्वात् विनताख्ये नगरे बहुजलवत्त्वेन गोमत्याख्यां नदीं च ततार। भरतः सुपरिश्रान्तवाहनः सन् कलिङ्गनगरसमीपस्थं सालवनं सर्जकवनं प्राप्य विश्रमार्थं गत्वा ततस्तदा स्वल्पकाल एवागच्छत् ॥ १६ ॥ वनमिति। सालवनं च शर्वर्य्यामाशु समतीत्य अरुणोदयेऽयोध्यां संददर्श ॥ १७ ॥ तामिति। पथि सप्तरात्रोषितः अष्टमदिवसे त्वरातिशयेन रात्रावपि गत्वा अरुणोदयसमये अयोध्यां ददर्श। दृष्ट्वा सारथिमब्रवीच्च ॥१८॥ एषेत्यादिश्लोकद्वयमेकान्वयम्। पाण्डुमृत्तिका गोमयानुलेपनाद्याचरणाभावाच्छ्वेतमृत्तिका। एषायोध्या नातिप्रतीता मे दृश्यते नातिसन्तुष्टा दृश्यते। "सुप्सुपा" इति समासः। "प्रतीतो हृषिते ख्याते ज्ञाते प्रत्ययिते बुधे" इतिवैजयन्ती। यज्वभिः विधिनेष्टवद्भिः। गुणसम्पन्नैः शमदमादिगुणसमृद्धैः। भूयिष्ठं भृशम्। ऋद्धैः धनिकैः॥१९॥२०॥

जनाः सगजाः समागताः इत्यवगम्यते। स भरतः। लौहित्ये लौहिताख्यनगरे कपीवतीं कपीवताख्यनदीम् ॥ १४ ॥१५॥ एकसाले ग्रामे। स्थाणुमतीं नदीम्। विनते विनताख्यनगरे ॥ १६–१८ ॥ एषेत्यादिश्लोकद्वयम्। नातिप्रतीता नातिहर्षिता ; "प्रतीतो हृषिते ख्याते" इति वैजयन्ती। पाण्डुमृत्तिका सुधाधवलित

अयोध्यायामिति । श्रूयत इति वर्त्तमाननिर्देशस्स्मृतौ वर्त्तमानवद्भानात् । नरविशिष्टा नार्य्यो नरनार्य्यस्तासाम् ॥ २१ ॥ उद्यानानीतिसार्द्धश्लोकमेकं वाक्यम् । उद्यानानि सायाह्ने गतेत्विति शेषः । रात्रौ क्रीडित्वा उपरतैः प्रातर्विप्रधावद्भिः गृहं प्रतिगच्छद्भिः नरैः अन्यदा पूर्वं प्रकाशन्ते । अद्य त्वाह

अयोध्यायां पुरा शब्दः श्रूयते तुमुलो महान् । समन्तान्नरनारीणां तमद्य न शृणोम्यहम् ॥ २१ ॥ उद्यानानि हि सायाह्ने क्रीडित्वोपरतैर्नरैः। समन्ताद्विप्रधावद्भिः प्रकाशन्ते ममान्यदा । तान्यद्यानुरुदन्तीव परित्यक्तानि कामिभिः ॥ २२ ॥ अरण्यभूतेव पुरी सारथे प्रतिभाति मे ॥ २३ ॥ नह्यत्र यानैर्दृश्यन्ते न गजैर्न च वाजिभिः । निर्यान्तो वाभियान्तो वा नरमुख्या यथापुरम् ॥२४॥ उद्यानानि पुरा भान्ति मत्तप्रमुदितानि च । जनानां रतिसंयोगेष्वत्यन्त गुणवन्ति च ॥ २५ ॥ तान्येतान्यद्य पश्यामि निरानन्दानि सर्वशः । स्रस्तपर्णैरनुपथं विक्रोशद्भिरिव द्रुमैः ॥ २६ ॥ नाद्यापि श्रूयते शब्दो मत्तानां मृगपक्षिणाम् । संरक्तां मधुरां वाणीं कलं व्याहरतां बहु ॥ २७ ॥

तानीति ॥ २२ ॥ प्रकारान्तरमप्याह—अरण्येति ॥२३॥ नहीति । यानैः शिबिकादिभिः । निर्यान्तः नगरान्निर्गच्छन्तः अभियान्तः । प्रविशन्तः ॥२४॥ उद्यानानीति । मत्तानि फलपल्लवमकरन्दास्वादेन मत्तशुककोकिलभ्रमरादियुक्तत्वान्मत्तानि प्रमुदितानि आलवालकरणदोहदसेचनादिना कन्दलितानि । रतिसंयोगेषु रत्यर्थसंयोगेषु। अत्यन्तगुणवन्ति विविधकुसुमलतागृहदीर्घिकाक्रीडापर्वतादिगुणयुक्तानि ॥२५॥ अद्य त्वाह—तानीति । द्रुमैरुपलक्षितानि पश्यामीत्यन्वयः ॥ २६ ॥ नेति । अद्यापि सूर्य्योदयेऽपि । मत्तानां स्वस्वाभीष्टफलभोजनेन मत्तानाम् । अतएव संरक्तां राग

सौधनिचयत्वादयोध्यायाः पाण्डुमृत्तिकावत्त्वम् ॥१९-२१॥ उद्यानानि हीत्यादिसार्धश्लोकमेकं वाक्यम् । यान्युद्यानानि सायाह्ने क्रीडित्वोपरतैः समन्ताद्विप्रधावद्भिः नरैश्च प्रकाशितानीति शेषः । तान्यद्य कामिभिः परित्यक्तानि सन्ति ममान्यथा रुदन्तीव प्रकाशन्त इति सम्बन्धः ॥ २२ ॥ अरण्यभूतेत्यर्धमेकं वाक्यम् ॥ २३ ॥ मत्तप्रमुदितानि मत्तानि फलपल्लवमकरन्दास्वादनेन मत्तशुककोकिलभ्रमरादियुक्तत्वान्मत्तानि प्रमुदितानि आलवालकरणदोहदसेचनादिना कन्दलितानि अत्यन्त गुणवन्ति । विविधकुसुमलतागृहदीर्घिकाक्रीडापर्वतादियुक्ततया गुणवत्त्वम् ॥२४॥२५॥ स्रस्तपर्णैरत एव विक्रोशद्भिरिव द्रुमैरुपलक्षितानि अत एव निरानन्दानि

सत्य०—संरक्तां नानारागसहितां मधुरां वाणीं व्याहरतां पक्षिणां कलं व्याहरतां मृगाणामिति बुद्ध्या विवेकेनान्वयः ॥ २७ ॥

युक्ताम् । मधुरां रमणीयाम् वाणीं कलं यथा भवति तथा व्याहरतां मृगपक्षिणाम् क्रीडामृगशुकसारिकाप्रभृतीनाम् शब्दो न श्रूयते ॥ २७ ॥ चन्दनागरुसंपृक्तः चन्दनागरुगन्धसंपृक्तः । धूपसंमूर्च्छितः धूपव्याप्तः । श्रीमान् रमणीयः ॥ २८ ॥ भेरीति । कोणसङ्घट्टितः

चन्दनागरुसंपृक्तो धूपसंमूर्च्छितोऽतुलः । प्रवाति पवनः श्रीमान् किंनु नाद्य यथापुरम् ॥ २८ ॥ भेरीमृदङ्गवीणानां कोणसङ्घट्टितः पुनः । किमद्य शब्दो विरतः सदाऽदीनगतिः पुरा ॥ २९ ॥ अनिष्टानि च पापानि पश्यामि विविधानि च । निमित्तान्यमनोज्ञानि तेन सीदति मे मनः ॥ ३० ॥ सर्वथा कुशलं सूत दुर्लभं मम बन्धुषु । तथा ह्यसति सम्मोहे हृदयं सीदतीव मे ॥ ३१ ॥ विषण्णः श्रान्तहृदयस्त्रस्तस्स लुलितेन्द्रियः । भरतः प्रविवेशाशु पुरीमिक्ष्वाकुपालिताम् ॥ ३२ ॥ द्वारेण वैजयन्तेन प्राविशच्छ्रान्तवाहनः । द्वास्स्थैरुत्थाय विजयं पृष्टस्तैः सहितो ययौ ॥ ३३ ॥ स त्वनेकाग्रहृदयो द्वास्स्थं प्रत्यर्च्य तं जनम् । सूतमश्वपतेः क्लान्तमब्रवीत्तत्र राघवः ॥ ३४ ॥ किमहं त्वरयानीतः कारणेन विनाऽनघ । अशुभाशङ्कि हृदयं शीलं च पततीव मे ॥ ३५ ॥

भेरीमृदङ्गवीणावादनसाधनभूतदण्डहस्ततलाङ्गुल्याद्याहतिजनितः । सदा अदीनगतिरिति पदच्छेदः । पुरा अदीनगतिः शब्दः अद्य पुनः किमर्थं विरतः उपरतः ॥ २९ ॥ अनिष्टानीति । अनिष्टानि अनिष्टसूचकानि । पापानि क्रूराणि "पापं स्यात् क्रूरपाप्मनोः" इति वैजयन्ती । अमनोज्ञानि दर्शनमात्रेण दुःखकराणि । निमित्तानि अशुभसूचकानि शिवावाशितादीनि ॥ ३० ॥ सर्वथेति । संमोहे संमोहकारणे ॥ ३१ ॥ विषण्णः दुःखितः । श्रान्तहृदयः कलुषितमनस्कः। लुलितेन्द्रियः क्षुभितबाह्येन्द्रियः ॥ ३२ ॥ वैजयन्तेन वैजयन्ताख्येन द्वारेण नगरपश्चिमद्वारेण । अत्र रे इति गायत्र्यक्षरम् । पञ्चसहस्राणि श्लोकानां गतानि ॥ ३३ ॥ स त्विति । अनेकाग्रहृदयः व्याकुलमनाः । प्रत्यर्च्य सोपचारं निवर्त्त्य ॥ ३४ ॥ किमिति ।

पश्यामीति सम्बन्धः ॥ २६–२८ ॥ भेरीति । कोणसङ्घट्टितः भेर्यादीनां वादनसाधनभूतदण्डाद्याहतिजनितः । सदा अदीनगतिरिति पदच्छेदः ॥ २९ ॥ पापानि क्रूराणि । "पापं स्यात्क्रूरपाप्मनोः" इति वैजयन्ती ॥ ३०–३२ ॥ गायत्र्याः रे इति षष्ठाक्षरं द्वारेण वैजयन्तेनेत्यस्य श्लोकस्य द्वितीयाक्षरेण सङ्गृह्णाति । वैजयन्तेनेत्युक्तिरिन्द्रप्रासादसदृशत्वेन निर्मितत्वात् । यद्वा विजयप्रदविन्यासविशेषवत्त्वेन । यद्वा वैजयन्ती पताकाऽस्यास्तीति वैजयन्तम् । अर्शाद्यच् । यद्वा वैजयन्ताख्येन ॥ ३३ ॥ प्रत्यर्च्य सोपचारं निवर्त्त्य ॥ ३४ ॥ आनीतः वसिष्ठेन दूतद्वारा आनीत इत्यर्थः ॥ ३५ ॥

कारणेन विना आह्वानकारणोक्तिं विना । त्वरयानीतः द्रुतं वसिष्ठेनानीतः । अनर्घेतिचिन्तासमर्थतोक्तिः ॥३५॥ श्रुता इति । नः अस्माभिः आकारान् वक्ष्यमाणान् तान् तादृशान् । इह नगरे ॥ ३६ ॥ आकारानेव दर्शयति–संमार्जनविहीनानीत्यादिना । सम्मार्जनविहीनानि कानिचित्कुटुम्बिभवना

श्रुता नो यादृशाः पूर्वं नृपतीनां विनाशने। आकारांस्तानहं सर्वानिह पश्यामि सारथे ॥३६॥ सम्मार्जनविहीनानि परुषाण्युपलक्षये । असंयतकवाटानि श्रीविहीनानि सर्वशः ॥ ३७ ॥ बलिकर्मविहीनानि धूपसम्मोदनेन च । अनाशितकुटुम्बानि प्रभाहीनजनानि च । अलक्ष्मीकानि पश्यामि कुटुम्बिभवनान्यहम् ॥ ३८ ॥ अपेतमाल्यशोभान्यप्यसंमृष्टाजिराणि च । देवागाराणि शून्यानि न चाभान्ति यथापुरम् ॥ ३९ ॥ देवतार्चाः प्रविद्धाश्च यज्ञगोष्ठ्यस्तथाविधाः। माल्यापणेषु राजन्ते नाद्य पण्यानि वा तथा ॥ ४० ॥ दृश्यन्ते वणिजोऽप्यद्य न यथापूर्वमत्र वै । ध्यानसंविग्नहृदया नष्टव्यापारयन्त्रिताः ॥ ४१ ॥ देवायतनचैत्येषु दीनाः पक्षिगणास्तथा । मलिनं चाश्रुपूर्णाक्षं दीनं ध्यानपरं कृशम् ॥ ४२ ॥

नीति शेषः ॥ ३७ ॥ बलिकर्मविहीनानीति । धूपसंमोदनेन धूमपरिमलेन विहीनानीत्यनुकर्षः । अनाशितकुटुम्बानि अभोजितकुटुम्बानि । ण्यन्तप्रयोगः । भोजयितॄणामपि दुःखाक्रान्ततया पाकयत्नाभावात् ॥ ३८ ॥ अपेतेति। अपेता माल्यशोभा द्वारि बद्धपुष्पदामशोभा येभ्यस्तानि । शून्यानि पूजकपरिचारकादिरहितानि ॥ ३९ ॥ देवतार्चा इति । देवतार्चाः देवपूजाः । प्रविद्धाः लुप्ताः । “ अर्चा पूजाप्रतिमयोः ” इति वैजयन्ती । यज्ञगोष्ठ्यः यज्ञसभाः तथाविधाः प्रविद्धा इत्यर्थः । पण्यानि क्रयपुष्पाणि ॥ ४० ॥ दृश्यन्त इति । ध्यानसंविग्नहृदयाः ध्यानासक्तहृदयाः । नष्टव्यापारयन्त्रिताः नष्टक्रयविक्रयादिव्यापाराः । यन्त्रिताः निरुद्धाश्च “ यन्त्रि संकोचे ” इतिधातुः ॥४१॥ देवायतनेति । स्त्रीपुंसेति निपातनात् समासान्तोऽच्प्रत्ययः ।



तान् तादृशान् ॥ ३६ ॥ आकारानेवाह–सम्मार्जनेत्यादि । असंयतकवाटानीत्यादिश्लोकद्वयमेकं वाक्यम् । अनाशितकुटुम्बानि अभोजितकुटुम्बानि ॥ ३७–३९ ॥ देवतार्चाः देवताविग्रहाः । प्रविद्धाः विभिन्ना इत्यर्थः । नष्टव्यापारयन्त्रिताः नष्टक्रयविक्रयादिव्यापारे वशीकृताः, नष्टक्रयविक्रयादिव्यापारत्वान्निरुद्धा

समुदायसमुदायिनोर्भेदविवक्षया जनविशेषणत्वम् ॥ ४२ ॥ ४३ ॥ इतीति । तान्यरिष्टानि प्रेक्ष्य तं सूतमित्येवमुक्त्वेत्यन्वयः ॥ ४४ ॥ तामिति । शून्याः जनरहिताः । शृङ्गाटकवेश्मरथ्याः चतुष्पथगृहवीथयो यस्याम् । रजोरुणद्वारकपाटयन्त्रां रजोभिः अरुणानि मलिनानि द्वारस्थकपाटानां

सस्त्रीपुंसं च पश्यामि जनमुत्कण्ठितं पुरे ॥ ४३ ॥ इत्येवमुक्त्वा भरतः सूतं तं दीनमानसः । तान्यरिष्टान्ययोध्यायां प्रेक्ष्य राजगृहं ययौ ॥ ४४ ॥ तां शून्यशृङ्गाटकवेश्मरथ्यां रजोरुणद्वारकपाटयन्त्राम् । दृष्ट्वा पुरीमिन्द्रपुरप्रकाशां दुःखेन सम्पूर्णतरो बभूव ॥ ४५ ॥ बहूनि पश्यन् मनसोऽप्रियाणि यान्यन्यदा नास्य पुरे बभूवुः । अवाक्छिरा दीनमना न हृष्टः पितुर्महात्मा प्रविवेश वेश्म ॥ ४६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

अपश्यंस्तु ततस्तत्र पितरं पितुरालये । जगाम भरतो द्रष्टुं मातरं मातुरालये ॥ १ ॥ अनुप्राप्तं तु तं दृष्ट्वा कैकेयी प्रोषितं सुतम् । उत्पपात तदा हृष्टा त्यक्त्वा सौवर्णमासनम् ॥ २ ॥ स प्रविश्यैव धर्मात्मा स्वगृहं श्रीविवर्जितम् । भरतः प्रतिजग्राह जनन्याश्चरणौ शुभौ ॥ ३ ॥ सा तं मूर्द्धन्युपाघ्राय परिष्वज्य यशस्विनम् । अङ्के भरतमारोप्य प्रष्टुं समुपचक्रमे ॥ ४ ॥ अद्य ते कतिचिद्रात्र्यश्च्युतस्यार्यकवेश्मनः । अपि नाध्वश्रमः शीघ्रं रथेनापततस्तव ॥ ५ ॥

यन्त्राणि दारुबन्धादीनि यस्याम् । संमार्जनाद्यभावादितिभावः ॥ ४५ ॥ बहूनीति । अन्यदा पूर्वकाले । अस्य भरतस्य । यानि अप्रियाणि न बभूवुः तानि मनसोऽप्रियाणि पश्यन् सन् । आवाक्छिरा अवनतशिराः । न हृष्टः अहृष्टः महात्मा महाधैर्यः ॥ ४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकसप्ततितमः सर्गः ॥ ७१ ॥ १–४॥ अद्येति । कतिचिदिति प्रश्ने । पृथङ्निपातो वा । च्युतस्य इत्यर्थः ॥ ४०–४४ ॥ तामिति । शृङ्गाटकानि चतुष्पथानि । रजोरुणद्वारकपाटयन्त्रां रजसा अरुणानि निरुद्धानि व्याप्तानि द्वारकपाटयन्त्राणि यस्यां ताम् ॥ ४५ ॥ ४६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां एकसप्ततितमस्सर्गः ॥ ७१ ॥ १–४ ॥ अद्येति । कतिचित् कतीत्यर्थः । च्युतस्य निर्गतस्य । आर्यकवेश्मनः । आर्यकः मातामहः ॥ ५ ॥

निर्गतस्य । आर्यकः मातामहः । अपिः प्रश्ने ॥ ५ ॥ आर्यक इति । आर्यकः सुकुशली किमिति शेषः । प्रवासात् इतो निर्गमादारभ्य अपि सुख मित्यनुषक्तापिनान्वयः । एतत्सर्वं मे वक्तुमर्हसीति योजना ॥ ६ ॥ ७ ॥ अद्येति अद्यरात्रिः अस्मादह्नः पूर्वरात्रिः सप्तमी । अतः सप्तरात्रोषितः

आर्यकस्ते सुकुशली युधाजिन्मातुलस्तव। प्रवासाच्च सुखं पुत्र सर्वं मे वक्तुमर्हसि ॥ ६ ॥ एवं पृष्टस्तु कैकेय्या प्रियं पार्थिवनन्दनः । आचष्ट भरतः सर्वं मात्रे राजीवलोचनः ॥ ७ ॥ अद्य मे सप्तमी रात्रिश्च्युतस्यार्यक वेश्मनः । अम्बायाः कुशली तातो युधाजिन्मातुलश्च मे ॥८॥ यन्मे धनं च रत्नं च ददौ राजा परंतपः । परिश्रान्तं पथ्यभवत् ततोऽहं पूर्वमागतः ॥ ९ ॥ राजवाक्यहरैर्दूतैस्त्वर्यमाणोऽहमागतः । यदहं प्रष्टुमिच्छामि तदम्बा वक्तु मर्हति ॥ १० ॥ शून्योऽयं शयनीयस्ते पर्यङ्को हेमभूषितः । न चायमिक्ष्वाकुजनः प्रहृष्टः प्रतिभाति मा ॥ ११ ॥ राजा भवति भूयिष्ठमिहाम्बाया निवेशने । तमहं नाद्य पश्यामि द्रष्टुमिच्छन्निहागतः ॥ १२ ॥ पितुर्ग्रहीष्ये चरणौ तं ममाख्याहि पृच्छतः । आहोस्विदम्ब ज्येष्ठायाः कौसल्याया निवेशने ॥ १३ ॥ तं प्रत्युवाच कैकेयी प्रियवद् घोरमप्रियम् । अजानन्तं प्रजानन्ती राज्यलोभेन मोहिता ॥ १४ ॥

पथीत्यनेन न विरोधः ॥ ८ ॥ यदिति । राजा मातामहः । धनं प्रागुक्ताश्वादि यद्ददौ तत् परिश्रान्तं परिश्रान्तवाहनम् अतएव पथ्यभवत् ॥९॥१०॥ शून्य इति । शून्यः पितृशून्यः । शयनीयः शयनार्हः । इक्ष्वाकुजनः दशरथजनः ॥ ११ ॥ राजेति । भवतीत्यत्रेतिकरणं द्रष्टव्यम् । भूयिष्ठं प्राचुर्येण ॥ १२ ॥ पितुरिति । कौसल्याया निवेशने भवति किमित्यनुषञ्जनीयम् ॥ १३ ॥ तमिति । अजानन्तं राजवृत्तान्तमजानन्तम् । प्रियवत् प्रियमिव । प्रजानन्ती अप्रियमुवाचेत्यन्वयः । तत्र हेतुः राज्यलोभेन मोहितेति ॥ १४ ॥



प्रवासात् मातुलगृहोद्देशेन गमनात् ॥ ६ ॥ ७ ॥ अद्य मे सप्तमी रात्रिः अस्मादह्नः पूर्वरात्रिः सप्तमीरात्रिरित्यर्थः । अतः सप्तरात्रोषितः पथीत्यनेन न विरोधः ॥ ८ ॥ राजा मे यद्धनं रत्नं च ददौ तत्परिश्रान्तं सत्पथ्यभवत । मार्गे स्थितम्, ततः कारणात् अहम् इह पूर्वमागत इति सम्बन्धः ॥ ९ ॥ तत्र हेतुः—राज वाक्येति ॥ १० ॥ शून्यः शयनीयः शयनार्हः । इक्ष्वाकुजनः दशरथः ॥ ११ ॥ राजेति । भूयिष्ठं प्राचुर्येण ॥ १२ ॥ १३ ॥ प्रियवत् प्रियमिव ॥ १४ ॥

अस्य दुःखमनुत्पादयन्ती मृदूक्त्या मरणमाह—येति । यायजूकः इज्याशीलः । "इज्याशीलो यायजूकः" इतिहलायुधः॥ १५—१७॥तत इति । शोकेन संवीतः शोकेनावृतः । मरणदुःखितः मरणश्रवणेन सञ्जातदुःखः । भ्रान्ता अनवस्थिता आकुलिता खिन्ना चेतना यस्य सः भ्रान्ताकुलितचेतनः ॥१८॥

या गतिः सर्वभूतानां तां गतिं ते पिता गतः। राजा महात्मा तेजस्वी यायजूकः सतां गतिः ॥ १५ ॥ तच्छ्रुत्वा भरतो वाक्यं धर्माभिजनवाञ्छुचिः । पपात सहसा भूमौ पितृशोकबलार्दितः ॥ १६ ॥ हा हतोस्मीति कृपणां दीनां वाचमुदीरयन् । निपपात महाबाहुर्बाहू विक्षिप्य वीर्यवान् ॥१७॥ ततः शोकेन संवीतः पितुर्मरणदुःखितः । विललाप महातेजा भ्रान्ताकुलितचेतनः ॥ १८ ॥ एतत् सुरुचिरं भाति पितुर्मे शयनं पुरा । शशिनेवामलं रात्रौ गगनं तोयदात्यये ॥ १९ ॥ तदिदं न विभात्यद्य विहीनं तेन धीमता । व्योमेव शशिना हीनमप्च्छुष्क इव सागरः ॥ २० ॥ बाष्पमुत्सृज्य कण्ठेन स्वार्त्तः परमपीडितः । प्रच्छाद्य वदनं श्रीमद्वस्त्रेण जयतां वरः ॥ २१ ॥ तमार्त्तं देवसङ्काशं समीक्ष्य पतितं भुवि । निकृत्तमिव सालस्य स्कन्धं परशुना वने ॥ २२ ॥ मत्तमातङ्गसङ्काशं चन्द्रार्कसदृशं भुवः । उत्थापयित्वा शोकार्तं वचनं चेदमब्रवीत् ॥२३॥ उत्तिष्ठोत्तिष्ठ किं शेषे राजन्नत्र महायशः । त्वद्विधा नहि शोचन्ति सन्तः सदसि सम्मताः ॥ २४ ॥

विलापमेवाह—एतदित्यादिना ॥ १९ ॥ तदिति । अप्च्छुष्कः शुष्कापः । आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । उच्छुष्क इति पाठान्तरम्॥२०॥ बाष्पमिति । कण्ठेन कण्ठस्वरेण । स्वार्त्तः सुतरामार्त्तः, अभवदिति शेषः । परमपीडितः मानसव्यथायुक्तः ॥२१—२३॥ उत्तिष्ठोत्तिष्ठेति । राजन्निति

यायजूकः यज्ञशीलः ॥ १५ ॥ धर्माभिजनवान् धर्मः धर्मयुक्तः अभिजनः अन्वयो यस्यास्तीति तथा ॥ १६ ॥ १७ ॥ मरणदुःखितः मरणश्रवणेन सञ्जातदुःखः ॥ १८ ॥ १९ ॥ अप्च्छुष्कः शुष्कापः । निष्ठायाः परानिपातः ॥ २० ॥ बाष्पमिति । वदनं वस्त्रेण प्रच्छाद्य कण्ठेन सस्वरेण बाष्पमुत्सृज्य सस्वरं रुदित्वेत्यर्थः । स्वार्तः अभवदिति शेषः ॥ २१—२३ ॥ राजपुत्रेति वा राजन्नत्रेतिवा पाठः ॥ २४ ॥

स०—मत्तमातङ्गसङ्काशं धूलिप्रक्षेपेण गजसदृशम् । चन्द्रार्कसदृशम् रामपक्षाणां चन्द्रसदृशम् अन्येषां तापकत्वेन सूर्यसदृशमिति विवेकः ॥ २३ ॥

भरतशोकनिवर्त्तनार्थमित्युक्तवती । सदसि सम्मताः सभ्या इत्यर्थः । दानयज्ञो अधिक्रियते अनयेति दानयज्ञाधिकारा । तत्र हेतुः शीलेति । शीलं सद्वृत्तं श्रुतिवचो वेदवाक्यं ते अनुगच्छतीति तदनुगा तदनुसारिणी बुद्धिः अध्यवसायः । अर्कस्य प्रभा मन्दिर इव सूर्यप्रभा यथा स्वस्थाने निश्चला भवति

दानयज्ञाधिकारा हि शीलश्रुतिवचोनुगा । बुद्धिस्ते बुद्धिसम्पन्न प्रभेवार्कस्य मन्दिरे ॥ २५ ॥ स रुदित्वा चिरं कालं भूमौ विपरिवृत्य च । जननीं प्रत्युवाचेदं शोकैर्बहुभिरावृतः ॥ २६ ॥ अभिषेक्ष्यति रामं नु राजा यज्ञं नु यक्ष्यते । इत्यहं कृतसङ्कल्पो हृष्टो यात्रामयासिषम् ॥ २७ ॥ तदिदं ह्यन्यथाभूतं व्यवदीर्णं मनो मम । पितरं यो न पश्यामि नित्यं प्रियहितेरतम् ॥ २८ ॥ अम्ब केनात्यगाद्राजा व्याधिना मय्यनागते । धन्या रामादयः सर्वे यैः पिता संस्कृतः स्वयम् ॥ २९ ॥ न नूनं मां महाराजः प्राप्तं जानाति कीर्तिमान् । उपजिघ्रेद्धि मां मूर्ध्नि तातः सन्नम्य सत्वरम् ॥३०॥ क्व स पाणिः सुखस्पर्शस्तातस्याक्लिष्टकर्मणः । येन मां रजसा ध्वस्तमभीक्ष्णं परिमार्जति ॥ ३१ ॥ यो मे भ्राता पिता बन्धुर्यस्य दासोऽस्मि धीमतः । तस्य मां शीघ्रमाख्याहि रामस्याक्लिष्टकर्मणः ॥३२॥

तथा ते बुद्धिर्निश्चला भातीत्यर्थः । मन्दर इति पाठे–अर्कस्य प्रभा मन्दर इवेत्युक्तिरत्युन्नतमन्दरपर्वते अर्कप्रभायाः पर्वतान्तरापेक्षया चिरकालावस्थानात् ( पाठभेदः । मन्दर इतिपाठे मन्दरशिखरे स्थितस्यार्कस्य प्रभेवाधिकप्रकाशवतीत्यर्थः । उत्तरायणे हि मन्दरगतस्य सूर्यस्य प्रभाधिकं प्रकाशत इति प्रसिद्धम् । ) ॥ २४–२६ ॥ अभिषेक्ष्यतीति । यज्ञं यक्ष्यत इति यज्ञं करिष्यत इत्यर्थः । यात्रामयासिषं यात्रामकार्षमित्यर्थः ॥ २७ ॥ तदिति । व्यवदीर्णं भिन्नम् ॥ २८–३० ॥ क्वेति । परिमार्जति परिमार्ष्टि । माम् आगतमिति शेषः । क्व स पाणिः, गत इतिशेषः ॥ ३१–३४ ॥

अर्कस्य प्रभा मन्दर इवेत्युक्तिः अत्युन्नतमन्दरपर्वते अर्कप्रभायाः पर्वतान्तरापेक्षया चिरकालावस्थानात् ॥ २५ ॥ २६ ॥ यक्ष्यते यागं करिष्यतीति । यात्रामयासिषं यात्रामकार्षमित्यर्थः ॥ २७–३० ॥ परिमार्जति परिमार्ष्टि ॥ ३१ ॥ ३२ ॥



स०–अर्कप्रभा यथा मन्दिरे समुद्रे सर्वदा व्याप्ता तथा तव बुद्धिरपि लौकिकालौकिकविषये व्याप्तेत्यर्थः । यद्वा मन्दिरे गृहे । अर्कस्य स्फटिकस्य प्रभा यथा तथा तव बुद्धिरपि स्वच्छा । “ अर्कोऽर्कपर्णे स्फटिके । मन्दिरं नगरेऽगारे मन्दिरो मकरालये ” इति विश्वः ॥ २५ ॥

पश्चिममिति। आत्मनः सन्देशं मद्विषयसन्देशम् ॥ ३५ ॥ एवं पृष्टवन्तं भरतं प्रति त्वां राजा न स्मृतवान् किंतु राममेव स्मरन् स्वर्गमगादिति पितृ विषयस्नेहनिवर्त्तनाभिप्रायेणोत्तरमाह–रामेत्यादिना ॥ ३६ ॥ इमामित्यादिश्लोकद्वयमेकान्वयम् । सिद्धार्थाः कृतार्थाः । पुनरागतं द्रक्ष्यन्तीति इमां

पिता हि भवति ज्येष्ठो धर्ममार्यस्य जानतः। तस्य पादौ ग्रहीष्यामि स हीदानीं गतिर्मम ॥३३॥ धर्मविद्धर्मनित्यश्च सत्यसन्धो दृढव्रतः । आर्यः किमब्रवीद्राजा पिता मे सत्यविक्रमः ॥ ३४ ॥ [गुरुरेकः प्रजानां तु पिता मे सत्य विक्रमः।] पश्चिमं साधु सन्देशमिच्छामि श्रोतुमात्मनः। इति पृष्टा यथातत्त्वं कैकेयी वाक्यमब्रवीत् ॥३५॥ रामेति राजा विलपन् हा सीते लक्ष्मणेति च। स महात्मा परं लोकं गतो गतिमतां वरः ॥३६॥ इमां तु पश्चिमां वाचं व्याजहार पिता तव। कालधर्मपरिक्षिप्तः पाशैरिव महागजः ॥ ३७ ॥ सिद्धार्थास्ते नरा राममागतं सीतया सह। लक्ष्मणं च महाबाहुं द्रक्ष्यन्ति पुनरागतम् ॥ ३८ ॥ तच्छ्रुत्वा विषसादैव द्वितीयाप्रियशंसनात् । विषण्णवदनो भूत्वा भूयः पप्रच्छ मातरम् ॥ ३९ ॥ क्व चेदानीं स धर्मात्मा कौसल्यानन्दवर्द्धनः । लक्ष्मणेन सह भ्रात्रा सीतया च समं गतः ॥ ४० ॥ तथा पृष्टा यथातत्त्वमाख्यातुमुपचक्रमे । मातास्य युगपद्वाक्यं विप्रियं प्रियशङ्कया ॥ ४१ ॥

वाचं व्याजहारेति सम्बन्धः ॥ ३७ ॥ ३८ ॥ तदिति। द्वितीयाप्रियशंसनात् राजमरणापेक्षया रामस्य देशान्तरगमनरूपाप्रियस्य द्वितीयत्वम् ॥३९॥४०॥ तथेति । यथातथमिति सम्यक्पाठः । यथाचायमितिपाठे–अयं वृत्तान्तः यथा तथाख्यातुमित्यन्वयः। विप्रियं रामविवासनप्रतिपादकम् । प्रियशङ्कया एतच्छ्रवणेन भरतस्य प्रियं भविष्यतीति वितर्केण "शङ्कावितर्कभययोः" इति वैजयन्ती । युगपत् राजमरणकथनसमकालमेव । यद्वा युगपदाख्यातु

धर्मं जानतः आर्यस्य श्रेष्ठस्य विवेकिनः पुरुषस्येत्यर्थः। ज्येष्ठभ्राता पिता भवति अतस्तस्य पादौ ग्रहीष्यामीति। कुतः ? स हि गतिः ममेति सम्बन्धः ॥३३॥३४॥ आत्ममः सन्देशं नृपमरणसमये नृपेण मद्विषये वार्तामित्यर्थः ॥ ३५ ॥ रामादीन् स्मरन्नेव परं गत इत्याह–रामेति ॥ ३६ ॥ इमामित्यादिश्लोकद्वयमेकं वाक्यम् । कालधर्मपरिक्षिप्तः मृत्युना व्याप्तः । सिद्धार्था नराः आगतं रामं द्रक्ष्यन्तीति इमां वाचं व्याजहारेतिसम्बन्धः ॥ ३७॥ ३८ ॥ तच्छ्रुत्वेति । द्वितीयाप्रियशंसनात् राज मरणापेक्षया रामवनवासरूपाप्रियस्य द्वितीयत्वम् ॥३९॥४०॥ विप्रियं रामविवासनप्रतिपादकं प्रियशङ्कया एतच्छ्रवणेन भरतस्य प्रियं भविष्यतीति तर्केण युगपत्

मुपचक्रम इत्युपक्रमस्य वक्ष्यमाणपरत्वात् 'याचितस्ते पिता राज्यं रामस्य च विवासनम्' इति वक्ष्यमाणवाक्यार्थाभिप्रायेण यौगपद्यम् ॥ ४१ ॥ स हीति । दण्डकान् महावनमिति 'वेदाः प्रमाणम्' इतिवन्निर्देशः ॥४२॥ तदिति । चारित्रशङ्कया चारित्रं किमभूदिति शङ्कया । वंशस्य माहात्म्यात्

स हि राजसुतः पुत्र चीरवासा महावनम् । दण्डकान् सह वैदेह्या लक्ष्मणानुचरो गतः ॥४२॥ तच्छ्रुत्वा भरतस्त्रस्तो भ्रातुश्चारित्रशङ्कया । स्वस्य वंशस्य माहात्म्यात् प्रष्टुं समुपचक्रमे ॥ ४३ ॥ कच्चिन्न ब्राह्मणधनं हृतं रामेण कस्य चित् । कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥४४॥ कच्चिन्न परदारान्वा राजपुत्रोऽभिमन्यते । कस्मात्स दण्डकारण्ये भ्रूणहेव विवासितः ॥ ४५ ॥ अथास्य चपला माता तत् स्वकर्म यथातथम् । तेनैव स्त्रीस्वभावेन व्याहर्तुमुपचक्रमे ॥ ४६ ॥ एवमुक्ता तु कैकेयी भरतेन महात्मना । उवाच वचनं हृष्टा मूढा पण्डितमानिनी ॥४७॥

असदाचारवैमुख्यपूर्वकसदाचारनिरतत्वं वंशस्य माहात्म्यम् ॥ ४३ ॥ कच्चिदिति । ब्राह्मणधनमित्यत्राविभक्तिको निर्देशः । कस्यचिद्ब्राह्मणस्येत्यर्थः । यद्वा कस्यचित् कस्माच्चिद्धेतोरित्यर्थः ॥ ४४ ॥ कच्चिदिति । भ्रूणः श्रुताध्ययनसम्पन्नः "अनूचानो गुणैर्युक्तो व्रतस्वाध्यायवाञ्छुचिः । भ्रूण इत्युच्यते सद्भिस्त्वेष यो विजितेन्द्रियः ॥" इति स्मृतेः ॥४५॥ अथेति । यथातथं यथावृत्तम् । निपातनात्साधुः । स्त्रीस्वभावेन चापलेनेत्यर्थः । व्याहर्तुमुपचक्रमे वक्तुं व्यवसितवतीत्यर्थः । अथास्येति श्लोको मुनेः खेदाभिनयः । एवमिति श्लोकः क्रमिक इति केचित् ॥ ४६ ॥ रामानु०-भ्रूणहेव विवासित इत्येतच्छ्लोकानन्तरम् एवमुक्तेतिश्लोकश्चेत् सुसङ्गतं भवति। मध्ये अथास्येति श्लोको वर्तते, स्थितस्य गतिश्चिन्तनीयेति न्यायेनास्य व्याख्या क्रियते।व्याहर्तुमुपचक्रमे वक्तुं व्यवसितवतीत्यर्थः॥४६॥ एवमिति । अयं श्लोकः पूर्वानुवादार्थः ॥ ४७ ॥

राजमरणकथनसमकालमेव आख्यातुमुपचक्रम इति सम्बन्धः ॥ ४१ ॥ ४२ ॥ चारित्रशङ्कया चरित्रं किमभूदिति शङ्कया । वंशस्य माहात्म्यात् । वंशस्य माहात्म्यं नाम असदाचारवैमुख्यपूर्वकसदाचारनिरतत्वम् ॥ ४३ ॥ ब्राह्मणधनं कस्य चित् कस्माच्चिद्धेतोर्न हृतं कच्चित् ॥ ४४ ॥ भ्रूणहा नाम एकशाखाध्यायी श्रोत्रियः, सर्वशाखाध्यायी भ्रूणः स्य हन्ता ॥ ४५-४८ ॥

न ब्राह्मणेत्यादि । रामः परदारान् चक्षुर्भ्यामपि न पश्यति । एवंसति न स्पृशतीत्यत्र किंवक्तव्यमिति भावः ॥ ४८ ॥ मयेति । ते राज्यं रामस्य विवासनं च पिता याचितः पूर्वदत्तवरद्वये विषयत्वेन याचित इत्यर्थः ॥ ४९ ॥ स इति । स्ववृत्तिं स्वप्रतिज्ञारूपां वृत्तिम् ॥ ५० ॥ तमिति ।

न ब्राह्मणधनं किञ्चिद्धृतं रामेण कस्यचित् । कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः । न रामः परदारांश्च चक्षुर्भ्यामपि पश्यति ॥ ४८ ॥ मया तु पुत्र श्रुत्वैव रामस्यैवाभिषेचनम् । याचितस्ते पिता राज्यं रामस्य च विवासनम् ॥ ४९ ॥ स स्ववृत्तिं समास्थाय पिता ते तत्तथाकरोत् । रामश्च सहसौमित्रिः प्रेषितः सीतया सह ॥ ५० ॥ तमपश्यन् प्रियं पुत्रं महीपालो महायशाः । पुत्रशोकपरिद्यूनः पञ्चत्वमुपपेदिवान् ॥ ५१ ॥ त्वया त्विदानीं धर्मज्ञ राजत्वमवलम्ब्यताम् । त्वत्कृते हि मया सर्वमिदमेवंविधं कृतम् ॥ ५२ ॥ मा शोकं मा च सन्तापं धैर्यमाश्रय पुत्रक । त्वदधीना हि नगरी राज्यं चैतदनामयम् ॥५३॥ तत्पुत्र शीघ्रं विधिना विधिज्ञैर्वसिष्ठ मुख्यैः सहितो द्विजेन्द्रैः । सङ्काल्य राजानमदीनसत्त्वमात्मानमुर्व्यामभिषेचयस्व ॥ ५४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

पुत्रशोकपरिद्यूनः पुत्रशोकेन परिद्यूनः तप्तः विलपन्नित्यर्थोऽवा । " दिवोऽविजिगीषायाम् " इतिनिष्ठानत्वम् ॥ ५१ ॥ त्वयेति । धर्मज्ञ राजनीतिज्ञ ! ॥ ५२ ॥ मा शोकमिति । अनामयं निरुपद्रवम् ॥ ५३ ॥ तदिति । सङ्काल्य संस्कृत्य ॥ ५४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्विसप्ततितमः सर्गः ॥ ७२ ॥

मया त्विति । ते राज्यं रामस्य विवासनं च पिता याचित इति सम्बन्धः ॥ ४९ ॥ स्ववृत्तिं स्वस्य प्रतिज्ञारूपम् ॥ ५० ॥ पुत्रेति । पुत्रशोकपरिद्यूनः पुत्रशोकेन विलपन्नित्यर्थः ॥ ५१ ॥ धर्मज्ञ राजनीतिज्ञ ॥ ५२ ॥ अनामयं निरुपद्रवम् ॥ ५३ ॥ सङ्काल्य संस्कृत्य ॥ ५४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायां द्विसप्ततितमः सर्गः ॥ ७२ ॥

श्रुत्वेति। वृत्तम् अतीतम्, मृतमिति यावत् ॥१॥ किं न्विति। कार्यं प्रयोजनम् । दशरथभ्रात्रा हीनस्य॥२॥ दुःख इति । दुःखे दुःखकरणात् व्रणक्षारा घानसादृश्यम् ॥ ३ ॥ कुलस्येति । कालरात्रिः प्रलयकालोत्थितसर्वसंहारशक्तिः । उपगूह्य आलिङ्ग्य ॥ ४-६ ॥ विनाशित इति । महाराजः

[ कैकेय्याप्येवमुक्तस्तु भरतो राघवानुजः । कर्णौ कराभ्यां प्रच्छाद्य पपात धरणीतले ॥ ] श्रुत्वा तु पितरं वृत्तं भ्रातरौ च विवासितौ । भरतो दुःखसन्तप्त इदं वचनमब्रवीत् ॥ १ ॥ किंनु कार्यं हतस्येह मम राज्येन शोचतः । विहीनस्याथ पित्रा च भ्रात्रा पितृसमेन च ॥ २ ॥ दुःखे मे दुःखमकरोर्व्रणे क्षारमिवादधाः । राजानं प्रेतभावस्थं कृत्वा रामं च तापसम् ॥ ३ ॥ कुलस्य त्वमभावाय कालरात्रिरिवागता । अङ्गारमुपगूह्य स्म पिता मे नावबुद्धवान् ॥ ४ ॥ मृत्युमापादितो राजा त्वया मे पापदर्शिनि। सुखं परिहृतं मोहात् कुलेऽस्मिन् कुल पांसिनि ॥ ५ ॥ त्वां प्राप्य हि पिता मेऽद्य सत्यसन्धो महायशाः । तीव्रदुःखाभिसन्तप्तो वृत्तो दशरथो नृपः ॥६॥ विनाशितो महाराजः पिता मे धर्मवत्सलः । कस्मात् प्रव्राजितो रामः कस्मादेव वनं गतः ॥ ७ ॥ कौसल्या च सुमित्रा च पुत्रशोकाभिपीडिते । दुष्करं यदि जीवेतां प्राप्य त्वां जननीं मम ॥ ८ ॥ ननु त्वार्योऽपि धर्मात्मा त्वयि वृत्तिमनुत्तमाम्। वर्त्तते गुरुवृत्तिज्ञो यथा मातरि वर्त्तते ॥९॥ तथा ज्येष्ठा हि मे माता कौसल्या दीर्घदर्शिनी । त्वयि धर्मं समास्थाय भगिन्यामिव वर्तते ॥ १० ॥

कस्माद्विनाशितः, रामः कस्मात्प्रव्राजित इति सम्बन्धः । त्वया सर्वं निष्फलमेव कृतमिति भावः ॥७॥ कौसल्येति । यदि जीवेतां तदा दुष्करं जीवेता मिति सम्बन्धः ॥ ८ ॥ ननु त्विति । आर्यः ज्येष्ठः । वृत्तिं शुश्रूषाम् । वर्त्तते करोतीत्यर्थः । मातरि वर्त्तते मातरि शुश्रूषते ॥ ९ ॥ तथेति । दीर्घ

श्रुत्वेति । वृत्तं मृतमित्यर्थः ॥ १ ॥ २ ॥ राजानं प्रेतभावस्थं रामं च तापसं कृत्वा मे दुःखमकरोः अतः दुःखे दुःखकरे व्रणे क्षारमादधा इव ॥ ३ ॥ कुलस्येति । कालरात्रिः प्रलयकालोत्थितसर्वसंहारशक्तिः ॥ ४ ॥ ५ ॥ त्वामिति । वृत्तः मृतः ॥ ६ ॥ विनाशित इति । महाराजः कस्माद्विनाशितः कस्माद्रामः प्रव्राजित इति सम्बन्धः । त्वयैतत्सर्वं निष्फलमेव कृतमिति भावः ॥ ७ ॥ ८ ॥ नन्विति । आर्यः रामः ॥ ९ ॥ दीर्घदर्शिनी दूरकालभाव्यनर्थदर्शिनीत्यर्थः ॥ १० ॥

दर्शिनी । दूरकालभाव्यनर्थदर्शिनी । "दूरानर्थस्य संदर्शी दीर्घदृष्टिः प्रकीर्त्तितः" इति ॥ १० ॥ तस्या इति । तस्याः तादृशधर्मयुक्तायाः ॥ ११ ॥ अपापदर्शनमिति । किंतु पश्यसि कारणम् किंफलं पश्यसीत्यर्थः । फलं हि प्रयोजकतया कारणम् । न किमपीत्यर्थः ॥ १२ ॥ लुब्धाया इति ।

तस्याः पुत्रं कृतात्मानं चीरवल्कलवाससम् । प्रस्थाप्य वनवासाय कथं पापे न शोचसि ॥ ११ ॥ अपापदर्शनं शूरं कृतात्मानं यशस्विनम् । प्रव्राज्य चीरवसनं किं नु पश्यसि कारणम् ॥१२॥ लुब्धाया विदितो मन्ये न तेऽहं राघवं प्रति । तथा ह्यनर्थो राज्यार्थं त्वयाऽऽनीतो महानयम् ॥ १३ ॥ अहं हि पुरुषव्याघ्रावपश्यं रामलक्ष्मणौ । केन शक्तिप्रभावेन राज्यं रक्षितुमुत्सहे ॥१४॥ तं हि नित्यं महाराजो बलवन्तं महाबलः । अपाश्रितोऽभूद्धर्मात्मा मेरुर्मेरुवनं यथा ॥१५॥ सोऽहं कथमिमं भारं महाधुर्यसमुद्धृतम् । दम्यो धुरमिवासाद्य वहेयं केन चौजसा ॥१६॥

अहं राघवं प्रति यथा यादृशप्रकारयुक्तः तथा लुब्धायास्ते लुब्धया त्वया न विदित इति मन्ये । अविदितत्वे हेतुमाह तथा हीति । राज्यार्थं मम राज्यार्थम् । महानयमनर्थस्त्वया आनीतो हि आनीतः खलु सम्पादितः खलु ॥ १३ ॥ राघवंप्रत्यहं यादृश इत्युक्तं विवृणोति—अहमिति । अपश्यन् हि अपश्यन्नेव । "हि हेताववधारणे" इत्यमरः । केन शक्तिप्रभावेन शक्त्यतिशयेन । भ्रातृसम्पत्तिरेव मम शक्त्यतिशय इति भावः ॥१४॥ न केवलं ममैव रामापेक्षा, पितुरपीत्याह—तमिति । मेरुर्मेरुवनं यथा मेरुजनितमेरुवनस्य तद्रक्षकत्वं परैराक्रमितुमशक्यत्वसम्पादनेन ॥ १५ ॥ केन शक्तिप्रभावेनेत्युक्तमर्थं सदृष्टान्तमाह—स इति । अहं बालः । इमं प्रबुद्धपितृधृतम् । भारं राज्यभारम् । महाधुर्यो महाबलीवर्दः । धुरं वहतीति धुर्य्यः "धुरो यड्ढकौ" इति यत्प्रत्ययः । तेन समुद्धृतं धुरं भारम् । पुंस्त्वमार्षम् । दम्यः तरुणवत्स इव । "तर्णकः स्मर्यते वत्सो दम्यो वत्सतरश्च सः" इति हलायुधः । "दम्यवत्सतरौ समौ" इत्यमरश्च । केनौजसा केनावष्टम्भेन । "ओजोऽवष्टम्भबलयोः" इति वैजयन्ती । कथं केन

तस्या इति । तस्याः तादृशधर्मयुक्तायाः ॥ ११ ॥ १२ ॥ लुब्धाया इति । अहं राघवं प्रति यथा यादृशप्रकारयुक्तः, तथा लुब्धायास्ते लुब्धया त्वया न विदित इति मन्ये । अविदितत्वे हेतुः तथा ह्यनर्थ इति । राज्यार्थं मम राज्यार्थम् । महानयमनर्थस्त्वया आनीतो हि आनीतः खलु॥१३॥१४॥ दशरथस्यापि रामालम्बनेनैव राज्यपरिपालनशक्तिरित्याह—तमिति । मेरुः मेरुवनम् यथा मेरुजनितमेरुवनस्य तद्रक्षकत्वं परैराक्रमितुमशक्यत्वसम्पादनेन ॥ १५ ॥ सोऽहमिति । महाधुर्य

प्रकारेण वहेयम् ॥ १६ ॥ अथवेति । योगैः सामदानाद्युपायैः " योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु " इत्यमरः । बुद्धिबलेन ग्रहणधारणाद्यष्टाङ्ग युक्तबुद्धिबलेन वा मे शक्तिर्भवेत् । राजपुत्रत्वेन संभावितत्वात् । तथापि पुत्रगर्द्धिनीं पुत्रप्रयोजनाभिलाषवर्तीं त्वां सकामां न करिष्यामि, गर्द्धिता

अथवा मे भवेच्छक्तिर्योगैर्बुद्धिबलेन वा । सकामां न करिष्यामि त्वामहं पुत्रगर्द्धिनीम् ॥ १७ ॥ न मे विकांक्षा जायेत त्यक्तुं त्वां पापनिश्चयाम् । यदि रामस्य नावेक्षा त्वयि स्यान्मातृवत् सदा ॥ १८ ॥ उत्पन्ना तु कथं बुद्धिस्तवेयं पापदर्शिनि । साधुचारित्रविभ्रष्टे पूर्वेषां नो विगर्हिता ॥ १९ ॥ अस्मिन् कुले हि पूर्वेषां ज्येष्ठो राज्येऽभिषिच्यते । अपरे भ्रातरस्तस्मिन् प्रवर्त्तन्ते समाहिताः ॥ २० ॥ नहि मन्ये नृशंसे त्वं राजधर्ममवेक्षसे । गतिं वा न विजानासि राजवृत्तस्य शाश्वतीम् ॥ २१ ॥

भिलाषत्वादिति भावः ॥ १७ ॥ नेति । रामस्य त्वयि मातृवत् मातरीव । सदा अवेक्षा भक्तिपूर्वकेक्षणं यदि न स्यात्तदानीं पापनिश्चयां त्वां त्यक्तुं मे विकाङ्क्षा काङ्क्षाराहित्यम्, न जायेत काङ्क्षा जायतैव । रामस्य त्वयि मातृवत् प्रतिपत्तिसद्भावात् त्वां त्यक्तुं नेच्छामीत्यर्थः ॥ १८ ॥ उत्पन्नेति । नः पूर्वेषां पूर्वैः । विगर्हिता इयं बुद्धिः ज्येष्ठे विद्यमाने कनिष्ठस्य राज्यप्रार्थनाविषया बुद्धिः तव कथमुत्पन्ना ॥ १९ ॥ अस्मिन्निति । पूर्वेषामिति निर्द्धारणे षष्ठी । अपरे कनिष्ठा भ्रातरः । तस्मिन्समाहिताः प्रवर्त्तन्ते, पितृवत्तच्चित्तानुवर्त्तने सावधाना जीवन्तीत्यर्थः । तथाह मनुः—" ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः । शेषास्तमनुजीवेयुर्यथैव पितरं तथा ॥" इति ॥२०॥ नेति । राजधर्मं राज्ञां विहितं धर्मम् । नावेक्षसे नाद्रियसे अथवा राजवृत्तस्य

समुद्धृतं महाधुर्येण महाभारवाहकेन बलीवर्देन उद्धृतं इमं भारं राज्यभारं धुरं भारम् आसाद्य दम्य इव वत्सतर इव केनौजसा वहेयमिति योजना ॥ १६ ॥ अथवेति । योगैरुपायैर्बुद्धिबलेन ग्रहणधारणाद्यष्टाङ्गयुक्तबुद्धिबलेन ॥ १७ ॥ रामस्य त्वयि मातृवत् मातरीव भक्तिपूर्विकेक्षणं यदि न स्यात् तदानीं पापमिश्चयां त्वां त्यक्तुं मे विकाङ्क्षा काङ्क्षाराहित्यं न जायेतेत्युक्तम्, काङ्क्षैव जायेत । रामस्य त्वयि मातृवत् प्रतिपत्तिसद्भावात् त्वां त्यक्तुं नेच्छामीत्यर्थः ॥ १८ ॥ उत्पन्नेति । नः पूर्वेषां पूर्वैर्विगर्हिता इयं बुद्धिः, ज्येष्ठे वर्तमाने कनिष्ठस्य राज्यप्रार्थनादिविषया बुद्धिः ॥ १९ ॥ अस्मिन्निति । पूर्वेषामिति निर्द्धारणे षष्ठी । अपरे [कनिष्ठभ्रातरः, तस्मिन् ज्येष्ठे समाहिताः प्रवर्तन्ते, ज्येष्ठाधीना वर्तन्त इत्यर्थः ॥ २० ॥ रानधर्मं राज्ञां हितं धर्मं नावेक्षसे राजवृत्तस्य राजसमाचारस्य गतिं वा नाभिजानासीति

राजसमाचारस्य । गतिं प्रकारं वा न जानासीति मन्ये ॥ २१ ॥ न केवलमस्माकमेवायं धर्मः किन्तु सर्वेषामपीत्याह—सततमिति । राजवृत्ते विचार्यमाणइति शेषः । एतद्राज्ञां सर्वेषां समम् । इक्ष्वाकूणां तु तत् ज्येष्ठाभिषेचनं विशेषतः स्यात्, अस्खलिताचारत्वादिति भावः ॥ २२ ॥

सततं राजवृत्ते हि ज्येष्ठो राज्येऽभिषिच्यते। राज्ञामेतत् समं तत्स्यादिक्ष्वाकूणां विशेषतः ॥ २२ ॥ तेषां धर्मैक रक्षाणां कुलचारित्रशोभिनाम् । अत्र चारित्रशौण्डीर्यं त्वां प्राप्य विनिवर्त्तितम् ॥ २३ ॥ तवापि सुमहाभागा जनेन्द्राः कुलपूर्वगाः । बुद्धेर्मोहः कथमयं सम्भूतस्त्वयि गर्हितः ॥ २४ ॥ न तु कामं करिष्यामि तवाहं पाप निश्चये । त्वया व्यसनमारब्धं जीवितान्तकरं मम ॥ २५ ॥ एष त्विदामीमेवाहमप्रियार्थं तवानघम् । निवर्त्त यिष्यामि वनाद्भ्रातरं स्वजनप्रियम् ॥ २६ ॥ निवर्त्तयित्वा रामं च तस्याहं दीप्ततेजसः । दासभूतो भविष्यामि सुस्थितेनान्तरात्मना ॥ २७ ॥

तेषामिति । धर्मेण एका रक्षा येषां ते तथा । कुलचारित्रशोभिनां कुलक्रमागतचरित्रशोभिनाम् । "चरित्रं चरितं शीलं चारित्रं च समं मतम्" इतिहला युधः । चारित्रशौण्डीर्यं चरित्रगर्वितम् । चरित्रजनितसमुन्नतत्त्वमिति यावत् । त्वां प्राप्य विनिवर्त्तितम्, त्वत्सम्बन्धान्निवृत्तमित्यर्थः ॥ २३ ॥ स्वकुल चारित्रक्रममभिधाय मातृकुलाचारक्रममप्याह—तवेति । जनेन्द्राः राजानः । कुलपूर्वगाः कुलपूर्वाः कुलज्येष्ठाः तान् गच्छन्तीति कुलपूर्वगाः, ज्येष्ठाभिषे चनशीला इत्यर्थः । सुमहाभागाः सुचरित्राः ॥ २४ ॥ फलितमाह—न त्वित्यादिना ॥ २५ ॥ न केवलमिष्टाकरणम्, अनिष्टमपि तव करोमीत्याह—एष इति । एष इत्यविलम्बोक्तिः । तव मद्व्याजेन राज्यं भोक्तुकामायाः॥२६॥ न केवलं निवर्त्तनम्,दासश्च तस्य स्यामित्याह—निवर्तयित्वेति । दासभूतः छत्र सम्बन्धः ॥ २१ ॥ २२ ॥ कुलचारित्रयोगिनां कुलशीलयुक्तानाम् । कुलचारित्रशोभिनामिति वा पाठः । धर्मैकरक्षाणां धर्मैकं रक्षन्तीति धर्मैकरक्षा तेषाम् । चारित्रशौण्डीर्यं चारित्रगर्वितत्वं, चारित्रजनितसमुन्नतत्वमिति यावत् । त्वां प्राप्य विनिवर्तितम्, त्वत्सम्बन्धान्निवर्तितमित्यर्थः ॥ २३ ॥ स्वकुलाचारक्रममभिधाय मातृकुलाचारक्रममप्याह—तवेति । जनेन्द्राः राजानः । कुलपूर्वगाः कुलपूर्वः कुलज्येष्ठः तं गच्छन्तीति ॥ २४–२७ ॥

स०—एषोहम् । अनघे इति चिराभ्यासात् असमयेऽप्यमनस्कतयोक्तिर्वा । "रक्षोहागमलघ्वसन्देहाः" इतिवत् अघाभावोऽनघं तस्मिन् पापाभावे । पुण्यार्थमिति यावत् । इति वार्थः प्रशंसासमयौचित्याज्ज्ञेयः । सुमहाभागे इत्यादिसम्बोधनादेः 'तां तथा गर्हयित्वा तु' इत्यादिपुरोवादस्य च शावल्यमेतत्कऽपकमिति मन्तव्यम् ॥ २६ ॥

चामरादिधारणेन किङ्करवृत्तिर्भविष्यामि । इदञ्च न त्वयि कोपात् किन्तु स्वस्याभिप्रायेणाह सुस्थितेनेति । सुप्रतिष्ठितेनान्तःकरणेनेत्यर्थः ॥ २७ ॥ इतीति । तुदन् व्यथयन् । पर्वतगह्वरस्थः पर्वतगुहास्थः । गुहास्थत्वे सन्तोषातिशयात् सिंहस्य नादातिशय इत्यभिप्रायेण विशेषणमिदम् ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्रिसप्ततितमः सर्गः ॥ ७३ ॥

इत्येवमुक्त्वा भरतो महात्मा प्रियेतरैर्वाक्यगणैस्तुदंस्ताम् । शोकातुरश्चापि ननाद भूयः सिंहो यथा पर्वतगह्वरस्थः ॥ २८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीदमयोध्याकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

तां तथा गर्हयित्वा तु मातरं भरतस्तदा । रोषेण महताविष्टः पुनरेवाब्रवीद्वचः ॥ १ ॥ राज्याद्भ्रंशस्व कैकेयि नृशंसे दुष्टचारिणि । परित्यक्ता च धर्मेण मा मृतं रुदती भव ॥ २ ॥ किं नु तेऽदूषयद्राजा रामो वा भृशधार्मिकः । ययोर्मृत्युर्विवासश्च त्वत्कृते तुल्यमागतौ ॥ ३ ॥ भ्रूणहत्यामसि प्राप्ता कुलस्यास्य विनाशनात् । कैकेयि नरकं गच्छ मा च भर्तुः सलोकताम् ॥ ४ ॥ यत्त्वया हीदृशं पापं कृतं घोरेण कर्मणा । सर्वलोकप्रियं हित्वा ममाप्यापादितं भयम् ॥ ५ ॥

एवं सामान्यतो मृदुतया निन्दित्वा पुनस्तदपराधस्मरणेन प्रवृद्धरोषः क्रूरं निन्दति—तामित्यादिना । तथा मृदुतया ॥ १ ॥ भ्रंशस्व भ्रष्टा भव । त्वन्मातृवत्त्वमपि वनं प्रविशेत्यर्थः । मा मृतं रुदती भव प्राणहानिकरकार्यकरणान्मां मृतं मत्वा रोदनं कुर्वित्यर्थः । यद्वा मृतं भर्तारमुद्दिश्य रुदती च मा भव, पतिभार्याभावस्य गतत्वादिति भावः ॥ २ ॥ किमिति । ते किंन्वदूषयत् तव सम्बन्धि किंनु गुणचारित्रादिकमदूषयत् । तुल्यं युगपत् ॥ ३ ॥ भ्रूणहत्यां भ्रूणहत्यातुल्यपापम् । सलोकतां समानलोकत्वम् ॥ ४ ॥ यदिति । घोरेण कर्मणा घोरेण व्यवसायेन । ईदृशं रामविवासनभर्तृमरणरूपम् । यत्पापं कृतं तेन सर्वलोकप्रियं रामं त्यक्त्वा स्थितस्य ममापि भयमापादितम्, त्वत्कृतं पापं ममापि भयमजनयत् ननु

इतीति । प्रियेतरैः दुःखतरैरित्यर्थः ॥ २८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां त्रिसप्ततितमः सर्गः ॥७३॥ ॥ १ ॥ राज्यादिति । मां मृतं त्वयि विषये मां मृतं मत्वा रुदती भव रोदनं कुर्वित्यर्थः ॥ २ ॥ किन्न्विति । ते किन्वदूषयत् तव सम्बन्धि किं नु गुणचरित्रादिकमदूषयत् ॥ ३ ॥४॥ यदिति । ईदृशं पापं रामविवासनभर्तृमरणरूपम् । घोरेण कर्मणा घोरत्वं नाम सामान्यविषयस्य वरद्वयस्य ज्येष्ठविवासनकनिष्ठाभिषेचनरूप

राज्यमितिभावः ॥ ५ ॥ त्वत्कृत इति । अयशः मातृमुखेन ज्येष्ठं विवास्य राजानं नाशितवानित्येवंविधम् । प्रतिपादितः प्रापितः ॥ ६ ॥ मातृरूप इति । राज्य कामुक इति अमैथुनेच्छातो न ङीप् । न तेऽहमभिभाष्य इति "कृत्यानां कर्तरि वा" इति षष्ठी । मत्सम्भाषणं त्वया न कर्तव्यमित्यर्थः ॥ ७ ॥ कौसल्येति ।

त्वत्कृते मे पिता वृत्तो रामश्चारण्यमाश्रितः । अयशो जीवलोके च त्वयाहं प्रतिपादितः ॥ ६ ॥ मातृरूपे ममामित्रे नृशंसे राज्यकामुके । न तेऽहमभिभाष्योऽस्मि दुर्वृत्ते पतिघातिनि ॥ ७ ॥ कौसल्या च सुमित्रा च याश्चान्या मम मातरः । दुःखेन महताविष्टास्त्वां प्राप्य कुलदूषिणीम् ॥ ८ ॥ न त्वमश्वपतेः कन्या धर्मराजस्य धीमतः । राक्षसी तत्र जातासि कुलप्रध्वंसिनी पितुः ॥ ९ ॥ यत्त्वया धार्मिको रामो नित्यं सत्यपरायणः । वनं प्रस्थापितो दुःखात् पिता च त्रिदिवं गतः ॥ १० ॥ यत्प्रधानासि तत्पापं मयि पित्रा विना कृते । भ्रातृभ्यां च परित्यक्ते सर्वलोकस्य चाप्रिये ॥ ११ ॥ कौसल्यां धर्मसंयुक्तां वियुक्तां पापनिश्चये । कृत्वा कं प्राप्स्यसे त्वद्य लोकं निरयगामिनि ॥ १२ ॥

याश्चान्या इत्यत्र ता इत्यध्याहारः ॥ ८ ॥ नेति । न त्वमश्वपतेः कन्या तत्कुलोचितकन्या न भवसीत्यर्थः । धर्मराजस्य धर्मप्रधानराजस्य । तत्र केकयराजे ॥ ९ ॥ उक्तेऽर्थे हेतुमाह—यदित्यादिना ॥ १० ॥ यत्प्रधानेति । यत् प्रधानं यस्याः सा यत्प्रधाना । यत्पापकर्मप्रधानासि त्वम् । तत् पापं तत्कर्मजनितं पापम् । पित्रा विना कृते भ्रातृभ्यां परित्यक्ते मयि संक्रान्तमिति शेषः । संक्रान्तकार्यं विशेषणद्वयेन दर्शितम् । अप्रिये इति संबुद्धिः ॥ ११ ॥ कौसल्यामिति । वियुक्तां गुणवत्पुत्रवियुक्तां कृत्वा निरयगामिनि त्वं कं लोकं प्राप्स्यसे, निरयं विना कं लोकं प्राप्स्यस इत्यर्थः । कं लोकं कं

विशेषे व्यवस्थापितत्वात् । ममाप्यापादितं भयमित्यपिशब्दात्सर्वजनस्यापीत्यर्थः ॥ ५ ॥ त्वत्कृत इति । जीवलोके चेति चकारः परलोकसमुच्चयपरः । प्रति पादितः प्रापित इत्यर्थः ॥ ६–१० ॥ यत्प्रधानासीति । यच्छब्देन पापकर्मोच्यते । यत्प्रधानं यस्यास्सा यत्प्रधाना, यत्पापकर्मप्रधानासि तत्पापं तत्कर्मजनितं पापं पित्रा विना कृते पितृरहिते भ्रातृभ्यां च परित्यक्ते अत एव सर्वलोकस्य चाप्रिये सर्वलोकविद्विष्टे मयि, अभूदिति शेषः । एवं नित्यं पापप्रधाना यत्पापं कृतवती तत्पितृभ्रातृवियोगरूपेण लोकद्वेषरूपेण च फलितमिति भावः ॥ ११ ॥ कौसल्यामिति । वियुक्तां कृत्वा, पुत्रेणेति शेषः ॥ १२ ॥

स०—निरयगामिनीति सम्बोध्य कं लोकं प्राप्स्यस इत्युक्त्या त्वत्पापस्य नरकोपि नालमिति सूचयति ॥ १२ ॥"

नरकम् । निरयगामिनीति सिद्धवत्कारात् । किमिति क्षेपोक्त्यां पूर्वसृष्टा अपर्याप्ता इत्युच्यते । विशेषणद्वयं सम्बोधनम् ॥१२॥ किमिति । बन्धुसंश्रयं बन्धूनामाश्रयभूतम् । कौसल्याया आत्मसम्भवमित्यत्र कौसल्यायात्मसम्भवमित्यार्षः सन्धिः । यद्वा पृषोदरादित्वेन आकारलोपः । "गूढोत्मा न प्रका

किं नावबुध्यसे क्रूरे नियतं बन्धुसंश्रयम् । ज्येष्ठं पितृसमं रामं कौसल्यायात्मसम्भवम् ॥ १३ ॥
अङ्गप्रत्यङ्गजः पुत्रो हृदयाच्चापि जायते । तस्मात्प्रियतमो मातुः प्रियत्वान्न तु बान्धवः ॥ १४ ॥
अन्यदा किल धर्मज्ञा सुरभिः सुरसम्मता । वहमानौ ददर्शोर्व्यां पुत्रौ विगतचेतसौ ॥ १५ ॥

शते " इतिवत् । तेन सम्यक्सन्धिः । नियतं किंनावबुध्यसे । प्राकृतवत् बन्धुविघातकमवगतासीति भावः ॥ १३ ॥ औरसपुत्रविश्लेषो मातुरसह्य इति दर्शयितुमङ्गादङ्गादितिश्रुत्यर्थं हृदि निधायाह-अङ्गेति । अङ्गानि मुखकण्ठवक्षःकुक्षिहस्तपादाः । प्रत्यङ्गानि नेत्रनासाङ्गुल्यादीनि तज्जः तत्तेजोजः "अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि" इति श्रुतावपि वीप्सयाङ्गप्रत्यङ्गग्रहः । अङ्गप्रत्यङ्गजत्वं च सर्वाङ्गतेजस्सम्भूतत्वम् "यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतम्" इति श्रुतेः । स्त्रियास्तु शोणितमेव रेतः । हृदयात् हृदयपुण्डरीकात् । प्रत्यगात्मस्थानाच्च जायते तस्मात्पुत्रो मातुः प्रियतमो भवति । बान्धवो भ्रात्रादिः न प्रियतमः किन्तु प्रिय एव । एवमतिशयप्रियत्वात्पुत्रस्य तद्वियोगादिदुःखं दुस्सहमिति भावः । सुरभिर्बन्धुमात्रे दुःखितवती किंपुनः पुत्रे कौसल्येति सूचयति नतु बान्धव इति ॥१४॥ पुत्रशोको मातुर्दुस्सह इत्यत्रेतिहासं प्रमाणयति-अन्य देत्यादिना । अन्यदा पूर्वकाले । किलेत्यैतिह्ये, तथा वदन्ति किलेत्यर्थः । धर्मज्ञा कर्षणकालधर्मज्ञा । सुरभिः कामधेनुः सुरसम्मता देवपूजिता । वहमानौ हलमितिशेषः । विगतचेतसौ मूर्च्छितावित्यर्थः । पुत्रौ साक्षात्पुत्रौ किञ्चिन्निमित्तवशात् भूमिङ्गतौ । यद्वा पुत्रौ स्ववंश्यत्वेन पुत्रव्यपदेश्यौ ॥ १५ ॥

बन्धुसंश्रयम् । बन्धूनामाश्रयं कौसल्याया आत्मसम्भवमित्यत्र सन्धिरार्षः ॥ १३ ॥ औरसपुत्रविश्लेषो मातुरसह्यतर इति दर्शयितुम् " अङ्गादङ्गात् " इति श्रुत्यर्थं हृदि निधायाह-अङ्गप्रत्यङ्गज इति । अङ्गानि करचरणादीनि, प्रत्यङ्गान्यङ्गुल्यादीनि तेभ्यो जायत इति अङ्गप्रत्यङ्गजः । हृदयाच्चापि जायते अनुरागस्थानभूत हृदयप्रदेशाच्चापि जायते, तस्मादौरसत्वात्पुत्रो मातुः प्रियतमः । प्रियत्वादेव न बान्धवः बन्धुभूतदत्तपुत्रादिवन्न भवतीत्यर्थः ॥ १४ ॥ पुत्रपीडनमपि दुस्सहदुःख कारणमिति दर्शयितुमितिहासमाह-अन्यदेत्यादिना । सुरभिः कामधेनुः । पुत्रौ स्ववंशत्वेम पुत्रत्वेन व्यपदेशः ॥ १५ ॥

तावीति । अर्द्धदिवसे दिवसस्यार्धे, मध्याह्न इत्यर्थः । अर्द्धदिवसमिति पाठे—"कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । सर्वथा एकदेशिसमासः । मध्याह्नपर्यन्तमित्यर्थः ॥ १६ ॥ अधस्तादिति । सुरराज्ञः सुरराजस्य । समासान्तविधेरनित्यत्वाट्टजभावः ॥ १७ ॥ इन्द्रोपीति । इन्द्रोपि स्वगात्रे पुण्य

तावर्द्धदिवसे श्रान्तौ पुत्रौ दृष्ट्वा महीतले । रुरोद पुत्रशोकेन बाष्पपर्याकुलेक्षणा ॥ १६ ॥ अधस्ताद्व्रजत स्तस्याः सुरराज्ञो महात्मनः । बिन्दवः पतिता गात्रे सूक्ष्माः सुरभिगन्धिनः ॥ १७ ॥ इन्द्रोप्यश्रुनिपातं तं स्वगात्रे पुण्यगन्धिनम् । सुरभिं मन्यते दृष्ट्वा भूयसीं तां सुरेश्वरः ॥ १८ ॥ निरीक्षमाणः शक्रस्तां ददर्श सुरभिं स्थिताम् । आकाशे विष्ठितां दीनां रुदन्तीं भृशदुःखिताम् ॥ १९ ॥ तां दृष्ट्वा शोकसन्तप्तां वज्रपाणिर्यशस्विनीम् । इन्द्रः प्राञ्जलि रुद्विग्नः सुरराजोऽब्रवीद्वचः ॥ २० ॥ भयं कच्चिन्न चास्मासु कुतश्चिद्विद्यते महत् । कुतोनिमित्तः शोकस्ते ब्रूहि सर्वहितैषिणि ॥ २१ ॥ एवमुक्ता तु सुरभिः सुरराजेन धीमता । प्रत्युवाच ततो धीरा वाक्यं वाक्यविशारदम् ॥ २२ ॥ शान्तं पापं न वः किञ्चित् कुतश्चिदमराधिप । अहं तु मग्नौ शोचामि स्वपुत्रौ विषमे स्थितौ ॥ २३ ॥

गन्धिनं रम्यगन्धम् अश्रुनिपातम् अश्रुपातं दृष्ट्वा तां सुरभिं भूयसीं श्रेष्ठाम् अमन्यत ॥ १८ ॥ निरीक्षमाण इति । निरीक्षमाणः उपरिनिरीक्षमाणः ॥ १९ ॥ २० ॥ भयमिति । अस्मासु सुरेषु मध्ये । कुतश्चिदपि भूतात् महद्भयं न विद्यते कच्चित् । प्रायशः त्वदश्रुमोचनस्य भयसूचकत्वादिति भावः । कुतोनिमित्त इत्यत्र आद्यादित्वात् प्रथमान्तविहिततसि तस्य कुतःशब्दस्य निमित्तशब्देन समानाधिकरणेन बहुव्रीहिः । किंनिमित्तक इत्यर्थः । यद्वा "सार्वविभक्तिकं स्तसिः" इत्यनुशासनात् अत्र प्रथमार्थे तसिल्प्रत्ययः ॥ २१ ॥ २२ ॥ शान्तमिति । शान्तं पापं प्रतिहतममङ्गलमित्यादिकमनुचितप्रसङ्गश्रवणदोष

तावीति । अर्धदिवसं "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । मध्याह्नपर्यन्तमित्यर्थः । ( अर्धदिवसमिति पाठः ) ॥ १६ ॥ अधस्तादिति । सुरराज्ञः । समासान्तविधेरनित्यत्वाट्टजभावः ॥ १७–२० ॥ भयमिति । कुतोनिमित्तः कुतः किंनिमित्तं यस्य सः, किंन्निमित्तमित्यर्थः । कुत इति तसिल्प्रत्ययः प्रथमार्थे । अस्मासु निमित्तम् ॥ २१ ॥ २२ ॥ शान्तमिति । वः युष्माकं कुतश्चित् किञ्चिदपि भयं नास्ति । पापं शान्तम् । युष्मद्भयागमनशङ्काहेतुभूतं पापं नास्तीत्यर्थः । अहं

स०—पुण्यगन्धिनमश्रुपातं दृष्ट्वा आघ्राय इह लोके । भूयसीम् उत्तमां मन्यते अमन्यत । तदपेक्षया सौरभ्यमन्यत्र नास्तीति ज्ञातवानिति भावः ॥ १८ ॥

निवर्त्तकवचनविशेषः। वः युष्माकं मध्ये कुतश्चिदपि पुरुषात्किञ्चिद्भयं नास्ति। किन्तु मग्नौ दुःखमग्नौ। विषमे सङ्कटे स्थितौ स्वपुत्रौ प्रति शोचामि ॥ २३ ॥ एतौ दृष्ट्वेतिश्लोकस्य पूर्वश्लोकस्योत्तरार्द्धेनान्वयः ॥ २४ ॥ पुत्रं विशेषयति–ममेति। यौ दृष्ट्वा अहं परितप्ये तौ मम कायात् प्रसूतौ।



एतौ दृष्ट्वा कृशौ दीनौ सूर्यरश्मिप्रतापितौ। अर्द्यमानौ बलीवर्दौ कर्षकेण सुराधिप ॥ २४ ॥ मम कायात् प्रसूतौ हि दुःखितौ भारपीडितौ। यौ दृष्ट्वा परितप्येऽहं नास्ति पुत्रसमः प्रियः ॥२५॥ यस्याः पुत्रसहस्रैस्तु कृत्स्नं व्याप्तमिदं जगत्। तां दृष्ट्वा रुदतीं शक्रो न सुतान्मन्यते परम् ॥ २६ ॥ सदाप्रतिमवृत्ताया लोकधारणकाम्यया। श्रीमत्या गुणनित्यायाः स्वभावपरिवेषया ॥ २७ ॥ यस्याः पुत्रसहस्राणि सापि शोचति कामधुक्। किंपुनर्या विना रामं कौसल्या वर्त्तयिष्यति ॥ २८ ॥ एकपुत्रा च साध्वी च विवत्सेयं त्वया कृता। तस्मात्त्वं सततं दुःखं प्रेत्य चेह च लप्स्यसे ॥ २९ ॥

प्रसूतत्वं परम्परया, तस्मात्पुत्रसमः प्रियो नास्तीति योजना ॥ २५ ॥ कविराह–यस्या इति। मन्यते अमन्यत ॥२६॥ भरतवचनम्, सदेत्यादिश्लोकद्वयमेकं वाक्यम्। अप्रतिमं निस्तुलं वृत्तं चरित्रं यस्यास्तस्याः। श्रीमत्याः समृद्धिमत्याः। गुणनित्यायाः नित्यगुणायाः यस्याः सुरभेः स्वभावपरिवेषया स्वभावेन स्त्रीपुंस्वभावेन मैथुनेन परिवेष आवृत्तिर्यस्यास्तादृश्याः। लोकधारणकाम्यया लोकधारणेच्छया पुत्रसहस्राणि सन्ति, सन्तानपरम्परया बहवः पुत्राः सन्तीत्यर्थः। सापि कामधुक् कामधेनुः यथेष्टसृष्टिक्षमा शोचति अशोचत्। या राममेकं विना वर्त्तयिष्यति सा हि शोचतीति किंपुनः ॥ २७ ॥ २८ ॥ एकपुत्रेत्यादि। विवत्सा पुत्रविरहिता। तस्मात् विवत्सात्वकरणात्। लप्स्यसे तत्फलत्वेन ॥ २९ ॥

त्वित्यादिसार्धश्लोकमेकं वाक्यम्। कर्षकेणार्द्यमानौ विषमे स्थितौ पुत्रौ दृष्ट्वा शोचामीति सम्बन्धः ॥ २३ ॥ २४ ॥ ममेति। यौ दृष्ट्वा अहं परितप्ये तौ मम कायात् प्रसूतौ, कायप्रसूतत्वं परम्परया ॥ २५ ॥ यस्या इति। सुतात्परं सुतादुत्कृष्टं नेति मन्यते अमन्यत ॥ २६ ॥ सदेत्यादिश्लोकद्वयमेकं वाक्यम्। लोकधारणकाम्यया लोकसंरक्षणेच्छया। स्वभावपरिवेषयेति षष्ठ्यर्थे तृतीया। स्वभावः शीलं, परिवेषः पर्यावरणं स्वभावपरिवेषायाः शीलपर्यावरणायाः, शीलपरिपूर्णाया इत्यर्थः। यस्याः पुत्रसहस्राणि, सन्तीति शेषः। सापि शोचति। या कौसल्या रामं विना एकपुत्रं रामं विना वर्तयिष्यति जीविष्यति। सा शोचतीति किमु वक्तव्य

स०–मम कायात्प्रसूतावित्यनेन कामधेनुपुत्रयोरेव केनचिन्निमित्तेन भुवि जन्मेति ज्ञायते। अन्यथा तद्वंशभवबलीवर्दानां सर्वत्र विद्यमानत्वेन कयोश्चिद्विषये शोकायोगेनासङ्गत्यापत्तेः ॥ २९ ॥ समं सर्वप्राणिषु सेवानुरूपं नतु विषमम्। अप्रतिमम् असदृशं वृत्तं चारित्रं यस्याः सा तस्याः। गुणमुख्यायाः गुणैः सर्वापेक्षितदातृत्वादिरूपैः मुख्यायाः ॥ २७ ॥

अपचितिं पूजाम् "पूजा नमस्यापचितिः" इत्यमरः । भ्रातुरपचितिं राज्यप्रदानरूपाम् । पितुरिमां सकलामपचितिम् और्द्ध्वदैहिकात्मिकाम् ॥ ३० ॥ भ्रातुरपचितिमाह–आनाययित्वेत्यादिना ॥३१॥ नहीति । पापं रामविवासनरूपम् । धारयितुं सोढुम् । अश्रुकण्ठैः गद्गदकण्ठैः ॥३२॥ अस्य पापस्य

अहं ह्यपचितिं भ्रातुः पितुश्च सकलामिमाम् । वर्द्धनं यशसश्चापि करिष्यामि न संशयः॥३०॥आनाययित्वा तनयं कौसल्याया महाबलम् । स्वयमेव प्रवेक्ष्यामि वनं मुनिनिषेवितम् ॥ ३१ ॥ नह्यहं पापसङ्कल्पे पापे पापं त्वया कृतम् । शक्तो धारयितुं पौरैरश्रुकण्ठैर्निरीक्षितः ॥३२॥ सा त्वमग्निं प्रविश वा स्वयं वा दण्डकान् विश । रज्जुं बधान वा कण्ठे न हि तेऽन्यत् परायणम् ॥३३॥ अहमप्यवनिं प्राप्ते रामे सत्यपराक्रमे । कृतकृत्यो भविष्यामि विप्रवासितकल्मषः॥३४॥ इति नाग इवारण्ये तोमराङ्कुशचोदितः । पपात भुवि संक्रुद्धो निःश्वसन्निव पन्नगः॥३५॥ संरक्तनेत्रः शिथिलाम्बरस्तथा विधूतसर्वाभरणः परंतपः । बभूव भूमौ पतितो नृपात्मजः शचीपतेः केतुरिवोत्सव क्षये ॥ ३६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

मरणान्तिकप्रायश्चित्तं विना निवर्त्तकान्तरं नास्तीत्यभिप्रायेणाह–सेति । सा बुद्धिपूर्वकमहापापकारिणी । कण्ठे रज्जुं बधान बद्ध्वा म्रियस्वेत्यर्थः । परायणं गतिः ॥ ३३ ॥ अहमिति । विप्रवासितकल्मषः अपनीतकिल्बिषः ॥ ३४ ॥ इतीति । इति संक्रुद्धः । पन्नग इव निःश्वसन् आरण्ये अरण्य गर्ते । तोमराङ्कुशचोदितः तोमरैरङ्कुशैश्च विद्धो नाग इव भुवि पपात । भरत इति शेषः ॥ ३५ ॥ संरक्तनेत्र इति । शचीपतेः केतुः इन्द्रध्वजः । उत्सव क्षये उत्सवान्ते ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुःसप्ततितमः सर्गः ॥ ७४ ॥

मित्यर्थः ॥ २७–२९ ॥ अहमिति । अपचितिं पूजाम् । इमां वक्ष्यमाणाम् ॥ ३० ॥ तामेवाह–आनाययित्वेति ॥३१॥ नहीति । अश्रुकण्ठैः गद्गदकण्ठैरित्यर्थः ॥ ३२ ॥ अस्य पापस्य मरणान्तिकप्रायश्चित्तं विना निवर्तकान्तरं नास्तीत्यभिप्रायेणाह–सेति । सा बुद्धिपूर्वकमहापापकारिणी ॥ ३३ ॥ अहमिति । अवनिं राज्यम् । विप्र वासितकल्मषः अवसितपापः ॥ ३४ ॥ इतीति । सङ्क्रुद्धः पन्नग इव निश्वसन् अरण्ये अरण्यसम्बन्धिनि गर्ते । तोमराङ्कुशचोदितः तोमरैरङ्कुशैश्च विद्धो नाग इव भुवि पपात । भरत इति शेषः । आरण्यो नाग इति वा पाठः ॥३५॥ संरक्तेति । शचीपतेः केतुः इन्द्रध्वजः । उत्सवक्षये उत्सवान्ते ॥ ३६ ॥ इति श्रीमहेश्वरतीर्थ विरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायां चतुःसप्ततितमः सर्गः॥ ७४ ॥

दीर्घकालादिति । दीनां प्रतिहतेच्छत्वात् । अमात्यमध्ये सुमन्त्रादिमध्ये । अनेन भरतागमनं श्रुत्वा सुमन्त्रादयः इतःपूर्वमागता इति गम्यते । अभ्यकुत्सयत् मन्त्रिणां ज्ञापनाय पुनरप्यनिन्ददित्यर्थः ॥१॥ कैकेय्या कृतं स्वेष्टं नेति मन्त्रिभ्यो ज्ञापयति–राज्यमिति । जातु कदाचिदपि । एतत् न कामये

दीर्घकालात् समुत्थाय संज्ञां लब्ध्वा च वीर्यवान् । नेत्राभ्यामश्रुपूर्णाभ्यां दीनामुद्वीक्ष्य मातरम् । सोऽमात्यमध्ये भरतो जननीमभ्यकुत्सयत् ॥ १ ॥ राज्यं न कामये जातु मन्त्रये नापि मातरम् । अभिषेकं न जानामि योऽभूद्राज्ञा समीक्षितः । विप्रकृष्टे ह्यहं देशे शत्रुघ्नसहितोऽवसम् ॥ २ ॥ वनवासं न जानामि रामस्याहं महात्मनः । विवासनं वा सौमित्रेः सीतायाश्च यथाभवत् ॥ ३ ॥ तथैव क्रोशतस्तस्य भरतस्य महात्मनः । कौसल्या शब्दमाज्ञाय सुमित्रामिदमब्रवीत् ॥ ४ ॥ आगतः क्रूरकार्यायाः कैकेय्या भरतः सुतः । तमहं द्रष्टुमिच्छामि भरतं दीर्घदर्शिनम् ॥ ५ ॥ एवमुक्त्वा सुमित्रां सा विवर्णा मलिना कृशा । प्रतस्थे भरतो यत्र वेपमाना विचेतना ॥६ ॥ स तु रामानुजश्चापि शत्रुघ्नसहितस्तदा । प्रतस्थे भरतो यत्र कौसल्याया निवेशनम् ॥७॥ ततः शत्रुघ्नभरतौ कौसल्यां प्रेक्ष्य दुःखितौ । पर्य्यष्वजेतां दुःखार्त्तां पतितां नष्टचेतनाम् । रुदन्तौ रुदतीं दुःखात् समेत्यार्यां मनस्विनीम् ॥८॥

न मन्त्रये इत्युभयत्रापि सम्बध्यते । मन्त्रये राज्यार्थमितिशेषः । मन्त्रणं विचारः न जानामि मदनुज्ञापूर्वकोऽयं न भवतीत्यर्थः । यो मदर्थोऽभिषेकः राज्ञा समीक्षितश्चिन्तितः अभूत् तमभिषेकं न जानामि । अज्ञाने हेतुमाह विप्रकृष्ट इति ॥२॥ वनवासमिति । विवासनं वेत्यत्र न जानामीत्यनुकर्षः ॥३॥४॥ आगत इति । दीर्घदर्शिनमित्यनेन रामनिर्गमनं भरतो न संमन्यत इति कौसल्याहृदयमिति सूचितम् ॥ ५ ॥ एवमिति । भरतो यत्र स्थितः तत्र प्रतस्थे ॥ ६ ॥ स इति । यत्र कौसल्याया निवेशनं स्थितं तत्र प्रतस्थे ॥ ७ ॥ तत इत्यादि । आर्यां ज्येष्ठां मातरम् ॥ ८ ॥ ९ ॥

दीर्घकालादित्यादिसार्धश्लोकमेकं वाक्यम् । अभ्यकुत्सयत् अगर्हयत् । अत्र उपरि गर्हाया अश्रवणेपि अभ्यकुत्सयदित्यनुवादात् पूर्ववद्गर्हितवानित्यवगम्यते । अमात्यमध्य इत्यभिधानात् भरतागमनं श्रुत्वा समागता मन्त्रिणः भरतमूर्च्छानन्तरमन्तःप्रविष्टा इत्यवगम्यते ॥ १ ॥ राज्यमिति । मातरं न मन्त्रये छद्मना राज्यग्रहणार्थं मातरं न प्रेरयामीत्यर्थः । राज्ञा मदर्थे योऽभिषेकः समीक्षितोऽभूत् तमभिषेकं न जानामीति सम्बन्धः । अपरिज्ञाने हेतुमाह विप्रकृष्ट इत्यादि ॥२–४॥ आगत

कथं राज्यं प्राप्तं तत्राह—सम्प्राप्तमिति । क्रूरेण रामविवासनपूर्वकेण कर्मणा वरप्रार्थनेन ॥१०॥ प्रस्थाप्येति । तत्र प्रस्थापने । कं गुणम् अतिशयं पश्यति न कमपि गुणम्, रामप्रस्थापनं विनापि राज्यलाभसम्भवात् ॥११॥ क्षिप्रमिति । कैकेयी मामपि प्रस्थापयितुमर्हति सर्वस्य राज्यस्य तदाय

भरतं प्रत्युवाचेदं कौसल्या भृशदुःखिता ॥ ९ ॥ इदं ते राज्यकामस्य राज्यं प्राप्तमकण्टकम् । सम्प्राप्तं बत कैकेय्या शीघ्रं क्रूरेण कर्मणा ॥ १० ॥ प्रस्थाप्य चीरवसनं पुत्रं मे वनवासिनम् । कैकेयी कं गुणं तत्र पश्यति क्रूरदर्शिनी ॥ ११ ॥ क्षिप्रं मामपि कैकेयी प्रस्थापयितुमर्हति । हिरण्यनाभो यत्रास्ते सुतो मे सुमहायशाः ॥१२॥ अथवा स्वयमेवाहं सुमित्रानुचरा सुखम् । अग्निहोत्रं पुरस्कृत्य प्रस्थास्ये यत्र राघवः ॥ १३ ॥ कामं वा स्वयमेवाद्य तत्र मां नेतुमर्हसि । यत्रासौ पुरुषव्याघ्रः पुत्रो मे तप्यते तपः ॥ १४ ॥ इदं हि तव विस्तीर्णं धनधान्यसमाचितम् । हस्त्यश्वरथसम्पूर्णं राज्यं निर्यातितं तया ॥ १५ ॥ इत्यादिबहुभिर्वाक्यैः क्रूरैः सम्भर्त्सितोऽनघः । विव्यथे भरतस्तीव्रं व्रणे तुद्येव सूचिना ॥ १६ ॥

त्तत्वादिति भावः । हिरण्यनाभः हिरण्यवत्स्पृहणीयनाभियुक्तः । नाभिग्रहणं शरीरस्योपलक्षणम् ॥ १२ ॥ कैकेयीकृतपापानुबन्धिनस्तव राजसंस्काराधिकारो नास्तीति ध्वनयन्त्याह—अथवेति । अग्निहोत्रं राजाग्निहोत्रम् । अग्निहोत्रस्य ज्येष्ठभार्याधीनत्वात् दशरथेन भरतसंस्कारप्रतिषेधाच्चेति भावः । एतेन राजशरीरप्रापणमप्यर्थसिद्धम् ॥ १३ ॥ काममिति । तपस्तप्यते तपः करोतीत्यर्थः । " तपस्तपःकर्मकस्यैव " इति कर्मवद्भावादात्मनेपदम् ॥१४॥ तव प्रस्थापने मम का शक्तिस्तत्राह—इदमिति । धनधान्यसमाचितं धनधान्यसम्पूर्णम् । तया कैकेय्या । निर्यातितं दापितम् । "निर्यातनं वैरशुद्धौ दाने न्यासार्पणे मतम् " इति विश्वः ॥ १५ ॥ इत्यादिबहुभिरिति । सम्भर्त्सितः परपक्षबुद्ध्या भाषितः । व्रणे सूचिना तुद्येव व्यथयित्वेव ।

इति । दीर्घदर्शिनं भाविकार्याकार्यपर्यालोचनशीलम् ॥ ५–९ ॥ अकण्टकं निस्सपत्नम् । राज्यप्राप्तिप्रकारमाह—संप्राप्तमिति । क्रूरेण कर्मणा रामविवासनत्वदभिषेचनप्रार्थनारूपेण कर्मणा ॥ १० ॥ ११ ॥ क्षिप्रमिति । हिरण्यनाभः हिरण्यवत्स्पृहणीयनाभियुक्तः । नाभिग्रहणं शरीरस्योपलक्षणम् ॥ १२ ॥ कैकेयीकृतपापानुबन्धेन तव राजसंस्कारे अधिकारो नास्तीतिं ध्वनयन्त्याह—अथवेति । अग्निहोत्रं पुरस्कृत्येत्येतद्राजदेहस्याप्युपलक्षणम् ॥ १३ ॥ काममिति । तपस्तप्यति तपः करोतीत्यर्थः ॥ १४ ॥ इदमिति । धनधान्यसमाचितं धनधान्यैर्व्याप्तम् । निर्यातितं दापितम् ॥ १५–१८ ॥

पूर्वमेव भ्रातृपितृवियोगखिन्नोऽपि कौसल्यावाक्यश्रवणखिन्न इत्यर्थः ॥१६॥ पपातेति । चरणौ प्रतीति शेषः । बहुधासंज्ञ इत्यत्र असंज्ञ इति पदच्छेदः ॥ १७ ॥ एवमिति । एवं विलपमानां पूर्वोक्तप्रकारेण विलपन्तीम् ॥ १८ ॥ आर्य इति । अजानन्तम्, अभिषेकादिकमिति शेषः ॥ १९ ॥ कौसल्यया

पपात चरणौ तस्यास्तदा सम्भ्रान्तचेतनः । विलप्य बहुधाऽसंज्ञो लब्धसंज्ञस्ततः स्थितः ॥ १७ ॥ एवं विलपमानां तां भरतः प्राञ्जलिस्तदा । कौसल्यां प्रत्युवाचेदं शोकैर्बहुभिरावृताम् ॥ १८ ॥ आर्ये कस्मादजानन्तं गर्हसे मामकिल्बिषम् । विपुलां च मम प्रीतिं स्थिरां जानासि राघवे ॥ १९ ॥ कृता शास्त्रानुगा बुद्धिर्माभूत्तस्य कदाचन । सत्यसन्धः सतां श्रेष्ठो यस्यार्योऽनुमते गतः ॥ २० ॥ प्रेष्यं पापीयसां यातु सूर्यं च प्रति मेहतु । हन्तु पादेन गां सुप्तां यस्यार्योऽनुमते गतः ॥ २१ ॥

स्वस्मिन्नारोपितं दोषं परिहर्तुं शपथवाक्यान्याह—कृतेत्यादिना । आर्यः रामः यस्यानुमते सम्मतौ सत्यां गतः तस्य शास्त्रानुगा कृता बुद्धिः गुरुणा विधिनिषेधबोधकशास्त्रानुसारित्वेन सुशिक्षिता बुद्धिः कदाचन माभूदिति सम्बन्धः । यद्यहमार्यप्रवासने अनुमन्तास्मि तर्हि श्रुतिस्मृतिज्ञानात् प्रच्युतो भूयासमित्यर्थः । एवमुत्तरत्रापि सामान्यनिर्देशो भरतविषयतया योजनीयः, "निर्विशेषं न सामान्यम्" इतिन्यायात् । अत्र शपथव्याजेन धर्मविशेषाश्च शिक्ष्यन्ते मुनिनेति बोध्यम् । अत्र च सत्पुरुषविषयापराधे शास्त्रज्ञानभ्रंशो भवतीति सूचितम् ॥२०॥ प्रेष्यमिति । प्रेष्यं प्रेष्यभावम् । पापीयसाम् अतिशयेन पापिनाम् । हीनजातीनां प्रेष्यत्वं हि पापहेतुः । सूर्यं प्रति मेहतु मूत्रपुरीषोत्सर्गं करोतु सूर्याभिमुखेन मेहने यत्पापं तत् प्राप्नोत्वित्यर्थः । अनेन सूर्यप्रति मेहनं न कर्त्तव्यमिति सिद्धम् । गां पादेन हन्तु पादेन गोहननपापं प्राप्नोतु । पादेन गोहननं दोषः । सुप्तामित्यनेन स्वहननप्रवृत्तगोहननं न दोषा

आर्येति । अजानन्तम्, अभिषेकमिति शेषः ॥१९॥ कौसल्यया स्वस्मिन्नारोपितं दोषं परिहर्तुं शपथवाक्यान्याह—कृता शास्त्रानुगेत्यादिना । आर्यः रामः यस्यानुमते यस्य सम्मतौ सत्यां गतः, अरण्यमिति शेषः । तस्य शास्त्रानुगा बुद्धिः गुरुणा विधिनिषेधबोधशास्त्रानुसारित्वेन सुशिक्षिता बुद्धिः कदाचन माभूदिति सम्बन्धः । आर्यस्य गमनं ममानुमतं चेदहं मूर्खो भवानीत्यर्थः । सामान्येन शपथकरणं "निर्विशेषं न सामान्यम्" इतिन्यायेन स्वस्मिन्नपि पर्यवस्यतीत्यभिप्रायः ॥ २० ॥ प्रेष्यमिति । प्रेष्यं प्रेष्यभावम् । पापीयसाम् अतिशयेन पापिनाम् । सूर्यं च प्रति मेहतु सूर्याभिमुखं मूत्रयतु ॥ २१ ॥

येत्युक्तम् ॥ २१॥ कारयित्वेति । यो भर्त्ता भृत्यं महत्कर्म कारयित्वा । "ह्रक्रोरन्यतरस्याम्" इतिद्विकर्मकत्वम् । अनर्थकं तं प्रयोजनशून्यं करोतीति शेषः । अस्य भर्तुः यः अधर्मः सोऽस्तु ॥ २२ ॥ परिपालयमानस्येति । परिपालयमानस्य राज्ञः। राज्ञि परिपालयति सति। तं प्रति द्रुह्यतां पापम्।

कारयित्वा महत्कर्म भर्त्ता भृत्यमनर्थकम्। अधर्मो योऽस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः ॥ २२॥ परिपालयमानस्य राज्ञो भूतानि पुत्रवत् । ततस्तं द्रुह्यतां पापं यस्यार्योनुमते गतः ॥ २३ ॥ बलिषड्भागमुद्धृत्य नृपस्यारक्षतः प्रजाः । अधर्मो योऽस्य सोस्यास्तु यस्यार्योऽनुमते गतः ॥२४॥ संश्रुत्य च तपस्विभ्यः सत्रे वै यज्ञदक्षिणाम्। तां विप्रलपतां पापं यस्यार्योऽनुमते गतः॥२५॥ हस्त्यश्वरथसम्बाधे युद्धे शस्त्रसमाकुले। मा स्म कार्षीत्सतां धर्मं यस्यार्योऽनुमते गतः ॥२६॥ उपदिष्टं सुसूक्ष्मार्थं शास्त्रं यत्नेन धीमता । स नाशयतु दुष्टात्मा यस्यार्योऽनुमते गतः ॥२७॥ मा च तं व्यूढबाहंसं चन्द्रार्कसमतेजसम् । द्राक्षीद्राज्यस्थमासीनं यस्यार्योऽनुमते गतः ॥ २८ ॥

ततः तस्य ॥ २३ ॥ बलिषड्भागमिति । बलिषड्भागं बलिः करः " बलिः पूजोपहारे च दैत्यभेदे करेऽपि च" इति वैजयन्ती । षष्ठो भागः षड्भागः बलिश्चासौ षड्भागश्चेति विशेषणसमासः । उद्धृत्य आदाय ॥ २४ ॥ ॥ संश्रुत्येति । सत्रे यागे तपस्विभ्यः व्रतोपवासशीलेभ्यः ऋत्विग्भ्यः यज्ञदक्षिणां संश्रुत्य प्रतिज्ञाय तां दक्षिणां विप्रलपतां विरुद्धोक्त्या अपलपताम् ॥२५॥ हस्त्यश्वरथसम्बाध इति । सतां शूराणां धर्मम् अपरावर्त्तनम् । मा स्म कार्षीत् परावर्त्तमानस्य यत्पापं तदस्त्वित्यर्थः ॥ २६ ॥ उपदिष्टमिति । धीमता गुरुणा यत्नेनोपदिष्टं सुसूक्ष्मार्थं परलोकसाधकरहस्यार्थयुक्तं शास्त्रं वेदान्तादिविशिष्टार्थं नाशयतु विस्मरतु॥२७॥ मेति। व्यूढबाहंसं व्यूढौ संहतौ मांसलौ बाहू अंसौ च यस्य तम् "व्यूढौ विन्यस्तसंहतौ" इत्यमरः। राज्यस्थं

कारयित्वेति । यो भर्ता भृत्यं महत्कर्म कारयित्वा तम् अनर्थकम् अर्थशून्यम्, भृतिविरहितमिति यावत् । करोतीति शेषः । अस्य भर्तुः यो वा अधर्मः सः यस्यानुमते आर्यो गतः तस्यास्त्विति सम्बन्धः ॥ २२ ॥ परिपालयेति । परिपालयमानस्य पुत्रवद्भूतानि परिपालयति सति राज्ञि । तद्द्रुह्यतां तस्मै द्रुह्यतां द्रोहं कुर्वतां यत्पापं तत्तस्यास्तु॥ २३ ॥ बलीति । बलिषड्भागं बलिः करः, षष्ठः भागः षड्भागः, बलिश्चासौ षड्भागश्चेति विशेषणसमासः । उद्धृत्य आदाय ॥ २४ ॥ संश्रुत्येति । तपस्विभ्यः ऋत्विग्भ्यः । यज्ञदक्षिणां यज्ञकारयितृऋत्विग्दक्षिणामित्यर्थः । तां दक्षिणां विप्रलपताम् अपलपताम् ॥२५॥ हस्त्यश्वेति । सतां धर्मम् उत्तमक्षत्रियाणामपलायनेन युद्धकरणम् ॥ २६ ॥ उपदिष्टमिति सुसूक्ष्मार्थं परलोकसाधनरहस्यार्थं वेदान्तादिविशिष्टशास्त्रम् । नाशयतु विस्मरतु ॥ २७ ॥ मा चेति ।

प्राप्तराज्यम् । आसीनं सिंहासने आसीनं तं रामम् मा द्राक्षीत्, तादृशरामदर्शनभाग्यरहितो भवत्वित्यर्थः ॥ २८ ॥ पायसमिति । कृसरं तिलौदनम् । छागम् अजम्, मांसमात्रोपलक्षणमेतत् । वृथाश्नातु देवतापित्रतिथिनिवेदनमन्तरेण भुङ्क्तामित्यर्थः । अवजानातु प्रत्युत्थानाभिवादनादिकं न करोत्वि



पायसं कृसरं छागं वृथा सोऽश्नातु निर्घृणः । गुरूंश्चाप्यवजानातु यस्यार्योऽनुमते गतः ॥२९॥ गाश्च स्पृशतु पादेन गुरून् परिवदेत् स्वयम् । मित्रे द्रुह्येत सोऽत्यन्तं यस्यार्योऽनुमते गतः ॥३०॥ विश्वासात् कथितं किञ्चित् परिवादं मिथः क्वचित् । विवृणोतु स दुष्टात्मा यस्यार्योऽनुमते गतः॥३१॥ अकर्ता ह्यकृतज्ञश्च त्यक्तात्मा निरपत्रपः । लोके भवतु विद्वेष्यो यस्यार्योऽनुमते गतः ॥ ३२ ॥ पुत्रदारैश्च भृत्यैश्च स्वगृहे परिवारितः । स एको मृष्टमश्नातु यस्यार्योऽनुमते गतः ॥३३॥ अप्राप्य सदृशान् दारानपत्यः प्रमीयताम् । अनवाप्य क्रियां धर्म्यां यस्यार्योऽनुमते गतः ॥ ३४ ॥ मात्मनः सन्ततिं द्राक्षीत् स्वेषु दारेषु दुःखितः । आयुः समग्रमप्राप्य यस्यार्योऽनुमते गतः ॥३५॥

त्यर्थः ॥२९॥ गा इति । गाः पादेन स्पृशतु हन्तु । पादेनेत्यत्र हननमुक्तम्, इह तु पादस्पर्शोऽपि पापहेतुरित्युच्यते । परिवदेत् अपवदेत् । मित्रे द्रुह्येत मित्राय द्रुह्यत्वित्यर्थः ॥ ३० ॥ विश्वासादिति । परिवादम् अपवादम् । "अपवादोपक्रोशनिर्वादावर्णपरिवादाः" इति हलायुधः । मिथः रहस्ये । "मिथोऽन्योन्यरहस्ययोः" इति वैजयन्ती । विश्वासाद्रहःकथितस्य परिवादस्य क्वचिदन्यत्र प्रकटीकरणं पातकमिति भावः ॥ ३१ ॥ अकर्तेति । अकर्ता प्रत्युपकारस्याकर्ता । अथाप्यकृतज्ञः आभ्यामेकं पापमुक्तम् । त्यक्तात्मा सद्भिः परिहृतः अथापि निरपत्रपः निर्लज्जः, अकृतप्रायश्चित्त इति यावत् । इदमेकं पापम् ॥ ३२ ॥ पुत्रदारैरिति । मृष्टमश्नातु इतरेषु कदन्नभुक्षु स्वयं मृष्टं समीचीनमन्नम् अश्नातु ॥ ३३ ॥ अप्राप्येति । सदृशान् समानकुलान् । धर्म्यां क्रियाम् अग्निहोत्रादिकं च अप्राप्य अनपत्यः सन् प्रमीयताम् ॥ ३४ ॥ अप्राप्येत्यादिविवरणम्—मात्मन इति । अनेन ऋणा

व्यूढबाह्वंसं राज्यस्थं प्राप्तराज्यम् । आसीनं सिंहासने समासीनं तं रामं मा द्राक्षीत् तादृशरामदर्शनभाग्यरहितो भवत्वित्यर्थः ॥ २८ ॥ पायसमिति । वृथा सोऽश्नातु देवतापित्रतिथिनिवेदनमन्तरेणाश्नातु ॥ २९ ॥ गाश्चेति । मित्रे मित्राय ॥३०॥ विश्वासादिति । अस्मिन् यत्किञ्चिदुक्तमप्ययं परेभ्यो न प्रकटयति । विश्वासात् मिथः एकान्ते कथितं परिवादं परापवादम् वा विवृणोतु ॥ ३१ ॥ अकर्तेति । अकर्ता अकृतोपकारकः । त्यक्तात्मा उद्बन्धनादिना त्यक्तदेहः ॥ ३२ ॥ ३३ ॥ अप्राप्येति ।

पाकरणं विना ब्रह्मचर्यादेव संन्यासः प्रतिषिद्ध्यते । अरक्तविषयमिदमिति चेन्न, ब्रह्मचर्यादेव प्रव्रजेदित्यादेर्दाराऽलाभविषयत्वात् । तत्रैवहि इतरथेत्यनेनायमर्थो दर्शितः ॥ ३५ ॥ राजस्त्रीत्यत्रापि यस्यार्योऽनुमते गत इत्यनुषञ्जनीयम् ॥ ३६ ॥ लाक्षयेति । भृत्यान् भरणीयान् । लाक्षादिविक्रयलब्ध

राजस्त्रीबालवृद्धानां वधे यत्पापमुच्यते । भृत्यत्यागे च यत्पापं तत्पापं प्रतिपद्यताम् ॥ ३६ ॥ लाक्षया मधुमांसेन लोहेन च विषेण च । सदैव बिभृयादभृत्यान् यस्यार्योऽनुमते गतः ॥ ३७ ॥ सङ्ग्रामे समुपोढे स्म शत्रुपक्षभयंकरे । पलायमानो वध्येत यस्यार्योऽनुमते गतः ॥ ३८ ॥ कपालपाणिः पृथिवीमटतां चीरसंवृतः । भिक्षमाणो यथोन्मत्तो यस्यार्योनुमते गतः ॥ ३९ ॥ पाने प्रसक्तो भवतु स्त्रीष्वक्षेषु च नित्यशः । कामक्रोधाभिभूतस्तु यस्यार्योनुमते गतः ॥ ४० ॥ मा स्म धर्मे मनो भूयादधर्मं सुनिषेवताम् । अपात्रवर्षी भवतु यस्यार्योऽनुमते गतः ॥ ४१ ॥ सञ्चितान्यस्य वित्तानि विविधानि सहस्रशः । दस्युभिर्विप्रलुप्यन्तां यस्यार्योनुमते गतः ॥ ४२ ॥ उभे सन्ध्ये शयानस्य यत्पापं परिकल्प्यते । तच्च पापं भवेत्तस्य यस्यार्योनुमते गतः ॥ ४३ ॥ यदग्निदायके पापं यत्पापं गुरुतल्पगे । मित्रद्रोहे च यत्पापं तत्पापं प्रतिपद्यताम् ॥ ४४ ॥ देवतानां पितॄणां च मातापित्रोस्तथैव च । मा स्म कार्षीत् स शुश्रूषां यस्यार्योऽनुमते गतः ॥ ४५ ॥

द्रव्येण बिभृयाद्रक्षेदित्यर्थः । "लाक्षालवणमांसानि वर्जनीयानि विक्रये" इतिस्मृतेः । 'अप्यकार्यशतं कृत्वा' इत्यस्यापवादोऽयम् ॥३७॥ सङ्ग्राम इति । समुपोढे निकटे "उपोढो निकटोढयोः" इति वैजयन्ती ॥ ३८ ॥ कपालपाणिरिति । अटतां चरतु । चीरं मलिनं जीर्णवस्त्रम् । अनेन शैवमतप्रवेशो निन्द्यते ॥३९॥ पाने प्रसक्त इति स्पष्टम् ॥४०॥ मा स्मेति । अपात्रवर्षी अपात्रे बहुदायी ॥४१॥ सञ्चितानीति । दस्युभिः तस्करैः ॥४२॥ उभे इति । उभयोः संध्ययोः ॥४३॥ यदिति । गुरुतल्पगे गुरुदारगे ॥४४॥ देवतानामिति । देवानां शुश्रूषा अग्निहोत्रादिकर्म सम्भृतैराज्यचरुपशुपुरोडाशादिभिः

धर्म्याः धर्मादनपेताः क्रियाः अनवाप्य प्रमीयतां म्रियताम् ॥ ३४–३६ ॥ लाक्षयेति । भर्तॄन् भरणीयान् बिभृयात् लाक्षादिविक्रयलब्धद्रव्येण रक्षेदित्यर्थः । " लाक्षालवणमांसानि वर्जनीयानि विक्रये " इति स्मृतेः ॥ ३७ ॥ सङ्ग्राम इति । समुपोढे निकटे ॥ ३८–४२ ॥ उभे सन्ध्ये उभयोः सन्ध्ययोः ॥ ४३–४५ ॥

प्रीणनम् । पितॄणां तु उपरागादिषु मातापितृमरणतिथ्यादिषु च पूर्वोक्तैरन्यैश्च तिलादिभिराराधनम् । पितृशुश्रूषयैव मृतमातापितृशुश्रूषाग्रहणसम्भवात् । मातापित्रोरित्यत्र जीवतोरिति विवक्षितम् ॥ ४५ ॥ सतामिति । सतां कीर्त्यात् सद्भिः क्रियमाणश्लाघनात् । सञ्जुष्टात् सत्सेवितात् ॥ ४६ ॥

सतां लोकात्सतां कीर्त्यात् सञ्जुष्टात् कर्मणस्तथा । भ्रश्यतु क्षिप्रमद्यैव यस्यार्योऽनुमते गतः ॥ ४६ ॥ अपास्य मातृशुश्रूषामनर्थे सोऽवतिष्ठताम् । दीर्घबाहुर्महावक्षा यस्यार्योऽनुमते गतः ॥ ४७॥ बहुपुत्रो दरिद्रश्च ज्वररोगसमन्वितः । स भूयात् सततं क्लेशी यस्यार्योऽनुमते गतः ॥४८॥ आशामाशंसमानानां दीनानामूर्ध्वचक्षुषाम् । अर्थिनां वितथां कुर्याद्यस्यार्योऽनुमते गतः ॥ ४९ ॥ मायया रमतां नित्यं परुषः पिशुनोऽशुचिः । राज्ञो भीतस्त्वधर्मात्मा यस्यार्योऽनुमते गतः ॥ ५० ॥ ऋतुस्नातां सतीं भार्यामृतुकालानुरोधिनीम् । अतिवर्त्तेत दुष्टात्मा यस्यार्योऽनुमते गतः ॥ ५१ ॥ धर्मदारान् परित्यज्य परदारान्निषेवताम् । त्यक्तधर्मरतिर्मूढो यस्यार्योऽनुमते गतः ॥ ५२ ॥ विप्रलुप्तप्रजातस्य दुष्कृतं ब्राह्मणस्य यत् । तदेव प्रतिपद्येत यस्यार्योऽनुमते गतः ॥ ५३ ॥

अपास्येति । पुनर्मातृशुश्रूषाग्रहणं तत्त्यागे प्रत्यवायभूयस्तया तन्नित्यतया च । मातृशुश्रूषा हि नित्या, यतस्तस्यां पतितायामपि शुश्रूषां विदधति स्मृतयः । अनर्थे अधर्मे ॥ ४७॥ बहुपुत्र इति । बहुपुत्रस्यापि धनिनो दुःखाभावात् । अपुत्रस्य दारिद्र्येऽपि भरणीयाल्पतया क्लेशाल्पतेति च विशेषणद्वयम् ॥ ४८ ॥ आशामिति । आशंसमानानां स्तुवताम् । ऊर्ध्वचक्षुषाम् उन्नतासनस्थदातृमुखनिरीक्षकाणाम् अर्थिनाम् आशां वितथां कुर्यात् ॥ ४९ ॥ माययेति । मायया वञ्चनया । रमतां सक्तो भवतु ॥ ५० ॥ ऋतुस्नातामिति । ऋतुकालानुरोधिनीम् ऋतुस्नानादिवसे स्वसंनिहिताम् ॥५१॥ धर्मदारानिति । निषेवतां भजताम् ॥ ५२ ॥ विप्रलुप्तप्रजातस्येति । विप्रलुप्तप्रजातस्य नष्टापत्यस्य सन्ततिहीनस्येत्यर्थः । तदेव दुष्कृतं प्रति



सतामिति । सञ्जुष्टात् क्रियमाणादित्यर्थः ॥ ४६–४८ ॥ आशामिति । अर्थिनामाशां वितथां कुर्यादिति सम्बन्धः ॥ ४९ ॥ मायया वञ्चनया ॥ ५०–५२ ॥ विप्रलुप्तप्रजातस्य अन्नपानाद्यप्रदानेन प्रनष्टसन्तानस्येत्यर्थः । विच्छिन्नसन्तानस्येति वा। यद्वा विप्रलुप्ता विवर्जिता प्रजाता प्रसूता जातापत्या जाया येन तस्य ॥५३॥५४॥

पद्येत ॥ ५३ ॥ पानीयेति । पानीयदूषके विषदायके च यत्पापं तत् दुःखम् एको लभतामित्यर्थः ॥ ५४ ॥ ब्राह्मणायेति । बालवत्साम् अनिर्दशाम् ॥५५॥ तृष्णार्तमिति । पानीये सति गृहे विद्यमाने सति । विप्रलम्भेन वञ्चनया यो योजयेत् न ददातीत्यर्थः । तस्य यत्पापं तल्लभेत ॥ ५६ ॥ भक्त्येति ।



पानीयदूषके पापं तथैव विषदायके । यत्तदेकः स लभतां यस्यार्योऽनुमते गतः ॥ ५४ ॥ ब्राह्मणायोद्यतां पूजां विहन्तु कलुषेन्द्रियः । बालवत्सां च गां दोग्धु यस्यार्योऽनुमते गतः ॥ ५५ ॥ तृष्णार्तं सति पानीये विप्रलम्भेन योजयेत् । लभेत तस्य यत्पापं यस्यार्योऽनुमते गतः ॥५६॥ भक्त्या विवदमानेषु मार्गमाश्रित्य पश्यतः । तस्य पापेन युज्येत यस्यार्योऽनुमते गतः ॥ ५७ ॥ विहीनां पतिपुत्राभ्यां कौसल्यां पार्थिवात्मजः । एवमाश्वासयन्नेव दुःखार्त्तो निपपात ह ॥५८॥ तथा तु शपथैः कष्टैः शपमानमचेतनम् । भरतं शोकसन्तप्तं कौसल्या वाक्यमब्रवीत् ॥ ५९ ॥ मम दुःखमिदं पुत्र भूयः समुपजायते । शपथैः शपमानो हि प्राणानुपरुणत्सि मे ॥ ६० ॥ दिष्ट्या न चलितो धर्मादात्मा ते सहलक्ष्मणः । वत्स सत्यप्रतिज्ञो मे सतां लोकानवाप्स्यसि ॥ ६१ ॥ इत्युक्त्वा चाङ्कमानीय भरतं भ्रातृवत्सलम् । परिष्वज्य महाबाहुं रुरोद भृशदुःखिता ॥ ६२ ॥

विवदमानेषु वादिप्रतिवादिषु विवादं कुर्वत्सु । भक्त्या एकस्मिन् स्नेहेन । मार्गं जयोपायमाश्रित्य पश्यतः ब्रुवतस्तस्य पापेन युज्येतेति सम्बन्धः ॥ ५७–५९ ॥ ममेति । उपरुणत्सि पीडयसीत्यर्थः । यद्वा प्राणानुपरुणत्सि रामवियोगेन मे निर्गच्छतः प्राणान् स्थापयसि, शपथकरणेन ममाश्वासो जात इत्यर्थः ॥ ६० ॥ दिष्ट्येति । दिष्ट्या भाग्येन । आत्मा अन्तःकरणम् । धर्मात् ज्येष्ठानुवर्त्तनधर्मात् । मे मह्यम् । सहलक्ष्मणः सत्यप्रतिज्ञोसि ।

बालवत्साम् अनिर्दशामित्यर्थः । "सन्धिस्सनिर्दशावत्सागोपयः परिवर्जयेत्" इति स्मृतेः ॥ ५५ ॥ ५६ ॥ अयं परस्त्वयं नेति विवदमानेषु वादिप्रतिवादिषु विवादं कुर्वत्सु सत्सु भक्त्या एकस्मिन् स्नेहेन । मार्गं जयोपायमाश्रित्य पश्यतः तूष्णीम्भवतः । जयोपायं ज्ञात्वापि पक्षपातेन तूष्णीम्भवत इत्यर्थः । तस्य पापेन युज्येतेति सम्बन्धः । अस्मिन् शपथप्रकरणे श्लोकानां पूर्वोत्तरव्यत्यासः पुनरुक्तिश्च दृश्यते, तत् शपथविषयत्वान्न दोषः ॥ ५७–५९ ॥ ममेति । इदं तव शपथ वाक्यजातम्, श्रुत्वेति शेषः । किञ्च उपरुणत्सि पीडयसि ॥ ६० ॥ दिष्ट्येति । दिष्ट्या भाग्येन सहलक्ष्मणः ते आत्मा स्वभावः धर्मात् ज्येष्ठानुवर्तनरूपधर्मात् न चलितः । मे सत्ये प्रतिज्ञः मह्यं कृतयथार्थशब्दपथस्सन् सतां लोकानवाप्स्यसीति सम्बन्धः । यद्वा सत्यप्रतिज्ञः मे मम सत्यं शंसमानः त्वं सतां लोकानवा

लक्ष्मणवत् सत्यप्रतिज्ञोऽसीत्यर्थः । अतः सतां लोकानवाप्स्यसि ॥ ६१ ॥ ६२ ॥ एवमिति । एवं विलपमानस्य पूर्वोक्तशपथरूपेण विलपतः । शोक संरोधात् शोककृतसंरोधात् ॥ ६३ ॥ लालप्यमानस्येति । लालप्यमानस्य भृशं प्रलपतः । विचेतनस्य मूर्च्छितस्य । प्रनष्टबुद्धेः क्षुभितान्तःकरणस्य । घर्मम् उष्णं यथाभवति तथा निश्वसतः ॥६४॥ इति श्रीगोविन्द० श्रीरामायणभूषण० पीता० अयोध्याकाण्डव्याख्याने पञ्चसप्ततितमः सर्गः ॥ ७५॥

एवं विलपमानस्य दुःखार्त्तस्य महात्मनः । मोहाच्च शोकसंरोधाद्बभूव लुलितं मनः ॥ ६३ ॥ लालप्यमानस्य विचेतनस्य प्रणष्टबुद्धेः पतितस्य भूमौ । मुहुर्मुहुर्निश्वसतश्च घर्मं सा तस्य शोकेन जगाम रात्रिः ॥ ६४ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

तमेवं शोकसन्तप्तं भरतं कैकयीसुतम् । उवाच वदतां श्रेष्ठो वसिष्ठः श्रेष्ठवागृषिः ॥ १ ॥ अलं शोकेन भद्रं ते राजपुत्र महायशः । प्राप्तकालं नरपतेः कुरु संयानमुत्तमम् ॥ २ ॥ वसिष्ठस्य वचः श्रुत्वा भरतो धारणां गतः । प्रेतकार्याणि सर्वाणि कारयामास धर्मवित् ॥ ३॥ उद्धृतं तैलसंरोधात् स तु भूमौ निवेशितम् । आपीतवर्णवदनं प्रसुप्तमिव भूपतिम् ॥ ४ ॥ संवेश्य शयने चाग्र्ये नानारत्नपरिष्कृते । ततो दशरथं पुत्रो विललाप सुदुःखितः ॥ ५ ॥

तमिति । कैकयीसुतमित्यत्र "केकयमित्रयुप्रलयानां यादेरियः" इति विहितस्येयादेशस्याभावः ॥१॥ अलमिति । संयानं सम्यग् यानम्, स्वर्गप्रापकक्रियाजातमित्यर्थः ॥ २ ॥ वसिष्ठस्येति । धारणां गतः धैर्यं प्राप्तः "मर्यादा धारणा स्थितिः" इत्यमरः । स्वस्थान्तःकरण इत्यर्थः । कारयामासेति संक्षेपोक्तिः ॥ ३ ॥ उद्धृतमित्यादिश्लोकद्वयमेकान्वयम् । ततः स पुत्रः तैलसंरोधात् तैलद्रोण्याः उद्धृतं ततस्तैलापमार्जनाय भूमौ निवेशितम् चिरं तैले स्थापनादापीतवर्णवदनम् अवयवशैथिल्याभावात् प्रसुप्तमिव स्थितं दशरथं भूपतिम् । उक्तविशेषणे शयने संवेश्य शाययित्वा सुदुःखितः सन्



प्स्यसीति सम्बन्धः ॥ ६१ ॥ ६२ ॥ एवमिति । शोकसंरोधात् शोकविरोधात् ॥ ६३ ॥ लालप्यमानस्येति लालप्यमानस्य भृशं विलपतः । विचेतनस्य मूर्च्छतः प्रनष्टबुद्धेः क्षुभितान्तःकरणस्य ॥ ६४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां पञ्चसप्ततितमः सर्गः ॥ ७५ ॥ ॥ १ ॥ अलमिति । संयानं सम्यग्यानं स्वर्गप्रापकक्रियाजातमित्यर्थः । कारयामासेति संग्रहोक्तिः ॥ २ ॥ वसिष्ठस्येति । धारणां गतः स्थितिं प्राप्तः, स्वस्थान्तःकरण

विललाप ॥ ४ ॥ ५ ॥ किमिति । किं ते व्यवसितं त्वया किमद्य व्यवसितम्, स्वर्गगमनायेतिशेषः ॥ ६ ॥७ ॥ योगक्षेममिति । ते पुरे अयोध्यायां कः जनः योगक्षेमं स्वकीयपुरयोगक्षेमं कल्पयिता कारिष्यति । स्वः स्वर्गम् ॥ ८–१० ॥ प्रेतकार्याणीति । विशांपतेः प्रजानां पत्युः ॥ ११ ॥



किं ते व्यवसितं राजन् प्रोषिते मय्यनागते । विवास्य रामं धर्मज्ञं लक्ष्मणं च महाबलम् ॥६॥ क्व यास्यसि महाराज हित्वेमं दुःखितं जनम् । हीनं पुरुषसिंहेन रामेणाक्लिष्टकर्मणा ॥ ७ ॥ योगक्षेमं तु ते राजन् कोऽस्मिन् कल्पयिता पुरे । त्वयि प्रयाते स्वस्तात रामे च वनमाश्रिते ॥ ८ ॥ विधवा पृथिवी राजंस्त्वया हीना न राजते । हीनचन्द्रेव रजनी नगरी प्रतिभाति मा ॥९॥ एवं विलपमानं तं भरतं दीनमानसम् । अब्रवीद्वचनं भूयो वसिष्ठस्तु महामुनिः ॥ १० ॥ प्रेतकार्याणि यान्यस्य कर्त्तव्यानि विशांपतेः । तान्यव्यग्रं महाबाहो क्रियन्तामविचारितम् ॥ ११ ॥ तथेति भरतो वाक्यं वसिष्ठस्याभिपूज्य तत् । ऋत्विक्पुरोहिताचार्यांस्त्वरयामास सर्वशः ॥ १२ ॥ ये त्वग्नयो नरेन्द्रस्य चाग्न्यगाराद्बहिष्कृताः । ऋत्विग्भिर्याजकैश्चैव आह्रियन्त यथाविधि ॥ १३ ॥ शिबिकायामथारोप्य राजानं गतचेतसम् । वाष्पकण्ठा विमनसस्तमूहुः परिचारकाः ॥ १४ ॥ हिरण्यं च सुवर्णं च वासांसि विविधानि च । प्रकिरन्तो जना मार्गं नृपतेरग्रतो ययुः ॥ १५ ॥

तथेतीति । ऋत्विक्पुरोहिताचार्यान् ऋत्विजो यज्ञकर्मणि वृताः । पुरोहिताः पुरोहितपरत्वेन शान्तिकपौष्टिकादिक्रियाप्रवर्त्तकाः । आचार्याः वसिष्ठ वामदेवादयः । "त्रय्यां च धर्मकृत्ये च शान्तिकर्मणि पौष्टिके । अध्वरे यश्च कुशलः स स्याद्राजपुरोहितः ॥ उपनीय वदेद्वेदमाचार्यः स उदाहृतः ।" इतिलक्षणम् ॥१२॥ य इति । अग्न्यगारात् अग्निगृहात् । बहिष्कृताः अन्तःशववत्त्वात् बहिः प्रतिष्ठापिताः । अग्नयो गार्हपत्यादयः । याजकैः उपद्रष्टृभिः ऋत्विग्भिश्च । आह्रियन्त आनीयन्त ॥ १३ ॥ १४ ॥ हिरण्यमिति । हिरण्यं च सुवर्णं च रजतं च सुवर्णं च, तत्कृतपुष्पाणीत्यर्थः॥ १५ ॥

इत्यर्थः ॥ ३–५ ॥ किमिति । प्रोषिते देशान्तरं गते ॥ ६ ॥ ७ ॥ योगक्षेममिति । स्वः स्वर्गम् ॥ ८–११ ॥ ऋत्विक्पुरोहिताचार्यान् ऋत्विजो यज्ञकर्मणि वृताः, पुरोहिताः शान्तिपौष्टिकादिक्रियाप्रवर्तकाः, आचार्याः वसिष्ठवामदेवादयः ॥१२॥ ये त्विति । याजकैः उपद्रष्टृभिः ॥ १३ ॥१४॥ हिरण्यमिति । हिरण्यं रजतम् ॥१५॥

चन्दनागरुनिर्यासानिति । चन्दनागरुनिर्यासान् । निर्यासो गुग्गुलुः । "गुग्गुलुः कालनिर्यासौ" इतिनिघण्टुः । चन्दनागरुजनितधूपद्रव्याणीति यावत् । सरलं धूपसरलम् । पद्मकं सुरभिकाष्ठविशेषम् । क्षेपयन्ति पुरतः पार्श्वतश्च ध्रियमाणसौवर्णराजताङ्गारधानीषु धूपार्थमिति शेषः । चन्दनादीनि गन्धा

चन्दनागरुनिर्यासान् सरलं पद्मकं तथा । देवदारूणि चाहृत्य क्षेपयन्ति तथा परे ॥ १६॥ गन्धानुच्चावचांश्चान्यान् तत्र गत्वाथ भूमिपम् । ततः संवेशयामासुश्चितामध्ये तमृत्विजः ॥ १७ ॥ तथा हुताशनं दत्त्वा जेपुस्तस्य तमृत्विजः । जगुश्च ते यथाशास्त्रं तत्र सामानि सामगाः ॥ १८॥ शिबिकाभिश्च यानैश्च यथार्हं तस्य योषितः । नगरान्निर्ययुस्तत्र वृद्धैः परिवृतास्तदा ॥ १९ ॥ प्रसव्यं चापि तं चक्रुर्ऋत्विजोऽग्निचितं नृपम् । स्त्रियश्च शोकसन्तप्ताः कौसल्याप्रमुखास्तदा ॥ २० ॥ क्रौञ्चीनामिव नारीणां निनादस्तत्र शुश्रुवे । आर्तानां करुणं काले क्रोशन्तीनां सहस्रशः ॥ २१ ॥ ततो रुदन्त्यो विवशा विलप्य च पुनःपुनः । यानेभ्यः सरयूतीरमवतेरुर्वराङ्गनाः ॥ २२ ॥ कृत्वोदकं त भरतेन सार्द्धं नृपाङ्गना मन्त्रिपुरोहिताश्च । पुरं प्रविश्याश्रुपरीतनेत्रा भूमौ दशाहं व्यनयन्त दुःखम् ॥ २३ ॥ इत्यार्षे श्रीरामायणे आदिकाव्ये श्रीमदयोध्याकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

न्तानि चिताकाष्ठद्रव्याणीत्येव तु युक्तम् । तदा क्षेपयन्ति दहनार्थं चितामकुर्वन्नित्यर्थः॥१६॥तत्र गत्वाथ भूमिपामित्युत्तरशेषः । अथ चिताकल्पनानन्तरम् । तत्र चितासमीपे गत्वा तं भूमिपं चितामध्ये ततः शिबिकायाः, उद्धृत्येतिशेषः ! संवेशयामासुः शाययामासुः ॥ १७ ॥ तथेति । हुताशनं दत्त्वा भरतेन दापयित्वा । जेपुः पैतृमेधिकमन्त्रविशेषानिति शेषः । तस्य, परमगत्यर्थमिति शेषः । तमिति हुताशनविशेषणम् । हुतं प्रेताग्निमित्यर्थः । ते उद्गातृप्रभृतयः ऋत्विजः ॥ १८ ॥ शिबिकाभिरिति । यानैरश्वादिभिः । वृद्धैः परिचारकैः ॥ १९ ॥ प्रसव्यमिति । अग्निचितम् अग्निचयनं कृतवन्तं तं नृपम् । ऋत्विजः स्त्रियश्च प्रसव्यं सव्यापसव्यं प्रदक्षिणमप्रदक्षिणं च चक्रुः ।( पाठभेदः। प्रसव्यम् अप्रदक्षिणम् इदं प्रदक्षिणस्याप्युपलक्षणम् ) भरतश्चेत्यर्थसिद्धम् । इदं चाग्निदानात्पूर्वं शिबिकास्थे प्रेते क्रमस्याविवक्षितत्वादत्रोक्तं देशविशेषाचारोऽयं वा ॥२०—२२॥ कृत्वेति । ताश्च ते च ते । "पुमान्

चन्दनेति । निर्यासः कर्पूरगुग्गुल्वादिधूपद्रव्यविशेषः । सरलं धूपसरलम् । पद्मकं सुरभिकाष्ठविशेषः ॥ १६ ॥ १७॥ तथेति । जेपुः ऋग्यजुस्सामादिकमिति शेषः ॥ १८ ॥ १९ ॥ प्रसव्यमिति । प्रसव्यमप्रदक्षिणम् । अग्निचितं अग्निं चितवन्तम्, अश्वमेधादियज्ञकर्तारमित्यर्थः ॥ २०–२२ ॥ कृत्वेति । भूमौ शयाना इति

स्त्रिया" इत्येकशेषः । दशाहं "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । भूमौ शयाना इति शेषः । "कियछ्छब्धाशना भूमौ स्वपेयुस्ते पृथक् पृथक्" इत्याशौचिनां पृथक्शयनं हि विहितम् । दुःखमाशौचं व्यनयन्त अगमयन् । ननु षोडशाहेन ( द्वादशाहेन )भूपाला इति क्षत्रियस्य ( द्वादशाहा ) षोडशाहाशौचसद्भावात् कथं दशाहमित्युच्यत इतिचेत् ? सत्यम्; "क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः" इत्यादिविशेषशास्त्रानुसारेणोक्तमिति न

ततो दशाहेऽतिगते कृतशौचो नृपात्मजः। द्वादशेऽहनि सम्प्राप्ते श्राद्धकर्माण्यकारयत् ॥१॥ ब्राह्मणेभ्यो ददौ रत्नं धनमन्नं च पुष्कलम् । वासांसि च महार्हाणि रत्नानि विविधानि च ॥ २ ॥ बास्तिकं बहुशुक्लं च गाश्चापि शतशस्तदा । दासीदासं च यानं च वेश्मानि सुमहान्ति च ॥ ब्राह्मणेभ्यो ददौ पुत्रो राज्ञस्तस्यौर्ध्वदैहिकम् ॥ ३ ॥

दोषः । अत्र स्त्रीणां प्रेतप्रदक्षिणमुदकदानं च सूत्रान्तरोक्तं ज्ञेयम् । तथा चितास्थस्य प्रदक्षिणं च । अत एवाह बोधायनः "प्रदक्षिणमपि बान्धवाः कुर्वन्ति एवं मार्गेपि चितामारोप्य चितायामेवेत्येके" इति । अत्र प्रेतेन सहाग्न्यानयनं चितारोपणं समन्त्रकमग्निदानं प्रदक्षिणीकरणमुदकदानं दशाहमाशौचेन भूमौ शयनमित्येतावन्मात्रं देशकुलसूत्रभेदेन और्ध्वदैहिकविशेष उक्त इति वा प्रधानोक्तिः सर्वग्रहणार्थमितिवा ज्ञेयम् ॥२३॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षट्सप्ततितमः सर्गः ॥ ७६ ॥ ततइति । दशाहे अतिगते अतीते, एकादशाह इत्यर्थः । कृतशौचः कृतशौचापादकपुण्याहवाचननवश्राद्धादिकइत्यर्थः । द्वादशेऽहनि श्राद्धकर्माणि षोडशमासिकानि सपिण्डीकरणान्तानीत्यर्थः । अकारयत् अकरोदित्यर्थः । स्वार्थे णिच् ॥१॥२॥ बास्तिकमित्यादि । बस्तानां छागानां समूहो बास्तिकम् । छान्दसष्ठक् । "अजा छागीशुभच्छागबस्तच्छागलका अजे" इत्यमरः । बहुशुक्लमिति छागविशेषणं रजतं वा, पितृप्रियत्वात् । "शुक्लो योगान्तरे श्वेते शुक्लं च रजते तथा" इतिविश्वः । दासीदासम् । गवाश्वप्रभृतित्वादेकवद्भावः । उर्ध्वं देहादूर्ध्वदेहः तत्र भवमौर्ध्वदैहिकम् । "ऊर्ध्वदेहाच्चेति वक्तव्यम्" इति ठक् ॥ ३ ॥

शेषः । दुःखम् आशौचं व्यनयन्त अगमयन् । ननु क्षत्रस्य षोडशाहानीति क्षत्रियस्य षोडशाहाशौचसद्भावात् कथं दशाहमित्युच्यत इति चेत् ? सत्यम्, "क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः" इत्यादिविशेषशास्त्रानुसारेणोक्तमिति न दोषः ॥ २३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायण० अयोध्याकाण्डव्याख्यायां षट्सप्ततितमः सर्गः ॥७६॥ तत इति । द्वादशेऽहनि श्राद्धकर्माण्यकारयत् एकादशेऽहनि कर्तव्यश्राद्धकरणपूर्वकं द्वादशेऽहनि श्राद्धकर्माण्यकरोदित्यर्थः ॥१॥ ब्राह्मणेभ्य

तत इति । शब्दापिहितकण्ठः रोदनध्वनिना व्याप्तकण्ठः । शोधनार्थं स्थलशोधनार्थम् "दहनदेशमुदकुम्भैः स्ववोक्षति" इतिसूत्रात् अस्थिसञ्चयनार्थमित्यर्थः । सावशेषास्थिनिचय इति वक्ष्यमाणत्वात् । त्रयोदशेप्यस्थिसञ्चयनं सूत्रान्ते दृश्यते । यथाह बोधायनः "द्वितीयेऽह्नि युग्मदिवसे

ततः प्रभातसमये दिवसेऽथ त्रयोदशे । विललाप महाबाहुर्भरतः शोकमूर्च्छितः । शब्दापिहितकण्ठस्तु शोधनार्थमुपागतः ॥ ४ ॥ चितामूले पितुर्वाक्यमिदमाह सुदुःखितः ॥ ५ ॥ तात यस्मिन्निसृष्टोऽहं त्वया भ्रातरि राघवे । तस्मिन्वनं प्रव्रजिते शून्ये त्यक्तोऽस्म्यहं त्वया ॥ ६॥ यस्या गतिरनाथायाः पुत्रः प्रव्राजितो वनम् । तामम्बां तात कौसल्यां त्यक्त्वा त्वं क्व गतो नृप ॥ ७ ॥ दृष्ट्वा भस्मारुणं तच्च दग्धास्थिस्थानमण्डलम् । पितुः शरीरनिर्वाणं निष्टनन् विषसाद सः ॥८॥ स तु दृष्ट्वा रुदन् दीनः पपात धरणीतले। उत्थाप्यमानः शक्रस्य यन्त्रध्वज इव च्युतः॥९

ष्वर्द्धमासान्मासानृतून् संवत्सरं वा सञ्चयनं कुर्यात्" इति ॥ ४ ॥ चितामूल इत्यर्धम् ॥ ५ ॥ तातेति । निसृष्टः दत्तः । प्रव्रजिते प्रव्राजिते । छान्दसो ह्रस्वः ॥ ६ ॥ ७ ॥ दृष्ट्वेति । भस्मारुणं भस्मयुक्तमरुणं च । अरुणत्वमतिदग्धत्वात् । पितुः शरीरनिर्वाणं शरीरं निर्वाप्यते विनाश्यते अस्मिन्निति शरीरनिर्वाणम् । अधिकरणे ल्युट्। "निर्वाणो निर्वृते मोक्षे विनाशे गजमज्जने" इति वैजयन्ती । निष्टनन् नितरां स्तनन् । "अभिनिसस्तनः शब्दसंज्ञायाम्" इति षत्वम् । ( पाठभेदः । भस्मारुणं भस्मना अरुणम्, अव्यक्तरागम् । दग्धास्थिस्थानमण्डलं दग्धानामस्थ्नां यानि स्थानानि विन्यासविशेषाः तेषां मण्डलं समूहं दृष्ट्वा अस्थिमण्डलं दृष्ट्वेत्यर्थसिद्धम् । पितुः शरीरनिर्वाणं शरीरविनाशं प्रति निष्टनन् नितरां रोदनशब्दं कुर्वन् ) विषसाद दुःखितोऽभूत् ॥ ८ ॥ स इति । उत्थाप्यमानः रज्जुभिरुत्थाप्यमानः । च्युतः स्रस्तः शक्रस्य यन्त्रबद्धो ध्वजो यन्त्रध्वजः रज्जुयुक्तो ध्वज इव पपात, यथा

इति । बास्तिकं छागसमूहम् ।शुक्लं शुद्धम्, दानार्हमित्यर्थः । और्ध्वदैहिकं परलोकक्रियामुद्दिश्य ददाविति सम्बन्धः । शोधनार्थम् अस्थिसञ्चयनार्थम् । शब्दापिहितकण्ठः शब्देन रोदनशब्देन अपिहितम् आवृतं कण्ठं यस्य सः ॥ २–७ ॥ भस्मारुणं भस्मयुक्तमरुणम्, अरुणत्वमतिदग्धत्वात् । स्थानमण्डलं चितास्थानमण्डलम् । पितुः शरीरनिर्वाणम् शरीरं निर्वाप्यतेऽस्मिन्निति शरीरनिर्वापणम् । दग्धास्थि दग्धानि अस्थीनि यस्मिन् तत तच्च चितामूलं दृष्ट्वा निष्टनन् नितरां स्तनन् विलपन्नित्यर्थः । विषसादेति सम्बन्धः ॥ ८ ॥ स त्विति । उत्थाप्यमानः रज्जुभिरुत्थाप्यमानः च्युतः स्रस्तः शक्रयन्त्रध्वजः यन्त्रबद्धो ध्वजः यन्त्रध्वज इव

यन्त्रपतनात् ध्वजपतनम् एवं राजपतनात् भरतपतनमिति भावः ॥ ९ ॥ अभिपेतुरिति । अमात्याः ज्ञातयः । शुचिव्रतं तम् । अन्तकाले पुण्यक्षयकाले निपतितं ययातिम् ऋषयः दौहित्रभूता इव अभिपेतुः ॥ १० ॥ शत्रुघ्न इति । भरतपतनावधि शत्रुघ्नस्य धैर्यं स्थितम्, तत्पतनानन्तरं तु भूमिपाल मनुस्मरन्नपतत् ॥ ११ ॥ उन्मत्त इति । गुणाङ्गानि गुणानङ्गानि चेत्यर्थः । तदातदा तानितानि तत्तत्कालोचिताभिमतप्रदानोपलालनकराणि गुणा

अभिपेतुस्ततः सर्वे तस्यामात्याः शुचिव्रतम् । अन्तकाले निपतितं ययातिमृषयो यथा ॥ १० ॥ शत्रुघ्न श्चापि भरतं दृष्ट्वा शोकपरिप्लुतम् । विसंज्ञो न्यपतद्भूमौ भूमिपालमनुस्मरन् ॥ ११ ॥ उन्मत्त इव निश्चेता विल लाप सुदुःखितः । स्मृत्वा पितुर्गुणाङ्गानि तानितानि तदातदा ॥ १२ ॥ मन्थराप्रभवस्तीव्रः कैकेयीग्राहसङ्कुलः । वरदानमयोऽक्षोभ्योऽमज्जयच्छोकसागरः ॥ १३ ॥ सुकुमारं च बालं च सततं लालितं त्वया । क्व तात भरतं हित्वा विलपन्तं गतो भवान् ॥ १४ ॥ ननु भोज्येषु पानेषु वस्त्रेष्वाभरणेषु च । प्रवारयसि नः सर्वांस्तन्नः कोऽन्यः करिष्यति ॥ १५ ॥ अवदारणकाले तु पृथिवी नावदीर्यते । या विहीना त्वया राज्ञा धर्मज्ञेन महात्मना ॥ १६ ॥ पितरि स्वर्गमापन्ने रामे चारण्यमाश्रिते । किं मे जीवितसामर्थ्यं प्रवेक्ष्यामि हुताशनम् ॥ १७ ॥

ङ्गानि ॥ १२ ॥ मन्थरेति सगरव्यावृत्तिः । तीव्रः अगाध इति यावत् । अमज्जयत् अस्मानितिशेषः ॥ १३ ॥ १४ ॥ नन्विति । प्रवारयसि एष्वाभरणादिषु किं तवेष्टं गृहाणेति प्रकर्षेण स्वयं ग्राहयासि तत्प्रवारणम् ॥ १५ ॥ अवदारणेति । या पृथिवी धर्मज्ञेन त्वया विहीना नावदीर्यते न भिद्यते । स्वयमिति शेषः । सा अवदारणकाले तु प्रलयकालेपि नावदीर्यते नावदीर्यैतेत्यर्थः । ( पाठभेदः । अवदारणकाले त्वद्विहीनतया अवदारणस्य प्राप्तकाले । अवदारणकालत्वे हेतुः त्वयाविहीनेति । धर्मज्ञेन महात्मना त्वया राज्ञा एतादृशगुणाढ्येन त्वयेत्यर्थः । विहीना या सा पृथ्वी अवदारणकाले नावदीर्यत इत्यन्वयः ) ॥ १६ ॥ पितरीति । जीवित सामर्थ्यं जीवनशक्तिः ॥ १७ ॥ १८ ॥

पपातेति सम्बन्धः ॥ ९ ॥ अभिपेतुरिति । अन्तकाले पुण्यक्षयकाले ॥ १० ॥ ११ ॥ उन्मत्त इति । तदा तदा तानि तानि गुणाङ्गानि तत्कालोचिताभिमतप्रदानोप लालनकरणानीत्यर्थः ॥ १२ ॥ मन्थरेति । अमज्जयत् अस्मानिति शेषः ॥ १३ ॥ १४ ॥ नन्विति । प्रवारयसि प्रकर्षेण स्वयं ग्राहयसि ॥ १५ ॥ अवदारणेति । या

तयोरिति । आर्त्ततराः । आसन्निति शेषः ॥ १९ ॥ तत इति । विश्रान्तौ विशेषेण श्रान्तौ । व्यचेष्टेतां व्यलुण्ठेताम् ॥ २० ॥ तत इति । प्रकृतिमान् प्रशस्तस्वभावः । " प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे " इति वैजयन्ती । वैद्यः विद्यां तत्त्वज्ञानहेतुभूतां वेदान्तविद्यां वेदेति

हीनो भ्रात्रा च पित्रा च शून्यामिक्ष्वाकुपालिताम् । अयोध्यां न प्रवेक्ष्यामि प्रवेक्ष्यामि तपोवनम् ॥ १८ ॥ तयोर्विलपितं श्रुत्वा व्यसनं चान्ववेक्ष्य तत् । भृशमार्त्ततरा भूयः सर्व एवानुगामिनः ॥१९॥ ततो विषण्णौ विश्रान्तौ शत्रुघ्नभरतावुभौ । धरण्यां संव्यचेष्टेतां भग्नशृङ्गाविवर्षभौ ॥ २० ॥ ततः प्रकृतिमान् वैद्यः पितुरेषां पुरोहितः । वसिष्ठो भरतं वाक्यमुत्थाप्य तमुवाच ह ॥ २१ ॥ त्रयोदशोऽयं दिवसः पितुर्वृत्तस्य ते विभो । सावशेषास्थिनिचये किमिह त्वं विलम्बसे ॥२२॥ त्रीणि द्वन्द्वानि भूतेषु प्रवृत्तान्यविशेषतः । तेषु चापरिहार्येषु नैवं भवितुमर्हसि ॥२३॥

वैद्यः वेदान्तविद्याधिगतपरावरतत्त्वयाथात्म्यविज्ञानः, सर्वज्ञ इति यावत् । " तदधीते तद्वेद " इत्यण् । " सर्वज्ञभिषजौ वैद्यौ " इत्यमरः । एषा मितिबहुवचननिर्देशो बुद्धिस्थरामाद्यपेक्षया । पितुर्दशरथस्य ॥ २१ ॥ त्रयोदश इति । वृत्तस्य संस्कृतस्य । त्रयोदशोऽयं दिवसः । सावशेषास्थिनिचये अस्थिसञ्चयनाख्ये कर्मण्यवशिष्ट इत्यर्थः । दशाहमध्ये शास्त्रविहितं प्रधानावयवास्थिसञ्चयनं कृतम्, त्रयोदशे दिवसे तद्देशीयशिष्टाचारप्राप्तस्थलशोधनमात्रं कृतमिति न स्मृतिविरोध इत्यप्याहुः । स्मृतिश्चास्माभिर्दर्शितैव ॥ २२ ॥ त्रीणीति । अशनायापिपासे शोकमोहौ जरामृत्यू इत्युक्तानि त्रीणि द्वन्द्वानि । भूतेषु जन्तुषु । अविशेषतः प्रवृत्तानि तेषु चापरिहार्येषु प्राप्तेषु । त्वमेवं भवितुं नार्हसि अज्ञवन्मोहेन प्रलपितुं नार्हसि ॥ २३ ॥

पृथिवी धर्मज्ञेन त्वया विहीना नावदीर्यते न भिद्यते सा अवदारणकाले तु प्रलयकाले आगतेपि नावदीर्यत इत्यन्वयः ॥ १६–१८ ॥ तयोरिति । आर्तंतरा अभवन्निति शेषः ॥ १९ ॥ तत इति । विषण्णौ श्रान्तौ चेति पाठः । विषण्णौ विश्रान्ताविति पाठे–विशेषेण श्रान्तावित्यर्थः ॥ २० ॥ तत इति । प्रकृतिमान् प्रशस्तस्वभावः । वैद्यः सर्वज्ञः ॥ २१ ॥ त्रयोदश इति । वृत्तस्य संस्कृतस्य । सावशेषास्थिनिचय इत्यभिधानात् दशाहमध्ये शास्त्रविहितं प्रधानास्थिसञ्चयनं कृत्वा त्रयोदशदिवसे तद्देशीयाचारप्राप्तस्थलशोधनमात्रं कृतमित्यवगम्यते । त्रयोदशेऽहन्यस्थिसञ्चयनं कर्तव्यमिति स्मृतेरपि न विरोध इत्यवगन्तव्यम् ॥ २२ ॥ त्रीणि द्वन्द्वानीति । त्रीणि द्वन्द्वानि " अशनायापिपासे च शोकमोहौ जरामृती " इत्युक्तप्रकारेण । त्रीणि द्वन्द्वानि जन्ममरणे सुखदुःखे लाभालाभे । एवं भवितुं शोचितुम् ॥२३॥

सुमन्त्र इति । सर्वभूतभवाभवौ सर्वभूतोत्पत्तिविनाशौ ॥ २४ ॥ २५ ॥ अश्रूणीति । परिमृद्नन्तौ मार्जयन्तौ । तनयौ राजपुत्रौ । अपराः क्रियाः अस्थिसञ्चयनादिकाः । प्रतीतिशेषः ॥ २६ ॥ इति श्रीगो० श्रीरामायणभूषणे पीताम्बर० अयोध्याकाण्डव्याख्याने सप्तसप्ततितमः सर्गः ॥ ७७ ॥

सुमन्त्रश्चापि शत्रुघ्नमुत्थाप्याभिप्रसाद्य च । श्रावयामास तत्त्वज्ञः सर्वभूतभवाभवौ ॥ २४ ॥ उत्थितौ च नरव्याघ्रौ प्रकाशेते यशस्विनौ । वर्षातपपरिक्लिन्नौ पृथगिन्द्रध्वजाविव ॥ २५ ॥ अश्रूणि परिमृद्नन्तौ रक्ताक्षौ दीनभाषिणौ । अमात्यास्त्वरयन्ति स्म तनयौ चापराः क्रियाः ॥ २६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

अथ यात्रां समीहन्तं शत्रुघ्नो लक्ष्मणानुजः । भरतं शोकसन्तप्तमिदं वचनमब्रवीत् ॥ १ ॥
गतिर्यः सर्वभूतानां दुःखे किंपुनरात्मनः । स रामः सत्त्वसम्पन्नः स्त्रिया प्रव्राजितो वनम् ॥ २ ॥
बलवान् वीर्यसम्पन्नो लक्ष्मणो नाम योऽप्यसौ । किं न मोचयते रामं कृत्वा स्म पितृनिग्रहम् ॥ ३ ॥

अथेत्यादि । अथ अपरक्रियां निर्वर्त्य गृहं प्रति गमनानन्तरं यात्रां रामसमीपगमनं समीहन्तं समीहमानम्, यात्रोद्युक्तमित्यर्थः ॥ १ ॥ गतिरिति । सर्वभूतानां प्राणिमात्रस्य दुःखे सति यो गतिः स आत्मनो दुःखे सति गतिरिति किंपुनः किंवक्तव्यम् । एवं दुःखनिस्तारक्षमो रामः सत्त्वसम्पन्नोपि बलसम्पन्नोपि स्त्रिया अत्यन्ताबलया वनं प्रव्राजितः इदमत्यन्तचित्रमिति भावः ॥२॥ पितृपरतन्त्रो रामः किङ्करोत्वित्यत्राह—बलवानित्यादिना । नामेति कुत्सने । " नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने " इति वैजयन्ती । लक्ष्मणोनाम योऽपीत्यनादरोक्तिः । असौ पितृनिग्रहं कृत्वापि रामं वनवासात् किं न

सुमन्त्र इति । सर्वभूतभवाभवं सर्वभूतानामुत्पत्तिविनाशौ ॥ २४ ॥ २५ ॥ अश्रूणीति । अपराः क्रियाः उद्दिश्येति शेषः ॥ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां सप्तसप्ततितमः सर्गः ॥ ७७ ॥ अथेत्यादि । यात्रां रामानयनं प्रति गमनम् । समीहन्तं विचारयन्तम् ॥१॥ गतिरिति । यो रामः दुःखे सङ्कटे प्राप्ते सति सर्वभूतानां गतिः निवारकत्वेन प्राप्यः सः आत्मनः स्वस्य किं पुनः स रामः स्त्रिया स्वायत्तीकृतभर्तृकया कैकेय्या वनं प्रव्राजितः, रामस्त्वेतदनुचितं कृतवानिति भावः ॥ २ ॥ रामो राज्यकाङ्क्षया पितृवचनोल्लङ्घनं कृतवानित्ययशोभयादेवं करोतु, लक्ष्मणस्तु कथमनुमतिं

मोचयते किं न मोचितवान् इदमप्यपरमाश्चर्यमिति भावः ॥३॥ पितृनिग्रहे दोषो नास्तीत्याशङ्कां परिहरति–पूर्वमित्यादिना। यो राजा नार्या वशं गतः उत्पथं समारूढः अपथं प्राप्तः सः नयानयौ नीत्यनीती समवेक्ष्य सम्यक्विचार्य पूर्वमेव अन्यायप्रवृत्तिसमापनात् पूर्वमेव निग्राह्य इति योजना ॥ ४ ॥

पूर्वमेव तु निग्राह्यः समवेक्ष्य नयानयौ। उत्पथं यः समारूढो नार्या राजा वशं गतः ॥ ४ ॥ इति सम्भाषमाणे तु शत्रुघ्ने लक्ष्मणानुजे। प्राग्द्वारेऽभूत्तदा कुब्जा सर्वाभरणभूषिता ॥ ५ ॥ लिप्ता चन्दनसारेण राजवस्त्राणि बिभ्रती। विविधं विविधैस्तैस्तैर्भूषणैश्च विभूषिता ॥ ६ ॥ मेखलादामभिश्चित्रैरन्यैश्च शुभभूषणैः। बभासे बहुभिर्बद्धा रज्जुबद्धेव वानरी ॥ ७ ॥ तां समीक्ष्य तदा द्वास्स्थाः सुभृशं पापकारिणीम्। गृहीत्वाऽकरुणां कुब्जां शत्रुघ्नाय न्यवेदयन् ॥ ८ ॥ यस्याः कृते वने रामो न्यस्तदेहश्च वः पिता। सेयं पापा नृशंसा च तस्याः कुरु यथामति ॥ ९ ॥ शत्रुघ्नश्च तदाज्ञाय वचनं भृशदुःखितः। अन्तःपुरचरान् सर्वानित्युवाच धृतव्रतः ॥ १० ॥ तीव्रमुत्पादितं दुःखं भ्रातृणां मे तथा पितुः। यथा सेयं नृशंसस्य कर्मणः फलमश्नुताम् ॥ ११ ॥ एवमुक्ता तु तेनाशु सखीजनसमावृता। गृहीता बलवत् कुब्जा सा तद्गृहमनादयत् ॥ १२ ॥

इतीति। कुब्जा प्राग्द्वारेऽभूत् स्वाभिलषितो भरताभिषेकः कदा भविष्यतीति अवसरं प्रतीक्षमाणा भरतशत्रुघ्नाधिष्ठितराजगृहस्य प्राग्द्वारे दैवादागताऽभूत् ॥ ५ ॥ लिप्तेति। चन्दनसारेण चन्दनपङ्केन। राजवस्त्राणि राजार्हवस्त्राणि कैकेयीदत्तानि। कञ्चुकान्तरीयोत्तरीयादिभेदाद्बहुवचनम्। तैस्तैरिति तत्तदवयवोचितत्वमुच्यते। एकैकाभरणे रत्नखचितत्वादिवैविध्यमाह विविधैरिति। विविधमिति क्रियाविशेषणम्। तेन भूषणसंस्थानविशेष उच्यते ॥६॥ मेखलादामभिरिति। भूषणशब्दोऽपि मेखलादामभिन्नपरः गोबलीवर्दन्यायात्। अन्यैः मेखलाप्रदेशधारणीयैः। बद्धेति विशेषणात् भूषणानि बन्धनस्थानीयानि नतु शोभाकराणीत्युक्तम् ॥७॥ तामिति। अकरुणां निर्दयाम् ॥८॥ यस्या इति। वने अभूदितिशेषः। कुरु शिक्षणमितिशेषः ॥९-१२॥



कृतवानित्याह–बलवानिति। किं न मोचयते स्म प्रव्राजनादिति शेषः ॥ ३ ॥ पितृनिग्रहे दोषोऽस्तीत्याशङ्क्य परिहरति–पूर्वमिति। यो राजा नार्या वशं गतः। उत्पथं समारूढः अपथं प्राप्तस्सन्। नयानयौ न्यायान्यायमवेक्ष्य सम्यग्विचार्य पूर्वमेव निग्राह्य इति योजना ॥ ४-७ ॥ तामिति। अकरुणामिति छेदः ॥८॥ यस्याः

तत इति। विपलायतेति "उपसर्गस्यायतौ" इति रेफस्य लत्वम् ॥ १३ ॥ आमन्त्रयतेति। आमन्त्रयत अन्योन्यमाह्वयत्। तस्याः सर्वः सखीजनः कृत्स्नः तदितरः सर्वोऽपि जनः यथा येन प्रकारेणायं शत्रुघ्नः उपक्रान्तः यश्च नः निश्शेषान्करिष्यति। जनापेक्षया पुंस्त्वम् ॥१४॥ वदान्यां वल्गुवाचम्।

ततः सुभृशसन्तप्तस्तस्याः सर्वः सखीजनः। क्रुद्धमाज्ञाय शत्रुघ्नं विपलायत सर्वशः ॥ १३ ॥ आमन्त्रयत कृत्स्नश्च तस्याः सर्वः सखीजनः। यथायं समुपक्रान्तो निश्शेषान्नः करिष्यति ॥ १४ ॥ सानुक्रोशां वदान्यां च धर्मज्ञां च यशस्विनीम्। कौसल्यां शरणं याम सा हि नोऽस्तु ध्रुवा गतिः ॥१५॥ स च रोषेण ताम्राक्षः शत्रुघ्नः शत्रुतापनः। विचकर्ष तदा कुब्जां क्रोशन्तीं धरणीतले ॥ १६ ॥ तस्या ह्याकृष्यमाणाया मन्थरायास्ततस्ततः। चित्रं बहुविधं भाण्डं पृथिव्यां तद्व्यशीर्यत ॥ १७ ॥ तेन भाण्डेन संस्तीर्णं श्रीमद्राजनिवेशनम्। अशोभत तदा भूयः शारदं गगनं यथा ॥ १८ ॥ स बली बलवत्क्रोधाद्गृहीत्वा पुरुषर्षभः। कैकेयीमभिनिर्भर्त्स्य बभाषे परुषं वचः ॥१९॥ तैर्वाक्यैः परुषैर्दुःखैः कैकेयी भृशदुःखिता। शत्रुघ्नभयसन्त्रस्ता पुत्रं शरणमागता ॥ २० ॥ तां प्रेक्ष्य भरतः क्रुद्धं शत्रुघ्नमिदमब्रवीत्। अवध्याः सर्वभूतानां प्रमदाः क्षम्यतामिति ॥ २१ ॥

"वदान्यो वल्गुवागपि" इति वैजयन्ती। कौसल्यां शरणं याम सा नो ध्रुवा गतिरस्त्वित्यन्योन्यमाह्वयादित्यन्वयः ॥ १५॥१६ ॥ तस्या इति। भाण्डं भूषणं "वणिङ्मूलधने पात्रे भाण्डं भूषाश्वभूषयोः" इति वैजयन्ती। पृथिव्यां तद्व्यशीर्यत विशीर्णमासीत् ( पाठभेदः। पृथिव्यां तद्विशीर्यते विशीर्णमासीत् ) ॥ १७ ॥ तेनेति। शारदं प्रसन्ननक्षत्रमित्यर्थः ॥ १८ ॥ स इति। बलवत्क्रोधात् अतीव क्रोधात्। कैकेयीमभिनिर्भर्त्स्यैत्यनेन मन्थरामोचनार्थं तदा कैकेयी समागतेत्यवगम्यते ॥ १९ ॥ तैरिति। शत्रुघ्नभयसन्त्रस्ता पुत्रं शरणमागतेत्यनेन भर्त्सनानन्तरं तां प्रहर्तुमप्युद्युक्तवानिति सूच्यते ॥ २० ॥ तामिति। क्षम्यतामित्यब्रवीदित्यन्वयः ॥ २१ ॥

कृत इति। वने रामः। अभूदिति शेषः। कुरु शिक्षणमिति शेषः ॥ ९-१३ ॥ आमन्त्रयतेति। आमन्त्रयत मन्त्रविचारमकरोत्। तदेवाह यथेति सार्धेन। वदान्यां वल्गुवाचम् ॥१४-१६॥ तस्या इति। भाण्डं भूषणम् ॥ १७ ॥ १८ ॥ स इति। कैकेयीमभिनिर्भर्त्स्य कुब्जामोचनार्थमागतामिति शेषः ॥ १९ ॥ तैरिति। पुत्रं शरणमागतेत्यनेन कुब्जामोचनार्थमिति ज्ञेयम् ॥ २० ॥ तामिति। सर्वभूतानां मध्ये प्रमदा अवध्या अतः क्षम्यतामिति शत्रुघ्नमब्रवीदिति सम्बन्धः ॥ २१ ॥

हन्यामिति। नासूयेन्न गर्हेत ॥ २२ ॥ माभून्मातृहत्या, सर्वकुहनामूलभूतयमेव कुब्जां हन्यतामित्यत्राह–इमामित्यादिना । नाभिभाषिष्यते इत्यब्रवी दिति अनुकृष्टेन पूर्वेण सम्बन्धः॥२३–२५॥ शत्रुघ्नेति। विक्षेपो भ्रामणं तेन विमूढसंज्ञाम् अन्यथाभूतमतिम् ।विलग्नां वागुरालग्नामिति भावः। विविग्ना मितिपाठे–कम्पवतीमित्यर्थः ॥२६॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीता० अयोध्याकाण्डव्याख्याने अष्टसप्ततितमः सर्गः ॥ ७८ ॥

हन्यामहमिमां पापां कैकेयीं दुष्टचारिणीम् । यदि मां धार्मिको रामो नासूयेन्मातृघातकम् ॥ २२ ॥ इमामपि हतां कुब्जां यदि जानाति राघवः । त्वां च मां च हि धर्मात्मा नाभिभाषिष्यते ध्रुवम् ॥ २३ ॥ भरतस्य वचः श्रुत्वा शत्रुघ्नो लक्ष्मणानुजः । न्यवर्त्तत ततो रोषात्तां मुमोच च मन्थराम् ॥ २४ ॥ सा पादमूले कैकेय्या मन्थरा निपपात ह । निश्वसन्ती सुदुःखार्त्ता कृपणं विललाप च ॥ २५ ॥ शत्रुघ्नविक्षेपविमूढसंज्ञां समीक्ष्य कुब्जां भरतस्य माता । शनैः समाश्वासयदार्त्तरूपां क्रौञ्चीं विलग्नामिव वीक्षमाणाम् ॥ २६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे अष्टसप्ततितमः सर्गः ॥ ७८ ॥

ततः प्रभातसमये दिवसे च चतुर्दशे । समेत्य राजकर्त्तारो भरतं वाक्यमब्रुवन् ॥ १ ॥
गतो दशरथः स्वर्गं यो नो गुरुतरो गुरुः । रामं प्रव्राज्य वै ज्येष्ठं लक्ष्मणं च महाबलम् ॥ २ ॥
त्वमद्य भव नो राजा राजपुत्र महायशः । सङ्गत्या नापराध्नोति राज्यमेतदनायकम् ॥ ३ ॥

तत इति । त्रयोदशदिवसपर्यन्तमपरक्रियाव्यापृतत्वाच्चतुर्दश इत्युक्तम् । समेत्य एकीभूय ॥ १ ॥ गुरुतरो गुरुः, परमगुरुरित्यर्थः ॥ २ ॥ " राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् " इति मातापित्रादेरपि राज्ञ एवान्तरङ्गरक्षकत्वोपदेशात् अनायकमपि एतद्राज्यं सङ्गत्या दैवयोगेन नापराध्नोति ।

मातृघातकमिति रामो मां नासूयेद्यदि न गर्हयेद्यदि तदा कैकेयीमपि हन्यामिति सम्बन्धः ॥ २२ ॥ इमामिति । त्वां च मां च नाभिभाषिष्यत इति शत्रुघ्नमब्रवी दिति पूर्वेण सम्बन्धः ॥२३–२५॥ शत्रुघ्नमिति । शत्रुघ्नविक्षेपविमूढसंज्ञां शत्रुघ्नविक्षेपः शत्रुघ्नेनेतस्ततः आकर्षणम् । विलग्नां यन्त्रादिना संयताम् ॥२६॥ इति श्रीमहे श्वरतीर्थ० श्रीरामायण० अयोध्याकाण्डव्याख्यायाम् अष्टसप्ततितमः सर्गः ॥ ७८ ॥ तत इति । राजकर्तारः राजाभिषेककर्तारः ॥१॥२॥ त्वमिति । सङ्गत्या सामन्ता

राज्यस्थजनजातमन्योन्यं न द्रुह्यतीत्यर्थः ॥ ३ ॥ प्रकृत्याभिमुख्यमप्यस्तीत्याह—आभिषेचनिकमिति । आभिषेचनिकम् अभिषेकप्रयोजनं पदार्थजातम् । स्वजनः अमात्यादिः । श्रेणयः नैगमाः प्रतीक्षन्त इति विपरिणामः ॥ ४ ॥ ५ ॥ भाण्डम् उपकरणम् ॥ ६ ॥ राजता राजत्वम् ॥ ७ ॥

आभिषेचनिकं सर्वमिदमादाय राघव । प्रतीक्षते त्वां स्वजनः श्रेणयश्च नृपात्मज ॥४॥ राज्यं गृहाण भरत पितृपैतामहं ध्रुवम् । अभिषेचय चात्मानं पाहि चास्मान्नरर्षभ ॥५॥ [एवमुक्तः शुभं वाक्यं द्युतिमान् सत्यवाक्छुचिः।] आभिषेचनिकं भाण्डं कृत्वा सर्वं प्रदक्षिणम् । भरतस्तं जनं सर्वं प्रत्युवाच धृतव्रतः ॥ ६ ॥ ज्येष्ठस्य राजता नित्यमुचिता हि कुलस्य नः । नैवं भवन्तो मां वक्तुमर्हन्ति कुशला जनाः ॥ ७ ॥ रामः पूर्वो हि नो भ्राता भविष्यति महीपतिः । अहं त्वरण्ये वत्स्यामि वर्षाणि नव पञ्च च ॥ ८ ॥ युज्यतां महती सेना चतुरङ्गमहाबला । आनयिष्याम्यहं ज्येष्ठं भ्रातरं राघवं वनात् ॥ ९ ॥ आभिषेचनिकं चैव सर्वमेतदुपस्कृतम् । पुरस्कृत्य गमिष्यामि रामहेतोर्वनं प्रति ॥ १० ॥ तत्रैव तं नरव्याघ्रमभिषिच्य पुरस्कृतम् । आनेष्यामि तु वै रामं हव्यवाहमिवाध्वरात् ॥ ११ ॥ न सकामां करिष्यामि स्वामिमां मातृगन्धिनीम् । वने वत्स्याम्यहं दुर्गे रामो राजा भविष्यति ॥ १२ ॥

वत्स्यामि रामप्रतिनिधित्वेनेति शेषः ॥ ८ ॥ युज्यतामिति । आनयिष्यामीत्यत्र इडार्षः ॥ ९ ॥ उपस्कृतं संस्कृतम् । उपकरणमितिवार्थः । रामहेतोः रामाभिषेकार्थम् ॥ १० ॥ पुरस्कृतं पूजितम् "पुरस्कृतः पूजिते स्यादभियुक्तेऽग्रतः कृते" इति वैजयन्ती । यद्वा पुरस्कृतं स्वजनदर्शनेनाभिमुखीकृतमित्यर्थः । अध्वरात् यागशालायाः । हव्यवाहं त्रेताग्निम् ॥ ११ ॥ मातृगन्धिनीं केवलमातृव्यपदेशाम् लेशमात्रमातृभावामिति वा । "गन्धो

मात्यादीनामैकमत्येन अनायकमप्येतद्राज्यं नापराध्नोति राज्यस्थजनजातमन्योन्यं न द्रुह्यतीत्यर्थः। यद्वा एवं राज्यमनायकमपि सङ्गत्या दैवगत्या नापराध्नोति न विनश्यति सर्वमपि राज्यं नायकरहितं सत् नश्यति, इदं तु राज्यं दैवयोगेन न नश्यति अतस्त्वं नो राजा भवेति सम्बन्धः ॥३॥ आभिषेचनिकमिति । श्रेणयः वीथिमुख्याः ॥ ४ ॥ ५ ॥ आभिषेचनिकं भाण्डम् अभिषेकोपयुक्तमङ्गलद्रव्यजातम् ॥ ६ ॥ ज्येष्ठस्येति । राजता राजत्वम् । आनयिष्यामि आनेष्यामि ॥ ७–९ ॥ उपस्कृतं संस्कृतम् ॥ १० ॥ तत्रेति । पुरस्कृतम् अग्रतः कृतम् । अध्वरात् यागशालायाः ॥ ११ ॥ मातृगन्धिनीम् केवलमातृव्यपदेशाम्, मातृसंज्ञामात्रामित्यर्थः ॥१२॥

लेशे महीगुणे" इति वैजयन्ती ॥ १२ ॥ क्रियतामिति । तत्समीपगमनायेति शेषः । विषमाणि निम्नोन्नतस्थलानि समानि क्रियन्ताम् । पथि दुर्गविचारकाः मार्गे दुर्गस्थलशोधकाः । यद्वा दुर्गाभिज्ञा रक्षिणः ॥ १३ ॥ रामहेतोः अनुत्तमं श्रीमद्वाक्यम् । एवं सम्भाषमाणं प्रत्युवाचेतिसम्बन्धः ॥ १४ ॥ पद्मा पद्मालया श्रीः ते उपतिष्ठतां त्वत्समीपे अनपायिनी तिष्ठत्वित्यर्थः । नृपसुते नृपसुताय । स एव सुतः ज्येष्ठत्वात् । "इतरे कामजाः

क्रियतां शिल्पिभिः पन्थाः समानि विषमाणि च । रक्षिणश्चानुसंयान्तु पथि दुर्गविचारकाः ॥ १३ ॥ एवं सम्भाषमाणं तं रामहेतोर्नृपात्मजम् । प्रत्युवाच जनः सर्वः श्रीमद्वाक्यमनुत्तमम् ॥ १४ ॥ एवं ते भाषमाणस्य पद्मा श्रीरुपतिष्ठताम् । यस्त्वं ज्येष्ठे नृपसुते पृथिवीं दातुमिच्छसि ॥ १५ ॥ अनुत्तमं तद्वचनं नृपात्मजप्रभाषितं संश्रवणे निशम्य च । प्रहर्षजास्तं प्रति बाष्पबिन्दवो निपेतुरार्याननेत्रसम्भवाः ॥ १६ ॥ ऊचुस्ते वचनमिदं निशम्य हृष्टाः सामात्याः सपरिषदो वियातशोकाः । पन्थानं नरवर भक्तिमान् जनश्च व्यादिष्टास्तव वचनाच्च शिल्पिवर्गः ॥ १७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकोनाशीतितमः सर्गः ॥ ७९ ॥

स्मृताः" इति वचनादिति भावः ॥ १५ ॥ संश्रवणे रामानयनप्रतिज्ञाविषये । "आगूःसङ्गरसन्धाः प्रतिश्रवः संश्रवः प्रतिज्ञा च" इति हलायुधः । निशम्य स्थितानामिति शेषः । आर्याननेत्रसम्भवा इत्यत्र आर्येत्यविभक्तिकनिर्देशः । आर्याणामिति यावत् ॥ १६ ॥ हे नरवर ! तव वचनात् शिल्पिवर्गः भक्तिमान् जनः रक्षकश्च पन्थानं प्रति व्यादिष्टाः आज्ञप्ताः इतीदमूचुरिति सम्बन्धः ॥ १७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोनाशीतितमः ॥ ७९ ॥

एवमिति । रामहेतोरनुत्तमं श्रीमद्वाक्यमेवं सम्भाषमाणं तं प्रत्युवाचेति सम्बन्धः ॥ १४ ॥ एवमिति । पद्मा पद्महस्ता ते उपतिष्ठताम् त्वत्समीपे अनपायिनी भवत्वित्यर्थः । ज्येष्ठे नृपसुत इति चतुर्थ्यर्थे सप्तमी ॥ १५ ॥ अनुत्तममिति । संश्रवणे रामानयनप्रतिज्ञाविषये अनुत्तमं नृपात्मजप्रभाषितं तद्वचनं निशम्य । तं प्रति भरतमुद्दिश्य प्रहर्षजाः आर्याननेत्रसम्भवाः बिन्दवः निपेतुरिति सम्बन्धः ॥ १६ ॥ ऊचुरिति । इदं क्रियतां शिल्पिभिः पन्था इत्युक्तं भरतवाक्यं निशम्य ते सामात्या हृष्टा ऊचुः । वचनप्रकारमेवाह पन्थानमिति । व्यादिष्टः आज्ञप्तः ॥ १७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां एकोनाशीतितमः सर्गः ॥ ७९ ॥

॥ १३ ॥ एवमिति । रामहेतोरनुत्तमं श्रीमद्वाक्य विषमाणि विषमस्थलानि समानि क्रियन्ताम् । पथि दुर्गविचारकाः पथि दुर्गमेषु विषमेषु जनान् चारयन्ति तथा ॥ १३ ॥

अथेत्यादि। भूमिप्रदेशज्ञाः निम्नोन्नतादिप्रदेशज्ञाः। यद्वा नानादेशविदः। सूत्रकर्मविशारदाः सूत्रकर्मणि निर्जलप्रदेशेष्वगाधवापीकूपादिजलोद्धारसूत्र कर्मणि विशारदाः समर्थाः। यद्वा सूत्रैः कर्म सूत्रकर्म तत्र विशारदाः समर्थाः, तन्तुवाया इत्यर्थः। स्वकर्माभिरताः मार्गरक्षणादिस्वकर्मसावधानाः।

अथ भूमिप्रदेशज्ञाः सूत्रकर्मविशारदाः। स्वकर्माभिरताः शूराः खनका यन्त्रकास्तथा ॥ १ ॥
कर्मान्तिकाः स्थपतयः पुरुषा यन्त्रकोविदाः। तथा वर्द्धकयश्चैव मार्गिणो वृक्षतक्षकाः ॥ २ ॥
कूपकाराः सुधाकारा वंशकर्मकृतस्तथा। समर्था ये च द्रष्टारः पुरतस्ते प्रतस्थिरे ॥ ३ ॥
स तु हर्षात्तमुद्देशं जनौघो विपुलः प्रयान्। अशोभत महावेगः समुद्र इव पर्वणि ॥ ४ ॥

खनकाः खननोपजीविनः, सुरङ्गादिकृत इत्यर्थः। यन्त्रकाः महाकुल्यादितरणाय काष्ठादिना उपयन्त्रप्रवर्तकाः वागुरिका वा। कर्मान्तिकाः कर्मणि अन्तोऽवसानमेषामस्तीति कर्मान्तिकाः परिकल्पितकर्मकारिणः, भृतिजीविन इति यावत्। स्थपतयः कारवः "स्थपतिः कारुभेदेपि" इत्यमरः। पुरुषाः अध्यक्षराजपुरुषाः। यन्त्रकोविदाः क्षेपणीयादियन्त्रकरणसमर्थाः। वर्द्धकयस्तक्षाणः। "तक्षा तु वर्द्धकिः" इत्यमरः। मार्गिणः मार्गसमी करणसमर्थाः। वृक्षतक्षकाः मार्गनिरोधकवृक्षच्छेदकाः। कूपकाराः कूपनिर्माणसमर्थाः। सुधाकाराः प्रासादस्थलक्षित्यादिलेपनकराः। वंशकर्मकृतः वंशैः कटपिटकशूर्पादिकर्मकराः। समर्थाः कार्यान्तरेषु समर्थाः। द्रष्टारः पूर्वानुभूतमार्गाः, मार्गप्रदर्शका इति यावत् ॥ १–३ ॥ हर्षात् कर्मकरणस्य दुःखात्मकत्वेपि जनौघस्य हृष्टत्वं रामदर्शनकुतूहलात्। तमुद्देशं प्रयान् रामाधिष्ठितप्रदेशमुद्दिश्य गच्छन् ॥ ४ ॥

अथेत्यादि। सूत्रकर्मविशारदाः शिबिरादिनिर्माणे सूत्रग्रहणकुशलाः। यद्वा सूत्रक्रियमाणं कर्म तत्र विशारदाः, तन्तुवाया इत्यर्थः। खनकाः खननेनोपजीविनः। यन्त्रकाः मृगपक्षिग्रहणसाधनयन्त्रकर्तारः, वागुरिका इति यावत्। कर्मान्तिकाः कर्मणाम् अन्तः अवसानमस्तीति तथा, भृतिजीवना इत्यर्थः। स्थपतयः पुरादि कृतः प्रधानवर्धकयः पुरुषाः यन्त्रकोविदाः क्षेपणीयादियन्त्रकरणकुशलाः जलयन्त्रादिकृतो वा। वर्धकयस्तक्ष्णाः मार्गसमीकरणसमर्थाः। वृक्षतक्षकाः मार्ग निरोधकवृक्षच्छेदकाः। सुधाकाराः प्रासादादिषु सुधालेपनकारकाः। वंशकर्मकृतः वंशैः कटशूर्पादिकर्मकृतः। द्रष्टारः मार्गप्रदर्शकाः ॥१–३॥ स त्विति। हर्षात्

ते मार्गशोधकाः । स्ववारं समास्थाय स्वस्वशोध्यमार्गशोधने अन्योन्यपर्यायकरणं प्राप्य " निवहावसरौ वारौ " इत्यमरः । विविधोपेतैः विविधाः नानाप्रकाराः तानुपेतैः, नानाविधैरित्यर्थः । करणैः खनित्रपिटककुठारादिभिः सह पुरस्तात् संप्रतस्थिरे ॥ ५ ॥ लताः मार्गावरणीभूताः शाखाः

ते स्ववारं समास्थाय वर्त्मकर्मणि कोविदाः । करणैर्विविधोपेतैः पुरस्तात् सम्प्रतस्थिरे ॥ ५ ॥ लता वल्लीश्च गुल्मांश्च स्थाणूनश्मन एव च । जनास्ते चक्रिरे मार्गं छिन्दन्तो विविधान् द्रुमान् ॥ ६ ॥ अवृक्षेषु च देशेषु केचिद्वृक्षानरोपयन् । केचित् कुठारैष्टङ्कैश्च दात्रैश्छिन्दन् क्वचित् क्वचित् ॥ ७ ॥ अपरे वीरणस्तम्बान् बलिनो बलवत्तराः । विधमन्ति स्म दुर्गाणि स्थलानि च ततस्ततः ॥ ८ ॥ अपरेऽपूरयन् कूपान् पांसुभिः श्वभ्रमायतम् । निम्नभागांस्ततः केचित्समांश्चक्रुः समन्ततः ॥ ९ ॥

" समे शाखालते " इत्यमरः । वल्लीः वीरुधः । गुल्मान् कक्षान् । स्थाणून् शंकून् । " स्थाणुरस्त्री ध्रुवः शङ्कुः " इत्यमरः ॥ ६ ॥ टङ्कैः पाषाणभेदनादिसाधनैः । "टङ्कः पाषाणदारणः" इत्यमरः । दात्रैर्लवित्रैः "दात्रं लवित्रम्" इत्यमरः । छिन्दन् अच्छिन्दन् ॥ ७ ॥ वीरणस्तम्बान् वीरणतृणकाण्डान् । विधमन्ति स्म अदहन् । "ध्मा शब्दाग्निवक्रसंयोगयोः" इत्यस्मात् धातोर्धमादेशः। बलिनः रूढमूलान्, छेत्तुमशक्यानित्यर्थः। दुर्गाणि गन्तुमशक्यानि निम्नोन्नतस्थलानीत्यर्थः । स्थलानि समानि चक्रुरिति शेषः ॥ ८ ॥ कूपान् मार्गस्थान् । आयतं श्वभ्रमवटं च पांसुभिरपूरयन् । निम्नभागांश्च पांसुभिः समांश्चक्रुः, प्रपूर्य्यैति शेषः । यद्वा पूर्वश्लोके दुर्गाणि तृणलतादिच्छन्नानि स्थलानि च विधमन्ति स्मेति योजना । अतो न पुनरुक्तिः ॥ ९ ॥

दुःखात्मकत्वेपि जनौघस्य हृष्टत्वं रामदर्शनकुतूहलात् । तमुद्देशं प्रयान् रामाधिष्ठितप्रदेशमुद्दिश्य गच्छन् जनौघः अशोभत ॥ ४ ॥ त इति । ते मार्गशोधकाः पूर्वोक्ताः स्ववारं स्वस्वसमूहम् । समास्थाय प्राप्य । "वारसङ्घातसञ्चयाः" इत्यमरः । विविधोपेतैः पिटकखनित्रकुठारादिनानाप्रकारोपेतैः करणैः कर्म कर्तुं पुरस्तात् सम्प्रतस्थिर इति योजना ॥ ५ ॥ लता इति । लताः शाखाः " समे शाखालते " इत्यमरः ॥ ६ ॥ अवृक्षेष्विति । टङ्कैः पाषाणदारकैः दात्रैः लवित्रैः ॥ ७ ॥ अपरे इति । अपरे बलवत्तराः दुर्गाणि स्थलानि विषमभूप्रदेशान् प्राप्य, तत्रत्यानिति शेषः । बलिनः रूढमूलान् वीरणस्तम्बान् उशीरजातितृणविशेषान् ततस्तत

बन्धनीयान् जलप्रदेशान् । बबन्धुः सेनासन्तरणार्थं सेतुभिर्बबन्धुः । क्षोद्यान् क्षोदार्हान् शर्कराभूयिष्ठप्रदेशान् संचुक्षुदुः चूर्णयामासुः । भेदनीयान् कच्छादिबहुजलप्रदेशान् जलनिर्गमनार्थं बिभिदुः ॥ १० ॥ परिवाहान् अल्पप्रवाहान् जलोच्छ्वासान् । बन्धनेन बहूदकान् चक्रुः । यद्वा परिवाहान्

बबन्धुर्बन्धनीयांश्च क्षोद्यान् सञ्चुक्षुदुस्तदा । बिभिदुर्भेदनीयांश्च तांस्तान् देशान्नरास्तदा ॥ १० ॥ अचिरेणैव कालेन परिवाहान् बहूदकान् । चक्रुर्बहुविधाकारान् सागरप्रतिमान् बहून् ॥ ११ ॥ निर्जलेषु च देशेषु खानयामासु रुत्तमान् । उदपानान् बहुविधान् वेदिकापरिमण्डितान् ॥ १२ ॥ ससुधाकुट्टिमतलः प्रपुष्पितमहीरुहः । मत्तोद्घुष्ट द्विजगणः पताकाभिरलंकृतः ॥ १३ ॥ चन्दनोदकसंसिक्तो नानाकुसुमभूषितः । बह्वशोभत सेनायाः पन्थाः सुरपथोपमः ॥ १४ ॥ आज्ञाप्याथ यथाज्ञप्ति युक्तास्तेऽधिकृता नराः । रमणीयेषु देशेषु बहुस्वादुफलेषु च ॥ १५ ॥ यो निवेशस्त्वभिप्रेतो भरतस्य महात्मनः । भूयस्तं शोभयामासुर्भूषाभिर्भूषणोपमम् ॥ १६ ॥

दूरस्थतटाकप्रवर्त्तितान् बहुविधाकारान् सोपानावताराद्यनेकप्रकारानित्यर्थः ॥ ११ ॥ उदपानान् कूपान् । "पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा" इत्यमरः । बहुविधान् नरगजतुरगादिपानयोग्यसरोवाप्यादिभेदेन बहुविधान् । वेदिकापरिमण्डितान् जलपानकाले विश्रान्त्यर्थं तीरे वेदिकालंकृतान् ॥ १२ ॥ ससुधेत्यादिश्लोकद्वयमेकान्वयम् । सुधालिप्तकुट्टिमतलोपेतः "कुट्टिमोऽस्त्री निबद्धा भूः" इत्यमरः । प्रपुष्पितमहीरुहः जलसेचनेनेति शेषः । चन्दनोदकसंसिक्तः विश्रान्तिप्रदेशेषु चन्दनयुक्तवारिसिक्तः । नानाकुसुमभूषितः प्रकीर्णनानापुष्पशोभितः ॥१३॥१४॥ अथ मार्गकरणानन्तरम् । अधिकृताः मार्गशिबिरादिकरणे नियुक्ताः । युक्ताः परस्परं युक्ताः । बहुस्वादुफलेषु रमणीयेषु देशेषु भरतस्य यो निवेशः यादृशाकारविशिष्टो

विधमन्ति विक्षेपन्ति, छिन्दन्तीति यावत् । इति योजना ॥ ८ ॥ ९ ॥ बबन्धुरिति । बन्धनीयान् बबन्धुः पल्वलक्षुद्रनदीदुर्गमप्रदेशान् सेतुभिर्बबन्धुरित्यर्थः । क्षोद्यान् क्षुद्रशिलाभूयिष्ठप्रदेशान् सञ्चुक्षुदुः चूर्णयामासुः । भेदनीयान् तटाकादिजलप्रदेशान् जलनिर्गमार्थं बिभिदुः ॥ १० ॥ अचिरेणेति । परिवाहान् अल्पप्रवाहान् बन्धनेन बहूदकान् चक्रुः ॥ ११ ॥ निर्जलेष्विति । उदपानान् कूपान् । वेदिकापरिमण्डितान् वेदिकाभिः परितो मण्डितान् ॥ १२ ॥ ससुधेत्यादिश्लोकद्वयमेकं वाक्यम् । सुधाकुट्टिमतलः सुधालिप्तबद्धभूप्रदेशः ॥ १३ ॥ १४ ॥ आज्ञाप्येत्यादिश्लोकद्वयमेकं वाक्यम् । अथ मार्गकरणानन्तरम् अधिकृताः मार्गशिबिरादिकरण नियुक्ताः परस्परं सङ्गताः । बहुस्वादुफलेषु रमणीयेषु देशेषु भरतस्य यो निवेशः यादृशाकारविशिष्टो निवेशः अभिप्रेतः तं तादृशसन्निवेशं यथाज्ञप्ति यथामति आज्ञाप्य कर्तुमिति शेषः । भूषणोपमं भूषणसदृशम्, अतिरमणीयमिति यावत् । भूषाभिः वितानकनककलशध्वजादिभिः भूयो भूषयामासुरिति योजना ॥१५॥१६॥

निवेशोऽभिप्रेतः अभिमतस्तं तादृशसंनिवेशम्, यथाज्ञप्ति यथामति आज्ञाप्य कर्तुं नियम्य भूषणोपमं भूषणभूतम्, स्वतोलंकृतमितियावत् । निवेशं भूषाभिः वितानकनककलशध्वजादिभिः भूयोपि शोभयामासुः भूषयामासुः॥१५॥१६॥ तद्विदः वास्तुशास्त्रज्ञाः । निवेशान् शिबिराणि ॥१७॥ बह्वित्या दिश्लोकत्रयमेकं वाक्यम् । तत्र मार्गे । बहुपांसुचयाः पांसुशब्देनात्र सूक्ष्मसिकता उच्यन्ते । बहवः पांसुचया येषु ते तथोक्ताः । परिखापरिवारिताः खेयै

नक्षत्रेषु प्रशस्तेषु मुहूर्त्तेषु च तद्विदः। निवेशान् स्थापयामासुर्भरतस्य महात्मनः ॥१७॥ बहुपांसुचयाश्चापि परिखा परिवारिताः। तत्रेन्द्रकीलप्रतिमाः प्रतोलीवरशोभिताः ॥ १८ ॥ प्रासादमालावितताः सौधप्राकारसंवृताः। पताका शोभिताः सर्वे सुनिर्मितमहापथाः ॥ १९ ॥ विसर्पद्भिरिवाकाशे विटङ्काग्रविमानकैः। समुच्छ्रितैर्निवेशास्ते बभुः शक्रपुरोपमाः ॥ २० ॥ जाह्नवीं तु समासाद्य विविधद्रुमकाननाम् । शीतलामलपानीयां महामीनसमाकुलाम् ॥ २१ ॥ सचन्द्रतारागणमण्डितं यथा नभः क्षपायाममलं विराजते । नरेन्द्रमार्गः स तथा व्यराजत क्रमेण रम्यः शुभशिल्पिनिर्मितः ॥२२॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमदयोध्याकाण्डे अशीतितमः सर्गः॥८०॥

वृंताः इन्द्रकीलप्रतिमाः इन्द्रकीलपर्वतसदृशाः । प्रतोलीवरशोभिताः । प्रतोली वीथिः । "रथ्या प्रतोली विशिखा" इत्यमरः । प्रासादमालावितताः प्रासादा देवगृहाणि "प्रासादो देवभूभुजाम्" इत्यमरः । सौधप्राकारसंवृताः सौधाः राजगृहाणि । यद्वा सौधाः सुधाधवलिताः "तेन रक्तं रागात्" इत्यण् । समुच्छ्रितैः उन्नतैः अतएव आकाशे विसर्पद्भिरिव स्थितैः । विटङ्काग्रविमानकैः विटङ्कयुक्ताग्रविमानैः । "कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्" इत्यमरः । विमानानि सप्तभूमिकाः प्रासादास्तैर्बभुः । शक्रपुरोपमाः अमरावतीसदृशाः ॥१८-२०॥ समासाद्य अवधीकृत्य, तत्पर्यन्तमित्यर्थः । निवेशा बभुरिति पूर्वेणान्वयः । उत्तरेण वा गङ्गाविशेषणैस्ततःपरं निवेशकरणाशक्यत्वं द्योत्यते ॥ २१॥ सचन्द्रेति । सचन्द्रो यस्तारागणः तेन मण्डितम् ॥ २२॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अशीतितमः सर्गः ॥ ८० ॥

नक्षत्रेष्विति । निवेशान् शिबिराणि ॥ १७ ॥ बह्वित्यादिश्लोकत्रयमेकं वाक्यम् । बहुपांसुचयाः बहवः पांसुसदृशसिकतामयाः येषु ते तथोक्ताः । इन्द्रकीलप्रतिमाः इन्द्रकीलपर्वतसदृशाः । प्रतोलीपरिशोभिताः प्रतोली रथ्या । विटङ्काग्रविमानकैः विटङ्को गृहकपोतपालिका तदुपरि निर्मितैः शिलागृहैरित्यर्थः । यद्वा विटङ्कवद्भिरग्रविमानैः समुच्छ्रितैः निवेशास्ते बभुः ॥ १८-२० ॥ जाह्नवीमित्यादिश्लोकद्वयमेकं वाक्यम् । जाह्नवीं समासाद्य स नरेन्द्रमार्गो व्यराजतेतिसम्बन्धः॥ २१ ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायाम् अशीतितमः सर्गः ॥ ८० ॥

तत इति । नान्दीमुखीं रामानयनाभ्युदयप्रारम्भयुक्ताम् । यद्वा भरताभिषेकाय वसिष्ठेन कृतनान्दीमुखाभ्युदययुक्ताम् । यद्वा शोकविगमाय कृताभ्युदयामित्यर्थः । रात्रिं रात्रौ, अपररात्र इत्यर्थः । यद्वा रात्रिं प्राप्येतिशेषः । मङ्गलसंहितैः मङ्गलशब्दसहितैः ॥ १ ॥ कोणो वादनदण्डः । यामावसानसूचको

ततो नान्दीमुखीं रात्रिं भरतं सूतमागधाः । तुष्टुवुर्वाग्विशेषज्ञाः स्तवैर्मङ्गलसंहितैः ॥ १ ॥ सुवर्णकोणाभिहतः प्राणदद्यामदुन्दुभिः । दध्मुः शङ्खांश्च शतशो नादांश्चोच्चावचस्वरान् ॥ २ ॥ स तूर्यघोषः सुमहान् दिवमापूरयन्निव । भरतं शोकसन्तप्तं भूयः शोकैररन्ध्रयत् ॥ ३ ॥ ततः प्रबुद्धो भरतस्तं घोषं संनिवर्त्य च । नाहं राजेति चाप्युक्त्वा शत्रुघ्नमिदमब्रवीत् ॥ ४ ॥ पश्य शत्रुघ्न कैकेय्या लोकस्यापकृतं महत् । विसृज्य मयि दुःखानि राजा दशरथो गतः ॥ ५ ॥ तस्यैषा धर्मराजस्य धर्ममूला महात्मनः । परिभ्रमति राजश्रीर्नौरिवाकर्णिका जले ॥ ६ ॥ यो हि नः सुमहान्नाथः सोऽपि प्रव्राजितो वनम् । अनया धर्ममुत्सृज्य मात्रा मे राघवः स्वयम् ॥ ७ ॥ इत्येवं भरतं प्रेक्ष्य विलपन्तं विचेतनम् । कृपणं रुरुदुः सर्वाः सस्वरं योषितस्तदा ॥ ८ ॥ तथा तस्मिन् विलपति वसिष्ठो राजधर्मवित् । सभामिक्ष्वाकुनाथस्य प्रविवेश महायशाः ॥ ९ ॥

दुन्दुभिः यामदुन्दुभिः । प्राणदत् नदति स्म । नाद्यन्ते एभिरिति नादाः काहल्यादयः तान् । उच्चावचस्वरान् निम्नोन्नतस्वरान् । मन्द्रमध्यमताररूपेण नानास्वरानित्यर्थः ॥२॥ अरन्ध्रयत् व्यदारयत् । अरन्धयदितिपाठे–अपचत् अतपदित्यर्थः॥३॥४॥ कैकेय्या हेतुभूतया जायमानं लोकस्य सूतमागधादेः अपकृतम् अनुचितं कर्म पश्य । यद्वा लोकस्य जनस्य कैकेय्या महद्यथाभवति तथाऽपकृतम् । तदेवाह विसृज्येत्यादि ॥ ५ ॥ राजश्रीः प्रधाने राजनि वर्त्तमाने ज्येष्ठपुत्रस्य युवराजत्वेन प्राप्तेत्येवमविच्छिन्ना राज्यलक्ष्मीः । अकर्णिका कर्णोऽरित्रं "कर्णः श्रोत्रमरित्रं च" इति भुवनः ।

तत इति । नान्दीमुखीं रामानयनाभ्युदयप्रारम्भयुक्तां रात्रिं । रात्रौ अपररात्र इति यावत् ॥ १ ॥ सुवर्णेति । सुवर्णकोणाभिहतः सुवर्णदण्डाभिहतः । यामदुन्दुभिः यामनिर्गमनसूचको दुन्दुभिः । सान्ध्यान् मङ्गलादीन् । अरन्ध्रयत् व्यदलयत् ॥ २–५ ॥ तस्येति । राजपरम्परया आगता श्रीः । अकर्णिका कर्णधररहिता ॥६–९॥

सोऽस्यास्तीति कर्णी स एव कर्णिकः, कर्णधारक इति यावत् । तद्रहिता ॥६-९॥ शातकुम्भमयीं स्वर्णमयीम् । मणिरत्नसमाकुलां मणिश्रेष्ठसमावृतां "रत्नं स्वजातिश्रेष्ठेऽपि" इत्यमरः । यद्वा मणयो मुक्ताः "मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च" इत्यमरः । रत्नानि पद्मरागादीनि । अत्र सभा



शातकुम्भमयीं रम्यां मणिरत्नसमाकुलाम् । सुधर्मामिव धर्मात्मा सगणः प्रत्यपद्यत ॥ १० ॥ स काञ्चनमयं पीठं सुखास्तरणसंवृतम् । अध्यास्त सर्ववेदज्ञो दूताननुशशास च ॥ ११ ॥ ब्राह्मणान् क्षत्रियान् वैश्यानमात्यान् गणवल्लभान् । क्षिप्रमानयताव्यग्राः कृत्यमात्ययिकं हि नः ॥ १२ ॥ सराजभृत्यं शत्रुघ्नं भरतं च यशस्विनम् । युधाजितं सुमन्त्रं च ये च तत्र हिता जनाः ॥ १३ ॥ ततो हलहलाशब्दः सुमहान् समपद्यत । रथैरश्वैर्गजैश्चापि जनानामुपगच्छताम् ॥ १४ ॥ ततो भरतमायान्तं शतक्रतुमिवामराः । प्रत्यनन्दन् प्रकृतयो यथा दशरथं तथा ॥ १५ ॥ ह्रद इव तिमिनागसंवृतः स्तिमितजलो मणिशङ्खशर्करः । दशरथसुतशोभिता सभा सदशरथेव बभौ यथापुरा ॥ १६ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

॥ १० ॥ ११ ॥ गणवल्लभान् गणाध्यक्षान् । आत्ययिकम् अत्ययः कृच्छ्रं तत्र भवमात्ययिकम्, यत्नसाध्यमिति विशेष्यम् । सगणः सशिष्यगणः ॥ १० ॥ ११ ॥ गणवल्लभान् गणाध्यक्षान् । आत्ययिकम् अत्ययः कृच्छ्रं तत्र भवमात्ययिकम्, यत्नसाध्यमित्यर्थः ॥ १२ ॥ सराजभृत्यं राजान्तरङ्गभृत्यसहितम् । युधाजिदिति विजयाख्यमन्त्रिणो नामान्तरं सुमन्त्रशब्दसाहचर्यात् । ये च तत्र भरते हिताः हितपराः जनाः तानप्यानयतेति पूर्वेण सम्बन्धः ॥ १३–१५ ॥ शर्कराशब्देनात्र स्थूलवालुका उच्यन्ते । ह्रदश्च समुद्रसमीपस्थः । तिमिशङ्खादिसाहचर्यात् । अत्र स्तिमितजलेन वसिष्ठस्य तिमिनागाभ्यां भरतशत्रुघ्नयोर्मण्यादिभिरमात्यादीनां च साम्यम् ॥१६॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकाशीतितमः सर्गः ॥ ८१ ॥

शातकुम्भेति । मणिरत्नसमाकुलां मणिश्रेष्ठनिबिडाम् । सगणः सशिष्यगणः ॥ १० ॥ ११ ॥ गणवल्लभान् सेनानायकान् । आत्ययिकम् अत्ययः कृच्छ्रं तत्र भवमात्ययिकम्, यत्नसाध्यमित्यर्थः ॥ १२ ॥ ये हिता जनाः तानानयेति पूर्वेण सम्बन्धः । युधाजिदिति कश्चन मन्त्री ॥ १३–१५ ॥ ह्रद इवेति । शर्कराशब्देन स्थूलवालुका उच्यन्ते ॥ १६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायाम् एकाशीतितमः सर्गः ॥ ८१ ॥

तामिति । प्रग्रहां नियमवतीम् । यद्वा शुक्रबृहस्पत्यादिप्रकृष्टग्रहयुक्ताम्, तदा निशाविशेषणमिदम् ॥ १ ॥ आसनानि विशताम् आसनेषूपविशता मित्यर्थः ॥ २ ॥ सेति । घनापाये वर्षापगमे, शरदीति यावत् । भरताभिषेकाय सर्वे अलंकृताः समागता इति भावः ॥ ३ ॥ प्रेक्ष्य संवादार्थमवलोक्य

तामार्यगणसम्पूर्णां भरतः प्रग्रहां सभाम् । ददर्श बुद्धिसम्पन्नः पूर्णचन्द्रो निशामिव ॥ १ ॥ आसनानि यथान्याय मार्याणां विशतां तदा । वस्त्राङ्गरागप्रभया द्योतिता सा सभोत्तमा ॥२॥ सा विद्वज्जनसम्पूर्णा सभा सुरुचिरा तदा । अदृश्यत घनापाये पूर्णचन्द्रेव शर्वरी ॥ ३ ॥ राज्ञस्तु प्रकृतीः सर्वाः समग्राः प्रेक्ष्य धर्मवित् । इदं पुरोहितो वाक्यं भरतं मृदु चाब्रवीत् ॥ ४ ॥ तात राजा दशरथः स्वर्गतो धर्ममाचरन् । धनधान्यवतीं स्फीतां प्रदाय पृथिवीं तव ॥ ५ ॥ रामस्तथा सत्यधृतिः सतां धर्ममनुस्मरन् । नाजहात् पितुरादेशं शशी ज्योत्स्नामिवोदितः ॥ ६ ॥ पित्रा भ्रात्रा च ते दत्तं राज्यं निहतकण्टकम् । तद्भुङ्क्ष्व मुदितामात्यः क्षिप्रमेवाभिषेचय ॥७॥ उदीच्याश्च प्रतीच्याश्च दाक्षिणात्याश्च केवलाः । कोट्यापरान्ताः सामुद्रा रत्नान्यभिहरन्तु ते ॥ ८ ॥

॥ ४ ॥ तात वत्स ! धर्मं सत्यपरिपालनरूपम् । तव तुभ्यम् ॥ ५ ॥ तथा पितृवत् सत्ये धृतिः प्रीतिर्यस्य स सत्यधृतिः। "धृङ् प्रीतौ" इति धातोः स्त्रियां क्तिन् प्रत्ययः । सतां पितृनिर्देशवर्त्तिनाम् । धर्मं पितृवचनपरिपालनरूपम् । " जीवतोर्वाक्यकरणात् प्रत्यब्दं भूरिभोजनात् । गयायां पिण्ड दानाच्च त्रिभिः पुत्रस्य पुत्रता ॥" इति वचनात् ॥ ६ ॥ पित्रेति । अभिषेचय आत्मानमिति शेषः ॥७॥ उदीच्या इति प्राच्या इत्यपि सिद्धम् । केवलाः सिंहासनादिरहिता इत्यपरान्तादिविशेषणम् । अपरान्ताः अपरान्तदेशवासिनो यवनाः । कोट्या कोटिसङ्ख्यया उपलक्षितानि रत्नानि । सामुद्राः

तामिति । प्रग्रहां निभृताम् । यद्वा शुक्रबृहस्पत्यादिप्रकृष्टग्रहयुक्ताम् ॥ १ ॥ आसनानि विशताम् आसनेषूपविशतामित्यर्थः ॥ २ ॥ सेति । घनापाये वर्षापगमे ॥ ३ ॥ ४ ॥ धर्ममाचरन् धर्मं सत्यपरिपालनरूपम् ॥ ५ ॥ राम इति तथा सत्यधृतिः तथा पितृवत्सत्यवर्ती । सतां धर्मं पितृनिदेशवर्तिनां धर्मं पितृवचनपरि पालनरूपम् ॥ ६ ॥ अभिषेचय आत्मानमिति शेषः ॥ ७ ॥ केवलाः प्रत्येकरि[illegible]श्वरा इत्यर्थः । कोट्यापरान्ता इत्यत्र परान्ता इति छेदः । कोट्या उपलक्षिताः परान्ताः प्राचीदिगन्तवासिनः । सामुद्राः समुद्रद्वीपवासिन इत्यर्थः ॥ ८ ॥

समुद्रद्वीपवासिनः ॥ ८ ॥ धर्मज्ञः कुलक्रमागतज्येष्ठाभिषेचनरूपधर्मज्ञः । धर्मकाङ्क्षया ज्येष्ठानुवर्त्तनरूपधर्मलिप्सया । रामं मनसा जगाम, सस्मारे त्यर्थः ॥ ९ ॥ स इति । बाष्पकलया अधर्मस्मरणात् रामस्मरणाद्वा । बाष्पेणाव्यक्तया कलहंसस्वर इत्यनेन अभिनिवेशविशेषो द्योत्यते ।

तच्छ्रुत्वा भरतो वाक्यं शोकेनाभिपरिप्लुतः । जगाम मनसा रामं धर्मज्ञो धर्मकांक्षया ॥ ९ ॥
स बाष्पकलया वाचा कलहंसस्वरो युवा । विललाप सभामध्ये जगर्हे च पुरोहितम् ॥ १० ॥
चरितब्रह्मचर्यस्य विद्यास्नातस्य धीमतः । धर्मे प्रयतमानस्य को राज्यं मद्विधो हरेत् ॥ ११ ॥
कथं दशरथाज्जातो भवेद्राज्यापहारकः । राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि ॥ १२ ॥

युवेत्यनेन भोगकालेपि भोगोपकरणजिहासा चित्रमिति ऋषिः स्तौति । सभामध्ये जगर्हे 'नियमातिक्रमं रहसि बोधयेत्' इति नियमोपि भग्नः । अति क्रूरमधर्मं नियुक्तवानिति दुःखपारवश्यात् रहः सदोविभागविस्मरणेन गर्हितवान् । पुरोहितं जगर्हे सम्यक् त्वयास्य कुलस्य भाविहितमवेक्षित मिति निनिन्द । सभामध्ये बहवः समेत्य ममैकस्य पारतन्त्र्यं किमपजिहीर्षन्ति सभामध्ये किमवनेपि मद्धनं मुष्णन्ति ॥ १० ॥ चरितेति । चरितब्रह्मचर्यस्य अनुष्ठितगुरुकुलवासस्य । विद्यास्नातस्य "वेदमधीत्य स्नायात्" इति स्मृतिप्रक्रियया निखिलवेदाध्ययनानन्तरभाविस्नान कर्मयुक्तस्य । धीमतः तदर्थज्ञस्य । धर्मे प्रयतमानस्य तदर्थानुष्ठानवतः । मद्विधः शास्त्रवश्यो मादृशः ॥ ११ ॥ मद्विध इत्येतद्विवृणोति—कथमित्या दिना । रामविरहोत्तरक्षणे मृतस्य कुक्षौ जातोऽहं कथं तत्त्यक्तं राज्यं परिगृह्णीयाम् ? मत्स्वरूपपर्यालोचनयापि नाहं राज्यार्ह इत्याह राज्यं चेति । शेषवस्तुष्वेकमेकस्य किमीष्टे प्रत्युत राज्यं वा किमिति मां नेष्टे राज्यं चाहं च रामस्य राज्यमपि रामसम्बन्धि अहमपि च रामसम्बन्धी, उभयमपि रामशेषमित्यर्थः । धर्मं वक्तुमिहार्हसि लोके स्वपित्रादिकं निगृह्य स्वयं राज्यस्य कर्त्तारः सन्ति तदेतद्व्यक्तावपि भवतीति मा मंस्थाः । इह मद्विषये ।



तच्छ्रुत्वेति । धर्मज्ञः कुलक्रमागतज्येष्ठाभिषेचनरूपधर्मज्ञः । धर्मकाङ्क्षया ज्येष्ठानुवर्तनरूपधर्मलिप्सया रामं मनसा जगाम सस्मारेत्यर्थः ॥ ९ ॥ स इति । सभामध्ये जगर्हे च पुरोहितम् अधर्मे मां नियुक्तवानिति दुःखपारवश्याद्गर्हितवान ॥ १० ॥ चरितेति । विद्यास्नातस्य सर्ववेदाध्ययनानन्तरभाविस्नान युक्तस्य । मद्विधः शास्त्रवश्यो मादृशः ॥ ११ ॥ राज्यं च रामसम्बन्धि अहमपि रामसम्बधि उभयमपि रामशेषमित्यर्थः । अतो धर्मं वक्तुमर्हसि ॥ १२–१५ ॥

मत्प्रकृतिं ज्ञात्वा धर्मं वक्तुमर्हसि । धर्मं पाल्यत्वपालकत्वरूपं वक्तुमर्हसि, रामशेषत्वाविशेषे एकं शेषं कथमपरं रक्षेत् । तथासति राज्यमेव मां किमिति न रक्षेदिति भावः । ननु रत्नपेटिकयोर्द्वयोः शेषत्वाविशेषेपि एकं रक्ष्यमपरं रक्षकं च दृष्टम् तद्वदास्त्विति चेन्न, तत्र हि पेटिका कुञ्चिकादि

ज्येष्ठः श्रेष्ठश्च धर्मात्मा दिलीपनहुषोपमः । लब्धुमर्हति काकुत्स्थो राज्यं दशरथो यथा ॥१३॥ अनार्यजुष्टमस्वर्ग्यं कुर्यां पापमहं यदि । इक्ष्वाकूणामहं लोके भवेयं कुलपांसनः ॥ १४ ॥ यद्धि मात्रा कृतं पापं नाहं तदपि रोचये । इहस्थो वनदुर्गस्थं नमस्यामि कृताञ्जलिः ॥१५॥ राममेवानुगच्छामि राजा स द्विपदां वरः । त्रयाणामपि लोकानां राज्यमर्हति राघवः ॥ १६ ॥ तद्वाक्यं धर्मसंयुक्तं श्रुत्वा सर्वे सभासदः । हर्षान्मुमुचुरश्रूणि रामे निहितचेतसः ॥ १७ ॥ यदि त्वार्यं न शक्ष्यामि विनिवर्त्तयितुं वनात् । वने तत्रैव वत्स्यामि यथार्यो लक्ष्मणस्तथा ॥ १८ ॥ सर्वोपायं तु वर्त्तिष्ये विनिवर्त्तयितुं बलात् । समक्षमार्यमिश्राणां साधूनां गुणवर्त्तिनाम् ॥ १९ ॥

व्यापारेण स्वामिना रक्षकत्वेन विनियुक्ता, नाहमेवं रामेण विनियुक्तः । यथा स्वैकधार्यमपि रत्नमवसरे पेटिकास्थं करोति तद्वत्स्वेनैव पाल्यमपि राज्यमस्माभिर्यावच्छक्ति प्रसादितोपि अनवसरतया रामो यदा मदधीनं कुर्यात्तदा तदाहितशक्तिकस्तत्परतन्त्रः पेटिकावत् यावत्तदागमनं रक्षेयम् । अतस्तन्निवर्तनप्रयत्न एव सर्वथा कार्यः । प्रथमतो वरनिर्बन्धादिकृता राज्यस्यास्मदयित्वबुद्धिः रामसमक्षं गत्वा परिहरणीयेति भावः ॥ १२ ॥ वक्तव्यं धर्ममाह—ज्येष्ठ इत्यादिना । दिलीपनहुषशब्दौ चन्द्रसूर्यवंशश्रेष्ठराजोपलक्षणार्थौ ॥ १३ ॥ अनार्येति । इक्ष्वाकूणां लोके तत्सम्बधिनि जने ॥१४॥ यद्धीत्यनेनाप्राप्तभाषणश्रवणपापस्य प्रायश्चित्तमनुष्ठितम्॥१५॥ द्वौ पादौ येषां ते द्विपादः । "सङ्ख्यासुपूर्वस्य" इति लोपः समासान्तः । अतः "पादःपत्" इतिभस्थले पदादेशः । तेषां पुरुषाणामित्यर्थः ॥ १६ ॥ मध्ये कविवाक्यम्—तद्वाक्यमिति । सभासु सीदन्तीति सभासदः सभ्याः ॥ १७ ॥ यदीति । कनिष्ठे लक्ष्मणे आर्यशब्दप्रयोगो ज्येष्ठानुवर्त्तनरूपधर्मनिरतत्वात् । यथार्यो लक्ष्मणस्तथाहं लक्ष्मणश्चेत्यर्थः ॥ १८ ॥ सर्वोपायं वर्तिष्ये । सर्वोपायमिति क्रियाविशेषणम्, सर्वोपायैर्यत्नं करिष्य इत्यर्थः । आर्यमिश्राणां सदस्यानाम् । "आर्य्यमिश्राः पारिषदाः सदस्याः राममेवानुगच्छामि, आनेतुमिति शेषः । कुतः? द्विपदां वरः स राघवो राजा त्रयाणामपि लोकानां राज्यमर्हति नान्य इति भावः ॥१६–१८॥ सर्वोपायमिति । आर्ये

सामवायिकाः ” इतिसज्जनः। भवद्भिरागन्तव्यमित्यर्थादुक्तं भवति ॥ १९ ॥ विष्टयो भृतिमन्तरेण जनपदेभ्यः समानीताः कर्मकराः । कर्मान्तिकाः कर्मान्ते भृतिग्रहीतारः। मार्गशोधकरक्षका इति विष्ट्यादिविशेषणम्। प्रस्थापिता मया पूर्वमित्यभिधानात्। वसिष्ठः शिबिरकरणनियोगमजानन्नभि



विष्टिकर्मान्तिकाः सर्वे मार्गशोधकरक्षकाः। प्रस्थापिता मया पूर्वं यात्रापि मम रोचते ॥ २० ॥ एवमुक्त्वा तु धर्मात्मा भरतो भ्रातृवत्सलः। समीपस्थमुवाचेदं सुमन्त्रं मन्त्रकोविदम् ॥ २१ ॥ तूर्णमुत्थाय गच्छ त्वं सुमन्त्र मम शासनात्। यात्रामाज्ञापय क्षिप्रं बलं चैव समानय ॥ २२ ॥ एवमुक्तः सुमन्त्रस्तु भरतेन महात्मना। हृष्टस्तदादिशत् सर्वं यथासन्दिष्टमिष्टवत् ॥२३॥ ताः प्रहृष्टाः प्रकृतयो बलाध्यक्षा बलस्य च। श्रुत्वा यात्रां समाज्ञप्तां राघवस्य निवर्त्तने ॥ २४ ॥ ततो योधाङ्गनाः सर्वा भर्तॄन् सर्वान् गृहेगृहे। यात्रागमनमाज्ञाय त्वरयन्ति स्म हर्षिताः ॥२५॥ ते हयैर्गोरथैः शीघ्रैः स्यन्दनैश्च महाजवैः। सहयोधैर्बलाध्यक्षा बलं सर्वमचोदयन् ॥२६॥ सज्जं तु तद्बलं दृष्ट्वा भरतो गुरुसन्निधौ। रथं मे त्वरयस्वेति सुमन्त्रं पार्श्वतोऽब्रवीत् ॥ २७ ॥

पेक्षप्रस्तावं कृतवानित्यवगम्यते ॥ २०–२२ ॥ इष्टवत् इष्टार्हम्, इष्टानुरूपमिति यावत् ॥ २३ ॥ ताः प्रकृतयः। पौरश्रेणयः “ राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च” इत्यमरः। बलाध्यक्षाः सेनापतयश्च राघवस्य निवर्त्तने निवर्त्तननिमित्तं समाज्ञप्तां बलस्य सैन्यस्य यात्रां श्रुत्वा प्रहृष्टाः आसन्निति शेषः ॥२४॥ तत इति। यात्रागमनं यात्राया आगमनं सिद्धिं यात्रारूपगमनमिति वा ॥ २५ ॥ गोरथैः वृषभयुक्तरथैः शकटैरित्यर्थः। बलं सर्वमित्यत्रावयवावयविनोर्भेदनिर्देशः ॥ २६ ॥ सज्जं सन्नद्धम्। गुरुसन्निधावित्यनुज्ञाकरणार्थमुक्तम् ॥ २७ ॥ २८ ॥

मिश्राणां सदस्यानां “ आर्यमिश्राः परिषदाः सदस्याः ” इति सज्जनः । समक्षं सर्वोपायं यथा तथा वनान्निवर्तयितुम्, राममिति शेषः । वर्तिष्ये यतिष्य इति सम्बन्धः ॥ १९ ॥ विष्टीति । विष्टिकर्मान्तिकाः विष्टयः भृतिं विना कर्मकृतः । कर्मान्तिकाः कर्मान्ते भृतिगृहीतारः ॥ २०–२२ ॥ इष्टवत् इष्टार्हम् इष्टानुरूपमिति यावत् ॥ २३ ॥ बलाध्यक्षाः बलानामधिष्ठातारः प्रकृतयश्च । बलस्य यात्रां समाज्ञतां श्रुत्वा प्रहृष्टा बभूवुरिति शेषः ॥ २४ ॥ यात्रागमनं रामागमनानुकूलम् ॥२५॥ गोरथैः वृषयुक्तरथैः, शकटैरिति यावत् ॥ २६ ॥ सज्जं गमनाय सन्नद्धम् । गुरुः वसिष्ठः ॥ २७ ॥ २८ ॥

उक्तमर्थं पुनः सङ्ग्रहेण दर्शयति–स इत्यादिना। सत्यधृतिः अप्रच्युतधैर्यः। सुयुक्तं ब्रुवन् गुरुं प्रसादयिष्यन् उचितवचनेन रामं प्रीणयिष्यन्नित्यर्थः ॥ २९ ॥ बलस्य योगाय बलस्य सन्नहनाय बलस्य सङ्गतये वा। "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः। बलप्रधानान् गच्छ, प्रधानशब्दः

भरतस्य तु तस्याज्ञां प्रतिगृह्य च हर्षितः। रथं गृहीत्वा प्रययौ युक्तं परमवाजिभिः ॥ २८ ॥ स राघवः सत्यधृतिः प्रतापवान् ब्रुवन् सुयुक्तं दृढसत्यविक्रमः। गुरुं महारण्यगतं यशस्विनं प्रसादयिष्यन् भरतोऽब्रवीत्तदा ॥२९॥ तूर्णं समुत्थाय सुमन्त्र गच्छ बलस्य योगाय बलप्रधानान्। आनेतुमिच्छामि हि तं वनस्थं प्रसाद्य रामं जगतो हिताय ॥३०॥ स सूतपुत्रो भरतेन सम्यगाज्ञापितः संपरिपूर्णकामः। शशास सर्वान् प्रकृतिप्रधानान् बलस्य मुख्यांश्च सुहृज्जनं च ॥ ३१ ॥ ततः समुत्थाय कुलेकुले ते राजन्यवैश्या वृषलाश्च विप्राः। अयूयुजन्नुष्ट्ररथान् खरांश्च नागान् हयांश्चैव कुलप्रसूतान् ॥ ३२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमदयोध्याकाण्डे द्व्यशीतितमः सर्गः ॥८२॥

ततः समुत्थितः काल्यमास्थाय स्यन्दनोत्तमम्। प्रययौ भरतः शीघ्रं रामदर्शनकांक्षया ॥ १ ॥ अग्रतः प्रययुस्तस्य सर्वे मन्त्रिपुरोधसः। अधिरुह्य हयैर्युक्तान् रथान् सूर्यरथोपमान् ॥ २ ॥ नवनागसहस्राणि कल्पितानि यथाविधि। अन्वयुर्भरतं यान्तमिक्ष्वाकुकुलनन्दनम् ॥ ३ ॥

पुँल्लिङ्गोऽप्यस्ति ॥३०॥३१॥ वृषलाः शूद्राः। कुलेकुले गृहेगृहे। "कुलं जनपदे गृहे" इत्यमरः। अयूयुजन् सज्जानकुर्वन्। कुलप्रसूतान् उत्तमानित्यर्थः ॥ ३२ ॥ इति श्रीगो० श्रीरामायणभूषणे पीता० अयोध्याकाण्डव्याख्याने द्व्यशीतितमः सर्गः ॥ ८२ ॥ तत इति। काल्यम् अहर्मुखम्। "प्रत्यूषोऽहर्मुखं काल्यम्" इत्यमरः। प्राप्येतिशेषः ॥१॥२॥ यथाविधि कल्पितानि भरतनियोगमनतिक्रम्य कल्पितानि। नवनागसहस्राणीत्यनेन पुरस्थगजेषु

सुयुक्तं ब्रुवन् गुरुं प्रसादयिष्यन् राममुचितवचनेन प्रीणयिष्यन् बलस्य योगाय बलस्य सङ्गतये ॥ २९–३१ ॥ तत इति। कुले गृहे। वृषलाः शूद्राः ॥ ३२ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां द्व्यशीतितमः सर्गः ॥ ८२ ॥ तत इति। काल्यं प्रातः काले ॥१॥२॥ यथाविधि

नवनागसहस्रमात्रं प्रयाणे कल्पितमित्यवगम्यते ॥ ३ ॥ धन्विनो विविधायुधाश्चेत्यनेन योधा उक्ताः ॥ ४ ॥ समारूढानि सादिभिरिति शेषः ॥ ५ ॥ कैकेयीति । अग्रतो गमनं पश्चात्तापातिशयात् । यानेनेत्येकवचनं प्रत्येकापेक्षया ॥६॥ आर्यसङ्घाताः त्रैवर्णिकसङ्घाः । तस्यैव कथाः तत्सम्बन्धिवार्त्ताः ॥ ७ ॥ ता एवाह–मेघेत्यादिना । मेघश्यामं दूरस्थितत्वेपि त्यक्तुमशक्यं सौन्दर्यमुच्यते । घर्माभितप्ताः पर्जन्यमिति[illegible] । मेघश्यामं दर्शनमात्रेण

षष्टीरथसहस्राणि धन्विनो विविधायुधाः । अन्वयुर्भरतं यान्तं राजपुत्रं यशस्विनम् ॥ ४ ॥ शतं सहस्राण्यश्वानां समारूढानि राघवम् । अन्वयुर्भरतं यान्तं सत्यसन्धं जितेन्द्रियम् ॥ ५ ॥ कैकेयी च सुमित्रा च कौसल्या च यशस्विनी । रामानयनसंहृष्टा ययुर्यानेन भास्वता ॥ ६ ॥ प्रयाताश्चार्यसङ्घाता रामं द्रष्टुं सलक्ष्मणम् । तस्यैव च कथाश्चित्राः कुर्वाणा हृष्टमानसाः ॥ ७ ॥ मेघश्यामं महाबाहुं स्थिरसत्त्वं दृढव्रतम् । कदा द्रक्ष्यामहे रामं जगतः शोकनाशनम् ॥ ८ ॥ दृष्ट एव हि नः शोकमपनेष्यति राघवः । तमः सर्वस्य लोकस्य समुद्यन्निव भास्करः ॥ ९ ॥ इत्येवं कथयन्तस्ते सम्प्रहृष्टाः कथाः शुभाः । परिष्वजानाश्चान्योन्यं ययुर्नागरिका जनाः ॥ १० ॥

सर्वसन्तापहरम् । महाबाहुम् 'आयताश्च सुवृत्ताश्च' इतिह्युक्तम् । महाबाहुं तादृशसौन्दर्यानुभवदानविषयौदार्ययुक्तम् । महाबाहुं तादृशसौन्दर्यभोगप्रदान समर्थं "राममिन्दीवरश्यामं सर्वशत्रुनिबर्हणम्" इतिवत् । स्थिरसत्त्वं स्थिरव्यवसायम् । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । स्थिरचित्त मिति च पाठः । आश्रितप्रातिकूल्येनाप्यविकृतमनस्कम् । दृढव्रतम् अन्तरङ्गैरप्यप्रकम्प्याश्रितरक्षणदीक्षम् । कदा द्रक्ष्यामहे रामं तन्मुखावलोकनमात्रं लभ्यते चेत् कैकेयीवचनजनिततापाः सर्वेपि निवर्त्तेरन् । जगतः शोकनाशनम् तस्मिन् सर्वलोकशोकनिवर्त्तके सति कथं वयं शोकाकुलाः स्याम । तदीय सर्वलोकशोकनिवर्तकत्वस्य अस्मच्छोकस्य च कः सम्बन्धः । मा शुच इत्युक्तवतोप्यस्यातिशय उक्तः ॥८॥ दृष्ट इति । दृष्ट एव रामः सन्निहितश्चेत्स मन्दस्मितो माभूत् कटाक्षपूर्वकं किञ्चित् प्रियवचनं च मावोचत् । अस्माभिश्च न यत्नः कार्यः किन्तु दूरे दर्शनमात्रेणास्मच्छोकाः सर्वे विनश्येयुः । तम इत्यादि । यथोद्यन् आदित्यो दूरस्थितोपि सकललोकान्धकारं निवर्त्तयति ॥९॥इतीति । परिष्वजानाः परिष्वजमानाः। नगरे चरन्तीति नागरिकाः। ॥१०॥



कल्पितानि भरतनियोगमनतिक्रम्य कल्पितानि सन्नद्धानि । नवनागसहस्राणीत्यनेन पुरे विद्यमानगजेषु नवनागसहस्रमात्रं भरतेन सह गतमित्यर्थः ॥ ३ ॥ ४ ॥ समारूढानि, सादिभिरिति शेषः ॥ ५ ॥ यानेनेत्येकवचनं प्रत्येकापेक्षया ॥ ६ ॥ आर्यसङ्घाताः त्रैवर्णिकसमूहाः ॥७–९॥ परिष्वजानाः परिष्वजमानाः ॥१०॥

"चरति" इति ठक् ॥ १० ॥ य इति । तत्र नगरे ये रामस्य सम्मताः ये च नैगमाः वणिजः ते सर्वे सर्वाः प्रकृतयः पौरश्रेणयश्च रामं प्रति ययुः॥११॥ ताः प्रपञ्चयति—मणीत्यादिना । अत्र यच्छब्दरहितस्थले सोऽनुषञ्जनीयः । मणिकाराः पद्मरागादिमणिसंस्कारकाः । कुम्भकाराः कुलालाः। शोभनाः स्वकार्यदक्षा इति यावत् । सूत्रकर्मकृतः तन्तुवायादयः। शस्त्रोपजीविनः शस्त्रकारकाः । मायूरकाः मयूरपिच्छैश्छत्रव्यजनादिकारिणः । क्राकचिकाः

ये च तत्रापरे सर्वे सम्मता ये च नैगमाः । रामं प्रति ययुर्हृष्टाः सर्वाः प्रकृतयस्तथा ॥ ११ ॥ मणिकाराश्च ये केचित् कुम्भकाराश्च शोभनाः । सूत्रकर्मकृतश्चैव ये च शस्त्रोपजीविनः॥ १२॥ मायूरकाः क्राकचिका रोचका वेधका स्तथा । दन्तकाराः सुधाकारास्तथा गन्धोपजीविनः ॥ १३ ॥ सुवर्णकाराः प्रख्यातास्तथा कम्बलधावकाः । स्नापकोच्छादका वैद्या धूपकाः शौण्डिकास्तथा ॥ १४ ॥

क्रकचैः करपत्रैश्चन्दनादिदारुदलनकारिणः "क्रकचोऽस्त्री करपत्रम्" इत्यमरः । रोचकाः दन्तकुडयवेदिकादिषु कान्त्युत्पादकाः। वेधकाः दारुरत्नादि रन्ध्रकारिणः । दन्तकाराः दन्तैः पुत्रिकापीठशिबिकादिकारकाः । सुधाकाराः प्रासादतलकुडयादिषु सुधालेपनकर्मकराः । गन्धोपजीविनः चन्दनकस्तूरी कर्पूरकुङ्कुमादिगन्धद्रव्यविक्रयजीविनः । सुवर्णकाराः प्रसिद्धाः । कम्बलधावकाः कम्बलशोधकाः । स्नापकोच्छादकाः स्नापकाः तैलाभ्यङ्गादिस्नानकारिणः । उच्छादकाः अङ्गमर्दकाः "उच्छादनं समुल्लेखोद्वाहनोद्वर्तनेषु च" इतिविश्वः । धूपकाः गृहादिषु धूपवासकाः । शौण्डिकाः मद्यकराः । "शुण्डा

सम्मताः, रामस्येति शेषः । नैगमाः वणिजः । प्रकृतयः पौरश्रेणयः ॥ ११ ॥ प्रकृतीन् विभज्य दर्शयति मणिकारा इति । मणिकाराः मुक्तापद्मरागादिमणिसंस्कारकाः । सूत्रकर्मकृतः तन्तुवायादयः । शस्त्रोपजीविनः शस्त्रनिर्माणोपजीविनः । मायूरकाः मयूरपिच्छैश्छत्रव्यजनादिकारिणः । क्राकचिकाः क्रकचैः करपत्रैः चन्दनादिदारुदलनं कृत्वा ये जीवन्ति ते क्राकचिकाः । " क्रकचः करपत्रं स्यात् " इति हलायुधः । रोचकाः दन्तकुडयवेदिकादिषु कान्त्युत्पादकाः । वेधकाः दारुरत्नादिरन्ध्रकारिणः । दन्तकाराः दन्तैः पुत्रिकापीठशिबिकादिकारिणः । सुधाकाराः प्रासादादिषु सुधालेपनकर्मकाराः । गन्धोपजीविनः चन्दनकस्तूर्यादि गन्धद्रव्योपजीविनः ॥ १२ ॥ १३ ॥ स्नापकोच्छादकाः स्नापकाः तैलाभ्यङ्गादिस्नानकारिणः । उच्छादकाः उद्वर्त्तनकारिणः । धूपकाः गृहादिषु धूपादिवासकाः । शौण्डिकाः मद्यकाराः । " शुण्डा करिकरे मद्ये " इति वैजयन्ती ॥ १४ ॥

करिकरे मद्ये" इति वैजयन्ती ॥ १२–१४ ॥ रजकाः निर्णेजकाः "निर्णेजकः स्याद्रजकः" इत्यमरः। तुन्नवायाः सौचिकाः। "तुन्नवायस्तु सौचिकः" इत्यमरः। ग्रामघोषमहत्तराः ग्राममहत्तराः घोषमहत्तराश्च, महत्तराः प्रधानभूताः। "घोष आभीरपल्ली स्यात्" इत्यमरः। शैलूषाः भूमिकाधारिणः,



रजकास्तुन्नवायाश्च ग्रामघोषमहत्तराः। शैलूषाश्च सह स्त्रीभिर्ययुः कैवर्त्तकास्तथा॥ १५॥ समाहिता वेदविदो ब्राह्मणा वृत्तसम्मताः। गोरथैर्भरतं यान्तमनुजग्मुः सहस्रशः॥ १६॥ सुवेषाः शुद्धवसनास्ताम्रमृष्टानुलेपनाः। सर्वे ते विविधैर्यानैः शनैर्भरतमन्वयुः ॥ १७॥ प्रहृष्टमुदिता सेना सान्वयात्कैकयीसुतम्। भ्रातुरानयने यान्तं भरतं भ्रातृवत्सलम् ॥ १८ ॥ ते गत्वा दूरमध्वानं रथयानाश्वकुञ्जरैः। समासेदुस्ततो गङ्गां शृङ्गिबेरपुरं प्रति ॥ १९ ॥ यत्र रामसखो वीरो गुहो ज्ञातिगणैर्वृतः। निवसत्यप्रमादेन देशं तं परिपालयन् ॥२०॥ उपेत्य तीरं गङ्गायाश्चक्रवाकैरलंकृतम्। व्यवातिष्ठत सा सेना भरतस्यानुयायिनी ॥ २१ ॥ निरीक्ष्यानुगतां सेनां तां च गङ्गां शिवोदकाम् । भरतः सचिवान् सर्वानब्रवीद्वाक्यकोविदः ॥ २२ ॥

स्त्रीजीविनो वा। अतएव सह स्त्रीभिरित्युक्तम्। "शैलालिनस्तु शैलूषा जायाजीवाः" इत्यमरः। कैवर्ताः धीवराः। "कैवर्त्ते दाशधीवरौ" इत्यमरः। ते सर्वे ययुरित्यन्वयः ॥१५॥ समाहिताः योगिनः। गोरथैर्वृषभयुक्तरथैः शकटैरिति यावत् ॥१६॥ ताम्रमृष्टानुलेपनाः रक्तवर्णसम्पूर्णाङ्गरागाः ॥ १७ ॥ प्रहर्षः कायिको रोमाञ्चादिः। प्रमोदो मानसो हर्षः। आनयने आनयननिमित्तम् ॥ १८ ॥ त इति। शृङ्गिबेरपुरं प्रति दूरमध्वानं गत्वा गङ्गां समासेदुरिति सम्बन्धः। यद्वा शृङ्गिबेरपुरं प्रतीति ["लक्षणेत्थंभूताख्यान–" इति] लक्षणे कर्म प्रवचनीयः। शृङ्गिबेरपुर इत्यर्थः ॥ १९ ॥ यत्रेति। अप्रमादेन सावधानतया, रामविरोध्यागमनवारणपर इत्यर्थः। तत्र देशे विद्यमानं शृङ्गिबेरपुरं प्रतीति पूर्वेणान्वयः ॥ २० ॥ उपेत्येति। व्यवातिष्ठत व्यवस्थिता



ग्रामघोषाः ग्रामस्थजनमेलने कर्तारः ॥ १५ ॥ गोरथैः वृषभयुक्तरथैः शकटैरिति यावत् ॥ १६ ॥ १७ ॥ प्रहृष्टेति । प्रहृष्टमुदिताः प्रहर्षः कायिको रोमाञ्चादिः। प्रमोदो मानसो हर्षः ॥१८॥ शृङ्गिबेरपुरं प्रति दूरमध्वानं गत्वा गङ्गामासेदुरिति सम्बन्धः ॥ १९ ॥ यत्रेति । अप्रमादेन सावधानेन ॥ २०–२२ ॥

अभूत् ॥ २१ ॥ २२ ॥ निवेशयतेति । अभिप्रायेण तत्तदिच्छया इदानीं विश्रान्ताः श्वो नदीं प्रतरिष्याम इति सम्बन्धः ॥२३॥ दातुमिति । और्ध्वदेह निमित्तार्थम् ऊर्ध्वदेहभवसुखप्रयोजनायेत्यर्थः । नदीमवतीर्य पितुरौर्ध्वदेहनिमित्तार्थमुदकं दातुमिच्छामीत्यन्वयः ॥ २४ ॥ तस्येति । छन्देन इच्छया ।

निवेशयत मे सैन्यमभिप्रायेण सर्वतः । विश्रान्ताः प्रतरिष्यामः श्व इदानीमिमां नदीम् ॥ २३ ॥ दातुं च ताव दिच्छामि स्वर्गतस्य महीपतेः । और्ध्वदेहनिमित्तार्थमवतीर्योदकं नदीम् ॥ २४ ॥ तस्यैवं ब्रुवतोऽमात्यास्तथे त्युक्त्वा समाहिताः । न्यवेशयंस्तां छन्देन स्वेन स्वेन पृथक्पृथक् ॥ २५ ॥ निवेश्य गङ्गामनु तां महानदीं चमूं विधानैः परिबर्हशोभिनीम् । उवास रामस्य तदा महात्मनो विचिन्तयानो भरतो निवर्त्तनम् ॥ २६ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

ततो निविष्टां ध्वजिनीं गङ्गामन्वाश्रितां नदीम् । निषादराजो दृष्ट्वैव ज्ञातीन् सन्त्वरितोऽब्रवीत् ॥ १ ॥
महतीयमितः सेना सागराभा प्रदृश्यते । नास्यान्तमधिगच्छामि मनसापि विचिन्तयन् ॥ २ ॥

"छन्दः श्रुतीच्छापद्येषु" इति वैजयन्ती ॥ २५ ॥ निवेश्येति । गङ्गामनु निवेश्य गङ्गामनुसृत्य निवेश्य, गङ्गाकूलानुसारेण निवेश्येति यावत् । विधानैः तत्तज्जातिव्यवस्थाकल्पनादिभिः । परिबर्हशोभिनीं परिबर्हो यात्रोपयुक्तपटवेश्माद्युपकरणम् । "तथोपकरणं प्रोक्तं परिबर्हः परिच्छदः" इति हलायुधः ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्र्यशीतितमः सर्गः ॥ ८३ ॥

तत इत्यादि । गङ्गामन्वाश्रितां प्राप्ताम् अतएव निविष्टां कृतनिवेशां ध्वजिनीं सेनां दृष्ट्वा । सन्त्वरितः ससम्भ्रमः ॥ १ ॥ महतीति । इतः इह शृङ्गि बेरपुरे । अस्य सेनारूपवस्तुनः । चिन्तयन्नहं मनसापि नास्यान्तमधिगच्छामीति सम्बन्धः ॥ २ ॥

निवेशयतेति । इदानीं मे सैन्यम् अभिप्रायेण तत्तदिच्छया सर्वतो निवेशयत । ततः श्वो नदीं प्रतरिष्याम इति सम्बन्धः ॥ २३ ॥ और्ध्वदेहनिमित्तार्थं ऊर्ध्वभवदेह सुखप्रयोजनायेत्यर्थः ॥२४॥ छन्देन इच्छया ॥२५॥ निवेश्येति । परिबर्हशोभिनीम् । परिबर्हः यात्रोपयुक्तवेश्माद्युपकरणजातम्, विधानैः तत्तज्जातीयव्यवस्थाकल्प नाभिः । गङ्गामनु गङ्गामनुसृत्य निवेश्य गङ्गाकूलानुसारेण निवेश्येति यावत् ॥ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्या काण्डव्याख्यायां त्र्यशीतितमः सर्गः ॥ ८३ ॥ तत इति । गङ्गामन्वाश्रिताम् अत एव निविष्टाम् ॥ १ ॥ २ ॥

यथेति । स इक्ष्वाकुकुलक्रमागतः कोविदारध्वजः रथे दृश्यते । हि यस्मात् अतो भरतः स्वयमागतः यथा तु खलु ध्रुवमित्यर्थः । कोविदारध्वजः दुर्बुद्धिरित्यनेन भरतो रामद्रोहाकाङ्क्षया आगच्छतीति शङ्कितवानिति गम्यते ॥ ३ ॥ तदेव स्थापयिष्यति–बन्धयिष्यतीत्यादिना । दाशानस्मान्

यथा तु खलु दुर्बुद्धिर्भरतः स्वयमागतः । स एष हि महाकायः कोविदारध्वजो रथे ॥ ३ ॥ बन्धयिष्यति वा दाशानथवाऽस्मान् वधिष्यति । अथ दाशरथिं रामं पित्रा राज्याद्विवासितम् ॥ ४ ॥ सम्पन्नां श्रियमन्विच्छंस्तस्य राज्ञः सुदुर्लभाम् । भरतः कैकयीपुत्रो हन्तुं समधिगच्छति ॥५॥ भर्त्ता चैव सखा चैव रामो दाशरथिर्मम । तस्यार्थ कामाः सन्नद्धा गङ्गानूपे प्रतिष्ठत ॥६॥ तिष्ठन्तु सर्वे दाशाश्च गङ्गामन्वाश्रिता नदीम् । बलयुक्ता नदीरक्षा मांसमूल फलाशनाः ॥७॥ नावां शतानां पञ्चानां कैवर्त्तानां शतंशतम् । सन्नद्धानां तथा यूनां तिष्ठन्त्वित्यभ्यचोदयत् ॥८॥

विवासितं दुर्बलमित्यर्थः । बन्धयिष्यति अथवा वधिष्यति हनिष्यति । हनो लटि वधादेश आर्षः । अथ अथवा । दाशरथिं ज्ञातिभूतमिति भावः । तस्य राज्ञः राजत्वार्हस्य रामस्य सुदुर्लभाम् सम्पन्नाम् अप्रच्युताम् । रामागमने हि श्रीः प्रच्युता स्यात् । कैकयीपुत्र इति दुष्प्रकृतित्वे हेतुः । तिष्ठन्त्विति । सर्वे दाशाश्च गङ्गामन्वाश्रिताः सन्तः बलयुक्ताः सेनायुक्ताः । नदीरक्षाः नदीतरणमार्गं रक्षन्तः । मांसमूलफलाशनाः नावारोपितमांसाद्यशनाः तिष्ठन्तु ॥ ७ ॥ नावामित्यादि । पञ्चानां शतानां नावाम् एकैकस्या नावः कैवर्त्तानां शतं शतं तिष्ठन्तु, शतंशतं कैवर्त्ताः तिष्ठन्त्वित्यर्थः ॥ ८ ॥

॥ ४ ॥ ५ ॥ किमतोऽभवदित्यत्राह–भर्तेति । अर्थकामाः अर्थेच्छवः, यूयमितिशेषः । अनूपे तीरे ॥६॥

यथेति । भरतः स्वयमागतो यथा तु खलु भरतः स्वयमागतो नूनम् । कुतः ? हि यस्मात् एष तस्य कोविदारध्वजः कोविदारलक्षणो ध्वजो रथे दृश्यते । यद्वा यथा येन कारणेन रथेन कोविदारध्वजो दृश्यते ततो दुर्बुद्धिर्भरतः स्वयमागतः खलु, आगत इत्यमन्यतेत्यर्थः ॥ ३ ॥ स प्रसिद्धः । इक्ष्वाकुकुलक्रमागतः । बन्धयिष्यतीत्यादिश्लोकद्वयमेकं वाक्यम् । भरतः दाशानस्मान् वधिष्यति । अनु पश्चाद्दाशरथिं हन्तुं समधिगच्छतीति सम्बन्धः ॥ ४ ॥ ५ ॥ भर्तेति । तस्यार्थ कामाः रामस्य प्रयोजनं काङ्क्षमाणाः ॥ ६ ॥ तिष्ठन्त्विति । नदीरक्षाः नदीं रक्षन्तीति नदीरक्षाः ॥ ७ ॥ पञ्चानां शतानां नावां प्रत्येकं कैवर्तानां शतं शतं तिष्ठन्त्वित्यभ्यचोदयदिति सम्बन्धः । पञ्चशतसङ्ख्यासु नौषु प्रत्येकं शतं शतं कैवर्तकास्तिष्ठन्त्वित्यर्थः ॥ ८ ॥

रामस्य तुष्टः रामविषये तुष्टः। यदादुष्ट इतिपाठे–अदुष्ट इति पदच्छेदः। स्वस्तिमतीति अन्यथा हन्तव्येतिभावः ॥ ९ ॥ उपायनं कौशेयादि । मांसं मृगाणाम्॥१०॥११॥ स्थपतिः प्रभुः। दण्डकारण्ये कुशलः तत्र सञ्चरणसमर्थ इत्यर्थः। विजानीते तं देशमित्यर्थः॥१२–१४॥ प्रह्वः कृतप्रणामः॥१५॥

यदा तुष्टस्तु भरतो रामस्येह भविष्यति । सेयं स्वस्तिमती सेना गङ्गामद्य तरिष्यति ॥ ९ ॥ इत्युक्तोपायनं गृह्य मत्स्यमांसमधूनि च। अभिचक्राम भरतं निषादाधिपतिर्गुहः ॥ १० ॥ तमायान्तं तु संप्रेक्ष्य सूतपुत्रः प्रतापवान्। भरतायाचचक्षेऽथ विनयज्ञो विनीतवत् ॥ ११ ॥ एष ज्ञातिसहस्रेण स्थपतिः परिवारितः। कुशलो दण्डकारण्ये वृद्धो भ्रातुश्च ते सखा ॥१२॥ तस्मात्पश्यतु काकुत्स्थ त्वां निषादाधिपो गुहः। असंशयं विजानीते यत्र तौ रामलक्ष्मणौ ॥१३॥ एतत्तु वचनं श्रुत्वा सुमन्त्राद्भरतः शुभम्। उवाच वचनं शीघ्रं गुहः पश्यतु मामिति ॥१४॥ लब्ध्वाभ्यनुज्ञां संहृष्टो ज्ञातिभिः परिवारितः। आगम्य भरतं प्रह्वो गुहो वचनमब्रवीत् ॥१५॥ निष्कुटश्चैव देशोऽयं वञ्चिताश्चापि ते वयम्। निवेदयामस्ते सर्वे स्वके दासकुले वस ॥ १६ ॥ अस्ति मूलं फलं चैव निषादैः समुपाहृतम्। आर्द्रञ्च मांसं शुष्कञ्च वन्यं चोच्चावचं महत् ॥ १७ ॥

अयं देशः मदधिष्ठितवनप्रदेशः । ते निष्कुटः गृहारामभूतः। " गृहारामस्तु निष्कुटः " इत्यमरः। त्वद्भोगयोग्य इतियावत्। वयं च वञ्चिताः अत्र गमनानिवेदनेन वञ्चिता इत्यर्थः। निवेदने हि प्रत्युद्गमनादिकं कर्तुं शक्यमिति भावः। सर्वे वयं ते, त्वदीया इत्यर्थः। अतः स्वके दासकुले दासगृहे वसेति निवेदयामः विज्ञापयामः। पूर्वं गङ्गामासाद्येति गङ्गापर्यन्तमार्गकरणेपि अद्य मनुष्यप्रेरणाभावात्त्वदागमनं न ज्ञातवानस्मीति गुहेनोच्यते ॥ १६॥ वन्यं

यदादुष्ट इत्यत्र अदुष्ट इति छेदः॥९–११॥ एष इति। दण्डकारण्ये कुशलः तत्र सञ्चारकोविद इत्यर्थः ॥१२–१५॥ निष्कुटश्चेति। अयं देशो निष्कुटश्चैव गृहाराम एव। वञ्चिताः अत्रागमनानिवेदनेन वञ्चिताः, विपन्नास्सर्वे वयं च त्वदीयाः अतः स्वके स्वकीये दासकुले दासगृहे वस इति निवेदयामः प्रार्थयामः इति सम्बन्धः॥१६॥१७॥

नीवारश्यामाकप्रियंग्वादिधान्यम् ॥ १७ ॥ आशंसे प्रार्थयामि । स्वाशिता सुष्ठु भोजिता ॥ १८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुरशीतितमः सर्गः ॥८४॥ एवमिति । हेत्वर्थसंहितम् उपपत्तिप्रयोजनाभ्यां युक्तम् ॥ १ ॥ ऊर्जित इति ।

आशंसे स्वाशिता सेना वत्स्यतीमां विभावरीम् । अर्चितो विविधैः कामैः श्वः ससैन्यो गमिष्यसि ॥ १८ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

एवमुक्तस्तु भरतो निषादाधिपतिं गुहम् । प्रत्युवाच महाप्राज्ञो वाक्यं हेत्वर्थसंहितम् ॥ १ ॥ ऊर्जितः खलु ते कामः कृतो मम गुरोः सखे । यो मे त्वमीदृशीं सेनामेकोऽभ्यर्चितुमिच्छसि ॥ २ ॥ इत्युक्त्वा तु महातेजा गुहं वचन मुत्तमम् । अब्रवीद्भरतः श्रीमान् निषादाधिपतिं पुनः ॥ ३ ॥ कतरेण गमिष्यामि भरद्वाजाश्रमं गुह । गहनोऽयं भृशं देशो गङ्गानूपो दुरत्ययः ॥४॥ तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः । अब्रवीत् प्राञ्जलिर्वाक्यं गुहो गहन गोचरः ॥ ५ ॥ दाशास्त्वाऽनुगमिष्यन्ति धन्विनः सुसमाहिताः । अहं त्वाऽनुगमिष्यामि राजपुत्र महायशः ॥६॥

स्वस्य रामविषयभक्तिं द्योतयितुं मम गुरोः सखे इत्युक्तम् । यस्त्वमेक एव ईदृशीमपरिच्छिन्नां सेनामभ्यर्चितुमिच्छसि तस्य ते ऊर्जितः अभिवृद्धः कामः अर्चनामनोरथः कृतः खलु कृत एव, तवादरेणैव वयमर्चिता इतिभावः ॥ २ ॥ इतीति । महातेजा इति गाम्भीर्यद्योतनम् । उत्तममित्यनेनार्चनोद्योगमात्रेण तृप्तत्वकथनादवाप्तसमस्तकामत्वमुक्तम् । श्रीमानिति तात्कालिकहर्षः ॥ ३ ॥ कतरेणेति । कतरेण केन मार्गेण । भृशं गहनः अत्यन्तदुष्प्रवेशः । अनूपो देशः जलप्रायो देशः । "जलप्रायमनूपं स्यात्" इत्यमरः ॥ ४ ॥ तस्येति । गहनं काननं गोचरः सञ्चारप्रदेशो यस्य सः गहनगोचरः । "गहनं काननं वनम्" इत्यमरः ॥ ५ ॥ दाशा इति । अहमनुगमिष्यामि अतो न मार्गविषयविचारः कर्तव्य इतिभावः ॥ ६ ॥

स्वाशिता सुष्ठु भोजिता । (वसत्वेनामितिपाठः) वसत्विति आशंसे प्रार्थये अतो अर्चितः श्वो गमिष्यतीति सम्बन्धः ॥ १८ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां चतुरशीतितमस्सर्गः ॥ ८४ ॥ एवमिति । हेत्वर्थसंहितम् उत्पत्तिप्रयोजनाभ्यां युक्तम् ॥ १ ॥ ऊर्जित इति । यस्त्वं मे मम ईदृशीं सेनाम् एको ह्यर्चितुमिच्छसि, तस्य ते ऊर्जितः कामः कृतः खलु तव श्रद्धया सर्वं कृतमेवेत्यर्थः ॥ २ ॥ ३ ॥ कतरेणेति । कतरेण केन मार्गेण । गहनः अत्यन्तदुष्प्रवेशः ॥ ४ ॥ तस्येति । गहनगोचरः दुष्प्रवेशप्रदेशसञ्चरणशीलः ॥ ५ ॥ दाशास्त्विति । अतो गहनविषया न काचिच्छङ्केति भावः ॥६॥

कच्चिदिति । न दुष्टः अदुष्टः । सुप्सुपेति समासः। रामस्य रामविषये अदुष्टो व्रजसि कच्चित् दुष्टो न व्रजसि कच्चिदिति वा सम्बन्धः । अक्लिष्टकर्मण इत्यनेन निरपायत्वमुक्तम् । शङ्काप्रसक्तौ हेतुमाह इयमिति । अनुकूलो व्रजसि चेत् सेना व्यर्थेति भावः । इवशब्दः शङ्कायाः ईषत्त्वं द्योतयति ॥ ७ ॥

कच्चिन्न दुष्टो व्रजसि रामस्याक्लिष्टकर्मणः । इयं ते महती सेना शङ्कां जनयतीव मे ॥७॥ तमेवमभिभाषन्तमाकाश इव निर्मलः । भरतः श्लक्ष्णया वाचा गुहं वचनमब्रवीत् ॥८॥ माभूत्स कालो यत्कष्टं न मां शङ्कितुमर्हसि । राघवः स हि मे भ्राता ज्येष्ठः पितृसमो मतः ॥ ९ ॥ तं निवर्त्तयितुं यामि काकुत्स्थं वनवासिनम् । बुद्धिरन्या न ते कार्या गुह सत्यं ब्रवीमि ते ॥१०॥ स तु संहृष्टवदनः श्रुत्वा भरतभाषितम् । पुनरेवाब्रवीद्वाक्यं भरतं प्रति हर्षितः ॥११॥ धन्यस्त्वं न त्वया तुल्यं पश्यामि जगतीतले । अयत्नादागतं राज्यं यस्त्वं त्यक्तुमिहेच्छसि ॥१२॥ शाश्वती खलु ते कीर्त्तिर्लोकाननुचरिष्यति । यस्त्वं कृच्छ्रगतं रामं प्रत्यानयितुमिच्छसि ॥१३॥ एवं सम्भाषमाणस्य गुहस्य भरतं तदा । बभौ नष्टप्रभः सूर्यो रजनी चाभ्यवर्त्तत ॥ १४ ॥ संनिवेश्य स तां सेनां गुहेन परितोषितः । शत्रुघ्नेन सह श्रीमान् शयनं पुनरागमत् ॥ १५ ॥

तमिति । आकाश इव निर्मल इत्यनेन तच्छङ्कितदोषस्य तत्र प्रसक्तिरेव नास्तीत्युच्यते । आकाशे हि पङ्कानुलेपे स तत्र न प्रसज्जति किन्तु स्वहस्त एव मलिनो भवति । श्लक्ष्णया स्वस्मिन्दोषालेपेप्यक्रोधया ॥ ८ ॥ माभूदिति । यत् यस्मिन् काले । कष्टं त्वया आशङ्कितं कष्टं जायते स कालो माभूत् । कलिकाले हि तादृशप्रसङ्गः, अतो मां शङ्कितुं नार्हसि । तत्र हेतुः राघव इत्यादि । न ते कार्या त्वया न कार्या ॥ ९ ॥ १० ॥ स त्विति । संहृष्टवदनः प्रसन्नवदन इत्यर्थः । हर्षितः सञ्जातहर्षः ॥११॥१२॥ शाश्वतीति । कृच्छ्रगतं व्यसनगतम् । प्रत्यानयितुं प्रत्यानेतुम् । इडार्षः ॥ १३ ॥ एवमिति । सम्भाषमाणस्य सम्भाषमाणे सति । नष्टप्रभः अदृष्टप्रभः ॥ १४ ॥ संनिवेश्येति । शयनं पुनरागमदिति अत्र पुनःशब्देन गुहागमनात् पूर्वं श्रान्तः शयने स्थित इति गम्यते । समुपागमदितिवा पाठः । पुनः परितोषित इति वा सम्बन्धः । वाक्यालङ्कारो वा ॥ १५ ॥

कच्चिदिति । रामस्य दुष्टः न व्रजसि कच्चित् रामस्य द्रोहं कर्तुं न व्रजसि कच्चिदित्यर्थः ॥ ७ ॥ ८ ॥ माभूदिति । यत् यस्मिन् काले त्वया आशङ्कितं कष्टं रामे

रामेति । अनर्हस्य गर्भैश्वर्येण शोकानर्हस्य । महात्मनः महाधीरस्यापि धर्मप्रेक्षस्य शोकमूलपापशून्यस्य । तादृशः अवाङ्मनसगोचरः । भ्रातृभक्तस्येति भरतविशेषणं वा ॥ १६ ॥ अन्तर्दाहेनेति । दहनः शोकाग्निः । अन्तर्दाहेन चिन्ताग्निना ततं राघवं भरतं सन्तापयति सम्यक्

रामचिन्तामयः शोको भरतस्य महात्मनः । उपस्थितो ह्यनर्हस्य धर्मप्रेक्षस्य तादृशः ॥ १६ ॥ अन्तर्दाहेन दहनः सन्तापयति राघवम् । वनदाहाभिसन्तप्तं गूढोऽग्निरिव पादपम् ॥ १७ ॥ प्रसृतस्सर्वगात्रेभ्यः स्वेदं शोकाग्निसम्भवम् । यथा सूर्यांशुसन्तप्तो हिमवान् प्रसृतो हिमम् ॥ १८ ॥ ध्याननिर्दरशैलेन विनिश्वसितधातुना । दैन्यपादपसङ्घेन शोकायासाधिशृङ्गिणा ॥ १९ ॥ प्रमोहानन्तसत्त्वेन सन्तापौषधिवेणुना । आक्रान्तो दुःखशैलेन महता कैकयीसुतः ॥ २० ॥

ग्लपयति स्म । वनदाहाभिसन्तप्तं वनदाहेन पर्यन्तवनाग्नेरूष्मणा सन्ततं शुष्कं पादपं गूढोऽग्निरिव कोटराग्निरिव अन्तरारभ्य बहिरदहत् अन्तःस्थोप्यात्मा दह्यते, अदाह्यत्वं केवलाग्नेर्हि ॥ १७ ॥ प्रसृत इति । शोकाग्निसम्भवं स्वेदं प्रसृतः, भरत इति शेषः । स्वेदः शोकाग्निसम्भव इति पाठस्तु न दृष्टान्तानुरूपः । स्वेदं प्रसृतः हिमं प्रसृतः इत्यत्र गत्यर्थत्वात् कर्त्तरि क्तः ॥ १८ ॥ भरतस्य दुःखं शैलत्वेन रूपयति–ध्यानेत्यादिना । ध्याननिर्दरशैलेन दरो गर्त्तः तस्मान्निर्गतं निर्दरं शिलानां समूहः शैलं रामविषयध्यानमेव निर्दरशैलं यस्मिन् तेन । ध्यानस्य निरन्तरत्वेन दरीविदीर्णशिलापङ्क्तिसाम्यम् । विविधं निश्वसितं विनिश्वसितं तदेव धातुर्यस्मिन् । विविधत्वसाम्यात् । दैन्यं करणानां स्वस्वविषयप्रवृत्तिवैमुख्यं तस्य पादपसाम्यमबोधरूपतया । शोकायासाधिशृङ्गिणा शोकादय एव शृङ्गिणः कृष्णसारादयो यस्मिन् तेन । यद्वा शोकायासाधिभिः शृङ्गिणा

द्रोहरूपं जायते स कालोऽपि माभूत् । कुतः ? राघवः मे ज्येष्ठो भ्राता, अत एव मम पितृसमः अतो मां शङ्कितुं नार्हसीति सम्बन्धः ॥९–१५॥ रामेति । अनर्हस्य शोकानर्हस्य । धर्मं प्रेक्षत इति धर्मप्रेक्षः तस्य, धर्मदृष्टेरित्यर्थः । तादृशः वाचामगोचरः शोक उपस्थितः प्राप्तः ॥ १६ ॥ अन्तरिति । दहनः शोकाग्निः । राघवं भरतं वनदावाग्निसन्तप्तं पर्यन्तवनदावोष्मणा शुष्कम् । गूढोऽग्निः कोटरसक्तोऽग्निः ॥१७॥ प्रसृत इति । शोकाग्निसम्भवं स्वेदं प्रसृतः, भरत इति शेषः ॥ १८ ॥ ध्याननिर्दरेत्यादिश्लोकद्वयमेकं वाक्यम् । ध्याननिर्दरशैलेन दरो विदारणं तस्मान्निर्गतं निर्दरं शिलानां समूहः शैलः, विदारणरहितस्थूलपाषाण इत्यर्थः । ध्यान

शृङ्गवता दृढत्वसाम्यात् । प्रमोहानन्तसत्त्वेन प्रमोहा एव अनन्तानि सत्त्वानि जन्तवो यस्मिन् तेन । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । प्राणभयशङ्काकरत्वात् । सन्तापौषधिवेणुना सन्तापा एव ओषधयो वेणवश्च यस्मिन् तेन । ओषधिवेणुसाम्यं दुष्प्रवेशत्वात् । आक्रान्तः

विनिःश्वसन् वै भृशदुर्मनास्ततः प्रमूढसंज्ञः परमापदं गतः । शमं न लेभे हृदयज्वरार्दितो नरर्षभो यूथगतो यथ र्षभः ॥२१॥ गुहेन सार्द्धं भरतः समागतो महानुभावः सजनः समाहितः । सुदुर्मनास्तं भरतं तदा पुनर्गुहः समा श्वासयदग्रजं प्रति ॥ २२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमदयोध्याकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

आचचक्षेऽथ सद्भावं लक्ष्मणस्य महात्मनः । भरतायाप्रमेयाय गुहो गहनगोचरः ॥ १ ॥

अभूदितिशेषः । महता अतिगुरुणा । मज्जतेतिपाठे—मज्जता अवयवेषु प्रविशता ॥ १९॥ २०॥ विनिःश्वसन्निति । विनिःश्वसन् चिन्तातिरेकेण श्वासं कुर्वन् । भृशदुर्मनाः अत्यन्तकलुषहृदयः । प्रमूढा नष्टा संज्ञा यस्य सः प्रमूढसंज्ञः । अतएव परमापदं मरणायार्थसम्पत्तिरूपां मूर्च्छां गतः । शमं ज्वरशान्तिम् । अयूथगतः यूथाद्भ्रष्ट इत्यर्थः । यूथहत इतिपाठे—हतयूथ इत्यर्थः ॥ २१ ॥ अथ गुहः समागत इत्याह—गुहेनेति । सजनः सपरिवारः । समाहितः एकाग्रचित्तः । भरतः गुहेन सार्द्धं सह समागतः सङ्गतः । अथ गुहः सुदुर्मनाः भरतक्लेशदर्शनेन भरतादपि भृशं दुर्मनाः सन् । भरतम् अग्रजं प्रति अग्रजं लक्षीकृत्य समाश्वासयत् ॥ २२ ॥ इति श्रीगो० श्रीरामायणभूषणे पीता० अयोध्याकाण्डव्याख्याने पञ्चाशीतितमः सर्गः ॥ ८५ ॥ आचचक्ष इत्यादि । अथ आश्वासनानन्तरम् । सद्भावं ज्येष्ठानुवर्तनरूपं समीचीनस्वभावम् । आचचक्ष इत्यादि भगवद्विषयोपदेशे नूतनपुरातन

मेव निर्दरशैलं यस्मिन् तेन । शोकायासाधिशृङ्गिणा शोकश्च आयासश्च आधिश्च ता एव शृङ्गाणि यस्मिन् तेन । प्रमोहानन्तसत्त्वेन प्रमोह एवानन्तसत्त्वानि जन्तवो यस्मिन् । सन्तापौषधिवेणुना सन्ताप एवौषधयश्च वेणवो यस्मिन् । मज्जता अवयवेषु प्रविशता दुःखशैलेन दुःखरूपपर्वतेन आक्रान्तः, अभूदितिशेषः । महतेति वा पाठः ॥ १९ ॥ २० ॥ विनिःश्वसन्निति । यूथहतः हतयूथः । यूथगत इति पाठे—यूथान्निर्गत इत्यर्थः ॥२१॥ गुहेनेति । समाहितः एकाग्रचित्तः । सजनः सपरिचारः । अग्रजं प्रति समागतो भरतः । गुहेन सार्धं सुदुर्मनाः सुदुःखितः, अभूदिति शेषः । तं भरतम् । गुहः पुनः गुहस्तु तदा समाश्वासयदिति सम्बन्धः ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिका० अयोध्याकाण्डव्याख्यायां पञ्चाशीतितमः सर्गः ॥ ८५ ॥ आचचक्ष इति । अथ आश्वासानन्तरम् । सद्भावं

विभागो नास्ति। देशिका वक्तारः सादराः श्रोतार इत्याह। आङीषदर्थे। स्ववागिन्द्रियविषयमेवाविदत नतु कार्त्स्न्येन। अथ भरतस्वभावज्ञानानन्तरम्। सद्भावं 'बाल्यात्प्रभृति सुस्निग्धः' इति सत्ताव्याप्तं स्वभावम्। लक्ष्मणस्य महात्मनः। पयोधिं पाणिना परिच्छेत्तुमुद्युक्तः भरतायाप्रमेयाय एतादृशस्योपदे

तं जाग्रतं गुणैर्युक्तं शरचापासिधारिणम्। भ्रातृगुप्त्यर्थमत्यन्तमहं लक्ष्मणमब्रुवम् ॥ २ ॥ इयं तात सुखा शय्या त्वदर्थमुपकल्पिता। प्रत्याश्वसिहि शेष्वास्यां सुखं राघवनन्दन ॥ ३ ॥ उचितोऽयं जनः सर्वो दुःखानां त्वं सुखोचितः। धर्मात्मंस्तस्य गुप्त्यर्थं जागरिष्यामहे वयम् ॥ ४ ॥ नहि रामात् प्रियतरो ममास्ति भुवि कश्चन। मोत्सुकोभूर्ब्रवीम्येतदप्यसत्यं तवाग्रतः ॥ ५ ॥ अस्य प्रसादादाशंसे लोकेऽस्मिन् सुमहद्यशः। धर्मावाप्तिं च विपुलामर्थावाप्तिं च केवलाम् ॥६॥ सोऽहं प्रियसखं रामं शयानं सह सीतया। रक्षिष्यामि धनुष्पाणिः सर्वैः स्वैर्ज्ञातिभिः सह ॥ ७ ॥ नहि मेऽविदितं किञ्चिद्वनेऽस्मिंश्चरतः सदा। चतुरङ्गं ह्यपि बलं प्रसहेम वयं युधि ॥ ८ ॥

ष्टेति नास्ति, गुहो गहनगोचरः वन्यवृक्षादितारतम्यमात्रज्ञः एतादृशस्वभावमविज्ञातवान्। यद्वा रामविरहेण कुत्रचित् कुञ्जे स्थितः तद्देशीयागमने समु त्थाय निर्गतः ॥१॥ भरतस्य रामविषयस्नेहमभिवर्द्धयितुं लक्ष्मणस्य ज्येष्ठानुवर्तनरूपं पूर्ववृत्तान्तमाह—तं जाग्रतमित्यादिना। भ्रातृगुप्त्यर्थम् अत्यन्तं जाग्रतं शरचापासिधारिणम् एकहस्ते शरयुक्तचापम् अपरहस्ते असिं च दधानमित्यर्थः। गुणैर्भ्रातृभक्त्यादिगुणैर्युक्तम् ॥ २ ॥ ३ ॥ उचित इति। तस्य रामस्य ॥ ४ ॥ नहीति। मोत्सुकोभूः अस्यां रात्रौ रामरक्षणौत्सुक्यं मा कृथा इत्यर्थः। एतद्रक्षणं प्रति तवाग्रतः असत्यं ब्रवीम्यपि ब्रवीमि किम्? न ब्रवीम्येवेत्यर्थः ॥५॥ स्वस्यैहिकमामुष्मिकं च फलं रामायत्तमित्याह—अस्येत्यादिना। धर्मावाप्तिम् आमुष्मिकफलसाधनसिद्धिम् केवलां न्यायप्राप्ता मितियावत् ॥६॥ तनि०—केवलां प्रतिबन्धरहितां धर्मावाप्तिं फलाभिसन्धिरहितां मोक्षपर्यन्ताम्। अर्थावाप्तिं स्वर्गादिपुरुषार्थप्राप्तिम्। अस्मिन् लोके सुमहद्यशः ऐहिक पुरुषार्थं महाभागवतत्वप्रयुक्तप्रसिद्धिं वा। अस्य रामस्य प्रसादात् आशंसे प्रार्थये ॥ ६ ॥ ७ ॥ नेति। मेविदितमित्यत्र अविदितमिति पदच्छेदः॥ ८–११॥

ज्येष्ठानुवर्तनरूपं समीचीनस्वभावम् ॥ १–३ ॥ उचित इतिं। तस्य रामस्य। तव गुप्त्यर्थमिति पाठे-तत्कृता या रामगुप्तिः तदर्थम् ॥ ४ ॥ नहीति। रामादन्यः प्रिय तरो भुवि नास्ति। मोत्सुकोभूः उत्सुको माभूः। अस्मिन्नर्थे विस्मयं मागाः। इदमसत्यमत आह ब्रवीम्येतदिति। रामं रक्षिष्यामीत्येतद्वचनं तवाग्रतः असत्यं ब्रवीम्यपि असत्यं ब्रवीमि किम्? न ब्रवीम्येवेत्यर्थः ॥ ५ ॥ स्वस्यैहिकामुष्मिकफलं रामायत्तमित्याह—अस्येति। धर्मावाप्तिम् आमुष्मिकफलसाधनभूताम्। अस्य

महतेति । तपसा अनशनेन । परिश्रमैः यज्ञादिभिरित्यर्थः । एकः मुख्यः " एके मुख्यान्यकेवलाः " इत्यमरः ॥ १२ ॥ प्रव्राजनकालिकदशरथदशां स्मरन्नाह–अस्मिन्निति । वर्त्तयिष्यति जीविष्यति ॥ १३ ॥ विनद्येति । सुमहानादं विनद्य, कृत्वेत्यर्थः । अद्य स्त्रियः उपरता इति मन्ये इत्युप

एवमस्माभिरुक्तेन लक्ष्मणेन महात्मना । अनुनीता वयं सर्वे धर्ममेवानुपश्यता ॥ ९ ॥ कथं दाशरथौ भूमौ शयाने सह सीतया । शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा ॥ १० ॥ यो न देवासुरैः सर्वैः शक्यः प्रसहितुं युधि । तं पश्य गुह संविष्टं तृणेषु सह सीतया ॥ ११ ॥ महता तपसा लब्धो विविधैश्च परिश्रमैः । एको दशरथस्यैष पुत्रः सदृशलक्षणः ॥ १२ ॥ अस्मिन् प्रव्राजिते राजा न चिरं वर्त्तयिष्यति । विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति ॥ १३ ॥ विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः । निर्घोषोपरतं नूनमद्य राजनिवेशनम् ॥ १४ ॥ कौसल्या चैव राजा च तथैव जननी मम । नाशंसे यदि जीवेयुः सर्वे ते शर्वरीमिमाम् ॥ १५ ॥ जीवेदपि च मे माता शत्रुघ्नस्यान्ववेक्षया । दुःखिता या तु कौसल्या वीरसूर्विनशिष्यति ॥ १६ ॥ अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथम् । राज्ये राममनिक्षिप्य पिता मे विनशिष्यति ॥१७॥ सिद्धार्थाः पितरं वृत्तं तस्मिन् काले ह्युपस्थिते । प्रेतकार्येषु सर्वेषु संस्करिष्यन्ति भूमिपम् ॥ १८ ॥

स्कार्यम् । निवेशनं निवेशनं च ॥१४॥ कौसल्येति । सर्वे ते जीवेयुरिति नाशंसे यदि जीवेयुरिमां शर्वरीमेवेति सम्बन्धः॥१५॥ जीवेदिति । शत्रुघ्नस्यान्ववेक्षया शत्रुघ्नसम्बन्ध्यवेक्षणेच्छया। वीरसूः कौसल्या दुःखितेति यत् अतो विनशिष्यति। दुःखिता या त्विति पाठः समीचीनः। तत्पक्षे या दुःखिता वीरसूः कौसल्या सा तु विनशिष्यत्येवेत्यर्थः ॥ १६ ॥ अतिक्रान्तमिति । अतिक्रान्तमतिक्रान्तं सर्वं प्रयोजनमतीत्येत्यर्थः ॥ १७॥ सिद्धार्था इति । वृत्तम्

रामस्य प्रसादादेवेत्याशंस इति सम्बन्धः ॥ ६–११ ॥ महतेतिं । एकः मुख्यः ॥ १२–१४ ॥ कौसल्येति । सर्वे ते जीवेयुरिति नाशंसे । यदि जीवेयुः इमां शर्वरीमेवेति सम्बन्धः ॥ १५ ॥ १६ ॥ अतिक्रान्तमिति । राज्ये राममनिक्षिप्य तादृशमनोरथमनवाप्य मे पिता विनशिष्यति । यतः अतः अतिक्रान्तमतिक्रान्तं सर्व

स०–सदृशलक्षणः दशरथे विद्यमानाः सर्वे गुणा रामे वर्तन्ते इत्येतावता सादृश्यं पितृगौरवादेवमुक्तिः । एतादृश एक एव लब्धः ॥ १२ ॥

अतीतम्, मृतमिति यावत्॥१८॥ रम्येत्यादि। हर्म्यप्रासादसम्पन्नां हर्म्याणि धनिनां गृहाणि, प्रासादा देवानां राज्ञां च गृहाणि तैः सम्पन्नां समृद्धाम् । सर्व
रत्नविभूषितां सर्वैः श्रेष्ठवस्तुभिरलंकृताम् । तूर्यनादविनादितां तूर्यस्य नृत्यगीतादिकस्य नादेन विनादिताम्, हर्म्यादिषु कृतप्रतिध्वनिमित्यर्थः । सर्व

रम्यचत्वरसंस्थानां सुविभक्तमहापथाम् । हर्म्यप्रासादसम्पन्नां सर्वरत्नविभूषिताम् ॥ १९ ॥ गजाश्वरथसम्बाधां तूर्य
नादविनादिताम् । सर्वकल्याणसम्पूर्णां हृष्टपुष्टजनाकुलाम् ॥२०॥ आरामोद्यानसम्पूर्णां समाजोत्सवशालिनीम् ।
सुखिता विचरिष्यन्ति राजधानीं पितुर्मम ॥ २१ ॥ अपि सत्यप्रतिज्ञेन सार्द्धं कुशलिना वयम् । निवृत्ते समये
ह्यस्मिन् सुखिताः प्रविशेमहि ॥ २२ ॥ परिदेवयमानस्य तस्यैवं सुमहात्मनः । तिष्ठतो राजपुत्रस्य शर्वरी साऽत्य
वर्तत ॥ २३ ॥ प्रभाते विमले सूर्ये कारयित्वा जटावुभौ । अस्मिन् भागीरथीतीरे सुखं सन्तारितौ मया ॥ २४ ॥
जटाधरौ तौ द्रुमचीरवाससौ महाबलौ कुञ्जरयूथपोपमौ । वरेषुचापासिधरौ परन्तपौ व्यवेक्षमाणौ सह सीतया
गतौ ॥ २५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

कल्याणैः सर्वमङ्गलैः सम्पूर्णां सर्वोत्सवैः सम्पूर्णां वा । आरामोद्यानसम्पूर्णाम् आरामाः उपवनानि उद्यानानि राज्ञामसाधारणवनानि तैः समृद्धाम् । समा
जोत्सवशालिनीम् उत्सवसमूहशालिनीम् ॥ १९–२१ ॥अपीति । सत्यप्रतिज्ञेन तीर्णवनवासप्रतिज्ञेन रामेण । प्रविशेमहि, पुरीमिति शेषः ॥२२॥ परि
देवयमानस्येति । तिष्ठतो राजपुत्रस्य राजपुत्रसम्बन्धिनी शर्वरी । अत्यवर्तत निरन्तरपरिदेवनेन रात्रिं यापितवानित्यर्थः ॥ २३ ॥२४॥ जटाधराविति ।
व्यवेक्षमाणौ सर्वतो दत्तावधानौ ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीता० अयोध्यकाण्डव्याख्याने षडशीतितमः सर्गः ॥ ८६ ॥

प्रयोजनमतीत्य गतं व्यर्थं गतमित्यर्थः ॥ १७ ॥ १८ ॥ रम्येत्यादिश्लोकत्रयमेकं वाक्यम् । हर्म्याणि धनिनां गृहाणि, प्रासादाः देवानां राज्ञां च गृहाणि, आरामा
उपवनानि, उद्यानानि राजसाधारणवनानि । समाजोत्सवशालिनीं उत्सवसमूहशालिनीमित्यर्थः ॥ १९–२१ ॥ अपीति । सत्यप्रतिज्ञेन रामेण ॥ २२ ॥ परीति ।
परिदेवयमानस्य राजपुत्रस्य सतः शर्वरी अत्यवर्तत निरन्तरपरिदेवनेन रात्रिर्यातेत्यर्थः ॥ २३ ॥ प्रभात इति । प्रभाते सूर्ये विमले सति अस्मिन् भागीरथीतीरे
जटाः कारयित्वा स्थितावुभौ सुखं मया सन्तारितौ गङ्गामिति शेषः ॥ २४ ॥ जटेति । व्यपेक्षमाणौ निरपेक्षावित्यर्थः ॥ २५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां
श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायाम् षडशीतितमः सर्गः ॥ ८६ ॥

गुहस्येति । यत्र तत्रैव यत्र क्षणे अप्रियं श्रुतं तत्रैवेत्यर्थः । यद्वा यत्र विषये अप्रियं श्रुतं तत्रैव ध्यानं जगाम स्वाभिलषितकार्य्यसङ्कटं जातमिति चिन्ता पारवश्यं प्राप्त इत्यर्थः ॥ १ ॥ सुकुमारइत्यादिश्लोकद्वयमेकान्वयम् । प्रत्याश्वस्य मुहूर्त्तं कालं परमदुर्मनाः सन् सहसा पपात । ससादेतिवा पाठः । सुकुमार इत्यादिना तदवस्थानर्हत्वमुच्यते ॥ २ ॥ ३ ॥ तदवस्थमिति । अनन्तरस्थितः निरन्तरं समीपे स्थितः ॥४॥ ५ ॥ ता इति । अनुसृत्य समीपं

गुहस्य वचनं श्रुत्वा भरतो भृशमप्रियम् । ध्यानं जगाम तत्रैव यत्र तच्छ्रुतमप्रियम् ॥ १ ॥ सुकुमारो महासत्त्वः सिंहस्कन्धो महाभुजः । पुण्डरीकविशालाक्षस्तरुणः प्रियदर्शनः ॥ २ ॥ प्रत्याश्वस्य मुहूर्त्तं तु कालं परमदुर्मनाः । पपात सहसा तोत्रैर्हृतिविद्ध इव द्विपः ॥ ३ ॥ तदवस्थं तु भरतं शत्रुघ्नोऽनन्तरस्थितः । परिष्वज्य रुरोदोच्चैर्विसंज्ञः शोककर्शितः ॥ ४ ॥ ततः सर्वाः समापेतुर्मातरो भरतस्य ताः । उपवासकृशा दीना भर्त्तुर्व्यसनकर्शिताः ॥ ५ ॥ ताश्च तं पतितं भूमौ रुदन्त्यः पर्यवारयन् । कौसल्या त्वनुसृत्यैनं दुर्मनाः परिषस्वजे ॥ ६ ॥ वत्सला स्वं यथा वत्समुपगूह्य तपस्विनी । परिपप्रच्छ भरतं रुदन्ती शोकलालसा ॥ ७ ॥ पुत्र व्याधिर्न ते कच्चिच्छरीरं परिबाधते । अद्य राजकुलस्यास्य त्वदधीनं च जीवितम् ॥८॥ त्वां दृष्ट्वा पुत्र जीवामि रामे सभ्रातृके गते । वृत्ते दशरथे राज्ञि नाथ एकस्त्वमद्य नः॥९॥ कच्चिन्नु लक्ष्मणे पुत्र श्रुतं ते किञ्चिदप्रियम् । पुत्रे वा ह्येकपुत्रायाः सहभार्ये वनं गते॥१०॥

प्राप्य ॥ ६ ॥ वत्सलेति । उपगूह्य परिष्वज्य ॥ ७ ॥ पुत्रेति । नहि भरतस्य व्याधिश्चातुर्थिकः, अपितु रामविरह एव । रामविरहः ते शरीरं बाधते कच्चिदित्यर्थः । अद्येति रामो वनं गतः चक्रवर्त्ती तु संस्थितः । अतस्त्वमेवेदानीमस्माकं रक्षक इति नार्थः, किन्तु रामे भवतो मुखवैवर्ण्यं दृष्ट्वा न पुनरनागतो भवेत्, अवश्यमागमिष्यतीत्येतदवेक्ष्य वयं जीवामः । भवान्नास्तीति श्रुतं चेत् क इमां दिशमवलोकयेत् ॥ ८ ॥ ९ ॥ कच्चिदिति ।

गुहस्येति । ध्यानं जगाम स्वाभिलषितकार्यसङ्कटं जातमिति चिन्तां प्रापेत्यर्थः ॥ १ ॥ सुकुमार इत्यादिश्लोकद्वयमेकं वाक्यम् । प्रत्याश्वस्य मुहूर्त्तकालं परमदुर्मनाः सन् सहसा पपात । ससादेति वा पाठः ॥ २ ॥ ३ ॥ तदवस्थमिति । अनन्तरस्थितः आसन्नस्थितः॥४–९॥ कच्चिदिति । एकपुत्रायाः ममेति शेषः॥१०॥

लक्ष्मणे विषये ते त्वया एकधुत्रायाः, ममेति शेषः ॥१०॥ स इति । परिसान्त्व्य त्वच्छङ्कितं किमपि न भवेदिति वदन्, परिसान्त्व्येत्यर्थः ॥११॥१२॥
स इति । गुहः हृष्टः रामवृत्तान्तकीर्त्तनस्यावकाशो लब्ध इति सञ्जातहर्षः सन् । रामे यद्विधं यादृशम् उपचारादिकम् । प्रतिपेदे अकरोदिति यावत् । तद

समुहूर्त्तं समाश्वस्य रुदन्नेव महायशाः । कौसल्यां परिसान्त्व्येदं गुहं वचनमब्रवीत् ॥ ११ ॥ भ्राता मे कावसद्रात्रौ क्व सीता क्व च लक्ष्मणः । अस्वपच्छयने कस्मिन् किं भुक्त्वा गुह शंस मे ॥ १२ ॥ सोऽब्रवीद्भरतं हृष्टो निषादाधिपतिर्गुहः । यद्विधं प्रतिपेदे च रामे प्रियहितेऽतिथौ ॥ १३ ॥ अन्नमुच्चावचं भक्षाः फलानि विविधानि च । रामायाभ्यवहारार्थं बहु चोपहृतं मया ॥१४॥ तत्सर्वं प्रत्यनुज्ञासीद्रामः सत्यपराक्रमः । न तु तत्प्रत्यगृह्णात् स क्षत्रधर्ममनुस्मरन् ॥ १५ ॥ न ह्यस्माभिः प्रतिग्राह्यं सखे देयं तु सर्वदा । इति तेन वयं राजन्ननुनीता महात्मना ॥१६॥

ब्रवीत् । चकारेण रामकृतं समुच्चीयते ॥ १३ ॥ अन्नमिति । उच्चावचं नानाविधमित्यर्थः । भक्षाः भक्षणीयानि अपूपादीनि । अभ्यवहारार्थं भोजनार्थं बहु चेति अन्यच्च बहुचोष्यलेह्यादिकमुपाहृतम् ॥१४॥ तत्सर्वमिति । रामः तन्न प्रत्यगृह्णात्, किन्तु तत्सर्वं प्रत्यनुज्ञासीत् प्रत्यन्वज्ञासीत्, पुनर्नीयतामित्यनुज्ञातवान् । क्षत्रधर्मं दानमेव क्षत्रधर्मः न त्वादानमिति । अत्र हीनजातिपरिग्रहत्वात्तत्प्रत्याख्यानम् ऋषिभ्यस्तु स्वीकरिष्यतीत्याहुः ॥ १६ ॥ प्रत्यनुज्ञाने हेतुमाह–नेत्यादिना । इत्यनुनीता वयमित्यनेन स्वाङ्घ्रिभक्ताग्रेसरगुहसमर्पितफलादेर्भक्तिपूतत्वेन शबरीविदुरादिन्यायेन परमभागवत तया स्वीकार्यत्वेपि स्वप्रियतमपितृमातृप्रमुखबहुजनविश्लेषदुःखप्राग्भारानुभवजनितवैमनस्येन पुण्यनदीतीरे उपवासचिकीर्षया च गुहसमर्पितं न

स इति । परिसान्त्व्य त्वच्छङ्कितं किमपि नास्तीत्याश्वास्य ॥ ११ ॥ १२ ॥ सोऽब्रवीदिति । गुहः हृष्टः रामवृत्तान्तकीर्तनेन स्वावकाशो लब्ध इति सञ्जातहर्षस्सन् रामे यद्विधं यादृशमुपचारं प्रतिपेदे अकरोदित्यर्थः । तदब्रवीत् । चकारेण रामकृतं समुच्चीयते ॥ १३ ॥ १४ ॥ तत्सर्वमिति । रामस्तन्न प्रत्यगृह्णात् किन्तु तत्सर्वं प्रत्यनुज्ञासीत् प्रत्यर्पयामास ॥ १५ ॥ १६ ॥



स०–प्रत्यनुज्ञासीत् दृष्ट्या स्वीकृत्य मह्यं दत्तवान् । क्षत्रधर्मं वन्येनैव वनवासं करिष्य इति प्रतिज्ञापालनरूपः प्रतिग्रहरूपं वा । प्रथमपक्षे उत्तरश्लोके स्वाभिप्रेतं निगूह्य प्रकारान्तरेण परिहारः कृत इति ध्येयम् । अत एवानुनीता इत्यत्रासन्धिः ॥ १९ ॥

प्रतिजग्राह रामइति च गुहेनापि विदितमिति गम्यते ॥१६॥ लक्ष्मणेनेति । औपवास्यम् । उपवासम् । स्वार्थे ष्यञ् ॥१७॥ तत इति । जलशेषेण रामपीत जलशेषेण अकरोत्, पानमिति शेषः । वाग्यताः नियतवाचः । सीताया अपि सन्ध्यायां ध्यानजपादिकमस्त्येव । संहिताः समाहिताः । ननु पूर्वं पुरोवादे

लक्ष्मणेन समानीतं पीत्वा वारि महायशाः। औपवास्यं तदाऽकार्षीद्राघवः सह सीतया ॥१७॥ ततस्तु जलशेषेण लक्ष्मणोप्यकरोत्तदा । वाग्यतास्ते त्रयः सन्ध्यां समुपासत संहिताः ॥ १८ ॥ सौमित्रिस्तु ततः पश्चादकरोत् स्वास्तरं शुभम् । स्वयमानीय बर्हींषि क्षिप्रं राघवकारणात् ॥ १९ ॥ तस्मिन् समाविशद्रामः स्वास्तरे सह सीतया। प्रक्षाल्य च तयोः पादावपचक्राम लक्ष्मणः ॥ २० ॥ एतत्तदिङ्गुदीमूलमिदमेव च तत्तृणम् । यस्मिन् रामश्च सीता च रात्रिं तां शयितावुभौ ॥ २१ ॥ नियम्य पृष्ठे तु तलाङ्गुलित्रवान् शरैः सुपूर्णाविषुधी परन्तपः । महद्धनुः सज्यमुपोह्य लक्ष्मणो निशामतिष्ठत् परितोऽस्य केवलम् ॥ २२ ॥

"ततश्चीरोत्तरासङ्गः सन्ध्यामन्वास्य पश्चिमाम् । जलमेवाददे भोज्यं लक्ष्मणेनाहृतं स्वयम् ॥" इत्युक्तम् । कथमत्रानुवादे प्रथमं जलादानं पश्चात्सन्ध्योपासनं चोच्यते ? सत्यम्; तथैव क्रमः । इह तु गुहानीतान्नानङ्गीकारे किं भुक्तवान् राम इत्याकाङ्क्षायां लक्ष्मणेन यद्वार्यानीतं तत्पीतमिति प्रसङ्गसङ्गत्या जलपानं प्रथममुक्त्वाऽथ सन्ध्योपासनमुक्तमिति न दोषः ॥ १८ ॥ सौमित्रिरिति । ततः पश्चात् वारिपानानन्तरम् । स्वयं बर्हींषि कुशान् "बर्हिर्नाग्नौ न ना कुशे" इति वैजयन्ती । क्षिप्रमानीय राघवकारणात् राघवनिमित्तम् । शुभं पवित्रं स्वास्तरं सुष्ठु आस्तीर्णम्, शयनमिति यावत् । अकरोत् कृतवान् ॥ १९ ॥ तस्मिन्निति । पादौ प्रक्षाल्य गङ्गातीरगमनकृतपङ्कशोधनं कृत्वेत्यर्थः । इदं च रामस्य स्वहस्ताभ्यां सीतायास्तूदकप्रदानेनेति बोध्यम् । अपचक्राम शयनकाले समीपवर्त्तनस्यानुचितत्वात् दूरे स्थितः ॥२०॥ एतदिति । शयितौ "गत्यर्थाकर्मकश्लिषशीङ्—" इत्यादिना कर्त्तरि निष्ठा ॥२१॥ नियम्येति । पृष्ठे पश्चाद्भागे । इषुधी तूणीरद्वयं नियम्य बद्ध्वा, शूराणां सव्यापसव्यप्रयोगार्थमिषुधिद्वयधारणमस्ति । तलाङ्गुलित्रवान् " . तलं ज्याघात

लक्ष्मणेनेत्यादिश्लोकद्वयमेकं वाक्यम् । वाग्यतास्ते त्रयस्सन्ध्यां समुपासत । अथ राघवः लक्ष्मणेन यद् वार्यानीतं तत्पीत्वा औपवास्यम् उपवासम् । औपवस्तमिति पाठेप्ययमेवार्थः । लक्ष्मणोप्यकरोत औपवास्यमित्यनुषङ्गः ॥१७॥१८॥ सौमित्रिरिति । स्वास्तरं सुष्ठु आस्तरं शयनमित्यर्थः । बर्हींषि कुशानि ॥१९–२१॥ नियम्येति ।

वारणम्" इत्यमरः। उपोह्य धृत्वा अस्य परितोऽतिष्ठत्, सर्वतोरक्षणार्थं प्रदक्षिणं चचारेत्यर्थः। निशां निशायाम्। अत्यन्तसंयोगे द्वितीया। केवलमित्यनेन शयननिद्राराहित्यं लक्ष्मणस्योच्यते ॥२२॥ तत इति। अहं चोत्तमबाणचापधृत् एको भ्राता नगरात् वनानि निरगमयत, अयमपरः सुप्तसिद्धायां

ततस्त्वहं चोत्तमबाणचापधृत् स्थितोऽभवं तत्र स यत्र लक्ष्मणः। अतन्द्रिभिर्ज्ञातिभिरात्तकार्मुकैर्महेन्द्रकल्पं परिपालयंस्तदा ॥२३॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे सप्ताशीतितमः सर्गः॥८७॥
तच्छ्रुत्वा निपुणं सर्वं भरतः सह मन्त्रिभिः। इङ्गुदीमूलमागम्य रामशय्यामवेक्ष्य ताम्॥१॥ अब्रवीज्जननीः सर्वा इह तेन महात्मना। शर्वरी शयिता भूमाविदमस्य विमर्दितम्॥२॥ महाभागकुलीनेन महाभागेन धीमता। जातो दशरथेनोर्व्यां न रामः स्वप्तुमर्हति॥३॥ अजिनोत्तरसंस्तीर्णे वरास्तरणसञ्चये। शयित्वा पुरुषव्याघ्रः कथं शेते महीतले॥४॥

किमपि कुर्य्यादिति शङ्कया सज्जायुधः सन् यत्रयत्र स लक्ष्मणः स्थितः तत्रतत्र स्थितोऽभवम्, प्रतिपदं तमनुसृतवानभवमित्यर्थः। अतन्द्रिभिर्ज्ञातिभिरात्तकार्मुकैः मम परिकराश्च अयं वनचरो निषादजातीयः रामे किञ्चित्करिष्यतिचेत् एनं च प्रहराम इति सावधाना मां प्रतिपदमन्वसरन्नित्यर्थः। एवमस्थाने भयशङ्किभिः कृतम्, वस्तुतः स न केनचित् परिभाव्य इत्याह महेन्द्रकल्पमिति ॥२३॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्ताशीतितमः सर्गः ॥ ८७ ॥ तदित्यादिश्लोकद्वयमेकं वाक्यम्। निपुणं सावधानमित्यर्थः। तेन रामेण। इह भूमौ। शर्वरी शयिता शर्वर्य्यां शयनं कृतम्। निष्ठाया अधिकरणत्वस्याभिहितत्वाच्छर्वरीशब्दात् प्रथमा, इदमेषामासितमितिवत्। इदमस्य विमर्दितमित्यत्राप्यधिकरणे निष्ठा। "क्तस्य च वर्त्तमाने" इति कर्त्तरि षष्ठी। अस्मिन्नेतत्कर्तृकं विमर्दनमित्यर्थः॥ १ ॥२॥ महाभागेति। महाभागेन महानुभावेन। दशरथेनेति पञ्चम्यर्थे तृतीया ॥ ३ ॥ अजिनेति। अजिनोत्तरसंस्तीर्णे अजिनरूपोत्तरच्छदेन संस्तीर्णे। अजिनशब्देन "कदलीकन्दलीचीनश्चमूरुप्रियका

तलाङ्गुलित्रवान् तलं ज्याघातवारणम्। अङ्गुलित्रम् अङ्गुलित्राणम् तदुभयवान्। इषुधी तूणीरौ उपोह्य धृत्वा। केवलमित्यनेन लक्ष्मणसम्बन्धिशयननिद्राराहित्यमुच्यते ॥२२॥२३॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायां सप्ताशीतितमः सर्गः॥८७॥१॥ तेन रामेण शर्वरीशयितं शर्वर्यां शयितम्। अस्य रामस्य। विमर्दितं विमर्दनम् ॥ २ ॥ महाभागेति। दशरथेनेति हेतौ तृतीया पञ्चम्यर्थे वा ॥ ३ ॥ अजिनेति । अजिनोत्तरसंस्तीर्णे अजिनोत्तर

वपि । समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ " इत्युक्तकदल्याद्यजिनं विवक्षितम् । वरास्तरणसञ्चये वराणि अमूल्यानि आस्तरणानि येषु पर्य्यङ्केषु तेषां सञ्चये समूहे । पर्य्यङ्कानां बहुत्वं शीतोष्णादिकालोचितान्तर्गृहशिरोगृहादिबाहुल्यात् । यद्वा मार्दवातिशयायानेकास्तरणत्वम् । अतिमृदुत्वादजिनस्योपर्यास्तरणत्वम् ॥ ४ ॥ प्रासादेति । प्रासादाग्रविमानेषु विमानतुल्यप्रासादशिखरेषु । वलभीषु कूटागारेषु " कूटागारे तु वलभी " इति वैजयन्ती । हैमराजतभौमेषु हैमानि राजतानि भौमानि भूतलानि येषु तेषु । वरास्तरणशालिषु चित्रकम्बलादिशालिषु ॥५॥ पुष्पसञ्चयचित्रेषु चित्रपुष्प

प्रासादाग्रविमानेषु वलभीषु च सर्वदा । हैमराजतभौमेषु वरास्तरणशालिषु ॥ ५ ॥ पुष्पसञ्चयचित्रेषु चन्दनागरुगन्धिषु । पाण्डराभ्रप्रकाशेषु शुकसङ्घरुतेषु च ॥ ६ ॥ प्रासादवरवर्य्येषु शीतवत्सु सुगन्धिषु । उषित्वा मेरुकल्पेषु कृतकाञ्चनभित्तिषु ॥ ७ ॥ गीतवादित्रनिर्घोषैर्वराभरणनिस्वनैः । मृदङ्गवरशब्दैश्च सततं प्रतिबोधितः ॥ ८ ॥ वन्दिभिर्वन्दितः काले बहुभिः सूतमागधैः । गाथाभिरनुरूपाभिस्स्तुतिभिश्च परन्तपः ॥ ९ ॥

समूहेषु । चन्दनागरुगन्धिषु चन्दनागरुधूपगन्धिषु । पाण्डराभ्रप्रकाशेषु तद्वद्धवलेषु । शुकसङ्घरुतेषु शुकसमूहनादवत्सु । अर्शआदित्वादच् मत्वर्थीयः ॥६॥ प्रासादवरवर्येषु प्रासादवराणामुत्तमेषु । शीतवत्सु शैत्यवत्सु । "शीतं गुणे तद्वत्"इत्यमरः। सुगन्धिषु घनसारादिभिरिति शेषः। उषित्वा शयित्वेत्यर्थः। उपरि प्रतिबोधोक्तेः । मेरुतुल्यत्वे हेतुः कृतकाञ्चनभित्तिष्विति ॥७॥ गीतवादित्रनिर्घोषैः गीतैस्तदनुगुणवीणादिरावैः । वराभरणनिस्वनैः परिचारिकापाणिचरणनूपुरकङ्कणाद्याभरणशिञ्जितैः। मृदङ्गवरशब्दैः मर्दलविशेषध्वनिभिश्च सततं प्रतिबोधितः । अथ प्रबोधनानन्तरम् । काले प्रातःकाले । वन्दिभिः कर्तृभिः सूतमागधैश्च । गाथाभिः गद्यविशेषैः ( पद्यविशेषैः ) । स्तुतिभिः स्तोत्रप्रबन्धैश्च वन्दितः स्तुतः । " वदि अभिवादनस्तुत्योः " इति धातुः । परन्तपः अन्यराजशिक्षणपरो रामः ( अथ राज्यशिक्षणपरो रामः ) कथं भूमौ केवलायां शेते कथं श्वापदरवैः प्रतिबोध्यते कथमेकाकी तिष्ठतीति चोपस्कार्यम् । गम्यमानत्वादप्रयोगः । "यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा । यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः ॥" इत्यादिवत् ॥८॥९॥

च्छदेन संस्तीर्णे, अत्राजिनशब्देन कदल्यादिमृगविशेषाजिनं विवक्षितम् । वरास्तरणसञ्चये वराण्यमूल्यानि आस्तरणानि येषु पर्यङ्केषु तेषां सञ्चये समूहे ॥ ४ ॥ प्रासादेति । प्रासादाग्रविमानेषु विमानाकारराजगृहेषु । हैमराजतभौमेषु हैमानि राजतानि भौमानि भूतलानि येषु तेषु । वरास्तरणशालिषु प्रासादवरवर्येषु प्रासाद

अश्रद्धेयमिति । इदं रामस्य तृणशय्याशयनादिकम् अश्रद्धेयम् । लोके पश्यामि "लोकृ दर्शने" इति धातुः । तत्र हेतुमाह न सत्यमिति । किञ्च मे भावः हृदयं मुह्यते खलु मुह्यति किमु । रामस्य भूमिशयनश्रवणादिकं भ्रमो वेत्यर्थः । अथवा अयं पूर्वोक्तश्रवणम् । स्वप्नापेक्षया पुल्लिङ्गत्वम् । स्वप्न इति मे मतिः मतम्, सिद्धान्त इत्यर्थः । कथमन्यथा सर्वमिदमसम्भाव्यं सम्भाव्यत इति भावः ॥ १० ॥ नेति । कालेन कालात् । दैवतं बलवत्तरं न

अश्रद्धेयमिदं लोके न सत्यं प्रतिभाति मा। मुह्यते खलु मे भावः स्वप्नोऽयमिति मे मतिः ॥१०॥ न नूनं दैवतं किञ्चित् कालेन बलवत्तरम् । यत्र दाशरथी रामो भूमावेव शयीत सः ॥ ११ ॥ विदेहराजस्य सुता सीता च प्रियदर्शना। दयिता शयिता भूमौ स्नुषा दशरथस्य च ॥ १२ ॥ इयं शय्या मम भ्रातुरिदं हि परिवर्तितम्। स्थण्डिले कठिने सर्वं गात्रैर्विमृदितं तृणम् ॥ १३ ॥ मन्ये साभरणा सुप्ता सीतास्मिन् शयनोत्तमे । तत्रतत्र हि दृश्यन्ते सक्ताः कनकबिन्दवः ॥१४॥ उत्तरीयमिहासक्तं सुव्यक्तं सीतया तदा । तथा ह्येते प्रकाशन्ते सक्ताः कौशेयतन्तवः॥१५॥

नूनं काल एव बलीयानित्यर्थः । यत्र यस्मात् दाशरथिः दशरथपुत्रोपि भूमावेव शयीत तस्मादित्यर्थः ॥ ११ ॥ विदेहराजस्येति । प्रियदर्शना अत दर्हेत्यर्थः । दयिता रामस्य प्राणेभ्योपि प्रेयसी शयिता शयितवती । कर्तरि क्तः । हन्तेति शेषः ॥ १२ ॥ इयमिति । परिवर्तितं परिवर्त्तनं स्वापकाले श्रमातिशयादितस्ततः शरीरपरिवर्त्तनपरम् । परिवर्तनज्ञापकमाह स्थण्डिल इति । स्थण्डिले भूतले कठिनस्थलत्वात् गात्रैः विमृदितं क्षुण्णं तृणम् इद मित्यनुषङ्गः ॥१३॥ मन्य इति । साभरणा सुप्ता मार्गश्रमादाभरणमनुन्मुच्य सुप्तवती । शयनोत्तमे भर्तृशय्यात्वादितरतल्पेभ्यः श्रेष्ठतमे । साभरण सुप्तेत्यत्र सूचकमाह तत्रतत्रेति । तत्रतत्र तृणेषु सक्ताः कनकबिन्दवः जाम्बूनदाभरणनिर्गलिताः सूक्ष्मरेणवः ॥ १४ ॥ उत्तरीयमिति । इह कुशाग्रेषु

वराणामुत्तमेषु । उषित्वा शयित्वेत्यर्थः । वराभरणनिस्वनैः परिचारिकाणां नूपुराद्याभरणानां शिञ्जितैः स्तुतिभिश्च प्रतिबोधितः महीतले कथं शेत इति पूर्वेण सम्बन्धः ॥ ५–१२ ॥ इयमिति । गात्रैः करचरणाद्यवयवैः ॥ १३ ॥ १४ ॥ उत्तरीयमिति । सीतया धृतमिति शेषः । यद्वा षष्ठ्यर्थे तृतीया ॥ १५ ॥



विष०—सर्वं गात्रं तृणैर्विमृदितं क्षुण्णमिति सम्बन्धः ॥ १३ ॥

आसक्तम् इदमासञ्जनं सुव्यक्तं सीतया सीतयाः ॥ १५ ॥ मन्य इति । या कापि भर्तुः शय्या पतिव्रतायाः सुखेति मन्ये । यतः सुकुमारी मैथिली सती पातिव्रता अस्मिन्नपि शयने शायिता दुःखं न जानाति ॥ १६॥ हाहन्तेति । हाहन्तेत्येकनिपातः खेदार्थः । अहं नृशंसोस्मि निर्दयोस्मि । मम कृते मन्निमित्तम् । कृते इत्यव्ययम् ॥१७॥ जन्मना शक्तिमत्तया प्रजारञ्जकत्वेन शरीरलक्षणेन च राज्यार्हो रामः कथमेतादृशीं दुर्दशां प्राप्त इति खिद्यति—सार्वभौम

मन्ये भर्त्तुः सुखा शय्या येन बाला तपस्विनी । सुकुमारी सती दुःखं न विजानाति मैथिली ॥ १६ ॥ हा हन्तास्मि नृशंसोऽहं यत् सभार्यः कृते मम । ईदृशीं राघवः शय्यामधिशेते ह्यनाथवत् ॥ १७ ॥ सार्वभौमकुले जातः सर्वलोकस्य सम्मतः । सर्वलोकप्रियस्त्यक्त्वा राज्यं सुखमनुत्तमम् ॥ १८ ॥ कथमिन्दीवरश्यामो रक्ताक्षः प्रियदर्शनः । सुखभागी न दुःखार्हः शयितो भुवि राघवः ॥ १९ ॥ धन्यः खलु महाभागो लक्ष्मणः शुभलक्षणः । भ्रातरं विषमे काले यो राममनुवर्त्तते ॥ २० ॥ सिद्धार्था खलु वैदेही पतिं यानुगता वनम् । वयं संशयिताः सर्वे हीनास्तेन महात्मना ॥ २१ ॥ अकर्णधारा पृथिवी शून्येव प्रतिभाति मा । गते दशरथे स्वर्गं रामे चारण्यमाश्रिते ॥२२॥ न च प्रार्थयते कश्चिन्मनसापि वसुन्धराम् । वनेऽपि वसतस्तस्य बाहुवीर्याभिरक्षिताम् ॥ २३ ॥ शून्यसंवरणारक्षामयन्त्रितहयद्विपाम् । अपावृतपुरद्वारां राजधानीमरक्षिताम् ॥ २४ ॥

कुले जात इत्यादिना श्लोकद्वयेन ॥ १८॥ १९॥ धन्य इति । विषमे काले सङ्कटे काले ॥२०॥ सिद्धार्थेति । पतिमनु पतिमनुसृत्य वनं गतेति सम्बन्धः । संशयिताः अस्मत्सेवां रामोऽङ्गीकरिष्यति नवेति संशयिताः ॥२१॥ अकर्णधारेति । अकर्णधारा प्रधानपुरुषरहितेति यावत् । अतएव शून्येव प्रतिभाति ॥२२॥ अनायकत्वे कथं राज्यं निरुपद्रवम् ? तत्राह—न चेति । कश्चित् सामन्तः न प्रार्थयते आक्रमितुं नेच्छति॥२३॥ रामवीर्यं विना रक्षकान्तरशून्यत्वमाह शून्यसंवरणेत्यादि । शून्यसंवरणारक्षाम् अविद्यमानप्राकाररक्षकाम् । यद्वा शून्यसंवरणः गुप्तिरहितः आरक्षः गुल्मस्थानं यस्याः सा तथा । अयन्त्रिताः येन मैथिली दुःखं न विजानाति तेन कारणेन भर्तुश्शय्या पतिव्रतानां सुखेति मन्य इति सम्बन्धः ॥१६—२०॥ सिद्धार्थेति । पतिमनुसृत्य वनं गता अतः सिद्धार्था वयं संशयिताः स्वस्य पुरुषार्थविषयसंशयं प्राप्ताः ॥२१॥ अकर्णेति । अकर्णधारेव कर्णधाररहिता नौरिव । शून्या नायकरहिता ॥ २२ ॥ २३ ॥ शून्येति । शून्य

रक्षकाणां रामपारवश्येन तैरबद्धाः हयद्विपाः यस्यास्ताम् । अपावृतानि अपिहितानि पुरद्वाराणि यस्यास्ताम् । अप्रहृष्टबलत्वमरक्षितत्वे हेतुः । न्यूनां साधनविहीनाम् । विषमस्थां दुर्दशापन्नाम् । अनावृतां बाह्यरक्षकरहिताम् । नाभिमन्यन्ते अभिभवितुं न स्मरन्ति । भक्षान् अपूपादीन् । विषैः विष

अप्रहृष्टबलां न्यूनां विषमस्थामनावृताम् । शत्रवो नाभिमन्यन्ते भक्षान् विषकृतानिव ॥ २५ ॥ अद्यप्रभृति भूमौ तु शयिष्येऽहं तृणेषु वा । फलमूलाशनो नित्यं जटाचीराणि धारयन् ॥ २६ ॥ तस्यार्थमुत्तरं कालं निवत्स्यामि सुखं वने । तं प्रतिश्रवमामुच्य नास्य मिथ्या भविष्यति ॥२७॥ वसन्तं भ्रातुरर्थाय शत्रुघ्नो माऽनुवत्स्यति । लक्ष्मणेन सह त्वार्यो ह्ययोध्यां पालयिष्यति ॥२८॥ अभिषेक्ष्यन्ति काकुत्स्थमयोध्यायां द्विजातयः । अपि मे देवताः कुर्युरिमं सत्यं मनोरथम् ॥ २९ ॥ प्रसाद्यमानः शिरसा मया स्वयं बहुप्रकारं यदि नाभिपत्स्यते । ततोऽनुवत्स्यामि चिराय राघवं वने वसन्नार्हति मामुपेक्षितुम् ॥३०॥ इत्यार्षे०वाल्मी०श्रीमदयोध्याकाण्डे अष्टाशीतितमः सर्गः ॥८८॥

मिश्रैः कृतान् ॥ २४ ॥२५॥ उक्तसर्वानर्थस्य आत्ममूलकतया तत्प्रायश्चित्तमाह—अद्येत्यादिश्लोकद्वयमेकान्वयम् । तं प्रतिश्रवं तां प्रतिज्ञाम् । आमुच्य स्वस्मिन्नासज्य । तस्यार्थं रामार्थमित्यर्थः । उत्तरं कालं चतुर्दशवर्षात्मके काले रामानुष्ठितव्यतिरिक्तोत्तरकालं वने वत्स्यामि । मिथ्या न भविष्यति, प्रतिज्ञेति शेषः ॥ २६–२८ ॥ अभिषेक्ष्यन्तीति । देवताः इमं मनोरथं सत्यं कुर्युरपि । सम्भावनायामपिशब्दः ॥ २९ ॥ प्रसाद्यमान इति । शिरसा प्रणामपूर्वकं स्वयं न तु मन्त्रिमुखेन । नाभिपत्स्यते नाङ्गीकरिष्यति, प्रसादमिति शेषः । ततस्तदा वने वसन् राघवमनुवत्स्यामि तदनुचरो भवामि । अनुचरणं वा कथमङ्गीकरिष्यतीत्यत्राह नार्हति मामुपेक्षितुमिति । मां भ्रातरं शिष्यं दासमित्यर्थः ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टाशीतितमः सर्गः ॥ ८८ ॥

संवरणारक्षां विहीनप्राकाररक्षाम् । अयन्त्रितहयद्विपाम् असन्नद्धाश्वगजाम् । न्यूनां साधनविहीनाम् । विषमस्थां दुर्दशोपपन्नाम् । अनावृतां बाह्यरक्षकरहिताम् । नाभिमन्यन्ते नाभिभवितुं स्मरन्ति ॥ २४ ॥ २५ ॥ अद्यप्रभृतीत्यादिश्लोकद्वयमेकं वाक्यम् । तं प्रतिश्रवं तां प्रतिज्ञाम् रामकृतवनवासप्रतिज्ञामित्यर्थः । आमुच्य स्वस्मिन्नासज्य । तस्यार्थं रामार्थम् उत्तरं कालं चतुर्दशवर्षात्मकरामानुष्ठेये व्यतिरिक्तोत्तरं कालम् । वने वत्स्यामि, अतोऽस्य रामस्य प्रतिज्ञा मिथ्या न भविष्यति ॥ २६–२९ ॥ प्रसाद्यमान इति । न प्रपत्स्यते नाङ्गीकरिष्यति यदि; प्रार्थनामिति शेषः ॥३०॥ इति श्रीमहे० श्रीरामा०अयोध्याकाण्ड०अष्टाशीतितमः सर्गः ॥८८॥



स०—अनावृतां सर्वतः पुररक्षकै रहिताम् । एतादृशीमपि विषकृतान्भक्षानाशङ्कया यथा नाभिमन्यन्ते तथा रामभिया नेच्छन्तीत्यर्थः ॥ २९ ॥

व्युष्येति । व्युष्य उषित्वा । रात्रिं रात्रौ । तत्रैव यत्र रामोऽशयिष्ट तत्रैव । काल्यं प्रत्यूषः । "प्रत्यूषोऽहर्मुखं काल्यम्" इत्यमरः । तस्मिन्नित्यर्थः ॥१॥ शत्रुघ्नेति । शत्रुघ्न भद्रं त इति सान्त्वोक्तिः । वाहिनीं गङ्गाम् । अस्मानित्यर्थसिद्धम् ॥ २ ॥ जागर्मीति । नाहं स्वपिमि जागर्मीति भ्रात्रा प्रचोदितः

व्युष्य रात्रिं तु तत्रैव गङ्गाकूले स राघवः । भरतः काल्यमुत्थाय शत्रुघ्नमिदमब्रवीत् ॥ १ ॥ शत्रुघ्नोत्तिष्ठ किं शेषे निषादाधिपतिं गुहम् । शीघ्रमानय भद्रं ते तारयिष्यति वाहिनीम् ॥ २ ॥ जागर्मि नाहं स्वपिमि तमेवार्यं विचिन्तयन् । इत्येवमब्रवीद्भ्रात्रा शत्रुघ्नोपि प्रचोदितः ॥३॥ इति संवदतोरेवमन्योन्यं नरसिंहयोः । आगम्य प्राञ्जलिः काले गुहो भरतमब्रवीत् ॥ ४ ॥ कच्चित्सुखं नदीतीरेऽवात्सीः काकुत्स्थ शर्वरीम् । कच्चित्ते सहसैन्यस्य तावत्सर्वमनामयम् ॥५॥ गुहस्य तत्तु वचनं श्रुत्वा स्नेहादुदीरितम् । रामस्यानुवशो वाक्यं भरतोऽपीदमब्रवीत् ॥ ६ ॥ सुखा नः शर्वरी राजन् पूजिताश्चापि ते वयम् । गङ्गां तु नौभिर्बह्वीभिर्दाशाः सन्तारयन्तु नः ॥ ७ ॥ ततो गुहः संत्वरितं श्रुत्वा भरतशासनम् । प्रतिप्रविश्य नगरं तं ज्ञातिजनमब्रवीत् ॥ ८ ॥ उत्तिष्ठत प्रबुध्यध्वं भद्रमस्तु च वः सदा । नावः समनुकर्षध्वं तारयिष्याम वाहिनीम् ॥ ९ ॥

शत्रुघ्नोपि तमेवार्यं यस्त्वया चिन्त्यते तमेवार्यं विचिन्तयन् सन् अहमपि जागर्मि न स्वपिमि इत्येवमब्रवीत् । तथैवेतिपाठे—यथा त्वं तथैवाहमार्यं विचिन्तयन्नित्यर्थः । चरमपर्वनिष्ठस्य प्रथमपर्वाभिनिवेशस्तत्प्रीत्यर्थतयेति व्यञ्जितम् । 'तदवस्थं तु भरतं शत्रुघ्नोऽनन्तरास्थितः' इतिहि पूर्वमप्युक्तम् ॥ ३ ॥ इतीति । संवदतोः सतोः काले गमनोचितकाले ॥ ४ ॥ कच्चिदिति । शर्वरीं तावत् शर्वर्यां साकल्येन । " यावत्तावच्च साकल्ये " इत्यमरः । सहसैन्यस्य ते सेनासहितस्य तव । सर्वमुपकरणम् अनामयं निरुपद्रवम् ॥ ५ ॥ गुहस्येति । रामस्यानुवशः रामायत्तः ॥ ६ ॥ सुखेति । सुखा सुखावहा, जातेतिशेषः । राजन्निति रामभक्ततया स्तौति । ते त्वया ॥ ७ ॥ तत इति । प्रतिप्रविश्य पुनः प्रविश्य ॥ ८ ॥ उत्तिष्ठतेति । प्रबुध्यध्वम् उत्तिष्ठतेति क्रमः । तारयिष्यामेत्यत्र विसर्गलोप आर्षः । तारयिष्यामीति च पाठः ॥ ९ ॥

॥ १–१० ॥

नावां पञ्चशतानीत्यन्वयः । समन्ततः सर्वावतारेभ्यः ॥१०॥ अन्या इति । अन्याः क्षुद्राभ्यः पञ्चशतनौभ्यः अन्याः स्वस्तिकविज्ञेयाः 'स्वस्तिकः सर्वतो भद्रः' इत्युक्तस्वस्तिकाख्यरचनाविशेषविशिष्टतया निर्मितत्वात् स्वस्तिका इति विज्ञेयाः । ताश्च नौद्वयसङ्घटनेन सम्पद्यन्ते । चतुर्षु कोणेषु महाघण्टा

ते तथोक्ताः समुत्थाय त्वरिता राजशासनात् । पञ्च नावां शतान्याशु समानिन्युः समन्ततः ॥ १० ॥ अन्याः स्वस्तिकविज्ञेया महाघण्टाधरा वराः । शोभमानाः पताकाभिर्युक्तवाताः सुसंहताः ॥ ११ ॥ ततः स्वस्तिकविज्ञेयां पाण्डुकम्बलसंवृताम् । सनन्दिघोषां कल्याणीं गुहो नावमुपाहरत् । तामारुरोह भरतः शत्रुघ्नश्च महाबलः ॥१२॥ कौसल्या च सुमित्रा च याश्चान्या राजयोषितः । पुरोहितश्च तत्पूर्वं गुरवो ब्राह्मणाश्च ये । अनन्तरं राजदारास्तथैव शकटापणाः ॥१३॥ आवासमादीपयतां तीर्थं चाप्यवगाहताम् । भाण्डानि चाददानानां घोषस्त्रिदिवमस्पृशत् ॥१४॥

धराः । वराः राजार्हतया श्रेष्ठाः । शोभमानाः कनकरूषिततया शोभमानाः । युक्तवाताः फलककुडचकरणेन मध्येमध्ये गवाक्षनिर्माणेन च महावातनिवारणादुचितवाताः । सुसंहताः राजारोहणस्थानत्वेनायसकीलादिभिर्दृढसन्धिबन्धाः । अत्रापि नाव आनिन्युरित्यनुकृष्यते ॥ ११ ॥ तत इति । ततः तासु स्वस्तिकविज्ञेयादिषु मध्ये पाण्डुकम्बलेन संवृताम् आच्छन्नतलप्रदेशाम् । सनन्दिघोषां हर्षजनककिङ्किण्यादिघोषयुक्ताम् । कल्याणीं शोभनाम् ॥१२॥ भरतशत्रुघ्नव्यतिरिक्तानामन्यासु नौष्वारोहणक्रममाह—कौसल्येत्यादिना । राजयोषितः आगता इति शेषः । तत्पूर्वं तासां पूर्वं पुरोहितो गुरवो ब्राह्मणाश्च ये आगतास्ते आरुरुहुः । अनन्तरं राजदाराः कौसल्यादयः आरुरुहुः । तथैव शकटापणाः शकटाश्चापणस्थपदार्थाश्चारुरुहुः । एतदारोहणं कर्तृद्वारा ॥१३॥ आवासं सेनानिवेशम् । आदीपयताम् अग्निना ज्वलयताम् । राजभटा हि निर्गमनकाले श्रीसमागमार्थमावासं दहन्तीति प्रसिद्धिः । तीर्थम् अव

अन्याः पूर्वोक्तव्यतिरिक्ताः स्वस्तिकविज्ञेयाः स्वस्तिकाख्यरचनाविशेषविशिष्टतया निर्मितत्वात्स्वस्तिका इति विज्ञेयाः । युक्तवाहाः पर्याप्तकर्णधारयुक्ताः । युक्तवाता इति पाठे—चारुफलकभित्तिसमावरणेन परिमितवाताः । सुसंहताः दृढसन्धिबन्धाः समानिन्युरित्यनुषङ्गः ॥ ११ ॥ तत इति । सनन्दिघोषां हर्षजनककिङ्किण्यादिघोषयुक्ताम् ॥ १२ ॥ कौसल्येत्यादि । राजयोषितः आगता इति शेषः । तत्पूर्वं तासां पूर्वम् । पुरोहितो गुरवो ब्राह्मणाश्च ये आगतास्ते आरुरुहुः । अनन्तरं राजदाराः कौसल्याप्रमुखा राजदाराः तथैवारुरुहुः । तथैव शकटापणाः शकटाश्च आपणाश्च आपणस्थपदार्थाश्च आरुरुहुः आरोपयामासुरित्यर्थः ॥ १३ ॥ आवासमिति । आवासं सेनानिवेशः । तीर्थम् अवतरणप्रदेशः । भाण्डानि उपकरणानि ॥ १४ ॥ १५ ॥

तरणप्रदेशम् । अवगाहतां नावारोहणार्थमहमहमिकया आगच्छतामित्यर्थः । स्नानं कुर्वतामिति वा । भाण्डानि उपकरणानि । आददानानां मदीयमिदं मदीयमिदमिति त्वरया स्वीकुर्वतां जनानाम् । घोषस्त्रिदिवमस्पृशत् महान् घोषो जात इत्यर्थः ॥ १४ ॥ पताकिन्य इति । पताकिन्यः वाय्वाकर्षणाय कृतपताकाः स्वयं संपेतुः आशुगत्वेन दाशाधिष्ठानमात्रेणानायासेन जग्मुरित्यर्थः ॥ १५ ॥ सम्प्रति ता नावः कीदृग्विधा इत्यपेक्षायामाह–नारीणामि

पताकिन्यस्तु ता नावः स्वयं दाशैरधिष्ठिताः। वहन्त्यो जनमारूढं तदा सम्पेतुराशुगाः ॥ १५ ॥
नारीणामभिपूर्णास्तु काश्चित् काश्चिच्च वाजिनाम् । काश्चिदत्र वहन्ति स्म यानयुग्यं महाधनम् ॥ १६ ॥
ताः स्म गत्वा परं तीरमवरोप्य च तं जनम् । निवृत्ताः काण्डचित्राणि क्रियन्ते दाशबन्धुभिः ॥ १७ ॥
सवैजयन्तास्तु गजा गजारोहप्रचोदिताः । तरन्तः स्म प्रकाशन्ते सध्वजा इव पर्वताः ॥ १८ ॥

त्यादि । नारीणामभिपूर्णाः नारीभिरभिपूर्णाः । वाजिनामभिपूर्णाः आरोहणार्हवाजिभिरभिपूर्णाः । दध्नः पूर्ण इति महाभाष्यकारवचनप्रामाण्यात् पूर्ण शब्दयोगे "पूरणगुण–" इत्यादिना षष्ठी तृतीयार्थे षष्ठी वा । यानयुग्यं यानानि रथशकटादीनि युग्यानि अश्वतरबलीवर्दादीनि । "सर्वो द्वन्द्वो विभाषयैकवद्भवति" इत्येकवद्भावः । महाधनं बहुमूल्यम् । "बहुमूल्यं महाधनम्" इत्यमरः ॥१६॥ ता इति । काण्डचित्राणि काण्डे वारिणि चित्राणि चित्रगमनानि क्रियन्ते अक्रियन्त । "काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु" इत्यमरः । दाशबन्धुभिः दाशाभासैः दाशस्य गुहस्य बन्धुभिरिति वा । भाराभावकृतलाघवातिशयेन निवर्तनकालिकदाशलीलोच्यते॥१७॥ सवैजयन्ता इति । सवैजयन्ताः सपताकाः सगृहा वा । राजानो हि गजोपरि गृहाणि निर्माय गच्छन्ति । तरन्तः प्लवन्तः "तॄ प्लवनतरणयोः" । सध्वजाः सगमनाः "ध्वज गतौ" जङ्गमपर्वता इव प्रकाशन्ते इत्यर्थः ॥ १८ ॥

नारीणामिति । नारीणामभिपूर्णाः नारीभिरभिपूर्णाः । वाजिनाम् आरोहणार्हवाजिभिरभिपूर्णाः । यानयुग्यं यानानि रथशकटादीनि, युग्यानि अश्वाश्वतरबलीवर्दादीनि च यानयुग्यम् । महाधनं बहुमूल्यम् ॥ १६ ॥ ताः स्मेति । ताः नावः । तं जनम् अवरोप्य निवृत्ताः । दाशबन्धुभिः दाशश्रेष्ठैः । काण्डचित्राणि काण्डे वारिणि चित्राणि विचित्रगमनानि क्रियन्ते निवृत्तिसमये भारावरोपणलघुत्वजनितेन सौकर्येण विचित्रगतिसहितं दाशैरानीयन्तेत्यर्थः । "काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु" इत्यमरः । काण्डचित्रा इति पाठः ॥ १७ ॥ सवैजयन्ताः सपताकाः ॥ १८ ॥

नाव इति । नावः क्षुद्रनावः प्लवैः तृणकाष्ठनिर्मितैः कुम्भघटैः कुम्भरूपघटैः सूक्ष्मवदना घटाः कुम्भाः ते हि तरणसाधनानि न घटमात्रम्। बाहुभिः केवल बाहुभिः ॥१९॥ सेति । पुण्या गङ्गास्नानादिना पूता। ध्वजिनी सेना स्वयं नतु परप्रेरणेन । मैत्रे मुहूर्ते दिवसस्य पञ्चदशभागेषु घटिकाद्वयात्मके तृतीये मुहूर्ते "द्वे तु नाड्यो मुहूर्तोऽस्त्री" इति वैजयन्ती । मुहूर्तसंख्योक्ता बृहस्पतिना–'रौद्रः सार्पस्तथा मैत्रः पैत्रो वासव एव च । आप्यो वैश्वस्तथा

नावश्चारुरुहुश्चान्ये प्लवैस्तेरुस्तथापरे । अन्ये कुम्भघटैस्तेरुरन्ये तेरुश्च बाहुभिः ॥ १९ ॥ सा पुण्या ध्वजिनी गङ्गा दाशैः सन्तारिता स्वयम् । मैत्रे मुहूर्ते प्रययौ प्रयागवनमुत्तमम् ॥ २० ॥ आश्वासयित्वा च चमूं महात्मा निवेशयित्वा च यथोपजोषम् । द्रष्टुं भरद्वाजमृषिप्रवर्यमृत्विग्वृतः सन् भरतः प्रतस्थे ॥ २१ ॥

ब्राह्मप्राजेशैन्द्राग्नास्तथैव च । ऐन्द्राग्नो नैर्ऋतश्चैव वारुणार्यमणौ भगी । एतेऽह्नि क्रमशो ज्ञेया मुहूर्ता दशपञ्च च" इति।(पाठभेदः।तस्य मैत्रनामत्वं विन्ध्य माधवीये प्रोक्तं यथा–"आर्द्रोरगमित्रमघावसुजलविश्वाभिजिद्विरिश्चेन्द्राः । ऐन्द्राग्नमूलवरुणार्यमभगयुक्ता दिवामुहूर्ताः स्युः ॥" इति। मैत्रे मुहूर्ते तारिता सती प्रयागवनं ययावित्यन्वयः। घटिकाषट्क एव गङ्गातरणमिति भावः। यद्वा मैत्रे प्रयागवनं ययावित्यन्वयः।,तत्रातिथ्येन निरवधिकभोगलाभात् मुहूर्त विशेषोक्तिः ॥ २० ॥ आश्वासयित्वेति । आश्वासयित्वा सान्त्वयित्वा । यथोपजोषं यथासुखम् । "तूष्णीमर्थे सुखे जोषम्" इति वैजयन्ती । ऋषि प्रवर्यम् ऋषिश्रेष्ठम् ( पाठभेदः । आश्वासयित्वेति । महात्मा महामतिः । स्वयं खिन्नोपि अखिन्न इव पराश्वासनपरः भरतः राज्यभरणदक्षः' भरत इति राज्यस्य भरणात्' इति सहस्रानीकवचनात् । चमूं महाजनम् ।अविशेषेण आश्वासयित्वा महानायासो वो जात इति प्रियोक्तिभिः सान्त्वयित्वा यथोपजोषं यथासुखं निवेशयित्वा यत्र प्रदेशे तेषां सुखं भवति तत्र प्रदेशे तान्निवेशयित्वा । प्रवर्षं प्रकृष्टवर्षम् । बहुवयस्कमिति यावत् । "भरद्वाजो ह त्रिभिरायुर्भि

कुम्भाः अधिकप्रमाणाः,घटाः न्यूनप्रमाणाः॥१९॥ मैत्रे मुहूर्ते रौद्रादिषु पञ्चदशघटिकामुहूर्तेषु तृतीयो मुहूर्तः तस्मिन् । तथा चोक्तम् "रौद्रः सार्पस्तथा मैत्रः पैत्रो वासव एव च। आप्यो वैश्वस्तथा ब्रह्मा प्राजेशेन्द्राग्नमुच्यते। ऐन्द्रोथ निर्ऋतिश्चैव वारुणार्यमदेवताः। एते क्रमेण विज्ञेया मुहूर्ता दशपञ्च च॥" इति॥२०॥ आश्वासयित्वेति।

स०–कुम्भघटैः कुम्भानां घटा समूहो येषु मद्यादिषु ते तथा तैः । षण्डादिशब्दानां वृक्षसमूहवाचकत्वं यथा तद्वद्घटाशब्दस्य करिसमूहवाचिन इतरसमूहवाचकत्वेपि न क्षतिः । यद्वा अन्ये कुम्भैः कलशैः घटैः करिशिरोभिश्च तेरुः । "घटस्समाधिभेदेभशिरःकुण्टकटेषु च" इति विश्वः । कुम्भस्स्यादित्यारभ्य द्विपाङ्गे चेति तत्रैवोक्तेर्विपरीतं वा ॥ १९ ॥

ब्रह्मचर्यमुवास तं ह जीर्णि स्थविरं शयानम्" इतिश्रुतेः। एतेन वयोवृद्धत्वमुक्तम्। ज्ञानवृद्धत्वमाह ऋषिमिति। "ऋष दर्शने" इति धातुः। भरद्वाजं "बृहतो भरद्वाजः" इतिश्रुतिप्रसिद्धम्) द्रष्टुं दर्शनपूर्वकमभिवन्दितुम्। तादृशस्य ऋषेर्विनीतवेषदर्शनीयत्वेन ऋत्विग्भिर्वसिष्ठादिभिः वृतः सन् प्रतस्थे पद्भ्यामेव जगाम॥२१॥ स ब्राह्मणस्येति। ब्राह्मणस्य ब्रह्म वेदः तदधीते ब्राह्मणः। "तदधीते तद्वेद" इत्यण्प्रत्ययः। अधीतबहुवेदस्येत्यर्थः। "भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास" इत्यादिना काठके तथाभिधानात्। महात्मनो महाज्ञानस्य। देवपुरोहितस्य बृहस्पतिपुत्रत्वेन देवपुरोहितत्वम्। "आत्मा वै

## स ब्राह्मणस्याश्रममभ्युपेत्य महात्मनो देवपुरोहितस्य। ददर्श रम्योटजवृक्षषण्डं महद्वनं विप्रवरस्य रम्यम् ॥२२॥

## इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

पुत्रनामासि" इति न्यायात्। भरद्वाजो ममताख्यायामुचथ्यभार्यायां बृहस्पतेर्जात इति भागवते प्रसिद्धम्। आश्रममभ्युपेत्य आश्रममुद्दिश्य गत्वा। प्रथमं तस्य महद्वनं ददर्श। (पाठभेदः। स इति। ब्राह्मणस्य ब्रह्म परमात्मानं वेत्तीति ब्राह्मणः। "तदधीते तद्वेद" इत्यण्प्रत्ययः। उत्तरसर्गरीत्या समाधिबलेन समस्तवस्त्वाह्वानक्षमस्येत्यर्थः। यद्वा "ब्रह्मबृहस्पतिः" इतिश्रुत्या ब्रह्मणो बृहस्पतेरपत्यं ब्राह्मणः तस्य महात्मनः महास्वभावस्य, अचिन्त्यशक्तेरित्यर्थः। देवपुरोहितस्य देवपुरोहितपुत्रत्वात् 'आत्मा वै पुत्रनामासि' इतिश्रुतेः) विप्रवरस्य निरवधिकवेदाध्ययनसम्पन्नस्य। "जन्मना जायते शूद्रः कर्मणा जायते द्विजः। वेदाभ्यासेन विप्रत्वं ब्रह्म जानाति ब्राह्मणः।" इत्यादिस्मृतेः। श्रुतिश्चास्य निरवधिकवेदाध्ययनसम्पत्तिं दर्शयति "भरद्वाज यत्ते चतुर्थमायुर्दद्यां किमनेन कुर्या इति ब्रह्मचर्यमेवैनेन चरेयमिति होवाच" इत्यादिना। आश्रममभ्युपेत्य प्राप्य रम्योटजवृक्षषण्डं रमणीयपर्णशालाप्रान्तवर्तिवृक्षसमूहयुक्तम्। रम्यं स्वतएव मनोज्ञप्रदेशम्। महत् स्वसेनानिवेशक्षमं वनं ददर्श॥२२॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोननवतितमः सर्गः ॥ ८९ ॥

यथोपजोषम् यथासुखम् ॥ २१ ॥ देवपुरोहितस्य भरद्वाजस्य देवपुरोहितत्वोक्तिः बृहस्पतिपुत्रत्वात्। बृहस्पतिरुचथ्यभार्यायां ममतायां पुत्रमुत्पादयामास, भर्तुर्भिया पुत्रं परित्यक्तुकामां तां देवा ऊचुः। उचथ्यस्य क्षेत्रजत्वेन बृहस्पतेरौरसत्वेन "भरद्वाजममुं भर" इति। तस्माद्भरद्वाज इति। रम्योटजवृक्षषण्डं रम्या उटजाः वृक्षषण्डानि वृक्षसमूहाः यस्मिंस्तत् ॥२२॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां एकोननवतितमः सर्गः ॥८९॥

भरद्वाजाश्रममित्यादिश्लोकद्वयमेकान्वयम् । क्रोशादेव क्रोशात् पूर्वमेव, क्रोशमात्रव्यवहितदेश इत्यर्थः । न्यस्तशस्त्रपरिच्छदः परिच्छदः आभरणादिकं भृङ्गाराद्युपकरणजातं च । वसानो वाससी क्षौमे भरद्वाजसेवार्थमुष्णीषकञ्चुकादिकमपहाय परिधानमुत्तरीयं च धृत्वा गत इत्यर्थः । ननु पूर्वं जटाचीराणि धारयन्नित्युक्तं जटिलं चीरवसनमिति च वक्ष्यति, कथमत्र क्षौमवासस्त्वमुच्यते ? नैष दोषः;पूर्वं प्रतिज्ञामात्रं कृतम्, भरद्वाजाश्रमात्परं जटाधारणमिति ।

भरद्वाजाश्रमं दृष्ट्वा क्रोशादेव नरर्षभः । बलं सर्वमवस्थाप्य जगाम सह मन्त्रिभिः ॥ १ ॥ पद्भ्यामेव हि धर्मज्ञो न्यस्तशस्त्रपरिच्छदः । वसानो वाससी क्षौमे पुरोधाय पुरोधसम् ॥ २ ॥ ततः सन्दर्शने तस्य भरद्वाजस्य राघवः । मन्त्रिणस्तानवस्थाप्य जगामानुपुरोहितम् ॥ ३ ॥ वसिष्ठमथ दृष्ट्वैव भरद्वाजो महातपाः । सञ्चचालासनात्तूर्णं शिष्यानर्घ्यमिति ब्रुवन् ॥ ४ ॥ समागम्य वसिष्ठेन भरतेनाभिवादितः । अबुध्यत महातेजाः सुतं दशरथस्य तम् ॥ ५ ॥ ताभ्यामर्घ्यं च पाद्यं च दत्त्वा पश्चात् फलानि च । आनुपूर्व्याच्च धर्मज्ञः पप्रच्छ कुशलं कुले ॥ ६ ॥ अयोध्यायां बले कोशे मित्रेष्वपि च मन्त्रिषु । जानन् दशरथं वृत्तं न राजानमुदाहरत् ॥ ७ ॥ वसिष्ठो भरतश्चैनं पप्रच्छतुरनामयम् । शरीरेऽग्निषु वृक्षेषु शिष्येषु मृगपक्षिषु ॥ ८ ॥

पुरोधाय पुरस्कृत्य ॥ १ ॥ २ ॥ तत इति । सन्दर्शने दूरादर्शने । राघवः रघुवंशवृत्ताभिज्ञः । अनुपुरोहितं पुरोहितस्य पश्चात् । अनोः पश्चादर्थेऽव्ययीभावः ॥ ३ ॥ वसिष्ठमिति । सञ्चचाल उदतिष्ठत् । अर्घ्यम्, आनयतेतिशेषः ॥ ४ ॥ समागम्येति । सवयस्कत्वान्नमस्काराभावः । अबुध्यतेति वसिष्ठसाहचर्य्यादिति भावः ॥ ५ ॥ ताभ्यामिति । आनुपूर्व्यात् प्रधानक्रमात् धर्मज्ञः पूजाक्रमधर्म्मज्ञः । कुले गृहे ॥ ६ ॥ अयोध्यायामिति । वृत्तम् अतीतम्, मृतमिति यावत् । नोदाहरत् तत्प्रसङ्गमेव न कृतवान् ॥ ७॥ तपोधनानां शरीराग्न्यादेः तपस्साधनत्वात् मृगपक्ष्यादीनामाश्रमवासित्वेन शिष्यवत् प्रीतिविषयत्वाच्च तद्विषयः प्रश्नः कृत इत्याह—वसिष्ठ इत्यादिना ॥ ८ ॥

भरद्वाजेत्यादिश्लोकद्वयमेकं वाक्यम ॥१॥२॥ पुरोहितमनुजगाम पुरोहितं पुरतः कृत्वा जगामेत्यर्थः ॥ ३ ॥ अर्घ्यम् आनयामासेति शेषः ॥४॥ ५॥ वृत्तं नोदाहरत

तथेति तत्प्रतिज्ञाय सर्वत्र तत्पृष्टमनामयमङ्गीकृत्य। राघवस्नेहबन्धनात् राघवविषये स्नेहानुबन्धनात्। नतु भरते दोषदर्शनात् ॥ ९ ॥ किमिति। न शुद्धयते शुद्धिं न प्राप्नोति, न विश्वसितीति यावत् ॥ १० ॥ सुषुव इत्यादिश्लोकत्रयमेकान्वयम्। नन्दवर्द्धनम् आनन्दवर्द्धनम्। चिरं प्रव्राजितः चिरकालमुद्दिश्य प्रव्राजितः। यः एतादृशः तस्य रामस्य राज्यमकण्टकं भोक्तुमनाः अपापस्य तस्यानुजस्य च पापं कर्त्तुं नेच्छसि

तथेति तत्प्रतिज्ञाय भरद्वाजो महातपाः। भरतं प्रत्युवाचेदं राघवस्नेहबन्धनात् ॥ ९ ॥ किमिहागमने कार्य्यं तव राज्यं प्रशासतः। एतदाचक्ष्व मे सर्वं नहि मे शुद्धयते मनः ॥ १० ॥ सुषुवे यममित्रघ्नं कौसल्या नन्दवर्द्धनम्। भ्रात्रा सह सभार्यो यश्चिरं प्रव्राजितो वनम् ॥ ११ ॥ नियुक्तः स्त्रीनियुक्तेन पित्रा योऽसौ महायशाः। वनवासी भवेतीह समाः किल चतुर्दश ॥१२॥ कच्चिन्न तस्यापापस्य पापं कर्तुमिहेच्छसि। अकण्टकं भोक्तुमना राज्यं तस्यानुजस्य च ॥ १३ ॥ एवमुक्तो भरद्वाजं भरतः प्रत्युवाच ह। पर्य्यश्रुनयनो दुःखाद्वाचा संसज्जमानया ॥ १४ ॥ हतोऽस्मि यदि मामेवं भगवानपि मन्यते। मत्तो न दोषमाशङ्के नैवं मामनुशाधि हि ॥ १५ ॥ न चैत दिष्टं माता मे यदवोचन्मदन्तरे। नाहमेतेन तुष्टश्च न तद्वचनमाददे ॥ १६ ॥

कच्चिदिति सम्बन्धः ॥ ११–१३ ॥ एवमिति। पर्य्यश्रुनयनः परिप्लुताश्रुनयनः। संसज्जमानया स्खलन्त्या ॥ १४॥ हत इति। हतोऽस्मि व्यर्थजन्मास्मि। भगवानपि भूतभविष्यद्वर्तमानज्ञोऽपीत्यर्थः। मत्तः मत्सकाशात्। मयि दोषं नाशङ्के नोत्प्रेक्षे मत्कृतो दोषो नास्तीति सन्देहोपि मे नास्तीत्यर्थः। अभावादिति भावः। अतो मामेवं नानुशाधि एवं कर्णारुन्तुदं वक्तुं नार्हसि ॥ १५ ॥ मातृकृतं त्वत्कृतमेवेत्याशङ्क्याह–नेति।

न पृष्टवान् ॥ ६–८ ॥ राघवस्नेहबन्धनात् रामविषयस्नेहबन्धनात् ॥९॥ न शुद्धयते शुद्धिं न प्राप्नोति, न विश्वसितीति यावत् ॥ १० ॥ सुषुवइत्यादिश्लोकद्वयमेकं वाक्यम्। चिरंप्रव्राजितः चिरकालमुद्दिश्य प्रव्राजितः ॥ ११ ॥ १२ ॥ तस्य रामस्य। राज्यमकण्टकं भोक्तुमनाः, अपापस्य तस्यानुजस्य च पापं द्रोहं कर्तुं नेच्छसि कच्चिदिति सम्बन्धः ॥ १३ ॥ पर्यश्रुनयनः परिप्लुताश्रुनयनः। संसज्जमानया स्खलन्त्या ॥ १४ ॥ भगवानपि भूतभविष्यद्वर्तमानार्थज्ञोपीत्यर्थः। मयि दोषं नाशङ्के नोत्प्रेक्षे अतो मामेवं नानुशास्तु हि एवं कर्णकठोरं वक्तुं नार्हसि ॥ १५ ॥ मदन्तरे मया विना ॥१६॥

स०–रामहनने राज्यमकण्टकं भवतीति अकण्टकं भोक्तुमनाः। तस्य रामस्यानुजस्य लक्ष्मणस्य च पापं वधरूपम् ॥ १३ ॥ हतोस्मि हतप्रायोस्मि ॥ १९ ॥

मदन्तरे मदसन्निधौ । नाददे नाङ्गीकृतवानस्मि ॥ १६ ॥ अहमिति । प्रसादकः प्रसादयितुम् । "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति ण्वुल् ॥१७॥ त्वमिति । एवंगतं एवं बुद्धा प्राप्तं महीपतिः, वर्त्तत इति शेषः ॥ १८ ॥ वसिष्ठादिभिरिति । याचितः भरताय प्रसन्नो भवेति प्रार्थितः । प्रसादादुवाच प्रसादं प्राप्योवाच । ल्यब्लोपे पञ्चमी ॥ १९ ॥ त्वयीति । गुरुवृत्तिः ज्येष्ठानुवर्त्तनम् । दम इन्द्रियनिग्रहः, राज्यालोलत्वमिति यावत् ।

अहं तु तं नरव्याघ्रमुपयातः प्रसादकः । प्रतिनेतुमयोध्यां च पादौ तस्याभिवन्दितुम् ॥ १७ ॥ त्वं मामेवङ्गतं मत्वा प्रसादं कर्तुमर्हसि । शंस मे भगवन् रामः क्व सम्प्रति महीपतिः ॥ १८ ॥ वसिष्ठादिभिर्ऋत्विग्भिर्याचितो भगवांस्ततः । उवाच तं भरद्वाजः प्रसादाद्भरतं वचः ॥ १९ ॥ त्वय्येतत्पुरुषव्याघ्र युक्तं राघववंशजे । गुरुवृत्ति र्दमश्चैव साधूनां चानुयायिता ॥ २० ॥ जाने चैतन्मनःस्थं ते दृढीकरणमस्त्विति । अपृच्छं त्वां तथात्यर्थं कीर्त्तिं समभिवर्द्धयन् ॥ २१ ॥ जाने च रामं धर्म्मज्ञं ससीतं सहलक्ष्मणम् । असौ वसति ते भ्राता चित्रकूटे महागिरौ ॥ २२ ॥ श्वस्तु गन्तासि तं देशं वसाद्य सह मन्त्रिभिः । एतं मे कुरु सुप्राज्ञ कामं कामार्थकोविद ॥ २३ ॥

साधूनां चानुयायिता सच्चित्तानुवर्त्तनम् । इत्येतत्त्रयं त्वयि युक्तमित्यन्वयः ॥ २० ॥ जान इति । जाने योगप्रभावेनेति शेषः । दृढीकरणमस्त्वित्यपृच्छं स्थूणानिखननन्यायेन दृढीकर्तुमपृच्छमित्यर्थः । कीर्त्तिं रामविषयसौभ्रात्रजनितां समभिवर्द्धयन् । "लक्षणहेत्वोः क्रियायाः" इति हेत्वर्थे शतृ प्रत्ययः ॥२१॥ जान इति । रामं जाने देशविशेषे स्थितं रामं जान इत्यर्थः ॥२२॥ श्व इति । काममभीष्टं कामार्थकोविद काङ्क्षितार्थप्रदानदक्षेत्यर्थः ॥२३॥

प्रसादकः प्रसादयितुम् ॥ १७ ॥ १८ ॥ वसिष्ठादिभिः याचितः भरताय प्रसन्नो भवेति प्रार्थितः । प्रसादात् प्रसादं प्राप्योवाचेत्यर्थः ॥ १९ ॥ एतत् गुरुवृत्त्यादि त्रयम् ॥ २० ॥ कीर्त्तिं रामविषयसौभ्रात्रजनिताम् ॥ २१ ॥ २२ ॥ श्व इति । कामार्थकोविद वाञ्छितार्थप्रदानदक्षेत्यर्थः ॥ २३ ॥

स०—कामार्थे कामितार्थे, तद्दान इति यावत् । कोविद । यद्वा सुप्राज्ञेत्युपसर्गद्वयेन धर्मविषयकज्ञानवत्त्वस्योक्तत्वादत्र कामार्थयोः कोविदेत्यर्थः ॥ २३ ॥

तत इति । प्रतीतरूपः प्रसिद्धकीर्तिः । "रूपं यशस्याभिरूप्ये वर्णे चैव निरूपणे" इति निघण्टुः । यद्वा प्रतीतरूपः प्रकर्षेण हृष्टः । प्रशंसायां रूपप् । चकार बुद्धिं चेति नह्युक्तिरन्या बुद्धिरन्येति भावः॥२४॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे पीता०अयोध्याकाण्डव्याख्यानेनवतितमस्सर्गः॥९०॥ कृतेति । तत्रैवाश्रमे निवासाय कृतबुद्धिं निश्चितबुद्धिं भरतं स मुनिः आतिथ्येन भोजनपर्य्यन्तातिथिसत्काराय न्यमन्त्रयत् प्रार्थयामास ॥ १ ॥

ततस्तथेत्येवमुदारदर्शनः प्रतीतरूपो भरतोऽब्रवीद्वचः । चकार बुद्धिं च तदा तदाश्रमे निशानिवासाय नराधिपात्मजः ॥ २४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे नवतितमः सर्गः ॥ ९० ॥ कृतबुद्धिं निवासाय तत्रैव स मुनिस्तदा । भरतं कैकयीपुत्रमातिथ्येन न्यमन्त्रयत् ॥१॥ अब्रवीद्भरतस्त्वेनं नन्विदं भवता कृतम् । पाद्यमर्घ्यं तथातिथ्यं वने यदुपपद्यते ॥ २ ॥ अथोवाच भरद्वाजो भरतं प्रहसन्निव । जाने त्वां प्रीतिसंयुक्तं तुष्येस्त्वं येन केनचित् ॥ ३ ॥ सेनायास्तु तवैतस्याः कर्तुमिच्छामि भोजनम् । मम प्रीतिर्यथारूपा त्वमर्हो मनुजाधिप ॥ ४ ॥ किमर्थं चापि निक्षिप्य दूरे बलमिहागतः । कस्मान्नेहोपयातोसि सबलः पुरुषर्षभ ॥५॥ भरतः प्रत्युवाचेदं प्राञ्जलिस्तं तपोधनम् । ससैन्यो नोपयातोऽस्मि भगवन् भगवद्भयात् ॥ ६ ॥ राज्ञा च भगवन् नित्यं राजपुत्रेण वा सदा । यत्नतः परिहर्त्तव्या विषयेषु तपस्विनः ॥ ७ ॥

अब्रवीदिति । वने यत्फलमूलादिकम् उपपद्यते लभ्यते तेन तापसाहारेणातिथ्यं कृतम्, ननु एतावन्मात्रेण तुष्टोऽस्मीति भावः ॥ २ ॥ अथेति । प्रहसन्निव प्रहासावेदकानुभावयुक्तः । मुनिरितःपरं किं करिष्यतीति भरताशयज्ञानेन हासः, त्वां प्रीतिसंयुक्तं मद्विषये सन्तुष्टं जाने अत एव केनचिदुपचारेण तुष्येः तुष्टो भवेः ॥ ३ ॥ सेनाया इति । भुज्यत इति भोजनमन्नम् । अत्रादौ तथापीत्युपस्कार्य्यम्, तथापि मम प्रीतिर्यथारूपा यादृशप्रकारा तथा त्वमर्हः, त्वं तथा प्रीतो भवितुमर्ह इत्यर्थः, तथानुमन्तुमर्हसीत्यर्थो वा ॥ ४ ॥ किमर्थमिति । उक्तमेवार्थं व्यतिरेकमुखेनाप्याह–कस्मादित्यादिना ॥ ५ ॥ भरत इति । भगवद्भयात् भवान् कुप्येदिति भयात् ॥ ६ ॥ राज्ञेति । विषयेषु तपस्विनः स्वकीयदेशेषु वर्तमानाः

प्रतीतरूपः प्रकर्षेण हृष्टरूपः ॥२४॥ इति श्रीमहेश्वरतीर्थ०श्रीरामा०तत्त्व० अयोध्याकाण्डव्याख्यायां नवतितमः सर्गः ॥ ९० ॥ कृतबुद्धिं कृताध्यवसायम् ॥१॥ वने यदुपपद्यते तेन आतिथ्यं कृतं नन्वित्यब्रवीदितिसम्बन्धः ॥२॥३॥ तथार्हः तथाङ्गीकर्तुमर्हसीत्यर्थः । ( तथार्हो मनुजाधिप इति पाठः ) ॥ ४–६ ॥ विषयेषु देशेषु ।

ऋषयः यत्नतः परिहर्तव्याः, ससैन्येन तत्समीपं न गन्तव्यमित्यर्थः ॥ ७ ॥ कोपनिमित्तमाह–वाजिमुख्या इत्यादिना । उटजान् पर्णशालाः ॥ ८ ॥ ९॥ आनीयतामिति । ततः सेनानिवेशस्थलात् । इतः इह । समुपागमं समानयनम् ॥ १० ॥ अग्निशालामिति । अग्निशालाप्रवेशः पावनत्वार्थः, देवतासन्निधानस्थलत्वात् । अपः पीत्वा, त्रिरिति शेषः । " त्रिराचामेत् " इतिश्रुतेः । परिमृज्य आस्यम् , द्विरितिशेषः । " द्विःपरिमृज्य " इतिश्रुतेः । चक्रा

वाजिमुख्या मनुष्याश्च मत्ताश्च वरवारणाः । प्रच्छाद्य भगवन् भूमिं महतीमनुयान्ति माम् ॥ ८ ॥ ते वृक्षानुदकं भूमिमाश्रमेषूटजांस्तथा । न हिंस्युरिति तेनाहमेक एव समागतः ॥ ९ ॥ आनीयतामितः सेनेत्याज्ञप्तः परमर्षिणा । ततस्तु चक्रे भरतः सेनायाः समुपागमम् ॥ १० ॥ अग्निशालां प्रविश्याथ पीत्वापः परिमृज्य च । आतिथ्यस्य क्रियाहेतोर्विश्वकर्माणमाह्वयत् ॥ ११ ॥ आह्वये विश्वकर्माणमहं त्वष्टारमेव च । आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयताम् ॥ १२ ॥ आह्वये लोकपालांस्त्रीन् देवान् शक्रमुखांस्तथा । आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयताम् ॥ १३ ॥ प्राक्स्रोतसश्च या नद्यः प्रत्यक्स्रोतस एव च । पृथिव्यामन्तरिक्षे च समायान्त्वद्य सर्वशः ॥ १४ ॥ अन्याः स्रवन्तु मैरेयं सुरामन्याः सुनिष्ठिताम् । अपराश्चोदकं शीतमिक्षुकाण्डरसोपमम् ॥ १५ ॥

रेण सकृदुपस्पृश्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमारभ्य इत्युक्तसंग्रहः । अनेन सर्वकर्म्माङ्गमाचमनमिति दर्शितम् । क्रियाहेतोः करणनिमित्तम् ॥ ११ ॥ आह्वानमन्त्रमाह–आह्वय इत्यादिना । आह्वय इत्यात्मनेपदमार्षम् । विश्वकर्मा सर्वशिल्पकर्ता । त्वष्टा तु तक्षणेन गृहादिनिर्माता । यद्वा त्वष्टारमेव चेत्यवधारणेनासुरविश्वकर्म्मा मयो व्यावर्त्यते । तत्रातिथ्यनिमित्तं संविधीयतां गृहादिसंविधानं क्रियताम् ॥ १२ ॥ वक्ष्यमाणान्नपानादिरक्षणाय लोकपालानाह्वयति–आह्वय इति । शक्रमुखान् इन्द्रप्रधानान् । शक्रस्य पृथङ्निर्देशात् त्रीन् लोकपालान् यमवरुणकुबेरान् देवानित्यग्न्यादय उच्यन्ते । संविधीयतां पालनं क्रियताम् ॥१३॥ सर्वा नदीर्द्वेधा विभज्याह्वयति–प्राक्स्रोतस इति । सह युगपत् ॥१४॥ तासां कर्त्तव्यमाह–अन्या इति ।

तपस्विनः परिहर्तव्याः सेनया सह गमने तेषामाश्रमपीडा भवेदिति भावः॥७–९॥ समुपागमं समानयनम् ॥१०॥ पीत्वापः परिमृज्य सम्यगाचम्य ॥११॥१२॥ त्रीन् लोकपालान् यमवरुणकुबेरान ॥१३॥१४॥ मैरेयं मिरादेशभवं खर्जूरतालादिहेतुकं मद्यविशेषम् । सुरा "गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा" इत्युक्ताम् ।

अन्याः काश्चन मैरेयं मिरादेशे भवं खर्जूरादिहेतुकं मद्यविशेषम् । सुरां "गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा" इत्युक्तां त्रिविधां सुराम् । सुनिष्ठितां सुनिष्पादिताम् । इक्षुकाण्डरसोपमम् । काण्डो वर्गः ॥ १५ ॥ गानार्थमाह्वयति—आह्वय इति । देवगन्धर्वान् मनुष्यगन्धर्वभिन्नान् । हहाहुहूनिति च्छान्दसो ह्रस्वः । अप्सरसां द्वैविध्यमाह—देवीर्गन्धर्वीरिति । देवीः देवजातीः । गन्धर्वीः गन्धर्वजातीः । अतएव " एते वै गन्धर्वाप्सरसां गृहाः " इति

आह्वये देवगन्धर्वान् विश्वावसुहहाहुहून् । तथैवाप्सरसो देवीर्गन्धर्वीश्चापि सर्वशः ॥ १६ ॥
घृताचीमथ विश्वाचीं मिश्रकेशीमलम्बुसाम् । नागदन्तां च हेमां च हिमामद्रिकृतस्थलाम् ॥ १७ ॥
शक्रं याश्चोपतिष्ठन्ति ब्रह्माणं याश्च योषितः । सर्वास्तुम्बुरुणा सार्द्धमाह्वये सपरिच्छदाः ॥ १८ ॥
वनं कुरुषु यद्दिव्यं वासोभूषणपत्रवत् । दिव्यनारीफलं शश्वत्तत्कौबेरमिहैतु च ॥ १९ ॥

श्रौतप्रयोगः ॥ १६ ॥ आवश्यकत्वेन प्रधानाप्सरसो विशिष्याह्वयति—घृताचीमित्यादिना । घृतवदञ्च्यते पूज्यत इति घृताची । विश्वैः समस्तैः अञ्च्यत इति विश्वाची । मिश्रकेशीं निरन्तरकेशीं श्रेष्ठकेशीं वा । बुसेभ्योऽलमलम्बुसाम् । बुसा बुधाः देवाः वर्णविपर्ययः। नागानां दन्ता इव शुभ्राः दन्ताः यस्यास्तां नागदन्ताम् । हेमां हेमवर्णाम् । पुनश्च हेमामिति पाठे—पूर्वोक्तहेमापेक्षया अस्या व्यावृत्तिमाह अद्रिकृतस्थलामिति । अद्रौ महेन्द्रे मयेन कृतनिवासां स्वयम्प्रभाबिलस्थामित्यर्थः । हिमामितिपाठे—हिमवच्छीतलाङ्गीम् । यद्वा हिममस्यास्तीति हिमा । अद्रिकृतस्थला चान्या एवमेतान्यन्वर्थनामानि ॥१७॥ शक्रमिति । शक्रं या उपतिष्ठन्ति रम्भोर्वशीमेनकादयः । ब्रह्माणं चतुर्मुखं तल्लोकेऽप्यप्सरसः सन्ति । " तं पञ्चशतान्यप्सरसां प्रतिधावन्ति" इति श्रुतेः। इदं च मतान्तरमनुसृत्योक्तम् । तुम्बुरुणा तासां गानशिक्षकेण सपरिच्छदाः नृत्यगीताद्युपकरणसहिताः सालङ्कारा वा ॥ १८ ॥ भोगोपकरणान्याहूय भोगस्थानान्याह्वयति-वनमिति । वनं चैत्ररथाख्यम्, तच्चोत्तरकुरुदेशे वर्त्तते । दिव्यं देवार्हम्। वासोभूषणान्येव पत्राण्यस्मिन् सन्तीति वासोभूषणपत्रवत्। शश्वत् सर्वदा । दिव्यनार्य्य एव फलानि यस्मिन् तत् तथा । एवम्भूतं यत्कौबेरमस्ति तत् इह वने एतु आगच्छतु । उत्तरदिक्पालत्वेन कुबेराधिष्ठितत्वात्

सुनिष्ठिताः सुस्थिताः ॥ १५–१७ ॥ सपरिच्छदाः सालङ्काराः ॥ १८ ॥ वासोभूषणपत्रवत् वासो भूषणान्येव पत्राणि यस्मिन् सन्तीति तथा । दिव्यनार्य एव फलानि

कौबेरमित्युक्तम् । इयं च कुबेरं प्रत्येवोक्तिः । नदीनामिव वनस्याह्वानं तदधिष्ठातृदेवताद्वारा ॥ १९ ॥ एवं कुबेरं प्रत्युक्त्वा अन्नपतिं चन्द्रं प्रत्याह–इहेति । मे मन्निमित्तम् । भगवान् माहात्म्यवान् । सोम ओषधीनामधिपतिश्चन्द्रः उत्तममन्नं विधत्तां सम्पादयतु । अन्नं चतुर्विधत्वेन विशेषयति–भक्ष्यमित्यादि । भक्ष्यं खाद्यमपूपादि । भोज्यम् ओदनादि । चोष्यं शुष्कादि । लेह्यं रसायनादि । विविधम् एकैकमनेकविधं । तदपि बहु अनल्पम् ॥२०॥

इह मे भगवान् सोमो विधत्तामन्नमुत्तमम् । भक्ष्यं भोज्यं च चोष्यं च लेह्यं च विविधं बहु ॥ २० ॥ विचित्राणि च माल्यानि पादपप्रच्युतानि च । सुरादीनि च पेयानि मांसानि विविधानि च ॥ २१ ॥ एवं समाधिना युक्त स्तेजसाऽप्रतिमेन च । शीक्षास्वरसमायुक्तं तपसा चाब्रवीन्मुनिः ॥ २२ ॥ मनसा ध्यायतस्तस्य प्राङ्मुखस्य कृताञ्जलेः । आजग्मुस्तानि सर्वाणि दैवतानि पृथक्पृथक् ॥ २३ ॥ मलयं दर्दुरं चैव ततः स्वेदनुदोऽनिलः । उपस्पृश्य ववौ युक्त्या सुप्रियात्मा सुखः शिवः ॥ २४ ॥

विचित्राणीति । पादपप्रच्युतानि, नवानीति भावः ॥२१॥ एवमाह्वाने शक्तिविशेषं दर्शयति–एवमित्यादिना । समाधिना योगेन । तपसा ज्ञानेन । यद्वा अनशनादिकायक्लेशरूपेण अतएव तेजसा अनागमे दण्डनसामर्थ्येन च युक्तः मुनिः । शीक्षास्वरसमायुक्तं शीक्ष्यन्ते उपदिश्यन्ते वर्णस्वरादयोऽनयेति शीक्षा । छान्दसो दीर्घः । शीक्षाप्रतिपाद्यस्वरयुक्तमिति क्रियाविशेषणम् । "दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" इतिस्वरापराधस्य प्रत्यवायहेतुत्वश्रवणात् । एवम् आह्वये विश्वकर्माणमित्यारभ्योक्तरीत्या । अब्रवीत् आह्वानमन्त्रानजपदित्यर्थः ॥२२॥ मनसेति । मनसा अनन्यपरेणेत्यर्थः । ध्यायतः निरन्तरं चिन्तयतः । प्राङ्मुखस्येत्यदृष्टविशेषार्थं कृताञ्जलेरिति आह्वानमुद्रोक्ता । तानि पूर्वोक्तानि । दैवतानि विश्वकर्मादीनि । मुनिदृष्टिविषयत्वाय पृथक्पृथक् आजग्मुः ॥२३॥ मलयश्चन्दनालयः । दर्दुरस्ततसमीपस्थश्चन्दनोत्पत्तिस्थानभूतो गिरिः । तदुभयं चोपस्पृश्य सुप्रियात्मा सुप्रियस्वभावः, सुगन्ध इत्यर्थः । अतएव सुखः सुखकरः । शिवः शीतलः । युक्त्या अङ्गस्पर्शेन ।



॥२०॥ २१ ॥ शीक्षास्वरसमायुक्तं शीक्षा यस्य तत् । इहैतु अत्रागच्छतु ॥ १९ ॥ इह म इत्यादिश्लोकद्वयमेकं वाक्यम् । पादपप्रच्युतानि वृक्षेभ्यः स्वयं चोदितानि शास्त्रोक्तस्वरसहितम् मन्त्रमिति शेषः । अब्रवीत् आह्वानार्थमुच्चारितवान् ॥ २२ ॥ २३ ॥ मलयं दर्दुरमिति चन्दनोत्पत्तिहेतुपर्वतौ । युक्त्या यथोचितवृत्त्या ॥ २४ ॥

स्वेदनुदः स्वेदनिवर्त्तकः। "इगुपध–" इत्यादिना कप्रत्ययः । अनिलो वायुः । [illegible]यौ। इन्द्राद्याह्वानेन वाय्वाद्याह्वानमर्थसिद्धम् ॥२४॥ तत इति । घनाः निरन्तराः "घनं निरन्तरं सान्द्रम्" इत्यमरः । पुष्पवृष्टयोऽभ्यवर्त्तन्त, आसन्नित्यर्थः ॥२५॥ प्रववुरिति । प्रववुश्चोत्तमा वाता इति पूर्वोक्तस्यैवाविच्छेद उच्यते । वीणाः प्रमुमुचुः स्वरान्, वीणाशब्देन वीणावन्तो लक्ष्यन्ते । तदेकपरत्वव्यञ्जनाय स्वरान्मुमुचुः उत्पादयामासुः। असिश्छिनत्ती

ततोऽभ्यवर्तन्त घना दिव्याः कुसुमवृष्टयः । दिव्यदुन्दुभिघोषश्च दिक्षु सर्वासु शुश्रुवे ॥ २५ ॥ प्रववुश्चोत्तमा वाता ननृतुश्चाप्सरोगणाः । प्रजगुर्देवगन्धर्वा वीणाः प्रमुमुचुः स्वरान् ॥ २६ ॥ स शब्दो द्यां च भूमिं च प्राणिनां श्रवणानि च । विवेशोच्चारितः श्लक्ष्णः समो लयगुणान्वितः ॥२७॥ तस्मिन्नुपरते शब्दे दिव्ये श्रोतृ(त्र)सुखे नृणाम् । ददर्श भारतं सैन्यं विधानं विश्वकर्मणः ॥२८॥ बभूव हि समा भूमिः समन्तात्पञ्चयोजना । शाद्वलैर्बहुभिश्छन्ना नीलवैडूर्य्यसन्निभैः ॥ २९ ॥ तस्मिन् बिल्वाः कपित्थाश्च पनसा बीजपूरकाः । आमलक्यो बभूवुश्च चूताश्च फलभूषणाः ॥ ३० ॥ उत्तरेभ्यः कुरुभ्यश्च वनं दिव्योपभोगवत् । आजगाम नदी दिव्या तीरजैर्बहुभिर्वृता ॥ ३१ ॥

तिवत् करणे कर्तृत्वोपचारो वा॥२६॥स शब्द इति । स शब्दः द्यां च भूमिं चाधिवसतामिति शेषः। प्राणिनां श्रवणानि श्रोत्राणि विवेश । स शब्दः कीदृशः उच्चारितः वीणादिभिरुत्पादितः। श्लक्ष्णः कोमलः । समः निषादादिषु कुत्रचित् औत्कटचरहितः ।मन्द्रमध्यमतारश्रुतिसाम्ययुक्तो वा । लयगुणान्वितः लयो नाम नृत्तगीतवाद्यानामेककालविरामः, स एव गुणस्तेनान्वितः ॥२७॥ तस्मिन्निति । अनेन गन्धर्वाप्सरसामागमनमात्रं सूचितम् । विधानं निर्माणम् । तच्च प्रपञ्चयिष्यति चतुःशालानीत्यादिना ॥ २८ ॥ देवताकृत्यमाह–बभूवेति । शाद्वलैर्बालतृणवत्प्रदेशैः । छन्ना व्याप्ता । नीलवैडूर्य्यसन्निभैः इन्द्रनील वैडूर्य्याभ्यां तुल्यैः ॥ २९ ॥ तस्मिन्निति । तस्मिन् भूप्रदेशे। बीजपूरकाः मातुलुङ्गकाः । फलान्येव भूषणानि येषां ते फलभूषणा इति सर्ववृक्षविशेषणम् । आमलक्यो बभूवुरितिपाठः ॥३०॥ उत्तरेभ्य इति । वनमाहूतं कौबेरवनं दिव्योपभोगवत् दिव्योपभोगार्हम् । नदीति जात्येकवचनम् । तीरजैः घनाः निरन्तराः ॥२५–२९॥ फलभूषणाः फलानि भूषणानि येषां ते तथा कपित्थादयो बभूवुः, आविर्बभूवुरित्यर्थः ॥३०॥ वनं कौबेरम् । नदीत्येतज्जात्येकवचनम् ।

स०–घनाः मेघाः । कुसुमवृष्टयः कुसुमवृष्टीः । भरद्वाजतपःप्रभावेण जलवर्षणशीलानामपि पुष्पाभिवर्षित्वं द्रष्टव्यम् । यद्वा मेघपुष्पशब्दस्य जलवाचकत्वात्तत्पर्यायेण जलस्य ग्रहणमिति द्रष्टव्यम् ॥ २५ ॥

इति हलायुधः । आजग्मुरिति विपरिणामः । तोर
वृक्षैरिति शेषः ॥ ३१ ॥ चतुःशालानीति । चतुःशालानि सञ्जवनानि " चतुःशालं सञ्जवनम् " इति हलायुधः । वन्दनमालेति पाठान्तरम् ॥ ३२ ॥ सितमेघेत्यारभ्य धौतनिर्मल
णानि बन्धनमालाः " बन्धी बन्धनमाला तु तोरणं परिकीर्तितम् " इति हलायुधः । वन्दनमालेति पाठान्तरम् ॥ ३२ ॥ दिव्यमाल्यकृताकारं दिव्यमालाभिः कृतालङ्कारम् ।
भाजनमित्यन्तमेकं वाक्यम् । आजगामेति क्रिया द्रष्टव्या । सितमेघनिभं सुधालेपनधवलत्वात् । दिव्यमाल्यकृताकारं दिव्यमालाभिः कृतालङ्कारम् ।

चतुःशालानि शुभ्राणि शालाश्च गजवाजिनाम् । हर्म्यप्रासादसम्बाधास्तोरणानि शुभानि च ॥ ३२ ॥ सितमेघनिभं चापि राजवेश्मसु तोरणम् । दिव्यमाल्यकृताकारं दिव्यगन्धसमुक्षितम् ॥ ३३ ॥ चतुरश्रमसम्बाधं शयनासनयानवत् । दिव्यैः सर्वरसैर्युक्तं दिव्यभोजनवस्त्रवत् । उपकल्पितसर्वान्नं धौतनिर्मलभाजनम् ॥ ३४ ॥ क्लृप्तसर्वासनं श्रीमत् स्वास्तीर्णशयनोत्तमम् । प्रविवेश महाबाहुरनुज्ञातो महर्षिणा । वेश्म तद्रत्नसम्पूर्णं भरतः केकयीसुतः ॥ ३५ ॥ अनुजग्मुश्च तं सर्वे मन्त्रिणः सपुरोहिताः । बभूवुश्च मुदा युक्ता दृष्ट्वा तं वेश्मसंविधिम् ॥ ३६ ॥ तत्र राजासनं दिव्यं व्यजनं छत्रमेव च । भरतो मन्त्रिभिः सार्द्धमभ्यवर्त्तत राजवत् ॥ ३७ ॥

दिव्यगन्धैर्दिव्यचन्दनैः। समुक्षितं सिक्तम् । चतुरश्रं चतुष्कोणम् । असम्बाधं विशालम् । शयनासन यानवत् यानं शिबिकादि । रसैः शर्करादिभिः। दिव्य
भोजनवस्त्रवत् दिव्यभोजनानि सूक्ष्मशाल्यन्नादीनि दिव्यवस्त्राणि सूक्ष्मवस्त्राणि उपकल्पितानि सर्वान्नानि नानाविधापूपादीनि यस्मिन् तत् । धौत
निर्मलभाजनं धौतत्वेन निर्मलानि भाजनानि यस्मिन् तत्तथा ॥३३॥३४॥ क्लृप्तसर्वासनमित्यत्र स्नानभोजनाद्यासनान्युच्यन्ते । शयनासनेत्यत्र राजा
सनं तत्साहचर्याच्छयनं च महाशयनम्, स्वास्तीर्णशयनोत्तममित्यत्र निद्रार्थशयनम् । तत्र भरतस्य प्रवेशमाह प्रविवेशेति । महाबाहुरित्यनेन तदर्हत्व
मुच्यते । केकयीसुत इत्यनेन केकयीदत्तराज्येप्यनादरः किमत्र आदरं करिष्यतीति द्योत्यते। महर्षिणा भरद्वाजेन ॥ ३५ ॥ अनुजग्मुरिति । वेश्म
संविधिं वेश्मसंविधानम् ॥ ३६ ॥ तत्रेति । राजासनं राजार्हासनम् । अभ्यवर्त्तत अभितो वर्तिष्ट, प्रदक्षिणं कृतवानिति यावत् । राजवत् राजतुल्यं राम



तीरजैः वृक्षैरिति शेषः ॥ ३१ ॥ चतुश्शालादयोऽभूवन्निति शेषः ॥ ३२ ॥ शुक्लमाल्यकृताकारमिति पाठः । शुक्लमाल्यैरलंकृतमित्यर्थः । यद्राजवेश्म रत्नसम्पूर्णं
तद्वेश्म प्रविवेशेति सम्बन्धः ॥ ३३–३५ ॥ वेश्मसंविधिं वेश्मसंविधानम् ॥ ३६ ॥ अभ्यवर्तत अभितोऽवर्तिष्ट प्रदक्षिणं कृतवानित्यर्थः । राजवत् राजार्हम् । राजार्हं

मित्यर्थः ॥३७॥ आसनमिति । आसनं पूजयामासेत्यत्र राजवदित्यमुख्यार्थः। रामाय आसनोपरि स्थितत्वेन भाविताय। वालव्यजनमादाय स्वशेषत्वानु गुणतयेति भावः। सचिवासने सचिवार्थं क्लृप्ते आसने, सिंहासनाधःप्रदेशस्थ इत्यर्थः ॥३८॥ आनुपूर्व्यादिति । सेनापतिः दण्डनायकः। प्रशास्ता शिबिर नियन्ता ॥ ३९ ॥ तत इति । मुहूर्त्तेन अल्पकालेन ॥ ४० ॥ तासामिति । उभयतःकूलम् उभयोः कूलयोरित्यर्थः । पाण्डुमृत्तिकलेपनाः सुधानु

आसनं पूजयामास रामायाभिप्रणम्य च। वालव्यजनमादाय न्यषीदत् सचिवासने ॥ ३८ ॥ आनुपूर्व्यान्निषेदुश्च सर्वे मन्त्रिपुरोहिताः। ततः सेनापतिः पश्चात् प्रशास्ता च निषेदतुः ॥ ३९ ॥ ततस्तत्र मुहूर्त्तेन नद्यः पायसकर्दमाः। उपातिष्ठन्त भरतं भरद्वाजस्य शासनात् ॥ ४० ॥ तासामुभयतःकूलं पाण्डुमृत्तिकलेपनाः । रम्याश्चावसथा दिव्या ब्रह्मणस्तु प्रसादजाः ॥ ४१ ॥ तेनैव च मुहूर्त्तेन दिव्याभरणभूषिताः। आगुर्विंशतिसाहस्रा ब्रह्मणा प्रहिताः स्त्रियः ॥ ४२ ॥ सुवर्णमणिमुक्तेन प्रवालेन च शोभिताः। आगुर्विंशतिसाहस्राः कुबेरप्रहिताः स्त्रियः ॥ ४३ ॥ याभिर्गृहीतपुरुषः सोन्माद इव लक्ष्यते। आगुर्विंशतिसाहस्रा नन्दनादप्सरोगणाः ॥ ४४ ॥ नारदस्तुम्बुरुर्गोपः प्रवराः सूर्य्यवर्चसः । एते गन्धर्वराजानो भरतस्याग्रतो जगुः ॥ ४५ ॥

लिप्ता इत्यर्थः। "ङ्यापोः–" इति ह्रस्वः । ब्रह्मणः भरद्वाजस्य उपातिष्ठन्तेत्येतदनुषज्यते ॥४१॥ तेनेति । आगुराजग्मुः । सहस्रमेव साहस्रम् । ब्रह्मणा चतुर्मुखेन । स्त्रियः अप्सरसः ॥ ४२ ॥ सुवर्णेति । सुवर्णमणिमुक्तेन सुवर्णानि सुवर्णमयाभरणानि मणयो रत्नानि मुक्ताश्च सुवर्णमणिमुक्तं तेन । "जातिर प्राणिनाम्" इति एकवद्भावः ॥४३॥ याभिरिति । गृहीत आलिङ्गितः याभिः यैरित्यर्थः। एतदर्थस्य पूर्वेण वान्वयः। कुबेरप्रहिताः गन्धर्वाप्सरसः। तथा हि श्रुतिः "गन्धार्वाप्सरसो वा एतमुन्मादयन्ति। यउन्माद्यति" इति। याभिर्गृहीताः पुरुषाः सोन्मादा इति होच्यते। इतिच पाठः। तदा उच्यते श्रुत्येति शेषः। हेति प्रसिद्धौ ॥ ४४ ॥ नारद इति । नारदो ब्रह्मपुत्रादन्यः तुम्बुरुसाहचर्य्यात् । स हि पर्वतसहचरः । आह्वानसमये तुम्बुरुणेत्यस्योपलक्षणार्थत्वात् ।

मासनादिकं सर्वं प्रदक्षिणं च चकारेत्यर्थः ॥ ३७ ॥ ३८ ॥ प्रशास्ता शिबिरनियन्ता ॥ ३९ ॥ ४० ॥ उभयतःकूलम् उभयोः कूलयोरित्यर्थः । पाण्डुमृत्तिकलेपनाः सुधालिप्ताः । ब्रह्मणः भरद्वाजस्य ॥ ४१ ॥ आगुः आजग्मुः ॥ ४२ ॥ सुवर्णेत्यादिसार्धश्लोकमेकं वाक्यम् । सुवर्णमणिमुक्तेन सुवर्णानि सुवर्णमयाभरणानि मणयो

गन्धर्वराजान इति टजभाव आर्षः ॥ ४५ ॥ अलम्बुसेति । भरतमुपानृत्यन् भरतमुद्दिश्याधिकमनृत्यन् । "उपोऽधिके च" इति कर्म्मप्रवचनीयसंज्ञा । अत्र भरद्वाजस्य शासनादुपानृत्यन्नित्यनेन भरतस्य रामे वृत्तिविशेषमातिथ्यव्याजेन परीक्षितवानृषिरिति गम्यते ॥ ४६ ॥ एवं भरतस्य रामशेषतयै वावस्थानम् न तु भोगलौल्येनेत्युक्त्वा सेनाभोगं प्रपञ्चयति—यानीत्यादिना । देवेषु देवोद्यानेषु, नन्दनादिष्वित्यर्थः । चैत्रस्थस्य पूर्वं कुरुदेशस्थत्वेनोक्ते

अलम्बुसा मिश्रकेशी पुण्डरीकाथ वामना । उपानृत्यंस्तु भरतं भरद्वाजस्य शासनात् ॥ ४६ ॥ यानि माल्यानि देवेषु यानि चैत्ररथे वने । प्रयागे तान्यदृश्यन्त भरद्वाजस्य तेजसा ॥ ४७ ॥ बिल्वा मार्दङ्गिका आसन् शम्याग्राहा विभीतकाः । अश्वत्थानर्त्तकाश्चासन् भरद्वाजस्य शासनात् ॥ ४८ ॥ ततः सरलतालाश्च तिलका नक्तमालकाः । प्रहृष्टास्तत्र सम्पेतुः कुब्जा भूत्वाथ वामनाः ॥ ४९ ॥ शिंशुपामलकीजम्ब्वो याश्चान्याः काननेषु ताः । मालती मल्लिका जातिर्याश्चान्याः कानने लताः ॥ ५० ॥ प्रमदाविग्रहं कृत्वा भरद्वाजाश्रमेऽवदन् । सुराः सुरापाः पिबत पायसं च बुभुक्षिताः । मांसानि च सुमेध्यानि भक्ष्यन्तां यावदिच्छथ ॥ ५१ ॥

आहूतानां भरतशेषत्वेन विनियोगात् सैनिकानां रिदं चैत्ररथं तद्बोध्यम् । प्रयागे प्रयागस्थितभरद्वाजाश्रमवनवृक्षेष्वित्यर्थः । तेजसा प्रभावेन ॥४७॥ आसन् तद्रूपास्तत्कार्यकारिणो नर्त्तकादीनि दर्शयति—बिल्वा इति । बिल्वाः बिल्ववृक्षाः । मार्दङ्गिकाः मृदङ्गवादकाः । "तदस्य शिल्पम्" इति ठक् । भवन्नित्यर्थः । विभीतकाः कलिवृक्षाः। शम्याग्राहास्तालग्राहका आसन् । "शम्या यज्ञायुधे ताले मशके च क्रियान्तरे" इति वैजयन्ती । भरते चोक्तं "वह्नि तालशम्यातालक्रिया" इति ॥४८॥ ततइति । सरलाः देवदारुविशेषाः । तालाः प्रसिद्धाः । तिलकाः क्षुरकनामका वृक्षाः । नक्तमालकाः करञ्जनाख्या वृक्षाः । कुब्जाः स्थगुमन्तः । वामना ह्रस्वाः। सम्पेतुः सम्पन्नाः॥४९॥ अथ स्त्रीलिङ्गवृक्षाणां स्त्रीभावपरिग्रहमाह—शिंशिपेत्यादिसार्धश्लोकद्वयमेकान्वयम् ।

रत्नानि मुक्ताश्च सुवर्णमणिमुक्तम् तेन । एकवद्भावोऽयम् ॥ ४३-४६ ॥ प्रयागे प्रयागस्थभरद्वाजाश्रमे ॥ ४७ ॥ शम्याग्राहाः शम्याख्यतालग्राहकाः । तथा चोक्तं भरतशास्त्रे "वह्नौ तालविशेषे च शम्या तालक्रियान्तरे" इति शम्याशब्दः प्रवर्तते । विभीतकाः कलिद्रुमाः । बिल्ववृक्षा एव मार्दङ्गिकाः मृदङ्गवाद्यधारिणः आसन् ॥ ४८ ॥ कुब्जाः स्थगुमन्तः । वामनाः ह्रस्वाः ॥४९॥ शिंशुपेत्यादिश्लोकद्वयमेकं वाक्यम् । अन्याः स्त्रीलिङ्गशब्दवाच्या ये वृक्षादयः मल्लिकामालत्यादयश्च

शिंशुपादयः प्रमदाविग्रहं कृत्वा यावदिच्छथ तावद्भक्ष्यन्तामित्यवदन्निति सम्बन्धः । सुरापाः हे सुरापानप्रवृत्ताः ! इमाः सुराः पिबत । हे बुभुक्षिताः पायसपानेच्छवः! इदं पायसं भक्ष्यतामिति वचनविपरिणामेनानुषज्यते । सुमेध्यानि परिशुद्धानि ॥५०॥५१॥ उच्छाद्येति । उच्छाद्य उद्वर्त्तनं कृत्वा ।

उच्छाद्य स्नापयन्ति स्म नदीतीरेषु वल्गुषु । अप्येकमेकं पुरुषं प्रमदाः सप्त चाष्ट च ॥ ५२ ॥ संवाहन्त्यः समापेतुर्नार्यो रुचिरलोचनाः । परिमृज्य तथान्योन्यं पाययन्ति वराङ्गनाः ॥ ५३ ॥ हयान् गजान् खरानुष्ट्रां स्तथैव सुरभेः सुतान् । अभोजयन् वाहनपास्तेषां भोज्यं यथाविधि ॥५४॥ इक्षूंश्च मधुलाजांश्च भोजयन्ति स्म वाहनान् । इक्ष्वाकुवरयोधानां चोदयन्तो महाबलाः ॥ ५५ ॥ नाश्वबन्धोऽश्वमाजानान्न गजं कुञ्जरग्रहः । मत्तप्रमत्तमुदिता चमूः सा तत्र सम्बभौ ॥ ५६ ॥

"उद्वर्त्तनोच्छादने द्वे" इत्यमरः। तैलादिना शरीरमर्दनं कृत्वेत्यर्थः। वल्गुषु रम्येषु । एकमेकमिति "एकम्बहुव्रीहिवत्" इति बहुव्रीहिवद्भावाभाव आर्षः । संवाहन्त्यः संवाहयन्त्यः पादसंवाहनं कुर्वन्त्यः । परिमृज्य जलार्द्रमङ्गं वस्त्रादिना परिमृज्य अलंकृत्येतिवार्थः । अन्योन्यं रहसि पाययन्ति, सुरा इति शेषः ॥५२॥५३॥ हयानिति । वाहनपाः ऋषिप्रभावसिद्धा वाहनपाः वाहनरक्षकाः तेषां हयादीनां यथाविधि यथायोग्यं भोज्यम् तत्तद्वाहनानुगुणं भोज्य मित्यर्थः । हयादीन् अभोजयन् । ण्यन्तत्वाद्विकर्मकत्वम् । सुरभेः सुतान् वृषभान् ॥ ५४ ॥ महाबला ऋषिप्रभावसिद्धवाहनपाः । इक्ष्वाकुवरयोधानां वाहनान् वाहनानि। इक्षून् मधुलाजान् मधुमिश्रलाजान्। "भक्ष्येण मिश्रीकरणम्" इति समासः। चोदयन्तः भक्षणार्थं प्रेरयन्तः सन्तः भोजयन्ति स्म॥५५ अश्वं बध्नातीत्यश्वबन्धः अश्वग्राहकः । नाजानात् न ज्ञातवान् । तत्र हेमतुमाह मत्तेति । मदकरद्रव्यसेवया मत्ताः प्रमत्ताः मधुपानादिना कार्य्याकार्य्य

यास्सन्ति ताः प्रमदाविग्रहं कृत्वा यावदिच्छथ तावद्भक्ष्यन्तामित्यवदन्निति सम्बन्धः ॥ ५० ॥ ५१ ॥ उच्छाद्य उद्वर्त्तनं कृत्वा । " उद्वर्त्तनोच्छादने द्वे " इत्यमरः । संवाहन्त्यः संवाहयन्त्यः, पादसंवाहनं कुर्वन्त्य इति यावत् । परिमृज्य जलार्द्रमङ्गं वस्त्रादिना परिमृज्य, अलंकृत्वेति वा । पाययन्ति मध्वादिकमिति शेषः ॥ ५२ ॥ ५३ ॥ सुरभेस्सुतान् बलीवर्दान् ॥ ५४ ॥ इक्ष्वाकुवरयोधानां वाहान् चोदयन्तः प्रेरयन्तः महाबलाः वाहनपाः इक्ष्वादीन् भोजयन्ति स्मेति सम्बन्धः॥५५॥ अश्वबन्धः अश्वग्राहकः । नाजानात् नाज्ञासीत् । कुञ्जरग्रहः कुञ्जरग्राहकः । मत्तप्रमत्तमुदिताः मत्ता मदकरद्रव्यसेवया प्रमत्ताः मधुपानेन कार्याकार्यविवेकशून्याः ।

विषेकशून्याः । मुदिताः स्रक्चन्दनादिभोगातिशयेन हृष्टाः । तत्र तदा ॥ ५६ ॥ तर्पिता इति । अप्सरोगणाः वनलताभूताः न त्वाहूताः, तासां भरत वेश्मप्रवेशकथनात् । सैन्याः सेनायां समवेताः । उदैरयन् उक्तवन्तः ॥५७॥ उदीरणप्रकारमाह—नेत्यादिना । न गमिष्याम इत्यत्र विसर्गलोपश्छान्दसः । भरतस्य कुशलमस्तु भरतो यथातथावा तिष्ठत्वित्यर्थः । एवं रामस्येत्यत्रापि । पादाभ्यामतन्तीति पादाताः । "अत सातत्यगमने" इति धातुः ।



तर्पिताः सर्वकामैस्ते रक्तचन्दनरूषिताः । अप्सरोगणसंयुक्ताः सैन्या वाचमुदैरयन् ॥५७॥ नैवायोध्यां गमिष्यामो न गमिष्याम दण्डकान् । कुशलं भरतस्यास्तु रामस्यास्तु तथा सुखम् ॥५८॥ इति पादातयोधाश्च हस्त्यश्वारोह बन्धकाः । अनाथास्तं विधिं लब्ध्वा वाचमेतामुदैरयन् ॥५९॥ सम्प्रहृष्टा विनेदुस्ते नरास्तत्र सहस्रशः । भरतस्यानुयातारः स्वर्गोयमिति चाब्रुवन् ॥ ६० ॥ नृत्यन्ति स्म हसन्ति स्म गायन्ति स्म च सैनिकाः । समन्तात् परिधावन्ति माल्योपेताः सहस्रशः ॥ ६१ ॥ ततो भुक्तवतां तेषां तदन्नममृतोपमम् । दिव्यानुद्वीक्ष्य भक्ष्यांस्तानभवद्भक्षणे मतिः ॥६२॥ प्रेष्याश्चेटयश्च वध्वश्च बलस्थाश्च सहस्रशः । बभूवुस्ते भृशं दृप्ताः सर्वे चाहतवाससः ॥ ६३ ॥ कुञ्जराश्च खरोष्ट्राश्च गोश्वाश्च मृगपक्षिणः । बभूवुः सुभृतास्तत्र नान्यो ह्यन्यमकल्पयत् ॥ ६४ ॥

ते च ते योधाश्च पादातयोधाः । चकाराद्रथिकसमुच्चयः । हस्त्यश्वानामारोहाः सादिनः हस्त्यादिबन्धकाः तद्भृत्याः तं विधिं सत्कारं लब्ध्वा अनाथाः स्वामिरहिताः, स्वतन्त्रा इति यावत् । नैवायोध्यामित्येतां वाचमुदैरयन्निति सम्बन्धः ॥५८॥५९॥ सम्प्रहृष्टा इति । विनेदुः जगर्जुः ॥६०॥६१॥ तत इति । तदन्नं पूर्वोक्तभक्ष्यादिचतुर्विधान्नम् । भक्षणे पुनर्भक्षणे । मतिरभवत्, भक्ष्यसौष्ठवादिति भावः ॥ ६२ ॥ प्रेष्याः परिचारकाः । चेटयः दास्यः । वध्वः योधाङ्गनाः । बले सेनायां तिष्ठन्तीति बलस्थाः । सर्वविशेषणमेतत् । अहतवाससः नूतनवस्त्राः । यद्वा आहतवाससः निर्णिक्तवाससः ॥६३॥ कुञ्जरा इति ।

मुदिताः स्रक्चन्दनादिभोगातिशयेन हृष्टाः ॥ ५६–५८ ॥ हस्त्यश्वारोहबन्धकाः हस्त्यश्वारोहास्तद्बन्धकाश्च तद्विधिं तादृशसत्कारविधिम् ॥ ५९–६२ ॥ चेटयः दास्यः ॥ ६३ ॥ सुभृताः सुपुष्टाः । अन्योह्यन्यं नाकल्पयत् ऋषिकृतव्यतिरिक्तादन्ये नाकरोत् ॥ ६४ ॥६५॥

सत्य०—गोऽश्वाः "विभाषा वृक्ष–" इत्यादिना पशुद्वन्द्वस्थले एकवद्भावस्य विकल्पितत्वादयमपि साधुः । "गवाश्वप्रभृतीनि च" इत्यस्यायं विषयः । तथा पाठे रूपमेषां विवक्षितम् नतु पूर्वोत्तरपदनिर्देश

खरसहितोष्ट्राः खरोष्ट्राः । मृगपक्षिणः क्रीडार्थं सैनिकैरानीताः । सुभृताः सुतृप्ताः सुपुष्टा वा । तत्र सेनायाम् । अन्यः अन्यं नाकल्पयत् ऋषिकृतव्यातिरिक्तम् अन्नादिकं नाकरोदित्यर्थः ॥ ६४ ॥ ६५ ॥ आजैरित्यादिश्लोकद्वयमेकान्वयम् । आजैः अजमांसैः । वाराहैः वराहमांसैः । निष्ठानवरसञ्चयैः व्यञ्जनश्रेष्ठसमूहैः । "निष्ठानं व्यञ्जनं स्मृतम्" इति हलायुधः । फलनिर्यूहसंसिद्धैः सम्यङ्निष्पन्नफलयुक्तशर्करादिक्काथरसैः ।

नाशुक्लवासास्तत्रासीत् क्षुधितो मलिनोऽपि वा । रजसा ध्वस्तकेशो वा नरः कश्चिददृश्यत ॥ ६५ ॥ आजैश्चापि च वाराहैर्निष्ठानवरसञ्चयैः । फलनिर्यूहसंसिद्धैः सूपैर्गन्धरसान्वितैः ॥ ६६ ॥ पुष्पध्वजवतीः पूर्णाः शुक्लस्यान्नस्य चाभितः । ददृशुर्विस्मितास्तत्र नरा लौहीः सहस्रशः ॥ ६७ ॥ बभूवुर्वनपार्श्वेषु कूपाः पायसकर्दमाः । ताश्च कामदुघा गावो द्रुमाश्चासन् मधुस्रुतः ॥ ६८ ॥ वाप्यो मैरेयपूर्णाश्च मृष्टमांसचयैर्वृताः । प्रतप्तपिठरैश्चापि मार्गमायूरकौक्कुटैः ॥ ६९ ॥

"द्वार्यापीडे क्वाथरसे निर्यूहो नागदन्तके" इति वैजयन्ती । सूपैः मुद्गाढकीचणकादिसूपैः । गन्धरसान्वितैः पाकभेदोत्थगन्धरसयुक्तैः । पुष्पध्वजवतीः अलङ्कारार्थपरिकल्पितपुष्पशिल्पवतीः । शुक्लस्यान्नस्य पूर्णाः शुक्लेनान्नेन च पूर्णाः । लौहीः लोहमयपात्रीः । सर्वलोहेषु प्रधानत्वात् सुवर्णमत्र लोहशब्देनोच्यते ॥ ६६ ॥ ६७ ॥ बभूवुरिति । पायसान्येव कर्दमानि येषु ते तथोक्ताः ताः । गावः पूर्वमेव वनचर्य्यः कामदुघाः याव दभीष्टक्षीरपूरकाः आसन् । "दुहः कब्घश्च" मधुस्रुतः मधुस्राविणः । ( मधुश्च्युतः मधुस्राविणः ) ॥ ६८ ॥ वाप्य इति । अत्रासन्नित्यनुषज्यते । प्रतप्त

आजैरित्यादिश्लोकद्वयमेकं वाक्यम् । निष्ठानवरसञ्चयैः व्यञ्जनश्रेष्ठसमूहैः । "निष्ठानं व्यञ्जनं ज्ञेयम्" इतिं हलायुधः । फलनिर्यूहसंस्थितैः सम्यङ्निष्पन्नफलयुक्त शर्करादिक्काथरसैः । "द्वार्यापीडे क्वाथरसे निर्यूहो नागदन्तके" इति वैजयन्ती । पुष्पध्वजवतीः अलङ्कारार्थं परिकल्पितपुष्पध्वजयुक्ताः । लौहीः स्वर्णरजत मयपात्रीः निष्ठानवरसञ्चयैः सूपैश्च शुक्लस्यान्नस्याभितः पूर्णलौहीर्ददृशुरिति सम्बन्धः ॥ ६६ ॥ ६७ ॥ पायसकर्दमाः कूपा बभूवुः । कामदुघा गावो बभूवुः । वृक्षा मधुश्च्युता आसन् ॥ ६८ ॥ प्रतप्तपिठरैः कुण्डेषु प्रतप्तैः । "पिठरः कुण्डमुच्यते" इति हलायुधः । मार्गमायूरकौक्कुटैः मृगमयूरकुक्कुटसम्बन्धिभिः मृष्टमांसचयैर्वृताः मैरेयपूर्णा वाप्यश्चासन्निति सम्बन्धः ॥ ६९ ॥

मात्रे तात्पर्यम् । तेन पूर्वरूपपक्षे गोऽश्वं गोऽश्वा इतीति शब्देन्दुशेखरोक्तेः । एवं पूर्वत्रापि । सुभृताः पूर्णोदराः । नार्यः अन्यं ऋष्यकल्पितपदार्थम् । नाकल्पयन् नाभुञ्जन् । क्वचित् नान्यो ह्यन्यमकल्पयत इत्यपि पाठः । तदा अन्यः भरतसेनान्तर्गतो देशान्तरात्तत्रागतः पुरुषः । अन्यमित्युक्तार्थम् ॥ ६४ ॥

पिठरैः प्रतप्तपिठरसंस्कृतैः " संस्कृतं भक्षाः " इत्यण् । तस्य लुक् । पिठराः कुण्डानि । "उखा स्थाली चरुः कुम्भी पिठरः कुण्डमुच्यते" इति हलायुधः । मार्गमायूरकौक्कुटैः मृगमयूरकुक्कुटमांसैः ॥६९॥ पात्रीणामित्यारभ्य सञ्चया इत्यन्तमेकं वाक्यम् । पात्रीणाम् अन्नधानकुम्भीनाम् । स्थालीनां व्यञ्जनपात्राणाम् । नियुतानि लक्षाणि । न्यर्बुदानि दशकोट्यः । पात्राणि भोजनपात्राणि,अमत्राणीति यावत् । दधिपूर्णा इति स्थाल्यादित्रयविशेषणम् ।

पात्रीणां च सहस्राणि स्थालीनां नियुतानि च । न्यर्बुदानि च पात्राणि शातकुम्भमयानि च ॥ ७० ॥
स्थाल्यः कुम्भ्यः करम्भ्यश्च दधिपूर्णाः सुसंस्कृताः । यौवनस्थस्य गौरस्य कपित्थस्य सुगन्धिनः ॥ ७१ ॥
ह्रदाः पूर्णा रसालस्य दध्नः श्वेतस्य चापरे । बभूवुः पायसस्यान्ये शर्करायाश्च सञ्चयाः ॥ ७२ ॥

स्थाल्यः पिठराः । कुम्भ्यः क्षुद्रकुम्भाः । करम्भ्यः विशालास्यगुरुस्थाल्यः । करम्भ्यः कर्कर्य इत्याहुः । सुसंस्कृताः दधिसंस्कारकशुण्ठ्यादियुक्ताः । यौवनस्थस्य नातिनूतनस्य नातिपुराणस्येत्यर्थः । मथनानन्तरं यामान्तरितस्येत्यर्थः । कापित्थस्य कपित्थपरिमलयुक्ततक्रस्येत्यर्थः । "तक्रं कपित्थं मथितम्" इति वैजयन्ती । गौरस्य शुभ्रस्य । रसालस्य तक्रविशेषस्य । "अपक्वतक्रं सव्योषं चतुर्जातं गुडार्द्रकम् । सजीरकं रसालं स्यान्मज्जिका शिखरिण्यपि ॥" इति वैजयन्ती । सव्योषं शुण्ठीपिप्पलीमरिचियुक्तम् । चतुर्जातगुडार्द्रकं चतुर्जातैः एलालवङ्गकक्कोलनागपुष्पैः गुडेन शर्करया आर्द्रकेन च युक्तम् । कपित्थेन पूर्णाः अपरे ह्रदा बभूवुः । रसालेन पूर्णा अपरे ह्रदा बभूवुः । दध्ना पूर्णाश्चापरे ह्रदाः । अन्ये पायसेन पूर्णाः । पायसस्यान्य इति पाठः । सर्वत्र तृतीयार्थे षष्ठी । तद्व्यञ्जनार्थं शर्करायाः सञ्चयाः राशयश्च बभूवुरित्यर्थः । शर्करायावसञ्चया इति च पाठः । शर्करामिश्रयवविकारापूपसञ्चय

पात्रीणामिति । पात्रीणां हस्तप्रक्षालनाद्युपयुक्तपात्राणां स्थालीनाम् उखानां पात्राणि भोजनपात्राणि । स्थाल्यः उखाः । कुम्भ्यः क्षुद्रस्थाल्यः "उखा स्थाली च कुम्भी च पिठरः कुण्डमुच्यते " इति हलायुधः । करम्भ्यः स्थाल्यादयश्चासन्निति पूर्वेण सम्बन्धः । यौवनस्थस्य नातिनवस्य नातिपुराणस्य, मथनानन्तरं यामान्तरितस्येत्यर्थः । कपित्थस्य तक्रस्य " तक्रं कपित्थं मथितम् " इति वैजयन्ती । यद्वा कपित्थस्य कपित्थपरिमलयुक्ततक्रस्येत्यर्थः । रसालस्य शुण्ठीमरिचिपिप्पल्येलालवङ्गकक्कोलनागपुष्पखण्डशर्कराशृङ्गिबेरजीरकमिश्रितस्य तक्रस्य । तथा च वैजयन्ती–" अपक्वतक्रं सव्योषं चतुर्जातं गुडार्द्रकम् । सजीरकं रसालं स्यान्मज्जिका शिखरिण्यपि ॥ " इत्युक्तविशेषणविशिष्टेन तक्रेण । दध्नः दध्ना च पूर्णाः अपरे ह्रदा बभूवुरित्यर्थः । शर्करायावसञ्चयाः शर्कराणां यावानां यवविकाराद्यपूपानां

इत्यर्थः ॥ ७०–७२ ॥ कल्कानिति । कल्कान् आमलक्यादिकल्कान् । चूर्णकषायान् चूर्णानि माषादिचूर्णानि कषायाः क्वथितानि । स्नान्त्येभि
रिति स्नानानि । तैलोष्णोदकादीनि । भाजनस्थानि कटाहादिमहापात्रस्थानि । तीर्थेषु अवतारेषु ॥ ७३ ॥ शुक्लानिति । शुक्लान् निर्म
लान् । अंशुमतः कूर्चवतः । दन्तधावनसञ्चयान् दन्तकाष्ठसमूहान् । स्नानानन्तरमलङ्कारोपकरणानि दर्शयति–शुक्लानिति । चन्दनकल्कान् चन्दन

कल्कांश्चूर्णकषायांश्च स्नानानि विविधानि च । ददृशुर्भाजनस्थानि तीर्थेषु सरितां नराः ॥ ७३ ॥ शुक्लानंशुमतश्चापि दन्तधावनसञ्चयान् । शुक्लांश्चन्दनकल्कांश्च समुद्गेष्ववतिष्ठतः ॥ ७४ ॥ दर्पणान् परिमृष्टांश्च वाससां चापि सञ्चयान् । पादुकोपानहश्चैव युग्मानि च सहस्रशः ॥७५॥ आञ्जनीः कङ्कतान् कूर्चान् शस्त्राणि च धनूंषि च । मर्मत्राणानि चित्राणि शयनान्यासनानि च ॥ ७६ ॥ प्रतिपानह्रदान् पूर्णान् खरोष्ट्रगजवाजिनाम् । अवगाह्यसुतीर्थांश्च ह्रदान् सोत्पलपुष्करान् ॥७७॥ आकाशवर्णप्रतिमान् स्वच्छतोयान् सुखप्लवान् । नीलवैडूर्यवर्णांश्च मृदून् यवससञ्चयान् ॥ ७८ ॥ निर्वापार्थान् पशूनां ते ददृशुस्तत्र सर्वशः ॥ ७९ ॥

पङ्कान् । समुद्गेषु सम्पुटकेषु । " समुद्गकः सम्पुटकः " इत्यमरः । अवतिष्ठतः वर्त्तमानान् । परिमृष्टान् निर्मलीकृतान् । पादुकाः दारुनिर्म्मिताः
उपानहश्चर्म्मनिर्म्मिताः । युग्मानि द्वन्द्वानि । आञ्जनीः अञ्जनयुक्ताः करण्डिकाः । कङ्कतान् केशमार्जनान् । " कङ्कतः केशमार्जनम् ।" इति
निघण्टुः । कूर्चान् स्नानाद्युपयुक्तासनानि श्मश्रुप्रसाधकान् वा । शस्त्राणि योधैरलङ्कारार्थं धार्य्याणि । मर्मत्राणानि कवचादीनि । प्रतिपानह्रदान्
ग्रासग्रहणानन्तरं भुक्तजीर्णार्थं पानार्हह्रदान् । अवगाह्यसुतीर्थान् अवगाहनयोग्यावतारप्रदेशयुक्तान् । सोत्पलपुष्करान् उत्पलमिन्दीवरम्, पुष्करं

स्नानानि स्नानीयद्रव्याणि॥७३॥शुक्लान् शुद्धान् । अंशुमतः स्निग्धान् । समुद्गेषु सम्पुटेषु । " समुद्गस्सम्पुटो ज्ञेयः " इति हलायुधः ॥७४॥ पादुकोपानहः पादुकाः दारुनिर्मिताः उपानहश्चर्मनिर्मिताः॥७५॥ आञ्जनीः अञ्जनयुक्ताः करण्डिकाः । कङ्कतान् केशमार्जनानि । कूर्चान् श्मश्रुप्रसाधकान् । मर्मत्राणानि कवचादीनि ॥७६॥ प्रतिपानह्रदान् भुक्तजीर्णार्थं बाहटशास्त्रोक्तप्रकारेण यत्पीयते तत्प्रतिपानं तस्य ह्रदान् । अवगाह्यसुतीर्थान् अवगाहनयोग्यशोधनजलावतरणप्रदेशान् " जलावतारे तीर्थं स्यात "

सत्य०–आकाशवर्णप्रतिमान्–" आकाशोनीलिमोदेति " " भूतमप्यसितं दिव्यदृष्टिगोचरम् " इत्याद्युक्तेर्नीलवर्णोपेतान् ॥ ७८ ॥

Note: the lower commentary lines are printed interleaved on the page as follows:

ग्रासग्रहणानन्तरं भुक्तजीर्णार्थं पानार्हह्रदान् । अवगाह्यसुतीर्थान् अवगाहनयोग्यावतारप्रदेशयुक्तान् । सोत्पलपुष्करान् उत्पलमिन्दीवरम्, पुष्करं
सञ्चयाः । यद्वा शर्करामिश्रयवाः शर्करायवाः ॥ ७०–७२ ॥ चूर्णकषायान् सुरभिचूर्णानि । " कषायो गन्धसुरभौ लोहितेपि च " इति विश्वः । स्नानानि स्नानीय

पद्मम् । आकाशवर्णप्रतिमान् आकाशवन्निर्म्मलानित्यर्थः । मुखप्रमाणान् मुखेन प्रवः स्नानं येषु तथोक्तान् । यवससञ्चयान् तृणसमूहान् । "यवसं तृणमर्ज्जुनम्" इत्यमरः । पशूनां निर्वापार्थान् पशुभ्यो विश्राणनार्थान् ॥ ७४-७९ ॥ व्यस्मयन्तेति । स्वप्नकल्पत्वोक्तिरयत्नसिद्धत्वात् अपूर्वत्वात् आश्चर्य्यकरत्वाच्च तादृक् वाचामभूमिम् । भरतस्य भरताय ॥ ८० ॥ ८१ ॥ प्रतिजग्मुरिति । अनुज्ञाप्य अनुज्ञां कारयित्वा ॥ ८२ ॥ इदं

व्यस्मयन्त मनुष्यास्ते स्वप्नकल्पं तदद्भुतम् । दृष्ट्वातिथ्यं कृतं तादृक् भरतस्य महर्षिणा ॥ ८० ॥ इत्येवं रममाणानां देवानामिव नन्दने । भरद्वाजाश्रमे रम्ये सा रात्रिर्व्यत्यवर्त्तत ॥ ८१ ॥ प्रतिजग्मुश्च ता नद्यो गन्धर्वाश्च यथागतम् । भरद्वाजमनुज्ञाप्य ताश्च सर्वा वराङ्गनाः ॥ ८२ ॥ तथैव मत्ता मदिरोत्कटा नरास्तथैव दिव्यागुरुचन्दनोक्षिताः । तथैव दिव्या विविधाः स्रगुत्तमाः पृथक् प्रकीर्णा मनुजैः प्रमर्दिताः ॥८३॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

ततस्तां रजनीं व्युष्य भरतः सपरिच्छदः । कृतातिथ्यो भरद्वाजं कामादभिजगाम ह ॥ १ ॥

चातिथ्यकरणमैन्द्रजालिकवन्न मिथ्येत्याह–तथैवेति । मत्ताः दृप्ताः भोगैस्तृप्ताः मदिरोत्कटाश्च मद्येन मत्ताश्च । "मत्ते शौण्डोत्कटक्षीबाः" इत्यमरः । तथैव अनुभवकाल इवावर्तिषतेत्यर्थः । प्रमर्दिताः प्रकीर्णाश्च भोगवशादिति भावः । पृथक् पूर्वस्रग्भ्यो विलक्षणाः ॥८३॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकनवतितमः सर्गः ॥९१॥ तत इत्यादि । व्युष्य विशेषेणोषित्वा । सपरिच्छदः

इति हलायुधः । यवससञ्चयान् तृणसमूहान् । पशूनां निर्वापार्थान् पशुभ्यो विश्राणनार्थान् । अत्र द्वितीयान्तानां ददृशुरित्यनेन सम्बन्धः ॥ ७७-७९ ॥ स्वप्नकल्पं अयत्नसिद्धत्वाददृष्टपूर्वत्वादाश्चर्यावहत्वाच्च स्वप्नकल्पोक्तिः ॥ ८० ॥ ८१ ॥ प्रतिजग्मुरिति । अनुज्ञाप्य अनुज्ञां प्राप्येत्यर्थः ॥ ८२ ॥ एतत्सर्वं मिथ्या न भवति सत्यमेवेति दर्शयितुं मदादीनामवस्थितिमाह–तथैवेति । मत्ताः भोगैः दृप्ताः । मदिरोत्कटाश्च मदिरया मत्ताश्च । तथैव अनुभवकाल इव अवर्तन्तेत्यर्थः ॥ ८३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां एकनवतितमः सर्गः ॥ ९१ ॥ तत इति । सपरिच्छदः सपरिवारः ।

सपरिवारः। "परिवारः परिकरः परिष्कन्दः परिग्रहः। तथोपकरणं प्रोक्तं परिबर्हः परिच्छदः॥" इति हलायुधः। कामात् रामप्राप्तीच्छया ॥१॥२॥ कच्चिदिति। अस्मद्विषये अस्मदाश्रमे। रात्रिः सुखा गता कच्चिदित्यन्वयः। आतिथ्ये विषये। समग्रः संपूर्णः, तृप्त इति यावत्। अनघेत्यनेन पूर्वं भरताशयपरीक्षणार्थमेवातिथ्यकरणमिति द्योतितम्, रामविषयभक्त्यभावे भोगप्रवणः स्यादिति हृदयम् ॥ ३ ॥ तमिति। अभिनिष्क्रान्तमित्यनेन

तमृषिः पुरुषव्याघ्रं प्राञ्जलिं प्रेक्ष्य चागतम्। हुताग्निहोत्रो भरतं भरद्वाजोऽभ्यभाषत ॥ २ ॥ कच्चिदत्र सुखा रात्रिस्तवास्मद्विषये गता। समग्रस्ते जनः कच्चिदातिथ्ये शंस मेऽनघ ॥ ३ ॥ तमुवाचाञ्जलिं कृत्वा भरतोऽभिप्रणम्य च। आश्रमादभिनिष्क्रान्तमृषिमुत्तमतेजसम्॥४॥ सुखोषितोऽस्मि भगवन् समग्रबलवाहनः। तर्पितः सर्वकामैश्च सामात्यो बलवत्त्वया ॥ ५ ॥ अपेतक्लमसन्तापाः सुभिक्षाः सुप्रतिश्रयाः। अपि प्रेष्यानुपादाय सर्वे स्म सुसुखोषिताः ॥ ६ ॥ आमन्त्रयेऽहं भगवन् कामं त्वामृषिसत्तम। समीपं प्रस्थितं भ्रातुर्मैत्रेणेक्षस्व चक्षुषा ॥ ७ ॥ आश्रमं तस्य धर्मज्ञ धार्मिकस्य महात्मनः। आचक्ष्व कतमो मार्गः कियानिति च शंस मे ॥ ८ ॥

कौसल्यादिसर्वजनदर्शनार्थं भरतागमनकाल एव बहिर्निर्गतवानृषिरिति व्यञ्जितम् ॥ ४ ॥ सुखेति। बलवत्तार्पितः अतीव तर्पितः "किमुतातीवबलवत् स्वति सुष्ठु च निर्भरे" इति वैजयन्ती ॥ ५ ॥ अपेतेति। क्लमो ग्लानिः। सन्तापो देहौष्ण्यम्। अपिप्रेष्यानुपादाय प्रेष्यानप्यारभ्य। सुभिक्षाः समृद्धान्नपानाः। सुप्रतिश्रयाः शोभनस्थानाः, शोभनगृहा इति यावत्। "स्थाने गोष्ठ्यां सत्रयागे प्रत्याहारे प्रतिश्रयः" इति वैजयन्ती ॥ ६ ॥ कामं यथेष्टम्। "कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्।" इत्यमरः। हे भगवन्! त्वामामन्त्रये आपृच्छे। भ्रातुः समीपं कामं प्रस्थितं मां त्वं मैत्रेण मित्रसम्बन्धिना चक्षुषा ईक्षस्व ॥ ७ ॥ आश्रममिति। धर्मेण योगजधर्मेण जानातीति धर्मज्ञ! योगप्रभावविदितसर्ववृत्तान्तेत्यर्थः। धार्मिकस्य पितृवचनपरिपालनरूपं धर्ममाचरतः महात्मनः महाधैर्यस्य तस्य रामस्याश्रममाचक्ष्व। स चाश्रमः कियान् कियद्दूरतः तस्य मार्गः कतमः

कामात् रामप्राप्तिकामात् ॥ १ ॥ २ ॥ सुखा सुखरूपा, आतिथ्ये ते जनः [illegible]दिति शेषः ॥ ३ ॥ ४ ॥ बलवत्तर्पितः अतीव तर्पितः ॥ ५ ॥ सुप्रतिश्रयाः शोभनस्थानाः, शोभनगृहा इत्यर्थः। प्रेष्यानुपादाय प्रेष्यानपि परिगृह्य, प्रेष्यैस्सहिता इति यावत् ॥ ६ ॥ कामं यथेच्छम् ॥ ७ ॥ आश्रममाचक्ष्व कतमो मार्गः

इति पृच्छते मे मह्यं शंसेति योजना ॥ ८ ॥ इतीति । महातपाः अतएव महातेजाः, सर्वज्ञानसमर्थ इत्यर्थः । रामाश्रमप्रदेशाभिज्ञेषु गुहज्ञातिषु विद्यमानेषु मुनिं प्रति प्रश्नस्तस्य पूजार्थम् ॥ ९ ॥ भरतेति । अर्द्धतृतीयेष्विति अर्द्धं तृतीयं येषां तेष्वर्द्धतृतीयेषु, सार्द्धयोजनद्वितय इत्यर्थः । अतीतेष्विति शेषः । अजने मुनिव्यतिरिक्तग्राम्यजनरहिते वने । तत्र प्रसिद्धो गिरिः, वर्तत इति शेषः॥१०॥ उत्तरमिति । तस्य गिरेरुत्तरं पार्श्वमासाद्य

इति पृष्टस्तु भरतं भ्रातृदर्शनलालसम् । प्रत्युवाच महातेजा भरद्वाजो महातपाः ॥ ९ ॥ भरतार्द्धतृतीयेषु योजनेष्वजने वने । चित्रकूटो गिरिस्तत्र रम्यनिर्दरकाननः ॥१०॥ उत्तरं पार्श्वमासाद्य तस्य मन्दाकिनी नदी । पुष्पितद्रुमसञ्छन्ना रम्यपुष्पितकानना॥११॥ अनन्तरं तत्सरितश्चित्रकूटश्च पर्वतः । तयोः पर्णकुटी तात तत्र तौ वसतो ध्रुवम्॥१२॥दक्षिणेनैव मार्गेण सव्यदक्षिणमेव वा । गजवाजिरथाकीर्णां वाहिनीं वाहिनीपते । वाहयस्व महाभाग ततो द्रक्ष्यसि राघवम् ॥१३॥ प्रयाणमिति तच्छ्रुत्वा राजराजस्य योषितः । हित्वा यानानि यानार्हा ब्राह्मणं पर्यवारयन् १४

स्थिता मन्दाकिनी नाम काचिन्नदी अस्तीति शेषः । द्रुमाः काननभिन्नाः ॥ ११ ॥ अनन्तरमिति । तत्सरितो मन्दाकिन्याः अनन्तरं समीपे चित्रकूटस्तिष्ठति नतु व्यवहितपार्श्वे । तयोः सरिद्गिर्योर्मध्ये पर्णकुटी पर्णशाला कृता तत्र वसतः ध्रुवम्, योगप्रभावेन जानामीत्यर्थः॥१२॥ दक्षिणेनेति । अस्मादाश्रमात् दक्षिणेन मार्गेण किञ्चिद्दूरं गत्वा ततः सव्यदक्षिणं नैर्ऋतदिग्भागो यथा भवति तथा वाहिनीं वाहयस्व, किञ्चिद्दूरं दक्षिण एको मार्गः, ततः शाखामार्गेण नैर्ऋतदिग्भागगामिना गन्तव्यमिति भावः । कान्तारमार्गस्य सूक्ष्मत्वाद्यथायोग्यं मार्गस्य वामतो दक्षिणतश्च विरलप्रदेशे वाहिनीं प्रापयस्वेत्यर्थ इत्यप्याहुः ॥ १३ ॥ प्रयाणमिति । इति उक्तप्रकारेण । तत्प्रयाणं प्रस्थानं श्रुत्वा राजराजस्य महाराजस्य दशरथस्य योषितः कौसल्याद्याः

तस्य कियान् दूरे शंस, वर्तत इति शेषः ॥ ८ ॥ ९ ॥ अर्धतृतीयेषु अर्धयुक्ततृतीयेष्वित्यर्थः । सार्धयोजनद्वये वा । अजने निर्जने चित्रकूटः, वर्तत इति शेषः॥१०॥ मन्दाकिनी भागीरथीव्यतिरिक्ता नदी, अस्तीति शेषः ॥ ११ ॥ तत्परितो मन्दाकिन्या अनन्तरं तस्याः परपार इत्यर्थः । तत्र चित्रकूटे ॥ १२ ॥ दक्षिणेनेत्यादि श्लोकद्वयमेकं वाक्यम् । दक्षिणेन मार्गेण किञ्चिद्दूरं गत्वा तदनन्तरं सव्यदक्षिणमेव वा सव्यं दक्षिणं यथा तथा वाहिनीं वाहयस्व । कान्तारमार्गस्य सूक्ष्मत्वात् यथायोग्यं मार्गस्य वामतो दक्षिणतश्च विस्तारप्रदेशे वाहिनीं प्रापयस्वेत्यर्थः ॥ १३ ॥ राजराजस्य दशरथस्य । ब्राह्मणं भरद्वाजम् ॥ १४–१७ ॥

स०–अर्धं तृतीयं येषु प्रथमं द्वितीयं चेति त्रिषु योजनेषु । दशक्रोशपरिमितो मार्ग इति यावत् । रम्यं निर्झरयुक्तं काननं यस्मिन् स तथा ॥ १० ॥

यानार्हाः यानत्यागानर्हा अपि यानानि त्यक्त्वा ब्राह्मणं ब्रह्मविदं भरद्वाजं पर्यवारयन्, वन्दनायेति शेषः ॥ १४॥ वेपमानेति । वेपमाना वार्द्धकाद्दर्षिदर्शनाच्च। कृशा दीना, रामविरहादिति शेषः ॥ १५ ॥ असमृद्धेन अपूर्णेन, फलापर्य्यवसायिनेति यावत् । कामेन मनोरथेन उपलक्षितेति शेषः । लोकस्य

वेपमाना कृशा दीना सह देव्या सुमित्रया। कौसल्या तत्र जग्राह कराभ्यां चरणौ मुनेः ॥ १५ ॥ असमृद्धेन कामेन सर्वलोकस्य गर्हिता । कैकेयी तस्य जग्राह चरणौ सव्यपत्रपा ॥ १६ ॥ तं प्रदक्षिणमागम्य भगवन्तं महामुनिम् । अदूराद्भरतस्यैव तस्थौ दीनमनास्तदा ॥ १७ ॥ ततः पप्रच्छ भरतं भरद्वाजो दृढव्रतः । विशेषं ज्ञातुमिच्छामि मातॄणां तव राघव ॥ १८ ॥ एवमुक्तस्तु भरतो भरद्वाजेन धार्मिकः। उवाच प्राञ्जलिर्भूत्वा वाक्यं वचनकोविदः ॥ १९ ॥ यामिमां भगवन् दीनां शोकानशनकर्शिताम् । पितुर्हि महिषीं देवीं देवतामिव पश्यसि ॥ २० ॥ एषा तं पुरुषव्याघ्रं सिंहविक्रान्तगामिनम् । कौसल्या सुषुवे रामं धातारमदितिर्यथा ॥ २१ ॥ अस्या वामभुजं श्लिष्टा यैषा तिष्ठति दुर्मनाः । [ इयं सुमित्रा दुःखार्ता देवी राज्ञश्च मध्यमा । ] कर्णिकारस्य शाखेव शीर्णपुष्पा वनान्तरे ॥ २२ ॥

गर्हिता लोकेन गर्हिता । सव्यपत्रपा सलज्जा । रामविवासनहेतुत्वात् ॥ १६ ॥ लज्जावशादेव कौसल्यादिभिः सह मुनेः पुरतः स्थातुमशक्ता प्रदक्षिणव्याजेन भरतं गतेत्याह—तमित्यादिना । दीनमनाः कैकेयी ॥ १७ ॥ तत इति । दृढव्रत इत्यनेन सर्वज्ञत्वं लक्ष्यते, सर्वज्ञोपि कैकेयीशिक्षार्थं पप्रच्छेत्यर्थः। विशेषं संज्ञासंज्ञिसम्बन्धादिविशेषम् । इतिकरणमध्याहृत्य इति पप्रच्छेत्यन्वयः ॥ १८ ॥ एवमिति । धार्मिकः सत्यवादीत्यर्थः। वचनकोविदः वचने पण्डितः, भरद्वाजवचनतात्पर्य्यज्ञ इत्यर्थः । भरतमुखेन मातॄणां स्वभावविशेषप्रतिपादनं हि मुनेराशयः ॥१९॥ यामिति । शोकानशनकर्शितां शोकानशनाभ्यां कर्शिताम् । देवतामिव धर्मदेवतामिव । सिंहविक्रान्तगामिनं सिंहवद्विक्रान्तं विक्रमयुक्तं यथा भवति तथा गामिनं गमनशीलम्। धातारं विष्णुम् । "एष धाता विधाता च" इति वक्ष्यमाणत्वात् । सर्वगुणसम्पन्ना राममाता एषा कौसल्येत्यर्थः ॥ २० ॥ २१ ॥ अस्या इति । वामभुजं

विशेषम् इयं का इयं केत्येवंरूपं विशेषमित्यर्थः ॥ १८–२० ॥ धातारम् उपेन्द्रम् ॥ २१ ॥ अस्याः कौसल्यायाः । दुर्मनाः दुःखितमनाः ॥ २२ ॥ २३ ॥

श्लिष्टा कौसल्याया वेपमानाङ्गत्वात्तद्धारणार्थं तद्वामभुजमवधृत्य स्थितेत्यर्थः। दुर्मनाः दुःखितमनाः । दुर्मनस्त्वे दृष्टान्तः कर्णिकारस्येति । शीर्णपुष्पा म्लानपुष्पा ॥२२॥ एतस्या इत्यत्र उक्तगुणसम्पन्नयोर्लक्ष्मणशत्रुघ्नयोर्मातेयमिति बोध्यम् । देववर्णिनौ अश्विनीदेवतुल्यौ॥२३॥यस्या इति । जीवनाशं राक्षसभूयिष्ठं दण्डकारण्यं प्रति विवासनात् जीवस्य जीवनस्य नाशम् इतः । इह वने । क्रुध्यतीति क्रोधना । कर्तरिल्युट् । अकृतप्रज्ञाम् अशिक्षितबुद्धिम् ।

एतस्यास्तु सुतौ देव्याः कुमारौ देववर्णिनौ । उभौ लक्ष्मणशत्रुघ्नौ वीरौ सत्यपराक्रमौ ॥ २३ ॥ यस्याः कृते नरव्याघ्रौ जीवनाशमितो गतौ । राजपुत्रविहीनश्च स्वर्गं दशरथो गतः ॥ २४ ॥ क्रोधनामकृतप्रज्ञां दृप्तां सुभगमानिनीम् । ऐश्वर्यकामां कैकेयीमनार्य्यामार्यरूपिणीम् ॥ २५ ॥ ममैतां मातरं विद्धि नृशंसां पापनिश्चयाम् । यतो मूलं हि पश्यामि व्यसनं महदात्मनः ॥ २६ ॥ इत्युक्त्वा नरशार्दूलो बाष्पगद्गदया गिरा । स निशश्वास ताम्राक्षो नागः क्रुद्ध इव श्वसन् ॥ २७ ॥ भरद्वाजो महर्षिस्तं ब्रुवन्तं भरतं तथा । प्रत्युवाच महाबुद्धिरिदं वचनमर्थवत् ॥२८॥ न दोषेणावगन्तव्या कैकेयी भरत त्वया । रामप्रव्राजनं ह्येतत् सुखोदर्कं भविष्यति ॥ २९ ॥ देवानां दानवानां च ऋषीणां भावितात्मनाम् । हितमेव भविष्यद्धि रामप्रव्राजनादिह ॥ ३० ॥

सुभगमानिनीं सुभगां सुन्दरीमात्मानं मन्यत इति सुभगमानिनी ताम् । वस्तुतोऽनार्याम् आर्यरूपिणीमार्यवद्भासमानाम् । यतोमूलं यत्कारणकम् । आत्मनो मम ॥२४–२६॥ इतीति । बाष्पगद्गदया रामविवासनस्मरणजबाष्पेण गद्गदया स्खलन्त्या गिरा इत्युक्त्वा । नागः सर्पः ॥२७॥ भरद्वाज इति । तथा ब्रुवन्तमित्यन्वयः। महाबुद्धिः भाविज्ञः। अर्थवत् प्रयोजनवत्॥२८॥ नेति । दोषेण दोषवत्तया नावगन्तव्या, तस्याः देवप्रेरितत्वादित्यभिप्रायः। तत्र हेतुमाह रामेति । सुखोदर्कं सुखोत्तरम् । अतीतानागतवर्त्तमानज्ञो महर्षिर्भाविरावणवधादिकं हृदि निधाय देवादीनां सुखोदर्कं भविष्यतीत्युक्तवान् २९।३०

जीवनाशं गतौ तादृशापदं प्राप्तावित्यर्थः ॥ २४ ॥ २५ ॥ यतोमूलं यन्निमित्तम् ॥ २६–२८ ॥ कैकेयी दोषेण नावगन्तव्या कैकेय्यां दोषदृष्टिर्न कर्तव्येत्यर्थः ।

स०–देववर्णिनौ देवानां वर्णो रूपमेतयोरस्तीति तथा । यद्वा देवानां वर्णो वर्णना स्तुतिरिति. यावत् । ययोस्तौ । कुमारौ षण्मुखसमौ । कुः कुत्सितो मारः सौन्दर्येण याभ्यामिति वा । अतो न सुतावित्यतिरिक्तता ॥ २३ ॥ जीवनेपि नाशः जीवनाशः अदर्शनमिति यावत् । तं गतौ ॥ २४ ॥ आर्यरूपिणीम् आर्यस्य वस्तुन इव रूपं यस्यास्ताम् ॥ २५ ॥ यो मूलं यस्य व्यसनस्य तत् यतोमूलम् ॥ २६ ॥

अभिवाद्येति । संसिद्धः लब्धाशीर्वादः । आमन्त्र्य आपृच्छय । युज्यतां गमनाय सन्नह्यतामिति स्वसैन्यमचोदयत् ॥३१॥ तत इति । वाजिरथान् वाजिनो रथांश्च । युक्त्वा संनह्य । युक्तानितिपाठे सज्जीकृतान् । प्रयाणार्थी प्रयाणकाङ्क्षी ॥३२॥ गजकन्याः करेणवः । हेमकक्ष्याः हेममयबन्धनरज्जवः । सघोषाः घण्टाघोषयुक्ताः । पताकिन इत्यत्र "पुमान् स्त्रिया" इत्येकशेषः ॥३३॥ विविधानीति । प्रययुरित्यत्र सादिन आरुह्येति शेषः । यद्वा यानानीति तत्स्था

अभिवाद्य तु संसिद्धः कृत्वा चैनं प्रदक्षिणम् । आमन्त्र्य भरतः सैन्यं युज्यतामित्यचोदयत् ॥ ३१ ॥ ततो वाजिरथान् युक्त्वा दिव्यान् हेमपरिष्कृतान् । अध्यारोहत् प्रयाणार्थी बहून् बहुविधो जनः ॥ ३२ ॥ गजकन्या गजाश्चैव हेम कक्ष्याः पताकिनः । जीमूता इव घर्मान्ते सघोषाः सम्प्रतस्थिरे ॥ ३३ ॥ विविधान्यपि यानानि महान्ति च लघूनि च । प्रययुः सुमहार्हाणि पादैरेव पदातयः ॥ ३४ ॥ अथ यानप्रवेकैस्तु कौसल्याप्रमुखाः स्त्रियः । रामदर्शन कांक्षिण्यः प्रययुर्मुदितास्तदा ॥ ३५ ॥ चन्द्रार्कतरुणाभासां नियुक्तां शिबिकां शुभाम् । आस्थाय प्रययौ श्रीमान् भरतः सपरिच्छदः ॥ ३६ ॥ सा प्रयाता महासेना गजवाजिरथाकुला । दक्षिणां दिशमावृत्य महामेघ इवोत्थितः ॥ ३७ ॥ वनानि तु व्यतिक्रम्य जुष्टानि मृगपक्षिभिः । गङ्गायाः परवेलायां गिरिष्वपि नदीषु च ॥ ३८ ॥

लक्ष्यन्ते । पदातयः पादैरेव ययुः यानैः समं ययुरितिभावः ॥३४॥ अथेति । यानप्रवेकैर्यानोत्तमैः । "प्रवेकानुत्तमोत्तमाः" इत्यमरः ॥३५॥ चन्द्रार्केति । चन्द्रार्कतरुणाभासां तरुणचन्द्रार्ककान्तिम् । नियुक्तां वसिष्ठादिभिराज्ञप्ताम् । सपरिच्छदः सपरिवारः ॥ ३६ ॥ सेत्यादिश्लोकद्वयमेकं वाक्यम् । गङ्गायाः दक्षिणवाहिन्याः । परवेलायां पश्चिमभागे स्थितेति शेषः । महासेना वनानि व्यतिक्रम्य गिरिषु नदीषु च विश्रम्येति शेषः । उत्थितो मेघ इव

कैकेय्या देवप्रेरितत्वादिति भावः ॥ २९ ॥ ३० ॥ संसिद्धः कृताशीर्वाद इत्यर्थः ॥ ३१ ॥ वाजिरथान् वाजिनश्च रथांश्च । युक्तान् सज्जीकृतान् ॥ ३२ ॥ गजकन्याः करेणवः ॥ ३३ ॥ ३४ ॥ यानप्रवेकैः यानश्रेष्ठैः ॥ ३५ ॥ चन्द्रार्कतरुणाभासाम् तरुणचन्द्रार्कसदृशामित्यर्थः । नियुक्तां सज्जीकृताम् ॥ ३६ ॥ सा प्रयाते त्यादिश्लोकद्वयमेकं वाक्यम् । गङ्गायाः परवेलायां दक्षिणकूले निविष्टा सा सेना उत्थितो मेघ इव दक्षिणां दिशमावृत्य गिरिष्वपि नदीषु च वनानि

दक्षिणां दिशमावृत्य प्रयातेति सम्बन्धः । यद्वा महासेना गिरिषु नदीषु च वनानि व्यतिक्रम्येति वा अन्वयः॥३७॥३८॥ सेति । तत्र तदेत्यर्थः ॥३९॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्विनवतितमः सर्गः॥९२॥ तयेत्यादि । यायिन्या गच्छन्त्या ।

सा सम्प्रहृष्टद्विजवाजियोधा वित्रासयन्ती मृगपक्षिसङ्घान् । महद्वनं तत्प्रतिगाहमाना रराज सेना भरतस्य तत्र ॥ ३९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

तया महत्या यायिन्या ध्वजिन्या वनवासिनः । अर्दिता यूथपा मत्ताः सयूथाः सम्प्रदुद्रुवुः ॥ १ ॥ ऋक्षाः पृषतसङ्घाश्च रुरवश्च समन्ततः । दृश्यन्ते वनराजीषु गिरिष्वपि नदीषु च ॥ २ ॥ स सम्प्रतस्थे धर्मात्मा प्रीतो दशरथात्मजः । वृतो महत्या नादिन्या सेनया चतुरङ्गया ॥ ३ ॥ सागरौघनिभा सेना भरतस्य महात्मनः । महीं सञ्छादयामास प्रावृषि द्यामिवाम्बुदः ॥ ४ ॥ तुरङ्गौघैरवतता वारणैश्च महाजवैः । अनालक्ष्या चिरं कालं तस्मिन् काले बभूव भूः ॥ ५ ॥ स यात्वा दूरमध्वानं सुपरिश्रान्तवाहनः । उवाच भरतः श्रीमान् वसिष्ठं मन्त्रिणां वरम् ॥ ६ ॥

आर्दिताः पीडिताः । यूथपाः गजादियूथनाथाः । "यूथनाथस्तु यूथपः" इत्यमरः ॥१॥ ऋक्षा इति । पृषतसङ्घाः बिन्दुमन्मृगसङ्घाः। ऋक्षाः भल्लूकाः। रुरवो बिन्दुरहिताः स्थूलकायाः विकटशृङ्गा मृगाः । दृश्यन्ते अदृश्यन्त । वनराजीष्वित्यादिना अपूर्वमनुष्यादिदर्शनेन स्तब्धेक्षणाः स्थिता इत्युच्यन्ते ॥ २ ॥ स इति । नादिन्या रथघोषहेषितबृंहितादिभिरिति शेषः ॥ ३ ॥ सागरौघेति । द्यामाकाशम् ॥ ४ ॥ तुरङ्गौघैरिति । अवतता निरन्तरा । तस्मिन् काले गमनकाले । चिरकालमित्यनेन कदाचिल्लक्ष्यत इति गम्यते ॥ ५ ॥ स इति । मन्त्रिणां मन्त्रविदाम् । यद्वा औचित्यान्मन्त्र



व्यतिक्रम्य प्रयातेति सम्बन्धः ॥ ३७-३९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां द्विनवतितमः सर्गः ॥९२॥
तयेति । यायिन्या गच्छन्त्या । यूथपाः गजयूथपाः ॥ १ ॥ पृषतसङ्घाः पृषतबिन्दुसहिताः । रुरवस्तु बिन्दुरहिताः स्थूलकायाः विकटशृङ्गाश्च ॥ २-४ ॥ अवतता व्याप्ता ॥ ५ ॥ मन्त्रिणां वरं मन्त्रज्ञानां श्रेष्ठम् ॥ ६-१२ ॥

शब्दः कार्य्यविचारे वर्त्तते ॥ ६ ॥ यादृशमिति । अस्य देशस्य यादृशं रूपं लक्ष्यते । मन्दाकिनी चित्रकूटमध्यवर्त्तितत्रूपं मया च यथा येन प्रका रेण श्रुतं भरद्वाजात् तथा दृश्यत इति शेषः ॥ ७ ॥ तदेवाह—अयमित्यादिना । अयं पुरोवर्ती गिरिश्चित्रकूटो भवति तथेयं मन्दाकिनी भवति । एतत् अनयोर्मध्यवर्त्ति वनं नीलमेघनिभं प्रकाशते ॥ ८ ॥ अथ तद्देशप्राप्तिं दर्शयति—गिरेः सानूनीति । सानूनि एतानीति सिद्धम् । अवमृद्यन्ते भज्यन्ते॥९॥

यादृशं लक्ष्यते रूपं यथा चैव श्रुतं मया । व्यक्तं प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत् ॥ ७ ॥ अयं गिरिश्चित्र कूट इयं मन्दाकिनी नदी । एतत् प्रकाशते दूरान्नीलमेघनिभं वनम् ॥ ८ ॥ गिरेः सानूनि रम्याणि चित्रकूटस्य सम्प्रति । वारणैरवमृद्यन्ते मामकैः पर्वतोपमैः ॥ ९ ॥ मुञ्चन्ति कुसुमान्येते नगाः पर्वतसानुषु । नीला इवातपापाये तोयं तोयधरा घनाः ॥ १० ॥ किन्नराचरितं देशं पश्य शत्रुघ्न पर्वतम् । मृगैः समन्तादाकीर्णं मकरैरिव सागरम् ॥ ११ ॥ एते मृगगणा भान्ति शीघ्रवेगाः प्रचोदिताः । वायुप्रविद्धा शरदि मेघराजिरिवाम्बरे ॥ १२ ॥ कुर्वन्ति कुसुमापीडान् शिरस्सु सुरभीनमी । मेघप्रकाशैः फलकैर्दाक्षिणात्या यथा नराः ॥ १३ ॥

अथ रामनिवासत्वेन भोग्यताबुद्ध्या तद्वनं भ्रातरं प्रति वर्णयति—मुञ्चन्तीत्यादिना । एते वकुला इत्यर्थः। आतपापाये घर्मान्ते, वर्षाकाल इति यावत् । तोयधरा इति नीलत्वे हेतुः ॥ १० ॥ किन्नरेति । किन्नराचरितं देशं किन्नराचरितदेशरूपं पर्वतम् ॥११॥ एत इति । प्रचोदिताः सैनिकैरिति शेषः । प्रविद्धा प्रेरितेति यावत् ॥ १२ ॥ कुर्वन्तीति । अमी भटाः मेघप्रकाशैः फलकैः केशबन्धविशेषैः वनसञ्चारार्थं कल्पितैरुपलक्षिताः सन्तः । दाक्षिणात्या नरा यथा दाक्षिणात्या नरा इव । शिरस्सु कुसुमापीडान् कुसुमशेखरान् कुर्वन्ति । "आपीडशेखरोत्तंसावतंसाः शिरसि स्रजः ।" इति हला

दक्षिणदिग्भवा नराः मेघप्रकाशैर्ऋक्षादिनीलचर्मपिनद्धतया नीलमेघतुल्यैः फलकैः साधनभूतैः शिरस्सु कुसुमापीडान् कुसुमसमूहान्यथा कुर्वन्ति यथा धारयन्ति तथैवामी वृक्षाः कुसुमापीडान् कुसुमस्तवकान् शिरस्सु धारयन्ति । दाक्षिणात्या हि फलकान् ऋक्षादिचर्मपिनद्धान् कृत्वा तेषु पुष्पाणि विकीर्य शिरस्सु धारयन्तीति प्रसिद्धिः । यद्वा अमी भटाः मेघप्रकाशैः फलकैरुपलक्षिताः सन्तः दाक्षिणात्या नरा इव कुसुमापीडान् कुसुमशेखरान् शिरस्सु कुर्वन्ति ॥ १३ ॥

स०—भरद्वाजो यं देशं यादृशं यादृशलक्षणं विशिष्टमब्रवीत् । यथा च मया श्रुतं तादृशलक्षणं तं देशं व्यक्तं प्राप्ताः स्म । यतोऽस्य रूपं तथैव लक्ष्यते । स्मेत्यव्ययं वा आर्षो वा विसर्गलोपः ॥ ७ ॥

युधः। दाक्षिणात्या हि केशानुद्धृत्य बद्ध्वा कुसुमापीडैरलङ्कुर्वन्ति ॥ १३ ॥ निष्कूजमिति। घोरप्रदर्शनं क्रूरदर्शनमिदं वनं पुरा निष्कूजमिव भूत्वा निर्जनं भूत्वेति यावत्। सम्प्रति जनाकीर्णा अयोध्या सौम्यनगरीव मा मां प्रतिभाति॥१४॥ खुरैरिति। हयादिखुरैरुदीरितः उत्थापितो रेणुर्दिवं प्रच्छाद्य तिष्ठति। वहति द्रुतमपनयति। कुर्वन्निव मम प्रियं रामाश्रमदर्शनप्रदानादिति भावः। अनेनावगम्यते रामाश्रमवर्णनं तदधिष्ठितत्वेन प्रीतिहेतुत्वादिति॥१५॥

निष्कूजमिव भूत्वेदं वनं घोरप्रदर्शनम्। अयोध्येव जनाकीर्णा सम्प्रति प्रतिभाति मा ॥ १४ ॥ खुरैरुदीरितो रेणुर्दिवं प्रच्छाद्य तिष्ठति। तं वहत्यनिलः शीघ्रं कुर्वन्निव मम प्रियम् ॥ १५ ॥ स्यन्दनांस्तुरगोपेतान् सूतमुख्यैरधिष्ठितान्। एतान् सम्पततः शीघ्रं पश्य शत्रुघ्न कानने ॥ १६ ॥ एतान् वित्रासितान् पश्य बर्हिणः प्रियदर्शनान्। एतमाविशतः शीघ्रमधिवासं पतत्रिणः ॥ १७॥ अतिमात्रमयं देशो मनोज्ञः प्रतिभाति मा। तापसानां निवासोऽयं व्यक्तं स्वर्गपथो यथा ॥ १८ ॥ मृगा मृगीभिः सहिता बहवः पृषता वने। मनोज्ञरूपा लक्ष्यन्ते कुसुमैरिव चित्रिताः ॥ १९ ॥ साधुसैन्याः प्रतिष्ठन्तां विचिन्वन्तु च कानने। यथा तौ पुरुषव्याघ्रौ दृश्येते रामलक्ष्मणौ ॥ २० ॥ भरतस्य वचः श्रुत्वा पुरुषाः शस्त्रपाणयः। विविशुस्तद्वनं शूरा धूमं च ददृशुस्ततः ॥ २१ ॥

वक्ष्यमाणत्रासहेतुत्वेनाह—स्यन्दनानिति। सूतमुख्यैः सारथिमुख्यैः। सम्पततः रामदर्शनकुतूहलेन सम्यग्गच्छतः ॥ १६ ॥ एतानिति। वित्रासितान् रथैरिति शेषः। बर्हिणः मयूरान्। एतं शैलम्। पतत्रिणः प्रशस्तपक्षानिति बर्हिविशेषणम् ॥ १७ ॥ अतिमात्रमिति। अतिमात्रं मनोज्ञ इति सम्बन्धः। अत एव स्वर्गपथो यथा स्वर्गप्रदेश इव। मा मां प्रतिभाति ॥ १८ ॥ मृगा इति। पृषताः बिन्दुमृगाः ॥ १९ ॥ साध्विति। साधुसैन्याः उचिताः सैनिकाः। "साधुः त्रिषूचिते सौम्ये सज्जने वार्द्धुषौ पुमान्।" इति वैजयन्ती। प्रतिष्ठन्तां गच्छन्त्वित्यर्थः। दृश्येते दृश्येयाताम्। लकार

निष्कूजमिव भूत्वा पूर्वं जनशब्दरहितं भूत्वा स्थितमिदं वनं संप्रति जनाकीर्णायोध्येव प्रतिभातीति सम्बन्धः ॥ १४ ॥ दावं वनं प्रच्छाद्य "दवदावौ वनारण्य वह्नी" इत्यमरः। दिवं प्रच्छाद्येति वा पाठः—शीघ्रं तं वहति तं द्रुतमपनयतीत्यर्थः ॥१५-१९॥ साधुसैन्याः उचिताः सैनिकाः प्रतिष्ठन्तां गच्छन्त्वित्यर्थः ॥२०-२२॥

व्यत्यय आर्षः ॥ २० ॥ २१ ॥ स इति । धूमाग्रं धूमशिखाम् । अमनुष्ये मनुष्यरहिते देशे । अग्निः धूमरेखाविशेषनिश्चितः न भवति । अत्र अत्रैव वह्निमत्प्रदेशे राघवौ स्तः । व्यक्तं ध्रुवम् ॥ २२ ॥ अथेति । अथ यदि न स्त इत्यर्थः । तपस्विनः सन्ति, ते प्रष्टव्या इति भावः ॥ २३ ॥

ते समालोक्य धूमाग्रमूचुर्भरतमागताः । नामनुष्ये भवत्यग्निर्व्यक्तमत्रैव राघवौ ॥ २२ ॥ अथ नात्र नरव्याघ्रौ राजपुत्रौ परन्तपौ । मन्ये रामोपमाः सन्ति व्यक्तमत्र तपस्विनः ॥ २३ ॥ तच्छ्रुत्वा भरतस्तेषां वचनं साधु सम्मतम् । सैन्यानुवाच सर्वांस्तानमित्रबलमर्दनः ॥ २४ ॥ यत्ता भवन्तस्तिष्ठन्तु नेतो गन्तव्यमग्रतः । अहमेव गमिष्यामि सुमन्त्रो गुरुरेव च ॥ २५ ॥ एवमुक्तास्ततः सर्वे तत्र तस्थुः समन्ततः । भरतो यत्र धूमाग्रं तत्र दृष्टिं समादधात् ॥ २६ ॥ व्यवस्थिता या भरतेन सा चमूर्निरीक्षमाणापि च धूममग्रतः । बभूव हृष्टा नचिरेण जानती प्रियस्य रामस्य समागमं तदा ॥ २७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

तदिति । साधुसम्मतं साधूनां न्यायविदां सम्मतम् । अमित्रबलमर्दनः अमोघशासन इति यावत् ॥२४॥ यत्ता इति । यत्ताः निश्शब्दाः । इतः अस्मा देशात् । परम् अग्रतः भवद्भिर्न गन्तव्यम् । अहमेव राजसु मन्त्रिषु सुमन्त्र एव ऋत्विक्षु गुरुर्वसिष्ठ एव । धृतिरिति पाठे—सुमन्त्र एवोच्यते ॥२५॥ ॥ २६ ॥ व्यवस्थितेति । अग्रतो धूमं निरीक्षमाणापि च । अनेन रामदर्शनत्वरातिशयः सूच्यते । व्यवस्थिता भरतेन व्यवस्थापितेत्यर्थः । भरतेन हेतुना व्यवस्थिता वा । सा चमूः प्रियस्य रामस्य नचिरेण अचिरेण । समागमं जानती सती तदा व्यवस्थाकालेपि हृष्टा बभूव । जानकीप्रियस्येति च पाठः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्रिनवतितमः सर्गः ॥ ९३ ॥

नरव्याघ्रौ अत्र यदि न स्त इति शेषः ॥ २३–२७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीराम० अयोध्याकाण्डव्याख्यायां त्रिनवतितमः सर्गः ॥ ९३ ॥

स०—समागममुद्दिश्य भरतेन स्थापिता ॥ विष०—या चमूर्भरतेन व्यवस्थिता व्यवस्थापिता सा वासाय अग्रतो भूमिं निरीक्षमाणा नचिरेण शीघ्रम् । जानकीप्रियस्य रामस्य । समागमं निरीक्षमाणा तदा हृष्टा बभूव ॥ २७ ॥

एवमेतावत्पर्यन्तं भरतकथां प्रस्तुत्य रामस्य चित्रकूटप्रवेशानन्तरदिनेषु विहारतारतम्याभावात् भरतप्रातिदिनसम्भूतविहारविशेषान् वर्णयति-दीर्घ कालेत्यादिना सर्गद्वयेन । आदौ श्लोकद्वयमेकान्वयम् । अथ प्रातःकर्त्तव्यकर्मानुष्ठानानन्तरम् । तस्मिन् गिरौ चिरपरिचयेपि वैलक्षण्यातिशयादपूर्ववद्भासमाने । दीर्घकालोषितः मासमात्रमुषितोपि गिरिवनप्रियः "नवंनवं प्रीतिरहो करोति" इत्युक्तरीत्या गिरिवनयोः नवनवत्वापादकप्रीतिकः ।

दीर्घकालोषितस्तस्मिन् गिरौ गिरिवनप्रियः । वैदेह्याः प्रियमाकांक्षन् स्वं च चित्तं विलोभयन् ॥१॥ अथ दाशरथिश्चित्रं चित्रकूटमदर्शयत् । भार्य्यााममरसङ्काशः शचीमिव पुरन्दरः ॥२॥ न राज्याद्भ्रंशनं भद्रे न सुहृद्भिर्विनाभवः। मनो मे बाधते दृष्ट्वा रमणीयमिमं गिरिम् ॥३॥ पश्येममचलं भद्रे नानाद्विजगणायुतम्। शिखरैः खमिवोद्विद्धैर्धातुमद्भिर्विभूषितम् ॥ ४ ॥ केचिद्रजतसङ्काशाः केचित् क्षतजसन्निभाः । पीतमाञ्जिष्ठवर्णाश्च केचिन्मणिवरप्रभाः ॥ ५ ॥

वैदेह्याः प्रियेण सहैव वनदर्शनकुतूहलायाः । प्रियं प्रीतिमाकाङ्क्षन् तद्द्वारा स्वचित्तं च विलोभयन् प्रीणयन् । अमरसङ्काशः कुत्रापि निर्भय इत्यर्थः । दाशरथिः रामः । चित्रमन्वर्थं चित्रकूटम् । भार्यां सर्वात्मना भरणीयां सीतां शचीं पुरन्दर इव अदर्शयत् । "गतिबुद्धि-" इत्यादिना द्विकर्मकत्वम् ॥१॥२॥ नेति । राज्यात् भक्तजनपूर्णात् । विनाभवो विनावस्थानम् । अपूछान्दसः । दृष्ट्वा स्थितस्येतिशेषः । मनो न बाधते न दुःखाकरोतीत्यर्थः । अयोध्यावासिजनविरहजः खेदः सर्वो निवृत्त इतिभावः॥३॥ तनि०-राज्यात् परमपदैश्वर्यात् भ्रंशनं तत्त्याग इत्यर्थः । "त्यक्त्वा वैकुण्ठमुत्तमम्" इतिवत् सुहृद्भिर्वैनतेयप्रभृतिभिः विनाभवः विनावस्थानं मे मनो न बाधते । रमणीयं लीलाविभूतिगतत्वेपि परमव्योम्नोप्यतिरमणीयम् । इमं गिरिं वक्ष्यमाणविशेषणयुक्तम्॥३॥ स्वचित्तविलोभनमुक्त्वा मैथिलीप्रियकरणं दर्शयति-पश्येति । खमाकाशम् । उद्विद्धैरिव स्थितैः विद्धोत्थितैरिव स्थितैः । अभ्रंलिहैरिति यावत् । कर्तरि निष्ठा ॥४॥ केचिदिति । धातुविभूषिताः नानाधात्वलंकृताः । अतएवाचलेन्द्रस्य चित्रकूटस्य केचिद्देशाः रजतसङ्काशाः अत्यन्तशुभ्राः । केचित् क्षतजसङ्काशाः रुधिरसदृश



दीर्घेत्यादिश्लोकद्वयमेकं वाक्यम् । स्वं च चित्तं वनवासपरिश्रान्तं स्वकीयं चित्तं च विलोभयन् अभिमतविषयान्तरव्यासङ्गेन आनन्दयन्नित्यर्थः ॥ १ ॥ २ ॥ विनाभवः विनाभवनम्, विनावस्थानमिति यावत् । मे गिरिं दृष्ट्वा स्थितस्येति शेषः ॥३॥ खमिवोद्विद्धैः खं भित्त्वा उद्गतैरिति ॥४॥ माञ्जिष्ठवर्णाः चित्रवर्णाः ॥ ५ ॥

वर्णाः । मणिवरप्रभाः इन्द्रनीलप्रभाः ॥५॥ पुष्पार्ककेतकाभाः पुष्पः पुष्परागः अर्कः स्फटिकः । " अर्कः स्फटिकसूर्ययोः " इत्यमरः । केतकाभाः ईषत्पाण्डुराः । ज्योतीरसप्रभाः ज्योतींषि तारा ज्वाला वा । "ज्योतिस्ताराग्निभाज्वालादृक्पुत्रार्थाध्वराग्निषु" इति वैजयन्ती । रसः पारदः । श्वेतवर्णा

पुष्पार्ककेतकाभाश्च केचिज्ज्योतीरसप्रभाः । विराजन्तेऽचलेन्द्रस्य देशा धातुविभूषिताः ॥ ६ ॥ नानामृगगण द्वीपितरक्ष्वृक्षगणैर्वृतः । अदुष्टैर्भात्ययं शैलो बहुपक्षिसमायुतः ॥ ७ ॥ आम्रजम्ब्वसनैर्लोध्रैः प्रियालैः पनसैर्धवैः । अङ्कोलैर्भव्यतिनिशैर्बिल्वतिन्दुकवेणुभिः ॥ ८ ॥ काश्मर्यरिष्टवरुणैर्मधूकैस्तिलकैस्तथा । बदर्यामलकैर्नीपैर्वेत्र धन्वनबीजकैः ॥९॥ पुष्पवद्भिः फलोपेतैश्छायावद्भिर्मनोरमैः। एवमादिभिराकीर्णः श्रियं पुष्यत्ययं गिरिः ॥१०॥ शैलप्रस्थेषु रम्येषु पश्येमान् रोमहर्षणान् । किन्नरान् द्वन्द्वशो भद्रे रममाणान् मनस्विनः ॥११॥ शाखावसक्तान् खड्गांश्च प्रवराण्यम्बराणि च । पश्य विद्याधरस्त्रीणां क्रीडोद्देशान् मनोरमान् ॥ १२ ॥ जलप्रपातैरुद्भेदैर्निष्यन्दैश्च क्वचित् क्वचित् । स्रवद्भिर्भात्ययं शैलः स्रवन्मद इव द्विपः ॥ १३ ॥

वान्तरभेदा उच्यन्ते ॥ ६ ॥ नानेति । द्वीपी महाव्याघ्रः । तरक्षुः क्षुद्रव्याघ्रः । अदुष्टैः मुनिजनसन्निधानेन शान्ततया हिंसादिदोषरहितैः ॥ ७ ॥ आम्रेत्यादि । असनैः पीतसालैः । लोध्रैः तिरीटैः । प्रियालैः राजादनैः । अङ्कोलैः भव्यैः । न्युब्जैः तिनिशैः । स्यन्दनैः बिल्वैः । तिन्दुकैः कालस्कन्धैः । वेणुभिः वंशैः । काश्मरीभिः मधुपर्णिकाख्यैर्वृक्षैः । अरिष्टैः निम्बैः । वरुणैः तिक्तशाकैः । मधूकैः गुडपुष्पैः । तिलकैः क्षुरकैः । बदरीभिः आमलकैः । नीपैः कदम्बैः । वेत्रैः । धन्वनैः इन्द्रवृक्षैः । बीजकैः बीजप्रचुरफलैः दाडिमैः । पुष्पवद्भिरित्यादि सर्ववृक्षविशेषणम् । पुष्यति वर्द्धयति ॥८-१०॥ शैलप्रस्थेष्विति । रोमहर्षणान् दर्शनमात्रतः पुलककरान् । द्वन्द्वशः स्त्रीपुरुषौ द्वौद्वावित्यर्थः । मनस्विनः अन्योन्यबद्धमनस्कान् ॥ ११ ॥ शाखेति । खड्गादीनि विद्याधराणामेव । विद्याधराः देवयोनिविशेषाः ॥ १२ ॥ जलप्रपातैः निर्झरैः । उद्भेदैर्भुवमुद्भिद्य निर्गतैः । स्रवद्भिरिति सर्वविशेषणम् ॥१३॥

पुष्पार्ककेतकाभाः पुष्पः पुष्परागः अर्कः स्फटिकः केतकानि केतकीपुष्पाणि । ज्योतिः नक्षत्रं ज्वाला वा । रसः पारदरसः ॥६॥ नानामृगगणद्वीपितरक्ष्वृक्षगणैः द्वीपी महाव्याघ्रः, तरक्षुः क्षुद्रव्याघ्रः । अदुष्टैः महर्षिनिवासभूतपर्वतवर्तित्वाददुष्टत्वम् ॥ ७ ॥ असनः पीतसारः । अरिष्टो निम्बः । बीजकाः बीजप्रचुरफलाः, दाडिमा इत्यर्थः॥८-१०॥शैलप्रस्थेषु पर्वतसानुषु॥११॥ क्रीडोद्देशान् क्रीडाप्रदेशान्॥१२॥जलप्रपातैः उन्नतप्रदेशात्पतद्भिः जलप्रवाहैः उद्भेदैः उद्भिद्य निर्गतैः क्षुद्रनिर्झरैः ॥१३॥

गुहेति । घ्राणतर्प्पणमिति क्रियाविशेषणम् ॥ १४ ॥ यदीति । हे अनिन्दिते सर्वाङ्गसुन्दरि ! इह वने अनेकाः शरदः संवत्सरान् त्वया लक्ष्मणेन कैङ्कर्य्य लक्ष्मीवता च सार्द्धं यदि वत्स्यामि तदा मां शोकः नगरत्यागजं दुःखं न प्रधक्ष्यति न पीडयिष्यतीत्यर्थः । अत्र यदीत्युक्त्या भाविविवासस्सूच्यते ॥१५॥ बहुपुष्पेति । घ्राणरसनचक्षुस्त्वक्श्रोत्रप्रीतिकरेऽस्मिन्वने रतवानस्मि प्रीतियुक्तोऽस्मि । भामिनि विशेषतस्त्वत्सन्निधानादिति भावः ॥ १६ ॥ न केवलं

गुहासमीरणो गन्धान् नानापुष्पभवान् वहन् । घ्राणतर्प्पणमभ्येत्य कं नरं न प्रहर्षयेत् ॥१४॥ यदीह शरदोऽनेकास्त्वया सार्द्धमनिन्दिते । लक्ष्मणेन च वत्स्यामि न मां शोकः प्रधक्ष्यति ॥ १५ ॥ बहुपुष्पफले रम्ये नानाद्विजगणायुते । विचित्रशिखरे ह्यस्मिन् रतवानस्मि भामिनि ॥ १६ ॥ अनेन वनवासेन मया प्राप्तं फलद्वयम् । पितुश्चानृणता धर्मे भरतस्य प्रियं तथा ॥१७॥ वैदेहि रमसे कच्चिच्चित्रकूटे मया सह । पश्यन्ती विविधान् भावान् मनोवाक्कायसंयतान् ॥ १८ ॥ इदमेवामृतं प्राहू राज्ञि राजर्षयः परे । वनवासं भवार्थाय प्रेत्य मे प्रपितामहाः ॥ १९ ॥

सुखस्य लाभः किन्तु पित्रानृण्यबन्धुहर्षावपीत्याह–अनेनेति । फलद्वयमेवाह पितुरिति । धर्मेविषये पितुः अनृणता आनृण्यम्, तद्वाक्यकरणमित्यर्थः । भरतस्य प्रियं च भरतस्य भाविस्वकैङ्कर्य्यमिति भावः ॥ १७ ॥ एवं स्वप्रीतिमुक्त्वा सीताप्रीतिं पृच्छति–वैदेहीत्यादिना । वैदेहि ! 'भोगोपोद्घातकेलीचुलकितभगद्वैश्वरूप्यानुभावां' त्वां जानासि किं मया भोगस्रोतसि त्वां प्रधानीकुर्वन्तं मां जानासि । (पाठभेदः । मया भोगस्रोतसि त्वामप्रधानीकुर्वन्तं मां जानासि किं चित्रकूटे भोगस्थानसौभाग्यमपि वाङ्मनसाविषयं जानासि ।) तटस्थोद्दीपनविभावानप्याह पश्यन्तीति । मनोवाक्कायाः संयताः यैस्तान् स्ववशीकृतजनमनोवाक्कायानित्यर्थः । मनोवाक्कायसंयतेतिपाठे सन्नियमितकरणत्रयेत्यर्थः । विविधान् मलयानिलकोकिलालापभ्रमरझङ्कारपुष्पहासप्रभृतिभेदान् । भावान् विभावान् पश्यन्ती रमसे कच्चित् । यद्वा भावान् किन्नरमृगादीनां चेष्टा । "भावो लीला क्रिया चेष्टा भूत्यभिप्रायजन्तुषु ।" इति वैजयन्ती ॥ १८ ॥ न केवलमयं वनवासो भोगाय आमुष्मिकसाधकश्चेत्याह–इदमिति । वनवासं वनवासरूपम् । इदम् अमृतम् अमृतवद्भोग्यं वस्तु । मे प्रपितामहाः मातृपितृवंश्याः । परे पूर्वे राजर्षयः । प्रेत्य प्रारब्धशरीरवियोगं प्राप्य । भवार्थाय संसारविनाशायेत्यर्थः । 'तमसे दीपो मशकार्थो

घ्राणतर्पणं यथा तथा कं नरं न प्रहर्षयेदिति सम्बन्धः ॥ १४–१७ ॥ भावान् किन्नरादीनां चेष्टाः । मनोवाक्कायसंयता सम्यङ्नियमित करणत्रयेत्यर्थः ॥१८॥ इदमिति

धूमः' इत्यादिवन्निर्देशः । प्राहुः प्रोचुः । यद्वा इदमिति लिङ्गव्यत्यय आर्षः । इदम् इमम् । वनवासं वानप्रस्थोचितनियमसहितं वनवासम् । अमृतं प्राहुः मोक्षसाधनं प्राहुः । " अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च मोक्षे च धन्वन्तरिसुवर्णयोः ॥ " इति वैजयन्ती । प्रेत्यभावार्थाय देवादिदेहान्तरपरिग्रहरूपप्रयोजनाय च प्राहुः । रघुवंश्या राजर्षयः वानप्रस्थोचितं वनवासं स्वर्गसाधनम् अपवर्गसाधनं च प्राहुरित्युक्तं

शिलाः शैलस्य शोभन्ते विशालाः शतशोऽभितः । बहुला बहुलैर्वर्णैर्नीलपीतसितारुणैः ॥२०॥ निशि भान्त्यचलेन्द्रस्य हुताशनशिखा इव । ओषध्यः स्वप्रभालक्ष्या भ्राजमानाः सहस्रशः ॥ २१ ॥ केचित् क्षयनिभा देशाः केचिदुद्यानसन्निभाः । केचिदेकशिला भान्ति पर्वतस्यास्य भामिनि ॥२२॥ भित्त्वेव वसुधां भाति चित्रकूटः समुत्थितः । चित्रकूटस्य कूटोऽसौ दृश्यते सर्वतः शुभः ॥ २३ ॥ कुष्ठपुन्नागस्थगरभूर्जपत्रोत्तरच्छदान् । कामिनां स्वास्तरान् पश्य कुशेशयदलायुतान् ॥ २४ ॥

भवति ॥ १९ ॥ शिला इति । विशालाः विपुलाः । बहुलैः उत्वणैः नीलादिभिर्वर्णैरुपलक्षिताः । बहुलाः बहुविधाः । शैलस्य चित्रकूटस्य । शिलाः शतशः अभितः शोभन्ते ॥ २० ॥ निशीति । अचलेन्द्रस्य ओषध्यः महौषधयः । स्वप्रभालक्ष्याः प्रभालक्ष्यस्वस्वरूपाः अतएव भ्राजमानाः भासमानाः । निशि सहस्रशो भान्ति ॥ २१ ॥ केचिदिति । अस्य पर्वतस्य देशाः केचित् क्षयनिभाः गृहसदृशाः । "धिष्ण्यं धाम निकेतनं च सदनं वस्त्यं च वास्तु क्षयः " इति हलायुधः । बहुगुहावत्त्वादिति भावः । उद्यानसन्निभाः बहुलतावृक्षवत्त्वात् । एकशिलाः शिलाभेदरहिताः ॥ २२ ॥ २३ ॥ कुष्ठेति । कुष्ठं पारिभाव्यम् । " व्याधिः कुष्ठं पारिभाव्यं वाप्यं पाकलमुत्पलम् " इत्यमरः । पुन्नागपुष्पाणि स्थगराणि पुत्रकसंज्ञिकवृक्षविशेषपुष्पाणि ।

लिङ्गव्यत्यय आर्षः । हे राज्ञि ! परे राजर्षयः । इदं वनवासं वानप्रस्थोचितनियमसहितं वनवासम् । अमृतं प्राहुः मोक्षसाधनं प्राहुः । मे प्रपितामहास्तु प्रेत्य भवार्थाय प्रेत्यभवः पुनर्जन्म तस्य अर्थः प्रयोजनं प्रेत्यभवार्थः तस्मा एव प्राहुः देहं त्यक्त्वा देवादिदेहान्तरपरिग्रहरूपप्रयोजनाय च प्राहुः ॥१९॥२०॥ अचलेन्द्रस्य ओषधयः अचलेन्द्रसम्बन्ध्योषधयः सहस्रशः । स्वप्रभालक्ष्या इति पाठः । स्वकान्तिसम्पदा भ्राजमानाः निशि हुताशनशिखा इव भान्तीति सम्बन्धः ॥२१॥ क्षयनिभाः सदनसदृशा देशाः ॥२२॥२३॥ कुष्ठमुत्पलम् । पुन्नागानि पुन्नागपुष्पाणि स्थगरः पुत्रजीविसंज्ञको वृक्षविशेषः । भूर्जपत्रं भूर्जवृक्षत्वक् उत्तरच्छदा उपर्यास्तरणानि येषां

भूर्जपत्राणि भूर्जवृक्षत्वचः । एतानि उत्तरच्छदाः उपर्यास्तरणानि यथा तान् । कुशशयदलयुतान् पद्मदलव्याप्तान् स्वास्तरान्, शयनानीत्यर्थः ॥२४॥ मृदिता इति । मृदिताः कृतमर्दनाः, घ्राणादिभोगेन म्लाना इत्यर्थः । अपविद्धाः त्यक्ताः । फलानीत्यत्रापि मृदितान्यपविद्धानीति योज्यम् ॥२५॥ वस्वौकसारामिति । वस्वौकसारा पूर्वदिगवस्थिता शक्रपुरी । " वस्वौकसारा शक्रस्य पूर्वस्यां दिशि संस्थिता " इति श्रीविष्णुपुराणवचनात् । यद्वा वस्वौकसारा कुबेरपुरी । " पुरी वस्वौकसारा स्याद्विमानं पुष्पकोऽस्त्रियाम् " इति यादवः । नलिनीं मानससरसीम्, सौगन्धिकाख्यसरसीं वा । अत्येतीव

मृदिताश्चापविद्धाश्च दृश्यन्ते कमलस्रजः । कामिभिर्वनिते पश्य फलानि विविधानि च ॥ २५ ॥ वस्वौकसारां नलिनीमत्येतीवोत्तरान् कुरून् । पर्वतश्चित्रकूटोऽसौ बहुमूलफलोदकः ॥ २६ ॥ इमं तु कालं वनिते विजह्रिवां स्त्वया च सीते सह लक्ष्मणेन च । रतिं प्रपत्स्ये कुलधर्मवर्द्धनीं सतां पथि स्वैर्नियमैः परैः स्थितः ॥ २७ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

अथ शैलाद्विनिष्क्रम्य मैथिलीं कोसलेश्वरः । अदर्शयच्छुभजलां रम्यां मन्दाकिनीं नदीम् ॥ १ ॥
अब्रवीच्च वरारोहां चारुचन्द्रनिभाननाम् । विदेहराजस्य सुतां रामो राजीवलोचनः ॥ २ ॥

रमणीयतया अतिक्रामतीव ॥ २६ ॥ इममिति । हे वनिते सीते ! परैः श्रेष्ठैः नियमैः सतां राजर्षीणां पथि स्थितः सन् इमं कालं चतुर्दशसमासम्मितं कालं त्वया लक्ष्मणेन च सह इह चित्रकूटे विजह्रिवान् विहृतवान् । विपूर्वाद्धरतेर्लिटः क्वसुरादेशः । पश्चात्कुलधर्मवर्द्धनीं कुलधर्मः प्रजापालनं तद् वर्द्धनीम् । रतिं राज्यसुखं प्रपत्स्ये ॥२७॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीता० अयोध्याकाण्डव्याख्याने चतुर्नवतितमः सर्गः ॥९४॥ एवं वनगिरिप्रदर्शनेनोपलाल्य नदीप्रदर्शनेनापि लालयति—अथेत्यादिना ॥ १ ॥ अब्रवीदिति । वचने हेतुः तत्सौन्दर्यमित्याशयेनोक्तम्—वरारोहा

ते तथा ॥२४॥२५॥ वस्वौकसारा अलकापुरी पूर्वदिगवस्थितशक्रपुरी वा । नलिनीं मानससरसीम्, सौगन्धिकाख्यसरसीं वाऽत्येति रमणीयतयातिक्रामतीव ॥२६॥ एवं कालं चतुर्दशवर्षावधिकालं रतिं प्रीतिं कुलधर्मवर्धनीं सत्यप्रतिपालनरूपधर्मवर्धनीम् । सतां राजर्षीणां स्वैर्नियमैः सह स्थितस्सन् त्वया लक्ष्मणेन च सह विजह्रिवान् यदि तदा रतिं प्रपत्स्य इति सम्बन्धः ॥२७॥ इति श्रीमहेश्वरतीर्थ विरचि० श्रीरामायणतत्त्वदी० अयोध्याकाण्ड० चतुर्नवतितमः सर्गः ॥९४॥ १–२ ॥

मित्यादि । वरारोहाम् आरुह्यत इति आरोहो जघनम्, गुरुजघनामित्यर्थः। चारुचन्द्रनिभाननामित्यनेन रतिरमणनिदर्शितवनगिरिविलोकनकुतूहलविक सितवदनत्वमुक्तम् । राजीवलोचनः विस्मयोत्फुल्लनयन इत्यर्थः ॥ २ ॥ विचित्रेति । पुलिनस्य विचित्रत्वं नवोलपालंकृतत्वात् । सारसाः हंसविशेषाः । अत्र वस्तुना पृथुजघनकलनूपुरसुन्दरकरपदवदनवती भवतीव भातीत्यलङ्कारध्वनिः ॥ ३ ॥ नानेति । राजराजस्य कुबेरस्य । नलिनीं सौगन्धिकसर

विचित्रपुलिनां रम्यां हंससारससेविताम् । कमलैरुपसम्पन्नां पश्य मन्दाकिनीं नदीम् ॥३॥ नानाविधैस्तीररुहैर्वृतां पुष्पफलद्रुमैः । राजन्तीं राजराजस्य नलिनीमिव सर्वतः ॥ ४ ॥ मृगयूथनिपीतानि कलुषाम्भांसि साम्प्रतम् । तीर्थानि रमणीयानि रतिं सञ्जनयन्ति मे ॥ ५ ॥ जटाजिनधराः काले वल्कलोत्तरवाससः । ऋषयस्त्ववगाहन्ते नदीं मन्दाकिनीं प्रिये ॥ ६ ॥ आदित्यमुपतिष्ठन्ते नियमादूर्द्ध्वबाहवः । एते परे विशालाक्षि मुनयः संशितव्रताः ॥ ७ ॥ मारुतोद्धूतशिखरैः प्रनृत्त इव पर्वतः । पादपैः पत्रपुष्पाणि सृजद्भिरभितो नदीम् ॥ ८ ॥ क्वचिन्मणिनिकाशोदां क्वचित्पुलिनशालिनीम् । क्वचित्सिद्धजनाकीर्णां पश्य मन्दाकिनीं नदीम् ॥ ९ ॥ निर्धूतान् वायुना पश्य विततान् पुष्पसञ्चयान् । पोप्लूयमानानपरान् पश्य त्वं जलमध्यगान् ॥ १० ॥

सीम् ॥ ४ ॥ मृगयूथेति । मृगयूथनिपीतानि अतएव कलुषाणि, रमणीयानि कुङ्कुमरसाभानि अम्भांसि येषु तानि तीर्थानि अवताराः । रतिम् अवगाहनविषयां प्रीतिम् ॥ ५ ॥ जटेति । काले स्वनियमोचितकाले । अवगाहन्ते मज्जन्ति। प्रिये इत्यन्यत्र दृष्टिर्निवार्यते ॥ ६ ॥ आदित्यमिति । उपतिष्ठन्ते । "उपान्मन्त्रकरणे" इत्यात्मनेपदम् । नियमाद्धेतोः परे पूर्वोक्तमुनिभ्योऽन्ये । संशितव्रताः तीक्ष्णनियमाः ॥ ७॥ मारुतोद्धूतशिखरैः वायुकम्पितशाखैः। पुष्पाणि सृजद्भिः मुञ्चद्भिः पादपैः प्रनृत्त इव नृत्यङ्कर्त्तुमुद्युक्त इव । आदिकर्मणि क्तः । लोके हि नृत्तोद्युक्तः पुष्पाणि परिविकीर्य्य हस्तौ चालयति तद्वदित्युत्प्रेक्षा ॥८॥ क्वचिदिति । मणिनिकाशोदां मुक्तामणिनिभजलाम् । उदकस्योदभाव आर्षः । क्वचित्तीरे सिद्धजनेनावगाहनोद्युक्तेनावकीर्णाम् । एतेन श्वेतवसना पृथुजघना कामुकावृता नारी द्योत्यते ॥९॥ निर्धूतानिति । वायुना निर्धूतान् विततान् तीरे व्याप्तान् पुष्पसञ्चयान् पश्य जलमध्यगान्

नानाविधैरिति । राजराजस्य कुबेरस्य । नलिनीं सौगन्धिकाख्याम् ॥ ४ ॥ रतिम् अवगाहनविषयां प्रीतिम् ॥५–७॥ प्रनृत्त इव नृत्तं कर्तुमुपक्रान्त इव ॥ ८ ॥ ९ ॥ पोप्लूयमानान् अतिशयेन प्लवमानान् ॥ १०–१२ ॥

पोप्लूयमानान् भृशं पुनःपुनर्वा प्लवमानान् अपरान् पुष्पसञ्चयांश्च त्वं पश्य । [illegible]वलितवसना नारीव लक्ष्यत इति व्यङ्ग्यम् ॥ १० ॥ तानिति । वल्गुवचसः रत्यर्थाह्वानकालिकरम्यवचसः शुभाः गिरः विकूजन्तः रतिकालिकस्वरान् कुर्वन्तः । रथाङ्गाह्वयनाः चक्राह्वयाः द्विजाश्चक्रवाकाः तान् पुष्पसञ्चयान् । अधिरोहन्ति शयनमारोहन्तीत्यर्थः । अनेन चक्रवाकरतिर्दर्शिता ॥ ११ ॥ दर्शनमिति । हे शोभने निर्मत्सरे । चित्रकूटस्य

तांश्चातिवल्गुवचसो रथाङ्गाह्वयना द्विजाः । अधिरोहन्ति कल्याणि विकूजन्तः शुभा गिरः ॥ ११ ॥ दर्शनं चित्रकूटस्य मन्दाकिन्याश्च शोभने । अधिकं पुरवासाच्च मन्ये च तव दर्शनात् ॥ १२ ॥ विधूतकलुषैः सिद्धैस्तपोदमशमान्वितैः । नित्यविक्षोभितजलां विगाहस्व मया सह ॥ १३ ॥ सखीवच्च विगाहस्व सीते मन्दाकिनीं नदीम् । कमलान्यवमज्जन्ती पुष्कराणि च भामिनि ॥ १४ ॥ त्वं पौरजनवद्व्यालानयोध्यामिव पर्वतम् । मन्यस्व वनिते नित्यं सरयूवदिमां नदीम् ॥ १५ ॥ लक्ष्मणश्चापि धर्मात्मा मन्निदेशे व्यवस्थितः । त्वं चानुकूला वैदेहि प्रीतिं जनयथो मम ॥१६॥ उपस्पृशंस्त्रिषवणं मधुमूलफलाशनः । नायोध्यायै न राज्याय स्पृहयेऽद्य त्वया सह ॥१७॥

दर्शनं पुरवासाधिकं चित्रकूटवासः पुरवासादप्यधिकसुखावहः, एकान्तभोगस्थानत्वादिति भावः । मन्दाकिन्या दर्शनं तव दर्शनादप्यधिक सुखकरम्, उद्दीपनत्वादिति भावः ॥ १२ ॥ विधूतकलुषैरिति । तपोदमशमान्वितैः अतएव विधूतकलुषैः निष्पापैः सिद्धैः सिद्धसाधननिष्ठैः । नित्यविक्षोभितजलां सदा तत्स्नानेन तत्पादरेणुधन्यां मन्दाकिनीं मया सह विगाहस्व मामप्रधानीकृत्य जलक्रीडारसमनुभवेत्यर्थः । नित्यविक्षोभित जलामित्यनेन जलक्रीडोपकरणकुसुमभादिसामग्री दर्शिता ॥१३॥ सखीवदिति । सख्या यथा सलिलमवगाहसे तथा मया सह विगाहस्व । कमलानि रक्ताब्जानि । पुष्कराणि सिताम्भोजानि । अवमज्जन्ती अवमज्जयन्ती स्नानजघनावातजनिततरङ्गैरिति भावः । यद्वा तव वदनकान्तिनिर्जिततया लज्जया अवमज्जयन्तीवेत्युत्प्रेक्षा ॥१४॥ त्वमिति । त्वं व्यालान् वनचरजन्तून् पौरजनवत्पश्य, पौरजनप्रीतिं व्यालेषु कुर्वित्यर्थः । एवमुत्तरत्रापि । अतः पौरजनाद्यनवलोकनक्लेशो न कार्य्य इति भावः ॥१५॥ लक्ष्मण इति । सौभ्रात्रम् अनुकूलभार्य्यत्वं च सौख्यरसायनमिति भावः ॥१६॥ उपस्पृशन्निति ।

कमलानि रक्ताब्जानि । पुष्कराणि श्वेतपद्मानि । अवमज्जन्ती अवमज्जयन्ती ॥१४–१६ ॥ त्रिषवणमुपस्पृशन् त्रिकालस्नानं कुर्वन् । अयोध्यायै राज्याय चेति द्विती

हे वैदेहि ! त्वया सह त्रिषवणं त्रिसन्ध्यम्। उपस्पृशन् स्नानं कुर्वन्। मधुमूलफलाशनोऽहमयोध्यायै न स्पृहये राज्याय च न स्पृहये। "स्पृहे रीप्सितः" इति सम्प्रदानसंज्ञा ॥ १७ ॥ इमामिति। इमां मन्दाकिनीम्। मृगयूथशालिनीम्, मृगयूथलोलितामिति च पाठः। गजसिंहवानरैः, आश्रममहिम्ना शान्तवैरैरित्यर्थः। निपीततोयामिति पापहरत्वमुक्तम्। पुष्पधरैः वृक्षैः अनेनोद्दीपनत्वमुक्तम्। उपस्पृशन्नित्यनुषज्यते। यः अगत

इमां हि रम्यां मृगयूथशालिनीं निपीततोयां गजसिंहवानरैः। सुपुष्पितैः पुष्पधरैरलंकृतां न सोऽस्ति यः स्यादगतक्लमः सुखी॥ १८॥ इतीव रामो बहुसङ्गतं वचः प्रियासहायः सरितं प्रति ब्रुवन्। चचार रम्यं नयनाञ्जनप्रभं स चित्रकूटं रघुवंशवर्द्धनः ॥ १९॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे पञ्चनवतितमः सर्गः ९५॥

तां तथा दर्शयित्वा तु मैथिलीं गिरिनिम्नगाम्। निषसाद गिरिप्रस्थे सीतां मांसेन छन्दयन् ॥ १ ॥ इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना। एवमास्ते स धर्मात्मा सीतया सह राघवः ॥ २ ॥ तथा तत्रासतस्तस्य भरतस्योपयायिनः। सैन्यरेणुश्च शब्दश्च प्रादुरास्तां नभस्स्पृशौ ॥ ३ ॥

क्लमः सुखी न स्यात् स नास्ति सर्वोऽप्यत्र स्नात्वा गतक्लमो भवतीत्यर्थः ॥ १८ ॥ इतीति। प्रियासहायो रामः सरितं प्रति सरिद्विषये सङ्गतं प्रसक्तानुप्रसक्तं बहुवचो ब्रुवन् सन्। नयनाञ्जनप्रभं नयनयोग्याञ्जनकान्तिम्, तद्वन्नीलमित्यर्थः। चित्रकूटं चचार, चित्रकूटप्रान्ते चचारेत्यर्थः। एतेन पुनः पुरवासनिस्पृहत्वद्योतनाय रामस्य वनवासनिर्भरत्वमुक्तम् ॥ १९ ॥ इति श्रीगो० श्रीरा० पीता० अयोध्याकाण्डव्याख्याने पञ्चनवतितमः सर्गः ॥ ९५ ॥

एवं प्रासङ्गिकमुक्त्वा प्रकृतमनुसरति—तामित्यादिना। गिरिनिम्नगां गिरिनदीम्। मांसेन छन्दयन् वशीकुर्वन्। "वशाभिप्राययोश्छन्दः" इति वैजयन्ती ॥ १ ॥ वशीकरणप्रकारमाह—इदमित्यादिना। इदं मांसं मेध्यं शुद्धम्, निर्मलमिति यावत्। स्वादु रसवत्। निष्टप्तं प्रतप्तम्। इदंशब्देन स्वभुक्तशेषमिति गम्यते। एवमास्ते एवं ब्रुवन्नास्त इत्यर्थः॥२॥ तथेति। तथा उक्तरीत्या। तत्र गिरिप्रस्थे। तस्य आसतः तस्मिन्नासीने सति। सैन्यरेणुः शब्दः

यार्थे चतुर्थी॥१७॥ इमामिति। उपस्पृशन्नित्यनुषज्यते इमां नदीम् उपस्पृशन् स्नानं कुर्वन् यो अगतक्लमः सुखी न स्यात् स नास्तीति सम्बन्धः। पुष्पभरैः वृक्षैः॥१८॥ नयनाञ्जनप्रभं नयनयोग्यमञ्जनं नयनाञ्जनं तत्प्रभम् ॥ १९ ॥ इति श्रीमहेश्वर० अयो० पञ्चनवतितमः सर्गः ॥ ९५ ॥ तां नदीम्। छन्दयन् वशीकुर्वन् ॥ १ ॥ इदं ब्रुवन्निति शेषः ॥ २ ॥ तत्र गिरिप्रस्थे। तस्य आसतः तस्मिन् रामे आसीने सति। उपयायिनः समीपे आगच्छतः भरतस्य। सैन्यरेणुः सैन्यपादोत्थितरेणुः। शब्दः

सैन्यशब्दश्चोभौ नभस्स्पृशौ सन्तौ प्रादुरास्ताम् ॥ ३ ॥ एतस्मिन्निति । एतस्मिन्नन्तरे अस्मिन् शब्दश्रवणसमये । ततः तेन ॥ ४ ॥ स इति । सैन्यसमुद्भूतं सैन्योत्पादितम् ॥ ५ ॥ तानिति । दीप्ततेजसमित्यनेन वक्ष्यमाणावेक्षणक्षमत्वमुच्यते ॥ ६ ॥ हन्तेति व्यग्रतायामव्ययं वाक्यारम्भे वा । "वाक्यारम्भेऽनुकम्पायां हन्त हर्षविषादयोः।" इति वैजयन्ती । पश्य वृक्षमारुह्य प्रेक्षस्व । सुमित्रा सुप्रजास्त्वया त्वया सुमित्रा सत्पुत्रेति सान्त्वोक्तिः ।

एतस्मिन्नन्तरे त्रस्ताः शब्देन महता ततः । अर्दिता यूथपा मत्ताः सयूथा दुद्रुवुर्दिशः ॥ ४ ॥ स तं सैन्यसमुद्भूतं शब्दं शुश्राव राघवः । तांश्च विप्रद्रुतान् सर्वान् यूथपानन्ववैक्षत ॥ ५ ॥ तांश्च विद्रवतो दृष्ट्वा तं च श्रुत्वा च निस्वनम् । उवाच रामः सौमित्रिं लक्ष्मणं दीप्ततेजसम् ॥ ६ ॥ हन्त लक्ष्मण पश्येह सुमित्रा सुप्रजास्त्वया । भीमस्तनितगम्भीरस्तुमुलः श्रूयते स्वनः ॥ ७ ॥ गजयूथानि वाऽरण्ये महिषा वा महावने । वित्रासिता मृगाः सिंहैः सहसा प्रद्रुता दिशः ॥ ८ ॥ राजा वा राजमात्रो वा मृगयामटते वने । अन्यद्वा श्वापदं किञ्चित् सौमित्रे ज्ञातुमर्हसि ॥ ९ ॥ सुदुश्चरो गिरिश्चायं पक्षिणामपि लक्ष्मण । सर्वमेतद्यथातत्त्वमचिराज्ज्ञातुमर्हसि ॥ १० ॥

भीमस्तनितगम्भीरः भयङ्करमेघनिर्घोषवद्गम्भीरः । महीस्तनितगम्भीर इतिपाठे—भूकम्पजनितशब्दवत् गम्भीर इत्यर्थः ॥ ७ ॥ गजयूथानीति । मृगा इत्यत्रापि वाशब्दः सम्बन्धनीयः ॥ ८ ॥ राजेति । राजमात्रः राजतुल्यः । कश्चिन्मृगयामुद्दिश्य अटते । आत्मनेपदमार्षम् । श्वापदं व्याघ्रादिहिंस्रपशुः । नपुंसकत्वमार्षम् । " व्याघ्रादयो वनचराः पशवः श्वापदा मताः " इति हलायुधः । अन्यो वा यःकश्चित् श्वापदः अटत इति सम्बन्धः ॥ ९ ॥ सुदुश्चर इति । अयं गिरिः पक्षिणामपि सुदुश्चरो वर्त्तते, पक्षिसञ्चारोपीदानीं नास्तीत्यर्थः । सर्वमेतत्पूर्वोक्तकारणेष्वन्यतमं ज्ञातुमर्हसीत्यर्थः ॥ १० ॥

सैन्यकृतशब्दः ॥ ३–८ ॥ मृगयां मृगयामुद्दिश्य । श्वापदं व्याघ्रादिहिंस्रपशुः ॥ ९ ॥ १० ॥

वि०—भीमस्तनितगम्भीरं भीमं भयङ्करं यत् स्तनितं मेघशब्दः तद्वद्गम्भीरं यथा भवति तथा योऽयं स्वनः श्रूयते अस्य कारणं पश्येति योजना ॥ ७ ॥ सिंहैर्वित्रासितानि गजयूथानि तैश्च वित्रासिताः महिषा वा तैर्महिषैर्वित्रासिता मृगाश्च सहसा प्रद्रुताः । तन्निमित्तं पश्येति पूर्वेणान्वयः । वाशब्दौ चार्थे ॥ ८ ॥

स इति । पुष्पितमित्यनेन विरलपत्रतथाऽनावारकत्वमुक्तम् । सर्वा दिशः प्रेक्षमाणः सामान्येन प्रेक्षमाणः सन् पूर्वां दिशमुदैक्षत सविशेषमलोकयत्
॥ ११ ॥ तत्र हेतुदर्शनमाह—उदङ्मुख इत्यादिना । यत्तैः सन्नद्धैः ॥ १२ ॥ तामिति । रथध्वजविभूषितां रथबद्धध्वजैरलंकृताम् ॥ १३ ॥ अग्निमिति ।
आग्निं संशमयतु, अन्यथा धूमानुसारेणागच्छेत्सेनेति भावः । सज्यं ज्यया मौर्व्या सहितं कुरुष्व, शरांश्च कवचं तथा शरांश्च कवचं च, गृहाणेति शेषः ।

स लक्ष्मणः संत्वरितः सालमारुह्य पुष्पितम् । प्रेक्षमाणो दिशः सर्वाः पूर्वां दिशमुदैक्षत ॥ ११ ॥ उदङ्मुखः प्रेक्षमाणो ददर्श महतीं चमूम् । रथाश्वगजसम्बाधां यत्तैर्युक्तां पदातिभिः ॥ १२ ॥ तामश्वगजसम्पूर्णां रथध्वजविभूषिताम् । शशंस सेनां रामाय वचनं चेदमब्रवीत् ॥ १३ ॥ अग्निं संशमयत्वार्यः सीता च भजतां गुहाम् । सज्यं कुरुष्व चापं च शरांश्च कवचं तथा ॥ १४ ॥ तं रामः पुरुषव्याघ्रो लक्ष्मणं प्रत्युवाच ह । अङ्गावेक्षस्व सौमित्रे कस्येमां मन्यसे चमूम् ॥ १५ ॥ एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् । दिधक्षन्निव तां सेनां रुषितः पावको यथा ॥ १६ ॥ सम्पन्नं राज्यमिच्छंस्तु व्यक्तं प्राप्याभिषेचनम् । आवां हन्तुं समभ्येति कैकेय्या भरतः सुतः ॥ १७ ॥
एष वै सुमहान् श्रीमान् विटपी सम्प्रकाशते । विराजत्युद्गतस्कन्धः कोविदारध्वजो रथे ॥ १८ ॥

यद्वा कुरुष्वेत्यनुषङ्गः । करोतेः क्रियासामान्यवाचित्वात् औचित्येन शरान् गृहाण कवचं धारयेत्यर्थः ॥ १४ ॥ तमिति । तम् एवं समीक्ष्य वदन्तम् । पुरुष
व्याघ्रः समीक्ष्यकारीति भावः । अङ्गेति सम्बोधने । अवेक्षस्व ध्वजचिह्नेन सम्यगालोकय । इमां त्वया दृष्टां चमूं कस्येयमिति मन्यसे, वदेति शेषः ॥ १५ ॥
एवमिति । रुषितः कुपितः । कर्त्तरि क्तः । पावकोयथा वह्नितुल्यः ॥ १६ ॥ सम्पन्नमिति । कैकेय्याः सुतः तत्सुतत्वेन क्रूरप्रकृतिः भरतः अभि
षेचनं प्राप्य कैकेयीवरानुरोधेनाभिषिक्तः तावताप्यतृप्तः । सम्पन्नं समृद्धम्, निष्कण्टकमिति यावत् । राज्यमिच्छन् सन् तदंशभागिनौ आवां हन्तुं
समभ्येति ॥ १७ ॥ भरतागमने किं चिह्नमित्यत्राह—एष इति । विटपी ध्वजचिह्नीभूतो वृक्षः । प्रकाशते स्पष्टं दृश्यते । तमेव विशिनष्टि विराजतीति ।
विशदयत्युत्तरार्धेन । उद्गतस्कन्धः ध्वजस्योद्गतस्कन्धत्वं लिखितवृक्षद्वारा ॥ १८ ॥

सर्वा दिशः प्रेक्षमाणः सर्वदिक्प्रेक्षणाद्धेतोः । हेत्वर्थे शानच् । पूर्वां दिशमुदैक्षतेति सम्बन्धः ॥ ११ ॥ यत्तैः सन्नद्धैः पदातिभिर्युक्ताम् ॥ १२ ॥ १३ ॥ शरान्
गृहाणेति शेषः । कवचं धारयेति शेषः ॥ १४–१६ ॥ सम्पन्नं सर्वसमृद्धियुक्तम् ॥ १७ ॥ विटपी भरतध्वजस्य लक्षणभूतः ध्वजे लिखितकोविदारः । एतदेव

उद्गतस्कन्धः उन्नतस्कन्धः। उन्नतस्कन्धत्वं लिखितवृक्षद्वारा। कोविदारध्वजः कोविदारवृक्षयुक्तो ध्वजः ॥ १८ ॥ भजन्तीति । एते अश्वारोहाः अश्वानारुह्य भजन्ति, इमं देशं प्राप्नुवन्तीत्यर्थः । सादिनः गजारोहाः ॥ १९ ॥ गृहीतधनुषाविति । दुर्गे स्थित्वा युद्धार्थं गिरेः श्रयणम् ॥ २० ॥ अपीति ।

[ असौ हि सुमहास्कन्धो विटपी च महाद्रुमः । विराजते महासैन्ये कोविदारध्वजो रथे ॥ ] भजन्त्येते यथा काममश्वानारुह्य शीघ्रगान् । एते भ्राजन्ति संहृष्टा गजानारुह्य सादिनः ॥ १९ ॥ गृहीतधनुषौ चावां गिरिं वीर श्रयावहै । अथवेहैव तिष्ठावः सन्नद्धावुद्यतायुधौ ॥ २० ॥ अपि नौ वशमागच्छेत् कोविदारध्वजो रणे ॥ २१ ॥ अपि द्रक्ष्यामि भरतं यत्कृते व्यसनं महत् । त्वया राघव सम्प्राप्तं सीतया च मया तथा ॥२२॥ यन्निमित्तं भवान् राज्याच्च्युतो राघव शाश्वतात् । सम्प्राप्तोऽयमरिर्वीर भरतो वध्य एव मे ॥ २३ ॥ भरतस्य वधे दोषं नाहं पश्यामि राघव । पूर्वापकारिणां त्यागे न ह्यधर्मो विधीयते ॥ २४ ॥ पूर्वापकारी भरतस्त्यक्तधर्मश्च राघव । एतस्मिन्निहते कृत्स्नामनुशाधि वसुन्धराम् ॥२५॥ अद्य पुत्रं हतं सङ्ख्ये कैकेयी राज्यकामुका । मया पश्येत् सुदुःखार्त्ता हस्तिभग्नमिव द्रुमम् ॥२६॥ कैकेयीं च वधिष्यामि सानुबन्धां सबान्धवाम् । कलुषेणाद्य महता मेदिनी परिमुच्यताम् ॥२७॥

अपिः कामप्रवेदने । नौ आवयोः ॥ २१ ॥ अपिद्रक्ष्यामीत्यारभ्य श्लोकः ॥ २२ ॥ यन्निमित्तमिति । यन्निमित्तं यस्माद्भरताद्धेतोः ॥२३॥ भरतस्येति । त्यागे वधे ॥२४॥ पूर्वापकारीति । अपकारश्च न प्रामादिक इत्याह त्यक्तधर्म इति ॥ २५ ॥ अद्येति । सङ्ख्ये युद्धे । "मृधमास्कन्दनं सङ्ख्यम्" इत्यमरः ॥२६॥ कैकेयीमिति । वधिष्यामि । हन्तेर्वधादेश आर्षः। सानुबन्धां मन्थराद्यनुबन्धसहिताम् । कलुषेण पापेन। "कलुषं वृजिनैनोवमंहोदुरितदुष्कृतम्"

सादिनः अश्वारोहाः अश्वानारुह्य भजन्ति इमं देशं प्राप्नुवन्तीत्यर्थः ॥ १९-२२ ॥ यस्मात् भरताद्धेतोः ॥ २३-२६ ॥ सानुबन्धां मन्थराद्यनुबन्धयुक्ताम् । कलुषेण पापेन, कैकेयीरूपकलुषेणेत्यर्थः ॥ २७ ॥

स०-सानुबन्धां कुब्जादिपरिवारसहिताम् । वधेः प्रकृत्यन्तरस्येदं रूपम् ॥ २७ ॥

इत्यमरः ॥ २७ ॥ अद्येति । सयत स्ताम्भितम् । असत्कारं तिरस्कारम् । मोक्ष्यामि तत्कार्य्यं करिष्यामीत्यर्थः, शरव्याजेन मोक्ष्यामीतिवार्थः । कक्षेषु
शुष्कगुल्मेषु । मानदेत्यनेन मानं माच्छेत्सीरित्युच्यते॥२८॥ अद्यैतदिति । शत्रुशरीराणि भिन्दन् एतत् काननं शोणितोक्षितं करिष्य इत्यन्वयः॥२९॥३०

अद्येमं संयतं क्रोधमसत्कारं च मानद । मोक्ष्यामि शत्रुसैन्येषु कक्षेष्विव हुताशनम् ॥ २८ ॥ अद्यैतच्चित्रकूटस्य
काननं निशितैः शरैः । भिन्दन् शत्रुशरीराणि करिष्ये शोणितोक्षितम् ॥२९॥ शरैर्निर्भिन्नहृदयान् कुञ्जरांस्तुरगां
स्तथा । श्वापदाः परिकर्षन्तु नरांश्च निहतान् मया ॥३०॥ शराणां धनुषश्चाहमनृणोऽस्मि महामृधे । ससैन्यं भरतं
हत्वा भविष्यामि न संशयः ॥ ३१ ॥ इत्यार्षे श्रीरामायणे० श्रीमदयोध्याकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥
सुसंरब्धं तु सौमित्रिं लक्ष्मणं क्रोधमूर्च्छितम् । रामस्तु परिसान्त्व्याथ वचनं चेदमब्रवीत् ॥ १ ॥ किमत्र धनुषा
कार्यमसिना वा सचर्मणा । महेष्वासे महाप्राज्ञे भरते स्वयमागते ॥ २ ॥

स्वयं युद्धे क्वाप्यपराजितः शत्रुकलेवराहारदानेन परिहृतऋणः, शराणामिति । अहं यतः पूर्वं तत्रतत्र युद्धे शराणां धनुषश्च विषये अनृणः ऋणरहितः अनृणो भविष्यामी शत्रुजयैकशील इत्यर्थः। अतः अस्मीत्यहमर्थेऽव्ययम् । अस्मि अहं महामृधे भाविन्यपि युद्धे ससैन्यं भरतं हत्वा अनृण इत्यनुकर्षः, तदा अभव त्यन्वयः। वनवासात्पूर्वमपि शम्बरसुतजयादिप्रतिपादनात् तत्र लक्ष्मणस्यापि सहभावावश्यंभावाद्युद्धसम्भवः । अस्मीति क्रियापदं वा । मित्यर्थः । यतः अनृणोऽभवमित्यन्वयः। त्वयापि मद्वीर्यं ज्ञातपूर्वमित्यर्थः ॥३१॥ इति श्रीगो० श्रीरा० पीता० अयो० षण्णवतितमः सर्गः ॥९६॥
अथ कुपितपरिसान्त्वनं सप्तनवतितमे—सुसंरब्धमित्यादि । पूर्वं सुसंरब्धं सुतरां प्रीतम् । " संरम्भः प्रणयेपि च " इत्यमरः । अद्य तु तद्वैलक्षण्येन क्रोध मूर्च्छितम् । यद्वा क्रोधमूर्च्छितत्वादेव सुसंरब्धं क्रोधकार्ययुद्धोन्मुख्ययुक्तम् । तत्र हेतुः सपत्नीपुत्रत्वमित्याह सौमित्रिमिति । यद्वा सुमित्रापुत्रत्व स्मारणपूर्वकमुक्तवानिति द्योत्यते । रामस्तु इदं वचनं रामादन्यैर्वक्तुमशक्यमिति भावः॥१॥ किमिति । अत्र इदानीं परिदृष्टे महेष्वासे उचितविषयशर सन्धातरि । तत्र हेतुः महाप्राज्ञ इति । स्वयं पुरुषप्रेरणंविना आगते भरते विषये धनुरादिभिः किं कार्यम् ? न किमपीत्यर्थः। महाप्राज्ञो भरतोपि यदि धनु
संयतं स्तम्भितम् ॥ २८-३० ॥ शराणामिति । शरादीनाममित्रमथनार्थत्वादितिभावः ॥३१॥ इति श्रीमहेश्वरतीर्थ० अयोध्या० षण्णवतितमः सर्गः ॥९६॥ सुसंरब्धं

गृहीत्वा स्वयमागतः तदा किमस्माकं युद्धोद्योगेनेति भावः ॥ २ ॥ तत्र युक्तिमाह—पितुरिति । सापवादेन पित्रा भरताय दत्तं राज्यं रामस्तं हत्वा गृहीतवानित्येवंरूपेणापवादेन युक्तम् ॥ ३ ॥ युक्त्यन्तरमाह—यदिति । बान्धवादीनां क्षये नाशे लब्धं यद्धनं तन्न गृह्णीयाम्, नेच्छेयमित्यर्थः । विषकृतान्

पितुः सत्यं प्रतिश्रुत्य हत्वा भरतमागतम् । किं करिष्यामि राज्येन सापवादेन लक्ष्मण ॥ ३ ॥ यद्द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत् । नाहं तत् प्रतिगृह्णीयां भक्षान् विषकृतानिव ॥४॥ धर्ममर्थं च कामं च पृथिवीं चापि लक्ष्मण । इच्छामि भवतामर्थे एतत् प्रतिशृणोमि ते ॥ ५ ॥ भ्रातॄणां सङ्ग्रहार्थं च सुखार्थं चापि लक्ष्मण । राज्यमप्यहमिच्छामि सत्येनायुधमालभे ॥ ६ ॥ नेयं मम मही सौम्य दुर्लभा सागराम्बरा । नहीच्छेयमधर्मेण शक्रत्वमपि लक्ष्मण ॥७॥ यद्विना भरतं त्वां च शत्रुघ्नं चापि मानद । भवेन्मम सुखं किञ्चिद्भस्म तत् कुरुतां शिखी ॥८॥ मन्येऽहमागतोऽयोध्यां भरतो भ्रातृवत्सलः । मम प्राणात् प्रियतरः कुलधर्ममनुस्मरन् ॥९॥ श्रुत्वा प्रव्राजितं मां हि जटावल्कलधारिणम् । जानक्या सहितं वीर त्वया च पुरुषर्षभ ॥ १० ॥

विषमिश्रद्रव्यकृतान् । भक्षान् अपूपादीनिव ॥ ४ ॥ धर्ममिति । अर्थं पृथिवीभिन्नं रत्नादिकम् । भवतां भ्रातॄणामर्थे भवन्निमित्तमित्यर्थः । एतत् उक्तरूपं प्रतिशृणोमि नातिवर्त्ते इत्यर्थः ॥ ५ ॥ भ्रातॄणामिति । सङ्ग्रहार्थं धनसञ्चयार्थम् । सुखार्थं तत्सुखार्थम्, तत्तदभिमतवस्तुप्रदानेन तत्प्रीत्यर्थमित्यर्थः । अपिना तद्वृद्धिः समुच्चीयते। राज्यमपि बहुच्छिद्रत्वेन अपरिग्राह्यतया ममानिष्टमपि। आलभे स्पृशामि,स्पृष्ट्वा शप इत्यर्थः। सत्येनेति मदुक्तं यथा सत्यं भवति तथा आयुधं स्पृशामीत्यर्थः ॥ ६ ॥ नेति । नेच्छेयम् इमामिति शेषः ॥ ७ ॥ यदिति । शिखी अग्निः । भरतादिसुखाननुगुणं यत् सुखं तदग्निर्भस्मीकुरुतां न तन्मम ग्राह्यमित्यर्थः ॥ ८ ॥ एवं लक्ष्मणचित्तानुसारेण परिहृत्य वस्तुतत्त्वमाह—मन्य इत्यादिश्लोकत्रयमेकान्वयम् । द्रष्टुमभ्यागतो ह्येष भरतो नान्यथागत इति मन्ये इत्यन्वयः । अयोध्यामागतः, मातुलगृहादिति शेषः । भ्रातृवत्सलः भ्रातृषु वत्सलः स्नेही । कुलधर्मं ज्येष्ठस्य राज्यपरिपालन



रणोद्युक्तम् ॥ १-४ ॥ एतत्प्रतिशृणोमि एतदुक्तार्थजातमुद्दिश्य प्रतिज्ञां करोमीत्यर्थः ॥ ५ ॥ उक्तार्थमेव शपथकरणेन द्रढयति—भ्रातॄणामिति । सङ्ग्रहार्थं सम्यक्ग्रहणार्थं तत्तदभिमतवस्तुप्रदानेन समुद्धरणार्थम् अत एव तेषां सुखार्थं चेति यावत् ॥ ६-८ ॥ अयोध्यामागतः मातुलगृहादिति शेषः ॥ ९-१२ ॥

रूपम् । स्नेहेन मद्विषयप्रीत्या । आक्रान्तहृदयः तत्परवश इत्यर्थः । शोकेन मद्विवासजनितदुःखेन । आकुलितेन्द्रियः व्याकुलहृदयः। अन्यथा मद्विरोधि तया नागतः ॥ ९-११ ॥ अम्बामिति । रुष्य संरुष्य ॥१२॥ प्राप्तकालमिति । एषः भरतः अस्मान् द्रष्टुमिच्छतीति यत् एतत् प्राप्तकालं कालोचित मित्यर्थः ॥ १३ ॥ विप्रियमिति । ते तुभ्यं भरतेन कदानु कदाचित् विप्रियं कृतपूर्वं किम् ईदृशं भयं वा त्वदुक्तसदृशं भयजनकवाक्यं वा कृतपूर्वं

स्नेहेनाक्रान्तहृदयः शोकेनाकुलितेन्द्रियः। द्रष्टुमभ्यागतो ह्येष भरतो नान्यथा गतः ॥११॥ अम्बां च कैकयीं रुष्य परुषं चाप्रियं वदन् । प्रसाद्य पितरं श्रीमान् राज्यं मे दातुमागतः ॥ १२ ॥ प्राप्तकालं यदेषोऽस्मान् भरतो द्रष्टु मिच्छति । अस्मासु मनसाप्येष नाप्रियं किञ्चिदाचरेत् ॥१३॥ विप्रियं कृतपूर्वं ते भरतेन कदा नु किम् । ईदृशं वा भयं तेऽद्य भरतं योऽत्र शङ्कसे ॥ १४ ॥ नहि ते निष्ठुरं वाच्यो भरतो नाप्रियं वचः । अहं ह्यप्रियमुक्तः स्यां भर- तस्याप्रिये कृते ॥ १५ ॥ कथं नु पुत्राः पितरं हन्युः कस्याञ्चिदापदि । भ्राता वा भ्रातरं हन्यात् सौमित्रे प्राण मात्मनः ॥१६॥ यदि राज्यस्य हेतोस्त्वमिमां वाचं प्रभाषसे । वक्ष्यामि भरतं दृष्ट्वा राज्यमस्मै प्रदीयताम् ॥१७॥

किम् उक्तपूर्वं किम् ? यस्त्वमद्य अत्रार्थे अत्र स्थाने वा भरतं शङ्कस इति योजना ॥ १४ ॥ न हीति । त इति "कृत्यानां कर्तरि वा " इति षष्ठी । ते त्वया भरतः निष्ठुरम् अप्रियं च वचः न वाच्यः । भरतस्य अप्रिये अप्रियवचने कृते उक्ते सति अहं हि अहमेवाप्रियमुक्तः स्यामिति सम्बन्धः । स्वाश्रितविषये कृतापचारः स्वस्मिन्नेव कृत इति भगवदभिप्रायोऽनेन गम्यते ॥ १५ ॥ पूर्वं दशरथो वध्यतामित्युक्तम्, इदानीं भरतो वध्यत इति । इत उपरि तूष्णीमवस्थाने कार्यहानिर्भविष्यतीति भयात् तां रौद्रीं बुद्धिं नियम्य निवर्तयति–कथं न्वित्यादिना । प्राणं प्राणभूतम् ॥ १६ ॥ यदीति यदि राज्यस्य हेतोः त्वम् इमां भरतहिंसारूपां वाचं प्रभाषसे तर्हि वक्ष्यामि भरतं दृष्ट्वा राज्यमस्मै प्रदीयताम् । प्रदीयतामित्यनन्तरमिति

एष भरतः अस्मान् द्रष्टुमिच्छतीति यत् एतत्प्राप्तकालं कालोचितमित्यर्थः ॥१३॥ तेन भरतेन कदानु कदाचित् विप्रियं कृतपूर्वं किं ते ईदृशं भयं वा त्वदुक्तसदृशं भयजनकवाक्यं वा कृतपूर्वम् उक्तपूर्वं किम् ? यस्त्वमद्य अत्रार्थे अत्र स्थाने वा अत्र भरतं शङ्कस इति सम्बन्धः ॥ १४ ॥ निष्ठुरं परुषं अतएवाप्रियं यथा तथा न वाच्यः । भरतस्याप्रिये अप्रियवचने कृते उक्ते सति अहं हि अहमेव अप्रियमुक्तः स्यामिति सम्बन्धः ॥ १५ ॥ प्राणं प्राणभूतम् ॥ १६ ॥ प्रदीयतामिति वक्ष्यामीति

करणं द्रष्टव्यम् ॥ १७ ॥ उच्यमान इति । भरतः अस्मै राज्यं प्रयच्छेति मया उच्यमानोऽपि अद्वयमुक्तोऽपि तत्त्वतः बाढमिति वक्ष्यत्येव तथा दास्यामीति वक्ष्यत्येवेत्यर्थः । एवकारेण तस्य पुनर्न्निवृत्त्यभाव उच्यते ॥१८॥ तथेति । तस्य रामस्य हिते रतः न तु स्वार्थपरः अतएव मङ्गलाशासन परत्वात् अस्थाने भयशङ्कया तथोक्तवानिति गम्यते । गात्राणि अवयवान् ' प्रविवेशेव लज्जातिशयेनात्यन्तसङ्कुचितगात्रोऽभूदित्यर्थः ॥ १९ ॥ तद्वाक्य



उच्यमानोऽपि भरतो मया लक्ष्मण तत्त्वतः । राज्यमस्मै प्रयच्छेति बाढमित्येव वक्ष्यति ॥ १८ ॥ तथोक्तो धर्मशीलेन भ्रात्रा तस्य हिते रतः । लक्ष्मणः प्रविवेशेव स्वानि गात्राणि लज्जया ॥ १९ ॥ तद्वाक्यं लक्ष्मणः श्रुत्वा व्रीडितः प्रत्युवाच ह । त्वां मन्ये द्रष्टुमायातः पिता दशरथः स्वयम् ॥२०॥ व्रीडितं लक्ष्मणं दृष्ट्वा राघवः प्रत्युवाच ह । एष मन्ये महाबाहुरिहास्मान् द्रष्टुमागतः ॥ २१ ॥ अथवा नौ ध्रुवं मन्ये मन्यमानः सुखोचितौ । वनवासमनुध्याय गृहाय प्रतिनेष्यति ॥२२॥ इमां वाप्येष वैदेहीमत्यन्तसुखसेविनीम् । पिता मे राघवः श्रीमान् वनादादाय यास्यति ॥ २३ ॥ एतौ तौ सम्प्रकाशेते गोत्रवन्तौ मनोरमौ । वायुवेगसमौ वीर जवनौ तुरगोत्तमौ ॥ २४ ॥ स एष सुमहाकायः कम्पते वाहिनीमुखे । नागः शत्रुञ्जयो नाम वृद्धस्तातस्य धीमतः ॥ २५ ॥

मिति । व्रीडया प्रसङ्गान्तरं प्रस्तौति त्वामिति । लोके स्वोक्तिभङ्गेन व्रीडितः पुरुषः प्रस्तावान्तरं हि वदति, आयात इति मन्य इत्यन्वयः ॥ २० ॥ भावज्ञो रामोपि औचित्येन लक्ष्मणकृतप्रस्तावं व्रीडाशमनाय प्रपञ्चयामासेत्याह–व्रीडितमिति । तदेवोच्यते एष इत्यादिना ॥२१॥ नाविति द्विवचनं प्राधान्यात् । मन्यमानः स्मरन् । वनवासं वनवासक्लेशम् । अनुध्याय अनुचिन्त्य ॥२२॥ इमामिति । अत्यन्तेत्यनेन तन्मात्रनयने हेतुरुक्तः ॥ २३ ॥ गोत्रवन्तौ प्रशस्तनामानौ । यद्वा प्रशस्तकुलप्रसूतौ "गोत्रं नाम्नि कुलेपि च" इति वैजयन्ती । वायुवेगसमौ वेगेन वायुसमावित्यर्थः। तुरगोत्तमौ राजौपवाह्यौ ॥२४॥ स एष इति । कम्पते "कपि चलने" इति धातुः । मत्तगजस्वभावोऽयम् । वृद्धः उन्नतः । धीमतः गजपरिपालनज्ञस्य तातस्य । नागः शत्रुञ्जयः नतु मया

सम्बन्धः ॥ १७ ॥ १८ ॥ गात्राणि अवयवान् प्रविवेश लज्जातिशयादत्यन्तसङ्कुचितोऽभूदित्यर्थः ॥ १९ ॥ व्रीडातिशयेन प्रसङ्गान्तरं प्रस्तौति त्वां मन्य इति ॥ २० ॥ भावज्ञो रामोप्यौचित्येन लक्ष्मणकृतप्रस्तावमेव प्रपञ्चयति–एष इत्यादिना ॥ २१–२३ ॥ गोत्रवन्तौ प्रशस्तनामानौ प्रशस्तकुलप्रसूतौ वा ॥२४॥ वृद्धः

सुयज्ञाय दत्तो मातुलाल्लब्धशत्रुञ्जय इत्यर्थः ॥ २५ ॥ लोकसत्कृतं लोकोत्तरमित्यर्थः । इह पितरि विषये संशयो भवतीह मे इति राघवः प्रत्युवाचेति पूर्वेणान्वयः ॥ २६ ॥ वृक्षाग्रादिति । मद्वचः भरतविषये शान्तो भवेति मत्सूचितं वचः । प्रथममर्धमुत्तरार्धेन योजनीयम् ॥ २७॥ अवतीर्येति । समितिं परसैन्यं जयतीति समितिञ्जयः । "संज्ञायां भृतॄवृजिधारिसहितपिदमः" इत्यत्र योगविभागेन खच् मुमागमश्च । सन्नद्ध इति यावत् । पार्श्वतः भ्रात

न तु पश्यामि तच्छत्त्रं पाण्डरं लोकसत्कृतम् । पितुर्दिव्यं महाबाहो संशयो भवतीह मे ॥ २६ ॥ वृक्षाग्रादवरोह त्वं कुरु लक्ष्मण मद्वचः । इतीव रामो धर्मात्मा सौमित्रिं तमुवाच ह ॥ २७ ॥ अवतीर्य्य तु सालाग्रात्तस्मात्स समितिञ्जयः । लक्ष्मणः प्राञ्जलिर्भूत्वा तस्थौ रामस्य पार्श्वतः ॥ २८ ॥ भरतेनापि सन्दिष्टा सम्मर्दो न भवेदिति । समन्तात्तस्य शैलस्य सेना वासमकल्पयत् ॥ २९ ॥ अध्यर्द्धमिक्ष्वाकुचमूर्योजनं पर्वतस्य सा । पार्श्वे न्यविश दावृत्य गजवाजिरथाकुला ॥ ३० ॥ सा चित्रकूटे भरतेन सेना धर्मं पुरस्कृत्य विधूय दर्प्पम् । प्रसादनार्थं रघुनन्दनस्य विराजते नीतिमता प्रणीता ॥ ३१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

र्यस्थाने भयशङ्कयेति भावः ॥२८॥ भरतेनेति । सम्मर्दः रामाश्रमस्य पीडा न भवेदिति भरतेन सन्दिष्टा आज्ञप्ता । सेना तस्य शैलस्य समन्तात् नतु तदाश्रमसमीपे ॥ २९ ॥ अध्यर्द्धमिति । अधिकमर्धं यस्मिन् तत् अध्यर्धं योजनम्, सार्धयोजनमित्यर्थः । पर्वतस्य पार्श्वे आवृत्य न्यविशत् मण्डलाकारेण स्थिता ॥ ३० ॥ सेति । चित्रकूटे चित्रकूटसमीपे । नीतिमता सेनयोपरोधे रामस्य प्रसादो न स्यादिति नीतिज्ञेन भरतेन । धर्मं पुरस्कृत्य विनीतवेषेण राजाभिगन्तव्य इतिधर्ममनुसृत्य । दर्पं विधूय स्थितेन रघुनन्दनस्य प्रसादनार्थं प्रणीता आनीता सा सेना विराजते भाति स्म ॥ ३१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्तनवतितमः सर्गः ॥ ९७ ॥

प्रवृद्धः । तातस्य शत्रुञ्जयो नाग इत्यनेन सुयज्ञाय रामेण दत्तादन्य इत्यर्थः ॥२५–२८॥ सन्दिष्टा आज्ञप्ता ॥ २९ ॥ ३० ॥ सेति । धर्मं पुरस्कृत्य दर्पं विधूय स्थितेनेति शेषः । प्रणीता आनीता ॥ ३१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां सप्तनवतितमः सर्गः ॥ ९७ ॥

अथ भरतस्य रामप्राप्तिरष्टनवतितमे सर्गे—निवेश्येत्यादिना । गुरुवर्तकं गुरुवचनानुवर्तकम् ॥ १।२ ॥ क्षिप्रमिति । लुब्धैः व्याधैः ॥ ३ ॥ ४ ॥ अमात्यैरिति । अमात्यैः सह पौरैः सह । गुरुभिः द्विजातिभिश्च परिवृतः पद्भ्यां सर्वं वनं चरिष्यामीति सम्बन्धः ॥ ५ ॥ यावदिति । शान्तिः दुःखशान्तिः मङ्गलं वा ।

निवेश्य सेनां तु विभुः पद्भ्यां पादवतां वरः । अभिगन्तुं स काकुत्स्थमियेष गुरुवर्त्तकम् ॥ १ ॥ निविष्टमात्रे सैन्ये तु यथोद्देशं विनीतवत् । भरतो भ्रातरं वाक्यं शत्रुघ्नमिदमब्रवीत् ॥ २ ॥ क्षिप्रं वनमिदं सौम्य नरसङ्घैः समन्ततः । लुब्धैश्च सहितैरेभिस्त्वमन्वेषितुमर्हसि ॥ ३ ॥ गुहो ज्ञातिसहस्रेण शरचापासिधारिणा । समन्वेषतु काकुत्स्थावस्मिन् परिवृतः स्वयम् ॥ ४ ॥ अमात्यैः सह पौरैश्च गुरुभिश्च द्विजातिभिः । वनं सर्वं चरिष्यामि पद्भ्यां परिवृतः स्वयम् ॥ ५ ॥ यावन्न रामं द्रक्ष्यामि लक्ष्मणं वा महाबलम् । वैदेहीं वा महाभागां न मे शान्तिर्भविष्यति ॥ ६ ॥ यावन्न चन्द्रसङ्काशं द्रक्ष्यामि शुभमाननम् । भ्रातुः पद्मपलाशाक्षं न मे शान्तिर्भविष्यति ॥ ७ ॥ यावन्न चरणौ भ्रातुः पार्थिवव्यञ्जनान्वितौ । शिरसा धारयिष्यामि न मे शान्तिर्भविष्यति ॥ ८ ॥ यावन्न राज्ये राज्यार्हः पितृपैतामहे स्थितः । अभिषेकजलक्लिन्नो न मे शान्तिर्भविष्यति ॥ ९ ॥ सिद्धार्थः खलु सौमित्रिर्यश्चन्द्रविमलोपमम् । मुखं पश्यति रामस्य राजीवाक्षं महाद्युति ॥ १० ॥

"शान्तिः प्रशममङ्गले" इति वैजयन्ती ॥ ६ ॥ ७ ॥ यावदिति । पार्थिवव्यञ्जनान्वितौ वज्रध्वजारविन्दाङ्कुशसुधाकलशादिमहाराजलक्षणयुक्तौ चरणौ यावन्न शिरसा धारयिष्यामि तावत्पर्यन्तं मे शान्तिर्न भविष्यति । यदा रामः स्वयोग्यसिंहासनाधिराज्यमौलिं धृत्वा मम योग्यं श्रीपादाख्यमौलिं ददाति तदा मे सकलदुःखशान्तिर्भविष्यतीति भावः ॥ ८ ॥ ९ ॥ सिद्धार्थ इति । चन्द्रविमलोपमं निर्मलचन्द्रसदृशम् ॥ १० ॥

गुरुवर्तकम् गुरुवचनानुष्ठानपरम् ॥१-४॥ सहपौरैरमात्यैः पौरसहितैरमात्यैश्च सह । द्विजातिभिर्गुरुभिः द्विजातिभिस्सह वर्तमानैः गुरुभिश्च परिवृतः पद्भ्यां सर्वं चरिष्यामीति सम्बन्धः ॥ ५ ॥ शान्तिः दुःखप्रशमः ॥६॥७॥ पार्थिवव्यञ्जनान्वितौ वज्राङ्कुशध्वजारविन्दसुधाकलशादिमहाराजलक्षणान्वितौ ॥८॥९॥ चन्द्रविमलो

महाकुलप्रसूता वैदेही महाभागा महाभाग्यवता । कृतकृत्या कृतार्था च । तत्फलं तद्धेतुं चाह भर्तारमिति । पृथिव्या भर्तारमित्यन्वयः ॥११॥ सुभग इति । असौ चित्रकूटः । सुभगः भाग्यशाली । गिरिराजोपमश्च गिरिराजोपमः हिमवत्पर्वतसदृशः । नन्दने नन्दयतीति नन्दनं चैत्ररथम् । सुभग इत्यादि सुभगः प्रदेशान्तरेभ्योऽतिरमणीयः । सुभगः सर्वेषामुद्देश्यतमः । अत्र हेतुं यस्मिन्नित्युत्तरार्धे वक्ष्यति । चित्रकूटः स्वभावतोपि रमणीयः । असौ गिरिः

कृतकृत्या महाभागा वैदेही जनकात्मजा। भर्तारं सागरान्तायाः पृथिव्या याऽनुगच्छति ॥११॥ सुभगश्चित्रकूटोऽसौ गिरिराजोपमो गिरिः। यस्मिन् वसति काकुत्स्थः कुबेर इव नन्दने ॥१२॥ कृतकार्यमिदं दुर्गं वनं व्यालनिषेवितम्। यदध्यास्ते महातेजा रामः शस्त्रभृतां वरः ॥१३॥ एवमुक्त्वा महातेजा भरतः पुरुषर्षभः। पद्भ्यामेव महाबाहुः प्रविवेश महद्वनम् ॥ १४ ॥ स तानि द्रुमजालानि जातानि गिरिसानुषु। पुष्पिताग्राणि मध्येन जगाम वदतां वरः ॥ १५ ॥

अयोध्यां परित्यज्यापि रामेण आदरणीयः । यद्वा गिरिराजोपमः गिरिराजोऽत्र श्रीनिवाससान्निध्यस्थानभूतो वेङ्कटाचलः । तत्र उभयत्र हेतुमाह यस्मिन्निति। काकुत्स्थः अयोध्याधिपतिः स्वदेशं विहाय अपरिचिते यस्मिन् वसति । तत्रानुरूपं दृष्टान्तमाह कुबेर इति। चैत्ररथवासयोग्यः कुबेरः इन्द्रोद्याने नन्दन इव । यद्वा स्वगृहं विहाय स्वगृहोद्याने विहरमाणो वैश्रवण इव वसतीत्यर्थः । 'इक्ष्वाकूणामियं भूमिः सशैलवनकानना' इत्युक्तेश्चित्रकूटोपि रामविषयो हि, नन्दनोपमानेन रामस्य चित्रकूटे भोग्यताप्रकर्ष उच्यते । काकुत्स्थः ककुत्स्थकुलोद्भवः । यथा स्वकुलमकृतार्थयत् तथा स्ववासस्थलमप्यकृतार्थयदिति भावः । यद्वा कुबेर इव नन्दने भूवाचकेन कुशब्देन जगदुपलक्ष्यते, बेरं शरीरं कुबेरो जगच्छरीरः परमात्मा । नन्दन इव वैकुण्ठ नन्दनवन इव ॥ १२ ॥ कृतेति । कृतकार्यं कृतार्थम् । दुर्गं दुष्प्रवेशम् । व्यालनिषेवितं दुष्टसर्पाश्रितम् । कृतकृत्यत्वे हेतुः यदित्यादि । वनं दुर्गमिति स्थलस्वभावेन वासानर्हत्वमुक्तम् । महातेजा इत्यादिना रामवैभवपेक्षयापि वासानर्हत्वमुच्यते ॥ १३ ॥ एवमिति । महातेजा इत्यादिना पद्भ्यां गमनानर्हत्वमुच्यते ॥ १४ ॥ स इति । द्रुमजालानि मध्येन द्रुमजालानां मध्येनेत्यर्थः । मध्यशब्दस्य दिग्वाचित्वात् "एनपा द्वितीया" इति द्वितीया । वदतां वर इत्यनेन रामसन्निधौ वक्तव्यविशेषं चिन्तयन्नेव जगामेत्युक्तम् ॥ १५ ॥

पमं निर्मलचन्द्रसदृशम् ॥ १० ॥ ११ ॥ सुभग इति । गिरिराजोपमः हिमवत्सदृशः । नन्दने कुबेरोद्याने ॥ १२ ॥ कृतकार्यं कृतार्थं स्थावरत्वमोचकरामपादाग्ररजोग्रस्ततया कृतार्थमित्यर्थः ॥ १३ ॥ १४ ॥ द्रुमजालानि मध्येन द्रुमजालानां मध्येन ॥ १५ ॥

स इति । अग्नेर्ध्वजं धूमम् । पूर्वं धूमाग्रदर्शनम् अधुना समीपत्वात्तन्मूलदर्शनमिति न पुनरुक्तिः ॥१६॥ तमिति । मुमोह मोहसदृशं पारवश्यं प्राप । मुमो देति च पाठः । अम्भसः समुद्रस्य पारं गत इव, अभूदिति शेषः ॥ १७ ॥ स इति । निशम्य दृष्ट्वा । दीर्घाभाव आर्षः । तत्समीपस्थजनेभ्यः श्रुत्वेति



स गिरेश्चित्रकूटस्य सालमासाद्य पुष्पितम् । रामाश्रमगतस्याग्नेर्ददर्श ध्वजमुच्छ्रितम् ॥ १६ ॥ तं दृष्ट्वा भरतः श्रीमान् मुमोह सहबान्धवः । अत्र राम इति ज्ञात्वा गतः पारमिवाम्भसः ॥ १७ ॥ स चित्रकूटे तु गिरौ निशम्य रामाश्रमं पुण्यजनोपपन्नम् । गुहेन सार्द्धं त्वरितो जगाम पुनर्निवेश्यैव चमूं महात्मा ॥ १८ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे अष्टनवतितमः सर्गः ॥ ९८ ॥

निविष्टायां तु सेनायामुत्सुको भरतस्तदा । जगाम भ्रातरं द्रष्टुं शत्रुघ्नमनुदर्शयन् ॥ १ ॥
ऋषिं वसिष्ठं सन्दिश्य मातृर्मे शीघ्रमानय । इति त्वरितमग्रे स जगाम गुरुवत्सलः ॥ २ ॥

वार्थः । अतएव पुण्यजनोपपन्नमित्युच्यते । गुहेनेति प्रधानजनोपलक्षणपरम् । चमूं पुनर्निवेश्य अन्वेषणार्थमागतां चमूमपि स्थापयित्वा । महात्मा दृढाध्यवसायः ॥ १८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टनवतितमः सर्गः ॥ ९८ ॥
अथ भरतस्य रामसङ्गम एकोनशततमे—निविष्टेत्यादिना । निविष्टायां सेनायाम्, स्वयं तत्र क्षणं निविष्टः सन् । उत्सुकः साभिलाषः । शत्रुघ्नमनु दर्शयन् । अनुः कर्मप्रवचनीयः । शत्रुघ्नस्य रामाश्रमसामीप्यचिह्नानि प्रदर्शयन् जगाम ॥ १ ॥ ऋषिमिति । मातृर्मे शीघ्रमानयेति ऋषिं वसिष्ठं सन्दिश्य जगामेत्यन्वयः । अनेन रामावासं निश्चित्य पश्चादानेष्यामीति धिया महासेनानिवेशे मातृर्निवेशितवानिति गम्यते ॥ २ ॥

अग्नेर्ध्वजं धूमम् ॥ १६ ॥ १७ ॥ निशम्य दृष्ट्वा । पुण्यजनोपपन्नं तपस्विजनयुक्तम् । गुहेनेत्येतत्प्रधानजनोपलक्षणपरम् । चमूं पुनर्निवेश्य अन्वेषणार्थमागतां चमूमपि स्थापयित्वा ॥ १८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायाम् अष्टनवतितमः सर्गः ॥ ९८ ॥
निविष्टायामिति । शत्रुघ्नमनुदर्शयन् आश्रमसमीपवर्तिचिह्नमिति शेषः ॥ १ ॥ २ ॥

तत्पश्चात् शत्रुघ्नः तत्पश्चात्सुमन्त्रश्च गत इत्याह–सुमन्त्र इति। सुमन्त्रोप्यदूरात् समीपे शत्रुघ्नमन्वपद्यत अन्वगच्छत्। तत्र हेतुमाह रामेति। रामदर्शनज स्तर्षः रामदर्शनमुद्दिश्य जनितोऽभिलाषः। "कामोऽभिलाषस्तर्षश्च" इत्यमरः। तस्य शत्रुघ्नस्यच चकारात् सुमन्त्रस्य चास्ति हीत्यर्थः। सुमन्त्रस्य त्वरितागमनात् वसिष्ठ एवमात्रानयने नियुक्त इत्यावेदितम् ॥ ३ ॥ गच्छन्निति। तापसालयसंस्थितां तापसालयानां मध्ये स्थिताम्, तापसालयसमान

सुमन्त्रस्त्वपि शत्रुघ्नमदूरादन्वपद्यत। रामदर्शनजस्तर्षो भरतस्येव तस्य च ॥ ३ ॥ गच्छन्नेवाथ भरतस्तापसा लयसंस्थिताम्। भ्रातुः पर्णकुटीं श्रीमानुटजं च ददर्श ह ॥ ४॥ शालायास्त्वग्रतस्तस्या ददर्श भरतस्तदा। काष्ठानि चावभग्नानि पुष्पाण्युपचितानि च ॥ ५ ॥ सलक्ष्मणस्य रामस्य ददर्शाश्रममीयुषः। कृतं वृक्षेष्वभि ज्ञानं कुशचीरैः क्वचित् क्वचित् ॥६॥ ददर्श च वने तस्मिन् महतः सञ्चयान् कृतान्। मृगाणां महिषाणां च करीषैः शीतकारणात् ॥ ७॥ गच्छन्नेव महाबाहुर्द्युतिमान् भरतस्तदा। शत्रुघ्नं चाब्रवीद्धृष्टस्तानमात्यांश्च सर्वशः ॥ ८ ॥

संस्थानामितिवार्थः। पर्णकुटीम् अग्र्यगारभूतां पर्णशालाम्। उटजं दिदृक्षया समागतैः तापसैः सह सुखावस्थानार्थमुपकल्पितां पर्णशालाम्। यद्वा भ्रातुः पर्णकुटीं सीतया सह शयनार्थं निर्मितां पर्णशालाम्। श्रीमान् तादात्विकप्रीतिजनितकान्तिमान्। उटजं दिवावस्थानार्थं कल्पितं पर्णमण्डपम्। यद्वा पर्णशालां महाशालाम्। उटजं तन्मध्यवर्तिसदावस्थानास्थानम्। तथैव वक्ष्यति ददर्श महतीमित्यादिना। ददर्श चिह्नैरुत्प्रेक्षितवान् ॥ ४ ॥ चिह्नान्ये वाह–शालाया इत्यादिना। काष्ठानि रात्रौ प्रकाशाय ज्वलनीयानि। पुष्पाणि पूजार्थानि ॥ ५ ॥ सलक्ष्मणस्येति। ईयुषः जलाशयादाश्रमं गच्छतो रामस्य। "उपेयिवाननाश्वाननूचानश्च" इत्यत्र नात्रोपसर्गस्तन्त्रम्। अन्योपसर्गपूर्वान्निरुपसर्गाच्च भवत्येवेति वृत्तिकृतोक्तत्वादनुपसर्गपूर्वादिणः क्वसुः। कुशादिभिः कृतम् अभिज्ञानं चिह्नम्, अन्योन्यस्य गमनागमनपरिज्ञानार्थं कृतं चिह्नं ददर्श ॥ ६ ॥ ददर्श चेति। करीषैः कृतान् सञ्चया नित्यन्वयः। शीतकारणात् शीतनिवारणार्थम् ॥७॥ गच्छन्निति। अमात्यान् सुमन्त्रम्, बहुवचनं पूजार्थम्। यद्वा अनेनैवावगम्यते अन्येप्यमात्याः सुम

रामदर्शनजस्तर्षः रामदर्शनमुद्दिश्य जनिताभिलाषः। तस्य शत्रुघ्नस्य चकारेण सुमन्त्रस्य च ॥३॥ तापसालयसंस्थितां तापसालयसमानसंस्थानां पर्णकुटीम् अग्न्य गारनिवासभूतां पर्णशालामुटजं च बहिःसुखावस्थानार्थमुपकल्पितमाश्रमं च ददर्शेत्यर्थः ॥ ४ ॥ उपचितानि संपादितानि ॥ ५ ॥ आश्रमम् ईयुषः प्राप्तवतः। कृतमभिज्ञानं मार्गपरिज्ञानार्थं कृतचिह्नम्। कुशचीरैः कुशैः वल्कलैः ॥ ६ ॥ मृगाणां महिषाणां करीषैः कृतान् सञ्चयानिति सम्बन्धः ॥ ७॥ एवमेतान् पदार्थान्

न्त्रेण सहागता इति ॥ ८ ॥ मन्य इति । इतः अस्मात्प्रदेशात् । मन्दाकिनीं नातिदूरे मन्ये, प्रत्यासन्नां मन्य इत्यर्थः । अतः यं देशं भरद्वाजोऽब्रवीत् तं देशं प्राप्ताः स्मेति मन्ये । प्राप्ताः स्मेत्येव वक्तव्ये मन्य इत्युक्त्या अयमर्थोऽवगम्यते—कैकेय्या राजन्नित्याहूतस्य भाग्यहीनस्य मे नेयं तद्देशप्राप्तिर्भवितु मर्हति किन्तु भ्रमस्वप्नादिष्वन्यतमोऽयमिति ॥ ९ ॥ उच्चैरिति । उच्चैर्बद्धानि चीराणि उन्नतप्रदेशे चीराणि बद्धानि दृश्यन्ते तस्मादयं पन्थाः विकाले

मन्ये प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत् । नातिदूरे हि मन्येऽहं नदीं मन्दाकिनीमितः ॥ ९ ॥
उच्चैर्बद्धानि चीराणि लक्ष्मणेन भवेदयम् । अभिज्ञानकृतः पन्था विकाले गन्तुमिच्छता ॥ १० ॥
इदं चोदात्तदन्तानां कुञ्जराणां तरस्विनाम् । शैलपार्श्वे परिक्रान्तमन्योन्यमभिगर्जताम् ॥ ११ ॥
यमेवाधातुमिच्छन्ति तापसाः सततं वने । तस्यासौ दृश्यते धूमः सङ्कुलः कृष्णवर्त्मनः ॥ १२ ॥

अकाले सायङ्कालादौ गन्तुमिच्छता फलमूलजलादिसङ्ग्रहणार्थं गन्तुमिच्छता लक्ष्मणेनाभिज्ञानकृतः कृताभिज्ञानो भवेत्, अतोऽनेनैवास्माभिर्गन्तव्य मिति भावः ॥ १० ॥ मार्गचिह्नकरणं गजपदमर्दनक्लिष्टत्वेन दुर्ज्ञानत्वादित्याशयेनाह—इदं चेति । उदात्तदन्तानां महादन्तानाम् । "महत्युदात्त उच्चोक्तौ" इति वैजयन्ती । तरस्विनां वेगवताम् । अन्योन्यमभिगर्जताम् अन्योन्यं प्रतिगर्जताम् । कुञ्जराणां गजानाम् । शैलपार्श्वे परिक्रान्तमिदं परिक्रमणस्थान मिदम् । "क्तोऽधिकरणे च" इत्यधिकरणे क्तः । इदमेषामासितमित्यादिवत् । अस्मिन्मार्गे कुञ्जराः परिक्रान्ता इत्यर्थः । अन्योन्यकोपातिशयेन वेगा दन्तादन्तिप्रहारं कुर्वतामाश्रमप्रवेशस्याशक्यत्वादाश्रमप्रान्तगमनमाश्रमप्रदेशं सूचयतीत्यर्थः ॥ ११ ॥ रामाश्रमस्यात्यन्तसन्निहितत्वज्ञापकं धूमबाहु हुल्यं दर्शयति—यमिति । तापसाः यमग्निमाधातुमिच्छन्ति सायंप्रातर्होमार्थं सर्वदा रक्षितुमिच्छन्ति तस्य कृष्णवर्त्मनः सङ्कुलोऽसौ धूमो दृश्यते । पचनाग्नेर्होमाग्नेश्च व्यावृत्तं सन्ततस्थायिगार्हपत्याग्निं दर्शयितुं सङ्कुलशब्दः, अतिनिबिड इत्यर्थः । पचने ज्वालानां होमे च अङ्गाराणामपेक्षि

पश्यन् गच्छन्नेव शत्रुघ्नमब्रवीत् ॥ ८ ॥ इतः अस्मात्प्रदेशात् मन्दाकिनीं च नातिदूरे मन्ये प्रत्यासन्नां मन्य इत्यर्थः ॥ ९ ॥ उच्चैर्बद्धानि चीराणि कस्मादयं पन्थाः विकाले गन्तुमिच्छता फलमूलसङ्ग्रहार्थमन्यत्र गन्तुमिच्छता लक्ष्मणेन अभिज्ञानकृतः कृताभिज्ञानो भवेदिति सम्बन्धः ॥ १० ॥ उदात्तदन्तानां महादन्तानाम् इदं परिक्रान्तं परिक्रमणस्थानमिति सम्बन्धः ॥ ११ ॥ तापसा यमग्निं सततमाधातुं सायं प्रातर्होमार्थं सर्वदा रक्षितुमिच्छन्ति तस्य कृष्णवर्त्मनः अग्नेर्धूम इति

तत्वान्न तदा धूमनिबिडसम्भव इति भावः। अनेन रामस्याग्न्याधानाभावाच्छ्रौताग्निरत्र नोच्यते किन्तु धार्यः स्मार्ताग्निः। यदि हि तस्य त्रेताग्निः स्यात् तदा " रामः कमलपत्राक्षः पुरोधसमथाब्रवीत् । अग्निहोत्रं व्रजत्वग्रे सर्पिर्ज्वलितपावकम् ॥ " इति चरमयात्रायामग्निहोत्रपुरस्कारश्रवणाद्वनयात्रायामपि तथा दृश्येत। अनुसरन्तोपि हि पौरवृद्धाः साग्नय एव समागता इत्युच्यन्ते। किञ्च "दीक्षितं व्रतसम्पन्नं वराजिनधरं शुचिम्। कुरङ्गशृङ्गपाणिं च पश्यन्ती त्वां भजाम्यहम् ॥" इति सीतामनोरथश्रवणाद्राज्याभिषेकात्पूर्वं न यज्ञोऽनुष्ठित इति गम्यते। ततोऽयमग्निर्गृह्याग्निरेव। न च तस्याप्यानयनं

अत्राहं पुरुषव्याघ्रं गुरुसंस्कारकारिणम्। आर्यं द्रक्ष्यामि संहृष्टो महर्षिमिव राघवम् ॥ १३ ॥

न पूर्वमुक्तमिति वाच्यम्;तस्यात्मसमारोपणेनानेतुं शक्यत्वात्। न च आत्मसमारोपणेपि सायम्प्रातर्होमः कार्यः, स तु नोक्तः। प्रत्युत तमसातीरे गङ्गाकूले वृक्षमूले भरद्वाजाश्रमे यमुनातटे च सन्ध्यावन्दनमेवोक्तम्। अत्र च श्लोके तापसवनशब्दाभ्यां वने तापसानां शीतनिवारणप्रकाशकरणकन्दमूलादिपचनसाधनतया सङ्ग्राह्य एवाग्निरुच्यत इति वक्तुं शक्यते। आधातुं सङ्ग्रहीतुमित्यर्थः। अतोऽयमग्निः पचनाद्यर्थ एव नतु धार्यः स्मार्ताग्निरितिचेत्। न; "प्रागुदक्प्रवणां वेदिं विशालां दीप्तपावकाम्" इति वक्ष्यमाणविरोधात्। न ह्यसंस्कृताग्नेर्वेदिसम्बन्धः प्रसिद्धः। प्रागुदक्प्रवणत्वादिवेदिलक्षणं चोच्यमानं वेदिं तत्स्थमग्निं च संस्कृतावगमयति। यद्येवं कथं तर्हि सायंप्रातर्होमावचनमिति चेत् ? नह्येकं स्वच्छन्दगामिना मुनिना असत्यामिच्छायामसति च फले पुनःपुनर्वक्तव्यम्। वक्ष्यति तु उपरिष्टात् सुतीक्ष्णाश्रमे-"अथ तेऽग्निं सुरांश्चैव वैदेही रामलक्ष्मणौ। काल्यं विधिवदभ्यर्च्य तपस्विशरणे वने। उदयन्तं दिनकरं दृष्ट्वा विगतकल्मषाः। सुतीक्ष्णमभिगम्यैवमिदं वचनमब्रुवन् ॥" इति। अत्रानुदितहोमपक्षेण उदयात्पूर्वमग्निकार्यवचनादग्निमित्येकवचनाच्च औपासनं सम्यगुक्तमिति। एवमेव सर्वत्र द्रष्टव्यमिति। अत्रचाग्निकार्ये रामस्य साक्षात्प्रधानकर्तृत्वेन सीतायाः सहभावेन प्रणयनादिना च लक्ष्मणस्य समिदादिसंपादनरूपसहकारित्वेन चान्वय इति ज्ञेयम्। तपस्विशरणे वन इत्यनेनातिसङ्कटदेशेपि यथावदनुष्ठानश्रद्धाविशेष उच्यते। अतश्चतुर्दशसु वनवाससंवत्सरेषु सीताहरणपर्यन्तं रामस्य चित्रकूटादिपञ्चवट्यन्तेषु प्रदेशेषु यत्र माससंवत्सरादिवासेन चिरकालावस्थानं तत्र बहिः स्मार्तनित्याग्निधारणम्। अन्यत्रात्मनि समिधि वा समारोप्य होमकालेऽवरोप्य सायंप्रातरौपासनमिति दिक्। अस्मिन् श्लोके च तापसा यमाधातुमिच्छन्तीत्यस्यार्थश्च वर्णितः। तेन च रामाश्रमचिह्नत्ववत्पावनत्वमप्युक्तं भवति ॥ १२ ॥ अत्रेति। गुरुसंस्कारकारिणं गुरुसंस्कारः श्रेष्ठसंस्कारः, मन्त्रोप

देशादिः, तत्कारिणम् ॥ १३ ॥ अथेति । राघवः भरतः। तं जनं सहागतं शत्रुघ्नादिकम् ॥१४॥ जगत्यामित्यादि । जगत्यां भूमौ। वीरासने दक्षिणजानू परिन्यस्तवामपादतयाऽवस्थाने । धिङ्मे जन्म सजीवितमिति मे जन्म प्राणनं च धिगित्यर्थः ॥१५॥ मत्कृते व्यसनं प्राप्तः कैकेय्या मम राज्यप्रापण कृते राज्यभ्रंशरूपव्यसनं प्राप्तः॥१६॥ इति लोकसमाक्रुष्टः एवं प्रकारेण लोकैरपवादं प्रापितः । प्रसादयन् प्रसादनाद्धेतोः लक्ष्मणस्य चेति तस्य कनिष्ठ

अथ गत्वा मुहूर्तं तु चित्रकूटं स राघवः । मन्दाकिनीमनुप्राप्तस्तं जनं चेदमब्रवीत् ॥ १४ ॥ जगत्यां पुरुषव्याघ्र आस्ते वीरासने रतः । जनेन्द्रो निर्जनं प्राप्य धिङ्मे जन्म सजीवितम् ॥ १५ ॥ मत्कृते व्यसनं प्राप्तो लोकनाथो महाद्युतिः । सर्वान् कामान् परित्यज्य वने वसति राघवः ॥ १६ ॥ इति लोकसमाक्रुष्टः पादेष्वद्य प्रसादयन् । रामस्य निपतिष्यामि सीताया लक्ष्मणस्य च॥ १७॥ एवं स विलपंस्तस्मिन् वने दशरथात्मजः। ददर्श महतीं पुण्यां पर्णशालां मनोरमाम् ॥१८॥ सालतालाश्वकर्णानां पर्णैर्बहुभिरावृताम् । विशालां मृदुभिस्तीर्णां कुशैर्वेदिमिवाध्वरे ॥ १९ ॥ शक्रायुधनिकाशैश्च कार्मुकैर्भारसाधनैः । रुक्मपृष्ठैर्महासारैः शोभितां शत्रुबाधकैः ॥ २० ॥

त्वेपि कार्य्यगौरवात्पादपतनम् । यदि मया प्रसाद्यमाने रामे लक्ष्मणः कैकेयीकृतापकारं मय्यारोप्य मा प्रसीदेति रामं निरुन्ध्यात्तर्हि लक्ष्मणस्यापि पादयोर्निपत्य तमपि प्रसादयिष्यामि । यदि रामप्रसादनरूपं कार्यं केवलं सुसाधितं भवेत् तदानीं कनिष्ठपादपतनं दोषायेति भरतहृदयम् । ( सीतायाश्च पुनःपुनरितिपाठः । सीताया लक्ष्मणस्य चेति पाठे रामभक्तत्वेन वयो नादृतमिति बोध्यम् । न "परीक्ष्यवयोवन्द्याः" इति स्मरणात्) ॥१७॥ एवमित्यारभ्य गुहामिवेत्यन्तमेकं वाक्यम्॥१८॥ सालोऽश्वकर्णादन्यो वृक्षः । अश्वकर्णः सर्जतरुः । तालो मृदुपर्णः श्रीतालः॥१९॥ कार्मुकैरिति बहुवचनाद्भ्यासयोग्यं कार्मुकान्तरमस्तीति गम्यते । भारसाधनैः गुर्ववयवैः । यद्वा अतिगुरुतररणकार्यसाधनभूतैः । यद्वा भारो धनुःपरिमाणविशेषः । यथोक्तं धनुर्वेदे ईशानसंहितायाम्–"भारं पलशतं विदुः । तेन भारेण चापानां प्रमाणमुपलभ्यते" इति । रुक्मपृष्ठैः कनकानुलिप्तपृष्ठप्रदेशैः । महासारैः महा



–सम्बन्धः ॥ १२–१६ ॥ इत्येवंप्रकारेण । लोकसमाक्रुष्टः जनैरपवादं प्रापितः । प्रसादयन् प्रार्थनाद्धेतोः ॥ १७–१९ ॥ भारसाधनैः भारः पलशतं तेन साध्यन्ते

स्थिरांशैः। "सारो बले स्थिरांशे च" इत्यमरः ॥२०॥ भोगवती सर्प्पनगरी ॥२१॥ महारजतवासोभ्यां स्वर्णमयकोशाभ्याम्। रुक्मबिन्दुविचित्राभ्यां शोभाविशेषाय मध्येमध्ये शिल्पिनिर्मितकनकबिन्दुविचित्राभ्याम्। (आत्मबिन्दुविचित्राभ्यां व्याघ्रचर्मकृततया स्वाभाविकनानावर्णबिन्दुविचित्राभ्याम्।) चर्मभ्यां खेटकाभ्याम्। "खेटकं फलकं चर्म" इति हलायुधः ॥२२॥ गोधाङ्गुलित्रैः गोधा ज्याघातवारणम्। अङ्गुलित्रम् अङ्गुलित्राणम्। उपलक्षणे

अर्करश्मिप्रतीकाशैर्घोरैस्तूणीगतैः शरैः। शोभितां दीप्तवदनैः सर्प्पैर्भोगवतीमिव ॥ २१ ॥ महारजतवासोभ्यामसिभ्यां च विराजिताम्। रुक्मबिन्दुविचित्राभ्यां चर्मभ्यां चापि शोभिताम् ॥ २२ ॥ गोधाङ्गुलित्रैरासक्तैश्चित्रैः काञ्चनभूषितैः। अरिसङ्घैरनाधृष्यां मृगैः सिंहगुहामिव ॥२३॥ प्रागुदक्प्रवणां वेदिं विशालां दीप्तपावकाम्। ददर्श भरतस्तत्र पुण्यां रामनिवेशने ॥२४॥ निरीक्ष्य स मुहूर्त्तं तु ददर्श भरतो गुरुम्। उटजे राममासीनं जटामण्डलधारिणम् ॥ २५ ॥ तं तु कृष्णाजिनधरं चीरवल्कलवाससम्। ददर्श राममासीनमभितः पावकोपमम् ॥ २६ ॥

तृतीया। शोभितामित्यनुकर्षो वा। अनाधृष्याम् अप्रधृष्याम् ॥२३॥ प्रागुदक्प्रवणां प्रागुदग्भागे क्रमनिम्नाम्। "प्रवणो दक्षिणे प्रह्वे क्रमनिम्ने चतुष्पथे" इति वैजयन्ती। तत्र रामनिवेशने, पूर्वोक्तपर्णशालायामित्यर्थः ॥ २४ ॥ निरीक्ष्येति। जटामण्डलधारित्ववैलक्षण्येन निश्चयार्थं मुहूर्त्तं निरीक्ष्य तेजोविशेषेण सामान्येन स्वगुरुं ज्ञातवानित्यर्थः। अस्मिन् श्लोके उत्तरार्धे जटामण्डलधारिणमित्यत्र णकारो गायत्र्याः सप्तमाक्षरः। षट्सहस्रं श्लोका गताः॥२५॥ विशेषतो दर्शनमाह—तं त्वित्यादिना। महार्हवसनोपेतस्य इदानीं ततो वैलक्षण्यमाह तं त्विति। तदेव वैलक्षण्यं दर्शयति कृष्णाजिनधरमिति। कृष्णाजिनधरम् उत्तरीयतया कृष्णाजिनधरम्। अधराम्बरत्वेन चीरवल्कलवाससम्। कृष्णाजिनधरं चीरवल्कलवाससं पूर्वस्माच्छोभाविशेषयुक्तम्। रामं वल्क

सम्पाद्यन्त इति भारसाधनानि ॥ २०॥२१॥ महारजतवासोभ्यां सुवर्णनिर्मितकोशाभ्याम्। चर्मभ्यां फलकाभ्याम्। गोधा ज्याघातवारणम् अङ्गुलित्रमङ्गुलित्राणम् अनाधृष्याम् अप्रधृष्याम्। आसक्तैः तत्तत्साधनेषु स्थापितैरित्यर्थः ॥ २२ ॥ २३ ॥ प्रागुदक्प्रवणाम् ईशान्यभागनिम्नामित्यर्थः। गायत्र्या णीति सप्तमाक्षरम् उटजे राममित्यस्य श्लोकस्य षोडशाक्षरेण सङ्गृह्णाति ॥ २४ ॥ २५ ॥ तं त्वित्यादि। विशेषणान्तराभिधानार्थं ददर्शेति पुनर्वचनम्। अभितः पावकोपमं परितः पावक

लादिधारणेप्यपरावर्तमानं रामणीयकमुच्यते। आसीनं [illegible] ध्यायन्तम्। अभितः पावकोपमं तादृशतपोविशेषेण समन्तात्तेजःपरिवृतम्। यद्वा "नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा" इत्युक्तरीत्या विद्युल्लेखामध्यवर्त्तिनीलतोयदमिव स्थितमित्यर्थः। यद्वा विरोधिनामनभिभवनीयमित्यर्थः। यद्वा उटजे राममासीनम् अयोध्यास्थितसमाजापेक्षया अल्पतरापीयं सभा महती जाता। कुतः? अभितः पावकोपमं तत्सभायां समीपस्थस्य

सिंहस्कन्धं महाबाहुं पुण्डरीकनिभेक्षणम्। पृथिव्याः सागरान्ताया भर्त्तारं धर्मचारिणम् ॥२७॥ उपविष्टं महाबाहुं ब्रह्माणमिव शाश्वतम्। स्थण्डिले दर्भसंस्तीर्णे सीतया लक्ष्मणेन च ॥ २८ ॥ तं दृष्ट्वा भरतः श्रीमान् दुःखशोकपरिप्लुतः। अभ्यधावत धर्मात्मा भरतः कैकयीसुतः ॥ २९ ॥ दृष्ट्वैव विललापार्त्तो बाष्पसन्दिग्धया गिरा। अशक्नुवन् धारयितुं धैर्याद्वचनमब्रवीत् ॥ ३० ॥ यः संसदि प्रकृतिभिर्भवेद्युक्त उपासितुम्। वन्यैर्मृगैरुपासीनः सोऽयमास्ते ममाग्रजः ॥ ३१ ॥ वासोभिर्बहुसाहस्रैर्यो महात्मा पुरोचितः। मृगाजिने सोऽयमिह प्रवस्ते धर्ममाचरन् ॥ ३२ ॥ अधारयद्यो विविधाश्चित्राः सुमनसस्तदा। सोऽयं जटाभारमिमं वहते राघवः कथम् ॥ ३३ ॥

भ्रातुरपि ह्यत्र समीपमागन्तुं न शक्यते, न हि ज्वलत्यनले कस्यापि समीपमागन्तुं शक्यम्। यद्वा उटजे राममित्यत्र रामं श्यामम्। अधोरामौ सावित्रावित्यत्र तथाप्रयोगात्। यद्वा पावकोपमं दुर्दर्शमित्यर्थः। अतएव पूर्वश्लोके निरीक्ष्य स मुहूर्तमित्युक्तम्॥२६॥२७॥ब्रह्मापेक्षयास्य वैलक्षण्यमुच्यते शाश्वतमिति। स्थण्डिले भूमौ ॥२८॥ तमिति। द्वितीयो भरतशब्द उत्तरश्लोकेन सम्बध्यते ॥२९॥ दृष्ट्वेति। दृष्ट्वैव दर्शनमात्रेणेत्यर्थः। आर्तः खिन्नः। तामार्त्तिं धारयितुमशक्नुवन्। बाष्पसन्दिग्धया शोकोष्मणा सन्दिग्धवर्णया गिरा उपलक्षितः ॥ ३० ॥ य इति। संसदि सभायाम्। युक्तः अर्हः ॥ ३१ ॥ वासोभिरिति। बहुसाहस्रैः बहुसहस्रमूल्यैः। उचितः, अलङ्कर्तुमिति शेषः। षष्ठ्यर्थे तृतीया वा। मृगाजिने मृगचर्मणी। प्रवस्ते आच्छादयति ॥३२॥३३॥

वदप्रधृष्यमित्यर्थः ॥ २६ ॥ २७ ॥ स्थण्डिले भूमौ ॥ २८॥ तं दृष्ट्वेति। द्वितीयो भरतशब्दः उत्तरश्लोकेन सम्बध्यते ॥२९-३१॥ वासोभिरिति। बहुसाहस्रैः बहुसहस्रमूल्यैः वासोभिरुचितः अलङ्कर्तुमिति शेषः। सोऽयं मृगाजिने मृगचर्मणी। द्वितीयाद्विवचनमेतत्। प्रवस्ते आच्छादयति। मृगाजिनैरिति पाठे मृगाजिनैराच्छादनं

यस्येति । यथोद्दिष्टैः यथाविहितैः । यथादृष्टैरिति पाठे—शास्त्रेष्विति शेषः । युक्तः योग्यः ॥३४-३८॥ वक्तुमशक्यत्वे हेतुमाह—बाष्पापिहितकण्ठ इत्यादिना । बाष्पापिहितकण्ठः बाष्पनिरुद्धकण्ठः ॥ ३९ ॥ ४० ॥ तत इति । राजसुतौ रामलक्ष्मणौ ॥ ४१ ॥ तानिति । तान् तादृशसुखयुक्तान् । समाग

यस्य यज्ञैर्यथोद्दिष्टैर्युक्तो धर्मस्य सञ्चयः । शरीरक्लेशसम्भूतं स धर्मं परिमार्गते ॥ ३४ ॥ चन्दनेन महार्हेण यस्याङ्गमुपसेवितम् । मलेन तस्याङ्गमिदं कथमार्यस्य सेव्यते ॥ ३५ ॥ मन्निमित्तमिदं दुःखं प्राप्तो रामः सुखोचितः । धिग्जीवितं नृशंसस्य मम लोकविगर्हितम् ॥ ३६ ॥ इत्येवं विलपन् दीनः प्रस्विन्नमुखपङ्कजः । पादावप्राप्य रामस्य पपात भरतो रुदन् ॥३७॥ दुःखाभितप्तो भरतो राजपुत्रो महाबलः । उक्त्वार्येति सकृद्दीनं पुनर्नोवाच किञ्चन ॥ ३८ ॥ बाष्पापिहितकण्ठश्च प्रेक्ष्य रामं यशस्विनम् । आर्येत्येवाथ संक्रुश्य व्याहर्तुं नाशकत्तदा ॥३९॥ शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ रुदन् । तावुभौ स समालिङ्ग्य रामश्चाश्रूण्यवर्तयत् ॥४०॥ ततः सुमन्त्रेण गुहेन चैव समीयतू राजसुतावरण्ये । दिवाकरश्चैव निशाकरश्च यथाम्बरे शुक्रबृहस्पतिभ्याम् ॥ ४१ ॥ तान् पार्थिवान् वारणयूथपाभान् समागतांस्तत्र महत्यरण्ये । वनौकसस्तेऽपि समीक्ष्य सर्वेऽप्यश्रूण्यमुञ्चन् प्रविहाय हर्षम् ॥४२॥
इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकोनशततमः सर्गः ॥ ९९ ॥

तान् सङ्गतान् ॥ ४२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोनशततमः सर्गः ॥ ९९ ॥

करोतीत्यर्थः ॥ ३२ ॥ ३३ ॥ यस्येति । यथादिष्टैर्यथाविहितैर्यज्ञैर्धर्मस्य सञ्चयो यस्य युक्तः स रामः शरीरक्लेशसम्भूतं धर्मं परिमार्गते करोतीति सम्बन्धः । यथादृष्टैरिति पाठे शास्त्रेष्विति शेषः ॥ ३४-४० ॥ राजसुतौ रामलक्ष्मणौ । समागतान् सङ्गतान् ॥ ४१ ॥ ४२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायामेकोनशततमः सर्गः ॥ ९९ ॥

दर्शनमात्रेण भरतो राज्यं पालयतीति कृत्वा राज्यनीतिं पृच्छति शततमे । जटिलमिति । यद्वा अथ भगवान् रामः प्रश्नव्याजेन राज्यरक्षणनीतिप्रकारान् शिक्षयति, पश्चाद्दशरथात्ययश्रवणभरतस्थण्डिलशयनादिव्यापारेण तदुपदेशावकाशाभावात् । जटिलमित्यादि । जटिलं समीचीनमालिका दृष्टा चेदियं भरतस्य केशार्हेत्येवं दशरथो वदति स एव जटां बद्धा तिष्ठतीति रामो विस्मयते । चीरवसनं श्लाघ्यचीनाम्बरं दृष्टं चेद्बालस्य भरतस्य वसनार्हमिदमिति ।पिता वदति स एवेदानीं वल्कलधारी तिष्ठति । प्राञ्जलिं पिता याचनापूर्वकं दिशति चेत् यः स्वीकरोति स सम्प्रति स्वाभिमतस्य स्वयमर्थी भवति ।

जटिलं चीरवसनं प्राञ्जलिं पतितं भुवि । ददर्श रामो दुर्दर्शं युगान्ते भास्करं यथा ॥ १ ॥

पतितं भुवि अङ्के भरतमारोप्येति स्थितिर्न लब्धा । कुसुमशय्यापि कठिनीभवेदितिमत्वा उत्सङ्ग एव पित्रा शायितः स सम्प्रति स्थले पतितः । ददर्श रामो दुर्दर्शं दत्तां दृष्टिमनाकृष्य स्थितस्य रामस्य दर्शनायोग्यतया स्थितम् । यद्वा दुर्दर्शं जटिलत्वादिवेषेण स्नेहितजनस्य दुष्प्रेक्षम् । दुर्दर्शं दुःखेन द्रष्टुं योग्यम्, कृच्छ्रेणाप्यभिज्ञातुमयोग्यमिति यावत् । युगान्ते भास्करं यथा न केवलं रामस्य सर्वस्यापि जनस्य दुर्दर्शतया स्थितमिति भावः । यद्वा युगान्ते भास्करं यथा युगान्ते भुवि पतितं भास्करमिव स्थितम्, अनेन पूर्ववन्महत्तरतेजोराहित्यं तादृशावस्थानर्हत्वं च व्यज्यते । ( युगान्ते भुवि पतितं भास्करं यथेत्यनेन महत्तरतेजोराशित्वं तादृशावस्थानर्हत्वं चोच्यते ।) ननु गङ्गातीरे 'अद्यप्रभृति भूमौ तु शयिष्येऽहं तृणेषु वा । फलमूलाशनो नित्यं जटाचीराणि धारयन् ' इति जटावल्कलधारणं प्रतिज्ञातम् । पुनर्नवतितमे भरद्वाजदर्शनसमये ' वसानो वाससी क्षौमे ' इति क्षौमवस्त्रं धृतवानित्युच्यते । अत्र तु

जटिलमिति । दुर्दर्शं दुःखेन द्रष्टुं योग्यम् । नन्वष्टाशीतितमे सर्गे ' जटाचीराणि धारयन् ' इति भरतस्य जटाधारणादिकं श्रूयते । नवतितमे सर्गे तु ' वसानो वाससी क्षौमे ' इति भरद्वाजदर्शनवेलायां क्षौमधारणं श्रूयते । अत्र जटिलं चीरवसनमिति जटावल्कलधारणं सिद्धवदनूद्यत इति चेत् ? उच्यते–प्रतिज्ञायाः रात्रौ गुहपुरे कृतत्वात् अपरेद्युर्भरद्वाजदर्शनानन्तरं जटावल्कलधारणं करिष्यामीत्यभिप्रायेणागतः, तत्र भरद्वाजेनातिथ्येन निमन्त्रितत्वादवकाशाभावात् भरद्वाजाश्रमनिर्गमनानन्तरं जटावल्कलधारणं कृतवानित्येतत्सर्वमुपपद्यत एव ॥ १–३ ॥

स०–जटिलमिति । ननु " अद्यप्रभृति भूमौ तु शयिष्ये " " जटाचीराणि धारयन्," इति गुहसन्निधौ भरतेन जटाधारणे प्रतिज्ञामात्रं कृतम् नतु तद्धारणम् । " वसानो वाससी क्षौमे " इति भरद्वाजावलोकनप्रकरणे तथोक्तेः । तस्मात्कथमिति चेत् ? सत्यम्; महर्षिपुरतस्ससैन्येन ऋषिचर्या न प्रदर्शनीयेति तत्पूर्वमभूत्वा अनन्तरं जटादिदर्शने रामकृपा भवेदिति तद्धृतवानिति कात्र कथन्ता । भुवि पतितमित्युभयत्रान्वेति । दुर्दर्शं द्रष्टुमयोग्यम् ॥ १ ॥

जटिलं चीरवसनमिति सिद्धवदनूद्यते। कथमेतत्सङ्गच्छत इतिचेत्? अत्राहुः—प्रतिज्ञाया रात्रौ कृतत्वात् परेद्युर्भरद्वाजदर्शनानन्तरं जटावल्कले धृतवा नित्यविरोध इति। अयं च परिहारः पुरैवास्माभिः प्रतिपादितः ॥१॥ कथञ्चिदिति। कथंचिदभिविज्ञानत्वे हेतुद्वयम्-विवर्णवदनं कृशमिति ॥ २ ॥ ३ ॥ अतिदुःखितस्य भरतस्य दुःखमपनेतुं प्रश्नव्याजेन धर्मानुपदिशति—क न्वित्यादि। ते पिता क न्वभूत् इति प्रश्नभङ्ग्या लोकान्तरं गतः किमिति

कथञ्चिदभिविज्ञाय विवर्णवदनं कृशम्। भ्रातरं भरतं रामः परिजग्राह बाहुना ॥ २ ॥ आघ्राय रामस्तं मूर्ध्नि परिष्वज्य च राघवः। अङ्के भरतमारोप्य पर्यपृच्छत् समाहितः ॥ ३ ॥ क नु तेऽभूत् पिता तात यदरण्यं त्व मागतः। न हि त्वं जीवतस्तस्य वनमागन्तुमर्हसि ॥ ४ ॥ चिरस्य बत पश्यामि दूराद्भरतमागतम्। दुष्प्रतीक मरण्येऽस्मिन् किं तात वनमागतः ॥ ५ ॥ कच्चिद्धारयते तात राजा यत्त्वमिहागतः। कच्चिन्न दीनः सहसा राजा लोकान्तरं गतः ॥ ६ ॥ कच्चित् सौम्य न ते राज्यं भ्रष्टं बालस्य शाश्वतम् ॥ ७ ॥

सिद्ध्यति। तत्र हेतुः यदिति। तदुपपादयति नहीति। जीवतः जीवति। अनादरे षष्ठी। वनं नागन्तुमर्हसि, शुश्रूषणपरत्वादिति भावः। यद्वा तस्य त्वद्विरहासहिष्णुत्वादिति रामस्य प्रश्नान्तरसम्बन्धदर्शनेन भरतो नोत्तरमुक्तवानिति बोध्यम् ॥ ४ ॥ चिरस्येति। बतेत्यद्भुते। "खेदानुकम्पासन्तोष विस्मयामन्त्रणे बत" इत्यमरः। दूरात् दूरावस्थितकेकयनगरात्। दुष्प्रतीकं वैवर्ण्यादिना दुर्ज्ञेयावयवम्। "अङ्गं प्रतीकोऽवयवः" इत्यमरः। किं किमर्थम् ॥ ५ ॥ अस्मिन्नरण्ये तव किं प्रयोजनम्? प्रयोजनं द्वेधा सम्भवति। राजनि जीवति तदाज्ञया मम दर्शनम्, राजनि मृते स्वबाल्येन बलवद्भि रपहृतराज्यत्वं वा। आद्यमाह—कच्चिदिति। धारयत इति, प्राणानिति शेषः। यस्मात्त्वमिहागतः तस्माद्राजा प्राणान् धारयते कच्चित्? राजा जीवतिचेत् त्वामत्रागच्छन्तं न सहेतेति भावः। कच्चिन्न धरत इति पाठान्तरम्। तदा देहं धारयितुं न शक्नोति कच्चिदित्यर्थः ॥६॥ द्वितीयं पक्षं प्रश्नद्वयेन दर्शयति—

अतिदुःखितस्य भरतस्य दुःखमपनेतु प्रश्नव्याजेन रामो धर्ममुपदिशति—क न्वित्यादिना। तस्य जीवत इत्यनादरे षष्ठी ॥ ४ ॥ चिरस्येति। बतेत्यद्भुते। दूरात् दूरा वस्थितकेकयनगरात्। दुष्प्रतीकं कार्श्यवैवर्ण्यादिना दुर्ज्ञेयावयवम् ॥ ५ ॥ कच्चिन्न धरते तात इति पाठः। न धरते कच्चित् देहं धारयितुं न शक्नोति कच्चित् ॥६–८॥

कच्चिदित्यादि । राज्यं भ्रष्टं न कच्चित्, प्रजानुरागो विद्यते कच्चिदित्यर्थः ॥ ७ ॥ कच्चिच्छुश्रूषस इति पितृशुश्रूषानादरेण किमागतोऽसीति पक्षान्तरम् ॥८॥ अथ राज्ञः आरोग्यं पृच्छति—कच्चिद्दशरथ इति । कुशली अनामयः । राज्ञो व्याधिपरिभूतत्वात् तत्कथनाय किमागतोसीति पक्षान्तरम् । सत्य सङ्गरः सत्यप्रतिज्ञः। सत्यप्रतिज्ञां प्रेक्ष्य पश्चात्तापेन किमकुशलं प्राप्त इति हार्दो भावः। आहर्त्ता सम्पादयिता, कर्त्तेति यावत्। धर्मे निश्चयो यस्य स धर्म

कच्चिच्छुश्रूषसे तात पितरं सत्यविक्रमम् ॥ ८ ॥ कच्चिद्दशरथो राजा कुशली सत्यसङ्गरः । राजसूयाश्वमेधाना माहर्त्ता धर्मनिश्चयः॥ ९ ॥ स कच्चिद् ब्राह्मणो विद्वान् धर्मनित्यो महाद्युतिः। इक्ष्वाकूणामुपाध्यायो यथावत्तात पूज्यते ॥ १० ॥ सा तात कच्चित्कौसल्या सुमित्रा च प्रजावती । सुखिनी कच्चिदार्य्या च देवी नन्दति कैकयी ॥ ११ ॥ कच्चिद्विनयसम्पन्नः कुलपुत्रो बहुश्रुतः । अनसूयुरनुद्रष्टा सत्कृतस्ते पुरोहितः ॥ १२ ॥ कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः । हुतं च होष्यमाणं च काले वेदयते सदा ॥ १३ ॥

निश्चयः ॥ ९ ॥ स कच्चिदिति । सः प्रसिद्धः । ब्राह्मणः ब्रह्मवित् । "तदधीते तद्वेद" इत्यण् । विद्वान् सर्वविद्यासु कुशलः । धर्मनित्यः ज्ञानानुगुण मनुष्ठातेत्यर्थः । महाद्युतिः तत्कृतब्रह्मवर्चसयुक्तः । इक्ष्वाकूणामुपाध्यायः कुलगुरुः वसिष्ठः । यथावत् यथापूर्वम् । तातवत्संपूज्यते बहुमन्यते ॥ १० ॥ सा तातेति । सा पूर्वं दुःखिततया अनुभूता कौसल्या सुखिनी कच्चित्। प्रजावती सुप्रजाः सुमित्रा च सुखिनी कच्चिदित्यन्वयः। आर्येति स्वमातुरपि बहु मानोक्तिः । कैकेयी नन्दति कच्चित्, राज्यलाभेनेति शेषः ॥ ११ ॥ कच्चिद्विनयसम्पन्न इति । विनयसम्पन्नः निरहङ्कारः । कुलपुत्रः सत्कुलप्रसूतः । बहुश्रुतमवधारणं यस्य स तथा । अनसूयुः । छान्दस उप्रत्ययः । अनुद्रष्टा वसिष्ठोपदिष्टानामुपद्रष्टा । ते पुरोहित इत्यनेन रामस्य सुयज्ञ इव भरत स्यापि प्रातिस्विकः कश्चित्पुरोहितोऽस्तीति गम्यते । सुयज्ञ एवोच्यत इत्यप्याहुः । सत्कृतः पूजितः कच्चिदित्यन्वयः। अनेन पुरोहितः सदा सत्कर्तव्य इति शिक्षितम्। एवमुत्तरत्रापि योजनीयम् ॥ १२ ॥ "पितृव्यपुत्रे सापत्ने परनारीसुतेषु च। विवाहदानयज्ञादौ परिवेदो न दूषणम् ॥" इति स्मरणात् द्वैमातुरेष्वधिवेदनदोषाभावाद्यज्ञोऽपि कृत इत्यारोप्य पृच्छति—कच्चिदग्निष्विति । अथवा अग्निषु अग्निकार्येषु युक्तः सावधानः नियुक्तो वा, अग्निशुश्रूषण



आहर्ता कर्तेत्यर्थः । धर्मनिश्चयः धर्मबुद्धिरित्यर्थः ॥ ९ ॥ उपाध्यायो वसिष्ठः ॥ १० ॥ ११ ॥ कुलपुत्रः सत्कुलप्रसूतः । अनुद्रष्टा अनन्तद्रष्टा । ते पुरोहित इत्यनेन वसिष्ठपुत्रस्सुयज्ञोऽभिप्रेतः ॥ १२ ॥ अग्निषु अग्निकार्येषु । युक्तो नियुक्तः ॥ १३ ॥

पर इत्यर्थः । विधिज्ञः अग्निहोत्राद्यश्वमेधान्तसकलयागविधिज्ञः । मतिमान् ऊहापोहादिकल्पनचतुरः । ऋजुः प्रत्यक्षपरोक्षयोरेकरूपानुष्ठानवान्, एकरूपकरणत्रय इतिवार्थः । पुरोहित इति शेषः । काले तत्तद्धोमकाले । वेदयते तुभ्यं ज्ञापयति कच्चित् ॥ १३ ॥ कच्चिद्देवानिति । अभिमन्यसे बहुमन्यसे। देवेषु बहुमतिर्यज्ञादिभिराराधनम्, पितृषु मातृषु च वचनकरणशुश्रूषणे । भृत्यानितिपाठे—तत्र बहुमतिः दानं । गुरुष्वनुवर्तनाभिमतकरणादि,

कच्चिद्देवान् पितॄन् मातॄर्गुरून् पितृसमानपि । वृद्धांश्च तात वैद्यांश्च ब्राह्मणांश्चाभिमन्यसे ॥ १४ ॥ इष्वस्त्रवरसम्पन्नमर्थशास्त्रविशारदम् । सुधन्वानमुपाध्यायं कच्चित्त्वं तात मन्यसे ॥ १५ ॥ कच्चिदात्मसमाः शूराः श्रुतवन्तो जितेन्द्रियाः । कुलीनाश्चेङ्गितज्ञाश्च कृतास्ते तात मन्त्रिणः ॥ १६ ॥ मन्त्रो विजयमूलं हि राज्ञां भवति राघव । सुसंवृतो मन्त्रधरैरमात्यैः शास्त्रकोविदैः ॥ १७ ॥ कच्चिन्निद्रावशं नैषीः कच्चित्काले प्रबुध्यसे । कच्चिच्चापररात्रेषु चिन्तयस्यर्थनैपुणम् ॥ १८ ॥

पितृसमेषु ज्ञातिष्वर्थदानम्, वृद्धादिषु नमस्कारादि । वृद्धाः ज्ञानशीलवयोभिः । विद्या येषां सन्तीति वैद्याः विद्वांसः तान् । ब्राह्मणान् ब्रह्मविदः । यद्वा वैद्यान् भिषजः तेषां बहुमतिश्च धनादिना परितोषणम् । ब्राह्मणानिति जातिमात्रपरो वा । तदा विद्याशीलादिकमपरीक्ष्य ब्राह्मणत्वमात्रेण यथायोग्यं बहुमानं विवक्षितम् ॥ १४ ॥ इष्वस्त्रवरसम्पन्नमिति-इषवः अमन्त्रका बाणाः, अस्त्राणि समन्त्रकाः, वरशब्दः प्रत्येकमभिसम्बध्यते । अर्थशास्त्रं नीतिशास्त्रम् । सुधन्वानं सुधन्वनामकम् उपाध्यायं धनुर्वेदाचार्यम् । मन्यसे बहुमन्यसे ॥ १५ ॥ आत्मसमाः विश्वसनीया इति यावत् । शूराः धीरा इति यावत् । श्रुतवन्तः नीतिशास्त्रज्ञाः । "श्रुतं शास्त्रावधृतयोः" इत्यमरः । जितेन्द्रियाः परैरलोभनीया इति यावत् । कुलीनाः प्रामाणिककुलोत्पन्नाः । ते त्वया ॥ १६ ॥ एतादृशमन्त्रिकरणे किं कारणम् ? तत्राह—मन्त्र इति । सुसंवृतः सुतरांगुप्तः । शास्त्रकोविदैः नीतिशास्त्रनिपुणैः । मन्त्रधरैः अमात्यैः । सुसंवृतो मन्त्रो हि विजयमूलं भवतीत्यन्वयः ॥ १७ ॥ कच्चिदिति । अर्थनैपुणम् अर्थविषयसामर्थ्यमिति यावत् ॥ १८ ॥

अभिमन्यसे यथावद्बहुमन्यस इत्यर्थः ॥ १४ ॥ इष्विति । इष्वस्त्रवरसम्पन्नम् इषवः अमन्त्रकाः, अस्त्राणि समन्त्रकाणि, वरशब्दः प्रत्येकमभिसम्बध्यते । सुधन्वानं सुधन्वनामानमुपाध्यायं धनुर्वेदाचार्यम् ॥ १५ ॥ १६ ॥ मन्त्र इति । सुसंवृतः सुतरांगुप्तः ॥ १७ ॥ १८ ॥

कच्चिन्मन्त्रयस इति। एको न मन्त्रयसे कच्चित्, एकेन मन्त्रे क्रियमाणे स्वकार्याभिनिवेशेन गुणागुणयोर्याथार्थ्यग्रहणं न सिद्ध्येदिति भावः। बहुभिः सह न मन्त्रसये कच्चित् बहुभिस्सह मन्त्रणेपि प्रथमंतावदैकमत्यं न घटते, मन्त्रभेदश्च भवेदिति भावः। राष्ट्रं जनपदं न परिधावति न व्याप्नोति। पूर्वं मन्त्रसंवरणमन्यहेतुतयोक्तम्, अत्र तु स्वतन्त्रतयोच्यत इति न पुनरुक्तिः॥१९॥ कच्चिदर्थमिति। लघुमूलं लघुसाधनम्। महोदयं महाफलम्। अर्थं

कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह। कच्चित्ते मन्त्रितो मन्त्रो राष्ट्रं न परिधावति॥ १९॥
कच्चिदर्थं विनिश्चित्य लघुमूलं महोदयम्। क्षिप्रमारभसे कर्तुं न दीर्घयसि राघव॥ २०॥
कच्चित्ते सुकृतान्येव कृतरूपाणि वा पुनः। विदुस्ते सर्वकार्याणि न कर्त्तव्यानि पार्थिवाः॥ २१॥
कच्चिन्न तर्कैर्युक्त्या वा ये चाप्यपरिकीर्तिताः। त्वया वा तव वाऽमात्यैर्बुध्यते तात मन्त्रितम्॥ २२॥

कार्यं विनिश्चित्य क्षिप्रमारभसे कच्चित्, न दीर्घयसि न विलम्बसे कच्चित्। एवमन्वयव्यतिरेकाभ्यामुक्तम् "क्षिप्रमक्रियमाणस्य कालः पिबति तत्फलम्" इतिभावः॥२०॥ कच्चित्ते सुकृतानीति। पार्थिवाः सामन्तनृपाः। ते सर्वकार्य्याणि मन्त्रितसर्वकार्य्याणि। सुकृतान्येव सुनिष्पन्नान्येव विदुः कच्चित् कृतरूपाणि कृतप्रायाणि वा क्षिप्रमेव फलोन्मुखानीति यावत्। कर्त्तव्यानि न विदुः मन्त्रेण कर्त्तव्यतया निश्चितानि करणात् पूर्वं न विदुरित्यर्थः॥२१॥ कच्चिन्नेति। मन्त्रितं कार्य्यं त्वया वा तवामात्यैर्वा हेतुभिस्तर्कैः ऊहैः युक्त्या वा अनुमानेन वा ये चाप्यपरिकीर्तिताः अनुक्ताः इङ्गितादयः तैर्वा न बुद्ध्यते कच्चित्, परैरिति शेषः। भवान् भवदीयामात्याश्च मन्त्रितार्थविषयपराभ्यूहास्थानानि सूक्ष्माण्यपि स्थगयन्ति कच्चिदित्यर्थः॥ २२॥

एको न मन्त्रयसे कच्चित् एकेन मन्त्रे क्रियमाणे स्वकार्याभिनिवेशेन गुणागुणयोर्याथार्थ्यग्रहणं न सिद्ध्यतीति भावः। बहुभिस्सह मन्त्रणे प्रथमं तावदैकमत्यं न घटते मन्त्रभेदश्च भवेदिति भावः। न परिधावति न व्याप्नोति॥ १९॥ लघुमूलं लघुसाधनम्। महोदयं महाफलम्। न दीर्घयसि विलम्बं न कार्षीः॥ २०॥ पार्थिवाः सामन्तपृथिवीश्वराः ते सर्वकार्याणि सुकृतान्येव सुनिष्पन्नान्येव विदुः कच्चित् कृतप्रायाणि वा क्षिप्रमेव फलोन्मुखानीति यावत्। कर्तव्यानि न विदुः मन्त्रेण कर्तव्यतया निश्चितानि करणात्पूर्वं न विदुरित्यर्थः॥ २१॥ तर्कः ऊहः युक्तिकारणम् अर्थापत्तिर्वा। ये चापरिकीर्तिताः अनुक्ता इङ्गितादयः तैर्युक्त्या वा इङ्गितादिभिर्वा त्वया वा तव अमात्यैर्वा सावधानभूतैर्मन्त्रितं मन्त्रं न बुद्ध्यते कच्चित्। अन्यैरिति शेषः॥ २२॥

मूर्खाणां सहस्रात् मूर्खसहस्रं परित्यज्यापि । ल्यब्लोपे पञ्चमी । पण्डितं विमृश्यकारिणमेकमिच्छसि कच्चित् । पण्डितपरिग्रहे हेतुमाह पण्डित इति । अर्थकृच्छ्रेषु कार्यसङ्कटेषु (पाठान्तरम् । अर्थकृच्छ्रेषु अर्थसङ्कटेषु) महन्निःश्रेयसं महदैश्वर्यं प्रापयेदित्यर्थः । (महन्निःश्रेयसम् अव्यभिचारितफलसाधनोपायम्) कुर्यात् उपदिशेदित्यर्थः ॥ २३ ॥ एवमन्वयेनोपपाद्य व्यतिरेकमुखेनोपपादयति—सहस्राणीति । उपास्ते आश्रयति, संगृह्णातीत्यर्थः ।

कच्चित् सहस्रान् मूर्खाणामेकमिच्छसि पण्डितम् । पण्डितो ह्यर्थकृच्छ्रेषु कुर्य्यान्निःश्रेयसं महत् ॥ २३ ॥ सहस्राण्यपि मूर्खाणां यद्युपास्ते महीपतिः । अथवाप्ययुतान्येव नास्ति तेषु सहायता ॥ २४ ॥ एकोप्यमात्यो मेधावी शूरो दक्षो विचक्षणः । राजानं राजमात्रं वा प्रापयेन्महतीं श्रियम् ॥ २५ ॥ कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः । जघन्यास्तु जघन्येषु भृत्याः कर्मसु योजिताः ॥ २६ ॥ अमात्यानुपधातीतान् पितृपैतामहाञ्छुचीन् । श्रेष्ठान् श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ॥ २७ ॥

नास्तीत्यस्मात्पूर्वं तथापीत्युपस्कार्यम् । सहायता मन्त्रोपायसहायत्वम् ॥ २४ ॥ पण्डितशब्दार्थं विवृण्वन्नाह—एक इति । मेधाऽस्यास्तीति मेधावी । "अस्मायामेधास्रजोविनिः" इति विनिः । झटिति परोपन्यस्तार्थग्रहणपटुरित्यर्थः । शूरः स्थिरबुद्धिः । दक्षः विचारसमर्थः । विचक्षणः अभ्यस्तनीतिशास्त्रः ॥ २५ ॥ कच्चिन्मुख्या इति । मुख्याः भृत्याः महत्सु मुख्येष्वेव कार्येषु वचनपरिवेषणादिषु कच्चिन्नियोजिताः न तु हीनेषु कार्येषु । मध्यमाः जात्यादिना मध्यमा भृत्याः मध्यमेष्वेव कार्येषु शय्यासनानयनादिषु नियोजिताः न तूत्तमाधमकार्य्येषु । जघन्याः जात्यादिहीनाः भृत्याः जघन्येष्वेव कार्येषु पादप्रक्षालनपादुकानयनपादसंवाहनादिषु नियोजिताः नतूत्तममध्यमेषु कार्येषु योजिताः कच्चित्, अन्यथा महद्वैशसं भवेदिति भाव ॥२६॥ भृत्येषूक्तं न्यायममात्येष्वतिदिशति—अमात्यानिति । उपधातीतान् स्वव्यतिरिक्तेष्वर्थाद्युपाधिरहितान् । यद्वा सुपरीक्षातीतान् "उपधा सुपरीक्षा स्यात्" इति

मूर्खाणां सहस्रात् अविमृश्यकारिणां सहस्रात् पण्डितं सम्यग्विमृश्यकारिणमेकमिच्छसि कच्चित् । पण्डितग्रहणे हेतुमाह पण्डित इति । अर्थकृच्छ्रेषु अर्थसङ्कटेषु महन्निःश्रेयसं कुर्यात् महदैश्वर्यं प्रापयेदित्यर्थः ॥ २३ ॥ २४ ॥ एक इति । विचक्षणः अभ्यस्तनीतिशास्त्र इत्यर्थः ॥ २५ ॥ २६ ॥ अमात्यानिति । उपधातीतान् उपधा परीक्षा "उपधा वा परीक्षा स्यात्" इति हलायुधः । अनर्घवस्त्राभरणादिकं पुरुषमुखेन सम्प्रेष्य राजस्त्रीप्रेषितमिति प्रबोध्य परीक्षां कुर्वते राजानः,

वैजयन्ती । श्लाघ्यवस्त्राभरणादिकं पुरुषमुखेन सम्प्रेष्य अन्तःपुरप्रेषितं परराजप्रेषितमिति प्रलोभ्य परीक्षां कुर्वन्ति राजानः, तामतीतानित्यर्थः । पितृपैतामहान् कुलक्रमागतान् । शुचीन् करणत्रयशुद्धियुक्तान् ॥ २७ ॥ कच्चिन्नोग्रेणेति । तव उग्रेण दण्डेन उद्वेजितप्रजं पीडितप्रजायुक्तं राष्ट्रं राज्यं मन्त्रिणः नानुजानन्ति नानुमन्यन्ते कच्चित्, राजानं त्वामुग्रदण्डात निवर्तयन्ति कच्चिदित्यर्थः ॥ २८ ॥ कच्चित्त्वामिति । उग्रप्रतिग्रहीतारमित्युपमानो

कच्चिन्नोग्रेण दण्डेन भृशमुद्वेजितप्रजम् । राष्ट्रं तवानुजानन्ति मन्त्रिणः कैकयीसुत ॥ २८ ॥
कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा । उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः ॥ २९ ॥
उपायकुशलं वैद्यं भृत्यसन्दूषणे रतम् । शूरमैश्वर्यकामं च यो न हन्ति स वध्यते ॥ ३० ॥

पमेययोः साधारणविशेषणम् । उग्रेण दण्डोपायेनादण्ड्येभ्यो धनग्रहणं कुर्वन्तं त्वाम् उग्रप्रतिग्रहीतारम् उग्रेण दुर्दानेन धनप्रतिग्रहीतारं पतितं यष्टुकामं पतितं याजका ऋत्विज इव, उग्रेण कर्मणा बलात्कारेण प्रतिग्रहीतारं कामयानं पुरुषं स्त्रिय इव वचनाज्जानन्ति कच्चित्, प्रजा इति शेषः । प्रजावमानहेतुभूतं न्यायातिक्रमेण उग्रकरग्रहणं त्वयि नास्ति कच्चिदिति भावः ॥२९॥ उपायेति । उपायेषु सामाद्युपायेषु । कुशलं निपुणं । वैद्यं कणिकोक्तकुटिलनीतिविद्याविदम् ( चाणक्याद्युक्तकुटिलनीतिशास्त्रविदम् ) भृत्यसन्दूषणे रतम् अन्तरङ्गभृत्यानां सन्दूषणे असद्दोषोद्घाटनेन तद्विघटने रतम् । शूरं राजहिंसनेपि निर्भयम् । ऐश्वर्यकामं क्रमेण राजैश्वर्याक्रमणकामं च पुरुषं यो न हन्ति स राजा तेनैव वध्यते, राज्याद्भ्रष्टो भवतीत्यर्थः । एवंविधः पुरुषः तां परीक्षामतीतान् तत्रालोलुपानित्यर्थः । अत एव शुचीन् करणत्रयशुद्धियुक्तान् । पितृपैतामहान् कुलक्रमागतान् ॥ २७ ॥ राज्यमनुजानन्ति रक्ष्यत्वेनानुमन्यन्ते कच्चित् ॥ २८ ॥ पतितं यष्टुकामं पतितम् । याजका यथा ऋत्विज इव उग्रप्रतिग्रहीतारम् उग्रेण कर्मणा प्रतिग्रहीतारम्, बलात्प्रतिग्रहीतारमिति यावत् । कामयानं कामुकं स्त्रिय इव च त्वां नावजानन्ति कच्चित्, प्रजा इति शेषः । प्रजातिक्रमणमुग्रकरग्रहणं च त्वयि नास्ति कच्चिदित्यर्थः ॥ २९ ॥ उपायकुशलमिति । सामाद्युपायचतुरम् वैद्यं विद्याविदं नीतिशास्त्रज्ञमिति यावत् । भृत्यसन्दूषणे रतं येन केनापि हेतुना आप्तभृत्यविघटने रतं शूरं मरणनिर्भयम् ऐश्वर्यकामं राज्याभिलाषिणमितियावत् । यो न हन्ति न वध्यते, एवंविधपुरुषस्त्वत्सन्निधौ न वर्तते ॥ ३० ॥

कतक०–याजकाः किञ्चित्पापानुसन्धानेन पतितमिव त्वामयाज्योऽयमिति मत्वा नावजानन्ति किल । तत्र दृष्टान्तः–उग्रेत्यादि । स्त्रियः कुलस्त्रियः । उग्राद्यहीनजातीयस्त्रीप्रतिग्रहीतारं तां च कामयानं कामयमानं तस्यामत्यन्तासक्तं तयाऽवजानन्तीत्यर्थः । परे तु उग्रप्रतिग्रहीतारम् उग्रः शिवः तत्प्रतिग्रहीतारं अल्पपुंस्त्वम्, तत्प्रतिग्रहीतुरीदृशषण्डतायाः कर्मविपाकशास्त्रे उक्तेरित्याहुः ॥ २९ ॥

त्वत्सन्निधौ न वर्तते कच्चिदित्यर्थः ॥ ३० ॥ सङ्ग्राह्यसेनापतिगुणानाह—कच्चिद्धृष्ट इति । हृष्यतीति हृष्टः राजकृतसत्कारेण सन्तुष्टः । यद्वा धृष्ट इति च्छेदः । धृष्टः व्यवहारेषु प्रगल्भः । शूरः परनिग्रहपरः । मतिमान् तत्तत्समयानुगुणस्वपरसेनाव्यूहतद्भेदनसेनानयनादिचतुरबुद्धियुक्तः । धृतिमान् विपदि प्रशस्तधैर्यः । शुचिः बाह्याभ्यन्तरशुद्धियुक्तः । यद्वा शुचिः स्वामिनि सविश्वासः । कुलीनः सत्कुलप्रसूतः । अनुरक्तः स्वस्मिन्निरवधिकप्रीतिमान् ।

कच्चिद्धृष्टश्च शूरश्च मतिमान् धृतिमाञ्छुचिः । कुलीनश्चानुरक्तश्च दक्षः सेनापतिः कृतः ॥३१॥ बलवन्तश्च कच्चित्ते मुख्या युद्धविशारदाः । दृष्टापदाना विक्रान्तास्त्वया सत्कृत्य मानिताः ॥३२॥ कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम् । सम्प्राप्तकालं दातव्यं ददासि न विलम्बसे ॥३३॥ कालातिक्रमणाच्चैव भक्तवेतनयोर्भृताः । भर्तुः कुप्यन्ति दुष्यन्ति सोऽनर्थः सुमहान् स्मृतः ॥३४॥ कच्चित् सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः । कच्चित्प्राणांस्तवार्थेषु सन्त्यजन्ति समाहिताः ॥३५॥ कच्चिज्जानपदो विद्वान् दक्षिणः प्रतिभानवान् । यथोक्तवादी दूतस्ते कृतो भरत पण्डितः ॥३६॥

दक्षः कार्यकुशलः एवंविधः सेनापतिः कृतः कच्चित्, तादृशं पूर्वसेनापतिं विहायातादृशमन्यं न परिगृहीतवानसि कच्चिदित्यर्थः ॥ ३१ ॥ बलवन्त इति । बलवन्तः अत्यन्तबलाः । ते प्रसिद्धाः । मुख्याः गणमुख्याः । युद्धविशारदाः युद्धे समर्थाः । दृष्टं साक्षात्कृतम् अपदानं पूर्ववृत्तं पौरुषं येषां ते तथोक्ताः । विक्रान्ताः शूराः । "शूरो वीरश्च विक्रान्तः" इत्यमरः । सत्कृत्य मानिताः पारितोषिकदानपूर्वकं श्लाघिताः कच्चित् ॥ ३२ ॥ कच्चिद् बलस्येति । बलस्य सैन्यस्य । सम्प्राप्तकालं कालप्राप्तम् । दातव्यं तत्तत्काले देयम् । भक्तमन्नं वेतनं प्रतिमासं देयां भृतिं च । यथोचितं तत्तत्कार्य्यौचितं ददासि । न विलम्बसे कच्चित् कालातिक्रमणं विना ददासि कच्चित् ॥ ३३ ॥ विलम्बे दोषमाह—कालातिक्रमणादिति । भृताः भृतिजीविनः, भटा इतियावत् । भर्तुः कुप्यन्ति भर्तारं प्रति कुप्यन्ति । दुष्यन्ति कोपेन विकृता भवन्ति, स विकारः सुमहाननर्थः स्मृतः अनर्थकरो भवेदित्यर्थः ॥३४॥ कच्चित् सर्वं इति । कुलपुत्राः क्षत्रियकुलप्रसूताः ज्ञातय इति वा । प्रधानतः प्रधानाः । सार्वविभक्तिकस्तसिः ॥ ३५ ॥ कच्चिज्जानपद इति । जानपदः

धृतिमान् विपदि प्रशस्तधैर्यः । शुचिः बाह्याभ्यन्तरशुद्धियुक्तः । दक्षः चतुरः ॥३१॥ मुख्या गणमुख्याः। दृष्टापदानाः दृष्टमपदानं पूर्ववृत्तं पौरुषं कर्म येषां ते तथा। विक्रान्ताः शूराः ॥ ३२ ॥ भक्तमन्नम् एतद्व्रीह्यादीनामुपलक्षणम् । वेतनं भृतिः ॥ ३३ ॥ भृताः भृत्युपजीविनः ॥ ३४ ॥ कुलपुत्राः ज्ञातयः । प्रधानतः प्रधानाः ॥ ३५ ॥ जानपदः जनपदे भवः । विद्वान् पराभिप्रायज्ञः । प्रतिभानवान् सद्युत्पन्नमतिः । पण्डितः परिच्छेत्ता ॥ ३६ ॥

स्वजनपदभवः । परजनपदभवश्चेत्पक्षपातमाचरेत् । विद्वान् ... प्रतिभानवान् प्रत्युत्पन्नमतिः, परोक्तस्याविलम्बमुचितो त्तरज्ञ इति यावत्। यथोक्तवादी उक्तमनतिक्रम्य सन्देशप्रतिसन्देशवदनशीलः। कार्योपयोगितया बहुमुखं व्याहरन्नपि स्वाम्युक्तमजहदेव व्यवहर्तेति यावत् । पण्डितः परिच्छेत्ता । " परिच्छेदो हि पाण्डित्यम् " इत्युक्तेः ॥ ३६ ॥ कच्चिदष्टादशान्येष्विति । अन्येषु परपक्षेषु । अष्टादश तीर्थानि स्वपक्षे पञ्च



**कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च। त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ ३७ ॥**

दशतीर्थानि च। अविज्ञातैः परस्परमन्यैश्चाविज्ञातैः। विज्ञातत्वे तेषां साङ्केतिकव्यवहारः प्रादुष्यात् । एकस्मिन् तीर्थे त्रिभिस्त्रिभिः चारकैः वेषान्तर धारिभिश्चारैः । कुत्रिमार्थे कप्रत्ययः । वेत्सि कच्चित्, एतानि न्यायतोऽन्यायतो वा प्रवर्तन्त इति जानासि कच्चिदित्यर्थः । तानीमानि अष्टादश नीतिशास्त्रोक्तानि तीर्थानि–मन्त्रिपुरोहितयुवराजसेनापतिदौवारिकान्तर्वंशिककारागाराधिकृतार्थसञ्चयकृत्कार्यनियोजकप्राड्विवाकसेनानायकनगराध्यक्ष कर्मान्तिकसभ्यधर्माध्यक्षदण्डपालदुर्गपालराष्ट्रान्तपालाः । एष्वेव मन्त्रिपुरोहितयुवराजव्यतिरिक्तानि स्वपक्षे पञ्चदशतीर्थानि । मन्त्रिपुरोहितयुवराज सेनापतयः प्रसिद्धाः । दौवारिकः अन्तःपुरादिद्वाररक्षणाधिकृतजननिर्वाहकः । अन्तर्वंशिकः अन्तःपुरकार्यनिर्वाहकः । कारागारम् अपराधिनां बन्धनगृहम्, तत्राधिकृतः कारागाराधिकृतः । अर्थसञ्चयकृत् धनाध्यक्षः । कार्यनियोजकः राजाज्ञाया बहिः प्रचारकर्ता । प्राड्विवाकः व्यवहारद्रष्टा । तल्लक्षणमुक्तम्–" विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च । प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः ॥ " इति । सेनानायकः सेनायाः भृतिजीवनादि दानाध्यक्षः। नगराध्यक्षः रात्रौ नगरशोधननगरद्वारप्राकारादिरक्षणसंविधानादिकर्ता । कर्मान्तिकः कार्यान्ते वेतनग्राहिणां सैनिकव्यतिरिक्तानां सर्वेषां राज्ञस्सकाशात् एकधा स्वयं वेतनं गृहीत्वा प्रत्येकं तद्यो दापयति सः । सभ्यः प्रतिदिनं सभालङ्करणराजमन्त्रिप्रभृतिसमुचितासनविधानसभ्या

अन्येषु परपक्षेषु मन्त्रादीन्यष्टादशतीर्थानि स्वपक्षे पञ्चदशतीर्थानि च परस्परमविज्ञातैरन्योन्यमविज्ञातैस्त्रिभिस्त्रिभिश्चारकैर्वेषान्तरधारिभिः चारैर्वेत्सि कच्चिदिति सम्बन्धः । " चारान्विचारयेत्तीर्थेष्वात्मनश्च परस्य च । पाषण्डादीनविज्ञातानन्योन्यमितरेष्वपि ॥ मन्त्रिणं युवराजं च हित्वा स्वेषु पुरोहितम् । " इति । अष्टादशतीर्थान्येतानि–मन्त्रिपुरोहितयुवराजसेनापतिदौवारिकान्तर्वंशिककारागाराधिकृतार्थसञ्चयकृत्कृत्याकृत्यनियोजकप्राड्विवाकसेनानायकनगराध्यक्षदण्डपाल दुर्गपालराष्ट्रान्तपालका इति नीतिशास्त्रोक्तान्यष्टादश तीर्थानि । प्राड्विवाकलक्षणम्–" विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च । प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः ॥ " इति । एतेषां तीर्थशब्दवाच्यत्वे हलायुधः " योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि ॥ " इति ॥ ३७ ॥

नयनासभ्यनिरोधनयथोचितनिवेशनसभानिश्शब्दीकरणसभारक्षणादिविधायिजननिर्वाहकः । धर्माध्यक्षः दायभागादिविषये विवादं कुर्वतां विवाद पदविशोधनपूर्वकं यथाधर्मशास्त्रं विवादशमनकर्ता । दण्डपालः परस्वापहरणाद्यपराधकारिणां राजाज्ञाप्रकारेण करशिरश्छेदादिविधायिजननियो जकः । दुर्गपालः गिरिजलवनादिदुर्गसन्ततरक्षकजननिर्वाहकः । राष्ट्रान्तपालः स्वराष्ट्रसीमान्ते सर्वासु दिक्षु परराजाक्रमणादिनिवारणाय सदा तद्रक्षणं

कच्चिद्व्यपास्तानहितान् प्रतियातांश्च सर्वदा । दुर्बलाननवज्ञाय वर्त्तसे रिपुसूदन ॥ ३८ ॥
कच्चिन्न लोकायतिकान् ब्राह्मणांस्तात सेवसे । अनर्थकुशला ह्येते बालाः पण्डितमानिनः ॥ ३९ ॥

कुर्वतां निर्वाहकः । स्वकीयमन्त्रिपुरोहितयुवराजा न परीक्ष्याः, तेषां सदा स्वसमीपवर्तित्वेन तत्स्वभावस्य स्वेनैव ज्ञातत्वात् । तथोक्तं नीतिशास्त्रे— " चारान् विचारयेत्तीर्थेष्वात्मनश्च परस्य च । पाषण्डादीनविज्ञातानन्योन्यमितरैरपि ॥ मन्त्रिणं युवराजं च हित्वा स्वेषु पुरोहितम् ॥ " इति । स्वेषु मन्त्रिणं युवराजं पुरोहितं च हित्वेत्यन्वयः । एषां तीर्थशब्दवाच्यत्वमुक्तं हलायुधे— " योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि॥" इति ॥ ३७ ॥ कच्चिद्व्यपास्तानिति । व्यपास्तान् निष्कासितान् । प्रतियातान् पुनरागतान् । अहितान् शत्रून् दुर्बलाननव ज्ञाय वर्त्तसे काच्चित्, दुर्बला इत्यवज्ञां कृत्वा न वर्त्तसे कच्चिदिति भावः । प्रतियानमवष्टम्भमन्तरेण न सम्भवतीति मत्वा तेषु सावधानतया स्थातव्य [illegible] भावः ॥ ३८ ॥ कच्चिन्नेति । लोकायतिकान् लोकेष्वायतं विस्तृतं लोकायतं प्रत्यक्षप्रमाणम् । यद्वा लोकायतशब्दाभ्यां प्रत्यक्षमनुमानं चोच्यते । लोक्यते साक्षात्क्रियतेऽनेनेति लोकः प्रत्यक्षप्रमाणम्, आ समन्ताद्व्याप्य धूमादिसमीपवर्ती वह्न्यादिर्यत्यते गृह्यतेऽनेनेति आयतमनुमानं तदेषा मस्तीति लोकायतिकाः । " अत इनिठनौ " इति ठन् प्रत्ययः । नास्तिका बौद्धचार्वाकादयः तान् ब्राह्मणान् न सेवसे कच्चित् । असेवार्यां हेतुमाह अनर्थेति । अर्थेषु तत्त्वार्थेषु कुशलाः यथावज्ज्ञानवन्तः ते न भवन्तीत्यनर्थकुशलाः । यद्वा अनर्थः धर्मानुष्ठानश्रद्धावैकल्यतन्मूलकसज्जनबहिष्कार नरकपतनादिः तत्र कुशलाः, दुर्बोधनेन तत्सम्पादका इत्यर्थः । बालाः तत्त्वज्ञानविरोध्यज्ञानयुक्ताः । अथ च पण्डितमानिनः अपण्डितमात्मानं

व्यपास्तान् निष्कासितान् । प्रतियातान् पुनरागतान् अहितान् शत्रून् दुर्बलाननवज्ञाय वर्तसे कच्चित् ॥३८॥ लोकायतिकान् चार्वाकान् । बालाः बालिशाः । अनर्थ

पण्डितं मन्वानाः । एते अनर्थकुशला हि ॥ ३९ ॥ अनर्थकुशलत्वमेवोपपादयति–धर्मशास्त्रेष्विति । दुर्बुधाः वेदमार्गविपरीतबुद्धयः । ते मुख्येषु तामसस्मृतिपुराणादिव्यावृत्तेषु सात्त्विकमहर्षिप्रणीतेषु सज्जनादरणीयेषु । धर्मशास्त्रेषु धर्मप्रमापकशास्त्रेषु विद्यमानेषु तत्सम्प्रदायपरम्परया पठ्यमानेषु सत्सु । आन्वीक्षिकीं बुद्धिं प्राप्य शुष्कतर्कविषयां बुद्धिमास्थाय । निरर्थं निष्प्रयोजनं प्रवदन्ति । " आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।

धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्बुधाः । बुद्धिमान्वीक्षिकीं प्राप्य निरर्थं प्रवदन्ति ते ॥ ४० ॥ वीरैरध्युषितां पूर्वमस्माकं तात पूर्वकैः । सत्यनामां दृढद्वारां हस्त्यश्वरथसङ्कुलाम् ॥४१॥ ब्राह्मणैः क्षत्त्रियैर्वैश्यैः स्वकर्मनिरतैः सदा । जितेन्द्रियैर्महोत्साहैर्वृतामार्यैः सहस्रशः ॥४२॥ प्रासादैर्विविधाकारैर्वृतां वैद्यजनाकुलाम् । कच्चित्सुमुदितां स्फीतामयोध्यां परिरक्षसि ॥ ४३ ॥ कच्चिच्चैत्यशतैर्जुष्टः सुनिविष्टजनाकुलः । देवस्थानैः प्रपाभिश्च तटाकैश्चोपशोभितः ॥ ४४ ॥ प्रहृष्टनरनारीकः समाजोत्सवशोभितः । सुकृष्टसीमा पशुमान् हिंसाभिः परिवर्जितः ॥ ४५ ॥

यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ " इति स्मृतेः ॥ ४० ॥ वीरैरित्यादिश्लोकत्रयमेकं वाक्यम् । अयोध्यां सत्यनामां परिरक्षसि कच्चित्, सत्यनामां " डाबुभाभ्यामन्यतरस्याम् " इति डाप् । अयोध्येति नाम सत्यं यथा भवति तथा रक्षसि कच्चिदित्यर्थः । सत्यनामात्वमूलं वीरैरध्युषितामित्यादि । तत्फलानि सत्यनामात्वादीनि । आर्यैः पूज्यैः । तत्र हेतवः स्वकर्मनिरतत्वादयः । वैद्यजनाकुलां वैद्यजनाः विद्वज्जनाः तैरावृताम् । सुमुदितां सुसन्तुष्टजनामित्यर्थः । स्फीतां समृद्धाम् ॥ ४१–४३ ॥ कच्चिच्चैत्यशतैरित्यादिश्लोकचतुष्टयमेकं वाक्यम् । चित्यशतैः चैत्यशतैरिति च पाठः । उभयत्रापि अश्वमेधान्तमहायज्ञचयनप्रदेशसमूहैरित्यर्थः । सुनिविष्टजनाकुलः सुप्रतिष्ठितजनव्याप्तः । सुप्रतिष्ठितत्वं च राजन्यत्वसुवृष्ट्यारोग्यादिदेशगुणाकृष्टचित्ततया देशान्तरजिगमिषाराहित्येन तत्रैवासक्तत्वम् । देवस्थानैः देवालयैः । प्रपाभिः पानीयशालाभिः, मार्गप्रवर्तिताभिरिति शेषः । " प्रपा पानीयशालिका " इत्यमरः । तटाकैः सस्यादिवृद्धिनिमित्तैर्महाजलाशयैः । समाजोत्सवशोभितः समाजैः धर्मनिर्णयार्थसभाभिः शोभितः ।



कुशलाः अनर्थसम्पादने चतुराः ॥ ३९ ॥ धर्मशास्त्रेष्विति । दुर्बुधाः वेदमार्गविपरीतबुद्धयः । आन्वीक्षिकीं बुद्धिं प्राप्य शुष्कतर्कविषयां बुद्धिमास्थाय ॥ ४० ॥ वीरैरित्यादि । अयोध्यां सत्यनामां परिरक्षसि कच्चित् अयोध्येति नाम सत्यं यथा तथा रक्षसे कच्चित् ॥ ४१–४३ ॥ प्रपाभिः पानीयशालाभिः ॥ ४४ ॥ ४५ ॥

यद्वा नदीतटाकादितीरवनेषु समस्तवस्तुविक्रयसौकर्याय निखिलजनविदिततया 'कृतवारसङ्केतः। कृतापणो वणिजां समूहः समाज इत्युच्यते। यद्वा समाजयुक्तोत्सवशोभितः। सुकृष्टसीमा अक्षुधा ईषत्क्षुधा च भूमिर्न तत्रास्तीत्यर्थः। यद्वा सर्वदा सुकृष्टप्रायसीमा, अकृष्टपच्यभूमियुक्त इत्यर्थः। पशुमान् गवाजादिपशुसमृद्धः। हिंसाभिः ईतिभिः षड्भिः "अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः खगाः। अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः॥" इत्युक्ताभिः परिवर्जितः। यद्वा परस्परहिंसारहित इत्यर्थः। अदेवमातृकः देवमातृकदेशरहितः, वृष्ट्येकनिष्पाद्यसस्यकदेशरहित

अदेवमातृको रम्यः श्वापदैः परिवर्जितः। परित्यक्तो भयैः सर्वैः खनिभिश्चोपशोभितः॥ ४६॥
विवर्जितो नरैः पापैर्मम पूर्वैः सुरक्षितः। कच्चिज्जनपदः स्फीतः सुखं वसति राघव॥ ४७॥
कच्चित्ते दयिताः सर्वे कृषिगोरक्षजीविनः। वार्त्तायां संश्रितस्तात लोको हि सुखमेधते॥ ४८॥

इत्यर्थः। सरयूतीरस्थत्वेन सर्वतो नदीमातृक इति यावत्। "नद्यम्बुजीवनो देशो नदीमातृक उच्यते। वृष्टिनिष्पाद्यसस्यस्तु विज्ञेयो देवमातृकः॥" इति हलायुधः। रम्यः आरामादिशोभितत्वेन रमणीयः। श्वापदैः व्याघ्रादिहिंस्रपशुभिः परिवर्जितः। भयैः सर्वैः भयहेतुभिश्चोरादिभिः सर्वैः परित्यक्तः परित स्त्यक्तः, तत्समीपदेशेपि चोरादिभयं नास्तीत्यर्थः। खनिभिः रत्नसुवर्णरजताद्याकरैः। "खनिः स्त्रियामाकरः स्यात्" इत्यमरः। पुनः कच्चिच्छब्देन प्रतिविशेषणं प्रश्न इति गम्यते "आद्यन्तयोः प्रयुक्तोऽयं कुतो नान्वेति मध्यतः। प्रधव्यतायां तुल्यायां केनार्धजरतीक्रमः। आदरातिशयोऽनेन श्रीमत् कोसलगोचरः। गम्यते रघुनाथस्य मुक्तियैंनापिपीलिकम्॥"॥ ४४-४७॥ कच्चित्ते दयिता इति। कृषिगोरक्षजीविनः वैश्याः। दयिताः कच्चित् अर्थ सम्पादनद्वारा अभिमताः। वार्त्तायां क्रयविक्रयात्मकवाणिज्ये सति। "वार्त्ता वागिङ्गितोदन्तवाणिज्यादिषु वर्त्तते" इतिवैजयन्ती। संश्रितो लोकः त्वत्सं

अदेवमातृकः वृष्टिनिष्पाद्यसस्यो देशो देवमातृकः स न भवतीत्यदेवमातृकः, नदीमातृक इत्यर्थः। तथा च हलायुधः "नद्यम्बुजीवनो देशो नदीमातृक उच्यते। वृष्टिनिष्पाद्यसस्यस्तु विज्ञेयो देवमातृकः॥" इति। खनिभिः रत्नसुवर्णरजताद्याकरैः, एतादृशजनपदः सर्वैर्भयैः परित्यक्तः कच्चित् सुखं वसति कच्चिदिति कच्चिच्छब्दद्वयस्य निर्वाहः॥ ४६॥ ४७॥ कृषिगोरक्षजीविनः वैश्यादयः। दयिताः अर्थसम्पादनद्वारा अभिमताः। वार्तायां क्रयविक्रयादिरूपवाणिज्ये सति संश्रितः

श्रितो जनः सुखमेधते हि ॥४८॥ तेषामिति । गुप्तिपरीहारैः इष्टप्रापणानिष्टनिवारणैः । ते त्वया तेषां भरणं पोषणं कृतं कच्चित् । तस्यावर्जनीयत्वमाह रक्ष्या हीति ॥ ४९ ॥ कच्चित्स्त्रिय इति । स्त्रियः स्वस्त्रियः । सान्त्वयसि तदनुकूलतया वर्त्तसे । सुरक्षिताः अन्यपुरुषसम्भाषणादिभ्य इतिशेषः । आसां स्त्रीणाम्, वचनमिति शेषः । न श्रद्दधासि आदरेण यथार्थबुद्ध्या न शृणोषीत्यर्थः । गुह्यं न भाषसे ताभ्य इति शेषः । स्त्रीणामतिचञ्चलमतित्वेन रहस्यभेद प्रसङ्गादिति भावः ॥ ५० ॥ कच्चिन्नागवनमिति । नागवनं गजोत्पत्तिस्थानभूतं वनम् । तद्रक्षणे परैर्गजग्रहणप्रसङ्ग इति भावः । धेनुकाः गजग्रहणसाधन

तेषां गुप्तिपरीहारैः कच्चित्ते भरणं कृतम् । रक्ष्या हि राज्ञा धर्मेण सर्वे विषयवासिनः ॥ ४९ ॥ कच्चित् स्त्रियः सान्त्वयसि कच्चित्ताश्च सुरक्षिताः । कच्चिन्न श्रद्दधास्यासां कच्चिद् गुह्यं न भाषसे ॥ ५० ॥ कच्चिन्नागवनं गुप्तं कच्चित्ते सन्ति धेनुकाः । कच्चिन्न गणिकाश्वानां कुञ्जराणां च तृप्यसि ॥ ५१ ॥ कच्चिद्दर्शयसे नित्यं मनुष्याणां विभूषितम् । उत्थायोत्थाय पूर्वाह्णे राजपुत्र महापथे ॥ ५२ ॥ कच्चिन्न सर्वे कर्मान्ताः प्रत्यक्षास्तेऽविशङ्कया । सर्वे वा पुनरुत्सृष्टा मध्यमेवात्र कारणम् ॥ ५३ ॥

भूताः करिण्यः । "करिणी धेनुका वशा" इत्यमरः । गणिकाश्वानां गणिकाः करिण्यः "वेश्याकरिण्योर्गणिका" इति वैजयन्ती । गणिकाश्चाश्वाश्च गणिकाश्वाः तेषां गणिकाश्वानां कुञ्जराणां च न तृप्यसि कच्चित् । तत्सम्पादनविषये तृप्तिं न प्राप्नोषि कच्चिदित्यर्थः । "पूरणगुण–" इत्यादिना समासप्रतिषेधेन सूचिता षष्ठी ॥ ५१ ॥ कच्चिद्दर्शयस इति । विभूषितम्, आत्मानमितिशेषः । महापथे सभायामिति यावत् । प्रातः सभायां स्थित्वा मनुष्याणां विभूषितमात्मानं दर्शयसे कच्चिदिति सम्बन्धः । अन्यथा राजारोग्ये तेषां शङ्का स्यादितिभावः ॥ ५२ ॥ कच्चिन्न सर्वे इति । कर्मान्ताः

आश्रितः लोको जनः सुखमेधते सुखं प्राप्नोति हि ॥ ४८ ॥ तेषामिति । गुप्तिपरीहारैः गुप्तिरिष्टप्रापणम्, परीहारः अनिष्टनिवारणं तैस्तेषां कृषिगोरक्षजीविनां भरणं कृतं कच्चिदिति सम्बन्धः ॥ ४९ ॥ आसां न श्रद्दधासि वचनमिति शेषः ॥ ५० ॥ नागवनं गजोत्पत्तिस्थानभूतं वनम् । धेनुकाः करिण्यः "करिणी धेनुका वशा" इत्यमरः । गणिकाश्वानां गणिकाः करिण्यः "वेश्याकरिण्योर्गणिका" इति वैजयन्ती । गणिकाश्वानां कुञ्जराणां च न तृप्यसे कच्चित् । तत्सम्पादनविषये तृप्तिं नाप्नोषि कच्चिदित्यर्थः ॥ ५१ ॥ विभूषितम्, आत्मानमिति शेषः ॥ ५२ ॥ कर्मान्ताः विष्टिप्रभृतिनीचकर्मकराः । अविशङ्कया विस्रम्भेण ते न प्रत्यक्षाः कच्चित्

कर्मान्तिकाः, कर्मकरा इति यावत् । अविशङ्कया ते न प्रत्यक्षाः कच्चित्, निर्भयतया त्वत्सन्निधिं प्राप्ता न कच्चिदित्यर्थः । अथवा ते सर्वे पुनः उत्सृष्टा न कच्चित्, दर्शनाप्रदानेन परित्यक्ता न कच्चिदित्यर्थः । अविशङ्कया प्रवेशे अवज्ञादिकं सम्भवेत् । दर्शनाभावे कार्यहानिः स्यात् अतः अत्र कर्मान्तिकविषये मध्यमेव कारणम् । अतिदर्शनादर्शनयोर्मध्यमरीत्याश्रयणमेवार्थसिद्धिकारणम् । अतिदर्शने हतानां तेषां स्वामि

कच्चित् सर्वाणि दुर्गाणि धनधान्यायुधोदकैः । यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्द्धरैः ॥ ५४ ॥
आयस्ते विपुलः कच्चित् कच्चिदल्पतरो व्ययः । अपात्रेषु न ते कच्चित्कोशो गच्छति राघव ॥ ५५ ॥
देवतार्थे च पित्रर्थे ब्राह्मणाभ्यागतेषु च । योधेषु मित्रवर्गेषु कच्चिद्गच्छति ते व्ययः ॥ ५६ ॥
कच्चिदार्य्यो विशुद्धात्माऽऽक्षारितश्चोरकर्मणा । अपृष्टः शास्त्रकुशलैर्न लोभाद्बध्यते शुचिः ॥ ५७ ॥

न्यनादरः स्यात् । अत्यदर्शने स्वकार्यविज्ञापनावसरालाभात्किमनेनेति कोपः स्यात् राजकार्यहानिश्च, तस्माद्यथोचितसमये दर्शनप्रदानमेवोचित मिति भावः ॥ ५३॥ कच्चित्सर्वाणीति । दुर्गाणि औदकपार्वतवार्क्षैरिणधान्वनानि । धनधान्यायुधोदकैः यन्त्रैः शिल्पिभिर्धनुर्द्धरैश्च परिपूर्णानि कच्चित् । अत्र कामन्दकः—" औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा । जलान्नायुधयन्त्राढ्यं वीरयोधैरधिष्ठितम् । गुप्तिप्रधानमाचार्या दुर्गं समनुमेनिरे ॥ " इति ॥५४॥ आय इति । आयः धनागमः कोशः सञ्चितधनम् । अपात्रेषु नटविटगायकेषु न गच्छति कच्चित् । तेभ्योपरिमितं न देयमितिभावः ॥५५॥ धन व्ययस्योचितविषयमाह—देवतार्थ इत्यादिना ॥५६॥ कच्चिदार्य इति । विशुद्धात्मा विशुद्धस्वभावः शुचिः करणत्रयशुद्धियुक्तः । आर्य्यः सज्जनः । यदृ च्छया चोरकर्मणा । आक्षारितः अभिशस्तः । "आक्षारितः क्षारितोभिशस्तः" इत्यमरः । शास्त्रकुशलैः अपृष्टः प्रश्नेन अशोधितः सन् । लोभाद्धन

सर्वे पुनरुत्सृष्टा न कच्चित । निश्शङ्कया प्रवेशे अवज्ञादिकं सम्भवेत । दर्शनाभावे कार्यहानिः स्यात् । तत्र दर्शनादर्शनयोः मध्यमेव यथोचितसमयनिरीक्षणप्रदान मेव कारणम्, प्रयोजनमित्यर्थः । एवं करोषि कच्चिदित्यर्थः ॥ ५३ ॥ सर्वाणि दुर्गाणि औदकपार्वतवार्क्षैरिणधान्वनानि । धनधान्यायुधोदकैर्यन्त्रैश्च शिल्पिधनुर्धरैश्च परिपूर्णानि कच्चित ॥ ५४ ॥ आय इति । आयो धनागमः, अपात्रेषु नटविटगायकादिषु विषये । कोशः अर्थसमूहः ॥ ५५ ॥ ५६ ॥ विशुद्धात्मा शुद्धस्वभावः । शुचिः करणत्रयशुद्धियुक्तः । आर्यः सज्जनः । यदृच्छया चौरकर्मणा आक्षारितः अभिशस्तः शास्त्रकुशलैरपृष्टः प्रश्नेनाशोधितस्सन लोभात्तदानीन्तनतदीयधन

लोभात् न वध्यते कच्चित् ॥५७॥ गृहीत इति । पृष्टः प्रश्नैः शोधितः। काले कालविशेषे । दृष्टः सकारणः चौर्यलब्धद्रव्यवत्तया वा दृष्टः। लोभात् मुषितं धनं तव दास्यामीति तद्दत्तधनलोभान्न मुच्यते कच्चित् ॥५८॥ व्यसन इति । आढ्यस्य दुर्गतस्य दरिद्रस्य च । व्यसने विवादरूपसङ्कटे प्राप्ते । अर्थं व्यवहारम् । "अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने । व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु ॥" इति वैजयन्ती । विरागाः विगतधनरागाः । पश्यन्ति

गृहीतश्चैव पृष्टश्च काले दृष्टः सकारणः । कच्चिन्न मुच्यते चोरो धनलोभान्नरर्षभ ॥ ५८ ॥ व्यसने कच्चिदाढ्यस्य दुर्गतस्य च राघव । अर्थं विरागाः पश्यन्ति तवामात्या बहुश्रुताः ॥५९॥ यानि मिथ्याभिशस्तानां पतन्त्यस्राणि राघव । तानि पुत्रपशून् घ्नन्ति प्रीत्यर्थमनुशासतः ॥६०॥ कच्चिद् वृद्धांश्च बालांश्च वैद्यमुख्यांश्च राघव । दानेन मनसा वाचा त्रिभिरेतैर्बुभूषसे ॥६१॥ कच्चिद्गुरूंश्च वृद्धांश्च तापसान् देवतातिथीन् । चैत्यांश्च सर्वान् सिद्धार्थान् ब्राह्मणांश्च नमस्यसि ॥६२॥ कच्चिदर्थेन वा धर्ममर्थं धर्मेण वा पुनः । उभौ वा प्रीतिलोभेन कामेन च न बाधसे ॥६३॥

परीक्षन्ते कच्चित् ॥ ५९ ॥ यानीति । मिथ्याभिशस्तानां राज्ञाम् अविचार्यप्रवर्तितमिथ्याभियोगानां प्रजानां यानि अस्राणि अश्रूणि पतन्ति तानि प्रीत्यर्थमनुशासतः राज्ये न्यायान्यायावविचार्य्य केवलभोगार्थं राज्यं कुर्वत इत्यर्थः ॥६०॥ कच्चिद्वृद्धानिति । दानेन अभिमतवस्तुप्रदानेन, मनसा स्नेहेन, वाचा सान्त्ववचनेन एतैस्त्रिभिर्बुभूषसे, प्राप्तुमिच्छसि वशीकर्त्तुमिच्छसि कच्चिदिति यावत् । भू प्राप्तावात्मनेपदी इति गणपाठे पठितत्वादात्मनेपदी ॥ ६१ ॥ कच्चिद्गुरूनिति । चैत्यान् देवतावासभूतचतुष्पथस्थमहावृक्षान् । सिद्धार्थान् निष्पन्नप्रयोजनान् । यागादिना लब्धामुष्मिकप्रयोजनानिति यावत् ॥ ६२ ॥ कच्चिदर्थेनेति । अर्थेन धर्मं न बाधसे कच्चित् । धर्मार्जनयोग्ये पूर्वाह्णे अर्थार्जनं कृत्वा धर्मं न बाधसे कच्चिदित्यर्थः । धर्मेणार्थं न

लोभात् न वध्यते न दण्ड्यते कच्चित्, धर्माधिकृतैरिति शेषः ॥ ५७ ॥ गृहीत इति । पृष्टः प्रश्नेन शोधितः काले द्रव्यापहरणकाले दृष्टः सकारणचौर्यलब्धद्रव्यसहितः ॥ ५८ ॥ व्यसन इति । आढ्यस्य दुर्गतस्य दरिद्रस्य च व्यसने निवातरूपसङ्कटे प्राप्ते अर्थं व्यवहारं विरागाः पश्यन्ति परीक्षन्ति कच्चित् ॥५९॥ यानीति । प्रीत्यर्थमनुशासतः भोगार्थं राज्यं कुर्वतः ॥ ६० ॥ दानेन अभिमतवस्तुप्रदानेम मनसा स्नेहेन वाचा सान्त्ववचनेन च त्रिभिरेतैः बुभूषसे कच्चित् । प्राप्तुमिच्छसि वशीकर्तुमिच्छसि कच्चिदिति यावत् ॥ ६१ ॥ चैत्यान् देवतावासभूतचतुष्पथस्थमहावृक्षान् । सिद्धार्थान् निष्पन्नामुष्मिकप्रयोजनान् ॥ ६२ ॥ अर्थेन धर्मं न बाधसे

बाधसे अर्थार्जनयोग्ये अपराह्णे धर्मार्जनं कृत्वा अर्थं न नाशयसि कच्चिदित्यर्थः । प्रीतिलोभेन सुखाभिलाषेण हेतुना । कामेन सायंकालविहितेन कामेन उभौ वा न बाधसे कच्चित् । यद्वा अर्थेन हेतुना धर्मं न बाधसे कच्चित्, धर्मं हित्वा अर्थं न गृह्णासीत्यर्थः। तथा धर्मेण हेतुना कुटुम्बनिर्वाहाद्यपेक्षितमर्थं न बाधसे । धर्मार्थावुभावपि प्रीतिलोभेन सुखेच्छया कामेन च हेतुना न बाधसे, गणिकादिसक्तावुभयमपिहि नश्यति ॥ ६३ ॥

कच्चिदर्थं च धर्मं च कामं च जयतां वर । विभज्य काले कालज्ञ सर्वान् वरद सेवसे ॥ ६४ ॥
कच्चित्ते ब्राह्मणाः शर्म सर्वशास्त्रार्थकोविदाः । आशंसन्ते महाप्राज्ञ पौरजानपदैः सह ॥ ६५ ॥
नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् । अदर्शनं ज्ञानवतामालस्यं पञ्चवृत्तिताम् ॥ ६६ ॥
एकचिन्तनमर्थानामनर्थज्ञैश्च मन्त्रणम् । निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् ॥ ६७ ॥

उक्तमर्थं सविशेषमाह—कच्चिदिति । अर्थं च धर्मं च कामं च सर्वान् काले विभज्य सेवसे। प्रातर्दानादिधर्मकालः, तदनन्तरम् आस्थान्यां राज्यविचारेणार्थकालः, रात्रौ कामकाल इत्येवं विभज्य सेवस इत्यर्थः । जयतां वर । तेषां कालान्तरे प्रवृत्तिनिवर्तनसमर्थेत्यर्थः ॥ ६४ ॥ कच्चित्त इति । शर्म सुखम् । आशंसन्ते प्रार्थयन्ते ॥६५॥ नास्तिक्यमित्यादि । नास्ति परलोक इति मतिर्यस्य स नास्तिकः "अस्ति नास्ति दिष्टं मतिः" इति ठञ् । तस्य भावः नास्तिक्यम् । अनृतमसत्यवचनम् । क्रोधं मातापित्राचार्यब्राह्मणदुर्बलादिषु कृतापराधेष्वपि तद्विषयकं क्रोधम् । प्रमादम् अनवधानत्वम् । दीर्घसूत्रतां चिरक्रियत्वम् । "दीर्घसूत्रश्चिरक्रियः" इत्यमरः । ज्ञानवतां सज्जनानाम् । अदर्शनं दर्शनाकरणम्, ज्ञानिनां दर्शनं हि निखिलश्रेयोमूलम् । आलस्यं मदकरवस्तुसेवाजनितं कार्यापटुकरणकत्वमित्यर्थः । पञ्चवृत्तितां पञ्चेन्द्रियपरवशताम् ॥ ६६ ॥ अर्थानामेकचिन्तनं राज्यकार्याणां मन्त्रयनादरेण स्वयमेक एव स्थित्वा पर्यालोचनम् । अनर्थज्ञैः विपरीतार्थदर्शिभिः ॥ ६७ ॥

कच्चित् धर्मार्जनयोग्यपूर्वाह्णे त्वर्थार्जनं कृत्वा धर्मान्न बाधसे धर्मार्जनं करोषि कच्चित् धर्मेणार्थान् न बाधसे कच्चित् अर्थार्जनयोग्ये मध्याह्ने धर्मार्जनं कृत्वा अर्थान्न बाधसे कच्चिदित्यर्थः । प्रीतिलोभेन सुखाभिलाषेण हेतुना कामेन उभौ धर्मार्थौ न बाधसे कच्चिदित्यर्थः ॥ ६३-६५ ॥ नास्तिक्यमित्यादि । प्रमादम् अनवधानत्वम् । दीर्घसूत्रताम् चिरक्रियत्वम् । पञ्चवृत्तितां पञ्चेन्द्रियपरवशताम् । अर्थानां प्रयोजनानाम् । एकचिन्तनम् एकेन चिन्तनम् । अनर्थज्ञैः

मङ्गलस्य प्रातर्दर्पणाद्यवलोकनस्य । अप्रयोगम् अननुष्ठानम् । मङ्गलाद्यप्रयोगमिति पाठे—अमङ्गलाचरणमित्यर्थः । सर्वतः प्रत्युत्थानं नीच स्यानीचस्याप्यागमने प्रत्युत्थानमित्यर्थः । यद्वा सर्वदिगवस्थितशत्रूद्देशेन युगपद्दण्डयात्रामिति वा। एतांश्चतुर्दशेत्यनेन अन्येषामपि बहूनां दोषाणां विद्यमानत्वम्, तेषु सर्वेषूक्तानामवश्यहेयत्वं च ज्ञायते ॥ ६८ ॥ दशेत्यादि । दशवर्गादिकान् बुद्ध्वा यथावदनुमन्यसे कच्चित् दशवर्गादिकान् त्याज्यत्वेनोपादेयत्वेन च ज्ञात्वा यथावदनुतिष्ठसि कच्चिदिति वाक्यार्थः । पूर्वोक्तसङ्ग्रहोऽयमुपदेशः। दशवर्गस्तावत्—"मृगयाक्षो दिवास्वापः परि

मङ्गलस्याप्रयोगं च प्रत्युत्थानं च सर्वतः । कच्चित्त्वं वर्जयस्येतान् राजदोषांश्चतुर्दश ॥ ६८ ॥
दश पञ्च चतुर्वर्गान् सप्तवर्गं च तत्त्वतः । अष्टवर्गं त्रिवर्गं च विद्यास्तिस्रश्च राघव ॥ ६९ ॥

वादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गुणः ॥" इति मनुनोक्तः । तौर्यत्रिकं नृत्यगीतवाद्यम् । वृथाट्या वृथापर्यटनम् । कामन्दकस्तु प्रकारान्तरेण लोभक्रोधालस्यासत्यवचनत्वप्रमादभीरुत्वास्थिरत्वमौढ्यानयावमन्तृत्वानि दशवर्ग इत्याशयेनाह—"लुब्धः क्रूरोऽलसो सत्यः प्रमादी भीरुरस्थिरः। मूढोऽनयोऽवमन्ता च सुखच्छेद्यो रिपुर्मतः॥" इति । पञ्चवर्गः पञ्च दुर्गाणि । तथाह मनुः—"औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा । शस्तं प्रशस्तमतिभिर्दुर्गं दुर्गोपचिन्तकैः ॥" इति । यद्वा पञ्चवर्गः पञ्चविधवैराणि । अत्रापि कामन्दकः—"सापत्नं वस्तुजं स्त्रीजं वाग्जातमपराधजम् । वैरप्रभेदनिपुणैर्वैरं पञ्चविधं स्मृतम् ॥" इति। चतुर्वर्गः सामदानभेददण्डाः। यथा कामन्दकीये "साम दानं च भेदश्च दण्डश्चेति चतुर्विधम्" इति। यद्वा चतुर्विधमित्राणि वा । यथाह कामन्दकः—"औरसं तन्तुसम्बन्धं तथा वंशक्रमागतम् । रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥" इति । यद्वा

विपरीतार्थदर्शिभिः । मङ्गलस्याप्रयोगम् अननुष्ठानम् । मङ्गलाद्यप्रयोगमिति च पाठः । प्रत्युत्थानं च सर्वतः सर्वदिगवस्थितशत्रूद्देशेन युगपद्दण्डयात्राम् ॥६६–६८॥ दशपञ्चेत्यादि । दशवर्गादिकं बुद्ध्वा यथावदनुमन्यसे कच्चित् । दशवर्गादिकं त्याज्यत्वेनोपादेयत्वेन च ज्ञात्वा यथावदनुतिष्ठसि कच्चिदिति वाक्यार्थः। दश वर्गस्तावत्—लोभक्रोधालस्यासत्यप्रमादभीरुत्वास्थिरत्वमूढत्वानयावमन्तृत्वानि । यद्वा मृगयाद्यूतदिवास्वप्नपरिवादस्त्रीमदनृत्तगीतवाद्यवृथापर्यटनानि । अथ पञ्चवर्गः कामन्दकः "सापत्नं वस्तुजं स्त्रीजं वाग्जातमपराधजम् । वैरप्रभेदनिपुणैर्वैरं पञ्चविधं स्मृतम् ॥" इति । औदकपार्वतवार्क्षैरिणधान्वनानि वा। अथ चतुर्वर्गः—सामदानभेददण्डाः चतुर्विधमित्राणि वा। "औरसं तन्तुसम्बन्धं तथा वंशक्रमागतम् । रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥" इति। अथ सप्तवर्गः—"स्वाम्यमात्याश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । परस्परोपकारीदं राज्यं सप्ताङ्गमुच्यते । इति । अथाष्टवर्गः—कृषिवाणिज्यदुर्गसेतुकुञ्जर बन्धनखन्याकरकरादानशून्यनिवेशनानि । अथ त्रिवर्गः—असाध्यवस्तुषु समुद्यमः साध्यवस्तुष्वनुद्यमः शक्यवस्तुष्वकाले समुद्यमश्च । तथाह—"वस्तुष्वशक्येषु

धनानां न्यायार्जनादिधर्मचतुष्टयं वा। तदपि तत्रैवोक्तम्—" न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा। सत्पात्रे प्रतिपत्तिश्च राज्यवृत्तं चतुर्विधम् ॥" इति। सप्तवर्गः स्वाम्यमात्यादिः। यथोक्तम्—"स्वाम्यमात्याश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत्। परस्परोपकारीदं राज्यं सप्ताङ्गमुच्यते॥" इति। यद्वा स्वपक्षस्थ जनावान्तरभेदसप्तकं वा। यथाह—" निजोऽथ मैत्रश्च समाश्रितश्च सुबन्धुजः कार्य्यसमुद्भवश्च। भृत्यो गृहीतो विविधोपचारैः पक्षं बुधाः सप्तविधं वदन्ति॥" इति। यद्वा प्रधानव्यूहाः सप्त वा सप्तवर्गः। यथा—"श्येनः सूची च वज्रश्च शकटो मकरस्तथा। दण्डाख्यः पद्मनामा च व्यूहाः सप्त प्रधानतः॥"

इन्द्रियाणां जयं बुद्ध्वा षाड्गुण्यं दैवमानुषम्। कृत्यं विंशतिवर्गश्च तथा प्रकृतिमण्डलम् ॥ ७० ॥

इति। अष्टवर्गमाह कामन्दकः—"कृषिवाणिज्यदुर्गाणि सेतुः कुञ्जरबन्धनम्। खन्याकरः करादानं शून्यानां च निवेशनम्। अष्टवर्गमिमं साधु स्वस्थ वृत्तो न लोपयेत्॥" इति। यद्वा पैशुन्याद्यष्टकं वा अष्टवर्गः। यथा—"पैशुन्यं साहसं द्रोहमीर्ष्यासूयार्थदूषणम्। वाग्दण्डयोश्च पारुष्यं क्रोधजोऽपि गुणोऽष्टकः॥" इति। ईर्ष्या क्षान्त्यभावः क्षान्तिविरोधी वा कश्चिद्गुणः, अज्ञदुर्बलकृतापराधासहिष्णुत्वमिति यावत्। असूया तु गुणेष्वपि दोषारोपः। वाक्पारुष्यं दण्डपारुष्यं च गुणद्वयम्। अथ त्रिवर्गः धर्मार्थकामाः। यद्वा उत्साहप्रभुत्वमन्त्रशक्तयस्त्रिवर्गः। यद्वा परेषां क्षयस्थानवृद्धयः। "क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् " इत्यमरः। यद्वा अशक्यसमुद्यमादिकार्यव्यसनत्रयं वा। यथाह कामन्दकः—"वस्तुष्वशक्येषु समुद्यमश्च शक्येषु मोहादसमुद्यमश्च। शक्येष्वकालेषु समुद्यमश्च त्रिधैव कार्य्यं व्यसनं वदन्ति॥" इति। तिस्रो विद्याः त्रयीवार्त्तादण्डनीतयः " आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च " इति विद्यायाश्चतुर्विधत्वेपि आन्वीक्षिक्यास्त्रय्यामन्तर्भावः। तथाह कामन्दकः " त्रयी वार्त्ता दण्डनीतिरिति विद्या हि मानवाः। त्रय्या एव विशेषोऽयमियमान्वीक्षिकी मता॥"इति। त्रयी वेदः, वार्ता कृषिगोरक्षवाणिज्यम्, दण्डनीतिः नीतिशास्त्रम्॥६९॥ इन्द्रियाणां जयं जयोपायम्। षड्गुणा

समुद्यमश्च शक्येषु मोहादसमुद्यमश्च। शक्येष्वकालेषु समुद्यमश्च त्रिधैव कार्यं व्यसनं वदन्ति॥" यद्वा प्रभुमन्त्रोत्साहशक्तयः। अथ तिस्रो विद्याः—त्रयीवार्तादण्ड नीतयः। आन्वीक्षिक्यास्त्रय्यामन्तर्भावात् त्रित्वोक्तिः॥६९॥ इन्द्रियाणां जयं जयोपायम् बुध्वा प्रजापालनस्य मूलमिन्द्रियजयं प्रथमं बुध्वा षाड्गुण्यं षड्गुणा एव षाड्गुण्यम्। स्वार्थे ष्यञ्। सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः षड्गुणाः। दैवमानुषं दैविकं मानुषं च व्यसनम्। तत्र दैवव्यसनं पञ्चविधम्, मानुषं च पञ्चविधम्। तथा कामन्दकीये—" हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा। इति पञ्चविधं दैवं मानुषं व्यसनं परम्॥ " मानुषव्यसनं तु कामन्दकीये—" आयुक्तेभ्यश्च चोरेभ्यः परेभ्यो राजवल्लभात्। पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयम् " इति। कृत्यम् अलब्धवेतनावमानितकोपितभीषितवर्गेषु शत्रुसम्बन्धिषु अभिमतवस्तुप्रदानेन

एव षाड्गुण्यम् । स्वार्थे ष्यञ् । ते च सन्धिविग्रहयानासनद्वैधीभावसंश्रयाः । [illegible] मानुषं देवमनुष्येभ्य आगतं व्यसनमिति वर्गः । दैवं मानुषं च व्यसनं
प्रत्येकं पञ्चविधम् । यथाह कामन्दकीये—"हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा । इति पञ्चविधं दैवं मानुषं व्यसनं परम् ॥ आयुक्तकेभ्यश्चोरेभ्यः
परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च व्यसनं पञ्चधा भवेत्॥" इति । आयुक्तकाः अधिकारिणः। कृत्यम् अलब्धवेतनावमानितकोपितभीषितेषु शत्रु
सम्बन्धिष्वभिमतवस्तुप्रदानेन कर्त्तव्यं भेदनम् । अत्राप्याह कामन्दकः—" अलब्धवेतनो लुब्धो मानी चाप्यवमानितः । क्रुद्धश्च कोपितोऽकस्मात्तथा
भीतश्च भीषितः । यथाभिलषितैः कामैर्भिन्द्यादेतांश्चतुर्विधान् ॥" इति । असन्धेयाः विग्राह्याः बालवृद्धादयो विंशतिविधाः। प्रतिपक्षनृपतयो विंशतिवर्ग
इत्युच्यते । यथाह कामन्दकीये—"बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः । भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा । विरक्तप्रकृतिश्चैव
विषयेष्वतिसक्तिमान् । अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः। दैवोपहतकश्चैव दैवचिन्तक एव च । दुर्भिक्षव्यसनोपेतो बलव्यसनसङ्कुलः । अदेशस्थो
बहुरिपुर्युक्तोऽकालेन यश्च सः । सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी । एतैः सन्धिं न कुर्वीत विगृह्णीयात्तु केवलम् ॥" इति। ज्ञातिबहिष्कृतः
बन्धुजनबहिष्कृतः । भीरवः जनाः मन्त्रिसेनापतियोधाः यस्य सः भीरुजनकः । एवमेव लुब्धजन इत्यत्रापि । लुब्धाः अत्यन्तधनाशापराः । दैवोप
हतकः महर्षिशापाद्यभिहतः ।दैवचिन्तकः दैवमेव सर्वं कुर्यादिति मत्वा पुरुषव्यापारमकुर्वाणः । बलव्यसनं सेनाविलयः । अदेशस्थः प्रोषितः ।
अकालेन युक्तः क्रूरग्रहदशाभागादियुक्तः । यद्वा विग्रहकारणभूतो राज्यापहारादिर्विंशतिवर्गः । अत्र च कामन्दकः—" *राज्यस्त्रीस्थानदेशानां
ज्ञातीनां च धनस्य च। अपहारो मदो मानः पीडा वैषयिकी तथा । ज्ञानार्थशक्तिधर्माणां विघातो दैवमेव च । मित्रार्थयोश्चावमानस्तथा बन्धु
विनाशनम् । भूतानुग्रहविच्छेदस्तथा मण्डलदूषणम् । एकार्थाभिनिवेशित्वमिति विग्रहयोनयः॥" इति । अत्रापहारशब्दः पूर्वैः षड्भिः सम्बध्यते ।
वैषयिकी पीडा विषयपारवश्यम् । विघातशब्दो ज्ञानादिभिश्चतुर्भिरन्वेति ।दैवशब्देन देवा इन्द्रादय उच्यन्ते। तेषां विरोध्यपि विग्राह्यः। यथा दशरथस्य

कर्तव्यं भेदनं कृत्यशब्देनोच्यते । तथा च कामन्दकीये " अलब्धवेतनो लुब्धो मानी चाप्यवमानितः । क्रुद्धश्च कोपितोऽकस्मात्तथा भीतश्च भीषितः । यथाभिल
षितैः कामैर्भिन्द्यादेतांश्चतुर्विधान्॥" इति । असन्धेया विग्राह्यो विंशतिवर्गः । तथा च कामन्दकीये "बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः। भीरुको भीरुज
नको लुब्धो लुब्धजनस्तथा । विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् । अनेकचित्तमन्त्रश्च देवब्राह्मणानिन्दकः । दैवोपहतकश्चैव दैवचिन्तक एव च । दुर्भिक्षव्यस



* कतक०—राज्यस्त्रीस्थानदेशानां ज्ञातिधनयोश्च यस्यापहारस्ते षट् । मदमानदेशपीडावन्तस्त्रयः । ज्ञानार्थशक्तिधर्माणां येषां विघातस्ते चत्वारः । दैवचिन्तकः रिपुमित्रावमन्तारौ बन्धुविनाशनं यस्य लोकानुग्रह
रहितः दूषितमण्डलः एकार्थाभिनिवेशित्वं यस्य एते विग्राह्या एव ॥

इन्द्रविरोधी शम्बरः। मित्रार्थयोरित्यत्र मित्रं मित्रार्थस्तदनुबन्धी चेत्यर्थः। यद्वा मित्रं मित्रस्यार्थः तद्धनम्। अर्थस्यावमानो हरणमेव। भूतानुग्रहविच्छेदः लोकानुग्रहराहित्यम्। मण्डलदूषणं मण्डलशब्देन स्वमन्त्रिसेनापतिसुहृदादिरुच्यते, तस्य दूषणं तद्विघटनम्। एकार्थाभिनिवेशित्वं स्वाभिमतविषयाभिलाषित्वम्। प्रकृतयश्च मण्डलं च प्रकृतिमण्डलम्। प्रकृतयस्तावत्—"अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः। एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः॥" इति कामन्दकोक्ताः। मण्डलं द्वादशविधराजात्मकम्—मध्यतो विजिगीषुः तस्य शत्रुः मित्रं शत्रोर्मित्रं मित्रमित्रं शत्रुमित्रमित्रं चेति पुरोवर्तिनः पञ्च। पार्ष्णिग्राहः आक्रन्दः पार्ष्णिग्राहासारः आक्रन्दासारश्चेति पृष्ठभागस्थाश्चत्वारः। पार्श्वस्थो मध्यमः तेषां बहिरवस्थित उदासीनश्चेति। तथाच कामन्दकः—"सम्पन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः। जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः॥ अरिर्मित्रमरेर्मित्रं मित्रमित्रमतःपरम्। तथारिमित्रमित्रं च विजिगीषोः पुरस्सराः॥ पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरः। आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः॥ अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः। अनुग्रहे संहतयोर्व्यस्तयोर्निग्रहे प्रभुः॥ मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः। अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः॥" इति अत्र शत्रुमित्रशब्दौ पुरस्तादव्यवहितानन्तरराष्ट्राधिपतिमेकव्यवहितानन्तरराष्ट्राधिपतिं च क्रमेण वदतः। पार्ष्णिग्राहाक्रन्दशब्दावपि पृष्ठतस्तादृशौ क्रमेण वदतः नतु प्रसिद्धशत्रुमित्रपरौ। "विषयानन्तरो राजा शत्रुर्मित्रमतःपरम्। उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः॥" इत्यमरः। आसारः सुहृद्बलम्। "आसारः स्यान्मित्रबले" इति रत्नमाला। मध्यमशब्देन च अरिविजिगीषोर्व्यस्तयोः समस्तयोश्च निग्रहानुग्रहसमर्थः। पार्श्वदेशस्थः कश्चिदुक्तेभ्योऽन्यो राजोच्यते न तु मध्यवर्ती। उदासीनशब्देन च एतेषां सर्वेषामपि व्यस्तानां समस्तानां च निग्रहानुग्रहसमर्थः कश्चिद्विप्रकृष्टदेशस्थो

नोपेतो बलव्यसनसङ्कुलः। अदेशस्थो बहुरिपुर्युक्तोऽकालेन यश्च सः। सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी। एतैस्सन्धिं न कुर्वीत विगृह्णीयात्तु केवलम्। अथ प्रकृतिमण्डलम्—प्रकृतयश्च मण्डलं च प्रकृतिमण्डलम्। प्रकृतयस्तावत्कामन्दकीये "अमात्या राष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः। एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः" इति। मण्डलं द्वादशविधराजात्मकम्। तेच मध्यतो विजिगीषुः तस्यारिः मित्रं अरेर्मित्रं मित्रशत्रुः शत्रुमित्रमित्रं चेति पुरोवर्तिनः पञ्च। पार्ष्णिग्राहः आक्रन्दस्तयोरासाराविति पार्ष्णिग्राहासारः आक्रन्दासार इति पृष्ठभागस्थाश्चत्वारः एवं नव भवन्ति, विजिगीषुर्दशमः, पार्श्वस्थो मध्यमः तेषां बहिरवस्थित उदासीनश्चेति मध्यमोदासीनाभ्यां साकं द्वादशविधाः। तथा कामन्दः "सम्पन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः। जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः। अरिर्मित्रमरेर्मित्रं मित्रामित्रमतःपरम्। अथारिमित्रमित्रं च विजिगीषोः पुरस्सराः। पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम्। आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः। अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः। अनुग्रहे संहतयोर्यस्तयोर्निग्रहे प्रभुः। मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः। अनुग्रहे संहतानां व्यस्तानां

राजोच्यते॥७०॥यात्रा दण्डविधानं यात्रा यानं दण्डस्य सैन्यस्य विधानं संविधानं व्यूहभेदविधानम् । यद्वा दण्डः शत्रुनिरसनं तस्य विधानं प्रकारः। यात्रा च दण्डविधानं च यात्रादण्डविधानम् । प्रकृतिमण्डलमित्यत्रात्रैकवद्भावः । सेनाव्यूहभेदाः पूर्वमुक्ताः शत्रुनिरसनप्रकाराश्च स्फुटाः सुज्ञेया इति यात्राशब्दितं यानं प्रदर्श्यते । तच्च पञ्चविधम्–बलातिशयेन पार्ष्णिग्राहादिभिर्विगृह्य शत्रूद्देशेन यानं विगृह्ययानम्, पार्ष्णिग्राहादिभिः सन्धिं कृत्वा शत्रूद्देशेन यानं सन्धाययानम्, सामन्तैः समेत्य यानं सम्भूययानम्, अन्योद्देशेन यात्राप्रसङ्गमुत्पाद्य अन्यंप्रति यानं प्रसङ्गतोयानम्, अन्यप्रसङ्गं कृत्वा बलवत्तया तमुपेक्ष्य

यात्रादण्डविधानञ्च द्वियोनी सन्धिविग्रहौ । कच्चिदेतान् महाप्राज्ञ यथावदनुमन्यसे ॥ ७१ ॥

तन्मित्रोद्देशेन यानमुपेक्ष्ययानमिति । यथा कामन्दकीये–"विगृह्य सन्धाय तथा सम्भूयाथ प्रसङ्गतः । उपेक्ष्य चेति निपुणैर्यानं पञ्चविधं स्मृतम् ॥" इति । द्वियोनी इति । सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः षड्गुणाः पृथक् पृथक् प्रतिपादिताः । इदानीं द्वैगुण्यमतावलम्बनेन यानादीन् सन्धिविग्रहयोरन्तर्भाव्य वदति । यानासने विग्रहस्य स्वरूपं द्वैधीभावसमाश्रयौ सन्धे रूपम् । तत्र विजिगीषोरारिं प्रति यात्रायानं तयोर्मिथः प्रतिबद्धशक्त्योः कालप्रतीक्षया तूष्णीमवस्थानमासनम् । दुर्बलस्य प्रबलयोर्द्विषतोर्वाचिकमात्मसमर्पणं द्वैधीभावः । तथाह–" बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥" इति । अरिणा पीड्यमानस्य बलवदाश्रयणं समाश्रय इति विवेकः । तदुक्तं कामन्दकेन–" यानासने विग्रहस्य रूपं सद्भिरिति स्मृतम् । सन्धेश्च सन्धिमार्गज्ञैर्द्वैधीभावसमाश्रयौ ॥" इति । एतान् पूर्वोक्तान् यथावदनुमन्यसे अनुतिष्ठसि कच्चिदित्यर्थः । उक्तदश

च वधे प्रभुः ॥" इति ॥७०॥ अथ यात्रादण्डविधानं सैन्यसंविधानं शत्रुनिरसनप्रकारस्य यानं पञ्चविधम् । तथा च कामन्दकीये " विगृह्य सन्धाय तथा सम्भूयाथ प्रसङ्गतः । उपेक्ष्य चेति निपुणैर्यानं पञ्चविधं स्मृतम् ॥ " इति । बलातिशयेन पार्ष्णिग्राहादिभिर्विगृह्य शत्रूद्देशेन यानं विगृह्ययानम् । पार्ष्णिग्राहादिभिस्सन्धिं कृत्वा शत्रूद्देशेन यानं सन्धाययानम् । सामन्तैस्समेत्य यानं सम्भूययानम् । अन्योद्देशेन यात्राप्रसङ्गमुत्पाद्य अन्यं प्रति यानं प्रसङ्गयानम् । शत्रूद्देशेन यात्रां कृत्वा तमुपेक्ष्य तन्मित्रोद्देशेन यानमुपेक्ष्ययानमिति । षाड्गुण्यमिति । सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः पूर्वं पृथक्प्रतिपादिताः, इदानीं द्वैगुण्यमतावलम्बनेन यानादीन् सन्धिविग्रहयोरन्तर्भाव्य वदति द्वियोनी इति । सन्धिविग्रहौ द्वियोनी प्रत्येकं तयोर्द्वयोः कारणभूतौ । तथाह कामन्दः "सन्धेश्च विग्रहस्यैतद्द्वैगुण्यमिति चक्षते " इति । " यानासने विग्रहस्य रूपं सन्धेः पदं द्वयम् " इति च । तत्र विजिगीषोरारिं प्रति यात्रा यानं तयोर्मिथः प्रतिबद्धशक्त्योः कालप्रतीक्षया तूष्णीमवस्थानमासनम् । दुर्बलस्य प्रबलयोर्विद्विषोः वाचिकमात्मनस्समर्पणं द्वैधीभावः । तथाह " बलिनोर्विद्विषोर्मध्ये वाचात्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षीवदलक्षितः ॥"

वर्गादीनां तत्त्वं ज्ञात्वा हेयान् जहासि ग्राह्यान् गृह्णासि कच्चिदिति यावत् ॥ ७१ ॥ मन्त्रिभिरिति । यथोद्दिष्टैः शास्त्रोक्तमन्त्रिलक्षणलक्षितैः । यथोद्दिष्टमितिपाठे—नीतिशास्त्रोक्तमन्त्रविचारमार्गमनतिक्रम्येत्यर्थः । बहुभिर्मन्त्रकरणे मन्त्रभिन्नत्वसम्भवादैकमत्याभावाच्च 'चतुर्भिस्त्रिभिरेववा' इत्युक्तम् । व्यस्तैस्तत्तन्मतं परिज्ञाय समस्तैश्चतुर्भिस्त्रिभिर्वा परिगणितैर्मन्त्रिभिः मिथः रहसि मन्त्रं मन्त्रयसे कच्चित् ॥७२॥ राज्ञामवश्यं सम्पादनीया

मन्त्रिभिस्त्वं यथोद्दिष्टैश्चतुर्भिस्त्रिभिरेव वा । कच्चित् समस्तैर्व्यस्तैश्च मन्त्रं मन्त्रयसे मिथः ॥ ७२ ॥
कच्चित्ते सफला वेदाः कच्चित्ते सफलाः क्रियाः । कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ॥ ७३ ॥
कच्चिदेषैव ते बुद्धिर्यथोक्ता मम राघव । आयुष्या च यशस्या च धर्मकामार्थसंहिता ॥ ७४ ॥
यां वृत्तिं वर्त्तते तातो यां च नः प्रपितामहाः । तां वृत्तिं वर्त्तसे कच्चिद्या च सत्पथगा शुभा ॥ ७५ ॥

नर्थान् पृच्छति—कच्चित्ते सफला वेदा इति । ते वेदाः त्वदधीता वेदाः सफलाः कच्चित् । अग्निहोत्राद्यनुष्ठानेन सफलीकृताः कच्चित् । क्रियन्ते साध्यन्त इति क्रियाः धनानि । धनानि त्वत्सम्पादितानि दानभोगाभ्यां सफलीकृतानि कच्चित् । ते दाराः सफलाः कच्चित् रतिपुत्राभ्यां सफलाः कच्चित् । ते श्रुतं शास्त्रश्रवणं सफलं कच्चित् शीलवृत्ताभ्यां सफलं कच्चित् । तथा च महाभारते—“ अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् । रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम् ॥ ” इति ॥ ७३ ॥ कच्चिदेषैवेति । आयुष्या यशस्या धर्मकामार्थसंहिता उक्ता एषा बुद्धिर्मम यथा तथैव ते तव वर्तते कच्चित् ॥७४॥ अथ उक्तानुक्तं सकलं सङ्ग्रहेण दर्शयति—यामित्यादिना । वृत्तिमाचरन् वर्तते अवर्तिष्ट । यद्वा दशरथमरणास्याज्ञातत्वात्

इति । अरिणा पीड्यमानस्य बलवदाश्रयणं समाश्रय इतिं विवेकः । एतान् पूर्वोक्तदशवर्गादीन् यथावदनुमन्यसे कच्चित् ग्राह्यग्राहकत्वेन जानासि कच्चित् ॥७१॥ मन्त्रिभिरिति । यथोद्दिष्टैः शास्त्रोक्तमन्त्रिलक्षणलक्षितैः । बहुभिर्मन्त्रकरणे मन्त्रभिन्नत्वसम्भवादैकमत्याभावाच्च चतुर्भिस्त्रिभिरेवेत्युक्तिः । व्यस्तैर्मन्त्रकरणे तत्तन्मतपरिज्ञानं भवतीत्यर्थः ॥ ७२ ॥ राज्ञामवश्यसम्पादनीयार्थान् पृच्छति—कच्चिदिति । ते वेदाः त्वदधीता वेदाः सफलाः कच्चित् त्वद्विहिताग्निहोत्राद्यनुष्ठानेन सफलीकृताः कच्चित् ? क्रियाः क्रियन्ते साध्यन्त इति व्युत्पत्त्या क्रियाशब्देन धनधान्यान्युच्यन्ते, त्वत्सम्पादितानि धनादीनि दानभोगाभ्यां सफलानि कच्चित् । ते दाराः सफलाः रतिपुत्रफलाः कच्चित् ? ते श्रुतं शास्त्रश्रवणं शीलवृत्तोत्पादनेन सफलं कच्चित् ? तथा च भारते “ अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् । रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम् ॥ ” इति ॥ ७३ ॥ एषा धर्मकामार्थसंहिता तत्परा उक्ता एषा ते बुद्धिः मम यथा तथैव तवापि वर्द्धते कच्चित् ॥ ७४–७५ ॥

 

वर्तंत इत्युक्तिः । पितामहस्य अजस्य चिरं राज्यपरिपालनाभावात् प्रपितामहा इत्युक्तम् । प्रपितामहाः प्रपितामहप्रभृतयः । यथा "सप्तमी शौण्डैः" इत्यत्र "शौण्डादिभिः" इतिवृत्तिकारः । अत्र अवर्तन्तेत्यध्याहार्यम् । पित्राद्यननुष्ठितस्याननुष्ठाने प्राप्ते आह–या च सत्पथगा शुभेति । सत्पथगा सन्मार्गानुसारिणी । शुभा अनिन्दिता ॥ ७५ ॥ कच्चिदिति । स्वादुकृतं मधुरतया सिद्धम् । आशंसमानेभ्यः, धनमिति शेषः ॥७६॥ एवमाचरतो राज्ञः

कच्चित् स्वादु कृतं भोज्यमेको नाश्नासि राघव । कच्चिदाशंसमानेभ्यो मित्रेभ्यः सम्प्रयच्छसि ॥ ७६ ॥ राजा तु धर्मेण हि पालयित्वा महामतिर्दण्डधरः प्रजानाम् । अवाप्य कृत्स्नां वसुधां यथावदितश्च्युतः स्वर्गमुपैति विद्वान् ॥ ७७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे शततमः सर्गः ॥ १०० ॥

रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह । किं मे धर्माद्विहीनस्य राजधर्मः करिष्यति ॥ १ ॥

ऐहिकामुष्मिकफले दर्शयति–राजा त्वित्यादिना । तुशब्देन राजवैलक्षण्यमुच्यते । हिः प्रसिद्धौ । पालयित्वा, महीमिति शेषः । महामतिः उक्तनीतिधर्मज्ञः । दण्डधरः युक्तदण्डधरः । यथावत् पूर्वराजवत् । इतः अस्माल्लोकात् च्युतः प्रारब्धकर्मावसाने मृत इत्यर्थः । विद्वान् शरीरभिन्नात्मज्ञानवान् ॥ ७७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने शततमः सर्गः ॥ १०० ॥

रामस्य वचनं श्रुत्वा भरतः प्रत्युवाचह इत्यादि अयं सर्गएवात्र लेखनीयः । 'तं तु रामः समाज्ञाय भ्रातरं गुरुवत्सलम्' इत्यादिसर्गस्तु लेखकैः प्रमादाल्लिखितः । तस्योक्तप्रश्नोत्तरत्वाभावात् । अत्र भरतोच्यमानपितृमरणश्रवणानन्तरं रामस्य दुःखितत्वाश्रवणात् । अत्र महेश्वरतीर्थेन सर्गपौर्वापर्यवैपरीत्यमनालोच्य स्वदृष्टकोशमात्रप्रामाण्येन 'तं तु रामः समाज्ञाय' इत्यादिकं सर्गमेवैकोत्तरशततमं मन्वानेन तत्सर्गव्याख्यानान्ते तत्रत्यार्थविरोधमालोच्यैवमाक्षेपपरिहारावुक्तौ । "ननु–आर्य तातः परित्यज्य कृत्वा कर्म सुदुष्करम् । गतः स्वर्गं महाबाहुः पुत्रशोकाभिपीडितः ॥ इति । इमाः प्रकृतयः सर्वा विधवा मातरश्च याः । त्वत्सकाशमनुप्राप्ताः । इति च भरतेनोक्ते रामस्तदानीमशोचन् तदुल्लङ्घ्याभिषेकप्रत्याख्यानमेव किमिति कृतवान् नैष दोषः । तस्मिन् भरतवाक्यप्रबन्धे पितृमरणमानुषङ्गिकत्वेनोक्तं राज्यस्वीकरणमेव प्राधान्येनोक्तम् । अतो रामस्तदेवं मन्यते । पिता पुत्रशोकेन



॥७६॥७७॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां शततमः सर्गः ॥ १०० ॥ रामस्येत्यादि । किमिति धर्मात्

मृतकल्पो न पुनर्जीविष्यतीति मृत इत्युच्यते । मातरश्च विधवाकल्पा इति विधवा इत्युच्यते । अनेन ममाभिषेचनमेव प्राधान्येनोच्यत इत्य शोचन्नभिषेकप्रत्याख्यानं कृतवान् । स्ववाक्ये पितृमरणानुवादस्य चायमेवार्थः " इति । अत्रायं परिहारो न युज्यते । यदि च पिता मृतकल्पत्वेन मृत इत्युच्यत इति रामो गृह्णीयात् तदा 'व्यादिश्य च महातेजा दिवं दशरथो गतः' इति नानुवदेत् । यस्तु स्वाशयं स्वयमेवैवमिति वदति तस्यान्येन गत्यन्तरे सति तद्विरुद्धाभिप्रायकल्पनं कथं कर्तुं शक्यम् ? अतोऽनेनैवानुवादेन रामेण पिता मृत इत्येव गृहीतमिति भाति । किञ्च प्रकृतीनां मातॄणां

शाश्वतोऽयं सदा धर्म्मः स्थितोऽस्मासु नरर्षभ । ज्येष्ठपुत्रे स्थिते राजन्न कनीयान् नृपो भवेत् ॥ २ ॥

च समागमनात्पूर्वम् "इमाः प्रकृतयः सर्वा विधवा मातरश्च याः । त्वत्सकाशमनुप्राप्ताः प्रसादं कर्तुमर्हसि" इत्यङ्गुल्यादिनिर्देशानुपपत्तेश्च । अतः 'तं तु रामः समाज्ञाय" इत्यादिसर्गः वसिष्ठं पुरतः कृत्वेति त्र्युत्तरशततमसर्गानन्तरं चतुरुत्तरशततमसर्गत्वेन लेखनीयः पठनीयश्च । तथा चेत्सङ्गतः स्यात् । अतोऽत्र रामस्य वचनं श्रुत्वेत्ययं सर्ग एव व्याख्यायते—रामस्य वचनं श्रुत्वेत्यादि । धर्मात् त्वत्सेवारूपमुख्यधर्मात् । यद्वा धर्मात् त्वदुक्तराज धर्मानुष्ठानहेतुभूतराजभावात् । राजधर्मः त्वदुक्तनीतिस्थः ॥ १ ॥ रामा०—रामस्येत्यादि । राजनीतिप्रतिपादकपूर्वसर्गस्यानन्तरम्—"रामस्य वचनं श्रुत्वा भरतः प्रत्युवाचह । किं मे धर्माद्विहीनस्य राजधर्मः करिष्यतीति प्रश्नोत्तरपरस्यास्य सर्गस्य स्थाने तं तु रामः समाज्ञाय भ्रातरं गुरुवत्सलम् । लक्ष्मणेन सह भ्रात्रा प्रष्टुं समुपचक्रमे । इत्ययं सर्गः केषु चित्कोशेषु दृश्यते । तत्तु न संगच्छते, पूर्वसर्गकृतप्रश्नस्योत्तराश्रवणात् । आर्यं तातः परित्यज्य कृत्वा कर्म सुदुष्करम् । गतः स्वर्गं महाबाहुः पुत्रशोकाभिपीडितः " इत्युक्तपितृमरणश्रवणानन्तरं दुःखितत्वाश्रवणात् । प्रकृतीनां मातॄणां च समागमनात्पूर्वम् " इमाः प्रकृतयः सर्वा विधवा मातरश्च याः । त्वत्सकाशमनुप्राप्ताः प्रसादं कर्तुमर्हसि " इत्यङ्गुलिनिर्देशानुपपत्तेश्च । तं तु राम इत्यादिसर्गस्य स्थानं तु-वसिष्ठः पुरतः कृत्वा दारान् दशरथस्य च । अभिचक्राम तं देशं रामदर्शनतर्षितः । इत्यादिसर्गस्यानन्तरम् ॥१॥ कुतस्ते राजभावाभाव इत्यत्राह—शाश्वत इति । अस्मासु अस्मत्पूर्वेषु ॥ २ ॥ तनि०—किं मे धर्माद्विहीनस्य राजधर्मः करिष्यति । शाश्वतोऽयं सदा धर्मः स्थितोऽस्मासु नरर्षभ ॥ धर्मात् रामकैङ्कर्यरूपपरमै कान्तिधर्मात् । स्वरूपनिरूपकशेषत्वधर्माद्वा । विहीनस्य राजधर्मः तद्विरोधिसामान्यधर्मः । अयं पूर्वोक्तः शाश्वतो नित्यसिद्धः अस्मासु सदा स्थितः । शत्रुघ्नलक्ष्मणा पेक्षया बहुवचनम् । नरर्षभ पुरुषोत्तम ॥ १ ॥ २ ॥

त्वत्सेवारूपमुख्यधर्मात ॥ १ ॥ शाश्वतः कुलक्रमागतः । अस्मासु अस्मात्पूर्वेषु । तदेवाह ज्येष्ठपुत्र इति ॥ २ ॥

स समृद्धामिति। भवाय भद्राय । "भवो भद्रे हरे प्राप्तौ सत्ता संसारजन्मसु" इति वैजयन्ती ॥ ३ ॥ न सर्वसुलभं राजत्वमित्याह–राजानमिति। प्राहुः प्राकृता जना इति शेषः। स राजा मम देवत्वे मतः। देवत्वेन सम्मत इत्यर्थः ॥ ४ ॥ तनि०–ये लोकाः राजानं मानुषं प्राहुः त एव यस्य ते धर्मार्थ

स समृद्धां मया सार्द्धमयोध्यां गच्छ राघव । अभिषेचय चात्मानं कुलस्यास्य भवाय नः ॥ ३ ॥ राजानं मानुषं प्राहुर्देवत्वे स मतो मम । यस्य धर्मार्थसहितं वृत्तमाहुरमानुषम् ॥ ४ ॥ केकयस्थे च मयि तु त्वयि चारण्य माश्रिते । दिवमार्यो गतो राजा यायजूकः सतां मतः ॥ ५ ॥ निष्क्रान्तमात्रे भवति सहसीते सलक्ष्मणे । दुःख शोकाभिभूतस्तु राजा त्रिदिवमभ्यगात् ॥ ६ ॥ उत्तिष्ठ पुरुषव्याघ्र क्रियतामुदकं पितुः। अहं चायं च शत्रुघ्नः पूर्वमेव कृतोदकौ ॥ ७ ॥ प्रियेण खलु दत्तं हि पितृलोकेषु राघव । अक्षय्यं भवतीत्याहुर्भवांश्चैव पितुः प्रियः ॥ ८ ॥ त्वामेव शोचंस्तव दर्शनेप्सुस्त्वय्येव सक्तामनिवर्त्य बुद्धिम् । त्वया विहीनस्तव शोकरुग्णस्त्वां संस्मरन्नस्तमितः पिता ते ॥ ९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये श्रीमदयोध्याकाण्डे एकोत्तरशततमःसर्गः ॥१०१॥

सहितं वृत्तममानुषं प्राहुः। मनुष्यसंस्थानत्वेपि अतिमानुषशीलवृत्तवैरतिलङ्घितसर्वलोकसाम्यत्वेन देवत्वे नारायणत्वे मम संमत इत्यर्थः ॥ ४ ॥ एवं सन्निहितनीति प्रश्नस्योत्तरमुक्त्वा प्राथमिकराजविषयप्रश्नस्योत्तरमाह–केकयस्थ इति। यायजूकः इज्याशीलः। "इज्याशीलो यायजूकः" इत्यमरः ॥ ५ ॥ मन्त्रिगमनानन्तरं कतिदिवसेषु राजा दिवं गत इत्यत्राह–निष्क्रान्तमात्र इति ॥ ६ ॥ ७ ॥ भवद्भ्यां दत्ते किं मयापि दातव्यमित्यत्राह–प्रियेणेति ॥ ८ ॥ प्रियत्वमेव दर्शयति–त्वामेवेति। रुग्णः पीडित इति यावत् ॥ ९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरा० पीता० अयो० एकोत्तरशततमः सर्गः १०१

भवाय भद्राय ॥ ३ ॥ देवत्वप्रापकतपश्चरणं विहाय मम राज्याभिषेकेण किमित्यत आह–राजानमिति। यद्यपि राजानं मानुषं प्राहुः तथापि मम देवत्वे सम्मतः। कुतः ? यस्य वृत्तममानुषं दिव्यं देवत्वसम्पादकमित्यर्थः। तपश्चरणेन क्लेशद्वारा देवत्वं राज्यपरिपालनेन भोगद्वारा देवत्वमिति भावः ॥ ४ ॥ ननु पितरि जीवति कुतो मम राज्याधिकारः ? इत्यत आह केकयस्थ इति। यायजूकः इज्याशीलः ॥५–८॥ त्वामेवेति। त्वामेव शोचन्नित्युक्त्वा पुनस्तव शोकमग्न इत्युक्तिः स एव शोकस्तस्यावसादहेतुरिति प्रतिपादयितुमिति ज्ञेयम् ॥९॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपि० अयोध्याकाण्डव्याख्यायाम् एकोत्तरशततमः सर्गः॥१०१॥

तामित्यादि । करुणां शोकावहाम् । यद्वा अकरुणां करुणारहिताम्, क्रूरामिति यावत् ॥१॥ तं त्वित्यादिश्लोकद्वयमेकं वाक्यम् । दानवारिणा इन्द्रेण । बाहू प्रगृह्य पाणिना पाणिं निष्पीडय उद्धृत्य वा । वाग्वज्रमित्यस्य पूर्वश्लोकादनुषक्तेन श्रुत्वेत्यनेनान्वयः ॥ २ ॥ ३ ॥ तथेत्यादिश्लोकद्वयम् । कूलघातेन मदेन दन्तकण्ड्वा च कृतेन कूलप्रहारेण परिश्रान्तम् अतएव प्रसुप्तं कुञ्जरमिव स्थितम्, मूर्च्छितमित्यर्थः । सलिलेन सर्वतः सिषिचुः सर्व

तां श्रुत्वा करुणां वाचं पितुर्मरणसंहिताम् । राघवो भरतेनोक्तां बभूव गतचेतनः ॥ १ ॥ तं तु वज्रमिवोत्सृष्टमाहवे दानवारिणा । वाग्वज्रं भरतेनोक्तममनोज्ञं परन्तपः ॥ २ ॥ प्रगृह्य बाहू रामो वै पुष्पिताग्रो यथा द्रुमः । वने परशुना कृत्तस्तथा भुवि पपात ह ॥३॥ तथा निपतितं रामं जगत्यां जगतीपतिम् । कूलघातपरिश्रान्तं प्रसुप्तमिव कुञ्जरम् ॥ ४ ॥ भ्रातरस्ते महेष्वासं सर्वतः शोककर्शितम् । रुदन्तः सह वैदेह्या सिषिचुः सलिलेन वै ॥ ५ ॥ स तु संज्ञां पुनर्लब्ध्वा नेत्राभ्यामास्रमुत्सृजन् । उपाक्रामत काकुत्स्थः कृपणं बहु भाषितुम् ॥ ६ ॥ स रामः स्वर्गतं श्रुत्वा पितरं पृथिवीपतिम् । उवाच भरतं वाक्यं धर्मात्मा धर्मसंहितम् ॥ ७ ॥ किं करिष्याम्ययोध्यायां ताते दिष्टां गतिं गते । कस्तां राजवराद्धीनामयोध्यां पालयिष्यति ॥ ८ ॥ किं नु तस्य मया कार्य्यं दुर्जातेन महात्मनः । यो मृतो मम शोकेन मया चापि न संस्कृतः ॥ ९ ॥

गात्राणि मोहशान्तये सिक्तवन्तः । यतः "अमृतं वा आपस्तस्मादद्भिरवतांतमभिषिञ्चन्ति" इति श्रुतिरपि हि वदति ॥ ४ ॥ ५ ॥ स त्विति । उपाक्रामत उपाक्रमत । दीर्घ आर्षः ॥ ६ ॥ ७ ॥ किमिति । दिष्टां कालकल्पिताम् । "कालो दिष्टोप्यनेहापि" इत्यमरः । यद्वा दिष्टां दैवकल्पिताम् । "दैवं दिष्टं भागधेयम्" इत्यमरः । राजवरात् । तृतीयार्थे पञ्चमी । ( पाठान्तरं । किंकरिष्यामीत्यस्य भावमुद्घाटयति राजवरेति । राजवराधीनां तद्रक्षणाधीनामित्यर्थः ) ॥ ८ ॥ पितृमरणहेतुभूतत्वात्तत्संस्काराद्यनुपयोगाच्चात्मानं विगर्हते--किं नु तस्येति ॥ ९ ॥

तामिति । अकरुणां क्रूराम् ॥ १ ॥ तमित्यादिश्लोकद्वयमेकं वाक्यम् । दानवारिणा इन्द्रेण । वाग्वज्रं श्रुत्वेत्यनुषज्यते । बाहू प्रगृह्य पाणिना पाणिं निष्पीडय, बाहू उद्धृत्य वा ॥ ३–७ ॥ दिष्टां गतिं कालकल्पितां गतिम्, मरणमित्यर्थः । राजवरात् । तृतीयार्थे पञ्चमी ॥ ८–१० ॥

अहो इति । अनघ " पुत्रमन्त्ये तु कर्मणि " इत्युक्तपितृसंस्काररूपभाग्यविघटकपापरहित ! अहं हि तादृशपापवानिति भावः । येन कारणेन त्वया शत्रुघ्नेन च सर्वेषु प्रेतकृत्येषु प्राप्तेषु राजा सत्कृतः ॥ १० ॥ निष्प्रधानामिति । एकाग्रा अनाकुला । " अनाकुलेपि चैकाग्रः " इत्यमरः । सा न भवतीत्यनेकाग्रा । ताम् आकुलामिति यावत् ॥ ११ ॥ समाप्तेति । शासिष्यति कार्य्येषु नियोक्ष्यतीत्यर्थः ॥ १२ ॥ पुरेति । सुवृत्तं शोभनं नियोगा

अहो भरत सिद्धार्थो येन राजा त्वयाऽनघ। शत्रुघ्नेन च सर्वेषु प्रेतकृत्येषु सत्कृतः ॥ १० ॥ निष्प्रधानामनेकाग्रां नरेन्द्रेण विना कृताम् । निवृत्तवनवासोपि नायोध्यां गन्तुमुत्सहे ॥ ११ ॥ समाप्तवनवासं मामयोध्यायां परन्तप । को नु शासिष्यति पुनस्ताते लोकान्तरं गते ॥ १२ ॥ पुरा प्रेक्ष्य सुवृत्तं मां पिता यान्याह सान्त्वयन् । वाक्यानि तानि श्रोष्यामि कुतः कर्णसुखान्यहम् ॥ १३ ॥ एवमुक्त्वा स भरतं भार्यामभ्येत्य राघवः । उवाच शोकसन्तप्तः पूर्णचन्द्रनिभाननाम् ॥ १४ ॥ सीते मृतस्ते श्वशुरः पित्रा हीनोऽसि लक्ष्मण । भरतो दुःखमाचष्टे स्वर्गतं पृथिवीपतिम् ॥ १५ ॥ ततो बहुगुणं तेषां बाष्पं नेत्रेष्वजायत । तथा ब्रुवति काकुत्स्थे कुमाराणां यशस्विनाम् ॥ १६ ॥ ततस्ते भ्रातरः सर्वे भृशमाश्वास्य राघवम् । अब्रुवन् जगतीभर्तुः क्रियतामुदकं पितुः ॥ १७ ॥ सा सीता श्वशुरं श्रुत्वा स्वर्गलोकगतं नृपम् । नेत्राभ्यामश्रुपूर्णाभ्यामशकन्नेक्षितुं पतिम् ॥ १८ ॥ सान्त्वयित्वा तु तां रामो रुदन्तीं जनकात्मजाम् । उवाच लक्ष्मणं तत्र दुःखितो दुःखितं वचः ॥ १९ ॥

चरणरूपं वृत्तं यस्य तम् । कुतः कस्मात् पुरुषात् ॥ १३ ॥ एवमिति । अभ्येत्य अभिमुखो भूत्वा ॥ १४ ॥ सीत इति । दुःखमित्येतत् क्रियाविशेषणम् । इत्युवाचेति पूर्वेणान्वयः ॥ १५ ॥ तनि०—ते श्वशुरः त्वय्यत्यन्तप्रीतियुक्तः श्वशुरः । पित्रा हीनोसि लक्ष्मणेत्यनेन त्वमेव पित्रा हीनः नाहमिति गम्यते । "न संवृत्तः पिता मम" इति वक्ष्यमाणत्वात् ॥ १५ ॥ १६ ॥ तत इति । क्रियतामित्यत्रेतिकरणं द्रष्टव्यम् ॥ १७–१९ ॥

निष्प्रधानां नाथरहिताम् । अनेकाग्राम् आकुलामित्यर्थः ॥ ११ ॥ शासिष्यति कार्येषु नियोक्ष्यतीत्यर्थः ॥१२॥ सुवृत्तं शोभननियोगाचरणम् । कुतः कस्मात्पुरुषात् ॥ १३ ॥ अभ्येत्य अभिमुखो भूत्वा ॥ १४ ॥ दुःखमित्येतत्क्रियाविशेषणम् ॥ १५ ॥ १६ ॥ तत इति । क्रियतामित्यत्रेतिकरणं द्रष्टव्यम् ॥ १७–१९ ॥

आनयेति । इङ्गुदिपिण्याकं तपस्विभोज्यं तापसतरुबीजपिण्याकम् । अनिस्सारिततैलं पिष्ट्वा चूर्णीकृत्य पिण्डीकृतमिङ्गुदीबीजमेव पिण्याकत्वेनो पचर्य्यते । "इङ्गुदी तापसतरुः" इत्यमरः । चीरं वास उदकदानार्थम् । ( चीरं स्नानार्थं परिधानम् ) उत्तरम् उत्तरीयं च ॥ २० ॥ सीतेति । अभितः पश्चात् " अभितः परितः " इत्यादिना एनामिति द्वितीया । सुदारुणा सुतरां दुस्सहा । गतिः दुःखिनां गतिः । एषा हि स्नानाद्यर्थं स्त्रीबालपुर

आनयेङ्गुदिपिण्याकं चीरमाहर चोत्तरम् । जलक्रियार्थं तातस्य गमिष्यामि महात्मनः ॥२०॥ सीता पुरस्ताद्व्रजतु त्वमेनामभितो व्रज । अहं पश्चाद्गमिष्यामि गतिर्ह्येषा सुदारुणा ॥२१॥ ततो नित्यानुगस्तेषां विदितात्मा महामतिः । मृदुर्दान्तश्च शान्तश्च रामे च दृढभक्तिमान् ॥२२॥ सुमन्त्रस्तैर्नृपसुतैः सार्द्धमाश्वास्य राघवम् । अवातारयदालम्ब्य नदीं मन्दाकिनीं शिवाम् ॥२३॥ ते सुतीर्थां ततः कृच्छ्रादुपागम्य यशस्विनः । नदीं मन्दाकिनीं रम्यां सदा पुष्पित काननाम् ॥२४॥ शीघ्रस्रोतसमासाद्य तीर्थं शिवमकर्दमम् । सिषिचुस्तूदकं राज्ञे तत्रैतत्ते भवत्विति ॥ २५ ॥

स्सरा खल्वित्यर्थः । तथा च सूत्रम् " सर्वे कनिष्ठप्रथमा अनुपूर्वं इतरे स्त्रियोऽग्रे " इति ॥ २१ ॥ तत इति । नित्यानुगः कुलक्रमानुगतानुचरः । विदितात्मा ज्ञातात्मस्वरूपः ॥ २२ ॥ २३ ॥ त इति । ते सीतालक्ष्मणरामाः । स्त्रियोपि उदकं दिशन्तीति शास्त्रसिद्धम् । शीघ्रस्रोतसं नदीमुपागम्य अकर्दमं तीर्थम् अवतारप्रदेशमासाद्य । तत हे तात ! ते तुभ्यमेतद्भवत्वित्युच्चार्य्य उदकं सिषिचुः, ददुरित्यर्थः । स्नानमर्थात्सिद्धम् । सीतायाः स्नानमात्रे ऽन्वयो वा । कृच्छ्रादित्यनेन तेषां दुःखातिशयात् स्खलितगमनमुच्यते । सुतीर्थामित्यनेन पुण्यतीर्थत्वमुक्तम् । उपगम्येत्यनेन नदीतीरेपि कञ्चित्कालं रोदनाचार उक्तः । यशस्विन इत्यनेन शास्त्रानतिक्रम उक्तः । रम्यामित्यनेन दुःखशान्तिहेतुत्वमुक्तम् । पुष्पितकानननामित्येन उदकदानसमाप्तिपर्य्यन्त मनातपत्वमुक्तम् । शीघ्रस्रोतसमित्यनेन स्नानकाले स्रोतोभिमुखत्वमुक्तम् । शिवं शुद्धम् । अकर्दमं तीर्थमासाद्येत्यनेन तीरे सेचनमुक्तम् ॥ २४ ॥ २५ ॥

आनयेति । इङ्गुदिपिण्याकं तपस्विभोज्यं तापसतरुपिण्याकम् । उत्तरं चीरम् उत्तरीयं वस्त्रम् । आहर देहीत्यर्थः ॥ २०॥ अभितः पश्चात् सुदारुणा सुतरां दुस्सहा । गतिः दुःखिनां गतिः । एषा हि स्नानार्थं स्त्रीबालपुरस्सरेति । तथा च पितृमेधसूत्रे "सर्वे कनिष्ठप्रथमा अनुपूर्वं इतरे स्त्रियोऽग्रे" इति ॥२१॥ नित्यानुगः कुलक्रमा गतानुचरः । विदितात्मा ज्ञातात्मस्वरूपः ॥२२॥२३॥ त इत्यादिश्लोकद्वयमेकं वाक्यम् । ते सीतालक्ष्मणरामाः । शीघ्रस्रोतसं नदीमुपागम्य । विकर्दमं तीर्थम् अव

दानप्रकारमाह–प्रगृह्येत्यादिना ॥ २६ ॥ दानमन्त्रमाह–एतत्तेत्यादिना ॥ २७ ॥ तत इति । भ्रातृभिः सह मन्दाकिनीतीरात् प्रत्युत्तीर्य्य पितुर्निवापं पिण्डप्रदानं चकार मन्दाकिनीतीरात्समुत्तीर्येत्युदकदानदेशात् किंचित्प्रदेशान्तरगमनवचनात् सपिण्डीकरणमेव कृतमित्यवगम्यते । दशाहात्यये उदकदानं विना पिण्डदानस्याचोदितत्वात् । उदकसेचनवत् कनिष्ठेन लक्ष्मणेन पिण्डदानानुक्तेश्च ॥ २८–३२ ॥ तेषामिति । प्रतिश्रुत्कः

प्रगृह्य च महीपालो जलपूरितमञ्जलिम् । दिशं याम्यामभिमुखो रुदन् वचनमब्रवीत् ॥ २६ ॥ एतत्ते राजशार्दूल विमलं तोयमक्षयम् । पितृलोकगतस्याद्य मद्दत्तमुपतिष्ठतु ॥२७॥ ततो मन्दाकिनीतीरात् प्रत्युत्तीर्य्य स राघवः । पितुश्चकार तेजस्वी निवापं भ्रातृभिः सह ॥२८॥ ऐङ्गुदं बदरीमिश्रं पिण्याकं दर्भसंस्तरे । न्यस्य रामः सुदुःखार्त्तो रुदन् वचनमब्रवीत् ॥ २९ ॥ इदं भुङ्क्ष्व महाराज प्रीतो यदशना वयम् । यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ ३० ॥ ततस्तेनैव मार्गेण प्रत्युत्तीर्य्य नदीतटात् । आरुरोह नरव्याघ्रो रम्यसानुं महीधरम् ॥ ३१ ॥ ततः पर्णकुटीद्वारमासाद्य जगतीपतिः । परिजग्राह बाहुभ्यामुभौ भरतलक्ष्मणौ ॥ ३२ ॥ तेषां तु रुदतां शब्दात् प्रतिश्रुत्कोऽभवद्गिरौ । भ्रातॄणां सह वैदेह्याः सिंहानामिव नर्दताम् ॥३३॥ महाबलानां रुदतां कुर्वतामुदकं पितुः । विज्ञाय तुमुलं शब्दं त्रस्ता भरतसैनिकाः ॥ ३४ ॥ अब्रुवंश्चापि रामेण भरतः सङ्गतो ध्रुवम् । तेषामेव महा न्छब्दः शोचतां पितरं मृतम् ॥ ३५ ॥

प्रतिध्वनिः ॥ ३३ ॥ महाबलानामित्यादिश्लोकद्वयमेकं वाक्यम् । त्रस्ताः किं भविष्यतीति धिया उद्विग्नाः । उद्वेगानन्तरं निश्चित्य वदन्ति स्मेत्याह अब्रुवन्नित्यादिना । मृतं पितरमुद्दिश्येति शेषः ॥ ३४ ॥ ३५ ॥



तरणप्रदेशं समासाद्य ततः तात एतत्ते भवत्विति उच्चार्य राज्ञे उदकं सिषिचुः ददुरित्यर्थः ॥२४–२७॥ तत इति । स राघवः भ्रातृभिस्सह मन्दाकिनीतीरात्प्रत्युत्तीर्य पितुर्निवापं पिण्डप्रदानं चकारेति सम्बन्धः ॥ २८–३२ ॥ प्रतिश्रुत्कः प्रतिध्वनिः ॥ ३३ ॥ महाबलानामित्यादिश्लोकद्वयमेकं वाक्यम् ॥ ३३–३५ ॥

अथेति । स्वनमभिमुखाः स्वनोत्पत्तिदिगभिमुखा इत्यर्थः । यथास्थानं शब्दोत्पत्तिप्रदेशमनतिक्रम्य । प्रधाविताः शीघ्रगतियुक्ताः ॥ ३६ ॥ सुकुमारा इति । हयैरित्यादिभिरुक्तानां त्रयाणां विशेषणम् । सुकुमारत्वाभावे दुःखितं रामं प्रति पद्भ्यामेव गन्तव्यत्वात् ॥ ३७ ॥ ३८ ॥ भ्रातॄणामिति । एषां

अथ वासान् परित्यज्य तं सर्वेऽभिमुखाः स्वनम् । अप्येकमनसो जग्मुर्यथास्थानं प्रधाविताः ॥ ३६ ॥ हयैरन्ये गजैरन्ये रथैरन्ये स्वलंकृतैः । सुकुमारास्तथैवान्ये पद्भिरेव नरा ययुः ॥ ३७ ॥ अचिरप्रोषितं रामं चिरविप्रोषितं यथा । द्रष्टुकामो जनः सर्वो जगाम सहसाश्रमम् ॥ ३८ ॥ भ्रातॄणां त्वरितास्तत्र द्रष्टुकामाः समागमम् । ययु र्बहुविधैर्यानैः खुरनेमिस्वनाकुलैः ॥ ३९ ॥ सा भूमिर्बहुभिर्यानैः खुरनेमिसमाहता । मुमोच तुमुलं शब्दं द्यौरिवाभ्र समागमे ॥ ४० ॥ तेन वित्रासिता नागाः करेणुपरिवारिताः । आवासयन्तो गन्धेन जग्मुरन्यद्वनं ततः ॥ ४१ ॥ वराह वृकसङ्घाश्च महिषाः सर्पवानराः । व्याघ्रगोकर्णगवयाः वित्रेसुः पृषतैः सह ॥ ४२ ॥ रथाङ्गसाह्वा नत्यूहाः हंसाः कारण्डवाः प्लवाः । तथा पुंस्कोकिलाः क्रौञ्चा विसंज्ञा भेजिरे दिशः ॥ ४३ ॥ तेन शब्देन वित्रस्तैराकाशं पक्षिभि र्वृतम् । मनुष्यैरावृता भूमिरुभयं प्रबभौ तदा ॥ ४४ ॥ ततस्तं पुरुषव्याघ्रं यशस्विनमरिन्दमम् । आसीनं स्थण्डिले रामं ददर्श सहसा जनः ॥ ४५ ॥

यानैर्गमनं दर्शनत्वरया । ययुर्बहुविधैर्यानैः खुरनेमिसमाहताः इति पाठः । ययुर्बहुविधैर्युक्तैरिति पाठे—युक्तैः सज्जैः, यानैरिति शेषः ॥३९॥४०॥ तेनेति । आवासयन्तः मदगन्धेनावासयन्तः । एतेन वनगजानामपि रामदर्शनहर्षो द्योत्यते ॥ ४१ ॥ वराहेति । गोकर्णः गोरिव कर्णौ यस्य स गोकर्णः । महापृषतविशेषः ॥ ४२ ॥ रथाङ्गेति । नत्यूहाः जलरङ्कवः । "नत्यूहो जलरङ्कुः स्यात्" इतिहलायुधः । प्लवाः स्थूलबकविशेषाः ॥ ४३–४५ ॥

तं स्वनमभिमुखाः स्वनोत्पत्तिदिगभिमुखाः । यथास्थानं शब्दोत्पत्तिप्रदेशमनतिक्रम्य ॥ ३६ ॥ हयैरिति । सुकुमारा इत्येतदन्यशब्दत्रयेण प्रत्येकमभिसम्बध्यते । युक्तैः सज्जैः, यानैरिति शेषः ॥ ३७–४० ॥ तेन शब्देन मदगन्धेन आवासयन्तः आ समन्ताद्वासयन्तः ॥ ४१ ॥ वराहेति । गोरिव कर्णावस्य गोकर्णः, हरिण विशेषः ॥ ४२ ॥ प्लवाः स्थूलबकविशेषाः । नत्यूहाः जलकुक्कुटाः ॥ ४३–४५ ॥

विगर्हमाण इति । सहितः अन्योन्यसङ्गतः ॥४६॥४७॥ स इति । चकार सम्मानमितिशेषः ॥४८॥४९॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्व्युत्तरशततमः सर्गः ॥ १०२ ॥ अथ मातृसमागमस्त्र्युत्तरशततमे–वसिष्ठ इति । रामदर्शनतर्षितः

विगर्हमाणः कैकेयीं सहितो मन्थरामपि । अभिगम्य जनो रामं बाष्पपूर्णमुखोऽभवत् ॥ ४६ ॥ तान्नरान् बाष्पपूर्णाक्षान् समीक्ष्याथ सुदुःखितान् । पर्यष्वजत धर्मज्ञः पितृवन्मातृवच्च सः ॥४७॥ स तत्र कांश्चित् परिषस्वजे नरान्नराश्च केचित्तु तमभ्यवादयन् । चकार सर्वान् सवयस्यबान्धवान् यथार्हमासाद्य तदा नृपात्मजः ॥ ४८ ॥ स तत्र तेषां रुदतां महात्मनां भुवं च खं चानुनिनादयन् स्वनः। गुहा गिरीणां च दिशश्च सन्ततं मृदङ्गघोषप्रतिमः प्रशुश्रुवे ॥४९॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे द्व्युत्तरशततमःसर्गः ॥१०२॥

वसिष्ठः पुरतः कृत्वा दारान् दशरथस्य च। अभिचक्राम तं देशं रामदर्शनतर्षितः ॥ १ ॥ राजपत्न्यश्च गच्छन्त्यो मन्दं मन्दाकिनीं प्रति । ददृशुस्तत्र तत्तीर्थं रामलक्ष्मणसेवितम् ॥ २ ॥ कौसल्या बाष्पपूर्णेन मुखेन परिशुष्यता । सुमित्रामब्रवीद्दीना याश्चान्या राजयोषितः ॥ ३ ॥ इदं तेषामनाथानां क्लिष्टमक्लिष्टकर्मणाम् । वने प्राक्केवलं तीर्थं ये ते निर्विषयीकृताः ॥ ४ ॥ इतः सुमित्रे पुत्रस्ते सदा जलमतन्द्रितः । स्वयं हरति सौमित्रिर्मम पुत्रस्य कारणात् ॥५॥

रामदर्शने सञ्जाताभिलाषः । "कामोऽभिलाषस्तर्षश्च" इत्यमरः ॥१–३॥ इदमिति । ते प्रसिद्धाः रामादयः । ये प्राक् निर्विषयीकृताः राज्यान्निष्कासिताः । वने तेषां क्लिष्टम् उपमर्दितम् इदं तीर्थमवतरणम् । केवलं निश्चितम् । "केवलं निश्चिते क्लीबे वाच्यवत्त्वेककृत्स्नयोः" इति वैजयन्ती॥४॥५॥

विगर्हमाण इति । सहितः अन्योन्यं सङ्गतः ॥ ४६ ॥ ४७ ॥ स इति । चकार, सम्मानमिति शेषः ॥ ४८ ॥ ४९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायां द्व्युत्तरशततमः सर्गः ॥१०२॥ वसिष्ठ इति । रामदर्शनतर्षितः रामदर्शने साभिलाषः ॥१–३॥ ते प्रसिद्धा ये रामादयः प्राक् निर्विषयीकृताः राज्यान्निष्कासिताः निराश्रयीकृता वा। वने तेषां क्लिष्टम् उपमर्दितं तीर्थम् अवतरणस्थलमित्यर्थः । केवलं निश्चितम् "केवलं निश्चिते क्लीबे

स०–क्लिष्टं दुःखरोहं प्राकलनम् बहुदिनमारम्य स्नानाद्यर्थं परिगृहीतम् । तीर्थम् अवातारप्रदेशः । इति निश्चय इति शेषः ॥ ४ ॥ वक्ष्यमाणसौमित्रिपदव्याख्यानं सुमित्रे पुत्रस्ते इति ॥ ५ ॥

जघन्यमिति । जघन्यं हीनम् । जलाहरणादिकर्म कृतवानपि न गर्हितः । कुत इत्यत्राह भ्रातुरिति । भ्रातुर्ज्येष्ठभ्रातुः । अर्थसहितं प्रयोजनसहितं यत्कर्म तत्सर्वं गुणैर्विहितम् । "ज्येष्ठभ्राता पितृसमः" इति वचनात् पितृशुश्रूषावत् गुणाय कल्पत इत्यर्थः ॥ ६ ॥ अद्येति । क्लेशानामतथोचितः

जघन्यमपि ते पुत्रः कृतवान्न तु गर्हितः । भ्रातुर्यदर्थसहितं सर्वं तद्विहितं गुणैः॥ ६ ॥ अद्यायमपि ते पुत्रः क्लेशाना मतथोचितः । नीचानर्थसमाचारं सज्जं कर्म प्रमुञ्चतु ॥ ७ ॥ दक्षिणाग्रेषु दर्भेषु सा ददर्श महीतले । पितुरिङ्गुदि पिण्याकं न्यस्तमायतलोचना ॥ ८ ॥ तं भूमौ पितुरार्तेन न्यस्तं रामेण वीक्ष्य सा । उवाच देवी कौसल्या सर्वा दशरथस्त्रियः ॥ ९ ॥ इदमिक्ष्वाकुनाथस्य राघवस्य महात्मनः । राघवेण पितुर्दत्तं पश्यतैतद्यथाविधि ॥१०॥ तस्य देवसमानस्य पार्थिवस्य महात्मनः । नैतदौपयिकं मन्ये भुक्तभोगस्य भोजनम् ॥ ११ ॥ चतुरन्तां महीं भुक्त्वा महेन्द्रसदृशो विभुः । कथमिङ्गुदिपिण्याकं स भुङ्क्ते वसुधाधिपः ॥१२॥ अतो दुःखतरं लोके न किञ्चित् प्रतिभाति मा । यत्र रामः पितुर्दद्यादिङ्गुदीक्षोदमृद्धिमान् ॥ १३ ॥

इदानीं यादृशक्लेशानुभवस्तादृशक्लेशानामनुचितः । ते अयं पुत्रः नीचानर्थसमाचारं निकृष्टदुःखप्रचुरसमाचारसहितम् । सज्जम् उद्युक्तं कर्म अद्य प्रमुञ्चत्वपि । अपिशब्दः सम्भावनायाम् "अपिः सम्भावनाप्रश्नगर्हाशङ्कासमुच्चये" इति वैजयन्ती । भरतप्रार्थनया रामेण स्वराज्ये स्वीकृते लक्ष्मणस्य नीचकर्मप्रमोचनं सम्भवेदिति भावः ॥ ७ ॥ दक्षिणाग्रेष्विति । पितुरिति चतुर्थ्यर्थे षष्ठी ॥ ८–१० ॥ तस्येति । औपयिकं प्राप्तम् । "युक्तं स्यादुचितं न्याय्यं प्राप्तमौपयिकं तथा" इति हलायुधः ॥ ११ ॥ १२ ॥ राज्यैश्वर्ययोग्यतया ऋद्धिमान् इत्युक्तिः ॥ १३ ॥

वाच्यवत्त्वेककृत्स्नयोः" इति वैजयन्ती । इदं रामादीनां स्नानादिभिर्व्यवहितस्थलं नूनमिति भावः ॥ ४ ॥ ५ ॥ ते पुत्रः जघन्यं जलाहरणादिनिकृष्टं कर्म कृतवानपि न तु गर्हितः । कुत इत्यत आह भ्रातुः ज्येष्ठभ्रातुः । अर्थसहितं प्रयोजनसहितं भ्रातृशुश्रूषारूपमित्यर्थः । यत्कर्म तत्सर्वं गुणैर्विहितं ज्येष्ठभ्रातुः पितृसमत्वात् पितृशुश्रूषणं लक्ष्मणस्य गुणाय कल्पत इत्यर्थः ॥ ६ ॥ क्लेशानामतथोचितः यथेदानीं क्लेशानामुचितो भवति तथा क्लेशानामनुचितस्ते अयं पुत्रः, नीचानर्थसमाचारं नीचो निकृष्टः अनर्थो दुःखम् समाचारोऽनुष्ठानं यस्य तत्, जलाहरणादिरूपमित्यर्थः । सज्जं कर्म उद्युक्तं कर्म अद्य प्रमुञ्चेदपि । अपिशब्दः सम्भावनायाम् । भरतप्रार्थनया रामेण राज्ये स्वीकृते लक्ष्मणस्य नीचकर्मप्रमोचनं सम्भवेदिति भावः ॥ ७–११ ॥ चतुरन्तां चतुर्दिगन्तान् ॥ १२ ॥ यत्र यदा ऋद्धिमान्

स्फोटति स्फुटति ॥ १४ ॥ सत्या सत्यार्था । लौकिकी लोकविदिता, लोकप्रसिद्धेति यावत् । देवता इति श्रुतिः सत्येत्यन्वयः ॥ १५–१८ ॥



रामेणेङ्गुदिपिण्याकं पितुर्दत्तं समीक्ष्य मे। कथं दुःखेन हृदयं न स्फोटति सहस्रधा ॥ १४ ॥ श्रुतिस्तु खल्वियं सत्या लौकिकी प्रतिभाति मा । यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ १५ ॥ एवमार्त्तां सपत्न्यस्ता जग्मुराश्वास्य तां तदा । ददृशुश्चाश्रमे रामं स्वर्गच्युतमिवामरम् ॥ १६ ॥ सर्वभोगैः परित्यक्तं रामं सम्प्रेक्ष्य मातरः । आर्त्ता मुमुचुरश्रूणि सस्वरं शोककर्शिताः ॥ १७॥ तासां रामः समुत्थाय जग्राह चरणान् शुभान् । मातॄणां मनुजव्याघ्रः सर्वासां सत्यसङ्गरः ॥ १८ ॥ ताः पाणिभिः सुखस्पर्शैर्मृद्वङ्गुलितलैः शुभैः । प्रममार्जू रजः पृष्ठाद्रामस्यायतलोचनाः ॥ १९ ॥ सौमित्रिरपि ताः सर्वाः मातॄः सम्प्रेक्ष्य दुःखितः । अभ्यवादयतासक्तं शनै रामादनन्तरम् ॥ २० ॥ यथा रामे तथा तस्मिन् सर्वा ववृतिरे स्त्रियः । वृत्तिं दशरथाज्जाते लक्ष्मणे शुभलक्षणे ॥२१॥ सीतापि चरणांस्तासामुपसंगृह्य दुःखिता । श्वश्रूणामश्रुपूर्णाक्षी सा बभूवाग्रतः स्थिता ॥ २२ ॥ तां परिष्वज्य दुःखार्त्तां माता दुहितरं यथा । वनवासकृशां दीनां कौसल्या वाक्यमब्रवीत् ॥ २३ ॥ विदेहराजस्य सुता स्नुषा दशरथस्य च । रामपत्नी कथं दुःखं सम्प्राप्ता निर्जने वने ॥ २४ ॥

ता इति । रामस्यायतलोचना इति पाठः ॥१९॥ असक्तम् अविरतम् । "अविरतमनवरतं स्यादेकार्थमनारतमसक्तमपि" इति हलायुधः ॥२०॥ ववृतिरे

राज्यैश्वर्ययुक्तः । क्षोदं पिण्याकम् ॥ १३ ॥ न स्फोटति न स्फुटति ॥ १४ ॥ श्रुतिरिति । सत्या सत्यार्था । लौकिकी लोके प्रसिद्धेति यावत् ॥ १५–१९ ॥ सौमित्रिरिति । असक्तमनवरतम् ॥ २० ॥ ववृतिरे चक्रुरित्यर्थः ॥ २१–२५ ॥



स०–सत्यसङ्गरः सत्या कैकेय्या सह न विद्यते सङ्गरः कलहो यस्य सः । सत्यप्रतिज्ञ इति वा ॥ १८ ॥

चक्षुरित्यर्थः ॥२१-२४॥ ते मुखं प्रेक्ष्य स्थितामिति शेषः । मां मनसि स्थितः सन्निति शेषः । आश्रयमाश्रयभूतं काष्ठादिकम् ॥ २५-२८ ॥

पद्ममातपसन्तप्तं परिक्लिष्टमिवोत्पलम् । काञ्चनं रजसा ध्वस्तं क्लिष्टं चन्द्रमिवाम्बुदैः ॥ २५ ॥ मुखं ते प्रेक्ष्य मां शोको दहत्यग्निरिवाश्रयम् । भृशं मनसि वैदेहि व्यसनारणिसम्भवः ॥ २६ ॥ ब्रुवन्त्यामेवमार्त्तायां जनन्यां भरताग्रजः । पादावासाद्य जग्राह वसिष्ठस्य च राघवः ॥ २७ ॥ पुरोहितस्याग्निसमस्य वै तदा बृहस्पतेरिन्द्र इवामराधिपः । प्रगृह्य पादौ सुसमृद्धतेजसः सहैव तेनोपविवेश राघवः ॥२८॥ ततो जघन्यं सहितैः समन्त्रिभिः पुरप्रधानैश्च सहैव सैनिकैः । जनेन धर्मज्ञतमेन धर्मवानुपोपविष्टो भरतस्तदाग्रजम् ॥ २९ ॥ उपोपविष्टस्तु तथा स वीर्यवांस्तपस्विवेषेण समीक्ष्य राघवम् । श्रिया ज्वलन्तं भरतः कृताञ्जलिर्यथा महेन्द्रः प्रयतः प्रजापतिम् ॥ ३० ॥ किमेष वाक्यं भरतोऽद्य राघवं प्रणम्य सत्कृत्य च साधु वक्ष्यति । इतीव तस्यार्यजनस्य तत्त्वतो बभूव कौतूहलमुत्तमं तदा ॥ ३१ ॥ स राघवः सत्यधृतिश्च लक्ष्मणो महानुभावो भरतश्च धार्मिकः । वृताः सुहृद्भिश्च विरेजुरध्वरे यथा सदस्यैः सहितास्त्रयोऽग्नयः ॥ ३२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

ततो जघन्यं वसिष्ठरामोपवेशादनन्तरमुपोपविष्टः । "प्रसमुपोदः पादपूरणे" इति द्विर्वचनम् ॥ २९ ॥ कृताञ्जलिः अभूदिति शेषः ॥ ३० ॥ इतीवेत्यत्र इवशब्दो वाक्यालङ्कारे ॥ ३१ ॥३२॥ इति श्रीगोविन्द० श्रीरामायणभू० पीताम्बरा० अयोध्याकाण्ड० त्र्युत्तरशततमस्सर्गः ॥ १०३ ॥

मुखमिति । प्रेक्ष्य स्थितायाः, ममेति शेषः । शोको मनसि स्थितस्सन्निति शेषः । आश्रयम् आश्रयभूतकाष्ठादिकम् ॥ २६-२८ ॥ तत इति । जघन्यं वसिष्ठरामोपवेशनानन्तरम् । उपोपविष्टः कृताञ्जलिः, अभूदिति शेषः ॥२९-३२॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

अथ रामभरतयोरुक्तिप्रत्युक्ती चतुरुत्तरशततमे—तं त्वित्यादिना। गुरुवत्सलं गुरौ स्वस्मिन् भक्तम्, समाज्ञाय ज्ञात्वा प्राप्तराज्यपरित्यागेन जटावल्कल धारणादिना च स्वस्मिन् भक्तियुक्तं ज्ञात्वेत्यर्थः। समाश्वास्येति पाठे—प्रियवचनादिभिः सम्यगाश्वास्येत्यर्थः ॥ १ ॥ यस्मात् कारणात् त्वं चीरजटा

तं तु रामः समाज्ञाय भ्रातरं गुरुवत्सलम्। लक्ष्मणेन सह भ्रात्रा प्रष्टुं समुपचक्रमे ॥ १ ॥ किमेतदिच्छेयमहं श्रोतुं प्रव्याहृतं त्वया। यस्मात्त्वमागतो देशमिमं चीरजटाजिनी ॥ २ ॥ किंनिमित्तमिमं देशं कृष्णाजिनजटाधरः। हित्वा राज्यं प्रविष्टस्त्वं तत्सर्वं वक्तुमर्हसि ॥ ३ ॥ इत्युक्तः कैकयीपुत्रः काकुत्स्थेन महात्मना। प्रगृह्य बलवद्भूयः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ४ ॥ आर्य्यं तातः परित्यज्य कृत्वा कर्म सुदुष्करम्। गतः स्वर्गं महाबाहुः पुत्रशोकाभिपीडितः॥५॥ स्त्रिया नियुक्तः कैकेय्या मम मात्रा परन्तप। चकार सुमहत्पापमिदमात्मयशोहरम् ॥६॥ सा राज्यफलमप्राप्य विधवा शोककर्शिता। पतिष्यति महाघोरे निरये जननी मम ॥ ७ ॥ तस्य मे दासभूतस्य प्रसादं कर्त्तुमर्हसि। अभिषिञ्चस्व चाद्यैव राज्येन मघवानिव ॥ ८ ॥ इमाः प्रकृतयः सर्वा विधवा मातरश्च याः। त्वत्सकाशमनुप्राप्ताः प्रसादं कर्त्तुमर्हसि ॥ ९ ॥

जिनी सन् इमं देशमागतः एतत् एतत्कारणं किम्? अहं त्वया प्रव्याहृतं श्रोतुमिच्छेयं श्रोतुमिच्छामि, न तु ऊहेयेति भावः ॥ २ ॥ एवमुक्तेपि शोकेन तूष्णींस्थितं पुनः पृच्छति—किंनिमित्तमित्यादिश्लोकद्वयेन। काकुत्स्थेन बलवत्प्रगृह्य गाढं परिष्वज्य तत्सर्वं वक्तुमर्हसीति भूय उक्तः कैकयीपुत्रः प्राञ्जलिर्वाक्यमब्रवीदित्यन्वयः ॥ ३ ॥ ४ ॥ आर्यमिति। सुदुष्करं कर्म कृत्वा ज्येष्ठार्हं राज्यं स्त्रीनियोगात् कनिष्ठसात्कृत्येत्यर्थः। आर्यं त्वां परित्यज्य विवास्य ॥ ५ ॥ स्त्रियेति। सुमहत्पापं सुपुत्रस्य वने प्रव्राजनरूपम् ॥ ६ ॥ सा एवंरूपपापप्रेरणकर्त्री ॥ ७ ॥ तस्य कैकेयीसम्बन्धात् प्राप्तापवा

तमिति। गुरुवत्सलं समाज्ञाय प्राप्तराज्यपरित्यागेन जटावल्कलधारणादिना गुरुभूते स्वस्मिन् भक्तियुक्तं ज्ञात्वेत्यर्थः। समाश्वास्येति पाठे—प्रियवचनादिभिस्सम्यगाश्वास्येत्यर्थः ॥ १ ॥ किमेतदिति। यस्मात्कारणात्त्वं चीरजटाजिनस्सन् इमं देशमागतः एतत्कारणं किम् अहं त्वया प्रव्याहृतं श्रोतुमिच्छेयमिति सम्बन्धः ॥ २ ॥ ३ ॥ काकुत्स्थेन बलवत्प्रगृह्य गाढं परिष्वज्य तत्सर्वं वक्तुमर्हसीति भूय उक्तः कैकयीपुत्रः प्राञ्जलिर्वाक्यमब्रवीदिति सम्बन्धः ॥ ४ ॥ सुदुष्करं कर्म कृत्वा ज्येष्ठार्हं राज्यं स्त्रीनियोगात्कनिष्ठसात्कृत्येत्यर्थः। परित्यज्य विवास्य पुत्रशोकाभिपीडितः स्वर्गं गत इति सम्बन्धः ॥ ५–७ ॥ तस्येति तस्य मे कैकेयीसम्बन्धात

दस्येत्यर्थः । राज्येन हेतुना ॥ ८ ॥ ९ ॥ आनुपूर्व्यां युक्तं ज्येष्ठानुक्रमेण सङ्गतम् आत्मनि युक्तं च । भरणसमर्थे त्वय्येव प्राप्तम् ॥ १० ॥ भवत्विति । पतिनेति नाभाव आर्षः। रजनी यथा रजनीव। भूमिः शशिनेव त्वया अविधवा भवतु ॥११॥ ममैकस्य शोकाश्रुपातमसहमानः कथमेषामश्रूणि सहिष्यत

तदानुपूर्व्यां युक्तं च युक्तं चात्मनि मानद । राज्यं प्राप्नुहि धर्मेण सकामान् सुहृदः कुरु ॥ १० ॥ भवत्वविधवा भूमिः समग्रा पतिना त्वया । शशिना विमलेनेव शारदी रजनी यथा ॥ ११ ॥ एभिश्च सचिवैः सार्द्धं शिरसा याचितो मया । भ्रातुः शिष्यस्य दासस्य प्रसादं कर्त्तुमर्हसि ॥ १२ ॥ तदिदं शाश्वतं पित्र्यं सर्वं प्रकृतिमण्डलम् । पूजितं पुरुषव्याघ्र नातिक्रमितुमर्हसि ॥१३॥ एवमुक्त्वा महाबाहुः सबाष्पः कैकयीसुतः । रामस्य शिरसा पादौ जग्राह विधिवत्पुनः ॥१४॥ तं मत्तमिव मातङ्गं निःश्वसन्तं पुनःपुनः । भ्रातरं भरतं रामः परिष्वज्येदमब्रवीत् ॥१५॥

इति मत्वा युद्धाय संनद्धैरिव रथगजतुरगपदातिभिः सार्द्धमागतोऽस्मि । सचिवैः मम हि याचनमुपेक्ष्यमस्मद्राज्यनिर्वाहकैः पूजनीयैः सचिवैर्याचितं तवानतिक्रमणीयं हि । याचितः ममाग्रतः स्थितिरेवालं तव कार्यकरणाय किंपुनर्याचनेपि कृते । शिरसा याचितः " शिरसा याचतस्तस्य वचनं न कृतं मया " इति खलु तव हृदयमनुशेते । मया एतावत्पर्यन्तं त्वमेव मां याचित्वा मम मनोरथं पूरितवानसि । भ्रातुः किमर्थं याचितव्यं तवानुजो न भवामि किम् । शिष्यस्य अनुजो भूत्वा भवता सह किमंशभाक् तिष्ठामि मन्त्रसम्बन्धोऽपि त्वत्तः खलु । दासस्य शिष्यो भूत्वा क्रयविक्रयार्हो न भवामि किम् अतः प्रसादं कर्तुमर्हसि उक्तैरमोघैः हेतुभिर्मम याच्ञां सफलां कुरुष्व ॥ १२ ॥ एभिश्च सचिवैरित्यस्य विवक्षितं दर्शयति—तदिति । तत्पुरवर्तनदशायामसन्निहितमिदम्, इदानीं सन्निहितम् । शाश्वतं सनातनम्, परम्पराप्राप्तमिति यावत् । पूजितं पूजार्हम् । प्रकृतीनां मन्त्रिप्रभृतीनां मण्डलं समूहम् नातिक्रमितुमर्हसि, तद्वचनं नातिक्रमणीयमित्यर्थः ॥ १३ ॥ एवमिति । महाबाहुः प्रसारितबाहुरिति यावत् । कैकयीसुतः मातुर्दोषादियमवस्थेति भावः । पुनरिति पूर्वं याचितवान् ततः शरणागतिमकरोदित्यर्थः ॥ १४ ॥ १५ ॥

प्राप्तापवादस्य । राज्येन । हेतौ तृतीया ॥ ८ ॥ ९ ॥ आनुपूर्व्या युक्तं ज्येष्ठक्रमेण प्राप्तम् युक्तं च आत्मनि योग्यम् ॥ १० ॥ पतिना । नाभाव आर्षः । शशिनेव त्वया पतिना रजनी यथा रजनीव चेति यथेवशब्दयोरन्वयः ॥ ११ ॥ १२ ॥ शाश्वतं परम्पराप्राप्तमित्यर्थः ॥ १३–१५ ॥

कुलीन इति । कुलीनः महाकुलप्रसूतः । सत्त्वसम्पन्नः सत्त्वगुणसम्पन्नः । पापं ज्येष्ठविषयप्रातिकूल्यरूपम् ॥ १६ ॥ नेति । बाल्यात् अज्ञानादित्यर्थः ॥ १७ ॥ कामेति । कामकारः स्वच्छन्दकरणम् । उपपन्नेषु शिष्यदासादिषु ॥ १८ ॥ वयमिति । लोके भार्यादयः साधुभिर्यथा सङ्ख्याताः

कुलीनः सत्त्वसम्पन्नस्तेजस्वी चरितव्रतः । राज्यहेतोः कथं पापमाचरेत्त्वद्विधो जनः ॥ १६ ॥ न दोषं त्वयि पश्यामि सूक्ष्ममप्यरिसूदन । न चापि जननीं बाल्यात्त्वं विगर्हितुमर्हसि ॥ १७ ॥ कामकारो महाप्राज्ञ गुरूणां सर्वदाऽनघ । उपपन्नेषु दारेषु पुत्रेषु च विधीयते ॥ १८ ॥ वयमस्य यथा लोके सङ्ख्याताः सौम्य साधुभिः । भार्य्याः पुत्राश्च शिष्याश्च त्वमनु ज्ञातुमर्हसि ॥ १९ ॥ वने वा चीरवसनं सौम्य कृष्णाजिनाम्बरम् । राज्ये वापि महाराजो मां वासयितुमीश्वरः ॥ २० ॥ यावत्पितरि धर्मज्ञे गौरवं लोकसत्कृतम् । तावद्धर्मभृतां श्रेष्ठ जनन्यामपि गौरवम् ॥ २१ ॥ एताभ्यां धर्मशीलाभ्यां वनं गच्छेति राघव । मातापितृभ्यामुक्तोऽहं कथमन्यत् समाचरे ॥ २२ ॥ त्वया राज्यमयोध्यायां प्राप्तव्यं लोकसत्कृतम् । वस्तव्यं दण्डकारण्ये मया वल्कलवाससा ॥ २३ ॥ एवं कृत्वा महाराजो विभागं लोकसन्निधौ । व्यादिश्य च महातेजा दिवं दशरथो गतः ॥ २४ ॥

नियाम्यत्वेन परिगणिताः, वयमपि तथा दशरथस्येति त्वं ज्ञातुमर्हसि । अनुर्निरर्थकः ॥ १९ ॥ वन इति । चीरं द्रुमवल्कलं वसनमुत्तरीयं यस्य तम् । कृष्णाजिनम् अम्बरम् अधराम्बरं यस्य तम् । ईश्वरः नियन्ता ॥ २० ॥ यावदिति । पितरि यावत् यत्परिमाणकं गौरवं जनन्यामपि तावत् तत्परिमाणकं गौरवम्, कर्तव्यमिति शेषः । यत्तच्छब्दाभ्यां "यत्तदेतेभ्यः परिमाणे वतुप्" इति वतुप् ॥ २१ ॥ फलितमाह—एताभ्यामिति । समाचरे



राज्यहेतोः राज्यार्थम् । पापं ज्येष्ठविषयप्रातिकूल्यरूपम् ॥ १६ ॥ १७ ॥ कामकारः स्वच्छन्दकरणं गुरूणां महताम् । उपपन्नेषु युक्तेषु सम्मतेष्वित्यर्थः । दारादिषु विधीयत इति सम्बन्धः । महान्तोपि अभिमतदारादिषु स्नेहं कुर्वन्तीति भावः ॥ १८ ॥ वयमिति । लोके भार्यादयः साधुभिर्यथा सङ्ख्याताः नियाम्यत्वेन परिगणिताः । वयमप्यस्य दशरथस्य तथा नियाम्या इति त्वं ज्ञातुमर्हसीति सम्बन्धः ॥ १९–२१ ॥ मातापितृभ्यां कैकेयीदशरथाभ्याम् ॥ २२–२६ ॥

समाचरामि, कथं समाचराणीत्यर्थः ॥ २२–२४ ॥ सचेति । पित्रा दत्तं भागं यथा यथावत् उपभोक्तुमित्यन्वयः ॥ २५ ॥ २६ ॥ यदिति । परमात्मनो हितम् आत्मनः परं हितम् ॥ २७ ॥ इति श्रीगोवि० श्रीरामायणभूषणे पीता० अयोध्याकाण्डव्याख्याने चतुरुत्तरशततमस्सर्गः ॥ १०४ ॥

स च प्रमाणं धर्मात्मा राजा लोकगुरुस्तव । पित्रा दत्तं यथाभागमुपभोक्तुं त्वमर्हसि ॥ २५ ॥ चतुर्दशसमाः सौम्य दण्डकारण्यमाश्रितः । उपभोक्ष्ये त्वहं दत्तं भागं पित्रा महात्मना ॥ २६ ॥ यदब्रवीन्मां नरलोकसत्कृतः पिता महात्मा विबुधाधिपोपमः । तदेव मन्ये परमात्मनो हितं न सर्वलोकेश्वरभावमप्यहम् ॥ २७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे चतुरधिकशततमः सर्गः ॥ १०४ ॥

ततः पुरुषसिंहानां वृतानां तैः सुहृद्गणैः । शोचतामेव रजनी दुःखेन व्यत्यवर्त्तत ॥ १ ॥
रजन्यां सुप्रभातायां भ्रातरस्ते सुहृद्वृताः । मन्दाकिन्यां हुतं जप्यं कृत्वा राममुपागमन् ॥ २ ॥
तूष्णीं ते समुपासीना न कश्चित्किञ्चिदब्रवीत् । भरतस्तु सुहृन्मध्ये रामं वचनमब्रवीत् ॥ ३ ॥

अथ पुनर्भरतस्य कैकेयीनिर्बन्धकृतपितृनियोगपरिहारोचितवचनपूर्वकं प्रार्थनम्, रामस्य च तत्समाश्वासनं तत्त्वोपदेशेनेत्येतत्पञ्चोत्तरशततमे–ततः पुरुषसिंहानामित्यादि ॥ १ ॥ रजन्यामिति । हुतं होमम् ॥ २ ॥ ३ ॥

यदिति । सर्वलोकेश्वरभावं सर्वलोकेश्वरत्वम् । ननु "आर्य तातः परित्यज्य, इमाः प्रकृतयः, त्वत्सकाशमनुप्राप्ताः" इति भरतेनोक्ते रामस्तदानीमशोचन् तदुल्लङ्घ्याभिषेकप्रत्याख्यानमेव किमिति कृतवान् ? नैष दोषः । तस्मिन् भरतवाक्यप्रबन्धे पितृमरणमानुषङ्गिकत्वेनोक्तम्, प्राधान्येन राज्यस्वीकरणमेवोच्यते, अतो रामस्तदेवं मन्यते पिता पुत्रशोकेन मृतकल्पो न पुनर्जीविष्यतीति मृत इत्युच्यते । मातरश्च बिधवाकल्पा इति विधवा इत्युच्यन्ते । अनेन ममाभिषेकवचनमेव प्राधान्येनोच्यत इत्यशोचन् अभिषकप्रत्याख्यानं कृतवान् । स्ववाक्ये पितृमरणानुवादस्य चायमेवार्थ इति परिहारः ॥ २७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां चतुरुत्तरशततमः सर्गः ॥ १०४ ॥ १ ॥ रजन्यामिति । हुतं होमम् ॥ २ ॥ ३ ॥

तिलक०–ननु पितृमरणश्रवणोत्तरं शोकमुल्लङ्घ्य अभिषेकप्रत्याख्यानमेव कृतमिति चेच्छृणु–भरतस्य रामो राज्यं स्वीकरिष्यतीति प्रत्याशावारणाय कैकेय्या लोकानां च अन्यथासम्भावनावारणाय शोककालेपि धैर्यमवलम्ब्य वर्तनं शोककालेप्येवं धैर्यं कर्तव्यमिति लोकोपदेशाय चेति मम प्रतिभाति ॥ कतक०–सङ्क्षेपेणादावुक्त्वाग्रे विस्तरेण वदतीति प्रायः कवेः स्वभावोऽयमिति ॥ २७ ॥

दत्तमन्यथयितुमशक्तोऽहमिति रामो वदेदिति मत्वा तस्य परिहारानुगुणं वचनमाह—सान्त्वितेति । ममेयं मामिका । शैषिकोऽण् । "तवकममकावेकवचने" इत्यण् । सन्नियोगेनास्मच्छब्दस्य ममकादेशः आदिवृद्धिश्च । "प्रत्ययस्थात्—" इत्यत्र "मामकनरकयोः—" इत्युपसंख्यानात्





सान्त्विता मामिका माता दत्तं राज्यमिदं मम । तद्ददामि तवैवाहं भुङ्क्ष्व राज्यमकण्टकम् ॥ ४ ॥ महतेवाम्बुवेगेन भिन्नः सेतुर्जलागमे । दुरावारं त्वदन्येन राज्यखण्डमिदं महत् ॥ ५ ॥ गतिं खर इवाश्वस्य तार्क्ष्यस्येव पतत्त्रिणः । अनुगन्तुं न शक्तिर्मे गतिं तव महीपते ॥ ६ ॥ सुजीवं नित्यशस्तस्य यः परैरुपजीव्यते । राम तेन तु दुर्जीवं यः परानुपजीवति ॥ ७ ॥ यथा तु रोपितो वृक्षः पुरुषेण विवर्द्धितः । ह्रस्वकेन दुरारोहो रूढस्कन्धो महाद्रुमः ॥ ८ ॥ स यथा पुष्पितो भूत्वा फलानि न विदर्शयेत् । स तां नानुभवेत्प्रीतिं यस्य हेतोः प्ररोपितः ॥ ९ ॥

ककारात्पूर्वस्याकारस्य इकारः । मातृविरोधे न स्वीकुर्य्यादिति मत्वाह सान्त्वितेति । दत्तस्यान्यथाकरणमनुचितमिति रामो वदेदिति परिहरति दत्तमिति । त्रय एवाधना इति न्यायेन दासस्य स्वं त्वदीयमिति ददामीत्यर्थः ॥ ४ ॥ त्वमेव राज्यं रक्षेत्याशङ्क्याह—महतेति । जलागमे वर्षाकाले । दुरावारम् आवरीतुमशक्यं राज्यखण्डं नवखण्डेषु भरतखण्डाख्यं राज्यं कोसलराज्यखण्डं वा ॥ ५ ॥ राज्यस्य दुरावारत्वमुक्त्वा स्वस्याशक्तिमाह—गतिमिति । खरेत्यविभक्तिकनिर्देशः । खरस्येत्यर्थः । प्रकृतिभाव आर्षः । पतत्त्रिणः पक्षिमात्रस्य । अश्वस्य गतिमनुगन्तुं खरस्य यथा न शक्तिः गरुडस्य गतिमनुगन्तुं केवलपक्षिणो यथा च शक्तिर्नास्ति तथेत्यर्थः ॥ ६ ॥ तव शक्तिर्नास्ति चेदन्यः कश्चिद्राज्यं रक्षत्वित्यत्राह—सुजीवमिति । नित्यशः नित्यम् ॥ ७ ॥ उचितं च त्वद्रक्षणमेवेत्याह—यथेत्यादिना । श्लोकत्रयमेकान्वयम् । यथात्वितिनिपातसमुदायोयमुदाहरणोपक्रमद्योतनार्थः ।

सान्त्विता आश्वासिता ॥४॥ जलागमे वर्षाकाले । दुरावारम् आवरीतुमशक्यं राज्यखण्डं नवखण्डेषु भरतखण्डाख्यराज्यम् ॥५–७॥ लोकरक्षणार्थं दशरथेनोत्पाद्य वर्धितस्सकलसद्गुणसम्पन्नस्त्वं यदि लोकरक्षणं न कुर्यास्तदा तस्य लोकस्य दशरथस्य च त्वया न प्रयोजनमित्यस्योपदेशमुखेन फलादर्शनवृक्षौपम्यमाह—यथा त्वित्यादि श्लोकत्रयेण । उदाहरणोपक्रमद्योतनार्थो यथा निपातसमुदायः । पुरुषेण रोपितो वर्द्धितः । ह्रस्वकेन वामनेन दुरारोहः दुष्प्रापः अतो रूढस्कन्धः अतो महाद्रुमो



स०—यः परैरुपजीव्यते तस्य जीवं सुजीवम् । दुर्जीवं "ईषद्दुस्सुषु—" इत्यादिना खल् । तादृशं दुर्जीवं ते तव न तु माभूत् ॥ ७ ॥

केनचित्पुरुषेण रोपितः बीजावापेनोत्पादितः यो वृक्षः पुनः संवर्द्धितः ह्रस्वकेन वामनेन दुरारोहः क्रमेण रूढस्कन्धः महाद्रुमो जातः स यथा पुष्पितो भूत्वा फलानि न विदर्शयेत् स रोपयिता यस्य फलस्य हेतोः हेतुना तं वृक्षं रोपितवान् तां फलविषयिणीं प्रीतिं नानुभवेत् । विनयेन प्रत्येकं वक्तुमशक्तः समुदायरूपेण दर्शयति—भर्ता त्वम् अस्मान् भृत्यान् न शाधि यदि एषोपमेति एषा पूर्वोक्तमर्थजातमुपमा । उपमाशब्दापेक्षया

एषोपमा महाबाहो तमर्थं वेत्तुमर्हसि । यदि त्वमस्मान् वृषभो भर्त्ता भृत्यान्न शाधि हि॥ १०॥ श्रेणयस्त्वां महाराज पश्यन्त्वग्र्याश्च सर्वशः । प्रतपन्तमिवादित्यं राज्ये स्थितमरिन्दमम् ॥ ११ ॥ तवाऽनुयाने काकुत्स्थ मत्ता नर्दन्तु कुञ्जराः। अन्तःपुरगता नार्यो नन्दन्तु सुसमाहिताः ॥१२॥ तस्य साध्वित्यमन्यन्त नागरा विविधा जनाः । भरतस्य वचः श्रुत्वा रामं प्रत्यनुयाचतः ॥१३॥ तमेवं दुःखितं प्रेक्ष्य विलपन्तं यशस्विनम् । रामः कृतात्मा भरतं समाश्वासय दात्मवान् ॥१४॥ नात्मनः कामकारोऽस्ति पुरुषोऽयमनीश्वरः । इतश्चेतरतश्चैनं कृतान्तः परिकर्षति ॥ १५ ॥

स्त्रीलिङ्गत्वम् । रोपयिता अभिवृद्धो वृक्षः पुष्पदर्शनं फलादर्शनं चोपमेत्यर्थः । तमर्थमुपमेयमर्थजातं वेत्तुमर्हसि । भावज्ञानकुशलः खल्व सीत्यर्थः । रोपयितुर्दशरथ उपमेयः । वर्द्धितमहावृक्षस्य भवान् पुष्पदर्शनस्याभिषेचनोन्मुख्यं फलानुभवस्य भवतो राज्यापरिपालनमित्ये तत् सर्वं त्वं जानासीत्यर्थः । एतत्सर्वं महाबाहो इत्यनेन सूचितम् ॥ ८–१० ॥ श्रेणय इति । श्रेणयः पौरश्रेणयः । अग्र्याः प्रधानाः ॥ ११–१३ ॥ तमिति । दुःखितं स्वप्रार्थनानङ्गीकारेण दुःखितम् । विलपन्तं मम हेतोरार्यविवासनं पितुर्मरणमित्यादिजातमिति प्रलपन्तम् । कृतात्मा सुशिक्षितबुद्धिः धैर्यवान् वा ॥ १४ ॥ कैकेयीप्रेरितो राजा भवांश्च न मद्वनवासहेतुः किन्तु दैवमेवेति तत्त्वदृष्ट्या भरतं दुःखान्निवर्तयितुमुपक्रमते—नात्मन इत्यादि । आत्मनः पुरुषस्य कामकारः ऐच्छिकव्यापारो नास्ति । यतोऽयं पुरुषः अनीश्वरः, अस्वतन्त्र इत्यर्थः। इतश्च एतस्माद्देशात्

जात इति शेषः । स वृक्षो यथा पुष्पितो भूत्वा फलानि न विदर्शयेत् न फलेत् । यस्य फलस्य हेतोश्च रोपितः तां फलविषयां प्रीतिं सः रोपयिता पुरुषो नानु भवेत् । त्वं भर्ता सन भृत्यानस्मान्न शाधि यदि एषोपमा, अतस्तमर्थं अस्मत्पालनरूपधर्मं वेत्तुमर्हसीति सम्बन्धः ॥ ८–१० ॥ श्रेणय इति । श्रेणयः पौरश्रेणयः । अग्र्याः प्रधानाः ॥ ११–१३ ॥ कृतात्मा शिक्षितमनाः । आत्मवान् धैर्यवान् ॥ १४ ॥ कैकेयीप्रेरितो राजा च भवांश्च मद्वनवासादौ हेतुर्न भवति किन्तु दैवमेव

देशान्तरम् । इतरतः अन्यदेशाच्च एनं देशं कृतान्तः स्वतन्त्रदैवमेव परिकर्षति आकर्षति । "दैवे कृतान्तः सिद्धान्ते यमाकुशलकर्मणोः" इति वैजयन्ती । यथोक्तं भगवता गीताचार्येण– "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥" इति ॥ १५ ॥ अपरिहरणीयवस्तुस्वभावपर्य्यालोचनायां पितृमरणेनापि शोकस्यावकाशो नास्तीत्यमुमर्थमाह–सर्वे इति । निचयाः धनसञ्चयाः । सर्वे बहुशः

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ १६ ॥ यथा फलानां पक्कानां नान्यत्र पतनाद्भयम् । एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥ १७ ॥ यथागारं दृढस्थूणं जीर्णं भूत्वाऽवसीदति । तथैव सीदन्ति नरा जरामृत्युवशङ्गताः ॥ १८ ॥ अत्येति रजनी या तु सा न प्रति निवर्त्तते । यात्येव यमुना पूर्णा समुद्रमुदकाकुलम् ॥ १९ ॥ अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनामिह । आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः ॥ २० ॥

सम्पादिता अपि क्षयान्ताः क्षयपर्य्यवसायिनः, चोरेण कामेन राज्ञा वा नश्यन्तीत्यर्थः । समुच्छ्रयाः अत्यन्तसमुन्नता अपि पतनान्ताः अत्युन्नतपदस्थिताः ब्रह्मेन्द्रादयोपि स्वस्वाधिकारसमाप्तिदशायां तत्पदभ्रंशपर्यवसायिन इति यावत् । संयोगाः पुत्रमित्रकलत्रादिसम्बन्धा अपि विप्रयोगान्ताः विरहपर्य्यवसायिनः । जीवितं च उत्कृष्टजीवनमपि मरणान्तम् अपरिहार्यमरणाधीनभङ्गशालीत्यर्थः । पितृमरणशोकेनैवमुच्यते भरतेनेत्यारोप्य तदपनोदनं कृतमस्मिन् श्लोके पादत्रयोक्तार्थत्रयं दृष्टान्तार्थम् । तुरीयपादश्च दार्ष्टान्तिकं दशरथमरणमभिप्रैति । अतः अपरिहार्यकालकृतत्वात् पितृमरणमपि न शोचनीयमिति भावः ॥ १६ ॥ प्रथमश्लोके वनगमनं न मया स्वतन्त्रेण कृतम् अपित्वीश्वरकृतमित्युक्तम्, द्वितीयश्लोके दशरथमरणंच कालकृतमतस्तत्रापि न शोचनीयमित्युक्तम् । अथ द्वितीयश्लोकोक्तं सदृष्टान्तं प्रपञ्चयति–यथेत्यादिना ॥ १७ ॥ १८ ॥ अत्येतीति । समुद्रस्योदकाकुलत्वविशेषणम् । यमुनायाः सर्वथा अनिवर्त्यत्वाय ॥ १९ ॥ रामानु०–अत्येतीति । समुद्रं लवणार्णवमिति पाठः सम्यक् ॥ १९ ॥ अहोरात्राणीति । गच्छन्तीति

कारणमित्यन्यापदेशमुखेन भरतदुःखं निवर्तयितुमुपक्रमते–नात्मन इत्यादि । आत्मनः पुरुषस्य । कामकारः ऐच्छिकव्यापारः । अनीश्वरः अस्वतन्त्रः । कृतान्तः दैवम् ॥ १५ ॥ अपरिहरणीयवस्तुस्वभावपर्यालोचनया शोकस्यावकाशो नास्तीत्याह–सर्व इति । निचयाः वस्तुसमूहाः ॥ १६–१८ ॥ अत्येतीति । उदकार्णवम् उदकाधारम् ॥ १९ ॥ ( समुद्रमुदकार्णवमितिपाठः ) गच्छन्तीति शत्रन्तम् । आयूंषि क्षपयन्ति । अंशवः सूर्यकिरणाः ॥ २० ॥

प्रथमाबहुवचनमहोरात्रविशेषणम् । अंशवः सूर्य्यस्येति शेषः ॥ २० ॥ शोकविषयं निर्द्धारयति—आत्मानमिति । आयुस्ते यतो हीयते अतः परलोक चिन्तामेव कुर्वित्यर्थः ॥ २१ ॥ मृत्युः सर्वथा दुष्परिहर इत्याह—सहैवेति ॥ २२ ॥ कालान्तरे तथैव करिष्यामीत्यत्राह—गात्रेष्वित्यादिना । तस्मात् बाल्य एव आत्मज्ञानाय यतेतेत्युक्तं भवति । किं हि कृत्वा पूर्वोक्तोपद्रवपरिहारत्वेन कमुपायं कृत्वा आत्मानं प्रभुं कुर्य्यादित्यर्थः ॥ २३ ॥ बाल्येपि

आत्मानमनुशोच त्वं किमन्यमनुशोचसि । आयुस्ते हीयते यस्य स्थितस्य च गतस्य च ॥२१॥ सहैव मृत्युर्व्रजति सह मृत्युर्निषीदति । गत्वा सुदीर्घमध्वानं सहमृत्युर्निवर्तते ॥२२॥ गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरुहाः । जरया पुरुषो जीर्णः किं हि कृत्वा प्रभावयेत् ॥ २३ ॥ नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमिते रवौ । आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम् ॥ २४ ॥ हृष्यन्त्यृतुमुखं दृष्ट्वा नवंनवमिहागतम् । ऋतूनां परिवर्त्तेन प्राणिनां प्राणसंक्षयः ॥ २५ ॥ यथा काष्ठं च काष्ठं च समेयातां महार्णवे । समेत्य च व्यपेयातां कालमासाद्य कञ्चन ॥ २६ ॥ एवं भार्याश्च पुत्राश्च ज्ञातयश्च धनानि च । समेत्य व्यवधावन्ति ध्रुवो ह्येषां विनाभवः ॥ २७ ॥

पुरुषाणां विवेको दुर्लभ इत्याह—नन्दन्तीत्यादिना । आदित्ये उदिते नन्दन्ति, अर्थार्जनकालोऽयमागत इति । रवौ अस्तमितेपि नन्दन्ति, कामोपभोग कालोऽयमागत इति । आत्मनो जीवितक्षयं नावबुध्यन्ते सच्छिद्रघटे गृहीतं जलमिव प्रतिक्षणमायुः क्षीयत इति न जानन्ति । जीवितकाल एव परलोक हितं कर्तुं नेच्छन्तीत्यर्थः ॥ २४ ॥ हृष्यन्तीति । तत्तदृत्वागमं दृष्ट्वा नानाभोगहेतुरिति हृष्यन्ति, प्रत्युत ऋत्वागमोऽनर्थहेतुरित्याह—ऋतूनां परिवर्त्तेनेति ॥ २५ ॥ श्लिष्टानां विश्लेषस्यावश्यम्भावित्वात्तदपि न शोचनीयमित्यभिप्रायेणाह—यथा काष्ठमितिश्लोकद्वयेन । विनाभवः वियोगः ॥ २६॥ २७॥

आत्मानमनुशोच नश्वरफलसाधनेषु व्यापृतं त्वामेवानुशोचेत्यर्थः ॥ २१॥ सहैवेति । सहैव मृत्युर्व्रजति ईश्वरलिखितललाटरेखाया एव मृत्युरूपत्वादिति भावः ॥ २२ ॥ किंवा कृत्वा प्रभावयेत् एतत्सर्वपरिहारत्वेन कमुपायं कृत्वा पुरुषस्समर्थो भवेत् ॥ २३ ॥ आयुःक्षयकरादित्योदयाद्यनिष्टसाधने इष्टसाधनत्वबुद्धिं कुर्वन्तः स्वहितं न जानन्तीत्याह—नन्दन्तीत्यादिना ॥ २४ ॥ हृष्यन्तीति । येषां ऋतूनां परिवर्तनेन प्राणिनां प्राणक्षयो भवति तादृशम् ऋतुमुखं दृष्ट्वा हृष्यन्तीति यत्तच्छब्दाध्याहारेण सम्बन्धः ॥ २५॥ संश्लिष्टानां विशेषस्यावश्यम्भावित्वात्तन्निमित्तमनश्शोको न कार्यं इत्यभिप्रायेणाह—यथाकाष्ठमित्यादि । विनाभवः विनाभावः, वियोग इत्यर्थः । एषां वियोगो ध्रुव इत्यर्थः ॥ २६ ॥ २७ ॥

नात्रेति । अस्मिंल्लोके कश्चिदपि प्राणी यथाभावं न समभिवर्त्तते यथाभिलाषं बन्धुभिः सह न वर्त्तते तेन कारणेन प्रेतस्य मृतस्य हेतोः अनुशोचतः पुरुषस्य तस्मिन् मरणनिवारणे सामर्थ्यं नास्ति । ( अस्मिन् लोके कश्चिदपि ब्रह्मादिस्तम्बपर्यन्तेषु कोऽपि जन्तुः यथाभावं यथाभिलाषम् अप्रतिहतसङ्कल्पतयेत्यर्थः । न समभिवर्त्तते कश्चिदित्यनेन मानुषाद्यपेक्षया चिरकालवर्तिनां शक्त्यतिशयभाजामपि ब्रह्मादीनामधिकारावसाने मरणं

नात्र कश्चिद्यथाभावं प्राणी समभिवर्त्तते । तेन तस्मिन्न सामर्थ्यं प्रेतस्यास्त्यनुशोचतः ॥ २८ ॥
यथा हि सार्थं गच्छन्तं ब्रूयात् कश्चित् पथि स्थितः । अहमप्यागमिष्यामि पृष्ठतो भवतामिति ॥ २९ ॥
एवं पूर्वैर्गतो मार्गः पितृपैतामहो ध्रुवः । तमापन्नः कथं शोचेद्यस्य नास्ति व्यतिक्रमः ॥ ३० ॥
वयसः पतमानस्य स्रोतसो वाऽनिवर्तिनः । आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः ॥ ३१ ॥

दुर्निवारमेवेत्याशयः । तेन एवमप्रतिहतसङ्कल्पत्वाभावेन प्रेतस्य मृतस्य हेतोः अनुशोचतः पुरुषस्य तस्मिन्मरणनिवारणे सामर्थ्यं नास्ति, अतः ब्रह्मादीनामप्यपरिहार्यं शोकं विहाय सर्वानर्थनिवृत्तये प्रयततेति भावः ) ॥ २८ ॥ यथेत्यादिश्लोकद्वयम् । गच्छन्तं सार्थं पथिकसमूहं पथि स्थितः पुरुषो यथा अहमप्यागमिष्यामीति ब्रूयादनुगच्छति च एवं पूर्वैर्वंश्यैः गतः प्राप्तो मार्गः पितृपैतामहः पितृपितामहसम्बन्धी तैरपि प्राप्त इति यावत् । ध्रुवः पुत्रादिभिर[illegible]व्यत्वेन निश्चितः॥२९॥३०॥ उक्तमर्थमुपसंहरति—वयस इत्यादिना । " यस्य च भावेन भावलक्षणम् " इति सप्तम्यर्थे षष्ठी । वाशब्द इवार्थः । [illegible]निवर्तिनि स्रोतसीव वयसि पतमाने अनिवर्तितया गच्छति सति आत्मा सुखे सुखहेतौ धर्मे नियोक्तव्यः । परलोकहितचिन्तयेति

अत्र अस्मिंल्लोके कश्चि[illegible]पि प्राणी यथाभावं न समभिवर्तते यथाभिलाषं बन्धुभिस्सह न वर्तते अपि तु विप्रयुज्यत एव । तेन कारणेन प्रेतस्य मृतस्य हेतोरनुशोचतः पुरुषस्य तस्मिन् विप्रयोगे मरणनिवारणे वा सामर्थ्यं परिहारशक्तिर्नास्तीति सम्बन्धः ॥ २८ ॥ यथा हीत्यादिश्लोकद्वयमेकं वाक्यम् । गच्छन्तं सार्थं पथिकसङ्घं पथि स्थितः पुरुषो यथा ब्रूयादनुसृत्य गच्छति च, एवं पूर्वैराद्यैरन्यैर्गतः प्राप्तः मार्गः मृतिरूपः पितृपैतामहः पितृपितामहसम्बन्धी ध्रुवः पुत्रादिभिरप्युपगन्तव्यत्वेन निश्चितः ॥ २९ ॥ ३० ॥ [illegible] इति सप्तम्यर्थे षष्ठी । वाशब्द इवार्थे । अनिवर्तिनि स्रोतसीव वयसि आयुषि पतमाने गच्छति सति आत्मा सुखे धर्मे योक्तव्यः ।

शेषः । यतः प्रजाः सुखभाजः धर्मसाध्यसुखासक्ताः स्मृता इति योज्यम् ॥ ३१ ॥ एवं लोकस्थितिः, अस्मत्पितरं प्रति तु न शोकगन्धोपि कार्य इत्याशयेनाह–धर्मात्मेत्यादिना ॥ ३२ ॥ भृत्यानामिति । धर्मेण अर्थादानात् धर्मेण करादिग्रहणात् ॥ ३३ ॥ कर्मभिरिति । इष्टैः जनानां स्वस्य



धर्मात्मा स शुभैः कृत्स्नैः क्रतुभिश्चाप्तदक्षिणैः । धूतपापो गतः स्वर्गं पिता नः पृथिवीपतिः ॥ ३२ ॥ भृत्यानां भरणात् सम्यक् प्रजानां परिपालनात् । अर्थादानाच्च धर्मेण पिता नस्त्रिदिवं गतः ॥ ३३ ॥ कर्मभिस्तु शुभैरिष्टैः क्रतुभिश्चाप्तदक्षिणैः । स्वर्गं दशरथः प्राप्तः पिता नः पृथिवीपतिः ॥ ३४ ॥ इष्ट्वा बहुविधैर्यज्ञैर्भोगांश्चावाप्य पुष्कलान् । उत्तमं चायुरासाद्य स्वर्गतः पृथिवीपतिः ॥ ३५ ॥ आयुरुत्तममासाद्य भोगानपि च राघवः । स न शोच्यः पिता तातः स्वर्गतः सत्कृतः सताम् ॥ ३६ ॥ स जीर्णं मानुषं देहं परित्यज्य पिता हि नः । दैवीमृद्धिमनुप्राप्तो ब्रह्मलोकविहारिणीम् ॥ ३७ ॥ तं तु नैवंविधः कश्चित् प्राज्ञः शोचितुमर्हति । तद्विधो यद्विधश्चापि श्रुतवान् बुद्धिमत्तरः ॥ ३८ ॥ एते बहुविधाः शोका विलापरुदिते तथा । वर्जनीया हि धीरेण सर्वावस्थासु धीमता ॥ ३९ ॥

चाभिमतैः शुभैः कर्मभिः महापथेषु तटाकनिर्माणादिभिः ॥ ३४ ॥ ३५ ॥ आयुरिति । उत्तमं तत्पूर्वराजायुरपेक्षया अधिकतमम् । आयुः भोगानपि चासाद्य स्वर्गतः सतां सत्कृतः स पिता न शोच्य इत्यन्वयः ॥ ३६ ॥ स जीर्णमिति । दैवीमृद्धिं देवसम्बन्धिसम्पदं दिव्यदेहादिलाभरूपामित्यर्थः ॥ ३७ ॥ तं त्विति । एवंविधः प्राज्ञ इति भरतगुणं प्रत्यक्षेण निर्दिशति–एवंविध इत्युक्तमुद्घाटयति तद्विध इति । श्रुतवान् बुद्धिमत्तरश्च यद्विधोसि, तद्विध इत्यर्थः ॥ ३८ ॥ एत इति । बहुविधाः दशरथमरणमद्विवासनादिभेदेन बहुप्रकाराः । विलापरुदिते प्रलापाश्रुमोचने च वर्जनीये इति

कुतः ? सुखभाजः प्रजाः स्मृताः धर्मसाध्ये सुखे सक्ताः खलु जना इत्यर्थः ॥ ३१–३४ ॥ इष्ट्वेति । उत्तमं पापप्रसङ्गरहितम् ॥ ३५ ॥ ३६ ॥ दैवीमृद्धिं देवसम्बन्धिसम्पदम् ॥ ३७ ॥ एवं मिथः कश्चित् प्राज्ञः तं दशरथं शोचितुं नार्हति । एवंविधः को वेत्याकाङ्क्षायामाह तद्विध इति । श्रुतवान् बुद्धिमत्तरश्च यद्विधोसि, तद्विध इति योजना ॥ ३८ ॥ एत इति । बहुविधाः दशरथमरणमद्विवासनादिविषयभेदेन बहुप्रकाराः । तथा विलापरुदिते प्रलापाश्रुविमोचने च वर्जनीये ॥ ३९ ॥

विपरिणामेनान्वयः ॥ ३९ ॥ मद्विवासनं त्वयापि मान्यमित्याह—स स्वस्थ इत्यादिना । यात्वा गत्वा । तां पुरीम् । आवस अधितिष्ठ ॥ ४० ॥ यत्रेति । यत्र वनरूपे स्थाने ॥ ४१—४४ ॥ आत्मानमिति । स्वभावेनात्मानमनुतिष्ठ राजभावेन भवन्तं योजयेत्यर्थः । निशाम्य दृष्ट्वा, ज्ञात्वेति यावत् ॥ ४५ ॥



स स्वस्थो भव माशोचीर्यात्वा चावस तां पुरीम् । तथा पित्रा नियुक्तोऽसि वशिना वदतां वर ॥ ४० ॥ यत्राहमपि तेनैव नियुक्तः पुण्यकर्मणा । तत्रैवाहं करिष्यामि पितुरार्य्यस्य शासनम् ॥ ४१ ॥ न मया शासनं तस्य त्यक्तुं न्याय्यमरिन्दम । तत् त्वयापि सदा मान्यं स वै बन्धुः स नः पिता ॥४२॥ तद्वचः पितुरेवाहं सम्मतं धर्मचारिणः । कर्मणा पालयिष्यामि वनवासेन राघव ॥ ४३ ॥ धार्मिकेणानृशंसेन नरेण गुरुवर्त्तिना । भवितव्यं नरव्याघ्र परलोकं जिगीषता ॥४४॥ आत्मानमनुतिष्ठ त्वं स्वभावेन नरर्षभ । निशाम्य तु शुभं वृत्तं पितुर्दशरथस्य नः ॥४५॥ इत्येवमुक्त्वा वचनं महात्मा पितुर्निदेशप्रतिपालनार्थम् । यवीयसं भ्रातरमर्थवच्च प्रभुर्मुहूर्ताद्विरराम रामः ॥ ४६ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

एवमुक्त्वा तु विरते रामे वचनमर्थवत् । ततो मन्दाकिनीतीरे रामं प्रकृतिवत्सलम् । उवाच भरतश्चित्रं धार्मिको धार्मिकं वचः ॥१॥ को हि स्यादीदृशो लोके यादृशस्त्वमरिन्दम । न त्वां प्रव्यथयेद्दुःखं प्रीतिर्वा न प्रहर्षयेत् ॥२॥

इतीति । यवीयसं यवीयांसम् ॥ ४६ ॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे पीता० अयोध्याकाण्डव्याख्याने पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥ अथ रामं प्रति भरतस्य श्लाघ्यतरोचितोत्तरं षट्शततमे—एवमुक्त्वेत्यादि । अस्मिन् सर्गे श्लोकव्यत्यासः सर्गभेदश्च दृश्यते तच्छुद्धये क्रमेण व्याक्रियते ।



स इति । यात्वा गत्वा । तां पुरीम् आवस अधितिष्ठेत्यर्थः ॥४०—४४॥ आत्मानमिति । स्वभावेनात्मानमनुतिष्ठस्व । स्वभावेन भवन्तं योजयेत्यर्थः । निशाम्य दृष्ट्वा ज्ञात्वेत्यर्थः ॥ ४५ ॥ इत्येवमिति । यवीयसम् । तुमभाव आर्षः ॥४६॥ इति श्रीमहे० श्रीरामायण० अयोध्याकाण्डव्याख्यायां पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥१॥२॥

एवमुक्त्वा त्विति । निरुत्तरमुक्तवन्तं रामं प्रति मुखान्तरेण [illegible] ॥१॥२॥ सम्मत इति । वृद्धानां त्रैविद्यवृद्धानाम् । सम्मतः सर्वज्ञत्वेन सम्मतः तथापि तान् संशयान् पृच्छसीति सम्बन्धः ॥ ३ ॥ पितृवियोगादिजनितदुःखेन मया कथितमिति हि भवतोक्तम्, मम तादृशदुःख



सम्मतश्चासि वृद्धानां तांश्च पृच्छसि संशयान् ॥ ३ ॥ यथा मृतस्तथा जीवन् यथाऽसति तथा सति । यस्यैष बुद्धिलाभः स्यात्परितप्येत केन सः ॥ ४ ॥ परावरज्ञो यश्च स्यात्तथा त्वं मनुजाधिप । स एवं व्यसनं प्राप्य न विषीदितुमर्हति ॥ ५ ॥ अमरोपम सत्त्वस्त्वं महात्मा सत्यसङ्गरः । सर्वज्ञः सर्वदर्शी च बुद्धिमांश्चासि राघव ॥६॥ न त्वामेवङ्गुणैर्युक्तं प्रभवाभवकोविदम् । अविषह्यतमं दुःखमासादयितुमर्हति ॥ ७ ॥

प्रसङ्ग एव नास्तीत्याह–यथा मृत इति । मृतः पुरुषो यथा द्वेषविषयो न भवति जीवन्नपि तथा । यथा असति तथा सति अविद्यमाने वस्तुनि यथा रागो नास्ति विद्यमाने वस्तुन्यपि तथा । इत्येष बुद्धिलाभो यस्य स केन हेतुना परितप्येत, न केनापीत्यर्थः । भवदुक्तप्रकारेण मम दुःखलेशोऽपि नास्तीति भावः ॥ ४ ॥ किमर्थं तर्हि शोकमूलवचनं त्वयोक्तमित्याशङ्क्य भवद्व्यसनासहतयेत्याह–परावरज्ञ इति । यः परावरज्ञः त्रिकालज्ञः आत्मानात्मज्ञो वा परमात्मजीवात्मस्वरूपज्ञो वा । सः एवं व्यसनं प्राप्यापि व्यथितुं नार्हति तथा त्वमपीति सम्बन्धः । अथापि तव राज्यभ्रंशवनवास रूपव्यसनं त्वद्विश्लेषं चाहं कथं सहेयेति भावः ॥ ५ ॥ अमरेति । अपरोपमेति पृथक्पदम् । सत्त्वः सत्त्वगुणसम्पन्नः । अर्श आद्यच् । स्वाश्रितानां सत्त्वगुणकार्यतत्त्वज्ञानप्रवर्तकत्वाद्वा सत्त्व इत्युच्यते । " सत्त्वस्यैष प्रवर्तकः " इतिहि श्रुतिः । महात्मा महाधैर्यः अतएव सत्यसङ्गरः सत्यप्रतिज्ञः । सर्वज्ञ इत्यादिभिस्त्रिभिर्भूतवर्तमानभावियावद्वस्तुज्ञानवत्त्वमुक्तम् ॥ ६ ॥ न त्वामिति । प्रभवाभवकोविदम् उत्पत्तिविनाशज्ञमित्यर्थः । भूताना

सम्मत इति । सम्मतः सर्वज्ञत्वेन सम्मतः तथापि तान् पृच्छसि ॥ ३ ॥ यथा मृतस्तथा जीवन् यथा मृतः पुरुषो द्वेषविषयो न भवतीति शेषः । जीवन्नपि तथा यथा असति अविद्यमाने वस्तुनि यथा रागो नास्ति, तथा सति विद्यमानेऽपि वस्तुनि तथा इत्येष बुद्धिलाभो यस्य पुरुषस्य स्यात् स हि केन हेतुना परितप्येत, न केनापीत्यर्थः॥४॥ परावरज्ञो यः स एवं व्यसनं प्राप्यापि विषीदितुं व्यथितुं नार्हति तथा त्वमपीति सम्बन्धः ॥५॥ अमरेति । सत्त्वः सत्त्वगुणसम्पन्नः॥६॥ न त्वामिति ।

स०–व्यसनं व्यसनावस्थां प्राप्यापि विषीदितुं विषादं प्राप्तुं नार्हति । तत्र दृष्टान्तः–यथा त्वमिति । विषीदितुमित्यत्र सीदादेश इडागमश्चार्षः ॥ ५ ॥ अमरोपमसत्त्वः देवसमबलः । बुद्ध्यारोहार्थमेतत् । सर्वज्ञः सामान्यज्ञानवान् । सर्वदर्शी सर्वसाक्षी । बुद्धिमान् सर्वविषयकविशेषज्ञानवान् । मतुपाद्यमर्थो लभ्यते ॥ ६ ॥

मिति शेषः । अविषह्यतममपि अस्मदादीनामिति शेषः । दुःखं राज्यभ्रंशवनवासादिहेतुकम् । नासादयितुमर्हति नाभिभवितुमर्हति ॥ ७ ॥ ८ ॥
धर्मबन्धेन धर्मपाशेन ॥ ९ ॥ जुगुप्सितं लोकगर्हितम् ॥ १० ॥ क्रियावान् यज्ञादिक्रियावान् । संसदि सभायाम् ॥ ११ ॥ धर्मार्थयोर्हीनं



प्रोषिते मयि यत्पापं मात्रा मत्कारणात्कृतम् । क्षुद्रया तदनिष्टं मे प्रसीदतु भवान्मम ॥ ८ ॥ धर्मबन्धेन बद्धोऽस्मि
तेनेमां नेह मातरम् । हन्मि तीव्रेण दण्डेन दण्डार्हां पापकारिणीम् ॥९॥ कथं दशरथाज्जातः शुद्धाभिजनकर्मणः ।
जानन् धर्ममधर्मिष्ठं कुर्य्यां कर्म जुगुप्सितम् ॥ १० ॥ गुरुः क्रियावान् वृद्धश्च राजा प्रेतः पितेति च । तातं न
परिगर्हेयं दैवतं चेति संसदि ॥ ११ ॥ को हि धर्मार्थयोर्हीनमीदृशं कर्म किल्बिषम् । स्त्रियाः प्रियं चिकीर्षुः सन्
कुर्याद्धर्मज्ञ धर्मवित् ॥ १२ ॥ अन्तकाले हि भूतानि मुह्यन्तीति पुराश्रुतिः । राज्ञैवं कुर्वता लोके प्रत्यक्षं सा श्रुतिः
कृता ॥ १३ ॥ साध्वर्थमभिसन्धाय क्रोधान्मोहाच्च साहसात् । तातस्य यदतिक्रान्तं प्रत्याहरतु तद्भवान् ॥ १४ ॥
पितुर्हि यदतिक्रान्तं पुत्रो यः साधु मन्यते । तदपत्यं मतं लोके विपरीतमतोऽन्यथा ॥ १५ ॥

धर्मार्थाभ्यां हीनम्, कामप्रधानमिति यावत् ॥ १२ ॥ अन्तकाले विनाशकाले । मुह्यन्ति मोहं प्राप्नुवन्ति, विपरीतबुद्धिं प्राप्नुवन्तीति यावत् । पुरा
श्रुतिः पुरातनी गाथेत्यर्थः ॥ १३ ॥ साध्वर्थमिति । क्रोधात् विषमद्यैव पास्यामीत्युक्तकैकेयीक्रोधात् । मोहात् कैकेयीविषयमोहात् । साहसात्
साहसकरणात्, अविमृश्यकारित्वादिति यावत् । तातस्य यदविक्रान्तं यद्धर्मातिक्रमणं तत्साध्वर्थमभिसन्धाय समीचीनार्थं स्मृत्वा भवान् प्रत्या
हरतु निवर्त्तयतु ॥ १४ ॥ पितुरिति । साधुमन्यते साधुकर्तुं मन्यत इत्यर्थः । तदपत्यं मतं पितुरपतनहेतुत्वात्तदेवापत्यत्वेन सम्मतम् ॥ १५ ॥

प्रभवाभवकोविदम् उत्पत्तिनाशज्ञमित्यर्थः । दुःखमासादयितुमभिभवितुम् ॥ ७ ॥ ८ ॥ धर्मबन्धेन धर्मपाशेन । अधर्मिष्ठम् अधर्मप्रचुरत्वाद्राज्यापहरणरूपमित्यर्थः
॥ ९ ॥ १० ॥ क्रियावान् यज्ञादिक्रियावान् ॥ ११ ॥ धर्मार्थयोः धर्मार्थाभ्यां विहीनं कामप्रधानमिति यावत् ॥ १२ ॥ अन्तकाले मुह्यन्ति विपरीतबुद्धिं प्राप्नुवन्ती
त्यर्थः । पराश्रुतिः गाथेत्यर्थः ॥ १३ ॥ क्रोधात् विषमद्यैव पास्यामीत्युक्तकैकेयीक्रोधात् । मोहात् कैकेयीविषयमोहात् । साहसात् अविमृश्यकारित्वात् तातस्य यद
तिक्रान्तं यद्धर्मातिक्रमणं तत्साध्वर्थमभिसन्धाय समीचानार्थं स्मृत्वा भवान् प्रत्याहरत निवर्तयत्विति सम्बन्धः ॥ १४ ॥ पितुरिति । साधु मन्यते साधुकर्तुं



स०–यः पुत्रः साधु मन्यते तदेवापत्यम् । विधेयापेक्षया तच्छब्दे नपुंसकता । अतोन्यथा चेत् पितृकृतातिक्रमणस्य साधुत्वेन ज्ञानामात्रे विपरीतम्, अनपत्यमेव तदिति भावः । नञ्पूर्वात् "पत्ल पतने"

तदपत्यं भवानस्तु तादृशमपत्यमस्तु । माभिपत्ता प्राप्तुं नार्हसीत्यर्थः ॥ १६-१८ ॥ तापसधर्मावलम्बनं क्षत्रियाणामप्यस्तीत्याशङ्क्याह—एष हीत्या दिना ॥ १९ ॥ क इति । प्रत्यक्षं परिदृश्यमानत्यागभोगयुक्तं धर्मं परलोकश्रेयःसाधनं प्रजापालनरूपं धर्ममुत्सृज्य संशयस्थमप्रत्यक्षम् अङ्ग

तदपत्यं भवानस्तु मा भवान् दुष्कृतं पितुः । अभिपत्ता कृतं कर्म लोके धीरविगर्हितम् ॥ १६ ॥ कैकेयीं मां च तातं च सुहृदो बान्धवांश्च नः । पौरजानपदान् सर्वांस्त्रातु सर्वमिदं भवान् ॥ १७ ॥ क्व चारण्यं क्व च क्षात्रं क्व जटाः क्व च पालनम् । ईदृशं व्याहतं कर्म न भवान् कर्तुमर्हति ॥ १८ ॥ एष हि प्रथमो धर्मः क्षत्रियस्याभिषेचनम् । येन शक्यं महाप्राज्ञ प्रजानां परिपालनम् ॥ १९ ॥ कश्च प्रत्यक्षमुत्सृज्य संशयस्थमलक्षणम् । आयतिस्थं चरेद्धर्मं क्षत्रबन्धुरनिश्चितम् ॥ २० ॥ अथ क्लेशजमेव त्वं धर्मं चरितुमिच्छसि । धर्मेण चतुरो वर्णान् पालयन् क्लेशमाप्नुहि ॥ २१ ॥ चतुर्णामाश्रमाणां हि गार्हस्थ्यं श्रेष्ठमाश्रमम् । प्राहुर्धर्मज्ञ धर्मज्ञास्तं कथं त्यक्तुमर्हसि ॥ २२ ॥

लोपादिसम्भावनया संशयितफलसिद्धिकमित्यर्थः । अलक्षणं लक्षणरहितम् । क्रियाशक्तिरपूर्वं वा इति दुर्निरूपमित्यर्थः । आयतिस्थं कालान्तरभावि फलम् । अनिश्चितं क्षत्रियेण प्रथममिदमनुष्ठेयमिति केनापि प्रमाणेनानिश्चितम् । तापसधर्मं कः क्षत्रियः चरेत्, न कोपीत्यर्थः ॥ २० ॥ अथ क्लेशजमेव त्वं धर्मं चरितुमिच्छसि तथापि चातुर्वर्ण्यपालनतत्तद्धर्मस्थापनादिक्लेशयुक्तत्वाद्राज्यपालनमेवाचरेत्याह—अथेति ॥ २१ ॥ सर्वाश्रमधर्मापेक्षया श्रेष्ठतमो मन्यते । तदपत्यं पितुरपतनहेतुत्वात्तदपत्यत्वेनाभिमतम् ॥ १९ ॥ तदिति । तदपत्यं भवानस्तु तादृशपुत्रो भवान् भवतु । धीरविगर्हितं पितुः कृतं दुष्कृत माभिपत्ता प्राप्तुं नार्हतीत्यर्थः ॥ १६-१८ ॥ तापसधर्मावलम्बनं क्षत्रियाणामप्यस्तीत्याशङ्क्याह—एष इति ॥ १९ ॥ प्रत्यक्षं परिदृश्यमानत्यागभोगयुक्तम् प्रजापरिपालनं धर्ममुत्सृज्य संशयस्थम् अप्रत्यक्षम् अलक्षणं लक्षणरहितं दुर्निरूपमिति यावत् । आयतिस्थं कालान्तरभावि फलं अनिश्चितं क्षत्रियेण प्रथममिदमेवानुष्ठेयमिति केनापि प्रमाणेनानिश्चितं धर्मं परलोकश्रेयस्साधनं तव धर्मं कः क्षत्रबन्धुश्चरेत् न कोपीत्यर्थः ॥ २०-२२ ॥

इत्यस्मात्करणे यत्प्रत्यये रूपम् । अपतनहेतुरपत्यमित्युक्तं भवति ॥ १९ ॥ तदपत्यम् अन्वर्थकापत्यशब्दवाच्यः । पितुर्दुष्कृतं भवान् नानुमन्यतामिति शेषः ॥ १६ ॥

गार्हस्थ्यधर्मः कथं त्यज्यत इत्याह–चतुर्णामिति ॥ २२ ॥ स्वशक्त्यापि भवतैव राज्यं पालयितव्यमित्याह–श्रुतेनेति । श्रुतेन विद्यया । स्थानेन पदेन, प्राप्तिक्रमेणेति यावत् ॥ २३ ॥ कथमेवमुच्यते बालत्वस्य ममापि तुल्यत्वात् भवदपेक्षया अहं कियान्वृद्ध इत्यत आह–हीनेति । हीनबुद्धि

श्रुतेन बालः स्थानेन जन्मना भवतो ह्यहम् । स कथं पालयिष्यामि भूमिं भवति तिष्ठति ॥ २३ ॥ हीनबुद्धिगुणो बालो हीनः स्थानेन चाप्यहम् । भवता च विनाभूतो न वर्त्तयितुमुत्सहे ॥ २४ ॥ इदं निखिलमव्यग्रं राज्यं पित्र्यमकण्टकम् । अनुशाधि स्वधर्मेण धर्मज्ञ सह बान्धवैः ॥ २५ ॥ इहैव त्वाऽभिषिञ्चन्तु सर्वाः प्रकृतयः सह । ऋत्विजः सवसिष्ठाश्च मन्त्रवन्मन्त्रकोविदाः ॥२६॥ अभिषिक्तस्त्वमस्माभिरयोध्यां पालने व्रज । विजित्य तरसा लोकान् मरुद्भिरिव वासवः ॥ २७ ॥ ऋणानि त्रीण्यपाकुर्वन् दुर्हृदः साधु निर्दहन् । सुहृदस्तर्पयन् कामैस्त्वमेवात्रानुशाधि माम् ॥ २८ ॥ अद्यार्य मुदिताः सन्तु सुहृदस्तेऽभिषेचने । अद्य भीताः पलायन्तां दुर्हृदस्ते दिशो दश ॥ २९ ॥ आक्रोशं मम मातुश्च प्रमृज्य पुरुषर्षभ । अद्य तत्रभवन्तं च पितरं रक्ष किल्बिषात् ॥ ३० ॥ शिरसा त्वाऽभियाचेऽहं कुरुष्व करुणां मयि । बान्धवेषु च सर्वेषु भूतेष्विव महेश्वरः ॥ ३१ ॥

गुणः सद्गुणबुद्धिरहितः वर्तयितुं स्थातुं भवता विना तूष्णीं स्थातुमपि नोत्सहे, किंपुना राज्यं कर्तुमिति भावः ॥ २४ ॥ २५ ॥ इहेति । सह संभूय ॥ २६ ॥ अभिषिक्त इति । विजित्य स्थित इति शेषः । मरुद्भिर्देवैः ॥ २७ ॥ रामं राज्याङ्गीकरणाय प्रोत्साहयति–ऋणानीत्यादिना । दुर्हृदः शत्रून् ॥ २८ ॥ २९ ॥ आक्रोशमिति । आक्रोशं शापम् । " शाप आक्रोश आक्षेपः " इति हलायुधः । जनकर्तृकमिति शेषः । तत्रभवन्तं पूज्यम् । तत्रभवान्नत्रभवानितिशब्दौ वृद्धैः पूज्ये प्रयुज्येते ॥ ३० ॥ शिरसेति । मयि बान्धवेषु च करुणां कुर्वीति सम्बन्धः । महेश्वरो विष्णुः । " यद्वेदादौ स्वरः प्रोक्तो

श्रुतेनेति । श्रुतेन विद्यया । स्थानेन स्थित्या च बालः ॥ २३ ॥ ममापि तथात्वादित्यत आह–हीनेति । हीनबुद्धिगुणः सद्गुणबुद्धिरहितः । वर्तयितुं स्थातुं भवता विना तूष्णीं स्थातुमपि नोत्सहे किंपुनः राज्यं कर्तुमिति योजना ॥ २४ ॥ २५ ॥ इहेति । सह सम्भूय ॥ २६ ॥ विजित्य स्थित इति शेषः ॥ २७ ॥ राज्याङ्गीकरणाय प्रोत्साहयति–ऋणानीत्यादिना ॥ २८ ॥ २९ ॥ आक्रोशं शापम् । तत्रभवन्तं पूज्यम् ! किल्बिषात् अपवादजन्यदुरितात् ॥ ३० ॥ मयि बान्धवेषु च करुणां

वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ” इति पूर्वप्रकृतदहरविद्याकरणमन्त्रप्रणवप्रकृतिभूताकारवाच्यो महेश्वरः
इत्युक्तेः । दहरोपास्यश्चापहतपाप्मत्वादिगुणकः पुरुषोत्तमः “ स उत्तमः पुरुषः ” इति तत्समानप्रकरणे छान्दोग्ये श्रवणात् । अपहतपाप्मत्वं च

अथैतत् पृष्ठतः कृत्वा वनमेव भवानितः । गमिष्यति गमिष्यामि भवता सार्द्धमप्यहम् ॥ ३२ ॥ तथाहि रामो
भरतेन ताम्यता प्रसाद्यमानः शिरसा महीपतिः । न चैव चक्रे गमनाय सत्त्ववान् मतिं पितुस्तद्वचने व्यवस्थितः
॥ ३३ ॥ तदद्भुतं स्थैर्यमवेक्ष्य राघवे समं जनो हर्षमवाप दुःखितः । न यात्ययोध्यामिति दुःखितोऽभवत् स्थिर
प्रतिज्ञत्वमवेक्ष्य हर्षितः ॥ ३४ ॥ तमृत्विजो नैगमयूथवल्लभास्तदा विसंज्ञाश्रुकलाश्च मातरः । तथा ब्रुवाणं भरतं
प्रतुष्टुवुः प्रणम्य रामं च ययाचिरे सह ॥३५॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे
षडुत्तरशततमः सर्गः ॥ १०६ ॥

रुद्रस्य नास्ति “ अनपहतपाप्मा वा अहमस्मि ” इति रुद्रेणैवोक्तेः । भूतसंहाराधिकृतस्य रुद्रस्य भूतेषु करुणा च गगनकुसुमतुल्या । अतः “ स
एकाकी न रमते । न ततो विजुगुप्सितः” इत्यादिश्रुतिस्मृत्यादिभिः सुप्रसिद्धापारकारुण्यवात्सल्यादिगुणगणः पुरुषोत्तम एव महेश्वर इतिदिक्॥३१॥
॥ ३२ ॥ तथेति । गमनाय अयोध्यां प्रतीति शेषः । तद्वचने तस्मिन् वचने ॥ ३३ ॥ तदद्भुतमिति । समं युगपत् ॥३४॥ तमिति । नैगमयूथवल्लभाः
निगमः पुरं तत्र भवाः नैगमाः । “निगमो निश्चये वेदे पुरे पथि वणिक्पथे” इति वैजयन्ती। यूथवल्लभा गणमुख्याः । विसंज्ञाश्रुकलाः विगतसंज्ञाः अश्रु
क्लिन्नाश्चेत्यर्थः ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षडुत्तरशततमः सर्गः ॥ १०६ ॥

कुर्विति सम्बन्धः ॥ ३१ ॥ ३२ ॥ तथाहीति । गमनाय, अयोध्यां प्रतीति शेषः । तद्वचने तस्मिन्वचने ॥ ३३ ॥ तदिति । समं युगपत् ॥ ३४ ॥ नैगमयूथवल्लभाः
निगमः पुरं तत्र भवाः नैगमाः, पौरा इति यावत् । “ निगमो निश्चये वेदे पुरे चैव वणिक्पथे ” इति वैजयन्ती । यूथवल्लभाः गणमुख्याः । विसंज्ञाश्रुकलाः
विगतसंज्ञाः अश्रुक्लिन्नाश्चेत्यर्थः ॥ ३५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां षडुत्तरशततमः सर्गः ॥ १०६ ॥

पुनरित्यादि । अभिसत्कृतः भरतेन स्तोत्रादिना सम्यगभिपूजितः ॥ १ ॥ २ ॥ काममोहेन पित्रा कृतमिति पितरं निन्दन्तं भरतं प्रति रामो मोह हेतुप्रसक्तिरेव नास्तीति दुष्परिहरं हेत्वन्तरमाह–पुरेत्यादिना । राज्यशुल्कं समाश्रौषीत् तव पुत्रिकायां यो जनिष्यते तस्मै राज्यं दास्यामीति प्रतिज्ञां कृतवान् ॥ ३ ॥ दैवासुर इति । दैवासुरे देवासुरसम्बन्धिनि । वरं वरद्वयम् ॥ ४ ॥ तत इति । तव माता सम्प्रतिश्राव्य शपथं कारयित्वा । ततः द्वौ

पुनरेवं ब्रुवाणं तं भरतं लक्ष्मणाग्रजः । प्रत्युवाच ततः श्रीमान् ज्ञातिमध्येऽभिसत्कृतः ॥ १ ॥ उपपन्नमिदं वाक्यं यत्त्वमेवमभाषथाः । जातः पुत्रो दशरथात् कैकेय्यां राजसत्तमात् ॥ २ ॥ पुरा भ्रातः पिता नः स मातरं ते समुद्वहन् । मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमम् ॥ ३ ॥ दैवासुरे च सङ्ग्रामे जनन्यै तव पार्थिवः । सम्प्रहृष्टो ददौ राजा वरमाराधितः प्रभुः ॥ ४ ॥ ततः सा सम्प्रतिश्राव्य तव माता यशस्विनी । अयाचत नरश्रेष्ठं द्वौ वरौ वरवर्णिनी ॥ ५ ॥ तव राज्यं नरव्याघ्र मम प्रव्राजनं तथा । तौ च राजा तदा तस्यै नियुक्तः प्रददौ वरौ ॥ ६ ॥

वरौ अयाचतेति सम्बन्धः ॥ ५ ॥ याच्याप्रकारमाह–तवेत्यादिना । ननु कैकेयी स्वोद्वाहकाले कन्याशुल्कत्वेन भरतस्य प्राप्तं राज्यं वरविषयत्वेन कथमयाचत ? उच्यते–बाल्यवृत्तान्तत्वाच्चिरकालान्तरितत्वाच्च सन्निहितं वरद्वयमेव याचितवतीति न दोषः । मध्येप्राप्तस्यापि वरद्वयस्य "किं न स्मरसि कैकेयि" इति मन्थरया स्मारितत्वात् चिरकालवृत्तान्तस्य विस्मरणमुपपन्नमेव । ननु दशरथ उद्वाहकाले कैकेयीपुत्राय प्रतिश्रुतं राज्यं रामाय

पुनरिति । अभिसत्कृतः भरतेन स्तोत्रादिना सम्यक्प्रपूजितः ॥ १ ॥ २ ॥ को हि धर्मार्थयोर्हीनं कर्म स्त्रियाः प्रियचिकीर्षुस्सन् कुर्यादित्यनेन कामुकेन तातेनोक्तं न कर्तव्यमित्युक्तम् । तत्तथा भवतु, अकामुकेन तेन स्वस्थावस्थायां कृतमवर्जनीयं हेत्वन्तरमप्यस्तीत्याह–पुरा भ्रातरित्यादिना । राज्यशुल्कं समाश्रौषीत् ते तव पुत्रिकायां यो जनिष्यते तस्मै राज्यं दास्यामीति प्रतिज्ञां कृतवानित्यर्थः ॥ ३ ॥ दैवासुरे देवासुरसम्बन्धिनि । वरं वरद्वयम् ॥ ४ ॥ संप्रतिश्राव्य शपथं कारयित्वा ततो द्वौ वरौ अयाचतेति सम्बन्धः । ननु दशरथ उद्वाहकाले कैकेयीपुत्राय प्रतिश्रुतं राज्यं कथं रामाय दातुमुद्युक्तवानिति चेत्, सत्यम्; "उद्वाहकाले रतिसम्प्रयोगे प्राणात्यये सर्वधनापहारे । विप्रस्य चार्थे ह्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि ।" इति न्यायेन दोषाभावं हृदि निधाय तथाकृतवानित्यदोषः । तथा च उमासंहितायां पार्वतीं प्रति शिववचनम् "पट्टाभिषेकसमये भवेयं स्मारितो ह्यहम् । त्वया वान्येन भूपाल तथा चेत्करवाण्यहम् । इत्थं प्रतिज्ञामकरोदाहिताग्न्यग्रणीर्नृपः ।" इति कैकेयीविवाहसमये केकयदशरथसङ्केतस्य विद्यमानत्वाच्चादोषः । याचनाप्रकारमाह–तव राज्यमिति । नियुक्तः कैकेय्येति शेषः ॥५॥६॥

दातुं कथमुद्युक्तवान्? सत्यम्—"उद्वाहकाले रतिसम्प्रयोगे प्राणात्यये सर्वधनापहारे। विप्रस्य चार्थेऽप्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि॥" इतिन्यायेन दोषाभावं हृदि निधाय तथाकृतवानिति न दोषः। केकयोऽपि रामगुणानुविद्धतया राज्यं न दौहित्राय याचितवान्। रामोऽपि सुमन्त्रादिभ्य इदं रहस्यं

तेन पित्राऽहमप्यत्र नियुक्तः पुरुषर्षभ। चतुर्दश वने वासं वर्षाणि वरदानिकम् ॥ ७ ॥ सोऽहं वनमिदं प्राप्तो निर्जनं लक्ष्मणान्वितः। सीतया चाप्रतिद्वन्द्वः सत्यवादे स्थितः पितुः ॥ ८ ॥ भवानपि तथेत्येव पितरं सत्यवादिनम्। कर्त्तुमर्हति राजेन्द्र क्षिप्रमेवाभिषेचनात् ॥ ९ ॥ ऋणान्मोचय राजानं मत्कृते भरत प्रभुम्। पितरं चापि धर्मज्ञं मातरं चाभिनन्दय ॥ १० ॥ श्रूयते हि पुरा तात श्रुतिर्गीता यशस्विना। गयेन यजमानेन गयेष्वेव पितॄन् प्रति ॥ ११॥ पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः। तस्मात् पुत्र इति प्रोक्तः पितॄन् यत्पाति वा सुतः ॥ १२॥ एष्टव्या बहवः पुत्रा गुणवन्तो बहुश्रुताः। तेषां वै समवेतानामपि कश्चिद्गयां व्रजेत् ॥ १३ ॥ एवं राजर्षयः सर्वे प्रतीता राजनन्दन। तस्मात् त्राहि नरश्रेष्ठ पितरं नरकात् प्रभो ॥ १४ ॥

श्रुतवान् अतएव हि ते शृण्वन्तोऽनुमान्य स्थितवन्त इति द्रष्टव्यम् ॥६॥ तेन कैकेय्यै प्रतिश्रुतराज्येन। अत्र वने दण्डकारण्ये। वरदानिकं वरदाननिमित्तकं वासं नियुक्त इति सम्बन्धः ॥ ७ ॥ अप्रतिद्वन्द्वः केनापि वारयितुमशक्य इति यावत् ॥ ८ ॥ ९ ॥ ऋणान्मोचय राजानं स्वाभिषेचनेन कैकेय्या ऋणाद्राजानं मोचयेत्यर्थः ॥ १० ॥ स्वोक्तार्थस्यावश्यकर्त्तव्यत्वे सम्मतिमाह—श्रूयत इत्यादिना। गयेन गयाख्येन। गयेषु गयाख्येषु प्रदेशेषु ॥ ११ ॥ पुन्नाम्नो नरकात्त्रायत इति पुत्रः। पितॄन् पाति तदुद्देशकृतेष्टापूर्त्तादिना स्वर्लोकं प्रापय्य रक्षतीत्यर्थः ॥ १२ ॥ एष्टव्याः काङ्क्षितव्याः ॥१३॥ एवम्

अत्र वने दण्डकारण्ये वरदानिकं वरदाननिमित्तकं वासं नियुक्त इति सम्बन्धः॥७॥ अप्रतिद्वन्द्वः अप्रातिबन्धः केनापि निवर्त्तयितुमशक्य इत्यर्थः॥८॥९॥ ऋणान्मोचय राजानं स्वाभिषेचनेन कैकेय्या ऋणाद्राजानं मोचयेत्यर्थः ॥ १० ॥ स्वोक्तस्यावश्यकत्वे सम्मतिमाह—श्रूयत इति। गयेन गयाख्येन। गयेषु गयाख्यप्रदेशेषु ॥ ११ ॥ पुन्नाम्नो नरकात् त्रायत इति पुत्रः पितॄन् पाति पितॄनुद्दिश्य कृतेष्टापूर्तादिना स्वर्लोकं प्रापय्य रक्षतीत्यर्थः ॥ १२॥ एष्टव्या इति। बहवः पुत्रा एष्टव्याः प्राप्तव्याः। कुतः? तेषामिति ॥ १३ ॥ अत एव सर्वे राजर्षयः। एवं प्रतीताः एवमुक्तप्रकारेण निश्चितवन्तः ॥ १४–१६ ॥

उक्तप्रकारेण । प्रतीताः निश्चितवन्तः ॥ १४-१६ ॥ मृगाणां राजराट् भवामि मृगाणां रञ्जकः शिक्षकश्च भवामीत्यर्थः । अत्र मृगशब्देन तत्तुल्या मुनयो लक्ष्यन्ते । यद्वा भाविसुग्रीवरञ्जनवालिवधादीनां बीजन्यासोयम् ॥ १७ ॥ छायामिति । वर्षत्रं छत्रम् । सुखी श्रयिष्य इतिपाठः ॥१८॥



अयोध्यां गच्छ भरत प्रकृतीरनुरञ्जय। शत्रुघ्नसहितो वीर सह सर्वैर्द्विजातिभिः ॥ १५ ॥ प्रवेक्ष्ये दण्डकारण्य महमप्यविलम्बयन् । आभ्यां तु सहितो राजन् वैदेह्या लक्ष्मणेन च ॥ १६ ॥ त्वं राजा भरत भव स्वयं नराणां वन्यानामहमपि राजराण्मृगाणाम् । गच्छ त्वं पुरवरमद्य सम्प्रहृष्टः संहृष्टस्त्वहमपि दण्डकान् प्रवेक्ष्ये ॥१७॥ छायां ते दिनकरभाः प्रबाधमानं वर्षत्रं भरत करोतु मूर्ध्नि शीताम् । एतेषामहमपि काननद्रुमाणां छायां तामतिशयिनीं सुखी श्रयिष्ये ॥ १८ ॥ शत्रुघ्नः कुशलमतिस्तु ते सहायः सौमित्रिर्मम विदितः प्रधानमित्रम् । चत्वारस्तनयवरा वयं नरेन्द्रं सत्यस्थं भरत चराम मा विषादम् ॥ १९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

आश्वासयन्तं भरतं जाबालिर्ब्राह्मणोत्तमः । उवाच रामं धर्मज्ञं धर्मापेतमिदं वचः ॥ १ ॥

शत्रुघ्न इति । चराम करवामेत्यर्थः॥१९॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीता० अयोध्याकाण्ड० सप्तोत्तरशततमः सर्गः ॥ १०७ ॥ एवं रामेणोक्ते निरुत्तरतया स्थितं भरतमालोक्य हितपरतया जाबालिश्चार्वाकमतमाश्रित्योत्तरमाह अष्टोत्तरशततमे—आश्वासयन्तमित्यादिना । ब्राह्म

भरतस्य राज्याधिपत्यमिव स्वस्य वनाधिपत्यं सम्पादयति—त्वमित्यादि । मृगाणां राजराट् भवामि मृगाणां रञ्जकः शिक्षकश्च भवामीत्यर्थः । एतद्भाविसुग्रीवरञ्जनवालिवधादीनां बीजत्वेन प्रतिभाति ॥ १७ ॥ छायामिति । वर्षत्रं छत्रम् । दिनकरभा इति द्वितीयाबहुवचनम् । शीतां छायामित्यन्वयः ॥ १८ ॥ शत्रुघ्न इति । चराम करवामेत्यर्थः ॥ १९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां सप्तोत्तरशततमः सर्गः ॥ १०७ ॥ आश्वासयन्तमिति । धर्मापेतं वैदिकधर्मविरुद्धम् ॥ १ ॥

णोत्तम इत्यनेन वक्ष्यमाणं नास्तिकवचनमहृद्यमिति द्योत्यते । धर्मापेतं वैदिकधर्मापेतम् ॥ १ ॥ साध्विति । बुद्धिः साधु माभूत् सम्यक् निवर्त्यतामित्यर्थः ॥ २ ॥ क इति । कस्य पुरुषस्य केनचित्साधनेन किमाप्यम्, न किमपीत्यर्थः ॥ ३ ॥ ४ ॥ यथेत्यादि । आवासमात्रमिति मार्गस्थसत्र

साधु राघव माभूत्ते बुद्धिरेवं निरर्थिका । प्राकृतस्य नरस्येव ह्यार्यबुद्धेर्मनस्विनः ॥ २ ॥ कः कस्य पुरुषो बन्धुः किमाप्यं कस्य केनचित् । यदेको जायते जन्तुरेक एव विनश्यति ॥ ३ ॥ तस्मान्माता पिता चेति राम सज्जेत यो नरः । उन्मत्त इव स ज्ञेयो नास्ति कश्चिद्धि कस्यचित् ॥४॥ यथा ग्रामान्तरं गच्छन् नरः कश्चित् क्वचिद्वसेत् । उत्सृज्य च तमावासं प्रतिष्ठेतापरेऽहनि ॥ ५ ॥ एवमेव मनुष्याणां पिता माता गृहं वसु । आवासमात्रं काकुत्स्थ सज्जन्ते नात्र सज्जनाः ॥ ६ ॥ पित्र्यं राज्यं परित्यज्य स नार्हसि नरोत्तम । आस्थातुं कापथं दुःखं विषमं बहुकण्टकम् ॥ ७ ॥ समृद्धायामयोध्यायामात्मानमभिषेचय । एकवेणी धरा हि त्वां नगरी सम्प्रतीक्षते ॥८॥ राजभोगाननुभवन् महार्हान् पार्थिवात्मज । विहर त्वमयोध्यायां यथा शक्रस्त्रिविष्टपे ॥९॥ न ते कश्चिद्दशरथस्त्वं च तस्य न कश्चन । अन्यो राजा त्वमन्यः स तस्मात् कुरु यदुच्यते ॥ १० ॥ बीजमात्रं पिता जन्तोः शुक्लं रुधिरमेव च । संयुक्तमृतुमन्मात्रा पुरुषस्येह जन्म तत् ॥ ११ ॥

शालायां विश्रमार्थं क्षणं निवासेपि तद्विसृज्य गच्छतः पथिकस्य तच्चिन्तानुवृत्तिवत् यावत्संश्लेषमेव मातापित्रादयोऽनुवर्तनीयाः । विश्लेषे तत्स्मृतिरपि विफला, किमुत तत्प्रीत्यर्थकार्याचरणमिति भावः ॥ ५ ॥ ६ ॥ पित्र्यमिति । रामाभिप्रायेणेदं परप्रतीत्या परो बोधनीय इति न्यायात् । कापथं कुत्सितमार्गम् । दुःखं दुःखप्रदम् । विषमं यौवनानुचितम् । बहुकण्टकम् अनेकोपप्लवसाहितम् । कापथमित्यनेनानुचितवानप्रस्थमार्ग एवोच्यते ॥७॥ समृद्धायामिति । एकवेणी धरा व्रतपरायणेत्यर्थः । नगरी तदधिदेवता ॥ ८ ॥ ९ ॥ नेति । यदुच्यते मयेति शेषः ॥ १० ॥ बीजमात्रमिति । पिता जन्तो

साधु माभूत् सम्यङ्निवर्ततामित्यर्थः ॥ २ ॥ कस्यचित्पुरुषस्य केनचित्सम्बन्धेन किमाप्यं प्राप्यं किम् ? न किमपीत्यर्थः । तत्र हेतुः यदेक इति ॥ ३–६ ॥ पित्र्यं राज्यमिति रामाभिप्रायेणोक्तिः । पराभिप्रायेण परो बोधनीय इतिं न्यायादित्याशयः । कापथं कुत्सितमार्गम् । दुःखं दुःखप्रदम् ॥ ७–१० ॥ पिता जन्तोर्बीजमात्रम्

बीजमात्रम् अल्पकारणम् । प्रधानकारणं तु ऋतुमन्मात्रा संयुक्तं धृतं शुक्लं रुधिरमेव च शुक्लशोणितमेव । तत् शुक्लशोणितं पुरुषस्य जन्मकारणम् ॥ ११ ॥ गत इति । तेन नृपेण यत्र येषु भूतेषु गन्तव्यं स नृपतिस्तत्र गतः, पञ्चभूतेषु लयं प्राप्त इत्यर्थः । पञ्चभूतमयत्वान्नरपतिशरीरस्य तदतिरि

गतः स नृपतिस्तत्र गन्तव्यं यत्र तेन वै । प्रवृत्तिरेषा मर्त्यानां त्वं तु मिथ्या विहन्यसे ॥ १२ ॥ अर्थधर्मपरा ये ये तांस्तान् शोचामि नेतरान् । ते हि दुःखमिह प्राप्य विनाशं प्रेत्य भेजिरे ॥ १३ ॥ अष्टका पितृदैवत्य मित्ययं प्रसृतो जनः । अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति ॥ १४ ॥ यदि भुक्तमिहान्येन देहमन्यस्य गच्छति । दद्यात् प्रवसतः श्राद्धं न तत् पथ्यशनं भवेत् ॥ १५ ॥

क्तस्य आत्मनोभावात् । मर्त्यानां मरणशीलानामेषा प्रवृत्तिः, अयं स्वभाव इत्यर्थः । त्वं तु मिथ्या विहन्यसे मिथ्याभूतेन सम्बन्धेन पीड्यसे॥ १२ ॥ अर्थेति । अर्थधर्मपराः प्रत्यक्षसौख्यं विहाय केवलार्थसम्पादनपराः । धर्मपराश्च इतरान् केवलप्रत्यक्षसुखानुभवपरान् । अर्थधर्मपरविषयशोक हेतुमाह ते हीति । प्रेत्यापि विनाशं दुःखं भेजिर इति सम्बन्धः ॥१३॥ धर्म्मस्याफलत्वे स्थालीपुलाकन्यायेन किञ्चिदुदाहरणमाह—अष्टकेति । अयं जनः अष्टका अष्टकाश्राद्धम् पितृदैवत्यं प्रतिसांवत्सरिकमिति यत्कर्म कर्तुमिति शेषः। प्रसृतः प्रवृत्तः। अत्र तत्सर्वमिति शेषः। अन्नस्य उपद्रवं क्षयं पश्य तत्सर्वं स्वभोज्यान्नस्य निरर्थकक्षयहेतुम् आलोचयेत्यर्थः । तत्र हेतुमाह मृतोहि किमशिष्यतीति ॥ १४ ॥ उक्तमेवार्थं तर्कमुखेन द्रढयति—यदीति । अन्येन

अल्पकारणम्, प्रधानकारणं तु ऋतुमन्मात्रा संयुक्तं धृतं शुक्लं रुधिरमेव च तच्छुक्लशोणितमिह पुरुषस्य जन्मकारणं भवतीत्यर्थः ॥ ११ ॥ गत इति । तेन यत्र येषु भूतेषु गन्तव्यं स नृपतिस्तत्र गतः, तेषु भूतेषु लयं प्राप्त इत्यर्थः । मर्त्यानां मरणशीलानां एषा प्रवृत्तिः अयं स्वभाव इत्यर्थः । त्वं तु मिथ्याविहन्यसे मिथ्याभूतेन पितृपुत्रादिसम्बन्धेन पीड्यस इत्यर्थः ॥ १२ ॥ अर्थधर्मपराः प्रत्यक्षसौख्यं विहाय केवलार्थधर्मसम्पादनपराः । इतरान् केवलप्रत्यक्षसुखानुभवपरायणान् न शोचामीत्यर्थः । अर्थसम्पादनविषये शोकहेतुमाह ते हीति । प्रेत्यापि विनाशं दुःखं भेजिर इति सम्बन्धः ॥ १३ ॥ अष्टकाश्राद्धं पितृदैवत्यं प्रतिसांवत्सरिकमित्यपि प्रसृतः प्रवृत्तः योऽयं जनः । तस्यान्नस्योपद्रवं क्षयं पश्य । तत्र हेतुः मृतो हीति ॥ १४ ॥ उक्तमेवार्थं तर्कमुखेन द्रढयति—यदि भुक्तमिति । अन्येन भुक्तमन्नं

स०—अर्थधर्मपराः अर्थशब्दो निवृत्तिपरः । अर्थेन निवृत्त्या, प्राप्तराज्यपरित्यागेनेति यावत् । धर्मपराः ते इह दुःखं प्रारब्धम्। प्रेत्य मृत्वा विनाशम् अदर्शनं लेभिरे प्राप्तवन्तः । "णश अदर्शने" इति धातुः ॥ १३ ॥ अशिष्यति भक्षयिष्यति ॥ १४ ॥

भवेत् । नचैवं दृश्यते अतः श्राद्धादिकं मृतस्याशनं न भवतीति भावः ॥ १५ ॥ एवमेकत्र वैदिककर्मणि फलव्यभिचारदर्शनात्सर्वत्रापि वैदिके न

दानसंवनना ह्येते ग्रन्था मेधाविभिः कृताः । यजस्व देहि दीक्षस्व तपस्तप्यस्व सन्त्यज ॥ १६ ॥ स नास्ति पर मित्येव कुरु बुद्धिं महामते । प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु ॥ १७ ॥ स तां बुद्धिं पुरस्कृत्य सर्वलोक निदर्शिनीम् । राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादितः ॥ १८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

फलप्रसक्तिरित्याह—दानसंवनना इत्यादिना । दानसंवननाः दानाय वशीकरणोपायाः "संवननं कर्मणा वशीकरणम्" इति हलायुधः । मेधाविभिः पर द्रव्यग्रहणकुशलबुद्धिभिः । यजस्व देवताराधनं कुरुष्व। सन्त्यज अर्थैषणादीन् सम्यक् त्यज । अत्रेतिकरणं द्रष्टव्यम् । यजस्वेत्यादिरूपा ग्रन्थाः मेधा विभिः कृता इत्यन्वयः ॥१६॥ स इति । सः पितृवचनं परिपालनीयमितिमन्यमानः त्वं परं परलोकानुभाव्यं यत्प्रत्यक्षं प्रत्यक्षसिद्धं राज्यभोगादिकम् । तदातिष्ठ प्रतिगृह्णीष्व परोक्षं परोक्षसुखफलकं पितृवचनपरिपालनादिकम् ॥१७॥ स इति । तां बुद्धिं प्रत्यक्षादन्यं नास्तीतिबुद्धिम् । सर्वलोकनिदर्शिनीं सर्वजनसम्मतामित्यर्थः ॥ १८ ॥ इतिं श्रीगोविन्दराज० श्रीरामायणभूषणे पीताम्बरा० अयोध्याकाण्डव्याख्याने अष्टोत्तरशततमः सर्गः ॥१०८॥

अन्यस्य देहं गच्छति यदि तदा प्रवसतः श्राद्धं दद्यात् पथि गच्छन्तमुद्दिश्यान्नं भोजयेत् अन्यभुक्तमन्नं पथ्यशनं भवेत्, पथिकस्य पाथेयं भवेदित्यर्थः । नैवं दृश्यते अतो न भवतीति भावः ॥१५॥ वैदिकाचारं सन्दूष्य तद्विधायकं शास्त्रं दूषयति—दानेति । दानसंवननाः दानाय वशीकरणोपायाः । मेधाविभिः द्रव्यग्रहण कुशलबुद्धिभिः । यजस्व देवताराधनं कुरुष्व । अर्थादीन सन्त्यज सम्यक्त्यज । अत्रेतिकरणं द्रष्टव्यम् ॥ १६ ॥ स इति । सः पितृवचनं परिपालनीयमिति मन्य मानस्त्वम् । परलोकं नास्तीति बुद्धिं कुरु । प्रत्यक्षं प्रत्यक्षसिद्धं राज्यभोगादिकं यत्तदातिष्ठ प्रतिगृह्णीष्व परोक्षसुखफलकं पितृवचनपरिपालनादिकम् । पृष्ठतः कुरु नानुतिष्ठ ॥ १७ ॥ तां बुद्धिं सर्वलोकनिदर्शिनीं सर्वजनसम्मतामित्यर्थः ॥ १८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्ड व्याख्यायाम् अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

अथ जाबालिमतनिरासपूर्वकं वैदिकमतस्थापनं नवोत्तरशततमे सर्गे—जाबालेरित्यादिना । सत्यात्मनां सत्यबुद्धीनां भक्त्या वैदिकधर्मश्रद्धया । अविपन्नया जाबालिवचनैः सांदृष्टिकैरप्यचलितया ॥१॥ भवानिति । प्रियकामार्थं प्रियविषयेच्छासिद्ध्यर्थं यद्वचनमुक्तवान् तत् कार्य्यसङ्काशं कार्यवत्प्रतीयमानम् ।

जाबालेस्तु वचः श्रुत्वा रामः सत्यात्मनां वरः । उवाच परया भक्त्या स्वबुद्ध्या चाविपन्नया ॥ १ ॥ भवान् मे प्रियकामार्थं वचनं यदिहोक्तवान् । अकार्य्यं कार्य्यसङ्काशमपथ्यं पथ्यसम्मितम् ॥ २ ॥ निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः । मानं न लभते सत्सु भिन्नचारित्रदर्शनः ॥ ३ ॥ कुलीनमकुलीनं वा वीरं पुरुषमानिनम् । चारित्रमेव व्याख्याति शुचिं वा यदि वाऽशुचिम् ॥ ४ ॥ अनार्यस्त्वार्यसङ्काशः शौचाद्धीनस्तथा शुचिः । लक्षण्यवदलक्षण्यो दुःशीलः शीलवानिव ॥ ५ ॥ अधर्मं धर्मवेषेण यदीमं लोकसङ्करम् । अभिपत्स्ये शुभं हित्वा क्रियाविधिविवर्जितम् ॥ ६ ॥ कश्चेतयानः पुरुषः कार्याकार्यविचक्षणः । बहुमंस्यति मां लोके दुर्वृत्तं लोकदूषणम् ॥७॥

अकार्य्यं पथ्यसम्मितं पथ्यवदवभासमानम् । अपथ्यम्, दुःखोदर्कमिति यावत् । एवं वचनं दूषितम् ॥२॥ अथ वक्तारं दूषयति—निर्मर्याद इत्यादिना । निर्मर्यादः मर्य्यादारहितः । अतएव पापाचारसमन्वितः। तत्र हेतुः भिन्नचारित्रदर्शन इति । दर्शनं मतं वेदविहितात् भिन्नाचारप्रतिपादकमतप्रवर्त्तक इत्यर्थः । एवम्भूतः पुरुषः सत्सु मानं पूजां न लभते प्रत्युत निन्दामेव लभत इत्यर्थः ॥३॥ पापाचारत्वे किं प्रमाणमित्याशङ्क्य तदुक्तिरेव प्रमाणमित्याह—कुलीनमित्यादिना । पुरुषमानिनम् अतिधीरमित्यर्थः । चारित्रम् उक्तरूपाचारः॥४॥ एतादृशपुरुषोपदेशश्रवणे स्वस्यानर्थं दर्शयति श्लोकत्रयेण—अनार्य इत्या

जाबालेरिति । सत्यात्मनां सत्यप्रवणस्वभावानाम् । अविपन्नया विपदमप्राप्तया, धर्माचलितयेति यावत् ॥१॥ प्रियकामार्थं प्रियाभिलाषनिमित्तम् यद्वचनमुक्तवान् अकार्यं सत् कार्यसङ्काशं कार्यत्वेन प्रतीयमानम् । पथ्यसम्मितं पथ्यवदवभासमानम् । अपथ्यं दुःखोदर्कमिति यावत् ॥ २ ॥ निर्मर्यादमिति । निर्मर्यादः उत्पथे वर्तमानः । मानं पूजाम् । भिन्नचारित्रदर्शनः वेदविहिताचाराद्भिन्नाचारप्रतिपादकमतप्रवर्तक इत्यर्थः ॥ ३ ॥ सज्जनासज्जनस्वरूपं केन कारणेन ज्ञायत इत्यत आह—कुलीनमिति ॥ ४ ॥ अनार्यमित्यादिश्लोकत्रयमेकं वाक्यम् । आर्यसङ्काशः शुचिः । लक्षण्यः लक्षणयुक्तः शीलवांश्चाहम् । अनार्यः शौचाद्धीनः अलक्षण्यः दुश्शील इव शुभं हित्वा शुभसाधनवैदिकधर्मं हित्वा । लोकसङ्करं लोकसङ्करकारकम् । क्रियाविधिवर्जितं वैदिकक्रियया वेदविधिना च वर्जितम् । इदं त्वदुक्तम धर्मम् । धर्मवेषेण धर्मत्वेनाभिपत्स्ये यदि तदा दुर्वृत्तं मां चेतयानः चेतनः पुरुषः कः लोके बहुमंस्यति न कोपीत्यर्थः ॥ ५-७ ॥

दिना । अनार्य एव सन्नार्यसङ्काशः । शौचाद्धीन एव सन् शुचिरिव । लक्षण्यवत् शिष्टलक्षणयुक्ततुल्य एव सन् अलक्षण्यः लक्षणहीनः । शीलवानिव सन् दुःशीलः । अहं शुभं हित्वा शुभसाधनं वैदिकधर्मं हित्वा । लोकसङ्करं लोकसङ्करकारकम् । क्रियाविधिविवर्जितं वैदिकक्रियया वेदविधिना च वर्जितम् । इमं त्वदुक्तमधर्मं धर्मवेषेण धर्मत्वेनाभिपत्स्ये स्वीकरिष्यामि यदि दुर्वृत्तं मां चेतयानः ज्ञानवान् कः पुरुषः लोके बहुमंस्यति न कोपीत्यर्थः ॥५–७॥

कस्य धास्याम्यहं वृत्तं केन वा स्वर्गमाप्नुयाम् । अनया वर्त्तमानो हि वृत्त्या हीनप्रतिज्ञया ॥८॥ कामवृत्तस्त्वयं लोकः कृत्स्नः समुपवर्त्तते । यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति हि प्रजाः ॥ ९ ॥ सत्यमेवानृशंसञ्च राजवृत्तं सनातनम् । तस्मात्सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः ॥ १० ॥ ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे । सत्यवादी हि लोकेऽस्मिन् परमं गच्छति क्षयम् ॥ ११ ॥

न केवलं बहुमानहानिः परलोकहानिश्चेत्याह–कस्येत्यादिना । अहं हीनप्रतिज्ञया वनवासप्रतिज्ञारहितया अनया वृत्त्या परोक्षं पृष्ठतः कुर्विति त्वदुक्तया वृत्त्या वर्तमानः सन्, वृत्तं त्वदुक्ताचरणम् । कस्य धास्यामि आधास्यामि, उपदेक्ष्यामीत्यर्थः। दास्यामीति पाठान्तरम् । केन वा साधनेन स्वर्गमाप्नुयामिति योजना ॥ ८ ॥ त्वदुक्ताचरणे सर्वलोकस्यापि परलोकहानिः स्यादित्याह–कामवृत्त इत्यादिना ॥ ९ ॥ सत्यप्रशंसापूर्वकं सत्यनिष्ठां दर्शयन् सत्यपरत्वरूपस्वमतं स्थापयति–सत्यमेवेत्यादिना । अनृशंसं भूतानुकम्पाप्रधानं सनातनं च राजवृत्तं सत्यमेव सत्यरूपमेव । तस्माद्राजवृत्तस्य सत्यरूपत्वात् । राज्यं राज्यस्थजनजातं सत्यात्मकं सत्यरूपम्, सत्यप्रधानमिति यावत् । लोक इति जात्येकवचनम् ॥ १० ॥ ऋषय इति । मेनिरे

कस्येति । अहं हीनप्रतिज्ञया चतुर्दशवर्षावधि वनवासप्रतिज्ञारहितया अनया वृत्त्या " प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु " इति त्वदुक्तया वृत्त्या । वर्तमानस्सन् । वृत्तं त्वदुक्ताचरणम् । कस्य दास्यामि कस्योपदेक्ष्यामीत्यर्थः । केन साधनेन वा स्वर्गमाप्नुयामिति योजना ॥ ८ ॥ त्वदुक्ताचरणे सर्वजनस्यापि परलोकहानिः स्यादित्यत आह–कामवृत्त इति ॥ ९ ॥ सत्यप्रशंसापूर्वकं सत्यनिष्ठां दर्शयन् सत्यरूपं स्वमतं स्थापयति–सत्यमेवेत्यादिना । अनृशंसं भूतानुकम्पाप्रधानं सनातनं च राजवृत्तं च सत्यमेव सत्यरूपमेव । तस्माद्राजवृत्तस्य सत्यरूपत्वात् राज्यं राज्यस्थजनजातम् । सत्यात्मकं सत्यरूपम् सत्यप्रधानमित्यर्थः । लोक इति जात्येकवचनम् ॥ १० ॥ परमं क्षयम् उत्कृष्टस्थानम् ॥ ११–१३ ॥

उत्कृष्टमिति शेषः । परमं क्षयं परमं धाम "धिष्ण्यं धाम निकेतनं च सदनं वस्थं च वास्तु क्षयः" इति वैजयन्ती ॥ ११ ॥ उद्विजन्त इति । उद्विजन्ते जना इति शेषः ॥ १२॥ सत्यमिति । ईश्वरः नियन्ता, व्यवस्थापक इति यावत् ॥ १३ ॥ दत्तमिति । सत्यप्रतिष्ठानाः सत्याधाराः सत्यप्रतिष्ठानानीति

उद्विजन्ते यथा सर्प्पान्नरादनृतवादिनः । धर्मः सत्यं परो लोके मूलं स्वर्गस्य चोच्यते ॥ १२ ॥ सत्यमेवेश्वरो लोके सत्यं पद्मा श्रिता सदा । सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥ १३ ॥ दत्तमिष्टं हुतं चैव तप्तानि च तपांसि च । वेदाः सत्यप्रतिष्ठानास्तस्मात् सत्यपरो भवेत् ॥ १४ ॥ एकः पालयते लोकमेकः पालयते कुलम् । मज्जत्येको हि निरय एकः स्वर्गे महीयते ॥ १५ ॥ सोऽहं पितुर्नियोगन्तु किमर्थं नानुपालये । सत्यप्रतिश्रवः सत्यं सत्येन समयीकृतः ॥१६॥ नैव लोभान्न मोहाद्वा न ह्यज्ञानात्तमोन्वितः । सेतुं सत्यस्य भेत्स्यामि गुरोः सत्यप्रतिश्रवः ॥१७॥ असत्यसन्धस्य सतश्चलस्यास्थिरचेतसः । नैव देवा न पितरः प्रतीच्छन्तीति नः श्रुतम् ॥१८॥

विपरिणम्य पूर्वार्द्धेन योज्यम् ॥ १४ ॥ प्रस्तुतसत्यनिष्णातस्य ऐहिकामुष्मिकफलं तद्रहितस्य निरयप्राप्तिं च दर्शयति--एक इत्यादिना ॥ १५॥ स इत्यादि । सत्यप्रतिश्रवः सत्यसन्धः ॥ १६ ॥ नैवेति । लोभात् राज्यलोभात् । मोहात् विप्रलम्भवाक्यजनितचित्तविभ्रमात् । अज्ञानात् तमोन्वितः तमोगुणयुक्तः सत्यस्य "करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे" इत्यस्य सत्यवचनस्य । सेतुं मर्य्यादाम् ॥ १७ ॥ असत्यसन्धस्येति । चलस्य

सत्यप्रतिष्ठानाः सत्याधाराः दत्तादीन्यपि सत्यप्रतिष्ठानानीति वचनव्यत्ययेन योजनीयानि ॥ १४ ॥ प्रस्तुतसत्यनिष्णातस्य ऐहिकामुष्मिकं फलं तद्रहितस्य निरयप्राप्तिं च दर्शयति-एक इति ॥ १५ ॥ सोहमिति । सत्यप्रतिश्रवः सत्यसन्धः । समयीकृतः "तद्ब्रूहि वचनं देवि राज्ञो यदभिकाङ्क्षितम् । करिष्ये प्रतिजाने च" इति शपथेन प्रतिज्ञावान् कृतः । सोहं सत्यं पितुर्निदेशं किमर्थं नानुपालये पालयिष्याम्येव ॥ १६ ॥ नैवेति । लोभात् राज्यलोभात् । मोहात् विप्रलम्भवाक्यश्रवणजनितचित्तविभ्रमात् । अज्ञानात् ज्ञानाभावात् । तमोऽन्वितः तमोगुणयुक्तः । सत्यस्य सेतुं 'करिप्यामि तव प्रीतिं सुकृतेनापि ते शपे' इत्युक्तसत्यवचनस्य मर्यादाम् ॥ १७ ॥ असत्यसन्धस्येति । चपलस्य चपलस्वभावस्य । न प्रतीच्छन्ति न स्वीकुर्वन्ति । हव्यकव्यादिकमिति शेषः । नः अस्माभिः

स०—सत्येन शपथेन समयीकृतः कैकेय्या प्रतिज्ञावान् कृतः यतः अतः कथं नानुपालये । कृतमित्यपि पाठः ॥ १६ ॥ तमः तत्कार्यं कोपादि । गुरोः पितुः ॥ १७ ॥ उपासकस्य चञ्चलत्वादेव तेपि देवाद्याः अस्थिरचेतसस्सन्तः न प्रतीच्छन्ति न गृह्णन्ति, हव्यादिकमिति शेषः ॥ १८ ॥

चलस्वभावस्य । प्रतीच्छन्ति हव्यकव्यादिकामिति शेषः । नः अस्माभिः श्रुतम् ॥ १८ ॥ प्रत्यगात्ममिति । अहं सत्यं सत्यरूपमिमं धर्मं प्रत्यगात्मं स्वयं पश्यामि आत्मानं प्रत्यविनाभूतत्वेन प्रवृत्तं पश्यामीत्यर्थः । सत्पुरुषाचीर्णः सत्पुरुषैराचरितः, सम्पादित इति यावत् । भारः जटावल्कलादि

प्रत्यगात्ममिमं धर्मं सत्यं पश्याम्यहं स्वयम् । भारः सत्पुरुषाचीर्णस्तदर्थमभिमन्यते ॥१९॥ क्षात्रं धर्ममहं त्यक्ष्ये ह्यधर्मं धर्मसंहितम् । क्षुद्रैर्नृशंसैर्लुब्धैश्च सेवितं पापकर्मभिः ॥ २० ॥ कायेन कुरुते पापं मनसा सम्प्रधार्य च । अनृतं जिह्वया चाह त्रिविधं कर्म पातकम् ॥२१॥ भूमिः कीर्त्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि । स्वर्गस्थं चानु पश्यन्ति सत्यमेव भजेत तत् ॥ २२ ॥ श्रेष्ठं ह्यनार्यमेव स्याद्यद्भवानवधार्य्य माम् । आह युक्तिकरैर्वाक्यैरिदं भद्रं कुरुष्व ह ॥ २३ ॥ कथं ह्यहं प्रतिज्ञाय वनवासमिमं गुरौ । भरतस्य करिष्यामि वचो हित्वा गुरोर्वचः ॥ २४ ॥

भारः । तदर्थं सत्यरूपधर्मार्थम् । अभिमन्यते अभिमतो भवति ॥ १९ ॥ पूर्वैराचरितं सत्यं परित्यज्य त्वदुक्तरीत्या राज्यं नाङ्गीकरिष्यामीत्याह–क्षात्रमित्यादिना । अधर्मम् अधर्मप्रचुरम् । धर्मसंहितं धर्मलेशसहितम्, अधर्मप्रचुरधर्मलेशयुक्तक्षत्रियधर्ममहं त्यक्ष्य इत्यर्थः ॥२०॥२१॥ भूमिरिति । कीर्तिः वितरणजनिता प्रथा । यशः पौरुषनिबन्धनम् । पुरुषं करणत्रयेण सत्यनिष्णातम् अनुपश्यन्ति अनुसृत्य पश्यन्ति, अनुबध्नन्तीति यावत् ॥२२॥ श्रेष्ठमिति । श्रेष्ठमित्यवधार्य्य निश्चित्य । इदं भद्रं कुरुष्वेति भवान् युक्तिकरैर्वाक्यैः यदाह तदनार्य्यमेव स्यात् ॥ २३ ॥ 'प्रत्यक्षं यत्तदातिष्ठ

श्रुतम् ॥ १८ ॥ प्रत्यगात्ममिति । अहं सत्यं सत्यरूपमिमं धर्मम् । प्रत्यगात्मम् आत्मनि प्रत्यक्षीकृतम् आत्मनि प्रतिमुखीकृतं स्वयं पश्यामि आत्मानं प्रत्यविनाभूतत्वेनावृतं पश्यामीत्यर्थः । सत्पुरुषाचीर्णः सत्पुरुषैराचरितः, सम्पादित इत्यर्थः । भारः जटावल्कलादिभारः, तदर्थसत्यरूपधर्मार्थमभिनन्द्यत इत्यर्थः ॥ १९ ॥ पूर्वैराचरितं सत्यं परित्यज्य त्वदुक्तरीतया राज्यं नाङ्गीकरिष्यामीत्याह–क्षात्रमिति । अधर्ममधर्मप्रचुरम् । धर्मसंहितं धर्मलेशसहितम् अधर्मप्रचुरधर्मलेशयुक्तक्षत्रियधर्ममहं त्यक्ष्य इत्यर्थः ॥ २० ॥ २१ ॥ भूमिरिति । पुरुषं प्रार्थयन्ति, सत्यभागिनमिति शेषः । कीर्तिः वितरणजनिता प्रथा ॥ २२ ॥ अवधार्य निश्चित्य । इदं भद्रं कुरुष्वेति भवान् युक्तिकरैर्वाक्यैर्मा यदाह तदकार्यमेव स्यात् ॥ २३ ॥ 'प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु' इत्येतस्य जाबालिवाक्यस्योत्तर

स०–प्रत्यगात्मम्–अञ्चन्ति गच्छन्ति नानायोनिष्वित्यञ्चः । ते च ते आत्मानः अगात्मानो जीवाः । अगात्मनः प्रति विद्यमानं प्रत्यगात्मम् । वीप्सायामव्ययीभावः । "अनक्ष" इति टच् । सत्यं सत्यपरिपालनम् ध्रुवं मुख्यं धर्मं पश्यामि । भारः जटाभारः यतः धर्मार्थं सत्पुरुषैश्चीर्णः अतस्तदर्थम् अभिनन्द्यते आद्रियते ॥ १९ ॥

परोक्षं पृष्ठतः कुरु ' इत्यन्तस्य जाबालिवाक्यजातस्योत्तरमभिधाय ' राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादितः ' इत्यस्याप्युत्तरमाह—कथमित्यादिना ॥ २४ ॥ स्थिरेति । प्रतिज्ञा, प्रतिज्ञाता कृतेत्यर्थः ॥२५॥ वनवासमित्यादिश्लोकद्वयमेकं वाक्यम् । वनवासं वसन् कुर्वन्नित्यर्थः । नियतभोजनः

स्थिरा मया प्रतिज्ञाता प्रतिज्ञा गुरुसन्निधौ । प्रहृष्यमाणा सा देवी कैकेयी चाभवत्तदा ॥ २५ ॥ वनवासं वसन्नेवं शुचिर्नियतभोजनः । मूलैः पुष्पैः फलैः पुण्यैः पितॄन् देवांश्च तर्पयन् ॥ २६ ॥ सन्तुष्टपञ्चवर्गोऽहं लोकयात्रां प्रवर्त्तये । अकुहः श्रद्दधानस्सन् कार्य्याकार्य्यविचक्षणः ॥ २७ ॥ कर्मभूमिमिमां प्राप्य कर्त्तव्यं कर्म यच्छुभम् । अग्निर्वायुश्च सोमश्च कर्मणां फलभागिनः ॥२८॥ शतं क्रतूनामाहृत्य देवराट् त्रिदिवङ्गतः । तपांस्युग्राणि चास्थाय दिवं याता महर्षयः ॥ २९ ॥ अमृष्यमाणः पुनरुग्रतेजा निशम्य तन्नास्तिकवाक्यहेतुम् । अथाब्रवीत्तं नृपतेस्तनूजो विगर्हमाणो वचनानि तस्य ॥ ३० ॥

नियतवन्याहारः। सन्तुष्टपञ्चवर्गः परितुष्टपञ्चेन्द्रियवर्गः। लोकयात्रां पितृवचनपरिपालनरूपलोकवर्त्तनम् । "गमने वर्तने यात्रा" इति वैजयन्ती। अकुहः अकृत्रिमः ॥२६॥२७॥ अष्टकोदाहरणेन वैदिककर्मणां निष्फलत्वं यदुक्तं तत्र परिहारमाह—कर्मभूमिमित्यादिना। यत् शुभं कर्म तत् कर्त्तव्यम्, जनैरिति शेषः। तत्र फलवदनुष्ठानं दर्शयति अग्निरित्यादि। कर्मणां कर्मभूमिकृतस्वस्वकर्मणाम् । फलभागिनः अग्नित्वादिफलं प्राप्तवन्तः ॥ २८ ॥ क्रतूनां शतम् आहृत्य कृत्वेत्यर्थः। प्रवासिनं प्रति श्राद्धकरणविधेरभावात् विहितस्थले कुत्रापि न व्यभिचार इति भावः॥ २९॥ अमृष्यमाण इति । नास्तिक

मभिधाय ' राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादितः ' इत्यस्योत्तरमाह कथमिति ॥ २४ ॥ २५ ॥ वनवासमित्यादिश्लोकद्वयमेकं वाक्यम् । वसन् कुर्वन् । नियतभोजनः नियतवन्याहारः तेन सन्तुष्टपञ्चवर्गः सन्तुष्टेन्द्रियवर्गः । लोकयात्रां पितृवचनपरिपालनरूपलोकादिवर्तनं प्रवर्तये । अकुहः अकृत्रिमः अमायावी सन् ॥ २६ ॥२७॥ कर्मभूमिमित्यादिश्लोकद्वयमेकं वाक्यम् । यच्छुभं कर्म तत्कर्तव्यम्, जनैरिति शेषः । शुभकर्मकर्तव्यमित्यत्र हेतुमाह—अग्निरित्यादिना। कर्मणां कर्मभूमौ कृतस्वस्वकर्मणां फलभागिनः अग्नित्वादिकं कर्मफलत्वेन प्राप्तवन्तः । अग्न्यादयस्तु जन्मान्तरे कर्मभूमौ शुभकर्म कृत्वा इदानीमग्नित्ववायुत्वसोमत्वादिकं प्राप्ताः, अतस्सर्वैरपि शुभकर्मैव कर्तव्यमिति भावः ॥ २८ ॥ २९ ॥ अमृष्यमाण इति । नास्तिकवाक्यहेतुं ' यदि भुक्तमिहान्येन देहमन्यस्य गच्छति ।

विष०—फलभागिनः अग्नित्वादिकं कर्मफलत्वेन प्राप्तवन्तः । अतः सर्वैरपि शुभकर्मैव कर्तव्यमिति भावः । स०—कर्मणां फलभागिनः अस्मिन् वर्षे कर्म कृत्वैव प्राप्तपदाः ॥ २८ ॥

वाक्यहेतुं ' यदि भुक्तमिहान्येन देहमन्यस्य गच्छति । दद्यात्प्रवसतः श्राद्धं न तत्पथ्यशनं भवेत् ॥ ' इत्यादिनास्तिकवाक्यरूपतर्कं विगर्हमाणः मनसि विगर्हमाणः ॥ ३० ॥३१॥ तेनेति । तेन हेतुना । विप्राः एवमर्थं यथावत् आज्ञाय ज्ञात्वा । एकोदयं सम्प्रतिपद्य ऐककण्ठ्यं प्राप्य सकलं धर्मं

सत्यं च धर्मं च पराक्रमं च भूतानुकम्पां प्रियवादिताञ्च । द्विजातिदेवातिथिपूजनं च पन्थानमाहुस्त्रिदिवस्य सन्तः ॥ ३१ ॥ तेनैवमाज्ञाय यथावदर्थमेकोदयं सम्प्रतिपद्य विप्राः । धर्मं चरन्तः सकलं यथावत् कांक्षन्ति लोकागममप्रमत्ताः ॥ ३२ ॥ निन्दाम्यहं कर्म पितुः कृतं तद्यस्त्वामगृह्णाद्विषमस्थबुद्धिम् । बुद्ध्यानयैवंविधया चरन्तं सुनास्तिकं धर्मपथादपेतम् ॥ ३३ ॥ यथा हि चोरः स तथा हि बुद्धस्तथागतं नास्तिकमत्र विद्धि । तस्माद्धि यः शङ्क्यतमः प्रजानां न नास्तिकेनाभिमुखो बुधः स्यात् ॥ ३४ ॥

स्वस्ववर्णाश्रमोचितधर्मम् । अप्रमत्ताः सावधानाः यथावच्चरन्तः अनुतिष्ठन्तः लोकागमं स्वर्गादिलोकप्राप्तिं काङ्क्षन्तीति ॥ ३२ ॥ निन्दामीति । विषमस्थबुद्धिम् अवैदिकमार्गनिष्णातबुद्धिम् । अनया बुद्ध्या चरन्तं चार्वाकमतानुसारिणीं बुद्धिं परान् प्रत्युपदिश्याचरन्तमित्यर्थः । सुनास्तिकं परलोको नास्तीति बुद्धियुक्तम् । सुशब्देन वैदिकवत्स्थित्या चार्वाकमतप्रवर्त्तक इत्युच्यते । निन्दामि वैदिककर्मभ्यो बहिष्करोमि ॥ ३३ ॥ प्रत्यक्षैकप्रमाणवादी यदि कश्चिद्राज्ये स्यात् सोपि बहिष्करणीय इत्याह–यथेत्यादिना । चोरो यथा निराकरणीयः सः वेदबाह्यत्वेन प्रसिद्धोपि । तथाहि तथैव । अत्र अस्मिन् लोके । नास्तिकं चार्वाकं तथागतं बुद्धतुल्यं विद्धि तस्माद्यः प्रजानां शङ्क्यतमः अवैदिकत्वेन शङ्कनीयः । तेन नास्तिकेन

दद्यात्प्रवसतः श्राद्धं न तत्पथ्यशनं भवेत् " इत्यादिनास्तिकवाक्यरूपतर्कं विगर्हमाणः ॥ ३० ॥ ३१ ॥ तेनेति । येन त्रिदिवस्यं पन्थानमाहुः तेन हेतुना विप्राः एवमर्थं यथावदाज्ञाय श्रुत्वा एकोदयं सम्प्रतिपद्य एकमुखं प्राप्य एकमनसो भूत्वा सकलं धर्मं स्ववर्णाश्रमोचितं धर्मम् । अप्रमत्ताः सावधानाः यथावच्चरन्तः अनुतिष्ठन्तः । लोकागमं परलोकप्राप्तिं कांक्षन्तीति योजना ॥ ३२ ॥ निन्दामीति । विषमस्थबुद्धिम् अवैदिकमार्गनिष्णातबुद्धिम् । अनया बुद्ध्या चार्वाकमतानुसारिण्या बुद्ध्या ॥ ३३ ॥ प्रत्यक्षैकप्रमाणवादी चार्वाकमतानुसारी जाबालिरिव प्रत्यक्षमात्रप्रमाणवादी बुद्धमतावलम्बी राज्ये यदि कश्चित्सम्भवेत्सोपि निराकरणीय इत्याह–यथाहीति । चोरो यथा निराकरणीयः स वेदबाह्यत्वेन प्रसिद्धो बुद्धः तथैव निराकरणीयः । अत्र अस्मिँल्लोके नास्तिकं चार्वाकमपि तथागतं

बुधोऽभिमुखो न स्यात् ॥३४॥ ऐहिकामुष्मिकफलसाधने धर्मे शिष्टाचारं प्रमाणयति—त्वत्त इत्यादिना । त्वत्तः पूर्वतरे पुरातनाश्च वराश्च ज्ञानतः श्रेष्ठाश्च जनाः बहूनि शुभानि कर्माणि चक्रुः। ते इमं परं च लोकं जित्वा सदा वर्तन्त इति शेषः। सदावर्तमानत्वं च ग्रहनक्षत्रादिरूपेण दृश्यमानत्वात्। "सुकृतां

त्वत्तो जनाः पूर्वतरे वराश्च शुभानि कर्माणि बहूनि चक्रुः। जित्वा सदेमं च परञ्च लोकं तस्माद्द्विजाः स्वस्ति हुतं कृतं च ॥३५॥ धर्मे रताः सत्पुरुषैः समेतास्तेजस्विनो दानगुणप्रधानाः। अहिंसका वीतमलाश्च लोके भवन्ति पूज्या मुनयः प्रधानाः ॥ ३६ ॥ इति ब्रुवन्तं वचनं सरोषं रामं महात्मानमदीनसत्त्वम्। उवाच तथ्यं पुनरास्तिकं च सत्यं वचः सानुनयं च विप्रः॥ ३७ ॥ न नास्तिकानां वचनं ब्रवीम्यहं न चास्तिकोऽहं न च नास्ति किञ्चन। समीक्ष्य कालं पुनरास्तिकोऽभवं भवेय काले पुनरेव नास्तिकः ॥ ३८ ॥

वा एतानि ज्योतींषि यन्नक्षत्राणि" इति श्रुतेः। तस्मात् कर्मानुष्ठानस्यैहिकामुष्मिकसकलफलसाधनत्वात्। द्विजाः स्वस्ति मङ्गलात्मकं कर्म हुतं यज्ञादिकृतं च तपोदानादिकं च कुर्वन्तीति शेषः। एवं प्रत्यक्षमेव न प्रमाणं तदतिरिक्तानां वेदानामपि प्रमाणत्वात् । तत्त्वं च तेषां महाजनपरिग्रहात् । स चापौरुषेयत्वेन तच्चाविच्छिन्नसम्प्रदायत्वे सति अस्मर्यमाणकर्तृकत्वात्। वैदिकानि च कर्माणि सफलानि अग्निरविसोमनक्षत्रेन्द्रादिफलभोगस्याबाधितप्रत्यक्षसिद्धत्वात् । अन्यकृतभोजनस्य पथिकाशनतृप्त्यभावस्तु अदर्शनादविहितत्वाच्चेत्युक्तम् ॥३५॥३६॥ इतीति। तथ्यं यथार्थम्। सत्यं सद्वचो हितम् ॥३७॥ धर्मसङ्कटे प्राप्ते सर्वमतज्ञेन विदुषा यत्किञ्चिन्मतमवलम्ब्यापि तस्य परिहरणीयत्वात् महतो राज्यस्यानायकत्वरूपसङ्कटपरिहाराय त्वां निवर्तयितुं मया नास्तिकमतमुपन्यस्तम्, न त्वहं वस्तुतो नास्तिक इत्याह—नेत्यादिना। किञ्चन परलोकादिकं नास्तीति न, अस्त्येव। समीक्ष्य कालं पुन

विद्धि बुद्धतुल्यं विद्धि, तस्मात्प्रजानां यः शङ्क्यतमः अवैदिकत्वेन परिहर्तव्यः। तेन नास्तिकेन बुधः अभिमुखो न स्यात्। शक्यतम इति पाठे बहिष्कर्तुं च योग्य इत्यर्थः॥ ३४॥ ऐहिकामुष्मिकफलसाधने धर्मे शिष्टाचारं प्रमाणयति—त्वत्त इति। त्वत्तः पूर्वतरे पुरातनाः वराश्च ज्ञानतः श्रेष्ठजनाः बहूनि कर्माणि शुभानि कर्माणि चक्रुः। ते इमं च परलोकं च जित्वा सदा वर्तन्त इति शेषः । सदावर्तमानत्वं ग्रहनक्षत्रादिरूपेण दृश्यमानत्वात् कर्मानुष्ठानस्यैहिकामुष्मिकफलसाधनत्वात्। द्विजाः स्वस्ति मङ्गलात्मकं कर्म। हुतं यज्ञादिकम्, कृतं तपो दानादि च कुर्वन्तीति शेषः ॥ ३५–३७॥ धर्मसङ्कटे प्राप्ते सर्वमतज्ञेन विदुषा यत्किञ्चिन्मत

रास्तिकोऽभवं यदा वादिनान्येन नास्तिकमतमवलम्ब्यते तं कालं समीक्ष्य अहं पुनरास्तिकमतावलम्ब्यभवम्। अन्यैर्वादिभिर्नास्तिकमतमवलम्ब्य कुतर्कोद्घाटने तदानीमहमेव त्वदुक्तरीत्या शतशस्तत्खण्डनमकार्षमित्यर्थः । तर्हीदानीं नास्तिकमतं कुतोऽवलम्बितवानसीत्यत्राह—भवेय काले पुन

स चापि कालोऽयमुपागतः शनैर्यथा मया नास्तिकवागुदीरिता । निवर्त्तनार्थं तव राम कारणात् प्रसादनार्थं तु मयैतदीरितम् ॥ ३९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमदयोध्याकाण्डे नवोत्तरशततमः सर्गः ॥ १०९ ॥

क्रुद्धमाज्ञाय रामं तं वसिष्ठः प्रत्युवाच ह । जाबालिरपि जानीते लोकस्यास्य गतागतिम् ॥ १ ॥ निवर्त्तयितु कामस्तु त्वामेतद्वाक्यमुक्तवान् । इमां लोकसमुत्पत्तिं लोकनाथ निबोध मे ॥ २ ॥

रेव नास्तिक इति । तादृशोऽहमेव पुनः काले धर्मसङ्कटकाले नास्तिको भवेय, धर्मसङ्कटकालप्रयुक्तोऽयं मम नास्तिकवाद इत्यर्थः। भवेयेत्यनेन इतःपरमपि कस्मिंश्चिद्धर्मसङ्कटकाले नास्तिकमतमवलम्बनीयमेव नच तावता वस्तुतो नास्तिकत्वं मम भवेदिति भावः ॥ ३८ ॥ तादृशधर्मसङ्कट कालएवायमित्याह—स चापीति । एवमपि परमवैदिकस्य तव न युक्तमेतादृशं वचनमित्याशङ्क्याह—निवर्त्तनार्थमित्यादिना । निवर्त्तनार्थं तव निवृत्तिज्ञापनार्थं तव वेदमार्गादविचाल्यत्वस्य लोकानां प्रकटीकरणार्थमित्यर्थः । कारणात् भरतकारणात् भरतमुखोल्लासाय तव प्रसादनार्थं चेत्यर्थः ॥ ३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने नवोत्तरशततमः सर्गः ॥ १०९ ॥

अथ वसिष्ठो जाबालिवचनयाथार्थ्यप्रदर्शनेन तद्विषयकोपं निवर्त्त्य स्वाभिमतं ज्येष्ठस्यैव राज्यार्हतारूपं निवर्त्तनोपायं प्रतिपादयति—क्रुद्धमित्यादिना । लोकस्य जनस्य गतं गमनम् । भावे निष्ठा । परलोकप्राप्तिं तत इहागतिं च जानीते, नासौ नास्तिक इत्यर्थः ॥ १ ॥ निवर्तनार्थमिति तदुक्त

मवलम्ब्यापि तस्य परिहरणीयत्वात् महतो राज्यस्यानायकत्वरूपधर्मसङ्कटपरिहाराय त्वां निवर्तयितुं नास्तिकमतमुपन्यस्तम्, न त्वहं वस्तुतो नास्तिक इत्याह—नेति । कश्चन परलोकादिकम् नास्तीति न, अस्त्येव समीक्ष्य कालं पुनरास्तिकोऽभवम् । यदा वादिना नास्तिकमतमवलम्ब्यते तत्कालं समीक्ष्य पुनरास्तिको भवेयम् पुनः धर्मसङ्कटे काले नास्तिकः नास्तिकमतावलम्बी भवेयमित्यर्थः ॥ ३८ ॥ स चेति । कारणात् तादृशकालागमनकारणात् ॥ ३९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायां नवोत्तरशततमः सर्गः ॥ १०९ ॥ १ ॥ ज्येष्ठस्य राज्यप्राप्तिं वक्तुमादिकारणमारभ्य राज

सत्य०—यथा नास्तिकवागुदाहृता तथा कारणात् तव कोपरूपनिमित्तात् त्वत्प्रसादनार्थम् । एतत् आस्तिकवचनम् ॥ ३९ ॥ क्रुद्धं जाबालये ॥ १ ॥

मपि सत्यमित्याह निवर्तयितुकाम इत्यादिना । ज्येष्ठस्यैव राज्यार्हता यकुमारभरत इमामित्यादि । लोकनाथ ! तवैव तत्प्रत्यक्षं हीति भावः ॥ २ ॥ ३ ॥ असृजदिति । आकाशप्रभव इत्यत्राकाशशब्दः परब्रह्मपरः । "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति श्रुतेः । इत्थमेव "अव्यक्त

सर्वं सलिलमेवासीत् पृथिवी यत्र निर्मिता । ततः समभवद्ब्रह्मा स्वयम्भूर्दैवतैः सह । स वराहस्ततो भूत्वा प्रोज्जहार वसुन्धराम् ॥ ३ ॥ असृजच्च जगत् सर्वं सह पुत्रैः कृतात्मभिः । आकाशप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ॥ ४ ॥ तस्मान्मरीचिः संजज्ञे मरीचेः काश्यपः सुतः ॥ ५ ॥ विवस्वान् काश्यपाज्जज्ञे मनुर्वैवस्वतस्सुतः । स तु प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ॥ ६ ॥ यस्येयं प्रथमं दत्ता समृद्धा मनुना मही । तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् ॥ ७ ॥ इक्ष्वाकोस्तु सुतः श्रीमान् कुक्षिरेवेति विश्रुतः । कुक्षेरथात्मजो वीरो विकुक्षिरुदपद्यत ॥ ८ ॥ विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान् । बाणस्य तु महाबाहुरनरण्यो महायशाः ॥ ९ ॥ नानावृष्टिर्बभूवास्मिन्न दुर्भिक्षं सतां वरे । अनरण्ये महाराजे तस्करो नापि कश्चन ॥ १० ॥

प्रभवो ब्रह्म" इति बालकाण्डोक्तमपि । शाश्वतः प्रवाहरूपेण नित्यः । नित्यः इतरापेक्षया चिरकालस्थायी, अन्यथा आकाशप्रभव इति विरुध्यते । अव्ययः तस्मात् स्थानात्तस्य मोक्षसिद्धेः ॥ ४ ॥ ५ ॥ विवस्वानिति । वैवस्वतः विवस्वत्सम्बन्धी तस्येक्ष्वाकुवंशकूटस्थत्वं च दर्शयति स त्वित्यादिना । परम्परामाह इमामित्यादिना ॥ २ ॥ सर्वमिति । यत्र यस्मिन्नधिकरणे सर्वं सलिलमासीत् सलिलव्याप्तमासीत् तत्र पृथिवी निर्मितेति सम्बन्धः । ततस्सलिलात् सः प्रसिद्धो नारायणः वराहो भूत्वा ततस्सलिलाद्वसुन्धरां प्रोज्जहारेत्यर्थः ॥ ३ ॥ असृजदिति । आकाशप्रभवः आकाशशब्देन तत्कारणमव्यक्तं लक्ष्यते, ब्रह्मा जगद सृजदिति सम्बन्धः । तस्माद्ब्रह्मणः ॥ ४ ॥ ५ ॥ मनोः सुतः इक्ष्वाकुः पूर्वं प्रजापतिः, जनेश्वर इत्यर्थः ॥ ६–१४ ॥

स०–सर्वं सर्वत्र । सलिलं लक्ष्म्यात्मकम् । तत्र सलिले ॥ वि०–सलिलमेव एकार्णवोदकमेवासीत् । नारायणाधिष्ठितमिति शेषः । ततो नारायणात् स्वयम्भूर्ब्रह्मा समभवत्, नाभिपद्मे इति शेषः । ननु सर्वनाम्नः प्रधानपरामर्शित्वात्कथमिह नारायणपरामर्श इति चेन्न । "दर्शिते राजमातङ्गास्तस्यैवामी तुरङ्गमाः" इत्यादावप्रधानपरामर्शित्वदर्शनेन तस्यौत्सर्गिकत्वात् ॥ ३ ॥ स०–सः वराहो भगवान् चतुर्मुखान्तर्यामितया प्रसक्तः । वसुन्धरां रसातलगतामिति शेषः । कृतात्मभिः शिक्षितमनस्कैः ॥ विषम०–ननु पृथिव्यास्सलिले निमग्नत्वात् क दैवतान्यभवन्नित्याकांक्षायामाह–स वराह इति । सः नारायणः । ततो ब्रह्मनासारन्ध्राद्वराहो भूत्वा वसुन्धरां प्रोज्जहार, सलिलादुद्धृत्य तदुपरि स्थापयामासेत्यर्थः । स एव नारायणो ब्रह्ममूर्तिः पुत्रैस्सह सर्वमसृजत् । वक्ष्यत्युत्तरकाण्डे–"संक्षिप्य हि पुरा लोकान् मायया स्वयमेव हि । महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः । पद्मे दिव्येऽर्कसङ्काशे नाभ्यामुत्पाद्य मामपि । प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम् ॥" इति ॥ ४ ॥

" मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् " इति तस्यायोध्यानिर्मातृत्वोक्तिः॥६–११॥ त्रिशङ्कोरिति । युवनाश्व एव महातेजाः महातेजःप्रभावेन महाबलधुन्धुनामकासुरमारणाद्धुन्धुमारसंज्ञामलभतेत्यर्थः ॥ १२ ॥ १३ ॥ सुसन्धेरिति । ज्येष्ठस्य ध्रुवसन्धेः । वंशकथनाज्ज्येष्ठस्यैव राज्ये

अनरण्यान्महाबाहुः पृथू राजा बभूव ह । तस्मात् पृथोर्महाराजस्त्रिशङ्कुरुदपद्यत । स सत्यवचनाद्वीरः सशरीरो दिवङ्गतः ॥ ११ ॥ त्रिशङ्कोरभवत्सूनुर्धुन्धुमारो महायशाः । धुन्धुमारो महातेजा युवनाश्वो व्यजायत ॥ १२ ॥ युवनाश्वसुतः श्रीमान् मान्धाता समपद्यत । मान्धातुस्तु महातेजाः सुसन्धिरुदपद्यत ॥ १३ ॥ सुसन्धेरपि पुत्रौ द्वौ ध्रुवसन्धिः प्रसेनजित् । यशस्वी ध्रुवसन्धेस्तु भरतो रिपुसूदनः ॥ १४ ॥ भरतात्तु महाबाहोरसितो नाम जायत । यस्यैते प्रतिराजान उदपद्यन्त शत्रवः । हैहयास्तालजङ्घाश्च शूराश्च शशिबिन्दवः ॥१५॥ तांस्तु सर्वान् प्रतिव्यूह्य युद्धे राजा प्रवासितः । स च शैलवरे रम्ये बभूवाभिरतो मुनिः ॥ १६ ॥ द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति श्रुतिः । एका गर्भविनाशाय सपत्न्यै सगरं ददौ ॥ १७ ॥ भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः । तमृषिं समुपागम्य कालिन्दी त्वभ्यवादयत् ॥ १८ ॥ स तामभ्यवदद्विप्रो वरेप्सुं पुत्रजन्मनि । पुत्रस्ते भविता देवि महात्मा लोकविश्रुतः । धार्मिकश्च सुशीलश्च वंशकर्त्ताऽरिसूदनः ॥ १९ ॥

स्थापितत्वमुक्तम् ॥ १४ ॥ भरतादिति । जायतेत्यत्राडभावः अनित्यत्वात् । प्रतिराजानः सामन्ताः शत्रवः । उदपद्यन्त आसन्नित्यर्थः । हैहयाद्यास्तत्तद्देशाधिपतयः ॥ १५ ॥ तानितिं । प्रतिव्यूह्य युद्धं कृत्वा राजा असितः शैलवरे हिमवति रम्ये निर्भयतया स्थातुं योग्ये मुनिः सन्नभिरतो बभूव अन्यथा तस्मादपि शैलात्प्रवासयेयुरिति भावः ॥ १६ ॥ द्वे इति । श्रूयत इति श्रुतिः, जनवाद इत्यर्थः॥ १७ ॥ १८ ॥ स इति । उदपद्यन्त अभवन् ॥ १५ ॥ तांस्त्विति । प्रतिव्यूह्य चक्रादिव्यूहं कृत्वा । शैलवरे हिमवति मुनिर्बभूव वानप्रस्थो बभूवेत्यर्थः ॥ १६ ॥ श्रुतिः जनवादः ॥ १७ ॥ उपाश्रितः, अभूदिति शेषः ॥ १८ ॥ १९ ॥

वि०–धुन्धुमाराद्युवनाश्व इति । त्रिशङ्कुसुतो युवनाश्व इत्यन्यत्र श्रूयमाणं कल्पान्तरविषयम् । यद्वा युवनाश्व एव महातेजःप्रभवत्वाद्धुन्धुमारसंज्ञां लभते । यद्वा अन्यत्र त्रिशङ्कुसुत इत्यस्य तत्पौत्र इत्यर्थः॥ १२ ॥

सः अभिवादनप्रसन्नो विप्रः । पुत्रजन्मनि विषये वरंप्सुं तामभ्यवदत् उवाच । महात्मा महामतिः । लोकविश्रुतः सर्वलोकप्रसिद्धः । पुत्रा भवितेत्यभ्यवददित्यन्वयः ॥ १९ ॥ कृत्वेति । सा देवी तं मुनिं अनुमान्य सम्पूज्य ततो गृहमागम्य पद्मपत्रसमानाक्षं पद्मगर्भसमप्रभं पुत्रं व्यजायत

कृत्वा प्रदक्षिणं हृष्टा मुनिं तमनुमान्य च । पद्मपत्रसमानाक्षं पद्मगर्भसमप्रभम् । ततः सा गृहमागम्य देवी पुत्रं व्यजायत ॥ २० ॥ सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया । गरेण सह तेनैव जातः स सगरोऽभवत् ॥२१॥ स राजा सगरो नाम यः समुद्रमखानयत् । इष्ट्वा पर्वणि वेगेन त्रासयन्तमिमाः प्रजाः ॥ २२ ॥ असमञ्जस्तु पुत्रोभूत् सगरस्येति नः श्रुतम् । जीवन्नेव स पित्रा तु निरस्तः पापकर्मकृत् ॥ २३ ॥ अंशुमानपि पुत्रोऽभूदसमञ्जस्य वीर्य्यवान् । दिलीपोऽंशुमतः पुत्रो दिलीपस्य भगीरथः ॥ २४ ॥ भगीरथात् ककुत्स्थस्तु काकुत्स्था येन विश्रुताः । ककुत्स्थस्य च पुत्रोऽभूद्रघुर्येन तु राघवाः ॥ २५ ॥ रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः । कल्माषपादः सौदास इत्येवं प्रथितो भुवि ॥२६॥ कल्माषपादपुत्रोऽभूच्छङ्खणस्त्विति विश्रुतः । यस्तु तद्वीर्यमासाद्य सहसैन्यो व्यनीनशत् ॥२७॥ शङ्खणस्य च पुत्रोऽभूच्छूरः श्रीमान् सुदर्शनः । सुदर्शनस्याग्निवर्ण अग्निवर्णस्य शीघ्रगः ॥२८॥ शीघ्रगस्य मरुः पुत्रो मरोः पुत्रः प्रशुश्रुकः । प्रशुश्रुकस्य पुत्रोऽभूदम्बरीषो महाद्युतिः ॥ २९ ॥

व्यजीजनत् ॥ २० ॥ २१ ॥ स राजेति । यः इष्ट्वा दीक्षां कृत्वा पर्वणि वेगेन अम्बुवेगेन इमाः प्रजाः त्रासयन्तं समुद्रम् अखानयत् ॥ २२ ॥ असमञ्ज इति । नः श्रुतम् अस्माभिः श्रुतमित्यर्थः ॥ २३-२६ ॥ कल्माषपादेति । तद्वीर्य्यं वसिष्ठशापाद्राक्षसत्वं प्राप्तस्य कल्माषपादस्य



सा देवी तमृषिमनुमान्य सम्पूज्य ततो गृहमागम्य पद्मपत्रसमानाक्षं पुत्रं व्यजायत व्यजनयत ॥२०॥ २१ ॥ इष्ट्वा दीक्षां कृत्वा । पर्वणिं वेगेन अम्बुवेगेन । इमाःप्रजाः त्रासयन्तं समुद्रमखानयत, पुत्रैरिति शेषः ॥ २२-२६ ॥ तद्वीर्यं वसिष्ठशापाद्राक्षसत्वं प्राप्तस्य कल्माषपादस्य पराक्रममासाद्य व्यनीनशत नाशं प्राप्तवानित्यर्थः । स्वार्थेणिः ॥२७॥

स०–पापकर्मकृत् तद्वत्प्रदर्शकः। श्रीमद्भागवते तस्य पुनर्योगेन कुमारप्रदर्शकत्वोक्तेः॥२३॥ कतक०–यः शङ्खणस्तु तत्प्रसिद्धं वीर्यं पराक्रमम्। युद्धे प्राप्य दैवात्सहसैन्यो व्यनीमशत् नष्टोऽभूत्।

पराक्रमम् । आसाद्य व्यनीनशत् विनाशं प्राप्तवानित्यर्थः । राक्षसत्वात् कल्माषपादेन स्वपुत्रएव विनाशित इत्यर्थः ॥ २७–३१ ॥ तस्येति । दायादः सुतः । " दायादौ सुतबान्धवौ " इत्यमरः ॥ ३२ ॥ इक्ष्वाकूणामिति । पूर्वजे विद्यमाने अवरः कनिष्ठपुत्रो राज्ये नाभिषिच्यते

अम्बरीषस्य पुत्रोऽभून्नहुषः सत्यविक्रमः । नहुषस्य च नाभागः पुत्रः परमधार्मिकः ॥ ३० ॥ अजश्च सुव्रतश्चैव नाभागस्य सुतावुभौ । अजस्य चैव धर्मात्मा राजा दशरथः सुतः ॥ ३१ ॥ तस्य ज्येष्ठोऽसि दायादो राम इत्यभिविश्रुतः । तद्गृहाण स्वकं राज्यमवेक्षस्व जनं नृप ॥३२॥ इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः । पूर्वजे नावरः पुत्रो ज्येष्ठो राज्येऽभिषिच्यते ॥ ३३ ॥ स राघवाणां कुलधर्ममात्मनः सनातनं नाद्य विहन्तुमर्हसि । प्रभूतरत्नामनुशाधि मेदिनीं प्रभूतराष्ट्रां पितृवन्महायशः ॥३४॥ इत्यार्षे० श्रीमदयोध्याकाण्डे दशोत्तरशततमः सर्गः ॥११०॥ वसिष्ठस्तु तदा राममुक्त्वा राजपुरोहितः । अब्रवीद्धर्मसंयुक्तं पुनरेवापरं वचः ॥ १ ॥ पुरुषस्येह जातस्य भवन्ति गुरवस्त्रयः । आचार्यश्चैव काकुत्स्थ पिता माता च राघव ॥ २ ॥

किंतु ज्येष्ठ एवेति अन्वयः ॥ ३३ ॥ स राघवाणामिति । स त्वं आत्मनः सम्बन्धिनां राघवाणां सनातनं परम्परयागतं कुलधर्मं ज्येष्ठाभिषेचनरूपम् अद्य भवन्तमारभ्य न विहन्तुमर्हसि । अन्येन रक्षितुं चाशक्यमित्याह प्रभूतेति । रत्नानि श्रेष्ठवस्तूनि । प्रभूतराष्ट्रां बहुविधावान्तरजनपदयुक्ताम् ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने दशोत्तरशततमः सर्गः ॥ ११० ॥ अथ रामनिवर्त्तनोपायान् पुनरुपन्यस्य निरस्यति एकादशोत्तरशततमे–वसिष्ठस्त्वित्यादिना ॥ १ ॥ एवं कुलधर्मोपपादनेपि सर्वं तत्पितृनियोग

कल्माषपादः राक्षसभावेन स्वसैन्यं स्वपुत्रं शङ्खणमपि भक्षितवानिति कथा ॥ २७–३१ ॥ दायादः सुतः ॥ ३२ ॥ पूर्वजे विद्यमाने अवरः कनिष्ठः पुत्रः राज्ये नाभिषिच्यते किन्तु ज्येष्ठ एवाभिषिच्यते ॥ ३३ ॥ ३४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीराम० आयोध्याकाण्डव्याख्यायां दशोत्तरशततमः सर्गः ॥ ११० ॥ मन्वादीनारभ्यैतावत्पर्यन्तं ज्येष्ठेनैव राज्यं परिपाल्यत इति श्रुतेऽपि तदनङ्गीकारमालोच्य पितृवचनादपि पितुस्तव च गुरोर्मम वचनं करणीयमिति वक्तुमुपक्रमते

व्यतिरिक्तविषयमिति मत्वा तूष्णींस्थितस्य रामस्याशयं जानन् वसिष्ठः पुनर्निवर्तनहेत्वन्तरमाह–गुरुषस्येत्यादिना ॥ २ ॥ पितेति मातुरप्युप लक्षणम्, शरीरमेव मातापितरौ जनयत इत्यर्थः । तस्मात्प्रज्ञादानात् गुरुः मातापितृभ्यां गरीयानित्यर्थः । "स हि विद्यातस्तं जनयति तच्छ्रेष्ठं

पिता ह्येनं जनयति पुरुषं पुरुषर्षभ । प्रज्ञां ददाति चाचार्यस्तस्मात्स गुरुरुच्यते ॥ ३ ॥ सोऽहं ते पितुराचार्य्य स्तव चैव परन्तप । मम त्वं वचनं कुर्वन् नातिवर्त्तेः सतां गतिम् ॥ ४ ॥ इमा हि ते परिषदः श्रेणयश्च द्विजास्तथा । एषु तात चरन् धर्मं नातिवर्त्तेः सतां गतिम् ॥ ५ ॥ वृद्धाया धर्मशीलाया मातुर्नार्हस्यवर्त्तितुम् । अस्यास्तु वचनं कुर्वन् नातिवर्त्तेः सतां गतिम् ॥ ६ ॥ भरतस्य वचः कुर्वन् याचमानस्य राघव । आत्मानं नातिवर्त्तेस्त्वं सत्यधर्मपराक्रम ॥ ७ ॥ एवं मधुरमुक्तस्तु गुरुणा राघवः स्वयम् । प्रत्युवाच समासीनं वसिष्ठं पुरुषर्षभः ॥ ८ ॥ यन्मातापितरौ वृत्तं तनये कुरुतः सदा । न सुप्रतिकरं तत्तु मात्रा पित्रा च यत्कृतम् ॥ ९ ॥

जन्म" इति वचनादिति भावः ॥ ३ ॥ ४ ॥ इमा इति । परिषदः ब्राह्मणसमूहाः । श्रेणयः पौरजनाः क्षत्रियाः वैश्याश्च ते त्वत्सम्बन्धिनः येषु विषये धर्मं परिपालनरूपं चरन् सतां गतिं सतां पूर्वेषां राज्ञां मार्गं नातिवर्तेः नातिवर्तेथाः ॥ ५ ॥ वृद्धाया इति । अवर्तितुं शुश्रूषामकर्तुं नार्हसि । अस्यास्तु "पितुः शतगुणं माता" इत्युक्तायाः ॥ ६ ॥ भरतस्येति । 'सान्त्विता मामिका माता' इत्यादिप्रार्थयमानस्य । आत्मानम् आत्मभूतं भरतं नातिवर्त्तेथा इत्युदारः । सत्यधर्मनिष्णाततत्त्वस्वभावमित्यपरे । स्वसाधारणधर्मत्वादाश्रितपारतन्त्र्यं नातिवर्तेथा इत्याचार्याः । स एव हि सर्वे श्वरस्य स्वभावः स्वतःसिद्धः । सत्यधर्मपराक्रमेति दृष्टान्तार्थम् । यथा सत्यवचनमनतिक्रमणीयं यथा च धर्मो नातिक्रमणीयः तथा आश्रितपारतन्त्र्य मपीत्यर्थः । सत्यधर्मयोः पराक्रमः अनुष्ठानशूरत्वं यस्येति बहुव्रीहिः ॥ ७ ॥ ८ ॥ 'सति धर्मिणि धर्माश्चिन्त्यन्ते' इतिन्यायेन सर्वधर्मसम्पा

॥१–३॥ नातिवर्तेः वसिष्ठ इत्यादिना । राजपुरोहितः राज्ञः पुरोहितं चिन्तयतीति राजपुरोहितः । तस्मात्प्रज्ञादानाद्धेतोराचार्यो गुरुरुच्यते, पितुरपि गरीयानित्यर्थः सतां गतिम् सतां वर्तनं नातिवर्तेः नातिक्रामेः, पितृस्वगुरुवचनपरिपालनरूपवर्तनं नातिवर्तेथा इत्यर्थः ॥ ४ ॥ इमा इति । परिषदः ब्राह्मणसमूहः । श्रेणयः परि जनाः द्विजाश्च क्षत्रियवैश्याश्च ते त्वत्सम्बन्धिनः । धर्मं प्रजापालनरूपम् ॥ ५ ॥ अवर्तितुम् अशुश्रूषितुम् नार्हसि ॥ ६ ॥ भरतस्येति । याचमानस्य 'सान्त्विता मामिका माता' इत्यादिना प्रार्थयमानस्येत्यर्थः । आत्मानं सत्यधर्मनिष्णाततत्त्वस्वभावम् ॥ ७ ॥ ८ ॥ 'सति धर्मिणि धर्माश्चिन्त्यन्ते' इति न्यायेन सर्वधर्मसम्पादने

दनबीजभूतशरीरोत्पादकत्वात् अत्यन्ताज्ञानदशायामपि सर्वप्रकारसंरक्षणेन बहुविधोपकारकत्वाच्चाचार्यवचनादपि पितृवचनमवश्यं कर्तव्यम् अतएव "मातृदेवो भव पितृदेवो भव आचार्य देवो भव" इति चरमपर्वण्याचार्य उपात्त इत्यभिप्रायेणाह–यन्मातेत्यादिना श्लोकद्वयेन । तनये

यथाशक्ति प्रदानेन स्नापनोच्छादनेन च । नित्यं च प्रियवादेन तथा संवर्द्धनेन च ॥ १० ॥ स हि राजा जनयिता पिता दशरथो मम । आज्ञातं यन्मया तस्य न तन्मिथ्या भविष्यति ॥ ११ ॥ एवमुक्तस्तु रामेण भरतः प्रत्यनन्तरम् । उवाच परमोदारः सूतं परमदुर्मनाः ॥ १२ ॥ इह मे स्थण्डिले शीघ्रं कुशानास्तर सारथे । आर्य्यं प्रत्युपवेक्ष्यामि यावन्मे न प्रसीदति ॥ १३ ॥ अनाहारो निरालोको धनहीनो यथा द्विजः । शेष्ये पुरस्तात् शालाया यावन्न प्रतियास्यति ॥ १४ ॥

तनयसम्पादननिमित्तं यद्वृत्तं व्रतोपवासदेवताराधनादिकं कुरुतः, तन्न सुप्रतिकरं सुतरामशक्यप्रत्युपक्रियम् । मात्रा पित्रा च उत्पत्त्यनन्तरं यथाशक्ति प्रदानेन स्तन्यान्नादिप्रदानेन स्नापनोच्छादनेन नित्यं प्रियवादेन सदा संवर्धनेन च यत्कृतं तच्च सुप्रतिकरम् ॥ ९ ॥ १० ॥ स हीति । जनयिता पितेति गौणपितृव्यावृत्तिः । आज्ञातम् प्रतिज्ञातम् । एवं प्रथमं प्रतिज्ञातत्वात् मातृवचनं भ्रातृवचनं च कर्तुं नार्हामीति भावः ॥ ११ ॥ एवमिति । प्रत्यनन्तरं समीपस्थं परमोदारः सान्त्वितामामिकेत्यादिना दत्तराज्यनिर्वाहकः ॥ १२ ॥ इहेति । इह स्थण्डिले भूमौ कुशानास्तर आस्तृणीहि, पावनत्वार्थमित्यर्थः । अतएव वक्ष्यति 'कुशानास्तीर्य राघवः' इति । प्रत्युपवेक्ष्यामि प्रतिरोत्स्यामीत्यर्थः ॥ १३ ॥ प्रत्युपवेशप्रकारमाह–अनाहार इति । निरालोकः अवकुण्ठिताननः । धनहीनः वृद्ध्यर्थम् ऋणप्रदानान्निर्धनः । शेष्ये शयिष्ये । इडभाव आर्षः ॥ १४ ॥

प्रधानसाधनभूतस्य शरीरस्योत्पादकत्वात् अत्यन्ताज्ञानदशायामपि सर्वप्रकारसंरक्षणेन बहुश उपकारकत्वाच्च आचार्यवचनादपि पितृवचनमवश्यं कर्तव्यमित्यभिप्रायेणाह–यन्मातापितरावित्यादिश्लोकद्वयेन । तनये तनयसम्पादननिमित्तम् । यद्वृत्तं यद्व्रतम् । व्रतोपवासदेवताराधनादिकं मातापितरौ कुरुतः तन्न सुप्रतिकरं सुतरामशक्यप्रतिक्रियम् । मात्रा पित्रा च उत्पत्त्यनन्तरं यथाशक्ति प्रदानेन स्तन्यान्नाच्छादनादिप्रदानेन प्रियवादेन संवर्द्धनेन च यत्कृतं तच्च न सुप्रतिकरमिति सम्बन्धः ॥ ९ ॥ १० ॥ स हीति । जनयिता पिता गौणः पिता न भवतीत्यर्थः । आज्ञातं चतुर्दशवर्षावधिवनवासरूपमाज्ञापनम् । मयेति हेतौ तृतीया ॥ ११ ॥ प्रत्यनन्तरं समीपवर्तिनम् ॥ १२ ॥ उपवेक्ष्यामि उपरोत्स्यामीत्यर्थः ॥ १३ ॥ निरालोकः अवकुण्ठिताननः । धनहीनः वृद्ध्यर्थमृणं दत्त्वा तद्ग्रहणार्थमधमर्णावरोध

स०–शालायाः पुरस्तान्मामुद्दिश्य प्रतियास्यति त्वद्विधानं करोमीत्यायास्यति ॥ १४ ॥

राममवेक्षन्तं रामानुज्ञां काङ्क्षन्तमित्यर्थः । कुशोत्तरं कुशास्तरणम् । उपस्थाप्य आनीय स्वयमेवास्तरत् आस्तृणात्, शयनं कृतवानित्यर्थः ॥ १५ ॥ तमिति । किं कुर्वाणं किमपकारं कुर्वाणम् । तात इति सान्त्वनार्थमुक्तम् ॥ १६ ॥ ब्राह्मण इति । एकपार्श्वेन एकपार्श्वशयनेन । मूर्द्धाभिषिक्तानाम्

स तु राममवेक्षन्तं सुमन्त्रं प्रेक्ष्य दुर्मनाः । कुशोत्तरमुपस्थाप्य भूमावेवास्तरत् स्वयम् ॥ १५ ॥ तमुवाच महातेजा रामो राजर्षिसत्तमः। किं मां भरत कुर्वाणं तात प्रत्युपवेक्ष्यसि ॥१६॥ ब्राह्मणो ह्येकपार्श्वेन नरान् रोद्धुमिहार्हति । न तु मूर्द्धाभिषिक्तानां विधिः प्रत्युपवेशने ॥ १७ ॥ उत्तिष्ठ नरशार्दूल हित्वैतद्दारुणं व्रतम् । पुरवर्य्यामितः क्षिप्र मयोध्यां याहि राघव ॥१८॥ आसीनस्त्वेव भरतः पौरजानपदं जनम् । उवाच सर्वतः प्रेक्ष्य किमार्यं नानुशासथ ॥ १९ ॥ ते तमूचुर्महात्मानं पौरजानपदा जनाः । काकुत्स्थमभिजानीमः सम्यग्वदति राघवः ॥ २० ॥ एषोऽपि हि महाभागः पितुर्वचसि तिष्ठति । अतएव न शक्ताः स्मो व्यावर्त्तयितुमञ्जसा ॥ २१ ॥ तेषामाज्ञाय वचनं रामो वचनमब्रवीत् । एवं निबोध वचनं सुहृदां धर्मचक्षुषाम् ॥ २२ ॥

अभिषिक्तक्षत्रियाणाम् ॥ १७ ॥ १८ ॥ आसीन इति । नानुशासथेत्यत्र इतिकरणं बोध्यम् ॥१९॥ त इति । काकुत्स्थं रामम् अभिजानीमः अभितो जानीमः, सत्यसन्धं जानीम इत्यर्थः ॥ २० ॥ सम्यग्वदतीत्येतदुपपादयति—एष इत्यादिना । अञ्जसा शीघ्रं व्यावर्त्तयितुं न शक्ता स्म इति तं भरतमूचु

कोत्तमर्णो धनहीन इत्यर्थः ॥ १४ ॥ स त्विति । स्वयमेव कुशोत्तरं कुशास्तरणम् । भूमावुपस्थाप्य आस्तरत् शयनं कृतवानित्यर्थः ॥ १५ ॥ किं कुर्वाणं किमपकारं कुर्वाणम् ॥ १६ ॥ एकपार्श्वेन एकपार्श्वशयनेन । ब्राह्मणो हि अधमर्णाद्वृद्धिसहितऋणगृहीतोत्तमर्ण इत्यर्थः । तादृशः खलु नरान् रोद्धुमर्हति । मूर्द्धाभिषिक्तानां राजन्यानां प्रत्युपवेशने विरोधने विधिः न राज्ञामेतादृशनिर्बन्धो योग्यो न भवतीत्यर्थः ॥ १७ ॥ १८ ॥ आसीन इति । नानुशासथेत्यत्रेतिकरणं द्रष्टव्यम् ॥ १९ ॥ ते इति श्लोकद्वयमेकं वाक्यम् । काकुत्स्थं रामम् अभिजानीमः सत्यसन्धं जानीम इत्यर्थः । व्यावर्तयितुं निवर्तयितुम् । न शक्ताः स्म इति तं भरतमूचुरिति



स०—रामं तन्मुखम् । सः भरतः । दुर्मनाः मद्वचनं न शृणोतीति दुःखितमनाः ॥ १५ ॥

रित्यन्वयः ॥ २१ ॥ २२ ॥ एतदिति । एतदुभयं मद्वचनं पौरजनवचनं चेत्यर्थः । सम्यक्सम्पश्य कर्त्तव्यं सम्यक् निरूपय । मां च स्पृश तथोदकमिति क्षत्रियाविहितप्रत्युपवेशनप्रायश्चित्तार्थमित्यर्थः । वसिष्ठादिषु विद्यमानेषु स्वस्पर्शनविधेः इतः परमेवंविधं न क्रियत इति शपथार्थं जलं स्पृष्ट्वा

एतच्चैवोभयं श्रुत्वा सम्यक् सम्पश्य राघव । उत्तिष्ठ त्वं महाबाहो मां च स्पृश तथोदकम् ॥ २३ ॥ अथोत्थाय जलं स्पृष्ट्वा भरतो वाक्यमब्रवीत् । शृण्वन्तु मे परिषदो मन्त्रिणः श्रेणयस्तथा ॥२४॥ न याचे पितरं राज्यं नानुशासामि मातरम् । आर्यं परमधर्मज्ञं नानुजानामि राघवम् ॥ २५ ॥ यदि त्ववश्यं वस्तव्यं कर्त्तव्यं च पितुर्वचः । अहमेव निवत्स्यामि चतुर्दश समा वने ॥२६॥ धर्मात्मा तस्य तथ्येन भ्रातुर्वाक्येन विस्मितः। उवाच रामः सम्प्रेक्ष्य पौरजानपदं जनम् ॥ २७ ॥ विक्रीतमाहितं क्रीतं यत् पित्रा जीवता मम । न तल्लोपयितुं शक्यं मया वा भरतेन वा ॥ २८ ॥ उपधिर्न मया कार्य्यो वनवासे जुगुप्सितः । युक्तमुक्तं च कैकेय्या पित्रा मे सुकृतं कृतम् ॥ २९ ॥

मां स्पृशेत्यपि सिद्धम् ॥ २३ ॥ अथेत्यादि । न याचे न याचितवान् । नानुशासामि नानुशास्मि, एवंकुर्विति नानुशिष्टवानस्मीत्यर्थः । नानुजानामि वनवासाय नानुज्ञातवानस्मीत्यर्थः ॥ २४ ॥ २५ ॥ यदीति । अवश्यं पितुर्वचः कर्तव्यं वने वस्तव्यं चेति यदि मन्यसे तर्हि अहमेव त्वत्प्रतिनिधित्वेन वने वत्स्यामि । त्वं तु मत्प्रतिनिधित्वेनाऽयोध्यां पालय, एवंच सत्युभाभ्यां सम्यक् पितृवचनं कृतं भवेदिति भावः । इति भरतो वाक्यमब्रवीदित्यन्वयः ॥ २६ ॥ २७ ॥ विक्रीतमिति । आहितम् आधिरूपेण न्यस्तं विक्रयस्त्यागः क्रयः स्वीकार इति भेदः । मह्यं वनवासं दत्त्वा तन्मूल्यत्वेन राज्यं स्वीकृतवान् । यद्वा मम वनवासमाधिं कृत्वा तव राज्यं दापितवान् तल्लोपयितुं न शक्यमित्यर्थः ॥ २८ ॥ वारुणस्नानाशक्तस्य मान्त्रस्नानवदशक्तस्यैव

सम्बन्धः ॥ २०–२२॥ एतदिति । एतदुभयं 'पुरवर्यामितः क्षिप्रमयोध्यां याहि राघव' इति मद्वचनं 'एषोऽपि हि महाभागः पितुर्वचसि तिष्ठति' इत्यादिमहद्वचनं चोभयं श्रुत्वा सम्यक्संपश्य सम्यक् परिगृहाण मां च स्पृश तथोदकमित्युक्तिः क्षत्रियाविहितप्रत्युपवेशनप्रायश्चित्तार्थम् ॥ २३ ॥ २४ ॥ न याचे न याचितवानस्मि। नानुशासामि एवं कुर्विति नानुशिष्टवानित्यर्थः । परमधर्मज्ञं नानुजानामि । नाभिजानामीतिपाठे आर्यं वनवासोद्युक्तं न ज्ञातवानस्मीत्यर्थः । अवश्यं पितृवचनं कर्तव्यं वने वस्तव्यं चेति यदि मन्यसे अहमेव त्वत्प्रतिनिधित्वेन वने वत्स्यामि, त्वं मत्प्रतिनिधित्वेन अयोध्यां पालय, एवं च सत्युभाभ्यां पितृवचनं कृतं भवेदित्यर्थः ॥ २५–२७ ॥ विक्रीतं द्रव्यं गृहीत्वा दत्तं वस्तु, आहितम् आधिरूपत्वेन न्यस्तं, क्रीतम् द्रव्यं दत्त्वा गृहीतं वस्तु । उपधिः प्रतिनिधिः । मया वनवासकरण

प्रतिनिधिस्वीकारः। अहं तु वनवासे शक्तः अतः प्रतिनिध्याचरणं न पितृऋणमोचनमित्याह–उपधिरित्यादिना। उपधिः प्रतिनिधिरित्यर्थः। मया शक्तेन जुगुप्सितः हीनकल्पत्वेन निन्दितः। "हीनकल्पं न सेवेत पुरुषो विभवे सति" इति वचनादिति भावः। कैकेय्या युक्तं योग्यमेवोक्तं पित्रा च

जानामि भरतं क्षान्तं गुरुसत्कारकारिणम्। सर्वमेवात्र कल्याणं सत्यसन्धे महात्मनि ॥३०॥ अनेन धर्मशीलेन वनात् प्रत्यागतः पुनः। भ्रात्रा सह भविष्यामि पृथिव्याः पतिरुत्तमः ॥३१॥ वृतो राजा हि कैकेय्या मया तद्वचनं कृतम्। अनृतान्मोचयानेन पितरं तं महीपतिम् ॥३२॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे एकादशोत्तरशततमः सर्गः ॥१११॥

तमप्रतिमतेजोभ्यां भ्रातृभ्यां रोमहर्षणम्। विस्मिताः सङ्गमं प्रेक्ष्य समवेता महर्षयः ॥१॥
अन्तर्हितास्त्वृषिगणाः सिद्धाश्च परमर्षयः। तौ भ्रातरौ महात्मानौ काकुत्स्थौ प्रशशंसिरे ॥२॥

सुकृतं धर्म्यं कृतम् आवाभ्यां तदकरणे हीनकल्पकरणे च पितुरनृतं स्यात् ॥२९–३१॥ वृत इति। पितरम् अनेन राज्यपरिपालनेन अनृतात् मोचयेत्यर्थः ॥३२॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकादशोत्तरशततमः सर्गः ॥१११॥ अथ भरतस्य समाधानं कृत्वा प्रस्थापनं द्वादशोत्तरशततमे–तमित्यादि। भ्रातृभ्यां सङ्गमं भ्रातृभ्यामन्योन्यसौहार्देन कृतं सङ्गमं प्रेक्ष्य विस्मिता अभूवन्निति शेषः ॥१॥ अन्तर्हिता इति। अन्तर्हिताः पूर्वमेवान्तर्धानं प्राप्ताः ऋषिगणाः राजर्षिगणाः सिद्धाः देवजातिविशेषाः। परमर्षयः देवर्षयः। इद

शक्तिमता। वनवासे वनवासविषये न कार्यः ॥२८॥ २९॥ जानामीति। अत्रास्मिन् भरते भरतविषये सर्वं कल्याणं भविष्यतीति शेषः ॥३०॥ ३१॥ विक्रीतमित्यादिना पौरजनमाश्वास्य पुनर्भरतं प्रत्याह–वृत इति। तद्वचनं तस्याः कैकेय्याः वचनं मया कृतं त्वमपि अनेन मद्वचनकरणेन पितरमनृतान्मोचयेति सम्बन्धः ॥३२॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायामेकादशोत्तरशततमः सर्गः ॥१११॥ तमिति। भ्रातृभ्यां सङ्गमं भ्रातृभ्यामन्योन्यमतिशयितसौहार्देन कृतं सङ्गमं प्रेक्ष्य विस्मिताः, अभूवन्निति शेषः ॥१॥ अन्तर्हिताः पूर्वमेवान्तर्धानं

मुत्तरत्र " एतावदुक्त्वा वचनं गन्धर्वाः सहमर्षयः । राजर्षयश्चैव " इत्यत्र व्यक्तीभविष्यति ॥ २ ॥ स धन्य इति । धर्मविक्रमौ धर्मशूरौ । वयमुभयोः सम्भाषां श्रुत्वा स्पृहयामहे पुनःपुनः श्रोतुं वाञ्छाम इत्यर्थः । वयं ययोरुभयोः सम्भाषां श्रुत्वा स्पृहयामहे तादृशौ धर्मज्ञौ धर्मविक्रमौ द्वौ पुत्रौ यस्य



स धन्यो यस्य पुत्रौ द्वौ धर्मज्ञौ धर्मविक्रमौ । श्रुत्वा वयं हि सम्भाषामुभयोः स्पृहयामहे ॥ ३ ॥ ततस्त्वृषिगणाः क्षिप्रं दशग्रीववधैषिणः । भरतं राजशार्दूलमित्यूचुः सङ्गता वचः ॥४॥ कुले जात महाप्राज्ञ महावृत्त महायशः । ग्राह्यं रामस्य वाक्यं ते पितरं यद्यवेक्षसे ॥ ५ ॥ सदानृणमिमं रामं वयमिच्छामहे पितुः । अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः ॥६॥ एतावदुक्त्वा वचनं गन्धर्वाः समहर्षयः । राजर्षयश्चैव तदा सर्वे स्वांस्वां गतिं गताः ॥७॥ ह्लादितस्तेन वाक्येन शुभेन शुभदर्शनः । रामः संहृष्टवदनस्तानृषीनभ्यपूजयत् ॥८॥ स्रस्तगात्रस्तु भरतः स वाचा सज्जमानया । कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत् ॥ ९ ॥ राजधर्ममनुप्रेक्ष्य कुलधर्मानुसन्ततिम् । कर्त्तुमर्हसि काकुत्स्थ मम मातुश्च याचनाम्॥ १० ॥ रक्षितुं सुमहद्राज्यमहमेकस्तु नोत्सहे । पौरजानपदांश्चापि रक्तान् रञ्जयितुं तथा॥ ११ ॥ ज्ञातयश्च हि योधाश्च मित्राणि सुहृदश्च नः । त्वामेव प्रतिकांक्षन्ते पर्जन्यमिव कर्षकाः ॥ १२ ॥

स धन्य इत्यन्वयः ॥ ३ ॥ तत इति । सङ्गताः ऐककण्ठ्यं प्राप्ताः ॥ ४ ॥ कुल इति । पितरं यद्यवेक्षसे पितरं सुखास्थितं यदि मन्यस इत्यर्थः ॥ ५–८ ॥ स्रस्तगात्र इति । सज्जमानया स्खलन्त्या स्वमनोरथस्य सर्वथा असिद्धत्वात् शिथिलगात्रत्वं सज्जमानवाक्त्वं च ॥ ९ ॥ राजधर्ममिति । राजधर्मं राज्यपरिपालनधर्मम् । कुलधर्मानुसन्ततिं ज्येष्ठाभिषेकरूपकुलधर्मस्यानुस्यूतिम् ॥ १० ॥ ११ ॥ ज्ञातय इति । सुहृदः शोभनहृदयाः । पर्जन्यं रसदब्दम् इन्द्रं वा ।

प्राप्ताः । ऋषिगणाः राजर्षिगणाः, सिद्धा देवजातिविशेषाः । परमर्षयः देवर्षयः ॥ २ ॥ स धन्य इति । धर्मविक्रमौ धर्ममार्गवर्तिनावित्यर्थः । वयमुभयोः सम्भाषां श्रुत्वा स्पृहयामहे पुनःपुनः श्रोतुं वाञ्छाम इत्यर्थः ॥ ३ ॥ तत इति । सङ्गताः ऐक्यं प्राप्ताः ॥ ४ ॥ पितरं यद्यवेक्षसे पितरं सुखावस्थितं मन्यस इत्यर्थः ॥ ५–८ ॥ स्रस्तगात्र इति । सज्जमानया स्खलन्त्या ॥ ९ ॥ राजधर्म प्रजापालनरूपम् । कुलधर्मानुसन्ततिं ज्येष्ठाभिषेकरूपकुलधर्मस्यानुक्रमणम् ॥ १० ॥

" पर्जन्यौ रसदब्देन्द्रौ " इत्यमरः ॥१२॥१३॥ एवं स्वबुद्धिशक्त्युपन्यस्तोपायान्तरवैफल्यदर्शनेन गत्यन्तराभावात् भरतो राममेव प्रपद्यत इत्याह– इत्युक्त्वेति ॥ १४ ॥ तमङ्क इति । स्वप्रपदनस्यामोघत्वात् तदानीं पूर्वकृतदेवसङ्घशरणागतिफलप्रदानप्रवृत्त्यनुकूलपितृवचनपरिपालनावरुद्धावसरतया

इदं राज्यं महाप्राज्ञ स्थापय प्रतिपद्य हि । शक्तिमानसि काकुत्स्थ लोकस्य परिपालने ॥१३॥ इत्युक्त्वा न्यपतद् भ्रातुः पादयोर्भरतस्तदा । भृशं सम्प्रार्थयामास राममेव प्रियंवदः ॥ १४ ॥ तमङ्के भ्रातरं कृत्वा रामो वचनमब्रवीत् । श्यामं नलिनपत्राक्षं मत्तहंसस्वरं स्वयम् ॥ १५ ॥ आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या । भृशमुत्सहसे तात रक्षितुं पृथिवीमपि ॥१६॥ अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः। सर्वकार्याणि सम्मन्त्र्य सुमहान्त्यपि कारय॥१७॥ लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान् वा हिमं त्यजेत् । अतीयात् सागरो वेलां न प्रतिज्ञामहं पितुः ॥१८॥ कामाद्वा तात लोभाद्वा मात्रा तुभ्यमिदं कृतम् । न तन्मनसि कर्त्तव्यं वर्त्तितव्यं च मातृवत् ॥१९॥

तन्निर्वर्तनानन्तरं फलप्रदित्सुस्तावद्विलम्बसहनाय सान्त्वपूर्वमङ्कमारोपयति । रामदिव्यदेहसंस्पर्शकृतपुष्ट्यतिशयद्योतनाय श्याममित्यादिविशेषणम् । मत्तहंसस्वरत्वमादरातिशयं द्योतयति । किञ्च स्वररामणीयकेन पूर्वहंसभूतावस्थासूचकेन सदा त्वत्करपुष्करहंसभूतमपि मां कथं वियोजयितुमिच्छसीति च सूच्यते । स्वयमङ्केकृत्वेत्यन्वयः ॥ १५ ॥ आगतेति । स्वजा सहजा । वैनयिकी विनयो गुरुशिक्षा ततः प्राप्ता इयमुभयाकारा बुद्धिः । त्वामागता त्वां पूर्वमेव प्राप्तवती, अतो भृशमुत्सहसे शक्नोषि ॥ १६ ॥ अमात्यैरिति । अमात्यैः प्रधानसचिवैः । मन्त्रिभिः उपमन्त्रिभिः ॥ १७ ॥ मया देवर्षिसङ्घैश्च पुनःपुनरुच्यमानोप्ययं निवर्त्तनेच्छां न त्यजेदिति तदिच्छा सवासना त्याजयितव्येति स्वप्रतिज्ञादार्ढ्यं दर्शयति–लक्ष्मीरित्यादिना । न प्रतिज्ञाम् अतीयामितिशेषः ॥ १८ ॥ तनि०–लक्ष्मीः कान्तिः चन्द्रादपेयात् इन्दुक्षयादिषु तथादर्शनात् । उदाहरणान्तरमाह–हिमवान्वेति । ग्रीष्मकाले हिमवतोपि हिमपरिक्षयसंभवात् । सागरोप्यतीयाद्वेलां प्रलये वेलोल्लङ्घनसम्भवात् ॥ १८ ॥ स्त्रिया कामकृतत्वात्त्यक्तुमिमं प्रतिज्ञार्हेत्याशङ्क्याह–कामादित्यादिना ।



रक्तान् अनुरक्तान् ॥११–१५॥ आगतेति । स्वजा सहजा । वैनयिकी विनयो गुरुशिक्षा ततः प्राप्ता । इयमुभयाकारा बुद्धिस्त्वामागता त्वां पूर्वमेव प्राप्तवती, अतो भृशमुत्सहसे नितरां शक्नोषि ॥१६॥ अमात्यैः प्रधानसचिवैः । मन्त्रिभिः उपमन्त्रिभिः ॥१७॥ लक्ष्मीरिति । पितुः प्रतिज्ञां न त्यजेयामिति शेषः ॥१८॥ कामादिति ।

कामात् त्वद्विषयस्नेहात् । लोभात् त्वद्व्याजेन राज्यकरणलोभात् । मातृवत् मातरीव ॥ १९ ॥ एवमिति । तेजसादित्यसङ्काशमित्यनेनानिवर्त्त्यप्रतिज्ञत्व मुच्यते । प्रतिपच्चन्द्रदर्शनमित्यनेन क्रमेण राज्ये पूर्णप्रतिष्ठत्वं सर्वैरपि पूज्यत्वं च द्योत्यते ॥ २० ॥ अथ मध्यस्थेनोभयोर्हितपरेण वासिष्ठेन नियुक्तो



एवं ब्रुवाणं भरतः कौसल्यासुतमब्रवीत् । तेजसादित्यसङ्काशं प्रतिपच्चन्द्रदर्शनम् ॥ २० ॥ अधिरोहार्य पादाभ्यां पादुके हेमभूषिते । एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥ २१ ॥ सोऽधिरुह्य नरव्याघ्रः पादुके ह्यवरुह्य च । प्रायच्छत् सुमहातेजा भरताय महात्मने ॥ २२ ॥ स पादुके सम्प्रणम्य रामं वचनमब्रवीत् । चतुर्दश हि वर्षाणि जटाचीरधरो ह्यहम् ॥ २३ ॥ फलमूलाशनो वीर भवेयं रघुनन्दन । तवागमनमाकांक्षन् वसन् वै नगराद्बहिः ॥ २४ ॥ तव पादुकयोर्न्यस्तराज्यतन्त्रः परन्तप । चतुर्दशे हि सम्पूर्णे वर्षेऽहनि रघूत्तम । न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् ॥२५॥ तथेति च प्रतिज्ञाय तं परिष्वज्य सादरम् । शत्रुघ्नं च परिष्वज्य भरतं चेदमब्रवीत् ॥ २६ ॥ मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति । मया च सीतया चैव शप्तोऽसि रघुसत्तम ॥ २७ ॥ इत्युक्त्वा ऽश्रुपरीताक्षो भ्रातरं विससर्ज ह ॥ २८ ॥

भरतः प्रार्थयते–अधिरोहेत्यादिना । अतएव भरद्वाजं प्रति भरतो वसिष्ठोक्तिमनुवदिष्यति–" एते प्रयच्छ संहृष्टः पादुके हेमभूषिते " इति ॥ २१ ॥ अथ रामः स्वप्रतिज्ञां भरतकृतप्रपत्तिं च निर्वहन् तथाकरोति–स इति । प्रायच्छद्गृहाणेत्यन्वयुङ्क्त ॥ २२ ॥ स इत्यादिसार्धश्लोकत्रयमेकान्वयम् ।

कामात् त्वद्विषयस्नेहात् । लोभात्त्वद्व्याजेन राज्यकारणलोभात् । मातृवत् मातरीव ॥ १९ ॥ तेजसादित्यसङ्काशमित्यनेन परैरप्रधृष्यत्वम्, प्रतिपच्चन्द्रमित्यनेन सर्वैरपि पूज्यतया दृश्यमानत्वं वर्द्धिष्णुत्वं च द्योत्यते ॥ २० ॥ अत्र रामं प्रति भरतकृतपादुकाप्रार्थनं प्रातीयते । तत्र रामं प्रति वसिष्ठनियोगानन्तर मेवेत्यवगन्तव्यम् । ' एते प्रयच्छ संहृष्टः पादुके हेमभूषिते ' इत्युपरि भरद्वाजं प्रति भरतेनानूद्यमानत्वात् ॥ २१ ॥ २२ ॥ चतुर्दश हीत्यादि श्लोकद्वयमेकं

स०–हे आर्य ! अधिरोह पादुकयोः पादौ स्थापयेत्यर्थः । एते च पादुके भरतेन सहानीते इति बोध्यम् । अन्यथा रामस्य वस्त्राणि गृहीत्वाऽजिनानि दत्तवत्याः कैकेय्या रामाय हेमपादुकादानस्यानुचितत्वात् ॥२१॥

चतुर्दशे वर्षे सम्पूर्णे सति अहनि उत्तरवर्षादिमदिने। प्रवेक्ष्यामीत्यन्तं इतिकरणम्। इत्यब्रवीदिति पूर्वेणान्वयः ॥२३–३१॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बरा० अयोध्याकाण्डव्याख्याने द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥ अथ भरतस्यायोध्याप्रवेशः त्रयोदशोत्तरशततमे–तत



स पादुके ते भरतः प्रतापवान् स्वलंकृते सम्परिपूज्य धर्मवित्। प्रदक्षिणं चैव चकार राघवं चकार चैवोत्तमनाग मूर्द्धनि ॥ २९ ॥ अथानुपूर्व्यात् प्रतिनन्द्य तं जनं गुरूंश्च मन्त्रिप्रकृतीस्तथानुजौ । व्यसर्जयद्राघववंशवर्द्धनः स्थिरः स्वधर्मे हिमवानिवाचलः ॥३०॥ तं मातरो बाष्पगृहीतकण्ठ्यो दुःखेन नामन्त्रयितुं हि शेकुः। स त्वेव मातॄ रभिवाद्य सर्वा रुदन् कुटीं स्वां प्रविवेश रामः॥३१॥ इत्यार्षे०श्रीमदयोध्याकाण्डे द्वादशोत्तरशततमः सर्गः॥११२॥ ततः शिरसि कृत्वा तु पादुके भरतस्तदा। आरुरोह रथं हृष्टः शत्रुघ्नेन समन्वितः ॥१॥ वसिष्ठो वामदेवश्च जाबालि श्च दृढव्रतः। अग्रतः प्रययुः सर्वे मन्त्रिणो मन्त्रपूजिताः ॥ २ ॥ मन्दाकिनीं नदीं रम्यां प्राङ्मुखास्ते ययुस्तदा । प्रदक्षिणं च कुर्वाणाश्चित्रकूटं महागिरिम् ॥ ३ ॥

इत्यादि। पादुके शिरसि कृत्वा शत्रुञ्जयमूर्ध्नि निक्षिप्ते पादुके सादरमादाय स्वमूर्ध्न्याधायेत्यर्थः ॥ १ ॥ तनि०–पादुके शिरसि कृत्वा हृष्टः "यावन्न चरणौ भ्रातुः पार्थिवव्यञ्जनान्वितौ। शिरसा धारयिष्यामि न मे शान्तिर्भविष्यति॥" इति स्वप्रार्थितस्यानुगुणकिरीटधारणं कृत्वा हृष्टः। पूर्वं स्वातन्त्र्यभीतः इदानीं पादुकाप्राप्त्या हृष्टः ॥ १ ॥ वसिष्ठ इति। मन्त्रपूजिताः अमोघकार्यविचारनैपुण्यात्पूजिताः ॥ २ ॥ मन्दाकिनीमिति। सीतारामयोर्जलक्रीडादिभिः रम्यां मन्दाकिनीं

वाक्यम्। जटाचीरधरः फलमूलाशनः तव पादुकयोः न्यस्तराज्यतन्त्रश्च भवेयमिति सम्बन्धः। चतुर्दशे वर्षे सम्पूर्णे सति अहनि पञ्चदशवर्षप्रादुर्भावप्रथमदिवसे त्वां न द्रक्ष्यामि यदि हुताशनं प्रवेक्ष्यामि ॥ २३–३१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां द्वादशोत्तर शततमः सर्गः ॥ ११२ ॥ तत इति। पादुके शिरसि कृत्वा शत्रुञ्जयनागमूर्ध्नि निक्षिप्ते पादुके सादरमादाय स्वमूर्ध्नि निधायेत्यर्थः ॥ १ ॥ मन्त्रपूजिताः अमोघ कार्यविचारनैपुण्येन पूजिताः ॥ २ ॥ मन्दाकिनीं उद्दिश्येति शेषः ॥ ३ ॥

रामनिवासत्वेन महाप्रभावं चित्रकूटं गिरिं च प्रदक्षिणं कुर्वाणास्सन्तः प्राङ्मुखा ययुः ॥ ३ ॥ पश्यन्निति। द्रुतगतिं विहाय नानाधातून् दृग्भ्यां



पिबन्निव पश्यन् तस्य चित्रकूटस्य पार्श्वेन ययौ ॥ ४ ॥ अदूरादिति। चित्रकूटसौन्दर्यदर्शनाकृष्टचित्ततया अदूरादिव भासमानम् ॥ ५ ॥ स इति।

पश्यन् धातुसहस्राणि रम्याणि विविधानि च । प्रययौ तस्य पार्श्वेन ससैन्यो भरतस्तदा ॥४॥ अदूराच्चित्रकूटस्य ददर्श भरतस्तदा । आश्रमं यत्र स मुनिर्भरद्वाजः कृतालयः ॥ ५ ॥ स तमाश्रममागम्य भरद्वाजस्य बुद्धिमान् । अवतीर्य रथात् पादौ ववन्दे भरतस्तदा ॥ ६ ॥ ततो हृष्टो भरद्वाजो भरतं वाक्यमब्रवीत् । अपि कृत्यं कृतं तात रामेण च समागतम् ॥ ७ ॥ एवमुक्तः स तु ततो भरद्वाजेन धीमता । प्रत्युवाच भरद्वाजं भरतो भ्रातृवत्सलः ॥ ८ ॥ स याच्यमानो गुरुणा मया च दृढविक्रमः । राघवः परमप्रीतो वसिष्ठं वाक्यमब्रवीत् ॥ ९ ॥ पितुः प्रतिज्ञां तामेव पालयिष्यामि तत्त्वतः । चतुर्दश हि वर्षाणि या प्रतिज्ञा पितुर्मम ॥ १० ॥ एवमुक्तो महाप्राज्ञो वसिष्ठः प्रत्युवाच ह । वाक्यज्ञो वाक्यकुशलं राघवं वचनं महत् ॥ ११ ॥ एते प्रयच्छ संहृष्टः पादुके हेमभूषिते । अयोध्यायां महाप्राज्ञ योगक्षेमकरे तव ॥ १२ ॥ एवमुक्तो वसिष्ठेन राघवः प्राङ्मुखः स्थितः । पादुके अधिरुह्यैते मम राज्याय वै ददौ ॥ १३ ॥

भरद्वाजस्य पादौ ववन्द इत्यन्वयः ॥ ६ ॥ तत इति । अपिशब्दः प्रश्ने । रामेण किं समागतं सङ्गतम् । भवता रामेण कृत्यं भवत्प्रयोजनं किंकृतमित्यर्थः ॥ ७ ॥ ८ ॥ गुरुणा वसिष्ठेन ॥९॥ चतुर्दशवर्षाणि वने वस्तव्यमिति कैकेयीनिमित्तं कृता पितुर्या प्रतिज्ञास्ति तामेव पितुः प्रतिज्ञां तत्त्वतः पालयिष्यामीत्यब्रवीदिति सम्बन्धः ॥ १० ॥ एवमित्यादि । हेमभूषिते इत्यनेन रामाय प्रीत्या समर्पयितुमभिनवतया निर्माय नगरात् भरतेनानीते

तस्य चित्रकूटस्य ॥ ४–८ ॥ गुरुणा वसिष्ठेन ॥ ९ ॥ मम चतुर्दशवर्षाणि पितुर्या प्रतिज्ञा, अस्तीति शेषः । मया चतुर्दशवर्षाणि वने वस्तव्यमिति कैकेयीनिमित्तं कृता पितुर्या प्रतिज्ञास्ति तामेव पालयिष्यामि तत्त्वत इति सम्बन्धः ॥ १० ॥ ११ ॥ एते इति । अप्राप्तस्य प्राप्तिर्योगः, प्राप्तस्य परिपालनं क्षेमः ॥ १२–१५ ॥

इति गम्यते । योगक्षेमकरे अपूर्ववस्तुलाभो योगः, लब्धस्य परिपालनं क्षेमः, एते पादुके प्रयच्छेति वासिष्ठः प्रत्युवाच हेतिसम्बन्धः ॥ ११-१५ ॥ आर्य्यं ज्येष्ठानुवर्त्तनरूपं श्रेयः । निम्ने तटाकादौ । सृष्टं धृतम् ॥ १६ ॥ "प्रजामनु प्रजायसे तदु ते मर्त्यामृतम्" इतिश्रुत्युक्तरीत्या सत्पुत्रलाभात्

निवृत्तोऽहमनुज्ञातो रामेण सुमहात्मना । अयोध्यामेव गच्छामि गृहीत्वा पादुके शुभे ॥ १४ ॥ एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः । भरद्वाजः शुभतरं मुनिर्वाक्यमुवाच तम् ॥ १५॥ नैतच्चित्रं नरव्याघ्र शीलवृत्तवतां वर । यदार्यं त्वयि तिष्ठेत्तु निम्ने सृष्टमिवोदकम् ॥ १६ ॥ अमृतः स महाबाहुः पिता दशरथस्तव । यस्य त्वमीदृशः पुत्रो धर्मज्ञो धर्मवत्सलः ॥ १७ ॥ तमृषिं तु महात्मानमुक्तवाक्यं कृताञ्जलिः । आमन्त्रयितुमारेभे चरणावुपगृह्य च ॥ १८ ॥ ततः प्रदक्षिणं कृत्वा भरद्वाजं पुनःपुनः । भरतस्तु ययौ श्रीमानयोध्यां सह मन्त्रिभिः ॥ १९ ॥ यानैश्च शकटैश्चैव हयैर्नागैश्च सा चमूः । पुनर्निवृत्ता विस्तीर्णा भरतस्यानुयायिनी ॥ २० ॥ ततस्ते यमुनां दिव्यां नदीं तीर्त्वोर्मिमालिनीम् । ददृशुस्तां पुनः सर्वे गङ्गां शुभजलां नदीम् ॥ २१ ॥ तां रम्यजलसम्पूर्णां सन्तीर्य सहबान्धवः । शृङ्गिबेरपुरं रम्यं प्रविवेश ससैनिकः ॥ २२ ॥

मृतोऽपि दशरथः अमृत इत्याह—अमृत इति ॥१७॥ तमिति । आमन्त्रयितुमारेभे विनयेनामन्त्रणोद्युक्त इव स्थित इत्यर्थः॥१८॥ ततस्तदनुज्ञानन्तरम् । अत्र पुनःपुनरित्यनेन एकं प्रदक्षिणं न कार्यमित्युक्तम् । प्रदक्षिणविशेषणेन प्रणामस्तु सकृदेवेत्युक्तं भवतीत्याचार्याः । केचित्तु एकहस्तप्रणामैकप्रदक्षिणयोरिव एकप्रणामस्यापि निषिद्धत्वात् पुनःपुनरिति विशेषणस्यात्रार्थिके वा पूर्वश्लोकोक्ताभिवादनबललब्धे वा प्रणामेप्यन्वयेन न कोपि विरोध इत्याहुः । अयोध्यामुद्दिश्य ययावित्यन्वयः ॥ १९ ॥ भरतस्यैव सेनायाश्चित्रकूटान्निवृत्तिमाह—यानैरिति ॥ २० ॥ भरतमनुसृत्य सेनानुयानप्रकार



नैतदिति । आर्यं ज्येष्ठानुवर्तनरूपं श्रेयः ॥ १६--२० ॥ भरद्वाजाश्रमागमनात्पूर्वमेव भरतस्य सेनायाश्च आगमनप्रकारमाह—तत इति । यमुनां तीर्त्वा गच्छन्तः

तिलक०—शुभजलां—जलस्य शुभत्वं नाम दर्शनमात्रेण सकलपापापहन्तृत्वम्, रम्यत्वं तु मधुरत्वम् ॥ २१ ॥

माह–तत इति । यमुनां तीर्त्वा गच्छन्तस्ते सर्वे गङ्गां ददृशुरिति सम्बन्धः ॥ २१–२४ ॥ सारथ इति । निराकारा निर्गतशोभनाकारा ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्ड० त्रयोदशोत्तरशततमः सर्गः ॥११३॥ पूर्वसर्गान्तिमश्लोकोक्तं विस्तरेण

शृङ्गिबेरपुराद्भूयस्त्वयोध्यां संददर्श ह ॥ २३ ॥ अयोध्यां च ततो दृष्ट्वा पित्रा भ्रात्रा विवर्जिताम् । भरतो दुःख सन्तप्तः सारथिं चेदमब्रवीत् ॥ २४ ॥ सारथे पश्य विध्वस्ता सायोध्या न प्रकाशते । निराकारा निरानन्दा दीना प्रतिहतस्वरा ॥२५॥ इत्यार्षे० श्रीरामायणे वाल्मीकीये श्रीमदयोध्याकाण्डे त्रयोदशोत्तरशततमः सर्गः ॥११३॥
स्निग्धगम्भीरघोषेण स्यन्दनेनोपयान् प्रभुः । अयोध्यां भरतः क्षिप्रं प्रविवेश महायशाः ॥ १ ॥ बिडालोलूक चरितामालीननरवारणाम् । तिमिराभ्याहतां कालीमप्रकाशां निशामिव ॥ २ ॥ राहुशत्रोः प्रियां पत्नीं श्रिया प्रज्वलितप्रभाम् । ग्रहेणाभ्युत्थिते नैकां रोहिणीमिव पीडिताम् ॥३॥ अल्पोष्णक्षुब्धसलिलां घर्मोत्तप्तविहङ्गमाम् । लीनमीनझषग्राहां कृशां गिरिनदीमिव ॥ ४ ॥ विधूमामिव हेमाभामध्वराग्नेः समुत्थिताम् । हविरभ्युक्षितां पश्चात् शिखां विप्रलयं गताम् ॥ ५ ॥ विध्वस्तकवचां रुग्णगजवाजिरथध्वजाम् । हतप्रवीरामापन्नां चमूमिव महाहवे ॥ ६ ॥ सफेना सस्वना भूत्वा सागरस्य समुत्थिताम् । प्रशान्तमारुतोद्धातां जलोर्मिमिव निस्वनाम् ॥ ७ ॥

दर्शयति चतुर्दशोत्तरशततमे–स्निग्धगम्भीरघोषेणेत्यादि । उपयान् समीपमागच्छन् ॥ १ ॥ कालीं कृष्णपक्षसम्बन्धिनीम् ॥ २ ॥ राहुशत्रोः चन्द्रस्य ॥ ३ ॥ ४ ॥ हविरभ्युक्षितां दध्यादिहविषा अभ्युक्षिताम् । शिखां प्रवर्ग्योत्थितज्वालाम् ॥ ५–७ ॥

ते सर्वे ततो गङ्गां ददृशुरिति सम्बन्धः ॥ २१–२४ ॥ सारथ इति । विध्वस्ता रामवियोगजदुःखेन पीडितेत्यर्थः । निराकारा निर्गतशोभनाकारा ॥ २५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां रामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां त्रयोदशोत्तरशततमः सर्गः ॥ ११३ ॥ स्निग्धेति । उपयान् समीपं गच्छन् ॥ १ ॥ कालीं कृष्णपक्षसम्बन्धिनीम् ॥ २ ॥ राहुशत्रोः चन्द्रस्य ॥ ३ ॥ ४ ॥ हविरभ्युक्षितां दध्यादिहविषाभ्युक्षिताम् । शिखां प्रवर्ग्योत्थितशिखाम् ॥ ५–७ ॥

यज्ञायुधैः स्फ्यादिभिः । सुत्याकाले सुत्यादिवसे ॥ ८ ॥ अचरन्तीम् अभक्षयन्तीम् ॥ ९ ॥ प्रभाकराद्यैः पद्मरागाद्यैः ॥ १० ॥ ११ ॥ वसन्तान्ते ग्रीष्मे । द्रुतदावाग्निविप्लुष्टां वेगवद्दावाग्निना ईषद्दग्धाम् ॥ १२ ॥ संमूढनिगमां जनसञ्चाररहितमार्गाम् । "निगमो निश्चये वेदे पुरे पथि वणिक्पथे" इति वैजयन्ती ।





त्यक्तां यज्ञायुधैः सर्वैरभिरूपैश्च याजकैः । सुत्याकाले विनिर्वृत्ते वेदिं गतरवामिव ॥ ८ ॥ गोष्ठमध्ये स्थितामार्त्तामचरन्तीं तृणं नवम् । गोवृषेण परित्यक्तां गवां पत्तिमिवोत्सुकाम् ॥ ९ ॥ प्रभाकराद्यैः सुस्निग्धैः प्रज्वलद्भिरिवोत्तमैः । वियुक्तां मणिभिर्जात्यैर्नवां मुक्तावलीमिव ॥ १० ॥ सहसा चलितां स्थानान्महीं पुण्यक्षयाद्गताम् । संहतद्युतिविस्तारां तारामिव दिवश्च्युताम् ॥ ११ ॥ पुष्पनद्धां वसन्तान्ते मत्तभ्रमरनादिताम् । द्रुतदावाग्निविप्लुष्टां क्लान्तां वनलतामिव ॥ १२ ॥ सम्मूढनिगमां स्तब्धां संक्षिप्तविपणापणाम् । प्रच्छन्नशशिनक्षत्रां द्यामिवाम्बुधरैर्वृताम् ॥ १३ ॥ क्षीणपानोत्तमैर्भिन्नैः शरावैरभिसंवृताम् । हतशौण्डामिवाकाशे पानभूमिमसंस्कृताम् ॥ १४ ॥ वृक्णभूमितलां निम्नां वृक्णपात्रैः समावृताम् । उपयुक्तोदकां भग्नां प्रपां निपतितामिव ॥ १५ ॥ विपुलां विततां चैव युक्तपाशां तरस्विनाम् । भूमौ बाणैर्विनिष्कृत्तां पतितां ज्यामिवायुधात् ॥ १६ ॥

संक्षिप्तविपणापणां सङ्कुचितविक्रयां सङ्कुचितनिषद्यां च ॥ १३ ॥ क्षीणपानोत्तमैः क्षीणमधूत्तमैः । शरावैः चषकाकारैः । हतशौण्डां हतमत्तजनाम् । आकाशे अनावृतप्रदेशे ॥ १४ ॥ वृक्णभूमितलां विदीर्णभूमितलाम् । वृक्णपात्रैः भिन्नपात्रैः ॥ १५ ॥ विततांम् अटनीद्वयव्याप्ताम्, आरोपिता

यज्ञायुधैः स्फ्यादिभिः । सुत्याकाले यागसमाप्तिदिवसे ॥ ८ ॥ अचरन्तीम् अभक्षयन्तीम् । गवां पत्तिं गवां पङ्क्तिमिवेत्यर्थः ॥ ९ ॥ प्रभाकरः पद्मरागः आद्यो येषां तैः । मणिभिः नायकमणिभिः ॥ १० ॥ संहतद्युतिविस्तारां उपसंहतप्रकाशाम्, क्षीणपुण्यत्वात् ॥ ११ ॥ वसन्तान्ते वसन्तमध्ये । पुष्पनद्धां पुष्पोपेताम् । द्रुतदावाग्निविप्लुष्टां वेगवद्दावाग्निना ईषद्दग्धाम् ॥ १२ ॥ सम्मूढनिगमां सम्मूढः जनरहितः निगमः पन्था यस्यां ताम् । "निगमो निश्चये वेदे पुरे पथि वणिक्पथे" इति वैजयन्ती । संक्षिप्तविपणापणां सङ्कुचितविक्रयां सङ्कुचितनिषद्यां च ॥ १३ ॥ क्षीणपानोत्तमैः क्षीणमद्योत्तमैः । हतशौण्डां हतमत्तजनाम् । आकाशे अनावृतप्रदेशे । शरावैश्चषकाकारैः । वृक्णभूमितलां विदीर्णभूमितलाम् । वृक्णपात्रैः भिन्नपात्रैः ॥ १४ ॥ १५ ॥ विततां धनुषि समारोपिताम् । युक्तपाशां बद्धरज्जुम् कोटिद्वयबन्धनार्थं ज्याया आद्यन्तयोः द्वौ पाशौ स्तः । तरस्विनां वीराणाम् । बाणैर्विनिष्कृत्तां छिन्नाम् । आयुधात् धनुषः ॥ १६ ॥

मितियावत्। युक्तपाशां युक्तरज्जुम्। तरस्विनां वीराणां बाणैः विनिष्कृत्ताम्, छिन्नामिति यावत्। आयुधात् धनुषः॥१६॥युद्धशौण्डेन आहवसमर्थेन। निक्षिप्त भाण्डाम् अवरोपिताश्वभूषाम्। उत्सृष्टां वाहनानर्हां किशोरीं बालवडवाम्॥१७-१९॥प्रविगाढायां प्रवृद्धायां भास्करस्य प्रभामिव स्थिताम्। उक्तविशे

सहसा युद्धशौण्डेन हयारोहेण वाहिताम्। निक्षिप्तभाण्डामुत्सृष्टां किशोरीमिव दुर्बलाम्॥ १७॥ शुष्कतोयां महा मत्स्यैः कूर्मैश्च बहुभिर्वृताम्। प्रभिन्नतटविस्तीर्णां वापीमिव हृतोत्पलाम्॥ १८॥ पुरुषस्याप्रहृष्टस्य प्रतिषिद्धानु लेपनाम्। सन्तप्तामिव शोकेन गात्रयष्टिमभूषणाम्॥ १९॥ प्रावृषि प्रविगाढायां प्रविष्टस्याभ्रमण्डलम्। प्रच्छन्नां नीलजीमूतैर्भास्करस्य प्रभामिव॥ २०॥ भरतस्तु रथस्थः सन् श्रीमान् दशरथात्मजः। वाहयन्तं रथश्रेष्ठं सारथिं वाक्यमब्रवीत्॥ २१॥ किं नु खल्वद्य गम्भीरो मूर्च्छितो न निशम्यते। यथापुरमयोध्यायां गीतवादित्र निस्वनः॥ २२॥ वारुणीमदगन्धश्च माल्यगन्धश्च मूर्च्छितः। धूपितागरुगन्धश्च न प्रवाति समन्ततः॥२३॥ यान प्रवरघोषश्च स्निग्धश्च हयनिस्वनः। प्रमत्तगजनादश्च महांश्च रथनिस्वनः। नेदानीं श्रूयते पुर्यामस्यां रामे विवा सिते॥ २४॥ चन्दनागरुगन्धांश्च महार्हाश्च नवस्रजः। गते हि रामे तरुणाः सन्तप्ता नोपभुञ्जते॥ २५॥ बहिर्यात्रां न गच्छन्ति चित्रमाल्यधरा नराः। नोत्सवाः सम्प्रवर्त्तन्ते रामशोकार्दिते पुरे॥२६॥ सह नूनं मम भ्रात्रा पुरस्यास्य द्युतिर्गता। नहि राजत्ययोध्येयं सासारेवार्जुनी क्षपा॥ २७॥

षणविशिष्टामयोध्यां प्रविवेशेति पूर्वेणान्वयः॥ २०॥२१॥ किंनु खलु अहो कष्टं जातमित्यर्थः॥२२॥ वारुणीमदगन्धः वारुण्याः मदोत्पादको गन्ध इत्यर्थः ॥ २३-२६॥ सासारा वेगवद्वृष्टिसहिता। "आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले" इति वैजयन्ती। अर्जुनी शुक्लपक्षसम्बन्धिनी॥ २७॥

युद्धशौण्डेन निक्षिप्तभाण्डां अवरोपिताश्वभूषाम्। किशोरीं बालाश्वाम्। प्रविगाढायां निविडायाम्। उक्तविशेषणविशिष्टामयोध्यां प्रविवेशेति पूर्वेण सम्बन्धः ॥ १७-२२॥ वारुणीमदगन्धः वारुण्या मदोत्कटो गन्ध इत्यर्थः ॥२३-२६॥ सहेति। सासारा वेगवद्वृष्टिसहिता। अर्जुनी शुक्लपक्षसम्बन्धिनी। यद्वा अर्जुनी

महोत्सवः ग्रीष्मे अम्बुद इव च अयोध्यायां कदा मे भ्राता हर्षं जनयिष्यतीति सम्बन्धः ॥२८॥ तरुणैरिति । उन्नतगामिभिः सगर्वगमनैरित्यर्थः। महापथाः राजमार्गाः ॥ २९ ॥ एवमिति । एवं बहुविधं जल्पन्निति पाठः ॥ ३० ॥ तदेति । सुरैरुत्सृष्टमभास्करं दिनमिव उज्झितप्रभम् अन्तःपुरं निरीक्ष्येति

कदा नु खलु मे भ्राता महोत्सव इवागतः । जनयिष्यत्ययोध्यायां हर्षं ग्रीष्म इवाम्बुदः ॥ २८ ॥ तरुणैश्चारुवेषैश्च नरैरुन्नतगामिभिः । सम्पतद्भिरयोध्यायां नाभिभान्ति महापथाः ॥ २९ ॥ एवं बहुविधं जल्पन् विवेश वसतिं पितुः । तेन हीनां नरेन्द्रेण सिंहहीनां गुहामिव ॥३०॥ तदा तदन्तःपुरमुज्झितप्रभं सुरैरिवोत्सृष्टमभास्करं दिनम् । निरीक्ष्य सर्वन्तु विविक्तमात्मवान् मुमोच बाष्पं भरतः सुदुःखितः ॥ ३१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥

ततो निक्षिप्य मातॄः स अयोध्यायां दृढव्रतः । भरतः शोकसन्तप्तो गुरूनिदमथाब्रवीत् ॥ १ ॥
नन्दिग्रामं गमिष्यामि सर्वानामन्त्रयेऽद्य वः । तत्र दुःखमिदं सर्वं सहिष्ये राघवं विना ॥ २ ॥

सम्बन्धः । विविक्तं विजनम् । "विविक्तौ पूतविजनौ" इत्यमरः । पुराकिल देवासुरयुद्धे असुरैर्देवाः पराजिताः, स्वर्भानुना च भानुः पातितस्तदानीं कियान् कालो दिवारात्रविभागरहितोऽभूत् । ततःपरं ब्रह्मनियोगादत्रिः स्वतेजसा सप्तरात्रं सूर्याधिपत्यं चकारेति पौराणिकी कथा । अत्रिः स्वतेजसेति पाठान्तरम् ॥ ३१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥
अथ भरतस्य नन्दिग्रामे स्थित्वा राज्यपरिपालनं पञ्चदशोत्तरशततमे—तत इत्यादिना ॥ १ ॥ नन्दिग्राममिति । राघवं विना दुःखं राघवं विना प्राप्तं

शारदी ॥ २७ ॥ महोत्सवः ग्रीष्मे अम्बुद इव च अयोध्यां यदा मे भ्राता हर्षं जनयिष्यतीति सम्बन्धः ॥ २८ ॥ तरुणैरिति । उन्नतगामिभिः सगर्वगमनैरित्यर्थः । महापथाः राजमार्गाः ॥ २९ ॥ ३० ॥ उज्झितप्रभं अन्तःपुरं निरीक्ष्येति सम्बन्धः । सुरैरिवोत्सृष्टमभास्करं दिनमित्यत्रैवं श्रूयते—पुरा किल देवासुरयुद्धे असुरैर्देवाः पराजिताः,स्वर्भानुना च भानुः पातितः, तदानीं कियान् कालो दिवारात्रविभागरहितोऽभूत । ततःपरं ब्रह्मनियोगादत्रिः सप्तरात्रं सूर्याधिपत्यं चकारेति पौराणिकी कथा ॥ ३१॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायां चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥ १ ॥ नन्दिग्राममिति ।

दुःखम् ॥ २-४ ॥ सुभृशं श्लाघनीयं चेतिपाठः । सदृशमिति पाठे कुलस्य सदृशमित्यर्थः ॥ ५ ॥ नित्यमिति । नानुमन्येत वचनमिति शेषः ॥ ६ ॥ ॥ ७ ॥ (प्रहृष्टवदन इति सम्यक् ॥ ८ ॥ ९ ॥ अग्रतो गुरवस्तत्र नन्दिग्रामो यतोऽभवत् इतिपाठः ॥ १०-१२ ॥ नन्दिग्रामं ययौ तूर्णं शिरस्याधाय

गतश्च हि दिवं राजा वनस्थश्च गुरुर्मम । रामं प्रतीक्षे राज्याय स हि राजा महायशाः ॥ ३ ॥ एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः । अब्रुवन् मन्त्रिणः सर्वे वसिष्ठश्च पुरोहितः ॥ ४ ॥ सुभृशं श्लाघनीयं च यदुक्तं भरत त्वया । वचनं भ्रातृवात्सल्यादनुरूपं तवैव तत् ॥ ५ ॥ नित्यं ते बन्धुलुब्धस्य तिष्ठतो भ्रातृसौहृदे । आर्यमार्गं प्रपन्नस्य नानुमन्येत कः पुमान् ॥ ६ ॥ मन्त्रिणां वचनं श्रुत्वा यथाभिलषितं प्रियम् । अब्रवीत्सारथिं वाक्यं रथो मे युज्यतामिति ॥ ७ ॥ प्रहृष्टवदनः सर्वा मातॄः समभिवाद्य सः । आरुरोह रथं श्रीमान् शत्रुघ्नेन समन्वितः ॥ ८ ॥ आरुह्य च रथं शीघ्रं शत्रुघ्नभरतावुभौ । ययतुः परमप्रीतौ वृतौ मन्त्रिपुरोहितैः ॥ ९ ॥ अग्रतो गुरवस्तत्र वसिष्ठ प्रमुखा द्विजाः । प्रययुः प्राङ्मुखाः सर्वे नन्दिग्रामो यतोऽभवत् ॥ १० ॥ बलं च तदनाहूतं गजाश्वरथसङ्कुलम् । प्रययौ भरते याते सर्वे च पुरवासिनः ॥ ११ ॥ रथस्थः स हि धर्मात्मा भरतो भ्रातृवत्सलः । नन्दिग्रामं ययौ तूर्णं शिरस्याधाय पादुके ॥ १२ ॥ ततस्तु भरतः क्षिप्रं नन्दिग्रामं प्रविश्य सः । अवतीर्य्य रथात्तूर्णं गुरूनिदमुवाच ह ॥ १३ ॥ एतद्राज्यं मम भ्रात्रा दत्तं संन्यासवत् स्वयम् । योगक्षेमवहे चेमे पादुके हेमभूषिते ॥ १४ ॥

पादुके इत्यतःपरं ततस्तु भरतः क्षिप्रं नन्दिग्रामं प्रविश्य सः । अवतीर्य रथात्तूर्णं गुरूनिदमुवाचहेति श्लोकः ॥ १३ ॥ ) मातृवरव्याजेन पित्रा दत्तं राज्यं भरतः करोतीति जनवादो माभूदिति धिया वदति-एतदित्यादिना । संन्यासवत् सम्यक्निक्षिप्तद्रव्यमिव अनेनान्यूनतया प्रत्यर्पणीयत्वं

राघवं विना दुःखं राघवं विना प्राप्तं दुःखम् । रामविश्लेषजनितदुःखमिति यावत् । सुभृशं श्लाघनीयं चेति पाठः । सदृशं श्लाघनीयमिति पाठे कुलस्य सदृशमित्यर्थः ॥ २-५ ॥ नित्यमिति । आर्यं श्रेष्ठं नानुमन्येत, तव वचनमिति शेषः ॥ ६-१३ ॥ मातृवरव्याजेन पित्रा दत्तं राज्यं भरतः करोतीति जनाप

ध्वन्यते । निक्षेपवद्दत्तस्य राज्यस्य रक्षणादिस्वातन्त्र्यमपि स्वस्य नास्तीति दर्शयति योगक्षेमवहे चेति ॥ १४ ॥ भरत इति । संन्यासं पादुके स्वप्रतिनिधित्वेन न्यस्ते पादुके ॥ १५ ॥ छत्रमित्येतच्चामरादीनामुपलक्षणम् । अतएव धारयतेति बहुवचनम् । आर्यपादाभेदभावनया पादुकयोरिमाविति

भरतः शिरसा कृत्वा संन्यासं पादुके ततः । अब्रवीद्दुःखसन्तप्तः सर्वं प्रकृतिमण्डलम् ॥ १५ ॥ छत्रं धारयत क्षिप्रमार्यपादाविमौ मतौ । आभ्यां राज्ये स्थितो धर्मः पादुकाभ्यां गुरोर्मम ॥ १६ ॥ भ्रात्रा हि मयि संन्यासो निक्षिप्तः सौहृदादयम् । तमिमं पालयिष्यामि राघवागमनं प्रति ॥ १७ ॥ क्षिप्रं संयोजयित्वा तु राघवस्य पुनः स्वयम् । चरणौ तौ तु रामस्य द्रक्ष्यामि सहपादुकौ ॥ १८ ॥ ततो निक्षिप्तभारोऽहं राघवेण समागतः । निवेद्य गुरवे राज्यं भजिष्ये गुरुवृत्तिताम् ॥ १९ ॥ राघवाय च संन्यासं दत्त्वेमे वरपादुके । राज्यं चेदमयोध्यां च धूतपापो भवामि च ॥ २० ॥ अभिषिक्ते तु काकुत्स्थे प्रहृष्टमुदिते जने । प्रीतिर्मम यशश्चैव भवेद्राज्याच्चतुर्गुणम् ॥ २१ ॥

पुँल्लिङ्गनिर्देशः । पादुकाभ्यामिति हेतौ तृतीया ॥ १६ ॥ अयं संन्यासः पादुकारूपप्रतिनिधिः । पालयिष्यामि रक्षिष्यामि ॥ १७ ॥ १८ ॥ राघवेण समागतः सङ्गतः। गुरवे राज्यं निवेद्य रामाय राज्यं प्रत्यर्प्य । ततः गुरुवृत्तितां भजिष्ये पितरीव शुश्रूषां करिष्यामीत्यर्थः ॥ १९ ॥ धूतपाप इत्यत्र पापशब्देन कैकेयीनिमित्तमयश उच्यते ॥ २० ॥ प्रहृष्टमुदिते प्रहृष्टः पुलकितगात्रः, मुदितः सञ्जातमानसहर्षः ॥ २१-२३ ॥

वादो माभूदित्याह-एतदिति । संन्यासवत् सम्यङ्निक्षिप्तद्रव्यमिव । अनेन अनृणतया प्रत्यर्पणीयत्वं ध्वन्यते । निक्षिप्तवद्दत्तस्य राज्यस्य रक्षणादिस्वातन्त्र्यमपि स्वस्य नास्तीति दर्शयति योगक्षेमवहे चेति ॥ १४ ॥ संन्यासं पादुके स्वप्रतिनिधित्वेन न्यस्तपादुके । छत्रमित्येतच्चामरादीनामुपलक्षणम् । मम गुरोराभ्यां पादुकाभ्यां राज्ये धर्मः स्थित इति सम्बन्धः ॥ १५ ॥ १६ ॥ भ्रात्रेति । अयं संन्यासः पादुकाप्रतिनिधिः । तं पादुकाप्रतिनिधिं पालयिष्यामि रक्षिष्यामि ॥ १७ ॥ १८ ॥ राघवेण समागतस्सङ्गतः गुरवे रामाय राज्यं निवेद्य प्रत्यर्प्य गुरुवृत्तितां भजिष्ये पितरीव शुश्रूषां करिष्यामीत्यर्थः ॥ १९ ॥ राघवायेति । संन्यासं वरपादुके रामप्रतिनिधिरूपश्रेष्ठपादुके राज्यमयोध्यां च दत्त्वा धूतपापो भवामीति सम्बन्धः ॥ २० ॥ हृष्टे पुलकितगात्रे । मुदिते सञ्जातमानसहर्षे ॥ २१-२४ ॥

स०-संन्यासं ममागमनपर्यन्तं त्वयि तिष्ठत्विति संन्यस्यत इति संन्यासम् । कर्मणि घञन्तः । "घञबन्ताः पुंस्येव" इति नियमो नास्तीति सम्बन्धमनुवर्तिष्यत इति माध्यादौ स्पष्टमुक्तेर्युक्तः पादुके इत्यनेनान्वयः ॥ १९ ॥

रामागमनमाकांक्षन्नित्यादि । पादुकाभ्यां न्यवेदयत् विज्ञापयामास ॥ २५ ॥ २६ ॥ आर्यपादुके अभिषिच्य राज्याभिषेकमार्यपादुकयोः कृत्वेत्यर्थः । तदधीनः पादुकापरतन्त्रः ॥ २६ ॥ तदा पादुके पुरस्कृत्य राज्यपालनसमये । उपायनम् उपहारः । "उपायनमुपग्राह्यमुपहारः" इत्यमरः ॥२७॥



एवं तु विलपन् दीनो भरतः स महायशाः । नन्दिग्रामेऽकरोद्राज्यं दुःखितो मन्त्रिभिः सह ॥२२॥ स वल्कलजटाधारी मुनिवेषधरः प्रभुः । नन्दिग्रामेऽवसद्वीरः ससैन्यो भरतस्तदा ॥ २३ ॥ रामागमनमाकांक्षन् भरतो भ्रातृवत्सलः । भ्रातुर्वचनकारी च प्रतिज्ञापारगस्तथा ॥२४॥ पादुके त्वभिषिच्याथ नन्दिग्रामेऽवसत्तदा । भरतः शासनं सर्वं पादुकाभ्यां न्यवेदयत् ॥२५॥ ततस्तु भरतः श्रीमानभिषिच्यार्य्यपादुके । तदधीनस्तदा राज्यं कारयामास सर्वदा ॥ २६ ॥ तदा हि यत्कार्य्यमुपैति किञ्चिदुपायनं चोपहृतं महार्हम् । स पादुकाभ्यां प्रथमं निवेद्य चकार पश्चाद्भरतो यथावत् ॥२७॥ इत्यार्षे श्रीरामायणे॰वाल्मी॰श्रीमदयोध्याकाण्डे पञ्चदशोत्तरशततमः सर्गः॥ ११५॥

प्रतिप्रयाते भरते वसन् रामस्तपोवने । लक्षयामास सोद्वेगमथौत्सुक्यं तपस्विनाम् ॥ १ ॥

तनि०—यत्कार्यं राज्यपरिपालनकृत्यम् । उपायनमित्यत्र यदित्यनुवर्तते । उपायनं पत्रफलपुष्पादिकम् । पादुकाभ्यां प्रथमं निवेद्येत्यनेन प्रतिदिनं पादुकार्चा तन्निवेदितस्वीकारश्च ध्वन्यते । यथावच्चकारेति हव्यकव्यादिषु विनियोगो व्यज्यते ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चदशोत्तरशततमः सर्गः ॥ ११५ ॥ अथ रामस्य चित्रकूटान्निर्गमनं षोडशोत्तरशततमे—प्रतिप्रयात इत्यादि । सोद्वेगं सभयम् । औत्सुक्यम् आश्रमान्तरगमनाभिलाषं लक्षयामास इङ्गिताकारादिभिरिति शेषः ॥ १ ॥

सर्वं शासनं सर्वं कृत्यमित्यर्थः। न्यवदेयत् विज्ञापयामास ॥ २५ ॥ आर्यपादुके अभिषिच्य राज्याभिषेकमार्यपादुकयोः कृत्वेत्यर्थः । तदधीनः पादुकापरतन्त्रः ॥२६॥ यत्कार्यं राज्यपरिपालनकृत्यं यदुपायनं वस्त्रपुष्पफलादिकं पादुकाभ्यां प्रथमं निवेद्य पश्चाद्यथावच्चकार, सर्वं कृत्यमिति शेषः ॥ २७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां पञ्चदशोत्तरशततमः सर्गः ॥ ११५.॥ प्रतिप्रयात इति । सोद्वेगं सभयम्, औत्सुक्यम् आश्रयान्तरगमनौत्सुक्यं लक्षयामास, इङ्गिताकारादिभिरिति शेषः॥ १ ॥

य इति । पुरस्तात् पूर्वं चित्रकूटस्य तापसाश्रमे राममाश्रित्य ये निरतास्तान् उत्सुकान् गमनोत्सुकान् । अलक्षयत् राम इत्यनुषङ्गः ॥ २ ॥ रामं निर्दिश्य प्रदर्श्य । मिथः रहस्ये । "मिथोन्योन्यरहस्ययोः" इति वैजयन्ती ॥३॥ तेषामिति । आत्मनि शङ्कितः स्वस्मिन् सञ्जातशङ्कः ॥४॥

ये तत्र चित्रकूटस्य पुरस्तात्तापसाश्रमे । राममाश्रित्य निरतास्तानलक्षयदुत्सुकान् ॥ २ ॥ नयनैर्भ्रूकुटीभिश्च रामं निर्दिश्य शङ्किताः। अन्योन्यमुपजल्पन्तः शनैश्चक्रुर्मिथः कथाः ॥ ३ ॥ तेषामौत्सुक्यमालक्ष्य रामस्त्वात्मनि शङ्कितः। कृताञ्जलिरुवाचेदमृषिं कुलपतिं ततः ॥ ४ ॥ न कच्चिद्भगवन् किञ्चित्पूर्ववृत्तमिदं मयि। दृश्यते विकृतं येन विक्रियन्ते तपस्विनः ॥ ५ ॥ प्रमादाच्चरितं कच्चित्किञ्चिन्नावरजस्य मे । लक्ष्मणस्यर्षिभिर्दृष्टं नानुरूपमिवात्मनः ॥६॥ कच्चिच्छुश्रूषमाणा वः शुश्रूषणपरा मयि । प्र(म)मादाभ्युचितां वृत्तिं सीता युक्तं न वर्तते ॥ ७ ॥ अथर्षिर्जरया वृद्धस्तपसा च जरां गतः। वेपमान इवोवाच रामं भूतदयापरम् ॥ ८ ॥

हे भगवन् ! मयि पूर्ववृत्तं विकृतं न दृश्यते कच्चित् । येन तपस्विनो विक्रियन्ते इदं किञ्चित् किमिदमित्यर्थः ॥ ५ ॥ प्रमादात् अनवधानात् । मे अवरजस्य लक्ष्मणस्य । आत्मनो नानुरूपमिव किञ्चिच्चरितम् ऋषिभिर्दृष्टं न कच्चिदित्यन्वयः ॥ ६ ॥ ७ ॥ तपसा च जरां गतः

य इति । पुरस्तात्पूर्वं चित्रकूटस्य तापसाश्रमे राममाश्रित्य ये निरताः तानुत्सुकान् गमनोत्सुकानलक्षयत् राम इत्यनुषङ्गः ॥ २ ॥ नयनैरिति । रामं निर्दिश्य प्रदर्श्य । मिथः रहस्ये ॥ ३ ॥ आत्मनि शङ्कितः स्वस्मिन् सञ्जातशङ्कः ॥ ४ ॥ हे भगवन्! मयि पूर्ववृत्तं न दृश्यते कच्चित् विकृतं दृश्यते कच्चित् । येन विकृतेन विकारेण तपस्विनः विक्रियन्ते । इदं किञ्चित् किमिदमितियोजना ॥ ५ ॥ प्रमादात् अनवधानात् । मे अवरजस्य लक्ष्मणस्यात्मनो नानुरूपमिह चरितं दृष्टं

तिल०—अत्रेदं बोध्यम्—ज्येष्ठमासे भरतस्य चित्रकूटं प्रति प्रस्थानम्, अग्रे वर्षासन्निहितत्वेन कार्तिक्यन्तं चित्रकूटे वासो रामस्य, तदनन्तरं तापसौत्सुक्यलक्षणम्, नतु भरतनिवृत्त्यनन्तरमेवेति, अत एव पाद्मे भरतस्यायोध्यां प्रति निवृत्त्यनन्तरं "राघवश्चित्रकूटाद्रौ सानुजोऽरमत स्त्रिया । कदाचिदङ्के वैदेह्या निद्राणे रघुनन्दने । ऐन्द्रः काकः समागम्य जानकीं वीक्ष्य कामुकः । इत्यादि—तच्छिरः पादयोस्तस्य युयुजे चाथ जानकी । तमुत्थाप्य करेणाथ कृपापियूषसागरः । रक्षासौ०—उवास चित्रकूटाद्रौ स्तूयमानो महर्षिभिः" इत्यन्तग्रन्थसन्दर्भेण चित्रकूटे चिरकालवास एवोक्तः ॥ २ ॥

सुदीर्घतपा इत्यर्थः ॥ ८ ॥ कल्याणसत्त्वायाः कल्याणस्वभावायाः । "सत्त्वोऽस्त्री जन्तुषु क्लीबोऽध्यवसाये पराक्रमे । आत्मभावे पिशाचादौ द्रव्ये सत्तास्वभावयोः॥" इति वैजयन्ती ॥ ९ ॥ त्वन्निमित्तमिति । त्वन्निमित्तं त्वत्तो हेतोः । रक्षोभ्यः समागतम् इदं वक्ष्यमाणमुपद्रवजातम् । तापसान्

कुतः कल्याणसत्त्वायाः कल्याणाभिरतेस्तथा । चलनं तात वैदेह्यास्तपस्विषु विशेषतः ॥ ९ ॥ त्वन्निमित्तमिदं तावत्तापसान् प्रति वर्तते । रक्षोभ्यस्तेन संविग्नाः कथयन्ति मिथः कथाः ॥ १० ॥ रावणावरजः कश्चित् खरो नामेह राक्षसः । उत्पाट्य तापसान् सर्वान् जनस्थाननिकेतनान् ॥ ११ ॥ धृष्टश्च जितकाशी च नृशंसः पुरुषादकः । अवलिप्तश्च पापश्च त्वां च तात न मृष्यते ॥ १२ ॥ त्वं यदाप्रभृति ह्यस्मिन्नाश्रमे तात वर्तसे । तदाप्रभृति रक्षांसि विप्रकुर्वन्ति तापसान् ॥१३॥ दर्शयन्ति हि बीभत्सैः क्रूरैर्भीषणकैरपि । नानारूपैर्विरूपैश्च रूपैर्विकृतदर्शनैः ॥१४॥

प्रति वर्तते । तेन रक्षस्सञ्जातोपद्रवेण । संविग्नाः तापसाः मिथः रहसि कथाः रक्षोविषयिणीः तदुपद्रवविषयिणीश्च कथयन्ति ॥ १० ॥ ता एवाह—रावणावरज इत्यादिना । श्लोकद्वयमेकं वाक्यम् । उत्पाट्य उत्खाय, निष्कास्येति यावत् । जितेन जयेन काशते प्रकाशत इति जितकाशी । यद्वा जिताहवः । "जितकाशी जिताहवः" इति हलायुधः॥ ११ ॥ १२ ॥ त्वमिति । विप्रकुर्वन्ति अपकुर्वन्ति ॥१३॥ दर्शयन्तीति । बीभत्सैः जुगुप्सितैः। क्रूरैः भीषणकैः भयङ्करैः । नानारूपैः अनेकप्रकारैः । विरूपैः लोकविलक्षणसंस्थानैः । विकृतदर्शनैः विकृतदृष्टिभिः। रूपैः शरीरैः दर्शयन्ति भयमिति शेषः ॥ १४ ॥

कच्चिदिति योजना ॥ ६–८ ॥ कुत इति । कल्याणसत्त्वायाः कल्याणस्वभावायाः ॥ ९ ॥ त्वन्निमित्तं त्वत्तो हेतोः रक्षोभ्य इदं रक्षोभ्यस्समागतं वक्ष्यमाणमुपद्रवजातम् ॥ १० ॥ रावणावरज इत्यादि श्लोकद्वयमेकं वाक्यम् । जितकाशी जितेन जयेन काशते प्रकाशत इति तथा । यद्वा जितकाशी जिताहवः खरः तापसानुत्पाट्य तापसान्निष्कास्य त्वां च न मृष्यते अत्र तवावस्थानं न सहत इत्यर्थः ॥ ११ ॥ १२ ॥ विप्रकुर्वन्ति अपकुर्वन्तीत्यर्थः ॥ १३ ॥ बीभत्सैः जुगुप्सितैः

**विषम०**—स्खलनमितिपाठे— स्वभावविपर्यासः ॥९॥ **स०**—अन्ते कथनात्सीताया बुद्धौ परिवर्तनाचद्विषय एव । कल्याणसत्त्वायाः मङ्गलदेव्याः । कल्याणे त्वयि अभिरतिर्यस्यास्सा तस्याश्चलनमिति वा । विशेषत इत्यनेन साधारणस्थलेपि मङ्गलकार्याचलनं नास्तीति सूचयति ॥ ९ ॥

अप्रशस्तैः अशुभैः । अशुचिभिः अशुचिद्रव्यैः संप्रयोज्य ॥ १५ ॥ अबुद्धम् अविदितं यथा भवति तथा । अवलीय निलीय । रमन्ते विहरन्ति । अल्पचेतसः क्षुद्रबुद्धयः ॥ १६ ॥ हवने समुपस्थिते होमकर्मणि प्रवृत्ते ॥ १७ ॥ प्रजिहासवः प्रकर्षेण हातुमिच्छवः ॥ १८ ॥ पुरादर्शयन्ति दर्शयि





अप्रशस्तैरशुचिभिः सम्प्रयोज्य च तापसान् । प्रतिघ्नन्त्यपरान् क्षिप्रमनार्य्याः पुरतः स्थिताः ॥ १५ ॥ तेषु तेष्वा श्रमस्थानेष्वबुद्धमवलीय च । रमन्ते तापसांस्तत्र नाशयन्तोऽल्पचेतसः ॥ १६ ॥ अपक्षिपन्ति स्रुग्भाण्डानग्नीन् सिञ्चन्ति वारिणा । कलशांश्च प्रमृद्नन्ति हवने समुपस्थिते ॥ १७ ॥ तैर्दुरात्मभिरामृष्टानाश्रमान् प्रजिहासवः । गमनायान्यदेशस्य चोदयन्त्यृषयोऽद्य माम् ॥ १८ ॥ तत्पुरा राम शारीरीमुपहिंसां तपस्विषु । दर्शयन्ति हि दुष्टास्ते त्यक्ष्याम इममाश्रमम् ॥ १९ ॥ बहुमूलफलं चित्रमविदूरादितो वनम् । पुराणाश्रममेवाहं श्रयिष्ये सगणः पुनः ॥ २० ॥ खरस्त्वय्यपि चायुक्तं पुरा तात प्रवर्त्तते । सहास्माभिरितो गच्छ यदि बुद्धिः प्रवर्त्तते ॥ २१ ॥ सकलत्रस्य सन्देहो नित्यं यत्तस्य राघव । समर्थस्यापि वसतो वासो दुःखमिहाद्य ते ॥ २२ ॥ इत्युक्तवन्तं रामस्तं राज पुत्रस्तपस्विनम् । न शशाकोत्तरैर्वाक्यैरवरोद्धुं समुत्सुकः ॥ २३ ॥

ष्यन्ति । "यावत्पुरानिपातयोर्लट्" इतिलट् ॥ १९ ॥ २० ॥ खर इति । अयुक्तमिति क्रियाविशेषणम् । पुराप्रवर्त्तते प्रवर्तिष्यते ॥ २१ ॥ सकलत्र स्येति । सन्देहः सन्देहजनकः । यत्तस्य सन्नद्धस्य । दुःखं दुःखहेतुः ॥ २२ ॥ उत्तरैर्वाक्यैरवरोद्धुं न शशाक मयि वर्त्तमाने युष्माकं का भीतिः

भीषणकै रूपैर्दर्शयन्ति भयमिति शेषः ॥१४॥ अशुचिभिरशुचिद्रव्यैः । संप्रयुज्य संयोज्य । अपरान् प्रतिघ्नन्ति ॥ १५ ॥ अबुद्धम् अविदितं यथा तथा अवलीय रमन्ते विहरन्ति ॥ १६ ॥ सवने समुत्थिते होमकर्मणि प्रवृत्ते सति ॥ १७ ॥ प्रजिहासवः प्रकर्षेण हातुमिच्छवः ॥ १८ ॥ शारीरीं शरीरसम्बन्धिनीम् । पुरादर्शयन्ति दर्शयिष्यन्तीत्यर्थः ॥ १९ ॥ २० ॥ अयुक्तमिति क्रियाविशेषणम् । पुरा प्रवर्तते प्रवर्तिष्यते ॥ २१ ॥ सन्देहः सन्देहजनकः । यत्तस्य सन्नद्धस्य । दुःखं दुःखहेतुः ॥ २२ ॥ उत्तरैर्वाक्यैः अवरुद्धुं न शशाक 'मयि वर्तमाने युष्माकं का भीतिः अहमेव परितो रक्षामि' इत्याद्युत्तरवाक्यैर्नियोक्तुं न शशाकेत्यर्थः ॥ २३ ॥

अहमेव परितो रक्षामीत्युत्तरवाक्यैर्निरोद्धुं न शशाक ॥ २३ ॥ अभिनन्द्येति । कुलैः ऋषिसङ्घातैः । " कुलं सङ्घातवंशयोः " इति वैजयन्ती ॥ २४ ॥

रामः ऋषिगणं तस्माद्देशात् आश्रमप्रदेशात् । अनुगमनात् संसाध्य प्रस्थाप्य । कुलपतिमभिवाद्य तैरुपदिष्टार्थः उपदिष्टप्रयोजनस्सन् । वासाय

अभिनन्द्य समापृच्छ्य समाधाय च राघवम् । स जगामाश्रमं त्यक्त्वा कुलैः कुलपतिः सह ॥२४॥ रामः संसाध्य त्वृषिगणमनुगमनाद्देशात्तस्मात् कुलपतिमभिवाद्य ऋषिम् । सम्यक्प्रीतैस्तैरनुमत उपदिष्टार्थः पुण्यं वासाय स्वनिलयमुपसम्पेदे ॥ २५ ॥ आश्रमं त्वृषिविरहितं प्रभुः क्षणमपि न विजहौ स राघवः । राघवं हि सततमनुगता स्तापसाश्चार्षचरितधृतगुणाः ॥२६॥ इत्यार्षे श्रीरामायणे० श्रीमदयोध्याकाण्डे षोडशोत्तरशततमः सर्गः ॥११६॥ राघवस्त्वथ यातेषु तपस्विषु विचिन्तयन् । न तत्रारोचयद्वासं कारणैर्बहुभिस्तदा ॥ १ ॥ इह मे भरतो दृष्टो मातरश्च सनागराः । सा च मे स्मृतिरन्वेति तान्नित्यमनुशोचतः ॥ २ ॥ स्कन्धावारनिवेशेन तेन तस्य महात्मनः । हयहस्तिकरीषैश्च उपमर्दः कृतो भृशम् ॥ ३ ॥

पुण्यं स्वनिलयम् उपसंपेदे इतिसम्बन्धः ॥ २५ ॥ आश्रममिति । राघवः ऋषिविरहितमप्याश्रमं क्षणं न विजहौ मुनिशून्यतया तदैव त्याज्यमप्याश्रमं मुनिविषयप्रेम्णा क्षणं न त्यक्तवानित्यर्थः । आर्षचरितधृतगुणाः रामस्यार्षचरित्रेण सञ्चितगुणाः । हि यस्मात्कारणात्तापसाः राममनुगतास्तस्मात् तत्प्रेम्णा क्षणं न जहाविति । वृत्तं तु श्लोकद्वयस्यापि चिन्त्यम् ॥२६॥ इति श्रीगो० श्रीरामा० पीता० अयोध्याकाण्ड० षोडशोत्तरशततमः सर्गः ॥११६॥ अथ रामस्यात्र्याश्रमप्रवेशः सप्तदशोत्तरशततमे–राघव इत्यादिना ॥ १ ॥ बहुकारणान्येवाह–इह म इत्यादिना ॥ २ ॥ स्कन्धावारनिवेशेन सेनानिवे

कुलैः ऋषिसङ्घातैः । " कुलं सङ्घातवंशयोः " इति वैजयन्ती ॥ २४ ॥ ऋषिगणं तस्माद्देशादाश्रमप्रदेशात् । अनुगमनात्संसाध्य प्रस्थाप्य कुलपतिमभिवाद्य तैरुपदिष्टार्थः उपदिष्टप्रयोजनस्सन् वासाय पुण्यं स्वनिलयम् उपसम्पेद इति सम्बन्धः ॥२५॥ ऋषिविरहितमप्याश्रमं क्षणान्न जहौ मुनिशून्यतया तदैव त्याज्यमप्या श्रमं मुनिविषयप्रेम्णा क्षणमात्रं न त्यक्तवान् । मुनिकर्तृकरामविषयस्नेहहेतुमाह–तापसाश्चार्षचरितधृतगुणाः रामस्यार्षचरित्रेणासञ्जितगुणाः ॥ २६ ॥ इति श्रीमहे श्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां अयोध्याकाण्डव्याख्यायां षोडशोत्तरशततमः सर्गः ॥ ११६ ॥ १ ॥ २ ॥ स्कन्धावारनिवेशेन स्कन्धावारः

शेन। करीषैश्च उपमर्द इत्यत्र वाक्यसंहिताया अनित्यत्वान्न सन्धिकार्यम् । "एकपदे नित्या संहिता नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥" इतिवचनात् ॥ ३ ॥ तस्मादिति । प्रातिष्ठत प्रस्थितः ॥ ४ ॥ ५ ॥ आतिथ्यमादिश्य आतिथ्यं कृत्वा ॥ ६ ॥ सत्कृतां सर्वैः सत्कृ



तस्मादन्यत्र गच्छाम इति सञ्चिन्त्य राघवः । प्रातिष्ठत स वैदेह्या लक्ष्मणेन च सङ्गतः ॥ ४ ॥ सोऽत्रेराश्रममासाद्य तं ववन्दे महायशाः । तं चापि भगवानत्रिः पुत्रवत् प्रत्यपद्यत ॥५॥ स्वयमातिथ्यमादिश्य सर्वमस्य सुसत्कृतम् । सौमित्रिं च महाभागां सीतां च समसान्त्वयत् ॥६॥ पत्नीं च समनुप्राप्तां वृद्धामामन्त्र्य सत्कृताम् । सान्त्वयामास धर्मज्ञः सर्वभूतहिते रतः ॥ ७ ॥ अनसूयां महाभागां तापसीं धर्मचारिणीम् । प्रतिगृह्णीष्व वैदेहीमब्रवीदृषिसत्तमः । रामाय चाचचक्षे तां तापसीं धर्मचारिणीम् ॥८॥ दशवर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरम् । यया मूलफले सृष्टे जाह्नवी च प्रवर्त्तिता ॥ ९ ॥ उग्रेण तपसा युक्ता नियमैश्चाप्यलंकृता । दशवर्षसहस्राणि यया तप्तं महत्तपः ॥ १० ॥ अनसूया व्रतैः स्नाता प्रत्यूहाश्च निवर्त्तिताः । देवकार्यनिमित्तं च यया संत्वरमाणया । दशरात्रं कृता रात्रिः सेयं मातेव तेऽनघ ॥ ११ ॥

ताम् ॥ ७ ॥ प्रतिगृह्णीष्वेत्यत्र इतिकरणं द्रष्टव्यम् ॥८॥ दशवर्षाणीत्यारभ्य सेयं मातेव तेनघेत्यन्तमेकं वाक्यम् । दशवर्षाण्यनावृष्ट्या लोके दग्धे सति यया स्वतपोमहिम्ना निरन्तरं मूलफले सृष्टे । जाह्नवी च प्रवर्तिता । यया दशवर्षसहस्राणि महत्तपस्तप्तं कृतम् । यया व्रतैः कृच्छ्रचान्द्रायणादिभिः प्रत्यूहा स्तपोविघ्नाश्च निवर्तिताः निरस्ताः। देवकार्यनिमित्तं सन्त्वरमाणया यया दशरात्रमेकारात्रिश्च कृता दशरात्रावधिकः कालः एकरात्रत्वेन कृत इत्यर्थः ।

शिबिराणि । तस्य भरतस्य ॥ ३ ॥ प्रातिष्ठत प्रस्थितः ॥ ४ ॥ सोऽत्रेरिति । ववन्दे वस्तुतस्तु ववन्दे अस्तौषीत् । पुत्रवत् पुंसः पुरुषान् भक्तान् त्रायत इति पुत्रः तद्वत् । प्रत्यपद्यत ईश्वरत्वेन प्राप्तवानित्यर्थः ॥ ५ ॥ आतिथ्यमादिश्य आतिथ्यं कृत्वा ॥ ६ ॥ सत्कृतां सर्वैस्सत्कृतामित्यर्थः ॥ ७ ॥ प्रतिगृह्णीष्वेत्यत्र इतिकरणं द्रष्टव्यम् ॥ ८ ॥ दशवर्षाणीत्यारभ्य सेयं मातेव ते सखेत्यन्तमेकान्वयम् । दशवर्षाण्यनावृष्ट्या लोके दग्धे सति यया कृततपोमहिम्ना निरन्तरं मूलफले सृष्टे जाह्नवी च प्रवर्तिता । यया दशवर्षसहस्राणि महत्तपस्तप्तं कृतम् ॥ ९ ॥ १० ॥ यया व्रतैः कृच्छ्रचान्द्रायणादिभिः प्रत्यूहा विघ्नाश्च निवर्तिता निरस्ताः ।

❀इयं कथा पुराणेषु द्रष्टव्या। उग्रेण तपसा युक्ता नियमैश्चाप्यलंकृता, सेयमनसूया ते मातेव मातृवत्पूजनीयेत्यर्थः॥९-११॥ तामित्यादि। या कर्मभि
रनन्यशक्यैः परानुग्रहार्थतपोविशेषैः अनसूया असूयारहितेति लोके ख्यातिमागता। यद्वा कर्मभिः पातिव्रत्यवर्द्धकैः अन्याभिः कर्त्तुमशक्यैः पतिरक्ष

तामिमां सर्वभूतानां नमस्कार्य्यां यशस्विनीम्। अभिगच्छतु वैदेही वृद्धामक्रोधनां सदा। अनसूयेति या लोके कर्मभिः ख्यातिमागता ॥ १२ ॥ एवं ब्रुवाणं तमृषिं तथेत्युक्त्वा स राघवः। सीतामुवाच धर्मज्ञामिदं वचनमुत्तमम् ॥ १३ ॥ राजपुत्रि श्रुतं त्वेतन्मुनेरस्य समीरितम्। श्रेयोर्थमात्मनः शीघ्रमभिगच्छ तपस्विनीम् ॥ १४ ॥ सीता त्वेतद्वचः श्रुत्वा राघवस्य हितैषिणः। तामत्रिपत्नीं धर्मज्ञामभिचक्राम मैथिली ॥ १५ ॥ शिथिलां वलितां वृद्धां जरापाण्डरमूर्द्धजाम्। सततं वेपमानाङ्गीं प्रवाते कदली यथा ॥ १६ ॥ तां तु सीता महाभागामनसूयां पतिव्रताम्। अभ्यवादयदव्यग्रा स्वनाम समुदाहरत् ॥ १७ ॥

णादिकर्मभिः। अनसूया अस्पर्द्धनीयमाहात्म्ययुक्तत्वादसूयितुमशक्या इति लोके ख्यातिमागता तामिमां वैदेही अनुगच्छत्विति सम्बन्धः॥१२-१५॥
रामानुजीयम्-श्रेयोर्थमात्मनः शीघ्रमभिगच्छ तपस्विनीम्। इत्यतःपरम्-सीता त्वेतद्वचः श्रुत्वा राघवस्य हितैषिणः। तामत्रिपत्नीं धर्मज्ञामभिचक्राम मैथिली॥ इत्ययं श्लोकः ॥१५॥
शिथिलामित्यादिश्लोकद्वयमेकान्वयम्। शिथिलां श्लथसन्धिबन्धावयवसन्निवेशाम्। वलितां सञ्जातवलिकाम् ॥ १६ ॥ १७ ॥

देवकार्यनिमित्तं सन्त्वरमाणया यथा दशरात्रं रात्रिश्च कृता दशरात्रावधिकालः एकरात्रत्वेन कृत इत्यर्थः। सेयं ते मातेव मातृवत्पूजनीयेत्यर्थः ॥ ११ ॥ यया कर्मभिः अनन्यशक्यैः परानुग्रहार्थतपोविशेषैः। अनसूया असूयारहिता इति लोके ख्यातिमागता तामिमां वैदेही अनुगच्छत्विति सम्बन्धः ॥ १२-१५ ॥
शिथिलामिति। शिथिलां श्लथसन्धिबन्धावयवसन्निवेशाम्। वलितां सञ्जातवलिताङ्गाम् ॥ १६ ॥ १७ ॥

* अत्रेयं कथा पौराणिकी-अनसूयायाः काचन सखी पतिव्रताभूत्। सा च काञ्चन वेश्यां दृष्ट्वा तत्सङ्गं कामयमानं स्वपतिं स्वस्कन्धे समारोप्य तद्गृहं गन्तुमारेभे। तत्समये माण्डव्यऋषिश्चोरबुद्ध्या राजभटैः शूले समारोपितः। स च मार्गे पतिव्रतायाः पत्या पदा स्पृष्टोऽतीव व्यथितोऽभूत्। तञ्च दशाहाभ्यन्तरे सूर्योदये सति म्रियस्वेति शशाप माण्डव्यः। ततस्तद्भार्या सूर्योदयानन्तरं किल मद्भर्तुर्मरणं स एव माभू दित्यूचे। ततश्च तत्प्रभावात्सूर्येऽनुदिते यज्ञादिलोपे प्राप्ते देवा ब्रह्माणमासाद्य प्रार्थयामासुः। स चावादीत्-तत्सखीमनसूयां प्रार्थयत, सा भवत्कार्यं करोतीति। ततस्तैः प्रार्थिता सत्यनसूया दशरात्रावधिकालमेक रात्रित्वेन कृत्वा सूर्योदयानन्तरं तद्भर्तुर्मरणे सति पुनरुज्जीवयिष्यामि इति वरं ददतेत्युक्त्वा तैर्वरं गृहीत्वा देवकार्यं कृतवतीति॥

अनामयम् आरोग्यम् । " अनामयं स्यादारोग्यम् " इत्यमरः ॥१८॥ दिष्ट्या भाग्येन धर्ममवेक्षसे पातिव्रत्यधर्ममवधानेन समीक्षसे ॥१९॥ ज्ञातिजनं बन्धुजनम् । मानम् अहङ्कारम् । वने अवरुद्धं चतुर्दशवर्षाणि वने वस्तव्यमिति पित्रा नियुक्तम् ॥ २०-२२ ॥ सर्वत्रयोग्यं सर्वावस्थासु रक्षणसमर्थम्

अभिवाद्य च वैदेही तापसीं तामनिन्दिताम् । बद्धाञ्जलिपुटा हृष्टा पर्यपृच्छदनामयम् ॥ १८ ॥ ततः सीतां महाभागां दृष्ट्वा तां धर्मचारिणीम् । सान्त्वयन्त्यब्रवीद्धृष्टा दिष्ट्या धर्ममवेक्षसे ॥ १९ ॥ त्यक्त्वा ज्ञातिजनं सीते मानमृद्धिं च भामिनि । अवरुद्धं वने रामं दिष्ट्या त्वमनुगच्छसि ॥२०॥ नगरस्थो वनस्थो वा पापो वा यदि वा शुभः । यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥ २१ ॥ दुःशीलः कामवृत्तो वा धनैर्वा परिवर्जितः । स्त्रीणामार्यस्वभावानां परमं दैवतं पतिः ॥ २२ ॥ नातो विशिष्टं पश्यामि बान्धवं विमृशन्त्यहम् । सर्वत्रयोग्यं वैदेहि तपःकृतमिवाव्ययम् ॥ २३ ॥ न त्वेनमवगच्छन्ति गुणदोषमसत्स्त्रियः । कामवक्तव्यहृदया भर्तृनाथाश्चरन्ति याः ॥२४॥ प्राप्नुवन्त्ययशश्चैव धर्मभ्रंशं च मैथिलि । अकार्यवशमापन्नाः स्त्रियो याः खलु तद्विधाः ॥२५॥ त्वद्विधास्तु गुणैर्युक्ता दृष्टलोकपरावराः । स्त्रियः स्वर्गे चरिष्यन्ति यथा धर्मकृतस्तथा ॥ २६ ॥

॥२३॥ कामवक्तव्यहृदयाः कामविषयवक्तव्यहृदयाः, कामरूपार्थाभिलाषिण्य इति यावत् । यद्वा मदनविधेयहृदयाः । भर्तृनाथाः भर्तॄणां नाथभूताः, भर्तृनियामिका इत्यर्थः । यद्वा भर्तारं नाथन्ते याचन्त इति तथा, परपुरुषकाङ्क्षिण्य इत्यर्थः ॥ २४-२६ ॥

अनामयम् आरोग्यम् ॥ १८ ॥ धर्ममवेक्षसे पातिव्रत्यधर्मं समीक्षसे । ज्ञातिजनं बन्धुजनम् । मानम् अहङ्कारम् । वने अवरुद्धं वस्तव्यतया पित्रा नियुक्तम् ॥ १९-२२ ॥ नात इति । सर्वत्रयोग्यं सर्वावस्थासु रक्षणसमर्थम् ॥ २३ ॥ कामवक्तव्यहृदयाः मदनविधेयहृदयाः । भर्तृनाथाः भर्तॄणां नाथभूताः भर्तृनियामिका इत्यर्थः । यद्वा भर्तारं नाथन्ते याचन्त इति तथा, परपुरुषकाङ्क्षिण्य इत्यर्थः ॥ २४-२६ ॥

समयानुवर्त्तिनी आचारानुवर्त्तिनी । " समयाः शपथाचारकालसिद्धान्तसंविदः " इत्यमरः । भर्तुः सहधर्मचारिणी भवस्व भव । आर्षमात्मनेपदम् । ततः भर्तुः सहधर्मचारिणीत्वेन यशश्च धर्मं च कालान्तरानुभाव्यसुखसाधनमदृष्टं च समाप्स्यसि । यद्वा भर्तुः सहधर्मचारिणी एवम्भूता त्वं ततः भर्तुः सहधर्मचारिणीत्वरूपहेतोः यशश्च भवस्व प्राप्नुहीत्यर्थः । धर्म च समाप्स्यसि भूप्राप्तावत्मनेपदीति गणपाठात् प्राप्त्यर्थस्य भवतेरात्मनेपदम् । पातिव्रत्यधर्मेण सर्वैः श्लाघां प्राप्य कालान्तरे तज्जन्यादृष्टद्वारा निरतिशयं श्रेयः समवाप्स्यसीत्यर्थः । इति धर्मचारिण्यनसूया सीतामब्रवीदिति

तदेवमेनं त्वमनुव्रता सती पतिव्रतानां समयानुवर्तिनी । भवस्व भर्त्तुः सहधर्मचारिणी यशश्च धर्मं च ततः समाप्स्यसि ॥ २७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

सा त्वेवमुक्ता वैदेही त्वनसूयाऽनसूयया । प्रतिपूज्य वचो मन्दं प्रवक्तुमुपचक्रमे ॥ १ ॥
नैतदाश्चर्य्यमार्याया यन्मां त्वमनुभाषसे । विदितं तु ममाप्येतद्यथा नार्य्याः पतिर्गुरुः ॥ २ ॥
यद्यप्येष भवेद्भर्ता ममार्ये वृत्तवर्जितः । अद्वैधमुपचर्तव्यस्तथाप्येष मया भवेत् ॥ ३ ॥
किंपुनर्यो गुणः श्लाघ्यः सानुक्रोशो जितेन्द्रियः । स्थिरानुरागो धर्मात्मा मातृवत्पितृवत्प्रियः ॥ ४ ॥

सम्बन्धः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥ अथ सीतानसूयासंवादोऽष्टादशोत्तरशततमे–सेति । अनसूया असूयारहिता । पातिव्रत्यधर्मोपदेशं गुणत्वेन गृहीतवतीत्यर्थः ॥ १ ॥ २ ॥ यद्यपीति । अद्वैधं द्वैधीभावरहितम् । उपचर्त्तव्यः गुणवत्त्वनिर्गुणत्वभेदं विहाय सम्यगुपचरणीय इत्यर्थः । मातृवत्प्रियः प्रियपरत्वात्, पितृवत्प्रियः अत्यन्त

तदेवमिति । एवं रामं पतिव्रतानां समयानुवर्तिनी पतिपुत्राणामाचारानुवर्तिनी ॥ २७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायां स[illegible]दशोत्तरशततमः सर्गः ॥ ११७ ॥ १ ॥ २ ॥ यद्यपीति । एष मे भर्ता वृत्तिवर्जितो यद्यपि तथापि अद्वैधं द्वैधीभावरहितं यथा तथा उपचर्तव्यः गुणवत्त्वनिर्गुणत्वभेदं विहाय सम्यगुपचरणीय इत्यर्थः ॥ ३ ॥ मातृवर्ती पितृप्रियः इति पाठः । मातृवर्ती मातृशुश्रूषकः । पितृप्रियः पितुः

हितपरत्वेन ॥ ३ ॥ ४ ॥ यामिति । नृपनारीणां सप्तम्यर्थे षष्ठी ॥ ५ ॥ ६ ॥ आगच्छन्त्या इति । श्वश्र्वा कौसल्यया यत्पातिव्रत्यधर्माचरणं समाहितम् उपदिष्टमित्यर्थः ॥ ७–९ ॥ सावित्रीति । तथावृत्तिस्त्वं च दिवं यातेत्युक्तिः पातिव्रत्यतपोमाहात्म्येन स्वर्गस्य हस्तगतत्वात् ॥ १० ॥

यां वृत्तिं वर्त्तते रामः कौसल्यायां महाबलः । तामेव नृपनारीणामन्यासामपि वर्त्तते ॥ ५ ॥ सकृद्दृष्टास्वपि स्त्रीषु नृपेण नृपवत्सलः । मातृवद्वर्त्तते वीरो मानमुत्सृज्य धर्मवित् ॥ ६ ॥ आगच्छन्त्याश्च विजनं वनमेवं भयावहम् । समाहितं मे श्वश्र्वा च हृदये तद्धृतं महत् ॥ ७ ॥ पाणिप्रदानकाले च यत्पुरा त्वग्निसन्निधौ । अनुशिष्टा जनन्याऽस्मि वाक्यं तदपि मे धृतम् ॥ ८ ॥ नवीकृतं च तत्सर्वं वाक्यैस्ते धर्मचारिणि । पतिशुश्रूषणान्नार्य्यास्तपो नान्यद्विधीयते ॥ ९ ॥ सावित्री पतिशुश्रूषां कृत्वा स्वर्गे महीयते । तथावृत्तिश्च याता त्वं पतिशुश्रूषया दिवम् ॥ १० ॥ वरिष्ठा सर्वनारीणामेषा च दिवि देवता । रोहिणी न विना चन्द्रं मुहूर्त्तमपि दृश्यते ॥ ११ ॥ एवंविधाश्च प्रवराः स्त्रियो भर्तृदृढव्रताः । देवलोके महीयन्ते पुण्येन स्वेन कर्मणा ॥ १२ ॥ ततोऽनसूया संहृष्टा श्रुत्वोक्तं सीतया वचः । शिरस्याघ्राय चोवाच मैथिलीं हर्षयन्त्युत ॥ १३ ॥ नियमैर्विविधैराप्तं तपो हि महदस्ति मे । तत्संश्रित्य बलं सीते छन्दये त्वां शुचिस्मिते ॥ १४ ॥ उपपन्नं मनोज्ञं च वचनं तव मैथिलि । प्रीता चास्म्युचितं किं ते करवाणि ब्रवीहि मे ॥ १५ ॥

॥ ११ ॥ एवंविधा इति । भर्तृदृढव्रताः अतिसङ्कटदशायामपि भर्तृविषयदृढव्रतयुक्ताः ॥ १२ ॥ १३ ॥ नियमैरिति । छन्दये वरं वृणीष्वेति प्रीतिविषय इत्यर्थः । तदेवाह–यामित्यादिश्लोकद्वयेन । नृपनारीणामित्यत्र सप्तम्यर्थे षष्ठी ॥ ४–६ ॥ आगच्छन्त्या इति । श्वश्र्वा कौसल्यया यत्पातिव्रत्यधर्माचरणं समाहितं उपदिष्टमित्यर्थः ॥७–९॥ तथा त्वं यातेत्युक्तिः पातिव्रत्यमहिम्ना स्वर्गस्य हस्तगतत्वादिति भावः ॥१०–१३॥ छन्दये वरं वृणीष्वेति प्रार्थये ॥ १४ ॥ १५ ॥



स०–सावित्री सत्यवान्नाम कश्चिद्राजा तस्य पत्नी । सा वने मृतं स्वभर्तारं यमं प्रतोष्य तद्वरादुज्जीवितवतीत्यादि कथा ज्ञेया । यातेति सिद्धवत्कृत्योक्तिः ॥ १० ॥

प्रार्थये ॥१४॥१५॥ मन्दविस्मया मन्दस्मितेत्यर्थः ॥१६॥ प्रहर्षं ते तुभ्यं सफलं करोमि करिष्यामि । अङ्गरागः कुङ्कुमहरिचन्दनादिः । अनुलेपनं कर्पूरागरुकस्तूरीप्रमुखपरिमलमिलितम् । अनुरूपं त्वद्गात्रानुरूपम् । असंक्लिष्टम् अबाधितशोभमित्यर्थः । भर्तारं शोभयिष्यसीत्यन्ते इत्यब्रवीच्चेत्य



तस्यास्तद्वचनं श्रुत्वा विस्मिता मन्दविस्मया । कृतमित्यब्रवीत्सीता तपोबलसमन्विताम् ॥ १६ ॥ सा त्वेवमुक्ता धर्मज्ञा तया प्रीततराऽभवत् । सफलं च प्रहर्षं ते हन्त सीते करोम्यहम् ॥ १७ ॥ इदं दिव्यं वरं माल्यं वस्त्रमाभरणानि च । अङ्गरागं च वैदेहि महार्हं चानुलेपनम् ॥ १८ ॥ मया दत्तमिदं सीते तव गात्राणि शोभयेत् । अनुरूपमसंक्लिष्टं नित्यमेव भविष्यति ॥ १९ ॥ अङ्गरागेण दिव्येन लिप्ताङ्गी जनकात्मजे । शोभयिष्यसि भर्तारं यथा श्रीर्विष्णुमव्ययम् ॥ २० ॥ सा वस्त्रमङ्गरागं च भूषणानि स्रजस्तथा । मैथिली प्रतिजग्राह प्रीतिदानमनुत्तमम् ॥ २१ ॥ प्रतिगृह्य च तत् सीता प्रीतिदानं यशस्विनी । श्लिष्टाञ्जलिपुटा तत्र समुपास्त तपोधनाम् ॥ २२ ॥ तथा सीतामुपासीनामनसूया दृढव्रता । वचनं प्रष्टुमारेभे कांचित् प्रियकथामनु ॥ २३ ॥ स्वयंवरे किल प्राप्ता त्वमनेन यशस्विना । राघवेणेति मे सीते कथा श्रुतिमुपागता ॥ २४ ॥ तां कथां श्रोतुमिच्छामि विस्तरेण च मैथिलि । यथानुभूतं कार्त्स्न्येन तन्मे त्वं वक्तुमर्हसि ॥ २५ ॥

ध्याहारः । सा अनसूया प्रीततराभवत् शोभयिष्यसीत्यब्रवीच्चेति सबन्धः ॥१७–२२॥ प्रियकथामनु प्रियां कथामुद्दिश्य । सीतां प्रष्टुं वचनमारेभे वचनं वक्तुमारेभे इत्यर्थः ॥ २३ ॥ श्रुतिमुपागता श्रुतिपथं प्राप्ता ॥ २४–२७ ॥

तस्या इति । मन्दविस्मया मन्दस्मितेत्यर्थः ॥ १६ ॥१७॥ अनुलेपनं अङ्गरागम् । अनुलेपनसाधनमङ्गरागमित्यर्थः । यद्वा उद्वर्तनादिना अङ्गानि रञ्जयतीत्यङ्गरागः कुङ्कुमचन्दनादिः । अनुलेपनं तु " कर्पूरागरुकस्तूरीतक्कोलैर्यक्षकर्दमम् । " इत्युक्तयक्षकर्दमवन्महापरिमलद्रव्यसहितमनुलेपनमित्यङ्गरागानुलेपनयोर्भेदः ॥१८॥ अनुरूपं त्वद्गात्रानुरूपम् । असंक्लिष्टम् अबाधितमित्यर्थः ॥ १९–२२ ॥ तथेति । प्रियकथामनु प्रियकथामुद्दिश्य ॥ २३ ॥ श्रुतिमुपागता श्रवणपथं प्राप्ता ॥२४–२७॥

तस्येति । कर्षतः "षङ्गवेन कृषति" इति श्रुत्या शोधनं कुर्वतः । क्षेत्रमण्डलं यागोपयोगिक्षेत्रम्, चयनस्थानमित्यर्थः ॥ २८ ॥ मुष्टिविक्षेपतत्परः "या जाता ओषधय इति चतुर्दशभिरोषधीर्वपति" इत्युक्तप्रकारेण ओषधिमुष्टिविकिरणतत्परः ॥ २९ ॥ अनपत्येन च तेन स्नेहान्मामङ्कमारोप्य इयं

एवमुक्ता तु सा सीता तां ततो धर्मचारिणीम् । श्रूयतामिति चोक्त्वा वै कथयामास तां कथाम् ॥ २६ ॥ मिथिलाधिपतिर्वीरो जनको नाम धर्मवित् । क्षत्त्रधर्मे ह्यभिरतो न्यायतः शास्ति मेदिनीम् ॥ २७ ॥ तस्य लाङ्गलहस्तस्य कर्षतः क्षेत्रमण्डलम् । अहं किलोत्थिता भित्त्वा जगतीं नृपतेः सुता ॥२८॥ स मां दृष्ट्वा नरपतिर्मुष्टिविक्षेपतत्परः । पांसुकुण्ठितसर्वाङ्गीं जनको विस्मितोऽभवत् ॥२९॥ अनपत्येन च स्नेहादङ्कमारोप्य च स्वयम् । ममेयं तनयेत्युक्त्वा स्नेहो मयि निपातितः ॥३०॥ अन्तरिक्षे च वागुक्ता प्रति माऽमानुषी किल । एवमेतन्नरपते धर्मेण तनया तव ॥३१॥ ततः प्रहृष्टो धर्मात्मा पिता मे मिथिलाधिपः । अवाप्तो विपुलामृद्धिं मामवाप्य नराधिपः ॥ ३२ ॥ दत्त्वा चास्मीष्टवद्देव्यै ज्येष्ठायै पुण्यकर्मणा । तया सम्भाविता चास्मि स्निग्धया मातृसौहृदात् ॥ ३३ ॥ पतिसंयोगसुलभं वयो दृष्ट्वा तु मे पिता । चिन्तामभ्यगमद्दीनो वित्तनाशादिवाधनः ॥ ३४ ॥

मम तनयेति चोक्त्वा स्नेहो मयि निपातितः । अङ्कम् उत्सङ्गम् ॥ ३० ॥ मा प्रति मामुद्दिश्य 'एवमेतन्नरपते धर्मेण तनया तव' इति अन्तरिक्षे अमानुषी वागुक्ता । यद्वा वागुक्ताप्रतिमेत्यत्र अप्रतिमेति च्छित्वा वाग्विशेषणतया वा योज्यम् ॥३१॥३२॥ दत्तेति । इष्टवद्देव्यै इच्छावत्यै देव्यै । पुण्यकर्मणा अनवरतयज्ञादिकर्मयुक्तेन जनकेन । सम्भाविता संवर्द्धितेत्यर्थः ॥३३॥ रामानु०—दत्तेति । पुण्यकर्मणेति तृतीयान्तः पाठः । केचिच्चतुर्थ्यन्तं पठित्वा देवीविशेषणं कुर्वन्ति ॥३३॥ पतिसंयोगसुलभमिति । पतिसंयोगे सति सुलभम् अन्यथा दुर्लभमित्यर्थः । पतिसंयोगं विना स्थातुमशक्ययौवनावस्थावादित्यर्थः ॥ ३४ ॥

क्षेत्रमण्डलं यागोपयोगिमण्डलाकारं क्षेत्रम् । कर्षतः शोधनार्थं कृषतः ॥ २८ ॥ मुष्टिविक्षेपतत्परः "या जाता ओषधयो देवेभ्यः" इत्यादिमन्त्रोक्तप्रकारेण औषधिमुष्टिविकिरणतत्पर इत्यर्थः ॥ २९ ॥ ३० ॥ अन्तरिक्षेति । अप्रतिमेतिच्छेदः ॥ ३१ ॥ ३२ ॥ इष्टवद्देव्यै पत्न्यै । सम्भाविता संवर्द्धितेत्यर्थः ॥३३॥ पतिसंयोगसुलभं

प्रधर्षणां तिरस्क्रियाम् ॥ ३५ ॥ अप्लवः प्लवरहितः ॥ ३६ ॥ अयोनिजामिति । सदृशम् अभिजनवृत्तादिना तुल्यम् । अनुरूपं प्रादुर्भूतयौवना प्रतिमरूपलावण्यादिना योग्यम् ॥ ३७ ॥ ३८ ॥ वरुणेन दत्तं वरुणेनातिसहकारिणा दत्तम् ॥ ३९-४१ ॥ भविष्यति न संशय इत्यत्र इतिकरणं

सदृशाच्चापकृष्टाच्च लोके कन्यापिता जनात् । प्रधर्षणमवाप्नोति शक्रेणापि समो भुवि ॥ ३५॥ तां धर्षणामदूरस्थां दृष्ट्वा चात्मनि पार्थिवः । चिन्तार्णवगतः पारं नाससादाप्लवो यथा ॥३६॥ अयोनिजां हि मां ज्ञात्वा नाध्यगच्छ द्विचिन्तयन् । सदृशं चानुरूपं च महीपालः पतिं मम ॥३७॥ तस्य बुद्धिरियं जाता चिन्तयानस्य सन्ततम् । स्वयं वरं तनूजायाः करिष्यामीति धीमतः ॥ ३८ ॥ महायज्ञे तदा तस्य वरुणेन महात्मना । दत्तं धनुर्वरं प्रीत्या तूणी चाक्षयसायकौ ॥ ३९ ॥ असञ्चाल्यं मनुष्यैश्च यत्नेनापि च गौरवात् । तन्न शक्ता नमयितुं स्वप्नेष्वपि नराधिपाः ॥४०॥ तद्धनुः प्राप्य मे पित्रा व्याहृतं सत्यवादिना । समवाये नरेन्द्राणां पूर्वमामन्त्र्य पार्थिवान् ॥ ४१ ॥ इदं च धनुरुद्यम्य सज्यं यः कुरुते नरः । तस्य मे दुहिता भार्या भविष्यति न संशयः ॥४२॥ तच्च दृष्ट्वा धनुः श्रेष्ठं गौरवा द्गिरिसन्निभम् । अभिवाद्य नृपा जग्मुरशक्तास्तस्य तोलने ॥ ४३ ॥ सुदीर्घस्य तु कालस्य राघवोऽयं महाद्युतिः । विश्वामित्रेण सहितो यज्ञं द्रष्टुं समागतः । लक्ष्मणेन सह भ्रात्रा रामः सत्यपराक्रमः ॥ ४४ ॥

द्रष्टव्यम् ॥ ४२ ॥ तोलने चालने ॥ ४३-५० ॥

वयः पाणिग्रहणोत्सवयोग्यं वयः ॥ ३४ ॥ जनात् कन्याग्रहीतृतत्सम्बन्धिजनात् । प्रधर्षणां तिरस्क्रियाम् ॥ ३५ ॥ अदूरस्थां तां धर्षणां समीपस्थां कन्यानिमित्त तिरस्क्रियामित्यर्थः । आत्मनि सन्दृश्य ममापि कार्यनिमित्ततिरस्कारो भवेदित्यालोच्येत्यर्थः ॥ ३६ ॥ सदृशम् अभिजनविद्यावृत्तादिना तुल्यम् । अभिरूपं वय स्सौन्दर्यादिना योग्यम् ॥३७॥३८॥ महायज्ञ इति । वरुणेन दत्तं देवैः प्रेरितेन वरुणेन दत्तमित्यर्थः ॥३९-४१॥ इदमिति न संशय इति पित्रा व्याहृतमिति पूर्वेण सम्बन्धः ॥ ४२ ॥ तोलने चालने ॥ ४३ ॥ ४४ ॥

रामानुजीयम्—सुतौ दशरथस्येमौ धनुर्दर्शनकाङ्क्षिणौ इत्यतः परम् धनुर्दर्शय रामाय राजपुत्राय दैविकम् । इत्युक्तस्तेन विप्रेण तद्धनुः समुपानयत् ॥ इति पाठक्रमः ॥ ४६ ॥





विश्वामित्रस्तु धर्मात्मा मम पित्रा सुपूजितः । प्रोवाच पितरं तत्र भ्रातरौ रामलक्ष्मणौ ॥ ४५ ॥ सुतौ दशरथस्येमौ धनुर्दर्शनकांक्षिणौ । धनुर्दर्शय रामाय राजपुत्राय दैविकम् ॥४६॥ इत्युक्तस्तेन विप्रेण तद्धनुः समुपानयत् । निमेषान्तरमात्रेण तदानम्य स वीर्य्यवान् ॥ ४७ ॥ ज्यां समारोप्य झटिति पूरयामास वीर्यवत् ॥ ४८ ॥ तेन पूरयता वेगान्मध्ये भग्नं द्विधा धनुः । तस्य शब्दोऽभवद्भीमः पतितस्याशनेरिव ॥ ४९ ॥ ततोऽहं तत्र रामाय पित्रा सत्याभिसन्धिना । निश्चिता दातुमुद्यम्य जलभाजनमुत्तमम् ॥ ५० ॥ दीयमानां न तु तदा प्रतिजग्राह राघवः । अविज्ञाय पितुश्छन्दमयोध्याधिपतेः प्रभोः ॥ ५१ ॥ ततः श्वशुरमामन्त्र्य वृद्धं दशरथं नृपम् । मम पित्रा त्वहं दत्ता रामाय विदितात्मने ॥ ५२ ॥ मम चैवानुजा साध्वी ऊर्मिला प्रियदर्शना । भार्य्यार्थे लक्ष्मणस्यापि दत्ता पित्रा मम स्वयम् ॥ ५३ ॥ एवं दत्तास्मि रामाय तदा तस्मिन् स्वयम्वरे । अनुरक्तास्मि धर्मेण पतिं वीर्यवतां वरम् ॥ ५४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदयोध्याकाण्डे अष्टादशोत्तरशततमः सर्गः ॥११८॥

दीयमानामिति । छन्दम् अभिप्रायम् । "वशाभिप्राययोश्छन्दः" इति वैजयन्ती ॥ ५१–५४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टादशोत्तरशततमः सर्गः ॥ ११८ ॥

इमौ धनुर्दर्शनकाङ्क्षिणौ । रामाय धनुर्दर्शयेति विश्वामित्रः पितरं प्रोवाचेति सम्बन्धः ॥ ४५–४७ ॥ ज्यामिति । वीर्यवत् सारवत् ॥ ४८ ॥ ४९ ॥ उत्तमं जलभाजनं उद्यम्य पित्राहं रामाय दातुमुद्यतेति सम्बन्धः ॥ ५० ॥ छन्दम् अभिप्रायम् ॥ ५१–५४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् अयोध्याकाण्डव्याख्यायाम् अष्टादशोत्तरशततमः सर्गः ॥ ११८ ॥

स०—सवीर्यवान् वीर्यवद्भिर्निरीक्षकैः क्षोणीशैः सहितः सवीर्यवान् । अनेन नैकान्तिकतास्य प्रमेयस्येति सूच्यते । विश्वासौ ईर्यः प्रेर्यश्च स गरुडोऽस्यास्तीति स वा ॥ ४८ ॥ जलभाजनं कमण्डलुम् उद्यम्य दातुमुद्यता ॥ ५० ॥ मम श्वशुरम् आमन्त्र्य आकारयित्वा ॥ ५२ ॥

अथात्र्याश्रमे रजनीमुषित्वा प्रातर्निर्गम एकोनविंशत्युत्तरशततमे–अनसूयेत्यादि ॥ १ ॥ २ ॥ रविरित्यादि । उपोह्य समीपं प्रापय्य स्वसंचाराद्वि विमुक्तं प्रदेशं प्रापय्येत्यर्थः ॥ ३ ॥ एत इति । कलशोद्यताः उद्यतकलशाः ॥ ४ ॥ कपोताङ्गारुणः कपोतकन्धरावदव्यक्तरागः । " अव्यक्तराग

अनसूया तु धर्मज्ञा श्रुत्वा तां महतीं कथाम् । पर्य्यष्वजत बाहुभ्यां शिरस्याघ्राय मैथिलीम् ॥ १ ॥ व्यक्ताक्षरपदं चित्रं भाषितं मधुरं त्वया । यथा स्वयम्वरं वृत्तं तत्सर्वं हि श्रुतं मया । रमेऽहं कथया ते तु दृढं मधुरभाषिणि ॥२॥ रविरस्तं गतः श्रीमानुपोह्य रजनीं शिवाम् । दिवसं प्रतिकीर्णानामाहारार्थं पतत्त्रिणाम् । सन्ध्याकाले निलीनानां निद्रार्थं श्रूयते ध्वनिः ॥३॥ एते चाप्यभिषेकार्द्रा मुनयः कलशोद्यताः । सहिता उपवर्तन्ते सलिलाप्लुतवल्कलाः ॥४॥ ऋषीणामग्निहोत्रेषु हुतेषु विधिपूर्वकम् । कपोताङ्गारुणो धूमो दृश्यते पवनोद्धतः ॥५॥ अल्पपर्णा हि तरवो घनीभूताः समन्ततः । विप्रकृष्टेऽपि देशेऽस्मिन्न प्रकाशन्ति वै दिशः ॥ ६ ॥ रजनीचरसत्त्वानि प्रचरन्ति समन्ततः । तपोवनमृगा ह्येते वेदितीर्थेषु शेरते ॥ ७ ॥ सम्प्रवृद्धा निशा सीते नक्षत्रसमलंकृता । जोत्स्नाप्रावरणश्चन्द्रो दृश्यतेऽभ्युदितोऽम्बरे ॥ ८ ॥ गम्यतामनुजानामि रामस्यानुचरी भव । कथयन्त्या हि मधुरं त्वयाहं परितोषिता ॥ ९ ॥

स्त्वरुणः " इत्यमरः ॥ ५ ॥ विप्रकृष्टेऽपि देशे अल्पपर्णाः ये तरवस्तेऽपि समन्ततः घनीभूताहि अव्यक्तपर्णान्तरालत्वात् सान्द्रीभूता इव । तत्र हेतुमाह न प्रकाशन्ति वै दिश इति ॥ ६ ॥ रजनीचरेति । वेदितीर्थेषु वेद्यवतरणप्रदेशेषु । " तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने । पात्रोपधावतरणेषु " इति वैजयन्ती ॥ ७ ॥ ८ ॥ अनुजानामि अनुमतिं करोमि । अनुचरी भवेति पाठः ॥ ९ ॥

॥ १ ॥ २ ॥ उपोह्य समीपं प्रापय्य । सन्ध्याकाले निद्रार्थं निलीनानां पतत्त्रिणां ध्वनिः श्रूयत इति सम्बन्धः ॥ ३ ॥ एते चेति । कलशोद्यताः उद्यतकलशाः ॥ ४ ॥ कपोताङ्गारुणः कपोताङ्गवदरुणः ॥ ५ ॥ अल्पपर्णा ये तरवः ते समन्ततः घनीभूताहि अव्यक्तपर्णान्तरालत्वात्सान्द्रभूता इव । तत्र हेतुः न प्रकाशन्ति वै दिश इति ॥ ६ ॥ वेदितीर्थेषु वेदिस्थानेषु ॥ ७–९ ॥

अलङ्कुर्विति । अलङ्कुरु आत्मानमिति शेषः ॥ १०–१२॥ न्यवेदयदिति । प्रीत्या दीयत इति प्रीतिदानम् । कर्मणि ल्युट् । वसनाभरणस्रजां समाहारो वसनाभरणस्रजम् "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति समासान्तष्टच् । वसनाभरणस्रजामितिपाठे प्रीतिदानमिति भावे ल्युट् ॥ १३–१५ ॥

अलङ्कुरु च तावत्त्वं प्रत्यक्षं मम मैथिलि । प्रीतिं जनय मे वत्से दिव्यालङ्कारशोभिता ॥ १० ॥ सा तथा समलंकृत्य सीता सुरसुतोपमा । प्रणम्य शिरसा तस्यै रामं त्वभिमुखी ययौ ॥ ११ ॥ तथा तु भूषितां सीतां ददर्श वदतां वरः । राघवः प्रीतिदानेन तपस्विन्या जहर्ष च ॥ १२ ॥ न्यवेदयत्ततः सर्वं सीता रामाय मैथिली । प्रीतिदानं तपस्विन्या वसनाभरणस्रजम् ॥ १३ ॥ प्रहृष्टस्त्वभवद्रामो लक्ष्मणश्च महारथः । मैथिल्याः सत्क्रियां दृष्ट्वा मानुषेषु सुदुर्लभाम् ॥ १४ ॥ ततस्तां शर्वरीं प्रीतः पुण्यां शशिनिभाननः । अर्चितस्तापसैः सिद्धैरुवास रघुनन्दनः ॥ १५ ॥ तस्यां रात्र्यां व्यतीतायामभिषिच्य हुताग्निकान् । आपृच्छेतां नरव्याघ्रौ तापसान् वनगोचरान् ॥ १६ ॥ तावूचुस्ते वनचरास्तापसा धर्मचारिणः । वनस्य तस्य सञ्चारं राक्षसैः समभिप्लुतम् ॥ १७ ॥ रक्षांसि पुरुषादानि नानारूपाणि राघव । वसन्त्यस्मिन् महारण्ये व्यालाश्च रुधिराशनाः ॥ १८ ॥ उच्छिष्टं वा प्रमत्तं वा तापसं धर्मचारिणम् । अदन्त्यस्मिन् महारण्ये तान्निवारय राघव ॥ १९ ॥ एष पन्था महर्षीणां फलान्याहरतां वने । अनेन तु वनं दुर्गं गन्तुं राघव ते क्षमम् ॥ २० ॥

तस्यामिति । अभिषिच्य हुताग्निकान् स्नात्वा कृतहोमान् ॥ १६ ॥ ताविति । वनस्य सञ्चारं कन्दमूलफलाद्याहरणार्थं सञ्चारम् । राक्षसैः समभिप्लुतं सम्यक् उपद्रुतमूचुः ॥ १७ ॥ रक्षांसीति । व्यालाः हिंस्रपशवः । "सर्प्पहिंस्रपशू व्यालौ" इत्यमरः ॥ १८–२० ॥ रामा०–एष इति । क्षमं युक्तम् ॥ २० ॥

अलङ्कुरु आत्मानमिति शेषः ॥ १०–१२ ॥ न्यवेदयदिति । प्रीतिदानं प्रीत्या दीयत इति प्रीतिदानम् । कर्मणि ल्युट् । वसनाभरणस्रजां समाहारो वसनाभरणस्रजम् । वसनाभरणस्रजाम् इति वा पाठः ॥ १३–१६ ॥ वनस्य सञ्चारम् कन्दमूलफलाहरणार्थं सञ्चारम् । राक्षसैस्समभिप्लुतं सम्यगुपद्रुतमित्यूचुरितिसम्बन्धः ॥ १७ ॥ व्यालाः पशवः । "सर्पहिंस्रपशू व्यालौ" इति निघण्टुः ॥ १८ ॥ १९ ॥ एष इति । क्षमं युक्तम् ॥ २० ॥

इतीवेति। तैः प्राञ्जलिभिः तपस्विभिः द्विजैः कृतस्वस्त्ययनः कृतमङ्गलाशीर्वचनः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥ ॥ ॥

इतीव तैः प्राञ्जलिभिस्तपस्विभिर्द्विजैः कृतः स्वस्त्ययनः परं तपः।
वनं सभार्य्यः प्रविवेश राघवः सलक्ष्मणः सूर्य्यमिवाभ्रमण्डलम् ॥ २१ ॥

इत्यार्षे श्रीरामायणे श्रीवाल्मीकीये आदिकाव्ये चतुर्विंशत्सहस्त्रिकायां संहितायां श्रीमदयोध्याकाण्डे एकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥ इत्ययोध्याकाण्डः ॥ २ ॥

इत्थं श्रीमच्छठारेश्चरणसरसिजद्वन्द्वनिर्द्वन्द्वसेवानिर्धूताशेषमोहो निरुपमधिषणः कौशिकानां कुलेन्दुः । गोविन्दार्य्योऽनिवार्य्यप्रतिकथकगजस्तोमपञ्चास्यरूपष्टीकां पीताम्बराख्यां व्यतनुत विपुलां साधुसाकेतकाण्डे ॥ १ ॥ अयोध्याकाण्डः समाप्तः ॥ २ ॥

इतीवेति इतीव पूर्वोक्तमार्गप्रकारेणैव द्विजैः कृतस्वस्त्ययनः कृतमङ्गलाशीर्वादः ॥ २१ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यनारायणतीर्थशिष्यश्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामयोध्याकाण्डव्याख्यायाम् एकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥ महेशतीर्थरचिता रामपादसमर्पिता । टीकात्वयोध्याकाण्डस्य समाप्ता तत्त्वदीपिका ॥ अपाङ्गजनिताशेषसम्पदम्भोधिसम्भवा । लक्ष्मीः स्थितिमती भूयादस्माकं भवने सदा ॥

स०—अभ्रमण्डलम् आकाशमण्डलं मेघमण्डलं वा । " अभ्रं नभः स्वर्गवलाहकेषु " इति यादवः ॥ २१ ॥

---

श्रीमदयोध्याकाण्डपठनश्रवणयोः फलम्—ब्रह्माण्डपुराणे सप्तचत्वारिंशदुत्तरशततमे अध्याये—

काण्डं द्वितीयं शृण्वन् यः प्रोक्तेन नियमेन तु । सोऽग्निसायुज्यमाप्नोति पठनाद्वापि शाश्वतः ॥

अयोध्याकाण्डः समाप्तः ॥

## ॥ इति श्रीमद्वाल्मीकिरामायणे अयोध्याकाण्डम् ॥

श्री भूषणादिव्याख्याचतुष्टयालंकृतं मुनिभावप्रकाशिकादिव्याख्योद्धृतटिप्पणीसंवलितं च समाप्तम् ॥

# THE VĀLMĪKĪYA RĀMĀYAṆA

# श्रीमद्वाल्मीकीयरामायणम्

श्री-गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्यव्याख्याचतुष्टयालङ्कृतम्

## अरण्यकाण्डम्

# श्रीमद्वाल्मीकीयरामायणम्

# THE VALMIKIYARAMAYANA

श्री गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्याव्याख्याचतुष्टयालङ्कृतं
मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृत टिप्पणी संवलितं च

# महापुराणम्

१. ब्रह्म महापुराणम्
२. पद्म महापुराणम्
३. विष्णु महापुराणम्
४. शिव महापुराणम्
५. नारदीय महापुराणम्
६. मार्कण्डेय महापुराणम्
७. अग्नि महापुराणम्
८. भागवत महापुराणम्
९. भविष्य महापुराणम्
१०. ब्रह्मवैवर्त महापुराणम्
११. लिंग महापुराणम्
१२. वाराह महापुराणम्
१३. स्कन्द महापुराणम्
१४. वामन महापुराणम्
१५ कूर्म महापुराणम्
१६. मत्स्य महापुराणम्
१७ गरुड महापुराणम्
१८. ब्रह्माण्ड महापुराणम्
१९. वायु महापुराणम्
२०. विष्णुधर्मोत्तरपुराणम्

हरिवंश पुराणम् : देवीभागवतम्
वासुकि पुराणम् : कालिका पुराणम्
कल्किपुराणम् : एकाम्रपुराणम्
सौर पुराणम् : नरसिंह पुराणम्

---

[महाभारत-नीलकंठी टीका सहित]

क्षेमराज श्रीकृष्णदासेन सम्पादितस्य मुम्बई श्री वेंकटेश्वरस्टीम मुद्रणालयेन प्रकाशितस्य पुनर्मुद्रणम्

# श्रीमद्वाल्मीकीयरामायणम्

# THE VALMIKIYARAMAYANA

[श्री-गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्यव्याख्या चतुष्टयालङ्कृतं मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृत टिप्पणी संवलितम् च]

तृतीय खण्ड :: आरण्यकाण्डम्-किष्किन्धाकाण्डम्





NAG PUBLISHERS
11A/U. A. Jawahar Nagar, Delhi-7 (India)

**NAG PUBLISHERS**

(i) 11A/U. A. (Post Office Building), Jawahar Nagar, Delhi-110007
(ii) 8A/U.A. 3, Jawahar Nagar, Delhi-110007
(iii) Jalalpur Mafi (Chunar-Mirzapur) U. P.

I S B N 81-7081-232-1

1990

Price ; Rs. 1800.00 (For 6 vols. set)



**PRINTED IN INDIA**

Published by Nag Sharan Singh for Nag Publishers 11A/U.A., Jawahar Nagar, Delhi-110007 and printed at New Gian offset Printers Delhi

# ॥ अथ श्रीमद्वाल्मीकिरामायणे आरण्यकाण्डम् ॥

श्री भूषणादिव्याख्याचतुष्टयालंकृतं मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृतटिप्पणीसंवलितं च ॥

श्रीरङ्गेशाय नमः ॥ वात्स्यश्रीशठकोपदेशिकवरश्रीपादरेण्वञ्जनैर्दृष्ट्या निर्मलया निरीक्ष्य बहुधा वल्मीकजन्माशयम् । श्रीमत्कौशिकवंशसागरमणिर्गोविन्द राजाह्वयो व्याचक्षेऽहमरण्यकाण्डमधुना पश्यन्तु निर्मत्सराः ॥ श्रीरामायणराजस्य दत्त्वा पीताम्बरं महत् । अर्पये परया लक्ष्म्या राजन्तीं रत्नमेखलाम् ॥

एवं पूर्वस्मिन् काण्डे जगज्जन्मादिकारणस्य वेदान्तवेद्यस्य ब्रह्मणो निरस्तसमस्ताविद्यत्वं नित्यानन्दपरिपूर्णत्वं निखिलान्तर्यामित्वं निरतिशयौ

**श्रीरङ्गेशाय नमः ॥ प्रविश्य तु महारण्यं दण्डकारण्यमात्मवान् । ददर्श रामो दुर्धर्षस्तापसाश्रममण्डलम् ॥ १ ॥**
**कुशचीरपरिक्षिप्तं ब्राह्मया लक्ष्म्या समावृतम् । यथा प्रदीप्तं दुर्दर्शं गगने सूर्यमण्डलम् ॥ २ ॥**

ज्ज्वल्यं निरुपमधर्मप्रवर्तकत्वमित्याद्यनन्तकल्याणगुणजातमुपवर्णितम् । सम्प्रति सज्जनसंरक्षणरूपं धर्मविशेषमभिधातुमारण्यकाण्ड आरभ्यते । यद्वा पूर्व काण्डे पितृवचनपरिपालनरूपो धर्मः सद्भिरनुष्ठातव्य इति प्राधान्येन दर्शितम् । अथ सज्जनसंरक्षणरूपं धर्मविशेषं प्रतिपादयितुमारण्यकाण्ड आरभ्यते— प्रविश्येत्यादि । तुशब्दः पूर्वारण्यवैलक्षण्यं द्योतयति । महारण्यम् इतरदुरवगाहम् । दण्डकारण्यं दण्डकस्य राज्ञोऽरण्यं शुक्रशापादरण्यभूतं जनपदम् । प्रविश्य आत्मवान् धैर्यवान्, दुरवगाहमहागहनप्रवेशेप्यजनितभयलेश इत्यर्थः । तत्र हेतुमाह दुर्धर्ष इति । हिंस्रादिभिरप्रधृष्य इत्यर्थः । रामः तापसानां तपस्विनाम् । आश्रममण्डलम् आश्रमसमूहम् । "तपोवने मठे ब्रह्मचर्यादावाश्रमोऽस्त्रियाम्" इति बाणः । ददर्श ॥ १ ॥ अभिगम्यत्वायाश्रममण्डलं वर्णयति—कुशेत्यादिभिः सार्धसप्तश्लोकैः । कुशैः यज्ञार्थमाहृतैः चीरैः स्नानानन्तरमातपे परिशोषणार्थं क्षिप्तैर्वल्कलैश्च परिक्षिप्तं व्याप्तम् । ब्रह्म वेदः तत्सम्बन्धिनी वेदाध्ययनतदर्थानुष्ठानजन्येत्यर्थः । तया लक्ष्म्या श्रिया समावृतं समन्तादावृतम् अत एव गगने प्रदीप्तं, गगनमध्यस्थमित्यर्थः । दुर्दर्शं सूर्यमण्डलं यथा तथावस्थितमित्यर्थः । तद्वद्रक्षोभिरनभिभवनीयम् । उदयास्तमययोर्हि सूर्यस्य मन्देहाख्यरक्षोभिराक्रमणम् नतु मध्याह्ने ॥ २ ॥

श्रीरामचन्द्राय नमः ॥ 'इक्ष्वाकुवंशप्रभवः' इत्यारभ्य 'दण्डकान्प्रविवेशह' इत्यन्तेन ग्रन्थसन्दर्भेण संक्षिप्य नारदेनोक्तं श्रीरामचरितं सर्वलोकोपकारकं महाप्रबन्धेनोक्त्वा अधुना देवस्य दण्डकारण्यसञ्चारसमुद्भूतानद्भुतान्पराक्रमान्विस्तरेण वक्तुं तृतीयकाण्डमारभते—प्रविश्येत्यादि । आत्मवान् धृतिमान् "आत्मा जीवे धृतौ च" इति यादवः । दुर्धर्षः द्विषद्भिरप्रधृष्यः, तिरस्कर्तुमशक्य इत्यर्थः । महारण्यमिति सामान्येनोक्तस्य दण्डकारण्यमिति विशेषसंज्ञा । दण्डकनाम्ना राज्ञा परिपालितो देशः शुक्रशापादरण्यमभूदित्युत्तरकाण्डे वक्ष्यति । मण्डलं समूहः ॥ १ ॥ तापसाश्रममण्डलं वर्णयति—कुशेत्यादिना सार्द्धसप्तश्लोकैः । चीराणि वल्कलानि । परिक्षिप्तं व्याप्तम् । ब्राह्मी लक्ष्मीः तपोजनिततेजोविशेषः तया समावृतम् । तया समावृतत्वादेव गगनाधिकरणसूर्यमण्डलवद्दुर्दर्शं रक्षोऽसुरादिभिर्द्रष्टु

अत एव शरण्यं शरणार्हम् "तदर्हति" इति यत्प्रत्ययः । सहजवैरप्रयुक्तवध्यघातुकभावाभावेन सर्वप्राणिनां वरणीयमित्यर्थः । रक्षोभ्यो भीतानां वासार्हं वा । "शरणं गृहरक्षित्रोः" इत्यमरः । सदा सुसंमृष्टाजिरं सदा सम्यक् संमृष्टाङ्गणम् । "अङ्गणं चत्वराजिरे" इत्यमरः । सर्वभूतशरण्यत्वं प्रपञ्चयति मृगैरिति॥३॥ प्रनृत्तं प्रकृष्टनृत्तवत् । अर्श आद्यच् । बहुव्रीहिर्वा । अतिरमणीयप्रदेशत्वाद्देवतासान्निध्याद्वा नर्तनम् अत एव पूजितम् । अग्निशरणैः अग्निहोत्रगृहैः ।

**शरण्यं सर्वभूतानां सुसंमृष्टाजिरं तथा । मृगैर्बहुभिराकीर्णं पक्षिसङ्घैः समावृतम् ॥३॥ पूजितं च प्रनृत्तं च नित्यमप्सरसां गणैः । विशालैरग्निशरणैः स्रुग्भाण्डैरजिनैः कुशैः ॥४॥ समिद्भिस्तोयकलशैः फलमूलैश्च शोभितम् । आरण्यैश्च महावृक्षैः पुण्यैः स्वादुफलैर्वृतम् ॥ ५ ॥ बलिहोमार्चितं पुण्यं ब्रह्मघोषनिनादितम् । पुष्पैर्वन्यैः परिक्षिप्तं पद्मिन्या च सपद्मया ॥६॥ फलमूलाशनैर्दान्तैश्चीरकृष्णाजिनाम्बरैः। सूर्यवैश्वानराभैश्च पुराणैर्मुनिभिर्वृतम् ॥७॥ पुण्यैश्च नियताहारैः शोभितं परमर्षिभिः । तद्ब्रह्मभवनप्रख्यं ब्रह्मघोषनिनादितम् । ब्रह्मविद्भिर्महाभागैर्ब्राह्मणैरुपशोभितम् ॥८॥**

स्रुङ्मुखानि भाण्डानि यज्ञपात्राणि स्रुग्भाण्डानि "स्फ्यश्च कपालानि च" इत्याद्याम्नातानि तैः। "वणिङ्मूलधने पात्रे भाण्डम्" इति वैजयन्ती। कुशैः परिस्तरणार्थैः। कुशचीरेत्यत्र संगृहीतकुशोक्तिः ॥४॥ अरण्ये भवैः आरण्यैः ॥५॥ बलिभिः भूतबलिप्रभृतिभिः होमैर्वैश्वदेवादिहोमैश्च अर्चितं सत्कृतम् । ब्रह्मघोषैर्वेदघोषैः निनादितं सञ्जातनिनादम् । पुष्पैः देवपूजार्थमुपक्षिप्तैः । सपद्मया पद्मसहितया पद्मिन्या सरस्या ॥ ६ ॥ मुनिषु तारतम्यप्रदर्शनार्थं सूर्यवैश्वानराभैरित्युपमानद्वयम् । पुराणैर्वृद्धैः ॥७॥ परमर्षिभिः उक्तमुनीनामपि पूजनीयैः । तत् प्रसिद्धं ब्रह्मभवनप्रख्यं ब्रह्मलोकतुल्यप्रसिद्धिकम् । ब्रह्मघोषैः कर्मकालिकवेदमन्त्रघोषैः निनादितम् । ब्रह्मविद्भिः परब्रह्मज्ञानिभिः । महाभागैः महाभाग्यैः । " भागो रूपार्थके प्रोक्तो भागधेयैकदेशयोः" इति विश्वः । एतादृशं तापसाश्रममण्डलं ददर्शेति पूर्वेणान्वयः ॥ ८ ॥

मशक्यम् ॥ २ ॥ शरण्यम् आवासार्हम् । सुसंमृष्टाजिरम् अलंकृतप्राङ्गणमित्यर्थः ॥ ३ ॥ अप्सरसां गणैरुपनृत्तम् उपसमीपे नृत्तवत् । अर्श आद्यच् । बहुव्रीहिर्वा । अतिमनोहरप्रदेशत्वात्तैः पूजितं पूज्यमानम् । अग्निशरणानि दक्षिणाग्निगार्हपत्याहवनीयसभ्यावसथ्यशालाः । स्रुग्भाण्डैः स्रुक्स्रुवादियागोपकरणजातैः । " सर्वं मावपनं भाण्डम् " इत्यमरः ॥ ४ ॥ अरण्ये भवा आरण्याः ॥ ५ ॥ बलिहोमार्चितं बलिभिर्वैश्वदेवादिबलिभिर्होमैः शोभितम् । ब्रह्मघोषनिनादितं वेदघोषयुक्तम् । पद्मिनी पद्मसरः । पद्मयः पद्मपुष्पयुक्तया ॥ ६ ॥ पुराणैः वृद्धैः ॥ ७ ॥ ब्रह्मभवनं ब्रह्मलोकः । ब्रह्मघोषः वेदघोषः । ब्रह्मविद्भिस्सर्वत्र ब्रह्मानन्यत्वज्ञानवद्भिः ब्राह्मणै

स इति । विज्यं विसृष्टमौर्वीकं कृत्वा विनीतवेषप्रवेश्यत्वादाश्रमाणामाश्रममृगपक्ष्यादिभयनिवृत्त्यर्थं च विज्यकरणम् । अभ्यगच्छत् अभिमुखीभूय गतः ॥ ९ ॥ दिव्येति । दिव्यं लोकविलक्षणं ज्ञानं तेन उपपन्ना युक्ताः, अतीतानागतज्ञानवन्त इत्यर्थः । रामोऽयं रावणवधार्थमवतीर्णो विष्णुः, सीता लक्ष्मीः, लक्ष्मणश्च तदंश इति विज्ञाततदवताररहस्या इति यावत् ॥ १० ॥ तनिश्लोकी—दिव्यज्ञानोपपन्नाः अवताररहस्यरूपदिव्यज्ञानोपपन्नाः । " जन्म

स दृष्ट्वा राघवः श्रीमान् तापसाश्रममण्डलम् । अभ्यगच्छन्महातेजा विज्यं कृत्वा महद्धनुः ॥ ९ ॥ दिव्यज्ञानोपपन्नास्ते रामं दृष्ट्वा महर्षयः । अभ्यगच्छंस्तथा प्रीता वैदेहीं च यशस्विनीम् ॥ १० ॥ ते तं सोममिवोद्यन्तं दृष्ट्वा वै धर्मचारिणः । लक्ष्मणं चैव दृष्ट्वा तु वैदेहीं च यशस्विनीम् । मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन् दृढव्रताः ॥ ११ ॥

कर्म च मे दिव्यम्" इति स्मृतेः । महर्षयः अलौकिकतत्त्वसाक्षात्कारसमर्थाः । प्रीताः भक्तिप्रेरिताः अभ्यगच्छन् प्रत्युत्थानं चक्रुः ॥ १० ॥ ते तमित्यादिसार्धश्लोक एकान्वयः । ते त्रिकालज्ञाः । तं राक्षसनिरासायावतीर्णं रामम् । उद्यन्तं सोममिव स्थितम् अन्धकारनिवर्तनप्रवृत्तं चन्द्रमिव स्थितम् । यद्वा उद्यन्तं सोममिव प्रतिपच्चन्द्रमिवार्चनीयम् । यद्वा वनराज्यन्तःप्रादुर्भवत्तया मेघावृतमिन्दुमिव स्थितम् । धर्मचारिणो दृष्ट्वा स्वाचर्यमाणधर्माराध्यं साक्षात्कृत्य । यद्वा इतःपूर्वं धर्मवीर्येण पश्यन्ति सम्प्रति चक्षुषा साक्षात्कुर्वन्तीत्यर्थः । तथा लक्ष्मणं च वैदेहीं च दृष्ट्वा मङ्गलानि प्रयुञ्जानाः स्वापेक्षितरक्षाभ्यर्थनात् प्रागेव मङ्गलानि प्रयुञ्जानाः । रामस्य सौन्दर्यसौकुमार्यादिकं दृष्ट्वा रक्षोभूयिष्ठेऽत्र वने किं भविष्यतीति व्याकुलहृदयतया तस्मै विरोधिनिरसनवचनानि प्रयुञ्जानाः । दृढव्रताः अशिथिलतद्रक्ष्यत्वनियमाः सन्तः । प्रत्यगृह्णन् प्रतिगृहीतवन्तः । प्रत्युत्थानफलप्रदानाद्युपचारमकुर्वन्नित्यर्थः ॥ ११ ॥

रुक्तलक्षणैः । अन्वर्थब्राह्मणैस्तादृशैर्युक्तत्वादेव ब्रह्मभवनप्रख्यत्वमाश्रमस्य ॥ ८ ॥ स इति । विज्यम् अवरोपितगुणं कृत्वेति आश्रमवर्तिमृगपक्षित्रासनिवृत्त्यर्थमिति शेषः ॥ ९ ॥ दिव्यज्ञानोपपन्नाः श्रीराम एव तारकं ब्रह्मेति ज्ञानवन्त इत्यर्थः । महर्षयः अलौकिकतत्त्वसाक्षात्कारसमर्थाः रामं दृष्ट्वा चकाराल्लक्ष्मणं च तथा प्रीतास्सन्तः अभ्यगच्छन् आभिमुख्येन जग्मुरित्यर्थः ॥ १० ॥ त इति । रामं दृष्ट्वा लक्ष्मणं च वैदेहीं च दृष्ट्वा मङ्गलानि भवन्त्विति आशीर्वचनानि प्रयुञ्जानाः उद्यन्तं सोममिव सकलजगदानन्दकरं तं राममेव स्वेष्टदेवतात्वेन प्रत्यगृह्णन् स्वीचक्रुरित्यर्थः ॥ ११ ॥

ति०—उद्यन्तं सोममिव तद्वत्प्रियदर्शनम् " तस्मात्सोमराजानो ब्राह्मणाः " इति श्रुतेः स्वकुलरक्षकं सोममिव स्वरक्षकं धर्मचारिणं रामं दृष्ट्वा । यशस्विनी पातिव्रत्ययशोवती रक्षःकुलसंहारहेतुत्वरूपयशोवती वा सीतां च दृष्ट्वा अत एवाग्रे रक्षणप्रार्थनोपपद्यते । मङ्गलानि आशीर्वादान् ॥ ११ ॥

तनि०—प्रत्यगृह्णन् आत्मीयताकरणं प्रतिग्रहः। निसृष्टात्मा सुहृत्सु चेति वक्ष्यति ॥ ११ ॥ मङ्गलाशासननिमित्तं सौन्दर्यसौकुमार्यादिकमाह—रूपेति। रूपस्य शरीरस्य संहननं 'समः समविभक्ताङ्गः' इत्युक्तावयवसंस्थानविशेषम्। लक्ष्मीं समुदायशोभाम्। सौकुमार्यं पुष्पहासतुल्यकोमलताम्। सुवेषतां शोभन लावण्यवत्ताम्। लावण्यस्वरूपमुक्तम्—"मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते॥" इति। विस्मितानामाकारा इवा

**रूपसंहननं लक्ष्मीं सौकुमार्यं सुवेषताम्। ददृशुर्विस्मिताकारा रामस्य वनवासिनः ॥ १२ ॥**
**वैदेहीं लक्ष्मणं रामं नेत्रैरनिमिषैरिव। आश्चर्यभूतान् ददृशुः सर्वे ते वनचारिणः ॥ १३ ॥**

कारा येषां ते विस्मिताकाराः, विस्मयावेदकस्वमुखप्रसादफुल्लनेत्रत्वादियुक्ता इत्यर्थः। वनवासिनः विकारहेतौ सत्यप्यविकृतचित्ता इत्यर्थः। वनवासिनोऽपि विस्मिताकाराः सन्तः रामस्य रूपसंहननादिकं ददृशुः। अभेदेन प्रत्ययद्योतनार्थं चकाराप्रयोगः। यद्वा अभूपणेपि भूपितवद्भासमानत्वं रूपम्। तथोक्तम् "अङ्गान्यभूपितान्येव वलयाद्यैर्विभूपणैः। येन भूपितवद्भाति तद्रूपमिति कथ्यते॥" इति। संहननं सौन्दर्यम्। तदप्युक्तम्—"अङ्गप्रत्यङ्गकानां यः सन्निवेशो यथोचितः। सुश्लिष्टसन्धिबन्धः स्यात्तत्सौन्दर्यमिहोच्यते॥" इति। लक्ष्मीं लावण्यं, तच्चोक्तं पूर्वमेव सौकुमार्यमप्युक्तमेव। सुवेपताम् उचितशृङ्गारसंपन्नत्वम् ॥ १२ ॥ एतं न्यायं सीतालक्ष्मणयोरप्यतिदेष्टुमाह—वैदेहीमिति। सर्वे वनचारिणः। आश्चर्यभूतान् अदृष्टपूर्वतया आश्चर्यावहान्। वैदेहीं लक्ष्मणं रामं च दिव्यरूपदर्शनजनितानन्दभङ्गभीरुतया विस्मयविस्फारितेक्षणतया च सर्वथा निर्निमेपैरिव स्थितैर्नेत्रैरुपलक्षिताः सन्तः ददृशुः। अनेन पूर्वश्लोके विस्मिताकारा इत्येतद्विवृतम् ॥ १३ ॥ तनि०—नेत्रैरनिमिपैरिव जगन्मोहनदिव्यमङ्गलविग्रहदर्शनानन्दाविच्छेदभयेन निमेपरहितैर्नेत्रैः। इवशब्दो वाक्यालङ्कारे।

रूपेति। रामस्य रूपादिकं वनवासिनो मुनयः ददृशुरिति सम्बन्धः। रूपं नाम—" अङ्गान्यभूषितान्येव प्रेक्षणीयैर्विभूषणैः। येन भूषितवद्भाति तद्रूपमिति कथ्यते ॥" इति। संहननम् अवयवानां संश्लिष्टसन्धिबन्धः सौन्दर्यम्—" अङ्गप्रत्यङ्गकानां यस्सान्निवेशो यथोचितम्। सुश्लिष्टसन्धिबन्धस्तत्सौन्दर्यमिति चोच्यते ॥" लक्ष्मीः कान्तिः लावण्यमित्यर्थः। "मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु लावण्यं तन्निगद्यते ॥" सौकुमार्यं मार्दवम्। सुवेषताम् उचितशृङ्गारसम्पन्नताम्। विस्मिताकाराः विस्मितोऽन्तःकरणधर्मः अद्भुतवस्तुदर्शनजन्यः, आकारः तद्व्यञ्जकमुखप्रसादविस्फारितेक्षणत्वादिः तद्वन्तः ॥ १२ ॥ वैदेहीमिति। वनचारिणः पशुपक्षिमृगादयः। अयं भावः—पद्मभवप्रमुखानामप्यगोचरो भगवान् सीतालक्ष्मणोपेतः श्रीरामः पङ्गोरुपरि गङ्गाप्रवाहवदस्माकमपि पुरतः प्रादुरासीदिति सकलजगन्मोहनदिव्यमङ्गलविग्रहदर्शनानन्दविच्छेदभयेन निमेषरहितैर्नेत्रैर्मृगादयोप्याश्चर्यभूता ददृशुरित्यर्थः।

अनिमिषत्वे हेतुमाह आश्चर्यभूतानिति ॥ १३ ॥ अत्रेति । अत्र आश्रममण्डले । महाभागाः महाभाग्याः ऋषयः । सर्वभूतहिते रतम् अतिथिं न्यायतः पूजार्हम् । एवं राघवं पर्णशालायां स्वस्वपर्णशालायां सन्न्यवेशयन् स्थापयामासुः ॥१४॥ तत इति । रामस्य सत्कृत्येति षष्ठ्यार्षी । "न लोकाव्ययनिष्ठा–" इत्यादिना निषेधात् । सत्कृत्य सत्कारं कृत्वा, कुशलप्रश्नादिकं कृत्वेत्यर्थः । पावकोपमा इत्यनेन रामस्य पवित्राणां पवित्रत्वमुक्तम् । धर्मचारिण

अत्रैनं हि महाभागाः सर्वभूतहिते रतम् । अतिथिं पर्णशालायां राघवं सन्न्यवेशयन् ॥ १४ ॥ ततो रामस्य सत्कृत्य विधिना पावकोपमाः । आजह्रुस्ते महाभागास्सलिलं धर्मचारिणः ॥ १५ ॥ मूलं पुष्पं फलं वन्यमाश्रमं च महात्मनः । निवेदयित्वा धर्मज्ञास्ततः प्राञ्जलयोऽब्रुवन् ॥ १६ ॥ धर्मपालो जनस्यास्य शरण्यस्त्वं महायशाः । पूजनीयश्च मान्यश्च राजा दण्डधरो गुरुः ॥ १७ ॥

इत्यनेन सत्कारस्य धर्माचरणफलत्वमुक्तम् । महाभागा इति सुकृतपरिपाक उच्यते । सलिलम् अर्घ्याद्युचितम् आजह्रुः ॥ १५ ॥ मूलमिति । धर्मज्ञाः शेषिणि शेषवृत्तिरूपधर्मज्ञाः । प्राञ्जलयः प्रकृष्टाञ्जलयः, मूर्ध्नि कृताञ्जलय इत्यर्थः। महात्मनः शेषिणो रामस्य । वन्यं मूलादिकमाश्रमं च निवेदयित्वा इमानि भवदीयानि यथेष्टं विनियुङ्क्ष्वेति निवेद्य ततोऽब्रुवन् ॥ १६ ॥ तनि०—आत्मीयभरसमर्पणमत्रोच्यते ॥ १६ ॥ धर्मपाल इति । धर्मपालः वर्णाश्रमधर्मपालकः । अस्य आर्तस्य मुनिजनस्य शरण्यः शरणार्हः । पूजनीयश्च देवताबुद्ध्या अर्चनार्हः । मान्यः राजबुद्ध्या बहुमानार्हः । मान्यत्वे हेतुः राजा दण्डधर इति । दण्डस्य निग्रहस्य धरः कर्ता । पूजनीयत्वे हेतुर्गुरुरिति ॥ १७ ॥

इवशब्दो वाक्यालङ्कारे ॥ १३ ॥ अत्र अस्मिन् दिने । महाभागाः ऋषयः ॥ १४ ॥ परमपुरुषस्य तव सन्दर्शनेन वयं महाभागा अतिधन्याश्चेति प्रियवचनैस्सत्कृत्य । सलिलं सलिलादिपूजाद्रव्यम्, आनीयेति शेषः । आजह्रुः रामस्य पूजामिति शेषः ॥ १५ ॥ वन्यं वने भवम् । आश्रमं निवासस्थानं च निवेदयित्वा इमानि वस्तूनि देव त्वदीयानीत्युक्त्वा प्राञ्जलयः अयमेवादिपुरुष इति निश्चयबुद्ध्या सम्बुद्धभक्तिरसेन बद्धाञ्जलयो भक्तिनम्राः भगवन्तं श्रीराममब्रुवन् विज्ञापयन्ति स्मेत्यर्थः ॥ १६ ॥ विज्ञापनप्रकारमेवाह–धर्मपाल इत्यादिना । धर्मपालः वर्णाश्रमधर्मपालकः । शरण्यः आर्तस्य सर्वलोकस्य रक्षिता । दण्डधरः दुष्टनिग्रहकर्ता । भगवदवताररूपेण गुरुः पूज्यः अर्घ्यादिसत्क्रियापूजार्हः। राजा राजरूपेण मान्यः बहुमानार्हश्च त्वमसीति शेषः। कुतो ममैतादृशप्रभाव इति शङ्कायां

पूज्यत्वे हेत्वन्तरमाह—इन्द्रस्येहेति । इह भूस्वर्गे । इन्द्रस्य चतुर्भागः चतुर्थांशः राजा प्रजा रक्षति तस्माद्धेतोः वरान् श्रेष्ठान् भोगान् भुङ्क्ते अनुभवति । इन्द्रस्येति लोकपालान्तराणामुपलक्षणम् । "अष्टाभिर्लोकपालानां मात्राभिः कल्पितो नृपः" इति वचनात् । वस्तुतस्तु इन्द्रशब्दोऽयं परमात्मपरः । "इदि परमैश्वर्ये" इतिधातोस्तत्रैव मुख्यवृत्तत्वात् "इन्द्रो मायाभिः पुरुरूप ईयते" इतिं श्रौतप्रयोगाच्च । इन्द्रस्य परमात्मनः चतुर्भागः चतुर्थांशः तदव

इन्द्रस्येह चतुर्भागः प्रजा रक्षति राघव । राजा तस्माद्वरान् भोगान् भुङ्क्ते लोकनमस्कृतः ॥ १८ ॥
ते वयं भवता रक्ष्या भवद्विषयवासिनः । नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वरः ॥ १९ ॥

तारभूते व्यक्तिचतुष्टये एकव्यक्तिभूतः भवान् भोगान् भुङ्क्ते इत्यर्थः । पूर्वापरश्लोकानुगुण्याच्चायमेवार्थः, नह्यन्यस्मै ऋषयः प्राञ्जलयो भवन्ति नचाश्रमं निवेदयन्ति नापि गर्भभूतत्वं वदन्ति ॥ १८ ॥ भवता रक्ष्यत्वे त्वद्देशवासित्वमेव निष्प्रमादो हेतुः, नोपासनादिकमित्याहुः—ते वयमिति । ते वयम् आर्त्ता वयम् । भवता रक्ष्याः आर्तरक्षणदीक्षितेन त्वया रक्षितुमर्हाः। किमुपासनबलेनैवमुच्यते ? नेत्याहुः भवद्विषयवासिन इति । भवद्देशवासित्वमेव भवद्रक्ष्यत्वे हेतुः, नान्यः । तत्र प्रमादादिसंभवात् देशवासित्वे तदभावादिति भावः । भवतु तथैव रक्षिष्यामः यदा रक्षणप्रदेशे स्थास्याम इत्यत्राहुः नगरस्थ इति । नगरस्थः सिंहासनस्थो वा । वनस्थः तद्रहितो वा । त्वं स्वतःसिद्धसर्वशक्तिकः निरुपाधिकसर्वशेषी च त्वम् । नः अस्माकं राजा रक्षकः । तत्र हेतुमाह जनेश्वर इति । निरुपाधिकसर्वशेषीत्यर्थः ॥ १९ ॥ तनि०—ते पूर्वोक्तप्रकारेण आत्मात्मीयभरसमर्पकाः । वयम् उपायशून्यत्वापायबहुलत्वादिमन्तः । भवता निरुपाधिकसर्वलोकशरण्येन रक्ष्याः । अतिप्रसङ्गपरिहारार्थमाह भवद्विषय वासिन इति । भवद्विषयवासित्वात् साकेतसम्भवचराचरजन्तुन्यायेन प्रपत्तिनिरपेक्षमेव रक्षणमित्येकः पक्षः । पूर्वोत्तरश्लोकपर्यालोचनया प्रपत्तिद्वारकमित्यन्यः पक्षः । न च पूर्वकृतात्मात्मीयरक्षाभरसमर्पणेनैव प्रयोजने सिद्धे विषयवासित्वकथनं व्यर्थमिति शङ्क्यम् । रक्षके पश्यति तत्सन्निधाने रक्ष्यविनाशस्य दोषभूयस्त्वकथनार्थत्वात् । विषयवासित्वस्य निरपेक्षहेतुत्वनिर्बन्धेपि मोक्षव्यतिरिक्तरक्षणोपायस्याविरोधात् । न ह्यत्र महर्षयो

तमेव कैमुतिकन्यायेन द्रढयति—इन्द्रस्येति । दिक्पालचतुष्टयात्प्रत्येकं चतुर्थांशो राजनि संक्रामतीतिन्यायेनेन्द्रस्य त्वन्नियम्यस्य पुरन्दरस्य चतुर्थांशभूतो राजापि प्रजा धर्मेण रक्षति तस्माद्रक्षणाद्वरानऽयान् भोगान्भुङ्क्ते च लोकनमस्कृतश्चेति सम्बन्धः । यद्येवंविधस्य राज्ञोप्येवं प्रभावः, सकलजगद्रक्षणायावतीर्णस्येश्वरस्य तव तु धर्मपालकत्वशरण्यत्वादिकमस्तीति किमु वक्तव्यमिति भावः ॥ १७ ॥ १८ ॥ अस्तु, प्रकृते किमायातमित्यत आह—ते वयमिति । ननु नगरं विहायागतेन चतुरङ्गबलरहितेन वनस्थेन मया भवन्तः कथं रक्ष्या इत्यत आह नगरस्थ इति । यतस्त्वं नगरस्थो वनस्थो वा राजा अतस्ते भवदेकशरणा वयं भवता

मोक्षापेक्षया उपायानुष्ठानं चक्रुः किन्तु दुष्टराक्षसनिरसनापेक्षया। नगरस्थो वनस्थो वेति इतरे मूर्धाभिषिक्ता बुद्धिबलेन स्थानबलेन चतुरङ्गबलेन च स्वराज्यमात्ररक्षणे समर्था भवन्ति। सकललोकरक्षणधुरन्धरस्यासहायशूरस्य तव नगरवासे किं बलमुपचीयते वनवासे किमपचीयते, स्वाभाविकनित्यनिरतिशयशक्तिसम्पन्नस्यावसादकं सत्त्वं किमपि नास्तीत्यर्थः। सोपाधिकशेषिणो देशविशेषादिसम्बन्धापेक्षा निरुपाधिकशेषिणस्तव यत्र कुत्रचिदवस्थानेऽप्यस्मद्रक्षणमावश्यकमिति राजशब्दार्थः॥ १९॥ ननु भवन्त एव तपःप्रभावेन स्वरक्षणक्षमा इत्यत्राहुः—न्यस्तेति। न्यस्तः त्यक्तो दण्डो यैस्ते न्यस्तदण्डाः, शापतो निग्रहकरणरहिता इत्यर्थः। तत्र

न्यस्तदण्डा वयं राजन् जितक्रोधा जितेन्द्रियाः। रक्षितव्यास्त्वया शश्वद्गर्भभूतास्तपोधनाः॥ २०॥

हेतुः जितक्रोधा इति। तपोनाशभीत्या त्यक्तक्रोधा इत्यर्थः। तत्रापि हेतुः जितेन्द्रिया इति। इन्द्रियजयेन कामाद्यभिष्वङ्गाभावात्तन्मूलक्रोधरहिता इत्यर्थः। वस्तुतस्तु-स्वसामर्थ्ये सत्यपि स्वरूपविरोधान्नास्माभिरस्मद्रक्षणमुचितमित्याहुः। त्वया रक्षितव्या इति अनन्यार्हशरणा इत्यर्थः। गर्भभूताः प्रजातुल्याः, अनेनानन्यार्हशेषत्वमुक्तम्। शश्वदिति काकाक्षिन्यायेनोभयत्राप्यन्वेति, तेनानन्यार्हशेषत्वानन्यशरणत्वयोः स्वाभाविकत्वमुक्तम्। तथापि साधनं विना रक्षणेऽतिप्रसङ्गः स्यादित्यत्राहुः तपोधना इति। तपोऽत्र न्यासनिक्षेपापरपर्यायः। "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः" इति श्रुतेः। प्रपत्त्येकधना वयमित्यर्थः। अस्मत्कृतां प्रपत्तिं व्याजीकृत्यास्मान् रक्षेत्यर्थः। रक्षणमत्र मोक्षप्रापणमेव। खरादिभ्यस्त्राणस्य शरभङ्गाश्रमवासिभिर्वक्ष्यमाणत्वात्। इमे तु मुनयो मोक्षैकपराः॥ २०॥ तनि०—महाप्रभावानां भवतां कुतो रक्षकान्तरापेक्षेत्यत्राहुः—न्यस्तदण्डाः त्यक्तशापादिशासनाः। यद्वा त्वय्येव विन्यस्तसकलराक्षसशिक्षाभाराः अतएव गर्भभूताः गर्भो यथा प्रयत्नेन परिपालनीयः तद्वद्वयमपि परिपालनीया इत्यर्थः॥ २०॥

करुणाशालिना रक्ष्याः। अत्रास्मद्रक्षणं नाम अनन्तकल्याणगुणैकनिलयजगन्मोहनदिव्यमङ्गलत्वन्मूर्तिध्यानानन्दानुभवान्तरायरूपरक्षोनिवारणरूपम्। अति प्रसङ्गपरिहारार्थमाह भवद्विषयवासिन इति। विषयो देशः। अयं भावः—इतरे राजानो बुद्धिबलेन चतुरङ्गबलेन च स्वराज्यमात्ररक्षणे शक्ता भवन्ति, सकललोक रक्षणधुरन्धरस्यासहायशूरस्य तव नगरवासे किं बलमुपचीयते, स्वाभाविकनित्यनिरतिशयज्ञानशक्तिसम्पन्नस्य तव वनवासे किमपचीयते? अतो यत्रकुत्रापि स्थितस्य तवासाध्यं किमपि नास्तीति॥ १९॥ महाप्रभाववतां भवतां कुतो रक्षकान्तरापेक्षेत्यत्राह—न्यस्तदण्डा इति। न्यस्तदण्डाः त्यक्तशापादि शासनाः। यद्वा त्वय्येव विन्यस्तसकलराक्षसशिक्षाभाराः। अत एव गर्भभूताः गर्भो यथा मात्रा प्रयत्नेन परिपालनीयः तद्वद्वयमपि परिपालनीयाः

अतस्तेषां प्रपन्नानां यथोचितकैङ्कर्यप्रवृत्तिं दर्शयति–एवमित्यादि। ऋषयः एवमुक्त्वा सलक्ष्मणं राघवं वन्यैः पुष्पैः फलादिभिश्चापूजयन्। राघवमित्यनेन सीतापूजनमप्यर्थसिद्धम्। मिथुनशेषित्वस्यैव स्वरूपत्वात् प्रभाप्रभावन्न्यायेन तयोरपृथग्भावात्। अन्यैः सङ्कल्पसिद्धैः। विविधाहारैः मृष्टान्नादिभिः ॥२१॥ तथान्य इति। सिद्धाः सिद्धसाधननिष्ठाः। न्यायवृत्ताः न्यायानुगुणव्यापाराः, स्वरूपानुरूपकैङ्कर्यवृत्तय इत्यर्थः। वैश्वानरोपमाः अस्पृष्टविरोधिनः स्वरूप

एवमुक्त्वा फलैर्मूलैः पुष्पैर्वन्यैश्च राघवम्। अन्यैश्च विविधाहारैः सलक्ष्मणमपूजयन् ॥ २१ ॥ तथान्ये तापसाः सिद्धा रामं वैश्वानरोपमाः। न्यायवृत्ता यथान्यायं तर्पयामासुरीश्वरम् ॥ २२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे प्रथमः सर्गः ॥ १ ॥

कृतातिथ्योऽथ रामस्तु सूर्यस्योदयनं प्रति। आमन्त्र्य स मुनीन् सर्वान् वनमेवान्वगाहत ॥ १ ॥

विरुद्धनिषिद्धकाम्यकर्मान्तरत्यागिन इत्यर्थः। अन्ये पूर्वेभ्यो विलक्षणाः। तापसाः कायिककैङ्कर्याशक्ता इत्यर्थः। ईश्वरं परमशेषिणं रामं यथान्यायं यथोचितं स्तुतिप्रणामादिभिस्तर्पयामासुरित्यर्थः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥ एवं प्रथमसर्गेण सिद्धसाधननिष्ठानां मुमुक्षूणां मुनीनां तदीयपर्यन्तं विशिष्टविषयकैङ्कर्यं प्रतिपाद्य खरवधार्थिमुनिजनशरणागतिं वक्ष्यन् शरण्यत्वोपयोगिसामर्थ्यं विराधवधकथनमुखेन बोधयितुमुपक्रमते–कृतातिथ्य इत्यादिना। अत एव संक्षेपे "विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह" इत्यत्र विराधवधोपहारमुखेन शरभङ्गं दृष्टवानिति व्याख्यातम्। तुशब्देन अत्र्यादिकृतातिथ्याद्वैलक्षण्यमुच्यते। अनन्यप्रयोजनदत्तं हि भगवतः परमभोग्यं पत्रं पुष्पमित्यादि। अथशब्दः कृत्स्नवाची, कार्त्स्न्येन कृतातिथ्य इत्यर्थः। भक्तैर्यत् किञ्चिद्दत्तमपि तत् सर्वातिथ्यत्वेन हि भगवान् स्वीकरोति।

इत्यर्थः ॥ २० ॥ अन्यैः नीवारादिभिः ॥ २१ ॥ सिद्धाः भरद्वाजादिवत्सिद्धसङ्कल्पाः। न्यायवृत्ताः न्यायो भगवदुपासनादिरूपधर्मः स एव वृत्तं शीलं येषां ते तथा कृताभ्यवहारमीश्वरं सकलजगत्स्वामिनं नीराजनमङ्गलस्तुत्यादिभिर्यथान्यायं यथाविधि तर्पयामासुः ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् आरण्यकाण्डव्याख्यायां प्रथमः सर्गः ॥ १ ॥ कृत इति। सूर्यस्योदयनं प्रति उदयकाल इत्यर्थः। अवगाहत प्राविशत् ॥ १ ॥



स०–सलक्ष्मणं लक्ष्मणेन श्रीवत्सचिह्नेन वैदेह्या सहितमिति यावत्। एतेन पूर्वं रामलक्ष्मणाभ्यां सह दृष्टायास्सीतायाः कथमनर्घ्यत्वमिति शङ्का परास्ता ॥ २१ ॥

सूर्यस्योदयनं प्रतीति कर्मप्रवचनीययोगे द्वितीया । "लक्षणेत्थम्भूताख्यान–" इत्यादिना प्रतेः कर्मप्रवचनीयत्वम् । उदयनं प्रति उदयकाले, प्रातःस्नानादि कर्मावसान इत्यर्थः । वनमेवान्वगाहत नच तत्र स्थातुमैच्छदित्यर्थः ॥ १ ॥ नानामृगगणेत्यादिश्लोकद्वयमेकान्वयम् । ध्वस्तवृक्षलताग़ुल्मं तुङ्गकठिन विराधदेहसंपर्कादिति भावः । दुर्दर्शसलिलाशयमित्यत्राग्रेप्ययमेव हेतुः । निष्कूजनानाशकुनि निःशब्दनानाविधपक्षिकं, सुदूरमुड्डीयमानोपि पक्षी तस्मात् भिया निःशब्दं लीयत इति भावः । झिल्लिकागणनादितं झिल्लिकाभिस्तु दुर्दर्शत्वात् सर्वदा शब्द्यत इत्यर्थः । नानेत्यादि सर्वं वनमध्यविशेषणम् ॥२॥३॥

नानामृगगणाकीर्णं शार्दूलवृकसेवितम् । ध्वस्तवृक्षलतागुल्मं दुर्दर्शसलिलाशयम् ॥ २ ॥ निष्कूजनानाशकुनि झिल्लिकागणनादितम् । लक्ष्मणानुगतो रामो वनमध्यं ददर्श ह ॥ ३ ॥ सीतया सह काकुत्स्थस्तस्मिन् घोर मृगायुते । ददर्श गिरिशृङ्गाभं पुरुषादं महास्वनम् ॥ ४ ॥ गम्भीराक्षं महावक्त्रं विकटं विषमोदरम् । बीभत्सं विषमं दीर्घं विकृतं घोरदर्शनम् ॥ ५ ॥ वसानं चर्म वैयाघ्रं वसार्द्रं रुधिरोक्षितम् । त्रासनं सर्वभूतानां व्यादितास्य मिवान्तकम् ॥ ६ ॥ त्रीन् सिंहांश्चतुरो व्याघ्रान् द्वौ वृकौ पृषतान् दश । सविषाणं वसादिग्धं गजस्य च शिरो महत् । अवसज्यायसे शूले विनदन्तं महास्वनम् ॥ ७ ॥

सीतया सहेत्यादि सार्धश्लोकचतुष्टयमेकान्वयम् । घोरमृगास्तरक्ष्वादयः । पुरुषानत्ति भक्षयतीति पुरुषादः । पचाद्यच् । राक्षसमित्यर्थः । महास्वनं दृढकण्ठ ध्वनिकम् ॥ ४ ॥ गम्भीराक्षं निम्नाक्षम् । महावक्त्रं पृथुतरमुखम् । विकटं विशालम् । विषमोदरं निम्नोन्नतोदरम् । बीभत्सं मांसरुधिरालिप्तशरीरतया कुत्सितम् । विषमं न्यूनाधिकावयवम् । विकृतम् उक्तप्रकारेण विकृतवेषम् अत एव घोरदर्शनम् ॥५॥ वसा मांसं तया आर्द्रम् । रुधिरोक्षितं रक्तासिक्तम् । व्यादितास्यं व्यात्तास्यम् । आर्षं इट् ॥ ६ ॥ त्रीनित्यादि । भक्षणार्थमिति शेषः । पृषतान् बिन्दुमृगान् । आयसे अयोमये शूले । अवसज्य प्रोतान्

वृक्षादिध्वंसे विराधकृतोपप्लवः कारणं दुर्दुर्शसलिलाशयमित्युक्तहेतोरेव । पक्षिणां साध्वसेन निष्कूजाः निश्शब्दा नानाविधाः शकुनयो ,यस्मिन् तत् । झिल्लिकागणनादितं रामो वनमध्यं ददर्शेति पूर्वेण सम्बन्धः ॥ २ ॥ ३ ॥ गिरिशृङ्गाभं गिरेः शृङ्गं आभा उपमा यस्य तम् ॥ ४ ॥ गम्भीराक्षं निम्ननयनम् । विकटं वक्रम् । बीभत्सं कुत्सितम् । विषमं निम्नोन्नतम् । विकृतं वक्ष्यमाणधर्मवत्त्वाद्विपरीतवेषम् ॥ ५ ॥ वसार्द्रं चर्म वसानम् वसा मांसविशेषः ॥ ६ ॥ भक्षणार्थं सिंहादीन्

कृत्वा महास्वनं यथा भवति तथा विनदन्तं विनादं कुर्वन्तम् ॥ ७ ॥ काले संहारकाले । प्रजा उद्दिश्य अन्तको यथा धावति तथा अभ्यधावत ॥ ८ ॥ अङ्केनं कटिप्रदेशेन ॥ ९ ॥ सभार्याविति भार्याशब्दो योषिन्मात्रवाचीत्येके वदन्ति । अन्ये तु यथा " प्राणभृत उपदधाति " इत्यत्र प्राणभृच्छब्दः प्राणभृदप्राणभृत्साधारणः, यथाच "ऋतं पिबन्तौ" इत्यत्र पानकर्त्रकर्तृसाधारणो जीवेश्वरयोः पिबच्छब्दप्रयोगः तथा छत्रिन्यायं नात्रापि सभार्यावित्युक्तमित्याहुः । तथापि ध्वनिदोषोऽवर्जनीयः । वस्तुतस्तु–द्वयोरेका भार्यास्तीति दुर्बुद्धिनैवमुक्तमिति सम्यक् । क्षीण

स रामं लक्ष्मणं चैव सीतां दृष्ट्वा च मैथिलीम् । अभ्यधावत संक्रुद्धः प्रजाः काल इवान्तकः ॥ ८ ॥ स कृत्वा भैरवं नादं चालयन्निव मेदिनीम् । अङ्केनादाय वैदेहीमपक्रम्य ततोऽब्रवीत् ॥ ९ ॥ युवां जटाचीरधरौ सभार्यौ क्षीणजीवितौ । प्रविष्टौ दण्डकारण्यं शरचापासिधारिणौ ॥ १० ॥ कथं तापसयोर्वां च वासः प्रमदया सह । अधर्मचारिणौ पापौ कौ युवां मुनिदूषकौ ॥ ११ ॥

जीवितौ मद्धस्ते पतनादिति भावः । यद्वा क्षीणजीवितौ प्रविष्टौ क्षीणजीवितत्वादेव प्रविष्टौ । अत्र प्रविष्टानां जीवितं दुर्लभमिति भावः ॥ १० ॥ वस्तुतो विपरीताचारौ युवां मम वध्यावेवेत्याशयेनाह–कथमिति । वां युवयोः प्रमदया सह वासश्च कथं, विरुद्ध इत्यर्थः । "न चवाहा–" इति निषेधेपि वामादेशः

आयसे शूले अवसज्य निधाय प्रोतं कृत्वा महास्वनं यथा तथा विनदन्तमेवंविधं विराधं ददर्शेति पूर्वेण सम्बन्धः ॥ ७ ॥ स इति । सः विराधः । काले युगान्तकाले । क्रुद्धोऽन्तकः प्रजा उद्दिश्य यथा धावति ॥ ८ ॥ अङ्केन कटिप्रदेशेनेति यावत् ॥ ९ ॥ युवामित्यादि । सभार्याविति भार्याशब्दस्तु योषिन्मात्रवाची । एकया योषिता सहितौ । सभार्यशब्दः छत्रिणो गच्छन्तीतिवल्लाक्षणिको वा ॥ १० ॥ कथमिति । वां युवयोः । मुनिदूषकौ मुनिवेषशरचापासिधारणात् अत एव पापौ ॥ ११ ॥

टी०–अत्र विराधेन सीताग्रहणं स्वाघौघपरिहारार्थमेव नतु दारबुद्ध्या । तदुक्तं स्कान्दे–" सोपि तां जानकीं दृष्ट्वा शीघ्रं सञ्जातविक्रमः । इयं परा महाशक्तिस्संयं स्वर्गस्य कारणम् । अस्या विरोधो मोक्षेपि कारणं बन्धनेपि च । तस्मादिमां भजिष्यामि दिष्ट्या प्राप्तं हि दर्शनम् । इति दर्शनमात्रेण विमुक्ताघौघपञ्जरः । भक्तियुक्तो जहारैनां सीतां चैतन्यरूपिणीम् ॥ " इति ॥ ९ ॥ सभार्यौ–सभायामार्यौ सभार्यौ ॥ सत्य०–सभार्यौ भार्यासहितौ । सीताया उभयभार्यात्वभ्रमेणेयमुक्तिः । "द्वयोरेकप्रियत्वं प्रमाणविकलं सदपि तदनुमतं चेन्ममापि सा भार्या भवितुं योग्येति भावमवगमयितुमियमुक्तिर्वा । अत एव ' इयं नारी वरारोहा मम भार्या भविष्यति ' इति वक्ष्यमाणं युक्तं भवति । छत्रिन्यायेन वा ॥ १० ॥

आर्षः। कथंशब्दोक्तं विवृणोति अधमौंति। मुनिदूषकौ मुनिवेषविरुद्धशरचापासिधारणादितिभावः। अत एव पापौ ॥ ११ ॥ मृधे युद्धे ॥ १२ ॥ १३ ॥ सगर्वितं सगर्वम्। भावे निष्ठा। उद्वेगात् भयात् ॥ १४ ॥ १५ ॥ परिशुष्यता शोकसङ्कुचितेन मुखेन उपलक्षितः ॥ १६ ॥ १७ ॥ कैकेय्याः अस्मासु विषये यदभिप्रेतं योऽभिप्रायः। यच्च प्रियं वरवृतं वरव्याजेन वृतं तदद्यैव सुसम्पन्नं फलितम् ॥ १८ ॥ अभिप्रेतशब्दोक्तं सूक्ष्मेक्षिकया विवृणोति—या न

अहं वनमिदं दुर्गं विराधो नाम राक्षसः। चरामि सायुधो नित्यमृषिमांसानि भक्षयन् ॥ १२ ॥ इयं नारी वरारोहा मम भार्या भविष्यति। युवयोः पापयोश्चाहं पास्यामि रुधिरं मृधे ॥ १३ ॥ तस्यैवं ब्रुवतो धृष्टं विराधस्य दुरात्मनः ॥१४॥ श्रुत्वा सगर्वितं वाक्यं सम्भ्रान्ता जनकात्मजा । सीता प्रावेपतोद्वेगात्प्रवाते कदली यथा ॥१५॥ तां दृष्ट्वा राघवः सीतां विराधाङ्कगतां शुभाम्। अब्रवील्लक्ष्मणं वाक्यं मुखेन परिशुष्यता ॥१६॥ पश्य सौम्य नरेन्द्रस्य जनकस्यात्मसम्भवाम्। मम भार्यां शुभाचारां विराधाङ्के प्रवेशिताम्। अत्यन्तसुखसंवृद्धां राजपुत्रीं यशस्विनीम् ॥१७॥ यदभिप्रेतमस्मासु प्रियं वरवृतं च यत्। कैकेय्यास्तु सुसम्पन्नं क्षिप्रमद्यैव लक्ष्मण ॥ १८ ॥ या न तुष्यति राज्येन पुत्रार्थे दीर्घदर्शिनी॥१९॥ ययाहं सर्वभूतानां हितः प्रस्थापितो वनम्। अद्येदानीं सकामा सा या माता मम मध्यमा॥२०

तुष्यतीति। दीर्घदर्शिन्या कैकेय्या अस्मद्व्यसनं पूर्वमेव यदि न चिन्तितं स्यात्तर्हि पुत्रार्थं राज्यमेव वरयेत्, नतु मत्प्रवासनम्। मत्प्रवासनवरणादत्र गम्यते; अयं वनं गतश्चेत् सीतापि गच्छेत् सा च राक्षसादिभिरपह्रियेत, तेन रामोपि व्यसनं महत्प्राप्नुयात्, ततश्च मत्पुत्रस्य राज्यं निष्कण्टकं स्यादिति तयोर्भीत्युत्पादनाय विराधः स्वयमेव स्वस्वरूपं कथयति—अहमित्यादिना। मृधे युद्धे ॥ १२–१५ ॥ तामिति। परिशुष्यता मुखेनोपलक्षितः ॥ १६ ॥ विराधाङ्के प्रवेशितां विराधेनाङ्के प्रवेशिताम् ॥ १७॥ अस्मासु विषये कैकेय्या यद्दुःखं वने सम्पादनीयतया अभिमतं तत् क्षिप्रमद्यैव सुसंवृत्तं सिद्धमित्यर्थः ॥ १८ ॥ येति। या पुत्रार्थे पुत्रप्रयोजननिमित्तम्। राज्येन राज्याभिषेककरणमात्रेण न तुष्यति, सर्वभूतानां हितोप्यहं ययाहं दीर्घदर्शिन्या वनमपि पुत्रराज्यस्थैर्याय प्रस्थापितः। या मम माता मध्यमा सा कैकेयी अद्य दिवसे सकामा जाता। ननु पूर्वं माता यवीयसीत्युक्तम्, कथमिदानीं मध्यमेत्युच्यते? सत्यम्, कौसल्यासुमित्राभ्यां कनीयसी।

सत्य०–मध्यमा सुमित्रा, तत्सान्नीध्यान्मध्यमा कैकेयी। अथवा मध्यमा उक्तकारिणी। स्वतस्सद्बुद्धित्वान्मन्थरोक्तकारिणीति प्रोक्तकारिणीत्यर्थः। "प्रोक्तकारी तु मध्यमः" इत्युक्तेः ॥ २० ॥

कैकेयी नूनममन्यतेति भावः । पुत्रार्थे पुत्रप्रयोजननिमित्तम् । माता मम मध्यमेति । यद्यपि पूर्वं मम माता कनीयसीत्युक्तम् तथापि महिषीत्रयापेक्षया कनीयसीत्वं सर्वदशरथपत्न्यपेक्षया मध्यमात्वम्, त्रिशतं पञ्चाशच्च दशरथपत्न्यः सन्तीति पूर्वमेवोक्तम् । अद्य अस्मिन् दिवसे । इदानीम् अस्मिन् क्षणे ॥ १९ ॥ २० ॥ किं ते तादृशं व्यसनं तत्राह–परस्पर्शादिति । वैदेह्याः परस्पर्शाद्यथा दुःखतरम् अतिदुःखं पितृवियोगाद्राज्यहरणाच्च तथा दुःखं

परस्पर्शात्तु वैदेह्या न दुःखतरमास्ति मे । पितुर्वियोगात्सौमित्रे स्वराज्यहरणात्तथा ॥ २१ ॥ इति ब्रुवति काकुत्स्थे बाष्पशोकपरिप्लुते । अब्रवील्लक्ष्मणः क्रुद्धो रुद्धो नाग इव श्वसन् ॥ २२ ॥ अनाथ इव भूतानां नाथस्त्वं वासवोपमः । मया प्रेष्येण काकुत्स्थ किमर्थं परितप्यसे ॥ २३ ॥ शरेण निहतस्याद्य मया क्रुद्धेन रक्षसः । विराधस्य गतासोर्हि मही पास्यति शोणितम् ॥ २४ ॥ राज्यकामे मम क्रोधो भरते यो बभूव ह । तं विराधे प्रमोक्ष्यामि वज्री वज्रमिवाचले ॥ २५ ॥

नास्तीति योजना ॥ २१ ॥ इतीति । रुद्धः मन्त्रगणनिरुद्धः । नागः सर्पः । श्वसन् रामशोकदर्शनादिति भावः ॥२२॥ वासवोपमो भूतानां नाथः सन् अनाथ इव नाथसापेक्षो नर इव । विशिष्य मया प्रेष्येण सहितोपि किमर्थं परितप्यसे । वास्तवार्थस्तु-भूतानां सर्वलोकानां नाथः वासव उपमीयतेऽनेनेति वासवोपमः त्वम् अनाथ इव नाथभिन्न इव किमर्थं परितप्यसे । एवमेव तत्त्वं जगुः । यथा विश्वामित्रः " अहं वेद्मि महात्मानम् " इति । यथा च परशुरामः " त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः " इति । एवमृषयोपि ॥२३॥ प्रेष्येण त्वया किं क्रियत इत्यत्राह–शरेणेति ॥२४॥ कैकेय्याः भरतार्थं राज्यकाङ्क्षित्वात् भरतस्यापि राज्यकामत्वम् । तं विराधे विमोक्ष्यामीति शरणागते भरते दुर्विमोचत्वादिति भावः । ननु भरतकैकेयीभ्यामज्ञानात् प्रवासनं

कैकेयी, अन्यासां दशरथस्त्रीणां ज्यायसीत्युभयात्मकता विद्यत इत्युभयनिर्देशः ॥१९॥२०॥ वैदेह्याः परस्पर्शात् यथा मे दुःखतरम् अतिदुःखं तथा पितुर्विनाशात् स्वराज्यहरणादपि मे दुःखं नास्तीत्यन्वयः ॥ २१ ॥ बाष्पशोकपरिप्लुते नेत्रजलमनस्तापाभ्यां व्याप्ते क्रुद्धः कैकेयीं प्रति ॥ २२ ॥ भूतानां ब्रह्मादीनामपि नाथः परमपुरुषोपि त्वम् अनाथ इव प्राकृत इव किमर्थं परितप्यसे । " स रामं लक्ष्मणं दृष्ट्वा " इत्यारभ्य " किमर्थं परितप्यसे" इत्यन्तस्य ग्रन्थसन्दर्भस्य वास्तवार्थस्तु–सः विराधः रामं लक्ष्मणं वैदेहीं च दृष्ट्वा संक्रुद्धस्सन् सीतामभ्यधावद्, ग्रहीतुमितिशेषः । रामादीन् दृष्ट्वा तत्तेजसाभिभूतो विराधः स्ववृत्तान्तं कथयन् तान्

कारितं पुनरागन्तव्यमिति क्षमापणस्य कृतत्वात् कुतः पुनः रामलक्ष्मणाभ्यां तत्र राज्यापहारित्वमनुस्मर्यते ? उच्यते—अनन्तरं तथानुष्ठानेपि पूर्वं कैकेय्या तथा चिन्तितत्वात्तस्य चावश्यकर्तव्यत्वाद्दुःखकाले तच्चिन्तनम् । तथापि व्यसनकालेपि परदोषोद्घाटनं सत्पुरुषानुचितं रामप्रकृतिविरुद्धं च सुप्तप्रमत्तकुपितानां भावज्ञानं दृष्टमिति न्यायेन दोषदर्शनमेव रामस्य हार्दं तदुपेक्षकत्वं त्वभिनयमात्रमिति स्यात् । अत्रोच्यते—व्यसनकाले लोको

मम भुजबलवेगवेगितः पततु शरोऽस्य महान् महोरसि । व्यवसयतु तनोश्च जीवितं पततु ततस्स महीं विघूर्णितः ॥ २६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकिये आदिकाव्ये श्रीमदारण्यकाण्डे द्वितीयः सर्गः ॥ २ ॥

❀ अथोवाच पुनर्वाक्यं विराधः पूरयन् वनम् । आत्मानं पृच्छते ब्रूतं कौ युवां क्व गमिष्यथः ॥ १ ॥

वाच्यमवाच्यं च न जानातीत्यमुमर्थं व्यञ्जयितुमेवमुक्तमिति॥२५॥ ममेति । भुजबलवेगेन धनुराकर्षणवेगेन वेगितः आनीतवेगः । इतजन्तो वा । विघूर्णितः सञ्जातभ्रमणः ॥ २६॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्वितीयः सर्गः ॥२॥ अथ विराधानुग्रहाय तदाक्रमणं तृतीये—अथोवाचेत्यादि । पूरयन्, शब्देनेति शेषः । आत्मानं युष्मत्स्वरूपं पृच्छते मह्यमिति शेषः । ब्रूतमिति लोण्मध्यमपुरुषद्विवचनम् । पृच्छति—स कृत्वेत्यादिश्लोकपञ्चकेन । ततः स विराधः अङ्के समीपे आगत्येतिशेषः । वैदेहीमनादाय अपक्रम्याब्रवीत्, रामलक्ष्मणाविति शेषः । युवामिति । सभार्यौ सभायामार्यौ क्षीणजीवितौ क्षीणं जीवितमरीणां याभ्याम् । शरचापासिधारिणौ सन्तौ जटाचीरधरौ च सन्तौ दण्डकारण्यं प्रविष्टौ । यद्यपि तापसयोर्वा प्रमदया सह वासो यद्यपि तथापि कथं पापौ कथं मुनिदूषकौ, तादृशौ न भवत इत्यर्थः । अत्र हेतुः—अधर्मचारिणौ अधर्मं चरतो भक्षयतो नाशयत इति तथा एतादृशविशेषणविशिष्टौ कौ युवाम् ? किञ्च अहमिति । अहं विराधो नाम राक्षसः इदानीं मम पापयोः पापाभ्यां हस्ताभ्यामिति शेषः । ऋषिमांसानि भक्षयन् सायुधो मृधे रुधिरं पास्यामीति धिया दुर्गं वनं चरामि । किञ्च मया कान्त्या आर्या श्रेष्ठा इयं नारी युवयोः का भविष्यतीति तावब्रवीदिति पूर्वेण सम्बन्धः । तस्येति । ऋषिमांसानि भक्षयन् चरामीत्येवं दुष्टं यथा तथा विराधस्य ब्रुवतः सतः सीता प्रावेपत । तामिति । विराधाङ्के विराधस्य समीपे प्रवेशितां स्थितामित्यर्थः । सीतां दृष्ट्वा परिशुष्यता मुखेनोपलक्षितः सीतामीत्येति शेषः । अब्रवीत् । पश्येति विराधाङ्के तत्समीपे प्रवेशितां स्थिताम् । यदभिप्रेतमित्यादिवाक्यानि सीताभीतिनिमित्तेनोक्तानीति द्रष्टव्यानि । परस्पर्शात् परस्य राक्षसस्य स्पर्शात् समीपगमनादित्यर्थः । बाष्पशोकपरिप्लुते सीताभीतिनिमित्तमिति भावः ॥ २३—२५ ॥ ममेति । भुजबलवेगवेगितः भुजबलस्य वेगेन वेगितः । सञ्जातवेगः सशरः महीं मह्यां पततु, विराध इति शेषः ॥ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां द्वितीयः सर्गः ॥ २ ॥ अथेति । पूरयन् शब्देनेति शेषः । आत्मानं युष्मत्स्वरूपं पृच्छते मह्यम् ॥ १ ॥

❀ इत्युक्त्वा लक्ष्मणः श्रीमान् राक्षसं प्रहसन्निव । को भवान्वनमभ्येत्य चरिष्यति यथासुखम् ॥ इतीति । उक्त्वा रामं प्रतीति शेषः । राक्षसम्, अब्रवीदिति शेषः ॥ अयंश्लोकः महेश्वरेण व्याख्यातः ॥१॥

प्रश्नप्रकारमाह कावितीति ॥ १ ॥ राक्षसत्वेन प्रकृत्या ज्वलिताननमिति भयहेतूक्तिः । आत्मनः सम्बन्धि इक्ष्वाकुकुलमुवाचेत्यन्वयः । इक्ष्वाकुवंश्यदशरथपुत्रावावां पितृवचनाद्वनं गमिष्याव इत्युवाचेत्यर्थः ॥ २ ॥ अधर्मचारिणौ पापाविति पूर्वोक्तविराधवचनस्योत्तरमाह–क्षत्रियौ वृत्तसम्पन्नाविति । त्वामिति कस्य पुत्रः किंप्रभाव इति ज्ञातुमिच्छामीत्यर्थः । 'अहं वनमिदं दुर्गं विराधो नाम राक्षसः' इति नामजात्योः पूर्वमुक्तत्वान्न तद्विषयोऽयं प्रश्नः ॥३॥

तमुवाच ततो रामो राक्षसं ज्वलिताननम् । पृच्छन्तं सुमहातेजा इक्ष्वाकुकुलमात्मनः ॥ २ ॥ क्षत्रियौ वृत्तसम्पन्नौ विद्धि नौ वनगोचरौ । त्वां तु वेदितुमिच्छावः कस्त्वं चरसि दण्डकान् ॥ ३ ॥ तमुवाच विराधस्तु रामं सत्यपराक्रमम् । हन्त वक्ष्यामि ते राजन् निबोध मम राघव ॥ ४ ॥ पुत्रः किल जयस्याहं मम माता शतह्रदा । विराध इति मामाहुः पृथिव्यां सर्वराक्षसाः ॥५॥ तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा । शस्त्रेणावध्यता लोकेऽच्छेद्याभेद्यत्वमेव च ॥ ६ ॥ उत्सृज्य प्रमदामेनामनपेक्षौ यथागतम् । त्वरमाणौ पलायेथां न वां जीवितमाददे ॥ ७ ॥

रामानु०–क्षत्रियाविति । वनगोचराविति बहुव्रीहिः ॥ ३ ॥ तमिति । हन्तेति स्वाभिप्रायकीर्तनोद्योगजगर्वेण । मम मत्तः मे स्वरूपमिति शेषः । निबोधेत्युवाचेत्यन्वयः ॥ ४ ॥ विराधः विगताराधनः दुराराध्य इत्यन्वर्थसंज्ञः । राक्षसाः सजातीयाः, सजातीयैः कृतं नामेदं न तु मातापितृभ्यामिति भावः ॥ ५ ॥ चापि किञ्च । तपसा साधनेन ब्रह्मणः प्रसादजा शस्त्रेणावध्यता अमारणीयता प्राप्ता । अच्छेद्याभेद्यत्वं च प्राप्तम्, प्राणवियोजनहेतुखण्डनविदारणानर्हत्वं च प्राप्तमित्यर्थः ॥ ६ ॥ अनपेक्षौ अपेक्षायां मरणं ध्रुवमिति भावः । त्वरमाणौ मन्दगमने मे मनश्चलेदिति भावः । न वां जीवितमाददे उत्तमप्रमदारत्नतामिति । आत्मनः इक्ष्वाकुकुलमिक्ष्वाकुवंशप्रभवत्वम् उवाचेत्यन्वयः ॥ २ ॥ ३ ॥ हन्तेति । मम निबोध मम वचनान्मे स्वरूपमिति शेषः ॥ ४ ॥ ५ ॥ शस्त्रेण येन केनापि शस्त्रेण शस्त्रबलेनाच्छेद्याभेद्यत्वम्, छेदभेदाभ्यामव्यथनीयत्वं ताभ्यां व्यथा नास्तीत्यर्थः ॥६॥ अनपेक्षौ प्रमदाशारहितौ । वां युवयोः । वस्तुतस्तु–उत्सृज्य

स०–वनं गोचरो ययोस्तौ । वनस्य या गौर्भूस्तस्यां चरत इति तौ तथोक्तौ । समासान्तविधेरनित्यत्वान्न टच् । यद्वा गवि चरतो गोचरी वनस्य गोचरी वनगोचरौ । वनपदार्थस्य योग्यतया गोचरपदैकदेशगोपदार्थेनानन्वयः । " दीप्तानलार्कद्युतिमप्रमेयम्" इत्यत्राप्रमेयत्वस्य द्युतावन्वयो ज्ञेयः ॥ ३ ॥ सर्वराक्षसा इत्यनेन लोकप्रसिद्धत्वं द्योतयति ॥ ५ ॥ लोके ये छेद्यास्तेषामभेद्यत्वम् । यद्वा छेद्यानामङ्गानामभेद्यत्वम् अवध्यत्वप्रकारनिरूपणं वैतत् ॥ ६ ॥

प्रापणादिति भावः ॥ ७ ॥ तम् एवं परुषं वदन्तम् । परुषवचनादेव हेतोः कोपसंरक्तलोचनः । विकृताकारं विकृताकारमपि पापे सीताहरणे चेतो यस्य तम् ॥ ८ ॥ क्षुद्र हीनजाते ! धिक्कारे हेतुरयम् । हीनार्थम् उत्तमाङ्गनाभिलापरूपहीनप्रयोजनमिति यावत् । मृत्युम् अन्वेषणहेतुं मरणं सम्प्राप्स्यसे अन्वेषणं सफलं भविष्यतीत्यर्थः । तदा किञ्चिदुपेक्षया गन्तुमुद्युक्तं प्रत्याह तिष्ठेति । गमनं च दुर्लभमित्याह नेति । मे पुरत इति

तं रामः प्रत्युवाचेदं कोपसंरक्तलोचनः। राक्षसं विकृताकारं विराधं पापचेतसम् ॥८॥ क्षुद्र धिक् त्वां तु हीनार्थं मृत्युमन्वेषसे ध्रुवम् । रणे संप्राप्स्यसे तिष्ठ न मे जीवन् गमिष्यसि ॥ ९ ॥ ततः सज्यं धनुः कृत्वा रामः सुनिशितान् शरान् । सुशीघ्रमभिसन्धाय राक्षसं निजघान ह ॥ १० ॥ धनुषा ज्यागुणवता सप्त बाणान् मुमोच ह । रुक्मपुङ्खान् महावेगान् सुपर्णानिलतुल्यगान् ॥ ११ ॥ ते शरीरं विराधस्य भित्त्वा बर्हिणवाससः । निपेतुः शोणितादिग्धा धरण्यां पावकोपमाः ॥ १२ ॥ स विद्धो न्यस्य वैदेहीं शूलमुद्यम्य राक्षसः । अभ्यद्रवत्सुसंक्रुद्धस्तदा रामं सलक्ष्मणम् ॥ १३ ॥ स विनद्य महानादं शूलं शक्रध्वजोपमम् । प्रगृह्याशोभत तदा व्यात्तानन इवान्तकः ॥१४॥

शेषः ॥ ९ ॥ राक्षसं प्रति शरान् निजघान अमुञ्चत् । "हन हिंसागत्योः" इति धातुः ॥ १० ॥ पुनः शरान् विशिंषन्नाह-धनुषेति । ज्यारूपो गुणो रज्जुः तद्वता । महावेगान् अत एव सुपर्णानिलाभ्यां तुल्यं गच्छन्तीति तथोक्तान् ॥ ११ ॥ बर्हिणवासस इति स्वार्थे इनच् । बर्हिणवाससः बर्हपत्रा इत्यर्थः । शोणितेन आदिग्धाः ईषल्लिप्ताः रक्तोद्गमात्पूर्वमेव शरीरान्निर्गमादिति भावः । पावकोपमा इति भूस्थतृणादिदहनादग्निसाम्यसिद्धिः ॥ १२ ॥ विद्धः बाणवेधजनितवेदनातिशयवान् । न्यस्य भूमौ निक्षिप्य ॥ १३ ॥ महान् नादः प्रतिध्वनिर्यस्मिंस्तद्यथा भवति तथा विनद्य । शक्र

मामिति शेषः प्रमदामादायेति च शेषः। यथागतं त्वरमाणौ पलायेथां गच्छेथाम्। वां युवयोः जीवितं प्राणसमं स्त्रीरत्नम् । नाददे इत्युवाचेति पूर्वेण सम्बन्धः ॥७॥८॥ क्षुद्रेति । रणे तिष्ठ ध्रुवं संप्राप्स्यसे मृत्युमित्यनुषङ्गः । मे मम पुरतः । जीवन् क्व गमिष्यसीति सम्बन्धः ॥ ९ ॥ शरानभिसन्धाय धनुषीति शेषः । सुदीर्घमाकर्णमाकृष्येति शेषः ॥ १० ॥ ज्यागुणवता ज्याशब्दवता सुपर्णानिलाभ्यां तुल्यं गच्छन्तीति तथा ॥ ११ ॥ बर्हिणवाससः बर्हवासस इति यावत् । वासः पत्रम् । शोणितादिग्धाः रक्तलिताः॥१२॥ विद्धः ताडितः । वैदेहीं न्यस्य । वस्तुतस्तु-वैदेहीं न्यस्य सीतासमीपमगत्वा। महानादं विनद्य कृत्वा ॥ १३ ॥ १४ ॥

ध्वजोपमं तद्वदुन्नतम् । व्यात्ताननः विवृत्तास्यः । अनेन प्रसारितजिह्वत्वं लक्ष्यते । शूलोपमेयताभाव ॥१४॥ अथ सीतानिक्षेपानन्तरम् । यथेष्टं बाण मोचनार्हत्वाद्दीप्तं पूर्वबाणेभ्यस्तेजस्विनम् । शरवर्षं शरसमूहम् । उभाभ्यामपि मोचनीयत्वे हेतवः राक्षस इत्यादिविशेषणानि । कालान्तकयमोपमे काले संहारकाले अन्तको नाशको यो यमस्तत्तुल्ये ॥ १५ ॥ प्रहस्य किमेतैर्मशकप्रायैरिति हसित्वा । अजृम्भत गात्रविनाममकरोत् । बाणाः काये किञ्चि



अथ तौ भ्रातरौ दीप्तं शरवर्षं ववर्षतुः । विराधे राक्षसे तस्मिन् कालान्तकयमोपमे ॥ १५ ॥ स प्रहस्य महारौद्रः स्थित्वाजृम्भत राक्षसः । जृम्भमाणस्य ते बाणाः कायान्निष्पेतुराशुगाः ॥ १६ ॥ स्पर्शात्तु वरदानेन प्राणान् संरोध्य राक्षसः । विराधः शूलमुद्यम्य राघवावभ्यधावत ॥१७॥ तच्छूलं वज्रसङ्काशं गगने ज्वलनोपमम् । द्वाभ्यां शराभ्यां चिच्छेद रामः शस्त्रभृतां वरः ॥ १८ ॥ तद्रामविशिखच्छिन्नं शूलं तस्य कराद्भुवि । पपाताशनिना छिन्नं मेरोरिव शिलातलम् ॥ १९ ॥ तौ खड्गौ क्षिप्रमुद्यम्य कृष्णसर्पोपमौ शुभौ । तूर्णमापततस्तस्य तदा प्रहरतां बलात् ॥ २० ॥ स वध्यमानस्सुभृशं बाहुभ्यां परिरभ्य तौ । अप्रकम्प्यौ नरव्याघ्रौ रौद्रः प्रस्थातुमैच्छत ॥ २१ ॥ तस्याभिप्रायमाज्ञाय रामो लक्ष्मणमब्रवीत् । वहत्वयमलं तावत् पथानेन तु राक्षसः ॥ २२ ॥

ल्लग्नाः । आशु गच्छन्तीत्याशुगाः, आशुगा अपीत्यर्थः । निष्पेतुः जगलुः ॥ १६ ॥ वरदानेन स्पर्शात्सम्बन्धात् । प्राणान् प्राणवायून् । संरोध्य हृदये समूह्य, बलं कृत्वेत्यर्थः ॥ १७ ॥ तत् हस्तस्थम् । गगने ज्वलनः आकाशस्थाग्निः तदुपममित्यभूतोपमा ॥ १८ ॥ अशनिना वज्रेण ॥ १९ ॥ प्रहरतां प्राहरताम् ॥ २० ॥ अप्रकम्प्यौ चालयितुमप्यशक्यौ, किम्पुनः परिग्रहीतुमिति कविः परिहसति । रौद्रः रौद्राकृतिः । अप्रकम्प्यत्वे हेतुः नरव्याघ्राविति । नरव्याघ्रौ पुरुषोत्तमौ ॥ २१ ॥ अभिप्रायं वनान्तर्नयनेच्छाम् । वहतु नौ प्रापयतु, अनेन आवाभ्यां गन्तव्येन पथा वहतु अथवा

कालान्तकयमोपमे कालः अन्तकः यमश्चेति त्रयो मारणाधिकारिणः । तत्र कालस्याधिकारो जीवितविच्छेदे, अन्तकस्य प्राणापहारे, यमस्य पुण्यापुण्यविवेक इति भेदः ॥ १५ ॥ जृम्भमाणस्य तनूभङ्गं कुर्वतः । कायान्निष्पेतुः कायं निर्भिद्य निष्पेतुः । आशु गच्छन्तीति आशुगास्सन्तः ॥ १६ ॥ वरदानेन स्पर्शात्सम्बन्धात् । प्राणान् संरोध्य बलार्थं हृदये वायून् समाहृत्य ॥ १७–२१ ॥ अयमलं सुष्ठु वहति अनेन पथा गमनस्येष्टं भवति । यथा चेच्छति यथास्य गमनमिष्टं भवति तथा

टी०—वरदानेन ईश्वरवरदानेन । तदुक्तम्—" विराधो हाटकपुरे विधिवन्मामपूजयत् । मदनुग्रहवैशिष्ट्यादवध्यस्स सुरासुरैः ॥ " इति ॥ १७ ॥

यथेच्छति यन मार्गेण गन्तुमिच्छति तथा वहतु, उभयथापि न दोष इति भावः । तत्र हेतुमाह अयमिति । नः वनमध्यगमनेच्छूनामस्माकम् ॥ २२ ॥ २३ ॥ अतिबलौ रामलक्ष्मणौ समुत्क्षिप्य बालाविव स्कन्धगतौ चकार, तयोरिच्छावशादितिभावः ॥२४॥२५॥ इमावपि स्वाभीष्टवनं प्रविष्टा वित्याशयेनाह-वनमिति । शिवाः सृगालविशेषाः ताभिर्युतम् । व्यालमृगैः दुष्टमृगैः "दुष्टे द्विपे श्वापदे च व्यालः पुंसि शठेपि च" इति बाणः । अत्र सर्गे

यथा चेच्छति सौमित्रे तथा वहतु राक्षसः । अयमेव हि नः पन्था येन याति निशाचरः ॥२३॥ स तु स्वबलवीर्येण समुत्क्षिप्य निशाचरः । बालाविव स्कन्धगतौ चकारातिबलौ ततः ॥ २४ ॥ तावारोप्य ततः स्कन्धं राघवौ रजनीचरः । विराधो निनदन् घोरं जगामाभिमुखो वनम् ॥ २५ ॥ वनं महामेघनिभं प्रविष्टो द्रुमैर्महद्भिर्विविधैरुपेतम् । नानाविधैः पक्षिशतैर्विचित्रं शिवायुतं व्यालमृगैर्विकीर्णम् ॥ २६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे तृतीयः सर्गः ॥ ३ ॥

ह्रियमाणौ तु तौ दृष्ट्वा वैदेही रामलक्ष्मणौ । उच्चैस्स्वरेण चुक्रोश प्रगृह्य सुभुजा भुजौ ॥ १ ॥
एष दाशरथी रामस्सत्यवाञ्छीलवाञ्छुचिः । रक्षसा रौद्ररूपेण ह्रियते सहलक्ष्मणः ॥ २ ॥
मां वृका भक्षयिष्यन्ति शार्दूला द्वीपिनस्तथा । मां हरोत्सृज्य काकुत्स्थौ नमस्ते राक्षसोत्तम ॥ ३ ॥

भगवतः स्वायत्तसकलप्रवृत्तिकत्वं महाभयहेतावपि निर्भयत्वं च दर्शितम् । अस्मिन् सर्गे षड्विंशतिश्लोकाः ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥ अथ परमपुरुषवहनफलं वक्तुमुपक्रमते—ह्रियमाणावित्यादि । चुक्रोश रामस्यातिमानुषं चरित्रमवगच्छन्त्यपि स्नेहातिशयेन व्याकुला रुरोदेत्यर्थः ॥ १ ॥ सत्यवान् सत्यवचनवान् । शीलवान् सदाचारसम्पन्नः । शुचिः ऋजुबुद्धिः ॥ २ ॥ एवं दैवं प्रत्याक्रुश्य विराधं प्रत्याह—मामिति । वृकाः ईहामृगाः । "कोकस्त्वीहामृगो वृकः" इत्यमरः । शार्दूलाः महाव्याघ्राः ।

वहतु गच्छतु ॥ २२ ॥ कुत एवमत आह अयमेवेति । परिगृह्य एकैकेन एकैकमिति यावत् ॥२३॥ स त्विति । समुत्क्षिप्य परिगृह्य । स्कन्धगतौ चकार स्कन्धमारोपयामासेत्यर्थः ॥ २४-२६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां तृतीयस्सर्गः ॥ ३ ॥ ह्रियमाणाविति । प्रगृह्य

द्वीपिनः अल्पव्याघ्राः । "व्याघ्रो मृगारिः शार्दूलो हिंसारुश्चित्रकीमृगात् । चण्डश्चाल्पस्त्वयं द्वीपी" इति वैजयन्ती । नमस्त इत्येवं चुक्रोशेति पूर्वेणान्वयः ॥ ३ ॥ ४ ॥ सव्यमिति । ननु विराधादाने कबन्धादाने च लक्ष्मणः सव्यं रामो दक्षिणं भुजमच्छिनदित्यविशेषेणोच्यते, किमत्र नियामकमिति चेत् ? उच्यते—सर्वदा लक्ष्मणो रामस्य दक्षिणपार्श्व एव तिष्ठति, अतो गृह्णन् दक्षिणेन रामं सव्येन लक्ष्मणं चागृह्णादित्यविरोधः । तरसा

तस्यास्तद्वचनं श्रुत्वा वैदेह्या रामलक्ष्मणौ । वेगं प्रचक्रतुर्वीरौ वधे तस्य दुरात्मनः ॥ ४ ॥ तस्य रौद्रस्य सौमित्रिर्बाहुं सव्यं बभञ्ज ह । रामस्तु दक्षिणं बाहुं तरसा तस्य रक्षसः ॥ ५ ॥ स भग्नबाहुः संविग्नो निपपाताशु राक्षसः । धरण्यां मेघसङ्काशो वज्रभिन्न इवाचलः ॥ ६ ॥ मुष्टिभिर्जानुभिः पद्भिः सूदयन्तौ तु राक्षसम् । उद्यम्योद्यम्य चाप्येनं स्थण्डिले निष्पिपेषतुः ॥ ७ ॥ स विद्धो बहुभिर्बाणैः खड्गाभ्यां च परिक्षतः । निष्पिष्टो बहुधा भूमौ न ममार स राक्षसः ॥ ८ ॥ तं प्रेक्ष्य रामः सुभृशमवध्यमचलोपमम् । भयेष्वभयदः श्रीमानिदं वचनमब्रवीत् ॥ ९ ॥ तपसा पुरुषव्याघ्र राक्षसोऽयं न शक्यते । शस्त्रेण युधि निर्जेतुं राक्षसं निखनावहे ॥ १० ॥ तच्छ्रुत्वा राघवेणोक्तं राक्षसः प्रश्रितं वचः । इदं प्रोवाच काकुत्स्थं विराधः पुरुषर्षभम् ॥ ११ ॥ हतोऽस्मि पुरुषव्याघ्र शक्रतुल्यबलेन वै । मया तु पूर्वं त्वं मोहान्न ज्ञातः पुरुषर्षभः ॥ १२ ॥

बलेन ॥ ५ ॥ संविग्नः भीतः ॥ ६ ॥ मुष्टिभिरिति बहुवचनमावृत्त्या उद्यम्योद्यम्य सूदयन्तौ मुष्ट्यादिकमुद्धृत्योद्धृत्य प्रहरन्तौ । स्थण्डिले भूतले ॥७॥८॥ भयेष्वभयदः शापापायकरणाय प्रसन्न इत्युच्यते ॥ ९ ॥ शस्त्रेण शस्त्रादिभिः । निखनावहे भूमौ निक्षिपेव ॥ १० ॥ प्रश्रितं विनयान्वितं यथा तथा प्रोवाचेत्यन्वयः ॥ ११ ॥ रामपादस्पर्शेन प्रत्यभिजानन्नाह—हत इत्यादि । त्वयेति शेषः । पुरुषर्षभः पुरुषोत्तमस्त्वं रामत्वेनावतीर्ण इति न ज्ञात

उद्यम्य । शार्दूलद्वीपिन इति सबिन्दुविन्दुव्याघ्रौ । काकुत्स्थावुत्सृज्य मां हर ते नमः इत्याद्युक्तिः रामलक्ष्मणयोः प्रेमातिशयादिति ज्ञेया ॥ १–३ ॥ तस्या इति । वेगं त्वराम् ॥ ४ ॥ ५ ॥ संविग्नः बाहुभङ्गेनोद्विग्नः ॥ ६–८ ॥ भयेष्वभयद इति स्वश्रवणस्मरणकीर्तनादि संविदधतः पुरुषस्य सकलभयापहारी भवति ॥ ९ ॥ अयं तपोबलसम्पन्नो यस्मात् अतः राक्षसः युधि शस्त्रेण निर्भेत्तुं न शक्यते, किन्तु निखनावह इति सम्बन्धः ॥ १० ॥ ११ ॥ मोहात् अज्ञानात् । पुरुषर्षभ इति

टी०–मुष्टिभिरिति । स्थण्डिले भूप्रदेशे ॥ ७ ॥ सत्य०–मया रमया सहितस्त्वं न ज्ञात इति वा ॥ १२ ॥

इत्यर्थः ॥ १२ ॥ ज्ञानप्रकारमाह–कौसल्येति । तात सर्वलोकजनक ! त्वं कौसल्यायाः सुप्रजाः । "नित्यमसिच् प्रजामेधयोः" इत्यसिच् । इति विदितोसि । महाभागा श्रीवैदेहीत्यवगता । अयं च त्वदंशभूतो महायशाः त्वदनुवर्तनजकीर्तिमान् लक्ष्मण इति विदितः ॥ १३ ॥ एतावत्पर्यन्तं कुतो न ज्ञातवानसीत्यत्राह–अपीति । अपिर्गर्हायाम् । कस्य केन शाप इत्यत्राह तुम्बुरुरित्यादि । अहमिति शेषः ॥ १४ ॥ उपकारस्मृत्योपश्लोकयति

कौसल्यासुप्रजा राम तात त्वं विदितो मया । वैदेही च महाभागा लक्ष्मणश्च महायशाः ॥१३॥ अपि शापादहं घोरां प्रविष्टो राक्षसीं तनुम् । तुम्बुरुर्नाम गन्धर्वः शप्तो वैश्रवणेन ह ॥१४॥ प्रसाद्यमानश्च मया सोऽब्रवीन्मां महा यशाः । यदा दाशरथी रामस्त्वां वधिष्यति संयुगे॥१५॥ तदा प्रकृतिमापन्नो भवान् स्वर्गं गमिष्यति । इति वैश्रवणो राजा रम्भासक्तं पुराऽनघ । अनुपस्थीयमानो मां संक्रुद्धो व्याजहार ह ॥ १६ ॥ तव प्रसादान्मुक्तोऽहमभिशापात् सुदारुणात् । भुवनं स्वं गमिष्यामि स्वस्ति वोऽस्तु परन्तप ॥१७॥ इतो वसति धर्मात्मा शरभङ्गः प्रतापवान् ॥१८॥

महायशा इति । प्रकृतिं स्वरूपम् । शापनिमित्तमाह अनुपस्थीयमान इति । रम्भासक्तं माम् अनुपस्थीयमानः अवसरे मया असेव्यमानः अत एव संक्रुद्धः राजा अस्मत्स्वामी वैश्रवणः इति उक्तप्रकारेण राक्षसो भवेति व्याजहार । पुनर्मया प्रसाद्यमान इत्यब्रवीच्च उक्तप्रकारेण शापावसानं चोवाचेति योजना ॥ १५ ॥ १६ ॥ स्वं भुवनं स्वर्गलोकम् । उपकारस्मृत्या मङ्गलमाशास्ते स्वस्ति व इति ॥ १७ ॥ वाचिककैङ्कर्यमातनोति–इत इति । प्रतापवान् महातपाः । अधिकमर्धं यस्य तदध्यर्धं तच्च तद्योजनं च तस्मिन्, सार्धयोजन इत्यर्थः ॥ १८ ॥

पाठः । हे परमपुरुष ! पूर्वं त्वं मया न ज्ञात इति तव सच्चिदानन्दजगन्मोहनश्रीमूर्तिसंस्पर्शभागधेयात्पूर्वं निरवधिककरुणया मदीयशापविमोचनायाविर्भूतश्रीराम स्त्वमिति मया न ज्ञात इत्यर्थः ॥ १२ ॥ इदानीं स एव परमेश्वरः त्वं रामरूपेणावतीर्ण इति विदितः ॥ १३ ॥ तुम्बुरुर्नाम गन्धर्वोऽहं वैश्रवणेन शप्तः, तस्मादामि शापाद्राक्षसीं तनुं प्रविष्ट इति सम्बन्धः ॥ १४ ॥ प्रकृतिं गान्धर्वीं तनुम् ॥ १५ ॥ शापकारणमाह अनुपस्थीयमानः अवसरेष्वसेव्यमानः । अनुपस्थाने कारण माह रम्भासक्तमिति । अतः क्रुद्धस्सन् मां राक्षसो भवेति व्याजहार । ततः प्रसाद्यमान इत्युवाच । इति यदा दाशरथी राम इत्यादिना पूर्वोक्तं शापमोचनप्रकार

क्षिप्रं तदग्निप्रवेशात्पूर्वम् । ते त्वत्तः श्रेयः ब्रह्मलोकं विधास्यति पोपयिष्यति । यद्वा ते श्रेयः निवासस्थानप्रवेशनादिकम् ॥ १९॥ अवट इति । अवटे श्वभ्रे कुशली आर्तत्राणरूपकुशलयुक्तः । गतसत्त्वानां गतासूनाम् । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । एषः अवटप्रक्षेपः । अस्य धर्मस्य फलमाह अवट इति ॥ २० ॥ स्वर्गसम्प्राप्तः सम्प्राप्तप्राय इत्यर्थः । खननानन्तरं स्वर्गप्राप्तेः ॥ २१ ॥ २२ ॥ कुञ्जरस्येत्यादि श्लोकद्वयम् । वैपुल्यं विधाय

अध्यर्धयोजने तात महर्षिस्सूर्यसन्निभः । तं क्षिप्रमभिगच्छ त्वं स ते श्रेयो विधास्यति ॥ १९ ॥ अवटे चापि मां राम प्रक्षिप्य कुशली व्रज । रक्षसां गतसत्त्वानामेष धर्मः सनातनः । अवटे ये निधीयन्ते तेषां लोकाः सनातनाः ॥ २० ॥ एवमुक्त्वा तु काकुत्स्थं विराधः शरपीडितः । बभूव स्वर्गसंप्राप्तो न्यस्तदेहो महाबलः ॥ २१ ॥ तच्छ्रुत्वा राघवो वाक्यं लक्ष्मणं व्यादिदेश ह ॥ २२ ॥ कुञ्जरस्येव रौद्रस्य राक्षसस्यास्य लक्ष्मण । वनेऽस्मिन् सुमहच्छ्वभ्रं खन्यतां रौद्रकर्मणः ॥ २३ ॥ इत्युक्त्वा लक्ष्मणं रामः प्रदरः खन्यतामिति । तस्थौ विराधमाक्रम्य कण्ठे पादेन वीर्यवान् ॥ २४ ॥ ततः खनित्रमादाय लक्ष्मणः श्वभ्रमुत्तमम् । अखनत् पार्श्वतस्तस्य विराधस्य महात्मनः ॥२५॥ तं मुक्तकण्ठं निष्पिष्य शङ्कुकर्णं महास्वनम् । विराधं प्राक्षिपच्छ्वभ्रे नदन्तं भैरवस्वनम् ॥२६॥ तमाहवे निर्जितमाशु विक्रमौ स्थिरावुभौ संयति रामलक्ष्मणौ । मुदान्वितौ चिक्षिपतुर्भयावहं नदन्तमुत्क्षिप्य बिले तु राक्षसम् ॥ २७ ॥

निम्नतां विधत्ते प्रदरः खन्यतामिति । प्रकृष्टो दरः प्रदरः ॥२३॥२४॥ उत्तमम् अतिनिम्नम् । महात्मनः महाकायस्य ॥ २५ ॥ मुक्तकण्ठं कण्ठाक्रमणरहितम् अत एव महास्वनम् । शङ्कुकर्णं शङ्कुः कीलं तत्सदृशकर्णं गर्दभाकारं वा । "शङ्कुकर्णौ गर्दभोष्ट्रौ" इति बाणः । भैरवस्वनं भयङ्करप्रतिध्वानं यथा भवति तथा नदन्तम् । महास्वनमित्यत्र स्वभावोक्तिः । अत्रोच्चारणरूपकार्योक्तिरिति भिदा ॥ २६ ॥ समस्तमुक्तमेवार्थं वृत्तान्तरेण संगृह्णाति–तमाहव

मप्युवाचेत्यर्थः ॥ १६–१८ ॥ अध्यर्धयोजने अधिकमर्धं यस्य तदध्यर्धं तच्च तद्योजनञ्च, सार्धयोजनमित्यर्थः ॥ १९ ॥ अवटे गर्ते ॥ २० ॥ स्वर्गसंप्राप्तः स्वर्गं सम्यक् प्राप्तुमुपक्रान्तवान् ॥ २१ ॥ २२ ॥ कुञ्जरस्येत्यादिश्लोकद्वयमेकं वाक्यम् । श्वभ्रं गर्तः । प्रदरः गर्तः । हे लक्ष्मण ! राक्षसस्य श्वभ्रं खन्यतामिति रामो लक्ष्मणमुक्त्वा अयं प्रदरं खनतु तावत्पर्यन्तमहमेवं करोमीति प्रदरखननावसरप्रदानाय पादेन विराधकण्ठे आक्रम्य तस्थावित्यर्थः ॥ २३॥ २४॥२५॥ मुक्तकण्ठं श्रीरामचरणपीडनेन शिथिलीकृतकण्ठम् । यद्वा रामपादेन त्यक्तं कण्ठं निक्षिप्य नितरां चालयित्वा प्राक्षिपत् अपातयत् ॥ २६ ॥ तमाहव इत्यादि

इत्यादिना । संयति युद्धे स्थिरौ ॥ २७ ॥ बिलप्रक्षेपनिमित्तमाह—अवध्यतामिति । महासुरस्य वृत्राद्यसुरसदृशस्य । समर्थ्य अयमेवास्य वधोपाय इति निश्चित्य ॥२८॥ न केवलं स्वनिश्चयः, विराधेन चानन्तरं तथोक्तमित्याह—स्वयमिति । काननचारिणा रामेण । प्रसह्य बलात्कृत्य आत्मनो वधार्थं स्वय मीप्सितः मृत्युः बिलप्रवेशरूपवधोपायः । न मे वधः शस्त्रकृतो भवेदित्युपायान्तरं प्रतिपिद्ध्य स्वयं निवेदितः उक्तो हीति योजना ॥२९॥ रामेण तद्भाषित

अवध्यतां प्रेक्ष्य महासुरस्य तौ शितेन शस्त्रेण तदा नरर्षभौ । समर्थ्य चात्यर्थविशारदावुभौ बिले विराधस्य वधं प्रचक्रतुः ॥ २८ ॥ स्वयं विराधेन हि मृत्युरात्मनः प्रसह्य रामेण वधार्थमीप्सितः । निवेदितः काननचारिणा स्वयं न मे वधः शस्त्रकृतो भवेदिति ॥ २९ ॥ तदेव रामेण निशम्य भाषितं कृता मतिस्तस्य बिलप्रवेशने । बिलं च रामेण बलेन रक्षसा प्रवेश्यमानेन वनं विनादितम् ॥३०॥ प्रहृष्टरूपाविव रामलक्ष्मणौ विराधमुर्व्याः प्रदरे निहत्य तौ । ननन्दतुर्वीतभयौ महावने शिलाभिरन्तर्दधतुश्च राक्षसम् ॥ ३१ ॥ ततस्तु तौ काञ्चनचित्रकार्मुकौ निहत्य रक्षः परिगृह्य मैथिलीम् । विजह्रतुस्तौ मुदितौ महावने दिवि स्थितौ चन्द्रदिवाकराविव ॥३२॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे चतुर्थः सर्गः ॥ ❀ ॥

मेव निशम्य तस्य विराधस्य बिलप्रवेशने मतिः कृता । रामेण बलेन बिलं प्रवेश्यमानेन रक्षसा वनं विनादितमिति योजना ॥ ३० ॥ प्रहृष्टरूपौ पुलकित शरीरौ । वस्तुतो हर्षशोकावनयोर्न स्तः किंतु तन्नटनमात्रमिति इवशब्देन सूचयति ॥ ३१ ॥ पत्नीसहितस्य रामस्य तद्रहितस्य परतन्त्रस्य लक्ष्मणस्य चोपमानमाह—चन्द्रदिवाकराविवेति ॥३२॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥

पूर्वस्य विस्तरः । नदन्तमिति परमेश्वरेण श्रीरामेण वधं प्राप्तोऽस्म्यतो धन्योऽहं धन्योऽहमिति हर्षेण नादं कुर्वन्तमित्यर्थः । संयति स्थिरौ आहवे निर्जितं तं बलेनो त्क्षिप्य चालयित्वा निक्षिपतुः अपातयताम् ॥ २७ ॥ कस्मादेवं प्रचक्रतुरित्यत आह—असह्यतामिति । महासुरस्य शस्त्रेणासह्यतामवध्यतां प्रेक्ष्य अत्यर्थविशारदौ अत्यन्तकार्यविशारदौ बिले वधं समर्थ्य निश्चित्य प्रचक्रतुः । (असह्यतां प्रेक्ष्य इति पाठः)॥२८॥ अतोऽयमेवास्य वधोपाय इति कथं ज्ञातमित्यत आह—स्वयमिति । स्वयं प्रसह्य अवरुध्य बिले निक्षिप्य । काननचारिणा रामेण वधार्थं न मे वधः शस्त्रकृतो भवेदिति आत्मन ईप्सितो मृत्युर्विराधेन स्वयं निवेदित इति सम्बन्धः । बिलप्रक्षेपार्थं शस्त्रवधं निषिद्ध्य ईप्सितो बिलप्रक्षेपवधो विराधेन स्वयं निवेदित इत्यर्थः ॥ २९–३१ ॥ चन्द्रदिवाकराविव उभावपि चन्द्र इव कलासम्पन्नो सूर्य इव प्रतापसम्पन्नौ ॥३२॥ इति आरण्य० चतुर्थः सर्गः ॥ ४ ॥ * विराधवधसर्गपठनश्रवणफलं स्कान्दे–“ यो विराधवधं नित्यं शृणोति श्रावयेत वा । तस्य पापानि सर्वाणि विनष्टानि न संशयः॥” इति ॥

एवं विराधवनवासिमुमुक्षुमुनिजनशरणागतेरानुपङ्गिकफलभूतं विराधवधमभिधाय खरादिवधफलशरभङ्गाश्रमवासिमुनिजनशरणागतिं दर्शयिष्यन् तदु चितसौलभ्यदर्शनाय शरभङ्गाश्रमवनगमनं दर्शयति पञ्चमे–हत्वेत्यादि। परिष्वज्य समाश्वास्य चेति विराधाङ्कस्पर्शजभयदुःखव्रीडाशान्त्यर्थमिति भावः ॥१॥ कष्टं कृच्छ्रं गहनं वा। "कृच्छ्रगहनयोः कषः" इत्यनिण्निष्ठा। अत एव दुर्गं विषमं विश्रमायोग्यमित्यर्थः ॥२॥ तस्य विराधोक्तस्य 1 देवप्रभावस्य

हत्वा तु तं भीमबलं विराधं राक्षसं वने। ततः सीतां परिष्वज्य समाश्वास्य च वीर्यवान्। अब्रवील्लक्ष्मणं रामो भ्रातरं दीप्ततेजसम् ॥ १ ॥ कष्टं वनमिदं दुर्गं न च स्म वनगोचराः। अभिगच्छामहे शीघ्रं शरभङ्गं तपोधनम् ॥ २ ॥ आश्रमं शरभङ्गस्य राघवोऽभिजगाम ह। तस्य देवप्रभावस्य तपसा भावितात्मनः ॥ ३ ॥ समीपे शरभङ्गस्य ददर्श महदद्भुतम्। विभ्राजमानं वपुषा सूर्यवैश्वानरोपमम् ॥ ४ ॥ अवरुह्य रथोत्सङ्गात् सकाशे विबुधानुगम्। असंस्पृशन्तं वसुधां ददर्श विबुधेश्वरम् ॥ ५ ॥ सुप्रभाभरणं देवं विरजोम्बरधारिणम्। तद्विधैरेव बहुभिः पूज्यमानं महात्मभिः ॥ ६ ॥

तपसा साधनेन भावितात्मनः साक्षात्कृतपरब्रह्मणः। "तपसा ब्रह्म विजिज्ञासस्व" इति श्रुतेः ॥ ३ ॥ महदद्भुतं महाश्चर्यभूतं किमपि वस्तु विभ्राजमानं वपुषा, भ्राजमानवपुषमित्यर्थः। वैश्वानराः सूर्यव्यतिरिक्तास्तेजांसि, सूर्यादितेजस्समुदायोपममित्यर्थः ॥ ४ ॥ ततः किञ्चित्समीपगमनानन्तरम्। रथोत्सङ्गात् रथतटादवरुह्य वसुधामसंस्पृशन्तम्, अभूमिस्पर्शस्य देवस्वभावत्वात्। सकाशे समीपे। विबुधानुगं विबुधा अनुगाः यस्य तम् विबुधेश्वरमिन्द्रं ददर्श ॥५॥ सुप्रभान्याभरणानि यस्य तम्। देवं देदीप्यमानम्। विरजो निर्मलमम्बरं धर्तुं शीलमस्यास्तीति विरजोम्बरधारिणम्। तद्विधैः इन्द्र

हत्वेति। सीतां परिष्वज्य समाश्वास्य चेति, विराधाद्भीतामिति शेषः। कष्टं गहनम्। दुर्गं विषमं विश्रमायोग्यम् ॥ १ ॥ २ ॥ तपसा भावितात्मनः तपसा सर्वेश्वरालोचनेन भावितो वासित आत्मा अन्तःकरणं यस्य तथा ॥ ३–७ ॥



स०–कष्टं कष्टसाधनम्। वयम् अवनगोचराः वनं गोचरो विषयो येषां ते वनगोचराः, ते न भवन्तीत्यवनगोचराः। न च स्मः अत्रेति शेषः। न स्थास्यामः, अन्यत्र गच्छाम इति भावः। यद्वा वनगोचरा न च स्म इतीदं वनं दुर्गं कष्टमित्यब्रवीत् ॥ २ ॥ टीका०–अवरुह्य रथोत्सङ्गादाकाशे इति पाठे–आकाशे भूमेः समीपवर्तिनि ॥ ५ ॥ तद्विधैः इन्द्रतुल्यैर्देवैः ॥ ६ ॥

तुल्याकारैः । ददर्शेत्यनुषङ्गः ॥६॥ हरिभिः श्यामैः । यद्वा वाजिभिः वेगवद्भिः हरिभिः अश्वैः । तस्य इन्द्रस्य ॥७॥ पाण्डराभ्रस्येव घना अधिका प्रख्या कान्तिर्यस्य तदिति श्वैत्ये दृष्टान्तः । चन्द्रमण्डलसन्निभमिति वृत्ततायाम् । चित्रमाल्यैर्लम्बमानकुसुमसरैरुपशोभितम् ॥ ८ ॥ चामरव्यजने चामररूप व्यजने । महाधने बहुमूल्ये । मूर्ध्नि तस्येति शेषः । अपश्यदित्यनुषङ्गः ॥ ९ ॥ ईडिरे तुष्टुवुः । ईडमानानपश्यदित्यर्थः ॥ १० ॥ सहेत्यादिसार्धः श्लोक

हरिभिर्वाजिभिर्युक्तमन्तरिक्षगतं रथम् । ददर्शादूरतस्तस्य तरुणादित्यसन्निभम् ॥ ७ ॥ पाण्डराभ्रघनप्रख्यं चन्द्र मण्डलसन्निभम् । अपश्यद्विमलं छत्रं चित्रमाल्योपशोभितम् ॥ ८ ॥ चामरव्यजने चाग्र्ये रुक्मदण्डे महाधने । गृहीते वरनारीभ्यां धूयमाने च मूर्द्धनि ॥ ९ ॥ गन्धर्वामरसिद्धाश्च बहवः परमर्षयः । अन्तरिक्षगतं देवं वाग्भि रग्र्याभिरीडिरे ॥ १० ॥ सह सम्भाषमाणे तु शरभङ्गेण वासवे । दृष्ट्वा शतक्रतुं तत्र रामो लक्ष्मणमब्रवीत् ॥ ११ ॥ रामोऽथ रथमुद्दिश्य लक्ष्मणाय प्रदर्शयन् ॥ १२ ॥ अर्चिष्मन्तं श्रिया जुष्टमद्भुत पश्य लक्ष्मण । प्रतपन्तमिवा दित्यमन्तरिक्षगतं रथम् ॥ १३ ॥ ये हयाः पुरुहूतस्य पुरा शक्रस्य नः श्रुताः । अन्तरिक्षगता दिव्यास्त इमे हरयो ध्रुवम् ॥ १४ ॥ इमे च पुरुषव्याघ्रा ये तिष्ठन्त्यभितो रथम् । शतं शतं कुण्डलिनो युवानः खड्गपाणयः ॥ १५ ॥

एकान्वयः । तत्र तदानीम् । राम इति पदस्यावृत्तिः क्रियाभेदात् अतो न पुनरुक्तिः । उद्दिश्य हस्तेन निर्दिश्य शरभङ्गेण साकं वासवे सम्भाषमाणे सति तत्र समये रामः शतक्रतुं दृष्ट्वा तदीयरथं रामः लक्ष्मणाय उद्दिश्य प्रदर्शयन् सन् अथ लक्ष्मणमब्रवीदिति योजना ॥ ११ ॥ १२ ॥ अर्चिष्मन्तं सतेज स्कम् । श्रिया कान्त्या ॥ १३ ॥ पुरुहूतस्य यज्वभिर्बहुशो हूतस्य । नः अस्माभिः । इमे हरितवर्णाः हरयः अश्वाः ते । यद्वा त इमे शक्रस्य हरय इत्यन्वयः ॥ १४ ॥ इमे चेत्यादिश्लोकत्रयमेकं वाक्यम् । शतं शतमिति प्रतिदिशमिति शेषः । विस्तीर्णविपुलोरस्काः अत्यन्तविशालोरस्काः । शोणांशु

पाण्डराभ्रघनप्रख्यं पाण्डराभ्रस्येव घना अधिका प्रख्या कान्तिर्यस्य तथा ॥ ८-१३ ॥ य इति । पुरुहूतस्य पुरु भूयिष्ठं यथा भवति तथा यज्वभिर्हूयत इति तथा । नः अस्माभिः ॥ १४ ॥ इम इति अष्टदिक्ष्विति शेषः । अत्र शतशब्दोऽनेकवाची ॥ १५ ॥

टीका—अर्चिष्मन्तम् प्रतपन्तमादित्यमिव स्थितम् ॥ १३ ॥

वसनाः रक्तकान्तियुक्तवस्त्राः, एवंभूता य इमे तिष्ठन्तीत्यन्वयः । येषां सर्वेषामुरोदेशेषु हाराः ज्वलनसन्निभाः अग्निवच्छुक्लभास्वराः दृश्यन्ते । रूपमित्य त्रापि ये इत्यध्याहार्यम् । पञ्चविंशतिः वर्षाः परिमाणमस्य पञ्चविंशतिवार्षिकम् । "तदस्य परिमाणम्" इति ठक् । "वर्षस्याभविष्यति" इत्युत्तरपद वृद्धिः । एवम्भूतं रूपं शरीरं ये बिभ्रति । "अदभ्यस्तात्" इत्यदादेशः । पञ्चविंशतिवार्षिकमिति यौवनावस्थोच्यते । "कौमारं स्यात्पञ्चदशाद्यौवनं तु ततःपरम्" इत्युक्तेः । त इमे सुरा इत्यध्याहार्यम् ॥ १५-१७ ॥ तत्र युक्तिमाह-एतद्धीति । एतत् पञ्चविंशतिवार्षिकं वयः शरीरावस्था देवानां

विस्तीर्णविपुलोरस्काः परिघायतबाहवः । शोणांशुवसनास्सर्वे व्याघ्रा इव दुरासदाः ॥ १६ ॥ उरोदेशेषु सर्वेषां हारा ज्वलनसन्निभाः । रूपं बिभ्रति सौमित्रे पञ्चविंशतिवार्षिकम् ॥ १७ ॥ एतद्धि किल देवानां वयो भवति नित्यदा । यथेमे पुरुषव्याघ्रा दृश्यन्ते प्रियदर्शनाः ॥१८॥ इहैव सह वैदेह्या मुहूर्तं तिष्ठ लक्ष्मण । यावज्जानाम्यहं व्यक्तं क एष द्युतिमान् रथे ॥१९ ॥ तमेवमुक्त्वा सौमित्रिमिहैव स्थीयतामिति । अभिचक्राम काकुत्स्थः शरभङ्गाश्रमं प्रति ॥ २० ॥ ततः समभिगच्छन्तं प्रेक्ष्य रामं शचीपतिः । शरभङ्गमनुप्राप्य विविक्त इदमब्रवीत् ॥ २१ ॥

नित्यदा भवति । नित्यदेति निपातः । किलेति प्रसिद्धौ । यथेमे वसनाभरणादिभिश्चारुदर्शनाः तथा किल देवा इति योजना ॥ १८ ॥ रथे इत्यनेन तदानीं रामं दृष्ट्वा रथमारूढ इत्यवगम्यते । यावज्जानामि ज्ञास्यामि । "यावत्पुरानिपातयोर्लट्" इति लट् । व्यक्तम् अनुमितिं विना स्पष्टं प्रत्यक्षेण ज्ञास्यामीत्यर्थः ॥ १९ ॥ विरहासहिष्णुतया अनुव्रजन्तं लक्ष्मणं पुनः प्रदिश्य जगामेत्याह-तमेवमिति ॥ २० ॥ अनुप्राप्य एकान्तवचनश्रवणाय समीपमागत्य । विविक्ते रहसि वक्ष्यमाणस्यातिगोप्यत्वात् ॥ २१ ॥

विस्तीर्णेति । अतिशयेन विशालानि उरांसि येषाम् । शोणाश्मवसनाः पद्मरागसदृशवसनाः । शोणांशुवसना इति पाठे-शोणा अंशवो वसनानि च येषां ते ॥ १६ ॥ १७ ॥ इमे देवा इदानीं यथा यादृग्वयस्का इव दृश्यन्ते एतदेव देवानां नित्यदा वयो भवतीति सम्बन्धः ॥ १८ ॥ इहैवेत्यादिश्लोकद्वयमेकं वाक्यम् । हे लक्ष्मण ! वैदेह्या सह इहैव तिष्ठ । आवामपि त्वया साकमागच्छाव इत्यत आह यावदिति । रथे रथसमीपे एष क इति यावज्जानामि तावत्पर्यन्तमिहैव स्थीयता मिति तं सौमित्रिमेवमुक्त्वा राघवः शरभङ्गाश्रमं प्रति स्वयमेवाभिचक्राम गन्तुमुपक्रान्त इति सम्बन्धः ॥ १९ ॥ २० ॥ शरभङ्गमनुज्ञाप्य वक्ष्यमाणवचनश्रवणेन

टीका-शोणाश्ववसना इति पाठे-शोणा अश्वा वसनानि च येषां ते ॥ १६ ॥

असौ रामः इह मत्समीपे उपयाति । उपयानसौ यावति काले मां नाभिभाषते तावत्स्वप्रतिज्ञां निष्ठां समाप्तिं नयतु । "निष्ठा निष्पत्तिनाशान्ताः" इत्यमरः । मया असम्भाषमाण एव स्वप्रतिज्ञां निर्वर्तयतु, मया सम्भाषणेऽस्य देवत्वप्रकटनं स्यादिति भावः । सम्भाषणाभावेपि दर्शनमस्त्वित्यत आह तत इति । ततः स्वप्रतिज्ञानिष्ठानयनानन्तरं मां द्रष्टुमर्हति स मां पश्यतु ॥२२॥ भवान् तं पश्यत्वित्यत्राह–जितवन्तमिति । रावणं जितवन्तम्, अत एव

इहोपयात्यसौ रामो यावन्मां नाभिभाषते । निष्ठां नयतु तावत्तु ततो मां द्रष्टुमर्हति ॥ २२ ॥ [ तावद्गच्छामहे शीघ्रं यावन्मां नाभिभाषते ] जितवन्तं कृतार्थं च द्रष्टाहमचिरादिमम् । कर्म ह्यनेन कर्त्तव्यं महदन्यैस्सुदुष्करम् । निष्पादयित्वा तत्कर्म ततो मां द्रष्टुमर्हति ॥२३॥ इति वज्री तमामन्त्र्य मानयित्वा च तापसम् । रथेन हरियुक्तेन ययौ दिवमरिन्दमः ॥ २४ ॥ प्रयाते तु सहस्राक्षे राघवस्सपरिच्छदम् । अग्निहोत्रमुपासीनं शरभङ्गमुपागमत् ॥ २५ ॥ तस्य पादौ च संगृह्य रामः सीता च लक्ष्मणः । निषेदुस्समनुज्ञाता लब्धवासा निमन्त्रिताः ॥ २६ ॥

कृतार्थं कृतदेवप्रयोजनम्, इममहमचिराद् द्रष्टा द्रष्टास्मि । दर्शनसम्भाषणाभ्यां देवत्वप्रकटने का हानिरित्यत्राह कर्मेति । हि यस्मादन्यैर्देवैर्दुष्करं महत्कर्म रावणवधादिकम् अनेन मानुषवेषेण कर्तव्यं तस्मादित्यर्थः ॥२३॥ इति उक्तप्रकारेण । तापसं तापसवेषम् । मानयित्वा बहुमान्य । तं शरभङ्गमामन्त्र्य । हरियुक्तेन अश्वयुक्तेन रथेन दिवं ययौ ॥ २४ ॥ प्रयाते त्विति रामागमनोद्योगकाल एवेन्द्रस्य प्रयातत्वात् । सपरिच्छदं स्त्रीभ्रातृरूपपरिवारसहितं यथा भवति तथा । अग्निहोत्रं वह्निम् । उपासीनं तत्र प्रवेशार्थमुपतिष्ठन्तं शरभङ्गमुपागमत् ॥ २५ ॥ समनुज्ञाताः आसनाय कृतानुमतिकाः । लब्धवासाः

शरभङ्गमङ्गीकृत्य विविक्ते एकान्ते परमरहस्यत्वात् ॥ २१ ॥ रामः इहोपयाति असौ यावन्मां नाभिभाषते तावत्कर्मणो निष्ठां निवृत्तिं नयतु, ततो मां द्रष्टुमर्हति । ममाभिभाषणात्पूर्वमेव अनेन रावणवधरूपं कर्म कर्तव्यम्, ततो मां द्रष्टुमर्हति तदा मयि तस्य परमकटाक्षवीक्षणस्य स एवावसर इत्यर्थः ॥ २२ ॥ अनेनान्यैस्सुदुष्करं महत्कर्म रावणवधरूपं कर्म कर्तव्यम् । कृतार्थं कृतदेवप्रयोजनं विजयिनं द्रष्टा द्रक्ष्यामि, रावणवधानन्तरं दृष्ट्वा कृतार्थो भविष्यामीति भावः ॥ २३–२५ ॥ रामस्तस्य पादौ संगृह्येति रामस्येश्वरावतारत्वेपि क्षत्रियरूपेणावतीर्णत्वात् 'यद्यदाचरति श्रेष्ठः' इति न्यायेन क्षत्रियमर्यादां प्रवर्त

मुनितो लब्धासनाः । ततो निमन्त्रिताः सत्कृताश्च सन्तः निषेदुः ॥ २६ ॥ शक्रोपयानम् इन्द्रागमननिमित्तम् ॥ २७ ॥ कथं न्यवेदयदित्यत्राह—मामिति । सर्वेषां वरं ददातीति वरदः एष इन्द्रः मां ब्रह्मलोकं निनीषति नेतुमिच्छति, ब्रह्माज्ञयेति शेषः ॥ २८ ॥ तर्हि किमर्थं न गतोऽसीत्यत्राह—अहमिति । हे नरव्याघ्र ! अदूरतो वर्तमानं मनसि सदा सन्निहितं त्वां योगतो ज्ञात्वा प्रियातिथिं त्वामदृष्ट्वा त्वदनुभवानन्दं विहाय ब्रह्मलोकम् "आब्रह्मभवनाल्लोकाः पुन

ततः शक्रोपयानं तु पर्यपृच्छत् स राघवः । शरभङ्गश्च तत्सर्वं राघवाय न्यवेदयत् ॥ २७ ॥ मामेष वरदो राम ब्रह्मलोकं निनीषति । जितमुग्रेण तपसा दुष्प्रापमकृतात्मभिः ॥२८॥ अहं ज्ञात्वा नरव्याघ्र वर्तमानमदूरतः । ब्रह्मलोकं न गच्छामि त्वामदृष्ट्वा प्रियातिथिम् ॥ २९ ॥ त्वयाहं पुरुषव्याघ्र धार्मिकेण महात्मना । समागम्य गमिष्यामि त्रिदिवं देवसेवितम् ॥ ३० ॥ अक्षया नरशार्दूल मया लोका जिताश्शुभाः । ब्राह्याश्च नाकपृष्ठ्याश्च प्रतिगृह्णीष्व मामकान् ॥ ३१ ॥ एवमुक्तो नरव्याघ्रः सर्वशास्त्रविशारदः । ऋषिणा शरभङ्गेण राघवो वाक्यमब्रवीत् ॥ ३२ ॥

रावर्तिनः" इत्युक्तलोकं न गच्छामि ॥२९॥ तर्हि केन साधनेन कं लोकं गमिष्यसीत्यत्राह—त्वयेति । धार्मिकेण धर्मस्वरूपेण । स्वार्थे ठक् । महात्मना सत्यसङ्कल्पेन त्वया समागम्य त्वत्कटाक्षविषयो भूत्वा देवसेवितं "यत्र पूर्वे साध्याः सन्ति देवाः" इत्युक्तरीत्या नित्यसूरिसेवितं त्रिदिवं त्रिपाद्विभूतिं ब्रह्मलोकादुत्कृष्टं गमिष्यामि, ब्रह्मलोकं न गच्छामि त्रिदिवं गमिष्यामीत्यनेनायमर्थोऽवगम्यते॥ ३० ॥ क्रमेण तथा भविष्यति आर्जितकर्मफलानि प्रथममनुभवेत्यत आह—अक्षया इति। ब्राह्याः ब्रह्मलोकभवाः। नाकपृष्ठ्याः स्वर्गलोकभवाः। अक्षयाश्चिरकालस्थायिनः। ये लोकाः भोगभूमयः मया आर्जिताः

यतीति सूचितम् ॥ २६–२८ ॥ हे नरव्याघ्र पुरुषोत्तम ! अदूरतो वर्तमानं बहुकालं मनसा ध्यातम् अधुना मम भाग्यवशेन बाह्येप्यदूरे वर्तमानं प्रियातिथिं प्रिया अतिथयो भक्ताः यस्य तम् । त्वामदृष्ट्वा ब्रह्मलोकं न गमिष्यामीत्यर्थः ॥ २९ ॥ त्वयेति । हे देव ! धार्मिकेण भक्तसंरक्षणरूपधर्मशीलेन । कुतः, महात्मना महान् जगदाधारः आत्मा मूर्तिर्यस्य त्वया परमपुरुषेण समागम्य त्रिदिवं ब्रह्मलोकं गमिष्यामीति भावः । नित्यनिरतिशयनिर्मलानन्दस्वरूपस्य भक्तजनपारिजातस्य तव दर्शनानन्दं विहाय मम ब्रह्मलोके न किमपि भोक्तव्यमस्ति, तथापि पूर्वमपि मयैव शरीरान्तरैरनुभूतमपि ब्रह्मलोकं स्वबलप्रारब्धकर्माधीनो गमिष्यामि किं कर्तव्यमिति भावः ॥ ३० ॥ ब्राह्याः ब्रह्मलोकभवाः भोगप्रदेशविशेषाः । नाकपृष्ठ्याः स्वर्लोकभवाः भोगप्रदेशविशेषाः । प्रतिगृह्णीष्व मामका

तान् मामकान् प्रतिगृह्णीष्व, मत्कृतानि सर्वाणि सुकृतानि त्वदर्पितानि सन्त्विति भावः । सर्वत्रातिथिसत्कारः प्रातीतिकोऽर्थः । कर्मणां भगवदर्पणं नाम फलसङ्गत्यागकर्तृत्वत्यागपूर्वकं भगवत्कैङ्कर्यतयाऽनुष्ठानम् ॥ ३१ ॥ ३२ ॥ तनि०—ब्राह्म्याः ब्रह्मलोकभवाः भोगप्रदेशाविशेषाः । नाकपृष्ठ्याः स्वर्गलोकभवाः भोगप्रदेशविशेषाः । उभयत्र " दिगादिभ्यो यत् " इति यत् । प्रतिगृह्णीष्व मामकानिति सर्वेश्वरे फलसमर्पणाभिप्रायेणोक्तम् । अतिथिसत्कारविवक्षा प्राती

अहमेवाहरिष्यामि सर्वलोकान् महामुने । आवासं त्वहमिच्छामि प्रदिष्टमिह कानने ॥ ३३ ॥ राघवेणैवमुक्तस्तु शक्रतुल्यबलेन वै । शरभङ्गो महाप्राज्ञः पुनरेवाब्रवीद्वचः ॥ ३४ ॥ इह राम महातेजास्सुतीक्ष्णो नाम धार्मिकः । वसत्यरण्ये धर्मात्मा स ते श्रेयो विधास्यति ॥३५॥ सुतीक्ष्णमभिगच्छ त्वं शुचौ देशे तपस्विनम् । रमणीये वनोद्देशे स ते वासं विधास्यति ॥३६॥ इमां मन्दाकिनीं राम प्रतिस्रोतामनुव्रज । नदीं पुष्पोडुपवहां तत्र तत्र गमिष्यसि ॥३७॥

तिकी । उत्तरत्र—" मत्प्रसादात् सभार्यस्त्वं विहरस्व सलक्ष्मणः " इतीदमपि फलसमर्पणाभिप्रायमेव ॥ ३१ ॥ तदिदमङ्गीकुर्वन् तस्य वाचिककैङ्कर्यं नियमयति—अहमेवेति । आहरिष्याम्येव स्वीकरिष्याम्येव । सर्वलोकान् त्वया मय्यर्पितान् । इह कानने प्रदिष्टं त्वया निर्दिष्टम् आवासं त्विच्छामि । तुशब्देन त्वदभिमतदेश एव वास इत्युच्यते । " सा काशीति न चाकशीति भुवि सायोध्येति नाध्यास्यते " इत्यादिकमिहानुसन्धेयम् ॥ ३२ ॥ तनि०—अहमेवाहरिष्यामि संपादयामि, प्रदास्यामीत्यर्थः । "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः" इति श्रुतेः । "लभते च ततः कामान् मयैव विहितान् हितान्" इति भगवदुक्तेश्च ॥ ३३ ॥ राघवेणेति । महाप्राज्ञ इत्यनेन मृगरूपमारीचनिरसनं मनसि कृतवानिति सूचयति ॥ ३४ ॥ धार्मिकः धर्मचारी । धर्मात्मा धर्मबुद्धिः । वसति अदूर इति शेषः ॥ ३५ ॥ ३६॥ मन्दाकिनीशब्दः पुण्यनदीमात्रे मुनिभिरुपचर्यते अत एव चित्रकूटेप्युक्तम् । प्रतिस्रोतामिति टाबार्षः । प्रतिस्रोतसं कृत्वाऽनुसृत्य व्रज, नद्यां पूर्ववाहिन्यां पुरुषेण पश्चिमाभिमुखतया गमने प्रतिस्रोतस्त्वं भवति । पुष्पोडुपवहाम् उडुपः प्लवः उडुपाकारपुष्प

निति सर्वेश्वरे श्रीरामे फलसमर्पणाभिप्रायेणोक्तम् । अतिथिसत्कारविवक्षा प्रातीतिकी । अहमेवाहरिष्यामीति समर्पितफलस्वीकारोक्तिः । प्रातीतिकार्थस्त्वहमेव सर्वान् लोकानाहरिष्यामि नतु त्वत्तः । प्रतिग्रहीष्यामीति क्षत्रियस्य प्रतिग्रहानर्हत्वादित्यभिप्रायः। प्रदिष्टं प्रदर्शितं,त्वयेति शेषः॥३१–३६॥ प्रतिस्रोतामित्यावन्तत्व

यथावद्गामित्यर्थः। नदीं तत्र तत्र गमिष्यसीत्यनेन क्वचिन्नदीतीरे क्वचिद्व्यवहिते च मार्ग इत्युच्यते ॥ ३७ ॥ एष पन्था इति । अनयोक्त्या सुतीक्ष्णाश्रममार्गो हस्तेन निर्दिश्यते । अथ मुनिः स्वदेहत्यागकाले रामसन्निधानमर्थयते मुहूर्तं पश्य तात मामिति । तात सर्वलोकजनक ! ॥३८॥ मन्त्रवित् ब्रह्ममेधमन्त्रवित् शरभङ्गः अग्निं सुसमाधाय परिस्तरणादिभिरलंकृत्य आज्येन ब्रह्ममेधमन्त्रैर्हुत्वा हुताशनं प्रविवेश । अत्र विधिः–" यद्युत्कण्ठा

एष पन्था नरव्याघ्र मुहूर्तं पश्य तात माम् । यावज्जहामि गात्राणि जीर्णां त्वचमिवोरगः ॥३८॥ ततोऽग्निं सुसमाधाय हुत्वा चाज्येन मन्त्रवित् । शरभङ्गो महातेजाः प्रविवेश हुताशनम् ॥ ३९ ॥ तस्य रोमाणि केशांश्च ददाहाग्निर्महात्मनः । जीर्णां त्वचं तथास्थीनि यच्च मांसं सशोणितम् ॥ ४० ॥ रामस्तु विस्मितो भ्रात्रा भार्यया च सहात्मवान् ॥ ४१ ॥ स च पावकसङ्काशः कुमारः समपद्यत । उत्थायाग्निचयात्तस्माच्छरभङ्गो व्यरोचत ॥ ४२ ॥ स लोकानाहिताग्नीनामृषीणां च महात्मनाम् । देवानां च व्यतिक्रम्य ब्रह्मलोकं व्यरोहत ॥ ४३ ॥

तदावाप्तौ ब्रह्ममेधानलं व्रजेत् । नाभिवक्रात्मगानग्नीनवरोप्य यथास्थलम् ॥ संस्कारयेत्–" इति ॥ ३९–४१ ॥ अथास्य देवयानमार्गेण ब्रह्मलोकप्राप्तिं दर्शयति–स चेत्यादिना । कुमारलक्षणमुक्तं रत्नाकरे–" बालोऽथ पञ्चदशभिस्त्रिंशद्भिस्तु कुमारकः " इति । ब्रह्मलोकं " तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स

मार्षम् । प्रतिस्रोतसं कृत्वा अनुव्रज अनुसृत्य गच्छ । नद्यां पूर्ववाहिन्यां पुरुषेण पश्चिमाभिमुखगमने प्रतिस्रोतस्त्वं भवति । पुष्पोडुपवहां पुष्पवल्लघूडुपानि वहतीति तथा । यद्वा पुष्पप्रस्तरवहाम् ॥ ३७ ॥ एष इति । तात जगज्जनक ! मां पश्य अयं कृतार्थो भवत्विति करुणाकटाक्षेणेति शेषः । गात्राणीत्यवयवाभिप्रायेण ।

ति०–आहिताग्निलोकाः " कर्मणा पितृलोकः " इति श्रुताश्चन्द्रप्रदक्षिणा ऋषिलोकाः । " विद्यया देवलोकः " इति श्रुतास्सूर्यप्रदक्षिणाः । देवानाम् आजानदेवानां ब्रह्मविष्णुरुद्राणां च लोकाः यान् ध्रुवः प्रदक्षिणीकरोति । ततो ब्रह्मलोकं तुर्यम् । व्यरोहत आरूढवान् । सत्य०–ऋषीणां कश्यपादीनाम् । ब्रह्मलोकं भगवद्द्वाररूपेणेत्यर्थः । " स्वर्गतिं तथादात् " इत्याचार्योक्तेः ॥ ४३ ॥

एनान् ब्रह्म गमयति " इत्युक्तं ब्रह्मात्मकं लोकम् ॥४२॥४३॥ स इति । अत्र पितामहशब्दोऽपि सविग्रहपरमात्मपरः । सर्वमिदं शरभङ्गस्य रामसान्निध्य प्रतीक्षया व्यज्यते । अस्मिन् सर्गे चतुश्चत्वारिंशच्छ्लोकाः ॥ ४४ ॥ इति श्रीगो० श्रीरा० रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥ एवं खरवधार्थिमुनिजनशरणागतिं वक्तुं तदुपयोगितया रामस्य समर्थकारुणिकत्वमुक्त्वा अथ तच्छरणागतिं वक्तुमुपक्रमते–शरभङ्ग इत्यादि । शरभङ्गे दिवं

स पुण्यकर्मा भवने द्विजर्षभः पितामहं सानुचरं ददर्श ह । पितामहश्चापि समीक्ष्य तं द्विजं ननन्द सुस्वागत मित्युवाच ह ॥ ४४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे पञ्चमः सर्गः * ॥५॥

शरभङ्गे दिवं याते मुनिसङ्घाः समागताः । अभ्यगच्छन्त काकुत्स्थं रामं ज्वलिततेजसम् ॥ १ ॥ वैखानसा वाल खिल्यास्सम्प्रक्षाला मरीचिपाः । अश्मकुट्टाश्च बहवः पत्राहाराश्च धार्मिकाः ॥ २ ॥

यात इति कालप्रदर्शनं सुतीक्ष्णादीनां विद्यमानत्वात् । समागताः सम्मिलिताः ॥१॥ वैखानसा इत्यादि । "ये नखास्ते वैखानसाः ये वालास्ते वालखिल्याः" इत्युक्तरीत्या भगवन्नखरोमजाता ऋषयः । सदा शरीरं संप्रक्षालयन्तीति संप्रक्षालाः । मरीचींश्चन्द्रसूर्यादिकिरणान् सदा पिबन्तीति मरीचिपाः । सदान्तः

" वृद्धः शौचक्रियालुप्तः प्रत्याख्यातभिषक्क्रियः । आत्मानं घातयेद्यस्तु भृग्वग्न्यनशना (म्बु) दिभिः । " इति वचनाच्छरभङ्गस्याग्निप्रवेशस्समञ्जस इति ॥ ३८–४४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां पञ्चमः सर्गः ॥ ५ ॥ शरभङ्ग इति । मुनिसङ्घाः काकुत्स्थं ककुत्स्थान्वयेऽवतीर्णं ज्वलिततेजसं रामं " रमन्ते योगिनोऽनन्ते " इति श्रुतेः परं ब्रह्म अभ्यगच्छन्त द्रष्टुं किञ्चिद्विज्ञापयितुं चेति शेषः । अयं भावः- स्वप्रकाशं परं ब्रह्मैव ककुत्स्थान्वयेऽवतीर्णं सद्भाग्यवशेनास्मद्दृष्टिगोचरोऽभूत् अतोऽस्मत्तपोदानादिकमद्यफलितमिति दर्शनानन्देन कृतार्थीभवितुं निर्धनस्य धनलाभे यथा तद्वदानन्दनिर्भरा मुनिसङ्घा नानादिग्भ्यः समागता इति ॥ १ ॥ वैखानसादयस्तपोविशेषलब्धसंज्ञास्तापसविशेषाः । यद्वा ब्रह्मणो नखजाता वैखानसाः । केशजाता वालखिल्याः " ये नखास्ते वैखानसाः ये वालास्ते वालखिल्याः" इति श्रुतेः । यद्वा विखनसमुनिना प्रोक्तं सूत्रमधिकृत्य तन्मार्गानुसारिणो वैखानसाः । वालखिल्यास्तु नवेऽन्ने लब्धे पूर्वसञ्चितत्यागिनः । सम्प्रक्षालास्तु भगवतः श्रीपादप्रक्षालनजाता महर्षयः । यद्वा प्रत्यहं जीवनसाधनं सम्पाद्य सर्वं तद्विनियुज्य वर्त्तन्ते ये ते वा सम्प्रक्षालाः, अश्वस्तनिका इत्यर्थः । मरीचिपाश्चन्द्रिकापायिनः । अश्मकुट्टास्तु भक्षणार्थं प्रियङ्ग्वादीनश्मन्येव कुट्टयन्तीति

* अस्य श्रवणफलम् । स्कान्दे–" शरभङ्गाश्रमप्राप्तपुरुहूतसमागमम् । दर्शनं शरभङ्गस्य रघुनाथस्य पूजनम् । शृण्वन्तो मरुतां लोकं प्राप्नुवन्ति न संशयः ॥" इति ॥

किरणान् प्रवेशयन्तो विवृतास्या इत्यर्थः । अश्मभिरात्मशरीराणि कुट्टन्तीत्यश्मकुट्टाः । पत्राहाराः पर्णाशनाः ॥ २ ॥ दन्ता एवोलूखलं तदेषामस्तीति दन्तोलूखलिनः, दन्तैरेव व्रीह्यादितुषनिर्मोकं कृत्वा भक्षयन्त इत्यर्थः । उन्मज्जकाः शिरोमात्रमुद्धृत्य सदा जलावगाढाः । गात्रमेव शय्या येषां ते गात्रशय्याः । उरसि पृष्ठेंऽसयोर्वा शिरः कृत्वा शयाना इत्यर्थः । अतो न स्थण्डिलशायिन इत्यनेन पुनरुक्तिः । अशय्याः अनम्रगात्रा इत्यर्थः । अभ्रावका

दन्तोलूखलिनश्चैव तथैवोन्मज्जकाः परे । गात्रशय्या अशय्याश्च तथैवाभ्रावकाशकाः ॥ ३ ॥ मुनयः सलिलाहारा वायुभक्षास्तथापरे । आकाशनिलयाश्चैव तथा स्थण्डिलशायिनः ॥ ४ ॥ व्रतोपवासिनो दान्तास्तथार्द्रपटवाससः । सजपाश्च तपोनित्यास्तथा पञ्चतपोन्विताः ॥ ५ ॥ सर्वे ब्राह्म्या श्रिया जुष्टा दृढयोगास्समाहिताः । शरभङ्गाश्रमे राममभिजग्मुश्च तापसाः ॥६॥ अभिगम्य च धर्मज्ञा रामं धर्मभृतां वरम् । ऊचुः परमधर्मज्ञमृषिसङ्घास्समाहिताः॥७॥

शकाः वर्षवातातपादिष्वप्यनावृतदेश एव वर्तमानाः ॥ ३ ॥ सलिलाहाराः सलिलमात्राहाराः । वायुभक्षाः वायुमात्रभक्षाः । आकाशे वृक्षाग्रादौ निलीयन्त इत्याकाशनिलयाः । स्थण्डिले कुशाद्यास्तृतभूतले शेरत इति स्थण्डिलशायिनः ॥ ४ ॥ व्रतोपवासिनः व्रतोपवासनिरताः, सर्वाहारशून्या इत्यर्थः । आर्द्रपटवाससः आर्द्रपटवसनशीलाः । सजपाः सदा जपशीलाः । तपोनित्याः " स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्यायः " इत्युक्तसदास्वाध्यायपारायणरूपतपोनिष्ठाः । पञ्चतपोन्विताः ग्रीष्मे पञ्चाग्निमध्यस्थाः ॥ ५ ॥ ब्राह्म्या श्रिया ब्रह्मविद्यानुष्ठानजनितब्रह्मवर्चसेन दृढः परिपक्वः योगो यमतथा । पत्राहाराः जीर्णपर्णाशनाः ॥ २ ॥ ये व्रीह्यादीन् दन्तैरखण्डयित्वा भक्षयन्ति ते दन्तोलूखलिनः । उन्मज्जकानाम कण्ठदघ्नजले स्थित्वा तपः कुर्वन्तः । उन्मत्तका इति पाठे–उद्गतः मत्तो मात्सर्यं येषां ते तथा । स्वार्थे कः । यद्वा ज्ञानिनः ' बालोन्मत्तपिशाचवत् ' इति स्मरणात्तथा । गात्रशय्यास्तु केवलं स्थले गात्रैरेव ये शेरते ते तथा । ये केचिदपि न शेरते ते अशय्याः । अभ्रावकाशकाः ये वातातपवर्षेषु अभ्रावकाशे असंवृतदेशे तपश्चरन्ति ते तथा । अभ्यवकाशिन इति पाठे–अभ्यवकाशिनः सदाजाग्रत्स्वभाविनः । आकाशनिलयाः आकाश एव वायुधारणबलेन ये निलीयन्ते ते तथा । ये कुशाद्यावृतभूतले शेरते ते स्थण्डिलशायिनः ॥ ३ ॥ ४ ॥ व्रतोपवासिनः व्रतोपवासनिष्ठाः । आर्द्रपटवाससः आर्द्रपट एव वासः आच्छादनं येषां ते तथा । तपोनित्याः " तपो हि स्वाध्यायः " इति श्रुतेः सदा अध्ययननिष्ठा इत्यर्थः । पञ्चतपोन्विताः पञ्चाग्निमध्यसमाचरिततपस्का इत्यर्थः ॥ ५ ॥ ६ ॥ रक्षःपरिपीडि

स०–दृढयोगसमाहिताः दृढं योगस्समाहितो येषु । यद्वा दृढं योगाः अणिमादयो वा समाहिता येषु । यद्वा दृढयोगाः अत्यन्तसम्बन्धवन्तः पुत्रादयो बान्धवाश्च तैस्समा अहिता येषां ते । "सुहृन्मित्रार्युदासीनः" इत्यादेः समबुद्धय इति यावत् ॥ ६ ॥

नियमाद्यष्टाङ्गयोगो येषां ते दृढयोगाः। समाहिताः येगैकाग्रचित्ताः एवंभूतास्तापसा राममभिजग्मुरित्यन्वयः । मुनिवैविध्योक्तिर्दर्शनीयत्वाय । अत्रा भिजग्मुरित्यनेन शरणागतिरुक्ता ॥ ६ ॥ ७ ॥ इक्ष्वाकुकुलस्य प्रधानः पृथिव्याश्च नाथः। प्रथमे दृष्टान्तः देवानामिति। यथा देवेन्द्र इति शक्रस्य नाम तथा रघुपतिरिति तव नामेत्यर्थः ॥ ८ ॥ यशसा शरभङ्गानुग्रहकीर्त्या। विक्रमेण विराधनिरसनेन च त्रिषु लोकेषु भूर्भुवस्सुवर्लोकेषु विश्रुतः प्रसिद्धः।

त्वमिक्ष्वाकुकुलस्यास्य पृथिव्याश्च महारथ। प्रधानश्चासि नाथश्च देवानां मघवानिव ॥ ८ ॥
विश्रुतस्त्रिषु लोकेषु यशसा विक्रमेण च। पितृभक्तिश्च सत्यं च त्वयि धर्मश्च पुष्कलः ॥ ९ ॥
त्वामासाद्य महात्मानं धर्मज्ञं धर्मवत्सलम्। अर्थित्वान्नाथ वक्ष्यामस्तच्च नः क्षन्तुमर्हसि ॥ १० ॥

पितृभक्तिस्त्वयि पुष्कला तद्वचनेन लब्धस्यापि राज्यस्य त्यागात्। सत्यं सत्यवचनं च त्वयि पुष्कलं भरतप्रार्थनयापि प्रतिज्ञातस्याभञ्जनात्। धर्मश्च त्वयि पुष्कलः शरभङ्गानुग्रहात् ॥ ९ ॥ धर्मज्ञं धर्मवत्सलमित्युक्तानुवादः । अर्थिनो याचकास्तेषां भावोऽर्थित्वं याच्ञेत्यर्थः। सा च रक्षोनिरसनविषया तया त्वां किञ्चिद्वक्ष्यामः तत् क्षन्तुमर्हसि आर्ततया त्वदग्रगमनमेव कार्यसाधनम्, आर्त्यतिशयेन विज्ञापनं तु क्षमस्वेत्यर्थः। एतेन उपायत्वाध्यव तानां स्वेषामनन्यगतिकत्वं जगद्रक्षणायावतीर्णस्य श्रीरामचन्द्रस्य सर्वलोकशरण्यत्वञ्च निश्चित्य स्वरक्षणार्थं तस्य दयोत्पादकानि वाक्यानि मुनयो विज्ञापयन्ति–अभिगम्येत्यादिना परिपालय नस्सर्वान्राक्षसेभ्यो नृपात्मजेत्यन्तेन ग्रन्थसन्दर्भेण । समाहिताः सावधानाः ॥ ७ ॥ त्वमित्यादिश्लोकद्वयस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु–देवानां मघवानिव इक्ष्वाकुकुलस्य इक्ष्वाकुकुलमात्रस्य पृथिव्याश्च पृथिवीमात्रस्य च प्रधानो नाथस्त्वमिति काकुः । किन्तु जगद्धारणपोषणकर्ता अत एव निरवधिकेन यशसा विक्रमेण च त्रिषु लोकेषु सर्वलोकेषु विश्रुतः, सकलोकाधीश्वर इति शेषः। तथापि क्षत्रियरूपेणावतीर्ण त्वाल्लोकशिक्षार्थम्। पितृव्रतत्वं पित्रर्थं व्रतं यस्य पितृव्रतः तस्य भावस्तत्त्वं, पितृवचनपरिपालकत्वमिति यावत्। सत्यं सत्यवचनत्वं पुष्कलः अधिको धर्मश्च त्वय्य स्तीत्यर्थः ॥ ८ ॥ ९ ॥ त्वामिति। धर्मज्ञं शरणागतरक्षणरूपं धर्मं जानातीति तथोक्तम्। धर्मवत्सलं तादृशधर्मानुष्ठाननिरतम् त्वामासाद्य शरण्यत्वेन प्राप्य अर्थित्वात् अर्थो रक्षणविषययाच्ञा तद्वन्तोऽर्थिनः तेषां भावस्तत्त्वम्। हे नाथ सर्वलोकप्रार्थनीय ! वक्ष्यामः किञ्चिद्विज्ञापयिष्यामः। नः अस्माकं तत्त विज्ञापन रूपापराधं क्षन्तुमर्हसि। यद्यपि " सत्सु कार्यवतां पुंसामलमेवाग्रतः स्थितिः " इति न्यायेन त्वयि शरणागतिमात्रमेव कार्यसाधनम् । तथाप्यार्त्यतिशयेन

सत्य०–यशसा विक्रमेण च विश्रुतः। यशस्वी विक्रमी चेति प्रसिद्ध इत्यर्थः । त्वयि विक्रमेणापि विरुद्धः क्रमः। कनिष्ठराज्यप्रदानरूपस्तेनापि त्यागहेतौ सत्यर्पाति यावत्। पितृव्रतत्वं पित्रनुव्रतत्वं विश्रुतमिति विपरिणामेनान्वयः। यद्वा हे पितृव्रत त्वं विश्रुत इत्यन्वयः ( पितृव्रतत्वं सत्यं च इति पाठः ) ॥ ९ ॥

साय एव चेतनस्य कृत्यम्, प्रार्थनं तु न कर्तव्यम्। हठात् कृतेपि क्षमापणं कर्तव्यमित्युक्तं भवति ॥ १० ॥ स्वविषये रामेण रक्षणं स्वाभाविकमिति दर्शयिष्यन्तः औपाधिकलौकिकराजरक्षणप्रकारं दर्शयन्ति–अधर्मस्त्वित्यादिना। यः प्रजाभ्यो बलिषड्भागं हरति हृत्वा च ताः न रक्षति तस्य महान् अधर्मः। बलिः करः। "भागधेयः करो बलिः" इत्यमरः। षष्ठो भागः षड्भागः। लुप्तपूरणो निर्देशः। बलिश्चासौ षड्भागश्च बलिषड्भागः ॥११॥

अधर्मस्तु महांस्तात भवेत्तस्य महीपतेः। यो हरेद्बलिषड्भागं न च रक्षति पुत्रवत् ॥ ११ ॥ युञ्जानः स्वानिव प्राणान् प्राणैरिष्टान् सुतानिव। नित्ययुक्तस्सदा रक्षन् सर्वान् विषयवासिनः ॥ १२ ॥ प्राप्नोति शाश्वतीं राम कीर्तिं स बहुवार्षिकीम्। ब्रह्मणः स्थानमासाद्य तत्र चापि महीयते ॥१३॥ यत्करोति परं धर्मं मुनिर्मूलफलाशनः। तत्र राज्ञश्चतुर्भागः प्रजा धर्मेण रक्षतः ॥ १४ ॥

एवमरक्षणे प्रत्यवायमुक्त्वा रक्षणेऽभ्युदयमाहुः–युञ्जान इति। युञ्जानो यतमानः। नित्ययुक्तो नित्यावहितः। सर्वान् स्वविषयवासिनः स्वकीयान् प्राणानिव प्राणैः प्राणेभ्योऽपि इष्टान् सुतानिव च यो रक्षति स महीपतिः बहुवार्षिकीं बहुकालस्थायिनीं शाश्वतीम् अनुवृत्ताम्। "मुहुः पुनःपुनः शश्वत्" इति बाणः। भवार्थेण् ततो ङीप्। कीर्तिं प्राप्नोति। ब्रह्मणः स्थानमासाद्य तत्र ब्रह्मणा महीयते पूज्यते च ॥ १२ ॥ १३ ॥ यस्तु करप्रदाना

किञ्चिदुच्यते तत्त्वया क्षन्तव्यमिति भावः ॥१०॥ जगद्रक्षणायावतीर्णो रामोऽस्मानपि रक्षिष्यतीति विज्ञायाप्यार्त्यतिशयाल्लोकरीत्यनुसारेण राजधर्मं विज्ञापयन्ति–अधर्म इति। सर्वान्विषयवासिन इत्युत्तरश्लोकगतमत्रापि सम्बध्यते। तान् पुत्रवद्यो न रक्षति तेभ्यो बलिषड्भागम् बलिः करः षष्ठो भागः षड्भागः स चासौ षड्भागश्च तं गृह्णाति तस्य महानधर्मः ॥ ११ ॥ एवमरक्षणे अनिष्टमुक्त्वा रक्षणे अभ्युदयमाहुः–युञ्जान इति श्लोकद्वयेन। युञ्जानः प्रजारक्षणे यतमानः। नित्ययुक्तो नित्यावहितः। सर्वान् विषयवासिनः। स्वकीयान् प्राणानिव। प्राणैः प्राणेभ्योपि। पञ्चम्यर्थे तृतीया। इष्टान् सुतानिव च रक्षन् सन् ऐहिकामुष्मिकफलं प्राप्नोति ॥१२॥१३॥ रक्षकस्य राज्ञः करषड्भागमुक्त्वा धर्मादपि भागप्राप्तिप्रकारमाहुः–यदिति। ननु क्वचित् षष्ठो भाग उच्यते, अत्र चतुर्थो भागो भण्यते, क्वचिद्द्वितीयो भागः पठ्यते तत्कथमिति चेत्? उच्यते–उपवासिभिक्षाहारजनकृतधर्मात् षष्ठो भागः, राजपरिपालितदेशसम्भूतफलाशिनो धर्माच्चतुर्थो भागः, तदन्नपानपुष्टाङ्गजनस्य धर्मात्

स०–शाश्वतीं बहुकालसम्बन्धिनीम्। बहुवार्षिकीं बह्वी च सा वार्षिकी च रक्षकसम्बन्धिनीं तां कीर्तिं प्राप्नोतीत्यन्वयः। "वार्षिकं त्रायमाणं स्याद्वर्षाकालभवेऽन्यवत्" इति विश्वः ॥ १३ ॥

समर्थौ मुनिजनस्तद्रक्षणं कुत इत्यत्राह—यदिति । यद्धर्मे तत्र धर्मे राज्ञः चतुर्भागः चतुर्थांशो भवति ॥ १४ ॥ एवं धर्माय प्रजारक्षकस्य फलमुक्त्वा धर्मानपेक्षे रामे शरणागतिरेव रक्षणहेतुरित्याहुः—सोऽयमित्यादिना । स पूर्वोक्तवैखानसादिरूपः । ब्राह्मणाः भूयिष्ठाः अधिकाः यस्मिन् स ब्राह्मणभूयिष्ठः । क्षत्रियवैश्यवानप्रस्थसम्भवात् ब्राह्मणभूयिष्ठ इत्युक्तम् । यद्वा ब्राह्मणाः ब्रह्मविदः । "तदधीते तद्वेद" इत्यण् । वानप्रस्थानां तृतीयाश्रमिणां गणः त्वं

सोऽयं ब्राह्मणभूयिष्ठो वानप्रस्थगणो महान् । त्वन्नाथोऽनाथवद्राम राक्षसैर्बाध्यते भृशम् ॥ १५ ॥
एहि पश्य शरीराणि मुनीनां भावितात्मनाम् । हतानां राक्षसैर्घोरैर्बहूनां बहुधा वने ॥ १६ ॥
पम्पानदीनिवासानामनुमन्दाकिनीमपि । चित्रकूटालयानां च क्रियते कदनं महत् ॥ १७ ॥

नाथो यस्यासौ त्वन्नाथः । अनाथवद्बाध्यते ॥१५॥ तनि०—सोऽयं ब्राह्मणभूयिष्ठ इत्यनेन क्षत्त्रियवैश्यवानप्रस्थाश्च केचिदिह सन्तीति व्यज्यते । यद्वा ब्रह्मविद्ब्राह्मणः । ब्राह्मणात्वादिपरमैकान्तिधर्मनिष्ठ इत्यर्थः । अत एव त्वन्नाथ इत्येकं पदम् । त्वमेव नाथो यस्य सः तेनानन्यशेषत्वमुक्तम् । तस्यैव नाथनीयत्वेनानन्यसाधनत्वानन्य भोग्यत्वे कथिते । अत एव महान् निरतिशयमहिमयुक्तः तथाविधोऽप्यनाथवदयं बाध्यते । अस्मत्पराभवो नाथ न तेऽनुरूप इति भावः ॥ १५ ॥ बाधामेव दर्शयन्ति—एहीत्यादिना । दूरे सम्यङ् न दृश्यत इत्यत एहि पश्येत्युक्तम् । भावितात्मनां ध्यातात्मनाम् । बहुधा छेदनभेदनभक्षणादिभिः ॥ १६ ॥ तनि०—मुनीनां सर्वेश्वरमननपराणाम् । भावितात्मनां निदिध्यासननिष्ठानां हतानां शरीराणि पश्येति कारुण्यातिशयोत्पादनायोक्तम् । बहुधा हतानाम् अङ्गप्रत्यङ्गशस्त्र भिन्नानामस्माकं शरीराणि पश्येति व्यज्यते ॥१६॥ हतानां बहूनामित्युक्तं विवृणोति—पम्पेति । अनुमन्दाकिनीमपीति "अनुर्लक्षणे" कर्मप्रवचनीयः ।

द्वितीयो भागः । "यस्यान्नपानपुष्टाङ्गः कुरुते धर्मसञ्चयम् । अन्नप्रदातुस्तस्यार्धं कर्तुश्चार्धं न संशयः ॥" इति स्मरणात् ॥ १४ ॥ एवं राजसाधारणधर्माधर्मौ प्रदर्श्य स्वकीयं विवक्षितमर्थं कथयन्ति—सोऽयमित्यादिना । ब्राह्मणभूयिष्ठमित्यनेन क्षत्रियवैश्यवानप्रस्थाश्च केचिदिह सन्तीति गम्यते ॥ १५ ॥ एहीति । मुनीनां त्वन्मननशीलानाम् । भावितात्मनां निदिध्यासननिष्ठानां हतानां शरीराणि पश्येति कारुण्योत्पादनायोक्तम् । बहुधा हतानां प्रत्यङ्गं प्रत्युपाङ्गं च शस्त्रभिन्नाना मस्माकं शरीराणि पश्येति च व्यज्यते ॥ १६ ॥ पम्पेति तीरपरमेतत् । कदनं बाधा क्रियते, राक्षसैरिति शेषः ॥ १७ ॥

टी०—ब्राह्मणभूयिष्ठः ब्रह्मविद्भूयिष्ठः । त्वन्नाथः त्वमेव नाथो यस्य सः । एतेन अनन्यशेषत्वमुक्तम् । तस्यैव नाथनीयत्वेन अनन्यसाधनत्वानन्यभोग्यत्वे कथिते । अत एव महान् निरतिशयमहिमयुक्तः ॥ १५ ॥

मन्दाकिनीं शरभङ्गाश्रमवाहिनीं मन्दाकिन्यास्तत्तटवासिनामित्यर्थः । कदनं हिंसा ॥ १७ ॥ शरीराण्युपेक्ष्य तपस्यतां किं हिंसाभयेनेत्याशङ्क्य न वयं स्वशरीरपीडातो भीताः किंतु महत्सु गरीयस्सु क्रियमाणं कदनं न मृष्याम इत्याहुः—एवमिति । विप्रकारं निकारम् । "निकारो विप्रकारः स्यात्" इत्यमरः । स्वजनपीडा दुःसहेति भावः ॥१८॥ तत इति । शरणार्थं रक्षणार्थम् । समुपस्थिताः प्रपन्नाः । "गत्यर्थाकर्मक–" इत्यादिना कर्तरि क्तः ॥१९॥

एवं वयं न मृष्यामो विप्रकारं तपस्विनाम् । क्रियमाणं वने घोरं रक्षोभिर्भीमकर्मभिः ॥ १८ ॥
ततस्त्वां शरणार्थं च शरण्यं समुपस्थिताः । परिपालय नो राम वध्यमानान्निशाचरैः ॥ १९ ॥
परा त्वत्तो गतिर्वीर पृथिव्यां नोपपद्यते । परिपालय नः सर्वान् राक्षसेभ्यो नृपात्मज ॥ २० ॥
एतच्छ्रुत्वा तु काकुत्स्थस्तापसानां तपस्विनाम् । इदं प्रोवाच धर्मात्मा सर्वानेव तपस्विनः ॥ २१ ॥
नैवमर्हथ मां वक्तुमाज्ञप्तोऽहं तपस्विनाम् । केवलेनात्मकार्येण प्रवेष्टव्यं मया वनम् ॥ २२ ॥

तनि०—शरण्यमिति निरुपपदेन सर्वलोकशरण्यत्वमुक्तम्, तेन तदुपयुक्तगुणाः स्वामित्वादयः पूर्वखण्डनारायणपदोक्ताः स्मारिताः । शरणार्थम् उपायान्तरस्थाने निवेशयितुमित्यर्थः । समुपागताः विश्वासाद्यङ्गसम्पत्तिपूर्वकरक्षाभरसमर्पणं कृतवन्तः । नः परिपालयेति गोप्तृत्ववरणोक्तिः । उत्तरार्धेन अनिष्टनिवृत्तिरूपफलप्रार्थना पर्यवसिता ॥ १९ ॥ परेति । त्वत्तः परा अन्या गतिः उपायः नोपपद्यते । पृथिव्यामिति सर्वभुवनोपलक्षणम् । तथा च श्रुतिः "नान्यः पन्था अयनाय विद्यते" इति । इत्यूचुरिति पूर्वेणान्वयः ॥ २० ॥ तनि०—उत्तरखण्डविवरणमाकिञ्चन्यमाह—परेति । त्वत्तः सिद्धोपायात्परा गतिः । यद्वा "नान्यः पन्था अयनाय विद्यते" इति श्रुत्यर्थं मनसिकृत्वाह परेति । पृथिव्यां नोपपद्यते । यस्मात्परिमितं फलमित्याद्युक्तबहुदोषदुष्टत्वादिति भावः । नः सर्वानिति आत्मात्मीयसर्वसंग्रहः । राक्षसेभ्य इति सर्वानिष्टोपलक्षणम् ॥२०॥ तपस्विनां प्रशस्ततपसाम् । तापसानां मुनीनाम् ॥ २१ ॥ शरणागत्यैवाज्ञप्तोऽहं परिपालयेत्यादिकं वक्तुं नार्हथ, केवलेनात्म

विप्रकारं बाधाम् । न मृष्यामः सोढुमशक्ताः ॥१८॥ स्वानुभूतां रक्षःपीडामनूद्य निगमयन्ति—तत इत्यादि श्लोकद्वयेन । प्रातीतिकार्थः स्पष्टः । शरण्यं सर्वलोकरक्षणसमर्थं त्वां शरणार्थं रक्षणार्थं समुपस्थिताः प्राप्ताः । नः कदावतीर्य रक्षिष्यतीति त्वामेव प्रतीक्षमाणानस्मानित्यर्थः ॥१९॥ अनन्यगतिकत्वेन सर्वात्मना त्वयैव रक्षणीया वयमिति विज्ञापयन्ति—परेति । पृथिव्यामिति सर्वलोकोपलक्षणम् । त्वत्तः परा त्वदन्या गतिः ऐहिकामुष्मिकसाधनं देवतान्तरं नास्तीत्यर्थः । "तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेः ॥ २० ॥ एतदिति । तपस्विनामतिशयेन विद्यमानतपसाम् । तापसानाम् ऋषीणाम् ॥२१॥ श्रीरामः ऋषीन्

कार्येण केवलात्मप्रयोजनत्वेन। राक्षसैः क्रियमाणं भवतामिमं विप्रकारम् अपाक्रष्टुं निवर्तयितुं मया वनं प्रवेष्टव्यं प्रविष्टम्। "तयोरेव कृत्यक्तखलर्थाः" इति कर्मणि तव्यप्रत्ययः। स्वतो मत्प्रयोजनरूपं भवद्विरोधिनिरसनं कर्तुमेवेदं वनं प्रविष्टोऽस्मीत्यर्थः। शेषभूतरक्षणस्य शेषिप्रयोजनत्वादिति भावः ॥२२॥ तनि०—तपस्विनामतिशयेन विद्यमानतपसाम्। तापसानामृषीणाम्। आज्ञाप्योहमिति सौलभ्यव्यञ्जनम्। केवलेनेति रक्षोभिः क्रियमाणं भवतामिमं विप्रकारम् अपाक्रष्टुं निराकर्तुमेव वनं प्रवेष्टव्यमिति, प्रविष्टमिति शेषः ॥ २२ ॥ पितृवाक्यपरिपालनाय वनं प्रविष्टोसीति किंवदन्त्याः का गतिरित्यत्राह—पितुरिति।

विप्रकारमपाक्रष्टुं राक्षसैर्भावितामिमाम्। पितुस्तु निर्देशकरः प्रविष्टोऽहमिदं वनम्। भवतामर्थसिद्ध्यर्थमागतोऽहं यदृच्छया ॥ २३ ॥ तस्य मेऽयं वने वासो भविष्यति महाफलः ॥ २४ ॥ तपस्विनां रणे शत्रून् हन्तुमिच्छामि राक्षसान्। पश्यन्तु वीर्यमृषयः सभ्रातुर्मे तपोधनाः ॥ २५ ॥

अहं भवतामर्थसिद्ध्यर्थमागतोस्मि, यदृच्छया दैवगत्या पितुर्निर्देशकरः वनमिदं प्रविष्टोस्मि। पितृवाक्यकरणव्याजेन भवदर्थसिद्ध्यर्थमेवागतोस्मीति भावः ॥ २३ ॥ तनि०—पितृवचनपरिपालनं तु व्याजमात्रमित्याह—पितुस्त्विति। भवतामेवार्थसिद्ध्यर्थं यदृच्छया नतु कर्मपारवश्येन ॥ २३ ॥ भवत्कार्यार्थमेवागतस्य मे वने वासो महाफलो भविष्यति ॥ २४ ॥ तनि०—तस्येति। तस्य भवत्कार्यार्थमेवागतस्य मे वनवासस्तपस्विनां महाफलः, अतः तपस्विनां शत्रून् रणे हन्तुमिच्छामीति योजनीयम्। महाफलं नाम अनिष्टनिवृत्तिपूर्वकेष्टप्राप्तिरूपम् ॥२४॥२५॥ तदेव फलमाह—तपस्विनामिति। तपस्विनां शत्रून् रणे हन्तुमिच्छामि

प्रत्युत्तरमाह नैवमर्हथेत्यादिश्लोकचतुष्टयेन। आज्ञाप्यः आज्ञानुवर्ती। केवलेन निरुपाधिकेन कार्येण पितृवचनपरिपालनरूपेण प्रयोजनेन हेतुना अवश्यं मया वनं प्रवेष्टव्यमेव, अयमेव वनप्रवेशो दैवगत्या राक्षसैः क्रियमाणं भवतामिमं विप्रकारमपाक्रष्टुमपि सम्पन्न इति अपेक्षितपदाध्याहारेण योज्यम्। उक्तश्लोकार्थ एव कविना श्लोकान्तरेण वर्ण्यते। इयमपि शैली कवेः। अहं पितुर्निर्देशकरस्सन् वनं प्रविष्टश्च भवतामर्थसिद्ध्यर्थं त्वाहमागतः ॥२२॥२३॥ तस्येति। हन्तुमिच्छामीति यत् अतो महाफलो भविष्यतीति तपस्विनः प्रोवाचेति पूर्वेण सम्बन्धः। वास्तवार्थस्तु तपस्विनामहमाज्ञाप्यः, भक्ताधीनत्वादित्याशयः। किञ्च केवलेन कार्येण स्वकार्येण मया वनं प्रवेष्टव्यमिति काकुः। किन्तु राक्षसैः क्रियमाणं भवतां विप्रकारमपाक्रष्टुमेवेति सम्बन्धः। पितृवचनपरिपालनायागतः स्वयमिति न शङ्कनीयम्, तत्तु व्याजमात्रमित्याह—पितुरिति। भवतामेवार्थसिद्ध्यर्थं यदृच्छया, नतु कर्मपारवश्येन। अतस्तस्य भवत्कार्यार्थमागतस्य मे वनवासः तपस्विनां महाफलः तपस्विनां शत्रून् रणे हन्तुमिच्छामीति यत् तेन महाफलो भविष्यति। महाफलत्वं नाम आश्रितानामिष्टप्राप्त्यनिष्टपरिहारहेतुत्वम्। इदानीं मुनिजनधैर्य

इतीदं प्रोवाचेत्यन्वयः ॥ २५ ॥ दत्त्वेति । अभयमिति छेदः । धृतात्मा निश्चलमनाः । तपोधनैः ऋषिभिश्च सभाज्यवृत्तः पूज्याचारः ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥ अथ सुतीक्ष्णाभ्यर्थनया मृगरूपमारीचादि दुष्टराक्षसनिरासः सप्तमे–रामस्त्वित्यादि । आश्रमपदम् उद्दिश्येति शेषः । तैर्द्विजैः वैखानसादिभिः ॥ १ ॥ स इति । अदूरमिति छेदः । पूर्वं

दत्त्वाऽभयं चापि तपोधनानां धर्मे धृतात्मा सह लक्ष्मणेन । तपोधनैश्चापि सभाज्यवृत्तः सुतीक्ष्णमेवाभिजगाम वीरः ॥ २६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे षष्ठः सर्गः ॥ ६ ॥

रामस्तु सहितो भ्रात्रा सीतया च परंतपः । सुतीक्ष्णस्याश्रमपदं जगाम सह तैर्द्विजैः ॥ १ ॥ स गत्वाऽदूरमध्वानं नदीस्तीर्त्वा बहूदकाः । ददर्श विपुलं शैलं महामेघमिवोन्नतम् ॥ २ ॥ ततस्तदिक्ष्वाकुवरौ सन्ततं विविधैर्द्रुमैः । काननं तौ विविशतुस्सीतया सह राघवौ ॥ ३ ॥ प्रविष्टस्तु वनं घोरं बहुपुष्पफलद्रुमम् । ददर्शाश्रममेकान्ते चीरमालापरिष्कृतम् ॥ ४ ॥ तत्र तापसमासीनं मलपङ्कजटाधरम् । रामस्सुतीक्ष्णं विधिवत्तपोवृद्धमभाषत ॥ ५ ॥

शरभङ्गेण 'इह राम महातेजाः' इति सुतीक्ष्णाश्रमस्यादूरत्वोक्तेः । नदीरिति बहुवचनमेकस्या एव मन्दाकिन्याः बहुप्रदेशेष्वावृत्त्या । बहूदकाः विपुलोदकाः । नौतार्यत्वानुक्तेः । शैलं शैलसम्बन्धिवनं काननमित्यनुवादात् । तस्येदमित्यण् । महामेघमिवेति श्यामिकायासुपमा ॥ २ ॥ द्रुमैः सन्ततं व्याप्तम् । इक्ष्वाकुवरौ राघवावित्युभयथा धैर्यमूलोक्तिः ॥ ३ ॥ चीरमालया वल्कलपङ्क्त्या परिष्कृतं अलंकृतम् ॥ ४ ॥ मलपङ्कजटाधरं नित्यानिश्चक्षु

रामानु०–विमलं पवित्रम् ॥ २ ॥ रामानु०–तत इति । तदित्यत्र प्रस्तुतस्य काननस्य तच्छब्देन परामर्शः । प्रथमं शैलस्य प्रस्तुतत्वात्तस्य काननमपि प्रस्तुतमेवेति ॥ ३ ॥

सिद्ध्यर्थं रामः प्रतिजानीते–पश्यन्त्विति ॥ २४ ॥ २५ ॥ दत्त्वेति । वरं राक्षसवधप्रतिज्ञारूपम् । आर्यं पूज्यम् वृत्तं यस्येति आर्यवृत्तः ॥ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां आरण्यकाण्डव्याख्यायां षष्ठः सर्गः ॥ ६ ॥ राम इत्यादि । तैः पूर्वोक्तैर्द्विजैर्मुनिभिः ॥ १ ॥ २ ॥ तदित्यत्र 'प्रविश्य तु महारण्यम्' इत्यारभ्य दण्डकारण्यस्यैव प्रस्तुतत्वात्तच्छब्देन तदेव परामृश्यते । द्रुमैः सन्ततं सम्यग्व्याप्तम् ॥ ३ ॥ ४ ॥ तत्रेति । मलपङ्कजटा

टी०–मलपङ्कजधारिणमिति पाठे–मलस्य सर्वाघस्य शान्तये पङ्कजे पद्मासने स्थित्वा धारणशीलम् । यद्वा पङ्कजे हृदयपङ्कजे धारिणं ऐश्वरयोगधारणशीलम् । तापसमासीनं तापेषु पञ्चाग्नितापेषु सम्यगासीनम् ॥ ५ ॥

तपोयोगेन वा वार्द्धकेन वा मलपङ्कजटानां धरम् । विधिवत् क्रमवद्यथा भवति तथा अभाषत। मीलितनयनत्वेन स्वाभिवादनापरिज्ञानात् भाषणम् ॥५॥ मा अभिवादयन्तं माम् । अभिवद प्रत्यभिवादनं कुरु । सत्यविक्रम अमोघतपःप्रभाव ॥ ६ ॥७॥ सनाथ इव सनाथ एव । यद्वा सर्वदा त्वया सनाथत्वेपि पामराणां सनाथत्वप्रतिभेदानीं जातेत्यर्थः ॥ ८ ॥ स्वस्य मोक्षापेक्षां व्यञ्जयति–प्रतीक्षमाण इति । त्वामेव प्रतीक्षमाणः प्रतिपालयन् त्वदागमनं काङ्क्ष

रामोऽहमस्मि भगवन् भवन्तं द्रष्टुमागतः । त्वं माऽभिवद धर्मज्ञ महर्षे सत्यविक्रम ॥ ६ ॥ स निरीक्ष्य ततो वीरं रामं धर्मभृतां वरम् । समाश्लिष्य च बाहुभ्यामिदं वचनमब्रवीत् ॥ ७ ॥ स्वागतं खलु ते वीर राम धर्मभृतां वर । आश्रमोऽयं त्वयाक्रान्तः सनाथ इव साम्प्रतम् ॥ ८ ॥ प्रतीक्षमाणस्त्वामेव नारोहेऽहं महायशः । देवलोकमितो वीर देहं त्यक्त्वा महीतले ॥ ९ ॥ चित्रकूटमुपादाय राज्यभ्रष्टोऽसि मे श्रुतः ॥ १० ॥ इहोपयातः काकुत्स्थ देवराजः शतक्रतुः । उपागम्य च मां देवो महादेवस्सुरेश्वरः । सर्वान् लोकान् जितानाह मम पुण्येन कर्मणा ॥ ११ ॥ तेषु देवर्षिजुष्टेषु जितेषु तपसा मया । मत्प्रसादात्सभार्यस्त्वं विहरस्व सलक्ष्मणः ॥ १२ ॥

माण इत्यर्थः । देवलोकं नारोहे " तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् " इति तस्य मोक्षविरोधित्वादिति भावः ॥ ९ ॥ मदागमनं [illegible] गतम् ? तत्राह–चित्रकूटमिति। चित्रकूटमुपादाय चित्रकूटगमनमारभ्य। राज्याद्भ्रष्टः प्रच्युत इति मे मया श्रुतोऽसि॥१०॥ स्वर्गारोहणस्य कः प्रसङ्ग इत्यत्राह–[illegible]

धरं मलं नाम उद्वर्तनादिसंस्काराभावाच्छरीरजन्यम् । पङ्को नाम वनसञ्चाराच्छरीरलग्नमिति भेदः । विधिवदित्यनन्तरं उपगम्येति शेषः ॥ ५ ॥ रामोऽहमिति । सत्यविक्रम अक्षततपःस्वभाव ! ॥ ६ ॥ ७ ॥ त्वया क्रान्तः अधिष्ठितः । अत एव सनाथ इव स्वामिसहित इव, अभूदिति शेषः ॥ ८ ॥ प्रतीक्षमाण इत्यादि सार्धश्लोकस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु–रावणवधार्थं रघुकुलेऽवतीर्णस्य तव राज्यभ्रंशः, चित्रकूटमुपादाय तव चित्रकूटप्राप्तिमारभ्य मे मया श्रुतः । अत एव तद्वधार्थं भवाननेन मार्गेणागमिष्यतीति त्वामेव प्रतीक्षमाणस्सन् देहं त्यक्त्वा इतो देवलोकं नारोहे परमपुरुषार्थस्वरूपत्वद्दर्शनस्य स्वर्गस्यान्तरायत्वादिति भावः ॥ ९–११ ॥ मत्प्रसादात्तेषु विहरस्व । वस्तुतस्तु मत्प्रसादात् मय्यनुग्रहात् । तेषु विहरस्वेत्यपि तान् विशेषेण हर स्वीकुर्विति भगवति कर्मफलसमर्पण

स०–महादेवः महेन उत्सवेन आदेवः अतिकान्तिमान् सुरेश्वरः । सर्वान् जितान् प्राप्तानाहेत्यन्वयः । आहेत्यनेन तन्निदिध्यासितब्रह्मलोकादिज्ञानं तस्यास्तीति तत्र साक्षित्वेनेन्द्रवचस उपयोग इति कविस्सूचयति । तन्निदिध्यासनाभावस्योक्त इति नागोजिभट्टीयं व्याख्यानं " यं यं लोकं मनसा संविभाति " " यं यं वापि स्मरन् भावम् " इत्यादि श्रुतिस्मृतिविरुद्धत्वादसङ्गततरमिति द्रष्टव्यम् ॥ ११ ॥

उपयातः शरभङ्गार्थमागतः । मामुपागम्याह तर्हि तादृशमहाफलं किमिति त्यक्तवानसीत्युक्ते तारतम्यज्ञानादिति भावः ॥ ११-१४ ॥ गौतमेन गौतमवंश्येन ॥१५॥ हर्षेण महताप्लुतः मोक्षानुग्रहेण परमानन्दभरितः ॥ १६ ॥ १७ ॥ गुणमुक्त्वा दोषमाह निरसनीयत्वाभिप्रायेण-इमामिति । आश्रमं तपोवनम् । अविद्यमानं कुतोऽपि भयं येषां ते अकुतोभयाः सन्तः अटित्वा इतस्ततः परिप्लुत्य । लोभयित्वा समाधिभङ्गं जनयित्वा । विचित्र

तमुग्रतपसा युक्तं महर्षिं सत्यवादिनम् । प्रत्युवाचात्मवान् रामो ब्रह्माणमिव काश्यपः ॥१३॥ अहमेवाहरिष्यामि स्वयं लोकान्महामुने । आवासं त्वहमिच्छामि प्रदिष्टमिह कानने ॥ १४ ॥ भवान् सर्वत्र कुशलस्सर्वभूतहिते रतः । आख्यातश्शरभङ्गेण गौतमेन महात्मना ॥ १५ ॥ एवमुक्तस्तु रामेण महर्षिर्लोकविश्रुतः । अब्रवीन्मधुरं वाक्यं [हर्षे]ण महताप्लुतः॥१६॥ अयमेवाश्रमो राम गुणवान् रम्यतामिह । ऋषिसङ्घानुचरितस्सदा मूलफलान्वितः ॥१७॥ इममाश्रममागम्य मृगसङ्घा महायशः । अटित्वा प्रतिगच्छन्ति लोभयित्वाकुतोभयाः । नान्यो दोषो भवेदत्र मृगेभ्योऽन्यत्र विद्धि वै ॥१८॥ तच्छ्रुत्वा वचनं तस्य महर्षेर्लक्ष्मणाग्रजः । उवाच वचनं धीरो विकृष्य सशरं धनुः ॥१९॥

तरवैषैरिति शेषः । प्रतिगच्छन्ति प्रतियान्ति । अत्र वने । मृगेभ्योऽन्यत्र मृगान् विनान्यो दोषो न भवेदिति विद्धि, मृगप्रलोभनरूपदोषादन्यो दोषोऽत्र नास्तीत्यवेहीत्यर्थः। इति वाक्यमब्रवीदिति पूर्वेण सम्बन्धः॥१८॥ तत् मृगभयविषयकं वचनम् । विकृष्य सशरं धनुरिति स्वोत्साहप्रकटनम् ॥१९॥

बुद्ध्या मुनिनोक्तम् ॥ १२ ॥ १३ ॥ अहमेवेति । प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु-भक्त्या त्वदर्पिताल्लोकानहमाहरिष्याम्येवेत्यर्थः । लौकिकदृष्ट्याह-आवासमिति ॥ १४ ॥ गौतमेन तद्वंशजेन शरभङ्गेण भवान् कुशल इत्याख्यातः ॥ १५-१७ ॥ लोभयित्वा मनसो लौल्यं जनयित्वा रूपकान्तिगतिचेष्टाविशेषैः समाधिभङ्गं कृत्वेत्यर्थः । दोषं भयम् । लिङ्गव्यत्यय आर्षः । अत्र दण्डकारण्ये ॥ १८ ॥ तस्य वचनं श्रुत्वा विरोचनमुवाचेत्यन्वयः । विकृष्य सशरं धनुरित्युत्तरेण



स०-आहरिष्यामीत्यनेन त्वया तपसा सम्पादिताल्लोकांस्तुभ्यं दास्यामीति रामस्य स्वातन्त्र्यं द्योत्यते । प्रदिष्टमित्यनेन मयैव पूर्वं तुभ्यं प्रदिष्टमिति भावमाविष्करोति देव इति कविरवगमयति ॥ १४ ॥

टी०-मृगेभ्य इति हेतुगर्भितम्, मृगरूपधारिणो राक्षसा एवागत्य तपोभङ्गं कुर्वन्तीत्यर्थः ॥ १८ ॥

हन्यामिति प्राप्तकाले लिङ् । वधकाले प्राप्ते सकलमृगहननं कुर्यामित्यर्थः । प्राप्तकालश्च तद्दर्शनकालः ॥ २० ॥ तच्च हननमिह स्थित्वा न कर्तुं शक्यमित्याह—भवानिति । तत्र मृगसङ्घवधविषये । भवान् मया अभिषज्येत अभिभूयेत । अभिपूर्वात् षञ्जेः कर्मणि लिङ् । " अभिषङ्गः परिभवे सङ्गाक्रोशनयोरपि " इति वाणः । तादृशमृगहनने मया त्वं कृतापराधो भवेः, आश्रमसम्बन्धित्वादिति भावः । ततः किमित्यत्राह किंस्यात्कृच्छ्र

तानहं सुमहाभाग मृगसङ्घान् समागतान् । हन्यां निशितधारेण शरेणाशनिवर्चसा ॥ २० ॥ भवांस्तत्राभिषज्येत किं स्यात्कृच्छ्रतरं ततः । एतस्मिन्नाश्रमे वासं चिरं तु न समर्थये ॥२१॥ तमेवमुक्त्वा वरदं रामस्सन्ध्यामुपागमत् ॥ २२ ॥ अन्वास्य पश्चिमां सन्ध्यां तत्र वासमकल्पयत् । सुतीक्ष्णस्याश्रमे रम्ये सीतया लक्ष्मणेन च ॥ २३ ॥ ततश्शुभं तापसभोज्यमन्नं स्वयं सुतीक्ष्णः पुरुषर्षभाभ्याम् । ताभ्यां सुसत्कृत्य ददौ महात्मा सन्ध्यानिवृत्तौ रजनीमवेक्ष्य ॥ २४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे सप्तमः सर्गः ॥ ७ ॥

तरं तत इति । ततः भवदभितापात् कृच्छ्रतरं कष्टतरं किम्, न किमपीत्यर्थः । तस्मादेतस्मिन्नाश्रमे चिरं तद्दर्शनपर्यन्तं वासं न समर्थये नेच्छामि । इह वासे मृगसङ्घपीडां सोढ्वा स्थातव्यम् । हत्वावस्थाने स्वाश्रममृगाणां स्वसन्निधौ हनने तव वैमनस्यं स्यात् । तच्च ममानिष्टम्, अतोऽन्यत्र त्वदसन्निधाने मृगान् हनिष्यामीत्यर्थः । इत्युवाचेति पूर्वेणान्वयः ॥२१॥ वरदमित्यनेन मुनिस्तथैवानुज्ञातवानिति गम्यते । सन्ध्यामुपागमत् सन्ध्यामुद्दिश्य सरस्तीरं गतवानित्यर्थः । पश्चिमां सन्ध्यामन्वास्य । अत्यन्तसंयोगे द्वितीया । यावत्सन्ध्यं जलतीरे जपन् स्थित्वेत्यर्थः । तत्राश्रमे वासमकल्पयदित्यनेन प्रातर्जिगमिषा जातेति व्यज्यते । अन्यत्र गत्वा मृगनिरासश्च रावणं प्रति मारीचानुवादादवगन्तव्यः ॥ २२ ॥ २३ ॥ शुभं भक्त्युपनीतत्वेन सम्बन्धः ॥ १९ ॥ हे महाभाग ! अहं धनुर्विकृष्य शरेण मृगसङ्घान् हन्यां चेत् तत्र मृगवधे भवानभिषज्येत विषादं प्राप्नुयात्, ततो भवद्विषादान्मे कृच्छ्रतरं कष्टतरं किं स्यात् ? न किमपि । अतस्त्वदाश्रमे हिंसां न करिष्यामीति भावः । तत इत्यत्राप्यनुषज्यते, ततः कारणादेव एकत्र चिरं वासं न समर्थये नाङ्गीकरोमीति ॥ २० ॥ २१ ॥ सन्ध्यामुपागमत् सन्ध्यामुपासितुमुपागतवानित्यर्थः ॥ २२–२४ ॥ इति श्रीमहे० श्रीरामा०आरण्यकाण्डव्याख्यायां सप्तमः सर्गः ॥ ७ ॥

टी०—तत इति । ताभ्यामित्यनेन सीतायाश्च संग्रहः ॥ २४ ॥

पावनम् । तापसभोज्यं फलमूलादि । अन्नं अदनीयम् । स्वयं नतु शिष्यमुखेन, सुसत्कृत्य अर्घ्यपाद्यादिना सम्पूज्य । महात्मा तत्र परमपुरुषत्वज्ञानवान् । सन्ध्यानिवृत्तौ सन्ध्याकर्मावसाने रजनीमवेक्ष्य ददौ, रजनीभक्ष्यानुसारं ददावित्यर्थः । सीता तु रामभुक्तशेषं भुक्तवतीत्याशयः ॥ २४ ॥ इति श्रीगोविन्द राजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥ अथ सुतीक्ष्णानुज्ञया रामस्याश्रममण्डलं प्रति

रामस्तु सहसौमित्रिस्सुतीक्ष्णेनाभिपूजितः । परिणाम्य निशां तत्र प्रभाते प्रत्यबुद्ध्यत ॥ १ ॥ उत्थाय तु यथा कालं राघवः सह सीतया । उपास्पृशत्सुशीतेन जलेनोत्पलगन्धिना ॥ २ ॥ अथ तेऽग्निं सुरांश्चैव वैदेही राम लक्ष्मणौ । काल्यं विधिवदभ्यर्च्य तपस्विशरणे वने ॥ ३ ॥ उदयन्तं दिनकरं दृष्ट्वा विगतकल्मषाः । सुतीक्ष्णमभि गम्येदं श्लक्ष्णं वचनमब्रुवन् ॥ ४ ॥ सुखोषितास्स्म भगवन् त्वया पूज्येन पूजिताः । आपृच्छामः प्रयास्यामो मुनय स्त्वरयन्ति नः ॥ ५ ॥ त्वरामहे वयं द्रष्टुं कृत्स्नमाश्रममण्डलम् । ऋषीणां पुण्यशीलानां दण्डकारण्यवासिनाम् ॥ ६ ॥ अभ्यनुज्ञातुमिच्छामस्सहैभिर्मुनिपुङ्गवैः । धर्मनित्यैस्तपोदान्तैर्विशिखैरिव पावकैः ॥ ७ ॥

प्रस्थानमष्टमे–रामस्त्वित्यादि । परिणाम्य अतिवाह्य । प्रभाते उषःकाले ॥ १ ॥ सहसीतयेत्यनेन पूर्वमेव सौमित्रिः स्नात इति व्यज्यते । उपास्पृशत् स्नातवान् । "स्नानाचान्त्योरुपस्पर्शः" इति बाणः । सुशीतेनेत्युष्णोदकव्यावृत्तिः । उत्पलगन्धिनेत्यनेन तटाकस्नानं सूच्यते ॥ २ ॥ अग्निमित्येकवचनेन एकाग्नित्वावगमान्न त्रेताग्निरिदानीमिति गम्यते । सुरान् नारायणम् ' सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ' इत्ययोध्याकाण्डोक्तेः । परिवारापेक्षया बहुवचनम् । काल्यं यथाकालप्राप्तं यथातथा । देशानुगुणपूजाकथनाय तपस्विशरण इत्युक्तम् । उदयन्तम् उद्यन्तम् । अनेन होमा नन्तरमादित्योपस्थानोक्त्या अनुदितहोमपक्षसूचनात् कात्यायनसूत्रक्रमेण राघवाणामनुष्ठानमिति गम्यते ॥३॥४॥ सुखोषिता इत्यादित्रिश्लोक्येकान्वया । आपृच्छामः आपृच्छामहे । परस्मैपदमार्षम् । अभ्यनुज्ञातुमिति भावे तुमुन् । त्वत्कर्तृकं गमनानुज्ञानं प्रार्थयामहे इत्यर्थः । मुनयः सहवासयोग्या



राम इति । निशां परिणाम्य गमयित्वेत्यर्थः ॥१॥ उपास्पृशत् स्नातवान् ॥२–६॥ अभ्यनुज्ञातुमिच्छाम इति त्वत्कर्तृकां गमनानुज्ञां प्रार्थयाम इत्यर्थः । धर्मनित्यैः नित्य

टी०–सुखेति । मुनयस्त्वरयन्ति मामित्यनेन चित्रकूटादारभ्य मार्गप्रदर्शनव्याजेन पञ्चवटीप्रवेशपर्यन्तं रामेण सह मुनयः समागता इति गम्यते ॥ ५ ॥

इत्याह धर्मनित्यैरित्यादि । धर्मनित्यैर्नित्यधर्मैः । तपोभिर्दान्तैः निगृहीतेन्द्रियैः । तपो हीन्द्रियनिग्रहहेतुः । विशिखैः विगतज्वालैः । "अर्चिर्हेतिः शिखा स्त्रियाम्" इत्यमरः । गुप्तमाहात्म्यैरित्यर्थः ॥ ५–७ ॥ अविपह्येत्यादि । सूर्यः अविपह्यातपः असह्यातपः सन् यावन्नातिविराजते नात्यन्तमुद्गच्छति । कथमिव ? अमार्गेणान्यायेनागतां लक्ष्मीम् ऐश्वर्यं प्राप्य अन्वयवर्जितः साधुसमागमवर्जितो दुष्प्रभुरिवाविपह्यातप इत्यन्वयः ।

अविषह्यातपो यावत्सूर्यो नातिविराजते । अमार्गेणागतां लक्ष्मीं प्राप्येवान्वयवर्जितः ॥ ८ ॥ तावदिच्छामहे गन्तुमित्युक्त्वा चरणौ मुनेः । ववन्दे सहसौमित्रिस्सीतया सह राघवः ॥ ९ ॥ तौ संस्पृशन्तौ चरणावुत्थाप्य मुनिपुङ्गवः । गाढमालिङ्ग्य सस्नेहमिदं वचनमब्रवीत् ॥ १० ॥ अरिष्टं गच्छ पन्थानं राम सौमित्रिणा सह । सीतया चानया सार्द्धं छाययेवानुवृत्तया ॥ ११ ॥ पश्याश्रमपदं रम्यं दण्डकारण्यवासिनाम् । एषां तपस्विनां वीर तपसा भावितात्मनाम् ॥ १२ ॥ सप्राज्यफलमूलानि पुष्पितानि वनानि च । प्रशस्तमृगयूथानि शान्तपक्षिगणानि च ॥ १३ ॥ फुल्लपङ्कजषण्डानि प्रसन्नसलिलानि च । कारण्डवविकीर्णानि तटाकानि सरांसि च ॥ १४ ॥ द्रक्ष्यसे दृष्टिरम्याणि गिरिप्रस्रवणानि च । रमणीयान्यरण्यानि मयूराभिरुतानि च ॥ १५ ॥

तावदिच्छामहे गन्तुमित्यनेन रावणवधत्वारा व्यज्यते । अतो न हीनोपमादोषोऽपि ॥ ८–१० ॥ अरिष्टम् अनुपद्रवम् । रिषेः "तीपसह–" इति भावे निष्ठा । अनेनापि रावणविजयाभ्यनुज्ञा सूच्यते ॥ ११ ॥ तपोवनपदार्थान् कृतार्थयितुमाह–पश्येत्यादि ॥ १२ ॥ प्राज्यम् अदभ्रम् । "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु" इत्यमरः ॥ १३ ॥ कारण्डवो जलकुक्कुटः । "मद्गुः कारण्डवः प्लवः" इत्यमरः ॥ १४ ॥ रमणीयत्वादिना विशेष

धर्मपरैः । विशिखैः विधूमैः ॥ ७ ॥ अविह्येषत्यादिश्लोकद्वयमेकं वाक्यम् । अमार्गेणान्यायेनागतां प्राप्तां लक्ष्मीं राज्यलक्ष्मीं प्राप्य अन्वयवर्जितः दुष्कुलजातो दुष्प्रभुरिव । अविषह्यातपः अविषह्य आतपो यस्य सः सूर्यः यावन्नातिविराजते नातिजृम्भते तावत्पूर्वं गन्तुमिच्छाम इत्युक्त्वा ववन्द इत्यन्वयः ॥ ८–११ ॥ आश्रममिति जातावेकवचनम् ॥ १२ ॥ शान्तपक्षिगणानीति परस्परवैरविरहादिति भावः ॥ १३–१७ ॥

टी०—अरिष्टं शुभम् ॥ ११ ॥ सुप्राज्यं सुसमृद्धम् ॥ १३ ॥ कारण्डवः जलकुक्कुटः ॥ १४ ॥

यितुं पुनरप्याह—रमणीयानीति । मयूराणामभिरुतानि येषु तानि । गम्यतां त्वयेति शेषः । भवानिति राम उच्यते । आश्रमं प्रतीति शेषः ॥ १५–१७ ॥ ततः प्रस्थानोपक्रमानन्तरम् । विमलौ तत इति । ततः धनुरादिदानानन्तरमित्यर्थः । ततः शुभतरे इत्यादिना अयमर्थो अवगम्यते—आश्रमप्रवेशे किमस्माकमायुधैरिति मन्यमाना सीता आयुधानि मुनिगृहे कुत्रचिन्निहितवती । अथ अमार्गेणेत्यादिरामवाक्येन अरिष्टं गच्छे

गम्यतां वत्स सौमित्रे भवानपि च गच्छतु। आगन्तव्यं त्वया तात पुनरेवाश्रमं मम ॥ १६ ॥ एवमुक्तस्तथेत्युक्त्वा काकुत्स्थस्सहलक्ष्मणः। प्रदक्षिणं मुनिं कृत्वा प्रस्थातुमुपचक्रमे ॥१७॥ ततः शुभतरे तूणी धनुषी चायतेक्षणा। ददौ सीता तयोर्भ्रात्रोः खड्गौ च विमलौ ततः ॥ १८ ॥ आबध्य च शुभे तूणी चापौ चादाय सस्वनौ । निष्क्रान्ता वाश्रमाद्गन्तुमुभौ तौ रामलक्ष्मणौ ॥ १९ ॥ श्रीमन्तौ रूपसम्पन्नौ दीप्यमानौ स्वतेजसा । प्रस्थितौ धृतचापौ तौ सीतया सह राघवौ ॥२०॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे अष्टमस्सर्गः ॥८॥

सुतीक्ष्णेनाभ्यनुज्ञातं प्रस्थितं रघुनन्दनम् । हृद्यया स्निग्धया वाचा भर्तारमिदमब्रवीत् ॥ १ ॥

त्यादिमुनिवाक्येन च तयोर्हृदयं विदित्वा स्वयमेवादाय पुनर्दत्तवतीति । अत एवोत्तरसर्गे स्वाशयं वक्ष्यति ॥१८–२०॥ रामानु०—ततः धनुरादिदानानन्तरम् । विमलौ मुनिशितौ खड्गौ च ददावित्यन्वयः ॥ १८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने अष्टमः सर्गः ॥ ८ ॥

अथ सीता वीरपत्नीत्वेन धनुर्मुष्टिग्रहणविशेषेण सायुधतया सन्नद्धं पतिमालोक्य यदि त्वं सायुधो राक्षसभूयिष्ठे देशे प्रविष्टः स्याः तर्हि तैः साकं विरोधः स्यात्, तेनावयोर्विश्लेषः स्यात्, तेन भवतो महान् क्लेशः स्यात् अतो निधायायुधं वनेस्माभिर्गन्तव्यमित्याह नवमे—सुतीक्ष्णेनेत्यादि । अभ्यनुज्ञातम् अरिष्टं गच्छ पन्थानमिति रावणवधाभिप्रायेणानुज्ञातम् । हृद्यया युक्तियुक्तत्वेन हृदयङ्गमया । स्निग्धया स्नेहप्रवृत्तया । अनेन वक्ष्यमाणवचने स्नेह एव मूलमित्युक्तम् । रामेण ऋषिभ्यः प्रतिज्ञाकरणं रामप्रतिज्ञायाः दुरावरत्वं च बहुशो दृष्टवत्यपि राक्षसैर्वैरे भर्तुः स्वविरहद्वारा महान् क्लेशो

खड्गौ च कनकत्सरू इति । त्सरुः खड्गमुष्टिः॥१८–२०॥ इति श्रीमहे० श्रीरामायण०आरण्यकाण्डव्याख्यायामष्टमः सर्गः ॥८॥ सुतीक्ष्णेनेति । सीतेति शेषः । हृद्यया

भवेदिति प्रेमान्धतया तथोक्तवतीति भावः ॥ १ ॥ किं तदुक्तं तत्राह—अयं धर्म इति । महानयं धर्मः त्वयानुष्ठीयमानो मुनिधर्मः । सुसूक्ष्मेण विधिना मार्गेण विचारेण प्राप्यते, धर्मकामैरिति शेषः । सूक्ष्मविधिमेवाह निवृत्तेनेति । इह वने । कामजात् इच्छाकृताद्व्यसनान्निवृत्तेन पुरुषेणायं धर्मः शक्यः सम्पाद्यः । व्यसनमिति जात्येकवचनम् ॥ २॥ किं तद्व्यसनं तत्राह—त्रीण्येवेति । अत्र लोके । उत अत्यर्थम् । कामजानि रागकृतानि त्रीण्येव व्यसनानि

अयं धर्मस्सुसूक्ष्मेण विधिना प्राप्यते महान् । निवृत्तेन तु शक्योऽयं व्यसनात् कामजादिह ॥ २ ॥ त्रीण्येव व्यसनान्यत्र कामजानि भवन्त्युत । मिथ्यावाक्यं परमकं तस्माद् गुरुतरावुभौ । परदाराभिगमनं विना वैरं च रौद्रता ॥ ३ ॥ मिथ्यावाक्यं न ते भूतं न भविष्यति राघव । कुतोऽभिलाषणं स्त्रीणां परेषां धर्मनाशनम् ॥ ४ ॥

भवन्ति । कानि तानि त्रीणीत्यत्राह मिथ्यावाक्यमित्यादि । मिथ्यावाक्यं परमकम् प्रथममित्यर्थः, सर्वेभ्यो व्यसनेभ्यः श्रेष्ठमित्यर्थः । स्वार्थे कः । तस्मादपि व्यसनात् गुरुतरावुभौ व्यसनविशेषौ । तावाह परदारेत्यादिना । परदाराभिगमनं परदाराभिमर्शनम्, वैरं विना रौद्रता हिंसकता चेति ॥ ३ ॥ एवं सामान्येन व्यसनरूपमुक्त्वा प्रकृते परिहार्यत्वेन वक्तव्यं व्यसनं दर्शयितुमितरपरिशेषमाह—मिथ्येत्यादिना । अत्र भूतभविष्यतोर्वर्तमानस्यान्तर्भावः । कुत इति परेषां सम्बन्धिनीनां स्त्रीणां धर्मनाशनमधर्मकरं च अभिलाषणमभिलाषः कुतः, असम्भावित इत्यर्थः । धर्मनाशनशब्देन गुरुतरशब्दोक्ता

हृदयङ्गमया । स्निग्धया स्नेहप्रवृद्धया ॥ १ ॥ २ ॥ किं तत्कामजं व्यसनं कश्चाधर्मः ? याभ्यां निवर्तनीयोऽहमित्याकाङ्क्षायामाह—त्रीण्येवेति । परमकं परमव्यसनभूतम् ॥ ३ ॥ एवं व्यसनत्रयं निरूप्य प्रकृतेऽधर्मप्राप्तिपरिहाराय परिहार्यं व्यसनं परिशेषयितुमाह—मिथ्यावाक्यमित्यादिना सार्धश्लोकचतुष्टयेन । हे राम ! कर्मनाशनं मिथ्यावाक्यं परेषां स्त्रीणामभिलाषणं च ते तव न भूतं न भविष्यति। कुतो वर्तमानकाल इति शेषः ॥ ४ ॥

टी०—अथ "केवलेनात्मकार्येण प्रवेष्टव्यं वनं मया । विप्रकारमपाक्रष्टुं राक्षसैर्भवतामिमम्" इति मुनीनां राक्षसवधप्रतिज्ञां कुर्वाणं भर्तारं प्रति सीता "अहिंसा परमो धर्मः" इति न्यायं मनसि निधाय हिंसां निवर्तयितुं लोकदृष्टान्तेन वक्तुमारभते—यस्तु धर्म इत्यादिना । महान् उत्कृष्टः यो धर्मः सुतीक्ष्णेन मुनिना विधिना शास्त्रोक्तप्रकारेण प्राप्यते अयं धर्मः । इह लोके कामजाद्व्यसनान्निवृत्तेन पुरुषेण त्वयेति वा शक्यः, आचरितुं शक्य इति योजना । अधर्मं तु सुसूक्ष्मेणेति पाठे तु—महान् महात्मा यद्यपि भवान् तथापि सुसूक्ष्मेण विधिना सूक्ष्ममार्गेण विचारेण सति अधर्मं प्राप्यते । अपंश्छान्दसः श्यन् वा कर्तरि यग्वा छान्दसः । अधर्ममेव प्राप्नोति भवानित्यर्थः । अयमधर्मस्तु कामजाद्व्यसनान्निवृत्तेन त्वया परिहर्तुं शक्य इत्यर्थः ॥ २ ॥

तिशयो दर्शितः। मिथ्यावाक्यमधर्मकरम् इदमुभयकरमिति भावः ॥४॥ कुत इत्यादिना परदाराभिलाप एव नास्ति कुतस्तदभिगमनमित्युक्तम्। काल त्रयेपि तदभाव इति विशेषयति-तवेति। मनुष्येन्द्रेति हेतुगर्भं सम्बोधनम्। तव परदाराभिलापणमिदानीं नास्ति कदाचन ते तन्नाभूत्। हे राम! एतत् अभिलाषणं ते क्वचित्सुन्दरेष्वपि परदारेषु मनसा सङ्कल्पेनापि न विद्यते। अनेन भविष्यत्कालेपि नास्तीत्युक्तम्। तथेति समुच्चये। चोवधारणे ॥ ५ ॥

तव नास्ति मनुष्येन्द्र न चाभूत्ते कदाचन। मनस्यपि तथा राम न चैतद्विद्यते क्वचित् ॥ ५ ॥ स्वदारनिरतस्त्वं च नित्यमेव नृपात्मज। धर्मिष्ठस्सत्यसन्धश्च पितुर्निर्देशकारकः ॥ ६ ॥ सत्यसन्ध महाभाग श्रीमँल्लक्ष्मणपूर्वज! त्वयि सत्यं च धर्मश्च त्वयि सर्वं प्रतिष्ठितम् ॥ ७ ॥ तच्च सर्वं महाबाहो शक्यं धर्तुं जितेन्द्रियैः। तव वश्येन्द्रियत्वं च जानामि शुभदर्शन ॥ ८ ॥

उक्तव्यसनद्वयाभावे बहून् हेतून् दर्शयति-स्वदारेत्यादिना। हे नृपात्मज! त्वं नित्यमेव स्वदारनिरतः धर्मिष्ठश्च. अत एव सत्यसन्धः सत्यप्रतिज्ञः। तत्र निदर्शनं पितुर्निर्देशकारकः ॥ ६ ॥ उक्तानुवादपूर्वकं भर्तारं स्तौति-सत्यसन्धेति। महाभाग महाधर्मन्! श्रीमन् निरवधिकैश्वर्य! लक्ष्मणपूर्वज वैराग्ये लक्ष्मणादप्यधिक! त्वयि सत्यं प्रतिष्ठितम्। धर्मश्च प्रतिष्ठितः अन्यत्सर्वमैश्वर्यवैराग्यादिकं च त्वयि प्रतिष्ठितं सुस्थिरम् ॥ ७ ॥ तृतीयव्यसन सद्भावं वक्तुमुक्तव्यसनद्वयाभावं स्वानुभवसिद्धत्वेन द्रढयति-तच्चेति। हे महाबाहो! जितेन्द्रियैः धर्तुं शक्यं तत्पूर्वोक्तं धर्मिष्ठत्वादिकं सर्वं तव वश्ये न्द्रियत्वं च जानामि। शुभदर्शन! तत्सद्भावे तव दर्शनमेव प्रमाणम् "रूपमेवास्यैतन्महिमानं व्याचष्टे" इति श्रुतेः ॥ ८ ॥

अत एव तद्धेतुकं परदाराभिगमनं नास्तीत्याह-तवेति। हे मनुष्येन्द्र! एतत् परदाराभिगमनं तव नास्ति, वर्तमान इति शेषः। ते तव नाभूत् पूर्वमिति शेषः। कदाचिदपि भविष्यत्काल इत्यर्थः। किं बहुना, हे राम! मनसि तथा तादृशप्रसङ्गः कश्चिच्च क्वचिदपि न विद्यते भूतभविष्यद्वर्तमानकालेष्वपि तव परदाराभिगमनं नास्तीत्यर्थः ॥ ५ ॥ परदाराभिगमनमिथ्यावचनयोरभावे क्रमेण हेतुद्वयमाह-स्वदारनिरत इति। हे नृपात्मज! त्वं धर्मिष्ठस्सन् नित्यं स्वदारनिरतोसि, अनेन पर दाराभिगमनराहित्ये हेतुरुक्तः। सत्यसन्धस्सन् पितुर्निर्देशकारकोऽसि, अनेन मिथ्यावचनराहित्ये हेतुरुक्त इति द्रष्टव्यम्। अत एव त्वयि धर्मश्च सत्यं च सर्वं प्रतिष्ठितम् ॥ ६ ॥ ७ ॥ अन्यैर्बोद्धुमप्यशक्यमेतत्सर्वं तवास्तीति जानामीत्याह-तच्चेति। अशक्यमिति छेदः। अतो न तव व्यसनद्वयप्रसक्तिरित्यर्थः ॥ ८ ॥

एवं व्यसनद्वयरहितेन त्वया तृतीयव्यसनमपि कथंचित्परिहर्तव्यमित्याशयेनाह–तृतीयमिति । निर्वैरं यथा भवति तथा परप्राणाभिहिंसनरूपं यदिदं रौद्रं रौद्राख्यम् तृतीयं महद्व्यसनं पामरैः क्रियते । तच्च तत्तु ते समुपस्थितम्, त्वया कर्तुमुद्युक्तमित्यर्थः ॥ ९ ॥ कथमुद्युक्तमित्यत्राह–प्रतिज्ञात इति ॥ १० ॥ न केवलमृष्यभ्यर्थनया प्रतिज्ञातं प्रथमसङ्कल्पश्च तव तथैवेत्याह–एतन्निमित्तमिति । दण्डका इति विश्रुतं वनं प्रति त्वं

तृतीयं यदिदं रौद्रं परप्राणाभिहिंसनम् । निर्वैरं क्रियते मोहात्तच्च ते समुपस्थितम् ॥ ९ ॥ प्रतिज्ञातस्त्वया वीर दण्डकारण्यवासिनाम् । ऋषीणां रक्षणार्थाय वधस्संयति रक्षसाम् ॥ १० ॥ एतन्निमित्तं च वनं दण्डका इति विश्रुतम् । प्रस्थितस्त्वं सह भ्रात्रा धृतबाणशरासनः ॥ ११ ॥ ततस्त्वां प्रस्थितं दृष्ट्वा मम चिन्ताकुलं मनः । त्वद्वृत्तं चिन्तयन्त्या वै भवेन्निःश्रेयसं हितम् ॥ १२ ॥ नहि मे रोचते वीर गमनं दण्डकान्प्रति । कारणं तत्र वक्ष्यामि वदन्त्याः श्रूयतां मम ॥ १३ ॥

भ्रात्रा सह धृतबाणशरासनः सन् प्रस्थितः । ' केवलेनात्मकार्येण ' इत्यादिना भवतैवोक्तत्वादिति भावः ॥ ११ ॥ ततः किमित्यत्राह–ततस्त्वामिति । प्रस्थितं त्वां दृष्ट्वा त्वद्वृत्तं सत्यप्रतिज्ञत्वस्वदारैकनिरतत्वादिकं च दृष्ट्वा । त्वन्निःश्रेयसं तव सौख्यं हितं तत्साधनं च चिन्तयन्त्या मम मनश्चिन्ताकुलं भवेद्धि भवति हि । भवान् सत्यप्रतिज्ञत्वेन रक्षोवधान्न निवर्तेत निर्वैरं परहिंसनं च न करोषि, यस्य कस्यचिद्वैरमूलस्य करणे तदहमेव स्याम्, मद्विरहं च त्वमेकदारव्रतनिरतः न सोढुमर्हसि अतः कथमिदं सम्पत्स्यत इति भावः ॥ १२ ॥ तर्हि क उपायस्ते प्रतिभातीत्यपेक्षायां रामपक्षंस्यैव

तृतीयव्यसनप्रसक्त्या तवाधर्मः स्यादित्यत आह–तृतीयमिति । यदिदं परप्राणाभिहिंसनरूपं तृतीयं रौद्रं भयङ्करं व्यसनमस्ति तच्च मोहाद्यतो निर्वैरं क्रियते तच्च तन्निर्वैरं रौद्रतारूपं अधर्मान्तरं ते समुपस्थितम् ॥ ९ ॥ ननु कथं तृतीयव्यसनजनिताधर्मप्राप्तिरित्यत आह–प्रतिज्ञात इति ॥ १० ॥ ननु प्रतिज्ञामात्रेणाधर्मप्राप्तिः कथमित्यत आह–एतदिति । एतन्निमित्तमेव प्रतिज्ञातरक्षोवधार्थमेव त्वं दण्डका इति विश्रुतं प्रसिद्धं वनम् धृतबाणशरासनस्सन् भ्रात्रा सह प्रस्थितोऽसि यतः अतः प्राप्तमेतत्तृतीयं प्राप्तमित्यर्थः ॥११॥ तत इति । तस्माद्धेतो राक्षसवधार्थं प्रस्थितं त्वां दृष्ट्वा त्वद्वृत्तं सत्यप्रतिज्ञालक्षणं चरित्रं च दृष्ट्वा निःश्रेयसं परलोकसुखम् । हितम् इह लोके सुखं चिन्तयन्त्या मम मनश्चिन्ताकुलं भवेत् भवति ॥१२॥ स्वाभिप्रायमाह–नहीति । अरुचौ हेतुमाह कारणमिति । मम मत्सकाशात् ॥ १३ ॥

टीका०–अत्र दण्डकानां जनपदवाचकत्वाद्बहुवचनं पुँल्लिङ्गता च । सहि पूर्वं जनपदः शुक्रशापाद्वनमभवत् ॥ ११ ॥

स्वपक्षत्वात्तत्पक्षं स्थूणादिखननन्यायेन द्रढयितुं पक्षान्तरमाह–नहीति । मम मतः ॥ १३ ॥ शरव्ययं शरमोक्षम् । कच्चिदिति कामप्रवेदने ॥ १४ ॥ तर्हि शरव्ययं न करोमीत्यत्राह–क्षत्रियाणामिति । क्षत्रियाणां समीपतः स्थितं धनुः तेजोरूपं बलं भृशम् । उच्छ्रूयते वर्धयति । हुताशस्य समीपस्थितानी न्धनानि च तेजोबलमुच्छ्रूयन्ते । दृष्टान्तालङ्कारः ॥ १५ ॥ उक्तार्थे ऐतिह्यमाह–पुरेत्यादि । रतमृगद्विजे सन्तुष्टमृगपक्षिके । तपस्वी कश्चिदभवदित्य

त्वं हि बाणधनुष्पाणिर्भ्रात्रा सह वनं गतः । दृष्ट्वा वनचरान् सर्वान् कच्चित् कुर्याश्शरव्ययम् ॥१४॥ क्षत्रियाणां च हि धनुर्हुताशस्येन्धनानि च । समीपतः स्थितं तेजोबलमुच्छ्रूयते भृशम् ॥१५॥ पुरा किल महाबाहो तपस्वी सत्यवाक् शुचिः । कस्मिंश्चि[illegible]त्पुण्ये वने रतमृगद्विजे ॥ १६ ॥ तस्यैव तपसो विघ्नं कर्तुमिन्द्रश्शचीपतिः । खड्गपाणिरथागच्छदाश्रमं भटरूपधृत् ॥ १७ ॥ तस्मिंस्तदाश्रमपदे निशितः खड्ग उत्तमः । स न्यासविधिना दत्तः पुण्ये तपसि तिष्ठतः ॥१८॥ स तच्छस्त्रमनुप्राप्य न्यासरक्षणतत्परः । वने तं विचरत्येव रक्षन् प्रत्ययमात्मनः ॥ १९ ॥ यत्र गच्छत्युपादातुं मूलानि च फलानि च । न विना याति तं खड्गं न्यासरक्षणतत्परः ॥ २० ॥ नित्यं शस्त्रं परिवहन् क्रमेण स तपोधनः । चकार रौद्रीं स्वां बुद्धिं त्यक्त्वा तपसि निश्चयम् ॥ २१ ॥

न्वयः ॥१६॥१७॥ स इति खड्गविशेषणम् । न्यासविधिना न्यासप्रकारेण । "राजचोरादिकभयाद्दायादानां च वञ्चनात् । स्थाप्यतेऽन्यगृहे द्रव्यं न्यासः स परिकीर्तितः ॥" इत्युक्तो न्यासः । तिष्ठतः तस्येति शेषः । चतुर्थ्यर्थे षष्ठी ॥ १८ ॥ आत्मनः प्रत्ययं विश्वासस्थापितं वस्तु । "प्रत्ययोधीन शपथ ज्ञानविश्वासहेतुषु" इत्यमरः । रक्षन्नेव विचरति व्यचरत् ॥ १९ ॥ एतदेवोपपादयति–यत्रेति ॥ २० ॥ परिवहन् रक्षन् । रौद्रीं हिंसापराम् । स्वां शस्त्र

वनचरान् राक्षसाननुद्दिश्य शरव्ययं कुर्याः कच्चित् कुर्या एव, तस्मादेव तृतीयव्यसनप्राप्तिस्तवेति भावः ॥ १४ ॥ ननु शरमोक्षमकृत्वैव स्थास्य इत्याशङ्क्याह–क्षत्रियाणामिति । क्षत्रियाणां समीपे स्थितं धनुः क्षत्रियाणां तेजोबलमुच्छ्रूयते वर्द्धयते । स्थितानीति बहुवचनतया योज्यम् । इन्धनानि हुताशस्य तेजोबलं तेजोरूपं बलं वर्द्धयन्तीति योज्यम् ॥ १५ ॥ वासनाप्राबल्यादपरिहार्योऽयं व्यापार इति वक्तुमितिहासमाह–पुराकिलेति ॥ १६ ॥ १७ ॥ सन्यासविधिना कालान्तरे पुनरादानाय रक्षणार्थं स्थापनकर्मणेत्यर्थः ॥ १८ ॥ स इति । आत्मनः प्रत्ययं स्थापितवस्तुविषयं विश्वासमित्यर्थः ॥ १९–२१ ॥

धार्यसाधारणाम् ॥ २१ ॥ रौद्रे हिंसारूपकर्मणि । अधर्मेण कर्शितः पीडितः । संवासात्सम्पर्कात् ॥ २२ ॥ शस्त्रसंयोगकारणं पुरावृत्तम्, उक्त मिति शेषः ॥ २३ ॥ पुरावृत्तफलितमर्थमाह—अग्नीति । अग्निसंयोगो यथा वस्तुनो विकारहेतुः एवं शस्त्रसंयोगोऽपि शस्त्रिणो विकारहेतुर्भवति । स्नेहात् त्वद्विषयस्नेहात् । बहुमानात् मद्विषये त्वत्कृतबहुमानात् । स्मारये भवद्विज्ञातार्थमेव स्मारयामि । न शिक्षये नापूर्वमर्थमुपदिशामि ॥ २४ ॥



ततः स रौद्रेऽभिरतः प्रमत्तोऽधर्मकर्शितः । तस्य शस्त्रस्य संवासाज्जगाम नरकं मुनिः ॥ २२ ॥ एवमेतत्पुरा वृत्तं शस्त्रसंयोगकारणम् ॥ २३ ॥ अग्निसंयोगवद्धेतुश्शस्त्रसंयोग उच्यते । स्नेहाच्च बहुमानाच्च स्मारये त्वां न शिक्षये ॥ २४ ॥ न कथञ्चन सा कार्या गृहीतधनुषा त्वया । बुद्धिर्वैरं विना हन्तुं राक्षसान् दण्डकाश्रितान् । अपराधं विना हन्तुं लोकान् वीर न कामये ॥ २५ ॥ क्षत्रियाणां तु वीराणां वनेषु निरतात्मनाम् । धनुषा कार्य मेतावदार्तानामभिरक्षणम् ॥ २६ ॥

गृहीतधनुषा त्वया वैरं विना राक्षसान् हन्तुं सा रौद्री बुद्धिः । कथञ्चन केनापि प्रकारेण । न कार्या न कर्तुं योग्या, त्वत्प्रकृत्यननुगुणत्वादिति भावः । इयं बुद्धिर्मत्प्रकृतेरप्यननुगुणेत्याह अपराधमिति । लोकान् प्राणिनः ॥ २५ ॥ तनि०—अपराधं विनेति । निरपराधहननमेवात्र प्रतिषिध्यते नतु तपस्विषु सापराध राक्षसहननम् । तेन सापराधं सम्यगालोच्य तत्राप्यपराधक्षालनोपायान्तराभावे हन्तव्यमिति भावः । लोकान् हन्तुमिति । " अकुर्वन्तोपि पापानि शुचयः पापसंश्र यात् " इत्युक्तन्यायेन एकापराधिलक्षीकरणेन प्रवृत्ते हनने अनपराधिनामपि बाधा यथा न भवति तथा कार्यमितीहार्थः ॥ २५ ॥ यद्येवं तर्हि क्षत्रियधर्मो धनु र्धारणं निरवकाशं स्यादित्याशङ्क्याह—क्षत्रियाणां त्विति । वीराणां क्षत्रियाणां धनुषा कार्यं कर्तव्यम् । वनेषु निरतात्मनाम् आर्तानां पीडितानां रक्षणं अधर्मकर्शितः अधर्मेण पीडितः । संवासात् धारणात् ॥ २२ ॥ अग्निसंयोगवद्धेतुः अग्निसंयोगो यथा वस्तुनो विकारहेतुस्तद्वच्छस्त्रसंयोगोऽपि शस्त्रिणो विकारहेतु र्भवति । स्वधार्ष्ट्यं परिहरति स्नेहादिति । स्नेहाद्भवद्विषयस्नेहात् । बहुमानात् भवत्कर्तृकात् अस्मद्विषयात् । स्मारये भवद्विज्ञातार्थमेव स्मारयामि, नत्वपूर्वमुप दिशामीत्यर्थः ॥ २३ ॥२४॥ उपसंहरति—नेति । वैरं विना हन्तुं बुद्धिर्न कार्येति सम्बन्धः । इममर्थं प्रपञ्चयति अपराधं विनेति । लोकान् प्राणिनः राक्षसवधारम्भः शनैश्शनैरितरप्राणिवधबुद्ध्युत्पादको भविष्यतीति भावः ॥ २५ ॥ नन्वार्तमुनिजनरक्षणार्थमेव अनपराधिनामपि वधोऽस्तीति सिद्धान्तमुपसृत्याह—क्षत्रियाणा मिति । क्षत्रियाणां क्षत्रधर्मोचितशिष्टरक्षणप्रवृत्तानां तु आर्तानां स्वसन्निधौ पीड्यमानानां वने निरतात्मनां मुनीनां अभिरक्षणमिति यावत् । एतावदेव धनुषा

बाधकोत्सारणमित्येतावदेव। तुरवधारणे ॥२६॥ ननु रक्षणार्थं वा धनुर्धार्यमेवेत्याशङ्क्य तदपि नेदानीमुचितम्। किंतु राज्यपालनकाल इत्याह-क्वचेत्यादिना। क्षात्रं क्षत्रधर्मः। किंशब्दाभ्यां गम्यमानमर्थमाह व्याविद्धमिदमिति। शस्त्रवने क्षात्रतपसी च परस्परविरुद्धमिदमस्माभिर्न पूज्यताम्, किन्तु देशधर्मस्तपोवनधर्मः पूज्यताम्। क्षात्रशस्त्रे विहाय वनवासतपश्चरणे एव क्रियतामित्यर्थः॥ २७॥ व्यत्ययो वा किं न स्यादित्यत्राह-तदार्येति। तर्हि

क्व च शस्त्रं क्व च वनं क्व च क्षात्रं तपः क्व च। व्याविद्धमिदमस्माभिर्देशधर्मस्तु पूज्यताम् ॥ २७ ॥ तदार्य कलुषा बुद्धिर्जायते शस्त्रसेवनात्। पुनर्गत्वा त्वयोध्यायां क्षत्रधर्मं चरिष्यसि ॥ २८ ॥ अक्षया तु भवेत्प्रीतिः श्वश्रूश्वशुरयोर्मम। यदि राज्यं परित्यज्य भवेस्त्वं निरतो मुनिः ॥२९॥ धर्मादर्थः प्रभवति धर्मात्प्रभवते सुखम्। धर्मेण लभते सर्वं धर्मसारमिदं जगत् ॥ ३०॥ आत्मानं नियमैस्तैस्तैः कर्शयित्वा प्रयत्नतः। प्राप्यते निपुणैर्धर्मो न सुखाल्लभ्यते सुखम् ॥३१॥ नित्यं शुचिमतिः सौम्य चर धर्मं तपोवने। सर्वं हि विदितं तुभ्यं त्रैलोक्यमपि तत्त्वतः ॥३२॥

वर्णधर्मो लुप्येतेत्यत्राह पुनरिति ॥ २८॥ तपोमात्रकरणे फलान्तरमप्याह-अक्षयेति। यद्वा सर्वदा क्षत्रधर्मं त्यक्त्वा मुनिवृत्तिराश्रयतामित्याह-अक्षयेति। तुः समुच्चये। अकलुषा बुद्धिश्च ते भवेदित्यर्थः। श्वश्रूश्वशुरयोः कैकेयीदशरथयोः। "श्वशुरः श्वश्र्वा" इत्येकशेषाभाव आर्षः॥ २९ ॥ केवलधर्मानुष्ठानस्य सर्वश्रेयोमूलत्वमाह-धर्मादित्यादिना। सर्वं मुक्तिमपि ज्ञानद्वारा लभत इत्यर्थः ॥ ३० ॥ धर्मार्थज्ञानप्रकारमाह-आत्मानमिति। नियमैः चान्द्रायणादिव्रतैः। आत्मानं शरीरम् ॥ ३१ ॥ त्रैलोक्यं त्रिलोकभवं पुरुषार्थतत्साधनतदङ्गकलापम् ॥ ३२ ॥

कार्यं राक्षसानां भयं कृत्वा मुनीनां रक्षणं कार्यं नतु राक्षसानां हिंसनमिति भावः ॥ २६ ॥ नास्माकं हिंसाकर्मण्यधिकार इत्याह-क्व चेति। शस्त्रं क्व च राज्यपालकक्षत्रियधार्यं शस्त्रं क्व वनं क्व राज्यं त्यक्त्वा इदानीमस्माभिराश्रयमाणं वनं क्व? क्षत्रियकृत्यहिंसालक्षणं कर्म क्व? हिंसारहितं तपश्च क्व इदं व्याविद्धं परस्परं विरुद्धम्, अतोऽस्माभिर्देशधर्मः तपोवनधर्मः पूज्यतां सेव्यताम् ॥ २७॥ २८॥ अक्षयेति। त्वं राज्यं परित्यज्य मुनिः सन्निरतः अहिंसायामिति शेषः। यदि भवेः तर्हि मम श्वश्रूश्वशुरयोः अक्षया प्रीतिर्भवेत्। वनवासोचितधर्मानुष्ठाने श्वशुरस्य स्वर्गलाभजा प्रीतिः पुत्रस्य युद्धादिक्लेशराहित्येन श्वश्र्वाः कौसल्यायाः प्रीतिरित्यर्थः ॥ २९ ॥ अहिंसाप्रधानं धर्मं प्रस्तौति-धर्मादित्यादिना। धर्मात् अहिंसाप्रधानधर्मात् ॥ ३० ॥ न सुखाल्लभ्यते सुखमिति सुखादिष्टानुवर्तनात् सुखं न लभ्यते, अतो राक्षससंहारोद्योगः कर्तव्य इति भावः ॥ ३१ ॥ नित्यमिति धर्मसहिंसालक्षणं त्रैलोक्यं त्रिलोकान्तर्वर्तिजनधर्माधर्मात्मकं वस्त्वित्यर्थः। तुभ्यं त्वया तत्त्वतो विदित

टीका-श्वश्रूश्वशुरयोः कैकेयीदशरथयोः अक्षया प्रीतिर्भवेत्। यदि राज्यं परित्यज्य निरतः स्थिरो मुनिर्भवेः ॥ २९ ॥

स्त्रीचापलात् स्त्रीत्वप्रयुक्तचापलात् । मे मया । मा चिरेण विचारस्य विलम्बो मा भूत् । अत्र सार्धत्रयस्त्रिंशच्छ्लोकाः ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने नवमः सर्गः ॥ ९ ॥ एवं रामः सत्यप्रतिज्ञः निर्वैरं च रक्षोवधं न करिष्यति तथा च मद्वियोगेन रक्षोवधेन भवितव्यं मद्विरहं च न सहिष्यते, सङ्कटमिदमुपस्थितमित्याकुलचित्ता वैदेही पतिप्रेमान्धा रक्षोवधान्निवर्तयितुमुपक्रान्ता ।

स्त्रीचापलादेतदुदाहृतं मे धर्मं च वक्तुं तव कस्समर्थः। विचार्य बुद्ध्या तु सहानुजेन यद्रोचते तत्कुरु मा चिरेण ॥३३॥
इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे नवमः सर्गः ॥ ९ ॥

वाक्यमेतत्तु वैदेह्या व्याहृतं भर्तृभक्तया। श्रुत्वा धर्मे स्थितो रामः प्रत्युवाचाथ मैथिलीम् ॥ १ ॥
हितमुक्तं त्वया देवि स्निग्धया सदृशं वचः । कुलं व्यपदिशन्त्या च धर्मज्ञे जनकात्मजे ॥ २ ॥

रामस्तु सीताविरहं सोढ्वापि तन्मूलवैरेण रक्षांसि निहत्य प्रतिज्ञा निर्वोढव्येति समाधत्ते दशमे–वाक्यमेतत्त्वित्यादि । भर्तृभक्तयेत्यनेन भर्तृप्रेमपारवश्येन पूर्वमुक्तमिति ज्ञायते । धर्मे स्थित इत्यनेन सीताविरहक्लेशमङ्गीकृत्यापि प्रतिश्रुतनिर्वहणपरता द्योत्यते । यद्यपि खरवध एव दण्डकारण्यवासिभिरर्थितो रामेण प्रतिज्ञातश्च तथापि खरवधो रावणवधमूलमिति खरवधद्वारा रावणवधोऽप्यर्थित एवेति सीतयोक्तमुपपन्नम् ॥ १ ॥ स्निग्धया अनुरक्तया । कुलं व्यपदिशन्त्या स्वमहाकुलीनत्वं प्रख्यापयन्त्या त्वया । सदृशम् अनुरागकुलसदृशं हितमुक्तम् । हितोक्तौ हेतुः धर्मज्ञ इति । कुलव्यपदेशे हेतुः जनकात्मज इति ॥ २ ॥

मित्यन्वयः ॥ ३२ ॥ ३३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां नवमः सर्गः ॥ ९ ॥ वाक्यमिति । धर्मे स्थितः मुनिपरिपालनात्मके धर्मे स्थितः ॥ १ ॥ कुलं व्यपदिशन्त्या क्षत्रियाणां हि वीराणामित्यादिना क्षत्रियकुलधर्मं प्रकाशयन्त्येत्यर्थः ॥ २ ॥

स०–पूर्वं स्वस्य स्त्रियाः प्रकृतत्वेपि कः समर्थ इति पुंनिर्देशेन स्त्रीपुरुषसाधारण्येन समर्थो नास्तीति सूचयति । यद्वा कूटस्थोऽक्षर इति रमायाः पुंशक्तिमत्त्वेन पुंलिङ्गशब्दवाच्यत्वात् कः समर्थ इति वक्त्री स्वस्य तत्त्वं सूचयामासेत्यवसेयम् । अनुजेन सह विचार्येति लोकानुकरणार्थम् ॥ ३३ ॥

किन्त्विति । यदि मया हितमुक्तं तर्हि तथैव क्रियतामिति चेत्तत्र वक्ष्यामि । तदेवाह त्वयैवेति । क्षत्रियैर्धार्यते चापो नार्तशब्दो भवेदितीदं वचनं त्वयैवोक्तं खलु, मुनयश्चार्त्ताः तस्मात्तद्विरोधिवधः कर्तव्य एवेति भावः ॥ ३ ॥ ननूक्तं विरोध्युत्सारणेनार्तरक्षणं कर्तव्यम्, नतु निरपराधवध इत्याशङ्क्य

किन्तु वक्ष्याम्यहं देवि त्वयैवोक्तमिदं वचः । क्षत्त्रियैर्धार्यते चापो नार्तशब्दो भवेदिति ॥ ३ ॥ मां सीते स्वयमागम्य शरण्याः शरणं गताः । ते चार्ता दण्डकारण्ये मुनयः संशितव्रताः ॥४॥ वसन्तो धर्मनिरता वने मूलफलाशनाः । न लभन्ते सुखं भीता राक्षसैः क्रूरकर्मभिः ॥ ५ ॥ कालेकाले च निरता नियमैर्विविधैर्वने । भक्ष्यन्ते राक्षसैर्भीमैर्नरमांसोपजीविभिः ॥ ६ ॥ ते भक्ष्यमाणा मुनयो दण्डकारण्यवासिनः । अस्मानभ्यवपद्येति मामूचुर्द्विजसत्तमाः ॥ ७ ॥ मया तु वचनं श्रुत्वा तेषामेवं मुखाच्च्युतम् । कृत्वा चरणशुश्रूषां वाक्यमेतदुदाहृतम् ॥ ८ ॥

तेषां शरणागतत्वेन मत्प्राणभूतत्वात्तेष्वपराधो मदपराध इत्याशयेनाह—मामित्यादि । अत्रत्यविशेषणैरात्मनः शरणागतपक्षपातं स्फोरयति ॥ ४ ॥ ५ ॥ कालेकाले सर्वकालेष्वित्यर्थः ॥६॥ अभ्यवपद्येति अनुगृहाणेत्यर्थः । लोण्मध्यमपुरुषैकवचनम् । आर्षं परस्मैपदम् । अभ्यवपत्तिः अनुग्रहः ॥ ७ ॥ चरण

किन्त्विति । हे देवि ! किन्तु वक्ष्यामि किञ्चिदपि मया न वक्तव्यम्, तत्कुतः ? त्वयैवोक्तमिदं वचः । किं तद्वचनमिति चेत्, धनुषा कार्यमेतावदार्तानामभिरक्षणमितीदं वचनं पूर्वसर्गे त्वयैवोक्तमिति । तद्वचनार्थमेवात्र रचनाभेदेनाह—क्षत्रियैरिति । यद्वा किन्तु वक्ष्यामि किञ्चिद्वक्तव्यं मया कुतस्त्वयैवोक्तमिदं वचः । किं तद्वचनमिति चेत् ? "क्षत्रियैर्धार्यते चापो नार्तशब्दो भवेदिति । धनुषा कार्यमेतावदार्तानामभिरक्षणम्" इति पूर्वसर्गे यद्देव्या वचः तदनेन स्मार्यते । किं तु वक्ष्यामीति पाठे—त्वया यदुक्तं तत्करणीयम्, किंतु विशेषोऽस्ति, शरणागतपरित्राणं मया प्रतिज्ञातम् आर्ता मुनयश्च मां शरणागता इत्युपरि प्रतिपादयिष्यते । त्वयाप्युक्तमेवेत्याह क्षत्रियैरिति ॥ ३ ॥ तद्वचनस्यायमवसर इत्याह ते चेति । संशितव्रताः सम्यक् शितं तीक्ष्णं व्रतं येषां ते तथोक्ताः ॥ ४–७ ॥ तेषां मुखाच्च्युतं वचनं त्रायस्वेति वचनमित्यर्थः । वचनशुश्रूषां वचनानुष्ठानलक्षणशुश्रूषामित्यर्थः । कृत्वा मनसिकृत्वेत्यर्थः । चरणशुश्रूषामिति पाठे—पादाभिवन्दनमित्यर्थः ॥ ८ ॥



स०—संशितव्रताः सम्यक् तीव्रफलजनकव्रतविशिष्टाः । संसितव्रता इति पाठे—सम्यक् सितं बद्धं व्रतं येषां ते तथा । राक्षसोपद्रवादननुष्ठितसद्व्यापारा इति भावः ॥ ४ ॥ टी०—अस्मानभ्यवपद्य त्रायस्व ॥ ७ ॥

शुश्रूषां पादवन्दनम् ॥ ८ ॥ प्रसीदन्तु मदपचारं क्षमन्ताम् । ह्रीः लज्जा । अतुला अधिका । तत्र हेतुमाह यदिति । उपस्थेयैरभिगन्तव्यैः । उपस्थितः अभिगतः । किं करोमीति लोडर्थे लट् । किं करवाणीत्यर्थः ॥ ९ ॥ तनि०—स्तोत्रादिना चेतस्सङ्कोचनं ह्रीः "वीतरागस्य स्तोत्राद्यैश्चेतस्सङ्कोचनं व्रीडा" इति लक्षणात् ॥ ९ ॥ १० ॥ अर्दिताः पीडिताः तत्र तेभ्यः रक्षत्विति । अभ्यवपद्येत्यत्र सामान्येनानुग्रहः प्रार्थितः । इह तु तद्विशेषे पृष्टे विशेष

प्रसीदन्तु भवन्तो मे ह्रीरेषा हि ममातुला । यदीदृशैरहं विप्रैरुपस्थेयैरुपस्थितः । किं करोमीति च मया व्याहृतं द्विजसन्निधौ ॥ ९ ॥ सर्वैरेतैः समागम्य वागियं समुदाहृता ॥ १० ॥ राक्षसैर्दण्डकारण्ये बहुभिः कामरूपिभिः । अर्दिताः स्म दृढं राम भवान्नस्तत्र रक्षतु ॥ ११ ॥ होमकालेषु सम्प्राप्ताः पर्वकालेषु चानघ । धर्षयन्ति सुदुर्धर्षा राक्षसाः पिशिताशनाः ॥ १२ ॥ राक्षसैर्धर्षितानां च तापसानां तपस्विनाम् । गतिं मृगयमाणानां भवान्नः परमा गतिः ॥ १३ ॥ कामं तपःप्रभावेन शक्ता हन्तुं निशाचरान् । चिरार्जितं तु नेच्छामस्तपः खण्डयितुं वयम् ॥ १४ ॥ बहुविघ्नं तपो नित्यं दुश्चरं चैव राघव । तेन शापं न मुञ्चामो भक्ष्यमाणाश्च राक्षसैः ॥ १५ ॥ तदर्द्यमानान् रक्षोभिर्दण्डकारण्यवासिभिः । रक्ष नस्त्वं सह भ्रात्रा त्वन्नाथा हि वयं वने ॥ १६ ॥

उक्तः ॥ ११ ॥ न केवलं पीडयन्ति यज्ञविघ्नं च कुर्वन्तीत्याहुः—होमेति । "यज्ञविघ्नकरं हन्याम्" इति मद्गोजननिवर्तनात् कः परोऽपराध इति सीतायै सूचयितुमिदमनूदितम् । होमकालेषु अग्निहोत्रकालेषु । पर्वकालेषु दर्शपौर्णमासादियज्ञकालेषु । धर्षयन्ति अभिधावन्ति ॥ १२ ॥ गतिं रक्षकम् । मृगयमाणानाम् अन्वेषयताम् ॥ १३ ॥ परमशब्दव्यवच्छेद्यं दर्शयति—काममिति ॥ १४ ॥ उक्तं विवृणोति—बह्विति ॥ १५ ॥ उपसंहरति—तदिति । त्वन्नाथा

स्वोक्तवाक्यविस्तारः प्रसीदन्त्विति । ईदृशैः महानुभावैः उपस्थेयैः उपास्यैः विप्रैरिति शेषः । अहमुपस्थित इति यज्ञरक्षणार्थं प्रार्थित इति यत् एषा मम ह्रीः, अतः प्रसीदन्त्विति सम्बन्धः ॥९--११॥ धर्षयन्ति तिरस्कुर्वन्ति ॥१२॥ गतिं गम्यत इति गतिः शरणम् ॥१३॥ तपःप्रभावेन त्वदुपासनात्मकतपः प्रभावेन ॥ १४–१६ ॥

टी०—एषा मम ह्रीः स्तोत्रादिना चित्तसङ्कोचो ह्रीशब्देनोच्यते । अतः प्रसीदन्त्विति सम्बन्धः ॥९॥ स०—तत्र तत्कृतपीडावस्थायाम् । यद्वा तांस्त्रायत इति तत्त्रः, तस्य संबुद्धिः हे तत्त्र ! एतावत्कालपर्यन्तं राक्षससंरक्षक ! त्वद्रक्षणमन्तरेण तेषां जीवनासम्भवादिति भावः ॥ ११ ॥ **तापसानां** तपस इमे तापसाः । अतीतकालीनतपस्काः तेषाम् । तपस्विनां वर्तमानकालीनतपस्कानाम् । यद्वा तपस्विनामिति निर्धारणे षष्ठी । तपस्विनां मध्ये तापसानामित्यर्थः । अत्यन्ततपस्विनामिति भावः ॥ १३ ॥

इति बहुव्रीहिः । इयं वाक् समुदाहृतेति पूर्वेणान्वयः ॥ १६ ॥ कात्स्न्येंन परिपालनं रक्षोवधपर्यन्तपरिपालनम् । संश्रुतं प्रतिज्ञातम्, मदाश्रितविरोधिनो मद्विरोधित्वात् मद्भोजनविघातकत्वाच्चेत्यर्थः ॥ १७ ॥ जीवमानः जीवन् । प्रतिश्रवं प्रतिज्ञाम् । अन्यथा कर्तुं न शक्ष्यामि । तत्र हेतुः सत्यमिष्टमिति । सत्यं सत्यवचनम् ॥ १८ ॥ तद्द्वयोर्विश्लेषो दुर्विषहः स्यात्तत्राह–अप्यहमिति । "आत्मानं सर्वदा रक्षेद्दारैरपि धनैरपि" इत्युक्तं जीवित

मया चैतद्वचः श्रुत्वा कात्स्न्येंन परिपालनम् । ऋषीणां दण्डकारण्ये संश्रुतं जनकात्मजे ॥ १७ ॥ संश्रुत्य च न शक्ष्यामि जीवमानः प्रतिश्रवम् । मुनीनामन्यथा कर्तुं सत्यमिष्टं हि मे सदा ॥ १८ ॥ अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् । न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥ १९ ॥ तदवश्यं मया कार्यमृषीणां परिपालनम् । अनुक्तेनापि वैदेहि प्रतिज्ञाय तु किं पुनः ॥ २० ॥ मम स्नेहाच्च सौहार्दादिदमुक्तं त्वयाऽनघे । परितुष्टोऽस्म्यहं सीते न ह्यनिष्टोऽनुशिष्यते ॥ २१ ॥

मपि जह्याम् । "भ्राता स्वा मूर्तिरात्मनः" इत्युक्तं लक्ष्मणमपि जह्याम् । "अर्धो वा एष आत्मनो यत्पत्नी" इत्युक्तां त्वां वा जह्यामिति किमाश्चर्यम्, संश्रुत्य यस्मै कस्मैचित् यत्किंचित् प्रतिज्ञाय तां प्रतिज्ञां न जह्याम् । ब्राह्मणेभ्यः ब्रह्मविद्भ्यः कृतां प्रतिज्ञां विशेषतो न जह्याम् ॥ १९ ॥ तनि०–अप्यहं जीवितं जह्यां प्राणान्वा त्यक्ष्यामि । त्वां वा "न जीवेयं क्षणमपि विना तामसितेक्षणाम्" "प्राणेभ्योपि गरीयसीम्" इत्युक्तां त्वां वा त्यजामि । सलक्ष्मणाम् "अद्यैवाहं गमिष्यामि लक्ष्मणेन" इत्युक्तरीत्या अत्यन्तविश्लेषासहनप्रीतिविषयं लक्ष्मणं वा त्यजामि । नतु प्रतिज्ञां त्यजामि ॥ १९ ॥ अनुक्तेनापीति । ऋषिभिरिति शेषः । उक्तरीत्या रक्षसां मदपराधित्वेन तद्वधस्य मत्कार्यत्वादिति भावः ॥ २० ॥ एवं वदन्त्यास्तव हृदयं च जानामी मयेति । एतद्वचः मुन्युक्तं वचः श्रुत्वा दण्डकारण्ये ऋषीणां कात्स्न्येंन परिपालनम् । संश्रुतं प्रतिज्ञातम् ॥ १७ ॥ जीवमानः जीवन् । मुनीनां मुनिभ्यः । प्रतिश्रुतं संश्रुत्य । प्रतिज्ञां प्रतिज्ञाय । अन्यथाकर्तुं प्रतिज्ञातार्थमन्यथाकर्त्तुम्, अनृतं कर्तुमित्यर्थः । न शक्ष्यामि न शक्तोऽस्मि सत्यं सत्यवचनं मे मम इष्टम् ॥ १८–२० ॥ ममेति मयीति विभक्तिव्यत्यय आर्षः । सौहार्दात् शोभनहृदयत्वात् मयि स्नेहात् प्रीतेरित्यर्थः । न ह्यनिष्टोऽनुशिष्यते । यस्मिन् यस्य प्रीतिर्नास्ति नासावनुशिष्यते हितं नोपदिश्यत इत्यर्थः ॥ नह्यतुष्ट इति पाठे–अतुष्टः तोषरहितः, इष्टव्यतिरिक्त इति पूर्ववदेवार्थः ॥ २१ ॥

टी०–अप्यहं जीवितं जह्याम् इति । तच्छ्लोकस्य फलस्तुतिः स्कान्दे–"एतच्छ्रवणमात्रेण रामात् कांक्षितमाप्नुयात् ।" इति ॥ १९ ॥

त्याङ्–ममेति । मम त्वयि स्नेहात् तव मयि सौहार्दाच्चोक्तम् । विरहो दुस्सहो भविष्यतीत्युक्तमित्यर्थः । अनिष्टः अप्रियः पुरुषः ॥ २१ ॥ तव आत्मनः सदृशं तव कुलस्य चानुरूपमिदं वचः धर्मप्राधान्योक्तिस्त्वत्कुलानुरूपा । " कर्मणैव हि संसिद्धिमास्थिता जनकादयः " इति हि त्वत्कुलपद्धतिः । सापराधेष्वपि निरपराधोक्तिस्तव सदृशी । " पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति ॥ " इति हि तव

सदृशं चानुरूपं च कुलस्य तव चात्मनः । सधर्मचारिणी मे त्वं प्राणेभ्योऽपि गरीयसी ॥ २२ ॥ इत्येवमुक्त्वा वचनं महात्मा सीतां प्रियां मैथिलराजपुत्रीम् । रामो धनुष्मान् सह लक्ष्मणेन जगाम रम्याणि तपोवनानि ॥२३॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे दशमः सर्गः ॥ १० ॥

अग्रतः प्रययौ रामः सीता मध्ये सुमध्यमा । पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणोऽनुजगाम ह ॥ १ ॥

तौ पश्यमानौ विविधान् शैलप्रस्थान् वनानि च । नदीश्च विविधा रम्या जग्मतुः सीतया सह ॥ २ ॥

प्रकृतिः । तथापि त्वं मे प्राणेभ्यो गरीयस्यपि सधर्मचारिणी भव, मया यो धर्मः सङ्कल्पितस्तत्रैव त्वयापि सङ्कल्पयितव्यमिति भावः ॥ २२ ॥ महात्मा महाधृतिः । प्रियां मैथिलराजपुत्रीम् इतीति उक्तधर्मद्वयानुवादः॥२३॥इति श्रीगो०श्रीरामा० रत्न० आरण्यकाण्डव्याख्याने दशमः सर्गः॥१०

अथ कर्माणि सापायानि, रामसेवैका निरपायेति दर्शयितुं माण्डकर्णिवृत्तान्तप्रकटनपूर्वकं सकलमुनिजनाश्रममण्डलसञ्चरणमेकादशे–अग्रत इत्यादि । अनेन श्लोकेन प्रणवार्थ उक्तः । तौ पश्यमानावित्यादिना नारायणपदार्थः । माण्डकर्णिवृत्तान्ते नम इत्यस्यार्थः । ततःपरं विरोधि निवृत्तिः सूच्यते । एवं मूलमन्त्रार्थानुसन्धानमेवं परमा गतिरित्युच्यते ॥ १ ॥ तनि०–अनेन श्लोकेन प्रणवार्थः प्रकाशित इति संप्रदायः । तत्र अग्रत इति अवर्णप्राथमिकत्वम् । अग्रतः प्रययावित्यर्थप्राथम्यम् । राम इति सत्तासम्पादनरक्षणादिना रमयतीति कारणत्वे रक्षकत्वे च रमासम्बन्धित्वेन श्रीशत्वं च । सुमध्यमेति प्रणवद्वितीयवर्णश्च । मध्य इति तस्य वर्णद्वयमध्यवर्तित्वम् । सीता मध्ये इति लक्ष्म्याः पुरुषकारत्वम् । लक्ष्मण इति " मन ज्ञाने " इति धातोरसाधारणधर्मवत्त्वम्, धनुष्पाणिरिति निरन्तरकैङ्कर्यवत्त्वम्, अनुजगामेति अहङ्कारममकारविरहेणानुसरणम् । पदान्तमकारेण प्रणवतृतीयवर्णश्च व्यज्यत इति सङ्क्षेपः । तौ पश्यमानावित्या

सदृशमिति त्वयोक्तं वचनमित्यनुषङ्गः । तव स्नेहस्येति शेषः । सदृशं तव कुलस्यानुरूपं चेत्यन्वयः ॥२२॥२३॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां आरण्यकाण्डव्याख्यायां दशमः सर्गः ॥ १० ॥ ॥ १–३ ॥

दिना नारायणपदार्थः प्रकाशित इति संप्रदायः ॥ १ ॥ तावित्यादि । पश्यमानौ पश्यन्तौ । शैलप्रस्थान् शैलसानूनि । सारसान् हंसविशेषान् । पुलिनं सैकतम् । जलजैः खगैः जलपक्षिभिः ॥ २ ॥ ३ ॥ यूथबद्धान् यूथतया बद्धान्, समूहीभूतानित्यर्थः । पृषतान् बिन्दुमृगान् । विषाणिन इति महिषादि विशेषणम् । नागान् गजान् ॥ ४ ॥ लम्बमाने अस्तमयोन्मुखे । योजनायतं चतुर्दिशि योजनप्रमाणविस्तारम् । पद्मपुष्करसम्बाधं पद्मैः पुष्करैः सर्पैश्च

सारसांश्चक्रवाकांश्च नदीपुलिनचारिणः । सरांसि च सपद्मानि युक्तानि जलजैः खगैः ॥ ३ ॥ यूथबद्धांश्च पृषतान् मदोन्मत्तान्विषाणिनः । महिषांश्च वराहांश्च नागांश्च द्रुमवैरिणः ॥ ४ ॥ ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे । ददृशुः सहिता रम्यं तटाकं योजनायतम् ॥ ५ ॥ पद्मपुष्करसम्बाधं गजयूथैरलंकृतम् । सारसैर्हंसकादम्बैः सङ्कुलं जलचारिभिः ॥ ६ ॥ प्रसन्नसलिले रम्ये तस्मिन् सरसि शुश्रुवे । गीतवादित्रनिर्घोषो न तु कश्चन दृश्यते ॥ ७ ॥ ततः कौतूहलाद्रामो लक्ष्मणश्च महाबलः । मुनिं धर्मभृतं नाम प्रष्टुं समुपचक्रमे ॥ ८ ॥ इदमत्यद्भुतं श्रुत्वा सर्वेषां नो महामुने । कौतूहलं महज्जातं किमिदं साधु कथ्यताम् ॥ ९ ॥ वक्तव्यं यदि चेद्विप्र नातिगुह्यमपि प्रभो ॥ १० ॥ तेनैवमुक्तो धर्मात्मा राघवेण मुनिस्तदा । प्रभवं सरसः कृत्स्नमाख्यातुमुपचक्रमे ॥ ११ ॥

सम्बाधं निबिडम् । "वाद्यभाण्डमुखे सर्पे कारण्डे पुष्करं स्मृतम्" इति विश्वः । सारसैः "सारसो मैथुने कामी गोनर्दः पुष्कराह्वयः" इत्युक्तैः । हंसैः राजहंसैः । कादम्बैः "कादम्बः कलहंसश्च हंसः स्यान्नूसरच्छदः" इत्युक्तेः ॥ ५ ॥ ६ ॥ गीतेति । गीतानि षड्जादिस्वरनिबद्धप्रबन्धाः । वादित्राणि ततघनसुषिरानद्धभेदेन चतुर्विधानि तेषां निर्घोषः । अत्र यादवः—"वादित्रं वादितं वाद्यमातोद्यं तच्चतुर्विधम् । ततं वीणादिकं वाद्यं तालं तु विततं घनम् । वंशादिकं तु सुषिरमानद्धं मुरजादिकम्॥" इति । कश्चन वादयिता न दृश्यते नादृश्यत ॥७॥ धर्मभृतं सहागतेषु मुनिष्वन्यतमम् । कथ्यतामित्येवं



यूथबद्धान् यूथतया बद्धान् । पृषतान् बिन्दुमृगान् ॥ ४ ॥ ५ ॥ पद्मपुष्करसम्बाधं पद्मानां रक्तपङ्कजानाम्, पुष्कराणां पुण्डरीकाणाम् "पुष्करं पुण्डरीकम्" इति निघण्टुः । सम्बाधः सम्मर्दो यस्मिन् तम् ॥ ६ ॥ नतु कश्चन दृश्यते गीतादिकर्तेत्यर्थः ॥ ७ ॥ धर्मभृतं शरणागतेष्वनुयायिषु मुनिष्वेकं मुनिम् ॥ ८–११ ॥

प्रष्टुं समुपचक्रम इत्यन्वयः ॥ प्रभवम् उत्पत्तिम् । कृत्स्नं गीतवादित्रमूलं चेत्यर्थः ॥ ८-११ ॥ पञ्चाप्सरःक्रीडासाधनत्वात् पञ्चाप्सरो नाम । सार्वकालिकं सर्वकाले भवम् । "कालाट्ठञ्" उभयपदवृद्धिः । सर्वस्मिन्नपि काले अशुष्यदित्यर्थः ॥ १२ ॥ उक्तार्थे इतिहासमाह-स हीत्यादिना । जलाश्रयः स्वनिर्मिततटाकजलावगाढः ॥ १३ ॥ साग्निपुरोगमाः अग्निना पुरस्सरेण सहिताः । क्रियाभेदात्सर्वशब्दावृत्तिः ॥ १४ ॥ अस्माकं मध्ये

इदं पञ्चाप्सरो नाम तटाकं सार्वकालिकम् । निर्मितं तपसा राम मुनिना माण्डकर्णिना ॥१२॥ स हि तेपे तपस्तीव्रं माण्डकर्णिर्महामुनिः । दशवर्षसहस्राणि वायुभक्षो जलाश्रयः ॥ १३ ॥ ततः प्रव्यथिताः सर्वे देवाः साग्निपुरोगमाः । अब्रुवन्वचनं सर्वे परस्परसमागताः ॥ १४॥ अस्माकं कस्यचित्स्थानमेष प्रार्थयते मुनिः । इति संविग्नमनसः सर्वे ते त्रिदिवौकसः ॥ १५ ॥ तत्र कर्तुं तपोविघ्नं देवैः सर्वैर्नियोजिताः । प्रधानाप्सरसः पञ्च विद्युच्चलितवर्चसः ॥ १६ ॥ अप्सरोभिस्ततस्ताभिर्मुनिर्दृष्टपरावरः । नीतो मदनवश्यत्वं सुराणां कार्यसिद्धये ॥ १७ ॥ ताश्चैवाप्सरसः पञ्च मुनेः पत्नीत्वमागताः । तटाके निर्मितं तासामस्मिन्नन्तर्हितं गृहम् ॥ १८ ॥ तथैवाप्सरसः पञ्च निवसन्त्यो यथासुखम् । रमयन्ति तपोयोगान्मुनिं यौवनमास्थितम् ॥ १९ ॥ तासां सङ्क्रीडमानानामेष वादित्रनिस्वनः । श्रूयते भूषणोन्मिश्रो गीतशब्दो मनोहरः ॥ २० ॥

संविग्नमनसः भीतमनस्काः ॥१५॥ तत्र तदा । विद्युच्चलितवर्चसः विद्युत इव तरलतेजसः, चलितविद्युद्वर्चस इति वार्थः ॥१६॥ दृष्टपरावरः दृष्टपरमात्मजीवस्वरूपः ॥ १७ ॥१८॥ तपोयोगात् तपोरूपोपायात् यौवनमास्थितम् । "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः ॥१९॥ संक्रीडमानानामिति "क्रीडोऽनुसंपरिभ्यश्च" इत्यात्मनेपदम् । भूषणोन्मिश्रः भूषणघोषोन्मिश्रः वादित्रनिःस्वनविशेषणम् । भूषणोन्मिश्रो वादित्रनिःस्वनो गीतशब्दश्च

पञ्चाप्सरो यस्मिन्निवसन्ति तत्पञ्चाप्सर इति तटाकनाम ॥१२॥१३॥ सर्वे प्रव्यथिता अभूवन् सर्वे अब्रुवन्निति च सर्वशब्दद्वयस्य निर्वाहः । साग्निपुरोगमाः अग्निना पुरोगमेन सहिताः साग्निपुरोगमाः ॥ १४ ॥ १५ ॥ विद्युच्चलितवर्चसः चलद्विद्युद्वर्चसः प्रधानाप्सरसः पञ्चेत्यनेन तत्परिचारिका अन्या अपि सन्तीत्यवगम्यते ॥ १६ ॥ दृष्टपरावरः दृष्टौ परावरौ जीवात्मपरमात्मानौ येन स तथोक्तः । "द्वे ब्रह्मणी वेदितव्ये परं चैवापरं च" इति श्रुतेः ॥ १७ ॥ निर्मितं तेनैव मुनिना क्रीडार्थमिति शेषः ॥ १८ ॥ १९ ॥ वादित्राणां निस्वनो यस्मिन् स तथोक्तः । भूषणोन्मिश्रः भूषणस्वनोन्मिश्रः । गीतशब्दो विशेष्यम् । प्रतिजग्राह शुश्रावे

 

श्रूयत इत्यन्वयः ॥ २० ॥ एतत् पूर्वोक्तं वचनम् । आश्चर्यमिति प्रतिजग्राह श्रुतवान् ॥ २१ ॥ कथयमानस्य कथयमाने तस्मिन् मुनौ । कथयमानः स इति पाठे—एवं सम्भाषमाणः स रामः । ब्राह्म्या ब्राह्मणसम्बन्धिन्या लक्ष्म्या समृद्ध्या, ब्राह्मणसम्पूर्णमित्यर्थः । आश्रममण्डलं ददर्श राघव इत्यनुषङ्गः ॥२२॥ प्रविश्येति आश्रममण्डलमित्यनुषज्यते । सर्वैस्तदाश्रमवासिभिः पूज्यमानः स्वस्वाश्रमे अर्घ्यादिना अर्च्यमानः ॥ २३ ॥ कियन्तं कालं तत्रोवासेत्यपे

आश्चर्यमिति तस्यैतद्वचनं भावितात्मनः । राघवः प्रतिजग्राह सह भ्रात्रा महायशाः ॥२१॥ एवं कथयमानस्य ददर्शाश्रममण्डलम् । कुशचीरपरिक्षिप्तं ब्राह्म्या लक्ष्म्या समावृतम् ॥ २२ ॥ प्रविश्य सह वैदेह्या लक्ष्मणेन च राघवः । उवास मुनिभिः सर्वैः पूज्यमानो महायशाः ॥ २३ ॥ तथा तस्मिन् स काकुत्स्थः श्रीमत्याश्रममण्डले । उषित्वा तु सुखं तत्र पूज्यमानो महर्षिभिः ॥ २४ ॥ जगाम चाश्रमांस्तेषां पर्यायेण तपस्विनाम् । येषामुषितवान् पूर्वं सकाशे स महास्त्रवित् ॥ २५ ॥ क्वचित् परिदशान् मासानेकं संवत्सरं क्वचित् । क्वचिच्च चतुरो मासान् पञ्च षट् चापरान् क्वचित् ॥ २६ ॥

क्षायां कालपरिमाणं वक्तुं रामस्याश्रमवासप्रकारं दर्शयति—तथेत्यादिश्लोकद्वयेन । तथा उक्तप्रकारेण । तस्मिन्नाश्रममण्डले सुखमुषित्वा तत्र पूज्यमानः स राम इत्युक्तानुवादः । येषां सकाशे पूर्वमुषितवान् तेषामाश्रमान् पर्यायेण द्वितीयपर्यायेण च जगाम । एवमाश्रमवासप्रकारः—एकवारं सर्वेषामाश्रमान् गत्वा पुनरपि तेषामेवाश्रमान् जगामेति वाक्यार्थः । महास्त्रविदित्यनेन तत्रत्यराक्षसोपद्रवपरिहाराय पुनर्गमनमिति सूचयति । वक्ष्यति हि मारीचः "तेन मुक्तास्त्रयो बाणाः" इत्यारभ्य 'पराक्रमज्ञो रामस्य शरो दृष्टभयः पुरा । समुद्भ्रान्तस्ततो मुक्तस्तावुभौ राक्षसौ हतौ ॥" इति । एतदर्थमेव सुतीक्ष्णेनात्र गमनमनुज्ञातम् ऋषिभिः कारितं च ॥२४॥२५॥ पूर्वमुषितवानित्युक्तवासक्रमं दर्शयति—क्वचिदित्यादिना । राघवो रामः क्वचिदाश्रमे परि

त्यर्थः ॥ २० ॥ २१ ॥ एवमिति । कथयमानस्य कथयमाने सति ॥ २२ ॥ प्रविश्येति आश्रममण्डलमित्यनुषज्यते ॥ २३ ॥ तथेत्यादिश्लोकद्वमेकं वाक्यम् । तस्मिन्नाश्रममण्डले उषित्वा तत्रैव महर्षिभिः पूज्यमान इति तच्छब्दद्वयस्य सम्बन्धः ॥ २३ ॥ ॥ २४ ॥ जगामेति । येषां मुनीनां सकाशे आश्रमेषु पूर्वं प्रथमं पर्यायेण जगाम उषितवांश्च येषामेवाश्रमे अनुग्रहविशेषेण पर्यायान्तरेणापि तथैव पर्यायेण जगाम उषितवांश्चेत्यर्थः ॥ २५–२८ ॥

टी०—पूर्वं शरभङ्गाश्रमात्प्रभृति येषां मुनीनां सकाशे समीपे उषितवान् शरभङ्गाश्रममादितः कृत्वा यैः सहावसदित्यर्थः ॥ २९ ॥

दशान् परिगताः दश येषां ते परिदशाः। "सङ्ख्ययाव्यय–" इत्यादिना बहुव्रीहिसमासः। "बहुव्रीहौ सङ्ख्येये डजबहुगणात्" इति डच् समासान्तः। तान् मासान् त्रयोदशमासानित्यर्थः। अत्यन्तसंयोगे द्वितीया। सुखं यथा भवति तथा न्यवसत्। क्वचिदाश्रमे एकं संवत्सरं सुखं न्यवसत्। क्वचिदाश्रमे चतुरो मासान् सुखं न्यवसत्। क्वचित् पञ्च मासान् क्वचित् षण्मासान् क्वचिदपरान् पञ्चभ्योन्यान् सप्त मासान् सुखं न्यवसत्। पञ्च षट् च तथा क्वचिदिति पाठे–तथा पुनः क्वचित् षण्मासानित्यर्थः। परिदशानित्यत्र चतुर्दशमासानित्यर्थः। अपरत्राश्रमे मासादधिकं सुखं न्यवसत्। अधिकशब्देनात्र

अपरत्राधिकं मासादप्यर्धमधिकं क्वचित्। त्रीन् मासानष्टमासांश्च राघवो न्यवसत् सुखम् ॥ २७ ॥
तथा सम्वसतस्तस्य मुनीनामाश्रमेषु वै। रमतश्चानुकूल्येन ययुः सम्वत्सरा दश ॥ २८ ॥

मासचतुर्थांशो विवक्षितः, एकमासं मासपादं चेत्यर्थः। अपरत्राधिकं मासमिति पाठे–मासम् अधिकं तत्पादं चेत्यर्थः। अपिशब्दः सर्वत्र मासानुकर्षणार्थः। क्वचिदाश्रमे अर्धमधिकं च न्यवसत् पादोनमासमित्यर्थः। तथा चैतदव्यवहितपूर्वाश्रमवासदिनैर्द्वौ मासौ संवृत्तौ। एकत्र सपादमासः अपरत्र पादोनमास इत्याहृत्य मासद्वयसम्भवात्। अध्यर्धमधिकं क्वचिदिति पाठे–अध्यर्धम् अर्धाधिकम् अर्धमासाधिकमित्यर्थः। अधिकं पूर्वोक्तपादमासात्मकाधिकं तथा च त्रिपादमासमित्यर्थः। क्वचित् त्रीन् मासान् न्यवसत्। क्वचिदष्टमासान् न्यवसत्। एवं षष्टिमासाः सिद्धाः। केचिदाहुः–परिदशान् दशाधिकानिति वक्ष्यमाणेष्वष्टसु स्थानेष्वन्वेति। तथाचायमर्थः–एवं संवत्सरं क्वचिदित्यत्र द्वाविंशतिमासानित्यर्थः। क्वचिच्च चतुरो मासानित्यत्र चतुर्दश मासानित्यर्थः। पञ्च षट् चापरान् क्वचिदित्यत्र क्वचित् पञ्चदश मासान् क्वचित् षोडशमासानित्यर्थः। अपरानाधिकं मासादप्यर्धमधिकं क्वचिदित्यत्र प्रथमाधिकशब्दोऽर्धमासरूपाधिकांशपरः। तथा च अपरान् परिदशान् मासान् अधिकं चेत्यन्वये अर्धाधिकदशमासानित्यर्थः। मासादप्यर्धमित्यादेरयमर्थः–क्वचित्परिदशान् मासान् तदुपरिमासादधिकमर्धमपि चेति तथा च अर्धाधिकैकादशमासानित्यर्थः। त्रीन् मासान् अष्टमासांश्चेत्यत्र त्रयोदश मासान् अष्टादश मासांश्चेत्यर्थः। तथाच विंशत्युत्तरशतमासा लब्धा इति। तस्मिन् पक्षे प्राथमिकक्वचित्पदमासपदानर्थक्यं पूर्वग्रन्थविरोध इत्यादि द्रष्टव्यम् ॥ २६ ॥ २७ ॥ तथाचाश्रममण्डले दश संवत्सराः संवृत्ता इत्याह–तथा संवसत इति। इयमेवाश्रमवाससंख्या। पूर्वापरसंख्या तु किष्किन्धाकाण्डे वक्ष्यते ॥ २८ ॥

टी०–क्वचिदिति परिदशान् परिगता दशा परिदशाः तान् दशसंख्याकान्मासानित्यर्थः। यद्वा दशसमीपान् एकादश नव वेत्यर्थः ॥ २६ ॥

परिवृत्य एवमाश्रमं सर्वं परिक्रम्य ॥ २९–३१ ॥ कथाः नानाकथाः । कथयतां कथयतसु ॥ ३२ ॥ तत्र वने । अगस्त्यमभिवादयितुमभिगच्छेयमित्यन्वयः ॥ ३३ ॥ ३४ ॥ तं मुनिवरं शुश्रूषेयमिति यत् एप मनोरथः अभिलाषो मे हृदि परिवर्तत इत्यन्वयः । शुश्रूषेयमिति परस्मैपदमार्षम् ॥३५॥३६॥

परिवृत्य च धर्मज्ञो राघवः सह सीतया । सुतीक्ष्णस्याश्रमं श्रीमान् पुनरेवाजगाम ह ॥ २९ ॥ स तमाश्रममासाद्य मुनिभिः प्रतिपूजितः । तत्रापि न्यवसद्रामः किञ्चित्कालमरिन्दमः ॥ ३० ॥ अथाश्रमस्थो विनयात् कदाचित्तं महामुनिम् । उपासीनः स काकुत्स्थः सुतीक्ष्णमिदमब्रवीत् ॥ ३१ ॥ अस्मिन्नरण्ये भगवन्नगस्त्यो मुनिसत्तमः । वसतीति मया नित्यं कथाः कथयतां श्रुतम् ॥ ३२ ॥ नतु जानामि तं देशं वनस्यास्य महत्तया । कुत्राश्रममिदं पुण्यं महर्षेस्तस्य धीमतः ॥ ३३ ॥ प्रसादात्तत्रभवतः सानुजः सह सीतया । अगस्त्यमभिगच्छेयमभिवादयितुं मुनिम् ॥३४॥ मनोरथो महानेष हृदि मे परिवर्तते । यदहं तं मुनिवरं शुश्रूषेयमपि स्वयम् ॥३५॥ इति रामस्य स मुनिः श्रुत्वा धर्मात्मनो वचः । सुतीक्ष्णः प्रत्युवाचेदं प्रीतो दशरथात्मजम् ॥ ३६ ॥ अहमप्येतदेव त्वां वक्तुकामः सलक्ष्मणम् । अगस्त्यमभिगच्छेति सीतया सह राघव ॥ ३७ ॥ दिष्ट्या त्विदानीमर्थेऽस्मिन् स्वयमेव ब्रवीषि माम् । अहमाख्यामि ते वत्स यत्रागस्त्यो महामुनिः ॥ ३८ ॥ योजनान्यश्रमादस्मात्तथा चत्वारि वै ततः । दक्षिणेन महाञ्छ्रीमानगस्त्यभ्रातुराश्रमः ॥ ३९ ॥

अहमिति । अगस्त्यमभिगच्छेत्येतद्वक्तुकामोस्मीत्यन्वयः ॥ ३७ ॥ ३८ ॥ अस्मादाश्रमाद्दक्षिणेन तथेति हस्तेन निर्देशः । चत्वारि योजनानि अभियाहीति शेषः । ततस्तत्र अगस्त्यभ्रातुराश्रमो वर्तते । आश्रमाद्दक्षिणेनेत्यत्र " एनपा द्वितीया " इति द्वितीयाभाव आर्षः ॥ ३९ ॥

परिवृत्य सर्वमुन्याश्रमान् ॥२९॥३०॥ उपासीनः उपसमीपे आसीनः ॥३१॥ कथयतां सकाशादिति शेषः ॥३२–३४॥ तं मुनिवरं स्वयमपि स्वयं शुश्रूषेयमिति यत् एष मनोरथः हृदि संपरिवर्तत इति सम्बन्धः ॥३५–३८॥ योजनानीति । अस्मादाश्रमाद्दक्षिणेन चत्वारि योजनानि याहि ततःपरं अगस्त्यभ्रातुराश्रमोऽस्ति ॥ ३९ ॥

स०–अगस्त्यभ्रातुः इध्मवाहस्य । " अगस्त्यः प्राग्दुहितरमुपयेमे दृढव्रताम् । यस्यां दृढच्युतो जात इध्मवाहात्मजो मुनिः ॥ " इति भागवते ज्येष्ठत्वाद्दुहितृसमायामिध्मवाहभार्यायां देवरात्सुतोत्पत्तिन्यायेन दृढच्युतमपत्यमगस्त्यो लेभ इति भावः ॥ ३९ ॥

स्थलीप्राये स्थलीप्रचुरे ॥ ४० ॥ कारण्डवाः सारसाः ॥ ४१ ॥ तत्रागस्त्यभ्रात्राश्रमे रजनीं व्युष्य रात्रिमतिवाह्य । वनषण्डस्य वनसमूहस्य पार्श्वतः दक्षिणां दिशम् । आस्थाय उद्दिश्य निर्वणदेशे योजनमन्तरं योजनावकाशं गत्वा अगस्त्याश्रमपदं गम्यतामित्यन्वयः ॥ ४२–४५ ॥ इति एवंप्रकारेण मुनेः सकाशाच्छ्रुत्वा ॥ ४६ ॥ अभ्रसन्निभान् मेघसन्निभान् । मार्गवशानुगाः मार्गवशेनानुगम्यमानाः । राम इति पूर्वश्लोकादनुकृष्यते ॥ ४७ ॥ ४८ ॥

स्थलीप्राये वनोद्देशे पिप्पलीवनशोभिते । बहुपुष्पफले रम्ये नानाशकुनिनादिते ॥ ४० ॥ पद्मिन्यो विविधास्तत्र प्रसन्नसलिलाः शिवाः । हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः ॥ ४१ ॥ तत्रैकां रजनीं व्युष्य प्रभाते राम गम्यताम् । दक्षिणां दिशमास्थाय वनषण्डस्य पार्श्वतः ॥ ४२ ॥ तत्रागस्त्याश्रमपदं गत्वा योजनमन्तरम् । रमणीये वनोद्देशे बहुपादपसम्वृते ॥ ४३ ॥ रंस्यते तत्र वैदेही लक्ष्मणश्च सह त्वया । स हि रम्यो वनोद्देशो बहुपादपसङ्कुलः ॥४४॥ यदि बुद्धिः कृता द्रष्टुमगस्त्यं तं महामुनिम् । अद्यैव गमने बुद्धिं रोचयस्व महायशः ॥४५॥ इति रामो मुनेः श्रुत्वा सह भ्रात्राभिवाद्य च । प्रतस्थेऽगस्त्यमुद्दिश्य सानुजः सीतया सह ॥४६॥ पश्यन् वनानि रम्याणि पर्वतांश्चाभ्रसन्निभान् । सरांसि सरितश्चैव पथि मार्गवशानुगाः ॥४७॥ सुतीक्ष्णेनोपदिष्टेन गत्वा तेन पथा सुखम् । इदं परमसंहृष्टो वाक्यं लक्ष्मणमब्रवीत् ॥४८॥ एतदेवाश्रमपदं नूनं तस्य महात्मनः । अगस्त्यस्य मुनेर्भ्रातुर्दृश्यते पुण्यकर्मणः ॥४९॥ यथाहि मे वनस्यास्य ज्ञाताः पथि सहस्रशः । सन्नताः फलभारेण पुष्पभारेण च द्रुमाः ॥५०

नूनमिति वितर्के । यदाश्रमपदं दृश्यते एतन्मुनेर्नूनमित्यन्वयः ॥ ४९ ॥ उक्तेऽर्थे हेतुमाह–यथाहीति । यथाहि मे पथि चिह्नतया वनं श्रुतं तथैवास्य स्थलीप्राये वनोद्देशे । पिप्पलीवनशोभित इति मार्गचिह्नप्रदर्शनार्थमुक्तम् । स्थलप्राये स्थलं प्रायः प्रायेण यस्मिन् तथा ॥ ४० ॥ पद्मिन्यः सरस्यः ॥ ४१ ॥ दक्षिणामिति । योजनमन्तरं गत्वा तत्रागस्त्याश्रमपदं द्रक्ष्यसीति शेषः ॥ ४२–४५ ॥ मुनेः श्रुत्वा वचनमिति शेषः ॥४६–४८॥ आश्रमपदं दृश्यते खलु एतदेव अगस्त्यस्य भ्रातुराश्रमपदं नूनमिति सम्बन्धः ॥ ४९ ॥ कुत इत्याकाङ्क्षायां सुतीक्ष्णोक्तमार्गचिह्नानि प्रदर्शयति–यथा हीति । अस्य अगस्त्यस्य भ्रातुः वनस्य सम्बन्धिनो द्रुमा

स०–स्थलीप्राये अकृत्रिमस्थलबहुले । "जानपद–" इत्यादिना ङीष ॥ टी०–पिप्पलीनां पिप्पलीलतानां वनं तेन शोभिते ॥ ४० ॥

वनस्य फलभारेण पुष्पभारेण च सन्नताः द्रुमाः सहस्रशो मया ज्ञाताः ज्ञायमाना वर्तन्ते ॥ ५० ॥ असाधारणोपदिष्टलिङ्गं चानुभूयत इत्याह–पिप्पलीनामित्यादि । पक्कानां पिप्पलीनामिति तत्फलानामित्यर्थः । कटुकस्य कटुरसस्य उदयोऽभिव्यक्तिरानुमानिकी येन स तथा गन्धः उपागतः ॥ ५१ ॥ ५२ ॥ कृष्णाभ्रशिखरोपमं नीलमेघाग्रोपमम् ॥ ५३ ॥ विविक्तेषु पूतेषु । "विविक्तौ पूतविजनौ" इत्यमरः । उपहारं पुष्पबलिम् । स्वय

पिप्पलीनां च पक्कानां वनादस्मादुपागतः । गन्धोऽयं पवनोत्क्षिप्तः सहसा कटुकोदयः ॥ ५१ ॥ तत्रतत्र च दृश्यन्ते संक्षिप्ताः काष्ठसञ्चयाः । लूनाश्च पथि दृश्यन्ते दर्भा वैडूर्यवर्चसः ॥ ५२ ॥ एतच्च वनमध्यस्थं कृष्णाभ्रशिखरोपमम् । पावकस्याश्रमस्थस्य धूमाग्रं सम्प्रदृश्यते ॥ ५३ ॥ विविक्तेषु च तीरेषु कृतस्नाना द्विजातयः । पुष्पोपहारं कुर्वन्ति कुसुमैः स्वयमार्जितैः ॥ ५४ ॥ तत्सुतीक्ष्णस्य वचनं यथा सौम्य मया श्रुतम् । अगस्त्यस्याश्रमो भ्रातुर्नूनमेष भविष्यति ॥५५॥ निगृह्य तरसा मृत्युं लोकानां हितकाम्यया । यस्य भ्रात्रा कृतेयं दिक्छरण्या पुण्यकर्मणा ॥ ५६ ॥ इहैकदा किल क्रूरो वातापिरपि चेल्वलः । भ्रातरौ सहितावास्तां ब्राह्मणघ्नौ महासुरौ ॥५७॥ धारयन् ब्राह्मणं रूपमिल्वलः संस्कृतं वदन् । आमन्त्रयति विप्रान् स्म श्राद्धमुद्दिश्य निर्घृणः ॥ ५८ ॥

मार्जितैः "समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत्" इति स्मरणात् ॥ ५४ ॥ नूनं निश्चये । "नूनं तर्के विनिश्चये" इत्यमरः ॥५५॥ मृत्युं वातापील्वलनिमित्तकं मरणम् । हितकाम्यया हितेच्छया । इयं दिक् दक्षिणा दिक् । शरण्या संश्रयितुं योग्या ॥५६॥ अस्मिन्नर्थे आख्यायिकामाह–इहेत्यादिना ॥ ५७ ॥ संस्कृतं व्याकरणसंस्कारवतीं वाचम् वदन् ॥ ५८ ॥

दृश्यन्त इत्युत्तरेणान्वयः ॥ ५० ॥ पिप्पलीनां कटुकोदयः कटुकस्योदयः अभिव्यक्तिर्यस्मिन् स तथा । गन्धो दृश्यत इति शेषः ॥ ५१ ॥ तत्र तत्रेति । संक्षिप्ताः सम्यङ् न्यस्ताः, होमार्थं स्थापिता इत्यर्थः । काष्ठसञ्चयाः समित्समूहाः ॥ ५२ ॥ कृष्णे कृष्णवर्णे । अभ्रशिखरे मेघगिरिशिखरे उपमा यस्य तत् ॥ ५३ ॥ विविक्तेषु पूतेषु । पुष्पोपहारं पुष्पबलिम् ॥ ५४ ॥ यस्मात्सुतीक्ष्णस्य वचनं मया यथा श्रुतम् तस्मादगस्त्यभ्रातुराश्रमं भविष्यतीति सम्बन्धः ॥ ५५ ॥ हितकाम्यया हितेच्छया । लोकानां वातापील्वलनिमित्तं मृत्युं तपसा तपोबलेन निगृह्य विनाश्य दिगियं पुण्यकर्मणा शरण्या संश्रयितुं योग्या कृतेति सम्बन्धः ॥५६॥ अत्राख्यायिकामाह–इहेति ॥ ५७ ॥ संस्कृतं ब्राह्मणवदेव संस्कृतभाषां वदन् ॥ ५८ ॥

संस्कृतं श्राद्धोचितपाकसंस्कारसंस्कृतं कृत्वा श्राद्धदृष्टेन श्राद्धकल्पावगतेन ॥ ५९ ॥ भुक्तवतां भुक्तवत्सु । वदन्नब्रवीत् व्यक्तमब्रवीत् ॥ ६० ॥ व्यनिष्पतत् विनिरपतत् ॥ ६१ ॥ रामानु०—मेषवन्नदन् मृतसञ्जीवनीवैभवात् उदरान्तारिति शेषः ॥ ६१ ॥ तैरिति बहुवचनं परिवारापेक्षया । संहत्य बहुश इति

भ्रातरं संस्कृतं कृत्वा ततस्तं मेषरूपिणम् । तान् द्विजान् भोजयामास श्राद्धदृष्टेन कर्मणा॥५९॥ ततो भुक्तवतां तेषां विप्राणामिल्वलोऽब्रवीत् । वातापे निष्क्रमस्वेति स्वरेण महता वदन् ॥ ६० ॥ ततो भ्रातुर्वचः श्रुत्वा वातापिर्मेषव न्नदन् । भित्त्वा भित्त्वा शरीराणि ब्राह्मणानां विनिष्पतत् ॥६१॥ ब्राह्मणानां सहस्राणि तैरेवं कामरूपिभिः । विनाशितानि संहत्य नित्यशः पिशिताशनैः ॥ ६२ ॥ अगस्त्येन तदा देवैः प्रार्थितेन महर्षिणा । अनुभूय किल श्राद्धे भक्षितः स महासुरः ॥ ६३ ॥ ततः सम्पन्नमित्युक्त्वा दत्त्वा हस्तोदकं ततः । भ्रातरं निष्क्रमस्वेति चेल्वलः सोऽभ्यभाषत ॥ ६४ ॥ स तं तथा भाषमाणं भ्रातरं विप्रघातिनम् । अब्रवीत् प्रहसन् धीमानगस्त्यो मुनिसत्तमः ॥६५॥ कुतो निष्क्रमितुं शक्तिर्मया जीर्णस्य रक्षसः । भ्रातुस्ते मेषरूपस्य गतस्य यमसादनम् ॥ ६६ ॥ अथ तस्य वचः श्रुत्वा भ्रातुर्निधनसंश्रयम् । प्रधर्षयितुमारेभे मुनिं क्रोधान्निशाचरः ॥ ६७ ॥

यावत् ॥ ६२ ॥ अनुभूय श्राद्धवरणादिकमनुभूय ॥ ६३ ॥ ततः श्राद्धान्ते । सम्पन्नमित्युक्त्वा ततो हस्तोदकं च दत्त्वा ॥ ६४–६६ ॥ निधनसंश्रयं नाशविषयम् । प्रधर्षयितुं हिंसितुम् ॥ ६७ ॥

ततः निमन्त्रणानन्तरं वातापिं भ्राता इल्वलः भोजयामासेति द्विकर्मको धातुः । भुक्तवतां सताम् । ततः भोजनानन्तरम् ॥ ५९ ॥ ६० ॥ विनिष्पतत् अडभाव आर्षः ॥ ६१ ॥ तैरिति बहुवचनम् । तयोः परिजनाभिप्रायेण ॥ ६२ ॥ प्रार्थितोऽभूदिति शेषः । तदनु तत्प्रार्थनामङ्गीकृत्य भक्षितः अगस्त्येनेतिशेषः ॥ ६३ ॥ ततः श्राद्धान्ते । सम्पन्नं समृद्धं वा इत्युक्त्वा पृष्ट्वा हस्तावसेचनं उत्तरापोशनं दत्त्वा ॥ ६४ ॥ ६५ ॥ जीर्णस्य जीर्णितस्य ॥ ६६ ॥ प्रधर्षयितुं हिंसितुम् ॥ ६७ ॥ ६८ ॥

अनलकल्पेन अग्निसदृशेन ॥६८॥ विप्रानुकम्पया विप्रेष्वनुकम्पया ॥ ६९–७१ ॥ प्रतिगृहीतः प्रत्युद्गतः । प्राश्य भुक्त्वा ॥७२॥७३॥ अभिवादय इतिं अत्र वर्णाधिक्यमार्षम् ॥ ७४ ॥ यथोद्दिष्टेन सुतीक्ष्णोक्तेन ॥ ७५ ॥ निवारान् जलकदम्बान् । वञ्जुलान् वकुलान् । "वकुलो वञ्जुलोऽशोकः"

सोऽभिद्रवन्मुनिश्रेष्ठं मुनिना दीप्ततेजसा । चक्षुषानलकल्पेन निर्दग्धो निधनं गतः ॥ ६८ ॥ तस्यायमाश्रमो भ्रातुस्तटाकवनशोभितः । विप्रानुकम्पया येन कर्मेदं दुष्करं कृतम् ॥६९॥ एवं कथयमानस्य तस्य सौमित्रिणा सह । रामस्यास्तं गतः सूर्यः सन्ध्याकालोऽभ्यवर्तत ॥७०॥ उपास्य पश्चिमां सन्ध्यां सह भ्रात्रा यथाविधि । प्रविवेशाश्रमपदं तमृषिं सोऽभ्यवादयत् ॥७१॥ सम्यक् प्रतिगृहीतश्च मुनिना तेन राघवः । न्यवसत्तां निशामेकां प्राश्य मूलफलानि च ॥ ७२ ॥ तस्यां रात्र्यां व्यतीतायां विमले सूर्यमण्डले । भ्रातरं तमगस्त्यस्य ह्यामन्त्रयत राघवः ॥ ७३ ॥ अभिवादये त्वां भगवन् सुखमध्युषितो निशाम् । आमन्त्रये त्वां गच्छामि गुरुं ते द्रष्टुमग्रजम् ॥ ७४ ॥ गम्यतामिति तेनोक्तो जगाम रघुनन्दनः । यथोद्दिष्टेन मार्गेण वनं तच्चावलोकयन् ॥ ७५ ॥ निवारान् पनसांस्तालांस्तिमिशान्वञ्जुलान् धवान् । चिरिबिल्वान् मधूकांश्च बिल्वानपि च तिन्दुकान् ॥ ७६ ॥

इत्यमरः । तिमिशान् नेमिवृक्षान् । धवान् चिरिबिल्वान् नक्तमालान् । "करञ्जः स्यान्नक्तमालः प्रकीर्यश्चिरिबिल्वकः" इति वैजयन्ती । मधूकान् मधुद्रुमाख्यवृक्षान् । तिन्दुकान् स्फूर्जकाख्यान् वृक्षान् ॥ ७६–७९ ॥

तस्य अगस्त्यस्य ॥ ६९ ॥ कथयमानस्य कथयतस्सतः ॥ ७०–७५ ॥ निवारो जलकदम्बकः ॥७६–७९॥ टी०–प्रतिगृहीतः–प्रतिपूजितः ॥ ७२ ॥

स०–ननु वनपर्वणि "ततो जगाम कौरव्य–मिक्षितुं वसु" इत्यारभ्य–"ततो राजर्षयस्सर्वे विषण्णगतचेतसः । वातापिं संस्कृतं दृष्ट्वा मेषभूतं महासुरम् । अथाब्रवीदगस्त्यस्तान्राजर्षीनृषिसत्तमः । विषादो वो न कर्तव्यो ह्यहं मोक्ष्ये महासुरम् । धुर्यासनमथासाद्य निषसाद महामुनिः । तं पर्यवेषद्दैत्येन्द्र इल्वलः प्रहसन्निव । अगस्त्य एव कृत्स्नं तु वातापिं बुभुजे ततः ॥" इति गर्भीकृत्य–"गवां दशसहस्राणि राज्ञामेकैकशोऽसुर । तावदेव सुवर्णस्य दित्सितं तु महासुर । मह्यं ततो वै द्विगुणं रथश्चैव हिरण्मयः । मनोजवौ वाजिनौ च दित्सितं ते महासुर । जिज्ञास्यतां रथः सद्यो व्यक्त एष हिरण्मयः ।

स्निग्धपत्राः आश्रमवासिभिः रक्षितत्वेन सरसपत्राः । क्षान्ताः शान्ताः । यथा येन प्रकारेण तथा तेन प्रकारेण । आश्रमो नातिदूरस्थ इति मन्ये ॥ ८० ॥ स्वेन कर्मणा विन्ध्यस्तम्भनरूपेण । अगस्त्य इति विख्यातः अगं स्तम्भयतीत्यगस्त्य इति व्युत्पत्तेः । परिश्रान्तानां श्रममपघ्नन्तीति परिश्रान्तश्रमापहः ।

पुष्पितान् पुष्पिताग्राभिर्लताभिरनुवेष्टितान् । ददर्श रामः शतशस्तत्र कान्तारपादपान् ॥ ७७ ॥ हस्तिहस्तैर्विमृदितान्वानरैरुपशोभितान् । मत्तैः शकुनिसङ्घैश्च शतशश्च प्रणादितान् ॥ ७८ ॥ ततोऽब्रवीत्समीपस्थं रामो राजीवलोचनः । पृष्ठतोऽनुगतं वीरं लक्ष्मणं लक्ष्मिवर्धनम् ॥ ७९ ॥ स्निग्धपत्रा यथा वृक्षा यथा क्षान्ता मृगद्विजाः । आश्रमो नातिदूरस्थो महर्षेर्भावितात्मनः ॥ ८० ॥ अगस्त्य इति विख्यातो लोके स्वेनैव कर्मणा । आश्रमो दृश्यते तस्य परिश्रान्तश्रमापहः ॥ ८१ ॥ प्राज्यधूमाकुलवनश्चीरमालापरिष्कृतः । प्रशान्तमृगयूथश्च नानाशकुनिनादितः ॥ ८२ ॥ निगृह्य तरसा मृत्युं लोकानां हितकाम्यया । दक्षिणा दिक्कृता येन शरण्या पुण्यकर्मणा । तस्येदमाश्रमपदं प्रभावाद्यस्य राक्षसैः । दिगियं दक्षिणा त्रासाद्दृश्यते नोपभुज्यते ॥८३॥ यदाप्रभृति चाक्रान्ता दिगियं पुण्यकर्मणा । तदाप्रभृति निर्वैराः प्रशान्ता रजनीचराः ॥ ८४ ॥

प्राज्यैर्बहुभिर्धूमैराकुलं वनं यस्य सः ॥ ८१ ॥ ८२ ॥ त्रासात् दृश्यते न तु प्राचीनकाल इवोपभुज्यते ॥ ८३ ॥ यदाप्रभृतीति अगस्त्यागमनात्प्रभृति । शान्ता मृगद्विजाः इति पाठः । यथा स्निग्धपत्रा वृक्षाः यथा मृगद्विजाः शान्ताः अतः आश्रमो नातिदूरस्थ इति सम्बन्धः ॥ ८० ॥ अगं विन्ध्यपर्वतं स्यति स्तम्भयतीत्यगस्त्यः । स्यतेः स्त्यादेशः । स्वेन कर्मणा स्तम्भनरूपकर्मणा परिश्रान्तानां श्रमापहः । आज्येति प्राज्येति पाठद्वयम् ॥ ८१ ॥ ८२ ॥ तस्येदमाश्रमपदमिति पूर्वेण योज्यम् । प्रभावादिति अस्य प्रभावाद्राक्षसैः न दृश्यते अस्य त्रासात् नोपभुज्यते स्वदेशत्वेन परिगृह्य नानुभूयत इत्यर्थः ॥ ८३ ॥ यदेति । निर्वैराः प्राणिषु

ततः प्रव्यथितो दैत्यो ददावभ्यधिकं वसु । विवाजाश्च सुवाजाश्च तस्मिन्युक्तौ रथे हयौ । ऊहतुः स्म वसूनाशु तानगस्त्याश्रमं प्रति । सर्वान्राजन्सहागस्त्यान्निमेषादिव भारत " इत्यन्तेन प्रधर्षणारम्भस्येल्वलकृतस्य तेनागस्त्येन तद्धननस्य चानुक्तेर्विरोध इति चेत्, सत्यम् कल्पभेदेन समाधिसम्भवात् । यद्वा अनलकल्पेन स्वेन चक्षुषा दग्ध इव सन्निल्वलस्तं मुनिमभ्यद्रवत् । अनन्तरं तेन दीप्तेन तेजसा मुनिनागस्त्येन निधनं भारतरीत्या धनाभावरूपं निधनं गत इति अर्थैककण्ठ्यं ज्ञेयम् ॥ ६८ ॥

दिक् अगस्त्याश्रमप्रदेशः। अन्यथा पूर्वोक्तविराधादिराक्षसोपद्रवो विरुध्येत। यद्वा दिक् सर्वापि। विराधादयोप्यगस्त्यागमनप्रभृति मन्दोपद्रवा एव। अशुचितादशायामेव मुनिमांसभक्षणम्। निर्वैरा वैरप्रवर्तनाशक्ताः। प्रशान्ताः प्रशान्तवद्वर्तमानाः। अतएवेयं दक्षिणा दिक् नाम्ना भगवतोऽगस्त्यस्य दिगिति प्रसिद्धेत्युच्यते ॥ ८४॥८५॥ निरतः उद्युक्तः, वर्धमान इत्यर्थः। न वर्धते अद्यापीति शेषः ॥ ८६ ॥ ८७ ॥ सतां हिते साधुः नित्यरतश्च ॥ ८८ ॥

नाम्ना चेयं भगवतो दक्षिणा दिक् प्रदक्षिणा। प्रथिता त्रिषु लोकेषु दुर्धर्षा क्रूरकर्मभिः ॥ ८५ ॥ मार्गं निरोद्धुं निरतो भास्करस्याचलोत्तमः। निदेशं पालयन् यस्य विन्ध्यः शैलो न वर्द्धते ॥८६॥ अयं दीर्घायुषस्तस्य लोके विश्रुतकर्मणः। अगस्त्यस्याश्रमः श्रीमान् विनीतजनसेवितः ॥ ८७ ॥ एष लोकार्चितः साधुर्हिते नित्यरतः सताम्। अस्मानभिगतानेष श्रेयसा योजयिष्यति ॥ ८८ ॥ आराधयिष्याम्यत्राहमगस्त्यं तं महामुनिम्। शेषं च वनवासस्य सौम्य वत्स्याम्यहं प्रभो ॥ ८९ ॥ अत्र देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः। अगस्त्यं नियताहारं सततं पर्युपासते ॥ ९० ॥ नात्र जीवेन्मृषावादी क्रूरो वा यदि वा शठः। नृशंसः कामवृत्तो वा मुनिरेष तथाविधः ॥९१॥ अत्र देवाश्च यक्षाश्च नागाश्च पतगैः सह। वसन्ति नियताहारा धर्ममाराधयिष्णवः ॥ ९२ ॥

शेषं चेति। प्रभो इत्युक्तिः लक्ष्मणस्यापि राजपुत्रत्वात्। प्रभोरिति पाठे--प्रभोरगस्त्यस्य नियोगादिति शेषः ॥ ८९ ॥ अत्रेति। देवाः वक्ष्यमाणाः पूज्यव्यतिरिक्ताः ॥ ९० ॥ क्रूरः निर्दयः। "क्रूरौ कठिननिर्दयौ" इत्यमरः। शठः गूढविप्रियकृत्। नृशंसः घातुकः। कामेन वृत्तं यस्य सः कामवृत्तः स्वैरवृत्तः। एष मुनिः अगस्त्यः तथाविधः मृषावाद्याद्यनर्हः ॥ ९१ ॥ देवाः वक्ष्यमाणब्रह्मादिभिन्नाः। पतगैः गरुडजातिभिः। आराधयिष्णवः

वैररहिताः वैरवर्तनाशक्ताः। प्रशान्ताः शान्तवद्वर्तमानाः ॥ ८४ ॥ भगवतः अगस्त्यस्य नाम्ना नामग्रहणेन। इयं दक्षिणा दिक् क्रूरकर्मभिः रक्षोभिः दुर्धर्षा धर्षयितुमशक्या। प्रदक्षिणा सज्जनाभिगम्या चेति त्रिषु लोकेषु ( अगस्त्यदिगिति ) प्रथितेति सम्बन्धः ॥ ८५ ॥ सामान्यत उक्तमगस्त्यशब्दार्थं विवृणोति—मार्गमिति ॥ ८६ ॥ ८७ ॥ एष इति। श्रेयसा योजयिष्यति इन्द्रोदीरितं शरभङ्गोक्तमर्थं मनसि निधायेदमुक्तमित्यनुसन्धेयम् ॥ ८८ ॥ प्रभोरगस्त्यस्य वाक्याद्वनवासस्य शेषमवशिष्टकालं वत्स्यामि स्थास्यामीति सम्बन्धः ॥ ८९ ॥ ९० ॥ क्रूरः निर्दयः। गूढविप्रियकृच्छठः। नृशंसः घातुकः ॥९१॥ पतगाः गरुडजातयः ॥९२॥

स०—भगवतः अगस्त्यस्य महिम्ना इयं दिक् क्रूरकर्मभी रक्षोभिर्दुर्धर्षा, अतो दक्षिणा अत्युदारा इति हेतोर्नाम्ना दक्षिणेति त्रिषु लोकेषु प्रथितेत्यन्वयः ॥ ८५ ॥

आराधयन्तः । छान्दस इष्णुच् ॥ ९२ ॥ सिद्धास्तपस्सिद्धाः । नवैः दिव्यैः ॥ ९३ ॥ भूतैः प्राणिभिः । देवाः ब्रह्मादयः । अगस्त्योपासनकृतनित्यसान्निध्यादिति भावः । शुभैः सत्कर्मनिरतैः ॥ ९४ ॥ आगता इति । सीतया सह प्राप्तमित्यन्वयः । अनेन रावणवधोद्युक्तत्वं द्योतयति । अत्र चतुर्नवतिः श्लोकाः ॥ ९५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥

अत्र सिद्धा महात्मानो विमानैः सूर्यसन्निभैः। त्यक्तदेहा नवैर्देहैः स्वर्याताः परमर्षयः ॥ ९३ ॥ यक्षत्वममरत्वं च राज्यानि विविधानि च । अत्र देवाः प्रयच्छन्ति भूतैराराधिताः शुभैः ॥९४॥ आगताः स्माश्रमपदं सौमित्रे प्रविशाग्रतः । निवेदयेह मां प्राप्तमृषये सीतया सह ॥९५॥ इत्यार्षे श्रीरामायणे॰ श्रीमदारण्यकाण्डे एकादशः सर्गः ॥११॥

स प्रविश्याश्रमपदं लक्ष्मणो राघवानुजः । अगस्त्यशिष्यमासाद्य वाक्यमेतदुवाच ह ॥ १ ॥ राजा दशरथो नाम ज्येष्ठस्तस्य सुतो बली । रामः प्राप्तो मुनिं द्रष्टुं भार्यया सह सीतया ॥ २ ॥ लक्ष्मणो नाम तस्याहं भ्राता त्ववरजो हितः । अनुकूलश्च भक्तश्च यदि ते श्रोत्रमागतः ॥३॥ ते वयं वनमत्युग्रं प्रविष्टाः पितृशासनात् । द्रष्टुमिच्छामहे सर्वे भगवन्तं निवेद्यताम् ॥४॥ तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य तपोधनः । तथेत्युक्त्वाग्निशरणं प्रविवेश निवेदितुम् ॥५॥

रुद्रस्यापूज्यत्वमाह—स प्रविश्येत्यादि ॥ १ ॥ २ ॥ हितः हितकारी । अनुकूलः प्रियकरः । प्रियहितकरत्वे हेतुः भक्त इति । भक्तः प्रीतिमान् । यदीति सम्भावनायाम् । अहं रामश्च ते श्रुतौ भवेवेत्यर्थः । अग्रजत्वादिविशेषणानि रामेण तुल्यप्रतिपत्तिवारणाय ॥ ३ ॥ निवेद्यताम् अस्मद्दर्शनेच्छेति शेषः । एतद्वाक्यमुवाचेति पूर्वेणान्वयः । ते वयमित्यस्मिन् श्लोके यमिति गायत्र्या अष्टमाक्षरम् । सप्तसहस्रसङ्ख्याकाः श्लोका गताः ॥ ४ ॥ तस्येति । अग्नि

सिद्धाः तपस्सिद्धाः । नवैर्देहैर्दिव्यदेहैः ॥ ९३ ॥ अत्राश्रमे । देवाः भूतैः प्राणिभिः कर्तृभिः शुभैः सत्कर्मभिराराधितास्सन्तः राज्यादीनि शीघ्रं प्रयच्छन्तीति सम्बन्धः ॥ ९४ ॥ ९५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायामेकादशः सर्गः ॥ ११ ॥ १ ॥ २ ॥ हितः शुभोदर्ककारी । अनुकूलः तदिच्छाकरणशीलः । भक्तः पूज्यविषयकानुरागो भक्तिः तद्वान् । यदि ते श्रोत्रमागतः । यदिशब्दस्सम्भावनायाम् ॥ ३ ॥ यमिति गायत्र्या अष्टमाक्षरं ते वयमितिश्लोकस्थयमित्यनेन तृतीयाक्षरेण सङ्गृह्णाति । भगवन्तं द्रष्टुमिच्छामहे अयमर्थो मुनये निवेद्यतामिति सम्बन्धः ॥ ४ ॥ अग्निशरणम् अग्नि

शरणम् अग्निगृहम् ॥ ५ ॥ अञ्जसा आशु । यथेष्टमित्यस्य उवाचेत्यनेनान्वयः । सम्मतः शिष्येषु मान्यत्वेन सम्मतः ॥ ६ ॥ शुश्रूषार्थं सवार्थं चेत्यर्थः । अत्र अस्मिन् रामे विषये । अनन्तरं तदागमनानन्तरम् । यद्वक्तव्यं तत्त्वं तस्य भावं प्रकारम् आज्ञापयितुमर्हसि ॥ ७–९ ॥ दिष्ट्या यदृच्छया ।

स प्रविश्य मुनिश्रेष्ठं तपसा दुष्प्रधर्षणम् । कृताञ्जलिरुवाचेदं रामागमनमञ्जसा । यथोक्तं लक्ष्मणेनैव शिष्यो ऽगस्त्यस्य सम्मतः ॥ ६ ॥ पुत्रौ दशरथस्येमौ रामो लक्ष्मण एव च । प्रविष्टावाश्रमपदं सीतया सह भार्यया ॥७॥ द्रष्टुं भवन्तमायातौ शुश्रूषार्थमरिन्दमौ । यदत्रानन्तरं तत्त्वमाज्ञापयितुमर्हसि ॥ ८ ॥ ततः शिष्यादुपश्रुत्य प्राप्तं रामं सलक्ष्मणम् । वैदेहीं च महाभागामिदं वचनमब्रवीत् ॥९॥ दिष्ट्या रामश्चिरस्याद्य द्रष्टुं मां समुपागतः। मनसा कांक्षितं ह्यस्य मयाप्यागमनं प्रति ॥१०॥ गम्यतां सत्कृतो रामः सभार्यः सहलक्ष्मणः । प्रवेश्यतां समीपं मे किञ्चासौ न प्रवेशितः ॥ ११ ॥ एवमुक्तस्तु मुनिना धर्मज्ञेन महात्मना । अभिवाद्याब्रवीच्छिष्यस्तथेति नियताञ्जलिः॥१२॥ ततो निष्क्रम्य सम्भ्रान्तः शिष्यो लक्ष्मणमब्रवीत् । क्वासौ रामो मुनिं द्रष्टुमेतु प्रविशतु स्वयम् ॥१३॥

चिरस्य चिरात् प्रतिकाङ्क्षितमित्यन्वयः । प्रतिर्वीप्सायाम् । सत्कृतः सत्कारार्हः । किञ्चासौ न प्रवेशितः कुतो विलम्बित इत्यर्थः ॥ १० ॥ ११ ॥ अभि शालाम् । निवेदितुं निवेदयितुम् ॥ ५ ॥ अञ्जसा शीघ्रम् ॥ ६–८ ॥ तत इति प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु अस्मत्कुलदैवतं सीतालक्ष्मणोपेतः श्रीराम आगत इति शिष्यादुपश्रुत्य स्वयं श्रवणानन्दमनुभूय पश्चादब्रवीदित्यर्थः ॥९॥ रामः दिष्ट्या दैवात् । चिरस्य चिरकालस्य । अद्य द्रष्टुं मां प्रति समुपागतः । हि यस्मात् । अस्य रामस्यागमनं मयापि मनसा काङ्क्षितमिति योजना । वस्तुतस्तु मयाप्यन्तरङ्गभूतया लक्ष्म्यापि यस्य अस्य विष्णोः "अकारो ब्रह्मविष्ण्वीशेषु" इति निघण्टुः । आगमनं ज्ञानम् "सर्वे गत्यर्था ज्ञानार्थाः" इति वचनात् । मनसा काङ्क्षितं हि मनसा कांक्षितं खलु "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति श्रुतेः । स एव सर्वलोकैकशरण्यः श्रीरामः भीषणामयपीडितस्य भिषगिव चिरस्य चिरकालस्याद्य द्रष्टुं मां प्रति मामुद्दिश्य दिष्ट्या मद्भाग्यवशेन समुपागतः मम पुरत आविर्भूत इत्यहो मम भाग्यं किं वर्णनीयमित्यर्थः । एतदात्मगतम् ॥ १० ॥ ११ ॥ एवमिति । तथेति आनयिष्यामीत्यब्रवीदित्यर्थः । लक्ष्मणः काकुत्स्थं

स०—चिरस्य बहुकालक्षेपं कृत्वा । चिरस्यति । असु क्षेपणे श्यन् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । शकन्ध्वादित्वात् पररूपम् । "चिरस्याद्याश्चिरार्थकाः" इत्यमरः ॥ १० ॥

टीका०—किञ्चासौ न प्रवेशित इत्यत्र किमर्थं न प्रवेशित इत्यर्थः ॥ ११ ॥

वाद्येति विलम्बकरणापचारनिवृत्त्यर्थं वन्दनम् अतएव सम्भ्रान्त इति वक्ष्यति ॥ १२-१४ ॥ अगस्त्येनोच्यत इत्यगस्त्यवचनम्, अगस्त्योक्तमित्यर्थः । सुसत्कृतं सविनयवाक्येन बहुमतम् ॥ १५ ॥ आश्रमं मुनिगृहम् ॥ १६ ॥ अयं तत्र देवपूजागृहाण्यपश्यदित्याह-स तत्रेत्यादि । तत्र अगस्त्यगृहे । ब्रह्मणः चतुर्मुखस्य । अग्नेः पावकस्य । तथैव चेति निपातसमुदायस्समुच्चये ॥ १७ ॥ भगो देवताविशेषः ॥ १८ ॥ १९ ॥ पाशहस्तस्येत्यादिविशेष

ततो गत्वाश्रमद्वारं शिष्येण सहलक्ष्मणः । दर्शयामास काकुत्स्थं सीतां च जनकात्मजाम् ॥ १४ ॥ तं शिष्यः प्रश्रितो वाक्यमगस्त्यवचनं ब्रुवन् । प्रावेशयद्यथान्यायं सत्कारार्हं सुसत्कृतम् ॥१५॥ प्रविवेश ततो रामः सीतया सह लक्ष्मणः । प्रशान्तहरिणाकीर्णमाश्रमं ह्यवलोकयन् ॥ १६ ॥ स तत्र ब्रह्मणः स्थानमग्नेः स्थानं तथैव च । विष्णोः स्थानं महेन्द्रस्य स्थानं चैव विवस्वतः ॥ १७ ॥ सोमस्थानं भगस्थानं स्थानं कौबेरमेव च । धातुर्विधातुः स्थाने च वायोः स्थानं तथैव च ॥१८॥ नागराजस्य च स्थानमनन्तस्य महात्मनः । स्थानं तथैव गायत्र्या वसूनां स्थानमेव च॥१९॥ स्थानं च पाशहस्तस्य वरुणस्य महात्मनः । कार्तिकेयस्य च स्थानं धर्मस्थानं च पश्यति॥२०॥

णानि तत्र मुनेरगस्त्यस्य भक्तिविशेषद्योतनार्थम् । इमे ब्रह्मादयः पूर्वसर्गे फलप्रदत्वेनोक्ताः । अन्ये अगस्त्योपासकत्वेनोक्ताः । एते ब्रह्माग्निविष्णुमहेन्द्र विवस्वत्सोमभगकुबेरधातृविधातृवाय्वनन्तगायत्रीवसुवरुणकार्तिकेयधर्माख्याः सप्तदश देवाः । " यो वै सप्तदशम् " इत्यनुवाकोक्तसप्तदशाक्षरदेवताः यायजूकेन मुनिना पूजार्थं प्रतिष्ठिता इति बोध्यम् । अत्र पूज्यदैवतेषु रुद्रस्यानुपादानादपूज्यत्वमुक्तम् । अधुना जनैः कैश्चित् पूज्यमानता तु तामस शास्त्रानुरोधेनेति बोध्यम् । ननु विष्णोः स्थानं महेशस्येति पाठात् स्थानानुक्त्यसम्भव इति चेत्, तदा पूर्वं रामेण " अगस्त्यं नियताहारं सततं पर्यु पासते " इत्युक्तावपि स्थाननिर्देशे उपास्योपासकयोरुभयोरपि निर्देशो न विरुध्यते । यद्वा उपासनं समीपावस्थानं नत्वाराधनम्, धर्ममाराधयिष्णव

दर्शयामास । शिष्यमिति शेषः । गतिबुद्धीत्यादिना द्विकर्मकत्वम् ॥ १२-१४ ॥ तमिति । अगस्त्यवचनं ब्रुवन् अगस्त्येनोक्तं वाक्यं ब्रुवन् ॥ १५ ॥ १६ ॥ अगस्त्याश्रमाधिष्ठितदेवतास्थानान्याह-स तत्रेत्यादिना । तत्र अगस्त्याश्रमे सः श्रीरामः ब्रह्मादिदेवतास्थानानि पश्यतीत्यन्वयः ॥ १७-२० ॥

इत्युक्तेः। धर्मस्याराधनं परिपालनमेव ॥ २० ॥ अभिनिष्पतत् अभ्युत्थानं कृतवान्। अडभाव आर्षः। मुनीनामग्रतः स्थितमिति शेषः ॥२१॥२२॥ औदार्येण तेजोविशेषरूपौन्नत्येन। इममवगच्छामि अगस्त्यत्वेनेति शेषः। इति वचनमब्रवीदित्यन्वयः ॥ २३ ॥ अगस्त्यम् उद्दिश्येति शेषः ॥ २४ ॥ रामः अभिवाद्य रामस्तस्थावित्यन्वयः ॥ २५ ॥ प्रतिजग्राह अतिथित्वेनेति शेषः। उदकानि पाद्यानि ॥ २६ ॥ तस्मिन्नासीने अग्निं हुत्वा वैश्वदेवं

ततः शिष्यैः परिवृतो मुनिरप्यभिनिष्पतत्। तं ददर्शाग्रतो रामो मुनीनां दीप्ततेजसाम् ॥ २१ ॥ अब्रवीद्वचनं वीरो लक्ष्मणं लक्ष्मिवर्धनम्। एष लक्ष्मण निष्क्रामत्यगस्त्यो भगवानृषिः ॥२२॥ औदार्येणावगच्छामि निधानं तपसामिमम् ॥ २३ ॥ एवमुक्त्वा महाबाहुरगस्त्यं सूर्यवर्चसम्। जग्राह परमप्रीतस्तस्य पादौ परंतपः ॥ २४ ॥ अभिवाद्य तु धर्मात्मा तस्थौ रामः कृताञ्जलिः। सीतया सह वैदेह्या तदा रामः सलक्ष्मणः ॥ २५ ॥ प्रतिजग्राह काकुत्स्थमर्चयित्वासनोदकैः। कुशलप्रश्नमुक्त्वा च ह्यास्यतामिति चाब्रवीत् ॥२६॥ अग्निं हुत्वा प्रदायार्घ्यमतिथीन् प्रतिपूज्य च। वानप्रस्थेन धर्मेण स तेषां भोजनं ददौ ॥ २७ ॥ प्रथमं चोपविश्याथ धर्मज्ञो मुनिपुङ्गवः। उवाच राममासीनं प्राञ्जलिं धर्मकोविदम् ॥ २८ ॥ अग्निं हुत्वा प्रदायार्घ्यमतिथिं प्रतिपूजयेत्। अन्यथा खलु काकुत्स्थ तपस्वी समुदाचरन्। दुःसाक्षीव परे लोके स्वानि मांसानि भक्षयेत् ॥ २९ ॥

कृत्वा। तेभ्यः अर्घ्यं दत्त्वा अतिथीन् तान् प्रतिपूज्य आचमनीयपुष्पादिभिः पूजयित्वा। वानप्रस्थेन धर्मेण सिद्धं भोजन कन्दमूलादिकं ददौ ॥ २७ ॥ स्वयं प्रथमसुपविश्य आसीनं राममुवाच ॥ २८ ॥ अयं रामव्याजेन सीतां प्रत्युपदेशः। धर्मकोविदमित्युक्तस्य रामस्य हि नेदं वक्तव्यम्। अतएव

अभिनिष्पतत् अभ्युत्थानं कृतवान् मुनीनामग्रतः स्थित इति शेषः। तमगस्त्यं ददर्शेत्यन्वयः ॥ २१ ॥ २२ ॥ औदार्येण तेजोविशेषजनित गाम्भीर्येण इममगस्त्यमित्यवगच्छामि निश्चिनोमीत्यर्थः ॥२३॥२४॥ अभिवाद्येति। योगरूढिभेदेन रामस्यापौनरुक्त्यम् ॥२५॥२६॥ प्रथममग्निं हुत्वा वैश्वदेवं कृत्वा पश्चादर्घ्यदानेन अतिथीन् प्रतिपूज्य ब्राह्मणातिथीन् पूजयित्वा वानप्रस्थधर्मेण तेषामतिथीनां भोजनं ददावित्यर्थः ॥२७॥२८॥ ननु निरपेक्षेण पूजनीयो न क्षत्रियः अहं किमर्थं पूजित इत्याशङ्कायां वानप्रस्थ इति मयैवमनुष्ठितं नान्यथेति समाधित्सुराह–अन्यथेति। तपस्वी वानप्रस्थः। अन्यथा समुदाचरन् पूज्यपूजातिक्रमं कुर्वन् परे लोके स्वानि

सीता रावणं सत्करिष्यति । अन्यथा समुदाचरन् होममतिथिसत्कारंचाकुर्वन्नित्यर्थः । दुःसाक्षी कूटसाक्षी ॥ २९ ॥ भवांस्तु विशिष्टातिथिरित्याह—राजेति । राजपक्षे स्पष्टोऽर्थः । तत्त्वार्थस्तु-सर्वस्य लोकस्य भुवनत्रयस्य । राजा स्वामी । "पतिं विश्वस्य" इति श्रुतेः । अतएव लोकस्य पूजनीयः कर्मभिराराध्यः । " इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः " इति श्रुतेः । मान्यः मुक्तये योगिभिश्चिन्त्यः । प्रियातिथिः लौकिकातिथिभ्यो

राजा सर्वस्य लोकस्य धर्मचारी महारथः । पूजनीयश्च मान्यश्च भवान् प्राप्तः प्रियातिथिः ॥ ३० ॥ एवमुक्त्वा फलैर्मूलैः पुष्पैरन्यैश्च राघवम् । पूजयित्वा यथाकामं पुनरेव ततोऽब्रवीत् ॥ ३१ ॥ इदं दिव्यं महच्चापं हेमरत्नविभूषितम् ॥ ३२ ॥ वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा ॥ ३३ ॥ अमोघः सूर्यसङ्काशो ब्रह्मदत्तः शरोत्तमः । दत्तौ मम महेन्द्रेण तूणी चाक्षयसायकौ ॥ ३४ ॥ सम्पूर्णौ निशितैर्बाणैर्ज्वलद्भिरिव पावकैः । महारजतकोशोऽयमसिर्हेमविभूषितः ॥ ३५ ॥

विलक्षणः । एवमुवाचेति पूर्वेणान्वयः ॥३०॥ एवमिति । पुनः फलादिदानं सीतायाः ॥३१॥ इदमिति परशुरामात् गृहीत्वा वरुणहस्ते दत्तं रामेण । तदेव वरुणः खरादिवधसन्निहित इति अगस्त्यहस्ते निक्षिप्तवानित्यवगम्यते, वैष्णवशब्दप्रत्यभिज्ञानात् ॥३२॥ ३३ ॥ ब्रह्मदत्तः ब्रह्मणा दत्तः अयमितिशेषः । तूणी इमाविति शेषः ॥३४॥ महारजतं सुवर्णं तन्मयः कोशः खड्गपिधानं यस्य सः महारजतकोशः । बालरामायणे ऐन्द्रं शरासनमिति इन्द्रदत्तत्वोक्ति

मांसानि भक्षयेत् । किञ्च दुस्साक्षी कूटसाक्ष्यपि परलोके स्वानि मांसानि भक्षयेत् अतः प्रत्यवायपरिहाराय त्वां पूजयामीत्यर्थः ॥२९॥ मम पूज्यत्वं कथमित्यत आह—राजेति । सर्वस्य लोकस्य राजा अतः पूजनीयश्च मान्यश्च किञ्च प्रियातिथिश्च सन् सम्प्राप्तः अतः पूज्यता तवेत्यर्थः । वस्तुतस्तु सर्वलोकस्य ब्रह्माण्डस्य राजा प्रभुः तथापि धर्मचारी लोकशिक्षार्थं धर्मान् चरत्याचरतीति तथा । महारथः महान् महात्मा गरुडो रथो यस्य सः तथोक्तः । किञ्च पूजनीयस्सत्कर्मभिराराध्यः । मान्यः मुक्तिसिद्धये मन्तव्यश्चेति योजना ॥ ३० ॥ ३१ ॥ इदमिति । हेमरत्नविभूषितं हेम्ना रत्नैश्च विभूषितम् । ब्रह्मणा दत्तो ब्रह्मदत्तः तदाख्यश्च .( तूणी

स०—महत् चापमिति पदद्वयम् । इदं च शार्ङ्गमिन्द्रदत्तम् " शार्ङ्गं तदादिपुरुषो निजमाजहार " इत्याचार्योक्तेः । एतदुत्पत्तिप्रकारस्तु—" अत्रागमं ते वक्ष्यामि " इत्यारभ्य—" एतत्ते सर्वमाख्यातम् " इत्यन्तेनानुशासनिके पर्वण्युक्तः । नन्वानुशासनिके पर्वणि धनुषो वेणुविकृतत्वोक्तेः कथं शृङ्गविकृतत्वाच्छार्ङ्गत्वोक्तिरिति चेत् कण्वशिरस्स्यवल्मीकगवेणुविकृतत्वात्तथा व्यपदेशः ॥ ३२ ॥

च्छन्निन्यायात् ॥ ३५ ॥ धनुषा धनुरादिना ॥ ३६ ॥ शरं खड्गं च वैष्णवाविति शेषः । वज्रं वज्रधरो यथेत्यनेन तावकं त्वमेव गृहाणेत्युक्तम् ॥ ३७ ॥ एवमुक्त्वा ततः पुनरेव इत्यब्रवीदित्यन्वयः ॥ ३८ ॥ इति श्रीगोविन्द० श्रीरामायण० रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥ एतादृशस्थले सर्गविच्छित्तिर्नास्तीति प्रतीयते, कथाया अपर्यवसानात् । अथ खरवधायागस्त्येनानुज्ञातस्य रामस्य पञ्चवटीं प्रति प्रयाणं त्रयोदशे—रामे

अनेन धनुषा राम हत्वा सङ्ख्ये महासुरान् । आजहार श्रियं दीप्तां पुरा विष्णुर्दिवौकसाम् ॥ ३६ ॥ तद्धनुस्तौ च तूणीरौ शरं खड्गं च मानद । जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा॥३७॥ एवमुक्त्वा महातेजाः समस्तं तद्वरायुधम् । दत्त्वा रामाय भगवानगस्त्यः पुनरब्रवीत् ॥३८॥ इत्यार्षे श्रीरामायणे० श्रीमदारण्यकाण्डे द्वादशः सर्गः ॥ १२ ॥

राम प्रीतोऽस्मि भद्रं ते परितुष्टोऽस्मि लक्ष्मण । अभिवादयितुं यन्मां प्राप्तौ स्थः सह सीतया ॥ १ ॥ अध्वश्रमेण वां खेदो बाधते प्रचुरश्रमः । व्यक्तमुत्कण्ठते चापि मैथिली जनकात्मजा ॥ २ ॥ एषा हि सुकुमारी च दुःखैश्च न विमानिता । प्राज्यदोषं वनं प्राप्ता भर्तृस्नेहप्रचोदिता ॥ ३ ॥ यथैषा रमते राम इह सीता तथा कुरु । दुष्करं कृतवत्येषा वने त्वामनुगच्छति ॥ ४ ॥

त्यादि । ते इत्यस्य लक्ष्मणेत्यत्राप्यन्वयः ॥१॥ अध्वश्रमेण मार्गायासेन । प्रचुरः श्रमः श्रमजलं येन सः प्रचुरश्रमः । खेदः वां बाधते । उत्कण्ठते विश्रान्तिमभिलषति । अनेनास्याः श्रमातिशय उच्यते । जनकात्मजेति सौकुमार्यातिशयोक्तिः ॥ २ ॥ एषा सुकुमार्यपि प्राज्यदोषं बहुदोषं वनं प्राप्ता दुःखैर्न विमानिता न परिभूता च । तत्र हेतुः भर्तृस्नेहप्रचोदितेति ॥ ३ ॥ इह आश्रमे ॥ ४ ॥

च दत्ताविति शेषः ) महारजतकोशः हेमकोशः । वैष्णवं त्वदीयम् । तद्धनुः परशुरामाद् गृहीत्वा देवेषु तिष्ठत्विति वरुणे न्यस्तं, खरादिवधः प्रत्यासन्न इति मत्वा इन्द्रेणागस्त्ये विहितमिति वेदितव्यम् ॥ ३३-३८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां आरण्यकाण्डे द्वादशः सर्गः ॥ १२ ॥ राम प्रीतोस्मि लक्ष्मण परितुष्टोस्मि इति श्रीरामागमननिवेदननिमित्तकः परितोषः । भगवद्विषया प्रीतिर्भक्तिः ॥ १ ॥ अध्वश्रमेण मार्गश्रमेण । आगमनादिप्रयुक्तस्वेदादिकार्यकृत् खेदः खिन्नता वां बाधते किमिति शेषः । प्रचुरश्रमः मैथिलीमिति शेषः । व्यक्तं बाधत इति योज्यम् । अत एव मैथिली उत्कण्ठते आकाङ्क्षते, काचिद्विश्रान्तिमिति शेषः ॥ २ ॥ न विमानिता न पीडिता । प्राज्यदोषं प्रचुरदोषं दुष्करमशक्यं कार्यं कृतवती सती त्वामधिगच्छतीति सम्बन्धः ॥ ३ ॥ ४ ॥

स०—अध्वश्रमेण खेदः तज्जन्यं दुःखं वां बाधत इति व्यक्तम् । ममापि प्रचुरश्रमः मैथिलीसम्बन्धमात्रात् । हे जनक जगज्जनक राम ! आत्मनः स्वत एव जायत इत्यात्मजा, अयोनिजेति यावत् ॥ २ ॥

प्रकृतिः स्वभावः। आसृष्टेः जगत्सृष्टिमारभ्य। समस्थं सुस्थं प्रति। विषमस्थं दुर्दशापन्नम् ॥५॥ शतह्रदानां विद्युताम्। लोलत्वं चञ्चलत्वम्। अनुगच्छन्ति चञ्चलचित्तत्वादिति भावः। शस्त्राणां तीक्ष्णतां क्रौर्यम्। अनुगच्छन्ति बहुकालागतस्नेहबन्धच्छेदनादिति भावः। गरुडानिलयोः शैघ्र्यम् अनुगच्छन्ति, अविचारेण कार्यकरणादिति भावः ॥६॥ एवं लौकिकस्त्रीणां दुष्टस्वभावमुक्त्वा सीतायास्तद्वैलक्षण्यमाह—इयन्त्विति। न केवलं दोषरहिता,

एषा हि प्रकृतिः स्त्रीणामासृष्टे रघुनन्दन। समस्थमनुरज्जन्ति विषमस्थं त्यजन्ति च ॥ ५ ॥ शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा। गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः ॥ ६ ॥ इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता। श्लाघ्या च व्यपदेश्या च यथा देवी ह्यरुन्धती ॥७॥ अलंकृतोऽयं देशश्च यत्र सौमित्रिणा सह। वैदेह्या चानया राम वत्स्यसि त्वमरिन्दम ॥ ८ ॥ एवमुक्तः स मुनिना राघवः संयताञ्जलिः। उवाच प्रश्रितं वाक्यमृषिं दीप्तमिवानलम् ॥९॥ धन्योस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गवः। गुणैः सभ्रातृभार्यस्य वरदः परितुष्यति ॥१०॥ किन्तु व्यादिश मे देशं सोदकं बहुकाननम्। यत्राश्रमपदं कृत्वा वसेयं निरतः सुखम् ॥ ११ ॥

श्लाघ्या सद्भिः प्रशंसनीया च। व्यपदेश्या पतिव्रतास्वग्रगण्या। एवं सीताप्रशंसनं वक्ष्यमाणदेवबन्दीमोचनोत्साहनाय ॥ ७ ॥ अयं देशः आश्रमप्रदेशः। यद्वा भूलोकः। वत्स्यसि दश वर्षसहस्राणि दश वर्षशतानि च ॥ ८ ॥ संयताञ्जलिः बद्धाञ्जलिः ॥ ९ ॥ १० ॥ निरतः एकाग्रः ॥ ११ ॥

आसृष्टेः सृष्टिमारभ्य समस्तं धनधान्यादियुक्ततया सम्यगवस्थितं पतिमनुरज्जन्ति अनुरक्ता भवन्ति। विषमस्थं दरिद्रं पतिम् ॥ ५ ॥ एकत्रानवस्थानात् विद्युतां लोलत्वमनुगच्छन्ति। बहुकालागतस्नेहबन्धच्छेदेन शस्त्राणां तीक्ष्णतां अविचारेण कार्यकरणाद्गरुडानिलयोः शैघ्र्यमनुगच्छन्तीत्यर्थः ॥ ६ ॥ इयं तु सकलदोषरहितत्वेन गुणसम्पत्त्या च सद्भिः प्रशंसनीया। व्यपदेश्या पतिव्रतास्वग्रगण्येत्यर्थः ॥ ७ ॥ अलंकृत इति। आश्रमोऽयमलंकृतोऽभवत्। यत्र यस्मिन्नाश्रमे त्वं निवासं करिष्यसि आधुनिकनिवासमात्रकृतालङ्कारमात्रं न पर्याप्तमित्यर्थः। यद्वा त्वदागमनमात्रेणायं देशस्त्वलंकृतोऽभवत्। इतःपरं यत्र वत्स्यसि स त्वलंकृतो भविष्यतीति किमु वक्तव्यमित्यर्थः ॥ ८ ॥ ९ ॥ मुनिपुङ्गवः, भवानिति शेषः ॥ १० ॥ त्वदुक्तस्य सर्वार्थस्याऽङ्गीकारेपि किञ्चि

स०—आसृष्टेः ईषज्जन्मनः विवाहरूपद्वितीयजन्मारभ्येति यावत्। "स्त्रीणां प्रदानकर्मैव यथोपनयनं तथा" इत्याद्युक्तेः। यद्वा आसृष्टे जगति। समस्थं मया सम्पदा सहिताः समाः तेषु तिष्ठतीति समस्थस्तं सम्पद्युक्तम्। अनुरज्यन्ति अनुरागयुक्ता भवन्ति। विषमस्थं दरिद्रम् ॥ ५ ॥ "अजाद्यदन्तम्" इत्यनिलशब्द एव प्राक्प्रयोज्यः, तथापि गरुडशब्दस्य मुख्यगरुडवाचकत्वात् अनिलशब्दस्य भूतवायुपरत्वात्तदपेक्षया गरुडस्याभ्यर्हितत्वात्पूर्वनिपातः। यद्वा "समुद्राभ्राद्घः" इत्यत्रादर्शनात् "अजाद्यदन्तम्" इत्यस्यानित्यत्वाद्गरुडशब्दस्य पूर्वनिपातः ॥ ६ ॥

ध्यात्वा भाविकार्योचितदेशं ध्यात्वा। धीरः धीमान्, निश्चितकार्योचितदेश इत्यर्थः। धीरतरम् अतिनिश्चितं वचः ॥ १२ ॥ पञ्चानां वटानां समाहारः पञ्चवटी, तद्युक्तदेशो लक्षणया पञ्चवटीत्युच्यते। पञ्चवटीत्यभिविश्रुतो देश इत्यन्वयः ॥१३–१६॥ मम पितृवाक्यपरिपालनप्रकारः कथं ज्ञात इत्यत्राह– विदित इति। तपःप्रभावेन पर्यालोचनकरणे निमित्तमाह स्नेहादिति ॥ १७॥ छन्दः अभिप्रायः। " अभिप्रायवशौ छन्दौ " इत्यमरः। खरादि

ततोऽब्रवीन्मुनिश्रेष्ठः श्रुत्वा रामस्य तद्वचः। ध्यात्वा मुहूर्तं धर्मात्मा धीरो धीरतरं वचः ॥ १२ ॥ इतो द्वियोजने तात बहुमूलफलोदकः। देशो बहुमृगः श्रीमान् पञ्चवट्यभिविश्रुतः ॥ १३ ॥ तत्र गत्वाश्रमपदं कृत्वा सौमित्रिणा सह। रंस्यसे त्वं पितुर्वाक्यं यथोक्तमनुपालयन् ॥ १४ ॥ कालोऽयं गतभूयिष्ठो यः कालस्तव राघव। समयो यो नरेन्द्रेण कृतो दशरथेन ते ॥१५॥ तीर्णप्रतिज्ञः काकुत्स्थ सुखं राज्ये निवत्स्यसि। धन्यस्ते जनको राम स राजा रघुनन्दन। यस्त्वया ज्येष्ठपुत्रेण ययातिरिव तारितः ॥ १६ ॥ विदितो ह्येष वृत्तान्तो मम सर्वस्तवानघ। तपसश्च प्रभावेन स्नेहाद्दशरथस्य च ॥ १७ ॥ हृदयस्थश्च ते छन्दो विज्ञातस्तपसा मया। इह वासं प्रतिज्ञाय मया सह तपोवने ॥ १८ ॥ [वसन्तं त्वां जनाः सर्वे ज्ञास्यन्ति रघुनन्दन।] अतश्च त्वामहं ब्रूमि गच्छ पञ्चवटीमिति ॥ १९ ॥

वधसङ्कल्प इत्यर्थः। तपसा आलोचनेन तन्मूलत्वद्वचनभङ्ग्या चेत्यर्थः। अलंकृतोऽयं देशश्चेति ममेह वासे प्रस्तुते किंतु व्यादिश मे देशमिति त्वदुक्त्या चेत्यर्थः। अभिप्रायवेदनकार्यमाह इहेति। यस्मात्त्वदभिप्रायो मया विदितः अतो हेतोः इह तपोवने मया सह वासं प्रतिज्ञाय अनुज्ञाय, तदनन्तरमेव

द्वक्तव्यमस्तीत्यर्थः ॥ ११ ॥ ध्यात्वा मुहूर्तमिति भाविकार्यनिश्चयाय ध्यानम्, ध्यानेनागामिसीतावियोगरूपकिञ्चिद्विक्षेपं दृष्ट्वापि भाविवाञ्छितरावणवधसीतावाप्त्यादिकार्यसिद्धिदर्शनेन धीरः सन् तं वचोऽब्रवीद् ॥ १२ ॥ पञ्चानां वटानां समाहारः पञ्चवटी, तदुपलक्षितत्वात् पञ्चवटीत्यभिविश्रुतः प्रसिद्धो देशः ॥ १३–१६ ॥ दशरथस्य स्नेहात् कैकेयीविषयदशरथस्नेहात् तव सर्वोऽपि वृत्तान्तः प्रवृत्त इति मम तपसः प्रभावेन विदित इत्यन्वयः। यद्वा मम तपसः प्रभावेन दशरथस्य तवोपरि परमस्नेहाच्च तव दशरथस्य च वृत्तान्तः पितृवचनपरिपालनाय वनवासवृत्तान्तः। दशरथवृत्तान्तः कैकेयीविषयस्नेहात् त्वत्प्रेरणरूपः विदित इत्यर्थः ॥ १७ ॥ हृदयस्थ इति सार्धश्लोकमेकं वाक्यम्। छन्दः पूर्वमविज्ञातराक्षस[illegible]अभिप्रायः। टी०–एकान्तवासकौतूहलविधानाभिप्रायो वा। स च मया तपसा विज्ञातः,

त्वं पञ्चवटीं गच्छेति ब्रूमि ब्रवीमि । अनित्यमागमशासनमिति ईदृग्भावः ॥ १८-२० ॥ आयतः व्यासः । विविक्तः विजनः ॥ २१ ॥ परिरक्षणे तापसानामिति शेषः । अत्र पञ्चवट्याश्रमे ॥ २२ ॥ अस्य मधूकवनस्य । न्यग्रोधमभिगच्छता उत्तरेण मार्गेण गन्तव्यम् । इदं मधूकवनं गत्वा तदुत्तरेण मार्गेण गन्तव्यम्, स मार्गो न्यग्रोधं प्रापयतीत्यर्थः ॥ २३ ॥ ततो न्यग्रोधात्परतः । स्थलं निर्वणप्रदेशम् । किञ्चिदुन्नतमुपारुह्य गमने कश्चित्पर्वतो दृश्यते



स हि रम्यो वनोद्देशो मैथिली तत्र रंस्यते । स देशः श्लाघनीयश्च नातिदूरे च राघव ॥ २० ॥ गोदावर्याः समीपे च मैथिली तत्र रंस्यते । प्राज्यमूलफलश्चैव नानाद्विजगणायुतः । विविक्तश्च महाबाहो पुण्यो रम्यस्तथैव च ॥२१॥ भवानपि सदारश्च शक्तश्च परिरक्षणे । अपि चात्र वसन् राम तापसान् पालयिष्यसि ॥ २२ ॥ एतदालक्ष्यते वीर मधूकानां महद्वनम् । उत्तरेणास्य गन्तव्यं न्यग्रोधमभिगच्छता ॥ २३ ॥ ततः स्थलमुपारुह्य पर्वतस्याविदूरतः । ख्यातः पञ्चवटीत्येव नित्यपुष्पितकाननः ॥२४॥ अगस्त्येनैवमुक्तस्तु रामः सौमित्रिणा सह । सत्कृत्यामन्त्रयामास तमृषिं सत्यवादिनम् ॥२५॥ तौ तु तेनाभ्यनुज्ञातौ कृतपादाभिवन्दनौ । तदाश्रमात्पञ्चवटीं जग्मतुः सह सीतया ॥ २६ ॥ गृहीतचापौ तु नराधिपात्मजौ विषक्ततूणौ समरेष्वकातरौ । यथोपदिष्टेन पथा महर्षिणा प्रजग्मतुः पञ्चवटीं समाहितौ ॥ २७॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

तस्याविदूरतः पञ्चवटीति ख्यातः पञ्चवटत्वेन प्रसिद्धः । नित्यपुष्पितकाननत्वेन ज्ञातुं योग्यश्चाश्रमो दृश्यत इत्यर्थः ॥ २४ ॥ सत्कृत्य प्रदक्षिणनमस्काराभ्यामिति शेषः ॥ २५ ॥ २६ ॥ विषक्ततूणौ बद्धतूणीरौ । अकारान्तोपि तूणशब्दः । महर्षिणा यथोपदिष्टेन पथेत्यन्वयः । समाहितौ एकाग्रौ । अस्मिन् सर्गे सार्धसप्तविंशतिः श्लोकाः ॥ २७ ॥ इति श्रीगोविन्द० श्रीरामायण० रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

अत एव हि मया सह वासं प्रतिज्ञाय अनुज्ञाय पञ्चवटीं गच्छेति ब्रूमि ब्रवीमि । 'अनित्यमागमशासनम्' इतीडभावः ॥ १८-२१ ॥ भवानिति । परिरक्षणे तापसानामिति शेषः । अत्र पञ्चवट्याश्रम एवेत्यर्थः ॥ २२ ॥ न्यग्रोधं मार्गस्थम् अभि उद्दिश्य गच्छता त्वया अस्य मधूकवनस्योत्तरेण मार्गेणेति शेषः । गन्तव्यामिति योजना ॥ २३ ॥ स्थलं निर्वणं देशम् । उपारुह्य प्राप्य ततः पश्चात्कस्यचित्पर्वतस्याविदूरतः समीपे पञ्चवटीति ख्यातो देशोऽस्ति तं गच्छेति शेषः ॥ २४-२७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां त्रयोदशः सर्गः ॥ १३ ॥

अथ गृध्रराजसमागमश्चतुर्दशे—अथ पञ्चवटीमित्यादि ॥१॥ वटस्थम् अगस्त्योपदिष्टवटस्थम् । पक्षिमिति छान्दसं रूपम् । को भवानिति ब्रुवाणौ सन्तौ राक्षसं मेनाते, राक्षसं मत्वा को भवानित्यब्रूतामित्यर्थः ॥ २ ॥ सौम्यया सौजन्यपरया । प्रीणयन्निवेति इवशब्द एवकारार्थः । आत्मन इत्यन्ते इति करणं ज्ञेयम् । आत्मनो रामस्य ॥ ३ ॥ ४ ॥ द्विजः आत्मानम् आत्मनाम ॥ ५ ॥ स्वोत्पत्तिं कथयिष्यन् प्रसङ्गादादौ सर्वभूतसमुद्भवमाह—पूर्व



अथ पञ्चवटीं गच्छन्नन्तरा रघुनन्दनः । आससाद महाकायं गृध्रं भीमपराक्रमम् ॥ १ ॥ तं दृष्ट्वा तौ महाभागौ वटस्थं रामलक्ष्मणौ । मेनाते राक्षसं पक्षिं ब्रुवाणौ को भवानिति ॥ २ ॥ स तौ मधुरया वाचा सौम्यया प्रीणयन्निव । उवाच वत्स मां विद्धि वयस्यं पितुरात्मनः ॥ ३ ॥ स तं पितृसखं बुद्ध्वा पूजयामास राघवः । स तस्य कुलमव्यग्रमथ पप्रच्छ नाम च ॥ ४ ॥ रामस्य वचनं श्रुत्वा सर्वभूतसमुद्भवम् । आचचक्षे द्विजस्तस्मै कुलमात्मानमेव च ॥ ५ ॥ पूर्वकाले महाबाहो ये प्रजापतयोऽभवन् । तान्मे निगदतः सर्वानादितः शृणु राघव ॥ ६ ॥ कर्दमः प्रथमस्तेषां विकृतस्तदनन्तरः । शेषश्च संश्रयश्चैव बहुपुत्रश्च वीर्यवान् ॥ ७ ॥ स्थाणुर्मरीचिरत्रिश्च क्रतुश्चैव महाबलः । पुलस्त्यश्चाङ्गिराश्चैव प्रचेताः पुलहस्तथा ॥ ८ ॥ दक्षो विवस्वानपरोऽरिष्टनेमिश्च राघव । कश्यपश्च महातेजास्तेषामासीच्च पश्चिमः ॥ ९ ॥ प्रजापतेस्तु दक्षस्य बभूवुरिति विश्रुतम् । षष्टिर्दुहितरो राम यशस्विन्यो महायशः ॥ १० ॥ कश्यपः प्रतिजग्राह तासामष्टौ सुमध्यमाः । अदितिं च दितिं चैव दनुमप्यथ कालिकाम् । ताम्रां क्रोधवशां चैव मनुं चाप्यनलामपि ॥ ११ ॥

काल इत्यादि ॥६–८॥ अरिष्टनेमिरिति कश्यपविशेषणम् ॥९॥१०॥ तासां दुहितॄणां मध्ये सुमध्यमाः अष्टौ कन्याः प्रतिजग्राह पर्यणैषीत् ॥ ११ ॥

॥ १ ॥ तमिति । पक्षिं पक्षिणम् ॥ २ ॥ आत्मनः पितुः श्रीरामस्य तव पितुरित्यर्थः ॥ ३ ॥ ४ ॥ सर्वभूतसमुद्भवमिति रामस्य प्रत्ययार्थं स्वोत्पत्तिकथनार्थमपीत्यर्थः ॥ ५–७ ॥ कश्यप इति अरिष्टनेमिविशेषणम् । अनन्तरोऽरिष्टनेमिः कश्यपः तेषां पश्चिमश्चासीदित्यर्थः ॥ ८–१० ॥ कश्यप इति । ननु 'दद्यौ

त्रैलोक्यभर्तॄन् त्रैलोक्यरक्षणक्षमान् ॥१२॥ तन्मनाः तद्वचनादरवत्यः । कालिका चेत्यत्र चकारेण मनुरप्युच्यते । तन्मना इति दितिकालिकामनूनामपि विशेषणम् । चतस्रः प्रौढपुत्रोत्पादनमनसोऽभवन्, चतस्रो नाभवन्नित्यर्थः॥१३॥ भर्तृवचनादरानादरफले दर्शयति—अदित्यामित्यादिना । द्वादशादित्याः अष्टौ वसवः एकादश रुद्राः अश्विनौ द्वौ एवं त्रयस्त्रिंशत् ॥ १४ ॥ तेषां दितिपुत्राणाम् ॥ १५–१७ ॥ ताम्रावंशं प्रपञ्चयति—उलूकानित्यादिना ।

तास्तु कन्यास्ततः प्रीतः कश्यपः पुनरब्रवीत् । पुत्रांस्त्रैलोक्यभर्तॄन् वै जनयिष्यथ मत्समान् ॥ १२ ॥ अदितिस्तन्मना राम दितिश्च मनुजर्षभ । कालिका च महाबाहो शेषास्त्वमनसोऽभवन् ॥ १३ ॥ अदित्यां जज्ञिरे देवास्त्रयस्त्रिंशदरिन्दम । आदित्या वसवो रुद्रा ह्यश्विनौ च परन्तप ॥१४॥ दितिस्त्वजनयत्पुत्रान् दैत्यांस्तात यशस्विनः । तेषामियं वसुमती पुरासीत् सवनार्णवा ॥ १५ ॥ दनुस्त्वजनयत् पुत्रमश्वग्रीवमरिन्दम । नरकं कालकं चैव कालिकापि व्यजायत ॥ १६ ॥ क्रौञ्चीं भासीं तथा श्येनीं धृतराष्ट्रीं तथा शुकीम् । ताम्रापि सुषुवे कन्याः पञ्चैता लोकविश्रुताः ॥ १७ ॥ उलूकान् जनयत् क्रौञ्ची भासी भासान् व्यजायत । श्येनी श्येनांश्च गृध्रांश्च व्यजायत सुतेजसः ॥ १८ ॥ धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः । चक्रवाकांश्च भद्रं ते विजज्ञे सापि भामिनी ॥ १९ ॥ शुकी नतां विजज्ञे तु नताया विनता सुता ॥ २० ॥ दश क्रोधवशा राम विजज्ञे ह्यात्मसम्भवाः । मृगीं च मृगमन्दां च हरिं भद्रमदामपि ॥ २१ ॥ मातङ्गीमपि शार्दूलीं श्वेतां च सुरभिं तथा । सर्वलक्षणसम्पन्नां सुरसां कद्रुकामपि ॥ २२ ॥

जनयदित्यत्र आगमशास्त्रस्यानित्यतया नाडागमः ॥ १८ ॥ अप्रसक्तवृत्तान्तानादरप्रतिषेधाय मध्ये भद्रं ते इत्युक्तिः । सा भामिनीति धृतराष्ट्रीविशेषणम् ॥ १९ ॥ शुकी ताम्रापुत्री । विजज्ञे एवमादयोन्तर्भावितण्यर्थाः शब्दाः ॥ २० ॥ क्रोधवशा कश्यपपत्नी ॥ २१ ॥ २२ ॥

स दश धर्माय कश्यपाय त्रयोदश " इति श्रूयते, अत्र कथमष्टावित्युच्यत इति चेत्, सत्यम्; अष्टावित्येकवारमिति वा उपलक्षणमिति वा वैवस्वतमन्वन्तरे एवमिति द्रष्टव्यम् ॥ ११ ॥ कन्याः भार्याः ॥ १२ ॥ तन्मनाः भर्तृपरा । अदित्यादयस्तिस्रः पतिवाक्यं श्रद्दधिरे, तत्राप्यदितिः । शेषास्त्वमनसोऽभवन् ॥१३॥ अत

अपत्यामात जात्येकवचनम् । सृमराः स्त्रीणां केशसहायोपयुक्तविनीलदीर्घवाला मृगाः । चमराः चामरमृगाः ॥२३॥ हरयः सिंहाः ॥२४॥ मातङ्गाः गजाः ॥२५॥ गोलांगूलाः अत्यन्तदीर्घलांगूलाः मर्कटजातिविशेषाः । रोहिण्यजनयद्वा वै इति पाठः । नागाः बहुफणाः सर्पाः । पन्नगाः केवलसर्पाः॥२६—२८॥ मनुः कश्यपपत्नी । पुण्यफलान् चारुफलान् । "पुण्यं तु चारु" इत्यमरः । विषवृक्षनिम्बादयोपि महौषधत्वेन पुण्यफला एव । पिण्डफलानितिपाठे—पिण्डाकार

अपत्यं तु मृगाः सर्वे मृग्या नरवरोत्तम । ऋक्षाश्च मृगमन्दायाः सृमराश्चमरास्तथा ॥ २३ ॥ हर्याश्च हरयोऽपत्यं वानराश्च तरस्विनः । ततस्त्विरावतीं नाम जज्ञे भद्रमदा सुताम् ॥ २४ ॥ तस्यास्त्वैरावतः पुत्रो लोकनाथो महागजः । मातङ्गास्त्वथ मातङ्ग्या अपत्यं मनुजर्षभ ॥ २५ ॥ गोलांगूलांश्च शार्दूली व्याघ्रांश्चाजनयत् सुतान् । दिशागजांश्च काकुत्स्थ श्वेताप्यजनयत् सुतान् ॥ २६ ॥ ततो दुहितरौ राम सुरभिर्द्वे व्यजायत । रोहिणीं नाम भद्रं ते गन्धर्वीं च यशस्विनीम् ॥ २७ ॥ रोहिण्यजनयद्वा वै गन्धर्वी वाजिनः सुतान् । सुरसाऽजनयन्नागान् राम कद्रूस्तु पन्नगान् ॥ २८ ॥ मनुर्मनुष्यान् जनयद्राम पुत्रान् यशस्विनः । ब्राह्मणान् क्षत्त्रियान् वैश्यान् शूद्रांश्च मनुजर्षभ । सर्वान् पुण्यफलान् वृक्षाननलापि व्यजायत ॥ २९ ॥ विनता च शुकी पौत्री कद्रूश्च सुरसा स्वसा । कद्रूर्नागं सहस्रास्यं विजज्ञे धरणीधरम् ॥ ३० ॥

फलानित्यर्थः । प्रायिकं चैतदिति बोध्यम् ॥ २९ ॥ एवं प्रासङ्गिकं परिसमाप्य स्वकुलमवतारयति—विनता चेति । अत्र कद्र्वा उपादानं स्वप्रतिपक्ष

एव पतिविश्वासतारतम्यमपि ज्ञातमित्याह—अदित्यामिति ॥ १४—२२ ॥ अपत्यमिति । सृमराश्चमरास्तथा येषां नीलवालैः कान्ताकचसाहाय्यं क्रियते ते सृमराः । येषां श्वेतवालैः देवराजादिवीजनं क्रियते ते चमराः महिषाकृतयः ॥२३—२७॥ नागाः बहुफणास्सर्पाः । यद्वा मनुष्याकाराः फणालाङ्गूलयुक्ताः नागाः । तदन्ये पन्नगाः ॥ २८ ॥ सर्वान् पिण्डफलान् वृक्षान् पिण्डाकारफलान् ॥ २९ ॥ विनता च शुकीपौत्री कद्रूश्च सुरसास्वसेति पूर्वोक्ताया विनतायाः पुनः कथनं

स०—नागान् फणानुद्धृत्य गन्तॄन् । पन्नगान् भूमिमालम्ब्य गन्तॄन् ॥ कतक०—निर्विषा नागाः । तदन्ये पन्नगाः ॥२८ ॥

कुलत्वेनेति केचित् । वस्तुतस्तु-धरणीधरशेषजनकत्वेन स्वकुलतुल्यत्वं वक्तुं "कद्रूर्नागं सहस्रास्यं विजज्ञे धरणीधरम्" इत्युक्तम् ॥ ३० ॥ ३१ ॥ श्येनीपुत्रमिति इयं च श्येनी पूर्वोक्ताया अन्या । यद्वा कश्यपसुता श्येनीमाता कश्यपस्य पञ्चमोऽरुणः । पिता कश्यपप्रजापतिः कूटस्थ इति स्वीय

द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च । तस्माज्जातोऽहमरुणात् सम्पातिस्तु ममाग्रजः ॥ ३१ ॥ जटायुरिति मां विद्धि श्येनीपुत्रमरिन्दम ॥ ३२ ॥ सोऽहं वाससहायस्ते भविष्यामि यदीच्छसि । इदं दुर्गं हि कान्तारं मृग राक्षससेवितम् । सीतां च तात रक्षिष्ये त्वयि याते सलक्ष्मणे ॥ ३३ ॥ जटायुषं तं प्रतिपूज्य राघवो मुदा परिष्वज्य च सन्नतोऽभवत् । पितुर्हि शुश्राव सखित्वमात्मवान् जटायुषा संकथितं पुनः पुनः ॥ ३४ ॥ स तत्र सीतां परिदाय मैथिलीं सहैव तेनातिबलेन पक्षिणा । जगाम तां पञ्चवटीं सलक्ष्मणो रिपून् दिधक्षन् शलभानिवानलः ॥ ३५ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

वंशप्रभावो निवेदितः । विधिनिषेधयोस्तिर्यङ्क्स्वभावान्न मातृपुत्रयोरेकवंश्यत्वादिदोषः । अयं च सृष्टिक्रमो वैवस्वतमन्वन्तरप्रकारः । अतो न पुराणान्तरविरोधः ॥ ३२ ॥ सोऽहमिति । वाससहायः वासस्थले सीतायाः रक्षणे सहाय इत्यर्थः । यदीच्छसि, उक्तार्थमिति शेषः । सहायापेक्षत्वे हेतुमाह इदमिति । याते मृगयार्थमिति शेषः ॥ ३३ ॥ जटायुषमिति । सन्नतौ हेतुमाह पितुर्हीति ॥ ३४ ॥ सीतां तत्र परिदाय रक्षणाय जटायुवशां कृत्वेत्यर्थः । "यमाय त्वा परिददाम्यसावन्तकाय त्वा परिददाम्यसौ" इत्यादौ तथा प्रयोगात् । शलभानिवानल इत्यनेन लीलया विरोध्युन्मूलनाभिप्रायोवगम्यते ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥

शुक्याः पौत्री विनतेति स्वकुलक्रमं वक्तुं पुनः कद्रूग्रहणम्, तस्यास्सन्ततिकथनाय । अनेन प्रतिपक्षकुलेन गरुडमर्दितेन स्वकुलं प्रख्यापितं भवति । एष सृष्टिप्रकारो वैवस्वतमन्वन्तर इति विज्ञेयम् । श्येनीपुत्रमिति । ननु श्येनीशुक्यौ ताम्रायाः पुत्र्यौ । श्येनीपुत्रस्तु कथं जटायुः, अरुणस्य कथं श्येनी भार्या ? उच्यते—श्येनीसन्तानपरम्परापतिता काचन श्येनी भविष्यतीत्यदोषः । विधिनिषेधयोर्मनुष्याधिकारत्वाद्वा न दोष इति ज्ञेयम् ॥ ३०–३२ ॥ त्वयि याते, आश्रमान्मृगयाप्रयोजनायेति शेषः ॥ ३३ ॥ ३४ ॥ सीतां परिदाय परिवार्य ॥ ३५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां चतुर्दशः सर्गः ॥ १४ ॥

टीका०—रामस्य प्रत्ययार्थं स्वस्यानूचानसन्ततिमुक्त्वा स्वकर्तव्यं वदति—सोऽहमिति ॥ ३३ ॥

अथ शेषभूतस्य शेष्यभिमतकैङ्कर्यमेव कर्तव्यमिति दर्शयति पञ्चदशे—तत इत्यादि। सौमित्रिं 'रामं दशरथं विद्धि' इत्यादि सुमित्रानियोगेन रामकैङ्कर्योद्युक्तं दीप्ततेजसं कैङ्कर्योचितदेशलाभेन सन्तुष्टमित्यर्थः। व्यालाः दुष्टसर्पाः ॥१॥ आगता इति यथोद्दिष्टम् अगस्त्योक्तक्रमेण आगताः स्म। यं देशं मुनिरब्रवीत् सोऽयं पञ्चवटीदेश इत्यर्थः ॥२॥ सर्वतः सर्वत्र कानने त्वया दृष्टिश्चार्यतां सर्वं काननमवलोक्यतामित्यर्थः। हिर्हेतौ। असीति त्वामित्यर्थे निपातः। यस्मात्त्व

ततः पञ्चवटीं गत्वा नानाव्यालमृगायुताम्। उवाच भ्रातरं रामः सौमित्रिं दीप्ततेजसम् ॥ १ ॥ आगताः स्म यथोद्दिष्टममुं देशं महर्षिणा। अयं पञ्चवटीदेशः सौम्य पुष्पितपादपः ॥ २ ॥ सर्वतश्चार्यतां दृष्टिः कानने निपुणो ह्यसि। आश्रमः कतरस्मिन्नो देशे भवति सम्मतः ॥ ३ ॥ रमते यत्र वैदेही त्वमहं चैव लक्ष्मण। तादृशो दृश्यतां देशः सन्निकृष्टजलाशयः ॥४॥ वनरामण्यकं यत्र स्थलरामण्यकं तथा। सन्निकृष्टं च यत्र स्यात् समित्पुष्पकुशोदकम् ॥ ५ ॥ एवमुक्तस्तु रामेण लक्ष्मणः संयताञ्जलिः। सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत् ॥ ६ ॥

माश्रमोचितस्थलपरिज्ञाने निपुणः तस्मात् कतरस्मिन् प्रदेशे सर्वेषां नः सम्मत आश्रमो भवतीति सर्वत्र कानने दृष्टिश्चार्यतामित्यर्थः ॥३॥ सर्वसम्मतत्व मुपपादयति—रमत इति। त्वं रमस इति शेषः। अहं रमे इति च शेषः। सर्वरतिहेतुमाह सन्निकृष्टेति ॥ ४ ॥ तदेव विवृणोति—वनेति। रामण्यकं रम णीयता। "योपधाद्गुरूपोत्तमाद्वुञ्" इति वुञि प्राप्ते ईकारलोपश्छान्दस इति बोध्यम्। वनस्य रमणीयता चूतपुन्नागादिमिश्रत्वम्। स्थलस्य रमणी यता निम्नोन्नतत्वरहितकोमलसिकतामयत्वम्। समित्पुष्पकुशोदकम्। "जातिरप्राणिनाम्" इत्येकवद्भावः। वनरामण्यकं कुसुमाभिलाषिण्याः सीतायाः रतिहेतुः। स्थलरामण्यकं सुखशयनादिकाङ्क्षिणो रामस्य। सन्निकृष्टसमिदादिमत्त्वं शुश्रूषमाणस्य सौमित्रेः ॥ ५ ॥ एवं स्वसौख्यमप्युक्तवतो रामस्य वचनमसहमानः सौमित्रिः सीतायास्तव च यः प्रदेशो रमणीयः स एवाज्ञप्तव्यः न तु मे सौकर्यावह इत्याह—एवमिति। सीतासमक्षमिति पुरुषकार



॥ १ ॥ आगता इति। यं देशं मुनिरब्रवीत् यथोद्दिष्टं तं देशमागताः स्मेत्यन्वयः ॥ २ ॥ सर्वतश्चार्यतां पश्येत्यर्थः। कानने निपुणो ह्यसि आश्रमोचितस्थलपरिज्ञान इत्यर्थः ॥ ३ ॥ ४ ॥ वनरामण्यकं वनस्य रमणीयता ॥ ५-१० ॥

सान्निध्योक्तिः ॥ ६ ॥ परवनास्मि ममास्मिता तवास्मितावन्न भवति, पारतन्त्र्यैकवेषा ममास्मितेति भावः । काकुत्स्थ इदं च पारतन्त्र्यं न परत्वावस्थाया मेव किंत्ववतारावस्थायामपीत्यर्थः । इदं च पारतन्त्र्यं कियत्कालम् ? तत्राह—त्वयि वर्षशतं स्थित इति । शतशब्दः आनन्त्यवचनः । सार्वकालिकं मम पारतन्त्र्यमिति भावः । एवं पारतन्त्र्यस्यैव मत्स्वरूपत्वेन तदनुकूलतया त्वया आज्ञापनं कर्तव्यमित्याह स्वयमिति । स्वयं रुचिरे देशे तवैव रमणीये प्रदेशे आश्रमः क्रियतामिति मां वद ॥ ७ ॥ तनि०—एवमुक्तः त्वमहं चैव लक्ष्मणेति तवापि सौख्यकारिणि कस्मिंश्चिद्देशे पर्णशालां कुर्विति लक्ष्मणे स्वातन्त्र्यं

परवानस्मि काकुत्स्थ त्वयि वर्षशतं स्थिते । स्वयं तु रुचिरे देशे क्रियतामिति मां वद ॥ ७ ॥
सुप्रीतस्तेन वाक्येन लक्ष्मणस्य महात्मनः । विमृशन् रोचयामास देशं सर्वगुणान्वितम् ॥ ८ ॥
स तं रुचिरमाक्रम्य देशमाश्रमकर्मणि । हस्तौ गृहीत्वा हस्तेन रामः सौमित्रिमब्रवीत् ॥ ९ ॥
अयं देशः समः श्रीमान् पुष्पितैस्तरुभिर्वृतः । इहाश्रमपदं सौम्य यथावत्कर्तुमर्हसि ॥ १० ॥

निक्षिप्य श्रीरामेणोक्ते मयि स्वातन्त्र्यनिक्षेपकाल एव रामो मां त्यक्तवान्, एतावत्पर्यन्तं ममाज्ञानेन स्वरूपहानिः कृता, इतःपरं मम स्वरूपं नाम कश्चन पदार्थोऽस्ति किमित्येवमवस्थान्तरं प्राप्तवान् । लक्ष्मणः पारतन्त्र्यैकलक्षणः । संयताञ्जलिः इदानीं तु श्रीरामं प्रत्यञ्जलिरेव मद्रक्षकः । अञ्जलेः सर्वाभिमतसाधनत्वादिति मत्वा कृताञ्जलिः सन् । सीतासमक्षं पुरुषकारभूतायाः श्रियः सन्निधौ काकुत्स्थं प्रति इदं वचनमब्रवीत् । एतादृशमुक्तवानिति ऋषिः स्तौति । सीतासमक्षमित्यनेन कैङ्कर्यप्रतिसम्बन्धित्वं द्वयो त्तरखण्डोक्तं लक्ष्मीविशिष्टस्यैवेति व्यञ्जितम् । परवानस्मि ममास्मिता तवास्मितावन्न भवति तच्च पारतन्त्र्यं न केनाप्याकाङ्क्षितम् । अतएव भवता न दीयते, लोकस्य भिन्नरुचित्वात् । मयापेक्षितमेव वर्षशतम् । अत्र शतशब्द आनन्त्यवाची, तेन सार्वकालिकोक्तिः । परवानस्मीति सर्वदा परवत्त्वप्रतीत्या सर्वावस्थोक्तिः । क्रियतामिति मां वदेति निरुपपदक्रियापदयोगात् सर्वविधकैङ्कर्योपलक्षणम् । एवं कैङ्कर्यरूपफलप्रार्थना द्वयोत्तरखण्डोक्ता व्यञ्जिता ॥ ७ ॥ विमृशन् पर्यालोचयन् । देशं कञ्चिदिति शेषः ॥ ८ ॥ आक्रम्य स्वीयत्वेनाभिमन्य । आश्रमकर्मणि आश्रमनिमित्तं हस्तौ कृताञ्जलिकौ स्वहस्तेन गृहीत्वाब्रवीत् । स्नेहातिशयकृतानुभावो हस्तग्रहणम् ॥ ९ ॥ समः

टीका०—परवान् त्वदधीनः वर्षशतमित्युपलक्षणम् । एकादशसहस्राणि वर्षाणीत्यर्थः ॥ ७ ॥

समतलः । पुष्पितैः सञ्जातपुष्पैः । यथावत् यथायोग्यम् ॥ १० ॥ आदित्यसङ्काशैः आदित्यविकसितैः, तद्वदुज्ज्वलैर्वा । "तुलसीकाननं यत्र यत्र पद्मवनानि च । वसन्ति वैष्णवा यत्र तत्र सन्निहितो हरिः॥" इत्युक्तरीत्या नित्यसन्निहितहरिभिरिति वा । सुरभिगन्धिभिः सौम्यगन्धयुक्तैः । "गन्धस्य—" इत्यादिना इकारोन्तादेशः। "सुरभिर्मधुमासे स्याद्वसन्ततर्तावपि त्रिषु। सौम्ये सुगन्धौ स्त्री धेन्वाम्" इति दर्पणः। "सर्वगन्धः सर्वरसः" इत्युक्तरीत्या सुरभिणा

इयमादित्यसङ्काशैः पद्मैः सुरभिगन्धिभिः । अदूरे दृश्यते रम्या पद्मिनी पद्मशोभिता ॥ ११ ॥ यथाख्यातमगस्त्येन मुनिना भावितात्मना । इयं गोदावरी रम्या पुष्पितैस्तरुभिर्वृता । हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता ॥१२॥ नातिदूरेण चासन्ने मृगयूथनिपीडिताः। मयूरनादिता रम्याः प्रांशवो बहुकन्दराः॥ १३ ॥ दृश्यन्ते गिरयः सौम्य फुल्लैस्तरुभिरावृताः ॥ १४॥ सौवर्णै राजतैस्ताम्रैर्देशेदेशे च धातुभिः । गवाक्षिता इवाभान्ति गजाः परमभक्तिभिः॥ १५॥

हरिणा । गन्धिभिः गन्धवद्भिरिति वा । पद्मिनी गोदावरीसमीपस्था पुष्करिणी । पद्मया शोभिता पद्मशोभिता । "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" इति ह्रस्वः । हरिसान्निध्येन तन्नित्यानपायिन्या श्रिया च युक्तेत्यर्थः । अनेन श्लोकेन वासयोग्यत्वमुक्तम् ॥११॥ यथाख्यातमित्यादि । अगस्त्येन यथाख्यातं तथेयं गोदावरी दृश्यत इत्यनुषङ्गः ॥१२॥ नातिदूरेणचासन्न इति । अस्य गोदावर्या गिरिभिश्चान्वयः, काकाक्षिन्यायात् । मृगेत्यादि गिरिविशेषणम् । मयूरनादिताः मयूरनादयुक्ताः । इतचप्रत्ययः । प्रांशवः उन्नताः । बहुकन्दराः विपुलगुहाः । "दरी तु कन्दरो वा स्त्री देवखातबिले गुहा" इत्यमरः । फुल्लैः विकसितपुष्पैः । "अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः" इति निपातितः ॥१३ ॥१४॥ देशेदेशे नानादेशे वर्तमानैः सुवर्णादिसदृशैः धातुभिः परिणतत्वदशासंक्रान्तैः गैरिकैः । "धातवो गिरिसम्भवाः" इत्यमरः । उपलक्षिताः गजाः । परमभक्तिभिः उत्कृष्टरेखालङ्कारैः । गवाक्षिताः सञ्जातगवाक्षा इवा

इयमिति । पद्मिनी सरसी । पद्मैः रक्तपद्मैः । पद्मसेविता श्वेतपद्मयुक्ता ॥११॥ यथाख्यातं तथेयं गोदावरी दृश्यत इत्यनुषङ्गः ॥ १२ ॥ मृगयूथनिपीडिताः मृगयूथैर्निबिडाः । वासार्थमागतैरिति शेषः । प्रांशवः उन्नताः॥ १३ ॥ दृश्यन्त इति सार्धश्लोकमेकं वाक्यम् । फुल्लैर्विकसितैः सौवर्णादिधातुभिरुपलक्षिता गिरयः परमभित्तिभिः नीलपीतादिवर्णरचनाभिः गवाक्षिताः चित्रिताः, अलंकृता इति यावद् । गजा इवाभान्तीत्यन्वयः ॥ १४ ॥ १५ ॥

भान्ति। गजानां हि गवाक्षाकाराः भक्तीः कुर्वन्ति ॥१५॥ प्रीत्यतिशयेन वनं वर्णयति—सालैरित्यादिना। सालैः सर्जकाख्यैर्वृक्षैः। तमालैः कालस्कन्धाख्यैः। खर्जूरैः खर्जूरवृक्षैः। पनसैः। आम्रकैः रसालभेदैः। निवारैः जलकदम्बैः। तिमिशैः नेमिद्रुमैः। पुन्नागैः। तिलकैः क्षुरकवृक्षैः। गुल्माः जातिप्रभृतयः। लताः माधवीप्रभृतयः। स्पन्दनैः तिमिशभेदैः। नीपैः स्थलकदम्बकैः। पर्णासैः करिञ्जराख्यैः। लिकुचैः धवैः अश्वकर्णैः खदिरैः शमीभिः किंशुकैः पलाशैः।

सालैस्तालैस्तमालैश्च खर्जूरपनसाम्रकैः। निवारैस्तिमिशैश्चैव पुन्नागैश्चोपशोभिताः ॥ १६ ॥ चूतैरशोकैस्तिलकैश्चम्पकैः केतकैरपि। पुष्पगुल्मलतोपेतैस्तैस्तैस्तरुभिरावृताः ॥ १७ ॥ चन्दनैः स्पन्दनैर्नीपैः पर्णासैर्लिकुचैरपि। धवाश्वकर्णखदिरैः शमीकिंशुकपाटलैः ॥ १८ ॥ इदं पुण्यमिदं मेध्यमिदं बहुमृगद्विजम्। इह वत्स्यामि सौमित्रे सार्धमेतेन पक्षिणा ॥ १९ ॥ एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा। अचिरेणाश्रमं भ्रातुश्चकार सुमहाबलः ॥२०॥ पर्णशालां सुविपुलां तत्र सङ्घातमृत्तिकाम्। सुस्तम्भां मस्करैर्दीर्घैः कृतवंशां सुशोभनाम् ॥ २१ ॥ शमीशाखाभिरास्तीर्य दृढपाशावपाशिताम्। कुशकाशशरैः पर्णैः सुपरिच्छादितां तथा ॥ २२ ॥ समीकृततलां रम्यां चकार लघुविक्रमः। निवासं राघवस्यार्थे प्रेक्षणीयमनुत्तमम् ॥ २३ ॥

पाटलैः। अत्र पूर्वश्लोकात् गिरयो दृश्यन्त इत्यनुषक्तपदाभ्यामन्वयः ॥१६–१८॥ इदमिति। पुण्यं पुण्यप्रदम्। मेध्यं पवित्रम्। एतेन अस्माभिः सहागतेन। पक्षिणा जटायुषा ॥ १९ ॥ परवीरहेति क्विप् छान्दसः। आश्रमम् अङ्गणादिविस्तारवदाश्रमप्रदेशम् ॥ २० ॥ पर्णशालामित्यादि। तत्र आश्रमे [illegible] पर्णशालाम् उटजम्। सङ्घातमृत्तिकां भित्तीकृतमृत्तिकामित्यर्थः। मस्करैः वेणुभिः। "मस्करमस्करिणौ वेणुपरिव्राजकयोः" इति निपातनात्साधुः। कृतवंशां कृतगृहोर्ध्वकाष्ठाम्। "वंशस्तु पृष्ठास्थि गृहोर्ध्वकाष्ठे वेणौ गुणे कुले" इति वैजयन्ती। वेणुमयस्तम्भोपरि प्रसारिततिर्यक्काष्ठामित्यर्थः। शमी सालादिपाटलान्तैस्तरुभिरावृतास्सन्तो गिरयो दृश्यन्त इति पूर्वेणान्वयः॥१६–२०॥ पर्णशालामिति। सङ्घातमृत्तिकां भित्त्यात्मना सङ्घाता मृत्तिका यस्यां तां तथोक्ताम्। दीर्घैर्मस्करैर्वेणुभिः कृतवंशामाच्छादकतृणादेर्धारणार्थं पार्श्वयोस्तिर्यक् प्रसारितैर्दीर्घैर्वेणुभिः कृतवंशां धारितवंशादिसर्वाधेयकपालामित्यर्थः ॥२१॥२२॥ लघुविक्रमः

टीका–खर्जूरः कण्टकच्छदः। नीवारः स्थलकदम्बः ॥ १६ ॥ स्पन्दनः तिमिशविशेषः। पनसैर्लिकुचैरिति पाठः। धवः खदिरः। अश्वकर्णः सर्जः ॥ १८ ॥

शाखाभिरास्तीर्य तिर्यग्वेणूपरि शमीशाखाभिरास्तीर्य । दृढपाशावपाशिता दृढवल्कलादिकृतपाशैरवपाशितां सञ्जातपाशां, तिर्यग्वंशैः सह शमीशाखाः दृढं बद्धेत्यर्थः । कुशकाशशरैः कुशादिरूपैः पर्णैः सुपरिच्छादितां सुशोभनं रमणीयं यथा तथा परिच्छादितां पर्णशालारूपं निवासं चकारेत्यन्वयः ॥२१–२३॥ सफलः फलानि चादायेत्यर्थः ॥२४॥ पुष्पबलिं वास्तुपूजाम् । शान्तिम् आभ्युदयिकीं क्रियाम् । यथाविधि वास्तुकल्पानुसारेण ॥ २५ ॥

स गत्वा लक्ष्मणः श्रीमान् नदीं गोदावरीं तदा । स्नात्वा पद्मानि चादाय सफलः पुनरागतः ॥२४॥ ततः पुष्पबलिं कृत्वा शान्तिं च स यथाविधि । दर्शयामास रामाय तदाश्रमपदं कृतम् ॥ २५ ॥ स तं दृष्ट्वा कृतं सौम्यमाश्रमं सह सीतया । राघवः पर्णशालायां हर्षमाहारयद्भृशम् ॥ २६ ॥ सुसंहृष्टः परिष्वज्य बाहुभ्यां लक्ष्मणं तदा । अतिस्निग्धं च गाढं च वचनं चेदमब्रवीत् ॥२७॥ प्रीतोऽस्मि ते महत्कर्म त्वया कृतमिदं प्रभो । प्रदेयो यन्निमित्तं ते परिष्वङ्गो मया कृतः ॥२८॥ भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण । त्वया पुत्रेण धर्मात्मा न संवृत्तः पिता मम॥२९॥

पर्णशालायां विषये हर्षमाहारयत्, सन्तोषं प्राप्तवानित्यर्थः ॥ २६ ॥ अतिस्निग्धं च गाढं चेति परिष्वङ्गक्रियाविशेषणम् ॥ २७ ॥ प्रीत इति । हे प्रभो समर्थ ! त्वया इदं महत्कर्म कृतम् अतस्ते प्रीतोऽस्मि । यन्निमित्तं यदाश्रमनिर्माणनिमित्तम् । प्रदेयः पारितोषिकोऽस्ति तन्निमित्तं मया परिष्वङ्गः कृतः । आश्चर्यभूतपर्णशालानिर्माणस्य उचितपारितोषिकान्तराभावात् परिष्वङ्गमेव दत्तवानस्मीत्यर्थः ॥ २८ ॥ भावज्ञेन मच्चित्तज्ञेन, सीतया सह रहसि स्थातुं मम स्थलं रचयेति रामो न वदेत् किंतु मनसि कुर्यादिति तदपि ज्ञातवतेत्यर्थः । कृतज्ञेन चिरमपुत्रेण दशरथेन स्वस्मिन्नादरातिशयाद्येन क्रमेण चन्द्रतारा बलालोचनपूर्वकं गृहं निर्मापितं तेन क्रमेण तत्कृतप्रकारज्ञेनेत्यर्थः । धर्मज्ञेन स्वयं राजपुत्रोऽपि स्वोचितस्थलमकृत्वा यथा रामः संतुष्यति तथैव

अनलसगतिः ॥ २३ ॥ गोदावरीं प्राप्येति शेषः । सफलः फलसहितः ॥ २४ ॥ पुष्पबलिं वास्तुपूजाम् । शान्तिम् आभ्युदयिकीं क्रियाम् ॥ २५ ॥ हर्षमाहारयत् प्राप्तवान् ॥ २६ ॥ सुसंहृष्टः राघव इत्यनुषङ्गः । गाढं परिष्वज्यातिस्निग्धं वचनमब्रवीदित्यन्वयः ॥ २७ ॥ प्रभो लक्ष्मण ! प्रदेयो यन्निमित्तं ते परिष्वङ्गः मया कृतः यदाश्रमनिर्माणार्थं प्रदेयः पारितोषिकोऽस्ति तन्निमित्तपरिष्वङ्ग एव मयाद्य कृतः । इहान्यस्य प्रदेयस्याभावादिति मया कृतः दत्त इति वा ॥ २८ ॥ भावज्ञः

स०--भावज्ञानस्य प्रयोजनं स्वानुकूलसम्भोगादिस्थाननिर्माणम् ॥ २९ ॥

मया स्थातव्यमित्यंवंविधधर्मज्ञेन त्वया पुत्रेण पुन्नाम्नो नरकात्त्रायत इति पुत्रः। ततो मदभिमतासिद्धिरेव स्वस्य निरय इत्यभिमेने, मदभिमतकरणेन तस्य निरयनिस्तारकेण त्वयेत्यर्थः। धर्मात्मा स्वयं यावज्जीवं मदभीष्टमेव कृत्वा स्वचरमकालेऽपि मदभिमतकरणाय त्वां स्थापितवान् पानीयशाला प्रवर्तकवत्। मम पिता न संवृत्तः किंतु त्वमेव त्वन्मुखेन पित्रा मम सर्वाभिलषितपरिपूरणात् अहं सर्वं कारिष्यामीति हि त्वयोक्तमिति भावः ॥२९॥

एवं लक्ष्मणमुक्त्वा तु राघवो लक्ष्मिवर्धनः। तस्मिन् देशे बहुफले न्यवसत् सुसुखं वशी ॥ ३० ॥
कञ्चित् कालं स धर्मात्मा सीतया लक्ष्मणेन च। अन्वास्यमानो न्यवसत् स्वर्गलोके यथामरः ॥ ३१ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

वसतस्तस्य तु सुखं राघवस्य महात्मनः। शरद्व्यपाये हेमन्त ऋतुरिष्टः प्रवर्तते ॥ १ ॥
स कदाचित्प्रभातायां शर्वर्यां रघुनन्दनः। प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम् ॥ २ ॥
प्रह्वः कलशहस्तस्तं सीतया सह वीर्यवान्। पृष्ठतोऽनुव्रजन् भ्राता सौमित्रिरिदमब्रवीत् ॥ ३ ॥
अयं स कालः सम्प्राप्तः प्रियो यस्ते प्रियंवद। अलंकृत इवाभाति येन संवत्सरः शुभः ॥ ४ ॥

एवमिति। वशी विषयचापलरहितः ॥ ३० ॥ ॥ अत्र एकत्रिंशच्छ्लोकाः ॥३१॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चदशः सर्गः ॥१५॥ अथ भाविशूर्पणखादर्शनाद्यनर्थसूचकतया हेमन्तवर्णनं प्रस्तौति—वसत इत्यादि। इष्टः तपस्विनां तपःसाधनायेष्टः। रामस्य तु खरादिराक्षसवधविजयमूलशूर्पणखागमनहेतुतयेष्टः ॥ १ ॥ स इति। प्रभातायां विरामोन्मुखायाम् ॥ २ ॥ ३ ॥ अयमिति। येन हेमन्तेन॥४॥

अभिप्रायज्ञः। कृतज्ञः गृहनिर्माणादिकृतज्ञः। धर्मज्ञः सेवाधर्मज्ञः। नाथेन पालकेन त्वया मम पिता न संवृत्तः न गतः, मद्दृष्ट्या जीवितवानित्यर्थः। पिता यथा पुत्रं पालयति तद्वत्त्वमपि मां पालयसीति भावः। त्वया नाथेनेति पाठः ॥ २९-३१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां पञ्चदशः सर्गः ॥ १५ ॥ अथ मुनिः शूर्पणखागमनं वक्तुं तत्कामोद्दीपकं हेमन्तं वर्णयति—वसत इति। राघवस्य वसतस्ततः श्रीरामे पञ्चवट्यां स्थिते सतीत्यर्थः। इष्टः कामिनीनां कामिनामिष्ट इत्यर्थः। शरद्व्यपाये शरत्काले गते सति हेमन्त ऋतुः "ऋत्यकः" इति सन्ध्यभावः ॥ १ ॥ अभिषेकार्थं स्नानार्थम् ॥ २ ॥ ३ ॥ येन हेमन्तेन सुपक्वसस्यादिसम्पन्नेन शुभस्सन्नयं संवत्सरः अलंकृतो यद्यपि तथापि तव अतिसुकुमारस्य प्रिय इवाभाति। किमिति

नीहारेति । लोको जनः नीहारेण हिमेन परुषः परुषत्वक्, सर्वत्र भवतीति शेषः । स्वभावोक्तिरलङ्कारः । "स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्" इति लक्षणात् ॥ ५ ॥ काले आग्रयणकर्मानुष्ठानकाले । आग्रयणं नाम कश्चिद्धविर्यज्ञो नूतनधान्यभोजनस्यादावनुष्ठेयः । तदुक्तमापस्तम्बेन "नानिष्ट्वाग्रयणेनाहिताग्निर्नवस्य धान्यस्याश्नीयाद् व्रीहीणां यवानां श्यामाकानामग्रे पाकस्य यजेत" इति । आग्रयणरूपपूजाभिः पितृदेवता अभ्यर्च्य कृताग्रयणकाः नतु कृताग्रयणप्रतिनिधय इत्यर्थः ॥ ६ ॥ प्राज्यकामा इति । प्राज्यकामाः बहुलकामोद्रेकाः । "प्राज्यमदभ्रं बहुलम्" इत्यमरः । जनपदाः जनपदस्थाः ।

नीहारपरुषो लोकः पृथिवी सस्यशालिनी । जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ५ ॥ नवाग्रयणपूजाभिरभ्यर्च्य पितृदेवताः । कृताग्रयणकाः काले सन्तो विगतकल्मषाः ॥ ६ ॥ प्राज्यकामा जनपदाः सम्पन्नतरगोरसाः । विचरन्ति महीपाला यात्रास्था विजिगीषवः ॥ ७ ॥ सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् । विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥ ८ ॥ प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च साम्प्रतम् । यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥ ९ ॥ अत्यन्तसुखसञ्चारा मध्याह्ने स्पर्शतः सुखाः । दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥ १० ॥

यात्रायां युद्धयात्रायाम् आस्था येषां ते यात्रास्थाः ॥ ७ ॥ अन्तकसेवितां दक्षिणामित्यर्थः । अत्रोत्प्रेक्षालङ्कारेण दक्षिणा दिक् सतिलकेव प्रकाशत इत्युत्प्रेक्षा व्यज्यते ॥ ८ ॥ प्रकृत्या स्वभावेन । हिमकोशैः घनीभूतहिमैः । आढ्यः सम्पूर्णः । साम्प्रतं दक्षिणायने । दूरसूर्यः अत एव हिमवान् अधिकहिमः । भूमार्थे मतुप् । हिमवान् गिरिः यथार्थनामा भवति । सुव्यक्तमित्युत्प्रेक्षाव्यञ्जकं निरुक्तिश्चालङ्कारः । "निरुक्तिर्योगतो नाम्नामन्वर्थत्वप्रकल्पनम्" इति लक्षणात् ॥९॥ मध्याह्ने स्पर्शतः उष्णस्पर्शतः । सुखाः सुखकराः अतएव तदानीम् अत्यन्तसुखसञ्चाराः । सुभगादित्याः दर्शनयोग्यादित्याः ।

योजना । यद्वा यः हेमन्तकालः ते प्रियः येन हेमन्तेन संवत्सरः शुभस्सन् अलंकृत इवाभाति अयं कालस्सम्प्राप्त इति योजना ॥ ४ ॥ हेमन्तधर्मान्वर्णयति— नीहारेति । लोको जनः नीहारपरुषः नीहारेण हिमेन परुषः परुषस्पर्शशरीर इत्यर्थः । जलान्यनुपभोग्यानि शैत्यातिशयात्स्नानाद्यर्थमशक्यानि । सुभगः इष्टः ॥ ५ ॥ आग्रयणं नाम कश्चिद्धविर्यज्ञः नवधान्यभोजनस्यादावनुष्ठेयः । तेनाग्रयणेन देवान् सन्तर्प्य । पितृकर्मणा पितॄन् सन्तर्प्य सन्तो विगतकल्मषा भवन्तीत्यन्वयः । कृताग्रयणका इत्यनुवादः । काले शरत्काले ॥ ६ ॥ प्राज्यः प्रभूतः कामो येषां ते तथोक्ताः, सर्वसस्यादिसम्पन्नत्वादिति भावः । सम्पन्नतरगोरसाः बहुलतरगोक्षीराः जनपदा भवन्तीति शेषः ॥ ७ ॥ अन्तकसेवितां दिशं दक्षिणां दिशम् ॥ ८ ॥ प्रकृत्या स्वभावेन हिमकोशैः घनीभूतैः हिमसमूहैराढ्यः समृद्धः । दूरे सूर्यो यस्य स तथोक्तः ॥ ९ ॥ अत्यन्तं सुखं सञ्चारो येषां ते तथोक्ताः । स्पर्शतः सुखाः सुखस्पर्शातपा इति यावत् । सुभगादित्याः

छायासलिलदुर्भगाः दुर्भगच्छायासलिलाः । आहिताग्न्यादित्वात्परनिपातः । अतिशीतच्छायासलिला इत्यर्थः । भवन्तीति शेषः । स्वभावोक्तिरलङ्कारः ॥ १० ॥ मृदुसूर्याः अक्रूरसूर्याः । पटुशीताः प्रबलशीताः । शून्यारण्याः आरण्या वनचराः तैः शून्याः आवरणरहितत्वेन शीतपीडिताः, न बहिः सञ्चरन्तीत्यर्थः । हिमध्वस्ताः हिमध्वस्तजनवन्तः, शैत्येन पीण्डीभूतशरीरजना इत्यर्थः । अनेन राक्षसकृतसार्वत्रिकपीडा द्योतिता ॥ ११ ॥

मृदुसूर्याः सनीहाराः पटुशीताः समारुताः । शून्यारण्या हिमध्वस्ता दिवसा भान्ति साम्प्रतम् ॥ ११ ॥
निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः । शीता वृद्धतरायामास्त्रियामा यान्ति साम्प्रतम् ॥ १२ ॥
रविसङ्क्रान्तसौभाग्यस्तुषारारुणमण्डलः । निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ १३ ॥

निवृत्ताकाशशयनाः निवृत्तचन्द्रशालाद्यनावृतप्रदेशशयनाः । पुष्यनीताः पुष्यनक्षत्रयुक्ता पौर्णमासी पुष्यं तेन नीताः, तत्प्रधाना इत्यर्थः । यद्वा पुष्यः पुष्यमासः तेन नीताः, पुष्यमाससन्निहिता इत्यर्थः । हिमारुणाः हिमधूसराः । शीताः शीतवाताः । वृद्धतरायामाः चतुर्विंशतिघटिकायुक्तत्वेनातिवृद्धतरविस्ताराः त्रियामाः रात्रयः । दिनान्ते अर्धयामस्य दिनादावर्धयामस्य च दिनशेषत्वात् । अनेन स्वर्गलोकोपद्रवः तामसराक्षसवृद्धिः सज्जनक्षयः कल्यनुसारिता चोक्ता । पुष्यः कलिः ॥ १२ ॥ मन्दरश्मित्वेन संक्रान्तं सम्प्रवृत्तं सौभाग्यं भोग्यत्वं यस्य सः । सूर्ये स्वसौभाग्यं दत्तवानित्यर्थः । सुभगः सुसेव्यः आदित्यो येषु ते तथोक्ताः । छायासलिलदुर्भगाः छायाश्च सलिलानि च दुर्भगान्यनिष्टानि येषु ते तथोक्ताः दिवसाः मध्याह्ने एवंविधा भान्तीत्युत्तरेणान्वयः ॥ १० ॥ मृदुसूर्याः ईषदुष्णसूर्याः । पटुशीताः प्रबलशीताः । शून्यारण्याः हिमालयपर्यन्तारण्ये प्राणिसञ्चारविरहात् । हिमध्वस्ताः हिमोपहताः, शून्यारण्यपदसान्निध्यात् हिमध्वस्ता इत्यनेन अरण्यप्रदेशव्याप्तहिममुच्यते । मृदुसूर्यपदसान्निध्यात् सनीहारा इत्यनेन सूर्यमण्डलावारकं हिममुच्यत इत्यर्थः ॥ ११ ॥ निवृत्तानि आकाशे अनावृतप्रदेशे शयनानि भोगिनां पर्यङ्का यासु ताः । पुष्यनीताः पुष्यनक्षत्रेण नीताः प्रवर्तिताः येषु दिवसेषु पुष्यनक्षत्रं रात्रिकालं परिमाणं बोधयतीत्यर्थः । अन्ये तु पुष्यनीताः पुष्यशब्देन पुष्यनक्षत्रयुक्ता पौर्णमासी नीता लक्ष्यते । तथा च पुष्यनक्षत्रयुक्तां पौर्णमासीं नीताः गताः तदुपलक्षिता इति यावत् । कादाचित्कतया भेदधीहेतुरुपलक्षणमित्याहुः । यद्वा पुष्यनीताः पुष्याः पोष्याः । गुणाभाव आर्षः । शीतनिवारकोपचारैः पोष्या भोगिन इत्यर्थः । तैर्नीताः कृच्छ्रेण गमिताः त्रियामाः हिमारुणाः हिमधूसराः । शीताः शीतस्पर्शमारुतसमेताः । वृद्धतरायामाः अतिदैर्घ्याः त्रियामाः रात्रयः यान्ति गच्छन्ति ॥ १२ ॥ रविणा संक्रान्तं सौभाग्यं सुभगत्वं यस्य स तथोक्तः । रविर्हि तस्मिन् काले सुभगो न चन्द्रः । तुषारारुणमण्डलः तुषारधूसरमण्डलः निश्वासान्धः निश्वासेनान्धो

टीका०—सनीहारा इत्युक्त्वा हिमध्वस्ता इति पुनर्वचनं हिमवासरा इति विशेषणदर्शनार्थम् ॥ स०—हे मध्वस्त मधुरस्तो ध्वस्तो येन स तथा, तत्सम्बुद्धिः । आहिताग्न्यादित्वात्परनिपातः । आदिवसाः ईषद्दिवसाः अहर्मानन्यौन्यात् । छन्दस्तुल्यत्वादाभान्तीति तिङाऽऽङोन्वयः । अरण्यपुरहिमभेदाद्वाऽपौनरुक्त्यम् ॥ ११ ॥

तुषारैः हिमशीकरैः अरुणं रक्तं मण्डलं यस्य। हिमशीकरावरणेन चन्द्रसूर्यमण्डलयोरारुण्यं प्रत्यक्षसिद्धम्। निःश्वासेन अन्धः अप्रकाशः आदर्शः दर्पण मिव। उपमालङ्कारः। अनेन रावणापहृतसर्वस्वस्य मलिनाकृतेरिन्द्रस्यावस्थोक्ता ॥ १३ ॥ ज्योत्स्नी चन्द्रिकयान्विता रात्रिः। तुषारमलिना सती पौर्णमास्यामपि न राजते न शोभते। एवम्भूता सा आतपश्यामा आतपापहृतवर्णा सीतेव लक्ष्यते, किन्तु सीतावन्न शोभते। व्यतिरेकालङ्कारः। "व्यति

ज्योत्स्नी तुषारमलिना पौर्णमास्यां न राजते। सीतेव चातपश्यामा लक्ष्यते न तु शोभते ॥ १४ ॥
प्रकृत्या शीतलस्पर्शो हिमविद्धश्च साम्प्रतम्। प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १५ ॥
बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च। शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १६ ॥
खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः। शोभन्ते किञ्चिदानम्राः शालयः कनकप्रभाः ॥ १७ ॥

रेको विशेषश्चेदुपमानोपमेययोः" इति तल्लक्षणम्। अनेन सीताया भाविरावणाभिभवः तेनापि सुरनारीजनबन्दीमोक्षणार्थत्वेनातिशयश्च व्यज्यते ॥१४॥ प्रकृत्या शीतलस्पर्शः वायोः शीतस्पर्श एव स्वभावः, उष्णस्पर्शस्त्वागन्तुक इति हृदयम्। साम्प्रतं हेमन्ते। हिमविद्धः हिमयुक्तः। काले प्रातःकाले। द्विगुणशीतलः द्विरावृत्त्या शीतलः। " अथो गुणः। रूपादौ सूदशिञ्जिन्योरावृत्तीन्द्रियतन्तुषु । सन्ध्यादावपि सत्त्वादौ त्यागादावुपसर्जने ॥ " इति रत्नमाला। पश्चिमो वायुः पश्चिमदिग्वायुः। अनेन स्वभावतः करुणाशीतलस्य अवतारकाले देवप्रार्थनोत्तम्भितकृपस्य पुनर्मुन्याश्रमे द्विगुणितकरुणस्य रामस्य व्यापारः सूचितः ॥ १५ ॥ बाष्पैः ऊष्मभिः छन्नानि यथा कूपोदकेभ्यो निर्गच्छन्तो धूमाकारा बाष्पाः। अनेन रामसमागमानन्तरभाव्या श्रमसमृद्धिरुच्यते। बाष्पशब्देन रामकृपोच्यते। यवेत्यादिना तपस्समृद्धिः। नदद्भिरिति वेदघोषः ॥ १६ ॥ खर्जूरपुष्पाकृतिभिः तद्वत्पिशङ्गवर्णैः

मलिनः आदर्शो मुकुर इव न प्रकाशते ॥ १३ ॥ तुषारमलिना ज्योत्स्ना कौमुदी। आतपश्यामा आतपेन वैवर्ण्यं प्राप्ता सीतेव लक्ष्यते दृश्यते। न तु शोभते सीतेव न शोभत इत्यर्थः ॥१४॥ प्रकृत्या स्वभावेनाशीतलस्पर्शः। अशीतेत्युपलक्षणमनुष्णोपि द्रष्टव्यम्। तथा चानुष्णाशीतलस्पर्श इत्यर्थः। काले प्रातःकाले हिमविद्धस्सन् द्विगुणशीतलः प्रातःकालभवत्वेन हिमविद्धत्वेन च द्विगुणशीतलत्वमित्यर्थः ॥१५॥ बाष्प ऊष्मा तेन छन्नानि प्रातःकाले कूपोदकादिष्विव वनादप्यूष्मा प्रादुर्भवतीत्यनुभव एव प्रमाणम् ॥ १६ ॥ खर्जूरपुष्पाकृतिभिः, पीतवर्णैरित्यर्थः। पूर्णतण्डुलैः व्रीहिपूर्णैश्शिरोभिः मञ्जरीभिः किञ्चिदालम्बाः किञ्चिन्नम्राः ॥ १७ ॥

शिरोभिः कणिशैः कनकप्रभाः परिपक्वनालपत्रत्वात्कनकवर्णाः । अनेन वृद्धा अपि जटाभरितशिरोभिस्त्वां प्रणमन्तीति द्योतितम् ॥ १७ ॥ हिमनीहारैः शीतलनीहारैः संवृताः तैः । अनेन बहुकालं समागतोऽपि राक्षसप्रभाभिभूततेजस्को मृदुरिव किमर्थं वर्तस इत्यर्थस्सूच्यते ॥ १८ ॥ पूर्वाह्णे अग्राह्यवीर्यः अग्राह्यौष्ण्यः, चन्द्रिकायमाणो वर्तत इत्यर्थः । ईषदर्थे वा नञ्, अनुदरा कन्येतिवत् । तदुक्तम् "तत्सादृश्यमभावश्च तदन्यत्वं तद

मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः । दूरमभ्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥ १८ ॥ अग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः । संरक्तः किञ्चिदापाण्डुरातपः शोभते क्षितौ ॥ १९ ॥ अवश्यायनिपातेन किञ्चित्प्रक्लिन्नशाद्वला । वनानां शोभते भूमिर्निविष्टतरुणातपा ॥ २० ॥ स्पृशंस्तु विपुलं शीतमुदकं द्विरदः सुखम् । अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥ २१ ॥ एते हि समुपासीना विहगा जलचारिणः । न विगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥ २२ ॥ अवश्यायतमोनद्धा नीहारतमसावृताः । प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २३ ॥

ल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः" इति । मध्याह्ने स्पर्शतः स्पर्शेन । सुखः सुखकरः । किञ्चित्संरक्तः किञ्चिदापाण्डुश्च, अनेनापि राक्षसाक्रमेप्यपराक्रमत्वमनुचितमिति गम्यते ॥ १९ ॥ अवश्यायः हिमम् । शाद्वलः शष्पप्रचुरा भूमिः "नडशादाड्ड्वलच्" इति वलच् । अनेन राक्षसाभिभवकृतमुनिजनरोदनं रामकृपाप्रवृत्तिश्चोच्यते ॥ २० ॥ प्रतिसंहरते । अतिदुःसहशैत्यवत्त्वादिति भावः । अनेनेन्द्रस्य राज्यभोगाभिलाषिणोऽपि तद्रोगभीरुत्वं सूचितम् ॥ २१ ॥ समुपासीनाः जलमिति शेषः । अनेन मुनीनां समाधिभङ्गो द्योत्यते । अप्रगल्भाः अधृष्टाः । आहवं युद्धम् ॥ २२ ॥ अवश्यायः हिमसलिलम्, स एव तमः तेन नद्धा बद्धाः, अनेन निश्चलत्वं लक्ष्यते । हिमक्लिन्ना हि लता निश्चलीभवन्ति । नीहारः अजलवर्षिमहा

हिमनीहारसंवृतैः हिमबिन्दुसंवृतैः उपलक्षितः सूर्यः ॥१८॥ पूर्वाह्णे प्रातःकाले । अग्राह्यवीर्यः । अत्र नञीषदर्थे, अनुदरा कन्येतिवत् । ईषद्ग्राह्यं वीर्यमौष्ण्यं यस्य । स्पर्शतः सुखः, सुखस्पर्श इत्यर्थः । आपाण्डुरीषत्पाण्डुः किञ्चिच्छोभते ॥ १९ ॥ अवश्यायनिपातेन हिमनिपातेन । निविष्टतरुणातपा बालातपसमेतेत्यर्थः ॥२०॥ प्रतिसंहरते करं दुस्पर्शशैत्यवत्त्वादितिभावः ॥ २१ ॥ समुपासीनाः सम्यग्जलसमीपमुपासीनाः प्राप्ताः जलचारिणो विहङ्गाः । अप्रगल्भाः शौर्यरहिताः ॥ २२ ॥ अवश्यायरूपेण तमसा नद्धाः सङ्कुचितपल्लवपुटाः । नीहारतमसावृताः उपरि पतत्प्रालेयरूपेण तिमिरेण सञ्छन्नाः । स्वपतां हि द्वे तमसी, आभ्यन्तरं बाह्यं च ।

हिमं तदेव तमः तेनावृताः । अनेन प्रच्छादनपटाच्छन्नत्वं व्यज्यते । विपुष्पा इत्यनेन निमीलिताक्षत्वमुक्तम् । अनेन वनवासिनां दैन्यातिशय उक्तः । अत्रोत्प्रेक्षालङ्कारः ॥ २३ ॥ रुतं शब्दः । हिमार्द्रवालुकैः हिमसिक्तसिकतैः, अनेनापि ऋपिजनदैन्यमेव द्योत्यते ॥ २४ ॥ तुपारः हिमम् । अगाग्रस्थ मपि निर्मलशिलातलस्थमपि । रसवत् विषवत् " रसो रागे विषे द्रव्ये शृङ्गारादौ पराक्रमे " इति बाणः। शैत्यातिशयेन विपवदनुपादेयं भवतीत्यर्थः ।

बाष्पसञ्छन्नसलिला रुतविज्ञेयसारसाः । हिमार्द्रवालुकैस्तीरैः सरितो भान्ति साम्प्रतम् ॥२४॥ तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च । शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम् ॥ २५ ॥ जराजर्झरितैः पद्मैः शीर्णकेसरकर्णिकैः । नालशेषैर्हिमध्वस्तैर्न भान्ति कमलाकराः ॥ २६ ॥ अस्मिंस्तु पुरुषव्याघ्रः काले दुःखसमन्वितः । तपश्चरति धर्मात्मा त्वद्भक्त्या भरतः पुरे ॥ २७ ॥ त्यक्त्वा राज्यं च मानं च भोगांश्च विविधान् बहून् । तपस्वी नियताहारः शेते शीते महीतले ॥ २८ ॥ सोऽपि वेलामिमां नूनमभिषेकार्थमुद्यतः । वृतः प्रकृतिभिर्नित्यं प्रयाति सरयूनदीम् ॥ २९ ॥ अत्यन्तसुखसंवृद्धः सुकुमारः सुखोचितः । कथं न्वपररात्रेषु सरयूमवगाहते ॥ ३० ॥

एतेन राक्षसप्रकोपात् भवतश्चानुद्योगान्मुनिमनो दुःखितं भवतीति द्योत्यते ॥ २५ ॥ जरया चिरप्ररूढतया जर्झरितैः विवर्णैः । शीर्णकेसरकर्णिकैः शिथिलकिञ्जल्ककर्णिकैः पद्मैर्न भान्ति । स्पष्टं व्यङ्ग्यम् ॥२६॥ एवमृषिपीडातिशयेपि रामस्य राक्षसवधानुद्यमसुक्त्वा भरतस्य त्वदागमनव्यसनित्वा तद्दर्शनकालोपि सन्निहित इत्याशयेनाह–अस्मिन्नित्यादिना । दुःखसमन्वितः त्वद्विरहादिति शेषः ॥ २७ ॥ राज्यं राजत्वं प्रभुत्वमित्यर्थः । मानं राज पुत्रोहमित्यभिमानम् । भोगान् स्रक्चन्दनवनितादीन् । बहूनित्यपरित्याज्यत्वमुच्यते । तपस्वी तपस्विचिह्नजटादिमान् । नियताहारः फलमूलाद्यशनः । शीत इत्यनेनावरणराहित्यमुच्यते । महीतल इत्यनेन खट्वादिराहित्यम् ॥ २८ ॥ सोपीति । वेलां प्राप्येति शेषः । प्रकृतिभिरिति उपभोक्तुं व्यवस्यन्ति " पौरा वै धर्मवत्सलम् " इति वक्ष्यमाणरीत्या भरतभक्त्या त्वद्भक्त्या च भरतमनुसरन्तीभिरित्यर्थः ॥२९॥ अत्यन्तसुखसंवृद्धः राज्ञा उपलालितत्वात्



तत्राभ्यन्तरेण निद्रातमसा सङ्कुचिताः बाह्येन निशातमसा सञ्छन्नाः स्वपन्ति । वनराजयश्च स्वेषु पतितावश्यायतमस्सङ्कुचितपल्लवा उपरिपतितनीहारतमसा सञ्छन्नाः प्रसुप्ता इव लक्ष्यन्ते ॥२३॥२४॥ अगाधस्थमपि गम्भीरस्थमपि । अगाग्रस्थमिति पाठे–पर्वताग्रस्थमपीत्यर्थः । रसवत् रुचिकरम् ॥ २५ ॥ जरया जर्झरितैः

सुखसंवृद्धः, त्वयापि लालितत्वादत्यन्तसुखसंवृद्धः । सुकुमारः भवतोपि दृष्ट्यवेक्षणासहसौकुमार्यः । सुखोचितः त्वया सह वस्तुं योग्यः ननु त्वद्वियोगार्हः । कथं नु आत्मौपम्येन मन्यते स्वस्य रामविरहाभावेन शैत्यानुभवः तस्य रामतापात् 'उपतप्तोदका नद्यः' इत्युक्तरीत्या नदीनामपि रामविरहेणोष्णत्वाच्च शैत्यप्रसक्तिरेव नास्ति । अपररात्रेषु यथा नववैधव्याः स्त्रियः मनुष्यसञ्चारात् पूर्वमेव मनुष्यमुखमनवलोकयन्त्यो गच्छन्ति तथायमपि

पद्मपत्रेक्षणो वीरः श्यामो निरुदरो महान् । धर्मज्ञः सत्यवादी च ह्रीनिषेधो जितेन्द्रियः ॥ ३१ ॥ प्रियाभिभाषी मधुरो दीर्घबाहुररिन्दमः । सन्त्यज्य विविधान् भोगानार्यं सर्वात्मना श्रितः ॥ ३२ ॥ जितः स्वर्गस्तव भ्रात्रा भरतेन महात्मना । वनस्थमपि तापस्ये यस्त्वामनुविधीयते ॥ ३३ ॥ न पित्र्यमनुवर्तन्ते मातृकं द्विपदा इति । ख्यातो लोकप्रवादोऽयं भरतेनान्यथा कृतः ॥ ३४ ॥ भर्ता दशरथो यस्याः साधुश्च भरतः सुतः । कथं नु साम्बा कैकेयी तादृशी क्रूरशीलिनी ॥ ३५ ॥

कैकेयीपुत्रोऽयम् एतन्निमित्त एवानर्थ इति जना वक्ष्यन्तीति भीत्या अपररात्रेष्वेव गच्छति । सरयूमवगाहते निर्वेदातिशयेनातित्वरितगामिनीमपि सरयूं निर्भयोऽवगाहते । अवगाहते जले निमग्नश्चेन्मनुष्यादातव्यो भवति ॥३०॥ निरुदरः अतुन्दिलः । ह्रीनिषेधः ह्रिया लज्जया निषेधः अकृत्येभ्यो निवर्तनं यस्य सः । मधुरः मधुरवाक् सुन्दरो वा । आर्यं ज्येष्ठं त्वाम् सर्वात्मना करणत्रयेण श्रितः ॥ ३१ ॥ ३२ ॥ स्वर्गः रामप्राप्त्यन्तरायभूतः स्वर्गः जितः तिरस्कृतः । वनस्थमपि त्वां तापस्ये तापसकर्मविषये अनुविधीयते अनुकरोति । श्यन्नार्षः ॥ ३३ ॥ एवं प्रतिज्ञातराक्षसवधे विलम्बः कृतः, भरतक्लेशेन तत्रापि शीघ्रं गन्तव्यम् । अतः किमत्र कृत्यमिति सूचयित्वा सर्वस्यानर्थस्य मूलभूता कैकेयीत्याशयेनाह—न पित्र्यमित्यादिश्लोकद्वयेन । पित्र्यं शकलीकृतैः पर्णैः पत्रैः पुष्पदलैश्चोपलक्षितैः, पद्मैरिति शेषः । न भान्तीत्यन्वयः ॥ (जराजर्झरितैः पर्णैः इति पाठः )॥२६–३०॥ निरुदरः तनूदरः । ह्रीनिषेधः ह्रिया निषिद्धकर्मजुगुप्सोत्पादकतया परनारीविषये निषेधश्चक्षुरादीन्द्रियनिवर्तनं यस्य सः । तत्र हेतुः जितेन्द्रियः । मधुरः सुन्दरः । आर्यं ज्येष्ठं त्वाम् । वस्तुतस्तु—विविधान् भोगान् सन्त्यज्य सर्वात्मना श्रवणादिरूपनवविधभक्त्या आर्यं ब्रह्मादीनामपि पूज्यं त्वामेवाश्रितः ॥ ३१ ॥ ३२ ॥ स्वर्गो जितः सम्पादितः । वस्तुतस्तु तिरस्कृतः स्वर्गस्य त्वद्भक्तेरन्तरायरूपत्वादितिभावः । अत एव वनस्थमपि त्वां तापस्ये तापसकृत्ये स्थित्वा अनुविधीयते अनुकरोति सेवत इत्यर्थः ॥३३॥ पित्र्यं पितृस्वभावम् । द्विपदा मनुष्याः नानुवर्तन्ते अपितु मातृकं मातृस्वभावमनुवर्तन्त इति ख्यातः प्रसिद्धोऽयं लोकप्रवादः भरतेनान्यथाकृतः, मातृकृतस्यानयस्य परिहारादिति

पितृस्वभावम् । द्वे पदे येषां ते द्विपदाः मनुष्याः । अन्यथाकृतः पितृस्वभाव एवानुकृतो न मातृस्वभाव इत्यर्थः । भर्तेति साधुशब्दस्य भर्तरि भरते चान्वयः । तादृशीति पूर्वं कैकेय्युक्तस्मरणम् ॥ ३४ ॥ ३५ ॥ इत्येवमिति अनेन लक्ष्मणः प्रत्यूषे रामस्य ससीतस्य सरःस्नानादिक्लेशमालोक्य मुदुःखिततया कैकेयीं निन्दितुमुपक्रम्य झटिति निन्दायां क्रियमाणायां रामः कुप्येदिति प्रथमं हेमन्तस्वभावं प्रस्तुत्य तत्प्रसङ्गेन भरतमुपक्षिप्य कैकेयीं

इत्येवं लक्ष्मणे वाक्यं स्नेहाद् ब्रुवति धार्मिके । परिवादं जनन्यास्तमसहन् राघवोऽब्रवीत् ॥ ३६ ॥
न तेऽम्बा मध्यमा तात गर्हितव्या कथञ्चन । तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु ॥ ३७ ॥
निश्चितापि हि मे बुद्धिर्वनवासे दृढव्रता । भरतस्नेहसन्तप्ता बालिशीक्रियते पुनः ॥ ३८ ॥
संस्मराम्यस्य वाक्यानि प्रियाणि मधुराणि च । हृद्यान्यमृतकल्पानि मनःप्रह्लादनानि च ॥ ३९ ॥

निन्दति स्मेति गम्यते । स्नेहात् रामस्नेहात् । परिवादम् अपवादम् । असहन् असहमानः ॥ ३६ ॥ मध्यमा सर्वदशरथपत्न्यपेक्षया । कथंचन प्रासङ्गिककथायामपि मध्यमाम्बेति स्वाभिमानद्योतनाय । इक्ष्वाकुनाथस्य राजनि स्वर्गं गते अस्मासु च वनं गतेषु पूर्वतरास्मत्कुलमर्यादास्थापकस्य ॥ ३७ ॥ तनि०—तामेव 'तस्मिन् पुरुषव्याघ्र' इत्याद्युक्ताम् । इक्ष्वाकुनाथस्य "आस्फोटयन्ति पितरः" इत्यादिना इक्ष्वाकुभिः प्रार्थनीयस्य भरतस्य । पद्मपत्रेक्षण इत्याद्युक्तसद्गुणभरितस्य ॥ ३७॥ वनवासे निश्चिता दृढव्रतापि मे बुद्धिः भरते स्नेहसन्तप्ता सति बालिशीक्रियते बालबुद्धिरिव भवति, असम्पूर्णेऽपि वनवासकाले तद्दर्शने सञ्जातकुतूहला भवतीत्यर्थः ॥ ३८ ॥ स्नेहमेव प्रकाशयति—संस्मरामीत्यादिना । लोके कैश्चिदुक्तानि वाक्यानि प्रियाण्यपि कर्णकठोराणि भवन्तीति तद्व्युदासायाह मधुराणीति । हृद्यानि हृदयादनपेतानि । अमृतकल्पानि शुभोदर्काणि । इदानीमपि मनःप्रह्लादनानि ॥३९॥ तनि०—वाक्यानि अर्थपरिपूर्णानि । प्रियाणि श्रवणप्रियाणि । मधुराणि "माधुर्यं सुकुमारता" इत्याद्युक्तगुणवन्ति । एवं शब्दधर्मानुक्त्वा अर्थधर्मानाह हृद्यानीति । हृद्यानि हृदयाह्लादजननानि ।

भावः ॥ ३४ ॥ ३५ ॥ इतीति । स्नेहात् भरतविषयस्नेहात् ॥ ३६ ॥ कौसल्यासुमित्राव्यतिरिक्तमात्रभिप्रायेण कैकेयी मध्यमेत्युच्यते । अमध्यमेति वा छेदः । तामेव पूर्वोक्तामेव कुरु कथय ॥ ३७ ॥ वनवासे निश्चिता निश्चयवती । दृढव्रता मे बुद्धिः भरतस्नेहसन्तप्ता सती बालिशीक्रियते । भरतस्य सुगुणाश्रयस्य विश्लेषमसहमाना सती चाञ्चल्यं प्राप्नोतीति भावः ॥ ३८ ॥ कैश्चिदुच्यमानानि प्रियाण्यपि वाक्यानि कर्णकठोराणि भवन्ति तन्निरासायोक्तं मधुराणि । हृद्यानि

अमृतकल्पानि शर्करामध्वादिवदत्यन्तभोग्यानि । मनःप्रह्लादनानि विजातीयप्रत्ययमूलतया आनन्दैकजनकानि ॥ ३९ ॥ कदेति । भरतसाहित्याभावेन विद्यमानाभ्यां सीतालक्ष्मणाभ्यामपि विरहितमात्मानं मन्यते भरतस्नेहातिशयप्रकारोऽयम् ॥ ४० ॥ तनि०—रघुनन्दन शत्रुघ्नेन त्वया च सहितेन भरतेन कदा समेष्यामीति सङ्गतो भविष्यामीति योजनीयम् । चकारेण सीतासमुच्चयः । यावदनुरक्तमेलनेपि एकानुरक्तविरहे सर्वानुरक्तविरह इव आर्तिर्जायते । तस्यैकस्यापि मेलने अपूर्वसर्वसुहृज्जनमेलने इवातिहर्षो जायत इति । त्वया चेति लक्ष्मणमेलनस्य सिद्धत्वेपि असिद्धवत्कथनं भरतशत्रुघ्नविषयप्रेमातिशयेनेति भावः ॥ ४० ॥ इत्येवं विलपन्

कदान्वहं समेष्यामि भरतेन महात्मना । शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन ॥ ४० ॥ इत्येवं विलपंस्तत्र प्राप्य गोदावरीं नदीम् । चक्रेऽभिषेकं काकुत्स्थः सानुजः सह सीतया ॥ ४१ ॥ तर्पयित्वाथ सलिलैस्ते पितॄन् दैवतानि च । स्तुवन्ति स्मोदितं सूर्यं देवताश्च समाहिताः ॥४२॥ कृताभिषेकः स रराज रामः सीताद्वितीयः सह लक्ष्मणेन । कृताभिषेको गिरिराजपुत्र्या रुद्रः सनन्दी भगवानिवेशः ॥४३॥ इत्यार्षे० श्रीमदारण्यकाण्डे षोडशः सर्गः ॥१६॥

कृताभिषेको रामस्तु सीता सौमित्रिरेव च । तस्माद्गोदावरीतीरात्ततो जग्मुः स्वमाश्रमम् ॥ १ ॥

भरतस्नेहकृतानि बहूनि वाक्यानि जल्पन्नित्यर्थः । अभिषेकं स्नानम् ॥ ४१ ॥ तर्पयित्वेति ऋषितर्पणस्याप्युपलक्षणम् । स्तुवन्ति स्म उपतस्थिरे "मित्रस्य" इत्यादिमन्त्रैः । सीतात्वमन्त्रेण । देवताः संध्यादिदेवताः ॥४२॥ रुद्रः सनन्दीत्युपमया दुष्प्रधर्षणत्वमुच्यते । रुद्रः सविष्णुर्भगवानिवेश इति न क्वचिदपि कोशे दृश्यते । कश्चिद्दृश्यत इत्याह तदा अभूतोपमेति युक्तमिति ज्ञेयम् ॥ ४३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥ एवं रामतपोविशेषद्योतनाय हेमन्तं प्रथमप्रवृत्तमुपवर्ण्य ततस्त्रिषु संवत्सरेष्वतीतेषु कदाचिच्चैत्रमासे प्रसक्तं भाविसकलराक्षसवधनिदानत्वेन शूर्पणखावृत्तान्तमुपक्षिपति सप्तदशे—कृताभिषेक इत्यादि । ततः अभिषेकानन्तरभाविकृत्यानन्तरम् ।

हृदयादनपेतानि हृदयप्रियत्वस्य तु प्रागेवोक्तत्वात् । यद्वा हृद्यानि हृदयङ्गमानि " बन्धनेचर्षौ " इति यत्प्रत्ययः । वश्यमन्त्रवत्परहृदयबन्धनानीति यावत् । मनःप्रह्लादनानि नितान्तसुखकराणि ॥ ३९–४३ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां आरण्यकाण्डव्याख्यायां षोडशः सर्गः ॥ १६॥ कृतेति ।

आश्रमं तपोवनम् । " तपोवने मठे ब्रह्मचर्यादावाश्रमोऽस्त्रियाम् " इति बाणः ॥१॥ पूर्वाह्णे भवं पौर्वाह्णिकम् ब्रह्मयज्ञादि न त्वग्निकृत्यम्, अनुदितहोमत्वेन तस्य सूर्योपस्थानानन्तरभावित्वाभावात् । पर्णशालामुपागमत् आश्रमे पर्णशालातो बहिरेव कर्तव्यमनुष्ठाय वासस्थानमगमदित्यर्थः ॥ २ ॥ कथाः पुराणेतिहासकथाः । चकार उवाचेत्यर्थः । तथा चोक्तं धातुवृत्तौ " करोतिरभूतप्रादुर्भावे वर्तते अश्मानमितः कुरु पादं जले कुरु यः प्रथमः

आश्रमं तमुपागम्य राघवः सह लक्ष्मणः । कृत्वा पौर्वाह्णिकं कर्म पर्णशालामुपागमत् ॥२॥ उवास सुखितस्तत्र पूज्यमानो महर्षिभिः । लक्ष्मणेन सह भ्रात्रा चकार विविधाः कथाः ॥३॥ स रामः पर्णशालायामासीनः सह सीतया । विरराज महाबाहुश्चित्रया चन्द्रमा इव ॥ ४ ॥ तथासीनस्य रामस्य कथासंसक्तचेतसः । तं देशं राक्षसी काचिदाजगाम यदृच्छया ॥ ५ ॥ सा तु शूर्पणखा नाम दशग्रीवस्य रक्षसः । भगिनी राममासाद्य ददर्श त्रिदशोपमम् ॥ ६ ॥ सिंहोरस्कं महाबाहुं पद्मपत्रनिभेक्षणम् । आजानुबाहुं दीप्तास्यमतीव प्रियदर्शनम् ॥ ७ ॥ गजविक्रान्तगमनं जटामण्डलधारिणम् । सुकुमारं महासत्त्वं पार्थिवव्यञ्जनान्वितम् ॥ ८ ॥ राममिन्दीवरश्यामं कन्दर्पसदृशप्रभम् । बभूवेन्द्रोपमं दृष्ट्वा राक्षसी काममोहिता ॥ ९ ॥ सुमुखं दुर्मुखी रामं वृत्तमध्यं महोदरी । विशालाक्षं विरूपाक्षी सुकेशं ताम्रमूर्धजा ॥ १० ॥

शकलः परापतेत् सस्मरुः कार्यः चोरंकारमाक्रोशतीत्यादौ अवस्थापननिर्मलीकरणोपादानोच्चारणादौ प्रयोगात् । चौरंकारमित्यत्र चोरशब्दमुच्चार्येत्यर्थः । नह्यत्र चोरः क्रियते अर्थनिर्देशस्तूपलक्षणम् " इति ॥ ३ ॥ चित्रया चित्रानक्षत्रेण । चित्रापौर्णमास्यामिति भावः ॥ ४ ॥ रामस्यासीनस्य रामे आसीने ॥ ५ ॥ राक्षसीमृषिर्विशेषयति–सेति । राममासाद्य ददर्श रामं दृष्ट्वा आससादेत्यर्थः । समानकर्तृकत्वमात्रे ल्यप् ॥ ६ ॥ सिंहोरस्कं सिंहशब्दः श्रेष्ठवाची, विशालोरस्कमित्यर्थः । महासत्त्वं महाबलम् । पार्थिवव्यञ्जनानि राजलक्षणानि । कामकृतमोहहेतवो विशेषणानि ॥७–९॥ तस्यास्तस्मिन् मनः



ततः अवगाहनानन्तरम् ॥ १ ॥ पौर्वाह्णिकीं प्रातर्होमादिकम् ॥ २–४ ॥ कथासंसक्तचेतसः सतः यदृच्छया ॥ ५–१० ॥

प्रवृत्तिं मुनिः परिहसति—सुमुखमित्यादिना । वृत्तमध्यं तनुमध्यम् । विरूपाक्षी विकटनेत्री । सुकेशं नीलकेशम् ॥ १० ॥ प्रीतिरूपं प्रियरूपम् । प्रीयत इति प्रीतिः । विरूपा विकटरूपा । सुस्वरं स्निग्धगम्भीरस्वरम् । तरुणं युवानं सौम्यं चेत्यर्थः । दारुणेति प्रतियोगिनिर्देशात् । दक्षिणम् ऋजुभाषिणम् । वामभाषिणी वक्रभाषिणी ॥११॥ न्यायवृत्तम् उचिताचारम् । शरीरजो मन्मथः ॥१२॥ जटीति तापसरूपेण जटी । कामुकरूपेण सभार्यः । क्षत्रियरूपेण

प्रीतिरूपं विरूपा सा सुस्वरं भैरवस्वरा । तरुणं दारुणा वृद्धा दक्षिणं वामभाषिणी ॥ ११ ॥ न्यायवृत्तं सुदुर्वृत्ता प्रियमप्रियदर्शना । शरीरजसमाविष्टा राक्षसी वाक्यमब्रवीत् ॥ १२ ॥ जटी तापसरूपेण सभार्यः शरचापधृत् । आगतस्त्वमिमं देशं कथं राक्षससेवितम् । किमागमनकृत्यं ते तत्त्वमाख्यातुमर्हसि ॥१३॥ एवमुक्तस्तु राक्षस्या शूर्पनख्या परन्तपः । ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे ॥१४॥ अनृतं नहि रामस्य कदाचिदपि सम्मतम् । विशेषेणाश्रमस्थस्य समीपे स्त्रीजनस्य च ॥ १५ ॥ आसीद्दशरथो नाम राजा त्रिदशविक्रमः । तस्याहमग्रजः पुत्रो रामो नाम जनैः श्रुतः ॥ १६ ॥ भ्राताऽयं लक्ष्मणो नाम यवीयान् मामनुव्रतः ॥ १७ ॥ इयं भार्या च वैदेही मम सीतेति विश्रुता । नियोगात्तु नरेन्द्रस्य पितुर्मातुश्च यन्त्रितः ॥ १८ ॥ धर्मार्थं धर्मकांक्षी च वनं वस्तु मिहागतः । त्वां तु वेदितुमिच्छामि कथ्यतां कासि कस्य वा ॥ १९ ॥

शरचापधृत् । राक्षससेवितम् एतद्रूपासहैः सेवितामित्यर्थः ॥१३॥ शूर्पनख्येति छान्दसौ ङीप्णत्वाभावौ । ऋजुबुद्धितया कुटिलेष्वप्यकुटिलबुद्धितया । आश्रमस्थस्य तपोवनस्थस्य ॥ १४ ॥ १५ ॥ यवीयान् कनिष्ठः । अनुव्रतः अनुसरणं व्रतं यस्य सः ॥ १६ ॥ १७ ॥ वैदेही विदेहराजपुत्री । मातुः कैकेय्याः । यन्त्रितः नियतः, चोदित इति यावत् ॥ १८ ॥ धर्मकाङ्क्षी पितृवाक्यपालनरूपधर्मकाङ्क्षी । धर्मार्थं तपोरूपधर्मसिद्ध्यर्थम् । वनं वस्तुं यन्त्रितः सन्निहागत इत्यन्वयः । कासीति नामजातिप्रश्नः । कस्येति पित्रादिविषयः प्रश्नः ॥ १९ ॥

प्रीतिरूपम् आनन्दप्रदरूपम् । दारुणा निर्घृणा । तरुणं सघृणम् । दक्षिणम् ऋजुभाषिणम् । वामभाषिणी वक्रोक्तिशीला । न्यायवृत्तं शास्त्रविहिताचारम् । शरीरजसमाविष्टा मदनाकुला ॥ ११-१७ ॥ नियोगात् आज्ञाबलात् । यन्त्रितः प्रचोदितः ॥ १८ ॥ धर्मकांक्षी पितृवाक्यनिर्वहणरूपधर्माभिलाषी । धर्मार्थं तस्यैव धर्मस्य

नहीति । तावत्कात्स्न्र्येन । मनोज्ञाङ्गी न भवसि, मां प्रति राक्षसीति प्रतिभासि । यद्वा राक्षससेवित इति तद्वचनात् राक्षसीत्वमित्याशङ्क्य परिहरति । मनोज्ञाङ्गी त्वं राक्षसीति न प्रतिभासीति रामदर्शनकाले तथारूपं कृतवती कामरूपत्वात् । दुर्मुखीत्यादिकं वास्तवाभिप्रायेण मुनिनोक्तमिति ज्ञेयम् ॥ २० ॥ तत्त्वार्थं परमार्थम् ॥ २१ ॥ कामरूपिणी इतोप्यधिकरूपधारणे समर्था । सर्वभयङ्करेति वक्ष्यमाणरतिप्रति

नहि तावन्मनोज्ञाङ्गी राक्षसी प्रतिभासि मे । इह वा किन्निमित्तं त्वमागता ब्रूहि तत्त्वतः ॥ २० ॥ साऽब्रवी द्वचनं श्रुत्वा राक्षसी मदनार्दिता । श्रूयतां राम वक्ष्यामि तत्त्वार्थं वचनं मम ॥२१॥ अहं शूर्पणखा नाम राक्षसी कामरूपिणी । अरण्यं विचरामीदमेका सर्वभयङ्करा ॥ २२ ॥ रावणो नाम मे भ्राता बलीयान् राक्षसेश्वरः । वीरो विश्रवसः पुत्रो यदि ते श्रोत्रमागतः ॥ २३॥ प्रवृद्धनिद्रश्च सदा कुम्भकर्णो महाबलः । विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः ॥ २४ ॥ प्रख्यातवीर्यौ च रणे भ्रातरौ खरदूषणौ । तानहं समतिक्रान्ता राम त्वापूर्वदर्शनात् । समुपेतास्मि भावेन भर्तारं पुरुषोत्तमम् ॥ २५ ॥

बन्धकनिवारणक्षमतोक्ता ॥ २२ ॥ कासीति प्रश्नस्योत्तरमुक्त्वा कस्येत्यस्य प्रश्नस्योत्तरमाह–रावण इत्यादिना ॥ २३ ॥ कुम्भकर्णश्च मे भ्रातेत्यन्वयः । विभीषणस्तु तस्य विशेषोस्ति सोपि मे भ्रातेत्यर्थः । तं विशेषमाह धर्मात्मेति । धर्मात्मा धर्मस्वभावः राक्षसचेष्टितो न, जन्मना राक्षसोपि न राक्षसव्यापार इत्यर्थः ॥ २४ ॥ एतद्देशागमने निमित्तमाह–प्रख्यातेति । खरदूषणौ जनस्थानस्थावितिशेषः । एवं भ्रातृकथनेन रामस्य स्वपरिग्रहे भीतिर्माभूदित्यताह तानहमिति । अतिक्रान्ता अतिक्रम्य वर्तमाना, स्वच्छन्दचारिणीत्यर्थः । त्वा त्वाम् । पूर्वदर्शनात् प्रथमदर्शनमारभ्य । अपूर्वदर्शनादिति वा छेदः । देवदानवमर्त्येष्वितःपूर्वमदृष्टत्वद्रूपदर्शनाद्धेतोः । भावेन हृदयेन रत्याख्यभावेन वा भर्तारं समुपेतास्मि । तत्र हेतुः

परिपालनाय । का किन्नामधेया । कस्य जन्मादिना सम्बन्धिनी ॥ १९–२४ ॥ तान् रावणादीन् । समतिक्रान्ता त्वदभिसरणे तन्निमित्तभयरहितेत्यर्थः । हे राम ! त्वा त्वां पूर्वदर्शनात् प्रथमदर्शनमारभ्य । अपूर्वदर्शनादितिपाठे–अपूर्वदर्शनात् देवदानवमर्त्येष्वितः प्रागदृष्टदिव्यत्वद्रूपदर्शनाद्धेतोः त्वां भर्तारं समुपेतास्मीति

पुरुषोत्तममिति ॥ २५ ॥ सीतायां विद्यमानायां किं त्वयेत्यत्राह-अहमिति । स्वच्छन्दबलगामिनी स्वेच्छानुगुणबलगमना च ॥ २६ ॥ सीतां निन्दति-विकृता चेति । विकृतेति विषमशरीरत्वमुच्यते । करालां विकृताम् "करालो दन्तुरे तुङ्गे विशाले विकृतेपि च" इति वैजयन्ती ॥२७॥ निर्णतं निरतिशयेन नतं निम्नमुदरं यस्याः सा निर्णतोदरी ॥२८॥२९॥ तां मदिरेक्षणां मदयति दर्पयतीति मदिरम् तादृशमीक्षणं यस्यास्ताम्। "मद दर्पशोभ

अहं प्रभावसम्पन्ना स्वच्छन्दबलगामिनी । चिराय भव मे भर्ता सीतया किं करिष्यसि ॥ २६ ॥ विकृता च विरूपा च न चेयं सदृशी तव । अहमेवानुरूपा ते भार्यारूपेण पश्य माम् ॥ २७ ॥ इमां विरूपामसतीं करालां निर्णतोदरीम् । अनेन ते सह भ्रात्रा भक्षयिष्यामि मानुषीम् ॥ २८ ॥ ततः पर्वतशृङ्गाणि वनानि विविधानि च । पश्यन् सह मया कान्त दण्डकान् विचरिष्यसि ॥ २९ ॥ इत्येवमुक्तः काकुत्स्थः प्रहस्य मदिरेक्षणाम् । इदं वचन मारेभे वक्तुं वाक्यविशारदः ॥ ३० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये श्रीमदारण्यकाण्डे सप्तदशः सर्गः ॥ १७ ॥

ततः शूर्पणखां रामः कामपाशावपाशिताम् । स्वच्छया श्लक्ष्णया वाचा स्मितपूर्वमथाब्रवीत् ॥ १ ॥
कृतदारोऽस्मि भवति भार्येयं दयिता मम । त्वद्विधानां तु नारीणां सुदुःखा ससपत्नता ॥ २ ॥

नयोः" इत्यस्माद्धातोः "इषिमदि-" इत्यादिना किरच् प्रत्ययः। अत्र सार्धत्रिंशच्छ्लोकाः ॥३०॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखला ख्याने आरण्यकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७॥ अथ खरक्रोधहेतुः शूर्पणखाविरूपकरणमष्टादशे-तत इत्यादि । ततः तत्र पर्णशालायाम् । अथ शूर्पणखावचनानन्तरम् । स्वच्छया स्पष्टार्थया । श्लक्ष्णया मृद्व्या । काम एव पाशः तेनावपाशितां सञ्जातपाशां बद्धामित्यर्थः ॥ १ ॥ कृतदारः

सम्बन्धः ॥ २५ ॥ प्रभावसम्पन्ना प्रकर्षेण भावेन शृङ्गाराख्येन सम्पन्ना स्वच्छन्दबलगामिनी च ॥ २६ ॥ सीतासौन्दर्यदर्शनमोहितापि जगन्मोहनदिव्यमङ्गलविग्रह श्रीरामदर्शनजनितमदनातुरा आत्मनः श्रीरामपरिग्रहाय शूर्पणखा देवीं दूषयति-विकृतेति ॥ २७ ॥ निर्णतोदरीं लम्बोदरीम् ॥ २८ ॥ २९ ॥ मदिरेक्षणां रक्त लोचनाम् ॥३०॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां सप्तदशः सर्गः ॥ १७ ॥ अवपाशितां बद्धाम् । स्वेच्छयेति पाठे-स्वेच्छया भ्रातृविषयपरिहासरूपविनोदेन, अत एव स्मितपूर्वमब्रवीत् ॥१॥ हे भवति ! अस्मीत्यहमर्थे । कृतदारः ऊढभार्यः । भार्या चेयं सन्निहितेत्यर्थः ॥ २ ॥

स्वीकृतभार्यः । करोतेरनेकार्थत्वात् अस्मीत्यहमित्यस्मिन्नर्थे निपातः । भवतीति शूर्पणखायाः सम्बोधनम् । इष्टात्वेन त्यक्तुमनर्हेत्याह दयितेति । तर्हि "तुल्योनेकत्रदक्षिणः" इत्युक्तदक्षिणो भवेत्याशङ्क्याह त्वद्विधानामिति । सुदुःखा सुतरां दुःखकरी । सपत्न्या सहिता ससपत्नी तस्या भावः ससपत्नता "त्वतलोर्गुणवचनस्य" इति पुंवद्भावः । गुणत्वं चास्य न शुक्लतादिवत् किन्तु कठिनत्वमित्यादिवत् द्रव्यत्वव्यावृत्तिः । अतः सपत्नीसाहित्य

अनुजस्त्वेष मे भ्राता शीलवान् प्रियदर्शनः । श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्यवान् ॥३॥ अपूर्वी भार्यया चार्थी तरुणः प्रियदर्शनः । अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति ॥ ४ ॥ एनं भज विशालाक्षि भर्तारं भ्रातरं मम । असपत्ना वरारोहे मेरुमर्कप्रभा यथा ॥५॥ इति रामेण सा प्रोक्ता राक्षसी काममोहिता । विसृज्य रामं सहसा ततो लक्ष्मणमब्रवीत् ॥६॥ अस्य रूपस्य ते युक्ता भार्याहं वरवर्णिनी । मया सह सुखं सर्वान् दण्डकान् विचरिष्यसि ॥७॥

रूपगुणवचनत्वात् पुंवद्भावः ॥ २ ॥ अकृतदारः असहकृतदार इत्यर्थः । "न वितथा परिहासकथास्वपि" इत्युक्तेः "अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन" इत्युक्तेश्च अकृतदार इति नार्थः ॥ ३ ॥ पूर्वं भार्यासुखं ज्ञातमनेन । पूर्वी "पूर्वादिनिः" इति इनिः । न पूर्वी अपूर्वी, चिरादज्ञातभार्यासुख इत्यर्थः । अतएव भार्यया अर्थी प्रयोजनवान् । इदं वचनद्वयं स्वभार्याविषयकान्तराशयेन प्रयुक्तम् । अनुरूपश्च तेभर्तेत्यत्र अभर्तेति च्छेदेनान्तराशयः । रूपस्यास्य कुत्सितस्य रूपस्येत्यर्थः ॥ ४ ॥ विशालाक्षी वर्तुलतया विशालाक्षीत्वमपि गम्यते । अर्कप्रभा मेरुं यथा भजति तथेत्यन्वयः । अर्कप्रभा मेरुं प्राप्ता यथा निवर्तते तथेत्यप्यर्थः । एवं रामो दयालुतया स्वस्मिन् काममोहेन प्राप्तायाः स्त्रियाः सहसा धिक्कारेण दुःखं मा भूदिति परिहास "गुरुणापि समं हास्यं कर्तव्यं कुटिलं विना" इति न्यायेन भ्रातृविषयमपि परिहासं प्रयोजयन् रामो लक्ष्मणविषयत्वेन प्रवृत्त्याभासप्रत्यायिकैः तात्पर्येण निवृत्तिप्रतिपादकैः श्लिष्टशब्दैरुत्तरमनुभाषते—अनुज इत्यादिना । शीलवत्प्रियदर्शनत्वादिगुणयुक्तः । प्रियं दर्शनं यस्य सः । अकृतदारः अनूढभार्यश्च ॥३॥ अपूर्वी भार्यया चार्थीति पाठानुसारेण व्याख्यायते । पूर्वं भार्यासुखमनेन ज्ञातमिति पूर्वी स न भवतीत्यपूर्वी, अत एव भार्यार्थी प्रयोजनवांश्च । अपूर्वभार्यया चार्थीति पाठे अयमर्थः—अपूर्वा नूतना या भार्या तामेवार्थयतीत्यर्थे सा च त्वमेव भविष्यसीति परिहासानुकूलः प्रातीतिकोऽर्थः । अन्तराशयस्तु अकृतदारः अकृतपरदारपरिग्रहः, असन्निहितभार्यो वा । अपूर्वभार्यया प्रथमभार्ययैवार्थी चरितार्थः । शीलवान् एकपत्नीव्रतशीलः । प्रियदर्शनः प्रियेषु मित्रेषु दर्शनं दृष्टिर्यस्य स तथोक्तः । ते अभर्तेति छेदः । अनुरूपः स्वभार्यानुरूप इति यावत् । अस्य रामस्य योग्य इति शेषः । भविष्यति काकाक्षरेण भविष्यतीत्यर्थः । यद्वा अस्य रूपस्यानुरूपो भविष्यतीति

कथां प्रवर्तयामास ॥ ५-७ ॥ शूर्प इव नखो यस्याः सा शूर्पणखी । संज्ञाया अविवक्षितत्वात् "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीष् । असंज्ञात्वादेव "पूर्वपदात्संज्ञायामगः" इति णत्वाभावः ॥८॥ दासस्य मे भार्या भूत्वा कथं दासी भवितुमिच्छसि। कस्य दासस्त्वमित्यत्राह सोऽहमिति। अहमार्येण ज्येष्ठेन भ्रात्रा। परवान् नाथवान् "दूरानात्मोत्तमाः पराः" इत्यमरः। तस्य दासोऽहमित्यर्थः। अकमलवर्णिनीत्यपि च्छेदः ॥९॥ सिद्धार्था

एवमुक्तस्तु सौमित्री राक्षस्या वाक्यकोविदः। ततः शूर्पनखीं स्मित्वा लक्ष्मणो युक्तमब्रवीत् ॥८॥ कथं दासस्य मे दासी भार्या भवितुमिच्छसि। सोऽहमार्येण परवान् भ्रात्राकमलवर्णिनि ॥९॥ समृद्धार्थस्य सिद्धार्थामुदितामलवर्णिनी। आर्यस्य त्वं विशालाक्षि भार्या भव यवीयसी ॥ १० ॥ एनां विरूपामसतीं करालां निर्णतोदरीम्। भार्यां वृद्धां परित्यज्य त्वामेवैष भजिष्यति ॥ ११ ॥ को हि रूपमिदं श्रेष्ठं सन्त्यज्य वरवर्णिनि। मानुषीषु वरारोहे कुर्याद्भावं विचक्षणः ॥ १२ ॥ इति सा लक्ष्मणेनोक्ता कराला निर्णतोदरी। मन्यते तद्वचस्तथ्यं परिहासाविचक्षणा ॥ १३ ॥ सा रामं पर्णशालायामुपविष्टं परंतपम्। सीतया सह दुर्धर्षमब्रवीत् काममोहिता ॥१४॥ एनां विरूपामसतीं करालां निर्णतोदरीम्। वृद्धां भार्यामवष्टभ्य मां न त्वं बहुमन्यसे ॥ १५ ॥

सिद्धनिवृत्तिः। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। अमुदिता मलवर्णिनीत्यपि। यवीयसी कनिष्ठा हीना च ॥ १० ॥ सीतायां विद्यमानायां कथं मां परिग्रहीष्यसीत्यत्राह—एनामिति। एतादृशावस्थां त्वामेव परित्यज्य सीतां भजिष्यतीति हार्दोऽर्थः। असतीम् अप्रशस्तामिति सीतापक्षे, अतो न पुरः स्फूर्तिकदोषः। करालां दन्तुराम्। निर्णतं निरतिशयम् उदरं यस्यास्ताम् ॥ ११ ॥ को हीति विपरीतलक्षणा ॥ १२ ॥ परिहासाविचक्षणा परिहासानभिज्ञा ॥ १३ ॥ पर्णशालायामित्यनेन लक्ष्मणो बहिरेव स्थित इतिं गम्यते ॥ १४ ॥ अवष्टभ्य अवलम्ब्य ॥ १५ ॥

काकुः ॥४-७॥ एवमिति। भर्तारं महास्यकर्मणा अस्मत्पोषकमित्यन्तराशयः ॥८॥ आर्येण परवान् तदधीनः दासस्य मे भार्या सती दासी भवितुं कथमिच्छसीति योजना ॥ ९-१४ ॥ गुरुणापि समं हास्यं कर्तव्यं कुटिलं विनेति न्यायेन लक्ष्मणः सीतायामपि परिहासं प्रयुङ्क्ते—एनामिति। प्रातीतिकोर्थः स्पष्टः। वस्तुतस्तु विरूपां

स०—आर्येण परवान् आर्याभिन्नपरवान्। कमलवर्णिनि कमलसदृशवर्णवति। पुण्डरीकवंयशस्विनीति वा। "वर्णो रूपयशोऽक्षरे" इति विश्वः ॥ ९ ॥ अमलवर्णिनि शुद्धाक्षरालापे ॥ १० ॥

पश्यतः तव त्वयि पश्यति । निस्सपत्ना निष्प्रतिबन्धिका ॥ १६ ॥ अलातसदृशेक्षणा निर्ज्वालकाष्ठाग्नितुल्येक्षणा । उल्का निर्गतज्वाला सा चोत्पात कालभाविनी प्रकृते विवक्षिता ॥ १७ ॥ निगृह्य हुंकारेण प्रातिषिद्ध्य ॥ १८ ॥ अनार्यैः दुर्जनैः । कथञ्चिज्जीवर्ती शूर्पणखायाः क्रौर्यमालोक्य कथञ्चित् स्वास्थ्यमापन्नाम् ॥ १९ ॥ इमामिति । पूर्वमेव विरूपां पुनर्वैरूपयेति भावः । एतावत्पर्यन्तमपराधाभावात्तूष्णीं स्थितम्, अद्य सीताक्रमण

अद्येमां भक्षयिष्यामि पश्यतस्तव मानुषीम् । त्वया सह चरिष्यामि निस्सपत्ना यथासुखम् ॥ १६ ॥ इत्युक्त्वा मृगशावाक्षीमलातसदृशेक्षणा । अभ्यधावत् सुसंक्रुद्धा महोल्का रोहिणीमिव ॥ १७ ॥ तां मृत्युपाशप्रतिमा मापतन्तीं महाबलः । निगृह्य रामः कुपितस्ततो लक्ष्मणमब्रवीत् ॥ १८ ॥ क्रूरैरनार्यैः सौमित्रे परिहासः कथ ञ्चन । न कार्यः पश्य वैदेहीं कथञ्चित् सौम्य जीवतीम् ॥ १९ ॥ इमां विरूपामसतीमतिमत्तां महोदरीम् । राक्षसीं पुरुषव्याघ्र विरूपयितुमर्हसि ॥ २० ॥ इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य पार्श्वतः । उद्धृत्य खड्गं चिच्छेद कर्णनासं महाबलः ॥२१॥ निकृत्तकर्णनासा तु विस्वरं सा विनद्य च । यथागतं प्रदुद्राव घोरा शूर्पणखा वनम् ॥२२॥

व्याजेनेमां विरूपयेत्यर्थः ॥ २० ॥ तस्याः कर्णनासमित्यन्वयः । प्राण्यङ्गत्वादेकवद्भावः । रामे बद्धभावाया अपि शूर्पणखायास्तदीयापचारेण हानि र्जातेत्यनुसन्धेयम् ॥ २१ ॥ यथागतम् आगतमार्गमनतिक्रम्य वनं प्रदुद्रावेति सम्बन्धः ॥ २२ ॥

विशेषरूपां त्रिलोकसुन्दरीमित्यर्थः । असतीं न विद्यते अन्या सती यस्याः सा असती, परमपतिव्रता तामित्यर्थः । करालासुन्नताम् "करालो दन्तुरे तुङ्गे तरुणेऽपि च कथ्यते" इति निघण्टुः । निर्णतोदरीं निर्णतं निम्नमुदरं यस्यास्सा ताम्, तनुमध्यामित्यर्थः । वृद्धां ज्ञानशीलगुणवृद्धामित्यर्थः ॥१५॥१६॥ अलातम्, उल्मुकम् । महोल्काः क्रूरग्रहाः ॥ १७ ॥ मृत्युपाशप्रतिमां यमपाशसदृशीम् । निगृह्य प्रतिरुद्ध्य जीवतीम् शूर्पणख्या भीषणतामालोक्य कथञ्चित्स्वास्थ्यमापन्नाम् ॥१८–२०॥ कर्णनासमित्यत्र प्राण्यङ्गत्वादेकवद्भावः ॥ २१–२२ ॥

टीका०—कर्णनासमित्युपलक्षणम् । स्तनोष्ठमपीत्यर्थः । प्राण्यङ्गत्वादेकवद्भावः । उक्तं च भारते—" निकृत्तकर्णनासौष्ठां चकार रघुनन्दनः " इति । स्कान्दे च—" लक्ष्मणस्तूणमुत्थाय करवालेन वीर्यवान् । कर्णौ स्तनौ नासिकां च आच्छिनद्रामशासनात् । " इति ॥ २१ ॥

शोणितोक्षिता रक्तेन सिक्ता । नादान्ननाद नादान् चकारेत्यर्थः । ओदनपाकं पचतीतिवत् । प्रावृषि वर्षाकाले ॥ २३ ॥ विक्षरन्ती स्रवन्ती । रुधिरं रक्तम् । प्रगृह्य उद्यम्य ॥ २४ ॥ तं रामवध्यत्वेन प्रसिद्धम् । यथाशनिः अशनिरिव गगनात् भूमौ पपात ॥ २५ ॥ उत्तरसर्गार्थमेकेन संगृह्णाति—ततः सभार्यमिति । भयजो मोहो भयमोहः निस्संज्ञता तेन मूर्च्छिता व्याप्ता । राघवं वनमागतं शशंस आत्मविरूपणं च सर्वं शशंस,

सा विरूपा महाघोरा राक्षसी शोणितोक्षिता । ननाद विविधान्नादान् यथा प्रावृषि तोयदः ॥ २३ ॥ सा विक्षरन्ती रुधिरं बहुधा घोरदर्शना । प्रगृह्य बाहू गर्जन्ती प्रविवेश महावनम् ॥ २४ ॥ ततस्तु सा राक्षससङ्घसंवृतं खरं जनस्थानगतं विरूपिता । उपेत्य तं भ्रातरमुग्रदर्शनं पपात भूमौ गगनाद्यथाशनिः ॥ २५ ॥ ततः सभार्यं भयमोहमूर्च्छिता सलक्ष्मणं राघवमागतं वनम् । विरूपणं चात्मनि शोणितोक्षिता शशंस सर्वं भगिनी खरस्य सा ॥ २६ ॥

इत्यार्षे श्रीरामायणे वाल्मीकिये आदिकाव्ये श्रीमदारण्यकाण्डे अष्टादशः सर्गः * ॥ १८ ॥

तां तथा पतितां दृष्ट्वा विरूपां शोणितोक्षिताम् । भगिनीं क्रोधसन्तप्तः खरः पप्रच्छ राक्षसः ॥ १ ॥

उत्तिष्ठ तावदाख्याहि प्रमोहं जहि सम्भ्रमम् । व्यक्तमाख्याहि केन त्वमेवंरूपा विरूपिता ॥ २ ॥

समूलं शशंसेत्यर्थः । खरस्य भगिनी सपत्नीमातृपुत्रत्वान्मातृष्वसेयत्वाच्चेति पूर्वमुपपादितम् ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभू० रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने अष्टादशः सर्गः ॥ १८ ॥ अथ खरवधमूलभूतः खरक्रोध उच्यते एकोनविंशे—तामित्यादि । भगिनीं ज्येष्ठाम् । "अत्तिका भगिनी ज्येष्ठा" इत्यमरः ॥ १ ॥ उत्तिष्ठेति । प्रमोहो विसंज्ञता । सम्भ्रमः चित्ताप्रतिष्ठा । एवंरूपा यथा भवसि तथा विरूपितेत्यर्थः ॥ २ ॥

प्रगृह्य उद्धृत्य ॥ २४ ॥ ततस्सभार्यमित्युत्तरसर्गार्थसङ्ग्रहश्लोकः ॥ २५ ॥ भयमोहाभ्यां मूर्च्छिता व्याप्ता ॥ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायामष्टादशः सर्गः ॥ १८ ॥ १ ॥ उत्तिष्ठेति । प्रमोहं विसंज्ञताम् । सम्भ्रमं चित्तचाञ्चल्यम् ॥ २–४ ॥

* सर्गफलम्—"कर्णनासापहारं च शृण्वतां पठतामपि । न जातु मानभङ्गः स्याद्रघुनाथप्रसादतः ।" इति स्कान्दे ॥

---

१ व्यक्तमाख्याहीत्यर्धमारभ्य देवगन्धर्वभूतानामित्यर्धपर्यन्तं विद्यमाना नःमष्टानामर्धानां पौर्वापर्यं केषुचित्पुस्तकेषु—यस्त्वामद्य । बलविक्रमसम्पन्ना । इमामवस्थां । देवगन्धर्व । व्यक्तमाख्याहि । कः कृष्णसर्पं । तुदत्यभि । कः कालपाशं । एवं क्रमेण दृश्यते ।

उत्तरकालं एवापकर्त्तुरनिष्टावाप्तिं सूचयन् पृच्छति—क इति । कृष्णेत्यमोघविषत्वव्यञ्जनाय । आसीनं निश्चलमित्यर्थः । आशिषि दंष्ट्रायां विषं यस्येति सर्पविशेषणम् । पृषोदरादित्वात्सकारलोपः । "आशीरुरगदंष्ट्रायां प्रियवाक्याभिषङ्गयोः" इति निघण्टुः । ईकारान्तोप्याशीशब्दोऽस्ति । तुदति व्यथयति । अभिसमापन्नम् आभिमुख्येनागतमिति शीघ्रप्रतीकारमूलम् । अङ्गुल्यग्रेण लीलयेति प्रभावानभिज्ञत्वोक्तिः । अनेन स्वस्य लीलया

कः कृष्णसर्पमासीनमाशीविषमनागसम् । तुदत्यभिसमापन्नमङ्गुल्यग्रेण लीलया ॥ ३ ॥ कः कालपाशमासज्यं कण्ठे मोहान्न बुद्ध्यते । यस्त्वामद्य समासाद्य पीतवान् विषमुत्तमम् ॥ ४ ॥ बलविक्रमसम्पन्ना कामगा कामरूपिणी । इमामवस्थां नीता त्वं केनान्तकसमा गता ॥ ५॥ देवगन्धर्वभूतानामृषीणां च महात्मनाम् । कोऽयमेवं विरूपां त्वां महावीर्यश्चकार ह ॥ ६ ॥ नहि पश्याम्यहं लोके यः कुर्यान्मम विप्रियम् । अन्तरेण सहस्राक्षं महेन्द्रं पाकशासनम् ॥ ७ ॥

सद्यः प्रतीकारसामर्थ्यं द्योतितम् ॥ ३ ॥ पुनरपि स्वमाहिमानं प्रकटयन् शूर्पणखां चाश्वासयन् पृच्छति—कः कालेति । यः कण्ठे कालपाशं मृत्युपाशम् आसज्य आबध्य न बुध्यते, उत्तरक्षणे स्वमरणं न जानातीत्यर्थः । यश्च त्वाम् आसाद्य प्राप्य उत्तमं विषं कालकूटं पीतवान् स क इत्यन्वयः । अत्र आसादनशब्देन विरूपकरणमुच्यते, त्वदासादनरूपं विषमित्यर्थः ॥ ४ ॥ अथ विस्मयेन पृच्छति—बलेति । इतो गता त्वं केनेमामवस्थां नीतेत्यन्वयः ॥ ५ ॥ देवेत्यादि निर्धारणे षष्ठी । देवादीनां मध्ये अयम् एतादृशकार्यकर्ता कः एवं विरूपां चकार ॥ ६ ॥ स्वनिश्चयमाह—नहीति । अत्र तामित्यध्या

अन्तकसमा त्वं केन इमामवस्थां नीता प्रापिता सती आगता अत्रेति शेषः ॥ ५ ॥ टीका—बलमात्मशक्तिः । विक्रमः पराभिभवसामर्थ्यम् ॥ ६ ॥ त्वं केन विरूपिता एवंरूपा जातेति शेषः । व्यक्तमाख्याहि क इति । अभिसमापन्नम् अभितः सम्यगापन्नम् । क्षुधितमाशीविषम् आशिषि दंष्ट्रायां विषं यस्य सः तम् । को वा तुदतीति प्रश्नः । तत्तुल्योऽयं त्वदवमान इति भावः । कः कालेति । न जानते इति पाठः न जानीते । बहुवचनमार्षम् । अयमपि प्रश्नः ॥ ६ ॥ नहि पश्यामीत्यन्तमेकं वाक्यम् । तत्र तामित्यध्याहार्यम् । अमरेष्विति अत्र महेन्द्रशब्दो विशेष्यम् । पाकशासनसहस्राक्षशब्दौ विशेषणे । एतेषु षष्ठ्यर्थे द्वितीया । यथा महेन्द्रस्येति दृष्टान्तः । ( अमरेषु सहस्राक्षमिति पाठः ) पाकं पाकाख्यं वृत्रासुरभ्रातरं शासितवानिति पाकशासनम् । अन्तरेण सहस्राक्षं महेन्द्रं पाकशासनमिति पाठे—महेन्द्रमन्तरेण इन्द्रं विना कः मम विप्रियं कुर्यात् तव नहि पश्यामीत्यन्वयः ॥ ७ ॥

हार्यम् । तस्य गर्वविशेषद्योतनाय इन्द्रस्य विशेषणद्वयम् ॥७॥ प्राणान् तस्येति शेषः । जीवितान्तकैः शत्रुजीवितविनाशकरैः । मार्गणैः बाणैः । सारसः हंसविशेषः ॥ ८ ॥ सङ्ख्ये युद्धे । शरसंकृत्तमर्मणः बाणच्छिन्नमर्मस्थलस्य । सफेनं प्राणवायुनिर्गमनकालिकफेनसहितम् । रक्तं रक्तवर्णम् । अचिरप्रवृत्तत्वमनेनोच्यते । मेदिनी भूमिः ॥ ९ ॥ पत्त्ररथाः पक्षिणः । कायात् देहात् । उत्कृत्य उच्छिद्य । सङ्गताः सङ्घशः समवेताः ॥१०॥ मया आहवे अपकृष्टम्

अद्याहं मार्गणैः प्राणानादास्ये जीवितान्तकैः । सलिले क्षीरमासक्तं निष्पिबन्निव सारसः ॥ ८ ॥ निहतस्य मया सङ्ख्ये शरसङ्कृत्तमर्मणः । सफेनं रुधिरं रक्तं मेदिनी कस्य पास्यति ॥ ९ ॥ कस्य पत्त्ररथाः कायान्मांसमुत्कृत्य सङ्गताः । प्रहृष्टा भक्षयिष्यन्ति निहतस्य मया रणे ॥ १० ॥ तं न देवा न गन्धर्वा न पिशाचा न राक्षसाः । मयापकृष्टं कृपणं शक्तास्त्रातुमिहाहवे ॥११॥ उपलभ्य शनैः संज्ञां तं मे शंसितुमर्हसि । येन त्वं दुर्विनीतेन वने विक्रम्य निर्जिता ॥ १२ ॥ इति भ्रातुर्वचः श्रुत्वा क्रुद्धस्य च विशेषतः । ततः शूर्पणखा वाक्यं सबाष्पमिदमब्रवीत् ॥१३॥ तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ । पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ १४ ॥ फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ । पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ ॥ १५ ॥

आकृष्टम् । इहेति युद्धसन्निधानोक्तिः ॥ ११ ॥ उपलभ्य प्राप्य । दुर्विनीतेन दुर्जनेन । विक्रम्य शौर्यं कृत्वा ॥ १२ ॥ विशेषतः अतिशयेन । क्रुद्धस्य कृतक्रोधस्य ॥ १३ ॥ ननु ' व्यक्तमाख्याहि केन त्वमेवंरूपा विरूपिता ' इति पृच्छन्तं खरं प्रति ' पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ " इत्येव वक्तव्ये तरुणावित्यादिना रामादिसौन्दर्यादिकं किमर्थं कथयतीति चेत्, अस्या वैरूप्ये जातेऽपि वैराग्याजननात् काममोहातिशयेन भ्रात्रादिसन्निधानेपि हृद्गतमेवोक्तवती । अनुकूलानां प्रतिकूलानां च रामं दृष्टवतामयमेव स्वभावः, अतएव ' यानि रामस्य चिह्नानि ' इति पृष्टवती सीतां प्रति "त्रिस्थिरस्त्रि

सारसो हंसः ॥ ८ ॥ रक्तं रक्तवर्णं रुधिरम् ॥ ९ ॥ पत्त्ररथाः पक्षिणः । सङ्गता मिश्रिताः ॥ १० ॥ मयापकृष्टम् आक्रान्तं मयासह कृतविरोधमिति यावत् ॥ ११ ॥ विक्रम्य शौर्यं कृत्वा ॥ १२ ॥ १३ ॥ " न तं पश्याम्यहं लोके परोक्षमपि वा नरः । स्वमित्रोऽपि निरस्तोऽपि योऽस्य दोषमुदाहरेत् ॥" इत्युक्तेः सर्वलोकस्पृहणी

प्रलम्बश्च" इति वक्तव्ये " रामः कमलपत्राक्षः सर्वसत्त्वमनोहरः " इत्येवमाह हनुमान् । यद्वा "सुप्तप्रमत्तकुपितानां भावज्ञानं दृष्टम्" इति न्यायेन कर्णनासाच्छेदेन प्रमत्ता कुपिता च शूर्पणखा हृद्गतमेवाह । तरुणौ कामिनीनां प्रथमाकर्षकं वय एव हि, अतस्तदुच्यते। परस्परपरिहासकरणेनोभयत्र भावबन्धाविशेषाद्विवचनम् । वयसा तुल्यत्वेपि रूपे किमनयोस्तारतम्यमस्ति ? नेत्याह रूपसम्पन्नौ । रूपं सौन्दर्यं तेन सम्पन्नौ समृद्धौ,इतरेषां कामादीनां रूपमाभ्यां भिक्षित्वा सम्पादयितव्यमिति मन्यमानावित्यर्थः । यद्वा रूपसंपन्नौ संपन्नरूपौ । आहिताग्न्यादित्वात्परनिपातः । तेन " उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठति " इति न्यायं विहाय "रूपदाक्षिण्यसम्पन्नः प्रसूतः" इत्युक्तरीत्या धर्मिणा सहैवोत्पन्नरूपावित्यर्थः । वयोरूपसत्त्वेपि किं कठिनस्पर्शौ ? नेत्याह सुकुमारौ । परुषतरभवच्छरीरवन्न भवत्यनयोः शरीरं किंतु पुष्पहाससुकुमारौ । एवं सौकुमार्यसत्त्वेपि रतिवैयात्ये किं श्रान्तौ स्याताम् ? नेत्याह महाबलौ। 'रामस्तु सीतया सार्धं विजहार बहूनृतून्' इत्याद्युक्तरीत्यानेकर्तुषु विहरणेऽपि श्रमलवरहितौ । एवं समुदायशोभासम्पन्नत्वेपि किमवयवशोभासु वैकल्यम् ? नेत्याह पुण्डरीकविशालाक्षौ। 'संरक्तनयना घोरा' इत्युक्तरीत्या त्वादृशनयनवन्न भवति तन्नयनमित्यर्थः । पुण्डरीकं सिताम्भोजम्, तमोगुणोद्रेकेण निद्राकषायितत्वं रजोगुणोद्रेकेण संरक्तत्वं वा नास्ति किंतु सर्वदा सत्त्वप्रसन्ननयनावित्यर्थः । न केवलमेवावयवशोभातिशयः, चीरकृष्णाजिनाम्बरौ "किमिव हि मधुराणां मण्डनं नाकृतीनाम्" इत्युक्तरीत्या वल्कलाजिनधारणेप्यतिरमणीयौ । यद्वा कोऽयमेवं महावीर्य इति भीतं प्रति तयोर्दुर्बलत्वमुच्यते । तरुणौ 'ऊनषोडशवर्षः ' इत्याद्युक्तरीत्या युद्धायोग्यौ । यद्वा 'यौवने विषयैषिणाम् ' इत्याद्युक्तरीत्या विषयप्रावण्येन युद्धभीतौ । रूपसम्पन्नौ 'कन्या कामयते रूपम्' इत्युक्तरीत्या वनिताजनवशीकरणाय शरीरमुद्भासयन्तौ न पौरुषसम्पन्नौ । सुकुमारौ श्रीमत्पुत्रतया सम्पत्कुमारौ अतो भवदायुधप्रहारासहौ । महाबलौ विपरीतलक्षणया द्वावेतौ दुर्बलौ, ससैन्यस्य भवतो न पर्याप्तावित्यर्थः । यद्वा सुकुमारतराबलासहितौ युद्धविरोधिकलत्रसहितत्वान्न युद्धार्हौ । पुण्डरीकविशालाक्षौ तयोर्युद्धासामर्थ्यं मद्वैरूप्यकरणानन्तरं किं भविष्यतीति भीत्या शुभ्रीभूतलोचनतया चावगम्यते। चीरकृष्णाजिनाम्बरौ परिधानसम्पादनस्याप्यशक्तौ तत्राप्येकरूपोत्तरीयरहितौ । चीरकृष्णाजिनाम्बरौ स्थावरातिर्यग्भ्यां याचित्वा लब्धे अम्बरे बिभ्राणौ । यद्वा खरस्य प्रोत्साहनाय तयोर्बलातिशय उच्यते तरुणावित्यादि । तरुणौ जयोत्साहयोग्यवयस्कौ । रूपसम्पन्नौ " सिंहोरस्कं महाबाहुम् " इत्युक्तरीत्या युद्धाभावेपि दर्शनमात्रेण परहृदयकम्पजनकशरीरौ । सुकुमारौ लीलयैव सर्वसंहरणक्षमौ । महाबलौ मनोबलबाहुबलोपायबलसम्पन्नौ । पुण्डरीकविशालाक्षौ वैरिषु गौरवबुद्धिमूलककालुष्यरहिततया यस्य श्रीरामस्य दिव्यरूपगुणानां मित्रामित्रसाधारण्येन आनन्दकरत्वात्तेन विरूपितापि शूर्पणखा तद्रूपगुणवर्णनेन वा परमसुखमनुभविष्यामीति धिया वर्णयति तरुणावित्यादिना ॥ १४ ॥ १५ ॥

विमलनेत्रौ । अनेन शत्रुदर्शनकृतक्षोभराहित्यमुच्यते । चीरकृष्णाजिनाम्बरौ सदा बद्धवसनतया युद्धसन्नद्धावित्यर्थः । एवमुत्तरत्रापि योज्यम् ॥१४॥१५॥

तनि०—एतत्पुत्रावेतन्नामकाविति वक्तव्ये सौन्दर्यवर्णनमस्या वैरूप्यप्राप्तावपि वैराग्योत्पत्त्यभावेन काममोहितत्वादवशा भ्रातुः सन्निधाववाच्यमपि हृद्गतमेवाह । विषयाभिनिवेशवन्तो ह्यनुकूलप्रतिकूलविचारमन्तरेण प्रथमं यन्मनसि लग्नं तदेवानुवदन्ति । यद्वा " सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वा " इतिवत् प्रथमं रूपोदाहरणम् । अथवा सुप्तप्रमत्तकुपितानां भावज्ञानं दृष्टमिति कुपितत्वाद्भावज्ञानं प्रकाशितम् । यद्वा एवं राक्षसावासवनप्रवेशविरूपकरणाभ्यां तौ बलिष्ठाविति मा भैषीः किंतु मृदुप्रकृतिकावित्युच्यते । यद्वा " युवा कुमारम् " इत्यादिवेदान्तसिद्धमर्थं राक्षस्याचष्ट । "व्यक्तमेष महायोगी" इति मन्दोदरीवत् । परत्वं खलु मुक्तवेद्यम्, स्नेहस्तु दशरथादिभिः कार्यः तदविशेषेण राक्षस्या जातं ज्ञानं स्नेहश्चेत्युभयं रघुनन्दनसौन्दर्यवैलक्षण्यमहिम्नेति ज्ञेयम् । ननु रूपसम्पदा प्रथमं तरुणत्वादिविशेषणविशिष्टे श्रीरामे भावानुबन्धः,लक्ष्मणे तु विरूपकरणाद् द्वेषः, उभयोः प्राधान्येन ग्रहणं कथमिति चेत् ? परस्परस्य सदृशाविति तारुण्यादिसामान्यात् रामप्रत्याख्याने लक्ष्मणेपि भावबन्धनाद्रामेणापि कर्णनासाच्छेदाभ्यनुज्ञानेन द्वेषसाम्याच्च न दोषः । ताभ्यामुभाभ्यामिमामवस्थां संप्राप्तेति वक्ष्यति । कथं युगपदेकस्या द्वयोर्भावबन्धो जातः । ज्येष्ठकनिष्ठभावानुसन्धानेपि न तारुण्यवैषम्यम्, तेनोभयत्रैकधा(दा)भावबन्धः तारुण्यैक्येपि रूपवैषम्ये अन्यथा भावबन्धः स्यात्तच्च नेत्याह रूपसंपन्नौ । लोके मन्मथादिभिः रूपापेक्षया यथा प्रार्थनीयौ भवेतां तथा रूपसमृद्धौ एतदङ्गप्रत्यङ्गसौष्ठवलेशयाच्ञया खलु मदनो रूपवान् । " रूपदाक्षिण्यसम्पन्नः प्रसूतः " इत्युक्तरीत्या उत्पत्तिसिद्धरूपसमृद्धौ नतु वयोपचितरूपसमृद्धौ । " रामेति रामेति सदैव बुद्ध्या विचार्य वाचा ब्रुवती तमेव" इत्येतादृशातिव्यामोहजनकरूपसम्पन्नौ । सुकुमारौ आलिङ्गने काठिन्यरहितावयवौ पुष्पसमुदायालिङ्गनवत्, अतएव शिरीषपुष्पसाम्यम् । सौकुमार्यप्रयुक्तदौर्बल्यं परिहरति महाबलाविति । बलमनुभवसामर्थ्यम् । तेन " रामस्तु सीतया सार्धं विजहार बहूनृतून् " इत्युक्तरीत्या अनवरतकान्तानुभवसम्भवेपि बलहानिराहित्यमुक्तम् । एतेन राक्षसजातिप्रयुक्तकठिनप्रकृतियुक्ताया अपि स्वस्याः समरतिप्रदानसामर्थ्यमभिप्रेतम् । स्त्रीणां तु स्वानुभवविशेषैः पुरुषो जेतव्य इति मनोरथः, तमतिक्रम्य स्वबलाधिक्येन क्रीडायां स्त्रियं यो जयति स महाबलः । पुण्डरीकविशालाक्षौ अवयवानां सौन्दर्यं समीपगमने सम्यक् प्रकाशते, नेत्रे तु दूरे स्फुटं प्रकाशेते । यद्वा पुण्डरीकं सिताम्भोजम् । अनेन सत्त्वगुणप्रचुरतया दृष्टिप्रसन्नतोच्यते नतु महापुरुषलक्षणोपयुक्तरक्तान्तत्वं कनीनिकानैल्यं च निवार्यते । अथवा मनुष्यावतारेण परत्वगोपनेपि " कप्यासं पुण्डरीकाक्षम् " इत्युक्तपुण्डरीकाक्षत्वं प्रकाश्यत एव । किंच क्षीरसमुद्रवत् नेत्रविशालत्वगाम्भीर्यं केनापि निश्चितुमशक्यं लोकरीत्या पुण्डरीकसाम्यमुक्तम् । वस्तुतस्तु " अदीर्घमप्रेमद्रुघम् " इत्याद्युक्तरीत्या अनुपममेव । अपिच बद्धमुक्तनित्यात्मकत्रिविधकोट्युभयविभूतिमेकप्रयत्नेन कटाक्षयितुं विशालत्वम् । महाबलौ पुण्डरीकाक्षाविति बलं प्रदर्श्य भयं जनयित्वा " जितं ते पुण्डरीकाक्ष "

इति स्तुतिप्रसन्ननेत्रतां प्रकाशयति । सुकुमारौ पुण्डरीकविशालाक्षाविति नयनपुष्पबाणवत्त्वमुक्तम् । अरविन्दस्य मदनबाणत्वात् तेन शूर्पणखामनोदारकत्वं व्यज्यते । चीरकृष्णाजिनाम्बरौ आभरणरहितावेव मां मन्मथपीडितां कृत्वा व्यथयतः " इयमधिकमनोज्ञा वल्कलेनापि " इत्युक्तं हि कालिदासेन । अतश्चीरकृष्णाजिनधारणेन तयोः सौन्दर्यं न्यूनतां नैति, किंतु तत्तारुण्यादिगुणसमुदायराजितमिदं चीरं रामशरीरसन्निकर्षेण सर्वस्यापि हृदयाकर्षकं सत् " रूपसंहननं लक्ष्मीं सौकुमार्यं सुवेषताम् । ददृशुर्विस्मिताकारा रामस्य वनवासिनः ॥" इति स्वरूपध्यानपराणामिदमेव हृदयग्राहकं भवति। द्वितीययोजनायाम्-तरुणौ "ऊनषोडशवर्षः । न युद्धयोग्यतामस्य पश्यामि" इत्याद्युक्तरीत्या युद्धायोग्यौ । यद्वा विषयप्रवणौ नतु युद्धप्रवणौ । रूपसम्पन्नौ " कन्या कामयते रूपम् " इति रूपेण वनिताजनानुरागजनकसौन्दर्यवन्तौ नतु पौरुषज्ञापकपराक्रमसम्पन्नौ । केवलमाकारसुन्दरौ नत्वन्तस्सारवन्तौ । अत्र हेतुः सुकुमारौ । श्रीमत्कुमारतया श्रमासहनौ भवदीयरक्तलोचननिरीक्षणासहौ अत्युग्रभवदायुधनिपातं कथं सहेताम् । महाबलौ अत्यन्ताबलौ । स्त्रीनिमित्तं राज्यत्यागेन तयोर्बलं दृष्टमेव । यद्वा महती रक्षणीया अबला ययोस्तौ प्रतिबन्धकीभूता अबला चास्तीत्यर्थः । पुण्डरीकविशालाक्षौ भगिन्याः परिज्ञानेन कर्णनासच्छेदः कृतः, इतःपरं किं भविष्यतीति भयेन निर्निमेषेण प्रफुल्लनेत्रौ दैन्येन शीतायमाननेत्रौ वा । स्वस्थानसामर्थ्येपि जलादपनीतपुण्डरीकवदन्यत्रासामर्थ्यं लोचनेन प्रकाशितम् । स्वयमशक्तत्वेप्यैश्वर्यादिसम्पत्तौ अबलौ भवतः सा च नेत्याह चीरकृष्णाजिनाम्बरौ । वस्त्राभावेन दारुचर्म मृगचर्म च वसानौ, अतो द्रव्यसाध्यसेनासम्पादनं कथमित्यर्थः । यद्वा आच्छादनमेकजातीयमपि न किंतु स्थावरेणैकं दत्तं जङ्गमेनेकं दत्तमिति । तृतीययोजनायां तु—तरुणौ ऊनषोडशवर्ष इत्युक्तरीत्या अनतिबालावनतिवृद्धौ च " यौवने विजिगीषूणाम् " इतिवत् युद्धेन हस्तकण्डूनिरसनं कर्तुमिच्छन्तौ । रूपसंपन्नौ वीररसाभिव्यञ्जकसंहननविशेषौ " सिंहोरस्कं महाबाहुम् " इतिवत् सन्निवेशदर्शनेन शत्रवः पलायन्ते । रूप्यतेऽनेनेति व्युत्पत्त्या रूपशब्दोऽसाधारणनिरतिशयरूपविशेषवाची । ' नाविनित्य निवर्तते ' इति ' यशसश्चैकभाजनम् ' इति च बाल्यादारभ्य सुबाहुप्रभृतिनिरसनेनैतावत्पर्यन्तं प्रसिद्धापदानौ । सुकुमारौ अनायासेन शत्रुनिरासकौ । पौरुषदर्शने हृदयग्राहित्ववत् रूपसौकुमार्ययोरपि हृदयग्राहित्वम् । महाबलौ " सदेवगन्धर्वमनुष्यपन्नगं जगत्सशैलं परिवर्तयाम्यहम्' 'सागरमेखलां । महीं दहति कोपेन" इत्याद्युक्तरीत्या प्रसिद्धबलयुक्तौ । बलशब्देन बाहुबलं मनोबलमुपायबलं चोच्यते । पुण्डरीकविशालाक्षौ अतिसङ्कटवनसञ्चारेप्यम्लाननेत्रौ । एतेन युद्धे अश्रमाविति ज्ञायते, युद्धादिकालेपि शत्रुष्वलक्ष्यबुद्ध्या नेत्रविकारादिरहितौ "प्रीतिविस्फुरितेक्षणम्" इतिवत् । शत्रुदर्शनेप्युत्तरोत्तरमुत्साहेनातिविस्तृतनेत्रौ । चीरकृष्णाजिनाम्बरौ सर्वदा युद्धसन्नाहसूचकवस्त्रबन्धादियुक्तौ । यद्वा मृगयाशीलतया तदुचितकृष्णाजिनदारुपटकञ्चुकधरौ 'सत्येन लोकान् जयति ' इत्युक्तरीत्या तदुचितवेषव्यापारवत्त्वं प्रसिद्धम् । महाबलावित्यनेन खरोक्तवीरालापाननादृत्य अजेयत्वं समर्थितम् ॥ १४ ॥ १५ ॥

पुनरपि हृदये परिवर्तमानं तत्सौन्दर्यमाह—गन्धर्वेति । देवाविति यद्यपि दशरथसुताविति श्रुतम् तथापि तत्प्रभावदर्शनेन तदसत्यमेवोक्तमिति मन्य इति भावः ॥१६॥ तत्र आश्रमे ॥१७॥ प्रमदाम् अधिकृत्य निमित्तीकृत्य । उभाभ्यां सम्भूय ऐकमत्यं प्राप्य । इमामवस्थां नीतास्मि यथा अनाथा असती कुलटा नीयते तथा नीतास्मीति योजना ॥१८॥ अनृजुवृत्तायाः कुटिलवृत्तायाः । अनेन तत्प्रेरणेनैव मां तौ विरूपितवन्तावित्यमन्यतेति गम्यते । रणमूर्धनि

गन्धर्वराजप्रतिमौ पार्थिवव्यञ्जनान्वितौ । देवौ वा मानुषौ वा तौ न तर्कयितुमुत्सहे ॥ १६ ॥ तरुणी रूपसम्पन्ना सर्वाभरणभूषिता । दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा ॥ १७ ॥ ताभ्यामुभाभ्यां सम्भूय प्रमदामधिकृत्य ताम् । इमामवस्थां नीताहं यथानाथासती तथा ॥ १८ ॥ तस्याश्चानृजुवृत्तायास्तयोश्च हतयोरहम् । सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि ॥ १९ ॥ एष मे प्रथमः कामः कृतस्तात त्वया भवेत् । तस्यास्तयोश्च रुधिरं पिबेय महमाहवे ॥२०॥ इति तस्यां ब्रुवाणायां चतुर्दश महाबलान् । व्यादिदेश खरः क्रुद्धो राक्षसानन्तकोपमान् ॥ २१ ॥

हतयोरित्यन्वयः । सीताया रणमूर्धनि गमनासम्भवाद्धताया इति विपरिणामो न युक्तः, अन्यथा अशक्यत्वाद्रणमूर्धनीत्युक्तम् ॥ १९ ॥ अवश्यकर्तव्यत्वाय पुनरप्याह—एष इति । प्रथमः श्रेष्ठः । कामः अभिलाषः । "प्रथमौ प्रवरादिमौ" इति वैजयन्ती । तातेति पितृवज्ज्येष्ठसम्बोधनम् ॥२०॥ चतुर्दशेति

'देवौ वा मानुषौ वा तौ न तर्कयितुमुत्सहे' यद्यपि दशरथसुताविति तत्सकाशादेव श्रुतं तथापि तयोरमानुषचरित्रैः श्रीरामलक्ष्मणौ देवौ वा मानुषौ वेति विचारयितुं निश्चितुं न समर्थास्मीत्यर्थः ॥ १६ ॥ १७ ॥ ताभ्यामिति । तां प्रमदामधिकृत्य निमित्तीकृत्य ताभ्यामुभाभ्यां सम्भूय एकेन कनीयसा इमामवस्थां नीतेति योजना ॥ १८ ॥ रुधिरं पातुमिच्छामीत्यनेन श्रीरामवर्णनेन स्वकामुकीत्वशङ्कां खरस्य निवर्तयतीति ज्ञेयम् । तस्याः हताया इति विपरिणामः ॥ १९ ॥ एष मे प्रथमः काम इति पुनर्वचनमुत्कटेच्छाद्योतनायेति न पुनरुक्तिः । तस्याश्चानृजुवृत्ताया इत्यादि श्लोकद्वयस्य वास्तवार्थस्तु—रणमूर्द्धनि तयोः रामलक्ष्मणयोः । तृतीयार्थे षष्ठी । अनृजुवृत्तायास्तस्याः त्वद्भगिन्या ममेति शेषः । हतयोः छिन्नयोः । द्वितीयार्थे षष्ठी । कर्णनासिके पश्येति शेषः । अत इतःपरमहं सफेनमपि रुधिरं पातुमिच्छामीति काकुः । नेच्छाम्येवेत्यर्थः । आहवे तयोस्त्वयं कृतो भवेद्यदि अपकार इति शेषः । छिन्नकर्णनासां मां दृष्ट्वाप्युपेक्षसे यदि तदा त्यक्ताहारा देहं त्यक्ष्यामीति भावः ॥ २० ॥ इति तस्यां ब्रुवाणायामित्यारभ्य सर्गसमाप्तिपर्यन्तस्य वास्तवार्थस्तु—इति

चतुर्दशसहस्राध्यक्षानित्यर्थः ॥ २१ ॥ २२ ॥ दुर्वृत्तां भगिनीवैरूप्यमूलत्वात् । अपावर्तितुम् आनेतुम् । तां चेति चकारेण तावपीत्युच्यते । आनयन प्रयोजनमाह इयं चेति । अस्या अयं मनोरथः मम चायमिष्टः सम्मत इत्यर्थः । प्रमथ्य हत्वा ॥२३॥२४॥ इतीति तयोर्मार्गं प्रदर्शयन्त्येति शेषः । इयं खरे

मानुषौ शस्त्रसम्पन्नौ चीरकृष्णाजिनाम्बरौ । प्रविष्टौ दण्डकारण्यं घोरं प्रमदया सह ॥ २२ ॥ तौ हत्वा तां च दुर्वृत्ता मपावर्तितुमर्हथ । इयं च रुधिरं तेषां भगिनी मम पास्यति ॥२३॥ मनोरथोऽयमिष्टोस्या भगिन्या मम राक्षसाः । शीघ्रं सम्पाद्यतां तौ च प्रमथ्य स्वेन तेजसा ॥ २४ ॥ इति प्रतिसमादिष्टा राक्षसास्ते चतुर्दश । तत्र जग्मुस्तया सार्धं घना वातेरिता यथा ॥ २५ ॥ ततस्तु ते तं समुदग्रतेजसं तथापि तीक्ष्णप्रदरा निशाचराः । न शेकुरेनं सहसा प्रमर्दितुं वनद्विपा दीप्तमिवाग्निमुत्थितम् ॥२६॥ इत्यार्षे॰ श्रीरामायणे॰ श्रीमदारण्यकाण्डे एकोनविंशः सर्गः ॥१९॥

णाप्रेरितापि गतेति बोध्यम् ॥ २५ ॥ प्रदराः बाणाः । " प्रदरा भङ्गनारीरुक्बाणाः " इत्यमरः । तथा तीक्ष्णप्रदरा अपीति योज्यम् । तमेनमित्यन्वयः । उत्थितं राक्षसान् दृष्ट्वा अभिमुखमुद्गतमिति रामविशेषणम् । उत्तरसर्गसङ्ग्रहोऽयं श्लोकः ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्न मेखलाख्याने आरण्यकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥

तस्यां ब्रुवाणायां रामवृत्तान्तमिति शेषः । खरः " तस्माद्यः क्रूररूपेण देहेन हरतामृतम् । विष्णुर्दाशरथिर्भूत्वा मोक्षयिष्यति सुव्रत ॥ " इति शिवशापाद्राक्ष सत्वं प्राप्तयाज्ञवल्क्यसुतश्चन्द्रकान्त इत्यर्थः । अत एव शूर्पणखामुखाद्रामवृत्तान्तश्रवणानन्तरं विष्णुत्वेन ज्ञात्वा सपरिवारस्य स्वस्य रामहस्ताद्वधेच्छुस्सन् भगिनीप्रीतय इव रामेण सह युद्धार्थं राक्षसान्यादिदेशेत्यर्थः । अस्मिन्नर्थे शेषधर्मे भीष्मयुधिष्ठिरसंवादकथानुसन्धेया । भीष्मः—" याज्ञवल्क्यसुता राजन् त्रयो वै लोकविश्रुताः । चन्द्रकान्तमहामेधविजया ब्राह्मणोत्तमाः । खरश्च दूषणश्चेति त्रिशिरा ब्रह्मवित्तमः । आसन् तेषां च शिष्याश्च चतुर्दशसहस्रधा " इति । अत एव बाह्यदृष्ट्या परुषोक्तिवत्प्रतीयमानानि तस्य वाक्यानि सौम्यरूपाण्येव तथा व्याख्यास्यामः ॥ २२ ॥ तौ हत्वेति श्लोकद्वयमेकं वाक्यम् । प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु हे राक्षसाः ! इयं भगिनी प्रमथ्य मम रुधिरं पास्यति अतस्तेषां समीपं गत्वा स्वतेजसा शीघ्रेण तौ रामलक्ष्मणौ दुर्वृत्तां दुर्लभं वृत्तमाचारो यस्यास्तां सीतां च हत्वा ज्ञात्वा " हन हिंसागत्योः " इति धातोर्गत्यर्थस्य ज्ञानार्थत्वात् । अपावर्तितुं प्रतिनिवर्तितुमर्हथ । अयं मम भगिन्याः इष्टो मनोरथः ॥ २३॥२४ ॥ वातेरिता वायुनुन्ना मेघा इव जग्मुरितिसम्बन्धः ॥ २५ ॥ २६ ॥ इति श्रीमहे॰ श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायामेकोनविंशः सर्गः ॥ १९ ॥

अथ चतुर्दशराक्षसवधो विंशे–ततः शूर्पणखेत्यादि ॥ १–३ ॥ मुहूर्तमिति । प्रत्यनन्तरः प्रत्यासन्नः, रक्षक इति यावत् । अस्याः पदवीमागतानित्यन्वयः ॥ ४ ॥ प्रत्यपूजयत् परिपालितवान् ॥ ५ ॥ चामीकरं स्वर्णम् ॥ ६ ॥ स्वस्य कपटवेषत्वं परिहरन्नाह–पुत्रावित्यादि । आवां किमर्थमुपहिंसथ ॥७॥८॥

ततः शूर्पणखा घोरा राघवाश्रममागता । रक्षसामाचचक्षे तौ भ्रातरौ सह सीतया ॥ १ ॥ ते रामं पर्णशालायामुपविष्टं महाबलम् । ददृशुः सीतया सार्धं वैदेह्या लक्ष्मणेन च ॥ २ ॥ तान् दृष्ट्वा राघवः श्रीमानागतां तां च राक्षसीम् । अब्रवीद् भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ॥ ३ ॥ मुहूर्तं भव सौमित्रे सीतायाः प्रत्यनन्तरः । इमानस्या वधिष्यामि पदवीमागतानिह ॥ ४ ॥ वाक्यमेतत्ततः श्रुत्वा रामस्य विदितात्मनः । तथेति लक्ष्मणो वाक्यं रामस्य प्रत्यपूजयत् ॥ ५ ॥ राघवोऽपि महच्चापं चामीकरविभूषितम् । चकार सज्यं धर्मात्मा तानि रक्षांसि चाब्रवीत् ॥ ६ ॥ पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ । प्रविष्टौ सीतया सार्धं दुश्चरं दण्डकावनम् ॥ ७ ॥ फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ । वसन्तौ दण्डकारण्ये किमर्थमुपहिंसथ ॥ ८ ॥ युष्मान् पापात्मकान् हन्तुं विप्रकारान् महाहवे । ऋषीणां तु नियोगेन प्राप्तोऽहं सशरायुधः ॥९॥ तिष्ठतैवात्र सन्तुष्टा नोपावर्तितुमर्हथ । यदि प्राणैरिहार्थो वा निवर्तध्वं निशाचराः ॥ १० ॥

प्रत्युत युष्मानेवाहं हन्तुमागत इत्याह–युष्मानिति । विप्रकारान् हिंसकान् । भवतां प्रथमप्रवृत्तिमाकाङ्क्षन् स्थितोऽस्मीत्यर्थः ॥९॥ अत्रैव सन्तुष्टाः अभीता इति यावत् । तिष्ठत नोपावर्तितुमर्हथेति मा पलायध्वमित्यर्थः । यदिवा प्राणैः अर्थः प्रयोजनं प्राणापेक्षास्ति चेन्निवर्तध्वमित्यर्थः ॥ १० ॥

सहसीतया वर्तमानमिति शेषः ॥ १–३ ॥ प्रत्यनन्तरः प्रत्यासन्नः पालक इति यावत् । अस्याः पदवीम् अस्या मार्गम् । अस्या रक्षणार्थमागतानित्यर्थः ॥४॥५॥ चामीकरं सुवर्णम् ॥ ६ ॥ पुत्रावित्यादिश्लोकद्वयमेकं वाक्यम् । दण्डकारण्यं प्रविष्टौ आवां दण्डकारण्ये वसन्तौ सन्तौ किमर्थमुपहिंसथ । मुनीनितिशेषः ॥७॥८॥ तेषां विचारे तव किं कार्यमित्यत आह–युष्मानिति । विप्रकारान मुनिविप्रकारान् । ऋषीणां नियोगेन युष्मान् हन्तुमेव प्राप्त इति सम्बन्धः ॥ ९ ॥ हे संतुष्टाः अति

ब्रह्मघ्नाः ब्राह्मणघ्नाः ॥ ११ ॥ १२ ॥ शक्तिः बलम् । " शक्तिर्बले प्रभावादौ " इति विश्वः ॥ १३ ॥ परिघैः गदाभेदैः । पट्टिशैः असिभेदैः ॥ १४ ॥ तानि शूलपाणय इति पूर्वमुक्तानि ॥ १५ ॥ १६ ॥ नाराचान् अफलकान् बाणान् । शिलाशितान् शिलास्वपि शितान्, शिलानिर्भेदक्षमानित्यर्थः ।



तस्य तद्वचनं श्रुत्वा राक्षसास्ते चतुर्दश । ऊचुर्वाचं सुसंक्रुद्धा ब्रह्मघ्नाः शूलपाणयः ॥११॥ [ संरक्तनयना घोरा रामं संरक्तलोचनम् । परुषं मधुराभाषं हृष्टा दृष्टपराक्रमम् ॥] क्रोधमुत्पाद्य नो भर्तुः खरस्य सुमहात्मनः । त्वमेव हास्यसे प्राणानद्यास्माभिर्हतो युधि ॥१२॥ का हि ते शक्तिरेकस्य बहूनां रणमूर्धनि । अस्माकमग्रतः स्थातुं किं पुनर्योद्धु माहव ॥ १३ ॥ एहि बाहुप्रयुक्तैर्नः परिघैः शूलपट्टिशैः । प्राणांस्त्यक्षसि वीर्यं च धनुश्च करपीडितम् ॥ १४ ॥ इत्येवमुक्त्वा संक्रुद्धा राक्षसास्ते चतुर्दश । [ उद्यतायुधनिस्त्रिंशा राममेवाभिदुद्रुवुः । ] चिक्षिपुस्तानि शूलानि राघवं प्रति दुर्जयम् ॥ १५ ॥ तानि शूलानि काकुत्स्थः समस्तानि चतुर्दश । तावद्भिरेव चिच्छेद शरैः काञ्चनभूषणैः ॥ १६ ॥ ततः पश्चान्महातेजा नाराचान् सूर्यसन्निभान् । जग्राह परमक्रुद्धश्चतुर्दश शिलाशितान् ॥ १७ ॥ गृहीत्वा धनुरायम्य लक्ष्यानुद्दिश्य राक्षसान् । मुमोच राघवो बाणान् वज्रानिव शतक्रतुः ॥ १८ ॥

शाणोपलसन्निघृष्टानित्यप्याहुः ॥ १७ ॥ गृहीत्वेति । लक्ष्यान् वेध्यान् । वज्रानित्यभूतोपमा ॥ १८ ॥

दुष्टाः ! उपासर्पितुं समीपमागन्तुं नार्हथ । यद्यागमिष्यथ तर्हि हनिष्यामीत्यर्थः ( सन्दुष्टा नोपासर्पितुम् इति पाठः ) ॥ १०--१२ ॥ क्रोधमुत्पाद्येत्यादिश्लोकत्रयस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु-सुमहात्मनः सुमहानात्मा शरीरं यस्य सः । भर्तुः राज्ञः खरस्य क्रोधमुत्पाद्य तत्प्रेरितैरस्माभिरिति तुच्छैर्हतस्ताडितोपि प्राणान्नो हास्यस्येव ॥ १३ ॥ अत्र हेतुः-का हीति । रणमूर्द्धन्येकस्य ते अग्रतः स्थातुं बहूनामप्यस्माकं का शक्तिः ? शक्तिर्नास्ति तदा किं पुनर्योद्धुमिति योजना । अत एव खरनिर्बन्धेनागतानामस्माकमित्यत्राप्याकृष्यते । परिघादिभिरुपलक्षितानामस्माकं प्राणान् । वीर्यमित्यादि जात्येकवचनम् । वीर्यादिकं च त्यक्ष्यसि । गर्भितो णिच् । त्याजयिष्यसि न सन्देहः अत एव हीति सम्बन्धः । इतः परावृत्य गतानामस्माकं खरहस्तवधाद्वरं त्वद्धस्तेन वध इति भावः ॥ १४–१६ ॥ शिलाशितान् शाणोपले तीक्ष्णीकृतान् ॥ १७ ॥ टीका—आयम्य कर्णान्तमाकृष्य ॥ १८–२४ ॥

न्यमजन्त न्यमजन्त चेत्यर्थः ॥ १९ ॥ विकृताः विरूपाः । विगतासवः विगतप्राणाः ॥ २० ॥ भैरवस्वनात् भयङ्करशब्दात् ॥ २१ ॥ महानादं नदन्ती कुर्वन्तीत्यर्थः । निर्यासः क्षतप्रसृतवृक्षरसः । सल्लकी लताविशेषः ॥ २२-२४ ॥ पुनः सर्गार्थं सङ्क्षेपेणाह-निपातितानिति । दृश्य दृष्ट्वा ।

रुक्मपुङ्खाश्च विशिखा दीप्ता हेमविभूषिताः । ते भित्त्वा रक्षसां वेगाद्वक्षांसि रुधिराप्लुताः । विनिष्पेतुस्तदा भूमौ न्यमज्जन्ताशनिस्वनाः ॥ १९ ॥ ते भिन्नहृदया भूमौ छिन्नमूला इव द्रुमाः । निपेतुः शोणितार्द्राङ्गा विकृता विगतासवः ॥ २० ॥ तान् दृष्ट्वा पतितान् भूमौ राक्षसी क्रोधमूर्च्छिता । परित्रस्ता पुनस्तत्र व्यसृजद्भैरवस्वनान् ॥२१॥ सा नदन्ती पुनर्नादं जवाच्छूर्पणखा पुनः । [ जगाम तत्र सम्भ्रान्ता खरो यत्र महाबलः । ] उपगम्य खरं सा तु किञ्चित्संशुष्कशोणिता ॥ २२ ॥ पपात पुनरेवार्ता सनिर्यासेव सल्लकी ॥ २३ ॥ भ्रातुः समीपे शोकार्ता ससर्ज निनदं मुहुः । [ भूमौ शयाना दुःखार्ता लब्धसंज्ञाचिरात्पुनः । ] सस्वरं मुमुचे बाष्पं विषण्णवदना तदा ॥ २४ ॥ निपातितान् दृश्य रणे तु राक्षसान् प्रधाविता शूर्पणखा पुनस्ततः । वधं च तेषां निखिलेन रक्षसां शशंस सर्वं भगिनी खरस्य सा ॥२५॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे विंशः सर्गः ॥ २० ॥

स पुनः पतितां दृष्ट्वा क्रोधाच्छूर्पणखां खरः । उवाच व्यक्तया वाचा तामनर्थार्थमागताम् ॥ १ ॥
मया त्विदानीं शूरास्ते राक्षसा रुधिराशनाः । त्वत्प्रियार्थं विनिर्दिष्टाः किमर्थं रुद्यते पुनः ॥ २ ॥

अस्मिन् सर्गे पञ्चविंशतिश्लोकाः ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥
अथ खरप्रोत्साहनमेकविंशे-स पुनरित्यादि । अनर्थार्थं सर्वराक्षसविनाशार्थम् ॥ १ ॥ २ ॥

निपातितानित्युत्तरसर्गसङ्ग्रहश्लोकः ॥ २५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां विंशः सर्गः ॥ २० ॥ स इति ।

टीका-उपगम्येति । सनिर्यासा वल्लरी निर्याससहिता लतेव । किञ्चित्संशुष्कं किञ्चिदार्द्रं शोणितं यस्यास्सा । सनिर्यासा वल्लरीव ॥ २२ ॥ २३ ॥

भक्ताः विश्वासभाजः । हिताः हितपराः । न कुर्युरिति न किंतु कुर्युरेवेत्यर्थः ॥ ३ ॥ किमेतादिति विस्मये । यत्कृते यस्य कृते । कृत इत्यव्ययम् । यन्निमित्तं लुठसि तस्य कारणं श्रोतुमिच्छामीत्यन्वयः ॥ ४ ॥ विलपसीति किमिति शेषः । वैक्लव्यं कातर्यम् । इह मत्समीपे ॥ ५ ॥ दुर्धर्षा

भक्ताश्चैवानुरक्ताश्च हिताश्च मम नित्यशः । घ्नन्तोऽपि न निहन्तव्या न न कुर्युर्वचो मम ॥ ३ ॥ किमेतच्छ्रोतु मिच्छामि कारणं यत्कृते पुनः । हा नाथेति विनर्दन्ती सर्पवल्लुठसि क्षितौ ॥ ४ ॥ अनाथवद्विलपसि नाथे तु मयि संस्थिते । उत्तिष्ठोत्तिष्ठ मा भैषीर्वैक्लव्यं त्यज्यतामिह ॥ ५ ॥ इत्येवमुक्ता दुर्धर्षा खरेण परिसान्त्विता । विमृज्य नयने सास्रे खरं भ्रातरमब्रवीत् ॥ ६ ॥ अस्मीदानीमहं प्राप्ता हतश्रवणनासिका । शोणितौघपरिक्लिन्ना त्वया च परिसान्त्विता ॥ ७ ॥ प्रेषिताश्च त्वया वीर राक्षसास्ते चतुर्दश । निहन्तुं राघवं क्रोधान्मत्प्रियार्थं सलक्ष्मणम् ॥ ८ ॥ ते तु रामेण सामर्षाः शूलपट्टिशपाणयः । समरे निहताः सर्वे सायकैर्मर्मभेदिभिः ॥ ९ ॥ तान् दृष्ट्वा पतितान् भूमौ क्षणेनैव महाबलान् । रामस्य च महत् कर्म महांस्त्रासोऽभवन्मम ॥ १० ॥ अहमस्मि समुद्विग्ना विषण्णा च निशा चर । शरणं त्वां पुनः प्राप्ता सर्वतो भयदर्शिनी ॥ ११ ॥ विषादनक्राध्युषिते परित्रासोर्मिमालिनि । किं मां न त्रायसे मग्नां विपुले शोकसागरे ॥ १२ ॥

दुस्साध्या ॥ ६ ॥ खरोक्तमङ्गीकरोति–अस्मीत्यादिना ॥ ७–१० ॥ अहमस्मीति । समुद्विग्ना भीता । विषण्णा दुःखिता । सर्वतो भयदर्शिनी सर्वत्र रामप्रतिभासवतीति भावः ॥ ११ ॥ विषादनक्रेति । नक्रो ग्राहः ॥ १२ ॥

अनर्थार्थम् स्वकुलस्येति शेषः ॥ १ ॥ २ ॥ भक्ताः अत एव मय्यनुरक्ताः । अत एव मम हिताः । अत एव मम वचनं न कुर्युरिति न किन्तु कुर्युरेव । किंच ते न निहन्तव्याः परैर्हन्तुमशक्याः घ्नन्तोपि घातुका एव । निश्चयार्थे अपिशब्दः ॥ ३ ॥ कारणं शोककारणम् । यत्कृते शोकनिमित्तम् ॥ ४–९ ॥ तानिति । रामस्य कर्म च, दृष्ट्वेत्यनुषज्यते ॥ १० ॥ भीता अत एव समुद्विग्ना कम्पमाना अतएव विषण्णा दुःखिता । अत्र हेतुः-सर्वतो भयदर्शिनी, सर्वत्र श्रीरामदर्शनादिति भावः । रामेणेत्यादिश्लोकचतुष्टयस्य भातीतिकार्थः स्पष्टः । वस्तुतस्तु शूर्पणखा रामं न जहीति हितबुद्ध्या खरं निवारयति रामेणेति । हे निशाचार ! रामेण ते शक्तिः

क्रोधभीतिभ्यां पूर्वोक्तं विस्मृत्य पुनराह—एते चेति ॥ १३ ॥ अनुक्रोशो दया । शक्तिरिति तुल्येति शेषः ॥ १४ ॥ निरपत्रपा निर्लज्जा । हृतकर्णनासात्वादिति भावः ॥ १५ ॥ प्रतिमुखे अग्रे । सबलः ससैन्यः ॥ १६ ॥ मिथ्येति मिथ्यावचोभिरित्यर्थः । आरोपितविक्रमः कल्पितपराक्रमः ॥ १७ ॥ १८ ॥

एते च निहता भूमौ रामेण निशितैः शरैः । येऽपि मे पदवीं प्राप्ता राक्षसाः पिशिताशनाः ॥ १३ ॥ मयि ते यद्यनुक्रोशो यदि रक्षःसु तेषु च । रामेण यदि ते शक्तिस्तेजो वास्ति निशाचर । दण्डकारण्यनिलयं जहि राक्षसकण्टकम् ॥ १४ ॥ यदि रामं ममामित्रं न त्वमद्य वधिष्यसि । तव चैवाग्रतः प्राणांस्त्यक्ष्यामि निरपत्रपा ॥ १५ ॥ बुद्ध्याहमनुपश्यामि न त्वं रामस्य संयुगे । स्थातुं प्रतिमुखे शक्तः सबलश्च महात्मनः ॥ १६ ॥ शूरमानी न शूरस्त्वं मिथ्यारोपितविक्रमः । मानुषौ यौ न शक्नोषि हन्तुं तौ रामलक्ष्मणौ ॥ १७ ॥ रामेण यदि ते शक्तिस्तेजो वास्ति निशाचर । दण्डकारण्यनिलयं जहि तं कुलपांसन ॥ १८ ॥ निस्सत्त्वस्याल्पवीर्यस्य वासस्ते कीदृशस्त्विह । अपयाहि जनस्थानात्त्वरितः सहबान्धवः ॥ १९ ॥ रामतेजोभिभूतो हि त्वं क्षिप्रं विनशिष्यसि । स हि तेजस्समायुक्तो रामो दशरथात्मजः ॥२०॥ भ्राता चास्य महावीर्यो येन चास्मि विरूपिता ॥२१॥ एवं विलप्य बहुशो राक्षसी विततोदरी । भ्रातुः समीपे दुःखार्ता नष्टसंज्ञा बभूव ह । कराभ्यामुदरं हत्वा रुरोद भृशदुःखिता ॥ २२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे एकविंशः सर्गः ॥ २१ ॥

कीदृश इति अत्यन्तायोग्य इत्यर्थः ॥१९–२१॥ विततोदरी प्रहारार्थं विस्तृतोदरी । अत्र द्वाविंशतिश्लोकाः ॥२२॥ इति० आरण्य०एकविंशः सर्गः॥२१

वीर्यं तेजो वास्ति यदि तथापि अमित्रघ्नं दण्डकारण्यनिलयं रामं त्वं न जहि मावधीः । यदि हनिष्यसि तर्हि तवाग्रतोऽहं प्राणान् त्यक्ष्यामीति सम्बन्धः॥११–१५॥ विचार्यमाणे तयोर्हनने तव शक्तिरपि नास्तीत्याह–बुद्ध्येति । रामस्य प्रतिमुखे अग्रतः स्थातुं न शक्त इति बुद्ध्या पश्यामि आलोचयामीति सम्बन्धः । सबलश्च महारणे इति पाठः । महारणे यः मिथ्यारोपितविक्रमः अत एव शूरमानी अत एव न शूरः अत एव तौ मानुषावपि हन्तुं न शक्नोषीति सम्बन्धः ॥ १६ ॥ १७ ॥ टीका०–कुलपांसन कुलघातक ॥ १८ ॥ अपयाहि अपसर्प ॥ १९ ॥ एवमङ्गीकारे बाधकमाह–रामतेज इति ॥ २० ॥ २१ ॥ प्रथितोदरी विस्तृतोदरी, स्थूलोदरीति यावत् । राक्षसी प्रथितोदरी इति पाठः ॥२२॥ इति श्रीमहेश्वरतीर्थविर० श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायामेकविंशः सर्गः॥२१॥

अथ खरस्य युद्धोद्योगो द्वाविंशे–एवमित्यादि । आधर्षितः अवमानितः । खरः दारुणः । खरतरं परुषतरम् ॥ १ ॥ लवणाम्भः लवणसमुद्राम्भः । उत्थितं पर्वण्युल्बणम् ॥ २ ॥ यः आत्मदुश्चरितैरेव हतः सन् अद्य प्राणान् विमोक्ष्यति तं रामं न गणये ॥ ३ ॥ संह्रियतां निवर्त्यताम् ।

एवमाधर्षितः शूरः शूर्पणख्या खरस्तदा । उवाच रक्षसां मध्ये खरः खरतरं वचः ॥ १ ॥ तवावमानप्रभवः क्रोधोऽयमतुलो मम । न शक्यते धारयितुं लवणाम्भ इवोत्थितम् ॥ २ ॥ न रामं गणये वीर्यान्मानुषं क्षीणजीवितम् । आत्मदुश्चरितैः प्राणान् हतो योऽद्य विमोक्ष्यति ॥ ३ ॥ बाष्पः संह्रियतामेष सम्भ्रमश्च विमुच्यताम् । अहं रामं सह भ्रात्रा नयामि यमसादनम् ॥ ४ ॥ परश्वधहतस्याद्य मन्दप्राणस्य संयुगे । रामस्य रुधिरं रक्तमुष्णं पास्यसि राक्षसि ॥ ५ ॥ सा प्रहृष्टा वचः श्रुत्वा खरस्य वदनाच्च्युतम् । प्रशशंस पुनर्मौर्ख्याद् भ्रातरं रक्षसां वरम् ॥ ६ ॥

सदनमेव सादनम् ॥ ४ ॥ परश्वधः कुठारः । मन्दप्राणस्य अल्पप्राणस्य । औष्ण्यार्थमिदमुक्तं रक्तवर्णत्वार्थं च ॥ ५ ॥ मौर्ख्यात् अव्यवस्थित

एवमिति । आधर्षितः कोपादवमानितः । खरः तीक्ष्णगुणः ॥ १ ॥ आत्मनीतिपदाध्याहारः । तथा चात्मनि कोपो धारयितुं न शक्यत इत्यन्वयः । लवणाम्भ इवोल्बणम् । व्रण इति शेषः । व्रणे विक्षिप्तं लवणयुक्तमम्भ इव धारयितुं न शक्यत इत्यर्थः । उदितमिति पाठे–उदितं न्यस्तम् । उत्थितमिति पाठे–उल्बणमिति यावत् ॥ २ ॥ आत्मदुश्चरितैः स्वकीयदुष्कृतैः विरूपकरणरूपैः ॥ ३ ॥ सम्भ्रमः भयम् । तवावमानप्रभव इत्यादिश्लोकचतुष्टयस्य वास्तवार्थस्तु–तवावमानप्रभवः त्वत्सम्बन्ध्यवमानोत्पन्नः मयि त्वरया कृतावमानप्रभव इत्यर्थः । क्रोधः धारयितुं न शक्यते । किञ्च मानुषं च वीर्यात् मच्छौर्यात् क्षीणजीवितं न गणये, तमहं जेतुं न शक्नोमीत्यर्थः । स राम एव प्राणान् मदीयप्राणान् मोक्ष्यति मोक्षयिष्यतीत्यर्थः । अतः हे दुर्भगे ! आत्मदुश्चरितैः स्वापचारव्यापारैः अद्य अयं मच्छुभावहविधिः हतः । त्वन्निमित्तं ममैश्वर्यं क्षीणजीवितं च नष्टमिति भावः । इतः परं बाष्पः संह्रियताम् सम्भ्रमश्च विमुच्यताम् । अहं भ्रात्रा सह रामं प्रति यामि यमसादनं च यामि न सन्देह इत्यर्थः ॥ ४ ॥ ततः परं रामस्य परश्वधहतस्य रामसम्बन्धिपरश्वधेन हतस्य मन्दप्राणस्य भूतले पतितस्य, ममेति शेषः । हे राक्षसि ! रुधिरं पास्यसीति सम्बन्धः ॥ ५ ॥ पुनः प्रशंसितः त्वमेव सकलरक्षःश्रेष्ठ इत्यादि ॥ ६ ॥ ७ ॥



स०–मध्येखरः इत्यत्र अखर इति छेदः । अखरः स्वभावतोऽक्रूरः, याज्ञवल्क्यसुतत्वात् । यथोक्तं शान्तिपर्वणि–" याज्ञवल्क्यसुता राजन् " इत्यादि ॥ १ ॥

चित्ततया पुनः प्रशशंस ॥ ६ ॥ अमुमर्थं विशदयति–तयेति ॥ ७ ॥ चतुर्दशेत्यादिश्लोकत्रयमेकं वाक्यम् । चतुर्दश सहस्राणि सन्तीति शेषः । घोराणां घोररूपाणाम् । लोकहिंसाविहाराणां जनवधैकलीलानाम् । महास्यानां विकृतमुखानामिति यावत् । उदीर्णानां गर्वितानाम् । सर्वोद्योगं सर्वप्रकारे

तया परुषितः पूर्वं पुनरेव प्रशंसितः । अब्रवीद्दूषणं नाम खरः सेनापतिं तदा ॥ ७ ॥ चतुर्दश सहस्राणि मम चित्तानुवर्तिनाम् । रक्षसां भीमवेगानां समरेष्वनिवर्तिनाम् ॥ ८ ॥ नीलजीमूतवर्णानां घोराणां क्रूरकर्मणाम् । लोकहिंसाविहाराणां बलिनामुग्रतेजसाम् ॥ ९ ॥ तेषां शार्दूलदर्पाणां महास्यानां महौजसाम् । सर्वोद्योगमुदीर्णानां रक्षसां सौम्य कारय ॥ १० ॥ उपस्थापय मे क्षिप्रं रथं सौम्य धनूंषि च । शरांश्चित्रांश्च खड्गांश्च शक्तीश्च विविधाः शिताः ॥ ११ ॥ अग्रे निर्यातुमिच्छामि पौलस्त्यानां महात्मनाम् । वधार्थं दुर्विनीतस्य रामस्य रणकोविदः ॥ १२ ॥ इति तस्य ब्रुवाणस्य सूर्यवर्णं महारथम् । सदश्वैः शबलैर्युक्तमाचचक्षेऽथ दूषणः ॥ १३ ॥ तं मेरुशिखराकारं तप्तकाञ्चनभूषणम् । हेमचक्रमसम्बाधं वैडूर्यमयकूबरम् ॥ १४ ॥ मत्स्यैः पुष्पैर्द्रुमैः शैलैश्चन्द्रसूर्यैश्च काञ्चनैः । मङ्गलैः पक्षिसङ्घैश्च ताराभिरभिसंवृतम् ॥ १५ ॥

रुद्योगम्, सर्वायुधवाहनादिभिरुद्योगमित्यर्थः ॥ ८–१० ॥ शक्तीः आयुधविशेषान् ॥ ११ ॥ पौलस्त्यानां पुलस्त्यवंश्यानामग्रे रणकोविदोऽहं गन्तुमिच्छामीत्यन्वयः । रामस्य रणज्ञत्वात् पौलस्त्यानां वधार्थमिति दैवी वाक् भाविसूचनी ॥ १२ ॥ शबलैः नानावर्णैः । "शबलैताश्च कर्बुरे" इत्यमरः । महारथं सदश्वैर्युक्तमाचचक्ष इत्यन्वयः ॥ १३ ॥ तप्तकाञ्चनं परिशुद्धकाञ्चनम् । असम्बाधं विस्तीर्णम् । कूबरः युगन्धरः । "कूबरस्तु युगंधरः" इत्यमरः ॥ १४ ॥ मङ्गलैः मङ्गलावहैः अलङ्कारकरैरित्यर्थः । काञ्चनैः काञ्चनविकारैः । इदं विशेषणद्वयं मत्स्यादिसर्वविशेषणम् । निस्त्रिंशः असिः ॥ १५–१८ ॥

चतुर्दशसहस्राणि, सन्तीति शेषः ॥ ८ ॥ ९ ॥ उदीर्णानां हृतानाम् । सर्वोद्योगं सर्वप्रकारेणोद्योगं चतुरङ्गबलसर्वायुधासामग्रीसहितत्वेनोद्योगं कारयेत्यन्वयः ॥ १० ॥ ११ ॥ वस्तुतस्तु–दुर्विनीतस्य दुष्टेषु विनीतस्य रामस्याग्रे पौलस्त्यानां राक्षसानां वधार्थं निर्यातुमिच्छामीति सम्बन्धः ॥ १२ ॥ शबलैः चित्रवर्णैः । रथमुपस्थितमिति शेषः ॥ १३ ॥ वैडूर्यमयौ कूबरौ युगंधरौ यस्य सः । असम्बाधं सम्मर्दरहितम् ॥ १४ ॥ शोभार्थं विरचितैः काञ्चनैस्सुवर्णकल्पितैः । एतच्च

तत इति । राक्षसं राक्षससम्बन्धि ॥१९॥ मुद्गरः लोहमयगदा। पट्टिशः 'पट्टयम्' इति द्रमिडनामयुक्त आयुधविशेषः। तोमरः 'वल्लयम्' इति द्रमिडनामयुक्तः। शक्तिः 'ईट्टी' इति द्रमिडनामकः। परिघः 'कुण्डान्तडी' इति द्रमिडनामा। अतिमात्रैः महद्भिः वज्रैः अष्टास्त्रैरायुधैः ॥२०-२२॥ तांस्त्विति ।

ध्वजनिस्त्रिंशसम्पन्नं किङ्किणीकविराजितम्। सदश्वयुक्तं सोमर्षादारुरोह खरो रथम् ॥१६॥ निशाम्य तु रथस्थं तं राक्षसा भीमविक्रमाः। तस्थुः सम्परिवार्यैनं दूषणं च महाबलम् ॥ १७ ॥ खरस्तु तान् महेष्वासान् घोरवर्मायुधध्वजान्। निर्यातेत्यब्रवीद्धृष्टो रथस्थः सर्वराक्षसान् ॥ १८ ॥ ततस्तद्राक्षसं सैन्यं घोरवर्मायुधध्वजम्। निर्जगाम जनस्थानान्महानादं महाजवम्॥१९॥ मुद्गरैः पट्टिशैः शूलैः सुतीक्ष्णैश्च परश्वधैः। खड्गैश्चक्रैश्च हस्तस्थैर्भ्राजमानैश्च तोमरैः ॥ २० ॥ शक्तिभिः परिघैर्घोरैरतिमात्रैश्च कार्मुकैः। गदासिमुसलैर्वज्रैर्गृहीतैर्भीमदर्शनैः ॥ २१ ॥ राक्षसानां सुघोराणां सहस्राणि चतुर्दश । निर्यातानि जनस्थानात् खरचित्तानुवर्तिनाम् ॥ २२ ॥ तांस्त्वभिद्रवतो दृष्ट्वा राक्षसान् भीमविक्रमान्। खरस्यापि रथः किञ्चिज्जगाम तदनन्तरम्॥ २३ ॥ ततस्तान् शबलानश्वांस्तप्तकाञ्चनभूषितान्। खरस्य मतिमाज्ञाय सारथिः समचोदयत् ॥ २४ ॥ स चोदितो रथः शीघ्रं खरस्य रिपुघातिनः । शब्देनापूरयामास दिशश्च प्रदिशस्तदा ॥ २५ ॥

किंचिज्जगाम सेनासम्मर्दादिति भावः। खराज्ञाभावाद्वा ॥ २३॥ मतिं सम्मतिम्। यात्राभिप्रायमिति यावत् ॥ २४ ॥ शब्देन नेमिघोषेण । प्रदिशः

मत्स्यादौ सर्वत्र योज्यम्। मङ्गलैरलङ्कारप्रयोजकैः। सर्वत्र विचित्रैरिति शेषः ॥ १५ ॥ अमर्षात् क्रोधात् आरुरोहेति पराजयसूचनम्। "क्रोधः कार्यविभङ्गाय" इति शकुनशास्त्रे ॥ १६ ॥ टीका—निस्त्रिंशः खड्गः॥१६॥ रथस्थं खरं निशाम्य दृष्ट्वा ॥ १७ ॥ १८ ॥ रक्षसामिदं राक्षसं सैन्यं निर्जगामेति सम्बन्धः ॥ १९ ॥ मुद्गरैरित्यादि श्लोकत्रयमेकं वाक्यम्। वज्रैः वज्रायुधतुल्यैः मुद्गरादिभिरुपलक्षितानां राक्षसानां चतुर्दशसहस्राणि निर्यातानीत्यन्वयः। पुनरप्यत्र रक्षसां चतुर्दशसहस्राणीत्युक्तिः पूर्वं खरेणोक्तसङ्ख्याप्रदर्शनार्थमिति भावः॥ टीका—मुद्गरः लगुडः। पट्टसः लोहदण्डः तीक्ष्णधार आयुधविशेषः। पट्टस इति पाठः ॥ २०-२५ ॥

विदिशः ॥ २५ ॥ महाबलः झञ्झामारुतः । "झञ्झावातो महाबलः" इति निघण्टुः । तद्वान् अर्श आद्यच् । झञ्झामारुतप्रेरित इत्यर्थः । महानिल इत्यपि पाठः । अश्मवर्षवान् अश्मवर्षोद्युक्त इत्यर्थः । घनम् उपरितत(न)मेघम् ॥ २६॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥ अथ युद्धाय प्रयातस्य खरस्य उत्पातवर्णनं त्रयोविंशे—तस्मिन् यात इत्यादि । अशिवम् अशुभावहम् ।

प्रवृद्धमन्युस्तु खरः खरस्वनो रिपोर्वधार्थं त्वरितो यथान्तकः । अचूचुदत्सारथिमुन्नदन् घनं महाबलो मेघ इवाश्म वर्षवान् ॥ २६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे द्वाविंशः सर्गः ॥ २२ ॥
तस्मिन् याते जनस्थानादशिवं शोणितोदकम् । अभ्यवर्षन्महामेघस्तुमुलो गर्दभारुणः ॥ १ ॥ निपेतुस्तुरगा स्तस्य रथयुक्ता महाजवाः । समे पुष्पचिते देशे राजमार्गे यदृच्छया ॥ २ ॥ श्यामं रुधिरपर्यन्तं बभूव परिवेषणम् । अलातचक्रप्रतिमं परिगृह्य दिवाकरम् ॥ ३ ॥ ततो ध्वजमुपागम्य हेमदण्डं समुच्छ्रितम् । समाक्रम्य महाकाय स्तस्थौ गृध्रः सुदारुणः ॥४॥ जनस्थानसमीपे तु समागम्य खरस्वनाः । विस्वरान्विविधांश्चक्रुर्मांसादा मृगपक्षिणः॥५॥

शोणितोदकं रक्तवर्णजलम् । तुमुलः सङ्कुलः । गर्दभारुणः गर्दभवद्धूसरः ॥ १ ॥ निपेतुः स्खलिताः । रथयुक्ताः रथे बद्धाः । पुष्पचिते पुष्पैः निबिडे । यदृच्छया दैवगत्या ॥ २ ॥ सूर्यपरिवेषमाह—श्याममिति । सर्वत्र श्यामम् । पर्यन्ते प्रान्ते रुधिरं रुधिरवर्णम् । अलातचक्रप्रतिममिति ह्रस्वत्वमुच्यते । परिवेषणं परिवेषः । परिगृह्य परितो व्याप्य ॥३॥ समुच्छ्रितम् उन्नतम् । ध्वजमुपागम्य समाक्रम्य परिक्रम्य तस्थौ ॥४॥ खरस्वनाः परुषस्वनाः । विस्वरान्

प्रवृद्धेति । उन्नदन्नुच्चैर्नादं कुर्वन् । अश्मवर्षवान् महाबलो मेघः उपरि विद्यमानं घनं मेघमिवाचूचुददित्यन्वयः ॥ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां द्वाविंशः सर्गः ॥ २२ ॥ तत्प्रयातमिति पाठः । णिचि कर्मणि क्तः । तत् बलम् सेनायामित्यर्थः । गर्दभारुणः गर्दभ इव अरुणो धूसरः ॥ १ ॥ पुष्पचिते पुष्पयुक्ते । रथयुक्ताः रथे बद्धाः । यदृच्छया दैवगत्या ॥ २ ॥ रुधिरपर्यन्तं रुधिरो रक्तवर्णः पर्यन्तः प्रान्तदेशो यस्य तत् । अलातचक्रप्रतिममिति तद्वत्तुल्यम् ॥ ३ ॥ ४ ॥ विस्वरान विकृतस्वरान् ॥ ५ ॥

विकृतस्वरान् । मांसमदन्तीति मांसादाः ॥५॥ प्रदीप्तायां दिशि सूर्यसन्निहितदिशीत्यर्थः । शिवाः शृगालाः । घोराः ज्वालामुखाः ॥६॥ प्रभिन्नाः इन्द्रच्छिन्नपक्षाः । तोयशोणितधारिणः शोणिततोयधारिणः । परनिपातः । अनाकाशम् अप्रकाशम्, छन्नमिति यावत् । बलाहकाः मेघाः ॥७॥ उद्धतं सान्द्रम् ॥८॥ क्षतजार्द्रसवर्णाभा क्षतजेन रक्तेनार्द्रं संसिक्तं यत् पटादिकं तत्तुल्याभा । कालं विना स्वकालं विना । सन्ध्या बभौ, मेघेष्विति शेषः । खरस्येति पूर्वं सूर्या



व्याजह्रुश्च प्रदीप्तायां दिशि वै भैरवस्वनम् । अशिवं यातुधानानां शिवा घोरा महास्वनाः ॥ ६ ॥ प्रभिन्नगिरिसङ्काशास्तोयशोणितधारिणः । आकाशं तदनाकाशं चक्रुर्भीमा बलाहकाः ॥ ७ ॥ बभूव तिमिरं घोरमुद्धतं रोमहर्षणम् । दिशो वा विदिशो वापि न च व्यक्तं चकाशिरे ॥ ८ ॥ क्षतजार्द्रसवर्णाभा सन्ध्या कालं विना बभौ । खरस्याभिमुखा नेदुस्तदा घोरमृगाः खगाः । कङ्कगोमायुगृध्राश्च चुक्रुशुर्भयशंसिनः ॥ ९ ॥ नित्याशुभकरा युद्धे शिवा घोरनिदर्शनाः । नेदुर्बलस्याभिमुखं ज्वालोद्गारिभिराननैः ॥ १० ॥ कबन्धः परिघाभासो दृश्यते भास्करान्तिके । जग्राह सूर्यं स्वर्भानुरपर्वणि महाग्रहः ॥ ११ ॥

धिष्ठितदिशि शिवारुतयुक्तम् अधुना खरस्याभिमुखमुच्यते । घोरमृगाः श्वापदादयः । कङ्काः स्थूलकायाः । भयङ्कराः मृतपशुनरादिभक्षणशीलाः पक्षिविशेषाः ॥९॥ सेनाभिमुखशिवारुतमाह—नित्येति । युद्धे नित्यमशुभकराः अशुभशंसिनः । घोरनिदर्शनाः घोरफलकनिदर्शनाः । शिवाः गोमायवः । "स्त्रियां शिवाभूरिमायगोमायुमृगधूर्तकाः" इत्यमरः । ज्वालामुद्गिरन्तीति ज्वालोद्गारीणि तैः आननैः । उपलक्षणे तृतीया ॥१०॥ परिघवत् परिघायुधवदाभासत

प्रदीप्तायां दिशि उत्पातवशाज्जाज्वल्यमानायाम् । शिवाः गोमायवः । यातुधानानां राक्षसानाम् । अशिवममङ्गलसूचकं भैरवस्वनं व्याजह्रुरित्यन्वयः ॥ ६ ॥ प्रभिन्नगिरिसङ्काशाः परस्परसंसक्तपर्वतसदृशाः । तोयशोणितधारिणः तोयं शोणितमिव धारयन्तीति तथा । रक्ततुल्यं तोयं धारयन्तीत्यर्थः । आकाशमनाकाशमनवकाशं चक्रुः आच्छादयामासुरित्यर्थः ॥७॥ उद्धतं सान्द्रम् ॥८॥ क्षतजार्द्रसवर्णाभा रुधिरोक्षितेन वस्तुना समानप्रभा सन्ध्या कर्त्री । कालं स्वकालं विना । खरस्येति पूर्वं दीप्तदिगभिमुख्येन शिवारुतान्युक्तानि अधुना खराभिमुख्येन सैन्याभिमुख्येन चेति भेदादपौनरुक्त्यम् । टी०—कङ्कः श्वेतगृध्रः ॥ ९ ॥ नित्यमशुभकरा अशुभशंसिनः । घोरनिदर्शनाः दुर्निमित्तदृष्टान्तभूताः ॥१०॥ कबन्धो धूमकेतुः । परिघाभासः परिघा आयुधविशेषः । तद्वद्भासमान इत्यर्थः ॥ टी०—स्वर्भानुः राहुः ॥ ११॥

इति परिघाभासः । कबन्धः शिरःशून्यमनुष्यकायः । भास्करान्तिके सूर्यस्य समीपे । दृश्यते अदृश्यत । तथोक्तं कामन्दकीये—"सूर्यंदृष्टकबन्धादिरकस्मान्मूढवाहनः ।" इति । कबन्धाकारमेघखण्ड इति यावत् । महानाग्रहो यस्य स महाग्रहः । स्वर्भानुः राहुः । अपर्वणि प्रतिपद्दर्शसन्धिः पर्व तस्मादन्यस्मिन् काले सूर्यं जग्राह । तदाह वराहमिहिरः "अपर्वणि तथा राहुग्रहणं चन्द्रसूर्ययोः" इति ॥११॥ प्रवाति प्रतिकूलो वाति । उत्पेतुः प्रचकाशिरे खद्योतसप्रभाः

प्रवाति मारुतः शीघ्रं निष्प्रभोऽभूद्दिवाकरः । उत्पेतुश्च विना रात्रिं ताराः खद्योतसप्रभाः ॥ १२ ॥ संलीनमीनविहगा नलिन्यः शुष्कपङ्कजाः । तस्मिन् क्षणे बभूवुश्च विना पुष्पफलैर्द्रुमाः ॥ १३ ॥ उद्धूतश्च विना वातं रेणुर्जलधरारुणः । वीचीकूचीति वाश्यन्त्यो बभूवुस्तत्र शारिकाः ॥ १४ ॥ उल्काश्चापि सनिर्घाता निपेतुर्घोरदर्शनाः । प्रचचाल मही सर्वा सशैलवनकानना ॥ १५ ॥ खरस्य च रथस्थस्य नर्दमानस्य धीमतः । प्राकम्पत भुजः सव्यः स्वरश्चास्यावसज्जत ॥ १६ ॥ सास्रा सम्पद्यते दृष्टिः पश्यमानस्य सर्वतः । ललाटे च रुजा जाता न च मोहान्न्यवर्तत ॥ १७ ॥ तान् समीक्ष्य महोत्पातानुत्थितान् रोमहर्षणान् । अब्रवीद्राक्षसान् सर्वान् प्रहसन् स खरस्तदा ॥ १८ ॥

ज्योतिरिङ्गणसमानकान्तयः ॥ १२ ॥ संलीनाः जलान्तर्गताः । पुष्पफलैर्विना बभूवुः गलितपुष्पादिका बभूवुरित्यर्थः ॥ १३ ॥ उद्धूतः उत्क्षिप्तः । जलधरारुणः मेघवद्धूसरः । वीचीकूचीति शब्दानुकारः । वाश्यन्त्यः शब्दं कुर्वन्त्यः ॥ १४ ॥ उल्कानिर्घातौ ज्योतिर्वायुविशेषौ । अत्र वराहमिहिरः—" उल्का शिरसि विशाला निपतन्ती वर्धते तनुप्रभया । पवनाभिहता गगनादवनौ च यदा समापतति । भवति तदा निर्घातः स च पापो दीर्घखगविरुतः ॥ " इति ॥१५॥ अवसज्जत अवासज्जत । गद्गदकण्ठतया प्रतिबद्धोऽभूदित्यर्थः ॥१६॥ रुजा पीडा । "स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः" इत्यमरः । मोहात् अज्ञानात् । न न्यवर्तत एवमनेकदुर्निमित्तदर्शनेपि युद्धगमनान्न न्यवर्ततेत्यर्थः ॥ १७ ॥ उत्थितान् उद्भूतान् । रोमहर्षणान् रोमाञ्चकरान् भयजनकानित्यर्थः । तदुक्तं साहित्यचिन्तामणौ—" उल्कानिपातनिर्घातव्यालव्याघ्रादिदर्शनैः । उत्पन्नः सहसा चित्तविक्षोभस्त्रास इष्यते ॥ नेत्रसम्मीलनोत्कम्पगात्र

प्रवातीति । प्रतिकूल इति शेषः । खद्योतसप्रभाः खद्योतसन्निभाः । उत्पेतुः उत्पन्नाः ॥१२॥१३॥ जलधरारुणः सन्ध्यामेघवदरुण इत्यर्थः । वीचीकूचीत्यनुकरणशब्दौ । वाश्यन्त्यः शब्दं कुर्वन्त्यः ॥१४॥१५॥ स्वरश्चास्यावसज्जत हीनस्वरोऽभूत् ॥ १६ ॥ सास्रा दुर्निमित्तरूपाश्रुसमेता । सास्रमिति पाठे—क्रियाविशेषणम् । रुजा वेदना

टी०—ननु रामस्य अमानुषचरित्रं ज्ञात्वा युद्धागमनवेलायां स्वस्य दुर्निमित्तानि दृष्ट्वा च खरो निर्भीकः प्रहृष्टः किमर्थमभूदित्याशङ्कायामुच्यते—पुरा तु याज्ञवल्क्यसुताशिवेन शप्ताः पुनरनुगृहीता राक्षसत्व

सङ्कोचगद्गदैः । वैवर्ण्यस्वेदरोमाञ्चस्तम्भाद्यैरनुभाव्यते ॥" इति । प्रहसन्नित्यनेन गर्वः सूच्यते ॥ १८ ॥ तत्कार्यप्रतिज्ञामाह—महोत्पातानिति । तथा चोक्तं चिन्तामणौ—"कुलरूपवयोविद्याबलैश्वर्यधनादिभिः । या भवेदात्मनः श्लाघा स गर्व इति कथ्यते । उद्ग्रीवावेक्षणावज्ञाप्रतिज्ञातिर्भवेदिह ॥" इति ।

महोत्पातानिमान् सर्वानुत्थितान् घोरदर्शनान् । न चिन्तयाम्यहं वीर्याद्बलवान् दुर्बलानिव ॥१९॥ तारा अपि शरै स्तीक्ष्णैः पातयामि नभःस्थलात् । मृत्युं मरणधर्मेण संक्रुद्धो योजयाम्यहम् ॥ २० ॥ राघवं तं बलोत्सिक्तं भ्रातरं चास्य लक्ष्मणम् । अहत्वा सायकैस्तीक्ष्णैर्नोपावर्तितुमुत्सहे॥२१॥ सकामा भगिनी मेऽस्तु पीत्वा तु रुधिरं तयोः । यन्निमित्तस्तु रामस्य लक्ष्मणस्य विपर्ययः॥२२॥ न क्वचित्प्राप्तपूर्वो मे संयुगेषु पराजयः । युष्माकमेतत्प्रत्यक्षं नानृतं कथयाम्यहम् ॥२३॥ देवराजमपि क्रुद्धो मत्तैरावतयायिनम् । वज्रहस्तं रणे हन्यां किं पुनस्तौ कुमानुषौ ॥ २४ ॥ सा तस्य गर्जितं श्रुत्वा राक्षसस्य महाचमूः । प्रहर्षमतुलं लेभे मृत्युपाशावपाशिता ॥२५॥ समीयुश्च महात्मानो युद्धदर्शनकांक्षिणः । ऋषयो देवगन्धर्वाः सिद्धाश्च सह चारणैः॥२६॥ समेत्य चोचुः सहितास्तेऽन्योन्यं पुण्यकर्मणः॥२७

दुर्बलानिव पुरुषान् ॥ १९ ॥ २० ॥ उत्सिक्तं गर्वितम् ॥ २१–२५ ॥ समीयुः सङ्गताः । सहिताः लोकहितपराः । पुण्यकर्मणः पुण्यकर्माणः । दीर्घा

तथापीति शेषः । न न्यवर्तत युद्धयात्राया इति शेषः ॥१७॥१८॥ दुर्बलान् जनानिव॥१९॥२०॥ बलोत्सिक्तं बलाधिकम् । अहत्वा उपावर्तितुं नोत्सह इति सम्बन्धः । वस्तुतस्तु अहत्वा नोपावर्तितुमुत्सह इत्यनेन हत्वैवोपावर्तितुमुत्सह इत्यभिप्रायः । हन्तुमसमर्थः अतः नोपावर्तत इति व्यज्यते ॥ २१ ॥ यन्निमित्त इति । या शूर्पणखा निमित्तं यस्य विपर्ययस्य स तथोक्तः । विपर्ययो नाशः । सा भगिनीत्यर्थः । वस्तुतस्तु—रामस्य लक्ष्मणस्य च जय इति शेषः । मे मम विपर्ययः नाशश्च यन्निमित्तः या शूर्पणखानिमित्तं यस्य सः । सा भगिनी । तयोः ताभ्यां मृतस्य, ममेति शेषः । रुधिरं पीत्वा सकामास्तु ॥ २२ ॥ एवं रामात्स्वमरणं निश्चित्यापि युयुत्सुस्सन् स्वसेनाधैर्योत्पादकानि वाक्यान्याह—न क्वचिदित्यादिना ॥२३॥ कुमानुषौ कौ भूमौ मनुष्यरूपेणावतीर्णावित्यवगन्तव्यम् ॥ २४ ॥ मृत्युपाशावपाशिता



—मोक्षाय । ते च खरदूषणत्रिशिरसो बभूवुः । तच्छापनिवृत्त्यर्थं शिवस्त्रिगुणात्मके रामे स्वांशं खरादिवधकाले न्यवेशयत् । तस्माच्छापमुक्तिर्भविष्यतीति तद्रासगात्रतात् प्रमोदो जात इत्यविरोधः । शेषधर्मस्थभीष्म युधिष्ठिरसंवादकथात्रानुसन्धेया ॥ १८ ॥

भाव आर्षः ॥ २६ ॥२७॥ लोकानामभिसङ्गता इति ये लोकानाम् अभिसङ्गताः अनुकूलाः तेभ्योपि स्वस्त्यस्त्वित्यर्थः । जयतां जयतु ।आर्ष आत्मने पदम् । सङ्ख्ये युद्धे । चक्रहस्तो विष्णुः । वाहिनीं सेनाम् । गतायुषां गन्तुमुद्युक्तायुषाम् । एतत् स्वस्तीत्यादिवाक्यम् । अन्यच्च राघवजयविषयकं

स्वस्ति गोब्राह्मणेभ्योऽस्तु लोकानां येऽभिसङ्गताः। जयतां राघवः सङ्ख्ये पौलस्त्यान् रजनीचरान् ॥२८॥ चक्रहस्तो यथा युद्धे सर्वानसुरपुङ्गवान् । एतच्चान्यच्च बहुशो ब्रुवाणाः परमर्षयः ॥२९॥ जातकौतूहलास्तत्र विमानस्थाश्च देवताः। ददृशुर्वाहिनीं तेषां राक्षसानां गतायुषाम् ॥ ३० ॥ रथेन तु खरो वेगादुग्रसैन्यो विनिस्सृतः । तं दृष्ट्वा राक्षसं भूयो राक्षसाश्च विनिस्सृताः ॥ ३१ ॥ श्येनगामी पृथुग्रीवो यज्ञशत्रुर्विहङ्गमः । दुर्जयः करवीराक्षः परुषः कालकार्मुकः ॥ ३२ ॥ मेघमाली महामाली सर्पास्यो रुधिराशनः । द्वादशैते महावीर्याः प्रतस्थुरभितः खरम् ॥ ३३ ॥ महाकपालः स्थूलाक्षः प्रमाथी त्रिशिरास्तथा । चत्वार एते सेनान्यो दूषणं पृष्ठतो ययुः ॥ ३४ ॥ सा भीमवेगा समराभिकामा महाबला राक्षसवीरसेना । तौ राजपुत्रौ सहसाभ्युपेता माला ग्रहाणामिव चन्द्रसूर्यौ ॥ ३५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

वाक्यं ब्रुवाणाः परमर्षयः विमानस्था देवताश्च जातकौतूहलाः सन्तः राक्षसानां वाहिनीं ददृशुरिति सम्बन्धः ॥ २८–३० ॥ रथेनेति । वेगात् रथवेगात् । विनिस्सृतः गतः ॥३१॥ श्येनेत्यादि । श्येनगाम्यादयो द्वादश खरामात्याः ॥ ३२–३४ ॥ सेति । समराभिकामा युद्धेप्सुः । ग्रहाणामङ्गारकादीनाम् ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

अवपाशिता बद्धा ॥ २५–३१ ॥ श्येनगाम्यादयो द्वादश खरामात्याः ॥ ३२–३५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां त्रयोविंशः सर्गः ॥ २३ ॥

अथ रामस्य युद्धसन्नाहश्चतुर्विंशे–आश्रममित्यादि । औत्पातिकानिति स्वार्थे ठक् ॥ १ ॥ २ ॥ इमानिति । सर्वभूतापहारिणः सर्वभूतापहारसूचकान् प्रकृते तु सर्वराक्षसान् संहर्तुमुद्यतानिति योजना ॥ ३ ॥ अमी इति । रुधिरमय्यो धाराः येषां ते रुधिरधाराः । खरस्वरान् घोरस्तनितानि विवर्तन्ते सञ्चरन्ति ॥ ४ ॥ सधूमा इति प्रतापानलोद्युक्ता इति भावः । अत एव मम युद्धाभिनन्दिनः । रुक्मपृष्ठानि स्वर्णमयपृष्ठानि । चापानि

आश्रमं प्रतियाते तु खरे खरपराक्रमे । तानेवोत्पातिकान् रामः सह भ्रात्रा ददर्श ह ॥ १ ॥ तानुत्पातान् महाघोरानुत्थितान् रोमहर्षणान् । प्रजानामहितान् दृष्ट्वा वाक्यं लक्ष्मणमब्रवीत् ॥ २ ॥ इमान् पश्य महाबाहो सर्वभूतापहारिणः । समुत्थितान् महोत्पातान् संहर्तुं सर्वराक्षसान् ॥ ३ ॥ अमी रुधिरधारास्तु विसृजन्तः खरस्वनान् । व्योम्नि मेघा विवर्तन्ते परुषा गर्दभारुणाः ॥ ४ ॥ सधूमाश्च शराः सर्वे मम युद्धाभिनन्दिनः । रुक्मपृष्ठानि चापानि विवेष्टन्ते च लक्ष्मण ॥ ५ ॥ यादृशा इह कूजन्ति पक्षिणो वनचारिणः । अग्रतो नो भयं प्राप्तं संशयो जीवितस्य च ॥ ६ ॥ सम्प्रहारस्तु सुमहान् भविष्यति न संशयः । अयमाख्याति मे बाहुः स्फुरमाणो मुहुर्मुहुः । सन्निकर्षे तु नः शूर जयं शत्रोः पराजयम् ॥ ७ ॥

धनूंषि । "अथास्त्रियां धनुश्चापौ" इत्यमरः । विवेष्टन्ते चलन्ति, युद्धसन्नद्धानि भवन्तीत्यर्थः । आत्मनश्चापद्वयं लक्ष्मणस्यैकमिति बहुवचनम् ॥ ५ ॥ यादृशाः प्रसिद्धाः, पूर्वं कृतसंवादा इत्यर्थः । अग्रतः अव्यवहितोत्तरकाले । नो भयमिति सुवाक् ॥ ६ ॥ सुमहान् सम्प्रहारः युद्धम् । बाहुः दक्षिणः । सन्नि

आश्रममिति । औत्पातिकानुत्पातान् । स्वार्थे ठक् ॥ १ ॥ प्रजानामहितान् । अत्र प्रजाशब्देन प्रकृतत्वाद्राक्षसा एवोच्यन्ते ॥ २ ॥ सर्वभूतापहारिणः सर्वराक्षसविनाशसूचकानिति यावत् ॥ ३ ॥ ४ ॥ एवं राक्षसानां दुर्निमित्तान्युक्त्वा स्वस्य जयसूचकानि निमित्तान्याह–सधूमा इति । मम युद्धाभिनन्दिताः युद्धे अभितो नन्दो आनन्द एषां सञ्जाता इति तथोक्ताः, श्रीरामगतो युद्धहर्षः शरेषूपचर्यते । मम युद्धहर्षसूचका इति फलितार्थः । चापानि विवेष्टन्ते विशेषेण वेष्टन्ते अभिनिमन्त्रिततत्तद्देवतासान्निद्ध्याच्चापेषु स्वयमेव शरास्संसक्ता भवन्तीत्यर्थः ॥ ५ ॥ अग्रतः अस्माकं पुरत इत्यर्थः । वनचारिणः यादृशाः सौम्याः पक्षिणः कूजन्ति तादृशैस्सुनिमित्तैः नोऽस्माकम् अभयं प्राप्तम् । चकारादरीणां जीवितस्य संशयश्च प्राप्त इत्यर्थः ॥ ६ ॥ सम्प्रहारो रणः । स्वस्य जयसूचकानिमित्ता

कर्पे अव्यवहितोत्तरकाले ॥ ७ ॥ स्वमुखप्रसादादेः स्वयं द्रष्टुमशक्यत्वेन स्वसमानसुखे लक्ष्मणे निदर्शयति—सप्रभमिति । मुखप्रसादफलं व्यतिरेकमुखे नाह उद्यतानामिति ॥ ८–१० ॥ अनागतेति । आपदं निमित्तवशाच्छङ्कमानेन शुभम् आपत्परिहारम् । इच्छता विपश्चिता दूरदर्शिना पुरुषेण अनागत विधानम् अनागतस्य भाविनोऽनर्थस्य विधानं प्रतिविधानं कर्तव्यम् ॥ ११ ॥ तस्मादिति । गृहीत्वा रक्ष्यत्वेन गृहीत्वा । पादपसङ्कुलां वृक्षावृताम् ॥१२॥

सप्रभं च प्रसन्नं च तव वक्त्रं हि लक्ष्यते । उद्यतानां हि युद्धार्थं येषां भवति लक्ष्मण ॥ ८ ॥ निष्प्रभं वदनं तेषां भवत्यायुःपरिक्षयः ॥९॥ रक्षसां नर्दतां घोरः श्रूयते च महाध्वनिः । आहतानां च भेरीणां राक्षसैः क्रूरकर्मभिः ॥१०॥ अनागतविधानं तु कर्तव्यं शुभमिच्छता । आपदं शङ्कमानेन पुरुषेण विपश्चिता ॥ ११ ॥ तस्माद्गृहीत्वा वैदेहीं शरपाणिर्धनुर्धरः । गुहामाश्रय शैलस्य दुर्गां पादपसङ्कुलाम् ॥ १२ ॥ प्रतिकूलितुमिच्छामि नहि वाक्य मिदं त्वया । शापितो मम पादाभ्यां गम्यतां वत्स मा चिरम् ॥ १३ ॥ त्वं हि शूरश्च बलवान् हन्या ह्येतान्न संशयः । स्वयं तु हन्तुमिच्छामि सर्वानेव निशाचरान् ॥ १४ ॥

अहमेव योत्स्यामीति वक्तुमुद्यतं प्रत्याह—प्रतिकूलितुमिति । इदं वाक्यं प्रतिकूलितुं नेच्छामि । मया शापितोसीति वक्तव्ये मम पादाभ्यामित्युक्तिर्लक्ष्मण व्यवहारानुसारेण ॥ १३ ॥ त्वन्निवर्तनं न त्वदशक्त्या किन्तु मुनिभ्यः प्रतिज्ञानान्मयैव तद्वधः कर्तव्य इत्याशयेनाह—त्वं हीति ॥ १४ ॥

न्तरं दर्शयति अयमिति । बाहुः कर्ता दक्षिण इति शेषः । सन्निकर्षे समीपे ॥ ७ ॥ न केवलं ममैव जयसूचकम्, तवाप्यस्तीत्याह—सप्रभमिति । युद्धार्थमुद्यतान्[1] येषामायुःपरिक्षयो भवति भविष्यति तेषां वदनं निष्प्रभं भवति, नैवमस्माकमिति भावः ॥ ८–१० ॥ अनागतस्य आगमिष्यतः अनिष्टस्येत्यर्थः । प्रतिविधानं परिहारः केनेत्यत आह आपदमिति ॥ ११ ॥ शैलस्य गुहाम्, आश्रमं हित्वेति शेषः । दुर्गामन्यैर्गन्तुमशक्याम् ॥ १२ ॥ इदं वाक्यं त्वया प्रतिकूलितुं प्रतिकूलयितुम् नेच्छामि "समानकर्तृकेषु तुमुन्" इति । यद्यपि तथापि भोक्तुमनुजानातीतिवद् क्वचिद्भिन्नकर्तृकेष्वपि तुमुनिष्यते । प्रतिकूलितमिति पाठे त्वया प्रतिकूलितं

स०—इदं वाक्यं त्वया प्रतिकूलितुं नेच्छामीति भिन्नकर्तृकत्वेपि भोक्तुमनुजानामीत्यादिवत्तुमुन् सम्भवति । यद्वा इदंत्वयेत्येकं वाक्यम् । अयं चासौ त्वं च इदंत्वं तेन प्रतिकूलितुम् । भवान् युवत्या सह गच्छतीति शङ्कामारोपयितुं वाक्यं नेच्छामीति पादाभ्यां शापितोसि । अतश्चिरं मा माकुरु । यद्वा इदं वाक्यं विरमुत्तरं प्रत्युत्तररूपं मा माकार्षीः ॥ १३ ॥

दुर्गाम् अन्यैर्दुरासदाम् ॥ १५ ॥ हन्तेति हर्षे । निर्युक्तं निश्चयेन उपायश्चिन्तित इत्यर्थः । "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः । आविशत् प्राविशत्, अधारयदित्यर्थः ॥ १६ ॥ स तेनेति अत्रोपमालङ्कारेण क्षणेन रक्षःक्षयो ध्वन्यते ॥ १७ ॥ १८ ॥ ततो देवा इत्यादि पूर्वसर्गे समागमनमुक्तम् अत्र सन्निधानम् । चारणाः देवजातिविशेषाः । लोके त्रैलोक्ये । ब्रह्मर्षिसत्तमाः भृग्वादयः । पुण्यकर्मणः पुण्यकर्माणः ॥ १९ ॥ २० ॥ स्वस्तीत्यादि

एवमुक्तस्तु रामेण लक्ष्मणः सह सीतया । शरानादाय चापं च गुहां दुर्गां समाश्रयत् ॥१५॥ तस्मिन् प्रविष्टे तु गुहां लक्ष्मणे सह सीतया । हन्त निर्युक्तमित्युक्त्वा रामः कवचमाविशत् ॥१६॥ स तेनाग्निनिकाशेन कवचेन विभूषितः । बभूव रामस्तिमिरे विधूमोऽग्निरिवोत्थितः ॥ १७ ॥ स चापमुद्यम्य महच्छरानादाय वीर्यवान् । बभूवावस्थितस्तत्र ज्यास्वनैः पूरयन् दिशः ॥ १८ ॥ ततो देवाः सगन्धर्वाः सिद्धाश्च सह चारणैः । समेयुश्च महात्मानो युद्धदर्शन कांक्षिणः ॥ १९ ॥ ऋषयश्च महात्मानो लोके ब्रह्मर्षिसत्तमाः । समेत्य चोचुः सहिता अन्योन्यं पुण्यकर्मणः ॥२०॥ स्वस्ति गोब्राह्मणेभ्योऽस्तु लोकानां येऽभिसङ्गताः । जयतां राघवो युद्धे पौलस्त्यान् रजनीचरान् ॥ २१ ॥ चक्रहस्तो यथा युद्धे सर्वानसुरपुङ्गवान् । एवमुक्त्वा पुनः प्रोचुरालोक्य च परस्परम् ॥ २२ ॥ चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥ २३ ॥

लोकानां येऽभिसङ्गता इति । ये लोकानामभिसङ्गताः अनुकूलाः तेभ्योपि स्वस्त्यस्त्वित्यर्थः । देवादयः समेत्य स्वस्तीत्याद्यूचुः त एवैवमुक्त्वा कथं

त्वत्कर्तृकप्रातिकूल्यवद्वाक्यं नेच्छामीत्यर्थः ॥ १३–१५ ॥ हन्तेति हर्षे । निर्युक्तम् अस्मदुक्तम् लक्ष्मणेन निर्युक्तं नितरां युक्तं कृतमित्युक्त्वा रामः कवचमाविशत् धृतवानित्यर्थः ॥ १६–२० ॥ स्वस्तीति । स्वस्ति गोब्राह्मणेभ्य इति लोकानामभिसङ्गताः लोकपालनायाभिसङ्गताः उद्युक्तास्तेभ्यो ब्राह्मणेभ्यः स्वस्त्यस्तु क्षेममस्तु । स्वस्ति गोब्राह्मणानां चेति पाठे–आर्षत्वान्न चतुर्थी । ये लोकानामभिसङ्गताः हविर्मुखेन अनुकूला भवन्तीत्यर्थः । तदुक्तम् "अग्नौ प्रास्ताहुतिस्सम्यगादित्य

स०–निर्युक्तम् अतिशोभनम् । इत्युक्त्वा यथोक्तं कर्मनिर्णयटीकायां "युक्तशब्दश्शोभनपर्यायः । यथाह भिक्षुः" इति । तट्टिप्पण्यां च यथाह भिक्षुः–"बालक्रीडा वासुदेवस्य युक्ता" इति ॥ १६ ॥

युद्धं भविष्यतीत्यन्तं पुनः प्रोचुरिति सम्बन्धः ॥२१--२३॥ राजर्षयः देवत्वं प्राप्ताः । यद्वा वानप्रस्थीभूताः । सगणाः सपरिकराः ॥२४॥ आविष्टमिति । सङ्ग्रामशिरसि युद्धाग्रे ॥ २५ ॥ रामस्य रूपं रुद्रस्य रूपमिव बभूव ॥ २६ ॥ तत इति । निर्ह्रादः शब्दः । वर्म कवचम् । अनीकं सेना ॥ २७ ॥ सिंह

इति राजर्षयः सिद्धाः सगणाश्च द्विजर्षभाः । जातकौतूलास्तस्थुर्विमानस्थाश्च देवताः ॥ २४ ॥ आविष्टं तेजसा रामं सङ्ग्रामशिरसि स्थितम् । दृष्ट्वा सर्वाणि भूतानि भयाद्विव्यथिरे तदा ॥ २५ ॥ रूपमप्रतिमं तस्य रामस्याक्लिष्टकर्मणः । बभूव रूपं क्रुद्धस्य रुद्रस्येव पिनाकिनः ॥ २६ ॥ [ इति सम्भाष्यमाणे तु देवगन्धर्वचारणैः ] ततो गम्भीरनिर्ह्रादं घोरवर्मायुधध्वजम् । अनीकं यातुधानानां समन्तात्प्रत्यदृश्यत ॥ २७ ॥ सिंहनादं विसृजतामन्योन्यमभिगर्जताम् । चापानि विस्फारयतां जृम्भतां चाप्यभीक्ष्णशः ॥ २८ ॥ विप्रघुष्टस्वनानां च दुन्दुभींश्चापि निघ्नताम् । तेषां सुतुमुलः शब्दः पूरयामास तद्वनम् ॥२९॥ तेन शब्देन वित्रस्ताः श्वापदा वनचारिणः । दुद्रुवुर्यत्र निःशब्दं पृष्ठतो न व्यलोकयन् ॥३०॥ तत्त्वनीकं महावेगं रामं समुपसर्पत । धृतनानाप्रहरणं गम्भीरं सागरोपमम् ॥३१॥ रामोऽपि चारयन् चक्षुः सर्वतो रणपण्डितः । ददर्श खरसैन्यं तद्युद्धाभिमुखमुत्थितम् ॥ ३२ ॥

नादमित्यादि । अन्योन्यमभिगर्जताम् अहमेव शत्रुं हनिष्यामीति जल्पतामित्यर्थः । विस्फारयतां ज्याशब्दं कुर्वताम् । अभीक्ष्णशः भृशम् । जृम्भतां जृम्भमाणानां मदेनोद्गच्छतामित्यर्थः । विप्रघुष्टस्वनानां घोषो गुञ्जनाख्यध्वनिविशेषः । " घोषो गुञ्जनमञ्जने " इति वैजयन्ती । भावे निष्ठा । तद्रूप स्वनवतामित्यर्थः ॥ २८ ॥ २९ ॥ तेनेति । श्वापदाः हिंस्रा व्याघ्रादयः । यत्र निःशब्दं शब्दाभावः । "अव्ययं विभक्ति--" इत्यादिना अव्ययीभावः । तं देशं दुद्रुवुरित्यन्वयः । पृष्ठतः पश्चाद्भागम् ॥३०॥ समुपसर्पत समुपासर्पत् । गम्भीरम् इतरदुष्प्रवेशम् ॥३१॥ रामोऽपीति । उत्थितम् उद्युक्तम् ॥३२॥

मुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥" इति ॥२१--२५॥ टी०--चक्रहस्तो विष्णुः ॥ २१ ॥ रूपमिति । रुद्रस्येव महात्मन इति पाठः । जगत्संहरणार्थमुद्युक्तस्य प्रलयकालरुद्रस्य रूपं यद्वत्तद्वत् खरादिवधार्थमुद्युक्तस्य रामस्य रूपमपि बभूवेत्यर्थः । तदुक्तं स्कान्दे--" रुद्रतेजोविलसितं दृष्ट्वा रामकलेवरम् । शङ्खं चक्रं च शूलं च पिनाकं खेटमेव च । खट्वांं घण्टां च डमरुं बाणपाशाङ्कुशं तथा । चापं वज्रं च खड्गं च परशुं त्रासकारणम् । जयश्रियं च गङ्गां च ददृशुः सिद्ध

वितत्येति । वितत्य किञ्चिद्बाणविसर्पणं कृत्वेत्यर्थः । "विततं संहितस्यापि किञ्चिदेव विसर्पणम्" इति वैजयन्ती । तूण्योः पृष्ठपार्श्वद्वयबद्धयोः । आहारयदित्यनेन करुणामूर्तिरप्याश्रितकण्टकोद्धारणाय क्रोधमारोपयामासेति गम्यते, भीमं धनुरुद्धृत्य तूण्योः शरांश्चोद्धृत्य वितत्य सर्वरक्षसां वधार्थं

वितत्य च धनुर्भीमं तूण्योश्चोद्धृत्य सायकान् । क्रोधमाहारयत्तीव्रं वधार्थं सर्वरक्षसाम् ॥ ३३ ॥ दुष्प्रेक्षः सोऽभवत् क्रुद्धो युगान्ताग्निरिव ज्वलन् । तं दृष्ट्वा तेजसाविष्टं प्राद्रवन्वनदेवताः ॥३४॥ तस्य क्रुद्धस्य रूपं तु रामस्य ददृशे तदा । दक्षस्येव क्रतुं हन्तुमुद्यतस्य पिनाकिनः ॥३५॥ आविष्टं तेजसा रामं सङ्ग्रामशिरसि स्थितम् । दृष्ट्वा सर्वाणि भूतानि भयार्तानि प्रदुद्रुवुः ॥ ३६ ॥ तत्कार्मुकैराभरणैर्ध्वजैश्च तैर्वर्मभिश्चाग्निसमानवर्णैः । बभूव सैन्यं पिशिताशनानां सूर्योदये नीलमिवाभ्रवृन्दम् ॥३७॥ इत्यार्षे श्रीरामायणे वाल्मी० श्रीमदारण्यकाण्डे चतुर्विंशः सर्गः ॥२४॥

अवष्टब्धधनुं रामं क्रुद्धं च रिपुघातिनम् । ददर्शाश्रममागम्य खरः सह पुरस्सरैः ॥ १ ॥ तं दृष्ट्वा सशरं चापमुद्यम्य खरनिस्वनम् । रामस्याभिमुखं सूतं चोद्यतामित्यचोदयत् ॥ २ ॥ स खरस्याज्ञया सूतस्तुरगान् समचोदयत् । यत्र रामो महाबाहुरेको धून्वन् स्थितो धनुः ॥ ३ ॥

क्रोधमाहारयदित्यन्वयः ॥ ३३ ॥ ३४ ॥ दक्षस्येति क्रोधातिशयमात्रे दृष्टान्तः ॥ ३५ ॥ ३६ ॥ तदिति । कवचसूर्यकिरणयोः साम्यं नीलाभ्राणां रक्षसां च कार्मुकवत्त्वं ध्वजवत्त्वं च तुल्यं मेघे उत्पातध्वजसम्भवात् । अत्र सार्धसप्तत्रिंशच्छ्लोकाः ॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्डकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥ तुमुलयुद्धं पञ्चविंशे—अवष्टब्धेत्यादि । धन्यत इति धनुः । "धन धान्ये" इत्यस्माद्धातोः "भृमृशीतृचरितत्सरितनिधनिमिमस्जिभ्य उः" इत्यौणादिकसूत्रेण उप्रत्ययः । "धनुर्धां च धनुं विदुः, धनुरिवाजनि वक्रः" इति कविकाव्यप्रयोगश्च ॥ १ ॥ तमिति । चोद्यतामिति रथ इति शेषः ॥ २ ॥ ३ ॥

चारणाः ॥" इति ॥ २६–३२ ॥ वितत्येति । धनुर्वितत्य आरोप्य । क्रोधमिति क्रोधमाहारयत प्राप्तवान् ॥३३॥ तेजसाविष्टमिति रौद्रतेजसा सम्पन्नमित्यर्थः ॥३४–३७॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां चतुर्विंशः सर्गः ॥ २४ ॥ अवष्टब्धधनुं अवलम्बितशरासनम् । धनुःशब्द

निष्पतितं युद्धोन्मुखम् । सचिवाः श्येनगाम्यादयः ॥ ४ ॥ लोहिताङ्गः अङ्गारकः ॥ ५ ॥ अर्दयित्वा पीडयित्वा महानादं ननाद चकारेत्यर्थः ॥ ६ ॥ भीमधन्वानम् । " धनुषश्च " इत्यनङ् समासान्तः । शस्त्रैः आयुधैः । " शस्त्रमायुधलोहयोः " इत्यमरः ॥ ७ ॥ मुद्गरैः स्थूलगदाभिः । प्रासैः कुन्तैः ।



तं तु निष्पतितं दृष्ट्वा सर्वे ते रजनीचराः । नर्दमाना महानादं सचिवाः पर्यवारयन् ॥ ४ ॥ स तेषां यातुधानानां मध्ये रथगतः खरः । बभूव मध्ये ताराणां लोहिताङ्ग इवोदितः ॥ ५ ॥ ततः शरसहस्रेण राममप्रतिमौजसम् । अर्दयित्वा महानादं ननाद समरे खरः ॥ ६ ॥ ततस्तं भीमधन्वानं क्रुद्धाः सर्वे निशाचराः । रामं नानाविधैः शस्त्रैरभ्यवर्षन्त दुर्जयम् ॥७॥ मुद्गरैः पट्टिशैः शूलैः प्रासैः खड्गैः परश्वधैः । राक्षसाः समरे रामं निजघ्नू रोषतत्पराः ॥८॥ ते बलाहकसङ्काशा महानादा महौजसः । अभ्यधावन्त काकुत्स्थं रथैर्वाजिभिरेव च । गजैः पर्वतकूटाभै रामं युद्धे जिघांसवः ॥९॥ ते रामे शरवर्षाणि व्यसृजन् रक्षसां गणाः । शैलेन्द्रमिव धाराभिर्वर्षमाणा बलाहकाः ॥१०॥ स तैः परिवृतो घोरै राघवो रक्षसां गणैः ॥११॥ तानि मुक्तानि शस्त्राणि यातुधानैः स राघवः । प्रतिजग्राह विशिखैर्नद्योघानिव सागरः ॥१२॥ स तैः प्रहरणैर्घोरैर्भिन्नगात्रो न विव्यथे । रामः प्रदीप्तैर्बहुभिर्वज्रैरिव महाचलः ॥१३॥ स विद्धः क्षतजादिग्धः सर्वगात्रेषु राघवः । बभूव रामः सन्ध्याभ्रैर्दिवाकर इवावृतः ॥ १४ ॥

रोषतत्पराः क्रोधपरवशाः ॥ ८ ॥ त इति । बलाहकसङ्काशाः मेघतुल्याः । कूटं शृङ्गम् । अभ्यधावन्त आभिमुख्येनाधावन्त ॥ ९ ॥ ते राम इति । शैलेन्द्रमिवेत्युपमानेन रामस्य निर्दुःखत्वमुक्तम् ॥ १० ॥ स तैरित्याद्यर्धमेकान्वयम् ॥ ११ ॥ तानीति । विशिखैः बाणैः । प्रतिजग्राह प्रतिरुरोध । नद्योघान् नदीप्रवाहान् ॥ १२ ॥ स तैरिति । वज्रैः अशनिभिः ॥ १३ ॥ स विद्ध इति । क्षतजादिग्धः रुधिरालिप्तः ॥ १४ ॥

उकारान्तोऽप्यस्ति ॥ १–३ ॥ सचिवाः श्येनगाम्यादयः ॥ ४ ॥ लोहिताङ्गः भौमः ॥ ५–८ ॥ बलाहकाः मेघाः ॥ ९–११ ॥ तानि शस्त्राणि । स्वविशिखैः प्रतिजग्राह अवरुरोध ॥ १२ ॥ वज्रैरिव महाचल इति व्यतिरेकदृष्टान्तः । वज्रैः वज्रनिपातैः । अनयोपमया श्रीरामस्य न काचिदपि तत्कृतव्यथेति सूच्यते ॥ १३ ॥

विषेदुरिति । बहुभिः सहस्रैः चतुर्दशसहस्रैः ॥ १५ ॥ तत इति।मण्डलीकृतकार्मुकः आकर्णाकर्षणेन मण्डलाकारीकृतधनुः । विशिखान् बाणान् अर्धचन्द्राग्रबाणान् । प्रथमं शतशः अनन्तरं सहस्रशः स निर्बिभेदेति योजना ॥ १६ ॥ दुरावारान् वारयितुमशक्यान् । दुर्विषहान् दुःसहान् ।

विषेदुर्देवगन्धर्वाः सिद्धाश्च परमर्षयः । एकं सहस्रैर्बहुभिस्तदा दृष्ट्वा समावृतम् ॥ १५ ॥ ततो रामः सुसंक्रुद्धो मण्डलीकृतकार्मुकः । ससर्ज विशिखान् बाणान् शतशोथ सहस्रशः ॥ १६ ॥ दुरावारान् दुर्विषहान् कालदण्डोपमान् रणे । मुमोच लीलया रामः कङ्कपत्रानजिह्मगान् ॥ १७ ॥ ते शराः शत्रुसैन्येषु मुक्ता रामेण लीलया । आददू रक्षसां प्राणान् पाशाः कालकृता इव ॥१८॥ भित्त्वा राक्षसदेहांस्तांस्ते शरा रुधिराप्लुताः ।अन्तरिक्षगता रेजुर्दीप्ताग्निसमतेजसः ॥ १९ ॥ असङ्ख्येयास्तु रामस्य सायकाश्चापमण्डलात् । विनिष्पेतुरतीवोग्रा रक्षःप्राणापहारिणः ॥ २० ॥ तैर्धनूंषि ध्वजाग्राणि वर्माणि च शिरांसि च । बाहून् सहस्ताभरणानूरून् करिकरोपमान् । चिच्छेद रामः समरे शतशोथ सहस्रशः ॥ २१ ॥ हयान् काञ्चनसन्नाहान् रथयुक्तान् ससारथीन् । गजांश्च सगजारोहान् सहयान् सादिनस्तथा ॥ २२ ॥ पदातीन् समरे हत्वा ह्यनयद्यमसादनम् ॥ २३ ॥

कालदण्डोपमान् यमदण्डतुल्यान् । अजिह्मगान् अवक्रगामिनः, अस्खलितलक्ष्यकानित्यर्थः । कङ्कपत्रान् बाणान् । " कङ्कपत्रशरमार्गणबाणाः " इति हलायुधः ॥ १७ ॥ ते शरा इति । प्राणानाददुः अमारयन्नित्यर्थः । कालकृताः यममुक्ता इत्यर्थः ॥ १८ ॥ रुधिराप्लुता इति विशेषणं दीप्ताग्न्युपमासिद्ध्यर्थम् ॥ १९ ॥ असङ्ख्येया इति । सायकाः बाणाः ॥ २० ॥ तैरित्याद्यर्धत्रयमेकं वाक्यम् । वर्माणि कवचानि ॥ २१ ॥ हयानिति । काञ्चनसन्नाहान् काञ्चनाभरणान् । रथयुक्तान् रथबद्धान् । सगजारोहान् सनिषादान् । सादिनः अश्वारोहान् । सदनमेव सादनम् । स्वार्थे अण् ॥२२॥२३



क्षतजं रक्तम् ॥ १४ ॥ १५ ॥ विशिखान् बाणान् बाणसंज्ञान् शरान् " बाणास्तु गतपत्रिणः " इति वैजयन्ती ॥ १६ ॥ दुरावारान् अशक्यनिवारणान् । दुर्विषहान् सोढुमशक्यान् । कङ्कपत्रान् कङ्कपत्रसंज्ञान् शरान् ।अजिह्मगान् अकुटिलगतीन्, अस्खलितलक्ष्यानित्यर्थः ॥१७–२१॥ काञ्चनसन्नाहान् काञ्चनपरिकरान् । सादिनः

नालीकाः नालमात्रशराः । नाराचाः आयसशराः । विकर्णिनः कर्णशराः । भीममिति क्रियाविशेषणम् ॥ २४ ॥ रामेण कर्त्रा बाणैः अर्दितं पीडितं तत्सैन्यम्, सुखं दुःखनिवृत्तिम् अग्निना अर्दितं शुष्कं वनमिव न लेभे ॥ २५ ॥ केचिदिति । परमायुधानिति शूलादिविशेषणम् ॥ २६ ॥ तानीति । आवार्य निवार्य । शिरोधरानिति पुंलिङ्गत्वमार्षम् । शिरोधरांश्चिच्छेद प्राणान् जहारेति क्रमः ॥ २७ ॥ त इति । सुपर्णो गरुडः तस्य वातेन पक्षा

ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः । भीममार्तस्वरं चक्रुर्भिद्यमाना निशाचराः ॥ २४ ॥ तत्सैन्यं निशितै बाणैरर्दितं मर्मभेदिभिः । रामेण न सुखं लेभे शुष्कं वनमिवाग्निना ॥ २५ ॥ केचिद्भीमबलाः शूराः शूलान् खड्गान् परश्वधान् । रामस्याभिमुखं गत्वा चिक्षिपुः परमायुधान् ॥ २६ ॥ तानि बाणैर्महाबाहुः शस्त्राण्यावार्य राघवः । जहार समरे प्राणांश्चिच्छेद च शिरोधरान् ॥ २७ ॥ ते छिन्नशिरसः पेतुश्छिन्नवर्मशरासनाः । सुपर्णवातविक्षिप्ता जगत्यां पादपा यथा ॥ २८ ॥ अवशिष्टाश्च ये तत्र विषण्णाश्च निशाचराः । खरमेवाभ्यधावन्त शरणार्थं शरा र्दिताः ॥ २९ ॥ तान् सर्वान् पुनरादाय समाश्वास्य च दूषणः । अभ्यधावत काकुत्स्थं क्रुद्धो रुद्रमिवान्तकः ॥ ३० ॥ निवृत्तास्तु पुनः सर्वे दूषणाश्रयनिर्भयाः । राममेवाभ्यधावन्त सालतालशिलायुधाः ॥ ३१ ॥ शूलमुद्गरहस्ताश्च चापहस्ता महाबलाः । सृजन्तः शरवर्षाणि शस्त्रवर्षाणि संयुगे । द्रुमवर्षाणि मुञ्चन्तः शिलावर्षाणि राक्षसाः ॥ ३२ ॥

निलेन विक्षिप्ताः उन्मूलिताः । जगत्यां भुवि ॥ २८ ॥ तत्र सैन्येषु । अवशिष्टाः हतावशिष्टाः । विषण्णाः दुःखिताः । शरणार्थं रक्षणार्थमिति यावत् ॥ २९ ॥ तानिति । आदाय खरसमीपगमनान्निवर्त्य । अन्तकः रुद्रपराजितो यमः ॥ ३० ॥ निवृत्ताः युद्धान्निवृत्ताः । दूषणरूपाश्रयेण निर्भयाः सन्तः । अभ्यधावन्त अभिमुखमाजग्मुः । प्रायशो नष्टायुधत्वात्सालतालेत्याद्युक्तम् ॥ ३१ ॥ शस्त्रवर्षाणि शराभिन्नायुधवर्षाणीत्यर्थः । सृजन्त इति

तुरगारूढान् ॥ २२ ॥ २३ ॥ नालीकाः मुखमात्रायस्संयुक्ताश्शराः । नाराचाः सर्वत आयसाः । विकर्णिनः उग्राङ्कुशाः उद्धारे आन्त्रहारिण इति भेदः ॥ २४–२६ ॥ आवार्य निवार्य ॥ २७–३० ॥ दूषणाश्रयसंश्रिताः दूषणमेव आश्रयं रक्षितारं संश्रिताः ॥ ३१–३९ ॥

आसन्निति शेषः ॥ ३२ ॥ रामस्य रक्षसां च तुमुलं सङ्कुलं महाघोरम् अत एव रोमहर्षणं भयातिरेकेण रोमाञ्चजनकम् अत एवाद्भुतं तद्युद्धं पुनरपि बभूव ॥३३॥ त इत्यर्धमेकं वाक्यम् । अभ्ययुः आवव्रुः ॥३४॥ इदमनुवदन्नाह—तैश्चेत्यादिश्लोकद्वयमेकं वाक्यम् । महाबलः स रामः । दिशः प्रदिशश्च तैरावृताः दृष्ट्वा । भैरवं भयङ्करं नादं कृत्वा । राक्षसेषु राक्षसनिमित्तं गान्धर्वमस्त्रं धनुषि संयोजयत समयोजयत् । शरवर्षाभिवर्षिभिः शरवर्ष

तद्बभूवाद्भुतं युद्धं तुमुलं रोमहर्षणम् । रामस्य च महाघोरं पुनस्तेषां च रक्षसाम् ॥ ३३ ॥ ते समन्तादभिक्रुद्धा राघवं पुनरभ्ययुः ॥ ३४ ॥ तैश्च सर्वा दिशो दृष्ट्वा प्रदिशश्च समावृताः । राक्षसैरुद्यतप्रासैः शरवर्षाभिवर्षिभिः ॥३५॥ स कृत्वा भैरवं नादमस्त्रं परमभास्वरम् । संयोजयत गान्धर्वं राक्षसेषु महाबलः ॥३६॥ ततः शरसहस्राणि निर्ययुश्चापमण्डलात् । सर्वा दश दिशो बाणैरावार्यन्त समागतैः ॥ ३७ ॥ नाददानं शरान् घोरान्न मुञ्चन्तं शिलीमुखान् । विकर्षमाणं पश्यन्ति राक्षसास्ते शरार्दिताः ॥ ३८ ॥ शरान्धकारमाकाशमावृणोत्सदिवाकरम् । बभूवावस्थितो रामः प्रवमन्निव तान् शरान् ॥ ३९ ॥ युगपत्पतमानैश्च युगपच्च हतैर्भृशम् । युगपत्पतितैश्चैव विकीर्णा वसुधाभवत् ॥४०॥ निहताः पतिताः क्षीणाश्छिन्ना भिन्ना विदारिताः । तत्र तत्र स्म दृश्यन्ते राक्षसास्ते सहस्रशः ॥४१॥

कारिभिरित्यर्थः ॥ ३५ ॥ ३६ ॥ तत इति । चापमण्डलात् संहितगान्धर्वास्त्रात् आकर्षणातिशयेन मण्डलीकृताच्चापान्निर्ययुः । समागतैस्तैः बाणैर्दश दिशः । सर्वाः अन्यूनाः अवार्यन्त ॥ ३७ ॥ नाददानमिति । राक्षसा रामस्य शरादानकर्षणमोचनानि नापश्यन् किंतु स्वहिंसनमेवापश्यन्निति क्रियाप्रधानो निर्देशः । यद्यपि गान्धर्वास्त्रप्रयोगे विचित्रबाणनिर्गमोऽस्ति तदस्मिन् श्लोके नोच्यते किन्तु तदनन्तरभाविकेवलशरमोक्ष इति ज्ञेयम् ॥ ३८ ॥ शरान्धकारमिति । अन्धकारमिति क्लीबत्वमार्षम् । प्रवमन् उद्गिरन् ॥ ३९ ॥ युगपच्छरनिर्गमः समुत्प्रेक्ष्यते—युगपदिति । पतमानैः पतद्भिः एककाले शरहतैः एककाले भूमौ पतद्भिः एककाले पतितैश्च राक्षसैः वसुधा विकीर्णा व्याप्ताऽभवदिति युगपच्छरनिर्गमनकार्योक्तिः ॥ ४० ॥ अथ हिंसावैचित्र्यमाह—निहता इति । निहताः केवलं प्रहताः । पतिताः अशनिपात इव भयेन भूमौ पतिताः । क्षीणाः कण्ठगतप्राणाः । छिन्नाः द्विधा

विस्तीर्णा इति पाठः । विशेषाच्छादना ॥ ४० ॥ क्षीणाः कण्ठगतप्राणाः । छिन्नाः द्विधाभूतशरीराः । भिन्नाः खण्डितावयवाः ॥ ४१ ॥

कृताः। भिन्नाः खण्डितावयवाः। विदारिताः नृसिंहेन हिरण्यवदानाभिकण्ठमुद्भिन्नशरीराः। तत्र तत्रेत्यनेन कश्चिद्भिन्नः कश्चिद्विदारितः पुनः कश्चित् भिन्नः इत्येवं विचित्रशववत्त्वमुक्तम् ॥ ४१ ॥ चित्रवधं दर्शयति—सोष्णीषैरित्यादिना। सोष्णीषैः शिरोवेष्टनवद्भिः। उत्तमाङ्गैः केवलशिरोभिः। नानारूप विभूषणैरित्यूरुजानूनां विशेषणम्। सार्धोरुकैरूरुभिः सकटकैर्जानुभिश्चेत्यर्थः। अनेकशो भिन्नैरिति हयादित्रयविशेषणम्। विच्छिन्नैरिति चामरादिसर्व

सोष्णीषैरुत्तमाङ्गैश्च साङ्गदैर्बाहुभिस्तथा। ऊरुभिर्जानुभिश्छिन्नैर्नानारूपविभूषणैः ॥ ४२ ॥ हयैश्च द्विपमुख्यैश्च रथैर्भिन्नैरनेकशः। चामरैर्व्यजनैश्छत्रैर्ध्वजैर्नानाविधैरपि ॥ ४३ ॥ रामस्य बाणाभिहतैर्विचित्रैः शूलपट्टिशैः। खड्गैः खण्डीकृतैः प्रासैर्विकीर्णैश्च परश्वधैः॥४४॥ चूर्णिताभिः शिलाभिश्च शरैश्चित्रैरनेकशः। विच्छिन्नैः समरे भूमिः विकीर्णाऽभूद्भयंकरा ॥ ४५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदि० श्रीमदारण्यकाण्डे पञ्चविंशः सर्गः ॥२५॥

दूषणस्तु स्वकं सैन्यं हन्यमानं निरीक्ष्य सः। संदिदेश महाबाहुर्भीमवेगान् दुरासदान्। राक्षसान् पञ्च साहस्रान् समरेष्वनिवर्तिनः ॥ १ ॥ ते शूलैः पट्टिशैः खड्गैः शिलावर्षैर्द्रुमैरपि। शरवर्षैरविच्छिन्नं ववृषुस्तं समन्ततः ॥ २ ॥ स द्रुमाणां शिलानां च वर्षं प्राणहरं महत्। प्रतिजग्राह धर्मात्मा राघवस्तीक्ष्णसायकैः ॥ ३ ॥

विशेषणम्, विचित्रैरिति शूलादिविशेषणम्, नानाविधैरिति चामरादिविशेषणम्, पूर्वोक्तैरेतैर्विकीर्णा अत एव भयङ्कराऽभूदिति योजना। एतावता ग्रन्थेन रामशरप्रभावातिशयो दर्शितः। अस्मिन् सर्गे पञ्चचत्वारिंशच्छ्लोकाः ॥ ४२–४५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥ अथ दूषणप्रमुखसर्वसैन्यविनाशः षड्विंशे—दूषणस्त्वित्याद्यर्धत्रयमेकं वाक्यम्। निरीक्ष्य चेति खिन्न श्चेत्यर्थः। भीमवेगान् भयङ्करधावनान् अत एव दुरासदान्। पञ्चसहस्रानित्यनेन पञ्चसाहस्री पूर्वं हतेति व्यज्यते ॥१॥ त इति। तं रामम् ॥ २ ॥ स इति। प्राणहरम् अन्येपामिति शेषः। प्रतिजग्राह प्रतिरुरोध। धर्मात्मेत्यनेन कूटयोधित्वव्युदासः ॥ ३ ॥

सोष्णीषैः शिरोवेष्टनसहितैः ॥४२–४५॥ इति श्रीमहे० श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां पञ्चविंशस्सर्गः ॥२५॥१॥ तं रामम् ॥२॥ स राघवः

स०—पञ्चसाहस्रान् "शतमानविंशतिक—" इत्यण्। सहस्राणीति वक्तव्ये यत्साहस्रानिति कथनं तेन अहस्रैः अमूर्खैस्सहितास्साहस्रास्तान्, कुशलपुरुषसहितानिति यावत्। "हस्रो मूर्खे विदूषके" इति संसारावर्तः ॥१॥

निमीलित इवर्षभ इत्यनेन शरवर्षेपि निर्व्यथत्वमनायासत्वं च द्योत्यते ॥ ४ ॥ क्रोधसमाविष्ट इति राम इति शेषः । प्रदीप्त इव तेजसेति तेजोयुक्तत्वेन प्रदीप्त इव स्थित इत्यर्थः । सहदूषणं दूषणसहितम् । दूषणः खरस्य सेनापतिः ॥ ५ ॥ ६ ॥ तत इति । चतुर्भिरिति शरैरित्यनुषङ्गः ॥ ७ ॥ हत्वेति । तद्रक्षः दूषणं वक्षसि विव्याधेति सम्बन्धः ॥ ८ ॥ परितो हन्यतेऽनेनेति परिघः तम् । पट्टैः बन्धनैः । परवसोक्षितं शत्रुमेदस्सिक्तम् ।

प्रतिगृह्य च तद्वर्षं निमीलित इवर्षभः । रामः क्रोधं परं भेजे वधार्थं सर्वरक्षसाम् ॥ ४ ॥ ततः क्रोधसमाविष्टः प्रदीप्त इव तेजसा । शरैरवाकिरत्सैन्यं सर्वतः सहदूषणम् ॥ ५ ॥ ततः सेनापतिः क्रुद्धो दूषणः शत्रुदूषणः । शरैरशनिकल्पैस्तं राघवं समवाकिरत् ॥ ६ ॥ ततो रामः सुसंक्रुद्धः क्षुरेणास्य महद्धनुः । चिच्छेद समरे वीरश्चतुर्भिश्चतुरो हयान् ॥७॥ हत्वा चाश्वान् शरैस्तीक्ष्णैरर्धचन्द्रेण सारथेः । शिरो जहार तद्रक्षस्त्रिभिर्विव्याध वक्षसि ॥ ८ ॥ स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः । जग्राह गिरिशृङ्गाभं परिघं रोमहर्षणम् ॥९॥ वेष्टितं काञ्चनैः पट्टैर्देवसैन्यप्रमर्दनम् । आयसैः शङ्कुभिस्तीक्ष्णैः कीर्णं परवसोक्षितम् ॥१०॥ वज्राशनिसमस्पर्शं परगोपुरदारणम् ॥ ११ ॥ तं महोरगसङ्काशं प्रगृह्य परिघं रणे । दूषणोऽभ्यद्रवद्रामं क्रूरकर्मा निशाचरः ॥ १२ ॥ तस्याभिपतमानस्य दूषणस्य स राघवः । द्वाभ्यां शराभ्यां चिच्छेद सहस्ताभरणौ भुजौ ॥ १३ ॥

" हृन्मेदस्तु वपा वसा " इत्यमरः । वज्राशनिसमस्पर्शं वज्रं वज्राख्यरत्नम् । अशनिः वज्रायुधम्, तदुभयसदृशकाठिन्यम् । परगोपुरदारणं परेषां शत्रूणां यत् गोपुरं पुरद्वारं तस्य दारणं भेदकम् । " पुरद्वारं तु गोपुरम् " इत्यमरः ॥ ९–१२ ॥ तस्येति । अभिपतमानस्य अभिपततः ।



प्रतिजग्राह अवरुरोध ॥३–१०॥ वज्राशनिसमस्पर्शं व्रजति यात्येव न प्रतिहन्यत इति वज्रम्, अश्नाति शत्रुजीवितमित्यशनिः । तदुभयसमस्पर्शम् ॥११–१३॥

टी०—परवसोक्षितं शत्रुवसाक्लिन्नम् ॥ १० ॥ परगोपुरदारणं सुरपुरद्वारभेदकम् ॥ ११ ॥

सहस्ताभरणावित्यनेन शौर्यबिरुदवत्त्वं लक्ष्यते ॥ १३ ॥ रणमूर्धनि छिन्नहस्तस्य तस्य दूषणस्य भ्रष्टः हस्ताच्च्युतः महाकायः महाप्रमाणः परिघः शक्रध्वज इवाग्रतः पपातेत्यन्वयः ॥ १४ ॥ स इति । कराभ्यां सह पपातेत्यन्वयः । मनस्वी धीरः ॥ १५ ॥ तमिति । अपूजयन् अस्तुवन् ॥ १६ ॥ १७॥

भ्रष्टस्तस्य महाकायः पपात रणमूर्द्धनि । परिघश्छिन्नहस्तस्य शक्रध्वज इवाग्रतः ॥ १४ ॥ स कराभ्यां विकीर्णाभ्यां पपात भुवि दूषणः । विषाणाभ्यां विशीर्णाभ्यां मनस्वीव महागजः ॥ १५ ॥ तं दृष्ट्वा पतितं भूमौ दूषणं निहतं रणे । साधुसाध्विति काकुत्स्थं सर्वभूतान्यपूजयन् ॥१६॥ एतस्मिन्नन्तरे क्रुद्धास्त्रयः सेनाग्रयायिनः । संहत्याभ्यद्रवन् रामं मृत्युपाशावपाशिताः ॥ १७ ॥ महाकपालः स्थूलाक्षः प्रमाथी च महाबलः । महाकपालो विपुलं शूलमुद्यम्य राक्षसः । स्थूलाक्षः पट्टिशं गृह्य प्रमाथी च परश्वधम् ॥ १८ ॥ दृष्ट्वैवापततस्तूर्णं राघवः सायकैः शितैः । तीक्ष्णाग्रैः प्रतिजग्राह सम्प्राप्तानतिथीनिव ॥१९॥ महाकपालस्य शिरश्चिच्छेद परमेषुभिः । असङ्ख्येयैस्तु बाणौघैः प्रममाथ प्रमाथिनम् ॥ २० ॥ स पपात हतो भूमौ विटपीव महाद्रुमः । स्थूलाक्षस्याक्षिणी तीक्ष्णैः पूरयामास सायकैः ॥ २१ ॥ दूषणस्यानुगान् पञ्चसाहस्रान् कुपितः क्षणात् । बाणौघैः पञ्चसाहस्रैरनयद्यमसादनम् ॥२२॥ दूषणं निहतं दृष्ट्वा तस्य चैव पदानुगान् । व्यादिदेश खरः क्रुद्धः सेनाध्यक्षान् महाबलान् ॥ २३ ॥ अयं विनिहतः सङ्ख्ये दूषणः सपदानुगः । महत्या सेनया सार्धं युध्वा रामं कुमानुषम् ॥ २४ ॥

त्रीनेवाह–महाकपाल इति । कः किमायुधं गृहीत्वाऽभ्यद्रवदित्यत्राह–महाकपाल इति ॥ १८ ॥ दृष्ट्वेति । शितैः शाणोल्लीढैः । प्रतिजग्राह तेषु बाणानर्पयामासेत्यर्थः । यथा गृहं प्राप्तानतिथीनुपचारैः प्रतिगृह्णाति तथेत्यर्थः ॥ १९ ॥ प्रतिजग्राहेत्युक्तं विवृणोति–महाकपालस्येत्यादिना । प्रममाथ चूर्णीचकारेत्यर्थः ॥ २० ॥ चूर्णशरीरत्वे दृष्टान्ततयोक्तं विटपीति ॥ २१–२३ ॥ अयमिति । हनध्वं व्रत ॥ २४ ॥ २५ ॥

छिन्नहस्तस्य तस्याग्रतः परिघः पपातेत्यनुषज्यते ॥१४॥१५॥ अपूजयन् अस्तुवन् ॥१६॥ संहत्य मिलित्वा ॥ १७–२१ ॥ पञ्चसाहस्रैर्बाणैरित्यध्याहार्यम् ॥ २२–२८ ॥
स०–कुमानुषं कौ भूमौ मनुष्याकारं प्राप्तम् ॥ २४ ॥

सेनाध्यक्षानेवाह—श्येनगामीत्यादिना ॥ २६–२८ ॥ तत इति । वज्रं वज्रमणिः । तेजस्वी राम इति शेषः॥२९॥ सधूमा इत्यनेन दहनोन्मुखत्वं व्यज्यत इत्यङ्गारावस्थाव्यावृत्तिः। वज्रा इवेति "वज्रमस्त्रियाम्" इत्युभयलिङ्गो वज्रशब्दः॥३०॥ रक्षसामिति। कर्णिना कर्णाकारशरीरेण॥३१॥ छिन्नं खण्डितम्।

शस्त्रैर्नानाविधाकारैर्हन्तुं सर्वराक्षसाः । एवमुक्ता खरः क्रुद्धो राममेवाभिदुद्रुवे ॥ २५ ॥ श्येनगामी पृथुग्रीवो यज्ञशत्रुर्विहङ्गमः । दुर्जयः करवीराक्षः परुषः कालकार्मुकः ॥ २६ ॥ मेघमाली महामाली सर्पास्यो रुधिराशनः । द्वादशैते महावीर्या बलाध्यक्षाः ससैनिकाः ॥२७॥ राममेवाभ्यवर्तन्त विसृजन्तः शरोत्तमान् ॥ २८ ॥ ततः पावक सङ्काशैर्हेमवज्रविभूषितैः । जघान शेषं तेजस्वी तस्य सैन्यस्य सायकैः ॥ २९ ॥ ते रुक्मपुङ्खा विशिखाः सधूमा इव पावकाः । निजघ्नुस्तानि रक्षांसि वज्रा इव महाद्रुमान् ॥ ३० ॥ रक्षसां तु शतं रामः शतेनैकेन कर्णिना । सहस्रं च सहस्रेण जघान रणमूर्धनि ॥ ३१ ॥ तैर्भिन्नवर्माभरणाश्छिन्नभिन्नशरासनाः । निपेतुः शोणितादिग्धा धरण्यां रजनीचराः ॥३२॥ तैर्मुक्तकेशैः समरे पतितैः शोणितोक्षितैः । आस्तीर्णा वसुधा कृत्स्ना महावेदिः कुशैरिव ॥३३॥ क्षणेन तु महाघोरं वनं निहतराक्षसम् । बभूव निरयप्रख्यं मांसशोणितकर्दमम् ॥३४॥ चतुर्दशसहस्राणि रक्षसां भीम कर्मणाम् । हतान्येकेन रामेण मानुषेण पदातिना ॥३५॥ तस्य सैन्यस्य सर्वस्य खरः शेषो महारथः । राक्षसस्त्रिशिरा श्चैव रामश्च रिपुसूदनः ॥३६॥ शेषा हता महासत्त्वा राक्षसा रणमूर्धनि । घोरा दुर्विषहाः सर्वे लक्ष्मणस्याग्रजेन ते॥३७॥

भिन्नं विदारितम् । आदिग्धाः आलिप्ताः ॥ ३२ ॥ तैर्मुक्तेति रणाग्रपतितत्वातिशयात्कुशसाम्योक्तिः ॥ ३३ ॥ निरयप्रख्यं नरकतुल्यम् । मांसशोणितैः कृतः कर्दमः पङ्को यस्य तत्तथा ॥ ३४ ॥ मानुषेण ऋजुना । पदातिना वाहनरहितेनेत्यद्भुतोक्तिः ॥ ३५ ॥ सैन्यस्य युद्धप्रवृत्तस्य अतो रामस्यापि तत्रान्तर्भावः । खरादित्रयं शेषः अवशिष्टांश इत्यर्थः । शेषाः सर्वे राक्षसा हता इत्यन्वयः । महासत्त्वा इत्यादिविशेषणैर्महारथा एव हताः, क्षुद्राः केचन तेजस्वी राम इत्यनुज्यते ॥ २९–३८ ॥

भीरवो न हता इति गम्यते । अत एवोत्तरसर्गे हतशेषा इति वक्ष्यति । लक्ष्मणस्याग्रजेनेति रामस्य विष्णवर्धांशभाक्त्वेनाधिकबलत्वोक्तिः ॥ ३६॥३७॥ भीमबलं भीमसैन्यम् । उद्यताशनिः उद्यतवज्रः ॥ ३८ ॥ इति श्रीगोविन्दराज० श्रीरामायण० रत्नमे० आरण्यकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

ततस्तु तद्भीमबलं महाहवे समीक्ष्य रामेण हतं बलीयसा । रथेन रामं महता खरस्तदा समाससादेन्द्र इवोद्यताशनिः ॥ ३८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे षड्विंशः सर्गः ॥ २६ ॥

खरं तु रामाभिमुखं प्रयान्तं वाहिनीपतिः । राक्षसस्त्रिशिरा नाम सन्निपत्येदमब्रवीत् ॥ १ ॥ मां नियोजय विक्रान्त सन्निवर्तस्व साहसात् । पश्य रामं महाबाहुं संयुगे विनिपातितम् ॥ २ ॥ प्रतिजानामि ते सत्यमायुधं चाहमालभे । यथा रामं वधिष्यामि वधार्हं सर्वरक्षसाम् ॥ ३ ॥ अहं वास्य रणे मृत्युरेष वा समरे मम । विनिवृत्य रणोत्साहान्मुहूर्तं प्राश्निको भव ॥४॥ प्रहृष्टो वा हते रामे जनस्थानं प्रयास्यसि । मयि वा निहते रामं संयुगायोपयास्यसि ॥५॥

त्रिशिरःशिरसां छेदहष्टान्तेन स्वसेविनाम् । दुःखत्रयनिहन्तारं लक्ष्मणाग्रजमाश्रये ॥ खरं त्विति । वाहिनीपतिः सेनापतिः । सन्निपत्य समीपमागत्येत्यर्थः ॥१॥ साहसात् युद्धाभिमुख्यलक्षणात् । विनिपातितमिति मयेतिशेषः ॥ २ ॥ आलभे स्पृशामि । प्रतिज्ञाप्रकारमाह यथेति । सर्वरक्षसां सर्वरक्षोभिः ॥ ३ ॥ मृत्युः मारयिता । प्राश्निकः जयापजयनिर्णायकः ॥ ४ ॥ प्रहृष्टे गर्विष्ठे । संयुगाय युद्धं कर्तुम् । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति

इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां षड्विंशः सर्गः ॥ २६ ॥ खरमिति । सन्निपत्य आगत्य ॥ १ ॥ २ ॥ आयुधमालभे स्पृशामीति ॥ ३ ॥ तस्यावध्यत्वं ज्ञात्वाह एष वेति । प्राश्निकः जयापजयनिर्णायकः । सप्तविंशे सर्गे मां नियोजयेत्यादिसार्धश्लोकचतुष्टयस्य वास्तवार्थस्तु–हे खर ! संयुगे रामं च तेन विनिपातितं सैन्यं चेति शेषः । पश्य अतस्त्वं साहसान्निवर्तस्व मां नियोजय । तर्हि त्वं तं हनिष्यसि किम् ? तत्राह प्रतिजानामीत्यादि । सर्वरक्षसां वधार्थं सर्वरक्षसां हन्तारमित्यर्थः । रामं यथा यथावत् । अहं प्रतिजानामि सम्यग् जानामीत्यर्थः । अतः तं वधिष्यामीति सर्वमायुधमालभे ग्रहिष्यामि केवलमित्यर्थः । हन्तुमशक्यश्चेदनेन किम् ? तत्राह–अहमिति । अस्य रामस्य अहं वा रणे मृत्युः, किन्तु एष वा एष राम एव समरे मम मृत्युः अतस्त्वं महोत्साहाद्विनिवर्तस्व मुहूर्तं प्राश्निको भवेति सम्बन्धः ॥ ४ ॥ प्रहृष्ट इति । प्रहृष्टो वाहत इत्यत्र अहत इति पदच्छेदः । रामे

चतुर्थी ॥ ५ ॥ मृत्युलोभात् मृत्युना कृतो लोभो युद्धलोभस्तस्मात् । प्रसादितः निवर्तित इति यावत् । युद्धच युद्धं कुरु । अनुज्ञातः खरेणेति शेषः । त्रिशरा इति सिद्धम् ॥ ६ ॥ त्रिशिराश्चेति चकारो न समुच्चयार्थः ॥ ७ ॥ शरा एव धाराः आसाराः तासां समूहान् । जलार्द्रस्येति । दुन्दुभिशब्दः पुंलिङ्गः । " भेरी स्त्री दुन्दुभिः पुमान् " इत्युक्तेः । दुन्दुभेः दुन्दुभिनादस्य । जलार्द्रस्येत्यनेनास्य हीनस्वरत्वमुक्तम् ॥८॥ धनुषा सायकान् विधून्वन्

खरस्त्रिशिरसा तेन मृत्युलोभात्प्रसादितः । गच्छ युद्धचेत्यनुज्ञातो राघवाभिमुखो ययौ ॥ ६ ॥ त्रिशिराश्च रथेनैव वाजियुक्तेन भास्वता । अभ्यद्रवद्रणे रामं त्रिशृङ्ग इव पर्वतः ॥ ७ ॥ शरधारासमूहान् स महामेघ इवोत्सृजन् । व्यसृजत्सदृशं नादं जलार्द्रस्य तु दुन्दुभेः ॥ ८ ॥ आगच्छन्तं त्रिशिरसं राक्षसं प्रेक्ष्य राघवः । धनुषा प्रतिजग्राह विधून्वन् सायकान् शितान् ॥ ९ ॥ स सम्प्रहारस्तुमुलो रामत्रिशिरसोर्महान् । बभूवातीव बलिनोः सिंह कुञ्जरयोरिव ॥१०॥ ततस्त्रिशिरसा बाणैर्ललाटे ताडितस्त्रिभिः । अमर्षी कुपितो रामः संरब्धमिदमब्रवीत् ॥११॥ अहो विक्रमशूरस्य राक्षसस्येदृशं बलम् । पुष्पैरिव शरैर्यस्य ललाटेऽस्मि परिक्षतः ॥ १२ ॥ ममापि प्रतिगृह्णीष्व शरांश्चापगुणच्युतान् । एवमुक्त्वा तु संरब्धः शरानाशीविषोपमान् । त्रिशिरोवक्षसि क्रुद्धो निजघान चतुर्दश ॥ १३ ॥

कम्पयन्, मुञ्चन्निति यावत् ॥ ९ ॥ सम्प्रहारो युद्धम् ॥ १० ॥ संरब्धं सकोपमित्यर्थः । लोके कश्चित्कुपितोऽपि वचनेन कोपं न प्रकटयति, अयं तु प्रकट यतीति भावः ॥ ११ ॥ अहो इत्यादि व्यङ्ग्योक्तिः । विक्रमः पराभिभवनं तत्र शूरस्य समर्थस्येत्यर्थः । ईदृशमित्यस्यैव विवरणम् पुष्पैरिवेत्यर्धम् । ललाटे स्वललाटे । ललाटे स्वल्पापि क्षतिर्बाधिका भवति सापि नास्तीति सूचयितुं पुष्पतौल्यम् । चापगुणः चापमौर्वी । संरब्धः सन्नेवमुक्त्वा क्रुद्धो निज

अहते सति मे मयि च निहते सति प्रहृष्टस्त्वं रामं प्रति संयुगायोपयास्यसि । अथवा जनस्थानं वा प्रयास्यसीति सम्बन्धः । प्रसादितः प्रार्थितः । युध्य युद्धं कुरुष्व ॥ ५ ॥ ६ ॥ त्रिशिरापीत्यत्राकारलोपश्छान्दसः ॥ ७ ॥ व्यसृजदिति । दुन्दुभेर्दुन्दुभिनादस्य सदृशं नादं व्यसृजत अकरोत ॥ ८–११ ॥ सोपहासं वचन मीदृशं विक्रमसदृशम् बलं तस्यैवाविष्करणम् । पुष्पैः स्वल्पा पीडा भवति त्वच्छरैस्तादृशी पीडापि नास्तीति भावः ॥ १२ ॥ १३ ॥

घानेत्यन्वः ॥ १२ ॥ १३ ॥ सन्नतपर्वभिः ऋजुपर्वभिः । वाजिनः वेगवतः ॥ १४ ॥ रथोपस्थे रथोपरिभागे ॥ १५ ॥ हतरथात् हतहयसारथिकरथात् । हृदये वक्षसि बिभेदेत्यन्वयः । जडः निश्चेष्टः ॥ १६ ॥ १७ ॥ पूर्वं पतितैः शिरोभिः हेतुभिः स्वयं न्यपतत् ॥ १८ ॥ खरसंश्रयाः खरसेवकाः ॥ १९॥२०॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

चतुर्भिस्तुरगानस्य शरैः सन्नतपर्वभिः । न्यपातयत तेजस्वी चतुरस्तस्य वाजिनः ॥ १४ ॥ अष्टभिः सायकैः सूतं रथोपस्थे न्यपातयत् । रामश्चिच्छेद बाणेन ध्वजं चास्य समुच्छ्रितम् ॥ १५ ॥ ततो हतरथात्तस्मादुत्पतन्तं निशाचरम् । बिभेद रामस्तं बाणैर्हृदये सोऽभवज्जडः ॥ १६ ॥ सायकैश्चाप्रमेयात्मा सामर्षस्तस्य रक्षसः । शिरांस्यपातयद्रामो वेगवद्भिस्त्रिभिः शितैः ॥ १७ ॥ स भूमौ रुधिरोद्गारी रामबाणाभिपीडितः । न्यपतत् पतितैः पूर्वं स्वशिरोभिर्निशाचरः ॥ १८॥ हतशेषास्ततो भग्ना राक्षसाः खरसंश्रयाः । द्रवन्ति स्म न तिष्ठन्ति व्याघ्रत्रस्ता मृगा इव ॥ १९ ॥ तान् खरो द्रवतो दृष्ट्वा निवर्त्य रुषितः स्वयम् । राममेवाभिदुद्राव राहुश्चन्द्रमसं यथा ॥ २० ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

निहतं दूषणं दृष्ट्वा रणे त्रिशिरसा सह । खरस्याप्यभवत् त्रासो दृष्ट्वा रामस्य विक्रमम् ॥ १ ॥

महामोहसहायस्य दर्पस्याश्रयनिग्रहम् । व्यङ्क्तुं खरोपकरणं हन्तारं राममाश्रये ॥ निहतमित्यादि । निहतं दूषणं दृष्ट्वा रामस्य विक्रमं च दृष्ट्वा । सन्नतपर्वभिः ऋज्वीकृतपर्वभिः । वाजिनः वेगवतः इति तुरङ्गविशेषणम् ॥१४॥ तस्य सूतं रथोपस्थाद् इति पाठः । रथोपरिभागाद्न्यपातयदिति सम्बन्धः ॥१५॥ जडः निश्चेष्टः ॥ १६ ॥ १७ ॥ पूर्वं पतितैः शिरोभिः हेतुभिः स्वयं न्यपतत् ॥ १८ ॥ खरसंश्रयाः खरसेवकाः ॥ १९ ॥ २० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां सप्तविंशः सर्गः ॥ २७ ॥ १ ॥

टी०—ननु, खरः शेषो महारथः । त्रिशिराश्चैव रामश्चेत्युक्तम्, कथमिदानीं हतशेषा इति । उच्यते—तत्र प्रधानेषु त्रयोऽवशिष्टा इति मुनेरभिप्रायः ॥१९॥ स०—निवर्त्य निवर्तयित्वा । रुषितः रुष्टः ॥२०॥

स्थितस्य खरस्य त्रासोऽभवदिति योजना ॥ १ ॥ रक्षसां [illegible] राक्षसम् । त्रिशिरोदूषणौ हतावित्यनुषङ्गः । बलं सैन्यं हतभूयिष्ठं हतप्रवर राक्षसं चतुर्दशसहस्रसङ्ख्याकाः प्रधाना हताः अवशिष्टं सैन्यं प्रेक्ष्येत्यर्थः । विमनाः विगतगर्वावस्थं मनो यस्य स तथा ॥ २ ॥ ३ ॥ बलवदत्यन्तं नाराचान् । "प्रक्ष्वेडनास्तु नाराचाः" इत्यमरः । रक्तभोजनानिति रक्तरूपितत्वेन रक्तभोजनत्वव्यपदेशः । आशीविषानिव सर्पानिव स्थितान् ॥४॥

स दृष्ट्वा राक्षसं सैन्यमविषह्यं महाबलः । हतमेकेन रामेण त्रिशिरोदूषणावपि ॥ २ ॥ तद्बलं हतभूयिष्ठं विमनाः प्रेक्ष्य राक्षसः । आससाद खरो रामं नमुचिर्वासवं यथा ॥ ३ ॥ विकृष्य बलवच्चापं नाराचान् रक्तभोजनान् । खरश्चिक्षेप रामाय क्रुद्धानाशीविषानिव ॥ ४ ॥ ज्यां विधून्वन् सुबहुशः शिक्षयास्त्राणि दर्शयन् । चकार समरे मार्गान् शरै रथगतः खरः ॥ ५ ॥ स सर्वाश्च दिशो बाणैः प्रदिशश्च महारथः । पूरयामास तं दृष्ट्वा रामोपि सुमहद्धनुः ॥ ६ ॥ स सायकैर्दुर्विषहैः सस्फुलिङ्गैरिवाग्निभिः । नभश्चकाराविवरं पर्जन्य इव वृष्टिभिः ॥ ७ ॥ तद्बभूव शितैर्बाणैः खररामविसर्जितैः । पर्याकाशमनाकाशं सर्वतः शरसङ्कुलम् ॥ ८ ॥ शरजालावृतः सूर्यो न तदा स्म प्रकाशते । अन्योन्यवधसंरम्भादुभयोः संप्रयुद्ध्यतोः ॥ ९ ॥

शिक्षया धनुर्वेदशिक्षापाटवेन । ज्यां विधून्वन् अस्त्राणि दर्शयन्, अस्त्रप्रयोगपाटवं दर्शयन्नित्यर्थः । समरे शरैः मार्गान् नानाप्रकारांश्चकार ॥ ५ ॥ सं रामोऽपि तं दृष्ट्वा बाणैः सुमहद्धनुः सर्वा दिशः प्रदिशश्च पूरयामासेत्यन्वयः ॥६॥ सः रामः अविवरं नीरन्ध्रम् ॥७॥ पर्याकाशं परितः स्थितमाकाशम्, खररामयोश्चतुःपार्श्ववर्त्याकाशमित्यर्थः । सर्वतः सर्वत्र । अनाकाशम् अनवकाशं बभूव ॥ ८ ॥ शरजालेति । संरम्भात् कोपात् । " संरम्भः संभ्रमे कोपे "

त्रिशिरोदूषणावपि हतौ दृष्ट्वा त्रासोऽभवदित्यनुषज्यंते ॥ २ ॥ ३ ॥ हतभूयिष्ठम् अल्पावशिष्टम् ॥ ४ ॥ शिक्षया धनुर्विद्याभ्यासेन । मार्गान् शरसङ्घातप्रक्षेपणादिप्रकारभेदान् ॥ ५ ॥ स खरः बाणैर्दिशः पूरयामासेति योजना ॥ ६ ॥ स रामः सायकैः नभः अविवरं नीरन्ध्रं चकारेति सम्बन्धः ॥ ७ ॥ पर्याकाशं परितोवर्तमानमाकाशम् । अनाकाशं निरवकाशं बभूव । तत्र हेतुः शरसङ्कुलमिति ॥ ८ ॥ उभयोः संप्रयुद्ध्यतोस्सतोः ॥ ९-११ ॥

स०–मार्गान् शरसङ्घातप्रक्षेपणादिप्रकारभेदान् । रथगत इत्यनेन रामस्य पदातित्वेप्यस्य रथगतत्वमन्याय्यमिति सूचयति ॥ ५ ॥ शरसङ्कुलम् उदकसङ्कुलमिव ॥ ८ ॥

इत्यमरः । उभयोः शरजालावृत इत्यन्वयः ॥ ९ ॥ तोत्रैः गजशिक्षणयष्टिभिः ॥ १० ॥ ११ ॥ हन्तारमिति । खरः सर्वसैन्यहननपरिश्रान्तमपि रामं पौरुषे पर्यवस्थितं महासत्त्वं मेने । यद्वा उक्तविशेषणं रामं परिश्रान्तं मेने ॥ १२ ॥ तमिति । नोद्विजते नाचलत् । क्षुद्रमृगं शशम् ॥ १३ ॥ पतङ्ग इत्यनेन अमृत्वा अनिवृत्तिरुच्यते ॥ १४ ॥ मुष्टिदेशे मुष्टिबन्धनसमीपदेशे । महात्मन इत्यनेन मुष्टिदेशे पततो बाणस्य परिहरणसामर्थ्यं व्यज्यते ।

ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः । आजघान खरो रामं तोत्रैरिव महाद्विपम् ॥ १० ॥ तं रथस्थं धनुष्पाणिं राक्षसं पर्यवस्थितम् । ददृशुः सर्वभूतानि पाशहस्तमिवान्तकम् ॥ ११ ॥ हन्तारं सर्वसैन्यस्य पौरुषे पर्यवस्थितम् । परिश्रान्तं महासत्त्वं मेने रामं खरस्तदा ॥ १२ ॥ तं सिंहमिव विक्रान्तं सिंहविक्रान्तगामिनम् । दृष्ट्वा नोद्विजते रामः सिंहः क्षुद्रमृगं यथा ॥ १३ ॥ ततः सूर्यनिकाशेन रथेन महता खरः । आससाद रणे रामं पतङ्ग इव पावकम् ॥ १४ ॥ ततोऽस्य सशरं चापं मुष्टिदेशे महात्मनः । खरश्चिच्छेद रामस्य दर्शयन् पाणिलाघवम् ॥१५॥ स पुनस्त्वपरान् सप्त शरानादाय वर्मणि । निजघान खरः क्रुद्धः शक्राशनिसमप्रभान् ॥१६॥ ततस्तत्प्रहतं बाणैः खरमुक्तैः सुपर्वभिः । पपात कवचं भूमौ रामस्यादित्यवर्चसः ॥ १७ ॥ ततः शरसहस्रेण राममप्रतिमौजसम् । अर्दयित्वा महानादं ननाद समरे खरः ॥ १८ ॥ स शरैरर्पितः क्रुद्धः सर्वगात्रेषु राघवः । रराज समरे रामो विधूमोऽग्निरिव ज्वलन् ॥ १९ ॥

लाघवं शैघ्र्यं चिच्छेद रामस्य किंचिच्छ्रान्तत्वेनानवधानादिति भावः ॥१५॥ पाणिलाघवमेवाह—स पुनरित्यादिना । वर्मणि निजघान अवदारयति स्म ॥१६॥ आदित्यवर्चस इत्यनेन कवचपतनानन्तरं प्रकाशमानतेजोविशेष उच्यते ॥१७॥१८॥ अर्पितः संयुक्तः । विधूम इत्यनेन ज्वालाधिक्यमुच्यते॥१९

खरः स्वसैन्यस्य हननेन परिश्रान्तमपि रामं तथा पौरुषे पर्यवस्थितं महासत्त्वं मेने इति सम्बन्धः ॥ १२ ॥ तं खरम् । क्षुद्रमृगं हरिणादिकम् ॥ १३-१५ ॥ वर्मणि

स०—महासत्त्वमपि रामं परिश्रान्तं मेने । अनेन भ्रमस्सूच्यते ॥ १२ ॥

गम्भीरनिर्ह्रादं गम्भीरध्वनिकं धनुः रिपोरन्ताय नाशाय सज्यं चकारेत्यन्वयः ॥ २० ॥ यत्तदिति प्रसिद्धयतिशयवाची । महर्षिणा अगस्त्येन अतिसृष्टं दत्तम् । समभिधावत समभ्यधावत ॥२१॥ सन्नतपर्वभिः ऋजुपर्वभिः ॥२२॥ स इति । दर्शनीयः रम्यः । आज्ञया शापेन । उत्प्रेक्षेयम् ॥२३॥ मातङ्गं गजम् । तोमरैः गजशिक्षादण्डैः । चतुर्भिरित्यत्र वीप्सा बोध्या । बहुभिरित्यनुवादात् ॥ २४ ॥ २५ ॥ स धनुरिति । परमेष्वासः उत्कृष्टशरा

ततो गम्भीरनिर्ह्रादं रामः शत्रुनिबर्हणः । चकारान्ताय स रिपोः सज्यमन्यन्महद्धनुः ॥२०॥ सुमहद्वैष्णवं यत्तदतिसृष्टं महर्षिणा । वरं तद्धनुरुद्यम्य खरं समभिधावत ॥ २१ ॥ ततः कनकपुङ्खैस्तु शरैः सन्नतपर्वभिः । बिभेद रामः संक्रुद्धः खरस्य समरे ध्वजम् ॥२२॥ स दर्शनीयो बहुधा विकीर्णः काञ्चनध्वजः । जगाम धरणीं सूर्यो देवतानामिवाज्ञया ॥२३॥ तं चतुर्भिः खरः क्रुद्धो रामं गात्रेषु मार्गणैः । विव्याध युधि मर्मज्ञो मातङ्गमिव तोमरैः ॥ २४ ॥ स रामो बहुभिर्बाणैः खरकार्मुकनिस्सृतैः । विद्धो रुधिरसिक्ताङ्गो बभूव रुषितो भृशम् ॥ २५ ॥ स धनुर्धन्विनां श्रेष्ठः प्रगृह्य परमाहवे । मुमोच परमेष्वासः षट् शरानभिलक्षितान् ॥ २६ ॥ शिरस्येकेन बाणेन द्वाभ्यां बाह्वोरथार्दयत् । त्रिभिश्चन्द्रार्धवक्त्रैश्च वक्षस्यभिजघान ह ॥२७॥ ततः पश्चान्महातेजा नाराचान् भास्करोपमान् । जिघांसू राक्षसं क्रुद्धस्त्रयोदश समाददे ॥२८॥ ततोऽस्य युगमेकेन चतुर्भिश्चतुरो हयान् । षष्ठेन तु शिरः सङ्ख्ये खरस्य रथसारथेः ॥२९

सनः । अभिलक्षितान् प्रसिद्धान् ॥ २६ ॥ षण्णां विनियोगप्रकारमाह—शिरसीत्यादिना । द्वाभ्यामिति बाह्वोरिति एकैकस्य बाह्वोरेकैकेनेत्यर्थः । चन्द्रार्धवक्त्रैः अर्धचन्द्राकारमुखैरित्यर्थः ॥ २७ ॥ तत इति । त्रयोदश नाराचान् समाददे इत्यन्वयः । अन्तिमपादे-त्रयोदश शरान् शितानिति पाठे मुमोचेति क्रियाध्याहार्या ॥२८॥ त्रयोदशानां विनियोगमाह—ततोऽस्येत्यादिना । छित्त्वेत्युत्तरत्र स्थिता क्रिया सर्वत्र सम्बध्यते । त्रिवेणुर्नाम रथमुखस्थो

कवचे ॥ १६–१९ ॥ निर्ह्रादं शब्दम् ॥ २० ॥ सुमहर्षिणा अगस्त्येन । अतिसृष्टं दत्तम् ॥ २१–२५ ॥ अभिलक्षितान् श्रेष्ठान् ॥ २६ ॥ २७ ॥ नाराचान् अत्र मुमोचेतिक्रिया अध्याहार्या ॥ २८ ॥ त्रयोदशबाणानां सततु युगादिलक्ष्येषु विनियोगमाह—तत इति । त्रिवेणुर्नाम रथमुखस्थावयवविशेषः । छित्त्वेत्युत्तरत्र स्थिता

स०—देवतानां स्तोमानां हरिमहारणां आज्ञया सूर्यः अस्तसमये धरणीमिव ध्वजो जगामेत्यर्थः ॥ २३ ॥ रुधिरसिक्ताङ्गः तद्वद्भवेत्यर्थः ॥ २९ ॥ अभिलक्षितान् ज्ञातसामर्थ्यान् ॥ २६ ॥

युगाधारदण्डः । प्रहसन्निव लीलयेत्यर्थः ॥२९-३१॥ अवप्लुत्य रथात् समुल्लङ्घ्य ॥३२॥ तत्कर्म खरभङ्गकर्म । अपूजयन् अस्तुवन् । समेत्य समूही भूय । समेताः आगताः ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्यानं अष्टाविंशः सर्गः ॥ २८ ॥

त्रिभिस्त्रिवेणुं बलवान् द्वाभ्यामक्षं महाबलः । द्वादशेन तु बाणेन खरस्य सशरं धनुः ॥ ३० ॥ छित्त्वा वज्रनिकाशेन राघवः प्रहसन्निव । त्रयोदशेनेन्द्रसमो बिभेद समरे खरम् ॥ ३१ ॥ प्रभग्नधन्वा विरथो हताश्वो हतसारथिः । गदापाणिरवप्लुत्य तस्थौ भूमौ खरस्तदा ॥ ३२ ॥ तत्कर्म रामस्य महारथस्य समेत्य देवाश्च महर्षयश्च । अपूजयन् प्राञ्जलयः प्रहृष्टास्तदा विमानाग्रगताः समेताः ॥३३॥ इत्यार्षे श्रीरामा०श्रीमदारण्यकाण्डे अष्टाविंशःसर्गः॥२८॥

खरं तु विरथं रामो गदापाणिमवस्थितम् । मृदुपूर्वं महातेजाः परुषं वाक्यमब्रवीत् ॥ १ ॥
गजाश्वरथसम्बाधे बले महति तिष्ठता । कृतं सुदारुणं कर्म सर्वलोकजुगुप्सितम् ॥ २ ॥
उद्वेजनीयो भूतानां नृशंसः पापकर्मकृत् । त्रयाणामपि लोकानामीश्वरोऽपि न तिष्ठति ॥ ३ ॥
कर्म लोकविरुद्धं तु कुर्वाणं क्षणदाचर । तीक्ष्णं सर्वजनो हन्ति सर्पं दुष्टमिवागतम् ॥ ४ ॥

अहङ्कारस्य हीनस्य व्यक्तां शक्तिमिव स्थिताम् । गदां खरस्य निर्भिद्य राजन्तं राममाश्रये ॥ सर्वसाधनवैकल्येन खरस्यानुकूल्यमपि भवेदिति तच्चित्तपरीक्षार्थमाह—खरं त्वित्यादिना । मृदुपूर्वं न्यायावलम्बनेनोक्तम् । परुषं मर्मोद्घाटनरूपत्वात् ॥ १ ॥ तिष्ठता अधिपतित्वेन तिष्ठतेत्यर्थः ॥ २ ॥ मृदुपूर्वत्वसिद्धये लोकन्यायमाह—उद्वेजनीय इति । उद्वेजनीयः उद्वेजकः । नृशंसो घातुकः एवंविधो लोकानामीश्वरोपि न तिष्ठति न जीवेत् किं पुनर्भवादृश इति भावः ॥ ३ ॥ सर्वजन इति दयालुरपीति भावः ॥ ४ ॥

क्रिया सर्वत्र सम्बन्ध्यते ( त्रिवेणुर्बलवानिति पाठः ) ॥ २९-३२ ॥ रामस्य तत्कर्म समेत्य दृष्ट्वा देवादयस्तम् अपूजयन्, नमस्कारस्तुत्यादिभिरतोषयन्नित्यर्थः ॥ ३३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायामष्टाविंशः सर्गः ॥ २८ ॥ खरमिति । मृदुपूर्वं मृदूक्तिपूर्वम् । परुषं कर्णकठोरमित्यर्थः ॥ १ ॥ बले तिष्ठता बलविषयस्वामित्वेन तिष्ठता त्वयेत्यर्थः ॥ २ ॥ भूतानामुद्वेजनीयः उद्वेगकरः । नृशंसः घातुकः एवंविधश्च

लोभात् लब्धस्य त्यागासहिष्णुतया। कामात् अपूर्वलाभेच्छया न बुध्यते न पश्चात्तापं करोतीत्यर्थः। भ्रष्टः ऐश्वर्याद्भ्रष्टः। तस्य कर्मणः। अन्तं फलम्। पश्यति अनुभवति। कथमिव ? करकात् ब्राह्मणीव करकाः वर्षोपलाः। "वर्षोपलस्तु करकः" इत्यमरः। तानत्तीति करकात्। ब्राह्मणी रक्तपुच्छिका। "ब्राह्मणी रक्तपुच्छिका" इति निघण्टुः। तस्यास्तद्भक्षणं विषभक्षणवन्मारकमिति प्रसिद्धिः। यथा ब्राह्मणी स्वमारकं कर्म स्वयमेव

लोभात् पापानि कुर्वाणः कामाद्वा यो न बुध्यते। भ्रष्टः पश्यति तस्यान्तं ब्राह्मणी करकादिव ॥ ५ ॥ वसतो दण्डकारण्ये तापसान् धर्मचारिणः। किन्नु हत्वा महाभागान् फलं प्राप्स्यसि राक्षस ॥ ६ ॥ न चिरं पापकर्माणः क्रूरा लोकजुगुप्सिताः। ऐश्वर्यं प्राप्य तिष्ठन्ति शीर्णमूला इव द्रुमाः ॥ ७ ॥ अवश्यं लभते जन्तुः फलं पापस्य कर्मणः। घोरं पर्यागते काले द्रुमाः पुष्पमिवार्तवम् ॥ ८ ॥

करोति तथा त्वमपीत्यर्थः ॥ ५ ॥ किं पापं मया कृतमित्यत्राह–वसत इति ॥ ६ ॥ ननु तर्हि कथं पापिनोऽपि बहवो जीवन्तीत्यत्राह–न चिरमिति। केवलपापिनो जन्मान्तरे फलं भुञ्जते, क्रूरास्तु पुण्यलेशेन ऐश्वर्यं प्राप्यापि न चिरं तिष्ठन्ति, क्षिप्रमेव विनश्यन्तीत्यर्थः ॥ ७ ॥ पापस्य कर्ता जन्तुः। काले प्राप्ते अवश्यं घोरं दुःखरूपं फलं लभते। ऋतुलक्षणे काले पर्यागते प्राप्ते आर्तवं तत्तदृतुप्राप्तं पुष्पमिव ॥ ८ ॥

लोकानामीश्वरः इन्द्रोपि न तिष्ठति, चिरकालमिति शेषः। किंपुनर्भवानित्यर्थः ॥ ३ ॥ ४ ॥ अप्राप्तस्य प्राप्त्याशा कामः, प्राप्तपर्याप्तिर्लोभः। तस्य पापस्य अन्तं नाशरूपं परिपाकमिति यावत्। पश्यति पापफलमनुभवतीत्यर्थः। किमिव ? ब्राह्मणी करकादिव करका घनोपलः तानत्तीति करकात्, पुंल्लिङ्गोप्यस्ति। ब्राह्मणी रक्तपुच्छिकेव। रक्तपुच्छिकायाः करका विषमिति प्रसिद्धिः। रक्तपुच्छिका घनोपलं निगीर्य क्षणेन म्रियते, तद्वत्त्वमपि मया विनश्यसीत्यर्थः ॥ ५ ॥ ६ ॥ पापकर्माणः पूर्वपुण्येनैश्वर्यं प्राप्यापि न चिरं तिष्ठन्ति क्षिप्रमेव नश्यन्तीत्यर्थः ॥ ७ ॥ पापस्य कर्ता काले पापफलानुभवकाले प्राप्ते अवश्यं घोरं दुःखरूपं फलं

टीका–रक्तपुच्छिकायाः करका विषमिति प्रसिद्धिः। तथा च कामलोभाभ्यां पापानि कुर्वाणो यः पापफलं न जानाति स तु कालान्तरे देहाद्भ्रष्टः सन् कामलोभाभ्यां सञ्चितपापस्य फलमनुभवति। यथा रक्तपुच्छिका स्वशरीरसौख्यार्थं वर्षोपलं निगीर्य क्षणेन म्रियते तद्वत्त्वमपि नश्यसीति भावः ॥ कतक०–एवं यः कर्मकरणकाले नाशकमिदमिति न बुद्ध्यते तस्य तत्कर्मप्राप्तम् अन्तं नाशं लोको दृष्टसन् पश्यतीत्यर्थः। स०–पापानि कुर्वाणः यः भ्रष्टः न बुध्यते मयेदं कृतमिति सः तस्य पापस्य सकाशात् अन्तं स्वनाशं पश्यति। कस्मात्केव ? करकाद्ब्राह्मणीव ! "वर्षोपलस्तु करका" इत्यमरव्याख्यानावसरे "वर्षोपलस्तु करका करकोपि च दृश्यते" इति भानुदीक्षिताभिधानात्करकशब्दः पुंल्लिङ्गोप्यस्ति ॥ ५ ॥

नचिरादित्येकं पदम् । अविलम्बेनेत्यर्थः । अत्र पुरुष इति शेषः । पापानाम् अत्युत्कटानामित्यर्थः ॥ ९ ॥ एवं मृदुपूर्वमुक्त्वा परुषमाह—पापमित्यादिना । आसादितः प्राप्तोऽस्मि । आगमने हेतुमाह राज्ञेति ॥ १० ॥ मया मुक्ताः शराः त्वां विदार्य निपतिष्यन्ति प्रवेक्ष्यन्ति । यथा पन्नगाः सर्पाः वल्मीकं प्रविशन्ति तथा ॥ ११ ॥ ताननुगमिष्यसीति पापिनामपि समरे हतानां स्वर्गसम्भवादिति भावः ॥ १२ ॥ निरयस्थं नरकसदृशं दुःखं

नचिरात् प्राप्यते लोके पापानां कर्मणां फलम् । सविषाणामिवान्नानां भुक्तानां क्षणदाचर ॥ ९ ॥ पापमाचरतां घोरं लोकस्याप्रियमिच्छताम् । अहमासादितो राज्ञा प्राणान् हन्तुं निशाचर ॥ १० ॥ अद्य हि त्वां मया मुक्ताः शराः काञ्चनभूषणाः । विदार्य निपतिष्यन्ति वल्मीकमिव पन्नगाः ॥ ११ ॥ ये त्वया दण्डकारण्ये भक्षिता धर्मचारिणः । तानद्य निहतः सङ्ख्ये ससैन्योऽनुगमिष्यसि ॥ १२ ॥ अद्य त्वां पतितं बाणैः पश्यन्तु परमर्षयः । निरयस्थं विमानस्था ये त्वया हिंसिताः पुरा ॥ १३ ॥ प्रहर त्वं यथाकामं कुरु यत्नं कुलाधम । अद्य ते पातयिष्यामि शिरस्तालफलं यथा ॥ १४ ॥ एवमुक्तस्तु रामेण क्रुद्धः संरक्तलोचनः । प्रत्युवाच खरो रामं प्रहसन् क्रोधमूर्च्छितः ॥ १५ ॥ प्राकृतान् राक्षसान् हत्वा युद्धे दशरथात्मज । आत्मना कथमात्मानमप्रशस्यं प्रशंससि ॥ १६ ॥ विक्रान्ता बलवन्तो वा ये भवन्ति नरर्षभाः । कथयन्ति न ते किञ्चित्तेजसा स्वेन गर्विताः ॥ १७ ॥

भूमौ पतितत्वानुभवन्तमित्यर्थः ॥ १३ ॥ तालफलं यथेत्यनेनानायासोक्तिः ॥ १४ ॥ १५ ॥ आत्मना स्वयमेव ॥ १६ ॥ तेजसा प्रतापेन ॥ १७ ॥

लभते, ऋतुकाललक्षणे काले प्राप्ते आर्तवं तत्तद्दतुप्रयुक्तं पुष्पमिव ॥ ८ ॥ नचिरादित्येकं पदम् । अविलम्बेनेत्यर्थः ॥ ९ ॥ राज्ञा दशरथेन भरतेन वा । आसादितः नियुक्तः ॥ १० ॥ भित्त्वा तद्वपुरिति शेषः । विदार्य भूमिमिति शेषः । निपतिष्यन्ति भूमिं भित्त्वा गमिष्यन्तीत्यर्थः ॥ ११ ॥ ये धर्मचारिणः ताननुगमिष्यतीत्यनेन पापिनामपि स्वेन हतानामुत्तमलोकप्राप्तिरस्तीत्युक्तं भवति । टी०—तदुक्तं स्कान्दे—"रामविद्धा निशिचराः बाणैर्मर्मसु ताडिताः । राममासाद्य समरे सायुज्यपदवीं गताः" इति ॥ १२ ॥ पतितं दुर्दशां प्राप्य भूमौ पतितम् ॥ टी०—निरयस्थं दुर्दशां प्राप्तम् ॥ १३–१७ ॥

प्राकृताः क्षुद्राः। अकृतात्मानः अप्रतिष्ठितधृतयः । क्षत्रियपांसनाः क्षत्रियाधमाः । निरर्थकं निष्प्रयोजनं यथा तथा विकत्थन्ते श्लाघन्ते ॥ १८ ॥ कुलं व्यपदिशन् आत्मनो महाकुलप्रसूतत्वं प्रकटयन् । को वीरः मृत्युकाले सम्प्राप्ते अप्रस्तवे अनवसरे स्वयं स्तवमभिधास्यतीत्यन्वयः ॥ १९ ॥ 'सर्वथैव लघुत्वं ते कत्थनेन विदर्शितम्। सुवर्णप्रतिरूपेण तप्तेनेव कुशाग्निना॥' इति ते कत्थनेन लघुत्वमल्पत्वं सर्वथैव स्पष्टमेव विदर्शितम्। यथा तप्तेन

प्राकृतास्त्वकृतात्मानो लोके क्षत्त्रियपांसनाः। निरर्थकं विकत्थन्ते यथा राम विकत्थसे ॥ १८ ॥
कुलं व्यपदिशन् वीरः समरे कोऽभिधास्यति। मृत्युकाले हि सम्प्राप्ते स्वयमप्रस्तवे स्तवम् ॥ १९ ॥
सर्वथैव लघुत्वं ते कत्थनेन विदर्शितम्। सुवर्णप्रतिरूपेण तप्तेनेव कुशाग्निना ॥ २० ॥
न तु मामिह तिष्ठन्तं पश्यसि त्वं गदाधरम्। धराधरमिवाकम्प्यं पर्वतं धातुभिश्चितम् ॥ २१ ॥
पर्याप्तोऽहं गदापाणिर्हन्तुं प्राणान् रणे तव। त्रयाणामपि लोकानां पाशहस्त इवान्तकः ॥ २२ ॥

अत एव सुवर्णसदृशेन कुशाग्निना कुशदर्भमाश्रितेनाग्निना लघुत्वं विदर्श्यते तद्वत् । यथा तृणाग्निः सुवर्णतुल्यतया भासमानोपि ज्वलन्नप्युत्तरकाले दाहकार्यकरो न भवति तथा कत्थनेन वीरवद्भासमानोपि पुरुषः उत्तरकाले लघुरेव भविष्यतीत्यर्थः । शीघ्रं ज्वलन् तृणाग्निः यथा सद्यः शान्तो न दग्धुमीष्टे तथा कत्थमानः पुरुषः स्वकत्थनानुरूपं कार्यं न करोतीति सिद्धमिति ॥ २० ॥ इह तव पुरतः। तिष्ठन्तं निश्चलतया स्थितम् । गदाधरं शत्रुरक्तोक्षितगदावन्तम् । मां सर्वनिर्वाहकं पर्वतमिवाकम्प्यं न पश्यसि, अत एवैवं कत्थस इति भावः ॥२१॥ गदापाणिरहं पाशहस्तोऽन्तक इव

अकृतात्मानः कल्मषचित्ताः ॥१८॥ कुलं व्यपदिशन् कुलीनत्वं प्रकटयन्। मृत्युकाले तत्तुल्ये समरे संप्राप्ते सति । अप्रस्तवे स्तवं को वाभिधास्यति को वा आत्मप्रशंसां करोतीत्यर्थः ॥१९॥ सुवर्णप्रतिरूपेण सुवर्णसदृशेन । तप्तेनेवाश्मनाग्निना—अग्निना अग्निवर्णेन। अश्मना पाषाणेन न तप्यते, वस्त्विति शेषः। सुवर्णवर्णमश्मानं दृष्ट्वा अयमङ्गार इति स्तुत्या व्यपदिशन्ति तथापि तेनाग्निना वस्तु न तप्यते किन्तु मुख्येनैवाग्निना तप्यत इत्यर्थः। एतदुक्तं भवति अग्निबुध्या अग्निवर्णमश्मानं स्पृशते पुरुषायानुपलभ्यमानोष्णस्पर्शेनात्मना। आत्मनोऽनग्नित्वं नाम लघुत्वं यथा विदर्शितं भवति तथा ते त्वया त्वां वीरम्मन्वानाय मह्यं कत्थनेनात्मप्रशंसया अवीरत्वं नामात्मनो लघुत्वं विदर्शितमित्यपेक्षितपदाध्याहारेण योजना । तप्तेनेव कुशाग्निनेति पाठे त्वयमर्थः—कुशाग्निना सुवर्णशोधकाग्निना तप्तेन सुवर्णप्रतिरूपेणारकूटेन लघुत्वं कार्ष्यरूपं यथा विदर्शितं भवति तथा ते त्वया कत्थनेनात्मप्रशंसया लघुत्वमशूरत्वं प्रदर्शितं भवतीति ॥ २० ॥ नत्वित्यादि । म।

तव त्रयाणां लोकानामपि प्राणान् हन्तुं पर्याप्तः समर्थ इति योजना ॥ २२ ॥ त्वयि आत्मश्लाघिनि विषये । कामं यद्यपि बहु पारुष्यं वक्तव्यमस्ति तथापि तन्न वक्ष्यामि । कुतः ? हि यस्मात् सविता अस्तं गच्छेत् । ततः अस्तमयेन युद्धविघ्नो भवेत् । यद्यपि स्वस्य रात्रिर्बलायैव तथापि रात्र्यशक्तमनुष्य वधे स्वस्य न कापि कीर्तिरिति खरहृदयम् ॥ २३ ॥ ते त्वया । एष इत्यव्यवधानोक्तिः । तेषां तद्बन्धूनामित्यर्थः । यद्वा तद्वधप्रतिक्रियां करिष्यामी

कामं बह्वपि वक्तव्यं त्वयि वक्ष्यामि न त्वहम् । अस्तं गच्छेद्धि सविता युद्धविघ्नस्ततो भवेत् ॥ २३ ॥ चतुर्दश सहस्राणि राक्षसानां हतानि ते । त्वद्विनाशात् करोम्येष तेषामश्रुप्रमार्जनम् ॥ २४ ॥ [ ततो रुधिरधाराभिस्त्व च्छरीरविमर्दनात् । करिष्यामि बलिं भूमौ त्वां हत्वा सर्वरक्षसाम् ॥ ] इत्युक्त्वा परमक्रुद्धस्तां गदां परमाङ्गदः । खर श्चिक्षेप रामाय प्रदीप्तामशनिं यथा ॥ २५ ॥ खरबाहुप्रमुक्ता सा प्रदीप्ता महती गदा । भस्म वृक्षांश्च गुल्मांश्च कृत्वागात्त त्समीपतः ॥ २६ ॥ तामापतन्तीं ज्वलितां मृत्युपाशोपमां गदाम् । अन्तरिक्षगतां रामश्चिच्छेद बहुधा शरैः ॥ २७ ॥

त्यत्र हृदयम् ॥ २४ ॥ परमाङ्गदः गदाप्रहारसामर्थ्यबिरुदयुक्त इत्यर्थः । अशनिं वज्रम् ॥ २५ ॥ भस्म कृत्वा तत्समीपमगादित्यन्वयः । समीपत इति पश्यसि ननु । गदाधरमित्यनेन गदाया अमोघत्वं सूच्यते । धराधरमिति पर्वताविशेषणम् ॥ २१ ॥ २२ ॥ यद्यपि त्वद्विषये इति शेषः । बहुवक्तव्यं परुषवचनमस्ति तथाप्यहं त्वया साकं न वक्ष्यामीति शेषः । भवतो लघुतरत्वादिति भावः । हेत्वन्तरमाह अस्तमिति ॥ २३ ॥ ते त्वया हतानि तेषामश्रुप्रमार्जनमिति । तेषां हत बान्धवराक्षसानामित्यर्थः । प्राकृतानित्यादीनां वास्तवार्थस्तु–आत्मानं प्रशंससि इह महात्मनस्तवैतन्न युक्तमिति भावः । विक्रान्ता इति । ये नरर्षभाः त्वादृश महात्मानः ते एवं न कथयन्ति । केचित्स्वतेजसा गर्विताः कथयन्ति । अतस्तवोचितं न भवतीति भावः । प्राकृता इति । क्षत्रियपांसना यथा निरर्थकं विकत्थन्ते तथा त्वं विकत्थसे तव न युक्तमिति भावः । कुलमिति । समरे शत्रुपक्षस्य मृत्युकाले सम्प्राप्ते सति स्तवं को वाभिधास्यति, न कोपीत्यर्थः । सर्वथेति । आत्मान मेवं भाषयसि यदि तदा तव लघुत्वमेव प्रदर्शितं भविष्यति । अतस्तवैतन्न युक्तमिति भावः । नन्विति हेराम ! गदाधरं मां पश्यसि ननु, एतादृशगदापाणिरहं पाशहस्तोऽन्तक इव त्रयाणामपि लोकानां प्राणान् हन्तुं पर्याप्तः यद्यपि तथापि रणे तव न पर्याप्त इति शेषः । चतुर्दशेति । राक्षसानां चतुर्दशसहस्राणि ते त्वया हतानि तथा त्वन्नाशात् । त्वत् त्वत्तः नाशात् मन्नाशात् त्वत्तो मन्नाशे सतीत्यर्थः । तेषां तद्दारादीनां अश्रुमार्जनं करोमीति सम्बन्धः । त्वदिति । घातयितुर्मम मरणे तद्दारुणा दुःखनिवृत्तिर्भवतीति भावः ॥ २४ ॥ इत्युक्त्वा अश्रुप्रमार्जनं करोमीत्युक्तेत्यर्थः । रामाद्वधाकांक्षी सन्निति शेषः । परमक्रुद्धः खरः गदां रामाय चिक्षेपेति सम्बन्धः । परमाङ्गदः प्रशस्तकेयूरः ॥ २५ ॥ अत एव भस्म कृत्वा तत्समीपतः रामसमीपमगात् ॥ २६–२८ ॥

सार्वविभक्तिकस्तसिः ॥ २६ ॥ २७ ॥ व्याली पन्नगी ॥२८॥ इति श्रीगोविन्द० श्रीरामायण० रत्नमे० आरण्यकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥२९॥
निरस्तनिखिलालम्बमहङ्कारमिव स्थितम् । खरं निहत्य साधूनां सुखावहमहं भजे ॥ भित्त्वा त्वित्यादि । धर्मवत्सल इत्यनेन निरायुधवधोऽनुचित इति श्रीरामोऽमन्यतेतिं गम्यते । स्मयमानः परिहसन्नित्यर्थः । संरब्धं भ्रान्तमिति खरविशेषणम् । "संरम्भः सम्भ्रमे कोपे" इत्यमरः ॥ १ ॥ २ ॥ अभि

सा विकीर्णा शरैर्भग्ना पपात धरणीतले । गदा मन्त्रौषधबलैर्व्यालीव विनिपातिता ॥ २८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥
भित्त्वा तु तां गदां बाणै राघवो धर्मवत्सलः । स्मयमानः खरं वाक्यं संरब्धमिदमब्रवीत् ॥ १ ॥ एतत्त बलसर्वस्वं दर्शितं राक्षसाधम । शक्तिहीनतरो मत्तो वृथा त्वमवगर्जसि ॥ २ ॥ एषा बाणविनिर्भिन्ना गदा भूमितलं गता । अभिधानप्रगल्भस्य तव प्रत्यरिघातिनी ॥३॥ यत्त्वयोक्तं विनष्टानामहमश्रुप्रमार्जनम् । राक्षसानां करोमीति मिथ्या तदपि ते वचः ॥ ४ ॥ नीचस्य क्षुद्रशीलस्य मिथ्यावृत्तस्य रक्षसः । प्राणानपहरिष्यामि गरुत्मानमृतं यथा ॥ ५ ॥ अद्य ते छिन्नकण्ठस्य फेनबुद्बुदभूषितम् । विदारितस्य मद्बाणैर्मही पास्यति शोणितम् ॥ ६ ॥ पांसुरूषितसर्वाङ्गः स्रस्तन्यस्तभुजद्वयः । स्वप्स्यसे गां समालिङ्ग्य दुर्लभां प्रमदामिव ॥ ७ ॥

धाने वचसि । प्रगल्भस्य धृष्टस्य । प्रत्यरिघातिनीतिं वीप्सायां प्रतिः । अरीनरीन् प्रतिघातिनी गदा ॥ ३ ॥ ४ ॥ नीचस्य केवलवाचाटकत्वेन क्षुद्रस्य । क्षुद्रशीलस्य हीनस्वभावस्य । मिथ्यावृत्तस्य असद्वृत्तस्य ॥ ५ ॥ फेनबुद्बुदाभ्यां भूषितम् अलंकृतम्, अनेन नूतनत्वमुक्तम् । विदारितस्य विदारितोदरस्य ॥ ६ ॥ पांसुरूषितेति । रूषितं लिप्तम् । स्रस्तं यथा तथा भुवि न्यस्तं भुजद्वयं येन । गां भूमिं समालिङ्ग्येत्यनेनावाग्भूतत्वमुच्यते ॥ ७ ॥

इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायामेकोनत्रिंशः सर्गः ॥ २९ ॥१॥२॥ एषेति । अभिधानेति अभिधानप्रगल्भस्य प्रौढवाददक्षस्य । प्रत्ययघातिनी विश्वासघातिनी ( तवप्रत्ययघातिनीतिपाठः ) ॥ ३–७ ॥

प्रवृद्धनिद्रे दीर्घनिद्रे । अशरण्यानाम् ऋष्यादीनामगतीनाम् । शरण्याः सुखावासभूताः ॥ ८ ॥ हतस्थाने हतराक्षसावस्थानसन्निवेशे ॥ ९ ॥ पूर्वमन्य भयावहाः राक्षस्यः अद्य मद्भयात् जनस्थानात् । विप्रसरिष्यन्ति पलायिष्यन्ते ॥ १० ॥ अद्येति । यासां त्वमीदृशः पापी पतिः ताः पत्न्यः अनुरूप कुलाः त्वत्सदृशदुर्वृत्ता इत्यर्थः । इतःपूर्वं शोकानभिज्ञा अपि अद्य शोकरसज्ञाः, निरर्थकाः निर्गतकामपुरुषार्थाः भविष्यन्ति ॥ ११ ॥ ईदृश इत्युक्तं

प्रवृद्धनिद्रे शयिते त्वयि राक्षसपांसने । भविष्यन्त्यशरण्यानां शरण्या दण्डका इमे ॥ ८ ॥ जनस्थाने हतस्थाने तव राक्षस मच्छरैः । निर्भया विचरिष्यन्ति सर्वतो मुनयो वने ॥९॥ अद्य विप्रसरिष्यन्ति राक्षस्यो हतबान्धवाः । बाष्पार्द्रवदना दीना भयादन्यभयावहाः ॥ १० ॥ अद्य शोकरसज्ञास्ता भविष्यन्ति निरर्थकाः । अनुरूपकुलाः पत्न्यो यासां त्वं पतिरीदृशः ॥ ११ ॥ नृशंस नीच क्षुद्रात्मन्नित्यं ब्राह्मणकण्टक । यत्कृते शङ्कितैरग्नौ मुनिभिः पात्यते हविः ॥ १२ ॥ तमेवमभिसंरब्धं ब्रुवाणं राघवं रणे । खरो निर्भर्त्सयामास रोषात्खरतरस्वनः ॥ १३ ॥ दृढं खल्ववलिप्तोऽसि भयेष्वपि च निर्भयः । वाच्यावाच्यं ततो हि त्वं मृत्युवश्यो न बुद्ध्यसे ॥ १४ ॥ कालपाश परिक्षिप्ता भवन्ति पुरुषा हि ये । कार्याकार्यं न जानन्ति ते निरस्तषडिन्द्रियाः ॥ १५ ॥

विवृणोति—नृशंसेति । नृशंस घातुक ! नीच वृत्ततो हीन ! क्षुद्रात्मन् क्षुद्रबुद्धे ! ब्राह्मणकण्टक ब्राह्मणशत्रो ! मुनिभिः यत्कृते यन्निमित्तं शङ्कितैः सद्भिः अग्नौ हविः पात्यते हविर्दानसमयेपि किमेतदपहरिष्यन्तीति भीता भवन्तीत्यर्थः ॥ १२ ॥ १३ ॥ अवलिप्तोऽसि गर्वितोऽसि । दृढं निश्चितम् । ततः कारणात् । भयेषु भयकारणेषु सत्स्वपि निर्भयोऽसि । वाच्यं चावाच्यं च वाच्यावाच्यम् "येषां च विरोधः शाश्वतिकः" इति द्वन्द्वैकवद्भावः । तत् मृत्यु वश्यः सन् न बुध्यस इति योजना ॥ १४ ॥ उक्तमर्थं विशिष्य दर्शयति—कालेति । परिक्षिप्ताः बद्धाः निरस्तषडिन्द्रियाः निरस्तषडिन्द्रिय

प्रवृद्धनिद्रेति पाठः । प्रवृद्धनिद्रे प्रकर्षेण वृद्धा दीर्घभूता निद्रा यस्य तस्मिन् । शरण्यानां स्वतपोमहिम्ना सर्वजनशरण्यानां मुनीनां शरण्या वासयोग्या भविष्यन्ति ॥८॥ हतस्थाने हतराक्षससन्निवेशे ॥९॥ विप्रसरिष्यन्ति जनस्थानाद्विद्रविष्यन्तीत्यर्थः ॥१०॥ निरर्थकाः निर्गतोऽर्थः कामादिपुरुषार्थो यासां ताः । अनुरूपं त्वत्सदृशं कुलं यासां ताः अनुरूपकुलाः । पतिरीदृशः पापकर्मेत्यर्थः ॥ ११ ॥ यत्कृते यन्निमित्तम् । शङ्कितैः त्वद्विघ्नं शङ्कितैः मुनिभिरग्नौ हविः पात्यते क्षिप्यते ॥ १२–१४ ॥ कालपाशपरिक्षिताः बद्धाः । निरस्तषडिन्द्रियाः निर्गतज्ञानेन्द्रियान्तःकरणव्यापाराः । तमेवमित्यादिश्लोकत्रयस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु—एवं ब्रुवाणं

व्यापाराः ॥१५॥ एवमिति । भ्रुकुटीं संरुद्ध्य कृत्वेत्यर्थः । प्रहरणस्यार्थे आयुधार्थं सर्वतोऽवलोकयन् सन्नपि दूरे महासालं ददर्शेत्यन्वयः ॥१६॥ दशन च्छदम् अधरम् । सन्दश्य निपीड्य, अनेन सालस्य दुर्ग्रहत्वमुक्तम् । बाहुभ्यामित्यनेन सालस्थौल्यमुक्तम् । विनद्येत्यादिना जयाशोच्यते ॥ १७ ॥१८॥ रोषमिति सर्वसामग्रीविरहेप्यानुकूल्यलेशाभावादिति भावः ॥ १९ ॥ जातस्वेद इति रोषाज्जातस्वेदः ननु श्रमात् । रक्तान्तलोचनः रक्तवर्णापाङ्गः ॥२०॥

एवमुक्त्वा ततो रामं संरुध्य भ्रुकुटीं ततः । स ददर्श महासालमविदूरे निशाचरः । रणे प्रहरणस्यार्थे सर्वतो ह्यवलोकयन् ॥ १६ ॥ स तमुत्पाटयामास सन्दश्य दशनच्छदम् । तं समुत्क्षिप्य बाहुभ्यां विनद्य च महाबलः ॥ १७ ॥ राममुद्दिश्य चिक्षेप हतस्त्वमिति चाब्रवीत् ॥ १८ ॥ तमापतन्तं बाणौघैश्छित्त्वा रामः प्रतापवान् । रोषमाहारयत्तीव्रं निहन्तुं समरे खरम् ॥ १९ ॥ जातस्वेदस्ततो रामो रोषाद्रक्तान्तलोचनः । निर्बिभेद सहस्रेण बाणानां समरे खरम् ॥ २० ॥ तस्य बाणान्तराद्रक्तं बहु सुस्राव फेनिलम् । गिरेः प्रस्रवणस्येव तोयधारापरिस्रवः ॥ २१ ॥ विह्वलः स कृतो बाणैः खरो रामेण संयुगे । मत्तो रुधिरगन्धेन तमेवाभ्यद्रवद्द्रुतम् ॥ २२ ॥ तमापतन्तं संरब्धं कृतास्त्रो रुधिराप्लुतम् । अपासर्पत् प्रतिपदं किञ्चित्त्वरितविक्रमः ॥ २३ ॥

बाणान्तरात् बाणक्षतविवरात् । फेनिलं फेनवत् । प्रस्रवणस्य प्रस्रवणाख्यस्य । परिस्रवः प्रवाहः ॥२१॥ विह्वलः विक्लवः । रुधिरगन्धेनोपलक्षितः ॥२२॥ तमापतन्तमिति । संरब्धं सम्भ्रान्तं प्रतिपदम् अस्त्रमोचनप्रतिकूलं तं खरं किञ्चिदपासर्पत् पश्चादागतः, तस्मादपासर्पदित्यर्थः । अपसर्पणनिमित्त

रामं मृत्युवश्यः खरः हे राम त्वं वाच्यावाच्यं न बुद्ध्यस इति दृढमवलिप्तोसीति च निर्भर्त्सयामासेति च सम्बन्धः । एवं निर्भर्त्सने हेतुमाह कालपाशेति । लोके कालपाशपरिक्षिप्ताः पुरुषाः महात्मानमपि निर्भर्त्सयन्त्येवेति भावः ॥ १५ ॥ भ्रुकुटिं संरुद्ध्य संनिबद्ध्य । प्रहरणस्यार्थे आयुधस्यार्थे ॥ १६ ॥ दशनच्छदम् अधरम् ॥ १७ ॥ तमिति हत इत्यब्रवीत् । वस्तुतस्तु त्वं हतः मया ज्ञात इत्यब्रवीत् ॥ १८ ॥ १९ ॥ जातस्वेदः रोषादुत्पन्नस्वेदः ॥ २० ॥ बाणान्तरात् बाणक्षतविव रात् । प्रस्रवणस्य प्रस्रवणाख्यस्य । तोयधारापरिस्रवः तोयधारापरिस्रवणमिव ॥ २१ ॥ विह्वलः विकटः रुधिरगन्धेनोपलक्षितः ॥२२॥ संरब्धम् अतिक्रुद्धम् । आप तन्तं बाणक्षेपणानवकाशतया अतिसन्निकृष्टम् उपरि आपतन्तं खरं दृष्ट्वेति शेषः । कृतास्त्रः शिक्षितास्त्रः रामः त्वरितविक्रमः शस्त्रसन्धानावकाशार्थं त्वरितपाद

माह कृतास्त्र इति । संहितास्त्रत्वात् अस्त्रमोचनावकाशलाभायापासर्पदिति भावः । निमित्तान्तरमाह रुधिराप्लुतमिति । तत्स्पर्शबीभत्सेनापसर्पणमित्यर्थः । यद्यपि रणे किञ्चिदपसर्पणं शूरस्यायुक्तम् तथापि 'सर्वतो बलवती ह्यन्यथानुपपत्तिः' इति न्यायेनापसर्पणं विना तत्संहारहेत्वलाभादपसर्पणं न दोष इति हृदयम् ॥२३॥ तनि०—संरब्धम् अतिक्रुद्धम् । आपतन्तम् आयुधप्रसारणानवकाशतया अतिसन्निकृष्टमागच्छन्तम् । तत्र हेतुः त्वरितविक्रम इति । शस्त्रसन्धानावकाशार्थं

ततः पावकसङ्काशं वधाय समरे शरम् । खरस्य रामो जग्राह ब्रह्मदण्डमिवापरम् ॥ २४ ॥ स तं दत्तं मघवता सुरराजेन धीमता । सन्दधे चापि धर्मात्मा मुमोच च खरं प्रति ॥२५॥ स विमुक्तो महाबाणो निर्घातसमनिस्वनः । रामेण धनुरायम्य खरस्योरसि चापतत् ॥ २६ ॥ स पपात खरो भूमौ दह्यमानः शराग्निना । रुद्रेणेव विनिर्दग्धः श्वेतारण्ये यथान्तकः ॥२८॥ स वृत्र इव वज्रेण फेनेन नमुचिर्यथा । बलो वेन्द्राशनिहतो निपपात हतः खरः ॥२८॥

त्वरितविक्रमतया किञ्चिदपासर्पदित्यर्थः । हेत्वन्तरमाह रुधिराप्लुतमिति । तद्देहरुधिरस्य स्वस्मिन् संश्लेषो भवेदिति जुगुप्सयेत्यर्थः । इदमेवाभिप्रेत्य वेदान्ताचार्यैरुक्तम्— "क्वचिदतिसङ्कटविषये सुभटानामभिमतोयमपसर्पः" इति ॥२३॥ ततः बाणपातावसरलाभात् । ब्रह्मदण्डं ब्रह्मशापम् ॥२४॥ धीमता भावज्ञेन दत्तम्, अगस्त्य मुखेनेति शेषः ॥ २५ ॥ रामेण धनुरायम्य आकृष्य विमुक्तः इत्यन्वयः ॥ २६ ॥ स खरः शराग्निना दह्यमानः सन् रुद्रेण रुद्रनेत्राग्निना दग्धोऽन्तक इव श्वेतारण्ये यथा श्वेतारण्य इव भूमौ पपात ॥ २७ ॥ सः रामबाणेन हतः खरः । अमोघबाणहतत्वज्ञापनाय प्रथमो दृष्टान्तः । लीलया हतत्वज्ञापनाय द्वितीयः । समर्थाधिष्ठितत्वज्ञापनाय तृतीयः । आर्द्राच्छुष्काच्चावध्यत्वं नमुचेर्लब्धं तदर्थं फेनेन हतः । बलो वेति वाशब्द इवार्थः । वृत्रादित्रयमिन्द्रेणैव

विक्षेपस्सन् प्रतिपदं प्रतीपं तिर्यगित्यर्थः । किञ्चिदपासर्पत अपसृतवान्, अपसर्पणे हेत्वन्तरमाह रुधिराप्लुतमिति । तद्देहरुधिरस्य स्वस्मिन् संश्लेषजुगुप्सयेत्यर्थः । यद्वा तं खरं वर्जयित्वा प्रतिपदं प्रतिमार्गं आगतेनैव मार्गेणापासर्पत् अपागच्छत् शरसन्धानसौकर्यार्थं द्वित्राणि पदानि किञ्चित्पृष्ठतो गच्छतीत्यर्थः । क्वचिदति सङ्कटदेशकालयोः वीरधुरन्धराणामपि सम्मतमिदमपसर्पणमिति भावः ॥ २३ ॥ उद्यन्तं ब्रह्मदण्डं ब्रह्मास्त्रमिव स्थितम् ॥ २४ ॥ २५ ॥ रामेण धनुरायम्य कर्णान्त माकृष्य विमुक्तः स बाणः खरस्योरस्यपातयत अपतदित्यर्थः ॥२६॥ रुद्रेणेवेति । इवशब्दो वाक्यालङ्कारे । श्वेतारण्यं कावेरीसिन्धुनिकटदेशः ॥२७॥ बलो वेत्यत्र

हतम् ॥ २८ ॥ परमर्षयः ब्रह्मर्षयः । सभाज्य सम्पूज्य ॥ २९ ॥ एतदर्थम् एतद्वधाय ॥ ३० ॥ इदमुपपादयति—आनीत इति । उपायेन तत्तदाश्रमदर्शन व्याजेन ॥ ३१ ॥ ३२ ॥ एतस्मिन्नित्याद्यर्धत्रयमेकान्वयम् ॥ ३३ ॥ रामं स्तुवन्ति—अर्धेत्यादिना । अर्धाधिकमुहूर्तेन घटिकात्रयेण । दाक्ष्यं सर्व संहारचातुर्यम् ॥ ३४–३६ ॥ एतस्मिन्निति । अन्तरे अवसरे । गिरिदुर्गात् गिरिदुर्गप्रदेशात् । सुखी रामपराक्रमदर्शनजन्यसन्तोपवान् ॥ ३७ ॥ ३८ ॥

ततो राजर्षयः सर्वे सङ्गताः परमर्षयः । सभाज्य मुदिता राममिदं वचनमब्रुवन् ॥ २९ ॥ एतदर्थं महातेजा महेन्द्रः पाकशासनः । शरभङ्गाश्रमं पुण्यमाजगाम पुरन्दरः ॥ ३० ॥ आनीतस्त्वमिमं देशमुपायेन महर्षिभिः । एषां वधार्थं क्रूराणां रक्षसां पापकर्मणाम् ॥ ३१ ॥ तदिदं नः कृतं कार्यं त्वया दशरथात्मज । सुखं धर्मं चरिष्यन्ति दण्डकेषु महर्षयः ॥ ३२ ॥ एतस्मिन्नन्तरे देवाश्चारणैः सह सङ्गताः । दुन्दुभींश्चाभिनिघ्नन्तः पुष्पवर्षं समन्ततः । रामस्योपरि संहृष्टा ववृषुर्विस्मितास्तदा ॥ ३३ ॥ अर्धाधिकमुहूर्तेन रामेण निशितैः शरैः । चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ॥ ३४ ॥ खरदूषणमुख्यानां निहतानि महाहवे । अहो बत महत् कर्म रामस्य विदितात्मनः ॥ ३५ ॥ अहो वीर्यमहो दाक्ष्यं विष्णोरिव हि दृश्यते । इत्येवमुक्त्वा ते सर्वे ययुर्देवा यथागतम् ॥ ३६ ॥ एतस्मिन्नन्तरे वीरो लक्ष्मणः सह सीतया । गिरिदुर्गाद्विनिष्क्रम्य संविवेशाश्रमं सुखी ॥ ३७ ॥ ततो रामस्तु विजयी पूज्यमानो महर्षिभिः । प्रविवेशाश्रमं वीरो लक्ष्मणेनाभिपूजितः ॥ ३८ ॥ तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् । बभूव हृष्टा वैदेही भर्तारं परिषस्वजे ॥ ३९ ॥

तं दृष्ट्वेति । चतुर्दशसहस्ररक्षोभिरयमेकाकी किं करिष्यतीत्युद्विग्ना सीता रामेण जिते वीरतारतम्याभिज्ञकुलप्रसूततया सबहुमानं परिष्वस्वज इत्याह ।

वाशब्द इवार्थे "उपमायां विकल्पे वा" इत्यमरः ॥ २८ ॥ टीका-सभाज्यं पूज्यम् ॥ २९ ॥ एतदर्थं खरादिवधार्थं शरभङ्गाश्रममिति सुतीक्ष्णागस्त्याश्रमयोरप्युप लक्षणम् । हे शरभङ्ग ! त्वं तावत् जनस्थानसन्निकर्षाय रामं सुतीक्ष्णाश्रमं नय । ततो मुनयः स्वस्वाश्रमदर्शनापदेशेन खरसन्निकर्षं नयन्त्विति वक्तुमगस्त्यहस्ते आयुधानि निधातुं चेत्यर्थः ॥ ३०–३३ ॥ अर्धाधिकमुहूर्तेन घटिकात्रयेणेत्यर्थः ॥ ३४ ॥ ३५ ॥ दाक्ष्यं सामर्थ्यम् ॥ ३६–३८ ॥ तं दृष्ट्वेति । "ते तु यावन्त एवाजौ

तं दृष्ट्वा पूर्वं महासमरे अदृश्यतया स्थितम् इदानीं दृष्ट्वा । तं दृष्ट्वा वीरव्रणेन विगलद्रुधिरेण रोमकूपोल्लसद्भिरपि घर्मपयःकणौघैः "कोदण्डदण्डमवलम्ब्य विनीय वर्म किंचित्परिश्रमभृतं प्रियमीक्षमाणा ।" इत्युक्तप्रकारं दृष्ट्वा । तं दृष्ट्वा ततोद्ग्रथितजटामण्डलेन दृढबद्धकक्ष्यतया स्कन्धावलम्बितूणीरेण रणावसाननिर्वापितकोपाग्नितया प्रसन्नवदनेन सीतालक्ष्मणमार्गावलोकनेन पुनरपि किमागमिष्यन्ति राक्षसा इति दत्तावधानेन च लक्षितं दृष्ट्वा । तं दृष्ट्वा पूर्वं वीर इति श्रुतम्, इदानीं निर्वर्तितवीरकृत्यं दृष्ट्वा । दर्शनप्रकारमाह शत्रुहन्तारम् । हननव्यापारे कर्मभावः शत्रूणां स्वस्य तु कर्तृभाव एव । हन्तारं हननव्यापार एव दृष्टः नतु शरसन्धानादिव्यापार इत्यर्थः । शत्रुपदेन देवगन्धर्वादिसङ्गे सत्यपि शत्रूनेव हतवानित्युच्यते । दुष्टनिग्रह उक्तः । शिष्टपरिपालनमाह महर्षीणां सुखावहम् । महर्षीणां तपोक्लेशेन हन्तुं सामर्थ्येपि रक्षकस्वरूपस्य रक्ष्यभूतस्वस्वरूपस्य च हानिर्मा भूदिति केवलं रक्षकव्यापारप्रतीक्षाणां रामप्रतिज्ञामेवावलोकयताम् । सुखावहम् "एहि पश्य शरीराणि" इत्युक्तदुःखगन्धं निवर्त्य सुखस्यैव प्रापकम् । बभूव बहुतरशत्रुगणाक्रमणाद्रामस्यैकाकितया च पूर्वं सत्तारहिता सीता सम्प्रति सत्तां लेभे, जगत्प्राणस्य रामस्य सत्तालाभात् स्वयमपि सत्तामवाप । "आत्मा वै पुरुषस्य दाराः" इत्युक्तरीत्या रामसत्तालाभात् स्वस्या अपि सत्ता जातेति भावः । यद्वा "भू प्राप्तौ" इत्यस्माल्लिटि व्यत्ययेन परस्मैपदम् । भर्तारं विजयिनमालोक्य सरभसं गुहान्तरादागतेत्यर्थः । हृष्टा "सति धर्मिणि धर्माः" इति न्यायेन धर्मिलाभानन्तरं तद्धर्महर्षोऽभूदित्यर्थः । यद्वा आन्तरप्रीत्यङ्कुरोपमरोमाञ्चाञ्चितेत्यर्थः । एवं शौर्यावलोकनप्रीतत्वे हेतुमाह वैदेही । "मिथिलाधिपतिर्वीरः" इत्युक्तरीत्या वीरकुलप्रसूतत्वादित्यर्थः । भर्तारं परिषस्वजे तादृशनिरवधिकप्रेमभारभरिततया स्वयमालिलिङ्गे । भर्तारं लोकभर्तारं सर्वलोकमातृत्वेन सर्वप्रजारक्षणं दृष्ट्वा परिषस्वजे । आयुधक्षतव्रणेषु सुखोष्णाभ्यां स्तनाभ्यां पस्पर्श । परिषस्वजे पर्याप्तं सस्वजे, पश्चात् पुरस्तात् पार्श्वतश्च पस्पर्शेत्यर्थः । यद्यपि रणे अपलायमानस्य पृष्ठे शरपातप्रसङ्ग एव नास्ति तथापि सर्वतः समावृत्य आयुधप्रक्षेपात् पृष्ठतोपि व्रणसम्भवः बाणानां सम्यक् क्षिप्तानां पृष्ठतो निर्गमोपि सम्भवति । महर्षीणां सुखावहं परिषस्वजे पुत्रविषये स्वभर्त्रोपकारकरणे पुत्रवात्सल्यात् भर्तरि सन्तुष्टा भार्येव ऋषिजनसंरक्षणेन प्रीता परिषस्वजे । रामं विना गुहागता सीता ततो निर्गत्य निरस्तसमस्तशत्रुं रामं परिषस्वज इत्यनेन हृदयगुहागतो जीवः परतन्त्रः आचार्यमुखेन परमशेषिणं दृष्ट्वा तेन सकलविरोधिवर्गे निवर्तिते ततो निर्गत्य

तावांस्तु ददृशे स तैः" इत्युक्तरीत्या तात्कालिकस्वेच्छागृहीतचतुर्दशसहस्रदिव्यमङ्गलविग्रहवत्तया प्रतिराक्षसं प्रत्येकं राम इव स्थित्वा दृश्यमानामिति तच्छब्दार्थः । यद्वा इन्द्रादिभिरपि सम्भूयाप्रधृष्यान् बलीयसश्चतुर्दशसहस्रराक्षसान् एक एवार्धाधिकमुहूर्तेन स्वयमक्षत एव लीलया संहृत्य स्वपुरस्स्थितं "राम जामातरं

नित्यसूरिपारिषदासीनं शेषिणमासाद्य तद्भोगपरिवाहमनुबभूवेति ध्वन्यते ॥ ३९ ॥ उक्तमेवार्थं विशदं दर्शयति द्वाभ्याम्—मुदेत्यादि ॥ ४० ॥ तनि०—रक्षोगणान् हतानिति वीर्यगुणविवरणम् । तत्र रामं चैवाव्ययमिति वीर्यलक्षणे स्वयमक्षत इति विशेषविवरणम् । रक्षोगणान् हतानित्यनेन यः परान् जयतीति लक्षणगत विशेष्यविवरणम् ॥ ४० ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

मुदा परमया युक्ता दृष्ट्वा रक्षोगणान् हतान् । रामं चैवाव्ययं दृष्ट्वा तुतोष जनकात्मजा ॥ ४० ॥ ततस्तु तं राक्षससङ्घमर्दनं सभाज्यमानं मुदितैर्महर्षिभिः । पुनः परिष्वज्य शशिप्रभानना बभूव हृष्टा जनकात्मजा तदा ॥ ४१ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे त्रिंशः सर्गः* ॥ ३० ॥

त्वरमाणस्ततो गत्वा जनस्थानादकम्पनः । प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत् ॥ १ ॥

एवं शरणागतिमन्त्रविवरणरूपे श्रीरामायणे इयता ग्रन्थसन्दर्भेण उत्तरखण्डार्थौ विवृतः । अनुष्ठानदशायां हि प्रथमखण्डार्थस्य प्राथम्यम्, व्युत्पत्तिदशायां तु उत्तरखण्डार्थस्य फलानुसारेणोपायप्रवृत्तेः, अतो द्वितीयखण्डार्थः प्रथमं विवृतः । तत्र बालकाण्डे प्रथमपदार्थभूतपुरुषकारयोगो दर्शितः, अयोध्याकाण्डे द्वितीयपदार्थभूतसौलभ्यादिगुणयोगः, आरण्यकाण्डे शूर्पणखागमनात्पूर्वभाविवृत्तान्तेन चतुर्थ्यर्थभूता किङ्करवृत्तिरुक्ता, ततः खरवधान्त

प्राप्य श्रियं पुरुषविग्रहम् " इत्यात्मना अज्ञानात्पूर्वं विप्रलब्धमिति वा तच्छब्दार्थः । " तैर्धनूंषि ध्वजाग्राणि वर्माणि च शिरांसि च । बाहून् सहस्ताभरणानूरून् करिकरोपमान् । चिच्छेद समरे रामः " इत्युक्तप्रकारेण शत्रुहन्तारं दृष्ट्वेत्यन्वयः । किञ्च " परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ " इति स्वप्रतिज्ञां परिपालयन्नवतीर्य असतो राक्षसान् हत्वा सतामृष्यादीनां जगन्मोहनदिव्यमङ्गलस्वमूर्तिसाक्षात्कारेण परमानन्दं सम्पादितवानित्याह—महर्षीणां सुखावहमिति । किञ्च एवंविधं रामं दृष्ट्वा वैदेही बभूव स्वनिर्वाहरूपसत्तासम्पन्ना जातेत्यर्थः । भूधातोस्सत्तावाचकत्वात् । श्रीरामस्य शत्रुमध्यलीनतया असत्प्रायत्वात्स्वस्याप्यसत्प्रायत्वम् अमन्यत पूर्वं वैदेही, इदानीं स्वप्राणेश्वरश्रीरामसत्तया स्वसत्ता निष्पन्नेत्यमन्यत । "आत्मा वै पुरुषस्य दाराः" इति नियमादिति भावः । हृष्टा प्रीता परिषस्वजे आयुधव्रणानां स्तनोष्मणा परिहारं कर्तुं गाढमालिङ्गनं कृतवतीति ॥३९॥४०॥ सभाज्यमानम् पूज्यमानम् ॥४१॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां त्रिंशस्सर्गः ॥ ३० ॥ त्वरमाण इति । शूर्पणखागमनात्पूर्वमेवेति शेषः ॥१॥



* सर्गफलम् । स्कान्दे—"श्रुत्वा श्रीरामविजयं पापबन्धात्प्रमुच्यते । तथैव श्रुत्वा [illegible] ॥ श्रुत्वा पुष्पवती नारी तनयं वंशवर्द्धनम् । लभते राघवेन्द्रस्य प्रसादात्कीर्तिवर्द्धनम् ॥ " इति ॥

वृत्तान्तेन चरमपदार्थभूता विरोधिनिवृत्तिरिति । अथ पूर्वखण्डार्थ उच्यते शास्त्रशेषेण । तत्र चारण्यकाण्डशेषेण विभीषणस्य पुरुषकारसान्निध्यमुच्यते, किष्किन्धाकाण्डेन नारायणपदार्थभूतं वात्सल्यम्, सुन्दकाण्डेन चरणशब्दोक्तदिव्यमङ्गलविग्रहवैशिष्ट्यम् 'रामः कमलपत्राक्षः' इत्यादिना तथोक्तेः । युद्धकाण्डे शरणागतिः, उत्तरकाण्डे प्रपन्नचर्येति बोध्यम् । एवमानुषङ्गिकमुनिजनशरणागतिफलं देवशरणागतिकार्यरावणवधाङ्गत्वेनोक्त्वा अथ

जनस्थानस्थिता राजन् राक्षसा बहवो हताः । खरश्च निहतः सङ्ख्ये कथञ्चिदहमागतः ॥ २ ॥ एवमुक्तो दशग्रीवः क्रुद्धः संरक्तलोचनः । अकम्पनमुवाचेदं निर्दहन्निव चक्षुषा ॥३॥ केन रम्यं जनस्थानं हतं मम परासुना । को हि सर्वेषु लोकेषु गतिं चाधिगमिष्यति ॥ ४ ॥ न हि मे विप्रियं कृत्वा शक्यं मघवता सुखम् । प्राप्तुं वैश्रवणेनापि न यमेन न विष्णुना ॥ ५ ॥ कालस्य चाप्यहं कालो दहेयमपि पावकम् । मृत्युं मरणधर्मेण संयोजयितुमुत्सहे ॥६॥

तन्निमित्तभूतसीतापहाररूपबीजमुपक्षिपति—त्वरमाण इत्यादिना ॥ संहृत्य सकलं लोकं पुनः स्रष्टुं च यः क्षमः । तमहं शिरसा वन्दे जानकीप्राणनायकम् ॥ त्वरमाणः शूर्पणखागमनापेक्षयेति शेषः । अकम्पनो रावणचारः त्वरमाणो गत्वा वेगेनाब्रवीदित्यन्वयः ॥ १ ॥ जनस्थानेति । कथञ्चिदिति स्त्रीवेष धारणेनेति भावः । अत एव शूर्पणखा वक्ष्यति " एका कथञ्चिन्मुक्ताहं परिभूय महात्मना । स्त्रीवधं शङ्कमानेन राघवेण महात्मना ॥ " इति ॥२॥ तनि०—लङ्कायाः जनस्थानं पुरद्वारसदृशं खलु । लङ्काया राज्यं जनपदग्रामादिसंकुलं किञ्चिदपि नास्ति खलु । एका लङ्का तस्या रक्षाभूतं जनस्थानमेकं तस्य नाशाल्लङ्काया अपावृतं द्वारं संवृतं राजन् तवैव सत्ताहानिः खलु । राक्षसाः राक्षसराजस्य तव तन्नाशे राजत्वं नाशितं किल । बहवः एकद्वित्रिनाशेपि हानिर्भवत्येव किमुत बहूनां नाशे । हताः मारिताः नतु सप्राणाः । सर्वराक्षसनाशे खरेण किं कृतमित्यत्राह खरश्चेति । चकारेण दूषणत्रिशिरसावुच्येते । कथंचिदहमागतः स्त्रीवेषेणेति भावः । स्त्रीवधं शङ्कमानेन एका कथञ्चिन्मुक्ताहमिति शूर्पणखावाक्यानुरोधात् ॥२॥ एवमिति । क्रुद्धत्वं नारोपितमिति ज्ञापयितुं संरक्तलोचन इत्युक्तम् । कोपातिरेकं दृष्टान्त मुखेनाह—निर्दहन्निवेति ॥ ३ ॥ केनेति । परा गताः असवः प्राणाः यस्य तेन परासुनेति परुषभाषणमात्रम् । गम्यत इति गतिः स्थानम् ॥ ४ ॥५॥ कालस्यापि काल इत्यत्रोपपत्तिमाह मृत्युमिति ॥ ६ ॥

खरश्चेति चकारेण दूषणत्रिशिरसौ संङ्गृहीतौ । कथञ्चिदहमागतः केवलं प्रेक्षकतया स्थितत्वाद्रामशराविषयीकृत इत्यर्थः ॥२॥३ ॥ परासुना मुमूर्षुणा । कः को वा

आदित्यपावकौ परस्परसाहाय्येन संयुक्तावपीत्यर्थः । अतो न पुनरुक्तिः ॥ ७ ॥ सन्दिग्धया सन्दिग्धाक्षरया । याचते अयाचत । अभयमिति च्छेदः ॥ ८–११ ॥ नागेन्द्रः सर्पेन्द्रः ॥ १२ ॥ स रामः सुरेन्द्रेणामरैश्च युक्तः सन् जनस्थानमुपयातः कच्चित् ? अन्यथा तस्यैतादृशसामर्थ्यं न युज्यत इति भावः ॥ १३ ॥ १४ ॥ इन्द्रादिसहायानपेक्षो राम इत्याशयेनाह–रामो नामेत्यादिना । दिव्यास्त्रगुणसम्पन्नः दिव्यास्त्रकृतातिशययुक्तः ॥ १५ ॥

दहेयमपि संक्रुद्धस्तेजसादित्यपावकौ । वातस्य तरसा वेगं निहन्तुमहमुत्सहे ॥ ७ ॥ तथा क्रुद्धं दशग्रीवं कृताञ्जलिरकम्पनः । भयात् सन्दिग्धया वाचा रावणं याचतेऽभयम् ॥ ८ ॥ दशग्रीवोऽभयं तस्मै प्रददौ रक्षसां वरः । स विश्रब्धोऽब्रवीद्वाक्यमसन्दिग्धमकम्पनः ॥ ९ ॥ पुत्रो दशरथस्यास्ति सिंहसंहननो युवा । रामो नाम वृषस्कन्धो वृत्तायतमहाभुजः ॥ १० ॥ वीरः पृथुयशाः श्रीमानतुल्यबलविक्रमः । हतं तेन जनस्थानं खरश्च सहदूषणः ॥ ११ ॥ अकम्पनवचः श्रुत्वा रावणो राक्षसाधिपः । नागेन्द्र इव निःश्वस्य वचनं चेदमब्रवीत् ॥ १२ ॥ स सुरेन्द्रेण संयुक्तो रामः सर्वामरैः सह । उपयातो जनस्थानं ब्रूहि कच्चिदकम्पन ॥ १३ ॥ रावणस्य पुनर्वाक्यं निशम्य तदकम्पनः । आचचक्षे बलं तस्य विक्रमं च महात्मनः ॥ १४ ॥ रामो नाम महातेजाः श्रेष्ठः सर्वधनुष्मताम् । दिव्यास्त्रगुणसम्पन्नः पुरन्दरसमो युधि ॥ १५ ॥ तस्यानुरूपो बलवान् रक्ताक्षो दुन्दुभिस्वनः । कनीयान् लक्ष्मणो नाम भ्राता शशिनिभाननः ॥ १६ ॥ स तेन सह संयुक्तः पावकेनानिलो यथा । श्रीमान् राजवरस्तेन जनस्थानं निपातितम् ॥ १७ ॥ नैव देवा महात्मानो नात्र कार्या विचारणा ॥ १८ ॥

तस्येति । रक्ताक्षः रक्तरेखाञ्चितनयनः । दुन्दुभिस्वनः दुन्दुभिवत् गम्भीरस्वनः । संयुक्त इति वर्तत इति शेषः ॥ १६ ॥ १७ ॥ नैव देवा इति सहायार्थं गतिं स्थितिं स्वरूपं वा ॥४–७॥ सन्दिग्धया वाचा सन्दिग्धाक्षरया वाचेत्यर्थः ॥८॥९॥ सिंहसंहननः "वराङ्गरूपोपेतो यः सिंहसंहननो हि सः" इत्यमरः॥१०॥११॥ नागेन्द्र इव सर्पश्रेष्ठ इव ॥ १२–१७ ॥ नैव देवा महात्मान इति आयाता इति शेषः ॥ १८ ॥ १९ ॥

मागता इतिशेषः ॥ १८ ॥ पञ्चाननाः विस्तृताननाः भूत्वा भक्षयन्ति स्मेत्युत्प्रेक्षा ॥ १९ ॥ राक्षसाः भयकर्शिताः भयपीडिताः सन्तो येन येन मार्गेण गच्छन्ति तेन तेन मार्गेणाग्रतः स्थितं राममेव पश्यन्ति स्म । अत्र विशेषणसामर्थ्याद्रामदर्शनं भयकृतमिति व्यज्यते ॥ २० ॥ तनि०—येन येन मार्गेणे त्यर्थः । अथवा येन येन यद्यद्वस्त्वन्तर्धानसाधनत्वबुद्ध्या गच्छन्ति तेन तेन तस्मिन् तस्मिन् वस्तुनि राममेवाग्रतः स्थितं पश्यन्ति । अत्र प्रतिराक्षसम् इच्छागृहीत

शरा रामेण तूत्सृष्टाः रुक्मपुङ्खाः पतत्रिणः । सर्पाः पञ्चानना भूत्वा भक्षयन्ति स्म राक्षसान् ॥ १९ ॥ येन येन च गच्छन्ति राक्षसा भयकर्शिताः । तेन तेन स्म पश्यन्ति राममेवाग्रतः स्थितम् । इत्थं विनाशितं तेन जनस्थानं तवानघ ॥२०॥ अकम्पनवचः श्रुत्वा रावणो वाक्यमब्रवीत् । जनस्थानं गमिष्यामि हन्तुं रामं सलक्ष्मणम् ॥२१॥ अथैवमुक्ते वचने प्रोवाचेदमकम्पनः । शृणु राजन् यथावृत्तं रामस्य बलपौरुषम् ॥ २२ ॥ असाध्यः कुपितो रामो विक्रमेण महायशाः । आपगायाः सुपूर्णाया वेगं परिहरेच्छरैः ॥ २३ ॥

देहत्वं ध्वन्यते ॥२०॥ ॥२१॥ अथेति । यथावृत्तं परमार्थभूतमित्यर्थः ॥ २२ ॥ असाध्यः अनिग्राह्यः ॥२३॥ तनि०—शृण्विति । यथावृत्तम् तत्कृतातिमानुष कर्मानतिक्रमेण । यद्वा रामस्य वृत्तम् इतिहासपुराणोक्तवृत्तान्तम् । यथावत् यथा । बलं पराभिभवसामर्थ्यम् । पौरुषं महापुरुषकर्म । कुपितः मर्यादोल्लङ्घनविषयनिग्रहवान् राम इति कोपस्यापरिहार्यत्वं व्यज्यते । विक्रमेण असाध्यः विक्रमे प्रवृत्ते निवारयितुमशक्य इत्यर्थः । असाध्य इति निरुपपदेन ब्रह्मरुद्रेन्द्रादिभिरसाध्यत्वं ध्वन्यते । महा यशाः लोके वेदे च प्रसिद्धविभवः । अनेन त्रिविक्रमावतारो व्यज्यते । आपगायाः सुपूर्णाया वेगं परिहरेदित्यनेन भविष्यत्कृष्णावतारो भूतकृष्णावतारो वा व्यज्यते । येन येनेति । भयकर्शिताः राक्षसाः स्वेषां राक्षसत्वगोपनार्थं येन येन रूपान्तरेण गच्छन्ति तेन तेन परिगृहीतरूपेणाग्रतः स्थितं राममेव पश्यन्ति । यद्वा येन येन यद्यद्वस्त्वन्तर्धानसाधनबुद्ध्या गच्छन्ति तेन तेन तस्मिंस्तस्मिन्वस्तुनि राममेव पश्यन्ति, तत्तद्वस्तु रामाकारमेव पश्यन्तीति । यद्वा मार्गेणेत्यध्याहारः । येन येन मार्गेण राक्षसाः स्वत्राणार्थं गच्छन्ति पलायन्ते तेन तेन तत्र तत्र मार्गे रामं पश्यन्तीति अनेन प्रतिराक्षसं स्वेच्छागृहीतदेहत्वं व्यज्यते ॥ २० ॥ २१ ॥ हे राजन् ! यथा रामस्य वृत्तं तत्कृतातिमानुषकर्म । यद्वा रामस्य वृत्तं चरितम् । यथा यथावत् बलं पराभिभवनसामर्थ्यम् । पौरुषं महापुरुषकर्म । यथा यादृशम्, तत्सर्वमिति शेषः । शृण्वितियोजना ॥ २२ ॥ कुपितः मर्यादोल्लङ्घनविषयनिग्रहवान् राम इति रमयतीतिव्युत्पत्त्या कोपस्याहार्यत्वं व्यज्यते । विक्रमेणासाध्यः विक्रमे प्रवृत्ते निवारयितुमशक्य इत्यर्थः । असाध्य इत्युपपदरहितेन असाध्यशब्देन ब्रह्मेन्द्ररुद्राद्यसाध्यत्वं प्रतीयते । महायशाः लोके वेदे च प्रसिद्धविभवः,

"भयानकावर्तशताकुला नदी मार्गं ददौ सिन्धुरिव श्रियः पतेः । " इति श्रीभागवतोक्तेः । अनेनमत्स्यावतार इति केचित् ॥२२॥२३ ॥सतारेति । ग्रहा नवग्रहाः । नक्षत्राणि सप्तविंशतिनक्षत्राणि । तारास्तदन्यज्योतींषि । अवसादयेत् विशीर्णं कुर्यात् । मज्जन्तीं समुद्र इति शेषः ॥ २४ ॥ तनि०—सताराग्रहनक्षत्रं ताराः अश्विन्यादयः, ग्रहाः सूर्यादयः, तदितराणि नक्षत्राणि । नभश्चापीति तदधिष्ठानाण्डकोश उच्यते । तमप्यवसादयेदित्यनेनापि त्रिविक्रमावतारध्वनिः । तथाच श्रुतिः

सताराग्रहनक्षत्रं नभश्चाप्यवसादयेत् । असौ रामस्तु मज्जन्तीं श्रीमानभ्युद्धरेन्महीम् ॥ २४ ॥
भित्त्वा वेलां समुद्रस्य लोकानाप्लावयेद्विभुः । वेगं वापि समुद्रस्य वायुं वा विधमेच्छरैः ॥ २५ ॥
संहृत्य वा पुनर्लोकान् विक्रमेण महायशाः । शक्तः स पुरुषव्याघ्रः स्रष्टुं पुनरपि प्रजाः ॥ २६ ॥

"यो अस्कभायदुत्तरꣳसधस्थं विचक्रमाणस्त्रेधोरुगायः" इति । सीदन्तीं मज्जन्तीं महीम् अभ्युद्धरेत् असाविति वराहावतारो व्यज्यते । "तां वराहो भूत्वाऽहरत्" इति श्रुतेः । श्रीमानित्यवतारेषु सर्वत्रानुवृत्तिर्लक्ष्म्याः सूच्यते । "अन्येषु चावतारेषु विष्णोरेपानपायिनी" इति पराशरवचनात् । श्रीमानिति लक्ष्मीसमभिव्याहारबलेन संसारे मज्जन्तं चेतनमभ्युद्धरेदिति परत्वासाधारणलिङ्गमोक्षप्रदत्वं व्यञ्जितम् । श्रीमान् महीमभ्युद्धरेदिति लक्ष्म्याः सहकारित्वश्रवणेन सपत्नीद्वेषाभावो व्यज्यते ॥२४॥ भित्त्वेति । विप्लावयेत् सिञ्चेत् । विधमेत् दहेत् । "ध्मा शब्दाग्निसंयोगयोः" इति धातोर्लिङि धमादेशः॥२५॥ तनि०—भित्त्वेति । समुद्रवेलाभेदेन लोकानाप्लावयेदिति सङ्कर्षणावतारो ध्वन्यते । समुद्रस्य वेगमपि विधमेदिति करिष्यमाणसमुद्रबन्धनं व्यज्यते । वायुं वा विधमेदिति पृथिव्यादिभूतोपलक्षणम् । "पृथिव्यप्सु प्रलीयते । आपस्तेजसि लीयन्ते" इत्याद्युक्तप्रकारेण प्रलयं कुर्यादिति ध्वन्यते । संहृत्येत्यनन्तरमनुवादात्॥२५॥संहृत्येति । लोकान् भूरादीन् संहृत्य पुनः स्रष्टुं शक्तः इमाः प्रजाश्च संहृत्य पुनः अनेन त्रिविक्रमावतारस्सूच्यते । शरैर्जलैः पूर्णाया आपगाया वेगं परिहरेदित्यनेन भविष्यत्कृष्णावतारस्सूच्यते ॥ २३ ॥. नभश्शब्देन लक्षणया ब्रह्माण्डकोश उच्यते । नभश्चाप्यवसादयेदित्यनेनापि त्रिविक्रमावतारध्वनिः। तथा च श्रुतिः "यो अस्कभायदुत्तरꣳसधस्थं विचक्रमाणस्त्रेधोरुगायः" इति । मज्जन्तीं सीदन्तीम् महीमुद्धरेदिति वराहावतारस्सूचितः । श्रीमानित्यनेन वराहावतारेपि लक्ष्म्या अनुवृत्तिस्सूचिता । यद्वा महीशब्देन महीस्थजनो लक्ष्यते तथाचायमर्थः—संसार समुद्रे मज्जन्तं महीस्थजनमुद्धर्तुं शक्तमिति परमपुरुषार्थरूपमोक्षप्रद इत्यर्थः ॥ २४ ॥ लोकानाप्लावयेदित्यनेन संहारकारणमपि श्रीराम एवेति प्रतीयते । शरैः समुद्रस्य वेगं विधमेदित्यनेन करिष्यमाणसेतुबन्धनं व्यज्यते । वायुमिति पृथिव्यादिभूतोपलक्षणम् " पृथिव्यप्सु प्रलीयते । आपस्तेजसि लीयन्ते " इत्याद्युक्त प्रकारेण प्रलयं कुर्यादिति ध्वन्यते । संहृत्य वेत्यनन्तरमनुवादात् ॥२५॥ पुनस्संहृत्येत्यनेन पूर्वकल्पसंहारसृष्ट्योरप्येतत्कर्तृकत्वं व्यज्यते । लोकानिति बहुवचनेन

स्रष्टुं शक्त इत्यर्थः ॥२६॥ तनि०—पुनः संहृत्येत्यनेन पूर्वसंहारसृष्ट्योरप्येतत्कर्तृकत्वं व्यज्यते "बभूव भूयश्च यथा महाभाग भविष्यति" इति प्रश्नवत् लोकानिति बहु वचनस्यासङ्कोचेन साण्डाः सर्वे लोका विवक्षिताः। विक्रमेण सङ्कल्पमात्रेणेत्यर्थः। "एतस्य वा अक्षरस्य" इत्यादिश्रुतेः। महायशाः षड्गुणैश्वर्यकृतप्रसिद्धिः। शक्तः अनन्त शक्तिमान्। "परास्य शक्तिः" इति श्रुतेः। ननु नारायणस्य "एको ह वै नारायणः" इत्यादिना सृष्ट्यादिकर्तृत्वं श्रूयते कथमेतस्येति? तत्राह स पुरुषव्याघ्र इति। "स हि देवैरुदीर्णस्य" इत्यादिना स एवायं नारायणो रामात्मनावतीर्ण इत्युक्तत्वात्। स्रष्टुं पुनरिति अत्रापि पुनःशब्दः पूर्वसृष्टेरेतदधीनत्वव्यञ्जकः। प्रजा इति प्रकृतिसंसृष्टे चेतनवर्गः

**न हि रामो दशग्रीव शक्यो जेतुं त्वया युधि। रक्षसां वापि लोकेन स्वर्गः पापजनैरिव ॥ २७ ॥**
**न तं वध्यमहं मन्ये सर्वैर्देवासुरैरपि। अयं तस्य वधोपायस्तं ममैकमनाः शृणु ॥ २८ ॥**

समष्टिकारणभूत उच्यते। अकम्पनस्यापि भगवत्प्रसादादेवं ज्ञानम् ॥२६॥ लोकेन समूहेन ॥२७॥ तनि०—रामः विक्रमैः रञ्जनीय। दशग्रीव अनितरसाधारणदशवदनत्वं खलु तवावलेपहेतुः। रामरामानुजौ तु सहस्रशीर्षाविति व्यज्यते। त्वया जेतुं युधि न शक्यः। अल्पशक्तिस्त्वम्, अपरिमितानन्तशक्तिमान् रामः कथं जेतुं शक्यः। रक्षसां नमुचिहिरण्यकशिपुशम्बरबलिप्रभृतीनां। लोकेन जनेन "को मज्जतोरणुकुलाचलयोर्विशेषः" इति न्यायसाम्यं द्योतयितुं त्वया लोकेनेत्येकवचननिर्देशः। जयस्या त्यन्तासम्भावनां द्योतयितुं स्वर्गः पापजनैरिवेत्युक्तम्। प्रसिद्धैर्बहुभिरेकः कथं जेतुमशक्य इत्यत्राह—स्वर्गः पापजनैरिवेति ॥२७॥ न तमिति। मम मत्तः। एकमनाः सावधानः ॥२८॥ तनि०—इन्द्रजिता निर्जिताः शक्रादयोऽस्मत्सहाया भविष्यन्तीत्याशां वारयति—न तमिति। देवासुरैरिति बहुवचनेन सर्वदेवासुरग्रहणे पुनः सर्वशब्दः संहार्यास्सर्वेऽपि लोका विवक्षिताः। विक्रमेण सङ्कल्पमात्रेणेत्यर्थः। " एतस्य वा अक्षरस्य " इत्यादि श्रुतेः। महायशाः षड्गुणैश्वर्यकृतप्रसिद्धिः '। शक्तः अनन्त शक्तिमान्। " परास्य शक्तिर्विविधैव श्रूयते " इति श्रुतेः। ननु " एको ह वै नारायणः " इत्यादिना नारायणस्य सृष्टिकर्तृत्वं प्रतीयते तत्कथं रामस्य सृष्टि कर्तृत्वमित्यत आह स पुरुषव्याघ्र इति। " स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः " इत्यादिना स एवायं नारायणो रामात्मनावतीर्ण इत्युक्तत्वादिति भावः। स्रष्टुं पुनरपीति अत्रापि पुनश्शब्दः पूर्वसृष्टेस्तदधीनत्वद्योतकः ॥ २६ ॥ दशग्रीवेति सम्बोधनेन रामपदस्वारस्याच्च तवावलेपहेतुभूतमनन्यसाधारणं दशवदनत्वं हीति सूचनेन श्रीरामस्य सहस्रशीर्षत्वं च व्यज्यते। तथा च हस्तिमशकयोरिव श्रीरामस्य तव चान्तरम्, अतस्त्वया रामो युधि जेतुमशक्यः। अल्पशक्तिकेन त्वया अपरिमितानन्तशक्तिमान् रामः कथं जेतुं शक्य इति भावः। रक्षसां नमुचिहिरण्यकशिपुशम्बरबलिप्रभृतीनां लोकेन जनेनापि जेतुं न शक्य इत्यर्थः। जयस्या सम्भावनां द्योतयितुं स्वर्गः पापजनैरिवेत्युक्तम्। प्रसिद्धैर्बहुभिरेकः कथं जेतुमशक्य इत्यत आह स्वर्गः पापजनैरिवेति ॥ २७ ॥ इन्द्रजिता निर्जिताश्शक्रादयो ऽस्मत्सहाया भविष्यन्तीत्याशङ्कां वारयति—न तमिति। अहं मन्य इति राक्षसजातिमापन्नस्यापि ममातीतानन्तजन्मसुकृतपरिपाकेन श्रीरामस्य रूपविषयं

भूतभविष्यद्वर्तमानकालिकेन्द्रजात्यादिसमुदायवाचकः। अहं मन्ये राक्षसजातित्वेऽपि सुकृतपरिपाकवशेन श्रीराममहत्त्वविषयं ज्ञानमुत्पन्नम्। तव तु 'आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि' इति शास्त्ररीत्या दुष्कर्मवशेन नोत्पन्नमिति। इदं चाकम्पनस्य परत्वज्ञानं सनत्कुमारादिभिः प्रोक्तेतिहासश्रवणादिना वा माल्यवत्प्रभृतिभिरुक्तसुमालिमालिवधादिवृत्तान्तादिना वा विश्वरूपादिदर्शनवत् चतुर्दशसहस्रराक्षसयुद्धे प्रतिराक्षसं रामविग्रहाभेदादिप्रतिपत्त्या वा सञ्जातमिति वा अकम्पनापदेशेन ऋषिरेव परत्वख्यापनं कृतवानिति वा न कोऽपि विरोधः ॥ २८ ॥ भार्येति। "श्यामा यौवनमध्यस्था" इत्युत्पलः। समं यथा तथा विभक्तानि नेत्रकर्णाद्यङ्गानि यस्याः

भार्या तस्योत्तमा लोके सीता नाम सुमध्यमा। श्यामा समविभक्ताङ्गी स्त्रीरत्नं रत्नभूषिता ॥ २९ ॥ नैव देवी न गन्धर्वी नाप्सरा नापि दानवी। तुल्या सीमन्तिनी तस्या मानुषीषु कुतो भवेत् ॥ ३० ॥ तस्यापहर भार्यां त्वं प्रमथ्य तु महावने। सीतया रहितः कामी रामो हास्यति जीवितम् ॥ ३१ ॥ अरोचयत तद्वाक्यं रावणो राक्षसाधिपः। चिन्तयित्वा महाबाहुरकम्पनमुवाच ह ॥ ३२ ॥ बाढं काल्यं गमिष्यामि ह्येकः सारथिना सह। आनयिष्यामि वैदेहीमिमां हृष्टो महापुरीम् ॥ ३३ ॥ अथैवमुक्त्वा प्रययौ खरयुक्तेन रावणः। रथेनादित्यवर्णेन दिशः सर्वाः प्रकाशयन् ॥ ३४ ॥

सा तथोक्ता। स्त्रीरत्नं स्त्रीश्रेष्ठा, अस्तीति शेषः ॥२९॥ देवी देवस्त्री। "पुंयोगादाख्यायाम्" इति ङीष्। एवमुत्तरत्रापि। अप्सरःशब्द एकवचनान्तोऽप्यस्ति। सीमन्तिनी स्त्री ॥३०॥ महावने प्रमथ्य विलोड्य येन केनाप्युपायेन रामं वञ्चयेत्यर्थः ॥३१॥ चिन्तयित्वा रामोच्चाटनोपायमिति शेषः ॥ ३२ ॥ बाढमित्यङ्गीकारं। काल्यं प्रातः ॥३३॥ खराः अश्वतराः। तत्स्वरूपमुक्तमश्वशास्त्रे "अश्वसृग्भ्यः समुत्पन्नास्तस्मादश्वतराः खराः। खररूक्षस्वरास्तीक्ष्णाः

ज्ञानमुत्पन्नमिति वा। यद्वा अकम्पनापदेशेन भगवान्वाल्मीकिरेव श्रीरामस्य परतत्त्वख्यापनं कृतवानिति वा न किञ्चिद्विरुद्धम्। मम सम्बन्धिनं तं वधोपायं मयोत्प्रेक्षितं वधोपायमित्यर्थः ॥ २८ ॥ भार्येति। श्यामा यौवनमध्यस्था ॥२९॥ देवी देवपत्नी। गन्धर्वी गन्धर्वपत्नी। "पुंयोगादाख्यायाम्" इति ङीष् ॥३०॥ प्रमथ्य श्रीरामं केनचिदुपायेन प्रलोभ्य तस्य भार्यां प्रमथ्य बलात्कृत्वापहर ॥ ३१ ॥ अरोचयत अनुकूलत्वेन ज्ञातवान्। चिन्तयित्वेति श्रीरामस्य सीतया सहानवस्थानोपायमिति शेषः ॥ ३२ ॥ काल्यं प्रातः। अरोचयत तद्वाक्यमित्यस्य वास्तवार्थस्तु–चिन्तयित्वा अकम्पनाद्रामवृत्तान्तश्रवणानन्तरं चिन्तयित्वा त्रेतायुगे

खरशीलाः खराङ्ग्रयः ॥" इति ॥ ३४ ॥ नक्षत्रपथगः आकाशगः । सञ्चार्यमाणः प्रेर्यमाणः ॥ ३५ ॥ ताटकेयं ताटकापुत्रम् । भक्ष्यभोज्यैः पेयखाद्यैः । अमानुषैः मनुष्यलोकदुर्लभैः ॥ ३६ ॥ अर्थोपहितया अर्थेन प्रयोजनेन उपहितया विशिष्टया ॥ ३७ ॥ हे राजन् ! लोकानां राक्षसलोकानां राक्षसे

स रथो राक्षसेन्द्रस्य नक्षत्रपथगो महान् । सञ्चार्यमाणः शुशुभे जलदे चन्द्रमा इव ॥ ३५ ॥
स मारीचाश्रमं प्राप्य ताटकेयमुपागमत् । मारीचेनार्चितो राजा भक्ष्यभोज्यैरमानुषैः ॥ ३६ ॥
तं स्वयं पूजयित्वा तु आसनेनोदकेन च । अर्थोपहितया वाचा मारीचो वाक्यमब्रवीत् ॥ ३७ ॥
कच्चित् सुकुशलं राजन् लोकानां राक्षसेश्वर । आशङ्के नाथ जाने त्वं यतस्तूर्णमिहागतः ॥ ३८ ॥

श्वरेति समभिव्याहारादयमर्थो लभ्यते । सुकुशलं कच्चिदिति सामान्येन प्रश्नः । अथ अथवा त्वं यतस्तूर्णमिहागतः ततः कारणात् किंचिदत्याहित श्रीरामोऽवतरिष्यतीति सनत्कुमारवाक्यं स्मृत्वेत्यर्थः । श्रीरामहस्ताद्वधेच्छू रावणः तद्वाक्यं तस्याकम्पनस्य वाक्यं सीतामपहरेत्येवंरूपं वचनमरोचयत अनुकूलत्वेनाङ्गीचकारेति सम्बन्धः । अस्मिन्नर्थे उत्तररामायणोक्ता सनत्कुमाररावणसम्बन्धिनी अगस्त्यरामसंवादरूपा कथानुसन्धेया । तथाहि रामं प्रत्यगस्त्यवचनम्—" अथापरां कथां दिव्यां शृणु राजन् पुरातनीम् । यदर्थं राम वैदेही रावणेन हृता पुरा । पुरा कृतयुगे राम प्रजापतिसुतं प्रभुम् । सनत्कुमारमासीनं रावणो वाक्यमब्रवीत् । रावणः—दैत्यदानवयक्षांसि ये हतास्समरेऽरयः । कां गतिं प्रतिपद्यन्ते केन ते हरिणा हताः ॥ सनत्कुमारः—ये ये हताश्चक्रधरेण राजन् त्रैलोक्यनाथेन जनार्दनेन । ते ते गतास्तन्निलयं नरेन्द्राः क्रोधोपि देवस्य वरेण तुल्यः ॥ श्रुत्वा ततस्तद्वचनं निशाचरस्सनत्कुमारस्य मुखाद्विनिर्गतम् । तदा प्रहृष्टस्स बभूव विस्मितः कथं नु यास्यामि हरिं महाहवे ॥ मुनिः—मनसश्चेप्सितं यत्तद्भविष्यति तदाहवे । सुखी भव महाबाहो किञ्चित्कालं प्रतीक्षय । अथवा राक्षसेन्द्र त्वं यदीदं प्रष्टुमिच्छसि । कथयिष्यामि ते सर्वं श्रूयतां यदि रोचते । कृतेयुगे व्यतीते वै मुखे त्रेतायुगस्य तु । हितार्थं देवमर्त्यानां भविता नृपविग्रहः । इक्ष्वाकूणां च यो राजा भाव्यो दशरथो भुवि । तस्य सूनुर्महातेजा रामो नाम भविष्यति । एवं श्रुत्वा महाबाहू राक्षसेन्द्रः प्रतापवान् । त्वया सह विरोधेच्छुश्चिन्तयामास राघव । सनत्कुमारात्तद्वाक्यं चिन्तयानो मुहुर्मुहुः । रावणो मुमुदे मोहाद्युद्धार्थी विचचार ह । एतदर्थं महाबाहो रावणेन दुरात्मना । सुता जनकराजस्य हृता राम महामते । लङ्कामानीय यत्नेन मातेव परिरक्षिता ॥ " इत्यादि । अत एव रावणस्य सीतारामभृत्यत्वेन तावुद्दिश्य तेन वक्ष्यमाणानि बाह्यदृष्ट्या दुर्भाषणवत्प्रतीयमानान्यपि वाक्यानि वस्तुतः स्तुतिपराण्येव । तथा तत्र तत्र व्याख्यास्यामः ॥ ३३–३५ ॥ ताटकेयं मारीचम् ॥ ३६ ॥ अर्थोपहितया अर्थगम्भीर्या ॥ ३७ ॥ अथ जाने इति छेदः । हे राजन् ! कच्चित्सुकुशलमिति सामान्यप्रश्नः । राक्षसेश्वर लोकानां राक्षसलोकानां कुशलं नेत्याशङ्के । अथ अथवा । त्वं

मस्तीत्याशङ्के, तद्विशिष्य न जाने महत्कार्यं विना भवतस्तूर्णमागमनं नोपपद्यत इति भावः । यद्वा लोकानां कच्चित् सुकुशलम् अथ अथवा तेषां कुशलं नेत्याशङ्के यतस्त्वं तूर्णमागतः न जाने तद्विशिष्य न जान इत्यर्थः ॥ ३८ ॥ एवमुक्त इति । ततः पश्चात् तद्वाक्यादनन्तरम् ॥ ३९ ॥



एवमुक्तो महातेजा मारीचेन स रावणः । ततः पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ॥३९॥ आरक्षो मे हतस्तात रामेणाक्लिष्टकर्मणा। जनस्थानमवध्यं तत् सर्वं युधि निपातितम्। तस्य मे कुरु साचिव्यं तस्य भार्यापहारणे ॥४०॥ राक्षसेन्द्रवचः श्रुत्वा मारीचो वाक्यमब्रवीत् ॥ ४१ ॥ आख्याता केन सीता सा मित्ररूपेण शत्रुणा । त्वया राक्षसशार्दूल को न नन्दति निन्दितः। सीतामिहानयस्वेति को ब्रवीति ब्रवीहि मे ॥ ४२ ॥ रक्षोलोकस्य सर्वस्य कः शृङ्गं छेत्तुमिच्छति। प्रोत्साहयति कश्चित्त्वां स हि शत्रुरसंशयः ॥ ४३ ॥ आशीविषमुखाद्दंष्ट्रामुद्धर्तुं चेच्छति त्वया। कर्मणा तेन केनासि कापथं प्रतिपादितः ॥ ४४ ॥ सुखसुप्तस्य ते राजन् प्रहृतं केन मूर्धनि ॥ ४५ ॥



आरक्षः अन्तपालः। उक्तमुपपादयति–जनस्थानमित्याद्यर्धेन। जनस्थानशब्देन तत्स्थो रक्षोगणो लक्ष्यते। तत् प्रसिद्धम्। साचिव्यं साहाय्यम्। तस्य मे हतस्वजनस्य मे ॥ ४० ॥ ४१ ॥ आख्यातेत्याद्यर्धत्रयमेकान्वयम् । यः सीतायाः आख्याता स मित्ररूपः शत्रुः। यश्च तामानयेत्युपदेष्टा सः त्वया निन्दितः सन् तिरस्कृतः सन् त्वदैश्वर्यं न नन्दति तावुभौ ब्रूहीत्यर्थः। ब्रवीहीत्यत्र ईडागमश्छान्दसः ॥ ४२ ॥ रक्षोलोकस्येत्यादि। शृङ्गं प्राधान्यम्। "शृङ्गं प्राधान्यसान्वोश्च" इत्यमरः। प्रोत्साहयति सीतानयनं प्रतीति शेषः। स च स एव ॥ ४३ ॥ आशीविषेति। आशीविषः सर्पविशेषः। उद्धर्तुम्

य तस्तूर्णमागतः अतः कुशलं नैव जाने महत्प्रयोजनं विना भवदागमनं नोपपद्यत इत्यर्थः ॥ ३८ ॥ ३९ ॥ आरक्षः अन्तपालः, खरादिरित्यर्थः । अत एव जनस्थानं हतं नाशितम्। साचिव्यं साहाय्यम् ॥ ४० ॥ ४१ ॥ सा सीता केन आख्याता आहर्तव्येति शेषः । आख्याता कथितेत्यर्थः । त्वया सामादिनानन्दितः को वा नन्दति, स्वकीयशाठ्येनेति भावः। तादृशः को वा सीतामिहानयस्वेति ब्रवीति तमपि ब्रवीहि ब्रूहि। निन्दित इति पाठे–निन्दितस्त्वया तिरस्कृतः को वा न नन्दति राज्यलक्ष्मीसम्पन्नं त्वां दृष्ट्वेति शेषः । त्वया तिरस्कृतस्तावकमैश्वर्यमसहमानस्सन् त्वया सह कृत्रिममित्रभावं प्राप्तस्सन् तवेदृशीं बुद्धिमुपदिशतीति भावः ॥ ४२ ॥ शृङ्गं प्राधान्यमैश्वर्यमिति यावत् ॥ ४३ ॥ उद्धर्तुमुद्धारयितुम्। कापथं कुमार्गम्। प्रतिपादितः प्रापितः ॥ ४४ ॥ ४५ ॥

उद्धारयितुं क इति शेषः। तेन कर्मणा सीतापहारलक्षणकर्मणा। कापथं कुमार्गम्। "ऋक्पूरब्धूः पथामानक्षे" इति समासान्तः अप्रत्ययः। प्रतिपादितः उपदिष्टोसि। कर्मणा केनेति पाठे—केन पुरुषेण केन कर्मणा केनोपायेन कापथं प्रतिपादितोसीत्यन्वयः। मूर्ध्नि केन प्रहृतं केन प्रहारः कृतः। वृथैव केन दुःखमुत्पादितमित्यर्थः॥ ४४॥ ४५॥ रामे कं गुणं दृष्ट्वैवं वदसीत्याशङ्क्याह—विशुद्धेति। अनेन रामस्य मत्तगजसमाधिरुच्यते।

**विशुद्धवंशाभिजनाग्रहस्तस्तेजोमदः संस्थितदोर्विषाणः। उदीक्षितुं रावण नेह युक्तः स संयुगे राघवगन्धहस्ती॥४६॥**
**असौ रणान्तस्थितिसन्धिवालो विदग्धरक्षोमृगहा नृसिंहः। सुप्तस्त्वया बोधयितुं न युक्तः शराङ्गपूर्णो निशितासिदंष्ट्रः॥४७**

विशुद्धवंशे अभिजनः अभिजननं तदेवाग्रहस्तो यस्य स तथा। द्वयोरौन्नत्यकरत्वसाम्याद्रूपकं निरूढम्। तेजोमदः तेजः प्रताप एव मदो यस्य सः। तेजो मदयोर्दुर्धर्षताहेतुत्वसाम्याद्रूपकोपपत्तिः। उपरितनपदे संस्थितत्वसाम्याद्रूपकम्। संस्थितौ समीचीनसंस्थानवन्तौ दोषौ बाहू एव विषाणे यस्य सः राघव एव गन्धहस्ती मदगजः यस्य गन्धमात्रेणान्ये गजाः पलायन्ते स गन्धहस्तीत्युच्यते। उदीक्षितुमपि इहास्मिन् देशे काले च न युक्तः॥ ४६॥ पुनरप्यतिशयं वक्तुं रामस्य सिंहसाम्यमाह—असाविति। रणान्तो रणाग्रं तत्र स्थितिर्नासीरावस्थानं सैव सन्धिवालो यस्य स तथा सन्दधातीति सन्धिः। "उपसर्गे घोः किः" इति किः। सन्धिभूतः लोमसङ्घभूत इत्यर्थः। वालो लाङ्गूलम्। यद्वा संधिर्मध्यः तद्गतो वालो लाङ्गूलं यस्य स तथेति वा। सिंहस्य लाङ्गूलं क्रोधदशायां मध्योपरिप्रदेशे वर्तते इति प्रसिद्धिः। तस्य मृगाणां गर्वहेतुत्वेन रणाग्रस्थितिसाम्यम्। विदग्धानि पटूनि रक्षांस्येव मृगाः

विशुद्धवंशे अभिजनोऽभिजननमेव॥ अग्रहस्तो यस्य स तथा गजस्य यथा करो भूषणम् तथा श्रीरामचन्द्रस्यापि सत्कुलप्रसूतत्वं भूषणमिति भावः। तेजो मदः तेजः प्रताप एव मदो यस्य सः। समदस्यैव गजस्य श्लाघ्यतया मदो यथा गजस्य भूषणं तथा श्रीरामचन्द्रस्यापि महावीर्यस्य प्रताप एव भूषणमिति भावः। संस्थितदोर्विषाणः संस्थितौ संस्थानवन्तौ दिव्यलक्षणलक्षितौ दोषौ बाहू एव विषाणे यस्य स तथा गजस्य शृङ्गद्वयमिव श्रीरामस्याजानुलम्बि भुजगभोगाभबाहु द्वयं भूषणमिति भावः। राघवगन्धहस्ती मत्तगजः यस्य मदगन्धेनान्ये गजाः पलायन्ते स मदगन्धहस्ती। इह इदानीं यदीक्षितुमपि न युक्तः, किमुत योद्धुमिति भावः॥ ४६॥ रणान्तास्थितिसन्धिवालः रणान्ते सङ्ग्राममध्ये स्थितिरनपक्रमणमेव सन्धिः अङ्गप्रत्यङ्गसन्धिश्च वालश्च यस्य स तथा। रणान्तस्थितिसन्धिपाल इति पाठे रणान्तःस्थित्या रणमध्यावस्थानेन सन्धीन् छिद्राणि पालयतीति तथा। विदग्धाः रणचतुरा ये खरादिराक्षसरूपाः मृगाः तान् हन्तीति तथा। शराङ्गपूर्णः शरैरेवाङ्गैरवयवैः पूर्णः। निशितासिः तीक्ष्णखड्ग एव दंष्ट्रे यस्य सः। सुप्तः परद्रोहविमुखतया अवस्थानमेव सुप्तत्वं रामपक्षे द्रष्टव्यम्। सिंहपक्षेतु सुप्तत्वं सनिद्र

तान् हन्तीति तथा ब्रह्मादिव्यतिरिक्तेप्युपपदे प्रयोगानुसारात् क्विप्। शराङ्गपूर्णः शरा एवाङ्गानि नखाद्यवयवाः तैः पूर्णः। निशितासिरेव दंष्ट्रे यस्य स तथा नृसिंहो नरश्रेष्ठः सिंह इत्यपि ध्वन्यते। यद्वा नृसिंह एव सिंह इत्येकशेषः। यद्वा विद्वन्मानसहंस इतिवत् श्लिष्टं रूपकम्। यद्वा नृसिंहो रामः पुरुष सिंह इतिं व्यङ्ग्यम् ॥ ४७॥ सिंहाभिमुखगमनेपि दैवाद्दृष्टवैषम्यान्निवर्तितुं शक्यम् न तु रामाहवगमन इत्याशयेन रामस्य पातालसाम्यमाह—चापेति।

चापावहारे भुजवेगपङ्के शरोर्मिमाले सुमहाहवौघे। न रामपातालमुखेऽतिघोरे प्रस्कन्दितुं राक्षसराज युक्तम् ॥ ४८ ॥ प्रसीद लङ्केश्वर राक्षसेन्द्र लङ्कां प्रसन्नो भव साधु गच्छ। त्वं स्वेषु दारेषु रमस्व नित्यं रामः सभार्यो रमतां वनेषु ॥ ४९ ॥ एवमुक्तो दशग्रीवो मारीचेन स रावणः। न्यवर्तत पुरीं लङ्कां विवेश च गृहोत्तमम् ॥ ५० ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

चाप एवावहारो ग्राहो यस्मिन् स तथा। 'ग्राहोवहारः' इत्यमरः। अनेन पतनकाल एव ग्रहणसामग्र्युक्ता। भुजवेगः शरमोक्षणवेगः स एव पङ्को यस्य स तथा अनेन मज्जने निर्गमायोग्यतोक्ता। शरा एवोर्मिमाला तरङ्गपङ्क्तिर्यस्य स तथा। अनेन मज्जनसामग्र्युक्ता। सुमहानाहव एव ओघो जलपूरो यस्य स तथा। अनेन दुस्तरत्वमुक्तम्। अतिघोरे राम एव पातालं महाबिलं तस्य मुखे मध्ये प्रस्कन्दितुं न युक्तम् ॥ ४८ ॥ एवं वस्तुस्थितिमुक्त्वा प्रेमातिशयेन पुनःपुनः सान्त्वयति—प्रसीदेति ॥ ४९ ॥ ५० ॥ इति श्रीगो० श्रीरा० रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकत्रिंशः सर्गः ॥३१॥

त्वम्। नृसिंहो ना मनुष्यः दशरथतनयरूपेण गृहीतलीलाविग्रहः श्रीराम एव सिंहः बोधयितुं न युक्त इति योजना ॥ ४७ ॥ चाप एव अवहारो जलग्राहो यस्मिन् "ग्राहोऽवहारः" इत्यमरः। भुजयोर्वेगः शरसन्धानमोक्षणविषयो वेगः स एव पङ्को यस्मिन् तस्मिन्। चापस्य परनिग्रहपरतया मकरसाम्यम्। दुस्तरत्वसाम्येन भुज वेगस्य पङ्कसाम्यम्। शरोर्मिमाले शरा एव ऊर्मिमालास्तरङ्गसमूहा यस्मिन् तस्मिन् सुमहाबलौघे महाबलमेव ओघ आवर्तो यस्मिंस्तस्मिन्। सुमहाहवौघ इति पाठे—सुमहानाहव एव लक्षणया रणोत्साहा एव ओघः प्रवाहो यस्मिंस्तस्मिन्। अतिघोरे दुष्प्रवेशतया भयङ्करे। राम एव पातालमुखः समुद्रस्तस्मिन् प्रस्कन्दितुं प्रवेष्टुं न युक्तमित्यन्वयः ॥ ४८ ॥ रावणोद्युक्तमकार्यमविलम्बेन निवर्तयितुं प्रसीद प्रसन्नो भवेति पुनःपुनराह ॥ ४९ ॥ ५० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायामेकत्रिंशः सर्गः ॥ ३१ ॥

तपोबाहुबलोपेतं सर्वभूतभयङ्करम् । यो हनिष्यति दुर्बुद्धिं रावणं सोऽस्तु मे मुदे ॥ तत इति । शूर्पणखीत्यार्षो ङीपादिः । महानादमिति क्रियाविशेषणम् ॥ १ ॥ २ ॥ कृतं कर्म पर्याप्तं कर्म । परमोद्विग्ना अत्यन्तभीता ॥ ३ ॥ विमानाग्रे पुष्पकविमानाग्रे । उपोपविष्टम् उपोपेत्येकनिपातः । उपनिविष्टमित्यर्थः । मरुद्भिः देवैः ॥४॥ रुक्मवेदिगतं हिरण्येष्टकाचितवेदिगतम् । तदुक्तमापस्तम्बेन " सावित्रं स्वर्गकामश्चिन्वीत पञ्चाशीतिशतं हिरण्येष्टकाः "

ततः शूर्पणखी दृष्ट्वा सहस्राणि चतुर्दश । हतान्येकेन रामेण रक्षसां भीमकर्मणाम् ॥ १ ॥ दूषणं च खरं चैव हतं त्रिशिरसा सह । दृष्ट्वा पुनर्महानादं ननाद जलदो यथा ॥ २ ॥ सा दृष्ट्वा कर्म रामस्य कृतमन्यैः सुदुष्करम् । जगाम परमोद्विग्ना लङ्कां रावणपालिताम् ॥ ३ ॥ सा ददर्श विमानाग्रे रावणं दीप्ततेजसम् । उपोपविष्टं सचिवैर्मरुद्भिरिव वासवम् ॥ ४ ॥ आसीनं सूर्यसङ्काशे काञ्चने परमासने । रुक्मवेदिगतं प्राज्यं ज्वलन्तमिव पावकम् ॥ ५ ॥ देवगन्धर्वभूतानामृषीणां च महात्मनाम् । अजेयं समरे शूरं व्यात्ताननमिवान्तकम् ॥ ६ ॥ देवासुरविमर्देषु वज्राशनिकृतव्रणम् । ऐरावतविषाणाग्रैरुद्घृष्टकिणवक्षसम् ॥ ७ ॥ विंशद्भुजं दशग्रीवं दर्शनीयपरिच्छदम् । विशालवक्षसं वीरं राजलक्षणशोभितम् ॥ ८ ॥ स्निग्धवैडूर्यसङ्काशं तप्तकाञ्चनकुण्डलम् । सुभुजं शुक्लदशनं महास्यं पर्वतोपमम् ॥ ९ ॥ विष्णुचक्रनिपातैश्च शतशो देवसंयुगे । अन्यैः शस्त्रप्रहारैश्च महायुद्धेषु ताडितम् ॥ १० ॥

इत्यादिना । प्रभूतमाज्यं यस्य तं प्राज्यम्, प्रभूतेनाज्येन वर्धितमित्यर्थः । अत एव ज्वलन्तम् ॥५॥६॥ विमर्देषु युद्धेषु वज्राशनिकृतव्रणमित्यनेन तदवध्यत्वमुक्तम् । उद्घृष्टम् उल्लेखनम् । भावे क्तः । तेन जातो यः किणः तदङ्कितवक्षसम् ॥ ७ ॥ विंशद्भुजं विंशतिभुजम् । दर्शनीयपरिच्छदं दर्शनीयच्छत्रचामरादिकम् ॥८॥ स्निग्धवैडूर्यैः कान्तियुक्तवैडूर्यरत्नैः आभरणस्थैः सङ्काशं भासमानम् । सुभुजं दीर्घवृत्तभुजम् ॥९॥ विष्णुचक्रनिपातैरित्यत्र ताडित

१–३ ॥ विमानाग्रे पुष्पके ॥४॥ रुक्मं हिरण्यम् । तन्मयीभिरिष्टकाभिश्चिता वेदिः रुक्मवेदिः तां गतं प्राप्तम् । प्राज्यं प्रभूतमाज्यं यस्य तम्, प्रभूतेनाज्येन, वर्द्धितमित्यर्थः ॥५॥६॥ देवासुराणां विमर्देषु युद्धेषु । उत्कृष्टकिणवक्षसमिति पाठः । उत्कृष्टमुल्लिखितं क्षतं किणयुक्तं वक्षो यस्य तम् ॥ ७ ॥ दर्शनीयाः परिच्छदाः छत्रचामरादयो यस्य तम् ॥ ८ ॥ स्निग्धवैडूर्यसङ्काशं स्निग्धानि कान्तियुक्तानि वैडूर्याणि प्राचुर्येण येष्वाभरणेषु तेषां सङ्काशाः प्रभाविशेषाः यस्य तम् ॥८–१४॥

स०—विष्णुचक्रस्येव निपातो येषां तैः । यद्वा विष्णुचक्रैः आयुधान्तरैः अन्यैः पूर्वोक्तेभ्यः कर्तृभिः । शस्त्रप्रहारैः करणैस्ताडितम् ॥ १० ॥

मित्यनुषज्यते ॥ १० ॥ क्षोभणं क्षोभकर्तारम् । योक्तारं प्रयोक्तारम् । यज्ञेति । उच्छेत्तारमित्यत्र उच्छास्त्रवर्तित्वमुक्तम् । अत्र परयज्ञध्वंसकत्वम् ॥११॥ १२॥ भोगवतीं सर्पनगरीं पराजित्य बलात्कृत्येति यावत् ॥१३॥ नरवाहनं कुबेरम् ॥१४॥ नलिनीं कुबेरस्य पुष्करिणीम् । नन्दनं वनम् इन्द्रोद्यानं देवोद्यानानि नन्दनवनादन्यानि ॥ १५ ॥ उत्तिष्ठन्तौ उद्यन्तौ ॥१६॥ उपजहार पूजोपकरणानि चकार ॥१७॥ देवदानवेति देवादिभिः कर्तृभिः । मृत्युतः

आहताङ्गं समस्तैश्च देवप्रहरणैस्तथा । अक्षोभ्याणां समुद्राणां क्षोभणं क्षिप्रकारिणम् ॥ ११ ॥ क्षेप्तारं पर्वतेन्द्राणां सुराणां च प्रमर्दनम् । उच्छेत्तारं च धर्माणां परदाराभिमर्शनम् ॥ १२ ॥ सर्वदिव्यास्त्रयोक्तारं यज्ञविघ्नकरं सदा । पुरीं भोगवतीं प्राप्य पराजित्य च वासुकिम् ॥ १३ ॥ तक्षकस्य प्रियां भार्यां पराजित्य जहार यः । कैलासपर्वतं गत्वा विजित्य नरवाहनम् ॥ १४ ॥ विमानं पुष्पकं तस्य कामगं वै जहार यः । वनं चैत्ररथं दिव्यं नलिनीं नन्दनं वनम् ॥ १५ ॥ विनाशयति यः क्रोधाद्देवोद्यानानि वीर्यवान् । चन्द्रसूर्यौ महाभागावुत्तिष्ठन्तौ परन्तपौ ॥ १६ ॥ निवारयति बाहुभ्यां यः शैलशिखरोपमः । दशवर्षसहस्राणि तपस्तप्त्वा महावने ॥ १७ ॥ पुरा स्वयम्भुवे धीरः शिरांस्युपजहार यः । देवदानवगन्धर्वपिशाचपतगोरगैः ॥ १८ ॥ अभयं यस्य सङ्ग्रामे मृत्युतो मानुषादृते । मन्त्रैरभिष्टुतं पुण्यमध्वरेषु द्विजातिभिः ॥ १९ ॥

मृत्योः । षष्ठ्यर्थे तसिः । अभयं भयाभावः अस्तीति गम्यमानत्वादप्रयोगः । मनुष्यादृते मनुष्यं विना, मनुष्यात्तु भयमस्तीत्यर्थः । अध्वरेषु यागेषु हविर्धानेषु सोमाभिषवशालासु । मन्त्रैः प्रातरनुवाकग्रावस्तोत्रादिभिः करणैः। द्विजातिभिः कर्तृभिः। अभिष्टुतं क्षरितं सोमम् उपहन्ति होमकाले नाशयती

नलिनीं चैत्ररथवनमध्यवर्तिनीं सरसीमित्यर्थः ॥ १५ ॥ १६ ॥ उत्तिष्ठन्तौ उदयन्तौ ॥ १७ ॥ शिरांस्युपजहार पूजोपकरणानि चकार । देवदानवेति मानुषादृते देवादिभिः कर्तृभिः अस्य मृत्युतो भयं मरणभयं नास्तीत्यर्थः ॥ १८ ॥ १९ ॥

स० देवदानवादिभिस्स्य मृत्युतो भयम् । तत्रापवादमाह मानुषादृते मनुष्यत्वेनालक्ष्यत्वात्ततोऽवध्यत्वाप्रार्थनादिति भावः ॥ १८ ॥

त्यर्थः ॥ आप्तयज्ञहरम् आप्तान् दक्षिणाकालं प्राप्तान् यज्ञान् हरतीति तथा ॥१८–२०॥ कर्कशं निर्दाक्षिण्यम् । निरनुक्रोशं निर्दयम् । रावणं रावकं सा ददर्श महाबलमित्युपसंहारः, अतो न सर्गादिस्थेन ददर्शेतिपदेन पौनरुक्त्यम् ॥ २१ ॥ कालकालं मृत्योरपि मृत्युम् । उद्यतम् उद्युक्तम् ॥ २२ ॥

हविर्धानेषु यः सोममुपहन्ति महाबलः । आप्तयज्ञहरं क्रूरं ब्रह्मघ्नं दुष्टचारिणम् ॥ २० ॥ कर्कशं निरनुक्रोशं प्रजाना महिते रतम् । रावणं सर्वभूतानां सर्वलोकभयावहम् । राक्षसी भ्रातरं शूरं सा ददर्श महाबलम् ॥ २१ ॥ तं दिव्यवस्त्राभरणं दिव्यमाल्योपशोभितम् । आसने सूपविष्टं च कालकालमिवोद्यतम् ॥ २२ ॥ राक्षसेन्द्रं महाभागं पौलस्त्यकुलनन्दनम् । रावणं शत्रुहन्तारं मन्त्रिभिः परिवारितम् ॥ २३ ॥ अभिगम्याब्रवीद्वाक्यं राक्षसी भय विह्वला ॥२४॥ तमब्रवीद्दीप्तविशाललोचनं प्रदर्शयित्वा भयमोहमूर्च्छिता । सुदारुणं वाक्यमभीतचारिणी महात्मना शूर्पणखा विरूपिता ॥२५॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदि० श्रीमदारण्यकाण्डे द्वात्रिंशः सर्गः *॥३२॥

ततः शूर्पणखा दीना रावणं लोकरावणम् । अमात्यमध्ये संक्रुद्धा परुषं वाक्यमब्रवीत् ॥ १ ॥

पौलस्त्यानां कुलं नन्दयतीति तथा ॥ २३ ॥ २४ ॥ पुनः सर्गान्ते संग्रहश्लोकः—तमिति । प्रदर्शयित्वा स्वकं वैरूप्यमिति शेषः । विरूपितेत्युक्तेः अभीततया सर्वपुरुषेषु सर्वलोके च चारोऽस्या अस्तीति सा ॥२५॥ इति श्रीगोविन्द० श्रीरामा० रत्नमे० आरण्यकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥३२॥ अमर्यादो भृशं मूर्खो वध्यो यस्य निशाचरः । तमहं नीतिसम्पन्नं रघुनाथं समाश्रये ॥ तत इति । दीना रामपरिभूतत्वात् । स्वपरिभवदर्शनेपि भ्रातु

हविर्धानेषु सोमाभिषवशालासु । मन्त्रैः प्रातरनुवाकग्रावस्तोत्रादिभिः । अभिष्टुतं सोममुपहन्ति नाशयति । प्राप्तयज्ञहरं दक्षिणकालप्राप्तयज्ञहरमित्यर्थः । आप्तयज्ञहरमिति पाठे–आप्तपदस्य पर्याप्तत्वमर्थः । सर्वभूतानां रावणं रावकम् ॥ २०–२४ ॥ टीका–कालस्य यमस्य कालं कालमिव स्थितम् ॥ २२ ॥ प्रदर्शयित्वा स्वकं वैरूप्यमिति शेषः । अभीतचारिणी भयराहित्येन सर्वपुरुषगामिनी ॥ २५ ॥ इति श्रीमहे० श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां द्वात्रिंशस्सर्गः ॥ ३२ ॥ १ ॥

* सर्गश्रवणफलम् । स्कान्दे–"श्रुत्वा दशग्रीवगुणानुवर्णनं सर्गं विशिष्टो भविता धरित्र्याम्" इति ॥ स०–लोकरावणं जनरोदकम् ॥ १ ॥

निश्चलतया संक्रुद्धा ॥ १ ॥ कामभोगेषु स्वैरवृत्तः स्वतन्त्रः, सदा कामपरवश इत्यर्थः । निरङ्कुशः कामभोग एव निष्प्रतिबन्धः । घोरं भयं शृण्वतामपि भयंकरमित्यर्थः । बोद्धव्यं चारमुखेनेति शेषः ॥ २ ॥ एवं कामवृत्तस्य सम्भावितां हानिं लोकरीत्या दर्शयति–सक्तमित्यादिना । ग्राम्येषु मैथुनादिषु । कामवृत्तं यथेच्छव्यापारम् ॥ ३ ॥ कार्याणि पालनादीनि ॥ ४ ॥ अयुक्तचारम् अनियोजितचारम् । दुर्दर्शम् उचितकाले सभायां प्रजादर्शनप्रदानरहि

प्रमत्तः कामभोगेषु स्वैरवृत्तो निरङ्कुशः । समुत्पन्नं भयं घोरं बोद्धव्यं नावबुद्ध्यसे ॥ २ ॥ सक्तं ग्राम्येषु भोगेषु कामवृत्तं महीपतिम् । लुब्धं न बहुमन्यन्ते श्मशानाग्निमिव प्रजाः ॥ ३ ॥ स्वयं कार्याणि यः काले नानुतिष्ठति पार्थिवः । स तु वै सह राज्येन तैश्च कार्यैर्विनश्यति ॥ ४ ॥ अयुक्तचारं दुर्दर्शमस्वाधीनं नराधिपम् । वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपाः ॥ ५ ॥ ये न रक्षन्ति विषयमस्वाधीना नराधिपाः । ते न वृद्ध्या प्रकाशन्ते गिरयः सागरे यथा ॥ ६ ॥ आत्मवद्भिर्विगृह्य त्वं देवगन्धर्वदानवैः । अयुक्तचारश्चपलः कथं राजा भविष्यसि ॥ ७ ॥ त्वं तु बालस्वभावश्च बुद्धिहीनश्च राक्षस । ज्ञातव्यं तु न जानीषे कथं राजा भविष्यसि ॥ ८ ॥ येषां चारश्च कोशश्च नयश्च जयतां वर । अस्वाधीना नरेन्द्राणां प्राकृतैस्ते जनैः समाः ॥ ९ ॥

तम् । अस्वाधीनं पत्न्यादिपरतन्त्रं परप्रत्ययनेयबुद्धिं वा । पङ्केपि विशेषणद्वयं योज्यम् । अयुक्तश्चारो यस्मिन् स्वस्य सञ्चारकर्तुरधीनो न भवतीत्यर्थः ॥ ५ ॥ विषयं स्वराज्यम् । वृद्ध्या वर्तमानयापीति शेषः ॥ ६ ॥ आत्मवद्भिः यत्नवद्भिः, त्वत्प्रतीकारदत्तावधानैरित्यर्थः । चपलः विषयचपलः ॥ ७ ॥ उक्तमेवार्थं पुनरपि प्रलपति रावणस्याग्रहोत्पादनाय–त्वमित्यादिना । बालस्येव स्वभावो विवेकशून्यत्वं यस्य स तथा । बुद्धिहीनः विवेकहेतुर्बुद्धिः तया हीनः ॥ ८ ॥ स्वपरराष्ट्रकार्याकार्यज्ञापकश्चारः । कोशो धनसमृद्धिः । नयो नीतिः । प्राकृतैर्जनैः साधारणैर्जनैः ॥ ९ ॥

॥ १-४ ॥ अयुक्तचारम् अनियोजितारम् । दुर्दर्शी सङ्कटकार्यदशायामप्यमात्यादीनां दर्शनाप्रदातारम् । अस्वाधीनं स्त्रीजितम् ॥ ५ ॥ विषयं देशम् । वृद्ध्या उदयेन । सागरे गिरयः मग्ना इति शेषः ॥ ६ ॥ आत्मवद्भिः प्रशस्तधैर्यैः । विगृह्य विरोधं कृत्वा ॥ ७ ॥ ८ ॥ प्राकृतैः मूर्खैः ॥ टी–चारः देशान्तरवर्तमानकार्यवक्ता ॥ ९–१३ ॥

स०–बोद्धव्यम् अवश्यं ज्ञातव्यम् ॥ २ ॥ ग्राम्येषु भोगेषु स्वकयादिभोगेषु विहितमर्यादोल्लङ्घनेनासक्तम् । कामवृत्तं परनार्यादिनिरतम् । श्मशानाग्निं शवाग्निम् ॥ ३ ॥ राज्येन कार्यैश्च सहेति सम्बन्धः ॥ ४ ॥

चारप्रयोजनमाह—यस्मादिति ॥ १० ॥ एवं लोकरीत्योक्तं रावणे उपसंहरति—अयुक्तेत्यादिना । जनस्थानं जनस्थानस्थम् ॥ ११ ॥ १२ ॥ स्वजनवधादपि दुःसहं कार्यान्तरमाह—ऋषीणामिति ॥ १३ ॥ लुब्धः चारादीनामभिमताप्रदाता ॥ १४ ॥ तीक्ष्णं क्रूरम् । शठं गूढविप्रियकारिणम् । व्यसने व्यसनकाले । सर्वभूतानि भृत्यामात्यादीनि । नाभिधावन्ति तद्रक्षणाय न प्रवर्तन्ते ॥ १५ ॥ अग्राह्यं सद्भिरिति शेषः । आत्मना स्वेनैव बहुमानं

यस्मात् पश्यन्ति दूरस्थान् सर्वानर्थान्नराधिपाः । चारेण तस्मादुच्यन्ते राजानो दीर्घचक्षुषः ॥ १० ॥ अयुक्तचारं मन्ये त्वां प्राकृतैः सचिवैर्वृतम् । स्वजनं तु जनस्थानं हतं यो नावबुद्ध्यसे ॥ ११ ॥ चतुर्दश सहस्राणि रक्षसां क्रूरकर्मणाम् । हतान्येकेन रामेण खरश्च सहदूषणः ॥ १२ ॥ ऋषीणामभयं दत्तं कृतक्षेमाश्च दण्डकाः । धर्षितं च जनस्थानं रामेणाक्लिष्टकर्मणा ॥ १३ ॥ त्वं तु लुब्धः प्रमत्तश्च पराधीनश्च रावण । विषये स्वे समुत्पन्नं भयं यो नावबुद्ध्यसे ॥ १४ ॥ तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम् । व्यसने सर्वभूतानि नाभिधावन्ति पार्थिवम् ॥ १५ ॥ अतिमानिनमग्राह्यमात्मसम्भावितं नरम् । क्रोधिनं व्यसने हन्ति स्वजनोपि महीपतिम् ॥ १६ ॥ नानुतिष्ठति कार्याणि भयेषु न बिभेति च । क्षिप्रं राज्याच्च्युतो दीनस्तृणैस्तुल्यो भविष्यति ॥ १७ ॥ शुष्कैः काष्ठैर्भवेत् कार्यं लोष्टैरपि च पांसुभिः । न तु स्थानात् परिभ्रष्टैः कार्यं स्याद्वसुधाधिपैः ॥ १८ ॥ उपभुक्तं यथा वासस्स्रजो वा मृदिता यथा । एवं राज्यात् परिभ्रष्टः समर्थोपि निरर्थकः ॥ १९ ॥

प्राप्तः सोयमात्मसम्भावितः तम् । क्रोधिनम् अस्थाने क्रोधवन्तम् । व्यसने व्यसनकाले । स्वजनोपि अमात्यादिरपि ॥ १६ ॥ भयेषु भयहेतुषु । न बिभेति साशङ्को न वर्तत इत्यर्थः ॥ १७ ॥ १८ ॥ उपभुक्तवस्त्रादिदृष्टान्तः परेषामयोग्यत्वप्रदर्शनाय ॥ १९ ॥

स्वे विषये स्वकीये देशे ॥ १४ ॥ तीक्ष्णं प्रत्यक्षदृश्यमानम् । शठं गूढविप्रियकारिणम् । गर्वितं सञ्जातगर्वं पार्थिवम् । सर्वभूतानि भृत्यादिसर्वप्रजा अपि व्यसने व्यसनकाले नाभिधावन्ति तद्रक्षणाय न प्रवर्द्धन्ते ॥ १५ ॥ अग्राह्यं सद्भिरिति शेषः । आत्मसम्भावितम् आत्मना स्वेनैव बहुमानं प्राप्तः सोयमात्मसम्भावितः तम् । क्रोधिनम्

चिरं तिष्ठत इत्यत्र आर्षमात्मनेपदम् ॥ २० ॥ जागर्ति अप्रमत्तो भवतीत्यर्थः ॥ २१ ॥ यस्य ते येन त्वया । अविदित इति छेदः ॥ २२ ॥ सर्गार्थमेकेन संगृह्णाति—परेति । परावमन्ता शत्रुषु उपेक्षावान् । विषयेषु शब्दादिषु । सक्तः सक्तवान् । नदेशकालप्रविभागतत्त्वविदित्येकं पदम् । नगनैकादिवन्नसमासः ।

अप्रमत्तश्च यो राजा सर्वज्ञो विजितेन्द्रियः । कृतज्ञो धर्मशीलश्च स राजा तिष्ठते चिरम् ॥ २० ॥ नयनाभ्यां प्रसुप्तोपि जागर्ति नयचक्षुषा । व्यक्तक्रोधप्रसादश्च स राजा पूज्यते जनैः ॥२१॥ त्वं तु रावण दुर्बुद्धिर्गुणैरेतैर्विवर्जितः । यस्य ते विदितश्चारै रक्षसां सुमहान् वधः ॥२२॥ परावमन्ता विषयेषु सक्तो नदेशकालप्रविभागतत्त्ववित् । अयुक्तबुद्धिर्गुणदोषनिश्चये विपन्नराज्यो नचिराद्विपत्स्यसे ॥ २३ ॥ इति स्वदोषान् परिकीर्तितांस्तया समीक्ष्य बुद्ध्या क्षणदाचरेश्वरः । धनेन दर्पेण बलेन चान्वितो विचिन्तयामास चिरं स रावणः ॥ २४ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

ततः शूर्पणखां क्रुद्धां ब्रुवन्तीं परुषं वचः । अमात्यमध्ये संक्रुद्धः परिपप्रच्छ रावणः ॥ १ ॥
कश्च रामः कथंवीर्यः किंरूपः किंपराक्रमः । किमर्थं दण्डकारण्यं प्रविष्टः स दुरासदम् ॥ २ ॥

देशकालभेदातत्त्वज्ञ इत्यर्थः। गुणदोषनिश्चये विषये अयुक्तबुद्धिः अनियोजितबुद्धिः, अप्रवृत्तबुद्धिरित्यर्थः । नचिरात् क्षिप्रम् । विपत्स्यसे आपदं प्राप्स्यसीत्यर्थः । त्वमिति शेषः ॥२३॥२३॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

परगोष्ठीप्रसिद्धानां गुणानामाकरो महान् । अनुजो यस्य सौमित्रिस्तमहं राममाश्रये ॥ तत इति । संक्रुद्धः शत्रुविषयेऽतीव क्रोधवान् ॥ १ ॥ कथंवीर्यः

अस्थाने क्रोधवन्तम् । व्यसने व्यसनकाले । स्वजनोपि अमात्यादिरपि ॥ १६–१९ ॥ सर्वज्ञः स्वराष्ट्रपरराष्ट्रवृत्तान्तज्ञः ॥ २० ॥ व्यक्तक्रोधप्रसादश्च व्यक्तौ सार्थकत्वेनाभिव्यक्तौ क्रोधप्रसादौ यस्य सः तथोक्तः ॥ २१ ॥ यस्य ते येन त्वया अविदितः न ज्ञात इत्यर्थः ॥ २२ ॥ नदेशकालप्रविभक्ततत्त्वविदिति नगनैकादिवन्नसमासः । नचिरात् क्षिप्रम् । विपत्स्यसे आपदं प्राप्स्यसीत्यर्थः ॥ २३ ॥ विचिन्तयामासेति मारीचः समरो मास्त्विति ब्रूते, इयं भगिनीतु समरं प्रोत्साहयति किमत्रकर्तव्यमिति चिन्तयामासेत्यर्थः ॥ २४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां त्रयस्त्रिंशः सर्गः ॥३३॥१–५॥

कीदृशवीर्यः ॥२॥ येन खरदूषणात्रिशिरःप्रभृतयो राक्षसा निहतास्तादृशं तदायुधं किं कीदृशम् इति परिपप्रच्छेति पूर्वेणान्वयः ॥३॥ ४ ॥ रामानुज परवशहृदयापि तदग्रजकृतमहोन्मादहेतुभूतं रामलावण्यं सङ्ग्रहेणाभिधत्ते—दीर्घबाहुरित्यादिना ॥ ५॥ कनकाङ्गदं कनकमयपट्टबन्धम् ॥ ६ ॥ नाददान

आयुधं किञ्च रामस्य निहता येन राक्षसाः। खरश्च निहतः सङ्ख्ये दूषणस्त्रिशिरास्तथा ॥ ३ ॥ इत्युक्ता राक्षसेन्द्रेण राक्षसी क्रोधमूर्च्छिता। ततो रामं यथातत्त्वमाख्यातुमुपचक्रमे ॥ ४ ॥ दीर्घबाहुर्विशालाक्षश्चीरकृष्णाजिनाम्बरः। कन्दर्पसमरूपश्च रामो दशरथात्मजः ॥ ५ ॥ शक्रचापनिभं चापं विकृष्य कनकाङ्गदम्। दीप्तान् क्षिपति नाराचान् सर्पानिव महाविषान् ॥ ६ ॥ नाददानं शरान् घोरान्न मुञ्चन्तं शिलीमुखान् । न कार्मुकं विकर्षन्तं रामं पश्यामि संयुगे ॥ ७ ॥ हन्यमानं तु तत्सैन्यं पश्यामि शरवृष्टिभिः । इन्द्रेणेवोत्तमं सस्यमाहतं त्वश्मवृष्टिभिः ॥ ८ ॥ रक्षसां भीमरूपाणां सहस्राणि चतुर्दश । निहतानि शरैस्तीक्ष्णैस्तेनैकेन पदातिना ॥ ९ ॥ अर्धाधिकमुहूर्तेन खरश्च सहदूषणः। ऋषीणामभयं दत्तं कृतक्षेमाश्च दण्डकाः ॥ १० ॥ एका कथञ्चिन्मुक्ताहं परिभूय महात्मना। स्त्रीवधं शङ्कमानेन रामेण विदितात्मना ॥ ११ ॥ भ्राता चास्य महातेजा गुणतस्तुल्यविक्रमः। अनुरक्तश्च भक्तश्च लक्ष्मणो नाम वीर्यवान् ॥ १२ ॥

मिति अत्रादानमोचनविकर्षणानि लक्ष्यन्ते। वेगातिशयेनादानादिकं न पश्यामि, किंतु हननमेवेति भावः। अश्मवृष्टिभिः करकामयवर्षैः ॥ ७–९ ॥ अर्धाधिकमुहूर्तेन घटिकात्रयेण ससैन्यः खरो हत इत्यर्थः ॥१०॥ एकेति। स्त्रीवधं शङ्कमानेन स्त्रीवधो भविष्यतीति शङ्कमानेनेत्यर्थः ॥११॥ अनुरक्तः

कनकाङ्गदं कनकवलयभूषणमिति चापविशेषणम् ॥ ६–९ ॥ सहदूषणः खरश्च हत इति शेषः ॥ १०–१२ ॥

स०—विकर्षन्तं रामं न पश्यामीत्यस्य "सविशेषणे--" इति न्यायेन विशेषणे तात्पर्यम् ॥ ७ ॥ रामगुणसदृशगुणानततीति गुणात् तेन तुला सास्तीति तत्तुली। सोपि कं कं हतवानित्यत आह। अविक्रमः इदानीमिति। गुणात्तुल्यविक्रमः इति पाठः ॥ १२ ॥

अनुरागवान् । भक्तः तत्कार्यभजनशीलः ॥ १२ ॥ दक्षिणो बाहुरित्यनेन सर्वकार्यधुरंधरत्वमुक्तम् । प्राणत्वरूपणेन निरतिशयप्रेमास्पदत्वम् । अनुरक्त इत्यस्य दृष्टान्तोऽयमिति न पुनरुक्तिः ॥ १३ ॥ रामस्य प्रियास्तीत्यन्वयः ॥ १४ ॥ तां वर्णयति–सेत्यादिना । यशस्विनी उक्तरूपादिमत्त्वकीर्तिमती । वनस्य देवतेव स्थिता श्रीरिव राजते ॥ १५ ॥ तप्तकाञ्चनवर्णाभा तप्तकाञ्चनवर्णतुल्या आभा यस्याः सा । वैदेही विदेहराजेन

अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान् बली । रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ १३ ॥ रामस्य तु विशालाक्षी पूर्णेन्दुसदृशानना । धर्मपत्नी प्रिया भर्तुर्नित्यं प्रियहिते रता ॥ १४ ॥ सा सुकेशी सुनासोरुः सुरूपा च यशस्विनी । देवतेव वनस्यास्य राजते श्रीरिवापरा ॥ १५ ॥ तप्तकाञ्चनवर्णाभा रक्ततुङ्गनखी शुभा । सीता नाम वरारोहा वैदेही तनुमध्यमा ॥ १६ ॥ नैव देवी न गन्धर्वी न यक्षी न च किन्नरी । नैवंरूपा मया नारी दृष्टपूर्वा महीतले ॥१७॥ यस्य सीता भवेद्भार्या यं च हृष्टा परिष्वजेत् । अतिजीवेत् स सर्वेषु लोकेष्वपि पुरन्दरात् ॥ १८ ॥ सा सुशीला वपुःश्लाघ्या रूपेणाप्रतिमा भुवि । तवानुरूपा भार्या स्यात्त्वं च तस्यास्तथा पतिः ॥ १९ ॥ तां तु विस्तीर्णजघनां पीनश्रोणीपयोधराम् । भार्यार्थे च तवानेतुमुद्यताहं वराननाम् । विरूपितास्मि क्रूरेण लक्ष्मणेन महाभुज ॥ २० ॥ तां तु दृष्ट्वाद्य वैदेहीं पूर्णचन्द्रनिभाननाम् । मन्मथस्य शराणां वै त्वं विधेयो भविष्यसि ॥२१॥

पुत्रीकृता ॥ १६ ॥ एवंरूपा देवी च न दृष्टपूर्वा गन्धर्वी च न दृष्टपूर्वा यक्षी च न दृष्टपूर्वा किन्नरी च न दृष्टपूर्वा एवंरूपा नारी महीतलेऽपि न दृष्टपूर्वा इत्यन्वयः । उत्तरार्धे महीतल इत्यनेन पूर्वार्धे स्वर्गलोक इति सिद्धम् । देव्यादीनां तत्रैव वाससम्भवात् । यद्वा महीतल इति सर्वलोकोपलक्षणम् ॥१७॥ परिष्वङ्गं विना भार्यात्वेन स्थिता चेत् सः सर्वेषु लोकेषु सर्वानपि लोकान् । अतिजीवेत् अतीत्य जीवेत् । सर्वलोकोत्तीर्णपरमसुखमयजीवन इत्यर्थः । परिष्वङ्गाभावेपि सदा सन्निधानादिसौख्यादिति भावः । भार्यात्वं विनापि यं सकृत् परिष्वजेत् सः पुरन्दरादपि पुरन्दरमपि अतिजीवेत् अतिशय्य जीवेत् ॥ १८ ॥ सा सुशीलेति । वपुःश्लाघ्या वपुषा श्लाघ्या, सर्वानवद्याङ्गीत्यर्थः ॥ १९ ॥ विस्तीर्णजघनां विशालजघनां तव चेत्यन्वयः ॥२०–२१॥



रामस्य दक्षिणो बाहुरित्यनेन रामकार्यधुरन्धरत्वं प्रतीयते । प्राणो बहिश्चर इत्यनेन निरतिशयप्रेमास्पदत्वं दर्शितम् ॥ १३–२१ ॥

रोचत इति । तं तुभ्यम् । "रुच्यर्थानां प्रीयमाणः" इति चतुर्थी । निर्विशङ्केन त्वयेति शेषः ॥ २५ ॥ विज्ञायेति । आत्मशक्तिं स्वबलम् । "शक्तिर्बले प्रभावादौ" इति विश्वः । विज्ञाय पर्यालोच्य । बलात् पौरुषेण सीता भार्यार्थे ह्रियताम् ॥ २६ ॥ उक्तमर्थं सर्गान्ते पुनः संगृह्णाति–निशम्येति । प्रति

यदि तस्यामभिप्रायो भार्यार्थे तव जायते । शीघ्रमुद्ध्रियतां पादो जयार्थमिह दक्षिणः ॥ २२ ॥ कुरु प्रियं तथा तेषां रक्षसां राक्षसेश्वर । वधात्तस्य नृशंसस्य रामस्याश्रमवासिनः ॥ २३ ॥ तं शरैर्निशितैर्हत्वा लक्ष्मणं च महारथम् । हतनाथां सुखं सीतां यथावदुपभोक्ष्यसि ॥२४॥ रोचते यदि ते वाक्यं ममैतद्राक्षसेश्वर । क्रियतां निर्विशङ्केन वचनं मम रावण ॥ २५ ॥ विज्ञायेहात्मशक्तिं च ह्रियतामबला बलात् । सीता सर्वानवद्याङ्गी भार्यार्थे राक्षसेश्वर ॥ २६ ॥ निशम्य रामेण शरैरजिह्मगैर्हतान् जनस्थानगतान्निशाचरान् । खरं च बुध्वा निहतं च दूषणं त्वमत्र कृत्यं प्रतिपत्तुमर्हसि ॥ २७ ॥ इत्यार्षे श्रीरामायणे० श्रीमदारण्यकाण्डे चतुस्त्रिंशः सर्गः ॥३४॥

ततः शूर्पणखावाक्यं तच्छ्रुत्वा रोमहर्षणम् । सचिवानभ्यनुज्ञाय कार्यं बुध्वा जगाम सः ॥ १ ॥
तत्कार्यमनुगम्याथ यथावदुपलभ्य च । दोषाणां च गुणानां च सम्प्रधार्य बलाबलम् ॥ २ ॥

पत्तुं ज्ञातुम् ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥

यद्वाहनस्य माहात्म्यं सर्वेषां विस्मयावहम् । अवतीर्णं रघोर्वंशे तमहं विष्णुमाश्रये ॥ तत इति । रोमहर्षणं भयोत्पादकत्वेन रोमाञ्चकरम् । सचिवमुखेन कार्यं बुद्ध्वा तानभ्यनुज्ञाय विसृज्य ॥ १ ॥ तदित्यादिश्लोकद्वयमेकान्वयम् । अनुगम्य स्वयमनुसन्धाय, पर्यालोच्येत्यर्थः । यथावदुप

टी–भार्यात्वेन भार्यात्वेनादाने ॥ २२–२६ ॥ निशम्येति । प्रतिपत्तुं ज्ञातुम् ॥ २७॥ इति श्रीमहेश्वर० श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्ड० चतुस्त्रिंशः सर्गः ॥३४॥ तत इति । शूर्पणखावाक्यमिति शूर्पं शोणितभाजनं शूर्पेण शोणितभाजनेन यज्ञादिसत्क्रियां नखयति विदूषयतीति शूर्पनखा । "नख विदूषणे" इति धातुः । यद्वा शूर्पाकाराणि नखानि यस्यास्सा । सचिवमुखेन कार्यं बुध्वा । तानभ्यनुज्ञाय विसृज्य जगाम अन्तःपुरमिति शेषः ॥ १ ॥ अथानन्तरम् । तत्कार्यं स्वयमनु

लभ्य इदमित्थमिति निश्चित्य । पुनरपि दार्ढ्याय गुणदोषप्राबल्यदौर्बल्यविषयाचिन्तां निर्णयान्तां दर्शयति–दोषाणां चेति । इदमत्र संप्रधार्य स्वेन चिकीर्षितं सीतापहारलक्षणं कार्यं किं पौरुषेण सुकरम् आहोस्विच्चौर्येण कर्तव्यमिति । कतरस्मिन् पक्षे दोषाल्पत्वं गुणभूयस्त्वमिति, तत्र पौरुषेण कर्तुमशक्यम्, खरादियुद्धे रामस्याचिन्त्यपराक्रमत्वेन श्रुतत्वात् । उपायपरिकल्पितचौर्याश्रयणे तादात्विकदोषा न लक्ष्यन्ते सीतारहितेन तद्व्यसनिना रामेण

इतिकर्तव्यमित्येव कृत्वा निश्चयमात्मनः । स्थिरबुद्धिस्ततो रम्यां यानशालां जगाम ह ॥ ३ ॥ यानशालां ततो गत्वा प्रच्छन्नो राक्षसाधिपः । सूतं सञ्चोदयामास रथः संयोज्यतामिति ॥ ४ ॥ एवमुक्तः क्षणेनैव सारथिर्लघुविक्रमः । रथं संयोजयामास तस्याभिमतमुत्तमम् ॥ ५ ॥ काञ्चनं रथमास्थाय कामगं रत्नभूषितम् । पिशाचवदनैर्युक्तं खरैः काञ्चनभूषणैः ॥ ६ ॥ मेघप्रतिमनादेन स तेन धनदानुजः । राक्षसाधिपतिः श्रीमान् ययौ नदनदीपतिम् ॥ ७ ॥ स श्वेतवालव्यजनः श्वेतच्छत्रो दशाननः । स्निग्धवैडूर्यसङ्काशस्तप्तकाञ्चनकुण्डलः ॥ ८ ॥ विंशद्भुजो दशग्रीवो दर्शनीयपरिच्छदः । त्रिदशारिर्मुनीन्द्रघ्नो दशशीर्ष इवाद्रिराट् ॥ ९ ॥

कापि हानिर्न सम्भाव्यते तस्मादयमेव पक्षः सम्यगिति एवं निश्चित्य प्रावर्ततेत्यर्थः । स्थिरबुद्धिः निश्चलबुद्धिः । यानशालाम् अश्वशालाम् ॥ २ ॥ ३ ॥ यानशालामिति । प्रच्छन्न इति प्रकाशश्चेद्वृद्धा मन्दोदर्यादयश्च वारयिष्यन्तीति भावः । यद्वा पौरुषं विहाय चौर्यमार्गाश्रयणं लज्जावहमिति प्रच्छन्न मार्गाश्रयणम् । यद्वा तत इत्यादि सचिवान् तदानीं सभास्थितान् विसृज्य स्वयं कार्यं बुद्ध्वेत्यर्थः । अत एव सचिवैः पर्यालोचनाभावात् प्रच्छन्न इत्युक्तम् । अत एव कुम्भकर्णादिभिरुच्यते-सचिवैरमन्त्रयित्वा कृतस्य कथमिदानीं प्रतीकार इति । खरलक्षणं पूर्वमुक्तम् ॥ ४–९ ॥

गम्यानुसन्धाय, पर्यालोच्येत्यर्थः । तच्च यथावदुपलभ्य इदमित्थमिति निश्चित्य । पुनश्च दार्ढ्याय गुणदोषप्राबल्यदौर्बल्यविषयचिन्तानिर्णयतां दर्शयति–दोषाणां चेति । इदमत्र संप्रधार्य स्वेन चिकीर्षितं सीताहरणलक्षणं कार्यं किं पौरुषेण सुकरम् अथवा चौर्येण कर्तव्यमिति । कतरस्मिन् पक्षे दोषाल्पत्वं गुणभूयस्त्वमिति, तत्र पौरुषेण कर्तुं न शक्यम्, खरादियुद्धे रामस्याचिन्त्यपराक्रमत्वेन श्रुतत्वात् । उपायपरिकल्पितचौर्याश्रयणे तात्कालिकदोषा न लक्ष्यन्ते सीतारहिते रामे पश्चादपि हानिर्न सम्भाव्यत इति दोषाणां गुणानां च बलाबलं संप्रधार्य॥२॥ इतिकर्तव्यमित्येवात्मनो निश्चयं कृत्वा अयमेव पक्षस्सम्यगिति निश्चयं कृत्वेत्यर्थः । स्थिरबुद्धिस्सन् । ततोऽनन्तरं यानशालां जगामेत्यन्वयः ॥ ३ ॥ प्रच्छन्नं गूढम् । प्रकाशं चेत् बन्धवः वारयिष्यन्तीत्यभिप्रायः ॥ ४–९ ॥

विद्युत्स्थाने आभरणानि, मेघस्थाने रावणः, बलाकास्थाने अलंकृतरथः ॥१०॥ सशैलं शैलसहितम्। सागरानूपं समुद्रतीरम् ॥११॥ मङ्गलतोयाभिः शुभजलाभिः। पद्मिनीभिरिति समावृतमित्यनुकर्षः॥१२॥ आढकिः सूपापयुक्तधान्यस्तम्बः॥१३॥ सुपर्णैः गरुडैः। अजैः अयोनिजैः। वैखानसैः ब्रह्मनखजैः।

कामगं रथमास्थाय शुशुभे राक्षसेश्वरः। विद्युन्मण्डलवान् मेघः सबलाक इवाम्बरे ॥ १० ॥ सशैलं सागरानूपं वीर्यवानवलोकयन्। नानापुष्पफलैर्वृक्षैरनुकीर्णं सहस्रशः ॥ ११ ॥ शीतमङ्गलतोयाभिः पद्मिनीभिः समन्ततः। विशालैराश्रमपदैर्वेदिमद्भिः समावृतम् ॥१२॥ कदल्याढकिसम्बाधं नालिकेरोपशोभितम्। सालैस्तालैस्तमालैश्च पुष्पितैस्तरुभिर्वृतम् ॥ १३ ॥ नागैः सुपर्णैर्गन्धर्वैः किन्नरैश्च सहस्रशः। अजैर्वैखानसैर्माषैर्वालखिल्यैर्मरीचिपैः ॥ १४ ॥ अत्यन्तनियताहारैः शोभितं परमर्षिभिः। जितकामैश्च सिद्धैश्च चारणैरुपशोभितम् ॥ १५ ॥ दिव्याभरणमाल्याभिर्दिव्यरूपाभिरावृतम्। क्रीडारतिविधिज्ञाभिरप्सरोभिः सहस्रशः ॥ १६ ॥ सेवितं देवपत्नीभिः श्रीमतीभिः श्रिया वृतम्। देवदानवसङ्घैश्च चरितं त्वमृताशिभिः ॥ १७ ॥ हंसक्रौञ्चप्लवाकीर्णं सारसैः संप्रणादितम्। वैडूर्यप्रस्तरं रम्यं स्निग्धं सागरतेजसा ॥ १८ ॥

"ये नखास्ते वैखानसाः" इति श्रुतेः। माषैः माषगोत्रजैः। वालखिल्यैः ब्रह्मवालजैः। "ये वालास्ते वालखिल्याः" इति श्रुतेः। मरीचिपैः रविकिरणपानव्रतनिष्ठैः ॥ १४–१६ ॥ अमृताशिभिः देवैश्चेति शेषः। यद्वा "ऋतामृताभ्यां जीवेत" इत्युक्तायाचितलब्धाशिभिः। "ऋतमुञ्छशिलं प्रोक्तममृतं स्यादयाचितम्।" इति मनुः ॥१७॥ प्लवाः जलकुक्कुटाः मण्डूका इत्यप्याहुः। वैडूर्यप्रस्तरं वैडूर्यमयाः प्रस्तराः शिलाः यस्मिन् तम्। "पाषाणप्रस्तर

विद्युन्मण्डलस्थाने आभरणानि, मेघस्थाने रावणः, बलाकास्थाने अलंकृतो रथ इति ज्ञेयम् ॥ १० ॥ सागरानूपं समुद्रतीरप्रदेशम्। अवलोकयन् ययाविति शेषः। सागरानूपमेव वर्णयति–नानापुष्पफलैरित्यारभ्य स्निग्धं सागरतेजसेत्यन्तेन। (आढकिः तुवरी) आजैरिति पाठः। आजैः अजो ब्रह्मा तत्पुत्रैः वैखानसैः प्रसिद्धैः। माषैः माषसंज्ञैः ॥ ११–१७ ॥ प्लवाः मण्डूकाः। वैडूर्याण्येव प्रस्तराणि शिला यस्मिन् अनूपे ॥ १८ ॥ १९ ॥

ग्रावोपलाश्मानः शिला दृषत् " इत्यमरः ॥१८॥ तपसा जितलोकानां पुरुषाणां विमानानीत्यन्वयः। अभिसम्पतन् मार्गवशात् प्राप्नुवन्। सशैलं नाना पुष्पफलैर्वृक्षैरनुकीर्णमित्यारभ्य सागरतेजसा स्निग्धमित्यन्तविशेषणविशिष्टं सागरानूपमवलोकयन् पाण्डरत्वादिविशेषणविशिष्टानि। तपसा जित लोकानां विमानान्यभिसंपतन् गन्धर्वाप्सरसो ददर्शेत्यन्वयः ॥ १९ ॥ २० ॥ निर्यासरसमूलानामित्यादिसार्धश्लोकपद्कमेकान्वयम्। निर्यासरसमूलानां



पाण्डराणि विशालानि दिव्यमाल्ययुतानि च। तूर्यगीताभिजुष्टानि विमानानि समन्ततः ॥ १९ ॥ तपसा जित लोकानां कामगान्यभिसम्पतन्। गन्धर्वाप्सरसश्चैव ददर्श धनदानुजः ॥ २० ॥ निर्यासरसमूलानां चन्दनानां सहस्रशः। वनानि पश्यन् सौम्यानि घ्राणतृप्तिकराणि च ॥ २१ ॥ अगरूणां च मुख्यानां वनान्युपवनानि च। तक्कोलानां च जात्यानां फलानां च सुगन्धिनाम् ॥२२॥ पुष्पाणि च तमालस्य गुल्मानि मरिचस्य च। मुक्तानां च समूहानि शुष्यमाणानि तीरतः ॥ २३ ॥ शङ्खानां प्रस्तरं चैव प्रवालनिचयं तथा। काञ्चनानि च शैलानि राज तानि च सर्वशः ॥ २४ ॥ प्रस्रवाणि मनोज्ञानि प्रसन्नानि ह्रदानि च। धनधान्योपपन्नानि स्त्रीरत्नैः शोभितानि च ॥ २५ ॥ हस्त्यश्वरथगाढानि नगराण्यवलोकयन्। तं समं सर्वतः स्निग्धं मृदुसंस्पर्शमारुतम्। अनूपं सिन्धु राजस्य ददर्श त्रिदिवोपमम् ॥ २६ ॥

हिङ्गुरूपनिर्यासरसयुक्तमूलानां मूलाख्यौषधीविशेषाणाम्। मूलाख्यौषधीमूलाद्धिङ्गुरूपनिर्यासा उत्पद्यन्त इति प्रसिद्धिः। वनानि अकृत्रिमाणि। उप वनानि कृत्रिमाणि। तक्कोलानां गन्धद्रव्याणाम्। जात्यानां जातिभवानाम्। फलानां जातिफलानामित्यर्थः। सुगन्धिनाम् उपवनानीत्यन्वयः। गुल्मानि स्तम्बान्। मरिचस्य मरीचस्य। समूहानीति नपुंसकत्वमार्षम्। शुष्यमाणानि चिरसङ्गतत्वेनानाद्राणीत्यर्थः। तीरतः तीरे। शैलानीति नपुंसकत्वमार्षम्।

अभिसंपतन् मार्गवशात्प्राप्नुवन्। विमानानि गन्धर्वाप्सरसश्च ददर्शेति सम्बन्धः ॥ २० ॥ २१ ॥ जात्यानां जातिभवानाम् ॥ २२ ॥ समूहानित्युत्तरत्र स्थितं पदं मण्डूकप्लुत्यात्र विनियोज्यम्। तीरतः तीरे ॥२३॥ प्रस्तरान् समूहान् शैलानीत्यादिषु लिङ्गव्यत्यय आर्षः ॥२४॥ प्रस्रवाणि प्रवाहान्। टी—स्निग्धं नीरन्ध्रम् ॥२९—२७॥

...र्थः। अन्तरं समूहं निचयं समूहम्। प्रस्रवाणि प्रस्रवणानि निर्झरानित्यर्थः। गाढानि निबिडानि। एवं बहुधा सागरानूपवर्णनं पुनर्बहुदूर... मारीचाश्रमदेशानिवृत्त्यध्यवसायविशेषं व्यञ्जयितुम् ॥२१—२६॥ यस्य वाहनप्रभावोऽप्यपरिच्छेद्यस्तेन रामेण विरुणद्धि रावणो मूढ इति ...—तत्रापश्यदित्यादिना। ताः प्रसिद्धाः ॥२७॥ यस्येति। गरुडः महाकायं महाप्रमाणम्। हस्तिनं गजं कच्छपं चादाय यस्य शाखामाजगाम

तत्रापश्यत्स मेघाभं न्यग्रोधमृषिभिर्वृतम्। समन्ताद्यस्य ताः शाखाः शतयोजनमायताः ॥ २७ ॥ यस्य हस्तिनमादाय महाकायं च कच्छपम्। भक्षार्थं गरुडः शाखामाजगाम महाबलः ॥ २८ ॥ तस्य तां सहसा शाखां भारेण पतगोत्तमः। सुपर्णः पर्णबहुलां बभञ्ज च महाबलः ॥ २९ ॥ तत्र वैखानसा माषा वालखिल्या मरीचिपाः। अजा बभूवुर्धूम्राश्च सङ्गताः परमर्षयः ॥ ३० ॥ तेषां दयार्थं गरुडस्तां शाखां शतयोजनाम्। जगामादाय वेगेन तौ चोभौ गजकच्छपौ ॥३१॥ एकपादेन धर्मात्मा भक्षयित्वा तदामिषम्। निषादविषयं हत्वा शाखया पतगोत्तमः ॥ ३२ ॥ प्रहर्षमतुलं लेभे मोक्षयित्वा महामुनीन् ॥ ३३ ॥ [ शाखानिपातभीतांश्च शाखां चोत्सृज्य सर्ववित् ॥]

...न्वयः। भारेण बभञ्ज नतु यत्नेनेत्यर्थः। महागजकच्छपवहनात् भारेण शाखा भग्नाभूदित्यर्थः ॥ २८ ॥ २९ ॥ तत्र शाखाया अधःप्रदेशे ये सङ्गताः मरीचिपाः रविकिरणपानव्रताः, धूम्राः धूमपाः तेषां दयार्थं शाखापातेन पीडा माभूदिति तदनुग्रहार्थमित्यर्थः। एकपादेन आदाय अवष्टभ्येत्यर्थः। भक्षयित्वा आकाश एवेति शेषः ॥३०॥३१॥ आमिषं गजकच्छपरूपं मांसम्। निषादविषयं निषादग्रामं शाखया हत्वा तानपि भक्षयित्वा महामुनीन् वैखानसादीन् निषादविषयस्थब्राह्मणान् वा निषादैः पीड्यमानान्वा, तद्रक्षणार्थमेव तद्धननमिति भावः। तादृशशाखारूपप्रहरणलाभेन तदैव मुनिबाधक...

गरुडो गजकच्छपावादाय यस्य न्यग्रोधस्य शाखामाजगामेति सम्बन्धः ॥२८॥ २९ ॥ तत्रेति। तत्र भग्नायाः शाखायाः अधः प्रजापतेर्नखजाताः वैखानसाः। वाल...जाताः वालखिल्याः " ये नखास्ते वैखानसाः ये वालास्ते वालखिल्याः " इति श्रुतेः। माषाः पृतिमाषगोत्रजाः। माषप्रमाणा वा। अजाः अयोनिजाः। धूम्राः ...यिनः परमर्षयः सङ्गता बभूवुः ॥ ३० ॥ तेषां मुनीनां दयार्थं शाखापातेन तेषां नाशो माभूदित्यनुग्रहार्थम् ॥ ३१ ॥ एकपादेन तौ गजकच्छपौ तां शाखां च गृहीत्वा अन्तरिक्ष एव तदामिषं गजकच्छपामिषं भक्षयित्वा तथा शाखया निषादविषयं निषाददेशं हत्वा मुनींश्च बधान्मोक्षयित्वा अतुलं प्रहर्षं लेभे ॥३२॥३३॥

निषाददर्शं सर्वं हत्वा शिष्टपालनाद्दुष्टनिग्रहाच्चातुलं प्रहर्षं लेभ इति भावः ॥ ३२ ॥३३॥ तेनैव भक्षणजन्येनेत्यर्थः ॥ ३४ ॥ अयोजालानि अयोनिर्मित जालकानि । निर्मथ्य ध्वंसयित्वा तदन्तर्वर्तिरत्नमयं गृहं भित्त्वा ततः तदन्तरे गुप्तममृतं महेन्द्रभवनादाजहार ॥ ३५ ॥ सुपर्णकृतलक्षणं सुपर्णेन गरुडेन

स तेनैव प्रहर्षेण द्विगुणीकृतविक्रमः । अमृतानयनार्थं वै चकार मतिमान् मतिम् ॥ ३४ ॥ अयोजालानि निर्मथ्य भित्त्वा रत्नमयं गृहम् । महेन्द्रभवनाद्गुप्तमाजहारामृतं ततः ॥ ३५ ॥ तं महर्षिगणैर्जुष्टं सुपर्णकृतलक्षणम् । नाम्ना सुभद्रं न्यग्रोधं ददर्श धनदानुजः ॥ ३६ ॥ तं तु गत्वा परं पारं समुद्रस्य नदीपतेः । ददर्शाश्रममेकान्ते रम्ये पुण्ये वनान्तरे ॥ ३७ ॥ तत्र कृष्णाजिनधरं जटावल्कलधारिणम् । ददर्श नियताहारं मारीचं नाम राक्षसम् ॥३८॥ स रावणः समागम्य विधिवत्तेन रक्षसा । मारीचेनार्चितो राजा सर्वकामैरमानुषैः ॥३९॥ तं स्वयं पूजयित्वा तु भोजनेनोदकेन च । अर्थोपहितया वाचा मारीचो वाक्यमब्रवीत् ॥ ४० ॥ कच्चित् सुकुशलं राजन् लङ्कायां राक्षसेश्वर । केनार्थेन पुनस्त्वं वै तूर्णमेवमिहागतः ॥४१॥ एवमुक्तो महातेजा मारीचेन स रावणः । तं तु पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ॥ ४२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये श्रीमदारण्यकाण्डे पञ्चत्रिंशः सर्गः ॥३५॥

कृतं भग्नैकशाखत्वरूपं लक्षणं चिह्नं यस्य ॥ ३६ ॥ ३७ ॥ तत्रेति । कृष्णाजिनेत्यादिना रामभक्ततया जनितवैराग्यचिह्नोक्तिः ॥ ३८ ॥ समागम्य मारीचं प्राप्य । सर्वकामैः सर्वभोग्यवस्तुभिः अर्चितो बभूव ॥ ३९॥४० ॥ एवं तूर्णम् एकाकितया शीघ्रम् ॥४१॥ एवमिति । इदम् उत्तरसर्गे वक्ष्यमाणम् ॥४२॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

तेनैव प्रहर्षेण अभिमतभक्षणनिषादनाशमुनिजनरक्षणजनितसन्तोषेणेत्यर्थः ॥ ३४ ॥ अयोजालानि अयश्शृङ्खलनिर्मितानि जालानि रत्नमयगेहोपरि पक्षिराज प्रवेशपरिहाराय बद्धानि निर्मथ्य भित्त्वा रत्नगृहं च भित्त्वा अमृतमाजहारेत्यन्वयः ॥ ३५ ॥ सुपर्णकृतलक्षणं शाखाभङ्गरूपं लक्षणं चिह्नं यस्य तं तथोक्तम् ॥ ३६-४१ ॥ पश्चादिदम् उत्तरसर्गे वक्ष्यमाणम् ॥ ४२ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां पञ्चत्रिंशः सर्गः ॥ ३५ ॥

महासमरमध्येपि गाम्भीर्यं यस्य निश्चलम् । तमहं शिरसा वन्दे जानकीप्राणवल्लभम् ॥ मारीचेत्यादि । भाषतः भाषमाणस्य ॥१॥ कर्तव्यं वक्ष्यन् पूर्वं वृत्तं स्मारयति–जानीष इत्यादिना, अनुवर्तिनामित्यन्तमेकं वाक्यम् । खरादयश्चतुर्दशसहस्रराक्षसान्ताः जनस्थानं नित्यवासं यथा तथा वसन्तीति

मारीच श्रूयतां तात वचनं मम भाषतः । आर्तोऽस्मि मम चार्तस्य भवान् हि परमा गतिः ॥ १ ॥ जानीषे त्वं जनस्थाने यथा भ्राता खरो मम । दूषणश्च महाबाहुः स्वसा शूर्पणखा च मे ॥ २ ॥ त्रिशिराश्च महातेजा राक्षसः पिशिताशनः । अन्ये च बहवः शूरा लब्धलक्षा निशाचराः ॥ ३ ॥ वसन्ति मन्नियोगेन नित्यवासं च राक्षसाः । बाधमाना महारण्ये मुनीन् वै धर्मचारिणः ॥ ४ ॥ चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । शूराणां लब्धलक्षाणां खरचित्तानुवर्तिनाम् ॥ ५ ॥ ते त्विदानीं जनस्थाने वसमाना महाबलाः । सङ्गताः परमायत्ता रामेण सह संयुगे । नानाप्रहरणोपेताः खरप्रमुखराक्षसाः ॥ ६ ॥ तेन सञ्जातरोषेण रामेण रणमूर्द्धनि । अनुक्त्वा परुषं किञ्चिच्छरैर्व्यापारितं धनुः ॥ ७ ॥ चतुर्दश सहस्राणि रक्षसामुग्रतेजसाम् । निहतानि शरैस्तीक्ष्णैर्मानुषेण पदातिना ॥ ८ ॥ खरश्च निहतः सङ्ख्ये दूषणश्च निपातितः । हतश्च त्रिशिराश्चापि निर्भया दण्डकाः कृताः ॥ ९ ॥ पित्रा निरस्तः क्रुद्धेन सभार्यः क्षीणजीवितः । स हन्ता तस्य सैन्यस्य रामः क्षत्रियपांसनः ॥ १० ॥

जानीष इत्यन्वयः । रतिवासमिति पाठे–रत्या प्रीत्या वासो यस्मिन् कर्मणि तत्तथा ॥२–५॥ ते त्विति । वसमानाः । ताच्छील्ये शानच् । संयुगे रामेण सह सङ्गताः रामेण सह युद्धमकुर्वन्नित्यर्थः । परम् अत्यन्तम् । आयत्ताः सन्नद्धाः । प्रहरणं आयुधम् ॥ ६ ॥ तेनेति । अनुक्त्वा परुषं किञ्चिदित्यनेन

॥१॥ २ ॥ लब्धलक्षाः लब्धावसराः । प्राप्तयुद्धोत्साहा इति यावत् ॥ ३ ॥ रतिवासं च राक्षसाः इति पाठः–रत्या प्रीत्या वासो यस्मिन् कर्मणि तत्तथोक्तम् । चतुर्दश सहस्राणि वसन्तीत्यनुषज्यते ॥ ४ ॥ ५ ॥ संयुगे रामेण सह सङ्गताः तेन सह समरमकार्षुरित्यर्थः । वसमाना वसन्तः । परमत्यर्थम् । आयत्ताः सन्नद्धाः ॥ ६ ॥ तेन रामेण किञ्चिदपि परुषमनुक्त्वा धनुः शरैः शरमोक्षव्यापारैः व्यापारितं सञ्जातव्यापारं कृतम् ॥ ७–९ ॥ पित्रेत्यादिश्लोकद्वयस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु–

गाम्भीर्यं विवक्ष्यते । व्यापारितं सन्धानमोक्षणव्यापारविशिष्टं कृतम् । सङ्ख्ये युद्धे । "युद्धमायोधनम्" इत्यारभ्य "मृधमास्कन्दनं सङ्ख्यम्" इत्यमरः ॥ ७-१० ॥ कर्कशः कठिनहृदयः ॥ ११ ॥ सत्त्वं बलं केवलमाश्रित्य नतु धर्ममित्यर्थः । "सत्त्वं बलं च जन्तौ च" इति विश्वः । आनयिष्यामि

दुःशीलः कर्कशस्तीक्ष्णो मूर्खो लुब्धोऽजितेन्द्रियः । त्यक्तधर्मो ह्यधर्मात्मा भूतानामहिते रतः ॥ ११ ॥ येन वैरं विनारण्ये सत्त्वमाश्रित्य केवलम् । कर्णनासापहरणाद्भगिनी मे विरूपिता ॥१२॥ तस्य भार्यां जनस्थानात् सीतां सुरसुतोपमाम् । आनयिष्यामि विक्रम्य सहायस्तत्र मे भव ॥ १३ ॥ त्वया ह्यहं सहायेन पार्श्वस्थेन महाबल । भ्रातृभिश्च सुरान् युद्धे समग्रान्नाभिचिन्तये ॥१४॥ तत्सहायो भव त्वं मे समर्थो ह्यसि राक्षस । वीर्ये युद्धे च दर्पे च न ह्यस्ति सदृशस्तव ॥१५॥ उपायज्ञो महान् शूरः सर्वमायाविशारदः । एतदर्थमहं प्राप्तस्त्वत्समीपं निशाचर ॥ १६ ॥ शृणु तत् कर्म साहाय्ये यत्कार्यं वचनान्मम ॥ १७ ॥ सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः । आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ॥ १८ ॥

आनेष्यामि । इडार्षः ॥ १२ ॥ १३ ॥ भ्रातृभिः कुम्भकर्णादिभिः । समग्रान् सम्पूर्णान् । नाभिचिन्तये न गणयामि ॥ १४-१६ ॥ शृणु तत् कर्मेत्यत्र तदिति भिन्नं पदम् । प्रकृते कार्यसाहाय्ये यत्कर्म कार्यं कर्तव्यं तन्मम वाचनाच्छृणिवति सम्बन्धः ॥ १७ ॥ प्रमुखे अग्रे ॥ १८ ॥

क्रुद्धेन पित्रा निरस्तः निष्कासितः किम् ? किन्तु कैकेयीवरदानसमये हि तेन पित्रा प्रार्थितः सन् वनमागतस्सभार्यः सभायामार्यः सभ्यः क्षीणजीवितः किम् ? किन्तु तस्य खरस्य सैन्यस्य संहर्ता । कुतः क्षत्रियपांसनः क्षत्रियान् पातीति क्षत्रियपः सचासावंसनश्च शत्रुनाशकः । "अंस समाघाते" इति धातुः । अत एव अशीलः किम् किन्तु सद्वृत्तः तथापि कर्कशः कठिनः, शत्रुविषय इति शेषः । तीक्ष्णः क्रौर्येष्वनलसः अत एव अमूर्खः अलुब्धः जितेन्द्रिय इति छेदः । त्यक्त धर्मः त्यक्ता विरुद्धा धर्मा येनेति मध्यमपदलोपिसमासः । अत एवाधर्मात्मा किम् ? किन्तु धार्मिकएव, अत एव भूतानामहिते रतः सर्वभूतदयापर इत्यर्थः ॥१०॥११॥ टीका–येनेति । सत्त्वं बलम् आश्रित्य प्राप्य ॥ १२ ॥ तस्य भार्यामिति यथाश्रुतार्थः स्पष्टः । वस्तुतस्तु–सनत्कुमारवचनाद्विष्णुरूपश्रीरामाद्वधं प्राप्य तत्पदं प्राप्तुं तस्य भार्यामानयिष्यामि न तु द्रोहबुद्ध्येति भावः ॥ १३ ॥ त्वया भ्रातृभिश्च सहायभूतैर्नाभिचिन्तये न गणयामि । समग्रान् सर्वान् सुरान् ॥ १४-१६ ॥ तदिति भिन्नं पदम् ।

गृह्यतामिति अयमिति शेषः ॥ १९ ॥ तयोः रामलक्ष्मणयोः । अपाये अपगमे सति शून्ये प्रदेशे । निराबाधः अप्रतिबन्धः ॥ २० ॥ विश्रब्धः निश्शङ्कः । अन्तरात्मना अन्तस्स्थधैर्येण ॥२१॥ सः मारीचः रामकथां श्रुत्वा परित्रस्तो बभूव । तेन त्रासेन तस्य वक्त्रं शुष्कं समभवादित्यन्वयः ॥२२॥ भयकार्यान्तरमाह–ओष्ठाविति। शुष्कौ ओष्ठौ परिलिहन् सः । अनिमिषैः निमेषरहितैः नेत्रैः नेत्रव्यापारैः । मृतभूत इव मृतजन्तुरिवार्तः सन् रावणं समुदैक्षत॥२३॥

त्वां तु निस्संशयं सीता दृष्ट्वा तु मृगरूपिणम् । गृह्यतामिति भर्तारं लक्ष्मणं चाभिधास्यति ॥ १९ ॥ ततस्तयोरपाये तु शून्ये सीतां यथासुखम् । निराबाधो हरिष्यामि राहुश्चन्द्रप्रभामिव ॥ २० ॥ ततः पश्चात्सुखं रामे भार्याहरणकर्शिते । विश्रब्धः प्रहरिष्यामि कृतार्थेनान्तरात्मना ॥२१॥ तस्य रामकथां श्रुत्वा मारीचस्य महात्मनः । शुष्कं समभवद्वक्त्रं परित्रस्तो बभूव सः ॥ २२ ॥ ओष्ठौ परिलिहन् शुष्कौ नेत्रैरनिमिषैरिव । मृतभूत इवार्तस्तु रावणं समुदैक्षत ॥२३॥ स रावणं त्रस्तविषण्णचेता महावने रामपराक्रमज्ञः । कृताञ्जलिस्तत्त्वमुवाच वाक्यं हितं च तस्मै हितमात्मनश्च ॥ २४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे षट्त्रिंशः सर्गः ॥३६॥

उत्तरसर्गार्थं संगृह्णाति–स इति । त्रस्तविषण्णचेताः भीतदुःखितमनाः । तत्र हेतुः रामपराक्रमज्ञ इति । पूर्वं दण्डकारण्ये यो रामपराक्रम आसीत् तज्ज्ञ इत्यर्थः । तस्मै रावणाय । हितम् अनपायम् । "हितयोगे च" इति वार्तिकेन चतुर्थी ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥

प्रकृते कार्यसाहाय्ये यत्कार्यं यत्कर्तव्यं तन्मे वचनात् शृण्विति सम्बन्धः ॥ १७-१९ ॥ तयोरपाये अपगमे सति शून्ये इत्यत्राश्रम इत्यनुषज्यते । निराबाधः प्रतिबन्धरहितः ॥ २० ॥ तत इति प्रातीतिकोर्थः स्पष्टः । वस्तुतस्तु–रामे भार्याहरणकर्शिते राम एवेभः रामेभस्य आर्या सीता तस्याः आहरणम् तेन हेतुना कर्शिते नाशिते सति रामेण मच्छरीर इति शेषः । ततः कृतार्थेनान्तरात्मना उपलक्षितस्सन् पश्चाद्विस्रब्धं निष्कलङ्कं सुखं परमानन्दसुखं मोक्षमिति यावत् । प्रहरिष्यामि प्रकर्षेणाहरिष्यामि, प्राप्स्यामीत्यर्थः । इदमात्मगतम् ॥ २१ ॥ रामकथां श्रुत्वा मारीचः परित्रस्तो बभूव तेन परित्रासेन तस्य वक्त्रं शुष्कं समभवदिति सम्बन्धः ॥ २२ ॥ नेत्रैः नेत्रव्यापारैः । मृतभूत इव मृतसदृशः ॥ टीका–नेत्रैः नेत्रव्यापारैः । अन्यथा बहुवचनायोगात् ॥ २३ ॥ त्रस्तविषण्णचेताः त्रस्तः विषण्णचेताः खिन्नमानससञ्चारो यस्य । कुतः ? रामपराक्रमज्ञः ॥ २४ ॥ इति श्रीमहेश्वरतीर्थकृतायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां षट्त्रिंशः सर्गः ॥ ३६ ॥

सीतापतित्वसम्भूतमप्रमेयं वहन्महः । समस्तापायरहितो रामो जयतु मे धनम् ॥ तच्छ्रुत्वेत्यादि ॥१॥ सततम् आपत्प्राप्तावपि । प्रियवादिनः स्वामि हिताहितविमर्शमुपेक्ष्य केवलं स्वप्रयोजनाय यथेच्छावादशीलाः पुरुषाः सुलभाः । राज्ञः अप्रियस्य तु अप्रियस्यापि तत्काले श्रवणकटुतया प्रतीयमान स्यापि । कालान्तरे पथ्यस्य हितस्य शुभोदर्कस्येत्यर्थः । वचनस्य वक्ता भृत्यः तथाविधवचनस्य श्रोता च पथ्यभक्षणवन्ममेदं हितमिति अहिता राजा

तच्छ्रुत्वा राक्षसेन्द्रस्य वाक्यं वाक्यविशारदः । प्रत्युवाच महाप्राज्ञो मारीचो राक्षसेश्वरम् ॥ १ ॥ सुलभाः पुरुषा राजन् सततं प्रियवादिनः । अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ २ ॥ न नूनं बुद्ध्यसे रामं महावीर्यं गुणोन्नतम् । अयुक्तचारश्चपलो महेन्द्रवरुणोपमम् ॥३॥ अपि स्वस्ति भवेत्तात सर्वेषां भुवि रक्षसाम् । अपि रामो न संक्रुद्धः कुर्याल्लोकमराक्षसम् ॥ ४ ॥ अपि ते जीवितान्ताय नोत्पन्ना जनकात्मजा । अपि सीतानिमित्तं च न भवेद्व्यसनं मम ॥५॥ अपि त्वामीश्वरं प्राप्य कामवृत्तं निरङ्कुशम् । न विनश्येत् पुरी लङ्का त्वया सह सराक्षसा ॥६॥

च दुर्लभः, अतो मयोच्यमानमप्रियमिव स्थितमपि परमहितामिति गृहाणेति भावः ॥२॥ पथ्यवचनमेवाह—न नूनमित्यादिना । अयुक्तचारः अनियोजितचारः चपलतया अयुक्तचारत्वाद्वा तद्वीर्यं सम्यक् न जानासीत्यर्थः ॥३॥ अद्यैव निर्गत्य पुनरागमनान्नूनं न मे वचनं श्रोष्यतीति निश्चित्य रावण चापलेन सम्भावितानन्र्थानाह—अपीत्यादिना । अपिः सम्भावनायां काकुस्वरोपि द्रष्टव्यः । एवमुत्तरवाक्येष्वपि स्वरपर्यवसानेनार्थपरिच्छेदः कार्यः । रक्षसां सजातीयानाम् । स्वस्ति भवेदपि ! आर्षी षष्ठी । अकार्यनिवृत्त्यर्थं तातेति सम्बोधनम् ॥४॥५॥ ईश्वरं स्वामिनम् । कामवृत्तं यथेच्छव्यापारम् ।

॥१॥ सुलभा इति । सततं प्रियवादिनः तत्कालमधुरवाक्यवक्तारः पुरुषाः सुलभाः भवन्तीति शेषः । लोके केचिद्वञ्चकाः राजसमीपवर्तिनः राज्ञो भाविष्यदापदं ज्ञात्वापि तन्निवृत्त्युपायमकथयित्वा तत्कालप्रियवचनं कथयन्तीति भावः । किन्तु अप्रियस्य तत्काले अप्रियवत्प्रतीयमानस्य श्रवणकटुभूतस्येत्यर्थः । पथ्यस्य कालान्तरे पथ्यस्य, शुभोदर्कस्येत्यर्थः । वचनस्येति शेषः । वक्ता दुर्लभः तादृशो मन्त्री दुर्लभ इत्यर्थः । अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः । तस्मात् मयोक्तमिदानीं कर्णपरुषमपि शुभोदर्कं वचनं त्वया श्रोतव्यमिति भावः ॥ २ ॥ टीका—अयुक्तचारः अहितोपदेष्टृचारः ॥ ३ ॥ अन्यथा तवानर्थो भविष्यतीत्याशयेनाह—अपीति । रक्षसां स्वस्ति भवेदपि भवेत्किम् ? न भवेदेवेत्यर्थः । रामो लोकान् अराक्षसान् कुर्यादपि न कुर्यात्किम् ? कुर्यादेव ॥ ४ ॥ जनकात्मजा ते जीवितान्ताय नोत्पन्नापि किन्तु उत्पन्नैव । सीतानिमित्तं महद्व्यसनं न भवेदपि किम् ? भवेदेव ॥ ५ ॥ लङ्कापुरी त्वां प्राप्य न विनश्येदपि किम् ? विनश्येदेवेत्यर्थः ॥ ६ ॥ ७ ॥

निरङ्कुशम् अमर्यादम् ॥ ६ ॥ य इत्यध्याहार्यम् । पापं दुष्टं मन्त्रितं विचारो यस्य सः ॥ ७ ॥ पित्रा निरस्त इत्यादिना पूर्वं रावणोक्तदूषणानि परि-हरति–न चेत्यादिना । कौसल्यानन्दिवर्द्धन इति । आनन्दिरानन्दः " सर्वधातुभ्य इन् " इति इन् ॥ ८ ॥ ९ ॥ कैकेय्या वञ्चितं पितरं दृष्ट्वा तं सत्यवादिनं करिष्यामीति स्वयं प्रव्रजितः गतः । तातेति सान्त्वोक्तिः ॥ १० ॥ वनगमने हेत्वन्तरमाह–कैकेय्या इति । प्रियस्य कामः कामना स एवार्थो

त्वद्विधः कामवृत्तो हि दुःशीलः पापमन्त्रितः । आत्मानं स्वजनं राष्ट्रं स राजा हन्ति दुर्मतिः ॥ ७ ॥ नच पित्रा परित्यक्तो नामर्यादः कथञ्चन । न लुब्धो नच दुःशीलो नच क्षत्रियपांसनः ॥ ८ ॥ नच धर्मगुणैर्हीनः कौसल्यानन्दिवर्धनः । न तीक्ष्णो नच भूतानां सर्वेषामहिते रतः ॥ ९ ॥ वञ्चितं पितरं दृष्ट्वा कैकेय्या सत्यवादिनम् । करिष्यामीति धर्मात्मा तात प्रव्रजितो वनम् ॥ १० ॥ कैकेय्याः प्रियकामार्थं पितुर्दशरथस्य च । हित्वा राज्यं च भोगांश्च प्रविष्टो दण्डकावनम् ॥ ११ ॥ न रामः कर्कशस्तात नाविद्वान्नाजितेन्द्रियः । अनृतं दुःश्रुतं चैव नैव त्वं वक्तुमर्हसि ॥ १२ ॥ रामो विग्रहवान् धर्मः साधुः सत्यपराक्रमः । राजा सर्वस्य लोकस्य देवानां मघवानिव ॥ १३ ॥ कथं त्वं तस्य वैदेहीं रक्षितां स्वेन तेजसा । इच्छसि प्रसभं हर्तुं प्रभामिव विवस्वतः ॥ १४ ॥ शरार्चिषमनाधृष्यं चापखड्गेन्धनं रणे । रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्वमर्हसि ॥ १५ ॥ धनुर्व्यादितदीप्तास्यं शरार्चिषममर्षणम् । चापपाशधरं वीरं शत्रुसैन्यप्रहारिणम् ॥ १६ ॥

यस्मिन् कर्मणि ॥ ११ ॥ अनृतम् असत्यम् । दुःश्रुतं वैपरीत्येन श्रुतं च । भवान् वक्तुं नार्हसीत्यन्वयः ॥ १२ ॥ रामः विग्रहवान् मूर्तो धर्म एव । तत्र दोषसम्भावना कथञ्चिदपि न कार्येति भावः । यथा वासवो देवानां नायकस्तथा रामः सर्वेषां लोकानां नायक इत्यर्थः ॥ १३ ॥ स्वेन तेजसा पातिव्रत्य वैभवेन । प्रसभं बलात्कृत्य ॥ १४ ॥ शरार्चिषमिति शरपदं खड्गधाराया अप्युपलक्षणम् । चापखड्गेन्धनमिति रूपणात् । सहसा साहसेन ॥ १५ ॥ धनु

पूर्वं रामे रावणेनोक्तदूषणानि निराकरोति–न च पित्रेत्यादि ॥ ८ ॥ ९ ॥ सत्यवादिनं करिष्यामीति वनं प्रव्रजितः स्वयमेव गतः ॥ १० ॥ कैकेय्याः प्रियकामार्थं प्रियमनोरथपूरणार्थम् ॥ ११–१३ ॥ स्वेन तेजसा पातिव्रत्यवैभवादिना । शरार्चिषं शरा एवार्चींषि ज्वाला यस्य तम् । खड्गचापेन्धनं खड्गचापशब्देन तद्वन्तः शत्रवः कथ्यन्ते । अर्शआद्यच् । तथा खड्गचापधराः शत्रव एवेन्धनानि दाह्यवस्तूनि यस्य तम् तथोक्तम् ॥ १४ ॥ १५ ॥ धनुर्व्यादितदीप्तास्यं धनुरेव व्यादितं

रित्यादिश्लोकद्वयमेकान्वयम् । धनुरेव व्यादितदीप्तास्यं व्यादितं विवृतम् । अत्यासादयितुम् अत्यन्तमासन्नो भवितुम् ॥ १६ ॥ १७ ॥ जनकात्मजा यस्य यत्सम्बन्धिनी । तत्तेजः तस्य तेजः । अप्रमेयम् अपरिच्छेद्यम् । "श्रद्धया देवो देवत्वमश्नुते" इत्युक्तरीत्या सीतासम्बन्धेन रामस्यातिशय उक्तः । वने सावधानतया रक्षणीयप्रदेशे रामचापाश्रयामिति रामवैभवोक्तिः । उभयथापि न हर्तुं शक्येत्यर्थः । जनकात्मजेति कुलप्रभावादपि न हर्तुं शक्ये

राज्यं सुखं च सन्त्यज्य जीवितं चेष्टमात्मनः । नात्यासादयितुं तात रामान्तकमिहार्हसि ॥ १७ ॥ अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा । न त्वं समर्थस्तां हर्तुं रामचापाश्रयां वने ॥ १८ ॥ तस्य सा नरसिंहस्य सिंहोरस्कस्य भामिनी । प्राणेभ्योपि प्रियतरा भार्या नित्यमनुव्रता ॥ १९ ॥ न सा धर्षयितुं शक्या मैथिल्योजस्विनः प्रिया । दीप्तस्येव हुताशस्य शिखा सीता सुमध्यमा ॥ २० ॥ किमुद्यममिमं व्यर्थं कृत्वा ते राक्षसाधिप । दृष्टश्चेत्त्वं रणे तेन तदन्तं तव जीवितम् ॥२१॥ जीवितं च सुखं चैव राज्यं चैव सुदुर्लभम् । यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम् ॥ २२ ॥ स सर्वैः सचिवैः सार्द्धं विभीषणपुरोगमैः । मन्त्रयित्वा तु धर्मिष्ठैः कृत्वा निश्चयमात्मनः ॥२३॥ दोषाणां च गुणानां च सम्प्रधार्य बलाबलम् । आत्मनश्च बलं ज्ञात्वा राघवस्य च तत्त्वतः । हिताहितं विनिश्चित्य क्षमं त्वं कर्तुमर्हसि ॥२४॥ अहं तु मन्ये तव न क्षमं रणे समागमं कोसलराजसूनुना । इदं हि भूयः शृणु वाक्यमुत्तमं क्षमं च युक्तं च निशाचरेश्वर ॥२५॥ इत्यार्षे श्रीरा० आदि० श्रीमदारण्यकाण्डे सप्तत्रिंशः सर्गः ३७

त्यर्थः ॥ १८-२० ॥ किमिति । व्यर्थमिममुद्योगं कृत्वा ते किं किम् फलं प्राप्तव्यमित्यर्थः । तदन्तं दर्शनान्तम् ॥ २१ ॥ न केवलं जीवितं सुखादिकं च दुर्लभमित्याह–जीवितं चेति ॥ २२ ॥ स इत्यादि सार्धश्लोकद्वयमेकान्वयम् । स त्वमित्यन्वयः । क्षमं साधु ॥ २३ ॥ २४ ॥ अधुना स्वबुद्धिं दर्शयति–अहं त्विति । युक्तं युक्तिसहितम् ॥ २५ ॥ इति श्रीगोविन्द० श्रीरामायण० रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥

सर्वसंहाराय विवृतं दीप्तं ज्वालादीप्तमास्यं यस्य तम् । अमर्षणं क्रुद्धम् ॥ १६ ॥ आसादयितुं प्राप्तुम् । किं कृत्वा, राज्यादीनि संत्यज्येत्यर्थः ॥ १७-२० ॥ किमिति । व्यर्थमिममुद्यमं कृत्वा ते किम् न किमपि हितमित्यर्थः । तदन्तं तद्दर्शनावसानमित्यर्थः ॥२१॥ जीवितमित्यर्धं भिन्नं वाक्यम् ॥ २२-२५ ॥ इति श्रीमद्ईश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां सप्तत्रिंशः सर्गः ॥ ३७ ॥

आबाल्यसिद्धसहजशौर्यादिगुणशेवधिः। रघुनाथो महाप्रीत्या परिस्फुरतु सर्वतः॥ तद्गुणजातं न युक्त्या कल्पयित्वोच्यते किन्त्वनुभवसिद्धमित्याह—कदाचिदित्यादिना। सार्धश्लोकद्वयमेकान्वयम्। अहं व्यचरमित्यन्वयः। नागो गजः। भयजनने हेतुमाह—नीलेत्यादिना॥ १॥ २॥ विश्वामित्र इति। मदिति पञ्चमी॥ ३॥ पर्वकाले यज्ञसुत्याकाले॥ ४॥५॥ द्वादशवर्षः द्वादशवर्षवयस्कः। केचित्तु इदं रावणबिभीषयोक्तम् वस्तुत ऊनषोडशवर्ष इत्युक्त

कदाचिदप्यहं वीर्यात् पर्यटन् पृथिवीमिमाम्। बलं नागसहस्रस्य धारयन् पर्वतोपमः॥ १॥ नीलजीमूतसङ्काशस्तप्त काञ्चनकुण्डलः। भयं लोकस्य जनयन् किरीटी परिघायुधः। व्यचरं दण्डकारण्ये ऋषिमांसानि भक्षयन्॥ २॥ विश्वामित्रोथ धर्मात्मा मद्वित्रस्तो महामुनिः। स्वयं गत्वा दशरथं नरेन्द्रमिदमब्रवीत्॥ ३॥ अद्य रक्षतु मां रामः पर्वकाले, समाहितः। मारीचान्मे भयं घोरं समुत्पन्नं नरेश्वर॥ ४॥ इत्येवमुक्तो धर्मात्मा राजा दशरथस्तदा। प्रत्युवाच महाभागं विश्वामित्रं महामुनिम्॥ ५॥ बालो द्वादशवर्षोयमकृतास्त्रश्च राघवः। कामं तु मम यत्सैन्यं मया सह गमिष्यति॥ ६॥ बलेन चतुरङ्गेण स्वयमेत्य निशाचरान्। वधिष्यामि मुनिश्रेष्ठ शत्रूंस्ते मनसेप्सितान्॥ ७॥ इत्येवमुक्तः स मुनी राजानमिदमब्रवीत्। रामान्नान्यद्बलं लोके पर्याप्तं तस्य रक्षसः॥ ८॥ देवतानामपि भवा‌ः समरेष्वभिपालकः। आसीत्तव कृतं कर्म त्रिलोके विदितं नृप॥ ९॥ काममस्तु महत्सैन्यं तिष्ठत्विह परन्तप। बालोप्येष महातेजाः समर्थस्तस्य निग्रहे॥ १०॥ गमिष्ये राममादाय स्वस्ति तेऽस्तु परन्तप॥ ११॥

मित्यूचुः। कामं भृशम्। यत्सैन्यं तदित्यध्याहार्यम्॥ ६॥ ७॥ रामादन्यत् बलं सैन्यं तस्य न पर्याप्तं न समर्थम्। दशरथस्य कोपो मा भूदिति सान्त्वयति—देवतानामिति। आसीदिति। तव कृतं त्वया कृतं कर्म। त्रिलोके लोकत्रये। आर्षत्वान्न ङीप्। विदितं प्रसिद्धम्। यद्यपि महत्सैन्यमप्यस्तु तथापि

इदानीं मारीचः रावणदुर्बुद्धिनिवारणाय रामवैभवं वक्तुमुपक्रमते—कदाचिदिति॥ १॥ २॥ मद्वित्रस्तः मन्निमित्तं वित्रस्तः॥ ३॥ ४॥ पर्वकाले यागकाले॥ ५॥ अकृतास्त्रः अनभ्यस्तास्त्रः॥ टीका—बालो द्वादशवर्षोऽकृतास्त्रश्चेति रावणविभीषयोक्तम्॥ काममिति सैन्यं कर्तृ॥ ६–९॥ काममत्यन्तम्। महत्समर्थं सैन्यमस्तु तथापि तिष्ठतु।

तत्सर्वमिह तिष्ठतु, प्रकृतकार्यासामर्थ्यादिति भावः ॥ ८–१२ ॥ रामः चित्रं धनुः विस्फारयन् नयन् सन् । उपस्थितः रक्षणाय समीपं प्राप्तो बभूवे त्यर्थः ॥ १३ ॥ अजातेत्यादिश्लोकद्वयमेकान्वयम् । अजातव्यञ्जनः अनुत्पन्नयौवनलक्षणः । एकवस्त्रधरः ब्रह्मचर्यव्रते स्थित इत्यर्थः । शिखी कुलोचितशिखायुक्तः । व्रीह्यादित्वादिनिः । कनकमालयेत्युपलक्षणे तृतीया । शोभयन् मयूरकण्ठच्छायया व्याप्तं कुर्वन्नित्यर्थः । उदितचन्द्रौपम्येन

एवमुक्त्वा तु स मुनिस्तमादाय नृपात्मजम् । जगाम परमप्रीतो विश्वामित्रः स्वमाश्रमम् ॥ १२ ॥ तं तदा दण्डकारण्ये यज्ञमुद्दिश्य दीक्षितम् । बभूवोपस्थितो रामश्चित्रं विस्फारयन् धनुः ॥ १३ ॥ अजातव्यञ्जनः श्रीमान् पद्मपत्रनिभेक्षणः । एकवस्त्रधरो धन्वी शिखी कनकमालया ॥ १४ ॥ शोभयन् दण्डकारण्यं दीप्तेन स्वेन तेजसा । अदृश्यत ततो रामो बालचन्द्र इवोदितः ॥ १५ ॥ ततोऽहं मेघसङ्काशस्तप्तकाञ्चनकुण्डलः । बली दत्तवरो दर्पादाजगाम तदाश्रमम् ॥ १६ ॥ तेन दृष्टः प्रविष्टोऽहं सहसैवोद्यतायुधः । मां तु दृष्ट्वा धनुः सज्यमसम्भ्रान्तश्चकार सः ॥ १७ ॥ अवजानन्नहं मोहाद्बालोऽयमिति राघवम् । विश्वामित्रस्य तां वेदिमभ्यधावं कृतत्वरः ॥ १८ ॥ तेन मुक्तस्ततो बाणः शितः शत्रुनिबर्हणः । तेनाहं त्वाहतः क्षिप्तः समुद्रे शतयोजने ॥ १९ ॥

विरोधिनिरसनोद्युक्तत्वं गम्यते । शत्रोरपि विग्रहवर्णनमाकर्षकतया ॥ १४ ॥ १५ ॥ तनि०—श्रीमान् अनपायश्रीकः पद्मपत्रनिभेक्षणः रविकरविकसितपुण्डरीकदलायतेक्षणः । धन्वी बाल्योचितप्रशस्तधनुः ॥ १४ ॥ शोभयन्निति । स्वेन स्वासाधारणेन तेजसा दण्डकारण्यं शोभयन्निति मयूरग्रीवासदृशस्वकान्त्या श्यामारुणकान्तिं वर्धयन्नित्याचार्याः । तादृशतेजोवत्त्वेऽप्यनुद्वेगदायित्वमाह बालचन्द्र इति ॥ १५ ॥ तत इति । आजगामेत्युत्तमपुरुषः ॥ १६ ॥ १७ ॥ मोहात् अवजानन् तिरस्कुर्वन् ॥ १८ ॥ तेन रामेण । बाणो मुक्तः मयि क्षिप्त इत्यर्थः ॥ १९ ॥

तेनानुपयोगादिति भावः ॥ १०–१२ ॥ उपस्थितः तद्रक्षणार्थं समीपं प्राप्तः सन् ॥ १३ ॥ अजातव्यञ्जनः अनुत्पन्नश्मश्रुः । एकवस्त्रधरः ब्रह्मचर्ये स्थितः । शिखी काकपक्षधरः कनकमालया उपलक्षितः ॥ १४ ॥ १५ ॥ आजगामेत्युत्तमपुरुषरूपम् । आगतोऽस्मीत्यर्थः ॥ १६–१८ ॥ तेन रामेण, तेन बाणेन आहतोऽहं शतयोजन

टी०—धन्वी बाल्योचितधनुर्धरः । कनकमालया बाल्योचितव्याघ्रनखादिखचितकनकमालया उपलक्षितः ॥ १४ ॥ शोभयन्निति । स्वेन स्वासाधारणेन । दीप्तेन देदीप्यमानेन । दण्डकारण्यं शोभयन् । तादृशतेजस्वित्वेऽपि अनुद्वेगकारित्वमाह—बालचन्द्र इति ॥ १५ ॥

नेच्छता अनिच्छता । नशब्दस्य " सुप्सुपा " इति समासः । अनिच्छाहेतुर्न ज्ञायते स्वयं हन्तुं समर्थ एवेति भावः । अचेतनः निश्चेष्टः मूर्च्छितो वा ॥ २० ॥ २१ ॥ तनि०—नेच्छता अनिच्छता एतच्च रक्षणं केवलकृपामूलम् ॥ २० ॥ २१ ॥ निपातिताः हताः ॥ २२ ॥ २३ ॥ क्रीडा लीला, रतिः भोगः तयोर्विधिः क्रमः तज्ज्ञानां तत्र सक्तानामित्यर्थः । समाजः सभा । अनर्थं दुःखम् । सन्तापः तत्कार्यम् । आहरिष्यसि यत्नेन संपादयिष्यसि ॥२४॥

नेच्छता तात मां हन्तुं तदा वीरेण रक्षितः । रामस्य शरवेगेन निरस्तोऽहमचेतनः ॥२०॥ पातितोऽहं तदा तेन गम्भीरे सागराम्भसि । प्राप्य संज्ञां चिरात्तात लङ्कां प्रति गतः पुरीम् ॥ २१ ॥ एवमस्मि तदा मुक्तः सहायास्तु निपातिताः । अकृतास्त्रेण बालेन रामेणाक्लिष्टकर्मणा ॥ २२ ॥ तन्मया वार्यमाणस्त्वं यदि रामेण विग्रहम् । करिष्यस्यापदं घोरां क्षिप्रं प्राप्स्यसि रावण ॥ २३ ॥ क्रीडारतिविधिज्ञानां समाजोत्सवशालिनाम् । रक्षसां चैव सन्तापमनर्थं चाहरिष्यसि ॥ २४ ॥ हर्म्यप्रासादसम्बाधां नानारत्नविभूषिताम् । द्रक्ष्यसि त्वं पुरीं लङ्कां विनष्टां मैथिलीकृते ॥ २५ ॥ अकुर्वन्तोऽपि पापानि शुचयः पापसंश्रयात् । परपापैर्विनश्यन्ति मत्स्या नागह्रदे यथा ॥ २६ ॥ दिव्यचन्दनदिग्धाङ्गान् दिव्याभरणभूषितान् । द्रक्ष्यस्यभिहतान् भूमौ तव दोषात्तु राक्षसान् ॥ २७ ॥

हर्म्येति " हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् " इत्यमरः । सम्बाधां निबिडाम् रत्नविभूषितां गृहद्वारादौ ॥ २५ ॥ त्वद्दोषेण सकलराक्षसक्षयो भविष्यतीति दर्शयिष्यन् तदर्थमसत्सङ्गदोषन्यायारूढमुपवर्णयति—अकुर्वन्तोपीति । शुचयः परिशुद्धाः, अपापा इत्यर्थः । पापान्यकुर्वन्तोपि पापसंश्रयात् पापपुरुषसंसर्गात् परपापैर्विनश्यन्ति । यथा नागह्रदे सर्पह्रदे नागनिग्रहाय प्रवृत्तेन मत्स्या अपि तत्सहवासाद्धन्यन्ते तद्वदित्यर्थः ॥ २६ ॥ दिव्येति । तव दोषात्तु तव दोषादेव ॥ २७ ॥

पर्यन्ते समुद्रे क्षिप्तः॥१९॥ नेच्छता अनिच्छता,एतच्च रक्षणं केवलकृपामूलम् । निरस्तस्सन् अचेतनोस्मि॥ टी०—एवमिति । सहायाः सहायभूताः एते सर्वे रामेण निपातिताः॥२०—२३॥ क्रीडेति । आहरिष्यसि प्रयत्नेन सम्पादयिष्यसि ॥ २४॥२५ ॥ पापसंश्रयात् पापात्मसङ्गतेः । परपापैः परेषां पापात्मनां पापैर्निमित्तैः । नागह्रदे सर्पयुक्तह्रदे गरुडेन

हृतदारान् त्यक्तदारान् । अशरणान् रक्षकरहितान् ॥ २८ ॥ प्रदग्धभवनां प्रकर्षेण दग्धगृहाम् ॥ २९ ॥ एवं दृष्टदोषमुपपाद्यादृष्टदोषं दर्शयति– परदारेति । "परिग्रहः कलत्रे स्यात्" इति शाश्वतः । जात्यभिप्रायेणैकवचनम् । रामविप्रियं रामापराधम् ॥ ३०–३२ ॥ प्रसह्य बलात्कृत्य, मांमना

हृतदारान् सदारांश्च दश विद्रवतो दिशः । हतशेषानशरणान् द्रक्ष्यसि त्वं निशाचरान् ॥ २८ ॥ शरजालपरिक्षिप्तामग्निज्वालासमावृताम् । प्रदग्धभवनां लङ्कां द्रक्ष्यसि त्वं न संशयः ॥ २९ ॥ परदाराभिमर्शात्तु नान्यत् पापतरं महत् । प्रमदानां सहस्राणि तव राजन् परिग्रहः ॥ ३० ॥ भव स्वदारनिरतः स्वकुलं रक्ष राक्षस । मानमृद्धिं च राज्यं च जीवितं चेष्टमात्मनः ॥ ३१ ॥ * कलत्राणि च सौम्यानि मित्रवर्ग तथैव च । यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम् ॥ ३२ ॥ निवार्यमाणः सुहृदा मया भृशं प्रसह्य सीतां यदि धर्षयिष्यसि । गमिष्यसि क्षीणबलः सबान्धवो यमक्षयं रामशरात्तजीवितः ॥ ३३ ॥ इत्यार्षे श्रीरामा० वाल्मी० आदि० श्रीमदारण्यकाण्डे अष्टात्रिंशः सर्गः ॥ ३८ ॥

एवमस्मि तदा मुक्तः कथञ्चित्तेन संयुगे । इदानीमपि यद्वृत्तं तच्छृणुष्व निरुत्तरम् ॥ १ ॥
राक्षसाभ्यामहं द्वाभ्यामनिर्विण्णस्तथा कृतः । सहितो मृगरूपाभ्यां प्रविष्टो दण्डकावनम् ॥ २ ॥

हृत्येत्यर्थः । रामशरेण आत्तम् आकृष्टम्, नाशितमिति यावत् । तादृशं जीवितं यस्य सः ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने आरण्यकाण्डव्याख्याने अष्टात्रिंशः सर्गः ॥ ३८ ॥

अपराधविहीनेषु नापराधं करोति यः । दयालुं सर्वभूतेषु तमहं राममाश्रये ॥ एवमित्यादि । इदानीमपि प्रौढावस्थायामपि । यद्वृत्तं मद्विषयमभूत् तत् निरुत्तरं शृणुष्व मध्ये वाक्यविच्छेदाकरणेन शृण्वित्यर्थः । यदुत्तरमिति पाठे–यत्सर्वान्तोत्तरं तदतिरिक्तासाध्यं तदपि शृण्वित्यर्थः ॥ १ ॥ राक्षसाभ्या

नागनिग्रहसमये यथा मत्स्याश्च हन्यन्ते तद्वदित्यर्थः ॥ २६ ॥ २७ ॥ हृतदारान् परिहृतदारान्, त्यक्तदारानिति यावत् ॥ २८ ॥ २९ ॥ परिग्रहः जात्यभिप्रायेणैकवचनम् ॥ ३०–३३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां अष्टात्रिंशः सर्गः ॥ ३८ ॥ एवमिति । निरन्तरमिति पाठे मध्ये वाक्यविच्छेदाकरणेनेत्यर्थः ॥ १ ॥ अनिर्विण्णः तथाकृतः । पूर्वं रामेण प्राणसङ्कटं प्रापितोप्यहमनिर्विण्णः कृतः पुनरपि श्रीरामनिरसनविषयक

* सामात्याः सगणाश्च भविष्यन्ति शीघ्रवत् । आत्मनश्च दशग्रीव पुरस्यास्यःपुरस्य च ॥ रक्षसां च विनाशाय मैथिलीमानयिष्यसि । मा नाशय त्वं राज्यं च जीवितं चेष्टमात्मनः ॥ इत्यधिकः पाठः ।

मिति । तथाकृतः उक्तरीत्या प्राणसङ्कटं प्रापितोपि । अनिर्विण्णः निर्वेदरहितः, निर्वेदो निष्फलत्वधीः । अप्राप्ततद्विषयप्रवृत्तिवैराग्य इत्यर्थः ॥ २ ॥ दीप्तजिह्व इत्यादिविशेषणत्रयेण निरपेक्षहननसाधनभूयस्त्वं विवक्ष्यते ॥ ३–७ ॥ रामपराक्रमं जानन्नपि कथं तत्परिभवायोद्युक्त इत्यत्राह–तापसोऽय मिति । ज्ञात्वेति तापसत्वादहिंसापरेण भवितव्यमिति विश्वस्येत्यर्थः । एवंविधदुर्व्यापारप्रयोजकं वैरस्मरणम् अकृता अप्रवर्तिता प्रज्ञा बुद्धिर्यस्य

दीप्तजिह्वो महाकायस्तीक्ष्णदंष्ट्रो महाबलः । व्यचरं दण्डकारण्यं मांसभक्षो महामृगः ॥ ३ ॥ अग्निहोत्रेषु तीर्थेषु चैत्यवृक्षेषु रावण । अत्यन्तघोरो व्यचरं तापसान् सम्प्रधर्षयन् ॥४॥ निहत्य दण्डकारण्ये तापसान् धर्मचारिणः । रुधिराणि पिबंस्तेषां तथा मांसानि भक्षयन् ॥ ५ ॥ ऋषिमांसाशनः क्रूरस्त्रासयन् वनगोचरान् । तथा रुधिरमत्तोहं विचरन् धर्मदूषकः ॥ ६ ॥ आसादयं तदा रामं तापसं धर्मचारिणम् । वैदेहीं च महाभागां लक्ष्मणं च महारथम् ॥ ७ ॥ तापसं नियताहारं सर्वभूतहिते रतम् । सोहं वनगतं रामं परिभूय महाबलम् ॥८॥ तापसोऽयमिति ज्ञात्वा पूर्ववैरमनुस्मरन् । अभ्यधावं हि संक्रुद्धस्तीक्ष्णशृङ्गो मृगाकृतिः ॥९॥ जिघांसुरकृतप्रज्ञस्तं प्रहारमनुस्मरन् । तेन मुक्तास्त्रयो बाणाः शिताः शत्रुनिबर्हणाः । विकृष्य बलवच्चापं सुपर्णानिलनिस्वनाः ॥ १० ॥ ते बाणा वज्रसङ्काशाः सुमुक्ता रक्तभोजनाः । आजग्मुः सहिताः सर्वे त्रयः सन्नतपर्वणः ॥ ११ ॥ पराक्रमज्ञो रामस्य शरो दृष्टभयः पुरा । समुद्भ्रान्तस्ततो मुक्तस्तावुभौ राक्षसौ हतौ ॥ १२ ॥ शरेण मुक्तो रामस्य कथञ्चित्प्राप्य जीवितम् । इह प्रव्राजितो युक्तस्तापसोऽहं समाहितः ॥ १३ ॥

सः ॥ ८–१० ॥ सर्वे इति प्रयोगयौगपद्यार्थमुक्तम् । सन्नतपर्वणः सन्नतपर्वाणः ॥ ११ ॥ दृष्टं भयं येन कारणेन स दृष्टभयः । उद्भ्रान्तः पलाय्य गतः । मुक्त इति पलायितेषु रामशराप्रवृत्तेरिति भावः । रामस्येति पदं काकाक्षिन्यायात् पूर्वोत्तरपदयोरन्वेति । यतः मया रामस्य शरः पुरा दृष्टभयः ततः रामस्य पराक्रमज्ञोऽहं समुद्भ्रान्तः सन् मुक्तः । रामपराक्रमाज्ञौ तावुभौ राक्षसौ तु हतावित्यन्वयः ॥ १२ ॥ प्रव्राजितः कृतसकलदुर्वृत्तपरित्याग प्रवृत्तौ निष्फलत्वधीरहितः कृतः, पुनरपि श्रीरामनिरसनाय प्रवृत्तोहमिति यावत् । यद्वा तथाकृतः पूर्वं प्राणसङ्कटं प्रापितोपि अहमनिर्विण्णः अप्राप्तरामविषय प्रवृत्तिवैराग्यः ॥ २–६॥ टी०–तापसोयमिति ज्ञात्वा तापसवेषधार्ययं मां किं करिष्यतीति ज्ञात्वा ॥ ७–९ ॥ जिघांसुरिति । तं प्रहारं पूर्वप्रहारम् ॥ १० ॥ सन्नतपर्वेण इति प्रथमार्थे द्वितीया ॥ ११॥ १२ ॥

इत्यर्थः। युक्तः उचिताचरणः। तापसः तपोनिष्ठः। समाहितः नियतमनस्कः ॥१३॥ वृक्षेवृक्षे इति। "हृदयान्नापयातोसि दिक्षु सर्वासु दृश्यसे।" 'रामभूतं जगद्भूद्रामे राज्यं प्रशासति।" इत्यादाविव शोकरागभयादिजनितनिरन्तरसन्तन्यमानाचिन्तासक्तस्य साक्षात्कारोपपत्तिः। भयस्योत्तरोत्तरभूमिकाभिप्रायेण दर्शनस्याप्युत्तरोत्तरदशेत्यनुसन्धेयम् ॥ १४ ॥ तनि०--चीरकृष्णाजिनाम्बरमिति गृहीतधनुषमिति च शुभाश्रयसंशीलने पीताम्बरशङ्खचक्रादियोग इव

वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम्। गृहीतधनुषं रामं पाशहस्तमिवान्तकम् ॥१४॥ अपि रामसहस्राणि भीतः पश्यामि रावण। रामभूतमिदं सर्वमरण्यं प्रतिभाति मे ॥ १५ ॥ राममेव हि पश्यामि रहिते राक्षसाधिप। दृष्ट्वा स्वप्नगतं राममुद्भ्रमामि विचेतनः ॥१६॥ रकारादीनि नामानि रामत्रस्तस्य रावण। रत्नानि च रथाश्चैव त्रासं सञ्जनयन्ति मे ॥१७॥ अहं तस्य प्रभावज्ञो न युद्धं तेन ते क्षमम्। बलिं वा नमुचिं वापि हन्याद्धि रघुनन्दनः ॥ १८॥ रणे रामेण युद्ध्यस्व क्षमां वा कुरु राक्षस। न ते रामकथा कार्या यदि मां द्रष्टुमिच्छसि ॥ १९॥

ज्ञानालम्बनयोगो व्यज्यते ॥ १४ ॥ एकस्यैव रामस्य प्रतिवृक्षं गत्वा गत्वा दृश्यमानत्वमुच्यत इति भ्रमं वारयति--अपीति। न केवलं प्रतिवृक्षं किंतु सर्वत्र प्रदेश इत्याह रामभूतमिति ॥ १५ ॥ नेदं रामस्य मायाकृतमित्याह--राममेवेति। रहिते रामरहिते प्रदेशे। न केवलं जाग्रद्दशायामेव प्रतीतोयं किंतु स्वप्नदशायामपीत्याह दृष्ट्वेति। उद्भ्रमामि भ्रान्तं प्रलापं करोमीत्यर्थः ॥ १६ ॥ न केवलं दर्शनदशायां भीतिकार्यम् श्रवणदशायामपीत्याह--रकारादीनीति। कारप्रत्ययश्छान्दसः। रेफादीनि यानि रत्नादीनि नामानि तेषामाद्याक्षरोच्चारणे राममेवायमब्रवीदिति त्रासो जायते। द्वितीयाक्षरोच्चारणे शनैः स निवर्तत इति भावः ॥ १७॥ १८॥ यदि वैरनिर्यातनं कर्तुमिच्छसि तदा रामेण रणे युद्ध्यस्व। यद्वा क्षमां कुरु खरादिवधं सहस्व सर्वथा चौरव्यापारो न कर्तव्य इति भावः। हितं चाह न त इति। रामकथा रामप्रसङ्गोपि। ते त्वया न कार्या यदि मां द्रष्टुमिच्छसि जीवितुमिच्छसीत्यर्थः ॥ १९॥



प्रव्राजितः कृतसकलदुष्कृतपरित्याग इत्यर्थः ॥ १३-१५ ॥ रहिते रामरहिते वन इत्यर्थः ॥ १६ ॥ रकाराद्वीनि रेफादीनीति यावत्। टी०--कारप्रत्ययश्छान्दसः। तेषामाद्योच्चारणे राममेवायं ब्रवीतीति मन्त्रासो जायते तद्द्वितीयाक्षरोच्चारणे शनैः मन्त्रासोऽपगच्छतीति भावः ॥ १७ ॥ १८ ॥ रामकथा न कार्या न कथनीया, मत्पुरत इति शेषः ॥ १९ ॥

लोकन्यायमाह—बहव इति । युक्ताः सम्यगाचाराः धर्मम् अनुष्ठिताः अनुष्ठितवन्तः साधवोपि परेषामपराधेन विनष्टाः असत्संसर्गदोषेणेत्यर्थः ॥ २० ॥ सामान्यन्यायं स्वविषये दर्शयति—सोहमिति । सोहं साधुभूतोहम् । यत्ते क्षमं यत्त्वया कर्तुं शक्यं तत् त्वमेव कुरु । अहं त्वा त्वां नानुयामि अनर्थस्य निश्चितत्वादित्यर्थः ॥ २१ ॥ तत्र हेतुमाह—रामश्च हीति । हिः प्रसिद्धौ । अपिः कामचारकरणे । "अपिः सम्भावनाप्रश्नशङ्कागर्हासमुच्चये ।

बहवः साधवो लोके युक्ता धर्ममनुष्ठिताः । परेषामपराधेन विनष्टाः सपरिच्छदाः ॥ २० ॥ सोऽहं तवापराधेन विनश्येयं निशाचर । कुरु यत्ते क्षमं तत्त्वमहं त्वा नानुयामि ह ॥२१॥ रामश्च हि महातेजा महासत्त्वो महाबलः । अपि राक्षसलोकस्य न भवेदन्तकोपि सः ॥ २२ ॥ यदि शूर्पणखाहेतोर्जनस्थानगतः खरः । अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा ॥ २३ ॥ अत्र ब्रूहिं यथातत्त्वं को रामस्य व्यतिक्रमः ॥ २४ ॥ इदं वचो बन्धुहितार्थिना मया यथोच्यमानं यदि नाभिपत्स्यसे । सबान्धवस्त्यक्ष्यसि जीवितं रणे हतोद्य रामेण शरैरजिह्मगैः ॥ २५ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे एकोनचत्वारिंशः सर्गः * ॥ ३९ ॥

तथा युक्तपदार्थेषु कामचारप्रियासु च " इति विश्वः । द्वितीयोऽपिशब्दः अवधारणे ॥ २२ ॥ खरवधेन नाग्रहः कार्य इत्याह—यदीति । सीतापरिभवकरणेन शूर्पणखा विरूपिता खरश्चातिवृत्तो रामस्योपरि गत्वा प्रहारोद्युक्तो रामेण हतः अत्र रामस्य व्यतिक्रमः कः ? न कोपीत्यर्थः ॥२३॥२४॥ अवश्यं वक्तव्यमर्थं पुनर्निष्कृष्य दर्शयति—इदमिति । यथोच्यमानं परमार्थंत उच्यमानम् । नाभिपत्स्यसे नाङ्गीकरोषि ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

युक्ताः नियमितचित्ताः । सपरिच्छदाः सपरिवाराः ॥२०॥ क्षमं कुरु सीताहरणोपायं कुरु ॥२१॥ महातेजाः महापराक्रमः । महासत्त्वः महत् सत्त्वं बुद्धिबलं यस्य स महासत्त्वः । महाबलः महत् बलं शरीरबलं यस्य स महाबलः । एको हिशब्दः प्रसिद्धौ । अपरोऽवधारणे । राक्षसलोकस्यान्तको न भवेदपि हि अन्तको भवेदेवेत्यर्थः ॥ २२ ॥ अतिवृत्तः वृत्तमतिक्रान्तः शूर्पणखाहेतोः सीताहननप्रयत्नदोषविरहितशूर्पणखाहेतोः अतिवृत्तः शूर्पणखावाक्यश्रवणजनितरोषवशाद्रामहननार्थमुद्युक्तः खरः हतः ॥ २३ ॥ अत्र रामस्य को व्यतिक्रमः, न कोऽपीत्यर्थः ॥ २४ ॥ नाभिपत्स्यसे नाङ्गीकरिष्यसि ॥ २५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायाम् एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

* सर्गश्रवणफलम् । स्कान्दे—" मारीचोक्तिमुपश्रुत्य गुरुमान् भवति क्षितौ ॥ " इति ।

यस्य तत्त्वं समुद्दिष्टं माभिजानन्ति दुर्जनाः । तमहं शिरसा वन्दे रघुनाथं गुणार्णवम्॥ मारीचेन त्वित्यादि । क्षमं निवर्तनसमर्थम् । युक्तं कार्यम्॥१॥ पथ्यम् अनपायम् । हितं सुखावहम् । अयुक्तम् अयुक्तार्थम् ॥२॥ अयुक्तार्थं राजचित्तप्रतिकूलत्वादनुचितार्थम् । उप्तं निक्षिप्तम् ॥ ३ ॥ रामस्य संयुगे विषये मां भेत्तुं सीतापहरणोपायाद्युद्धे मां प्रवर्तयितुं त्वद्वाक्यैर्न शक्यम् । तत्र हेतुत्रयं पापेत्यादि । पापशीलत्वान्मूर्खत्वाद्विशेषतो मानुषत्वाच्च । तेन

मारीचेन तु तद्वाक्यं क्षमं युक्तं निशाचरः। उक्तो न प्रतिजग्राह मर्तुकाम इवौषधम् ॥१॥ तं पथ्यहितवक्तारं मारीचं राक्षसाधिपः। अब्रवीत्परुषं वाक्यमयुक्तं कालचोदितः ॥ २ ॥ यत्किलैतदयुक्तार्थं मारीच मयि कथ्यते । वाक्यं निष्फलमत्यर्थमुप्तं बीजमिवोषरे ॥३॥ त्वद्वाक्यैर्न तु मां शक्यं भेत्तुं रामस्य संयुगे। पापशीलस्य मूर्खस्य मानुषस्य विशेषतः ॥ ४ ॥ यस्त्यक्त्वा सुहृदो राज्यं मातरं पितरं तथा। स्त्रीवाक्यं प्राकृतं श्रुत्वा वनमेकपदे गतः ॥ ५ ॥ अवश्यं तु मया तस्य संयुगे खरघातिनः। प्राणैः प्रियतरा सीता हर्तव्या तव सन्निधौ ॥ ६ ॥

नाहं योद्धुमर्हः किन्तु तद्भार्यापहरणमेव तदपकाराय प्रतिक्रियेति भावः ॥ ४ ॥ मूर्खत्वमुपपादयति—यदिति । प्राकृतम् असारम् । स्त्रीवाक्यं कैकेयी वाक्यम् । एकपदे उत्तरक्षणे । प्राणैः प्राणेभ्यः । प्रियतरा तत्प्राणापहरणादपि वरं तत्स्त्रियोऽपहरणमिति भावः । तव सन्निधौ सति हर्तव्या त्वत्सन्निधि

मारीचेनेति । क्षमं निवर्तनसमर्थम् । युक्तं युक्तियुक्तम् न्याय्यं वा ॥ टी०—मर्तुकामः आसन्नमरणः ॥ १ ॥ पथ्यहितवक्तारं पथ्यम् अनपायम् । हितं सुखावहम् ॥ २ ॥ अयुक्तार्थं राजप्रतिकूलत्वादनुचितार्थम् ॥ ३ ॥ पापशीलत्वादिविशेषणयुक्तस्य रामस्य पौरुषमिति शेषः । त्वद्वाक्यैरेव भेत्तुं मया न शक्यमिति काकुः ॥ टी०—संयुगे रामस्य पौरुषं मया भेत्तुं शक्यमेवेत्यर्थः ॥ ४ ॥ प्राकृतमसारं स्त्रीवाक्यं कैकेयीवाक्यम् । एकपदे एकपादविन्यासेनैव अतित्वरया गत इत्यर्थः । प्राणैः प्राणेभ्यः । मारीचेनेत्यादेः हर्तव्या तव सन्निधावित्यन्तस्य ग्रन्थस्य वास्तवार्थेऽयमर्थः—तद्वाक्यं सीतां नाहरेति वाक्यं न जग्राह तं प्रति परुषवाक्यं चाब्रवीत् । तदेवाह यदिति । हे मारीच ! मयि सीताहरणकाम इत्यर्थः । अयुक्तार्थमयोग्यार्थं वाक्यं निष्फलम् । इदं चेद्युक्तमित्याह त्वदिति । मानुषस्य मूर्खस्य विशेषतः पाप शीलस्य । द्वितीयार्थे षष्ठी । भेत्तुं शक्यम् । रामस्य रामं तु मया भेत्तुं न शक्यमिति यदुक्तं त्वद्वाक्यैस्तत्सत्यमेवेत्यर्थः । किन्तु य इति । यः परमकरुणाशालितया

मुखेन हर्तव्येत्यर्थः ॥ ५ ॥ ६ ॥ निश्चिता निश्चयरूपा । सेन्द्रैः किं पुनस्त्वयेति भावः ॥ ७ ॥ अपि चापृष्टोत्तरप्रलापस्तवासङ्गत इत्याह–दोषमिति कार्यनिश्चये विषये कौ गुणदोषौ तत्साधने कावुपायाविति पृष्टश्चेदुत्तरं वक्तुमर्हसि । नास्माकं तज्जिज्ञासा ततो नैवं वक्तुं युक्तमित्यर्थः ॥ ८ ॥ प्रसङ्गाद्राजसन्निधौ विज्ञापनप्रक्रियां दर्शयति–सम्पृष्टेनेत्यादिना । विपश्चिता विदुषा । राजसेवाप्रकारज्ञेनेति यावत् । भूतिम् ऐश्वर्यम् ॥ ९ ॥ एवं वक्तृगुणा

एवं मे निश्चिता बुद्धिर्हृदि मारीच वर्तते । न व्यावर्तयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ७ ॥ दोषं गुणं वा सम्पृष्टस्त्वमेवं वक्तुमर्हसि । अपायं वाप्युपायं वा कार्यस्यास्य विनिश्चये ॥८॥ सम्पृष्टेन तु वक्तव्यं सचिवेन विपश्चिता । उद्यताञ्जलिना राज्ञे य इच्छेद्भूतिमात्मनः ॥ ९ ॥ वाक्यमप्रतिकूलं तु मृदुपूर्वं हितं शुभम् । उपचारेण युक्तं च वक्तव्यो वसुधाधिपः ॥ १० ॥ सावमर्दं तु यद्वाक्यं मारीच हितमुच्यते । नाभिनन्दति तद्राजा मानार्हो मानवर्जितम् ॥ ११ ॥ पञ्च रूपाणि राजानो धारयन्त्यमितौजसः । अग्नेरिन्द्रस्य सोमस्य वरुणस्य यमस्य च ॥ १२ ॥ औष्ण्यं तथा विक्रमं च सौम्यं दण्डं प्रसन्नताम् । धारयन्ति महात्मानो राजानः क्षणदाचर । तस्मात्सर्वास्ववस्थासु मान्याः पूज्याश्च पार्थिवाः ॥ १३ ॥

उक्ताः, अथ वचनप्रकारमाह–वाक्यमिति । उपचारेण युक्तं बहुमानेन पुरस्कृतम्, हितमप्युपचारपूर्वं वक्तव्यमित्यर्थः ॥ १० ॥ प्रकारान्तरेण न वक्तव्यमित्याह–सावमर्दमिति । सावमर्दं तिरस्कारसहितम् ॥ ११ ॥ पञ्च रूपाणि अग्न्यादिपञ्चकस्य यानि रूपाणि तानि धारयन्तीत्यर्थः ॥ १२ ॥ तान्येवाह–औष्ण्यमिति । औष्ण्यं तैक्ष्ण्यम् । सौम्यम् आह्लादकरत्वम् । दण्डं दुष्टनिग्रहम् । मान्याः मनसा पूज्याः । पूज्याः वाचा बहुमन्तव्याः ॥ १३ ॥

प्राकृतस्त्रीवाक्यमपि श्रुत्वा राज्यादिकं त्यक्त्वा वनं गतः तस्य सीता भार्या त्ववश्यं मया आहर्तव्येति सम्बन्धः । सीताहरणाभावे स्वस्य रामहस्तान्मरणं न भविष्यतीति हृद्गतम् ॥ ५–७ ॥ कार्यस्य विनिश्चये विषये दोषं गुणं वा अपायं वा उपायं वा संपृष्टस्त्वेवम् उत्तरं वक्तुमर्हसि नास्माकं तज्जिज्ञासा अतो नैवं वक्तुं सुयुक्तमित्यर्थः ॥ ८ ॥ ९ ॥ उपचारेण युक्तं बहुमानपुरस्सरम् ॥ १० ॥ मानवर्जितं सम्मानशून्यम्, प्रत्युत सावमर्दं तिरस्कारसहितम् ॥ ११ ॥ रूपाणि अंशान् । अग्नेरौष्ण्यं सौम्यं शिशिरत्वं प्रकृते दयार्द्रचित्तत्वमित्यर्थः । दण्डं दुष्टनिग्रहकारित्वम् ॥ १२ ॥ १३ ॥

सामान्यत उक्तमर्थं प्रकृतं सङ्गमयति—त्वं त्विति । धर्मं राजधर्मम् । मोहम् अज्ञानम् । दौरात्म्यात् दौर्जन्यात् ॥१४॥ तर्हि कथं मया वक्तव्यमित्यत्राह—गुणेति । गुणदोषौ आत्मनि क्षेमं च न पृच्छामि किन्तु सम्प्रति मया तव तुभ्यं मयोक्तमेतावत् ॥ १५ ॥ किन्तदित्यत्राह—अस्मिन्निति । कृत्ये कार्ये ।

त्वं तु धर्ममविज्ञाय केवलं मोहमास्थितः । अभ्यागतं मां दौरात्म्यात् परुषं वक्तुमिच्छसि ॥ १४ ॥ गुणदोषौ न पृच्छामि क्षमं चात्मनि राक्षस । मयोक्तं तव चैतावत्सम्प्रत्यमितविक्रम ॥१५॥ अस्मिंस्तु त्वं महाकृत्ये साहाय्यं कर्तुमर्हसि । शृणु तत्कर्म साहाय्ये यत्कार्यं वचनान्मम ॥ १६ ॥ सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः । आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ॥ १७ ॥ प्रलोभयित्वा वैदेहीं यथेष्टं गन्तुमर्हसि ॥१८॥ त्वां तु माया मृगं दृष्ट्वा काञ्चनं जातविस्मया । आनयैनमिति क्षिप्रं रामं वक्ष्यति मैथिली ॥ १९ ॥ अपक्रान्ते तु काकुत्स्थे दूरं यात्वा व्युदाहर । हा सीते लक्ष्मणेत्येवं रामवाक्यानुरूपकम्॥२०॥ तच्छ्रुत्वा रामपदवीं सीतया च प्रचोदितः । अनु गच्छति सम्भ्रान्तः सौमित्रिरपि सौहृदात् ॥ २१ ॥ अपक्रान्ते च काकुत्स्थे लक्ष्मणे च यथासुखम् । आनयिष्यामि वैदेहीं सहस्राक्षः शचीमिव ॥ २२ ॥ एवं कृत्वा त्विदं कार्यं यथेष्टं गच्छ राक्षस । राज्यस्यार्धं प्रयच्छामि मारीच तव सुव्रत ॥२३॥ गच्छ सौम्य शिवं मार्गं कार्यस्यास्य विवृद्धये । अहं त्वाऽनुगमिष्यामि सरथो दण्डकावनम् ॥२४॥

शृण्विति साहाय्ये करणीये यत्कार्यं तद्वचनं तद्विषयवचनं शृणु ॥ १६ ॥ प्रमुखे अग्रे ॥ १७ ॥ १८ ॥ किं तस्य प्रयोजनं तत्राह—त्वामिति॥ १९ ॥ अपक्रान्त इति अनुरूपकम् । स्वार्थे कप्रत्ययः ॥२०॥ पदवीं मार्गम् ॥२१॥ अपक्रान्त इति । यथासुखं यत्नं विना ॥२२॥२३॥ मार्गं मृगसम्बन्धिरूपम् ।

धर्मं राजधर्मम् ॥१४॥ गुणदोषौ आत्मनि च कार्याकार्येक्षमं युक्तं वा त्वां न पृच्छामि किन्तु एतावदेव मयोक्तम्॥१५॥ तत्किमत आह—अस्मिन्निति । अस्मिन् कार्ये विषये भवत्कृत्यं साहाय्यमेव न त्वात्मनि गुणदोषचिन्तनम् अतस्त्वं साहाय्यं कर्तुमर्हसीति सम्बन्धः। साहाय्ये मम वचनात् यत्कर्म कार्यं तच्छृण्विति सम्बन्धः॥ १६—२३॥ शिवं

शिवं मनोहरम् । गच्छ प्राप्नुहि ॥ २४ ॥ २५ ॥ बलादपि करिष्यसि अनिच्छतापि त्वया सर्वथा अहमेतत्कार्यं कारयिष्यामीत्यर्थः । विपक्षे बाधकमाह—राज्ञ इति ॥ २६ ॥ कार्यकरणाकरणयोर्गुणदोषौ दर्शयति—आसाद्येति । तं रामम् । आसाद्य मृगरूपेण प्राप्य । जीवितस्य संशयः दैवाज्जीवितं लभ्येतापि, मद्विरोधे तु जीवितहानिरेव स्यात् । प्रतिगृह्य निश्चित्य । अत्र कार्यद्वये । यत्ते पथ्यं तत्कुरु, मदुक्ताकरणे अवश्यं हननमित्यर्थः ॥२७॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

प्राप्य सीतामयुद्धेन वञ्चयित्वा तु राघवम् । लङ्कां प्रति गमिष्यामि कृतकार्यः सह त्वया ॥ २५ ॥ न चेत् करोषि मारीच हन्मि त्वामहमद्य वै । एतत्कार्यमवश्यं मे बलादपि करिष्यसि । राज्ञो हि प्रतिकूलस्थो न जातु सुखमेधते ॥ २६ ॥ आसाद्य तं जीवितसंशयस्ते मृत्युर्ध्रुवो ह्यद्य मया विरुद्ध्य । एतद्यथावत्प्रतिगृह्य बुद्ध्या यदत्र पथ्यं कुरु तत्तथा त्वम् ॥ २७॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

आज्ञप्तोऽराजवद्वाक्यं प्रतिकूलं निशाचरः । अब्रवीत् परुषं वाक्यं मारीचो राक्षसाधिपम् ॥ १ ॥
केनायमुपदिष्टस्ते विनाशः पापकर्मणा । सपुत्रस्य सराष्ट्रस्य सामात्यस्य निशाचर ॥ २ ॥

येन सर्वात्मना वर्ज्यं प्रातिकूल्यं हितैषिणाम् । सर्वलोकानुकूलं तमाश्रये रघुनायकम् ॥ आज्ञप्त इत्यादि । अराजवत् यदा रामप्रातिकूल्ये प्रवृत्तस्तदैव राजत्वं गतमिति मुनेराशयः । यद्वा राजवत् राजार्हं "तदर्हम्" इत्यर्हार्थे वतिः । यद्वा राजवदिति पूर्वसर्गोक्तमौद्धत्यं लक्ष्यते । वाक्यं वाक्यार्थानुष्ठानं मृगरूपमासाद्य त्वया गन्तव्यमित्येवंरूपं प्रतीत्यर्थः । यद्वा प्रतिकूलं वाक्यम् आज्ञप्तः चोदितः उक्त इत्यर्थः ॥ १ ॥ विनाशः विनाशोपायः ॥ २ ॥

मनोहरम् । मार्गं मृगरूपम्, गच्छ प्राप्नुहि ॥ २४ ॥ २५ ॥ बलादपि करिष्यसि अनिच्छतापि त्वया सर्वथा अहमेतत्कार्यं कारयिष्यामीत्यर्थः । विपक्षे बाधकमाह—राज्ञ इति ॥ २६ ॥ तं राममासाद्य मृगरूपेण प्राप्य । जीवितसंशयः तव जीवितस्य संशयः । हानिलाभौ सन्दिग्धौ पक्षे जीवितलाभोऽपि सम्भाव्यते, मद्विरोधे तु जीवितहानिर्निश्चितैव । अतस्त्वं बुद्ध्या निश्चित्य यद्युक्तं तत्कुरुष्व ॥ २७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां चत्वारिंशः सर्गः ॥ ४० ॥ आज्ञप्त इति । राजवद्राजार्हम् । वाक्यं वाक्यानुष्ठानम् । रामलक्ष्मणावपवाह्य त्वयेत्थं करणीयमित्येवंरूपं प्रतीत्यर्थः । रावणेनाज्ञप्तमारीचः तस्य प्रतिकूलं वाक्यमब्रवीदिति सम्बन्धः । यद्वा राजवदितिशब्देन पूर्वसर्गोक्तं रावणगतमौद्धत्यं लक्ष्यते । तदस्मिन्वाक्ये प्रवर्त

सुखिना त्वया, अवस्थानमिति शेषः । मृत्युद्वारं मृत्युद्वारतुल्यमिदं कार्यम् । उपायतः व्याजेन ॥ ३ ॥ बलीयसा रामेण । उपरुद्धम् आक्रान्तम् । अत एव विनश्यन्तं त्वामिच्छन्ति त्वद्विनाशं रामविरोधमुखेनेच्छन्तीत्यर्थः ॥ ४ ॥ न केवलं शत्रवः तत्रापि क्षुद्रा एवेदं कार्यमिच्छन्तीत्याह—केनेति । स्वकृतेन त्वत्कृताकृत्येन ॥ ५ ॥ ये उत्पथं लोकशास्त्रविरुद्धमार्गम् । आरूढं प्रविष्टं त्वां न निगृह्णन्ति तस्मान्मार्गान्न निवर्तयन्ति ते सचिवाः वध्याः

कस्त्वया सुखिना राजन्नाभिनन्दति पापकृत् । केनेदमुपदिष्टं ते मृत्युद्वारमुपायतः ॥ ३ ॥ शत्रवस्तव सुव्यक्तं हीन वीर्या निशाचराः । इच्छन्ति त्वां विनश्यन्तमुपरुद्धं बलीयसा ॥ ४ ॥ केनेदमुपदिष्टं ते क्षुद्रेणाहितवादिना । यस्त्वा मिच्छति नश्यन्तं स्वकृतेन निशाचर ॥ ५ ॥ वध्याः खलु न हन्यन्ते सचिवास्तव रावण । ये त्वामुत्पथमारूढं न निगृह्णन्ति सर्वशः ॥ ६ ॥ अमात्यैः कामवृत्तो हि राजा कापथमाश्रितः । निग्राह्यः सर्वथा सद्भिर्न निग्राह्यो निगृह्यसे ॥ ७ ॥ धर्ममर्थं च कामं च यशश्च जयतां वर । स्वामिप्रसादात् सचिवाः प्राप्नुवन्ति निशाचर ॥ ८ ॥ विपर्यये तु तत्सर्वं व्यर्थं भवति रावण । व्यसनं स्वामिवैगुण्यात् प्राप्नुवन्तीतरे जनाः ॥ ९ ॥

वधार्हाः ॥ ६ ॥ एतदुपयुक्तत्वेन सचिवकर्तव्यं दर्शयन् प्रकृते तदभावं चतुर्थपादेनाह—अमात्यैरिति । कापथं कुमार्गम् । निग्राह्यः निवर्तनीयः ॥ ७ ॥ स्वामिप्रसादात् स्वामिनः प्रसन्नभावात्, स्वामिसाद्गुण्यादित्यर्थः ॥८॥ विपर्यये स्वामिवैगुण्ये । स्वामिवैगुण्यान्न केवलममात्या एव नश्यन्ति किन्तु तादि

कत्वेनास्तीति राजवदिति योज्यम् । यद्वा राजवत् राजेव । वाक्यं वाक्यानुष्ठानम् । मृगरूपमाश्रित्य रामलक्ष्मणावपवाह्य त्वया यथेष्टं गन्तव्यमित्येवंरूपं प्रतिकूलं रावणेनाज्ञप्तश्चोदितो निशाचरः परुषं वाक्यमब्रवीत् ॥१॥२॥ त्वया सुखिना सता कः पापकृन्नाभिनन्दति । केन पापकारिणा उपायतः उपायेन अयमुपदिष्टः विनाश इत्यनुषज्यते । स एव मृत्युद्वारम् ॥ ३ ॥ हीनवीर्याः तव शत्रवः त्वां बलीयांसम् । बलीयसा त्वत्तो बलवत्तरेण उपरुद्धं विनश्यन्तमिच्छन्ति, इदमाश्चर्यमिति शेषः ॥ ४ ॥ इदं सीताहरणम् । स्वकृतेन स्वनिर्मितविनाशोपायेनेत्यर्थः ॥५॥ उत्पथं शास्त्रविरुद्धम् । आरूढमापन्नं त्वां न निगृह्णन्ति न निवारयन्ति । सर्वशः सर्वोपायैः ते सचिवा वध्या इति सम्बन्धः ॥ ६ ॥ निग्राह्यः निवर्तनीयः । न निगृह्यसे न निवार्यसे ॥ ७ ॥ स्वामिप्रसादात् स्वामिनः प्रसन्नभावात् । विपर्यये स्वाम्यनुग्रहाभावे । स्वामिवैगुण्यात् स्वाम्युत्पथप्रवृत्तेः स्व[illegible]  [illegible] प्राप्नुवन्ति किन्तु इतरजना अपीत्यर्थः ॥ ८ ॥ ९ ॥

तरोपि जना इत्याह—व्यसनमिति ॥ ९ ॥ उक्तमर्थमुपसंहरति—तस्मादिति ॥१०॥ तीक्ष्णेन क्रूरदण्डेन । प्रतिकूलेन प्रजाविरुद्धेन । अविनीतेन इन्द्रियजय रहितेन । "विनयो हीन्द्रियजयः" इति कामन्दकः ॥११॥ तीक्ष्णमन्त्राः तीक्ष्णोपायप्रयोक्तारः । तेन स्वमन्त्रग्राहिणा राज्ञा सह । विषमे निम्नोन्नतप्रदेशे । शीघ्रगास्तुरगाः मन्दसारथयः अपटुसारथयः सन्तः । यथा सारथिना सह नश्यन्ति तथेत्यर्थः ॥ १२ ॥उत्तरश्लोके वक्ष्यमाणस्य सामान्यन्यायं दर्शयति—

राजमूलो हि धर्मश्च जयश्च जयतां वर । तस्मात्सर्वास्ववस्थासु रक्षितव्या नराधिपाः ॥ १० ॥ राज्यं पालयितुं शक्यं न तीक्ष्णेन निशाचर । न चापि प्रतिकूलेन नाविनीतेन राक्षस ॥ ११ ॥ ये तीक्ष्णमन्त्राः सचिवा भज्यन्ते सह तेन वै । विषमे तुरगाः शीघ्रा मन्दसारथयो यथा ॥ १२ ॥ बहवः साधवो लोके युक्ता धर्ममनुष्ठिताः । परेषा मपराधेन विनष्टाः सपरिच्छदाः ॥ १३ ॥ स्वामिना प्रतिकूलेन प्रजास्तीक्ष्णेन रावण । रक्ष्यमाणा न वर्धन्ते मेषा गोमायुना यथा ॥ १४ ॥ अवश्यं विनशिष्यन्ति सर्वे रावण राक्षसाः । येषां त्वं कर्कशो राजा दुर्बुद्धिरजिते न्द्रियः ॥ १५ ॥ तदिदं काकतालीयं घोरमासादितं मया । अत्रैव शोचनीयस्त्वं ससैन्यो विनशिष्यसि ॥ १६ ॥

बहव इति । साधवो धर्मज्ञाः । युक्ताः नीतिमार्गनिष्ठाः । धर्मम् अनुष्ठिताः अनुष्ठितवन्तः । "गत्यर्थाकर्मक—" इत्यादिना कर्तरि क्तः । सपरिच्छदाः सपरिवाराः ॥१३॥ गोमायुना क्रोष्ट्रा । स हि मेषघातुक इति प्रसिद्धिः ॥१४॥ कर्कशः क्रूरबुद्धिः ॥१५॥ काकतालीयं याहच्छिकम् । घोरं भयंकरमिदं कृत्यम् मया आसादितं ततो नाहं शोच्यः, नहि प्रमादविपन्नः शोच्य इति भावः । यद्वा ससैन्यस्त्वं विनशिष्यसीत्यत्रैव कृत्ये त्वं मे शोचनीयः बुद्धिपूर्वकारी त्वमेव हि शोच्य इति भावः । यद्वा ससैन्यो विनशिष्यसीति यत् तदिदं काकतालीयं घोरं कार्यं त्वया आसादितम् । अत्रैव मया त्वं शोचनीयः । हन्त दैवान्महा

उक्तमर्थं निगमयति-तस्मादिति ॥१०॥ तीक्ष्णेन क्रूरदण्डेन । प्रतिकूलेन सर्वजनविरुद्धेन ॥११॥ तीक्ष्णमन्त्राः तीक्ष्णोपायाः । तेन सह मन्त्रग्राहिणा राज्ञा सह । मन्दसारथयः अकुशलसारथयः । विषमे निम्नोन्नतदेशे ॥१२॥ साधवः धर्मज्ञाः । युक्ता नीतिमार्गनिष्ठाः । धर्ममनुष्ठिताः अनुष्ठितवन्तः । सपरिच्छदाः सपरिजनाः ॥१३॥ तीक्ष्णेन तीक्ष्णदण्डेन स्वामिना रक्ष्यमाणाः प्रजाः न वर्द्धन्ते । गोमायुना मृगघातकमृगेण ॥ १४ ॥ कर्कशः क्रूरबुद्धिः ॥ १५ ॥ काकतालीयं याहच्छिकं तदिदं घोरं रामकर्तृकवधरूपं मया आसादितं प्राप्तम् । अत्र स्वहननविषये किं किञ्चिदपि न विचारणीयमिति शेषः । किन्तु त्वमेव शोचनीयः । कुतः ? यतः ससैन्यो विनशिष्यसि । अयं भावः—अहमेक एव याहच्छिकेन निपातेन विनशिष्यामि अतो नाहं शोच्यः प्रमादविपन्नाः शोच्यन्ते त्वन्तु बुद्धिपूर्वमकार्यं कुर्वन् सबन्धुपरिवारो

ननर्थो राज्ञ उपस्थित इति शोचामीत्यर्थः ॥ १६ ॥ त्वयि विद्यमाने मम का हानिरित्यत्राह–मामिति । नचिरात् क्षणेनैव । अहं न शोचनीय इत्यत्र हेतु माह–अनेनेति । तवारिणा रामेण हतो म्रिये इति यत् अनेन हेतुना कृतकृत्योस्मि । विश्वामित्रयागसंरक्षणप्रभृतिखरादिवधान्तातिमानुपचारित्रानुस्मृति कृतासाधारणमहिमस्फूर्त्या राघवं परमपुरुषं निश्चितवतो मम तत्करप्रापितमरणस्य परमपुरुपार्थत्वादिति भावः । तथोक्तं नृसिंहपुराणे–"रामादपि

मां निहत्य तु रामश्च नचिरात्त्वां वधिष्यति । अनेन कृतकृत्योस्मि म्रिये यदरिणा हतः ॥ १७ ॥ दर्शनादेव रामस्य हतं मामुपधारय । आत्मानं च हतं विद्धि हत्वा सीतां सबान्धवम् ॥ १८ ॥ आनयिष्यसि चेत् सीता माश्रमात् सहितो मया। नैव त्वमसि नाहं च नैव लङ्का न राक्षसाः ॥ १९॥ निवार्यमाणस्तु मया हितैषिणा न मृष्यसे वाक्यमिदं निशाचर । परेतकल्पा हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

हि मर्तव्यं मर्तव्यं रावणादपि । उभयोरपि मर्तव्ये वरं रामान्न रावणात् ॥" इति। यद्वा त्वत्तो निरुपाधिकवधाच्छत्रुहस्ताद्वधो निःश्रेयसकर इति भावः ॥१७–१९॥ उक्तमर्थं न्यायप्रदर्शनेन प्रतिपादयति–निवार्यमाण इति । द्विर्हितौ । यस्मात् गतायुषो नराः हितं न गृह्णन्ति तस्माद्वाक्यमिदं न मृष्यसे न सहसे, गतायुष्कत्वाद्धितं न गृह्णासीत्यर्थः । परेतकल्पाः आसन्नमरणाः । ईषदसमाप्तौ कल्पप्प्रत्ययः ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामा यणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

विनशिष्यसि अतस्त्वमेव शोचनीय इति ॥ १६ ॥ नचिरात् क्षणेनैव तवारिणा श्रीरामेण हतोहं म्रियेयम् अनेन हेतुना कृतकृत्योस्मि, विश्वामित्रयागसंरक्षण मारभ्य खरादिवधान्तममानुषश्रीरामचरितमनुस्मृत्यासाधारणमहिमस्फूर्त्या रघुपुङ्गवे परमपुरुषत्वमभिसन्धाय तत्करप्रापितमरणस्य परमपुरुषार्थत्वादिति भावः । तथाहि नारसिंहपुराणे–" रामादपि च मर्त्तव्यं मर्त्तव्यं रावणादपि । उभाभ्यामपि मर्तव्ये वरं रामान्न रावणात् ॥ " इति ॥ १७–१९ ॥ परेतकल्पाः आसन्नमरणाः । गतायुषः क्षीणायुषः । अतो गतायुष्यस्त्वमपि हितं न गृह्णासि ॥२०॥ इति श्रीमहेश्वरतीर्थविर० श्रीरामायण० आरण्यकाण्डव्याख्यायामेकचत्वारिंशः सर्गः ॥४१॥

क्षणं क्षणार्धमपि वा वियोगो यस्य दुःखदः । तमहं शिरसा वन्दे जानकीप्राणवल्लभम् ॥ एवमित्यादि । भयात् रावणादधुनैव वधो भविष्यतीति भयात् ॥ १ ॥ दीन इत्युक्तं दौस्थ्यमुपपादयति—दृष्ट इत्यादिना । यद्यहं तेन दृष्टः तदा मे जीवितं विनष्टमित्यन्वयः ॥ २ ॥ यमदण्डहतस्य ते प्रतिरूपः सदृशः असौ जनो वर्तते त्वमिवाहमपि यमदण्डहत इत्यर्थः ॥ ३ ॥ ४ ॥ सुसंश्लिष्टं दृढम् ॥ ५ ॥ शौण्डीर्यं वीरत्वम् । "कृशृपृकटिपटिशौण्डिभ्य

एवमुक्त्वा तु वचनं मारीचो रावणं ततः । गच्छावेत्यब्रवीद्दीनो भयाद्रात्रिंचरप्रभोः ॥ १ ॥ दृष्टश्चाहं पुनस्तेन शर चापासिधारिणा । मद्वधोद्यतशस्त्रेण विनष्टं जीवितं च मे ॥ २ ॥ नहि रामं पराक्रम्य जीवन् प्रतिनिवर्तते । वर्तते प्रतिरूपोऽसौ यमदण्डहतस्य ते ॥ ३ ॥ किंतु शक्यं मया कर्तुमेवं त्वयि दुरात्मनि । एष गच्छाम्यहं तात स्वस्ति तेऽस्तु निशाचर ॥४॥ प्रहृष्टस्त्वभवत्तेन वचनेन स रावणः । परिष्वज्य सुसंश्लिष्टमिदं वचनमब्रवीत् ॥ ५ ॥ एतच्छौण्डीर्ययुक्तं ते मच्छन्दादिव भाषितम् । इदानीमसि मारीचः पूर्वमन्यो निशाचरः ॥ ६ ॥ आरुह्यतामयं शीघ्रं रथो रत्नविभूषितः । मया सह तथा युक्तः पिशाचवदनैः खरैः ॥ ७ ॥ प्रलोभयित्वा वैदेहीं यथेष्टं गन्तुमर्हसि । तां शून्ये प्रसभं सीतामानयिष्यामि मैथिलीम् ॥ ८ ॥ ततो रावणमारीचौ विमानमिव तं रथम् । आरुह्य ययतुः शीघ्रं तस्मादाश्रममण्डलात् ॥९॥ तथैव तत्र पश्यन्तौ पत्तनानि वनानि च । गिरींश्च सरितः सर्वा राष्ट्राणि नगराणि च ॥ १० ॥

ईरन्" इत्यौणादिकसूत्रेण "शौडि गर्वे" इत्यस्मादीरन् प्रत्ययः । "शौण्डीरो वीरः" इति वृत्तिकारः । "शौण्डीरस्त्यागिवीरयोः" इति निघण्टुः । तत्कर्म तद्भावो वा शौण्डीर्यं गुणवचनत्वात् ष्यञ् । शौण्डीर्ययुक्तमेतत्ते भाषितं मच्छन्दादिव मदभिप्रायादिव भाषितं मत्सदृशं भाषितमित्यर्थः । पूर्वमन्यो यः कश्चन निशाचरोसि विक्लवभाषणात् इदानीं मारीचोसि मारीच इति लोकप्रसिद्धनामधेयानुरूपव्यापारोसि स्वप्रकृतिं प्राप्तोसीत्यर्थः ॥ ६ ॥ तथेति समुच्चये । खरैर्युक्तो रत्नविभूषितश्चेत्यर्थः ॥ ७ ॥ ८ ॥ तस्मात् मारीचीयात् ॥ ९ ॥ तथैव रथारूढावेव । सहैव स्थितावित्यर्थः । पत्तनानि

एवमिति । भयाद्रावणादधुनैव हानिर्भविष्यतीति त्रासाद्गच्छामीत्यब्रवीत् ॥ १–४ ॥ सुसंश्लिष्टं दृढम् ॥ ५ ॥ शौण्डीर्यं पौरुषम् । मच्छन्दादिव मम मतसदृशमुक्तम् । इदानीं मारीचोऽसि स्वप्रकृतिं प्राप्तोऽसि । पूर्वमन्यः अधैर्यावलम्बनादिति शेषः ॥ ६ ॥ ७ ॥ शून्ये रामलक्ष्मणरहितसमये ॥ ८–१४ ॥

नगरविशेषान् । नगाः वृक्षाः सन्त्येष्विति नगराणि, उद्यानाकीर्णपुराणीत्यर्थः । " नगपांसुपाण्डुभ्यश्च " इति मत्वर्थीयो रप्रत्ययः । नगरपत्तनादि लक्षणमुक्तं वास्तुशास्त्रे–" ग्रामश्च नगरं चैव पत्तनं खर्वटं पुरम् । खेटकं कुसुमं चैव शिबिरं राजवासिकम् । सेनामुखमिति त्वेवं दशधा कीर्तितं बुधैः । विप्राणां च सभृत्यानां वासो ग्रामं इतीरितः । स एव विप्रैराकीर्णस्त्वग्रहार इति स्मृतः । कुटुम्बिभेदैरेकोनत्रिंशद्भिश्च समन्वितः । अनेकनारीसंबद्धं

समेत्य दण्डकारण्यं राघवस्याश्रमं ततः । ददर्श सहमारीचो रावणो राक्षसाधिपः ॥ ११ ॥ अवतीर्य रथात्तस्मा त्ततः काञ्चनभूषणात् । हस्ते गृहीत्वा मारीचं रावणो वाक्यमब्रवीत् ॥ १२ ॥ एतद्रामाश्रमपदं दृश्यते कदली वृतम् । क्रियतां तत्सखे शीघ्रं यदर्थं वयमागताः ॥ १३ ॥ स रावणवचः श्रुत्वा मारीचो राक्षसस्तदा । मृगो भूत्वा ऽऽश्रमद्वारि रामस्य विचचार ह ॥ १४ ॥ स तु रूपं समास्थाय महदद्भुतदर्शनम् । मणिप्रवरशृङ्गाग्रः सितासित मुखाकृतिः ॥ १५ ॥ रक्तपद्मोत्पलमुख इन्द्रनीलोत्पलश्रवाः । किञ्चिदभ्युन्नतग्रीव इन्द्रनीलदलाधरः ॥ १६ ॥

नानाशिल्पिजनैर्वृतम् । क्रयविक्रयकैः कीर्णं सर्वदैवैः समन्वितम् । नगरं त्विति विख्यातं पत्तनं शृणु साम्प्रतम् । द्वीपान्तरागतद्रव्यक्रयविक्रयकैर्युतम् । पत्तनं त्वब्धितीरे स्यात्तयोर्मिश्रं तु खर्वटम् । क्रयविक्रयकैर्युक्तं नानाज्ञातिसमन्वितम् । तन्तुवायसमायुक्तं तत्पुरं त्विति कथ्यते । एतैरधिष्ठितं यत्तत् खेटकं परिकीर्तितम् । तेषामेकान्तरेष्वेव वासः कुसुममुच्यते । " इत्यादिना ॥ १० ॥ ११ ॥ हस्ते गृहीत्वेत्यनेनावश्यकत्वं द्योत्यते ॥ १२ ॥ यदर्थं यत्कार्यार्थम् । तत् कार्यं क्रियताम् आगमप्रयोजननिर्वाहकं मृगरूपं भजस्वेत्यर्थः ॥ १३॥१४ ॥ सङ्ग्रहेणोक्तं विवृणोति–स त्वित्यादिना । अद्भुतं विस्म यावहं दर्शनं यस्य तत्तथा । मणिप्रवरः इन्द्रनीलः तत्तुल्ये शृङ्गाग्रे यस्य स तथा । क्वचित्सिता क्वचिदसिता च मुखस्याकृतिः शोभारेखा यस्य । "वर्णो वर्णेन " इति समानाधिकरणसमासः । अवयवद्वारेण सितासितशब्दौ समुदाये वर्तमानौ समानाधिकरणौ भवतः ॥ १५ ॥ रक्तपद्मोत्पलमुखः मुख पुटयोरेको रक्तपद्मवर्णः अन्यस्तूत्पलवर्ण इत्यर्थः । इन्द्रनीलोत्पलश्रवाः श्रवसोरिन्द्रनीलसादृश्यं नीलभास्वररूपेण उत्पलसादृश्यं रूपेण इन्द्रनीलदल

मणिप्रवरशृङ्गाग्रः मणिप्रवराकारे इन्द्रनीलरत्नाकारे शृङ्गाग्रे यस्य सः । सितासितमुखाकृतिः क्वचित् सिता क्वचिदसिता च मुखस्याकृतिर्यस्य सः ॥ १५ ॥ रक्त पद्मोत्पलमुखः मुखपुटयोर्मध्ये एकः रक्तपद्मवर्णः अन्यः नीलोत्पलवर्णः । इन्द्रनीलोत्पलश्रवाः इन्द्रनीलमिव उत्पलमिव श्रवः श्रवणं यस्य सः ॥ १६ ॥

वद्धरो यस्य स तथा ॥ १६ ॥ कुन्देति । अस्य मृगरूपस्य कुन्देन्दुवज्रसङ्काशमुदरमासीत् तस्मात्तादृशोदर इति विपरिणमयितव्यम् । अन्यथा पूर्वापरविरोधः । मधूकनिभपार्श्वः गुडपुष्पतुल्यवर्णैकपार्श्वः, पार्श्वान्तरे हेमवर्णस्य वक्ष्यमाणत्वात् । पद्मकिञ्जल्कसन्निभः उक्तावयवव्यतिरिक्तपृष्ठसर्वप्रदेशे पद्मकेसरवर्णः ॥ १७ ॥ सुसंहतः सुश्लिष्टसन्धिबन्धः । ऊर्ध्वं पुच्छोर्ध्वपार्श्वे इन्द्रायुधसवर्णेन इन्द्रधनुर्वन्नानावर्णेन पुच्छेनोपलक्षितः । स्निग्धवर्ण इति पूर्वोक्त

कुन्देन्दुवज्रसङ्काशमुदरं चास्य भास्वरम् । मधूकनिभपार्श्वश्च पद्मकिञ्जल्कसन्निभः ॥ १७ ॥ वैडूर्यसङ्काशखुरस्तनुजङ्घः सुसंहतः । इन्द्रायुधसवर्णेन पुच्छेनोर्ध्वं विराजता ॥ १८ ॥ मनोहरः स्निग्धवर्णो रत्नैर्नानाविधैर्वृतः । क्षणेन राक्षसो जातो मृगः परमशोभनः । वनं प्रज्वलयन् रम्यं रामाश्रमपदं च तत् ॥ १९ ॥ मनोहरं दर्शनीयं रूपं कृत्वा स राक्षसः । प्रलोभनार्थं वैदेह्या नानाधातुविचित्रितम् ॥ २० ॥ विचरन् गच्छते तस्माच्छाद्वलानि समन्ततः ॥ २१ ॥ रूप्यैर्बिन्दुशतैश्चित्रो भूत्वा स प्रियदर्शनः । विटपीनां किसलयान् भङ्क्त्वाऽदन् विचचार ह ॥ २२ ॥ कदलीगृहकं गत्वा कर्णिकारानितस्ततः । समाश्रयन्मन्दगतिः सीतासन्दर्शनं तथा ॥ २३ ॥ राजीवचित्रपृष्ठः स विरराज महामृगः । रामाश्रमपदाभ्याशे विचचार यथासुखम् ॥ २४ ॥

सर्ववर्णानां स्निग्धत्वं विशेषणम् । रत्नैः रत्नाकारबिन्दुभिः । उपसंहरति क्षणेनेति । प्रज्वलयन् प्रकाशयन् मृगो जात इति पूर्वेणान्वयः ॥ १८ ॥ १९ ॥ मनोहरमित्यादिसार्धश्लोक एकान्वयः । धातुवर्णः । शाद्वलानि शादाः बालतृणानि । "शादो जम्बालशष्पयोः" इत्यमरः । तद्वन्ति स्थलानि शाद्वलानि । "नडशादाड्ड्वलच्" इति ड्वलच् प्रत्ययः । विचरन् भक्षयन् । "चर गतिभक्षणयोः" । गच्छते गच्छति ॥ २० ॥ २१ ॥ विटपीनामिति दीर्घश्छान्दसः । किसलयान् पल्लवान् । पुँल्लिङ्गत्वमार्षम् ॥ २२ ॥ कदलीगृहकं कृत्रिमकदलीमयगृहम् । तदनन्तरं कर्णिकारान् गत्वा ततः सीता संदृश्यतेऽस्मिन्निति सीतासन्दर्शनम् । अधिकरणे ल्युट् । सीतासन्दर्शनयोग्यस्थानमित्यर्थः । तथेति समुच्चये । तदपि गत्वा मन्दगतिः सन् इतस्ततः समाश्रयत् ॥ २३ ॥ राजीवचित्रपृष्ठः राजीवकेसरवदाश्चर्यकरपृष्ठदेशः । चित्रत्वं पूर्वस्माद्विशेषः । रामाश्रमपदाभ्याशे रामाश्रमस्थानसमीपे ॥ २४ ॥

मधूकनिभपार्श्वः मधूकपुष्पसदृशपार्श्वद्वयः॥१७॥ सुसंहतः श्लिष्टसन्धिबन्धः॥१८—२०॥ शाद्वलानि विचरन् भक्षयन्॥२१॥२२॥ कदलीवाटिकां समाश्रयदिति च्छेदः ।

पुनर्गत्वेति पुनर्निवृत्तश्चेत्यन्वयः । निवृत्य गमनमुक्त्वा गत्वा निवर्तनमाह—गत्वेति ॥ २५ ॥ एवं गमनागमनाभ्यां विक्रीडन् सन् पुनः क्वचित्तूष्णीं निषीदति ॥ २६ ॥ विनिष्पतन् सञ्चरन् ॥ २७ ॥ समाघ्रायेति घ्राणेन विशेषं जानन्ति तिर्यञ्च इति प्रसिद्धिः ॥ २८ ॥ भावस्य क्रौर्यस्य । प्रच्छादनार्थं मृगवधे रतोपि मृगान्न भक्षयति किन्तु संस्पृशन्नास्ते ॥ २९ ॥ ततः आश्रमादभ्यवर्ततेत्यन्वयः ॥ ३० ॥ मदिरम् आनन्दजनकम् ईक्षणं

पुनर्गत्वा निवृत्तश्च विचचार मृगोत्तमः । गत्वा मुहूर्तं त्वरया पुनः प्रतिनिवर्तते ॥ २५ ॥ विक्रीडंश्च क्वचिद्भूमौ पुनरेव निषीदति । आश्रमद्वारमागम्य मृगयूथानि गच्छति ॥ २६ ॥ मृगयूथैरनुगतः पुनरेव निवर्तते । सीतादर्शनमाकांक्षन् राक्षसो मृगतां गतः । परिभ्रमति चित्राणि मण्डलानि विनिष्पतन् ॥ २७ ॥ समुद्वीक्ष्य च तं सर्वे मृगा ह्यन्ये वनेचराः । उपागम्य समाघ्राय विद्रवन्ति दिशो दश ॥२८॥ राक्षसः सोपि तान्वन्यान् मृगान् मृगवधे रतः । प्रच्छादनार्थं भावस्य न भक्षयति संस्पृशन् ॥ २९ ॥ तस्मिन्नेव ततः काले वैदेही शुभलोचना । कुसुमापचयव्यग्रा पादपानभ्यवर्तत ॥ ३० ॥ कर्णिकारानशोकांश्च चूतांश्च मदिरेक्षणा । कुसुमान्यपचिन्वन्ती चचार रुचिरानना ॥ ३१ ॥ अनर्हाऽरण्यवासस्य सा तं रत्नमयं मृगम् । मुक्तामणिविचित्राङ्गं ददर्श परमाङ्गना ॥ ३२ ॥ सा तं रुचिरदन्तोष्ठी रूप्यधातुतनूरुहम् । विस्मयोत्फुल्लनयना सस्नेहं समुदैक्षत ॥ ३३ ॥

यस्याः सा मदिरेक्षणा । अनेन रुचिराननेत्यनेन च वक्ष्यमाणकार्योपयोग्युल्लासो द्योत्यते ॥ ३१ ॥ अरण्यवासस्यानर्हेत्यनेन सन्निहितव्रतसमाप्तिकालत्वकथनान्मृगग्रहणत्वरातिशयो द्योत्यते । रत्नमयं श्रेष्ठभूतम् । स्वार्थे मयट् । " रत्नं स्वजातौ श्रेष्ठेपि " इत्यमरः । मुक्तामणिशब्देन तत्तुल्यबिन्दुमत्त्वमुक्तम् ॥३२॥ रुचिरदन्तोष्ठीत्यनेन कुतुकानुभाव उक्तः । रूप्यं रजतम् धातवः ताम्रगैरिकादयः तत्तुल्यतनूरुहम् । "तनूरुहं रोम लोम" इत्यमरः॥३३॥



सीतासन्दर्शनं सीतादर्शनयोग्यस्थानं समाश्रयत् ॥२३–२६॥ विनिष्पतन् उत्प्लुत्य धावन् ॥ २७ ॥ टीका—समुद्वीक्ष्येति तिर्यग्जन्तूनामाघ्राणेन सजातीयविजातीयज्ञानं सम्भवतीति प्रसिद्धिः ॥ २८ ॥ भावस्य राक्षसत्वस्य । अपचयः लवनम् ॥ २९–३२ ॥ रूप्यधातुतनूरुहं रूप्यं रजतं धातवः ताम्रगैरिकादयः तैस्सदृशतनूरुहम् ॥ ३३ ॥ ३४ ॥

स इति । दीपयन् प्रकाशयन् ॥ ३४ ॥ ३५ ॥ इति श्रीगोविन्द० श्रीरामायणभू०रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥
सीतायास्त्वेकनाथायाः पूरयिष्यन् मनोरथम् । मायामृगं योऽनुययौ श्रीरामं तमुपास्महे ॥ सा तमित्यादि । हैमराजतवर्णाभ्यामित्यनेन द्वयोः पार्श्वयो वर्णभेद उच्यते । मृष्टं शुद्धं हाटकं सुवर्णं तस्य वर्णोऽस्या अस्तीति तथा । "स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्" इत्यमरः । अभिचक्रन्द उच्चै

स च तां रामदयितां पश्यन् मायामयो मृगः । विचचार पुनश्चित्रं दीपयन्निव तद्वनम् ॥ ३४ ॥ अदृष्टपूर्वं तं दृष्ट्वा नानारत्नमयं मृगम् । विस्मयं परमं सीता जगाम जनकात्मजा ॥ ३५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

सा तं सम्प्रेक्ष्य सुश्रोणी कुसुमान्यपचिन्वती । हैमराजतवर्णाभ्यां पार्श्वाभ्यामुपशोभितम् ॥ १ ॥ प्रहृष्टा चानवद्याङ्गी मृष्टहाटकवर्णिनी । भर्तारमभिचक्रन्द लक्ष्मणं चापि सायुधम् ॥ २ ॥ तयाऽऽहूतौ नरव्याघ्रौ वैदेह्या रामलक्ष्मणौ । वीक्षमाणौ तु तं देशं तदा ददृशतुर्मृगम् ॥ ३ ॥ शङ्कमानस्तु तं दृष्ट्वा लक्ष्मणो राममब्रवीत् । तमेवैनमहं मन्ये मारीचं राक्षसं मृगम् ॥ ४ ॥ चरन्तो मृगयां हृष्टाः पापेनोपाधिना वने । अनेन निहता राजन् राजानः कामरूपिणा ॥ ५ ॥ अस्य मायाविदो मायामृगरूपमिदं कृतम् । भानुमत् पुरुषव्याघ्र गन्धर्वपुरसन्निभम् ॥ ६ ॥ मृगो ह्येवंविधो रत्नविचित्रो नास्ति राघव । जगत्यां जगतीनाथ मायैषा हि न संशयः ॥ ७ ॥

राह्वयत् "क्रदि आह्वाने रोदने च" इति धातुः । सायुधमित्यनेनायुधेन सहागन्तव्यमित्याहूतवतीति गम्यते ॥१–४॥ मृगयां चरन्तः मृगयार्थं पर्यटन्तो राजानः । अनेन पापेन मृगरूपोपाधिना निमित्तेन हताः ॥ ५ ॥ मायां वेत्तीति मायावित् तस्य । मायैव मृगरूपं कृतं मृगाकारेण परिणतम् । भानुमत् प्रकाशवत् । गन्धर्वपुरं नानाविधविस्मयनीयाकारसंस्थानं क्षणभङ्गुरमभ्रं तत्सन्निभम्, तद्वद्विस्मयनीयमित्यर्थः । जगत्यां भूमौ ॥ ६ ॥ ७ ॥

टीका–अदृष्टपूर्वमिति।नानारत्नमयं नानाविधरत्नकान्तिमयम् ॥ ३५॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां द्विचत्वारिंशः सर्गः ४२ ॥ १ ॥ प्रहृष्टेति । मृष्टहाटकवर्णिनी मृष्टं परिशुद्धं हाटकं हेम तस्य वर्णोऽस्तीति तथा ॥२–४॥ मृगयां चरन्तः मृगयार्थं पर्यटन्तः । उपाधिना मृगरूपोपाधिना ॥५॥ मायाविदः अस्य या माया दृश्यते अनया इदं मृगरूपं कृतम् अस्य माया मृगाकारेण परिणतेत्यर्थः । भानुमत् प्रकाशसम्पन्नम् । गन्धर्वपुरसन्निभम् गन्धर्वपुरं नाम

काकुत्स्थं प्रतिवार्य निवर्त्य उवाच, राममिति शेषः । तत्र हेतुश्चर्मणेति । हृतचेतना हृतप्रज्ञा ॥ ८ ॥ नो भविष्यति नः भविष्यति । न भविष्यतीत्यपि वाग्दोषः ॥९॥ सहिताः सङ्घीभूताः । सृमराः व्यालमृगाः । "सृमरः स्याद्व्यालमृगः" इति वैजयन्ती । चमराः चामरमृगाः । ऋक्षाः भल्लूकाः । पृषताः

एवं ब्रुवाणं काकुत्स्थं प्रतिवार्य शुचिस्मिता । उवाच सीता संहृष्टा चर्मणा हृतचेतना ॥ ८ ॥ आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः । आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ॥९॥ इहाश्रमपदेऽस्माकं बहवः पुण्यदर्शनाः । मृगाश्चरन्ति सहिताः सृमराश्चमरास्तथा ॥ १० ॥ ऋक्षाः पृषतसङ्घाश्च वानराः किन्नरास्तथा । विचरन्ति महाबाहो रूपश्रेष्ठा मनोहराः ॥ ११ ॥ न चास्य सदृशो राजन् दृष्टपूर्वो मृगः पुरा । तेजसा क्षमया दीप्त्या यथायं मृगसत्तमः ॥ १२ ॥ नानावर्णविचित्राङ्गो रत्नबिन्दुसमाचितः । द्योतयन् वनमव्यग्रं शोभते शशिसन्निभः ॥ १३ ॥ अहो रूपमहो लक्ष्मीः स्वरसम्पच्च शोभना । मृगोऽद्भुतो विचित्राङ्गो हृदयं हरतीव मे ॥१४॥ यदि ग्रहणमभ्येति जीवन्नेव मृगस्तव । आश्चर्यभूतं भवति विस्मयं जनयिष्यति ॥ १५ ॥

बिन्दुमृगाः । किन्नराः मृगविशेषाः ॥ १०॥ ११ ॥ तेजसा वर्णेन । क्षमया अत्वरया । दीप्त्या शारीरप्रकाशेन । यथायं मृगो दृश्यते तथा तेजआदिभिः अस्य सदृशो मृगो न दृष्टपूर्वः । पुरा भाविकालेपि न दृश्यत इति शेषः । " स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा " इत्यमरः ॥ १२ ॥ समाचितः व्याप्तः । अव्यग्रं समग्रं यथा तथा शोभते । शशिसन्निभः आनन्दकरत्वेन शशिसाम्यम् ॥ १३ ॥ रूपं वर्णः । लक्ष्मीः कान्तिः । उक्तानुवादपूर्वकं मनोहरत्वमाह-मृग इति । अतो न पूर्वार्धेन गतार्थता ॥ १४ ॥ यदीति श्लोकद्वयमेकान्वयम् । तव ग्रहणं त्वत्कर्तृकग्रहणम् । कर्तरि षष्ठी । तदा एष

रम्यभवनाकारविशेषक्षणमङ्कुरमश्वम् ॥ ६ ॥ ७ ॥ काकुत्स्थं लक्ष्मणम् ॥ टी–प्रतिवार्य परिहृत्य ॥ ८ ॥ ९ ॥ सृमरचमरौ कृष्णशुक्लपुच्छौ चामरमृगौ ॥ १० ॥ ११ ॥ तेजसा गर्वेण । क्षमया अत्वरया । दीप्त्या शरीरप्रकाशेन पतैरुपलक्षितः । पुरः निकटे । अयं मृगो यथा यादृशप्रकारः । अस्य सदृशो मृगः दृष्टपूर्वो न भवतीत्यन्वयः ॥ १२ ॥ रत्नबिन्दुसमाचितः रत्नबिन्दुव्याप्तः ॥ १३ ॥१४॥ मृगो यदि जीवन्नेव तव ग्रहणमभ्येति यदि गृहीतो भवेद तदा नः आश्चर्यभूतं भवति ।

मृगः आश्चर्यभूतम् अस्माकं विस्मयावहं सत्त्वं भवति इदानीमिति शेषः । समाप्तवनवासानाम् अत एव पुनः राज्यस्थानां च नः विस्मयं जनयिष्यति किंच अन्तःपुरविभूषार्थोपि भविष्यति ॥ १५ ॥ १६ ॥ आर्यपुत्रस्य तव श्वश्रूणां मम श्वश्रूणां चेति योजना । मृगरूपं प्रशस्तमृगः । प्रशंसायां रूपप् प्रत्ययः । मृगस्य रूपं वा ॥ १७ ॥ जीवतः अग्रहणेपि प्रयोजनमाह—जीवन्निति । अजिनं चर्म । रुचिरं प्रियम् ॥ १८ ॥ प्रियत्वमेव विवृणोति-निहतस्येति । जाम्बूनदमयत्वचि स्वर्णसदृशत्वचि । शष्पबृस्यां बालतृणैः कृतायां बृस्याम् । मध्यमपदलोपिसमासः । " व्रतिनामासनं

समाप्तवनवासानां राज्यस्थानां च नः पुनः । अन्तःपुरविभूषार्थो मृग एष भविष्यति ॥ १६ ॥ भरतस्यार्य पुत्रस्य श्वश्रूणां मम च प्रभो । मृगरूपमिदं व्यक्तं विस्मयं जनयिष्यति ॥ १७ ॥ जीवन्न यदि तेऽभ्येति ग्रहणं मृगसत्तमः । अजिनं नरशार्दूल रुचिरं मे भविष्यति ॥ १८ ॥ निहतस्यास्य सत्त्वस्य जाम्बूनदमयत्वचि । शष्प बृस्यां विनीतायामिच्छाम्यहमुपासितुम् ॥ १९ ॥ कामवृत्तमिदं रौद्रं स्त्रीणामसदृशं मतम् । वपुषा त्वस्य सत्त्वस्य विस्मयो जनितो मम ॥ २० ॥ तेन काञ्चनरोम्णा तु मणिप्रवरशृङ्गिणा । तारुणादित्यवर्णेन नक्षत्रपथवर्चसा । वभूव राघवस्यापि मनो विस्मयमागतम् ॥ २१ ॥

बृसी" इत्यमरः । तस्यां विनीतायाम् आस्तृतायाम् । उक्तरूपत्वचि उपासितुं स्थातुम् इच्छामि, त्वया सहेति शेषः ॥ १९ ॥ अथ सविनयमाह—काम वृत्तमिति । रौद्रं घोरम् इदं कामवृत्तं भर्तृप्रेरणरूपस्वेच्छाव्यापारः । स्त्रीणाम् असदृशम् अयुक्तं कैकेयीवत्, तथाप्यस्य सत्त्वस्य तु वपुषा विलक्षणदेहेन मम विस्मयो जनितः ममात्यन्तं कुतूहलं वर्तते, आनयेति वक्तुमप्ययुक्तम् अतः तवापि कुतूहलमस्ति चेत्तथा क्रियतामिति भावः । अनेन पूर्वमानयेति प्रमादादुक्तस्य क्षमापणं कृतम् ॥२०॥ न केवलं स्त्रीपारवश्येन कृतवान् किंतु स्वविस्मयेनापीत्याह—तेनेत्यादिना । मणिप्रवरो नील

आश्चर्यसत्त्वं भवति । अतस्सर्वेषां विस्मयं जनयिष्यतीति सम्बन्धः ॥ १५–१८ ॥ शष्पबृस्यां बालतृणैः परिकल्पिततापसासने । विनीतायां प्रसारितायां जाम्बूनद मयत्वचि उपासितुं त्वत्समीपे स्थातुमिच्छामीति योजना ॥१९॥ इदं कामवृत्तं कैकेय्यादिवत्स्वप्रयोजनाय भर्तृवियोजनरूपमिदं कृत्यं रौद्रं क्रूरं स्त्रीणामसदृशमिति यद्यपि मतं ज्ञातं तथाप्यस्य वपुषा मम विस्मयो जात इत्यभिप्रायेण वाक्यं परिसमापितवती ॥ २० ॥ काञ्चनरूपेण काञ्चनमृगेण । " रूपं मृगेपि विज्ञेयम् "

रत्नम्। काञ्चनवर्णरोमत्वात् बालसूर्यवर्णत्वम् । नक्षत्रपथः छायापथः तत्तुल्यवर्चसा नक्षत्रसदृशबिन्दूपलक्षितत्वात् । आगतं प्राप्तम् ॥२१॥ रूपेण मृगेण । "रूपं मृगेपि विज्ञेयम्" इति हलायुधः ॥ २२ ॥ २३ ॥ पश्येति । सीता स्पृहायुक्तेति भावः । तत्र हेतुमाह रूपेति । मृगेषु श्रेष्ठतया रूपेण श्रेष्ठतया वा । एष मृगः एतादृशमृगः । अद्य वनवासे । न भविष्यति न सेत्स्यति दुर्लभ इत्यर्थः ॥ २४ ॥ न केवलमत्र देशान्तरेपि दुर्लभ इत्याह–

एवं सीतावचः श्रुत्वा तं दृष्ट्वा मृगमद्भुतम् । लोभितस्तेन रूपेण सीतया च प्रचोदितः ॥ २२ ॥ उवाच राघवो हृष्टो भ्रातरं लक्ष्मणं वचः ॥ २३ ॥ पश्य लक्ष्मण वैदेह्याः स्पृहां मृगगतामिमाम् । रूपश्रेष्ठतया ह्येष मृगोऽद्य न भविष्यति ॥ २४ ॥ न वने नन्दनोद्देशे न चैत्ररथसंश्रये । कुतः पृथिव्यां सौमित्रे योऽस्य कश्चित्समो मृगः ॥ २५ ॥ प्रतिलोमानुलोमाश्च रुचिरा रोमराजयः । शोभन्ते मृगमाश्रित्य चित्राः कनकबिन्दुभिः ॥२६॥ पश्यास्य जृम्भमाणस्य दीप्तामग्निशिखोपमाम् । जिह्वां मुखान्निस्सरन्तीं मेघादिव शतह्रदाम् ॥ २७ ॥ मसारगल्लर्कमुखः शङ्खमुक्तानिभोदरः । कस्य नामाभिरूपोऽसौ न मनो लोभयेन्मृगः ॥ २८ ॥ कस्य रूपमिदं दृष्ट्वा जाम्बूनदमयं प्रभो । नानारत्नमयं दिव्यं न मनो विस्मयं व्रजेत् ॥ [ किं पुनर्मैथिली सीता बाला नारी न विस्मयेत् । ] ॥२९॥

न वन इति । नन्दन इत्युद्देशः कीर्तनं यस्य तस्मिन् वने चैत्ररथसंश्रये चैत्ररथाख्ये वने च न भविष्यतीत्यनुषज्यते पृथिव्यां कुतो हेतोर्भविष्यति ॥ २५ ॥ प्रतिलोमाः तिर्यग्भूताः । अनुलोमाः अनुकूलाः रोमराजयश्च मृगमाश्रित्य दृश्यन्ते । चित्राः आश्चर्यभूताः कनकबिन्दवः कनकवर्णबिन्दवश्च मृगमाश्रित्य शोभन्ते ॥ २६ ॥ पश्येति । शतह्रदां तटितम् ॥ २७ ॥ मसारः इन्द्रनीलः । गल्लर्कः चषकः । "गल्लर्कश्चानुतर्षश्च तर्षकश्चषकः स्मृतः" इति हलायुधः । इन्द्रनीलनिर्मितचषकाकारमुखसंपुट इत्यर्थः । अभिरूपः सुन्दरः ॥ २८ ॥ कस्येति । रूपं मृगम् ।

इति हलायुधः । नक्षत्रपथवर्चसा नक्षत्रसदृशवर्चसा बिन्दूपलक्षितत्वात आगतं प्राप्तं बभूव ॥ २१–२३ ॥ रूपश्रेष्ठतया उपलक्षित एष मृगो न भविष्यति एतादृशमृगो न क्वचिदपि सिद्ध्यतीत्यर्थः ॥ २४ ॥ नन्दनोद्देशे नन्दनमित्युद्देशः कीर्तनं यस्य तस्मिन् । चैत्ररथसंश्रये तदाख्ये वने ॥ २५ ॥ कनकबिन्दुभिश्चित्र रोमराजय इत्यन्वयः ॥ २६ ॥ शतह्रदां विद्युतम् ॥ २७ ॥ मसारगल्लर्कमुखः मसारः इन्द्रनीलः, गल्लर्कश्चषकः, इन्द्रनीलनिर्मितचषकाकारास्यसम्पुट इत्यर्थः ।

जाम्बूनदमयेति स्वार्थे मयट् । नानारत्नमयं नानाबिन्दुप्रचुरम् ॥२९॥ मांसहेतोरपि विनोदार्थं च राजानो मृगान् घ्नन्ति, किं पुनरेवंविधविचित्रवस्तुलाभहेतोरिति भावः ॥ ३० ॥ एतन्मृगरूपं महद्धनम् एतच्च वन एव संभवति तस्मादिदं व्यवसायेन स्वीकर्तव्यमित्यभिप्रायेणाह–धनानीति । मणिरत्नं मणिश्रेष्ठं सुवर्णं च मणिरत्नसुवर्णे ते येषु स्त इति मणिरत्नसुवर्णिनः मणयः सुवर्णानि च धातुषु भवन्तीति प्रसिद्धिः । तथाभूता विविधा

मांसहेतोरपि मृगान् विहारार्थं च धन्विनः । घ्नन्ति लक्ष्मण राजानो मृगयायां महावने ॥ ३० ॥
धनानि व्यवसायेन विचीयन्ते महावने । धातवो विविधाश्चापि मणिरत्नसुवर्णिनः ॥ ३१ ॥
तत्सारमखिलं नृणां धनं निचयवर्धनम् । मनसा चिन्तितं सर्वं यथा शुक्रस्य लक्ष्मण ॥ ३२ ॥

धातवश्च धनानि करिमस्तकमुक्ताप्रभृतीनि महावने व्यवसायेन मृगयोर्योगेन राजभिः विचीयन्ते संगृह्यन्ते । यद्वा धनानि व्यवसायेन मृगयोद्योगेन महावने विचीयन्ते । ननु कुतो वने धनसङ्ग्रहप्रसक्तिरित्यत्राह–धातव इति । यस्मादुक्तरूपा विविधा धातवः सन्ति तस्मादित्यर्थः ॥ ३१ ॥ तेषां धनानां सारं श्रेष्ठभूतम् । अखिलं धनं नृणां निचयवर्धनं कोशवर्धनं भवेत् । किमिव शुक्रस्य मनसा चिन्तितं सङ्कल्पितं वस्तुजातं तथैवाविर्भूय निचयवर्धनं यथा तद्वदित्यर्थः । यद्वा नृणां मनसा चिन्तितं वृथामनोरथकल्पितं सर्वं धनं यथा शुक्रस्य कोशं पूरयति तथेत्यर्थः । तदुक्तमुद्योगपर्वणि–" मनुष्येभ्यः समादत्ते शुक्रश्चिन्तार्जितं धनम् । " इति । यद्वा नृणां राजादिधनिनां कोशवर्धनं तत् वन्यं धनं सारं भवति जानपदधनादपि

कस्य नामानिरूप्योऽसौ–अनिरूप्यः इदमित्थमिति निरूपयितुमशक्यः॥२८॥२९॥ मांसहेतोरिति । किम्पुनरेवंविधलाभार्थमिति भावः । टी–मांसलाभहेतोरपि विनोदार्थं च राजानो मृगान् साधारणमृगान् घ्नन्ति, किम्पुनरेवंविधरूपमिति भावः ॥ ३० ॥ एतन्मृगरूपं महाधनं वन एव सम्भवति तस्मादिदमत्यादरेण सङ्ग्राह्यमित्याशयेनाह–धनानीति । मणिरत्नसुवर्णिनः मणिरत्नं मणिश्रेष्ठं सुवर्णं च हेममयेषु धातुषु सम्भवतः ते तथोक्ताः, वज्रादिमणिसुवर्णरजताद्याकाराः धातवः लक्षणया गैरिकादिधात्वाधारपर्वतप्रदेशा इत्यर्थः । धनानि विचित्रमृगादिरूपधनानि । व्यवसायेन उद्योगेन वने विचीयन्ते अन्विष्यन्ते । वन इत्युपलक्षणम् । यत्र क्वापि स्थितं वस्तु राज्ञा सङ्ग्राह्यत इति भावः ॥ ३१ ॥ तत् तस्मात् सारं श्रेष्ठमखिलं धनं शास्त्राविरुद्धोपायेन सर्वदा सम्पादितं धनमित्यर्थः । निचयवर्द्धनं कोशवर्द्धनम् " उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः " इति न्यायेन शास्त्राविरुद्धोपायेन सम्पादितं द्रव्यं राज्ञां कोशगृहं पूरयतीति भावः । तत्र दृष्टान्तमाह–मनसेति । नृणां मनुष्याणां चिन्तितं

स०–तत् वन्यं धनं नृणां सारं वरेण्यम् । तत्र दृष्टान्तमाचष्टे, मनसा चिन्तितं सर्वं तत् वन्यं शुक्रस्य उशनसः यथा सारं तथेत्यर्थः । वन्यरसेनैव कूपं निर्माय मृतजीवनकर्तृकत्वाच्छुक्रस्येति भावः ॥ ३२ ॥

वन्यं धनं सारम् अतिप्रशस्तं भवति अपूर्वत्वात् अतो निवृत्तवनवासैरस्माभिर्वनादपूर्वधनतया पुरीं नेतुमयं ग्रहीतव्य इति भावः ॥ ३२ ॥ अस्त्विदम् अथापि विचार्य कार्यमिति चेत्तत्राह–अर्थीति । अर्थी असन्निहितार्थापेक्षी । "अर्थाच्चासन्निहिते" इति इनिप्रत्ययः । सः येन अर्थकृत्येन अर्थकार्येण हेतुना अविचारयन् संव्रजति सम्यग्गच्छति यद्वस्तुसौन्दर्यजातोपकारलोभेन पुरुषस्तत्साधने व्यग्रः प्रवर्तते तमेवार्थं प्राहुः । अर्थशास्त्रज्ञाः

अर्थी येनार्थकृत्येन संव्रजत्यविचारयन् । तमर्थमर्थशास्त्रज्ञाः प्राहुरर्थ्यांश्च लक्ष्मण ॥ ३३ ॥
एतस्य मृगरत्नस्य परार्ध्ये काञ्चनत्वचि । उपवेक्ष्यति वैदेही मया सह सुमध्यमा ॥ ३४ ॥
न कादली न प्रियकी न प्रवेणी न चाविकी । भवेदेतस्य सदृशी स्पर्शनेनेति मे मतिः ॥ ३५ ॥

नीतिशास्त्रज्ञाः । अर्थ्याः अर्थादनपेताश्च । " अर्थ्योऽभिज्ञार्थशालिनोः " इत्यजयः । " धर्मपथ्यर्थन्यायादनपेते " इति यत्प्रत्ययः । यस्य गुणप्रीतः पुरुषः अभिनिविशते स एवार्थ इति नीतिशास्त्रज्ञा अर्थवन्तश्चाहुः । अयञ्च तथाविध इति भावः ॥ ३३ ॥ एवं प्रयत्नसम्पाद्यं वस्त्वयमेव मृग इत्यभिप्रायेणाह–एतस्येति । मृगरत्नस्य मृगश्रेष्ठस्य । परार्ध्ये श्लाघ्ये । काञ्चनत्वचि काञ्चनसदृशत्वचि । पुँल्लिङ्गत्वमार्षम् ॥ ३४ ॥ परार्ध्यत्वं विवृणोति–नेति । कदल्येव कादली मृगविशेषः । तल्लक्षणमुक्तं वैजयन्त्याम्–" कदली तु बिले शेते मृदुसूक्ष्मोच्चकर्बुरैः । नीलाग्रैर्लोमभिर्युक्ता सा विंशत्यङ्गुलायता । प्रियकी लोमभिर्युक्ता मृदुश्च मसृणैर्घनैः ॥ " इति । प्रवेणी आस्तरणविशेषः मृगविशेषो वा । अविरेव अविकः " अवेः कः " इति स्वार्थे कप्रत्ययः । तस्येयमाविकी तल्लोमनिर्मिता शाटीत्यर्थः । स्पर्शनेन मार्दवेन ॥ ३५ ॥

सङ्कल्पितं धनं सर्वं तथैवाविर्भूतं सत् यथा शुक्रस्य निचयवर्द्धनं भवति तथैवेत्यर्थः । जनस्य सङ्कल्पितार्थाः शुक्रस्य कोशं पूरयन्तीति प्रसिद्धिः । यद्वा शुक्रस्य मनसा चिन्तितं सङ्कल्पितं सर्वधनं तथैवाविर्भूय यथा शुक्रस्य निचयवर्द्धनं भवति ॥ ३२ ॥ एवमस्तु, अथापि विचार्य कर्तव्यमिति चेन्नेत्याह–अर्थीति । अर्थयते प्रार्थयतीत्यर्थी, अपूर्ववस्तुकामः पुरुष इत्यर्थः । अविचारयन्नालोचनामकुर्वन् येनार्थकृत्येन अर्थसाधनेनोद्योगेन संव्रजति सम्यग्गच्छतीत्यर्थः । अर्थ्याः अर्थादनपेताः, अर्थसम्पादनचतुरा इति यावत् । अर्थशास्त्रज्ञास्तमेवार्थं प्राहुः–यद्वस्तु सौन्दर्यलोभेन पुरुषस्तत्साधने व्यग्रः प्रवर्तते स एवार्थः । अयंच मृगस्तथाविध इति भावः ॥ ३३ ॥ परार्ध्ये अमूल्ये ॥ ३४ ॥ कदल्येव कादली मृदुकर्बुरनीलाग्ररोममृगविशेषः । प्रियकी मृदुघनमसृणघनरोममृगविशेषः । प्रियकी सुखस्पर्शो व्याघ्र

दिव्यः श्लाघ्यः। नभश्चरो मृगः मृगशीर्षः। दिव्यौ शोभमानौ ॥३६॥ एवं सीतामतमङ्गीकृत्य प्रवृत्तिरुक्ता । अथ लक्ष्मणमतमङ्गीकृत्याह—यदि वेति । मायैषा राक्षसस्येति यन्मां वदसि तथायं यदि वा भवेत् एवमप्यस्य वधो मया कार्यः ॥ ३७ ॥ हनने हेतुत्वेन तदीयदौरात्म्यमाविष्करोति—एतेन हीति । नृशंसेन घातुकेन। अकृतात्मना दुष्टभावेन ॥ ३८ ॥ उत्थाय प्रादुर्भूय ॥ ३९ ॥ पूर्वोक्तमपि वातापिवृत्तान्तं मारीचस्य मायाव्यापारे दृष्टान्त

एष चैव मृगः श्रीमान् यश्च दिव्यो नभश्चरः। उभावेतौ मृगौ दिव्यौ तारामृगमहीमृगौ ॥ ३६ ॥ यदि वाऽयं तथा यन्मां भवेद्वदसि लक्ष्मण । मायैषा राक्षसस्येति कर्तव्योऽस्य वधो मया ॥ ३७ ॥ एतेन हि नृशंसेन मारीचेनाकृतात्मना। वने विचरता पूर्वं हिंसिता मुनिपुङ्गवाः ॥ ३८ ॥ उत्थाय बहवो येन मृगयायां जनाधिपाः । निहताः परमेष्वासास्तस्माद्वध्यस्त्वयं मृगः ॥ ३९ ॥ पुरस्तादिह वातापिः परिभूय तपस्विनः । उदरस्थो द्विजान् हन्ति स्वगर्भोऽश्वतरीमिव ॥ ४० ॥ स कदाचिच्चिराल्लोभादाससाद महामुनिम् । अगस्त्यं तेजसा युक्तं भक्षस्तस्य बभूव ह ॥ ४१ ॥ समुत्थाने च तद्रूपं कर्तुकामं समीक्ष्य तम् । उत्स्मयित्वा तु भगवान् वातापिमिदमब्रवीत् ॥ ४२ ॥

त्वेनाह—पुरस्तादिति । पुरस्तात् पूर्वस्मिन्काले । इह दण्डकारण्ये । अश्वतरो नाम गर्दभादश्वायामुत्पन्न इति वृत्तिकारः । "गोखरोऽश्वतरो मतः" इति हलायुधः । तत्स्वरूपमुक्तं शालिहोत्रीये—" खररूक्षस्वरास्तीक्ष्णाः खरशीलाः खराङ्ग्यः ।" इति । तामश्वतरीं स्वगर्भो यथा हन्ति तथायमपि गर्भस्थो द्विजान् हन्ति । अश्वतरी वृश्चिकेत्यप्याहुः ॥ ४० ॥ भक्षः आहारः ॥ ४१ ॥ समुत्थाने श्राद्धान्ते । तद्रूपं रक्षोरूपम् । उत्स्मयित्वा ईषत्स्मित्वा ।

इत्यन्ये । प्रवेणी आस्तरणम् । आविकम् अविवालनिर्मितः कम्बलविशेषः । एतस्य मृगचर्मणः ॥ ३५ ॥ यश्च दिव्यो नभश्चरो मृगः मृगशीर्षनक्षत्रम् एतावुभौ दिव्यौ देवतार्हौ अमानुषौ वा शोभनावित्यर्थः ॥ ३६ ॥ मायैषा राक्षसस्येति यन्मां वदसि तथायं यदि भवेदेवमप्यस्य वधः कर्तव्य इत्यन्वयः ॥ ३७ ॥ ३८ ॥ उत्थाय प्रादुर्भूय ॥ ३९ ॥ पूर्वमुक्तमपि वातापिवृत्तान्तं मारीचस्य मायाव्यापारे दृष्टान्तत्वेनाह—पुरस्तादिति । पुरस्तात्पूर्वस्मिन् काले । इह दण्डकारण्ये । स्वगर्भोऽश्वतरीमिवेति । अश्वतरी गर्दभादश्वायामुत्पन्ना तां स्वगर्भ एव यथा हन्ति तद्वदयमपि उदरस्थो द्विजान् हन्ति ॥ ४० ॥ ४१ ॥ समुत्थाने श्राद्धान्ते । तद्रूपं स्वकं

ल्यबभाव आर्षः ॥ ४२ ॥ अविगण्य अविचार्य, पापमिति शेषः ।.जीवलोके भूलोके । जरां जीर्णताम् । इति वातापिमब्रवीदिति पूर्वेणान्वयः ॥ ४३ ॥ तदिति रक्षःशब्दाभिप्रायेण नपुंसकत्वम् । अतिमन्येत अतिक्रामेत् । मां गत इति । अगस्त्यो यथा अजरूपं वातापिं लोकहितार्थं नाशित वान् तथाहमपि मृगरूपमेनं हनिष्यामीत्यर्थः ॥४४॥ सन्नद्धः धनुःकवचादिसन्नाहयुक्तः । यन्त्रितः व्याक्षेपान्तररहितः । अस्यामिति । अस्माकं यत्कृत्य

त्वयाऽविगण्य वातापे परिभूताः स्वतेजसा । जीवलोके द्विजश्रेष्ठास्तस्मादसि जरां गतः ॥ ४३ ॥ तदेतन्न भवेद्रक्षो वातापिरिव लक्ष्मण । मद्विधं योऽतिमन्येत धर्मनित्यं जितेन्द्रियम् । भवेद्धतोऽयं वातापिरगस्त्येनेव मां गतः ॥४४॥ इह त्वं भव सन्नद्धो यन्त्रितो रक्ष मैथिलीम् । अस्यामायत्तमस्माकं यत्कृत्यं रघुनन्दन ॥ ४५ ॥ अहमेनं वधि ष्यामि ग्रहीष्याम्यपि वा मृगम् । यावद्गच्छामि सौमित्रे मृगमानयितुं द्रुतम् ॥ ४६ ॥ पश्य लक्ष्मण वैदेहीं मृग त्वचि गतस्पृहाम् । त्वचा प्रधानया ह्येष मृगोऽद्य न भविष्यति ॥ ४७ ॥

मावश्यकं तत् सर्वमस्यामायत्तम् एतद्रक्षणप्रधानमित्यर्थः । एतन्मूलतया रावणवधादिकं कर्तव्यम् । इयं हि पूर्वं वेदवतीभावे तथा, सङ्कल्पितवती त्यपि सूचयति ॥ ४५ ॥ अहमिति । यावद्गच्छामि गमिष्यामि । " यावत्पुरानिपातयोः " इति भविष्यदर्थे लट् ॥ ४६ ॥ पश्येति । गतस्पृहां प्राप्त स्पृहाम् । प्रधानया प्रधानप्रयोजनभूतया न भविष्यति मरिष्यतीत्यर्थः । अत्र सीताप्रार्थितमेव प्रधानप्रयोजनम्, अन्यदानुषङ्गिकमित्यर्थः ॥ ४७ ॥

रूपम् । उत्स्मयित्वा ईषत्स्मित्वा ॥ ४२ ॥ अविगण्य अविचार्य, पापमिति शेषः ॥ ४३ ॥ एवं यो मद्विधमतिमन्येत तद्रक्षः मारीचः वातापिरिव न भवेत् किमिति काकुः । वातापिरिव मारीचोपि वधार्ह एवेत्यर्थः । अतिमन्येत अतिक्रामेत मा मां गतः प्राप्तः अयं मारीचः अगस्त्येन वातापिरिव हतो भवेदित्यन्वयः ॥ ४४ ॥ सन्नद्धः धनुःकवचादिसन्नाहयुक्तो भव । मैथिलीं यत्नतो रक्ष । कुतः ? अस्यामिति । अस्माकं यत्कृत्यं तत्सर्वमस्यामायत्तं सीतारक्षणार्थमित्यर्थः ॥४५॥ तर्हि त्वया करणीयं किमित्यत आह–अहमिति । अतः कारणान्मृगमानयितुं यावद्गच्छामि तावदिह सन्नद्धो भवेति पूर्वेण सम्बन्धः ॥ ४६ ॥ प्रधानया श्रेष्ठया त्वचा उपलक्षित एष मृगो न भविष्यति, किन्तु रक्षोमायैव यद्यपि तथापि मृगत्वचि गतस्पृहां गता प्राप्ता स्पृहा यस्याः ताम् । वैदेहीं पश्येत्यन्वयः । यद्वा पश्येति मृगत्वचि गत स्पृहां वैदेहीं पश्य अत एव प्रधानया त्वचा हेतुभूतया एष मृगो न भविष्यति, मरिष्यतीत्यर्थः । मृगत्वचि सीतेच्छाया विद्यमानत्वान्मृगं हत्वा त्वचमेवानयिष्या

अप्रमत्तेनेति । सीतया हेतुभूतया आश्रमस्थेन ते त्वया अप्रमत्तेन भाव्यम्, आश्रमस्थोऽप्रमत्तः सन् सीतारक्षणं कुर्वित्यर्थः । पृषतं मृगम् ॥४८॥४९॥ प्रदक्षिणेन अत्यन्तसमर्थेन। जटायुषेति सहार्थे तृतीया। "वृद्धो यूना" इति ज्ञापकात् । मैथिलीं परिगृह्य स्ववशीकृत्य सर्वतः शङ्कित एव प्रतिक्षणमति शङ्कयेवाप्रमत्तो भवेत्यन्वयः। अत्र पञ्चाशच्छ्लोकाः॥५०॥ इति श्रीगोविन्द० श्रीरामा० रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥४३॥

अप्रमत्तेन ते भाव्यमाश्रमस्थेन सीतया ॥ ४८ ॥ यावत्पृषतमेकेन सायकेन निहन्म्यहम् । हत्वैतच्चर्म चादाय शीघ्रमेष्यामि लक्ष्मण ॥ ४९ ॥ प्रदक्षिणेनातिबलेन पक्षिणा जटायुषा बुद्धिमता च लक्ष्मण । भवाप्रमत्तः परिगृह्य मैथिलीं प्रतिक्षणं सर्वत एव शङ्कितः ॥ ५० ॥ इत्यार्षे श्रीरामायणे श्रीमदारण्यकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

तथा तु तं समादिश्य भ्रातरं रघुनन्दनः । बबन्धासिं महातेजा जाम्बूनदमयत्सरुम् ॥१॥ ततस्त्र्यवनतं चापमादायात्मविभूषणम् । आबध्य च कलापौ द्वौ जगामोदग्रविक्रमः ॥ २ ॥ तं वञ्चयानो राजेन्द्रमापतन्तं निरीक्ष्य वै । बभूवान्तर्हितस्त्रासात्पुनः सन्दर्शनेऽभवत् । बद्धासिर्धनुरादाय प्रदुद्राव यतो मृगः ॥ ३ ॥

अजानन्निव यो मायामृगं कार्यान्तरैकदृक् । अनुसृत्य जघानाशु तं लीलामानुषं भजे ॥ अथ मारीचवधः—तथा त्वित्यादिर्ना । त्सरुः खड्गमुष्टिः । "त्सरुः खड्गादिमुष्टिः स्यात्" इत्यमरः ॥ १ ॥ त्र्यवनतं त्रिषु स्थलेष्ववनतम्, शार्ङ्गमित्यर्थः । आत्मविभूषणम् आत्मालङ्कारम् । कलापौ द्वौ द्वौ तूणीरौ "कलापो भूषणे बर्हे तूणीरे संहतेपि च" इत्यमरः ॥२॥ वञ्चयानः वञ्चयमानः । अनित्यो मुमागमः । सन्दर्शने दृष्टिविषये अभवत् स्थितः ।

मीति भावः ॥४७॥ सीतया हेतुभूतया ते त्वया आश्रमस्थेनापि त्वया अप्रमत्तेन भाव्यम्, आश्रमेऽप्रमत्तः सन् सीताया रक्षणं कुर्वित्यर्थः । पृषतं चर्म आदायेत्यत्र सन्ध्यभाव आर्षः ॥ ४८ ॥ ४९ ॥ प्रदक्षिणेन प्रकर्षेण दक्षिणः समर्थः तेन पक्षिणा जटायुषा सह अनुकूलेनेति वा । प्रदक्षिणं सर्वत एव, सर्वदिग्वर्तिराक्षसादिभ्य इत्यर्थः । शङ्कितस्सन् अप्रमत्तो भवेति शेषः ॥ ५० ॥ इति श्रीमहेश्वरतीर्थविर० श्रीरामायणतत्त्वदीपिकाख्यायाम् आरण्यकाण्डव्याख्यायां त्रिचत्वारिंशः सर्गः ॥४३॥ तथेति । त्सरुः खड्गमुष्टिः । असिकण्ठ इति यावत् ॥ १ ॥ त्र्यवनतं शार्ङ्गम् । आत्मविभूषणं चापस्य वीरालङ्कारत्वादिति भावः । कलापौ तूणीरे । उदग्रविक्रमः मृगजिघृक्षया त्वरितपदविन्यासः ॥ २ ॥ सन्दर्शनेऽभवत् दृष्टिविषयोऽभवत् ॥ ३ ॥

बद्धेति । यतः यस्मिन् प्रदेशे मृगो वर्तते तत्र प्रदुद्राव ॥३॥तमित्यादिश्लोकत्रयमेकं वाक्यम् । रूपेण कान्त्या । अग्रे द्योतमानमिव स्थितम् इषोः पातात् अतिवृत्तम् अतिक्रान्तं शङ्कितमिवेत्यन्वयः । धनुष्पाणिं दृष्ट्वा शङ्कितमिवेत्यनेन धनुष्पाणिदर्शनादन्यमृगाणामिवास्य शोको न भवतीतीवशब्दः प्रयुज्यते । यद्वा रामाद्भयं शङ्कमानं सन्तम् उत्पतन्तमिव स्थितं वस्तुतस्तत्राप्यदर्शनादिति भावः। लोभयानं हस्तप्राप्तमिव दृश्यमानमित्यर्थः । दृश्यमान

तं स्म पश्यति रूपेण द्योतमानमिवाग्रतः । अवेक्ष्यावेक्ष्य धावन्तं धनुष्पाणिं महावने ॥ ४ ॥ अतिवृत्तमिषोः पाता ल्लोभयानं कदाचन । शङ्कितं तु समुद्भ्रान्तमुत्पतन्तमिवाम्बरे ॥ ५ ॥ दृश्यमानमदृश्यं च वनोद्देशेषु केषुचित् । छिन्नाभ्रैरिव संवीतं शारदं चन्द्रमण्डलम् ॥ ६ ॥ मुहूर्तादेव ददृशे मुहुर्दूरात्प्रकाशते । दर्शनादर्शनादेवं सोपाकर्षत राघवम् ॥७॥ सुदूरमाश्रमस्यास्य मारीचो मृगतां गतः ॥८॥ आसीत्क्रुद्धस्तु काकुत्स्थो विवशस्तेन मोहितः । अथा वतस्थे संभ्रान्तश्छायामाश्रित्य शाद्वले ॥ ९ ॥ स तमुन्मादयामास मृगरूपो निशाचरः । मृगैः परिवृतो वन्यैरदूरात् प्रत्यदृश्यत ॥१०॥ ग्रहीतुकामं दृष्ट्वैनं पुनरेवाभ्यधावत । तत्क्षणादेव संत्रासात्पुनरन्तर्हितोऽभवत् ॥११॥ पुनरेव ततो दूराद्वृक्षषण्डाद्विनिःसृतम् । दृष्ट्वा रामो महातेजास्तं हन्तुं कृतनिश्चयः । भूयस्तु शरमुद्धृत्य कुपितस्तत्र राघवः १२

मिति केषुचिद्दृश्यमानं केषुचिददृश्यम् अत एव छिन्नाभ्रैः संवीतं व्याप्तं चन्द्रमण्डलमिव स्थितम् । शारदमिति मेघशकलसंभावनार्थमुक्तम् ॥४॥५॥६॥ समीपे मुहूर्तात् मुहूर्तं ददृशे दूरात् दूरं मुहुः प्रकाशते अतः एवम् उक्तरीत्या दर्शनादर्शनात् दर्शनादर्शनाभ्यां सुदूरमपाकर्षत आकृष्टवान् ॥ ७ ॥ ८ ॥ विवशः कुतूहलपरवशः । मोहितः वञ्चितः ॥ ९ ॥ उन्मादयामासेति । उन्मादश्चित्तविभ्रमः, बहुदूराकर्षणेन चित्तमोहं चकारेत्यर्थः ॥१०॥ ११ ॥ भूयः

तं स्मेत्यादिश्लोकत्रयमेकं वाक्यम् । रूपेण स्वरूपेण । अग्रतः अग्रे द्योतमानमिव इषोः पातादतिवृत्तम् अतिक्रान्तम् । लोभयानं हस्तप्राप्तमिव दृश्यमानम् । इवशब्दस्य शङ्कितमित्यनेन सम्बन्धः । धनुष्पाणिं दृष्ट्वा अन्यमृगाणामिव अस्य शङ्का नास्तीति भावः ॥ ४–६ ॥ अपाकर्षत उन्मादयामास बहुदूरधावनेन चित्तमोहं चकारेत्यर्थः ॥ ७–११ ॥ भूयः अत्यर्थं कुपित इत्यन्वयः ॥ १२–१४ ॥

अत्यर्थं कुपितोभूत् ॥ १२ ॥ सूर्यैत्यादिश्लोकद्वयमेकं वाक्यम् ॥ १३ ॥ १४ ॥ प्रथमं मृगरूपस्य शरीरं विनिर्भिद्य ततः मारीचस्य हृदयं तदन्तवर्ति स्वशरीरं बिभेद ॥१५॥ तालमात्रं तालप्रमाणम् । "प्रमाणे द्वयसच्" इत्यादिना प्रमाणे मात्रच् ॥ १६ ॥ सीता केनोपायेन लक्ष्मणमिह प्रस्थापयेत् केनो

सूर्यरश्मिप्रतीकाशं ज्वलन्तमरिमर्दनः । सन्धाय सुदृढे चापे विकृष्य बलवद्बली ॥ १३ ॥ तमेव मृगमुद्दिश्य श्वसन्तमिव पन्नगम् । मुमोच ज्वलितं दीप्तमस्त्रं ब्रह्मविनिर्मितम् ॥ १४ ॥ शरीरं मृगरूपस्य विनिर्भिद्य शरोत्तमः । मारीचस्यैव हृदयं बिभेदाशनिसन्निभः ॥ १५ ॥ तालमात्रमथोत्प्लुत्य न्यपतत्स शरातुरः । विनदन् भैरवं नादं धरण्यामल्पजीवितः ॥ १६ ॥ म्रियमाणस्तु मारीचो जहौ तां कृत्रिमां तनुम् । स्मृत्वा तद्वचनं रक्षो दध्यौ केन तु लक्ष्मणम् । इह प्रस्थापयेत्सीता शून्ये तां रावणो हरेत् ॥१७॥ स प्राप्तकालमाज्ञाय चकार च ततः स्वरम् । सदृशं राघवस्यैव हा सीते लक्ष्मणेति च ॥ १८ ॥ तेन मर्मणि निर्विद्धः शरेणानुपमेन च । मृगरूपं तु तत्त्यक्त्वा राक्षसं रूपमात्मनः ॥ १९ ॥ चक्रे स सुमहाकायो मारीचो जीवितं त्यजन् ॥ २० ॥ ततो विचित्रकेयूरः सर्वाभरणभूषितः । हेममाली महादंष्ट्रो राक्षसोऽभूच्छराहतः ॥ २१ ॥ तं दृष्ट्वा पतितं भूमौ राक्षसं घोरदर्शनम् । रामो रुधिरसिक्ताङ्गं वेष्टमानं महीतले । जगाम मनसा सीतां लक्ष्मणस्य वचः स्मरन् ॥ २२ ॥ मारीचस्यैव मायैषा पूर्वोक्तं लक्ष्मणेन तु । तत्तथा ह्यभवच्चाद्य मारीचोऽयं मया हतः ॥ २३ ॥

पायेन रावणस्तां हरेदिति दध्यौ चिन्तयामास ॥१७॥ स इति । प्राप्तकालं कालप्राप्तं कालोचितमर्थम् । आज्ञाय निश्चित्य ॥१८–२२॥ मारीचस्यैवेति ।

सदृशं मृगरूपस्येति पाठः । रूपमिति शेषः । मारीचस्य तदानीं रूपमन्यदीयम् । हृदयं तु स्वीयमेव । तथाचायमर्थः–मृगरूपस्य सदृशं रूपं तस्यास्वकीयं रूपं भित्त्वा पश्चात्स्वकीयं हृदयं बिभेदेति भावः ॥ १५ ॥ १६ ॥ तां मतिं रावणोक्तसीतालक्ष्मणाह्वानोपायं स्मृत्वा केन मत्कृतोपायेनेति शेषः । सीता लक्ष्मणं प्रेषयेत् तां सीतां शून्ये रावणो हरेदिति दध्याविति योजना ॥१७॥ टी०–तां मतिं विश्वामित्रयागे रामकृतवैरबुद्धिं स्मृत्वा वा ॥ १७॥ स इति । राघवस्य सदृशं रामकण्ठध्वनिसदृशम् ॥ १८–२२॥ मारीच

मायैषेत्यत्र इतिकरणं बोध्यम् ॥ २३ ॥ हा सीत इत्यादि । हृष्टतनूरुहः भयात्पुलकितः, अभूदिति शेषः ॥ २४ ॥ २५ ॥ तत्रेति । विषादजं विषादोत्थम्, विषादो भविष्यतीत्युत्पन्नम् ॥२६॥ राक्षसमित्यादि । हत्वा मरणानुकूलव्यापारं कृत्वा ततस्तदुक्तं स्वरं श्रुत्वा त्वरमाणो रामः जनस्थानं

हा सीते लक्ष्मणेत्येवमाक्रुश्य च महास्वनम् । ममार राक्षसः सोयं श्रुत्वा सीता कथं भवेत् ॥ २४ ॥ लक्ष्मणश्च महाबाहुः कामवस्थां गमिष्यति । इति संचिन्त्य धर्मात्मा रामो हृष्टतनूरुहः ॥ २५ ॥ तत्र रामं भयं तीव्रमाविवेश विषादजम् ॥ २६ ॥ राक्षसं मृगरूपं तं हत्वा श्रुत्वा च तत्स्वरम् । निहत्य पृषतं चान्यं मांसमादाय राघवः । त्वरमाणो जनस्थानं ससाराभिमुखस्तदा ॥२७॥ इत्यार्षे श्रीरामा० श्रीमदारण्यकाण्डे चतुश्चत्वारिंशः सर्गः ॥४४॥
आर्तस्वरं तु तं भर्तुर्विज्ञाय सदृशं वने । उवाच लक्ष्मणं सीता गच्छ जानीहि राघवम् ॥ १ ॥ नहि मे हृदयं स्थाने जीवितं वावतिष्ठति । क्रोशतः परमार्तस्य श्रुतः शब्दो मया भृशम् ॥ २ ॥ आक्रन्दमानं तु वने भ्रातरं त्रातुमर्हसि । तं क्षिप्रमभिधाव त्वं भ्रातरं शरणैषिणम् । रक्षसां वशमापन्नं सिंहानामिव गोवृषम् ॥ ३ ॥

जनस्थानस्थस्वाश्रममुद्दिश्याभिमुखः सन् ससार ययौ । अत्र सार्धसप्तविंशतिश्लोकाः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

अस्थाने भयशङ्किन्या जानक्यापि सुहृज्जनम् । धिक्कृत्य चिन्तितं रामं नित्यापूर्वमहं भजे ॥ आर्तस्वरं त्वित्यादि । भर्तुः भर्तुस्स्वरस्य ॥ १ ॥ नहीति । हृदयं मनः । जीवितं प्राणः । वाशब्दः समुच्चये । स्थाने स्वस्थाने मोहो जायत इति भावः । शरणैषिणं रक्षकार्थिनं गोवृषमिति सामान्य



स्यैषा मायेति लक्ष्मणेन पूर्वं यदुक्तं तत्तथैवाभवत् । कुतः ? मारीच एव मया हतः ॥ २३ ॥ २४ ॥ हृष्टतनूरुहः त्रासाद्रोमाञ्चिततनुरभवदिति शेषः ॥ २५ ॥ २६ ॥ जनस्थानमभिमुखः जनस्थानमध्यवर्तिनिजाश्रममुद्दिश्येत्यर्थः ॥ २७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ ॥ १–३ ॥

विशेषयोः प्रयोगः करिकलभवत् । इति सीता लक्ष्मणमुवाचेति सम्बन्धः ॥२॥३॥ न जगामेति । शासनम् 'अप्रमत्तेन ते भाव्यम्' इत्याद्युक्तम् ॥४॥ मित्ररूपेणोपलक्षितः रूपेण मित्रसदृशः क्रियया शत्रुतुल्योसीत्यर्थः । शात्रवक्रियां दर्शयति यस्त्वमिति ॥५॥ इच्छसीति । इच्छायां हेतुमाह—मत्कृत इति । मत्परिग्रहार्थमित्यर्थः । दार्ढ्याय पुनराह लोभादिति । लोभो मल्लाभेच्छा ॥६॥७॥ त्वद्रक्षणं विहाय कथं गमिष्यामीत्यत्राह—किं हीति । यो रामः प्रधानं

न जगाम तथोक्तस्तु भ्रातुराज्ञाय शासनम् । तमुवाच ततस्तत्र कुपिता जनकात्मजा ॥ ४ ॥ सौमित्रे मित्ररूपेण भ्रातुस्त्वमसि शत्रुवत् । यस्त्वमस्यामवस्थायां भ्रातरं नाभिपत्स्यसे ॥ ५ ॥ इच्छसि त्वं विनश्यन्तं रामं लक्ष्मण मत्कृते । लोभान्मम कृते नूनं नानुगच्छसि राघवम् ॥ ६ ॥ व्यसनं ते प्रियं मन्ये स्नेहो भ्रातरि नास्ति ते । तेन तिष्ठसि विस्रब्धस्तमपश्यन् महाद्युतिम् ॥७॥ किं हि संशयमापन्ने तस्मिन्निह मया भवेत् । कर्तव्यमिह तिष्ठन्त्या यत्प्रधानस्त्वमागतः ॥ ८ ॥ इति ब्रुवाणां वैदेहीं बाष्पशोकपरिप्लुताम् । अब्रवील्लक्ष्मणस्त्रस्तां सीतां मृगवधूमिव ॥ ९ ॥ पन्नगासुरगन्धर्वदेवमानुषराक्षसैः । अशक्यस्तव वैदेहि भर्ता जेतुं न संशयः ॥ १० ॥ देवि देवमनुष्येषु गन्धर्वेषु पतत्त्रिषु । राक्षसेषु पिशाचेषु किन्नरेषु मृगेषु च ॥ ११ ॥ दानवेषु च घोरेषु न स विद्येत शोभने । यो रामं प्रतियुद्ध्येत समरे वासवोपमम् ॥ १२ ॥

यस्य सः यत्प्रधानः त्वमिहागतः तस्मिन् रामे । संशयं प्राणसंशयमापन्ने सति इहाश्रमपदे तिष्ठन्त्या मया किं कार्यम् । न किमपीत्यर्थः ॥ ८–१२ ॥

भ्रातुराज्ञाय शासनमिति । अप्रमत्तेन ते भाव्यमित्यादिरूपम् ॥ ४ ॥ ५ ॥ मत्कृते मदर्थम् ॥ ६ ॥ विस्रब्धः निश्चिन्तः ॥ ७ ॥ त्वद्रक्षणं विहाय कथं गमिष्यामीत्यत्राह—किं हीति । यत्प्रधानस्त्वमिहागतः यो रामः प्रधानं यस्य सः यत्प्रधानः तस्मिन् रामे संशयं प्राणसंशयम् आपन्ने प्राप्ते सति इहाश्रमे तिष्ठन्त्या मया किं कर्तव्यम्, न किमपि मद्रक्षणेन प्रयोजनं नास्ति, श्रीरामं विना अहं क्षणमपि न जीविष्यामीति भावः ॥ ८–१५ ॥

स०—संशयं सम्यग्राक्षसहस्तमापन्ने इति वा । हिंसंशयम् गतसंशयं यथा भवति तथा तस्मिन् रामे आपत् न । यतोऽहम् ई साक्षाल्लक्ष्मीः ततो मया आपत् प्राप्तेति शेषः । न भवेदिति मानसिको भावोपि ज्ञेयः॥८॥

अवध्य इति । एवम् उक्तप्रकारं परुषभाषणम् । राघवं विना स्थितां त्वामित्यन्वयः ॥ १३ ॥ समुद्युक्तैः सन्नाहवद्भिः । सेश्वरैः सेन्द्रैः ॥ १४ ॥ निर्वृतं निर्दुःखम् ॥ १५ ॥ न चेति । तस्य रामस्य नायं स्वरः अपितु केनचिदन्येन मायया विचित्रशक्त्या कृतः । वस्तुतस्तु मारीचस्यैवेयं मायेत्याह गन्धर्वेति । तस्य रक्षसः। मृगीभूतस्य रक्षसः सा स्वरः, मायापेक्षया स्त्रीत्वम्। गन्धर्वनगरप्रख्या गन्धर्वनगरतुल्या माया । यद्वा सा मृगरूपम् । गन्धर्वनगरं

अवध्यः समरे रामो नैवं त्वं वक्तुमर्हसि । न त्वामस्मिन्वने हातुमुत्सहे राघवं विना ॥ १३ ॥ अनिवार्यं बलं तस्य बलैर्बलवतामपि । त्रिभिर्लोकैः समुद्युक्तैः सेश्वरैरपि सामरैः ॥ १४ ॥ हृदयं निर्वृतं तेऽस्तु सन्तापस्त्यज्यतामयम् । आगमिष्यति ते भर्ता शीघ्रं हत्वा मृगोत्तमम् ॥ १५ ॥ नच तस्य स्वरो व्यक्तं मायया केनचित्कृतः । गन्धर्वनगरप्रख्या माया सा तस्य रक्षसः ॥ १६ ॥ न्यासभूतासि वैदेहि न्यस्ता मयि महात्मना । रामेण त्वं वरारोहे न त्वां त्यक्तुमिहोत्सहे ॥ १७ ॥ कृतवैराश्च वैदेहि वयमेतैर्निशाचरैः । खरस्य निधनादेव जनस्थानवधं प्रति ॥ १८ ॥ राक्षसा विविधा वाचो विसृजन्ति महावने । हिंसाविहारा वैदेहि न चिन्तयितुमर्हसि ॥ १९ ॥ लक्ष्मणेनैवमुक्ता सा क्रुद्धा संरक्तलोचना । अब्रवीत्परुषं वाक्यं लक्ष्मणं सत्यवादिनम् ॥ २० ॥

नाम मेघादावारोपितं प्रासादवनादिकं तत्कदाचिद् दृश्यते तद्यथा व्यामोहजनकं तथा चित्रवस्तुरूपा परव्यामोहजनिका काचिच्छक्तिर्माया सा तस्य रक्षसः मारीचस्यास्ति यया मुह्यसीत्यर्थः । "गन्धर्वनगरं प्रोक्तमिन्द्रजालं मनीषिभिः ।" इत्यप्याहुः ॥ १६ ॥ न्यासेति । न्यासभूतासि निक्षेपरूपासि । केन निक्षिप्तेत्यत आह रामेण मयि न्यस्तेति ॥ १७ ॥ कृतवैरा इति । खरस्य स्वामिनो निधनात् जनस्थाने वधो यः तं प्रति वयमेतैर्निशाचरैः कृतवैराः, एते अस्मासु वैरमाचरितवन्त इत्यर्थः ॥ १८ ॥ किं तत इत्यत्राह–राक्षसा इति । वाचो विसृजन्ति अस्मन्मोहनार्थमिति शेषः ॥ १९ ॥ २० ॥

गन्धर्वनगरप्रख्या गन्धर्वनगरमिन्द्रजालम्। यद्वा मेघादावारोपितं प्रासादवनादिकं तत्कदाचिद्दृश्यते तद्यथा व्यामोहजनकम् एवं चित्रवस्तुरूपेण परव्यामोहजनिका काचिच्छक्तिर्माया सा तस्य रक्षसो मारीचस्यास्ति यया मुह्यसीत्यर्थः ॥ १६ ॥ १७ ॥ जनस्थानवधं शून्यताकरणरूपं प्रति उद्दिश्य खरस्य निधनात् संहारादारभ्येत्यर्थः । ल्यब्लोपे पञ्चमी । हे कल्याणि ! वयमेतैर्निशाचरैः कृतवैराः अस्मासु वैरमाचरितवन्त इत्यर्थः ॥१८॥ तस्मादेव हिंसाविहाराः हिंसैव विहारो येषां ते विविधा वाचो विसृजन्ति प्रबलानेकरक्षोयुद्धेप्यप्रतिहतशक्तिसम्पन्नस्य श्रीरामस्य पुरतः स्थातुमशक्ताः मायाविनो हिंसाविहारा विविधा वाचो विसृजन्तीति भावः ॥१९॥२०॥

अनार्य दुःशील ! अकरुणारम्भ दयाप्रसक्तिरहित ! तत्र युक्तिमाह रामस्येति । तेन अनार्यत्वादिकारणेन रामस्य व्यसनं दृष्ट्वा एतानि पूर्वोक्तवचनानि प्रभाषसे ॥ २१ ॥ २२ ॥ प्रच्छन्नचारिषु त्वद्विधेषु सपत्नेषु पापं भवेदिति यत् एतन्न चित्रम्, नृशंसत्वादिकमत्र हेतुत्वेनोपात्तम् ॥ २३ ॥ सुदुष्ट इति । प्रयुक्तः प्रेषितः ॥२४॥ तन्न सिद्ध्यतीति । पृथग्जनं क्षुद्रपुरुषम् ॥ २५ ॥२६॥ इत्युक्तः परुषं वाक्यमिति । "अप्रधाने दुहादीनाम्" इति कर्मण्यप्रधाने

अनार्याकरुणारम्भ नृशंस कुलपांसन । अहं तव प्रियं मन्ये रामस्य व्यसनं महत् ॥ २१ ॥ रामस्य व्यसनं दृष्ट्वा तेनैतानि प्रभाषसे ॥ २२ ॥ नैतच्चित्रं सपत्नेषु पापं लक्ष्मण यद्भवेत् । त्वद्विधेषु नृशंसेषु नित्यं प्रच्छन्नचारिषु ॥ २३ ॥ सुदुष्टस्त्वं वने राममेकमेकोऽनुगच्छसि । मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ॥२४॥ तन्न सिद्ध्यति सौमित्रे तव वा भरतस्य वा । कथमिन्दीवरश्यामं पद्मपत्रनिभेक्षणम् । उपसंश्रित्य भर्तारं कामयेयं पृथग्जनम् ॥ २५ ॥ समक्षं तव सौमित्रे प्राणांस्त्यक्ष्ये न संशयः । रामं विना क्षणमपि नहि जीवामि भूतले ॥ २६ ॥ इत्युक्तः परुषं वाक्यं सीतया रोमहर्षणम् । अब्रवील्लक्ष्मणः सीतां प्राञ्जलिर्विजितेन्द्रियः ॥ २७ ॥ उत्तरं नोत्सहे वक्तुं दैवतं भवती मम । वाक्यमप्रतिरूपं तु न चित्रं स्त्रीषु मैथिलि ॥ २८ ॥ स्वभावस्त्वेष नारीणामेवं लोकेषु दृश्यते । विमुक्तधर्माश्चपलास्तीक्ष्णा भेदकराः स्त्रियः ॥ २९ ॥ न सहे हीदृशं वाक्यं वैदेहि जनकात्मजे । श्रोत्रयोरुभयोर्मेऽद्य तप्तनाराचसन्निभम् ॥ ३० ॥

द्वितीया । सीतापारुष्येण प्रतिपारुष्यादिराहित्यं सूचयति विजितेन्द्रिय इति ॥ २७ ॥ उत्तरमिति । अप्रतिरूपम् अत्यन्तानुचितम् । विमुक्तधर्माः परित्यक्तविनयादिधर्माः । चपलाः चञ्चलचित्ताः । तीक्ष्णाः क्रूरहृदयाः । भेदकराः परस्परस्नेहकार्यविच्छेदकराः ॥ २८–३० ॥

अकार्यकरणारम्भ इति पाठः । अकार्यकरणारम्भः अकृत्यकरणोद्युक्तः ॥ २१–२८ ॥ तीक्ष्णाः क्रूरहृदयाः ॥ २९ ॥ ३० ॥

विषम०—अकार्यकरणारम्भ अशोभनकृत्यकरणोद्युक्त ! ॥ स०—आर्ये करुणारम्भो यस्य स न भवतीत्यनार्यकरुणारम्भः ॥ २१ ॥

उपशृण्वन्त्विति । मं साक्षिभूताः वनेचराः । न्यायवादी अहं त्वया अन्यायं परुषं यथा उक्तः तथा उपशृण्वन्तु ॥३१॥ धिक्त्वामिति "उभसर्वतसोः—"

उपशृण्वन्तु मे सर्वे साक्षिभूता वनेचराः । न्यायवादी यथाऽन्यायमुक्तोऽहं परुषं त्वया॥३१॥ धिक् त्वामद्य प्रणश्य त्वं यन्मामेवं विशङ्कसे । स्त्रीत्वं दुष्टं स्वभावेन गुरुवाक्ये व्यवस्थितम् ॥ ३२ ॥ गमिष्ये यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने । रक्षन्तु त्वां विशालाक्षि समग्रा वनदेवताः ॥३३॥ निमित्तानि हि घोराणि यानि प्रादुर्भवन्ति मे । अपि त्वां सह रामेण पश्येयं पुनरागतः ॥ ३४ ॥ [ न वेत्त्येतन्न जानामि वैदेहि जनकात्मजे । ] लक्ष्मणेनैवमुक्ता सा रुदन्ती जनकात्मजा । प्रत्युवाच ततो वाक्यं तीव्रं बाष्पपरिप्लुता ॥ ३५ ॥ गोदावरीं प्रवेक्ष्यामि विना रामेण लक्ष्मण । आवन्धिष्येऽथवा त्यक्ष्ये विषमे देहमात्मनः ॥ ३६ ॥ पिबाम्यहं विषं तीक्ष्णं प्रवेक्ष्यामि हुताशनम् । न त्वहं राघवादन्यं पदापि पुरुषं स्पृशे ॥ ३७ ॥

इत्यादिना धिग्योगे द्वितीया ॥३२–३५॥ आवन्धिष्ये उद्बन्धनं करिष्यामि । विषमे भृग्वादिविषमस्थले । पातेनेति शेषः । स्पृशे स्पृशामि ॥३६॥३७॥

उपशृण्वन्तु मे वाक्यमिति शेषः । वनेचराः देवाः । अन्यायं परुषं त्वयोक्तः ॥ ३१ ॥ त्वं प्रणश्य नाशं प्राप्नुहि । यत् यस्माद्गुरुवाक्ये व्यवस्थितं मामेवं विशङ्कसे अतएव स्त्रीत्वं स्वभावेन दुष्टम् ॥ ३२ ॥ पूर्वं धिक् त्वामद्य प्रणश्येत्युक्त्वा रामस्मरणेन तस्या मङ्गलमाशास्ते—स्वस्तीत्यादिना ॥ ३३ ॥ रामेण सह त्वां पश्येयं नवेत्येतन्न जानामीति निमित्तानां तादृशत्वादिति भावः ॥ ३४ ॥ ३५ ॥ आवन्धिष्ये उद्बन्धनं करिष्यामीति । विषमे भृग्वादिविषमप्रदेशे ॥ ३६–३९ ॥

ति०—प्रवेक्ष्यामि हुताशनम् । अनेन साक्षाद्रावणगृहं न गमिष्यामि, किन्त्वहं स्वरूपेणाग्नौ स्थित्वा माययैव तद्धस्तं गमिष्यामीति ध्वनितम् । तदुक्तं कूर्मपुराणे—" रामस्य सुभगां भार्यां रावणो राक्षसेश्वरः । सीतां विशालनयनां चकमे कालनोदितः । गृहीत्वा मायया वेषं चरन्तीं विजने वने । समाहर्तुं मनश्चक्रे तापसः किल कामिनीम् । विज्ञाय साच तद्भावं स्मृत्वा दाशरथिं पतिम् ॥ " तद्भावं लङ्कायामेव हृदिकृतम्, तापसो भूत्वा हरिष्यामीति भावमित्यर्थः । " जगाम शरणं वह्निमावसथ्यं शुचिस्मिता । प्रपेदे पावकं देवं साक्षिणं विश्वतोमुखम् । आत्मानं दीप्तवपुषं सर्वभूतहृदि स्थितम् ॥ " इत्याद्यष्टश्लोकानुक्त्वा " इति वह्न्यष्टकं जप्त्वा रामपत्नी यशस्विनी । ध्यायन्ती मनसा तस्थौ राममुन्मीलितेक्षणा ॥ अथावसथ्याद्भगवान् हव्यवाहो महेश्वरः । आविरासीत्सुदीप्तात्मा तेजसा निर्दहन्निव । सृष्ट्वा मायामयीं सीतां स रावणवधेच्छया । सीतामादाय रामेष्टां पावकोऽन्तरधीयत । कृत्वा तु रावणवधं रामो लक्ष्मणसंयुतः । समादायाभवत्सीतां शङ्काकुलितमानसः । सा प्रत्ययाय भूतानां सीता मायामयी पुनः । विवेश पावकं दीप्तं ददाह ज्वलनोपि ताम् । दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः । रामायादर्शयत्सीतां पावकोऽसौ सुरप्रियः । एतत्पतिव्रतानां वै माहात्म्यं कथितं मया । स्त्रीणां सर्वाघशमनं प्रायश्चित्तमिदं स्मृतम् । " इत्युत्तरखण्डे चतुस्त्रिंशेऽध्याये ।

आक्रुश्य विनिन्द्य॥३८॥ तामिति । भर्तुर्भ्रातरं न किञ्चिदुवाचेति आश्वासनव्याजेन गमनविलम्बं करोतीति कोपेनेति शेषः ॥३९॥ किञ्चिदिति कोपमिश्रत्वात् किञ्चित्प्रणामः । बहुशोऽन्वीक्षमाण इति कथमेनामेकाकिनीं त्यक्त्वा गमिष्यामीत्यनुशयेन बहुशोऽन्वीक्षणम् । आत्मवान् धैर्यवान् । अस्मिन् सर्गे सार्धचत्वारिंशच्छ्लोकाः ॥ ४० ॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥



इति लक्ष्मणमाक्रुश्य सीता दुःखसमन्विता । पाणिभ्यां रुदती दुःखादुदरं प्रजघान ह ॥ ३८ ॥ तामार्त्तरूपां विमना रुदन्तीं सौमित्रिरालोक्य विशालनेत्राम् । आश्वासयामास न चैव भर्तुस्तं भ्रातरं किञ्चिदुवाच सीता॥३९॥ ततस्तु सीतामभिवाद्य लक्ष्मणः कृताञ्जलिः किञ्चिदभिप्रणम्य च । अन्वीक्षमाणो बहुशश्च मैथिलीं जगाम रामस्य समीपमात्मवान् ॥ ४० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे पञ्चचत्वारिंशः सर्गः ॥४५॥

तया परुषमुक्तस्तु कुपितो राघवानुजः । स विकांक्षन् भृशं रामं प्रतस्थे नचिरादिव ॥ १ ॥
तदासाद्य दशग्रीवः क्षिप्रमन्तरमास्थितः । अभिचक्राम वैदेहीं परिव्राजकरूपधृत् ॥ २ ॥

अथ सीतायाः लक्ष्मणविषयपरुषभाषणफलं दर्शयत्येकादशभिः सर्गैः । रावणप्रलोभनमाह षट्चत्वारिंशे—तया परुषमित्यादि । विकाङ्क्षन् अनिच्छन्नेव राममुद्दिश्य प्रतस्थे । नचिरादिव अविलम्बितमेव । इवशब्दो वाक्यालङ्कार इति वा । यद्वा नचिरादिव सीतात्यागासहिष्णुतया पादौ पश्चादाकर्षतः रामप्राप्तित्वरा तु पुरतः कर्षतीतीवशब्दस्य भावः ॥ १ ॥ तदिति । आस्थितः अवकाशं प्रतीक्षमाणः स्थितो दशग्रीवः । तदेव अन्तरम् अव अभिवाद्य नमस्कृत्य अभिप्रणम्य प्रह्वीभूय अन्वीक्षमाणः कथमेनां रामेण विना कृत्वा गमिष्यामीत्याशयेन बहुशो निरीक्षणम् ॥ ४० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥ तयेति । नचिरादिव शीघ्रमेवेत्यर्थः ॥१॥ अन्तरं रामलक्ष्मणयो

—अनेन स्त्रीणां जातिभ्रंशकरापदि अग्निप्रवेशो न दोषाय सर्वप्रायश्चित्तं चेति ध्वनितम् । कदाप्यन्यं पुरुषं न स्पृशे इत्यन्वयः । अत्र पत्यसान्निध्य इति शेषः । तेन विराधस्पर्शेपि न हानिः । तदा पतिसंनिधानात् । किञ्च साक्षाद्भगवतीस्पर्शे रावणो विराधवत्तत्क्षणादेव म्रियेत । एवं सर्वराक्षसवधो न स्यादिति मा०.सीतारचना । किञ्चास्य कार्यं हनुमत्पुच्छाग्निना लङ्कादाहः । अन्यथा रावणवशेन लोकपालाग्निना कथं तन्नगरदाहः स्यात् ? एतच्छक्तिप्रवेशेन तु तत्कार्यसामर्थ्यं तस्येति मन्तव्यम् । किञ्चैवं प्रतिज्ञाय रावणस्पर्शे जगन्मातुः प्रतिज्ञाभङ्गः स्यात् । स्पृशे स्पर्शनं च पतित्वेन स्वीकरणम् ॥ ३७ ॥

स०—तेनैव रक्षोरूपेणाऽऽगमने न प्रत्यानयनं सीतायाः स्यादिति वेषान्तरेणागमनं चेद् गृहस्थवेषेण कुतो नागतिरिति चेन्न; मध्येसंवादं रामागतौ समरसमारम्भो भवेदिति मतिमान् अयं यतिवेषस्तदनारम्भक—

काशम् । आसाद्य वैदेहीम् अभिचक्राम आभिमुख्येनाजगाम । परिव्राजको भिक्षुः तस्य रूपं लिङ्गं धारयतीति परिव्राजकरूपधृत् ॥ २ ॥ परिव्राजक लिङ्गान्याह—श्लक्ष्णेति । शिखी अदन्तत्वाभावेपि व्रीह्यादित्वादिनिः । छत्रीत्यत्र वाक्यसन्धेरनित्यत्वेन यणभावः । उपानहीत्यत्र इनिरार्षः । यष्टिः त्रिदण्डम् । शिखीत्यनेन साहचर्यात् । अत्र धर्मप्रधानजनककुलनन्दिन्याः सीताया विश्वासाय धृतत्वादित्थमेव यतिलिङ्गमिति दर्शितम् । तथाहाङ्गिराः—

श्लक्ष्णकाषायसंवीतः शिखी छत्री उपानही । वामे चांसेऽवसज्याथ शुभे यष्टिकमण्डलू । परिव्राजकरूपेण वैदेहीं समुपागमत् ॥ ३ ॥ तामाससादातिबलो भ्रातृभ्यां रहितां वने । रहितां चन्द्रसूर्याभ्यां सन्ध्यामिव महत्तमः ॥ ४ ॥ तामपश्यत्ततो बालां रामपत्नीं यशस्विनीम् । रोहिणीं शशिना हीनां ग्रहवद् भृशदारुणः ॥५॥ तमुग्रं पापकर्माणं जनस्थानरुहा द्रुमाः । समीक्ष्य न प्रकम्पन्ते न प्रवाति च मारुतः ॥ ६ ॥ शीघ्रस्रोताश्च तं दृष्ट्वा वीक्षन्तं रक्तलोचनम् । स्तिमितं गन्तुमारेभे भयाद्गोदावरी नदी ॥ ७ ॥ रामस्य त्वन्तरप्रेप्सुर्दशग्रीवस्तदन्तरे । उपतस्थे च वैदेहीं भिक्षुरूपेण रावणः ॥ ८ ॥

"यतेर्लिङ्गं प्रवक्ष्यामि येनासौ लक्ष्यते यतिः । ब्रह्मसूत्रं त्रिदण्डं च वस्त्रं जन्तुनिवारणम् । शिक्यं पात्रं बृसी चैव कौपीनं कटिवेष्टनम् । यस्यैतद्विद्यते लिङ्गं स यतिर्नेतरो यतिः ॥" इति । परिव्राजकरूपेणेत्यनेन ब्रह्मसूत्रादिकमुक्तम् । समुपागमदिति प्रतिपाद्यार्थभेदात् पुनःपुनः क्रियापदप्रयोगः ॥३॥ तामिति । भ्रातृभ्यां रामलक्ष्मणाभ्याम् । महत्तम इत्यभूतोपमा, सन्ध्यायां महतस्तमसोऽसम्भवात् ॥ ४ ॥ तामिति । ग्रहः अङ्गारकः शनैश्चरो वा स रोहिणीमिव भृशदारुणो रावणस्तामपश्यत् । यथा रोहिण्याः क्रूरग्रहवीक्षणं लोकानर्थकरं तथा रावणस्य सीतावीक्षणमिति भावः ॥ ५ ॥ दारुणत्वं प्रकटयति—तमुग्रमिति ॥ ६ ॥ शीघ्रस्रोताः शीघ्रप्रवाहा । वीक्षन्तं वीक्षमाणम् । स्तिमितमिति क्रियाविशेषणम् ॥ ७ ॥ रामस्येति । रामस्य रपसरणरूपमवकाशमित्यर्थः । "अभिचक्राम वैदेहीम्, वैदेहीमन्वपद्यत, तामाससादातिबलः, उपतस्थे स वैदेहीम्, अभ्यगच्छत वैदेहीम" इत्येताः क्रियाः प्रत्यासत्तिविशेषविवक्षया पुनः पुनः प्रयुज्यन्ते ॥ २ ॥ टीका—श्लक्ष्णेति । शिखीत्यादिविशेषणैः त्रिदण्डीति व्यज्यते । तदुक्तं भारते "त्रिदण्डी सकमण्डलुः" इति ॥ ३ ॥ ४ ॥ ग्रहवत् अङ्गारकादिवत् ॥ ५–७ ॥ तदन्तरे तस्मिन्नवकाशे ॥ ८ ॥

—इति तमर्दीधरदिति सम्भवात् । हन्त तर्हि रामरूपं कुतो न दधारेति परमवशिष्यते शङ्केति चेन्न; इदानीन्तना अपि यद्वद्वेषमिषेणायान्तस्तत्तदाचारा इति रामरूपग्रहणे नान्यकामिनीकामस्यादिति तत्याग इति सम्भवात् ॥ १ ॥

अन्तरप्रेप्सुः विश्लेषान्वेषी । तदन्तरं तस्मिन्नवकाशे । प्रथमं सीतामुद्दिश्य गमनम् अथाश्रमसमीपगमनं ततः सीतादर्शनं ततः सन्निकर्षगमनमिति क्रमः ॥ ८ ॥ अथाभिमुखगमनमाह—अभव्य इति । अभव्यः दुर्जनः । भव्यरूपेण सुजनरूपेण । अनुशोचतीमिति आगमशासनस्यानित्यत्वान्नुमभावः ॥ ९ ॥ स इति । पापः अन्तः पापात्मा । भव्यरूपेण बाह्याकारेणोपलक्षितः ॥ १० ॥ बाष्पशोकाभिपीडितां रामार्तस्वरश्रवणेन बाह्याभ्यन्तरास्वास्थ्य

अभव्यो भव्यरूपेण भर्तारमनुशोचतीम् । अभ्यवर्तत वैदेहीं चित्रामिव शनैश्चरः ॥ ९ ॥ स पापो भव्यरूपेण तृणैः कूप इवावृतः । अतिष्ठत्प्रेक्ष्य वैदेहीं रामपत्नीं यशस्विनीम् ॥ १० ॥ शुभां रुचिरदन्तोष्ठीं पूर्णचन्द्रनिभाननाम् । आसीनां पर्णशालायां बाष्पशोकाभिपीडिताम् ॥ ११ ॥ स तां पद्मपलाशाक्षीं पीतकौशेयवासिनीम् । अभ्यगच्छत वैदेहीं दुष्टचेता निशाचरः ॥ १२ ॥ स मन्मथशराविष्टो ब्रह्मघोषमुदीरयन् । अब्रवीत्प्रश्रितं वाक्यं रहिते राक्षसाधिपः ॥ १३ ॥ तामुत्तमां स्त्रियं लोके पद्महीनामिव श्रियम् । विभ्राजमानां वपुषा रावणः प्रशशंस ह ॥ १४ ॥ का त्वं काञ्चनवर्णाभे पीतकौशेयवासिनि । कमलानां शुभां मालां पद्मिनीव हि बिभ्रती ॥ १५ ॥ ह्रीः कीर्तिः श्रीः शुभा लक्ष्मीरप्सरा वा शुभानने । भूतिर्वा त्वं वरारोहे रतिर्वा स्वैरचारिणी ॥ १६ ॥

वतीम् । पीतकौशेयं वस्ते इति पीतकौशेयवासिनीम् । णिन्यन्तात् ङीप् । अभ्यगच्छत पूर्वस्मादपि सन्निकर्षं प्राप्तः ॥ ११ ॥ १२ ॥ स इति । ब्रह्मघोषम् "उपनिषदमावर्तयेत्" इत्युक्तपरिव्राजकोचितवेदघोषम् । प्रश्रितं विनयान्वितम् । रहिते विजनप्रदेशे ॥ १३ ॥ तामिति । लोके उत्तमां स्त्रियमित्यन्वयः । प्रश्रितं वाक्यमब्रवीदित्यस्यैव विवरणं प्रशशंसेति ॥ १४ ॥ काञ्चनवर्णाभे काञ्चनतुल्यवर्णे ! कमलानां मालां बिभ्रती पद्मिनीव स्थिता पद्मतुल्यमुखनयनपाणिपादविशिष्टत्वादिति भावः ॥ १५ ॥ ह्रीः विष्णुपत्नी भूमिः । "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति श्रुतेः । श्रीः कमला । लक्ष्मीः

भव्यरूपेण साधुरूपेणोपलक्षितः ॥ ९ ॥ १० ॥ बाष्पशोकाभिपीडितां बाष्पैः शोकेन चाभिपीडिताम् ॥ ११ ॥ ब्रह्मघोषं परिव्राजकवेषोचितं वेदघोषम् । रहिते रामलक्ष्मणाभ्यां रहिते समये ॥ १२–१४ ॥ टीका—का त्वमित्यादि प्रशस्तया सह संलापार्थः । न त्वज्ञातज्ञानार्थम् ॥ १५ ॥ ह्रीरिति ह्रीप्रभृतयो विष्णुशक्तिविशेषाः ॥ १६ ॥

कान्त्यधिष्ठानदेवता । रतिः मन्मथस्त्री । स्वैरचारिणी स्वतन्त्रा ॥ १६ ॥ समाः वैषम्यरहिताः । शिखराणि अग्राणि प्रशस्तानि सन्तीति शिखरिणः । प्रशंसायामिनिः । कुन्दकुड्मलवत् प्रशस्ताग्रा इत्यर्थः । स्निग्धाः मसृणाः । रक्तान्ते रक्तरेखायुक्तान्ते । जघनं कटिपुरोभागः । " पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः " इत्यमरः ॥ १७ ॥ १८ ॥ एताविति । उपचितौ उन्नतौ । वृत्तौ वर्तुलौ । संहतौ अन्योन्यसंश्लिष्टौ । सम्यक् प्रकृष्टं

समाः शिखरिणः स्निग्धाः पाण्डरा दशनास्तव । विशाले विमले नेत्रे रक्तान्ते कृष्णतारके ॥ १७ ॥ विशालं जघनं पीनमूरू करिकरोपमौ ॥ १८ ॥ एतावुपचितौ वृत्तौ संहतौ संप्रवल्गितौ । पीनोन्नतमुखौ कान्तौ स्निग्धौ तालफलोपमौ । मणिप्रवेकाभरणौ रुचिरौ ते पयोधरौ ॥ १९ ॥ चारुस्मिते चारुदति चारुनेत्रे विलासिनि । मनो हरसि मे कान्ते नदी कूलमिवाम्भसा ॥ २० ॥ करान्तमितमध्यासि सुकेशी संहतस्तनी ॥ २१ ॥ नैव देवी न गन्धर्वी न यक्षी नच किन्नरी । नैवंरूपा मया नारी दृष्टपूर्वा महीतले ॥ २२ ॥

वल्गितं चलनं ययोस्तौ संप्रवल्गितौ गुरुत्वौन्नत्याभ्यां किञ्चिच्चलन्ताविव स्थितावित्यर्थः । पीनोन्नतमुखौ क्वचित् स्तनयोः पीनत्वेप्यग्रे औन्नत्यं पीनत्वं च न स्तः तथा न भवत इमौ किन्तु पीनम् उन्नतं च मुखं ययोस्तौ । कान्तौ काम्यमानौ । मणिप्रवेकाभरणौ मणिप्रवेकाः मणिश्रेष्ठाः । " प्रवेकानुत्तमोत्तमौ " इत्यमरः । ते मालात्मकाः आभरणं ययोस्तौ । रुचिरौ शोभमानौ । सूक्ष्मतरकौशेयोत्तरीयचलनवशेन हठाद् दृष्टः प्रकारो दुरात्मना वर्ण्यते ॥ १९ ॥ चारुस्मित इति । चारवो दन्ता यस्याः सा चारुदती । आर्षो दन्तस्य दत्रादेशः छन्दोवद्भावेन "छन्दसि च" इति सूत्रेण समासान्तो दन्तस्य दत्रादेशो वा "उगितश्च" इति ङीप् । समा इत्यादिना पूर्वोक्तस्य सामान्योक्तिरियं चारुस्मितत्वनिर्वाहाय विलासोऽम्भस्थानीयः अतो न न्यूनोपमा॥२०॥ करान्तेति । करान्तेन करतलाङ्गुष्ठप्रदेशिनीचक्रमानेन मितं परिच्छिन्नं मध्यं यस्याः सा । संहतस्तनीति पूर्वं संहतावित्युक्तकल्पेपि पुनरुक्तिर्दुर्लभलक्षणत्वविस्मयेन ॥ २१ ॥ एवंरूपा देवी देवस्त्री देवलोके न दृष्टा, एवमुत्तरत्रापि योज्यम् । नारी मनुष्यस्त्री ॥ २२ ॥

समा एकाकाराः शिखरिणः शिखराणि अग्राणि प्रशस्तानि सन्तीति तथा ॥ १७–१९ ॥ टी०—मणिप्रवेकः मणिश्रेष्ठः ॥ १९ ॥ नदी कर्त्री अम्भसा कूलं स्वकूलमिव मनो हरसीत्यन्वयः ॥ २० ॥ करान्तमितमध्या मुष्टिग्राह्यमध्या ॥ २१ ॥ २२ ॥

स०—मनो हरसि मे रामे इति पाठः । हे रामे हे रमिते । नदीति कर्त्रीनिर्दे[illegible] ...मिताद्भिर्मनो हरसीत्यर्थः । करान्ते इति च्छेदः । रामदत्ते देवो मा॥२०॥

लोकेष्वग्र्यं श्रेष्ठं रूपं लावण्यं रूपादीनि कान्तार[illegible] [illegible] । [illegible] [illegible]गमनमिति निर्णयबुद्धिं न जनयन्तीत्यर्थः ॥ २३ ॥ सेति । प्रतिक्राम प्रतिनिवर्तस्व, निलयमिति शेषः । वस्तुं स्थातुम् ॥ २४ ॥ सम्पन्नानि समृद्धानि । आचरितुं सञ्चरितुम् ॥२५॥ वरमिति । वरं श्रेष्ठम् । माल्यादि त्वद्युक्तं तव योग्यं मन्ये नतु यादृशतादृशम् । एवमुत्तरत्रापि । यद्वा माल्यादिकं त्वद्युक्तं त्वत्संबद्धं सत् वरं प्रशस्तं भवतीति

रूपमग्र्यं च लोकेषु सौकुमार्यं वयश्च ते । इह वासश्च कान्तारे चित्तमुन्मादयन्ति मे ॥ २३ ॥ सा प्रतिक्राम भद्रं ते न त्वं वस्तुमिहार्हसि । राक्षसानामयं वासो घोराणां कामरूपिणाम् ॥२४॥ प्रासादाग्राणि रम्याणि नगरोपवनानि च । सम्पन्नानि सुगन्धीनि युक्तान्याचरितुं त्वया ॥ २५ ॥ वरं माल्यं वरं भोज्यं वरं वस्त्रं च शोभने । भर्तारं च वरं मन्ये त्वद्युक्तमसितेक्षणे ॥२६॥ का त्वं भवसि रुद्राणां मरुतां वा वरानने । वसूनां वा वरारोहे देवता प्रतिभासि मे ॥ २७ ॥ नेह गच्छन्ति गन्धर्वा न देवा नच किन्नराः । राक्षसानामयं वासः कथं नु त्वमिहागता ॥ २८ ॥ इह शाखामृगाः सिंहा द्वीपिव्याघ्रमृगास्तथा । ऋक्षास्तरक्षवः कङ्काः कथं तेभ्यो न बिभ्यसि ॥ २९ ॥ मदान्वितानां घोराणां कुञ्जराणां तरस्विनाम् । कथमेका महारण्ये न बिभेषि वरानने ॥३०॥ कासि कस्य कुतश्चित्त्वं किंनिमित्तं च दण्डकान् । एका चरसि कल्याणि घोरान् राक्षससेवितान् ॥ ३१ ॥

मन्ये ॥ २६ ॥ का त्वमिति । त्वं मे देवता देवस्त्रीति प्रतिभासि । तत्र का त्वं किं रुद्राणां सम्बन्धिनी उत मरुताम् आहोस्विद्वसूनां सम्बन्धिनी । वाकारः समुच्चयार्थः । तेन किमादित्यानामित्यपि सिद्ध्यति ॥ २७ ॥ तत्रापि संशयनिवृत्तिमाह—नेहेति ॥ २८ ॥ भयहेत्वन्तरमाह—इहेति । शाखामृगाः वानराः । द्वीपं चर्म तद्योगात् द्वीपिनो बालव्याघ्राः । व्याजिघ्रन्तीति व्याघ्राः द्वीप्यपेक्षया किञ्चिन्महान्तोऽमी । तरक्षवो मृगादनाः महाव्याघ्राः । न विभ्यसि न बिभेषि । कङ्काः मांसादा भयङ्कराकृतयः पक्षिविशेषाः ॥ २९ ॥ पञ्चम्यर्थे षष्ठी । तरस्विनां बलवताम् ॥ ३० ॥ कासीति । कासि किंनामधेयासि । कस्य सम्बन्धिनी कुतः कस्माद्देशादागतासि ॥ ३१ ॥

रूपादीनि त्रीणि चित्तमुन्मादयन्ति मनःक्षोभं जनयन्ति ॥ २३ ॥ प्रतिक्राम निर्याहि ॥ २४ ॥ सम्पन्नानि राजभोगैरिति शेषः ॥२५॥ माल्यादीनि त्वया आचरितुमुपभोक्तुं युक्तानीति पूर्वेणान्वयः ॥ २६–२८ ॥ टीका—इहेति । द्वीपिनो बिन्दुव्याघ्राः ॥ २९–३१ ॥

इतीति । द्विजातिवेषेण संन्यासिवेषेण । हितं सहितम् । सत्क्रियते एभिरिति सत्काराः पूजाद्रव्याणि तैः ॥ ३२ ॥ उक्तं विवृणोति—उपनीयेति । पाद्येन पादोदकेन । अभिनिमन्त्र्य सत्कृत्य । तदा पाद्यप्रदानानन्तरं सिद्धमित्येवाब्रवीत् । पक्वान्नं सिद्धमित्यब्रवीत् ॥ ३३ ॥ उक्तमर्थं सर्गान्तश्लोकाभ्यां विवृणोति—द्विजातीत्यादि । द्विजातिवेषेण समागतम् । पात्रम् अलाबुप्रभृतिष्वेकं कुसुम्भं महारजताख्यरञ्जकद्रव्यविशेषरक्तं वस्त्रम् । "तेन रक्तम्—" इति

इति प्रशस्ता वैदेही रावणेन दुरात्मना । द्विजातिवेषेण हितं दृष्ट्वा रावणमागतम् । सर्वैरतिथिसत्कारैः पूजयामास मैथिली ॥३२॥ उपनीयासनं पूर्वं पाद्येनाभिनिमन्त्र्य च । अब्रवीत्सिद्धमित्येव तदा तं सौम्यदर्शनम् ॥ ३३ ॥ द्विजातिवेषेण समीक्ष्य मैथिली समागतं पात्रकुसुम्भधारिणम् । अशक्यमुद्द्वेष्टुमपायदर्शनं न्यमन्त्रयद् ब्राह्मणवत्तदाङ्गना ॥ ३४ ॥ इयं बृसी ब्राह्मण काममास्यतामिदं च पाद्यं प्रतिगृह्यतामिति । इदं च सिद्धं वनजातमुत्तमं त्वदर्थमव्यग्रमिहोपभुज्यताम् ॥ ३५ ॥

प्राप्तस्याणो लोप आर्षः । यद्वा कुसुम्भः कमण्डलुः । "स्यान्महारजने क्लीबं कुसुम्भं करके पुमान्" इत्यमरः । तदुभयधारिणम् । अपाये अपहरणे अनर्थकरणे वा दर्शनं बुद्धिर्यस्य तम् । अत एव उद्द्वेष्टुं भोजयितुमशक्यं तं समीक्ष्य मैथिली ब्राह्मणवत् ब्राह्मणेन सदृशं यथा भवति तथा न्यमन्त्रयत् । ब्राह्मणातिथिवन्निमन्त्रितवतीत्यर्थः । यद्वा ब्राह्मणवत् ब्राह्मणार्हम् "तदर्हम्" इति वतिः । यद्वा मैथिली जनककुलजाततया तद्व्यवहारपरिपाटीविज्ञातकपटवेषापि संन्यासिवेषधारणमात्रेण उद्द्वेष्टुं द्वेषं कर्तुम् अशक्यं तं न्यमन्त्रयत् । "काषायदण्डमात्रेण यतिः पूज्यो न संशयः" इति वचनादिति भावः॥३४॥ सत्कारप्रकारमाह—इयमिति । इयं बृसी मुनीनामासनम् । आस्यतां त्वदर्थं सिद्धं पक्वम् इदं वनजातं कन्दमूलफलादिकम् । इह स्थले अव्यग्रमुपभुज्यताम् ।

प्रशस्ता प्रशंसिता ॥ ३२ ॥ आतिथ्यकरणेन अर्घ्याद्यनन्तरं पक्वान्नं सिद्धं भूतमित्यादिशब्दैः ब्रूयादिति शास्त्रात्तथैवाब्रवीदित्यर्थः ॥ ३३ ॥ पात्रकुसुम्भधारिणं पात्रमलाबुप्रभृतिष्वेकं कुसुम्भं रक्तवस्त्रम् । कुसुम्भशब्देन रक्तवर्णे लक्षणा वा । अपायदर्शनम् अपाये अपहरणे अनर्थकरणे वा दर्शनं बुद्धिर्यस्य तम् । उद्वेष्टुं भोजयितुम् । यद्वा अतिथित्वाद्द्वेषं कर्तुमशक्यम् । ब्राह्मणवत् ब्राह्मणेन सदृशं यथा भवति तथा न्यमन्त्रयत् । ब्राह्मणातिथिमिव निमिन्त्रितवतीत्यर्थः ॥३४॥ बृसी व्रत्यासनम् । सिद्धं पक्वम् । वनजातं वनोद्भूतं कन्दमूलादि [illegible] । स्त्री—"यतीनां पूजनं कार्यं स्त्रिया वा पुरुषेण वा" इत्युक्तत्वात्सीता तमपूजयदिति भावः॥३५॥

इतिकरणस्य उत्तरश्लोकेऽन्वयः ॥ ३५ ॥ निमन्त्र्यमाण इति । प्रतिपूर्णभाषिणीं सर्वं सम्पक्मित्यतिथये वक्तव्यं वचनं भाषमाणाम् । धृतं धीरं यथा तथा मनोविशेषणं वा । तस्या हरणे मनः समार्पयत् निहितवान् ॥ ३६ ॥ सुवेषं शोभनाकारम् । मृगयागतं मृगयार्थं गतं पतिं प्रतीक्ष



निमन्त्र्यमाणः प्रतिपूर्णभाषिणीं नरेन्द्रपत्नीं प्रसमीक्ष्य मैथिलीम् । प्रसह्य तस्या हरणे धृतं मनः समार्पयत्स्वात्म वधाय रावणः ॥ ३६ ॥ ततः सुवेषं मृगयागतं पतिं प्रतीक्षमाणा सहलक्ष्मणं तदा । विवीक्षमाणा हरितं ददर्श तन्महद्वनं नैव तु रामलक्ष्मणौ ॥ ३७ ॥ इत्यार्षे श्रीरामायणे श्रीमदारण्यकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

रावणेन तु वैदेही तथा पृष्टा जिहीर्षता । परिव्राजकलिङ्गेन शशंसात्मानमङ्गना ॥ १ ॥ ब्राह्मणश्चातिथिश्चायमनुक्तो हि शपेत माम् । इति ध्यात्वा मुहूर्तं तु सीता वचनमब्रवीत् ॥ २ ॥ दुहिता जनकस्याहं मैथिलस्य महात्मनः । सीता नाम्नास्मि भद्रं ते रामभार्या द्विजोत्तम ॥ ३ ॥ उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने । भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥ ४ ॥

माणा प्रतिपालयन्ती हरितम् यत्र गतौ तौ तां दिशं विवीक्षमाणा विविधं पश्यन्ती । महद्वनमेव ददर्श रामलक्ष्मणौ तु न ददर्श ॥ ३७ ॥ रामानु०—तत इति । सुवेषं शोभनाकारम् । प्रतीक्षमाणा प्रतिपालयन्ती । विवीक्षमाणा विविधमीक्षमाणा । हरितं श्यामम् ॥ ३७ ॥ इति श्रीगोविन्द० श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥ अथ मैथिली आर्जवेन स्वस्वरूपमुक्त्वा रावणानार्जवदर्शनेन स्वपातिव्रत्यानुरूपं तमुपालभते—रावणेन त्वित्यादिना । जिहीर्षता हर्तुमिच्छता । तेन कापट्येन पृष्टापि यतिचिह्नं पुरस्कृत्य स्वयाथात्म्यमुक्तवतीति भावः ॥ १ ॥ यतिवेषं प्रत्यात्मवंशं सा किमर्थमुक्तवतीत्यत्राह—ब्राह्मणश्चेति ॥ २ ॥ कासीत्यस्योत्तरमाह—दुहितेति । कस्येत्यस्योत्तरमाह—रामेति ॥ ३ ॥ कुतश्चिदित्यादेरुत्तरमाह—

प्रतिपूर्णभाषिणीं सर्वमन्नं पक्वमिति भाषमाणाम् ॥ ३६ ॥ हरितं श्यामम् ॥ टी०—हरितं दिशम् ॥ ३७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां षट्चत्वारिंशः सर्गः ॥ ४६ ॥ * फलश्रुतिः। स्कान्दे—"सीतारावणसंवादं ये शृण्वन्ति नरोत्तमाः । न तेषां पापराशिभ्यः पीडा लोके भविष्यति ॥" इति ॥ १—५ ॥
विषम०—मनस्समर्पयित्वात्मवधायेति पाठे—हरणे धृतं निश्चितं मनः समर्पयित्वा दत्वा स्थित इत्यर्थः ॥ ३६ ॥

उपित्वेत्यादिना । विवाहानन्तरम् इक्ष्वाकूणां निवेशने अयोध्यायाम् । द्वादशसमाः द्वादशवत्सरानुपित्वा तत्र सर्वकामसमृद्धिनी काम्यन्त इति कामाः । भोगोपकरणस्रक्चन्दनादीनि तेषां समृद्धं समृद्धिः । भावे निष्ठा । तद्वती सती मानुषान् भोगान् रतिक्रीडाः, अग्राम्यत्वाय मानुषानित्युक्तम् । वस्तुतः स्वयं दिव्यभोगपरतया मानुषानित्यवशमुक्तवती । यद्वा मानुषान् मनुष्यत्वेनावतीर्णरामकृतान् भोगान् । अमानुषानिति वा छेदः । मनुष्यदुर्लभान्

ततस्त्रयोदशे वर्षे राजाऽमन्त्रयत प्रभुः। अभिषेचयितुं रामं समेतो राजमन्त्रिभिः ॥ ५ ॥ तस्मिन् सम्भ्रियमाणे तु राघवस्याभिषेचने । कैकेयी नाम भर्तारमार्या सा याचते वरम् ॥ ६ ॥ प्रतिगृह्य तु कैकेयी श्वशुरं सुकृतेन मे । मम प्रव्राजनं भर्तुर्भरतस्याभिषेचनम् । द्वावयाचत भर्तारं सत्यसन्धं नृपोत्तमम् ॥ ७ ॥ नाद्य भोक्ष्ये न च स्वप्स्ये न पास्ये च कथञ्चन। एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ ८ ॥ इति ब्रुवाणां कैकेयीं श्वशुरो मे स मानदः। अयाचतार्थैरन्वर्थैर्न च याच्ञां चकार सा ॥ ९ ॥

दिव्यान् भोगानित्यर्थः । भुञ्जाना अभवमिति शेषः । सर्वकामसमृद्धिनि इति सतम्यन्तंपाठे–सर्वकामसमृद्धिनि इक्ष्वाकूणाम् इक्ष्वाकुवंश्यस्य रामस्य । पूजायां बहुवचनम् । व्रीडया भर्तृनामाग्रहणं निवेशने गृहे । द्वादशसमाः द्वादश वत्सरान् । अत्यन्तसंयोगे द्वितीया । अमानुषान् भोगान् भुञ्जाना अनुभवन्ती सती उपित्वा उपितवत्यस्मि । व्यत्ययेन त्वाप्रत्ययः ॥४॥ तत इति । राजा दशरथः । अमन्त्रयत् अकथयत् । राजमन्त्रिभिः मन्त्रिराजैः मन्त्रिश्रेष्ठैरिति यावत् । राजदन्तादित्वात्परनिपातः ॥५॥ तस्मिन्निति । तस्मिन् रामाभिषेचने सम्भ्रियमाणे आरभ्यमाणे सति आर्या पूज्या मम श्वश्रूरित्यर्थः । सा प्रसिद्धा कैकेयी वरं याचते अयाचत ॥६॥ कं वरं कमयाचतेत्यत्राह–प्रतिगृह्येति । सार्द्धश्लोक एकान्वयः । कैकेयी मे श्वशुरं स्वस्य भर्तारं सत्यसन्धं सत्यप्रतिज्ञं नृपोत्तमं दशरथम् । सुकृतेन प्रतिगृह्य धर्मेण शापयित्वा । यद्वा सुकृतेनोपकारेण प्रतिगृह्य वशीकृत्य स्वकृतप्राणप्रदानोपकारस्मरणेन राजानं वशीकृत्येत्यर्थः । मम भर्तुः प्रव्राजनं भरतस्याभिषेचनमित्येवंरूपौ द्वौ वरावयाचत ॥ ७ ॥ नाद्येति । पास्य इत्यात्मनेपदमार्षम् । एषः अभिषेकः ॥८॥ इतीति । मानदः बहुमानप्रदः । अन्वर्थैः अर्थानुगतैः, सप्रयोजनैरिति यावत् । उपभोगक्षमैरित्यर्थः । अर्थैः सुवर्णरत्नादिभिः । कैकेयीमयाचत वरद्वय

संभ्रियमाणे राघवस्याभिषेकोपयुक्तसम्भार इत्यर्थः ॥६॥ मे श्वशुरं सुकृतेन धर्मेण शापयित्वा अयाचत ॥७॥८॥ अर्थैरन्वर्थैरर्थैः सुवर्णरत्नादिभिः अन्वर्थैरनुगतार्थैः

प्रतिनिधित्वेनैतानर्थांव प्रतिगृहाणेति प्रार्थयामासेत्यर्थः । सा त्वां याच्ञां न चकार नाङ्गीचकार ॥ ९ ॥ वस्तुतो मम भर्ता प्रव्राजनायोग्यः बालत्वा द्गुणवत्त्वाच्चेत्याह—मम भर्तेति । पञ्चोत्तरा विंशतिः पञ्चविंशतिः । वयसा पञ्चविंशतिवर्षाण्यर्हतीति पञ्चविंशकः । " विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम् " इत्यार्हीयो ड्वुन् प्रत्ययः । "सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुकि" इति तदन्तविधिः । पञ्चविंशतिवर्षं इत्यर्थः । वयःपरिमाणं वननिर्गमनकालिकम् ।

मम भर्ता महातेजा वयसा पञ्चविंशकः । अष्टादश हि वर्षाणि मम जन्मनि गण्यते ॥ १० ॥
रामेति प्रथितो लोके गुणवान् सत्यवान् शुचिः । विशालाक्षो महाबाहुः सर्वभूतहिते रतः ॥ ११ ॥

मम जन्मनि सति वर्षाण्यष्टादशेति गण्यते । रामस्य जन्मारभ्य द्वादशे वर्षे विश्वामित्रागमनम्, तदनन्तरं वैदेह्या सह नगरे द्वादशवर्षाणि वासं कृतवान्, ततः परं त्रयोदशे वर्षे यौवराज्याभिषेकारम्भः, ततश्च वनप्रवेशसमये रामः पञ्चविंशतिवर्षार्हः, ततो मुनीनामाश्रमेषु दश वत्सराः, पञ्चवट्यां त्रयः, वनवासस्य चतुर्दशे वर्षे सीताहरणम् । सीतायाश्च भूगर्भादाविर्भावानन्तरं मिथिलायां षट् संवत्सराः, ततो विवाहानन्तरमयोध्यायां द्वादश इत्येवमष्टादश वर्षा गताः वनवासारम्भ इत्युक्तम् । विस्तरेणायमर्थः "ऊनषोडशवर्षो मे" इत्यत्र प्रत्यपादि । इदानीं तु रामः अष्टात्रिंशद्वर्षः मम त्वेकत्रिंशद्वर्षा गताः । इदानीं तु द्वात्रिंशो वर्षो वर्तते । अस्मिन् श्लोके मम भर्तेत्यत्र भकारो गायत्र्याः नवमाक्षरम् । अष्टसहस्रश्लोका गताः ॥ १० ॥ एवं वनवासायोग्यं वय इत्युक्त्वा गुणवत्तया

सप्रयोजनैः उपभोगक्षमैरित्यर्थः । टी—याच्ञाम् ' अञ्जलिं कुर्मि कैकेयि ' इत्यादिप्रार्थनाम् ॥ ९ ॥ सकलदिव्यभोगानुभवकाले कैकेयीवञ्चितराज्ञा वयं वनं प्रति प्रेषिता इत्याशये नाह—मम भर्तेति । भ इति गायत्र्या नवमाक्षरं मम भर्तेत्यस्य श्लोकस्य भ इत्यनेन तृतीयाक्षरेण सङ्गृह्णाति । ममेत्येतद्वनप्रवेशसमयमधिकृत्योच्यते । वनप्रवेश समये मम भर्ता वयसा पञ्चविंशकः । पञ्चविंश इव । क इवार्थे । पञ्चविंशतिवार्षिक इति व्यपदेष्टुं शक्यते नातिपरिणत इत्यर्थः । मम जन्मनि तदानीं वर्षाणि

टीका—नन्विदानीमेव रामः पञ्चविंशतिवर्षः देवी चाष्टादशवर्षेति किं न गृह्यत इति चेत्; तदानीन्तनवृत्तान्तस्येदानीमुच्यमानत्वादिदानीमष्टात्रिंशद्वर्षत्वाद्देव्यास्त्वेकत्रिंशद्वर्षत्वाच्च पञ्चविंशकशब्दस्य न मुख्यार्थ स्वीकारः स्यात् । तयोर्वियोगगणनाक्रमस्त्वेवम्—रामस्य त्रयोदशे वर्षे सीतापाणिग्रहणम्, तदारभ्यायोध्यायां द्वादशसंवत्सरपर्यन्तं वासः, ततः पञ्चविंशे वर्षे वनवासारम्भः " तथा संवसतस्तस्य मुनीनामाश्रमेषु वै । रमतश्चानुकूल्येन ययुः संवत्सरा दश ॥" इत्युक्तवान्मुन्याश्रमेषु दश, पञ्चवट्यां त्रयः । तथाचेदानीं रामस्याष्टात्रिंशद्वर्षाणीति सिद्धम् । तस्मिन्नेव वर्षे सीतावियोगश्च । ततश्चैकोनचत्वारिंशे पट्टाभिषेक इति गम्यते । देव्यास्तु—षष्ठे पाणिग्रहणम्, सप्तमे अयोध्याप्रवेशः तदारभ्यायोध्यायां द्वादशसंवत्सरपर्यन्तं वासः, ततश्चैकोनविंशे वनवासप्रारम्भः, ततो मुनीनामाश्रमेषु दश, पञ्चवट्यां त्रयः इत्येकत्रिंशत् द्वात्रिंशे रामवियोगो लङ्काप्रवेशश्च, ततस्त्रयस्त्रिंशे रामेण सह पट्टाभिषेक इति विवेकः ॥ १० ॥

प्रव्राजनानर्हत्वमाह—रामेतीति । गुणवान् सौशील्यवान् ॥ ११ ॥ एवम्भूतस्य प्रव्राजनं दशरथदोपकृतमित्याह—कामार्त इति । नाभ्यषेचयत् कैकेयी सम्मार्तिं विनेति शेषः । तत्र हेतुः प्रियकामार्थमिति । प्रियकरणकामाय प्रतिज्ञातकैकेयीप्रियकरणनिर्वाहायेत्यर्थः । तव प्रियं करिष्यामीति प्रथमप्रतिज्ञाकरणे हेतुः कामार्त इति । कामार्ततया प्रथमं तव यत् प्रियं तत्करिष्यामीति प्रतिज्ञाय पश्चाद्रामप्रव्राजने तया वृते प्रतिज्ञाभङ्गं कर्तुमक्षमो नाभ्यषे



कामार्तस्तु महातेजाः पिता दशरथः स्वयम् । कैकेय्याः प्रियकामार्थं तं रामं नाभ्यषेचयत् ॥१२॥ अभिषेकाय तु पितुः समीपं राममागतम् । कैकेयी मम भर्तारमित्युवाच धृतं वचः ॥ १३ ॥ तव पित्रा समाज्ञप्तं ममेदं शृणु राघव । भरताय प्रदातव्यमिदं राज्यमकण्टकम् ॥१४॥ त्वया हि खलु वस्तव्यं नव वर्षाणि पञ्च च । वने प्रव्रज काकुत्स्थ पितरं मोचयानृतात् ॥ १५ ॥ तथेत्युक्त्वा च तां रामः कैकेयीमकुतोभयः । चकार तद्वचस्तस्या मम भर्ता दृढव्रतः ॥१६॥ दद्यान्न प्रतिगृह्णीयात् सत्यं ब्रूयान्न चानृतम् । एतद्ब्राह्मण रामस्य ध्रुवं व्रतमनुत्तमम् ॥१७॥ तस्य भ्राता तु द्वैमात्रो लक्ष्मणो नाम वीर्यवान् । रामस्य पुरुषव्याघ्रः सहायः समरेऽरिहा ॥ १८ ॥

चयदित्यर्थः ॥ १२ ॥ सामान्यत आह्वानेनाभिषेकाय भवितुमर्हति मदाह्वानमित्यागतमित्यर्थः । धृतं धैर्ययुक्तमिति क्रियाविशेषणम् ॥ १३ ॥ तवेत्यादि श्लोकद्वयमेकान्वयम् । त्वद्विषये पित्रा समाज्ञप्तं समाज्ञापनम् । मम मत्तः शृणु । इदं राज्यं भरताय प्रदातव्यं तदर्थं त्वया नव पञ्च च वर्षाणि चतुर्दश वर्षाणीत्यर्थः । वने वस्तव्यं तदर्थं प्रव्रज । अनृतात् प्रतिज्ञाभङ्गरूपात् ॥ १४ ॥ १५ ॥ अकुतोभयः राज्यत्यागवनवासाभ्यां भयरहितः ॥१६॥ दृढव्रत इत्युक्तमुपपादयति—दद्यादिति । ध्रुवं निश्चलम् । अनुत्तमम् अवश्यपरिपालनीयम् ॥ १७ ॥ तनि०—दद्यादित्यनेन अर्थिनां यावदपेक्षितं दानं विवक्षितम् । न प्रतिगृह्णीयादित्यनेनावाप्तसमस्तकामत्वं व्यज्यते ॥१७॥ तस्येति । द्वयोर्मात्रोरपत्यं पुमान् द्वैमात्रः। अण् प्रत्ययः। "मातुरुत्सङ्ख्या—" इत्युदादेशाभाव आर्षः। गुर्वक्षरं च च्छान्दसम् । अरिहेति छन्दोवद्भावात् "बहुलं छन्दसि" इति सूत्रेण ब्रह्मादिभिन्नेप्युपपदे क्विप् । यद्वा " अन्येभ्योपि दृश्यते " इत्यत्र दृशि

अष्टादश गण्यते गण्यन्ते । वचनव्यत्यय आर्षः । वर्षाण्यष्टादशेति गण्यत इति वा ॥१०—१६॥ अत्र दद्यादित्यनेन अर्थिनां यावदपेक्षितं वस्तु ददातीत्युक्तं भवति । न प्रतिगृह्णीयादित्यनेन अवाप्तसकलकामत्वं व्यज्यते ॥ १७ ॥ द्वैमात्रः द्वयोर्मात्रोरपत्यं सापत्निकमातुः पुत्र इत्यर्थः ॥ १८—२० ॥

ग्रहणस्य विध्यन्तरोपसङ्ग्रहार्थत्वाद्वा क्विप् ॥१८॥ स इति । मया सह अन्वगच्छदित्यन्वयः ॥ १९ ॥ जटीति । तापसरूपस्यानेकरूपत्वाज्जटीति विशेषयति ॥ २० ॥ ते वयामिति । कृते प्रयोजनाय क्रियते सम्पाद्यत इति कृतम् । सम्पादि[illegible]ात् किम् । गम्भीरं दुष्प्रवेशम् । ओजसा बलेन । "ओजो दीप्तौ बले" इत्यमरः ॥२१॥ समाश्वस समाश्वसिहि, विश्रान्तिं कुर्वित्यर्थः। वस्तुं स्थातुं शक्यं पवित्रदेशत्वादिति भावः। पुष्कलं समग्रम् ॥२२॥ स त्वमिति । स त्वम्

स भ्राता लक्ष्मणो नाम धर्मचारी दृढव्रतः । अन्वगच्छद्धनुष्पाणिः प्रव्रजन्तं मया सह ॥ १९ ॥ जटी तापसरूपेण मया सह सहानुजः । प्रविष्टो दण्डकारण्यं धर्मनित्यो जितेन्द्रियः ॥ २० ॥ ते वयं प्रच्युता राज्यात्कैकेय्यास्तु कृते त्रयः । विचराम द्विजश्रेष्ठ वनं गम्भीरमोजसा ॥ २१ ॥ समाश्वस मुहूर्तं तु शक्यं वस्तुमिह त्वया । आगमिष्यति मे भर्ता वन्यमादाय पुष्कलम् ॥ २२ ॥ [ रुरून् गोधान् वराहांश्च हत्वादायामिषान् बहून् । ] स त्वं नाम च गोत्रं च कुलं चाचक्ष्व तत्त्वतः। एकश्च दण्डकारण्ये किमर्थं चरसि द्विज ॥ २३ ॥ एवं ब्रुवन्त्यां सीतायां रामपत्न्यां महाबलः। प्रत्युवाचोत्तरं तीव्रं रावणो राक्षसाधिपः ॥ २४ ॥ येन वित्रासिता लोकाः सदेवासुरपन्नगाः । अहं तु रावणो नाम सीते रक्षोगणेश्वरः ॥ २५ ॥ त्वां तु काञ्चनवर्णाभां दृष्ट्वा कौशेयवासिनीम् । रतिं स्वकेषु दारेषु नाधिगच्छाम्यनिन्दिते ॥ २६ ॥

एवं समाश्वस्तस्त्वं कुलं गृहम् । " कुलमन्वयसङ्घातगृहपर्याश्रमेष्वपि " इति निघण्टुः । ननु संन्यासिनं प्रति कुलगोत्रप्रश्नोऽनुपपन्नः एकाकितयाऽरण्ये संचारश्च यतेर्धर्म एव अतोऽसङ्गत इव प्रतिभातीति चेत् । उच्यते–पूर्वाश्रमनामगोत्रप्रश्नोऽयम् । " भिक्षार्थं ग्रामं प्रविशेत् " इति श्रुत्या भिक्षोर्ग्रामसमीपारण्ये वस्तव्यम् नतु ग्रामप्रसङ्गरहितेऽरण्ये इति कथं भवान् भिक्षाप्रदजनरहितश्चरसीति प्रश्न उपपद्यते ॥ २३ ॥ एवमिति । आत्मवैभवप्रकटनावसरप्रतीक्षकतया तीव्रं झटितीत्युक्तम् ॥२४॥ येनेति । लोकाः जनाः ॥२५॥ त्वामिति । काञ्चनवर्णाभां स्वर्णवर्णतुल्यकान्तिम् ॥ २६ ॥

कैकेय्याः कृते कैकेयीनिमित्तम् ॥ २१ ॥ समाश्वस समाश्वसिहि विश्रान्तिं कुरु ॥ २२ ॥ स त्वमिति, अत्र त्वदीयमिति शेषः । कुलशब्देन मातृकुलम्, गोत्रशब्देन पितृकुलमुच्यते ॥ २३–२५ ॥ त्वां तु काञ्चनवर्णाङ्गीमित्यादिश्लोकस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु–त्वां ममेष्टदेवतामित्यर्थः । दृष्ट्वा स्वकेषु पुत्रमित्रादिषु दारेषु

वह्वीनामिति । उत्तमस्त्रीणामिति निर्धारणे षष्ठी ॥२७॥ लङ्केति । समुद्रमध्ये वर्तमाने नगमूर्धनि गिरिशृङ्गप्रदेशे । निविष्टा कृतनिवेशा । सागरेण सगरनिर्मितेन समुद्रेण। परिक्षिप्ता परिवृता पुरी मम अस्तीति शेषः ॥२८॥ तत्रेति। वनेषु उद्यानेषु । अरण्यवासस्येति चतुर्थ्यर्थे षष्ठी ॥२९॥ पञ्च सहस्राणि दास्यस्त्वां परिचरिष्यन्ति ॥३०॥ रावणेनेति । तुशब्देन पूर्वोक्तोपचारवचनविलक्षणवचना ॥३१॥ महागिरिमिति । महेन्द्रसदृशं पतिं पतित्वे स्वामित्वे

वह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः । सर्वासामेव भद्रं ते ममाग्रमहिषी भव ॥ २७ ॥ लङ्का नाम समुद्रस्य मध्ये मम महापुरी । सागरेण परिक्षिप्ता निविष्टा नगमूर्द्धनि ॥ २८ ॥ तत्र सीते मया सार्धं वनेषु विहरिष्यसि । न चास्यारण्यवासस्य स्पृहयिष्यसि भामिनि ॥ २९ ॥ पञ्च दास्यः सहस्राणि सर्वाभरणभूषिताः । सीते परिचारिष्यन्ति भार्या भवसि मे यदि ॥ ३० ॥ रावणेनैवमुक्ता तु कुपिता जनकात्मजा । प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ॥ ३१ ॥ महागिरिमिवाकम्प्यं महेन्द्रसदृशं पतिम् । महोदधिमिवाक्षोभ्यमहं राममनुव्रता ॥ ३२ ॥ सर्वलक्षणसम्पन्नं न्यग्रोधपरिमण्डलम् । सत्यसन्धं महाभागमहं राममनुव्रता ॥ ३३ ॥

महेन्द्रतुल्यमित्यर्थः । अनुव्रता अनुकूलं व्रतं यस्याः सा राममुद्दिश्यानुव्रता ॥३२॥ सर्वेति । न्यग्रोधपरिमण्डलं वटवृक्षमिव महापरिणाहम् । यद्वा न्यग्रोधवत् बहुशाखबन्धुस्तोमं तद्वत् सर्वसमाश्रयणीयमिति वा । यद्वा "कूपोदकं वटच्छाया युवतीनां स्तनद्वयम् । शीतकाले भवत्युष्णमुष्णकाले च शीतलम् ॥"

च रतिमिच्छां नाधिगच्छामि ममेष्टदेवतायास्तव दर्शनेनानन्दपूर्णोऽहं सर्वतो निर्वृतोऽस्मीति भावः ॥ २६ ॥ इतस्तत आहृतानामुत्तमस्त्रीणां सर्वासां मम मे या अग्रमहिषी तस्याश्च मम च भव, ईश्वरीति शेषः ॥ २७ ॥ लङ्केति श्लोकद्वयमेकं वाक्यम् । तत्र लङ्कायां वनेषु विहरिष्यसि यदि तदा अस्यारण्यवासं न स्पृहयिष्यसि ॥ २८ ॥ २९ ॥ किञ्च पञ्चसहस्राणि दास्यः मे मया सार्धं परिचरिष्यन्ति यदि, तवेति शेषः । तदा भार्या भया कान्त्या आर्या पूज्या भवसीति सम्बन्धः ॥ ३० ॥ रावणेन, पुत्रसदृशेनेति शेषः । एवं प्रार्थनारूपेणोक्तापि अतितामसभक्तो रावणः श्रीरामवियोगं सम्पादयतीति कुपिता जनकात्मजा प्रत्युवाचेति सम्बन्धः ॥ ३१ ॥ महागिरिर्मेरुः । अकम्प्यमप्रधृष्यम् । राममनुव्रता राममुद्दिश्यानुसरणमेव व्रतं यस्यास्सा तयोक्ता ॥ ३२ ॥ न्यग्रोधपरिमण्डलं न्यग्रोधमिव परिणाहवन्तम् । यद्वा बहुशाखं न्यग्रोधवत् बहुबन्धुजनस्तोमम् ॥ ३३ ॥

इत्युक्तरीत्या सर्वकालेपि सर्वजनानुकूलमित्यर्थः ॥ ३३ ॥ महाबाहुमिति । सिंहवद्विक्रान्तं पराक्रमयुक्तं सगर्वमिति यावत् । तथा गच्छतीति सिंहविक्रान्तगामिनम् । सिंहसङ्काशं पराक्रमे सिंहतुल्यम् । नृसिंहं पुरुषश्रेष्ठम् ॥३४॥ पूर्णेति । राजवत्सं राजकुमारम् ॥३५॥ एवं स्वभर्तुरतिशयमुक्त्वा तस्य हीनत्वमाह—त्वमित्यादिना । त्वं तु जम्बुकः गोमायुः । निगीर्याध्यवसानं तथा सिंहीमित्यत्रापि । आदित्यस्य प्रभेव रामस्याविनाभूताऽहं

महाबाहुं महोरस्कं सिंहविक्रान्तगामिनम् । नृसिंहं सिंहसङ्काशमहं राममनुव्रता ॥३४॥ पूर्णचन्द्राननं रामं राजवत्सं जितेन्द्रियम् । पृथुकीर्तिं महात्मानमहं राममनुव्रता ॥ ३५ ॥ त्वं पुनर्जम्बुकः सिंहीं मामिच्छसि सुदुर्लभाम् । नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा ॥ ३६ ॥ पादपान् काञ्चनान् नूनं बहून् पश्यसि मन्दभाक् । राघवस्य प्रियां भार्यां यस्त्वमिच्छसि रावण ॥ ३७ ॥ क्षुधितस्य च सिंहस्य मृगशत्रोस्तरस्विनः । आशीविषस्य वदनाद्दंष्ट्रामादातुमिच्छसि ॥३८॥ मन्दरं पर्वतश्रेष्ठं पाणिनाहर्तुमिच्छसि । कालकूटं विषं पीत्वा स्वस्तिमान् गन्तुमिच्छसि ॥३९॥ अक्षि सूच्या प्रमृजसि जिह्वया लेक्षि च क्षुरम् । राघवस्य प्रियां भार्यां योऽधिगन्तुं त्वमिच्छसि ॥४०

त्वया स्प्रष्टुं न शक्येत्यर्थः ॥ ३६ ॥ पादपानिति । आसन्नमरणाः वृक्षान् स्वर्णमयान् पश्यन्तीति प्रसिद्धिः । मन्दभाक् मन्दभाग्यः । यद्वा मन्दं क्षीणम् आयुरादिकम् भजतीति मन्दभाक् । मदभिलाषयुक्तस्त्वं सद्यो मरिष्यसीति भावः ॥ ३७॥ सर्वात्मना आदानस्याशक्यत्वज्ञापनाय विशेषणानि । आशीविषस्य सर्पस्य । चकारो द्रष्टव्यः । क्षुधितस्य तरस्विन इति चाशीविषस्यापि विशेषणम् । अत्र सदृशयोर्वाक्यार्थयोरैक्यारोपान्निदर्शनालङ्कारः ॥ ३८ ॥ मन्दरमिति । अत्रापि राघवस्य भार्यां यस्त्वमिच्छसीत्यनुषज्यते । स्वस्तिमान् सुखित इत्यर्थः ॥३९॥ स्वाक्षि प्रमृजसि प्रकर्षेण मार्जनं करोषि । लेक्षि लेहनं करोषि । " लिह आस्वादने " इत्यस्माल्लुग्विकरणस्थाद्धातोर्लटि मध्यमपुरुषैकवचनम् । क्षुरं तीक्ष्णधारं शस्त्रम् ।

सिंहविक्रान्तगामिनं सिंह इव विक्रान्तं गर्वयुक्तं गच्छतीति सिंहविक्रान्तगामी तम् । सिंहसङ्काशं पराक्रमे सिंहसदृशमिति विवेकः ॥ ३४–३६ ॥ मन्दभाक् मन्दो भागो भागधेयं यस्य । यद्वा मन्दं क्षीणम् आयुरादिकं भजतीति तथोक्तः, क्षीणदशापन्नायुरादिकमित्यर्थः । काञ्चनपादपदर्शनं मुमूर्षूणां लक्षणम् ॥ ३७–४४ ॥

अधिगन्तुं प्राप्तुम् ॥४०॥४१॥ अवसज्येति सार्धश्लोक एकान्वयः। अवसज्य बद्ध्वा ॥४२॥ कल्याणवृत्तां शुभाचाराम् ॥४३॥ अयोमुखानाम् अयोमयाग्राणाम्। शूलानामग्रे शूलाग्रपङ्क्तिषु सञ्चरितुमिच्छसीत्यर्थः॥४४॥ उक्तं रामोत्कृष्टत्वं रावणनिकृष्टत्वं च सदृष्टान्तमाह—यदन्तरमित्यादिना। सिंहसृगालयोः। "सृगालो वञ्चकः क्रोष्टा" इत्यमरः। यत् अन्तरं भेदः तारतम्यमिति यावत्। "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्यें। छिद्रात्मीयविना

अवसज्य शिलां कण्ठे समुद्रं तर्तुमिच्छसि। सूर्याचन्द्रमसौ चोभौ पाणिभ्यां हर्तुमिच्छसि ॥ ४१ ॥ यो रामस्य प्रियां भार्यां प्रधर्षयितुमिच्छसि ॥ ४२ ॥ अग्निं प्रज्वलितं दृष्ट्वा वस्त्रेणाहर्तुमिच्छसि । कल्याणवृत्तां रामस्य यो भार्यां हर्तुमिच्छसि ॥ ४३ ॥ अयोमुखानां शूलानामग्रे चरितुमिच्छसि । रामस्य सदृशीं भार्यां योऽधिगन्तुं त्वमिच्छसि ॥ ४४ ॥ ❀ यदन्तरं सिंहसृगालयोर्वने यदन्तरं स्यन्दिनिकासमुद्रयोः। सुराग्र्यसौवीरकयोर्यदन्तरं तदन्तरं वै तव राघवस्य च ॥ ४५ ॥ यदन्तरं काञ्चनसीसलोहयोर्यदन्तरं चन्दनवारिपङ्कयोः। यदन्तरं हस्तिबिडालयोर्वने तदन्तरं दाशरथेस्तवैव च ॥ ४६ ॥ यदन्तरं वायसवैनतेययोर्यदन्तरं मद्गुमयूरयोरपि । यदन्तरं सारसगृध्रयोर्वने तदन्तरं दाशरथेस्तवैव च ॥ ४७ ॥

बहिरवसरमध्येऽन्तरात्मनि च ॥" इत्यमरः। वने जले विषये। "जीवनं भुवनं वनम्" इत्यमरः। स्यन्दिनिका स्यन्दितुम् प्रस्रवितुं शीलमस्या अस्तीति स्यन्दिनिका। ताच्छील्ये णिनिः। अल्पार्थे कप्रत्ययः "केऽणः" इति ह्रस्वः। क्षुद्रनदी स्यन्दिनिका। सुराग्र्यं श्रेष्ठमद्यम्। सौवीरकं काञ्जिकम्। "आरनालकसौवीरकुल्माषाभिषुतानि च। अवन्तीसोमधान्याम्लकुञ्जलानि च काञ्जिकम् ॥" इत्यमरः॥ ४५ ॥ काञ्चनसीसलोहयोरित्यत्र लोहशब्दः प्रत्येकमभिसम्बध्यते, काञ्चनस्यापि नवलोहेषु परिगणनात्। चन्दनवारि चन्दनपङ्कः। बिडालो मार्जारः ॥ ४६ ॥ मद्गुः जलवायसः। सारसो

स्यन्दिनिका क्षुद्रनदी। सुराग्र्यं सुराणामग्र्यम् श्रेष्ठममृतमित्यर्थः। सौवीरकम् आरनालम् ॥ ४५ ॥ ४६ ॥ मद्गुः जलकाकः। सारसो हंसः ॥ ४७ ॥

❀ फलश्रुतिः। स्कान्दे—"यदन्तरेत्यादिवाक्यश्रवणाद्धनाशनम्।" इति।

हंसविशेषः ॥ ४७ ॥ तस्मिन् रामे स्थिते सति । जरां जीर्णतां मक्षिकया अवगीर्णं ग्रस्तं वज्रं हीररत्नं मक्षिकया तण्डुलखण्डभ्रान्त्या ग्रस्तं हीररत्न मित्यर्थः । यथा न जीर्णं भवति । यद्वा मक्षिकया सहावगीर्णं भुक्तं वज्रम् आज्यम् । "वज्रो वा आज्यम्" इति श्रुतेः । यथा न जीर्णं भवती त्यर्थः । तथा अहं त्वया हृतापि ते जीर्णतां न गमिष्ये न गमिष्यामि । प्रत्युत तवैव मरणं प्रापयिष्यामीत्यर्थः ॥ ४८ ॥ इतीव उक्तप्रकारसदृशं तद्वाक्यं सुधृष्टं यथा तथा उक्त्वा । सा सीता वातोद्धता वाताहता कदलीव गात्रप्रकम्पव्यथिता शरीरकम्पेन पीडिता बभूव ॥ ४९ ॥ वेपमानां



तस्मिन् सहस्राक्षसमप्रभावे रामे स्थिते कार्मुकबाणपाणौ । हृतापि तेऽहं न जरां गमिष्ये वज्रं यथा मक्षिकयावगीर्णम् ॥४८॥ इतीव तद्वाक्यमदुष्टभावा सुधृष्टमुक्त्वा रजनीचरं तम् । गात्रप्रकम्पव्यथिता बभूव वातोद्धता सा कदलीव तन्वी ॥ ४९ ॥ तां वेपमानामुपलक्ष्य सीतां स रावणो मृत्युसमप्रभावः । कुलं बलं नाम च कर्म च स्वं समाचचक्षे भय कारणार्थम्॥५०॥इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

एवं ब्रुवन्त्यां सीतायां संरब्धः परुषं वचः । ललाटे भ्रुकुटीं कृत्वा रावणः प्रत्युवाच ह ॥ १ ॥ भ्राता वैश्रवणस्याहं सापत्नो वरवर्णिनि । रावणो नाम भद्रं ते दशग्रीवः प्रतापवान् ॥ २ ॥ यस्य देवाः सगन्धर्वाः पिशाचपतगोरगाः । विद्रवन्ति भयाद्भीता मृत्योरिव सदा प्रजाः ॥ ३ ॥

कम्पमानाम् । उपलक्ष्य तत्कम्पेन तद्भयमुपलक्ष्य, भूयो भयजननेन एषा स्ववशीकर्तुं शक्येति मत्वा भयकारणार्थं भयोत्पादनार्थम् । स्वं स्वकीयं कुलादिकमाचचक्षे । कर्म पौरुषम् ॥ ५० ॥ इति श्रीगोविन्दराज॰ श्रीरामायणभूषणे रत्नमे॰ आरण्यकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

एवं ब्रुवन्तीं सीतां रावणो भर्त्सयति—एवमित्यादिना । संरब्धः कुपितः सम्भ्रमाविष्टो वा ॥ १ ॥ भ्रातेति । वैश्रवणस्य सपत्न्या मातुरपत्यं पुमान् सापत्नः, सापत्न एव सापत्न्यः । स्वार्थे ष्यञ् ॥ २ ॥ यस्येति । यस्य सम्बन्धिनो भयात् देवादयः मृत्योर्भीताः प्रजा इव विद्रवन्ति ॥ ३ ॥

जरां जीर्णावस्थाम् । वज्रं रत्नविशेषः । अवगीर्णं ग्रस्तम्, वज्रखण्डं तण्डुलखण्डमिति बुद्ध्या ग्रस्यते तत्तस्य नाशाय भवति तद्वदित्यर्थः । यद्वा वज्रम् आज्यम् । "वज्रो वा आज्यम्" इति श्रुतेः । मक्षिकया सहावगीर्णं भुक्तमित्यर्थः ॥ ४८ ॥ ४९ ॥ भयकारणार्थं भयोत्पादनार्थम् ॥ ५० ॥ इति श्रीमहेश्वरतीर्थविर चितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ १ ॥ २ ॥ पतगाः गरुडाः देवयोनिविशेषाः ॥ ३ ॥

येनेति । द्वयोर्मात्रोरपत्यं द्वैमात्रः, सपत्नीमातृपुत्र इत्यर्थः । कारणान्तरे कस्मिंश्चित् कारणावकाशे । द्वन्द्वं युद्धम् । "द्वन्द्वं कलहयुग्मयोः" इत्यमरः ॥ ४ ॥ स्वमधिष्ठानं स्वां पुरीं कैलासमध्यास्ते प्रबलावष्टम्भार्थमिति भावः । "अधिशीङ्स्थासां कर्म" इत्यधिकरणस्य कर्मसंज्ञा । नरवाहनः कुबेरः ॥ ५ ॥ यस्येति । तत् प्रसिद्धम् । कामेन गच्छतीति कामगम्, अधिष्ठातृकामानुरूपं गच्छतीत्यर्थः। येन पुष्पकेण । विहायसम्

येन वैश्रवणो राजा द्वैमात्रः कारणान्तरे । द्वन्द्वमासादितः क्रोधाद्रणे विक्रम्य निर्जितः ॥ ४ ॥ यद्भयार्तः परित्यज्य स्वमधिष्ठानमृद्धिमत् । कैलासं पर्वतश्रेष्ठमध्यास्ते नरवाहनः ॥ ५ ॥ यस्य तत् पुष्पकं नाम विमानं कामगं शुभम् । वीर्यादेवार्जितं भद्रे येन यामि विहायसम् ॥ ६ ॥ मम सञ्जातरोषस्य मुखं दृष्ट्वैव मैथिलि । विद्रवन्ति परित्रस्ताः सुराः शक्रपुरोगमाः ॥ ७ ॥ यत्र तिष्ठाम्यहं तत्र मारुतो वाति शङ्कितः । तीव्रांशुः शिशिरांशुश्च भयात् सम्पद्यते रविः ॥ ८ ॥ निष्कम्पपत्रास्तरवो नद्यश्च स्तिमितोदकाः । भवन्ति यत्र यत्राहं तिष्ठामि विचरामि च ॥ ९ ॥ मम पारे समुद्रस्य लङ्का नाम पुरी शुभा । सम्पूर्णा राक्षसैर्घोरैर्यथेन्द्रस्यामरावती ॥ १० ॥ प्राकारेण परिक्षिप्ता पाण्डरेण विराजता । हेमकक्ष्या पुरी रम्या वैडूर्यमयतोरणा ॥ ११ ॥

आकाशम् । एतादृशविशेषणविशिष्टो यो रावणो नाम रावण इति प्रसिद्धः सोहमिति पूर्वेणान्वयः ॥ ६ ॥ ममेति । विद्रवन्ति विद्रवेयुः ॥ ७ ॥ यत्र देशे । तीव्रांशुश्च तीक्ष्णांशुरपि रविः मद्भयात् शिशिरांशुः शीतलांशुः सम्पद्यते ॥ ८ ॥ निष्कम्पेति पत्राण्यपि न चलन्तीत्यर्थः ॥९॥ पारे पारसदृशे । त्रिकूटे समुद्रस्य मध्य इति पूर्वमुक्तत्वात् यथेन्द्रस्यामरावती तथा मम लङ्का पुरी असाधारणेत्यर्थः । अस्तीति शेषः॥१०॥ लङ्कां वर्णयति—प्राकारेणेति । रजत

द्वन्द्वमासादितः कलहं प्राप्तः ॥ ४ ॥ स्वमधिष्ठानं लङ्काम् ॥ ५-७ ॥ तीव्रांशुः तीव्रकिरणोपि सूर्यः मद्भयाच्छिशिरकिरणो भवतीति भावः ॥ ८-१० ॥ पाण्डरेण

स०-द्वैमात्रः द्वितीया माता द्विमाता तस्या अयं द्वैमात्रः । आर्षमनुत्वम् । यद्वा पूरणार्थकतीयप्रत्ययान्तार्थबोधकत्वाद्द्विशब्दस्य केवलसङ्ख्यार्थत्वाभावान्नोत्वमिति केचित् । वैमात्र इति पाठो वा । कारणान्तरे मन्मातृवाक्यपरिपालनरूपकारणान्तरे ॥ ४ ॥

मयत्वात् पाण्डरेण हेममय्यः कक्ष्याः हर्म्याङ्गणादयो यस्याः सा । “ कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने ” इत्यमरः । तोरणो बहिर्द्वारेषु । सम्बाधा सङ्कुला । तूर्यनादेन वाद्यशब्देन विनादिता । सर्वः कालो येषां तानि सर्वकालानि, सर्वकालसम्भवानीत्यर्थः । तादृशानि फलानि येषां तैः सर्वकालफलैः । सङ्कुलोद्यानैः व्याप्तोद्यानैः शोभिता एतादृशी सा पुरी रम्येत्यन्वयः ॥ ११ ॥ १२ ॥ तत्रेति । वसती वसन्ती । अनित्यमागमं

हस्त्यश्वरथसम्बाधा तूर्यनादविनादिता। [शतयोजनविस्तीर्णा त्रिंशद्योजनमायता।] सर्वकालफलैर्वृक्षैः सङ्कुलोद्यान शोभिता॥ १२ ॥ तत्र त्वं वसती सीते राजपुत्रि मया सह। न स्मरिष्यसि नारीणां मानुषीणां मनस्विनी ॥ १३ ॥ भुञ्जाना मानुषान् भोगान् दिव्यांश्च वरवर्णिनि। न स्मरिष्यसि रामस्य मानुषस्य गतायुषः ॥ १४ ॥ स्थापयित्वा प्रियं पुत्रं राज्ञा दशरथेन यः। मन्दवीर्यः सुतो ज्येष्ठस्ततः प्रस्थापितो ह्ययम् ॥ १५ ॥ तेन किं भ्रष्टराज्येन रामेण गतचेतसा। करिष्यसि विशालाक्षि तापसेन तपस्विना ॥ १६ ॥

शासनमिति नुमभावः। नारीणामिति “अधीगर्थ-” इति षष्ठी। मनस्विनी तत्समासक्तेत्यर्थः ॥ १३ ॥ मानुषान् मनुष्यलोकसम्भवान् । दिव्यान् स्वर्गसम्भवान् । गतायुषः गतप्रायायुषः, अल्पायुष इत्यर्थः। अनेन भुञ्जाना मानुषान् भोगानिति पूर्वं सीतोक्तस्य परिहार उक्तः ॥ १४ ॥ अथ रामस्य स्वापेक्षया उक्तमतिशयं प्रतिवक्ति-स्थापयित्वेत्यादिना, श्लोकद्वयमेकान्वयम् । प्रियं पुत्रं भरतं राज्ये स्थापयित्वा ततो राज्यात् प्रव्राजितः। ज्येष्ठत्वेपि प्रव्राजनान्मन्दवीर्यत्वं सिद्धमित्याह-तेनेति । तेन मन्दवीर्येण। गतचेतसा कर्तव्याकर्तव्यमूढमनसा । तापसेन “ भग्नाः कृषेर्भागवता भवन्ति ” इति न्यायेन अशूरेण। तपस्विना शोच्येन। “ तपस्वी तापसः शोच्यः ” इति विश्वः। अनेन इतः परं राज्यं साधयिष्यतीत्याशा न कर्तव्येत्युक्तम् ॥१५॥१६॥

शुभ्रेण प्राकारेण राजतेनेत्यर्थः ॥११-१५॥ टी-रामस्येति कर्मणि षष्ठी ॥१४॥ तापसेन मुनिना। तपस्विना शोच्येन। तत्र त्वं वसती सीतेत्यारभ्य तव भाग्येन संप्राप्तं भजस्व वरवर्णिनीत्यन्तस्य ग्रन्थसन्दर्भस्य प्रातीतिकार्थः स्पष्टः। वस्तुतस्तु-तत्रेति । तत्र लङ्कायां वसती त्वं मया भृत्येन समर्पितानिति शेषः। मानुषान् दिव्यांश्च भोगान् सह एकदैव भुञ्जाना सती । मानुषीणां नारीणामिति द्वितीयार्थे षष्ठी । नं स्मरिष्यसि । किञ्च मानुषस्य मनुष्यरूपेणावतीर्णस्य। गतायुषः गतं प्राप्तमङ्गीकृतमेकादशसहस्रवत्सरायुर्येन तस्य रामस्य भगवतः श्रीमन्नारायणस्य सम्बन्धिन इति शेषः । नः अस्मान् स्मरिष्यसि ॥ स्थापयित्वेति । यः मन्दवीर्यः तमप्रियमपि

सर्वराक्षसेति । सर्वराक्षसभर्तारं त्वया प्रार्थनीयमित्यर्थः । स्वयं कामात् अर्थितया इहागतं प्रत्याख्यातुं निराकर्तुम् । स्वयमागमने हेतुः मन्मथेति ॥१७॥ प्रत्याख्यानफलमाह–प्रत्याख्यायेति । भीरु इत्यनेन रामात् भीतिः प्रत्याख्यानमूलमिति मम मन इति व्यज्यते । परितापं पश्चात्तापम् । पुरूरवसं राजानं चरणेनाभिहत्य उर्वशीव, उरून् महतो वशीकरोतीत्युर्वशी । "वश कान्तौ" पृषोदरादित्वादुकारलोपः । गौरादित्वात् ङीप् । एवं

सर्वराक्षसभर्तारं कामात् स्वयमिहागतम् । न मन्मथशराविष्टं प्रत्याख्यातुं त्वमर्हसि ॥ १७ ॥
प्रत्याख्याय हि मां भीरु परितापं गमिष्यसि । चरणेनाभिहत्येव पुरूरवसमुर्वशी ॥ १८ ॥
अङ्गुल्या न समो रामो मम युद्धे स मानुषः । तव भाग्येन सम्प्राप्तं भजस्व वरवर्णिनि ॥ १९ ॥
एवमुक्ता तु वैदेही क्रुद्धा संरक्तलोचना । अब्रवीत्परुषं वाक्यं रहिते राक्षसाधिपम् ॥ २० ॥

ह्रस्वादिस्तालव्यान्तश्च । तथाच माघयमकम् । "दधत्युरोजद्वयमुर्वशीतलं भुवो गतेव स्वयमुर्वशी तलम्" इति । नारायणस्य ऊरौ वसतीति व्युत्पत्तावपि पृषोदरादित्वाद्वर्णलोपादिना ह्रस्वादिस्तालव्यान्त एव च युक्तः । उर्वशी किल स्वयमेव प्रार्थयन्तं पुरूरवसं प्रथमं निरस्य पश्चात्तापेन पुनस्तमागतेति पौराणिकी कथा ॥ १८ ॥ अङ्गुल्या अङ्गुलिबलेन । न समः न समबलः । संप्राप्तं मामिति शेषः ॥ १९ ॥ संरक्तेति कोपातिशयो द्योत्यते । रहिते निर्जने वने "रागं विविक्ता इति वर्धयन्तीः" इति रागजननौचित्येपि परुषमब्रवीत् । हन्त सीतायाः पातिव्रत्यमेतदिति ऋषिर्विस्मयते ॥ २० ॥

पुत्रं भरतम् अन्तर्यामिप्रेरितेन राज्ञा स्थापयित्वा राज्य इति शेषः । ततस्तेनैव प्रेरितेन राज्ञा ज्येष्ठः श्रीमन्नारायणः श्रीरामः "ज्येष्ठः श्रेष्ठः प्रजापतिः" इति सहस्रनामोक्तेः । सर्वराक्षससंहाराय वनं प्रस्थापितः ॥ तेनेति । भ्रष्टराज्येन भ्रष्टमरीणां राज्यं येन तेन । गतचेतसा मायोपाधिकेश्वरस्य श्रीरामस्यान्तःकरणाभावाद्गतचेतस्कत्वम् "न तस्य कार्यं करणं च विद्यते" इति श्रुतेः । तापसेनतपस्विना तापसानामिनस्तापसेनस्स चासौ तपस्वी च तेन श्रीरामेण सह करिष्यसि किम् अयमस्मदीय इति विज्ञापनामिति शेषः ॥ १६ ॥ सर्वेति । सर्वराक्षसभर्तारम् । प्रतिशब्द इवार्थे । कामात्तव भृत्यो भविष्यामीति मनोरथादागतं मां मन्मथशराविष्टं जनमिव स्वयं ममेष्टदेवता त्वमेवमाख्यातुं वक्तुं नार्हसीत्यर्थः ॥ १७ ॥ कामुकं पुरूरवसमुर्वशी चरणेनाभिहत्य पश्चात्तापमगमदिति यत् तद्युक्तम् । अकामुकं भृत्यं मां मम मातृरूपा त्वं चरणेनाभिहत्य तिरस्कृत्येत्यर्थः । परितापं गमिष्यसीत्येतद्युक्तमित्यर्थः । उर्वशी पुरूरवसं चरणेनाभिहत्य पश्चात्तापं गतेति यथा पुराणेषु प्रसिद्धं तथा पश्चात्तापं गमिष्यसि ॥१८॥ रामं विना लङ्कां प्रत्यागन्तुमनिच्छन्तीं प्रत्याह–अङ्गुल्येति । युद्धे यस्याङ्गुल्या समः कोपि नास्ति । कुतः ? यस्स

कथमिति । पुण्यात्मनः कुबेरस्य भ्राता सन् कथं पापकर्मणि प्रवर्तस इत्यर्थः ॥ २१ ॥ कर्कशः क्रूरः ॥ २२ ॥ अपनीय स्थितस्य तवेति शेषः ॥२३॥
क्रोधातिशयेनोक्तमेव पुनराह—जीवेदिति । अप्रतिरूपम् अनुपमं रूपं यस्यास्तां मादृशीम् । अश्लीलत्वपरिहाराय न मामित्यनुक्तिः । मोक्षः मरणा

कथं वैश्रवणं देवं सर्वभूतनमस्कृतम् । भ्रातरं व्यपदिश्य त्वमशुभं कर्तुमिच्छसि ॥ २१ ॥ अवश्यं विनशिष्यन्ति सर्वे रावण राक्षसाः । येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ २२ ॥ अपहृत्य शचीं भार्यां शक्यमिन्द्रस्य जीवितुम् । नच रामस्य भार्यां मामपनीयास्ति जीवितम् ॥ २३ ॥ जीवेच्चिरं वज्रधरस्य हस्ताच्छचीं प्रधृष्याप्रतिरूपरूपाम् । न मादृशीं राक्षस दूषयित्वा पीतामृतस्यापि तवास्ति मोक्षः ॥ २४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

सीताया वचनं श्रुत्वा दशग्रीवः प्रतापवान् । हस्ते हस्तं समाहत्य चकार सुमहद्वपुः ॥ १ ॥
स मैथिलीं पुनर्वाक्यं बभाषे च ततो भृशम् । नोन्मत्तया श्रुतौ मन्ये मम वीर्यपराक्रमौ ॥ २ ॥
उद्वहेयं भुजाभ्यां तु मेदिनीमम्बरे स्थितः । आपिबेयं समुद्रं च हन्यां मृत्युं रणे स्थितः ॥ ३ ॥

दिति शेषः । अमृतमपि न त्वद्रक्षणसमर्थमित्यर्थः ॥ २४ ॥ इति श्रीगो० श्रीरामायणभू० रत्नमे० आरण्यकाण्डव्याख्याने अष्टचत्वारिंशः सर्गः ॥४८॥
यश्चिन्तनीयः सततमापत्सु परमासु च । नान्योस्ति चिन्तनीयस्तं सीतापतिमुपास्महे ॥ सीताया इत्यादि । हस्ते हस्तं समाहत्य संयोज्य । अयं च कोपाकृतिविशेषः ॥१॥ स इत्यादिश्लोकत्रयमेकान्वयम् । ततः रूपकरणानन्तरम् । उन्मत्तया त्वयेति शेषः । वीर्यपराक्रमौ पूर्वोक्ताविति शेषः । उद्वहेयम्

रामः श्रीमन्नारायण एव मानुषः मनुष्यरूपेणावतीर्णः । तं मम भाग्येन तत्रैव सम्प्राप्तं तव पतिमिति शेषः । भजस्वेति सम्बन्धः ॥ १९–२३ ॥ अप्रतिरूपरूपाम्
अप्रतिरूपमनुपमं रूपं सौन्दर्यं यस्यास्ताम् ॥२४॥ इति श्रीमहेश्वरतीर्थविर० श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायाम् अष्टचत्वारिंशः सर्गः ॥४८॥
महापुण्यस्य परमभागवताग्रगण्यस्य श्रीहनुमतोपि रूपान्तरस्वीकरणसमये आग्रहपूर्वकत्वस्य श्रूयमाणत्वेन आग्रहं विना क्रूररूपस्वीकारायोगाद्रावणोपि देवीनिकटे कपटमनुचितमिति मत्वा देव्यै स्वरूपं दर्शयितुं स्वसामर्थ्यप्रशंसापूर्वकं निजरूपं स्वीकरोति । सीताया इत्यारभ्य वसनाभरणोपेतामित्यन्तस्य प्राकृतार्थः

उद्धरेयम् । विभिन्द्यां विदारयेयम् । महद्वपुरित्युक्तं दर्शयति कामेति ॥२–४॥ अथ सीतापहारोपयोगिरूपान्तरपरिग्रहमाह–एवमित्यादिना । सूर्यकल्पे शिखिप्रभे इति तेजस्यौष्ण्ये चोपमाद्वयम् । हरिपर्यन्ते पिङ्गलवर्णपर्यन्ते । " यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥" इत्यमरः ॥५॥ स्वं स्वासाधारणम् । कालरूपाभं मृत्युशरीराभम् । वैश्रवणानुज इत्यनेन जन्मकारणे तुल्येपि हन्तान्यतरस्य क्रौर्यमित्युच्यते ॥६॥

अर्कं रुन्ध्यां शरैस्तीक्ष्णैर्विभिन्द्यां हि महीतलम् । कामरूपिणमुन्मत्ते पश्य मां कामदं पतिम् ॥ ४ ॥ एवमुक्त वतस्तस्य सूर्यकल्पे शिखिप्रभे । क्रुद्धस्य हरिपर्यन्ते रक्ते नेत्रे बभूवतुः ॥ ५ ॥ सद्यः सौम्यं परित्यज्य भिक्षुरूपं स रावणः । स्वं रूपं कालरूपाभं भेजे वैश्रवणानुजः ॥ ६ ॥ संरक्तनयनः श्रीमांस्तप्तकाञ्चनकुण्डलः । क्रोधेन महताविष्टो नीलजीमूतसन्निभः । दशास्यः कार्मुकी बाणी बभूव क्षणदाचरः ॥ ७ ॥ स परिव्राजकच्छद्म महाकायो विहाय तत् । प्रतिपद्य स्वकं रूपं रावणो राक्षसाधिपः ॥ ८ ॥ संरक्तनयनः क्रोधाज्जीमूतनिचयप्रभः । रक्ताम्बर धरस्तस्थौ स्त्रीरत्नं प्रेक्ष्य मैथिलीम् ॥ ९ ॥ स तामसितकेशान्तां भास्करस्य प्रभामिव । वसनाभरणोपेतां मैथिलीं रावणोऽब्रवीत् ॥ १० ॥

संरक्तेति सार्धश्लोक एकान्वयः । श्रीमान् विचित्रशक्तिसम्पन्नः । क्षणदाचरः संरक्तनयनत्वादिविशिष्टो बभूव ॥ ७ ॥ उक्तानुवादपूर्वकं क्रौर्यान्तरमाह द्वाभ्याम्–स इत्यादि । परिव्राजकच्छद्म परिव्राजकरूपं परिव्राजकरूपेण परिवृतं मां प्रेक्ष्य तस्थौ । किमेवंरूपं दृष्ट्वापि मां भजिष्यतीति प्रत्याशयेति भावः ॥ ८ ॥९॥ असितकेशान्तां नीलकेशाग्राम् । केशाग्रे पैङ्गलं दुर्लक्षणम् । भास्करस्य प्रभामित्यनेन दुष्प्रसहत्वमुच्यते । वसनेत्यादिना दुस्त्यजत्व स्पष्टः । वास्तवार्थस्तु–वीर्यपराक्रमौ वीर्यं समरे अभीरुत्वम्, पराक्रमः पराभिभवनसामर्थ्यम् । उन्मत्तया मत्तजनाद्युद्धता उन्मत्तभिन्ना तादृशयापि न श्रुतौ । योऽहमेता दृशविशेषणविशिष्टः तं कामरूपिणं कामदं पतिं रक्षसामिति शेषः । मां पश्येति बभाष इति पूर्वेणान्वयः ॥ १–४ ॥ एवमिति । अस्मिन् श्लोके पूर्वश्लोकस्थ मुन्मत्त इति पदमाकृष्य श्लोको योजनीयः । तथा सत्येवं योजना । एवमुक्तवतो रावणस्य क्रुद्धस्य उन्मत्ते हरिपर्यन्ते हरिः पिङ्गलवर्णः पर्यन्तयोरुपान्तयो र्ययोस्ते । शिखिप्रभे अग्निसदृशे नेत्रे बभूवतुः ॥ ५–७ ॥ परिव्राजकच्छद्म मायात्मकं यतिवेषम् ॥ ८–१० ॥

स०–असितकेशान्तां कृष्णकेशान्ताम् । आदित्यप्रभाया असितत्वं च " असौ वा आदित्यः पिङ्गलः एष शुक्ल एष नीलः " इत्यादिच्छान्दोग्यवाक्यसिद्धम् ॥ १० ॥

मुच्यते ॥ १० ॥ त्रिष्विति । वरारोहे वरजघने ॥ ११ ॥ पुनरस्यागशङ्का मा कार्षीरित्याह मामिति । क्वचित् क्वापीत्यर्थः ॥ १२ ॥ त्यज्यतामिति



त्रिषु लोकेषु विख्यातं यदि भर्तारमिच्छसि । मामाश्रय वरारोहे तवाहं सदृशः पतिः ॥ ११ ॥ मां भजस्व चिराय त्वमहं श्लाघ्यः प्रियस्तव । नैव चाहं क्वचिद्भद्रे करिष्ये तव विप्रियम् ॥ १२ ॥ त्यज्यतां मानुषो भावो मयि भावः प्रणीयताम् । राज्याच्च्युतमसिद्धार्थं रामं परिमितायुषम् ॥ १३ ॥ कैर्गुणैरनुरक्तासि मूढे पण्डितमानिनि । यः स्त्रिया वचनाद्राज्यं विहाय ससुहृज्जनम् ॥ १४ ॥ अस्मिन् व्यालानुचरिते वने वसति दुर्मतिः ॥ १५ ॥ इत्युक्त्वा मैथिलीं वाक्यं प्रियार्हां प्रियवादिनीम् । अभिगम्य सुदुष्टात्मा राक्षसः काममोहितः । जग्राह रावणः सीतां बुधः खे रोहिणीमिव ॥ १६ ॥

सार्धश्लोकद्वयमेकान्वयम् । मानुषः मनुष्यरामविषयः । भावः स्नेहबन्धः । व्यालाः हिंस्राः । तमिति पूर्वेणान्वयः ॥ १३–१५ ॥ इतीत्यादिसार्धश्लोक त्रिषु लोकेषु विख्यातमित्यादिसार्धचतुष्टयश्लोकस्य प्रातीतिकार्थः स्पष्टः । कुलकम् । वस्तुतस्तु–भर्तारं शुश्रूषादिना स्वामिनं बिभर्तीति भर्ता, भृत्य इत्यर्थः । पतिः रक्षसामिति शेषः । यद्यहं रक्षसां पतिः तथापि तव सदृशः अनुरूपः किम् ? भृत्य इति शेषः । अनुरूपो भृत्यो न भवामि तथापि भृत्यमिच्छसि यदि त्रिषु लोकेषु विख्यातं यथा तथा मामाश्रय भृत्यत्वेनाङ्गीकुरु । कुतः ? चिराय चिरकालादारभ्य तव श्लाघ्यः प्रियः प्रीणयति शुश्रूषादिना स्वामिनमिति प्रियो भृत्यः । जयस्यैव रावणरूपेणोत्पन्नत्वात् । अतो मां भृत्य इति भजस्व जानीहीत्यर्थः । अत एव नैवाहमिति । मानुषे भावस्त्यज्यताम्, मनुष्य एव रक्षणीय इत्यभिप्रायस्त्यज्यता मित्यर्थः । किन्तु प्राचीनकृपया मूढे पण्डितमानिन्यपि राक्षसे भृत्ये मयि भावः प्रणीयताम् अयमपि रक्षणीय इत्यनुसन्धीयतामित्यर्थः । किञ्च राज्याच्च्युतं तुच्छी कृत्य राज्यभोगमित्यर्थः । कुतः ? असिद्धार्थम् अश्वासौ सिद्धार्थश्च असिद्धार्थस्तम् अवाप्तसमस्तकामं विष्णुमित्यर्थः । परिमितायुषं परिगतं त्यक्तं मितमल्पमायुर्येन तम् अपरिमितायुषमित्यर्थः । किञ्च कैर्गुणैरनिर्वचनीयैर्गुणैरनन्तकल्याणगुणैरित्यर्थः । युक्तामिति शेषः । अनुरक्तासि, कुत एवं दुर्मतिः दुष्टेष्वपि मतिः अनुग्राहिका यस्य सः अत एव हि स्त्रिया वचनात्सुहृज्जनं राज्यं विहाय वने वसति तादृशं त्वमनुरक्तासि यतः अतस्सर्वोत्तमा लक्ष्मीस्त्वम् अत एव मां भृत्यत्वेनाङ्गीकुर्विति तात्पर्यम् ॥ ११–१५ ॥ इतीति । प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु रावणः अन्यत्र सुदुष्टात्मा काममोहितश्च यद्यपि तथाप्यत्र न तथा अत एव बुधः रोहिणीमिव जग्राह

टीका०–जग्राह रावणः सीतां बुधः खे रोहिणीमिवेति । नन्वत्र नलकूबरवेदवत्यादिशापाद्भलात्कथं परदारस्पर्श इति चेत्; सत्यम्, रावणः सीतां साक्षान्न जग्राह न स्पृष्टवान् परन्तु जानुकेशादिच्छायामेव जग्राह । राक्षसानां छायाग्राहित्वात् । तदुक्तं स्कान्दे–“ छायाग्राहित्वमप्यस्ति सर्वविद्याविशारदे । केशच्छायां परामृश्य जानुच्छायां तथैव च । गृहीत्वा जानकीं हृष्टो लङ्कां प्रायात्स रावणः । सीतापहरणं चैव ये शृण्वन्ति नरोत्तमाः । न तेषामशुभं देवि भविष्यति कदाचन ॥” इति ॥ स०–प्रियः स्वप्रियो रामः तस्यैवार्हाम् । अत एव तमेव वदतीति प्रियवादिनी ताम् ॥ १६ ॥

एकान्वयः । प्रियार्हत्वे हेतुः प्रियवादिनीमिति । अत्र मुहूर्तं तिष्ठ भूयः सत्करिष्यामीति प्रियभाषिणीं मैथिलीम् । इत्युक्त्वा एवं परुषमुक्त्वा । तत्र हेतुः सुदुष्टात्मेति । बुधः खे रोहिणीमिवेत्यभूतोपमा । बुधः स्वपितृपत्नीत्वेन मातरं खे आकाशे सुखेन सञ्चरन्तीं रोहिणीं यदि गृह्णीयात् तत्तुल्य मिदं पापमित्यर्थः ॥ १६ ॥ वामेनेति । शापकृतदोषो भविष्यतीति मूर्धजेषूर्वोश्च ग्रहणम् ॥ १७ ॥ तमिति गृह्णन्तमित्यर्थः ॥ १८ ॥ सः पूर्वं गुप्तः

वामेन सीतां पद्माक्षीं मूर्द्धजेषु करेण सः । ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना ॥ १७ ॥ तं दृष्ट्वा मृत्युसङ्काशं तीक्ष्णदंष्ट्रं महाभुजम् । प्राद्रवन् गिरिसङ्काशं भयार्ता वनदेवताः ॥ १८ ॥ स च मायामयो दिव्यः खरयुक्तः खरस्वनः । प्रत्यदृश्यत हेमाङ्गो रावणस्य महारथः ॥ १९ ॥ ततस्तां परुषैर्वाक्यैर्भर्त्सयन् स महास्वनः । अङ्केना दाय वैदेहीं रथमारोपयत्तदा ॥ २० ॥ सा गृहीता विचुक्रोश रावणेन यशस्विनी । रामेति सीता दुःखार्ता रामं दूरगतं वने ॥ २१ ॥ तामकामां स कामार्तः पन्नगेन्द्रवधूमिव । विवेष्टमानामादाय उत्पपाताथ रावणः ॥ २२ ॥ ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा । भृशं चुक्रोश मत्तेव भ्रान्तचित्ता यथातुरा ॥ २३ ॥

मायामयः अन्तर्धानाद्यर्हतया आश्चर्यमयः खरयुक्तः अश्वतरयुक्तः हेमाङ्गः स्वर्णमयचक्रः । चक्रं हि रथाङ्गमित्युच्यते ॥ १९ ॥ अङ्केन ऊरुभागेन ॥ २० ॥ सेति । वने दूरगतं राममुद्दिश्य रामेति विचुक्रोश । "क्रुश आह्वाने रोदने च" ॥ २१ ॥ अकामां विरागिणीम् । विवेष्टमानां रथोपरिस्थले लुठन्तीम् । आदाय पुनरङ्केनादाय । उत्पपात रथेन सहित इति शेषः॥२२॥ तत इति । आतुरा सा मत्तेव मद्युक्तेव । भ्रान्तचित्ता यथा भ्रान्तचित्तेव च

बुधः स्वमातरं यथा पूजार्थं गृह्णाति तथा रावणोपि सीतां जग्राह । स्वगृहे संस्थाप्य स्वेष्टदेवताबुद्ध्या पूजयितुमेवेत्यर्थः ॥ १६ ॥ वामेनेति । मूर्द्धजेषुकरेण मूर्द्धजाः श्रेष्ठाः इषवः यस्मिन् तेन करेण दक्षिणेन वामेन च ऊर्वोः पादयोः परिजग्राह पादौ गृहीत्वा लङ्कां प्रत्यागन्तव्यमिति प्रार्थितवानिति भावः ॥ १७–१९ ॥ तत इति स्पष्टोर्थः। वस्तुतस्तु—परुषैर्वाक्यैर्यदि मां भृत्यत्वेन नाङ्गीकरोषि तर्हि तवाग्रतः प्राणांस्त्यक्ष्यामीत्यादिवाक्यैर्भर्त्सयन् भीतिमुत्पादयन् रथमारोपयत् ॥२०॥ सा गृहीतेत्यादीनां वास्तवार्थे सीतया दैन्यवत्प्रतीयमानानि वाक्यानि सर्वाणि सीतया लौकिकरीतिमनुसृत्योक्तानीति द्रष्टव्यानि ॥ २१–२५ ॥

टीका—यशमिति । मत्तेव भ्रान्तचित्ता यथा उन्मत्तचित्तेव । आतुरा अप्रकृतिस्था । भृशमत्यन्तं चुक्रोश ॥ २३ ॥

चुक्रोश ॥ २२ ॥ अमर्षिणा खरवधकृतामर्षवता ॥ २४ ॥ धर्महेतोः आश्रितसंरक्षणरूपधर्महेतोः । जीवितं सुखमर्थांश्च परित्यजन् जीवितादिपरित्याग शीलः ॥२५॥ ननु नामेति प्रसिद्धौ । अविनीतानां दुर्जनानाम् । विनेता शिक्षकः । पापं पापिष्ठं कथं न शास्सि न शिक्षयसि ॥ २६ ॥ अशासने स्वयमेव हेतुमुन्नयति—न त्विति । अविनीतस्य दुर्जनस्य । कर्मणः पापस्य सद्यः फलं न दृश्यते । कुतः? अत्र फलदर्शने कालोऽप्यङ्गीभवति सहकारिकारणं भवति ।

हा लक्ष्मण महाबाहो गुरुचित्तप्रसादक । ह्रियमाणां न जानीषे रक्षसा माममर्षिणा ॥ २४ ॥ जीवितं सुखमर्थांश्च धर्महेतोः परित्यजन् । ह्रियमाणामधर्मेण मां राघव न पश्यसि ॥ २५ ॥ ननु नामाविनीतानां विनेतासि परन्तप । कथमेवंविधं पापं न त्वं शास्सि हि रावणम् ॥ २६ ॥ नतु सद्योऽविनीतस्य दृश्यते कर्मणः फलम् । कालोऽप्यङ्गी भवत्यत्र सस्यानामिव पक्तये ॥ २७ ॥ स कर्म कृतवानेतत् कालोपहतचेतनः । जीवितान्तकरं घोरं रामाद्व्यसन माप्नुहि ॥ २८ ॥ हन्तेदानीं सकामाऽस्तु कैकेयी सह बान्धवैः । ह्रिये यद्धर्मकामस्य धर्मपत्नी यशस्विनः ॥ २९ ॥ आमन्त्रये जनस्थाने कर्णिकारान् सुपुष्पितान् । क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः ॥ ३० ॥ माल्यवन्तं शिखरिणं वन्दे प्रस्रवणं गिरिम् । क्षिप्रं रामाय शंस त्वं सीतां हरति रावणः ॥ ३१ ॥ हंसकारण्डवाकीर्णां वन्दे गोदावरीं नदीम् । क्षिप्रं रामाय शंस त्वं सीतां हरति रावणः ॥ ३२ ॥

अभूततद्भावे च्विः । पक्तये पाकाय ॥२७॥ सः त्वमित्यर्थः । व्यसनं भ्रंशम् । "व्यसनं विपदि भ्रंशे" इत्यमरः ॥२८॥ वने राक्षसादिभिर्हता भवेदिति मां कैकेयी वनं प्रेषितवतीति वैदेह्या हृदये सर्वदा स्थितं,तदिदानीं सुप्तप्रमत्तकुपितानां भावज्ञानं दृष्टमिति न्यायेनोद्घाटयति—हन्तेति । अत्र हेतुमाह ह्रिये यदिति ॥ २९ ॥ अथ चित्तविभ्रमातिरेकादचेतनानपि रामायाख्यातेत्यभ्यर्थयते—आमन्त्रय इत्यादिभिः सतश्लोकैः । आमन्त्रये सम्बोधयामि । जनस्थाने स्थितानिति शेषः । कर्णिकारान् परिव्याधाख्यान् पुष्पवृक्षान् । रावणः सीतां हरतीति यत् एतच्छंसध्वं कथयत । एवमुत्तरत्रापि योज्यम् ॥ ३० ॥ माल्यवन्तं पुष्पवन्तम् । शिखरिणं प्रशस्तशिखरम् । प्रस्रवणं प्रस्रवणाख्यम् ॥ ३१ ॥ हंससारसंघुष्टामिति पाठे—संघुष्टाः हंसाः सारसाश्च यस्यां

विनीतोसि शिक्षितोऽसि ॥२६—२९॥ टीका—आमन्त्रये सम्बोधयामि। सीतां हरति रावण इत्यत्रेतिकरणं द्रष्टव्यम् ॥३०॥ माल्यवन्तं पुष्पवन्तम् । शिखरिणं शृङ्गवन्तम् । प्रस्रवणाख्यं गिरिम् ॥३१॥३२॥

सा हंससारससंघुष्टा । कर्तरि क्तः । हंसकारण्डवाकीर्णामिति शुद्धः पाठः ॥ ३२ ॥ दैवतानीति । तेभ्यो युष्मभ्यमिति शेषः ॥ ३३ ॥ यानीत्यादिश्लोकद्वयमेकान्वयम् । सत्त्वानि जन्तवः । उतेति सम्बोधने समुच्चये वा । ह्रियमाणां प्राणेभ्योपि गरीयसीं प्रियां माम्, सीता रावणेन हृतेति भर्तुः शंसत रावणान्न भेतव्यं तत्त्वं कथयतेति भावः ॥ ३४ ॥ ३५ ॥ कथने किं प्रयोजनं तत्राह–विदित्वेति । भवदुक्तप्रकारेण मां विदित्वा । अमुत्र स्वर्गलोके गतामपि वैव

दैवतानि च यान्यस्मिन् वने विविधपादपे । नमस्करोम्यहं तेभ्यो भर्तुः शंसत मां हृताम् ॥ ३३ ॥ यानि कानिचिदप्यत्र सत्त्वानि निवसन्त्युत । सर्वाणि शरणं यामि मृगपक्षिगणानपि ॥३४॥ ह्रियमाणां प्रियां भर्तुः प्राणेभ्योपि गरीयसीम् । विवशाऽपहृता सीता रावणेनेति शंसत ॥ ३५ ॥ विदित्वा मां महाबाहुरमुत्रापि महाबलः । आनेष्यति पराक्रम्य वैवस्वतहृतामपि ॥ ३६ ॥ सा तदा करुणा वाचो विलपन्ती सुदुःखिता । वनस्पतिगतं गृध्रं ददर्शायतलोचना ॥ ३७ ॥ सा तमुद्वीक्ष्य सुश्रोणी रावणस्य वशं गता । समाक्रन्दद्भयपरा दुःखोपहतया गिरा ॥ ३८ ॥ जटायो पश्य मामार्य ह्रियमाणामनाथवत् । अनेन राक्षसेन्द्रेण करुणं पापकर्मणा ॥३९॥ नैष वारयितुं शक्यस्तव क्रूरो निशाचरः । सत्त्ववान् जितकाशी च सायुधश्चैव दुर्मतिः ॥ ४० ॥ रामाय तु यथातत्त्वं जटायो हरणं मम । लक्ष्मणाय च तत्सर्वमाख्यातव्यमशेषतः ॥४१॥ इत्यार्षे श्रीरामायणे० श्रीमदारण्यकाण्डे एकोनपञ्चाशः सर्गः ॥४९

स्वतहृतामपि मां पराक्रम्यानेष्यति । तस्मादवश्यं शंसतेति भावः ॥ ३६ ॥ करुणाः दीनाः । तात्कालिकहर्षं सूचयति आयतलोचनेति ॥ ३७ ॥ तमिति । समाक्रन्दत् "क्रदि आह्वाने रोदने च" । दुःखोपहतया दुःखगद्गदया ॥ ३८ ॥ आर्येति श्वशुरवत्सम्बोधनम् । करुणं यथा तथा ह्रियमाणाम् ॥ ३९ ॥ नेति । अशक्यत्वे हेतुः सत्त्ववानित्यादिकम् । जितकाशी जयावहः । दुर्मतिः कूटयोधी ॥ ४० ॥ तर्हि मया किं कर्तव्यं तत्राह–रामाय त्विति । तत् अस्य दुर्जयत्वादेव हेतोः ॥ ४१ ॥ इति श्रीगोविन्द० श्रीरामा० रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥



॥ ३३-४१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् आरण्यकाण्डव्याख्यायाम् एकोनपञ्चाशः सर्गः ॥ ४९ ॥

टी०–अमुत्रापि परलोकेपि ॥ ३६ ॥ नैष वारयितुं शक्यस्तुभ्यम् इति पाठे–तुभ्यं त्वया । जितकाशी जितेन जयेन काशत इति जितकाशी ॥ ४० ॥

अथ स्वामिविषये दासेन यावच्छक्ति शेषवृत्तिरवश्यं कर्तव्येत्यमुमर्थं लोके प्रवर्तयितुं जटायुवृत्तान्तमुपक्षिपति सर्गद्वयेन। अत्र प्रथमं जटायुः सान्त्वनभर्त्स नाभ्यां रावणमनुकूलयितुमिच्छतीत्याह—तं शब्दमित्यादि। अवसुप्तः ईषत्सुप्तो जटायुः। अथ सीतावचनानन्तरम्। तं शब्दं शुश्रुवे। आत्मनेपदमार्षम्। ततः प्रथमं महाशरीरतया रावणं निरीक्ष्य सः वैदेहीं ददर्श ॥१॥ तीक्ष्णतुण्डः तीक्ष्णमुखः। "वक्त्रास्ये वदनं तुण्डम्" इत्यमरः। श्रीमान् कैङ्कर्य

तं शब्दमवसुप्तस्तु जटायुरथ शुश्रुवे। निरीक्ष्य रावणं क्षिप्रं वैदेहीं च ददर्श सः ॥ १ ॥ ततः पर्वतकूटाभस्तीक्ष्ण तुण्डः खगोत्तमः। वनस्पतिगतः श्रीमान् व्याजहार शुभां गिरम् ॥ २ ॥ दशग्रीव स्थितो धर्मे पुराणे सत्यसंश्रयः। जटायुर्नाम नाम्नाऽहं गृध्रराजो महाबलः ॥ ३ ॥ राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः। लोकानां च हिते युक्तो रामो दशरथात्मजः ॥ ४ ॥ तस्यैषा लोकनाथस्य धर्मपत्नी यशस्विनी। सीता नाम वरारोहा यां त्वं हर्तुमिहेच्छसि ॥ ५ ॥ कथं राजा स्थितो धर्मे परदारान् परामृशेत्। रक्षणीया विशेषेण राजदारा महाबल ॥ ६ ॥ निवर्तय मतिं नीचां परदाराभिमर्शनात्। न तत् समाचरेद्धीरो यत्परोऽस्य विगर्हयेत् ॥ यथात्मनस्तथान्येषां दारा रक्ष्या विपश्चिता ॥ ७ ॥

श्रीसमृद्धः। शुभां रावणस्य शोभनावहाम् ॥ २ ॥ पुराणे सनातने धर्मे, दास्यवृत्तावित्यर्थः। स्थितः तदेकपरायणः। सत्यम् "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युक्तः परमात्मा संश्रयः आलम्बनं यस्य सः। भगवदेकोपायनिष्ठ इत्यर्थः। नाम्ना जटायुर्नाम जटायुरिति प्रसिद्धः। तथा च मयि दासे स्थिते तव सीतापहरणं न युक्तमिति भावः ॥ ३ ॥ स्वस्वरूपमुक्त्वा स्वामिस्वरूपमाह—राजेति। महेन्द्रवरुणोपमत्वमेकदेशसाम्यात्। सर्वलोकस्य राजा स्वामी, भवतोपि स्वामीत्यर्थः ॥ ४ ॥ तथा च राजदारापहारो न युक्त इत्याह—तस्येति। सहधर्मचारिणीति धर्मपत्नीशब्दार्थः ॥ ५ ॥ मा भूत्तव रामे स्वामित्वबुद्धिः, मनुष्यमात्रबुद्धिं राजबुद्धिं वा कृत्वा सीतां परिहरेत्याह—कथमिति। राजा भवानिति शेषः ॥ ६ ॥ राजत्वबुद्धिस्तव रामे मा भूत् तथापि परदाराभिमर्शनं न कार्यमित्याह—निवर्तयेति। परदाराभिमर्शनान्मतिं निवर्तय तद्विषयमतिं न कुर्वित्यर्थः। नीचत्वमेवाह—नेति। धीरः धीमान्

तं शब्दमिति। सुप्तो जटायुः। अवबोधानन्तरं तं शब्दं शुश्राव। जटायो पश्य मामित्यामन्त्रणेन प्रबुद्धः पश्चादुत्तरवाक्यजातं शुश्रावेत्यर्थः ॥१॥२॥ पुराणे सनातने धर्मे। सत्यसंश्रयः सत्यावलम्बी ॥ ३ ॥ सर्वलोकस्य राजा राम इत्यनेन तवापि राजेति भावः ॥४॥ धर्मपत्नीत्यनेनैतद्धरणे महापापं सूचितम् ॥५॥ रक्षणीया विशेषेण राजदारा इत्यनेन राजदारापहरणस्य गुरुतल्पसमत्वादिति भावः ॥ ६ ॥ नीचां निकृष्टाम्। अस्य पुरुषस्य परः यत्कर्म विगर्हयेत् निन्देत् न तत्समा

तत्कर्म न समाचरेत् । अस्य धीरस्य यत् कर्म । परो विगर्हयेत् निन्देत् । यथेत्यर्धमेकं वाक्यम् । विपश्चिता विवेकिना ॥ ७ ॥ शिष्टाः सन्तः राजानः शास्त्रेष्वनागतमनुपदिष्टं धर्ममर्थं वा । यदि वा कामं कामं वा । न व्यवस्यन्ति नेच्छन्तीत्यर्थः । लोके यथा तथा वा भवतु, राज्ञस्तव सुतरां नेद मुचितमिति भावः ॥ ८ ॥ न केवलं स्वार्थं लोकानुग्रहार्थम् चेदं परिहर्तव्यमित्याह–राजेति । अत्र धर्मादिशब्दौ धर्मादिप्रवर्तकपरौ । द्रव्याणामर्थाना

अर्थं वा यदि वा कामं शिष्टाः शास्त्रेष्वनागतम् । व्यवस्यन्ति न राजानो धर्मं पौलस्त्यनन्दन ॥ ८ ॥
राजा धर्मश्च कामश्च द्रव्याणां चोत्तमो निधिः । धर्मः शुभं वा पापं वा राजमूलं प्रवर्तते ॥ ९ ॥
पापस्वभावश्चपलः कथं त्वं रक्षसां वर । ऐश्वर्यमभिसम्प्राप्तो विमानमिव दुष्कृतिः ॥ १० ॥

मुत्तमो निधिराश्रयः । यस्मादेवं तस्मान् धर्मः धर्मादिः राजमूलं यथा तथा प्रवर्तते । शुभं शुभाचारः पापं वा राजमूलं प्रवर्तते राजानुसारेण लोकाः धर्माधर्मादिषु प्रवर्तन्ते । अतो राज्ञा पापं विहाय धर्मादिकमेव कर्तव्यमित्यर्थः ॥ ९ ॥ परदाराभिमर्शनमैश्वर्याङ्कुशकं चेत्याह–पापस्वभाव इति । पापं स्वभावः सहजधर्मो यस्य स पापस्वभावः । अत एव चपलः विषयप्रवणः त्वं दुष्कृतिः विमानं देवार्हं विमानमिव । ऐश्वर्यमभि ऐश्वर्यं प्रति कथं

चरेत् । विनर्शनात् परपुरुषसंस्पर्शनात् रक्ष्या इत्यन्वयः । ( रक्ष्या विमर्शनात् इति पाठः ) ॥ ७ ॥ धर्ममर्थं च कामं चेति । शास्त्रेष्वनागतमनवगतं रहस्यरूप तया शास्त्रपर्यालोचनेपि असूक्ष्मदृष्टीनां दुर्बोधनामित्यर्थः । धर्ममर्थं च कामं च शिष्टा राज्ञोऽन्ये जनाः राजानमनु राजानमनुसृत्य व्यवस्यन्ति कुर्वन्ति । राज्ञः मोक्षधर्मादिज्ञानसम्पत्त्या तादृशं राजानमनुसृत्य भूपोपदिष्टधर्मादिकं शास्त्रे सम्यगस्फुटमपि प्रजा आचरन्तीति भावः । तस्माद्धर्मोपदेशपरस्य राज्ञस्त्वधर्मप्रवृत्ति रनुचितेति तात्पर्यम् । उपसंहरति–धर्म इति । हे पौलस्त्यनन्दन ! तस्माद्धर्मस्समाश्रयणीय इत्यपेक्षितपदाध्याहारेण योजना । “धर्ममर्थं च कामं च शिष्टाः शास्त्रेष्वनागतम् । व्यवस्यन्त्यनु राजानं धर्मः पौलस्त्यनन्दन ॥” इति पाठः । “धर्ममर्थं च कामं च शिष्टाः शास्त्रेष्वनागतम् । न व्यवस्यन्ति राजानो धर्मः पौल स्त्यनन्दन ॥” इति पाठे त्वयमर्थः–शिष्टाः सद्वृत्तयो राजानः शास्त्रेष्वनागतम् अप्रतिपादितमित्यर्थः । न व्यवस्यन्ति नेच्छन्ति । शास्त्रविरुद्धधर्मार्थकामादिकं नेच्छन्तीत्यर्थः । तस्माद्धर्मः समाश्रयणीय इति योजना ॥ ८ ॥ एतदेव प्रपञ्चयति–राजा धर्मस्येति । धर्मस्य कामस्य द्रव्याणाम् अर्थरूपपुरुषार्थस्य निधिः स्थानम् यतः अत एव धर्मः पुण्यं पापं शुभं यशः राजमूलं प्रवर्तते । “राजा धर्मश्च कामश्च” इति पाठे अयमर्थः–राजैव द्रव्याणामर्थरूपपुरुषार्थस्य निधिः स्थानम् यतः अतः राजा धर्मश्च कामश्च भवति । कुतः ? धर्म इति । धर्मादिकं हि राजमूलं प्रवर्तते अतो राजा धर्मश्च कामश्च भवतीति योजना ॥ ९ ॥ उक्तराजधर्महीने त्वयि कथमैश्वर्यं स्थितमिति विस्मयो जायत इत्याह–पापस्वभाव इति ॥ १० ॥

सम्प्राप्तः योग्यः । एवं विषयचपलश्चेदैश्वर्याद्भ्रष्टो भविष्यसीति भावः ॥ १० ॥ एवं बहुसान्त्वनेऽपि सीताविसर्जनाकरणात् भवादृशे उपदेशो निरर्थक इत्याह—काममिति । यो यस्य स्वभावः औत्पत्तिकः स धर्मः कामम् अत्यन्तं परिमार्जितुं न शक्यः । उपदेशेन निवर्तयितुं न शक्य इत्यर्थः । तथाहि आर्ये सदुपदेशः दुष्टात्मनाम् आलये हृदये चिरं नावसति न तिष्ठति ॥ ११ ॥ शत्रुभार्यापहरणं मम स्वभाव इत्याशङ्क्य शात्रवप्रसक्तिरत्र



कामं स्वभावो यो यस्य न शक्यः परिमार्जितुम् । नहि दुष्टात्मनामार्यमावसत्यालये चिरम् ॥ ११ ॥ विषये वा पुरे वा ते यदा रामो महाबलः । नापराद्ध्यति धर्मात्मा कथं तस्यापराद्ध्यसि ॥ १२ ॥ यदि शूर्पणखाहेतोर्जनस्थानगतः खरः । अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा ॥ १३ ॥ अत्र ब्रूहि यथातत्त्वं को रामस्य व्यतिक्रमः । यस्य त्वं लोकनाथस्य भार्यां हृत्वा गमिष्यसि ॥ १४ ॥ क्षिप्रं विसृज वैदेहीं मा त्वा घोरेण चक्षुषा । दहेद्दहनभूतेन वृत्रमिन्द्राशनिर्यथा ॥ १५ ॥ सर्पमाशीविषं बध्वा वस्त्रान्ते नावबुद्ध्यसे । ग्रीवायां प्रतिमुक्तं च कालपाशं न पश्यसि ॥ १६ ॥

नास्तीत्याह—विषये वेति । विषये राज्ये यदा नापराध्यति तदा तस्य कथमपराध्यसि ॥ १२ ॥ खरवध एव ममापराध इत्याशङ्क्याह द्वाभ्याम्—यदीत्यादि । वृत्तं मर्यादामतिक्रान्तोऽतिवृत्तः अत्र हननविषये । यस्येति । तस्येति पूर्वशेषः ॥ १३ ॥ १४ ॥ प्रकृतमुपसंहरति—क्षिप्रमिति । अत्र राम इत्यध्याहार्यम् । चक्षुषेत्यनेन दर्शनमात्रेण वधो लक्ष्यते । अशनिः वज्रम् ॥ १५ ॥ सीताग्रहणमवश्यं मृत्युकरमित्याह—सर्पमित्यादिना । आशीविषम् आशीविषाख्यम् ।

ननु दुष्टः समीचीनो वा स्वभावो दुरतिक्रमः, तत्र दुष्टस्वभावानामपि प्राप्तमैश्वर्यं दुर्निवारमेवेत्यत आह—कामस्वभाव इति । स्वभावो दुरतिक्रमोऽस्तु, दुष्टात्मनामालये गृहे आर्यमैश्वर्यं चिरं चिरकालं नावसति न तिष्ठति । अयं भावः—सुकृते सत्यैश्वर्यप्राप्तिः, सुकृतं च दुष्टात्मना क्रियमाणं प्रायेण निष्फलं भवति, तवैतत्सम्भावितम् । यद्वा यस्य पुरुषस्य यः कामः स्वभावस्तस्य स स्वभावः परिमार्जितुं न शक्यः । कुतः ? हि यस्माद्दुष्टात्मनामालये चित्ते आर्यं पूज्यं पुण्यमिति यावत् । चिरं चिराय नावसति तस्माद् "धर्मेण पापमपनुदति" इति श्रुत्या कामादिस्वभावनिवृत्तिकारणत्वेन बोधितस्य धर्मस्य पापिष्वभावात्पापस्वभावो न शक्यमार्जनः केनापीत्यर्थः ॥ ११ ॥ १२ ॥ यदीति । अतिवृत्तः उचितमतिक्रम्य जायमानं वृत्तं यस्य स तथा । गमिष्यसीत्यत्र काकुः, न जीवन् गमिष्यसीत्यर्थः ॥ १३ ॥ १४ ॥ क्षिप्रमिति । राम इत्यध्याहारः । त्वां दहनभूतेन चक्षुषा मा दहेत अन्यथा दहेदित्यर्थः ॥ १५ ॥ १६ ॥

स०—कार्यगौरवादार्येति रावणसम्बोधनम् । दुष्टात्मनामालये मा लक्ष्मीः चिरं बहुकालं न वसति किन्तु आर्यमा ज्येष्ठलक्ष्मीर्वसति । पूर्वत्र मा वसतीति च्छेदः ॥ ११ ॥

प्रतिमुक्तम् आमुक्तम् । यथा वस्त्रबद्धः सर्पोऽवश्यं नाशयति तद्वत् इयं सीता गृहीता त्वां नाशयिष्यतीति भावः । व्याजस्तुतिरलङ्कारः ॥ १६ ॥ भारः भारद्रव्यम् । नावसादयेत् न पीडयेत् । अनामयं व्याध्यनुत्पादकम् । अत्रापि पूर्ववद्व्याजस्तुतिः ॥ १७ ॥ यत्कार्यं कृत्वा स्थितस्य न धर्मो भवेत्, कीर्तिः ऐश्वर्यादिजनिता प्रथा वा न भवेत्, यशः भोगित्वकृतप्रथा वा न भवेत्, प्रत्युत शरीरदुःखमेव भवेत्, तत्कर्म कः समाचरेत् ? मूढ एवा

स भारः सौम्य भर्तव्यो यो नरं नावसादयेत् । तदन्नमपि भोक्तव्यं जीर्यते यदनामयम् ॥ १७ ॥ यत्कृत्वा न भवे द्धर्मो न कीर्तिर्न यशो भुवि । शरीरस्य भवेत् खेदः कस्तत्कर्म समाचरेत् ॥ १८ ॥ षष्टिर्वर्षसहस्राणि मम जातस्य रावण । पितृपैतामहं राज्यं यथावदनुतिष्ठतः ॥ १९ ॥ वृद्धोऽहं त्वं युवा धन्वी सशरः कवची रथी । तथाप्यादाय वैदेहीं कुशली न गमिष्यसि ॥ २० ॥ न शक्तस्त्वं बलाद्धर्तुं वैदेहीं मम पश्यतः । हेतुभिर्न्यायसंयुक्तैर्ध्रुवां वेदश्रुतीमिव ॥ २१ ॥

चरेत् । तथाविधकर्मकरणाद्भवान्मूढ एवेति भावः ॥ १८ ॥ मयि वृद्धत्वेनावमतिं मा कृथा इत्याशयेनाह द्वाभ्याम्–षष्टिरित्यादि । षष्टिर्वर्षसहस्राणि गतानीति शेषः । जातस्येत्यनेन वयसा जीर्णत्वमुच्यते । राज्यं यथावत् अनुतिष्ठतः पालयत इत्यनेन कर्मणा जीर्णत्वमुक्तम् । अहं धनुराद्युपकरण रहितः ॥ १९ ॥ २० ॥ एतदेव दृष्टान्तमुखेन द्रढयति–न शक्त इति । मम पश्यतः मयि पश्यति सति । सीतां बलाद्धर्तुं न शक्तः न समर्थः । कथमिव न्यायसंसिद्धैः न्यायशास्त्रसंसिद्धैः हेतुभिः अनुमानैः । ध्रुवां निश्चलाम् अविचाल्यप्रामाण्यामिति यावत् । वेदश्रुतीमिव वेदश्रुतिमिव । दीर्घ आर्षः । वेदयतीति वेदः स्वतः प्रमाणभूतां श्रुतिमित्यर्थः । यथा वेदविदग्रेसरे पश्यति सति हैतुकैः न्यायसिद्धैर्हेतुभिः श्रुतिः अन्यथा अन्यपरा नेतुं न शक्यते तद्व

अनामयं रोगानुत्पादकम् ॥ १७ ॥ यत्कर्म कृत्वा स्थितस्य पुरुषस्य धर्मादिकं न भवति प्रत्युत खेद एव भवेत् तत्कर्म कः समाचरेत् न कोपीत्यर्थः । यद्वा यत्कर्म कृत्वा स्थितस्य पुरुषस्य धर्मादिकं न भवेत् नाशं प्राप्नुयादित्यर्थः । यत्कर्मकरणेन धर्मादिकं नाशं प्राप्नुयादिति यावत् । अपि तु शरीरस्य खेद एव भवेत् तत्कर्म कस्समाचरेत् न कोपीत्यर्थः । कीर्तिर्विक्रमादिजनिता प्रथा । यशः सौजन्यजनिता प्रथेति विवेकः ॥ १८ ॥ षष्टिरिति गतानीति शेषः । पितृपैतामहं पितृपितामहेभ्यः समागतं राज्यं नः दण्डकारण्यमेव, दण्डकारण्ये पक्षिणामधिपतिरहमिति भावः ॥ १९ ॥ २० ॥ श्रुतीमित्यत्र दीर्घश्छान्दसः । यथा ' न सुरां पिबेत ' इत्यादिकां ध्रुवां नित्यां निरपेक्षलक्षणां श्रुतिम्, सुरा पेया द्रवद्रव्यत्वात् क्षीरवदित्यादिभिः न्यायसंयुक्तैः तर्कसहितैः हेतुभिर्हर्तुं बाधितुं पुमान्न शक्नोति । किन्तु श्रुत्येव हेतवः कालात्ययोपदिष्टा भवन्ति तथैव [illegible] श्रुतिसदृशीं सीतां हर्तुं न शक्तः किन्तु त्वमेव नश्यसीत्यर्थः ॥ २१ ॥

द्विति भावः । अन्यपरार्थपादादिव्याघृत्यर्थो वेदशब्दः । यथा तामन्यथा कुर्वन् स्वयमेव विनश्यति न वेदश्रुतेः कापि हानिः एवं सीतामपहरंस्त्वमेव नाशिष्यसि, न तु सीतायाः कापि हानिरित्याकूतम् । यथा वेदविदग्रेसरो वेदश्रुतिमन्यथा नीयमानामवलोकयन् तदसहमानो यावच्छक्ति निवर्तयति तथाऽहमपि त्वया बलान्नीयमानामपि सीतां यावच्छक्ति निवर्तयिष्यामीत्यर्थः ॥२१॥ युद्धयस्वेति । यदि शूरोसि मुहूर्तं तिष्ठ । मा पलायस्व मया युद्धयस्व ।



युद्धयस्व यदि शूरोसि मुहूर्तं तिष्ठ रावण । शयिष्यसे हतो भूमौ यथा पूर्वं खरस्तथा ॥ २२ ॥ असकृत्संयुगे येन निहता दैत्यदानवाः । नचिराच्चीरवासास्त्वां रामो युधि वधिष्यति ॥ २३ ॥ किंनु शक्यं मया कर्तुं गतौ दूरं नृपात्मजौ । क्षिप्रं त्वं नश्यसे नीच तयोर्भीतो न संशयः ॥ २४ ॥ न हि मे जीवमानस्य नयिष्यसि शुभामिमाम् । सीतां कमलपत्राक्षीं रामस्य महिषीं प्रियाम् ॥ २५ ॥ अवश्यं तु मया कार्यं प्रियं तस्य महात्मनः । जीवितेनापि रामस्य तथा दशरथस्य च ॥ २६ ॥ तिष्ठ तिष्ठ दशग्रीव मुहूर्तं पश्य रावण । युद्धातिथ्यं प्रदास्यामि यथाप्राणं निशाचर ॥ २७ ॥

युद्धे मया हतस्त्वं पूर्वं रामेण हतः खर इव भूमौ शयिष्यसे। यद्वा यदि शूरोसि तदा मया युद्धयस्व । अथवा रामागमनपर्यन्तं मुहूर्तं तिष्ठ तेन हतः शयिष्यस इति । यद्वा यदि शूरोसि मुहूर्तं तिष्ठ स्थित्वा तेन युद्धयस्व ॥२२॥ न केवलं स्वापराधप्रतीकारः किन्तु " देवानां दानवानां च सामान्यमधिदैवतम" इत्युक्तस्य रामस्य स्वकीयापराधप्रतीकारोपि भविष्यतीत्याह–असकृदिति ॥२३॥ एवमुक्तेपि पुनः पलायमानं प्रत्याह–किंन्विति । किंनु शक्यं किंवा शक्यम् । नश्यसे अदर्शनं प्राप्नोषि । तयोः ताभ्याम् ॥ २४ ॥ तथापि त्वां नाहं गमयामीत्याह–नहीति । जीवमानस्य जीवतः मयि जीवतीत्यर्थः ॥ २५ ॥ त्वया किं कर्तुं शक्यमित्यत्राह–अवश्यमिति । जीवितेनापि जीवितव्ययेनापि ॥ २६ ॥ तिष्ठेति । यथाप्राणं यथाबलम् ॥ २७ ॥

यदि शूरोसि युद्धयस्व अथवा मुहूर्तं तिष्ठ, रामागमनपर्यन्तमित्यर्थः ॥ २२ ॥ रामपराक्रमं वर्णयति–असकृदिति ॥ २३ ॥ रामः क्वास्ते तमानयेत्यत आह–किमिति । तावुभावपि नृपात्मजौ दूरं गतौ अत एवाहर्तुमानेतुं किं नु शक्यं कथं शक्यमित्यर्थः । अत एव तयोरागमशङ्कया त्वं तयोस्ताभ्यां भीतः क्षिप्रं नश्यसे अदर्शनाय पलायसे न संशय इत्यर्थः ॥२४॥ तथापि जीवमानस्य जीवतः । नयिष्यसि नेष्यसि ॥ २५ ॥ कुतः अवश्यमिति । स्पष्टोऽर्थः ॥२६॥ यथाप्राणं

वृन्तादित्यर्धमेकान्वयम् । "वृन्तं प्रसवबन्धनम्" इत्यमरः ॥२८॥ इति श्रीगोविन्द० श्रीरामायण०रत्नमे० आरण्यकाण्डव्याख्याने पञ्चाशः सर्गः ॥५०॥ अथ स्वामिकार्याय प्राणत्यागमकरोज्जटायुरित्याह—इतीत्यादि ॥ १ ॥ अमर्षणः असहनः ॥ २ ॥ सः युद्धयस्वेति पूर्वं प्रवर्तितः । सम्प्रहारः युद्धम् । वाताभ्यां प्रतिकूलवायुभ्याम् । उद्धतयोः प्रेरितयोः । मेघपक्षे सम्प्रहारः सङ्घट्टनमात्रम् ॥३॥ सपक्षयोः पक्षसहितयोः माल्यवतोः माल्यवन्नामानौ द्वौ पर्वतौ ।

वृन्तादिव फलं त्वां तु पातयेयं रथोत्तमात् ॥ २८ ॥ इत्यार्षे श्रीरामा० श्रीमदारण्यकाण्डे पञ्चाशः सर्गः ॥ ५० ॥
इत्युक्तस्य यथान्यायं रावणस्य जटायुषा । क्रुद्धस्याग्निनिभाः सर्वा रेजुर्विंशतिदृष्टयः ॥१॥ संरक्तनयनः कोपात्तप्त
काञ्चनकुण्डलः । राक्षसेन्द्रोऽभिदुद्राव पतगेन्द्रममर्षणः ॥ २ ॥ स सम्प्रहारस्तुमुलस्तयोस्तस्मिन् महावने । बभूव
वातोद्धतयोर्मेघयोर्गगने यथा ॥ ३ ॥ तद्बभूवाद्भुतं युद्धं गृध्रराक्षसयोस्तदा । सपक्षयोर्माल्यवतोर्महापर्वतयोरिव ॥४॥
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः । अभ्यवर्षन्महाघोरैर्गृध्रराजं महाबलः ॥ ५ ॥ स तानि शरजालानि
गृध्रः पत्ररथेश्वरः । जटायुः प्रतिजग्राह रावणास्त्राणि संयुगे ॥ ६ ॥ तस्य तीक्ष्णनखाभ्यां तु चरणाभ्यां महाबलः ।
चकार बहुधा गात्रे व्रणान् पतगसत्तमः ॥७॥ अथ क्रोधाद्दशग्रीवो जग्राह दश मार्गणान् । मृत्युदण्डनिभान् घोरान्
शत्रुमर्दनकांक्षया ॥ ८ ॥ स तैर्बाणैर्महावीर्यः पूर्णमुक्तैरजिह्मगैः । बिभेद निशितैस्तीक्ष्णैर्गृध्रं घोरैः शिलीमुखैः ॥९॥

एको दण्डकारण्ये पूर्वमुक्तः माल्यवन्तं शिखरिणमिति । अन्यः किष्किन्धासमीपे वक्ष्यति वर्षावर्णने ॥ ४ ॥ नालीकैः नालमात्रशरैः । नाराचैः आयसशरैः । विकर्णिभिः अङ्कुशाग्रशरैः ॥५॥ पत्ररथेश्वरः पक्षीश्वरः । प्रतिजग्राह सेहे । रावणास्त्राणि रावणप्रयुक्तास्त्राणि ॥६॥ तस्य रावणस्य गात्रे ॥७॥ मार्गणान् बाणान् ॥ ८ ॥ पूर्णम् आकर्णाकृष्टं यथा तथा मुक्तैः । अजिह्मगैः ऋजुगामिभिः । निशितैः शाणोल्लीढैः । अत एव तीक्ष्णैः घोरैः भयङ्करैः ।



यथाशक्ति ॥२७॥२८॥ इति श्रीमहे० श्रीरामायणतत्त्व० आरण्यकाण्डव्याख्यायां पञ्चाशः सर्गः ॥ ५० ॥१॥२॥ स प्रसिद्धः । सम्प्रहारः सम्प्रहरणम् ॥३॥ माल्यवतोः द्वौ माल्यवन्तौ, एको दण्डकारण्ये, अपरो मेरुपार्श्वे ॥४॥ [illegible] विकर्णिभिः कर्णिहारैः ॥ ५ ॥ जग्राह सेहे ॥ ६–८ ॥ बाणाजिह्मग

शिलीमुखैः शिली शल्यं मुखे येषां तैः बाणैः [illegible] बिभेद ॥९॥ समभिद्रवत् समभ्यद्रवत् ॥१०॥ सशरं संहितशरम् ॥११॥ क्रोधमूर्च्छितः क्रोधेन व्याप्तः ॥१२॥ आवारितः आ समन्ताद्व्याप्तः । कुलायं नीडं प्राप्तः पक्षीव बभौ ॥१३॥ तानि च पक्षाभ्यां विधूय चरणाभ्यां धनुर्बभञ्ज चेत्यन्वयः ॥१४॥

स राक्षसरथे पश्यन् जानकीं बाष्पलोचनाम् । अचिन्तयित्वा तान् बाणान् राक्षसं समभिद्रवत् ॥ १० ॥ ततोऽस्य सशरं चापं मुक्तामणिविभूषितम् । चरणाभ्यां महातेजा बभञ्ज पतगेश्वरः ॥ ११ ॥ ततोऽन्यद्धनुरादाय रावणः क्रोधमूर्च्छितः । ववर्ष शरवर्षाणि शतशोऽथ सहस्रशः ॥ १२ ॥ शरैरावारितस्तस्य संयुगे पतगेश्वरः । कुलायमुपसम्प्राप्तः पक्षीव प्रबभौ तदा ॥ १३ ॥ स तानि शरवर्षाणि पक्षाभ्यां च विधूय च । चरणाभ्यां महातेजा बभञ्जास्य महद्धनुः ॥ १४ ॥ तच्चाग्निसदृशं दीप्तं रावणस्य शरावरम् । पक्षाभ्यां स महावीर्यो व्याधुनोत्पतगेश्वरः ॥ १५ ॥ काञ्चनोरश्छदान् दिव्यान् पिशाचवदनान् खरान् । तांश्चास्य जवसम्पन्नान् जघान समरे बली ॥१६॥ वरं त्रिवेणुसम्पन्नं कामगं पावकार्चिषम् । मणिहेमविचित्राङ्गं बभञ्ज च महारथम् ॥१७॥ पूर्णचन्द्रप्रतीकाशं छत्रं च व्यजनैः सह । पातयामास वेगेन ग्राहिभी राक्षसैः सह ॥ १८ ॥ सारथेश्चास्य वेगेन तुण्डेनैव महच्छिरः । पुनर्व्यपाहरच्छ्रीमान् पक्षिराजो महाबलः ॥ १९ ॥

शरावरं कवचम् । पक्षाभ्यां पक्षवातेन व्याधुनोत् प्राच्यावयत् ॥ १५ ॥ काञ्चनोरश्छदान् स्वर्णमयकवचयुक्तान् । "उरश्छदः कङ्कटको जागरः कवचोऽस्त्रियाम्" इत्यमरः । बली जटायुः ॥ १६ ॥ वरमिति । त्रिवेणुः युगन्धरः । कामं यथेच्छं गच्छतीति कामगम् ॥ १७ ॥ पूर्णेति । ग्राहिभिः छत्रचामरादिग्राहकैः । "नन्दिग्रहि–" इत्यादिना णिनिः ॥१८॥ सारथेरिति । व्यपाहरत् खण्डितवान् । पुनरित्यनेन छत्रादिखण्डनं तुण्डेनेति सूच्यते॥१९॥

शब्दौ गुणवचनौ । बाणयन्ति रोषयन्ति शत्रुमिति बाणाः । अजिह्मगा ऋजुगामिनः । शिली शल्यं मुखे येषां ते तथा तैः । निशितैः शाणोल्लिखितैः, अत एव तीक्ष्णैः ॥ ९–१२ ॥ स जटायुः शरैरावारितः आच्छादितः कुलायं नीडम् ॥ १३ ॥ १४ ॥ शरावरं कवचम् । व्याधुनोत् पातयामास ॥ १५ ॥ उरश्छदान् कवचयुक्तान् ॥ टीका–पन्नगासजवसम्पन्नान् इति पाठे–सिंहसदृशवेगयुक्तान् ॥ १६ ॥ त्रिवेणुः रथावयवविशेषम्, युगन्धर इति यावत् ॥ १७ ॥ ग्राहिभिः छत्रचामरग्राहकैः ॥१८–२२॥

भग्नधन्वा । "धनुपश्च" इत्यनङ् ॥ २० ॥ दृष्ट्वा . । अपूजयन् मनसेति शेषः ॥ २१ ॥ गृह्य गृहीत्वा ॥ २२ ॥ तमित्यादिसार्धश्लोक एकान्वयः । समुत्पत्य ऊर्ध्वं गत्वा । समभिद्रुत्य अभिमुखं गत्वा । समावार्य सम्यगवरुध्य ॥ २३ ॥ वज्रसंस्पर्शाः वज्रसमस्पर्शाः बाणाः यस्य ॥ २४ ॥ समित्रेति । पीयते इति पानं पानकरसादि । विषयुक्तं पानमिति मध्यमपदलोपिसमासः । यद्वा विषस्य पानं विषपानम्, एतत्सीताहरणरूपं विषपानं पिबासि करोषि । ओदन

स भग्नधन्वा विरथो हताश्वो हतसारथिः । अङ्केनादाय वैदेहीं पपात भुवि रावणः ॥२०॥ दृष्ट्वा निपतितं भूमौ रावणं भग्नवाहनम् । साधु साध्विति भूतानि गृध्रराजमपूजयन् ॥ २१ ॥ परिश्रान्तं तु तं दृष्ट्वा जरया पक्षियूथपम् । उत्पपात पुनर्हृष्टो मैथिलीं गृह्य रावणः ॥२२॥ तं प्रहृष्टं निधायाङ्के गच्छन्तं जनकात्मजाम् । गृध्रराजः समुत्पत्य समभिद्रुत्य रावणम् । समावार्य महातेजा जटायुरिदमब्रवीत् ॥ २३ ॥ वज्रसंस्पर्शबाणस्य भार्यां रामस्य रावण । अल्पबुद्धे हरस्येनां वधाय खलु रक्षसाम् ॥ २४ ॥ समित्रबन्धुः सामात्यः सबलः सपरिच्छदः । विषपानं पिबस्येतत्पिपासित इवोदकम् ॥ २५ ॥ अनुबन्धमजानन्तः कर्मणामविचक्षणाः । शीघ्रमेव विनश्यन्ति यथा त्वं विनशिष्यसि ॥ २६ ॥ बद्धस्त्वं कालपाशेन क्व गतस्तस्य मोक्ष्यसे । वधाय बडिशं गृह्य सामिषं जलजो यथा ॥ २७ ॥ नहि जातु दुराधर्षौ काकुत्स्थौ तव रावण । धर्षणं चाश्रमस्यास्य क्षमिष्येते तु राघवौ ॥ २८ ॥

पाकं पचतीतिवत् प्रकृतेः प्रत्ययोपस्थानमात्रं प्रयोजनम् ॥२५॥ अनुबध्यत इत्यनुबन्धः फलम् । अविचक्षणाः असमर्थाः । कर्मणाम् आत्मना क्रियमाणानां फलमजानन्तः शीघ्रं विनश्यन्ति । तत्रोदाहरणं भवानित्याह—यथेति ॥२६॥ बद्धेति । कालपाशेन बद्धस्त्वं क्व देशे गतः सन् तस्य तस्मात्कालपाशान्मोक्ष्यसे, सदानुवर्तमानाद्बन्धात्कथं ते मुक्तिर्भविष्यतीत्यर्थः । सामिषं मांससहितम् । बडिशं मत्स्यबन्धनम् । "बडिशं मत्स्यबन्धनम्" इत्यमरः । आमिषलोभेन गृह्य गृहीत्वा जलजो मत्स्यो यथा देशान्तरं गतोपि न जीवति बडिशामोक्षणात् तद्वत् ॥२७॥ आश्रमकर्मकं त्वत्कर्तृकं धर्षणं परिभवम् । आश्रम



समावार्य उपरुध्य ॥ २३ ॥ २४ ॥ विषपानम् एतत्सीताहरणरूपविषपानं पिबसि करोषि प्रत्ययोऽवस्थानमात्रं प्रयोजनम् ओदनपाकं पचतीतिवत् । टी०—विषपानं विषसमिति वार्थः ॥ २५ ॥ अनुबध्यत इत्यनुबन्धं कर्मफलम् ॥ २६ ॥ बद्ध इति । तस्य तस्मात् । पञ्चम्यर्थे षष्ठी । कालपाशात् क्व गतो मोक्ष्यसे । बडिशं

शब्देन आश्रमस्था सीतोच्यते । मञ्चाः क्रोशन्तीतिवत् ॥ २८ ॥ यथेति । लोकगर्हितं कर्म भीरुणा त्वया यथा कृतं तथा तस्कराचरिता मार्गः । तस्करकृत्यतुल्यं त्वत्कृत्यमित्यर्थः । तस्मादेष मार्गः वीरनिषेवितो न भवतीत्यर्थः ॥ २९ ॥ युद्धयस्वेति । पूर्वसर्गान्ते व्याख्यातोऽयम् ॥ ३० ॥ परेतेति । परेतकाले मृत्युकाल इत्यर्थः । यत्कर्म यादृशं कर्म पुरुषः आत्मविनाशाय प्रतिपद्यते प्राप्नोति । अधर्म्यम् अधर्मादनपेतं तत्कर्म सीताहरण

यथा त्वया कृतं कर्म भीरुणा लोकगर्हितम् । तस्कराचरितो मार्गो नैष वीरनिषेवितः ॥ २९ ॥ युद्ध्यस्व यदि शूरोसि मुहूर्तं तिष्ठ रावण । शयिष्यसे हतो भूमौ यथा भ्राता खरस्तथा ॥ ३० ॥ परेतकाले पुरुषो यत्कर्म प्रतिपद्यते । विनाशायात्मनोऽधर्म्यं प्रतिपन्नोसि कर्म तत् ॥ ३१ ॥ पापानुबन्धो वै यस्य कर्मणः कर्म को नु तत् । कुर्वीत लोकाधिपतिः स्वयम्भूर्भगवानपि ॥३२॥ एवमुक्त्वा शुभं वाक्यं जटायुस्तस्य रक्षसः । निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् ॥ ३३ ॥ तं गृहीत्वा नखैस्तीक्ष्णैर्विरराद समन्ततः । अधिरूढो गजारोहो यथा स्याद्दुष्टवारणम् ॥ ३४ ॥ विरराद नखैरस्य तुण्डं पृष्ठे समर्पयन् । केशांश्चोत्पाटयामास नखपक्षमुखायुधः ॥ ३५ ॥ स तथा गृध्रराजेन क्लिश्यमानो मुहुर्मुहुः । अमर्षस्फुरितोष्ठः सन् प्राकम्पत स रावणः ॥ ३६ ॥

रूपं प्रतिपन्नोसि । एतादृशकर्मकरणादवश्यमविलम्बितं मृत्युं प्राप्नोपीत्यर्थः ॥ ३१ ॥ यस्य कर्मणः पापानुबन्धः पापफलसम्बन्धो भवति तत्कर्म लोकाधिपतित्वादिविशिष्टोपि को नु कुर्वीत ॥ ३२ ॥ एवमिति । पृष्ठ इत्यनेन जटायुपमनादृत्य रावणस्य पलायमानत्वं गम्यते ॥ ३३ ॥ तमिति । तं गृहीत्वा बलान्निवर्त्याधिरूढः सन् जटायुः गजारोहो यन्ता दुष्टवारणं पलायितम् अङ्कुशैर्निरुध्य यथा विदारयति तथा नखैः विरराद । स्यादिति सम्भावनायाम् ॥ ३४ ॥ विररादेति । नखपक्षमुखायुधो गृध्रः । अस्य रावणस्य पृष्ठे नखैः सह तुण्डं समर्पयन् व्यापारयन् सन् विरराद व्यदारयदित्यर्थः । केशांश्चोत्पाटयामास ॥ ३५ ॥ स इति । अमर्षेण क्रोधेन । स्फुरितोष्ठः चलितोष्ठः । प्राकम्पत प्रहारार्थं प्रदक्षिणं प्राचलदित्यर्थः ॥ ३६ ॥

मत्स्यबन्धनम् । टी–तस्य रामस्य । पुत्त इति शेषः ॥ २७ ॥२८॥ भीरुणा त्वया लोकगर्हितं कर्म कृतमिति यथा यतः एषः वीरनिषेवितो मार्गो न किन्तु तस्कराचरितः ॥ २९ ॥ ३० ॥ परेतकाले मृत्युकाले । प्रतिपद्यते करोति । प्रतिपन्नोसि प्राप्तवानसि ॥ ३१–३३ ॥ गजारोहो यन्ता दुष्टवारणमधिरूढो यथा स्यात् यादृश व्यापारवान् स्यात् तथा तं व्यदारयत् ॥ ३४ ॥ तुण्डं पृष्ठे समर्पयन् तुण्डेन पृष्ठं क्षतवान् ॥ ३५–३८ ॥

स इति । अङ्केन ऊरुभागेन । जटायुं जटायुरित्युकारान्तोऽप्यस्ति ॥ ३७ ॥ जटायुरिति । अभिक्रम्य अभितो गत्वा, अवसरं प्रतीक्ष्येत्यर्थः । अस्य वामबाहून् यैः सीता परिष्वक्ता तानित्यर्थः । व्यपाहरत् अच्छिनत् ॥ ३८ ॥ संछिन्नबाहोः रावणादिति शेषः । सद्यैवेत्यार्षे सलोपे वृद्धिः । अभवन्

स परिष्वज्य वैदेहीं वामेनाङ्केन रावणः । तलेनाभिजघानाशु जटायुं क्रोधमूर्च्छितः ॥ ३७ ॥ जटायुस्तमभिक्रम्य तुण्डेनास्य खगाधिपः । वामबाहून् दश तदा व्यपाहरदरिंदमः ॥३८॥ संछिन्नबाहोः सद्यैव बाहवः सहसाऽभवन् । विषज्वालावलीयुक्ता वल्मीकादिव पन्नगाः ॥ ३९ ॥ ततः क्रोधाद्दशग्रीवः सीतामुत्सृज्य रावणः । मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत् ॥४०॥ ततो मुहूर्तं सङ्ग्रामो बभूवातुलवीर्ययोः । राक्षसानां च मुख्यस्य पक्षिणां प्रवरस्य च ॥ ४१ ॥ तस्य व्यायच्छमानस्य रामस्यार्थे स रावणः । पक्षौ पार्श्वौ च पादौ च खड्गमुद्धृत्य सोऽच्छिनत् ॥ ४२ ॥ स च्छिन्नपक्षः सहसा रक्षसा रौद्रकर्मणा । निपपात हतो गृध्रो धरण्यामल्पजीवितः ॥ ४३ ॥ तं दृष्ट्वा पतितं भूमौ क्षतजार्द्रं जटायुषम् । अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता ॥ ४४ ॥ तं नीलजीमूतनिकाशकल्पं सुपाण्डुरोरस्कमुदारवीर्यम् । ददर्श लङ्काधिपतिः पृथिव्यां जटायुषं शान्तमिवाग्निदावम् ॥ ४५ ॥

प्रादुरभवन् । विषज्वालेत्युपमानविशेषणाद्बाहूनां सायुधत्वं गम्यते ॥ ३९ ॥ तत इति । अपोथयदताडयत् ॥ ४० ॥ तत इति । सङ्ग्रामो युद्धम् ॥ ४१ ॥ तस्येति । व्यायच्छमानस्य व्यायामं कुर्वतः । "आङो यमहनः" इत्यात्मनेपदम् । "शरीरायासजनकं कर्म व्यायाम उच्यते" इति वाग्भटः । युद्धं कुर्वतः इत्यर्थः । पार्श्वौ पक्षमूले ॥ ४२ ॥ स इति । अल्पजीवितः द्वित्रिक्षणावस्थानोचितप्राण इत्यर्थः ॥४३॥ क्षतजं शोणितम् ॥४४॥ नीलजीमूतनिकाशकल्पं नीलमेघप्रकाशतुल्यम् । अग्निदावं दावाग्निम् ॥ ४५ ॥

सञ्छिन्नबाहोः कर्तितबाहोरपि तस्य बाहवः पुनः सहसा समभवन् वल्मीकात्पन्नगा इव ॥ ३९–४१ ॥ तस्येति । व्यायच्छमानस्य व्यायामं कुर्वतः । "शरीरायासजनकं कर्म व्यायाम उच्यते" इति । युद्धं कुर्वत इत्यर्थः ॥ ४२–४४ ॥ नीलजीमूतनिकाशकल्पं नीलजीमूतस्य निकाशः प्रकाशः तत्कल्पम्, तत्सदृशप्रकाश

ततः परिष्वज्य बाहुभ्यामिति शेषः ॥ ४६ ॥ इति श्रीगोवि० श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥
जटायुर्युद्धकाले विसृष्टायाः पुनरपि रावणेन हरणप्रकारमाह—तमित्यादि। राघवाश्रमादित्यवधित्वात्पञ्चमी ॥ १ ॥ सा त्विति। रावणेन विनिहतं समीक्ष्ये

ततस्तु तं पत्ररथं महीतले निपातितं रावणवेगमर्दितम्। पुनः परिष्वज्य शशिप्रभानना रुरोद सीता जनकात्मजा तदा ॥ ४६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे एकपञ्चाशः सर्गः * ॥ ५१ ॥

तमल्पजीवितं गृध्रं स्फुरन्तं राक्षसाधिपः। ददर्श भूमौ पतितं समीपे राघवाश्रमात् ॥ १ ॥ सा तु ताराधिपमुखी रावणेन समीक्ष्य तम्। गृध्रराजं विनिहतं विललाप सुदुःखिता ॥ २ ॥ आलिङ्ग्य गृध्रं निहतं रावणेन बलीयसा। विललाप सुदुःखार्ता सीता शशिनिभानना ॥ ३ ॥ निमित्तं लक्षणज्ञानं शकुनिस्वरदर्शनम्। अवश्यं सुखदुःखेषु नराणां प्रतिदृश्यते ॥४॥ नूनं राम न जानासि महद्व्यसनमात्मनः। धावन्ति नूनं काकुत्स्थं मदर्थं मृगपक्षिणः ॥ ५ ॥

त्यन्वयः ॥२॥ विशेषान्तरं वक्तुं पुनरनुवदति—आलिङ्ग्येति। कराभ्यां संस्पृश्येत्यर्थः ॥ ३ ॥ निमित्तमिति। लक्षणानि अक्षिस्पन्दनादीनि तेषां ज्ञानम्। शकुनीनां पिङ्गल्यादीनां स्वरस्य दर्शनं ज्ञानम्। नराणां सुखदुःखेषु निमित्तं ज्ञापकं प्रतिदृश्यते ॥ ४ ॥ ततः किमित्यत्राह—नूनमिति। हे राम! आत्मनो म (ह) द्व्यसनं न जानासि किमिति काकुः, जानास्येव। यस्मान्मदर्थं मदपहरणसूचनप्रयोजनमुद्दिश्य मृगपक्षिणः काकुत्स्थं त्वामभिधावन्ति।

मित्यर्थः। अग्निदावम् अग्निश्चासौ दावश्चेत्यग्निदावः तम्। करिकलभवत्सामान्यविशेषयोः सह प्रयोगः ॥ ४५ ॥४६ ॥ इति श्रीमहे० श्रीरामायणतत्त्व० आरण्यकाण्डव्याख्यायामेकपञ्चाशः सर्गः ॥ ५१ ॥ १ ॥ सा त्वित्यादि। गृध्रराजं जटायुषम् ॥ २ ॥ ३ ॥ लक्षणज्ञानं लक्षणम् अक्षिस्पन्दनादीनि लक्षणानि तेषां ज्ञानम्। शकुनिस्वरदर्शनं पिङ्गल्यादिपक्षिस्वरस्य दर्शनं ज्ञानम्। नराणां सुखदुःखेषु निमित्तं ज्ञापकं कारणं दृश्यते ज्ञापयति ॥ टीका—अन्ये तु निमित्तं लक्षणं ज्ञानमिति पाठमङ्गीकृत्य एवं व्याचक्षते—निमित्तं गोमायुरुतादिकम्, लक्षणम् अङ्गस्पन्दनादिकम्, ज्ञानं यदृच्छया तथा प्रतिभासः ॥ ४ ॥ एवं मदपहरणरूपव्यवसायसूचकसामग्र्यां सत्यामपि तव व्यवसायज्ञानं नास्तीति चित्रमिति श्रीरामं सीता उपालभते-न नूनमिति। हे राम! आत्मनो मम महद्व्यसनं न जानासि, मदर्थं मदपहारसूचनरूपप्रयोजनमुद्दिश्य मृगपक्षिणः

* सर्गफलस्तुतिः। स्कान्दे—"श्रुत्वा खगेश्वरस्यापि रक्षसामीश्वरस्य च। आयोधनमृणान्मुक्तो भृत्यः स्वामिकृताद्भवेत् ॥" इति ॥

नूनं सम्प्रति मद्व्यसनसूचकाः मृगपक्षिणः काकुत्स्थं त्वामभिधावन्ति । तेन निमित्तेन मद्व्यसनं जानास्येवेत्यर्थः ॥५॥ व्यसनमेवाह–अयं हीति । अयं विहङ्गमः पापचारेण रावणेन विनिहतः शेते ॥ ६ ॥ शृण्वतामन्तिके यथा शृण्वतां समीप इव, दूरस्थितं रामं लक्ष्मणं च रामेति लक्ष्मणेति च सम्बोध्य आक्रन्दत् ॥ ७ ॥ क्लिष्टमाल्याभरणां मृदितमाल्याभरणाम् । क्षणं विश्रान्तः अभ्यधावत अभ्यधावत् ॥ ८ ॥ तामित्यादि द्वावेकान्वयौ । लतामिव भूतले

अयं हि पापचारेण मां त्रातुमभिसङ्गतः । शेते विनिहतो भूमौ ममाभाग्याद्विहङ्गमः ॥६॥ त्राहि मामद्य काकुत्स्थ लक्ष्मणेति वराङ्गना । सुसंत्रस्ता समाक्रन्दच्छृण्वतां तु यथान्तिके ॥ ७ ॥ तां क्लिष्टमाल्याभरणां विलपन्तीमनाथवत् । अभ्यधावत वैदेहीं रावणो राक्षसाधिपः ॥ ८ ॥ तां लतामिव वेष्टन्तीमालिङ्गन्तीं महाद्रुमान् । मुञ्च मुञ्चेति बहुशः प्रवदन् राक्षसाधिपः ॥ ९ ॥ क्रोशन्तीं राम रामेति रामेण रहितां वने । जीवितान्ताय केशेषु जग्राहान्तकसन्निभः ॥ १० ॥ प्रधर्षितायां सीतायां बभूव सचराचरम् । जगत्सर्वममर्यादं तमसाऽन्धेन संवृतम् ॥ ११ ॥ न वाति मारुतस्तत्र निष्प्रभोभूद्दिवाकरः ॥ १२ ॥ दृष्ट्वा सीतां परामृष्टां दीनां दिव्येन चक्षुषा । कृतं कार्यमिति श्रीमान् व्याजहार पितामहः ॥ १३ ॥

वेष्टन्तीं वेष्टमानाम् ॥ ९ ॥ १० ॥ प्रधर्षितायामिति । अमर्यादं भिन्नसत्त्वप्रकृतिकम् । अन्धेन गाढेन तमसा अज्ञानान्धकारेण । तदा जगत्सर्वं संवृतं विमूढं चासीदित्यर्थः ॥ ११ ॥ न वातीत्यर्धमेकं वाक्यम् ॥ १२ ॥ दृष्ट्वेति । परामृष्टाम् अपहृताम् । दिव्येन चक्षुषा ज्ञानेन । दृष्ट्वा ज्ञात्वा । कार्यं

धावन्ति अशुभसूचकास्सन्तः सञ्चरन्तीत्यर्थः ॥ ५ ॥ अयमिति । अयं विहङ्गमो जटायुः मां त्रातुं पापचारेण रावणेनेति शेषः । सङ्गतः युद्धार्थं सङ्गतस्सन् विनिहतः शेत इत्यन्वयः ॥ ६ ॥ त्राहीति । शृण्वतामन्तिके जना यथा समाक्रन्दन्ति तथा समाक्रन्ददिति सम्बन्धः ॥ ७ ॥ क्लिष्टानि परिमृदितानि ॥ ८ ॥ तान् द्रुमान् वेष्टयन्तीं वेष्टमानां लतामिव द्रुमान् आलिङ्गन्तीं तां जग्राहेत्यन्वयः ॥ ९ ॥ जीवितान्तायेत्यनेन परस्त्रीकेशस्पर्शो यस्य कस्यापि जीवितापहारीति बोधितम् ॥ १० ॥ अमर्यादम् अतिक्रान्तनैसर्गिकावस्थानम् । अन्धेन तमसा गाढेन तमसा ॥ ११ ॥ १२ ॥ परामृष्टामपहृताम् । दिव्येन चक्षुषेत्युत्तरशेषः । तथा च

बालकाण्डे विष्णुना प्रतिज्ञातं कृतमिति व्याजहार । प्रीत्यतिशयेन पुरुषान्तरसन्निधानेऽप्युदाहृतम् ॥ १३ ॥ प्रहृष्टा इति । रावणवधस्य सिद्धप्रायत्वेन हर्षः, तादात्विकसीतादशावलोकनेन व्यथा । सीतां परामृष्टां दृष्ट्वा यदृच्छया दैवगत्या रावणस्य प्राप्तं सन्निहितं विनाशं च बुद्ध्वा व्यथिताः प्रहृष्टाश्चासन्नित्यन्वयः ॥१४॥ स त्विति । तुशब्देन ऋष्यादिभ्यो व्यावृत्तिः ॥१५॥ तप्ताभरणं तप्तं काञ्चनाभरणम्, तत्तुल्यवर्णाङ्गी । विद्युत् विशेषेण द्योत

प्रहृष्टा व्यथिताश्चासन् सर्वे ते परमर्षयः । दृष्ट्वा सीतां परामृष्टां दण्डकारण्यवासिनः । रावणस्य विनाशं च प्राप्तं बुद्ध्वा यदृच्छया ॥ १४ ॥ स तु तां रामरामेति रुदन्तीं लक्ष्मणेति च । जगामादाय चाकाशं रावणो राक्षसेश्वरः ॥ १५ ॥ तप्ताभरणवर्णाङ्गी पीतकौशेयवासिनी । रराज राजपुत्री तु विद्युत्सौदामिनी यथा ॥ १६ ॥ उद्धूतेन च वस्त्रेण तस्याः पीतेन रावणः । अधिकं प्रतिबभ्राज गिरिर्दीप्त इवाग्निना ॥ १७ ॥ तस्याः परमकल्याण्यास्ताम्राणि सुरभीणि च । पद्मपत्राणि वैदेह्या अभ्यकीर्यन्त रावणम् ॥ १८ ॥ तस्याः कौशेयमुद्धूतमाकाशे कनकप्रभम् । बभौ चादित्यरागेण ताम्रमभ्रमिवातपे ॥ १९ ॥ तस्यास्तत्सुनसं वक्त्रमाकाशे रावणाङ्कगम् । न रराज विना रामं विनालमिव पङ्कजम् ॥ २० ॥

माना सौदामिनी तडित् । अनेन तडिद्यथा मेघे क्षणं तिष्ठति तथा रावणे सीतेति सूचितम् ॥१६॥ उद्धूतेति अत्रापि सीताग्रहणेन रावणस्य सन्तापो भविष्यतीत्यलङ्कारेण वस्तुध्वनिः ॥१७॥ तस्या इति । रावणमभ्यकीर्यन्त रावणाङ्के पतितानीत्यर्थः । अत्र रावणैश्वर्यं क्षणाद्विशीर्णं भविष्यतीति वस्तुना वस्तुध्वनिः ॥१८॥ तस्या इति । आतपे मध्याह्ने । आदित्यरागेण ताम्रम् अरुणमभ्रमिव बभौ । अनेन रावणविनाशपिशुनोत्पातः सूचितः ॥१९॥ तस्यास्तदिति । "उपसर्गाच्च" इति नासिकाशब्दान्ताद्बहुव्रीहेरच् समासान्तः । नासिकाशब्दस्य नसादेशश्च । अत्र सीताया मुखविवर्णत्वोक्त्या खेदातिशय उच्यते ॥२०॥

पितामहो ब्रह्मा दिव्येन चक्षुषा आलोच्येति शेषः । कार्यं देवकार्यं कृतमिति व्याजहारेत्यन्वयः ॥ १३ ॥ प्रहृष्टा इति सार्धश्लोकमेकं वाक्यम् । रावणवधरूपकार्यं निष्पन्नमिति प्रहृष्टाः, सीतायास्तात्कालिकीं व्यथां दृष्ट्वा व्यथिताश्चाभवन् ॥ १४ ॥ १५ ॥ विद्युत्सौदामिनीति । सुदामा पर्वतविशेषः रत्नादिसहितः । तत्र भवा विद्युदतिस्फुटा भवति तद्वदित्यर्थः ॥ १६ ॥ १७ ॥ अभ्यकीर्यन्त रावणं पद्मपत्रादिकं रावणाङ्के पतितमभूदित्यर्थः ॥ १८ ॥ आतपशब्दः सन्ध्याकालं लक्षयति,

अथ त्वरितगमनमाह—बभूवेति । अत्र मुखमिति शेषः । जलदं भित्त्वा उदितः प्रकाशमानश्चन्द्र इव मेघरन्ध्रे भासमान इत्यर्थः । अत्र प्रतिचन्द्र दर्शनरूपोत्पातः सूच्यते । पद्मगर्भाभं विकसितपद्माभमित्यर्थः । अव्रणं निर्दोषम् ॥ २१ ॥ शुक्लैरिति । न शुशुभ इति वक्ष्यमाणमनुषज्यते । रावणाङ्कगं सन्न शुशुभे । अननुरूपत्वादिति भावः ॥ २२ ॥ रुदितमिति। रुदितं रोदनवत् अत एव व्यपमृष्टास्रम् अनिवृत्ताश्रुकम् । हाटकप्रभं

बभूव जलदं नीलं भित्त्वा चन्द्र इवोदितः । सुललाटं सुकेशान्तं पद्मगर्भाभमव्रणम् ॥ २१ ॥ शुक्लैः सुविमलैर्दन्तैः प्रभावद्भिरलंकृतम् । तस्यास्तद्विमलं वक्त्रमाकाशे रावणाङ्कगम् ॥ २२॥ रुदितं व्यपमृष्टास्रं चन्द्रवत्प्रियदर्शनम् । सुनासं चारु ताम्रोष्ठमाकाशे हाटकप्रभम् ॥२३॥ राक्षसेन समाधूतं तस्यास्तद्वदनं शुभम् । शुशुभे न विना रामं दिवा चन्द्र इवोदितः ॥ २४ ॥ सा हेमवर्णा नीलाङ्गं मैथिली राक्षसाधिपम् । शुशुभे काञ्चनी काञ्ची नीलं मणिमिवाश्रिता ॥ २५ ॥ सा पद्मगौरी हेमाभा रावणं जनकात्मजा । विद्युद्घनमिवाविश्य शुशुभे तप्तभूषणा ॥२६॥ तरुप्रवालरक्ता सा नीलाङ्गं राक्षसेश्वरम् । प्राशोभयत वैदेही गजं कक्ष्येव काञ्चनी ॥ २७ ॥

हिरण्यप्रभम् । "हिरण्यं हेम हाटकम्" इत्यमरः ।पूर्वं मनोज्ञं मुखम् इदानीम् रुदितादिमत्त्वान्न शुशुभ इति भावः ॥२३॥ राक्षसेन निमित्तेन समाधूतं भयकम्पितम् ॥ २४ ॥ सेति । राक्षसाधिपमाश्रिता सा सीता नीलं मणिमाश्रिता काञ्चनी काञ्चनमयी काञ्ची मेखलेव शुशुभे, रजतमेव नीलरत्नस्य परभागकरमिति प्रसिद्धिः । तेन काञ्चनस्य नीलमणिशोभातिरस्कारकत्वात् शुशुभ इति व्यतिरेकोक्त्या न शुशुभे इत्यर्थः । नेत्यनुषङ्गो वा ॥ २५ ॥ पद्मगौरी पद्मवत्पीतवर्णा, अनेन सुकुमारवर्णतोक्ता । हेमाभेत्यनेन स्थिरवर्णतोक्ता । तप्तभूषणा तपनीयभूषणा । विद्युदिव सीता तस्मिन् क्षणं स्थितापि सौहृदं नाकाङ्क्षतेत्यर्थः ॥ २६ ॥ तरुविशेषप्रवालवत् रक्ता पीतवर्णा । " तेन रक्तं रागात् " इत्यत्र रागशब्दो हि वर्णमात्रे

तदानीं कनकप्रभम् आदित्यरागेण ताम्रमभ्रमिव बभौ ॥ १९॥२० ॥ बभूव जलदमित्यादिश्लोकद्वयमेकं वाक्यम् । तस्याः सीतायाः रावणाङ्कगतं वक्त्रं नीलं जलदं भित्त्वा उत्थितश्चन्द्र इव बभावित्यन्वयः ॥ २१ ॥ २२ ॥ रुदितेन रोदनेन व्यपमृष्टास्रमुपमार्जिताश्रुकम् ॥ २३–२५ ॥ सेति । पद्मगौरी रक्तपद्मारुणा । तप्तभूषणा तपनीयभूषणा ॥ २६ ॥ तरुप्रवालरक्ता तरुपल्लवारुणा हेमवर्णेति यावत् । तरुप्रवालरत्नेति पाठे–प्रवालसदृशरत्ना ॥ २७–३५ ॥

प्रयुक्तः । कक्ष्या इभबन्धनी । यथा कक्ष्या गजगता गजं यन्तुर्निग्राह्यं करोति तथेयं रावणं प्राप्य रामनिग्राह्यमकरोदिति भावः ॥ २७ ॥ सचपलः सविद्युत् । यथा सगर्जितो मेघ आशु निस्सारो भविष्यति तथेति भावः ॥ २८ ॥ उत्तमेति । उत्तमाङ्गाच्छिरसः ॥ २९ ॥ सा त्विति । सा पुष्पवृष्टिः । रावणवेगेन रावणवेगजनितवातेन । समाधूता पुनर्दशग्रीवमेव अभ्यवर्तत अभितः प्रावर्तिष्ट । अनेन रावणस्य त्वरितगमनमुक्तम् ॥ ३० ॥ उक्तां

तस्या भूषणघोषेण वैदेह्या राक्षसाधिपः । बभौ सचपलो नीलः सघोष इव तोयदः ॥ २८ ॥ उत्तमाङ्गाच्च्युता तस्याः पुष्पवृष्टिः समन्ततः । सीताया ह्रियमाणायाः पपात धरणीतले ॥ २९ ॥ सा तु रावणवेगेन पुष्पवृष्टिः समन्ततः । समाधूता दशग्रीवं पुनरेवाभ्यवर्तत ॥ ३० ॥ अभ्यवर्तत पुष्पाणां धारा वैश्रवणानुजम् । नक्षत्रमाला विमला मेरुं नगमिवोन्नतम् ॥ ३१ ॥ चरणान्नूपुरं भ्रष्टं वैदेह्या रत्नभूषितम् । विद्युन्मण्डलसङ्काशं पपात मधुरस्वनम् ॥ ३२ ॥ तां महोल्कामिवाकाशे दीप्यमानां स्वतेजसा । जहाराकाशमाविश्य सीतां वैश्रवणानुजः ॥३३॥ तस्यास्तान्यग्निवर्णानि भूषणानि महीतले । सघोषाण्यवकीर्यन्त क्षीणास्तारा इवाम्बरात् ॥ ३४ ॥ तस्याः स्तनान्तराद् भ्रष्टो हारस्ताराधिपद्युतिः । वैदेह्या निपतन् भाति गङ्गेव गगनाच्च्युता ॥३५॥ उत्पन्नवाताभिहता नानाद्विजगणायुताः । मा भैरिति विधूताग्रा व्याजह्रुरिव पादपाः ॥ ३६ ॥

पुष्पवृष्टिं वर्णयति—अभ्यवर्ततेति । धारा पङ्क्तिः ॥ ३१ ॥ चरणादिति वामचरणादित्यर्थः । भ्रष्टं शिथिलं पपात ॥ ३२ ॥ तामिति । उत्पातसूचिका तारा महोल्का ॥ ३३ ॥ भूषणानि उपात्तनूपुरादिभिन्नानि ॥ ३४ ॥ भाति भाति स्म ॥ ३५ ॥ उत्पन्नेति । रावणवेगोत्पन्नेत्यर्थः । वातकम्पिताग्र उत्पातवाताभिहताः इति पाठः । ऊर्ध्ववाताभिहताः । द्विजगणायुताः पक्षिगणयुक्ताः ॥ ३६ ॥

तिल०—उत्तमाङ्गादिति । मातस्त्वया सम्पादितोऽस्मन्मनोरथः इति हर्षाद्देवैः क्रियमाणा पुष्पवृष्टिस्तदुत्तमाङ्गाच्च्युता तत्काले भूमौ पपातेति कतकः । वस्तुतो रावणसन्निधौ देवानां तथा वीर्यासम्भवात् उत्तमाङ्गे धृतपुष्पाणां तद्वेगेन ततश्च्युत्योत्तमाङ्गाच्च्युतेत्युक्तम् । अत एवाग्रे भूमौ पुष्पयुतं मार्गं दृष्ट्वा रामो वक्ष्यति—" अभिजानामि पुष्पाणि तानीमानीह लक्ष्मण । अपिनद्धानि वैदेह्या मया दत्तानि कानने ॥ " इति । सा पुष्पवृष्टिः रावणवेगेन रावणगमनवेगजनितवायुवेगेन समाधूता पुनः दशग्रीवमेव अभ्यवर्तत अभितः प्राप्यातिष्ठत् ॥ २९ ॥ ३० ॥ अत्र प्रकरणे वारं वारं वैश्रवणानुजत्वोक्त्या ईदृशक्रियाया अत्यनौचित्यप्रदर्शनेन शीघ्रफलदत्वं सूचयति ॥ ३१ ॥

त्वात् पक्षिगणरववत्त्वाच्च विधूताग्राः आश्वासनाय चलितशिरसः सन्तः मा भैरिति व्याजहुरिव ॥ ३६ ॥ गतोच्छ्वासां गतप्राणाम्, मूर्च्छितामिति यावत् । तादृशीं सखीमिव मैथिलीमुद्दिश्य । अशोचन्त अशोचन् । ध्वस्तकमलाः कान्तिहीना इत्यर्थः । त्रस्ताः भीताः मीनाः मत्स्याः जलेचराः नक्रादयश्च यासु ताः । त्रस्तेत्यादिना आकुलनेत्रत्वादिकमुच्यते ॥ ३७ ॥ समन्तादिति । तदा व्याघ्रादयः समन्तान्नानादेशात् । अभिसम्पत्य

नलिन्यो ध्वस्तकमलास्त्रस्तमीनजलेचराः । सखीमिव गतोच्छ्वासामन्वशोचन्त मैथिलीम् ॥ ३७ ॥ समन्तादभिसम्पत्य सिंहव्याघ्रमृगद्विजाः । अन्वधावंस्तदा रोषात्सीतां छायानुगामिनः ॥ ३८ ॥ जलप्रपातास्रमुखाः शृङ्गै रुच्छ्रितबाहवः । सीतायां ह्रियमाणायां विक्रोशन्तीव पर्वताः ॥ ३९ ॥ ह्रियमाणां तु वैदेहीं दृष्ट्वा दीनो दिवाकरः । प्रतिध्वस्तप्रभः श्रीमानासीत् पाण्डरमण्डलः ॥ ४० ॥ नास्ति धर्मः कुतः सत्यं नार्जवं नानृशंसता । यत्र रामस्य वैदेहीं भार्यां हरति रावणः । इति सर्वाणि भूतानि गणशः पर्यदेवयन् ॥ ४१ ॥ वित्रस्तका दीनमुखा रुरुदुर्मृगपोतकाः । उद्वीक्ष्योद्वीक्ष्य नयनैरास्रपाताविलेक्षणाः ॥ ४२ ॥ सुप्रवेपितगात्राश्च बभूवुर्वनदेवताः । विक्रोशन्तीं दृढं सीतां दृष्ट्वा दुःखं तथा गताम् ॥ ४३ ॥ तां तु लक्ष्मण रामेति क्रोशन्तीं मधुरस्वरम् । अवेक्षमाणां बहुशो वैदेहीं धरणीतलम् ॥ ४४ ॥

आगत्य । रावणे रोषाच्छायानुसारिणः सन्तोऽन्वधावन् ॥ ३८ ॥ जलप्रपातरूपाण्यस्राणि मुखे येषां ते । उच्छ्रितबाहवः उन्नतबाहवः । विक्रोशन्तीव व्याक्रोशन्निव ॥३९॥ श्रीमान् प्राप्तविषयशोक एव श्रीः ॥४०॥ नास्तीति सार्धश्लोक एकान्वयः । अनृशंसता दया। यत्र यस्मात् । गणशः सङ्घशः । पर्यदेवयन् व्यलपन् ॥ ४१ ॥ वित्रस्तका इति स्वार्थे कः । मृगपोतकाः मृगशावाः । आविलं कलुषम् ॥४२॥ सुप्रवेपितेत्यादिश्लोकद्वयमेकान्वयम् । तथा

गतोच्छ्वासां मूर्च्छितां सखीमिव गतोच्छ्वासाः सीतादुर्दशादर्शनात् प्राप्तनिश्वासाः नलिन्यः शोचन्ति ॥ ३७ ॥ समन्तादिति । रोषात् रावणविषयरोषात् ॥ ३८ ॥ जलप्रपातरूपाणि जलप्रवाहरूपाण्यस्राणि अश्रूणि मुखेषु येषां ते तथोक्ताः ॥३९॥४०॥ नास्ति आर्जवं मनोवाक्कायकर्मभिरजिह्मम् । अनृशंसता दया। यत्र यस्मात् ॥ ४१ ॥ ४२ ॥ सुप्रवेपितेत्यादिश्लोकद्वयमेकं वाक्यम् । धरणीतलमवेक्षमाणां रामलक्ष्मणागमनकाङ्क्षयेति भावः ॥ ४३ ॥ ४४ ॥

वाचामगोचरं दुःखम् । धरणीतलं बहुशोऽवेक्षमाणां रामलक्ष्मणप्रत्याशयेति भावः ॥ ४३ ॥ ४४ ॥ स इति । विप्रमृष्टं विलुलितं विशेषकं तिलकं यस्यास्ताम् । "तमालपत्रतिलकचित्रकाणि विशेषकम्" इत्यमरः । मनस्विनीं दृढमनस्काम्, पतिव्रतामित्यर्थः ॥ ४५ ॥ तत इति ।



स तामाकुलकेशान्तां विप्रमृष्टविशेषकाम् । जहारात्मविनाशाय दशग्रीवो मनस्विनीम् ॥ ४५ ॥ ततस्तु सा चारुदती शुचिस्मिता विनाकृता बन्धुजनेन मैथिली । अपश्यती राघवलक्ष्मणावुभौ विवर्णवक्त्रा भयभारपीडिता॥४६॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

खमुत्पतन्तं तं दृष्ट्वा मैथिली जनकात्मजा । दुःखिता परमोद्विग्ना भये महति वर्तिनी ॥ १ ॥
रोषरोदनताम्राक्षी भीमाक्षं राक्षसाधिपम् । रुदन्ती करुणं सीता ह्रियमाणेदमब्रवीत् ॥ २ ॥
न व्यपत्रपसे नीच कर्मणाऽनेन रावण । ज्ञात्वा विरहितां यन्मां चोरयित्वा पलायसे ॥ ३ ॥

शुचिस्मितेति भूतपूर्वाभिप्रायेण स्वाभाविकहसितत्वाद्वा । विवर्णवक्त्रा बभूवेति शेषः ॥ ४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥ अथ सीता रावणस्य चौर्यवृत्त्यादिकं बहुशो निन्दति—खमित्यादिना । दुःखिता बभूवेति शेषः । परमोद्विग्ना कम्पिता । "ओविजी भयचलनयोः" इत्यस्मान्निष्ठा । वर्तिनी वर्तमाना ॥ १ ॥ रोषवद्रोदनमपि रक्तिमहेतुः ॥ २ ॥ नेति । नीचेति सम्बोधनम् । न व्यपत्रपसे न लज्जसे । विरहिताम्, रामलक्ष्मणाभ्यामिति शेषः ॥ ३ ॥

विप्रमृष्टविशेषकां विशेषकं तिलकम् ॥ ४५ ॥ तत इति । शुचिस्मितेति भूतपूर्वगत्या । बन्धुजनेन श्रीरामेण विनाकृता । विवर्णवक्त्रेत्यनन्तरं बभूवेति शेषः । अत्रालङ्कारवर्णनं देव्या व्यथातिशयप्रदर्शनार्थम् ॥४६ ॥ इति श्रीमहेश्वरतीर्थवि० श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां द्विपञ्चाशः सर्गः ॥ ५२ ॥ अथ सीतया क्रियमाणपारुष्य एव तां हरति स्मेत्याह—खमिति । वर्तिनीत्यत्रसुप्यपि णिनिरार्षः ॥ १ ॥ २ ॥ अनेन कर्मणा चौर्येणेत्यर्थः ॥ ३ ॥

स०—अभये रामे सदा वर्तिन्यपि इदानीं परमोद्विग्ना सती दुःखिताऽभूत् । यद्वा महति भये अपरमोद्विग्नापि इदानीं दुःखिता । यद्वा अभेन गत्या हतौ रामवियोगे वर्तत इति तथा । एतत्पक्षे णिनेरार्षत्वं न कल्पनीयम् ॥ १ ॥ नीचेति कर्मविशेषणं सम्बुद्ध्यन्तं च ॥ ३ ॥

त्वयैवेति । हर्तुं मामिति शेषः । अपवाहितः अपनीतः । मृगरूपेण मायया मायारूपमृगेणेत्यर्थः ॥ ४ ॥ य इति । पुराणो वृद्ध इति व्यङ्ग्योक्तिः । अतिवृद्धं हत्वा शूरोऽहमिति मन्यस इति भावः ॥५॥ परममिति सोल्लुण्ठनं वचनम्, अतिनीचमित्यर्थः । तत्र हेतुमाह विश्राव्येति । हि यस्मात् स्वनामधेयं विश्राव्य अहं रावणोस्मीति स्वनाम प्रख्याप्य युद्धेनास्म्यहं जितेति व्यतिरेकोक्तिः । यद्वा ते परमम् अवीर्यं क्लीबत्वं हि यस्माद्युद्धे न जितास्मि ॥ ६ ॥

त्वयैव नूनं दुष्टात्मन् भीरुणा हर्तुमिच्छता । ममापवाहितो भर्ता मृगरूपेण मायया ॥ ४ ॥ यो हि मामुद्यतस्त्रातुं सोऽप्ययं विनिपातितः । गृध्रराजः पुराणोऽसौ श्वशुरस्य सखा मम ॥ ५ ॥ परमं खलु ते वीर्यं दृश्यते राक्षसाधम । विश्राव्य नामधेयं हि युद्धे नास्मि जिता त्वया ॥६॥ ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे । स्त्रियाश्च हरणं नीच रहिते तु परस्य च ॥७॥ कथयिष्यन्ति लोकेषु पुरुषाः कर्म कुत्सितम् । सुनृशंसमधर्मिष्ठं तव शौण्डीर्यमानिनः ॥८॥ धिक् ते शौर्यं च सत्त्वं च यत्त्वं कथितवांस्तदा । कुलाक्रोशकरं लोके धिक् ते चारित्रमीदृशम् ॥ ९ ॥ किं कर्तुं शक्यमेवं हि यज्जवेनैव धावसि । मुहूर्तमपि तिष्ठस्व न जीवन् प्रतियास्यसि ॥ १० ॥

रहिते स्वामिरहितप्रदेशे । परस्य स्त्रियाः हरणरूपमीदृशं गर्हितं निन्दितं कर्म कृत्वा कथं न लज्जसे ॥ ७ ॥ शौण्डीर्यमानिनः तव कर्म कुत्सितं सुनृशंसम् अधर्मिष्ठं च कथयिष्यन्तीत्यन्वयः ॥ ८ ॥ धिगिति । तदा हरणकाले । यच्छौर्यं सत्त्वं बलं कथितवानसि तद्धिक् । "उद्धहेयं भुजाभ्यां तु मेदिनीमम्बरे स्थितः ।" इत्यादि त्वदुक्तमनृतप्रलपनमित्यर्थः । कुलाक्रोशकरं कुलनिन्दाकरम् ॥ ९ ॥ यत् यदा एवं जवेनैव धावसि तदा रामेण त्वयि किं कर्तुं शक्यम् । तर्हि कदा शक्यमित्यत आह मुहूर्तमिति । मुहूर्तमपि मुहूर्तमेव तिष्ठस्व तिष्ठ तदा जीवन् सन् न प्रतियास्यसि

त्वयैवेति । मृगरूपेण परिणतया मायया । मम भर्ता अपवाहितः अन्यत्र नीतः ॥ ४ ॥ य इति । पुराणः वृद्धः, अत एवास्य निपातः तव वीर्यहेतुर्न भवतीति भावः । परममिति व्यङ्ग्योक्तिः । विश्राव्य त्वदीयं नामधेयं श्रावयित्वा युद्धे न जितास्मीति योजना । टी–युद्ध इति सतम्यन्तं पदम् ॥ ५ ॥ ६ ॥ गर्हितमिति । ईदृशं परस्त्रीहरणरूपं कर्म । रहितेन पतिरहितेन कालेन कृत्वा कथं न लज्जसे ॥ ७ ॥ ८ ॥ धिगिति । कुलाक्रोशकरं कुलनिन्दाकरम् ॥ ९ ॥ किं कर्तुमिति । भयेन धावसीति यत् एवं कर्तुं शक्यं किम् न शक्यमित्यर्थः । श्रीरामभयेन त्वया पलायनं क्रियते तदेतन्मया निवारयितुं न शक्यम्, स्त्रीत्वादिति भावः । यद्वा इह

मृतो भविष्यसीत्यर्थः ॥१०॥ उक्तमुपपादयति—न हीति ॥११॥ दर्शनप्राप्तिमात्रेण कथं जीवितुमशक्यत्वं तत्राह—न त्वमिति । अथ कर्तव्यमुपदिशति—साध्विति । अर्धश्लोकः एकान्वयः । आत्मनः पथ्यं हितं साधु कृत्वा विचार्य । कृतिर्हि नानार्थो धातुवृत्तिकृतोक्तः, यथा उरसि कृत्वा मनसि कृत्वेति । मां साधु सम्यक् आर्जवपूर्वकं मुञ्च ॥ १२ ॥ अमोचने बाधकमाह—मदिति । त्वं मां यदि न मुञ्चसि तदा मम पतिः मत्प्रधर्षणेन मत्परिभवेन रुष्टः सन्

नहि चक्षुष्पथं प्राप्य तयोः पार्थिवपुत्रयोः । ससैन्योऽपि समर्थस्त्वं मुहूर्तमपि जीवितुम् ॥ ११ ॥ न त्वं तयोः शरस्पर्शं सोढुं शक्तः कथञ्चन । वने प्रज्वलितस्येव स्पर्शमग्नेर्विहङ्गमः । साधु कृत्वाऽऽत्मनः पथ्यं साधु मां मुञ्च रावण ॥ १२ ॥ मत्प्रधर्षणरुष्टो हि भ्रात्रा सह पतिर्मम । विधास्यति विनाशाय त्वं मां यदि न मुञ्चसि ॥ १३ ॥ येन त्वं व्यवसायेन बलान्मां हर्तुमिच्छसि । व्यवसायः स ते नीच भविष्यति निरर्थकः ॥ १४ ॥ न ह्यहं त मपश्यन्ती भर्तारं विबुधोपमम् । उत्सहे शत्रुवशगा प्राणान् धारयितुं चिरम् ॥ १५ ॥ न नूनं चात्मनः श्रेयः पथ्यं वा समवेक्षसे । मृत्युकाले यथा मर्त्यो विपरीतानि सेवते ॥ १६ ॥ मुमूर्षूणां हि सर्वेषां यत्पथ्यं तन्न रोचते । पश्याम्यद्य हि कण्ठे त्वां कालपाशावपाशितम् ॥ १७ ॥

भ्रात्रा सह त्वद्विनाशाय यत्नं विधास्यति ॥ १३ ॥ अहमपि सफलयत्नो भविष्यामीत्याशङ्क्याह—येनेति । व्यवसायेन भोगव्यवसायेनेत्यग्राम्योक्तिः ॥ १४ ॥ नैरर्थक्यमेवाह—न हीति । इदानीं कथं धारयसीत्यत्र परिहारश्चिरमिति ॥ १५ ॥ किञ्च त्वमात्मनः श्रेयः प्रियं पथ्यं हितं वा न समवेक्षसे न पर्यालोचयसि । किन्तु मृत्युकाले मर्त्यो यथा विपरीतानि सेवते तथा त्वमपि विपरीतानि सेवस इत्यर्थः ॥ १६ ॥ त्वां कण्ठे कालपाशावपाशितं काल

भयेन धावसीति यत् एवं कर्तुं शक्यं किम् न शक्यम् शक्त्यभिमानपलायनयोरन्योन्यविरोधादित्यर्थः । मुहूर्तमपि मुहूर्तमेव तिष्ठस्व यदि शूर इति शेषः ॥ १० ॥ ११ ॥ साध्विति । आत्मनस्तव पथ्यं कुरु, साधु यत्समीचीनमित्यर्थः । किं तत्पथ्यमत आह—साध्विति । मां मुञ्च तत्साधुत्वमित्यर्थः ॥ १२ ॥ मदिति । विधास्यति यत्नमिति शेषः ॥ १३ ॥ १४ ॥ व्यवसायनैरर्थक्यमेवाह—नह्यहमिति ॥ १५ ॥ न नूनमिति । पथ्यं सुखोदर्कम् श्रेयः, वासं लङ्कारूपं निवासं न नावेक्षसे उभयं त्यक्तुमिच्छसीत्यर्थः ॥ १६ ॥ टीका—मुमूर्षूणामिति । कालपाशेनावपाशितं बद्धम् ॥ १७ ॥

पाशेन बद्धं पश्यामि ॥ १७ ॥ यथेति । किञ्च यन प्रकारेण न बिभेषि तेन प्रकारेण महीरुहान् हिरण्मयान् सम्पश्यसीति मन्य इति योजना ॥ १८ ॥ नदीमिति । रुधिरौघैः रक्तौघैः सह निवहति प्रवहतीति तथा । असिपत्रवनम् असिमयपत्रयुक्तवनमिति नरकविशेषस्य नाम । पश्यसीति वर्तमानसामीप्ये वर्तमाननिर्देशः ॥१९॥ पारदारिकस्यासाधारणनरकानुभवं दर्शयति—तप्तेति । तप्तानि सद्योऽग्निनिष्टप्तानि काञ्चनमयानि पुष्पाणि यस्या

यथा चास्मिन् भयस्थाने न बिभेषि दशानन । व्यक्तं हिरण्मयान् हि त्वं संपश्यसि महीरुहान् ॥ १८ ॥ नदीं वैतरणीं घोरां रुधिरौघनिवासिनीम् । असिपत्रवनं चैव भीमं पश्यसि रावण ॥ १९ ॥ तप्तकाञ्चनपुष्पां च वैडूर्यप्रवरच्छदाम् । द्रक्ष्यसे शाल्मलीं तीक्ष्णामायसैः कण्टकैश्चिताम् ॥ २० ॥ न हि त्वमीदृशं कृत्वा तस्यालीकं महात्मनः । धरितुं शक्ष्यसि चिरं विषं पीत्वेव निर्घृणः ॥ २१ ॥ बद्धस्त्वं कालपाशेन दुर्निवारेण रावण । क्व गतो लप्स्यसे शर्म भर्तुर्मम महात्मनः ॥ २२ ॥ निमेषान्तरमात्रेण विना भ्रात्रा महावने । राक्षसा निहता येन सहस्राणि चतुर्दश ॥ २३ ॥ स कथं राघवो वीरः सर्वास्त्रकुशलो बली । न त्वां हन्याच्छरैस्तीक्ष्णैरिष्टभार्यापहारिणम् ॥ २४ ॥

स्ताम् । स्वर्णस्य तप्तत्वेतीवौष्ण्यं भवति । वैडूर्यप्रवराः वैडूर्यमणिश्रेष्ठमयाः छदाः पर्णानि यस्यास्ताम् । अत्रापि तप्तेति विशेषणं बोध्यम् । शाल्मलीं पारदारिकालिङ्गयत्वेन यमलोकोत्पन्नां शाल्मलीवृक्षाकारस्थूणाम् । द्रक्ष्यसे द्रक्ष्यसि, आलिङ्गितुमिति शेषः ॥२०॥ भवत्वेवं कालान्तरे, सद्यो लब्धं हि सुखमित्यत्राह—न हीति । तस्य अलीकमप्रियं कृत्वा । "अलीकं त्वप्रियेऽनृते" इत्यमरः । धरितुं जीवितुम् ॥ २१ ॥ त्वामादाय देशान्तरं गमिष्यामि तदा न मे रामभयं तत्राह—बद्ध इति । भर्तुरिति हेतौ पञ्चमी । तस्माद्धेतोः क्व गतः सन् शर्म लप्स्यसे न क्वचिदपीत्यर्थः ॥ २२ ॥ कथं तस्य तादृशी शक्तिरित्यत्राह द्वाभ्याम्—निमेषेति । निमेषान्तरमात्रेण निमेषावकाशमात्रेण । भ्रात्रा विना एकाकिनेत्यर्थः ॥ २३ ॥ २४ ॥

यथेति । हिरण्मयवृक्षदर्शनं मृत्युचिह्नं वैतरण्यादि यातनास्थानम् । पश्यसीति वर्तमानसामीप्ये लट् ॥ १८ ॥ १९ ॥ तप्तेति । शाल्मली यातनावृक्षः ॥ २० ॥ नहीति । निर्घृणस्त्वं चिरं न तिष्ठसीत्यन्वयः । टी—अलीकम् अप्रियम् । धरितुं धर्तुम् । जीवितमिति शेषः ॥ २१ ॥ बद्ध इति । मम भर्तुरित्यनन्तरम् अपराधं कृत्वेति शेषः ॥२२॥ निमेषेति । भ्रात्रा विना

एतच्चान्यच्च वचनं करुणं परुषं च यथा भवति तथा विललाप परिदेवनमकरोत् ॥ २५ ॥ सीतोक्तं सर्वं पापिष्ठस्य तस्य समुद्रदीपतुल्यमासी दित्याह—तथेति । तथेति वाचामगोचरत्वोक्तिः । विलापपूर्वं करुणं च यथा तथा भाषिणीं करुणं यथा तथा विवेष्टन्तीं विवेष्टमानाम् । आगतगात्रवेपथुम् उत्पन्नशरीरकम्पाम् ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

एतच्चान्यच्च परुषं वैदेही रावणाङ्कगा । भयशोकसमाविष्टा करुणं विललाप ह ॥ २५ ॥ तथा भृशार्तां बहु चैव भाषिणीं विलापपूर्वं करुणं च भामिनीम् । जहार पापः करुणं विवेष्टतीं नृपात्मजामागतगात्रवेपथुम् ॥ २६ ॥
इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥
ह्रियमाणा तु वैदेही कञ्चिन्नाथमपश्यती । ददर्श गिरिशृङ्गस्थान् पञ्च वानरपुङ्गवान् ॥१॥ तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम् । उत्तरीयं वरारोहा शुभान्याभरणानि च । मुमोच यदि रामाय शंसेयुरिति मैथिली ॥ २ ॥ वस्त्रमुत्सृज्य तन्मध्ये निक्षिप्तं सहभूषणम् । सम्भ्रमात्तु दशग्रीवस्तत्कर्म न स बुद्धवान् ॥ ३ ॥ पिङ्गाक्षास्तां विशालाक्षीं नेत्रैरनिमिषैरिव । विक्रोशन्तीं तथा सीतां ददृशुर्वानरर्षभाः ॥ ४ ॥

अथ सीताया अशोकवनिकायां स्थापनमाह—ह्रियमाणा त्वित्यादि । नाथं रक्षकम् ॥१॥ तेषामित्यादिसार्धश्लोक एकान्वयः । उत्तरीयम् उत्तरीयभूतं कौशेयम् । आभरणानि कौशेये बद्ध्वा मुमोचेत्यर्थः । किमर्थं मुमोचेत्यत्राह—यदि रामाय शंसेयुरिति । यदृच्छया दृष्टाय रामाय स्वस्य रावणापहरणं कथयेयुरिति प्रत्याशयेत्यर्थः । " आशंसावचने लिङ् " इति लिङ् ॥ २ ॥ वस्त्रमिति । सहभूषणं भूषणान्तरितं वस्त्रम् । उत्सृज्य उन्मुच्य । तन्मध्ये सीतया निक्षिप्तमिति यत् तत्कर्म सम्भ्रमात्सीतापहारजनितक्षोभात् न बुद्धवान् । यदि बुद्ध्येत गृहीयादेवेति भावः ॥ ३ ॥ पिङ्गाक्षाः वानराः, न केवलं

एकाकिनेति यावत् ॥ २३–२५ ॥ तथेति । आगतगात्रवेपथुः भारातिशयात् ॥ २६ ॥ इति श्रीमहेश्वर० आरण्यकाण्डव्याख्यायां त्रिपञ्चाशः सर्गः ॥ ५३ ॥
ह्रियमाणेति । नाथं रक्षकम् ॥ १ ॥ तेषामिति । शंसेयुरिति, प्रत्याशयेति शेषः ॥ २ ॥ वस्त्रमिति । तत्कर्म भूषणक्षेपणकर्म । सम्भ्रमात् सभयहरणजनित

वानराः अपितु वानरर्षभाः वानरश्रेष्ठाः । अनिमिषैरिव निमेषरहितैरिव । तथा विक्रोशन्तीं राम रामेति विक्रोशन्तीमित्यर्थः ॥ ४ ॥ पम्पां पम्पोपर्याकाशम् । लङ्कामभिमुख इत्यनेन एतावत्पर्यन्तं रामाश्रमदत्तदृष्टिर्गतः । ततः स्वच्छन्दं गतवानिति गम्यते । अत एव सुसंहृष्ट इति वक्ष्यते ॥५॥ उत्सङ्गेनेत्यस्य उभयत्राप्यन्वयः । मृत्युं मृत्युहेतुभूताम् ॥ ६ ॥ विहायसा आकाशमार्गेण ॥ ७ ॥ तिमयो मत्स्यविशेषाः नक्राः ग्राहाः तेषां निकेतं वास

स च पम्पामतिक्रम्य लङ्कामभिमुखः पुरीम् । जगाम रुदतीं गृह्य वैदेहीं राक्षसेश्वरः ॥ ५ ॥ तां जहार सुसंहृष्टो रावणो मृत्युमात्मनः । उत्सङ्गेनैव भुजगीं तीक्ष्णदंष्ट्रां महाविषाम् ॥ ६ ॥ वनानि सरितः शैलान् सरांसि च विहायसा । स क्षिप्रं समतीयाय शरश्चापादिव च्युतः ॥ ७ ॥ तिमिनक्रनिकेतं तु वरुणालयमक्षयम् । सरितां शरणं गत्वा समतीयाय सागरम् ॥ ८ ॥ सम्भ्रमात्परिवृत्तोर्मी रुद्धमीनमहोरगः । वैदेह्यां ह्रियमाणायां बभूव वरुणालयः ॥ ९ ॥ अन्तरिक्षगता वाचः ससृजुश्चारणास्तदा । एतदन्तो दशग्रीव इति सिद्धास्तदाऽब्रुवन् ॥ १० ॥ स तु सीतां विवेष्टन्तीमङ्केनादाय रावणः । प्रविवेश पुरीं लङ्कां रूपिणीं मृत्युमात्मनः ॥ ११ ॥

स्थानम् । वरुणस्य आलयं वासः शरणम् । प्राप्य गत्वा । क्रमेण सागरं समतीयाय ॥ ८ ॥ सम्भ्रमात् रावणदर्शनक्षोभात् । परिवृत्तोर्मिः रुद्धमीनमहोरगः बहिस्सञ्चाररहितमत्स्यसर्पः ॥ ९ ॥ अन्तरिक्षगताश्चारणाः दशग्रीवः एतदन्तः एतत्सीतापहरणावसान इति वाचः ससृजुः ऊचुरित्यर्थः । अन्तरिक्षगताः सिद्धाश्च एतदन्तो दशग्रीव इत्यब्रुवन् ॥ १० ॥ आत्मनः रूपिणीं रूपवतीं मृत्युमिति सीताविशेषणम् ॥ ११ ॥

चित्तक्षोभात् अतिभारेण शिरसामधोमुखतया च ॥ ३-५ ॥ तामिति । मृत्युं मृत्युहेतुभूताम् ॥ ६ ॥ वनानीति । विहायसा आकाशमार्गेण क्षिप्रं समतीयायेत्यन्वयः ॥ ७ ॥ ८ ॥ सम्भ्रमादिति । सम्भ्रमात् अकार्यजनितक्षोभात् । परिवृत्तोर्मिः परिभ्रमितोर्मिः ॥ ९ ॥ एतदन्तः एतत्सीताहरणं कर्म अन्तोऽवसानं

तिल०—सुसंहृष्टः मृत्योस्तत्त्वेनाज्ञानात् । केचित्तु—ऊर्ध्वं रामहस्तान्मृत्युद्वारमिति संहृष्टः विना चोत्कटं पापं पुण्यक्षयाभावेन न मृत्युसन्निहितस्स्यादिति तमोगुणावृतस्स न् मातर्यपि विरुद्धशब्दव्यवहारं कृतवानिति वदन्ति । तेषामेतत्सर्गान्ते वक्ष्यमाणं 'बभूव मोहान्मुदितः' इत्यसङ्गतं स्यात् । तथा 'आत्मानं बुद्धिवैक्लव्यात्कृतकृत्यममन्यत' इत्युत्तरसर्गोक्तेरथमसङ्गतं स्यात् ॥ ६ ॥

संरूढाः जनाकीर्णाः कक्ष्याः द्वारप्रकोष्ठाः ताभिः बहुलं निबिडम् ॥ १२ ॥ तत्र अन्तःपुरे। शोकमोहपरायणां शोकमोहपरतन्त्राम् । निदधे स्थापितवान् । मयस्त्रिपुराधिपतिः । मायां मायामयीम्, आश्चर्यशक्तियुक्तामित्यर्थः । स्त्रियं स्वयम्प्रभां बिले यथा निदधे तथेत्यर्थः ॥ १३ ॥ अब्रवीदिति । पिशाचीः पिशाच्याकाराः राक्षसीः यथेमां स्त्री वा पुमान्वा असंमतः अननुज्ञातः न पश्यति तथाऽब्रवीत् । एनामन्यो न पश्येदित्यब्रवीदित्यर्थः ॥ १४॥

सोऽभिगम्य पुरीं लङ्कां सुविभक्तमहापथाम् । संरूढकक्ष्याबहुलं स्वमन्तःपुरमाविशत् ॥ १२ ॥ तत्र तामसितापाङ्गां शोकमोहपरायणाम् । निदधे रावणः सीतां मयो मायामिव स्त्रियम् ॥ १३ ॥ अब्रवीच्च दशग्रीवः पिशाचीर्घोरदर्शनाः । यथा नेमां पुमान् स्त्री वा सीतां पश्यत्यसंमतः ॥१४॥ मुक्तामणिसुवर्णानि वस्त्राण्याभरणानि च । यद्यदिच्छेत्तदेवास्या देयं मच्छन्दतो यथा ॥ १५ ॥ या च वक्ष्यति वैदेहीं वचनं किञ्चिदप्रियम् । अज्ञानाद्यदि वा ज्ञानान्न तस्या जीवितं प्रियम् ॥१६॥ तथोक्त्वा राक्षसीस्तास्तु राक्षसेन्द्रः प्रतापवान् । निष्क्रम्यान्तःपुरात्तस्मात्किं कृत्यमिति चिन्तयन् ॥ १७ ॥ ददर्शाष्टौ महावीर्यान् राक्षसान् पिशिताशनान् ॥ १८ ॥ स तान् दृष्ट्वा महावीर्यो वरदानेन मोहितः । उवाचैतानिदं वाक्यं प्रशस्य बलवीर्यतः ॥ १९ ॥ नानाप्रहरणाः क्षिप्रमितो गच्छत सत्वराः । जनस्थानं हतस्थानं भूतपूर्वं खरालयम् ॥ २० ॥

मुक्तेति । एषा यद्यदिच्छेत्तत्तद्देयं यथा मच्छन्दतः मदिच्छानुसारेण यथा मह्यं दीयते तद्वद्देयमित्यर्थः ॥ १५ ॥ जीवितं न प्रियं मारयेयमित्यर्थः ॥१६॥ चिन्तयन् महावीर्यान् राक्षसान् ददर्श अपश्यत् ॥ १७ ॥ १८ ॥ वरदानेन ब्रह्मवरदानेन । तानेतानित्यन्वयः ॥ १९ ॥ नानेति "आयुधं तु प्रहरणम्" यस्य सः तथोक्तः ॥ १० ॥ ११ ॥ संरूढकक्ष्याबहुलं संरूढा बहुजनाकीर्णाः कक्ष्याः द्वाराणि तैर्बहुलम् ॥ १२ ॥ १३ ॥ असम्मतः अस्मदननुज्ञातः पुमान्वा अस्मदननुज्ञाता स्त्री वा यथा चैनां न पश्यति तथा रक्षतेति शेषः ॥ १४ ॥ मच्छन्दतः मदनुज्ञाबलात् ॥ १५–१८ ॥ वरदानेन ब्रह्मवरदानेन ॥ १९ ॥ हत

तिल०—मायामिवासुरीम इति पाठः । अनेन मायारूपैवैषा सीता या लङ्कामागतेति ध्वनितम् । मुह्यमाना स्वर्ग्निं प्रविष्टेति पूर्वमेव ध्वनितम्, अत एव रावणस्य वहनीयैषा जाता । मायात्वादेव रावणस्य तदज्ञानम् ॥ १३ ॥

इत्यमरः । हतस्थानं शून्यसन्निवेशं खरालयं भूतपूर्वं पूर्वं खरालयमित्यर्थः । "भूतपूर्वे चरट्" इति निर्देशात्समासः ॥ २० ॥ पौरुषं बलं न केवलं नीतिबलमित्यर्थः ॥ २१ ॥ पौरुषबलाश्रयणे हेतुमाह—बलं हीति । यत् बलं सैन्यं निवेशितं तद्धतमित्यन्वयः ॥ २२ ॥ तत्र वधनिमित्तम् । अमर्षात् असहनात् ॥ २३ ॥ निर्यातयितुम् अवसितुम् ॥ २४ ॥ तन्त्विति । शर्म सुखम् । उपलप्स्यामि प्राप्स्यामि ॥२५॥ प्रवृत्तिर्वार्ता । रामः किं करोतीति



तत्रोष्यतां जनस्थाने शून्ये निहतराक्षसे । पौरुषं बलमाश्रित्य त्रासमुत्सृज्य दूरतः ॥ २१ ॥ बलं हि सुमहद्यन्मे जनस्थाने निवेशितम् । सदूषणखरं युद्धे हतं रामेण सायकैः ॥ २२ ॥ तत्र क्रोधो ममामर्षाद्धैर्यस्योपरि वर्तते । वैरं च सुमहज्जातं रामं प्रति सुदारुणम् ॥ २३ ॥ निर्यातयितुमिच्छामि तच्च वैरमहं रिपोः । नहि लप्स्याम्यहं निद्रामहत्वा संयुगे रिपुम् ॥ २४ ॥ तं त्विदानीमहं हत्वा खरदूषणघातिनम् । रामं शर्मोपलप्स्यामि धनं लब्ध्वेव निर्धनः ॥ २५ ॥ जनस्थाने वसद्भिस्तु भवद्भी राममाश्रिता । प्रवृत्तिरुपनेतव्या किं करोतीति तत्त्वतः ॥ २६ ॥ अप्रमादाच्च गन्तव्यं सर्वैरपि निशाचरैः । कर्तव्यश्च सदा यत्नो राघवस्य वधं प्रति ॥ २७ ॥ युष्माकं च बलज्ञोऽहं बहुशो रणमूर्धनि । अतश्चास्मिन् जनस्थाने मया यूयं नियोजिताः ॥ २८ ॥ ततः प्रियं वाक्यमुपेत्य राक्षसा महार्थमष्टावभिवाद्य रावणम् । विहाय लङ्कां सहिताः प्रतस्थिरे यतो जनस्थानमलक्ष्यदर्शनाः ॥ २९ ॥

तत्त्वतो वार्ता मत्सकाशमुपनेतव्येत्यर्थः ॥ २६ ॥ अप्रमादादिति अवधानादित्यर्थः ॥ २७ ॥ खरादिस्थाने अस्माभिः कथं स्थातुं शक्यं तत्राह—युष्माकं चेति ॥ २८ ॥ महानर्थोऽभिधेयो यस्य तं महार्थम् । प्रियं श्लाघारूपं वाक्यम् उपेत्य लब्ध्वा, रावणतः स्तुतिं प्राप्येत्यर्थः । यतो यत्र जनस्थानं तद्वनमुद्दिश्य प्रतस्थिरे । अलक्ष्यदर्शनाः वेगातिशयेन दुष्प्रेक्षस्वरूपाः ॥ २९ ॥



स्थानं शून्यसन्निवेशम् । खरालयं भूतपूर्वं पूर्वं खरालयमित्यर्थः ॥ २०–२३ ॥ निर्यातयितुं अत्यपकारेणापनेतुम् ॥ २४ ॥ २५ ॥ प्रवृत्तिः वार्ता ॥ २६–२९ ॥

सर्गार्थं संगृह्य दर्शयति—ततस्त्विति । उपलभ्य दृष्ट्वा सुसम्प्रहृष्टः कामविकारवान् । परिगृह्य गृहीत्वा । रामेण वैरं प्रसज्य प्राप्यापि मोहान्मुदितो बभूव । अत्र त्रिंशच्छ्लोकाः ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुःपञ्चाशः सर्गः ॥ ५४ ॥



पूर्वं स्वप्रभावकथनमुखेन प्रलोभनं कृतवान् । अथ भोगोपकरणप्रदर्शनमुखेन रावणः सीतां प्रलोभयति पञ्चपञ्चाशे—सन्दिश्येत्यादि । बुद्धिवैक्लव्यात्

ततस्तु सीतामुपलभ्य रावणः सुसम्प्रहृष्टः परिगृह्य मैथिलीम् । प्रसज्य रामेण च वैरमुत्तमं बभूव मोहान्मुदितः स राक्षसः ॥ ३० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे चतुःपञ्चाशः सर्गः * ॥५४॥

सन्दिश्य राक्षसान् घोरान् रावणोऽष्टौ महाबलान् । आत्मानं बुद्धिवैक्लव्यात्कृतकृत्यममन्यत ॥१॥ स चिन्तयानो वैदेहीं कामबाणसमर्पितः । प्रविवेश गृहं रम्यं सीतां द्रष्टुमभित्वरन् ॥ २ ॥ स प्रविश्य तु तद्वेश्म रावणो राक्षसाधिपः । अपश्यद्राक्षसीमध्ये सीतां शोकपरायणाम् ॥ ३ ॥ अश्रुपूर्णमुखीं दीनां शोकभाराभिपीडिताम् । वायुवेगैरिवाक्रान्तां मज्जन्तीं नावमर्णवे ॥ ४ ॥ मृगयूथपरिभ्रष्टां मृगीं श्वभिरिवावृताम् । अधोमुखमुखीं सीतामभ्येत्य च निशाचरः ॥ ५ ॥ तां तु शोकपरां दीनामवशां राक्षसाधिपः । स बलाद्दर्शयामास गृहं देवगृहोपमम् ॥ ६ ॥

बुद्धिदौर्बल्यात्, अकृतबुद्धित्वादित्यर्थः ॥१॥ समर्पितः पीडित इत्यर्थः। अभित्वरन् अभित्वरमाणः ॥२॥ स प्रविश्येति। वेश्म अन्तःपुरम् ॥३॥ अश्रिवत्यादिश्लोकत्रयमेकं वाक्यम् । अधोमुखमवनतं मुखं यस्यास्ताम् । "स्यादवाङप्यधोमुखः" इत्यमरः । शोकभाराभिपीडितामभ्येत्य शोकपरां दर्शयां

महाप्रकरणार्थं संगृह्णाति—तत इति । उपलभ्य प्राप्य, गृहीत्वेत्यर्थः । परिगृह्य स्वगृहे अवस्थाप्य । वैरं प्रसज्य प्राप्य । मोहादविवेकान्मुदितः प्रीतो बभूव । वस्तुतस्तु रावणस्य श्रीरामेण सह वैरं लोकदृष्ट्या अनर्थवत्प्रतीयमानमपि सीताहरणद्वारा श्रीरामहस्तात्स्ववधस्येष्टतमत्वाद्रामेण वैरं प्राप्य मुमुद इति भावः ॥३०॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायाम् आरण्यकाण्डव्याख्यायां चतुःपञ्चाशः सर्गः ॥ ५४ ॥ सन्दिश्येति । बुद्धिवैक्लव्यात् बुद्धिवैपरीत्यात् ॥ १–४ ॥ मृगयूथेति । अधोमुखमुखीम् अधोमुखे अधःप्रदेशे मुखं यस्यास्ताम् । यद्वा अधोमुखमवगतं मुखं यस्यास्ताम् । "स्यादवाङप्यधोमुखः" इत्यमरः ॥ ५ ॥ स बलाद्दर्शयामासेत्यारभ्य तप्तकाञ्चनतोरणमित्यन्तमेकं वाक्यम् । दान्तकैरित्याद्युपलक्षणे तृतीया । दन्तैः कृतैः दान्तकैः । तापनीयैः

* सर्गश्रवणफलम् । स्कान्दे—"सीतापहारमारभ्य लङ्कायां स्थापनावधि । श्रवणाच्छात्रविहिताज्येष्ठा देवी विनश्यति ॥" इति ।

मासेति क्रियाभदादपुनरुक्तिः। अवशां दर्शनमनिच्छन्तीम् ॥ ४–६ ॥ गृहं वर्णयति द्वाभ्याम्–हर्म्यैत्यादि। हर्म्यैः ह्रस्वविमानैः प्रासादैः उन्नतविमानैश्च सम्बाधं निबिडम्। काश्चनैः स्वर्णमयैः तापनीयैः तप्तस्वर्णमयैः स्तम्भैरुपलक्षितम् ॥ ७ ॥ ८ ॥ दिव्यदुन्दुभिनिर्हादं निर्हादवत्। अर्शआद्यच्। यद्वा दिव्यदुन्दुभेरिव निर्हादः शब्दो यस्य तत्, आरोहणकाले दुन्दुभिवत् ध्वनतीति भावः। तोरणो बहिर्द्वारम्। चित्रम् आश्चर्यभूतम्। "आलेख्याश्चर्ययो

हर्म्यप्रासादसम्बाधं स्त्रीसहस्रनिषेवितम्। नानापक्षिगणैर्जुष्टं नानारत्नसमन्वितम् ॥ ७ ॥ काश्चनैस्तापनीयैश्च स्फाटिकै राजतैरपि। वज्रवैडूर्यचित्रैश्च स्तम्भैर्दृष्टिमनोहरैः ॥ ८ ॥ दिव्यदुन्दुभिनिर्ह्रादं तप्तकाञ्चनतोरणम्। सोपानं काञ्चनं चित्रमारुरोह तया सह ॥ ९ ॥ दान्तिका राजताश्चैव गवाक्षाः प्रियदर्शनाः। हेमजालावृताश्चासन् तत्र प्रासादपङ्क्तयः ॥ १० ॥ सुधामणिविचित्राणि भूमिभागानि सर्वशः। दशग्रीवः स्वभवने प्रादर्शयत मैथिलीम् ॥ ११ ॥ दीर्घिकाः पुष्करिण्यश्च नानावृक्षसमन्विताः। रावणो दर्शयामास सीतां शोकपरायणाम् ॥ १२ ॥ दर्शयित्वा तु वैदेह्याः कृत्स्नं तद्भवनोत्तमम्। उवाच वाक्यं पापात्मा सीतां लोभितुमिच्छया ॥ १३ ॥

श्चित्रम्" इत्यमरः। तया सहारुरोह तामादायारुरोहेत्यर्थः ॥ ९ ॥ वक्ष्यमाणभूभागदर्शनसाधनान्याह–दान्तिका इति। दान्तिकाः दन्तविकृताः। तत्र सोपानमार्गे गवाक्षा आसन् तदुपरि हेममयैः जालैः जालकैः आवृताः प्रासादपङ्क्तयश्चासन् ॥ १० ॥ सुधावलेपनेन मणिभिश्च विचित्राणि, भूमिभागानीति क्लीबत्वमार्षम्। प्रादर्शयत प्रदर्शयामास। तैर्गवाक्षैरिति शेषः ॥ ११ ॥ दीर्घिकाः वाप्यः। पुष्करं जलमासामस्तीति पुष्करिण्यः। द्वितीयार्थे प्रथमा। "पुष्करादिभ्यो देशे" इति इनिप्रत्ययः। शोकपरायणामित्यनेन तस्या असह्यत्वं द्योत्यते ॥ १२ ॥ लोभितुं लोभयितुम्। अन्तर्भावित

तपनीयकृतैः, सुवर्णकृतैरित्यर्थः ॥ ६–९ ॥ दान्तिका इति। हेमजालैः हेममयजालकैः ॥ १० ॥ सुधेति। सुधामणिविचित्राणि सुधा चूर्णं तज्जनकमणिभिः मुक्तामणिभिर्विचित्राणि। भूमिभागानि कुट्टिमप्रदेशान् ॥ ११ ॥ दीर्घिकाः वापीः। पुष्करिण्यः पुष्करिणीः, पद्मयुक्ता इत्यर्थः ॥ १२ ॥ लोभितुं सामनिग्रहाभ्यां प्रलोभ

ण्यर्थोऽयम् ॥ १२ ॥ दश द्वाविंशतिश्चेति द्वाविंशत्कोट्यः तेषां द्वाविंशत्कोटिराक्षसानाम् । गुणीभूतानामपि राक्षसानां तच्छब्देन परामर्शः "अथ शब्दानुशासनं केषां शब्दानाम्" इत्यादौ तथा दर्शनात् ॥१४॥ वर्जयित्वेति । बालवृद्धान् विना ममैकस्य । पुरः सरतीति पुरस्सरं परिचारकजातम् एकसहस्रमस्ति॥१५॥ यदिदमिति । मम यदिदं राजतन्त्रं राजपरिकरः तत्सर्वं त्वयि प्रतिष्ठितं त्वदधीनं मम जीवितं च त्वदधीनं त्वयि प्रतिष्ठितम् । त्वं मे मम प्राणैः

दश राक्षसकोटयश्च द्वाविंशतिरथापराः । तेषां प्रभुरहं सीते सर्वेषां भीमकर्मणाम् ॥१४॥ वर्जयित्वा जरावृद्धान् बालांश्च रजनीचरान् । सहस्रमेकमेकस्य मम कार्यपुरस्सरम् ॥ १५ ॥ यदिदं राजतन्त्रं मे त्वयि सर्वं प्रतिष्ठितम् । जीवितं च विशालाक्षि त्वं मे प्राणैर्गरीयसी॥१६॥ बहूनां स्त्रीसहस्राणां मम योऽसौ परिग्रहः । तासां त्वमीश्वरा सीते मम भार्या भव प्रिये ॥१७॥ साधु किं तेऽन्यथा बुद्ध्या रोचयस्व वचो मम । भजस्व माऽभितप्तस्य प्रसादं कर्तुमर्हसि॥ १८

प्राणेभ्यः गरीयसी ॥१६॥ अन्तःपुरचारिणां स्त्रीसहस्राणां मध्ये योसौ मम परिग्रहः या भार्या इत्यर्थः । "परिग्रहः कलत्रे स्यात्" इति शाश्वतः । नियतपुँल्लिङ्गः । जात्यभिप्रायेणैकवचनम् । तासामित्यत्र स्त्रीणामित्यभिप्रायेण स्त्रीलिङ्गनिर्देशः । मम भार्या सती तासामीश्वरा स्वामिनी भव । "स्थेशभासपिसकसो वरच्" इति वरच् । ततष्टाप् ॥१७॥ साध्विति । मम वचो रोचयस्व मदुक्तं स्वीकुरु, इदं साधु समीचीनम्, ते अन्यथा बुद्ध्या किम् ? रामविषया

यितुम् ॥ १३ ॥ दशेति । द्वात्रिंशत्कोटिसङ्ख्या इत्यर्थः ॥ १४ ॥ सहस्रमिति । एकस्य मुख्यस्य, तेषां मुख्यस्येत्यर्थः । मम कार्यपुरस्सरं कार्यसाधकमेकैकं सहस्रं भवतीति शेषः । एकैकस्य कार्यसाधनाय एकैकं सहस्रं नियोजयामीत्यर्थः ॥ १५ ॥ यदिदमिति । राजतन्त्रं राजपरिकरः । प्रतिष्ठितं त्वदधीनम् । प्राणैः प्राणेभ्यः ॥ १६ ॥ अन्तःपुरचारिणीनां स्त्रीणां मध्ये यो मम परिग्रहः, या मम भार्या इत्यर्थः। परिग्रहशब्दो नियतपुँल्लिङ्गः । अत्रायं जात्येकवचने योसौ परिग्रह इति निर्दिश्य तासामिति स्त्रीलिङ्गेन स्त्रीणां निर्देशः । परमार्थतः परिग्रहशब्दवाच्यानां स्त्रीत्वादिति ज्ञेयम् । मे मम भार्या सती तासामीश्वरा स्वामिनी भवेत्यन्वयः । वस्तुतस्तु–अभवप्रिये इति छेदः । हे मोक्षप्रिये ! भार्येत्यत्र भा आर्येति च्छेदः । भा चिद्रूपिणी । आर्या श्रेष्ठा त्वं मम तासां च ईश्वरा भवेति योजना ॥ १७ ॥ साध्विति । साधु हितं मम वचो रोचयस्व अङ्गीकुरु, भज मामिति शेषः । कामाभितप्तस्य मम प्रसादं कर्तुमर्हसि । " भजस्व माभितप्तस्य " इत्यपि पाठः ।

स०–बालान् वृद्धान् जनान्वर्जयित्वा द्वात्रिंशत्संख्याकेषु राक्षसेषु मध्ये एकैकस्य कार्यपुरस्सरम् कार्यकरम् एकैकसहस्रं तिष्ठति । एतच्च रावणगृहमध्ये परिचारसंख्यानम् । एतदतिरिक्ताश्च बहवः शूराः सन्ति । अतो नाशीतिकोटियूथपरिमित्यादिविरोधः ॥ १५ ॥ हे प्रिये ! तासां यः परिग्रहः मूलम् असौ त्वमेवेति योजना " परिग्रहः स्वीकारमूलयोः " इति विश्वः ॥ १७ ॥

बुद्धिर्मा भूदित्यर्थः । तस्मात् मा मां भजस्व । अभितप्तस्य कामाभितप्तस्य मे प्रसादं कर्तुमर्हसि । अर्हसि किम् नार्हसीत्यपि ध्वनिः ॥ १८ ॥ रामागमनप्रसक्तिरेव नास्तीत्याशयेनाह—परिक्षिप्तेति । "शतं सहस्रमयुतं सर्वमानन्त्यवाचकम्" इति वचनात् सहस्रेण अनेकराक्षसैः परिक्षिप्ता परिवृता इयं लङ्का शतयोजना शतयोजनपरिमिता, तस्मान्नेयं धर्षयितुं शक्या ॥ १९ ॥ मा भूत्पुरस्य दुर्धर्षता मम पुनर्वीर्यं शृण्वित्याह—न देवेष्विति ।

परिक्षिप्ता सहस्रेण लङ्केयं शतयोजना । नेयं धर्षयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ १९ ॥ न देवेषु न यक्षेषु न गन्धर्वेषु पक्षिषु । अहं पश्यामि लोकेषु यो मे वीर्यसमो भवेत् ॥ २० ॥ राज्यभ्रष्टेन दीनेन तापसेन गतायुषा । किं करिष्यसि रामेण मानुषेणाल्पतेजसा ॥ २१ ॥ भजस्व सीते मामेव भर्ताहं सदृशस्तव । यौवनं ह्यध्रुवं भीरु रमस्वेह मया सह ॥ २२ ॥ दर्शने मा कृथा बुद्धिं राघवस्य वरानने । कास्य शक्तिरिहागन्तुमपि सीते मनोरथैः ॥२३॥

मे वीर्यं यः समो भवेत् तं देवेषु न पश्यामि, यक्षेषु न पश्यामि, गन्धर्वेषु न पश्यामि, पक्षिषु च न पश्यामि ॥ २० ॥ राज्येति । गतायुषा अल्पायुषेत्यर्थः ॥ २१ ॥ भजस्वेति । इह भवने ॥ २२ ॥ राघवस्य दर्शने बुद्धिं मा कृथाः, तद्दर्शनं च दुर्लभमित्यर्थः । तदेव स्पष्टयति कास्येऽति ।

वस्तुतस्तु—कामाभितप्तस्य कामेन त्वद्भृत्यो भविष्यामीत्येवंरूपेण मनोरथेनाभितप्तस्येत्यर्थः ॥ १८–२० ॥ राज्यभ्रष्टेनेत्यादिश्लोकद्वयस्य वाक्यार्थः स्पष्टः । वस्तुतस्तु—राज्यभ्रष्टेन राज्याद्भ्रष्टा रिपवो यस्मात्तेन । दीनेनतापसेनगतायुषेत्यन्तमेकं पदम् । दीनानामिनः तापसानामिनः, दीनेनश्चासौ तापसेनश्च दीनेनतापसेनः तादृशस्सन् गतं प्राप्तमायुरेकादशसहस्रवत्सरपरिमितं येन तेन । दीनजनानां तापसानां च रक्षणार्थमवतीर्णेनेत्यर्थः । मानुषेण मनुष्यरूपेणावतीर्णेन । अल्पतेजसा अल्पमितरेषां तेजो यस्मात्तेन "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतेः । रामेण किमेतादृशं परमपुरुषमुद्दिश्य किमर्थं विलापः क्रियते इति भावः । भजस्वेति । मा मे अवेति च्छेदः । यौवनं यौवनशब्देन सर्वा अवस्था लक्ष्यन्ते, ताभिस्सर्वमायुर्लक्ष्यते, तथा च यतः मे मम त्वत्सेवानुकूलं सर्वमायुरध्रुवम् । भर्ता बिभर्ति शुश्रूषादिना स्वामिनमिति भर्ता भृत्यः । सदृशः अनुरूपः । यतस्तवाहमनुरूपो भृत्यः अतो मा मां भजस्व भृत्यत्वे नाङ्गीकुरु, अव रक्ष च । तदर्थमिह लङ्कायाम् । मया सह राज्यलक्ष्म्या सह । रमस्व ॥ २१ ॥ २२ ॥ दर्शन इत्यादिश्लोकत्रयस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु—दर्शने इति । यथा वायुर्बद्धुं न शक्यते, अग्नेः शिखा ग्रहीतुं यथा न शक्यते एवं मनोरथैरपि इह लङ्कां प्रत्यागन्तुं कस्य शक्तिः ? न कस्यापि । रामं विनेति शेषः । तथा मद्बाहुपरिपालितां त्वां यो हरेत् तं न पश्यामि, रामं विनेति शेषः । श्रीरामश्चेदागन्तुं शक्नुयात् त्वामाहर्तुं च शक्नुयात् अतः स एवागत्य प्राप्स्यति, त्वं व्र

अत्र आगन्तुं मानसिकव्यापारोपि न शक्यः, किंतु न कायिक इत्यर्थः ॥ २३ ॥ अशक्यत्वे दृष्टान्तमाह—न शक्य इति । विमलां निर्धूमाम् । शिखां ज्वालाम् ॥ २४ ॥ त्रयाणामिति । लोकानामिति निर्धारणे षष्ठी ॥ २५ ॥ त्वत्प्रेष्याः त्वत्परिचरिकाः, भविष्यन्तीति शेषः । अभिषेकेत्यर्धमेकं वाक्यम् । अभिषेकोदकेन पट्टमहिषीत्वेनाभिषेकोदकेन । क्लिन्ना सिक्ता ॥ २६ ॥ दुष्कृतमिति । पुरा पूर्वजन्मनि यद्दुष्कृतं कर्मास्ति तत्

न शक्यो वायुराकाशे पाशैर्बद्धुं महाजवः । दीप्यमानस्य वाप्यग्नेर्ग्रहीतुं विमलां शिखाम् ॥ २४ ॥ त्रयाणामपि लोकानां न तं पश्यामि शोभने । विक्रमेण नयेद्यस्त्वां मद्बाहुपरिपालिताम् ॥ २५ ॥ लङ्कायां सुमहद्राज्यमिदं त्वमनुपालय । त्वत्प्रेष्या मद्विधाश्चैव देवाश्चापि चराचराः । अभिषेकोदकक्लिन्ना तुष्टा च रमयस्व माम् ॥ २६ ॥ दुष्कृतं यत्पुरा कर्म वनवासेन तद्गतम् । यश्च ते सुकृतो धर्मस्तस्येह फलमाप्नुहि ॥ २७ ॥ इह माल्यानि सर्वाणि दिव्यगन्धानि मैथिलि । भूषणानि च मुख्यानि सेवस्व च मया सह ॥ २८ ॥ पुष्पकं नाम सुश्रोणि भ्रातुर्वैश्रवणस्य मे । विमानं सूर्यसङ्काशं तरसा निर्जितं मया ॥ २९ ॥ विशालं रमणीयं च तद्विमानमनुत्तमम् । तत्र सीते मया सार्धं विहरस्व यथासुखम् ॥ ३० ॥

वनवासेन वनवासक्लेशेन दत्तफलत्वात् गतं नष्टम् ॥ २७ ॥ भूषणानि च मुख्यानि, सेवस्व धारयेत्यर्थः ॥ २८ ॥ पुष्पकमित्यादि । तरसा बलेन । विशालं वेशनयोग्यम् । "वेः शालच्छङ्कटचौ" इत्यनेन शालच् प्रत्ययः । असङ्कोचन्यायाद्यावदुपवेष्टृसम्भावनमुपवेशार्हमित्यर्थः ॥ २९ ॥ ३० ॥

श्रीरामं कदा द्रक्ष्यामीत्युत्कण्ठां मा कुर्वित्यर्थः ॥ २३–२५ ॥ लङ्कायामित्यारभ्य अलं व्रीडेनेत्यन्तश्लोकानां प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु–कुलदेवतायै देव्यै रावणः स्वात्मात्मीयसमर्पणं करोति लङ्कायामित्यादिश्लोकद्वयेन । मद्विधा इत्यनेन आत्मसमर्पणम्, लङ्कायां राज्यमनुपालयेत्यनेन आत्मीयसमर्पणमिति ज्ञेयम् । सुकृतफलमपि समर्पयति–दुष्कृतमिति । वनवासेन वनं जलम्, जलमध्यस्थलङ्काद्वीपवासिना, मयेति शेषः । पुरा यद्दुष्कृतं कर्म, कृतमिति शेषः । तद्गतं नष्टम् । मदिष्टदेवतायास्तव दर्शनमात्रेणेति शेषः । पुरा मया सुकृतो यो धर्मः तस्य फलं ते तुभ्यं निवेदयामि । आप्नुहि गृहाणेत्यर्थः ॥ २६ ॥ २७ ॥ इहेति । मया समर्पितानीति शेषः । सह एकदैव ॥ २८ ॥ पुष्पमित्यादिश्लोकद्वयमेकं वाक्यम् । अत्र पुष्पके मया समर्पिते पुष्पक इत्यर्थः । सार्धं सर्वसम्पद्भिरिति शेषः ।

न भ्राजति न भासते ॥ ३१ ॥ वदतीति सतिसप्तमी । पिधाय आच्छाद्य ॥ ३२॥ इवशब्दोऽवधारणे । यद्वा अस्वस्थामिव भूताविद्यामिवेत्यर्थः ॥ ३३ ॥ अलमिति । वैदेहि ! धर्मलोपकृतेन व्रीडेनालम्,व्रीडा मा भूदित्यर्थः। कुत इत्यत्राह—आर्ष इति । यो दैवनिष्यन्दः दैवकृतसम्बन्धः त्वामाभिगमिष्यति अयं सम्बन्धः आर्षः ऋषिप्रोक्तः, न त्वधर्म्य इत्यर्थः । अत्र नारदः—" परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ताः स्वयम्भुवा । पुनर्भूस्त्रिविधा तासां स्वैरिणी तु

वदनं पद्मसङ्काशं विमलं चारुदर्शनम् । शोकार्तं तु वरारोहे न भ्राजति वरानने ॥ ३१ ॥ एवं वदति तस्मिन् सा वस्त्रान्तेन वराङ्गना । पिधायेन्दुनिभं सीता मुखमश्रूण्यवर्तयत् ॥ ३२ ॥ ध्यायन्तीं तामिवास्वस्थां दीनां चिन्ता हतप्रभाम् । उवाच वचनं पापो रावणो राक्षसेश्वरः ॥ ३३ ॥ अलं व्रीडेन वैदेहि धर्मलोपकृतेन च । आर्षोयं दैव निष्यन्दो यस्त्वामभिगमिष्यति ॥३४॥ एतौ पादौ मया स्निग्धौ शिरोभिः परिपीडितौ । प्रसादं कुरु मे क्षिप्रं वश्यो दासोऽहमस्मि ते॥३५॥ इमाः शून्या मया वाचः शुष्यमाणेन भाषिताः । न चापि रावणः काञ्चिन्मूर्ध्ना स्त्रीं प्रणमेत ह३६

चतुर्विधा । कन्या वाक्षतयोनिर्वा पाणिग्रहणदूषिता । पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा । देशधर्मानपेक्ष्य स्त्री गुरुभिर्या प्रदीयते । उत्पन्नसाहसा न्यस्मै सा द्वितीया प्रकीर्त्यते । मृते भर्तरि तु प्राप्ता देवरादीनपास्य या । उपगच्छेत्परं कामात् सा तृतीया प्रकीर्तिता । प्राप्ता देशाद्धनक्रीता क्षुत्पि पासातुरा च या । तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता ॥" इति ॥ ३४ ॥ एताविति । तवेति शेषः ॥३५॥ इमा इति । शुष्यमाणेन अनङ्गेन तप्य मानेन मया । इमाः शून्याः नीचाः वाचो भाषिताः । कुतः ? यस्माद्रावणः स्त्रीं न प्रणमेत न प्रणमेत् । अदृष्टपूर्वत्वात् स्वस्यापि नीचोक्तिर्विस्मयावहा

विहरस्व ॥ २९-३३ ॥ अलं व्रीडेनेति । वैदेहि ! धर्मलोपकृतेन अलम्, व्रीडा मा भूदित्यर्थः । कुत इति चेत् ? दैवनिष्यन्दः दैवानिपातः यः सम्बन्धः त्वामभि गमिष्यति सोऽयं दैवनिष्यन्दः आवयोर्निष्कारणः सम्बन्ध इति यावत् । आर्षः ऋषिदृष्टः, अनादिसिद्ध इति यावत् । वस्तुतस्तु—अलं व्रीडेनेति । भृत्यलक्षण विषये व्रीडा नोचितेत्यर्थः । कुतो वा धर्मलोपो भविष्यति । कुतः ? यः दैवनिष्यन्दः आवयोर्दैवेन सम्पादितदासदास्यवद्भावः अयं सम्बन्धः आर्षः अनादिसिद्धः, स एव त्वामभिगमिष्यति न तु नवीनः । अतो व्रीडा मा भूदित्यर्थः ॥ ३४ ॥ ३५ ॥ इमा इति । शून्याः नीचाः । शुष्यमाणेन तप्यमानेन । भाषिताःउक्ताः ॥३६॥

जातेति भावः ॥ २६ ॥ एवमिति । मन्यते अमन्यत ॥२७॥ इति श्रीगो० श्रीरामा० रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः॥५५॥

तथैतच्छ्रुत्वा परुषं भाषमाणायाः सीतायाः पुनरशोकवनिका[illegible] अन्तरतो मध्ये, पतिव्रतायाः परपुरुषं प्रत्यभिमुखतया भाषणायोगात् ॥ १ ॥ धर्मसेतुः धर्मस्य सेतुरिव मर्यादास्थापकः इत्यर्थः । अचलः स्थिरः । परिज्ञातः प्रसिद्धः, कथमेतादृशकुलं प्राप्ताऽतिचरेदिति भावः ।



एवमुक्त्वा दशग्रीवो मैथिलीं जनकात्मजाम् । कृतान्तवशमापन्नो ममेयमिति मन्यते ॥२७॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

सा तथोक्ता तु वैदेही निर्भया शोककर्शिता । तृणमन्तरतः कृत्वा रावणं प्रत्यभाषत ॥ १ ॥ राजा दशरथो नाम धर्मसेतुरिवाचलः । सत्यसन्धः परिज्ञातो यस्य पुत्रः स राघवः ॥ २ ॥ रामो नाम स धर्मात्मा त्रिषु लोकेषु विश्रुतः । दीर्घबाहुर्विशालाक्षो दैवतं हि पतिर्मम ॥ ३ ॥ इक्ष्वाकूणां कुले जातः सिंहस्कन्धो महाद्युतिः । लक्ष्मणेन सह भ्रात्रा यस्ते प्राणान् हरिष्यति ॥ ४ ॥ प्रत्यक्षं यद्यहं तस्य त्वया स्यां धर्षिता बलात् । शयिता त्वं हतः सङ्ख्ये जनस्थाने यथा खरः ॥ ५ ॥ य एते राक्षसाः प्रोक्ता घोररूपा महाबलाः । राघवे निर्विषाः सर्वे सुपर्णे पन्नगा यथा ॥ ६ ॥

॥ २ ॥ सः दशरथपुत्रः दैवतं सर्वलोकानामिति शेषः । य एवम्भूतः स मे पतिरिति योजना । कथमेवम्भूतभर्तृकाऽतिचरेदिति भावः ॥ ३ ॥ इक्ष्वाकूणामिति । त्वद्वधार्थमेव भ्रात्रा सह इक्ष्वाकुकुलेऽवतीर्ण इति भावः । तथाच न मे त्वत्तो भयमिति भावः ॥ ४ ॥ तर्हि कथमिदानीं स तूष्णीं स्थित इत्याशङ्क्याह–प्रत्यक्षमिति । प्रत्यक्षं यथा तथा यदि धर्षिता स्यां तदा त्वं हतः सन् युद्धे शयिता म्रियेथा इत्यर्थः ॥ ५ ॥ य इति । निर्विषाः निर्वीर्या इति

..त्रमिति । मन्यते अमंस्त । अत्र रसाभासः ॥२७॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां पञ्चपञ्चाशः सर्गः ॥५५॥

..ति । अन्तरतः कृत्वा मध्ये कृत्वा, साक्षात्पापात्मकपरपुरुषसम्भाषणदोषपरिहारायेति भावः ॥ १ ॥ परिज्ञातः प्रसिद्धः । धर्मसेतुः धर्मस्य सेतुरिव मर्यादा..तिष्ठापकः ॥ २–४ ॥ तस्य रामस्य ॥ ५–७ ॥

स०–तृणमन्तरतः मध्ये कृत्वा प्रत्यभाषतेत्यर्थः । अनेन रावणस्यामाष्यत्वं द्योत्यते । वायसासुरशासनं तृणेनैव मम पत्या कृतम्, दशानन! तवापि दशा तथा स्यादिति द्योतयितुमिति वा ॥ १ ॥

राक्षसपक्षं ॥ ६ ॥ तस्येति । विधमिष्यन्ति ध्मास्यन्ति निपातयिष्यन्तीत्यर्थः । गङ्गेत्यविभक्तिकनिर्देशः, गङ्गाया ऊर्मय इत्यर्थः ॥ ७ ॥ त्वं सुरासुरैर्यद्यप्यवध्यः तथापि तस्य रामस्य सुमहद्वैरं कोपमुत्पाद्य स्थितस्त्वं जीवन् सन् तच्छरपातान्न मोक्ष्यसे न मुक्तो भविष्यसीत्यर्थः ॥ ८ ॥ सः

तस्य ज्याविप्रमुक्तास्ते शराः काञ्चनभूषणाः । शरीरं विधमिष्यन्ति गङ्गा कूलमिवोर्मयः ॥ ७ ॥ असुरैर्वा सुरैर्वा त्वं यद्यवध्योऽसि रावण । उत्पाद्य सुमहद्वैरं जीवंस्तस्य न मोक्ष्यसे ॥ ८ ॥ स ते जीवितशेषस्य राघवोन्तकरो बली । पशोर्यूपगतस्येव जीवितं तव दुर्लभम् ॥ ९ ॥ यदि पश्येत् स रामस्त्वां रोषदीप्तेन चक्षुषा । रक्षस्त्वमद्य निर्दग्धो गच्छेः सद्यः पराभवम् ॥ १० ॥ यश्चन्द्रं नभसो भूमौ पातयेन्नाशयेत वा । सागरं शोषयेद्वापि स सीतां मोचयेदिह ॥ ११ ॥ गतायुस्त्वं गतश्रीको गतसत्त्वो गतेन्द्रियः । लङ्का वैधव्यसंयुक्ता त्वत्कृतेन भविष्यति ॥ १२ ॥ न ते पापमिदं कर्म सुखोदर्कं भविष्यति । याऽहं नीता विनाभावं पतिपार्श्वात्त्वया वने ॥ १३ ॥

राघवः । ते जीवितशेषस्य अन्तकरः नाशं कर्तुं समर्थः । तस्मात् यूपगतस्य पशोरिव रामापराधिनस्तव जीवितं दुर्लभम् ॥ ९ ॥ यदीति । हे रक्षः ! सः रामः त्वां रोषदीप्तेन चक्षुषा यदि पश्येत् तदा त्वं निर्दग्धः सन् सद्यः पराभवं गच्छेः, निर्दग्धशब्देनातीव पीडितत्वमुच्यते ॥१०॥ नभसः आकाशात् पातयेत् नाशयेत वा अदर्शनं प्रापयेद्वा सागरमपि शोषयेत् । सः सीतां मोचयेदिति किमुत ॥ ११ ॥ त्वत्कृतेन परदाराभिमर्शनरूपपापेन त्वम् आयुरादिहीनो भविष्यसि, लङ्का च वैधव्यसंयुक्ता अनाथत्वयुक्ता भविष्यति । " आयुर्बलं यशो लक्ष्मीः परदाराभिमर्शनात् । सद्य एव विनश्यन्ति " इति स्मृतेः ॥ १२ ॥ न त इति । याऽहं वने पतिपार्श्वात् विनाभावं वियोगं नीता । तस्यां मयि ते इदं पापं कर्म सुखोदर्कं न भविष्यति,



वैरं क्रोधमुत्पाद्य तत्सन्निधिं प्राप्तः ततो जीवन्न मोक्ष्यसे, तस्य मनुष्यत्वादिति भावः ॥ ८ ॥ तदेवाह–अन्तकरः नाशकरः ॥ ९ ॥ रक्षः इति रावणसम्बोधनम् । हे रावण ! रामस्त्वां रोषदीप्तेन चक्षुषा यदि पश्येत तदैव निर्दग्धो भवेः । तदा न पश्येदनिर्दग्धस्सन् पराभवं पलायनं गच्छेः ॥ १० ॥ ११ ॥ गतायुरिति । त्वत्कृतेन त्वन्नाशनिमित्तेन । यद्वा त्वत्कृतेनापराधेनेति शेषः ॥ १२ ॥ याहमित्यादि सार्धश्लोकद्वयमेकं वाक्यम् । याहं नीता यद्वहं नीता अविवक्षितलिङ्ग

किन्तु दुःखोदर्कमेव भविष्यतीत्यर्थः ॥ १२ ॥ दैवतसंयुक्तः दैवबलसंयुक्तः । दीनस्तापसो रामो मां किं करिष्यतीति पूर्वं रावणेनोक्तस्य परिहारोऽयम् ॥ १४ ॥ स त इति । दर्पं मदम् । उत्सेकम् उल्लङ्घ्यकार्यकारित्वम् । [illegible] गुणत्वात् ॥ १५ ॥ लोकन्यायमाह—यदेति । कालचोदितो दैवकृतः विनाशो यदा दृश्यते सन्निहितो भवतीत्यर्थः । तदा कार्ये कृत्ये प्रमाद्यन्ति वैपरीत्यं प्राप्नुवन्ति ॥ १६ ॥ उक्तं लोकन्यायं प्रकृते



स हि दैवतसंयुक्तो मम भर्ता महाद्युतिः । निर्भयो वीर्यमाश्रित्य शून्ये वसति दण्डके ॥ १४ ॥ स ते दर्पं बलं वीर्यमुत्सेकं च तथाविधम् । अपनेष्यति गात्रेभ्यः शरवर्षेण संयुगे ॥१५॥ यदा विनाशो भूतानां दृश्यते कालचोदितः । तदा कार्ये प्रमाद्यन्ति नराः कालवशं गताः॥१६॥ मां प्रधृष्य स ते कालः प्राप्तोऽयं राक्षसाधम । आत्मनो राक्षसानां च वधायान्तःपुरस्य च ॥१७॥ न शक्या यज्ञमध्यस्था वेदिः स्रुग्भाण्डमण्डिता । द्विजातिमन्त्रपूता च चण्डालेनावमर्दितुम् ॥ १८ ॥ तथाहं धर्मनित्यस्य धर्मपत्नी पतिव्रता । त्वया स्प्रष्टुं न शक्यास्मि राक्षसाधम पापिना ॥१९॥

योजयति—मामिति । मां प्रधृष्य स्थितस्य तव । कालोऽप्ययमेव वर्तमान एव, नतु चिरायेत्यर्थः। आत्मनो राक्षसानामन्तःपुरस्य च वधाय प्राप्तः ॥१७॥ न शक्येत्यादिश्लोकद्वयमेकान्वयम् । यज्ञो यज्ञपुरुषः तन्मध्यस्था गार्हपत्याहवनीयमध्यगता । वेदिः ऐष्टिकी महावेदिः । स्रुग्भाण्डमण्डिता स्रुगाद्युपकरणालंकृता । द्विजादिमन्त्रैः उद्धननादिमन्त्रैः । पूता शुद्धा यथा चण्डालेनावमर्दितुं पादेनाक्रमितुं न शक्या नार्हा तथाहं धर्मनित्यस्य यज्ञस्थानीयस्य धर्मपत्नी पतिव्रता त्वया स्प्रष्टुं न शक्या ॥ १८ ॥ १९ ॥

विशेषं हेतुमात्रे पर्यवसायि एतत्पदं तथा हेतुनेति केचित्पूरयन्ति । यद्वा याहं त्वया पतिपार्श्वाद्विनाभावं वियोगं नीता, तस्या मम भर्ता रामो दैवतसंयुक्तो दैवानुकूल्यवानित्यर्थः । देवरसंयुक्त इति पाठे—देवरसंयुक्तः लक्ष्मणसंयुक्तः । सः खरादिहन्ता ॥ १३ ॥ १४ ॥ दर्पं मदम् उत्सेकमुल्लङ्घ्य कार्यकारित्वम् अतिशयं वा । बलं देहशक्तिम् चतुरङ्गबलं वा ॥ १५ ॥ १६ ॥ मां प्रधृष्येति, स्थितस्येति शेषः । स ते कालः अयमेव वर्तमान एव न तु चिरायेत्यर्थः ॥१७॥ टीका—स्रुग्भाण्डं स्रुगादियागोपकरणम् । अवमर्दितुं स्प्रष्टुम् ॥ १८ ॥ १९ ॥

नित्यदा नित्यम् । नित्यशब्दस्य सर्वेकादिष्वपाठेप्यार्षो दाप्रत्ययः । सा प्रसिद्धा । तृणषण्डस्थं जलजनडादितृणकदम्बमध्यस्थम् । मद्गुकं जलकाकम् ॥२०॥ निस्संज्ञं निश्चेष्टम् । बन्ध बधान । खादयस्व भक्षय ॥ न त्वित्यर्धमेकं वाक्यम् । आत्मनः उपक्रोशमपवादं पृथिव्यां दातुं न शक्ष्यामि ॥ २१ ॥ एवमुक्त्वेति । तत्र तद्विषये क्रियाभेदात् पुनर्मैथिलीशब्दप्रयोगः ॥२२॥ सीताया इति । रोमहर्षणं क्रोधावहत्वाद्रोमाञ्चकरम् । भयसन्दर्शनं भयोत्पाद

क्रीडन्ती राजहंसेन पद्मषण्डेषु नित्यदा । हंसी सा तृणषण्डस्थं कथं पश्येत मद्गुकम् ॥ २० ॥ इदं शरीरं निस्संज्ञं बन्ध वा खादयस्व वा । नेदं शरीरं रक्ष्यं मे जीवितं वापि राक्षस ॥ न तु शक्ष्याम्युपक्रोशं पृथिव्यां दातु मात्मनः ॥ २१ ॥ एवमुक्त्वा तु वैदेही क्रोधात् सुपरुषं वचः । रावणं मैथिली तत्र पुनर्नोवाच किञ्चन ॥ २२ ॥ सीताया वचनं श्रुत्वा परुषं रोमहर्षणम् । प्रत्युवाच ततः सीतां भयसन्दर्शनं वचः ॥ २३ ॥ शृणु मैथिलि मद्वाक्यं मासान् द्वादश भामिनि । कालेनानेन नाभ्येषि यदि मां चारुहासिनि ॥२४॥ ततस्त्वां प्रातराशार्थं सूदाश्छेत्स्यन्ति लेशशः ॥ २५ ॥ इत्युक्त्वा परुषं वाक्यं रावणः शत्रुरावणः । राक्षसीश्च ततः क्रुद्ध इदं वचनमब्रवीत् ॥ २६ ॥

कम् ॥२३॥ शृण्वित्यादिसार्धश्लोक एकान्वयः। द्वादश मासानित्यत्यन्तसंयोगे द्वितीया । प्रतीक्ष इति शेषः । प्रातराशार्थं प्रातर्भक्षणार्थम् । सूदाः पाचकाः । "सूदा औदनिका गुणाः" इत्यमरः । अत्र सीताहरणं चैत्रमास इत्यवगन्तव्यम्, संवत्सरान्ते रावणवधकरणात् । तेन त्रीन् वर्षान् पञ्चवट्यां रामः स्थित इति गम्यते । हेमन्तवर्णनं तु रामतपोविशेषज्ञापनाय न शुर्पणखागमनज्ञापनाय ॥ २४ ॥ २५ ॥ शत्रून् रावयति क्रोशयतीति शत्रुरावणः ॥ २६ ॥

क्रीडन्तीति । मद्गुकं जलवायसम् ॥ २० ॥ उपक्रोशम् अपवादम् ॥ २१–२३ ॥ शृण्विति । द्वादशमासान्, प्रतीक्ष इति शेषः ॥ २४ ॥ प्रातराशार्थं प्रातःकालाशनार्थम् । सूदाः पाचकाः । वस्तुतस्तु–हे वैदेहि ! मे वाक्यं शृणु, तत्किम् ? द्वादशमासान द्वादशमासपर्यन्तं प्रतीक्ष इति शेषः । अनेन कालेन नाभ्येषि द्वादशमासपर्यन्तं भृत्यानुग्रहार्थमत्र स्थातुं नाङ्गीकरोषि यदीत्यर्थः । ततस्त्वामुद्दिश्य प्रातराशार्थं प्रातः प्रातरेव आशार्थम् आशासु स्थितगृध्राद्यर्थं सूदाः मां छेत्स्यन्ति, मदाज्ञयैवेति शेषः । देवि ! मां भृत्यत्वेन नाङ्गीकरोषि यदि अहमितः परं जीवितुं नेच्छामि । मां शस्त्रैश्छित्वा काकगृध्राद्यर्थं प्रयच्छतेति ममाज्ञयैव सूदास्तथा करिष्यन्तीति भावः ॥ २५ ॥ शत्रून् रावयति क्रोशयतीति शत्रुरावणः ॥ २६ ॥

स०–मासान् द्वादश इति । पद्मपुराणे–" दशमासात्परं सीते यदि मां न भजिष्यसि । तदा हन्मि " इत्येव कथनात् द्वादशमासानन्तर्यस्यापि दशमासानन्तर्यत्सम्भवान्न विरोधः । यद्वा दश च मासौ च तेषां समाहारः । दशपदार्थे मासपदार्थस्य बुद्ध्या विवेकेनान्वयः । अतो द्वादशमाससम्पत्तिरिति न विरोधः ॥ २४ ॥

शीघ्रमिति । विनेष्यध्वं विनयध्वम् । व्यत्ययेन स्यादेशः ॥२७॥ कृतप्राञ्जलयः रावणवाक्याङ्गीकारे कृतप्रकृष्टाञ्जलयः ॥२८॥ चरणोत्कर्षैः चरणाघातैः मेदिनीं भुवम् । दारयन्निव भिन्दन्निव । प्रचाल्य [illegible] ॥ २९ ॥ [illegible] युष्माभिः परिवारिता युष्माभिः रक्ष्यताम् ॥ ३० ॥ तत्रेति । अत्यन्तभयेन प्राणवियोगो माभूदिति पुनः सान्त्वैरित्युक्तम् ॥ ३१ ॥ प्रतिगृह्य आदाय ॥ ३२ ॥ सर्वस्मिन्नपि काले फलानि येषां ते सर्वकालफलाः तैः ।



शीघ्रमेव हि राक्षस्यो विकृता घोरदर्शनाः । दर्पमस्या विनेष्यध्वं मांसशोणितभोजनाः ॥२७॥ वचनादेव तास्तस्य सुघोरा राक्षसीगणाः । कृतप्राञ्जलयो भूत्वा मैथिलीं पर्यवारयन् ॥ २८ ॥ स ताः प्रोवाच राजा तु रावणो घोर दर्शनः । प्रचाल्य चरणोत्कर्षैर्दारयन्निव मेदिनीम् ॥ २९ ॥ अशोकवनिकामध्ये मैथिली नीयतामियम् । तत्रेयं रक्ष्यतां गूढं युष्माभिः परिवारिता ॥ ३० ॥ तत्रैवान्तर्जनैर्घोरैः पुनः सान्त्वैश्च मैथिलीम् । आनयध्वं वशं सर्वा वन्यां गजवधूमिव ॥ ३१ ॥ इति प्रतिसमादिष्टा राक्षस्यो रावणेन ताः । अशोकवनिकां जग्मुर्मैथिलीं प्रतिगृह्य तु ॥ ३२ ॥ सर्वकामफलैर्वृक्षैर्नानापुष्पफलैर्वृताम् । सर्वकालमदैश्चापि द्विजैः समुपसेविताम् ॥ ३३ ॥ सा तु शोक परीताङ्गी मैथिली जनकात्मजा । राक्षसीवशमापन्ना व्याघ्रीणां हरिणी यथा ॥ ३४ ॥ शोकेन महता ग्रस्ता मैथिली जनकात्मजा । न शर्म लभते भीरुः पाशबद्धा मृगी यथा ॥ ३५ ॥

एवमुत्तरत्रापि जग्मुरिति पूर्वेणान्वयः ॥ ३३ ॥ सा त्विति । राक्षसीत्यविभक्तिकनिर्देशः । राक्षसीनामित्यर्थः ॥ ३४ ॥ लभते अलभत ॥ ३५ ॥

शीघ्रमिति । अस्याः दर्पं विनेष्यध्वम् विनयत । वस्तुतस्तु—हे राक्षस्यः! मांसशोणितभोजनाः घोरदर्शनाश्च यूयं शीघ्रमविकृताः अविरूपा भूत्वा दर्पं विना अस्याः समीपे इष्यध्वं सेवार्थं स्थातुमिच्छतेत्यर्थः । छादेशाभावादिरार्षः ॥ २७ ॥ २८ ॥ स इति । प्रचाल्य उत्थाय । चरणोत्कर्षैः चरणघातैः ॥ २९ ॥ ३० ॥ तत्रैनामिति पाठः । एनां सीताम् । वस्तुतस्तु—घोरैस्तर्जनैः, विनेति शेषः । पुनः सान्त्वैरेव वशमानयध्वम् ॥ ३१ ॥ ३२ ॥ सर्वकामफलैरिति पाठः । काम्यन्त इति कामाः अभिलषितपदार्थाः त एव फलानि येषां ते तथोक्ताः । सर्वकालमदैः सर्वकालेष्वेकाकारमदैः । द्विजैः पक्षिभिः ॥३३॥ सा तु शोकपरीताङ्गीत्यादीनि देव्याः दुःखेन प्रलापवत् प्रतीयमानानि वाक्यानि लोकरीतिमनुसृत्योक्तानीति द्रष्टव्यानि ॥ ३४–३५ ॥

तत्र अशोकवनिकायाम् । दयितं प्राणवल्लभम् । ननु सीता लक्ष्म्या अवतार इति सिद्धम्, वक्ष्यति च "सीता लक्ष्मीर्भवान् विष्णुः" इति । विष्णुपुराणे चोक्तम्—"राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि" इति । एवम्भूतां सीतां समरसीमनि जनितमूर्च्छालक्षणं लक्ष्मणमप्युद्धर्तुमक्षमर्थौ रावणः कथं बलात्करोति स्म ? वक्ष्यति हि "हिमवान् मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः । शक्यं भुजाभ्यामुद्धर्तुं न सङ्ख्ये भरतानुजः ॥" इति । उच्यते—वेदवती

न विन्दते तत्र तु शर्म मैथिली विरूपनेत्राभिरतीव तर्जिता । पतिं स्मरन्ती दयितं च दैवतं विचेतनाऽभूद्भयशोकपीडिता ॥ ३६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे षट्पञ्चाशः सर्गः * ॥५६॥

राक्षसं मृगरूपेण चरन्तं कामरूपिणम् । निहत्य रामो मारीचं तूर्णं पथि निवर्तते ॥ १ ॥
तस्य संत्वरमाणस्य द्रष्टुकामस्य मैथिलीम् । क्रूरस्वनोऽथ गोमायुर्विननादास्य पृष्ठतः ॥ २ ॥

रूपपूर्वजन्मनि देवी तथा सङ्कल्पितवती । उक्तं ह्युत्तरकाण्डे—"यस्मात्तु धर्षिता चाहं त्वया पापात्मना वने । तस्मात्तव वधार्थं वै उत्पत्स्येऽहं महीतले ॥" इति । देवकार्यनिर्वाहाय स्वयमेव स्वधर्षणमङ्गीचकार, प्रजायां कूपपतितायां यथा माता स्वयं तदुपरि पतति वात्सल्यातिशयेन तथा रावणबन्दीकृतदेवस्त्रीरक्षणाय स्वयं तत्र स्वगमनमनुमतवती । वक्ष्यति सुन्दरकाण्डे—"नापहर्तुमहं शक्या तस्य रामस्य धीमतः । विधिस्तव वधार्थाय विहितो नात्र संशयः॥" इति । तर्हि सीता प्रलापादिकं किमर्थं कृतवतीति चेत् शृणु, पतिविरहे पतिव्रतयैवं वर्तितव्यमिति लोकहितप्रवर्तनाय प्रलापादिकमकरोदिति ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

एवमियता ग्रन्थसन्दर्भेण सीताहरणवृत्तान्तमुपवर्ण्य अथ रामस्य मृगानुसरणकथाशेषं दर्शयितुमारभते—राक्षसमित्यादि । निवर्तते न्यवर्तत ॥ १ ॥ तस्येति । द्रष्टुकामस्य तदर्थं सत्वरमाणस्येति सम्बन्धः । गोमायुः क्रोष्टा । एकस्य गोमायोः पृष्ठतः क्रूरस्वरकरणं दुर्निमित्तमिति भावः ॥ २ ॥

॥३६॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां षट्पञ्चाशः सर्गः ॥५६॥ अथ कविः रामवृत्तान्तमाह—राक्षसमिति ॥१॥ तस्येति सप्तम्यर्थे षष्ठी । अस्य रामस्य । गोमायुः शिवा ॥ २ ॥ ३ ॥

* सर्गश्रवणफलम् । स्कान्दे—" सीतारावणसंवादं राक्षसीनां च तर्जनम् । सीताप्रत्युक्तिकथनं ये शृण्वन्ति नरोत्तमाः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥" इति ॥

भयङ्करत्वेन रोमहर्षणमित्युच्यते। पूर्वमेव मारीचस्वरेण परिशङ्कितः सञ्जातशङ्कः स रामः तस्य गोमायोः स्वरम् आज्ञाय श्रुत्वा चिन्तयामास॥३॥ चिन्तामेवाह—अशुभमित्यादिना। गोमायुः यथा येन प्रकारेण वाश्यते शब्दायते तेन प्रकारेणाशुभं मन्ये। अपिः सम्भावनायाम् ॥४॥ मारीचेनेत्यादिश्लोकद्वयमेकान्वयम्। मृगरूपेण मारीचेन मामकं मदीयं स्वरं विज्ञाय मामकं स्वरम् आलम्ब्य अनुसृत्य। विक्रुष्टं हा सीते लक्ष्मणेत्याह्वानेनोद्घोपितं स्वरम्, लक्ष्मणः

स तस्य स्वरमाज्ञाय दारुण रोमहर्षणम्। चिन्तयामास गोमायोः स्वरेण परिशङ्कितः ॥ ३ ॥ अशुभं बत मन्येऽहं गोमायुर्वाश्यते यथा। स्वस्ति स्यादपि वैदेह्या राक्षसैर्भक्षणं विना ॥ ४ ॥ मारीचेन तु विज्ञाय स्वरमालम्ब्य मामकम्। विक्रुष्टं मृगरूपेण लक्ष्मणः शृणुयाद्यदि ॥ ५ ॥ स सौमित्रिः स्वरं श्रुत्वा तां च हित्वा च मैथिलीम्। तयैव प्रहितः क्षिप्रं मत्सकाशमिहैष्यति ॥ ६ ॥ राक्षसैः सहितैर्नूनं सीताया ईप्सितो वधः। काञ्चनश्च मृगो भूत्वा व्यपनीयाश्रमात्तु माम् ॥७॥ दूरं नीत्वा तु मारीचो राक्षसोऽभूच्छराहतः। हा लक्ष्मण हतोऽस्मीति यद्वाक्यं व्याजहार च ॥ ८ ॥ अपि स्वस्ति भवेत्ताभ्यां रहिताभ्यां महावने। जनस्थाननिमित्तं हि कृतवैरोऽस्मि राक्षसैः ॥ ९ ॥

शृणुयाद्यदि तदा स सौमित्रिर्मामकं स्वरं श्रुत्वा तं स्वरं श्रुतवत्या तया सीतया च प्रेपितः सन् इह देशे मत्सकाशं मत्समीपम् एष्यति ॥५॥६॥ राक्षसैरित्यादिश्लोकद्वयमेकान्वयम्। यद्यस्मान्मारीचः काञ्चनः मृगो भूत्वा मामाश्रमाद्व्यपनीय दूरं नीत्वा मया हतः सन् राक्षसोऽभूत् लक्ष्मण हतोऽस्मीति वाक्यं व्याजहार च तस्मात्कचित्सहितै राक्षसैः सीताया वधः ईप्सितः। नूनम् ॥ ७ ॥ ८ ॥ जनस्थाननिमित्तं जनस्थानवासनिमित्तेन। निमित्तकारण

यथा भाव्यशुभं तथा वाशत इत्यर्थः। वैदेह्या वैदेह्यै। राक्षसैर्भक्षणं विना तत्कर्तृकभक्षणाभावरूपं स्वस्ति स्यादित्यर्थः। अपिः कामप्रवेदने ॥ ४ ॥ मारीचेनेत्यादि श्लोकद्वयमेकं वाक्यम्। मारीचः मामकं स्वरमालक्ष्य अवधार्य, तेनावधारणेन अनुकृतं विज्ञाय मारीचेनानुक्रुष्टं सीते लक्ष्मणेति ह्याह्वानेन उद्घोषितं स्वरं लक्ष्मणः शृणुयाद्यदि श्रुत्वा तयैव प्रहितः क्षिप्रमिहैष्यतीति सम्बन्धः ॥ ५ ॥ ६॥ राक्षसैरित्यादिश्लोकद्वयमेकं वाक्यम्। यद्यस्मान्मारीचः काञ्चनमृगो भूत्वा मामाश्रमाद्व्यपनीय आकृष्य दूरं नीत्वा हा लक्ष्मण हतोस्मीति वाक्यं व्याजहार। यस्माच्छराहतः शरेण हतस्सन् राक्षसोऽभूत् तस्मात् सहितैः कुत्रचिन्मिलितैः राक्षसैर्नूनं सीताया वध ईप्सित इत्यन्वयः ॥ ७ ॥ ८ ॥ अपीति। रहिताभ्यां मया वियुक्ताभ्याम् ॥ ९ ॥ १० ॥

हेतूनां सर्वासामिष्टिः ॥ ९ ॥ निमित्तानीत्यादिश्लोकद्वयमेकान्वयम् । गोमायुनिःस्वनं श्रुत्वा मृगरूपेण रक्षसाऽऽत्मनः अपनयनात् आश्रमादपकर्षणाच्च परिशङ्कितः सन् जनस्थानम् आजगाम ॥ १० ॥ ११ ॥ सव्यं कृत्वा अप्रदक्षिणं कृत्वा आसेदुः ॥ १२ ॥ त्वरितः मानसिकत्वरासहितः । जवेन कायिकत्वरया ॥१३॥ सीतां लक्ष्मणं च चिन्तयन्नेवाजगाम । तत इत्यर्धमेकं वाक्यम् ॥१४॥ ततो दर्शनानन्तरम् । अविदूरे समीपे समीयाय सङ्गतः ।

निमित्तानि च घोराणि दृश्यन्तेऽद्य बहूनि च । इत्येवं चिन्तयन् रामः श्रुत्वा गोमायुनिःस्वनम् ॥ १० ॥ [ निवर्तमानस्त्वरितो जगामाश्रममात्मवान् । ] आत्मनश्चापनयनान्मृगरूपेण रक्षसा । आजगाम जनस्थानं राघवः परिशङ्कितः ॥११॥ तं दीनमनसो दीनमासेदुर्मृगपक्षिणः । सव्यं कृत्वा महात्मानं घोरांश्च ससृजुः स्वरान् ॥१२॥ तानि दृष्ट्वा निमित्तानि महाघोराणि राघवः । न्यवर्ततात्थ त्वरितो जवेनाश्रममात्मनः ॥ १३॥ स तु सीतां वरारोहां लक्ष्मणं च महाबलम् । आजगाम जनस्थानं चिन्तयन्नेव राघवः ॥ ततो लक्ष्मणमायान्तं ददर्श विगतप्रभम् ॥१४॥ ततोऽविदूरे रामेण समीयाय स लक्ष्मणः । विषण्णः सुविषण्णेन दुःखितो दुःखभागिना ॥ १५ ॥ सञ्जगर्हेऽथ तं भ्राता ज्येष्ठो लक्ष्मणमागतम् । विहाय सीतां विजने वने राक्षससेविते ॥ १६ ॥ गृहीत्वा च करं सव्यं लक्ष्मणं रघुनन्दनः । उवाच मधुरोदर्कमिदं परुषमार्तिमत् ॥ १७ ॥

दुःखभागिनेत्यत्र "संपृच–" इत्यादिसूत्रेण घिनुण् प्रत्ययः ॥१५॥ सञ्जगर्हे इति । विजने स्वजनरहिते ॥ १६ ॥ गृहीत्वेति । सव्यं करं गृहीत्वा लक्ष्मणमुवाच । कथं, परुषम् अथ मधुरोदर्कं मधुरोत्तरम् । आर्तिमत् आर्तियुक्तम् । सर्वमिदं क्रियाविशेषणम् । अहो इत्यादि परुषम्, लक्ष्मणेत्यादि मधुरम् ॥१७॥

अपनयनादपसारणात् परिशङ्कित इति सम्बन्धः ॥ ११ ॥ सव्यं कृत्वा अप्रदक्षिणं कृत्वा ॥ १२ ॥ त्वरितः मानसिकत्वरायुक्तः । जवेन शरीरजवेन आत्मनः आश्रमं प्रतिन्यवर्ततेति सम्बन्धः ॥ १३ ॥ सीतां लक्ष्मणं च, द्रष्टुमिति शेषः ॥ १४ ॥ समीयाय सङ्गतोऽभूत् ॥ १५ ॥ वने सीतां विहायागतं लक्ष्मणं सञ्जगर्हे इति सम्बन्धः ॥ १६ ॥ तमेवार्थं प्रपञ्चयति–गृहीत्वेत्यादि । मधुरोदर्कं सान्त्वोत्तरभागं परुषमार्तिमत् आदौ परुषम् अहो लक्ष्मणे

ते त्वया इत्युवाचेत्यन्वयः ॥ १८ ॥ नेति । केनापि दैवेन विनष्टा वा, राक्षसैर्भक्षिता वा ॥ १९ ॥ उक्तार्थे हेतुमाह–अशुभानीत्यर्धेन । भूयिष्ठं बहुलं यथा तथा ॥२०॥ अपीति । अपिः प्रश्ने । सामग्र्यम् अक्षतत्वं क्षेममिति यावत् । हे लक्ष्मणेति सम्बन्धः ॥२१॥ सामग्र्यप्राप्तिसंशये कारणमाह–यथेति ।

अहो लक्ष्मण गर्ह्यं ते कृतं यस्त्वं विहाय ताम् । सीतामिहागतः सौम्य कच्चित् स्वस्ति भवेदिह ॥ १८ ॥ न मेऽस्ति संशयो वीर सर्वथा जनकात्मजा । विनष्टा भक्षिता वापि राक्षसैर्वनचारिभिः ॥ १९ ॥ अशुभान्येव भूयिष्ठं यथा प्रादुर्भवन्ति मे ॥ २० ॥ अपि लक्ष्मण सीतायाः सामग्र्यं प्राप्नुयावहे । जीवन्त्याः पुरुषव्याघ्र सुताया जनकस्य वै ॥ २१ ॥ यथा वै मृगसङ्घाश्च गोमायुश्चैव भैरवम् । वाश्यन्ते शकुनाश्चापि प्रदीप्तामभितो दिशम् ॥ २२ ॥ अपि स्वस्ति भवेत्तस्या राजपुत्र्या महाबल ॥ २३ ॥ इदं हि रक्षो मृगसन्निकाशं प्रलोभ्य मां दूरमनुप्रयान्तम् । हतं कथञ्चिन्महता श्रमेण स राक्षसोऽभून्म्रियमाण एव ॥ २४ ॥

प्रदीप्तां दिशं सूर्याधिष्ठिता तत्पार्श्वद्वयदिशौ च प्रदीप्ता तामभिमुखं वाश्यन्ते नदन्ति । तेन वायसादिपक्षिणां शृगालादीनां कृष्णसारादिमृगाणां च सूर्याधिष्ठितदिशि कूजनं दुःखसूचकमित्युक्तम् ॥ २२ ॥ चिन्तातिशयेन पुनरप्याह–अपि स्वस्तीति । अर्धमेकान्वयम् ॥ २३ ॥ लक्ष्मणाय दर्शयति–इदमिति । मृगसन्निकाशं पूर्वं मृगवद्भातम् । इदं रक्षः महता श्रमेण उपलक्षितं मां प्रलोभ्य कथंचिद्धतम् । कथंचिदित्यनेन चिरं लक्ष्यवधाप्राप्तिर्द्योत्यते । मृगत्वं कुतो गतमित्यत्राह–स इति । सः म्रियमाणः सन् राक्षस एवाभूदित्यर्थः ॥ २४ ॥

त्यादिपरुषम् अपि लक्ष्मणेत्यादि मधुरम् । यद्वा शब्दतो माधुर्योत्तरम् । अर्थतः परुषम् । इदं वक्ष्यमाणम् । आर्तवद् आर्तार्हमुवाच ॥ १७–२० ॥ अपीति । सामग्र्यं क्षेमम् अनपहरणरूपम् ॥ २१ ॥ सामग्र्यावाप्तिसंशये कारणमाह–यथेति, सार्धश्लोकमेकं वाक्यम् । प्रदीप्तामभितो दिशम्–सूर्याधिष्ठिता दिक् प्रदीप्ता तां दिशम् अभिमुखं वाश्यन्ते नदन्ति, अतः राजपुत्र्याः स्वस्ति भवेदपि किमिति सम्बन्धः ॥२२॥ इदमिति । मृगसन्निकाशं रक्षः कथं जातमत आह–राक्षसोऽभून्म्रियमाण

स०–कथञ्चित् महता श्रमेणेति लोकानुकरणम् ॥ २४ ॥

निमित्तान्तरेणापि सीताहानिमनुमिनोति—मनश्चेति । इह सीतावियोगविषये । अप्रहृष्टं विकारं स्फुरणम् । नास्तीति, आश्रम इति शेषः ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥ अथ सीताप्राप्तिसन्देहकृतशोकप्रलापोऽष्टपञ्चाशे—स दृष्ट्वेत्यादि । शून्ये वने वैदेहीं विना आगतं वैदेहीं विसृज्यागतं लक्ष्मणं पर्यपृच्छत पर्यपृच्छत् ॥ १ ॥ प्रश्नस्वरूपमाह—

मनश्च मे दीनमिहाप्रहृष्टं चक्षुश्च सव्यं कुरुते विकारम् । असंशयं लक्ष्मण नास्ति सीता हृता मृता वा पथि वर्तते वा ॥ २५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

स दृष्ट्वा लक्ष्मणं दीनं शून्ये दशरथात्मजः । पर्यपृच्छत धर्मात्मा वैदेहीमागतं विना ॥ १ ॥ प्रस्थितं दण्डकारण्यं या मामनुजगाम ह । क सा लक्ष्मण वैदेही यां हित्वा त्वमिहागतः ॥ २ ॥ राज्यभ्रष्टस्य दीनस्य दण्डकान् परिधावतः । क सा दुःखसहाया मे वैदेही तनुमध्यमा ॥३॥ यां विना नोत्सहे वीर मुहूर्तमपि जीवितुम् । क सा प्राणसहाया मे सीता सुरसुतोपमा ॥ ४ ॥ पतित्वममराणां वा पृथिव्याश्चापि लक्ष्मण । तां विना तपनीयाभां नेच्छेयं जनकात्मजाम् ॥ ५ ॥ कच्चिज्जीवति वैदेही प्राणैः प्रियतरा मम । कच्चित्प्रव्राजनं सौम्य न मे मिथ्या भविष्यति ॥ ६ ॥ सीतानिमित्तं सौमित्रे मृते मयि गते त्वयि । कच्चित् सकामा सुखिता कैकेयी सा भविष्यति ॥ ७ ॥

प्रस्थितमित्यादिना । दण्डकारण्यं प्रति प्रस्थितम् ॥ २ ॥ दुःखसहाया समानदुःखेत्यर्थः ॥ ३ ॥ सुरसुता सुरस्त्री ॥ ४ ॥ तपनीयं स्वर्णम् । इच्छेयम् इच्छामि ॥ ५ ॥ प्राणैः प्राणेभ्यः । प्रव्राजनं चतुर्दशवर्षवनवासः । मिथ्या असत्यं न भविष्यतीति कच्चित् । चतुर्दशवर्षसमाप्तावेव सीतावियोगजं जीववियोगं किं प्राप्स्यामीत्यर्थः ॥६॥ सीतानिमित्तम् सीताविनाशनिमित्तम् । त्वयि गते, अयोध्यामिति शेषः । सकामेत्यनेन रामस्य हृदये कैकेयी स्व

पवेति ॥ २३ ॥२४॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां सप्तपञ्चाशः सर्गः ॥५७॥ स इति । शून्ये विजने देशे वैदेहीं विनागतं लक्ष्मणं पर्यपृच्छदिति सम्बन्धः ॥ १–३ ॥ प्राणसहाया या प्राणानां सहाया तां विना प्राणा असहायाः कथं तिष्ठन्तीत्यर्थः ॥ ४॥५॥ कच्चिदिति । प्राणैः प्राणेभ्यः । प्रव्राजनं चतुर्दशवर्षवनवासव्रतधारणं मिथ्या वितथं भविष्यति न कच्चित् वनवासं यथोक्तं न समापयिष्यामि कच्चित्, सीतापाये असमाप्त एव वनवासे ममापायो भविष्यतीत्यर्थः ॥ ६ ॥ सीतानिमित्तमिति । सीतानिमित्तं सीताविनाशनिमित्तम् । त्वयि गते, अयोध्यामिति शेषः ॥ ७ ॥

विनाशार्थमेव वनं प्रेषितवतीति सदा वर्तते । तादि[illegible] स्वीकृतम् ॥ ७ ॥ तपस्विनी शोच्या ॥ ८ ॥ वृत्ता परेता । सुवृत्ता स्वाचारा ॥ ९ ॥ प्रहसिता प्रहसितमुखी ॥ १० ॥ यदि जीवति तदा ब्रूहि वद । वैदेही जीवति वा न वा । न वेत्यस्य विवरणं त्वयीति । प्रमत्ते अनवहिते ॥ ११ ॥ दुःखं पश्यतीति दुःखदर्शिनी सा न भवतीत्यदुःखदर्शिनी । शोचति अशोचत् । वनवास इति शेषः । दुर्मनाः



सपुत्रराज्यां सिद्धार्थां मृतपुत्रा तपस्विनी । उपस्थास्यति कौसल्या कच्चित् सौम्य न केकयीम् ॥८॥ यदि जीवति वैदेही गमिष्याम्याश्रमं पुनः । सुवृत्ता यदि वृत्ता सा प्राणांस्त्यक्ष्यामि लक्ष्मण ॥ ९ ॥ यदि मामाश्रमगतं वैदेही नाभिभाषते । पुनः प्रहसिता सीता विनशिष्यामि लक्ष्मण ॥ १० ॥ ब्रूहि लक्ष्मण वैदेही यदि जीवति वा न वा । त्वयि प्रमत्ते रक्षोभिर्भक्षिता वा तपस्विनी ॥ ११ ॥ सुकुमारी च बाला च नित्यं चादुःखदर्शिनी । मद्वियोगेन वैदेही व्यक्तं शोचति दुर्मनाः ॥ १२ ॥ सर्वथा रक्षसा तेन जिह्मेन सुदुरात्मना । वदता लक्ष्मणेत्युच्चैस्तवापि जनितं भयम् ॥ १३ ॥ श्रुतस्तु शङ्के वैदेह्या स स्वरः सदृशो मम । त्रस्तया प्रेषितस्त्वं च द्रष्टुं मां शीघ्रमागतः ॥ १४ ॥ सर्वथा तु कृतं कष्टं सीतामुत्सृजता वने । प्रतिकर्तुं नृशंसानां रक्षसां दत्तमन्तरम् ॥ १५ ॥ दुःखिताः खरघातेन राक्षसाः पिशिताशनाः । तैः सीता निहता घोरैर्भविष्यति न संशयः ॥ १६ ॥

चिन्ताकुलेति यावत् ॥ १२ ॥ जिह्मेन कपटेन । तवापि अतिशूरस्यापि ॥ १३ ॥ मम स्वरेण यस्मादागतः तस्मात् सः स्वरो वैदेह्या श्रुतः त्रस्तया तया त्वं प्रेषितश्चेति शङ्के इति योजना ॥ १४ ॥ कष्टमेवाह—प्रतीति । प्रतिकर्तुं मत्कृतापकारस्य प्रत्यपकारं कर्तुम् । अन्तरम् अवकाशो दत्तः ॥१५॥ प्रतीकारमेवाह—दुःखिता इति । पिशिताशनत्वं निहनने हेतुः ॥ १६ ॥

सपुत्रेति । सौम्येन विनयेन ॥ ८ ॥ सुवृत्ता सद्वृत्ता सीता वृत्ता मृता यदीत्यर्थः ॥ ९ ॥ यदीति । प्रहसिता प्रकृष्टं सुन्दरं हसितं यस्याः सा ॥ १० ॥ प्रमत्ते अनुचितकारिणि ॥ ११ ॥ १२ ॥ तवापि शूरस्यापि ॥ १३ ॥ स्वरश्च सदृशो ममेति । मम स्वरेणेति शेषः । अत एव त्रस्तयेति ॥ १४ ॥ प्रतिकर्तुं मत्कृतापकारस्य

अहोऽस्मिन्निति सन्धिरार्षः । ईदृशं व्यसनमज्जनं प्राप्तव्यमिति शङ्के ॥ १७ ॥ वरारोहामिति चिन्ताहेतुसौन्दर्यातिशयोक्तिः ॥ १८ ॥ विगर्हमाण इत्यादिश्लोकद्वयमेकान्वयम् । वक्ष्यमाणानेकसर्गार्थसङ्ग्रहरूपम् । श्रमात् बहुदूरधावनात् । प्रतिश्रयं स्वाश्रमप्रदेशम् । शून्यं सीतारहितं प्रतिश्रयमित्यनुषज्यते । अनन्तरं स्वाश्रमं संप्रविगाह्य प्रविश्य तमपि शून्यं समीक्ष्येति शेषः । तदनु सीतायाः कांश्चिद्विहारदेशाननुसृत्य विचित्य तानपि

अहोऽस्मिन् व्यसने मग्नः सर्वथा शत्रुसूदन । किंन्विदानीं करिष्यामि शङ्के प्राप्तव्यमीदृशम् ॥१७॥ इति सीतां वरारोहां चिन्तयन्नेव राघवः । आजगाम जनस्थानं त्वरया सहलक्ष्मणः ॥१८॥ विगर्हमाणोऽनुजमार्तरूपं क्षुधा श्रमाच्चैव पिपासया च । विनिःश्वसन् शुष्कमुखो विवर्णः प्रतिश्रयं प्राप्य समीक्ष्य शून्यम् ॥ १९ ॥ स्वमाश्रमं सम्प्रविगाह्य वीरो विहारदेशाननुसृत्य कांश्चित् । एतत्तदित्येव निवासभूमौ प्रहृष्टरोमा व्यथितो बभूव ॥ २० ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये अष्टपञ्चाशः सर्गः ॥ ५८ ॥

अथाश्रमादुपावृत्तमन्तरा रघुनन्दनः । परिपप्रच्छ सौमित्रिं रामो दुःखार्दितं पुनः ॥ १ ॥

तमुवाच किमर्थं त्वमागतोऽपास्य मैथिलीम् । यदा सा तव विश्वासाद्वने विरहिता मया ॥ २ ॥

शून्यान् समीक्ष्य तत्रत्यनिवासभूमौ क्रीडास्थाने । तदेतदिति । तादृशमेतादृशमिति विहारविशेषं स्मृत्वा प्रहृष्टरोमा सन् शोकेन व्यथितो बभूव ॥ १९ ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने अष्टपञ्चाशः सर्गः ॥ ५८ ॥

एवं सङ्क्षेपेणोक्तमर्थं पुनर्विस्तरेण वक्तुमुपक्रमते—अथेत्यादि । अन्तरा मध्येमार्गम् । दुःखार्दितमिति क्रियाविशेषणम् । मारीचवधस्थानात् स्वाश्रमं गच्छन् मध्ये पप्रच्छेत्यर्थः ॥ १ ॥ तमिति । तं सौमित्रिमुवाच । तत्र प्रश्नप्रकारमाह—किमर्थमिति । यदा तु त्वया रक्षितायाः का हानिरिति विश्वासात्

प्रत्यपकारं कर्तुं रक्षसामन्तरमवकाशः दत्तः ॥ १५-१८ ॥ विगर्हमाणोऽनुजमित्यादिश्लोकद्वयेन वक्ष्यमाणसर्गस्य सङ्ग्रहः । प्रतिश्रयमाश्रमम् । एतत्तदिति । एतत्तदावयोर्निवासस्थानमित्येव व्यथितो बभूव ॥ १९ ॥ २० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायामष्टपञ्चाशः सर्गः ॥ ५८ ॥ अथ विस्तरेण मार्गमध्यकृतां कथामाह—अथेति । उपावृत्तं सीतावचनात्स्वसमीपं प्राप्तम् । अन्तरा मध्येमार्गम् ॥ १ ॥ प्रष्टव्यवक्तव्ययोः प्रष्टव्यं तावदाह किमर्थमिति । यदा यस्मात् सा सीता तव विश्वासात् त्वया रक्षितायास्सीतायाः का हानिरिति विश्वासादित्यर्थः । मया विरहिता कृता तदा

मया विरहिता कृता तदा तामपास्य विहाय किमर्थमागतः ॥ २ ॥ उवाचेत्युक्तार्थमाह—दृष्ट्वेति । त्वां दृष्ट्वा पापं सीतानिष्टरूपं शङ्कमानम्, मे मम मनः व्यथितमिति यत् तत्सत्यम् ॥ ३ ॥ एतच्च [illegible] इत्याह—स्फुरत इति । बाहुः सव्य इत्यनुपज्यते । हृदयं वक्षोमध्यम् ॥ ४ ॥ भूयो दुःखेन बहुतरदुःखेन । समाविष्टः पूर्वं सीतावचनादुःखाक्रान्तः सम्प्रति रामेण त्वया अकृत्यं कृतमित्युच्यमानत्वात् भूयोदुःखसमाविष्टत्वम् ॥ ५ ॥



दृष्ट्वैवाभ्यागतं त्वां मे मैथिलीं त्यज्य लक्ष्मण। शङ्कमानं महत्पापं यत्सत्यं व्यथितं मनः ॥ ३ ॥ स्फुरते नयनं सव्यं बाहुश्च हृदयं च मे । दृष्ट्वा लक्ष्मण दूरे त्वां सीताविरहितं पथि ॥ ४ ॥ एवमुक्तस्तु सौमित्रिर्लक्ष्मणः शुभलक्षणः । भूयो दुःखसमाविष्टो दुःखितं राममब्रवीत् ॥ ५ ॥ न स्वयं कामकारेण तां त्यक्त्वाहमिहागतः । प्रचोदितस्तयैवोग्रैस्त्वत्सकाशमिहागतः ॥ ६ ॥ आर्येणेव पराक्रुष्टं हा सीते लक्ष्मणेति च । परित्राहीति यद्वाक्यं मैथिल्यास्तच्छ्रुतिं गतम् ॥ ७ ॥ सा तमार्तस्वरं श्रुत्वा तव स्नेहेन मैथिली । गच्छ गच्छेति मामाह रुदन्ती भयविह्वला ॥ ८ ॥ प्रचोद्यमानेन मया गच्छेति बहुशस्तया। प्रत्युक्ता मैथिली वाक्यमिदं त्वत्प्रत्ययान्वितम् ॥ ९ ॥

कामकारेण स्वेच्छाकरणेन । स्वयमित्यस्य विवरणमिदम् । उग्रैः वचोभिरित्यर्थसिद्धम् ॥ ६ ॥ आर्येणेति । हा सीते लक्ष्मणेति परित्राहीति च यद् वाक्यम् आर्येणेव भवतेव केनचित्पराक्रुष्टम् आह्वानपुरःसरं घोषितं तत् मैथिल्याः श्रुतिं गतम् ॥ ७ ॥ तव स्नेहेन त्वयि स्नेहेन ॥ ८ ॥ त्वत्प्रत्ययान्वितं

तामपास्य विहाय किमर्थमागत इति सम्बन्धः ॥ २ ॥ वक्तव्यमाह—दृष्ट्वेति । हे लक्ष्मण ! मैथिलीं त्यज्य अभ्यागतं त्वां दृष्ट्वा । महत्पापं सीतापहरणरूपं शङ्कमानं राक्षसाः सीतामपहृतवन्त इति शङ्काग्रस्तमित्यर्थः । मे मनो व्यथितमिति यत् तत्सत्यमिति योजना । यद्वा त्वां दृष्ट्वा यन्महत्पापं सीतापहरणभक्षणादिरूपं शङ्कमानं मनो व्यथितं तत्पापं सत्यमेवेत्यन्वयः ॥ ३॥ ननु मदागमनमात्रेण कुतः पापशङ्का ? तत्राह स्फुरत इति । सव्यं वामम् ॥४॥ एवमिति । भूय इति । पूर्वं सीतावचनाद्दुःखाक्रान्तः इदानीमकृत्यं कृतमित्येतद्रूपरामवचनाद्भूयोदुःखसमाविष्ट इत्यर्थः ॥ ५ ॥ नेति । कामकारेण स्वेच्छया, उग्रैरवाच्यैर्वाक्यैरिति शेषः ॥ ६ ॥ तथा प्रचोदने कारणमाह—आर्येणेति । अत्र चकारो भिन्नक्रमः । हा सीते लक्ष्मणेति परित्राहीति च यद्वाक्यम् आर्येण त्वया पराक्रुष्टमिवात्यन्तमुद्घोषितमिव, तत्तु मैथिल्याः श्रुतिं गतमिति सम्बन्धः ॥ ७ ॥८॥ प्रचोद्यमानेनेति । त्वत्प्रत्ययः दुराधर्षत्वदैन्यराहित्यविषयं प्रामाणिकं ज्ञानं तेनान्वितं वाक्यं मया मैथिली प्रत्युक्तेति

स०—कामकारेण स्वेच्छया अहं तां त्यक्त्वा इह नागतः, किन्तु तया सीतया उग्रैः प्रचोदितः इह त्वत्सकाशमागतः । प्रलापकाल इति त्रिवारमहमित्युक्तिः द्विवारमिहोक्तिश्च सम्भवतः त्रिवारं कामकारेण नेति वक्तुं त्रिरहमित्युक्तिः “ जहिहि जहाहि जहीहि राममार्याम् ॥ ” इतिवत् ॥ ६ ॥

त्वयि प्रत्ययः दुराधर्षत्वदैन्यराहित्यविषयो विश्वासः तेनान्वितम् । इदं वक्ष्यमाणलक्षणं वाक्यं मैथिली प्रत्युक्ता ॥ ९ ॥ निर्वृता सुखिता भव । नास्त्येतत् रामवाक्यत्वेन यच्छङ्कितम् एतत् रामवाक्यं न भवति ॥ १० ॥ रामवचनत्वेऽनुपपत्तिमाह—विगर्हितमिति । विगर्हितं दैन्यावहत्वात् महाकुलप्रसूतस्य निन्दितम् । नीचम् आपत्काले स्त्रीसमाह्वानस्य क्षुद्रकृतत्वात् कुत्सितं वचनं कथमभिधास्यति यस्त्रिदशानपि त्रायेत् कथं सः

न तत्पश्याम्यहं रक्षो यदस्य भयमावहेत् । निर्वृता भव नास्त्येतत्केनाप्येवमुदाहृतम् ॥ १० ॥ विगर्हितं च नीचं च कथमार्योऽभिधास्यति । त्राहीति वचनं सीते यस्त्रायेत्त्रिदशानपि ॥ ११ ॥ किंनिमित्तं तु केनापि भ्रातुरालम्ब्य मे स्वरम् । राक्षसेनेरितं वाक्यं त्राहि त्राहीति शोभने ॥ १२ ॥ विस्वरं व्याहृतं वाक्यं लक्ष्मण त्राहि मामिति । न भवत्या व्यथा कार्या कुनारीजनसेविता ॥ १३ ॥ अलं वैक्लव्यमालम्ब्य स्वस्था भव निरुत्सुका । न सोऽस्ति त्रिषु लोकेषु पुमान्वै राघवं रणे । जातो वा जायमानो वा संयुगे यः पराजयेत् ॥ १४ ॥ न जय्यो राघवो युद्धे देवैः शक्रपुरोगमैः ॥ १५ ॥ एवमुक्ता तु वैदेही परिमोहितचेतना । उवाचाश्रूणि मुञ्चन्ती दारुणं मामिदं वचः ॥ १६ ॥ भावो मयि तवात्यर्थं पाप एव निवेशितः । विनष्टे भ्रातरि प्राप्तुं न च त्वं मामवाप्स्यसि ॥ १७ ॥

सीते त्राहीति वचनमभिधास्यति ॥ ११ ॥ किं निमित्तं किमपि प्रयोजनमुद्दिश्य केनापि दुर्जनेन राक्षसेन मे भ्रातुः स्वरं स्वरसदृशं स्वरम् आलम्ब्य अवलम्ब्य त्राहि त्राहीति वाक्यम् ईरितम् उक्तम् । शोभने इति सीतासम्बोधनम् ॥ १२ ॥ विस्वरमिति स्वरप्रकारविशेषशोधनेऽपि नायं रामस्वर इत्यर्थः ॥ १३ ॥ अलमित्यादिसार्धश्लोक एकान्वयः । वैक्लव्यं विक्लवत्वम् । "विक्लवो विह्वलस्तथा" इति हलायुधः । निरुत्सुका मत्प्रस्था पनोद्योगरहिता भव । नास्ति न विद्यते ॥ १४ ॥ नत्यर्धमेकं वाक्यम् । पूर्वमेकैकेनाजय्यत्वमुक्तं सम्प्रति मिलितैरिति विशेषः ॥ १५ ॥ एवमिति । परिमोहितचेतना कलुषितबुद्धिः ॥ १६ ॥ भाव इति । भ्रातरि विनष्टे सति मां प्राप्तुं पापः कुत्सितः भावः मयि तव त्वया निवेशित एव । त्वं च मां

सम्बन्धः ॥ ९ ॥ तस्यैव विवरणम्—न तदित्यादिना । निर्वृता दुःखरहिता भव । कुतः ? एतद्वाक्यम् अस्य रामस्य न भवतीत्यर्थः ॥ १० ॥ कुतः ? नीचं तुच्छम् । विगर्हितं निन्दितम् । दैन्यावहत्वादिति भावः ॥ ११ ॥ किंनिमित्तं किमपि निमित्तं यस्मिन् कर्मणि तत् ॥ १२ ॥ १३ ॥ अलमिति । वैक्लव्यं विह्वलत्वम् । निरुत्सुका मदीयमत्स्थापनोद्योगरहिता ॥ १४–१६ ॥ भाव इति । विनष्टे [illegible] मयि । तव त्वया निवेशितः ॥ १७ ॥

नाशयिष्यसि ॥ १७ ॥ सङ्केतादिति । भरतेन कृतात्सङ्केतात् कुतश्चिदवकाशे राममवश्यं हनिष्यामीत्येवंरूपात् रामं समनुगच्छसि न तु रामभक्त्या । अत्र हेतुमाह–क्रोशन्तमिति । क्रोशन्तमेनं यथा नाभ्यवपद्यसे न प्राप्नोषि तेन प्रकारेण सङ्केतादनुगच्छसीत्यन्वयः ॥ १८ ॥ अन्तरप्रेप्सुः रन्ध्रान्वेषी । येन प्रकारेण एवमनुगच्छसि तथा नाभिपद्यसे इत्यन्वयः ॥ १९ ॥ क्रोधादिति काकाक्षिन्यायेनोभयत्रान्वेति ॥ २० ॥ तां विना त्वमागत इति यत्

सङ्केताद्भरतेन त्वं रामं समनुगच्छसि । क्रोशन्तं हि यथात्यर्थं नैवमभ्यवपद्यसे ॥ १८ ॥ रिपुः प्रच्छन्नचारी त्वं मदर्थमनुगच्छसि । राघवस्यान्तरप्रेप्सुस्तथैनं नाभिपद्यसे ॥ १९ ॥ एवमुक्तो हि वैदेह्या संरब्धो रक्तलोचनः । क्रोधात्प्रस्फुरमाणोष्ठ आश्रमादभिनिर्गतः ॥ २० ॥ एवं ब्रुवाणं सौमित्रिं रामः सन्तापमोहितः । अब्रवीद्दुष्कृतं सौम्य तां विना यत्त्वमागतः ॥ २१ ॥ जानन्नपि समर्थं मां रक्षसां विनिवारणे । अनेन क्रोधवाक्येन मैथिल्या निस्सृतो भवान् ॥ २२ ॥ नहि ते परितुष्यामि त्यक्त्वा यद्यासि मैथिलीम् । क्रुद्धायाः परुषं श्रुत्वा स्त्रियाश्च त्वमिहागतः ॥ २३ ॥ सर्वथा त्वपनीतं ते सीतया यत्प्रचोदितः । क्रोधस्य वशमापन्नो नाकरोः शासनं मम ॥ २४ ॥

तद्दुष्कृतम् अकृत्यम् ॥ २१ ॥ उक्तं विवृणोति–जानन्नपीति ॥ २२ ॥ अनेनेत्युक्तं विशदयति–नहीति । स्त्रिया इत्यविवेकसम्भावनासूचनम् । स्त्रीष्वपि विशेषज्ञापनाय क्रुद्धाया इति । यस्त्वं क्रुद्धायाः स्त्रियाः परुषं श्रुत्वा इहागतः तस्य ते मैथिलीं त्यक्त्वायासीति यत्तत्कर्म न परितुष्यामि ॥ २३ ॥ नाकरोः शासनं ममेति यत्तत्सर्वथा ते अपनीतम् अपनयः । क्रुद्धया स्त्रिया यत्किंचित्परुषमुक्तं चेत्तत्सोढव्यम् । कथंचिदसहने बहिरागत्यान्तर्हितो भूत्वा

सङ्केतादिति । सङ्केतात् श्रीरामद्रोहविषयात् राममनुगच्छसि, नतु रामभक्त्या । कुतः ? क्रोशन्तमिति ॥ १८ ॥ अन्तरप्रेप्सुः रन्ध्रान्वेषी ॥ १९ ॥ २० ॥ एवमिति । सीताप्रेरणया मयि राक्षससंहारसामर्थ्याभावमाशङ्क्यागतोसि वा, सीतापरुषवाक्यैस्तव लोकगर्ह्य(र्हि)ता भविष्यतीति वा परुषवाक्यासहनमात्रेण वा समागतोसीति त्रेधा विकल्प्य आद्यं पराकरोति–दुष्कृतमित्यादि ॥ २१ ॥ जानन्निति । रक्षसां वारणे संहार इत्यर्थः। समर्थं मां जानन्नपि त्वं तां सीतां विना इहागत इति यत् तद् दुष्कृतं कष्टं कृतमिति यत्तच्छब्दाध्याहारेण योजना । द्वितीयं पराचष्टे–अनेनेति । अनेन क्रोधवाक्येन भावो मयि निवेशितः सङ्केताद्भरतेनेत्यादिमैथिल्याः क्रोधवाक्येन गर्हितो भवानित्यत्र काकुः ॥ २२ ॥ तृतीयं परिहरति–नहि ते इति । ते त्वत्तः न परितुष्यामि । यतः यद्यस्मात् क्रुद्धायाः स्त्रियाः । परुषं परुषवाक्यं श्रुत्वा आगत इति सम्बन्धः । क्रुद्धाः स्त्रियः किं किं न वदन्ति अतस्तादृशीं त्यक्त्वा आगतोसीति कृत्वा त्वां न परितुष्यामीति भावः ॥ २३ ॥ सर्वथेति ।

तत्परिपालनं कर्तव्यम् । केवलमागमनं तवापनीतिरेवेति भावः ॥ २४ ॥ अपनीतिमेवोपपादयितुं स्वरान्यथाभावं दर्शयति–असावित्यादिश्लोकत्रयेण ॥२५॥ विकृष्येति । परिधाय सन्धाय । सलीलबाणेन लीलार्थबाणेन । मार्गीं मृगसम्बन्धिनीम् । त्यज्य त्यक्त्वा ।सविक्लवस्वरः सदीनस्वरः । केयूरधरः अङ्गदधरः । आसीदित्यनेन दूरातीतत्वं गम्यते॥२६॥ शरेति । तदेति छेदः । सुदूरे संश्रवः श्रवणं यस्य तम् । मम स्वरं मत्स्वरसदृशं स्वरम् आलम्ब्य

असौ हि राक्षसः शेते शरेणाभिहतो मया । मृगरूपेण येनाहमाश्रमादपवाहितः ॥ २५ ॥ विकृष्य चापं परिधाय सायकं सलीलबाणेन च ताडितो मया । मार्गीं तनुं त्यज्य सविक्लवस्वरो बभूव केयूरधरः स राक्षसः ॥ २६ ॥ शराहतेनैव तदार्तया गिरा स्वरं ममालम्ब्य सुदूरसंश्रवम् । उदाहृतं तद्वचनं सुदारुणं त्वमागतो येन विहाय मैथिलीम् ॥ २७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे एकोनषष्टितमः सर्गः * ॥५९॥

भृशमाव्रजमानस्य तस्याधो वामलोचनम् । प्रास्फुरच्चास्खलद्रामो वेपथुश्चाप्यजायत ॥ १ ॥

आश्रित्य आर्तया गिरा दीनया वाचा शराहतेन तेनैव तदा तस्मिन् काले सुदारुणं तद्वचनमुदाहृतम् । येन वचनेन श्रुतेन मैथिलीं विहाय आगतोसि । अस्मिन् सर्गे सप्तविंशतिश्लोकाः ॥ २७ ॥ इति श्रीगोवि० श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥ एवमियता प्रबन्धेन सम्भोगशृङ्गारो वर्णितः । अथ विप्रलम्भशृङ्गारमासुवेलारोहणाद्वर्णयितुमारभते । तदङ्गत्वेन रसान्तराणि दर्शितानि । "संयुक्तयोस्तु सम्भोगो विप्रलम्भो वियुक्तयोः ।" इति लक्षणात् । तत्र "अभिलाषमनःसङ्गौ सङ्कल्पो गुणसंस्तुतिः प्रद्वेषः । तापाभिमतत्यागावुन्मादो मूर्च्छना च मृतिः" इत्युक्तविप्रलम्भावस्थास्वष्टमीं दशामाह सर्गत्रयेण–भृशमित्यादि । आव्रजमानस्य आगच्छतः । अधो वामलोचनं वामनेत्रस्याधःपक्ष्म

अविनीतमविनयम् । ते त्वया कृतमिति शेषः । सीतयेति यतस्सीतया प्रचोदितस्सन् क्रोधस्य वशमागम्य मम शासनमाज्ञां नाकरोः नाकार्षीः ॥ २४ ॥ मारीचवृत्तान्तमाह–असाविति । अपवाहितः नीतः ॥ २५ ॥ सायकं परिधाय सन्धाय । मार्गीम् मृगसम्बन्धिनीम् ॥ २६ ॥ सुदूरसुश्रवं सुदूरेपि सुश्रवः श्रवणं यस्य तं स्वरम्, मत्स्वरसदृशस्वरमित्यर्थः ॥२७॥ इति श्रीमहे० श्रीरामायणतत्त्वदीपिकाख्यायाम् आरण्यकाण्डव्याख्यायाम् एकोनषष्टितमः सर्गः ॥५९॥ भृशमिति । अधो



* सर्गश्रवणफलम् । स्कान्दे–"सीतादुक्तिकथनं लक्ष्मणस्य मुखाच्छ्रुतम् । श्रुत्वा न जातु पीडा स्यादभिशापकृते महत् ॥" इति ।

प्रास्फुरत् । " अधो वामदृशः स्फूर्तौ बहुनिधो भवेत् पुमान् ।" इति लक्षणात् । स्वयमस्खलत् " प्रयाणकाले स्खलनं करोतीप्यस्य भञ्जनम् ।" इति प्रसिद्धिः । वेपथुः कम्पः ॥ १ ॥ अशुभानि अशुभसूचकानि ॥ २ ॥ लालसः साभिलाषः । आवसथं गृहम् । " स्थानावसथवास्तु च " इत्यमरः ॥३॥ उद्भ्रमन्निति श्लोकद्वयमेकान्वयम् । वेगेन उद्भ्रमन्निव उत्पतन्निव । विक्षिपन् हस्तादीनवयवानितस्ततः क्षिपन् ॥ ४ ॥ ५ ॥ रुदन्तमिति श्लोकद्वयमेका

उपालक्ष्य निमित्तानि सोऽशुभानि मुहुर्मुहुः । अपि क्षेमं नु सीताया इति वै व्याजहार च ॥२॥ त्वरमाणो जगामाथ सीतादर्शनलालसः । शून्यमावसथं दृष्ट्वा बभूवोद्विग्नमानसः ॥ ३ ॥ उद्भ्रमन्निव वेगेन विक्षिपन् रघुनन्दनः । तत्र तत्रोटजस्थानमभिवीक्ष्य समन्ततः ॥ ४ ॥ ददर्श पर्णशालां च रहितां सीतया तदा । श्रिया विरहितां ध्वस्तां हेमन्ते पद्मिनीमिव ॥५॥ रुदन्तमिव वृक्षैश्च म्लानपुष्पमृगद्विजम् । श्रिया विहीनं विध्वस्तं संत्यक्तवनदेवतम् ॥६॥ विप्रकीर्णाजिनकुशं विप्रविद्धबृसीकटम् । दृष्ट्वा शून्यं निजस्थानं विललाप पुनः पुनः ॥ ७ ॥ हृता मृता वा नष्टा वा भक्षिता वा भविष्यति । निलीनाप्यथवा भीरुरथवा वनमाश्रिता ॥ ८ ॥ गता विचेतुं पुष्पाणि फलान्यपि च वा पुनः । अथवा पद्मिनीं याता जलार्थं वा नदीं गता ॥ ९ ॥

न्वयम् । वृक्षैः रुदन्तमिव स्थितं हीनस्वरभङ्गवत्त्वादिति भावः । पुष्पाणि सीतया पूर्वमपचितानि द्विजाः पक्षिणः म्लानाः पुष्पमृगद्विजा यस्मिन् तत् तथोक्तम् । श्रिया कान्त्या विहीनं विध्वस्तं विशीर्णम् रावणसन्यासिनं दत्तत्वेन विप्रकीर्णाः अयथास्थानस्थिताः अजिनकुशाः यस्मिन् तत्तथा । ग्रहणकाले सीताया अवलम्बितत्वेन विप्रविद्धबृसीकटं विपर्यस्तमुन्यासनास्तरणम् । शून्यं सीतारहितम् । विललाप पर्यदेवयत् ॥ ६ ॥ ७ ॥ विलाप माह द्वाभ्याम्—हृतेत्यादि । हृता अपहृता । नष्टा यादृच्छिकमदर्शनं गता । निलीना विनोदाय व्यवहिता अथवा निर्जनतया भीरुः सती गूढं वन

अनन्तरम् । आव्रजमानस्य आगच्छतः । वामलोचनस्याधः पक्ष्म स्वयमस्खलत् ॥ १ ॥ अशुभानि अशुभसूचकानि ॥ २ ॥ ३ ॥ उद्भ्रमन्निव उत्पतन्निव । विक्षिपन् हस्ताद्यवयवानितस्ततः क्षिपन् ॥ ४–७ ॥ हृतेति । नष्टा अदर्शनं गता । निलीना विनोदाय व्यवहिता । नदीं गतेत्यत्र इतिशब्दमध्याहृत्य

मागता । पद्मिनीं याता । स्नानार्थमिति शेषः । नदीं गतेत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ ८ ॥ ९ ॥ शोकाद्धेतोः उन्मत्त इव लक्ष्यते । अलक्ष्यतेत्यर्थः ॥१०॥ नदात् पश्चिमप्रवाहात् । शोकपङ्कार्णवाप्लुतो बभूव ॥११॥ अथ शोकमोहातिरेकेणाचेतनेषु चेतनबुद्ध्या तान् प्रतिभाषते—अपीत्यादिना । कदम्बानि कदम्बपुष्पाणि प्रियाणि यस्याः सा कदम्बप्रिया । प्रिया मत्कान्ता । अपिः प्रश्ने । एवं प्रश्नेऽपि प्रतिवचनादानमनादरकृतमिति मत्वाह—कदम्बेति । शुभाननामिति चिह्नकीर्तनम् । कदम्बप्रियेत्यनेन दर्शनसम्भावनोच्यते ॥ १२ ॥ स्निग्धपल्लवसङ्काशेत्यनेन कोमलाङ्गीत्वमुक्तम् । बिल्वोपम

यत्नान्मृगयमाणस्तु नाससाद वने प्रियाम् । शोकरक्तेक्षणः शोकादुन्मत्त इव लक्ष्यते ॥ १० ॥
वृक्षाद्वृक्षं प्रधावन् स गिरेश्चाद्रिं नदान्नदीम् । बभूव विलपन् रामः शोकपङ्कार्णवाप्लुतः ॥ ११ ॥
अपि कच्चित्त्वया दृष्टा सा कदम्बप्रिया प्रिया । कदम्ब यदि जानीषे शंस सीतां शुभाननाम् ॥ १२ ॥
स्निग्धपल्लवसङ्काशा पीतकौशेयवासिनी । शंसस्व यदि वा दृष्टा बिल्व बिल्वोपमस्तनी ॥ १३ ॥

यत्नान्मृगयमाणो नाससादेति सम्बन्धः कार्यः । शोकरक्तेक्षणः शोकादुन्मत्त इव लक्ष्यते । उन्मत्त इवेत्यत्र इवशब्दोऽस्मिन् श्लोके सर्वत्र सम्बन्धनीयः । शोकरक्तेक्षण इव शोकादुन्मत्त इव शोकात्प्रधावन्निव विलपन्निव शोकार्णवपरिप्लुत इव लक्ष्यत इति सम्बन्धः । वस्तुतस्तु—न तादृशः श्रीराम इत्यर्थः । अत एव सीतादीन् प्रति विलापादिकं सीतान्वेषणसमये सीतामुद्दिश्य वृक्षमृगादीन् प्रति प्रश्नादिकं सर्वं श्रीरामेण लोकशिक्षार्थं नटनं कृतमिति प्रदर्शयितुमेव सर्वज्ञेन भगवता श्रीवाल्मीकिना उद्भ्रमन्निव उन्मत्त इवेत्यादौ तत्र तत्र इवशब्दः प्रयुक्तः । अत एव श्रीशुकोप्याह—" रक्षोऽधमेन वृकवद्विपिनेऽसमक्षं वैदेहराजदुहितर्यपयापितायाम् । भ्रात्रा वने कृपणवत्प्रियया वियुक्तः स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचार ॥ मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः । कुतोऽन्यथा स्यू रमतः स्व आत्मन् सीताकृतानि व्यसनानीश्वरस्य ॥ न वै न आत्मात्मवतामधीश्वरस्सक्तस्त्रिलोक्यां भगवान् वासुदेवः । न स्त्रीकृतं कश्मलमश्नुवीत न लक्ष्मणं चापि विहातुमिच्छति ॥ " इति । तथा च स्कान्दे उमासंहितायां देवान् प्रति विष्णुवचनम्—" अहं दाशरथिर्भूत्वा हन्मि रावणमाहवे । श्रीमद्रामावतारेऽस्मिन् अज्ञवत्क्रियते मया । तत्र शङ्का न कर्तव्या सर्वज्ञेनापि मायया । मन्मायामोहितं रक्षो मनुष्यं मामवेक्ष्यति । अन्यथा तस्य सा नूनं न भवेद्यत्र कुत्रचित् " इति । किञ्च बहुविधदुःखप्रलापस्य देहादावात्मबुद्धिपूर्वकत्वात्तद्बुद्धेरज्ञानमूलकत्वात् स्वकृतलीलाश्रवणद्वारा सर्वलोकानां मुक्तिप्रदानाय नृपरूपेणावतीर्णस्य सच्चिदानन्दघनविग्रहस्य परमात्मनः श्रीरामस्य मायाधिष्ठातुः परमेश्वरस्य भृगुशापादिनाप्यज्ञानगन्धोप्यस्तीति वक्तुमशक्यत्वादेतद्विधविवासादिकं सर्वं श्रीरामेण लोकशिक्षार्थमेव कृतमिति वेदितव्यम् । अन्यत्राप्येतादृशस्थलेष्वेवमेवार्थोऽनुसन्धेयः ॥ ८–११ ॥ अपि काचिदिति पाठः ॥१२॥ स्निग्धपल्लवसङ्काशा कोमलाङ्गी

स्तनीत्यनेन पद्मिनी जातिरुक्ता । तदुक्तं रतिरहस्ये पद्मिनीलक्षणे—“ स्तनयुगमपि यस्याः श्रीफलश्रीविडम्बि ” इति ॥ १३ ॥ अथवेति । विल्वे नानुक्तौ अयं मत्सरान्न कथयतीत्यर्जुनवृक्षं पृच्छति । यदि ज्ञातं यदीत्यर्थः ॥ १४ ॥ प्रतिवचनादानमायं न जानातीति मत्वा वृक्षान्तरे तत् ज्ञानं सम्भावयति—ककुभ इति । ककुभोऽर्जुनविशेषः । स च स्त्रीणामूरुतुल्यो भवति अत एवमुच्यते ककुभोरूमिति । केचित्करभोरूमिति वदन्ति

अथवाऽर्जुन शंस त्वं प्रियां तामर्जुनप्रियाम् । जनकस्य सुता भीरुर्यदि जीवति वा न वा ॥१४॥ ककुभः ककुभोरूं तां व्यक्तं जानाति मैथिलीम् । यथा पल्लवपुष्पाढ्यो भाति ह्येष वनस्पतिः ॥ १५ ॥ भ्रमरैरुपगीतश्च यथा द्रुमवरो ह्ययम् । एष व्यक्तं विजानाति तिलकस्तिलकप्रियाम् ॥१६॥ अशोक शोकापनुद शोकोपहतचेतसम् । त्वन्नामानं कुरु क्षिप्रं प्रियासन्दर्शनेन माम् ॥ १७ ॥ यदि ताल त्वया दृष्टा पक्वतालफलस्तनी । कथयस्व वरारोहां कारुण्यं यदि ते मयि ॥ १८ ॥ यदि दृष्टा त्वया सीता जम्बु जम्बुफलोपमाम् । प्रियां यदि विजानीषे निःशङ्कं कथयस्व मे ॥ १९ ॥ अहो त्वं कर्णिकाराद्य सुपुष्पैः शोभसे भृशम् । कर्णिकारप्रिया साध्वी शंस दृष्टा प्रिया यदि ॥ २० ॥

तत्प्रकृतशैलीविरुद्धम् । कदम्ब ! कदम्बप्रिया बिल्व ! बिल्वोपमस्तनीत्येवं ह्युच्यते । ज्ञाने हेतुमाह—यथेति । अनेन परिचयसम्भावनोक्ता । जानाति कथं न कथयतीत्यर्थसिद्धम् । एवमुत्तरत्रापि श्लोके द्रष्टव्यम् ॥ १५ ॥ उप समीपे गीतः कृतवेदघोष इति ध्वन्यते । यथा येन कारणेन एवम्भूतो द्रुम वरोऽयं तेन कारणेन मन्ये एष जानाति तिलकः ॥ १६ ॥ अशोकेति । स्ववचनकरणाय स्तौति शोकापनुदेति । पचाद्यच् गुणाभाव आर्षः । त्वन्नामानं कुरु अशोकं कुरु । सन्दर्शनेन ज्ञापनेन शोकनिवृत्त्यर्थं प्रियां सन्दर्शयेत्यर्थः ॥ १७ ॥ तनि०—शोको यस्मान्न भवति सः अशोक इति व्युत्पत्तिमभिप्रेत्य शोकापनुदेत्युक्तिः । त्वन्नामानं शोकरहितमित्यर्थः ॥१७॥ यदि तालेति । पक्वतालेति सम्बन्धोक्तिः ॥ १८ ॥ जम्बु “ अम्बार्थनद्योर्ह्रस्वः ” इति ह्रस्वत्वम् “ एङ्ह्रस्वात्सम्बुद्धेः ” इति सुलोपः । स्निग्धताकारेण जम्बुफलौपम्यम् । विजानीषे चिह्नत इति शेषः ॥ १९ ॥ सुपुष्पैरिति धार्मिकत्वोक्तिः ॥ २० ॥

त्यर्थः ॥ १३ ॥ अर्जुनः करवीरः । अर्जुनप्रियां करवीरपुष्पप्रियाम् “ करवीरस्तथार्जुनः ” इति निघण्टुः ॥ १४–१८ ॥ यदीति स्निग्धत्वेन जम्बूफलौपम्यम्,

चूतेति श्लोकद्वयमेकान्वयम् । क्रियाभेदाद्रामपदद्वयम् । नीपः कदम्बः । कुरवान् कुरवकान् । रामः चूतादीन् गत्वा दृष्ट्वा पृच्छन् आधावनेन सर्वत्र भ्रान्तः कृतभ्रमणः रामः उन्मत्तः चित्तविभ्रमवानिव लक्ष्यते अलक्ष्यत ॥ २१ ॥ २२ ॥ इति वृक्षान् पृष्ट्वा मृगान् पृच्छति–अथेति । वृक्षा मा कथयन्तु त्वं तु कथयेत्याशयेनाथवाशब्दप्रयोगः । मृगशावस्य मृगबालस्याक्षिणी इवाक्षिणी यस्यास्ताम् । मृगस्य सीताज्ञाने योग्यतामाह मृगेति । मृगवत्

चूतनीपमहासालान् पनसान् कुरवान् धवान् । दाडिमानसनान् गत्वा दृष्ट्वा रामो महायशाः ॥ २१ ॥ मल्लिका माधवीश्चैव चम्पकान् केतकीस्तथा । पृच्छन् रामो वने भ्रान्त उन्मत्त इव लक्ष्यते ॥ २२ ॥ अथवा मृगशावाक्षीं मृग जानासि मैथिलीम् । मृगविप्रेक्षणी कान्ता मृगीभिः सहिता भवेत् ॥ २३ ॥ गज सा गजनासोरूर्यदि दृष्टा त्वया भवेत् । तां मन्ये विदितां तुभ्यमाख्याहि वरवारण ॥ २४ ॥ शार्दूल यदि सा दृष्टा प्रिया चन्द्रनिभानना । मैथिली मम विस्रब्धं कथयस्व न ते भयम् ॥ २५ ॥ किं धावसि प्रिये दूरं दृष्टासि कमलेक्षणे । वृक्षैराच्छाद्य चात्मानं किं मां न प्रतिभाषसे ॥ २६ ॥ तिष्ठ तिष्ठ वरारोहे न तेऽस्ति करुणा मयि । नात्यर्थं हास्यशीलाऽसि किमर्थं मामुपेक्षसे ॥ २७ ॥ पीतकौशेयकेनासि सूचिता वरवर्णिनि । धावन्त्यपि मया दृष्टा तिष्ठ यद्यस्ति सौहृदम् ॥ २८ ॥

विविधं प्रेक्षत इति मृगविप्रेक्षणी । सहिता भवेदिति सम्भावनायां लिङ् ॥ २३ ॥ गजनासोरूः करिकरोरूः । वरवारण वारणश्रेष्ठ हे गज ! तां सीतां तुभ्यं तव विदितां मन्ये शङ्के । गजनासोरूः सा त्वया यदि दृष्टा भवेत्तदाख्याहि ॥ २४ ॥ शार्दूलेति । अत्र तुल्यगतित्वरूपः सम्बन्धो बोध्यः । न ते भयं शूरस्य तव भयं नास्ति । एतेन पूर्वोक्ताः सर्वे भीत्या न प्रत्यूचुरिति रामस्याशयः ॥ २५ ॥ पुनरवस्थाविशेषं दर्शयति–किं धावसीति । प्रिये किमर्थं धावसि धावन्ती दृष्टासि नूनम् । अथादर्शनादाह–वृक्षैरिति । इदं च पूर्वापेक्षयातिरिक्तं दर्शनान्तरम् ॥ २६ ॥ २७ ॥ अन्तर्हितापि पीतकौशेयेन सूचितासि ।

न तु वर्णतः ॥ १९ ॥ २० ॥ दाडिमान् रामः पप्रच्छेति शेषः । अन्यथा उत्तरत्र रामशब्दोतिरिच्येत । यद्वा चूतेत्यादिश्लोकद्वयमेकान्वयम् । तत्रैको रामशब्दो यौगिकः । अन्यस्तु रूढः । उन्मत्त इव वस्तुतस्तु न तून्मत्त इत्यर्थः ॥ २१ ॥ २२ ॥ अथवेति । मृगविप्रेक्षणी . मृग इव विविधं प्रेक्षत इति तथा भवेद् किमिति शेषः ॥ २३ ॥ २४ ॥ लीलागतिसामान्यलक्षणमुपकल्प्य शार्दूलं पृच्छति–शार्दूलेति ॥ २५–२७ ॥ पीतेति । पीतकौशेयकेन पीताम्बरेण सूचिताऽसीति मोहात्तत्प्रतिभानम् । निरन्तर

इदमपि प्रत्ययान्तरम् ।पुनरपि प्रत्ययान्तरमाह—धावन्त्यपीति॥२८॥ अथ सर्वात्मना दर्शनाभावात् प्रकारान्तरमुत्प्रेक्षते—नैवेति । अथवा सात्र नैव विद्यते किंतु हिंसिता । अत्र हेतुमाह—कृच्छ्रमिति । कृच्छ्रं दुःखं प्राप्तं मां यथा येन कारणेन उपेक्षितुं नार्हति नूनं तेन कारणेन हिंसितैव नूनम् ॥२९॥ एतदेव



नैव सा नूनमथवा हिंसिता चारुहासिनी । कृच्छ्रं प्राप्तं न मां नूनं यथोपेक्षितुमर्हति ॥ २९ ॥ व्यक्तं सा भक्षिता बाला राक्षसैः पिशिताशनैः । विभज्याङ्गानि सर्वाणि मया विरहिता प्रिया ॥ ३० ॥ नूनं तच्छुभदन्तोष्ठं सुनासं चारुकुण्डलम् । पूर्णचन्द्रमिव ग्रस्तं मुखं निष्प्रभतां गतम् ॥ ३१ ॥ सा हि चम्पकवर्णाभा ग्रीवा ग्रैवेयशोभिता । कोमला विलपन्त्यास्तु कान्ताया भक्षिता शुभा ॥ ३२ ॥ नूनं विक्षिप्यमाणौ तौ बाहू पल्लवकोमलौ । भक्षितौ वेपमानाग्रौ सहस्ताभरणाङ्गदौ ॥ ३३ ॥ मया विरहिता बाला रक्षसां भक्षणाय वै । सार्थेनेव परित्यक्ता भक्षिता बहुबान्धवा ॥ ३४ ॥ हा लक्ष्मण महाबाहो पश्यसि त्वं प्रियां क्वचित् । हा प्रिये क्व गता भद्रे हा सीतेति पुनः पुनः ॥ ३५ ॥ इत्येवं विलपन् रामः परिधावन् वनाद्वनम् । क्वचिदुद्भ्रमते वेगात् क्वचिद्विभ्रमते बलात् । क्वचिन्मत्त इवाभाति कान्तान्वेषणतत्परः ॥ ३६ ॥

द्रढयति—व्यक्तमिति॥३०॥वक्ष्यमाणदशामनुसन्धाय प्रलपति—नूनमिति। पूर्णचन्द्रमिव ग्रस्तं राहुग्रस्तं पूर्णचन्द्रमिव स्थितमित्यर्थः। एवम्भूतं मुखं निष्प्रभतां गतं नूनमित्यन्वयः ॥ ३१ ॥ ग्रैवेयकं कण्ठभूषणम् । या उक्तविशेषणा ग्रीवा सा भक्षिता भवेदित्यन्वयः ॥ ३२ ॥ हस्ताभरणं कटकम् ॥३३॥ भक्षणाय विरहितासीदिति पूर्वार्धेऽन्वयः । सार्थेन पथिकसमुदायेन ॥ ३४ ॥ लक्ष्मणमामन्त्र्य पृच्छति—हा लक्ष्मणेति । पश्यसि पश्यसि किम् ? हा सीत इति वक्तव्ये हा सीतेति सन्धिरार्षः । इतिकरणस्य सर्गारम्भस्थेन विललापेत्यनेनान्वयः ॥ ३५ ॥ इत्येवमिति सार्धश्लोक एकान्वयः । प्रथमार्द्धं

कामिनीभावनायां कामुकस्य कामिनीसाक्षात्कार इति प्रसिद्धिः ॥ २८ ॥ नैवेति । अथवा सा नूनं नैव किन्तु चारुहासिनी हिंसिता, यद्यहिंसिता तदा कृच्छ्रमाप्तं दुःखगतं मां यथा येन कारणेन नोपेक्षितुमर्हति नूनम्, नार्हत्येवेत्यर्थः ॥ २९ ॥ उक्तमर्थं प्रपञ्चयति—व्यक्तमिति ॥ ३० ॥ ग्रस्तं रक्षोभिरिति शेषः ॥ ३१ ॥ ग्रैवेयकं कण्ठभूषणम् । भक्षिता राक्षसैरिति शेषः ॥ ३२॥३३ ॥ मयेति । रक्षसां भक्षणाय बाला सीता मया विरहिता, अत एव बहुबान्धवा सार्थेन पथिकसङ्घेन परित्यक्ता स्त्रीव भक्षिता, राक्षसैरिति शेषः॥३४॥हा लक्ष्मणेति। इति विललापेति शेषः। उत्तरत्र विलपन्नित्यनुवादात् ॥३५॥ उद्भ्रमते उत्पतति । विभ्रमते विधावते ।

पूर्वानुवादरूपम् । क्वचिदधिष्ठानसादृश्याभावेपि वेगात् शोकवेगादेव उद्भ्रमते सीताप्रतीतिरूपं भ्रमं प्राप्नोति । क्वचिल्लतादौ बलात् सादृश्यबलात् विभ्रमते तत्प्रतीतिभ्रमं लभते । मत्त इवाभाति मत्तवत्परिभ्रमतीत्यर्थः ॥ ३६ ॥ सुगम्यानि वनानि, दुर्गमाणि काननानि । गिरेरुद्भूतानि प्रस्रवणानि गिरिप्रस्रवणानि । "उत्सः प्रस्रवणं वारिप्रवाहः" इत्यमरः । अपरिसंस्थितः अप्रतिष्ठितः ॥३७॥ स रामः तथा क्वचिदुद्भ्रमत इत्यादिरीत्या विपुलं विशालं महत्

स वनानि नदीः शैलान् गिरिप्रस्रवणानि च । काननानि च वेगेन भ्रमत्यपरिसंस्थितः ॥ ३७ ॥ तथा स गत्वा विपुलं महद्वनं परीत्य सर्वं त्वथ मैथिलीं प्रति । अनिष्ठिताशः स चकार मार्गणे पुनः प्रियायाः परमं परिश्रमम् ॥ ३८ ॥ इत्यार्षे श्रीरामायणे श्रीवाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे षष्टितमः सर्गः ॥ ६० ॥

दृष्ट्वाऽऽश्रमपदं शून्यं रामो दशरथात्मजः । रहितां पर्णशालां च विध्वस्तान्यासनानि च ॥ १ ॥
अदृष्ट्वा तत्र वैदेहीं सन्निरीक्ष्य च सर्वशः । उवाच रामः प्राक्रुश्य प्रगृह्य रुचिरौ भुजौ ॥ २ ॥

निरन्तरं वनं गत्वा सर्वं वनस्य सर्वप्रदेशं परीत्य पुनः पुनश्चरित्वा अथ मैथिलीं प्रति मैथिलीलाभं प्रति अनिष्ठिताशः अनिष्पन्नाशः सन् पुनरपि प्रियाया मार्गणे परमं परिश्रमं चकार ॥३८॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षष्टितमः सर्गः ॥६०॥

अथ रामस्य नवमीमवस्थां दर्शयत्येकषष्टितमे—दृष्ट्वेत्यादिश्लोकद्वयमेकान्वयम् । शून्यं सीतारहितम् । रहितां सीतयेति शेषः । विध्वस्तानि रावणाक्रान्तत्वादिति भावः । सर्वशः सर्वत्र । तत्र वनप्रदेशे । वैदेहीं संनिरीक्ष्य विचित्य तत्रादृष्ट्वा । पुनरपि रामग्रहणं क्रियाभेदात् । प्राक्रुश्य सीतामुच्चैराहूय उवाच । भुजग्रहणं शोककृतविकारविशेषः । प्रगृह्य उत्क्षिप्य ॥ १ ॥ २ ॥

क्वचिदधिष्ठानसादृश्याभावेपि शोकवेगादेव सीताप्रतीतिभ्रमः । क्वचिल्लतासादृश्यप्रतीत्या तत्प्रतीतिभ्रम इति ज्ञेयम् ॥ ३६ ॥ स इति । अपरिसंस्थितः अस्वस्थ इत्यर्थः । पुष्पफलाद्युपेतानि सञ्चारयोग्यानि वनानि, विषमाणि तु काननानीति भेदः ॥ ३७ ॥ तथेति । अनिष्ठिताशः अनिष्पन्नमनोरथस्सन्नपि प्रियाया मार्गणे पुनरपि परिश्रममायासं चकार, उद्योगं चकारेत्यर्थः ॥ ३८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां षष्टितमः सर्गः ॥ ६० ॥ दृष्ट्वेति । प्राक्रुश्य सीतामुच्चैराहूय ॥ १ ॥ प्राक्रुश्य हा इति शब्दं कृत्वा । भुजौ प्रगृह्य उत्क्षिप्य ॥ २ ॥

केति । क नु अत्र वने कुत्र प्रदेशे वर्तते, कं वा देशान्तरं गता ॥ ३ ॥ वृक्षेणेति । आच्छाद्य, स्वमिति शेषः । हसितुम् अन्तर्हितां मां ज्ञातुमसमर्थोऽसीत्येवं परिहसितुम् । अद्य शोककाले ॥ ४ ॥ क्री- ः क्रीडसि । विश्वस्तैः चिरपालनेन विश्वासं प्राप्तैः । मृगपोतकैः बालमृगैः । "पोतः पाकोऽर्भको डिम्भः" इत्यमरः । ध्यायन्ति त्वामिति शेषः । कि नि ध्यायन्तीति वा ॥ सीतयेति । इदमर्धमेकं वाक्यम् ॥ ५ ॥ परलोके स्वर्गे ॥ ६ ॥

क नु लक्ष्मण वैदेही कं वा देशमितो गता । केनाहृता वा सौमित्रे भक्षिता केन वा प्रिया ॥ ३ ॥ वृक्षेणाच्छाद्य यदि मां सीते हसितुमिच्छसि । अलं ते हसितेनाद्य मां भजस्व सुदुःखितम् ॥ ४ ॥ यैः सह क्रीडसे सीते विश्वस्तैर्मृगपोतकैः । एते हीनास्त्वया सौम्ये ध्यायन्त्यास्राविलेक्षणाः ॥ सीतया रहितोऽहं वै नहि जीवामि लक्ष्मण ॥५॥ मृतं शोकेन महता सीताहरणजेन माम् । परलोके महाराजो नूनं द्रक्ष्यति मे पिता ॥ ६ ॥ कथं प्रतिज्ञां संश्रुत्य मया त्वमभियोजितः । अपूरयित्वा तं कालं मत्सकाशमिहागतः ॥ ७ ॥ कामवृत्तमनार्यं मां मृषावादिनमेव च । धिक्त्वामिति परे लोके व्यक्तं वक्ष्यति मे पिता ॥८॥ विवशं शोकसन्तप्तं दीनं भग्नमनोरथम् । मामिहोत्सृज्य करुणं कीर्तिर्नरमिवानृजुम् ॥९॥ क गच्छसि वरारोहे मां नोत्सृज सुमध्यमे । त्वया विरहितश्चाहं मोक्ष्ये जीवितमात्मनः १०

कथमिति श्लोकद्वयमेकान्वयम् । प्रतिज्ञां चतुर्दशवर्षवनवासप्रतिज्ञाम् । संश्रुत्य अङ्गीकृत्य । मया अभियोजितः नियुक्तस्त्वं तं कालमपूरयित्वा कथमागतः । कामवृत्तं यथेष्टाचारम् । अनार्यं दुर्जनं मां धिक् त्वामिति वक्ष्यति । अहमुपालम्भयोग्य एव, कामवृत्तत्वादिति भावः ॥ ७ ॥ ८ ॥ विवशमित्यादिश्लोकद्वयम् । विवशम् अस्वाधीनम्, त्वत्परतन्त्रमित्यर्थः । करुणं यथा भवति तथा उत्सृज्य त्यागकालेऽपि तव दयास्त्येवेति भावः । अनृजुं कपटाचारम् । मां नोत्सृज सुमध्यमे इदं मदुत्सर्जनं त्वल्लक्षणस्यानुरूपमिति भावः । उत्सर्जने को दोष इत्यत्राह त्वयेति ॥ ९ ॥ १० ॥

तदेवाह-केत्यादि ॥ ३ ॥ ४ ॥ यैरिति । विश्वस्तैः चिरकालसहवासेन विश्वासं प्राप्तैः । ध्यायन्ति, त्वामिति शेषः । अस्राविलेक्षणाः अश्रुकलुषनेत्राः ॥ ५ ॥ ६ ॥ कथमिति । प्रतिज्ञां चतुर्दशवर्षवनवासप्रतिज्ञाम् । अभियोजितः नियुक्तः ॥ ७ ॥ ८ ॥ पुनः सीतामुद्दिश्य प्रलपति-विवशमिति । अनृजुं कपटसञ्चारिणं नरमिव मामुत्सृज्य क गच्छसि । दृष्ट्वेवाह मां नोत्सृज ॥ ९-११ ॥

इतीवेति एवंप्रकारेणेत्यर्थः। लालसः साभिलाषः॥११॥ अनासादयमानमित्यादिसार्धश्लोक एकान्वयः। अप्राप्तवन्तमित्यर्थः। अत्यर्थं हितकाम्ययेत्यन्वयः ॥१२॥१३॥ विषादं मा कुरु, अन्वेषणे यत्नं कुर्वित्युभयत्रान्वयः। अन्वेषणयोग्यतामाह–इदं च हीति। बहुकन्दरैः कन्दरतुल्यलतागृहैः शोभितम्॥१४॥ प्रियः काननसञ्चारो यस्याः सा। वनोन्मत्ता च वनं जलम्। "जीवनं भुवनं वनम्" इत्यमरः। वनेन वनदर्शनेन उन्मादवती अतिप्रियसलिलेत्यर्थः।

इतीव विलपन् रामः सीतादर्शनलालसः। न ददर्श सुदुःखार्तो राघवो जनकात्मजाम् ॥ ११ ॥ अनासादयमानं तं सीतां दशरथात्मजम्। पङ्कमासाद्य विपुलं सीदन्तमिव कुञ्जरम्॥ १२ ॥ लक्ष्मणो राममत्यर्थमुवाच हितकाम्यया ॥ १३ ॥ मा विषादं महाबाहो कुरु यत्नं मया सह। इदं च हि वनं शूर बहुकन्दरशोभितम् ॥ १४ ॥ प्रियकानन सञ्चारा वनोन्मत्ता च मैथिली। सा वनं वा प्रविष्टा स्यान्नलिनीं वा सुपुष्पिताम् ॥ १५ ॥ सरितं वापि सम्प्राप्ता मीनवञ्जुलसेविताम् । स्नातुकामा निलीना स्याद्धासकामा वने क्वचित् ॥ १६ ॥ वित्रासयितुकामा वा लीना स्यात्कानने क्वचित्। जिज्ञासमाना वैदेही त्वां मां च पुरुषर्षभ ॥ तस्या ह्यन्वेषणे श्रीमन् क्षिप्रमेव यतावहे ॥१७॥ वनं सर्वं विचिनुवो यत्र सा जनकात्मजा। मन्यसे यदि काकुत्स्थ मा स्म शोके मनः कृथाः ॥ १८ ॥ एवमुक्तस्तु सौहार्दाल्लक्ष्मणेन समाहितः। सह सौमित्रिणा रामो विचेतुमुपचक्रमे ॥ १९ ॥

२९५

यथाक्रमं तत्कार्यमाह सेति ॥ १५ ॥ वञ्जुलो वेतसः। सरितं स्नातुकामा सम्प्राप्ता स्यात्। हासकामा परिहासकामा। क्वचिद्वने निलीना स्याद्वा ॥१६॥ पूर्वं हासार्थं गूढेति शङ्का, अत्र वित्रासनार्थमिति भिदा। मां त्वां च जिज्ञासमाना आवयोरन्वेषणादिसामर्थ्यं जिज्ञासमानेत्यर्थः॥ तस्या इत्यर्धम् पृथक्। श्रीमन् भार्यावियोगलक्षणं ते नास्तीति भावः॥ १७ ॥ यदि मन्यसे यदीच्छसि तदा विचिनुवः त्वं शोके मनो मा कृथाः॥ १८ ॥ लक्ष्मणेनैवमुक्तः अत

अनासादयमानमिति। अप्राप्तवानमित्यर्थः॥ १२ ॥ १३ ॥ मा विषादमिति । कुरु यत्नम् अन्वेषण इति शेषः ॥ १४ ॥ प्रियकाननसञ्चारा प्रियः काननसञ्चारो यस्यास्सा। वनोन्मत्ता वनसञ्चारकोविदा ॥ १५ ॥ १६ ॥ जिज्ञासमाना ज्ञातुमिच्छन्ती, कथं स्यातामिति शेषः ॥ १७ ॥ वनमिति । हे काकुत्स्थ ! सीतान्वेषणं

एव समाहितः कृतचित्तसमाधानः । विचेतुम् अन्वेष्टुम् ॥१९॥ वनानि स्वल्पानि महान्ति च पुष्पापचयव्यग्राऽत्र सन्निहिता भवेदिति, गिरीन् विचित्रधातु सङ्गसक्तात्र भवेदिति, सरितः हंसकारण्डवादि[illegible] भवेदिति, सरांसि च फुल्लकमलमण्डिततया तद्विहारपराऽत्र भवेदिति निखिलेन भावप्रधानो निर्देशः । कात्स्न्र्येन विचिन्वानौ सीता न लब्धेति त्यक्तव्यापारौ न भवतः । तौ दशरथात्मजौ न दृष्टेति तूष्णीं तिष्ठन्तौ

तौ वनानि गिरींश्चैव सरितश्च सरांसि च । निखिलेन विचिन्वानौ सीतां दशरथात्मजौ ॥ २० ॥ तस्य शैलस्य सानूनि गुहाश्च शिखराणि च । निखिलेन विचिन्वानौ नैव तामभिजग्मतुः ॥ २१ ॥ विचित्य सर्वतः शैलं रामो लक्ष्मणमब्रवीत् । नेह पश्यामि सौमित्रे वैदेहीं पर्वते शुभाम् ॥२२॥ ततो दुःखाभिसन्तप्तो लक्ष्मणो वाक्यमब्रवीत् । विचरन् दण्डकारण्यं भ्रातरं दीप्ततेजसम् ॥ २३ ॥ प्राप्स्यसि त्वं महाप्राज्ञ मैथिलीं जनकात्मजाम् । यथा विष्णुर्महाबाहुर्बलिं बध्वा महीमिमाम् ॥२४॥ एवमुक्तस्तु सौहार्दाल्लक्ष्मणेन स राघवः । उवाच दीनया वाचा दुःखाभिहतचेतनः ॥२५॥ वनं सर्वं सुविचितं पद्मिन्यः फुल्लपङ्कजाः । गिरिश्चायं महाप्राज्ञ बहुकन्दरनिर्झरः ॥ २६ ॥ नहि पश्यामि वैदेहीं प्राणेभ्योपि गरीयसीम् ॥२७॥ एवं स विलपन् रामः सीताहरणकर्शितः । दीनशोकसमाविष्टो मुहूर्तं विह्वलोऽभवत् ॥२८॥ सन्तप्तो ह्यवसन्नाङ्गो गतबुद्धिर्विचेतनः । निषसादातुरो दीनो निःश्वस्याशीतमायतम् ॥२९॥

न भवतः । मृदुप्रकृतिकत्वात् नैव तामभिजग्मतुरिति वक्ष्यमाणमत्राप्यनुपज्यते ॥ २० ॥ तस्य शैलस्य प्रस्रवणगिरेः । सानूनि प्रस्थान् । शिखराणि शृङ्गाणि ॥ २१ ॥ शैलं सर्वतः सर्वत्र शैले । "उभसर्वतसोः" इति द्वितीया । अन्ते इतिकरणम् ॥ २२ ॥ दीप्ततेजसमिति वक्ष्यमाणसीतालाभहेतुलक्षणोक्तिः ॥ २३ ॥ प्राप्स्यसीति । सीताहर्तारं बुद्धेति शेषः ॥ २४ ॥ दुःखाभिहतचेतनः दुःखोपहतहृदयः इत्यर्थः ॥ २५ ॥ पद्मिन्य इत्यादौ सुविचिताः सुविचित इति विभक्तिविपरिणामः कार्यः ॥ २६ ॥ न हीत्यर्धमेकं वाक्यम् ॥ २७ ॥ विह्वलः परवशः ॥ २८ ॥ अवसन्नाङ्गः कृशाङ्गः । गतबुद्धिः

समीचीनं मन्यसे यदि तर्हि विचिनुवः ॥ १८–२० ॥ तस्येति । तस्य शैलस्य प्रस्रवणनाम्नः ॥ २१–२७ ॥ एवमिति । विह्वलः परवशः ॥ २८ ॥ सन्तप्तो

निस्संज्ञः । विचेतनः निश्चेष्टः । अशीतम् उष्णम् । आयतं दीर्घमिति निश्वासक्रियाविशेषणम् ॥ २९ ॥ विचुक्रोश उच्चैः स्वरेणाहूतवान् ॥ ३० ॥ प्रश्रितं सविनयमिति क्रियाविशेषणम् । प्रश्रिताञ्जलिः बद्धाञ्जलिः ॥ ३१ ॥ लक्ष्मणोष्ठपुटाच्युतं लक्ष्मणोक्तमित्यर्थः । पुनः प्राक्रोशत् उद्घोषेणाहूतवान् । अस्मिन् सर्गे द्वात्रिंशच्छ्लोकाः ॥३२॥ इति श्रीगोविन्द० श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥

बहुलं स तु निःश्वस्य रामो राजीवलोचनः । हा प्रियेति विचुक्रोश बहुशो बाष्पगद्गदः ॥ ३० ॥ तं ततः सान्त्वयामास लक्ष्मणः प्रियबान्धवः । बहुप्रकारं धर्मज्ञः प्रश्रितं प्रश्रिताञ्जलिः ॥ ३१ ॥ अनादृत्य तु तद्वाक्यं लक्ष्मणोष्ठपुटाच्युतम् । अपश्यंस्तां प्रियां सीतां प्राक्रोशत् स पुनः पुनः ॥ ३२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

सीतामपश्यन् धर्मात्मा कामोपहतचेतनः । विललाप महाबाहू रामः कमललोचनः ॥ १ ॥
पश्यन्निव स तां सीतामपश्यन्मदनार्दितः । उवाच राघवो वाक्यं विलापाश्रयदुर्वचम् ॥ २ ॥

अथ रामस्य " दृङ्मनःसङ्गसंकल्पा जागरः कृशताऽरतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥" इत्युक्तावस्थास्वरतिं नाम षष्ठीमवस्थां प्रदर्शयति द्विषष्टितमे–सीतामित्यादि । धर्मात्मा कामोपहतचेतन इत्याभ्यां धर्माविरुद्धकामस्यानिन्द्यत्वमुक्तम् । महाबाहुरित्यूर्ध्वबाहुत्वमुच्यते । कमललोचन इत्यनेन समधुपद्मसाम्यादश्रुकालुष्यमुच्यते । कामेन सीताविप्रलम्भजनितव्यामोहेन उपहता अप्रकृतिस्था चेतना चैतन्यं यस्य स तथा ॥ १ ॥ पश्यन्निवेति । पुरोवर्तित्वाभावेन सीतामपश्यन्नपि मदनार्दितो मदनपरवशः तां पश्यन्निव सम्बोध्योवाच । तद्वाक्यं विलापाश्रयत्वेन दुर्वचं

ह्यवसन्नाङ्गः इत्येव पाठः । गतबुद्धिः ज्ञानशून्यः । विचेतनः चेष्टारहितः ॥ २९–३२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायामेकषष्टितमः सर्गः ॥ ६१ ॥ सीतामिति । कामोपहतचेतनः कामेन सीतावियोगजनितव्यामोहेन उपहता अप्रकृतिस्था चेतना चैतन्यं यस्य सः ॥१॥ पश्यन्निवेति । पुरोवर्तित्वाभावेन सीतामपश्यन्नपि मदनार्दितो मदनपरवशस्तां पश्यन्निव सम्बोध्य विलापाश्रयत्वेन दुर्वचं गद्गदकण्ठत्वाद्वाक्यमुवाचेति

गद्गदकण्ठत्वादिति भावः । यद्वा विलापसम्बन्धादस्माभिर्वक्तुमशक्यम् अनुवदितुमशक्यमित्यर्थः ॥२॥ पश्यन्निवेत्युक्तमुपपादयति, सार्द्धैस्त्वमित्यादि पञ्चभिः । त्वम् अशोकस्य शाखाभिः पुष्पिततया [illegible] मम शोकविवर्धनी सती आवृणोपि किं तेनावरणेन मया दृष्टत्वादिति भावः ॥ ३ ॥ कदलीकाण्डसदृशौ कदलीदण्डतुल्यत्वेन कदल्या संवृतावपि ते ऊरू पश्यामि तेन तौ निगूहितुम् आच्छादितुं न



त्वमशोकस्य शाखाभिः पुष्पप्रियतया प्रिये । आवृणोषि शरीरं ते मम शोकविवर्धनी ॥ ३ ॥ कदलीकाण्डसदृशौ कदल्या संवृतावुभौ । ऊरू पश्यामि ते देवि नासि शक्ता निगूहितुम् ॥ ४ ॥ कर्णिकारवनं भद्रे हसन्ती देवि सेवसे । अलं ते परिहासेन मम बाधावहेन वै ॥ ५ ॥ परिहासेन किं सीते परिश्रान्तस्य मे प्रिये । अयं स परिहासोऽपि साधु देवि न रोचते ॥ ६ ॥ विशेषेणाश्रमस्थाने हासोऽयं न प्रशस्यते । अवगच्छामि ते शीलं परिहासप्रियं प्रिये । आगच्छ त्वं विशालाक्षि शून्योऽयमुटजस्तव ॥ ७ ॥ सुव्यक्तं राक्षसैः सीता भक्षिता वा हृतापि वा । नहि सा विलपन्तं मामुपसंप्रैति लक्ष्मण ॥ ८ ॥ एतानि मृगयूथानि साश्रुनेत्राणि लक्ष्मण । शंसन्तीव हि वैदेहीं भक्षितां रजनीचरैः ॥ ९ ॥ हा ममार्ये क यातासि हा साध्वि वरवर्णिनि । हा सकामा त्वया देवी कैकेयी सा भविष्यति ॥ १० ॥ सीतया सह निर्यातो विना सीतामुपागतः । कथं नाम प्रवेक्ष्यामि शून्यमन्तःपुरं पुनः ॥ ११ ॥

शक्तासि, दृष्टस्याच्छादनासम्भवादिति भावः ॥ ४ ॥ हसन्ती हासार्थं कर्णिकारवनं सेवसे ॥ ५ ॥ हे सीते ! परिहासेन किं किंप्रयोजनम् ? हि यस्मात् परिश्रान्तस्य मे मह्यं सः पूर्वं प्रियः अयं परिहासः साधु सम्यक् न रोचते ॥ ६ ॥ विशेषेणेति । शीलं स्वभावः । परिहासेन प्रीणातीति परिहासप्रियम् । "इगुपधज्ञाप्रीकिरः कः" इति कः । आगच्छेत्यर्द्धमेकं वाक्यम् ॥७॥ सुव्यक्तमिति । हिर्हेतौ । उपसंप्रैति उपेक्षत इत्यर्थः॥८॥ एतानीति । शंसनप्रकारः साश्रुनेत्राणीति ॥९॥ मम मदीये । आर्ये पूज्ये । लोकैरिति शेषः । सकामा स्वाभीष्टास्मन्मरणसिद्धेरिति भावः ॥१०॥ सीतां विनाऽऽगतत्वाच्छून्यम्॥११

सम्बन्धः ॥ २ ॥ ३ ॥ कदलीकाण्डः कदलीस्कन्धः ॥ ४–७ ॥ पुनर्भ्रमनिवृत्त्याह–सुव्यक्तमिति । उपसंप्रैति हासरसेनोपेक्षते इत्यर्थः ॥ ८–११ ॥

कातरत्वम् अधीरत्वम् । जीवितधारणाशक्तेरिति भावः ॥ १२ ॥ निवृत्तवनवासः समाप्तवनवासः । "समाप्तौ वृत्त इत्यदः" इति शब्दार्णवे । निरीक्षितुं प्रतिवक्तुं सुतरामिति भावः ॥ १३ ॥ तया सीतया ॥ १४ ॥ भरतपालितां सुसमृद्धामपीत्यर्थः ॥ १५ ॥ कथञ्चन त्वत्कृताश्वासनेनापीत्यर्थः ॥ १६ ॥

निर्वीर्य इति लोको मां निर्दयश्चेति वक्ष्यति । कातरत्वं प्रकाशं हि सीतापनयनेन मे ॥१२॥ निवृत्तवनवासश्च जनकं मिथिलाधिपम् । कुशलं परिपृच्छन्तं कथं शक्ष्ये निरीक्षितुम् ॥ १३ ॥ विदेहराजो नूनं मां दृष्ट्वा विरहितं तया । सुतास्नेहेन सन्तप्तो मोहस्य वशमेष्यति ॥१४॥ अथवा न गमिष्यामि पुरीं भरतपालिताम् । स्वर्गोऽपि सीतया हीनः शून्य एव मतो मम ॥ १५ ॥ मामिहोत्सृज्य हि वने गच्छायोध्यां पुरीं शुभाम् । न त्वहं तां विना सीतां जीवेयं हि कथञ्चन ॥१६॥ गाढमाश्लिष्य भरतो वाच्यो मद्वचनात्त्वया । अनुज्ञातोऽसि रामेण पालयेति वसुन्धराम् ॥ १७ ॥ अम्बा च मम कैकेयी सुमित्रा च त्वया विभो । कौसल्या च यथान्यायमभिवाद्या ममाज्ञया ॥ १८ ॥ रक्षणीया प्रयत्नेन भवता सोक्तकारिणा ॥१९॥ सीतायाश्च विनाशोऽयं मम चामित्रकर्शन । विस्तरेण जनन्या मे विनिवेद्य स्त्वया भवेत् ॥२०॥ इति विलपति राघवे सुदीने वनमुपगम्य तया विना सुकेश्या । भयविकलमुखस्तु लक्ष्मणोऽपि व्यथितमना भृशमातुरो बभूव ॥ २१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमदारण्यकाण्डे द्विषष्टितमः सर्गः ॥६२॥

पालयेति वाच्य इत्यन्वयः ॥१७॥ अम्बेति । प्रथमोक्तिः शोकजाग्रहात् ॥ १८ ॥ रक्षणीयेत्यर्धम् । सा कौसल्या ॥ १९ ॥ सीतायाश्चेति । मम विनाशः भावीति शेषः ॥२०॥ इतीति । तया विनाकृतं वनमुपगम्येत्यर्थः । सुकेश्येति विलापहेतुः । भयेन विकलमुखः विवर्णमुखः । आतुरः तप्तशरीरः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

कातरत्वम् अधीरत्वम् ॥ १२ ॥ १३ ॥ (तया सीतया विरहितं हीनम् । वशमेष्यतीत्यनन्तरं–"तात एव कृतार्थस्स तत्रैव वसताद्गतः" इत्यर्धमधिकं कतकपाठे । अस्यार्थः–तातो दशरथ एव कृतार्थः । वसतादिति लोट् व्यत्ययेन । यतस्तत्र स्वर्ग एव वसति, नतु जीवन्ती कौसल्येत्यर्थः ॥ स०–तत्रैव स्वर्ग एव वसतात् । मया साकमिति शेषः । इति उक्त्वा गतः ततो दशरथः कृतार्थः । स्नुषादर्शनं तत्रैव जातमिति कृतार्थ इति भावः ॥ १४ ॥ ) ॥ १५–२० ॥ इतीति । भयविकलमुखः भयेन विवर्णमुखः ॥२१॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां द्विषष्टितमः सर्गः ॥ ६२ ॥

अथ तापाख्यां मदनावस्थां दर्शयति त्रिषष्टितमे—स राजपुत्र इत्यादि । कामेन प्रियास्मरणजन्येन शोकेन प्रियाविरहजन्येन भ्रातरं भूयो विषादयन् आर्तरूपः पीडितशरीरः । स रामः तीव्रं विषादं [illegible] गत इत्यर्थः ॥ १ ॥ विपुले शोके निमग्नः लक्ष्मणशोकदर्शनजशोकेन विपुले शोके सीताशोके निमग्नः व्यसनानुरूपं लोकवद्दुःखप्रसङ्गोचितम् उष्णं यथा तथा विनिःश्वस्य रुदन् सशोकं



स राजपुत्रः प्रियया विहीनः कामेन शोकेन च पीड्यमानः । विषादयन् भ्रातरमार्तरूपो भूयो विषादं प्रविवेश तीव्रम् ॥१॥ स लक्ष्मणं शोकवशाभिपन्नं शोके निमग्नो विपुले तु रामः । उवाच वाक्यं व्यसनानुरूपमुष्णं विनिःश्वस्य रुदन् सशोकम् ॥ २ ॥ न मद्विधो दुष्कृतकर्मकारी मन्ये द्वितीयोऽस्ति वसुन्धरायाम् । शोकेन शोको हि परम्पराया मामेति भिन्दन् हृदयं मनश्च ॥३॥ पूर्वं मया नूनमभीप्सितानि पापानि कर्माण्यसकृत्कृतानि । तत्राय मद्यापतितो विपाको दुःखेन दुःखं यदहं विशामि ॥ ४ ॥ राज्यप्रणाशः स्वजनैर्वियोगः पितुर्विनाशो जननी वियोगः । सर्वाणि मे लक्ष्मण शोकवेगमापूरयन्ति प्रविचिन्तितानि ॥ ५ ॥

वाक्यमुवाच ॥ २ ॥ द्वितीयो मद्विधो दुष्कृतकर्मकारी पापकर्मकारी वसुन्धरायां नास्तीति मन्ये । शोकेनेति । न मद्विध इत्यादिनोक्तमनेनार्थेन स्पष्टीक्रियते । परम्परायाः परम्परारूपेणागतः शोकेन शोकः शोकाच्छोकः हृदयं मनश्च भिन्दन् मामेति । मनोऽधिष्ठानं हृदयम् ॥ ३ ॥ एवं शोकपारम्पर्ये हेतुमुत्प्रेक्षते—पूर्वमिति । पूर्वं पूर्वजन्मनि । अभीप्सितानि प्रार्थितानि तत्र तेषु पापेषु विपाकः कार्योन्मुख्यम् । आपतितः प्राप्तः ॥ ४ ॥ दुःखानि परिगणयति—राज्येति । राज्यप्रणाशो राज्यभ्रंशः । स्वजनैः बन्धुभिः । सर्वाणीति सामान्ये नपुंसकम् । शोकवेगं शोकराशिम् । प्रविचिन्तितानि

इष्टवियोगजः शोकः, कामजं चित्तविवशत्वं मोहः ॥ १ ॥ २ ॥ न मद्विध इति । शोकेनेति । सहार्थे तृतीया । सहशब्दाप्रयोगेपि " वृद्धो यूना " इति निपातना द्भवति । परम्परायाः पङ्क्तेः । यद्वा परम्पराकारेण शोकेन सह स च शोको हृदयं मनश्च भिन्दन् मामेति । मनसोऽधिष्ठानं हृदयम् ॥ ३ ॥ विपाकः कर्मविपाकः, फलमिति यावत् । दुःखेन सह दुःखं विशामि दुःखपरम्परामनुभवामीत्यर्थः ॥ ४ ॥ तान्येव दुःखानि परिगणयति—राज्यप्रणाश इत्यादि । सर्वाणीति सामान्येन

स०—सशोपि ससुखोपि अकम् असुखं यथा भवति तथा रुदन्नुवाचेत्यन्वयः ॥ २ ॥ दुःखेन दुःखम् तत्परम्परामित्यर्थः ॥ ३ ॥

स्मृतानि ॥ ५ ॥ शून्यं निर्जनं वनमेत्य स्थितस्य मम शरीरे शान्तं शरीरक्लेशेन विस्मृतमित्यर्थः । उदीर्णम् उद्रिक्तं प्रदीप्तोऽग्निः पुनः काष्ठैरिव ॥ ६ ॥ मम सम्बन्धिनी आर्या सा राक्षसेन केनचिद्बलाद्धृता सती खमाकाशमुपेत्य भीरुतया सस्वरविप्रलापा सती उच्चैर्व्यक्तविप्रलापा सती भयेन अपस्वरम् अपगतनिजस्वरं यथा तथा । अभीक्ष्णमत्यर्थम् आक्रन्दितवती उद्घोषितवतीत्युत्प्रेक्षा ॥ ७ ॥ लोहितस्य लोहिताख्यस्य उत्तमचन्दनस्य ।

सर्वं तु दुःखं मम लक्ष्मणेदं शान्तं शरीरे वनमेत्य शून्यम् । सीतावियोगात् पुनरप्युदीर्णं काष्ठैरिवाग्निः सहसा प्रदीप्तः ॥ ६ ॥ सा नूनमार्या मम राक्षसेन बलाद्धृता खं समुपेत्य भीरुः । अपस्वरं सस्वरविप्रलापा भयेन विक्रन्दितवत्यभीक्ष्णम् ॥ ७ ॥ तौ लोहितस्य प्रियदर्शनस्य सदोचितावुत्तमचन्दनस्य । वृत्तौ स्तनौ शोणितपङ्कदिग्धौ नूनं प्रियाया मम नाभिभातः ॥ ८ ॥ तच्छ्लक्ष्णसुव्यक्तमृदुप्रलापं तस्या मुखं कुञ्चितकेशभारम् । रक्षोवशं नूनमुपागताया न भ्राजते राहुमुखे यथेन्दुः ॥९॥ तां हारपाशस्य सदोचिताया ग्रीवां प्रियाया मम सुव्रतायाः । रक्षांसि नूनं परिपीतवन्ति विभिद्य शून्ये रुधिराशनानि ॥ १० ॥

"रक्तं तु चन्दनं विद्याल्लोहितं हरिचन्दनम् ।" इति । यद्वा कुङ्कुमादिना रक्तस्य उत्तमचन्दनस्य सदा उचितौ योग्यौ वृत्तौ वर्तुलौ मम प्रियायाः स्तनौ शोणितपङ्कदिग्धौ राक्षसेन भक्षणाय विशसनादिति भावः । एवम्भूतौ सन्तौ नाभिभातः न प्रकाशेते । वर्तमानसामीप्ये वर्तमानवत्प्रयोगः । मम नाभिपात इति पाठान्तरे—एवमपि मम देहपातो न जायत इत्यर्थः ॥ ८ ॥ तत् पूर्वमनुभूतम् । श्लक्ष्णो मधुरः सुव्यक्तः अर्थव्यक्तियुक्तः मृदुः अपरुषः प्रलापो यस्य तत् ॥ ९ ॥ हारपाशस्य हारमालायाः सदोचितायाः सुव्रतायाः मदन्यं स्प्रष्टुमनिच्छन्त्याः मम प्रियायाः ग्रीवां शून्ये एकान्ते विभिद्य

नपुंसकलिङ्गनिर्देशः । शोकवेगमापूरयन्ति, इदानीन्तनमिति शेषः ॥ ५ ॥ सर्वमिति । शून्यं निर्जनम् । वनमित्यादि । सर्वमिदं दुःखं पूर्वोक्तराज्यभ्रंशादिरूपं सीतासन्निधानेन मम शरीरे शान्तम्, शरीरायासेन सीतासान्निध्येन च सर्वं दुःखं विस्मृतमित्यर्थः । अत्र सीतावियोगात्पुनरभ्युदीर्णमुद्रिक्तं स्मृतमिति यावत् ॥६॥७॥ ताविति । लोहितस्य लोहिताख्यस्योत्तमचन्दनस्य "रक्तं तु चन्दनं विद्याल्लोहितं हरिचन्दनम्" इति धन्वन्तरिः । प्रियदर्शनस्य दर्शनीयस्य । सदा उचितौ योग्यौ शोणितपङ्कदिग्धौ भक्षणाय राक्षसैः विशसनादिति भावः ॥ ८ ॥ तदिति । श्लक्ष्णः मधुरः प्रलापो यस्य तत् ॥ ९ ॥ तामिति । हारपाशस्य हारमालायाः ।

स०—वनमेत्य क्लेशम् इति पाठः । एत्य क्लेशमिति गुर्वशरोक्त्या क्लेशातिशयो द्योत्यते ॥ ६ ॥ अनन्नमार्या पूर्णलक्ष्मस्वामिनी "अर्यः स्वामिवैश्ययोः" इति निपातनात् ॥ ७ ॥

रुधिररूपाणि अशनानि पानानि परिपीतवन्ति नूनम् ॥ १० ॥ या विजने वने मया विहीना सा कुररीव क्रौञ्चीव विनादं मुक्तवती । आयतकान्तनेत्रे त्यनेन तत्काले मदागमनमार्गव्यग्रतोक्ता ॥ ११ ॥ पूर्वं गोदावर्यां सीतया सह सरसलीलाविहारो यस्मिन् कृतस्तस्मिन् प्रदेशे गत्वा तद्दर्शनेन जात पूर्वस्मरणो लक्ष्मणं प्रत्याह—अस्मिन्निति । अस्मिन् एवं शून्यतया स्थिते प्रदेशे हि मया पूर्वं निधिर्लब्धः । मया सार्धं प्रणयधारायामहं पण्डितमानी

मया विहीना विजने वने या रक्षोभिराहृत्य विकृष्यमाणा । नूनं विनादं कुररीव दीना सा मुक्तवत्यायतकान्तनेत्रा ॥ ११ ॥ अस्मिन् मया सार्धमुदारशीला शिलातले पूर्वमुपोपविष्टा । कान्तस्मिता लक्ष्मण जातहासा त्वामाह सीता बहुवाक्यजातम् ॥ १२ ॥ गोदावरीयं सरितां वरिष्ठा प्रिया प्रियाया मम नित्यकालम् । अप्यत्र गच्छेदिति चिन्तयामि नैकाकिनी याति हि सा कदाचित् ॥ १३ ॥

तादृशांऽहमप्यप्रधानांऽभवं तदीयविदग्धव्यवहारेषु । उदारशीला पूर्वं नगरवासे श्वश्र्वादिसन्निधानेन सङ्कुचितविहारा स्थिता, सीतया सार्धमिति ह्युक्तम् । साम्प्रतं तु एकान्तस्थलतया सरसभोगेषु सर्वस्वदानं कृतवती । शिलातले पूर्वमुपोपविष्टा गोदावरीसलिले चिरं सलिलविहारे प्रवृत्ते खिन्नो रामः प्रदेशा न्तरे निस्तरणायोगात् केनचिच्छिलातलमार्गेण निर्गन्तुमालोकितवान् । सीता तु 'प्रेक्षितज्ञास्तु कोसलाः' इति न्यायेन कान्तस्य प्रेक्षणातिशयमवगम्य तं पुनः क्लेशयितुं तच्छिलातलं पूर्वमधिरूढा उपोपविष्टा । तत्र यंयं कोणमवलम्ब्योत्थातुमिच्छति तत्तदाक्रम्य मुखे सलिलमभिषिञ्चन्ती स्थिता, वीप्सयैवमव गम्यते । कान्तस्मिता सहजमधुरहासवती । जातहासा स्वविजयकृतहर्षेण सञ्जातहासा । त्वामाह इतः पूर्वं कुत्रापि पराजयाभावात् अधुना स्त्रीतोऽभिनव पराजयाद्रामो लज्जानम्रवदनोऽभूत् । तं विहाय भ्रातरं बहुधा प्रशंसन्तं लक्ष्मणं प्रत्युक्तवती । बहुवाक्यजातं युवां सङ्कल्पितं सर्वं निर्वर्तितवन्तौ हि युवा मतिबलपराक्रमशालिनौ पुरुषधौरेयौ वयमबलाजनाः युवां मृगयायै शत्रुहत्यायै चाभियातारः वयं गृहादनिर्गच्छन्त्यः युवयोः संकल्पितं सर्वं कर्तुं शक्यं युष्मदग्रजो जितवान् हि इत्येवं बहुमुखं वचनमवोचत् ॥ १२ ॥ नित्यकालं सर्वकालम् । अत्र गोदावर्याम् चिन्तयामि तन्न युक्तमिति शेषः ॥ १३ ॥

परिपीतवन्ति रुधिरमिति शेषः । शून्ये विजनप्रदेशे ॥ १० ॥ ११ ॥ उपोपविष्टा समीपासीना । निश्शब्दं स्मितम्, ईषच्छब्दो हासः ॥ १२ ॥ १३ ॥

अभिप्रयाता गोदावरीमिति शेषः। पङ्कजानीत्यत्राप्यानेतुमित्यनुषज्यते॥ १४॥ अतिबिभेति अत्यन्तं बिभेति॥ १५॥ भो इत्यादित्यस्य सम्बोधनम्। लोकस्य कृताकृते जानातीति तथा। सत्यानृतयोः पुण्यपापयोः कर्मणः साक्षिन्! "कर्मसाक्षी जगच्चक्षुः" इत्युक्तेः। मम प्रिया क्व गता अथवा हृता

पद्मानना पद्मविशालनेत्रा पद्मानि वानेतुमभिप्रयाता। तदप्ययुक्तं नहि सा कदाचिन्मया विना गच्छति पङ्कजानि ॥ १४ ॥ कामं त्विदं पुष्पितवृक्षषण्डं नानाविधैः पक्षिगणैरुपेतम्। वनं प्रयाता नु तदप्ययुक्तमेकाकिनी साति बिभेति भीरुः॥ १५॥ आदित्य भो लोककृताकृतज्ञ लोकस्य सत्यानृतकर्मसाक्षिन्। मम प्रिया सा क्व गता हृता वा शंसस्व मे शोकवशस्य नित्यम् ॥ १६ ॥ लोकेषु सर्वेषु च नास्ति किञ्चिद्यत्ते न नित्यं विदितं भवेत्तत्। शंसस्व वायो कुलशालिनीं तां हृता मृता वा पथि वर्तते वा ॥१७॥ इतीव तं शोकविधेयदेहं रामं विसंज्ञं विलपन्तमेवम्। उवाच सौमित्रिरदीनसत्त्वो न्याये स्थितः कालयुतं च वाक्यम् ॥ १८ ॥ शोकं विमुञ्चार्य धृतिं भजस्व सोत्साहता चास्तु विमार्गणेऽस्याः। उत्साहवन्तो हि नरा न लोके सीदन्ति कर्मस्वतिदुष्करेषु ॥ १९ ॥

केनचिदपहृतेति शंसस्व शंस ॥ १६ ॥ लोकेष्विति। ते नित्यं यन्न विदितं तत् सर्वेषु नास्ति तस्माच्छंसेति ॥ १७ ॥ शोकविधेयः शोकपरवशः कालयुतं कालोचितम्। अदीनसत्त्वः अदीनधृतिः एवमुवाचेत्यन्वयः ॥ १८ ॥ अस्याः सीतायाः। विमार्गणे अन्वेषणे ॥ १९ ॥

पद्माननेति। गच्छति पङ्कजान्यानेतुमिति शेषः॥१४॥१५॥ लोककृताकृतज्ञ लोकस्य कृताकृतव्यापारज्ञ ॥१६॥ लोकेष्विति । हे वायो! लोकेषु यत्किञ्चिद्वस्तुजातमस्ति तत्सर्वं तव विदितं भवेत् तेन कारणेन तां शंसस्वेत्यन्वयः॥ १७ ॥ इतीवेति। विसंज्ञमिव विलपन्तमित्यर्थः। शोकविधेयदेहं शोकविधेयः शोकाधीनो

स०—लोककृताकृतज्ञ बहिः प्रकाशद्वारा कृताकृतज्ञानिन्! लोकस्य सत्यानृतकर्मसाक्षिन् अन्तः। मूलपुरुषत्वादादित्यं प्रत्युक्तिर्युक्तेति भावः ॥ १६ ॥ उत्तरत्र त्वदभिमानिना मरुतैव सर्वं कार्यं साधयिष्यामीति वायुं पृच्छति ॥ १७ ॥

उदग्रपौरुषं श्रेष्ठपराक्रमम् । इतीव ब्रुवन्तं सौमित्रिं न चिन्तयामास तद्वचनं नादृतवानित्यर्थः । धृतिं च मुक्तवान् ॥२०॥ इति श्रीगो० श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥ ६३ ॥ अथ चिन्ताविशेषः सीताहरणनिश्चयश्चतुःषष्टितमे—स दीन इत्यादि । लोके कश्चि दीनोपि दीनां वाचं न व्याहरति । इदमर्धमेकं वाक्यम् ॥ १ ॥ एवमिति । लघुविक्रमः त्वरितपदविन्यासः ॥ २ ॥ तीर्थवतीम् अवतारवतीम् ॥ ३ ॥



इतीव सौमित्रिमुदग्रपौरुषं ब्रुवन्तमार्तो रघुवंशवर्धनः । न चिन्तयामास धृतिं विमुक्तवान् पुनश्च दुःखं महदभ्युपागमत् ॥ २० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥
स दीनो दीनया वाचा लक्ष्मणं वाक्यमब्रवीत् ॥ शीघ्रं लक्ष्मण जानीहि गत्वा गोदावरीं नदीम् । अपि गोदावरीं सीता पद्मान्यानयितुं गता ॥ १ ॥ एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा । नदीं गोदावरीं रम्यां जगाम लघुविक्रमः ॥ २ ॥ तां लक्ष्मणस्तीर्थवतीं विचित्वा राममब्रवीत् ॥ ३ ॥ नैनां पश्यामि तीर्थेषु क्रोशतो न शृणोति मे ॥ ४ ॥ कं नु सा देशमापन्ना वैदेही क्लेशनाशिनी । न ह्यहं वेद तं देशं यत्र सा जनकात्मजा ॥ ५ ॥ लक्ष्मणस्य वचः श्रुत्वा दीनः सन्तापमोहितः । रामः समभिचक्राम स्वयं गोदावरीं नदीम् ॥ ६ ॥ स तामुपस्थितो रामः क्व सीतेत्येवमब्रवीत् ॥७॥ भूतानि राक्षसेन्द्रेण वधार्हेण हृतामिति । न तां शशंसू रामाय तथा गोदावरी नदी ॥८॥ ततः प्रचोदिता भूतैः शंसास्मत्तां प्रियामिति । न तु साभ्यवदत्सीतां पृष्टा रामेण शोचता ॥ ९ ॥

क्रोशतः आह्वयतः । मे मत्तः । न शृणोति, सेति शेषः ॥४॥ वेद जानामि ॥ ५ ॥ ६ ॥ स तामित्यर्धमेकं वाक्यम् ॥ ७ ॥ भूतानि वन्यानि । सत्त्वानि दृष्टान्तार्थमिदम् । यथा पूर्वं पृच्छ्यमानानि भूतानि न शशंसुः तथा गोदावरी च न शशंसेत्यर्थः ॥८॥ स्वयं न शशंस भूतैः प्रचोदितापि न शशंसेत्यर्थः । देहो यस्य सः । कालयुतं कालोचितम् ॥ १८–२० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां त्रिषष्टितमः सर्गः ॥ ६३ ॥
स दीन इति स्पष्टोऽर्थः ॥ १ ॥ लघुविक्रमः अविलम्बितपदन्यासः ॥ २ ॥ तीर्थवतीं जलावतरणयोग्यस्थलवतीम् । यद्वा पुण्योदकवतीम् ॥ ३ ॥ नैनामिति । एनां सीताम् । तीर्थेषु न पश्यामि । क्रोशतः आह्वयतः मे मम । न शृणोति, वाक्यमिति शेषः ॥ ४ ॥ क्लेशनाशिनी सति दर्शने इति भावः ॥ ५–८ ॥ तत इति ।

अस्मत् अस्मदर्थे पञ्चमी ॥ ९ ॥ अकथने हेतुमाह–रावणस्येति ॥ १० ॥ निराशः कृतः इत्यन्वयः ॥ ११ ॥ १२ ॥ वन्येन फलादिना ॥ १३ ॥ ज्ञातयश्च ते पक्षाः सहायाश्च तैर्विहीनस्य ॥ १४–१६ ॥ बाष्पसंरुद्धया दृशा निरीक्षन् निरीक्षमाणः सन् क सीतेत्युवाच ॥ १७ ॥ उक्तः पृष्टः । नभःस्थलं दर्शयन्तः आकाशावलोकनेङ्गितेन सीतागमनमार्गं दर्शयन्त इत्यर्थः । उत्थिताः प्रस्थिताः आकाशमार्गेण दक्षिणां दिशं गता सीतेत्यसूचय

रावणस्य च तद्रूपं कर्माणि च दुरात्मनः । ध्यात्वा भयात्तु वैदेहीं सा नदी न शशंस ताम् ॥१०॥ निराशस्तु तया नद्या सीताया दर्शने कृतः । उवाच रामः सौमित्रिं सीतादर्शनकर्शितः ॥ ११ ॥ एषा गोदावरी सौम्य किञ्चिन्न प्रतिभाषते । किन्नु लक्ष्मण वक्ष्यामि समेत्य जनकं वचः । मातरं चैव वैदेह्या विना तामहमप्रियम् ॥ १२ ॥ या मे राज्यविहीनस्य वने वन्येन जीवतः । सर्वं व्यपनयेच्छोकं वैदेही क्वनु सा गता ॥ १३ ॥ ज्ञातिपक्षविहीनस्य राजपुत्रीमपश्यतः । मन्ये दीर्घा भविष्यन्ति रात्रयो मम जाग्रतः ॥ १४ ॥ मन्दाकिनीं जनस्थानमिमं प्रस्रवणं गिरिम् । सर्वाण्यनुचरिष्यामि यदि सीता हि दृश्यते ॥ १५ ॥ एते मृगा महावीर्या मामीक्षन्ते मुहुर्मुहुः । वक्तुकामा इव हि मे इङ्गितान्युपलक्षये ॥ १६ ॥ तांस्तु दृष्ट्वा नरव्याघ्रो राघवः प्रत्युवाच ह । क्व सीतेति निरीक्षन् वै बाष्पसंरुद्धया दृशा ॥१७॥ एवमुक्ता नरेन्द्रेण ते मृगाः सहसोत्थिताः । दक्षिणाभिमुखाः सर्वे दर्शयन्तो नभःस्थलम् ॥१८॥ मैथिली ह्रियमाणा सा दिशं यामन्वपद्यत । तेन मार्गेण धावन्तो निरीक्षन्ते नराधिपम् ॥ १९ ॥

न्निति भावः ॥१८॥ अमुमेवार्थं स्पष्टयति–मैथिलीति । ह्रियमाणा सा मैथिली यां दिशमन्वपद्यत प्राप । तेन मार्गेण तया दिशा धावन्तः सन्तः नराधिपं

सा गोदावरी । भूतैः पञ्चमहाभूतैः । प्रचोदितापि नावददित्यन्वयः ॥ ९ ॥ सा नदी गोदावरी ॥ १०–१४ ॥ मन्दाकिनीमिति । मन्दाकिनी नाम काचिन्नदी ॥१५॥ पत इति । मे मम वक्तुकामा इव मैथिलीवृत्तान्तमिति शेषः । मामीक्षन्ते । कुतः ? यथा इङ्गितानि हृदयगताभिप्रायान् उपलक्षये, मृगाणामिति शेषः ॥ १६ ॥ तानिति । निरीक्षन्निति । मृगचेष्टाग्रहणार्थं सूक्ष्मदृष्टिं कुर्वन्नित्यर्थः॥१७॥ एवमित्यादि श्लोकद्वयमेकं वाक्यम् । अत्र श्लोके यत्तच्छब्दावध्याहार्यौ । अत्रैवमन्वयक्रमः– नरेन्द्रेण श्रीरामेण एवमुक्ताः पृष्टास्ते मृगाः सहसोत्थिता दक्षिणाभिमुखास्सन्तो नभस्थलं दर्शयन्तस्सन्तः ह्रियमाणा सा मैथिली येन मार्गेण यां दिशं

निरीक्षन्ते ॥ १९ ॥ तनि०—अत्र रामाशयाभिज्ञैर्मृगैः सीतागमनदिक्सूचकचेष्टाकरणात् सूक्ष्मालङ्कारः । " सूक्ष्मं पराशयाभिज्ञेतरसाकूतचेष्टितम् " इति लक्षणात् ॥ १८ ॥ १९ ॥ येन कारणेन मार्गम् आकाशमार्गं भूमिं दक्षिणां भूमिं च निरीक्षन्ते स्म पुनश्च मार्गं दक्षिणमार्गम् इच्छन्ति स्म, गन्तुमिति शेषः । तेन कारणेन मृगाः उपलक्षिताः गृहीतचेष्टार्थां आसन् ॥ २० ॥ उक्तमनुवदन्नाह—तेषामिति । वचनसर्वस्वं तत्सदृशमिङ्गितमित्यर्थः । लक्षयामास मृग

येन मार्गं च भूमिं च निरीक्षन्ते स्म ते मृगाः । पुनश्च मार्गमिच्छन्ति लक्ष्मणेनोपलक्षिताः ॥ २० ॥ तेषां वचनसर्वस्वं लक्षयामास चेङ्गितम् । उवाच लक्ष्मणो ज्येष्ठं धीमान् भ्रातरमार्तवत् ॥ २१ ॥ क्व सीतेति त्वया पृष्टा यथेमे सहसोत्थिताः । दर्शयन्ति क्षितिं चैव दक्षिणां च दिशं मृगाः ॥ २२ ॥ साधु गच्छावहे देव दिशमेतां हि नैर्ऋतिम् । यदि स्यादागमः कश्चिदार्या वा साथ लक्ष्यते ॥ २३ ॥ बाढमित्येव काकुत्स्थः प्रस्थितो दक्षिणां दिशम् । लक्ष्मणानुगतः श्रीमान् वीक्षमाणो वसुन्धराम् ॥ २४ ॥ एवं सम्भाषमाणौ तावन्योन्यं भ्रातरावुभौ । वसुन्धरायां पतितं पुष्पमार्गमपश्यताम् ॥ २५ ॥

चेष्टार्थं वचनोक्तमिव ज्ञातवानित्यर्थः । उवाच चेत्यन्वयः । आर्तवत् आर्तमिति क्रियाविशेषणम् । क्तवतुप्रत्ययः ॥२१॥ क्वेत्यादिश्लोकद्वयमेकान्वयम् । यथा येन प्रकारेण दर्शयन्ति तथा गच्छावहै इत्यन्वयः । आर्षमात्मनेपदम् । नैर्ऋतिं दक्षिणपश्चिमां राक्षसाधिष्ठितां तस्याश्च दक्षिणैकदेशत्वाद्दक्षिणां दिशमिति व्यपदेशः ॥२२॥ आगमः सीतादर्शनोपायः ॥ २३ ॥ श्रीमान् सीताधिगमनहेतुदर्शनश्रीमान् ॥२४॥ एवं साध्वित्याद्युक्तरीत्या । पुष्पमार्गं

मन्वपद्यत तस्यां दिशि तेन मार्गेण धावन्तो नराधिपं निरीक्षन्त इत्यन्वयः ॥ १८ ॥ १९ ॥ मृगकर्तृकनिरीक्षणेन किमत आह—येनेति । येन कारणेन एते मृगाः मार्गं दक्षिणां दिशम् भूमिं च दक्षिणदिग्भूमिं च निरीक्षन्ते पुनश्च मार्गं दक्षिणां दिशम् इच्छन्तः गन्तुमिच्छन्तः तेन कारणेन ते मृगाः लक्ष्मणेनोपलक्षिताः गृहीतचेष्टार्था अभवन्निति शेषः । अयश्चोपलक्षितश्चेष्टार्थः दक्षिणदिशि दूरे भूमौ स्थापिता सीतेति दक्षिणदिग्धावनदक्षिणभूनिरीक्षणशब्दैर्व्यज्यत इति ॥ २० ॥ मृगचेष्टाग्रहणेन किं जातमत आह—तेषामिति । वचनसर्वस्वं वचनसारमिव इङ्गितं चेष्टाभिप्रायं लक्षयामास लक्ष्मण इति शेषः । यद्वा तेषां वचनसर्वस्वमिङ्गितं स्वयं लक्ष्मणो लक्षयामास ज्ञातवान् पश्चाज्ज्येष्ठभ्रातरं प्रति तेषामिङ्गितम् उवाचेत्यन्वयः ॥ २१ ॥ २२ ॥ नैर्ऋतिं दक्षिणां दिशम् । दक्षिणाशागमने आगमः सीताज्ञापक उपायः चिह्नमिति यावत् यदि स्यात् सम्भवेत् अथवा आर्या सीता वा लक्ष्यते ॥ २३ ॥ २४ ॥ पुष्पमार्गं पुष्पचिह्नितं मार्गम् पुष्पपरम्परां वा ॥ २५ ॥ २६ ॥

पुष्पयुक्तमार्गम् । मध्यमपदलोपिसमासः ॥ २५ ॥ वीरः दर्शनोपायमात्रे ज्ञाते तां लब्धुं समर्थः ॥ २६ ॥ तानीमानि पुष्पाणि मया दत्तानि वैदेह्या केशपाशे पिनद्धानि बद्धानीत्यभिजानामि ॥ २७ ॥ अम्लानीकरणात् सूर्यः अनुत्क्षेपणात् वायुः धारणात् भूमिश्च रक्षन्तीति भावः ॥ २८ ॥ महाबाहुमित्यनेन बलवत्सहायत्वम् पुरुषर्षभ इत्यनेन स्वतः पराक्रमशालित्वमुक्तम् । तथापि धर्मात्मा सहसा गिरेरविनाशकरणात् ॥२९॥ काचिदिति ।

तां पुष्पवृष्टिं पतितां दृष्ट्वा रामो महीतले। उवाच लक्ष्मणं वीरो दुःखितो दुःखितं वचः ॥ २६ ॥ अभिजानामि पुष्पाणि तानीमानीह लक्ष्मण । पिनद्धानीह वैदेह्या मया दत्तानि कानने ॥ २७ ॥ मन्ये सूर्यश्च वायुश्च मेदिनी च यशस्विनी । अभिरक्षन्ति पुष्पाणि प्रकुर्वन्तो मम प्रियम् ॥ २८ ॥ एवमुक्त्वा महाबाहुं लक्ष्मणं पुरुषर्षभः । उवाच रामो धर्मात्मा गिरिं प्रस्रवणाकुलम् ॥ २९ ॥ कच्चित्क्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी । रामा रम्ये वनोद्देशे मया विरहिता त्वया ॥ ३० ॥ क्रुद्धोऽब्रवीद्गिरिं तत्र सिंहः क्षुद्रमृगं यथा ॥ ३१ ॥ तां हेमवर्णां हेमाभां सीतां दर्शय पर्वत । यावत्सानूनि सर्वाणि न ते विध्वंसयाम्यहम् ॥३२॥ एवमुक्तस्तु रामेण पर्वतो मैथिलीं प्रति । शंसन्निव ततः सीतां नादर्शयत राघवे ॥ ३३ ॥

रामा स्त्री ॥ ३० ॥ तनि०—क्षितिभृतां नाथ पर्वतश्रेष्ठ ! सर्वाङ्गसुन्दरी प्रत्यवयवशोभायुक्ता मया विरहिता रामा रम्ये वनोद्देशे त्वया दृष्टा कच्चित् । अस्यैव प्रश्नस्यावृत्त्या योजने इदमेवोत्तरम् । क्षितिभृतां नाथ क्षत्रियश्रेष्ठ ! त्वया विरहिता मया दृष्टेति कच्चित् । कच्चित्कामप्रवेदने । मया दृष्टेतीदमेव ममाप्यत्यन्ताभिमतमित्यर्थः । अत्र एकस्यैव वाक्यस्य प्रश्नोत्तररूपत्वाच्चित्रालङ्कारध्वनिः । "कृतप्रश्नोत्तराभिन्नमुत्तरं चित्रमुच्यते ।" इति लक्षणात् ॥ ३० ॥ अदर्शनादाह—क्रुद्ध इति । एकमर्धम् ॥ ३१ ॥ हेमवर्णां हेमप्रतिमासदृशीम् । हेमाभां स्वर्णतुल्यकान्तिम् ॥३२॥ शंसन्निव प्रतिध्वनिना कथयन्निव, स्वपृष्टस्यैवानुवादेनानादरोक्तिं रामोऽमन्यतेति भावः । ततः अनादरोक्त्या राघवे विषये सीतां नादर्शयत । "णिचश्च" इत्यात्मनेपदम् ॥ ३३ ॥ तनि०—शंसन्निव प्रतिशब्देन कथयन्निव

अभिजानामीति । अपिनद्धानिं केशपाशे बद्धानि ॥२७॥ अम्लापनेन सूर्यः अनपनयनेन वायुः धारणेन वसुन्धरा एवं मत्प्रियचिकीर्षया एते पुष्पाणि रक्षन्तीत्यर्थः ॥ २८ ॥ २९ ॥ कच्चिदिति । सर्वाङ्गसुन्दरी प्रत्यवयवशोभायुक्ता ॥ ३० ॥ तूष्णीं तिष्ठन्तं प्रति क्रुद्ध आह—क्रुद्ध इति ॥३१॥ तामिति । हेमाभामित्यनेन लावण्यनिर्देशः । हरिद्रादौ हेमवर्णसद्भावेपि लावण्याभावाद्भयनिर्देशः ॥ ३२ ॥ एवमिति । अत्र शंसन्निवेति प्रतिशब्देन कथयन्निवेत्यर्थः ॥ ३३–३५ ॥

अथ भविष्यन्निष्पपदेशेन रामं प्रति सीतादर्शनकथनं व्यज्यते । नादर्शयतेति रावणाद्भयं व्यज्यते ॥ ३३ ॥ दाशरथिरिति हेतुगर्भम् । शिलोच्चयं पर्वतम् । इदमर्धमेकम् ॥ ३४ ॥ ३५ ॥ इमामिति, इयमपि पृष्टा चेन्न वक्ष्यतीति मत्वेति भावः ॥ ३६ ॥ निष्क्रान्तं प्रादुर्भूतम् । इतः पूर्वमदर्शनादेव



ततो दाशरथी राम उवाच च शिलोच्चयम् ॥ ३४ ॥ मम बाणाग्निनिर्दग्धो भस्मीभूतो भविष्यसि। असेव्यः सन्ततं चैव निस्तृणद्रुमपल्लवः ॥ ३५ ॥ इमां वा सरितं चाद्य शोषयिष्यामि लक्ष्मण । यदि नाख्याति मे सीतामार्यां चन्द्रनिभाननाम् ॥ ३६ ॥ एवं स रुषितो रामो दिधक्षन्निव चक्षुषा । ददर्श भूमौ निष्क्रान्तं राक्षसस्य पदं महत् ॥ ३७ ॥ त्रस्ताया रामकांक्षिण्याः प्रधावन्त्या इतस्ततः । राक्षसेनानुवृत्ताया मैथिल्याश्च पदान्यथ ॥ ३८ ॥ स समीक्ष्य परिक्रान्तं सीताया राक्षसस्य च । भग्नं धनुश्च तूणी च विकीर्णं बहुधा रथम् । सम्भ्रान्तहृदयो रामः शशंस भ्रातरं प्रियम् ॥ ३९ ॥ पश्य लक्ष्मण वैदेह्याः शीर्णाः कनकबिन्दवः । भूषणानां हि सौमित्रे माल्यानि विविधानि च ॥ ४० ॥ तप्तबिन्दुनिकाशैश्च चित्रैः क्षतजबिन्दुभिः । आवृतं पश्य सौमित्रे सर्वतो धरणीतलम् ॥ ४१ ॥ मन्ये लक्ष्मण वैदेही राक्षसैः कामरूपिभिः । भित्त्वा भित्त्वा विभक्ता वा भक्षिता वा भविष्यति ॥ ४२ ॥ तस्या निमित्तं वैदेह्या द्वयोर्विवदमानयोः । बभूव युद्धं सौमित्रे घोरं राक्षसयोरिह ॥ ४३ ॥

मुक्तम्, त्रस्तायाः रावणाद्भीतायाः रामकाङ्क्षिण्याः रामाश्रमं प्रयातुमुद्युक्तायाः अत एव राक्षसेनानुवृत्तायाः अनुगतायाः अत एवेतस्ततो धावन्त्याः । ददर्शेत्यनुवर्तते ॥ ३७ ॥ ३८ ॥ स समीक्ष्येति सार्धश्लोक एकान्वयः । परिक्रान्तं परिक्रमम् पदन्यासमिति यावत् ॥ ३९ ॥ कनकबिन्दवः स्वर्णशकलानि ॥४०॥ तप्तेति । तप्तं स्वर्णम् ॥ ४१ ॥ मन्य इति । इति मन्य इति योज्यम् ॥४२॥ तस्या निमित्तं सुन्दोपसुन्दवत् परिग्रहार्थमित्यर्थः । विवद

इमां सरितं गोदावरीम् ॥ ३६ ॥ दिधक्षन्निव, सर्वं जगदिति शेषः । निष्क्रान्तं प्रवृत्तनिक्षेपम्, महदत्यायतविस्तृतमित्यर्थः । पदं चरणन्यासस्थानं ददर्शेत्यन्वयः ॥ ३७–३८ ॥ स इति । राक्षसस्य सीतायाश्च परिक्रान्तं प्रवृत्तं पदं समीक्ष्य भ्रातरं शशंसेत्यन्वयः ॥ ३९ ॥ पश्येति । कनकबिन्दवः कनकस्य भूषणस्य सम्बन्धिनो बिन्दवः शकलानि ॥ ४० ॥ तप्तेति । तप्तबिन्दुनिकाशैः तपनीयबिन्दुतुल्यैः ॥ ४१ ॥ ४२ ॥ तस्या इति । तस्या निमित्तं तस्या आहरणार्थं

मानयोः वैमत्यं प्राप्तयोः । "भासनोपसम्भाषा–" इत्यादिना आत्मनेपदम् ॥४३॥ मुक्तामणिमयं मुक्तामणिप्रचुरम् ॥४४॥ वैडूर्यगुलिकाचितं वैडूर्यमणि खचितम् ॥ ४५ ॥ सम्यक् शतधा भग्नदण्डमित्यन्वयः ॥ ४६ ॥ काञ्चनमयाः उरश्छदाः तनुत्राणि येषां ते । खराः अश्वतराः रासभविशेषा वा ॥४७॥ द्युतिमत्त्वादेव दीप्तपावकसङ्काशः समरे नायकसूचको ध्वजः समरध्वजः अपविद्धः रथश्च भग्न इति सम्बन्धः । साङ्ग्रामिकः समरोचितः ॥ ४८ ॥

मुक्तामणिमयं चेदं तपनीयविभूषितम् । धरण्यां पतितं सौम्य कस्य भग्नं महद्धनुः ॥ ४४ ॥ तरुणादित्यसङ्काशं वैडूर्यगुलिकाचितम् । विशीर्णं पतितं भूमौ कवचं कस्य काञ्चनम् ॥ ४५ ॥ छत्रं शतशलाकं च दिव्यमाल्योप शोभितम् । भग्नदण्डमिदं कस्य भूमौ सम्यङ्निपातितम् ॥ ४६ ॥ काञ्चनोरश्छदाश्चेमे पिशाचवदनाः खराः । भीमरूपा महाकायाः कस्य वा निहता रणे ॥४७॥ दीप्तपावकसङ्काशो द्युतिमान् समरध्वजः । अपविद्धश्च भग्नश्च कस्य साङ्ग्रामिको रथः ॥ ४८ ॥ रथाक्षमात्रा विशिखास्तपनीयविभूषणाः । कस्येमेऽभिहता बाणाः प्रकीर्णा घोर कर्मणः ॥ ४९ ॥ शरावरौ शरैः पूर्णौ विध्वस्तौ पश्य लक्ष्मण । प्रतोदाभीषुहस्तो वै कस्यायं सारथिर्हतः ॥ ५० ॥ कस्येमौ पुरुषव्याघ्र शयाते निहतौ युधि । चामरग्राहिणौ सौम्य सोष्णीषमणिकुण्डलौ ॥५१॥ पदवी पुरुषस्यैषा व्यक्तं कस्यापि रक्षसः । वैरं शतगुणं पश्य ममेदं जीवितान्तकम् ॥ ५२ ॥

रथस्याक्षः आधारदण्डः तन्मात्राः तद्वद्दीर्घप्रमाणाः । प्रमाणे मात्रच् । विगतशिखाः मुण्डाग्रा इत्यर्थः । विगतफलभागा इति वा । अभिहताः भग्नाः प्रकीर्णाः इतस्ततो विप्रकीर्णाः ॥ ४९ ॥ शरानावृणुत इति शरावरौ निषङ्गौ । प्रतोदः तोत्रम् । अभीषवः रश्मयः । " अभीषुः प्रग्रहे रश्मौ " इति शाश्वतः ॥५०॥ उष्णीषः शिरोवेष्टनम् ॥ ५१ ॥ एषा पदवी मार्गः पुरुषस्य जघनभागनिम्नत्वाद्यभावात् , तत्रापि रक्षसः पदवीं विषमरूपत्वात् ।

मित्यर्थः ॥ ४३ ॥ ४४ ॥ तरुणेति । वैडूर्यगुलिकाचितं वैडूर्यमणिभिरलंकृतमित्यर्थः ॥ ४५ ॥ ४६ ॥ काञ्चनोरश्छदाः काञ्चनमयतनुत्राणवन्तः ॥ ४७ ॥ ध्वजः अपविद्धः ध्वस्तः । रथो भग्न इत्यन्वयः ॥ ४८ ॥ विशिखाः मुण्डाग्राः खण्डिताग्रा इति यावत् । अपहताः ध्वस्ताः रथाक्षमात्राः चतुश्शताङ्गुलपरिमिताः । तदुक्तं शिल्पिप्रश्ने–" अष्टाशीतिशतमिभा तिर्यगक्षश्चतुश्शतः । " इति ॥ ४९ ॥ शरावरौ तूणीरौ । प्रतोदाभीषुहस्तः प्रतोदः तोत्रम् अभीषवः प्रग्रहाः ॥ ५० ॥ ५१ ॥ पदवीति । एषा पुरुषस्य पदवी तत्रापि कस्यचिद्रक्षस इत्यनेन निश्चयाभाव उक्तः । अत एव राक्षसैस्सह जीवितान्तकं जीवित

एवञ्च मम राक्षसैः सह इदं वैरं शतगुणं सत्तेषां जीवितमन्तयति विनाशयतीति जीवितान्तकं सम्पन्नं पश्य । एतावत्पर्यन्तं राक्षसैस्तीव्रवैराकरणात्तदप राधः सोढः संप्रति तान् समूलं नाशयिष्यामीति भावः ॥ ५२ ॥ मृता मारिता ॥ ५३ ॥ अस्यामनस्यायामरक्षकत्वाद्धर्मेपि रोपो जात इत्याह—न धर्म इति । इदमर्धमेकम् ॥ ५४ ॥ न केवलं धर्मे तत्फलप्रददेवेषु च रोपो जात इत्याह—भक्षितायामिति । के वा ईश्वराः मम अप्रियं कर्तुं शक्ता इत्यन्वयः ।



सुघोरहृदयैः सौम्य राक्षसैः कामरूपिभिः । हृता मृता वा सीता सा भक्षिता वा तपस्विनी ॥ ५३ ॥ न धर्मस्त्रायते सीतां ह्रियमाणां महावने ॥५४॥ भक्षितायां हि वैदेह्यां हृतायामपि लक्ष्मण । के हि लोकेऽप्रियं कर्तुं शक्ताः सौम्य ममेश्वराः ॥ ५५ ॥ कर्तारमपि लोकानां शूरं करुणवेदिनम् । अज्ञानादवमन्येरन् सर्वभूतानि लक्ष्मण ॥ ५६ ॥ मृदुं लोकहिते युक्तं दान्तं करुणवेदिनम् । निर्वीर्य इति मन्यन्ते नूनं मां त्रिदशेश्वराः ॥ ५७ ॥ मां प्राप्य हि गुणो दोषः संवृत्तः पश्य लक्ष्मण । अद्यैव सर्वभूतानां रक्षसामभवाय च ॥ ५८ ॥

आद्यो हिः पादपूरणं, द्वितीयः प्रसिद्धौ ॥ ५५ ॥ तर्हीदानीं कथमप्रियं तैः कृतमित्यत्राह—कर्तारमिति । लोकानां कर्तारमपि शूरमपि संहारकरणसमर्थमपि । करुणवेदिनं कारुण्यपरं पुरुषं सर्वभूतानि अज्ञानादवमन्येरन् नाद्रियेरन् । लोकस्वभावोयमिति भावः ॥ ५६ ॥ तनि०—अत्र लोकानां कर्तारमिति जगत्सृष्टिकर्तृत्वम्, शूरमिति संहारकरणसामर्थ्यं च व्यज्यते ॥५६॥ विशिष्य गर्विता देवाः मां नाद्रियेरन्नित्याह—मृदुमिति । लोकहिते युक्तं सक्तम्, अत एव मृदुं कोमलहृदयम्, अत एव करुणवेदिनम्. दान्तं विषयचापलरहितं मां निर्वीर्यं मन्यन्ते । अज्ञत्वाविशेषादिति भावः ॥ ५७ ॥ मामिति । गुणः स्यान्तं करोतीति तथा, रक्षसामेवेति शेषः । शतगुणमत्यन्तं मम वैरमासीत् पश्येति सम्बन्धः ॥ ५२ ॥ वैरहेतुमाह—सुघोरहृदयैरिति । अतो वैरं पश्येति पूर्वेण सम्बन्धः । मम वैरं पश्येत्याग्रहोक्तिः ॥ ५३ ॥ "आपत्सु रक्षको धर्मः" इति न्यायोस्ति सोप्यस्मिन्नवसरे नास्तीत्याह—न धर्म इति ॥ ५४ ॥ देवाश्च रक्षन्तीत्येतदपि नास्तीत्याह—भक्षितायामिति । ईश्वराः देवाः के वा मम प्रियं कर्तुं शक्ताः आसक्तिमन्तः, न केपीत्यर्थः । देवादयो यदि मम प्रियं कर्तुं शक्तास्तर्हि सीताहरणादेः पूर्वमेव रक्षेरन् अतस्त्वेतादृशा न भवन्तीतिं भावः ॥ ५५ ॥ अयं स्वयंकृतानर्थ इत्यभिप्रायेणाह—कर्तारमिति । करुणवेदिनं कारुण्यपरं लोकानां कर्तारमपि सर्वभूतानि अज्ञानात् तत्स्वभावापरिज्ञानादशक्तोऽयमित्यवमन्येरन् ॥ ५६ ॥ अस्तु प्रकृते किमायातमत आह—मृदुमिति । मृदुं मार्दवादिधर्मयुक्तं मां त्रिदशेश्वराः निर्वीर्यं मन्यन्ते, अज्ञत्वाविशेषादिति भावः ॥ ५७ ॥ मामिति । अत एव मां प्राप्य गुणोपि मार्दवादिगुणोपि दोषः अनिष्टसाधनत्वेन संवृत्त इत्यर्थः । अतो मृदुत्वं

कारुण्यादिः मां प्राप्य दोषः संवृत्तः अनिष्टसाधनत्वेन संवृत्तः । तस्मादस्मदवमानहेतुतया दोषरूपेण गुणेन किं प्रयोजनमित्यर्थः । यद्वा सर्वभूतानां रक्षसां च अभवाय नाशाय गुणः दोषः संवृत्तः, दयां त्यक्त्वा क्रोधं करिष्यामीत्यर्थः ॥५८॥ तनि०—सर्वभूतानां राक्षसानुकूलतया यानि भूतानि प्रवर्तन्ते तेषां रक्षसां च अभवाय नाशाय॥५८॥ संहृत्येति । यथा उदितः सूर्यः शशिज्योत्स्नां शीतलचन्द्रचन्द्रिकां संहृत्यैव प्रकाशते तथा मम तेजः गुणान् मृदुत्वादीन्

संहृत्यैव शशिज्योत्स्नां महान् सूर्य इवोदितः । संहृत्यैव गुणान् सर्वान् मम तेजः प्रकाशते ॥ ५९ ॥ नैव यक्षा न गन्धर्वा न पिशाचा न राक्षसाः । किन्नरा वा मनुष्या वा सुखं प्राप्स्यन्ति लक्ष्मण ॥६०॥ ममास्त्रबाणसम्पूर्णमाकाशं पश्य लक्ष्मण । निस्सम्पातं करिष्यामि ह्यद्य त्रैलोक्यचारिणाम् ॥६१॥ सन्निरुद्धग्रहगणमावारितनिशाकरम् । विप्रनष्टानलमरुद्भास्करद्युतिसंवृतम् ॥ ६२ ॥ विनिर्मथितशैलाग्रं शुष्यमाणजलाशयम् । ध्वस्तद्रुमलतागुल्मं विप्रणाशितसागरम् । त्रैलोक्यं तु करिष्यामि संयुक्तं कालधर्मणा ॥ ६३ ॥

संहृत्यैव प्रकाशते ॥ ५९ ॥ तनि०—शशिज्योत्स्नामित्युपलक्षणम् । उदितो महान् सूर्यः अनायासेन शशिज्योत्स्नादीनि तेजांस्यपहृत्य यथा प्रकाशते तद्वन्मम तेजः सकलवस्तुगुणान् संहृत्य प्रकाशते ॥५९॥ देवविषयः कोपस्तत्सम्बन्धिष्वपि प्रवर्ततामित्याह—नैवेति॥६०॥ ममेति । अस्त्राणि ब्रह्मास्त्रादीनि । पश्य, उत्तरक्षण इति शेषः । त्रैलोक्यचारिणां निस्सम्पातं बाणप्रचारतोऽशक्यसञ्चारम् ॥६१॥ सन्निरुद्धेत्यादिसार्धश्लोकद्वयमेकान्वयम् । सन्निरुद्धः ग्रहगणः ग्रहगणसञ्चारः यस्य । आवारितः आच्छादितः। विप्रनष्टानलमरुत् नष्टाग्निवातं भास्करद्युतिसंवृतं संवृतभास्करद्युति । आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । कालसाध्यो

विसृज्य अतःपरमेवं करिष्यामीत्याह—अद्यैवेत्यादि ॥५८॥ शशिज्योत्स्नां चन्द्रचन्द्रिकां संहृत्य अभिभूय उदितो रविरिव सर्वगुणान् तेजांसि संहृत्याभिभूय मम तेजः प्रतापः प्रकाशत इत्यन्वयः ॥५९॥६०॥ ममेति । निस्सम्पातं निस्सञ्चारम् ॥ ६१ ॥ सन्निरुध्येत्यादि सार्धश्लोकद्वयमेकं वाक्यम् । विप्रनष्टानलजलमरुद्भास्करसंवृतम् इति पाठः । विप्रनष्टाः अनलजलमरुतो यस्मिंस्तत्तथा भास्करसंवृतं भास्करस्य संवृतं संवरणं यस्मिन् तत्, लीनभास्करमित्यर्थः । विप्रनष्टाखिलमहद्भास्करद्युतीत्यपि पाठः । तस्यायमर्थः—विप्रनष्टाः अखिलमहतां भास्करस्य च द्युतयो यस्मिन् तत् । अत एव संवृतम्, तमसेति शेषः । कालधर्मणा विनाशेन

धर्मः कालधर्मः विनाशः तेन कालधर्मणा । अनिजार्पः ॥ ६२ ॥ ६३ ॥ न तामिति । तस्मादस्मिन् मुहूर्त इत्युपस्कार्यम् । कुशलिनीं क्षेमयुक्ताम्, अक्षतामित्यर्थः ॥६४॥ नाकाशमिति । गुणो मौर्वी ॥६५॥ अर्दितं हिंसितम् । समाकुलं सम्यग्व्यग्रम् । अमर्यादं त्यक्तस्वस्वप्रकृत्यवस्थानम् ॥ ६६ ॥ दुरावरैः दुर्वारैः । जीवलोकं ब्रह्माण्डम् ॥ ६७ ॥ रोषप्रयुक्तानां रोषसंप्रयुक्तानाम्, ममेति शेषः । अतिदूरातिगामिनाम् अतिदूरातिपातिनाम् ॥ ६८ ॥



न तां कुशलिनीं सीतां प्रदास्यन्ति ममेश्वराः । अस्मिन् मुहूर्ते सौमित्रे मम द्रक्ष्यन्ति विक्रमम् ॥ ६४ ॥ नाकाश मुत्पतिष्यन्ति सर्वभूतानि लक्ष्मण । मम चापगुणोन्मुक्तैर्बाणजालैर्निरन्तरम् ॥६५॥ अर्दितं मम नाराचैर्ध्वस्तभ्रान्त मृगद्विजम् । समाकुलममर्यादं जगत् पश्याद्य लक्ष्मण ॥ ६६ ॥ आकर्णपूर्णैरिषुभिर्जीवलोकं दुरावरैः । करिष्ये मैथिलीहेतोरपिशाचमराक्षसम् ॥ ६७ ॥ मम रोषप्रयुक्तानां सायकानां बलं सुराः । द्रक्ष्यन्त्यद्य विमुक्तानामति दूरातिगामिनाम् ॥ ६८ ॥ नैव देवा न दैतेया न पिशाचा न राक्षसाः । भविष्यन्ति मम क्रोधात्त्रैलोक्ये विप्रणा शिते ॥ ६९ ॥ देवदानवयक्षाणां लोका ये रक्षसामपि । बहुधा न भविष्यन्ति बाणौघैः शकलीकृताः ॥७०॥ निर्म र्यादानिमाँल्लोकान् करिष्याम्यद्य सायकैः । हृतां मृतां वा सौमित्रे न दास्यन्ति ममेश्वराः ॥ ७१ ॥ तथारूपां हि वैदेहीं न दास्यन्ति यदि प्रियाम् । नाशयामि जगत्सर्वं त्रैलोक्यं सचराचरम् ॥ ७२ ॥ इत्युक्त्वा रोषताम्राक्षो रामो निष्पीड्य कार्मुकम् । शरमादाय संदीप्तं घोरमाशीविषोपमम् ॥ ७३ ॥

न भविष्यन्ति नशिष्यन्तीत्यर्थः । पूर्वं दुःखप्राप्तिरेवोक्ता ॥ ६९ ॥ देवेति । बहुधा शकलीकृता इत्यन्वयः ॥ ७० ॥ निर्मर्यादान् स्वस्वव्यवस्थारहितान् । न दास्यन्ति न दास्यन्ति यदि ॥ ७१ ॥ हृतां मृतां वेत्यत्र सूचितमाह—तथारूपामिति । जगत्सर्वं सर्वं जनमित्यर्थः । अन्यथा त्रैलोक्यमित्यनेन पुनरुक्तिः सचराचरमित्यनुवादः ॥ ७२ ॥ इत्युक्त्वेति श्लोकद्वयमेकान्वयम् । निष्पीड्य दृढमुष्टिबलेन गृहीत्वा ॥ ७३ ॥ ७४ ॥

संयुक्तं करिष्यामीत्यन्वयः ॥ ६२ ॥ ६३ ॥ न तामित्यत्र यदिशब्दोऽध्याहार्यः ॥६४॥ नेति । निरन्तरं नीरन्ध्रम् आकाशे नोत्पतिष्यन्तीत्यन्वयः ॥६५–६८॥ नैवेति । न भविष्यन्तीत्यर्थः ॥ ६९ ॥ ७० ॥ निर्मर्यादानिति । न दास्यन्तीत्यत्र यदीत्यध्याहार्यम् ॥ ७१ ॥ ७२ ॥ इतीति । निष्पीड्य दृढमुष्टिबन्धेन गृहीत्वा ॥७३॥ ७४ ॥

यथेत्यादिः सार्धश्लोकः । विधिः अदृष्टं जरादयो यथा न प्रतिहन्यन्ते तथाहं न निवार्यः । अन्ये यथाशब्दाः पादपूरणार्थाः । यद्वा बहुवचनमविवक्षितम् । प्रतिहन्यत इति प्रत्येकमन्वयः ॥ ७५ ॥ तनि०—अनेन अप्रतिहतसङ्कल्पत्वं परैरनभिभवनीयत्वं च कथितम् । अत्र यथेति पदावृत्त्या न प्रतिहन्यन्त इत्यप्रतिक्रिया स्वरूपावृत्तिः । दीपकालङ्कारः ॥ ७५ ॥ पुरेव मे चारुदतीं मायामृगं प्रति गमनात् पूर्वं कान्तं मां प्रति इमं मृगं गृहीत्वा मह्यं देहीति हर्षेण यत् स्मितं

सन्धाय धनुषि श्रीमान् रामः परपुरञ्जयः । युगान्ताग्निरिव क्रुद्ध इदं वचनमब्रवीत् ॥ ७४ ॥ यथा जरा यथा मृत्युर्यथा कालो यथा विधिः । नित्यं न प्रतिहन्यन्ते सर्वभूतेषु लक्ष्मण । तथाहं क्रोधसंयुक्तो न निवार्योऽस्मि सर्वथा ॥ ७५ ॥ पुरेव मे चारुदतीमनिन्दितां दिशन्ति सीतां यदि नाद्य मैथिलीम् । सदेवगन्धर्वमनुष्यपन्नगं जगत् सशैलं परिवर्तयाम्यहम् ॥ ७६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

कृतवती तेन सहैव न दास्यन्ति चेत् अनिन्दितां तामलब्ध्वा जगदुपसंहारं करिष्यामि चेदपि इदं निन्दितमिति न केऽपि वक्ष्यन्तीति भावः । वक्ष्यते हि—"यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत् । अस्या हेतोर्विशालाक्ष्या युक्तमित्येव मे मतिः ॥" इति सर्वज्ञेन हनुमता । चारुदतीमित्यत्र "छन्दसि" इति सूत्रेण दन्तशब्दस्य दत्रादेशः । "अग्रान्त—" इति सूत्रस्थचकारेण वा दत्रादेशः । सीताम् अयोनिजतया मत्तोऽप्यतिशायिताम् । मैथिलीं वीरश्रेष्ठ जनकचक्रवर्तिपुत्रीत्वेन मत्सदृशीम् । सदेवेत्यादि । सर्वलोकस्य सम्भूतमरणमेव करिष्यामीति भावः । परिवर्तयामि नाशयामि अन्यथाकरिष्यामीति वा । अस्मिन् सर्गे सार्धपञ्चसप्ततिश्लोकाः ॥ ७६ ॥ इति श्रीगोविन्द० श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुःषष्टितमः सर्गः ॥ ६४ ॥

विधिः दैवम् । न प्रतिहन्यन्ते न निवार्यन्ते ॥ ७५ ॥ पुरेति । परिवर्तयामि नाशयामि ॥ ७६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां चतुष्षष्टितमः सर्गः ॥ ६४ ॥

ति०—नन्वेवंविधः कोपः कथमस्य किमर्थं चेति चेच्छृणु मनुष्यदेहधारणेन तद्व्यवहारनटनमेवैतत् । किञ्च ईदृशदुःखकालेऽस्य क्रोधाभावे रावणो मनुष्यबुद्धिं कुर्यात् तथा च तद्वधोऽशक्यः स्यादित्येतदर्थं च सः मृत्युं मरणधर्मेण योजयामीत्यादि वचोऽपि रावणवचोत्थदेव, आरोपितक्रोधमूलकत्वात्, अत एव हरिष्यामीत्युक्तिः । लक्ष्मणस्तु तत्त्वज्ञोऽपि तद्देवातत्त्वज्ञ इव तन्मायामोहितो वा प्रलयकालिकरौद्रशक्त्यंशः सम्भाव्यानुनयति स्म ॥ ७६ ॥

एवं जगदुपसंहारक्रोधकलुषं रामं लक्ष्मणः सन्धुक्ष (सान्त्व) यति पञ्चपदितमे । तप्यमानमित्यादिश्लोकत्रयमेकान्वयम् । तप्यमानं तपन्तम् । तथा तप्य मानमित्यनेन पूर्वोक्तजगदुपसंहारवाचस्तत्तत्व[illegible] रामं दृष्ट्वा राममब्रवीदिति क्रियाभेदान्न पुनरुक्तिदोषः । अभवे विनाशे । युक्तम् उद्युक्तम् । संवर्तकं संहारकम् । अदृष्टपूर्वमिति क्रोधनक्रियाविशेषणम् । परिशुष्यता लोकविनाशभयेनेति भावः ॥ १–२ ॥ पुरेति । क्रोधवशमापन्नः



तप्यमानं तथा रामं सीताहरणकर्शितम् । लोकानामभवे युक्तं संवर्तकमिवानलम् ॥ १ ॥ वीक्षमाणं धनुः सज्यं निःश्वसन्तं पुनः पुनः । दग्धुकामं जगत्सर्वं युगान्ते तु यथा हरम् ॥ २ ॥ अदृष्टपूर्वं संक्रुद्धं दृष्ट्वा रामं तु लक्ष्मणः । अब्रवीत् प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ॥ ३ ॥ पुरा भूत्वा मृदुर्दान्तः सर्वभूतहिते रतः । न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि ॥ ४ ॥ चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा । एतच्च नियतं सर्वं त्वयि चानुत्तमं यशः ॥ ५ ॥ एकस्य नापराधेन लोकान् हन्तुं त्वमर्हसि । न तु जानामि कस्यायं भग्नः साङ्ग्रामिको रथः । केन वा कस्य वा हेतोः सायुधः सपरिच्छदः ॥ ६ ॥

सन् प्रकृतिं मृदुत्वादिनिजस्वभावं न हातुमर्हसि ॥४॥ चन्द्र इति । लक्ष्म्यादिक्रमेकैकस्य प्रतिनियतम्, त्वयि तु एतत्सर्वं च यशश्च प्रतिनियतमित्यर्थः ॥५॥ तनि०—अत्र यशःशब्देन "न तस्येशे कश्चन तस्य नाम महद्यशः" इत्याद्युक्तनिस्सीमाभ्यधिकत्वादिगुणाः प्रतिनियता इत्युपलक्ष्यन्ते ॥ ५ ॥ मम दान्ततयैवैतादृशी दशा जाता अधुनाऽपि यदि क्रोधो न स्यात् को वा मम वित्रस्येत् कथं च सीताप्राप्तिरित्याशङ्क्याह—एकस्येति । अर्धत्रयमेकान्वयम् । अयं भावः—एको

तप्यमानमित्यादि । तप्यमानं तपन्तं रामं दृष्ट्वा राममब्रवीदिति रामशब्दद्वयस्य सम्बन्धः । अभवे नाशे युक्तमुद्युक्तम् । सांवर्तकमिति पाठः । सांवर्तकं प्रलयकालीनम् । मुखेन परिशुष्यतेति लोकविनाशभयेनेति भावः ॥ १–३ ॥ पुरेति । प्रकृतिं सर्वभूतहितत्वरूपम् ॥४॥ चन्द्र इति । लक्ष्म्यादिकमेकैकस्य प्रतिनियतम् । त्वयि एतच्च सर्वं यशश्च प्रतिनियतमित्यर्थः ॥ ५ ॥ अस्तु प्रकृते किमायातम् अत आह-एकस्येति । नन्वेकस्यापराध इति कथं ज्ञायते ? अत आह—नत्विति । न जानाम्येवेत्यर्थः । यद्यप्येक इति विशेषतो न जानामि तथापि भग्नो रथस्त्वेक इति कृत्वा अयमेक एवास्माकम् अपराधीति जानामीति भावः ॥ ६ ॥

स०—अदृष्टपूर्वमिति विशेष्येण स्वरसान्वयि सत् विशेषणीभूते क्रोधेऽन्वेति । तत्तथादृष्टपूर्वक्रोधवन्तमित्यर्थः ॥ ३ ॥

रथां दृश्यते एकस्यैव पदं प्रतीयते तेन एक एवापराधीति निश्चीयते एकस्य चापराधेन सर्वान् हन्तुं नार्हसि। तर्हि को वाऽपराधीत्यत्राह—नत्विति। केन प्रतिपक्षिणा कस्य प्रयोजनस्य हेतोः। "षष्ठी हेतुप्रयोगे" इति षष्ठी । प्रकृतादन्यस्माद्वा निमित्तादिति न जानामि, तच्चिन्तनीयमित्यर्थः । सपरिच्छदः सपरिकरः ॥ ६ ॥ अश्वानां खुरैः रथनेमिभिः रथाङ्गैश्च क्षतः निर्वृत्तसङ्ग्रामः, दृश्यत इति शेषः ॥ ७ ॥ विमर्दः सम्प्रहारः। तत्र हेतुमाह नहीति।

खुरनेमिक्षतश्चायं सिक्तो रुधिरबिन्दुभिः। देशो निर्वृत्तसङ्ग्रामः सुघोरः पार्थिवात्मज ॥ ७ ॥ एकस्य तु विमर्दोऽयं न द्वयोर्वदतां वर। न हि वृत्तं हि पश्यामि बलस्य महतः पदम् ॥८॥ नैकस्य तु कृते लोकान्विनाशयितुमर्हसि। युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः ॥ ९ ॥ सदा त्वं सर्वभूतानां शरण्यः परमा गतिः। को नु दारप्रणाशं ते साधु मन्येत राघव ॥ १० ॥ सरितः सागराः शैला देवगन्धर्वदानवाः। नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः ॥ ११ ॥ येन राजन् हृता सीता तमन्वेषितुमर्हसि। मद्द्वितीयो धनुष्पाणिः सहायैः परमर्षिभिः ॥ १२ ॥ समुद्रं च विचेष्यामः पर्वतांश्च वनानि च। गुहाश्च विविधा घोरा नदीः पद्मवनानि च॥१३॥ देवगन्धर्वलोकांश्च विचेष्यामः समाहिताः। यावन्नाधिगमिष्यामस्तव भार्यापहारिणम् ॥ १४ ॥

वृत्तं संक्रान्तम् ॥ ८ ॥ वक्तव्यमुक्त्वा प्रकृतमाह—नैकस्येति। युक्तदण्डा अपराधोचितशिक्षणप्रवर्तकाः ॥ ९ ॥ विशिष्य तवायं धर्म इत्याह—सदेति। शरण्यः शरणार्हः। परमा गतिः परमप्राप्यः। देवादिकृतोऽयमपराधो नेत्याह—को न्विति ॥१०॥ दीक्षितस्य उपक्रान्तयज्ञानुष्ठानस्य। साधवः ऋत्विजः ॥ ११ ॥ परमर्षिभिः एतद्वनस्थैः ॥ १२ ॥ समुद्रमिति। विचेष्यामः अन्वेषिष्यामहे ॥ १३ ॥ देवेति। स्पष्टम् ॥ १४ ॥

खुरेति। उक्तविशेषणविशिष्टो देशः निर्वृत्तसङ्ग्रामः निष्पन्नसङ्ग्रामो देशो दृश्यत इति शेषः। अतः एकस्य, रथिकस्येति शेषः। न द्वयोः रथिकयोरिति शेषः। कुतः ? महतो बलस्य सैन्यस्य पदं स्थानं न पश्यामीत्यर्थः ॥ ७॥८॥ उपसंहरति—नैकस्येति। एकस्य कृते एकनाशनिमित्तमित्यर्थः। युक्तदण्डाः यथापराधदण्डाः। मृदवः अकठिनाः ॥ ९ ॥ १० ॥ सरित इति। ते तव नालं न समर्थाः। दीक्षितस्य प्रक्रान्तयज्ञानुष्ठानस्य। साधवः ज्ञानसम्पन्नाः। ऋत्विजः विप्रियं शापाद्यपचारं कर्तुं न समर्थाः। "नैनं ततं नाभिचरितमागच्छति" इत्यादिश्रुतियलादिति भावः ॥ ११ ॥ मद्द्वितीयः अहं द्वितीयः सहायः यस्य सः ॥ १२–१६ ॥

न चेदिति । प्राप्तश्चतुर्थोपायकालो यस्मिन् कर्मणि तत्तथा ॥ १५ ॥ एतदेव स्पष्टयति—शीलेनेति । समुत्पादय, विवक्षितकार्यमिति शेषः । समुत्सादयेति पाठे—लोकानिति शेषः । एवं लक्ष्मण[illegible]पक्षपातिरुद्रसङ्कल्पाद्रामकोपो भग्न इति वदन् मूर्ख इत्यवगन्तव्यः ॥ १६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥

न चेत्साम्ना प्रदास्यन्ति पत्नीं ते त्रिदशेश्वराः । कोसलेन्द्र ततः पश्चात् प्राप्तकालं करिष्यसि ॥ १५ ॥ शीलेन साम्ना विनयेन सीतां नयेन न प्राप्स्यसि चेन्नरेन्द्र । ततः समुत्पादय हेमपुङ्खैर्महेन्द्रवज्रप्रतिमैः शरौघैः ॥ १६ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

तं तथा शोकसन्तप्तं विलपन्तमनाथवत् । मोहेन महताविष्टं परिद्यूनमचेतनम् ॥ १ ॥ ततः सौमित्रिराश्वास्य मुहूर्तादिव लक्ष्मणः । रामं सम्बोधयामास चरणौ चाभिपीडयन् ॥ २ ॥ महता तपसा राम महता चापि कर्मणा । राज्ञा दशरथेनासि लब्धोऽमृतमिवामरैः ॥ ३ ॥ तव चैव गुणैर्बद्धस्त्वद्वियोगान्महीपतिः । राजा देवत्वमापन्नो भरतस्य यथा श्रुतम् ॥ ४ ॥

एवं लक्ष्मणो राममाश्वास्य पुनर्वक्तव्यांशं ज्ञापयति षट्षष्टितमे—तं तथेत्यादिश्लोकद्वयमेकान्वयम् । परिद्यूनं परिदेवनं प्राप्तम्, परिशोचन्तमित्यर्थः । "च्छ्वोः शूडनुनासिके च" इत्यूठ् । "दिवोऽविजिगीषायाम्" इति निष्ठानत्वम् । अचेतनम् अस्वस्थचित्तम् । सम्बोधयामास ज्ञापयामास । अभिपीडयन् उपसंगृह्णन् ॥ १ ॥ २ ॥ महता तपसा कायक्लेशेन व्रतोपवासादिना । महता चापि कर्मणा अश्वमेधपुत्रकामेष्टिप्रभृतिकर्मणा । राज्ञा दशरथेन "राजा लोकस्य रञ्जनात्" अनेन मन्त्रद्रव्यक्रियालोपाभावेनाधिकारिणा कृतत्वमुच्यते । अमृतमिव तद्वत् भोग्यत्वं यत्नसाध्यत्वं चोच्यते । अमरैः अनेकसुरकृतयत्नः एकेन कृत इति गम्यते ॥ ३ ॥ तवेति । एवकारेण इतरपुत्रव्यावृत्तिः । तवैव गुणैर्बद्धः त्वद्गुणैकपरवशः महीपतिः राजा न तु

इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां पञ्चषष्टितमः सर्गः ॥ ६५ ॥ तमित्यादि । परिद्यूनं परिदेवनं प्राप्तं शोचन्तमित्यर्थः । "दिवोऽविजिगीषायाम्" इति निष्ठानत्वम् । "च्छ्वोरशूडनुनासिके च" इत्यूठ् । यद्वा परिद्यूनं क्षीणम् । अचेतनम् अस्वस्थचित्तम् ॥ १ ॥ २ ॥ महतेति । तपसा पुत्रकामनया कृतेन तपसा । कर्मणा पुत्रकामेष्ट्यादिरूपेणेत्यर्थः ॥ ३ ॥ तवेति । देवत्वमापन्नः स्वर्गं गतः । भरतस्य यथा श्रुतम्, मुखादिति शेषः । यथा यथावच्छ्रुत

जातिमात्रेण राजा देवत्वमापन्नः । तत्र किं प्रमाणं तत्राह भरतस्येति । भरतादित्यर्थः । पञ्चम्यर्थे षष्ठी । तथैव मयोक्तमिति शेषः ॥ ४ ॥ काकुत्स्थेत्यनेनाप्राकृतत्वं महासत्त्वत्वं च सिद्धम् । सहिष्यति सहिष्यते ॥ ५ ॥ धक्ष्यते धक्ष्यति ॥ ६ ॥ प्रसङ्गात् दैविकावर्थानर्थावन्ये महान्तोपि प्राप्नुवन्तीति दृष्टान्तमुखेन प्रतिपादयितुमाह—लोकस्वभाव इत्यादिना । एष लोकस्वभाव इति वक्ष्यमाणेषु सर्वत्र योज्यम् । अनयः अनयमूलं दुःखमित्यर्थः ।

यदि दुःखमिदं प्राप्तं काकुत्स्थ न सहिष्यसे । प्राकृतश्चाल्पसत्त्वश्च इतरः कः सहिष्यति ॥ ५ ॥ दुःखितो हि भवान् लोकांस्तेजसा यदि धक्ष्यते । आर्ताः प्रजा नरव्याघ्र क्वनु यास्यन्ति निर्वृतिम् ॥ ६ ॥ [आश्वसिहि नरश्रेष्ठ प्राणिनः कस्य नापदः । संस्पृशन्त्यग्निवद्राजन् क्षणेन व्यपयान्ति च ॥ ] लोकस्वभाव एवैष ययातिर्नहुषात्मजः । गतः शक्रेण सालोक्यमनयस्तं तमः स्पृशत् ॥ ७ ॥ महर्षिर्यो वसिष्ठस्तु यः पितुर्नः पुरोहितः । अह्ना पुत्रशतं जज्ञे तथैवास्य पुनर्हतम् ॥ ८ ॥ या चेयं जगतां माता देवी लोकनमस्कृता । अस्याश्च चलनं भूमेर्दृश्यते सत्यसंश्रव ॥ ९ ॥ यौ धर्मौ जगतां नेत्रौ यत्र सर्वं प्रतिष्ठितम् । आदित्यचन्द्रौ ग्रहणमभ्युपेतौ महाबलौ ॥ १० ॥

तमः अज्ञानं स्पृशत् अस्पृशत् । स हि स्वर्गगतोपि इन्द्रेणासूयाकलुषेण भवद्राज्ये को वा श्रेष्ठ इति पृष्टः सत्यवादितयाऽहमेवेत्युक्तवान् । इन्द्रेणात्मश्लाघी त्वं न स्वर्गार्ह इति पातित इति पुराणप्रसिद्धिः । नहुषात्मज इत्यनेन नहुषानीतिरपि व्यज्यते । स च सप्तर्षीन् स्ववाहकान् शचीस्मरणेन सर्प सर्प इत्युक्तवान् सर्पो भवेत्यगस्त्यशप्तश्चिरं तथाभूतस्तस्थौ ॥७॥ अह्ना पुत्रशतं हतम्, विश्वामित्रकोपेन युगपत्पुत्रशतनाशदुःखमनुभूतमिति भावः॥८॥ माता सर्वोपादानत्वात् । देवी देवस्य विष्णोः पत्नी अत एव लोकनमस्कृता । सत्यसंश्रवेति त्वयैव हि पूर्वं मह्यमेवमुपदिष्टमिति भावः ॥९॥ धर्मौ धर्मप्रवर्तकौ सर्वधर्मसाक्षित्वात् । नेत्रौ नेतारौ कालपरिच्छेदादिमुखेन जगतः प्रवर्तकौ । " नेत्रो नेतरि भेद्यवान् " इति विश्वः । सर्वेषामर्थप्रकाशकत्वेन नेत्रमित्यन्वयः ॥ ४–६ ॥ [ आश्वसिहीति । "नहवै शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इति श्रुतेः॥ ] अन्येपि महात्मानो दुःखं प्राप्नुवन्तीति दृष्टान्तमुखेनाह—लोक इति । एषः दुःखसम्बन्धः, लोकस्वभावः लोकस्य जनस्य स्वभावः, स्वभावप्राप्त इति यावत् । अनयः स्वर्गभ्रंशरूपदुःखमित्यर्थः । समस्पृशत् इति पाठः । प्राप्तवानित्यर्थः ॥ ७ ॥ महर्षिरिति । तथैवास्य पुनर्हतम्, विश्वामित्रेणेति भावः ॥ ८ ॥ ये चेति । भूमेश्चलनम्, कदाचिदिति शेषः ॥ ९ ॥ धर्मौ धर्मप्रवर्तकौ । नेत्रौ नेतारौ । कालपरिच्छेदादिमुखेन जगतां प्रवर्तकौ ॥ १० ॥

भूतौ वा । लिङ्गव्यत्ययश्छान्दसः । यत्र ययोः सर्वं जगत् प्रतिष्ठितं यदधीनस्वरूपस्थितिप्रवृत्तिकाः सर्वे जना इत्यर्थः । सूर्यस्य वर्षहेतुत्वात् चन्द्रस्यौषधिहेतुत्वाच्चेति भावः । "आदित्याज्जायते वृष्टिस्ततोऽन्नमभिजायते ।" इति वचनात् । ग्रहणं राहुकेतुभ्यां ग्रासम् ॥ १० ॥ किं बहुना संक्षेपेणोच्यत इत्याह—सुमहान्तीति । सुमहान्ति भूतानि मान्धातृनलप्रभृतिमहाजना अपि । सर्वभूतादिदेहिनः सर्वभूतानि आदिदेहोऽस्यास्तीति तथा सर्वभूतान्तर्यामिण इत्यर्थः । दैवस्य परमात्मनः । पञ्चम्यर्थे षष्ठी । न प्रभुश्चन्ति सर्वेऽपि तत्सङ्कल्पं नातिक्रामन्तीत्यर्थः ॥ ११ ॥ उपसंहरति—शक्रादिष्वपीति । नया

सुमहान्त्यपि भूतानि देवाश्च पुरुषर्षभ । न दैवस्य प्रभुश्चन्ति सर्वभूतादिदेहिनः ॥ ११ ॥ शक्रादिष्वपि देवेषु वर्तमानौ नयानयौ । श्रूयेते नरशार्दूल न त्वं शोचितुमर्हसि ॥ १२ ॥ नष्टायामपि वैदेह्यां हृतायामपि चानघ । शोचितुं नार्हसे वीर यथाऽन्यः प्राकृतस्तथा ॥ १३ ॥ त्वद्विधा न हि शोचन्ति सततं सत्यदर्शिनः । सुमहत्स्वपि कृच्छ्रेषु रामानिर्विण्णदर्शनाः ॥ १४ ॥ तत्त्वतो हि नरश्रेष्ठ बुद्ध्या समनुचिन्तय । बुद्ध्या युक्ता महाप्राज्ञा विजानन्ति शुभाशुभे ॥ १५ ॥ अदृष्टगुणदोषाणामधृतानां च कर्मणाम् । नान्तरेण क्रियां तेषां फलमिष्टं प्रवर्तते ॥ १६ ॥

नयौ तन्मूलसुखदुःखे अतो न त्वं शोचितुमर्हसीत्यर्थः ॥ १२ ॥ उक्तं विवृणोति—नष्टायामपीति । नार्हसे नार्हसि ॥ १३ ॥ सत्यदर्शिनः यथार्थदर्शिनः । कृच्छ्रेषु दुःखेषु । अनिर्विण्णम् अविनाशि दर्शनं कृत्याकृत्यविवेको येषां ते तथा ॥ १४ ॥ तत्त्वतो बुद्ध्या अबाधितबुद्ध्या समनुचिन्तय, शुभाशुभे इति शेषः । महाप्राज्ञाः बुद्ध्या तात्कालिक्या युक्ताः सन्तः शुभाशुभे भाविनी विजानन्ति ॥ १५ ॥ इदानीं फलानुभवः पूर्वकर्मसाध्यः अतस्तत्र न शोचनीयमित्याह—अदृष्टेति । अदृष्टगुणदोषाणां प्रत्यक्षतो द्रष्टुमशक्यसुखदुःखरूपगुणदोषाणाम् । अधृतानां पुरा एवं कर्म कृतमिति निश्चेतुमशक्यानाम् तेषां प्रसिद्धानां पूर्वकृतानामित्यर्थः । कर्मणाम् इष्टं फलं क्रियाम् अनुष्ठानमन्तरेण न प्रवर्तते । पूर्वकर्मानुष्ठानं विना इदानीं फलं नोत्पद्यते अतः पूर्वकर्म

न दैवस्य प्रभुश्चन्ति सर्वभूतादिदेहिनो देवस्य सर्वेश्वरस्य वशं न प्रभुश्चन्ति नातिक्रामन्ति ॥ ११ ॥ नयानयौ तन्मूलार्थानर्थौ ॥ १२ ॥ १३ ॥ त्वद्विधा इति । अनिर्विण्णदर्शनाः विषादरहितान्तःकरणा इत्यर्थः ॥ १४ ॥ यतः बुद्ध्या सूक्ष्मबुद्ध्या युक्ता जना इत्यर्थः । शुभाशुभे जानन्ति अतस्त्वमपि बुद्ध्या तत्त्वतः इदं दुःखं कथं मया प्राप्तमिति समनुचिन्तयेति सम्बन्धः । शुभाशुभे पुण्यपापे ॥ १५ ॥ लोके सर्वेषामपि कर्मफलमवश्यम्भावीत्याह—अदृष्टेति । अदृष्टगुणदोषाणाम्

फले इदानीं प्रवृत्ते कात्र परिदेवनेति भावः ॥ १६ ॥ अन्वशाः अनुशासितवानसि ॥ १७ ॥ दुरन्वया दुर्लभा । प्रसुप्तं स्तिमितम् । सम्बोधयामि उत्था पयामि ॥ १८ ॥ दिवि भवं दिव्यम् । प्राणिजातं देवगन्धर्वादिकं तच्च सात्त्विकं वधानर्हम्, मानुषं मनुष्यलोकोद्भवं ब्राह्मणादिकं तदपि वधानर्हम् । सर्वं

त्वमेव हि पुरा राम मामेवं बहुशोऽन्वशाः । अनुशिष्याद्धि को नु त्वामपि साक्षाद्बृहस्पतिः ॥ १७॥ बुद्धिश्च ते महाप्राज्ञ देवैरपि दुरन्वया । शोकेनाभिप्रसुप्तं ते ज्ञानं सम्बोधयाम्यहम् ॥ १८ ॥ दिव्यं च मानुषं च त्वमात्मनश्च पराक्रमम् । इक्ष्वाकुवृषभावेक्ष्य यतस्व द्विषतां वधे ॥ १९ ॥ किं ते सर्वविनाशेन कृतेन पुरुषर्षभ । तमेव त्वं रिपुं पापं विज्ञायोद्धर्तुमर्हसि ॥२०॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमदारण्यकाण्डे षट्षष्टितमः सर्गः ॥६६॥

पूर्वजोऽप्युक्तमात्रस्तु लक्ष्मणेन सुभाषितम् । सारग्राही महासारं प्रतिजग्राह राघवः ॥ १ ॥

लोकसंहारसमर्थम् आत्मनः पराक्रमं च अवेक्ष्य विचार्य द्विषतामेव वधे यतस्व ॥ १९ ॥ उद्धर्तुं नाशयितुम् ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥ अथ लक्ष्मणवाक्यप्रतिष्ठापितधैर्यो रामो युद्धभूमेर्दक्षिणतः किञ्चिद्दूरे गृध्रराजं दृष्ट्वा रोदिति सप्तषष्टितमे—पूर्वजोपीत्यादि । राघवः पूर्वजोपि लक्ष्मणेन कनिष्ठेन सुभाषितं युक्तियुक्ततयोक्तं वाक्यम् उक्तमात्रस्तु उक्तमात्र एव जग्राह । "बालादपि सुभाषितम्" इति स्मृतेः । स्वयमुपदेष्टा कथमन्योक्तं जग्राहेत्यत्राह—सारग्राहीति । कथमस्य वाक्यस्य सारवत्त्वं

अदृष्टाः शास्त्रैकसमधिगम्यतया प्रत्यक्षतो द्रष्टुमशक्याः गुणदोषाः सुखदुःखरूपाः येषां तेषाम् अतएव अध्रुवाणाम् अनिश्चितफलानाम् । सत्कर्मानुष्ठाने दुःखमित्यन्वयव्यतिरेकसूचकप्रत्यक्षप्रमाणेनानिश्चितफलानामित्यर्थः । कर्मणां क्रियामन्तरेण अनुष्ठानं विना इष्टं फलं सुखं दुःखं चेत्यर्थः । न प्रवर्तते कारणं विना कार्यानुत्पत्तेरित्याशयः । तथा चानुष्ठितस्य कर्मणः शुभमशुभं वाऽवश्यं भोक्तव्यमिति भावः ॥ १६ ॥ त्वमेवेति । अन्वशाः शिक्षितवानसि । अनुशिष्यात् शिक्षयेत् ॥ १७ ॥ ते बुद्धिः देवैरपि दुरन्वया अन्वेतुमनुगन्तुमशक्या अतः शोकेन प्रसुप्तमन्तर्हितं ते ज्ञानं सम्बोधयामीत्यन्वयः ॥ १८ ॥ दिव्यः देवगन्धर्वादिः वधानर्हः सात्विकः पक्षो ज्ञेयः । मानुषः मनुष्यलोकप्रभवो ब्राह्मणादिरहिंस्यो जनः तं च आत्मनस्तव पराक्रमं सर्वलोकसंहारसमर्थं चावेक्ष्यालोच्य द्विषतां वध्यानामेव वधे यतस्व सर्वत्र असङ्कोचेन पराक्रमे कृते ब्राह्मणादिसाधुबाधा भवेत् अतः अपराधिनमेव ज्ञात्वा जहीति भावः ॥ १९ ॥ २० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां षट्षष्टितमः सर्गः ॥ ६६ ॥ पूर्वजोपीति । महासारं युक्तियुक्तमित्यर्थः ॥ १–४ ॥

तत्राह—महासारमिति ॥ १ ॥ सन्निगृह्येति । स्पष्टम् ॥ २ ॥ पश्येयं पश्येव ॥ ३ ॥ तमिति सार्धश्लोक एकान्वयः ॥ ४ ॥ इह जनस्थाने । गिरिगतानि दुर्गाणि, गन्तुमशक्यप्रदेशा इत्यर्थः। निर्दराः विदीर्णपाषाणाः । कन्दराणि पाषाणसन्धयः। गुहाः देवखातबिलानि । युक्तः सन्नद्धः ॥ ५ ॥ ६ ॥ न प्रकम्पन्ते न चञ्चलचित्ता भवन्तीत्यर्थः ॥ ७ ॥ क्षुरं क्षुरप्राख्यं शरम् । सीताया अदर्शनात् क्रोधः ॥ ८ ॥ कूटः शृङ्गम् । महाभागं महाभाग्यम् । स्वाम्यर्थं



सन्निगृह्य महाबाहुः प्रवृत्तं कोपमात्मनः। अवष्टभ्य धनुश्चित्रं रामो लक्ष्मणमब्रवीत् ॥ २ ॥ किं करिष्यावहे वत्स क्व वा गच्छाव लक्ष्मण। केनोपायेन पश्येयं सीतामिति विचिन्तय ॥३॥ तं तथा परितापार्तं लक्ष्मणो राममब्रवीत्। इदमेव जनस्थानं त्वमन्वेषितुमर्हसि। राक्षसैर्बहुभिः कीर्णं नानाद्रुमलतायुतम् ॥४॥ सन्तीह गिरिदुर्गाणि निर्दराः कन्दराणि च। गुहाश्च विविधा घोरा नानामृगगणाकुलाः ॥ ५ ॥ आवासाः किन्नराणां च गन्धर्वभवनानि च। तानि युक्तो मया सार्धं त्वमन्वेषितुमर्हसि ॥६॥ त्वद्विधा बुद्धिसम्पन्ना महात्मानो नरर्षभ। आपत्सु न प्रकम्पन्ते वायुवेगैरिवाचलाः ॥ ७ ॥ इत्युक्तस्तद्वचनं सर्वं विचचार सलक्ष्मणः। क्रुद्धो रामः शरं घोरं सन्धाय धनुषि क्षुरम् ॥ ८ ॥ ततः पर्वतकूटाभं महाभागं द्विजोत्तमम्। ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषम् ॥ ९ ॥ तं दृष्ट्वा गिरिशृङ्गाभं रामो लक्ष्मणमब्रवीत्। अनेन सीता वैदेही भक्षिता नात्र संशयः ॥ १० ॥ गृध्ररूपमिदं रक्षो व्यक्तं भवति कानने। भक्षयित्वा विशालाक्षीमास्ते सीतां यथासुखम् ॥ ११ ॥ एनं वधिष्ये दीप्तास्यैर्घोरैर्बाणैरजिह्मगैः ॥ १२ ॥

त्यक्तशरीरत्वात् । द्विजोत्तमं पक्षिश्रेष्ठम् । " दन्तविप्राण्डजा द्विजाः " इत्यमरः । क्षतजं रुधिरम् ॥ ९ ॥ भक्षिता रुधिरार्द्रत्वादिति भावः ॥ १० ॥ गृध्रस्य रूपमिव रूपं यस्य तत्तथा ॥ ११ ॥ एनमित्यर्धमेकं वाक्यम् । अजिह्मम् अकुण्ठम् अवक्रं वा गच्छन्तीत्यजिह्मगाः तैः ॥ १२ ॥

सन्तीति । निर्दराः शिलोद्भेदमार्गाः । कन्दराणि दर्यः । गुहाः पाषाणसन्धयः । युक्तः सन्नद्धः । इह जनस्थाने ॥ ५–७ ॥ क्षुरं क्षुरवन्निशितम् ॥ ८–११ ॥ एनमिति । वधिष्ये इति लक्ष्मणमब्रवीदिति सम्बन्धः ॥ १२–१४ ॥

अभ्यपतत् अभिमुखं गतः। समुद्रान्तां समुद्रपर्यन्ताम् ॥ १२ ॥ दशरथात्मजमिति सम्बन्धोक्तिः ॥ १४ ॥ यथा महौषध्यन्वेषिणः प्रतिवनमन्वेषन्ते तथा यामस्मिन् विस्तीर्णे वनेऽन्वेषसि । " एषृ गतौ " इत्यस्माद्व्यत्ययेन परस्मैपदम् । नित्यं प्राणसमेत्युक्ता सा देवी मम प्राणाश्च उभयं रावणेन हृतम्, मम प्राणान् हृतप्रायान् कृत्वा सीतां रावणो हृतवानित्यर्थः । खरवधादिना रामबलं ज्ञात्वाप्यस्थाने भयशङ्कितया रामस्यायुः प्रार्थ्यते

इत्युक्त्वाऽभ्यपतद् गृध्रं सन्धाय धनुषि क्षुरम् । क्रुद्धो रामः समुद्रान्तां कम्पयन्निव मेदिनीम् ॥१३॥ तं दीनं दीनया वाचा सफेनं रुधिरं वमन् । अभ्यभाषत पक्षी तु रामं दशरथात्मजम् ॥ १४ ॥ यामोषधिमिवायुष्मन्नन्वेषसि महावने । सा देवी मम च प्राणा रावणेनोभयं हृतम् ॥ १५ ॥ त्वया विरहिता देवी लक्ष्मणेन च राघव । ह्रियमाणा मया दृष्टा रावणेन बलीयसा ॥ १६ ॥ सीतामभ्यवपन्नोऽहं रावणश्च रणे मया । विध्वंसितरथश्चात्र पातितो धरणीतले ॥ १७ ॥ एतदस्य धनुर्भग्नमेतदस्य शरावरम् । अयमस्य रथो राम भग्नः साङ्ग्रामिको मया ॥ १८ ॥ अयं तु सारथिस्तस्य मत्पक्षनिहतो युधि ॥ १९ ॥ परिश्रान्तस्य मे पक्षौ छित्त्वा खड्गेन रावणः । सीतामादाय वैदेहीमुत्पपात विहायसम् ॥ २० ॥ रक्षसा निहतं पूर्वं न मां हन्तुं त्वमर्हसि ॥ २१ ॥ रामस्तस्य तु विज्ञाय बाष्पपूर्णमुखस्तदा । द्विगुणीकृततापार्तः सीतासक्तां प्रियां कथाम् ॥ २२ ॥

आयुष्मन्निति ॥ १५ ॥ त्वयेति स्पष्टम् ॥ १६ ॥ अभ्यवपन्नः आभिमुख्येन गतः । ह्रियमाणां सीतामवलोक्य तदभिमुखमागत इत्यर्थः । रावणश्च विध्वंसितरथः सन् अत्र धरणीतले पातितः, रथाद्भ्रंशितः इत्यर्थः ॥ १७ ॥ भग्नमेतद्धनुः अस्य रावणस्य सम्बन्धि । एवमुत्तरत्रापि योज्यम् । शरावरं वर्म तूणीरं वा ॥ १८ ॥ अयं त्वित्यर्धमेकम् ॥ १९ ॥ वैदेहीं जनकेन सम्यक् परिपालिताम् ॥ २० ॥ रक्षसेत्यर्धमेकम् ॥ २१ ॥ तस्य गृध्रस्य

यामिति । ओषधिं दिव्यौषधिलतामिव ॥१५॥१६॥ सीतामिति । सीतामभ्यवपन्नोऽहं सीतां मोचयितुमभिगतवानस्मीत्यर्थः । तत्र रावणः पातितः ॥१७॥ शरावरं कवचम् ॥१८–२१॥ राम इति । तस्य जटायुषः । विज्ञाय [illegible] । [illegible] कथाम् । श्रुत्वेति शेषः । राम इति सार्धश्लोकमेकं वाक्यम् ।

सम्बन्धिनीं सीताविषयकथां विज्ञाय श्रुत्वा द्विगुणीकृतेन गृध्रवधेन द्विरावर्तितेन तापेन आर्तः पीडितः, अभूदिति शेषः ॥ २२ ॥ अवशः मूर्च्छित इत्यर्थः । रुरोद क्रमादिति शेषः ॥ २३ ॥ एकम् असहायं सहायरहितं दयया संरक्षकपथिकजनरहितमित्यर्थः । एकायने एकस्य मार्गे । "अयनं वर्त्म मार्गाध्व-" इत्यमरः । एकपद्यामित्यर्थः । दुर्गे इतः परमपि केनचिद्गन्तुमशक्ये इति दुःसहत्वातिरेकोक्तिः । निःश्वसन्तं गृध्रराजमिति शेषः ॥ २४ ॥



गृध्रराजं परिष्वज्य परित्यज्य महद्धनुः । निपपातावशो भूमौ रुरोद सहलक्ष्मणः ॥ २३ ॥
एकमेकायने दुर्गे निःश्वसन्तं कथञ्चन । समीक्ष्य दुःखिततरो रामः सौमित्रिमब्रवीत् ॥ २४ ॥
राज्याद्भ्रंशो वने वासः सीता नष्टा द्विजो हतः । ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम् ॥ २५ ॥
सम्पूर्णमपि चेदद्य प्रतरेयं महोदधिम् । सोपि नूनं ममालक्ष्म्या विशुष्येत्सरितां पतिः ॥ २६ ॥

यद्यपि "न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति" "वनवासो महोदयः" इति अभिमततमतया प्रोक्तौ राज्यनाशवनवासौ तथापि सम्प्रति सीता विश्लेषकारित्वाज्जटायुवियोगफलकत्वाच्च तावेवानर्थकरौ जातावित्याह–राज्यादिति । राज्याद्भ्रंशः हठात् लब्धराज्यस्य विच्युतिः । वने वासः राज्यभ्रंशेपि राज्ये भिक्षुकवृत्त्यापि स्थातुं शक्यं तदपि न लब्धम् । सीता नष्टा वनवासेप्यभिमतजनविश्लेषाभावे सुखेनावस्थातुं शक्यं तदपि नास्ति । हतो द्विजः अभिमतजनविश्लेषेपि बन्धुजनसन्निधौ शोको निर्वापयितुं शक्यः स च निवृत्तः । ईदृशी एतादृशदुःखपर्यवसायिनी मम अलक्ष्मीः दौर्भाग्यम् । पावकमपि निर्दहेत् सर्ववस्तुदाहकमपि दहेत्, सदा विश्लेषप्रसक्तिशून्यं लक्ष्मणमपि विश्लेषयेदिति भावः ॥२५॥ प्रतरेयं तापशान्तये प्लवेयं चेत् ॥२६॥

रामो रुरोदेत्यस्यायमभिप्रायः–परमेश्वरस्य श्रीरामस्य भक्तपक्षपातित्वेन भक्तं जटायुषमापन्नं दृष्ट्वा परमप्रियां सीतां रावणेन हृतां च श्रुत्वा "व्यसनेषु मनुष्याणां भृशं भवति दुःखितः" इत्युक्तेः भक्तापदं दृष्ट्वा रुरोदेति । द्विगुणीकृततापार्तो, बभूवेति शेषः । सीतादर्शनजस्तापः निजभक्तजटायुवधजनिततापश्च । एवं तापस्य द्विगुणत्वम् ॥२२॥२३॥ एकमिति । दुर्गे लताकण्टकसङ्कीर्णतया केनापि प्रवेष्टुमशक्ये । एकायने एकमार्गे । पतितवेति शेषः । कथञ्चन निश्वसन्तं मृतप्रायम् एकम् असहायम् ॥ २४ ॥ राज्येति । निर्दहेदपि पावकं सकलवस्तुदाहकमपि दहेत् किमुतान्यमित्यर्थः ॥ २५ ॥ सम्पूर्णमिति । महोदधिं प्रविशेयं यदि सीताविरह

व्यसनं वागुरेव व्यसनवागुरा । “ वागुरा मृगबन्धिनी ” इत्यमरः ॥ २७ ॥ पितुर्वयस्यः सखा ॥ २८ ॥ पितरीव स्नेहः पितृस्नेहः ॥ २९ ॥ रामः वाचं विमुच्य उक्त्वेत्यर्थः । अस्मिन् सर्गे एकोनत्रिंशच्छ्लोकाः ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्ड व्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥ अथ भगवत्कार्यार्थे त्यक्तशरीरस्य गृध्रराजस्य मोक्षपदप्रापणमष्टषष्टितमे–राम इत्यादि । रौद्रेण रावणेन । मित्र

नास्त्यभाग्यतरो लोके मत्तोऽस्मिन् सचराचरे । येनेयं महती प्राप्ता मया व्यसनवागुरा ॥२७॥ अयं पितुर्वयस्यो मे गृध्रराजो जरान्वितः । शेते विनिहतो भूमौ मम भाग्यविपर्ययात् ॥ २८ ॥ इत्येवमुक्त्वा बहुशो राघवः सह लक्ष्मणः । जटायुषं च पस्पर्श पितृस्नेहं विदर्शयन् ॥२९॥ निकृत्तपक्षं रुधिरावसिक्तं स गृध्रराजं परिरभ्य रामः । क्व मैथिली प्राणसमा ममेति विमुच्य वाचं निपपात भूमौ॥३०॥इत्यार्षे श्रीमदारण्यकाण्डे सप्तषष्टितमः सर्गः॥६७

रामः सम्प्रेक्ष्य तं गृध्रं भुवि रौद्रेण पातितम् । सौमित्रिं मित्रसम्पन्नमिदं वचनमब्रवीत् ॥ १ ॥ ममायं नूनमर्थेषु यतमानो विहङ्गमः । राक्षसेन हतः सङ्ख्ये प्राणांस्त्यक्ष्यति दुस्त्यजान् ॥ २ ॥ अयमस्य शरीरेऽस्मिन् प्राणो लक्ष्मण विद्यते । तथाहि स्वरहीनोऽयं विक्लवः समुदीक्षते ॥ ३ ॥ जटायो यदि शक्नोषि वाक्यं व्याहरितुं पुनः । सीतामाख्याहि भद्रं ते वधमाख्याहि चात्मनः ॥ ४ ॥

सम्पन्नं सर्वजनमित्रमित्यर्थः । यद्वा परनिपातः सम्पन्नमित्रम्, अत्यन्तरामविषयसौहार्दयुक्तमित्यर्थः ॥ १ ॥ अर्थेष्विति निमित्तसप्तमी । मम प्रयोजनार्थमित्यर्थः । सङ्ख्ये युद्धे ॥ २ ॥ अयं प्राणः सूक्ष्मप्राणः । स्वरहीनः हीनस्वरः । विक्लवः विह्वलः ॥ ३ ॥ व्याहरितुं व्याहर्तुम् । वधं वधप्रकारम् ॥ ४ ॥

जनिततापनिवृत्त्यर्थमिति शेषः । सोपि सरितां पतिः मम अलक्ष्म्याः अभाग्यात् विशुष्येदित्यर्थः ॥ २६ ॥ येन अभाग्येन ॥ २७ ॥ २८ ॥ इतीति । पितृस्नेहं पितरीव स्नेहम् ॥ २९ ॥ ३० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां सप्तषष्टितमः सर्गः ॥ ६७ ॥ राम इति । रौद्रेण रक्षसा । अनेन रक्षसां तमःप्राधान्यमेवेति सूचितम् । मित्रसम्पन्नं मित्रत्वेन सम्पन्नम् । सर्वजनेषु मैत्र्या युक्तम् ॥ १ ॥ २ ॥ अयमिति । तथा अतिखिन्नप्राण इव स्वरहीनो विह्वलेक्षणश्च ॥ ३ ॥ व्याहरितुं व्याहर्तुम् । वधं वधप्रकारम् ॥ ४ ॥

किंनिमित्तः किं निमित्तं यस्यासौ किंनिमित्तः, केन हेतुना अहरदित्यर्थः । किं भोगार्थम् उत अपकारप्रतीकारार्थमित्यर्थः । चरमपक्षे तत्स्वरूपं पृच्छति—तस्येति । यम् अपराधम् ॥ ५ ॥ कथं कीदृशप्रकारम् । कानि वाक्यानि ॥ ६ ॥ तात पितृतुल्य ॥ ७ ॥ दीनात्मा दीनमनाः । अतिसन्नया अतिकार्श्यं प्राप्तया ॥ ८ ॥ किं कर्मेत्यस्योत्तरमाह—हृता सेति । वातेन दुर्दिनेन च सङ्कुलाम् । "मेघच्छन्नेऽह्नि दुर्दिनम्" इत्यमरः । मायया महावातं

किन्निमित्तोऽहरत्सीतां रावणस्तस्य किं मया । अपराद्धं तु यं दृष्ट्वा रावणेन हृता प्रिया ॥ ५ ॥ कथं तच्चन्द्रसङ्काशं मुखमासीन्मनोहरम् । सीतया कानि चोक्तानि तस्मिन् काले द्विजोत्तम ॥ ६ ॥ कथंवीर्यः कथंरूपः किंकर्मा स च राक्षसः । क्व चास्य भवनं तात ब्रूहि मे परिपृच्छतः ॥ ७ ॥ तमुद्वीक्ष्याथ दीनात्मा विलपन्तमनन्तरम् । वाचाऽतिसन्नया रामं जटायुरिदमब्रवीत् ॥ ८ ॥ हृता सा राक्षसेन्द्रेण रावणेन विहायसा । मायामास्थाय विपुलां वातदुर्दिनसङ्कुलाम् ॥ ९ ॥ परिश्रान्तस्य मे तात पक्षौ छित्त्वा स राक्षसः । सीतामादाय वैदेहीं प्रयातो दक्षिणां दिशम् ॥ १० ॥ उपरुध्यन्ति मे प्राणा दृष्टिर्भ्रमति राघव । पश्यामि वृक्षान् सौवर्णानुशीरकृतमूर्धजान् ॥ ११ ॥ येन यातो मुहूर्तेन सीतामादाय रावणः । विप्रनष्टं धनं क्षिप्रं तत्स्वामी प्रतिपद्यते ॥ १२ ॥

मेघच्छादनं चोत्पाद्य हृतवानित्यर्थः ॥ ९ ॥ वधमाख्याहीत्यस्योत्तरमाह—परिश्रान्तस्येति । युद्धपरिश्रान्तस्येत्यर्थः ॥ १० ॥ प्रश्नान्तरे प्रत्युत्तरकथनाशक्तिमाह—उपरुध्यन्तीति । उपरुध्यन्ति उपरुध्यन्ते मरणवेदनया पीड्यन्त इत्यर्थः । सौवर्णान् मरणकाले तथा प्रतीयन्त इति प्रसिद्धम् । उशीरैः लामज्जकैः कृताः कल्पिताः मूर्धजाः केशाः येषां ते तथा ॥ ११ ॥ किमिह बहुनोक्तेन, सर्वथा सीता पुनर्लप्स्यत इत्याह—येनेति । येन मुहूर्तेन निमित्तभूतेन रावणः सीतामादाय याति स्म, तन्मुहूर्तबलेन स्वामी धनस्वामी विप्रनष्टं धनं क्षिप्रम् अचिरेण पुनः प्रतिपद्यते प्राप्नोति ॥ १२ ॥

किन्निमित्तमिति । किं निमित्तं यस्य सः ॥ ५–७ ॥ तमिति । वाचा अतिसन्नया कृशया ॥ ८ ॥ वातदुर्दिनसङ्कुलाम् वातैः दुर्दिनेन च सङ्कुलाम् ॥ ९ ॥ १० ॥ उपरुध्यन्ति संक्षीयन्ते एकत्र संक्षिप्यन्त इति वा । उशीरकृतमूर्द्धजान् नलदकृताग्रान् सौवर्णवृक्षदर्शनं मरणचिह्नं ज्योतिःशास्त्रप्रामाण्यात् ॥ ११ ॥ तव सीताप्राप्तिरित्यहं कथयामीत्याह—येनेत्यादिद्वाभ्याम् । येन मुहूर्तेन यस्मिन् मुहूर्ते रावणः सीतामादाय यातः असौ मुहूर्तो विन्दो नाम तत्र नष्टं धनं पुनरायास्यति

कोऽसौ मुहूर्त इत्यत्राह–विन्द इति । नष्टं धनं विन्दति लभतेऽस्मिन्निति विन्दः, स रावणस्तु नाबुधत् नाबुध्यत । विकरणव्यत्ययश्छान्दसः । तस्मात् बडिशं गृह्य गृहीत्वा झषवत् मत्स्य इव विनश्यति । वर्तमानसामीप्ये वर्तमानवत् । " बडिशं मत्स्यवेधनम् " इत्यमरः ॥ १३ ॥ फलितमाह–न चेति ॥ १४ ॥ असंमूढस्येति । एतावत्पर्यन्तमिति शेषः । अनुभापतः उत्तरं भाषमाणस्य । सामिषं मांससहितं रुधिरम् ॥ १५ ॥ अथ रावणवंशं वक्तुमुप

विन्दो नाम मुहूर्तोऽयं स च काकुत्स्थ नाबुधत् । त्वत्प्रियां जानकीं हृत्वा रावणो राक्षसेश्वरः । झषवद्बडिशं गृह्य क्षिप्रमेव विनश्यति ॥ १३ ॥ नच त्वया व्यथा कार्या जनकस्य सुतां प्रति । वैदेह्या रंस्यसे क्षिप्रं हत्वा तं राक्षसं रणे ॥ १४ ॥ असम्मूढस्य गृध्रस्य रामं प्रत्यनुभाषतः । आस्यात्सुस्राव रुधिरं म्रियमाणस्य सामिषम् ॥ १५ ॥ पुत्रो विश्रवसः साक्षात् भ्राता वैश्रवणस्य च । इत्युक्त्वा दुर्लभान् प्राणान् मुमोच पतगेश्वरः ॥ १६ ॥ ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः । त्यक्त्वा शरीरं गृध्रस्य जग्मुः प्राणा विहायसम् ॥ १७ ॥ स निक्षिप्य शिरो भूमौ प्रसार्य चरणौ तदा । विक्षिप्य च शरीरं स्वं पपात धरणीतले ॥ १८ ॥

क्रमते–पुत्र इति । साक्षात्पुत्रः औरस इत्यर्थः । अस्योत्तरार्धम् " अध्यास्ते नगरीं लङ्कां रावणो राक्षसेश्वरः । " इति बोध्यम् । उत्तरत्र सम्पातिवचने इदमेव पूर्वार्धमुपादाय अस्योत्तरार्धस्य कथनादिति लोकाचार्योक्तम् । इत्युक्त्वा, एतावन्मात्रमुक्त्वा भवनादिकथनात् पूर्वमित्यर्थः । दुर्लभान् ब्रूहि ब्रूहीति पृच्छते रामाय साकल्येन विज्ञापनपर्यन्तं प्राणा न स्थिताः । हन्तेति ऋषिः शोचति ॥ १६ ॥ ब्रूहीति । ब्रुवाणस्य ब्रुवाणे सति । प्राणः सूक्ष्मशरीरेन्द्रियप्राणसहित आत्मेत्यर्थः ॥ १७ ॥ स इति । निक्षिप्य मरणवेदनयेति भावः । विक्षिप्य विधूय पपातेत्युक्तिरौपचारिकी ॥ १८ ॥

तदेतत्स रावणो नाबुधत् नाबुद्ध्यत सीतामोहितत्वात् । विन्दते अनेन नष्टं धनमिति विन्दः । " विद्लृ लाभे " इति धातुः । स च एकादशो मुहूर्तः । मुहूर्तलक्षणं तूक्तं पुराणे–" रौद्रः श्वेतश्च मैत्रश्च तथा सारभटः स्मृतः । सावित्रो वैश्वदेवश्च गान्धर्वः कुतपस्तथा । रौहिणस्तिलकश्चैव विजयो नैर्ऋतस्तथा । शम्बरो वारुणश्चैव भगः पञ्चदशः स्मृतः ॥ " इत्येते अह्नि मुहूर्ताः । अत्र विजयस्यैव नामान्तरं विन्द इति ज्ञेयम् । यद्वा विन्दः घटिका । न केवलं मुहूर्तमहिम्ना सीतारूपेष्टप्राप्तिः अपितु निष्टरूपरावणविनाशोऽपीत्याह–झषवदिति । झषवत् मत्स्यवत् बडिशं मत्स्यबन्धनम् । विनश्यति, सीतापहर्तेति शेषः ॥ १२–१४ ॥ असम्मूढस्य मूर्तिदशायामपि भ्रान्तिरहितस्य । अनुभाषतः उत्तरं भाषमाणस्य ॥ १५–१७ ॥ स इति । विक्षिप्य विधाय । ननु रावणहतस्य जटायोरेतावन्तं कालं प्राणधारणं

ताम्राक्षम् अधःशिरस्कतया पतनजक्षोभात् ॥ १९ ॥ रक्षसां वासे दण्डकारण्ये । बहूनि वर्षाणि निर्भयतया सुखं वसताऽनेन पक्षिणा विशीर्णं देहविशरणं प्राप्तम् । इहैव सुखम् उषित्वा इहैव मृतमनेनेति भावः । विचीर्णमिति पाठे—अत्रैव वसता अनेन अत्रैव सुखं विचीर्णम् अनुभूतमित्यर्थः ॥२०॥ एतदेव विवृणोति—अनेकेति । अनेकवार्षिकः बहुवयःप्राप्तः । चिरकालसमुत्थितः चिरकालमभ्युदयं प्राप्तः ॥ २१ ॥ पश्येति । अनेन मोक्षप्रदानोचितं तदीयसुकृत

तं गृध्रं प्रेक्ष्य ताम्राक्षं गतासुमचलोपमम् । रामः सुबहुभिर्दुःखैर्दीनः सौमित्रिमब्रवीत् ॥ १९ ॥ बहूनि रक्षसां वासे वर्षाणि वसता सुखम् । अनेन दण्डकारण्ये विशीर्णमिह पक्षिणा ॥२०॥ अनेकवार्षिको यस्तु चिरकालसमुत्थितः । सोऽयमद्य हतः शेते कालो हि दुरतिक्रमः ॥ २१ ॥ पश्य लक्ष्मण गृध्रोऽयमुपकारी हतश्च मे । सीतामभ्यवपन्नो वै रावणेन बलीयसा ॥ २२ ॥ गृध्रराज्यं परित्यज्य पितृपैतामहं महत् । मम हेतोरयं प्राणान् मुमोच पतगेश्वरः ॥ २३ ॥ सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः । शूराः शरण्याः सौमित्रे तिर्यग्योनिगतेष्वपि ॥ २४ ॥ सीताहरणजं दुःखं न मे सौम्य तथागतम् । यथा विनाशे गृध्रस्य मत्कृते च परन्तप ॥ २५ ॥

विशेषं दर्शयति—सीतामभ्यवपन्नो मे उपकारी सन् हतः ॥ २२ ॥ गृध्रराज्यं परित्यज्येति प्राप्याभासपरित्याग उक्तः । महदिति स्वकीयेक्ष्वाकुराज्यव्यावृत्तिः, एकमुखत्वात् । ममेत्यादिना उपायानुष्ठानोक्तिः । पतगेश्वरः पितुर्मरणात् इतःपरमस्य पक्षानाश्रित्य सुखं स्थास्यामीति स्थितोऽहम् अयं तातवन्मत्कृते प्राणत्यागं कृतवानिति भावः ॥ २३ ॥ सर्वत्रेति सर्वजातिष्वपीत्यर्थः । तिर्यग्योनिगतस्यास्य कथमेतादृशी बुद्धिरिति न मन्तव्यमिति भावः ॥२४॥ मत्कृते च मत्कृत एव यथाऽस्य विनाशः प्राप्तः तथा सीताहरणजं दुःखं नागतं न प्राप्तम् । अत्र विनाशशब्देन तज्जं दुःखमुच्यते ॥२५॥

कथमिति चेत् ? तस्याः सीताया अनुग्रहवशादित्यनुसन्धेयम् । उक्तं च स्कान्दे—" देवी मां प्राह राजेन्द्र यावत्सम्भाषणं मम । भवतस्तावदासन्मे प्राणा इत्याह जानकी ॥ " इति ॥ १८ ॥ १९ ॥ बहूनीति । अनेन पक्षिणा इह वने विचीर्णमनुभूतं विचरितमिति वा ॥ २० ॥ चिरकालसमुत्थितः चिरकालमभ्युदयं प्राप्तः ॥ २१ ॥ सीतामभ्यवपन्नः सीतां मोचयितुमभिगतः सन् रावणेन हत इत्यन्वयः ॥ २२–२४ ॥ सीताहरणजमिति । तथा आगतमिति च्छेदः । मत्कृते च मन्निमित्तमेव । गृध्रस्य विनाशो यथा यादृशमागतं प्राप्तं सीताहरणजं दुःखं तथा तादृशं न भवतीति शेषः । सीताहरणदुःखाद्गृध्रनाशदुःखमधिकमिति भावः ॥ २५ ॥

अथ संस्कारयोग्यतामाह—राजेति। पूज्यः पैतृकविधिना अर्चनीयः। मान्यः श्लाघ्यः॥२६॥ दिधक्षामि दग्धुमिच्छामि। दहेस्सन्नन्तात् घत्वभष्भावौ ॥२७॥ नाथमिति। चितां काष्ठभारम् ॥ २८ ॥ या गतिरित्यादिश्लोकद्वयमेकान्वयम्। गम्यत इति गतिः लोकः। यज्ञशीलानां यज्ञाः शीलं सद्वृत्तं येषां ते तथा, सदा यज्ञानुष्ठानपराणां गृहस्थानामित्यर्थः। आहिताः परितः स्थापिताः अग्नयः पञ्चाग्नयो यस्य स तथा, सर्वदा तपःशीलस्य वानप्रस्थस्ये

राजा दशरथः श्रीमान् यथा मम महायशाः। पूजनीयश्च मान्यश्च तथाऽयं पतगेश्वरः ॥ २६ ॥
सौमित्रे हर काष्ठानि निर्मथिष्यामि पावकम्। गृध्रराजं दिधक्षामि मत्कृते निधनं गतम् ॥ २७ ॥
नाथं पतगलोकस्य चितामारोप्य राघव। इमं धक्ष्यामि सौमित्रे हतं रौद्रेण रक्षसा ॥ २८ ॥
या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः। अपरावर्तिनां या च या च भूमिप्रदायिनाम् ॥ २९ ॥
मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान्। गृध्रराज महासत्त्व संस्कृतश्च मया व्रज ॥ ३० ॥

त्यर्थः। अग्न्याधानस्य पूर्वेणैव सिद्धत्वात् पृथक् फलाभावाच्च। अपरावर्तिनाम् "अरण्यमियात्ततो न पुनरेयात्" इत्युक्तानां संन्यासिनामित्यर्थः। रणादपलायितानामित्यर्थवर्णने जटायोस्तादृशत्वेन तत्फलस्य स्वतःसिद्धत्वेनानुज्ञातव्यत्वाभावात् मुक्तानां धर्मप्रकरणे उक्त्यसम्भवात्। भूमिप्रदायिनां भूमिभोगत्यागिनां नैष्ठिकानामित्यर्थः। ता गतीरिति यत्तदोर्नित्यसम्बन्धात्सिद्धम्। ता गतीः "प्राजापत्यं गृहस्थानां ब्राह्मं संन्यासिनां स्मृतम्।" इत्याद्युक्तस्थानानि। यद्वा यज्ञदानतपःसंन्यासिनामित्यर्थः। तेषां या या गतिः शास्त्रविहिता तां मया संस्कृतो व्रज मया समनुज्ञातस्तु अनुत्तमान् सर्वश्रेष्ठान् लोकान्। "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु" इत्यादिश्रुतिप्रसिद्धान् विष्णुलोकान् गच्छ।

कुतः? पूजनीयः मान्यः श्लाघनीयश्च ॥ २६ ॥ दिधक्षामि दग्धुमिच्छामि ॥ २७ ॥ २८ ॥ या गतिरिति श्लोकद्वयमेकं वाक्यम्। गतिः गम्यत इति गतिः, लोक इत्यर्थः। यज्ञशीलादीनां लोकमार्गेण अपरावर्तिनां पुनरावृत्तिरहितानां मुक्तानां लोकान्। पूजायां बहुवचनम्। लोकं वैकुण्ठाख्यं व्रज प्राप्नुहीत्यर्थः। तिरश्चां कर्मानधिकारात् अग्निसंस्कारानर्हत्वाच्च उत्तमलोकाभावेपि मया त्वं समनुज्ञातस्सन् मुक्तिं प्राप्नुहीत्यर्थः। तदुक्तं नृसिंहपुराणे—"मत्कृते निधनं यस्मात्त्वया प्राप्तं द्विजोत्तम। तस्मान्मम प्रसादेन विष्णुलोकमवाप्स्यसि॥" इति। "सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः।" इत्यादौ मुक्तमध्यपरिगणनाच्च जटायुषो

अवयवबहुत्वाद्बहुवचनम्, अन्यथा गतिशब्देन [illegible] संस्कृतश्चेति पदद्वयानर्थक्यं च। ननु मानुषभावं भावयतः श्रीरामस्य कथं मुक्तिप्रदानं तस्य परत्वासाधारणचिह्नत्वादिति चेत्; "सत्येन लोकान् जयति" इत्युक्तरीत्या स्वार्जितधर्मविशेषेण स्वाधीनसर्वलोकत्वाविरोधात्। केचित्तु—मया संस्कृतस्ततोऽनुज्ञातस्त्वं यज्ञशीलादीनां या गतयः तान् लोकान् गच्छ सर्वान्ते मां व्रज। "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता" इत्युक्तरीत्या मुक्तभोगं प्राप्नुहि, न च निर्हेतुकमुक्तिप्रदानेऽतिप्रसङ्गः। स्वकार्यमुद्दिश्य प्राणत्यागस्यैव हेतुत्वात्। अत एव नृसिंहपुराणे—"मत्कृते निधनं यस्मात्त्वया प्राप्तं द्विजोत्तम। तस्मान्मम प्रसादेन विष्णुलोकमवाप्स्यसि" इत्युक्तम्। "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति हि कर्मणोपि मुक्तिहेतुत्वमुक्तम्। "नान्यः पन्थाः" इति श्रुतिः परमात्मनोऽन्यत्र साक्षान्मुक्तिहेतुत्वं निषेधति तस्यैव प्राधान्येन प्रकृतत्वादित्याहुः। यद्वा हे गृध्रराज महासत्त्व! मया संस्कृतस्त्वं मयाऽनुज्ञातो भूत्वा अनुत्तमान् लोकान् मल्लोकानित्यर्थः। गच्छ आनुषङ्गिकतया यज्ञशीलादीनां या या गतयस्ता अपि गच्छ। गम्यत इति गतिः लोकः। आहिताग्नेः गार्हपत्याहवनीयदक्षिणाग्निनिरतस्य या गतिः "अग्नयो वै त्रयी विद्या" इत्यारभ्य "तस्मादग्नीन् परमं वदन्ति" इत्याहिताग्नित्वस्यापि पृथक् धर्मत्वश्रवणात्। अपरावर्तिनां युद्धादपरावर्तमानानाम्। या गतिः दृष्टान्तार्थमिदमुक्तम्, जटायोस्तादृशत्वेन तत्फलस्येदानीमदेयत्वात् तिरश्चां यज्ञाद्यधिकाराभावेन तत्फलमात्रस्य देयत्वात्। यथाऽपरावर्तिनां गतिं प्राप्स्यसि तथा यज्ञशीलादीनां लोकानपि ब्रह्मप्राप्तौ वसुत्वादिकमिव प्राप्नुहीत्यर्थः। अस्मिन् कल्पे भूमिप्रदायिनामित्यस्य प्रतीयमानार्थकत्वमेव व्रज एवं गच्छ। यद्वा मया प्रथमं संस्कृतः। "अथ तृतीयेन ज्योतिषा संविशस्व" इत्यादिमन्त्रेणानुज्ञातो मया त्वं यज्ञाधिकारिणां लोकान् गच्छ, ब्रह्ममेधसंस्कारबलेन प्राप्नुहीत्यर्थः। इदं च फलं संस्कारोत्तरक्षण एवानुतिष्ठतीत्युच्यते संस्कृतो व्रजेति। गृध्रराज महासत्त्व संस्कृतश्च महाव्रतेति पाठे संस्कृतश्च भवेति वार्थः॥२९॥३०॥ तनि०—गम्यत इति गतिर्लोकः। तिरश्चां कर्माधिकाराभावेऽपि अकृतसंस्काराणां परलोकाभावात्त्वं मया संस्कृतः सन् मदनुज्ञयैव अनुत्तमान् लोकान् गच्छ, अपरावर्तिनां पुनरावृत्तिरहितानां मुक्तानामित्यर्थः। "न स पुनरावर्तते" इति श्रुतेः। लोकानिति पूजायां बहुवचनम्। यद्वा "विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु" इत्यत्र परमव्योमस्थितावान्तरलोकापेक्षया बहुवचननिर्देशवदत्रापि बहुवचननिर्देशः। यज्ञशीलानां यज्ञशीलादिलोकमार्गेणापरामुक्तिप्राप्तिस्सिद्धेत्यवगम्यते इति। अपरावर्तिनां सङ्ग्रामे इति शेषः। गम्यत इति गतिः लोकः। यज्ञशीलादीनां लोकान् क्रमेण प्राप्य मदनुज्ञातस्सन् अनुत्तमान् येभ्यः परे उत्तमा न सन्ति तान् लोकान् ब्रह्मलोकान् क्रममुक्तिदान् गच्छ। अनेन सङ्कल्पमात्रात्कर्मानधिकृततिरश्चस्साधनहीनस्यापि तल्लोकदानेन भगवान्नामः

वर्तिनां लोकं प्राप्नुहीत्यर्थः । तथा च नृसिंहपुराणे " मत्कृते मरणं यस्मात् " इत्यादि । ननु भगवता रामेण तिरश्चो जटायुषः संस्कारकरणं कथमिति चेत् । " न शूद्रा भगवद्भक्ताः " इत्यत्र शूद्रशब्दस्योपलक्षणार्थत्वाद्भगवद्भक्तानां सर्वप्राणिनां मोक्षाधिकारस्य गम्यमानत्वाच्च युक्तमेवेदमिति ज्ञेयम् । नन्वेवं सति जटायुषो मोक्षप्रदत्वाद्रामस्य परमात्मत्वं प्रतीयते । " त्वं गतिः परमा देव " इत्यादिना बालकाण्डे " स हि देवैरुदीर्णस्य " इत्यादिना युद्धकाण्डे " सीता लक्ष्मीर्भवान् विष्णुः " इत्यादिना श्रीभागवते च श्रीरामस्य परमात्मत्वं स्फुटमुक्तम् । एवं समस्तकल्याणगुणाकरस्य श्रीमन्नारायणस्य रावणादिवधरूपलोकहितार्थं स्वयमेव दशरथभवनेऽवतीर्णस्य सीतामुद्दिश्य विलापः कथमिति चेत् । सत्यम् , तथापि न दोषः । "व्यसनेषु मनुष्याणां भृशं भवति दुःखितः । निश्चितापि हि मे बुद्धिर्वनवासे दृढव्रता । भरतस्नेहसंतप्ता बालिशीक्रियते पुनः । सीताहरणजं दुःखं न मे सौम्य तथागतम् । यथा विनाशे गृध्रस्य मत्कृते च परंतप ॥ " इत्यनेन प्रकारेण सर्वेश्वरस्याप्याश्रितवत्सलत्वाद्दुःखितानाश्रितानाकलय्य दुःखेन स्वयमपि दुःखित इति वा भाति । तेषां दुःखमपनयति चेति ऋषेरभिप्राय इति वेदितव्यम् । शुकादयस्तु—" मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः । " इत्यादिप्रकारेण श्रीरामस्य दुःखाभावमेव वर्णयन्ति । एवमन्यत्राप्येवंविधविषये परिहारो द्रष्टव्यः ॥ २९ ॥ ३० ॥

**एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम् । ददाह रामो धर्मात्मा स्वबन्धुमिव दुःखितः ॥ ३१ ॥**
**रामोऽथ सहसौमित्रिर्वनं गत्वा स वीर्यवान् । स्थूलान् हत्वा महारोहीननु तस्तार तं द्विजम् ॥ ३२ ॥**
**रोहिमांसानि चोत्कृत्य पेशीकृत्य महायशाः । शकुनाय ददौ रामो रम्ये हरितशाद्वले ॥ ३३ ॥**

दीप्तां दीपनार्हाम्, स्वबन्धुमिवेत्यनेन मन्त्रपूर्वकत्वं दाहस्योच्यते ॥ ३१ ॥ राम इति । महारोहीन् महामृगान् । तान् द्विजमनु जटायुषमुद्दिश्य हत्वा तस्तार पिण्डदानार्थं दर्भानास्तृतवान् ॥ ३२ ॥ रोहीति । उत्कृत्य उद्धृत्य । पेशीकृत्य पिण्डीकृत्य । हरितशाद्वले नवीनतृणास्तृतप्रदेशे । शकुनाय

स्वस्वरूपांशो माययावृतज्ञान इति प्रलपतां मुखं ध्वस्तम्, शोकादि तु नटनमित्युक्तमेवासकृत् । तदुक्तं—"संस्कारमकरोत्तस्य रामो ब्रह्मविधानतः । स्वपदं च ददौ तस्मै सोपि रामप्रसादतः ॥ हरेस्सामान्यरूपेण प्रययौ परमं पदम् ॥ " इति जटायुषं प्रक्रम्य पाद्मे । एतेन तिरश्चामपि स्नेहादिना देहादि युक्तमिति ध्वनितम् । सारूप्यमुक्तिलाभश्चोक्तः । मया मद्रूपेण सामान्यहरिरूपेण॥२९–३१॥ राम इति । स्थूलान् हत्वा महारोहीननुतस्तार तं द्विजमिति । ईकारान्तत्वमार्षम् । महारोहीन् महामृगान् । हत्वा तं गृध्रम् अनु उद्दिश्य तस्तार निरवपत् दर्भानास्तीर्य मांसपिण्डप्रदानं कृतवानित्यर्थः ॥ ३२ ॥ एतदेव विशदयति—रोहीति । रोहिमांसानि

पक्षिणे ददौ ॥ ३३ ॥ प्रेतस्य मर्त्यस्य मनुष्यस्य [illegible] स्वर्गगमनं स्वर्गो गम्यते अनेनेति स्वर्गगमनं स्वर्गप्रापकं वदन्ति । पित्र्यं पितृदेवताकम् । तज्जजाप याम्यसूक्तादिकं जजापेत्यर्थः ॥३४॥ चक्रतुरिति । लक्ष्मणस्य कर्तृत्वं सहकारितया । उदकम् उदकदानमित्यर्थः ॥३५॥ उक्तस्यैवार्थस्य स्नानपूर्वकत्वविधिपूर्वकत्वप्रदर्शनाय पुनरप्याह—शास्त्रेति । तदा तौ राघवौ । शास्त्रदृष्टेन विधिना । गृध्राय गृध्रमुद्दिश्य । जले स्नात्वा गृध्र



यत्तत्प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः । तत्स्वर्गगमनं तस्य पित्र्यं रामो जजाप ह ॥ ३४ ॥ ततो गोदावरीं गत्वा नदीं नरवरात्मजौ । उदकं चक्रतुस्तस्मै गृध्रराजाय तावुभौ ॥३५॥ शास्त्रदृष्टेन विधिना जले गृध्राय राघवौ । स्नात्वा तौ गृध्रराजाय उदकं चक्रतुस्तदा ॥ ३६ ॥ स गृध्रराजः कृतवान् यशस्करं सुदुष्करं कर्म रणे निपातितः । महर्षिकल्पेन च संस्कृतस्तदा जगाम पुण्यां गतिमात्मनः शुभाम् ॥ ३७ ॥

राजायोदकं चक्रतुरित्यन्वयः । अयमत्र क्रमः—गृध्रराजं दग्ध्वा स्वर्गगमनसूक्तं जप्त्वा गोदावरीं गत्वा स्नात्वा उदकं दत्त्वा रोहिमांसपिण्डं ददाविति । ननु वैदिकोत्तमो रामः कथं हीनजातिं तिर्यञ्चं वैदिकेन कर्मणा संस्कृतवान् ? मैवम्, तस्यात्यन्तभक्तत्वेन जातेरपगमात् । "न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः । सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने ॥" इत्युक्तेः । न चेदं वचनम् "अपशवो वा अन्ये गोअश्वेभ्यः" इतिवत् प्रशंसापरमिति वक्तुं शक्यम्, बाधकाभावात् । ब्राह्मणत्वादिजातिर्हि शास्त्रैकसमधिगम्या न तु गोत्वादिवदाकृतिगम्या, येन तत्तुल्यत्वमाशङ्क्येत । अत एव विश्वामित्रस्यापि क्षत्रियत्वजातिरपनीता उपनीता च ब्राह्मणत्वजातिरित्युपपादितं बालकाण्डे । अयमर्थ उपपादयिष्यते च श्रमणीवृत्तान्ते । इदं च द्रौपदीविवाहादिवदैतिहासिकविलक्षणव्यक्तिविशेषनियतमिति च नातिप्रसङ्गावकाशः ॥ ३६ ॥ उक्तमर्थमादरातिशयेन पुनः संगृह्णाति—स इति । रणे सीतानिमित्तं दुष्करं कर्म प्राणविनाशपर्यन्तं व्यापारं कृतवान् । स गृध्रराजः रावणेन निपातितः महर्षिकल्पेन महर्षितुल्येन रामेण संस्कृतश्च तदा तदुत्तरक्षण एव पुण्यां

चोत्कृत्य उद्धृत्य । पेशीकृत्य पिण्डीकृत्य । शकुनाय जटायुषे पिण्डप्रदानाय कुशास्तृते हरितशाद्वले ददावित्यन्वयः ॥ ३३ ॥ यत्तदिति । स्वर्गगमनं गम्यते अनेनेति गमनम्, गमनसाधनमित्यर्थः । स्वर्गगमनसाधनं याम्यसूक्तं नारायणसूक्तं च जजापेत्यर्थः । उदकं चक्रतुः, एतदनन्तरं पिण्डदानादिकं द्रष्टव्यम् ॥३४॥३५॥ उक्तस्यैवार्थस्य स्नानपूर्वकत्वप्रदर्शनार्थं पुनर्वचनम् । शास्त्रदृष्टेनेत्यादि ॥३६॥ उक्तार्थमादरातिशयेन पुनस्सङ्गृह्णाति—स इति । रणे सीतानिमित्तं दुष्करं कर्म प्राणविनाश

पुण्यफलभूताम् आत्मनः सुखावहां गतिं लोकं जगाम ॥ ३७ ॥ कृतोदकाविति । इदं पिण्डदानस्याप्युपलक्षणम् । पक्षिसत्तमे स्थिरां बुद्धिं प्रणिधाय सीतामवश्यं प्राप्स्यसीत्युक्तं तद्वचनं विश्वस्येत्यर्थः । सीताधिगमे मनः प्रवेश्य वनं जग्मतुः । सुरेन्द्रौ विष्णुवासवाविव स्थितावित्यनेन सीतान्वेषणं भावनामात्रमिति सूच्यते । अस्मिन् सर्गे सार्धाष्टात्रिंशच्छ्लोकाः ॥३८॥ इति श्रीगो० श्रीरामायणभू० रत्नमे०आरण्यकाण्डव्याख्याने अष्टषष्टितमः सर्गः ॥६८॥

कृतोदकौ तावपि पक्षिसत्तमे स्थिरां च बुद्धिं प्रणिधाय जग्मतुः । प्रवेश्य सीताधिगमे ततो मनो वनं सुरेन्द्राविव विष्णुवासवौ ॥३८॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे अष्टषष्टितमः सर्गः* ॥६८॥

कृत्वैवमुदकं तस्मै प्रस्थितौ रामलक्ष्मणौ । अवेक्षन्तौ वने सीतां पश्चिमां जग्मतुर्दिशम् ॥ १ ॥ तौ दिशं दक्षिणां गत्वा शरचापासिधारिणौ । अविप्रहतमैक्ष्वाकौ पन्थानं प्रतिपेदतुः ॥२॥ गुल्मैर्वृक्षैश्च बहुभिर्लताभिश्च प्रवेष्टितम् । आवृतं सर्वतो दुर्गं गहनं घोरदर्शनम् ॥ ३ ॥ व्यतिक्रम्य तु वेगेन व्यालसिंहनिषेवितम् । सुभीमं तन्महारण्यं व्यतियातौ महाबलौ ॥ ४ ॥

अथायोमुखीवि रूपकरणपूर्वकं कबन्धदर्शनमेकोनसप्ततितमे–कृत्वैवमित्यादि । अवेक्षन्तौ अवेक्षमाणौ । पश्चिमां दक्षिणपश्चिमामित्यर्थः ॥ १ ॥ ताविति । दक्षिणां दिशमिति दक्षिणपश्चिमा ह्युभयथा व्यवहर्तुं शक्या । अविप्रहतम् अक्षुण्णम् । ऐक्ष्वाकौ "दाण्डिनायन–" इत्यादिसूत्रे निपातितः । प्रतिपेदतुः प्रतिपेदाते ॥२॥ गुल्मैरित्यादि श्लोकद्वयमेकान्वयम् । गुल्मैः कीचकप्रभृतिभिः वृक्षैश्च प्रवेष्टितं लताभिश्चावृत्तं दुर्गमं विषमं गहनं दुष्प्रवेशं घोरदर्शनम्

पर्यन्तं व्यापारं कृतवान् स गृध्रराजः रावणेन निपातितः महर्षिकल्पेन महर्षितुल्येन रामेण संस्कृतश्च तदा तदुत्तरक्षण एव पुण्यां पुण्यफलभूताम् आत्मनस्सुखावहां गतिं लोकं जगाम ॥ ३७ ॥ कृतोदकाविति, इदं पिण्डदानस्याप्युपलक्षणम् । पक्षिसत्तमे पितरि चेति शेषः । स्थिरां बुद्धिं प्रणिधाय निक्षिप्य कृतोदकौ सन्तौ ततोऽनन्तरम् । सीताधिगमे सीताप्राप्तौ निमित्ते मनः प्रवेश्य तौ रामलक्ष्मणौ सुरेन्द्रौ सुराणामिन्द्रौ विष्णुवासवौ उपेन्द्रेन्द्राविव वनं जग्मतुरित्यन्वयः ॥ ३८॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायामष्टषष्टितमः सर्गः ॥ ६८ ॥ कृत्वैवमित्यादि । पश्चिमामित्यत्रोक्तेरुत्तरश्लोके दक्षिणामित्युक्तेश्च नैर्ऋतिं जग्मतुरिति लभ्यते ॥ १ ॥ ताविति । अविप्रहतम् अक्षुण्णं पन्थानम् ॥ २ ॥ गुल्मैरिति । गुल्माः वंशेक्षुप्रभृतयः । तथाच गुल्मैर्वृक्षैश्च आवृतमाकीर्णं

* सर्गश्रवणफलम् । स्कान्दे–" जटायोः संस्कृतिं श्रुत्वा स्वर्लोकं याति मानवः । " इति ॥

अत एव सुभीमं तत् महारण्यं दण्डकारण्यं व्यतिक्रम्य अतीत्य [illegible] ॥ ४ ॥ ततः परं गमनानन्तरम् । जनस्थानात् त्रिक्रोशं गम्य गत्वा । क्रौञ्चारण्याख्यं गहनं वनं विविशतुः । "गहनं काननं वनम्" इत्यमरः ॥ ५ ॥ नानेत्यादि श्लोकद्वयमेकान्वयम् । नानामेघघनप्रख्यं नानावर्णमेघसमूहसदृशम् । प्रहृष्टमिव पुष्पोद्गमादिभिः सन्तुष्टमिव । व्यालमृगैः सर्पैः मृगैश्च । तद्वनं क्रौञ्चारण्यम् । तत्र तत्र वृक्षमूले । विश्रान्त्यै तिष्ठन्तौ सन्तौ विचिक्यतुः

ततः परं जनस्थानात् त्रिक्रोशं गम्य राघवौ । क्रौञ्चारण्यं विविशतुर्गहनं तौ महौजसौ ॥ ५ ॥ नानामेघघनप्रख्यं प्रहृष्टमिव सर्वतः । नानापक्षिगणैर्जुष्टं नानाव्यालमृगैर्युतम् ॥ ६ ॥ दिदृक्षमाणौ वैदेहीं तद्वनं तौ विचिक्यतुः । तत्र तत्रावतिष्ठन्तौ सीताहरणकर्शितौ ॥ ७ ॥ ततः पूर्वेण तौ गत्वा त्रिक्रोशं भ्रातरौ तदा । क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्रममन्तरे ॥ ८ ॥ दृष्ट्वा तु तद्वनं घोरं वहुभीममृगद्विजम् । नानासत्त्वसमाकीर्णं सर्वं गहनपादपम् ॥९॥ ददृशाते तु तौ तत्र दरीं दशरथात्मजौ । पातालसमगम्भीरां तमसा नित्यसंवृताम् ॥ १० ॥ आसाद्य तौ नरव्याघ्रौ दर्यास्तस्याविदूरतः । ददृशाते महारूपां राक्षसीं विकृताननाम् ॥ ११ ॥ भयदामल्पसत्त्वानां बीभत्सां रौद्रदर्शनाम् । लम्बोदरीं तीक्ष्णदंष्ट्रां करालां परुषत्वचम् ॥ १२ ॥

मृगयामासतुः ॥ ६ ॥ ७ ॥ तत इत्यादिश्लोकत्रयमेकान्वयम् । ततः क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्रमं पूर्वेण मतङ्गाश्रमपूर्वदिग्भागे । "एनपा द्वितीया" इति द्वितीया । त्रिक्रोशं गत्वा अन्तरे मतङ्गाश्रमक्रौञ्चारण्ययोर्मध्ये । तद्वनं मतङ्गाश्रमसम्बन्धि किञ्चिद्वनं दृष्ट्वा तत्र दरीं ददृशाते ददृशतुः । अत्रोपरिष्टाच्च कर्तरि लिङ्व्यात्मनेपदमार्षम् ॥ ८–१० ॥ आसाद्येत्यादि । तस्याविदूरत इत्यार्षः सन्धिः । महारूपां महाशरीराम् ॥ ११ ॥ सामान्यतो दर्शन

लताभिः प्रवेष्टितम् । दुर्गं विषमम् । गहनं दुष्प्रवेशम् एवंविधं महारण्यं व्यतियातौ अतिक्रम्य गतौ ॥ ३ ॥ ४ ॥ गम्य गत्वा गहनं दुष्प्रवेशं क्रौञ्चारण्याख्यं गहनं वनमिति वा ॥ ५ ॥ नानामेघेति । प्रहृष्टमिव सर्वतः वनगतपुष्पविकासादिना तद्गतमृगाद्रिहर्षेण च वनस्य प्रहृष्टत्वव्यपदेशः ॥ ६ ॥ ७ ॥ ततः पूर्वेणेति । क्रौञ्चारण्यमतिक्रम्य अन्तरा अन्तरप्रदेशे मतङ्गाश्रमं पूर्वेण त्रिक्रोशं गत्वेति पदयोजनां कृत्वा महद्वनमपश्यतामिति वाक्यशेषोऽनुसन्धेयः । दृष्ट्वा तु तद्वनमित्युत्तरत्रानुवादात् ॥ ८ ॥ दृष्ट्वेति । गहनपादपं निबिडवृक्षम् । तत्र वने । दरीं गुहां पातालसमगम्भीराम् रसातलतुल्याम् अत एव गम्भीराम् निम्नाम् ॥ ९ ॥ १० ॥ आसाद्येति तस्याः विदूरतः समीप इत्यर्थः ॥ ११ ॥ भयदामित्यादि । अल्पसत्त्वानां भीरूणां बीभत्सां जुगुप्सिताम् । करालां तुङ्गशरीराम् "करालो भीषणे तुङ्गे" इति

मुक्त्वा विशेषतो दर्शनमाह द्वाभ्याम्—भयदामित्यादि ॥ १२ ॥ १३ ॥ सेति । रंस्यावहेत्युक्त्वेत्यत्र सन्धिरार्षः । समालम्बत हस्ते गृहीतवती ॥१४॥ उवाचेत्यर्द्धम् । उपगुह्य आलिङ्ग्य ॥ १५ ॥ अहमित्यादिसार्धश्लोकः । अयोमुखीत्यन्वर्थनामा । हयमुखीत्यपि पाठः । ते लाभः लाभभूता । त्वमपि मम प्रियोसि । नाथेति । आयुःशेषमित्यत्यन्तसंयोगे द्वितीया ॥ १६ ॥ एवमिति । कर्णनासावित्यत्र एकवद्भावाभाव आर्षः । नानाशब्दस्य पुँल्लिङ्गता

भक्षयन्तीं मृगान् भीमान् विकटां मुक्तमूर्धजाम् । प्रैक्षेतां तौ ततस्तत्र भ्रातरौ रामलक्ष्मणौ ॥ १३ ॥ सा समासाद्य तौ वीरौ व्रजन्तं भ्रातुरग्रतः । एहि रंस्यावहेत्युक्त्वा समालम्बत लक्ष्मणम् ॥ १४ ॥ उवाच चैनं वचनं सौमित्रिमुपगुह्य सा ॥१५॥ अहं त्वयोमुखी नाम लाभस्ते त्वमसि प्रियः । नाथ पर्वतकूटेषु नदीनां पुलिनेषु च । आयुःशेषमिमं वीर त्वं मया सह रंस्यसे ॥ १६ ॥ एवमुक्तस्तु कुपितः खड्गमुद्धृत्य लक्ष्मणः । कर्णनासौ स्तनौ चास्या निचकर्तारिसूदनः ॥१७॥ कर्णनासे निकृत्ते तु विस्वरं सा विनद्य च । यथागतं प्रदुद्राव राक्षसी भीमदर्शना ॥ १८ ॥ तस्यां गतायां गहनं विशन्तौ वनमोजसा । आसेदतुरमित्रघ्नौ भ्रातरौ रामलक्ष्मणौ ॥१९॥ लक्ष्मणस्तु महातेजाः सत्त्ववाञ्छीलवाञ्छुचिः । अब्रवीत्प्राञ्जलिर्वाक्यं भ्रातरं दीप्ततेजसम् ॥ २० ॥ स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः । प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥ २१ ॥

चार्षी ॥ १७॥ कर्णेति । एकवद्भावे सप्तमी ॥ १८॥ तस्यामिति । गहनं दुष्प्रवेशं वनं विशन्तौ वनमध्यं गच्छन्तौ आसेदतुः, वक्ष्यमाणनिमित्तानीति शेषः ॥ १९ ॥ लक्ष्मणस्त्विति । महातेजा इत्यदीनतोक्तिः । सत्त्ववान् निर्मलमनस्कः शीलवान् सद्वृत्तवान् शुचिः कायशुद्धियुक्तः एभिर्विशेषणैर्भ्रातृभक्तिरुक्ता ॥ २० ॥ स्पन्दत इति । बाहुः वाम इति शेषः । उद्विग्नं कम्पितम् । अनिष्टानि अनिष्टसूचकानि ॥ २१ ॥



विश्वः । परुषा कर्कशा त्वक् यस्यास्तां परुषत्वचम् । परुषस्वनामिति वा पाठः । विकटाम् अतिस्थूलाकाराम् ॥ १२ ॥ १३ ॥ समालम्बत गृहीतवती ॥ १४ ॥ उवाचेति । ते त्वया लब्धा । लाभस्ते त्वमसि प्रियः इति च क्वचित्पाठः ॥ १५ ॥ नाथेति । आयुश्चिरं चिरमायुः ॥ १६ ॥ एवमिति । कर्णनासस्तनमिति प्राण्यङ्गत्वादेकवद्भावः ॥ १७ ॥ १८ ॥ तस्यामिति । गहनं दुष्प्रवेशम् ॥ १९ ॥ २० ॥ स्पन्दत इति । बाहुः, वाम इति शेषः । अनिष्टानि अशुभसूचकानि ॥ २१ ॥

तस्मादिति । मम वचनमित्यन्वयः । सम्भ्रमं भयम् ॥२२॥ एष इति । वञ्चुलकः कर्णवालाख्यः पक्षिविशेषः "वञ्चुलः कर्णवालः स्यात्" इति निघण्टुः । विनर्दति कूजति ॥२३॥ तयोरिति । एवम् एतादृशोक्तिपूर्वकम् अन्वेषतोः अन्वेषमाणयोः । प्रभञ्जन् प्रभञ्जयन् ॥२४॥ मातरिश्वना वायुना संवेष्टितं पूरितम्, अयमुत्पातविशेषः । शब्दः पूर्वोक्तः तस्य वनस्य सम्बन्धिनीं दिवम् आकाशम् आपूरयन्निवाभूत् ॥ २५ ॥ तं काङ्क्षमाणः किमस्योत्पत्तिमूल

तस्मात्सञ्जीभवार्य त्वं कुरुष्व वचनं हितम् । ममैव हि निमित्तानि सद्यः शंसन्ति सम्भ्रमम् ॥२२॥ एष वञ्चुलको नाम पक्षी परमदारुणः । आवयोर्विजयं युद्धे शंसन्निव विनर्दति ॥ २३ ॥ तयोरन्वेषतोरेवं सर्वं तद्वनमोजसा । संजज्ञे विपुलः शब्दः प्रभञ्जन्निव तद्वनम् ॥ २४ ॥ संवेष्टितमिवात्यर्थं गगनं मातरिश्वना । वनस्य तस्य शब्दोभूद्दिवमापूरयन्निव ॥ २५ ॥ तं शब्दं कांक्षमाणस्तु रामः कक्षे सहानुजः । ददर्श सुमहाकायं राक्षसं विपुलोरसम् ॥२६ ॥ आसेदतुस्ततस्तत्र तावुभौ प्रमुखे स्थितम् । विवृद्धमशिरोग्रीवं कबन्धमुदरेमुखम् ॥ २७ ॥ रोमभिर्निचितैस्तीक्ष्णैर्महागिरिमिवोच्छ्रितम् । नीलमेघनिभं रौद्रं मेघस्तनितनिःस्वनम् ॥ २८ ॥ अग्निज्वालानिकाशेन ललाटस्थेन दीप्यता । महापक्ष्मेण पिङ्गेन विपुलेनायतेन च ॥ २९ ॥

मिति ज्ञातुमिच्छन् । गत्वेति शेषः । कक्षे गुल्मे । ददर्श दूरादिति शेषः ॥२६॥ आसेदतुरित्यादिसार्धपट्श्लोकी । प्रमुखे अग्रे । विवृद्धम् उन्नतम् । अशिरोग्रीवम् अदृश्यमानशिरोग्रीवम् अत एव कबन्धम् अन्वर्थकबन्धनामकम् । उदरेमुखम् । "अमूर्धमस्तकात्स्वाङ्गादकामे" इति लुक् । रोमभिरुपलक्षितम् । निचितैर्निबिडैः । अग्निज्वालानिकाशेन तत्सदृशेन महापक्ष्मेण महापक्ष्मणा । अदन्तत्वमार्षम् । विपुलेन विस्तीर्णेन आयतेन दीर्घेण

तस्मादिति । सज्जीभव यत्तो भव । सम्भ्रमं भयम् ॥२२॥ वञ्चुलकः कर्णवालः ॥२३॥ तयोरिति सार्धश्लोकः । ओजसा सामर्थ्येन । तयोः रामलक्ष्मणयोः । सर्वं तद्वनमेवमुक्तरीत्या अन्वेषतोस्सतोः तद्वनं प्रभञ्जन्निव विपुलः शब्दः सञ्जज्ञे आविर्भूतः । कीदृशं तद्वनम् ? मातरिश्वना वायुनाऽत्यर्थं वेष्टितं गगनमिव मतरिश्वना पूरितं गगनं प्रभञ्जन् यथा शब्दस्सञ्जायते तथा तद्वनं प्रभञ्जन्निव शब्दः संजज्ञ इत्यर्थः ॥ २४–२६ ॥ आसेदतुरित्यादि सार्धश्लोकषट्कमेकं वाक्यम् । विवृद्धं विवृद्धाकारम्

उरसि उरोन्तर्गताशिरस्कत्वेन उरसि दृश्यमानेनेत्यर्थः । लेलिहानं पुनःपुनर्जिह्वया लेहनं कुर्वन्तम् । महामुखं विपुलास्यरन्ध्रं विकुर्वाणं व्यापारयन्तम् । योजनमिति । अध्ववाचित्वादत्यन्तसंयोगे द्वितीया । आकर्षन्तम् आभिमुख्येन कर्षन्तम् । विकर्षन्तं विशेषेण कर्षन्तं मृगयूथपानिति मृगविशेषणम् । प्रपन्नयोः समीपं प्राप्तयोः ॥ २७–३२ ॥ अथेति सार्धश्लोक एकान्वयः । अथ आसादनानन्तरम् । समभिक्रम्य आभिमुख्येन गत्वा क्रोशमात्रे समीपे दद

एकेनोरसि घोरेण नयनेनाशुदर्शिना । महादंष्ट्रोपपन्नं तं लेलिहानं महामुखम् ॥ ३० ॥ भक्षयन्तं महाघोरानृक्षसिंह मृगद्विपान् । घोरौ भुजौ विकुर्वाणमुभौ योजनमायतौ ॥३१॥ कराभ्यां विविधान् गृह्य ऋक्षान् पक्षिगणान् मृगान् । आकर्षन्तं विकर्षन्तमनेकान् मृगयूथपान् । स्थितमावृत्य पन्थानं तयोर्भ्रात्रोः प्रपन्नयोः॥३२॥ अथ तौ समभिक्रम्य क्रोशमात्रे ददर्शतुः । महान्तं दारुणं भीमं कबन्धं भुजसंवृतम् ॥३३॥ कबन्धमिव संस्थानादतिघोरप्रदर्शनम् ॥३४॥ स महाबाहुरत्यर्थं प्रसार्य विपुलौ भुजौ । जग्राह सहितावेव राघवौ पीडयन्बलात् ॥ ३५ ॥ खड्गिनौ दृढधन्वानौ तिग्मतेजोवपुर्धरौ । भ्रातरौ विवशं प्राप्तौ कृष्यमाणौ महाबलौ ॥ ३६ ॥ तत्र धैर्येण शूरस्तु राघवो नैव विव्यथे । बाल्यादनाश्रयत्वाच्च लक्ष्मणस्त्वतिविव्यथे । उवाच च विषण्णः सन् राघवं राघवानुजः ॥ ३७ ॥

र्शतुः ददृशतुः । दारुणं भीमम् अतिशयेन भीमम् । भुजाभ्यां मृगान् संवृणोतीति भुजसंवृतम् । संस्थानात् देहस्थित्या कबन्धमिव सर्वदा अशिरस्कत्व लक्षणकबन्धवत् स्थितम् ॥ ३३ ॥ ३४ ॥ स इति । सहितावेव नैकमपि मुक्त्वेत्यर्थः ॥ ३५ ॥ खड्गिनाविति । तिग्मं खरं तेजो यस्य तत्तथा तादृश वपुर्धरौ विवशं पारवश्यं प्राप्तौ ॥ ३६ ॥ तत्रेति । तत्र तस्यामवस्थायां बाल्यात् बालबुद्धित्वात् । रामवदप्रौढबुद्धित्वादित्यर्थः । अनाश्रयत्वात् धैर्या नालम्बनात् अतिविव्यथे अत्यन्तं खिन्नोऽभूत् उवाच च ॥ ३७ ॥

अशिरोग्रीवम् अदृश्यमानशिरोग्रीवमित्यर्थः ॥२७–२९॥ उरसि उरस्समीपे नयनेनोपलक्षितम् कबन्धस्य उदरमुखतया ललाटस्थनेत्रमुरस्समीपे भवतीति उरस्समीप इति व्याख्यायते ॥३०॥ भुजौ विकुर्वाणं विक्षिपन्तम्॥३१॥ आकर्षन्तम् इष्टान्मृगानाभिमुख्येन विकर्षन्तमनिष्टान्मृगान्मुञ्चन्तम् । प्रपन्नयोः पन्थानं प्राप्तयोः ॥३२॥ समभिक्रम्य आभिमुख्येन गत्वा । ददृशुरिति पुनर्ग्रहणं क्रोशमात्र इति विशेषयितुम् । भुजसंवृतं भुजाभ्यां संवृणोतीति भुजसंवृतम् ॥ ३३–३५ ॥ विवशं प्राप्तौ बलात्करणं प्राप्तौ ॥ ३६ ॥ तत्रेति । अनाश्रयत्वात् परमाश्रयरूपश्रीरामस्यापि कबन्धभुजावृतत्वादनाश्रयत्वोक्तिः ॥ ३७ ॥

पश्येत्यादि । राक्षसस्य वशंगतत्वेन विवशमिति योजना । विनिर्युक्तः वियुक्तः । एतस्यैव विवरणं मामिति । भूतबलिं भूतस्य कबन्धस्य बलिम् ॥३८॥३९॥ अधीत्येकार्थम् ॥ ४० ॥ प्रतिलभ्येति । तत्र मह्याम् ॥ ४१ ॥ लक्ष्मणेनेति । स्पष्टम् ॥ ४२ ॥ एतस्मिन्निति । एतस्मिन्नन्तरे लक्ष्मणाश्वासनावसरे ॥४३॥

पश्य मां वीर विवशं राक्षसस्य वशं गतम् । मयैकेन विनिर्युक्तः परिमुञ्चस्व राघव ॥ ३८ ॥ मां हि भूतबलिं दत्त्वा पलायस्व यथासुखम् ॥ ३९ ॥ अधिगन्तासि वैदेहीमचिरेणेति मे मतिः ॥ ४० ॥ प्रतिलभ्य च काकुत्स्थ पितृपैतामहीं महीम् । तत्र मां राम राज्यस्थः स्मर्तुमर्हसि सर्वदा ॥४१॥ लक्ष्मणेनैवमुक्तस्तु रामः सौमित्रिमब्रवीत् । मा स्म त्रासं कृथा वीर न हि त्वादृग्विषीदति ॥ ४२ ॥ एतस्मिन्नन्तरे क्रूरो भ्रातरौ रामलक्ष्मणौ । पप्रच्छ घननिर्घोषः कबन्धो दानवोत्तमः ॥ ४३ ॥ कौ युवां वृषभस्कन्धौ महाखड्गधनुर्धरौ । घोरं देशमिमं प्राप्तौ मम भक्षावुपस्थितौ ॥ ४४ ॥ वदतं कार्यमिह वां किमर्थं चागतौ युवाम् । इमं देशमनुप्राप्तौ क्षुधार्तस्येह तिष्ठतः ॥ ४५ ॥ सबाणचापखड्गौ च तीक्ष्णशृङ्गाविवर्षभौ । ममास्यमनुसम्प्राप्तौ दुर्लभं जीवितं पुनः ॥ ४६ ॥ तस्य तद्वचनं श्रुत्वा कबन्धस्य दुरात्मनः । उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥ ४७ ॥

काविति । भक्षौ आहारौ ॥ ४४ ॥ वदतमिति । इह वने वां युवयोः कार्यं वदतम् । लोण्मध्यमपुरुषद्विवचनम् । वामिह वने किं कार्यं किं कर्तव्यं किमर्थं कस्य प्रयोजनाय आगतौ न किमप्यस्त्यत्र वां प्रयोजनं प्रत्युतास्मत्प्रयोजनमेव सिद्धमित्याह–इममिति । इह तिष्ठतः ममेति शेषः । क्षुधार्तस्य मम सम्बन्धिनमिमं देशमनुप्राप्तावित्यनेन मम क्षुन्निवृत्त्यर्थमेव वामागमनमिति भावः ॥४५॥ आगमने आवयोः का हानिरित्यत्राह–सबाणेति ॥४६॥ तस्येति ।

विनिर्युक्तः वियुक्तः । परिमुञ्चस्व, मामिति शेषः ॥ ३८ ॥ एतस्यैव विवरणम्–मामिति । भूतबलिं भूतस्य कबन्धस्य बलिम् ॥ ३९ ॥ अधिगन्ता प्राप्स्यसि ॥ ४०–४३ ॥ दैवेन मम चाक्षुषौ दैवगत्या मम चक्षुर्गोचरौ ॥ ४४ ॥ इह वने । वां युवयोः कार्यं वदतम् । क्षुधार्तस्य मम सम्बन्धिनमिमं देशं किमर्थमागतौ ॥ ४५ ॥ ४६ ॥ परिशुष्यता मुखेनोपलक्षितं लक्ष्मणम् ॥ ४७ ॥

मुखेन उपलक्षित इति शेषः ॥ ४७ ॥ कृच्छ्रादिति । कृच्छ्रात्कृच्छ्रतरं राज्यभ्रंशवनवाससीताहरणपर्यन्तं प्राप्यात्रस्थितयोः पुनश्च तां प्रिया मप्राप्यैव आवयोर्जीवितान्ताय दारुणं व्यसनं दुःखं प्राप्तम् ॥ ४८ ॥ अत्र हेतुमाह—कालस्येति । सर्वभूतेष्वपि कालस्य वीर्यं सुमहत्, अनर्गलमित्यर्थः । त्वां च मां च महाबलपराक्रमावपि व्यसनैर्मोहितौ करोति पश्य ॥४९॥ उक्तमर्थमुपपादयति—नातीति सार्धश्लोकएकान्वयः । वालुकसेतवः सिकतामय

कृच्छ्रात्कृच्छ्रतरं प्राप्य दारुणं सत्यविक्रम । व्यसनं जीवितान्ताय प्राप्तमप्राप्य तां प्रियाम् ॥ ४८ ॥ कालस्य सुमहद्वीर्यं सर्वभूतेषु लक्ष्मण । त्वां च मां च नरव्याघ्र व्यसनैः पश्य मोहितौ ॥ ४९ ॥ नातिभारोस्ति दैवस्य सर्वभूतेषु लक्ष्मण । शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे । कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ ५० ॥ इति ब्रुवाणो दृढसत्यविक्रमो महायशा दाशरथिः प्रतापवान् । अवेक्ष्य सौमित्रिमुदग्रपौरुषं स्थिरां तदा स्वां मति मात्मनाकरोत् ॥५१॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे एकोनसप्ततितमः सर्गः ॥६९

सेतवः ॥५०॥ इतीति । सौमित्रिं दीनमवेक्ष्य स्वां मतिम् आत्मनैव स्थिरामकरोत्॥५०॥ इति श्रीगो०श्रीरामा०आरण्य० एकोनसप्ततितमः सर्गः ॥६९

तां प्रियाम् अप्राप्य दारुणं व्यसनं प्राप्य स्थितयोरावयोर्जीवितान्ताय कृच्छ्रात्कृच्छ्रतरं व्यसनं प्राप्तमिति सम्बन्धः । सीताविप्रणाशजनितदुःखादप्यतिशयितमाधु निकं दुःखमिति भावः ॥ ४८ ॥ "सर्वं वाक्यं सावधारणम्" इति न्यायेनात्र एवकारो द्रष्टव्यः । अस्यार्थः—सर्वभूतेषु मध्ये कालस्यैव सुमहद्वीर्यम् अस्तीति शेषः । कुतः ? त्वां त्वादृशम् मां मादृशं च व्यसनैः कालकृतैरिति शेषः । मोहितौ पश्येत्यर्थः ॥ ४९ ॥ नातीति । दैवस्य कालस्य सर्वभूतेषु विषये । यद्वा सर्व भूतेषु सर्वभूतानां संहार इति शेषः । नातिभारोस्ति न प्रयाससाध्य इत्यर्थः । कुतः ? शूराश्चेति । स महाबाहुरित्यारभ्य तत्र मां राम राज्यस्थ इत्यन्तस्य वास्त वार्थोऽयमर्थः—स कबन्धस्तौ जग्राह । यद्यपि तथापि तौ विवशं विव इति निपातौ पादपूरणार्थौ । शं सुखं प्राप्तौ । यद्वा विवशं वेः पक्षिणः गरुत्मतः वशं प्राप्तौ गरुडारूढावित्यर्थः । तौ स जग्राहेति पूर्वेण सम्बन्धः । तत्र लक्ष्मणस्य मनुष्यनाट्यं दर्शयति—तत्रेति । तु इवार्थे । अभिविव्यथ इव । तदनुरूपवचनान्याह—पश्य मामित्यारभ्य तत्र मां रामेत्यन्तेन । काविति । क्षुधार्तस्य भक्षाविव ममास्यं प्रति सबाणचापखड्गौ यदा सम्प्राप्तौ तदा मम जीवितं दुर्लभमिति सम्बन्धः । तस्येति । परिशुष्यता मुखेनोपलक्षितस्य कबन्धस्य वचनं श्रुत्वेति सम्बन्धः । कृच्छ्रात्कृच्छ्रतरमित्यादेः वास्तवार्थस्तु दारुणं कृच्छ्रतरं प्राप्यापि तां प्रियामप्राप्य जीविता न्ताय व्यसनं प्राप्तमित्यादिलोकरीतिमनुसृत्य सीतादर्शनव्याजेनोक्तिः ॥ ५० ॥ इतीति । दृढसत्यविक्रमः अचञ्चलः सत्यः स्वाभाविकः विक्रमो यस्य सः दाश रथिः सौमित्रिमवेक्ष्य स्वां स्वीयां मतिमात्मना स्वयमेव स्थिरां स्थैर्ययुक्तामकरोत् ॥ ५१ ॥ इति श्रीमद्दे० श्रीरामा० आरण्यकाण्ड० एकोनसप्ततितमः सर्गः ॥ ६९ ॥

अथ कबन्धस्य बाहुच्छेदेन पूर्वजन्मस्मृतिरुच्यते सप्ततितमे—तौ त्वित्यादि । परिक्षिप्तौ परिवेष्टितौ ॥ १ ॥ तिष्ठत इति । क्षुधार्तं मां दृष्ट्वा भीतौ किन्तु तिष्ठतः व्यर्थमेव न तु जीवितापत्परिहार इत्यर्थः । यतो [illegible] ॥ २ ॥ तच्छ्रुत्वेति । कृतलक्षणः कृतोद्योगः ॥ ३ ॥ त्वां चेति । पुरा आदत्ते आदास्यतीत्यर्थः ॥ ४ ॥ भीषण इति । भुजयोरेव विक्रमो यस्य स तथा । लोकं जनम् । अतिजितम् अत्यन्तजितम् ॥ ५ ॥



तौ तु तत्र स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ । बाहुपाशपरिक्षिप्तौ कबन्धो वाक्यमब्रवीत् ॥ १ ॥ तिष्ठतः किन्नु मां दृष्ट्वा क्षुधार्तं क्षत्रियर्षभौ । आहारार्थं तु सन्दिष्टौ दैवेन गतचेतसौ ॥ २ ॥ तच्छ्रुत्वा लक्ष्मणो वाक्यं प्राप्तकालं हितं तदा । उवाचार्तिं समापन्नो विक्रमे कृतलक्षणः ॥ ३ ॥ त्वां च मां च पुरा तूर्णमादत्ते राक्षसाधमः । तस्मादसिभ्यामस्याशु बाहू छिन्दावहे गुरू ॥ ४ ॥ भीषणोऽयं महाकायो राक्षसो भुजविक्रमः । लोकं ह्यतिजितं कृत्वा ह्यावां हन्तुमिहेच्छति ॥५॥ निश्चेष्टानां वधो राजन् कुत्सितो जगतीपतेः । क्रतुमध्योपनीतानां पशूनामिव राघव ॥६॥

भुजच्छेदनमात्रं कर्तव्यं न तु मारणमित्याह—निश्चेष्टानामिति । निश्चेष्टानां प्रतीकाराशक्तानाम् । जगतीपतेः क्षत्रियस्य । क्रतुमध्योपनीतानां निश्चेष्टानामित्यस्मिन्नर्थे प्रयुक्तम् । "पर्यग्निकृतानारण्यानुत्सृजन्त्यहिंसायै" इत्युक्तरीत्या अश्वमेधक्रतावुपनीतानामारण्यपशूनां वधः कुत्सित एव ॥ ६ ॥

तौ तु तत्रेत्यादि । बाहुपाशपरिक्षिप्तौ बाहुपाशावृतौ ॥ १ ॥ क्षुधार्तस्य मम दैवेन आहारार्थं सन्दिष्टौ अतः किन्नु तिष्ठत इति तावब्रवीदिति पूर्वेण सम्बन्धः । वस्तुतस्तु—तिष्ठत इति । हे क्षत्रियर्षभौ युवां दैवेन आहारार्थं सिन्दिष्टौ किम्, ममेति शेषः । गतचेतसौ किं तादृशौ न भवतः । अतः क्षुधार्तं मां दृष्ट्वा किं तिष्ठतः गच्छतमिति शेषः । इत्यब्रवीदिति पूर्वेण सम्बन्धः ॥ २ ॥ तदिति । उवाच राममिति शेषः । प्राप्तकालं युक्तम् । विक्रमे कृतलक्षणः आहितलक्षणः, पराक्रमसम्पन्न इति यावत् । "गुणैः प्रतीते तु कृतलक्षणो" इत्यमरः ॥ ३ ॥ त्वामिति । पुरा आदत्ते आदास्यतीत्यर्थः ॥ ४ ॥ भीषण इति । भुजविक्रमः भुजयोर्विक्रमो यस्य सः । भीषण इति पादपूरणार्थे अप्यर्थे चात्र हिशब्दौ । लोकमतिजितमत्यन्तपराजितं कृत्वा तद्वदावामपि हन्तुमिच्छति । अतोस्य बाहू छिन्दावहे इति पूर्वेण सम्बन्धः ॥ ५ ॥ अस्य हननमेव युक्तमित्याकांक्षायामाह—निश्चेष्टानामिति । निश्चेष्टानाम् अकृतविक्रमाणां वधः कुत्सितः अयुक्त इत्यर्थः । क्रतुमध्योपनीतानां क्रतुमध्यादन्यत्र नीतानां, क्रतुबाह्यानाम्, क्रत्वनङ्गभूतानामिति यावत् । वध इवेति ॥ ६ ॥

स०—क्रतुमध्योपनीतानां पशूनां वधः कलिकाले प्रायस्तद्विधानाङ्गत्वात् लोकानां यथा कुत्सितः पिष्टपशोरेव हिंसत्येन भारतायुक्तेः । अथवा क्रतुमध्ये तद्धननाक्लृप्तदिने ॥ ६ ॥

तयोरेतत् सञ्जल्पितं श्रुत्वा भक्षयितुमारभत, हस्ताभ्यामाकृष्टवानित्यर्थः ॥ ७ ॥ सुसंहृष्टौ कदलीकाण्डवत् सुखच्छेदनादिति भावः ॥ ८ ॥ दक्षिणः समर्थः । असक्तम् अप्रतिबन्धं यथा भवति तथा । रामस्य दक्षिणपार्श्वे गमनं लक्ष्मणस्य, अत उभयोर्दक्षिणसव्यपार्श्वप्राप्तिः ॥ ९ ॥ गां भूमिम् ॥ १० ॥ निकृत्ताविति । पूर्वमदत्तोत्तरत्वात् पुनः प्रश्नः ॥ ११ ॥ इतीति । क्रियाभेदात् पुनस्तच्छब्दः ॥ १२ ॥ इक्ष्वाकुदायादः दशरथपुत्रः ।

एतत्सञ्जल्पितं श्रुत्वा तयोः क्रुद्धस्तु राक्षसः । विदार्यास्यं तदा रौद्रस्तौ भक्षयितुमारभत् ॥७॥ ततस्तौ देशकालज्ञौ खड्गाभ्यामेव राघवौ । अच्छिन्दतां सुसंहृष्टौ बाहू तस्यांसदेशतः ॥८॥ दक्षिणो दक्षिणं बाहुमसक्तमसिना ततः । चिच्छेद रामो वेगेन सव्यं वीरस्तु लक्ष्मणः ॥९॥ स पपात महाबाहुश्छिन्नबाहुर्महास्वनः । खं च गां च दिशश्चैव नादयन् जलदो यथा॥१०॥स निकृत्तौ भुजौ दृष्ट्वा शोणितौघपरिप्लुतः । दीनः पप्रच्छ तौ वीरौ कौ युवामिति दानवः ॥११॥ इति तस्य ब्रुवाणस्य लक्ष्मणः शुभलक्षणः । शशंस राघवं तस्य कबन्धस्य महात्मनः ॥१२॥ अयमिक्ष्वाकुदायादो रामो नाम जनैः श्रुतः । अस्यैवावरजं विद्धि भ्रातरं मां च लक्ष्मणम् ॥ १३ ॥ [ मात्रा प्रतिहते राज्ये रामः प्रव्राजितो वनम् । मया सह चरत्येष भार्यया च महद्वनम् ॥] अस्य देवप्रभावस्य वसतो विजने वने । रक्षसाऽपहृता पत्नी यामिच्छन्ताविहागतौ ॥१४॥ त्वं तु को वा किमर्थं वा कबन्धसदृशो वने । आस्येनोरसि दीप्तेन भग्नजङ्घो विवेष्टसे ॥ १५ ॥ एवमुक्तः कबन्धस्तु लक्ष्मणेनोत्तरं वचः । उवाच परमप्रीतस्तदिन्द्रवचनं स्मरन् ॥ १६ ॥

"दायादौ सुतबान्धवौ" इत्यमरः ॥ १३ ॥ इच्छन्तौ अन्वेषमाणावित्यर्थः ॥ १४ ॥ त्वं त्विति । विवेष्टसे लुठसीति यावत् ॥ १५ ॥ प्रीतः शापमोक्षकालप्रत्यभिज्ञानात् । तदिन्द्रवचनम् उत्तरसर्गप्रतिपाद्यम् ॥ १६ ॥

एतदिति । तयोरेतज्जल्पनं श्रुत्वेति सम्बन्धः । भक्षयितुमारभत, हस्ताभ्यामाकृष्टवानित्यर्थः ॥ ७ ॥ तत इति । सुसंविग्नौ भीतौ, वस्तुतस्तु सुसंविग्नौ कम्पयुक्तौ भुजौ ॥ ८ ॥ दक्षिणः समर्थः । असक्तमप्रतिबन्धं यथा तथा ॥ ९ ॥ गां भुवम् ॥ १० ॥ स इति । कौ युवामिति पप्रच्छ । पूर्वमप्राप्तोत्तरत्वात्पुनः प्रश्नः ॥११॥१२ ॥ इक्ष्वाकुदायादः दशरथपुत्रः ॥१३॥ यामिच्छन्तौ यामन्वेषयन्तौ ॥१४॥ [illegible] इति । इन्द्रवचनं श्रीरामेण तव बाहुच्छेदने कृते

बाह्वोर्बन्धनं ययोस्तौ बाहुबन्धनौ अंसावित्यर्थः ॥ १७ ॥ विरूपं विषमरूपं यथा येन प्रकारेण प्राप्तं तत्कारणं तत्त्वतस्तव शंसतो मे सकाशाच्छृणु । अस्मिन् सर्गे अष्टादश श्लोकाः ॥ १८ ॥ इति श्रीमद्रा० श्रीरामा० रत्नमक्षे० आरण्यकाण्डव्याख्याने सप्ततितमः सर्गः ॥७०॥ अथ कबन्धः स्ववृत्तान्त



स्वागतं वां नरव्याघ्रौ दिष्ट्या पश्यामि चाप्यहम् । दिष्ट्या चेमौ निकृत्तौ मे युवाभ्यां बाहुबन्धनौ ॥ १७ ॥ विरूपं यच्च मे रूपं प्राप्तं ह्यविनयाद्यथा । तन्मे शृणु नरव्याघ्र तत्त्वतः शंसतस्तव ॥ १८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

पुरा राम महाबाहो महाबलपराक्रम । रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतम् । यथा सोमस्य शक्रस्य सूर्यस्य च यथा वपुः ॥ १ ॥ सोऽहं रूपमिदं कृत्वा लोकवित्रासनं महत् । ऋषीन्वनगतान् राम त्रासयामि ततस्ततः ॥२॥ ततः स्थूलशिरा नाम महर्षिः कोपितो मया । सञ्चिन्वन् विविधं वन्यं रूपेणानेन धर्षितः ॥ ३ ॥ तेनाहमुक्तः प्रेक्ष्यैवं घोरशापाभिधायिना । एतदेव नृशंसं ते रूपमस्तु विगर्हितम् ॥ ४ ॥

कथनपूर्वकं स्वशापमोक्षाय स्वशरीरदहनमर्थयते एकसप्ततितमे–पुरेत्यादिसार्धश्लोक एकान्वयः । अचिन्त्यम् अचिन्त्यवैभवम् ॥१॥ सोहमिति । सुन्दररूपोहम् । रूपं शरीरं लोकवित्रासनं क्रूरं कृत्वा परिगृह्य ततस्ततः तत्र तत्र ऋषीन् त्रासयामि अत्रासयम् ॥२॥ विविधं वन्यं सञ्चिन्वन् स्थूलशिराः धर्षितः अपहृतवन्यः तेन कोपितश्च ॥ ३ ॥ एवंविधं मे रूपं प्रेक्ष्य घोरशापाभिधायिना तेन ऋषिणा नृशंसं गर्हितम् एतदेव रूपं ते अस्त्वित्यहमुक्तः ॥ ४ ॥

तव मोक्षो भविष्यतीत्येवंरूपं वचनं स्मरन् ॥ १६॥ बाहुबन्धनौ बाहुपाशौ ॥१७॥ विरूपं विकृतम् ॥१८॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां सप्ततितमः सर्गः ॥ ७० ॥ पुरेति । अचिन्त्यम् अचिन्त्यवैभवम् ॥ १ ॥ सोऽहं पूर्वोक्तविशेषणविशिष्टोहम् । इदं रूपं इदानीं विद्यमानराक्षसरूपं कृत्वा ॥ २ ॥ विविधं विचिन्वन् सम्पादयन् स्थूलशिरा नाम ऋषिः मया कर्त्रा अनेन रूपेण इदानीं विद्यमानराक्षसरूपेण करणेन धर्षितः तिरस्कृतस्सन् कुपितोऽभूदिति शेषः ॥ ३ ॥ घोरशापाभिधायिना घोरशापभाषणशीलेन ऋषिणा । नृशंसं घातुकम् । विगर्हितं जुगुप्सितम् । एतद्रूपमेव अस्त्विति

स०–अचिन्त्यम् अचिन्त्यमिव । सोमस्य चन्द्रस्य रुद्रस्येत्यप्यर्थः । यथा तेषां वपुः तथा ममापि रूपमासीदिति पूर्वेण सम्बन्धः ॥ १ ॥ सोहम् एतादृशोप्यहं लोकवित्रासनम् इदं रूपं राक्षसरूपं वैभवेन कृत्वा ऋषींस्त्रासयामीति सम्बन्धः ॥ २ ॥

अभिशापशब्देन तन्निमित्तं धर्षणं लक्ष्यते । मद्धर्षणकृतस्य शापस्यान्तो भवेदिति स मया याचितः प्रार्थितः इति हेतोः तेन मयैवं याचितेन इदं वक्ष्य माणं वचो भाषितम् ॥ ५ ॥ तदेवाह—यदेति ॥६॥ तर्हि कबन्धरूपप्राप्तिः केन हेतुनेत्यत्राह—श्रियेति । मामिति शेषः । एवम् एवंविधम् । रणाजिरे रणा ङ्गणे ॥ ७ ॥ इन्द्रेण योद्धुं तव कुतः सामर्थ्यं तत्राह—अहं हीति । ऋषिदत्तघोराकारप्राप्त्यनन्तरम् उग्रेण तपसा पितामहमतोषयं, स्वकुलशत्रोरिन्द्रस्य

स मया याचितः क्रुद्धः शापस्यान्तो भवेदिति । अभिशापकृतस्येति तेनेदं भाषितं वचः ॥ ५ ॥ यदा छित्त्वा भुजौ रामस्त्वां दहेद्विजने वने । तदा त्वं प्राप्स्यसे रूपं स्वमेव विपुलं शुभम् ॥ ६ ॥ श्रिया विराजितं पुत्रं दनोस्त्वं विद्धि लक्ष्मण । इन्द्रकोपादिदं रूपं प्राप्तमेवं रणाजिरे ॥ ७ ॥ अहं हि तपसोग्रेण पितामहमतोषयम् । दीर्घमायुः स मे प्रादात्ततो मां विभ्रमोऽस्पृशत् ॥ ८ ॥ दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति । इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम् ॥ ९ ॥ तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा । सक्थिनी चैव मूर्धा च शरीरे संप्रवेशितम् ॥ १० ॥ स मया याच्यमानः सन्नानयद्यमसादनम् । पितामहवचः सत्यं तदस्त्विति ममाब्रवीत् ॥ ११ ॥

जयायेत्यर्थः । विभ्रमः अज्ञानम् ॥ ८ ॥ तदेवाह—दीर्घमिति ॥९॥ शतपर्वणा शतधारेण । सक्थिनी पृष्ठास्थिफलके । शरीरे मध्यदेहे उदरभागे सक्थ्नोः प्रवेशनम्, उरोभागे मूर्ध्नः प्रवेशनम् । संप्रवेशितमित्यत्र "नपुंसकमनपुंसकेन-" इति नपुंसकपरिशेषत्वम् एकवद्भावश्च ॥१०॥ याच्यमानः मारयेति प्रार्थ्य

तेनाहमुक्त इति सम्बन्धः ॥ ४ ॥ स इत्यादि श्लोकद्वयमेकं वाक्यम् । अभिशापकृतस्य अभिशापशब्देन तन्निमित्तं धर्षणं लक्ष्यते । तत्कृतस्य शापस्यान्तो भवेदिति स ऋषिर्मया याचितः प्रार्थितः सन् यदा रामो भुजौ छित्त्वा त्वां दहेत् तदा स्वं रूपं प्राप्स्यस इति तेन वचो भाषितमिति द्वितीयेतिकरणस्य सम्बन्धः ॥ ५ ॥ ६ ॥ श्रियः श्रिया विराजितं दनोः पुत्रं विद्धि । यद्वा दनोर्दनुवंशजस्य श्रियः श्रीनाम्नः पुत्रं विद्धि, मामिति शेषः । " दनुर्नाम श्रियः पुत्रः शापाद्राक्ष सतां गतः " इति किष्किन्धाकाण्डे वक्ष्यमाणत्वात् । ननु कबन्धाकारत्वं त्वया कथं प्राप्तमत आह इन्द्रेति ॥७ ॥ इन्द्रकोपे कारणं वर्णयति—अहं हीति द्वाभ्याम् । विभ्रमो गर्व इत्यर्थः ॥ ८ ॥ तदेवाह—दीर्घमायुरिति ॥ ९ ॥ ( स्कन्धिनि कण्ठे ) । शतपर्वणा शतधारेण । सक्थिनी इति नाभ्यधोभागोपलक्षणम् । शरीरे शरीर मध्यस्थे उदरभागे ॥ १० ॥ एवम्भूतेन मरणं याच्यमानोऽपि तन्नाकरोत् । किमिति नाकरोत्तत्राह—पितामहेति । तद्वचो दीर्घायुर्दानरूपम् ॥ ११ ॥

स०—अभिशापकृतस्य मत्कृतप्रधर्षणादिनिमित्तकस्य शापस्यान्तः परिहारो भवेदिति । समयप्रार्थित इत्येकं पदम् । समये शापान्तरकाले आयाचितो यस्तेनेदं वचो भाषितमित्यन्वयः ॥ ५ ॥

मानः । यमसादनं नानयत् मृतिं न प्रापितवान् । कुत इत्यत्राह पितामहेति । तत् पूर्वोक्तं दीर्घायुर्विषयकं पितामहवचः सत्यमस्त्विति मम मह्यम् अत्र वीत न त्वां मारयामीत्यत्रवीदित्यर्थः ॥ ११ ॥ अनाहार इत्यादिश्लोकद्वयमेकान्वयम् । अनाहारः सन् सुदीर्घं कालं कथं जीवितुं शक्तः भग्नसक्थि

अनाहारः कथं शक्तो भग्नसक्थिशिरोमुखः । वज्रेणाभिहतः कालं सुदीर्घमपि जीवितुम् ॥ १२ ॥ एवमुक्तस्तु मे शक्रो बाहू योजनमायतौ । प्रादादास्यं च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत् ॥ १३ ॥ सोऽहं भुजाभ्यां दीर्घाभ्यां संकृष्यास्मिन्वनेचरान् । सिंहद्विपमृगव्याघ्रान् भक्षयामि समन्ततः ॥ १४ ॥ स तु मामब्रवीदिन्द्रो यदा रामः सलक्ष्मणः । छेत्स्यते समरे बाहू तदा स्वर्गं गमिष्यसि ॥ १५ ॥ अनेन वपुषा राम वनेऽस्मिन् राजसत्तम । यद्यत्पश्यामि सर्वस्य ग्रहणं साधु रोचये ॥ १६ ॥ अवश्यं ग्रहणं रामो मन्येऽहं समुपैष्यति । इमां बुद्धिं पुरस्कृत्य देहन्यासकृतश्रमः ॥ १७ ॥ स त्वं रामोऽसि भद्रं ते नाहमन्येन राघव । शक्यो हन्तुं यथातत्त्वमेवमुक्तं महर्षिणा ॥ १८ ॥ अहं हि मतिसाचिव्यं करिष्यामि नरर्षभ । मित्रं चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना ॥ १९ ॥

शिरोमुखत्वमनाहारत्वे हेतुः । बाहू प्रादात् आस्यमकल्पयत् ॥ १२ ॥ १३ ॥ सोऽहमिति । संकृष्य आकृष्य ॥ १४ ॥ स मामित्यनेन बलात्कारो लक्ष्यते ॥ १५ ॥ अनेनेति । अनेन वपुषा उपलक्षितोऽहं यद्यत्पश्यामि तस्य ग्रहणं रोचये न त्वभक्ष्यबुद्ध्या किञ्चित्त्यजामीत्यर्थः ॥ १६ ॥ महर्षिवाक्यविश्वासात् अवश्यं रामो ग्रहणं समुपैष्यतीति मन्ये । इमां बुद्धिं पुरस्कृत्य देहन्यासे कृतश्रमो भवामि विकृतदेहत्यागे कृतोद्योगो भवामि । देहत्यागे कृतबुद्धितया रामोऽवश्यं ग्रहणमुपैष्यतीति सर्वग्रहणं रोचय इति भावः ॥ १७ ॥ रामत्वे युक्तिमाह—नाहमिति । एवं यथार्थमेव महर्षिणोक्तम् ॥ १८ ॥ मतिसाचिव्यं

वज्रिणा त्वयाऽभिहितः जीवितुं कथं शक्त इत्यन्वयः ॥ १२ ॥ एवमुक्तः अनाहारस्याक्रियस्य कथं जीवनमित्युक्तः ॥ १३ ॥ वनेचरान् वने सञ्चारवतः ॥ १४–१६ ॥ अवश्यमिति । देहन्यासकृतश्रमः विकृतदेहत्यागे कृतोद्योगः । अवश्यं रामग्रहणं समुपैष्यतीत्यहं मन्य इति बुद्धिं पुरस्कृत्य सर्वस्य ग्रहणं साधु रोचय इति पूर्वेण सम्बन्धः ॥ १७ ॥ १८ ॥ सर्वदा दाहोत्तरं बुद्धिसाहाय्यं करिष्यामि मित्रं चोपदेक्ष्यामि ॥ १९ ॥

बुद्धिसाहाय्यं करिष्यामि । किंच तद्विषये मित्रं चोपदेक्ष्यामि युवाभ्यामग्निना संस्कृतश्चेद्भवेयम् ॥ १९ ॥ दनुना दनुवंश्येन । औपचारिकस्तद्वंश्ये तच्छब्दः ॥ २० ॥ जनस्थानाद्यथासुखं निष्क्रान्तस्य निर्गतस्य मे भार्या हृता ॥ २१ ॥ नाममात्रं तु जानामि आप्तवाक्यादिति शेषः । न विद्महे अहं मत्पुरीजनाश्चेत्यर्थः ॥ २२ ॥ उपकारे परोपकारे । वर्तंतां प्रवर्तमानानाम् अस्माकं विषये कारुण्यं कर्तुं, सदृशं युक्तम् ॥ २३ ॥ उपकारमेवाह—

एवमुक्तस्तु धर्मात्मा दनुना तेन राघवः । इदं जगाद वचनं लक्ष्मणस्योपशृण्वतः ॥ २० ॥ रावणेन हृता भार्या मम सीता यशस्विनी । निष्क्रान्तस्य जनस्थानात्सह भ्रात्रा यथासुखम् ॥ २१ ॥ नाममात्रं तु जानामि न रूपं तस्य रक्षसः । निवासं वा प्रभावं वा वयं तस्य न विद्महे ॥ २२ ॥ शोकार्तानामनाथानामेवं विपरिधावताम् । कारुण्यं सदृशं कर्तुमुपकारे च वर्तताम् ॥ २३ ॥ काष्ठान्यादाय शुष्काणि काले भग्नानि कुञ्जरैः । धक्ष्यामस्त्वां वयं वीर श्वभ्रे महति कल्पिते ॥ २४ ॥ स त्वं सीतां समाचक्ष्व येन वा यत्र वा हृता । कुरु कल्याणमत्यर्थ यदि जानासि तत्त्वतः ॥ २५ ॥ एवमुक्तस्य रामेण वाक्यं दनुरनुत्तमम् । प्रोवाच कुशलो वक्तुं वक्तारमपि राघवम् ॥ २६ ॥ दिव्यमस्ति न मे ज्ञानं नाभिजानामि मैथिलीम् । यस्तां ज्ञास्यति तं वक्ष्ये दग्धः स्वं रूपमास्थितः ॥ २७ ॥ अदग्धस्य तु विज्ञातुं शक्तिरस्ति न मे प्रभो । राक्षसं तं महावीर्यं सीता येन हृता तव ॥ २८ ॥ विज्ञानं हि मम भ्रष्टं शापदोषेण राघव । स्वकृतेन मया प्राप्तं रूपं लोकविगर्हितम् ॥ २९ ॥ किन्तु यावन्न यात्यस्तं सविता श्रान्तवाहनः । तावन्मामवटे क्षिप्त्वा दह राम यथाविधि ॥ ३० ॥

काष्ठानीति । कल्पिते सज्जे । श्वभ्रे अवटे ॥ २४ ॥ कल्याणं तत्त्वकथनरूपम् ॥ २५ ॥ वक्तारमपि राघवं वक्तुं कुशलः ॥ २६ ॥ मैथिलीं तदपहर्तारं चेति द्रष्टव्यम् । तर्हि किंवा मतिसाचिव्यं करिष्यसीत्यत्राह—य इति । तर्हि तं वा ब्रूहीत्यत्राह—दग्ध इति ॥२७॥ इदमेव व्यतिरेकमुखेनाह—अदग्धस्येति ॥ २८ ॥ कुत इत्यत्राह—विज्ञानं हीति । विज्ञानम् अतीन्द्रियविषयकम् । स्वकृतेन पापेनेति शेषः ॥ २९ ॥ अवटे श्वभ्रे । यथाविधि यथा सम्यक् दग्धं भवमिति । दनुना तद्वंश्येन ॥२०॥ २१ ॥ नाममात्रम्, आप्तस्य [illegible] वाक्यादिति भावः ॥२२॥ शोकार्तानामित्यादि श्लोकत्रयमेकं वाक्यम् । उचितं कारुण्यं

भवति तथंत्यर्थः ॥ २० ॥ न्यायेन सम्यक्त्वेन ॥ २१ ॥ न्यायवृत्तेन [illegible] ॥ ३२ ॥ कारणान्तरे आत्मविरोधरूपनिमित्तान्तरे । अयं रावण मेव न जानाति सुग्रीवं तु जानाति किंतु तन्नाम न कथितवान् दाहात्पूर्वं कथने कुत्सितशरीरदहने रामो वैमनस्यं कुर्यादिति । अस्मिन् सर्गे सार्धत्रय स्त्रिंशच्छ्लोकाः॥३३॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकसप्ततितमः सर्गः॥ ७१ ॥

दग्धस्त्वयाहमवटे न्यायेन रघुनन्दन । वक्ष्यामि तमहं वीर यस्तं ज्ञास्यति राक्षसम् ॥ ३१ ॥ तेन सख्यं च कर्तव्यं न्यायवृत्तेन राघव । कल्पयिष्यति ते प्रीतः साहाय्यं लघुविक्रमः ॥ ३२ ॥ न हि तस्यास्त्यविज्ञातं त्रिषु लोकेषु राघव । सर्वान् परिसृतो लोकान् पुरासौ कारणान्तरे॥३३॥ इत्यार्षे० श्रीमदारण्यकाण्डे एकसप्ततितमः सर्गः॥७१

एवमुक्तौ तु तौ वीरौ कबन्धेन नरेश्वरौ । गिरिप्रदरमासाद्य पावकं विससर्जतुः ॥ १ ॥ लक्ष्मणस्तु महोल्काभि र्ज्वलिताभिः समन्ततः । चितामादीपयामास सा प्रजज्वाल सर्वतः ॥२॥ तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् । मेदसा पच्यमानस्य मन्दं दहति पावकः ॥ ३ ॥ स विधूय चितामाशु विधूमोऽग्निरिवोत्थितः । अरजे वाससी बिभ्र न्मालां दिव्यां महाबलः ॥४॥ ततश्चिताया वेगेन भास्वरो विमलाम्बरः । उत्पपाताशु संहृष्टः सर्वप्रत्यङ्गभूषणः ॥ ५ ॥ विमाने भास्वरे तिष्ठन् हंसयुक्ते यशस्करे । प्रभया च महातेजा दिशो दश विराजयन् ॥ ६ ॥

अथ संस्कृतः कबन्धः स्वरूपं प्रत्यापन्नो मित्रमुपदिशति द्विसप्ततितमे—एवमुक्तावित्यादि । प्रदरं श्वभ्रम् । आसाद्य प्रापय्य कबन्धमिति शेषः ॥१॥ महोल्काभिः निर्गतज्वालकाष्ठैः ॥ २ ॥ मेदसा मांसेन पच्यमानस्य अभिवृद्धस्य कबन्धस्य शरीरम् ॥ ३ ॥ अरजे निर्मले । अदन्तत्वमार्षम् ॥ ४ ॥ तत इति । चिताया उत्पपात सर्वेषु प्रत्यङ्गेष्वङ्गुल्यादिष्वपि भूषणानि यस्य स तथा ॥ ५ ॥ हंसयुक्त इत्यनेन रामदग्धतया ब्रह्मलोकप्राप्तिः सूच्यते । कर्तुं वर्ततामस्माकं सीतामाचक्ष्व, कुरु कल्याणमिति सम्बन्धः । तदेवाह—काष्ठानीति । यद्वा शोकार्तानामिति उपकारे सति सदृशं कारुण्यं प्रत्युपकाररूपं कारुण्यं कर्तुं वर्तताम् । तदेवाह—काष्ठानीति । कल्याणं सीतावार्ताश्रवणानन्दरूपम् ॥२३–३३॥ इति श्रीमहे०श्रीरामा०आरण्यकाण्डव्याख्यायाम् एकसप्ततितमः सर्गः॥७१ एवमुक्ताविति । पावकं विससर्जतुः पावकमुत्पादितवन्तावित्यर्थः ॥ १ ॥ २ ॥ तदिति । मेदसा, पूर्णस्येति शेषः । अतएव मन्दं दहति ॥ ३ ॥ अरजे निर्मले ॥४॥ सर्वप्रत्यङ्गभूषणः सर्वेषु प्रत्यङ्गेषु करचरणाद्यवयवेषु भूषणानि यस्य सः॥५॥ हंससंयुक्ते रामकृतसंस्कारप्रभावेण पूर्वतपःप्रभावेण चैवम्भूतं विमानं प्राप्तः॥६॥

विराजयन् अभूदिति शेषः ॥ ६ ॥ तत्त्वेन परमार्थतः । शृण्विति वाक्यमब्रवीदिति सम्बन्धः ॥ ७ ॥ हे राम ! लोके षड्युक्तयः सन्ति । युक्तयः उपायाः । ते च सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः । याभिर्युक्तिभिः सत्त्वं राज्ञां कृत्यं विमृश्यते ताः सन्तीति ॥ ८ ॥ ततः किमित्यपेक्षायां सान्धिविषयं दर्शयति–परिमृष्ट इति । दशा नाम दौस्थ्यरूपावस्था तस्या अन्तः परिपाकः तेन परिमृष्टः संस्पृष्टः पुरुषः दशाभागेन दशायाः भागः परिपाकलक्षणः

सोऽन्तरिक्षगतो रामं कबन्धो वाक्यमब्रवीत् । शृणु राघव तत्त्वेन यथा सीतामवाप्स्यसि ॥ ७ ॥ राम षड्युक्तयो लोके याभिः सत्त्वं विमृश्यते ॥ ८ ॥ परिमृष्टो दशान्तेन दशाभागेन सेव्यते । दशाभागगतो हीनस्त्वं हि राम सलक्ष्मणः । यत्कृते व्यसनं प्राप्तं त्वया दारप्रधर्षणम् ॥ ९॥ तदवश्यं त्वया कार्यः स सुहृत्सुहृदां वर । अकृत्वा हि न ते सिद्धिमहं पश्यामि चिन्तयन् ॥ १० ॥

अंशो यस्य तेन सेव्यते सन्धीयते । अस्तु प्रकृते किमायातं तत्राह दशाभागगत इति । हे राम ! सलक्ष्मणस्त्वं दशाभागगतः दुर्दशापन्नः अत एव हीनश्च । कुतः ? यत्कृते येन कारणेन दारप्रधर्षणं नाम व्यसनं प्राप्तं तेन त्वं दशाभागगतः ॥ ९ ॥ ततोपि किमित्यत्राह–तदिति । दशाभागेन त्वया

तत्त्वेन परमार्थतः, उच्यमानमिति शेषः ॥ ७ ॥ हे राम ! लोके षड्युक्तयः सन्धिविग्रहयानासनद्वैधीभावसमाश्रया इति षड्युक्तयः षड्गुणाः सन्ति । याभिर्युक्तिभिः सर्वं वस्तुजातं विमृश्यते विचार्यते । न्यायमार्गेण विचारो विमर्शः ॥ ८ ॥ तत्र न्यायमार्गेण विमर्शे कृते ऊनयोः पुरुषयोर्द्वयोः संश्लेषो भवतीत्याह–परिमृष्ट इति । दशान्तेन दशाशब्देनात्र दौस्थ्यरूपावस्था विवक्षिता तस्या अन्तः परिपाकस्तेन परिमृष्टः संस्पृष्टः पुरुषः, दुरवस्थामापन्नः पुरुष इत्यर्थः । दशाभागेन दशायाः दौस्थ्यरूपावस्थायाः भागः परिपाकलक्षणोंशो यस्य तेन दशाभागेन दुरवस्थापन्नेन पुरुषेण सेव्यते । संश्लिष्यते सन्धीयत इत्यर्थः । नन्वस्तु प्रकृते किमायातं तत्राह–दशेति । हे राम ! सलक्ष्मणस्त्वं हीनः राज्यादिति शेषः । अत एव दशाभागगतः दुरवस्थामापन्न इत्यर्थः । ततः किम् तत्राह–यत्कृत इति । यत्कृते यस्मात्कारणादित्यर्थः । त्वया दारप्रधर्षणं तद्रूपं व्यसनं प्राप्तम्, तत्तस्मात् सः मया वक्ष्यमाणः त्वया अवश्यं सुहृत् मित्रभूतः कार्यः कर्तव्यः । क्षीणेन त्वया क्षीणः सेव्य इत्याशयः । अवश्यमित्यत्र हेतुमाह–अकृत्वेति । अकृत्वा तादृशं पुरुषं सुहृदमकृत्वेत्यर्थः । ते तव सिद्धिं सीताप्राप्तिलक्षणां नहि पश्यामीति योजना । यद्वा षड्युक्तय इति । तत्र युक्तयः-प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यभावप्रमाणानि पार्थसारथिमिश्रैः शास्त्रदीपिकायां युक्तिशब्दस्य प्रमाणपरतया व्याख्यातत्वात् । अस्यार्थः–हे राम ! लोके षड्युक्तयः षट्प्रमाणानि सन्ति, याभिः प्रत्यक्षादिभिस्सर्वं वस्तु विमृश्यते ज्ञाप्यते । अत्र सर्वप्रमाणैः क्षीणः

स: दशाभागगतः काश्चित् सुहृत् कार्यः । अवश्यमित्यत्र हेतुमाह शक्त इति । सुहृत्त्वमन्तरेण असहाय्य सिद्धिं सीतालाभं चिन्तयन्नपि न पश्यामि ॥ १० ॥ स पुनः क इत्यपेक्षायामाह—श्रूयतामित्यादि, श्लोकद्वयमेकान्वयम् ॥ ११ ॥ १२ ॥ स च त्वत्सदृशगुणकत्वाद्दशाभागगतत्वाच्च ते मित्रता



श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः । भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना ॥११॥ ऋश्यमूके गिरिवरे पम्पापर्यन्तशोभिते । निवसत्यात्मवान् वीरश्चतुर्भिस्सह वानरैः ॥ १२ ॥ वानरेन्द्रो महावीर्यस्तेजोवानमितप्रभः । सत्यसन्धो विनीतश्च धृतिमान्मतिमान्महान् ॥ १३ ॥ दक्षः प्रगल्भो द्युतिमान्महाबलपराक्रमः । भ्रात्रा विवासितो राम राज्यहेतोर्महाबलः ॥१४॥ स ते सहायो मित्रं च सीतायाः परिमार्गणे । भविष्यति हि ते राम मा च शोके मनः कृथाः ॥१५॥ भवितव्यं हि यच्चापि न तच्छक्यमिहान्यथा । कर्तुमिक्ष्वाकुशार्दूल कालो हि दुरतिक्रमः ॥१६॥ गच्छ शीघ्रमितो राम सुग्रीवं तं महाबलम् । वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघव । अद्रोहाय समागम्य दीप्यमाने विभावसौ ॥१७॥ स च ते नावमन्तव्यः सुग्रीवो वानराधिपः । कृतज्ञः कामरूपी च सहायार्थी च वीर्यवान् ॥१८॥

महतीत्याह त्रिभिः—वानरेन्द्र इति । तेजोवान् तेजस्वी । द्युतिमान् कान्तिमान् ॥१३–१५॥ शोकापनोदनाय लोकन्यायमाह—भवितव्यमिति श्लोकेन ॥ १६ ॥ गच्छेत्यादिसार्धश्लोक एकान्वयः । इतो गत्वेत्यनुवादः । समागम्य सुग्रीवेण संयुज्य । अद्रोहाय परस्परद्रोहाभावाय । विभावसौ अग्नौ दीप्यमाने सति अग्निसाक्षिकमित्यर्थः । तं सुग्रीवं वयस्यं कुरु ॥ १७ ॥ स च सुग्रीवः ते त्वया नावमन्तव्यः अयं तिर्यक् किमनेनेति तस्मिन्नावमतिः कार्या । तत्र

पुरुषः क्षीणेन पुरुषेण सेव्यत इति फलितार्थः । तत्रान्वयव्यतिरेकमूलं प्रत्यक्षं दर्शयति—दशाभागगतो हीनस्त्वमिति । यत्कृते व्यसनं प्राप्तं त्वया दारप्रधर्षण मित्यनुमानं दर्शयति । अकृत्वा नहि ते सिद्धिमहं पश्यामि चिन्तयन्नित्यर्थापत्तिं दर्शयति । वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघवेति शब्दप्रमाणं दर्शयति ॥ ९ ॥ १० ॥ स सुहृत् क इत्यपेक्षायामाह—श्रूयतामिति ॥ ११ ॥ पर्यन्तः प्रदेशः ॥१२॥ तेजोवान् प्रतापवान् । अमितप्रभः अविच्छिन्नकान्तिः । द्युतिमान् ज्ञान लक्षणा द्युतिरस्यास्तीति तथा ॥ १३–१६ ॥ अद्रोहायेति । अद्रोहाय अन्योन्यक्षेमाय । दीप्यमाने विभावसौ तत्सन्निधौ वयस्यं कुर्विति सम्बन्धः ॥ १७ ॥ १८ ॥

हेतुमाह कृतज्ञ इति ॥ १८ ॥ तस्य सुग्रीवस्य । चिकीर्षितं युवां कर्तुं शक्तौ अतः स कृतार्थः कृतस्वप्रयोजनः । अकृतार्थः करिष्यमाणस्वप्रयोजनो वा तव कृत्यं करिष्यति ॥१९॥ स कस्य पुत्रः कुत्र तिष्ठतीत्यत्राह—स इति। सन्धिरार्षः । ऋक्षरजास्तन्मातेत्याहुः । पम्पामटति तत्तीरे पर्यटति । शङ्कितः वालिनिमित्तमिति शेषः । कृतकिल्बिषः कृतवैरः ॥ २० ॥ सख्यं च न केवलमग्निसाक्षिकं किन्त्वायुधमपि सन्निधाप्य कर्तव्यमित्याह—सन्निधायेति ।

शक्तौ ह्यद्य युवां कर्तुं कार्यं तस्य चिकीर्षितम् । कृतार्थो वाऽकृतार्थो वा कृत्यं तव करिष्यति ॥ १९ ॥ स ऋक्षरजसः पुत्रः पम्पामटति शङ्कितः । भास्करस्यौरसः पुत्रो वालिना कृतकिल्बिषः ॥२०॥ सन्निधायायुधं क्षिप्रमृश्यमूकालयं कपिम् । कुरु राघव सत्येन वयस्यं वनचारिणम् ॥ २१ ॥ स हि स्थानानि सर्वाणि कार्त्स्न्येन कपिकुञ्जरः । नरमांसाशिनां लोके नैपुण्यादधिगच्छति॥२२॥ न तस्याविदितं लोके किञ्चिदस्ति हि राघव । यावत्सूर्यः प्रतपति सहस्रांशुररिन्दम ॥ २३ ॥ स नदीर्विपुलाञ्छैलान् गिरिदुर्गाणि कन्दरान् । अन्वीक्ष्य वानरैः सार्धं पत्नीं तेऽधिगमिष्यति ॥ २४ ॥ वानरांश्च महाकायान् प्रेषयिष्यति राघव । दिशो विचेतुं तां सीतां त्वद्वियोगेन शोचतीम् ॥ २५ ॥ स ज्ञास्यति वरारोहां निर्मलां रावणालये ॥ २६ ॥ स मेरुशृङ्गाग्रगतामनिन्दितां प्रविश्य पातालतलेऽपि वाश्रिताम् । प्लवङ्गमानां प्रवरस्तव प्रियां निहत्य रक्षांसि पुनः प्रदास्यति ॥ २७ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

सत्येन शपथेन ॥ २१ ॥ नरमांसाशिनां राक्षसानाम् । अधिगच्छति ज्ञास्यति ॥ २२ ॥ नेति । यावत्सूर्यः प्रतपति तावति लोक इत्यन्वयः ॥ २३ ॥ स इति । अधिगमिष्यति ज्ञास्यति॥२४॥वानरांश्चेति सार्धश्लोकः । शोचतीं शोचन्तीम्॥२५॥२६॥स इति । प्रविश्य रक्षांसि निहत्येत्यन्वयः । अनिन्दिता

शक्तोप्यद्य तथा कर्तुं कार्यं तस्य चिकीर्षितम् इति पाठः । अद्यापि क्षीणदशायामपि । तथा सीता यथा दृश्यते तथा । तस्य तव चिकीर्षितं कर्तुमिष्टं सीतान्वेषणरूपं कार्यं कर्तुं शक्त इत्यन्वयः ॥१९॥ स इति । पम्पामटति पम्पातीरे सञ्चरति । कृतकिल्बिषः कृतवैरः ॥२०॥ आयुधमग्निसन्निधौ निक्षिप्य तेनाहित सत्येन तं वयस्यं कुर्वित्यर्थः ॥ २१ ॥ अधिगच्छति अन्वेष्यतीत्यर्थः ॥ २२ ॥ २३ ॥ अधिगमिष्यति ज्ञास्यति ॥ २४ ॥ वानरानिति । रावणालये शोचतीमिति

मिति सीतायाः शुद्धत्वप्रतिज्ञा॥२७॥इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने अरण्यकाण्डव्याख्याने द्विसप्ततितमः सर्गः ॥७२॥
अथ कबन्धः सुग्रीवस्थानमार्गं दर्शयित्वा गत इत्याह त्रिसप्ततितमे—निदर्शयित्वेत्यादि । सीतायाः प्रतिपादने प्रापणे निमित्ते । निदर्शयित्वा प्रदर्श्य “ क्त्वा च च्छन्दसि ” इति क्त्वाप्रत्ययः । पूर्वोक्तमुपायमिति शेषः ॥ १ ॥ ऋश्यमूकमार्गं सचिह्नं दर्शयति—एष इति । शिवः शोभनः । शोभनत्व

निदर्शयित्वा रामाय सीतायाः प्रतिपादने । वाक्यमन्वर्थमर्थज्ञः कबन्धः पुनरब्रवीत् ॥ १ ॥ एष राम शिवः पन्था यत्रैते पुष्पिता द्रुमाः । प्रतीचीं दिशमाश्रित्य प्रकाशन्ते मनोरमाः ॥ २ ॥ जम्बूप्रियालपनसप्लक्षन्यग्रोध तिन्दुकाः । अश्वत्थाः कर्णिकाराश्च चूताश्चान्ये च पादपाः ॥ ३ ॥ धन्वना नागवृक्षाश्च तिलका नक्तमालकाः । नीलाशोकाः कदम्बाश्च करवीराश्च पुष्पिताः । अग्निमुख्या अशोकाश्च सुरक्ताः पारिभद्रकाः ॥४॥ तानारुह्याथवा भूमौ पातयित्वा च तान् बलात् । फलान्यमृतकल्पानि भक्षयन्तौ गमिष्यथः ॥ ५ ॥ तदतिक्रम्य काकुत्स्थ वनं पुष्पितपादपम् । नन्दनप्रतिमं चान्यत् कुरवो ह्युत्तरा इव ॥६॥ सर्वकामफला वृक्षाः पादपास्तु मधुस्रवाः । सर्वे च ऋतवस्तत्र वने चैत्ररथे यथा ॥ ७ ॥

मेवाह—यत्रेति । द्रुमान् विशेषयति सार्धद्वयेन—जम्ब्वित्यादि । प्रियालाः धनुःपटाख्या वृक्षाः । प्लक्षाः वटभेदाः । तिन्दुकाः स्फूर्जकाख्या वृक्षाः । धन्वनाः धवाः । नागवृक्षाः नागकेसराः । तिलकाः क्षुरकवृक्षाः । नक्तमालकाः चिरिबिल्वाख्याः । करवीराः प्रतिहासाख्या वृक्षाः । अग्निमुख्याः भल्लातकीवृक्षाः । सुरक्ताः रक्तचन्दनाः । पारिभद्रकाः निम्बाः ॥ २–४ ॥ तानिति । पातयित्वा नमयित्वा तानारुह्य अथवा भूमौ तान् पातयित्वा वेत्यन्वयः ॥ ५ ॥ तदिति । तद्वनमतिक्रम्य नन्दनप्रतिममन्यद्वनं पश्यतमिति शेषः । उत्तरकुरुसाम्यं सर्वकामसमृद्ध्या ॥ ६ ॥ तद्वनं वर्णयति त्रिभिः—सर्वेत्यादि । मधु

सम्बन्धः । अनेन ज्ञायते सर्वदिक्षु रावणालयाः सन्ति, तत्र किंदिक्स्थरावणालये इति ज्ञातुं सर्वदिग्वचनम् ॥ २५–२७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां द्विसप्ततितमः सर्गः ॥ ७२ ॥ निदर्शयित्वेति । सीतायाः प्रतिपादने प्रापणे निमित्ते । निदर्शयित्वा सुग्रीवसख्यरूपं पूर्वोक्तमुपायमिति शेषः । पुनर्वाक्यमब्रवीदिति सम्बन्धः ॥ १ ॥ तदेवाह—एष इति ॥ २ ॥ प्रियालपनसेत्यादि । प्रियालः धनुष्पटः । तिन्दुकः अग्निमुख्यः । सुरक्तः रक्तचन्दनम् । पारिभद्रः मन्दारः ॥ ३ ॥ ४ ॥ पातयित्वा नमयित्वा ॥ ५ ॥ ६ ॥ सर्वकामफलाः सर्वकामान् कामितान् पदार्थान् फलन्तीति तथा । चैत्ररथे

पुष्परसं स्रवन्तीति मधुस्रवाः। सर्वैः काम्यमानानि फलानि येषां ते सर्वकामफलाः। ऋतवः षट् ऋतवः वसन्तीति शेषः। चैत्ररथं कुबेरोद्यानं तत्र वने महाविटपधारिणः। "विस्तारो विटपोऽस्त्रियाम्" इत्यमरः। पादपा इत्यनुषङ्गः। तत्र मेघपर्वतसन्निभाः तत्र विद्यमानाः मेघपर्वता इव स्थिता इत्यर्थः ॥ ७–९ ॥ चङ्क्रमन्ताविति श्लोकद्वयमेकं वाक्यम्। चङ्क्रमन्तौ चङ्क्रममाणौ पुनःपुनः गच्छन्तौ। पुष्करिणीं सरसीम्। अशर्करां

फलभारानतास्तत्र महाविटपधारिणः। शोभन्ते सर्वतस्तत्र मेघपर्वतसन्निभाः॥८॥ तानारुह्याथ वा भूमौ पातयित्वा यथासुखम्। फलान्यमृतकल्पानि लक्ष्मणस्ते प्रदास्यति ॥ ९ ॥ चङ्क्रमन्तौ वरान् देशान् शैलाच्छैलं वनाद्वनम्। ततः पुष्करिणीं वीरौ पम्पां नाम गमिष्यथः ॥१०॥ अशर्करामविभ्रंशां समतीर्थामशैवलाम्। राम सञ्जातवालूकां कमलोत्पलशालिनीम् ॥ ११ ॥ तत्र हंसाः प्लवाः क्रौञ्चाः कुरराश्चैव राघव। वल्गुस्वना निकूजन्ति पम्पासलिलगोचराः ॥ १२ ॥ नोद्विजन्ते नरान् दृष्ट्वा वधस्याकोविदाः शुभाः। घृतपिण्डोपमान् स्थूलांस्तान् द्विजान् भक्षयिष्यथः ॥१३॥ रोहितान् वक्रतुण्डांश्च नडमीनांश्च राघव। पम्पायामिषुभिर्मत्स्यांस्तत्र राम वरान् हतान् ॥१४॥ निस्त्वक्पक्षानयस्तप्तानकृशानेककण्टकान्। तव भक्त्या समायुक्तो लक्ष्मणः संप्रदास्यति ॥ १५ ॥

शर्करारहिताम्। अविभ्रंशाम् अशिथिलतटाम्। समतीर्थाम् अवतारस्थलेतिनिम्नत्वात्यगाधत्वरहिताम्। सञ्जातवालूकाम् अपङ्कतया संहतसिकताम्। दीर्घ आर्षः ॥ १० ॥ ११ ॥ तत्रेति। प्लवाः मण्डूकाः हंसभेदा वा। कुरराः क्रौञ्चभेदाः। वल्गुस्वराः रम्यस्वनाः। सलिलगोचराः सलिलचारिणः। गोचरः सञ्चारः ॥ १२ ॥ वधस्याकोविदाः वधमजानानाः। नोद्विजन्ते न बिभ्यति। द्विजा इति शेषः, तानित्यनुवादात् ॥ १३ ॥ रोहितानित्यादिश्लोकद्वयम्। रोहितान् पितृप्रियमत्स्यभेदान्। वक्रतुण्डान् वक्रमुखमत्स्यान्। नडमीनान् नडाख्यतृणविशेषस्तम्बसञ्चारशीलान् मत्स्यान् वरान् श्रेष्ठान् अयस्तप्तान् अयःशूलाग्रप्रोततया पक्वान्। कृशाश्चानेककण्टकाश्च ते न भवन्तीत्यकृशानेककण्टकाः तान् ॥ १४ ॥ १५ ॥

देवेशोद्याने ॥ ७–९ ॥ चङ्क्रमन्तौ चरन्तौ। असङ्कटां तरुमृगसङ्कीर्णतया असङ्कुचिताम्। अविभ्रंशां तटयोर्भ्रंशरहिताम्। समतीर्थां समावतारप्रदेशाम्॥१०–१२॥ वधस्याकोविदाः वधमजानानाः क्रौञ्चाः ॥ १३ ॥ अयस्तप्तान् शूलप्रोतदग्धान् अकृशानेककण्टकान् कृशाः कृशवत्तीक्ष्णाः अनेककण्टका येषां न विद्यन्ते

भृशमित्यादिद्वावेकान्वयौ । पुष्पसञ्चये पुष्पसमूहे वर्तमानम् अत एव सुगन्धि शिवं पापापहम् । सुखशीतम् नातिशीतमित्यर्थः । अनामयम् अव्याधिकरमित्यर्थः । एवम्भूतं वारि पुष्करपर्णेन पद्मपत्रेण पम्पायाः उद्धृत्य पाययिष्यति ॥ १६ ॥ १७ ॥ स्थूलानित्यादिसार्धश्लोक एकान्वयः । गिरिगुहायां शय्या येषां तान् रूपान्वितान् । सौन्दर्यवतः ॥ १८ ॥ १९ ॥ विटपीन् विटपिनः । इनिप्रत्ययस्य नलोप आर्षः । माल्यधारिणः पुष्पधारिणः पुष्प

भृशं ते खादतो मत्स्यान् पम्पायाः पुष्पसञ्चये । पद्मगन्धि शिवं वारि सुखशीतमनामयम् ॥ १६ ॥ उद्धृत्य सतताक्लिष्टं रौप्यस्फाटिकसन्निभम् । असौ पुष्करपर्णेन लक्ष्मणः पाययिष्यति ॥ १७ ॥ स्थूलान् गिरिगुहाशय्यान् वराहान् वनचारिणः । अपां लोभादुपावृत्तान् वृषभानिव नर्दतः ॥ १८ ॥ रूपान्वितांश्च पम्पायां द्रक्ष्यसि त्वं नरोत्तम ॥ १९ ॥ सायाह्ने विचरन् राम विटपीन् माल्यधारिणः । शीतोदकं च पम्पाया दृष्ट्वा शोकं विहास्यसि ॥ २० ॥ सुमनोभिश्चितांस्तत्र तिलकान्नक्तमालकान् । उत्पलानि च फुल्लानि पङ्कजानि च राघव ॥२१॥ न तानि कश्चिन्माल्यानि तत्रारोपयिता नरः । न च वै म्लानतां यान्ति न च शीर्यन्ति राघव ॥ २२ ॥ मतङ्गशिष्यास्तत्रासन्नृषयः सुसमाहिताः । तेषां भाराभितप्तानां वन्यमाहरतां गुरोः ॥ २३ ॥ ये प्रपेतुर्महीं तूर्णं शरीरात्स्वेदबिन्दवः । तानि जातानि माल्यानि मुनीनां तपसा तदा । स्वेदबिन्दुसमुत्थानि न विनश्यन्ति राघव ॥ २४ ॥

विकासहेतुत्वात् सायाह्न इत्युक्तम् ॥ २० ॥ सुमनोभिः चितान् निरन्तरान् । उत्पलानि इन्दीवराणि दृष्ट्वा शोकं विहास्यसीत्यत्राप्यनुषज्यते ॥ २१ ॥ आरोपयिता गृहीत्वा ग्रथिता । वनविस्तारात्पुष्पबाहुल्याच्च तानि म्लानतां न यान्ति । न शीर्यन्ति न शीर्यन्ते, शीर्णदलानि न भवन्तीत्यर्थः । मतङ्गशिष्यप्रभावाद्वा अनारोपणम् ॥ २२ ॥ अग्राह्यत्वाम्लानत्वादौ निमित्तमाह—मतङ्गेति । सार्धश्लोकद्वयमेकान्वयम् । मतङ्गो नाम महाप्रभावो महर्षिः तत्र

तथोक्ताः ॥ १४ ॥ १५ ॥ भृशमिति । ते तान्मत्स्यान् खादतस्ते जलं पाययिष्यतीति सम्बन्धः ॥ १६–१९ ॥ सायाह्न इत्यादि श्लोकद्वयमेकं वाक्यम् । एतान् सर्वान् दृष्ट्वा शोकं विहास्यतीति सम्बन्धः ॥ २० ॥ २१ ॥ न तानीति । माल्यानि पुष्पाणि । आरोपयिता गृहीत्वा धारयिता नास्ति ॥ २२ ॥ अम्लानत्वादौ कारणं दर्शयति—मतङ्गशिष्या इति । गुरोः गुर्वर्थम् । वन्यमाहरताम् अत एव भाराभितप्तानां वन्यपदार्थभारेण श्रान्तानामित्यर्थः । तानीति विधेयप्राधान्यान्नपुंसक

पम्पातीरे। सुष्ठु समाहितं समाधिर्येषां ते तथा। वन्यमाहरताम् अत एव भाराभितप्तानाम्। तानीति विधेयापेक्षया नपुंसकत्वम्। स्वेदबिन्दुसमुत्थानीति हेतुगर्भविशेषणम्। स्वेदबिन्दवो वायुना वृक्षोपरि नीता माल्यानि जातानीत्याशयः ॥ २३ ॥ २४ ॥ तेषां मतङ्गशिष्याणां परिचारिणी श्रमणी संन्यासिनी शबरीति नाम शबरीति प्रसिद्धा ॥ २५ ॥ धर्मे गुरुपरिचरणधर्मे ॥ २६ ॥ तत इति। तत् शबर्यावासभूतम्। गुह्यम् इतरैरदर्शनीयम्। पश्यसि द्रक्ष्यसि ॥२७॥ तस्मिन् वने वक्ष्यमाणे ऋश्यमूकपर्वते च विविधाः नागाः गजाः सन्ति तथापि तमाश्रमं तत्र प्रदेशे स्थिताः नागाः नाक्रमितुं शक्नुवन्ति ॥ २८ ॥ अनाक्रमणे हेतुमाह–ऋषेरिति। तस्य पूर्वोक्तस्य। विधानात् निर्माणात् तत्काननं जातमिति शेषः ॥ २९ ॥ देवारण्यं चैत्ररथादि। निर्वृतः निवृत्तदुःख इत्यर्थः ॥ ३० ॥ एवमनुग्रहार्थं शबर्याश्रमं गत्वा पुनः पम्पायाः पुरस्तादृश्यमूको गन्तव्य इत्याह

तेषामद्यापि तत्रैव दृश्यते परिचारिणी। श्रमणी शबरी नाम काकुत्स्थ चिरजीविनी ॥ २५ ॥ त्वां तु धर्मे स्थिता नित्यं सर्वभूतनमस्कृतम्। दृष्ट्वा देवोपमं राम स्वर्गलोकं गमिष्यति ॥ २६ ॥ ततस्तद्राम पम्पायास्तीरमाश्रित्य पश्चिमम्। आश्रमस्थानमतुलं गुह्यं काकुत्स्थ पश्यसि ॥ २७ ॥ न तत्राक्रमितुं नागाः शक्नुवन्ति तमाश्रमम्। विविधास्तत्र वै नागा वने तस्मिंश्च पर्वते ॥ २८ ॥ ऋषेस्तस्य मतङ्गस्य विधानात्तच्च काननम्। [ मतङ्गवनमित्येव विश्रुतं रघुनन्दन ॥ ] ॥ २९ ॥ तस्मिन्नन्दनसंकाशे देवारण्योपमे वने। नानाविहगसंकीर्णे रंस्यसे राम निर्वृतः ॥ ३० ॥ ऋश्यमूकश्च पम्पायाः पुरस्तात्पुष्पितद्रुमः। सुदुःखारोहणो नाम शिशुनागाभिरक्षितः। उदारो ब्रह्मणा चैव पूर्वकाले विनिर्मितः ॥ ३१ ॥

लिङ्गनिर्देशः ॥ २३ ॥ २४ ॥ गतानाम्, स्वर्गमिति शेषः। तेषां मुनीनां परिचारिणी श्रमणी तापसी शबरी नामाद्यापि दृश्यत इत्यन्वयः। दृश्यतेपापचारिणीति पाठे–अपापचारिणीति छेदः ॥ २५ ॥ त्वामिति। तु एवार्थे। त्वामेव दृष्ट्वा देवोपमं हे देव ! उपमम् उप समीपे मा लक्ष्मीः यस्य तं विष्णुं त्वामित्यर्थः। सर्गलोकं स्वः गीयत इति स्वर्गः स्वर्गश्चासौ लोकश्च स्वर्गलोकः तम्, वैकुण्ठमित्यर्थः। कुतः ? नित्यं धर्मे उपासनादिके स्थिता "विद्यया देवलोकः" इति श्रुतेः। स०–"स्वर्गः मुमुक्षुतिरित्याद्या मुक्तेरपि सगा" इति बृहदारण्यकभाष्योक्तेः मुक्तिमिति वा ॥ २६ ॥ तत इति। गुह्यं गूढम् ॥ २७ ॥ नेति। तदाश्रमं शबर्याश्रमम्। नागाः गजाः। नागानाक्रमणस्य मसक्तिं दर्शयति–विविधा इति। पर्वतमात्रेण नागप्रसक्तौ सत्यामपि तदेकदेशे मतङ्गाश्रमे तदीयतपःप्रभावेन नागानां न सञ्चार इति भावः ॥ २८॥ विधानान्निर्माणात् ॥ २९ ॥ तस्मिन्निति। देवारण्योपमे चैत्ररथवनतुल्ये। यद्वा [illegible] ॥ ३० ॥ [illegible] इति। सुदुःखारोहणः सुदुःखेनारोहणं यस्य सः।

सार्धश्लोकेन—ऋश्येति । ऋश्या मृगविशेषाः मूकाः निःशब्दा भवन्ति यस्मिन् सः ऋश्यमूकः । सुदुःखमारोहणं यस्य स तथा । तत्र हेतुः शिशुनागाभिरक्षित इति । अत्र नागाः गजा एव विविधास्तत्र वै नागाः इति पूर्वमुक्तत्वात् । उदारः प्रशस्तः । पूर्वकाले ब्रह्मणा उदारः प्रशस्तो निर्मितः । कुत्रचिन्निमित्ते अयं प्रशस्तो भवत्वित्यनुगृहीत इत्यर्थः ॥ ३१ ॥ प्राशस्त्यमाह—शयान इति ॥ ३२ ॥ ३३ ॥ अतिशयान्तरमाह—

शयानः पुरुषो राम तस्य शैलस्य मूर्धनि । यत्स्वप्ने लभते वित्तं तत्प्रबुद्धोऽधिगच्छति ॥३२॥ न त्वेनं विषमाचारः पापकर्माधिरोहति ॥३३॥ यस्तु तं विषमाचारः पापकर्माधिरोहति । तत्रैव प्रहरन्त्येनं सुप्तमादाय राक्षसाः ॥३४॥ तत्रापि शिशुनागानामाक्रन्दः श्रूयते महान् । क्रीडतां राम पम्पायां मतङ्गारण्यवासिनाम् ॥ ३५ ॥ सिक्ता रुधिर धाराभिः संहृत्य परमद्विपाः । प्रचरन्ति पृथक्कीर्णा मेघवर्णास्तरस्विनः ॥ ३६ ॥ ते तत्र पीत्वा पानीयं विमलं शीतमव्ययम् । [ अत्यन्तसुखसंस्पर्शं सर्वगन्धसमन्वितम् ॥ ] निर्वृताः संविगाहन्ते वनानि वनगोचराः ॥३७॥ ऋक्षांश्च द्वीपिनश्चैव नीलकोमलकप्रभान् । रुरूनपेतापजयान् दृष्ट्वा शोकं जहिष्यसि ॥३८॥ राम तस्य तु शैलस्य महती शोभते गुहा । शिलापिधाना काकुत्स्थ दुःखं चास्याः प्रवेशनम् ॥ ३९ ॥

यस्त्विति ॥ ३४ ॥ शिशुनागानां कलभानाम् । तत्रापीत्यत्रापिशब्दात् पम्पादिकं समुच्चीयते । अनेन ऋश्यमूकस्य पम्पासामीप्यमुक्तम् ॥ ३५ ॥ संहृत्य अन्योयं प्रहृत्य रुधिरधाराभिः सिक्ताः अत एव पृथक् कीर्णाः चरन्ति ॥ ३६ ॥ संविगाहन्ते प्रविशन्ति ॥ ३७ ॥ द्वीपिनः व्याघ्रान् । नीलकोमलकप्रभान् नीलरत्नवन्मनोज्ञप्रभान् । रुरून् मृगविशेषान् । अपेतापजयान् जयशीलानित्यर्थः । जहिष्यसि त्यक्ष्यसि ॥ ३८ ॥ रामेति । शिला

तत्र हेतुः शिशुनागाभिरक्षितः बालसर्पैरधिष्ठितः । उदारः तथा ऋश्यमूकः ब्रह्मणा पूर्वकाले विनिर्मित इत्यन्वयः ॥ ३१ ॥ उक्तमौदार्यं समर्थयति—शयान इति । अधिगच्छति प्राप्नोति ॥ ३२ ॥ सुदुःखारोहणत्वे हेत्वन्तरमाह—न त्वेनमिति ॥३३॥३४॥ शिशुनागानां बालगजादीनाम् आक्रन्दः ध्वनिः तस्मिन् पर्वते श्रूयते ॥३५॥ सिक्ता इति । द्विपाः गजाः । संहृत्य अन्योन्यमभिहृत्य अत एव रुधिरधाराभिः सिक्ताः पृथक्कीर्णाः सञ्चरन्तीति योजना ॥ ३६ ॥ ३७ ॥ ऋक्षानिति । नीलकोमलकप्रभान् नीलमणिवत्कोमलकान्तीन् ॥ ३८ ॥ ऋश्यमूकस्यासाधारणचिह्नमाह—रामेति । शिलापिधानेति गुहा नामेति ज्ञातव्यम् ॥ ३९—४३ ॥

अपिधानमाच्छादनं यस्याः सा। अस्या गुहायाः प्रवेशनं दुःखं दुःखकरम्, उन्नतस्थानस्थितत्वादिति भावः ॥ ३९ ॥ महान् विशालः, अस्तीति शेषः। फलमूलान्वितः फलमूलान्विततीरः ॥ ४० ॥ तस्यामिति। कदाचित् भूमाविति सिद्धम् ॥ ४१ ॥ अनुशास्य उपदिश्य। स्रगस्यास्तीति स्रग्वी। "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः। भास्करवर्णाभः सूर्यप्रभातुल्यप्रभः। खे व्यरोचत रामानुज्ञानार्थं क्षणमतिष्ठदित्यर्थः ॥ ४२ ॥

तस्या गुहायाः प्राग्द्वारे महान् शीतोदको ह्रदः। फलमूलान्वितो रम्यो नानामृगसमावृतः ॥ ४० ॥ तस्यां वसति सुग्रीवश्चतुर्भिः सह वानरैः। कदाचिच्छिखरे तस्य पर्वतस्यावतिष्ठते ॥ ४१ ॥ कबन्धस्त्वनुशास्यैवं तावुभौ रामलक्ष्मणौ। स्रग्वी भास्करवर्णाभः खे व्यरोचत वीर्यवान् ॥४२॥ तं तु खस्थं महाभागं कबन्धं रामलक्ष्मणौ। प्रस्थितौ त्वं व्रजस्वेति वाक्यमूचतुरन्तिके ॥ ४३ ॥ गम्यतां कार्यसिद्ध्यर्थमिति तावब्रवीत्स च। सुप्रीतौ तावनुज्ञाप्य कबन्धः प्रस्थितस्तदा ॥ ४४ ॥ स तत्कबन्धः प्रतिपद्य रूपं वृतः श्रिया भास्करतुल्यदेहः। निदर्शयन् राममवेक्ष्य खस्थं सख्यं कुरुष्वेति तदाभ्युवाच ॥ ४५ ॥ इत्यार्षे श्रीरामायणे श्रीवाल्मीकीये आदिकाव्ये श्रीमदारण्यकाण्डे त्रिसप्ततितमः सर्गः ❀ ॥ ७३ ॥

तं त्विति। प्रस्थितौ सन्तौ सुखं व्रजस्व व्रज। इति अन्तिके ऊचतुः अन्तिके प्रस्थिताविति कबन्धसमीपमागत्योचतुरित्यर्थः॥४३॥ गम्यतामिति। प्रस्थितः स्वर्गमिति शेषः॥४४॥ उक्तमर्थं सर्गान्ते संगृह्णाति–स इति। तत् पूर्वोक्तं रूपं शरीरं रामं प्रति निदर्शयन्। सख्यं कुरुष्व सुग्रीवेणेति शेषः। अस्मिन् सर्गे पञ्चचत्वारिंशच्छ्लोकाः॥४५॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिसप्ततितमः सर्गः ॥ ७३ ॥

अन्तिकात् कबन्धस्येति शेषः। प्रस्थितौ व्रजस्वेति वाक्यमूचतुरिति सम्बन्धः ॥ ४४ ॥ स इति। पूर्वोक्तार्थस्य संग्रहः। निदर्शयन् मार्गादिकमिति योजना ॥ ऋश्यमूकस्यासाधारणमिति शेषः। खस्थो राममवेक्ष्येति किञ्चिद्दूरं गत्वा पुनः श्रीराममवेक्ष्य आकाशे स्थित्वा सख्यं कुरुष्वेत्युवाचेत्यन्वयः। स०–भास्करसर्वदेहः इति पाठे–प्रकाशमानसमग्राङ्गः। भास्वरः प्रकाशितः सर्वो भूभागादिर्येन स देहो यस्य स इति वा ॥४५॥ इति श्रीमहे० श्रीरामायणतत्त्व० आरण्यकाण्डव्याख्यायां त्रिसप्ततितमः सर्गः॥७३॥

❀ सर्गश्रवणफलम्। स्कान्दे–"कबन्धरामसंवादं ये शृण्वन्ति सदादरात्। विप्रावमानजनितस्तापः क्षिप्रं विनश्यति ॥" इति।

एवमेतावत्पर्यन्तं भगवत्कैङ्कर्यतत्फले दर्शिते। अथाचार्याभिमाननिष्ठातत्फले दर्शयति चतुःसप्ततितमे—तावित्यादि। प्रतीचीं दिशं गृह्य गृहीत्वा कबन्धेन दर्शितं पम्पाया मार्गमुद्दिश्य प्रतस्थतुः प्रतस्थाते ॥ १ ॥ शैलेष्वाचितान् प्ररूढान् अनेकांश्च क्षौद्रकल्पफलान् मधुतुल्यफलयुक्तान् वीक्षन्तौ वीक्षमाणौ ॥ २ ॥ कृत्वा चेति। वासं तस्यां रात्र्यामिति शेषः। उपतस्थतुः उपतस्थाते, प्रापतुरित्यर्थः। रात्र्यन्त इति शेषः ॥ ३ ॥ तौ पुष्करिण्या

ता कबन्धेन तं मार्गं पम्पाया दर्शितं वने। प्रतस्थतुर्दिशं गृह्य प्रतीचीं नृवरात्मजौ ॥ १ ॥ तौ शैलेष्वाचितानेकान् क्षौद्रकल्पफलान् द्रुमान्। वीक्षन्तौ जग्मतुर्द्रष्टुं सुग्रीवं रामलक्ष्मणौ ॥ २ ॥ कृत्वा च शैलपृष्ठे तु तौ वासं रामलक्ष्मणौ। पम्पायाः पश्चिमं तीरं राघवावुपतस्थतुः ॥ ३ ॥ तौ पुष्करिण्याः पम्पायास्तीरमासाद्य पश्चिमम्। अपश्यतां ततस्तत्र शबर्या रम्यमाश्रमम् ॥ ४ ॥ तौ तमाश्रममासाद्य द्रुमैर्बहुभिरावृतम्। सुरम्यमभिवीक्षन्तौ शबरीमभ्युपेयतुः ॥ ५ ॥ तौ च दृष्ट्वा तदा सिद्धा समुत्थाय कृताञ्जलिः। रामस्य पादौ जग्राह लक्ष्मणस्य च धीमतः। पाद्यमाचमनीयं च सर्वं प्रादाद्यथाविधि ॥ ६ ॥ तामुवाच ततो रामः श्रमणीं संशितव्रताम्। कच्चित्ते निर्जिता विघ्नाः कच्चित्ते वर्धते तपः॥७॥ कच्चित्ते नियतः क्रोध आहारश्च तपोधने। कच्चित्ते नियमाः प्राप्ताः कच्चित्ते मनसः सुखम् ॥ ८ ॥ कच्चित्ते गुरुशुश्रूषा सफला चारुभाषिणि ॥९॥ रामेण तापसी पृष्टा सा सिद्धा सिद्धसम्मता। शशंस शबरी वृद्धा रामाय प्रत्युपस्थिता ॥ १० ॥

इति। स्पष्टम् ॥४॥ ताविति। आश्रममासाद्य तमभिवीक्षन्तौ अभिवीक्षमाणौ ॥ ५ ॥ तौ चेति सार्धश्लोक एकान्वयः। सिद्धा सिद्धयोगा ॥ ६ ॥ विघ्नाः तपोविघ्नाः कामादयः। नियतः निगृहीतः। आहारश्चेत्यत्रापि नियत इत्यनुषज्यते। "तपो नाशननात्परम्" इति श्रुतेः। नियमाः व्रतानि। मनसः सुखं मनस्सन्तोषः। चारुभाषिणीति साध्वीसम्बोधनप्रकारः। इति तामुवाचेति सम्बन्धः ॥७–९॥ रामेणेति। रामाय प्रत्युपस्थितेति तादर्थ्ये चतुर्थी ॥ १० ॥

ताविति। प्रतीचीं दिशं परिगृह्य कबन्धेन दर्शितं पम्पामार्गमुद्दिश्य प्रतस्थतुः॥१॥ क्षौद्रकल्पफलान् माधुर्येण मधुतुल्यफलान् ॥२॥ उपतस्थतुः प्रापतुः ॥३–६॥ विघ्नाः तपोविघ्नाः कामादयः। कोपो नियतः निगृहीतः आहारश्च नियत इत्यनुकर्षः ॥ ७–९ ॥ रामेणेति। प्रत्यवस्थिता अभिमुखावस्थिता ॥ १०–१४ ॥

तपःसिद्धिः तपःपरिपाकः । तप्तं तपः ॥ ११ ॥ अद्य म इति । अद्येत्यस्यार्थं विवृणोति—त्वयीति । देववरे विष्णौ । अनेन शबर्याः परमार्थज्ञानं वृत्तमिति सूच्यते ॥ १२ ॥ एवमुपचारवादानुक्त्वा स्वप्रयोजनमाह—चक्षुषेति । ते सौम्येन चक्षुषा निर्हेतुककटाक्षेण पूतास्मि अनेन पूर्वाघविनाश उक्तः । अरिन्दमेत्यनेन उत्तराघाश्लेष उच्यते । त्वत्प्रसादात् " धातुः प्रसादान्महिमानमात्मनः " इत्युक्तत्वादाचार्यप्रसादोपबृंहितात्त्वत्प्रसादात् । अक्षयान्

अद्य प्राप्ता तपःसिद्धिस्तव सन्दर्शनान्मया । अद्य मे सफलं तप्तं गुरवश्च सुपूजिताः ॥ ११ ॥ अद्य मे सफलं जन्म स्वर्गश्चैव भविष्यति । त्वयि देववरे राम पूजिते पुरुषर्षभ ॥ १२ ॥ चक्षुषा तव सौम्येन पूतास्मि रघुनन्दन । गमिष्याम्यक्षयान् लोकांस्त्वत्प्रसादादरिन्दम ॥ १३ ॥ चित्रकूटं त्वयि प्राप्ते विमानैरतुलप्रभैः । इतस्ते दिवमारूढा यानहं पर्यचारिषम् ॥ १४ ॥ तैश्चाहमुक्ता धर्मज्ञैर्महाभागैर्महर्षिभिः । आगमिष्यति ते रामः सुपुण्यमिममाश्रमम् ॥ १५ ॥ स ते प्रतिग्रहीतव्यः सौमित्रिसहितोऽतिथिः । तं च दृष्ट्वा वरान् लोकानक्षयांस्त्वं गमिष्यसि ॥ १६ ॥ मया तु विविधं वन्यं सञ्चितं पुरुषर्षभ । तवार्थे पुरुषव्याघ्र पम्पायास्तीरसम्भवम् ॥ १७ ॥

लोकान् गमिष्यामि पुनरावृत्तिरहितं परमपदं प्राप्स्यामीत्यर्थः ॥ १३ ॥ तर्हि त्वदाचार्यैरेव सह किमर्थं न गतासीत्यत्राह—चित्रकूटमिति । ते मतङ्गशिष्या मदाचार्याः ॥ १४ ॥ तैरिति । धर्मज्ञैः योगरूपभगवत्प्राप्त्युपायाभावेप्याचार्यप्रसादकृतभगवत्प्रसादात् सद्गतिमियं प्राप्स्यतीत्येतद्धर्मज्ञैः महाभागैः भविष्यत्तद्वृत्तान्तज्ञानोचितभाग्यवद्भिः । सुपुण्यमित्यागमनार्हत्वमुच्यते । स इति । प्रतिग्रहीतव्यः आतिथ्यकरणेन सत्करणीयः । दृष्ट्वा तेन दर्शनेन निमित्तेन अक्षयान् लोकान् गमिष्यसि । वरानिति कैवल्यव्यावृत्तिः । गमिष्यसीति तैरहमुक्तेत्यन्वयः । अनेन आचार्यशुश्रूषणं भगवत्प्रसादद्वारा मोक्षहेतुरित्युक्तं भवति ॥१५॥१६॥ आचार्योक्तिश्रद्धामात्मनः सूचयति—मया त्विति । तीरसम्भवं विविधं वन्यं सञ्चितम् । वन्यशब्देन फलमूलादिकमुच्यते ॥

तैरिति । आगमिष्यति अनुग्रहायेति शेषः । ते त्वया । तं दृष्ट्वा अस्मत्सेवाफलभूतं त्वद्दर्शनं प्राप्य अक्षयान् लोकान् ब्रह्मलोकम्, अवयवाभिप्रायेण गुणाभि

ति०—एवमुक्ता यतोऽहमतो मया त्वदर्थं वन्यं सम्यक्परीक्ष्य माधुर्ययुक्तं सञ्चितमित्यर्थः । तदुक्तं पाद्मे शबरी प्रस्तुत्य—" प्रत्युद्गम्य प्रणम्याथ निवेश्य कुशविष्टरे । पादप्रक्षालनं कृत्वा तत्तोयं पापनाशनम् ।

विविधमित्यनेन फलमूलादिभेद उच्यते । सञ्चितमित्यनेन [illegible] आदरेण गुप्तत्वं च तत्तत्फलजातीयमाधुर्यं परीक्ष्य स्थापितमिति सम्प्रदायः ॥ १७ ॥ विज्ञाने विषये । अबहिष्कृताम् अन्तरङ्गभूताम् । जात्या हीनामप्याचार्यप्रसादलब्धब्रह्मज्ञानामिति भगवताप्यादरणीयत्वोक्तिः ॥ १८ ॥ दनोः सकाशात् दनुत इत्यर्थः । पञ्चम्यर्थे सकाशशब्दं प्रयुङ्क्ते । तत्त्वेन याथार्थ्येन । ते महात्मनः त्वत्सम्बन्धिनो महात्मनः मतङ्गस्येत्यर्थः । महात्मनामिति पाठे—त्वदाचार्याणामित्यर्थः । श्रुतं प्रभावं प्रत्यक्षं संद्रष्टुमिच्छामि । यदि मन्यसे दर्शयितुमिति शेषः ॥ १९ ॥

एवमुक्तः स धर्मात्मा शबर्या शबरीमिदम् । राघवः प्राह विज्ञाने तां नित्यमबहिष्कृताम् ॥ १८ ॥ दनोः सकाशात्तत्त्वेन प्रभावं ते महात्मनः । श्रुतं प्रत्यक्षमिच्छामि संद्रष्टुं यदि मन्यसे ॥ १९ ॥ एतत्तु वचनं श्रुत्वा रामवक्त्राद्विनिःसृतम् । शबरी दर्शयामास तावुभौ तद्वनं महत् ॥ २० ॥ पश्य मेघघनप्रख्यं मृगपक्षिसमाकुलम् । मतङ्गवनमित्येव विश्रुतं रघुनन्दन ॥ २१ ॥ इह ते भावितात्मानो गुरवो मे महावने । जुहवाञ्चक्रिरे तीर्थं मन्त्रवन्मन्त्रपूजितम् ॥ २२ ॥ इयं प्रत्यक्स्थली वेदिर्यत्र ते मे सुसत्कृताः । पुष्पोपहारं कुर्वन्ति श्रमादुद्वेपिभिः करैः ॥ २३ ॥

एतत्त्विति । विनिस्सृतं निर्गतम् ॥ २० ॥ मेघघनप्रख्यं घनमेघसदृशं विश्रुतं वनमिति शेषः ॥ २१ ॥ भावितात्मानः चिन्तितात्मानः ते प्रसिद्धाः मे गुरवः । मन्त्रवन्मन्त्रपूजितं मन्त्रवतां मन्त्रैः पूजितं तीर्थं गङ्गादिपुण्यसलिलम् । इह प्रदेशे जुहवाञ्चक्रिरे आहुतवन्तः । महाद्युते इत्यनेन मुनिप्रभावश्रवणे सन्तोषवत्त्वं व्यज्यते ॥ २२ ॥ प्रत्यक्स्थली प्रत्यक्प्रदेशे स्थलीभूता । प्राक्प्रदेशे पश्चिमाभिमुखविष्णुस्थानत्वेन प्रत्यङ्ङिभेत्यर्थः । वेदिः देवप्रायेण वा बहुवचनम् ॥ १५–१७ ॥ एवमिति । विज्ञाने अतीतानागतज्ञाने अबहिष्कृताम् ( सर्वदा विज्ञान[illegible]मिति यावत् । ) ॥ १८ ॥ दनोरिति । महात्मनो दनोः सकाशाच्छ्रुतं ते तव गुरूणां प्रभावं प्रत्यक्षं संद्रष्टुम् इच्छामि । यदि मन्यसे सन्दर्शयितुमिति शेषः ॥ १९ ॥ २० ॥ पश्येति । मेघघनप्रख्यं मेघवत् घना अधिका प्रख्या प्रभा यस्य तत् ॥ २१ ॥ इह गुहायाम् । मन्त्रवन्मन्त्रपूजितं मन्त्रवतां मुनीनां मन्त्रैः पूजितं पालितं तीर्थं यज्ञम् "तीर्थं मन्त्राद्युपाध्याययज्ञेष्वम्भसि पावके " इति रत्नाकरे ॥ २२ ॥ इयमिति । मे मया सुसत्कृतास्ते गुरवः । श्रमात् उपवासश्रमात् । उद्वेपिभिः करैः । यत्र वेद्यां पुष्पोपहारं शिरसा धार्यं पीत्वा च वन्यैः पुष्पैरथार्चयत् । फलानि च सुपक्वानि मूलानि मधुराणि च । स्वयमास्वाद्य माधुर्यं परीक्ष्य परिभक्ष्य च । पश्चान्निवेदयामास राघवाभ्यां दृढव्रता । फलान्यास्वाद्य काकुत्स्थस्तस्यै मुक्तिं परां ददौ ॥ " इति ॥ १७ ॥

पूजास्थानम् । इयम् अवलोक्यतामिति शेषः । यत्र वेद्यां मे मया सुसत्कृतास्ते गुरवः श्रमात् वृद्धताकृतया पुष्पधारणाशक्त्या उद्वेपिभिः उत्कम्पिभिः करैः पुष्पोपहारं पुष्पैरर्चनं कुर्वन्ति अकुर्वन् । अत्र वेदिरिति जात्येकवचनम् । उत्तरश्लोके बहुवचनप्रयोगात् बहूनां वहुवेदिसम्भवाच ॥ २३ ॥ तेषाम् अस्मदाचार्याणाम् । प्रभावेन अतुलप्रभाः इमाः वेद्यः अद्यापि तेषामसन्निधानेपि सर्वा दिशः द्योतयन्ति प्रकाशयन्ति । अनेन आचार्याभिमतो

तेषां तपःप्रभावेन पश्याद्यापि रघूद्वह । द्योतयन्ति दिशः सर्वाः श्रिया वेद्योतुलप्रभाः ॥२४॥ अशक्नुवद्भिस्तैर्गन्तुमुपवासश्रमालसैः । चिन्तितेऽभ्यागतान् पश्य सहितान् सप्त सागरान् ॥२५॥ कृताभिषेकैस्तैर्न्यस्ता वल्कलाः पादपेष्विह । अद्यापि नावशुष्यन्ति प्रदेशे रघुनन्दन ॥२६॥ देवकार्याणि कुर्वद्भिर्यानीमानि कृतानि वै । पुष्पैः कुवलयैः सार्धं म्लानत्वं नोपयान्ति वै ॥२७॥ कृत्स्नं वनमिदं दृष्टं श्रोतव्यं च श्रुतं त्वया । तदिच्छाम्यभ्यनुज्ञाता त्यक्तुमेतत् कलेवरम् ॥२८॥ तेषामिच्छाम्यहं गन्तुं समीपं भावितात्मनाम् । मुनीनामाश्रमो येषामहं च परिचारिणी ॥ २९ ॥

देशस्तदसन्निधानेप्युद्देश्य इत्युक्तम् ॥ २४ ॥ पुनर्वैभवान्तरमाह–अशक्नुवद्भिरिति । उपवासश्रमेण अलसैः मन्दैः अत एव सप्त सागरान् गन्तुमशक्नुवद्भिः मे गुरुभिः चिन्तिते चिन्तितमात्रे अभ्यागतान् अभिमुखमागतान् सप्त सागरान् पश्य ॥ २५ ॥ अद्भुतान्तरमाह–कृतेति । इह प्रदेशे सागरप्रदेशे कृताभिषेकैः कृतस्नानैः तैर्गुरुभिः पादपेषु न्यस्ताः आर्द्रवल्कलाः अद्यापि नावशुष्यन्ति न शुष्का भवन्ति । तदङ्गसम्पर्कवैभवादिति भावः ॥ २६ ॥ देवकार्याणि देवार्चनानि कुर्वद्भिः तैः कुवलयैः सह पुष्पैः पुष्पान्तरैः यानीमानि माल्यानि कृतानि तानि म्लानत्वं नोपयान्ति भक्त्यतिशयेन समर्पितत्वादिति भावः । एतावता ग्रन्थसन्दर्भेण "गुरुं प्रकाशयेद्धीमान्" इत्युक्तरीत्या आचार्यवैभवप्रकटनं कर्तव्यमिति सूचितम् ॥२७॥ उपसंहरति–कृत्स्नमिति । अभ्यनुज्ञाता त्वयेति शेषः ॥२८॥ त्यक्त्वा किं करिष्यसीत्यत्राह–तेषामिति । समीपं पादमूलं गमिष्यामि यानहं पर्यचारिपमित्यन्यत्रोक्तेः ।

पूजां कुर्वन्ति अकुर्वन् । सेयं प्रत्यक् प्रतीच्यां स्थलं यस्यास्सा तया भवेद्वित्यन्वयः ॥२३–२६॥ देवकार्याणीति । यानीमानि कृतानि, माल्यानीति शेषः ॥२७॥२८॥ येषां मुनीनामयमाश्रमः येषां चाहं परिचारिणी तेषां भावितात्मनां सदाध्युसंहितपरमात्मनां मुनीनां समीपं गन्तुमहमिच्छामीति चाब्रवीत ॥ २९ ॥

आश्रमः अयमिति शेषः । येषामाश्रमोऽयं येषामहं परिचारिणी तेषां समीपं गन्तुमिच्छामीति कृतानुबन्धः ॥ २९ ॥ धर्मिष्ठमिति । वचः आचार्यवैभवप्रदर्शनादिरूपम् । तत्त्वतः मायां विना आश्चर्यमिति मत्वा ॥ ३० ॥ अथ शबरीमनोरथं पूरयति–तामिति । संशितव्रताम् आचार्यपरिचर्यानिष्ठामित्यर्थः । अर्चितः तव गुरुवृत्तिसन्दर्शनेनैवेति शेषः । भक्त्या वन्यसम्पादनमात्रेण वा, अयमेवार्थः संक्षेपे 'शबर्या पूजितः सम्यक्' इत्युक्तः । कामं

धर्मिष्ठं तु वचः श्रुत्वा राघवः सहलक्ष्मणः । प्रहर्षमतुलं लेभे आश्चर्यमिति तत्त्वतः ॥ ३० ॥ तामुवाच ततो रामः श्रमणीं संशितव्रताम् । अर्चितोऽहं त्वया भक्त्या गच्छ कामं यथासुखम् ॥३१॥ इत्युक्ता जटिला वृद्धा चीरकृष्णाजिनाम्बरा । तस्मिन्मुहूर्ते शबरी देहं जीर्णं जिहासती ॥ ३२ ॥ अनुज्ञाता तु रामेण हुत्वात्मानं हुताशने । ज्वलत्पावकसङ्काशा स्वर्गमेव जगाम सा ॥३३॥ दिव्याभरणसंयुक्ता दिव्यमाल्यानुलेपना । दिव्याम्बरधरा तत्र बभूव प्रियदर्शना । विराजयन्ती तं देशं विद्युत्सौदामिनी यथा ॥३४॥ यत्र ते सुकृतात्मानो विहरन्ति महर्षयः । तत्पुण्यं शबरीस्थानं जगामात्मसमाधिना॥३५॥ इत्यार्षे श्रीरामायणे० श्रीमदारण्यकाण्डे चतुःसप्ततितमः सर्गः ❀ ॥७४॥

काम्यमानं लोकम् ॥ ३१ ॥ इतीति श्लोकद्वयमेकान्वयम् । जिहासती हातुमिच्छन्ती । स्वर्गमेवेत्यवधानं द्योतयति ॥ ३२ ॥ ३३ ॥ दिव्येति सार्धश्लोकः । तत्र स्वर्गगमनारम्भे विद्युत् विशेषेण द्योतमाना सौदामिनी तडित् ॥ ३४ ॥ ते गुरवः सुकृतात्मानः सुकृतधैर्यवन्तः । आत्मसमाधिना आत्मविषययोगेन । एतत्सर्गवृत्तान्तेन मतङ्गशिष्योपदिष्टसमाधिका शबरी गुर्वनुज्ञया रामागमनपर्यन्तं स्थित्वा ततो रामानुज्ञया स्वसमाधिबलेन स्वगुरुगतं स्वर्गविशेषं प्राप्तेत्यवगम्यते । स्त्रिया अपि विदुरादेरिव योगाधिकारः सम्भवति तदङ्गयज्ञादिकर्मस्थाने गुरुशुश्रूषा । स्वर्गश्च आदौ अक्षयानित्युक्त्या पुनरावृत्तिरहितं परमपदमित्यवगम्ये । " एवमेवामुत्र पुण्यचितो लोकः क्षीयते " इति श्रुत्या केवलस्वर्गस्य क्षयित्वावगमात् । अस्मिन् सर्गे सार्धपञ्चत्रिंशच्छ्लोकाः ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुःसप्ततितमः सर्गः ॥७४॥

धर्मिष्ठमिति श्रुतार्थमुद्दिश्येति शेषः ॥३०॥ संशितव्रतां तीक्ष्णव्रताम् ॥३१॥ आत्मानं हुताशने हुत्वा स्वाचार्योपदिष्टमार्गेणेत्यर्थः । स्वर्गं ब्रह्मलोकमेव ॥३२–३४॥ यत्र ब्रह्मलोके तत्पुण्यस्थानं शबरी आत्मसमाधिना ब्रह्मसमाधिना जगाम॥३५॥इति श्रीमहे० श्रीरामायणतत्त्व० आरण्यकाण्डव्याख्यायां चतुःसप्ततितमः सर्गः॥७४॥

❀ सर्गश्रवणफलम् । स्कान्दे–" शबर्याः सत्कृतिं श्रुत्वा साध्वीनां लोकगो भवेत् ॥" इति ।

अथ पम्पागमनं पञ्चसप्ततितमे–दिवं त्वित्यादि । स्वेन तेजसा उपलक्षितायामिति शेषः ॥ १ ॥ एकाग्रम् एकचित्तम् ॥ २ ॥ बह्वाश्चर्यः अत्यद्भुतपुष्पफलादिसम्पत्तिसकलतीर्थसमागमादिना आश्चर्ययुक्तः । विश्वस्ताः विश्वासं प्राप्ताः । परस्परहिंसकत्वरहिताः मृगाः शार्दूलाश्च यस्मिन् तथा ॥ ३ ॥ उपस्पृष्टं स्नातम् । अनेन पुण्यतीर्थप्राप्तौ स्नानश्राद्धादिकं कर्तव्यमित्युक्तम् ॥ ४ ॥ तत्तदशुभं प्रनष्टम् । कल्याणं शुभं तेन

दिवं तु तस्यां यातायां शबर्यां स्वेन तेजसा । लक्ष्मणेन सह भ्रात्रा चिन्तयामास राघवः ॥ १ ॥ स चिन्तयित्वा धर्मात्मा प्रभावं तं महात्मनाम् । हितकारिणमेकाग्रं लक्ष्मणं राघवोऽब्रवीत् ॥ २ ॥ दृष्टोऽयमाश्रमः सौम्य बह्वाश्चर्यः कृतात्मनाम् । विश्वस्तमृगशार्दूलो नानाविहगसेवितः ॥ ३ ॥ सप्तानां च समुद्राणामेषु तीर्थेषु लक्ष्मण । उपस्पृष्टं च विधिवत्पितरश्चापि तर्पिताः ॥ ४ ॥ प्रनष्टमशुभं तत्तत्कल्याणं समुपस्थितम् । तेन तत्त्वेन हृष्टं मे मनो लक्ष्मण सम्प्रति ॥ ५ ॥ हृदये हि नरव्याघ्र शुभमाविर्भविष्यति ॥ ६ ॥ तदागच्छ गमिष्यावः पम्पां तां प्रियदर्शनाम् । ऋश्यमूको गिरिर्यत्र नातिदूरे प्रकाशते ॥ ७ ॥ यस्मिन् वसति धर्मात्मा सुग्रीवोंऽशुमतः सुतः । नित्यं वालिभयात् त्रस्तश्चतुर्भिः सह वानरैः ॥ ८ ॥ अभित्वरे च तं द्रष्टुं सुग्रीवं वानरर्षभम् । तदधीनं हि मे सौम्य सीतायाः परिमार्गणम् ॥ ९ ॥ एवं ब्रुवाणं तं धीरं रामं सौमित्रिरब्रवीत् । गच्छावस्त्वरितं तत्र ममापि त्वरते मनः ॥ १० ॥ आश्रमात्तु ततस्तस्मान्निष्क्रम्य स विशां पतिः । आजगाम ततः पम्पां लक्ष्मणेन सहाभिभूः ॥ ११ ॥

अशुभनिवृत्तिपूर्वकशुभप्राप्त्या ॥ ५ ॥ हृदय इत्यर्धमेकम् । शुभं शुभस्मरणम् ॥ ६ ॥ तदित्यादिश्लोकद्वयम् । अंशुमतः सूर्यस्य ॥ ७ ॥ ८ ॥ अभीति । मे सीतायाः इत्यन्वयः ॥ ९ ॥ धीरं कृतधैर्यमित्यर्थः ॥ १० ॥ ततः अनन्तरम् । विशां प्रजानां पतिः । ततः तत्र मार्गे । अभिभवतीत्यभिभूः

॥ १ ॥ स इति । महात्मनां प्रभावं शबर्युक्तम् ॥ २ ॥ बह्वाश्चर्यः बहून्याश्चर्याणि यस्मिन् सः । कृतात्मनां शुद्धचित्तानाम् ॥ ३ ॥ उपस्पृष्टं च विधिवत् शास्त्रोक्तमार्गेण स्नातमित्यर्थः ॥ ४ ॥ ५ ॥ शुभं मित्रलाभादि ॥ ६ ॥ यत्र पम्पातीरे ॥ ७ ॥ ८ ॥ अभित्वरे त्वरावानस्मि त्वरत इत्यब्रवीदिति सम्बन्धः ॥ ९–१२ ॥

अभिभावक इत्यर्थः । शत्रूणामित्यर्थसिद्धम् । प्रभुरित्यपि पाठः ॥ ११ ॥ स ददर्श ततः पुण्यामित्यादी द्वौ श्लोकौ । उदारजनाः श्रेष्ठजनाः मुनिप्रभृतयः । पानीयवाहिनीं पानार्हशीतलस्वादुजलवतीमित्यर्थः । सौगन्धिकैः कह्लारैः । कुवलयोद्घाटैः कुवलयसमूहैः । कुथा चित्रकम्बलम् । ददर्श दूरादिति बोध्यम् । अग्र इत्यनुवादात् ॥ १२ ॥ १३ ॥ उदकवाहिनीं तां दूरादासाद्य मतङ्गसरसं नाम मतङ्गसरसमिति प्रसिद्धम् । "अनोश्माय:सरसां जातिसंज्ञयोः" इति टच् समासान्तः । ह्रदं पम्पासमीपस्थं सरः । समवगाहत सस्नौ, पुण्यतीर्थत्वादिति भावः ॥१४॥ दूरतः पम्पादर्शनमनुवदन् तत्तीरवनदर्शनमाह षड्भिः—अरविन्देत्यादि । अरविन्दं रक्ताब्जम् । पद्मैः सितपद्मैः । आम्रवणं चूतवनम् । बर्हिणोद्घुष्टं मयूरशब्दः तेन नादितां सञ्जातनादाम् ॥ १५ ॥ तिलकैः क्षुरकवृक्षैः । बीजपूरैः दाडिमैः । धवैः धवाख्यैर्वृक्षविशेषैः । शुक्लद्रुमैः अर्जुनवृक्षैः । करवीरैः प्रसिद्धैः । पुन्नागैः तुङ्गवृक्षैः ॥ १६ ॥ मालतीति । मालतीगुल्मैः कुन्दगुल्मैश्चेत्यन्वयः । भाण्डीरैः वटैः । निचुलैः वञ्जुलैः । सप्तपर्णैः विषमच्छदवृक्षैः । अतिमुक्तकैः नेमिवृक्षैः । भूषितां शोभिताम् अतएव प्रमदामिव स्थितां सर्वतः चतुर्दिक्प्रदेशेपि ॥ १७ ॥ १८ ॥ कोयष्टिकैः टिट्टिभाख्यैः पक्षिविशेषैः । अर्जुनकैः पक्षिविशेषैः ।

स ददर्श ततः पुण्यामुदारजनसेविताम् । नानाद्रुमलताकीर्णां पम्पां पानीयवाहिनीम् ॥ १२ ॥ पद्मैः सौगन्धिकैस्ताम्रां शुक्लां कुमुदमण्डलैः । नीलां कुवलयोद्घाटैर्बहुवर्णां कुथामिव ॥ १३ ॥ स तामासाद्य वै रामो दूरादुदकवाहिनीम् । मतङ्गसरसं नाम ह्रदं समवगाहत ॥ १४ ॥ अरविन्दोत्पलवतीं पद्मसौगन्धिकायुताम् । पुष्पिताम्रवणोपेतां बर्हिणोद्घुष्टनादिताम् ॥ १५ ॥ तिलकैर्बीजपूरैश्च धवैः शुक्लद्रुमैस्तथा । पुष्पितैः करवीरैश्च पुन्नागैश्च सुपुष्पितैः ॥ १६ ॥ मालतीकुन्दगुल्मैश्च भाण्डीरैर्निचुलैस्तथा । अशोकैः सप्तपर्णैश्च केतकैरतिमुक्तकैः ॥ १७ ॥ अन्यैश्च विविधैर्वृक्षैः प्रमदामिव भूषिताम् । समीक्षमाणो पुष्पाढ्यं सर्वतो विपुलद्रुमम् ॥ १८ ॥ कोयष्टिकैश्चार्जुनकैः शतपत्रैश्च कीरकैः । एतैश्चान्यैश्च विहगैर्नादितं तु वनं महत् ॥ १९ ॥

कुवलयोद्घाटैः इन्दीवरसमूहैः ॥ १३ ॥ मतङ्गसरसमित्यकारान्तः, तच्च पम्पायामेव प्रदेशभेदो गङ्गायां मणिकर्णिकेव ॥ १४ ॥ अरविन्दपद्मयोः रक्तश्वेतविषयत्वेन भेदः ॥ १५–१८ ॥ कोयष्टिकादयः पक्षिविशेषाः ॥ १९ ॥ २० ॥

शतपत्रैः दार्वाघाटैः। कीरकैः शुकैः । अव्यग्रौ सुसमाहितौ व्याकुलत्वरहितौ प्रत्युत सावधानौ चेत्यर्थः । राघवौ अरविन्दोत्पलवतीमित्यादिविशेषिताम् तिलकादिभिर्वृक्षैर्भूषिताम् अतएव प्रमदामिव स्थितां पम्पां सर्वतः समीक्षमाणौ ततः पुष्पाढ्यं सर्वतो विपुलद्रुमं कोयष्टिकादिभिर्विहङ्गैर्नादितम् अन्यैः शकुनैश्च युतं सरसः पम्पायाः सम्बन्धि तद्वनं च पश्यन्तावेव सन्तौ अव्यग्रौ सुसमाहितौ च सन्तौ तद्वनं जग्मतुरिति सम्बन्धः । अतो न वनशब्दद्वय

ततो जग्मतुरव्यग्रौ राघवौ सुसमाहितौ । तद्वनं चैव सरसः पश्यन्तौ शकुनैर्युतम् ॥ २० ॥ स ददर्श ततः पम्पां शीतवारिनिधिं शुभाम् । प्रहृष्टनानाशकुनां पादपैरुपशोभिताम् । [ तिलकाशोकपुन्नागवकुलोद्दालकाशिनीम् ] ॥ २१ ॥ स रामो विविधान्वृक्षान्सरांसि विविधानि च । पश्यन्कामाभिसन्तप्तो जगाम परमं ह्रदम् ॥ २२ ॥ पुष्पितोपवनोपेतां सालचम्पकशोभिताम् । षट्पदौघसमाविष्टां श्रीमतीमतुलप्रभाम् ॥ २३ ॥ स्फटिकोपम तोयाढ्यां श्लक्ष्णवालुकसन्तताम् । स तां दृष्ट्वा पुनः पम्पां पद्मसौगन्धिकैर्युताम् । इत्युवाच तदा वाक्यं लक्ष्मणं सत्यविक्रमः ॥२४॥ अस्यास्तीरे तु पूर्वोक्तः पर्वतो धातुमण्डितः । ऋश्यमूक इति ख्यातः पुण्यः पुष्पितपादपः ॥ २५ ॥ हरेर्ऋक्षरजोनाम्नः पुत्रस्तस्य महात्मनः । अध्यास्ते तं महावीर्यः सुग्रीव इति विश्रुतः ॥ २६ ॥ सुग्रीव मभिगच्छ त्वं वानरेन्द्रं नरर्षभ । इत्युवाच पुनर्वाक्यं लक्ष्मणं सत्यविक्रमम् ॥ २७ ॥ राज्यभ्रष्टेन दीनेन तस्या मासक्तचेतसा । कथं मया विना शक्यं सीतां लक्ष्मण जीवितुम् ॥ २८ ॥

दोषः ॥ १९ ॥ २० ॥ समीपतः पम्पादर्शनमाह—स ददर्शेति ॥ २१ ॥ अथ पम्पाप्राप्तिमाह—स राम इति । परमं ह्रदं पम्पाख्यं सरः ॥ २२ ॥ प्राप्त्य नन्तरं पम्पां दृष्ट्वा लक्ष्मणं प्रत्याह—पुष्पितेत्यादि सार्धश्लोकद्वयम् । सालाः सर्जकवृक्षाः । चम्पकाः चाम्पेयवृक्षाः ॥ २३ ॥ २४ ॥ अस्या इति । पूर्वोक्तः कबन्धेनेति शेषः ॥ २५ ॥ हरेर्वानरस्य । तस्य प्रसिद्धस्य । तमृश्यमूकम् ॥ २६ ॥ सुग्रीवमिति । अभिगच्छेत्यनन्तरमित्युक्त्वेति शेषः । इति वक्ष्यमाणप्रकारेण सुग्रीवमभिगच्छेत्युक्त्वा लक्ष्मणं पुनरित्युवाचेत्यन्वयः ॥ २७ ॥ राज्यभ्रष्टेन अत एव दीनेन सर्वदैन्यपरिहारार्थं तस्यां सीतायाम् [ तिलकादिभिः काशते प्रकाशते इति तथोक्ता ॥ ] ॥ २१–२८ ॥

आसक्तचेतसा मया, सीतां विना कथं जीवितुं शक्यम् ॥ २८ ॥ अनन्यचेतसं स्ववाक्यश्रवणे सावधानम् । विवेश स्नानायेति शेषः । नलिनीं सरसीम् । शोकः दुःखम्, विषादः तत्कृतः कार्यकरणापाटवरूपशरीरावसादः ताभ्यां यन्त्रितः नियमितः, तत्परवश इत्यर्थः ॥ २९ ॥ सर्गार्थं संगृह्णाति–तत इति । सुदूरं संक्रमः गमनं यस्य तथा दूरादागत इत्यर्थः । प्रतिकूलधन्वनं पथिकजनप्रतिकूलभूतमरुकान्तारम् कवन्धवनमित्यर्थः । क्रमेण अनेकविघ्ननिवृत्ति

इत्येवमुक्त्वा मदनाभिपीडितः स लक्ष्मणं वाक्यमनन्यचेतसम् । विवेश पम्पां नलिनीं मनोहरां रघूत्तमः शोक विषादयन्त्रितः ॥ २९ ॥ ततो महद्वर्त्म सुदूरसङ्क्रमः क्रमेण गत्वा प्रतिकूलधन्वनम् । ददर्श पम्पां शुभदर्शकानना मनेकनानाविधपक्षिजालकाम् ॥ ३० ॥ इत्यार्षे श्रीमद्रामायणे आदिकाव्ये श्रीमद्वाल्मीकीये चतुर्विंशत्सहस्रिकायां संहितायां श्रीमदारण्यकाण्डे पञ्चसप्ततितमः सर्गः ॥७५॥ श्रीरामचन्द्रार्पणमस्तु ॥ इत्यारण्यकाण्डम् ॥

पूर्वकं गत्वा शुभः शोभनः दर्शः दर्शनं यस्य तादृशं काननं यस्यास्ताम् । अनेके नानाजातीयाः बहवो वा नानाविधाः नानासंस्थानाः पक्षिणः शुक शारिकाकोकिलप्रभृतयः तेषां जालकानि समूहाः यस्यां ताम् । यद्वा अनेकानि नानाविधपक्षिजालकानि यस्यां ताम्, काननद्वारा पक्षिजालवत्त्वं, तादृशीं पम्पां ददर्श । अस्मिन्सर्गे त्रिंशच्छ्लोकाः । न्यूनातिरेकसद्भावस्तु कोशेषु बहुधा दृश्यते ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चसप्ततितमः सर्गः ॥ ७५ ॥ इत्थं कौशिकदिव्यवंशकलशीवाराशिराकाशशी पादाम्भोजमरन्दभोगरसिकः श्रीमच्छठारेर्गुरोः । आलोक्याखिलदेशिकोत्तमकृतव्याख्यानशैलीश्चिरं व्याचख्यौ तदरण्यकाण्डमखिलं गोविन्दराजाभिधः ॥

उपसंहरति–इतीति । अनन्यचेतनः नास्त्यन्यत्र सीतायाश्चेतनं चित्तं यस्य सः । नलिनीभिर्मनोरमां पम्पां मतङ्गसरसप्रदेशवर्तिनीं विवेश ॥ २९ ॥ ततो महदिति । दूरतः सङ्क्रम्यत इति दूरसंक्रमम्, दूरतोगम्यमानमित्यर्थः । वर्त्म मार्गं गत्वा वनं प्रविलोकयन् पम्पां ददर्शेत्यन्वयः ॥ ३० ॥ इति श्रीपरमहंसपरिव्राजकाचार्यश्रीनारायणतीर्थशिष्यश्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायामारण्यकाण्डव्याख्यायां पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

महेशतीर्थरचिता रामपादसमर्पिता । टीका त्वारण्यकाण्डस्य समाप्ता तत्त्वदीपिका ॥

---

श्रीमदारण्यकाण्डपठनश्रवणयोः फलम्–ब्रह्माण्डपुराणे सप्तचत्वारिंशदुत्तरशततमे अध्याये–" आरण्यकं तु यः काण्डमतिभक्तिसमन्वितः । पठेद्वा शृणुयाद्वापि सोमसायुज्यमाप्नुयात् ॥ " इति । स्कान्दे च–"आरण्यकाण्डमाहात्म्यं ये शृण्वन्ति महीतले । श्रीरामस्य प्रसादेन विष्णुलोकं व्रजन्ति ते ॥ काण्डं तृतीयं शृण्वन् यः प्रोक्तेन नियमेन तु । सोऽग्निसायुज्यमाप्नोति पठनाद्वापि शाश्वतः ॥ " इति ॥

# ॥ इति श्रीमद्वाल्मीकिरामायणे आरण्यकाण्डम् ॥

श्रीभूषणादिव्याख्याचतुष्टयालंकृतं मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृतटिप्पणीसंवलितं च ॥

# अथ श्रीवाल्मीकिरामायणे किष्किन्धाकाण्डम् ॥

श्रीभूषणादिव्याख्याचतुष्टयालंकृतं मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृतटिप्पणीसंवलितं च ॥

श्रीरङ्गेशाय नमः ॥ क्वाहं मन्दमतिर्गभीरमधुरं रामायणं तत्क्व च व्याख्यास्येऽस्य परिश्रमन्नहमहो हासास्पदं धीमताम् । को भारोऽत्र मम स्वयं कुलगुरुः कोदण्डपाणिः कृपाकूपारो रचयत्यदः सपदि मज्जिह्वाग्रसिंहासनः ॥ श्रीरामायणराजस्य समर्प्य मणिमेखलाम् । सारोद्धारमिमं हारमर्पयिष्यामि सम्प्रति॥ एवं पूर्वस्मिन् काण्डे दीनजनसंरक्षणरूपो धर्मोऽनुष्ठापितः । अथ किष्किन्धाकाण्डे मित्रसंरक्षणरूपो धर्मोऽनुष्ठाप्यते । तथा पूर्वस्मिन् काण्डे मोक्षप्रदत्वरूपं परतत्त्वचिह्नमुपदर्शितम् । अत्रासङ्ख्येयकल्याणगुणाकरत्वं प्रतिपाद्यते । वस्तुतस्तु प्रथमे काण्डे श्रीमत्त्वं श्रीमत्पदोदीरितमुक्तम् । द्वितीये

श्रीरङ्गेशाय नमः ॥ स तां पुष्करिणीं गत्वा पद्मोत्पलझषाकुलाम् । रामः सौमित्रिसहितो विललापाकुलेन्द्रियः ॥ १ ॥

सर्वजनव्यामोहविषयत्वोक्त्या नारायणशब्दार्थः । तृतीये पञ्चवटीवासपर्यन्तवृत्तान्तेन मुनिजनकृतकैङ्कर्योक्त्या चतुर्थ्यर्थ उक्तः । खरादिवधवृत्तान्तेन नमःशब्दार्थ उक्तः । अथ मारीचदर्शनवृत्तान्तमारभ्य चेतनोज्जीवनप्रकारः प्रदर्श्यते । तत्र मारीचदर्शनवृत्तान्तेन भगवन्नित्यानुभवयोग्यस्य चेतनस्याप्राप्तविषयप्रावण्यम्, तेन रावणरूपमहामोहाक्रमणम्, जटायुव्यापारेण रावणानिवृत्तिकथनात् केवलकर्मणा संसारस्यानिवर्त्यत्वम्, लङ्काप्रवेशेन सांसारिकशरीरप्रवेशः, एकाक्ष्येककर्णीप्रभृतिव्यापारैस्तापत्रयाभिहतिः, रामान्वेषणेन भगवतश्चेतनोज्जीवनोपायचिन्तनं चोक्तमारण्यकाण्डे ॥ अथाचार्यमुखेन चेतनस्य स्वविषयभक्त्युत्पादनकृते तदन्वेषणमुच्यते किष्किन्धाकाण्डे । तत्र प्रथमे सर्गे नित्यकैङ्कर्यपरनित्यसूरिदर्शनेन एतत्तुल्यभोगस्य प्राप्तो जीववर्गः किमिति न मां प्राप्त इति भगवतः क्लेशातिशयं दर्शयति । "स एकाकी न रमेत" इति ह्युक्तम् । स तामित्यादि । पद्मोत्पलझषैः कमलेन्दीवरमत्स्यैः आकुलाम् । तां पम्पाख्याम् । पुष्करिणीं सरसीम् । गत्वा । मुखनयनकटाक्षवत्याः कान्तायाः स्मारकत्वेन व्याकुलेन्द्रियः मोहं प्रसादं च प्राप्तः । स रामः तादृशधैर्यविशिष्टोपि । सौमित्रिसहितः आश्वासकान्तरङ्गपुरुषसहितोऽपि विललाप ॥ १ ॥ तनि०—पद्मेति सीताया मुखानुस्मरणम् ।

श्रीमत्किष्किन्धाकाण्डे व्याख्येयानि व्याख्यायन्ते ॥ स तामिति । सः विराधखरत्रिशिरोदूषणकबन्धादीनामयत्नसंहारप्रसिद्धपराक्रमयुक्तः श्रीरामः । तां चिकीर्षितरावणवधोपयोगिसुग्रीवाधिष्ठितऋष्यमूकसमीपवर्तिनीम् । पुष्करिणीं पम्पाम् । आकुलेन्द्रियः पुष्करिणीदर्शनजनितसीताविरहशोकातिशयेन क्षुभितसर्वे

टीका०—पूर्वस्मिन् काण्डे दण्डकायां सीतासौमित्रिभ्यां सह सञ्चरन् श्रीरामो दशमुखहृतां सीतामन्वेष्टुकामो मध्येमार्गं स्वकरस्पर्शनिर्मुक्तशापबन्धेन कबन्धेन सूचितसीतासमागमसाधनं सुग्रीवसख्यमपेक्षमाण स्तत्प्रदर्शितेन पथा संचरमाणः पम्पामद्राक्षीदित्युक्तम्, इदानीम् अस्मिन् किष्किन्धाकाण्डे तदेव सुग्रीवसख्यं वक्तुमनाः प्रसङ्गात्पुरुषधौरेयाणामपीष्टजनवियोगिनां कामोद्दीपकदर्शनेन चित्तविभ्रमो भवतीति सूचनाय पम्पावर्णनमुखेन रामस्य चित्तविभ्रमं दर्शयितुमुपक्रमते—स तामिति ॥ १ ॥

उत्पलेति नेत्रानुस्मरणम् । झषेति नेत्रचाञ्चल्यानुस्मरणम् । सौमित्रे इति । तस्य दुःखाविष्करणपात्रत्वं च व्यज्यते ॥ १ ॥ आकुलेन्द्रिय इत्येतद्विवृण्वन्नाह–तस्येति । दृष्ट्वा स्थितस्य तस्य । इन्द्रियाणि हर्षाच्चकम्पिरे च्युतानीत्यर्थः ॥ २ ॥ प्रलापप्रकारमाह–सौमित्रे इत्यादिना । अनेन भक्तिद्रुतहृदयस्तत्सूचक सुखप्रसादः सपरिकरः पुरुष उच्यते ॥३॥ यत्र कानने । सशिखरा इव उन्नताग्रशाखाभिः सशृङ्गाः इव स्थिताः अत एव शैलाभाः । अनेन भगवद्दयारसोप



तस्य दृष्ट्वैव तां हर्षादिन्द्रियाणि चकम्पिरे । स कामवशमापन्नः सौमित्रिमिदमब्रवीत् ॥ २ ॥
सौमित्रे शोभते पम्पा वैडूर्यविमलोदका । फुल्लपद्मोत्पलवती शोभिता विविधैर्द्रुमैः ॥ ३ ॥
सौमित्रे पश्य पम्पायाः काननं शुभदर्शनम् । यत्र राजन्ति शैलाभा द्रुमाः सशिखरा इव ॥४॥
मां तु शोकाभिसन्तप्तं माधवः पीडयन्निव । भरतस्य च दुःखेन वैदेह्या हरणेन च ॥ ५ ॥
शोकार्तस्यापि मे पम्पा शोभते चित्रकानना । व्यवकीर्णा बहुविधैः पुष्पैः शीतोदका शिवा ॥६॥

जीविन आचार्याः तदुपजीविनोऽन्तेवासिनश्चोच्यन्ते । "अत्र परत्र चापि" इति न्यायेन नित्यविभूतावपि शिष्यवत्त्वं सिद्धम् ॥ ४ ॥ मां त्विति । भरतस्य दुःखेन नगरात् बहिर्व्रतोपवासादिनियमकृतदुःखेन । वैदेह्याः हरणेन च पूर्वमेव सन्तप्तं मां माधवो वसन्तः तु विशेषेण पीडयन्निव भवती त्यर्थः । वस्तुतः पीडाभावादिवशब्दः । अनेन संसारतो जीवस्य दुःखेन दुःखितत्वमुक्तम् ॥ ५ ॥ रामा०– मां त्वित्यादि । भरतस्य दुःखेन प्रार्थनाभङ्गजनितभरत सम्बन्धिदुःखेन वैदेह्या हरणेन च पूर्वमेव शोकाभिसन्तप्तं मां माधवः अधिकं पीडयन्निव, वर्तत इति शेषः । इवशब्दो वाक्यालङ्कारे । "आधयः पीडयन्ति वै" इति पाठे–वक्ष्यमाणवसन्त वर्णनस्वारस्यं नास्ति ॥ ५ ॥ सर्वेषु मद्भक्तेषु सुखं वसत्सु किमर्थमेते संसारिणः क्लिश्यन्तीत्यभिप्रायेणाह–शोकार्तस्येत्यादिना । शोकार्तस्यापि मे मयि शोका र्तेऽपि । शोभते । व्यर्थेयं शोभेति भावः ॥६॥ रामा०–शोकार्तस्यापि मे पम्पा शोभते । 'दुःखिते मनसि सर्वमसह्यम्' इति न्यायेन सर्वासह्यतापादकशोकार्तस्यापि मे पम्पा अतिरम-

न्द्रियः सन् विललाप परिदेवयामास ॥१–३॥ सौमित्रे इति । पम्पायाः काननं पम्पापरिसरवर्ति काननम् । यत्र कानने सशिखरा इव उन्नताग्रशाखाभिः सशृङ्गा इव, अत एव शैलाभाः ॥ ४ ॥ मां त्वित्यादि । राज्यभ्रंशबन्धुवियोगादिना पूर्वमेव शोकाभिसन्तप्तं मां भरतस्य च दुःखेन प्रार्थनाऽलाभजनितभरतसम्बन्धि दुःखेन वैदेह्या हरणेन च भूयोऽप्याधयः पीडयन्ति वै पीडयन्ति ... इति पाठे अस्यार्थः–भरतस्य च दुःखेन वैदेह्या हरणेन च पूर्वमेव

णीयतया हृदयंगमा भवतीत्यर्थः ॥६॥ नलिनैरिति । अपिशब्देन कुमुदादिकं समुच्चीयते । व्यालोऽजगरः । सर्पव्याला एवानुचराः ते अस्यां सञ्जाता इति सर्पव्याला नुचरिता । सर्पव्यालानुचरितत्वेपि नलिनसञ्छन्नत्वादत्यर्थं शुभदर्शना भवतीत्यर्थः । अनेन ज्ञानिनो यः कश्चिद्दोषोऽपि न तस्य हेयतापादक इत्युक्तम् । "तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ।" इति स्मृतेः ॥७॥ अधिकमिति । एतदिति परिसरप्रदेशमङ्गुल्या निर्दिशति । नीलपीतमिति मयूरकण्ठवर्ण इत्यु

नलिनैरपि सञ्छन्ना ह्यत्यर्थं शुभदर्शना । सर्पव्यालानुचरिता मृगद्विजसमाकुला ॥ ७ ॥ अधिकं प्रतिभात्येतन्नील पीतं तु शाद्वलम् । द्रुमाणां विविधैः पुष्पैः परिस्तोमैरिवार्पितम् ॥ ८ ॥ पुष्पभारसमृद्धानि शिखराणि समन्ततः । लताभिः पुष्पिताग्राभिरुपगूढानि सर्वतः ॥९॥ सुखानिलोऽयं सौमित्रे कालः प्रचुरमन्मथः । गन्धवान् सुरभिर्मासो जातपुष्पफलद्रुमः ॥ १०॥ पश्य रूपाणि सौमित्रे वनानां पुष्पशालिनाम् । सृजतां पुष्पवर्षाणि तोयं तोयमुचामिव ॥ ११ ॥ प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः । वायुवेगप्रचलिताः पुष्पैरवकिरन्ति गाम् ॥ १२ ॥ पतितैः पतमानैश्च पादपस्थैश्च मारुतः । कुसुमैः पश्य सौमित्रे क्रीडन्निव समन्ततः ॥ १३ ॥

च्यते । परिस्तोमैः कुथैः । "परिस्तोमः कुथो द्वयोः" इत्यमरः । अनेन नानागुरुमुखलब्धज्ञानतया भगवद्दासयोग्यः पुरुष उच्यते ॥ ८ ॥ पुष्पेति । शिख राणि वृक्षाग्राणि । समन्ततः सर्वत्र प्रदेशे । आमूलाग्रम् उपगूढानि । शोभन्त इति शेषः । अनेन गार्हस्थ्येऽपि निरवधिकबोधा उच्यन्ते ॥ ९ ॥ सुखेति । अनेन जनकादिवदैश्वर्ये सत्यपि भगवज्ज्ञानरत उच्यते ॥१०॥ पश्येति । तोयं सृजतां तोयमुचां रूपाणीवेति पूर्णोपमा । अनेन परोपदेशप्रवृत्ता आचार्या उच्यन्ते ॥११॥ प्रस्तरेषु पाषाणेषु । गां भूमिम्, प्रस्तरभूमिमित्यर्थः । अनेन कठिनहृदयेष्वपि दयावशात् ज्ञानवर्षिण उच्यन्ते ॥१२॥ पतितैरिति ।

शोकाभिसन्तप्तं मां माधवः पीडयन्निव, वर्तत इति शेषः ॥ ५ ॥ ६ ॥ नलिनैरिति । सर्पव्यालानुचरिता सर्पाः बहुफणाः, तदन्ये व्यालाः । टी०—व्यालाः स्वल्पफणाः । क्रूरमृगा वा ॥ ७ ॥ अधिकमिति । परिस्तोमः कुथः ॥ ८ ॥ पुष्पेति । शिखराणि द्रुमाग्राणि । सर्वतः सर्वस्थलम् ॥ ९ ॥ सुखानिल इति । अयं कालः । गन्धवान् अत एव सुखानिलः अत एव प्रचुरमन्मथः अतिमन्मथोद्दीपक इत्यर्थः । कालस्य गन्धवत्त्वे हेतुः सुरभिर्मासः वसन्तमास इत्यर्थः, कुतः ? जातपुष्पफलद्रुमः ॥ १० ॥ टी०—तोयमुचाम् अम्बुदानाम् ॥ ११–१३ ॥

पतमानैः पतद्भिः । अनेन सर्वगुरुप्रेरणैकलीलः सर्वान्तर्याम्युच्यते ॥ १३ ॥ कुसुमोत्कचाः कुसुमोत्कटाः । विक्षिपन् कम्पयन् । मारुतः चलितस्थानैः स्वस्थानकुसुमोच्चालितैः षट्पदैः अनुगीयते। अनेन "ज्ञानी त्वात्मैव मे मतम्" इत्यात्मभूतज्ञानिनां भक्तिवृद्धये भगवति भुवमवतीर्णे "इमान् लोकान् कामान्नीकामरूप्यनुसञ्चरन् । एतत्साम गायन्नास्ते" इत्युक्तरीत्या तमनुगच्छन् भक्तलोक उच्यते ॥ १४ ॥ रामानु०--नीयत इव पुष्परसोत्कण्ठया स्तूयत इव । अनुगीयत इति पाठे अनुसृत्य गीयत इत्यर्थः ॥ १४ ॥ मत्तकोकिलसन्नादैः मुखवाद्यस्थानीयैः । पादपान्नर्तयन् । शैलकन्दरनिष्क्रान्ततया तन्निष्क्रमणध्वनियुक्त

विक्षिपन् विविधाः शाखा नगानां कुसुमोत्कचाः । मारुतश्चलितस्थानैः षट्पदैरनुगीयते ॥ १४ ॥
मत्तकोकिलसन्नादैर्नर्तयन्निव पादपान् । शैलकन्दरनिष्क्रान्तः प्रगीत इव चानिलः ॥ १५ ॥
तेन विक्षिपतात्यर्थं पवनेन समन्ततः । अमी संसक्तशाखाग्रा ग्रथिता इव पादपाः ॥ १६ ॥
स एष सुखसंस्पर्शो वाति चन्दनशीतलः । गन्धमभ्यावहन् पुण्यं श्रमापनयनोऽनिलः ॥ १७ ॥

तया । प्रगीत इव गातुमुपक्रान्त इव । "आदिकर्मणि क्तः कर्तरि च" इति कर्तरि निष्ठा । यद्वा पादपान् नर्तयन् नर्तयितुमिव । "लक्षणहेत्वोः–" इति शतृप्रत्ययः । मत्तकोकिलसन्नादैः प्रगीतः प्रहृष्टगीतः सन् । शैलकन्दरात् नैपथ्यस्थानान्निष्क्रान्तः । अनेन वेदप्रवर्तनमुखेन लोकस्य भक्त्युत्पादनाय वैकुण्ठादवतीर्णो भगवानित्युच्यते ॥ १५ ॥ रामानु०–अत्र वायोर्नर्तकगायकसाधर्म्यमुच्यते । नर्तयितुं मुखवाद्यस्थानीयैर्मत्तकोकिलसन्नादैः पादपान्नर्तयन्निव ॥ १५ ॥ विक्षिपता विविधं प्रेरयता पवनेन । अत्यर्थं समन्ततः संसक्तशाखाग्रा अमी पादपाः ग्रथिताः मालावन्निबद्धा इव भान्ति । अनेन भगवत्कृपया परस्परमनुरक्ता भागवता उच्यन्ते ॥ १६ ॥ मन्दमारुतं वर्णयति–स एष इति । स्पार्शनप्रत्यक्षत्वादेष इत्युक्तिः । चन्दनशीतलः मलयगतचन्दनेन शीतलः, दक्षिणमारुत इत्यर्थः । चन्दनवच्छीतलो वा । गन्धं पुष्पगन्धम् । पुण्यं रम्यम् । सुखसंस्पर्श इत्यनेन मान्द्यमुक्तम् । एवं शैत्यमान्द्यसौरभ्यवान् । अत

विक्षिपन्निति । कुसुमोत्कचाः–कुसुमोत्कटाः । चलितस्थानैः स्वस्थानकुसुमोच्चालितैः षट्पदैः मारुतः गीयत इव ॥ १४ ॥ मत्तेति । अत्र वायोः नाटयितृगायकसाधर्म्यमुच्यते। नर्तयितुर्मुखवाद्यस्थानीयैः मत्तकोकिलसन्नादैः पादपान् नर्तयन्निव शैलकन्दरनिष्क्रान्तः प्रगीत इव शैलकन्दरनिर्गतध्वनियुक्ततया गातुमुपक्रान्त इव च भवत्यनिल इत्यर्थः ॥ १५ ॥ टी०–विक्षिपता द्रुमाग्राणीति शेषः ॥ १६ ॥ १७ ॥

एव श्रमापनयनः । अनेन "सर्वगन्धः सर्वरसः" [illegible] ॥ १७ ॥ रामानु०—पूर्वश्लोके विक्षिपतेति पठितं वायोस्तीव्रगतित्वं निवार यति–स एव इति । अचक्षुर्विषये त्वनिले एव इति निर्देशस्तदानीतनानासान्द्रपरागदर्शनात् ॥ १७ ॥ अमी इति । अनेन भगवदनुभवबलात्कारेण "एतत्साम गायन्नास्ते" इत्युक्तसामगानरसिका उच्यन्ते ॥ १८ ॥ गिरिप्रस्थेषु निजप्रस्थेष्वित्यर्थः । तदुत्पन्नैर्द्रुमैः । संसक्तशिखराः परस्परसंश्लिष्टाग्राः । शैला भान्ति महान्तः



अमी पवननिक्षिप्ता विनदन्तीव पादपाः । षट्पदैरनुकूजन्तो वनेषु मधुगन्धिषु ॥ १८ ॥ गिरिप्रस्थेषु रम्येषु पुष्पवद्भिर्मनोरमैः । संसक्तशिखराः शैला विराजन्ते महाद्रुमैः ॥ १९ ॥ पुष्पसञ्छन्नशिखरा मारुतोत्क्षेपचञ्चलाः । अमी मधुकरोत्तंसाः प्रगीता इव पादपाः ॥ २० ॥ पुष्पिताग्रांस्तु पश्येमान् कर्णिकारान् समन्ततः । हाटकप्रतिसंछन्नान्नरान्पीताम्बरानिव ॥ २१ ॥ अयं वसन्तः सौमित्रे नानाविहगनादितः । सीतया विप्रहीणस्य शोकसन्दीपनो मम ॥ २२ ॥ मां हि शोकसमाक्रान्तं सन्तापयति मन्मथः । हृष्टः प्रवदमानश्च मामाह्वयति कोकिलः ॥ २३ ॥

पुष्पराशय इव भान्तीत्यर्थः । अनेन सर्वेषां ज्ञानिनामेककण्ठत्वमुक्तम् ॥ १९ ॥ रामानु०—गिरिप्रस्थेष्विति । अत्राविवक्षितसम्बन्धप्रस्थेष्वित्यर्थः । तत्रोत्पन्नैर्महाद्रुमैः संसक्तशिखरा इति सम्बन्धः । अनेन द्रुमाणामौन्नत्यं सूचितम् ॥ १९ ॥ मधुकरा एव उत्तंसाः शिखराणि येषां ते । "पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेपि शेखरे" इत्यमरः । पुष्पावृतशिखोपरि नीलोष्णीषधारिणः । सगीतिकं नृत्यन्त इव भान्तीत्यर्थः । अनेन भगवद्भक्त्या नर्तनपरा गम्यन्ते ॥ २० ॥ पुष्पिताग्रान् पुष्पितोपरिप्रदेशान् । अत एव हाटकसंछन्नान् पीताम्बरांश्च नरानिव पश्य । पुष्पिताग्राः कर्णिकाराः सुवर्णवस्त्राभरणवन्त इव भान्तीत्यर्थः । अनेन भगवत्सारूप्यं गता उच्यन्ते ॥ २१ ॥ एवं मद्भक्तेषु सर्वेषु मदनुभवतृप्तेषु बद्धा मां दुःखीकुर्वन्तीत्याह–अयमिति । इदानीं वसन्तवर्णनेन नगरनिर्गममारभ्य त्रयोदश वत्सरा गता इति गम्यते ॥ २२ ॥ एवं वासन्तपुष्पसमृद्धिं वर्णयित्वा तथैवोद्दीपनभूतपक्षिरवानाह–मामित्यादिना । पूर्वार्द्धं स्पष्टम् । मां अमी इति । षट्पदैरनुकूजन्तः विनदन्तीवेति सम्बन्धः ॥ १८ ॥ प्रस्तरेषु च रम्येषु इति पाठः । प्रस्तरेषु पुष्पवद्भिः द्रुमैः संसक्तशिखराः शैलाः विराजन्त इति सम्बन्धः ॥ १९ ॥ पुष्पेति । पुष्पसंछन्नशिखराः पुष्पालंकृतशाखाः । मारुतोत्क्षेपचञ्चलाः वायुचलनेन चलनवन्तः । मधुकरोत्तंसाः मधुकरावतंसाः । अमी पादपाः प्रगीता इव गातुमुपक्रान्ता इवेति सम्बन्धः । गातुमुपक्रान्तसालङ्कारविलासपुरुषा इव स्थिता इत्यर्थः । मधुकरोत्क्रोशाः इति वा पाठः ॥ २० ॥ टी०—हाटकप्रतिसञ्छन्नाः अत्र हाटकशब्देन तन्मयान्याभरणानि ॥ २१–२३ ॥

शोकिनं मां दृष्टः कोकिलः । प्रवदमानः प्रवदन् विजयघोषं कुर्वन् सन् आह्वयति स्पर्धत इवेति गम्योत्प्रेक्षा । ज्ञानैकवत्सलं मामविज्ञाय केवलं कर्मठा मां स्पर्धन्त इति भावः ॥ २३ ॥ नत्यूहकः कुक्कुटभेदः । वननिर्झरे प्रणदन्नित्यन्वयः । अनेन केवलजपपरा उच्यन्ते । ज्ञानभक्त्योरेव भगवतः सद्यः प्रीत्यावहत्वात् साधनान्तरपरो नातिप्रिय इति रहस्यम् । "ज्ञानी त्वात्मैव मे मतम् । भक्तिक्रीतो जनार्दनः" इत्यादिवचनात् ॥२४॥ किमयं सर्वदेत्थं

एष नत्यूहको हृष्टो रम्ये मां वननिर्झरे । प्रणदन्मन्मथाविष्टं शोचयिष्यति लक्ष्मण ॥ २४ ॥ श्रुत्वैतस्य पुरा शब्दमाश्रमस्था मम प्रिया । मामाहूय प्रमुदिता परमं प्रत्यनन्दत ॥ २५ ॥ एवं विचित्राः पतगा नानारावविराविणः । वृक्षगुल्मलताः पश्य संपतन्ति ततस्ततः ॥२६॥ विमिश्रा विहगाः पुंभिरात्मव्यूहाभिनन्दिताः । भृङ्गराजप्रमुदिताः सौमित्रे मधुरस्वराः ॥ २७ ॥ नत्यूहरुतविक्रन्दैः पुंस्कोकिलरुतैरपि । स्वनन्ति पादपाश्चेमे ममानङ्गप्रदीपनाः ॥ २८ ॥ अशोकस्तबकाङ्गारः षट्पदस्वननिःस्वनः । मां हि पल्लवताम्रार्चिर्वसन्ताग्निः प्रधक्ष्यति ॥ २९ ॥ न हि तां सूक्ष्मपक्ष्माक्षीं सुकेशीं मृदुभाषिणीम् । अपश्यतो मे सौमित्रे जीवितेऽस्ति प्रयोजनम् ॥ ३० ॥

शोकावहः नेत्याह—श्रुत्वेति । श्रुत्वा प्रमुदिता प्रिया मामाहूय परमं प्रकामं प्रत्यनन्दत । नत्यूहरवाकर्णनोद्दीपिता मामाहूय विविधं क्रीडारसमनुभूतवतीत्यर्थः । अनन्यप्रयोजनस्य जपः प्रीत्यावह इति भावः ॥ २५ ॥ एवमिति स्पष्टम् ॥ २६ ॥ विहगाः स्त्रियः पुंविहगैः विमिश्राः आश्लिष्टाः सत्यः । आत्मव्यूहाभिनन्दिताः अनुरूपेण कान्तेन सहितासीत्येवं सजातीयैः श्लाघिताः । भृङ्गराजप्रमुदिताः भृङ्गराजझङ्कारश्रवणसन्तुष्टाः । तदुद्दीपनेन मधुरस्वराः रम्यरतिकूजिताः वर्तन्ते । एतान् पश्येति शेषः । अनेनाचार्यपरतन्त्राः सामगानपरा उच्यन्ते ॥ २७ ॥ विक्रन्दैः शब्दैः । स्वनन्ति स्वनन्तीव । अनेन नानाविधभगवन्नामकीर्तनपराः श्लाघ्यन्ते ॥ २८ ॥ षट्पदस्वननिःस्वन इति । अग्नेः निःस्वनवत्त्वं ज्वलनावस्थायां दृष्टम् । अनेन स्वप्रेमजनकभक्तियुक्ता उच्यन्ते ॥ २९ ॥ न हीति । एतेष्वेवं मत्प्रेमपरतन्त्रेषु संसारिचेतनो दुःखमनुभवतीत्येतन्ममासह्यमिति भावः ॥ ३० ॥

एष इति । नत्यूहः जलकुक्कुटः ॥ २४–२६ ॥ विमिश्रा इति । भृङ्गराजप्रमुदिताः मधुरस्वराः आत्मव्यूहाभिनन्दिताः आत्मीयव्यूहैरभिनन्दिताः, विहङ्गाः स्त्री विहङ्गाः, पुंभिः पुरुषविहङ्गैः, विमिश्राः संयुक्ताः पश्येति पूर्वेण सम्बन्धः ॥ २७ ॥ दात्यूहेति । दात्यूहगतविक्रन्दैः दात्यूहगदितविरावैः ॥ २८ ॥ अशोक इति ।

अयं कालो मम दयितायाः रुचिरो हि प्रियतरो हीत्यर्थः । यदीदानीं दयिता स्यात्तदातीव तुष्येदिति भावः । कोकिलाकुलसीमान्तः कोकिलव्याकुलचतुस्सीम इत्यर्थः ॥ ३१ ॥ मन्मथायाससम्भूतः मदनपीडाजनितः । वसन्तस्य गुणेन रामणीयकेन वर्धितः । क्षिप्रं धक्ष्यति ननु चिरात् । इवशब्दो वाक्यालङ्कारे ॥३२॥ आत्मप्रभवः मन्मथः । भूयस्त्वं प्रवृद्धत्वम् ॥३३॥ दृश्यमानः । पुष्पादिद्वारा । स्वेदसंसर्गदूषकः मलयमारुतद्वारा स्वेदसम्बन्धनिवर्तकः ।

अयं हि दयितस्तस्याः कालो रुचिरकाननः । कोकिलाकुलसीमान्तो दयिताया ममानघ ॥ ३१ ॥ मन्मथायाससम्भूतो वसन्तगुणवर्धितः । अयं मां धक्ष्यति क्षिप्रं शोकाग्निर्नचिरादिव ॥ ३२ ॥ अपश्यतस्तां दयितां पश्यतो रुचिरद्रुमान् । ममायमात्मप्रभवो भूयस्त्वमुपयास्यति ॥ ३३ ॥ अदृश्यमाना वैदेही शोकं वर्धयते मम । दृश्यमानो वसन्तश्च स्वेदसंसर्गदूषकः ॥ ३४ ॥ मां ह्यद्य मृगशावाक्षी चिन्ताशोकबलात्कृतम् । सन्तापयति सौमित्रे क्रूरश्चैत्रो वनानिलः ॥ ३५ ॥ अमी मयूराः शोभन्ते प्रनृत्यन्तस्ततस्ततः । स्वैः पक्षैः पवनोद्धूतैर्गवाक्षैः स्फाटिकैरिव ॥ ३६ ॥ शिखिनीभिः परिवृतास्त एते मदमूर्च्छिताः । मन्मथाभिपरीतस्य मम मन्मथवर्धनाः ॥ ३७ ॥

रतिश्रान्तिहर इत्यर्थः ॥३४॥ क्रूरः मन्मथोद्दीपकत्वात् । अत्र चकारो द्रष्टव्यः ॥३५॥ ततस्ततः तत्र तत्र प्रदेशे । पवनोद्धूतैः अत एव स्पष्टदृष्टशुभ्रनालजालत्वात् स्फाटिकैर्गवाक्षैरिव स्थितैः । यद्वा स्फाटिकैः स्फटिकप्रधानैः चन्द्रार्कपरम्परायास्तत्तुल्यत्वादिति भावः । अनेन भगवत्कृपाप्रवर्तितविविधकर्मपरा उच्यन्ते ॥ ३६ ॥ रामानु०—अमी इति । पक्षैर्बर्हैः । बर्हाणां स्फाटिकगवाक्षसाम्यं नर्तनावस्थायाम् अन्तरान्तरा विततोर्ध्वशुभ्रनालतया ॥ ३६ ॥ शिखिनीभिः मयूरस्त्रीभिः परिवृताः अत एव मदमूर्च्छिताः मदव्याप्ताः । त एते पूर्वश्लोकोक्ता एते शिखिनः । मन्मथाभिपरीतस्य पूर्वमेव मन्मथाभिव्याप्तस्य । मम पुन

अग्नेः स्वनवत्त्वं ज्वलनावस्थायां संभवति ॥ २९ ॥ ३० ॥ अयमिति । अयं कालो मम दयितायाः दयितः इष्ट इति सम्बन्धः ॥ ३१ ॥ मन्मथायासेति । न चिरादिव इत्यस्योत्तरश्लोकेन सम्बन्धः । मन्मथायाससम्भूतः मन्मथपीडाजनितः । क्षिप्रं धक्ष्यतीति सम्बन्धः ॥ ३२ ॥ अपश्यत इति । नचिरादेव इदानीमेव, आत्मप्रभवः कामः, भूयस्त्वं प्रवृद्धत्वमुपयास्यतीति सम्बन्धः ॥ ३३ ॥ अदृश्यमानेति । स्वेदसंसर्गशामकः वसन्तस्य स्वेदशामकत्वं मलयानिलसाहचर्यात् । टी०—स्वेदसंसर्गदूषकः स्वेदसंसर्गशामकः ॥ ३४ ॥ चिन्ताशोकबलात्कृतं सन्ततस्मरणाद्दुःखपरवशमित्यर्थः ॥ ३५ ॥ ३६ ॥ शिखिनीभिरिति । एते मयूराः मदमूर्च्छिताः मदाविष्टाः ॥ ३७॥

र्मन्मथवर्धनाः । अन्यरतिदर्शनस्य उद्दीपनत्वादिति भावः । सशिष्यभक्तदर्शनं मे सर्वत्र भक्त्युत्पादनव्यामोहं जनयतीत्यर्थः ॥ ३७ ॥ पश्येत्यादिश्लोकद्वयमेकान्वयम् । नृत्यन्तं स्वयं लीलारसप्रवृत्तं भर्तारं प्रति मन्मथार्ता रत्यर्थं तमाक्रष्टुकामा शिखिनी उपनृत्यति । तामेव रामां कान्ताम् । मनसा उपधावति । समीपमागन्तुमिच्छतीत्यर्थः । उपधावनं च रत्यर्थमिति द्योतयति—वितत्येति । रुतैः रतिकूजितैः । उपलक्षितः । पक्षविस्तारणं च रत्यर्थ

पश्य लक्ष्मण नृत्यन्तं मयूरमुपनृत्यति । शिखिनी मन्मथार्तैषा भर्तारं गिरिसानुषु ॥ ३८ ॥ तामेव मनसा रामां मयूरोप्युपधावति । वितत्य रुचिरौ पक्षौ रुतैरुपहसन्निव ॥ ३९ ॥ मयूरस्य वने नूनं रक्षसा न हृता प्रिया । तस्मान्नृत्यति रम्येषु वनेषु सह कान्तया ॥ ४० ॥ मम त्वयं विना वासः पुष्पमासे सुदुस्सहः ॥ ४१ ॥ पश्य लक्ष्मण संरागं तिर्यग्योनिगतेष्वपि । यदेषा शिखिनी कामाद्भर्तारं रमतेऽन्तिके ॥ ४२ ॥ मामप्येवं विशालाक्षी जानकी जातसम्भ्रमा । मदनेनाभिवर्तेत यदि नापहृता भवेत् ॥ ४३ ॥ पश्य लक्ष्मण पुष्पाणि निष्फलानि भवन्ति मे । पुष्पभारसमृद्धानां वनानां शिशिरात्यये ॥ ४४ ॥

व्यापारः । उपहसन्निव प्रसन्नमुख इत्यर्थः । यद्वा कान्ताविरहिणं मामुपहसन्निवेत्युत्प्रेक्षा । अत्र शिष्याचार्ययोरन्योन्यप्रावण्यमुच्यते ॥ ३८ ॥ ३९ ॥ वने उपभोगयोग्ये देशे रावणः सीतां हृतवान् । न तु नगर इति हार्दो भावः, न हृता अस्य भाग्यवशादिति भावः । तस्मादित्यादि । एतादृशरम्यदेशकालेषु धन्याः कान्ताभिः क्रीडन्तीति भावः ॥ ४० ॥ असुमेवाशयमुद्घाटयति—मम त्विति । विना । सीतयेति शेषः ॥ ४१ ॥ रामानु०—ममेति । विना, सीतयेति शेषः । अस्य श्लोकस्य ममाप्येवमित्येतच्छ्लोकानन्तरावस्थानमुचितम् । वनदुर्गवर्णनप्रकरणस्वारस्यात् ॥ ४१ ॥ सम्यग्रागः संरागः तम्, कान्तानुरागमित्यर्थः । तिर्यग्योनिगतेषु तिर्यग्योनिजातेषु । लोके स्त्रियं पुमाननुवर्तते न तु स्त्री पुरुषम्, अतोतीवास्याः कामः । अहो वसन्तवैभव इति भावः ॥ ४२ ॥ विशालाक्षी मदवलोकनविस्फारितेक्षणा । जातसम्भ्रमा जातत्वरा । यदि नापहृता भवेत् तदा मामेवाभिवर्तेत । अत्र चापलं नाम सञ्चारिभावः ॥ ४३ ॥ शिशिरात्यये वसन्ते । पुष्पभारसमृद्धानां पुष्पाणि अमितानि पुष्पाणीत्यर्थः । संसारिदुःखं पश्यतो मे ज्ञानिलाभोऽकिञ्चित्कर इव भातीत्यर्थः ॥ ४४ ॥ रामानु०—पुष्पभारेति समं

पश्येति । मन्मथार्ता शिखिनी गिरिसानुषु नृत्यन्तं भर्तारं मयूरम् उपनृत्यति ॥ ३८ ॥ तामिति । रामां शिखिनीं रुतैरु(र)पहसन्निवेत्यर्थः ॥ ३९ ॥ "मयूरस्य" इति

मधुकरोत्करैरित्यन्तेन पुष्पभाराणां मकरन्दनिर्भरत्वं सूचितम् ॥ ४४ ॥ उक्तमर्थं विशिष्य दर्शयति—रुचिराण्यपीति । अतिश्रिया अत्यन्तकान्त्या । रुचिराण्यपि अस्म दनुपयोजनान्निष्फलानि भवन्ति । निर्भरमकरन्दभारिततया मधुकरसमूहैः समं महीं यान्ति ॥ ४५ ॥ वदन्तीति । शकुनाः मम कामोन्मादकराः सन्तः अन्योन्यमाह्वयन्त इव । कलं मधुरम् रावं वदन्ति, शब्दं कुर्वन्तीत्यर्थः । मम कामोन्मादकरणार्थं सङ्घीभवितुमन्योन्यमाह्वयन्त इवेत्युत्प्रेक्षा । अनेन

रुचिराण्यपि पुष्पाणि पादपानामतिश्रिया । निष्फलानि महीं यान्ति समं मधुकरोत्करैः ॥ ४५ ॥ वदन्ति रावं मुदिताः शकुनाः सङ्घशः कलम् । आह्वयन्त इवान्योन्यं कामोन्मादकरा मम ॥ ४६ ॥ वसन्तो यदि तत्रापि यत्र मे वसति प्रिया । नूनं परवशा सीता सापि शोचत्यहं यथा ॥ ४७ ॥ नूनं न तु वसन्तोऽयं देशं स्पृशति यत्र सा । कथं ह्यसितपद्माक्षी वर्तयेत्सा मया विना ॥ ४८ ॥ अथवा वर्तते तत्र वसन्तो यत्र मे प्रिया । किं करिष्यति सुश्रोणी सा तु निर्भर्त्सिता परैः ॥ ४९ ॥ श्यामा पद्मपलाशाक्षी मृदुपूर्वाभिभाषिणी । नूनं वसन्तमासाद्य परि त्यक्ष्यति जीवितम् ॥ ५० ॥ दृढं हि हृदये बुद्धिर्मम सम्प्रति वर्तते । नालं वर्तयितुं सीता साध्वी मद्विरहं गता ॥ ५१ ॥ मयि भावस्तु वैदेह्यास्तत्त्वतो विनिवेशितः । ममापि भावः सीतायां सर्वथा विनिवेशितः ॥ ५२ ॥

स्वदयोत्तम्भकज्ञानिव्यापार उक्तः ॥ ४६ ॥ शोचति शोचेत् ॥ ४७ ॥ गूढदेशप्रापणेन तद्देशे वसन्तप्रसङ्गाभावान्न तस्याः शोकप्रसक्तिरित्याशङ्क्य वसन्ताभावेपि मां विना न जीवितं धारयिष्यतीत्याह—नूनमिति ॥ ४८ ॥ वसन्तप्राप्तिमङ्गीकृत्याह—अथवेति ॥ ४९ ॥ रामा०—वसन्तगुणोपलम्भनपक्षे मदना तुरा परैर्भर्त्सिता च सा कामवस्थां प्रपद्यत इति संशयेनाह—अथवेति ॥ ४९ ॥ श्यामा यौवनमध्यस्था ॥ ५० ॥ उक्तमर्थं सहेतुकं द्रढयति—दृढं हीति । अस्यान्ते इति करणं द्रष्टव्यम् । वर्तयितुं जीवितुम् । नालं न समर्था ॥ ५१ ॥ रामा०—साध्वी विरहं गतेति च विशेषणद्वयं हेतुगर्भितम् ॥ ५१ ॥ अत्र हेतुमाह—मयीति । भावः अनुरागः । तत्त्वतः एकतत्त्वतया । सर्वथा "न चास्य माता न पिता न चान्यः स्नेहाद्विशिष्टोऽस्ति मया समो वा ।" इत्युक्तप्रकारेण । अनेन स्वस्य जीव श्लोकानन्तरं "मामप्येवम्" इति श्लोकः ॥ ४०—४७ ॥ नूनमिति । यत्र सा तं देशं वसन्तो न स्पृशति नूनम्, तथापि मया विना कथं कालं यापयेदिति खिद्यते—कथं हीति ॥ ४८—५० ॥ संत्यक्ष्यति जीवितमित्यत्र हेतुमाह—दृढं हीति । सीता वर्तयितुं जीवितुं नालं न समर्थेति मम हृदये वर्तत इति सम्बन्धः । साध्वी

सम्बन्धः स्वाभाविक उक्तः ॥ ५२ ॥ एवं वसन्तोद्दीपनतामुक्त्वा मलयमारुतोद्दीपनतामाह—एष इत्यादिना । पुष्पवहः पुष्पगन्धवहः । अनेन सौरभ्य मुक्तम्, सुखस्पर्श इत्यनेन मान्द्यम् । हिमावहः हिमवत्त्वावह इति शैत्यम् । "तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः" इत्यमरः । तां विचिन्तयतः विरहिण इत्यर्थः । पावकप्रतिमः सन्तापकर इत्यर्थः ॥ ५३ ॥ उक्तमर्थं विवृणोति—सदेति । आभ्यां संसारिण्यकिञ्चित्करी स्वदया स्वस्याप्यसह्येत्यु

एष पुष्पवहो वायुः सुखस्पर्शो हिमावहः । तां विचिन्तयतः कान्तां पावकप्रतिमो मम ॥ ५३ ॥ सदा सुखमहं मन्ये यं पुरा सह सीतया । मारुतः स विना सीतां शोकं वर्धयते मम ॥ ५४ ॥ तां विना स विहङ्गो यः पक्षी प्रणदितस्तदा । वायसः पादपगतः प्रहृष्टमभिनर्दति ॥ ५५ ॥ एष वै तत्र वैदेह्या विहगः प्रतिहारकः । पक्षी मां तु विशालाक्ष्याः समीपमुपनेष्यति ॥ ५६ ॥ पश्य लक्ष्मण सन्नादं वने मदविवर्धनम् । पुष्पिताग्रेषु वृक्षेषु द्विजानामुपकूजताम् ॥ ५७ ॥

च्यते ॥ ५४ ॥ मध्ये यत्किंचिदाश्वसनं दृष्टमनुवदति द्वाभ्याम्—तामिति । तदा प्रथमदर्शनकाले सीताया वियोगपूर्वकाले वा । वायसः पक्षी । विहङ्गः आकाशगतः सन् । यः प्रणदितः परुषं वाशितवान् । सः इदानीं तां विना तद्विरहावस्थायां पादपगतः सन् प्रहृष्टं यथा तथा अभिनर्दति । पूर्वमाकाशगतः सन् परुषनादेन तद्विश्लेषं सूचितवान्, इदानीं पादपगतः सन् प्रहृष्टनादेनास्याः संश्लेषं सूचयतीत्यर्थः ॥ ५५ ॥ एतदेव विवृणोति—एष इति । तत्र तदानीम् । प्रतिहारकः वियोजकः सन् । आभ्यां यादृच्छिकप्रासङ्गिकसुकृतदर्शनमुक्तम् ॥ ५६ ॥ पश्येति । अनेन परमपदे ज्ञानप्रधाने साम

मद्विरहं गतेति चाजीवनहेतुद्वयं द्रष्टव्यम् ॥ ५१–५३ ॥ सदेति । यं मारुतं पुरा सीतया सह वर्तमानकाले ॥ ५४ ॥ टी०–सम्प्रति सीताप्राप्तिसूचकं शकुनं व्यतिरेकान्वयमुखे नाह–तां विनेति । तदा पञ्चवट्यां सीतया सह वर्तमानकाले । वायसः पक्षी । विहङ्गः सन् विहायसा गच्छन् । संप्रणदितः परुषं भाषितवान् । इदानीं तां विना तया विहीनावस्थायां पादपगतः प्रहृष्टमभिनर्दति । पूर्वमाकाशगतः सन् परुषनादेन तस्या विश्लेषं सूचितवान्, इदानीं पादपगतः सन् प्रहृष्टनादेन तस्याः संश्लेषं सूचयतीत्यर्थः ॥ ५५ ॥ एतदेव विवृणोति–एष इति । एष खलु विहङ्गः विहायसा गच्छतीति विहङ्गः । तत्र तदानीम् । वैदेह्याः प्रतिहारकः अपहारकः, वियोजक इति यावत् । इदानीं तु स पक्षी मां तस्याः समीपमुपनेष्यतीति सम्बन्धः ॥ ५६ ॥ पश्येति । सन्नादं पश्य शब्दं शृण्वित्यर्थः ॥ ५७–६९ ॥

गायिनां नित्यमुक्तानां स्थितिरुक्ता ॥ ५७ ॥ रामा०—पश्येति । सनादं पश्य शब्दं शृण्वित्यर्थः ॥ ५७ ॥ पवनेन विक्षिप्तां कम्पितां प्रियामिव स्थितां तिलकमञ्जरीं षट्पदः भृङ्गोऽभ्येति । अनेन भगवद्दयाविषयभूतस्योत्तरक्षणे द्वयप्राप्तिर्भवितेत्युच्यते ॥ ५८ ॥ कामिनां विरहिणाम् । शोकवर्धनः दुःखवर्धनस्वभावः । स्वभावतो दुष्टप्रकृतिरित्यर्थः । अशोकः पवनोत्क्षिप्तैः वायुना पत्राणां बहिश्चालितैः स्तवकैः मां तर्जयन्निव स्थितः । त्वत्संहारार्थमिमे तत्तबाणाः पञ्च



विक्षिप्तां पवनेनैतामसौ तिलकमञ्जरीम् । षट्पदः सहसाभ्येति मदोद्धूतामिव प्रियाम् ॥ ५८ ॥ कामिनामयमत्यन्त मशोकः शोकवर्धनः । स्तबकैः पवनोत्क्षिप्तैस्तर्जयन्निव मां स्थितः ॥ ५९ ॥ अमी लक्ष्मण दृश्यन्ते चूताः कुसुम शालिनः । विभ्रमोत्सिक्तमनसः साङ्गरागा नरा इव ॥ ६० ॥ सौमित्रे पश्य पम्पायाश्चित्रासु वनराजिषु । किन्नरा नरशार्दूल विचरन्ति ततस्ततः ॥ ६१ ॥ इमानि शुभगन्धीनि पश्य लक्ष्मण सर्वशः । नलिनानि प्रकाशन्ते जले तरुणसूर्यवत् ॥ ६२ ॥ एषा प्रसन्नसलिला पद्मनीलोत्पलायुता । हंसकारण्डवाकीर्णा पम्पा सौगन्धिकायुता ॥ ६३ ॥ जले तरुणसूर्याभैः षट्पदाहतकेसरैः । पङ्कजैः शोभते पम्पा समन्तादभिसंवृता ॥ ६४ ॥ चक्रवाकयुता नित्यं चित्रप्रस्थवनान्तरा । मातङ्गमृगयूथैश्च शोभते सलिलार्थिभिः ॥ ६५ ॥ पवनाहितवेगाभिरूर्मिभिर्विमलेऽम्भसि पङ्कजानि विराजन्ते ताड्यमानानि लक्ष्मण ॥ ६६ ॥

वाणेन स्थापिताः इति भीपयन्निव स्थित इत्युत्प्रेक्षा । संसारिणमनुज्जीवयन्तं मां ज्ञानिनो लज्जितं कुर्वन्तीत्यर्थः ॥ ५९ ॥ पुनरपि ज्ञानिनां समृद्धिं दर्शयन्वर्णयति—अमी इत्यादिना । कुसुमशालिनः अत एव साङ्गरागाः । विभ्रमोत्सिक्तमनसः विलासगर्वितमनसः । रागिण इति यावत् । नरा इव भान्ति ॥ ६० ॥ सौमित्र इति । स्पष्टम् ॥ ६१ ॥ इमानीति । नलिनानि रक्तोत्पलानि । जलेतरुणसूर्यवत् प्रतितरङ्गं प्रतिफलितबालसूर्यवत् ॥ ६२ ॥ विरजादृष्ट्या पम्पां वर्णयति—एषेत्यादिभिश्चतुर्भिः । "सौगन्धिकं तु कह्लारम्" इत्यमरः । शोभत इति शेषः ॥ ६३ ॥ रामा०—पम्पा सौगन्धिकान्वितेति पाठः ॥ ६३ ॥ जल इति । पङ्कजैरभिसंवृतेत्यन्वयः ॥ ६४ ॥ चित्रप्रस्थवनान्तरा चित्रतीरवनपरिधाना । अन्तरं परिधानम् ॥ ६५ ॥ पवनाहितवेगाभिः पवनोत्पादित पवनेति । पवनाहतवेगाभिः पवनाहतसंजातवेगाभिरित्यर्थः ॥ ६६ ॥ ६७ ॥

वेगाभिः। ताडयमानानि कशाभिस्ताड्यमानानीव ॥६६॥ एवं पम्पादर्शनजकामोद्रेकमरत्यवस्थया दर्शयति–पद्मेति। "स एकाकी न रमेत" इतिवद्विरजातीरवासो मे न रोचत इति लक्ष्मणायाभिव्यनक्ति ॥६७॥ वामत्वं वक्रत्वम्। गतां दूरगताम्। स्मारयिष्यति स्मारयति। कल्याणतरवादिनीं शुभतरवचनशीलाम्। मृगमाहरेति चरमश्रुतमेव वाक्यमस्य हृदये वर्तते ॥ ६८ ॥ अद्यागतः इदानीं वर्तमानः। पुष्पिताः द्रुमाः येन स पुष्पितद्रुमः। सर्वथा

पद्मपत्रविशालाक्षीं सततं पङ्कजप्रियाम्। अपश्यतो मे वैदेहीं जीवितं नाभिरोचते ॥ ६७ ॥ अहो कामस्य वामत्वं यो गतामपि दुर्लभाम्। स्मारयिष्यति कल्याणीं कल्याणतरवादिनीम् ॥ ६८ ॥ शक्यो धारयितुं कामो भवेदद्यागतो मया। यदि भूयो वसन्तो मां न हन्यात् पुष्पितद्रुमः ॥ ६९ ॥ यानि स्म रमणीयानि तया सह भवन्ति मे। तान्येवाऽरमणीयानि जायन्ते मे तया विना ॥ ७० ॥ पद्मकोशपलाशानि द्रष्टुं दृष्टिर्हि मन्यते। सीताया नेत्रकोशाभ्यां सदृशानीति लक्ष्मण ॥ ७१ ॥ पद्मकेसरसंसृष्टो वृक्षान्तरविनिस्सृतः। निःश्वास इव सीताया वाति वायुर्मनोहरः ॥ ७२ ॥

कामो दुःसह इति उच्यते ॥ ६९ ॥ भोग्यस्य वसन्तस्य कुतो बाधकत्वम्? तत्राह–यानीति ॥ ७० ॥ नेत्रकोशाभ्यां नेत्रदलाभ्याम्। सीतानेत्रे स्मारयित्वा सन्तापयन्तीत्यर्थः ॥ ७१ ॥ रामानु०–पद्मकोशपलाशानि पद्ममुकुलोपरिदलानि। नेत्रकोशाभ्यां नेत्रकोशशब्देन नेत्रपिधानभूतपक्ष्मप्रदेश उच्यते ॥ ७१ ॥ सर्वप्राणिनां प्राणहेतुर्वायुरेवास्मत्सर्वस्वापहारं कुरुत इत्याह–पद्मेति। पद्मकेसरसंसृष्टः धूलीकरणं वायुकार्यम्। तथा च सर्वप्राणहेतुरेव सर्वधूलीकरणप्रवृत्तः, सर्वसंहारप्रवृत्त इत्यर्थः। यद्वा पद्माविरहात् पद्मकेसराणि प्रतिकूलानि सन्ति वायोः साहाय्यं कुर्वन्ति। "पादारुन्तुदमेव पङ्कजरजः" इति स्वजनसहजबाधकं कथं नास्मद्बाधकम्। राजसप्रकृतित्वादस्मानपि बाधितुमुपक्रमते। केसरशब्देन तत्स्थरजसोऽत्र विवक्षितत्वात्, किञ्जल्कानामानयनायोगात्, एतन्मूलं



अहो इति। वामत्वं कुटिलत्वम् ॥ ६८–७० ॥ पद्मकोशेति। पद्मकोशपलाशानि पद्ममुकुलोपरिदलानि। नेत्रकोशाभ्यां नेत्रकोशशब्देन नेत्रपिधानभूतपक्ष्मप्रदेशा उच्यन्ते। टीका–पद्मकेसरसंसृष्टम् इत्यनेन सौरभ्यमुक्तम्। वृक्षान्तरविनिस्सृत इत्यनेन मान्द्यमुक्तम् ॥ ७१–८४ ॥

कण्टकिसंसर्गः । पद्मकेसरसंसृष्टः नायं वातः किंतु केसरी । सिंहः इत्यपि ध्वनिः । यद्वा पद्मकेसरैः संसृष्टः । स्वयमेव संहारक्षमः । तदुपरि ससहायः । 
यद्वा रूपवान् ह्यसहायशूरः, रूपरहितोऽयं कथं न सहायमपेक्षेत ? रूपवान् दृढशरीर इत्यपि ध्वनिः । वायुर्बाधकश्चेत्त्वया पूर्वमेव परिहृत्य वर्तितव्यम्
तत्राह—वृक्षान्तरविनिस्सृतः । दूरे दृष्ट्वा परिहर्तुं शक्यते । वृक्षषण्डे पूर्वमात्मानं सङ्गोप्य स्थित्वा झटिति विनिर्गतः । यद्वा यथा राजकुमारः सौकुमार्येण
छायामार्गेणागच्छति तथायमपीत्यर्थः । यद्वा मन्मथतापेन विश्रमाय तरुच्छायमपि नाश्रयितुं क्षमते । यदि तेऽहं बाधकः तर्हि दूरादपसरेत्यत्राह—
निःश्वास इव सीतायाः । पूर्वपरिचितवदवभासमानतया परिहर्तुमपि न शक्नोमि । यद्वा सीतानिश्वासतुल्यतया सात्र किं वृक्षमूले निलीना समागच्छ
तीति चापलातिशयेनान्यत्र न चालितुं शक्नोमि । " सुरभिनिःश्वसिते दधतस्तृपाम् " इति निःश्वासस्य सौरभ्यं कविभिरुक्तम् । यद्वा न केवलमनिलः
सपरिकर एव वाधते, किं तु स्मारकतयापि वाति । न कदाचिदायाति । सर्वदायाति । सकलमपि काननं सविलासं संचरति । यद्वा । वाति " वा
गतिगन्धनयोः " स्वार्जितगन्धेन सर्वान् परवशीकरोति । एतादृशबाधकोपि न यः कश्चिदित्याह—वायुः सर्वोज्जीवनहेतुः । यद्वा " भीषास्माद्वातः
पवते " इति मत्तो भीतो मां भर्त्सयति । बाधनप्रकारमाह—मनोहरः । आन्तरमपि पदार्थमपहराति । पद्मकेसरसंसृष्ट इत्यनेन शैत्यमुक्तम् । वृक्षान्तर
विनिःसृत इत्यनेन मान्द्यम् । निःश्वास इव सीताया इति सौरभ्यम् । यद्वा पद्मकेसरसंसृष्ट इत्यनेन चोरसमाधिरुच्यते । स्वस्वरूपापरिज्ञानाय
भीरुजनभीपणाय च भस्मोद्धूलितवदनः समायाति । वृक्षान्तरविनिःसृतः । पथिकानां स्वसमीपागमनपर्यन्तं गूढतया स्थित्वा तेषु समीपमागतेषु
सपदि समुत्तिष्ठन्निव भाति । निःश्वास इव सीतायाः चिरपरिचित इव सरससँल्लापविशेषैः कस्ते ग्रामः किं ते नामेति सम्भाषमाण इव स्थितः । वाति
धनस्य हस्तगतिपर्यन्तं निःस्पृहतया ततस्ततः सञ्चरन्निव स्थितः । वायुः चौर्यं दृष्ट्वा केनचित् ग्रहीतुमुद्युक्तश्चेल्लाघवेन हस्तग्रहणानर्हः । मनोहरः
नापाततोपाहरत्, अपि तु सुगुप्तमपि । अनेन निर्हेतुकहरिदयाप्रवाह उपवर्ण्यते—पद्मकेसरसंसृष्टः । " ङ्यापोः संज्ञाछन्दसोः—" इति ह्रस्वः ।
पद्मायाः केसरैः तत्तुल्यानुरागैः संसृष्टः, पुरुषकारभूतलक्ष्मीप्रणयप्रवृत्त इत्यर्थः । " पितेव त्वत्प्रेयान् जननि परिपूर्णागसि जने हितस्रोतोवृत्त्या भवति
च कदाचित्कलुषधीः । किमेतन्निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता तदसि नः ॥ " वृक्षान्तरविनिःसृतः " ऊर्ध्वमूल
मधःशाखमश्वत्थं प्राहुरव्ययम् ।" इति वृक्षत्वेनोक्ते संसारमण्डले प्रवृत्तः । निःश्वास इव सीतायाः "स्त्रीप्रायमितरत्सर्वम्" इति परतन्त्रतया स्त्रीतुल्यानां
लोकानाम् आश्वासको धारकश्चेत्यर्थः । वाति अनवरतं प्रवहति । वायुः सार्वत्रिकः । मनोहरः मानसिकसकलकल्मपहरः । द्रविडोपनिषद्व्याख्या

कारैर्व्याख्यातोयं श्लोकः ॥ ७२ ॥ अथ विरजाया अर्वाक्प्रदेशवर्तिनां राजसतामससात्त्विकभेदभिन्नानां चेतनानां स्वरूपं स्वकटाक्षविषयभूतं दर्शयति–सौमित्र इत्यादिना । दक्षिण इत्यनेन पम्पादक्षिणतीरं क्रमेण प्रविष्ट इत्यवगम्यते । अनेन कर्णिकारवर्णनेन सत्यलोकादिषु जृम्भमाणा राजसी वृत्तिरुच्यते । यष्टिं लताम् ॥ ७३ ॥ अधिकमिति । अनेन ऋश्यमूकसमीपगमनं द्योतितम् । रजोवर्धकलोक उक्तः ॥ ७४ ॥ प्रदीप्ताः ज्वलिताः ॥ ७५ ॥ पम्पेत्यादिसार्धसप्तश्लोकाः । इमे उपशोभन्त इत्यन्वयः । तदुपरि दृश्यन्त इत्यन्वयः । संसक्ताः अविरलाः । मधुगन्धिन इति सर्वविशेषणम् ।

सौमित्रे पश्य पम्पाया दक्षिणे गिरिसानुनि । पुष्पितां कर्णिकारस्य यष्टिं परमशोभनाम् ॥ ७३ ॥ अधिकं शैलराजोऽयं धातुभिः सुविभूषितः । विचित्रं सृजते रेणुं वायुवेगविघट्टितम् ॥७४॥ गिरिप्रस्थास्तु सौमित्रे सर्वतः सम्प्रपुष्पितैः । निष्पत्रैः सर्वतो रम्यैः प्रदीप्ता इव किंशुकैः ॥ ७५ ॥ पम्पातीररुहाश्चेमे संसक्ता मधुगन्धिनः । मालतीमल्लिकाषण्डाः करवीराश्च पुष्पिताः ॥ ७६ ॥ केतक्यः सिन्धुवाराश्च वासन्त्यश्च सुपुष्पिताः । माधव्यो गन्धपूर्णाश्च कुन्दगुल्माश्च सर्वशः ॥ ७७ ॥ चिरिबिल्वा मधूकाश्च वञ्जुला वकुलास्तथा । चम्पकास्तिलकाश्चैव नागवृक्षाः सुपुष्पिताः ॥ ७८ ॥ नीपाश्च वरणाश्चैव खर्जूराश्च सुपुष्पिताः ॥ ७९ ॥ पद्मकाश्चोपशोभन्ते नीलाशोकाश्च पुष्पिताः ॥ ७९ ॥ लोध्राश्च गिरिपृष्ठेषु सिंहकेसरपिञ्जराः । अङ्कोलाश्च कुरण्टाश्च पूर्णकाः पारिभद्रकाः ॥ ८० ॥

लिङ्गवचनविपरिणामः कार्यः । एवं पुष्पितपदमपि । पम्पातीररुहा इमे मालत्यादयः पदार्था उपशोभन्ते इत्येकोन्वयः । मालती जातिः । मल्लिकाषण्डाः मल्लिकासमूहाः । करवीराः प्रसिद्धाः । सिन्धुवाराः निर्गुण्ड्यः । वासन्त्यः पीतवर्णपुष्पाः लताः । “ अत्र पीतायां वासन्ती हेमपुष्पिका ” इति वैजयन्ती । माधव्यः अतिमुक्तलताः । गन्धेन पूर्णाः गन्धपूर्णाः । कुन्दानां गुल्माः कक्षाः कुन्दगुल्माः । चिरिबिल्वाः नक्तमालाः । मधूकाः मधुद्रुमाख्या वृक्षाः । वञ्जुलाः वेतसाः । वकुलाः प्रसिद्धाः । तिलकाः क्षुरकाः । नागवृक्षाः नागकेसराः । नीपाः जलकदम्बाः । वरणाः वरणवृक्षाः । खर्जूराः प्रसिद्धाः । पद्मकाः पद्मपर्ण्याख्या वृक्षविशेषाः । लोध्राः शावरवृक्षाः । सिंहकेसरपिञ्जराः सिंहकेसरवर्णा इत्यर्थः । अङ्कोलाः निकोचकाः । कुरण्टाः पीतवर्णपुष्पाः

महासहाख्या गुल्माः । पूर्णकाः शाल्मलिभेदा वृक्षविशेषाः [illegible] । पाटलयः [illegible] आर्षः । कोविदाराः युगपत्रकाख्या वृक्षाः । मुचुलिन्दाः नारङ्गवृक्षाः । अर्जुनाः ककुभवृक्षाः । केतकानि हेमवर्णपुष्पाणि इति पूर्वस्माद्विशेषः । उद्दालकाः श्लेष्मातकवृक्षाः । शिरीषाः कपीतनाख्या वृक्षाः । शिंशुपाः भस्मगर्भाख्या वृक्षाः । धवाः मधुराख्या वृक्षविशेषाः । कुरवकाः रक्तवर्णपुष्पा महासहाख्या गुल्माः । रक्तपदं विस्पष्टार्थम् ।

चूताः पाटलयश्चैव कोविदाराश्च पुष्पिताः । मुचुलिन्दार्जुनाश्चैव दृश्यन्ते गिरिसानुषु ॥ ८१ ॥ केतकोद्दालकाश्चैव शिरीषाः शिंशुपा धवाः । शाल्मल्यः किंशुकाश्चैव रक्ताः कुरवकास्तथा । तिनिशा नक्तमालाश्च चन्दनाः स्पन्दनास्तथा ॥ ८२ ॥ पुष्पितान् पुष्पिताग्राभिर्लताभिः परिवेष्टितान् । द्रुमान् पश्येह सौमित्रे पम्पाया रुचिरान् बहून् ॥ ८३ ॥ वातविक्षिप्तविटपान् यथासन्नान् द्रुमानिमान् । लताः समनुवर्तन्ते मत्ता इव वरस्त्रियः ॥ ८४ ॥ पादपात्पादपं गच्छन् शैलाच्छैलं वनाद्वनम् । वाति नैकरसास्वादः सम्मोदित इवानिलः ॥ ८५ ॥ केचित्पर्याप्तकुसुमाः पादपा मधुगन्धिनः । केचिन्मुकुलसंवीताः श्यामवर्णा इवाबभुः ॥ ८६ ॥

तिनिशाः नेमिद्रुमाः । नक्तमालाः चिरिबिल्वभेदाः । चन्दनाः प्रसिद्धाः । स्पन्दनाः वृक्षविशेषाः ॥ ७६–८२ ॥ पुष्पितानिति । पम्पायाः सम्बन्धिन इति शेषः ॥ ८३ ॥ वातविक्षिप्तविटपान् वायुविधूतशाखानिति तात्कालिककान्तिविशेषोक्तिः । यथास[illegible] संस्प्रष्टुं शक्यते तथा आसन्नान् । समीपवर्तिन इत्यर्थः । इयता ग्रन्थेन विषयान्तरप्रवणाः प्राकृताः उक्ताः ॥८४॥ पादपात्पादपमिति । [illegible] कच्छमित्यपि ज्ञेयम् । नैकरसास्वादः अनेकमधुरसकवलनेन । संमोदितः सञ्जातसंमोद इव ॥ ८५ ॥ केचिदिति । पर्याप्तकुसुमा इत्यनेन मुकुलाल्पत्वम् । मुकुलसंवीता मुकुलैः समन्तात् वेष्टिता इत्यनेन विकसितपुष्पस्वल्पत्वं चावगम्यते । श्यामवर्णाः वृन्तवर्णेनेति भावः । आबभुः आभान्ति । लडर्थे लिट् ॥ ८६ ॥

पादपात्पादपमिति । नैकरसास्वादसंमोदित इव अनेकरसास्वादनेन जातसंमोद इव ॥८५॥ केचिदिति । पर्याप्तकुसुमा मुकुलसंवीताः । एतत्पुष्पमुकुलप्राचुर्याभिप्राये

मृष्टं रम्यम् । स्वादु रसवत् । रागमत्तः अभिनवपुष्पकुतूहलाकुल इत्यर्थः । अवलीयते सक्तो भवति ॥ ८७ ॥ रामा०–मधुलिप्सया पुष्पात्पुष्पान्तरं गच्छन्तं मधुकरं विलोक्योत्प्रेक्षते–इदमिति ॥ ८७ ॥ पुनर्मधुकरस्य चापलं दर्शयति–निलीयेति । निलीय क्वचित् पुष्पे क्षणमात्रं स्थित्वा । पुष्पान्तरे भूयसीमिव मधुसमृद्धिं दृष्ट्वा तत्क्षणादन्यत्र पुष्पे गच्छति । एवं सर्वत्रेति ज्ञापयितुं पम्पातरिद्रुमेष्वित्युक्तम् ॥ ८८ ॥ इयं भूमिः । स्वयं निपतितैः, अति

इदं मृष्टमिदं स्वादु प्रफुल्लमिदमित्यपि । रागमत्तो मधुकरः कुसुमेष्ववलीयते ॥ ८७ ॥ निलीय पुनरुत्पत्य सहसान्यत्र गच्छति । मधुलुब्धो मधुकरः पम्पातरिद्रुमेष्वसौ ॥ ८८ ॥ इयं कुसुमसङ्घातैरुपस्तीर्णा सुखाकृता । स्वयं निपतितैर्भूमिः शयनप्रस्तरैरिव ॥ ८९ ॥ विविधा विविधैः पुष्पैस्तैरेव नगसानुषु । विकीर्णैः पीतरक्ता हि सौमित्रे प्रस्तराः कृताः ॥ ९० ॥ हिमान्ते पश्य सौमित्रे वृक्षाणां पुष्पसम्भवम् ॥ ९१ ॥ पुष्पमासे हि तरवः सङ्घर्षादिव पुष्पिताः । आह्वयन्त इवान्योन्यं नगाः षट्पदनादिताः । कुसुमोत्तंसविटपाः शोभन्ते बहु लक्ष्मण ॥ ९२ ॥

सुकुमारैरित्यर्थः । कुसुमसङ्घातैः उपस्तीर्णा व्याप्ता सती । शयनप्रस्तरैः शयनास्तरणैरिव सुखाकृता सुखावहा कृता ॥ ८९ ॥ नगसानुषु विकीर्णैः विविधैः इतस्ततः स्वयं पतितैः पुष्पैः । विविधाः प्रस्तराः कृता हीत्युत्प्रेक्षा । विविधा इत्यस्य विवरणं पीतरक्ता इति । इदमुपलक्षणम् । नानावर्णा इत्यर्थः । क्वचित्पीतवर्णचम्पकादिपुष्पाणि पतितानि हेममयपर्यङ्क इव भान्ति । क्वचिद्रक्तवर्णकर्णिकारादिपुष्पाणि पतितानि पट्टवस्त्ररचिततल्पिमानीव । इत्येवं नानावर्णनानाशय्या इव भान्तीति भावः ॥ ९० ॥ हिमान्त इत्यर्धम् । हिमान्ते वसन्ते । वृक्षाणां पुष्पसम्भवं पुष्पसमृद्धिं वक्ष्यमाणस्य संक्षेपेणोक्तिः ॥ ९१ ॥ रामा०–हिमान्ते शिशिरादौ वृक्षाणां यः पुष्पसंभवोऽस्ति तम् । अस्मिन् काले पश्येत्यर्थः ॥ ९१ ॥ पुष्पेति । पुष्पमासे वसन्ते । सङ्घर्षात् पुष्पिता अमी तरवः षट्पदनादिताः सन्तः परस्परमाह्वयन्त इव । यूयं वयमिव न पुष्पिता इत्यन्योन्यं भृङ्गरवेण व्याजेन वदन्तीवेत्युत्प्रेक्षा । ॥ ८ ॥

णोक्तम् ॥८६॥ मधुलिप्सया पुष्पात्पुष्पान्तरं गच्छन्तं मधुकरं विलोक्योत्प्रेक्षते–इदमिति । मृष्टं शोधितम्, निर्दोषमित्यर्थः । स्वादु मधुरम् ॥८७॥८८॥ इयमिति । इयं भूमिः शयनप्रस्तरैः स्वयं निपतितैः कुसुमसङ्घातैरुपस्तीर्णा अत एव सुखाकृतिः । इमां पश्येति परेण संबद्ध्यते ॥८९॥ विविधा इति । नगसानुषु विशीर्णैर्विविधैस्तैरेव पुष्पैः पीतरक्ताः विविधाः प्रस्तराः कृता हीत्युत्प्रेक्षा ॥ ९० ॥ हिमान्त इति । हिमान्ते शिशिरान्ते वृक्षाणां पुष्पसंभवम् ॥ ९१ ॥ पुष्पमासे वसन्ते सङ्घर्षादिव

अर्धत्रयमेकान्वयम् वा । आह्वयन्त इवेत्युक्त्वा कुसुमोत्तंसविटपाः पुष्पोत्कटाः तरवः बहु अधिकं शोभन्त इति ॥ ९२ ॥ काममुद्दीपयन् । अन्यरतिदर्शनस्य उद्दीपकत्वादिति भावः ॥ ९३ ॥ यदिदं पम्पायाः रूपम् एवं मन्दाकिन्याश्च मनोहरं रूपम् । कथमेतत्साहश्यं तस्या इत्यत्राह—स्थान इति । मनोरमाः जगति विख्याताः तस्या गुणाः स्थाने युक्ताः ॥ ९४ ॥ ननु परपुरुषेणापहृता कथं रतये प्रार्थ्यते ? तत्राह—साध्वीति । वसेमहि । "भवांस्तु सह

एष कारण्डवः पक्षी विगाह्य सलिलं शुभम् । रमते कान्तया सार्धं काममुद्दीपयन् मम ॥ ९३ ॥
मन्दाकिन्यास्तु यदिदं रूपमेवं मनोहरम् । स्थाने जगति विख्याता गुणास्तस्या मनोरमाः ॥ ९४ ॥
यदि दृश्येत सा साध्वी यदि चेह वसेमहि । स्पृहयेयं न शक्राय नायोध्यायै रघूत्तम ॥ ९५ ॥
न ह्येवं रमणीयेषु शाद्वलेषु तया सह । रमतो मे भवेच्चिन्ता न स्पृहाऽन्येषु वा भवेत् ॥ ९६ ॥
अमी हि विविधैः पुष्पैस्तरवो रुचिरच्छदाः । काननेऽस्मिन् विना कान्तां चित्तमुन्मादयन्ति मे ॥ ९७ ॥

वैदेह्या गिरिसानुषु रंस्यते । अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥" इत्युक्तवता त्वया सह वसेमेत्याशयेन बहुवचनम् । शक्राय शक्रत्वाय । ऐश्वर्ये इन्द्रत्वस्य प्राथमिकत्वात्तथोक्तम् । "रुच्यर्थानां प्रीयमाणः" इति चतुर्थी । उत्तमं पुरुषं प्रति नासत्यमुच्यत इत्याशयेन रघूत्तमेत्युक्तिः ॥ ९५ ॥ रामा०—यदि चेह वसेन्मयि । मयि मत्समीपे ॥ ९५ ॥ उक्तेऽर्थे हेतुमाह—नहीति । रमतः रममाणस्य । हि यस्मात् । चिन्ता न भवेत् अयोध्यायां अलाभकृता चिन्ता न स्यात् । अन्येषु शक्रत्वादिषु । रहस्यप्येवंविधमानुषत्वभावनानुरूपं वचनं योगिनो बुध्येरन्निति ॥ ९६ ॥ रामा०—नहीति । न स्पृहान्येषु वा भवेदिति सम्यक् । अन्येषु ब्रह्मलोकादिषु ॥ ९६ ॥ अमी इति । विना वर्तमानस्येति शेषः ॥ ९७ ॥

पुष्पिता ये वृक्षास्तानपि पश्येति पूर्वेण सम्बन्धः ॥ ९२ ॥ ९३ ॥ मन्दाकिन्यास्त्विति । मन्दाकिन्यास्तत्प्रसिद्धरूपम् एवं मनोहरं यदि भवेत्तर्हि तस्या जगति विख्याता मनोहराः गुणाः स्थाने युक्ताः इति योजना । टीका०—मन्दाकिन्याश्चित्रकूटपर्वतवर्तिन्याः । स्थाने युक्ताः । " युक्ते द्वे साम्प्रतं स्थाने " इत्यमरः । रूपमेतन्मनोहरमिति पाठे—पम्पाया यदिदं मनोहरं रूपमस्ति, एतन्मन्दाकिन्या विद्यते चेत्तर्हि तस्या जगति विख्याता मनोहरा गुणाः स्थाने युक्ता इति योजना ॥ ९४ ॥ यदीति । मयि मत्समीपे । शक्राय शक्रत्वाय ॥ ९५ ॥ न हीति ।

पश्येत्यादिसार्धश्लोकः । पुष्करैः पद्मैः । आयुतां व्याप्ताम् । कारण्डवाः जलकाकाः । प्लवैः जलकुक्कुटैः । वराहेति । तीर इति शेषः ॥ ९८ ॥ अधिक मित्यर्धम् । विहङ्गमैः उक्तभिन्नैः ॥ ९९ ॥ स्मृत्वा वर्तमानस्येति शेषः ॥ १०० ॥ पुनस्त्वर्थः । विरहीकृतम् विरहिणमित्यर्थः । मृगीभिः सहितान् मृगान् पश्य, वैदेह्या विरहीकृतं मां पुनः पश्येत्यन्वयः । एतेषु सकलत्रेषु सुखं सञ्चरत्सु ममैकस्याहो कष्टावस्थेति भावः ॥ १०१ ॥ रामानु०–पुनः

पश्य शीतजलां चेमां सौमित्रे पुष्करायुताम् । चक्रवाकानुचरितां कारण्डवनिषेविताम् । प्लवैः क्रौञ्चैश्च सम्पूर्णां वराहमृगसेविताम् ॥ ९८ ॥ अधिकं शोभते पम्पा विकूजद्भिर्विहङ्गमैः ॥ ९९ ॥ दीपयन्तीव मे कामं विविधा मुदिता द्विजाः । श्यामां चन्द्रमुखीं स्मृत्वा प्रियां पद्मनिभेक्षणाम् ॥ १०० ॥ पश्य सानुषु चित्रेषु मृगीभिः सहितान् मृगान् । मां पुनर्मृगशावाक्ष्या वैदेह्या विरहीकृतम् ॥ १०१ ॥ व्यथयन्तीव मे चित्तं सञ्चरन्तस्ततस्ततः । अस्मिन् सानुनि रम्ये हि मत्तद्विजगणायुते ॥ १०२ ॥ पश्येयं यदि तां कान्तां ततः स्वस्ति भवेन्मम ॥ १०३ ॥ जीवेयं खलु सौमित्रे मया सह सुमध्यमा । सेवते यदि वैदेही पम्पायाः पवनं सुखम् ॥ १०४ ॥ पद्मसौगन्धिकवहं शिवं शोकविनाशनम् । धन्या लक्ष्मण सेवन्ते पम्पोपवनमारुतम् ॥ १०५ ॥

शब्दोऽप्यर्थे । मामपि पश्येति सम्बन्धः ॥ १०१ ॥ व्यथयन्तीति । सञ्चरन्तः, मृगादय इति शेषः ॥ १०२ ॥ पश्येयमित्यर्धम् । ततः तदा । स्वस्ति शुभम् ॥ १०३ ॥ जीवेयमिति स्पष्टम् ॥ १०४ ॥ पद्मकल्हारगन्धवहमिति लक्षणयार्थः । धन्याः सकान्ताः । पदप्रयोजनं त्वाचार्या ऊचुः ! पद्मं च सौगन्धिकं च पद्मसौगन्धिके । ते वहति प्रापयतीति पद्मसौगन्धिकवहम् । अत्र पद्मसौगन्धिकयोर्वहनानुपपत्तेस्तद्गन्धो लक्ष्यते । लक्षणायाश्च प्रयोजनेन भवितव्यम् । यथा गङ्गायां घोष इत्यत्र पावनत्वादि । तथात्र प्रयोजनम् । यथा पद्मस्यैव घ्राणसमीपानयनेपि उपरि स्थितः परिमलः शीतलो गृह्यते । नान्तः स्थित उष्णमिश्रः तथायं वायुरपि उपरिस्थशीतलपरिमलमादाय समागच्छतीत्यर्थः । यद्वा पद्मकेसरसंसृष्ट इत्यनुक्तेः पद्मसौगन्धिकोपरिवर्ति

अन्येषु ब्रह्मलोकादिषु ॥ ९६–९९ ॥ दीपयन्तीति । प्रियां स्मृत्वा स्थितस्य मे कामं द्रुमाः दीपयन्तीति सम्बन्धः ॥ १०० ॥ पश्येति । पुनःशब्दोऽप्यर्थे । मामपि पश्येति सम्बन्धः ॥ १०१ ॥ व्यथयन्तीति । सञ्चरन्तः मृगा इति शेषः ॥ १०२–१०४ ॥ पद्मेति । पद्मसौगन्धिकवहं पद्मसौरभवहम् । धन्याः

परिमलावह इत्यर्थः । गुणगुणिनोरभेदविवक्षया पद्मसौगन्धिकेत्युक्तिः । उभयोक्त्या नानापुष्पग्रथितमालिकाधारिण इव नानापुष्पपरिमलं वहतीत्यु च्यते । शिवं शुद्धम् । तथा चान्यासंस्पर्शितोक्त्या [illegible] इत्युच्यते । [illegible] विरहिणो दक्षिणपवनः शोकवर्धनः ननु शोक विनाशनः । तथा च जीवतो हि शोकं कुर्यात् जीवितापायकरणेन शोकधर्म्यभावाच्छोकविनाशनम् । धन्या एवंविधे मलयानिले वाति सति एकान्त



श्यामा पद्मपलाशाक्षी प्रिया विरहिता मया । कथं धारयति प्राणान् विवशा जनकात्मजा ॥ १०६ ॥
किन्नु वक्ष्यामि राजानं धर्मज्ञं सत्यवादिनम् । सीताया जनकं पृष्टः कुशलं जनसंसदि ॥ १०७ ॥
या मामनुगता मन्दं पित्रा प्रव्राजितं वनम् । सीता सत्पथमास्थाय क्वनु सा वर्तते प्रिया ॥ १०८ ॥
तया विहीनः कृपणः कथं लक्ष्मण धारये । या मामनुगता राज्याद्भ्रष्टं विगतचेतसम् ॥ १०९ ॥
तच्चार्वञ्चितपक्ष्माक्षं सुगन्धि शुभमव्रणम् । अपश्यतो मुखं तस्याः सीदतीव मनो मम ॥ ११० ॥
स्मितहास्यान्तरयुतं गुणवन्मधुरं हितम् । वैदेह्या वाक्यमतुलं कदा श्रोष्यामि लक्ष्मण ॥ १११ ॥

स्थलमन्वेष्य शयनपराः केचन सन्ति हि । सेवन्ते कदा समागमिष्यत्ययं पवन इत्यवसरप्रतीक्षा भवन्ति । सेवा ह्यवसरप्रतीक्षा । पम्पोपवनमारुतम् आकरादागताग्निमिव स्थितम् । समुद्रादुत्थितवडवानलमिवेत्यर्थः । ( प्रत्येकश्लोकव्याख्यानेप्ययमेवाभिप्राय उक्तः ) ॥ १०५ ॥ श्यामेति । विवशा प्राणत्यागेपि न स्वतन्त्रेत्यर्थः ॥ १०६ ॥ किन्विति । सीतया सह मम कुशलं पृष्ट इत्यर्थः ॥ १०७ ॥ मन्दं भाग्यरहितम् । "मूढाल्पापटुनिर्भाग्या मन्दाः स्युः" इत्यमरः । सत्पथं पतिव्रतामार्गमास्थाय अनुगतेत्यन्वयः ॥ १०८ ॥ धारये जीवामि । विगतचेतसं विकलहृदयम् ॥ १०९ ॥ अञ्चित पक्ष्माक्षम् अञ्चितानि पूजितानि, स्निग्धानीति यावत् । पक्ष्माणि ययोस्ते अञ्चितपक्ष्मणी अक्षिणी यस्य तत् । शुभं शोभमानम् । अव्रणम्, निर्दोषमित्यर्थः । व्रणकिणरहितं वा ॥ ११० ॥ स्मितेति । स्मितहास्यान्तरयुतं "कान्तस्मिता लक्ष्मण जातहासा" इत्युक्तरीत्या स्मितेन नैसर्गिक

सकान्ताः ॥१०५॥१०६॥ किन्विति । सीतयेति सहार्थे तृतीया । सीतया सहितस्य तव कुशलमिति पृष्टोऽहं जनकं किं वक्ष्यामीति सम्बन्धः ॥१०७॥ टीका—धारये प्राणानिति शेषः ॥ १०८ ॥ १०९ ॥ तदिति । अव्रणं निर्दोषम् ॥ ११० ॥ स्मितहास्यान्तरयुतं प्रसन्नहास्यविशेषेण युक्तम् । टी०—यद्वा स्मितं मन्दहासः, हास्यं प्रकटहासः, अन्तरम्

स्मितेन हास्यान्तरेण आगन्तुकहास्येन च युक्तम् । गुणवत् स्ववचनापेक्षया उत्कर्षवत् । मधुरं हितं प्रियहितम् । अतुलम् । "प्रियवादि च भूतानाम्" इत्युक्तरामवचनमप्यस्य न सदृशमित्यर्थः । संसारादुत्तीर्णस्य चेतनस्य "एतत्साम गायन्नास्ते" इत्युक्तसामध्वनिं कदा श्रोष्यामीति व्यञ्जयति ॥१११॥ स्वयं दुःखं प्राप्य स्थितापि स्वदुःखमप्रकाशयन्ती हर्षं भावयन्ती । साधु मन्मथार्तिनिवर्तकं वचनमभ्यभापत । पूर्वमिति शेषः । अनादिकालं मम

प्राप्य दुःखं वने श्यामा सा मां मन्मथकर्शितम् । नष्टदुःखेव हृष्टेव साध्वी साध्वभ्यभाषत ॥ ११२ ॥ किन्नु वक्ष्यामि कौसल्यामयोध्यायां नृपात्मज । क सा स्नुषेति पृच्छन्तीं कथं चातिमनस्विनीम् ॥११३॥ गच्छ लक्ष्मण पश्य त्वं भरतं भ्रातृवत्सलम् । नह्यहं जीवितुं शक्तस्तामृते जनकात्मजाम् ॥ ११४ ॥ [ इति रामस्तु विलपन् हतनौरिव सागरे । न ददर्श तदा पारं शोकस्य पुरुषर्षभ ॥ ] इति रामं महात्मानं विलपन्तमनाथवत् । उवाच लक्ष्मणो भ्राता वचनं युक्तमव्ययम् ॥ ११५ ॥ संस्तम्भ राम भद्रं ते मा शुचः पुरुषोत्तम । नेदृशानां मतिर्मन्दा भवत्यकलुषात्मनाम् ॥ ११६ ॥

कैङ्कर्ययोग्यो जीव इत्यर्थः ॥ ११२ ॥ सा स्नुषा क कथं कीदृक्प्रकारेति पृच्छन्तीं कौसल्यां किं वक्ष्यामि । अतिमनस्विनीमित्यनेन यथार्थं वक्ष्यामि चेत्तदानीमेव वात्सल्यातिशयान्नश्येदित्युच्यते ॥ ११३ ॥ किमत्र युक्तं तत्राह–गच्छेति । ऋते विना ॥ ११४ ॥ रामानु०–न ह्यहं जीवितुं शक्तस्तामृते जनकात्मजामित्यस्यानन्तरम् इति रामस्तु विलपन्नित्यादयः केचन श्लोकाः कतिपयकोशेषु दृश्यन्ते । ते बहुकोशेष्वदृष्टत्वाद्वाल्मीकिपाकाप्रतीतेश्च तैर्विना कथासङ्गत्युपपत्तेश्च न व्याख्याताः॥११४॥ इतीति । अव्ययं युक्तिभिरविनाश्यम् ॥११५॥ संस्तम्भ संस्तम्भस्व, धैर्यमवलम्बस्वेत्यर्थः । अकलुषात्मनां सधैर्यहृदयानाम् । ईदृशानां त्वादृशानाम् ।

अवसरः, यथावसरं तद्युक्तमित्यर्थः । गुणवत् उपचारवत् ॥ १११ ॥ टीका–प्राप्येति । श्यामासम्पूर्णयौवना, उपभोगयोग्येति यावत् । मन्मथकर्शितं मन्मथपीडितम् अल्पकालविलम्बमप्यसहमानमित्यर्थः । तथापि नष्टदुःखेव सा मनोनुकूलं यथा भवति तथा । अभ्यभाषत अभिमुखी भाषते ॥ ११२ ॥ किं न्विति । सा स्नुषा कुत्र वर्तते कथं च किंप्रकारेति च पृच्छन्तीं कौसल्यां किन्तु वक्ष्यामि यथावृत्तं वक्ष्यामि अन्यद्वक्ष्यामि वा । उभयमपि वक्तुं न शक्यमिति भावः । टी०–इदं मदीयं दुःखं तावदास्ताम्, वनवासानन्तरं गतेन मया बन्धुविषयप्रश्नोपि दुस्तर इत्याह–किन्न्विति ॥ ११३ ॥ ११४ ॥ इति राममिति । अव्ययम् युक्तिभिः खण्डितुमशक्यम ॥ ११५ ॥ ११६ ॥

मन्दा अल्पा, कलुषितेत्यर्थः ॥ ११६ ॥ वियोगजं दुःखं भवतीत्येतच्छोकवृत्तं स्मृत्वा तद्धेतुभूतं प्रियजनविषयातिस्नेहं त्यजेत्यर्थः । तत्र श्लेषगर्भमर्थान्तरं न्यस्याति अतीति । स्नेहः प्रीतिः तैलं च । अतः वात्सल्यप्रवृत्तिं विहाय चेतनसन्तरणोपायं चिन्तयेत्यर्थः ॥ ११७ ॥ न भविष्यति विनशिष्यतीत्यर्थः ॥ ११८ ॥ प्रवृत्तिर्वार्ता ॥ ११९ ॥ अदितेः इन्द्रस्य मातुः ॥ १२० ॥ स्वास्थ्यं धैर्यम् । नष्टकार्यार्थैः नष्टकार्यरूपप्रयोजनैः पुरुषैः । अयत्नेन

स्मृत्वा वियोगजं दुःखं त्यज स्नेहं प्रिये जने । अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्रापि दह्यते ॥ ११७ ॥ यदि गच्छति पातालं ततो ह्यधिकमेव वा । सर्वथा रावणस्तावन्न भविष्यति राघव ॥ ११८ ॥ प्रवृत्तिर्लभ्यतां तावत्तस्य पापस्य रक्षसः । ततो हास्यति वा सीतां निधनं वा गमिष्यति ॥ ११९ ॥ यदि यात्यदितेर्गर्भं रावणः सह सीतया । तत्राप्येनं हनिष्यामि न चेद्दास्यति मैथिलीम् ॥ १२० ॥ स्वास्थ्यं भद्रं भजस्वार्य त्यज्यतां कृपणा मतिः । अर्थो हि नष्टकार्यार्थैरयत्नेनाधिगम्यते ॥ १२१ ॥ उत्साहो बलवानार्य नास्त्युत्साहात्परं बलम् । सोत्साहस्यास्ति लोकेऽस्मिन् न किञ्चिदपि दुर्लभम् ॥ १२२ ॥ उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु । उत्साहमात्रमाश्रित्य सीतां प्रतिलभेमहि ॥ १२३ ॥ त्यज्यतां कामवृत्तत्वं शोकं संन्यस्य पृष्ठतः । महात्मानं कृतात्मानमात्मानं नावबुद्ध्यसे ॥ १२४ ॥

यत्नाभावेन ॥ १२१ ॥ रामानु०—स्वास्थ्यं स्वभावावस्थानं धैर्यमिति यावत् ॥ १२१ ॥ अतो यत्नः कर्तव्य इत्याह द्वाभ्याम्—उत्साह इत्यादिभ्याम् ॥ १२२ ॥ १२३ ॥ कामे वृत्तो व्यापारो यस्य स तथा तस्य भावस्तत्त्वम् । पृष्ठतः संन्यस्य तिरस्कृत्येत्यर्थः । आत्मानम् कृतात्मानं शिक्षितमनस्कम् । महात्मानं महाधैर्यम् नावबुद्ध्यसे । तस्मात्त्यज्यतामित्यन्वयः । किं वात्सल्येन तप्यसे । "साधुकारी साधुर्भवति पापकारी पापी भवति" इति भवद्भिरेव स्मृत्वेति । वियोगजं दुःखं स्मृत्वा प्रिये जने स्नेहं त्यज । कुतः ? अतिस्नेहेति ॥ ११७–१२० ॥ स्वास्थ्यमिति । स्वास्थ्यं धैर्यमित्यर्थः । अर्थो हीति । नष्टकार्यार्थैः नष्टकार्यरूपप्रयोजनैः । पुरुषैः नष्टधैर्यैः पुरुषैर्वा अर्थः प्रयोजनः अयत्नेन नाधिगम्यते ॥ १२१–१२३ ॥ त्यज्यतामिति । आत्मानं कृतात्मानं शिक्षितान्तःकरणम् ।

स०—अतिस्नेहकरणे कदाचिद्वियोगेन दुःखं भवति । अतो वियोगजं दुःखं स्मृत्वा प्रिये जने स्नेहं त्यज । तदेव दृष्टान्तेनाह—अतीति । आर्द्रापीत्यनेन विरोधाभासस्सूच्यते । लोके आर्द्रवस्तुनो दाहाभावात् ॥ ११७ ॥

कृतां शास्त्रमर्यादां किं नावबुद्ध्यस इत्यर्थः ॥ १२४ ॥ एवमिति । अत्र शोकमोहशब्दाभ्यां दयावात्सल्ये उच्येते । तयोस्त्यागो नाम शास्त्रमर्यादानुसारेण चेतनरक्षणोद्योगः ॥१२५॥ अभ्यतिक्रामत्, अनित्यत्वादडभावः । पारिप्लवद्रुमां चञ्चलद्रुमाम् । अनेन भगवतः संसारिमण्डलाभिमुख्यं सूचितम् ॥१२६॥ सर्गार्थं पुनः सङ्क्षेपेण दर्शयति द्वाभ्याम्-निरीक्षमाण इति । विचार्य सीतामन्विष्येत्यर्थः ॥ १२७ ॥ मत्तगजवत् विलासेन गन्तुं शील

एवं सम्बोधितस्तत्र शोकोपहतचेतनः । न्यस्य शोकं च मोहं च ततो धैर्यमुपागमत् ॥ १२५ ॥ सोऽभ्यतिक्रामदव्यग्रस्तामचिन्त्यपराक्रमः । रामः पम्पां सुरुचिरां रम्यपारिप्लवद्रुमाम् ॥ १२६ ॥ निरीक्षमाणः सहसा महात्मा सर्वं वनं निर्झरकन्दरांश्च । उद्विग्नचेताः सह लक्ष्मणेन विचार्य दुःखोपहतः प्रतस्थे ॥ १२७ ॥ तं मत्तमातङ्गविलासगामी गच्छन्तमव्यग्रमना महात्मा । स लक्ष्मणो राघवमप्रमत्तो ररक्ष धर्मेण बलेन चैव ॥ १२८ ॥ तावृश्यमूकस्य समीपचारी चरन् ददर्शाद्भुतदर्शनीयौ । शाखामृगाणामधिपस्तरस्वी वितत्रसे नैव चिचेष्ट किञ्चित् ॥ १२९ ॥

मस्यास्तीति तथा । अनेन वनदुर्गप्रदेशेऽपि निर्भयसञ्चारित्वमुच्यते । अव्यग्रमनाः अचञ्चलचित्तः, अप्रकम्प्यरामविषयप्रेमभार इत्यर्थः । महात्मा अप्रच्युतधैर्यः । अप्रमत्तः गमनसौन्दर्यानुभवेप्यसक्तः । सः "रामे प्रमादं मा कार्षीः पुत्र भ्रातरि गच्छति ।" इति सुमित्रया सन्दिष्टः । लक्ष्मणः कैङ्कर्यलक्ष्मीयुक्तः । तं सीतावियोगार्तम् । गच्छन्तं 'मत्तमातङ्गगामिनम्' इत्युक्तरीत्या गमनचारुतया सर्वान् वशीकुर्वन्तं राघवम् । धर्मेण संस्तम्भेत्यादिराजनीतिकथनेन, बलेन 'तत्राप्येनं हनिष्यामि' इति स्वबलकथनेन च । ररक्ष निर्दुःखमकरोत् ॥१२८॥ अथ सीताप्राप्तिबीजमुपक्षिपति-ताविति । ऋश्यमूकस्य ऋश्यमूकाख्यपर्वतस्य । समीपचारी समीपसञ्चरणशीलः । वालिभयादिति शेषः । चरन् कदाचित्पम्पोपान्ते पर्यटन् । अद्भुतं यथा भवति तथा दर्शनीयौ । शाखामृगाणां वानराणाम् अधिपः सुग्रीवः । तरस्वी बलवान् । वितत्रसे तत्रास । व्यत्ययेनात्मनेपदम् । भीतोऽभूत् । न चिचेष्ट न चिचेष्टे । व्यत्ययेन परस्मैपदम् । स्तब्धोऽभूदित्यर्थः ॥ १२९ ॥



महात्मानं महाधृतिम्, परमात्मानं वा किं न बुद्ध्यस इत्यर्थः । टी०-कामवृत्तत्वं मन्मथपरतन्त्रत्वम् ॥१२४॥१२५॥ पारिप्लवद्रुमां चञ्चलद्रुमां तां पम्पामतिक्रामत् अत्यक्रामत् ॥१२६॥१२७॥ धर्मेण बलेन च "संस्तम्भ राम भद्रं ते" इत्यादिराजनीतिरूपधर्मकथनेन "तत्राप्येनं हनिष्यामि" इत्यादिस्वबलकथनेन चेत्यर्थः ॥१२८॥ ताविति ।

तत्र पम्पावने । विषादचिन्ताभयहेतव उत्तरश्लोके व्यक्तीभविष्यन्ति ॥ १२९ ॥ न केवलं सुग्रीव एव त्रस्तः, तत्सचिवा अपीत्याह—तमिति । आश्रमं मतङ्गाश्रमम् । पुण्यं धर्मवर्धकम् । सुखं सुखकरम् । शरण्यं मुनिजनवासयोग्यम् । सदैव वानरसेवितान्तम्, वानरसेवितमध्यमिति दुष्प्रवेशत्वोक्तिः । तौ दृष्ट्वा हरयः वानराः वित्रस्ताः । मुनिवेषेण वालिप्रेरितौ समागताविति शङ्कयेति भावः । हरयः तौ दृष्ट्वा त्रस्ताः सन्तः आश्रममभिजग्मु

स तौ महात्मा गजमन्दगामी शाखामृगस्तत्र चिरं चरन्तौ । दृष्ट्वा विषादं परमं जगाम चिन्तापरीतो भयभारमग्नः ॥१३०॥ तमाश्रमं पुण्यसुखं शरण्यं सदैव शाखामृगसेवितान्तम् । त्रस्ताश्च दृष्ट्वा हरयोभिजग्मुर्महौजसौ राघव लक्ष्मणौ तौ ॥ १३१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे प्रथमः सर्गः ॥१॥

तौ तु दृष्ट्वा महात्मानौ भ्रातरौ रामलक्ष्मणौ । वरायुधधरौ वीरौ सुग्रीवः शङ्कितोऽभवत् ॥ १ ॥
उद्विग्नहृदयः सर्वा दिशः समवलोकयन् । न व्यतिष्ठत कस्मिंश्चिद्देशे वानरपुङ्गवः ॥ २ ॥

रित्यन्वयः । अस्मिन् सर्गे सार्धत्रिंशदुत्तरशतश्लोकाः ॥ १३१ ॥ रामानु०—तमिति । तं मतङ्गशापाद्वालिनो दुष्प्रवेशत्वेन प्रसिद्धम् । हरयः सुग्रीवादयः । बहुवचनप्रयोगस्तु सचिवापेक्षया । एतदुपरितनसर्गे व्यक्तीभविष्यति ॥ १३१ ॥ इति श्रीगोविन्द० श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥

अथ सुग्रीवेण हनुमत्प्रेषणं द्वितीये—तौ त्वित्यादि । महात्मानौ महाशरीरौ, भद्राकृती इत्यर्थः । वरायुधधरौ अत एव वीरौ ॥ १ ॥ उद्विग्नहृदयः

शाखामृगाणामधिपः सुग्रीवः तौ रामलक्ष्मणौ ददर्श । ततः तस्य सुग्रीवस्य चित्तं विभ्रान्तिमत् बभूवेति सम्बन्धः ॥ १२९ ॥ १३० ॥ तमाश्रमं मतङ्गशापात् वालिनो दुष्प्रवेशत्वेन प्रसिद्धं मतङ्गाश्रमम् । हरयः सुग्रीवादयः, त्रस्ताः वालिप्रेरिताविति बुद्ध्या भीताः ॥ १३१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां प्रथमः सर्गः ॥ १ ॥ ॥ १ ॥ २ ॥

टीका—तमिति । तमाश्रमं मतङ्गशापाद्वालिनो दुष्प्रवेशत्वेन प्रसिद्धं मतङ्गाश्रमम् । हरयः सुग्रीवादयः । त्रस्ताः वालिप्रेरितबुद्ध्या भीताः । पुण्यं पवित्रम् । सुखं सुखकरम्, अनयोः पदयोर्विशेषणसमासः । अयं श्लोकः उत्तरसर्गार्थसङ्ग्राहकः । एवमेवान्येषु पुराणेषु पम्पादर्शनेन रामस्य कामार्तत्वं प्रतिपादितम् । अत एव रामो विरहभरेण भ्रमरादीन् शशापेत्युक्तं स्कान्दे—“ वैमुख्यं गन्धफल्यास्तु भ्रमरानशपत्प्रभुः । कोकाभिशीये विश्लेषं पिकमन्यविवर्द्धनम् । चन्दनं सर्पनिलयं वायुं सर्पाशनं तथा । ज्योत्स्नां कलङ्कसञ्छन्नां शशाप रघुनन्दनः ॥ ” इति ॥ १३१ ॥

भीतमनस्कः ॥ २ ॥ स्थाने स्वस्थाने, निश्चलत्व इति यावत् । व्यवससाद दुःखितमभूत् ॥ ३ ॥ धर्मे राजधर्मे आत्मा मतिर्यस्य स धर्मात्मा । अनुचरैः मन्त्रिभिः सह । चिन्तयित्वा गुरुलाघवं विमृश्य । स्थाने पलायने च गुरुलाघवं विमृश्य च परमोद्विग्नोऽभवत् ॥ ४ ॥ रामलक्ष्मणौ तत्स्वभावं शशंस ॥ ५ ॥ प्रणिहितौ चारौ । छद्मना ऋषिवेषव्याजेन ॥ ६ ॥ जग्मुः । सुग्रीववचने हितत्वबुद्ध्येति शेषः ॥ ७ ॥ अधिगम्य नानादिक्षु पलायिताः

नैव चक्रे मनः स्थाने वीक्षमाणो महाबलौ । कपेः परमभीतस्य चित्तं व्यवससाद ह ॥ ३ ॥ चिन्तयित्वा स धर्मात्मा विमृश्य गुरुलाघवम् । सुग्रीवः परमोद्विग्नः सर्वैरनुचरैः सह ॥ ४ ॥ ततः स सचिवेभ्यस्तु सुग्रीवः प्लवगाधिपः । शशंस परमोद्विग्नः पश्यंस्तौ रामलक्ष्मणौ ॥ ५ ॥ एतौ वनमिदं दुर्गं वालिप्रणिहितौ ध्रुवम् । छद्मना चीरवसनौ प्रचरन्ताविहागतौ ॥ ६ ॥ ततः सुग्रीवसचिवा दृष्ट्वा परमधन्विनौ । जग्मुर्गिरितटात्तस्मादन्यच्छिखरमुत्तमम् ॥ ७ ॥ ते क्षिप्रमधिगम्याथ यूथपा यूथपर्षभम् । हरयो वानरश्रेष्ठं परिवार्योपतस्थिरे ॥ ८ ॥ एकमेकायनगताः प्लवमाना गिरेर्गिरिम् । प्रकम्पयन्तो वेगेन गिरीणां शिखराण्यपि ॥ ९ ॥

एकत्र समागम्य ॥ ८ ॥ पुनरपि गिरेर्गिरिं प्लवमानाः गिरीणां शिखराण्यपि प्रकम्पयन्तः । एकायनगताः क्रमेणैकस्थानगताः सन्तः । एकम् एकाकिनं सुग्रीवमुपतस्थिर इत्यनुषङ्गः । एवमेकायनगता इति पाठे—एवम् उक्तरीत्या । एकायनगतास्ते प्रकम्पयन्तोऽभवन्निति योजना ॥ ९ ॥ रामानु०—एवमिति पाठः । अपिशब्दो भिन्नक्रमः । एवमेकायनगता अपि पूर्वोक्तप्रकारेणैकस्थानगता अपि गिरीणां शिखराणि प्रकम्पयन्तः गिरेर्गिरिं प्लवमानाः । जग्मुरिति शेषः । अत्र गिरिशब्दो गिर्येकदेशवाची । एकमेकायनगता इति पाठे—एकं पलायनेन एकाकिनं यूथपर्षभं सुग्रीवमधिगम्य । अत एव एकायनगता एकस्थानगताः परिवार्योपतस्थिर इति पूर्वेण सम्बन्धः ॥ ९ ॥

नैवेति । तौ वीक्षमाणौ मनः स्थाने न चक्रे न स्थापयामास । व्यसनात्कर्तव्यताशून्योऽभूदित्यर्थः ॥ ३ ॥ धर्मात्मा धर्मे राजधर्मे आत्मा मतिर्यस्य स तथोक्तः " आत्मा यत्नो धृतिर्बुद्धिः " इत्यमरः । सुग्रीवः अनुचरैर्मन्त्रिभिस्सह चिन्तयित्वा गुरुलाघवं विमृश्य अवस्थाने पलायने च गुरुलाघवं विमृश्य परमोद्विग्नोऽभवदिति सम्बन्धः ॥ ४–८ ॥ एवमिति पाठः । एवमेकायनगता अपि पूर्वोक्तप्रकारेण एकस्थानगता अपि गिरीणां शिखराणि प्रकम्पयन्तः गिरेः गिरिं प्लवमानाः जग्मुरिति शेषः । एकमेकायनगता इति पाठे—एकाकीभूय भयेन पलायन्तम् अत एव एकम् एकाकिनं यूथपर्षभं सुग्रीवमभिगम्य अत एव एकायनगताः

दुर्गं गिरिः ॥१०॥ आप्लवन्तो ययुः, नतु मन्दं गच्छन्तीत्यर्थः ॥ ११ ॥ पर्वतेन्द्रम् ऋश्यमूकम् । पर्वतान्तरेषु तत्र तत्र गत्वा पुनस्तमेव ऋश्यमूकं ययुरित्यर्थः ॥१२॥ रामा०—पर्वतेन्द्रम् ऋश्यमूकैकदेशम् ॥ १२ ॥ वालिकिल्बिषेण वालिकपटेन शङ्कितम् । वालिना प्रेषिताविमाविति शङ्कितमित्यर्थः ॥१३॥ वालिनिमित्तं सम्भ्रमस्त्यज्यताम् । मलय इति पर्वतमात्रस्य नाम । अयं मलयः अयं पर्वतः गिरिवरः ऋश्यमूक इत्यर्थः ॥ १४ ॥ रामा०—मलयोऽयमृश्यमूकावयव

ततः शाखामृगाः सर्वे प्लवमाना महाबलाः । बभञ्जुश्च नगांस्तत्र पुष्पितान् दुर्गसंश्रितान् ॥ १० ॥ आप्लवन्तो हरिवराः सर्वतस्तं महागिरिम् । मृगमार्जारशार्दूलांस्त्रासयन्तो ययुस्तदा ॥ ११ ॥ ततः सुग्रीवसचिवाः पर्वतेन्द्रं समाश्रिताः । सङ्गम्य कपिमुख्येन सर्वे प्राञ्जलयः स्थिताः ॥ १२ ॥ ततस्तं भयसंविग्नं वालिकिल्बिषशङ्कितम् । उवाच हनुमान् वाक्यं सुग्रीवं वाक्यकोविदः ॥१३॥ सम्भ्रमस्त्यज्यतामेष सर्वैर्वालिकृते महान् । मलयोऽयं गिरिवरो भयं नेहास्ति वालिनः ॥१४॥ यस्मादुद्विग्नचेतास्त्वं प्रद्रुतो हरिपुङ्गव । तं क्रूरदर्शनं क्रूरं नेह पश्यामि वालिनम् ॥१५॥ यस्मात्तव भयं सौम्य पूर्वजात् पापकर्मणः । स नेह वाली दुष्टात्मा न ते पश्याम्यहं भयम् ॥ १६ ॥ अहो शाखामृगत्वं ते व्यक्तमेव प्लवङ्गम । लघुचित्ततयात्मानं न स्थापयसि यो मतौ ॥१७॥ बुद्धिविज्ञानसम्पन्न इङ्गितैः सर्वमाचर । न ह्यबुद्धिं गतो राजा सर्वभूतानि शास्ति हि ॥ १८ ॥

पर्वतः । 'पर्वताद्दृश्यमूकात्तु पुप्लुवे यत्र राघवौ' इति मलयस्यैव ऋश्यमूकशब्देन वक्ष्यमाणत्वात् ॥१४॥ वाली वेषान्तरधारी समागत इति भ्रमं वारयति—यस्मादित्यादिना । यस्मात् वालिनः । क्रूरं क्रूरकर्माणम् ॥ १५ ॥ यस्मादिति । पापकर्मणः अनुजभार्यापहारिणः । भयं भयहेतुम् ॥ १६ ॥ अहो इति । मतौ सम्यग्विचारे ॥ १७ ॥ रामा०—मतौ सम्यग्विचारविषयबुद्धौ ॥ १७ ॥ बुद्धिः सामान्यतो ज्ञानम्, विशेषतो ज्ञानं विज्ञानम्, इङ्गितम् अभिप्रायसूचको व्यापारः । सर्वं पूर्वोक्तप्रकारेण एकस्थानगताः । यद्वा एकायनगताः । एकमार्गगताः "अयनं वर्त्ममार्गाध्वपन्थानः" इत्यमरः । सुग्रीवेण एकसुखदुःखा हरयः परिवार्योपतस्थिरे इति पूर्वेण सम्बन्धः ॥ ९–११ ॥ तत इति । पर्वतेन्द्रम् ऋश्यमूकम् ॥ १२ ॥ १३ ॥ मलयः ऋश्यमूक इत्यर्थः । टीका—सम्भ्रमो भयम । मलयः ऋश्यमूकः । भयं नास्ति मतङ्गशापादस्य वालिनो दुष्प्रवेशत्वादिति भावः ॥ १४–१६ ॥ अहो इति । मतौ सम्यग्विचारविषयबुद्धौ ॥ १७ ॥ बुद्धिः सामान्यतो ज्ञानम्, विज्ञानं विशेषज्ञानम् । इङ्गितम्

कार्यम् । अबुद्धिम् अबुद्ध्यादिकम् ॥ १८ ॥ ततः शुभतरं तद्वाक्यादत्यन्तशुभम् ॥ १९ ॥ दीर्घा बाहवो ययोस्तौ दीर्घबाहू, इत्येवं सर्वत्र समासः ॥ २० ॥ वालिप्रणिहितौ नाहं वाली समागत इति बिभेमि, किन्तु तत्प्रेपिताविति मत्वेति भावः । एतादृशतदीयपुरुपस्य का प्रसक्तिस्तत्राह—राजान इति । अत्र राजविपये ॥२१॥ छन्नचारिणोऽरयः मनुष्येण शत्रुमता ज्ञेयाः । कुत इत्यत्राह विश्वस्तानामिति । विश्वस्तानां शत्रूणां रन्ध्रेषु प्रमादेषु सत्सु

सुग्रीवस्तु शुभं वाक्यं श्रुत्वा सर्वं हनूमतः । ततः शुभतरं वाक्यं हनूमन्तमुवाच ह ॥ १९ ॥ दीर्घबाहू विशालाक्षौ शरचापासिधारिणौ । कस्य न स्याद्भयं दृष्ट्वा ह्येतौ सुरसुतोपमौ ॥ २० ॥ वालिप्रणिहितावेतौ शङ्केऽहं पुरुषोत्तमौ । राजानो बहुमित्राश्च विश्वासो नात्र हि क्षमः ॥ २१ ॥ अरयश्च मनुष्येण विज्ञेयाश्छन्नचारिणः । विश्वस्ताना मविश्वस्ता रन्ध्रेषु प्रहरन्ति हि ॥ २२ ॥ कृत्येषु वाली मेधावी राजानो बहुदर्शनाः । भवन्ति परहन्तारस्ते ज्ञेयाः प्राकृतैर्नरैः ॥ २३ ॥ तौ त्वया प्राकृतेनैव गत्वा ज्ञेयौ प्लवङ्गम । इङ्गितानां प्रकारैश्च रूपव्याभाषणेन च ॥ २४ ॥ लक्षयस्व तयोर्भावं प्रहृष्टमनसौ यदि । विश्वासयन् प्रशंसाभिरिङ्गितैश्च पुनः पुनः ॥ २५ ॥

स्वयमविश्वस्ताः सन्तः प्रहरन्ति हि ॥ २२ ॥ कृत्येषु कर्तव्यकार्येषु । वाली मेधावी दूरदर्शी । स्वभावश्चायं राज्ञामित्याह राजान इति । राजानः बहुदर्शनाः बहूपायज्ञाः । परहन्तारो भवन्ति । ते प्राकृतैः दीनवेपधरैः नरैः ज्ञेयाः ॥ २३ ॥ प्राकृतेन प्राकृतवेषेण । इङ्गितानां भावसूचककायिक व्यापाराणाम् । प्रकारैरवान्तरभेदैः । रूपेण सौम्यासौम्यलक्षणेन । व्याभापणेन अन्योन्यसम्भापणेन च तौ ज्ञेयौ ॥ २४ ॥ यदि प्रहृष्टमनसौ

अभिप्रायसूचको व्यापारः ॥ १८ ॥ १९ ॥ टी०—दीर्घेति । सुरसुतः सुरराजः, तदुपमौ । " पार्थिवे तनये सुतः " इत्यमरः ॥ २० ॥ वालिप्रणिहिताविति एतौ शङ्के । कुतः ? ' राजानो बहुमित्राः ' राजानो वेषान्तरधारिभिर्मित्रैः शत्रून् घातयिष्यन्तीति भावः ॥ २१ ॥ अरयो विज्ञेयाः शोधनीयाः । कुतः ? अविश्वस्ताः अविश्वसनीयाः । अरयो विश्वस्तानां छिद्रेषु प्रहरन्ति, विश्वस्तानां संहारावकाशं दृष्ट्वा तान् प्रहरन्तीत्यर्थः ॥ टी०—तर्हि किं कर्तव्यमित्यत आह—अरयश्चेति । विश्वस्तानाम् अमायाविनामिति कर्मणि षष्ठी ॥ २२ ॥ बहुदर्शनाः अनेकोपायज्ञाः । प्राकृतैः दीनवेषधारिभिः ॥ २३ ॥ तावित्यादिश्लोकचतुष्टयमेकं वाक्यम् । प्राकृतेनैव प्राकृतवेषधारिणैव । इङ्गितानां भावसूचकदेहव्यापाराणाम् । प्रकारैः भेदैः । रूपव्याभाषणेन च रूपेण सौम्यासौम्यरूपेण व्याभाषणेन अन्योन्यसम्भाषणेन च तयोर्भावं लक्षयस्व । यदि प्रहृष्टमनसौ

यदि शुद्धभावौ । तदा प्रशंसाभिः तदनुकूलेङ्गितैश्च पुनः पुनः विश्वासयन् ममैवाभिमुखम् अनुकूलं यथा भवति तथा । स्थित्वा स्थापयित्वा । धनुर्धरौ धनुर्धरतया अत्र वने प्रवेशस्य प्रयोजनं पृच्छ ॥ २५ ॥ २६ ॥ शुद्धेति । यद्येतौ शुद्धात्मानौ तदा पुनरपि जानीहि । किं तेनेत्यत्राह व्याभाषितैरिति । वाकारश्चार्थः । अदुष्टतेति च्छेदः ॥ २७ ॥ रामानु०—तावित्यादि । रूपव्याभाषणेन च तयोर्भावं लक्षयस्व । यदि प्रदुष्टमनसौ प्रशंसाभिरिङ्गितैश्च

ममैवाभिमुखं स्थित्वा पृच्छ त्वं हरिपुङ्गव । प्रयोजनं प्रवेशस्य वनस्यास्य धनुर्धरौ ॥ २६ ॥ शुद्धात्मानौ यदि त्वेतौ जानीहि त्वं प्लवङ्गम । व्याभाषितैर्वा विज्ञेया स्याद्दुष्टादुष्टता तयोः ॥ २७ ॥ इत्येवं कपिराजेन सन्दिष्टो मारुतात्मजः । चकार गमने बुद्धिं यत्र तौ रामलक्ष्मणौ ॥ २८ ॥ तथेति संपूज्य वचस्तु तस्य तत्कपेः सुभीमस्य दुरासदस्य च । महानुभावो हनुमान्ययौ तदा स यत्र रामोऽतिबलश्च लक्ष्मणः ॥ २९ ॥ इत्यार्षे श्रीरामायणे श्रीवाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे द्वितीयः सर्गः ॥ २ ॥

वचो विज्ञाय हनुमान् सुग्रीवस्य महात्मनः । पर्वतादृश्यमूकात्तु पुप्लुवे यत्र राघवौ ॥ १ ॥

पुनः पुनर्विश्वासयन् ममैवाभिमुखं यथा भवति तथा । स्थित्वा स्थापयित्वा । अस्य वनस्य प्रवेशस्य प्रयोजनं पृच्छ । धनुर्धरावेतौ शुद्धात्मानौ यदि तदानीमपि पूर्वोक्तप्रकारेण तौ मदीयौ कृत्वा आगमनप्रयोजनं जानीहि ॥ २४–२७ ॥ सुग्रीववचनं समीचीनममन्यतेत्याह—इतीति ॥ २८ ॥ संपूज्य श्लाघयित्वा । सुभीमस्य दुरासदस्येत्येताभ्यां सुनीतित्वं सूचितम् । महानुभावः वेषान्तरधारणसमर्थः । सः हनुमान् । यत्र रामो लक्ष्मणश्च तं देशं ययावित्यन्वयः ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्वितीयः सर्गः ॥ २ ॥ प्रथमे सर्गे वैकुण्ठवासिनो भगवतः स्वीयेषु केषांचित् स्वपरत्वे वर्तमाने केषांचिद्विषयान्तरप्रावण्यमवलोक्य दूयमानमानसस्य दयावृत्तिविशेषः प्रतिपादितः । द्वितीये चेतनस्य भगवदपराधदण्डभीतस्य तस्मिन्नाभिमुख्यमुक्तम् । अथ तल्लाभहेत्वाचार्यकृत्यं दर्शयति तृतीये—वच इत्यादि ॥ १ ॥

तर्हि प्रशंसादिभिरिङ्गितैश्च पुनःपुनः विश्वासयन् ममैवाभिमुखं यथा तथा स्थित्वा स्थापयित्वा । अस्य वनस्य प्रवेशस्य प्रयोजनं पृच्छ । धनुर्धरौ शुद्धात्मानौ यदि तदानीमपि पूर्वोक्तप्रकारेण तौ मदीयौ कृत्वा आगमनप्रयोजनं जानीहि । इङ्गितादिभिर्भावपरिज्ञाने हेत्वन्तरमाह व्याभाषितैर्वा इति । व्याभाषितैः ताभ्यां सह सम्भाषणैः ॥२४–२८॥ टी०—उत्कर्षार्थं सङ्गृह्णाति—तथेति ॥२९॥ इति श्रीमहेश्वर० श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां द्वितीयः सर्गः ॥२॥ ॥१॥

कपीति । रूपान्तरपरिग्रहसामर्थ्यमुच्यते मारुतात्मज इति । शठबुद्धितया वञ्चकबुद्धितया । भिक्षुरूपं संन्यासिवेषम् । "भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ।" इत्यमरः ॥ २ ॥ तत इति सार्धः । विनीतवत् सविनयम् । उपागम्य । प्रणिपत्य नमस्कृत्य । श्लक्ष्णया अपरुषया । सुमनोज्ञया अर्थतोऽतिरम्यया वाचा आबभाषे । यथावत्परमार्थतया प्रशशंस च । अत्र भिक्षुरूपस्य हनुमतः प्रणामादन्यत्रापि भिक्षोर्गृहस्थादिविषये प्रणामः

कपिरूपं परित्यज्य हनुमान् मारुतात्मजः । भिक्षुरूपं ततो भेजे शठबुद्धितया कपिः ॥ २ ॥ ततः स हनुमान् वाचा श्लक्ष्णया सुमनोज्ञया । विनीतवदुपागम्य राघवौ प्रणिपत्य च । आबभाषे तदा वीरौ यथावत् प्रशशंस च ॥ ३ ॥

कर्तव्य एवेति विज्ञायते । संन्यासिनो गृहस्थादिप्रणामनिषेधवचनान्यज्ञविषयाणीति मन्तव्यानि । यदि हि ज्ञानाधिकं दृष्ट्वा कर्ममात्रेणाधिको यतिर्न प्रणमेत् तर्हि "विप्राणां ज्ञानतो ज्यैष्ठ्यम्" इति मनुवचनं विरुध्येत । नहि तत्प्रणामनिषेधकं मनुवचनं किञ्चिद्दृश्यते । किं त्वनारभ्याधीतमदृष्टाकरं यत्किञ्चिद्यतिप्रणामनिषेधवचनं किंवदन्तीसिद्धम् । तस्य च विषयोऽज्ञगृहस्थादिरूपः। यत्तु कैश्चिदुक्तम्—अत्यद्भुतरामलक्ष्मणरूपदर्शनसञ्जातातिविस्मयः सन् अङ्गीकृतं भिक्षुरूपं विस्मृत्य "अवशाः प्रतिपेदिरे" इतिवत् प्रणनामेति न विरोध इति । तन्न; उपक्रमविरोधात् । इङ्गितवचनादिभिः परहृदयज्ञानार्थं हि प्रेषितोऽयम् । नहि तथा नियुक्तः सुनिपुणमतिः सचिवधुरन्धरः स्वकार्यविरोधकरं परिगृहीताकारविरुद्धमविस्रम्भहेतुत्वेन परेङ्गितानाविष्कारहेतुभूतं कार्यं कुर्यात् । यदप्युक्तम्—"रूपमेवास्यैतन्महिमानं व्याचष्टे" इति न्यायेन दर्शनमात्रेणैतौ सुग्रीवविरोधिनिरसनदक्षाविति निश्चित्य परिगृहीतवेषान्तरस्य स्वस्य चारत्वं प्रकटयितुं नमस्कारं कृतवानिति न दोष इति । तदपि न; तथा सति सुग्रीवो नामेत्यादिवक्ष्यमाणमेव प्रथमं कथयेत् । केचित्तु—भिक्षुर्ब्रह्मचारी, अतो न दोष इत्याहुः । तन्न; तादृशभिक्षुकत्वस्य पूर्वमेव सिद्धत्वेन इदानीमपरिग्राह्यत्वात् । अपरे तु—सर्वथा कपिरूपं परित्यज्येत्युपक्रमात् उपरिष्टात् प्रच्छन्नत्वोक्त्या च मानुषरूपाङ्गीकारावश्यंभावात्तद्रूपविशिष्टं ब्रह्मचर्यमेवात्र भिक्षुशब्देनोच्यत इति न विरोध इत्यूचिरे । तत्पक्षे तु पूर्वोक्तया दिशा दूषणं चिन्त्यम् ॥ ३ ॥ रामानु०—ततः स हनुमान् वाचा श्लक्ष्णया सुमनोज्ञयेति पाठः । प्रणिपत्येति । नमस्कारः परिगृहीतभिक्षुवेषविरुद्ध इति

कपिरूपमिति । शठबुद्धितया वञ्चकबुद्धितया । टी०—भिक्षुरूपं नैष्ठिकब्रह्मचर्यरूपम् ॥ २ ॥ तत इति । नमस्कारो विधृतभिक्षुवेषविरुद्ध इति चेत्, मैवम्; हनूमान् "रूपमेवास्यैतन्महिमानं व्याचष्टे" इति न्यायेन तयोर्दर्शनमात्रेणैव तौ सुग्रीवविरोधिनिरसने क्षमाविति ज्ञात्वा गृहीतवेषान्तरस्य स्वचारत्वं प्रकटयितुं प्रणनामेति

चेत् । अत्यद्भुतवस्तुदर्शनसञ्जातातिविस्मयः सन् अङ्गीकृतं भिक्षुरूपं विस्मृत्य "अवशाः प्रतिपेदिरे" इतिवत् प्रणनामेति न विरोधः । यद्वा हनुमान् "रूपमेवास्यैतन्महिमानं व्याचष्टे" इति न्यायेन दर्शनमात्रेणैतौ सुग्रीवविरोधिनिरसनदक्षमहिमानाविति निश्चित्य परिगृहीतवेषान्तरस्य स्वस्य चारत्वं प्रकटयितुं नमस्कारं कृतवानिति न दोषः । अत एव ह्युत्तरत्र तयोः प्रत्युत्तरकथनात्पूर्वमेव सुग्रीवस्वरूपं स्वस्य स्वस्वरूपं सुग्रीवसचिवत्वं भिक्षुरूपप्रतिच्छन्नत्वं सुग्रीवस्य रामसख्याभिलाषं च कथितवान् । वस्तुतस्तु त्रिदण्डादिबाह्यवेषधारणमात्रेण आपादमूलं रोमनिचितस्य सवालस्य वानररूपस्य प्रतिच्छन्नत्वायोगान्मानुषशरीरपरिग्रहपूर्वकमेव बाह्यस्य कस्यचिद्वेषस्य धारणं वक्तव्यम् । अत एव हि कपिरूपं परित्यज्येत्युपक्रान्तम् । तत्र हनुमतः स्वरूपेण वटुत्वेपि मानुषरूपेण वटुत्वमेवात्र प्रकरणे भिक्षुशब्देनोच्यत इति न यतेर्गृहस्थवन्दनापत्तिरिति । आबभाषे अभिमुखीचकार ॥ ३ ॥ सम्पूज्येति । कामतः भक्त्या । पूर्वोक्तप्रशंसा भक्तिकृता, नतु केवलपरीक्षाकृतेति भावः ॥ ४ ॥ रामानु०—उवाचेति । कामतः सुग्रीवोपदेशाविरुद्धस्वेच्छातः ॥ ४ ॥ राजर्षीत्यादिश्लोक

सम्पूज्य विधिवद्वीरो हनुमान् मारुतात्मजः । उवाच कामतो वाक्यं मृदु सत्यपराक्रमौ ॥ ४ ॥ राजर्षिदेवप्रतिमौ तापसौ संशितव्रतौ । देशं कथमिमं प्राप्तौ भवन्तौ वरवर्णिनौ ॥५॥ त्रासयन्तौ मृगगणानन्यांश्च वनचारिणः । पम्पा तीररुहान् वृक्षान् वीक्षमाणौ समन्ततः ॥६॥ इमां नदीं शुभजलां शोभयन्तौ तपस्विनौ । धैर्यवन्तौ सुवर्णाभौ कौ युवां चीरवाससौ ॥७॥ निःश्वसन्तौ वरभुजौ पीडयन्ताविमाः प्रजाः । सिंहविप्रेक्षितौ वीरौ सिंहातिबलविक्रमौ ॥८॥

द्वयम् । मृगगणान् अन्यान् वनचारिणश्च त्रासयन्तौ समन्ततः पम्पातीररुहान् वृक्षान् वीक्षमाणौ च भवन्तौ वरवर्णिनौ स्निग्धरूपवन्तौ । कर्मधारयादपि मत्वर्थीयो दृष्टचरः । अत एव राजर्षिदेवप्रतिमौ । संशितव्रतौ तीक्ष्णव्रतौ । अत एव तापसौ तपस्विवेषौ भूत्वा इमं दुर्गमं देशं कथं प्राप्तौ ॥ ५–६ ॥ रामानु०—वरवर्णिनौ वर्णिनौ प्रशस्तवर्णौ, वरौ च तौ वर्णिनौ चेति विग्रहः । पम्पातीररुहान् वृक्षान् वीक्षमाणौ समन्ततः इत्यन्तस्य भवन्तौ कथं प्राप्ताविरयनेन सम्बन्धः ॥ ५ ॥ ६ ॥ इमामित्यादिसार्धश्लोकत्रयमेकान्वयम् । पम्पायाः सरस्त्वेपि स्वल्पतया पूर्वापरप्रवाहवत्त्वेन नदीत्वमविरुद्धम् । शोभयन्तौ, स्वतेजसेति शेषः । सुवर्णाभौ रामस्य श्यामत्वेपि लक्ष्मणस्य पीतवर्णत्वाच्छत्रिन्यायात् सुवर्णकान्तित्वम् । निःश्वसन्तौ, वनसञ्चारायासात् । वरभुजौ सुन्दरभुजौ । हस्तिहस्तेत्यनेन दैर्घ्यपीवरत्वयोर्वक्ष्यमाणत्वात् । इमाः प्रजाः पक्षिमृगादीन् । पीडयन्तौ अपूर्वदर्शनेन विद्रावकावित्यर्थः । सिंहस्येव विप्रेक्षितं वीक्षणं

न विरोधः । आबभाषे अभिमुखीचकार ॥ ३ ॥ कामतः सुग्रीवोपदेशाद्विरुद्धस्वेच्छातः ॥ ४ ॥ देशं कथमित्यादिसार्धश्लोकमेकं वाक्यम् । समन्ततो वीक्षमाणौ कथं प्राप्ताविति सम्बन्धः ॥ ५ ॥ ६ ॥ इमां नदीमित्यारभ्य द्युतिमन्तौ नरर्षभावित्यन्तमेकम् । पम्पासरसो नदीत्वव्यपदेशस्तु आयामवत्तया । चापे गृहीत्वे

ययोस्तौ । सिंहातिबलविक्रमौ सिंहातिशायिबलपराक्रमौ । शक्रचापनिभे इन्द्रधनुस्तुल्ये चापे गृहीत्वा । शत्रुसूदनौ शत्रुसंहारकौ । नीलभेदपरभागतया धनुषोराभरणत्वं शत्रुसंहारकत्वेनायुधकोटिप्रविष्टत्वं च दर्शितमाभ्यां विशेषणाभ्याम् । श्रीमन्तौ कान्तिमन्तौ । रूपसम्पन्नौ सौन्दर्ययुक्तौ । वृषभश्रेष्ठविक्रमौ वृषभश्रेष्ठगमनौ । द्युतिमन्तौ तेजस्विनौ । तेजस्तु श्रियो भिन्नमिति न पुनरुक्तिः । एवम्भूतौ युवां कावित्यन्वयः ॥ ७–१० ॥ प्रभयेत्यर्धम् ॥ ११ ॥ राज्येत्यादित्रय एकान्वयाः । अमरप्रख्यौ देवतुल्यपराक्रमौ । देवलोकादागतौ वीराविव स्थितौ । यदृच्छया दैवात् वसुन्धरां प्राप्तौ चन्द्रसूर्या

शक्रचापनिभे चापे गृहीत्वा शत्रुसूदनौ । श्रीमन्तौ रूपसम्पन्नौ वृषभश्रेष्ठविक्रमौ ॥ ९ ॥ हस्तिहस्तोपमभुजौ द्युतिमन्तौ नरर्षभौ ॥ १० ॥ प्रभया पर्वतेन्द्रोऽयं युवयोरवभासितः ॥ ११ ॥ राज्यार्हावमरप्रख्यौ कथं देशमिहागतौ । पद्मपत्रेक्षणौ वीरौ जटामण्डलधारिणौ ॥ १२ ॥ अन्योन्यसदृशौ वीरौ देवलोकादिवागतौ । यदृच्छयेव सम्प्राप्तौ चन्द्रसूर्यौ वसुन्धराम् ॥१३॥ विशालवक्षसौ वीरौ मानुषौ देवरूपिणौ । सिंहस्कन्धौ महोत्साहौ समदाविव गोवृषौ ॥ १४ ॥ आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः । सर्वभूषणभूषार्हाः किमर्थं न विभूषिताः ॥ १५ ॥

विव स्थितौ । देवरूपिणौ देवतुल्यरूपिणौ । वीरौ मानुषौ युवां राज्यार्हावपि राज्यं त्यक्त्वा वीरौ जटामण्डलधारिणौ अविच्छिन्नजटामण्डलधारिणौ भूत्वा । इह देशं वनदेशम् कथं किमर्थम् आगतौ । समस्तराजलक्षणलक्षितयोर्युवयोः राज्यभोग एवोचितः, नतु वनवास इति भावः ॥ १२–१४ ॥ आयताः आजानुविलम्बिनः । सुवृत्ताः भुजगभोगवद्वृत्ताः । बाहवः "रामस्य दक्षिणो बाहुः" इति लक्ष्मणस्य रामबाहुत्वात्तद्बाहुभ्यां बहुवचनम् । यद्वा हनुमतो भक्तत्वेन तस्य चतुर्भुजवेषेण दृश्योऽभवत् । यद्वा द्वयोर्बाहुचतुष्टयवत्त्वाद्बहुवचनम् । परिघोपमाः परिघो गदाविशेषः तदुपमाः, स्वसौन्दर्यानुभव

त्येतस्य पीडयन्ताविमाः प्रजा इत्यनेन सम्बन्धः ॥ टी०–सिंहविप्रेक्षितौ शत्रुभयङ्करत्वात् ॥ ७–११ ॥ राज्यार्हाविति । अमरप्रख्यौ पद्मपत्रेक्षणौ राज्यार्हौ वीरौ युवां जटामण्डलधारिणौ सन्तौ इहारण्यप्रदेशं कथमागतौ ॥ १२ ॥ वनागमनायोग्यतायां हेत्वन्तरमाह–अन्योन्यसदृशाविति । देवलोकादागतौ अन्योन्यसदृशौ वीरौ इह यदृच्छया वसुन्धरां प्राप्तौ चन्द्रसूर्याविव स्थितौ कथमिमं देशम् उपागतावित्येतदत्राप्यनुषज्यते ॥ १३ ॥ महाराजदेवत्वलक्षणोभयाकारप्रतीतेर्वनागमनमसम्भावितमित्याह–विशालवक्षसाविति । टी०–' कथं देशमिहागतौ ' इति पुनः पुनः प्रश्नः अत्यन्तसौकुमार्यप्रियपाषाणदेशे कथं प्रत्ययमियागमनमिति विस्मयेनेति भावः ॥ १४–१६ ॥

पराणां समस्तविरोधिनिवर्तनक्षमा इत्यर्थः । सर्वभूषणभूषार्हाः 'आभरणस्याभरणम्' इत्युक्तरीत्या भूषणान्यपि भूषयितुमर्हाः । किमर्थं न विभूषिताः, इमान् भूषणैरलंकृत्य आभरणाभरणत्वं किमिति न प्रकाशितमित्यर्थः । यद्वा दृष्टिदोषपरिहाराय एतादृशबाहुसौन्दर्यमाच्छादयितव्यम्, तत्किमर्थं नाच्छादितमिति भावः । यद्वा आभरणच्छन्नसौन्दर्यमेवालमस्मद्वशीकरणाय । अधिकं निरावरणसौन्दर्यप्रदर्शनमिति भावः । यद्वा राजकुमाराणां क्षण

उभौ योग्यावहं मन्ये रक्षितुं पृथिवीमिमाम् । ससागरवनां कृत्स्नां विन्ध्यमेरुविभूषिताम् ॥ १६ ॥ इमे च धनुषी चित्रे श्लक्ष्णे चित्रानुलेपने । प्रकाशेते यथेन्द्रस्य वज्रे हेमविभूषिते ॥ १७ ॥ सम्पूर्णा निशितैर्बाणैस्तूणाश्च शुभ दर्शनाः । जीवितान्तकरैर्घोरैः श्वसद्भिरिव पन्नगैः ॥ १८ ॥ महाप्रमाणौ विस्तीर्णौ तप्तहाटकभूषितौ । खड्गावेतौ विराजेते निर्मुक्ताविव पन्नगौ ॥ १९ ॥ एवं मां परिभाषन्तं कस्माद्वै नाभिभाषथः ॥ २० ॥ सुग्रीवो नाम धर्मात्मा कश्चिद्वानरयूथपः । वीरो विनिकृतो भ्रात्रा जगद्भ्रमति दुःखितः ॥ २१ ॥

मात्रं ताम्बूलाभावे म्लानतावत्क्षणमात्रविरहेपि स्थातुमनर्हा भूषाः किमर्थं विश्लेषिता इति भावः । यद्वा एवं भूषणविरहः कस्य वा शत्रोर्मूलघातायेति भावः । अनेन अप्रतिहतसङ्कल्पत्वेपि नित्यसूरीन् विहाय चतुर्धाऽवतरणे को हेतुरित्युक्तम् ॥ १५ ॥ तनि०—सर्वभूषणभूषार्हाः सर्वेषां भूषणानाम् अङ्गद केयूरादीनां भूषायाम् अलङ्करणे अर्हाः । एतेन बाहूनां सर्वभूषणातीतकान्तिमत्त्वमुक्तम् । तमेवार्थं विशदयति—आजानुदीर्घबाहुत्वमायतत्वम् । वृत्तानुपूर्वत्वं सुवृत्तत्वम् । पीवरदृढसंस्थानत्वं परिघोपमत्वम् । किमर्थं न विभूषिताः भूषणधारणेन एतेषां भूषणाधिककान्तिमत्त्वं किमर्थं न प्रकाशितमित्यभिप्रायः ॥ १५ ॥ उभाविति । विन्ध्यमेरुविभूषितामिति दृष्टान्तार्थः-यथा विन्ध्यमेरू भूरक्षकौ तथा भवन्तावपीति ॥ १६ ॥ चित्रे लोके एतादृशधनुषोरदर्शनादद्भुतावहे । वज्रे इत्य भूतोपमा ॥ १७ ॥ तूणा इति बहुवचनम् एकैकस्य पार्श्वद्वयेपि तूणीरद्वयसत्त्वात् ॥ १८ ॥ महाप्रमाणाविति दीर्घत्वम् । विस्तीर्णाविति विशालता । तप्तहाटकं द्रुतकनकम् । निर्मुक्तौ निर्मुक्तत्वचौ ॥ १९ ॥ परिभाषन्तं पुनः पुनर्भाषमाणम् । नाभिभाषथः नाभिभाषेथे । व्यत्यय आर्षः ॥ २० ॥ एवं स्ववाक्सौष्ठवेन तूष्णींभूतौ दृष्ट्वा स्वकार्यमावेदयति—सुग्रीव इत्यादिना । विनिकृतः वञ्चितः ॥ २१ ॥

टी०—यथेन्द्रस्य वज्रे इति एकत्वेन प्रसिद्धस्याप्युपमानत्वेनोपात्तस्य वज्रायुधस्यानेकत्वकल्पनमुपमेयानेकत्वनिबन्धनमित्यविरुद्धम् ॥ १७–२० ॥ कस्य त्वं कस्त्वं किमर्थमागत इत्याकाङ्क्षायामाह—सुग्रीवं

महात्मना महाबुद्धिना ॥२२॥ वित्तम् । विदेलौंटि मध्यमपुरुषद्विवचनम् ॥२३॥ तर्हि कथं भिक्षुरसीत्यत्राह–भिक्ष्विति ॥२४॥ नोवाच । तद्वचनश्रवणेच्छयेति भावः ॥२५॥ एतदिति, हनुमन्तं स्तोतुं लक्ष्मणं प्रत्युक्तिः ॥२६॥ सचिव इति । उपागतः । स एव सचिवद्वारेति शेषः॥२७॥ स्नेहयुक्तं मयि

प्राप्तोऽहं प्रेपितस्तेन सुग्रीवेण महात्मना। राज्ञा वानरमुख्यानां हनूमान्नाम वानरः ॥ २२ ॥ युवाभ्यां सह धर्मात्मा सुग्रीवः सख्यमिच्छति। तस्य मां सचिवं वित्तं वानरं पवनात्मजम् ॥ २३ ॥ भिक्षुरूपप्रतिच्छन्नं सुग्रीवप्रिय काम्यया। ऋश्यमूकादिह प्राप्तं कामगं कामरूपिणम् ॥ २४ ॥ एवमुक्त्वा तु हनुमांस्तौ वीरौ रामलक्ष्मणौ । वाक्यज्ञौ वाक्यकुशलः पुनर्नोवाच किञ्चन ॥ २५ ॥ एतच्छ्रुत्वा वचस्तस्य रामो लक्ष्मणमब्रवीत् । प्रहृष्टवदनः श्रीमान् भ्रातरं पार्श्वतः स्थितम् ॥ २६ ॥ सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः । तमेव कांक्षमाणस्य ममान्तिकमुपागतः॥ २७ ॥ तमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम् । वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तमरिन्दम ॥ २८ ॥ नानृग्वेदविनीतस्य नायजुर्वेदधारिणः । नासामवेदविदुषः शक्यमेवं प्रभाषितुम् ॥ २९ ॥

सुग्रीवे च प्रीतियुक्तमित्यर्थः । अभ्यभाष अभिभाषस्व । अडागमपरस्मैपदे आर्षे । मन्त्रिणा स्वामिनो वचनं न नीतिरिति सौमित्रिं नियोजयति ॥२८॥ अथ चेतनोज्जीवनस्याचार्यमुखमन्तरेणासम्भवादाचार्यलाभं दर्शयति–नानृग्वेदेत्यादिना । "आचार्यो वेदसम्पन्नो विष्णुभक्तो विमत्सरः । मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्रार्थदः शुचिः । गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषतः । एवं लक्षणसम्पन्नो गुरुरित्यभिधीयते ॥" इत्युक्तमाचार्यलक्षणं दर्शयति । ऋग्वेदेषु विनीतस्य शिक्षितस्य विनयधारणवेदनानि सर्वत्र वेदेषु योज्यानि । यद्वा प्रतिवर्णं स्वरभूयस्त्वेन मनोनियमनेन सावधानोच्चार्यत्वादृग्वेद इत्यादिना । टी०–तूष्णीम्भूतौ रामलक्ष्मणौ भाषयितुं स्वस्वामिनामधेयं कथयति–सुग्रीव इत्यादिना । विनिकृतः तिरस्कृतः ॥२१–२५॥ प्रहृष्टवदनः हनुमद्वचनस्य विवक्षितवाक्यानुकूलत्वादिति भावः॥२६–२८॥ नानृग्वेदेति । अनृग्वेदविनीतस्य अनृग्वेदेन ऋग्वेदादन्येन विनीतस्य शिक्षितस्य एवं प्रभाषितुं न शक्यम् । अयजुर्वेदधारिणः यजुर्वेदधारणरहितस्यैवं प्रभाषितुं न शक्यम् । असामवेदविदुषः असामवेदज्ञस्यैवं भाषितुं न शक्यमिति सम्बन्धः । अयमर्थः–प्रतिवर्णं स्वरभूयस्त्वेन सावधानेनोच्चार्यमाणत्वादृग्वेदविनीतस्येत्युक्तिः । एकैकानुवाके अनुवाकान्तरवाक्यस्यासाङ्कर्येण धारणस्य दुष्करतां द्योतयितुम् अयजुर्वेदधारिण इत्युक्तम् । ऊहरहस्यादिगर्भितगानविशेषाणां दुर्ज्ञेयता

विनीतस्येत्युक्तिः । एकैकानुवाके अनुवाकान्तरवाक्यासाङ्कर्येण धारणस्य दुष्करत्वादयजुर्वेदधारिण इत्युक्तम् । ऊहरहस्यादिगर्भितगानविशेषाणां दुर्विज्ञेयत्वात् सामवेदविदुष इति । अथर्वणस्याध्ययनादिनियमाभावादनुक्तिः । एवं प्रभाषितुम् 'देशं कथमिमं प्राप्तौ' इत्यारभ्य उक्तरीत्या व्यक्तं वक्तुम् । न शक्यमिति । अनृग्वेदविनीतस्य एवं प्रभाषितुं न शक्यम् । अयजुर्वेदधारिण एवं प्रभाषितुं न शक्यम् । असामवेदविदुषः एवं प्रभाषितुं न शक्य

नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् । बहु व्याहरताऽनेन न किञ्चिदपशब्दितम् ॥ ३० ॥
न मुखे नेत्रयोर्वापि ललाटे च भ्रुवोस्तथा । अन्येष्वपि च गात्रेषु दोषः संविदितः क्वचित् ॥ ३१ ॥

मिति प्रत्येकमन्वयः । प्रत्येकं नञ्प्रयोगात् । दार्ढ्यार्थं व्यतिरेकमुखेनोक्तिः । अनृग्वेदविनीतस्य "उभौ योग्यावहं मन्ये रक्षितुं पृथिवीमिमाम् ।" इत्यादिनोक्तसृष्टिस्थितिसंहारकर्तृत्वं वक्तुं न शक्यम् । ऐतरेयके हि "ब्रह्म वा इदमेक एवाग्र आसीत्" इत्यादिना तथात्वं प्रथमतः प्रतिपाद्यते । अयजुर्वेदधारिणः । "मानुषौ देवरूपिणौ" इत्यादिना "अजायमानो बहुधा विजायते" इत्युक्तावताररहस्यं वक्तुं न शक्यम् । असामवेदविदुषः "सुवर्णाभौ पद्मपत्रेक्षणौ" इत्येवं भाषितुं न शक्यते । छान्दोग्ये हि "अथ य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्यारभ्य "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इत्याम्नायते ॥ २९ ॥ रामानु०—नानृग्वेद इति । विनयधारणवेदनानि प्रतिवेदमस्य सन्तीत्युक्तं भवति ॥ २९ ॥ न केवलं वेदाध्ययनम् अङ्गाध्ययनं च कृतमित्याह—नूनमिति । तत्र हेतुमाह—बह्विति । अपशब्दितम् अपकृष्टं न शब्दितम् । अत्रादौ यदित्यध्याहार्यम् । व्याकरणं श्रुतम् अतो नापशब्दितम् । कृत्स्नं श्रुतम् अतो न किञ्चिदपशब्दितम् । प्रकृतिप्रत्ययसमाससन्ध्यादिषु किंचिदपि नापभ्रंशितमित्यर्थः । बहुधा श्रुतम् । एकवारश्रवणे क्वचिदन्यथाभावोपि स्यात् ॥ ३० ॥ रामानु०—न किञ्चिदपशब्दितमित्यनेन संस्कृतभाषयैव व्यवहृतवानित्यवगम्यते ॥ ३० ॥ शिक्षा चानेन श्रुतेत्याह चतुर्भिः—न मुख इत्यादिभिः । लोके केषांचिद्व्यवहारदशायां मुखादिषु सर्वत्र यत्र कुत्रापि वा विकारो दृश्यते न तथात्रेति भावः । दोषः विकृतिः । न संविदित इत्यनेन स्वेन सूक्ष्ममवलोकितमिति गम्यते । तदुक्तं शिक्षायाम्—"गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः । अनर्थज्ञोल्पकण्ठश्च षडेते

मभिप्रेत्य असामवेदविदुष इत्युक्तम् ॥ २९ ॥ नूनमिति । न किञ्चिदपशब्दितमित्यनेन संस्कृतभाषयैव व्यवहृतवानिति गम्यते ॥ ३० ॥ ३१ ॥

पाठकाधमाः । न शिरः कम्पयेद्गात्रं भ्रुवौ चाप्यक्षिणी तथा । तैलपूर्णमिवात्मानं तत्तद्वर्णे प्रयोजयेत् ॥ " इति ॥ ३१ ॥ एवमुच्चारणशक्तिरुक्ता । अथ वाक्यप्रयोगचातुरीं दर्शयति—अविस्तरमिति । अविस्तरं शब्दप्रपञ्चरहितम् । " प्रथने वावशब्दे " इति वञो निषेधात् " ऋदोरप् " इत्यप्प्रत्ययः । असन्दिग्धं पदवर्णसन्देहरहितम् । अविलम्बितं विलम्बितत्वे स्वाशक्तिः प्रकटिता स्यात् । अद्रुतं द्रुतोच्चारणे परप्रत्यायनं न स्यात् । उरःस्थं मन्द्रम् । कण्ठगं मध्यमम्, तादृशं वाक्यं मध्यमे स्वरे वर्तते । न मन्द्रं न मध्यमं न द्रुतं न विलम्बितं चेत्यर्थः । इदं चतुर्दशदोषाभावानामुपलक्षणम् । तथाह शिक्षा

अविस्तरमसन्दिग्धमविलम्बितमद्रुतम् । उरःस्थं कण्ठगं वाक्य वर्तते मध्यमे स्वरे ॥ ३२ ॥
संस्कारक्रमसम्पन्नामद्रुतामविलम्बिताम् । उच्चारयति कल्याणीं वाचं हृदयहारिणीम् ॥ ३३ ॥
अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया । कस्य नाराध्यते चित्तमुद्यतासेररेरपि ॥ ३४ ॥

कारः—"शङ्कितं भीतमुद्घृष्टमव्यक्तमनुनासिकम् । काकस्वरं शीर्षगतं तथा स्थानविवर्जितम् । विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् । व्याकुलं तालुभिन्नं च पाठदोषाश्चतुर्दश॥" इति । अन्यत्राप्युक्तम्—"उपांशु दष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् । निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं नतु सानुनास्यम् ॥" इति ॥ ३२ ॥ एवं पाठदोषा उक्ताः । अथ तद्गुणानाह—संस्कारेति । संस्कारो व्याकरणकृता शब्दशुद्धिः, व्यक्तपदत्वमिति यावत् । क्रमः वर्णानां क्रमिकता व्यक्ताक्षरत्वमिति यावत् । कल्याणीम् इतरगुणवतीम् । हृदयहारिणीं मधुराम् । वाणीम् उच्चारयति उच्चरति । तदिदमुक्तं शिक्षायाम्—"माधुर्यमक्षरव्यक्तिः पदच्छेदस्तथाऽत्वरा । धैर्यं लयसमत्वं च षडेते पाठका गुणाः ॥ " इति ॥ ३३ ॥ माधुर्यपरकाष्ठामाह—अनयेति । चित्रया आश्चर्यावहया । त्रिस्थानानि उरःकण्ठशिरांसि । व्यज्यन्ते एषु वर्णा इति व्यञ्जनानि । त्रिस्थानरूपव्यञ्जनेषु तिष्ठतीति तथा । तथात्वं च न तदुत्पन्नत्वम् । शिरस्थत्वस्य निषिद्धत्वात् । शीर्षगतं तथेति ह्युदाहृतम् । किंतु उदात्तानुदात्तस्वरितवत्त्वम् । तथोक्तं शिक्षायाम्—"अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः । स्वरितः कण्ठमूलीयः पार्श्वास्ये प्रचयस्य तु ॥ " इति । नाराध्यते न तोष्यते । कस्येत्यस्य विवरणम् उद्यतासे



अविस्तरं विस्तररहितम् । मध्यमे स्वरे, नोच्चैर्नैव नीचैः ॥ ३२ ॥ संस्कारक्रमसम्पन्नां व्युत्पत्तिसामग्रीसम्पन्नामित्यर्थः । अद्रुतां द्रुतोच्चारणरहितामित्यर्थः ॥ ३३ ॥ अनया चित्रया विस्मयोत्पादकया । त्रिस्थानव्यञ्जनस्थया त्रिस्थानेषु उरःकण्ठशिरस्सु व्यञ्जनस्थया व्यक्ततया स्थितयेत्यर्थः ॥ ३४ ॥

ररेरपीति । उद्यतासेः छेत्तुमुद्धतासेरित्यतिक्रूरतोक्तिः । अनेन हनुमदादिभिः रामादीनां संस्कृतभाषयैव व्यवहार इति गम्यते ॥ ३४ ॥ एवं हनुमतो वाक्चातुरीमभिनन्द्य बुद्धिचातुरीमभिनन्दति—एवंविध इति । एवंविधः एवंप्रष्टा । अस्मत्प्रशंसाव्याजेन कुलगोत्रनामधेयराज्यत्यागकारणादीनां प्रष्टा । गतयः सिद्धयः ॥ ३५ ॥ उक्तमर्थमन्वयमुखेनापि दर्शयति—एवमिति । दूतवाक्यप्रचोदिताः । दूतवाक्यमूला एव सिद्ध्यन्ति, न प्रधानापेक्षा

एवंविधो यस्य दूतो न भवेत्पार्थिवस्य तु । सिध्यन्ति हि कथं तस्य कार्याणां गतयोऽनघ ॥ ३५ ॥ एवं गुण गणैर्युक्ता यस्य स्युः कार्यसाधकाः । तस्य सिद्ध्यन्ति सर्वार्था दूतवाक्यप्रचोदिताः ॥ ३६ ॥ एवमुक्तस्तु सौमित्रिः सुग्रीवसचिवं कपिम् । अभ्यभाषत वाक्यज्ञो वाक्यज्ञं पवनात्मजम् ॥ ३७ ॥ विदिता नौ गुणा विद्वन् सुग्रीवस्य महात्मनः । तमेव चावां मार्गावः सुग्रीवं प्लवगेश्वरम् ॥ ३८ ॥ यथा ब्रवीषि हनुमन् सुग्रीववचनादिह । तत्तथा हि करिष्यावो वचनात्तव सत्तम ॥ ३९ ॥ तत्तस्य वाक्यं निपुणं निशम्य प्रहृष्टरूपः पवनात्मजः कपिः । मनः समाधाय जयोपपत्तौ सख्यं तदा कर्तुमियेष ताभ्याम् ॥ ४० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे तृतीयः सर्गः* ॥ ३ ॥

इति भावः ॥ ३६ ॥ वाक्यज्ञो वाक्यज्ञमित्युक्त्या यथारीत्या हनुमतोक्तं तथैव सौमित्रिणापीत्युच्यते ॥ ३७ ॥ विदिता इति । विद्वन्निति हनुमत्सम्बोधनम् ॥ ३८ ॥ यथेति । अनेन ये तावत् आचार्याभिमाननिष्ठाः तेषां कार्यं तद्वचनादेव करिष्यामीति भगवतः प्रतिज्ञा सूचिता ॥ ३९ ॥ तदिति । जयोपपत्तौ वालिजयोपपत्तिनिमित्तम् ॥ ४० ॥ इति श्रीगोविन्दराजविरचिते श्रीरा० मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥

टी०—एवमिति । गतयो मार्गाः ॥ ३५—३७ ॥ विदिताः कबन्धमुखेनेति भावः ॥ ३८ ॥ ३९ ॥ जयोपपत्तौ सुग्रीवस्य जयसिद्धौ ॥ ४० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां तृतीयः सर्गः ॥ ३ ॥

* सर्गश्रवणफलश्रुतिः । स्कान्दे—" सुग्रीवो मारुतिं तत्र प्रेषयामास राघवम् । मारुतिप्रेषणं श्रुत्वा सद्बन्धुं लभते नरः । रामहनुमत्संवादश्रवणाद्राज्यमाप्नुयात् ॥" इति ॥

अथाचार्यमुखेन चेतनलाभश्चतुर्थे—तत इत्यादि । मधुरसम्भाषं मधुरभाषणम् । तद्वचः श्रुत्वा । कृत्यवान् कार्यवान् रामः इति हेतोः प्रहृष्टः सन् सुग्रीवं मनसा गतः । 'तमेव चार्वां मार्गाव' इति वचनभावतया रामस्य कृत्यवत्त्वज्ञानम् ॥ १ ॥ मनसा गत इत्येतद्दर्शयति—भव्य इति । यद्यस्मादयं कृत्यवान् प्राप्तः, तस्मात् । महात्मनः महाभाग्यस्य । तस्य सुग्रीवस्य । राज्यागमः भव्यः भावी । एतत् कृत्यं राज्यागमनरूपकार्यम् । उपागतं समीपे

ततः प्रहृष्टो हनुमान् कृत्यवानिति तद्वचः । श्रुत्वा मधुरसम्भाषं सुग्रीवं मनसा गतः ॥ १ ॥ भव्यो राज्यागम स्तस्य सुग्रीवस्य महात्मनः । यदयं कृत्यवान् प्राप्तः कृत्यं चैतदुपागतम् ॥ २ ॥ ततः परमसंहृष्टो हनुमान् प्लवग र्षभः । प्रत्युवाच ततो वाक्यं रामं वाक्यविशारदः ॥ ३ ॥ किमर्थं त्वं वनं घोरं पम्पाकाननमण्डितम् । आगतः सानुजो दुर्गं नानाव्यालमृगायुतम् ॥ ४ ॥ तस्य तद्वचनं श्रुत्वा लक्ष्मणो रामचोदितः । आचचक्षे महात्मानं रामं दशरथात्मजम् ॥ ५ ॥ राजा दशरथो नाम द्युतिमान् धर्मवत्सलः । चातुर्वर्ण्यं स्वधर्मेण नित्यमेवाभ्यपालयत् ॥६॥

आगतम् । निष्पन्नप्रायमित्यर्थः ॥ २ ॥ अस्मिन् श्लोके प्लवगर्षभ इत्यत्र गकारो गायत्र्याः दशमाक्षरम् । नवसहस्रश्लोका गताः ॥ ३ ॥ किमर्थमिति । पम्पाकाननेन पम्पोपवनेन मण्डितं वनं दण्डकारण्यम् । दण्डकारण्येप्येतत्प्रदेशं किमर्थमागत इति भावः । अनुजत्वमाकारसाम्यात्तमभ्यभाषेति नियो जनाच्चेति ॥४॥ तस्येति । महात्मत्वेन दशरथात्मजत्वेन चाचचक्ष इत्यर्थः॥ ५ ॥ रामानु०—तस्येति । दशरथात्मजं महात्मानमित्येतद्द्वयमपि विधेयविशेषणम् ॥५॥६॥

तत इति । हनुमान् मधुरसम्भाषं मधुरभाषणं तद्वचः श्रुत्वा कृत्यवानिति सुग्रीवेण कार्यवान् राम इति हृष्टः सुग्रीवं मनसा गतश्च । रामस्य कृत्यवत्त्वं तु "तमेव काङ्क्षमाणस्य । तमेव चार्वां मार्गावः" इत्येताभ्यां वाक्याभ्यामवगतम् ॥ १ ॥ भव्य इति । अयं रामः कृत्यवान् सुग्रीवेण कार्यवान् प्राप्तो यद्यस्मात् तस्मात्तस्य सुग्रीवस्य राज्यागमो भव्यः भावी । एतदिति षष्ठी । एतस्य रामस्येत्यर्थः । कृत्यं च उपागतम् उप समीपे आगतम्, निष्पन्नप्रायमिति यावत् । टी०—यद्वा एतस्य सुग्रीवस्य राज्यप्राप्तिरूपं कृत्यं सिद्धमेवेत्यर्थः ॥ २ ॥ ग इति गायत्र्या दशमाक्षरं ततः परमिति श्लोकस्य चतुर्दशाक्षरेण 'ग' इत्यनेन सङ्गृह्णाति ॥ ३ ॥ टी०—सामान्याकारेणा वगतकार्यवत्त्वं विशेषतः पृच्छति—किमर्थमित्यादिना ॥ ४ ॥ ५ ॥ विश्वासजननार्थं रामस्य कुलशीलादिमादितः कथयति-राजेत्यादिना ॥ ६ ॥

स०—पम्पाकाननमण्डितम् पम्पाया यानि (कानि) उदकानि तेषामननेन चेष्टया मण्डितमिति वा ॥ ४ ॥

न द्वेष्टेति । सर्वेषु भूतेषु मध्ये पितामह इव श्रेष्ठ इत्यर्थः ॥ ७ ॥ ८ ॥ पुत्राणां पुत्राणां मध्ये ॥ ९ ॥ राज्यादित्यादि । भार्ययेति । ऐश्वर्यभ्रंशदशायामप्यनु वर्तनद्योतनाय दिनक्षय इत्युक्तम् ॥ १० ॥ ११ ॥ रामानु०—भार्ययेति । दिवाकरप्रभाया दिवाकरानुगमनस्य सायङ्काल एव सम्यक्प्रतीयमानत्वाद्दिनक्षयपदोपादानम् ॥ ११ ॥ अहमिति । भवानस्य क इत्याकाङ्क्षायामाह—अस्यावरो भ्राता एतदभिप्रायेण भ्रातास्मि । अहं तु गुणैर्दास्यमुपागतः गुणवशीकृत हृदयः सन् तस्य

न द्वेष्टा विद्यते तस्य न च स द्वेष्टि कञ्चन । स च सर्वेषु भूतेषु पितामह इवापरः । अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्त दक्षिणैः ॥ ७ ॥ तस्यायं पूर्वजः पुत्रो रामो नाम जनैः श्रुतः । शरण्यः सर्वभूतानां पितुर्निर्देशपारगः ॥ ८ ॥ वीरो दशरथस्यायं पुत्राणां गुणवत्तमः । राजलक्षणसम्पन्नः संयुक्तो राजसम्पदा ॥ ९ ॥ राज्याद्भ्रष्टो वने वस्तुं मया सार्धमिहागतः । भार्यया च महातेजाः सीतयाऽनुगतो वशी ॥ १० ॥ दिनक्षये महातेजाः प्रभयेव दिवाकरः ॥ ११ ॥ अहमस्यावरो भ्राता गुणैर्दास्यमुपागतः । कृतज्ञस्य बहुज्ञस्य लक्ष्मणो नाम नामतः ॥ १२ ॥ सुखार्हस्य महार्हस्य सर्वभूतहितात्मनः । ऐश्वर्येण च हीनस्य वनवासाश्रितस्य च ॥ १३ ॥

दासोऽस्मि । यद्यपि परवानस्मीत्यादौ स्वरूपप्रयुक्तदास्यमुक्तम् । तथापि योग्यताप्रकर्षात् गुणोत्तम्भितं तद्दास्यमिति तदविरोधो द्रष्टव्यः । उपेत्यनेन सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्यं प्राप्त इत्युच्यते । इदमपि कैङ्कर्यं तन्मुखोल्लासार्थम्, न तु मदर्थमित्याह—कृतज्ञस्य बहुज्ञस्येति । अल्पमिति कृतं बहुतया जानत इत्यर्थः । इदमपि कैङ्कर्यं सहजमित्याशयेनाह—नाम्ना लक्ष्मणो नामेति । स्वनामतः कैङ्कर्यलक्ष्मीसम्पन्न इति प्रसिद्धः ॥ १२ ॥ सुखेत्यादि श्लोकद्वयमेकान्वयम् । यद्वा प्रथमश्लोकस्य पूर्वेणान्वयः । सहजत्वमुपपादयति—सुखेति । महार्हस्य ऐश्वर्यसम्पन्नस्य । वनवासाश्रितस्य दुःखितस्येत्यर्थः । तथा च समृद्धिदशायामसमृद्धिदशायां च दास्योक्त्या सहजत्वमुपपादितम् । सहजमेव कैङ्कर्यम् । गुणास्तु तद्वर्धका इति भावः ॥ १३ ॥ तनि०—अस्यावरो भ्राता । अहं तु दास्यं गतः । सर्वदेशसर्वकालादिषु अविश्लेषेण कैङ्कर्यकारित्वं द्योतयितुमुपपदम् । सहजसिद्धदास्यव्रत

टीका—आप्तदक्षिणैः पर्याप्तदक्षिणैः ॥ ७—१० ॥ सीतायाः प्रभासाम्यं सर्वावस्थास्वपि नित्यसन्निहितत्वात् ॥ ११—१३ ॥

सम्बन्धिनोपि भोग्यतमत्वमाह—गुणैरिति ॥ १३ ॥ रक्षसेति । रहिते आवाभ्यां रहितदेशे ॥ १४ ॥ दनुरिति । दनुः दनुवंशजः कबन्धः दितेः पुत्रः पुत्रप्रायः तेन सुग्रीवः समर्थ इत्याख्यातः ॥ १५ ॥ स इतिं । स्पष्टम् ॥ १६ ॥ एतदिति । ते तुभ्यं याथातथ्येनाख्यातम् ॥ १७ ॥ अहमित्यर्धम् ॥ १८ ॥ परत्वसौशील्ये दर्शयति—एष इति । त्रैलोक्यनाथत्वमेव सुग्रीवनाथत्वेच्छायां हेतुः । परत्वं विना सौशील्यस्यागुणत्वात् । इच्छति लप्स्यते न वा स्वय

रक्षसाऽपहृता भार्या रहिते कामरूपिणा । तच्च न ज्ञायते रक्षः पत्नी येनास्य सा हृता ॥ १४ ॥ दनुर्नाम दितेः पुत्रः शापाद्राक्षसतां गतः । आख्यातस्तेन सुग्रीवः समर्थो वानरर्षभः ॥ १५ ॥ स ज्ञास्यति महावीर्यस्तव भार्यापहारिणम् । एवमुक्त्वा दनुः स्वर्गं भ्राजमानो गतः सुखम् ॥ १६॥ एतत्ते सर्वमाख्यातं याथातथ्येन पृच्छतः ॥ १७॥ अहं चैव हि रामश्च सुग्रीवं शरणं गतौ ॥ १८ ॥ एष दत्त्वा च वित्तानि प्राप्य चानुत्तमं यशः । लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति ॥ १९॥ पिता यस्य पुरा ह्यासीच्छरण्यो धर्मवत्सलः । तस्य पुत्रः शरण्यश्च सुग्रीवं शरणं गतः ॥ २० ॥ सर्वलोकस्य धर्मात्मा शरण्यः शरणं पुरा । गुरुर्मे राघवः सोऽयं सुग्रीवं शरणं गतः ॥ २१ ॥ यस्य प्रसादे सततं प्रसीदेयुरिमाः प्रजाः । स रामो वानरेन्द्रस्य प्रसादमभिकांक्षते ॥ २२ ॥

मभिलषति । अपर्यनुयोज्या हि स्वतन्त्रा इति भावः । चकारेण लब्धा चेत्युच्यते । अनुत्तमं परत्वापेक्षयाऽवतारप्रयुक्तातिशयवत् । लोकनाथः सर्वलोकैर्याच्यमानः सर्वस्वामी च । "नाधृ नाथृ याच्ञोपतापैश्वर्याशीष्षु" धातुः ॥ १९ ॥ तनि०—अत्र सौशील्यमभिव्यनक्ति—लोकनाथ इति । निरुपपदेन सकललोकानां नाथत्वं नाथनीयत्वं च व्यञ्जितम् । अनुत्तमं यश इति । पूर्वापेक्षया अवतारप्रयुक्तातिशयितकीर्तिमत्त्वम् । एवंविधः क्षोदीयसं जनं कथमर्थयत इत्यत्राह—इच्छतीति । स्वतन्त्रेच्छया तदर्थनं गुणायैवेत्यर्थः ॥ १९ ॥ तदेव सौशील्यं प्रकारान्तरेणाह—पितेति । शरण्यः प्राप्यः । शरणं रक्षकम् ॥ २० ॥ शरण्य इत्युक्तं विशेषयति--सर्वलोकस्येति । गुरुः अग्रजः ॥ २१ ॥ रामानु०--शरण्यः प्राप्यः । शरणं रक्षकम् ॥ २१ ॥ यस्य प्रसाद इति । इमाः प्रजाः सततं प्रसीदेयुः तत्प्रसादलब्धसकलपुरुषार्थतया सर्वदा प्रसन्नचित्ता भवेयुः । वानरेन्द्रस्य स्वप्रसाद्यप्रजैकदेशक्षुद्रतरजनस्य प्रसादमभिकाङ्क्षते । स्वतन्त्रेच्छस्य

रक्षसेति । रहिते आवाभ्यां रहिते देश इत्यर्थः॥१४॥ दनुरित्यादिसार्धश्लोकमेकं वाक्यम् । स ज्ञास्यतीति तेन आख्यात इति सम्बन्धः॥१५–२०॥ सर्वलोकस्येति ।

नियन्तुमशक्यत्वादिति भावः ॥ २२ ॥ येनेत्यादि ... सततं सर्वगुणोपेता ... भवन्ति तथा सदा मानिताः । वानरेन्द्रं वन मात्रप्रसिद्धशाखामृगमिति सौशील्यातिशयध्वनिः ॥२३॥ रामानु०—येनेति । सततमित्यस्य सर्वगुणोपेता इत्यनेन सम्बन्धः । अन्यथा पुनरुक्तिः स्यात् ॥ २३ ॥ ॥ २४ ॥ शोकेनाभिभूते शोकपरतन्त्रे । शोकार्ते शोकपीडिते । कर्मपरतन्त्रं शोकाकुलं स्वजनमालोक्य स्वयं शोकाकुलस्याचार्यमुखं विनोभयशोकानुद्धारा

येन सर्वगुणोपेताः पृथिव्यां सर्वपार्थिवाः । मानिताः सततं राज्ञा सदा दशरथेन वै ॥ २३ ॥ तस्यायं पूर्वजः पुत्रस्त्रिषु लोकेषु विश्रुतः । सुग्रीवं वानरेन्द्रं तु रामः शरणमागतः ॥ २४ ॥ शोकाभिभूते रामे तु शोकार्ते शरणं गते । कर्तुमर्हति सुग्रीवः प्रसादं हरियूथपः ॥२५॥ एवं ब्रुवाणं सौमित्रिं करुणं साश्रुलोचनम् । हनुमान् प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ २६ ॥ ईदृशा बुद्धिसम्पन्ना जितक्रोधा जितेन्द्रियाः । द्रष्टव्या वानरेन्द्रेण दिष्ट्या दर्शन मागताः ॥२७॥ स हि राज्यात्परिभ्रष्टः कृतवैरश्च वालिना । हृतदारो वने त्यक्तो भ्रात्रा विनिकृतो भृशम् ॥ २८ ॥ करिष्यति स साहाय्यं युवयोर्भास्करात्मजः । सुग्रीवः सह चास्माभिः सीतायाः परिमार्गणे ॥ २९ ॥ इत्येवमुक्त्वा हनुमान् श्लक्ष्णं मधुरया गिरा । बभाषे सोऽभिगच्छेम सुग्रीवमिति राघवम् ॥ ३० ॥ एवं ब्रुवाणं धर्मात्मा हनुमन्तं सलक्ष्मणः । प्रतिपूज्य यथान्यायमिदं प्रोवाच राघवम् ॥ ३१ ॥ कपिः कथयते हृष्टो यथायं मारुतात्मजः । कृत्यवान् सोपि सम्प्राप्तः कृतकृत्योऽसि राघव ॥ ३२ ॥

दिति भावः ॥ २५ ॥ एवमिति । साश्रुलोचनमिति रामदुःखदर्शनाद्दुःखितत्वमुच्यते ॥ २६ ॥ द्रष्टव्याः अन्वेषितव्याः ॥ २७ ॥ रामा०-दिष्ट्या दर्शनमागता इत्यनन्तरं पठ्यमान इत्येवमुक्त्वेति श्लोकः सीतायाः परिमार्गण इत्यस्यानन्तरं द्रष्टव्यः ॥ २७ ॥ विनिकृतः वञ्चितः ॥ २८ ॥ करिष्यतीति । परिमार्गणे साहाय्यं करिष्यति । ततः परं भवतोरग्रे का शत्रुवार्तेति भावः ॥२९॥ इतीति । बभाषे, पुनरपीति शेषः॥३०॥ यथान्यायं दूतानुरूपम् ॥३१॥ कपिरिति । अयं हृष्टः शरण्यः प्राप्यः । शरणं रक्षकम् ॥ २१ ॥ २२ ॥ येनेति । सततं सर्वगुणोपेताः सदा राज्ञा मानिता इति सम्बन्धः ॥ २३ ॥२४॥ शोकाभिभूत इति । शोकाभिभूते शोकाविष्टे । शोकार्ते शोकपीडिते ॥ २५–३१ ॥ कपिरिति । हे राघव ! सम्प्राप्तोऽयं कपिः हृष्टः मद्वाक्यश्रवणात्सञ्जातहर्षः । सोपि सुग्रीवोपि कृत्यवानिति

सन् यथा यथार्थं कथयते । यथार्थकथने हृष्टत्वं हेतुः । सीतापरिमार्गणं करिष्यतीति यथार्थमेव । सोपि सुग्रीवः कृत्यवान् प्राप्तः जातः । तस्मात् कृत कृत्योसि ॥३२॥ रामा०—अग्रेतिकरणं द्रष्टव्यम् । हे राघव ! संप्राप्तोयं कपिर्मारुतात्मजो हृष्टः मद्वाक्यश्रवणात्सञ्जातहर्षः । सोपि सुग्रीवोपि कृत्यवानिति यथावत् कथयते अतः कृतकृत्योसीति योजना ॥ ३२ ॥ हृष्टपदसूचितं विवृणोति—प्रसन्नेति । वक्ष्यते वक्ष्यति । अनृतं न वदेदित्यर्थः ॥ ३३ ॥ रामा०—हनूमदुक्तवाक्यस्य याथार्थ्यं समर्थयते—प्रसन्नेति॥३३॥

प्रसन्नमुखवर्णश्च व्यक्तं हृष्टश्च भाषते । नानृतं वक्ष्यते वीरो हनुमान् मारुतात्मजः ॥ ३३ ॥ ततः स तु महाप्राज्ञो हनुमान्मारुतात्मजः । जगामादाय तौ वीरौ हरिराजाय राघवौ ॥ ३४॥ भिक्षुरूपं परित्यज्य वानरं रूपमास्थितः । पृष्ठमारोप्य तौ वीरौ जगाम कपिकुञ्जरः ॥ ३५ ॥ स तु विपुलयशाः कपिप्रवीरः पवनसुतः कृतकृत्यवत्प्रहृष्टः । गिरिवरमुरुविक्रमः प्रयातः सुशुभमतिः सह रामलक्ष्मणाभ्याम् ॥ ३६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे चतुर्थः सर्गः ॥ ४ ॥

ऋश्यमूकात्तु हनुमान् गत्वा तु मलयं गिरिम् । आचचक्षे तदा वीरौ कपिराजाय राघवौ ॥ १ ॥
अयं रामो महाप्राज्ञः सम्प्राप्तो दृढविक्रमः । लक्ष्मणेन सह भ्रात्रा रामोऽयं सत्यविक्रमः ॥ २ ॥

हरिराजाय वानरराजाय ॥ ३४ ॥ उक्तं विवृणोति—भिक्ष्विति ॥ ३५ ॥ विपुलयशाः सर्वदेववरप्रसादेन विशालकीर्तिः । कपिप्रवीरः सुग्रीवमपि नियन्तुं समर्थः । अनेन भगवल्लाभ आचार्याधीन इत्युक्तम् ॥३६॥ इति श्रीगोविन्द० श्रीरामा० मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥
अथ पापभीतस्य कर्मानुरूपं फलं दिशतो भगवतोपि त्रस्तस्य आचार्यमुखात् भगवद्गुणान् श्रुत्वा तदेकोपायनिष्ठा सूच्यते पञ्चमे—ऋश्यमूकात्त्वित्यादि । रामलक्ष्मणदर्शनभीतः सुग्रीवः ऋश्यमूकादुत्प्लुत्य गहनं मलयाख्यमृश्यमूकपर्यन्तपर्वतं गतः हनुमान् रामलक्ष्मणौ तत्र प्रतिष्ठाप्य सुग्रीवं तत्रानीतवानिति बोध्यम् ॥ १ ॥ अयं रामः सम्प्राप्तः । अयं रामः सत्यविक्रमः । त्वच्छत्रुनिवर्हणक्षम इत्यर्थः ॥ २ ॥ रामानु०—महाप्राज्ञो दृढविक्रमोऽयं संप्राप्तः । अयं रामः यथा कथयते अतः कृतकृत्योसीति योजना ॥ ३५ ॥ ३६ ॥ इति श्रीमहेश्वरतीर्थविर० श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां चतुर्थः सर्गः ॥४॥
ऋश्यमूकादिति । ऋश्यमूकात् मलयगिरिं गत्वा ऋश्यमूकप्रदेशान्तरस्यैव मलयगिरिरिति नाम ॥ १ ॥ भ्रात्रा लक्ष्मणेन सह महाप्राज्ञः दृढविक्रमोऽयं रामः
स०—सत्यविक्रमः इति षष्ठे सत्यपि अविक्रमः इदानीमप्रदर्शितविक्रमः । अमत्रप्रमः आतः सत्य आयुर्वर्धिनः आ सम्यक् अप्रमो दुःखं यस्मात्स तथा सम्प्राप्त इत्यन्वयः ॥ २ ॥

सत्यविक्रमः । तव शत्रुनिरसनदक्ष इति भावः । एवं वाक्यभेदेन योजना अयंरामशब्दयोः पुनरुक्तिपरिहारार्था ॥ २ ॥ किष्किन्धा प्रसिद्धः ॥ २ ॥ तस्येत्यादि ॥ ३–८ ॥ स कृत्वेति । राघवम्, प्राप्येति शेषः ॥ ९–११ ॥ रामानु०—हनुमद्वचनश्रवणानन्तरं सुग्रीवस्य मानुषरूपपरिग्रहाभिधानात् हनूमान् रामलक्ष्मणौ स्थलान्तरे निवेश्य तदा



इक्ष्वाकूणां कुले जातो रामो दशरथात्मजः । धर्मे निगदितश्चैव पितुर्निर्देशपारगः ॥ ३ ॥ तस्यास्य वसतोऽरण्ये नियतस्य महात्मनः । रावणेन हृता भार्या स त्वां शरणमागतः ॥ ४ ॥ राजसूयाश्वमेधैश्च वह्निर्येनाभितर्पितः । दक्षिणाश्च तथोत्सृष्टा गावः शतसहस्रशः ॥ ५ ॥ तपसा सत्यवाक्येन वसुधा येन पालिता । स्त्रीहेतोस्तस्य पुत्रोऽयं रामस्त्वां शरणं गतः ॥ ६ ॥ भवता सख्यकामौ तौ भ्रातरौ रामलक्ष्मणौ । प्रतिगृह्यार्चयस्वैतौ पूजनीयतमावुभौ ॥ ७ ॥ श्रुत्वा हनुमतो वाक्यं सुग्रीवो हृष्टमानसः । भयं च राघवाद्घोरं प्रजहौ विगतज्वरः ॥ ८ ॥ स कृत्वा मानुषं रूपं सुग्रीवः प्लवगर्षभः । दर्शनीयतमो भूत्वा प्रीत्या प्रोवाच राघवम् ॥ ९ ॥ भवान् धर्मविनीतश्च विक्रान्तः सर्ववत्सलः । आख्याता वायुपुत्रेण तत्त्वतो मे भवद्गुणाः ॥ १० ॥ तन्ममैवैष सत्कारो लाभश्चैवोत्तमः प्रभो । यत्त्वमिच्छसि सौहार्दं वानरेण मया सह ॥ ११ ॥ रोचते यदि वा सख्यं बाहुरेष प्रसारितः । गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा ॥ १२ ॥ एतत्तु वचनं श्रुत्वा सुग्रीवेण सुभाषितम् । स प्रहृष्टमना हस्तं पीडयामास पाणिना ॥ १३ ॥

गमनं सुग्रीवाय न्यवेदयदित्यवगम्यते ॥ ९–११ ॥ रोचत इति । मर्यादा व्यवस्था ॥ १२ ॥ रामानु०—मर्यादा अनुल्लङ्घनीया व्यवस्था ॥ १२ ॥ एतत्त्विति । राम इति सम्प्राप्तः, अयं रामः सत्यविक्रमः, तव शत्रुनिरसनक्षम इति भावः । एवं वाक्यभेदेन योजना तु अयंरामशब्दयोः पुनरुक्तिपरिहारार्था ॥ २–६ ॥ भवतेति । प्रतिगृह्य प्रत्युद्गम्य ॥ ७ ॥ ८ ॥ स कृत्वेति । हनुमद्वचनश्रवणानन्तरमेव सुग्रीवस्य मानुषरूपपरिग्रहाभिधानात् हनुमान् रामलक्ष्मणौ स्थलान्तरे निवेश्य तयोरागमनं सुग्रीवाय निवेदितवानित्यवगम्यते ॥ ९ ॥ टी०—भवानिति । विनीतः शिक्षितः ॥ १० ॥ वानरेण—तिरश्चा, असमानेनेत्यर्थः । एवंविधेनापि मया सख्यमिच्छसि चेत् करावलम्बः क्रियतामित्याह—रोचत इति । मर्यादा हि अनुल्लङ्घनीया व्यवस्था ॥ ११ ॥ १२ ॥ १३ ॥

स०—धर्मे धर्मविषये । राम एवेति निगदितः लोकैः ॥ ति०—धर्मे स्वसत्यपरिपालनरूपधर्मनिमित्तम् । निगदितः प्रेरितः । पित्रेति शेषः ॥ ३ ॥

शेषः ॥ १२ ॥ हृद्यमित्यर्धम् । पीडितं दृढम् ॥ १४ ॥ मर्यादा बध्यतामिति वदतः सुग्रीवस्याशयं विदित्वाचरति—तत इति । भिक्षुरूपं सन्त्यज्येत्यनेन सुग्रीवविश्वासार्थम् "तौ त्वया प्राकृतेनैव गत्वा ज्ञेयौ प्लवङ्गम" इति तदुक्तप्रकारेण पुनर्भिक्षुरूपेणैव तदन्तिकं गत इत्यवगम्यते । स्वेन रूपेण वानररूपेण । काष्ठयोः अरणिभूतशमीकाष्ठयोः । सप्तम्यन्तं पदम् ॥ १५ ॥ दीप्यमानमिति । सत्कृतमित्यभ्यर्च्येत्यस्यानुवादः । तयोः रामसुग्रीवयोः ॥१६॥

हृद्यं सौहृदमालम्ब्य पर्यष्वजत पीडितम् ॥ १४ ॥ ततो हनूमान् सन्त्यज्य भिक्षुरूपमरिन्दमः । काष्ठयोः स्वेन रूपेण जनयामास पावकम् ॥ १५ ॥ दीप्यमानं ततो वह्निं पुष्पैरभ्यर्च्य सत्कृतम् । तयोर्मध्येऽथ सुप्रीतो निदधे सुसमाहितः ॥ १६ ॥ ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम् । सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ॥ १७ ॥ ततः सुप्रीतमनसौ तावुभौ हरिराघवौ । अन्योन्यमभिवीक्षन्तौ न तृप्तिमुपजग्मतुः ॥ १८ ॥ त्वं वयस्योऽसि मे हृद्यो ह्येकं दुःखं सुखं च नौ । सुग्रीवो राघवं वाक्यमित्युवाच प्रहृष्टवत् ॥ १९ ॥ ततः स पर्णबहुलां छित्त्वा शाखां सुपुष्पिताम् । सालस्यास्तीर्य सुग्रीवो निषसाद सराघवः ॥२०॥ लक्ष्मणायाथ संहृष्टो हनुमान् प्लवगर्षभः । शाखां चन्दनवृक्षस्य ददौ परमपुष्पिताम् ॥ २१ ॥ ततः प्रहृष्टः सुग्रीवः श्लक्ष्णं मधुरया गिरा । प्रत्युवाच तदा रामं हर्षव्याकुललोचनः ॥ २२ ॥ अहं विनिकृतो राम चरामीह भयार्दितः । हृतभार्यो वने त्रस्तो दुर्गमे तदुपाश्रितः ॥ २३ ॥

तत इति । प्रदक्षिणं चक्रतुः । अन्योन्यं पाणिं गृहीत्वेति शेषः । उपागतौ अग्निसाक्षिकमिति शेषः ॥ १७ ॥ तत इति । अभिवीक्षन्तौ अभिवीक्षमाणौ ॥ १८ ॥ त्वमिति । एकं समानम् । त्वद्दुःखेन मम दुःखं भवतु त्वत्सुखेन मम सुखं भवत्वित्यर्थः । अनेन परसाम्यापत्त्यभ्यर्थनं सूचितम् ॥ १९ ॥ तत इति । सराघव इत्यनेन एकासनत्वमुक्तम् ॥ २० ॥ २१ ॥ तत इति । प्रत्युवाच तदा राममिति पाठः ॥ २२ ॥ २३ ॥ रामानु०—अहमिति । त्रस्तः



हृद्यमिति । पीडितं दृढं यथा तथा ॥ १४ ॥ 'भिक्षुरूपं परित्यज्य' इत्यनेन 'तौ त्वया प्राकृतेनैव गत्वा ज्ञेयौ प्लवङ्गम ।' इति सुग्रीवोक्तनिदेशकरणप्रतीत्यर्थं सुग्रीवस्य रामागमननिवेदनसमये पुनर्भिक्षुरूपं गृहीतवानित्यवगम्यते । काष्ठयोरिति सप्तम्यन्तम् । टी०—अत्र हनुमता पावकोत्पादनं रामाभ्यनुज्ञयैव, अग्निसाक्षिकं स्नेहं कुर्विति कबन्धेनोक्तत्वात् ॥ १५ ॥ दीप्यमानमिति । तयोः रामसुग्रीवयोः । निदधौ निहितवान् ॥ १६–२२ ॥ सुग्रीवः स्ववृत्तान्तं विज्ञापयति—अहमित्यादि । इवशब्दो

चकितः । अत्रस्त इति वा ॥ २३ ॥ सोऽहमिति । त्रस्त भीत उत्तरोत्तर भीतः । यद्वा वालिनस्त्रस्तोऽहमस्मिन् वने अभीतो वसामीत्यर्थः ॥ २४ ॥ वालिन इति । अभयं भयाभावं कुरु । आर्त्यतिशयेन दार्ढ्याय पुनरुच्यते—कर्तुमित्यर्धेन । मे भयं यथा न भवेत्तथा कर्तुमर्हसीत्यन्वयः ॥ २५ ॥

सोऽहं त्रस्तो वने भीतो वसाम्युद्भ्रान्तचेतनः । वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ॥२४॥ वालिनो मे महाभाग भयार्तस्याभयं कुरु। कर्तुमर्हसि काकुत्स्थ भयं मे न भवेद्यथा ॥ २५ ॥ एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः । प्रत्यभाषत काकुत्स्थः सुग्रीवं प्रहसन्निव ॥ २६ ॥ उपकारफलं मित्रं विदितं मे महाकपे । वालिनं तं वधिष्यामि तव भार्यापहारिणम् ॥ २७ ॥ अमोघाः सूर्यसङ्काशा ममैते निशिताः शराः । तस्मिन् वालिनि दुर्वृत्ते निपतिष्यन्ति वेगिताः ॥ २८ ॥ कङ्कपत्रप्रतिच्छन्ना महेन्द्राशनिसन्निभाः । तीक्ष्णाग्रा ऋजुपर्वाणः सरोषा भुजगा इव ॥ २९ ॥ तमद्य वालिनं पश्य क्रूरैराशीविषोपमैः । शरैर्विनिहतं भूमौ विकीर्णमिव पर्वतम् ॥ ३० ॥ स तु तद्वचनं श्रुत्वा राघवस्यात्मनो हितम् । सुग्रीवः परमप्रीतः सुमहद्वाक्यमब्रवीत् ॥ ३१ ॥ तव प्रसादेन नृसिंह राघव प्रियां च राज्यं च समाप्नुयामहम् । तथा कुरु त्वं नरदेव वैरिणं यथा निहंस्यद्य रिपुं ममाग्रजम् ॥ ३२ ॥ सीताकपीन्द्र क्षणदाचराणां राजीवहेमज्वलनोपमानि । सुग्रीवरामप्रणयप्रसङ्गे वामानि नेत्राणि समं स्फुरन्ति ॥ ३३ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे पञ्चमः सर्गः ॥ ५ ॥

प्रहसन्निव कियन्मात्रमेतदिति हसित्वा । इवशब्दो मन्दस्मितत्वे ॥ २६–२८ ॥ कङ्कपत्रप्रतिच्छन्नाः कङ्कपत्रैर्बद्धा इत्यर्थः ॥ २९ ॥ अद्य पश्येत्यनेन क्रियाझाटित्यमुक्तम् ॥ ३० ॥ ३१ ॥ कुरु यतस्वेत्यर्थः । वैरिणं रिपुमिति द्विरुक्त्या वैरकृतं शात्रवम्, नतु जात्येत्युक्तम् ॥ ३२ ॥ प्रसङ्गात् कविराह—सीतेति । सीतानेत्रं राजीवोपमम्, वालिनेत्रं हेमोपमम्, पिङ्गाक्षत्वात् । रावणनेत्राणि ज्वलनोपमानि । पुरुषस्य वामनेत्रस्फुरणमनर्थकरम् । स्त्रियास्तु

वाक्यालङ्कारे ॥ २३ ॥ त्रस्तः चकितः ॥ २४–२६ ॥ अथ सुग्रीवाभिमतं वालिवधं प्रतिजानीते—उपकारेति ॥ २७ ॥ वेगिताः सञ्जातवेगाः ॥ २८–३२ ॥ कपीन्द्रः

शोभनमिति निमित्तशास्त्रविदः ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चमः सर्गः ॥५॥ एवं रामेण वालिवधे प्रतिज्ञाते सुग्रीवेणापि रामकार्यसिद्धिः प्रतिज्ञायते षष्ठे–पुनरेवेत्यादि। राघवमिति नाम। सुग्रीव इति शेषः ॥१॥ अयमिति। त्वं

पुनरेवाब्रवीत् प्रीतो राघवं रघुनन्दनम् ॥ १ ॥ अयमाख्याति मे राम सचिवो मन्त्रिसत्तमः। हनुमान् यन्निमित्तं त्वं निर्जनं वनमागतः ॥ २ ॥ लक्ष्मणेन सह भ्रात्रा वसतश्च वने तव। रक्षसाऽपहृता भार्या मैथिली जनकात्मजा ॥ ३ ॥ त्वया वियुक्ता रुदती लक्ष्मणेन च धीमता। अन्तरप्रेप्सुना तेन हत्वा गृध्रं जटायुषम् ॥ ४ ॥ भार्यावियोगजं दुःखमचिरात्त्वं विमोक्ष्यसे। अहं तामानयिष्यामि नष्टां वेदश्रुतीमिव ॥ ५ ॥ रसातले वा वर्तन्तीं वर्तन्तीं वा नभस्तले। अहमानीय दास्यामि तव भार्यामरिन्दम ॥६ ॥ इदं तथ्यं मम वचस्त्वमवेहि च राघव। न शक्या सा जरयितुमपि सेन्द्रैः सुरासुरैः ॥ ७ ॥ तव भार्या महाबाहो भक्ष्यं विषकृतं यथा ॥ ८ ॥

यन्निमित्तं वनमागतः तदाख्याति स्म ॥ २ ॥ रामानु०–आख्याति आख्यतवान्। वर्तमानसामीप्ये वर्तमानवद्वेति भूते लट् ॥ २ ॥ लक्ष्मणेनेत्यादिश्लोकद्वयम्। तेन पूर्वमविज्ञातेन ॥ ३ ॥ ४ ॥ विमोक्ष्यसे त्यक्ष्यसि। नष्टां मधुकैटभापहृताम्। वेदश्रुतीम् श्रूयत इति श्रुतिः शब्दः, वेदरूपश्रुतीमिव वेदगिरमिव। दीर्घः आर्षः ॥ ५ ॥ रामानु०–नष्टां वेदश्रुतिं यथेति। श्रूयत इति श्रुतिरिति व्युत्पत्त्या श्रुतित्वं वेदशास्त्रादेः साधारणम्। तद्व्यावृत्त्यर्थं वेदश्रुतिमित्युक्तम् ॥ ५ ॥ वर्तन्तीं वर्तमानाम् ॥ ६ ॥ जरयितुम् आत्मसात्कर्तुम्। विषकृतं विषेण पक्वम् ॥ ७ ॥ ८ ॥

वाली। क्षणदाचरः रावणः। वामनेत्रस्फुरणं पुंसां दुर्निमित्तम्। स्त्रीणां शुभकरमिति भावः ॥ स०–सीताया वामनेत्रस्फुरणं त्रिकालदर्शिना ऋषिणा दृष्ट्वोक्तमिति वक्तव्यम् ॥ ३३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां पञ्चमः सर्गः ॥ ५ ॥ पुनरेवेत्यादिसार्धश्लोकमेकं वाक्यम्। त्वं यन्निमित्तं वनमागतः तदाख्याति आख्यातवान् ॥ १ ॥ २ ॥ लक्ष्मणेनेत्यादि श्लोकद्वयमेकं वाक्यम्। भ्रात्रा सह वने वसतस्तवान्तरप्रेप्सुना तवानवस्थानं प्राप्तुमिच्छता। रक्षसा रावणेन गृध्रं हत्वा त्वया लक्ष्मणेन च वियुक्ता वैदेही अपहृतेति हनुमानाख्यातीत्यब्रवीदिति पूर्वेण सम्बन्धः ॥ ३ ॥ ४ ॥ भार्यावियोगजमित्यादि। किञ्च नष्टां वेदश्रुतीमिव। श्रूयत इति श्रुतिरिति व्युत्पत्त्या श्रुतिर्वेदशास्त्रसाधारणम्, तद्व्यावृत्त्यर्थं वेदश्रुतीमित्युक्तम्। मधुकैटभाभ्यां पाताले गुप्तं वेदजातं मत्स्याकृतिर्हरिर्यथा आनीतवान् तद्वत्सीतामानयिष्यामि, आनेष्यामीत्यर्थः ॥ ५–८ ॥

अनुमानात् योग्यतया । या दृष्टा सा मैथिली, न संशयः । अनुमानात्तु जानामीत्यस्यैव विवरणमिदम् ॥ ९ ॥ रामाद्‌०—मैथिलीत्यत्र इतिकरणं द्रष्टव्यम् ॥९॥ ॥ १० ॥ आत्मनेति । आत्मना मया पञ्चमम् ॥ ११ ॥ प्रत्यभिज्ञातु स्मर्तुम् ॥ १२ ॥ रामानु०—किमर्थं प्रविलम्बस इति पाठः ॥ १३ ॥ १४ ॥ उत्तरीय

त्यज शोकं महाबाहो तां कान्तामानयामि ते । अनुमानात्तु जानामि मैथिली सा न संशयः ॥ ९ ॥ ह्रियमाणा मया दृष्टा रक्षसा क्रूरकर्मणा । क्रोशन्ती राम रामेति लक्ष्मणेति च विस्वरम् । स्फुरन्ती रावणस्याङ्के पन्नगेन्द्र वधूर्यथा ॥ १० ॥ आत्मना पञ्चमं मां हि दृष्ट्वा शैलतटे स्थितम् । उत्तरीयं तया त्यक्तं शुभान्याभरणानि च ॥ ११ ॥ तान्यस्माभिर्गृहीतानि निहितानि च राघव । आनयिष्याम्यहं तानि प्रत्यभिज्ञातुमर्हसि ॥ १२ ॥ तमब्रवीत्ततो रामः सुग्रीवं प्रियवादिनम् । आनयस्व सखे शीघ्रं किमर्थं प्रविलम्बसे ॥ १३ ॥ एवमुक्तस्तु सुग्रीवः शैलस्य गहनां गुहाम् । प्रविवेश ततः शीघ्रं राघवप्रियकाम्यया ॥ १४ ॥ उत्तरीयं गृहीत्वा तु शुभान्याभरणानि च । इदं पश्येति रामाय दर्शयामास वानरः ॥ १५ ॥ ततो गृहीत्वा तद्वासः शुभान्याभरणानि च । अभवद्बाष्पसंरुद्धो नीहारेणेव चन्द्रमाः ॥ १६ ॥ सीतास्नेहप्रवृत्तेन स तु बाष्पेण दूषितः । हा प्रियेति रुदन् धैर्यमुत्सृज्य न्यपतत् क्षितौ ॥ १७ ॥ हृदि कृत्वा तु बहुशस्तमलङ्कारमुत्तमम् । निशश्वास भृशं सर्पो बिलस्थ इव रोषितः ॥ १८ ॥ अविच्छिन्नाश्रुवेगस्तु सौमित्रिं वीक्ष्य पार्श्वतः । परिदेवयितुं दीनं रामः समुपचक्रमे ॥ १९ ॥ पश्य लक्ष्मण वैदेह्या सन्त्यक्तं ह्रियमाणया । उत्तरीयमिदं भूमौ शरीराद्भूषणानि च ॥ २० ॥

माभरणानि च । उत्तरीयबद्धानीत्यर्थः ॥ १५–१७ ॥ अलङ्कारमिति जात्येकवचनम् । रोषितः सञ्जातरोषः ॥ १८ ॥ परिदेवयितुं प्रलपितुम् । दीनमिति क्रियाविशेषणम् ॥ १९ ॥ पश्येति । शरीरात्, अपनीयेति शेषः ॥ २० ॥

टी०—अनुमानादिति । रावणेन हृता काचिन्मया दृष्टा ऋश्यमूकस्थितेन, सा सीता भवितुमर्हतीत्यनुमानप्रकारः ॥ ९ ॥ १० ॥ रावणहृता सीतेत्यस्मिन्नर्थे ज्ञापकान्तरमस्तीत्याह—आत्मनेति ॥ ११ ॥ निहितानि निगूढानि, विधिवद्रक्षितानीत्यर्थः ॥ १२ ॥ १३ ॥ गहनां दुष्प्रवेशाम् ॥ १४–१७ ॥ रोषितः सञ्जातरोषः ॥ १८–२० ॥

अत्र शाद्वलशब्देन हरिततृणान्युच्यन्ते । स्वार्थे वलजार्षः । तद्वत्यां भूमौ । मृदुस्थले उत्सृष्टत्वात् तथारूपम् अविकलरूपं दृश्यते ॥२१॥ रामानु०–तथारूपम् पूर्वं यथारूपं तथारूपम् । अक्षतमिति यावत् ॥ २१ ॥ कं देशं कां दिशं प्रति । ह्रियन्ती ह्रियमाणेत्यर्थः । प्राणैः प्राणेभ्यः ॥ २२–२४ ॥ अपावृतम्

शाद्वलिन्यां ध्रुव भूम्यां सीतया ह्रियमाणया । उत्सृष्टं भूषणमिदं तथारूपं हि दृश्यते ॥२१॥ एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् । नाहं जानामि केयूरे नाहं जानामि कुण्डले । नूपुर त्वभिजानामि नित्यं पादाभिवन्दनात् ॥ २२ ॥ ततः स राघवो दीनः सुग्रीवमिदमब्रवीत् ॥ २३ ॥ ब्रूहि सुग्रीव कं देशं ह्रियन्ती लक्षिता त्वया । रक्षसा रौद्ररूपेण मम प्राणैः प्रिया प्रिया ॥ २४ ॥ क्व वा वसति तद्रक्षो महद्व्यसनदं मम । यन्निमित्तमहं सर्वान्नाशयिष्यामि राक्षसान् ॥ २५ ॥ हरता मैथिलीं येन मां च रोषयता भृशम् । आत्मनो जीवितान्ताय मृत्युद्वारमपावृतम् ॥२६॥ मम दयिततरा हृता वनान्ताद्रजनिचरेण विमथ्य येन सा। कथय मम रिपुं त्वमद्य वै प्लवगपते यमसादनं नयामि ॥२७॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे षष्ठः सर्गः॥६॥

एवमुक्तस्तु सुग्रीवो रामेणार्तेन वानरः। अब्रवीत् प्राञ्जलिर्वाक्यं सबाष्पं बाष्पगद्गदः ॥ १ ॥
न जाने निलयं तस्य सर्वथा पापरक्षसः । सामर्थ्यं विक्रम वापि दौष्कुलेयस्य वा कुलम् ॥ २ ॥



उद्घाटितम् । येन तत्क वसतीत्यन्वयः ॥ २५ ॥ २६ ॥ ममेति । विषमवृत्तम् ॥ २७ ॥ रामानु०–अस्मिन् सर्गान्ते मम दयिततरेत्ययं श्लोको बहुषु कोशेषु न दृश्यते ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥

एवमाभरणदर्शनव्याजेन चेतनस्य यादृच्छिकप्रासङ्गिकसुकृतदर्शनेन तल्लाभत्वरा भगवत उच्यते सप्तमे–एवमुक्त इत्यादि । बाष्पगद्गदः रामबाष्पदर्शनेन स्वयमपि बाष्पगद्गदः । "एकं दुःखं सुखं च नौ" इत्यस्य प्रथमोदाहरणमिदम् ॥ १ ॥ दौष्कुलेयस्य दुष्कुले भवो दौष्कुलेयः । "दुष्कुलाड्ढक्"



तथारूपं पूर्वं यथारूपम् अक्षतरूपमित्यर्थः । मृदुप्रदेशपातादिति भावः ॥२१–२३॥ कं देशम् । अत्यन्तसंयोगे द्वितीया । कस्मिन् देशे लक्षितेत्यर्थः ॥ २४–२७ ॥ इति श्रीमहेश्वरतीर्थविर० श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां षष्ठः सर्गः ॥ ६ ॥ १ ॥ न जाने इति । सर्वथा न जाने सर्वप्रकारेण न जाने, किञ्चिज्जानामीत्यर्थः । उत्तरत्र

इति ढक् । तस्य पापरक्षसः परदारापहरणरूपपापकर्तुः राक्षसस्य । निलयं वासस्थानम् । सामर्थ्यं शक्तिम् । विक्रमं वा सर्वथा न जाने । किञ्चिदपि न जानामीत्यर्थः । नन्विदं वक्ष्यमाणेन विरुध्यते । वक्ष्यति वानरप्रेषणावसरे—"द्वीपस्तस्यापरे पारे शतयोजनमायतः । अगम्यो मानुषैर्देवैस्तं मार्गध्वं समन्ततः ॥ स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः । राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः ॥" इति । तत्र हि रावणस्य निलयसामर्थ्य

सत्यं ते प्रतिजानामि त्यज शोकमरिन्दम । करिष्यामि तथा यत्नं यथा प्राप्स्यसि मैथिलीम् ॥ ३ ॥

पराक्रमाः सुग्रीवेण स्पष्टमवगता इति गम्यते । सत्यम् । तथापि स्वकार्यं प्रथमं प्रवर्तयितुमेवमुक्तवान् सुग्रीवः । अत एव "ब्रूहि सुग्रीव कं देशं ह्रियन्ती लक्षिता त्वया" इत्यस्यापि प्रतिवचनं नोक्तवान् । कथं गमनदेशमपि न जानीयात् ? य एवमाह "ह्रियमाणा मया दृष्टा" इति । न चैवमादावेव मित्रद्रोहः कृतः स्यादिति वाच्यम्, दूरदर्शिना सुग्रीवेणैवं मनसि कृतम् । यदि मया 'रावणवृत्तान्तो मया ज्ञातः' इत्युक्तः स्यात् तदाऽतिव्यसनी रामोऽयं सीतान्वेषणे प्रथमं मां प्रवर्तयेत्, तच्चायुक्तम्, वानराणां वालिवशंवदत्वेनास्मदधीनत्वाभावात् । कथंचित् केषांचिद्वशीकरणेपि रावणेन कृतसख्यो वाली चास्मन्मनोरथानुरूपां प्रवृत्तिं कथं सहेत, तथा चोभयकार्यभङ्गः इत्यज्ञानमभिनीतवान् सुमतिः सुग्रीवः । न चैवं सति वानरप्रेषणकालिकसुग्रीववचनेन कथमिव रामो नाशङ्कतेति वाच्यम्, तारोक्तलक्ष्मणवचनश्रवणेन रामस्य न शङ्कावकाशः । पूर्वमयं न जानाति पश्चात्तारावचनैर्ज्ञातवानिति रामस्यापि प्रतिपत्तिर्भवेत् । एवं ह्याह लक्ष्मणं प्रति तारा—"शतकोटिसहस्राणि लङ्कायां किल राक्षसाः । अयुतानि च षट्त्रिंशत्सहस्राणि शतानि च ॥ अहत्वा तांश्च दुर्धर्षान् राक्षसान् कामरूपिणः । न शक्यो रावणो हन्तुं येन सा मैथिली हृता ॥" इत्यादि । किञ्च कथं वा लोकालोकपर्यन्तं पर्यटतस्तदपरिज्ञानम् ? अत एव हि रामबलपरीक्षासमये दुन्दुभ्यादिधर्षणकथनप्रसङ्गे वक्तव्यमपि रावणजयवृत्तान्तं नोक्तवान् । नन्वेवमिदानीं परमार्थतो न विजानाति सुग्रीवः पश्चात्तारया ज्ञातवानिति किन्न विकल्प्यत इति चेन्न; तारादर्शनात् प्रभृति कामपरवशेन सुग्रीवेण तारया सह रामकार्यपर्यालोचनाऽप्रसक्तेः । यदि च सुग्रीवः सर्वथा न जानीयात् तदा सीताक्रोशादिना स्फुटमवगतां दिशं वदेदेव । यच्च कैश्चिदुक्तम्—निलयं न जानामीत्यस्य इदानीं तद

सीतान्वेषणार्थं हनुमदादिवानरप्रेषणसमये "स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः । राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः ॥" इति वचनेन रावणावासस्य सुग्रीवावगतत्वप्रतीतेरेवं व्याख्यातम् ॥ टी०—सामर्थ्यं शारीरं बलम् । दौष्कुलेयस्य "दुष्कुलाड्ढक्" इति ढक् प्रत्ययः ॥ २ ॥ ३ ॥

वस्थानदेशं न जानामीत्यर्थ इति । तन्न; सर्वात्मना रावणवृत्तान्तमपरिज्ञाय कियदपि तत्स्वरूपज्ञानं भवत्विति तात्पर्येण "क्व वा वसति तद्रक्षः" इति पृष्टवन्तं प्रतिज्ञातांशमात्रमप्यनुक्त्वा इदानीं तदवस्थानभूमिं न जानामीत्युत्तरस्य च्छलत्वापत्तेः । तद्वासमात्रज्ञाने तद्गमने स स्वयमेवेहागमिष्यतीति हि रामाभिप्रायः । किञ्च इदानीं निलयापरिज्ञानेपि सामर्थ्यपराक्रमौ वा वक्तव्यौ स्याताम् । इतरदिशः प्रति वानराणां प्रेषणम्, तान् प्रति–"रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ।" इति वचनं च बहुकालविलम्बेन यत्र कुत्रापि सीतां स्थापयेत्तिष्ठेद्वेति सङ्गच्छते । एतेनेदमपि निरस्तम् । सर्वथा सर्व

रावणं सगणं हत्वा परितोष्यात्मपौरुषम् । तथास्मि कर्ता नचिराद्यथा प्रीतो भविष्यसि ॥ ४ ॥ अलं वैक्लव्यमालम्ब्य धैर्यमात्मगतं स्मर । त्वद्विधानामसदृशमीदृशं विद्धि लाघवम् ॥ ५ ॥ मयापि व्यसनं प्राप्तं भार्याहरणजं महत् । न चाहमेवं शोचामि नच धैर्यं परित्यजे ॥ ६ ॥ नाहं तामनुशोचामि प्राकृतो वानरोपि सन् । महात्मा च विनीतश्च किं पुनर्धृतिमान् भवान् ॥ ७ ॥ बाष्पमापतितं धैर्यान्निग्रहीतुं त्वमर्हसि । मर्यादां सत्त्वयुक्तानां धृतिं नोत्स्रष्टुमर्हसि ॥ ८ ॥ व्यसने वार्थकृच्छ्रे वा भये वा जीवितान्तके । विमृशन् वै स्वया बुद्ध्या धृतिमान्नाव सीदति ॥ ९ ॥ बालिशस्तु नरो नित्यं वैक्लव्यं योनुवर्तते । स मज्जत्यवशः शोके भाराक्रान्तेव नौर्जले ॥ १० ॥

प्रकारेणापि तन्निलयं न जानामीति विशिष्टाभावोर्थः । तथा चाग्रे केनचित्प्रकारेण तन्निलयज्ञानाविरोध इति । वानरान् प्रति यावन्मात्रमुच्यते तावदादावपि वक्तव्यत्वात् । यदपि केनचिदुन्नीतम्–संवत्सरपर्यन्तं सीतादुःखकरणाभावे रावणकृतशिवपूजाफलं न भवेदिति दैवप्रतिबन्धवशात्तदानीं सुग्रीवस्याज्ञानमिति । तत्तुच्छम्; दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् । सम्यक्च परदारधर्षणं शिवपूजाफलमिति । तस्माद्यथोक्त एवार्थो ग्राह्यः ॥ २ ॥ ३ ॥ सगणं सपरिवारम् । रावणं हत्वा भवन्तं परितोष्य आत्मपौरुषं तथा कर्तास्मि । यथा प्रीतो भविष्यसीति सम्बन्धः ॥ ४ ॥ वैक्लव्यं दैन्यम् ॥ ५ ॥ परित्यजे परित्यजामि ॥ ६ ॥ प्राकृतः हीनः । विनीतः वृद्धैः सुशिक्षितः ॥७॥ सत्त्वयुक्तानां व्यवसायवताम् । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । मर्यादां व्यवस्थारूपां धृतिम् ॥ ८ ॥ व्यसन इति । अर्थकृच्छ्रे धननाशे ॥ ९ ॥ १० ॥

सगणं सपरिवारम् ॥ ४–६ ॥ तां स्मरन् ॥ ७ ॥ ८ ॥ व्यसने अर्थकृच्छ्रे कार्यसङ्कटे ॥ ९ ॥ १० ॥

अन्तरम् अवकाशम् ॥ ११–१२ ॥ ब्रूमि ब्रवीमि । वयस्यतां मित्रत्वम् ॥ १४ ॥ मधुरमिति । प्रमार्जयत् । स्वार्थे णिच् । अनित्यमागमशासनमिति अडभावः ॥ १५ ॥ १६ ॥ अनुरूपं मित्रत्वानुरूपम् । युक्तं शोकनिवारणयोग्यम् । कृतम् उक्तमित्यर्थः ॥ १७–१९ ॥ विस्रब्धेन स्निग्धेन ॥ २० ॥

एषोऽञ्जलिर्मया बद्धः प्रणयात्त्वां प्रसादये । पौरुषं श्रय शोकस्य नान्तरं दातुमर्हसि ॥ ११ ॥ ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम् । तेजश्च क्षीयते तेषां न त्वं शोचितुमर्हसि ॥१२॥ शोकेनाभिप्रपन्नस्य जीविते चापि संशयः । स शोकं त्यज राजेन्द्र धैर्यमाश्रय केवलम् ॥१३॥ हितं वयस्यभावेन ब्रूमि नोपदिशामि ते । वयस्यतां पूजयन्मे न त्वं शोचितुमर्हसि ॥ १४ ॥ मधुरं सान्त्वितस्तेन सुग्रीवेण स राघवः । मुखमश्रुपरिक्लिन्नं वस्त्रान्तेन प्रमार्जयत् ॥ १५ ॥ प्रकृतिस्थस्तु काकुत्स्थः सुग्रीववचनात् प्रभुः । सम्परिष्वज्य सुग्रीवमिदं वचनमब्रवीत् ॥ १६ ॥ कर्तव्यं यद्वयस्येन स्निग्धेन च हितेन च । अनुरूपं च युक्तं च कृतं सुग्रीव तत्त्वया ॥ १७ ॥ एष च प्रकृतिस्थोऽहमनुनीत स्त्वया सखे । दुर्लभो हीदृशो बन्धुरस्मिन् काले विशेषतः ॥१८॥ किन्तु यत्नस्त्वया कार्यो मैथिल्याः परिमार्गणे । राक्षसस्य च रौद्रस्य रावणस्य दुरात्मनः ॥ १९ ॥ मया च यदनुष्ठेयं विस्रब्धेन तदुच्यताम् । वर्षास्विव च सुक्षेत्रे सर्वं सम्पद्यते मयि ॥२०॥ मया च यदिदं वाक्यमभिमानात्समीरितम् । तत्त्वया हरिशार्दूल तत्त्वमित्युपधार्यताम् ॥ २१ ॥ अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन । एतत्ते प्रतिजानामि सत्येनैव च ते शपे ॥ २२ ॥

अभिमानात् शौर्याभिमानात् । त्वय्यभिमानाद्वा । तत्त्वं यथार्थम् ॥ २१--२२ ॥

श्रय आश्रय । अन्तरमवकाशम् ॥ ११–१४ ॥ मधुरमिति । प्रमार्जयत् । स्वार्थे णिच् । अडभाव आर्षः ॥ १५ ॥ प्रकृतिस्थः स्वभावस्थः, दुःखरहित इत्यर्थः ॥ १६–२० ॥ मया चेति । इदं वाक्यं वालिनं वधिष्यामीति वाक्यम् । अभिमानात् त्वयि प्रणयात् ॥ २१–२३ ॥

स०—विस्रब्धेन विश्वस्तेन मया यत्कर्तव्यं तदुच्यताम् । अनन्तरं च वर्षासु तत्रापि च सुक्षेत्रे उप्तं यथा सम्पद्यते तथा तव सर्वं सम्पद्यते ॥ २० ॥

एवमिति। एकान्तसंपृक्तौ एकान्ते रहसि संयुक्तौ एकान्तं नियतं यथा तथा संयुक्तौ वा। प्रभापताम्। व्यत्ययेन परस्मैपदम्। अडभावश्च ॥ २४ ॥ महेति स्पष्टम् ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥

ततः प्रहृष्टः सुग्रीवो वानरैः सचिवैः सह। राघवस्य वचः श्रुत्वा प्रतिज्ञातं विशेषतः ॥ २३ ॥ एवमेकान्तसंपृक्तौ ततस्तौ नरवानरौ। उभावन्योन्यसदृशं सुखं दुःखं प्रभाषताम् ॥ २४ ॥ महानुभावस्य वचो निशम्य हरिर्नराणामृषभस्य तस्य। कृतं स मेने हरिवीरमुख्यस्तदा स्वकार्यं हृदयेन विद्वान् ॥२५॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे सप्तमः सर्गः ❋ ॥ ७ ॥

परितुष्टस्तु सुग्रीवस्तेन वाक्येन वानरः। लक्ष्मणस्याग्रतो राममिदं वचनमब्रवीत् ॥ १ ॥ सर्वथाऽहमनुग्राह्यो देवतानामसंशयः। उपपन्नगुणोपेतः सखा यस्य भवान्मम ॥२॥ शक्यं खलु भवेद्राम सहायेन त्वयाऽनघ। सुरराज्यमपि प्राप्तुं स्वराज्यं किं पुनः प्रभो ॥३॥ सोऽहं सभाज्यो बन्धूनां सुहृदां चैव राघव। यस्याग्निसाक्षिकं मित्रं लब्धं राघववंशजम् ॥ ४ ॥ अहमप्यनुरूपस्ते वयस्यो ज्ञास्यसे शनैः। नतु वक्तुं समर्थोऽहं स्वयमात्मगतान् गुणान् ॥५॥

अथ सुग्रीवस्य स्वशोकमूलविज्ञापनमष्टमे—परितुष्ट इत्यादि ॥ १ ॥ देवतानामनुग्राह्यः दयनीयोऽभवम्। यस्य मे भवान् सखाऽऽसीत्। कीदृशः सखा? उपपन्नगुणोपेतः राजयोग्यशौर्यवीर्यादिसर्वगुणोपपन्नः ॥ २ ॥ शक्यमित्यादि चतुश्चत्वारिंशत् ॥ ३ ॥ सभाज्यः पूज्यः ॥ ४ ॥ ५ ॥

एवमिति। प्रभाषताम्। अडभावः, परस्मैपदमार्षम् ॥ २४ ॥ स्वकार्यं वालिवधरूपकार्यम् ॥२५॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां सप्तमः सर्गः ॥ ७ ॥ ❋ सर्गश्रवणफलम्। स्कान्दे-"रामसुग्रीवसँल्लापं श्रुत्वा दुःखाद्विमुच्यते ॥" इति ॥

॥ १-३ ॥ सोऽहमिति। सभाज्यः पूज्यः, भजनीय इत्यर्थः ॥ ४ ॥ ५ ॥ स०-परितुष्टः तुष्टं तोषः। भावे क्तः। परि उपरतं तुष्टं यस्य स परितुष्टः। तुरप्यर्थे। तादृशोपि तेन रामेण वाक्येन हर्षितः। "परि स्यात्सर्वतोभावे" इत्यारभ्य-"दोषाख्यानेऽप्युपरमे व्याप्तौ निवसनेपि च।" इति विश्वः ॥ १ ॥

भूयिष्ठम् अतिशयेन । आत्मवताम् आत्मज्ञानिनाम् ॥ ६ ॥ साधूनां मित्राणां साधवो मित्राणि ॥ ७ ॥ ८ ॥ तथाविधं स्वस्नेहसदृशं स्नेहं दृष्ट्वा स्थितस्य वयस्यस्य वयस्यार्थे धनत्यागादयः प्रवर्तन्त इति योजना । अनया सुग्रीववचनभङ्ग्या आवाभ्यामेवं वर्तितव्यमिति व्यवस्था द्योत्यते ॥ ९ ॥

महात्मनां तु भूयिष्ठं त्वद्विधानां कृतात्मनाम् । निश्चला भवति प्रीतिर्धैर्यमात्मवतामिव ॥ ६ ॥ रजतं वा सुवर्णं वा वस्त्राण्याभरणानि च । अविभक्तानि साधूनामवगच्छन्ति साधवः ॥ ७ ॥ आढ्यो वापि दरिद्रो वा दुःखितः सुखितोपि वा । निर्दोषो वा सदोषो वा वयस्यः परमा गतिः ॥ ८ ॥ धनत्यागः सुखत्यागो देहत्यागोपि वा पुनः । वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ॥९॥ तत्तथेत्यब्रवीद्रामः सुग्रीवं प्रियवादिनम् । लक्ष्मणस्याग्रतो लक्ष्म्या वासवस्येव धीमतः ॥ १० ॥ ततो रामं स्थितं दृष्ट्वा लक्ष्मणं च महाबलम् । सुग्रीवः सर्वतश्चक्षुर्वने लोलमपातयत् ॥११॥ स ददर्श ततः सालमविदूरे हरीश्वरः । सुपुष्पमीषत्पत्राढ्यं भ्रमरैरुपशोभितम् ॥ १२ ॥ तस्यैकां पर्णबहुलां भङ्क्त्वा शाखां सुपुष्पिताम् । सालस्यास्तीर्य सुग्रीवो निषसाद सराघवः ॥ १३ ॥ तावासीनौ ततो दृष्ट्वा हनूमानपि लक्ष्मणम् । सालशाखां समुत्पाट्य विनीतमुपवेशयत् ॥ १४ ॥

लक्ष्म्या कान्त्या वासवस्येव स्थितस्य लक्ष्मणस्याग्रत इति सम्बन्धः । अनेनोक्तार्थे लक्ष्मणानुमतिर्द्योतिता ॥ १० ॥ रामानु०–लक्ष्मणस्तेजोविशेषेण वासवसदृश इत्यर्थः ॥ १० ॥ स्थितं भूषणग्रहणकालात्प्रभृति तिष्ठन्तमित्यर्थः । लोलं चक्षुरपातयदिति । समीचीनशाखालाभार्थं सर्वत्रान्वेषयामासेत्यर्थः ॥ ११ ॥ ईषत्पत्राढ्यमिति पवक्षप्रचुरमित्यर्थः ॥ १२ ॥ पर्णबहुलां पल्लवबहुलाम् ॥ १३ ॥ रामानु०–तस्येति । आस्तीर्येति पुनरासनप्रदानकथनेन अयं परेद्युर्वृत्तान्त इत्यवगम्यते ॥ १३ ॥ ताविति । विनीतम् एकासने स्थितिमनङ्गीकुर्वन्तमित्यर्थः । उपवेशयत् उपावेशयत् ॥ १४ ॥

टी०–महात्मनां विमलान्तःकरणानाम् । आत्मवतां प्रशस्तबुद्धीनाम् ॥ ६ ॥ अविभक्तानि स्वेन तुल्यानि ॥ ७–९ ॥ तत्तथेति । लक्ष्म्या कान्तिविशेषेण युक्तः रामः । इवशब्दो वाक्यालङ्कारे । वासवस्य वासवसदृशस्येत्यर्थः । लक्ष्मणस्याग्रतः सुग्रीवमब्रवीदिति सम्बन्धः ॥ १० ॥ अपातयत् प्रसारितवान् ॥ ११ ॥ ईषत्पत्राढ्यं पल्लवसङ्कुलम् ॥१२॥ शाखामास्तीर्येति । पुनरासनप्रदानेन अयं परेद्युर्वृत्तान्त इत्यवगम्यते ॥ १३ ॥ १४ ॥

सुखोपविष्टमित्यादिश्लोकद्वयमेकान्वयम् । द्वितीयरामपदमभिरामार्थकम् । प्रसन्नमुदधिं यथा तद्वत् प्रसन्नं गम्भीरमित्यर्थः ॥१५॥ रामानु०--अत्र द्वितीयो रामशब्दोऽभिरामवचनः । क्रियाविशेषणं वा ॥ १५ ॥ ॥ १६--१८ ॥ हे सर्वलोकाभयङ्कर ! वालिनः सकाशात् भयार्तस्य मे ममापि अत्यन्तभाग्यहीनस्यापि

सुखोपविष्टं रामं तु प्रसन्नमुदधिं यथा । फलपुष्पसमाकीर्णे तस्मिन् गिरिवरोत्तमे ॥ १५ ॥ ततः प्रहृष्टः सुग्रीवः श्लक्ष्णं मधुरया गिरा । उवाच प्रणयाद्रामं हर्षव्याकुलिताक्षरम् ॥१६॥ अहं विनिकृतो भ्रात्रा चराम्येष भयार्दितः । ऋश्यमूकं गिरिवरं हृतभार्यः सुदुःखितः ॥ १७ ॥ सोऽहं त्रस्तो भये मग्नो वसाम्युद्भ्रान्तचेतनः । वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ॥ १८ ॥ वालिनो मे भयार्तस्य सर्वलोकाभयङ्कर । ममापि त्वमनाथस्य प्रसादं कर्तुमर्हसि ॥१९॥ एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः । प्रत्युवाच स काकुत्स्थः सुग्रीवं प्रहसन्निव ॥ २० ॥ उपकारफलं मित्रमपकारोऽरिलक्षणम् । अद्यैव तं हनिष्यामि तव भार्यापहारिणम् ॥ २१ ॥ इमे हि मे महावेगाः पत्रिणस्तिग्मतेजसः । कार्त्तिकेयवनोद्भूताः शरा हेमविभूषिताः ॥ २२ ॥ कङ्कपत्रप्रतिच्छन्ना महेन्द्राशनिसन्निभाः । सुपर्वाणः सुतीक्ष्णाग्राः सरोषा भुजगा इव ॥ २३ ॥

प्रसादं कर्तुमर्हसि ॥ १९ ॥रामानु०--वालिन इति । सर्वलोकाभयङ्कर अत एव ममाप्यभयङ्कर ! वालिनो भयार्तस्य मे प्रसादं कर्तुमर्हसि । सखित्वेन मह्यं विशेषतः प्रसादः कर्तव्य इत्यभिप्रायः ॥ १९ ॥ एवमिति । प्रहसन्निव पूर्वमेव प्रतिज्ञातेऽपि चापलातिशयात् पुनः प्रार्थयत इति मन्दस्मितवानित्यर्थः ॥२०॥ उपकारेति। अरिलक्षणमित्यनन्तरम् अत इत्युपस्कार्यम् ॥ २१ ॥ पत्रिणः प्रशस्तपत्रिणः । तिग्मतेजसः क्रूरतेजसः । कार्त्तिकेयवनोद्भूताः शरवणोद्भूताः । कङ्कपत्रप्रतिच्छन्नाः



सुखोपविष्टमित्यादिश्लोकद्वयमेकं वाक्यम् । अत्र द्वितीयो रामशब्दोऽभिरामवाचकः ॥ १५-१८ ॥ वालिनः इति पञ्चमी ॥ १९-२१ ॥ पत्रिणः प्रशस्तपत्राः । कार्त्तिकेयवनोद्भूताः शरवणोत्पन्नाः ॥ २२ ॥ सुपर्वाणः निशितग्रन्थयः ॥ २३-२८ ॥

स०--आपिनो भावः आपित्वम्, प्राप्तिरित्यर्थः । मम ममतया आपित्वं यस्य तं प्रसादम् । मे मत्सम्बन्धिनो वालिन इति वा ॥ १९ ॥

इति पत्रिण इत्युक्तं विशेष्यते। महेन्द्रपदेनाशनेस्तत्सन्निहितत्वातिशय उच्यते। इमे मे शराः महावेगत्वादिविशिष्टा हि। अतः एतैः शरैर्वालिनं विनिहतं पश्येति सम्बन्धः ॥ २२--२४ ॥ वाहिनीपतिः वानरसेनाधिपतिः ॥ २५ ॥ रामेति। वयस्य इति, वयस्य इति चेत्यर्थः। त्वयि त्वत्समीपे ॥२६—२८॥

भ्रातृसंज्ञममित्रं ते वालिनं कृतकिल्बिषम्। शरैर्विनिहतं पश्य विकीर्णमिव पर्वतम् ॥ २४ ॥ राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः। प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् ॥ २५ ॥ राम शोकाभिभूतोऽहं शोकार्तानां भवान् गतिः। वयस्य इति कृत्वा हि त्वय्यहं परिदेवये ॥ २६ ॥ त्वं हि पाणिप्रदानेन वयस्यो मेऽग्निसाक्षिकम्। कृतः प्राणैर्बहुमतः सत्येनापि शपामि ते ॥२७॥ वयस्य इति कृत्वा च विस्रब्धं प्रवदाम्यहम्। दुःखमन्तर्गतं यन्मे मनो हरति नित्यशः ॥२८॥ एतावदुक्त्वा वचनं बाष्पदूषितलोचनः। बाष्पोपहतया वाचा नोच्चैः शक्नोति भाषितुम् ॥ २९ ॥ बाष्पवेगं तु सहसा नदीवेगमिवागतम्। धारयामास धैर्येण सुग्रीवो रामसन्निधौ ॥ ३० ॥ सन्निगृह्य तु तं बाष्पं प्रमृज्य नयने शुभे। विनिःश्वस्य च तेजस्वी राघवं वाक्यमब्रवीत् ॥ ३१ ॥ पुराहं वालिना राम राज्यात् स्वादवरोपितः। परुषाणि च संश्राव्य निर्धूतोऽस्मि बलीयसा ॥ ३२ ॥

एतावदुक्त्वा 'पुराहं वालिना' इत्यादि वक्तुकामस्तदुपोद्घातत्वेन "दुःखमन्तर्गतं यन्मे मनो हरति नित्यशः।" इत्येतावदुक्त्वा। शक्नोति अशक्नोत्॥२९॥

रामानु०—अत्र पुनःशब्दोऽध्याहर्तव्यः। एतावदुक्त्वा वचनम्। "राम शोकाभिभूतोह' मित्यारभ्य 'मनो हरति नित्यशः" इत्येतदन्तं वचनजातं पुनरुक्त्वा। उच्चैर्भाषितुं न शक्नोतीति सम्बन्धः। शक्नोतीति भूते लट् ॥ २९ ॥ बाष्पवेगमिति। रामसन्निधाविति मां प्रत्युपदिश्य स्वयं न शक्नोतीति रामो मन्येतेति भिया धारयामासेति भावः ॥ ३० ॥ ॥ ३१ ॥ स्वाद्राज्यात् यौवराज्यात्। निर्धूतः ॥ ३२ ॥

एतावदिति। अत्र पुनश्शब्दोऽध्याहर्तव्यः। एतावदुक्त्वा वचनं 'राम शोकाभिभूतोहम्' इत्यारभ्य 'मनो हरति नित्यशः' इत्येतदन्तं वचनमुक्त्वा पुनरुच्चैर्भाषितुं न शक्नोति नाशक्नोदिति सम्बन्धः ॥ २९-३१ ॥ निर्धूतः निष्कासितः ॥ ३२ ॥

स०—अवरोपितः अपहृताधिकारः। परुषाणि निष्ठुरवचांसि। संश्राव्य श्रावयित्वा निर्धूतोस्मि ॥ ३२ ॥

बन्धनेषु कारागृहेषु ॥ ३३ ॥ रामानु०—बन्धनेषु । बध्यतेऽस्मिन्निति बन्धनम् कारागारम् ॥ ३३ ॥ ३४ ॥ एतया शङ्कया वालिप्रयुक्तत्वशङ्कया । भीतः नोपसर्पामि नोपासर्पम् । भये भयनिमित्ते ॥ ३५ ॥ रामानु०—हे राघव ! अहम् त्वामपि परमकारुणिकं त्वामपि दृष्ट्वा एतया शङ्कया वालिप्रयुक्तत्वशङ्कया भीतः । अत एवाहं

हृता भार्या च मे तेन प्राणेभ्योऽपि गरीयसी । सुहृदश्च मदीया ये संयता बन्धनेषु ते ॥३३॥ यत्नवांश्च सुदुष्टात्मा मद्विनाशाय राघव । बहुशस्तत्प्रयुक्ताश्च वानरा निहता मया ॥ ३४ ॥ शङ्कया त्वेतया चेह दृष्ट्वा त्वामपि राघव । नोपसर्पाम्यहं भीतो भये सर्वे हि बिभ्यति ॥ ३५ ॥ केवलं हि सहाया मे हनुमत्प्रमुखास्त्विमे । अतोऽहं धारया म्यद्य प्राणान् कृच्छ्रगतोऽपि सन् ॥ ३६ ॥ एते हि कपयः स्निग्धा मां रक्षन्ति समन्ततः । सह गच्छन्ति गन्तव्ये नित्यं तिष्ठन्ति च स्थिते ॥ ३७ ॥ संक्षेपस्त्वेष ते राम किमुक्त्वा विस्तरं हि ते । स मे ज्येष्ठो रिपुर्भ्राता वाली विश्रुत पौरुषः ॥ ३८ ॥ तद्विनाशाद्धि मे दुःखं प्रनष्टं स्यादनन्तरम् । सुखं मे जीवितं चैव तद्विनाशनिबन्धनम् ॥ ३९ ॥ एष मे राम शोकान्तः शोकार्तेन निवेदितः । दुःखितः सुखितो वापि सख्युर्नित्यं सखा गतिः ॥४०॥ श्रुत्वैतद्वचनं रामः सुग्रीवमिदमब्रवीत् । किंनिमित्तमभूद्वैरं श्रोतुमिच्छामि तत्त्वतः ॥ ४१ ॥ सुखं हि कारणं श्रुत्वा वैरस्य तव वानर । आनन्तर्यं विधास्यामि सम्प्रधार्य बलाबलम् ॥ ४२ ॥

नोपसर्पामि । भूते लट् ॥ ३५ ॥ केवलम् अद्वितीयं यथा तथा ॥ ३६ ॥ केवलत्वमुपपादयति—एते हीति । गन्तव्ये मयि गच्छतीत्यर्थः ॥ ३७ ॥ संक्षेप इत्यादिद्वयम् । तद्विनाशादनन्तरं मे दुःखं प्रनष्टं स्यात् मे सुखं मे जीवितं चैव तद्विनाशनिबन्धमित्येष सङ्क्षेप इत्यन्वयः ॥ ३८ ॥ रामानु०—सख्यकरणादिना लब्धमपि सुखादिकं न लब्धप्रायमिति भावः ॥ ३८ ॥ ॥ ३९–४१ ॥ तव वैरस्य कारणं श्रुत्वा बलाबलं सम्प्रधार्य वैरकारणं वा वैरं वा बलवदिति विचार्य ।

बन्धनेषु बध्यन्ते अस्मिन्निति बन्धनं कारागारम् । तत्र संयताः बद्धाः ॥ ३३ ॥ ३४ ॥ एतया शङ्कया वालिप्रयुक्तत्वशङ्कया नोपसर्पामि नोपासर्पम् । भये भयनिमित्ते ॥ ३५ ॥ तर्हि कथं जीवसीत्यत आह—केवलं हीति ॥ ३६–४१ ॥ सुखं हीति । वैरस्य कारणं श्रुत्वा सम्प्रधार्य बलाबलं गुणदोषौ विचार्य । अनन्तरम् अनन्तरमात्तं

आनन्तर्यम् अनन्तरम् । स्वार्थे ष्यञ् । तव सुखं विधास्यामि । [illegible] तमद्यैव हत्वा तव सुखं विधास्यामि । अनल्पापराधे स्वल्पवैरं चेतसमाधानमुखेन सुखं विधास्यामीति भावः ॥ ४२ ॥ रामानु०—संप्रधार्य बलाबलं गुणदोषौ विचार्य । आनन्तर्यम् अनन्तरमाप्तं कर्म । तव सुखं यथा भवति तथा विधास्यामि हि विधास्याम्येव । गर्हितमगर्हितं वा तवाभिमतं करिष्याम्येवेत्यर्थः ॥ ४२ ॥ अपराधस्वल्पत्वपक्ष आह—बलवानिति । प्रावृषि वेगः प्रावृड्वेगः ॥ ४३ ॥

बलवान् हि ममामर्षः श्रुत्वा त्वामवमानितम् । वर्तते हृदयोत्कम्पी प्रावृड्वेग इवाम्भसः ॥ ४३ ॥ हृष्टः कथय विस्रब्धो यावदारोप्यते धनुः । सृष्टश्च हि मया बाणो निरस्तश्च रिपुस्तव ॥ ४४ ॥ एवमुक्तस्तु सुग्रीवः काकुत्स्थेन महात्मना । प्रहर्षमतुलं लेभे चतुर्भिः सह वानरैः ॥ ४५ ॥ ततः प्रहृष्टवदनः सुग्रीवो लक्ष्मणाग्रजे । वैरस्य कारणं तत्त्वमाख्यातुमुपचक्रमे ॥ ४६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमत्किष्किन्धाकाण्डे अष्टमः सर्गः ॥ ८ ॥ वाली नाम मम भ्राता ज्येष्ठः शत्रुनिषूदनः । पितुर्बहुमतो नित्यं ममापि च तथा पुरा ॥ १ ॥ पितर्युपरतेऽस्माकं ज्येष्ठोऽयमिति मन्त्रिभिः । कपीनामीश्वरो राज्ये कृतः परमसम्मतः ॥ २ ॥ राज्यं प्रशासतस्तस्य पितृपैतामहं महत् । अहं सर्वेषु कालेषु प्रणतः प्रेष्यवत्स्थितः ॥ ३ ॥

वालिवैरस्वल्पत्व आह—हृष्ट इति । हृष्ट इत्यनेन वालिहननानन्तरं शोकं मा कुर्वित्यर्थः । क्रमेण तत्काले वक्ष्यत इत्यत्राह—सृष्ट इति । यदा बाणो विसृष्टस्तदैव रिपुर्नष्ट इत्यवेहीत्यर्थः ॥ ४४ ॥ ४५ ॥ लक्ष्मणाग्रजे इति निमित्तसप्तमी । तन्निमित्तामित्यर्थः ॥ ४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने अष्टमः सर्गः ॥ ८ ॥ अथ वाल्यपराधवृत्तान्तो नवमे—वाली नामेत्यादिषड्विंशति श्लोकाः ॥ १ ॥ पितरीति । अयं ज्येष्ठः । अतः कपीनामीश्वर इति राज्ये कृतः स्थापितः ॥ २ ॥ पितृपैतामहं स्वपितुः ऋक्षरजसः पित्रा ब्रह्मणा तस्मै

कर्म तव सुखं यथा तथा विधास्यामि हीति सम्बन्धः ॥ ४२ ॥ ४३ ॥ विस्रब्धः निर्विशङ्कः ॥४४–४६॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायाम् अष्टमस्सर्गः ॥ ८ ॥ १ ॥२॥ राज्यमिति । पितृपैतामहम् ऋक्षरजसः ब्रह्मणा पित्रा तस्मै दत्तत्वात्पैतामहत्वम् ॥ ३ ॥

दत्तत्वात् ॥ ३ ॥ दुन्दुभेः पूर्वजः अग्रजः । सुतः । मयस्येति शेषः । वक्ष्यत्युत्तरकाण्डे मयः— "मायावी प्रथमस्तात दुन्दुभिस्तदनन्तरः ।" इति । तेन मायाविना । तस्य वालिनः । स्त्रीकृतं स्त्रीनिमित्तम् । महद्वैरमस्तीति पुरा विश्रुतम् ॥ ४ ॥ सुप्तजने सुप्तः जनो यस्मिन् रात्र्यंशे स सुप्तजनः, अर्धरात्र

मायावी नाम तेजस्वी पूर्वजो दुन्दुभेः सुतः । तेन तस्य महद्वैरं स्त्रीकृतं विश्रुतं पुरा ॥ ४ ॥ स तु सुप्तजने रात्रौ किष्किन्धाद्वारमागतः । नर्दति स्म सुसंरब्धो वालिनं चाह्वयद्रणे ॥ ५ ॥ प्रसुप्तस्तु मम भ्राता नर्दितं भैरवस्वनम् । श्रुत्वा न ममृषे वाली निष्पपात जवात्तदा ॥ ६ ॥ स तु वै निःसृतः क्रोधात्तं हन्तुमसुरोत्तमम् । वार्यमाणस्ततः स्त्रीभिर्मया च प्रणतात्मना ॥ ७ ॥ स तु निर्धूय सर्वान्नो निर्जगाम महाबलः । ततोऽहमपि सौहार्दान्निःसृतो वालिना सह ॥ ८ ॥ स तु मे भ्रातरं दृष्ट्वा मां च दूरादवस्थितम् । असुरो जातसंत्रासः प्रदुद्राव ततो भृशम् ॥९॥ तस्मिन् द्रवति संत्रस्ते ह्यावां द्रुततरं गतौ । प्रकाशश्च कृतो मार्गश्चन्द्रेणोद्गच्छता तदा ॥१०॥ स तृणैरावृतं दुर्गं धरण्या विवरं महत् । प्रविवेशासुरो वेगादावामासाद्य विष्ठितौ ॥११॥ तं प्रविष्टं रिपुं दृष्ट्वा बिलं रोषवशंगतः । मामुवाच तदा वाली वचनं क्षुभितेन्द्रियः ॥ १२ ॥ इह त्वं तिष्ठ सुग्रीव बिलद्वारि समाहितः । यावत्तत्र प्रविश्याहं निहन्मि सहसा रिपुम् ॥१३॥ मया त्वेतद्वचः श्रुत्वा याचितः स परन्तपः । शापयित्वा तु मां पद्भ्यां प्रविवेश बिलं महत् ॥१४॥ तस्य प्रविष्टस्य बिलं साग्रः संवत्सरो गतः । स्थितस्य च मम द्वारि स कालो व्यत्यवर्तत ॥१५॥

इत्यर्थः ॥ ५ ॥ भैरवस्वनं भैरवस्वनरूपम् । नर्दितं गर्जितम् ॥ ६–९ ॥ उद्गच्छता उदयमानेन ॥ १० ॥ आसाद्य, बिलद्वारमिति शेषः ॥ ११–१३ ॥ याचितः, सह प्रवेशनमिति शेषः । पद्भ्यां स्वपदाभ्याम् । "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति चतुर्थी ॥ १४ ॥ तस्य प्रविष्टस्य तस्मिन् प्रविष्टे ।

मायावीति । तस्य वालिनः स्त्रीकृतं स्त्रीनिमित्तमित्यर्थः ॥ ४ ॥ स त्विति । सुप्तजने रात्रौ भाग इति शेषः । रात्रौ सुप्तजने भागे अर्धरात्र इत्यर्थः ॥ ५–९ ॥

टी०—उद्गच्छता उदयता ॥ १० ॥ आसाद्य विवरमित्यनुषज्यते ॥ ११–१३ ॥ मयेति । याचितः वालिना सह बिलप्रवेशनमिति शेषः । शापयित्वा तु मां पद्भ्यामिति; बिलद्वारेऽवतिष्ठामि नानुव्रजामीति स्वपादस्पर्शनपूर्वकं शपथं मया कारयित्वेत्यर्थः ॥ १४ ॥ स कालः संवत्सरात्वधिकालः ॥ १५ ॥

साग्रः संपूर्णः । स कालः संवत्सरः । ममापि संवत्सरो गत इत्यर्थः ॥१५॥ अहं तं नष्टं ज्ञात्वा साग्रसंवत्सरमदृष्ट्वा बुद्ध्वा स्नेहादागतसम्भ्रमोऽभवम् । भ्रातरं च न पश्यामि नापश्यम् । ततः मे मनः । पापाशङ्कि तन्मरणाशङ्कि जातम् ॥१६॥ रक्तं रक्तवर्णम् ॥१७॥१८॥ चिह्नैः मरणकालिकस्वरैः ॥१९॥ तत्त्वं



अहं तु नष्टं ज्ञात्वा तं स्नेहादागतसम्भ्रमः । भ्रातरं नच पश्यामि पापाशङ्कि च मे मनः ॥ १६ ॥ अथ दीर्घस्य कालस्य बिलात्तस्माद्विनिस्सृतम् । सफेनं रुधिरं रक्तमहं दृष्ट्वा सुदुःखितः ॥ १७ ॥ नर्दतामसुराणां च ध्वनिर्मे श्रोत्रमागतः । निरस्तस्य च सङ्ग्रामे क्रोशतो निस्स्वनो गुरोः ॥ १८ ॥ अहं त्ववगतो बुद्ध्या चिह्नैस्तैर्भ्रातरं हतम् । पिधाय च बिलद्वारं शिलया गिरिमात्रया । शोकार्तश्चोदकं कृत्वा किष्किन्धामागतः सखे ॥ १९ ॥ गूहमानस्य मे तत्त्वं यत्नतो मन्त्रिभिः श्रुतम् । ततोहं तैः समागम्य सम्मतैरभिषेचितः ॥ २० ॥ राज्यं प्रशासतस्तस्य न्यायतो मम राघव । आजगाम रिपुं हत्वा वाली तमसुरोत्तमम् ॥ २१ ॥ अभिषिक्तं तु मां दृष्ट्वा वाली संरक्तलोचनः । मदीयान् मन्त्रिणो बद्ध्वा परुषं वाक्यमब्रवीत् ॥ २२ ॥ निग्रहेपि समर्थस्य तं पापं प्रति राघव । न प्रावर्तत मे बुद्धिर्भ्रातुर्गौरवयन्त्रिता ॥ २३ ॥

यथार्थम् । वालिमरणं गूहमानस्य प्रच्छादयतः । मे मत्तः । यत्नतः बहुयत्नेन । स्वविषयशापादिना श्रुतमासीत् ॥ २०–२२ ॥ पापम् अज्ञानकृतमिति

अहं नष्टं ज्ञात्वा पूर्वोक्तसाग्रसंवत्सरमदृष्ट्वा स्नेहादागतसम्भ्रमस्सन् तं भ्रातरं न पश्यामि ततो मे मनश्च पापाशङ्कि मरणशङ्कि जातमित्यर्थः ॥ १६ ॥ रक्तम् अरुणम् ॥ १७ ॥ १८ ॥ गिरिमात्रया पर्वतप्रमाणया ॥ १९ ॥ तत्त्वं वालिमरणम् ॥ २०–२४ ॥

विषम०—न रतस्येति पाठः । सङ्ग्रामे रतस्य निरतस्य । क्रोशतोपि गुरोः स्वनो न श्रोत्रमागत इत्यनुकर्षः ॥ १८ ॥ स०—अहम् अवगतः । कर्तरि क्तः । ज्ञातवान् । गिरिमात्रया गिरिप्रमाणया । यद्यपि "टिड्ढाणञ्" इत्यादिना टापोपवादकेन ङीपा भवितव्यम् । तथाप्यार्षत्वाट्टाप् । यद्वा नायं मात्रच् प्रत्ययः । किन्तु "मात्रा परिच्छेदे" इत्यमरोक्तेः परिमाणवाची मात्राशब्दः । अतो न पूर्वोक्तदोषः ॥ १९ ॥ मे मम निग्रहे समर्थस्यापि वालिनः तं पापं मां प्रति तादृशी बुद्धिर्न प्रावर्तत । तत्र हेतुः भ्रातृगौरवेत्यादि । भ्राता ज्येष्ठभ्राताहं किं कनिष्ठभ्रातृबन्धनेनेति भ्रातृगौरवयन्त्रिता सती न प्रावर्तत । एतेन सुग्रीवस्य वालिनिग्रहे सामर्थ्याभावात् कथं निग्रहे च समर्थस्येति वचनमिति शङ्का परास्ता ॥ २३ ॥

सान्त्वनेपि धिक्करणात् पापिष्ठं तं प्रति निग्रहे समर्थस्य, प्रकृतिबलसम्पन्नत्वादिति भावः । यन्त्रिता नियमिता ॥ २३ ॥ प्रविवेश पुरमित्युक्त्या मन्त्रिबन्धनादिकं पुराद्वहिरिति ज्ञेयम् ॥ २४ ॥ २५ ॥ नत्वेति । मम क्रोधान्मयि कोपात् ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने नवमः सर्गः ॥ ९ ॥ अथ वालिदोषदर्शनेन रामस्य दृढतरा वालिवधप्रतिज्ञा दशमे—तत इत्यादि ॥ १ ॥

हत्वा शत्रुं स मे भ्राता प्रविवेश पुरं तदा । मानयंस्तं महात्मानं यथावच्चाभ्यवादयम् ॥२४॥ उक्ताश्च नाशिषस्तेन सन्तुष्टेनान्तरात्मना ॥ २५ ॥ नत्वा पादावहं तस्य मुकुटेनास्पृशं प्रभो । अपि वाली मम क्रोधान्न प्रसादं चकार सः ॥ २६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे नवमः सर्गः ॥ ९ ॥

ततः क्रोधसमाविष्टं संरब्धं तमुपागतम् । अहं प्रसादयाञ्चक्रे भ्रातरं प्रियकाम्यया ॥ १ ॥ दिष्ट्यासि कुशली प्राप्तो निहतश्च त्वया रिपुः । अनाथस्य हि मे नाथस्त्वमेकोऽनाथनन्दनः ॥ २ ॥ इदं बहुशलाकं ते पूर्णचन्द्रमिवोदितम् । छत्रं सवालव्यजनं प्रतीच्छस्व मयोद्यतम् ॥ ३ ॥ आर्तश्चाथ बिलद्वारि स्थितः संवत्सरं नृप । दृष्ट्वाहं शोणितं द्वारि बिलाच्चापि समुत्थितम् ॥ ४ ॥ शोकसंविग्नहृदयो भृशं व्याकुलितेन्द्रियः । अपिधाय बिलद्वारं शैलशृङ्गेण तत्तथा । तस्माद्देशादपाक्रम्य किष्किन्धां प्राविशं पुनः ॥ ५ ॥ विषादात्त्विह मां दृष्ट्वा पौरैर्मन्त्रिभिरेव च । अभिषिक्तो न कामेन तन्मे त्वं क्षन्तुमर्हसि ॥ ६ ॥

अनाथान् नन्दयतीत्यनाथनन्दनः ॥ २ ॥ रामानु०—त्वमेकोनाथनन्दन इत्यत्र अनाथेति पदच्छेदः ॥ २ ॥ उद्यतम् अर्पितम् । प्रतीच्छस्व प्रतीच्छ ॥ ३ ॥ संवत्सरं बिलद्वारि स्थितः अहं च बिलद्वारि समुत्थितं शोणितं दृष्ट्वा आर्तश्चास्मि ॥ ४ ॥ शोकसंविग्नहृदयः शोककम्पितहृदयः । तद्बिलद्वारम् । तथा त्वया दृष्टप्रकारेण । अपिधाय प्रच्छाद्य । प्राविशम् ॥ ५ ॥ इह विषादादागतं मां दृष्ट्वा । विषादात् राज्यनाशविषादात् ॥ ६ ॥

तथापि वाली कालुष्यं न जहातीत्याह—उक्ता इति ॥ २५ ॥ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां नवमः सर्गः ॥ ९ ॥ १ ॥ दिष्ट्येति । त्वमेकोऽनाथनन्दन इत्यत्र अनाथनन्दन इति च्छेदः ॥ २ ॥ बहुशलाकं शितशलाकम् ॥३॥४॥ अपिधाय तिरोधाय ॥५॥६॥

अहं यथापुरं पूर्ववद्युवराजो भवामीत्यर्थः । राजभावनियोगः राजत्वेन राज्यशासनम् ॥ ७–९ ॥ बलादिति । शून्यदेशजिगीषया राजशून्यदेशवशीकरणेच्छया ॥ १० ॥ रामानु०–शून्यदेशजिगीषया । देशस्य राजशून्यत्वापनिनीषयेत्यर्थः ॥ १० ॥ स्निग्धमिति । तत्तत्परुषभाषणम् । अश्लीलतया विशिष्य



त्वमेव राजा मानार्हः सदा चाहं यथापुरम् । राजभावनियोगोऽयं मया त्वद्विरहात्कृतः ॥ ७ ॥ सामात्यपौरनगरं स्थितं निहतकण्टकम् । न्यासभूतमिदं राज्यं तव निर्यातयाम्यहम् ॥८॥ मा च रोषं कृथाः सौम्य मयि शत्रुनिबर्हण । याचे त्वां शिरसा राजन् मया बद्धोऽयमञ्जलिः ॥ ९ ॥ बलादस्मि समागम्य मन्त्रिभिः पुरवासिभिः । राजभावे नियुक्तोऽहं शून्यदेशजिगीषया ॥१०॥ स्निग्धमेवं ब्रुवाणं मां स तु निर्भर्त्स्य वानरः । धिक् त्वामिति च मामुक्त्वा बहु तत्तदुवाच ह ॥ ११ ॥ प्रकृतीश्च समानीय मन्त्रिणश्चैव संमतान् । मामाह सुहृदां मध्ये वाक्यं परमगर्हितम् ॥ १२ ॥ विदितं वो यथा रात्रौ मायावी स महासुरः । मां समाह्वयत क्रूरो युद्धकांक्षी सुदुर्मतिः ॥ १३ ॥ तस्य तद्वचनं श्रुत्वा निस्सृतोहं नृपालयात् । अनुयातश्च मां तूर्णमयं भ्राता सुदारुणः ॥ १४ ॥ स तु दृष्ट्वैव मां रात्रौ सद्वितीयं महाबलः । प्राद्रवद्भयसंत्रस्तो वीक्ष्यावां तमनुद्रुतौ ॥ १५ ॥ अनुद्रुतश्च वेगेन प्रविवेश महाबिलम् ॥ १६ ॥ तं प्रविष्टं विदित्वा तु सुघोरं सुमहद्बिलम् । अयमुक्तोऽथ मे भ्राता मया तु क्रूरदर्शनः ॥ १७ ॥ अहत्वा नास्ति मे शक्तिः प्रतिगन्तुमितः पुरीम् । बिलद्वारि प्रतीक्ष त्वं यावदेनं निहन्म्यहम् ॥ १८ ॥

नोक्तम् ॥ ११ ॥ प्रकृतीरिति । मामुद्दिश्य प्रकृत्यादीनाहेत्यर्थः ॥ १२ ॥ रामानु०–मामपदिश्य मन्त्र्यादीन् प्रत्याह ॥ १२ ॥ ॥ १३–१९ ॥

मम राजभावे राजत्वे त्वद्विरहादयं नियोगः कृत इति सम्बन्धः ॥ ७ ॥ सामात्येति । निर्यातयामि प्रत्यर्पयामि ॥ ८ ॥ ९ ॥ शून्यदेशजिगीषया देशस्य राजशून्यत्वापनिनीषयेत्यर्थः ॥ १० ॥ ११ ॥ प्रकृतीरिति । मामाह मामुद्दिश्य मन्त्र्यादीन् प्रत्याहेत्यर्थः ॥ १२–१९ ॥

विषम०–शून्यदेशस्य राजहीनदेशस्य या परेषां जिगीषा तया तन्निवृत्तिहेतुना ' मशकार्थो धूमः ' इतिवदयं प्रयोगः । शून्यदेशजिगीषया शून्येति भावप्रधानम् । शून्यत्वं ददतीति शून्यदाः । ते च ते ईशाश्च द्विषन्तो राजानः, तज्जिगीषया तज्जयेच्छया । यद्वा शून्यो देश इति या जिगीषा प्राप्तीच्छा तया । जिरत्र प्राप्त्यर्थको धनजित इत्यादिवत् ॥ स्निग्धं स्नेहपूर्वम् ॥ १० ॥ ११ ॥

अनिर्वेदात् अक्लेशात् ॥ २० ॥ भूतले भूविवरे । स्तनतः गर्जतः । तत् पूर्वोक्तम् । तस्य विलं स्तनतः तस्य आस्यात् प्रवृत्तेन रुधिरौघेण पूर्णं सत् दुराक्रममासीदिति योजना ॥ २१ ॥ रामानु०–भूतले भुवः अधस्तले । "अधःस्वरूपयोरस्त्री तलम्" इत्यमरः । तत् प्रसिद्धम् ॥ २१ ॥ दुन्दुभेः सुतम्, भ्रातरमित्यर्थः ।

स्थितोऽयमिति मत्वा तु प्रविष्टोऽहं दुरासदम् । तं च मे मार्गमाणस्य गतः संवत्सरस्तदा ॥ १९ ॥ स तु दृष्टो मया शत्रुरनिर्वेदाद्भयावहः । निहतश्च मया तत्र सोऽसुरो बन्धुभिः सह ॥ २० ॥ तस्यास्यात्तु प्रवृत्तेन रुधिरौघेण तद्बिलम् । पूर्णमासीद्दुराक्रामं स्तनतस्तस्य भूतले ॥ २१ ॥ सूदयित्वा तु तं शत्रुं विक्रान्तं दुन्दुभेः सुतम् । निष्क्रामन्नैव पश्यामि बिलस्य पिहितं मुखम् ॥ २२ ॥ विक्रोशमानस्य तु मे सुग्रीवेति पुनः पुनः । यदा प्रतिवचो नास्ति ततोऽहं भृशदुःखितः ॥ २३ ॥ पादप्रहारैस्तु मया बहुभिस्तद्विदारितम् । ततोऽहं तेन निष्क्रम्य पथा पुरमुपागतः ॥ २४ ॥ अत्रानेनास्मि संरुद्धो राज्यं प्रार्थयताऽऽत्मनः । सुग्रीवेण नृशंसेन विस्मृत्य भ्रातृसौहृदम् ॥ २५ ॥ एवमुक्त्वा तु मां तत्र वस्त्रेणैकेन वानरः । निर्वासयामास तदा वाली विगतसाध्वसः ॥ २६ ॥

यद्वा नायं मायावी मयपुत्रः, किंतु दुन्दुभिपुत्रोन्य इति बोध्यम् । "पूर्वजो दुन्दुभेः सुतः" इति हि पूर्वमप्युक्तम् । पिहितमिति हेतुगर्भम् । पिहितत्वान्मुखं न पश्यामि ॥ २२ ॥ रामानु०–अत्रैकस्तच्छब्दः प्रसिद्धपरः । न पश्यामि नापश्यम् ॥ २२ ॥ विक्रोशमानस्य "क्रुश आह्वाने रोदने च" इति धातुः ॥ २३ ॥ पादेति । तद्बिलम्, विदारितं क्वचित्सरन्ध्रीकृतम् । तेन पथा रन्ध्रमार्गेण ॥ २४ ॥ अत्र बिले ॥ २५ ॥ २६ ॥

अनिर्वेदादक्लेशात् निहतः ॥२०॥ भूतले भुवः अधस्तले । तद्बिलं तत्प्रसिद्धं तद्बिलम् । तस्य बिलम् । स्तनतः तस्य रक्षसः आस्यात्प्रवृत्तेन रुधिरौघेण पूर्णं सद् दुराक्रममासीदिति योजना ॥२१॥ सूदयित्वेति । अत्रैकस्तच्छब्दः प्रसिद्धपरः । बिलस्य मुखं न पश्यामि नापश्यम् ॥२२॥२३॥ पादप्रहारैः सः बिलप्रदेशविशेषः । तेन विदारणकृतमार्गेण । यथाशब्दो वाक्यालङ्कारे ॥२४॥ भ्रातृसौहृदं विस्मृत्यात्मनो राज्यं मार्गयता सुग्रीवेण । तत्र बिले संरुद्धोस्मीति योजना ॥२५॥ निर्वासयामास

स०–सुग्रीवेति । "प्राचाम्" इति योगविभागात् "दूराद्धूते च" इत्यादेर्वैकल्पिकत्वेन न सुग्रीवेत्यत्र प्लुतिप्रयुक्तप्रकृतिभावः । नास्ति नासीत् ॥ २३ ॥

अपविद्धः ताडितः ॥ २७ ॥ कारणान्तरे मतङ्गशापनिमित्ते सति । वालिनो दुराधर्षं दुराक्रमम् ॥ २८ ॥ वैरानुकथनं वैरकारणाख्यानम् ॥ २९ ॥ वालिन इति पञ्चमी ॥ ३०–३३ ॥ आत्मानुमानात् "आत्मवत्सर्वभूतानि" इति न्यायादित्यर्थः । तारयिष्यामि, शोकसागरादिति शेषः ॥३४॥३५॥



तेनाहमपविद्धश्च हृतदारश्च राघव । तद्भयाच्च मही कृत्स्ना क्रान्तेयं सवनार्णवा ॥ २७ ॥ ऋश्यमूकं गिरिवरं भार्याहरणदुःखितः । प्रविष्टोस्मि दुराधर्षं वालिनः कारणान्तरे ॥ २८ ॥ एतत्ते सर्वमाख्यातं वैरानुकथनं महत् । अनागसा मया प्राप्तं व्यसनं पश्य राघव ॥ २९ ॥ वालिनस्तु भयार्तस्य सर्वलोकाभयङ्कर । कर्तुमर्हसि मे वीर प्रसादं तस्य निग्रहात् ॥३०॥ एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मसंहितम् । वचनं वक्तुमारेभे सुग्रीवं प्रहसन्निव ॥३१॥ अमोघाः सूर्यसङ्काशा ममैते निशिताः शराः । तस्मिन् वालिनि दुर्वृत्ते निपतिष्यन्ति वेगिताः ॥३२॥ यावत्तं नाभिपश्यामि तव भार्यापहारिणम् । तावत्स जीवेत् पापात्मा वाली चारित्रदूषकः ॥ ३३ ॥ आत्मानुमानात् पश्यामि मग्नं त्वां शोकसागरे । त्वामहं तारयिष्यामि कामं प्राप्स्यसि पुष्कलम् ॥ ३४ ॥ तस्य तद्वचनं श्रुत्वा राघवस्यात्मनो हितम् । सुग्रीवः परमप्रीतः सुमहद्वाक्यमब्रवीत् ॥ ३५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे दशमः सर्गः ॥ १० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने दशमः सर्गः ॥ १० ॥

निष्कासयामास ॥ २६ ॥ अपविद्धः त्यक्तः ॥ २७ ॥ कारणान्तरे मतङ्गशापनिमित्ते सति । वालिनो दुराधर्षं दुष्प्रापम् ॥ २८ ॥ वैरानुकथनं वैरकारणाख्यानम् ॥ २९–३३ ॥ आत्मेति । आत्मानुमानात् "आत्मवत्सर्वभूतानि" इति न्यायात् । पुष्कलं सर्वम् । यद्वा श्रेष्ठमित्यर्थः ॥ ३४ ॥ ३५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां दशमः सर्गः ॥ १० ॥

स०–आत्मनोहितमिति । रामदर्शनक्षण एव हितं स्वधर्मे स्वसम्बन्धिजनाय च जातप्रायमिति पष्ठ्या स्पष्टयति । अन्यथा चतुर्थी श्रूयेतेति ज्ञेयम् । यद्वा आत्मना स्वेन ऊहितम् एवं रामो वदिष्यत इति तर्कितं वचः श्रुत्वा ॥ ३५ ॥

अथ सुग्रीवो वालिवधक्षमं रामबलं परीक्षितुकामस्तद्बलं दर्शयत्येकादशे—रामस्येत्यादि । पूजयाञ्चक्रे अञ्जलिबन्धादिना । प्रशशंस तुष्टाव ॥१॥२॥ पौरुषं बलम् । अनन्तरं यत्कर्तव्यं तद्विधत्स्व ॥ ३ ॥ समुद्रादिति । "ब्राह्मे मुहूर्त उत्थाय" इति ब्राह्ममुहूर्तस्य सन्ध्याकर्मकालत्वेन तस्मिन्नुत्थाय अनुदिते सूर्ये सन्ध्याकर्मकरणार्थं पश्चिमात्समुद्रात्पूर्वसमुद्रं दक्षिणात्समुद्रादुत्तरं समुद्रं च व्यपगतक्लमः सन् क्रामति । इदं व्यक्तमुत्तरकाण्डे, तारः—

रामस्य वचनं श्रुत्वा हर्षपौरुषवर्धनम् । सुग्रीवः पूजयाञ्चक्रे राघवं प्रशशंस च ॥ १ ॥ असंशयं प्रज्वलितैस्तीक्ष्णै र्मर्मातिगैः शरैः । त्वं दहेः कुपितो लोकान् युगान्त इव भास्करः ॥ २ ॥ वालिनः पौरुषं यत्तद्यच्च वीर्यं धृतिश्च या । तन्ममैकमनाः श्रुत्वा विधत्स्व यदनन्तरम् ॥ ३ ॥ समुद्रात्पश्चिमात्पूर्वं दक्षिणादपि चोत्तरम् । क्रामत्यनुदिते सूर्ये वाली व्यपगतक्लमः ॥ ४ ॥ अग्राण्यारुह्य शैलानां शिखराणि महान्त्यपि । ऊर्ध्वमुत्क्षिप्य तरसा प्रतिगृह्णाति वीर्यवान् ॥ ५ ॥ बहवः सारवन्तश्च वनेषु विविधा द्रुमाः । वालिना तरसा भग्ना बलं प्रथयतात्मनः ॥ ६ ॥

"चतुर्भ्योऽपि समुद्रेभ्यः सन्ध्यामन्वास्य रावण । इमं मुहूर्तमायाति वाली तिष्ठ मुहूर्तकम् ॥" इति । ननु कथं चतुर्ष्वप्येकसन्ध्याकरणम् ? उच्यते; एकस्मिन् तटाके पार्श्वभेद इव स्नानाचमनार्घ्यप्रदानजपानां कर्तुं शक्यत्वात् ॥ ४ ॥ रामानु०—समुद्रादिति । अनुदिते सूर्य इत्युत्तरावधिरभिहितः । पूर्वावधिस्तु—"ब्राह्मे मुहूर्त उत्थाय" इत्यनुष्ठानाङ्गत्वेन विहितः कालः । चतुःसमुद्रपरिक्रमणस्यानुष्ठानार्थत्वम् । "चतुर्भ्योऽपि समुद्रेभ्यः सन्ध्यामन्वास्य रावण । इमं मुहूर्तमायाति वाली तिष्ठ मुहूर्तकम् ॥" इत्युत्तरश्रीरामायणोक्ततारवचनादवगम्यते ॥ ४ ॥ अग्राणीति कन्दुकानीवेति भावः ॥५॥ बहव इति । मक्षिकोत्सारणरीत्येति भावः । सारवन्तः स्थिरांशवन्तः ।

॥ १ ॥ २ ॥ रामेण बहुशः प्रतिज्ञातेपि वालिवधे श्रीरामं तत्सामर्थ्यजिज्ञासुं मत्वा स्वेन प्रत्यक्षानुभूतं वालिपौरुषं ज्ञापयितुमाह—वालिन इति । वीर्यं शारीरबलम् । यत्प्रसिद्धं वालिपराक्रमादिकं तच्छ्रुत्वा अनन्तरं यत्कर्तव्यं तद्विधत्स्वेति मध्यवर्तितच्छब्द एव योजनीयः । ज्ञातव्यमेव प्रपञ्चयति यच्छब्दसमीपवर्तितच्छब्दः पादपूरणार्थः । उत्तरत्र पुनस्तच्छब्दश्रवणात् ॥ ३ ॥ समुद्रादिति । अनुदिते सूर्य इत्युत्तरावधिरभिहितः । पूर्वावधिस्तु "ब्राह्मे मुहूर्ते उत्थाय"

स०—युगान्ते प्रलये दहेः । दहेदिति पाठे—युष्मद्योगेपि प्रथमपुरुषः "त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः ।" इतिवत्सम्भवति । विस्तृतं चैतत्प्राक् ॥ २ ॥ अनुभूतभ्रातृप्रभावस्य कर्पेमम चाल्पतो विप्रति शृण्विति भ्रातृपराक्रमं कथयति—वालिन इति । पौरुषं शारीरबलम् । मम सकाशात् ॥ ३ ॥

"सारो बले स्थिरांशे च" इत्यमरः ॥ ६ ॥ कैलासशिखरप्रभः तदाकार इत्यर्थः ॥ ७ ॥ वीर्योत्सेकेन वीर्यगर्वेण । दुष्टात्मा दुर्बुद्धिः । अतिक्रम्य



महिषो दुन्दुभिर्नाम कैलासशिखरप्रभः। बलं नागसहस्रस्य धारयामास वीर्यवान् ॥ ७ ॥ वीर्योत्सेकेन दुष्टात्मा वरदानाच्च मोहितः। जगाम सुमहाकायः समुद्रं सरितां पतिम् ॥ ८ ॥ ऊर्मिमन्तमतिक्रम्य सागरं रत्नसञ्चयम्। मह्यं युद्धं प्रयच्छेति तमुवाच महार्णवम् ॥ ९ ॥ ततः समुद्रो धर्मात्मा समुत्थाय महाबलः । अब्रवीद्वचनं राजन्नसुरं कालचोदितम् ॥ १० ॥ समर्थो नास्मि ते दातुं युद्धं युद्धविशारद। श्रूयतां चाभिधास्यामि यस्ते युद्धं प्रदास्यति ॥११॥ शैलराजो महारण्ये तपस्विशरणं परम्। शङ्करश्वशुरो नाम्ना हिमवानिति विश्रुतः ॥ १२ ॥ गुहाप्रस्रवणोपेतो बहुकन्दरनिर्दरः। स समर्थस्तव प्रीतिमतुलां कर्तुमाहवे ॥१३॥ तं भीत इति विज्ञाय समुद्रमसुरोत्तमः। हिमवद्वनमागच्छच्छरश्चापादिव च्युतः ॥१४॥ ततस्तस्य गिरेः श्वेता गजेन्द्रविपुलाः शिलाः। चिक्षेप बहुधा भूमौ दुन्दुभिर्विननाद च ॥ १५ ॥ ततः श्वेताम्बुदाकारः सौम्यः प्रीतिकराकृतिः। हिमवानब्रवीद्वाक्यं स्व एव शिखरे स्थितः ॥ १६ ॥ क्लेष्टुमर्हसि मां न त्वं दुन्दुभे धर्मवत्सल। रणकर्मस्वकुशलस्तपस्विशरणं ह्यहम् ॥ १७ ॥ तस्य तद्वचनं श्रुत्वा गिरिराजस्य धीमतः। उवाच दुन्दुभिर्वाक्यं रोषात्संरक्तलोचनः ॥ १८ ॥

जगाम। पूर्वकालो न विवक्षितः। आक्रामन् जगामेत्यर्थः ॥ ८ ॥ ९ ॥ समुत्थाय पुरुषवेषेणोत्थाय ॥ १० ॥ ११ ॥ परं तपस्विशरणं तपस्विनां इत्यनुष्ठानाङ्गत्वेन विहितः कालः। चतुस्समुद्रपरिक्रमणस्यानुष्ठानार्थत्वम् "चतुर्भ्योऽपि समुद्रेभ्यः [illegible]धागन्वास्य रावण। इमं मुहूर्तमायाति वाली तिष्ठ मुहूर्तकम् ॥" इत्युत्तररामायणोक्ततारवचनादवगम्यते ॥ ४–३२ ॥

विष०—समुद्रमतिक्रम्य अविगणय्य। तं तदधिष्ठातृदेवताम् ॥ स०—रत्नानां सञ्चयो यस्मिन् सः। अथवा रत्नानि सञ्चीयन्ते अनेनेति रत्नसञ्चयस्तम् ॥९॥ प्रीतिकराकृतिः नम्रतादिभिः प्रीतिकृदाकारः ॥१६॥ स०—तपस्वी शरणो ह्यहम् इति पाठः। शरणगन्तृत्वेन शरणवान्। अर्शआद्यच्। शरणागत इति यावत्। तपस्विशरण इत्येकपदत्वेन क्वचित्पाठः ॥ १७ ॥

परमावासस्थानम् । नित्यनपुंसकम् । प्रस्रवणं निर्झरः । निर्दराः विदीर्णपाषाणरन्ध्राणि ॥ १२–१८ ॥ यदीति । त्वं युद्धासमर्थो यदि यदि वा समर्थोऽपि मद्भयान्निरुद्यमः, उभयथापि न त्वां योत्स्यामीत्यर्थः । युयुत्सतः योद्धुमिच्छतः ॥१९॥ हिमवानिति । अनुक्तपूर्वम् इतः पूर्वं केनाप्यनुक्तं वाक्यम् । अत

यदि युद्धेऽसमर्थस्त्वं मद्भयाद्वा निरुद्यमः । तमाचक्ष्व प्रदद्यान्मे योऽद्य युद्धं युयुत्सतः ॥ १९ ॥ हिमवानब्रवीद्वाक्यं श्रुत्वा वाक्यविशारदः । अनुक्तपूर्वं धर्मात्मा क्रोधात्तमसुरोत्तमम् ॥ २० ॥ वाली नाम महाप्राज्ञः शक्रतुल्यपराक्रमः । अध्यास्ते वानरः श्रीमान् किष्किन्धामतुलप्रभाम् ॥ २१ ॥ स समर्थो महाप्राज्ञस्तव युद्धविशारदः । द्वन्द्वयुद्धं महद्दातुं नमुचेरिव वासवः ॥ २२ ॥ तं शीघ्रमभिगच्छ त्वं यदि युद्धमिहेच्छसि । स हि दुर्धर्षणो नित्यं शूरः समरकर्मणि ॥ २३ ॥ श्रुत्वा हिमवतो वाक्यं क्रोधाविष्टः स दुन्दुभिः । जगाम तां पुरीं तस्य किष्किन्धां वालिनस्तदा ॥ २४ ॥ धारयन् माहिषं रूपं तीक्ष्णशृङ्गो भयावहः । प्रावृषीव महामेघस्तोयपूर्णो नभस्तले ॥ २५ ॥ ततस्तद्द्वारमागम्य किष्किन्धाया महाबलः । ननर्द कम्पयन् भूमिं दुन्दुभिर्दुन्दुभिर्यथा ॥ २६ ॥ समीपस्थान् द्रुमान् भञ्जन् वसुधां दारयन् खुरैः । विषाणेनोल्लिखन् दर्पात्तद्द्वारं द्विरदो यथा ॥ २७ ॥ अन्तःपुरगतो वाली श्रुत्वा शब्दममर्षणः । निष्पपात सह स्त्रीभिस्ताराभिरिव चन्द्रमाः ॥ २८ ॥ मितं व्यक्ताक्षरपदं तमुवाचाथ दुन्दुभिम् । हरीणामीश्वरो वाली सर्वेषां वनचारिणाम् ॥ २९ ॥ किमर्थं नगरद्वारमिदं रुद्ध्वा विनर्दसि । दुन्दुभे विदितो मेऽसि रक्ष प्राणान् महाबल ॥ ३० ॥

एव क्रोधात् ॥ २० ॥ २१ ॥ स इति । दातुं समर्थ इत्यन्वयः ॥ २२–२५ ॥ तद्द्वारं किष्किन्धाद्वारम् । विषाणेन उल्लिखन् गजेन्द्रवत् ॥ २६ ॥ २७ ॥ अन्तःपुरगत इति । सह स्त्रीभिरिति मदातिरेकादिति भावः ॥ २८ ॥ व्यक्तान्यक्षराणि येषु तानि व्यक्ताक्षराणि पदानि यस्मिन् कर्मणि तद्व्यक्ताक्षर



ति०—अनुक्तपूर्वम् इतः पूर्वं केनः युद्धदाता यस्य समभुत्सम् । अनुक्तपूर्वम् अर्थ मन्दति वाक्यमनुक्तम् ॥२०॥ द्वन्द्वयुद्धं महद्दातुं इति पाठे—एकः महाद्वन्द्वः प्रतिद्वन्द्वरूपकमार्थकः ॥ २२ ॥

पदमिति क्रियाविशेषणम् । वनचारिणां भल्लूकादीनाम् ॥ २९–३१ ॥ न त्वमिति । स्त्रीसन्निधौ वचनम् स्त्रीजनश्रामकं वचनमित्यर्थः ॥ ३२ ॥ उदयः

सूर्योदयः । गृह्यताम् अवधित्वेन गृह्यताम् ॥ ३३ ॥ सम्प्रदानं देयद्रव्यम् । वानरान् बन्धून् परिष्वज्य तेभ्यः संप्रदानं दीयताम्, चरमकालदानं दीयता

तस्य तद्वचनं श्रुत्वा वानरेन्द्रस्य धीमतः । उवाच दुन्दुभिर्वाक्यं रोषात्संरक्तलोचनः ॥ ३१ ॥ न त्वं स्त्रीसन्निधौ वीर वचनं वक्तुमर्हसि । मम युद्धं प्रयच्छाद्य ततो ज्ञास्यामि ते बलम् ॥ ३२ ॥ अथवा धारयिष्यामि क्रोधमद्य निशामिमाम् । गृह्यतामुदयः स्वैरं कामभोगेषु वानर ॥ ३३ ॥ दीयतां सम्प्रदानं च परिष्वज्य च वानरान् । सर्वं शाखामृगेन्द्रस्त्वं संसादय सुहृज्जनान् ॥ ३४ ॥ सुदृष्टां कुरु किष्किन्धां कुरुष्वात्मसमं पुरे । क्रीडस्व च सह स्त्रीभिरहं ते दर्पनाशनः ॥ ३५ ॥ यो हि मत्तं प्रमत्तं वा सुप्तं वा रहितं भृशम् । हन्यात्स भ्रूणहा लोके त्वद्विधं मदमोहितम् ॥ ३६ ॥ स प्रहस्याब्रवीन्मन्दं क्रोधात्तमसुरोत्तमम् । विसृज्य ताः स्त्रियः सर्वास्ताराप्रभृतिकास्तदा ॥ ३७ ॥ मत्तोऽयमिति मा मंस्था यद्यभीतोऽसि संयुगे । मदोऽयं संप्रहारेऽस्मिन् वीरपानं समर्थ्यताम् ॥ ३८ ॥

मित्यर्थः । संसादय कञ्चिदपि कालं सङ्गच्छस्व । आत्मसमं राजानमित्यर्थः । क्रीडस्व क्रीड, अद्येति शेषः । दर्पनाशनः, पश्चादिति शेषः ॥३४॥३५॥ यो हीति । मत्तं मधुपानादिना मत्तम् । प्रमत्तम् अनवहितम् । रहितम् आयुधादिशून्यम् । त्वद्विधं त्वामिव स्त्रीमध्यगतम् । मदमोहितम् मदनमोहितम् । यो हन्यात्स भ्रूणहा गर्भवधकृत् ॥३६॥ रामानु०–मदमोहितं स्त्रीभोगार्थमधुपानमदादितिकर्तव्यतामूढम् ॥ ३६ ॥ स इति । मन्दं प्रहस्य । धर्मान्वितवाक्यत्वादिति भावः । ताः विसृज्याब्रवीत् ॥३७॥ मत्त इति । संयुगे यद्यभीतोसि तदा अयं मत्त इति मा मंस्थाः । अयं मदः । अस्मिन् संप्रहारे युद्धे वीरपानं समर्थ्यतां

अथवा धारयिष्यामीति । उदयः सूर्योदयः । गृह्यताम् अवधित्वेन गृह्यताम् । सूर्योदयपर्यन्तं स्त्र्यादिभोगाननुभवेति भावः ॥३३॥ सम्पादय सङ्गच्छस्व । सम्प्रदानं युद्धम् ॥३४॥३५॥ मत्तं मधुपानादिना मत्तम् । प्रमत्तम् अनवहितम् । रहितम् आयुधादिरहितम् । त्वद्विधं त्वामिव स्त्रीमध्यगतम् । मदमोहितं स्त्रीभोगार्थं मधुपानादितिकर्तव्यतामूढम् ॥३६॥३७॥ मत्तोयमिति । संयुगे यद्यभीतोसि अयं मत्त इति मावमंस्थाः । अयं मदः । अस्मिन् प्रहारे युद्धे । वीरपानं समर्थ्यतां वीरपानं कृतमिति

वीरपानं कृतमिति मन्यताम् । वीरपानं नाम युद्धोपक्रमे उत्साहवर्धनाय वीरैः क्रियमाणं पानम् ॥३८॥ उत्क्षिप्य अंसयोरुपरि विन्यस्य । एतत्काञ्चनमाला धारणकाले यः पुरो युद्धायागच्छति तस्य बलं सर्वं तवैव भविष्यतीति महेन्द्रेण दत्तामित्यर्थः । व्यवतिष्ठत व्यवातिष्ठत ॥३९॥ आविध्यत अभ्रामयत् ॥४०॥ व्यापातयाञ्चक्रे भूमौ पातयामास । अथ पात्यतः पात्यमानस्य श्रोत्राभ्यां रक्तं सुस्राव । श्रोत्रमूलविषाणपीडनादिति भावः ॥४१॥ क्रोधसंरम्भात् क्रोध

तमेवमुक्त्वा संक्रुद्धो मालामुत्क्षिप्य काञ्चनीम् । पित्रा दत्तां महेन्द्रेण युद्धाय व्यवतिष्ठत ॥३९॥ विषाणयोर्गृहीत्वा तं दुन्दुभिं गिरिसन्निभम् । आविध्यत तदा वाली विनदन् कपिकुञ्जरः ॥ ४० ॥ वाली व्यापातयाञ्चक्रे ननर्द च महास्वनम् । श्रोत्राभ्यामथ रक्तं तु तस्य सुस्राव पात्यतः ॥ ४१ ॥ तयोस्तु क्रोधसंरम्भात्परस्परजयैषिणोः । युद्धं समभवद्घोरं दुन्दुभेर्वानरस्य च ॥ ४२ ॥ अयुध्यत तदा वाली शक्रतुल्यपराक्रमः । मुष्टिभिर्जानुभिश्चैव शिलाभिः पादपैस्तथा ॥ ४३ ॥ परस्परं घ्नतोस्तत्र वानरासुरयोस्तदा । आसीददसुरो युद्धे शक्रसूनुर्व्यवर्धत ॥ ४४ ॥ व्यापारवीर्यधैर्यैश्च परिक्षीणं पराक्रमैः । तं तु दुन्दुभिमुत्पाट्य धरण्यामभ्यपातयत् ॥ ४५ ॥ युद्धे प्राणहरे तस्मिन् निष्पिष्टो दुन्दुभिस्तदा । पपात च महाकायः क्षितौ पञ्चत्वमागतः ॥ ४६ ॥ तं तोलयित्वा बाहुभ्यां गतसत्त्वमचेतनम् । चिक्षेप बलवान् वाली वेगेनैकेन योजनम् ॥ ४७ ॥ तस्य वेगप्रविद्धस्य वक्त्रात् क्षतजबिन्दवः । प्रपेतुर्मारुतोत्क्षिप्ता मतङ्गस्याश्रमं प्रति ॥ ४८ ॥

वेगात् ॥ ४२ ॥ ४३ ॥ परस्परमिति । घ्नतोः सतोः ॥ ४४ ॥ ४५ ॥ प्राणहरे तस्मिन् युद्धे निष्पिष्टो दुन्दुभिः । पञ्चत्वं भूतानां पृथग्भावम्, मरणमिति यावत् । आगतः प्राप्तः । पपात ॥ ४६ ॥ तोलयित्वा चालयित्वा । एकेन वेगेन एकप्रयत्नेन ॥ ४७ ॥ वेगप्रविद्धस्य वेगेन क्षिप्तस्य ॥ ४८ ॥

विचार्यताम् । वीरपानं नाम, युद्धोपक्रमे उत्साहवर्द्धनार्थं वीरैः क्रियमाणं पानम् ॥ ३८ ॥ तमिति । उत्क्षिप्य अंसयोरुपरि विन्यस्य । युद्धसौकर्यार्थम् ॥ ३९॥४०॥ पात्यतः पात्यमानस्य । टी०—व्यापातयाञ्चक्रे हनुमनाधिक्षेपेणत्यर्थः । स्रोतोभ्यः इन्द्रियेभ्यः । श्रोत्राभ्यामिति वा पाठः ॥ ४१–४३ ॥ आसीदत क्षीणबलोऽभूत् ॥ ४४–४६ ॥ तमिति । एकेन

शोणितविप्रुष इति पुंल्लिङ्गत्वमार्षम् । तत्र शोणितबिन्दुविषये । क्रुद्धः सन् कोन्वयमिति चिन्तयामास ॥ ४९ ॥ रामानु०—तानिति । शोणितरूपाः विप्रुषो यस्येति विग्रहः ॥ ४९ ॥ को न्वयमित्येतद्विवृणोति—येनेति । स्पृष्टः अन्तर्भावितण्यर्थः । दुरात्मा दुःस्वभावः । अत एव दुर्बुद्धिः । अकृतात्मा अवशी



तान् दृष्ट्वा पतितांस्तस्य मुनिः शोणितविप्रुषः । क्रुद्धस्तत्र महाभागश्चिन्तयामास को न्वयम् ॥४९॥ येनाहं सहसा स्पृष्टः शोणितेन दुरात्मना । कोऽयं दुरात्मा दुर्बुद्धिरकृतात्मा च बालिशः ॥ ५० ॥ इत्युक्त्वाथ विनिष्क्रम्य ददर्श मुनिपुङ्गवः । महिषं पर्वताकारं गतासुं पतितं भुवि ॥ ५१ ॥ स तु विज्ञाय तपसा वानरेण कृतं हि तत् । उत्ससर्ज महाशापं क्षेप्तारं वालिनं प्रति ॥ ५२ ॥ इह तेनाप्रवेष्टव्यं प्रविष्टस्य वधो भवेत् । वनं मत्संश्रयं येन दूषितं रुधिरस्रवैः । संभग्नाः पादपाश्चेमे क्षिपतेहासुरीं तनुम् ॥ ५३ ॥ समन्ताद्योजनं पूर्णमाश्रमं मामकं यदि । आगमिष्यति दुर्बुद्धिर्व्यक्तं स न भविष्यति ॥५४॥ ये चापि सचिवास्तस्य संश्रिता मामकं वनम् । न च तैरिह वस्तव्यं श्रुत्वा यान्तु यथासुखम् ॥ ५५ ॥ यदि तेपीह तिष्ठन्ति शपिष्ये तानपि ध्रुवम् । वनेऽस्मिन् मामके नित्यं पुत्रवत्परिरक्षिते ॥ ५६ ॥ पत्राङ्कुरविनाशाय फलमूलाभवाय च ॥ ५७ ॥

कृतान्तःकरणः । बालिशः मूर्खः ॥ ५० ॥ रामानु०—को न्वयमित्यत्रेतिकरणं द्रष्टव्यम् । अयम् एतदकृत्यकारी ॥५०॥ ॥ ५१ ॥ स त्विति । तपसा तपोमाहात्म्येन ॥ ५२ ॥ इहेति । अप्रवेष्टव्यम् न प्रवेष्टव्यमित्यर्थः । सम्भग्ना इति । आसुरीं तनुमिह क्षिपतेत्यन्वयः ॥ ५३ ॥ रामानु०—इह तेनाप्रवेष्टव्यं प्रविष्टस्य वधो भवेत् इत्यतः परम्—वनं मत्संश्रयम् । सम्भग्नाः । समन्तात् । आगमिष्यति । ये चास्य । नच तैरिति । यदि ते । वनेस्मिन् । पत्रांकुर । दिवसश्चास्य । चङ्क्रमुः । ततस्ते । निश्चक्रमुः । किं भवन्तः । मत्समीपम् । ततस्ते कारणम् । शशंसुः । एतच्छ्रुत्वा । समहर्षिं तदासाद्य याचते स्म कृताञ्जलिरिति पाठक्रमः । अन्यथा पाठस्तु लेखकप्रमादकृतः ॥ ५३ ॥ समन्तादिति । स न भविष्यतिं नश्यतीत्यर्थः ॥ ५४ ॥ ये चेति । तस्य वालिनः ॥ ५५ ॥ यदीति । अस्मिन् वने पत्राङ्कुरविनाशाय फलमूलाभवाय च यदीह वेगेन एकप्रयत्नेन ॥ ४७ ॥ ४८ ॥ कोन्वित्यत्र इतिकरणं द्रष्टव्यम् । अयम् एतदकृत्यकारी ॥ ४९–६५ ॥

तिष्ठन्तीत्यन्वयः ॥ ५६ ॥ ५७ ॥ दिवस इति । अस्य शापस्य । एकोऽयं दिवसो मर्यादा । श्वः परश्वुः यं द्रष्टास्मि सः शैलो भविष्यति ॥ ५८ ॥ ततस्त्विति । गिरं शापम् ॥ ५९ ॥ किं भवन्त इति । वनौकसां वानरेभ्यः ॥ ६० ॥ ततस्ते कारणमिति । कारणं दुन्दुभिपतनम् ॥ ६१ ॥ एतच्छ्रुत्वेति ।

दिवसश्चास्य मर्यादा यं द्रष्टा श्वोऽस्मि वानरम् । बहुवर्षसहस्राणि स वै शैलो भविष्यति ॥ ५८ ॥ ततस्ते वानराः श्रुत्वा गिरं मुनिसमीरिताम् । निष्क्रमुर्वनात्तस्मात्तान् दृष्ट्वा वालिरब्रवीत् ॥ ५९ ॥ किं भवन्तः समस्ताश्च मतङ्गवनवासिनः । मत्समीपमनुप्राप्ता अपि स्वस्ति वनौकसाम् ॥ ६० ॥ ततस्ते कारणं सर्वं तदा शापं च वालिनः । शशंसुर्वानराः सर्वे वालिने हेममालिने ॥ ६१ ॥ एतच्छ्रुत्वा तदा वाली वचनं वानरेरितम् । स महर्षिं तदासाद्य याचते स्म कृताञ्जलिः ॥ ६२ ॥ महर्षिस्तमनादृत्य प्रविवेशाश्रमं तदा । शापधारणभीतस्तु वाली विह्वलतां गतः ॥ ६३ ॥ ततः शापभयाद्भीत ऋश्यमूकं महागिरिम् । प्रवेष्टुं नेच्छति हरिर्द्रष्टुं वापि नरेश्वर ॥ ६४ ॥ तस्याप्रवेशं ज्ञात्वाहमिदं राम महावनम् । विचरामि सहामात्यो विषादेन विवर्जितः ॥ ६५ ॥ एषोऽस्थिनिचयस्तस्य दुन्दुभेः सम्प्रकाशते । वीर्योत्सेकान्निरस्तस्य गिरिकूटोपमो महान् ॥ ६६ ॥ इमे च विपुलाः सालाः सप्त शाखावलम्बिनः । यत्रैकं घटते वाली निष्पत्रयितुमोजसा ॥ ६७ ॥

स्पष्टम् ॥ ६२ ॥ महर्षिरिति । विह्वलतां गत इति, जगामेति शेषः ॥ ६३–६५ ॥ एष इति । अस्थिनिचयः शुष्ककाय इति यावत् ॥ ६६ ॥ इमे चेति । विपुलाः स्थूलाः । शाखावलम्बिनः लम्बितशाखाः । शाखावृतत्वेन दुर्ज्ञेयलक्ष्या इत्यर्थः । यत्र सालेषु । एकं सालम् । ओजसा नतु धनुषा । निष्पत्रयितुं निर्गतशरपत्रं कर्तुं घटते शक्नोति । एकं सालं भित्त्वा शरो निष्पत्रं यथा तथा वृक्षान्तरासक्तमूलं गच्छति तथा वेद्धुं समर्थ इत्यर्थः ।

अस्थिनिचय इति शुष्ककाय इति यावत् । टी०—प्रासङ्गिकं परिसमाप्य प्रकृतमुपसंहरति—एषोऽस्थिनिचय इति ॥ ६६ ॥ इमे चेति । यत्र येषु सालेषु । एकं सालं निष्पत्रयितुं निर्गतशरपत्रं कर्तुम् । घटते समर्थो भवति । एकं सालं भित्त्वा शरो निष्पत्रं यथा निर्गच्छति तथा वेद्धुं समर्थ इत्यर्थः ॥ ६७–६९ ॥

धनुर्विना केवलबाणेन एकं सालं विध्यतीत्यर्थः । यद्वा वेद्धुं शक्तः नतु कदाचित्तथा कृतवानिति घटत इति पदेन व्यज्यते । एवमुत्तरत्रापि योज्यम् । यद्वा स्वजातिविरुद्धत्वेन युद्धे धनुर्ग्रहणाभावेपि लीलार्थं धनुरस्तीति ध्येयम् ॥ ६७ ॥ ६८ ॥ तथेति । कस्मिन्निति । मुहूर्तेन चतुःसमुद्रगमने उत्क्षिप्तपर्वत



एतदस्यासमं वीर्यं मया राम प्रकीर्तितम् । कथं तं वालिनं हन्तुं समरे शक्ष्यसे नृप ॥ ६८ ॥ तथा ब्रुवाणं सुग्रीवं प्रहसँल्लक्ष्मणोऽब्रवीत् । कस्मिन् कर्मणि निर्वृत्ते श्रद्दध्या वालिनो वधम् ॥ ६९ ॥ तमुवाचाथ सुग्रीवः सप्त सालानिमान् पुरा । एवमेकैकशो वाली विव्याधाथ स चासकृत् ॥ ७० ॥ रामोपि दारयेदेषां बाणेनैकेन चेद्द्रुमम् । वालिनं निहतं मन्ये दृष्ट्वा रामस्य विक्रमम् ॥ ७१ ॥ हतस्य महिषस्यास्थि पादेनैकेन लक्ष्मण । उद्यम्याथ प्रक्षिपेच्चेत्तरसा द्वे धनुःशते ॥७२॥ एवमुक्त्वा तु सुग्रीवो रामं रक्तान्तलोचनम् । ध्यात्वा मुहूर्तं काकुत्स्थं पुनरेव वचोऽब्रवीत् ॥ ७३ ॥ शूरश्च शूरघाती च प्रख्यातबलपौरुषः । बलवान् वानरो वाली संयुगेष्वपराजितः ॥ ७४ ॥ दृश्यन्ते चास्य कर्माणि दुष्कराणि सुरैरपि । यानि सञ्चिन्त्य भीतोऽहमृश्यमूकं समाश्रितः ॥ ७५ ॥

शिखरग्रहणे दुन्दुभिकायोत्क्षेपणे सालभेदने वेत्यर्थः ॥ ६९ ॥ तमिति । पुरा वाली इमान् सप्त सालान् विव्याध । अथ च अनन्तरमपि एवमेकैकशः असकृद्विव्याधेति योजना । यद्वा स वाली एवंविधानिमान् सप्त सालान् एकैकशः पुरा विव्याध अनन्तरमप्यसकृद्विव्याध ॥ ७० ॥ राम इति । एषां मध्ये एकं द्रुमम् एकेन बाणेन यदि विदारयेत् तदा तादृशं विक्रमं दृष्ट्वा वालिनं निहतं मन्ये ॥ ७१ ॥ उद्यम्य प्रकोष्ठेनोत्क्षिप्य । द्वे धनुःशते धनुःशतद्वयदूरम् । धनुर्नाम चतुर्हस्तमानम् । " किष्कुः स्याद्द्वटो हस्तश्चतुर्विंशतिरङ्गुलः । चतुर्हस्तो धनुर्दण्डो धनुर्धन्वन्तरं युगम् ॥ " इति वैजयन्ती । एवं सुग्रीवस्तमुवाचेति पूर्वेणान्वयः ॥ ७२ ॥ रामानु०–उद्यम्याथ प्रक्षिपेच्चेदिति पाठः ॥ ७२ ॥ एवमविश्वासकरणे सुहृद्दुर्मनायेतेत्यालोच्य यथा रामः

तमिति । पुरा स वाली । इमान् पुरतः स्थितान् सप्त सालान् । एकैकशः एकमेकं विव्याध । अथ च अनन्तरम् । एवं पूर्वोक्तप्रकारेण असकृद्विव्याधेति सम्बन्धः । एतेषु सालेषु एकं पूर्वं भित्त्वा तत्र खानितं शरं समुद्धृत्य तस्मिन् रन्ध्रे पुनरन्यं शरं निधाय तमपि समुद्धृत्य तथा अन्यं विद्ध्वा एवमसकृदेतान् छिद्रीकृतवानिति

सन्तुष्यति तथा वदति–एवमुक्त्वेत्यादिना ॥ ७३–७६ ॥ उद्विग्न इति । उद्विग्नः भीतः ॥ ७७–७९ ॥ नेति स्पष्टम् ॥ ८० ॥ काममिति । वाणी एकरूपं वचनम् । प्रमाणं बुद्धिः । धैर्यम् अचञ्चलता । आकृतिर्वपुश्च भस्मच्छन्नमनलमिव स्थितम् ते परं तेजः कामम् अतिशयेन सूचयन्ति । अथापि मे

तमजय्यमधृष्यं च वानरेन्द्रममर्षणम् । विचिन्तयन्न मुञ्चामि ऋश्यमूकमहं त्विमम् ॥७६॥ उद्विग्नः शङ्कितश्चापि विचरामि महावने । अनुरक्तैः सहामात्यैर्हनुमत्प्रमुखैर्वरैः ॥ ७७ ॥ उपलब्धं च मे श्लाघ्यं सन्मित्रं मित्रवत्सल । त्वामहं पुरुषव्याघ्र हिमवन्तमिवाश्रितः ॥ ७८॥ किन्तु तस्य बलज्ञोऽहं दुर्भ्रातुर्बलशालिनः । अप्रत्यक्षं तु मे वीर्यं समरे तव राघव ॥ ७९ ॥ न खल्वहं त्वां तुलये नावमन्ये न भीषये । कर्मभिस्तस्य भीमैस्तु कातर्यं जनितं मम ॥ ८० ॥ कामं राघव ते वाणी प्रमाणं धैर्यमाकृतिः । सूचयन्ति परं तेजो भस्मच्छन्नमिवानलम् ॥ ८१ ॥ [ स्निग्धानां प्रीतियुक्तानां सुहृदां सुहृदं प्रति । कातरं हृदयं राम प्रत्ययं नाधिगच्छति ॥ यदि बाणेन भेत्ता त्वं सालान् सप्ताद्य राघव । वालिनं समरे हन्तुं समर्थः स्यात्ततो भवान् ॥] तस्य तद्वचनं श्रुत्वा सुग्रीवस्य महात्मनः । स्मितपूर्वमथो रामः प्रत्युवाच हरिं प्रभुः ॥ ८२ ॥ यदि न प्रत्ययोऽस्मासु विक्रमे तव वानर । प्रत्ययं समरे श्लाघ्य महमुत्पादयामि ते ॥ ८३ ॥ एवमुक्त्वा तु सुग्रीवं सान्त्वं लक्ष्मणपूर्वजः । राघवो दुन्दुभेः कायं पादाङ्गुष्ठेन लीलया । तोलयित्वा महाबाहुश्चिक्षेप दशयोजनम् ॥ ८४ ॥ असुरस्य तनुं शुष्कं पादाङ्गुष्ठेन वीर्यवान् । क्षिप्तं दृष्ट्वा ततः कायं सुग्रीवः पुनरब्रवीत् ॥ ८५ ॥

कातर्यं जनितमिति पूर्वेणान्वयः ॥ ८१ ॥ रामानु०--काममिति । भस्मच्छन्नमनलमिव स्थितं तेज इति सम्बन्धः ॥ ८१ ॥ ॥ ८२ ॥ यदीति । विक्रमे विषये प्रत्ययं विश्वासम् । समरे विषये ॥८३॥ एवमिति । सान्त्वमित्यनेन प्रत्ययप्रश्नेन सुग्रीवस्य दुःखितत्वं द्योत्यते । पादाङ्गुष्ठेन अनुद्धृतेन । तोलयित्वा चालयित्वा ॥ ८४ ॥ रामानु०–राघवो दुन्दुभेः । तोलयित्वा । असुरस्य । क्षिप्तं दृष्ट्वा । लक्ष्मणस्याग्रतो राममिदं वचनमर्थवदिति पाठक्रमः । पादाङ्गुष्ठेन चिक्षेप अनुद्धृतपादतलः सन् वाक्यार्थः ॥ ७०–७९ ॥ टी०–मद्वीर्यमेव वालिमहत्त्वं वर्णितम्, नतु त्वत्सकाशात्पराभवनायेत्याह–नखल्विति ॥ ८०–८२ ॥ यदीति । समरे समरविषये ॥ ८३ ॥ पादाङ्गुष्ठेन लीलया चिक्षेप अनुद्धृतपादचलनरहितम् अङ्गुष्ठाग्रेण चिक्षेपेत्यर्थः ॥ ८४–८५ ॥

अङ्गुष्ठाग्रेण चिक्षेपेत्यर्थः ॥ ८४ ॥ असुरस्येति । तनुं पूर्वापेक्षया स्वल्पम् । कायं शरीरम् ॥ ८५ ॥ कथं कमित्यत्राह—लक्ष्मणस्येति ॥ ८६ ॥ आर्द्र इति । 
आर्द्रः सरक्तः । प्रत्यग्रः यत्किंचित् प्राणचेष्टायुक्तः । लघुत्वे सदृष्टान्तमाह तृणभूत इति ॥ ८७ ॥ सम्प्रत्यु--प्रत्यग्रः अभिनवः ॥ ८७ ॥ एवं प्रक्षेपेप्यवैषम्य

लक्ष्मणस्याग्रतो राममिदं वचनमब्रवीत् ॥ ८६ ॥ आर्द्रः समांसः प्रत्यग्रः क्षिप्तः कायः पुरा सखे । लघुः संप्रति निर्मांसस्तृणभूतश्च राघव ॥ ८७ ॥ परिश्रान्तेन मत्तेन भ्रात्रा मे वालिना तदा । क्षिप्तमेवंप्रहर्षेण भवता रघुनन्दन । नात्र शक्यं बलं ज्ञातुं तव वा तस्य वाधिकम् ॥८८॥ आर्द्रं शुष्कमिति ह्येतत्सुमहद्राघवान्तरम् । स एव संशयस्तात तव तस्य च यद्बले ॥ ८९ ॥ सालमेकं तु निर्भिन्द्या भवेद्व्यक्तिर्बलाबले ॥ ९० ॥ कृत्वेदं कार्मुकं सज्यं हस्तिहस्तमिवाततम् । आकर्णपूर्णमायम्य विसृजस्व महाशरम् ॥९१॥ इमं हि सालं सहितस्त्वया शरो न संशयोऽत्रास्ति विदारयिष्यति । अलं विमर्शेन मम प्रियं ध्रुवं कुरुष्व राजात्मज शापितो मया ॥ ९२ ॥

मुक्त्वा प्रक्षेप्तृतारतम्यमाह—परिश्रान्तेनेति । एवंप्रहर्षेण एवंविधप्रहर्षवता । नात्रेति । अत्र दुन्दुभिकायक्षेपकर्मणि । तव वा तस्य वा । अधिकं बलमिति ज्ञातुं न शक्यम् ॥ ८८ ॥ पुनः सङ्क्षेपेणाह—आर्द्रमिति । आर्द्रं शुष्कमित्येतत्सुमहत् अन्तरं तारतम्यं यद्यस्मादस्ति, अतस्तव च तस्य च बले युवयोर्बलतारतम्ये । स एव संशयो वर्तते, संशयो न निवृत्त इत्यर्थः ॥ ८९ ॥ सालमिति । निर्भिन्द्याः भञ्जय । व्यक्तिः विशेषज्ञानम् ॥ ९०॥९१ ॥ पुनर्निर्बन्धेन कुपितो भवेदिति सान्त्वयति—इममिति । सहितः संहितः । "समो वा हिततततयोः" इति मलोपः । शरो विदारयिष्यति । विमर्शेन पुनः किमर्थं

आर्द्र इति । प्रत्यग्रः अभिनवः ॥ ८७ ॥ नात्रेति । अत्र दुन्दुभिकायक्षेपकर्मणि कृते ॥ ८८ ॥ स एवेति । तव तस्य च यत् यः बले संशयः स एव संशयो न निवृत्त इति शेषः ॥ ८९ ॥ कस्मिन् कर्मणि कृते तव मदीयबलाभिव्यक्तिर्भविष्यतीत्यत आह—सालमेकं विनिर्भिद्य भवेद्व्यक्ते बलाबले इति । एकं सालं विनिर्भिद्य बलाबले । प्रथमाद्विवचनम् । व्यक्ते भवेत् भवेतामित्यर्थः । एकसालभेदने कृते त्वं बलाधिक इत्यहं ज्ञास्यामीत्यर्थः ॥ ९० ॥ ९१ ॥ इममिति । त्वया प्रहितः क्षिप्तः शरः इमं सालं विदारयिष्यति । अत्र अस्मिन्नर्थे संशयो न, त्वयि विमर्शेन त्वद्बलपरीक्षया अलम् । मया शापितोसि राजन्

प्रत्ययोत्पादनमिति विमर्शेन । मम प्रियं ननु त्वत्परीक्षार्थम् ॥ ९२ ॥ यथेति । तेजस्सु तेजस्विषु । विक्रमे, स्थितानामिति शेषः । अस्मिन् सर्गे त्र्युत्तर नवतिश्लोकाः ॥ ९३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥

अथ प्रत्ययपूर्वकं वालिवधाय गमनं द्वादशे–एतच्चेत्यादि ॥१॥२॥ स इति । सः एकसालोद्देशेन विसृष्टः । स्वर्णपरिष्कृतः स्वर्णपट्टालंकृतः । अनेन

यथा हि तेजस्सु वरः सदा रविर्यथाहि शैलो हिमवान् महाद्रिषु । यथा चतुष्पात्सु च केसरी वरस्तथा नराणामसि विक्रमे वरः ॥९३॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे एकादशः सर्गः*॥११॥

एतच्च वचनं श्रुत्वा सुग्रीवेण सुभाषितम् । प्रत्ययार्थं महातेजा रामो जग्राह कार्मुकम् ॥ १ ॥ स गृहीत्वा धनुर्घोरं शरमेकं च मानदः । सालमुद्दिश्य चिक्षेप ज्यास्वनैः पूरयन् दिशः ॥२॥ स विसृष्टो बलवता बाणः स्वर्णपरिष्कृतः । भित्त्वा सालान् गिरिप्रस्थे सप्त भूमिं विवेश ह ॥३॥ प्रविष्टश्च मुहूर्तेन धरां भित्त्वा महाजवः । निष्पत्य च पुनस्तूर्णं स्वतूणीं प्रविवेश ह ॥४॥ तान् दृष्ट्वा सप्त निर्भिन्नान् सालान् वानरपुङ्गवः । रामस्य शरवेगेन विस्मयं परमं गतः ॥५॥

सर्वोत्तमत्वमुक्तम् । सालानिति । सप्त सालान् भित्त्वा । गिरिप्रस्थे गिरिप्रस्थमार्गेण भूमिं विवेश । इत्थं ह्युक्तमभियुक्तैः–"सालांश्च सप्त सगिरीन् सरसातलान् " इति । संक्षेपे च " गिरिं रसातलं चैव " इति । अन्यस्त्वपपाठः ॥ ३ ॥ प्रविष्ट इति । धरां भित्त्वा प्रविष्टः स शरः महाजवत्वान्मुहूर्तेन । निष्पत्य निर्गत्य पुनस्तां तूणीं प्रविवेश । मन्त्रप्रभावेनाचेतनस्यापि पुनरागमनम् ॥ ४ ॥ तानिति । दृष्ट्वेत्यनेनाल्पज्ञत्वात्सुग्रीवः सालानेव भिन्नान्

मम प्रियं कुरुष्वेति सम्बन्धः ॥९२॥ यथाहीति । तेजस्सु तेजस्विषु ॥ ९३ ॥ इति श्रीमहेश्वर० श्रीरामायणतत्त्व० किष्किन्धाकाण्डव्याख्यायाम् एकादशः सर्गः॥११॥

टीका०–प्रत्ययार्थं विश्वासजननार्थम् ॥ १ ॥ मानं बहुमानं ददातीति मानदः ॥ २ ॥ स विसृष्ट इति । सः एकसालोद्देशेन विसृष्टः शरः सप्त सालान् गिरिप्रस्थे च भित्त्वा भूमिं विवेश । सप्त सालान् भित्त्वा गिरिप्रस्थं पर्वतमपि भित्त्वा भूमिं विवेशेत्यर्थः ॥ टी०–सः एकसालोद्देशेन विसृष्टः शरः सप्त सालान् भित्त्वा गिरिप्रस्थं पर्वतमपि भित्त्वा भूमिं प्रविश्य तामपि भित्त्वा रसातलं गत इति द्रष्टव्यम् ' गिरिं रसातलं च ' इत्युक्तत्वात् । तथाच स्कान्दे–" सप्तभूमीस्सप्त गिरीन् सप्तसालान्महाबलान् । स बाणो वेगसम्पन्नो भित्त्वा तूणीरमाविशत् ॥ " इति ॥ ३ ॥ प्रविष्ट

* सर्गश्रवणफलम् । स्कान्दे–"विद्याबलं दैवबलं ज्ञानवन्धुबलं तथा । सेनाबलं भवेचस्य वालिनो बलकीर्तनात् ॥ " इति ॥

ददर्श । सप्तभूमिप्रवेशं त्वहमेव धर्मवीर्येण पश्यामीति भावः ॥ ५ ॥ स इति । स सुग्रीवः परमप्रीतः सन् राघवाय कृताञ्जलिः मूर्ध्ना भूमौ न्यपतत् । शिरसा भूमिं स्पृष्ट्वा प्रणनामेत्यर्थः । प्रलम्बीकृतभूषण इत्यनेन उदरास्पर्श उक्तः । अनेन भगवद्विषये प्रणामप्रकारः शिक्षितो भवति ॥ ६ ॥ रामानु०—

स मूर्ध्ना न्यपतद्भूमौ प्रलम्बीकृतभूषणः । सुग्रीवः परमप्रीतो राघवाय कृताञ्जलिः ॥ ६ ॥ इदं चोवाच धर्मज्ञं कर्मणा तेन हर्षितः । रामं सर्वास्त्रविदुषां श्रेष्ठं शूरमवस्थितम् ॥ ७ ॥ सेन्द्रानपि सुरान्सर्वांस्त्वं बाणैः पुरुषर्षभ । समर्थः समरे हन्तुं किं पुनर्वालिनं प्रभो ॥ ८ ॥ येन सप्त महासाला गिरिर्भूमिश्च दारिताः । बाणेनैकेन काकुत्स्थ स्थाता ते को रणाग्रतः ॥ ९ ॥ अद्य मे विगतः शोकः प्रीतिरद्य परा मम । सुहृदं त्वां समासाद्य महेन्द्रवरुणोपमम् ॥ १० ॥ तमद्यैव प्रियार्थं मे वैरिणं भ्रातृरूपिणम् । वालिनं जहि काकुत्स्थ मया बद्धोऽयमञ्जलिः ॥ ११ ॥ ततो रामः परिष्वज्य सुग्रीवं प्रियदर्शनम् । प्रत्युवाच महाप्राज्ञो लक्ष्मणानुमतं वचः ॥ १२ ॥ अस्माद्गच्छेम किष्किन्धां क्षिप्रं गच्छ त्वमग्रतः । गत्वा चाह्वय सुग्रीव वालिनं भ्रातृगन्धिनम् ॥ १३ ॥ सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम् । वृक्षैरात्मानमावृत्य व्यतिष्ठन् गहने वने ॥ १४ ॥ सुग्रीवो व्यनदद् घोरं वालिनो ह्वानकारणात् । गाढं परिहितो वेगान्नादैर्भिन्दन्निवाम्बरम् ॥ १५ ॥ तं श्रुत्वा निनदं भ्रातुः क्रुद्धो वाली महाबलः । निश्चक्राम सुसंरब्धो भास्करोऽस्ततटादिव ॥ १६ ॥

प्रलम्बगतभूषणः प्रलम्बत्वंप्राप्तभूषण इत्यर्थः ॥ ६ ॥ ॥७–११॥ तत इति । लक्ष्मणानुमतमिति क्रियाविशेषणम् । भ्रातृगन्धिनं भ्रातृहिंसकम् । "गन्धनावक्षेपण—" इत्यत्र तथा प्रयोगात् । इति रामः सुग्रीवं प्रत्युवाचेति पूर्वेणान्वयः ॥ १२॥१३ ॥ सर्वे इति । आत्मानम् स्वं स्वमित्यर्थः ॥ १४ ॥ सुग्रीव इति । ह्वानम् आह्वानम् । गाढं परिहितः बलवृद्ध्ये दृढबद्धपरिधानः ॥१५॥ भास्करोऽस्ततटादिवेति । यथा सूर्योऽस्ततटादवतरन्नदृष्टरश्मिर्भवति तथेदानीं किष्किन्धा इति । प्रविष्टः शरोत्तमः मुहूर्तेन पुनर्धरां भित्त्वा स्थाने तूणीरे पपातेति योजना ॥ ४ ॥ ५ ॥ प्रलम्बगतभूषणः प्रलम्बत्वंप्राप्तभूषणः ॥ ६–१२ ॥ भ्रातृगन्धिनं गन्धस्सम्बन्धः । भ्रातृत्वमात्रेण सम्बन्धी नतु दानमानादिनेति भावः ॥ १३ ॥ १४ ॥ सुग्रीव इति । गाढं परिहितः वाससा दृढं संवीतः ॥१५॥ तमिति । भास्करः

निर्गमनं वालिनोल्पकालेन नाशहेतुरिति द्योतनार्थमस्ततटादित्युक्तम् । अस्मद्देशोदयगिरिः प्रदेशान्तरापेक्षया अस्तगिरिरित्युक्तमित्यप्याहुः ॥ १६ ॥ रामानु०—भास्करोस्ततटादिवेति । अस्माकमुदयपर्वतः सिद्धपुरवासिनामस्तगिरिरिति तदपेक्षया अस्ततटादित्युक्तम् । "उदयो यो लङ्कायां सोऽस्तमयः सवितुरेव सिद्धपुरे" इत्यार्यभटोक्तेः । एतच्छ्लोकानन्तरम्—ततः सुतुमुलं युद्धं वालिसुग्रीवयोरभूत् । गगने ग्रहयोर्घोरं बुधाङ्गारकयोरिव ॥ तलैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः । जघ्नतुः समरेऽन्योन्यं भ्रातरौ क्रोधमूर्च्छितौ ॥ इति

ततः सुतुमुलं युद्धं वालिसुग्रीवयोरभूत् । गगने ग्रहयोर्घोरं बुधाङ्गारकयोरिव ॥१७॥ तलैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः । जघ्नतुः समरेऽन्योन्यं भ्रातरौ क्रोधमूर्च्छितौ ॥ १८ ॥ ततो रामो धनुष्पाणिस्तावुभौ समुदीक्ष्य तु । अन्योन्यसदृशौ वीरावुभौ देवाविवाश्विनौ ॥१९॥ यन्नावगच्छत् सुग्रीवं वालिनं वापि राघवः । ततो न कृतवान् बुद्धिं मोक्तुमन्तकरं शरम् ॥ २० ॥ एतस्मिन्नन्तरे भग्नः सुग्रीवस्तेन वालिना । अपश्यन् राघवं नाथमृश्यमूकं प्रदुद्रुवे ॥२१॥ क्लान्तो रुधिरसिक्ताङ्गः प्रहारैर्जर्जरीकृतः । वालिनाभिद्रुतः क्रोधात् प्रविवेश महावनम् ॥२२॥ तं प्रविष्टं वनं दृष्ट्वा वाली शापभयार्दितः । मुक्तो ह्यसि त्वमित्युक्त्वा सन्निवृत्तो महाद्युतिः ॥ २३ ॥ [ निवृत्तः स्वपुरीं प्राप क्रोधाविष्टो महाबलः । ] राघवोपि सह भ्रात्रा सह चैव हनूमता । तदेव वनमागच्छत् सुग्रीवो यत्र वानरः ॥ २४ ॥ तं समीक्ष्यागतं रामं सुग्रीवः सहलक्ष्मणम् । ह्रीमान् दीनमुवाचेदं वसुधामवलोकयन् ॥ २५ ॥ आह्वयस्वेति मामुक्त्वा दर्शयित्वा च विक्रमम् । वैरिणा घातयित्वा च किमिदानीं त्वया कृतम् ॥ २६ ॥

पाठक्रमः ॥ १६ ॥ ततः सुतुमुलमिति । बुधाङ्गारकाख्ययोर्ग्रहयोरिव ॥ १७ ॥ अशनिः मेघज्योतिः ॥ १८ ॥ तत इत्यादिश्लोकद्वयमेकान्वयम् । उभावश्विनौ देवाविव स्थितौ तावुभौ समुदीक्ष्य सुग्रीवं वालिनं वा विशेषतो यन्नावगच्छत् ततः तस्मात् रामः शरं मोक्तुं बुद्धिं न कृतवानित्यन्वयः ॥ १९–२१ ॥ जर्जरीकृतः परुषत्वकृतः ॥ २२–२४ ॥ वसुधामवलोकयन्निति लज्जानुभावः ॥ २५ ॥ आह्वयस्वेति । दर्शयित्वा च विक्रममिति व्यति

अस्ततटादिव निष्पपात । मेरोरुत्तरवासिन अधिकृत्येदमुच्यते । अस्माकमस्तमयपर्वतो मेरोरुत्तरपार्श्वस्थानामुदयगिरिः । तेषामस्तगिरिरस्माकमुदयगिरिः । अतोऽस्तगिरेरपि भानोर्निर्गमनं सम्भवति ॥ १६–२५ ॥ आह्वयस्वेति । विक्रमं सालभेदनम् ॥ २६ ॥

रेकोक्तिः । त्वया किं कृतं किं चिन्तितमित्यर्थः । कृतिरनेकार्थः ॥२६॥ रामानु०—आह्वयस्वेति । विक्रमं दर्शयित्वा, सालभेदनादिनेति शेषः ॥२६॥ तामेव वेलामिति

अत्यन्तसंयोगे द्वितीया । 'वालिनं जहि काकुत्स्थ' इति प्रार्थनवेलायामित्यर्थः । ततः तथोक्तिं चेत् ॥२७॥ रामानु०—तामेव वेलां वेलायाम् । 'वालिनं जहि काकुत्स्थ मया बद्धोयमञ्जलिः' इति प्रार्थनावेलायाम् वालिनं न निहन्मीति वक्तव्यम् । कुतः शक्तेन त्वया स न हन्यते । ततो नाहमितो व्रज इति वा पाठः ॥ २७ ॥ तस्येति । करुणं सदयम् ।

तामेव वेलां वक्तव्यं त्वया राघव तत्त्वतः । वालिनं न निहन्मीति ततो नाहमितो व्रजे ॥२७॥ तस्य चैवं ब्रुवाणस्य सुग्रीवस्य महात्मनः । करुणं दीनया वाचा राघवः पुनरब्रवीत् ॥ २८ ॥ सुग्रीव श्रूयतां तात क्रोधश्च व्यपनीयताम् । कारणं येन बाणोऽयं न मया स विसर्जितः ॥ २९ ॥ अलङ्कारेण वेषेण प्रमाणेन गतेन च । त्वं च सुग्रीव वाली च सदृशौ स्थः परस्परम् ॥ ३० ॥ स्वरेण वर्चसा चैव प्रेक्षितेन च वानर । विक्रमेण च वाक्यैश्च व्यक्तिं वां नोपलक्षये । ततोऽहं रूपसादृश्यान्मोहितो वानरोत्तम ॥ ३१ ॥ नोत्सृजामि महावेगं शरं शत्रुनिबर्हणम् । जीवितान्तकरं घोरं सादृश्यात्तु विशङ्कितः ॥ ३२ ॥ मूलघातो न नौ स्याद्धि द्वयोरपि कृतो मया ॥ ३३ ॥

अब्रवीत् ॥ २८ ॥ सुग्रीवेति । येन कारणेन वाणो न विसर्जितः तत्कारणं श्रूयताम्, श्रुत्वा क्रोधश्चापनीयतामिति योजना ॥ २९ ॥ रामानु०—कारणं येन । अलङ्कारेण । त्वं च । स्वरेण । विक्रमेण । ततोहम् । इति पाठक्रमः ॥ २९ ॥ वेषेण आकारेण । प्रमाणेन औन्नत्येन । गतेन गमनेन ॥ ३० ॥ वर्चसा तेजसा । प्रेक्षितेन वीक्षणेन । वाक्यैः भाषणैः । व्यक्तिं विशेषम् । तत इति । मोहितः सञ्जातमोहः, विशेषानभिज्ञ इत्यर्थः ॥३१॥ नोत्सृजामीत्यादिसार्धश्लोक एकान्वयः । अन्ते इतिकरणं द्रष्टव्यम् । द्वयोरपि नौ मया मूलघातो न कृतः स्यादिति हि शरं नोत्सृजामि नोत्सृष्टवानस्मीति योजना । ननु काञ्चनमालारूपो

तामेव वेलां तस्यामेव वेलायाम् " वालिनं जहि काकुत्स्थ मया बद्धोऽयमञ्जलिः " इति मत्प्रार्थनवेलायामित्यर्थः ॥ २७–२९ ॥ अलङ्कारेणेति । अलङ्कारेण हाराद्याभरणेन । वेषेण सुवर्णालङ्करणकृतशोभया । वर्चसा कान्त्या ॥ ३० ॥ ३१ ॥ नोत्सृजामीत्यादिश्लोकमेकं वाक्यम् । अत्रेतिकरणं द्रष्टव्यम् । द्वयोरपि नौ मूलघातो न स्यादिति हि शरं नोत्सृजामीति सम्बन्धः । उत्सृजामीति भूते लट् ॥ ३२ ॥ टी०—विपक्षे बाधकमाह—मूलघात इति । मूलम् आवयोश्शत्रुनिबर्हणफलत्राप्ति

वालिनो विशेषोस्ति । सत्यम्; तस्मिन् दिने तन्न धृत्वा गतवानिति ज्ञेयम् । यद्यप्यत्र मत्तत्वभोगचिह्नाश्रान्तत्वपुरनिर्गतत्वादिकं वाल्यसाधारणमस्ति । समीपस्था हनुमदादयश्च प्रष्टुं शक्याः स्वयं च सूक्ष्मज्ञः, 'प्रेक्षितज्ञास्तु कोसलाः' इत्युक्तेः । तथापि 'त्वया मया च कुन्त्या च' इति न्यायेन साधारण्यं परिहर्तुं दृष्टहेतून् कांश्चिदुक्तवान् राम इति ज्ञेयम् ॥ ३२–३६ ॥ तस्मादिति । मा मा शङ्कीरिति, मा मां प्रति मा शङ्कीः शङ्कां मा

त्वयि वीरे विपन्ने हि अज्ञानाल्लाघवान्मया । मौढ्यं च मम बाल्यं च ख्यापितं स्याद्धरीश्वर ॥ ३४ ॥ दत्ताभयवधो नाम पातकं महदुच्यते ॥ ३५ ॥ अहं च लक्ष्मणश्चैव सीता च वरवर्णिनी । त्वदधीना वयं सर्वे वनेऽस्मिन् शरणं भवान् ॥ ३६ ॥ तस्माद्युद्धचस्व भूयस्त्वं मा मा शङ्कीश्च वानर । एतन्मुहूर्ते सुग्रीव पश्य वालिनमाहवे । निरस्तमिषुणैकेन वेष्टमानं महीतले ॥३७॥ अभिज्ञानं कुरुष्व त्वमात्मनो वानरेश्वर । येन त्वामभिजानीयां द्वन्द्वयुद्धमुपागतम् ॥ ३८ ॥ गजपुष्पीमिमां फुल्लामुत्पाट्य शुभलक्षणाम् । कुरु लक्ष्मण कण्ठेऽस्य सुग्रीवस्य महात्मनः ॥ ३९ ॥ ततो गिरितटे जातामुत्पाट्य कुसुमाकुलाम् । लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे व्यसर्जयत् ॥ ४० ॥ स तया शुशुभे श्रीमान् लतया कण्ठसक्तया । विपरीत इवाकाशे सूर्यो नक्षत्रमालया ॥ ४१ ॥

कुरु । व्यत्ययेन परस्मैपदम् ॥ ३७ ॥ अभिज्ञानं चिह्नम् ॥ ३८ ॥ गजपुष्पीं नागपुष्पीं नाम लताम् ॥ ३९ ॥ व्यसर्जयत् अमोचयत् बद्धवान् ॥ ४० ॥ स तयेत्यादि । विपरीत इवेत्याद्युपरि विव्रीयते ॥ ४१ ॥

क्षणम् ॥ ३३ ॥ अविमृश्यकरणे न केवलं मूलघात एव, किन्तु महानर्थप्राप्तिः स्यादित्याह–मौढ्यं चेत्यादिना ॥ ३४–३८ ॥ गजपुष्पीं नागपुष्पीसंज्ञां लताम्, कुन्दलतां वा । उत्पाट्य शुभदारुजाम् इति ॥३८॥

स०–विपरीत इति । विपरीते रात्रौ । "विपरीतं तु शर्वरी" इत्यभिधानात् । सूर्यः राकामध्यगतश्चन्द्रः । "राकामध्यगतश्चन्द्रः सूर्य इत्यभिधीयते" इत्युक्तेः । नक्षत्रमाल्या सूर्य इवायमपि शुशुभ इति विपरीतः अभूतदृष्टान्त इति वा ॥ ४१ ॥

ससन्ध्य इव तोयद इति । सुग्रीवस्य हेमपिङ्गलवर्णत्वादिति भावः । अस्मिन् सर्गे सार्धद्विचत्वारिंशच्छ्लोकाः ॥ ४२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्वादशः सर्गः ॥१२॥ अथ पुनः किष्किन्धाप्रवेशस्त्रयोदशे—ऋश्यमूकादित्यादि ॥१॥२॥ अग्रत इति । संहतग्रीवः निबिडकण्ठ इत्यर्थः । इदं स्वरूपकीर्तनम्, गजपुष्पीबन्धनेन वा ॥ ३ ॥ ४ ॥ अथ कार्यसिद्धिसूचकपदार्थानुभवविशेषं

मालयेव बलाकानां ससन्ध्य इव तोयदः । विभ्राजमानो वपुषा रामवाक्यसमाहितः । जगाम सह रामेण किष्किन्धां वालिपालिताम् ॥४२॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमत्किष्किन्धाकाण्डे द्वादशः सर्गः ॥१२॥ ऋश्यमूकात्स धर्मात्मा किष्किन्धां लक्ष्मणाग्रजः । जगाम सहसुग्रीवो वालिविक्रमपालिताम् ॥ १ ॥ समुद्यम्य महच्चापं रामः काञ्चनभूषितम् । शरांश्चादित्यसङ्काशान् गृहीत्वा रणसाधकान् ॥ २ ॥ अग्रतस्तु ययौ तस्य राघवस्य महात्मनः । सुग्रीवः संहतग्रीवो लक्ष्मणश्च महाबलः ॥३॥ पृष्ठतो हनुमान् वीरो नलो नीलश्च वानरः । तारश्चैव महातेजा हरियूथपयूथपः ॥४॥ ते वीक्षमाणा वृक्षांश्च पुष्पभारावलम्बिनः । प्रसन्नाम्बुवहाश्चैव सरितः सागरङ्गमाः ॥५॥ कन्दराणि च शैलांश्च निर्दराणि गुहास्तथा । शिखराणि च मुख्यानि दरीश्च प्रियदर्शनाः ॥६॥ वैडूर्यविमलैः पर्णैः पद्मैश्चाकोशकुड्मलैः । शोभितान् सजलान् मार्गे तटाकांश्च व्यलोकयन् ॥ ७ ॥

दर्शयति—ते वीक्षमाणा इत्यादिना ॥ ५ ॥ कन्दराणि गृहाकारगुहाविशेषान् । निर्दराणि स्फुटितशैलरन्ध्रविशेषान् । गुहाः देवखातबिलानि । दरीः गुहाविशेषान् ॥ ६ ॥ आकोशकुड्मलैः ईषद्विकसितमुकुलैः ॥ ७ ॥ रामानु०—कन्दराणि गुहाश्चैव शैलांस्तानि वनानि च । शिखराणि च मुख्यानि दरीश्च प्रियदर्शनाः । इति बहुकोशेषु पाठः । कन्दराणि मन्दिराकाराकारितशिलाविवरविशेषान् । गुहाः देवखातबिलानि । दरीः स्फुटितशैलरन्ध्रविशेषान् ॥ वैडूर्यविमलैः पर्णैः पद्मैश्चाकोशकुड्मलैः । शोभितान्

पाठः । देवदारुद्रुमाश्रिताम् "भद्रदारुद्रुकिलिमं देवदारुणि" इत्यमरः ॥१९—४२॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपि० किष्किन्धाकाण्डव्याख्यायां द्वादशः सर्गः ॥१२॥ ॥ १ ॥ २ ॥ टी०—अग्रत इति । सुग्रीवः प्रस्थानकाले संहतग्रीवः दृढकन्धरः ॥ ३—५ ॥ कन्दराणीति । कन्दराणि मन्दिराकाराकारितशिलाविवरविशेषाः । गुहाः देवखातबिलानि । दरीः स्फुटितशैलरन्ध्रविशेषाः ॥ ६ ॥ वैडूर्येति । आकोशकुड्मलैः आकोशैः विकसितैः कुड्मलैः मुकुलैश्च ॥ ७ ॥

सजलान्मार्गे तटाकांश्च व्यलोकयान् इति पाठः । अकोशकुड्मलैः अकोशैः विकसितैः कुड्मलैः मुकुलैः ॥ ५-७ ॥ कारण्डैः । " कारण्डको महापक्षी " इति वैजयन्ती । सारसैः सरोनिवासैः शकुनैरुपनादितान् तटाकान् व्यलोकयन्निति पूर्वेणान्वयः ॥ ८ ॥ मृदुशष्पेति । चरतः स्थितांश्चापश्यन् ॥ ९ ॥ रामानु०-चरतः सर्वतः पश्यान्निति पाठः ॥ ९ ॥ तटाकवैरिण इत्यादि । तटाकवैरिणः कलुषीकरणात् । एकचरान् एकाकिनः । द्विरदाः द्विदन्ता इति चतुर्दन्तव्या

कारण्डैः सारसैर्हंसैर्वञ्जुलैर्जलकुक्कुटैः । चक्रवाकैस्तथा चान्यैः शकुनैरुपनादितान् ॥ ८ ॥ मृदुशष्पाङ्कुराहारान्नि र्भयान् वनगोचरान् । चरतः सर्वतोऽपश्यन् स्थलीषु हरिणान् स्थितान् ॥ ९ ॥ तटाकवैरिणश्चापि शुक्लदन्तविभूषि तान् । घोरानेकचरान् वन्यान् द्विरदान् कूलघातिनः ॥ १० ॥ मत्तान् गिरितटोत्कृष्टान् पर्वतानिव जङ्गमान् । वारणान् वारिदप्रख्यान् महीरेणुसमुक्षितान् ॥११॥ वने वनचरांश्चान्यान् खेचरांश्च विहङ्गमान्। पश्यन्तस्त्वरिता जग्मुः सुग्रीववशवर्तिनः ॥ १२ ॥ तेषां तु गच्छतां तत्र त्वरितं रघुनन्दनः । द्रुमषण्डं वनं दृष्ट्वा रामः सुग्रीव मब्रवीत् ॥ १३ ॥ एष मेघ इवाकाशे वृक्षषण्डः प्रकाशते । मेघसङ्घातविपुलः पर्यन्तकदलीवृतः ॥ १४ ॥ किमेत ज्ज्ञातुमिच्छामि सखे कौतूहलं हि मे । कौतूहलापनयनं कर्तुमिच्छाम्यहं त्वया ॥ १५ ॥ तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः । गच्छन्नेवाचचक्षेऽथ सुग्रीवस्तन्महद्वनम् ॥ १६ ॥ एतद्राघव विस्तीर्णमाश्रमं श्रमनाश नम् । उद्यानवनसम्पन्नं स्वादुमूलफलोदकम् ॥ १७ ॥

वृत्तिः ॥ १० ॥ गिरितटोत्कृष्टान् उल्लिखितगिरितटान् ॥ ११ ॥ रामानु०-तटाकवैरिण इत्यादि । द्विरदवारणशब्दयोस्तत्तत्स्थलावस्थितव्यक्तिभेदवाचकत्वेन न पौनरुक्त्यम् । गिरितटानुत्कर्षन्तीति गिरितटोत्कृष्टाः तान् । कर्तरि क्तः ॥ १०-११ ॥ ॥ १२ ॥ तेषां त्विति । द्रुमषण्डं वृक्षषण्डमयमिति लतागुल्मव्यावृत्तिः ॥१३ ॥ एष इति । मेघ इवेति नीलवर्णे उपमा ॥ १४-१८ ॥

कारण्डः कारण्डवः । नामैकदेशे नामग्रहणम् । एतैरुपलक्षितांस्तटाकान् पश्यन्नित्यन्वयः ॥ ८ ॥ ९ ॥ तटाकवैरिण इत्यादि । द्विरदवारणशब्दयोः तत्तत्स्थलावस्थितव्यक्तिभेदवाचकत्वेनन पौनरुक्त्यम् । गिरितटो त्कृष्टान् गिरितटानुत्कर्षन्तीति तथा॥ १०-१९॥ गच्छन्नेवेति । शतृप्रत्ययेन कार्यत्वरा सूचिता॥ १६-१८॥

सप्तरात्रेति । सप्तरात्रकृताहाराः वायुना सप्तरात्रस्य एकवारं कृताहाराः । सप्तभिर्वर्षशतैरित्यन्वयः ॥ १९ ॥ तेषामित्यादि । विशन्तीति । ये मोहादत्राश्रमे विशन्ति न ते निवर्तन्ते किंतु तत्रैव नश्यन्तीत्यर्थः ॥ २० ॥ २१ ॥ दिवं गताः शरीरान्तरेण पुनरत्रागत्याप्सरोभिः क्रीडन्ती

अत्र सप्तजना नाम मुनयः संशितव्रताः । सप्तैवासन्नधःशीर्षा नियतं जलशायिनः ॥ १८ ॥ सप्तरात्र कृताहारा वायुना वनवासिनः । दिवं वर्षशतैर्याताः सप्तभिः सकलेवराः ॥ १९ ॥ तेषामेवंप्रभावानां द्रुमप्राकार संवृतम् । आश्रमं सुदुराधर्षमपि सेन्द्रैः सुरासुरैः ॥ २० ॥ पक्षिणो वर्जयन्त्येतत्तथान्ये वनचारिणः । विशन्ति मोहाद्ये तत्र निवर्तन्ते न ते पुनः ॥ २१ ॥ विभूषणरवास्तत्र श्रूयन्ते सकलाक्षराः । तूर्यगीतस्वनाश्चात्र गन्धो दिव्यश्च राघव ॥२२॥ त्रेताग्नयोपि दीप्यन्ते धूमो ह्यत्र प्रकाशते । वेष्टयन्निव वृक्षाग्रान् कपोताङ्गारुणो घनः ॥२३॥ एत वृक्षाः प्रकाशन्ते धूमसंसक्तमस्तकाः । मेघजालप्रतिच्छन्ना वैडूर्यगिरयो यथा ॥ २४ ॥ कुरु प्रणामं धर्मात्मन् तान् समुद्दिश्य राघव । लक्ष्मणेन सह भ्रात्रा प्रयतः संयताञ्जलिः ॥ २५ ॥ प्रणमन्ति हि ये तेषां मुनीनां भावि तात्मनाम् । न तेषामशुभं किञ्चिच्छरीरे राम दृश्यते ॥ २६ ॥ ततो रामः सह भ्रात्रा लक्ष्मणेन कृताञ्जलिः । समुद्दिश्य महात्मानस्तानृषीनभ्यवादयत् ॥ २७ ॥ अभिवाद्य तु धर्मात्मा रामो भ्राता च लक्ष्मणः । सुग्रीवो वानराश्चैव जग्मुः संहृष्टमानसाः ॥ २८ ॥

त्याश्चर्येणाह-विभूषणेत्यादिना । भूषणरवेण नृत्तमुपलक्ष्यते । सकलाक्षरा इति गीतस्वनविशेषणम् । तूर्यशब्दोत्र गीतभिन्नवाद्यपरः ॥ २२ ॥ त्रेतेति । त्रेताग्निदीपने लिङ्गमाह-धूमो हीति । घनः निबिडः ॥ २३ ॥ २४ ॥ कुर्विति । समुद्दिश्य किञ्चित्फलमुद्दिश्य तेषां प्रणामं कुरु ॥ २५ ॥ प्रणमन्तीति । शरीरे अशुभं व्याध्यादिकम् ॥ २६ ॥ महात्मानः महात्मनः ॥ २७ ॥ अभिवाद्येत्यनेन सर्वेषामभिवादनमनूद्यते । अत्राभिवादनं नम

सप्तरात्रकृताहाराः सप्तसु रात्रिषु वायुनैव कृताहारा इति यावत् । सप्तरात्रे सति वायुना कृताहारा इति वा ॥१९-२१॥ सकलाक्षरा कलान्यव्यक्तमधुराणि अक्षराणि वाक्यानि गन्धश्च प्रतीयत इति शेषः ॥२२॥ कपोताङ्गारुणः अरुणो धूसरः तपसा देवत्वं गता अपि स्वसामर्थ्येनेच्छया अमरगणाः पूर्वस्थाने विहरन्तीति भावः ॥ २३-२६ ॥ ततो राम इति । समुद्दिश्य

स्कारः, तेषां परोक्षत्वात् । अनेन सज्जनप्रणामो विजयावह इत्ययमर्थः सूचितः । तदिदं द्योत्यते उपरितनश्लोके उदिताग्र्यतेजस इति । प्रणामेनेति भावः ॥ २८ ॥ २९ ॥ सह युगपत् ॥ ३० ॥ इति श्रीगोविन्द० श्रीरामायणभू० मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

अथ वाल्याह्वानभीतं सुग्रीवं निश्वासयति रामश्चतुर्दशे–सर्व इत्यादि ॥ १ ॥ २ ॥ तत इत्यादि । वायुवेगपुरःसरः वायुवेगान्मेघे अधिको ध्वनिरिति

ते गत्वा दूरमध्वानं तस्मात् सप्तजनाश्रमात् । ददृशुस्तां दुराधर्षां किष्किन्धां वालिपालिताम् ॥ २९ ॥ ततस्तु रामानुजरामवानराः प्रगृह्य शस्त्राण्युदिताग्र्यतेजसः । पुरीं सुरेशात्मजवीर्यपालितां वधाय शत्रोः पुनरागताः सह ॥ ३० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिपालिताम् । वृक्षैरात्मानमावृत्य व्यतिष्ठन् गहने वने ॥ १ ॥ विचार्य सर्वतो दृष्टिं कानने काननप्रियः । सुग्रीवो विपुलग्रीवः क्रोधमाहारयद्भृशम् ॥ २ ॥ ततः स निनदं घोरं कृत्वा युद्धाय चाह्वयत् । परिवारैः परिवृतो नादैर्भिन्दन्निवाम्बरम् । गर्जन्निव महामेघो वायुवेगपुरस्सरः ॥ ३ ॥ अथ बालार्कसदृशो दृप्तसिंहगतिस्तदा । दृष्ट्वा रामं क्रियादक्षं सुग्रीवो वाक्यमब्रवीत् ॥ ४ ॥ हरिवागुरया व्याप्तां तप्तकाञ्चनतोरणाम् । प्राप्ताः स्म ध्वजयन्त्राढ्यां किष्किन्धां वालिनः पुरीम् ॥ ५ ॥

प्रसिद्धिः । यतः वायुवेगपुरस्सरः अत एव गर्जन्महामेघ इव स्थितः । परिवारैः परिवृतः सः नादैरम्बरं भिन्दन्निव घोरं निनदं कृत्वा युद्धायाह्वयत् । वालिनमिति शेषः ॥ ३ ॥ ४ ॥ हरिवागुरया हरय एव वागुरा मृगग्रहणपाशः तया व्याप्ताम् इतरदुष्प्रवेशामित्यर्थः । यद्वा हरिवागुरया हरिगृहैः । जात्येकवचनम् । "वागुरा मृगशालिका" इति वैजयन्ती ॥ ५ ॥ रामानु०–हरिवागुरया शत्रुभूतवानरग्राहिण्या वागुरया । यद्वा शत्रुग्राहकत्वेन वानरा एव वागुरात्वेन निरूपिताः तया ॥ ५ ॥

महात्मानः महात्मनः ॥ २७–३० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां त्रयोदशः सर्गः ॥ १३ ॥
॥ १–४ ॥ हरीति । हरिवागुरया शत्रुभूतवानरग्राहिण्या । यद्वा शत्रुग्राहकत्वेन वानरा एव वागुरात्वेन निरूपिताः, तया व्याप्ताम् ॥ ५–७ ॥

आगतः कालः फलकालः ॥ ६ ॥ रामानु०—लतां काल इवागत इति सम्यक् । कालो वसन्तादिकालः ॥ ६ ॥ ॥ ७ ॥ अभिज्ञापकं चिह्नम् अभिज्ञानचिह्नम्, कृतमभिज्ञानचिह्नं यस्य स तथा । गजपुष्पीमयी गजसाह्वया । यद्वा गजेन समा आह्वा आख्या यस्याः सा गजसाह्वा तया शोभस इति । अत्राहुः—विपरीते रात्रौ । सूर्यः पूर्णचन्द्रः । “ परीतं तु दिवा प्रोक्तं विपरीतं तु शर्वरी । राकामध्यगतश्चन्द्रः सूर्य इत्यभिधीयते ॥ ” इति वचनात् ।



प्रतिज्ञा या त्वया वीर कृता वालिवधे पुरा । सफलां तां कुरु क्षिप्रं लतां काल इवागतः ॥ ६ ॥
एवमुक्तस्तु धर्मात्मा सुग्रीवेण स राघवः । तमथोवाच सुग्रीवं वचनं शत्रुसूदनः ॥ ७ ॥
कृताभिज्ञानचिह्नस्त्वमनया गजसाह्वया । लक्ष्मणेन समुत्पाट्य येषा कण्ठे कृता तव ॥ ८ ॥
शोभसे ह्यधिकं वीर लतया कण्ठसक्तया । विपरीत इवाकाशे सूर्यो नक्षत्रमालया ॥ ९ ॥

यद्वा नक्षत्रमालया विपरीतः विशेषेण परिवृतः सूर्य इव चन्द्र इव । अन्यशब्देनान्यस्याभिधानं कथमिति चेत् ? “नवो नवो भवति” इति श्रुतौ अह्नां केतुः सूर्यः चन्द्राप्यायकत्वाच्चन्द्रमा इत्युच्यते । तद्वच्चन्द्रोपि सूर्यकिरणानुप्रवेशायत्तप्रकाशविशेषवत्त्वात् सूर्यशब्देनाभिधीयत इति । यद्वा विशेषेण परीतो विपरीतः नक्षत्रावृतः सूर्य इवेत्यभूतोपमा । विपरीत इत्यनेन तात्कालिकतेजोवत्त्वमुच्यते । यद्वा विपरीते विपरीतकाले । सूर्यो नक्षत्रमालयेव अनया लतया शोभसे । उत्पातकाले हि मध्याह्ने नक्षत्राणि दृश्यन्त इत्युच्यते ज्योतिःशास्त्रे—“ रात्राविन्द्रधनुर्दर्शे दिवा नक्षत्रदर्शने । तद्राष्ट्रनाथ नाशः स्यादिति गर्गस्य भाषितम् ॥ ” इति । अतः भाविवालिवधरूपफलानुसारेण तेजसा ज्वलन् सुग्रीवः शुभ्रपुष्पावलीशोभमानगजपुष्पीमालया उत्पातकाले नक्षत्रमालया सूर्य इव बभावित्यस्मदाचार्योक्तम् ॥ ८ ॥ ९ ॥ रामानु०—अत्रायं विशेषः । चन्द्रस्य सूर्यकिरणानुप्रवेशप्रकाशवत्त्वं विष्णुपुराणे प्रसिद्धम् ।

कृतेति । कृताभिज्ञानचिह्नः कृतमभिज्ञानार्थं चिह्नं यस्येति तथा ॥ ८ ॥ शोभस इति । आकाशे नक्षत्रमालया विपरीतो विशेषेण परीतः परिवृतः सूर्य इव चन्द्र इव त्वं शोभसे । सुवति प्रेरयतीति सूर्य इति व्युत्पत्त्या नक्षत्रमण्डलपरिवृतत्वविशेषणेन च चन्द्र एव सूर्यशब्देनोच्यते । यद्वा अभूतोपमेयम् । आकाशे नक्षत्रमालया विपरीतो विशेषेण परिवृतः सूर्य इव त्वं शोभसे । यद्वा विपरीत इति सप्तम्यन्तम् । विपरीते रात्रौ सूर्यः पौर्णमासीचन्द्रः “ परीतं तु दिवा प्रोक्तं विपरीतं तु शर्वरी । पौर्णमासीगतश्चन्द्रः सूर्य इत्यभिधीयते ॥ ” इति वचनात् । रात्रावाकाशे पूर्णचन्द्रो नक्षत्रमालया यथा शोभते तथा कण्ठसक्तमालया त्वं शोभस इति ॥ टी०—गजसाह्वया गजेन समा आह्वा आख्या यस्यास्सा, कुन्दलतेति यावत् । तया कण्ठसक्तमालया त्वं शोभस इति ॥ ९ ॥

"क्षीणं सोमं सुरैः पीतमाप्याययति दीप्तिमान्। मैत्रेयैककलं सन्तं रश्मिनैकेन भास्करः॥" इति ॥ ८ ॥ ९ ॥ अद्येति । प्रमोक्ष्यामि प्रमोचयिष्यामि । अनिद्रत्वमापर्यम् ॥ १० ॥ ममेति ॥ यावद्वेष्टते वेष्टिष्यते । "यावत्पुरानिपातयोर्लट्" इति लट् ॥ ११ ॥ यदीति । स वाली दृष्टिपथं प्राप्तः सन् पुनर्जीवन्यदि विनिवर्तते । ततः तदा । दोषेणोपलक्षितम् । मा माम् आगच्छेत् । सद्यो मा माम् भवान् गर्हेच गर्हेत च । यदि दृष्टमात्रेण तं न हन्यां तदा मत्समीप

अद्य वालिसमुत्थं ते भय वैरं च वानर । एकेनाहं प्रमोक्ष्यामि बाणमोक्षेण संयुगे ॥ १० ॥ मम दर्शय सुग्रीव वैरिणं भ्रातृरूपिणम् । वाली विनिहतो यावद्वने पांसुषु वेष्टते ॥ ११ ॥ यदि दृष्टिपथं प्राप्तो जीवन् स विनिवर्तते । ततो दोषेण माऽऽगच्छेत् सद्यो गर्हेच्च मा भवान् ॥ १२ ॥ प्रत्यक्षं सप्त ते साला मया बाणेन दारिताः । तेनावेहि बलेनाद्य वालिनं निहतं मया ॥ १३ ॥ अनृतं नोक्तपूर्वं मे वीर कृच्छ्रेऽपि तिष्ठता । धर्मलोभपरीतेन नच वक्ष्ये कथञ्चन ॥ १४ ॥ सफलां च करिष्यामि प्रतिज्ञां जहि सम्भ्रमम् । प्रसूतं कलमं क्षेत्रे वर्षेणेव शतक्रतुः ॥ १५ ॥ तदाह्वाननिमित्तं त्वं वालिनो हेममालिनः । सुग्रीव कुरु तं शब्दं निष्पतेद्येन वानरः ॥ १६ ॥ जितकाशी बलश्लाघी त्वया चाधर्षितः पुरा । निष्पतिष्यत्यसङ्गेन वाली स प्रियसंयुगः ॥ १७ ॥

मागच्छ मां गर्हस्व चेत्यर्थः ॥ १२ ॥ रामानु०—यदि दृष्टिपथमिति । स यदि दृष्टिपथं प्राप्तः जीवन्न निवर्तते ततः भवान् मां दोषेणोपलक्षितम् मा गच्छेन्नावगच्छेत् । सद्यो मा गर्हेच ॥ १२ ॥ ॥ १३ ॥ अनृतमिति । मे मया । "तेमयावेकवचनस्य" इत्येतत्तृतीयायामप्यार्षे दृश्यते । अतस्तद्विशेषणेपि तृतीयाप्रयोगः । धर्मलोभपरीतेन लोभो लब्धस्य त्यागासहिष्णुता, धर्महान्यसहिष्णुनेत्यर्थः ॥ १४ ॥ सफलामिति । सम्भ्रमं संशयकृतचाञ्चल्यम् । पराक्रमेण प्रतिज्ञा सफलत्वकरणे दृष्टान्तमाह प्रसूतमिति । कलमं सस्यम् ॥ १५ ॥ तदाह्वानेति । तत्तस्मात् ॥ १६ ॥ जितेति । जितेन जयेन काशते प्रकाशत इति जित

अद्येति । प्रमोक्ष्यामि मोक्षयिष्यामीत्यर्थः ॥ १० ॥ ११ ॥ यदीति । सः वाली । दृष्ट्योः पथं दृष्टिविषयं प्राप्तो यदि, ममेति शेषः । तर्हि जीवन्न निवर्तते । ततः तदनन्तरम् । मां दोषेण उपेक्षारूपदोषेण उपलक्षितम् । भवान् मा (गमनं) गच्छेद् न पश्येत् सद्यो मा गर्हेचेति सम्बन्धः ॥ १२ ॥ प्रत्यक्षमिति । यतः साला दारिताः ततः कारणादेव बलेन उपलक्षितं वालिनं मया हतं वेत्सि ॥ १३ ॥ अनृतमिति । म इति तृतीयार्थे षष्ठी । धर्मलोभपरीतेन धर्मात्यागयुक्तेनेत्यर्थः । मया अनृतं नोक्तपूर्वमिति सम्बन्धः ॥ १५ ॥ टी०—सम्भ्रमं [illegible] ॥ १५ ॥ तदाह्वानेति । तत्तस्मात्कारणात् । येन शब्देन ॥ १६ ॥ जितकाशी

काशी । ताच्छील्ये णिनिः । असङ्गेन अविलम्बेन ॥ १७ ॥ रामानु०—जितकाशी जितश्रमः ॥ १७ ॥ स्त्रीसमक्षमित्यनेन तदानीं सायंकाल इत्यवगम्यते । "प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया । सायं कामेन पीड्यन्ते जन्तवो निशि निद्रया ॥" इति वचनात् ॥ १८ ॥ १९ ॥ हतप्रभाः भीतिविकृतमुखकान्तयः । गाव इत्यनेन गवां पुरप्रवेशकालसूचनात्तत्कालस्य सायन्तनत्वं गम्यते । राजदोषपरामृष्टाः राजदोषेण अराजकत्वरूपदोषेण परामृष्टाः परैः

रिपूणां धर्षणं शूरा मर्षयन्ति न संयुगे । जानन्तस्तु स्वकं वीर्यं स्त्रीसमक्षं विशेषतः ॥ १८ ॥ स तु रामवचः श्रुत्वा सुग्रीवो हेमपिङ्गलः । ननर्द क्रूरनादेन विनिर्भिन्दन्निवाम्बरम् ॥ १९ ॥ तस्य शब्देन वित्रस्ता गावो यान्ति हतप्रभाः । राजदोषपरामृष्टाः कुलस्त्रिय इवाकुलाः ॥ २० ॥ द्रवन्ति च मृगाः शीघ्रं भग्ना इव रणे हयाः । पतन्ति च खगा भूमौ क्षीणपुण्या इव ग्रहाः ॥ २१ ॥ ततः स जीमूतगणप्रणादो नादं ह्यमुञ्चत्त्वरया प्रतीतः । सूर्यात्मजः शौर्यविवृद्धतेजाः सरित्पतिर्वाऽनिलचञ्चलोर्मिः ॥ २२ ॥ इत्यार्षे० श्रीमत्किष्किन्धाकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

अथ तस्य निनादं तु सुग्रीवस्य महात्मनः । शुश्रावान्तःपुरगतो वाली भ्रातुरमर्षणः ॥ १ ॥
श्रुत्वा तु तस्य निनदं सर्वभूतप्रकम्पनम् । मदश्चैकपदे नष्टः क्रोधश्चापतितो महान् ॥ २ ॥

परपुरुषैः आमृष्टाः केशेषु गृहीताः कुलस्त्रिय इव आकुलाः गन्तव्यप्रदेशाभावेनाकुलाः ॥ २० ॥ २१ ॥ प्रतीतः नादमोचने प्रसिद्धः । सरित्पतिर्वा समुद्र इव ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥

अथ ताराबुद्धिः पञ्चदशे—अथ तस्येत्यादि । महात्मनः महाधैर्यस्य ॥ १ ॥ श्रुत्वेति । स्थितस्येति शेषः । एकपदे एकस्मिन्नेव स्थाने, सद्य इत्यर्थः ।

जितेन जयेन काशते प्रकाशत इति तथा । असङ्गेन अतिशीघ्रेण ॥ १७–१९ ॥ तस्येति । राजदोषपरामृष्टाः राजदोषव्याप्ताः । राजाज्ञाभावे बलाधिकजारभीत्या कुलस्त्रियो यथा निष्प्रभा यान्ति तथा गावो यान्तीत्यर्थः ॥ २० ॥ २१ ॥ सरित्पतिर्वेत्यत्र वाशब्द इवार्थे । सरितः पतिरिव त्वरया नादं मुञ्चन् प्रतीतः प्रसिद्धः सः सुग्रीवः विवृद्धतेजाः, अभवदिति शेषः ॥२२॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायण० किष्किन्धाकाण्ड० चतुर्दशः सर्गः ॥१४॥१॥ टी०—एकपदे तत्काले "एकं पदं स्यात्तत्काले

आपतितः उत्पन्न इत्यर्थः ॥ २ ॥ स त्विति । रोषेण परीताङ्गः विपरीताङ्गः, विकृतवेष इत्यर्थः । अत एव सन्ध्यातपप्रभः 'कोपपावकयावकिताननः' इति प्रयोगात्कोपरक्तदेहत्वात्सन्ध्यातपप्रभत्वम् । किंच उपरक्तः समीपरक्तः, कृतपरिवेष इत्यर्थः । परिवेषयुक्तो हि सूर्यो निष्प्रभो दृश्यते । उपरक्तो राहुग्रस्तो वा ॥ ३ ॥ रामानु०—सन्ध्यातपप्रभः सन्ध्यातपवत्पिङ्गलवर्णः । स वाली रोषपरीताङ्गः अत एवोपरक्त आदित्य इव सद्यो निष्प्रभतां गत इति सम्बन्धः ॥३॥ दंष्ट्राकरालः

स तु रोषपरीताङ्गो वाली सन्ध्यातपप्रभः । उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥३॥ वाली दंष्ट्राकरालस्तु क्रोधाद्दीप्ताग्निसन्निभः । भात्युत्पतितपद्माभः समृणाल इव ह्रदः ॥ ४ ॥ शब्दं दुर्मर्षणं श्रुत्वा निष्पपात ततो हरिः । वेगेन चरणन्यासैर्दारयन्निव मेदिनीम् ॥ ५ ॥ तं तु तारा परिष्वज्य स्नेहाद्दर्शितसौहृदा । उवाच त्रस्तसम्भ्रान्ता हितोदर्कमिदं वचः ॥६॥ साधु क्रोधमिमं वीर नदीवेगमिवागतम् । शयनादुत्थितः काल्यं त्यज भुक्तामिव स्रजम् ॥ ७ ॥ काल्यमेतेन सङ्ग्रामं करिष्यसि च वानर । वीर ते शत्रुबाहुल्यं फल्गुता वा न विद्यते ॥ ८ ॥

दंष्ट्रादन्तुरः । "करालो दन्तुरे तुङ्गे" इत्यमरः । क्रोधाद्धेतोः दीप्ताग्निसन्निभः अत एवोत्पतितपद्मः विकसितरक्तोत्पलः । उत्पतितपद्माभ इति पाठे उत्पतिता स्वोपरि प्रसृता पद्मानामा भा यस्मिन् स इत्यर्थः। समृणालो ह्रदः इव भाति बभौ ॥ ४ ॥ रामानु०—वालीति । दीप्ताग्निसन्निभो वाली क्रोधाद्दंष्ट्राकरालः उत्पतितपद्माभः गजादिभिरुद्धृतपद्माभः समृणालो ह्रद इव भाति इति योजना । दंष्ट्रा मृणालस्थानीया ॥४॥ ५ ॥ परिष्वज्य स्ववचनश्रवणाभिमुख्यायालिङ्ग्य स्नेहात् परिष्वज्येत्यन्वयः । दर्शितसौहृदा यथा भवति तथोवाचेत्यर्थः । संभ्रान्ता त्वरिता । "संभ्रमस्त्वरा" इत्यमरः । हितोदर्कं हितफलकम् ॥६॥ साध्विति । काल्यं प्रातः शयनादुत्थितः पुरुषः भुक्तां स्रजमिव । नदीवेगमिव आगतम् अप्रतिबद्धं क्रोधम् । साधु निश्शेषं त्यज ॥ ७॥ काल्यं प्रातःकाले, एतेन युद्धं करि

"पद्व्यामेकपर्णपि" इति विश्वः ॥२॥ सत्विति । सन्ध्यातपप्रभः सन्ध्यातपवत्पिशङ्गवर्णः । रोषपरीताङ्गः अत एव उपरक्तादित्य इव सद्यो निष्प्रभतां गत इति सम्बन्धः । अनेन भाव्यनर्थः सूच्यते ॥ ३ ॥ उत्पतितपद्माभः गजादिभिरुद्धृतपद्माभः समृणालो ह्रद इव भातीति योजना । दंष्ट्रा मृणालस्थानीयाः । दीप्ताग्निसंनिभत्वं कात्स्न्र्यकषायवर्णप्राकट्याय ॥ ४ ॥ ५ ॥ दर्शितसौहृदा दर्शितसौमनस्या ॥ ६ ॥ शयनादुत्थितः पुरुषः भुक्तामनुभूतां स्रजं माल्यम् काल्यं प्रातःकाले यथा त्यजति तथा क्रोधं त्यजेति सम्बन्धः ॥ ७ ॥ काल्यं प्रातःकाले । ते तव । फल्गुता लाघवं शत्रुबाहुल्यं शत्रोर्बाहुल्यं गौरवं वा न विद्यते, शत्रुविषयबलावल

व्यसि। फल्गुता लाघवं वा शब्दबाहुल्यं शब्दगौरवं वा न विद्यते। अतः किमर्थमद्यैव निर्गच्छसीत्यर्थः ॥ ८ ॥ सहसा निर्गमे को दोष इत्यत्राह—सहसेति ॥ ९ ॥ प्रथमं युक्तिमाह—पूर्वमित्यादिश्लोकद्वयमेकान्वयम् । पूर्वमापतितः । ते त्वया । क्रोधान्निष्पत्य यो युधि निरस्तः, हन्यमानो दिशो गतश्च । सः

सहसा तव निष्क्रामो मम तावन्न रोचते। श्रूयतां चाभिधास्यामि यन्निमित्तं निवार्यसे ॥ ९ ॥
पूर्वमापतितः क्रोधात्स त्वामाह्वयते युधि। निष्पत्य च निरस्तस्ते हन्यमानो दिशो गतः ॥ १० ॥
त्वया तस्य निरस्तस्य पीडितस्य विशेषतः। इहैत्य पुनराह्वानं शङ्कां जनयतीव मे ॥ ११ ॥
दर्पश्च व्यवसायश्च यादृशस्तस्य नर्दतः। निनादश्चापि संरम्भो नैतदल्पं हि कारणम् ॥ १२ ॥
नासहायमहं मन्ये सुग्रीवं तमिहागतम्। अवष्टब्धसहायश्च यमाश्रित्यैष गर्जति ॥ १३ ॥

त्वामाह्वयते। पुनरेत्य स्थितस्य तस्यैतदाह्वानम् मे शङ्कां सहायसहितत्वशङ्काम् जनयतीति योजना। इवशब्दो वाक्यालङ्कारे। रामानु०—अल्पयानामने कार्थत्वादवधारणे वा ॥ १० ॥ ११ ॥ अवधारणे हेत्वन्तरमप्याह—दर्पश्चेति । नर्दतस्तस्य दर्पश्च व्यवसायश्च यत्नश्च निनादश्च संरम्भश्च यादृशः अस्य एतत्कारणमल्पं न भवतीति योजना ॥ १२ ॥ फलितमाह—नासहायमिति। अवष्टब्धसहायश्च परिगृहीतसहाय एव। कुतः? एषः यमाश्रित्य गर्जति तादृशगर्जनहेतुसहायाश्रित एष इत्यर्थः ॥ १३ ॥

विषयशङ्का तव नास्तीति भावः। यद्यप्येवं तथापि ॥८॥९॥ पूर्वमिति श्लोकद्वयमेकं वाक्यम् । पूर्वमापतितः आगतः ते त्वया। क्रोधान्निष्पत्य यो युधि निरस्तः हन्यमानो दिशो गतश्च सः त्वामाह्वयते। पुनरेत्य स्थितस्यैतदाह्वानं मम शङ्कां सहायवत्त्वशङ्कां जनयतीव जनयत्येवेति योजना ॥ १० ॥ ११ ॥ दर्पश्चेति। नर्दतः तस्य दर्पश्च व्यवसायः यत्नश्च निनादस्य संरम्भश्च यादृशः तादृशस्यैतत्कारणमल्पं न भवतीति योजना ॥ १२ ॥ अवष्टब्धसहायश्च परिगृहीतसहाय एव। कुतः?

स०—तं सुग्रीवम्। असहायं न मन्ये। वष्टब्धसहायः परिगृहीतसमानलाभः स न भवतीत्यवष्टब्धसहायः, अपरिगृहीतसमानराज्योऽयं सुग्रीवः यमाश्रित्य गर्जति तमपि सुग्रीवन्तं सुग्रीववदाचरन्तं सुग्रीववत्सामा द्युपायेनाभेद्यं मन्य इत्यावर्तितेनान्वयः। अहमिहागतं सुग्रीवमसहायं न मन्ये। भवतु सहायः कश्चित्तमप्यहं हनिष्यामीत्यत आह—अवष्टब्धसहायश्चेति। अवष्टब्धः परिगृहीतः सहायो येन स एषः यमाश्रित्य गर्जति तं राममपि असहायम् असहायशूरं मन्य इति वा। अनेन ताराया रामविषयकं ज्ञानमस्तीति सूचितम्। तच्चानुपदं स्पष्टीभविष्यति ॥ १३ ॥

सहायस्यातिशये किं मानमित्यत आह--प्रकृत्येति ॥१४॥ न केवलं युक्त्यायं निर्णयः, वचनाच्चेत्याह--पूर्वमिति। वचो यत् प्रासङ्गिकं कथयतोऽङ्गदस्य वचः मया श्रुतं तत् हितं वचः त्वां प्रति वक्ष्यामि ॥१५॥ रामानु०--पूर्वमेव मया वीर श्रुतं कथयतो वचः। अङ्गदस्य कुमारस्य वक्ष्यामि त्वा हितं वचः ॥ इति पाठः ॥१५॥ अङ्गद इति। वनान्तमुपवनान्तमभिनिर्गतः विहारार्थं गतः। प्रवृत्तिर्वार्ता। "वार्ता प्रवृत्तिर्वृत्तान्तः" इत्यमरः। तत्र ऋश्यमूके। दुरासदावित्यनन्तरमिति

प्रकृत्या निपुणश्चैव बुद्धिमांश्चैव वानरः। अपरीक्षितवीर्येण सुग्रीवः सह नेष्यति ॥ १४ ॥ पूर्वमेव मया वीर श्रुतं कथयतो वचः। अङ्गदस्य कुमारस्य वक्ष्यामि त्वा हितं वचः ॥ १५ ॥ अङ्गदस्तु कुमारोऽयं वनान्तमुपनिर्गतः। प्रवृत्तिस्तेन कथिता चारैराप्तैर्निवेदिता ॥ १६ ॥ अयोध्याधिपतेः पुत्रौ शूरौ समरदुर्जयौ। इक्ष्वाकूणां कुले जातौ प्रथितौ रामलक्ष्मणौ। सुग्रीवप्रियकामार्थं प्राप्तौ तत्र दुरासदौ ॥१७॥ तव भ्रातुर्हि विख्यातः सहायो रणकर्कशः। रामः परबलामर्दी युगान्ताग्निरिवोत्थितः ॥ १८ ॥ निवासवृक्षः साधूनामापन्नानां परा गतिः। आर्तानां संश्रयश्चैव यशसश्चैकभाजनम् ॥१९॥ ज्ञानविज्ञानसम्पन्नो निदेशे निरतः पितुः। धातूनामिव शैलेन्द्रो गुणानामाकरो महान् ॥२०॥

करणं बोध्यम्। प्राप्ताविति प्रवृत्तिस्तेन कथितेति सम्बन्धः ॥१६॥१७॥ तौ कीदृशावित्यपेक्षायाम् एकस्य स्वरूपकथनेनान्यस्य स्वरूपमप्यर्थादुक्तं भवतीति मत्वा प्रधानभूतरामस्वरूपमाह--तवेत्यादिना श्लोकत्रयेण। रामः उक्तविशेषणविशिष्ट इत्यन्वयः ॥ तत्त्वस्थितिं सूचयन्त्याह--निवासेति। यथा सुग्रीवस्य सहायः एवं ममापि कुतो न स्यादित्यत्राह साधूनामिति। स्वच्छायापेक्षिणाम् अनुकूलानां निवासवृक्षः। वृक्ष इत्यभेदाध्यवसायेन सर्वथा सादृश्यमुच्यते। यथा वृक्षः प्रथमं तापमपहृत्य पुष्पफलप्रदानादिना सर्वेन्द्रियतर्पणः तथायमित्यर्थः। निवास इति विशेषणेन कादाचित्कच्छायक

एषः यमाश्रित्य गर्जति अतः ससहाय एवेत्यर्थः ॥१३॥ टी०--अस्तु, सोपि सहायः सुग्रीवतुल्य एवेत्यत आह--अपरीक्षितेति। अपरीक्षितवीर्येण, सहायेनेति शेषः। अपरीक्षितं वीर्यं यस्येति विग्रहः ॥ १४ ॥ १५ ॥ अङ्गदस्त्विति। चारैर्निवेदिता प्रवृत्तिः वार्ता तेनाङ्गदेन कथितेति सम्बन्धः ॥ १६ ॥ प्रवृत्तिमेवाह--अयोध्याधिपतेरित्यादिना ॥ १७ ॥ "स्वरक्षणे प्यशक्तस्य को हेतुः पररक्षणे" इति न्यायेन राज्याद्विवासितो रामः सुग्रीवं कथं रक्षितुं समर्थः? शक्तो वाऽयलवन्तं कथमवलम्बत इत्यत आह--तवेति ॥१८--२०॥

तरुव्यावृत्तिः । "वासुदेवतरुच्छाया नातिशीता न घर्मदा । नरकाङ्गारशमनी सा किमर्थं न सेव्यते ॥" इत्युक्तत्वात् । सुग्रीवद्रोहकरणेन नास्माकं साधुत्व लेश इत्याशयः । साधूनामेवम्, आपन्नानां तु परा गतिः "योगक्षेमं वहामि" इत्युक्तरीत्या आश्रितविषये उपायदशाप्रभृति फलपर्यन्तसर्वकार्यकर इत्यर्थः । तत्राप्यार्तानां संश्रयश्चैव । आश्रितेष्वपि आर्तानां तु सर्वदा समीचीनाश्रयः, सर्वकार्यनिर्वाहक इत्यर्थः । भवत्वेवम्, ममापि कश्चिदाश्रयो भविष्यतीत्यत्राह यशसश्चैकभाजनमिति । एवंविधरक्षको लोकेऽन्यो नास्तीत्यर्थः । अत्र "चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासु रर्थार्थी ज्ञानी च भरतर्षभ ॥" इत्युक्ताश्चतुर्विधाधिकारिण उच्यन्ते । साधूनां जिज्ञासूनाम्, कैवल्यकामानामित्यर्थः । आपन्नानाम् अपूर्वैश्वर्यकामानाम् । आर्तानां भ्रष्टैश्वर्यकामानाम् । यशसः "ज्ञानी त्वात्मैव मे मतम्" इत्युक्तयशोयुक्तस्य । एकवचनेन तस्य सुदुर्लभत्वमुक्तम् । एकभाजनम् अद्विती याश्रयः । यद्वा साधूनामुपासकानाम् । आपन्नानां "सकृदेव प्रपन्नाय" इत्युक्तरीत्या ईषत्प्रपन्नानाम् । आर्तानाम् आर्तप्रपन्नानाम् । "आर्तो वा यदि वा दृप्तः परेषां शरणागतः" इति वक्ष्यमाणत्वात् । यशसश्चैकभाजनमित्यनेन एवंभूतोऽन्यो नास्तीत्युच्यते ॥ आश्रितफलप्रदानोपयोगिज्ञानसम्पत्तिमाह—ज्ञान विज्ञानसम्पन्न इति । ज्ञानं लौकिकज्ञानम्, विज्ञानं शास्त्रजन्यज्ञानम् ताभ्यां सम्पन्नः । यद्वा विज्ञानेन धर्मभूतेन सम्पन्नः । ज्ञानश्चासौ विज्ञानसम्पन्न श्चेति कर्मधारयः । ज्ञानस्वरूपो ज्ञानगुणकश्चेत्यर्थः । ज्ञानसम्पत्तिमुक्त्वाऽनुष्ठानसम्पत्तिमाह निदेशे निरतः पितुरिति । प्रधानत्वात्पितृवचनपरिपाल नत्वमुक्तम् । इदमुपलक्षणं धर्मान्तराणाम् । अनेन सौलभ्यं चोक्तम् । समस्तकल्याणगुणसमृद्धिमाह गुणानामाकर इति । बहुवचनेनासङ्ख्येयत्वमुक्तम् । आकर इत्यनेन गुणातिरिक्तत्वं गुणिन उक्तम् । महानित्यनेन गुणानामप्युत्कर्षावहं गुणिस्वरूपमुच्यते । धातूनामित्यनेन गुणानां ज्ञानशक्तिबलैश्वर्यादि भेदेन नानाविधत्वमुक्तम् । शैलेन्द्रो हिमवान् । अनेनाप्रकम्प्यत्वमुक्तम् ॥ १८–२० ॥ रामानु०–"स्वरक्षणेप्यशक्तस्य को हेतुः पररक्षणे" इति न्यायेन राज्याद्भ्रि शितो रामः सुग्रीवं कथं रक्षितुं शक्तः ? शक्तो वा सदृशं मां विहाय दुर्बलं सुग्रीवं कथमवलम्बत इत्याशङ्कायामाह—तव भ्रातुरित्यादिना । आर्तानां नष्टैश्वर्यकामानाम् । ज्ञानविज्ञानसम्पन्नः । ज्ञानं ब्रह्मविषयकं ज्ञानम्, विज्ञानं शिल्पशास्त्रयोर्ज्ञानम् । "मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः" इत्यमरः । यद्वा ज्ञानं सामान्यज्ञानम्, विज्ञानं विशेषज्ञानम् ॥ १८–२० ॥ ननि०–निवासवृक्षः साधूनाम् । साधूनां संसारतापतप्तानां निवासवृक्षः विश्रामस्थानम् । "वासुदेवतरुच्छाया नातिशीता न घर्मदा" इत्युक्तत्वात् । साधूनां "साधवस्त्वभि गन्तव्याः" इत्युक्त्या अभिगन्तव्यतया ये प्रसिद्धास्तेषामावासवृक्षः अभिगन्तव्यस्थानम् । साधूनां ज्ञानिनाम् आवासवृक्षः प्राप्यदेश इति च । आपन्नानाम् आकिञ्चन्याव सङ्गपुरस्कारेण शरणं गतानां दृप्तानां सदा गतिः अपुनरावृत्तिप्राप्यस्थानम् । अभ्युपगमप्रारब्धसहिष्णुतया देहस्थितिकालेपि गतिरिति च । आर्तानां प्रारब्धदेहेनार्दितानां

आर्तानामैश्वर्यकामानाम् इतरवैलक्षण्येनाश्रयणीयः । यशसश्च संश्रयः इतरवैलक्षण्येनाश्रयणीयः । यद्वा साधूनां भगवत्प्राप्तिकामानाम् । आपन्नानाम् कैवल्यनिष्ठानाम् । अत्र यशःशब्देनौदार्यप्रतापजनितकीर्तिर्लोकप्रसिद्धा "न यशस एव, नायशसः । एकभाजनम् अनितरसाधारण्येनाश्रयः । सुप्रतिष्ठितत्वपरिपूर्णत्वादिद्योतनाय भाजनग्रहणम् । तस्येशे कश्चन तस्य नाम महद्यशः" इत्युक्तवैदिकप्रसिद्धा च कीर्तिः कथिता ॥१८—२०॥ तदिति । रणकर्मसु दुर्जयेनेत्यन्वयः ॥२१॥ ते अभ्यसूयितुं नेच्छामि

तत्क्षमं न विरोधस्ते सह तेन महात्मना । दुर्जयेनाप्रमेयेन रामेण रणकर्मसु ॥ २१ ॥ शूर वक्ष्यामि ते किञ्चिन्नचेच्छाम्यभ्यसूयितुम् । श्रूयतां क्रियतां चैव तव वक्ष्यामि यद्धितम् ॥ २२ ॥ यौवराज्येन सुग्रीवं तूर्णं साध्वभिषेचय । विग्रहं मा कृथा वीर भ्रात्रा राजन् बलीयसा ॥ २३ ॥ अहं हि ते क्षमं मन्ये तेन रामेण सौहृदम् । सुग्रीवेण च संप्रीतिं वैरमुत्सृज्य दूरतः ॥ २४ ॥ लालनीयो हि ते भ्राता यवीयानेष वानरः । तत्र वा सन्निहस्थो वा सर्वथा बन्धुरेव ते ॥ २५ ॥ न हि तेन समं बन्धुं भुवि पश्यामि कञ्चन । दानमानादिसत्कारैः कुरुष्व प्रत्यनन्तरम् ॥२६॥ वैरमेतत्समुत्सृज्य तव पार्श्वे स तिष्ठतु । सुग्रीवो विपुलग्रीवस्तव बन्धुः सदा मतः ॥ २७ ॥ भ्रातुः सौहृदमालम्ब नान्या गतिरिहास्ति ते ॥ २८ ॥ यदि ते मत्प्रियं कार्यं यदि चावैषि मां हिताम् । याच्यमानः प्रयत्नेन साधु वाक्यं कुरुष्व मे ॥ २९ ॥ प्रसीद पथ्यं शृणु जल्पितं हि मे न रोषमेवानुविधातुमर्हसि । क्षमो हि ते कोसलराजसूनुना न विग्रहः शक्रसमानतेजसा ॥ ३० ॥

त्वद्विषये अभ्यसूयां दोषाविष्करणं कर्तुं कदाचिदपि नेच्छामीत्यर्थः । यद्वा मया वक्ष्यमाणे हिते त्वया अभ्यसूया न कार्येत्यर्थः ॥ २२ ॥ यौवराज्येन अभिषेचय यौवराज्येनोपलक्षितो यथा भवति तथाभिषिञ्चेत्यर्थः ॥ २३—२५ ॥ प्रत्यनन्तरं त्वदनन्तरम् । समीपवर्तिनं वा कुरुष्व ॥ २६ ॥ २७ ॥ भ्रातुरित्यर्धम् । आलम्ब आलम्बस्व ॥ २८ ॥ अवैपि जानासि । प्रयत्नेन बहुप्रयत्नेन ॥ २९ ॥ स्ववचनाश्रवणे बाधकं सूचयन्त्याह—प्रसीदेति । प्रसीद ॥ टी०—तर्हि हितोपदेशकथनस्य फलमाह—तदिति । न क्षमम् अयुक्तमित्यर्थः ॥ २१ ॥ शूरेति । ते अभ्यसूयितुं नेच्छामि । त्वद्विषये अभ्यसूया न क्रियत इत्यर्थः । किं कर्तव्यमित्यत आह—शूरेति । अभ्यसूयितुं दोषमाविष्कर्तुं नेच्छामि ॥ २३—२५ ॥ दानमानेति । प्रत्यनन्तरं त्वदनन्तरभूतम् ॥ २६—३० ॥

त्यक्तरोपो भव । पथ्यं हितम् । जल्पितं वचनम् । भाते कः । शक्रसमानतेजसा शक्रतेजस्तुल्यतेजसम् । अनेन वालिनो रामस्याधिक्यमुक्तम् ॥ २० ॥ तदा वक्तव्यकाले, वालिनं प्रतीति शेषः । भापतेर्द्विकर्मकत्वात् । तस्य तस्मै । चतुर्थ्यर्थे षष्ठी । "रुच्यर्थानाम्–" इति हि स्मृतिः । विनाशकालत्वे



तदा हि तारा हितमेव वाक्यं तं वालिनं पथ्यमिदं बभाषे । न रोचते तद्वचनं हि तस्य कालाभिपन्नस्य विनाश काले ॥ ३१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

तामेवं ब्रुवतीं तारां ताराधिपनिभाननाम् । वाली निर्भर्त्सयामास वचनं चेदमब्रवीत् ॥ १ ॥ गर्जतोऽस्य च संरम्भं भ्रातुः शत्रोर्विशेषतः । मर्षयिष्याम्यहं केन कारणेन वरानने ॥ २ ॥ अधर्षितानां शूराणां समरेष्वनिवर्तिनाम् । धर्षणामर्षणं भीरु मरणादतिरिच्यते ॥ ३ ॥ सोढुं न च समर्थोऽहं युद्धकामस्य संयुगे । सुग्रीवस्य च संरम्भं हीनग्रीवस्य गर्जतः ॥ ४ ॥ न च कार्यो विषादस्ते राघवं प्रति मत्कृते । धर्मज्ञश्च कृतज्ञश्च कथं पापं करिष्यति ॥ ५ ॥ निवर्तस्व सह स्त्रीभिः कथं भूयोऽनुगच्छसि । सौहृदं दर्शितं तारे मयि भक्तिः कृता त्वया ॥ ६ ॥ प्रतियोत्स्याम्यहं गत्वा सुग्रीवं जहि सम्भ्रमम् । दर्पमात्रं विनेष्यामि नच प्राणैर्विमोक्ष्यते ॥ ७ ॥

हेतुः कालाभिपन्नस्येति । मृत्युना गृहीतस्येत्यर्थः ॥३१॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥ अथ वालिवधः षोडशे–तामेवमित्यादि ॥ १ ॥ २ ॥ अधर्षितानामिति । धर्षणामर्षणं धर्षणस्य आमर्षणं सहनमिति वा । धर्षणायाः तिरस्कारस्य मर्षणमिति वार्थः ॥ ३ ॥ हीनग्रीवस्येति परुषोक्तिः ॥ ४ ॥ पापं निरपराधवधम् ॥ ५ ॥ निवर्तने क्रियमाणेऽपि भूयः सौहृदं सुहृत्कर्तव्यम् । हितोपदेश इति यावत् । भक्तिः कृता प्रकाशितेत्यर्थः ॥ ६ ॥ सुग्रीवं प्रतियोत्स्यामि ॥ ७ ॥

तदा हीति । तस्य तस्मै न रोचते ॥ पथ्यं शुभोदर्कम् । हितं न्याय्यम् । तस्य तस्मै । न रोचते हि ॥ ३१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां पञ्चदशः सर्गः ॥१५॥ ॥ १ ॥ २ ॥ टी०–धर्षणामर्षणं धर्षणायास्तिरस्कारस्य मर्षणं सहनम् ॥ ३ ॥ युद्धकाले बन्धोर्धर्षणं विशेषतस्सोढुं न शक्यत इत्याह–सोढुमिति ॥४॥ सुग्रीवसहायाद्रामान्मम भयं मा शङ्किष्ठा इत्याह–न चेति । पापं मद्वधरूपम् ॥ ५ ॥ निवर्तस्वेति । भूयः पुनः । कथं किमर्थम् । अनुगच्छसि मामनुसृत्यागच्छसीत्यर्थः ॥६॥७॥

सम्प्रहारव्याकुलेन त्वया कथं तस्य प्राणरक्षणं कर्तुं शक्यं तत्राह—अहं हीति । यथेप्सितम् ईप्सितं तत्प्राणरक्षणमनतिक्रम्य । आजौ युद्धे स्थितस्य ॥ ८॥ नेति । गर्वितं गर्वम् । आयस्तम् आयासम् । प्रयत्नमिति यावत् । सहिष्यतीति परस्मैपदमार्षम् । सहायत्वं बुद्धिसाहाय्यम् ॥ ९ ॥ १० ॥ रामानु०—जवेन

अहं ह्याजिस्थितस्यास्य करिष्यामि यथेप्सितम् । वृक्षैर्मुष्टिप्रहारैश्च पीडितः प्रतियास्यति ॥ ८ ॥ न मे गर्वितमायस्तं सहिष्यति दुरात्मवान् । कृतं तारे सहायत्वं सौहृदं दर्शितं मयि ॥९॥ शापितासि मम प्राणैर्निवर्तस्व जयेन च । अहं जित्वा निवर्तिष्ये तमहं भ्रातरं रणे ॥ १० ॥ तं तु तारा परिष्वज्य वालिनं प्रियवादिनी । चकार रुदती मन्दं दक्षिणा सा प्रदक्षिणम् ॥ ११ ॥ ततः स्वस्त्ययनं कृत्वा मन्त्रवद्विजयैषिणी । अन्तःपुरं सह स्त्रीभिः प्रविष्टा शोकमोहिता ॥ १२ ॥ प्रविष्टायां तु तारायां सह स्त्रीभिः स्वमालयम् । नगरान्निर्ययौ क्रुद्धो महासर्प इव श्वसन् ॥ १३ ॥ स निःश्वस्य महातेजा वाली परमरोषणः । सर्वतश्चारयन् दृष्टिं शत्रुदर्शनकांक्षया ॥१४॥ स ददर्श ततः श्रीमान् सुग्रीवं हेमपिङ्गलम् । सुसंवीतमवष्टब्धं दीप्यमानमिवानलम् ॥ १५ ॥

मनोजवेन । यद्वा जयेनेति पाठः । जयाशिषेत्यर्थः । चोऽवधारणे ॥ १०॥ तं त्विति । दक्षिणा स्वस्मिन् परस्मिंश्च तुल्यहिता ॥ ११॥ मन्त्रवत् स्वस्त्ययनमन्त्रवत् । मन्त्रश्च वैदिकादन्य इति ज्ञेयः ॥ १२ ॥ १३ ॥ स निःश्वस्येति । चारयन् प्रस्थित इति शेषः ॥ १४ ॥ स ददर्शेति । सुसंवीतं वाससा सुष्ठु परिवीतम् ।

महायुद्धे प्रवृत्ते सति दर्पापनयपूर्वकप्राणसंरक्षणव्यवस्था कथं शक्येतेत्यत आह–अहं हीति । अस्य सुग्रीवस्य । यथेप्सितम् ईप्सितमनतिक्रम्य, यावदपेक्षितमित्यर्थः । करिष्यामि, अतो वृक्षैः मुष्टिप्रहारैः पीडितः प्रतियास्यति पलायिष्यति ॥ ८ ॥ गर्वितं गर्वम् । आयस्तं प्रयत्नं च ॥ ९ ॥ शापितेति । शापितासि जयेन मनोजयेन। यद्वा जयाशिषा जयाशिषं कृत्वा निवर्तस्वेत्यर्थः । अहं जित्वा अहं निवर्तिष्य इति अहंशब्दद्वयस्य निर्वाहः ॥ १०–१३ ॥ स निश्वस्येति । सर्वतो दृष्टिं चारयन् स्थित इति शेषः ॥ १४ ॥ स ददर्शेति । सुसंवीतं वाससा सुष्ठु परिवीतम् । अवष्टब्धं युयुत्सया भूमिमाक्रम्य स्थितम् ॥ १५ ॥ १६ ॥

स०—तं भ्रातरं सुग्रीवम् । अहं जित्वा निवर्तिष्ये । अहं जित्वेति पाठे—तमहमित्येकं पदम् । "तमं तु तमसा समम्" इत्युक्तेः तमं हन्तीति तमहः तं सूर्यावतारम् । बाहुलकाड्डः ॥ १० ॥

अवष्टब्धं युयुत्सया भूमिमाक्रम्य स्थितम् ॥ १५ ॥ पर्यवस्थितं समीपे अवस्थितम् ॥ १६ ॥ स वालीति । कृतक्षणः कृतोत्सवः । लब्धावसरो वा । "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः ॥ १७–२० ॥ एवमिति । पततु मूर्धनीत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ २१ ॥ तेन वालिना

स तं दृष्ट्वा महावीर्यं सुग्रीवं पर्यवस्थितम् । गाढं परिदधे वासो वाली परमरोषणः ॥ १६ ॥ स वाली गाढसंवीतो मुष्टिमुद्यम्य वीर्यवान् । सुग्रीवमेवाभिमुखो ययौ योद्धुं कृतक्षणः ॥ १७ ॥ श्लिष्टमुष्टिं समुद्यम्य संरब्धतरमागतः । सुग्रीवोपि तमुद्दिश्य वालिनं हेममालिनम् ॥ १८ ॥ तं वाली क्रोधताम्राक्षः सुग्रीवं रणपण्डितम् । आपतन्तं महावेग मिदं वचनमब्रवीत् ॥१९॥ एष मुष्टिर्मया बद्धो गाढः सन्निहिताङ्गुलिः । मया वेगविमुक्तस्ते प्राणानादाय यास्यति ॥२०॥ एवमुक्तस्तु सुग्रीवः क्रुद्धो वालिनमब्रवीत् । तवैव चाहरन् प्राणान् मुष्टिः पततु मूर्धनि ॥ २१ ॥ ताडितस्तेन संक्रुद्धः समभिक्रम्य वेगितः । अभवच्छोणितोद्गारी सोत्पीड इव पर्वतः ॥२२॥ सुग्रीवेण तु निस्सङ्गं सालमुत्पाट्य तेजसा । गात्रेष्वभिहतो वाली वज्रेणेव महागिरिः ॥ २३ ॥ स तु वाली प्रचलितः सालताडनविह्वलः । गुरुभार समाक्रान्तो नौसार्थ इव सागरे ॥ २४ ॥ तौ भीमबलविक्रान्तौ सुपर्णसमवेगिनौ । प्रवृद्धौ घोरवपुषौ चन्द्रसूर्या विवाम्बरे । परस्परममित्रघ्नौ छिद्रान्वेषणतत्परौ ॥ २५ ॥

ताडितः । अत एव संक्रुद्धः । वेगितः सञ्जातवेगः । पुनः प्रहारायेति शेषः । अत्र सुग्रीव इत्यध्याहार्यम् । सोत्पीडः सनिर्झरः ॥ २२ ॥ २३ ॥ स त्विति । नौः पोतः ॥ २४ ॥ रामानु०–स त्विति । नौसार्थः नौसमूहः ॥ २४ ॥ तावित्यादि । विक्रान्तौ विक्रमवन्तौ । भीमबलौ च तौ विक्रान्तौ चेति कर्मधारयः । सुपर्ण

कृतक्षणः कृतावसरः ॥ १७–२० ॥ एवमिति । मूर्ध्नि मुष्टिः पतत्वित्यब्रवीदिति योजना ॥ २१ ॥ तेन वालिना । सोत्पीड इव सनिर्झर इव ॥ टी०–समतिक्रम्य, धीरसमयमिति शेषः । तथा चोक्तम्–"धीरः प्रवर्तते पूर्वं विकर्ता तदनन्तरम् । समयोऽयं द्वन्द्वयुद्धे" इति । वेगितः सञ्जातचलनः ॥ २२ ॥ २३ ॥ स त्विति । सः सार्थनौः सङ्घसहिता नौरिव । सार्थाः व्यावहारिकाः ॥ २४ ॥ ताविति । प्रवृद्धौ, अभूतामिति शेषः ॥ २५ ॥ २६ ॥

समवेगिनौ गरुडवेगतुल्यवेगवन्तौ । कर्मधारयान्मत्वर्थीयः । चन्द्रसूर्याविव पौर्णमासीचन्द्रसूर्याविव । प्रवृद्धावभूतामित्यर्थः ॥ २५ ॥ अवर्धत । तेजसेति शेषः । परिहीयते पर्यहीयतेत्यर्थः ॥ २६ ॥ लाघवं शैघ्र्यम् । "लघु माधुर्यशीघ्रयोः" इति निघण्टुः ॥ २७ ॥ वृक्षैरित्यादिना । तयोर्युद्ध

ततोऽवर्धत वाली तु बलवीर्यसमन्वितः । सूर्यपुत्रो महावीर्यः सुग्रीवः परिहीयते ॥ २६ ॥ वालिना भग्नदर्पस्तु सुग्रीवो मन्दविक्रमः । वालिनं प्रति सामर्षो दर्शयामास लाघवम् ॥ २७ ॥ वृक्षैः सशाखैः सशिखैर्वज्रकोटिनिभैर्नखैः । मुष्टिभिर्जानुभिः पद्भिर्बाहुभिश्च पुनः पुनः । तयोर्युद्धमभूद्घोरं वृत्रवासवयोरिव ॥ २८ ॥ तौ शोणिताक्तौ युद्ध्येतां वानरौ वनचारिणौ । मेघाविव महाशब्दैस्तर्जयानौ परस्परम् ॥ २९ ॥ हीयमानमथोऽपश्यत्सुग्रीवं वानरेश्वरम् । वीक्षमाणं दिशश्चैव राघवः स मुहुर्मुहुः ॥ ३० ॥ ततो रामो महातेजा आर्तं दृष्ट्वा हरीश्वरम् । शरं च वीक्षते वीरो वालिनो वधकारणात् ॥ ३१ ॥ ततो धनुषि सन्धाय शरमाशीविषोपमम् । पूरयामास तच्चापं कालचक्रमिवान्तकः ॥ ३२ ॥ तस्य ज्यातलघोषेण त्रस्ताः पत्ररथेश्वराः । प्रदुद्रुवुर्मृगाश्चैव युगान्त इव मोहिताः ॥ ३३ ॥ मुक्तस्तु वज्रनिर्घोषः प्रदीप्ताशनिसन्निभः । राघवेण महाबाणो वालिवक्षसि पातितः ॥ ३४ ॥ ततस्तेन महातेजा वीर्योत्सिक्तः कपीश्वरः । वेगेनाभिहतो वाली निपपात महीतले ॥ ३५ ॥

मभूद्घोरमिति पाठः ॥२८॥ ताविति । युध्येताम् अयुध्येताम् । तर्जयानाविति । उभयत्र आगमशासनस्यानित्यत्वादडभावः मुमभावश्च ॥ २९॥ ३० ॥ रामानु०—हीयमानमथोऽपश्यत्सुग्रीवं वानरेश्वरम् । वीक्षमाणं दिशश्चैव राघवः स मुहुर्मुहुः ॥ इति पाठः ॥ ३० ॥ ततो राम इति । शरं वीक्षते । वालिवधोचितं शरं पर्यालोचयदित्यर्थः ॥३१॥ रामानु०—शरञ्च वीक्षते वीर इति सम्यक् ॥३१॥ तत इति । कालचक्रं यमस्यायुधविशेषः ॥३२॥ तस्येति । पत्ररथेश्वराः पक्षिश्रेष्ठाः ॥३३॥ मुक्तस्त्विति । वज्रस्येव निर्घोषो यस्य तथा । प्रदीप्ताशनिसन्निभः प्रदीप्तविद्युत्तुल्यः । "अशनिस्तु द्वयोर्वज्रे सौदामिन्याम्" इति दर्पणः ॥३४॥ तत इत्यादि वालिनेति । लाघवं युद्धशैघ्र्यम् ॥ २७ ॥ वृक्षैरित्यादि सार्धश्लोकमेकं वाक्यम् । सशिखैः साग्रैः ॥ २८–३५ ॥

श्लोकद्वयमेकान्वयम् । उद्धूतः पातितः । आश्वयुक्समये आश्वयुक्समयरूपे । मासि पौर्णमास्याम् । महीतले पातित इत्यन्वयः ॥ ३५ ॥ ३६ ॥ उक्तमर्थं वृत्तान्तरेण संगृह्णाति—नरोत्तम इत्यादिश्लोकद्वयेन । कालयुगान्तकोपमम् युगान्तकालोपममित्यर्थः । स्वार्थे कप्रत्ययः । युगान्तकालो युगान्त मृत्युः । काञ्चनरूप्यभूषितं परभागाय स्वर्णरजताभ्यामलंकृतम् । सधूममित्यनेन ज्वालोन्मुखत्वमुच्यते । हरः प्रलये संहर्ता । नन्वत्र एकवचनादेकेन

इन्द्रध्वज इवोद्धूतः पौर्णमास्यां महीतले । आश्वयुक्समये मासि गतश्रीको विचेतनः ॥ ३६ ॥ नरोत्तमः कालयुगान्तकोपमं शरोत्तमं काञ्चनरूप्यभूषितम् । ससर्ज दीप्तं तममित्रमर्दनं सधूममग्निं मुखतो यथा हरः ॥ ३७ ॥ अथोक्षितः शोणिततोयविस्रवैः सुपुष्पिताशोक इवानलोद्धतः । विचेतनो वासवसूनुराहवे विभ्रंशितेन्द्रध्वजवत्क्षितिं गतः ॥ ३८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे षोडशः सर्गः * ॥ १६ ॥

बाणेन वाली हत इत्युक्तम् । इदम् उत्तरत्र तारावाक्येन " रामेण प्रहितै रौद्रैर्मार्गणैर्दूरपातिभिः " इत्यनेन बहुबाणहतत्ववचनेन विरुध्यते । मैवम्, व्याकुलवचनत्वात्तस्य । यतः तारा एकबाणहतं श्रुत्वाप्येवमाह । वक्ष्यति हि—" तं भार्या बाणमोक्षेण रामदत्तेन संयुगे । हतं प्लवगशार्दूलं तारा शुश्राव वालिनम् ॥" इति । सर्गोपक्रमे च—" निजघान च तत्रैनं शरेणैकेन राघवः ।" इत्यत्र एकशब्दः प्रयुक्तः । "प्रतिज्ञातं च रामेण तथा वालिवधं प्रति" इति प्रतिज्ञानिर्वाहाय छद्मनापि वालिवधः कृतः । अस्मिन् सर्गे एकोनचत्वारिंशच्छ्लोकाः ॥ ३७ ॥ ३८ ॥ रामानु०—वालिवक्षसि पातित इत्यतः परम्—ततस्तेन महातेजा इत्ययं श्लोकः । ततः परम् इन्द्रध्वज इवोद्धूत इति श्लोकः । ततः परं नरोत्तमः । अथोक्षित इति श्लोकद्वयमुक्तार्थनिगमनपरम् ॥ ३७ ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

इन्द्रध्वज इति । गौडदेशे कस्मिंश्चिदुत्सवे आश्वयुक्पौर्णमास्यामिन्द्रमुद्दिश्य ध्वजं संस्थाप्य उत्सवानन्तरं ध्वजं पातयन्ति, तद्वद्वाली पातित इत्यर्थः ॥ ३६ ॥ उक्तमेवार्थं श्लोकद्वयेन सङ्गृह्णाति—नरोत्तम इति । कालयुगान्तकोपमम् अन्तयतीत्यन्तकः युगादीनां कृतत्रेतादीनामन्तकः युगान्तकः कालश्चासौ युगान्तकश्चेति विशेष्यपूर्वपदः कर्मधारयः । विशेषणविशेष्यभावस्य कामचारत्वात् । स उपमा यस्य तम् ॥ ३७ ॥ अथोक्षित इति श्लोकस्तूक्तार्थनिगमनपरः ॥ ३८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां षोडशः सर्गः ॥ १६ ॥

* फलश्रुतिः । स्कान्दे—"गिरीणां भेदनं चैव किष्किन्धागमनं तथा । वालिसुग्रीवयोर्युद्धं श्रुत्वा विजयपूर्वकम् । युद्धे विजयमाप्नोति वालिनो विजयं यथा ॥ " इति ॥

अथ रामं प्रति वालिनिन्दा सप्तदशे—ततः शरेणेत्यादि । आरम्भणार्थोऽयमनुवादः ॥ १ ॥ स भूमाविति । रश्मिः बन्धनरज्जुः ॥ २ ॥ ३ ॥ भूमाविति । तेजः प्रतापः ॥ ४ ॥ उक्तेऽर्थे हेतुमाह—शक्रेति ॥ ५ ॥ स इति । हैमयेति ङीबभाव आर्षः ॥ ६ ॥ तस्येति । लक्ष्मीः तेजः ॥ ७ ॥



ततः शरेणाभिहतो रामेण रणकर्कशः । पपात सहसा वाली निकृत्त इव पादपः ॥१॥ स भूमौ न्यस्तसर्वाङ्गस्तप्तकाञ्चनभूषणः । अपतद्देवराजस्य मुक्तरश्मिरिव ध्वजः ॥ २ ॥ तस्मिन्निपतिते भूमौ वानराणां गणेश्वरे । नष्टचन्द्रमिव व्योम न व्यराजत भूतलम् ॥ ३ ॥ भूमौ निपतितस्यापि तस्य देहं महात्मनः । न श्रीर्जहाति न प्राणा न तेजो न पराक्रमः ॥ ४ ॥ शक्रदत्ता वरा माला काञ्चनी वज्रभूषिता । दधार हरिमुख्यस्य प्राणांस्तेजः श्रियं च सा ॥ ५ ॥ स तया मालया वीरो हैमया हरियूथपः । सन्ध्यानुगतपर्यन्तः पयोधर इवाभवत् ॥ ६ ॥ तस्य माला च देहश्च मर्मघाती च यः शरः । त्रिधेव रचिता लक्ष्मीः पतितस्यापि शोभते ॥ ७ ॥ तदस्त्रं तस्य वीरस्य स्वर्गमार्गप्रभावनम् । रामबाणासनक्षिप्तमावहत्परमां गतिम् ॥ ८ ॥ तं तदा पतितं सङ्ख्ये गतार्चिषमिवानलम् । बहुमान्य च तं वीरं वीक्षमाणं शनैरिव ॥ ९ ॥

स्वर्गमार्गस्य प्रभावनं प्रापकम् । "भू प्राप्तौ" इत्यस्माल्ल्युट् । अत एव परमां गतिम् आवहत् । सम्पादयामासेत्यर्थः ॥ ८ ॥ रामानु०—तदस्त्रमिति । आवहत् सम्पादयामासेत्यर्थः । एतदनन्तरं तं तथा पतितमिति श्लोकः । अतः परं ययातिमिव पुण्यान्त इति श्लोकः । अतः परं महेन्द्रमिवेति श्लोकः । अतः परं सिंहोरस्कमिति श्लोकः । अतः परं तं दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम् । अब्रवीत्प्रश्रितं वाक्यं परुषं धर्मसंहितम् ॥ इत्येवं पाठक्रमः साधुः ॥ ८ ॥ तं तदेत्यादिचत्वारः । सङ्ख्ये युद्धे । तं

आरम्भणार्थोऽयं सर्गादौ ततः शरेणेत्यादिपुनरनुवादः ॥ १–५ ॥ स तयेति । सन्ध्यानुगतपर्यन्तः सन्ध्यारागानुसृतप्रान्तदेश इत्यर्थः । पयोधर इवाभवत् ॥ ६ ॥ ७ ॥ तदिति । स्वर्गमार्गः प्रभवत्यस्मादिति स्वर्गमार्गप्रभावनम् । आवहत् सम्पादयामास, वालिनो मुक्तिरभूदित्यर्थः ॥ ८–१२ ॥



स०—अस्त्रमत्र बाणः । बाणासनं धनुः । स्वर्गमार्गप्रभावनमिति यतः अतः परमां गतिमावहत् ॥ ८ ॥ तं तयेति श्लोकस्य द्वितीयान्तानां चतुर्थश्लोकस्थया ददर्शेति क्रिययाऽन्वयः ॥ ९ ॥

वीरं रामं बहुमान्य साधु बाणं पातितवानसीति श्रावयित्वा स कुत्र स्थित इति शं… नेत्रवातिरं… ततं वीक्षमाणम् । इवशब्दो वाक्यालङ्कारे ॥ ययातिमिव । कालेन दैवेन । "कालः श्यामलदिष्टयोः" इति दर्पणः ॥ महेन्द्रमिव दुःसहम् आभिमुख्येन स्थातुमशक्यम् ॥ सिंहेति । दीप्तास्यं दीप्तमुखम् ।



ययातिमिव पुण्यान्ते देवलोकात्परिच्युतम् । आदित्यमिव कालेन युगान्ते भुवि पातितम् ॥ १० ॥ महेन्द्रमिव दुर्धर्षं महेन्द्रमिव दुःसहम् । महेन्द्रपुत्रं पतितं वालिनं हेममालिनम् ॥ ११ ॥ सिंहोरस्कं महाबाहुं दीप्तास्यं हरिलोचनम् । लक्ष्मणानुगतो रामो ददर्शोपससर्प च* ॥ १२ ॥ तं दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम् । अब्रवीत्प्रश्रितं वाक्यं परुषं धर्मसंहितम् ॥ १३ ॥ त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः । कुलीनः सत्त्वसम्पन्नस्तेजस्वी चरितव्रतः ॥ १४ ॥ पराङ्मुखवधं कृत्वा को नु प्राप्तस्त्वया गुणः । यदहं युद्धसंरब्धः शरेणोरसि ताडितः ॥ १५ ॥ रामः करुणवेदी च प्रजानां च हिते रतः । सानुक्रोशो जितोत्साहः समयज्ञो दृढव्रतः । इति ते सर्वभूतानि कथयन्ति यशो भुवि ॥ १६ ॥ दमः शमः क्षमा धर्मो धृतिः सत्यं पराक्रमः । पार्थिवानां गुणा राजन् दण्डश्चाप्यपराधिषु ॥ १७ ॥ तान् गुणान् सम्प्रधार्याहमग्र्यं चाभिजनं तव । तारया प्रतिषिद्धोपि सुग्रीवेण समागतः ॥ १८ ॥

हरिलोचनं कपिलनेत्रम् ॥ ९–१२ ॥ प्रश्रितं विनयान्वितम् ॥१३॥ प्रश्रितं वचनमाह–त्वमित्यादिना । प्रियदर्शनः प्रियं दर्शनं शास्त्रं यस्य सः । "दर्शनं दृशि शास्त्रे स्यात्" इति दर्पणः । पराङ्मुखवधं परयुद्धासक्तवधम् । गुणः उत्कर्षः । युद्धसंरब्धः अन्ययुद्धपराङ्मुख इत्यर्थः ॥१४॥१५॥ करुणवेदी कारुण्यज्ञः । सानुक्रोशः सदयः । समयज्ञः आचारज्ञः । ते यश इत्यन्वयः ॥१६॥ दम इति । "शमश्चित्तप्रशान्तिः स्याद्दम इन्द्रियनिग्रहः" ॥१७॥ अभिजन

प्रश्रितं मृदुपदम् । परुषं निष्ठुरार्थम् । तथापि धर्मसंहितम् अब्रवीत ॥१३॥१४॥ पराङ्मुखेति । पराङ्मुखवधं कृत्वा पराङ्मुखस्य अन्येन युद्धयमानस्य मम वधं कृत्वेत्यर्थः । युद्धसंरम्भः युद्धपरवशः ॥ १५ ॥ समयज्ञः उचितानुचितसमयज्ञ इत्यर्थः । करुणवेदी विचारादिसामग्रीसमेतः सन् आश्रितान् रक्ष्यत्वेन वेत्तीति करुणवेदी ॥ १६ ॥ दमः इन्द्रियनिग्रहः । शमः चित्तप्रशान्तिः ॥ १७ ॥ अभिजनं वंशम् ॥ १८ ॥ १९ ॥

---

* तं तथा पतितं वीरं गतार्चिषमिवानलम् । बहुमान्य च तं वीरं वीक्षमाणं शनैरिव ॥ उपयातौ महावीर्यौ भ्रातरौ रामलक्ष्मणौ ॥ इत्यधिकः पाठः ।

माभिजात्यम् । समागतः युद्धं कृतवानस्मीत्यर्थः ॥ १८ ॥ न मामिति । प्रमत्तं युद्धपरवशम् । अर्हति । उक्तगुणो राम इति शेषः । अदर्शने तव । दर्शने त्वेवमभूदिति भावः ॥ १९ ॥ न त्वामिति । विनिहतात्मानं विशेषेण निहतबुद्धिम् । धर्मध्वजं धर्मलिङ्गम् । वस्तुतो धर्मरहित

न मामन्येन संरब्धं प्रमत्तं योद्धुमर्हति । इति मे बुद्धिरुत्पन्ना बभूवादर्शने तव ॥ १९ ॥ न त्वां विनिहतात्मानं धर्मध्वजमधार्मिकम् । जाने पापसमाचारं तृणैः कूपमिवावृतम् ॥ २० ॥ सतां वेषधरं पापं प्रच्छन्नमिव पावकम् । नाहं त्वामभिजानामि धर्मच्छद्माभिसंवृतम् ॥२१॥ विषये वा पुरे वा ते यदा नापकरोम्यहम् । न च त्वामवजाने च कस्मात्त्वं हंस्यकिल्बिषम् ॥ २२ ॥ फलमूलाशनं नित्यं वानरं वनगोचरम् । मामिहाप्रतियुद्ध्यन्तमन्येन च समागतम् ॥ २३ ॥ लिङ्गमप्यस्ति ते राजन् दृश्यतेऽधर्मसंहितम् ॥ २४ ॥ कः क्षत्रियकुले जातः श्रुतवान्नष्टसंशयः । धर्मलिङ्गप्रतिच्छन्नः क्रूरं कर्म समाचरेत् ॥ २५ ॥

मित्यर्थः ॥ २० ॥ रामानु०—विनिहतात्मानं गूढात्मानम् ॥ २० ॥ एतदेव स्पष्टयति—सतामिति । धर्मच्छद्माभिसंवृतं धर्मव्याजयुक्तम् ॥ २१ ॥ विषय इति । यदा नापकरोमि यस्मान्नापाकरवम् । त्वां नावजाने, त्वय्यवमानं नाकरवमित्यर्थः । तस्मादकिल्बिषं मां किमर्थं हंसीति सम्बन्धः । फलेत्यस्य श्लोकस्य पूर्वेण सम्बन्धः ॥ २२ ॥ रामानु०—अपकरोमीत्यादौ भूते लट् ॥ २२ ॥ २३ ॥ तनि०—अविभाव्यं कलहनिमित्तमित्याह—विषये देशे पुरे पट्टणे वा । ते तुभ्यम् नापकरोमि । भूते लट् । त्वां नावजाने त्वयि विषये अवज्ञां नाकरवम् । आवयोः सामन्तत्वाद्यभावात्सीमाविवादो वा जलविवादो वा गोभूम्यादिविवादो वा कुलगतवैरं वा स्वयंवरादौ नार्यादिविषयकविवादो वा नास्तीति भावः ॥ २२ ॥ २३ ॥ लिङ्गमिति । हे राजन् ! अधर्मसंहितम् अधर्मकृतं लिङ्गमपि

नेति । विनिहतात्मानं गूढात्मानम् ॥ धर्मध्वजं धर्मलिङ्गमात्रधारिणम् ॥ २० ॥ २१ ॥ विषये वेति श्लोकद्वयमेकं वाक्यम् । विषये देशे । यदा यस्मात्कारणात् नापकरोमि त्वां नावजाने च तस्मादकिल्बिषं मां कस्माद्धंसीति सम्बन्धः ॥ २२–२५ ॥

विषम०—अन्येन संयुक्तम् अत एव ते त्वयि प्रमत्तम् असावधानं मां न वेद्धुमर्हसीति बुद्धिः तवादर्शने तव दर्शनात्प्रागुत्पन्ना ॥ १९ ॥ विनिहतात्मानम् अधर्माचरणान्नष्टात्मानम् ॥ २० ॥

ते आस्ति, दृश्यते च स्पष्टमवगम्यते चेत्यर्थः । [illegible] इति ॥ २४॥२५॥ रामेति । अभव्यः क्रूरः । भव्यरूपेण सौम्यरूपेण । परिधावसि चरसि ॥ २६ ॥ साम सान्त्वनम् ॥ २७ ॥ लोके कस्यचिद्वधे अपराधस्तदर्थलाभेच्छा वा हेतुर्भवेत् । तत्र नाद्य इत्याह—वयमिति । पुरुषः मनुष्यः ।

राम राजकुले जातो धर्मवानिति विश्रुतः । अभव्यो भव्यरूपेण किमर्थं परिधावसि ॥२६॥ साम दानं क्षमा धर्मः सत्यं धृतिपराक्रमौ । पार्थिवानां गुणा राजन् दण्डश्चाप्यपराधिषु ॥२७॥ वयं वनचरा राम मृगा मूलफलाशनाः । एषा प्रकृतिरस्माकं पुरुषस्त्वं नरेश्वरः ॥२८॥ भूमिर्हिरण्यं रूप्यं च विग्रहे कारणानि च । अत्र कस्ते वने लोभो मदीयेषु फलेषु वा ॥ २९ ॥ नयश्च विनयश्चोभौ निग्रहानुग्रहावपि । राजवृत्तिरसंकीर्णा न नृपाः कामवृत्तयः ॥ ३० ॥ त्वं तु कामप्रधानश्च कोपनश्चानवस्थितः । राजवृत्तैश्च संकीर्णः शरासनपरायणः ॥ ३१ ॥ न तेऽस्त्यपचितिर्धर्मे नार्थे बुद्धिरवस्थिता । इन्द्रियैः कामवृत्तः सन् कृष्यसे मनुजेश्वर ॥ ३२ ॥

नच केवलमनुष्यः अपि तु नरेश्वरः ॥ २८ ॥ तनि०—वयं वनचराः, भवन्तः पुरचराः । वयं मृगाः, भवन्तो मनुष्याः । वयं मूलफलाशनाः, यूयं राजान्नभोजनाः । नरेश्वरस्त्वम्, वयं परिचारकाः ॥ २८ ॥ द्वितीयोपि नेत्याह—भूमिरिति । लोके भूम्यादीनि कलहे कारणानि भवन्ति । अत्र अन्येषु वा मदीयेषु फलेषु ते को लोभः किंविषयेच्छा वर्तते ॥ २९ ॥ नयोऽनुग्रहश्च सद्राजधर्मौ । विनयो विपरीतनयः निग्रहश्च कुराजधर्मौ । इत्येषा राजवृत्तिरसङ्कीर्णा ग्राह्या । तथा च नृपाः कामवृत्तयो न स्युः । स्वेच्छया नयो विनयश्च निग्रहोऽनुग्रहश्च राजभिर्न कार्या इत्यर्थः ॥ ३० ॥ अनवस्थितः अमर्यादः । राजवृत्तैः राजचरितैः हेतुभिः संकीर्णः । संकीर्णराजवृत्त इत्यर्थः । शरासनपरायणः यदृच्छया यं हन्तुमिच्छसि तं हंसीत्यर्थः ॥ ३१ ॥ अपचितिः पूजा ।

रामेति । अभव्यः अविनीतः ॥ २६॥२७ ॥ अपकारिषु दण्ड इत्युक्तम्, तादृशापकारित्वं मयि नास्तीत्यत्र हेतुमाह—वयमिति । वयं वनचराः भवन्तः पुरचराः, मृगा वयं भवन्तो मनुष्याः, मूलफलाशना वयम् यूयं राजान्नभोजनाः, नरेश्वरस्त्वम् परिचारका वयम्, अतो वैरप्रसक्तिर्नास्तीति भावः ॥ २८ ॥ २९ ॥ टी०—त्वं तु राजधर्मविलक्षित इति वक्तुं राजधर्मानाह—नयश्चेति । विनयः इन्द्रियजयः ॥ ३० ॥ ३१ ॥ न तेस्तीति । कामवृत्तस्सन् इन्द्रियैः कृष्यस इति सम्बन्धः ॥ ३२ ॥ ३३ ॥

धर्मे श्रद्धा नास्तीत्यर्थः। अवस्थिता व्यवस्थिता, परद्रव्याभिलाषिणीत्यर्थः। कामे च न व्यवस्थेत्याह इन्द्रियैरिति ॥ ३२ ॥ हत्वेति । मां हत्वा स्थितः त्वं जुगुप्सितं कर्म कृत्वा सतां साधुकर्मकारिणां मध्ये किं वक्ष्यसि ॥३३॥ परिवेत्ता ज्येष्ठेऽनूढे दारपरिग्रहकृत् । " परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ।" इत्यमरः । निरयगामिनः नरकगामिनः ॥ ३४ ॥ सूचकश्चेति । सूचकः पिशुनः । कदर्यः लुब्धः । गच्छन्ते गच्छन्ति ॥ ३५ ॥ किमेवं

हत्वा बाणेन काकुत्स्थ मामिहानपराधिनम् । किं वक्ष्यसि सतां मध्ये कर्म कृत्वा जुगुप्सितम् ॥ ३३ ॥ राजहा ब्रह्महा गोघ्नश्चोरः प्राणिवधे रतः । नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ॥ ३४ ॥ सूचकश्च कदर्यश्च मित्रघ्नो गुरुतल्पगः । लोकं पापात्मनामेते गच्छन्ते नात्र संशयः ॥ ३५ ॥ अधार्यं चर्म मे सद्भी रोमाण्यस्थि च वर्जितम् । अभक्ष्याणि च मांसानि त्वद्विधैर्धर्मचारिभिः ॥३६॥ पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव । शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः ॥ ३७ ॥

निन्दसि ? मृगयायां मृगवधस्यादोषत्वादित्यत्राह–अधार्यमिति । मृगचर्मवत् मे चर्म न धार्यम् । मे रोमाणि ऊर्णादिवन्नास्तरणार्हाणि । मे अस्थि च गजास्थिवत् न स्पृश्यम् । मांसानि च न भक्ष्याणि । अतः किमर्थं मां हतवानसि ॥ ३६ ॥ तनि०–न धार्यं चर्म मे सद्भिः । मे चर्म व्याघ्राजिनादिवन्न धारणयोग्यम् । रोमाणि चामरादिवन्न ग्राह्याणि । अस्थि गजदन्तादिकमिव न ग्राह्यम् ॥ ३६ ॥ अभक्ष्यता कुत इत्यत्राह–पञ्चेति । शल्यकः श्वाविधः गोधा शशः कूर्मश्चेति पञ्चनखाः पञ्च भक्ष्याः । पञ्चनखेषु जन्तुषु एते पञ्चैव भक्ष्याः । नान्य इत्यर्थः । परिसङ्ख्याविधिरयम् । ब्रह्मक्षत्रेणेत्युपलक्षणम् । त्रैवर्णिकेनेत्यर्थः । शलतीति शल्यः । "शल, श्वल्ल–आशुगमने" इत्यस्माद्धातोः "सानसिवर्णसिपर्णसितण्डुलाङ्कुश–" इत्यादिना निपातनाद्यत्प्रत्ययः ।

राजहेति । सूचकः पिशुनः कदर्यः लुब्धः । गच्छन्ते गच्छन्ति ॥ ३४ ॥ ३५ ॥ टी०–चर्माद्यपेक्षया हत इत्यत आह–अधार्यमिति ॥ ३६ ॥ पञ्च पञ्चनखाः भक्ष्याः पञ्चनखेषु पञ्चैव भक्ष्या इति नियमः । तानेव परिगणयति–शल्यक इति । शल्यवान् शल्यः । अर्शआदित्वादच् । शल्य एव शल्यकः । शुक्तिकाकारशल्यावृतसर्वाङ्गो जन्तुविशेषः । श्वाविधः कण्टकाकारदीर्घरोमभिः श्वानं विध्यतीति श्वाविधः ॥ टी०–पञ्चनखत्वात्कथमयोग्यमित्याशङ्क्य योग्यान् पञ्चनखान् सम्परिचष्टे–पञ्चेति । शल्यकः श्वाविधः ॥३७॥

स०–परिवेत्ता ज्येष्ठे अकृतदारेऽकृताग्निहोत्रे च कृतदारः कृताग्निहोत्रोऽनुजः ॥ ३४ ॥

ततः स्वार्थे कः । यद्वा शल्यं शङ्कुः । " वा पुंसि शल्यं शङ्कुर्ना " इत्यमरः । [illegible] रोमाणि शल्यानि तद्वान् शल्यः । अर्शआद्यजन्तः । ततः स्वार्थे कः । श्वानं विध्यतीति श्वाविधः । पचाद्यच् । " अन्येषामपि " इति दीर्घः । [ श्वाविड इति पाठे पृषोदरादित्वाड्डकारः ] । इमौ वराहविशेषौ ॥ ३७ ॥ उपसंहरति—चर्म चेति । सोऽहम् अभक्ष्यपञ्चनखान्तर्भूतोऽहम् ॥ ३८ ॥ ३९ ॥ त्वयेति । पतिना पत्या ॥ ४० ॥ शठ इति ।

चर्म चास्थि च मे राजन् न स्पृशन्ति मनीषिणः । अभक्ष्याणि च मांसानि सोऽहं पञ्चनखो हतः ॥ ३८ ॥ तारया वाक्यमुक्तोहं सत्यं सर्वज्ञया हितम् । तदतिक्रम्य मोहेन कालस्य वशमागतः ॥३९॥ त्वया नाथेन काकुत्स्थ न सनाथा वसुन्धरा । प्रमदा शीलसम्पन्ना धूर्तेन पतिना यथा ॥ ४० ॥ शठो नैकृतिकः क्षुद्रो मिथ्याप्रश्रितमानसः । कथं दशरथेन त्वं जातः पापो महात्मना ॥ ४१ ॥ छिन्नचारित्रकक्ष्येण सतां धर्मातिवर्तिना । त्यक्तधर्माङ्कुशेनाहं निहतो रामहस्तिना ॥ ४२ ॥ अशुभं चाप्ययुक्तं च सतां चैव विगर्हितम् । वक्ष्यसे चेदृशं कृत्वा सद्भिः सह समागतः ॥ ४३ ॥ उदासीनेषु योऽस्मासु विक्रमस्ते प्रकाशितः । अपकारिषु तं राजन्नहि पश्यामि विक्रमम् ॥ ४४ ॥ दृश्यमानस्तु युध्येथा मया यदि नृपात्मज । अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया ॥ ४५ ॥

शठः गूढविप्रियकृत् । निकृत्या अपकारेण जीवतीति नैकृतिकः । क्षुद्रः क्षुद्रकर्मकारी । मिथ्याप्रश्रितमानसः मिथ्याशान्तमनस्कः ॥ ४१ ॥ छिन्नेति । छिन्ना चारित्रमेव कक्ष्या इभबन्धनं येन स तथा । सतां धर्मातिवर्तिना सतां धर्माः पूर्वोक्ताः सामदानसापराधिजनदण्डनादयः तानतीत्य वर्तत इति तथा । गजविषये अतिक्रान्तमर्यादेनेत्यर्थः ॥४२॥ अशुभमिति । ईदृशं कृत्वा स्थितस्त्वं सद्भिः ईदृशम् अशुभत्वादिविशिष्टं वक्ष्यसे, अशुभकारीत्येवं वक्ष्यसीत्यर्थः ॥४३॥ रामानु०—अशुभमिति । चकारोऽप्यर्थे । वक्ष्यसे वक्ष्यसीत्यर्थः । आत्मनेपदमार्षम् ॥ ४३ ॥ उदासीनेष्विति । अपकारिषु रावणादिषु ॥४४॥ दृश्यमानस्तु

चर्मेति । सोऽहम् अभक्ष्यपञ्चनखान्तर्भूतोऽहम् ॥३८–४०॥ शठ इति । नैकृतिकः निकृत्या परापकारेण जीवतीति नैकृतिकः । क्षुद्रः क्षुद्रकर्मकारी । मिथ्याप्रश्रितमानसः मिथ्याप्रशान्तमानसः ॥ ४१ ॥ ४२ ॥ अशुभं चेति । चकारः किमित्यर्थे । किं वक्ष्यसे वक्ष्यसि ॥ ४३–४५ ॥

युध्येथा इति पाठः ॥४५॥ त्वयेति । अदृश्येनेति च्छेदः ॥ ४६ ॥ एतदर्थं मैथिल्यानयनार्थम् । भवेत् भवेयम् । पुरुषव्यत्यय आर्षः ॥ ४७ ॥ यत्कृते यस्य रावणस्य कृते हतोस्मि । तं कण्ठे बद्धा ते प्रदद्यामिति योजना । सुग्रीवसख्यनिमित्तभूतं मैथिल्यानयनं च तारया पूर्वं निवेदितमिति ज्ञेयम् ॥४८॥

त्वयाऽदृश्येन तु रणे निहतोऽहं दुरासदः । प्रसुप्तः पन्नगेनेव नरः पानवशं गतः ॥ ४६ ॥ मामेव यदि पूर्वं त्वमेतदर्थमचोदयः । मैथिलीमहमेकाह्ना तव चानीतवान् भवेत् ॥ [ राक्षसं च दुरात्मानं तव भार्यापहारिणम् ॥ ] ॥ ४७ ॥ सुग्रीवप्रियकामेन यत्कृतेऽस्मि हतस्त्वया । कण्ठे बद्ध्वा प्रदद्यां ते निहतं रावणं रणे ॥ ४८ ॥ न्यस्तां सागरतोये वा पाताले वापि मैथिलीम् । आनयेयं तवादेशाच्छ्वेतामश्वतरीमिव ॥ ४९ ॥

रामानु०—यद्यस्मात् रावणप्रधर्षणलक्षणात् । "कण्ठे बद्ध्वा प्रदद्यां ते निहतं रावणं रणे" इत्युक्त्वा अङ्गदवाक्यान्यनुवदन्त्या तारया रावणवधपूर्वकं सीताप्रत्याहरणार्थं रामः सुग्रीवेण सख्यं कृतवानित्युक्तमित्यवगम्यते ॥ ४८ ॥ न्यस्तामिति । श्वेतामश्वतरीमिव मधुकैटभाभ्यां पाताले निरुद्धां श्वेताश्वतरीरूपां श्रुतिं हयग्रीव इवेत्यर्थः ॥ ४९ ॥

त्वयेति । अदृश्येनेति छेदः । टीका०—ननु वालिसुग्रीवयोर्युद्धे रामस्त्वदृश्यो भूत्वा कथं वालिनं हतवानिति चेत् ? सत्यम्; "आहूय वालिनं ब्रह्मा ददौ वरमनुत्तमम् । प्रतीपवर्तिनो भूयादर्थं बलमरिन्दम॥" इति वरप्रदानादाभिमुख्येन न युद्धकरणम् ॥ ४६–४८ ॥ न्यस्तामिति । श्वेतामश्वतरीमिव मधुकैटभाभ्यां पाताले निरुद्धां श्वेताश्वतरीरूपां श्रुतिं हयग्रीवो हरिर्यथा आजहार तद्वदानयेयमित्यर्थः ॥ टीका०—आनयेयमिति । ननु उक्तरीत्या वालिनः सीतानयनसामर्थ्यं ज्ञात्वा वालिना सख्यं रामेण किमिति न कृतमिति चेत्, तत्र सुग्रीवं प्रति वालिवधस्य प्रतिज्ञातत्वाद्धेत्वन्तरसद्भावाच्च । तथा च स्कान्दे—" अभयं वालिने दत्ते प्रतिज्ञा परिहीयते । रावणस्य सखा वाली रावणोपि व्रजेत्तु माम् ॥ रावणस्य वधाभावादवतारफलं नहि ॥" इति ॥४९॥ × "तं दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम् " इत्यारभ्य सर्गसमाप्तिपर्यन्तस्य वास्तवार्थोऽयमर्थः–वाली श्रीरामनिष्ठुरभाषणे प्रवृत्तोपि वालिवाणी श्रीराममीश्वरं मत्वा स्तौति–दृष्ट्वेत्यादि । परुषं बाह्यदृष्ट्या परुषवत्प्रतीयमानम् । वस्तुतः, प्रश्रितं धर्मसंयुतम् अगर्वितं वाक्यमब्रवीदित्यन्वयः । तदेवाह–पराङ्मुखेत्यादि । पराङ्मुखवधं पराङ्मुखस्य विषयलोलुपस्य मम वधं कृत्वा त्वया कोनु गुणः निर्वक्तुमशक्यः सद्गुणः प्राप्तः । यतः यस्मात्कारणात् युद्धसंरब्धोऽहं त्वत्कृते निधनं गतः त्वत्कृते त्वन्निमित्तम्, त्वया निधनं गत इत्यर्थः । अतो मयापीति शेषः । सुगुणः प्राप्त इति योजना ॥ " राजा त्वशासन् पापस्य तदवाप्नोति किल्बिषम् " इति वचनान्मद्दण्डनेन तत्परिहाररूपगुणस्त्वया प्राप्तः " राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ " इति वचनान्मयापि निष्कल्मषत्वरूपगुणः प्राप्त इति भावः ॥ मम सुग्रीवसख्यं श्रुत्वापि युद्धायागत्य मया किमर्थं हतोसीत्याशङ्क्य सुग्रीवहस्तवधान्मम दैवादुत्कृष्टमुक्तिकारणत्वद्धस्तवधो जात इत्याह–कुलीन इत्यादिश्लोकपञ्चकेन । कुलीनत्वादीन् तव गुणान् श्रुत्वा शमदमादिराजधर्ममपि विचार्य तवाऽऽत्ममभिजनं च सम्प्रधार्य युद्धाय न गन्तव्यमिति तारया प्रति

पिद्धोपि अन्येन संसक्तं वेद्धुं नार्हतीति तवादर्शने सति [illegible] तथापि त्वं तु प्रमत्तं मां हतवान्। अतो मम त्वद्धस्तहननं मङ्गलं जातमित्यन्ते वाक्यशेषेण योजना ॥ अत एव त्वामेवं मन्य इत्याह–न त्वामित्यादिना । त्वां विनिहतात्मत्वधर्मध्वजत्वाधार्मिकत्वपापसमाचारत्वादि विशेषणविशिष्टं न जाने । किञ्च सतां वेषधरत्वादिविशेषणविशिष्टं च न जानामि, किन्तु अपहतपाप्मत्वादिगुणकमीश्वरमेव त्वां जानामीत्यर्थः ॥ ननु अनप राधिनस्तव घातकस्य ममेश्वरत्वं दोषराहित्यं वा कुत इत्यत आह–विषय इत्यादिना । त्वमप्यकिल्विषं न हंसि । अहमपि ते विषये देशे पुरे वा यदा नापकरोमि अपकारं न कृतवान् त्वां न जाने च तथापि, फलमूलाशिनं वानरम् अप्रतियुद्ध्यन्तम् अन्येन समागतं मां हंसि तत्तस्मात् मयि दोषसद्भावादेवेत्यर्थः॥ किञ्च क्षत्रिय कुलेऽवतीर्य लोकानुग्रहार्थं जगन्मर्यादां पालयतः परमकरुणाशालिनस्तव सुतरामन्यायाचरणं न सम्भविष्यतीत्याशयेनाह–धर्मलिङ्गेत्यादिसार्धश्लोकेन । हे राम ! राजकुले जातः धर्मवानिति विश्रुतस्सन् अर्थं प्रयोजनमुद्दिश्य अभव्यस्सन् भव्यरूपेण परिधावसि किम्, क्रूरकर्मसमाचारः किम् ! उभयमपि तव न घटत इति भावः ॥ राजनीतौ विचार्यमाणायां मद्वधस्तव युक्त एवेत्याशयेनाह–साम दानमिति । अपकारिषु पापिषु । वैरबुद्ध्या हतवन्तं मां कथमेवं स्तौषीत्याशङ्क्य विचार्यमाणे तव मम च वैरप्रसक्तिरेव नास्तीत्याशयेनाह–वयमिति । कानि तर्हि वैरकारणानीत्याकांक्षायामाह–भूमिरिति । तव मम च एतादृशकारणानि न सन्तीति भावः । किञ्च नयश्चेति । नृपा अपि कामवृत्तयो न भवन्ति, किमुतेश्वरस्त्वमिति भावः । रागद्वेषादियुक्तस्येन्द्रियपरवशस्य मर्त्यस्य ममेश्वरत्वं कुत इत्याकांक्षायां निर्गुणेश्वरत्वमेव प्रतिपादयति–त्वामित्यादिश्लोकद्वयेन । तु किमर्थे। मनुजेश्वर मनुजश्चासावीश्वरश्चेति तथा, मनुष्यरूपेणावतीर्णेश्वर ! इत्यर्थः । कामप्रधानः कामस्य प्रधानः, निर्जितकाम इत्यर्थः । कोपनः, शत्रुसंहारविषय इति शेषः । तत्संहारार्थमनवस्थितस्तत्रतत्र सञ्चरमाणः । राजवृत्तैश्च सङ्कीर्णः, त्यक्तराजधर्म इत्यर्थः । वानप्रस्थधर्मयुक्तत्वादिति भावः । ते धर्मे सामान्यधर्मेपि । अपचितिः पूजा, आदर इत्यर्थः । कास्ति ? मनुष्याधिकारत्वाच्छास्त्रस्येति भावः । ते बुद्धिः अर्थेपि नावस्थिता, लक्ष्मीपतित्वात् । अतएवैतादृशविशेषणविशिष्टः त्वं कामवृत्तस्सन् इन्द्रियैः कृष्यसे किम् ? न कृष्यस एव । अत एव त्वमीश्वर इति भावः ॥ तथाप्यनपराधित्वद्वधजनितदुष्कृतकर्माहं सतां किमुत्तरं वक्ष्यामीत्यत आह–हत्वेति । बाणेन अनपराधिनं मां हत्वा दुष्कृतं कर्म कृत्वा सतां मध्ये वक्ष्यसि किम् ? किन्तु अनपराधिनमेव मां हत्वा अत एव सुकृतं कृत्वा सतां मध्ये वक्ष्यसीत्यर्थः । किञ्च सापराधिनो वानरस्य मम वधेन तव दोषशङ्कैव नास्तीत्याशयेनाह–राजहेत्यादिश्लोकद्वयेन । एतादृशानामेव नरकः । अनपराधिनो मम घातुकस्य तव तु नास्तीति भावः ॥ किञ्च अनुपयोगिचर्मादियुक्तमद्वध एव मयि दोषसद्भाव द्योतक इत्याशयेनाह–अधार्यं चर्मेत्यादिश्लोकत्रयेण । तारया निवारितोपि त्वद्धस्तवधकांक्षयैव युद्धायागतोऽस्मीत्याशयेनाह–तारयेति । सर्वज्ञयापि तारया भर्तृ मोहेनाहितमुक्तस्सन् तदतिक्रम्य कालस्येश्वरस्य तव वशं पार्षदत्वमागतः । सत्यं न सन्देहः । त्वयेति । विधर्मिणा पत्या शीलसम्पन्ना प्रमदा यथा सनाथा तथा तादृशनाथेन त्वया पृथिवी सनाथा न, किन्तु दुष्टनिग्रहादिरूपपरमकल्याणगुणनाथेन त्वया सनाथेत्यर्थः ॥ मम कपटयुद्धकरणहेतुना शठत्वादिगुणयुक्तत्वादेता दृशेन पृथिवी सनाथा कथं भवतीत्याशङ्क्याह–शठ इत्यादि । यतो महात्मना दशरथेन त्वं जातः अतः कारणगुणपूर्वकत्वात्कार्यगुणस्येति न्यायेन सकलकल्याण गुणयुक्तस्त्वं कथं शठः ? कथं नैकृतिकः ? कथं पापः ? इत्येवं योजना । तादृशो न भवसीति भावः ॥ ईश्वरेण त्वया निहतोऽहं कृतार्थ इत्याशयेन श्रीरामे स्वतन्त्रे श्वरगुणान् प्रकटयति–भिन्नचारित्रेत्यादि । रामहस्तिना निहतोऽहं कृतार्थ इति शेषः । रामस्येश्वरत्वादेव भिन्नचारित्रत्वादियुक्तत्वमिति भावः ॥ मया हतस्य तव

युक्तमिति । राज्यार्थे सुग्रीवो मां हतवानित्येतद्युक्तम् । त्वं तु मां हतवानित्येतत्त्वयुक्तमित्यर्थः । ज्ञातीनामेवंविधकृत्यस्य स्वाभाविकत्वादिति

युक्तं यत्प्राप्नुयाद्राज्यं सुग्रीवः स्वर्गते मयि । अयुक्तं यदधर्मेण त्वयाहं निहतो रणे ॥ ५० ॥
काममेवंविधो लोकः कालेन विनियुज्यते । क्षमं चेद्भवता प्राप्तमुत्तरं साधु चिन्त्यताम् ॥ ५१ ॥

भावः ॥ ५० ॥ काममिति । लोकः एवंविधे मरणरूपे कर्मणि विनियुज्यते । जातस्य मरणं स्वभाव इत्यर्थः । भवता प्राप्तम् अदृश्यतया प्रहरणम्

कथं कृतार्थत्वमत आह–अशुभमिति । समागत इत्यत्र सः मा गतः इति च्छेदः । अशुभम् अयुक्तम् सतां विगर्हितं च, मामिति शेषः । ईदृशं कृत्वा, हत्वेत्यर्थः । सः वाली । मा माम् । गतः मत्पार्षदत्वं प्राप्त इति । त्वं सद्भिस्सह वक्ष्यसे । एतादृशत्वत्कथनमेव मम कृतार्थत्वसूचकमिति भावः । निरुपाधिककरुणामृतसागरस्य तव महिमानं को वा वर्णयितुं शक्त इत्याशयेनाह–उदासीनेष्विति । हे राम ! अपकारिष्वस्मासु त्वद्भक्तसुग्रीवाय कृतापकार एव, तस्मै कृतापकार इति कृत्वा अपकारिष्वित्युक्तिः । अस्मास्विति बहुवचनं ताराङ्गदाद्यभिप्रायेण । एतादृशापकारिष्वस्मासु ते यो विक्रमः ब्रह्मादीनामपि दुर्लभः पादारविन्दविन्यासः प्रकाशितः, पादारविन्दं प्रदर्शितमित्यर्थः ॥ उदासीनेषु सर्वतो निवृत्तेषु मुनिषु तं विक्रमं पादारविन्दविन्यासं न पश्यामीति योजना । अतोऽहं कृतकृत्य इति भावः । पादारविन्दप्रदर्शनं तु–" बहुमान्य च तं वीरं वीक्षमाणं शनैरिव । उपयातौ महावीर्यौ भ्रातरौ रामलक्ष्मणौ ॥ " इत्युक्तेः । रामस्य पादारविन्दप्रदर्शनार्थमेव आसन्नमरणवालिसमीपागमनमित्यवगन्तव्यम् ॥ त्वया दृश्यमानः त्वत्प्रतियोद्धा जीवितुं न शक्नोतीति शङ्कयाऽहमदृश्य एव त्वां हतवानित्याशङ्कायां सत्यां तथात्वं त्वदन्येषामेव, तव तु नास्तीत्याशयेनाह–दृश्यमान इत्यादि । यदिः किमित्यर्थे । हे नृपात्मज ! अद्य मया दृश्यमानस्सन् युद्ध्येथा अपि मया हतस्सन् वैवस्वतं देवं पश्येः किम् ? न पश्येरित्यर्थः । ईश्वरस्य तव मरणशङ्का नास्तीति भावः ॥ समक्षं रामेण सह प्रतियुद्ध्य वाली निहत इति कीर्तिर्मया न लब्धेति दुःखित आह–त्वयाऽदृश्येनेति । पापवशङ्गतोऽहम् अदृश्येन त्वया निहत इतिं सम्बन्धः ॥ त्वदाज्ञाकरणरूपसेवाभाग्यं मया न लब्धमित्याशयेन खिद्यति–सुग्रीवप्रियकामेनेत्यादि ॥ × ॥ पूर्वं राज्यस्थं सुग्रीवं किमर्थं निष्कासितवानित्यत आह–युक्तमिति । अधर्मेण मन्नाशनिमित्तबिलद्वारपिधानरूपाधर्मेण । सुग्रीवो राज्यं प्राप्नुयादिति यत् तदयुक्तम्, अहं त्वया रणे निहतः । इतः परं मयि स्वर्गते सति सुग्रीवो राज्यं प्राप्नुयादिति यत् तद्युक्तमिति सम्बन्धः । अधर्मतो राज्यस्वीकारान्निष्कासित इति भावः ॥५०॥ एतादृशं किमर्थं हतवानस्मीति चिन्ताक्रान्तं प्रत्याह–काममिति । एवंविधो लोकः क्षत्रियवृत्तिमान् जनः । यद्वा लोक एवंविधश्चेत् मादृशा धर्मचारी जनश्चेदित्यर्थः । कामं कालेन वियुज्यते अतो हेतोः राम ! भवता प्राप्तं मद्वधरूपमुत्तरम् उत्तमं क्षमं युक्तम् उत्तमं यथा तथा चिन्त्यताम् । मया कृतपाप

स०–एवंविधो लोकः कालेन अदृष्टप्रेरकधीहरिणा वियुज्यत इति हेतोः काममेतद्भवतु । भवता क्षमं च प्राप्तम् । उत्तरम् उत्तरत्र क्रियमाणं स्वकार्यं साधु यथा तथा चिन्त्यताम् ॥ ५१ ॥

क्षमं चेत् तत्र साधूत्तरं चिन्त्यतामित्यर्थः ॥ ५१ ॥ इतीति । परिशुष्कवक्त्रः बहुभाषणक्लेशादिति भावः । अस्मिन् सर्गे द्विपञ्चाशच्छ्लोकाः ॥ ५२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

इत्येवमुक्त्वा परिशुष्कवक्त्रः शराभिघाताद्व्यथितो महात्मा । समीक्ष्य रामं रविसन्निकाशं तूष्णीं बभूवामरराजसूनुः ॥ ५२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे सप्तदशः सर्गः ॥ १७ ॥

इत्युक्तः प्रश्रितं वाक्यं धर्मार्थसहितं हितम् । परुषं वालिना रामो निहतेन विचेतसा ॥ १ ॥ तं निष्प्रभमिवादित्यं मुक्ततोयमिवाम्बुदम् । उक्तवाक्यं हरिश्रेष्ठमुपशान्तमिवानलम् ॥ २ ॥ धर्मार्थगुणसंपन्नं हरीश्वरमनुत्तमम् । अधिक्षिप्तस्तदा रामः पश्चाद्वालिनमब्रवीत् ॥ ३ ॥ धर्ममर्थं च कामं च समयं चापि लौकिकम् । अविज्ञाय कथं बाल्यान्मामिहाद्य विगर्हसे ॥ ४ ॥

अथ रामस्योत्तरमष्टादशे–इत्युक्त इत्यादि । वालिना इत्युक्त इत्यन्वयः । विचेतसेत्यनेन परुषवचनमज्ञानकृतमित्युच्यते ॥१॥ रामानु०–इत्युक्त इति श्लोकः स्वतन्त्रं वाक्यम् । अन्यथा रामशब्दोतिरिच्यते ॥ १ ॥ तमित्यादी द्वौ । तदा पूर्वम् अधिक्षिप्तो रामः धर्मार्थगुणसम्पन्नम् अनुत्तमं यथा भवति तथा पश्चाद्वालिनमब्रवीदिति योजना ॥ २ ॥ ३ ॥ रामानु०–तं निष्प्रभमित्यादि । अधिक्षिप्तो रामः धर्मार्थगुणसंपन्नमनुत्तमं यथा भवति तथा वालिनमब्रवीदिति सम्बन्धः ॥ २ ॥ ३ ॥ धर्ममिति । समयम् आचारम् । "समयाः शपथाचारकालसिद्धान्तसंविदः ।" इत्यमरः । बाल्यात् अज्ञानात् ॥४॥ तनि०–धर्मं वैदिकपुरुषार्थम् । लौकिकं प्रायश्चित्तरूपत्वान्मद्वधस्य युक्तत्वमुत्तमत्वं चेति भावः ॥ ५१ ॥५२॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायण० किष्किन्धाकाण्डव्याख्यायां सप्तदशः सर्गः ॥१७॥

इत्युक्त इत्यादि । वालिना रामः परुषमुक्तः अधिक्षिप्त इत्यादेरयमाशयः–यद्यपि वालिनो वाणी राममस्तौषीत् तथापि वाली तं रामं परुषमुक्तवानिति कृत्वा वालिना रामः परुषमुक्तः अधिक्षिप्त इत्याद्युक्तिः । अत एव श्रीरामोपि वालिपरुषोक्तिमनुसृत्यैव उत्तरं वक्ति धर्ममर्थं च कामं चेत्यादिना ॥ इत्युक्त इति रामो वालिना परुषं वाक्यमुक्त इति सम्बन्धः ॥ १ ॥ तं निष्प्रभमित्यादि श्लोकद्वयमेकं वाक्यम् । अधिक्षिप्तो रामः धर्मार्थगुणसम्पन्नमनुत्तमं यथा भवति तथा वालिनमब्रवीदिति सम्बन्धः ॥ २ ॥ ३ ॥ धर्ममिति । समयम् आचारम् ॥ टी०–समयाचारः साङ्केतिकाचारः तम् । बाल्यात् मौढ्यात् ॥ ४ ॥ ५ ॥

स०–सूर्यसङ्काशमित्यनेन वैरिसादृश्योक्त्या तन्निरीक्षण तद्वदेवेति सूचयति ॥ ५२ ॥

समयं लौकिकाचारम् । तेन द्वयोरेकभार्यात्वेपि माससंवत्सरादिप्रतिनियतकालसङ्केतः ॥ ४ ॥ अपृष्ट्वेति । अपृष्ट्वा धर्मादिकमिति शेषः । वानरचापल्यात् वानरत्व कृतचापल्यात् ॥५॥ इक्ष्वाकूणामिति । इयं जम्बूद्वीपात्मिका । लोके कस्यचित् भूमेः स्वत्वेपि शैलवनादिकमाक्रम्यान्ये भूमिं पीडयन्ति तद्व्यावृत्त्यर्थ माह सशैलेति । काननं महारण्यम् । मृगादिनिग्रहानुग्रहावपि इक्ष्वाकूणामेव । कृत्यमिति शेषः ॥ ६ ॥ तनि०--विषये वा पुरे वा ते कलहनिमित्तं नास्ती

अपृष्ट्वा बुद्धिसम्पन्नान् वृद्धानाचार्यसंमतान् । सौम्य वानरचापल्यात्किं मां वक्तुमिहेच्छसि ॥ ५ ॥
इक्ष्वाकूणामियं भूमिः सशैलवनकानना । मृगपक्षिमनुष्याणां निग्रहप्रग्रहावपि ॥ ६ ॥
तां पालयति धर्मात्मा भरतः सत्यवागृजुः । धर्मकामार्थतत्त्वज्ञो निग्रहानुग्रहे रतः ॥ ७ ॥
नयश्च विनयश्चोभौ यस्मिन् सत्यं च सुस्थितम् । विक्रमश्च यथादृष्टः स राजा देशकालवित् ॥ ८ ॥
तस्य धर्मकृतादेशा वयमन्ये च पार्थिवाः । चरामो वसुधां कृत्स्नां धर्मसन्तानमिच्छवः ॥ ९ ॥

त्यस्योत्तरम् । त्वदुपभुक्तवनगिर्युपवनपत्तनान्यस्मदीयानि न भवन्ति किम् । ज्ञातिभावोप्यस्ति । "त्वं वयस्यश्च हृद्यो मे । एकं दुःखं सुखं च नौ" इति सुग्रीवसखस्य मम भवान् ज्ञातिर्न भवति किम् । "तेनाहं प्रतिषिद्धश्च हृतदारश्च राघव" इति तेन मां प्रति नोक्तं किम् । "वस्त्रेणैकेन वानरः" इत्युक्तरीत्या एकवस्त्रः स न निर्वासितः किम् । सुग्रीवगृहदारभूजलादिकं त्वया न गृहीतं किम् । स्त्रीविवादश्च "भ्रातुर्वर्तसि भार्यायाम्" इत्यनेन दर्शितः ॥६॥ तामिति । तां भूमिम् ॥७॥ तनि०--मम तव च परस्पर ज्ञानं परिचयश्च नास्ति । मम गृहमागत्य निरपराधिनं हतवानसीत्यस्योत्तरमाह--तां पालयति धर्मात्मेत्यारभ्य कामतन्त्रप्रधानश्च न स्थितो राजवर्त्मनीत्यन्तम् । त्वं साप राध एवेत्यर्थः ॥ ७ ॥ नयश्चेति । नयो नीतिः, विनयः शिक्षा, तावुभौ सत्यं च यथादृष्टः शास्त्रविहितः विक्रमश्च । एतत्सर्वं यस्मिन् सुस्थितं देश कालवित् स भरतो राजेति योजना ॥ ८ ॥ धर्मकृतादेशाः धर्मकृतनियोगाः । कथं कनिष्ठेन ज्येष्ठनियोग इत्यपेक्षायां राजधर्मोऽयमित्याशयेनोक्तं

इक्ष्वाकूणामिति । निग्रहानुग्रहावपि इक्ष्वाकूणामेवेत्यर्थः ॥ ६ ॥ ७ ॥ नयश्च विनयश्चोभौ सत्यं च यथादृष्टः शास्त्रदृष्टः विक्रमश्च एतत्सर्वं यस्मिन् सुस्थितम् । देश कालविभागवित् स भरतो राजेति योजना ॥ ८ ॥ धर्मकृतादेशाः धर्म इत्यधर्मस्याप्युपलक्षणम् । धर्माधर्मकृतनियोगाः, धर्माधर्मविचारणार्थं नियुक्ता इत्यर्थः । धर्मकृतादेशाद्विति च पाठः । धर्मसन्तानं धर्मपरम्पराम् । टी०--अस्तु भरतो राजा, तव कः सम्बन्धः ? इत्यत आह--तस्येति ॥ ९ ॥

धर्मपदम् । धर्मसन्तानं धर्मवृद्धिम् । यद्यपि भरतेन नादेशः कृतः तथापि नेदमसत्यम् । यथाकथञ्चित् भरतेन राज्यभरणस्य स्वीकृतत्वात्तदन्येषां तत्कुलीनानां तदादिष्टत्वं सिद्धमिति हृदयम् । अत एवायोध्याकाण्डे दर्शितम्—"त्वं राजा" इति ॥ ९ ॥ धर्मनिग्रहं धर्महानिम् ॥१०॥ ते वयमिति । धर्मविभ्रष्टं, जनमिति शेषः ॥ ११ ॥ संक्लिष्टधर्मा धर्मविलोपकृत् । कर्मणा च विगर्हित इति अकृत्यकारीत्यर्थः ॥ १२ ॥ १३ ॥ यवीयानिति ।

तस्मिन्नृपतिशार्दूले भरते धर्मवत्सले । पालयत्यखिलां भूमिं कश्चरेद्धर्मनिग्रहम् ॥ १० ॥ ते वयं धर्मविभ्रष्टं स्वधर्मे परमे स्थिताः । भरताज्ञां पुरस्कृत्य निगृह्णीमो यथाविधि ॥ ११ ॥ त्वं तु संक्लिष्टधर्मा च कर्मणा च विगर्हितः । कामतन्त्रप्रधानश्च न स्थितो राजवर्त्मनि ॥ १२ ॥ ज्येष्ठो भ्राता पिता चैव यश्च विद्यां प्रयच्छति । त्रयस्ते पितरो ज्ञेया धर्मे पथि हि वर्तिनः ॥ १३ ॥ यवीयानात्मनः पुत्रः शिष्यश्चापि गुणोदितः । पुत्रवत्ते त्रयश्चिन्त्या धर्मश्चेदत्र कारणम् ॥१४॥ सूक्ष्मः परमदुर्ज्ञेयः सतां धर्मः प्लवङ्गम । हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभम्॥ १५

आत्मन इति त्रिष्वप्यन्वेति, गुणोदित इति च । ते त्रयः पुत्रवच्चिन्त्याः । पुत्रशब्दोऽत्र दृष्टान्तार्थः । यथा पुत्रे पुत्रवद्वर्तते तथान्ययोरपि वर्तितव्य मित्यर्थः । पुत्रे पुत्रवद्वृत्तिर्नाम सम्यक्स्नेहः । 'गगनं गगनाकारम्' इतिवत् । एवं चिन्त्यत्वे किं प्रमाणम्? तत्राह धर्मश्चेदिति । अत्र अस्मिन्नर्थे धर्मः कारणं व्यवस्थापकम् चेत् यदि धर्मो नानुवर्तनीयः तदा नैवं द्रष्टव्यम् । अनुवर्तनीयश्चेत् अवश्यमेवं द्रष्टव्यमिति चेच्छब्दस्य भावः ॥१४॥ सूक्ष्मः अतीन्द्रियः । अत एव सतामपि परमदुर्ज्ञेयः, किमुत भवादृशस्येति भावः । यद्वा जनस्य धर्माधर्मकरणं न कोऽपि वेत्तुमर्हति । तर्हि को वेत्ती- त्यत्राह हृदिस्थ इति । सर्वभूतानां हृदिस्थः सर्वान्तर्यामी । अलुक् । आत्मा परमात्मा । शुभाशुभं शुभाशुभकरणं वेत्तीत्यर्थः । सूक्ष्मं धर्मं परमात्मना

धर्मनिग्रहं धर्मनाशनम् ॥ १० ॥ ११ ॥ अस्त्वेवम्, मया किमपराद्धमित्यत आह—त्वमिति ॥ १२ ॥ १३ ॥ यवीयानिति । धर्मः कारणं व्यवस्थापकं प्रमाणम् ॥१४॥ हे प्लवङ्गम ! सर्वभूतानां हृदिस्थः आत्मा परमात्मा । शुभाशुभं शुभाशुभहेतुधर्माधर्मम् । वेद वेत्ति न तु त्वादृश इत्यर्थः । सूक्ष्मो धर्मः सतामपि परमदुर्ज्ञेयः

विषम०—कामतन्त्रं कामरूपः पुरुषार्थः । स एव प्रधानो मुख्यो यस्य सः ॥ १२ ॥

मया विना को वेत्तुं दक्ष इति भावः ॥ १५ ॥ त्वया तु न शक्य इत्याह–चपल इति । किं तु द्रक्ष्यसे, न किमपि द्रक्ष्यसीत्यर्थः ॥ १६ ॥ वर्तसि वर्तसे ॥ १८ ॥ अस्येति । धरमाणस्य जीवितं धारयतः । अनेन जीवतो भ्रातुर्भार्या भ्रात्रा न ग्राह्या । मृतस्य तु ग्राह्येति तत्कुल

रामानु०–वालिनः सूक्ष्मधर्मपरिज्ञानाभावे हेतुमाह–चपल इति ॥ १६ ॥ अहमिति । अस्य वचनस्य 'यवीयानात्मनः' इति पूर्वोक्तवचनस्य ॥ १७ ॥

चपलश्चपलैः साध वानरैरकृतात्मभिः । जात्यन्ध इव जात्यन्धैर्मन्त्रयन् द्रक्ष्यसे नु किम् ॥ १६ ॥ अहं तु व्यक्तता मस्य वचनस्य ब्रवीमि ते । न हि मां केवलं रोषात्त्वं विगर्हितुमर्हसि ॥ १७ ॥ तदेतत्कारणं पश्य यदथ त्वं मया हतः । भ्रातुर्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम् ॥ १८ ॥ अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः । रुमायां वर्तसे कामात् स्नुषायां पापकर्मकृत् ॥ १९ ॥ तद्व्यतीतस्य ते धर्मात्कामवृत्तस्य वानर । भ्रातृभार्याभिमर्शेऽस्मिन् दण्डोऽयं प्रतिपादितः ॥ २० ॥

धर्म इति प्रतीयते । अत एव हि वालिनो बिलगमनानन्तरं मन्त्रिभिरभिषिक्तस्य सुग्रीवस्य तारापरिग्रहं रामो न निन्दितवान्, अत एव प्रायोपवेशे

तादृशस्य किमुतेति भावः ॥ १५ ॥ वालिनो धर्मपरिज्ञानाभावे हेतुमाह–चपल इति ॥ १६ ॥ अहमित्यादि । अस्य वचनस्य "यवीयानात्मनः पुत्रः" इति पूर्वोक्तवचनस्यार्थं व्यक्तं ब्रवीमीत्यर्थः ॥ १७ ॥ १८ ॥ ननु भ्रातृभार्याभिमर्शनं सुग्रीवस्यापि समानमित्याशङ्क्य सुग्रीवो मायाविना बिलान्तर्गतयुद्धेन त्वन्मरणं निश्चित्य तारायामवर्तिष्ट, त्वं तु तज्जीवनं ज्ञात्वापि रुमायां वर्तस इति वैषम्यमस्तीत्याह–अस्य त्वमिति । धरमाणस्य प्राणान् धारयतः । चरमाणस्येति पाठे

स०–हे व्यक्ततामस्य व्यक्ततमोगुण ! ते वचनस्य "कस्मात्त्वं हंस्यकिल्बिषम्" इत्यस्य । ब्रवीमि, इत्युत्तरमिति शेषः । स्वार्थे तल्वा । व्यक्तम् । अस्य वचनस्य ज्येष्ठ इत्यादिवचनस्य ब्रवीमि, अर्थमिति शेषः ॥ १७ ॥ धरमाणस्य प्राणान् धारयतः, जीवत इति यावत् । वर्तसे प्रवर्तसे । ननु वालिनः स्वस्मादधमसुग्रीवभार्यापहारित्वेनाल्पदोषत्वात्, सुग्रीवस्य तु स्वोत्तमवालिभार्यास्वीकारित्वेन महादोषित्वा त्तदाच्छाद्य वालिवधे कथं भगवता दोषाविष्करणं क्रियत इति चेत्, उच्यते–वालिनोऽल्पपापत्वाच्चस्मै एतज्जन्मनि मरणलक्षणमल्पपापफलं ददौ । सुग्रीवस्य तु स्वोच्चदारग्रहणलक्षणमहापातकस्य फलीभूतां मुक्ता- नन्दोनाहाप्राप्तिं श्रीकृष्णावतारे सहस्रवर्मनामकासुराविष्टतया जनिकारणीभूतदोषोत्पादकवालिमारणं निमित्तीकर्तुं च न तं जघान भगवान् रामः । तदुक्तं भगवत्पादैरनुव्याख्यानश्रीमन्महाभारततात्पर्यनिर्णययोः । "चन्द्रसुग्रीवयोर्ध्वं स्वोच्चदारपरिग्रहात् । प्रासहानिरभूनैव क्लसहानिः कथञ्चन ॥" इति "पुरा स वालिमारणप्रभूतदोषकारणात् । सहस्रवर्मनाम्निनाऽसुरेण वेष्टितोऽजनि ॥" इति मरणस्याल्पपापफलत्वाच्च न्मात्रेण पापं न चरितार्थं चक्र इत्यर्थः ॥ १९ ॥

अङ्गदो वक्ष्यति " भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् । धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥ " ॥ १९–२१ ॥ तर्हि शिक्षैव कर्तव्या किमर्थमवधीस्तत्राह—न हीति ॥ २२ ॥ औरसीं पुत्रीम् । प्रचरेत गच्छेत् ॥ २३ ॥ २४ ॥ भरतस्तु महीपाल इत्युक्तं विवृणोति—गुरुरिति । धर्मव्यतिक्रान्तं धर्मव्यतिक्रमणम् । पालयन् परामृशन् । गुरुः भरतश्च निग्रहे पर्यवस्थितः । वयं च तदादेशं विधिं शास्त्रं कृत्वा नियन्तुं पर्यवस्थिताः । अतः कथं

नहि धर्मविरुद्धस्य लोकवृत्तादपेयुषः । दण्डादन्यत्र पश्यामि निग्रहं हरियूथप ॥ २१ ॥ न हि ते मर्षये पापं क्षत्रियोहं कुलोद्भवः ॥ २२ ॥ औरसीं भगिनीं वापि भार्यां वाप्यनुजस्य यः । प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः ॥ २३ ॥ भरतस्तु महीपालो वयं त्वादेशवर्तिनः । त्वं तु धर्मादतिक्रान्तः कथं शक्य उपेक्षितुम् ॥ २४ ॥ गुरुर्धर्मव्यतिक्रान्तं प्राज्ञो धर्मेण पालयन् । भरतः कामवृत्तानां निग्रहे पर्यवस्थितः ॥ २५ ॥ वयं तु भरतादेशं विधिं कृत्वा हरीश्वर । त्वद्विधान् भिन्नमर्यादान् नियन्तुं पर्यवस्थिताः ॥ २६ ॥ सुग्रीवेण च मे सख्यं लक्ष्मणेन यथा तथा । दारराज्यनिमित्तं च निःश्रेयसि रतः स मे ॥ २७ ॥

शक्य उपेक्षितुमिति पूर्वेण सम्बन्धः ॥ २५ ॥ रामानु०–धर्मव्यतिक्रान्तं व्यतिक्रान्तधर्माणम् ॥ २५ ॥ २६ ॥ एवं निरपराधवधदोषशङ्कायाः परिहारमुक्त्वा " मामेव यदि पूर्वं त्वमेतदर्थमचोदयः " इत्युक्तस्य परिहारमाह—सुग्रीवेणेति । सुग्रीवेण यत्सख्यम् तल्लक्ष्मणसख्यतुल्यं तद्वदपरिहार्यम् । दारराज्यनिमित्तं च

जीवत इत्यर्थः । वालिनो बिलनिर्गमनात्पूर्वं सुग्रीवस्य तारापरिग्रहोऽस्तीति " भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् । धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥ " इति प्रायोपवेशनसमयोक्ताङ्गदवाक्यादवगम्यते ॥ १९–२२ ॥ औरसीमिति । प्रचरेत गच्छेत् तस्य वध एव दण्डः स्मृत इति सम्बन्धः ॥ २३ ॥ २४ ॥ धर्मव्यतिक्रान्तं धर्मव्यतिक्रमणं कृतवन्तं पालयन् परामृशन् ॥ २५ ॥ वयमिति । भरतादेशविधिं भरताज्ञाकरणम् " औरसीं भगिनीं वापि भार्यां वाप्यनुजस्य यः । प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः" इत्युक्तप्रकारेणामार्गवर्तिनस्तव वधे दुष्टनिग्रहशिष्टपरिपालकसार्वभौमभरतस्याज्ञाकारिणो मम दोषो नास्तीति ॥ २६ ॥ एवं " इक्ष्वाकूणामियं भूमिः सशैलवनकानना " इत्यारभ्य " वयं तु भरतादेशविधिं कृत्वा हरीश्वर" इत्यन्तेन ग्रन्थसन्दर्भेण उक्त्वा सख्युस्सुग्रीवस्य प्रियकरणहेतुनापि त्वद्वधे मम दोषो नास्तीत्यभिप्रायेणाह—सुग्रीवेणेति । दारराज्यनिमित्तं दारराज्ये निमित्ते यस्य तत् तथा सख्यम्

दारराज्यफलकं च। स च मे निःश्रेयसि रतश्च, अतः कथमुपेक्षितुं शक्य इत्यन्वयः ॥ २७ ॥ हेत्वन्तरमप्याह—प्रतिज्ञा चेति । तदा सख्यकरणकाले । अनवेक्षितुम् उपेक्षितुमिति यावत् ॥ २८ ॥ तत्तस्मात् उपेक्षितुमशक्यत्वात् । एभिः भ्रातृभार्यापहरणादिकारणैः । तव भ्रातृभार्याविमर्शकस्य यच्छासनं कृतं तद्युक्तम् शास्त्रविहितमिति भवाननुमन्यताम् ॥ २९ ॥ पुनर्हेत्वन्तराणि वक्तुं पीठिकामारचयति—सर्वथेति ॥ ३० ॥ वयस्यस्यापीति । शत्रु

प्रतिज्ञा च मया दत्ता तदा वानरसन्निधौ । प्रतिज्ञा च कथं शक्या मद्विधेनानवेक्षितुम् ॥ २८ ॥ तदेभिः कारणैः सर्वैर्महद्भिर्धर्मसंहितैः । शासनं तव यद्युक्तं तद्भवाननुमन्यताम् ॥ २९ ॥ सर्वथा धर्म इत्येव द्रष्टव्यस्तव निग्रहः ॥ ३० ॥ वयस्यस्यापि कर्तव्यं धर्ममेवानुपश्यतः । शक्यं त्वयापि तत्कार्यं धर्ममेवानुपश्यता ॥ ३१ ॥ श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ । गृहीतौ धर्मकुशलैस्तत्तथा चरितं हरे ॥ ३२ ॥ राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ ३३ ॥

वद्धर्ममेवानुपश्यतो वयस्यस्यापि स्वमित्रशत्रुनिरसनं कर्तव्यम् । धर्ममेवानुपश्यता त्वयापि तत्कार्यम् आत्मनिग्रहरूपं शक्यम्, प्रायश्चित्तत्वेनानुमन्तुं योग्यमित्यर्थः ॥ ३१ ॥ रामानु०—वयस्यस्यापीत्ययं श्लोको बहुषु कोशेषु न दृष्टः ॥ ३१ ॥ स्वस्य रावणस्य हन्तव्यत्वे वालिनावश्यमनुमन्तव्यत्वे च संवादं दर्शयति—श्रूयत इति । चारित्रवत्सलौ आचारैकपरौ । गृहीतौ धृतौ । तत् श्लोकद्वयोक्तम् ॥ ३२ ॥ श्लोकौ पठति—राजभिरित्यादिना ॥ ३३ ॥

आसीदिति शेषः । तत्किमर्थमत आह सः सुग्रीवः मे निश्श्रेयसकरः ॥ २७ ॥ किञ्च प्रतिज्ञा च कृतेत्याह—प्रतिज्ञेति ॥२८॥ तदिति । तस्मात्कारणसद्भावात् । एभिः कारणैः भ्रातृभार्याहरणभरताज्ञाकरणसुग्रीवसख्यकरणप्रतिज्ञाकरणरूपैरित्यर्थः । तव भ्रातृभार्याविमर्शकस्य तव यच्छासनं कृतम् तद्युक्तं शास्त्रविहितमिति भवाननुमन्यतामिति योजना ॥ २९ ॥ ३० ॥ वयस्यस्यापीति । धर्ममेवानुपश्यतो वयस्यस्यापि सुग्रीवस्यापि कर्तव्यम्, मया प्रतिज्ञातत्वद्वधरूपकार्यमिति शेषः । धर्ममेवानुपश्यता त्वयापि तत्कार्यमात्मनिग्रहरूपं शक्यं प्रायश्चित्तत्वेनानुमन्तुं योग्यम् ॥३१॥ श्रूयत इति । चारित्रवत्सलौ चारित्रैकतत्परौ॥३२॥ त्वद्वधस्य

विषम०—धर्ममेवानुपश्यता जानता मित्रस्योपकर्तव्यम् । मित्रोपकारकरणमपि धर्म एवेति सुग्रीवोपकाररूपत्वात्त्वद्वधस्य धर्मत्वमिति भावः । किञ्चानुतापादिना धर्ममनुवर्तता एतद्दुष्कर्मप्रायश्चित्तरूपधर्मोऽनुवर्ति कुर्वता त्वयापि तत्कार्यं मत्कृतनिग्रहरूपकार्यं शक्यं रामप्रार्थनापूर्वं कारयितुं शक्यम् । सम्यनुतापे त्वया प्रार्थनापूर्वमयं दण्डः स्वस्य कारणीय एवेति स्वस्कारणीयस्यैव मया कृतत्वान्नात्र क्षोभः कार्य इति भावः॥ ३१॥

शासने परस्याभ्युदयमुक्त्वा अशासने राज्ञोऽनभ्युदयमाह—शासनादिति । राज्ञा शासने मोचने वा स्तेनश्चोरो मुच्यत एव पापात् । पापस्य पापिष्ठस्य अशासनाद्राजा तत्किल्बिषं पापमाप्नोति ॥ ३४ ॥ न केवलं वचनम् आचारश्चास्मिन्नर्थेऽस्तीत्याह—आर्येणेति । यथा त्वया पापं कृतं तथा श्रमणेन क्षपणकेन केनचित्पापे कृते मम आर्येण वृद्धप्रपितामहेन मान्धात्रा घोरं व्यसनं दण्डनम् । ईप्सितं प्रयुक्तमिति यावत् ॥३५॥ अन्यैरपीति । प्रमत्तैर्वसुधाधिपैः

शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते । राजा त्वशासनात् पापं तदवाप्नोति किल्बिषम् ॥३४॥ आर्येण मम मान्धात्रा व्यसनं घोरमीप्सितम् । श्रमणेन कृते पापे यथा पापं कृतं त्वया ॥३५॥ अन्यैरपि कृतं पापं प्रमत्तैर्वसुधाधिपैः । प्रायश्चित्तं च कुर्वन्ति तेन तच्छाम्यते रजः ॥३६॥ तदलं परितापेन धर्मतः परिकल्पितः । वधो वानरशार्दूल न वयं स्ववशे स्थिताः ॥ ३७॥ शृणु चाप्यपरं भूयः कारणं हरिपुङ्गव । यच्छ्रुत्वा हेतुमद्वीर न मन्युं कर्तुमर्हसि ॥३८॥

हेतुभिः । अन्यैरपि जनैः पापं कृतं ते वसुधाधिपाः विगतानवधानाः सन्तः कर्मपरामर्शवेलायां पापिनां प्रायश्चित्तं वधादिकं कुर्वन्ति । तेन प्रायश्चित्तेन तद्रजः तत्पापं शाम्यति । अद्यापीति शेषः ॥ ३६ ॥ रामानु०—कुर्वन्ति शाम्यत इत्येतदुभयमपि भूतार्थे लट् ॥ ३६ ॥ तदलमिति । न स्ववशे स्थिताः न स्वतन्त्राः, शास्त्रवश्या इत्यर्थः । अनेन पराङ्मुखवधस्य दोषत्वमपि परिहृतम्, प्रायश्चित्तस्य यथाकथंचित्कर्तव्यत्वात् । पञ्चमहापातकादिप्रायश्चित्तस्य मरणान्तिकत्वाद्बलादेव हि कार्यं भवति नान्यथा ॥ ३७ ॥ एवं सन्ध्योपासनराज्यपालनादिकं नियमेनानुतिष्ठतो वालिनः शास्त्रवश्यत्वमव

त्वत्कृतपापप्रायश्चित्तरूपत्वाद्व्यथा न कार्येत्याशयेनाह—राजभिरित्यादिश्लोकद्वयेन । पापस्य पापकारिणः । किल्बिषं दुरितम् ॥ ३३ ॥ ३४ ॥ आर्येणेति । यथा त्वया पापं कर्म कृतं तथा श्रमणेन क्षपणेन पापे कृते ममार्येण मान्धात्रा तस्मिन् श्रमणे घोरं व्यसनं दण्डनम् । ईप्सितं काङ्क्षितम् । प्रयुक्तमिति यावत् ॥ टी०—किं वक्ष्यसीत्यस्योत्तरत्वेन शिष्टाचारं दर्शयति—आर्येणेति ॥ ३५ ॥ प्रमत्तैर्वसुधाधिपैर्हेतुभिः, अन्यैरपि जनैः पापं कृतम् । राजसु प्रमत्तेषु अन्येऽपि केचिदेवं पापं कृतवन्त इत्यर्थः । ते वसुधाधिपाः पश्चात् धर्मपरामर्शवेलायाम् गतप्रमादास्सन्तः पापिनां प्रायश्चित्तं वधबन्धनादिकं कुर्वन्ति तेन प्रायश्चित्तकरणेन । तद्रजः तत्पापं शाम्यते । कुर्वन्ति शाम्यत इत्येतदुभयमपि भूतार्थे लट् ॥ ३६ ॥ तदलमिति । स्ववशे न स्थिताः शास्त्रवश्या इत्यर्थः ॥ ३७ ॥ सन्ध्योपासनराज्यपरिपालनादिकं नियमेनानुष्ठितवतो वालिनः शास्त्रवश्यत्वमवलम्ब्यैतत्सर्वमुक्तम् । इदानीं शाखामृगत्वमवलम्ब्याह—शृणु चाप्यपरमित्यादि ॥ ३८ ॥

लम्ब्योक्तम्। अथ शाखामृगत्वमवलम्ब्याह—शृणु चेत्यादिना ॥३८॥ "दृश्यमानस्तु युध्येथा मया यदि नृपात्मज। अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया"॥ इति "त्वयाऽदृश्येन तु रणे निहतोऽहं दुरासदः। प्रसुप्तः पन्नगेनेव नरः पानवशंगतः" इति च वालिना यदुक्तं तदुभयस्योत्तरमाह—न मे तत्र मनस्ताप इति। तत्र यमसदनप्रापणोक्तिप्रच्छन्नवेधननिन्दोक्तिविषये। मे मन्युर्नास्ति। शाखामृगस्य तवालक्ष्यत्वादिति भावः। मनस्तापाभावश्च मृगविषये

न मे तत्र मनस्तापो न मन्युर्हरियूथप। वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नराः ॥ ३९ ॥ प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून् मृगान्। प्रधावितान्वा वित्रस्तान् विस्रब्धांश्चापि निष्ठितान् ॥ ४० ॥ प्रमत्तानप्रमत्तान्वा नरा मांसार्थिनो भृशम्। विध्यन्ति विमुखांश्चापि न च दोषोऽत्र विद्यते ॥ ४१ ॥ यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः। तस्मात्त्वं निहतो युद्धे मया बाणेन वानर। अयुध्यन्प्रतियुध्यन्वा यस्माच्छाखामृगो ह्यसि ॥ ४२ ॥ दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च। राजानो वानरश्रेष्ठ प्रदातारो न संशयः ॥ ४३ ॥ तान्न हिंस्यान्न चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत्। देवा मनुष्यरूपेण चरन्त्येते महीतले ॥ ४४ ॥

प्रच्छन्नवेधनस्य राज्ञां स्वभावतया दोषाभावादिति भावः। तदेवोपपादयति वागुराभिरित्यादिना। कूटैः कपटव्यापारैः। विस्रब्धान् विश्वस्तान्। यद्यपि प्रकृते न मांसार्थिता तथापि पराङ्मुखवधान्न दोष इति तात्पर्यम् ॥३९–४२॥ (रामानु०—विध्यन्ति विमुखांश्चापीति पाठः ॥४१–४२॥) तनिश्लोकी—वागुराभिरिति। प्रयोजनान्तराभावेपि जनपदहिंसापरिहारार्थं निघ्नन्तीति भावः। "विध्यन्ति विमुखांश्चापि न च दोषोत्र विद्यते। यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः॥" तेन मृगयासक्तिर्न दोषायेति सूचितम्॥३९–४२॥ परपीडाकरो राज्ञां व्यापारो निष्फल इत्याशङ्क्य व्रणचिकित्सान्यायेन सः श्रेयस्कर एवेत्याह—दुर्लभस्येति। जीवितस्य जीवनस्य ॥ ४३ ॥ न हिंस्यान्न पीडयेत्, तेष्वनर्थकरत्वबुद्धिं न कुर्यादित्यर्थः। नाक्रोशेन्न निन्देत्। नाक्षिपेत् नोक्तिखण्डनं कुर्यात्। 

"दृश्यमानस्तु युध्येथा मया यदि नृपात्मज। अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया। त्वयाऽदृश्येन तु रणे निहतोऽहं दुरासदः॥" इति वालिना यदुक्तं तदुभयस्योत्तरमाह—न मे तत्रेति। तत्र यमसदनप्रापणप्रच्छन्नवेधनोक्तिविषये मन्युर्नास्ति, शाखामृगस्य तवालक्ष्यत्वादिति भावः। मनस्तापश्च न, मृगविषये प्रच्छन्नवेधनस्य राज्ञां स्वभावतया दोषाभावादिति भावः। तदेवोपपादयति वागुराभिरित्यादिना। गूढैः कपटोपायैः॥ ३९–४२॥ "नाविष्णुः पृथिवीपतिः"

नाप्रियं वदेत् परुषं न वदेदित्यर्थः । तत्र हेतुमाह–देवा इति । एते भूमिपाला राजानः । देवाः अष्टौ लोकपालाः । "अष्टाभिर्लोकपालानां मात्राभिः कल्पितो नृपः" इति वचनात् । मनुष्यरूपेण मनुष्यशरीरेण । उपलक्षिताश्चरन्ति ॥४४॥ पितृपैतामहे पितृपितामहप्राप्ते । नन्वेवमपि कथंचित्परिहार्यम् । "वरतनुहर्तिं वालिद्रोहं मनागपसर्पणम्" इत्याद्यपवादकरं छन्नवेधनं समर्थोऽपि किमर्थं कृतवान् ? तदवहितमनाः शृणु । यदि रामो वालिनः पुरतस्तिष्ठे

त्वं तु धर्ममविज्ञाय केवलं रोषमास्थितः । प्रदूषयसि मां धर्मे पितृपैतामहे स्थितम् ॥ ४५ ॥ एवमुक्तस्तु रामेण वाली प्रव्यथितो भृशम् । न दोषं राघवे दध्यौ धर्मेऽधिगतनिश्चयः । प्रत्युवाच ततो रामं प्राञ्जलिर्वानरेश्वरः ॥४६॥ यत्त्वमात्थ नरश्रेष्ठ तदेवं नात्र संशयः । प्रतिवक्तुं प्रकृष्टे हि नाप्रकृष्टस्तु शक्नुयात् ॥ ४७ ॥ तदयुक्तं मया पूर्वं प्रमादादुक्तमप्रियम् । तत्रापि खलु मे दोषं कर्तुं नार्हसि राघव ॥ ४८ ॥ त्वं हि दृष्टार्थतत्त्वज्ञः प्रजानां च हिते रतः । कार्यकारणसिद्धौ ते प्रसन्ना बुद्धिरव्यया ॥ ४९ ॥ मामप्यगतधर्माणं व्यतिक्रान्तपुरस्कृतम् । धर्मसंहितया वाचा धर्मज्ञ परिपालय ॥५०॥ ( बाष्पसंरुद्धकण्ठस्तु वाली सार्तस्वरं शनैः । उवाच रामं संप्रेक्ष्य पङ्कलग्न इव द्विपः ।)

त्तदा विदिततदीयप्रभावतया वाली प्रह्वो भवेत् । तदा तद्वधो न युक्तः । प्रतिज्ञा च व्याहन्येत । तद्द्वारा तन्मित्रं रावणोऽपि शरणं व्रजेत् । देवकार्यं च लुप्येत् । अतः प्रच्छन्नो वालिनमवधीत् ॥ ४५ ॥ एवमिति । प्रव्यथितः अज्ञानाद्राममधिक्षिप्तवानस्मीत्यनुतप्तः ॥ ४६ ॥ प्रकृष्टे विषये ॥ ४७ ॥ कर्तुं चिन्तयितुम् ॥ ४८ ॥ दृष्टार्थश्चासौ तत्त्वज्ञश्च दृष्टार्थतत्त्वज्ञः । यद्वा ज्ञः पण्डितः । दृष्टार्थतत्त्वश्चासौ ज्ञश्चेति समासः । कार्यकारणसिद्धौ कार्यं दण्डनम्, कारणं तद्धेतुभूतं पापम् तयोः सिद्धौ परिज्ञाने । बुद्धिः अन्तःकरणम् ॥ ४९ ॥ अगतधर्माणं कृत्याकरणवन्तम् । व्यतिक्रान्तपुरस्कृतं पुर

इति स्मरणाद्देवतारूपाणां राज्ञामधिक्षेपस्तव न युक्त इत्याशयेनाह–दुर्लभस्येत्यादिश्लोकद्वयेन ॥ ४३–४५ ॥ एवमुक्त इति । प्रव्यथितः अज्ञानाद्धर्मात्मानं त्वामधिक्षिप्तवानहमित्यनुतप्तः ॥ ४६ ॥ यदिति । प्रकृष्टे श्रेष्ठे, सर्वज्ञ इत्यर्थः । अपकृष्टः किञ्चिज्ज्ञः ॥ ४७ ॥ ४८ ॥ त्वमिति । दृष्टार्थश्चासौ तत्त्वज्ञश्च दृष्टार्थतत्त्वज्ञः । कार्यकारणसिद्धौ कार्यं दण्डनम्, कारणं तद्धेतुभूतं पापम् तयोः सिद्धौ परिज्ञाने बुद्धिरन्तःकरणम् । प्रसन्ना निर्मला, वैषम्यरहितेत्यर्थः ॥ ४९ ॥ मामिति ।

स्कृतव्यतिक्रमम्, अकृत्यकारिणमित्यर्थः । वाचा परिपाल्य, सर्वं मया क्षान्तमिति वदेत्यर्थः ॥ ५० ॥ कार्यान्तरमभ्यर्थयते--न त्वित्यादिना । नात्मानं प्रति शोचे, त्वया दत्तसम्यग्गतिकत्वात् । नापि तारादिकान् प्रति, सुग्रीवस्य विद्यमानत्वात् । पुत्रम् "अङ्गादङ्गात्संभवसि" इत्युक्तरीत्या स्वानतिरिक्तम् । गुणश्रेष्ठं पितृशुश्रूषादिगुणैः श्रेष्ठम् । कनकाङ्गदं दर्शनीयमित्यर्थः ॥ ५१--५३ ॥ सुग्रीवे चेति । मतिं तुल्यामिति शेषः ॥ ५४ ॥ वृत्तिः प्रीतिरिति

न त्वात्मानमहं शोचे न तारां न च बान्धवान् । यथा पुत्रं गुणश्रेष्ठमङ्गदं कनकाङ्गदम् ॥ ५१ ॥ स ममादर्शनाद्दीनो बाल्यात्प्रभृति लालितः । तटाक इव पीताम्बुरुपशोषं गमिष्यति ॥ ५२ ॥ बालश्चाकृतबुद्धिश्च एकपुत्रश्च मे प्रियः । तारेयो राम भवता रक्षणीयो महाबलः ॥ ५३ ॥ सुग्रीवे चाङ्गदे चैव विधत्स्व मतिमुत्तमाम् । त्वं हि शास्ता च गोप्ता च कार्याकार्यविधौ स्थितः ॥ ५४ ॥ या ते नरपते वृत्तिर्भरते लक्ष्मणे च या । सुग्रीवे चाङ्गदे राजंस्तां त्वमाधातुमर्हसि ॥ ५५ ॥ मद्दोषकृतदोषां तां यथा तारां तपस्विनीम् । सुग्रीवो नावमन्येत तथाऽवस्थातुमर्हसि ॥ ५६ ॥ त्वया ह्यनुगृहीतेन राज्यं शक्यमुपासितुम् । त्वद्वशे वर्तमानेन तव चित्तानुवर्तिना ॥ ५७ ॥ शक्यं दिवं चार्जयितुं वसुधां चापि शासितुम् ॥ ५८ ॥ त्वत्तोऽहं वधमाकांक्षन्वार्यमाणोऽपि तारया । सुग्रीवेण सह भ्रात्रा द्वन्द्वयुद्धमुपागतः ॥ ५९ ॥ इत्युक्त्वा सन्नतो रामं विरराम हरीश्वरः ॥६०॥ स तमाश्वासयद्रामो वालिनं व्यक्तदर्शनम् । सामसम्पन्नया वाचा धर्मतत्त्वार्थयुक्तया ॥ ६१ ॥

यावत् ॥ ५५ ॥ नावमन्येत पुत्रनिर्वासनेनेति भावः । अवस्थातुं व्यवस्थापयितुम् ॥ ५६ ॥ उपासितुम्, मयेति शेषः । न केवलं मद्राज्यम्, अन्यच्चे त्याह--शक्यमिति ॥ ५७ ॥ ५८ ॥ तर्हि तथा किं न कृतम् ? तत्राह--त्वत्त इति । आकाङ्क्षन् आकाङ्क्षमाण इवेत्यर्थः ॥ ५९ ॥ ६० ॥ व्यक्तदर्शनं

अगतधर्माणं कृत्याकरणवन्तम्, व्यतिक्रान्तपुरस्कृतं पुरस्कृतव्यतिक्रान्तमकृत्यकारिणमित्यर्थः । वाचा परिपाल्य वक्ष्यमाणं तथा करिष्यामीति वाचा समाश्वासयेत्यर्थः ॥ ५०--५५ ॥ मद्दोषकृतदोषां सुग्रीवाय मत्कृतापराधेन कृतापराधाम् । अवस्थातुम् अवस्थापयितुम् ॥ ५६--६० ॥ व्यक्तदर्शनम् अभिव्यक्तसर्वेश्वर

विशदज्ञानम् । साम सान्त्वनम् ॥ ६१ ॥ एतदर्थं पुत्रपालनार्थम् ॥ ६२ ॥ वयं न चिन्त्याः, अकृत्यकारिण इति शेषः । नाप्यात्मा, निवृत्तपापत्वात् । कुत इत्यत्राह—वयमिति । भवद्विशेषेण भवतः कृत्यरूपविशेषेण हेतुना । धर्मतः प्रायश्चित्तरूपे धर्मे । सप्तम्यर्थे तसिः । कृतनिश्चयाः । अतो वयं न चिन्त्या इत्यादि पूर्वेणान्वयः ॥ ६३ ॥ उक्तं विवृणोति—दण्ड्य इति । कार्यकारणसिद्धार्थौ । दण्ड्यत्वदण्डयितृत्वाभ्यां निष्पन्नप्रयोजनावित्यर्थः॥६४॥

न सन्तापस्त्वया कार्य एतदर्थं प्लवङ्गम ॥ ६२ ॥ न वयं भवता चिन्त्या नाप्यात्मा हरिसत्तम । वयं भवद्विशेषेण धर्मतः कृतनिश्चयाः ॥ ६३ ॥ दण्ड्ये यः पातयेद्दण्डं दण्ड्यो यश्चापि दण्ड्यते । कार्यकारणसिद्धार्थावुभौ तौ नावसीदतः ॥ ६४ ॥ तद्भवान् दण्डसंयोगादस्माद्विगतकल्मषः । गतः स्वां प्रकृतिं धर्म्यां धर्मदृष्टेन वर्त्मना ॥ ६५ ॥ त्यज शोकं च मोहं च भयं च हृदये स्थितम् । त्वया विधानं हर्यग्र्य न शक्यमतिवर्तितुम् ॥६६॥ यथा त्वय्यङ्गदो नित्यं वर्तते वानरेश्वर । तथा वर्तेत सुग्रीवे मयि चापि न संशयः ॥ ६७ ॥

धर्मदृष्टेन धर्मशास्त्रदृष्टेन वर्त्मना दण्डसंयोगात् विगतकल्मषः सन् । धर्म्यां धर्मादनपेताम् । स्वां प्रकृतिं यथावस्थितशुद्धस्वरूपं गतः ॥ ६५ ॥ हेत्वन्तरेणाश्वासयति—त्यजेति । विधानं विधिः । प्रारब्धं कर्मेति यावत् ॥ ६६ ॥ ६७ ॥

स्वरूपज्ञानम् ॥ ६१ ॥ ६२ ॥ न वयमिति । वयं भवता न चिन्त्याः न विचार्याः पराङ्मुखस्य मे वधं प्रच्छन्नं कृत्वा एष पापमार्जितवान् उत पुण्यमिति भवता न विचार्य इत्यर्थः । नाप्यात्मा चिन्त्यः भ्रातृभार्याहरणादिकं कृत्वा गतोऽहं किं भविष्यामीति त्वञ्च त्वया न विचार्यः । कुतः ? वयं भवद्विशेषेण भवतो विशेषेण । धर्मतः धर्मे । कृतनिश्चयाः अस्य वधः किं धर्म्यः, उताधर्म्यः ? इति विशेषेण विचार्य धर्मे निश्चयं कृतवन्त इत्यर्थः । यद्वा भवद्विशेषेण भवदकृत्यविशेषेण हेतुना । धर्मतः प्रायश्चित्तरूपधर्मे वयं कृतनिश्चयाः, अतो वयं भवता अचिन्त्याः अकृत्यं कृतवन्त इति न विचार्याः । नाप्यात्मा मम परलोकप्रतिबन्धकमस्तीति भवानपि न विचार्य इत्यर्थः । "राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते । राजा त्वशासन् पापस्य तदवाप्नोति किल्बिषम् ॥" इति मनुवचनानुसारेणोभयोरपि दोषाभाव इति भावः ॥ ६३ ॥ उक्तमेवार्थं विवृणोति—दण्ड्य इति । कार्यकारणसिद्धार्थौ कार्यं दण्डनम्, कारणमपराधः, भावप्रधानोऽयं निर्देशः । दण्ड्यत्वदण्डयितृत्वाभ्यां निष्पन्नप्रयोजनावित्यर्थः ॥ ६४ ॥ तत् तस्मात्कारणात् । स्वां प्रकृतिं स्वकीयं परिशुद्धतास्वभावम् ॥ ६५ ॥ त्यजेति । विधानं विधिः ॥ ६६–६७ ॥

उक्तमर्थं सर्गान्ते श्लोकाभ्यां पुनः संगृह्णाति—स तस्येति । समाहितं समाधानरूपम् ॥ ६८ ॥ शरेति । प्रदूषित इति यत् इदं मे अपचरितम् । क्षम क्षमस्व । अस्मिन् सर्गे सार्धसप्तषष्टिश्लोकाः ॥६९॥ इति श्रीगोविन्द० श्रीरामा० मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने अष्टादशः सर्गः ॥१८॥

स तस्य वाक्यं मधुरं महात्मनः समाहितं धर्मपथानुवर्तिनः । निशम्य रामस्य रणावमर्दिनो वचः सुयुक्तं निजगाद वानरः ॥ ६८ ॥ शराभितप्तेन विचेतसा मया प्रदूषितस्त्वं यदजानता प्रभो । इदं महेन्द्रोपम भीमविक्रम प्रसादितस्त्वं क्षम मे नरेश्वर ॥६९॥ इत्यार्षे श्रीरामायणे वाल्मीकीये श्रीमत्किष्किन्धाकाण्डे अष्टादशः सर्गः ॥ १८ ॥

स वानरमहाराजः शयानः शरविक्षतः । प्रत्युक्तो हेतुमद्वाक्यैर्नोत्तरं प्रत्यपद्यत ॥ १ ॥ अश्मभिः प्रविभिन्नाङ्गः पादपैराहतो भृशम् । रामबाणेन च क्रान्तो जीवितान्ते मुमोह सः ॥ २ ॥ तं भार्या बाणमोक्षेण रामदत्तेन संयुगे । हतं प्लवगशार्दूलं तारा शुश्राव वालिनम् ॥ ३ ॥ सा सपुत्राऽप्रियं श्रुत्वा वधं भर्तुः सुदारुणम् । निष्पपात भृशं त्रस्ता विविधाद्गिरिगह्वरात् ॥ ४ ॥ ये त्वङ्गदपरीवारा वानरा भीमविक्रमाः । ते सकार्मुकमालोक्य रामं त्रस्ताः प्रदुद्रुवुः ॥ ५ ॥ सा ददर्श ततस्त्रस्तान् हरीनापततो भृशम् । यूथादिव परिभ्रष्टान् मृगान्निहतयूथपान् ॥ ६ ॥ तानुवाच समासाद्य दुःखितान् दुःखिता सती । रामवित्रासितान्सर्वाननुबद्धानिवेषुभिः ॥ ७ ॥

तारागमनमेकोनविंशे—स वानरमहाराज इत्यादि । विक्षतः विशेषेण क्षतः । जीवितान्ते जीवितान्तकाले ॥१–३॥ सा सपुत्राप्रियमिति । अप्रियमिति च्छेदः । विविधान्नानाकक्ष्यात् गिरिगह्वराद्गिरिगुहातः । गुहारूपा हि किष्किन्धेत्युक्तम् ॥ ४ ॥ रामानु०—विविधाद्विचित्रान्तःप्रदेशात् ॥ ४ ॥ ये त्वित्यादिश्लोकद्वयमेकान्वयम् ॥ ५ ॥ ६ ॥ रामानु०—"सा ददर्श ततस्त्रस्तान् हरीनापततो द्रुतम् । यूथाधिपपरिभ्रष्टान्मृगान्निहतयूथपान्" इति पाठः ॥६॥ पूर्वं सामान्यतो विदितवृत्तान्तापि विशेषजिज्ञासया पृच्छति—तानिति ॥ ७ ॥

॥६८॥६९॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायाम् अष्टादशः सर्गः ॥ १८ ॥ १ ॥ मुमोह मुमूर्च्छ ॥२॥ ३ ॥ ४ ॥ सेति । विविधात् विचित्रान्तःप्रदेशात् ॥ ४–६ ॥ तानिति । इषुभिः अनुबद्धानिव इषुभिः भीतानिव ॥ ७ ॥ ८ ॥

वानरा इत्यादिश्लोकद्वयमेकान्वयम् । दुर्गताः अगतिकाः । राज्यलाभाय सुग्रीवेण वाली हतश्चेद्भवतां किं भयमित्यर्थः । मार्गणैरिति बहुवचनं संभावनयोक्तम् ॥ ८ ॥ ९ ॥ अविक्लिष्टं सयुक्तिकमिति यावत् ॥ १० ॥ जीवपुत्रे इति । अपुत्रायाः खलु मृतभर्त्रनुगमनमिति भावः । नयति

वानरा राजसिंहस्य यस्य यूयं पुरःसराः । तं विहाय सुसंत्रस्ताः कस्माद्द्रवथ दुर्गताः ॥ ८ ॥ राज्यहेतोः स चेद् भ्राता भ्रात्रा रौद्रेण पातितः । रामेण प्रहितै रौद्रैर्मार्गणैर्दूरपातिभिः ॥ ९ ॥ कपिपत्न्या वचः श्रुत्वा कपयः कामरूपिणः । प्राप्तकालमविक्लिष्टमूचुर्वचनमङ्गनाम् ॥ १० ॥ जीवपुत्रे निवर्तस्व पुत्रं रक्षस्व चाङ्गदम् । अन्तको रामरूपेण हत्वा नयति वालिनम् ॥ ११ ॥ क्षिप्तान् वृक्षान् समाविध्य विपुलाश्च शिलास्तथा । वाली वज्रसमैर्बाणै रामेण विनिपातितः ॥ १२ ॥ अभिद्रुतमिदं सर्वं विद्रुतं प्रसृतं बलम् । अस्मिन् प्लवगशार्दूले हते शक्रसमप्रभे ॥ १३ ॥ रक्ष्यतां नगरद्वारमङ्गदश्चाभिषिच्यताम् । पदस्थं वालिनः पुत्रं भजिष्यन्ति प्लवङ्गमाः ॥ १४ ॥ अथवाऽरुचितं स्थानमिह ते रुचिरानने । आविशन्ति हि दुर्गाणि क्षिप्रमन्यानि वानराः ॥ १५ ॥

लोकान्तरमिति शेषः ॥ ११ ॥ १२ ॥ विद्रुतं पूर्वं किष्किन्धातो निर्गतमिदं बलं प्रसृतं प्रकीर्णं सत् अभिद्रुतं किष्किन्धाभिमुख्येन द्रुतम् ॥ १३ ॥ १४ ॥ अथवेति । हे रुचिरानने । ते इह किष्किन्धायाम् । स्थानम् अवस्थानम् । अरुचितम् अनभिमतम् । अत्र स्थातुम् अस्माकं न रोचते इत्यर्थः ।

राज्यहेतोरित्यत्र एकेनैव बाणेन वालिहनने सत्यपि वालिविषये बहुबाणप्रयोगसम्भावनया मार्गणैरिति बहुवचननिर्देशः ॥ ९ ॥ कपिपत्न्या इति । अविक्लिष्टम् ऐकरूप्यम् ॥ १०–१२ ॥ अभिद्रुतमिति । अभिद्रुतं किष्किन्धाभिमुख्येन द्रुतम् । विद्रुतं विधावितम् । प्रसृतं प्रकीर्णम् ॥ १३ ॥ १४ ॥ एवमकरणे बाधकमाह—अथवेति ॥ ते तव । इह किष्किन्धायाम् । स्थानमवस्थानम् । अरुचितम् अनभिमतम् । हि यस्मात्कारणात् । वानराः शत्रुभूताः दुर्गाणि किष्किन्धादुष्प्रवेशस्थलानि आविशन्ति

विषम०—भ्राता प्रयोजककर्ता । रामः प्रयोज्यकर्ता । बाणाः करणम् । दूरात् दूरे स्थित्वा मार्गणैः 'पातितश्चेत् किं युष्माभिः, पलायितमिति शेषः । तत्सेवयैव भवज्जीवनसम्भवादिति भावः । वालिविषये बहुबाणप्रयोगसम्भावनया मार्गणैरिति बहुवचननिर्देशः ॥ ९ ॥ स०—ननु कथं कपिपत्न्या इति । "पत्युर्नो यज्ञसंयोगे" इति यज्ञसंयोग एव पत्नीत्वविधानात् वालिनश्च तिर्यग्जातीयत्वेन यज्ञाधिकाराभावादिति चेन्न; तस्य देवत्वेन देवानां च देवताधिकरणेऽधिकारस्य समर्थितत्वात्परिदृश्यमानकपित्वं न यज्ञाधिकारविलोपकमिति भावः । अधिकारनिषेधस्तु प्रसिद्धपामरतिर्यग्विषय इति भावः ॥ १० ॥

दि यस्मात्कारणात् वानराः शत्रुभूताः । दुर्गाणि किष्किन्धायाः दुष्प्रवेशस्थलानि । आविशन्ति आक्रमिष्यन्ति । अन्यानि अस्मदावासस्थलभिन्नानीत्यर्थः ॥ १५ ॥ अस्त्वाक्रमणम् । ततः किमित्यत्राह—अभार्या इति । अभार्याः भार्याविरहिताः सभार्याः समानभार्याः साधारणभार्या इत्यर्थः । ये वालिना विप्रवासिताः वनचारिणः सन्ति तेभ्यः विप्रयुक्तेभ्यः स्वभार्याविरहिभ्यः । लुब्धेभ्यः साधारणभार्यान्तराभिलाषिभ्यः । स्वेभ्यः ज्ञातिभ्यः

अभार्याश्च सभार्याश्च सन्त्यत्र वनचारिणः । लुब्धेभ्यो विप्रयुक्तेभ्यस्तेभ्यो नस्तुमुलं भयम् ॥ १६ ॥ अल्पान्तरगतानां तु श्रुत्वा वचनमङ्गना । आत्मनः प्रतिरूपं सा बभाषे चारुहासिनी ॥१७॥ पुत्रेण मम किं कार्यं किं राज्येन किमात्मना । कपिसिंहे महाभागे तस्मिन् भर्तरि नश्यति ॥ १८ ॥ पादमूलं गमिष्यामि तस्यैवाहं महात्मनः । योऽसौ रामप्रयुक्तेन शरेण विनिपातितः ॥ १९ ॥ एवमुक्त्वा प्रदुद्राव रुदन्ती शोककर्शिता । शिरश्चोरश्च बाहुभ्यां दुःखेन समभिघ्नती ॥ २० ॥ आव्रजन्ती ददर्शाथ पतिं निपतितं भुवि । हन्तारं दानवेन्द्राणां समरेष्वनिवर्तिनाम् ॥ २१ ॥ क्षेप्तारं पर्वतेन्द्राणां वज्राणामिव वासवम् । महावातसमाविष्टं महामेघौघनिःस्वनम् ॥ २२ ॥

सुग्रीवादिभ्यः । नः अस्माकम् । अत्र किष्किन्धास्थाने । तुमुलं निरन्तरम् । भयं भवति । अनेन भाविसुग्रीवव्यापारः सूचितः । रुचिराननइत्यादिसंबोधनात्तस्याः सहमरणसाहसं द्योत्यते ॥ १६ ॥ अल्पेति । अल्पान्तरगतानां किंचिदवकाशं प्राप्तानाम् । संभाषणाय कियन्मात्रावकाशं प्राप्तानामित्यर्थः । आत्मनः प्रतिरूपं स्वबुद्ध्यनुगुणम् । यद्वा आन्तरं बुद्धिः अल्पबुद्धीनामित्यर्थः ॥ १७–१९ ॥ एवमिति । बाहुभ्याम् हस्ताभ्यामित्यर्थः ॥ २० ॥ दानवेन्द्राणां मायाविप्रभृतीनाम् । वज्राणामिति प्रयोगबाहुल्यापेक्षया बहुवचननिर्देशः । महावातसमाविष्टं समाविष्टमहावातमिव स्थितम् । समावेशः

आक्रमिष्यन्ति ॥ १५ ॥ अत्रावस्थाने भयमवश्यं भावीति प्रतिपादयन्ति—अभार्या इति । अभार्याः भार्याविरहिताः, सभार्याश्च वालिना विप्रकृता ये वनचारिणः सन्ति तेभ्यः विप्रयुक्तेभ्यो लुब्धेभ्यः स्वेभ्यः सुग्रीवादिज्ञातिभ्यः नः अस्माकम् अत्र किष्किन्धावस्थाने तुमुलं भयं भवतीति योजना ॥ १६ ॥ अल्पेति । अल्पान्तरगतानां नातिदूरवर्तिनाम् आत्मनः प्रतिरूपम् आत्मानुरूपम् । अल्पान्तरगतानां नातिदूरवर्तिनाम् एवं भयेन किञ्चिद्भेदं प्राप्तानामिति वा ॥ १७–२१ ॥ क्षेप्तारमिति । वज्राणामिति किङ्करवज्रादिभेदविवक्षया बहुवचननिर्देशः, महावातसमाविष्टम् । भावे निष्ठा । महावातस्येव समाविष्टं समावेशनं

संघीभावः । यद्वा समाविष्टमिति भावे निष्ठा । महावातसमावेशमिव स्थितम् । पराक्रान्तं पराक्रमः । नर्दतां मध्ये भीमं नर्दन्तम् । शार्दूलेन सिंहेन "सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः श्वेतपिङ्गलः । व्यादीर्णास्यो महानादः शार्दूलोऽतुलविक्रमः ॥ " इति वैजयन्ती । यद्वा असंभावितत्वद्योतनाय शार्दूलहिंसितसिंहमिवेत्यभूतोपमा । अर्चितमिति । अत्र भागवताद्युक्तकालीयनागप्रहरणवेलायां वलिस्थानं चैत्यमप्युन्मथितमित्यवगन्तव्यमित्याहुः । सर्व

शक्रतुल्यपराक्रान्तं वृष्टेवोपरतं घनम् । नर्दन्तं नर्दतां भीमं शूरं शूरेण पातितम् ॥ २३ ॥ शार्दूलेनामिषस्यार्थे मृगराजं यथा हतम् । अर्चितं सर्वलोकस्य सपताकं सवेदिकम् ॥ २४ ॥ नागहेतोः सुपर्णेन चैत्यमुन्मथितं यथा । अवष्टभ्य च तिष्ठन्तं ददर्श धनुरुत्तमम् । रामं रामानुजं चैव भर्तुश्चैवानुजं शुभा ॥ २५ ॥ तानतीत्य समासाद्य भर्तारं निहतं रणे । समीक्ष्य व्यथिता भूमौ संभ्रान्ता निपपात ह ॥ २६ ॥

लोकस्य सर्वलोकेन । अर्चितं सपताकम् अलंकृतमित्यर्थः । सवेदिकं श्रमहरवेदिकासंपन्नम् । एवं वर्तमानमपि तत्र निगूढनागग्रहणाय गरुडोन्मथितं चैत्यमिव स्थितमित्यर्थः । शौर्यादिसंपन्नोपि भ्रातृभार्यापहरणपापवत्त्वेन हत इत्यत्र दृष्टान्तोऽयम् । अवष्टभ्येति । ऊर्जितं दृढम् । धनुरवष्टभ्य तिष्ठन्तम् अनेनाकर्षकाकार उच्यते । चकारेण तादृशसंस्थानविशेषेणाकर्षकता कथ्यते । भर्तारं हतवन्तं रामं तत्साहाय्यकृतं तदनुजं तेन संहारयितारं सुग्रीवं च ददर्श । शुभा तत्र शत्रुत्वबुद्धिं विहाय शुभहृदया बभूव । न रामस्य दोषोऽस्ति किंतु वालिन एव । पानीयपानाय तटाके खाते तत्र कण्ठे गुर्वीं शिलां बद्ध्वा पतित्वा म्रियमाणस्यैव हि दोषः, अयमप्यनुकूलश्चेत् कथमेनं न रक्षेत् । किंच " मम प्राणा हि पाण्डवाः " इत्युक्तरीत्या स्वप्राणभूते स्वाश्रिते हिंसां कुर्वन्तं कथं मृष्येत् ? अत एव हि प्रथमयुद्धे न हिंसितवान् । किंतु स्वाश्रितापराधं दृष्ट्वैव पुनर्युद्धे वालिनं हतवानित्यमन्यतेति भावः ॥ २१–२५ ॥ रामानु०–क्षेप्तारमिति । वक्त्राणामिति । किङ्करवक्त्रादिभेदविवक्षया बहुवचननिर्देशः । प्रयोगबाहुल्यापेक्षया वा । नर्दन्तमिति । नर्दतां मध्ये भीमं नर्दन्तम् । शूरं शूरेण पातितमित्युभयोः समत्वाभिधानादत्र शार्दूलशब्देन सिंह उच्यते ॥ २१–२५ ॥ तमिममर्थं व्यञ्जयन्नाह–तानिति । अतीत्येति नातिक्रम उच्यते । यस्य स तथोक्तः तम् । युद्धे महावातसदृशवेगमित्यर्थः ॥ नर्दन्तमिति । नर्दतां मध्ये भीमं नर्दन्तम् । शार्दूलेन सिंहेन । " सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः श्वेतपिङ्गलः । व्यादीर्णास्यो महानादः शार्दूलः " इति वैजयन्ती । अर्चितमिति । सर्वलोकस्य सर्वलोकेन चैत्यमुन्मथितं यथा गरुडेन कालियप्रहरणवेलायां वलि

सर्वेषां समीपस्थत्वात् । किंतु तत्र दोषबुद्धिमकृत्वेत्यर्थः । भर्तारं समासाद्येति । उपसर्गेण स्वाज्ञानेनायं हत इति बुद्धवतीति ज्ञाप्यते ॥२६॥ सुप्त्वेतिं । सन्दितं बद्धम् । मृत्युदामाभिः मृत्युपाशैः, आसन्नप्राणमित्यर्थः ॥२७॥ रामानु०–सन्दितं बद्धम् । "बद्धे सन्दानितं मूतमुद्दितं सन्दितं सितम्" इत्यमरः ॥ २७ ॥ तामिति । कष्टं विषादम्, अत्यन्तविषादमित्यर्थः ॥ २८ ॥ इति श्रीगोविन्दराज० श्रीरामायण० मुक्ताहारा० किष्किन्धा० एकोनविंशः सर्गः ॥ १९ ॥

सुप्त्वैव पुनरुत्थाय आर्यपुत्रेति क्रोशती । रुरोद सा पतिं दृष्ट्वा सन्दितं मृत्युदामभिः ॥ २७ ॥ तामवेक्ष्य तु सुग्रीवः क्रोशन्तीं कुररीमिव । विषादमगमत्कष्टं दृष्ट्वा चाङ्गदमागतम् ॥ २८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

रामचापविसृष्टेन शरेणान्तकरेण तम् । दृष्ट्वा विनिहतं भूमौ तारा ताराधिपानना । सा समासाद्य भर्तारं पर्यष्वजत भामिनी ॥ १ ॥ इषुणाऽभिहतं दृष्ट्वा वालिनं कुञ्जरोपमम् । वानरेन्द्रं महेन्द्राभं शोकसंतप्तमानसा । तारा तरुमिवोन्मूलं पर्यदेवयदातुरा ॥ २ ॥ रणे दारुणविक्रान्त प्रवीर प्लवतां वर । किं दीनामपुरोभागामद्य त्वं नाभिभाषसे ॥ ३ ॥ उत्तिष्ठ हरिशार्दूल भजस्व शयनोत्तमम् । नैवंविधाः शेरते हि भूमौ नृपतिसत्तमाः ॥ ४ ॥ अतीव खलु ते कान्ता वसुधा वसुधाधिप । गतासुरपि यां गात्रैर्मां विहाय निषेवसे ॥ ५ ॥ व्यक्तमन्या त्वया वीर धर्मतः संप्रवर्तिता । किष्किन्धेव पुरी रम्या स्वर्गमार्गे विनिर्मिता ॥ ६ ॥

अथ ताराप्रलापो विंशे–रामेत्यादिसार्धश्लोकः । सा तारा तं दृष्ट्वा पर्यष्वजत ॥ १ ॥ इषुणेत्यादिसार्धः ॥ २ ॥ रामानु०–रामचापेति । एतदनन्तरं सा समासाद्येति श्लोकः कतिपयकोशेषु प्रमादाल्लिखितो वर्तते । अयम् उपरि–" दुर्लभं दर्शनं तस्य तव वत्स भविष्यति " इत्यनन्तरं द्रष्टव्यः । तारा उच्चैःस्वरा, अतो न पुनरुक्तिः ॥ १ ॥ २ ॥ रण इति ॥ अपुरोभागां दोषदर्शनरहिताम् अनपराधामिति यावत् ॥ ३–६ ॥ व्यक्तमिति ॥ हे वीर ! अत्र निर्मिता किष्किन्धेवान्या पुरी स्वर्गमार्गे त्वया स्थानचैत्यमप्युन्मथितमित्यवगन्तव्यम् ॥ २२–२६ ॥ सन्दितं बद्धम् ॥ २७ ॥ कुररी शारिका ॥ २८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायाम् एकोनविंशः सर्गः ॥ १९ ॥ रामेति । तारा उच्चैःस्वरा । अतो न पुनरुक्तिः ॥ १ ॥ २ ॥ अपुरोभागां दोषदर्शनरहिताम्, अनपराधामिति यावत् ॥ ३–५ ॥ तारा [illegible] भोगस्थानगतां पुरीमुत्प्रेक्षते–व्यक्तमिति । हे वीर !

धर्मतः प्रवार्तिता । अतः खल्विमां त्यक्त्वा गन्तुमुद्यतोऽसीति भावः ॥ ६ ॥ यानीति । अस्माभिरिति [illegible]पेक्षया बहुवचनम् । अस्माभिः सह त्वया यानि विहृतानि विहाराः । कृतानीत्यध्याहारः । तेषां त्वया उपरमः विरामः कृतः ॥ ७ ॥ निरानन्देति । अद्य निराशा कालान्तरे आनन्दो भविष्यतीत्याशारहिताऽहं शोकसागरे निमग्ना, अस्मीति शेषः । पञ्चत्वं मरणम् ॥ ८ ॥ हृदयमिति । मह्यं मम ॥ ९ ॥ रामानु०—मह्यं मम, हृदयं सुस्थिरम् ।



यान्यस्माभिस्त्वया सार्धं वनेषु मधुगन्धिषु । विहृतानि त्वया काले तेषामुपरमः कृतः ॥ ७ ॥ निरानन्दा निराशाऽहं निमग्ना शोकसागरे । त्वयि पञ्चत्वमापन्ने महायूथपयूथपे ॥ ८ ॥ हृदयं सुस्थिरं मह्यं दृष्ट्वा विनिहतं पतिम् । यन्न शोकाभिसंतप्तं स्फुटतेऽद्य सहस्रधा ॥ ९ ॥ सुग्रीवस्य त्वया भार्या हृता स च विवासितः । यत्तु तस्य त्वया व्युष्टिः प्राप्तेयं प्लवगाधिप ॥ १० ॥ निःश्रेयसपरा मोहात्त्वया चाहं विगर्हिता । यैषाऽब्रवं हितं वाक्यं वानरेन्द्र हितैषिणी ॥ ११ ॥ रूपयौवनदृप्तानां दक्षिणानां च मानद । नूनमप्सरसामार्य चित्तानि प्रमथिष्यसि ॥ १२ ॥ कालो निःसंशयो नूनं जीवितान्तकरस्तव । बलाद्येनावपन्नोऽसि सुग्रीवस्यावशो वशम् ॥ १३ ॥ वैधव्यं शोकसन्तापं कृपणं कृपणा सती । अदुःखोपचिता पूर्वं वर्तयिष्याम्यनाथवत् ॥ १४ ॥

मे यदिति च पाठः ॥ ९ ॥ सुग्रीवस्येति । व्युष्टिः फलम् । "व्युष्टिः फले समृद्धौ च" इत्यमरः । विवासित इति यत्तस्य व्युष्टिरित्यन्वयः ॥ १० ॥ निःश्रेयसेति । निःश्रेयसपरा श्रेयस्कामा ॥ ११ ॥ रूपेति । दक्षिणानाम् अनङ्गतन्त्रे कुशलानाम् । प्रमथिष्यसि वशीकरिष्यसीति भावः । वीरस्य स्वर्गसिद्धेरिति भावः ॥ १२ ॥ काल इति । वशम् अवपन्नः प्राप्तः ॥ १३ ॥ वैधव्यमिति । अहं पूर्वम् अदुःखोपचिता अकृपणा च सती संप्रति कृपणा भूत्वा वैधव्यं

धर्मतः सम्प्रवर्तता धर्मेण युद्धमाचरता त्वया । परस्मैपदमार्षम् । स्वर्गमार्गे वीरस्वर्गसाधनभूतरणभूमौ किष्किन्धेव अन्या रम्या पुरी विनिर्मिता । व्यक्तं नूनम् । नो चेद् त्वं कथमत्र शेष इति भावः ॥ ६ ॥ यानीति । द्वितीयस्त्वयाशब्दः उपरमः कृत इत्यनेन सम्बध्यते ॥ ७ ॥ ८ ॥ टीका—सम्प्रति स्वहृदयमुपालभते—हृदयमिति ॥ ९ ॥ सुग्रीवस्येति । सुग्रीवस्य भार्या त्वया हृता स विवासितश्चेति यत्कर्मास्ति तस्येयं व्युष्टिः फलं प्राप्तोति योजना । "व्युष्टिः फले समृद्धौ च" इत्यमरः ॥ १० ॥ टी०—अहं च निराकृतेत्याह—निःश्रेयसेति । निःश्रेयसं कल्याणं परमुद्देश्यं यस्यास्सा ॥ ११ ॥ रूपेति । दक्षिणानां सरलानाम् । विदग्धानामिति यावत् ॥ १२ ॥ बलात् सामर्थ्यात् येन कालेन कर्त्रा । अवशः अस्वतन्त्रः । सुग्रीवस्य वशम् अधीनताम् अवपन्नः प्राप्तः ॥ १३ ॥ अदुःखोपचिता दुःखरहितेत्यर्थः ॥ १४ ॥

शोककृतसन्तापं च वर्तयिष्यामि धारयिष्यामि ॥ १४ ॥ लालित इति । मे मया लालितः अङ्गदः पितृव्ये पितृभ्रातरि क्रोधमूर्च्छिते सति । कामवस्थां वत्स्यते वर्तयिष्यति । नश्यत्येवेति भावः ॥ १५ ॥ कुरुष्वेति । अनेन तदानीमङ्गदः समागत इति द्योत्यते ॥ १६ ॥ १७ ॥ रामेणेति । महत् अन्यैरशक्यम् । कर्म कृतम् । आनृण्यं च गतं प्राप्तम् । प्रतिश्रवे प्रतिज्ञाविषये ॥ १८ ॥ सुग्रीवं प्रत्याह–सकाम इति । शस्तः हिंसितः ॥ १९ ॥

लालितश्चाङ्गदो वीरः सुकुमारः सुखोचितः । वत्स्यते कामवस्थां मे पितृव्ये क्रोधमूर्च्छिते ॥ १५ ॥ कुरुष्व पितरं पुत्र सुदृष्टं धर्मवत्सलम् । * दुर्लभं दर्शनं वत्स तव तस्य भविष्यति ॥ १६ ॥ समाश्वासय पुत्रं त्वं सन्देशं सन्दिशस्व च । मूर्ध्नि चैनं समाघ्राय प्रवासं प्रस्थितो ह्यसि ॥ १७ ॥ रामेण हि महत्कर्म कृतं त्वामभिनिघ्नता । आनृण्यं च गतं तस्य सुग्रीवस्य प्रतिश्रवे॥१८॥ सकामो भव सुग्रीव रुमां त्वं प्रतिपत्स्यसे । भुङ्क्ष्व राज्यमनुद्विग्नः शस्तो भ्राता रिपुस्तव ॥ १९ ॥ किं मामेवं विलपतीं प्रेम्णा त्वं नाभिभाषसे । इमाः पश्य वरा बह्वीर्भार्यास्ते वानरेश्वर ॥ २० ॥ तस्या विलपितं श्रुत्वा वानर्यः सर्वतश्च ताः । परिगृह्याङ्गदं दीनं दुःखार्ताः परिचुक्रुशुः ॥ २१ ॥ किमङ्गदं साङ्गदवीरबाहो विहाय यास्यद्य चिरप्रवासम् । न युक्तमेवं गुणसन्निकृष्टं विहाय पुत्रं प्रियपुत्र गन्तुम् ॥२२॥

वालिनं प्रत्याह–किमिति ॥ २० ॥ तस्या इति । विलपितम् विलापम् ॥ २१ ॥ रामानु०–परिगृह्याङ्गदं दीनं दुःखार्ताः परिचुक्रुशुरित्यतः परं किमङ्गदमिति श्लोकः । ततः परं किमप्रियमिति श्लोकः । ततः परं यद्यप्रियमिति श्लोकः ततः परं तथा तु तारेति सर्गान्तश्लोकः ॥२१॥ किमङ्गदमिति । साङ्गदौ वीरौ वीर्यवन्तौ बाहू यस्य स

मे मया लालितः ॥ १५ ॥ पुत्रं प्रत्याह–कुरुष्वेति । पितरं सुदृष्टं कुरुष्व, पितरं सम्यक्पश्येत्यर्थः ॥१६॥ वालिनं प्रत्याह–समाश्वासयेति । यतः प्रवासं प्रस्थितोसि, अतः मूर्ध्नि उपाघ्राय पुत्रं समाश्वासय, सन्देशं सन्दिशस्वेति सम्बन्धः । सन्देशं सन्देश्यम् । प्रवासं दीर्घप्रवासम् ॥ १७ ॥ सुग्रीवस्य प्रतिश्रवे प्रतिज्ञाविषये । आनृण्यम् अनृणत्वम् ॥ १८ ॥ सकाम इति । शस्तः हिंसितः ॥ १९–२१ ॥ किमङ्गदमिति । साङ्गदवीरबाहो साङ्गदौ वीरौ वीर्यवन्तौ बाहू यस्य स तथोक्तः ।

* "दुर्लभं दर्शनं वत्स" इत्यर्धानन्तरं रामानुजीय–तीर्थीय–टीकाशिरोमणिकारपाठे–"सा समासाद्य भर्तारं पर्यष्वजत भामिनी । पुनः भिद्यत्रं दृष्ट्वा वालिनं दुःखरोपमम्" इति श्लोको दृश्यते । तैर्व्याख्यातश्च । सा समासाद्येति ॥ सा अङ्गदं प्रति कथोक्तवती इति ।

तथोक्तः । गुणसन्निकृष्टं गुणैः प्रत्यासन्नम्, गुणैस्तव सदृशमित्यर्थः । हे प्रियपुत्रेति सम्बुद्धिः । प्रियः पुत्रो यस्य सः प्रियपुत्र इति । इयं स्त्रीजनप्रलाप परिपाटी ॥ २२ ॥ २३ ॥ यदीति । असंप्रधार्य अविज्ञाय ॥ २४ ॥ तथा त्विति । प्रायमुपोपवेष्टुं प्रायोपवेशं कर्तुमित्यर्थः । "प्रसमुपोदः पादपूरणे" इति द्विर्वचनम् । अत्र सर्गे श्लोकव्यत्यासो लेखककृतः । अस्मिन् सर्गे पञ्चविंशतिश्लोकाः॥२५॥ रामानु०–अस्मिन् सर्गे परिगृह्याङ्गदं दीनं दुःखार्ताः परिचुक्रुशु

किमप्रियं ते प्रियचारुवेष मया कृतं नाथ सुतेन वा ते । सहाङ्गदां मां स विहाय वीर यत्प्रस्थितो दीर्घमितः प्रवासम् ॥ २३ ॥ यद्यप्रियं किंचिदसंप्रधार्य कृतं मया स्यात्तव दीर्घबाहो । क्षमस्व मे तद्धरिवंशनाथ व्रजामि मूर्ध्ना तव वीर पादौ ॥ २४ ॥ तथा तु तारा करुणं रुदन्ती भर्तुः समीपे सह वानरीभिः । व्यवस्यत प्रायमुपोपवेष्टु मनिन्द्यवर्णा भुवि यत्र वाली ॥२५॥ इत्यार्षे श्रीरामायणे वाल्मीकीये श्रीमत्किष्किन्धाकाण्डे विंशः सर्गः ॥२०॥

ततो निपतितां तारां च्युतां तारामिवाम्बरात् । शनैराश्वासयामास हनुमान् हरियूथपः ॥ १ ॥
गुणदोषकृतं जन्तुः स्वकर्मफलहेतुकम् । अव्यग्रस्तदवाप्नोति सर्वं प्रेत्य शुभाशुभम् ॥ २ ॥

रित्यतः परम् उपरितनसर्गस्थाः हनुमद्वाक्यभूताः गुणदोषकृतं जन्तुरित्यादयश्चत्वारः श्लोकाः सर्गसाङ्कर्यं च केषुचित् कोशेषु दृश्यते । एतल्लेखकप्रमादकृतमित्यवगन्तव्यम् ॥ २५ ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥

अथ हनुमत्समाश्वासनमेकविंशे–तत इत्यादि । तारां तारकाम् ॥ १ ॥ गुणेति । जन्तुः गुणदोषकृतं ज्ञानाज्ञानाभ्यां कृतम् । स्वकर्मफलं स्वकर्म वासना हेतुर्यस्य तत्तथोक्तम् । यत् कर्मास्ति तत्तस्य शुभाशुभं फलभूतं सुखदुःखम् । प्रेत्य लोकान्तरं प्राप्य । अव्यग्रः एकाग्रः सन् अवाप्नोति । अत्र कृतं शुभाशुभरूपं कर्म लोकान्तरे फलदानाय सहैव गच्छतीत्यर्थः । सुग्रीवेणायं मारित इति न मन्तव्यम्, किंतु स्वकर्मणैव हतः । निमित्तमात्रं

गुणसन्निकृष्टं गुणैः प्रत्यासन्नम् । स्वगुणैस्तव सदृशमित्यर्थः ॥२२–२४॥ तथा त्विति । प्रायमुपोपवेष्टुं प्रायोपवेशं कर्तुम्, अनशनदीक्षां कर्तुमित्यर्थः । व्यवस्यत निश्चितवती ॥ २५ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० किष्किन्धाकाण्डव्याख्यायां विंशः सर्गः ॥२०॥ ॥१॥ गुणदोषकृतमिति । जन्तुः स्वकर्मफलहेतुकं स्वकर्मफलं वासना परम्परया हेतुः यस्य तथोक्तम् गुणदोषकृतं ज्ञानाज्ञानाभ्यां यत्कर्मास्ति तत । तादित्यविभक्तिकानिर्देशोऽयम्, तस्य शुभाशुभं फलभूतं

सुग्रीव इति भावः ॥ २ ॥ नायं शोचनीयः स्वकर्मानुरूपेण गतत्वात् । किंतु स्वात्मैव शोच्यः केन कर्मणा कं लोकं गमिष्यामीति तद्दर्शयति–शोच्येति । स्वयं शोच्या त्वं कं प्रति शोचसि । स्वयं दीना कं दीनम् अनुकम्पसे दयसे । बुद्बुदोपमे जलबुद्बुदवदस्थिरे देहे । निमित्तसप्तमी । कस्य को वाऽनुशोच्योऽस्ति, सर्वेषामप्यस्थिरत्वाविशेषात् । स्वयं स्थिर एव ह्यस्थिरं शोचेदिति भावः ॥ ३ ॥ अङ्गदस्त्विति । द्रष्टव्यः परिपालनीयः ।

शोच्या शोचसि कं शोच्यं दीनं दीनाऽनुकम्पसे । कस्य को वाऽनुशोच्योऽस्ति देहेऽस्मिन् बुद्बुदोपमे ॥ ३ ॥ अङ्गदस्तु कुमारोऽयं द्रष्टव्यो जीवपुत्रया । आयत्यां च विधेयानि समर्थान्यस्य चिन्तय ॥ ४ ॥ जानास्यनियतामेवं भूतानामागतिं गतिम् । तस्माच्छुभं हि कर्तव्यं पण्डितेनैहलौकिकम् ॥ ५ ॥ यस्मिन् हरिसहस्राणि प्रयुतान्यर्बुदानि च । वर्तयन्ति कृतांशानि सोऽयं दिष्टान्तमागतः ॥ ६ ॥ यदयं न्यायदृष्टार्थः सामदानक्षमापरः । गतो धर्मजितां भूमिं नैनं शोचितुमर्हसि ॥ ७ ॥

आयत्याम् उत्तरकाले । समर्थानि हितानि ॥ ४ ॥ जानासीति । अनियतामागतिं गतिम्, अस्थिरतामिति यावत् । शुभम् और्ध्वदैहिकम् । ऐहलौकिकं रोदनादिकम् ॥ ५ ॥ यस्मिन्निति । यस्मिन् विषये । हरीत्यविभक्तिकनिर्देशः । हरीणामित्यर्थः । कृतांशानि कृतविभागानि । सन्ति वर्तयन्ति जीवनं कुर्वन्ति सोऽयं दिष्टान्तं दिष्टस्य दैवकल्पितकालस्य अन्तं समाप्तिम् । "कालो दिष्टोऽप्यनेहापि" इत्यमरः । बहून् स्वजनान् जीवयित्वा गतः स्वसुकृतफलं प्राप्तुं गतः । अतः स न शोच्य इति भावः ॥ ६ ॥ यदिति । न्यायदृष्टार्थः शास्त्रदृष्टतत्त्वार्थः । साम दुःखितानां स्वजनानां सान्त्वनम् । दानम्

सुखदुःखं प्रेत्य अव्यग्रः अवाप्नोत्येवेति योजना ॥ टी०–आश्वासनप्रकारमाह–गुणदोषकृतमिति । सुकृतदुष्कृतफलं सर्वथा सर्वैरनुभाव्यमित्यर्थः ॥ २ ॥ शोच्येति । दीनमित्यत्रापि कमिति सम्बध्यते । अनुशोकः अनुबन्धशोकः । सर्वप्राणिशरीराणामनित्यतया सर्वेषां शोच्यत्वेन न कुत्रापि शोकः कार्य इत्याह न शोच्येति ॥ ३ ॥ अङ्गदस्त्विति । आयत्याम् उत्तरकाले । विधेयानि कर्तव्यानि । समर्थानि सप्रयोजकानि । अस्य अङ्गदस्य ॥ ४ ॥ पण्डिते इति सम्बुद्ध्यन्तमेतत् । शुभम् और्ध्वदैहिकं हि कर्तव्यम् । ऐहलौकिकं रोदनादिकं न कर्तव्यम् । यस्मिन् वर्तयन्ति जीवनं कुर्वन्ति । कृतांशानि कृतविभागानि । दिष्टान्तं परिकल्पितकालान्तम्, मरणमित्यर्थः ॥ ५ ॥ ६ ॥ न्यायदृष्टार्थः न्यायेन नीतिमार्गेण दृष्टार्थः दृष्टप्रयोजन इत्यर्थः । धर्मजितां वशीकृतधर्माणां भूमिं स्थानम् ॥ ७ ॥

अभीष्टार्थदानम् । क्षमा तत्कृतापराधसहनम् । एतासु परः सक्तः अयम् । धर्मजितां स्वाधीनधर्माधर्मकाणाम् । भूमिं लोकम् । यत् यस्मात् गतः । तस्मान्नैनं शोचितुमर्हसि ॥ ७ ॥ सर्व इति । हरीणाम् ऋक्षाणां च । राज्यं त्वत्सनाथं त्वया सनाथम् ॥ ८ ॥ रामानु०–हर्यृक्षपतिराज्यं चेति पाठः । अन्यथा वक्ष्यमाणाङ्गदाभिषेकवचनविरोधः स्यात् ॥ ८ ॥ ताविमाविति । ताविमौ शोकसन्तापौ शोकतत्कृततापौ । शनैः क्रमेण प्रेरय निवर्तय । भर्तृमरणशोकस्य

सर्वे हि हरिशार्दूलाः पुत्रश्चायं तवाङ्गदः । इदं हर्यृक्षराज्यं च त्वत्सनाथमनिन्दिते ॥८॥ ताविमौ शोकसन्तापौ शनैः प्रेरय भामिनि । त्वया परिगृहीतोऽयमङ्गदः शास्तु मेदिनीम् ॥ ९ ॥ सन्ततिश्च यथा दृष्टा कृत्यं यच्चापि साम्प्रतम् । राज्ञस्तत्क्रियतां तावदेष कालस्य निश्चयः ॥ १० ॥ संस्कार्यो हरिराजश्च अङ्गदश्चाभिषिच्यताम् । सिंहासनगतं पुत्रं पश्यन्ती शान्तिमेष्यसि ॥ ११ ॥ सा तस्य वचनं श्रुत्वा भर्तृव्यसनपीडिता । अब्रवीदुत्तरं तारा हनुमन्तमवस्थितम् ॥ १२ ॥ अङ्गदप्रतिरूपाणां पुत्राणामेकतः शतम् । हतस्याप्यस्य वीरस्य गात्रसंश्लेषणं वरम् ॥ १३ ॥ न चाहं हरिराजस्य प्रभवाम्यङ्गदस्य वा । पितृव्यस्तस्य सुग्रीवः सर्वकार्येष्वनन्तरः ॥ १४ ॥

सद्यो दुस्त्यजत्वादिति भावः ॥ ९ ॥ रामानु०–ताविमौ शोकसन्तापौ शनैः प्रेरय भामिनीति पाठः । प्रेरय निवर्तय । त्वयेति । अङ्गदाभिषेचनं तारादुःखशान्तये दर्शितम् ॥ ९ ॥ संततिश्चेति । संततिश्च यथा दृष्टा यत्प्रयोजनकः सन्तानो लब्धः । साम्प्रतम् इदानीम् । यच्च कृत्यं कर्तुं योग्यं तत्सर्वं राज्ञः क्रियताम् । एष निश्चयोऽस्य कालस्य योग्य इति शेषः । नतु शोक इति भावः । पुत्रोत्पादनफलमौर्ध्वदैहिकं क्रियतामित्यर्थः ॥१०॥ उक्तमर्थं वाचा दर्शयति–संस्कार्य इति । शान्तिं दुःखशमम् ॥ ११ ॥ १२ ॥ अङ्गदेति । अङ्गदप्रतिरूपाणाम् अङ्गदतुल्यानां पुत्राणां सत्पुत्राणां शतम् एकतः एकत्र एकतुलायामस्तु । हतस्याप्यस्य गात्रसंश्लेषणं गाढालिङ्गनम् एकतोऽस्तु । तयोर्मध्ये भर्तृसंश्लेषणमेव वरमित्यर्थः ॥ १३ ॥ संस्कार्य इत्यस्योत्तरमाह–न चेति । त्वत्सनाथं त्वया सनाथम् ॥ ८ ॥ ताविमाविति । तौ इमौ हरिशार्दूलम् अङ्गदम् प्रेरय निवर्तय । दुःखादिति शेषः ॥ ९ ॥ सन्ततिश्च यथा दृष्टा यत्प्रयोजनसन्तानो लब्ध इत्यर्थः । यत्कृत्यं साम्प्रतं योग्यम् तत्सर्वं राज्ञः क्रियताम् । एष निश्चयः कर्तव्यत्वेन विहितोऽयं निश्चयः । कालस्य वर्तमानस्य सम्बन्धीत्यर्थः ॥१०॥ सन्ततिरित्याद्युक्तमेव स्फुटयति–संस्कार्य इति ॥ ११ ॥ पतिव्रताधर्ममनुसृत्याह–सा तस्येति ॥ १२ ॥ अङ्गदेति । पुत्राणामेकतश्शतम् एकं शतम्, भवत्विति शेषः । तदपेक्षया अस्य गात्रसंश्लेषणं वरमित्यर्थः ॥ १३ ॥ वानरराज्याङ्गदयोरनाथत्वास्त्वया स्थानव्यमित्यत आह–न चेति । कस्तर्हि नाथ इत्यत आह पितृव्य इति ।

हरिराजस्य न प्रभवामि तस्य संस्कारकरणे न समर्थोऽस्मि । अङ्गदस्य वा न प्रभवामि तस्य राज्याभिषेककरणे न प्रभवामीत्यर्थः ॥ १४ ॥ न हीति नास्थेया नादर्तव्या । न कर्तव्येत्यर्थः । पिता पितृव्यः ॥ १५ ॥ नहीति । परत्र परलोके । इह अस्मिन् लोके शत्रभिमुखतया हतः अभिमुखहतः स चासौ वीरश्च तेन सेवितम् ॥ १६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्ड० एकविंशः सर्गः ॥ २१ ॥

न ह्येषा बुद्धिरास्थेया हनुमन्नङ्गदं प्रति । पिता हि बन्धुः पुत्रस्य न माता हरिसत्तम ॥ १५ ॥ न हि मम हरिराजसंश्रयात् क्षमतरमस्ति परत्र चेह वा । अभिमुखहतवीरसेवितं शयनमिदं मम सेवितुं क्षमम् ॥ १६ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे एकविंशः सर्गः ॥ २१ ॥

वीक्षमाणस्तु मन्दासुः सर्वतो मन्दमुच्छ्वसन् । आदावेव तु सुग्रीवं ददर्श त्वात्मजाग्रतः ॥ १ ॥
तं प्राप्तविजयं वाली सुग्रीवं प्लवगेश्वरः । आभाष्य व्यक्तया वाचा सस्नेहमिदमब्रवीत् ॥ २ ॥
सुग्रीव दोषेण न मां गन्तुमर्हसि किल्बिषात् । कृष्यमाणं भविष्येण बुद्धिमोहेन मां बलात् ॥ ३ ॥

एवममोघरामशराभिघातेन मोहसमाविष्टं वालिनं मृतं निश्चित्य संस्कारादिकरणाय त्वरमाणे हनुमति दैवात्किंचित्समाश्वस्तो वाली कर्तव्यभागं नियच्छति द्वाविंशे–वीक्षमाण इत्यादि । मन्दासुः अल्पप्राणः ॥ १ ॥ रामानु०–नन्वत्र वीक्षमाण इत्यादिना वालिनो जीवनं प्रतीयते । पूर्वसर्गे मरणोत्तरकालीनसंस्कारादिविधानं हनुमता कथमुच्यत इति चेत् अमोघरामबाणाभिघातेन मोहसमाविष्टं वालिनं मृतं निश्चित्य तथोक्तवानिति न दोषः ॥१॥ तमिति । आभाष्य सम्बोध्य ॥ २ ॥ सुग्रीवेति । किल्बिषात् राज्यविवासनदारहरणरूपकिल्बिषाद्धेतोः । मां दोषेण गन्तुं दोषसहितं ज्ञातुं नार्हसि, किंतु भविष्येण भाविफलेन हेतुना जातेन बुद्धि



अनन्तरः प्रत्यासन्नः ॥ १४ ॥ एषा बुद्धिः अङ्गदाभिलषिका बुद्धिः नास्थेया न स्मरणीया । पिता सुग्रीवः ॥ १५ ॥ स्वनिश्चयं निगमयति–नहीति ॥ १६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायामेकविंशः सर्गः ॥ २१ ॥ वीक्षमाण इति । सर्वतो वीक्षमाण इत्यादिना वालिजीवस्य प्रतीयमानत्वेऽप्यमोघरामबाणघातेन मरणस्य निश्चितत्वात् पूर्वसर्गे 'संस्कार्यो हरिराजः' इति हनुमदुक्तेर्न दोषः ॥ १ ॥ तमिति । आभाष्य सम्बोध्य ॥ २ ॥ सुग्रीवेति । किल्बिषात् राज्यविवासनदारापहरणकिल्बिषाद्धेतोः मां दोषेण गन्तुं दोषसहितं ज्ञातुं नार्हसि, किन्तु भविष्येण भाविफलेन हेतुना जातेन

मोहेन बलात्कृष्यमाणं मां गन्तुमर्हसि ॥ ३ ॥ युगपद्विहितमिति । आवयोः भ्रात्रोः भ्रातृयुक्तं भ्रातृत्वप्रयुक्तम् । सौहार्दं सुखं राज्यसुखं च । एतदुभयं दैवेन युगपन्न विहितम् । मन्ये ध्रुवम् । अव्ययमेतत् । तदिदं दैवकृतं युगपदविधानम् । अन्यथा न हि अन्यप्रकारं न भवति हि ॥ ४ ॥ प्रतीति । प्रतिपद्य, पालयेति शेषः । यद्वा प्रतिपद्य प्राप्नुहि । श्यन्नन्तोऽयम् । वैवस्वतक्षयं यमगृहम् ॥ ५ ॥ जीवितमिति । अगर्हितं यशः केनाप्यवध्यो वालीति प्रसिद्धं

युगपद्विहितं तात न मन्ये सुखमावयोः । सौहार्दं भ्रातृयुक्तं हि तदिदं तात नान्यथा ॥ ४ ॥ प्रतिपद्य त्वमद्यैव राज्यमेषां वनौकसाम् । मामप्यद्यैव गच्छन्तं विद्धि वैवस्वतक्षयम् ॥५॥ जीवितं च हि राज्यं च श्रियं च विपुलामिमाम् । प्रजहाम्येष वै तूर्णं महच्चागर्हितं यशः ॥ ६ ॥ अस्यां त्वहमवस्थायां वीर वक्ष्यामि यद्वचः । यद्यप्यसुकरं राजन् कर्तुमेव तदर्हसि ॥ ७ ॥ सुखार्हं सुखसंवृद्धं बालमेनमबालिशम् । बाष्पपूर्णमुखं पश्य भूमौ पतितमङ्गदम् । मम प्राणैः प्रियतरं पुत्रं पुत्रमिवौरसम् ॥ ८ ॥ मया हीनमहीनार्थं सर्वतः परिपालय । त्वमेवास्य हि दाता च परित्राता च सर्वतः । भयेष्वभयदश्चैव यथाऽहं प्लवगेश्वर ॥ ९ ॥ एष तारात्मजः श्रीमांस्त्वया तुल्यपराक्रमः । रक्षसां तु वधे तेषामग्रतस्ते भविष्यति ॥ १० ॥ अनुरूपाणि कर्माणि विक्रम्य बलवान् रणे । करिष्यत्येष तारेयस्तरस्वी तरुणोऽङ्गदः ॥ ११ ॥

यशः ॥ ६ ॥ अस्यामवस्थायां चरमावस्थायां यद्वचो वक्ष्यामि एतद्यद्यप्यसुकरं तथाप्यवश्यं कर्तुमर्हसि । मदुक्तरीत्या राजा भवेत्यर्थः ॥ ७ ॥ सुखार्हमिति । वयसा बालमप्यबालिशं बालबुद्धिरहितम् ॥ ममेति । प्राणैः प्राणेभ्यः । मम पुत्रं त्वम् औरसम् पुत्रमिव पश्येति संबन्धः ॥ ८ ॥ मयेत्यादि । अस्य अङ्गदस्य दाता, वस्त्राभरणादीनामिति शेषः । सर्वतः शत्रुभ्यः परित्राता । भयेष्वभयदः शत्रुपुत्रत्वेन स्थानान्निष्कासनादिभयहेतुषु विषये

बुद्धिमोहेन बलात्कृष्यमाणं मां ज्ञातुमर्हसीति सम्बन्धः ॥ ३ ॥ मन्य इत्येतदव्ययम् । यः आवयोः भ्रातृसौहार्दं भ्रातृत्वप्रयुक्तं सुखं राज्यसुखं च तदुभयं दैवेन युगपन्न विहितं मन्ये ध्रुवम्, तदिदं दैवकृतं युगपदविधानम् अन्यथा नहि अन्यप्रकारं न भवति हीति ॥ ४ ॥ ५ ॥ जीवितमिति । अगर्हितं यशः वाली केनाप्यवध्योऽप्रधृष्यश्चेति प्रसिद्धं यशः ॥ ६ ॥ ७ ॥ टी०—अबालिशं विवेकिनम् । प्राणैः प्राणेभ्यः ॥ ८ ॥ सर्वतः सर्वेष्वर्थेषु । अहीनार्थं परिपालय पूर्णकामं कुर्वित्यर्थः ॥ ९–११ ॥

अभयदः ॥ ९-११ ॥ सुषेणेति । अर्थसूक्ष्मविनिश्चये सूक्ष्मार्थविनिश्चये । औत्पातिकं उत्पातविषयज्ञानं च । परिनिष्ठिता सञ्जातनिष्ठा । समर्थेति यावत् ॥ १२ ॥ यदिति । न परिवर्तते न भवतीत्यर्थः ॥१३॥ राघवस्य चेति । विमानितः, राघव इति शेषः ॥१४॥ इमामिति । संप्रजह्यान्मृते मयि मृते सति श्रीरिमां काञ्चनीं मालां संप्रजह्यात् । ततः पूर्वमेव मयि जीवति गृहाणेति भावः ॥ १५ ॥ रामानु०-संप्रजह्याः संप्रजहि । शत्रूनिति शेषः ॥ १५ ॥ इतीति ।

सुषेणदुहिता चेयमर्थसूक्ष्मविनिश्चये । औत्पातिके च विविधे सर्वतः परिनिष्ठिता ॥ १२ ॥ यदेषा साध्विति ब्रूयात् कार्यं तन्मुक्तसंशयम् । नहि तारामतं किंचिदन्यथा परिवर्तते ॥ १३ ॥ राघवस्य च ते कार्यं कर्तव्यमविशङ्कया । स्यादधर्मो ह्यकरणे त्वां च हिंस्याद्विमानितः ॥ १४ ॥ इमां च मालामाधत्स्व दिव्यां सुग्रीव काञ्चनीम् । उदारा श्रीः स्थिता ह्यस्यां संप्रजह्यान्मृते मयि ॥ १५ ॥ इत्येवमुक्तः सुग्रीवो वालिना भ्रातृसौहृदात् । हर्षं त्यक्त्वा पुनर्दीनो ग्रहग्रस्त इवोडुराट् ॥ १६ ॥ तद्वालिवचनाच्छान्तः कुर्वन्युक्तमतन्द्रितः । जग्राह सोऽभ्यनुज्ञातो मालां तां चैव काञ्चनीम् ॥ १७ ॥ तां मालां काञ्चनीं दत्त्वा वाली दृष्ट्वाऽऽत्मजं स्थितम् । संसिद्धः प्रेत्यभावाय स्नेहादङ्गदमब्रवीत् ॥ १८ ॥ देशकालौ भजस्वाद्य क्षममाणः प्रियाप्रिये । सुखदुःखसहः काले सुग्रीववशगो भव ॥ १९ ॥

दीनः अभूदिति शेषः । ग्रहग्रस्तः राहुग्रस्तः ॥१६॥ तदिति । ततः तदनन्तरम् । शान्तः त्यक्तवैरः ॥१७॥ तामिति । प्रेत्यभावाय मरणाय । संसिद्धः कृतनिश्चयः ॥१८॥ अद्य मत्प्रयाणानन्तरम् । देशकालौ भजस्व । गत्यर्था ज्ञानार्थाः । देशकालौ जानीहि । अस्मिन् देशे अस्मिन् काले च एवं वर्तितव्यम्

सुषेणेति । अर्थसूक्ष्मविनिश्चये दुर्जयकार्येनिश्चय इत्यर्थः । औत्पातिके उत्पातोद्भवज्ञान इत्यर्थः । सर्वतः परिनिष्ठिता सर्वत्र चतुरेत्यर्थः ॥ टी०-ननु समुद्रसञ्जातायास्तारायास्सुषेणदुहितृत्वं कथमिति चेत् ? तत्र क्षीराब्धिमथनसमयोत्पन्नां तारां दृष्ट्वा सुषेणो वामं करमग्रहीत् वाली तु तारायाः दक्षिणं करमगृह्णात् । तदा अन्योन्यं विवादे सति देवैः सुषेणदुहितृत्वं तारायाः वालिनो जायात्वं च निश्चितम् । तदुक्तं स्कान्दे-"देवैः सुषेणकलहे पुत्रीति प्रतिपादिता । सुषेणो दुहितुस्तस्याः स्वयंवरमकल्पयत् । इत्थमूढा कपीन्द्रेण तारा सर्वाङ्गसुन्दरी । सुग्रीवमेकदा रात्रौ रूपसादृश्यमोहिता । प्रार्थयामास कामार्ता रन्तुं रतिवती प्रभुम् । न मयाऽयोनिजाताया गमनं लोकगर्हितम् ॥" इति ॥ अत एव यदेषेति ॥ १२-१५ ॥ इत्येवमिति । दीनः अभूदिति शेषः ॥ १६ ॥ तदिति । ततः तदनन्तरम् । शान्तः त्यक्तवैरः ॥ १७ ॥ प्रेत्यभावाय संसिद्धः निश्चितमरण इत्यर्थः ॥ १८ ॥ प्रियाप्रियौ अनुकूलप्रतिकूलव्यापारौ ॥ १९ ॥ २० ॥

एवं न वर्तितव्यमिति विवेचयेत्यर्थः । प्रियाप्रिये क्षममाणः । प्रमो प्रियवचनवदप्रियवचनमपि सोढव्यमित्यर्थः । काले सुखदुःखसहः । दुःखकाले सुखं सुखकाले दुःखं च सहमान इत्यर्थः । सुग्रीववशगो भव सुग्रीवपरतन्त्रो भव ॥ १९ ॥ २० ॥ मास्येति । अस्य सुग्रीवस्यामित्रैर्गतं प्राप्तं पुरुषं मा गच्छेः । अस्य शत्रुमित्रं न भजेरित्यर्थः । शत्रुभिः सह च मा गच्छेः ॥ २१ ॥ न चेति । अतिप्रणयः अतिस्नेहः, अप्रणयः स्नेहाभावश्च । अन्तरङ्गभव मध्यमभाव

यथा हि त्वं महाबाहो लालितः सततं मया । न तथा वर्तमानं त्वां सुग्रीवो बहु मंस्यते ॥ २० ॥ मास्यामित्रैर्गतं गच्छेर्मा शत्रुभिररिंदम । भर्तुरर्थपरो दान्तः सुग्रीववशगो भव ॥ २१ ॥ न चातिप्रणयः कार्यः कर्तव्योऽप्रणयश्च ते । उभयं हि महान् दोषस्तस्मादन्तरदृग्भव ॥ २२ ॥ इत्युक्त्वाऽथ विवृत्ताक्षः शरसंपीडितो भृशम् । विवृतैर्दशनैर्भीमै र्बभूवोत्क्रान्तजीवितः ॥ २३ ॥ ततो विचुक्रुशुस्तत्र वानरा हरियूथपाः । परिदेवयमानास्ते सर्वे प्लवगपुङ्गवाः ॥ २४ ॥ किष्किन्धा ह्यद्य शून्याऽसीत्स्वर्गते वानराधिपे । उद्यानानि च शून्यानि पर्वताः काननानि च । हते प्लवग शार्दूले निष्प्रभा वानराः कृताः ॥ २५ ॥ यस्य वेगेन महता काननानि वनानि च । पुष्पौघेणानुबध्यन्ते करिष्यति तदद्य कः ॥ २६ ॥

मवलम्बस्वेत्यर्थः ॥ २२ ॥ इतीति । विवृत्ताक्षः भ्रामितनेत्रः । विवृतैः प्रकाशितैः, अत एव भीमैः । दशनैः दन्तैरुपलक्षितः । उत्क्रान्तजीवितः उद्गतप्राणः ॥ २३ ॥ तत इति । परिदेवयमानाः रुदन्त इत्यर्थः । प्लवगपुङ्गवाः बलेन श्रेष्ठाः । पुनश्च हरियूथपाः यूथस्य निर्वोढारः । वानराः वानर जातयः ॥ २४ ॥ परिदेवनमेवाह–किष्किन्धेत्यादिना । शून्या शून्यप्राया ॥ २५ ॥ यस्येति । वेगेन पराक्रमेण । काननानि अरण्यानि । वनानि जलानि, सरांसीत्यर्थः । पुष्पौघेण अनुबध्यन्ते सम्बध्यन्ते, सदा पुष्पितानि भवन्तीत्यर्थः । तत्पुष्पानुबन्धनम् । अद्य तु वालिमरणानन्तरकाले ।

अस्य सुग्रीवस्य अमित्रैर्गतं संसृष्टं पुरुषं मा गच्छ, शत्रुभिश्च सह मा गच्छ । अस्य अमित्रानमित्रसम्बन्धिनश्च वर्जयेत्यर्थः ॥ २१ ॥ न चेति । अन्तरङ्गभव मध्यमभाव मवलम्बस्वेत्यर्थः । यद्वा उपदेश्यं रहस्यमाह न चेति । अवसरज्ञानपुरःसरं मध्यमभावमवलम्बस्वेत्यर्थः ॥ २२–२५ ॥ यस्येति । यस्य महता वेगेन काननानि निबिडा रण्यानि, वनानि विरलारण्यानि पुष्पौघैः सह अनुबध्यन्ते अनुबद्धानि क्रियन्ते, तदद्य कः करिष्यति ? लघुतरपुष्पौघैस्सह गुरुतरारण्यवनानां स्वानुगमन

यद्वा वनानि क्षुद्रारण्यानि । यस्मिन् वालिनि गच्छति सति तदूरुवेगेनाविशेषेण सर्वाणि वनानि पुष्पैः सहानुगच्छन्तीत्यर्थः ॥ २६ ॥ येनेति । गोलभस्य गोलभाख्यस्य । उपशाम्यति उपाशाम्यत् । भूते लट् । दंष्ट्राकरालवान् करालदंष्ट्रावान् । परनिपातः ॥ २७–२९॥ रामानु०–दंष्ट्राकरालवान् । भावप्रधानो निर्देशः । दंष्ट्राभ्यां करालवान् ॥ २७--२९ ॥ हत इति । शर्म सुखम् । सिंहयुत इति । सिंहस्थानीयो रामः ॥ ३० ॥ ततस्त्विति । व्यसनार्णवं

येन दत्तं महद्युद्धं गन्धर्वस्य महात्मनः । गोलभस्य महाबाहोर्दश वर्षाणि पञ्च च ॥ २७ ॥ नैव रात्रौ न दिवसे तद्युद्धमुपशाम्यति । ततस्तु षोडशे वर्षे गोलभो विनिपातितः ॥ २८ ॥ हत्वा तं दुर्विनीतं तु वाली दंष्ट्राकरालवान् । सर्वाभयकरोऽस्माकं कथमेष निपातितः ॥ २९ ॥ हते तु वीरे प्लवगाधिपे तदा प्लवङ्गमास्तत्र न शर्म लेभिरे । वनेचराः सिंहयुते महावने यथा हि गावो निहते गवांपतौ ॥ ३० ॥ ततस्तु तारा व्यसनार्णवाप्लुता मृतस्य भर्तुर्वदनं समीक्ष्य सा । जगाम भूमिं परिरभ्य वालिनं महाद्रुमं छिन्नमिवाश्रिता लता ॥ ३१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

ततः समुपजिघ्रन्ती कपिराजस्य तन्मुखम् । पतिं लोकाच्च्युतं तारा मृतं वचनमब्रवीत् ॥ १ ॥
शेषे त्वं विषमे दुःखमकृत्वा वचनं मम । उपलोपचिते वीर सुदुःखे वसुधातले ॥ २ ॥

आप्लुता मग्नेति यावत् ॥ ३१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥
अथ मरणानन्तरं ताराविलापस्त्रयोविंशे–ततः समुपजिघ्रन्तीत्यादि । लोकाच्च्युतम् अस्माल्लोकाच्च्युतम् । स्वर्गतमित्यर्थः ॥ १ ॥ शेष इति । दुःख मिदानीं को वा करिष्यतीत्यर्थः ॥ २६ ॥ गोलभस्य गोलभाख्यस्य । उपशाम्यति । भूते लट् ॥ २७ ॥ षोडशे षोडशतमे ॥ २८ ॥ तं हत्वेति । दंष्ट्राकरालवान् करालदंष्ट्रावानित्यर्थः ॥ २९–३१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां द्वाविंशः सर्गः ॥ २२ ॥ ततइति । लोकाच्च्युतम् अस्माल्लोकाद्विभ्रंश्य लोकान्तरं प्राप्तमित्यर्थः । बन्धुजनाद्वियुक्तमिति वा ॥ १ ॥ शेष इति । दुःखं यथा तथा सुदुःखे सुतरां दुःखकरे ॥ २ ॥ ३ ॥
स०–आवने सम्पप्रक्षेदे । नन्यादित्वाल्ल्युः । वालिनि हते सति अवराः जडप्रायास्सन्तः शर्म न लेभिरे । द्वितीयवनेचरशब्दो वानरपरः । गवांपतौ गोपाले । अलुक्समासत्वाद्वा पतिरित्याख्यात इत्यादि रीत्या वा साधुत्वं शब्दः ॥ ३० ॥ स०–लोकात् देहात् च्युतम् ॥ लोकश्रुतेति पाठे–श्रुता प्रसिद्धेत्यर्थः ॥ १ ॥ वि०–उपलैः पाषाणैः उपचिते व्याप्ते । सुदुःखे सुतरां दुःखकरे ॥ २ ॥

मित्येतत् क्रियाविशेषणम् । सुदुःखे सुतरां दुष्करे ॥ २ ॥ ३ ॥ सुग्रीवस्येति । त्वं सुग्रीवस्य [illegible] बहुशः कान्दिशीकस्य वशं प्राप्तः । सुग्रीव एव विक्रान्त इत्येषः विधिः दैवव्यापारः । अहो आश्चर्यकरो भवति ॥ ४ ॥ ऋक्षवानरेति । कृच्छ्रं दुःखम् ॥ ५ ॥ इदमिति । युधि हतो यत्र शेषे । पुरा त्वया निहता रिपवो यत्र शायिताः तदिदं वीरशयनमित्यन्वयः । युद्धपरायणस्य तव युद्धेनैव मरणं प्राप्तं खल्विति भावः ॥ ६ ॥ विशुद्धसत्त्वाभि

मत्तः प्रियतरा नूनं वानरेन्द्र मही तव । शेषे हि तां परिष्वज्य मां च न प्रतिभाषसे ॥ ३ ॥ सुग्रीवस्य वशं प्राप्तो विधिरेष भवत्यहो । सुग्रीव एव विक्रान्तो वीर साहसिकप्रिय ॥ ४ ॥ ऋक्षवानरमुख्यास्त्वां बलिनः पर्युपासते । एषां विलपितं कृच्छ्रमङ्गदस्य च शोचतः । मम चेमां गिरं श्रुत्वा किं त्वं न प्रतिबुध्यसे ॥ ५ ॥ इदं तद्वीरशयनं यत्र शेषे हतो युधि । शायिता निहता यत्र त्वयैव रिपवः पुरा ॥ ६ ॥ विशुद्धसत्त्वाभिजन प्रिययुद्ध मम प्रिय । मामनाथां विहायैकां गतस्त्वमसि मानद ॥ ७ ॥ शूराय न प्रदातव्या कन्या खलु विपश्चिता । शूरभार्यां हतां पश्य सद्यो मां विधवां कृताम् ॥ ८ ॥ अवभग्नश्च मे मानो भग्ना मे शाश्वती गतिः । अगाधे च निमग्नाऽस्मि विपुले शोकसागरे ॥ ९ ॥ अश्मसारमयं नूनमिदं मे हृदयं दृढम् । भर्तारं निहतं दृष्ट्वा यन्नाद्य शतधा गतम् ॥ १० ॥ सुहृच्चैव हि भर्ता च प्रकृत्या मम च प्रियः । आहवे च पराक्रान्तः शूरः पञ्चत्वमागतः ॥ ११ ॥

जनेति । कूटयुद्धाभावाद्विशुद्धबल । सत्कुलप्रसूतत्वाद्विशुद्धकुल ॥ ७ ॥ रामानु०—प्रिययुद्ध युद्धपरायण ॥ ७ ॥ शूरायेति । अप्रदातव्यत्वे हेतुमाह शूरभार्यामिति ॥ ८ ॥ अवभग्नश्चेति । गतिः पतिशुश्रूषेत्यर्थः । यद्वा गम्यत इति गतिः, सुखमित्यर्थः ॥ ९ ॥ अश्मसारेति । अश्मसारमयत्वे हेतुः दृढमिति ॥ १० ॥ हृदयभेदने हेतुमाह—सुहृदिति । पञ्चत्वं मरणम् ॥ ११ ॥ १२ ॥

टी०—सुग्रीव एव विक्रान्तो भवतीति यत् एष विधिरहो इत्यन्वयः ॥ ४ ॥ ५ ॥ इदमिति । युधि हतो यत्र शेषे, पुरा त्वया निहता रिपवो यत्र शायिताः तदिदं वीरशयनमिति योजना । युद्धपरायणस्य तव युद्धेनैव मरणं प्राप्तमिति भावः ॥ ६–८ ॥ अवभग्न इति । शाश्वती गतिः, गम्यत इति गतिरिति व्युत्पत्त्या प्राप्यभूतपतिशुश्रूषोच्यते । मानः त्वत्कलत्रमहमित्येवंरूपः ॥ ९ ॥ १० ॥ हृदयभेदने हेतुमाह—सुहृदिति ॥ ११ ॥

स्वगात्रेति । कृमेः इन्द्रगोपस्य राग इव रागो यस्मिन् स क्रिमिरागः परिस्तोमः आस्तरणं यस्मिन् स तथा ॥१३॥१४॥ १५ ॥ शरेणेति । वार्याभि वारितास्मीत्यर्थः ॥१६॥ उद्बर्हेति । उद्बर्ह उद्धृतवान् । नीलः सुग्रीवसेनापतिः॥१७॥ तस्येति । निष्कृष्यमाणस्य तस्य द्युतिः । अस्तमस्तकसंरुद्धः अस्ताद्रिशिखरनिरुद्धः । दिनकरादुद्गच्छन् रश्मिरिव बभौ । पूर्वश्लोकोक्तसर्पसाम्यापेक्षया चशब्दः ॥ १८ ॥ पेतुरिति । व्रणेभ्यः इति बहुवचनं पाशा

पतिहीना तु या नारी कामं भवतु पुत्रिणी । धनधान्यैः सुपूर्णापि विधवेत्युच्यते जनैः ॥ १२ ॥ स्वगात्रप्रभवे वीर शेषे रुधिरमण्डले । कृमिरागपरिस्तोमे त्वमात्मशयने यथा ॥ १३ ॥ रेणुशोणितसंवीतं गात्रं तव समन्ततः । परि रब्धुं न शक्नोमि भुजाभ्यां प्लवगर्षभ ॥ १४ ॥ कृतकृत्योऽद्य सुग्रीवो वैरेऽस्मिन्नतिदारुणे । यस्य रामविमुक्तेन हृतमेकेषुणा भयम् ॥ १५ ॥ शरेण हृदि लग्नेन गात्रसंस्पर्शने तव । वार्यामि त्वां निरीक्षन्ती त्वयि पञ्चत्वमागते ॥ १६ ॥ उद्बबर्ह शरं नीलस्तस्य गात्रगतं तदा । गिरिगह्वरसंलीनं दीप्तमाशीविषं यथा ॥ १७ ॥ तस्य निष्कृष्य माणस्य बाणस्य च बभौ द्युतिः । अस्तमस्तकसंरुद्धो रश्मिर्दिनकरादिव ॥१८॥ पेतुः क्षतजधारास्तु व्रणेभ्यस्तस्य सर्वशः । ताम्रगैरिकसंपृक्ता धारा इव धराधरात् ॥१९॥ अवकीर्णं विमार्जन्ती भर्तारं रणरेणुना । अस्रैर्नयनजैः शूरं सिषेचास्त्रसमाहतम् ॥२०॥ रुधिरोक्षितसर्वाङ्गं दृष्ट्वा विनिहतं पतिम् । उवाच तारा पिङ्गाक्षं पुत्रमङ्गदमङ्गना ॥२१॥

धिकरणन्यायेनावयवबहुत्वात् । यद्वा शिलापादपप्रहारकृतव्रणानि एतावत्पर्यन्तं शोणितनिर्गमशून्यतया स्थितानि इदानीं शरव्रणाच्छोणितानिर्गमकाले

पतिरहितेपि पुत्रिण्या त्वया एतादृशशोको न कार्य इत्यत आह–पतिहीनेति॥१२॥ कृमिरागो लाक्षारञ्जितः परिस्तोमः कुथो यस्मिन् तत्तथा। "क्रिमिरागं वदन्त्यार्या लाक्षिकं प्रियदर्शनम्" इत्युत्पलमाला । यद्वा कृमेः इन्द्रगोपस्य राग इव रागो यस्य सः कृमिरागः, परिस्तोमो यस्मिन् शयने तत्तथा ॥ १३ ॥ १४ ॥ यस्य सुग्रीवस्य । अस्मिन्नतिदारुणे वैरे सति, वालिना सहेति शेषः । रामविमुक्तेनैकेषुणा भयं हृतं सः अद्य कृतकृत्य इति योजना ॥ १५ ॥ त्वयि पञ्चत्वमागते सति त्वां निरीक्षन्त्यहम् तव संस्पर्शने विषये हृदि लग्नेन शरेण वार्यामि वारितास्मीत्यन्वयः ॥ १६ ॥ १७ ॥ तस्येति । निष्कृष्यमाणस्य तस्य बाणस्य द्युतिः, अस्तमस्तकसंरुद्धः अस्ताद्रिशिखरसंरुद्धो दिनकरादुद्गच्छन् रश्मिरिव बभौ ॥ १८ ॥ पेतुरिति । शरपादपशिलाजनितव्रणापेक्षया व्रणेभ्य इति बहुवचनप्रयोगः ॥ १९–२१ ॥

सर्वेभ्योपि शोणितानि सुस्रुवुरित्यर्थः । इदानीं रुधिरनिर्गमादितावत्पर्यन्तं सर्वात्मना प्राणो न गत इति गम्यते ॥ १९–२१ ॥ अवस्थामिति । पापकर्मणा पापरूपकर्मणा सम्प्रसक्तस्येति सम्बन्धः ॥ २२–२४ ॥ अभिवादयमानामिति । त्वामभिवादयमानमित्यन्वयः ॥ २५ ॥ २६ ॥

रामानु०–अभिवादयमानं त्वामिति पाठः । अत्र उवाच तारेत्यनुपज्यतें ॥ सिंहेन निहतमिति पाठः ॥ २५ ॥ २६ ॥ इष्ट्वेति । रामप्रहरणाम्भस्येवावभृथ इति व्यस्त

अवस्थां पश्चिमां पश्य पितुः पुत्र सुदारुणाम् । सम्प्रसक्तस्य वैरस्य गतोऽन्तः पापकर्मणा ॥ २२ ॥ बालसूर्योदयतनुं प्रयान्तं यमसादनम् । अभिवादय राजानं पितरं पुत्र मानदम् ॥२३॥ एवमुक्तः समुत्थाय जग्राह चरणौ पितुः । भुजाभ्यां पीनवृत्ताभ्यामङ्गदोऽहमिति ब्रुवन् ॥ २४ ॥ अभिवादयमानं त्वामङ्गदं त्वं यथा पुरा । दीर्घायुर्भव पुत्रेति किमर्थं नाभिभाषसे ॥ २५ ॥ अहं पुत्रसहाया त्वामुपासे गतचेतसम् । सिंहेन निहतं सद्यो गौः सवत्सेव गोवृषम् ॥ २६ ॥ इष्ट्वा सङ्ग्रामयज्ञेन रामप्रहरणाम्भसि । अस्मिन्नवभृथे स्नातः कथं पत्न्या मया विना ॥ २७ ॥ या दत्ता देवराजेन तव तुष्टेन संयुगे । शातकुम्भमयीं मालां तां ते पश्यामि नेह किम् ॥ २८ ॥ राजश्रीर्न जहाति त्वां गतासुमपि मानद । सूर्यस्यावर्तमानस्य शैलराजमिव प्रभा ॥ २९ ॥ न मे वचः पथ्यमिदं त्वया कृतं न चास्मि शक्ता विनिवारणे तव । हता सपुत्राऽस्मि हतेन संयुगे सह त्वया श्रीर्विजहाति मामिह ॥३०॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

रूपकम् ॥ २७ ॥ २८ ॥ राजश्रीरिति । शैलराजं मेरुम् । आवर्तमानस्य अस्तं गच्छत इत्यर्थः ॥ २९ ॥ न म इति । पथ्यं हितं वचः । न कृतं नानुष्ठितम् ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

अवस्थामिति । पापकर्मणा पापरूपकर्मणा । सम्प्रसक्तस्य प्राप्तस्य वैरस्यान्तो गतः वैरं समाप्तमित्यर्थः ॥२२–२८॥ राजश्रीरिति । शैलराजं मेरुम् । आवर्तमानस्य प्रदक्षिणं कुर्वतः । अवर्तमानस्य इति च छेदः । अदृश्यस्येत्यर्थः ॥२९॥३०॥ इति श्रीमहे० श्रीरामायणतत्त्व० किष्किन्धाकाण्डव्याख्यायां त्रयोविंशः सर्गः ॥ २३ ॥

अथ ताराप्रलापश्रवणदुःखितसुग्रीवनिर्वेदप्रदर्शनपूर्वकं ताराया रामे प्रतिपत्तिं दर्शयति चतुर्विंशे—तामित्यादि। अश्रुवेगेन च दुरासदेन दुष्प्रापेण शोकमहार्णवेन च अभिप्लुतां व्याप्तां तां तारां पश्यन्। तेन भ्रातृवधेन च। तेपे दुःखितोऽभूत् ॥ १ ॥ स इति। मुखेन उपलक्षितः सः। वीक्ष्य, तारामिति शेषः ॥ २ ॥ स तमिति। उदात्तं श्रेष्ठम्। लक्षणेन सुलक्षणेन लक्षिताङ्गम् ॥ ३ ॥ यथेति। यथाप्रतिज्ञातं प्रतिज्ञातमनतिक्रम्य। दृष्ट

तां चाश्रुवेगेन दुरासदेन त्वभिप्लुतां शोकमहार्णवेन। पश्यंस्तदा वाल्यनुजस्तरस्वी भ्रातुर्वधेनाप्रतिमेन तेपे ॥१॥ स बाष्पपूर्णेन मुखेन वीक्ष्य क्षणेन निर्विण्णमना मनस्वी। जगाम रामस्य शनैः समीपं भृत्यैर्वृतः सम्परिदूयमानः ॥२॥ स तं समासाद्य गृहीतचापमुदात्तमाशीविषतुल्यबाणम्। यशस्विनं लक्षणलक्षिताङ्गमवस्थितं राघवमित्युवाच ॥ ३ ॥ यथाप्रतिज्ञातमिदं नरेन्द्र कृतं त्वया दृष्टफलं च कर्म। ममाद्य भोगेषु नरेन्द्रपुत्र मनो निवृत्तं सह जीवितेन ॥४॥ अस्यां महिष्यां तु भृशं रुदन्त्यां पुरे च विक्रोशति दुःखतप्ते। हतेऽग्रजे संशयितेऽङ्गदे च न राम राज्ये रमते मनो मे ॥ ५ ॥ क्रोधादमर्षादतिविप्रधर्षात् भ्रातुर्वधो मेऽनुमतः पुरस्तात्। हते त्विदानीं हरियूथपेऽस्मिन् सुतीव्रमिक्ष्वाकुकुमार तप्स्ये ॥ ६ ॥ श्रेयोऽद्य मन्ये मम शैलमुख्ये तस्मिन्निवासश्चिरमृश्यमूके। यथा तथा वर्तयतः स्ववृत्त्या नेमं निहत्य त्रिदिवस्य लाभः ॥ ७ ॥

फलं दृष्टराज्यफलकम्। कर्म त्वया कृतम्। जीवितेन सह स्थितेषु भोगेषु जीविते भोगेषु च। मनो निवृत्तमित्यर्थः ॥ ४ ॥ अस्यामिति। पुरे पुरस्थजने। संशयिते पितृमरणदुःखेन जीवति वा न वेति संशयविषयीभूते सति। राज्ये मनः न रमते रतिं न प्राप्नोति ॥ ५ ॥ क्रोधादिति। क्रोधान्निर्निमित्तनिर्वासनकृतात्। अमर्षात्परुषभाषणाक्षमया। अतिविप्रधर्षात् अत्यन्तमाक्रमणाच्च ॥ ६ ॥ श्रेय इति। यथा तथा कथंचित्। स्ववृत्त्या

॥ १ ॥ स इति। बाष्पपूर्णेन मुखेन उपलक्षिताम्, तारामिति शेषः ॥ २ ॥ ३ ॥ यथेति। दृष्टफलं दृष्टराज्यफलं कर्म कृतम् ॥ टी०—इदं वालिवधरूपं कर्म यथा प्रतिज्ञातं तथैव कृतम्, तर्हि सर्वथैव राज्यमनुभूयतामित्याशङ्क्याह—ममाद्येति ॥ ४ ॥ अस्यामिति। संशयिते पितुर्मरणदुःखेन जीवति वा नवेति संशयविषयभूते। टी०—मनो न रमत इत्यन्वयः ॥ ५ ॥ तर्हि वालिवधप्रयत्नः किमर्थं कृत इत्याह—क्रोधादिति। पुरस्तात् आदौ। अतिविप्रधर्षात् अत्यन्ततिरस्कारात्तन्निमित्तात् अमर्षात् असहनात् तदुत्पन्नात्क्रोधात् मनःप्रज्वलनात् भ्रातृवधो मेऽनुमत इत्यन्वयः। इदानीं तु सुतीव्रम् अत्यन्तम्। तप्स्ये, वैरस्य मरणान्तत्वादिति भावः ॥ ६ ॥ स्ववृत्त्या वानरजात्युचितया। इमं वालिनं गत्वा ॥ ७ ॥

वानरजात्युचितवृत्त्या । तस्मिन् शैलमुख्ये ऋश्यमूके निवासः श्रेयस्करः । इमं वालिनं निहत्य त्रिदिवस्य स्वर्गस्य लाभोऽपि न श्रेय इत्यर्थः ॥ ७ ॥ न त्वामिति । महात्मा महास्वभावः । मतिमान् कर्तव्याकर्तव्यविवेकशीलः । अयं वाली । त्वां न जिघांसामि न मारयितुमिच्छामि । चर यथेष्टं गच्छेति मामुवाचेति यत् तद्वचः तस्यैव अनुरूपं सदृशम् तद्बुद्धिशीलतुल्यम् । इदं भ्रातृवधरूपं कर्म तु मे दुरात्मनो दुर्मतेरनुरूपम् ॥ ८ ॥ भ्रातेति ।

न त्वां जिघांसामि चरेति यन्मामयं महात्मा मतिमानुवाच । तस्यैव तद्राम वचोऽनुरूपमिदं पुनः कर्म च मेऽनुरूपम् ॥ ८ ॥ भ्राता कथं नाम महागुणस्य भ्रातुर्वधं राघव रोचयेत । राज्यस्य दुःखस्य च वीर सारं न चिन्तयन् काम पुरस्कृतः सन् ॥ ९ ॥ वधो हि मे मतो नासीत्स्वमाहात्म्याव्यतिक्रमात् । ममासीद् बुद्धिदौरात्म्यात्प्राणहारी व्यतिक्रमः ॥ १० ॥ द्रुमशाखावभग्नोऽहं मुहूर्तं परिनिष्टनन् । सान्त्वयित्वा त्वनेनोक्तो न पुनः कर्तुमर्हसि ॥ ११ ॥ भ्रातृत्वमार्यभावश्च धर्मश्चानेन रक्षितः । मया क्रोधश्च कामश्च कपित्वं च प्रदर्शितम् ॥ १२ ॥ अचिन्तनीयं परिवर्जनीयमनीप्सनीयं स्वनवेक्षणीयम् । प्राप्तोस्मि पाप्मानमिमं नरेन्द्र भ्रातुर्वधात्त्वाष्ट्रवधादिवेन्द्रः ॥ १३ ॥

राज्यस्य भ्रातृवधसाध्यस्य । दुःखस्य वधानन्तरभाविदुःखस्य च । सारम् उत्कर्षम् । न चिन्तयन् । उभयोस्तारतम्यमचिन्तयन्नित्यर्थः ॥ ९ ॥ महात्मेत्युक्तं विशदयति—वध इति । अस्य वालिनः । स्वमाहात्म्यस्य स्वमहत्त्वस्य अव्यतिक्रमात् अनतिक्रमणात् । मे वधः मन्निधनं मतो नासीत् । मम तु बुद्धिदौरात्म्यात् बुद्धेर्दुःस्वभावात् । प्राणहारी भ्रातृवधकारी । व्यतिक्रमः अमर्यादा आसीत् ॥ १० ॥ मतो नासीदित्युक्तं विशदयति—द्रुमेति । परिनिष्टनन् आर्तरवं कुर्वन् । न पुनः कर्तुमर्हसि, युद्धमिति शेषः । अत्रेतिकरणं द्रष्टव्यम् ॥ ११ ॥ १२ ॥ अचिन्तनीयमिति । अचिन्तनीयम्

वालिनं प्रशंसन्नात्मानं निन्दति—न त्वामिति । इदं कर्म भ्रातृहननरूपं कर्म ॥ ८ ॥ भ्रातेति । राज्यस्य दुःखस्य च सारं न चिन्तयन् भ्रातृवधात् प्राप्तस्य राज्यस्य भ्रातृवधजनितदुःखस्य चोत्कर्षं न चिन्तयन्, उभयोस्तारतम्यं न चिन्तयन्नित्यर्थः ॥ ९ ॥ मे मम । वधः मतः सम्मतः नासीत्, वालिन इति शेषः । स्वमाहात्म्याव्यतिक्रमात् स्वमाहात्म्यानुल्लङ्घनात् । मम बुद्धिदौरात्म्यात् बुद्धिमोहात् । प्राणहानिव्यतिक्रमः वालिवधरूपः अन्यायः आसीदित्यर्थः ॥ १० ॥ द्रुमेति । परिनिष्टनन् आर्तरवं मुञ्चन्नहं न पुनः कर्तुमर्हसीत्यनेन वालिना उक्त इति सम्बन्धः ॥ ११ ॥ १२ ॥ अचिन्तनीयमिति । अचिन्तनीयं पापचित्तैरपि चिन्तयितुमयोग्यम् । परिवर्जनीयं

अपरिच्छेद्यमित्यर्थः। परिवर्जनीयं साधुभिस्त्यक्तव्यम्। अनीप्सनीयम् अनभिलपणीयम्। कदाचिदपि इच्छाया अयोग्यमित्यर्थः। स्वनवेक्षणीयं सुतरामदर्शनीयम्, जुगुप्सितमित्यर्थः। त्वष्टुः पुत्रः त्वाष्ट्रः विश्वरूपः। तं हत्वा इन्द्रो महान्तं पाप्मानमगमदिति कथा ॥१२॥ पाप्मानमिति। इन्द्रस्य परमैश्वर्यसंपन्नस्य पाप्मानं मह्यादयः ऊषरफेननिर्यासऋतुरूपेण जगृहुः। खातपूरणादिवरप्रदत्त्वात्। मम तु शाखामृगस्य कस्याप्यनुपकारकस्य। पाप्मानं

पाप्मानमिन्द्रस्य मही जलं च वृक्षाश्च कामं जगृहुः स्त्रियश्च। को नाम पाप्मानमिमं क्षमेत शाखामृगस्य प्रतिपत्तु मिच्छन् ॥ १४ ॥ नार्हामि संमानमिमं प्रजानां न यौवराज्यं कुत एव राज्यम्। अधर्मयुक्तं कुलनाशयुक्तमेवंविधं राघव कर्म कृत्वा ॥ १५ ॥ पापस्य कर्तास्मि विगर्हितस्य क्षुद्रस्य लोकापकृतस्य चैव। शोको महान् मामभिवर्तते ऽयं वृष्टेर्यथा निम्नमिवाम्बुवेगः ॥ १६ ॥

प्रतिपत्तुं किंचिद्वरम् प्राप्तुमिच्छन् को नाम क्षमेत, ग्रहीतुमिति शेषः। यद्यपि विश्वरूपाख्यायिकायां त्वाष्ट्रशिरस्त्रयच्छेदकृतब्रह्महत्यात्रितयं पृथिवीवनस्पतिस्त्रिय एव जगृहुरित्युक्तम्। तथापि शाखान्तरानुरोधेन जलेनापि कश्चिदंशो गृहीत इत्यवगन्तव्यम् ॥१४॥ नार्हामीति। कुलनाशयुक्तम्। कुलनाशफलकम्, वालिविनाशेनाङ्गदादेरजीवनादिति भावः। एवंविधं भ्रातृवधरूपं कर्म कृत्वा। प्रजानां संमानं प्रजाकर्तृकराजसंमानम्। नार्हामि। अत एव यौवराज्यमेव नार्हामि, कुतो महाराज्यमिति भावः ॥१५॥ पापस्येति। क्षुद्रस्य दुष्टस्य। विगर्हितस्य विशेषेण शिष्टैर्निन्दितस्य। लोकापकृतस्य सर्वलोकैस्त्यक्तस्य पापस्य कर्तास्मि। एतादृशपापस्योत्तरपापहेतुत्वज्ञापनाय तृच्प्रत्ययः। वृष्टेरुत्पन्नोऽम्बुवेगो यथा तादृशशोको मां निम्नमिवाभिवर्तते। उभयत्राप्युपमावाचकप्रयोगो महाकविनिबन्धनेष्वस्त्येव ॥ १६ ॥

५१४

पापकारिभिरपि दूरतस्त्याज्यम्। अनीप्सनीयं पापरुचिभिरप्यनाकांक्षितव्यम्। स्वनवेक्षणीयं पापदर्शिभिरप्यदर्शनीयम्। त्वाष्ट्रवधात् त्वष्टृपुत्रविश्वरूपवधात् ॥१३॥ 'प्रतिहर्तुमिच्छेत्' इति पाठः। परिहर्तुं को वा इच्छेत् को वा सहेतेति सम्बन्धः ॥१४॥ नार्हामीति। एवंविधं कर्म भ्रातृवधरूपं कृत्वा स्थितः, अहमिति शेषः। प्रजानां सम्मानं प्रति नार्हामि यौवराज्यं प्रति नार्हामि, कुतो राज्यं प्रत्यर्हामीति योजना ॥ १५ ॥ पापस्येति। इवशब्दस्तथार्थे। वृष्टेरम्बुवेगो यथा तथा महान् शोको मामनुवर्तते। टी०—विगर्हितस्य निषिद्धस्य। क्षुद्रस्य जुगुप्सितस्य। लोकापमतस्य लोकविद्विष्टस्य ॥ १६ ॥

सोदर्येति। सोदर्यस्य भ्रातुः घात एवापरगात्रवालौ अपरकायपुच्छौ यस्य स तथा। सन्ताप एव हस्तादीनि यस्य स तथा। वधादपि सन्तापस्य प्राधान्यादूर्ध्वकायत्वरूपणम्। वधप्रकारवैविध्यात्सन्तापवैविध्याच्च नानावयवत्वेन रूपणम्। एनोमयः इति स्वार्थे मयट्। पापमेव हस्ती। एनसो दृप्तत्वमुत्कटत्वम्। तस्य प्रवृद्धत्वं महत्त्वं गजस्योन्नतत्वम् ॥१७॥ अंह इति। हे नृवर राघव! मे हृदि इदं साधु वृत्तम् अंहः स्वेन सह वर्तमानं पापम्।

सोदर्यघाताऽपरगात्रवालः सन्तापहस्ताक्षिशिरोविषाणः। एनोमयो मामभिहन्ति हस्ती दृप्तो नदीकूलमिव प्रवृद्धः ॥ १७ ॥ अंहो बतेदं नृवराविषह्य निवर्तते मे हृदि साधु वृत्तम्। विवर्णमग्नौ परितप्यमानं किट्टं यथा राघव जातरूपम् ॥ १८ ॥ महाबलानां हरियूथपानामिदं कुलं राघव मन्निमित्तम्। अस्याङ्गदस्यापि च शोकतापादर्धस्थितप्राणमितीव मन्ये ॥ १९ ॥ सुतः सुलभ्यः सुजनः सुवश्यः कुतः सुपुत्रः सदृशोऽङ्गदेन। न चापि विद्येत स वीर देशो यस्मिन्भवेत् सोदरसन्निकर्षः ॥ २० ॥

अविषह्य असोढ्वा। निवर्तते निर्गच्छति। कथमिव? विवर्णं जातरूपम् अग्नौ परितप्यमानं सत् किट्टं यथा ऋजीपांशमविषह्य निवर्तते, किट्टाद्वियुज्यत इत्यर्थः। बतेति विषादे ॥ १८ ॥ अपि चेति समुच्चयः पूर्वश्लोकोक्तदोषापेक्षया। मन्निमित्तं मत्तो निमित्तात्। अस्याङ्गदस्य शोकतापात् महाबलानां हरियूथपानाम् इदं परिदृश्यमानं कुलं यूथम्। अर्धस्थितप्राणमिव भवतीति मन्ये। "सजातीयैः कुलं यूथं तिरश्चां पुन्नपुंसकम्" इत्यमरः॥१९॥ सुत इति।

सोदर्येति। एनोमयः पापमयः ॥१७॥ ननु पुराकृतसुकृतलब्धविवेकधैर्यादिना शोकः सोढव्य इत्यत आह—अंह इति। हे नृवर राघव! मे हृदि स्थितं साधुवृत्तं विवेकधैर्यरूपं साधुवृत्तं कर्तृ इदमंहः भ्रातृवधजनितं पापफलरूपं कर्म असोढ्वा निवर्तते। कथमिव? विवर्णमत एवाग्नौ परितप्यमानं जातरूपं सुवर्णं किट्टम् ऋजीषांशम् मलमिति यावत्। अविषह्य पृथक्कृत्य यथा निवर्तते तथा अनेनांहसा सह वर्तमानं मम हृदि यत्किञ्चित्पूर्वेकृतं साधुवृत्तमस्ति तन्न तिष्ठति यथा अग्नौ तप्यमानं काञ्चनं किट्टेन सह न तिष्ठति तद्वदित्यर्थः ॥ १८ ॥ महाबलानामिति। अपि चेति समुच्चयः पूर्वश्लोकोक्तदोषापेक्षया। मन्निमित्तं मत्तो निमित्तात् अस्याङ्गदस्य शोकतापात् महाबलानां हरियूथपानां परिदृश्यमानं कुलं यूथम् अर्धस्थितप्राणमिव भवतीतिं मन्ये॥ १९ ॥ टी०—पितृवियोगादङ्गदे नष्टे पुत्रः कथं सुसम्पादनीयः इत्यत आह—सुत इति।

सुजनः सौजन्यवान् । सुवश्यः सुतरां वश्यः स्वाधीनः सुतः । सुलभ्यः लोके सुखेन लब्धुं योग्यः । अङ्गदेन तुल्यः पुत्रस्तु कुतो हेतोः सुलभ्यः, दुर्लभ इत्यर्थः । सोदरसन्निकर्षोऽपि दुर्लभः इत्याह न चापीति । सन्निकर्षः सन्निधानम् ॥ २० ॥ अङ्गदो यदि जीवेत्तदा तारापि जीवेत् अन्यथा नेत्याह— यदीति ॥२१॥ अङ्गदमरणं निश्चित्याह—सोऽहमिति । पुत्रेण अङ्गदेन । " भ्रातॄणामेकजातानां यद्येकः पुत्रवान् भवेत् । तेन पुत्रेण ते सर्वे पुत्रिणो मनु

यद्यङ्गदो वीर वराह जीवेज्जीवेच्च माता परिपालनार्थम् । विना तु पुत्रं परितापदीना तारा न जीवेदिति निश्चितं मे ॥ २१ ॥ सोहं प्रवेक्ष्याम्यतिदीप्तमग्निं भ्रात्रा च पुत्रेण च सख्यमिच्छन् । इमे विचेष्यन्ति हरिप्रवीराः सीतां निदेशे तव वर्तमानाः ॥ २२ ॥ कृत्स्नं तु ते सेत्स्यति कार्यमेतन्मय्यप्रतीते मनुजेन्द्रपुत्र । कुलस्य हन्तारमजीवनार्हं रामानुजानीहि कृतागसं माम् ॥ २३ ॥ इत्येवमार्तस्य रघुप्रवीरः श्रुत्वा वचो वाल्यनुजस्य तस्य । सञ्जातबाष्पः परवीरहन्ता रामो मुहूर्तं विमना बभूव ॥ २४ ॥ तस्मिन् क्षणेऽभीक्ष्णमवेक्ष्यमाणः क्षितिक्षमावान् भुवनस्य गोप्ता । रामो रुदन्तीं व्यसने निमग्नां समुत्सुकः सोऽथ ददर्श ताराम् ॥ २५ ॥

रब्रवीत् ॥ " इति स्मृतिः । सख्यमिति । तन्मरणे मरणं हि स्नेहस्य परा काष्ठा । निदेशे त्वदाज्ञायाम् ॥२२॥ कृत्स्नमिति । अप्रतीते अप्रकाशे, मृत इति यावत् । मां विनापि त्वं सर्वं कार्यं कर्तुं क्षम इत्यर्थः ॥ २३ ॥ अथ रामस्याश्रितकार्यमेव स्वकार्यम्, नतु स्वतः किंचिदस्ति । अत एव मम शत्रुर्वालीति सुग्रीवेणोक्ते तं निहत्य तस्मिन्नश्रूणि मुक्त्वा शोचति सति स्वयमपि तथा शोचति स्मेत्याह—इत्येवमिति । यद्वा सर्वेश्वरस्य कुत्रचिद्विपयीकारस्तत्सन्तानपर्यन्तः घण्टाकर्णमालाकारादिष्विवेत्याह—इत्येवमिति । रघुप्रवीर इत्यनेन स्वस्य वानरेण संबन्धान्तरप्रसक्तिर्नास्तीत्युच्यते । वाल्यनुजस्य आर्तस्य । वाल्यनुजे आर्ते सतीत्यर्थः । वचः श्रुत्वा तद्वचनं च श्रुत्वा सञ्जातबाष्पः तदार्तिनिमित्तकार्त्तिक इत्यर्थः । परवीरहन्ता आश्रितविरोधिनिरसनशीलः । ताच्छील्ये तृन् (च्) । सुग्रीववचनात् कृतवालिवधत्वेन तच्छोचनादशोचदित्यर्थः । अनेन रामस्य क्रोधशोकावाश्रितक्रोधशोकायत्तावित्ययमर्थः सूचितः ॥ २४ ॥ तस्मिन्निति । तस्मिन्क्षणे तस्मिन्नवसरे । अभीक्ष्णं पुनः पुनः । अवेक्ष्यमाणः । तारयेति शेषः । अनेन तारायाः रामविषय

सुलभ्यः सुतमात्रः सुलभ एवेत्यर्थः । किन्तु सुजनः सुवश्यः अङ्गदेन सदृशः पुत्रः कुतः, अतिदुर्लभ इत्यर्थः । किञ्च सोदरसङ्गः कुत्रापि नास्तीत्याह—न चेति ॥ २० ॥ २१ ॥ त्वयि विपन्ने मत्कार्यं कथं सिद्ध्यतीयत आह—इम इति ॥ २२–२४ ॥ तस्मिन्निति । तस्मिन क्षणे तस्मिन्नवसरे । समुत्सुकः शोकापनयनसमुत्सुकः ॥ २६–२७ ॥

मानुकूल्यमुक्तम् । क्षितिक्षमावान् क्षितेर्यादृशी क्षमा तादृशक्षमावान् । क्षमावत्त्वमुक्तमोक्तप्रवृत्त्यर्थं तादृशी चिन्तितो कविनोक्तो । रुदन्तीमित्यादिना ताराया दयनीयतोक्ता । समुत्सुकः शोकापनयने कृतादरः ॥ २५ ॥ रामागमनमालोक्य मन्त्रिणस्तामुत्थापयामासुरित्याह—तामिति ॥ २६ ॥ २७ ॥ सुसंवृतमिति । पार्थिवलक्षणैः राजलक्षणैः । सुसंवृतम् अन्यूनतया युक्तमित्यर्थः । चारुनेत्रम् पुण्डरीकाक्षम् । मृगशावनेत्रा "विद्वानेव विजानाति विद्वज्जनपरिश्रमम्" इति न्यायेन स्वयं चारुनेत्रतया तत्रैव प्रथमं दृष्टिं न्यधादिति भावः। अदृष्टपूर्वम् इतः पूर्वं कुत्राप्यदृष्टचरम्, योगं विना अदृष्टमित्यर्थः ।

तां चारुनेत्रां कपिसिंहनाथं पतिं समाश्लिष्य तदा शयानाम् । उत्थापयामासुरदीनसत्त्वां मन्त्रिप्रधानाः कपिवीरपत्नीम्॥२६॥ सा विस्फुरन्ती परिरभ्यमाणा भर्तुः सकाशादपनीयमाना । ददर्श रामं शरचापपाणिं स्वतेजसा सूर्यमिव ज्वलन्तम् ॥ २७ ॥ सुसंवृतं पार्थिवलक्षणैश्च तं चारुनेत्रं मृगशावनेत्रा । अदृष्टपूर्वं पुरुषप्रधानमयं स काकुत्स्थ इति प्रजज्ञे ॥ २८ ॥ तस्येन्द्रकल्पस्य दुरासदस्य महानुभावस्य समीपमार्या । आर्ताऽतितूर्णं व्यसनाभिपन्ना जगाम तारा परिविह्वलन्ती ॥ २९ ॥ सा तं समासाद्य विशुद्धसत्त्वा शोकेन संभ्रान्तशरीरभावा । मनस्विनी वाक्यमुवाच तारा रामं रणोत्कर्षणलब्धलक्ष्यम् ॥ ३० ॥

पुरुषप्रधानं पुरुषोत्तमम् । अयं स इति विजज्ञे यः पूर्वं भर्तारं हतवान् सोऽयमिति ज्ञातवती । यद्वा यः पूर्वमङ्गदाच्छ्रुतः । यद्वा यः पूर्वं पुण्डरीकाक्षत्वादिगुणविशिष्टतया महाजनेभ्यः श्रुतः स एवायमित्यर्थः । अत एव वक्ष्यति त्वमप्रमेयश्चेति ॥ २८ ॥ तस्येति । व्यसननिवर्तनक्षमा गुणा उच्यन्ते । परिविह्वलन्ती मूर्छन्तीत्यर्थः ॥ २९ ॥ सेति । रणे उत्कर्षणेन उत्कर्षेण लब्धं लक्षं शरव्यं यस्य तथा । एकेन शरेण स्वभर्तृहन्तारमित्यर्थः । तं रामम् । शोकेन सम्भ्रान्तः अयथाभूतः शरीरभावः शरीरकृतभावः यस्याः सा, कुपितेत्यर्थः । मनस्विनी मत्प्रियहन्तारं यावच्छक्ति परुषाणि वदेयमिति कृताध्यवसाया । समासाद्य विशुद्धसत्त्वा रामसन्निधिमाहात्म्येन निवृत्तकालुष्यतया समुन्मिषितशुद्धसत्त्वा तारा वाक्यमुवाच । परुषभाष

सुसंवृतमिति ।सा विस्फुरन्ती व्यपनीयमाना तारा उक्तविशेषणविशिष्टं तम् अयं स काकुत्स्थः अङ्गदवाक्याद्वगतः काकुत्स्थ इति प्रजज्ञ इति सम्बन्धः ॥२८॥२९॥ सेति । रणोत्कर्षणलब्धलक्ष्यं रणे उत्कर्षणमुत्कर्षो येषां ते तथोक्ताः तैः प्रथमगणनायां वीराग्रणीरिति लक्ष्यत्वेन लब्धमित्यर्थः । सम्भ्रान्तशरीरभावा

णोद्युक्तयैव वाचा अस्तौषीदित्यर्थः ॥ ३० ॥ तनि०—विशुद्धसत्त्वा तत्सन्निधिमाहात्म्येन समुन्मिषितसत्त्वा । परुषभाषणोद्युक्तापि सत्त्वनिष्पन्नपरमज्ञानतया निवृत्त कोपकलुषा सान्त्वमुक्तवती ॥ ३० ॥ एवं पुरुषोत्तमत्वपुण्डरीकाक्षत्वादिभिरनुसंहितं परत्वं ताराऽनुसन्धत्ते—त्वमप्रमेयश्चेति । त्वम् वक्ष्यमाणकल्याण गुणानुगुणधर्मिवैलक्षण्ययुक्तः । अप्रमेयः । "वेदाहम्" इत्युपक्रम्य "महान्तं क इत्था वेद" इति वेदैरप्यपरिच्छेद्यः । अप्रमेयः "सो अङ्ग वेद यदि वा न वेद" इति स्वेनापि परिच्छिद्य ज्ञातुमशक्यः । त्वमप्रमेयः प्रत्यक्षगम्योऽपि मनसा दुर्विभाव्यस्वभावः । त्वमप्रमेयः शरचापधरोऽपि त्वं शङ्खचक्र धरोसि । त्वमप्रमेयः सौलभ्यदशैव न परिच्छेत्तुं शक्यते । त्वमप्रमेयः परिकररहितोपि प्रतापातिशयेन निरवधिकपरिकरपरिगत इव दुरवगाहोसीत्येक

त्वमप्रमेयश्च दुरासदश्च जितेन्द्रियश्चोत्तमधार्मिकश्च।
अक्षय्यकीर्तिश्च विचक्षणश्च क्षितिक्षमावान् क्षतजोपमाक्षः ॥ ३१ ॥

वचनस्य भावः । एवमन्तःकरणेन दुष्प्रापोपि किं बाह्यकरणैः सुप्रापः ? नेत्याह दुरासदश्च । मनसापि दुरासदः कथं प्रकारान्तरेण स्वासद इति भावः । दुरासदश्च । "महाजनो येन गतः स पन्थाः" इत्युक्तं सन्मार्गं विना पथस्खलितेन दुष्प्राप इत्यर्थः । दुरासदश्च "षद्लृ, विशरणगत्यवसादनेषु" इति धातुपाठोक्तार्थत्रयमपि तन्त्रेणोच्यते। नित्यत्वान्न विशरणार्हः । विभुत्वान्न विचालनार्हः । नित्यानन्दत्वान्नावसादमापादयितुं शक्य इत्यर्थः । दुरासदश्च वालिवधकुपितानां प्रतीकाराय सन्निधानमपि गन्तुमशक्य इत्यर्थः । दुरासदश्च बाह्यकुदृष्टिभिरुक्त्याभासैरप्रकम्प्यवैभव इत्यर्थः । एवमप्रमेयत्वदुर्धर्ष त्वाभ्यां सुहृत्तोऽपि न परदारराज्यपरिग्रहलुब्ध इत्याह—जितेन्द्रियश्चेति । निःस्पृहतया सुग्रीवाय दत्तराज्य इत्यर्थः । जितेन्द्रियश्च यः कोपि पुरुषः काञ्चि द्योषितमालक्ष्य निर्वर्णयति त्वं तु न तथा। "न रामः परदारान् वै चक्षुर्भ्यामपि पश्यति" इत्युक्तेः। जितेन्द्रियश्च "पश्यत्यचक्षुः स शृणोत्यकर्णः। अपाणि पादो जवनो ग्रहीता" इत्याद्युक्तरीत्या सर्वेन्द्रियैर्विनापि सर्वं सर्वत्र सर्वदा जानन्नित्यर्थः। जितेन्द्रियः "दुर्ग्रहं मनसाप्यन्यैरिन्द्रियैरपि दुर्जयैः" इत्युक्तरीत्या वाङ्मनसागोचरः। त्वं जितेन्द्रियः त्वमेव जितेन्द्रियः। सर्वं वाक्यं सावधारणम्। अब्भक्षो वायुभक्ष इतिवत्। "अहल्यायै जारः सुरपतिरभूदात्मतनयां प्रजानाथोऽयासीदभजत गुरोरिन्दुरबलाम्।" इत्युक्तरीत्या त्वद्व्यतिरिक्ताः सर्वेपि विषयचपलाः। त्वमेको जितेन्द्रियः इत्यर्थः। एवं विरक्तोप्ययमस्मद



सम्भ्रान्तौ विभ्रमौ शरीरभावौ देहान्तःकरणे यस्यास्सा ॥ ३० ॥ ३१ ॥

हिंसया अधार्मिक इति मयास्थितम्। न तथेत्याह उत्तमधार्मिकश्च। स्वाश्रितसंरक्षणार्थमेवविधव्यापारकारितया परमधार्मिकः। स्वार्थकर्मकारी अधम धार्मिकः। स्वपरसाधारणकर्मकारी मध्यमधार्मिकः। परार्थमेव प्रवर्तमान उत्तमधार्मिकः। यद्वा वर्णाश्रमाचारसमाराध्यो धार्मिकः। उत्तमधार्मिको भक्ति मार्गभजनीयः। यद्वा उत्तमधार्मिकः शरणागतसंरक्षकः। यद्वा "उपायो गुरुरेव स्यात्तेनानुगृहीतो ब्रह्मलोकं गच्छति" इत्युक्तधर्मवानुत्तमधार्मिकः। यद्वा 'आनृशंस्यं परोधर्मः' इत्युक्तधर्मवान् धार्मिकः। स्वाश्रितानामापत्सु स्ववक्षो लक्षीकुर्वन्नुत्तमधार्मिकः। यद्वा आर्तसुग्रीवरक्षणाद्धार्मिकः। अकृत्यकरणेन नारकिणं वालिनं निहत्य तस्य पूतत्वकरणादुत्तमधार्मिकः। प्रच्छन्नवेधितया निरपराधवधेन च कथमस्य धार्मिकत्वमित्याशङ्क्याह अक्षय्यकीर्तिश्च। आश्रिता पराधितया तिर्यक्षु मृगयान्यायेन पराङ्मुखवधस्यादोषत्वात्तिर्यग्भिराभिमुख्येन युद्धकरणस्य सार्वभौमस्यावद्यावहत्वाच्च तव कीर्तिर्न दूषयितुं शक्ये त्यर्थः। अक्षय्यकीर्तिश्च 'तस्य नाम महद्यशः' इत्युक्तरीत्या परत्वप्रथायुक्तः। विचक्षणश्च दूरदृष्टितया युक्तायुक्तविचारपूर्वकं सर्वकार्यकृत्। अत एव हि निरपराधवधो मा भूदिति कदाचिद्वालितः पराभवं प्रापितवान्। लक्ष्यवैपरीत्यपरिहाराय गजपुष्पीं धारितवान्। एवं शत्रुसंहर्तापि 'सपुत्रपौत्रं सामात्यं समन्त्रि ज्ञातिबान्धवम्। हत्वा' इत्युक्तरीत्या अङ्गदादिष्वकिञ्चित्करतया प्रशस्तक्षमावानसीत्याह क्षितिक्षमावान्। स्वाश्रितापराधकारिविषये तव सान्वयविनाश करणे प्राप्तेपि तत्क्षमणं तवातिश्लाघ्यमित्यर्थः। क्षितिक्षमावान् 'क्षमया पृथिवीसमः' इत्युक्तरीत्या पञ्चाशत्कोटियोजनविस्तीर्णायाः पृथिव्या यावती क्षमा तावती तवैकस्यास्तीति भावः। नित्ययोगे मतुप्। तेन कदाचिदप्यस्याक्षमाप्रसङ्गोपि नास्तीति द्योत्यते। क्षतजोपमाक्षः वालिविषये कोपातिशयेना द्यापि शोणीकृतनयनोपि तदीयेषु क्षमावान्। यद्वा 'रक्तास्यनेत्रपाणिः। त्रिताम्रः' इत्यादिसामुद्रिकोक्तरीत्या रक्तान्तनेत्रः। 'रामो रक्तान्तलोचनः' इति ह्युक्तिः। अत्र प्रतिपदं चकारप्रयोगः एकैक एव गुणः परत्वे पर्याप्तं लिङ्गमिति द्योतयितुम्। क्षमावानित्यत्र चकाराप्रयोगस्तु रामेण क्षान्ते सर्वैरपि क्षान्तमेव। अतोन्य त्रापि संभवेन निरपेक्षत्वाभावाच्चकाराप्रयोगः। क्षतजोपमाक्ष इत्यत्र तु विग्रहगुणत्वेन भिन्नाधिकरणत्वात् समुच्चयाभावः। क्षतजोपमाक्षेति संबुद्ध्यन्तं वा। यद्वा अप्रमेयः अनाश्रितानां दुर्ज्ञेयः। चकारादाश्रितानां सुप्रमेयः। "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्य स्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति श्रुतेः। "नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये।" इत्युक्तेश्च। एवमनाश्रितानां दुरासदो दुष्प्रापः। चकारादाश्रितानां सुलभः। जितेन्द्रियः चकारादाश्रितविषये चपलः। उत्तमधार्मिकः चकाराद् दूरीकृताधर्मः। अक्षय्यकीर्तिः तदनु रूपकृत्यश्चशब्दार्थः। विचक्षणः चकारादाश्रितविषयत्यागाशक्तश्च। "मित्रभावेन संप्राप्तं न त्यजेयम्" इत्यशक्तिर्ह्युच्यते। अत्रत्यचकारः

देहलीदीपन्यायेनोभयत्रान्वेति । तेन दयादिकं समुच्चीयते ॥ ३१ ॥ तनि०—त्वमप्रमेयः रावणदुन्दुभिनिग्रहीतारं वालिनं हत्वा अकिंचित्कुर्वन्निव स्थितस्त्वं वालिभयप्राप्तगिरिवरस्य सुग्रीवस्यापि जयं दत्तवान्, शापायोग्यतां मां स्तोतुं घटयिता । त्वमप्रमेयः त्वत्स्वरूपमस्मत्स्वरूपं च विचार्य स्तोतुमुद्युक्ताहं त्वमप्रमेयो वेदैरप्यपरिच्छेद्योसि । अतोहं कथं स्तोतुं शक्नोमि । त्वमप्रमेयः पुरतो विद्यमानोप्यपरिच्छेद्यश्चक्षुषा मनसाऽप्रमेयः । " न चक्षुषा गृह्यते । मनसा तु विशुद्धेन " इति श्रुतेः । त्वमप्रमेयः धनुष्पाणिसुलभस्त्वं शङ्खचक्रगदादिधरो नारायणोसि । त्वमप्रमेयः परत्वमपरिच्छेद्यमिति स्थितम् । सौलभ्यं चापरिच्छेद्यं जातम् ।

त्वमात्तबाणासनबाणपाणिर्महाबलः संहननोपपन्नः । मनुष्यदेहाभ्युदयं विहाय दिव्येन देहाभ्युदयेन युक्तः ॥ ३२ ॥
येनैकबाणेन हतः प्रियो मे तेनैव मां त्वं जहि सायकेन । हता गमिष्यामि समीपमस्य न मामृते राम रमेत वाली ॥ ३३
स्वर्गेपि पद्मामलपत्रनेत्रः समेत्य संप्रेक्ष्य च मामपश्यन् । न ह्येष उच्चावचताम्रचूडा विचित्रवेषाप्सरसोऽभजिष्यत् ३४

त्वमप्रमेयः एकाकी सन्नपि परिकरपरीत इवाप्रधृष्योसि । त्वमप्रमेयः तापस इव स्थितोपि विराधादिदुष्टनिग्रहं कृत्वा शिष्यान् परिपालितवान् । ( अत्र व्याख्यान उपन्यस्तानामर्थानां प्रायशो गोविन्दराजीयेनैव स्पष्टत्वान्नात्र शेषं लिखितमिति ज्ञेयम् ) ॥ ३१ ॥ त्वमिति । अनेनाप्राकृतविग्रहत्वमुच्यते । संहननेन समीचीनावयवसंस्थानेन उपपन्नः युक्तः । मनुष्यदेहाभ्युदयं मानुषशरीरपरिग्रहं विहाय । दिव्येन देहाभ्युदयेन देहसौभाग्येन युक्तः ॥ ३२ ॥ तनि०--त्वमात्तबाणासनबाणपाणिर्महाबलः । महाबलत्वे हेतुमाह--संहननोपपन्न इति । महावीर्यत्वनिमित्तान्तःसाराभिव्यञ्जकशरीरसंस्थानविशेष इत्यर्थः । अयं च प्राकृतशरीरेषु न संभवतीत्याह—मनुष्येति । महाराजलक्षणशौर्यादिगुणाभिव्यञ्जकमनुष्यशरीरसंस्थानविशेषेष्वपि नैतादृश इति द्योतयितुमभ्युदयपदप्रयोगः । दिव्येन । "त्रिपादस्यामृतं दिवि" इत्यादिप्रमाणसिद्धाप्राकृतलोकस्थितदिव्यमङ्गलविग्रहसन्निवेशेनेत्यर्थः ॥ ३२ ॥ एवं रामस्य दिव्यतेजोविशेषदर्शनेन विस्मिता क्षणं विस्मृतशोका तद्वैभवं वर्णयित्वा स्वप्रकृत्यनुसारेण प्रलपति—येनेत्यादिना ॥ ३३ ॥ स्वर्गेपीति । पद्मामलपत्रनेत्रो वाली स्वर्गेपि अप्सरोभिः समेत्य त्वमात्तेति । दिव्येन दिवि भवेन । देहाभ्युदयेन सौभाग्येन ॥ ३२–३४ ॥

स०—आत्तबाणासनश्चासौ बाणपाणिश्चेति वा आत्तौ बाणासनबाणौ याभ्यां तादृशौ पाणी यस्येति वा । संहननोपपन्नः सिंहस्कन्धः मम प्रियो वाली हतस्सन् । मनुष्यदेहाभ्युदयं मनुष्यसदृशमपि राज्य सौभाग्यं विहाय दिव्येन विमलेन देहाभ्युदयेन सौभाग्येन युक्तः । अथवा दिवि भवं दिव्यम् देवजातं तस्येनः स्वामी इन्द्रः तस्य देहाभ्याभ्युदयेन युक्तोऽभूत् । तेनैव बाणेन मां जहि संहर । इहि गच्छ । मां हत्वा गच्छेति लौकिकवाप्रीतिरियम । जहि इहीति छेदः । तेनैव बाणेन हि मां जहीहि इति पाठः ॥ ३२ ॥ ३३ ॥

ताः संप्रेक्ष्य च मामपश्यन् उच्चावचताम्रचूडाः विविधताम्रकुसुमैः कृतशेखराः । विचित्रवेषाप्सरसः नाभजिष्यत् न भजिष्यति । लङर्थे लङ् ॥ ३४ ॥ नगेन्द्रस्य ऋश्यमूकस्य ॥ ३५ ॥ त्वं वेत्थेति । कुमारः युवा । तत् वनिताविरहदुःखम् प्रजानन् त्वं मां जहि । वाली ममादर्शनजं दुःखं न भजेत ॥ ३६ ॥ रामानु०—त्वं वेत्थेति । तत्त्वं प्रजानन् जहि मां न वालीति पाठः ॥ ३६ ॥ यच्चापीत्यादिसार्धश्लोकः । मद्वधं स्त्रीघातदोषो न भवेदिति भवान्

स्वर्गेपि शोकं च विवर्णतां च मया विना प्राप्स्यति वीर वाली। रम्ये नगेन्द्रस्य तटावकाशे विदेहकन्यारहितो यथा त्वम् ॥ ३५ ॥ त्वं वेत्थ यावद्वनिताविहीनः प्राप्नोति दुःखं पुरुषः कुमारः । तत्त्वं प्रजानन् जहि मां न वाली दुःखं ममादर्शनजं भजेत ॥ ३६ ॥ यच्चापि मन्येत भवान् महात्मा स्त्रीघातदोषो न भवेत्तु मह्यम् । आत्मेयमस्येति च मां जहि त्वं न स्त्रीवधः स्यान्मनुजेन्द्रपुत्र । शास्त्रप्रयोगाद्विविधाच्च वेदादात्मा ह्यनन्यः पुरुषस्य दाराः ॥ ३७ ॥ दारप्रदानान्न हि दानमन्यत्प्रदृश्यते ज्ञानवतां हि लोके ॥ ३८ ॥ त्वं चापि मां तस्य मम प्रियस्य प्रदास्यसे धर्ममवेक्ष्य वीर । अनेन दानेन न लप्स्यसे त्वमधर्मयोगं मम वीरघातात् ॥ ३९ ॥

यन्मन्येत तन्न युक्तम् । इयं तारा अस्य वालिनः आत्मा इति मत्वा मां जहि, तेन ते स्त्रीवधः स्त्रीवधदोषो न स्यात् । आत्मेत्येतदुपपादयति शास्त्रेति । " अर्धो वा एष आत्मनो यत्पत्नी । आत्मा हि दाराः " इत्यादिरूपात् विविधात् वेदाद्वेदरूपात् शास्त्रप्रयोगादित्यन्वयः । यद्वा वेदात् शास्त्रप्रयोगात् धर्मशास्त्रप्रयोगाच्चेति वाऽर्थः ॥ ३७ ॥ रामानु०—यच्चापि मन्येत । आत्मेयमस्येति । शास्त्रप्रयोगात् । दारप्रदानादिति पाठक्रमः ॥ ३७ ॥ सुकृतमप्यस्तीत्याह-दारेति ॥ ३८ ॥ न केवलं पापनिवृत्तिसुकृते, प्रायश्चित्तं चेदमित्याह—त्वं चापीति । वीरघातादित्येतत्सुग्रीवदुःखदुःखितराम

नगेन्द्रस्य ऋश्यमूकस्य ॥ ३५ ॥ तत् स्त्रीवियोगजदुःखम् ॥ ३६ ॥ यच्चापीति सार्धश्लोकमेकं वाक्यम् । मद्वधं स्त्रीघातदोषो भवेदिति भवान्न मन्येत । तस्य तव स्त्रीवधो न स्यात् । तत्र हेतुः आत्मेयमिति । अस्य वालिनः । इयं तारा । आत्मा " अर्धो वा एष आत्मनो यत्पत्नी " इति श्रुतेः । मद्वधस्य वालिवध एवान्तर्भावान्न तव स्त्रीवधदोषशङ्केति भावः ॥ ३७ ॥ न केवलं दोषाभावः, अपि तु पुण्यमप्यस्तीत्याह—दारप्रदानादिति ॥ ३८–४१ ॥

हृदयानुसारेणोक्तम् । त्वमुत्तमधार्मिकश्चेति पूर्वमुक्तत्वात् ॥ ३९ ॥ आर्तामिति । अपनीयमाना वालिना वञ्चिताम् ॥ ४० ॥ ४१ ॥ हितवचनमेवाह—मा वीरेति । विमतिं जीवितुं न शक्ष्यामीत्यादिविरुद्धमतिम् । सर्वो लोकः विधात्रा ब्रह्मणा विहितो निर्मितः । हिः प्रसिद्धौ । तं सुखदुःखयोगं च विधात्रा कृतमिति लोकः पण्डितः पामरश्चाब्रवीत् ॥ ४२ ॥ वस्तुस्थितिश्च तथेत्याह—त्रय इति । लोकाः लोकस्थजनाः । विहितं विधानं ब्रह्मकल्पितं प्रकारं



आर्तामनाथामपनीयमानामेवंविधामर्हसि मां निहन्तुम् । अहं हि मातङ्गविलासगामिना प्लवङ्गमानामृषभेण धीमता । विना वरार्होत्तमहेममालिना चिरं न शक्ष्यामि नरेन्द्र जीवितुम् ॥४०॥ इत्येवमुक्तस्तु विभुर्महात्मा तारां समाश्वास्य हितं बभाषे ॥ ४१ ॥ मा वीरभार्ये विमतिं कुरुष्व लोको हि सर्वो विहितो विधात्रा । तं चैव सर्वं सुख दुःखयोगं लोकोऽब्रवीत्तेन कृतं विधात्रा ॥ ४२ ॥ त्रयो हि लोका विहितं विधानं नातिक्रमन्ते वशगा हि तस्य । प्रीतिं परां प्राप्स्यसि तां तथैव पुत्रस्तु ते प्राप्स्यति यौवराज्यम् । धात्रा विधानं विहितं तथैव न शूरपत्न्यः परि देवयन्ति ॥४३॥ आश्वासिता तेन तु राघवेण प्रभावयुक्तेन परंतपेन । सा वीरपत्नी ध्वनता मुखेन सुवेषरूपा विरराम तारा ॥४४॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

नातिक्रमन्ते । हि यस्मात्तस्य वशगाः । प्रीतिमिति । तां वालिसंभोगसदृशभोगमिति द्योतयति ॥ ४३ ॥ प्रभावयुक्तेन अङ्गदयौवराज्यप्रदानसमर्थेन । परंतपेन तद्विरोधिनिरसनसमर्थेन आश्वासिता अत एव ध्वनता शब्दायमानेन मुखेनोपलक्षिता । सुवेषरूपेत्यनेन समाश्वासनकृतान्तरहर्षवत्त्वं सूचितम् । स्वलंकारयुक्तशरीरेत्यर्थः ॥ ४४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥

मा वीरेत्यादि । विमतिं जीवितुं न शक्ष्यामि इति विरुद्धां मतिम् । सर्वो लोकः सर्वोऽपि जनः । विधात्रा विहितः ब्रह्मणा निर्मितो हि । तेन विधात्रा कृतं सर्वं च । सुखदुःखयोगमेव सुखदुःखयुक्तमेव । लोको मन्वादिरब्रवीदिति योजना ॥ ४२ ॥ न केवलमयमेव लोको विधातृपरतन्त्रः किन्तु सर्वेऽपि लोका इत्याह—त्रयोपीति । लोकाः लोकत्रय वासिनो जनाः । विहितं विधानम् । कल्पितं प्रकारम् । तस्य वशगाः विधेर्वशगाः नातिक्रमन्ते । ब्रह्मादयोऽपि विधिकल्पितप्रकारमुल्लङ्घितुं न शक्नुवन्ति किमुत मर्त्यादय इति भावः । ममाज्ञाकरणेन फलमस्तीत्याह प्रीतिमिति । जीवति वालिनि यादृशी प्रीतिस्तादृशीमित्यर्थः ॥ ४३ ॥ आश्वासितेति । ध्वनता मुखेनोप लक्षिता ॥ ४४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां चतुर्विंशः सर्गः ॥ २४ ॥

अथ रामः सर्वसान्त्वनपूर्वकं वालिनः संस्कारं कारयति पञ्चभिः—सुग्रीवमित्यादि । साङ्गदमिति सुग्रीवविशेषणम् । समानशोकः ताराङ्गदादिभिस्तुल्यशोकः ॥ १ ॥ नेति । शोकपरितापेन शोककृतपरितापेन । युष्मदीयेनेति शेषः । मृतो वाली श्रेयसा न युज्यते । अत्र वालिनि विषये अनन्तरं मरणानन्तरम् । यत् श्रेयस्करं कार्यम् और्ध्वदैहिकरूपम्, तत्समाधातुं कर्तुम् अर्हथ ॥ २ ॥ लोकेति । लोकवृत्तं लोकाचारसिद्धम् । अत एव सर्वैरनु

सुग्रीवं चैव तारां च साङ्गदं सहलक्ष्मणः । समानशोकः काकुत्स्थः सान्त्वयन्निदमब्रवीत् ॥ १ ॥ न शोकपरितापेन श्रेयसा युज्यते मृतः । यदत्रानन्तरं कार्यं तत्समाधातुमर्हथ ॥२॥ लोकवृत्तमनुष्ठेयं कृतं वो बाष्पमोक्षणम् । न कालादुत्तरं किंचित्कर्म शक्यमुपासितुम् ॥ ३ ॥ नियतिः कारणं लोके नियतिः कर्मसाधनम् । नियतिः सर्वभूतानां नियोगेष्विह कारणम् ॥ ४ ॥ न कर्ता कस्यचित्कश्चिन्नियोगे चापि नेश्वरः । स्वभावे वर्तते लोकस्तस्य कालः परायणम् ॥ ५ ॥

ष्ठेयं बाष्पमोक्षणम् । वः युष्माभिः कृतम् । बाष्पमोक्षणादतिरिक्तं किमपि न युष्माभिः कर्तुं शक्यमित्याह–कालादिति । कालादुत्तरम् कालं विनेत्यर्थः । किंचित्कर्म । उपासितुं कर्तुम् । न शक्यं देवाज्ञामुल्लङ्घ्य स्वातन्त्र्येण किंचिदपि कर्म कर्तुं न शक्यमित्यर्थः ॥ ३ ॥ रामानु–कालाद्विहितात् कालात् । उत्तरम् उत्तरस्मिन् काले "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया ॥ ३ ॥ तदेतदुपपादयति–नियतिरिति । नियम्यतेऽनेनेति नियतिः ईश्वरः । लोके विषये कारणम् । सर्वलोककर्तेत्यर्थः । क्रियत इति कर्म कार्यम्, तस्य साधनं सहकारीत्यर्थः । सर्वभूतानाम् नियोगेषु प्रेरणेषु । नियतिः कारणम्, सर्वप्रवर्तकोपीश्वर इत्यर्थः । 'तेन विना तृणाग्रमपि न चलति' इति न्यायात् ईश्वरपरतन्त्रतया लोकः कर्म करोति न तु स्वातन्त्र्येणेत्यर्थः ॥ ४ ॥ एवमन्वयमुखेन ईश्वराधीनत्वमुक्त्वा व्यतिरेकमुखेन दर्शयति–न कर्तेति । कश्चित्पुरुषः कस्यचित्कर्मणः । न कर्ता न स्वातन्त्र्येण कर्ता । नियोगे कस्य

॥१॥२॥ लोकवृत्तमिति । बाष्पमोक्षणं कृतम् अलम्, लोकवृत्तं पारलौकिकं कर्मानुष्ठेयम्, कालाद्विहितात् कालादुत्तरम् उत्तरस्मिन् काले । किञ्चित्कर्म किमपि कर्म उपासितुम् अनुष्ठातुम् । न शक्यम्, कालस्यानुपादेयत्वादिति भावः ॥ ३ ॥ कालस्य प्राधान्यमेवोपपादयति–नियतिरित्यादिना । नियम्यते अनयेति व्युत्पत्त्या नियतिः कालः । नियोगेषु नियमनेषु ॥ ४ ॥ न कर्तेति । कस्यचिदपि कश्चिन्न कर्ता । नियोगे च नियमने च कश्चिदपि ईश्वरः स्वतन्त्रो न भवति, किन्तु लोकः

चित्प्रेरणे च नेश्वरः । किंतु स्वभावे वर्तते स्वभावाधीनो वर्तते लोकः । तत्र हेतुमाह तस्येति । कालः तस्य परायणं गतिः । अत्र स्वभावनियति कालादिशब्दैरीश्वर एवाभिधीयते । अन्यथाऽनेकराजत्वापत्तेः । श्वेताश्वतरश्रुतिश्च " स्वभावमेके कवयो वदन्ति " इत्यादिकैवमाह ॥ ५ ॥ न काल इति । कालः ईश्वरः । कालम् आत्मानम् । नात्येति नातिक्रामति । सः स्वाधीन एव न तु लोकवत् कस्यचित्परतन्त्रः । " न चास्य कश्चि जनिता न चाधिपः" इति श्रुतेः । न कालः परिहीयते न नश्यति । इदमुपलक्षणम् । षड्भावविकाररहित इत्यर्थः । "अपक्षयविनाशाभ्यां परिणामर्द्धि

न कालः कालमत्येति न कालः परिहीयते । स्वभावं च समासाद्य न कश्चिदतिवर्तते ॥ ६ ॥
न कालस्यास्ति बन्धुत्वं न हेतुर्न पराक्रमः । न मित्रज्ञातिसम्बन्धः कारणं नात्मनो वशः ॥ ७ ॥

जन्मभिः । वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् । " इति ह्युक्तम् । स्वस्मिन् भवतीति स्वभाव ईश्वरः । वाशब्दोऽवधारणे । स्वभावमासा द्यैव वर्तते न तु कश्चित्तमतिवर्तते । निरङ्कुशः स्वतन्त्रः । स्वकृतां व्यवस्थां स्वयमपि नातिवर्तते । तत्परतन्त्रोऽनीशः किमुतेति भावः ॥ ६ ॥ पुनरपी श्वरस्य स्वातन्त्र्यमुपपादयति—न कालस्येति । कालस्येश्वरस्य । बन्धुत्वं नास्ति, पक्षपातो नास्तीत्यर्थः । हेतुश्च नास्ति, वशीकरणोपायश्च नास्ति । तत्प्रसादं विना स्वयत्नेन वशीकर्त्तुं न शक्यते इत्यर्थः । न पराक्रमः तज्जयहेतुपराक्रमोपि नास्ति । पुरुषपराक्रमस्य स न बिभेति इति भावः । न मित्रज्ञातिसंबन्धः न सुहृत्सगोत्रसंबन्धः । अपराधिषु दण्डधरत्वमुक्तम् । " एष सेतुर्विधरण एषां लोकानामसंभेदाय " इति श्रुतेः । अतः कारण

स्वभावे काले वर्तते परतन्त्रतया वर्तते, अतस्तस्य कालः परायणम् इष्टप्रापकत्वेनानिष्टवारकत्वेन च परमप्राप्यमित्यर्थः ॥ टी०—किमनया कालादृष्टकल्पनया ? प्राणिन एवा न्योन्यकर्तारः कारयितारश्च भवन्तीत्यत आह—न कर्तेति ॥५॥ न काल इति । कालः महाकालः कालं प्राणिनां सुखदुःखप्रापकत्वेन दिवसपक्षमासर्त्वादिरूपमौपाधिकं कालम् । नात्येति नातिक्रामति । यस्मिन् काले जन्तुना सुखं दुःखं वा भोक्तव्यं तमतिक्रम्य कालान्तरेण भोजयितुं न समर्थ इत्यर्थः । न कालः परिहीयते न न्यूनतां प्राप्नोति । स्वभावं कालं समासाद्य कश्चिन्नातिवर्तते । वाशब्दोऽवधारणे । निरङ्कुशस्वतन्त्रकालः स्वकृतां व्यवस्थां स्वयमपि नातिक्रामति । तत्परतन्त्रोऽन्यः किमुतेति भावः ॥६॥ कालः केनापि हेतुना वशीकर्तुं न शक्य इत्याह—न कालस्येति । कालस्य पुरुषेण सह वशीकरणहेतुभूतं बन्धुत्वं नास्ति । तथा वशीकरण हेतुर्मित्रज्ञातिसम्बन्धोऽपि नास्ति । न हेतुः वशीकरणोपायभूतः पुरुषकृतोपकारादिर्नास्ति । न पराक्रमः वशीकरणोपायः पुरुषकृतः पराक्रमोपि नास्ति । अतः कारणं

मीश्वरः । आत्मनो जीवस्य । न वशः न परतन्त्रः । तत्तत्कर्मानुगुणमेव ईश्वरः सर्वं वर्तयतीत्यर्थः ॥ ७ ॥ तदधीनेन जन्तुना किं कर्तव्यं तत्राह–किंत्विति । साधु सम्यक् । पश्यता शास्त्रनिष्कर्षमवगच्छतेत्यर्थः । कालस्य ईश्वरस्य । परिणामः चेतनकर्मानुगुणप्रवृत्तिविशेषो द्रष्टव्यः, ईश्वरकृतव्यापारेषु न शोकः कर्तव्यः, यद्धितं तत्करिष्यतीति स्थातव्यमिति भावः । धर्मार्थकामास्तु कालक्रमेण ईश्वरमर्यादया समाहिताः समर्पिता भवन्ति ।

किंतु कालपरीणामो द्रष्टव्यः साधु पश्यता । धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः ॥ ८ ॥ इतः स्वां प्रकृतिं वाली गतः प्राप्तः क्रियाफलम् । धर्मार्थकामसंयोगैः पवित्रं प्लवगेश्वरः ॥ ९ ॥ स्वधर्मस्य च संयोगाज्जितस्तेन महात्मना । स्वर्गः परिगृहीतश्च प्राणानपरिरक्षता ॥ १० ॥ एषा वै नियतिः श्रेष्ठा यां गतो हरियूथपः । तदलं परितापेन प्राप्तकालमुपास्यताम् ॥ ११ ॥

धर्मादिषु यत् प्राप्तव्यं तत् प्रापयतीश्वर एवेति भावः । अत्र नियतिकालस्वभावपदैः व्यामिश्रतयोक्तिस्तदानीं रहस्यस्य वक्तुमनर्हत्वादिति बोध्यम् ॥८॥ एवमर्थस्थितिमुक्त्वा तां प्रकृते सङ्गमयति–इत इति । स्वां प्रकृतिं गतः मद्बाणवेधकृतप्रायश्चित्ततया स्वकीयं शुद्धभावं प्राप्तः सन् । प्लवगेश्वरो वाली । इतः अस्माल्लोकात् । धर्मार्थकामसंयोगैः विहितकालानुष्ठितधर्मार्थकामसंबन्धैः । पवित्रं क्रियाफलं स्वर्गं प्राप्तः । सामदानार्थसंयोगैरिति पाठे नीतिशास्त्रानुष्ठानैरित्यर्थः ॥९॥ केन स्वां प्रकृतिं प्राप्त इत्यपेक्षायामुक्तं विशदयति–स्वधर्मस्य चेति । स्वधर्मस्य संयोगात्स्वविहितधर्मानुष्ठानात् । रणे प्राणानपरिरक्षतेत्यनेन शौर्यकृतधर्मोप्युक्तः । उभाभ्यां जितः पूर्वं स्ववशीकृतः स्वर्गः इदानीं परिगृहीतश्च ॥ १० ॥ एषेति । हरियूथपः वाली ।

सर्वकारणभूतः कालः । आत्मनः पुरुषस्य वशो न भवति पुरुषाधीनो न भवति ॥ ७ ॥ किं तर्हीत्यत आह–किंत्विति । साधु पश्यता श्रेयः पश्यता । स्वात्महितं पश्यता, विवेकिनेत्यर्थः । सर्वोपि लोकव्यवहारः कालपरीणामो द्रष्टव्यः । स्वापेक्षितहेतुभूतः कालपरिणामः प्रेक्षणीयः । प्रेक्षणीयत्वे हेतुमाह धर्मश्चेति । धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः पूर्वाह्णमध्याह्नापराह्णकालक्रमायत्ताः, यस्मिन्काले यत्कर्म कर्तव्यं स कालोऽनुल्लङ्घनीय इति भावः ॥८॥ इत इति । स्वां प्रकृतिं गतः मद्बाणकृतवधेन कृतप्रायश्चित्ततया स्वकीयं शुद्धभावं प्राप्तः सः प्लवगेश्वरो वाली । इतः अस्माल्लोकात् । धर्मार्थकामसंयोगैः विहितकालानुष्ठितधर्मार्थकामसम्बन्धैः । पवित्रं क्रियाफलं स्वर्गं प्राप्त इति योजना ॥ ९ ॥ स्वधर्मस्य चेति । स्वधर्मसंयोगात् स्वविहितकर्मानुष्ठानात् स्वर्गो जितः पूर्वं स्ववशीकृतः, इदानीं युद्धे प्राणानपरिरक्षता परिगृहीतश्चेति सम्बन्धः ॥ १० ॥ नियतिः मृतिः प्राप्तकालम् एतत्कालोचितम् ॥ ११–१२ ॥

यां नियतिं गतः सा नियतिर्गतिः श्रेष्ठा । तत्तस्मात्कारणात् परितापमालम् । सद्गतिं प्राप्त प्राप्ति शङ्का न कार्यः । प्राप्तकालम् एतत्कालोचितम् । उपास्यताम् अनुष्ठीयताम् ॥ ११ ॥ गतचेतसम्, दुःखितमिति यावत् ॥ १२ ॥ कुरु त्वमस्येत्यर्धमेकं वाक्यम् ॥ १३ ॥ तारेत्यादि । वालिनो दहनं प्रति ताराङ्गदाभ्यां सहितः सन् । वालिसंस्कारकारणात् वालिसंस्कारार्थम् । चन्दनादीनि काष्ठानि समाज्ञापय । यच्चात्र समनन्तरं मरणा

वचनान्ते तु रामस्य लक्ष्मणः परवीरहा । अवदत्प्रश्रितं वाक्यं सुग्रीवं गतचेतसम् ॥ १२ ॥ कुरु त्वमस्य सुग्रीव प्रेतकार्यमनन्तरम् ॥ १३ ॥ ताराङ्गदाभ्यां सहितो वालिनो दहनं प्रति । समाज्ञापय काष्ठानि शुष्काणि च बहूनि च ॥ १४ ॥ चन्दनादीनि दिव्यानि वालिसंस्कारकारणात् । समाश्वासय चैनं त्वमङ्गदं दीनचेतसम् ॥ १५ ॥ मा भूर्बालिशबुद्धिस्त्वं त्वदधीनमिदं पुरम् । अङ्गदस्त्वानयेन्माल्यं वस्त्राणि विविधानि च । घृतं तैलमथो गन्धान्यच्चात्र समनन्तरम् ॥१६॥ त्वं तार शिबिकां शीघ्रमादायागच्छ संभ्रमात् । त्वरा गुणवती युक्ता ह्यस्मिन्काले विशेषतः ॥१७॥ सज्जीभवन्तु प्लवगाः शिबिकावहनोचिताः । समर्था बलिनश्चैव निर्हरिष्यन्ति वालिनम् ॥१८॥ एवमुक्त्वा तु सुग्रीवं सुमित्रानन्दवर्द्धनः । तस्थौ भ्रातृसमीपस्थो लक्ष्मणः परवीरहा ॥ १९ ॥ लक्ष्मणस्य वचः श्रुत्वा तारः संभ्रान्तमानसः । प्रविवेश गुहां शीघ्रं शिबिकासक्तमानसः ॥ २० ॥ आदाय शिबिकां तारः स तु पर्यापतत्पुनः ॥ २१ ॥ वानरैरुह्यमानां तां शूरैरुद्वहनोचितैः । दिव्यां भद्रासनयुतां शिबिकां स्यन्दनोपमाम् ॥ २२ ॥

नन्तरं यदानेतव्यमस्ति तत्सर्वमङ्गदः समानयेदित्यर्थः ॥ १४-१६ ॥ त्वमिति । त्वरा गुणवती अस्मिन्काले विशेषतो युक्ता ॥ १७ ॥ सज्जीभवन्त्विति । ये निर्हरिष्यन्ति ते सज्जीभवन्त्विति योजना । निर्हारः शववहनम् ॥ १८ ॥ १९ ॥ गुहां किष्किन्धाम् ॥२०॥२१॥ वानरैरित्यादि ।

समाज्ञापयेति । वालिसंस्कारकारणात् काष्ठानि समाज्ञापय, काष्ठानयनार्थं समाज्ञापयेत्यर्थः । वालिसंस्कारकारणात् अङ्गदं च समाश्वासयेति सम्बन्धः । गतचेतसमिति पाठे-गतचेतसम् इतिकर्तव्यतामूढम् । अनन्तरं यदानेतव्यं तदानयेति सम्बन्धः ॥ १४-१६ ॥ त्वमिति । सम्भ्रमाद्वेगात् । गुणवती त्वरा अस्मिन् काले विशेषतो युक्ता हीति सम्बन्धः ॥ १७ ॥ सज्जीभवन्त्विति । ये निर्हरिष्यन्ति ते सज्जीभवन्त्वित्यर्थः ॥ १८-२१ ॥ दिव्यामिति । भद्रासनयुतां

भद्रासनयुतां राजासनयुक्ताम् । ( राजार्होन्नतासनयुक्तामिति रामानुजार्यः ) पक्षिकर्मभिराचित्रां कृत्रिमपक्षिभिः समन्तादाश्चर्यभूताम् । क्रियत इति कर्म प्रतिकृतिः । द्रुमकर्मभिः द्रुमप्रतिकृतिभिः विभूषिताम् । आचितां चित्रपत्तीभिः चित्रलेखाभिः । पदातिभिरित्येके । आर्षो दीर्घः । सुनिविष्टां शोभनसन्निवेशवतीम् । जालवातायनावृतां सूक्ष्मरन्ध्रसमूहो जालम्, गोनयनाकृतिरन्ध्रसमूहो गवाक्षम्, तदावृताम् । सुनियुक्तां सुश्लिष्टां सुकृतां सुष्ठु

पक्षिकर्मभिराचित्रां द्रुमकर्मविभूषिताम् । आचितां चित्रपत्तीभिः सुनिविष्टां समन्ततः ॥ २३ ॥ विमानमिव सिद्धानां जालवातायनावृताम् । सुनियुक्तां विशालां च सुकृतां विश्वकर्मणा ॥ २४ ॥ दारुपर्वतकोपेतां चारुकर्म परिष्कृताम् । वराभरणहारैश्च चित्रमाल्योपशोभिताम् ॥ २५ ॥ गुहागहनसंछन्नां रक्तचन्दनभूषिताम् । पुष्पौघैः समभिच्छन्नां पद्ममालाभिरेव च । तरुणादित्यवर्णाभिर्भ्राजमानाभिरावृताम् ॥ २६ ॥ ईदृशीं शिबिकां दृष्ट्वा रामो लक्ष्मणमब्रवीत् । क्षिप्रं विनीयतां वाली प्रेतकार्यं विधीयताम् ॥२७॥ ततो वालिनमुद्यम्य सुग्रीवः शिबिकां तदा । आरोपयत विक्रोशन्नङ्गदेन सहैव तु ॥ २८ ॥

कृताम्, यत्नेन कृतामित्यर्थः । दारुपर्वतकोपेतां दारुनिर्मितक्रीडापर्वतयुक्ताम् । चारुकर्मणा उत्तंजनेन परिष्कृताम् अलंकृताम् । वराभरणैः हारैश्च, युक्तामिति शेषः । गुहागहनसंछन्नां कृत्रिमैर्गुहागहनैः गुहाभिः काननैश्च संछन्नाम् । पुष्पौघैः मुक्तकपुष्पनिचयैः आस्तरणार्थैः । समभिच्छन्नां व्याप्ताम् । पद्मेति, चतुर्दिक्षु पुष्पसरोपेतत्वेप्यन्तरान्तरा पद्ममालाभिः पद्मपङ्क्तिभिर्युक्तामित्यर्थः ॥२२–२६॥ ईदृशीं शिबिकामिति । पुनरुक्तिर्व्यवहितानुस्मरणार्था ॥२७॥ रामा०–क्षिप्रं प्रेतकार्यं विधीयतामिति लक्ष्मणोद्देशेनोक्तार्थस्य सुग्रीवेण क्रियमाणत्वाल्लक्ष्मणेन सुग्रीवोप्याज्ञप्त इत्यवगम्यते ॥२७॥ तत इति । ततः लक्ष्मणं

राजासनयुक्ताम् । पक्षिकर्मभिराचित्रां पक्षिप्रकृतिकर्मभिः आ समन्तात् चित्राम् । द्रुमकर्मविभूषितां द्रुमप्रकृतिभिः कर्मभिर्भूषिताम् । चित्रपत्तीभिः चित्ररचनाविशेषैर्वा । चित्रपङ्क्तीभिरिति वा पाठः । सुनिविष्टां शोभनसन्निवेशाम् । जालवातायनान्वितां जालैर्वातायनैश्च अन्विताम् । कुड्योपरि तिर्यगवस्थितफलकानिर्मितविविधसन्निवेशरन्ध्राणि जालानि । वातायनानि वायुप्रवेशार्थगवाक्षाकाररन्ध्राणि । सुनियुक्तां सुश्लिष्टाम् ॥ २२–२४ ॥ दारुपर्वतकोपेतां दारुनिर्मितक्रीडापर्वतयुक्ताम् । वराभरणहारैश्च, युक्तामिति शेषः ॥ २५ ॥ गुहागहनसञ्छन्नां क्रीडार्थं निर्मितदुष्प्रवेशगुहाकारावरणनिबिडाम् ॥ २६–२९ ॥

प्रति वाली विनीयतामित्युक्तिश्रवणानन्तरमित्यर्थः । यद्वा लक्ष्मणप्रत्युक्तिः स्वमुद्दिश्यैवेति ज्ञात्वेत्यर्थः । आरोपयत आरोपयत् ॥२८॥ आर्यस्य ज्येष्ठस्य । देहादूर्ध्वं कर्तव्यम् और्ध्वदैहिकम् उत्तरक्रिया । शिबिकासमनन्तरम् आसन्दीसमीपे । अत्रेतिकरणं द्रष्टव्यम् । इत्याज्ञापयदिति पूर्वेण संबन्धः ॥२९॥ रामा०—माल्यैर्वस्त्रैश्च भूषितामिति पाठः ॥ २९ ॥ ३० ॥ ३१ ॥ राज्ञामिति । ऋद्धिविशेषाः ऋद्धिविशेषानुरूपाः । यादृशाः और्ध्वदैहिकक्रियाप्रकारा दृश्यन्ते

आरोप्य शिबिकां चैव वालिनं गतजीवितम् । अलङ्कारैश्च विविधैर्माल्यैर्वस्त्रैश्च भूषितम् ॥ २९ ॥ आज्ञापयत्तदा राजा सुग्रीवः प्लवगेश्वरः । और्ध्वदैहिकमार्यस्य क्रियतामनुरूपतः ॥ ३० ॥ विश्राणयन्तो रत्नानि विविधानि बहून्यपि । अग्रतः प्लवगा यान्तु शिबिकासमनन्तरम् ॥ ३१ ॥ राज्ञामृद्धिविशेषा हि दृश्यन्ते भुवि यादृशाः । तादृशं वालिनः क्षिप्रं प्राकुर्वन्नौर्ध्वदैहिकम् ॥ ३२ ॥ अङ्गदं परिगृह्याशु तारप्रभृतयस्तदा । क्रोशन्तः प्रययुः सर्वे वानरा हतबान्धवाः ॥ ३३ ॥ ततः प्रणिहिताः सर्वा वानर्योऽस्य वशानुगाः । चुक्रुशुर्वीर वीरेति भूयः क्रोशन्ति ताः स्त्रियः ॥ ३४ ॥ ताराप्रभृतयः सर्वा वानर्यो हतयूथपाः । अनुजग्मुर्हि भर्तारं क्रोशन्त्यः करुणस्वनाः ॥ ३५ ॥ तासां रुदितशब्देन वानरीणां वनान्तरे । वनानि गिरयः सर्वे विक्रोशन्तीव सर्वतः ॥ ३६ ॥ पुलिने गिरिनद्यास्तु विविक्ते जलसंवृते । चितां चक्रुः सुबहवो वानराः शोककर्शिताः ॥ ३७ ॥ अवरोप्य ततः स्कन्धाच्छिबिकां वहनोचिताः । तस्थुरेकान्तमाश्रित्य सर्वे शोकसमन्विताः ॥ ३८ ॥

तादृशमौर्ध्वदैहिकं क्षिप्रं प्राकुर्वन् ॥३२॥ रामानु०—राज्ञामिति । तादृशं वालिनः क्षिप्रं प्राकुर्वन्नौर्ध्वदैहिकमिति पाठः ॥ ३२ ॥ तारप्रभृतयो वानरा इति सम्यक् ॥ ३३ ॥ रामानु०—अङ्गदं परिगृह्याशु तारप्रभृतयस्तदा । क्रोशन्तः प्रययुः सर्वे वानरा हतबान्धवाः । इति पाठः ॥३३॥ प्रणिहिताः आप्ताः ॥३४॥ रामानु०—प्रणिहिताः अत्यन्ताप्ता इत्यर्थः ॥३४॥ ॥ ३५–३७ ॥ अवरोप्येति वहनोचिताः वाहकाः ॥ ३८–४२ ॥



आज्ञापयदित्यस्मिन् श्लोके विश्राणयन्त इति श्लोके च इतिकरणं द्रष्टव्यम् । विश्राणयन्तः विकिरन्तः । श्लोकद्वयस्याज्ञापयदित्यनेन सम्बन्धः ॥ ३०–३३ ॥ प्रणिहिताः अत्यन्ताप्ताः ॥ ३४–३६ ॥ टी०—पुलिन इति । विविक्ते पूते "विविक्तौ पूतविजनौ" इत्यमरः ॥ ३७ ॥ ३८ ॥

विक्रुष्टं विप्रकृष्टम् । अध्वानं पादैरागताः ॥ ४३ ॥ इदानीमित्यादि । मदनोत्कटाः उत्कटमदनाः ॥ ४४ ॥ ४५ ॥ विलपतीं विलपन्तीम् ॥ ४६ ॥ पितरं पितृशरीरम् ॥ ४७ ॥ तत इति । अपसव्यम् अप्रदक्षिणम् ॥ ४८ ॥ संस्कृत्येति । वालिनं वालिशरीरम् । उदकं कर्तुं जलतर्पणं कर्तुम् ।



ततस्तारा पतिं दृष्ट्वा शिबिकातलशायिनम् । आरोप्याङ्के शिरस्तस्य विललाप सुदुःखिता ॥ ३९ ॥ हा वानरमहाराज हा नाथ मम वत्सल । हा महार्ह महाबाहो हा मम प्रिय पश्य माम् । जनं न पश्यसीमं त्वं कस्माच्छोकाभिपीडितम् ॥ ४० ॥ प्रहृष्टमिव ते वक्त्रं गतासोरपि मानद । अस्तार्कसमवर्णं च लक्ष्यते जीवतो यथा ॥४१॥ एष त्वां रामरूपेण कालः कर्षति वानर । येन स्म विधवाः सर्वाः कृता एकेषुणा वने ॥४२॥ इमास्तास्तव राजेन्द्र वानर्यो वल्लभाः सदा । पादैर्विकृष्टमध्वानमागताः किं न बुध्यसे । तवेष्टा ननु नामैता भार्याश्चन्द्रनिभाननाः ॥ ४३ ॥ इदानीं नेक्षसे कस्मात्सुग्रीवं प्लवगेश्वरम् । एते हि सचिवा राजन् तारप्रभृतयस्तव ॥ ४४ ॥ पुरवासी जनश्चायं परिवार्याऽऽसतेऽनघ । विसर्जयैतान् प्लवगान् यथोचितमरिन्दम । ततः क्रीडामहे सर्वा वनेषु मदनोत्कटाः ॥ ४५ ॥ एवं विलपतीं तारां पतिशोकपरिप्लुताम् । उत्थापयन्ति स्म तदा वानर्यः शोककर्शिताः ॥ ४६ ॥ सुग्रीवेण ततः सार्धमङ्गदः पितरं रुदन् । चितामारोपयामास शोकेनाभिहतेन्द्रियः ॥ ४७ ॥ ततोऽग्निं विधिवद्दत्त्वा सोऽपसव्यं चकार ह । पितरं दीर्घमध्वानं प्रस्थितं व्याकुलेन्द्रियः ॥ ४८ ॥ संस्कृत्य वालिनं ते तु विधिपूर्वं प्लवङ्गमाः । आजग्मुरुदकं कर्तुं नदीं शीतजलां शिवाम् ॥४९॥ ततस्ते सहितास्तत्र ह्यङ्गदं स्थाप्य चाग्रतः । सुग्रीवतारासहिताः सिषिचुर्वालिने जलम् ॥ ५० ॥

नदीं किष्किन्धासमीपवर्तिनीम् ॥ ४९ ॥ ततस्त इति । सुग्रीवतारासहिता इति । तारयाप्युदकदानं कुलाचारः ॥ ५० ॥

पुनस्ताराविलापमाह--तत इति ॥३९--४२॥ विक्रुष्टं दूरमित्यर्थः ॥४३॥४४॥ यथोचितं यथार्हम् । "ततः क्रीडामहे सर्वा वनेषु मदनोत्कटाः" इत्यत्र इति विललापेति शेषः ॥४३--४५॥ अपसव्यमप्रदक्षिणम् ।

सुग्रीवेणेति। अनेन रामः सहैवागत इत्यवगम्यते ॥ ५१ ॥ रामानु०–समानशोकः काकुत्स्थ इत्यनेन समानसुखदुःखित्वं सखित्वमित्येतत् प्रकटितं भवति ॥ ५१ ॥ ततस्त्विति। प्रकाशं प्रसिद्धम्। प्रदीप्य दग्ध्वा। हरिः सुग्रीवः। अन्ये पुरं प्रविविशुरित्यर्थसिद्धम्। यद्यपि तिर्यगधिकरणरीत्या तिरश्चां न शास्त्रविहितसंस्काराधिकारः, तथापि देवांशसंभूतानां तिर्यगवस्थामात्रभाजां वेदाध्ययनसंयोगाद्देवक्षेत्रजातत्वात् संस्कारार्हतास्तीति बोध्यम् ॥ ५२ ॥

सुग्रीवेणैव दीनेन दीनो भूत्वा महाबलः। समानशोकः काकुत्स्थः प्रेतकार्याण्यकारयत् ॥ ५१ ॥ ततस्तु तं वालिनमग्र्यपौरुषं प्रकाशमिक्ष्वाकुवरेषुणा हतम्। प्रदीप्य दीप्ताग्निसमौजसं तदा सलक्ष्मणं राममुपेयिवान् हरिः ॥ ५२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे पञ्चविंशः सर्गः *॥२५॥

ततः शोकाभिसंतप्तं सुग्रीवं क्लिन्नवाससम्। शाखामृगमहामात्राः परिवार्योपतस्थिरे ॥ १ ॥ अभिगम्य महाबाहुं राममक्लिष्टकारिणम्। स्थिताः प्राञ्जलयः सर्वे पितामहमिवर्षयः ॥ २ ॥ ततः काञ्चनशैलाभस्तरुणार्कनिभाननः। अब्रवीत्प्राञ्जलिर्वाक्यं हनुमान्मारुतात्मजः ॥ ३ ॥ भवत्प्रसादात्सुग्रीवः पितृपैतामहं महत्। वानराणां सुदुष्प्रापं प्राप्तो राज्यमिदं प्रभो ॥ ४ ॥ भवता समनुज्ञातः प्रविश्य नगरं शुभम्। संविधास्यति कार्याणि सर्वाणि ससुहृज्जनः ॥५

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चविंशः सर्गः ॥२५॥ अथ सुग्रीवाभिषेकः षड्विंशे–तत इत्यादि। क्लिन्नवाससम् आर्द्रवस्त्रम्। सद्यः स्नानादिति भावः। शाखामृगमहामात्राः वानररूपा मन्त्रिणः ॥१॥ सर्वे सुग्रीवादयः ॥२॥३॥ भवत्प्रसादा

दीर्घमध्वानं प्रस्थितं मृतम् ॥ ४८–५० ॥ सुग्रीवेणेति। सुग्रीवेणैवाकारयत् तत्प्रामुख्येनैवाकारयदित्यर्थः ॥ ५१ ॥ रामादेशादेव कर्तव्यकरणानन्तरं पुनस्तत्समीपं जगामेत्युक्तानुवादपूर्वकमाह–तत इति। प्रकाशं प्रभूतम्। प्रदीप्य संस्कार्य ॥५२॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां पञ्चविंशः सर्गः ॥ २५ ॥ तत इति। शाखा

* गतसर्गाणां फलश्रुतिः। स्कान्दे–"ताराप्रलापमाकर्ण्य वालिनो निधनं तथा। कपीन्द्रसंस्कृतिं नारी श्रुत्वा ह्यविधवा भवेत्। दीर्घायुष्यं भवेद्भर्तुः पुत्रिणी सम्भविष्यति ॥" इति ॥

दिति । वानराणां राज्यमित्यन्वयः ॥ ४ ॥ ५ ॥ अतिनिपुणतया हनुमान् प्रथमं संग्रहेण विज्ञाप्य तच्छृण्वति रामे पुनर्विशदमाह—स्नात इति ॥ ६ ॥ गिरिगुहां किष्किन्धाम् । वानराणां स्वामिना संबन्धं कुरु, सुग्रीवं वानरराजं कुर्वित्यर्थः ॥ ७–११ ॥ भाजनम् योग्यमित्यर्थः ॥ १२ ॥ अस्त्वभिषेकः,



स्नातोऽयं विविधैर्गन्धैरौषधैश्च यथाविधि । अर्चयिष्यति रत्नैश्च माल्यैश्च त्वां विशेषतः ॥ ६ ॥ इमां गिरिगुहां रम्यामभिगन्तुमितोऽर्हसि । कुरुष्व स्वामिसंबन्धं वानरान् संप्रहर्षयन् ॥७॥ एवमुक्तो हनुमता राघवः परवीरहा । प्रत्युवाच हनूमन्तं बुद्धिमान्वाक्यकोविदः ॥ ८ ॥ चतुर्दश समाः सौम्य ग्रामं वा यदि वा पुरम् । न प्रवेक्ष्यामि हनुमन् पितुर्निर्देशपालकः ॥ ९ ॥ सुसमृद्धां गुहां रम्यां सुग्रीवो वानरर्षभः । प्रविष्टो विधिवद्वीरः क्षिप्रं राज्येऽभिषिच्यताम् ॥ १० ॥ एवमुक्त्वा हनूमन्तं रामः सुग्रीवमब्रवीत् । वृत्तज्ञो वृत्तसंपन्नमुदारबलविक्रमम् ॥ ११ ॥ इममप्यङ्गदं वीर यौवराज्येऽभिषेचय । ज्येष्ठस्य स सुतो ज्येष्ठः सदृशो विक्रमेण ते । अङ्गदोऽयमदीनात्मा यौवराज्यस्य भाजनम् ॥ १२ ॥ पूर्वोऽयं वार्षिको मासः श्रावणः सलिलागमः । प्रवृत्ताः सौम्य चत्वारो मासा वार्षिकसंज्ञकाः ॥ १३ ॥ नायमुद्योगसमयः प्रविश त्वं पुरीं शुभाम् । अस्मिन्वत्स्याम्यहं सौम्य पर्वते सहलक्ष्मणः ॥१४॥

सीतान्वेषणरावणवधादिकं प्रत्युद्योगः क्रियत इत्याशङ्क्याह—पूर्व इत्यादि । पूर्वः वर्षर्त्वपेक्षया प्रथमः । वर्षाः वर्षर्तुः । "स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः" इत्यमरः । तत्र भवो वार्षिकः । "द्वौ द्वौ मार्गादिमासौ स्यादृतुः" इति श्रावणभाद्रपदौ वर्षर्तुः । तदेकदेशत्वाच्छ्रावणो वार्षिक इत्युच्यते । "वर्षाभ्यष्ठक्" इति ठक्प्रत्ययः । वार्षिकसंज्ञकाश्चत्वारो मासा इति । आश्वयुजाषाढाभ्यां चतुष्ट्वमिति ज्ञेयम् । छत्रिन्यायात् । वर्षमुखत्वाद्वर्षानन्तरकालत्वाच्च

मृग महामात्राः वानरप्रधानाः ॥ १–५ ॥ स्नातः अभिषिक्तः । औषधैः अभिषेकद्रव्यैः ॥ ६ ॥ गिरिगुहां किष्किन्धाम् । स्वामिसम्बन्धं वानराणां स्वामिना सह सम्बन्धं कुरुष्व, सुग्रीवं वानरराजं कुर्वित्यर्थः ॥७–१२॥ अस्तु भवदुक्तप्रकारेणाभिषेकादिकम्, मत्प्रार्थितः त्वया सम्पादितः सीतान्वेषणरावणनिरसनोद्योगोऽद्यैव कर्तव्य इति सुग्रीवाभिप्रायमाशङ्क्याह—पूर्वोयमित्यादिना । प्रवृत्ताः प्रवर्तितुमुपक्रान्ताः ॥ १३–१५ ॥

चत्वारोपि युद्धयोग्या न भवन्ति । कश्चित्तु "पक्षा वै मासाः" इति श्रुतिपक्षमाश्रित्य चत्वारो वार्षिका मासा इत्युक्तम् । श्रावणः प्रथमो मास इत्यत्रापि प्रथमः पक्ष इत्यर्थः । " चत्वारो वार्षिका मासा गता वर्षशतोपमाः " इत्युपसंहारादित्याह ॥ १३–१५ ॥ कार्त्तिक इति । कार्त्तिके मासि समनुप्राप्ते समीपं प्राप्ते । आश्वयुजान्त इत्यर्थः । यत यतस्व, सेनासंनहनं कुरु । कार्त्तिकशब्दस्य आश्वयुजान्तपरत्वं स्वयमेव वक्ष्यति–"वयमाश्वयुजे मासि

इयं गिरिगुहा रम्या विशाला युक्तमारुता । प्रभूतसलिला सौम्य प्रभूतकमलोत्पला ॥ १५ ॥ कार्त्तिके समनुप्राप्ते त्वं रावणवधे यत । एष नः समयः सौम्य प्रविश त्वं स्वमालयम् ॥ १६ ॥ अभिषिक्तः स्वराज्ये च सुहृदः संप्रहर्षय ॥ १७ ॥ इति रामाभ्यनुज्ञातः सुग्रीवो वानराधिपः । प्रविवेश पुरीं रम्यां किष्किन्धां वालिपालिताम् ॥ १८ ॥ तं वानरसहस्राणि प्रविष्टं वानरेश्वरम् । अभिवाद्य प्रविष्टानि सर्वतः पर्यवारयन् ॥ १९ ॥

पिङ्गाक्षप्रतिचोदिताः"इति । प्रतिचोदनं संनहनम् नतु निर्गमः । निर्गमस्तु मार्गशीर्षे । स्वसंकेतितकार्त्तिकातिक्रमादेव रामस्य सुग्रीवे कोपो लक्ष्मणप्रेषणं च । स्वयंप्रभाबिलनिर्गमनानन्तरं "द्रुमान् वासन्तिकान् दृष्ट्वा" इत्येतद्वसन्तपुष्पोद्गमोपक्रमभूतपत्रविगलनहेतुफाल्गुनापेक्षया । पक्षान्तरे फाल्गुनचैत्रयोर्वसन्तत्वोक्तेर्वा । अयमत्र क्रमोऽनुसन्धेयः । "उत्तरस्यादिना पूर्वस्यावधिं जानीयात्" इति न्यायेन उत्तरस्योत्तरस्य ग्रहणात् पूर्वपूर्वकालसंख्याज्ञापनं वाल्मीकेः शैली । तथा च चैत्रे रामस्य साकेतान्निर्गमः । अगस्त्याश्रमागमनात्पूर्वं दश संवत्सरा गता इत्युक्तम् । अथ पञ्चवट्यां वर्षत्रयानन्तरं चैत्रे प्राप्ते शूर्पणखानासिकाच्छेदनखरवधादिकं कृतमित्यवगम्यते । रावणेन च मारीचवचनादिना किंचिद्विलम्ब्य तस्मिन्नेव चैत्रे सीता हृता । सीताविरहेण दूयमानस्य रामस्य वसन्तवर्णने 'चैत्रवनानिलः' इत्युक्तेः लङ्कायां सीतायाः संवत्सरवासोक्तेश्च । पुनः फाल्गुने हि रावणवधः । आषाढे वालिवधः । शरदि सेनासंनहनम् । मार्गशीर्षे वानरप्रस्थापनम् । स्वयंप्रभाबिले बहुकालयापनम् । "कालश्च नो महान् यातः" इत्युक्तेः । बहिर्निर्गमनानन्तरं फाल्गुनशुद्धत्रयोदश्यां हनुमतः समुद्रतरणम् । चतुर्दश्यां पुनरागमनम् । पौर्णमास्यां दण्डयात्रेत्यादि । अन्यद्युद्धकाण्डे वक्ष्यते । समयः संकेतः ॥ १६–१९ ॥

तर्हि कदा मदुद्योगकाल इत्यत आह–कार्त्तिक इति ॥ १६–२१ ॥

प्रणम्येति । मूर्ध्ना प्रणम्य वसुधायां पतिताः । समाहिताः अनन्यमनस्काः ॥ २० ॥ भ्रातुरन्तःपुरं प्रविवेशेति । तारां संमान्य, स्ववशीकरणार्थमिति भावः ॥ २१ ॥ २२ ॥ प्ररोहान् पल्लवान् । अनुलेपनं कर्पूरादि । गन्धाः अगरुप्रभृतयः । अक्षतं जातरूपम्, अक्षततण्डुलं हरिद्रामिश्रम् । प्रियङ्गु सूक्ष्मधान्यविशेषः । वाराही वराहचर्मविकृती । " सुपां सुलुक् " इत्यादिना पूर्वसवर्णदीर्घः ॥ २३—२६ ॥ समालम्भनम् अनुलेपनविशेषः । " समा

ततः प्रकृतयः सर्वा दृष्ट्वा हरिगणेश्वरम् । प्रणम्य मूर्ध्ना पतिता वसुधायां समाहिताः ॥ २० ॥ सुग्रीवः प्रकृतीः सर्वाः संभाष्योत्थाप्य वीर्यवान् । भ्रातुरन्तःपुरं सौम्यं प्रविवेश महाबलः ॥ २१ ॥ प्रविश्य त्वभिनिष्क्रान्तं सुग्रीवं प्लवगेश्वरम् । अभ्यषिञ्चन्त सुहृदः सहस्राक्षमिवामराः ॥ २२ ॥ तस्य पाण्डुरमाजह्रुश्छत्रं हेमपरिष्कृतम् । शुक्ले च वालव्यजने हेमदण्डे यशस्करे ॥ २३ ॥ तथा सर्वाणि रत्नानि सर्वबीजौषधैरपि । सक्षीराणां च वृक्षाणां प्ररोहान् कुसुमानि च ॥ २४ ॥ शुक्लानि चैव वस्त्राणि श्वेतं चैवानुलेपनम् । सुगन्धीनि च माल्यानि स्थलजान्यम्बुजानि च ॥ २५ ॥ चन्दनानि च दिव्यानि गन्धांश्च विविधान् बहून् । अक्षतं जातरूपं च प्रियङ्गु मधुसर्पिषी । दधि चर्म च वैयाघ्रं वाराही चाप्युपानहौ ॥ २६ ॥ समालम्भनमादाय रोचनां समनःशिलाम् । आजग्मुस्तत्र मुदिता वराः कन्यास्तु षोडश ॥ २७ ॥ ततस्ते वानरश्रेष्ठं यथाकालं यथाविधि । रत्नैर्वस्त्रैश्च भक्ष्यैश्च तोषयित्वा द्विजर्षभान् ॥ २८ ॥ ततः कुशपरिस्तीर्णं समिद्धं जातवेदसम् । मन्त्रपूतेन हविषा हुत्वा मन्त्रविदो जनाः ॥ २९ ॥

लम्भो विलेपनम् " इत्यमरः । रोचनां गोरोचनाम् । समनःशिलां शैलधातुविशेषसंहितं तिलकसाधनं मनःशिला ॥ २७ ॥ ततस्ते वानरश्रेष्ठ मित्यारभ्य वसवो वासवं यथेत्यन्तमेकं वाक्यम् । यथाकालं विहितकालमनतिक्रम्य । यथाविधि यथाक्रमम् । द्विजर्षभान् याजनार्थमाहूतान् । समिद्धं

प्रविश्येति । प्रविश्य स्थितमिति शेषः ॥ २२ ॥ शुक्लानीति । श्वेतमनुलेपनं कर्पूरद्रवः । प्रियङ्गु फलिनीपुष्पम् । " प्रियङ्गुः फलिनी फली " इत्यमरः । यद्वा " प्रियङ्गुः सिद्धार्थसमे च " इति विश्वप्रकाशः । दधि चर्म चेति । समालम्भनमनुलेपनम् ॥२३—२७॥ ततस्त इत्यादि वसवो वासवं यथेत्यन्तमेकं वाक्यम् ।

ज्वलितम् । जातवेदसम् अग्निम् । मन्त्रविदः वानरपुरोहिताः । हेमप्रतिष्ठाने हेममयपादयुक्ते । वरासनविशेषणमेतत् । नदीनदेभ्यस्तीर्थेभ्यः समुद्रेभ्यश्च अपः आहृत्य आनीय, संहृत्य संमिश्रीकृत्य तद्विमलं जलं कनककुम्भेषु निधाय तेभ्यो वृषभशृङ्गादिभिरुद्धृत्य, शास्त्रदृष्टेन विधिना



ततो हेमप्रतिष्ठाने वरास्तरणसंवृते । प्रासादशिखरे रम्ये चित्रमाल्योपशोभिते ॥ ३० ॥ प्राङ्मुखं विविधैर्मन्त्रैः स्थापयित्वा वरासने । नदीनदेभ्यः संहृत्य तीर्थेभ्यश्च समन्ततः ॥ ३१ ॥ आहृत्य च समुद्रेभ्यः सर्वेभ्यो वानरर्षभाः । अपः कनककुम्भेषु निधाय विमलाः शुभाः ॥ ३२ ॥ शुभैर्वृषभशृङ्गैश्च कलशैश्चापि काञ्चनैः । शास्त्रदृष्टेन विधिना महर्षिविहितेन च ॥ ३३ ॥ गजो गवाक्षो गवयः शरभो गन्धमादनः । मैन्दश्च द्विविदश्चैव हनुमान् जाम्बवान्नलः ॥ ३४ ॥ अभ्यषिञ्चन्त सुग्रीवं प्रसन्नेन सुगन्धिना । सलिलेन सहस्राक्षं वसवो वासवं यथा ॥ ३५ ॥ अभिषिक्ते तु सुग्रीवे सर्वे वानरपुङ्गवाः । प्रचुक्रुशुर्महात्मानो हृष्टास्तत्र सहस्रशः ॥ ३६ ॥ रामस्य तु वचः कुर्वन् सुग्रीवो हरिपुङ्गवः । अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत् ॥ ३७ ॥ अङ्गदे चाभिषिक्ते तु सानुक्रोशाः प्लवङ्गमाः । साधु साध्विति सुग्रीवं महात्मानोऽभ्यपूजयन् ॥ ३८ ॥ रामं चैव महात्मानं लक्ष्मणं च पुनः पुनः । प्रीताश्च तुष्टुवुः सर्वे तादृशे तत्र वर्तति ॥ ३९ ॥ हृष्टपुष्टजनाकीर्णा पताकाध्वजशोभिता । बभूव नगरी रम्या किष्किन्धा गिरिगह्वरे ॥ ४० ॥

क्रमेण, महर्षिविहितेन कल्पसूत्रविहितेन च विधिना अभ्यषिञ्चन्त ॥ २८–३७ ॥ सानुक्रोशाः अङ्गदे सदयाः ॥ ३८ ॥ तादृशे सुग्रीवाङ्गदाभिषेकरूपोत्सवे । वर्तति वर्तमाने सति ॥ ३९ ॥ हृष्टेति । पताकाध्वजयोर्भेद उक्तः ॥ ४० ॥



द्विजर्षभान् वानरजातीयद्विजर्षभान् ॥ २८ ॥ २९ ॥ तत इति । हेमप्रतिष्ठाने वरास्तरणसंवृते इत्येतदुभयं वरासनविशेषणम् । हेमप्रतिष्ठाने हेममयपीठयुक्ते । नदीनदेभ्यः तीर्थेभ्यः समुद्रेभ्यश्च अपः संहृत्य आहृत्य च सम्मिलिताः कृत्वा विमलं जलं कनककुम्भेषु निधायेति सम्बन्धः । शास्त्रदृष्टेन महर्षिविहितेन । शास्त्रं वेदः, महर्षयः मन्वादयः ॥ ३०–३८ ॥ राममिति । तादृशे सुग्रीवाङ्गदाभिषेकरूपमहोत्सवे वर्तति वर्तमाने सति ॥ ३९–४० ॥

निवेद्येति । निवेद्य, रामसमीपमागत्य निवेद्येत्यर्थः ॥ ४१ ॥ इति श्रीगोविन्द० श्रीरामायण० मुक्ता० किष्किन्धाकाण्डव्याख्याने षड्विंशः सर्गः॥२६॥
अथ रामस्यैकान्तवाससमुद्भूतसीताविरहशोकप्रशमनं लक्ष्मणेन क्रियते सप्तविंशे—अभिषिक्ते इत्यादि । शैलं शिलामयमिति मृच्छिलोभयमय



निवेद्य रामाय तदा महात्मने महाभिषेकं कपिवाहिनीपतिः । रुमां च भार्यां प्रतिलभ्य वीर्यवानवाप राज्यं त्रिदशाधिपो यथा ॥४१॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे षड्विंशः सर्गः *॥२६॥

अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहाम् । आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् ॥१॥ शार्दूलमृगसंघुष्टं सिंहैर्भीमरवैर्वृतम् । नानागुल्मलतागूढं बहुपादपसंकुलम् ॥२॥ ऋक्षवानरगोपुच्छैर्मार्जारैश्च निषेवितम् । मेघराशिनिभं शैलं नित्यं शुचिजलाश्रयम् ॥ ३ ॥ तस्य शैलस्य शिखरे महतीमायतां गुहाम् । प्रत्यगृह्णत वासार्थं रामः सौमित्रिणा सह ॥ ४ ॥ कृत्वा च समयं सौम्यः सुग्रीवेण सहानघः । कालयुक्तं महद्वाक्यमुवाच रघुनन्दनः । विनीतं भ्रातरं भ्राता लक्ष्मणं लक्ष्मिवर्धनम् ॥५॥ इयं गिरिगुहा रम्या विशाला युक्तमारुता । अस्यां वसाव सौमित्रे वर्षरात्रमरिंदम ॥ ६ ॥ गिरिशृङ्गमिदं रम्यमुन्नतं पार्थिवात्मज । श्वेताभिः कृष्णताम्राभिः शिलाभिरुपशोभितम् ॥७॥ नानाधातुसमाकीर्णं दरीनिर्झरशोभितम् । विविधैर्वृक्षषण्डैश्च चारु चित्रलतावृतम् ॥ ८ ॥

गिरिभ्यो व्यावृत्तिः । अतो न गिरिं शैलमिति पुनरुक्तिः ॥ १–४ ॥ कृत्वेति । कालयुक्तं तत्कालोचितम् ॥ ५ ॥ युक्तमारुता उचितमारुता, यावदपेक्षमारुतेत्यर्थः । वसाव, लोडुत्तमद्विवचनम् । वर्षरात्रमिति । अच् समासान्त आर्षः । जात्येकवचनम् ॥ ६ ॥ गिरिशृङ्गमित्यादि ।

॥ ४१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां षड्विंशः सर्गः ॥ २६ ॥ १–४ ॥ कृत्वेति । समयं कृत्वा शरदि दण्डयात्रेति सङ्केतं कृत्वेत्यर्थः । कालयुक्तं तत्कालोचितम् । लक्ष्मिवर्धनमित्यत्र ह्रस्वश्छान्दसः ॥ ५ ॥ वर्षरात्रमिति जात्येकवचनमेतत ॥ ६ ॥ ७ ॥ दरीदर्दुर

* फलश्रुतिः । स्कान्दे—" अभिषेकं च ताराया रुमायाः प्राप्तिमुत्तमाम् । सुग्रीवस्य तदा श्रुत्वा राज्यलाभं स गच्छति ॥ " इति ॥ स०—गोपुच्छैः नीलमुखवानरविशेषैः ॥ ३ ॥ जीवन्तलक्ष्मीशब्दोऽप्यस्तीति लक्ष्मिवर्धनमित्येतत् साधु । " द्रागलक्ष्मिमर्तृगुणान् " इत्यादिप्रयोगात ॥ ५ ॥ नदीदर्दुरसंयुतमिति पाठे—नद्यां विद्यमानमण्डूकसदृशमहामण्डूकोपेतम् ॥ ८ ॥

कदम्बाः अर्जुनाः नदीसर्जाः ॥ ७-१० ॥ रामानुजीये... चारु कान्तम् । चित्रलतावृतमिति पाठः । कदम्बार्जुनसर्जैः । कदम्बाः नीपाः । अर्जुनाः नदीसर्जाः । सर्जाः सालाः ॥ ७-१० ॥ इयं चेति । नातिदूरे भविष्यतीत्यनेन वर्षाकालस्य प्रवृत्तत्वाद्भाविजलसमृद्ध्या समीपवर्तिनी भविष्यतीत्यर्थः ॥ ११ ॥ प्रागुदक्प्रवणे देशे वर्तमाना गुहा साधु भविष्यति । प्रागुदक्प्रवणे देशे वर्तमानत्वाभिधानाद्गुहाया नैर्ऋत्याभिमुखद्वारत्वमुक्तम् । अत एव पौरस्त्य



नानाविहगसंघुष्टं मयूररवनादितम् । मालतीकुन्दगुल्मैश्च सिन्धुवारकुरण्टकैः ॥ ९ ॥ कदम्बार्जुनसर्जैश्च पुष्पितै रुपशोभितम् ॥ १० ॥ इयं च नलिनी रम्या फुल्लपङ्कजमण्डिता । नातिदूरे गुहाया नौ भविष्यति नृपात्मज ॥ ११ ॥ प्रागुदक्प्रवणे देशे गुहा साधु भविष्यति । पश्चाच्चैवोन्नता सौम्य निवातेयं भविष्यति ॥ १२ ॥ गुहाद्वारे च सौमित्रे शिला समतला शुभा । श्लक्ष्णा चैवायता चैव भिन्नाञ्जनचयोपमा ॥ १३ ॥ गिरिशृङ्गमिदं तात पश्य चोत्तरतः शुभम् । भिन्नाञ्जनचयाकारमम्भोधरमिवोत्थितम् ॥ १४ ॥ दक्षिणस्यामपि दिशि स्थितं श्वेतमिवापरम् । कैलासशिखरप्रख्यं नानाधातुविभूषितम् ॥ १५ ॥ प्राचीनवाहिनीं चैव नदीं भृशमकर्दमाम् । गुहायाः पूर्वतः पश्य त्रिकूटे जाह्नवीमिव ॥ १६ ॥ चम्पकैस्तिलकैस्तालैस्तमालैरतिमुक्तकैः । पद्मकैः सरलैश्चैव अशोकैश्चैव शोभिताम् ॥ १७ ॥

वर्षप्रवेशाभावेन साधुत्वमुक्तं भवति । इयं पश्चादुन्नता पश्चाद्भागोन्नता । अत एव पुरोवातनिरोधकत्वान्निवाता च भविष्यति ॥ १२ ॥ गुहाद्वारे चेति । अस्मिन् श्लोके वर्तत इति शेषः ॥ १३ ॥ गिरिशृङ्गमित्यादि । श्वेतमिव रूप्यमिव । "दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतम्" इत्यमरः । अपरं शृङ्गं पश्येति पूर्वेणान्वयः ॥ १४ ॥ १५ ॥ प्राचीनवाहिनीमित्यादि । अतिमुक्तकैः पुण्ड्रकैः । पद्मकैः पद्मपर्णाख्यवृक्षविशेषैः । सरलैः यूपसरलैः ।

शोभितमिति पाठः । दर्दुराः पाषाणसन्धयः ॥ ८-१० ॥ अत्र वसतोरावयोः सौकर्यातिशयो भविष्यतीत्याह-इयं चेत्यादि । नलिनी पुष्करिणी । गुहायाः नातिदूरे भविष्यति । वर्षाकालस्य प्रवृत्तत्वात् भाविवारिपूरसमृद्ध्या गुहासमीपवर्तिनी भविष्यतीत्यर्थः ॥ ११ ॥ प्रागुदगिति । प्रागुदक्प्रवणे देशे वर्तमाना गुहा साधु भविष्यति । प्रागुदक्प्रवणवर्तमानत्वाभिधानाद् गुहाया नैर्ऋत्यद्वारवर्तित्वमवगम्यते । अत एव पौरस्त्यवर्षप्रवेशाभावेन साधुत्वमुक्तं भवति । इयं पश्चादुन्नता पश्चाद्भागोन्नता अत एव पुरोवातनिरोधकत्वात् निवाता च भविष्यति ॥ १२-१४ ॥ दक्षिणस्यामिति । श्वेतमिव रूप्यामिव "श्वेतं रूप्येपि" इत्यमरः ।

तिमिशैः स्यन्दनैः । "तिमि(नि)शे स्यन्दनो नेमिः" इत्यमरः । धवैः धुन्धुरैः । हिंतालैः लताङ्कुराख्यवृक्षैः । "अथ स्याल्लताङ्कुरः । हिन्तालस्तृणराजश्च" इति वैजयन्ती । तिरिटैः तिल्ववृक्षैः । "तिरिटस्तिल्वमार्जनौ" इत्यमरः । वेत्रकैरिति सम्यक् ॥ १६–१९ ॥ एकैकमनुरक्तैः अन्योन्यानुरागयुक्तैः ॥ २०–२२ ॥



वानीरैस्तिमिशैश्चैव वकुलैः केतकैर्धवैः । हिन्तालैस्तिरिटैर्नीपैर्वेत्रकैः कृतमालकैः ॥ १८ ॥ तीरजैः शोभिता भाति नानारूपैस्ततस्ततः । वसनाभरणोपेता प्रमदेवाभ्यलंकृता ॥ १९ ॥ शतशः पक्षिसङ्घैश्च नानानादैर्विनादिता । एकैकमनुरक्तैश्च चक्रवाकैरलंकृता ॥ २० ॥ पुलिनैरतिरम्यैश्च हंससारससेवितैः । प्रहसन्तीव भात्येषा नारी सर्वविभूषिता ॥ २१ ॥ क्वचिन्नीलोत्पलच्छन्ना भाति रक्तोत्पलैः क्वचित् । क्वचिदाभाति शुक्लैश्च दिव्यैः कुमुदकुड्मलैः ॥ २२ ॥ पारिप्लवशतैर्जुष्टा बर्हिणक्रौञ्चनादिता । रमणीया नदी सौम्य मुनिसङ्घैर्निषेविता ॥ २३ ॥ पश्य चन्दन वृक्षाणां पङ्क्तीः सुरचिता इव । ककुभानां च दृश्यन्ते मनसेवोदिताः समम् ॥ २४ ॥ अहो सुरमणीयोऽयं देशः शत्रुनिषूदन । दृढं रंस्याव सौमित्रे साध्वत्र निवसावहै ॥ २५ ॥ इतश्च नातिदूरे सा किष्किन्धा चित्रकानना । सुग्रीवस्य पुरी रम्या भविष्यति नृपात्मज ॥ २६ ॥ गीतवादित्रनिर्घोषः श्रूयते जयतां वर । नर्दतां वानराणां च मृदङ्गाडम्बरैः सह ॥ २७ ॥

पारिप्लवैः जलोपरिसञ्चारिपक्षिविशेषैः ॥ २३ ॥ पश्येति । सुरचिता इव मालारूपेण ग्रथिता इव । ककुभानाम् अर्जुनवृक्षाणाम् । दृश्यन्ते, पङ्क्तय इति शेषः । मनसेवोदिताः सममिति । मनसा सङ्कल्पेन । समं युगपत् । उदिता इव स्थिताः ॥ २४ ॥ रंस्याव रंस्यावहे । अतः अत्र गिरौ । निवसावहै निवसाव ॥ २५ ॥ अत्र वासे क्रियमाणे किष्किन्धा च समीपवर्तिनी भविष्यतीत्याह—इतश्चेति ॥ २६ ॥ गीतेति । मृदङ्गाडम्बरैः सह नर्दतां वानराणां

अपरं शृङ्गं पश्येति पूर्वेण सम्बन्धः ॥ १५-१९ ॥ शतश इति । एकैकमनुरक्तैः अन्योन्यानुरागयुक्तैः ॥ २०–२२ ॥ पारिप्लवेति । पारिप्लवशतैः पारिप्लवः जलोपरिसञ्चारी पक्षिविशेषः ॥ २३ ॥ चन्दनवृक्षाणां ककुभानामर्जुनवृक्षाणां च दृश्यम्, पश्य इति शेषः । मनसेवोदिताः समं मनसा सङ्कल्पेन समं यथा तथा उदिताः तेषां पङ्क्तीः पश्येति सम्बन्धः । टी०—समं मनसा उदिता इव एकोच्छ्रायविस्तारा उद्भवाम इति सङ्कल्प्य उत्थिता इवेत्युत्प्रेक्षा ॥ २४–२६ ॥ गीतेति । गीतवादित्रनिर्घोषः श्रूयते

निर्घोषः श्रूयत इत्यन्वयः ॥ २७ ॥ २८ ॥ तत्र गुहायाम् । कुञ्जः लतागृहम् ॥ २९ ॥ रामानु०—इत्युक्त्वा न्यवसत्तत्र राघवः सहलक्ष्मणः। इति पाठः ॥ २९ ॥ सुसुखेपीति ॥ बहुद्रव्ये बहुपुष्पफलादिघने ॥ ३० ॥ उदयेति । उदयाभ्युदितम् उदयपर्वतादुद्गतम् ॥३१॥ तत्समुत्थेनेत्यादि । लक्ष्मणोऽनुनयन् वचः

लब्ध्वा भार्यां कपिवरः प्राप्य राज्यं सुहृद्वृतः । ध्रुवं नन्दति सुग्रीवः संप्राप्य महतीं श्रियम् ॥२८॥ इत्युक्त्वा न्यवसत्तत्र राघवः सहलक्ष्मणः । बहुदृश्यदरीकुञ्जे तस्मिन् प्रस्रवेण गिरौ ॥२९॥ सुसुखेपि बहुद्रव्ये तस्मिन् हि धरणीधरे । वसतस्तस्य रामस्य रतिरल्पापि नाभवत् । हृतां हि भार्यां स्मरतः प्राणेभ्योपि गरीयसीम् ॥ ३० ॥ उदयाभ्युदितं दृष्ट्वा शशाङ्कं च विशेषतः । आविवेश न तं निद्रा निशासु शयनं गतम् ॥ ३१ ॥ तत्समुत्थेन शोकेन बाष्पोपहतचेतसम् । तं शोचमानं काकुत्स्थं नित्यं शोकपरायणम् ॥३२॥ तुल्यदुःखोऽब्रवीद्भ्राता लक्ष्मणोऽनुनयन् वचः ॥३३॥ अलं वीर व्यथां गत्वा न त्वं शोचितुमर्हसि । शोचतो व्यवसीदन्ति सर्वार्था विदितं हि ते ॥ ३४ ॥ भवान् क्रियापरो लोके भवान् दैवपरायणः । आस्तिको धर्मशीलश्च व्यवसायी च राघव ॥ ३५ ॥

इति पाठः ॥ ३२–३४ ॥ क्रियापर इत्यनेन कार्यसिद्धिहेतुभूतपुरुषकारवत्त्वमुक्तम् । दैवपरायण इत्यनेन कार्यसिद्धिहेतुभूतदेवतानिष्ठतोक्ता ॥ ३५ ॥

मृदङ्गाडम्बरैः सह नर्दतां वानराणां निर्घोषश्च श्रूयत इति सम्बन्धः । "आडम्बरस्तूर्यरवः" इति विश्वः ॥ २७ ॥ २८ ॥ तस्मिन् प्रस्रवणे गिरौ । तत्र गुहायां न्यवसदिति सम्बन्धः ॥ २९ ॥ ३० ॥ उदयाभ्युदितम् उदयपर्वतादुद्गतम् ॥ ३१ ॥ तत्समुत्थेन सीतास्मरणसमुत्थेन ॥ ३२ ॥ ३३ ॥ शोचतः पुरुषस्य ॥ ३४ ॥ भवानिति । क्रियापर इत्यनेन कार्यसिद्धिहेतुभूतपुरुषकारवत्त्वमुच्यते । दैवपरायणः भाग्यसम्पन्नः । उभयत्र हेतुः आस्तिक इति । व्यवसायी प्रशस्तोद्योगः ॥३५॥

स०—उदयाभ्युदितम् उदयपर्वतेऽभ्युदितम् । सविशेषतः द्वितीयान्तात्तसिः । सविशेषं पूर्णत्वादिविशेषसहितम् । शशाङ्कं चन्द्रं दृष्ट्वा स्थितम् । शयनं शय्यां प्राप्तं तं रामं निद्रा न विवेश । यद्वा सविशेषं शशाङ्कम् उदयाभ्युदितम् उदयपर्वतगतं सूर्यमिव दृष्ट्वा स्थितमित्यादिना योजना ॥ ३१ ॥ हे वीर ! व्यथां गत्वा अलं व्यथां न कुर्वित्यर्थः । "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति प्रतिषेधार्थकालंशब्दयोगे समानकर्तृकत्वाभावेपि क्त्वाप्रत्ययः । यद्वा अलमत्यन्तं व्यथां गत्वा मानसिकदुःखविशेषं प्राप्य शोचितुं नार्हसीत्येकमेव वाक्यम् । शोचतः पुरुषस्य सर्वार्था अवसीदन्ति अवसन्ना भवन्ति । नश्यन्तीति यावत् ॥ ३४ ॥ आस्तिकः अस्ति परलोक इति ज्ञानी । धर्मशीलः धर्मे धनुषि शीलं स्वभावो यस्य, सदा धनुर्धारीति यावत् । अभिधानं तूक्तं पूर्वम् । व्यवसायी उद्योगवान् ॥ ३५ ॥

अव्यवस्थितः धैर्यरहित इत्यर्थः । रणे विक्रमैर्हन्तुं न समर्थ इत्यन्वयः ॥ ३६ ॥ रामानु०—न हीति । विक्रमे जिह्मकारिणं विक्रमविषये छद्मकारिणम् ॥ ३६ ॥ ३७ ॥ परिवर्तयितुम् अधरोत्तरं कर्तुम् । अङ्गेति संबोधनम् । पुनरित्यत्र दीर्घाभाव आर्षः ॥ ३८ ॥ ३९ ॥ दीप्तैः ज्वलनकरैः । उद्बोधकैः, वाक्यैरिति



न ह्यव्यवसितः शत्रुं राक्षसं तं विशेषतः । समर्थस्त्वं रणे हन्तुं विक्रमैर्जिह्मकारिणम् ॥ ३६ ॥ समुन्मूलय शोकं त्वं व्यवसायं स्थिरं कुरु । ततः सपरिवारं तं निर्मूलं कुरु राक्षसम् ॥ ३७ ॥ पृथिवीमपि काकुत्स्थ ससागर वनाचलाम् । परिवर्तयितुं शक्तः किमङ्ग पुन रावणम् ॥ ३८ ॥ शरत्कालं प्रतीक्षस्व प्रावृट्कालोऽयमागतः । ततः सराष्ट्रं सगणं रावणं त्वं वधिष्यसि ॥ ३९ ॥ अहं तु खलु ते वीर्यं प्रसुप्तं प्रतिबोधये । दीप्तैराहुतिभिः काले भस्मच्छन्नमिवानलम् ॥ ४० ॥ लक्ष्मणस्य तु तद्वाक्यं प्रतिपूज्य हितं शुभम् । राघवः सुहृदं स्निग्धमिदं वचनमब्रवीत् ॥ ४१ ॥ वाच्यं यदनुरक्तेन स्निग्धेन च हितेन च । सत्यविक्रमयुक्तेन तदुक्तं लक्ष्मण त्वया ॥ ४२ ॥ एष शोकः परित्यक्तः सर्वकार्यावसादकः । विक्रमेष्वप्रतिहतं तेजः प्रोत्साहयाम्यहम् ॥ ४३ ॥ शरत्कालं प्रतीक्षिष्ये स्थितोऽस्मि वचने तव । सुग्रीवस्य नदीनां च प्रसादमनुपालयन् ॥ ४४ ॥ उपकारेण वीरस्तु प्रतिकारेण युज्यते । अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः ॥ ४५ ॥

शेषः ॥ ४० ॥ ४१ ॥ अनुरक्तेन अनुरागयुक्तेन । स्निग्धेन तत्कालोचितप्रियपरेण । हितेन हितपरेण । सत्यविक्रमयुक्तेन अमोघविक्रमयुक्तेन । यद्वाच्यं तत्सर्वं त्वयोक्तमिति संबन्धः ॥४२—४४॥ उपकारेणेति ।तुशब्दोऽवधारणे । उपकारेण युक्तो वीरः प्रतिकारेण युज्यत एव, प्रत्युपकारं करोत्येवेत्यर्थः ।

नहीति । विक्रमे जिह्मकारिणमिति पाठः । जिह्मकारिणं कुटिलम् । त्वम् अव्यवसितः उद्योगशून्यः शत्रुं हन्तुं न समर्थ इति योजना ॥ ३६ ॥ ३७ ॥ पृथिवीमिति । परिवर्तयितुम् अधरोत्तरयितुम् ॥ ३८ ॥ ३९ ॥ अहन्त्विति । अहं तु दीप्तैः दीपकैः, वाक्यैरिति शेषः ॥ ४० ॥ ४१ ॥ अनुरक्तेन अनुरागयुक्तेन । स्निग्धेन तत्कालोचितप्रियपरेण । हितेन उदर्कहितैषिणा । सत्यविक्रमयुक्तेन अमोघविक्रमयुक्तेन यद्वाच्यं तत्सर्वं त्वयोक्तमिति सम्बन्धः ॥ ४२—४४ ॥ सुग्रीवस्त्ववश्यमस्माकं प्रत्युपकारं करिष्यतीत्याशयेनाह—उपकारेणेति । तुशब्दोऽवधारणे । उपकारेण युक्तो वीरः, केनचित्कृतोपकारः पुरुष इत्यर्थः । प्रतीकारेण युज्यत एव

अप्रतिकृतः अकृतप्रत्युपकारः पुरुषः । सत्त्ववतां सात्त्विकानाम् । मनः हन्ति पीडयति, सात्त्विकास्तमजस्रं निन्दन्तीत्यर्थः । सज्जनापवादभीतः सुग्रीवोऽस्माकं प्रत्युपकारं करोत्येवेति भावः ॥ ४५ ॥ प्रणिधाय भाविकार्यमालोच्य । दर्शनं मतम् । प्रणिधानेन दृष्टार्थमित्यर्थः ॥ ४६ ॥ नचिरात् अविलम्बितम् । जलानि प्रपात्यन्तेऽस्मिन्निति जलप्रपातो वर्षाकालः । भवान् क्षमतां त्वं क्षमस्व । वर्षाकालकृतविरहवेदनां मा कुर्वित्यर्थः । रिपुनिग्रहे

अथैवमुक्तः प्रणिधाय लक्ष्मणः कृताञ्जलिस्तत्प्रतिपूज्य भाषितम् । उवाच रामं स्वभिरामदर्शनं प्रदर्शयन् दर्शनमात्मनः शुभम् ॥ ४६ ॥ यथोक्तमेतत्तव सर्वमीप्सितं नरेन्द्र कर्ता नचिराद्धरीश्वरः । शरत्प्रतीक्षः क्षमतामिमं भवान् जलप्रपातं रिपुनिग्रहे धृतः ॥ ४७ ॥ नियम्य कोपं प्रतिपालयतां शरत्क्षमस्व मासांश्चतुरो मया सह । वसाचलेऽस्मिन्मृगराजसेविते संवर्धयन् शत्रुवधे समुद्यमम् ॥ ४८ ॥ इत्यार्षे० श्रीमत्किष्किन्धाकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

स तथा वालिनं हत्वा सुग्रीवमभिषिच्य च । वसन्माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत् ॥ १ ॥

धृतः धैर्ययुक्तः ॥ ४७ ॥ सुग्रीवः प्रत्युपकारं करोतु वा मा वा, सद्यः शत्रुवधः कर्तव्य इति पुनः संजातकोपं रामं प्रत्याह–नियम्येति । चतुरो मासान् आषाढश्रावणभाद्रपदाश्वयुजान् । शरत् कार्त्तिकमासः । शत्रुवधे समुद्यमम् उत्साहम् । संवर्धयन् अभिवर्धयन् । समुद्यत इति पाठे संवर्तयन् मृगराजादीन्नाशयन् ॥ ४८ ॥ रामानु०–संवर्तयन् कालं यापयन् ॥ ४८ ॥ इति श्रीगोविन्द० श्रीरामा० मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तविंशः सर्गः २७

अथ रामः स्वस्याश्रितविश्लेषासहिष्णुत्वमन्यापदेशेन लक्ष्मणाय प्रदर्शयन् वर्षर्तुवर्णनमारभतेऽष्टाविंशे–स तथेत्यादि । सः, यत्किंचिद्विरोधिनिरसनाश्रितसंरक्षणलाभेप्यसत्कल्पमेतन्मन्यमानः । माल्यवतः पूर्वं प्रस्रवणाख्यतयोक्तस्य गिरेः पृष्ठे उपरि वसन्, सर्वजनोज्जीवनाय सन्निहित इत्यर्थः ॥ १ ॥

प्रत्युपकारं करोत्येव । अकृतज्ञः अप्रतिकृतः, अकृतप्रत्युपकार इत्यर्थः । सत्त्ववतां परमसात्त्विकानां मनः हन्ति क्षोभयति ॥ ४५ ॥ अथैवमिति । दर्शनं मतम् ॥ ४६ ॥ नचिरात् कर्ता करिष्यति ॥ ४७ ॥ ननु सुग्रीवः प्रत्युपकारं करोतु वा मा वा, अस्मत्कर्तव्यं रावणनिरसनमधुनैव करिष्याव इति क्रोधाविष्टं रामं पुनरनुनयन् प्रत्याह–नियम्य कोपमिति । संवर्तयन् कालं सम्यग्ज्ञापयन् । प्रतिपालयतां प्रतीक्ष्यताम् ॥ ४८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां सप्तविंशः सर्गः ॥ २७ ॥ १ ॥

अयमिति । समयः सुग्रीवस्य स्थानावधित्वेन संकेतितः । सोऽयं जलागमः कालः वर्षाकालः । अद्य संप्राप्तः संप्रवृत्तः ॥ २ ॥ नवेति । द्यौः भास्करस्य

गभस्तिभिः किरणैः । समुद्राणां रसं पीत्वा नवमासधृतं कार्त्तिकाद्याषाढपर्यन्तनवमासधृतं रसायनं षड्रसानां कारणं गर्भं जलं प्रसूते जनयति । भास्करस्य गभस्तिभिरित्यनेन " याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति " इति श्रुतिः सूच्यते । समुद्राणां रसमित्यनेन हंसस्य

अयं स कालः संप्राप्तः समयोऽद्य जलागमः । संपश्य त्वं नभो मेघैः संवृतं गिरिसन्निभैः ॥ २ ॥
नवमासधृतं गर्भं भास्करस्य गभस्तिभिः । पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम् ॥ ३ ॥
शक्यमम्बरमारुह्य मेघसोपानपङ्क्तिभिः । कुटजार्जुनमालाभिरलंकर्तुं दिवाकरम् ॥ ४ ॥
सन्ध्यारागोत्थितैस्ताम्रैरन्तेष्वधिकपाण्डरैः । स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवाम्बरम् ॥ ५ ॥

क्षीरनीरविभागचातुर्यवत् नीरलवणविभागसामर्थ्यं द्योत्यते । अत्र प्रस्तुतद्योवर्षवृत्तान्तेनाप्रस्तुतस्यानेकनायकाहितवीर्यगर्भं भस्त्रिकाभिर्धृत्वा काले प्रेमास्पदसुतप्रसवकृद्वधूवृत्तान्तस्य प्रतीतेः समासोक्तिरलंकारः । यदि सीता सन्निहिता सापीदानीं नवप्रसूतिः स्यादिति राममनोरथो गम्यते ॥ ३ ॥ शक्यमिति । मेघा एव सोपानानि तेषां पङ्क्तिभिरम्बरमारुह्य । कुटजार्जुनानां वार्षिकपुष्पाणां मालाभिः । दिवाकरम् अस्मत्कुलगुरुभूतसूर्यमध्ये सदा ध्येयं विष्णुम् । " अलंकारप्रियो विष्णुः " इति न्यायेनालंकर्तुं शक्यम् । लिङ्गसामान्ये नपुंसकम् । " सह पत्न्या विशालाक्ष्या नारायणमुपागमत् " इत्युक्तरीत्या सीतया सहाराधनं न लब्धमित्युत्कण्ठा द्योत्यते ॥ ४ ॥ संध्यारागोत्थितैः उत्थितसन्ध्यारागैः । आहिताग्न्यादित्वात् परनिपातः । वस्त्रखण्डपक्षे उत्थितसन्ध्यातुल्यरागैः अत एव ताम्रैः । अन्तेषु प्रान्तेषु । अधिकपाण्डरैः अत्यन्तशुभ्रैः । स्निग्धैः आर्द्रैः । अभ्रपटच्छेदैः अभ्राणि मेघा एव पटच्छेदाः वस्त्रखण्डाः तैः । बद्धव्रणमिवाम्बरं भाति । उपमालंकारः ॥५॥ तनि०—अम्बरस्य व्रणसंबन्धासम्भवादतिशयोक्तिरलंकारः ॥५॥

वर्षर्तोर्धर्मो विरहिभिर्दुस्सह इति हृदि निधाय तल्लक्षणमाह—अयमिति । समयः सुग्रीवावस्थानावधित्वेन सङ्केतितः सोऽयं कालः अद्य सम्प्राप्तः सम्प्रवृत्तः ॥ २ ॥ द्यौः भास्करस्य गभस्तिभिः किरणैः समुद्राणां रसं पीत्वा नवमासधृतं कार्त्तिकाद्याषाढपर्यन्तं नवमासधृतं रसायनं षड्रसानां कारणं गर्भं जलं प्रसूत इति योजना । " याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति " इति श्रुतिरत्रानुसन्धेया ॥ ३ ॥ ४ ॥ सन्ध्यारागेति । सन्ध्यारागोत्थितैः उत्थितसन्ध्यारागैः,

मन्दमारुत एव निश्वासो यस्य तत् तथा।अनेन निरन्तरनिश्वासवत्त्वमुच्यते। सन्ध्या सन्ध्यारागः । स एव चन्दनं तेन रञ्जितम् आलिप्तम् । अनेन ताप शान्तिकरशीतोपचार उक्तः। आपाण्डुजलदमित्यनेन विरहपाण्डुतोक्ता। अत एव कामातुरं कान्ताविरहपीडितमिवेत्युत्प्रेक्षा रूपकानुप्राणिता ॥ ६ ॥ एषेति । घर्मेण ग्रीष्मसंतापेन। सीतापक्षे विरहतापेन । परिक्लिष्टा नववारिभिः परिप्लुता सिक्ता । सीतापक्षे अश्रुक्लिन्ना । बाष्पम् ऊष्म अश्रुजलं च

मन्दमारुतनिश्वासं सन्ध्याचन्दनरञ्जितम् । आपाण्डुजलदं भाति कामातुरमिवाम्बरम् ॥ ६ ॥ एषा घर्मपरिक्लिष्टा नववारिपरिप्लुता । सीतेव शोकसन्तप्ता मही बाष्पं विमुञ्चति ॥ ७ ॥ मेघोदरविनिर्मुक्ताः कह्लारसुखशीतलाः। शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः ॥ ८ ॥ एष फुल्लार्जुनः शैलः केतकैरधिवासितः । सुग्रीव इव शान्तारि र्धाराभिरभिषिच्यते ॥ ९ ॥ मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः । मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ १० ॥

विमुञ्चति । प्रथमजलनिपाते हि भूमेरूष्मा समुदञ्चति । श्लेषालंकारः ॥ ७ ॥ मेघेति । मेघेत्यादिना मान्द्यमुक्तम् । कह्लारेत्यादिना शैत्यसौरभ्ये । एवं गुणत्वात् वाताः आदरातिशयेन अञ्जलिभिरादाय पातुं शक्यम् । अतिशयोक्तिरलंकारः ॥ ८ ॥ तनि०—अञ्जलिभिः पातुं शक्यमिति वातावयवानामति प्रश्लिष्टावयवत्वमतिशीतलत्वं च व्यञ्जितम् ॥ ८ ॥ फुल्लार्जुन इत्यनेन मालालंकृतत्वमुच्यते । केतकैरधिवासित इत्यनेन चन्दनादिमत्त्वं च सुग्रीवस्य सूच्यते। शान्तारिरित्यनेन शैलस्य निस्तापत्वमुक्तम् । बिम्बप्रतिबिम्बभावेन साम्यप्रतिपादनादुपमालंकारः ॥ ९ ॥ मेघा एव कृष्णाजिनानि तेषां धराः नीलवर्णतया तद्रूपणम् । शुभ्रत्वेन धाराया उपवीतत्वरूपणम् । धारा निर्झरधाराः । मारुतापूरितगुहा इत्यनेन शब्दहेतुवायुभरितकण्ठत्वमुच्यते । अन्तरान्तरा समुद्भिन्नसन्ध्यारागैरिति यावत् । अत एव ताम्रैः । अन्तेषु पर्यन्तेषु अधिकपाण्डरैः । स्निग्धैः किञ्चिज्जलरससम्बन्धैः अभ्रपटच्छेदैः अभ्राण्येव पटच्छेदाः तैः । अम्बरमाकाशं कर्तृ । बद्धव्रणमिव, व्रणगोपनाय निहितेन घृतादिनेत्यर्थः । प्रतीयत इति शेषः ॥ ५ ॥ मन्दमारुतेति निश्वासनैरन्तर्यम्, सन्ध्याचन्दनेति शीतोपचारः, आपाण्डु इति विरहपाण्डुत्वं चोक्तम् ॥ ६ ॥ ७ ॥ मेघोदरेति । "शक्यमञ्जलिभिः पातुम्" इत्यनेन शैत्यमान्द्यसौरभ्यभूयस्त्वा दादरातिशयेनाञ्जलिभिरादाय पातुं शक्यत इत्युच्यते ॥ ८ ॥ ९ ॥ मेघेति । धारायज्ञोपवीतिनः निर्झरधारोपवीतिनः । मारुतापूरितगुहा इत्यनेन शब्दहेतुत्व

स०—मेघोदरविनिर्मुक्ता इत्यनेन बहुदूरागमनेन मान्द्यं सूचयति । कह्लारदलवच्छीतलः । केतक्या गन्ध इव गन्ध एषामस्तीति केतकिगन्धिनः । एतादृशवाता अनेकवारम् अञ्जलिभिरादाय पातुं शक्यं शक्याः "मुखनासिकावचनः—" इति सूत्रभाष्यकैयटादिदिशा "शक्यं क्षुदपहन्तुम्" इतिवच्छक्यमित्युपपन्नं पदसंस्कारपक्ष इति ज्ञेयम् ॥ ८ ॥

प्राधीताः प्रकर्षेणाध्येतुमुपक्रान्ताः । आदिकर्मणि क्तः । रूपकानुप्राणित उपमालंकारः ॥ १० ॥ कशाभिरिति । विद्युद्भिरेव हैमीभिः कशाभिः व्यस्तरूपकम् । ताडितमिव स्थितम् । स्तनितमेव निर्घोषो यस्य तत् । अत एव अन्तः सवेदनमिवाम्बरं भाति । कशाभिघातेन उच्चैरधीयानसखेद माणवकसाम्यमुच्यते । उपमोत्प्रेक्षारूपकाणामङ्गाङ्गिभावेन सङ्करः ॥ ११ ॥ तनि०—अन्तःसन्निहितशब्देन प्राधीयमानवेदानां माणवकानां कशाघातजनित



कशाभिरिव हैमीभिर्विद्युद्भिरिव ताडितम् । अन्तःस्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥११॥ नीलमेघाश्रिता विद्युत् स्फुरन्ती प्रतिभाति मे । स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी ॥ १२ ॥ इमास्ता मन्मथवतां हिताः प्रतिहता दिशः । अनुलिप्ता इव घनैर्नष्टग्रहनिशाकराः ॥१३॥ क्वचिद्बाष्पाभिसंरुद्धान् वर्षागमसमुत्सुकान् । कुटजान् पश्य सौमित्रे पुष्पितान् गिरिसानुषु । मम शोकाभिभूतस्य कामसंदीपनान् स्थितान् ॥ १४ ॥

रुदितं गुरूच्चारणानूच्चारणशब्दमिश्रमित्युच्यते ॥ ११ ॥ स्फुरन्ती चलन्ती । तपस्विनी शोच्या ॥ १२ ॥ घनैरनुलिप्ता इव स्थिताः । नष्टग्रहनिशाकराः अदृष्टशुक्रादिग्रहचन्द्राः । "णश अदर्शने" इत्यस्मान्निष्ठा । यद्वा नष्टग्रहः ग्रहणरहितः, अदृश्यमान इत्यर्थः । तादृशश्चन्द्रो यासु ताः । अत एव प्रतिहताः अज्ञातप्राच्युदीच्यादिदिशाविभागाः । ता इमाः दिशः । मन्मथवतां सस्त्रीकाणाम् । हिताः सुखकराः, विरहिणां तु दुःखकरा इत्यर्थः । यद्वा मन्मथवताम् अभिसारिकजनानां हिताः ॥१३॥ क्वचिदित्यादिसार्धश्लोक एकान्वयः । बाष्पाभिसंरुद्धान् अभिनवजलकणसेचनसमुत्थनिदाघोष्मसमावृतान् । कामुकपक्षे आनन्दबाष्पवतः । वर्षागमेन समुत्सुकान् आप्यायितान् । अन्यत्र स्त्रीसङ्गमसन्तुष्टान् । गिरिसानुषु पुष्पितान् ।

मुच्यते । प्राधीता इव अध्येतुमुपक्रान्ता इव ॥ १०–१२ ॥ इमा इति । घनैरनुलिप्ता इव स्थिताः नष्टग्रहनिशाकराः अत एव प्रतिहताः प्रतिहतिं प्राप्ताः, अपरिज्ञातप्राच्योदीच्यादिविभागा इत्यर्थः । ता इमा दिशः मन्मथवतो मन्मथोत्सववताम्, सस्त्रीकाणामिति यावत् । हिताः सुखकराः, विरहिणां तु दुःखकरा इति भावः ॥ १३ ॥ बाष्पाभिसंरुद्धान् नववारिपरिप्लुतमहीसमुद्गतोष्मणावृतत्वात् ॥ १४ ॥

स०—प्रतिभाति मे । स्फुरन्तीरावणस्याङ्के इति । अस्यापत्यम् इः चतुर्मुखः, तं रावयतीति इरावणः । "स मायामकरोत्" इति श्रुतेः । एतादृशस्य मे अङ्के स्फुरन्ती तपस्विनी वैदेहीव प्रतिमाति स्वस्य नीलमेघसदृशत्वादिति भावः ॥ १२ ॥

अन्यत्र सहासात् । अत एव मम शोकाभिभूतस्य कामसंदीपनात् । अन्यरतिदर्शनस्योद्दीपनत्वादिति भावः । अनेन केषुचिदस्मदीयेषु ब्रह्मानुभवसंतुष्टेषु सत्सु केषांचिदस्मदनुभवाभावो ममातीव दुःसह इत्युक्तम् ॥ १४ ॥ अथ भगवत्कटाक्षफलमन्यापदेशेन दर्शयति—रज इत्यादिना । रज इत्युपलक्षणम् । रजस्तमसी प्रक्रान्ते । वायुशब्देन सततसंसारगतिर्जन इत्युच्यते । सहिम इति शीतलहृदयत्वम् । निदाघेत्यादिना आध्यात्मिकादि

रजः प्रशान्तं सहिमोऽद्य वायुर्निदाघदोषप्रसराः प्रशान्ताः । स्थिता हि यात्रा वसुधाधिपानां प्रवासिनो यान्ति नराः स्वदेशान् ॥ १५ ॥ संप्रस्थिता मानसवासलुब्धाः प्रियान्विताः संप्रति चक्रवाकाः । अभीक्ष्णवर्षोदकविक्षतेषु यानानि मार्गेषु न संपतन्ति ॥ १६ ॥ क्वचित्प्रकाशं क्वचिदप्रकाशं नभः प्रकीर्णाम्बुधरं विभाति । क्वचित्क्वचित्पर्वतसन्निरुद्धं रूपं यथा शान्तमहार्णवस्य ॥ १७ ॥ व्यामिश्रितं सर्जकदम्बपुष्पैर्नवं जलं पर्वतधातुताम्रम् । मयूरकेकाभिरनुप्रयातं शैलापगाः शीघ्रतरं वहन्ति ॥ १८ ॥

तापशान्तिः । यात्रा संसारगतिः । स्वदेशान् स्वप्राप्यभूतपरमपदम् । स्वभावार्थस्तु स्पष्ट एव ॥ १५ ॥ रामानु०—रज इति । सहिमः सशीकरः । स्थिताः निवृत्ताः । स्थिता यान्तीति च सिद्धवन्निर्देशः । वर्षाकाले संभावितत्वात्कृतः ॥ १५ ॥ मानसवासलुब्धाः हंसाः संप्रस्थिताः ॥ वर्षभीततया क्वचिल्लीनाः । परमहंसाख्यानां संन्यासिनां चातुर्मास्यतया सञ्चारनिवृत्तिर्द्योत्यते । चक्रवाकाः कामोद्रेकेण प्रियासमन्विता भवन्ति । यानासंपतने हेतुः अभीक्ष्णेति । यानानि शकटरथादीनि । संप्रस्थिता इत्यनेन कृतवैराग्यत्वमुच्यते । प्रियान्विता इति भगवद्भक्तिः । अभीक्ष्णेत्यादिना भगवत्कटाक्षेण निवृत्तकर्मत्वमुच्यते ॥ १६ ॥ क्वचिदिति । प्रकीर्णाम्बुधरं विप्रकीर्णमेघम् । अत एव क्वचित्प्रकाशं क्वचिदप्रकाशं नभः । क्वचित्क्वचित् पर्वतसन्निरुद्धम् । शान्तमहार्णवस्य निस्तरङ्गसमुद्रस्य । रूपं स्वरूपमिव भाति । अनेन मन्दाज्ञानेन प्रकाशाप्रकाशं ब्रह्मस्वरूपमुच्यते ॥ १७ ॥ सर्जैः असनपुष्पैः । कदम्बपुष्पैश्च व्यामिश्रितं संमिलितम् । पर्वतधातुताम्रमित्यनेन नदीनां पर्वतादुत्पत्तिरुक्ता । मयूराणां केकाभिः केकारवैः अनुप्रयातम् अनुस्यूतम् । नवं जलं वहन्ति ।



सहिमः सशीकरः । निदाघदोषा ऊष्मस्वेदादयः । स्थिताः निवृत्ताः ॥१५॥ मानसवासलुब्धाः मानसे सरसि वासाय लुब्धाः । यानानि रथशकटादीनि । न सम्पतन्ति न भ्रमन्ति ॥१६॥ शान्तमहार्णवस्य निस्तरङ्गजलधेः ॥१७॥ पर्वतधातुताम्रं पर्वतनिष्ठधातुसम्बन्धेन ताम्रम् । जलं शैलापगाः क्षुद्रनद्यः वहन्ति प्रवहन्ति ॥१८–२१॥

अत्र सात्त्विकराजसज्ञानमिश्रं भगवद्विषयानुरागयुक्तं भक्तिप्रेरितस्तुतिरवमुखरितपरिसरं हृदयं वहन्तो भक्ताः कथ्यन्ते ॥१८॥ रसाकुलं माधुर्यव्याप्तम्। षट्पदसन्निकाशं भृङ्गवन्नीलम्। जम्बु जम्ब्वाख्यं फलम्। "जम्बूः स्त्री जम्बु जाम्बवम्" इत्यमरः। प्रकामम् अतिशयेन प्रभुज्यते, जनैरिति शेषः। अनेकवर्णं रक्तहरिताद्यनेकरूपम्। आम्रफलं चूतफलम्। अनेन भगवत्कृपया जीवफलभोग उच्यते ॥१९॥ विद्युदिति। नक्षत्रमालास्थानीया बलाक



रसाकुलं षट्पदसन्निकाशं प्रभुज्यते जम्बुफलं प्रकामम्। अनेकवर्णं पवनावधूतं भूमौ पतत्याम्रफलं विपक्वम् ॥ १९ ॥ विद्युत्पताकाः सबलाकमालाः शैलेन्द्रकूटाकृतिसन्निकाशाः। गर्जन्ति मेघाः समुदीर्णनादा मत्ता गजेन्द्रा इव संयुगस्थाः ॥ २० ॥ वर्षोदकाप्यायितशाद्वलानि प्रवृत्तनृत्तोत्सवबर्हिणानि। वनानि निर्वृष्टबलाहकानि पश्य पराह्णेष्वधिकं विभान्ति ॥ २१ ॥ समुद्वहन्तः सलिलातिभारं बलाकिनो वारिधरा नदन्तः। महत्सु शृङ्गेषु महीधराणां विश्रम्य विश्रम्य पुनः प्रयान्ति ॥ २२ ॥ मेघाभिकामा परिसंपतन्ती संमोदिता भाति बलाकपङ्क्तिः। वातावधूता वरपौण्डरीकी लम्बेव माला रचिताऽम्बरस्य ॥ २३ ॥

माला। शैलेन्द्रस्य कूटानां शृङ्गाणामाकृतेः संस्थानस्य सन्निकाशास्तुल्याः। अनेन सर्वलोकप्रसिद्धाः सकलवावदूकाः वेदमार्गप्रतिष्ठापका उक्ताः ॥ २० ॥ निर्वृष्टाः वर्षुकाः बलाहकाः मेघाः येषु तानि। कर्तरि क्तः। अत्र दिव्यदम्पत्योः स्वकरोद्धृतकुम्भजलसिक्तालवालकलितोद्यानतुल्या लोकाः सर्वे भगवत्कृपावर्षेण संपन्नार्थकामा इत्युच्यते ॥ २१ ॥ समुद्वहन्त इति। सगर्भस्त्रीजनाः पर्वतमारोहन्त इव महत्सु शृङ्गेषु पुनः पुनर्विश्रम्य प्रयान्ति। अनेन 'हृदयेनोद्वहन् हरिम्' इत्युक्तरीत्या भगवद्ध्यानेन युक्ताः विशदज्ञानाः सन्ततस्तुतिशीलाः पूर्वाघोत्तराघक्लेशं क्रमेणोत्तीर्य परां कोटिमापन्नाः प्रतिपाद्यन्ते ॥२२॥ मेघेति। गर्भधारणार्थं मेघमभिकामयत इति मेघाभिकामा। परिसम्पतन्ती मेघं प्राप्तुमागच्छन्तीत्यर्थः। संमोदिता सञ्जातसंमोदा। पुण्डरीकाणां सितपद्मानां विकारः पौण्डरीकी, वरा चासौ पौण्डरीकी चेति कर्मधारयः। लम्बा रचिता लम्बमानतया कृता। अनेन भगवन्तं कालमेघ

समुद्वहन्त इति। बलाकिनः मेघाः। सलिलातिभारं समुद्वहन्तः अत एव वारिधराः अत एव महीधराणां शृङ्गेषु विश्रम्य विश्रम्य प्रयान्तीति सम्बन्धः। लोके भारभृतामयं स्वभाव इति भावः ॥ २२ ॥ मेघाभिकामा गर्भधारणार्थं मेघमभिकामयत इति तथा। पौण्डरीकी मालेव श्वेतपङ्कजमालेव ॥ २३ ॥

श्यामं प्राप्तुं प्रवृत्ता भक्तिरूपापन्नधीर्भवति सत्पुरुषस्येति द्योत्यते ॥२३॥ बालेन्द्रगोपैः अन्तरेषु चित्रितेन नानावर्णीकृतेन । नवशाद्वलेन उपलक्षिता भूमिः शुकप्रभेण प्राचुर्येण शुकवर्णेन । लाक्षोक्षितकम्बलेन मध्ये मध्ये लाक्षारसरञ्जितेन कम्बलेन नारीव भाति । अत्र भगवत्कटाक्षवर्षेण किंचिदुदञ्चितभक्तिका उच्यन्ते ॥ २४ ॥ निद्रेति । आषाढे स्वापारम्भः । श्रावणे निद्रासक्तिरुच्यते । अत्र तुल्ययोगितालङ्कारः । लोकोज्जीवनप्रवृत्त्या

बालेन्द्रगोपान्तरचित्रितेन विभाति भूमिर्नवशाद्वलेन। गात्रानुवृत्तेन शुकप्रभेण नारीव लाक्षोक्षितकम्बलेन ॥२४॥
निद्रा शनैः केशवमभ्युपैति द्रुतं नदी सागरमभ्युपैति । हृष्टा बलाका घनमभ्युपैति कान्ता सकामा प्रियमभ्युपैति ॥ २५ ॥ जाता वनान्ताः शिखिसंप्रनृत्ता जाताः कदम्बाः सकदम्बशाखाः । जाता वृषा गोषु समानकामा जाता मही सस्यवनाभिरामा ॥ २६ ॥ वहन्ति वर्षन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति समाश्वसन्ति । नद्यो घना मत्तगजा वनान्ताः प्रियाविहीनाः शिखिनः प्लवङ्गाः ॥ २७ ॥ प्रहर्षिताः केतकपुष्पगन्धमाघ्राय हृष्टा वननिर्झरेषु। प्रपातशब्दाकुलिता गजेन्द्राः सार्धं मयूरैः समदा नदन्ति ॥ २८ ॥

हरेस्तदेकचित्तत्वं शेषभूतानां शेषिपारतन्त्र्यसिद्धिश्च द्योतिता ॥ २५ ॥ शिखिभिः संप्रनृत्तं येषु ते तथोक्ताः । कदम्बशब्देन कदम्बपुष्पमुच्यते । सकदम्बपुष्पशाखा इत्यर्थः । सस्यवनेन सस्यसमूहेन । अभिरामा रम्या । अनेन सर्वानुकूल्यमुक्तम् ॥ २६ ॥ वहन्तीति । यथासंख्यमलंकारः । प्लवङ्गाः वानराः समाश्वसन्ति । एकत्रैव बहुभक्ष्यलाभेन अचलचित्ता भवन्तीत्यर्थः ॥ २७ ॥ हृष्टाः पूर्वमेव सन्तुष्टाः केतकगन्धमाघ्राय प्रहर्षिताः प्रकर्षेण

शुकप्रभेण लाक्षोक्षितेनेति विशेषणद्वयेन कम्बलस्य प्राचुर्येण शुकप्रभत्वं मध्ये मध्ये लाक्षारसराञ्जितत्वं चोच्यते ॥२४॥२५॥ जाता इति । शिखिसुप्रलापा इति पाठः । शिखिनां मयूराणां सुप्रलापा येषु ते तथोक्ताः । सकदम्बशाखाः कदम्बपुष्पसहितशाखाः ॥ २६ ॥ वहन्तीति । नद्यादयो यथाक्रमं वहन्तीत्यादिक्रियाभिः

स०-प्रहर्षिताः हृष्टाः । स्वार्थिकेऽन्तत्वादिडुपपद्यते । केतकिगन्धं केतकीनां गन्ध आमोदस्तम् । अगन्धद्रव्यवचनत्वादेकवचनं युज्यते । केतकिगन्धमित्यत्र “ ङ्यापोः संज्ञाछन्दसोः ” इत्युक्तेः केतकीति संज्ञात्वाद्ध्रस्व इति बोध्यम् । प्रपातशब्दाकुलिताः प्रपातशब्दाः उन्नतप्रदेशान्नतप्रदेशे जलपातजनितध्वनयः । तैराकुलिताः ये प्रहृष्टास्तैर्मयूरैः तेष्वेव मेघबुद्धिभिर्बर्हिभिः सार्धं नदन्तीत्यन्वयः । एतेन “ मेघदर्शनाभावान्मयूरसाहित्यवर्णनमयुक्तम्, प्रहर्षिता इति पूर्वमुक्तिः उत्तरत्र प्रहृष्टा इति वचनं च तद्वत् ” इति निरस्तम् । यद्वा प्रहर्षिताः सन्तोषकारणवस्तुभिस्तोषिताः । प्रहृष्टाः सन्तुष्टा इति मन्तव्यम् । आघ्राय मत्ता इति पाठे—समदाः ससन्तोषा इत्यर्थोऽवसेयः ॥ २८ ॥

सन्तुष्टाः । वननिर्झरेषु यः प्रपातशब्दः पतनकृतशब्दः तेनाकुलिताः ॥२८॥ धारेति । क्षणार्जितं तत्क्षणसम्पादितम् । पुष्परसेनावगाढम् उत्पन्नं मदम् । धारानिपातैः अभिहन्यमानाः अत एव पुष्पं विहाय केवलं शाखासु लम्बमानाः । षट्चरणाः भृङ्गाः । त्यजन्ति, कदम्बपुष्पेषु रसबाहुल्यात्क्षणेन मदः क्षणेन तद्धानिश्च भवतीत्यर्थः ॥ २९ ॥ अङ्गारचूर्णानाम् इङ्गालचूर्णानाम् उत्करैः समूहैस्तुल्याः अङ्गारचूर्णोत्करसन्निकाशाः, तद्वन्नीला इत्यर्थः ॥३०॥

धारानिपातैरभिहन्यमानाः कदम्बशाखासु विलम्बमानाः । क्षणार्जितं पुष्परसावगाढं शनैर्मदं षट्चरणास्त्यजन्ति ॥ २९ ॥ अङ्गारचूर्णोत्करसन्निकाशैः फलैः सुपर्याप्तरसैः समृद्धैः । जम्बूद्रुमाणां प्रविभान्ति शाखा निलीयमाना इव षट्पदौघैः ॥ ३० ॥ तडित्पताकाभिरलंकृतानामुदीर्णगम्भीरमहारवाणाम् । विभान्ति रूपाणि बलाहकानां रणोद्यतानामिव वारणानाम् ॥ ३१ ॥ मार्गानुगः शैलवनानुसारी संप्रस्थितो मेघरवं निशम्य । युद्धाभिकामः प्रतिनागशङ्की मत्तो गजेन्द्रः प्रतिसन्निवृत्तः ॥ ३२ ॥ क्वचित्प्रगीता इव षट्पदौघैः क्वचित्प्रनृत्ता इव नीलकण्ठैः । क्वचित्प्रमत्ता इव वारणेन्द्रैर्विभान्त्यनेकाश्रयिणो वनान्ताः ॥ ३३ ॥

रामानु०—अत्राङ्गारशब्दः शान्ताङ्गारवाची । अन्यथा षट्पदौघसाम्यं न स्यात् ॥ ३० ॥ तडिदिति । विद्युत्पताका इति श्लोकोक्तमेवार्थमादरातिशयेन भङ्ग्यन्तरेणोक्तवान् ॥ ३१ ॥ मार्गेति । मार्गानुगः सन्मार्गचारी वेदमार्गानुसारी । दिग्जयाय प्रवृत्तः प्रतिवादिशब्दं श्रुत्वा वादाहवकांक्षी प्रतिसन्निवृत्तः पुरुषधौरेयोऽत्र गम्यते ॥ ३२ ॥ क्वचिदिति । प्रकृष्टं गीतं येषां ते प्रगीताः । एवमुत्तरत्रापि योज्यम् । अनेकाश्रयिणः गीतनृत्तमदाश्रयिणः ॥ ३३ ॥

सम्बध्यन्ते ॥२७॥२८॥ धारेति । धारानिपातैः वर्षधारानिपातैः । पुष्परसैः पुष्पमकरन्दपानैरित्यर्थः । अवगाढं निबिडं मदं त्यजन्तीति सम्बन्धः ॥२९॥ अङ्गारेति । अत्राङ्गारशब्दः शान्ताङ्गारवाची । समृद्धैः फलैरुपलक्षिताः जम्बूद्रुमाणां शाखाः प्रतिभान्तीति सम्बन्धः ॥ ३० ॥ ३१ ॥ मार्गानुग इति । स्वनिवासभूमिशैलवनानुसारी मार्गानुगः मार्गानुगमनेन सम्प्रस्थितः पृष्ठतो मेघरवं निशम्य प्रतिनिवृत्त इति सम्बन्धः ॥ ३२ ॥ अनेकाश्रयिणः गीतनृत्तमदाश्रयिणः ॥ ३३ ॥

स०—क्षणार्जितम् एकेन क्षणेनैवार्जितं सम्पादितं पुष्परसावगाढं पुष्पमकरन्दोद्भवम् । मदं गर्वम् । धारानिपातैरभिहन्यमानास्त्यजन्तीति योजना । जलधारापातेन कदम्बशाखावलम्बनम् । तेन पुनः पुष्पान्तरार्जनाभावः आर्जितस्यापि त्यागः क्षणार्जितं पुष्परसावगाढं मदमित्यनेन मदनिर्भरता द्योत्यत इति ज्ञेयम् । क्षणेनोत्सवेनार्जितमिति व्याख्याने बहुदिनार्जितत्वस्यापि शक्योक्तित्वान्माहात्म्यातिशयालाभ इति ज्ञेयम् ॥ २९ ॥ उदीर्णगम्भीरमहारवाणाम्—उदीर्णः उच्चः, गम्भीर उच्चतरः, महान् उच्चतमः रवो येषां तेषाम् । रूपाणि आकाराः ॥ ३१ ॥

कदम्बैः, सर्जैः बन्धूकैः, कन्दलैः भूतालपुष्पैश्चाढ्या मयूराणां मत्ताभिरुतैः प्रनृत्तैश्च आपानभूमिप्रतिमा मद्यपानस्थलीतुल्या विभाति । सा हि संस्कार पुष्पाढ्या मद्यपूर्णा उन्मादनृत्तवत्पुरुषयुक्ता च भवति ॥ ३४ ॥ मुक्तेति । विवर्णच्छदनाः विविधवर्णपक्षाः । विहङ्गाः चातकाः । सुरेन्द्रदत्तं देवेन्द्रदत्तम् । चातकाः भूस्थं जलं न पिबन्ति, किन्तु सद्यो वर्षदेवताभूतेन्द्रदत्तमेव पिबन्तीति प्रसिद्धिः ॥ ३५ ॥ षट्पादा भृङ्गाः एव तन्त्री तस्या मधुराभिधानं

कदम्बसर्जार्जुनकन्दलाढ्या वनान्तभूमिर्नववारिपूर्णा । मयूरमत्ताभिरुतप्रनृत्तैरापानभूमिप्रतिमा विभाति ॥३४॥
मुक्तासकाशं सलिलं पतद्वै सुनिर्मलं पत्रपुटेषु लग्नम् । हृष्टा विवर्णच्छदना विहङ्गाः सुरेन्द्रदत्तं तृषिताः पिबन्ति ॥ ३५ ॥ षट्पादतन्त्रीमधुराभिधानं प्लवङ्गमोदीरितकण्ठतालम् । आविष्कृतं मेघमृदङ्गनादैर्वनेषु संगीतमिव प्रवृत्तम् ॥ ३६ ॥ क्वचित्प्रनृत्तैः क्वचिदुन्नदद्भिः क्वचिच्च वृक्षाग्रनिषण्णकायैः । व्यालम्बबर्हाभरणैर्मयूरैर्वनेषु संगीतमिव प्रवृत्तम् ॥ ३७ ॥

मधुरनादः यस्मिन् तत् । प्लवङ्गमोदीरितं मण्डूकनाद एव कण्ठतालो यस्मिन् तत् । मेघा एव मृदङ्गाः मर्दलाः तेषां नादैराविष्कृतं प्रकटीकृतं संगीतं वनेषु प्रवृत्तमिव सम्बभूवेवेति योजना॥३६॥ संगीतविषये केचिन्नृत्यन्ति केचिद्गायन्ति केचित् प्रधाना अनुभवन्ति तत्सर्वं वनेपि दर्शयति । नृत्यन्तो मयूराः नर्तकस्थानीयाः । नदन्तो मयूराः गायकस्थानीयाः । वृक्षाग्रनिषण्णकायाः मयूराः अनुभवितृस्थानीयाः । अतस्तैः संगीतं प्रवृत्तमिव ॥ ३७ ॥

आपानभूमिः मधुपानस्थानम् । तत्तु कदम्बपुष्पाढ्यं मधुपूर्णं मत्तजनाभिरावं नृत्तयुक्तं च, इयं वनान्तभूमिरपि वर्षाकालसम्भूतैः रक्तवर्णैः कदम्बादिभिः पुष्पैराढ्या मधुसदृशवारिपूर्णा च मयूरनाम्नां मत्तानामभिरुतैः प्रनृत्तैश्च युक्तेत्यापानभूमिसादृश्यम् ॥३४॥मुक्तासकाशं मुक्ताभिः समानः काशः प्रकाशो यस्य तत्तथोक्तम् । विवर्णच्छदनाः विविधवर्णपक्षाः॥३५॥ षट्पादतन्त्रीमधुराभिधानं षट्पादाः भ्रमराः त एव तन्त्री तस्याः मधुरनादो यस्मिंस्तत् । प्लवङ्गमोदीरितमेव कण्ठतालो यस्मिन् तत् । मेघमृदङ्गनादैः आविष्कृतं प्रकटितम् । सङ्गीतं वनेषु प्रवृत्तमिवेति सम्बन्धः ॥ ३६॥ सङ्गीतविषये केचिन्नृत्यन्ति, केचिद्गायन्ति, केचित्प्रधाना अनुभवन्ति । तत्सर्वं वनेपि सम्पाद्यते–क्वचिदिति । नृत्यन्तो मयूराः नर्तकस्थानीयाः, वृक्षाग्रनिषण्णमयूराः अनुभवितृस्थानीयाः, नदन्तो मयूराः मृदङ्गस्थानीया गायकाश्च अतस्तैस्सङ्गीतं प्रवृत्तमिव ॥ ३७ ॥

प्लवगाः मण्डूकाः । घनानां स्वनैः चिरसन्निरुद्धां चिरकालव्यापारनिरोधिकां निद्रां विहाय प्रबुद्धा इति संबन्धः ॥ ३८ ॥ अथ नदीनां स्वभर्तृसङ्गम मिच्छन्तीभिरुत्कटमन्मथाभिर्युवतिभिः साम्यमुच्यते । समुद्धाहितचक्रवाकाः वारिपूरोन्नमितचक्रवाकाः स्तनस्थानीयाः । अपवाहयित्वेत्येतन्नवोढो चितलज्जातिलङ्घनस्थानीयम् । नवप्राभृतपूर्णभोगाः प्राभृतं फलाद्युपहारः, भोगश्चन्दनकर्पूरकुसुमताम्बूलादिः । स्वभर्तारं समुद्रम् । उपोपयान्ति

स्वनैर्घनानां प्लवगाः प्रबुद्धा विहाय निद्रां चिरसन्निरुद्धाम् । अनेकरूपाकृतिवर्णनादा नवाम्बुधाराभिहता नदन्ति ॥ ३८ ॥ नद्यः समुद्धाहितचक्रवाकास्तटानि शीर्णान्यपवाहयित्वा । दृप्ता नवप्राभृतपूर्णभोगा द्रुतं स्वभर्तार मुपोपयान्ति ॥ ३९ ॥ नीलेषु नीलाः प्रविभान्ति सक्ता मेघेषु मेघा नववारिपूर्णाः । दवाग्निदग्धेषु दवाग्निदग्धाः शैलेषु शैला इव बद्धमूलाः ॥ ४० ॥

उपयान्तीत्यर्थः ॥ ३९ ॥ नीलेष्विति । दवाग्निदग्धेषु बद्धमूला दवाग्निदग्धाः शैला इव नीलेषु मेघेषु सक्ता नववारिपूर्णाः नीला मेघाः प्रविभान्ति । बद्धमूलत्वस्थाने नववारिपूर्णा इत्युक्तम् । उभयत्र स्थायित्वमर्थः ॥ ४० ॥

प्लवगाः मण्डूकाः । चिरसन्निरुद्धां दीर्घमनुस्यूतां निद्रां विहाय घनस्वनैः प्रबुद्धाः पुनर्जाताः अनेकाः (कारणं यथा तथा) निरूप्यन्ते ज्ञायन्त इत्यनेकरूपा आकृतयः अवयवसन्निवेशाः वर्णाः नीलपीतादयो येषां ते, नदन्तीत्यर्थः ॥ ३८ ॥ स्वभर्तृसङ्गमिच्छन्तीभिरुत्कटमन्मथाविष्टाभिर्युवतिभिर्नद्य उपमीयन्ते–नद्य इति । समुद्रा हितचक्रवाकाः वारिपूरेणोन्नमितचक्रवाकाः स्तनस्थानीयाः । तटानि शीर्णान्यपवाहयित्वेत्येतद् वृद्धपरिजनातिक्रमस्थानीयम् । नवोढोचितलज्जातिलङ्घनस्थानीयं वा, अत एव दृप्ताः, यौवनभरेणेति भावः । नवप्राभृतपूर्णभोगाः प्राभृतं फलाद्युपहारः, भोगः चन्दनकर्पूरकुसुमताम्बूलादिः । स्वभर्तारं समुद्रम् ॥ ३९ ॥ दवाग्नि

स०—समुद्धाहितचक्रवाकाः उत्थापितचक्रवाकपक्षिण्यः । अन्यत्रोपमानपदेनोपमेयस्तनानां ग्रहणम् । यद्वा समुद्धाहितचक्रवाकेत्यनेन स्थो वेदीकृतस्तनत्वेन तारुण्यं द्योत्यते । तटानि प्रवाहवेगतो विशीर्णानि अवहाप यित्वा त्याजयित्वा । अनेन चोद्वेलप्रसर्पणं सूचितं भवति । अन्यत्र जरत्यादीनां त्याजनं ज्ञेयम् । नवं नूतनं प्रावृतः प्रगतमागतमावृतमावरणं यस्य सः । स चासौ पूर्णः स्वस्वमनोनुसारः भोगो यासां तास्तथा । अन्यत्र नदीपक्षे वप्रेषु तटेषु आवृताश्च ते पूर्णाः पुष्टा भोगाः नागाङ्गानि, वप्रावृतपूर्णभोगा न विद्यन्ते ते यासां ताः । तीव्रप्रवहनेनाधिगततटस्यान्तःसरत्सरीसृपशरीरा इति भावः । अवहापयित्वेति ल्यबभाव आर्षः । यद्वा “ छन्दसि परेपि । व्यवहिताश्च ” इत्युक्तेरवेत्यस्य शीर्णपदेनान्वये हापयित्वेति साधुः । स्वभर्तारं समुद्रम् । अन्यत्र पतिम् । “ वप्रस्तु रेणौ च रोधसि ” इति त्रिकाण्डशेषः । “ वप्रः प्राकाररोधसोः ” इति विश्वः । अथवा नवप्रावृतेषु नूतनप्रावरणेषु स्वकञ्चुकेषु पूर्णा भोगाः शरीराणि येषां सर्पाणां ते तथा । दृप्ताः आ सम्यक् नवप्रावृतपूर्णभोगा यासां ताः । उपोपयान्ति “प्रसमुपोदः पादपूरणे” इत्युपोपसर्गाद्वित्वम् । वप्रावृतः रेणुरूषितो न भवतीति नवप्रावृतः स चासौ पूर्णः तदद्वितयसम्बन्धो भोगो विलासो यासां ताः । वप्रैः रेणुभिः आवृतम् आवरणं तैः पूर्णा रेणुरूषितास्ते न भवन्तीति तथा ते भोगा यासां ता वा स्वभर्तारमुपोपयान्ति । दृप्ता इत्यादिना स्मरपारवश्यं प्राग्विटघटना च सूचिते इति ज्ञातव्यम् । नदीपक्षे कांश्चन नदान्मध्येऽध्वनस्सङ्गम्य स्वभर्तारं समुद्रमुपोपयान्तीत्यर्थः ॥ ३९ ॥

प्रहृष्टेति । वनान्तराणि वनमध्यानि चरन्ति, वनमध्येषु चरन्तीत्यर्थः ॥४१ ॥ नवेति । कदम्बकेसराणामद्दतत्वे हेतुः नवानीति ॥ ४२ ॥ मत्ता इति । मृगेन्द्राः सिंहाः । नगेन्द्राः पर्वतश्रेष्ठाः । रम्याः पल्लवपुष्पाङ्कुरादिमत्त्वादिति भावः । प्रक्रीडित इति कर्तरि निष्ठा ॥ ४३ ॥ मेघा इति । अपवाहयन्ति परिवाहयन्ति ॥ ४४॥ रामानु०–अपवाहयन्ति वर्षन्ति ॥ ४४ ॥ वर्षेति । वर्षप्रवेगाः अतिवेगा वृष्टय इत्यर्थः । विपुलाः निरन्तराः । नद्यो जलैः विप्रतिपन्नमार्गाः

प्रहृष्टसन्नादितबर्हिणानि सशक्रगोपाकुलशाद्वलानि । चरन्ति नीपार्जुनवासितानि गजाः सुरम्याणि वनान्तराणि ॥ ४१ ॥ नवाम्बुधाराहतकेसराणि द्रुतं परित्यज्य सरोरुहाणि । कदम्बपुष्पाणि सकेसराणि नवानि हृष्टा भ्रमराः पतन्ति ॥ ४२ ॥ मत्ता गजेन्द्रा मुदिता गवेन्द्रा वनेषु विश्रान्ततरा मृगेन्द्राः । रम्या नगेन्द्रा निभृता नरेन्द्राः प्रक्रीडितो वारिधरैः सुरेन्द्रः ॥४३॥ मेघाः समुद्भूतसमुद्रनादा महाजलौघैर्गगनावलम्बाः । नदीस्तटाकानि सरांसि वापीर्महीं च कृत्स्नामपवाहयन्ति ॥ ४४ ॥ वर्षप्रवेगा विपुलाः पतन्ति प्रवान्ति वाताः समुदीर्णघोषाः । प्रनष्टकूलाः प्रवहन्ति शीघ्रं नद्यो जलैर्विप्रतिपन्नमार्गाः ॥ ४५ ॥ नरैर्नरेन्द्रा इव पर्वतेन्द्राः सुरेन्द्रदत्तैः पवनोपनीतैः । घनाम्बुकुम्भैरभिषिच्यमाना रूपं श्रियं स्वामिव दर्शयन्ति ॥ ४६ ॥ घनोपगूढं गगनं सतारं न भास्करो दर्शनमभ्युपैति । नवैर्जलौघैर्धरणी वितृप्ता तमोविलिप्ता न दिशः प्रकाशाः ॥ ४७ ॥

विरुद्धं प्राप्तमार्गाः ॥४५॥ आभिषिक्ताः नरेन्द्राः स्वां श्रियमिव अभिषिच्यमानाः पर्वताः स्वं रूपं दर्शयन्ति । नैर्मल्यादिनेति भावः ॥ ४६ ॥ तमोविलिप्ता

दग्धेषु शैलेषु बद्धमूलाः दवाग्निदग्धाः शैला इव नीलेषु मेघेषु सक्ता नववारिपूर्णाः नीलमेघाः प्रविभान्तीत्यन्वयः ॥ ४० ॥ सशक्रगोपाकुलशाद्वलानि इन्द्रगोपाख्यकीटविशेषप्रचुरशाद्वलसमेतानि ॥ ४१ ॥ ४२ ॥ निभृता निश्चलाः । दण्डयात्रादिव्यापाररहिता इत्यर्थः । प्रक्रीडित इति कर्तरि निष्ठा ॥४३॥ मेघा इति । मेघा महाजलौघैः नद्यादीनपवाहयन्ति परिवाहयन्ति ॥४४॥ वर्षप्रवेगाः अतिवेगा वृष्टय इत्यर्थः । विपुला निरन्तराः । विप्रतिपन्नमार्गाः विरुद्धं प्राप्तमार्गाः॥ ४५ ॥ नवै (रै) रभिषिच्यमाना नरेन्द्राः स्वां श्रियं राज्यं सम्पदमिव घनाम्बुकुम्भैरभिषिच्यमानाः पर्वतेन्द्रा रूपं स्वाकारं दर्शयन्ति नैर्मल्यविविधधातुभूषितत्वनाना

दिशः न प्रकाशाः ॥ ४७ ॥ प्रपातैः निर्झरैः ॥ ४८ ॥ शैलोत्तमानां विपुलाः प्रपाताः निर्झराः शैलोपलप्रस्खलमानवेगाः सन्तः । सन्नादितबर्हिणासु गुहासु । विकीर्यन्तः विकीर्यमाणाः । हारा इव अवभान्ति ॥ ४९ ॥ निर्धौतानि निर्मलीकृतानि शृङ्गोपतलानि शृङ्गसमीपतलानि यैस्ते तथा । गुहोत्सङ्गतलैः गुहामध्यतलैः ॥ ५० ॥ सुरतेति । तोयधाराः मौक्तिका इव पतन्तीति स्वरूपोत्प्रेक्षा ॥ ५१ ॥ निलीयमानैरिति । निलीयमानैः नीडेषु

महान्ति कूटानि महीधराणां धाराभिधौतान्यधिकं विभान्ति । महाप्रमाणैर्विपुलैः प्रपातैर्मुक्ताकलापैरिव लम्बमानैः ॥४८॥ शैलोपलप्रस्खलमानवेगाः शैलोत्तमानां विपुलाः प्रपाताः । गुहासु सन्नादितबर्हिणासु हारा विकीर्यन्त इवाभिभान्ति ॥४९॥ शीघ्रप्रवेगा विपुलाः प्रपाता निर्धौतशृङ्गोपतला गिरीणाम् । मुक्ताकलापप्रतिमाः पतन्तो महागुहोत्सङ्गतलैर्ध्रियन्ते ॥ ५० ॥ सुरतामर्दविच्छिन्नाः स्वर्गस्त्रीहारमौक्तिकाः । पतन्तीवाकुला दिक्षु तोयधाराः समन्ततः ॥ ५१ ॥ निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः । विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥५२॥ वृत्ता यात्रा नरेन्द्राणां सेना प्रतिनिवर्तते । वैराणि चैव मार्गाश्च सलिलेन समीकृताः ॥ ५३ ॥ मासि प्रोष्ठपदे ब्रह्म ब्राह्मणानां विवक्षताम् । अयमध्यायसमयः सामगानामुपस्थितः ॥ ५४ ॥

गच्छद्भिः ॥ ५२ ॥ वृत्ता निवृत्ता । अतोऽग्रे गता सेना प्रतिनिवृत्ता । सलिलेन वैराणि समीकृतानि, सलिलप्रतिरोधाद्वैराणि शान्तानीत्यर्थः । मार्गाश्च समीकृताः जलेन मार्गामार्गविवेको नासीदित्यर्थः ॥ ५३ ॥ मासीति । अनेन भाद्रपदो मासः सम्प्रवृत्त इति सूचयति । ब्रह्म वेदम् । विवक्षताम् अध्येतु

विधपुष्पितवृक्षलताद्यलंकृतत्वाविशिष्टं स्वाकारं दर्शयन्तीत्यर्थः ॥४६॥४७॥ महान्तीति । महान्ति कूटानि शिखराणि धाराभिर्धौतानि वर्षधाराभिः क्षालितानि । प्रपातैः निर्झरैः उपलक्षितानि भान्तीति सम्बन्धः ॥ ४८ ॥ शैलेति । शैलोत्तमानां विपुलाः प्रपाताः निर्झराः शैलोपरि प्रस्खलमानवेगास्सन्तः सन्नादितबर्हिणासु गुहासु विकीर्यन्तः विकीर्यमाणाः हारा इवाभिभान्तीति योजना ॥४९॥५०॥ टी०—स्वर्गस्त्रीहारमौक्तिकाः । मौक्तिकशब्दः पुंल्लिङ्गोऽप्यस्ति "मुक्ता स्त्री मौक्तिकोऽस्त्रियाम्" इत्युक्तेः ॥५१॥ निलीयमानैः, नीडेष्विति शेषः । ज्ञायते अनुमीयत इत्यर्थः ॥ ५२ ॥ वृत्तेति । नरेन्द्राणां यात्रा वृत्ता निवृत्ता, अतः पुरः प्रस्थिता सेना प्रतिनिवर्तते । सलिलेन समीकृताः वृष्टिबाहुल्यान्मार्गा निरुद्धाः अत एव वैराण्यपि निरुद्धानीत्यर्थः ॥ ५३ ॥ विवक्षताम् अध्ययनं कर्तुमिच्छताम् । अध्यायः अध्ययनम् तस्य समयः ॥ टी०—मासीति ।

मिच्छताम् । अध्यायसमयः वेदारम्भसमयः ॥ ५४ ॥ निवृत्तं कर्म यस्य तन्निवृत्तकर्म आयतनं गृहं यस्य सः निवृत्तकर्मायतनः, उपरतसकलगृहो पकरणसम्पादन इत्यर्थः । संचितसञ्चयः सम्पादितधननिचयः । आषाढीम् आषाढमाससमाप्तिपौर्णमासीम् । अभ्युपगतः व्रताङ्गत्वेन स्वीकृतवान् । अनेन ' चत्वारो वार्षिका मासाः ' इति पूर्वोक्तमासानाम् आषाढः प्राथमिक इति सूचितम् ॥ ५५ ॥ अयोध्यायाः अयोध्यावासिजनस्य ॥ ५६ ॥ इमा

निवृत्तकर्मायतनो नूनं सञ्चितसञ्चयः। आषाढीमभ्युपगतो भरतः कोसलाधिपः ॥ ५५ ॥ नूनमापूर्यमाणायाः सरय्वा वर्धते रयः । मां समीक्ष्य समायान्तमयोध्याया इव स्वनः ॥ ५६ ॥ इमाः स्फीतगुणा वर्षाः सुग्रीवः सुखमश्नुते। विजितारिः सदारश्च राज्ये महति च स्थितः ॥५७॥ अहं तु हृतदारश्च राज्याच्च महतश्च्युतः । नदी कूलमिव क्लिन्नमवसीदामि लक्ष्मण ॥५८॥ शोकश्च मम विस्तीर्णो वर्षाश्च भृशदुर्गमाः । रावणश्च महाञ् शत्रुरपारं प्रतिभाति मे ॥५९॥ अयात्रां चैव दृष्ट्वेमां मार्गांश्च भृशदुर्गमान् । प्रणते चैव सुग्रीवे न मया किंचिदीरितम् ॥६०॥

इति । वर्षा इत्यत्यन्तसंयोगे द्वितीया ॥ ५७ ॥ अहं त्विति । अजितारिश्चेत्यपि ज्ञेयम् । क्लिन्नम् आर्द्रम् ॥ ५८ ॥ शोकश्चेति । मम शोकश्च विस्तीर्णः । वर्षाश्च भृशदुर्गमाः अत्यन्तं दुरत्ययाः । रावणश्च महाञ् शत्रुः । अतश्च एतत्त्रितयम् अपारं दुस्तरं प्रतिभाति ॥ ५९ ॥ अयात्रां राज्ञामेतत्कालोचित दण्डयात्राभावम् । प्रणते चैव इदानीमेव सीतान्वेषणरावणनिरसनोद्योगः कर्तव्य इति प्रार्थनापूर्वकं प्रह्वीभूते सत्यपीत्यर्थः ॥ ६० ॥

उपस्थितोऽयं कालः । प्रोष्ठपदे मासि भाद्रपदे । ब्रह्म वेदं विवक्षतां सामगानां ब्राह्मणानाम् अध्यायोऽध्ययनं तस्य, अध्यापनस्य वा समयः ॥५४॥ निवृत्तकर्मायतनः निवृत्तं कर्म यस्य तत् निवृत्तकर्म आयतनं गृहं यस्य स तथोक्तः, उपरतगृहव्यापार इत्यर्थः । आषाढीम् आषाढमासपरिसमाप्तिपौर्णमासीमभ्युपगतः व्रताङ्गत्वेन स्वीकृतवान् । तदुक्तं महाभारते– " आषाढे तु सिते पक्षे एकादश्यामुपोषितः । चातुर्मास्यव्रतं कुर्याद्यत्किञ्चित्प्रयतो नरः । वार्षिकांश्चतुरो मासान् व्रतं किञ्चित्समापयेत् । असम्भवे तुलार्केऽपि कर्तव्यं तत् प्रयत्नतः ॥ " इति ॥ ५५ ॥ ५६ ॥ वर्षाः वर्षाकालान् ॥ ५७ ॥ क्लिन्नमार्द्रम् ॥ ५८ ॥ शोकश्चेति । इमाः वर्षाः वर्षाकालः रावणः शोकश्चेति मे एत त्रितयमपारं प्रतिभाति, दुर्निस्तरं प्रतिभातीत्यर्थः ॥ ५९ ॥ अयात्रां राज्ञामेतत्कालोचितदण्डयात्राभावम् । प्रणते चैव, इदानीमेव सीतान्वेषणरावणहिंसनोद्योगः

आत्मकार्यगरीयस्त्वात् अस्मत्प्रयोजनस्यातिमहत्त्वात्, अल्पयत्नेन अल्पकालेन चासाध्यत्वादित्यर्थः । वक्तुं नियोक्तुम् । नेच्छामीतिं भूतार्थे लट् ॥ ६१ ॥ रामानु०—अपि चातिपरिक्लिष्टश्चिराहारैः समागत इति प्रथमान्तपाठे इतिकरणं द्रष्टव्यम् ॥ ६१ ॥ स्वयमिति । कालं शरत्कालम् ॥ ६२ ॥ उक्तोपपत्तिभिः पूर्वसर्गोक्तं द्रढयति—तस्मादित्यादिना ॥ ६३ ॥ उपकारेणेति । अकृतज्ञः कृतोपकारानभिज्ञः पुरुषः । अप्रतिकृतः प्रत्युपकारमकुर्वन् । सत्त्ववतां

अपि चातिपरिक्लिष्टं चिराद्दारैः समागतम् । आत्मकार्यगरीयस्त्वाद्वक्तुं नेच्छामि वानरम् ॥ ६१ ॥ स्वयमेव हि विश्रम्य ज्ञात्वा कालमुपागतम् । उपकारं च सुग्रीवो वेत्स्यते नात्र संशयः ॥६२॥ तस्मात्कालप्रतीक्षोऽहं स्थितोऽस्मि शुभलक्षण । सुग्रीवस्य नदीनां च प्रसादमनुपालयन् ॥ ६३ ॥ उपकारेण वीरो हि प्रतिकारेण युज्यते । अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः॥६४॥ तमेवमुक्तः प्रणिधाय लक्ष्मणः कृताञ्जलिस्तत्प्रतिपूज्य भाषितम् । उवाच रामं स्वभिरामदर्शनं प्रदर्शयन् दर्शनमात्मनः शुभम् ॥ ६५ ॥ यथोक्तमेतत्तव सर्वमीप्सितं नरेन्द्र कर्ता नचिराद्धरीश्वरः । शरत्प्रतीक्षः क्षमतामिमं भवान् जलप्रपातं रिपुनिग्रहे धृतः ॥ ६६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

महात्मनाम् । मनो हन्ति क्षोभयति । वीरः प्रत्युपकारसमर्थः । उपकारेण हेतुना प्रतिकारेण प्रत्युपकारेण युज्यते हि युज्यत एव । सुग्रीवोऽप्येवंविधत्वात् प्रत्युपकारं करिष्यतीति भावः । अनेन प्रत्युपकारं कारयित्वा लोके प्रत्युपकारधर्मं प्रवर्तयिष्यामि इत्याशयः ॥ ६४ ॥ अस्य रामवचनस्य पूर्वसर्गान्तोत्तरमाह—तमिति । तं राममित्यन्वयः । दर्शनं मतम् ॥ ६५ ॥ यथोक्तमिति । कर्ता करिष्यति । लुट् ॥ ६६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने अष्टाविंशः सर्गः ॥ २८ ॥

कर्तव्य इति प्रार्थनापूर्वकं प्रह्वीभूते ॥ ६० ॥ अपिचेति । आत्मकार्यगरीयस्त्वात् अस्मत्प्रयोजनस्यातिमहत्त्वात्, अल्पयत्नेन अल्पकालेनासाध्यत्वादित्यर्थः । वक्तुं नियोक्तुं नेच्छामीति भूते लट् । परिक्लिष्टो दारैस्समागतः इति प्रथमान्तपाठे इतिकरणं द्रष्टव्यम् ॥ टी०—अनिवारणे युक्त्यन्तरमाह—अपिचेति । ननु त्वत्कार्यस्याल्पत्वात् किमनेन कालविलम्बेनेत्यत आह आत्मेति ॥ ६१–६३ ॥ उपकारेणेति । अकृतज्ञः कृतोपकारानभिज्ञः पुरुषः अप्रतिकृतः प्रत्युपकारमकुर्वन् । सत्त्ववतां महात्मनां मनो हन्ति क्षोभयति । वीरः प्रत्युपकारकरणसमर्थः उपकारेण हेतुना प्रतिकारेण युज्यते हि युज्यत एव, सुग्रीवोऽप्येवंविधत्वात्प्रत्युपकारं करोतीति भावः ॥ ६४–६६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायामष्टाविंशः सर्गः ॥ २८ ॥

अथ हनुमान् रामभक्तोऽपि स्वस्वाम्यनुज्ञाभावेन तं ध्यायन् सुग्रीवसमीप एव स्थितः स्वस्वामिना सर्वस्वामिहितानुगुणं कार्यमारब्धवानित्याहैकोनत्रिंशे-समीक्ष्येत्यादि हनुमान्वाक्यमब्रवीदित्यन्तमेकं वाक्यम् । हनुमान् उक्तगुणविशिष्टं व्योम उक्तगुणविशिष्टं सुग्रीवं च समीक्ष्य । हरीशं प्रसाद्य हरीश्वरमुपागम्य प्रणयाद्वाक्यमब्रवीदिति संबन्धः । विमलमित्यादिना सेनासन्नाहस्य प्राप्तकालत्वमुक्तम् । समृद्धार्थमित्यादिना समयातिक्रमहेतवः

समीक्ष्य विमलं व्योम गतविद्युद्बलाहकम् । सारसारवसंघुष्टं रम्यज्योत्स्नानुलेपनम् ॥ १ ॥ समृद्धार्थं च सुग्रीवं मन्दधर्मार्थसंग्रहम् । अत्यर्थमसतां मार्गमेकान्तगतमानसम् ॥ २ ॥ निर्वृत्तकार्यं सिद्धार्थं प्रमदाभिरतं सदा । प्राप्तवन्तमभिप्रेतान् सर्वानेव मनोरथान् ॥ ३ ॥ स्वां च पत्नीमभिप्रेतां तारां चापि समीप्सिताम् । विहरन्तमहोरात्रं कृतार्थं विगतज्वरम् ॥४॥ क्रीडन्तमिव देवेशं नन्दनेऽप्सरसां गणैः । मन्त्रिषु न्यस्तकार्यं च मन्त्रिणामनवेक्षकम् ॥ ५ ॥ उत्सन्नराज्यसन्देशं काममवृत्तमवस्थितम् । निश्चितार्थोऽर्थतत्त्वज्ञः कालधर्मविशेषवित् ॥ ६ ॥ प्रसाद्य वाक्यैर्मधुरैर्हेतुमद्भिर्मनोरमैः । वाक्यविद्वाक्यतत्त्वज्ञं हरीशं मारुतात्मजः ॥७॥ हितं तत्त्वं च पथ्यं च सामधर्मार्थनीतिमत् । प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चयम् । हरीश्वरमुपागम्य हनुमान् वाक्यमब्रवीत् ॥ ८ ॥

प्रदर्श्यन्ते । समृद्धार्थं संपूर्णरत्नवस्त्राभरणादिकम् । मन्दः अल्पः धर्मार्थयोः संग्रहः सम्पादनं यस्य तम् । एकान्तगतमानसम् एकस्मिन् काम

समीक्ष्येत्यादि 'समृद्धार्थं च' इत्यादिना 'काममवृत्तमवस्थितम्' इत्यन्तेनोक्तविशेषणविशिष्टं सुग्रीवं समीक्ष्य मधुरैर्वाक्यैर्हरीश्वरं प्रसाद्य हरीश्वरमुपागम्य हनुमान् प्रणयाद्वाक्यमब्रवीदिति सम्बन्धः । मन्दधर्मार्थसङ्ग्रहं मन्दौ स्वल्पौ धर्मार्थौ सङ्गृह्णातीति तथा । एकान्तगतमानसम् एकस्मिन्नेव कामपुरुषार्थे अन्तं निश्चयं गतं मानसं यस्य स तथोक्तः । निर्वृत्तकार्यं निष्पन्नवालिवधरूपकार्यम् । सिद्धार्थं प्राप्तराज्यम् । अभिप्रेतान् ईप्सितार्थान् मनोरथान् राज्यप्राप्त्यनन्तरमेवं करिष्यामीति मनोरथविषयभूतानर्थांश्च समीप्सितां तारां चापि प्राप्तवन्तमिति सम्बन्धः ॥ १-५ ॥ उत्सन्नराज्यसन्देहः उत्सन्नः नष्टः राज्यसन्देहो यस्य स तथोक्तः, स्वेनारक्षितस्य राज्यस्य कुशलं भवति वा न वेति शङ्कारहितमित्यर्थः ॥ ६ ॥ ७ ॥ हितम् उदर्कसुखकरम् । पथ्यं नीतिमार्गादनपेतम् । सामधर्मार्थनीतिमत् साम च

टीका-अथ त्रिकालवेदी हनुमान् सुग्रीवस्य किष्किन्धाप्रस्थापनसमये रामानुज्ञातं समयमासन्नं सुग्रीवं कामासक्तं चालोच्य तच्चित्तानुरञ्जनपुरस्सरं समयोचितं हितमुपदिशति-समीक्ष्येत्यादि । सारसैराकुलं संघुष्टं तत्सङ्घोषवत् । प्रणयः प्रार्थना । प्रीतिः स्नेहविशेषः ॥ १-८ ॥

पुरुषार्थे अन्तं निश्चयं गतं मानसं यस्य तथोक्तम् । यद्वा असतां कामुकानां मार्गम् एकान्तगतम् अत्यन्तगतं मानसं यस्य स तथा । "तीव्रैकान्तनितान्तानि" इत्यमरः । निर्वृत्तकार्यं निष्पन्नवालिवधरूपकार्यम् । सिद्धार्थं प्राप्तराज्यम् । अभिप्रेतानीप्सितान् मनोरथान् राज्यप्राप्त्यनन्तरमेवं करिष्यामीति संकल्पविषयीभूतानर्थान् तारां च प्राप्तवन्तमिति संबन्धः । कृतार्थं निष्पन्नधनम् । मन्त्रिणामनवेक्षकं मन्त्रिकृतकार्यापरामर्शकम् । उत्सन्नराज्यसन्देशं नष्टराज्यनियमनम् । कामवृत्तं कामव्यापारम् । अवस्थितं कामव्यापारपरतन्त्रतयाऽवस्थितमित्यर्थः । निश्चितार्थः निश्चितकर्तव्यः । अत्र हेतुः—अर्थे

राज्यं प्राप्तं यशश्चैव कौली श्रीरभिवर्धिता । मित्राणां संग्रहः शेषस्तं भवान् कर्तुमर्हति ॥ ९ ॥
यो हि मित्रेषु कालज्ञः सततं साधु वर्तते । तस्य राज्यं च कीर्तिश्च प्रतापश्चाभिवर्धते ॥ १० ॥
यस्य कोशश्च दण्डश्च मित्राण्यात्मा च भूमिप । समवेतानि सर्वाणि स राज्यं महदश्नुते ॥ ११ ॥

तत्त्वज्ञ इति । कालोचितो धर्मः कालधर्मः तद्विशेषवित् । वाक्यवित् तदुचितव्यवहारवित् । हितम् उदर्कसुखकरम् । तत्त्वं यथार्थम् । पथ्यं नीतिमार्गादनपेतम् । सामधर्मार्थनीतिमत् साम च धर्मश्च अर्थश्च नीतिश्च सामधर्मार्थनीति तदस्यास्तीति सामधर्मार्थनीतिमत् । प्रणयप्रीतिसंयुक्तम् प्रणयः समानविषयस्नेहः, प्रीतिः न्यूनविषयः । विश्वासकृतनिश्चयम् आप्तवाक्यत्वविश्वासे विषये कृतनिश्चयम् ॥ १–८ ॥ राज्यमिति । कौली कुलक्रमागता । श्रीः सम्पत् । अभिवर्धिता, अप्रतिद्वन्द्वत्वादिति भावः । मित्राणां संग्रहः तत्कार्यकरणम् । शेषः अवशिष्टो भवति । इदमेव वचनं प्रसाद्य वाक्यैरित्यादिना पूर्वं प्रशंसितम् ॥ ९ ॥ मित्रकार्यस्यावश्यकर्तव्यत्वमाह—यो हीति । कालज्ञः मित्रसंग्रहकालज्ञः । तत्कालातिक्रमे विपरीतं भवतीत्यर्थः । मित्रेषु वर्तते, मित्राधीनो भवतीत्यर्थः ॥ १० ॥ यस्येति । दण्डयतेऽनेनेति दण्डः सेनाविशेषः । आत्मा प्रभुरित्यर्थः । समवेतानि समुदितानि । एकन्यूनत्वे महाराज्यहानिरिति भावः ॥ ११ ॥ रामानु०—दण्डः दण्डयतेऽनेनेति दण्डः सैन्यविशेषः । तथाह कामन्दकः—" पितृपैतामहो वंशसम्भवो दत्तवेतनः । विख्यातपौरुषो जन्ये

धर्मार्थनीतिश्च सामधर्मार्थनीति तदस्यास्तीति तथा । विश्वासकृतनिश्चयम् आप्तवाक्यत्वविश्वासेन कृतनिश्चयम् ॥ ८ ॥ ९ ॥ यो हीति । कालज्ञः प्रत्युपकारकालज्ञस्सन् मित्रेषु स्वोपकर्तृष्विति शेषः । यः साधु यथा तथा वर्तते । टी०—मित्रसङ्ग्रहस्यावश्यकत्वमन्वयव्यतिरेकाभ्यामाह—यो हीति ॥१०॥ यस्येति । दण्डः दण्डयतेऽनेनेति दण्डः, सैन्यविशेषः । तथाह कामन्दकः—" अद्वैध्यः क्षत्रियप्रायो दण्डो दण्डविदां मतः " इति । समवेतानि अन्योन्यमनुकूलानि ॥ ११ ॥

कुशलः कुशलैर्वृतः । नानाप्रहरणोपेतो नानायुद्धविशारदः । नानायोधसमाकीर्णो विराजितहयद्विपः । प्रवासे च सुदुःखेषु युद्धेषु च कृतश्रमः । अद्वेष्यः क्षत्रियप्रायो दण्डो दण्ड विदां मतः ॥" इति ॥ ११ ॥ तदिति।निरत्यये अविनाशिनि । पथि सन्मार्ग इत्यर्थः । मित्रार्थं मित्रकार्यम् । अभिनीतार्थं प्रापितप्रयोजनं यथा भवति तथा । यथावत् यथाप्रतिज्ञमिति यावत्॥१२॥ सन्त्यज्येति । सर्वकर्माणि स्वभोगसाधनानि सन्त्यज्य । कृतोत्साहः सन् संभ्रमात् आदरात् मित्रार्थे विषये यः

तद्भवान् वृत्तसंपन्नः स्थितः पथि निरत्यये । मित्रार्थमभिनीतार्थं यथावत्कर्तुमर्हति ॥ १२ ॥ सन्त्यज्य सर्वकर्माणि मित्रार्थे योऽनुवर्तते । संभ्रमाद्धि कृतोत्साहः सोऽनर्थैर्नावरुध्यते ॥ १३ ॥ यस्तु कालव्यतीतेषु मित्रकार्येषु वर्तते । स कृत्वा महतोप्यर्थान्न मित्रार्थेन युज्यते ॥ १४ ॥ यदिदं वीर कार्यं नो मित्रकार्यमरिंदम । क्रियतां राघवस्यै तद्वैदेह्याः परिमार्गणम् ॥ १५ ॥ तादिदं वीरकार्यं ते कालातीतमरिंदम ॥ १६ ॥ न च कालमतीतं ते निवेदयति कालवित् । त्वरमाणोपि सन् प्राज्ञस्तव राजन् वशानुगः ॥ १७ ॥

अनुवर्तते अनुस्यूततया तिष्ठति, सोऽनर्थैर्नावरुध्यते न संबध्यते ॥ १३ ॥ एवं कर्तव्यं मित्रकार्यमुचितकाले कर्तव्यमित्याह–यस्त्विति । कालव्यतीतेषु अतिक्रान्तकालेषु ॥१४॥ यदिदमिति । हे वीर ! नः अस्माभिः । यदिदं मित्रकार्यं कर्तव्यम् एतत् वैदेह्याः परिमार्गणं क्रियतामिति संबन्धः॥१५॥ रामानु०–यदिदं वीर कार्यं नो मित्रकार्यमरिन्दम । तदिदं वीरकार्यं ते कालातीतमरिन्दम । नच कालमतीतं ते निवेदयति कालवित् ॥ इति पाठक्रमः ॥ १५ ॥ तदिदमिति । ते कार्यं त्वया कर्तव्यम् । इदं मित्रकार्यम् ॥ १६ ॥ न चेति । कालवित्, राम इति शेषः । त्वरमाण इत्यर्धं पूर्वेणान्वेति । कालवित् प्राज्ञो रामः त्वरमाणोपि

मित्रार्थं मित्रकार्यं अभिनीतार्थम् प्रापितप्रयोजनम् । यथार्थवत् यथाप्रतिज्ञमित्यर्थः ॥१२॥१३॥ यस्त्विति । कालव्यतीतेषु उचितकालविशेषातिक्रान्तेषु । अकाले कृतमकृतमिति भावः॥१४॥ यदिदमिति । वीर अरिन्दम !नः कार्यम् अस्माभिः कर्तव्यम् यदिदं मित्रकार्यमस्ति तदिदं वीरकार्यं रामकार्यम् अरिन्दम ! ते कालातीतं युक्तकालमतिक्रम्य वर्तत इत्यर्थः । अस्मिन् श्लोके अरिन्दमेति द्विरुक्तिः स्त्रीमध्यगतेन सुग्रीवेण हर्षपुरस्सरं स्वोक्तमङ्गीकारयितुमिति वेदितव्यम् ॥ १५ ॥ १६ ॥ कथमहं न ज्ञातवानत आह–न चेति । कालवित् कालज्ञापकः । ( कर्तव्यमेवाह क्रियतामिति । तर्हि कार्यार्थी राम एव ज्ञापयिष्यतीत्यत आह–नचेति । ) राम

सन् वैदेहीसमानयनाय त्वरमाणोपि सन् न निवेदयतीति संबन्धः ॥ १७ ॥ कुलस्येति । स्वयं चेति, स्वमपि गुणैरप्रतिम इत्यर्थः ॥१८॥ तस्येति । आज्ञापयितुम्, वानरसेनामानेतुमिति शेषः ॥१९॥ इदानीं वानरानयनेपि कालव्यतिक्रमस्तुल्य इत्याशङ्क्याह—नहीति । चोदनादृते रामप्रेरणं विना । कालो न व्यतीतो भवेत्, रामचोदनानन्तरं कार्यं क्रियते चेत्तदा कालातिक्रमः, तच्चोदनात्पूर्वमस्माभिः कार्यप्रवर्तने न कालातिक्रमदोष इति भावः ॥ २० ॥

कुलस्य हेतुः स्फीतस्य दीर्घबन्धुश्च राघवः। अप्रमेयप्रभावश्च स्वयं चाप्रतिमो गुणैः ॥१८॥ तस्य त्वं कुरु वै कार्यं पूर्वं तेन कृतं तव। हरीश्वर हरिश्रेष्ठानाज्ञापयितुमर्हसि ॥१९॥ न हि तावद्भवेत्कालो व्यतीतश्चोदनादृते। चोदितस्य हि कार्यस्य भवेत्कालव्यतिक्रमः ॥ २० ॥ अकर्तुरपि कार्यस्य भवान् कर्ता हरीश्वर। किं पुनः प्रतिकर्तुस्ते राज्येन च धनेन च ॥२१॥ शक्तिमानपि विक्रान्तो वानरर्क्षगणेश्वर। कर्तुं दाशरथेः प्रीतिमाज्ञायां किं न सज्जसे ॥ २२ ॥ कामं खलु शरैः शक्तः सुरासुरमहोरगान्। वशे दाशरथिः कर्तुं त्वत्प्रतिज्ञां तु काङ्क्षते ॥ २३ ॥ प्राणत्यागाविशङ्केन कृतं तेन तव प्रियम्। तस्य मार्गाम वैदेहीं पृथिव्यामपि चाम्बरे ॥ २४ ॥

अकर्तुः अनुपकर्तुः ॥२१॥ शक्तिमानपीति। प्रीतिं कर्तुम्। आज्ञायाम् आज्ञापने । न सज्जसे नोद्योगं करोषि ॥ २२ ॥ २३ ॥ प्राणत्यागेति। प्रेरितैरस्माभिः किमर्थं कर्तव्यम् ? कर्तव्यं चेदपि केन प्रकारेण कर्तव्यमत आह—त्वरमाण इत्यादिश्लोकद्वयेन । अप्रमेयस्वभावः कुलस्य बन्धुः स्वयं गुणैरप्रतिमश्च रामः त्वरमाणोपि तव वशानुगः, अतस्त्वां न प्रेरयतीति शेषः ॥ टी०—अनिर्वेदनेपि त्वन्निमित्तानुसरणं स्वसामर्थ्यं च कारणमित्यभिप्रायेणाह—त्वरमाण इत्यादि, श्लोकद्वयमेकं वाक्यम् ॥ १७ ॥ १८ ॥ तस्येति । किञ्च तेन पूर्वं तव कार्यं कृतम्, तस्य कार्यं कुरु । कर्तव्यप्रकारमाह हरीश्वरेति ॥ १९ ॥ इदानीं वानरप्रेषणेपि कालात्ययदोषस्तदवस्थ एवेत्याशङ्क्य नेत्याह—नहीति । चोदितस्य कार्यस्य हि कालव्यतिक्रमो भवेत, कालात्यये सत्यपि चोदनानन्तरं कृतस्य कार्यस्य कालात्ययदोषो भवेदित्यर्थः । चोदनादृते आज्ञां विना क्रियमाणस्य कार्यस्य कालस्तावद्व्यतीतो न भवेत् कालातिक्रमदोषो न भवेदेव, अतो रामनियोगात्पूर्वमेव सीतान्वेषणार्थं वानरानयनोद्योगः कर्तव्य इति भावः ॥ २० ॥ अकर्तुरपि अनुपकर्तुरपि । कार्यस्य कर्ता । राज्येन धनेन च प्रतिकर्तुः ॥ २१ ॥ शक्तिमानिति । आज्ञायां किन्न सज्जसे किमर्थं विलम्बसे ॥ २२ ॥ टी०· अनुद्योगे का भीतिरित्यत आह—काममिति । तथापि मर्यादां पालयतीत्याह त्वत्प्रतिज्ञामिति ॥ २३ ॥ किं कृतं तेनेत्यत आह—प्राणत्यागेति । प्राणत्यागाविशङ्केन महाबलिना वालिना विरोधे स्वानिष्टशङ्कापरित्यागेनेति भावः ॥ २४ ॥

प्राणत्यागाविशङ्केनेत्यनेन उपकारमहत्त्वं द्योतितम् ॥ २४–२६ ॥ नाधस्तादिति । कस्यचिदिति अस्माकं मध्ये कस्यचिद्गतिर्न सज्जतं न मन्दीभवति ॥ २७ ॥ तदिति । अप्रधृष्याः कोटयग्रतः कोटयधिकाः । हरयः ते सन्ति तेषां मध्ये कः । ते कृते त्वदर्थम् । किं, करोत्विति शेषः । कुत्र

न देवा न च गन्धर्वा नासुरा न मरुद्गणाः । न च यक्षा भयं तस्य कुर्युः किमुत राक्षसाः ॥ २५ ॥ तदेवं शक्तियुक्तस्य पूर्वं प्रियकृतस्तव । रामस्यार्हसि पिङ्गेश कर्तुं सर्वात्मना प्रियम् ॥२६॥ नाधस्तादवनौ नाप्सु गतिर्नोपरि चाम्बरे । कस्यचित्सज्जतेऽस्माकं कपीश्वर तवाज्ञया ॥ २७ ॥ तदाज्ञापय कः किं ते कृते कुत्र व्यवस्यतु । हरयो ह्यप्रधृष्यास्ते सन्ति कोटयग्रतोऽनघाः ॥२८॥ तस्य तद्वचनं श्रुत्वा काले साधु निवेदितम् । सुग्रीवः सत्त्वसम्पन्नश्चकार मतिमुत्त माम् ॥ २९ ॥ स संदिदेशाभिमतं नीलं नित्यकृतोद्यमम् । दिक्षु सर्वासु सर्वेषां सैन्यानामुपसङ्ग्रहे ॥ ३० ॥ यथा सेना समग्रा मे यूथपालाश्च सर्वशः । समागच्छन्त्यसङ्गेन सेनाग्राणि तथा कुरु ॥ ३१ ॥ ये त्वन्तपालाः प्लवगाः शीघ्रगा व्यवसायिनः । समानयन्तु ते सैन्यं त्वरिताः शासनान्मम । स्वयं चानन्तरं सैन्यं भवानेवानुपश्यतु ॥ ३२ ॥ त्रिपञ्चरात्रादूर्ध्वं यः प्राप्नुयान्नेह वानरः । तस्य प्राणान्तिको दण्डो नात्र कार्या विचारणा ॥ ३३ ॥

कुत्र कार्ये । व्यवस्यतु व्यवसायं करोतु । तदाज्ञापय ॥२८–३०॥ यथेति । सेनाग्राणि सेनाग्रेसरान्, सेनानेतॄनित्यर्थः । तथा कुरु तथा आज्ञापय ॥३१॥ ये त्विति । अन्तपालाः सेनापर्यन्तपालकाः ॥ ३२ ॥ त्रिपञ्चेति । त्रिपञ्चरात्रादूर्ध्वं पञ्चदशरात्रादनन्तरदिवसे ॥ ३३ ॥ रामानु०–त्रिपञ्चरात्रादूर्ध्वं यः प्राप्नुया

नेति । अस्माकं मध्ये कस्यचिदपीति सम्बन्धः । यद्वा अधस्तात् पाताले अस्माकं मध्ये कस्यचिदपि न सज्जत इति सम्बन्धः ॥२५–२७॥ तदिति । अनघाः अप्र धृष्याः । कोटयग्रतः कोटयधिकाः हरयः ते सन्ति हि । तेषां मध्ये कः ते कृते त्वदर्थे किं, करोत्विति शेषः । कुत्रचित्कुत्र व्यवस्यतु तदाज्ञापयेति योजना॥२८–३०॥ यथेति । सेनाग्राणि सेनाग्रेसरान् । तथा कुरु तथा आज्ञापय । असङ्गेन अविलम्बेन ॥३१॥ ये त्विति । अन्तपालाः सेनापर्यन्तपालकाः ॥३२॥ त्रिपञ्चेति । त्रिपञ्चरात्रा दूर्ध्वं पञ्चदशरात्रादनन्तरदिवसे इह न प्राप्नुयात् तस्य प्राणान्तिको दण्ड इति योजना । त्रिपञ्चरात्रादूर्ध्वं यः प्राप्नुयादिह वानरः इति पाठे–पञ्चदशरात्रादर्वा

दिह वानरः इति पाठे पञ्चदशरात्रादर्वागेव आगन्तव्यमिति भावः ॥ ३३ ॥ भृशं ... ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥ २९ ॥ अथ शरत्समागमेऽपि सुग्रीवस्यानुद्योगाद्रामकोपस्त्रिंशे—गुहामित्यादि । सुग्रीवे गुहां प्रविष्टे वर्षरात्रोषितो रामः कामशोकाभिपीडितः सन् । क्रमेण गगने घनैर्विमुक्ते । पाण्डरं निर्मलम् । गगनं दृष्ट्वा परमातुरः वर्षाकालिकशोकादधिकं

हरींश्च वृद्धानुपयातु साङ्गदो भवान्ममाज्ञामधिकृत्य निश्चिताम् । इति व्यवस्थां हरिपुङ्गवेश्वरो विधाय वेश्म प्रविवेश वीर्यवान् ॥ ३४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

गुहां प्रविष्टे सुग्रीवे विमुक्ते गगने घनैः । वर्षरात्रोषितो रामः कामशोकाभिपीडितः ॥ १ ॥ पाण्डरं गगनं दृष्ट्वा विमलं चन्द्रमण्डलम् । शारदीं रजनीं चैव दृष्ट्वा ज्योत्स्नानुलेपनाम् ॥ २ ॥ कामवृत्तं च सुग्रीवं नष्टां च जनकात्मजाम् । बुद्ध्वा कालमतीतं च मुमोह परमातुरः ॥ ३ ॥ स तु संज्ञामुपागम्य मुहूर्तान्मतिमान् पुनः । मनःस्थामपि वैदेहीं चिन्तयामास राघवः ॥ ४ ॥ आसीनः पर्वतस्याग्रे हेमधातुविभूषिते । शारदं गगनं दृष्ट्वा जगाम मनसा प्रियाम् ॥ ५ ॥ दृष्ट्वा च विमलं व्योम गतविद्युद्वलाहकम् । सारसारवसंघुष्टं विललापार्तया गिरा ॥ ६ ॥

शोकं प्राप्तः सन् मुमोह । एतावत्पर्यन्तं कस्यचिदवधेर्विद्यमानतया कथंचिद्धृतवान् । सम्प्रति तदभावान्मुमोहेत्यर्थः ॥ १–३ ॥ स त्विति । मनःस्थामपि वैदेहीं चिन्तयामास, पुनःपुनर्विशेषतश्चिन्तितवानित्यर्थः ॥ ४ ॥ रामानु०–स त्विति । मुहूर्तान्मतिमान् पुनरिति सम्यक् । मनःस्थामपि वैदेहीं चिन्तयामास. चिन्त्यमानामपि वैदेहीं विशेषतश्चिन्तयामासेत्यर्थः । अस्माच्छ्लोकात्परतः आसीनः पर्वतस्याग्र इति श्लोकः । अस्माच्च परतः दृष्ट्वा च विमलं व्योमेति श्लोकः । व्यत्यासस्तु लेखकप्रमादकृतः ॥ ४ ॥ आसीन इति । मनसा जगाम चिन्तयामासेति यावत् ॥ ५ ॥ दृष्ट्वा च विमलमिति । गिरा स्वरेण ॥ ६ ॥

गेवागन्तव्यमिति भावः । त्रिरावृत्तानां पञ्चानां रात्रीणां समाहारस्त्रिपञ्चरात्रः ॥ ३३ ॥ ३४ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० किष्किन्धाकाण्डव्याख्यायामेकोनत्रिंशः सर्गः ॥ २९ ॥ अथ उक्तानुवादपूर्वकं रामस्य वृत्तान्तमाह–गुहामिति । सुग्रीवेविमुक्त इत्यत्र अविमुक्त इति छेदः । सुग्रीवे गुहां किष्किन्धां प्रविष्टे गगने घनैरविमुक्ते आवृते सति वर्षरात्रोषितो रामः पाण्डरं गगनं दृष्ट्वा मुमोहेत्युत्तरत्र सम्बन्धः ॥ १–३ ॥ स त्विति । मनस्स्थामपि परमप्रियास्पदत्वेन नित्यसन्निहितामपि राक्षसगेहे कामवस्थामनुभवतीति चिन्तयामासेत्यर्थः ॥ ४ ॥ ५ ॥ दृष्ट्वेति । सारसारवसंघुष्टं सारसानामारवैः संघुष्टं व्योम दृष्ट्वेति सम्बन्धः ॥ ६ ॥

सारसेति । सारसारवसन्नादैः सारसारवोत्थितध्वनिभिः ॥७॥ पुष्पितानिति । पश्यन्ती मद्दिदृक्षया इतस्ततो दृष्टिं निक्षिपन्ती ॥८॥९॥ निःस्वनमिति । पुण्डरीकविशालाक्षी चक्रवाकनिनदश्रवणस्यासह्यतया नायकागमपथं सलीलमवलोकयन्तीत्यर्थः । कथं भविष्यति ? कथं सत्तां धारयिष्यतीत्यर्थः॥१०॥ वापीः कृत्रिमसरांसि । काननानि महावनानि ॥ ११ ॥ अपि तामिति । शरद्गुणनिरन्तरः शरद्गुणैः साधनैः निरन्तरः पूर्णः कामः । सौकुमार्यात्

सारसारवसन्नादैः सारसारवनादिनी । याऽऽश्रमे रमते बाला साऽद्य मे रमते कथम् ॥ ७॥ पुष्पितांश्चासनान् दृष्ट्वा काञ्चनानिव निर्मलान्। कथं सा रमते बाला पश्यन्ती मामपश्यती ॥८॥ या पुरा कलहंसानां स्वरेण कलभाषिणी। बुध्यते चारुसर्वाङ्गी साऽद्य मे बुध्यते कथम् ॥ ९ ॥ निःस्वनं चक्रवाकानां निशम्य सहचारिणाम् । पुण्डरीक विशालाक्षी कथमेषा भविष्यति ॥ १० ॥ सरांसि सरितो वापीः काननानि वनानि च। तां विना मृगशावाक्षीं चर न्नाद्य सुखं लभे ॥ ११ ॥ अपि तां मद्वियोगाच्च सौकुमार्याच्च भामिनीम् । न दूरं पीडयेत्कामः शरद्गुणनिरन्तरः ॥ १२ ॥ एवमादि नरश्रेष्ठो विललाप नृपात्मजः। विहङ्ग इव सारङ्गः सलिलं त्रिदशेश्वरात् ॥ १३ ॥ ततश्चञ्चूर्य रम्येषु फलार्थी गिरिसानुषु। ददर्श पर्युपावृत्तो लक्ष्मीवाँल्लक्ष्मणोऽग्रजम् ॥ १४ ॥ तं चिन्तया दुस्सहया परीतं विसंज्ञमेकं विजने मनस्वी। भ्रातुर्विषादात्परितापदीनः समीक्ष्य सौमित्रिरुवाच रामम् ॥ १५ ॥

मद्वियोगाच्च हेतोः । तां भामिनीम् । दूरम् आमरणम् । न पीडयेत्। अपिः सम्भावनायाम् । पीडयेदेवेत्यर्थः ॥ १२ ॥ एवमादीति । त्रिदशेश्वरात् सलिलमुद्दिश्य सारङ्गश्चातक इव विललापेति सम्बन्धः ॥ १३ ॥ तत इति । चञ्चूर्य कुटिलं चरित्वा । फलाभिलाषेण कुटिलमार्गेण चरित्वा । सारसेति । सारसारवसन्नादैः सारसारवोत्थितध्वनिभिः । या मे बाला आश्रमे रमते अरमत सा अद्य रक्षोवशं प्राप्ता कथं रमते ॥ ७ ॥ पुष्पितानिति । पश्यन्ती मद्दिदृक्षया इतस्ततः दृष्टिं विक्षिपन्ती ॥८-१०॥ सरांसीति । काननानि लतावृतगुल्मप्रदेशान् ॥ ११ ॥ शरद्गुणनिरन्तरः शरद्गुणैस्साधनैः निरन्तरः पूर्णः कामः सौकुमार्यान्मद्विरहाच्च हेतोः । तां भामिनीम् । दूरम् आमरणं च न पीडयेदपि । अपिः पदार्थसम्भावनायाम्, पीडयेदेवेत्यर्थः ॥ १२ ॥ त्रिदिवेश्वरात् सलिलमुद्दिश्य सारङ्ग इव चातक इव विललापेति सम्बन्धः ॥ १३ ॥ तत इति । चञ्चूर्य कुटिलं चरित्वा, फलाभिलाषेण कुटिलमार्गेषु चरित्वेत्यर्थः ॥ १४ ॥ १५ ॥

"नित्यं कौटिल्ये गतौ" इति यङ् ॥ १४ ॥ १५ ॥ किमिति । वशंगतेन, मनसेति शेषः । पौरुष्यं पौरुषम् । स्वार्थे ष्यञ् । अयं वर्तमानः । समाधिः चित्तसमाधानम् । सदा तत्र तत्र काले । संह्रियते सम्पाद्यते । अत्र अस्मिन् काले । निवर्तितेन योगेन किम् । अयं यदा संह्रियते समाधिः इति पाठान्तरम् । यदा यस्मिन् काले । अयं समाधिः चित्तसमाधानम् । संह्रियते संपाद्यते । अत्रास्मिन् काले निवर्तितेन योगेन सन्नहने उत्साहेन, किमित्यर्थः ॥ १६ ॥

किमार्य कामस्य वशंगतेन किमात्मपौरुष्यपराभवेन । अयं सदा संह्रियते समाधिः किमत्र योगेन निवर्तितेन ॥ १६ ॥
क्रियाभियोगं मनसः प्रसादं समाधियोगानुगतं च कालम् । सहायसामर्थ्यमदीनसत्त्व स्वकर्महेतुं च कुरुष्व हेतुम् ॥ १७ ॥ न जानकी मानववंशनाथ त्वया सनाथा सुलभा परेण । न चाग्निचूडां ज्वलितामुपेत्य न दह्यते वीरवरार्ह कश्चित् ॥ १८ ॥ सलक्षणं लक्ष्मणमप्रधृष्यं स्वभावजं वाक्यमुवाच रामः । हितं च पथ्यं च नयप्रसक्तं ससाम धर्मार्थसमाहितं च ॥ १९ ॥

क्रियेति । क्रियाभियोगं कार्योद्योगम् । मनसः प्रसादम् । समाधियोगानुगतं धैर्योपायाभ्यामनुबद्धं कालं च । सहायसामर्थ्यम् सुग्रीवादिसहायसामर्थ्यम् । स्वकर्म देवतोपासनात्मकं तदेव हेतुः तं च हेतुं कुरुष्व, क्रियाभियोगादिकं सर्वं स्वकार्यसिद्धौ हेतुं कुरुष्वेत्यर्थः । अत्र प्रकरणे लक्ष्मणेन रामस्याश्रितरक्षणत्वरा संदीप्यत इति स्वोपदेशः सुलभः ॥ १७ ॥ न जानकीति । सुलभा लब्धुमर्हा । अग्निचूडाम् अग्निज्वालाम् ॥ १८ ॥ सलक्षणमिति । रामः अप्रधृष्यं
आर्य ! यदा यस्मिन्काले । समाधिः चित्तसमाधानं सम्पादनीयम् । अत्र अस्मिन्काले अयं किं संह्रियते किमर्थं संह्रियते ? कामस्य वशंगतेन किं कामवशगमनेन किम् ? द्वितीयाया अलुगार्षः । भावे निष्ठा । आत्मपौरुष्यपराभवेन किम् ? पौरुषमेव पौरुष्यम् । निवर्तितेन योगेन किम् ? योगः सन्नहनम्, उद्योग इत्यर्थः । धैर्यालम्बनेन उद्योगे कर्तव्ये तत्परित्यागेन कामपरतन्त्रत्वादिकमयुक्तमिति भावः ॥ १६ ॥ क्रियाभियोगमिति । हे अधिकसत्त्व ! क्रियाभियोगं कार्योद्योगं मनःप्रसादम् । समाधियोगानुगतं धैर्योपायाभ्यामनुबद्धं कालं च सुग्रीवादिसहायसामर्थ्यं स्वकर्महेतुं च स्वकर्म देवतोपासनात्मकं तदेव हेतुः तं च हेतुं कुरुष्व, क्रियाभियोगादिकं सर्वं स्वकार्यसिद्धौ हेतुं कुरुष्वेत्यर्थः ॥ १७ ॥ नेति । अग्निचूडाम् अग्निशिखाम् । त्वयैव सनाथा न परेण नान्येन, अग्निचूडामुपेत्य न न दह्यते कश्चित् किन्तु दह्यत एवेत्यर्थः ॥ १८ ॥ सलक्षणमिति । रामः अप्रधृष्यं युक्तिभिरविचाल्यम्, स्वभावजं स्वभावसिद्धम् । हितम् उदर्कसुखकरम् । पथ्यं तत्काल

वि०—रामः अप्रधृष्यं युक्तिभिरविचाल्यम् । स्वभावजं स्वभावसिद्धं वाक्यमुक्तवन्तं लक्षणसहितं लक्ष्मणमुवाच । हे लक्ष्मण ! यत्त्वया प्रयुक्तं वाक्यं तद्धितं तत्कालसुखम् । पथ्यं कालान्तरेपि सुखम् । नयप्रसक्तं राजनीतियुक्तम् । सामसहितं धर्मार्थाभ्यां समाहितं सङ्गतम् ॥ स०—सलक्ष्मणम् इति पाठेऽपि सलक्ष्मणं लक्षणसहितम् । "लक्ष्मणं नाम्नि चिह्ने च रामभ्रातरि लक्ष्मणः" इति विश्वः ॥ १९ ॥

युक्तिभिरविचाल्यम्। स्वभावजं स्वभावसिद्धम्। हितम् उदर्कसुखकरम्। पथ्यं तत्कालसुखकरम्। नयप्रसक्तं राजनीतियुक्तम् ससाम सान्त्वयुक्तं धर्मार्थसहितं च वाक्यमुक्तवन्तं सलक्षणं लक्ष्मणमुवाचेति योजना। यद्वा अप्रधृष्यत्वादिविशेषणविशिष्टं वाक्यं राम उवाच। लक्ष्मणोक्तानुवादरूपत्वाद्रामवाक्यस्यापि तथात्वमिति बोध्यम् ॥ १९ ॥ रामा०—एतच्छ्लोकोक्ताप्रधृष्यत्वादिधर्माणां पूर्वोक्तलक्ष्मणवाक्येषु विद्यमानत्वाद्‌परिष्टाद्रामेण लक्ष्मणोक्तस्यास्यैव अनूद्यमानत्वादुक्तवन्तमिति पदमध्याहर्तव्यम् ॥ १९ ॥ निःसंशयमिति। कार्यं सीतान्वेषणादिकम्। निःसंशयं यथा भवति तथा अवेक्षणीयम्, तदनुरूपं धैर्यं कर्तव्यमित्यर्थः। क्रियाविशेषः

निःसंशयं कार्यमवेक्षितव्यं क्रियाविशेषो ह्यनुवर्तितव्यः। ननु प्रवृत्तस्य दुरासदस्य कुमार कार्यस्य फलं न चिन्त्यम् ॥ २० ॥ अथ पद्मपलाशाक्षीं मैथिलीमनुचिन्तयन्। उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥ २१ ॥ तर्पयित्वा सहस्राक्षः सलिलेन वसुन्धराम्। निर्वर्तयित्वा सस्यानि कृतकर्मा व्यवस्थितः ॥ २२ ॥ स्निग्धगम्भीरनिर्घोषाः शैलद्रुमपुरोगमाः। विसृज्य सलिलं मेघाः परिश्रान्ता नृपात्मज ॥ २३ ॥ नीलोत्पलदलश्यामाः श्यामीकृत्वा दिशो दश। विमदा इव मातङ्गाः शान्तवेगाः पयोधराः ॥ २४ ॥ जलगर्भा महावेगाः कुटजार्जुनगन्धिनः। चरित्वा विरताः सौम्य वृष्टिवाताः समुद्यताः ॥ २५ ॥

उत्साहादिः। अनुवर्तितव्यः अनुवर्तितव्य एव। हे कुमार! प्रवृत्तस्य दुरासदस्य कार्यस्य फलं सीताप्राप्तिरूपम्। न चिन्त्यं ननु? चिन्त्यमेव ॥ २० ॥ एवं लक्ष्मणसमाश्वासनेन प्रतिष्ठापितधैर्योऽपि सीताविषयककामानुवृत्त्या पुनः शरदं वर्णयति—अथेत्यादिना ॥ २१ ॥ तर्पयित्वेति। निर्वर्तयित्वा परिपक्वानि कृत्वा। कृतकर्मा कृतकृत्यः ॥ २२ ॥ स्निग्धेति। शैलद्रुमपुरोगमाः शैलद्रुमाणामग्रे गच्छन्तः। अत्र प्रकरणे सर्वत्र विषये प्रवृत्तिः रामावतारकृता सूच्यते ॥ २३ ॥ २४ ॥ जलगर्भा इति। वृष्टिकरा वाता वृष्टिवाताः, पुरोवाता इत्यर्थः ॥ २५ ॥ २६ ॥

सुखकरम्। नयप्रसक्तं राजनीतियुक्तम्। ससाम सामवादसहितम्। धर्मार्थसहितं च वाक्यमुक्तवन्तं लक्ष्मणं सलक्षणमुवाचेत्यन्वयः ॥ १९ ॥ निस्संशयमिति। हे कुमार! प्रवृत्तस्य दुरासदस्य कार्यस्य फलं सीताप्राप्तिरूपं न चिन्त्यमिति न, किन्तु चिन्त्यमेव। क्रियाविशेषः उत्साहादिः। सोऽपि अनुवर्तितव्यो हि अनुवर्तितव्य एव। कार्यं सीतान्वेषणादि। निस्संशयमवेक्षणीयम्, निस्संशयं यथा तथा कर्तव्यमित्यर्थः ॥ २० ॥ २१ ॥ टी०—उक्तमेवाह—तर्पयित्वेति। निर्वर्तयित्वा निष्पाद्य। परिश्रान्ता उपरताः ॥ २२ ॥ २३ ॥ नीलेति। श्यामी कृत्वा, स्वसम्बन्धेनेत्यर्थः। श्यामीति भिन्नपदम्, अन्यथा ल्यबादेशः स्यात् ॥ २४—२८ ॥

चित्रदीप्तिभिः नानावर्णकान्तिभिः ॥ २७ ॥ दर्शयन्तीति । अनेन चिरकालानुवर्तनेन गुरूणां शिष्येभ्यो रहस्यार्थप्रकाशनं सूच्यते ॥ २८ ॥ शाखास्विति । सप्तच्छदा नाम शरत्पुष्पा वृक्षाः । शरत्कर्त्री । श्रियं स्वसमृद्धिम् । विभज्य त्रेधा विभज्य । सप्तच्छदशाखादिषु प्रवृत्ता सप्तच्छदेषु पुष्प विकासरूपा श्रीः तारादिप्रभासु निर्मलतारूपा गजलीलासु उन्मस्तकतारूपा ॥ २९ ॥ संप्रतीति । अनेकाश्रयचित्रशोभा सितरक्तनीलपङ्कजादिरूपा ऽनेकाश्रयतया चित्रशोभा नानावर्णकान्तिः । शरत्कालगुणोपनीता शरत्कालोत्कर्षेण प्रापिता । लक्ष्मीः समृद्धिः । सूर्यस्याग्रहस्तैः प्राथमिककिरणैः ।

घनानां वारणानां च मयूराणां च लक्ष्मण । नादः प्रस्रवणानां च प्रशान्तः सहसाऽनघ ॥ २६ ॥ अभिवृष्टा महामेघै र्निर्मलाश्चित्रसानवः । अनुलिप्ता इवाभान्ति गिरयश्चित्रदीप्तिभिः ॥ २७ ॥ दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः । नवसङ्गमसव्रीडा जघनानीव योषितः ॥२८॥ शाखासु सप्तच्छदपादपानां प्रभासु तारार्कनिशाकराणाम् । लीलासु चैवोत्तमवारणानां श्रियं विभज्याद्य शरत्प्रवृत्ता ॥ २९ ॥ संप्रत्यनेकाश्रयचित्रशोभा लक्ष्मीः शरत्काल गुणोपनीता । सूर्याग्रहस्तप्रतिबोधितेषु पद्माकरेष्वभ्यधिकं विभाति ॥ ३० ॥ सप्तच्छदानां कुसुमोपगन्धी षट्पादवृन्दैरनुगीयमानः । मत्तद्विपानां पवनोऽनुसारी दर्पं वनेष्वभ्यधिकं करोति ॥३१॥ अभ्यागतैश्चारुविशालपक्षैः सरःप्रियैः पद्मरजोवकीर्णैः । महानदीनां पुलिनोपयातैः क्रीडन्ति हंसाः सह चक्रवाकैः ॥ ३२ ॥

हस्तशब्देन करा लक्ष्यन्ते । भगवत्कटाक्षबोधितेषु पुरुषेषु नानारूपसंवित्प्रकाश उच्यते ॥ ३० ॥ [illegible] अनुसृत्य वर्तमानः, अविच्छेदेनैव प्रवर्तमान इत्यर्थः । मत्तद्विपानां दर्पं करोति । मदवृद्धिहेतुत्वादिति भावः ॥ ३१ ॥ अभ्यागतैः [illegible] । मिथुनतया आभिमुख्येन संगतैः । चारु यथा तथा विशालपक्षैः, हर्षेण विस्तृतपक्षैरित्यर्थः । क्रीडन्ति हंसाः सह चक्रवाकैः, हंसाश्च क्रीडन्ति चक्रवाकाश्च क्रीडन्तीत्यर्थः ॥ ३२ ॥

शाखास्विति । एते पदार्थाः शरदि अतितरां शोभन्त इति भावः ॥ २९ ॥ सम्प्रतीति । सूर्याग्रपादप्रतिबोधितेषु सूर्यस्य प्रथमप्रसृतकिरणविकासितेषु ॥ ३० ॥ सप्तच्छदानामिति कर्मणि षष्ठी । ताननुसारी अनुसृत्य वर्तमानः पवनः मत्तद्विपानां दर्पं करोतीति सम्बन्धः । प्रतिगजमदगन्धशङ्काजनकत्वेनेति भावः ॥ ३१–३४ ॥

रामानु०—क्रीडन्ति हंसाः सह चक्रवाकैरिति । हंसचक्रवाकाः परस्परं वैरिणोपि शरद्गुणसञ्जातहर्षपारवश्यात् वैरं विस्मृत्य विहरन्ति इति न विरोधः ॥ ३२॥३३ ॥ नभ इति । गतोत्सवाः नष्टहर्षा इत्यर्थः । बभूवुरिति शेषः ॥ ३४ ॥ मनोज्ञगन्धैरिति । प्रियकैः बन्धूकैः । " सर्जकासनबन्धूकपुष्पप्रियकजीवकाः " इत्यमरः ॥ ३५ ॥ प्रियान्वितानामिति । कुसुमोद्धतानां सप्तच्छदकुसुमाघ्राणेन मत्तानाम् । मदोत्कटानां मदेन उद्भिन्नकटानाम् ॥ ३६ ॥ व्यभ्रं विगतमेघम् । शस्त्र



मदप्रगल्भेषु च वारणेषु गवां समूहेषु च दर्पितेषु । प्रसन्नतोयासु च निम्नगासु विभाति लक्ष्मीर्बहुधा विभक्ता ॥ ३३॥
नभः समीक्ष्याम्बुधरैर्विमुक्तं विमुक्तबर्हाभरणा वनेषु । प्रियास्वसक्ता विनिवृत्तशोभा गतोत्सवा ध्यानपरा मयूराः ॥ ३४ ॥
मनोज्ञगन्धैः प्रियकैरनल्पैः पुष्पातिभारावनताग्रशाखैः । सुवर्णगौरैर्नयनाभिरामैरुद्द्योतितानीव वनान्तराणि ॥ ३५ ॥
प्रियान्वितानां नलिनीप्रियाणां वने रतानां कुसुमोद्धतानाम् । मदोत्कटानां मदलालसानां गजोत्तमानां गतयोऽद्य मन्दाः ॥ ३६ ॥
व्यभ्रं नभः शस्त्रविधौतवर्णं कृशप्रवाहानि नदीजलानि । कह्लारशीताः पवनाः प्रवान्ति तमोविमुक्ताश्च दिशः प्रकाशाः ॥ ३७ ॥
सूर्यातपक्रामणनष्टपङ्का भूमिश्चिरोद्घाटितसान्द्ररेणुः । अन्योन्यवैरामर्षायुतानामुद्योगकालोऽद्य नराधिपानाम् ॥ ३८ ॥

विधौतवर्णं विधौतशस्त्रवर्णम् । कृशप्रवाहानि सङ्कुचितप्रवाहानि ॥ ३७ ॥ सूर्यातपेति । चिरोद्घाटितसान्द्ररेणुः चिरात् ईषत् उत्पादितनिबिडरेणुः । स्थूलरेणुरित्यर्थः । अन्योन्यवैरामर्षायुतानामित्यत्र वृत्तभङ्ग आर्षः । वैरं विरोधः, अमर्षः असहिष्णुता ताभ्याम् आयुतानाम् आ समन्ताद्युतानाम् । वैरामर्षपूर्णानामित्यर्थः ॥ ३८ ॥ रामानु०—सूर्यातपेति । समुत्पादितसान्द्ररेणुरिति पाठः । अन्योन्यवैरामर्षायुतानामित्यत्र वृत्तभङ्गः आर्षः । वैरं विरोधः, अमर्षः असहिष्णुता ताभ्यामायुतानाम् आ समन्ताद्युक्तानाम् । वैरामर्षपूर्णानामित्यर्थः ॥ ३८ ॥



मनोज्ञेति । प्रियकैः सर्जकैः ॥ ३५ ॥ कुसुमोद्धतानां सप्तच्छदकुसुमाघ्राणेन मत्तानां मदोत्कटानां मदेनोद्भिन्नकटानाम् ॥ ३६ ॥ व्यभ्रमिति । शस्त्रविधौतवर्णं धौतशस्त्रवर्णम् ॥ ३७ ॥ सूर्यस्येति । " समुत्सादितसान्द्ररेणुः " इति पाठः । टी०—अन्योन्येति । अत्र वृत्तभङ्गपरिहाराय अमर्षेति रेफस्योकारः पठनीयः ॥ ३८ ॥

रूपशोभाः शरीरशोभाः ॥ ३९ ॥ समन्मथमिति । कुलान्विताः सजातीयसमूहेन युक्ताः ॥ ४० ॥ सारसौघैः हंससमूहैः ॥ ४१ ॥ महारवैः वित्रास्येति संबन्धः । भिन्नकटाः, मदेनेति शेषः ॥ ४२ ॥ व्यपेतेति । सवालुकासु ससिकतासु । ससारसाः इति पदच्छेदः । रावविनादितासु निजशब्देन सञ्जात शब्दासु ॥ ४३ ॥ नदीति । नद्यश्च घनप्रस्रवणानि च तेषाम् उदकानाम् । प्लवङ्गमानां मण्डूकानाम् ॥ ४४ ॥ अनेकवर्णाः कृष्णपीतादिवर्णाः ।

शरद्गुणाप्यायितरूपशोभाः प्रहर्षिताः पांसुसमुक्षिताङ्गाः । मदोत्कटाः सम्प्रति युद्धलुब्धा वृषा गवां मध्यगता नदन्ति ॥ ३९ ॥ समन्मथं तीव्रगतानुरागाः कुलान्विता मन्दगतिं करिण्यः । मदान्वितं संपरिवार्य यान्तं वनेषु भर्तारमनुप्रयान्ति ॥ ४० ॥ त्यक्त्वा वराण्यात्मविभूषणानि बर्हाणि तीरोपगता नदीनाम् । निर्भर्त्स्यमाना इव सारसौघैः प्रयान्ति दीना विमदा मयूराः ॥ ४१ ॥ वित्रास्य कारण्डवचक्रवाकान् महारवैर्भिन्नकटा गजेन्द्राः । सरस्सु बद्धाम्बुजभूषणेषु विक्षोभ्य विक्षोभ्य जलं पिबन्ति ॥ ४२ ॥ व्यपेतपङ्कासु सवालुकासु प्रसन्नतोयासु सगोकुलासु । ससारसा रावविनादितासु नदीषु हृष्टा निपतन्ति हंसाः॥४३॥ नदीघनप्रस्रवणोदकानामतिप्रवृद्धानिलबर्हिणानाम् । प्लवङ्गमानां च गतोत्सवानां द्रुतं रवाः सम्प्रति सम्प्रनष्टाः ॥४४॥ अनेकवर्णाः सुविनष्टकाया नवोदितेष्वम्बुधरेषु नष्टाः । क्षुधार्दिता घोरविषा बिलेभ्यश्चिरोषिता विप्रसरन्ति सर्पाः ॥ ४५॥ चञ्चच्चन्द्रकरस्पर्शहर्षोन्मीलिततारका । अहो रागवती सन्ध्या जहाति स्वयमम्बरम् ॥ ४६ ॥

सुविनष्टकायाः अत्यन्तकृशशरीराः । नष्टा लीनाः ॥ ४५ ॥ चञ्चच्चन्द्रकरस्पर्शेन यो हर्षः तेन उन्मीलिततारका निर्मलनक्षत्रा । रागवती आरुण्यवती सन्ध्या । अम्बरम् आकाशम् । स्वयं जहाति । अत्र कान्तकरस्पर्शेन हर्षविस्फारितनेत्रकनीनिका उत्तेजितानुरागा स्वयमेव रतये अम्बरं त्यजन्ती

टी०—शरद्गुणैः प्रसन्नसलिलादिभिराप्यायिता वर्द्धिता रूपशोभा येषां ते तथोक्ताः ॥ ३९–४१ ॥ वित्रास्येति । विक्षोभ्य विक्षोभ्य पुनः पुनः प्रसार्य ॥ ४२ ॥ व्यपेतेति । ससारसाराववि‍नादितासु ससारसाश्च तेषामाराववि‍नादिताश्चेति तथा तासु । यद्वा ससारसाः रावविनादितास्विति छेदः ॥ ४३ ॥ नदीति । प्लवङ्गमानां मण्डूकानाम् ॥ ४४ ॥ अनेकेति । अम्बुधरेषु नवोदितेषु सत्सु सुतरां विनष्टाः सङ्कुचिताः कृताः कायाः येषां ते नष्टा अदृश्यमानाः, सञ्चाराभावादिति भावः ॥ ४५ ॥ ४६ ॥

कामुकी प्रतीयत इति समासोक्तिः । सन्ध्यारागः प्रायेण शरद्येव भवतीत्येवमुक्तम् ॥ ४६ ॥ शशाङ्कोदितसौम्यवक्त्रा उदितशशाङ्करम्यवक्त्रा । तारागणोन्मीलितचारुनेत्रा उन्मीलितताराग णचारुनेत्रा ॥४७॥ भुक्त्वा मुखाग्रे गृहीत्वा । माला नानावर्णपुष्पमाला ॥ ४८ ॥ सुप्तैकहंसमिति । इदं चन्द्रस्थाने, महाह्रदस्थमिति गाम्भीर्यकृतनैर्मल्यातिशयेन आकाशसाम्याय, घनैर्विमुक्तमिति परिपूर्णत्वायोक्तम् ॥ ४९ ॥ तनि०—महाह्रदशब्देनागाधत्व

रात्रिः शशाङ्कोदितसौम्यवक्त्रा तारागणोन्मीलितचारुनेत्रा । ज्योत्स्नांशुकप्रावरणा विभाति नारीव शुक्लांशुक संवृताङ्गी ॥४७॥ विपक्वशालिप्रसवानि भुक्त्वा प्रहर्षिता सारसचारुपङ्क्तिः । नभः समाक्रामति शीघ्रवेगा वातावधूता ग्रथितेव माला ॥ ४८ ॥ सुप्तैकहंसं कुसुमैरुपेतं महाह्रदस्थं सलिलं विभाति । घनैर्विमुक्तं निशि पूर्णचन्द्रं तारा गणाकीर्णमिवान्तरिक्षम् ॥ ४९ ॥ प्रकीर्णहंसाकुलमेखलानां प्रबुद्धपद्मोत्पलमालिनीनाम् । वाप्युत्तमानामधिकाऽद्य लक्ष्मीर्वराङ्गनानामिव भूषितानाम् ॥ ५० ॥ वेणुस्वनव्यञ्जिततूर्यमिश्रः प्रत्यूषकालानिलसंप्रवृद्धः । संमूर्च्छितो गर्गरगोवृषाणामन्योन्यमापूरयतीव शब्दः ॥ ५१ ॥

मुक्तम् । तेनातिनीलाश्रयस्थतया हंसस्यातिधावल्यं प्रकाश्यते ॥ ४९ ॥ ५० ॥ वेणूनां सुषिरवंशानां स्वनेन व्यञ्जितं यत्तूर्यं गीतवाद्यं तेन मिश्रः । प्रत्यूष कालानिलेन प्रातःकालवायुना संप्रवृद्धः अभिवृद्धः । संमूर्च्छितः अभिव्याप्तः । गर्गरगोवृषाणां, गर्गराणां दधिमथनभाण्डानां गवां वृषाणां च शब्दः । अन्योन्यमापूरयतीव परस्परमभिवर्धयतीव । प्रातःकालिकदधिमथनघोषः वत्सोत्सुकानां गवां पुष्ट्या कामातुराणां वृषाणां च शब्दः गोपालवेणुस्वनैः प्राभातिकवायुभिश्चापि वृद्धो जायत इत्यर्थः ॥ ५१ ॥



रात्रिरिति । शशाङ्कोदितसौम्यवक्त्रा उदितशशाङ्कसौम्यवक्त्रा ॥ ४७ ॥ विपक्वेति । ग्रथिता सूत्रप्रोता माला स्रगिव ॥४८॥ सुप्तेति । बिम्बप्रतिबिम्बभावेन प्रवृत्तेः उपमा ॥ ४८–५० ॥ वेणुस्वनेति । वेणुस्वनव्यञ्जिततूर्यमिश्रः वेणुस्वनविशेषितवाद्यमिश्रः । प्रत्यूषकालानिलसम्प्रवृत्तः अनिलसम्प्रयातः, अनिलसमाक्षिप्त इत्यर्थः । सम्मूर्च्छितः गर्गरगोवृषाणां गर्गराणां दधिमन्थनभाण्डानां गोवृषाणां वृषभाणां च शब्दः अन्योन्यमापूरयतीव, प्रत्यूषकाले प्रबुद्धा गोपाः गोष्ठेषु

नवैरिति । कुसुमैः प्रभासन्त इति कुसुमप्रभासाः तैः । पटप्रकाशैः पटतुल्यैः । काशैः शुभ्रपुष्पदर्भविशेषैः । नदीनां कूलानि तटानीत्युक्त्या स्त्रीणां जघनोपमा सूच्यते ॥ ५२ ॥ वने प्रचण्डाः निरङ्कुशगतयः । मधुपाने शौण्डाः धूर्ताः । पद्मानामसनानां च रेणुभिः गौराः । षट्चरणाः भृङ्गाः । वनेषु पवनानुयात्रां वातानुगमनम् । कुर्वन्ति, परिमलानुसारादिति भावः ॥ ५३ ॥ जलमिति । प्रभासत इति प्रभासम् । पचाद्यच् । विकस्वरमित्यर्थः ।

नवैर्नदीनां कुसुमप्रभासैर्व्याधूयमानैर्मृदु मारुतेन । धौतामलक्षौमपटप्रकाशैः कूलानि काशैरुपशोभितानि ॥५२॥ वनप्रचण्डा मधुपानशौण्डाः प्रियान्विताः षट्चरणाः प्रहृष्टाः । वनेषु मत्ताः पवनानुयात्रां कुर्वन्ति पद्मासनरेणुगौराः ॥ ५३ ॥ जलं प्रसन्नं कुमुदं प्रभासं क्रौञ्चस्वनः शालिवनं विपक्वम् । मृदुश्च वायुर्विमलश्च चन्द्रः शंसन्ति वर्षव्यपनीतकालम् ॥ ५४ ॥ मीनोपसंदर्शितमेखलानां नदीवधूनां गतयोऽद्य मन्दाः । कान्तोपभुक्तालसगामिनीनां प्रभातकालेष्विव कामिनीनाम् ॥ ५५ ॥ सचक्रवाकानि सशैवलानि काशैर्दुकूलैरिव संवृतानि । सपत्त्रलेखानि सरोचनानि वधूमुखानीव नदीमुखानि ॥ ५६ ॥ प्रफुल्लबाणासनचित्रितेषु प्रहृष्टषट्पादनिकूजितेषु । गृहीतचापोद्यतचण्डदण्डः प्रचण्डचारोऽद्य वनेषु कामः ॥ ५७ ॥

वर्षव्यपनीतकालं वर्षात्ययकालम् । शरत्कालमिति यावत् ॥ ५४ ॥ मीनेति । कामिनीनां वारस्त्रीणामित्यर्थः ॥ ५५ ॥ सचक्रवाकानीति । चक्रवाकशैवलकाशाः रोचनापत्त्रलेखावगुण्ठनदुकूलस्थानीयाः ॥ ५६ ॥ प्रफुल्लेति । बाणाः बाणवृक्षाः । असनाः सर्जकाः । गृहीतचापेन उद्यतः प्रयुक्तः चण्डदण्डः तीक्ष्णदण्डनं येन स तथा । यद्वा गृहीतचापश्चासौ उद्यतचण्डदण्डश्च । दण्डः शरविशेषः । "दण्डादयः काण्डभेदाः स्युः" इति हलायुधः ।

वेणुवाद्यानि वादयन्ति, गोप्यो गर्गरीश्च मथ्नन्ति, गोवृषाश्च नदन्ति । तत्र समुदितशब्दः पवनेन प्रथत इत्यर्थः । गर्गरीशब्दस्य ङीषभावश्छान्दसः । "गर्गरी मन्थनीभाण्डी पुमान्मत्स्यविशेषके" इति निघण्टुः ॥ ५१ ॥ नवैरिति । कुसुमप्रभासैः कुसुमभास्वरैः ॥ ५२ ॥ पवनानुयात्रां पवनानुगमनम् । पद्मासनरेणुगौराः पद्मानामसनानां बन्धूकानां च रेणुभिर्गौराः । वनप्रचण्डाः वनसञ्चारक्षमाः । मधुपानेन शौण्डा विख्याताः "मत्ते शौण्डोत्कटक्षीबाः" इत्यमरः ॥ ५३ ॥ जलमिति । वर्षव्यपनीतकालं शरत्कालमिति यावत ॥ ५४ ॥५५॥ सचक्रवाकानीति । चक्रवाकशैवलकाशाः रोचनापत्त्रलेखावगुण्ठनदुकूलस्थानीयाः ॥५६॥ प्रफुल्लेति ।

प्रचण्डचारः उग्रसञ्चारः ॥ ५७ ॥ लोकं जनम् ॥ ५८ ॥ कुररीभिः क्रौञ्चीभिः । सलिलाशयाः सरांसि ॥ ५९ ॥ असना इति । बन्धुजीवाः श्यामाश्च लताविशेषाः ॥ ६० ॥ ६१ ॥ अन्योन्येति । हे नृपात्मज । जिगीषूणां पार्थिवानामित्यन्वयः ॥ ६२ ॥ रामानु०–अन्योन्येति । जिगीषूणां नृपात्मजेति पाठः ॥ ६२ ॥ इयमिति । यात्रा उपस्थितेति शेषः ॥ ६३ ॥ चत्वारः आपाढाद्याः । केचिदाहुः श्रावणाद्या इति । 'पूर्वोऽयं वार्षिको

लोकं सुवृष्ट्या परितोषयित्वा नदीस्तटाकानि च पूरयित्वा । निष्पन्नसस्यां वसुधां च कृत्वा त्यक्त्वा नभस्तोयधराः प्रनष्टाः ॥५८॥ प्रसन्नसलिलाः सौम्य कुररीभिर्विनादिताः । चक्रवाकगणाकीर्णा विभान्ति सलिलाशयाः ॥ ५९ ॥ असनाः सप्तपर्णाश्च कोविदाराश्च पुष्पिताः । दृश्यन्ते बन्धुजीवाश्च श्यामाश्च गिरिसानुषु ॥ ६० ॥ हंससारसचक्राह्वैः कुररैश्च समन्ततः । पुलिनान्यवकीर्णानि नदीनां पश्य लक्ष्मण ॥ ६१ ॥ अन्योन्यबद्धवैराणां जिगीषूणां नृपात्मज । उद्योगसमयः सौम्य पार्थिवानामुपस्थितः ॥ ६२ ॥ इयं सा प्रथमा यात्रा पार्थिवानां नृपात्मज । नच पश्यामि सुग्रीवमुद्योगं वा तथाविधम् ॥ ६३ ॥ चत्वारो वार्षिका मासा गता वर्षशतोपमाः । मम शोकाभिभूतस्य सौम्य सीतामपश्यतः ॥ ६४ ॥ चक्रवाकीव भर्तारं पृष्ठतोऽनुगता वनम् । विषमं दण्डकारण्यमुद्यानमिव याऽऽगता ॥ ६५ ॥ प्रियाविहीने दुःखार्ते हृतराज्ये विवासिते । कृपां न कुरुते राजा सुग्रीवो मयि लक्ष्मण ॥६६॥ अनाथो हृतराज्योऽयं रावणेन च धर्षितः । दीनो दूरगृहः कामी मां चैव शरणं गतः ॥ ६७ ॥ इत्येतैः कारणैः सौम्य सुग्रीवस्य दुरात्मनः । अहं वानरराजस्य परिभूतः परन्तप ॥ ६८ ॥

मासः श्रावणः 'सलिलागमः' इत्युपक्रमोक्तेः । आश्वयुजकार्त्तिकयोर्वर्षानुवृत्त्या वार्षिकत्वम् । "कार्त्तिके समनुप्राप्ते त्वं रावणवधे यत" इति पूर्वोक्तवचने तु कार्त्तिके समनुप्राप्त इत्यस्य समाप्ते इत्यर्थं इत्याहुः ॥ ६४–६६ ॥ अनाथ इत्यादि । सुग्रीवस्य परिभूत इति "क्तस्य च वर्तमाने" गृहीतचापोद्यतचण्डदण्डः गृहीतचापश्चासौ उद्यतचण्डदण्डश्च दण्डः शरविशेषः । यद्वा गृहीतचापेन उद्यतः प्रयुक्तः चण्डदण्डः तीक्ष्णदण्डनं येन स तथोक्तः ॥ ५७–६२ ॥ इयमिति । यात्रा प्रथमा दण्डयात्रा, उपस्थितेति शेषः ॥६३॥ चत्वार इत्यादि । चक्रवाकी भर्तारमिव विषमं दण्डकारण्यम् उद्यानमिव या पृष्ठतः अनुगता गता इदानीं नष्टा च तामपश्यतो मे मासा वर्षशतोपमा गता इत्यन्वयः ॥ ६४–६७ ॥ इत्येतैरिति । सुग्रीवस्य सुग्रीवेण ॥ ६८–७१ ॥

इति षष्ठी । कृपां न कुरुत इत्यादिकं सुग्रीवाभिमानमनुसृत्योक्तम् ॥ ६७–६९ ॥ त्वं प्रविश्य चेत्यादि । शुभमिति, यः उदीरितं वाक्यं सत्येन परिगृह्णाति सत्यत्वेन स्वीकरोति, यथोक्तमनुतिष्ठतीत्यर्थः । मित्राणां न भवन्ति मित्राणामुपकाराय न भवन्तीत्यर्थः । अस्य श्लोकस्य अन्ते इतिकरणं द्रष्टव्यम् । इति सुग्रीवं ब्रूहीति पूर्वेण सम्बन्धः ॥ ७०–७४ ॥ रामानु०–शुभमिति । यो हि वाक्यमुदीरितमिति पाठः ॥ ७२–७४ ॥

स कालं परिसङ्ख्याय सीतायाः परिमार्गणे । कृतार्थः समयं कृत्वा दुर्मतिर्नावबुध्यते ॥ ६९ ॥ त्वं प्रविश्य च किष्किन्धां ब्रूहि वानरपुङ्गवम् । मूर्खं ग्राम्यसुखे सक्तं सुग्रीवं वचनान्मम ॥ ७० ॥ अर्थिनामुपसन्नानां पूर्वं चाप्युपकारिणाम् । आशां संश्रुत्य यो हन्ति स लोके पुरुषाधमः ॥७१॥ शुभं वा यदि वा पापं यो हि वाक्यमुदीरितम् । सत्येन परिगृह्णाति स वीरः पुरुषोत्तमः॥७२॥ कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये । तान् मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ ७३ ॥ नूनं काञ्चनपृष्ठस्य विकृष्टस्य मया रणे । द्रष्टुमिच्छति चापस्य रूपं विद्युद्गणोपमम् ॥ ७४ ॥ घोरं ज्यातलनिर्घोषं क्रुद्धस्य मम संयुगे । निर्घोषमिव वज्रस्य पुनः संश्रोतुमिच्छति ॥ ७५ ॥ काममेवं गतेऽप्यस्य परिज्ञाते पराक्रमे । त्वत्सहायस्य मे वीर न चिन्ता स्यान्नृपात्मज ॥ ७६ ॥

घोरमिति । निर्घोषमिव वज्रस्य पुनः संश्रोतुमिच्छतीति पाठः ॥७५॥ काममिति । वीर ! नृपात्मज । त्वत्सहायस्य मे एवं गते सालगिरिभूद्दलनादिषु

शुभमिति । येन प्रकारेण वाक्यमुदीरितं तेन प्रकारेण यः परिगृह्णाति निष्पादयति । यो हि वाक्यमुदीरितम् इति च पाठः ॥ ७२ ॥ कृतार्था मित्राणां न भवन्ति, मित्राणामुपकारका न भवन्तीत्यर्थः । अस्य श्लोकस्यान्ते इतिकरणं द्रष्टव्यम् । इति सुग्रीवं ब्रूहीति पूर्वेण सम्बन्धः ॥ ७३ ॥ अथ सुग्रीवमुद्दिश्य लक्ष्मणं सम्बोध्याह–नूनमिति ॥७४॥ पुनरिति वालिवधकृतधनुर्घोषश्रवणापेक्षयोक्तम् ॥७५॥ काममिति । वीर ! नृपात्मज ! त्वत्सहायस्य मे एवंगते सालगिरिभूविद्दलनादिषु

स०–नन्वेवं सुग्रीवहनने कथं त्वत्कार्यनिष्पत्तिरिति लक्ष्मणशङ्कां परिहरति–काममिति । एवं पूर्वोक्तप्रकारेण । मत्कोपेन सुग्रीवे गतेऽपि नष्टेऽपि । अस्य मे कामं यथा तथा त्वया ज्ञाते सति । तत्रापि त्वत्सहायस्य मे चिन्ता आगामिकार्ये न स्यात् । यद्वा त्वत्सहायस्य मे पराक्रमे अस्य सुग्रीवस्य एवं गते काले परिज्ञातेऽपि चिन्ता न स्यादिति । कामम् आश्चर्यम् ॥ ७६ ॥

इत्थमप्रतिहतं पराक्रमे कामं परिज्ञाते सत्यपि अस्य सुग्रीवस्य [चिन्ता समयव्यतिक्रमे मामपि हनिष्यतीति विचारः न स्यात्, नाभूदित्यर्थः ॥ ७६ ॥ यदर्थमिति । अयमारम्भः सख्यकरणवालिनिरसनरूपः । यदर्थं यस्मै सीतान्वेषणप्रयोजनाय कृतः । समयं तद्विषयसङ्केतम् । प्लवगेश्वरो नाभिजानातीति संबन्धः ॥ ७७ ॥ वर्षेति । वर्षासमयकालम् वर्षा एव समयकालः सङ्केतकालः तम् । वर्षाशब्देन चत्वारो मासा उपलक्ष्यन्ते ॥ ७८ ॥

यदर्थमयमारम्भः कृतः परपुरञ्जय । समयं नाभिजानाति कृतार्थः प्लवगेश्वरः ॥७७॥ वर्षासमयकालं तु प्रतिज्ञाय हरीश्वरः । व्यतीतांश्चतुरो मासान् विहरन्नावबुध्यते ॥७८॥ सामात्यपरिषत् क्रीडन् पानमेवोपसेवते । शोकदीनेषु नास्मासु सुग्रीवः कुरुते दयाम् ॥ ७९ ॥ उच्यतां गच्छ सुग्रीवस्त्वया वत्स महाबल । मम रोषस्य यद्रूपं ब्रूयाश्चैनमिदं वचः ॥ ८० ॥ न च संकुचितः पन्था येन वाली हतो गतः । समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥ ८१ ॥ एक एव रणे वाली शरेण निहतो मया । त्वां तु सत्यादतिक्रान्तं हनिष्यामि सबान्धवम् ॥ ८२ ॥ तदेवं विहिते कार्ये यद्धितं पुरुषर्षभ । तत्तद् ब्रूहि नरश्रेष्ठ त्वर कालव्यतिक्रमः ॥ ८३ ॥

सामात्यपरिषत् सामात्यबान्धवः॥७९॥उच्यतामिति । मम रोषस्य यद्रूपं तत्सुग्रीव उच्यताम् । एनमिदं वक्ष्यमाणं वचश्च ब्रूयाः॥८०॥न चेति। हतो वाली येन पथा गतः स पन्थाः, परलोक इत्यर्थः । न संकुचितः न नष्ट इत्यर्थः । समये मर्यादायां तिष्ठ । वालिपथं वालिगतं मार्गम् ॥८१॥८२॥ तदेवमिति ।

इत्थमप्रतिहते पराक्रमे कामं परिज्ञाते सत्यपि अस्य सुग्रीवस्य चिन्ता न स्यात् समयव्यतिक्रमेऽपि हनिष्यतीति विचारो नाभूदित्यर्थः । यद्वा सुग्रीवव्यामोहातिशयं प्रति विस्मयवचनमेतत् । एवं गते त्वत्सहायस्य मे पराक्रमे कामं परिज्ञातेपि अस्य सुग्रीवस्य चिन्ता मयि बुद्धिर्न स्याद् न भवेत्, अहो विस्मय इत्यर्थः ॥ ७६ ॥ यदर्थमिति । अयमारम्भः सख्यकरणवालिनिरसनरूपः यदर्थं यस्मै सीतान्वेषणप्रयोजनाय कृतः । समयं तद्विषयसङ्केतं प्लवगेश्वरो नाभिजानातीति सम्बन्धः ॥ ७७ ॥ वर्षं तु वर्षाकालमेव समयकालं प्रतिज्ञाय अवस्थाय, सङ्केतकालं प्रतिज्ञायेत्यर्थः ॥ ७८ ॥ सामात्येति । पीयत इति पानम् मद्यम् ॥ ७९ ॥ मम रोषस्य यद्रूपं तत्सुग्रीवस्योच्यताम् इदं वक्ष्यमाणं वचश्च ब्रूया इति सम्बन्धः ॥ ८०–८२ ॥ कार्ये [illegible] विहिते एवमवस्थिते सति यद्धितं तत् ब्रूहि । कालव्यतिक्रमो

कार्यं एवं विहितं एवमवस्थिते सति यद्धितं तद् ब्रूहि । कालव्यतिक्रमः, मा भूदिति शेषः । अतः त्वर त्वरस्वेति संबन्धः ॥ ८३ ॥ उक्तमर्थं पुनः संक्षेपेण सर्गान्ते दर्शयति—कुरुष्वेति । मयि विषये प्रतिश्रुतं सत्यं कुरु । शाश्वतं धर्ममवेक्ष्य प्रतिश्रुतकरणम् अक्षयो धर्म इत्यवेक्ष्य ॥ ८४ ॥ स इति । सः लक्ष्मणः । हरीश्वरे सुग्रीवे । तीव्रां मतिम् निग्रहबुद्धिमित्यर्थः । लालप्यमानं प्रलपन्तम् ॥ ८५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥ अथाङ्गदेन लक्ष्मणकोपकथनं सुग्रीवायैकत्रिंशे—स कामिनमिति । कामिनम् अधिक

कुरुष्व सत्यं मयि वानरेश्वर प्रतिश्रुतं धर्ममवेक्ष्य शाश्वतम् । मा वालिनं प्रेत्य गतो यमक्षयं त्वमद्य पश्येर्मम चोदितैः शरैः ॥८४॥ स पूर्वजं तीव्रविवृद्धकोपं लालप्यमानं प्रसमीक्ष्य दीनम् । चकार तीव्रां मतिमुग्रतेजा हरीश्वरे मानववंशनाथः ॥८५॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे त्रिंशः सर्गः ॥ ३०॥

स कामिनं दीनमदीनसत्त्वं शोकाभिपन्नं समुदीर्णकोपम् । नरेन्द्रसूनुर्नरदेवपुत्रं रामानुजः पूर्वजमित्युवाच॥१॥
न वानरः स्थास्यति साधुवृत्ते न मंस्यते कर्मफलानुषङ्गान् । न भोक्ष्यते वानरराज्यलक्ष्मीं तथाहि नाभिक्रमतेऽस्य बुद्धिः॥२

कामम् । अत एव दीनम् । तथाप्यदीनसत्त्वम् । एतेन वस्तुतः अदीनसत्त्वोपि दैन्यं भावयतीति गम्यते । शोकाभिपन्नं शोकं प्राप्तम् । समुदीर्णकोपम् अभिवृद्धकोपम् । अस्मिन् श्लोके नरदेवपुत्रमित्यत्र देकारो गायत्र्या एकादशाक्षरम् । दशसहस्रश्लोका गताः ॥ १ ॥ नेति । साधुवृत्ते साधूनां मित्रसमान सुखदुःखानां सुहृदां वृत्ते आचारे न स्थास्यति । कर्मफलानुषङ्गान् अग्निसाक्षिकसख्यरूपकर्मणा वालिनिरसनराज्यदारलाभरूपफलानुबन्धान् न मंस्यते ।

मा भूदिति शेषः । अतस्त्वरेति सम्बन्धः ॥८३॥ कुरुष्वेत्याद्युपन्यासः सङ्क्षेपेण सुग्रीवहितप्रदर्शनार्थम् ॥ ८४ ॥ तीव्रां मतिं जिघांसामित्यर्थः ॥८५॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां त्रिंशः सर्गः ॥ ३० ॥ स कामिनमिति । गायत्र्याः दे इत्येकादशाक्षरं स कामिनं दीनमित्यस्य श्लोकस्य त्रिंशाक्षरेण दे इत्यनेन संगृह्णाति । दीनं वैवर्ण्यादियुक्तम् ॥ १ ॥ न वानर इति । साधुवृत्ते साधूनां मित्रसमानसुखदुःखानां सुहृदां वृत्ते न स्थास्यति । कर्मफलानुषङ्गात् अग्निसाक्षिकसख्यरूपकर्मणा प्राप्तवालिनिरसनराज्यदाररूपफलानुबन्धाद्धेतोः न मंस्यते, अस्मानिति शेषः । वानरराज्यलक्ष्मीं न भोक्ष्यते, तथा हि; अस्य बुद्धिर्नाभिक्रमते, अस्मत्प्रयोजनाभिमुख्येन न वर्तत इति योजना । अस्मानुपेक्ष्य एतत्सर्वमनुभवितुं नार्हतीति भावः । वानरराज्य

वानरराज्यलक्ष्मीं न भोक्ष्यतं। तथा ह्यस्य बुद्धिः नाभिक्रमते अस्मत्प्रयोजनाभिमुख्येन न वर्तत इति योजना ॥२॥ मतीति। मतिभ्रमात् बुद्धिविपर्यासात्। तव प्रसादाप्रतिकारबुद्धिः प्रसादस्य राज्यप्रदानादिरूपस्य अप्रतिकारबुद्धिः प्रत्युपकारबुद्धिरहितः । अत एव हतः सुग्रीवः अग्रजं वालिनं पश्यतु । एवं विगुणस्य तस्य राज्यं न देयम् । वालिनमिति क्वचित्पाठः । तत्र वृत्तमुपजातिः॥३॥ रामानु०–मतिक्षयादिति । हतोग्रजं पश्यतु वीर वालिनमित्यत्र वृत्तभङ्ग आर्षः ॥३॥

मतिक्षयाद्ग्राम्यसुखेषु सक्तस्तव प्रसादाप्रतिकारबुद्धिः । हतोऽग्रजं पश्यतु वीर तस्य न राज्यमेवं विगुणस्य देयम् ॥ ३ ॥ न धारये कोपमुदीर्णवेगं निहन्मि सुग्रीवमसत्यमद्य । हरिप्रवीरैः सह वालिपुत्रो नरेन्द्रपत्न्या विचयं करोतु ॥ ४ ॥ तमात्तबाणासनमुत्पतन्तं निवेदितार्थं रणचण्डकोपम्। उवाच रामः परवीरहन्ता स्ववेक्षितं सानुनयं च वाक्यम् ॥ ५ ॥ न हि वै त्वद्विधो लोके पापमेवं समाचरेत्। पापमार्येण यो हन्ति स वीरः पुरुषोत्तमः ॥ ६ ॥ नेदमद्य त्वया ग्राह्यं साधुवृत्तेन लक्ष्मण। तां प्रीतिमनुवर्तस्व पूर्ववृत्तं च सङ्गतम् ॥ ७ ॥ सामोपहितया वाचा रूक्षाणि परिवर्जयन् । वक्तुमर्हसि सुग्रीवं व्यतीतं कालपर्यये ॥ ८ ॥

नेति । न धारये अकार्यकरणं कर्तुं न क्षम इत्यर्थः । असत्यं सत्यवचनरहितम् । नरेन्द्रपत्न्याः सीतायाः । विचयम् अन्वेषणम् ॥ ४ ॥ मम अहृदयवचन मात्रेण अयं तं हन्यादेवेत्यनुतप्तो रामः प्राह स्म । परवीरहन्ता, नतु स्वाश्रितहन्ता । स्ववेक्षितं सुष्ठु निरूपितम् ॥ ५ ॥ रामानु०–सानुनयं सप्रश्रयम् ॥ ५ ॥ न हीति । पापं मित्रहननाध्यवसायरूपम् । आर्येण सम्यग्विवेकेन ॥ ६ ॥ इदं मित्रहननाध्यवसायरूपं पापम् । पूर्ववृत्तं च सङ्गतं पूर्वकृतं सख्यरूपं बान्धवं च ॥ ७ ॥ सामेति । कालपर्यये कालक्रमे विपर्यये । व्यतीतं व्यतिक्रान्तवन्तम् सुग्रीवम् । रूक्षाणि परुषाणि । परिवर्जयन् । सामोपहितया

लक्ष्मीं वालिराज्यलक्ष्मीम् ॥ २ ॥ एतदेव विशदयति–मतीति । तव प्रसादे उपकारे विषये । अप्रतिकारबुद्धिः प्रत्युपकारबुद्धिरहितः ॥ ३ ॥ विचयम् अन्वेषणम् ॥ ४ ॥ रामो लक्ष्मणाभिप्रायं विज्ञाय चतुर्थोपायनिवारणपूर्वकं सानुनयमाह–तमिति । निवेदितार्थं ज्ञापितप्रयोजनम् । स्ववेक्षितं सुष्ठु निरूपितम् ॥ ५ ॥ नहीति । पापं मित्रहननाध्यवसायरूपम् । आर्येण सम्यग्विवेकेन । यो हन्ति निवारयति ॥ ६ ॥ इदं मित्रहननाध्यवसायरूपम् । साधुवृत्तेन साधुत्वेन पूर्ववृत्तं च सङ्गतं पूर्वकृतसख्यरूपबान्धवं च॥७॥ सामेति । व्यतीतं व्यतिक्रान्तवन्तम् । कालपर्यये कालक्रमविपर्यये । व्यतीतं कालपर्ययम् इति च पाठः । रूक्षाणि परुषवचनानि ॥८॥

सान्त्वयुक्तया वाचा वक्तुमर्हसि ॥ ८ ॥ ९ ॥ तत इति । प्रतिसंरब्धः प्रतिनिवृत्तहननाद्ध्यवसायः ॥ १० ॥ सोऽग्रजेनेत्यादिश्लोकद्वयोक्तं विस्तरेणाह- शक्रेत्यादिना । धनुः प्रगृह्य सानुमान् पर्वत इव स्थितः ॥ ११ ॥ यथोक्तेति । यथोक्तं रामोक्तमनतिक्रम्य करोतीति यथोक्तकारी लक्ष्मणः । वचनं सुग्रीवं प्रति स्वेन वक्तव्यं वचनम् । यथोक्तकारीति विशेषणात् रामोपदिष्टं वचनमिति सिद्धम् । उत्तरं च स्ववचनस्य सुग्रीवेण वक्ष्यमाणमुत्तरं च । सोत्तरं

सोऽग्रजेनानुशिष्टार्थो यथावत्पुरुषर्षभः । प्रविवेश पुरीं वीरो लक्ष्मणः परवीरहा ॥ ९ ॥ ततः शुभमतिः प्राज्ञो भ्रातुः प्रियहिते रतः । लक्ष्मणः प्रतिसंरब्धो जगाम भवनं कपेः ॥ १० ॥ शक्रबाणासनप्रख्यं धनुः कालान्तकोपमः । प्रगृह्य गिरिशृङ्गाभं मन्दरः सानुमानिव ॥ ११ ॥ यथोक्तकारी वचनमुत्तरं चैव सोत्तरम् । बृहस्पतिसमो बुद्ध्या मत्वा रामानुजस्तथा ॥१२॥ कामक्रोधसमुत्थेन भ्रातुः कोपाग्निनावृतः । प्रभञ्जन इवाप्रीतः प्रययौ लक्ष्मणस्तदा ॥ १३ ॥ सालतालाश्वकर्णांश्च तरसा पातयन् बहून् । पर्यस्यन् गिरिकूटानि द्रुमानन्यांश्च वेगतः ॥१४॥ शिलाश्च शकलीकुर्वन् पद्भ्यां गज इवाशुगः । दूरमेकपदं त्यक्त्वा ययौ कार्यवशाद् द्रुतम् ॥ १५ ॥ तामपश्यद्बलाकीर्णां हरिराजमहापुरीम् । दुर्गामिक्ष्वाकुशार्दूलः किष्किन्धां गिरिसङ्कटे ॥ १६ ॥ रोषात् प्रस्फुरमाणोष्ठः सुग्रीवं प्रति लक्ष्मणः । ददर्श वानरान् भीमान् किष्किन्धाया बहिश्चरान् ॥ १७ ॥

स्वेन वक्ष्यमाणोत्तरसहितं मत्वा आलोच्य प्रययाविति संबन्धः । दूरमिति । एकपदं पौरस्त्यपदं दूरं त्यक्त्वा दूरे क्षिप्त्वा । अनेन द्रुतगमनं सूचितम् । द्रुतं गच्छन् हि पुरुषः पुरः पादं दूरे क्षिपति ॥ १२–१५ ॥ तामिति । गिरिसङ्कटे निबिडगिरिमध्ये । अनेन पूर्वोक्तगुहाशब्दो विवृतः ॥ १६ ॥ १७ ॥

सोऽग्रजेनेत्यादि श्लोकद्वयं वक्ष्यमाणस्य संग्रहः ॥ ९ ॥ तत इति । प्रतिसंरब्धः प्रतिनिवृत्तहननाध्यवसाय इत्यर्थः ॥ १० ॥ मन्दरो मन्दराख्यः सानुमान् पर्वत इव ॥ ११ ॥ यथोक्तकारीति । वचनं सुग्रीवं प्रति स्वेन वक्तव्यं वचनम् । यथोक्तकारीति वचनादिदं वचनं रामोपदिष्टमिति मन्तव्यम् । उत्तरं स्ववचनस्य सुग्रीवेण वक्ष्यमाणमुत्तरं सोत्तरं स्वेन वक्ष्यमाणेनोत्तरेण सहितं मत्वा आलोच्य ॥ १२ ॥ प्रभञ्जन इव वायुरिव ॥ १३ ॥ पर्यस्यन् क्षिपन् ॥ १४ ॥ दूरमेकपदं त्यक्त्वा एकपदं पाश्चात्यं पादं दूरं यथा तथा त्यक्त्वा, अनेन पौरस्त्यपादस्य दूरनिक्षेपस्सूचितः ॥ १५–२६ ॥

तं दृष्ट्वेत्यादि । वानराः पूर्वोक्ता बहिश्चराः॥१८॥ रामानु०—किष्किन्धाया बहिश्चरानित्यतः परम् तं दृष्ट्वा वानराः सर्वे लक्ष्मणं पुरुषर्षभमित्यर्धं द्रष्टव्यम् ॥१८॥ ॥१९–२६ ॥
ततस्त इति । प्राकारपरिघान्तरान्निष्क्रम्य आविष्कृतं प्रकाशं यथा भवति तथा तस्थुः ॥ २७ ॥ सुग्रीवस्येति । आर्तं कामपीडितम् ॥ २८ ॥

तं दृष्ट्वा वानराः सर्वे लक्ष्मणं पुरुषर्षभम् । शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् । जगृहुः कुञ्जरप्रख्या वानराः पर्वतान्तरे ॥ १८ ॥ तान् गृहीतप्रहरणान् हरीन् दृष्ट्वा तु लक्ष्मणः । बभूव द्विगुणं क्रुद्धो बह्विन्धन इवानलः ॥१९॥ तं ते भयपरीताङ्गाः क्रुद्धं दृष्ट्वा प्लवङ्गमाः । कालमृत्युयुगान्ताभं शतशो विद्रुता दिशः ॥ २० ॥ ततः सुग्रीवभवनं प्रविश्य हरिपुङ्गवाः । क्रोधमागमनं चैव लक्ष्मणस्य न्यवेदयन् ॥ २१ ॥ तारया सहितः कामी सक्तः कपिवृषो रहः । न तेषां कपिवीराणां शुश्राव वचनं तदा ॥ २२ ॥ ततः सचिवसंदिष्टा हरयो रोमहर्षणाः । गिरिकुञ्जरमेघाभा नगर्या निर्ययुस्तदा ॥ २३ ॥ नखदंष्ट्रायुधा घोराः सर्वे विकृतदर्शनाः । सर्वे शार्दूलदर्पाश्च सर्वे च विकृताननाः ॥२४॥ दशनागबलाः केचित्केचिद्दशगुणोत्तराः । केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ॥२५॥ कृत्स्नां हि कपिभिर्व्याप्तां द्रुमहस्तैर्महाबलैः । अपश्यल्लक्ष्मणः क्रुद्धः किष्किन्धां तां दुरासदाम् ॥ २६ ॥ ततस्ते हरयः सर्वे प्राकारपरिघान्तरात् । निष्क्रम्योदग्रसत्त्वास्तु तस्थुराविष्कृतं तदा ॥ २७॥ सुग्रीवस्य प्रमादं च पूर्वजं चार्तमात्मवान् । बुद्ध्वा कोपवशं वीरः पुनरेव जगाम सः ॥ २८ ॥ स दीर्घोष्णमहोच्छ्वासः कोपसंरक्तलोचनः । बभूव नरशार्दूलः सधूम इव पावकः ॥ २९ ॥

रामानु०—पूर्वजं चार्तमात्मवानिति सम्यक् ॥ २८ ॥ ॥ २९ ॥

तत इति । प्राकारपरिघान्तरात् निष्क्रम्य आविष्कृतं प्रकटं यथा तथा तस्थुः ॥ टी०—प्राकारपरिघान्तरात् प्राकारपरिघाभ्यन्तरवर्तिमार्गात् ॥ २७–२९ ॥

स०—सचिवैः सुग्रीवामात्यैः सन्दिष्टाः भीषयध्वमित्याज्ञप्ताः ॥२३॥ विकृतदर्शनाः प्रकटीभूता इत्यर्थः ॥२४॥ दशगुणोत्तराः शतनागबलाः । नागसहस्रतुल्यवर्चसः सहस्रगजबलाभिव्यञ्जकवर्चोविशेषवन्त इत्यर्थः ॥२५॥

वाणेति । वाणशल्यं वाणाग्रमेव स्फुरन्ती जिह्वा यस्य स तथा । सायकासनं धनुः तदेव भोगः फणा तद्वान् बभूवेति पूर्वेण सम्बन्धः ॥ ३० ॥ ३१ ॥ सोऽङ्गदमित्यादि । वत्स ! अरिन्दमः एप रामानुजः त्वत्सकाशं प्राप्त इति ममागमनं सुग्रीवः कथ्यताम् । भ्रातृव्यसनसन्तप्तः स लक्ष्मणः द्वारि

बाणशल्यस्फुरज्जिह्वः सायकासनभोगवान् । स्वतेजोविषसङ्घातः पञ्चास्य इव पन्नगः ॥ ३० ॥ तं दीप्तमिव कालाग्निं नागेन्द्रमिव कोपितम् । समासाद्याङ्गदस्त्रासाद्विषादमगमद् भृशम् ॥ ३१ ॥ सोऽङ्गदं रोषताम्राक्षः सन्दिदेश महायशाः । सुग्रीवः कथ्यतां वत्स ममागमनमित्युत ॥३२॥ एष रामानुजः प्राप्तस्त्वत्सकाशमरिन्दमः । भ्रातुर्व्यसनसंतप्तो द्वारि तिष्ठति लक्ष्मणः ॥ ३३ ॥ तस्य वाक्ये यदि रुचिः क्रियतां साधु वानर । इत्युक्त्वा शीघ्रमागच्छ वत्स वाक्यमरिन्दम ॥ ३४ ॥ लक्ष्मणस्य वचः श्रुत्वा शोकाविष्टोऽङ्गदोऽब्रवीत् । पितुः समीपमागम्य सौमित्रिरयमागतः ॥ ३५ ॥ अथाङ्गदस्तस्य वचो निशम्य सम्भ्रान्तभावः परिदीनवक्त्रः । निपत्य तूर्णं नृपतेस्तरस्वी ततः कुमारश्चरणौ ववन्दे ॥ ३६ ॥ संगृह्य पादौ पितुरग्र्यतेजा जग्राह मातुः पुनरेव पादौ । पादौ रुमायाश्च निपीडयित्वा निवेदयामास ततस्तमर्थम् ॥ ३७ ॥

तिष्ठति । तस्य वाक्ये तव यदि रुचिः तर्हि साधु युक्तम् । तत्र तव गमनं वा अत्रैव तस्यानयनं वा क्रियताम् । इत्येतद्वाक्यमुक्त्वा शीघ्रमागच्छ इति सोऽङ्गदं सन्दिदेशेति सम्बन्धः ॥ ३२–३४ ॥ लक्ष्मणस्येति । अयमागत इत्यनन्तरमितिकरणं बोध्यम् ॥३५॥ उक्तं विस्तृणाति–अथेति ॥३६॥ रामानु०–निपत्य तूर्णं नृपतेस्तरस्वी ततः कुमारश्चरणौ ववन्दे इति पाठः ॥ ३६ ॥ संगृह्येति । मातुः पुनरेवेत्यनेन मातुः पृथग्वन्दनमुच्यते ॥ ३७ ॥ रामानु०–जग्राह मातुः पुनरेव पादावित्यत्र पुनःशब्दः पितृनमस्कारापेक्षया प्रयुक्तः ॥ ३७ ॥

बाणेति । बाणशल्यस्फुरज्जिह्वः बाणशल्यमेव स्फुरन्ती जिह्वा यस्य स तथोक्तः । पञ्चास्यः पन्नग इव बभूवेति पूर्वेण सम्बन्धः ॥ टी०–सायकासनं धनुः तदेव भोगः सर्पशरीरं तद्वान् ॥ ३० ॥ तमिति । त्रासाल्लक्ष्मणागमनकाल एव सुग्रीवो मत्तो वर्तते अहमपि नागतश्चेदयं विक्रंस्यतीति भयात्तं समासाद्य विषादं दुःखमगमदित्यन्वयः ॥ ३१–३८ ॥

स०–कार्यस्यात्यावश्यकताद्योतनाय पुनः प्रणमति–संगृह्येति । मातुः तारायाः । तमर्थं लक्ष्मणागमनरूपम् ॥ ३७ ॥

स इति । मदमत्तः पानकृतमदमत्तः ॥ ३८ ॥ तत इति । किलकिलेति वानराणां शब्द उच्यते ॥ ३९ ॥ त इति । महौघनिभं महाप्रवाहतुल्यं लक्ष्मणम् । समं युगपत् ॥४०॥४१॥ अथेति । तेनैव समागतौ तदाह्वानेन समागतौ । मन्त्रिणौ प्रशस्तमन्त्रौ । अर्थधर्मयोर्विषये उच्चावचं वक्तुं प्राप्तं लक्ष्मणं

स निद्रामदसंवीतो वानरो न विबुद्धवान् । बभूव मदमत्तश्च मदनेन च मोहितः ॥ ३८ ॥ ततः किलकिलां चक्रुर्लक्ष्मणं प्रेक्ष्य वानराः । प्रसादयन्तस्तं क्रुद्धं भयमोहितचेतसः ॥ ३९ ॥ ते महौघनिभं दृष्ट्वा वज्राशनिसमस्वनम् । सिंहनादं समं चक्रुर्लक्ष्मणस्य समीपतः ॥ ४० ॥ तेन शब्देन महता प्रत्यबुध्यत वानरः । मदविह्वलताम्राक्षो व्याकुलस्रग्विभूषणः ॥ ४१ ॥ अथाङ्गदवचः श्रुत्वा तेनैव च समागतौ । मन्त्रिणौ वानरेन्द्रस्य सम्मतौ दारदर्शिनौ ॥ ४२ ॥ प्लक्षश्चैव प्रभावश्च मन्त्रिणावर्थधर्मयोः । वक्तुमुच्चावचं प्राप्तं लक्ष्मणं तौ शशंसतुः ॥४३॥ प्रसादयित्वा सुग्रीवं वचनैः सामनिश्चितैः । आसीनं पर्युपासीनौ यथा शक्रं मरुत्पतिम् ॥४४॥ सत्यसन्धौ महाभागौ भ्रातरौ रामलक्ष्मणौ । वयस्यभावं संप्राप्तौ राज्यार्हौ राज्यदायिनौ ॥ ४५ ॥ तयोरेको धनुष्पाणिर्द्वारि तिष्ठति लक्ष्मणः । यस्य भीताः प्रवेपन्तो नादान् मुञ्चन्ति वानराः ॥४६॥ स एष राघवभ्राता लक्ष्मणो वाक्यसारथिः । व्यवसायरथः प्राप्तस्तस्य रामस्य शासनात् ॥४७॥ अयं च दयितो राजन् तारायास्तनयोऽङ्गदः । लक्ष्मणेन सकाशं ते प्रेषितस्त्वरयाऽनघ ॥ ४८ ॥

शशंसतुः ॥ ४२ ॥ ४३ ॥ प्रसादयित्वेत्यादि । सामनिश्चितैः सान्त्वविषये निश्चितैः । ऊचतुरिति शेषः ॥ ४४ ॥ ४५ ॥ यस्येति । यस्य भीताः यस्मात् भीताः ॥ ४६ ॥ रामानु०—प्रसादयित्वेत्यादि भव सत्यप्रतिश्रव इत्यन्तमेकं वाक्यम् । अत्र शशंसतुरित्यनुषज्यते । यस्य भीताः यस्मात् भीताः ॥ ४४–४६ ॥ वाक्यसारथिः



टी०—अथ लक्ष्मणवृत्तान्तमाह—सन इति । ततः अङ्गदस्य सुग्रीवागमनानन्तरम् । किलकिलां कपिजातिप्रयुक्तशब्दम् ॥३९॥ महौघनिभ समुद्रनिभम ॥४०॥४१॥ अथेत्यादि । अङ्गदवचः श्रुत्वा तेनैव समागतौ मन्त्रिणौ उच्चावचं वक्तुं प्राप्तं लक्ष्मणं शशंसतुरिति सम्बन्धः । दारदर्शिनौ अन्तःपुरप्रवेशयोग्यौ ॥ ४२ ॥ ४३ ॥ प्रसादयित्वेत्यादि भव सत्यप्रतिश्रवः इत्यन्तमेकं वाक्यम् । अत्र शशंसतुरित्यनुषज्यते ॥४४॥४५॥ यस्य भीताः यस्माद्भीताः ॥४६॥ वाक्यसारथिः वाक्यमेव सारथिवत् प्रवर्तकं यस्य सः ॥ ४७–४८ ॥

रामवाक्यप्रेरित इत्यर्थः । कथमिदं दुर्गमंकः प्रविष्टवानित्यत्राह व्यवसायरथ इति । प्रतिपक्षनिरासाध्यवसायरथः । तस्य तस्मै ॥ ४७–५० ॥ रामानु०–रोषो ह्यस्य निवर्त्यतामिति पाठः ॥ ५० ॥ स्वसमये स्वमर्यादायाम् । सत्यप्रतिश्रवः सत्यप्रतिज्ञो भव ॥५१॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकत्रिंशः सर्गः ॥३१॥ अथ हनुमता हितोपदेशो द्वात्रिंशे–अङ्गदस्येत्यादि । अङ्गदस्य प्राधान्यादङ्गदस्य

सोऽयं रोषपरीताक्षो द्वारि तिष्ठति वीर्यवान् । वानरान्वानरपते चक्षुषा निर्दहन्निव ॥ ४९ ॥ तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः सह बन्धुभिः । गच्छ शीघ्रं महाराज रोषो ह्यस्य निवर्त्यताम् ॥ ५० ॥ यदाह रामो धर्मात्मा तत्कुरुष्व समाहितः । राजंस्तिष्ठ स्वसमये भव सत्यप्रतिश्रवः ॥५१॥ इत्यार्षे ०श्रीमत्किष्किन्धाकाण्डे एकत्रिंशः सर्गः ॥३१॥

अङ्गदस्य वचः श्रुत्वा सुग्रीवः सचिवैः सह । लक्ष्मणं कुपितं श्रुत्वा मुमोचासनमात्मवान् ॥ १ ॥ सचिवानब्रवीद्वाक्यं निश्चित्य गुरुलाघवम् । मन्त्रज्ञान्मन्त्रकुशलो मन्त्रेषु परिनिष्ठितान् ॥ २ ॥ न मे दुर्व्याहृतं किंचिन्नापि मे दुरनुष्ठितम् । लक्ष्मणो राघवभ्राता क्रुद्धः किमिति चिन्तये ॥ ३ ॥ असुहृद्भिर्ममामित्रैर्नित्यमन्तरदर्शिभिः । मम दोषानसंभूतान् श्रावितो राघवानुजः ॥ ४ ॥ अत्र तावद्यथाबुद्धि सर्वैरेव यथाविधि । भावस्य निश्चयस्तावद्विज्ञेयो निपुणं शनैः ॥५॥ न खल्वस्ति मम त्रासो लक्ष्मणान्नापि राघवात् । मित्रं त्वस्थानकुपितं जनयत्येव संभ्रमम् ॥ ६॥

वचः श्रुत्वेत्युक्तम् । आसनं मुमोच भयेनासनादुदतिष्ठदित्यर्थः ॥ १ ॥ सचिवानिति । मन्त्रकुशलः मन्त्रप्रयोगकुशलः ॥ २ ॥ रामानु०–सचिवानब्रवीद्वाक्यमिति सम्यक् ॥ २ ॥ दुर्व्याहृतं परुषभाषणम् । दुरनुष्ठितम् अपकारः । किं किमर्थम् ? ॥३॥ असुहृद्भिरिति । असुहृद्भिः अशोभनहृदयैः ॥ ४ ॥ अत्रेति । तावत् प्रथमम् । यथाविधि यथाक्रमम् । भावस्य चेष्टायाः । निश्चयः अध्यवसायः ॥ ५ ॥ निजभयकृतमासनचलनमपह्नुते–न खल्विति ॥ ६ ॥ ॥ ४९–५१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायाम् एकत्रिंशः सर्गः ॥ ३१ ॥ अङ्गदस्येति । अङ्गदस्य प्राधान्यादङ्गद वचः श्रुत्वेत्युक्तम् ॥१॥ मंत्रकुशलः मन्त्रप्रयोगकुशलः । मन्त्रेषु परिनिष्ठितः नीतिप्रयोगनिपुण इत्यर्थः ॥ २॥ लक्ष्मणक्रोधनिमित्ताभावानाह–न मइति । मे मयेत्यर्थः ॥ ३ ॥ असुहृद्भिः अशोभनहृदयैः ॥ ४ ॥ तावत् प्रथमम् । भावः चेष्टा । निश्चयः अध्यवसायः । तावत् साकल्येन ॥ ५ ॥ ६ ॥

मित्रस्यास्थानकोपसंभावनायां लोकन्यायमाह–सर्वथेति । अल्पं, वैषम्य इति शेषः ॥ ७ ॥ अत इति । महात्मना रामेण । मम यदुपकृतं तन्मया प्रतिकर्तुं न शक्यम् । अतो निमित्तम् अस्मान्निमित्तात् । त्रस्तोऽहमिति संबन्धः ॥८॥ तर्केण ऊहेन ॥ ९ ॥ उपकारकृतम् उपकारकारिणम् ॥१०–१५॥

सर्वथा सुकरं मित्रं दुष्करं परिपालनम् । अनित्यत्वाच्च चित्तानां प्रीतिरल्पेऽपि भिद्यते ॥ ७ ॥ अतो निमित्तं त्रस्तोऽहं रामेण तु महात्मना । यन्ममोपकृतं शक्यं प्रतिकर्तुं न तन्मया ॥ ८ ॥ सुग्रीवेणैवमुक्तस्तु हनुमान् हरिपुङ्गवः । उवाच स्वेन तर्केण मध्ये वानरमन्त्रिणाम् ॥ ९ ॥ सर्वथा नैतदाश्चर्यं यस्त्वं हरिगणेश्वर । न विस्मरसि सुस्निग्धमुपकारकृतं शुभम् ॥ १० ॥ राघवेण तु वीरेण भयमुत्सृज्य दूरतः । त्वत्प्रियार्थं हतो वाली शक्रतुल्यपराक्रमः ॥ ११ ॥ सर्वथा प्रणयात् क्रुद्धो राघवो नात्र संशयः । भ्रातरं संप्रहितवान् लक्ष्मणं लक्ष्मिवर्द्धनम् ॥ १२ ॥ त्वं प्रमत्तो न जानीषे कालं कालविदां वर । फुल्लसप्तच्छदश्यामा प्रवृत्ता तु शरच्छिवा ॥ १३ ॥ निर्मलग्रहनक्षत्रा द्यौः प्रनष्टबलाहका । प्रसन्नाश्च दिशः सर्वाः सरितश्च सरांसि च ॥ १४ ॥ प्राप्तमुद्योगकालं तु नावैषि हरिपुङ्गव । त्वं प्रमत्त इति व्यक्तं लक्ष्मणोऽयमिहागतः ॥ १५ ॥ आर्तस्य हृतदारस्य परुषं पुरुषान्तरात् । वचनं मर्षणीयं ते राघवस्य महात्मनः ॥ १६ ॥

आर्तस्येति । पुरुषान्तरात् लक्ष्मणात्, आगतमिति शेषः । अत्र मर्षणीयत्वे बहवो हेतव उपन्यस्यन्ते । हृतदारस्य परुषवचनं मर्षणीयम् । एवमार्तस्येत्यादौ । राघवस्य महात्मनः परमात्मनः, सर्वस्वामिन इत्यर्थः ॥ १६ ॥

मित्रस्यास्थानकोपसम्भावनायां लोकन्यायमाह–सर्वथेति । अल्पेऽप्यपराधे सतीति शेषः ॥ टी०–मैत्रीमात्रं सुकरम्, तद्रक्षणन्तु न शक्यमिति लोकन्यायमाह–सर्वथेति ॥ ७ ॥ अत इति । महात्मना रामेण यदुपकृतं तत्तु मया प्रतिकर्तुं न शक्यम्, अतोऽस्मान्निमित्तात् त्रस्तोहमिति सम्बन्धः ॥ ८ ॥ तर्केण ऊहेन ॥ ९ ॥ सर्वथेति । उपकारं न विस्मरसीति यत् नैतदाश्चर्यम् ॥ १०–१५ ॥ आर्तस्येति । पुरुषान्तरात् लक्ष्मणात्, आगतमिति शेषः ॥ १६ ॥ १७ ॥

अथापराधप्रायश्चित्तं विदधाति—कृतेति । कृतापराधस्य न त्वारब्धापराधस्य । अपराधारम्भकाले सानुतापो यदि लघुप्रायश्चित्तेन तदा तस्य परिहारः स्यात् । न तथाऽभूः किन्तु निश्चयेन कृतापराधोऽसि । तेन अञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनादन्तरेण प्रसादनं विना । अन्यत् क्षमम् अपराधपरिहारक्षमं साधनं न पश्यामि । "अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी" इति शास्त्रात् । लक्ष्मणस्येत्यनेन तदीयं प्रत्यञ्जलिरेव भगवदपचारपरिहारक इत्युक्तम्, "त्वदङ्घ्रिमुद्दिश्य" इतिवत् । ते इत्यनेनात्राधिकारिनियमो नास्तीत्युच्यते । अञ्जलिमित्येकवचनेन सकृत्करणमेवालमित्युक्तम् । बद्ध्वेत्यनेन

कृतापराधस्य हि ते नान्यत् पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ॥ १७ ॥ नियुक्तै र्मन्त्रिभिर्वाच्यो ह्यवश्यं पार्थिवो हितम् । अत एव भयं त्यक्त्वा ब्रवीम्यवधृतं वचः ॥ १८ ॥ अभिक्रुद्धः समर्थो हि चापमुद्यम्य राघवः । सदेवासुरगन्धर्वं वशे स्थापयितुं जगत् ॥१९॥ न स क्षमः कोपयितुं यः प्रसाद्यः पुनर्भवेत् । पूर्वोपकारं स्मरता कृतज्ञेन विशेषतः ॥ २० ॥ तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः ससुहृज्जनः । राजंस्तिष्ठ स्वसमये भर्तुर्भार्येव तद्वशे ॥ २१ ॥

देशकालनियमाभावः सूचितः । बद्ध्वा लक्ष्मणस्य प्रसादनादित्यनेन क्षिप्रं देवप्रसादिनीत्यस्यार्थ उक्तः ॥ १७ ॥ तनि०—लक्ष्मणज्याघोषं श्रुत्वा कृतकापेयचेष्टेन सुग्रीवेण तादृशावस्थायां कर्तव्यं किमिति प्रश्ने कृते सुग्रीवं प्रति हनुमानाह—कृतापराधस्येति । अपराधारम्भ एवानुतापो यदि लघुप्रायश्चित्तेन परिहारः स्यात्, इदानीं तावन्मात्रेण न परिहर्तुं शक्यते । किंतु सान्त्वनं कार्यम् । ततश्चाञ्जलिः कर्तव्यः । अनेन भगवदपचारे तदीयप्रसादनं प्रायश्चित्तमिति व्यञ्जितम् । "अनुतप्तस्तु तापेन क्षामयेन्नान्यथा शमः । भगवत्यपचारेपि नैषा शान्तिरनुत्तमा ॥" इति स्मरणात् ॥ १७ ॥ किमेवं मां प्रति हीनवृत्तमुपदिष्टवानसीत्यत्राह—नियुक्तैरिति ॥ १८ ॥ कथमिदं हितम् ? तत्राह—अभिक्रुद्ध इति ॥ १९ ॥ हेत्वन्तरमाह—न स इति ॥ २० ॥ अञ्जलिं बद्ध्वेत्युक्तं विवृणोति—तस्येति ।

मत्परुषवचनेन त्वया आग्रहो न कार्य इत्याशयेनाह—नियुक्तैरिति । पार्थिवः राजा । अवधृतं निश्चितम् ॥ १८ ॥ उक्तानङ्गीकारे बाधकसूचनाय रामसामर्थ्यमाह—अभिक्रुद्ध इति ॥ १९ ॥ २० ॥ तस्येति । तद्वश इति प्रथमान्तपाठस्साधुः । सप्तम्यन्तपाठे स्वसमय इत्यत्र वर्तमान इति शेषः ॥ २१ ॥

स्वसमर्थं तिष्ठ नद्दर्शं च विट ॥ २१ ॥ सुरेन्द्रवर्चसः सराघवस्य सलक्ष्मणस्य अस्य रामस्य । मानुषं बलं दिव्यास्त्रादिकमन्तरेण केवलं स्वाभाविकं बलम् । ते मनो ज्ञास्यति हि जानात्येव, सालगिरिभेदनादौ दृष्टचरत्वादिति भावः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ता



न रामरामानुजशासनं त्वया कपीन्द्र युक्तं मनसाप्यपोहितुम् । मनो हि ते ज्ञास्यति मानुषं बलं सराघवस्यास्य सुरेन्द्रवर्चसः ॥२२॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे द्वात्रिंशः सर्गः॥३२॥ अथ प्रतिसमादिष्टो लक्ष्मणः परवीरहा । प्रविवेश गुहां घोरां किष्किन्धां रामशासनात् ॥ १ ॥ द्वारस्था हरय स्तत्र महाकाया महाबलाः । बभूवुर्लक्ष्मणं दृष्ट्वा सर्वे प्राञ्जलयः स्थिताः ॥ २ ॥ निःश्वसन्तं तु तं दृष्ट्वा क्रुद्धं दश रथात्मजम् । बभूवुर्हरयस्त्रस्ता न चैनं पर्यवारयन् ॥ ३ ॥ स तां रत्नमयीं श्रीमान् दिव्यां पुष्पितकाननाम् । रम्यां रत्नसमाकीर्णां ददर्श महतीं गुहाम् ॥ ४ ॥ हर्म्यप्रासादसंबाधां नानापण्योपशोभिताम् । सर्वकामफलैर्वृक्षैः पुष्पितैरुपशोभिताम् ॥५॥ देवगन्धर्वपुत्रैश्च वानरैः कामरूपिभिः । दिव्यमाल्याम्बरधरैः शोभितां प्रियदर्शनैः ॥६॥

हाराख्याने किष्किन्धाकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥ ३२ ॥ अथान्तःपुरं प्रविष्टस्य लक्ष्मणस्य तारया प्रसादनं त्रयस्त्रिंश–अथेत्यादि । प्रतिसमादिष्टः प्रत्याहूतः, अङ्गदेनेति शेषः ॥ १ ॥ २ ॥ निःश्वसन्तमिति । न चैनं पर्यवारयन् भयेन लक्ष्मणमुपगन्तुं नाशक्नुवन्नित्यर्थः ॥ ३ ॥ स तामिति । रत्नमयीं रत्ननिर्मिताम् । रत्नसमाकीर्णाम् आपणस्थरत्नैः समाकीर्णाम् ॥ ४ ॥ हर्म्याः धनिनां वासाः । प्रासादाः देवगृहाः ।

न रामेति । सुरेन्द्रवर्चसः सराघवस्य सलक्ष्मणस्य अस्य रामस्य मानुषं बलं दिव्यास्त्रादिबलमन्तरेण केवलं स्वाभाविकं बलमित्यर्थः । ते मनो ज्ञास्यति हि जानात्येव, सालगिरिभेदनादौ दृष्टचरत्वादिति भावः । टी०–रामशासनानन्तरं रामे स्वाभाविकबलमेव त्वन्नियमनाय पर्याप्तमिति भावः ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां द्वात्रिंशः सर्गः ॥ ३२ ॥ अथेति । प्रतिसमादिष्टः पूर्वं प्रेषितेनाङ्गदेन प्रत्येत्य समाहूतः ॥ १ ॥ २ ॥ निःश्वसन्तमिति । न चैनं पर्यवारयन् एनं लक्ष्मणम् उपगन्तुम् । भयेन नाशक्नुवन्नित्यर्थः ॥ ३ ॥ रत्नसमाकीर्णाम् आपणस्थरत्नैः समाकीर्णाम् ॥ ४–६ ॥

पद्मानाम् आलेपविशेषाणाम् ॥५॥६॥ ददर्शेति । गिरिनद्यः गिरिनदीः । व्यत्ययेन द्वितीया ॥७॥ अङ्गदस्येत्यादि । महासाराणि अतिदृढानि ॥८–१२॥

चन्दनागरुपद्मानां गन्धैः सुरभिगन्धिनाम् । मैरेयाणां मधूनां च संमोदितमहापथाम् । ददर्श गिरिनद्यश्च विमलास्तत्र राघवः ॥ ७ ॥ अङ्गदस्य गृहं रम्यं मैन्दस्य द्विविदस्य च । गवयस्य गवाक्षस्य गजस्य शरभस्य च ॥ ८ ॥ विद्युन्मालेश्च सम्पातेः सूर्याक्षस्य हनूमतः । वीरबाहोः सुबाहोश्च नलस्य च महात्मनः ॥ ९ ॥ कुमुदस्य सुषेणस्य तारजाम्बवतोस्तथा । दधिवक्त्रस्य नीलस्य सुपाटलसुनेत्रयोः ॥ १० ॥ एतेषां कपिमुख्यानां राजमार्गे महात्मनाम् । ददर्श गृहमुख्यानि महासाराणि लक्ष्मणः ॥ ११ ॥ पाण्डुराभ्रप्रकाशानि दिव्यमाल्ययुतानि च । प्रभूतधनधान्यानि स्त्रीरत्नैः शोभितानि च ॥ १२ ॥ पाण्डुरेण तु सालेन परिक्षिप्तं दुरासदम् । वानरेन्द्रगृहं रम्यं महेन्द्रसदनोपमम् ॥ १३ ॥ शुक्लैः प्रासादशिखरैः कैलासशिखरोपमैः । सर्वकामफलैर्वृक्षैः पुष्पितैरुपशोभितम् ॥ १४ ॥ महेन्द्रदत्तैः श्रीमद्भिर्नीलजीमूतसन्निभैः । दिव्यपुष्पफलैर्वृक्षैः शीतच्छायैर्मनोरमैः ॥ १५ ॥ हरिभिः संवृतद्वारं बलिभिः शस्त्रपाणिभिः । दिव्यमाल्यावृतं शुभ्रं तप्तकाञ्चनतोरणम् ॥ १६ ॥ सुग्रीवस्य गृहं रम्यं प्रविवेश महाबलः । अवार्यमाणः सौमित्रिर्महाभ्रमिव भास्करः ॥ १७ ॥ स सप्त कक्ष्या धर्मात्मा नानाजनसमाकुलाः । प्रविश्य सुमहद् गुप्तं ददर्शान्तःपुरं महत् ॥ १८ ॥

पाण्डुरेण सालेन सुधाधवलितप्राकारेण । दिव्यपुष्पफलैर्वृक्षैरित्यनेन इन्द्रदत्ताः स्वर्गीया वृक्षा उच्यन्ते । पूर्वमुक्ता वृक्षा भौमा इत्यवगन्तव्यम् । पूर्वं 'वानरेन्द्रगृहं रम्यम्' इत्युक्तस्यानेकविशेषणव्यवधानेन सुग्रीवस्य गृहं रम्यमिति पुनर्वचनम्, स्वरूपतो रम्यम् उक्तविशेषणैश्च रम्यमिति रम्यपदद्वय

चन्दनेति । अत्र पद्मशब्द आलेपनद्रव्यविशेषवाची । मैरेयाणां मिरादेशजातानाम् ॥ गिरिनद्यः गिरिभ्यः प्रसृता नदीरित्यर्थः ॥७–१२॥ पाण्डुरेणेति । पाण्डुरेण शैलेन परिक्षिप्तं स्फटिकशिलामयवप्रेण परिवेष्टितम् ॥ १३ ॥ सर्वेति । अत्रत्यवृक्षशब्दो भौमवृक्षवाची । उपरि दिव्यपुष्पफलैर्वृक्षैरिति दिव्यवृक्षाभिधानात् ॥ १४–१७ ॥ कक्ष्याः द्वाराङ्गणभूमयः ॥ १८ ॥ १९ ॥

निर्वाहः । यद्वा वानरेन्द्रगृहं वानरेन्द्रयोः ऋक्षरजोवालिनोः गृहभूतम् इदानीं सुग्रीवस्य गृहं प्रविवेशेति संबन्धः ॥ १३–१९॥ प्रविशन्नेवेति । सः लक्ष्मणः





ततं वीणादिवाद्यजातम् । मधुरस्वरं मधुरश्रुतियुक्तम् । तन्त्रीशब्देन तन्त्रीध्वनिर्लक्ष्यते । तद्रूपगीतैः समाकीर्णम् । समगीतपदाक्षरं समतया तन्त्री

हैमराजतपर्यङ्कैर्बहुभिश्च वरासनैः । महार्हास्तरणोपेतैस्तत्र तत्रोपशोभितम् ॥ १९ ॥ प्रविशन्नेव सततं शुश्राव मधुर स्वरम् । तन्त्रीगीतसमाकीर्णं समगीतपदाक्षरम् ॥ २० ॥ बह्वीश्च विविधाकारा रूपयौवनगर्विताः । स्त्रियः सुग्रीव भवने ददर्श स महाबलः ॥ २१॥ दृष्ट्वाऽभजनसंपन्नाश्चित्रमाल्यकृतस्रजः । फलमाल्यकृतव्यग्रा भूषणोत्तमभूषिताः ॥ २२ ॥ नातृप्तान्नापि चाव्यग्रान्नानुदात्तपरिच्छदान् । सुग्रीवानुचरांश्चापि लक्षयामास लक्ष्मणः ॥ २३ ॥ कूजितं नूपुराणां च काञ्चीनां निनदं तथा । सन्निशम्य ततः श्रीमान् सौमित्रिर्लज्जितोऽभवत् ॥ २४ ॥ रोषवेगप्रकुपितः श्रुत्वा चाभरणस्वनम् । चकार ज्यास्वनं वीरो दिशः शब्देन पूरयन् ॥ २५ ॥ चारित्रेण महाबाहुरपकृष्टः स लक्ष्मणः । तस्थावेकान्तमाश्रित्य रामशोकसमन्वितः ॥ २६ ॥ तेन चापस्वनेनाथ सुग्रीवः प्लवगाधिपः । विज्ञाया गमनं त्रस्तः संचचाल वरासनात् ॥ २७ ॥

गीतसमतया गीतानि कण्ठैर्गीतानि पदान्यक्षराणि च यस्य । यद्वा समानि अन्यूनातिरिक्तानि गीतसंबन्धीनि पदान्यक्षराणि च यस्य ॥ २० ॥ २१ ॥ दृष्ट्वेति । फलमाल्यकृतव्यग्राः फलमाल्यार्थं व्यग्रा इत्यर्थः । नानुदात्तपरिच्छदान् उत्कृष्टवस्त्राभरणादिकान् ॥ २२ ॥ २३ ॥ कूजितमिति । लज्जितोऽभवत्, उपरिसुरतद्योतकत्वादिति भावः ॥ २४ ॥ रोषेति । रोषवेगप्रकुपितः रोषप्रवृद्धः । प्रकोपशब्दो ह्यभिवृद्धवाची ॥ २५ ॥ चारित्रेणेति । रामशोकसमन्वितः रामविषयशोकसमन्वितः । एकान्तं स्त्रीप्रसङ्गरहितप्रदेशम् ॥ २६ ॥ तेनेति । सौमित्रिः संप्राप्त इत्यागमनं विज्ञायेति संबन्धः ।



प्रविशन्निति । तन्त्रीशब्देन ध्वनिर्लक्ष्यते ॥ २० ॥ २१ ॥ फलमाल्यकृतव्यग्राः फलमाल्यार्थं व्यग्रा इत्यर्थः ॥ २२ ॥ नानुदात्तपरिच्छदान् नानुत्कृष्टवस्त्राभरणादि कान् ॥ २३ ॥ लज्जितोऽभवत्, अन्तःपुरदर्शनादिति भावः ॥ २४ ॥ रोषवेगप्रकुपितः रोषवेगेन प्रवृद्धः ॥ २५ ॥ रामकोपसमन्वितः, बुद्धिस्थरामकोप इत्यर्थः ।

संचचाल वरासनात् लाङ्गूलचालनमाल्यच्छेदनादिकापेयव्यापारानकरोदित्यर्थः ॥ २७–२९ ॥ तत इति । अव्यग्रः, कार्यांश इति शेषः ॥ ३०–३५ ॥ त्वयेति । त्वया सान्त्वैः प्रसन्नेन्द्रियमानसमिति संबन्धः । उपक्रान्तम् उपागतम् ॥ ३६ ॥ सेति । सा कान्तसंश्लेषं विनापि रमणीयगमनसौन्दर्या । प्रस्ख

अङ्गदेन यथा मह्यं पुरस्तात्प्रतिवेदितम् । सुव्यक्तमेष संप्राप्तः सौमित्रिर्भ्रातृवत्सलः ॥२८॥ अङ्गदेन समाख्यातं ज्यास्वनेन च वानरः । बुबुधे लक्ष्मणं प्राप्तं मुखं चास्य व्यशुष्यत ॥ २९ ॥ ततस्तारां हरिश्रेष्ठः सुग्रीवः प्रियदर्शनाम् । उवाच हितमव्यग्रस्त्राससम्भ्रान्तमानसः ॥ ३० ॥ किंनु तत्कारणं सुभ्रु प्रकृत्या मृदुमानसः । सरोष इव सम्प्राप्तो येनायं राघवानुजः ॥ ३१ ॥ किं पश्यसि कुमारस्य रोषस्थानमनिन्दिते । न खल्वकारणे कोपमाहरेन्नरसत्तमः ॥३२॥ यदस्य कृतमस्माभिर्बुध्यसे किंचिदप्रियम् । तद् बुद्ध्या संप्रधार्याशु क्षिप्रमर्हसि भाषितुम् ॥३३॥ अथवा स्वयमेवैनं द्रष्टुमर्हसि भाषितुम् । वचनैः सान्त्वयुक्तैश्च प्रसादयितुमर्हसि ॥ ३४ ॥ त्वद्दर्शनविशुद्धात्मा न स कोपं करिष्यति । नहि स्त्रीषु महात्मानः क्वचित्कुर्वन्ति दारुणम् ॥ ३५ ॥ त्वया सान्त्वैरुपक्रान्तं प्रसन्नेन्द्रियमानसम् । ततः कमलपत्राक्षं द्रक्ष्याम्यहमरिन्दमम् ॥ ३६ ॥ सा प्रस्खलन्ती मदविह्वलाक्षी प्रलम्बकाञ्चीगुणहेमसूत्रा । सलक्षणा लक्ष्मणसन्निधानं जगाम तारा नमिताङ्गयष्टिः ॥ ३७ ॥

लन्ती संश्लेषकृतायासेन पदे पदं कृत्वा गच्छन्ती । मदविह्वलाक्षी भोगसंवर्धकमधुपानमदेन विह्वलनेत्रा । प्रलम्बे काञ्चीगुणहेमसूत्रे यस्याः सा प्रलम्बकाञ्चीगुणहेमसूत्रा, ईषच्छिथिलदुकूलतया शयने यथा स्थिता तथैव समागतेत्यर्थः । सलक्षणा व्यक्तैः संभोगलक्षणैः समागता । लक्ष्मणसन्निधानं जगाम ।

चारित्रेणापकृष्टः सच्चरित्रयुक्ततया परस्त्रीदर्शनेन स्त्रीनूपुरशब्दश्रवणेन च लज्जया उदासीनस्सन् एकान्ते स्थितवानिति भावः ॥ २६–३१ ॥ किमिति । कुमारस्य लक्ष्मणस्य । रोषस्थानं रोषनिमित्तम् ॥ ३२ ॥ भाषितुमर्हसि मह्यं वक्तुमर्हसीत्यर्थः ॥ ३३ ॥ ३४ ॥ दारुणं क्रूरकर्म, स्त्रीणां कोपालक्ष्यत्वादिति भावः ॥ ३५ ॥ सान्त्वैः प्रियवाक्यैः । प्रसन्नेन्द्रियमानसं तत उपक्रान्तम् उपागतम् द्रक्ष्यामीति सम्बन्धः ॥ ३६ ॥ सेति । " अथवा स्वयमेवैनं द्रष्टुमर्हसि भामिनि " इति

किं मातुरपि गोप्यमस्तीत्यागता। नमिताङ्गयष्टिः द्रवीभावावस्थायां नमितं नार्जवमर्हति। अतः नम्रतैव यथा निरूपकं भवति तथा स्थितेत्यर्थः ॥३७॥ रामानु०—सेति। "येनैव बाणेन हतः प्रियो मे तेनैव मां त्वं जहि सायकेन। हता गमिष्यामि समीपमस्य न मामृते राम रमेत वाली॥" इति या रामं प्रत्युक्तवती सेत्यर्थः। यद्वा "अथवा स्वयमेवैनं द्रष्टुमर्हसि भामिनि" इति सुग्रीवेणोक्ता सा तारा।( शेषं व्याख्यानान्तरवत्)॥३७॥ उदासीनतया तत्कान्तिनिर्वर्णनानादरतया ॥ ३८ ॥ नरेन्द्रसूनोः धार्मिकस्य

स तां समीक्ष्यैव हरीशपत्नीं तस्थावुदासीनतया महात्मा । अवाङ्मुखोऽभून्मनुजेन्द्रपुत्रः स्त्रीसन्निकर्षाद्विनिवृत्तकोपः ॥ ३८ ॥ सा पानयोगाद्विनिवृत्तलज्जा दृष्टिप्रसादाच्च नरेन्द्रसूनोः । उवाच तारा प्रणयप्रगल्भं वाक्यं महार्थं परिसान्त्वपूर्वम् ॥ ३९ ॥ किं कोपमूलं मनुजेन्द्रपुत्र कस्ते न संतिष्ठति वाङ्निदेशे । कः शुष्कवृक्षं वनमापतन्तं दवाग्निमासीदति निर्विशङ्कः ॥ ४० ॥ स तस्या वचनं श्रुत्वा सान्त्वपूर्वमसंशयम् । भूयः प्रणयदृष्टार्थं लक्ष्मणो वाक्यमब्रवीत् ॥ ४१ ॥

लक्ष्मणस्य दृष्टिप्रसादाद्धेतोः। प्रणयप्रगल्भं स्नेहदृष्टम् ॥ ३९ ॥ चतुरो मासान् राजपुत्रौ विद्युत्स्तनितसात्कृत्य स्वयं भोगप्रवणा स्थिता तज्जानन्त्यपि किं कोपमूलमित्याह तत्कृपारसविशेषज्ञतया, दृष्टिप्रसादादिति ह्युक्तम्। मनुजेन्द्रपुत्र। षष्टिवर्षसहस्राणि राज्यं परिपाल्य प्रजापराधं क्षान्तवतो दशरथस्य पुत्रस्त्वम् अपराधिजनानां शिरश्छेदनं करिष्यामीति संप्रति समागतोसि, सम्यञ्ची भवतो गतिः। कस्ते न संतिष्ठति वाङ्निदेशे यस्ते वाङ्निदेशे न तिष्ठति स कः ? अशास्त्रवश्यस्य दृष्टे वस्तुनि सपदि चापलं कृत्वा निवर्तितुमक्षमस्य तिर्यग्जनस्य च्युतान् भोगान् स्वयमेव दत्त्वा स्वाज्ञां कुर्वन्तं हिंसितुमिच्छसि। क इत्यादि। दवाग्नौ पतन् चपलः शलभः किलेति भावः। तद्वच्चपलोऽयमित्येवं दृष्टान्तः। संतिष्ठतीत्यार्षं परस्मैपदम् ॥ ४० ॥ स इति। असंशयं निःसंशयम्, अकुटिलमिति यावत्। प्रणयदृष्टार्थं स्नेहसन्दर्शितप्रयोजनम् ॥ ४१ ॥

सुग्रीवेणोक्ता सा तारा। प्रस्खलन्ती मदालसतया पदेपदे प्रस्खलन्ती। मदविह्वलाक्षी भोगसंवर्धनमधुपानमदेन अलसचकितनेत्रा। प्रलम्बकाञ्चीगुणहेमसूत्रा काञ्चीगुणः रशना, प्रलम्बे काञ्चीगुणहेमसूत्रे यस्यास्सा तथोक्ता। सलक्षणा परिदृश्यमानभोगचिह्ना। नमिताङ्गयष्टिः स्तनभारेण किञ्चिन्नमिताङ्गयष्टिः ॥ ३७ ॥ स इति। अवाङ्मुखम्, परस्त्रीमुखावलोकस्य निषिद्धत्वादिति भावः ॥ ३८ ॥ सेति। दृष्टिप्रसारात् दृष्टेरवाक्प्रसारणात् ॥ ३९ ॥ किमिति। आसीदति आभिमुख्येन तिष्ठति। निर्विशङ्कः निर्भयः ॥ ४० ॥ प्रणयदृष्टार्थं प्रकर्षेण नयः प्रणयः तेन दृष्टः अर्थः प्रयोजनं यस्य तत् ॥ ४१ ॥

अतीवायुक्तं तव भर्तुर्विषयप्रावण्यमित्याह—किमयमित्यादिना । युक्ते सक्ते ! इति संबुद्धिः । अयं कामवृत्त इति एनं नावबुध्यसे किमिति संबन्धः ॥४२॥ न चिन्तयतीति । राज्यार्थं राज्यरूपप्रयोजनम् ॥ ४३ ॥ प्रमाणं मर्यादाम् ॥ ४४ ॥ धर्मार्थसिद्ध्यर्थम्, यतमानस्येति शेषः ॥ ४५ ॥ धर्मेति । कृते उपकारविषये अप्रतिकुर्वतः महान् धर्मलोपो भवेत् । प्रत्युपकाराकरणाद्गुणवतो मित्रस्य नाशे सति महानर्थलोपो भवेत् । चकारात्

किमयं कामवृत्तस्ते लुप्तधर्मार्थसंग्रहः । भर्ता भर्तृहिते युक्ते न चैनमवबुध्यसे ॥ ४२ ॥ न चिन्तयति राज्यार्थं नास्मान् शोकपरायणान् । सामात्यपरिषत्तारे पानमेवोपसेवते ॥ ४३ ॥ स मासांश्चतुरः कृत्वा प्रमाणं प्लवगेश्वरः । व्यतीतांस्तान्मदव्यग्रो विहरन्नावबुध्यते ॥ ४४ ॥ नहि धर्मार्थसिद्ध्यर्थं पानमेवं प्रशस्यते । पानादर्थश्च धर्मश्च कामश्च परिहीयते ॥ ४५ ॥ धर्मलोपो महांस्तावत्कृते ह्यप्रतिकुर्वतः । अर्थलोपश्च मित्रस्य नाशे गुणवतो महान् ॥ ४६ ॥ मित्रं ह्यर्थगुणश्रेष्ठं सत्यधर्मपरायणम् । तद्द्वयं तु परित्यक्तं न तु धर्मे व्यवस्थितम् ॥ ४७ ॥ तदेवं प्रस्तुते कार्ये कार्यमस्माभिरुत्तरम् । यत्कार्यं कार्यतत्त्वज्ञे तदुदाहर्तुमर्हसि ॥ ४८ ॥

कामलोपश्च ॥ ४६ ॥ उक्तमर्थमुपपादयति—मित्रं हीति । सत्यधर्मपरायणं मित्रम् अर्थगुणश्रेष्ठं हि । अत्र गुणशब्दः कामवाची । अर्थकामयो मूलत्वान्मित्रं ताभ्यां श्रेष्ठं हि । तादृशं मित्रं त्यजता सुग्रीवेण तद्द्वयम् अर्थकामद्वयम् । परित्यक्तं तु परित्यक्तमेव । धर्मे तु न व्यवस्थितम्, धर्मोऽपि परित्यक्त इत्यर्थः ॥४७॥ तदिति । तत्तस्मात् । कार्यतत्त्वज्ञे ! कार्ये, धर्मार्थकामविलोपहेतुभूते मित्रपरित्यागलक्षणे कार्ये एवं प्रस्तुते सति यदुत्तरं कार्य

अयं कामवृत्त इति एनं नावबुद्ध्यसे किमिति सम्बन्धः । भर्तृहिते युक्ते ! इति सम्बोधनम् ॥ ४२ ॥ राज्यार्थं राज्यप्रयोजनम् ॥ ४३–४५ ॥ 'पानादर्थश्च' इत्यादिनो क्तमुपपादयति—धर्मलोप इत्यादिना । कृते उपकारविषये । अप्रतिकुर्वतः प्रत्युपकारमकुर्वतः । महान् धर्मलोपो भवेत् चकारात्कामलोपश्च ॥ ४६ ॥ उक्तमेवार्थं विशदयति—मित्रं हीति । सत्यधर्मपरायणं मित्रम् अर्थगुणश्रेष्ठम्, अत्र गुणशब्दः कामवाची, अर्थकामाभ्यां श्रेष्ठं हि । तादृशं मित्रं त्यजता सुग्रीवेण तद्द्वयम् अर्थकामद्वयन्तु परित्यक्तमेव । धर्मे तु न व्यवस्थितं धर्मोऽपि परित्यक्त इत्यर्थः ॥ ४७ ॥ तत् तस्मात् । हे कार्यतत्त्वज्ञे ! कार्ये धर्मार्थकामविलोपहेतुभूते मित्रपरित्यागलक्षणे कार्ये एवं प्रस्तुते सति यदुत्तरं कार्यमस्माभिः कार्यं कर्तव्यम् तदुदाहर्तुमर्हसीति योजना ॥ ४८ ॥

मस्माभिः कार्यं कर्तव्यम् तत् उदाहर्तुम् वक्तुम् अर्हसि ॥४८॥ सेति । धर्मार्थयोः समाधिना संबन्धेन युक्तम् । गतार्थे प्रयोजनयुक्ते । नरेन्द्रकार्ये विषये विश्वासयुक्तम् ॥ ४९ ॥ न कोपकालः, सुग्रीवस्य कामार्तत्वादिति भावः । त्वदर्थकामस्य त्वत्प्रयोजनपरस्य । जनस्य सुग्रीवस्य ॥५०॥ गुणप्रकृष्टः उत्कृष्टवीर्यगुणः । अपकृष्टसत्त्वे हीनबले । सत्त्वावरुद्धः व्यवसाययुक्तः । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । तपसः शान्तिरूपस्य प्रसूतिः उत्पत्तिस्थानम् ॥ ५१ ॥ मद्दोषमेव जानासि नतु तद्धेतूनित्यत्राह--जानामीति । हरिवीरबन्धोः रामस्य । रोषं जानामि रोषममोघस्वरूपं

सा तस्य धर्मार्थसमाधियुक्तं निशम्य वाक्यं मधुरस्वभावम् । तारा गतार्थे मनुजेन्द्रकार्ये विश्वासयुक्तं तमुवाच भूयः ॥ ४९ ॥ न कोपकालः क्षितिपालपुत्र न चातिकोपः स्वजने विधेयः । त्वदर्थकामस्य जनस्य तस्य प्रमाद मप्यर्हसि वीर सोढुम् ॥ ५० ॥ कोपं कथं नाम गुणप्रकृष्टः कुमार कुर्यादपकृष्टसत्त्वे । कस्त्वद्विधः कोपवशं हि गच्छेत्सत्त्वावरुद्धस्तपसः प्रसूतिः ॥ ५१ ॥ जानामि रोषं हरिवीरबन्धोर्जानामि कार्यस्य च कालसङ्गम् । जानामि कार्यं त्वयि यत्कृतं नस्तच्चापि जानामि यदत्र कार्यम् ॥५२॥ तच्चापि जानामि यथाऽविषह्यं बलं नरश्रेष्ठ शरीर जस्य । जानामि यस्मिंश्च जनेऽवबद्धं कामेन सुग्रीवमसक्तमद्य ॥ ५३ ॥

जानामीत्यर्थः । कार्यस्य च कालसङ्गम् उद्योगरूपकार्यस्य कालविलम्बनं च जानामि । जानामि कार्यं त्वयि यत्कृतं नः यत् वालिवधरूपं कार्यं नः अस्माकं कृतम्, त्वयि विद्यमानं तदपि जानामि । यदत्र कार्यम् अस्मिन्नुपकारे अस्माभिर्यत्सीतान्वेषणादिकं कर्तव्यं तच्चापि जानामि ॥ ५२ ॥ तच्चेति । हे नरश्रेष्ठ! शरीरजस्य कामस्य बलं यथा अविषह्यं तच्चापि जानामि । अद्य सुग्रीवं यस्मिन् जने कामेन असक्तम् अनवरतम् अवबद्धं जानामि ।

सेति । धर्मार्थसमाधियुक्तं धर्मार्थधैर्यसम्पादकमित्यर्थः । गतार्था अवगतप्रयोजना ॥ ४९ ॥ त्वदर्थकामस्य त्वत्प्रयोजनपरस्य ॥ ५० ॥ अपकृष्टसत्त्वे सत्त्वगुणहीने, क्षुद्र इत्यर्थः । सत्त्वावरुद्धः रजस्तमसोरनुप्रवेशाय सत्त्वगुणेन निरुद्धः । तपसः प्रसूतिः उपशमरूपतपस उत्पत्तिस्थानम् ॥ टी०--सत्त्वगुणेन अवरुद्धः सत्त्वगुणप्रधान इति यावत् ॥ ५१ ॥ अस्मद्दोषमेव निवारयन्ती त्वं तद्धेतुं न जानासीत्यत आह--जानामीति । हरिवीरबन्धोः रामस्य । रोषं रोषस्वभावं जानामि । कार्यस्य उद्योगरूपकार्यस्य । कालसङ्गं कालविलम्बं च जानामि । यदत्र कार्यमस्मिन्नुपकारे अस्माभिर्यत्सीतान्वेषणादिकं कर्तव्यं तच्चापि जानामि ॥ ५२ ॥ तच्चेति ।

तं च स्त्रीजनं जानामीति योजना ॥ ५३ ॥ लक्ष्मणसंरम्भोपशमनाय स्वप्रागल्भ्येन लोकस्थितिं दर्शयति--न कामतन्त्रे इत्यादिना । त्वं यथा येन प्रकारेण । मन्युवशं प्रपन्नः तेन प्रकारेण । कामतन्त्रे रतिक्रीडादौ । तव बुद्धिर्नास्ति । कामतन्त्राभिज्ञश्चेत्तादृशं न द्विष्या इति भावः । किं कामतन्त्रप्रवणः किमपि न जानातीत्यत्राह--न देशकालाविति ॥५४॥ तमिति । मम सन्निकृष्टं समीपस्थम् । अत एव कामवृत्तं कामव्यापारमिति क्रमेण योजना

न कामतन्त्रे तव बुद्धिरस्ति त्वं वै यथा मन्युवशं प्रपन्नः । न देशकालौ हि न चार्थधर्मावपेक्षते कामरतिर्मनुष्यः ॥ ५४ ॥ तं कामवृत्तं मम सन्निकृष्टं कामाभियोगाच्च निवृत्तलज्जम् । क्षमस्व तावत्परवीरहन्तस्त्वद्भ्रातरं वानरवंशनाथम् ॥ ५५ ॥ महर्षयो धर्मतपोभिकामाः कामानुकामाः प्रतिबद्धमोहाः । अयं प्रकृत्या चपलः कपिस्तु कथं न सज्जेत सुखेषु राजा ॥ ५६ ॥ इत्येवमुक्त्वा वचनं महार्थं सा वानरी लक्ष्मणमप्रमेयम् । पुनः सखेलं मदविह्वलं च भर्तुर्हितं वाक्यमिदं बभाषे ॥ ५७ ॥ उद्योगस्तु चिराज्ञप्तः सुग्रीवेण नरोत्तम । कामस्यापि विधेयेन तवार्थप्रतिसाधने ॥ ५८ ॥ आगता हि महावीर्या हरयः कामरूपिणः । कोटीशतसहस्राणि नानानगनिवासिनः ॥५९॥

॥५५॥ महर्षयोपि कामवशाः, किमुत पृथग्जन इत्याह--महर्षय इति । धर्मतपसी अभिकामयन्त इति धर्मतपोभिकामाः । कामस्याभिलाषस्य अनु पश्चात् कामो येषां ते कामानुकामाः । प्रतिबद्धमोहाः नियतस्त्रीव्यामोहाः ॥५६॥ इतीति । सखेलं सलीलम् ॥ ५७–५९ ॥ रामानु०–इत्येवमिति । पुनः सखेलमिति

हे नरश्रेष्ठ ! शरीरजस्य कामस्य बलं यथा अविषह्यं तच्चापि जानामि । अद्य सुग्रीवं यस्मिन् जने कामेन असक्तमनवरतमवबद्धं जानामि । तं स्त्रीजनं जानामीति योजना । कामेन असक्तं सुग्रीवम् अद्य यस्मिन् जने अवबद्धं जानामीति वा योजना ॥ ५३ ॥ लक्ष्मणसंरम्भोपशमार्थं स्वप्रागल्भ्येन सखेलोक्तिमाह--न कामतन्त्र इत्यादि । त्वं यथा येन प्रकारेण मन्युवशं प्रपन्नः तेन प्रकारेण ममैव कामतन्त्रे जलक्रीडादौ तव बुद्धिर्नास्ति । कामतन्त्राभिज्ञश्चेत्तादृशं न द्वेष्टीति भावः । कामतन्त्रप्रवणः किमपि न जानातीत्याह न देशकालाविति ॥ ५४ ॥ ५५ ॥ किञ्च विशेषतो राज्ञः कामासक्तिर्नाश्चर्यकारिणीत्यभिप्रायेणाह–महर्षय इति । काममनुसृत्य कामयन्त इति कामानुकामाः ॥ ५६ ॥ ५७ ॥ उद्योग इति । अर्थप्रतिसाधने कार्यसाधनविषये ॥ ५८ ॥ ५९ ॥

स०–कामवृत्तं स्वेच्छाचारिणम् । अत एव मम सन्निकृष्टं मच्छय्यासक्तम् त्वद्भ्रातरं सखित्वात् । एतादृशं सुग्रीवमुद्दिश्य क्षमस्व ॥ ५५ ॥

सम्यक् ॥ ५७ ॥ चारित्रं रक्षितं त्वया। अन्तःपुरद्वयवलोकनमनुचितमिति बहिरेव तिष्ठता त्वया सदाचारः सम्यगनुष्ठित इत्यर्थः। शरणागतरक्षणाचारस्त्वया सम्यगनुष्ठित इति वा। अच्छलम् अदोषावहम् ॥६० ॥ तारयेत्यादिश्लोकचतुष्टयमेकं वाक्यम्। समावृतं परिवृतम्। संरब्धतरः कुपिततरः। अत एव

तदागच्छ महाबाहो चारित्रं रक्षितं त्वया। अच्छलं मित्रभावेन सतां दारावलोकनम् ॥ ६० ॥ तारया चाभ्यनुज्ञातस्त्वरया चापि चोदितः। प्रविवेश महाबाहुरभ्यन्तरमरिन्दमः ॥ ६१ ॥ ततः सुग्रीवमासीनं काञ्चने परमासने। महार्हास्तरणोपेते ददर्शादित्यसन्निभम् ॥ ६२ ॥ दिव्याभरणचित्राङ्गं दिव्यरूपं यशस्विनम्। दिव्यमाल्याम्बरधरं महेन्द्रमिव दुर्जयम् ॥ ६३ ॥ दिव्याभरणमाल्याभिः प्रमदाभिः समावृतम्। संरब्धतररक्ताक्षो बभूवान्तकसन्निभः ॥ ६४ ॥ रुमां तु वीरः परिरभ्य गाढं वरासनस्थो वरहेमवर्णः। ददर्श सौमित्रिमदीनसत्त्वं विशालनेत्रः सुविशालनेत्रम् ॥ ६५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

तमप्रतिहतं क्रुद्धं प्रविष्टं पुरुषर्षभम्। सुग्रीवो लक्ष्मणं दृष्ट्वा बभूव व्यथितेन्द्रियः ॥ १ ॥ क्रुद्धं निःश्वसमानं तं प्रदीप्तमिव तेजसा। भ्रातुर्व्यसनसन्तप्तं दृष्ट्वा दशरथात्मजम् ॥ २ ॥ उत्पपात हरिश्रेष्ठो हित्वा सौवर्णमासनम्। महान्महेन्द्रस्य यथा स्वलंकृत इव ध्वजः ॥ ३ ॥

रक्ताक्षश्च ॥ ६१–६५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

अथ सुग्रीवं प्रति रामसन्देशकथनं चतुस्त्रिंशे—तमप्रतिहतमित्यादि॥१॥क्रुद्धमित्यादि। महेन्द्रस्य ध्वज इव उत्पपात। स्वलङ्कृत इत्युभयविशेषणम्॥२॥३

चारित्रं रक्षितम्। अन्तःपुरद्वयवलोकनमनुचितमिति अत्रैव तिष्ठता त्वया सदाचारो रक्षित इति भावः। अच्छलम् अदोषावहमित्यर्थः ॥ ६० ॥ तारया चेत्यादि श्लोकचतुष्टयमेकान्वयम्। प्रमदाभिस्समन्तत इति पाठः। अत्र प्रमदाभिः सममिति छेदः। प्रमदाभिस्समं सुग्रीवं ददर्श, ततस्संरब्धतररक्ताक्षो बभूवेति सम्बन्धः। प्रमदाभिररिन्दम इति पाठे—अरिन्दमः अरिषड्वर्गजेता ॥ ६१–६४ ॥ सुग्रीवस्य तदानीन्तनावस्थामाह—रुमामित्यादि ॥ ६५ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ टीका—तमिति। लक्ष्मणस्तारया प्रसादितोपि क्रुद्धो वर्तते ममापराधेनेति सुग्रीवो व्यथितेन्द्रियो बभूव ॥ १–५॥

रामानु०—उत्पपातेति । महेन्द्रस्य ध्वजो यथा स्वलंकृतः तथा स्वलंकृतः हरिश्रेष्ठः सौवर्णमासनं हित्वा महाध्वज इवोत्पपातेति संबन्धः ॥ २ ॥ ३ ॥ उत्पतन्तमिति । अनूत्पेतुः पश्चादुत्पेतुः ॥ ४ ॥ रामानु०—उत्पतन्तमनूत्पेतुरिति सम्यक् ॥ ४ ॥ संरक्तनयनः, मदेनेति शेषः ॥५–७॥ यस्त्विति । अधर्मे इति च्छेदः ॥ ८ ॥ शतमिति । पुरुषः अश्वानृते अश्वविषयानृते । शतं हन्ति, शताश्वहननदोषभाग् भवेदित्यर्थः । एवं गवानृते गोविषयानृते सहस्रं हन्ति सहस्रगोहननदोषभाग्

उत्पतन्तमनूत्पेतू रुमाप्रभृतयः स्त्रियः । सुग्रीवं गगने पूर्णचन्द्रं तारागणा इव ॥४॥ संरक्तनयनः श्रीमान् विचचाल कृताञ्जलिः । बभूवावस्थितस्तत्र कल्पवृक्षो महानिव ॥ ५ ॥ रुमाद्वितीयं सुग्रीवं नारीमध्यगतं स्थितम् । अब्रवी लक्ष्मणः क्रुद्धः सतारं शशिनं यथा ॥६॥ सत्त्वाभिजनसम्पन्नः सानुक्रोशो जितेन्द्रियः । कृतज्ञः सत्यवादी च राजा लोके महीयते ॥७॥ यस्तु राजा स्थितोऽधर्मे मित्राणामुपकारिणाम् । मिथ्या प्रतिज्ञां कुरुते को नृशंसतरस्ततः ॥८॥ शतमश्वानृते हन्ति सहस्रं तु गवानृते । आत्मानं स्वजनं हन्ति पुरुषः पुरुषानृते ॥ ९ ॥ पूर्वं कृतार्थो मित्राणां न तत्प्रतिकरोति यः । कृतघ्नः सर्वभूतानां स वध्यः प्लवगेश्वर ॥ १० ॥ गीतोऽयं ब्रह्मणा श्लोकः सर्वलोकनमस्कृतः । दृष्ट्वा कृतघ्नं क्रुद्धेन तं निबोध प्लवङ्गम ॥ ११ ॥

भवेत् । पुरुषानृते आत्मानं स्वजनं हन्ति, आत्मस्वजनहननदोपभाग् भवेदित्यर्थः । महापुरुपरामविपयानृते तु सर्वहननदोपभाग् भवेदिति भावः ॥ ९ ॥ पूर्वमिति । तन्मित्रकार्यं न प्रतिकरोति पुनर्न करोति ॥ १० ॥ गीतोयमिति । ब्रह्मणा स्वायम्भुवमनुना ॥ ११ ॥

टी०—रुमाद्वितीयं सरूपि रूपिसगृहे प्रावाम्यादेवमुक्तम् ॥ ६ ॥ ७ ॥ य इति । यस्तु राजा स्थितो धर्म इत्यत्र अधर्मे इति छेदः ॥ ८ ॥ पुरुषः अश्वानृते अश्वविषयानृते शतं हन्ति, शताश्वहननदोषभाग्भवेदित्यर्थः । एवं गवानृते गोविषयानृते सहस्रं हन्ति, सहस्रगोहननदोषभाग्भवेत् । पुरुषानृते आत्मानं स्वजनं हन्ति आत्मस्वजनहनन दोषभाग्भवेदित्यर्थः । महापुरुषरामविषयानृते तु सर्वहननदोषभाग्भवेदिति भावः ॥ ९ ॥ अनृतवादिनो दोषमभिधाय कृतघ्नस्य दोषमाह–पूर्वमिति ॥ १० ॥ उक्तार्थे सम्मातिमाह–गीत इति । अयं श्लोकः कृतघ्नं दृष्ट्वा ब्रह्मणा गीतः तं निबोधेत्यन्वयः । नमस्कृतः आदृतः इत्यर्थः ॥ ११–१३ ॥

निष्कृतिः प्रायश्चित्तम् ॥ १२ ॥ १३ ॥ कृतमिच्छता उपकारं स्मरता ॥ १४ ॥ स त्वामिति । मण्डूकराविणं मण्डूकग्रहणार्थं मण्डूकवद्रौति तमिव वञ्चकं त्वां न जानातीत्यर्थः ॥ १५-१८ ॥ रामस्य सन्दिष्टं वाक्यमभिधाय प्रकृतकार्योचितं स्ववाक्यमाह–न नूनमिति । इक्ष्वाकुवरस्य

ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा । निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ १२ ॥ अनार्यस्त्वं कृतघ्नश्च मिथ्यावादी च वानर । पूर्वं कृतार्थो रामस्य न तत्प्रतिकरोषि यत् ॥ १३ ॥ ननु नाम कृतार्थेन त्वया रामस्य वानर । सीताया मार्गणे यत्नः कर्तव्यः कृतमिच्छता ॥ १४ ॥ स त्वं ग्राम्येषु भोगेषु सक्तो मिथ्याप्रतिश्रवः । न त्वां रामो विजानीते सर्पं मण्डूकराविणम् ॥ १५ ॥ महाभागेन रामेण पापः करुणवेदिना । हरीणां प्रापितो राज्यं त्वं दुरात्मा महात्मना ॥ १६ ॥ कृतं चेन्नाभिजानीषे रामस्याक्लिष्टकर्मणः । सद्यस्त्वं निशितैर्बाणैर्हतो द्रक्ष्यसि वालिनम् ॥ १७ ॥ न च संकुचितः पन्था येन वाली हतो गतः । समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥ १८ ॥ न नूनमिक्ष्वाकुवरस्य कार्मुकच्युतान् शरान् पश्यसि वज्रसन्निभान् । ततः सुखं नाम निषेवसे सुखी न रामकार्यं मनसाऽप्यवेक्षसे ॥ १९ ॥ इत्यार्षे श्रीरामायणे वाल्मी० श्रीमत्किष्किन्धाकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

कार्मुकच्युतान् बाणान् वज्रसन्निभान् । न पश्यसि नाद्राक्षीः नूनम् । ततो नाम तस्मात् खलु । सुखं निषेवसे, सुखी सन् रामकार्यं मनसापि नावेक्षस इति योजना ॥ १९ ॥ रामानु०–नूनं त्वामिति । न नूनमिति वा पाठः ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥

कर्तव्यं प्रत्युपकारमाह–नन्विति । कृतमिच्छता उपकारं स्मरता ॥ १४ ॥ सर्पं मण्डूकराविणं मण्डूकग्रहणार्थं सर्पो मण्डूकवद्रौति तमिव वञ्चकं त्वां नाज्ञासीदित्यर्थः ॥ १५-१८ ॥ रामसन्दिष्टं वाक्यमभिधाय प्रकृतकार्योचितं स्ववाक्यमाह–न नूनमिति । इक्ष्वाकुवरस्य कार्मुकात् च्युतान् बाणान् वज्रसन्निभान् न पश्यसि नाद्राक्षीः नूनम्, ततो नाम तस्मात् खलु सुखं निषेवसे सुखी सन् रामकार्यं मनसापि नावेक्षस इति योजना ॥ १९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां चतुस्त्रिंशः सर्गः ॥ ३४ ॥

अथ पुनस्तारया लक्ष्मणसान्त्वनं पञ्चत्रिंशे—तथा ब्रुवाणमित्यादि ॥ १ ॥ वक्तव्यः, परुषमिति शेषः ॥ २ ॥ जिह्मः कुटिलः ॥ ३ ॥ विस्मृत इति कर्तरि निष्ठा। अन्यैर्दुष्करं तम् उपकारं न विस्मृत इति योजना ॥ ४-६ ॥ विश्वामित्रो घृताच्यामासक्तो दश वर्षाणि अहोऽमन्यत दिनममन्यत ।



तथा ब्रुवाणं सौमित्रिं प्रदीप्तमिव तेजसा। अब्रवील्लक्ष्मणं तारा ताराधिपनिभानना ॥ १ ॥ नैवं लक्ष्मण वक्तव्यो नायं परुषमर्हति। हरीणामीश्वरः श्रोतुं तव वक्त्राद्विशेषतः ॥ २ ॥ नैवाकृतज्ञः सुग्रीवो न शठो नापि दारुणः। नैवानृतकथो वीर न जिह्मश्च कपीश्वरः ॥ ३ ॥ उपकारं कृतं वीरो नाप्ययं विस्मृतः कपिः । रामेण वीर सुग्रीवो यदन्यैर्दुष्करं रणे ॥४॥ रामप्रसादात्कीर्तिं च कपिराज्यं च शाश्वतम्। प्राप्तवानिह सुग्रीवो रुमां मां च परन्तप॥५॥ सुदुःखं शयितः पूर्वं प्राप्येदं सुखमुत्तमम्। प्राप्तकालं न जानीते विश्वामित्रो यथा मुनिः ॥ ६ ॥ घृताच्यां किल संसक्तो दश वर्षाणि लक्ष्मण। अहोऽमन्यत धर्मात्मा विश्वामित्रो महामुनिः ॥ ७ ॥ स हि प्राप्तं न जानीते कालं कालविदां वरः। विश्वामित्रो महातेजाः किं पुनर्यः पृथग्जनः ॥ ८ ॥ देहधर्मं गतस्यास्य परिश्रान्तस्य लक्ष्मण। अवितृप्तस्य कामेषु कामं क्षन्तुमिहार्हसि ॥ ९ ॥

घृताचीशब्देनात्र मेनकैवोच्यते । मेनकासङ्गस्य बालकाण्डेऽभिधानात् ॥ ७ ॥ रामानु०—अत्र घृताचीशब्दो मेनकाया नामान्तरम्। 'तां ददर्श महातेजा मेनकां कुशिकात्मजः' इत्यादिना, 'तस्यां वसन्त्यां वर्षाणि पञ्च पञ्च च राघव' इत्यन्तेन विश्वामित्रस्य मेनकायां दशवर्षासक्तेर्बालकाण्डेऽभिहितत्वात् ॥ ७ ॥ ॥ ८ ॥ देहेति । देहधर्मं

॥ १–३ ॥ टीका—उपकारमिति । अत्र यच्छब्दस्य उक्तार्थमात्रपरामर्शित्वान्नपुंसकत्वमविरुद्धम् ॥ ४–६ ॥ घृताच्यामिति । अत्र घृताचीशब्दो मेनकाया नामान्तरम् । अहः एकदिनम् । अमन्यत, विषयासक्त्येति भावः ॥ ७ ॥ स हीति । पृथग्जनः प्राकृतः तुच्छ इत्यर्थः ॥ ८ ॥ देहेति । देहधर्मं गतस्य शरीरस्वभावं प्राप्तस्य । कामं कामवर्तनम् ॥ ९ ॥

स०—कृतमुपकारं जानातीति कृतज्ञः स न भवतीत्यकृतज्ञः, तादृशो नैव । शठः गूढद्वेषी । अनृतकथः मृषावादी । जिह्मः कुटिलः ॥ ३ ॥ यत् यस्मात् अन्यैर्दुष्करं रामेण कृतम् उपकारमुद्दिश्य अयं वीरः सुग्रीवः विस्मृतः । भावे क्तः । विगतं स्मृतं यस्य स तथा विस्मरणवानिति यावत्, नापि नैव भवतीत्यर्थः । अतोपि न कृतघ्न इत्यर्थः ॥ ४ ॥

गतस्य शरीरस्वभावं प्राप्तस्य । कामं कामवर्तनम् ॥ ९ ॥ अपराधमङ्गीकृत्य सान्त्वयित्वा इदानीं विचार्यमाणे अपराध एव नास्तीत्याह-न चेति निश्चयार्थं निश्चयरूपमर्थम्, । सुग्रीवाभिप्रायमिति यावत् ॥ १० ॥ ११ ॥ संरम्भः अभिनिवेशः ॥ १२ ॥ धनधान्येत्यत्र धनशब्दो हस्तिरथाश्वादिपरः । वसुशब्दो रत्नपरः ॥ १३ ॥ समानेष्यतीति । समानेष्यति घटयिष्यति । निहत्वेत्यत्र ल्यबभाव आर्षः ॥ १४-१६ ॥ ते न शक्या

न च रोषवशं तात गन्तुमर्हसि लक्ष्मण । निश्चयार्थमविज्ञाय सहसा प्राकृतो यथा ॥ १० ॥ सत्त्वयुक्ता हि पुरुषास्त्वद्विधाः पुरुषर्षभ । अविमृश्य न रोषस्य सहसा यान्ति वश्यताम् ॥ ११ ॥ प्रसादये त्वां धर्मज्ञ सुग्रीवार्थे समाहिता । महान् रोषसमुत्पन्नः संरम्भस्त्यज्यतामयम् ॥ १२ ॥ रुमां मां कपिराज्यं च धनधान्यवसूनि च । रामप्रियार्थं सुग्रीवस्त्यजेदिति मतिर्मम ॥ १३ ॥ समानेष्यति सुग्रीवः सीतया सह राघवम् । शशाङ्कमिव रोहिण्या निहत्वा रावणं रणे ॥ १४ ॥ शतकोटिसहस्राणि लङ्कायां किल राक्षसाः । अयुतानि च षट्त्रिंशत्सहस्राणि शतानि च ॥ १५ ॥ अहत्वा तांश्च दुर्धर्षान् राक्षसान् कामरूपिणः । न शक्यो रावणो हन्तुं येन सा मैथिली हृता ॥ १६ ॥ ते न शक्या रणे हन्तुमसहायेन लक्ष्मण । रावणः क्रूरकर्मा च सुग्रीवेण विशेषतः ॥ १७ ॥ एवमाख्यातवान् वाली स ह्यभिज्ञो हरीश्वरः । आगमस्तु न मे व्यक्तः श्रवात्तस्माद् ब्रवीम्यहम् ॥ १८ ॥ त्वत्सहायनिमित्तं वै प्रेषिता हरिपुङ्गवाः । आनेतुं वानरान् युद्धे सुबहून् हरियूथपान् ॥ १९ ॥

इति च्छेदः । ते राक्षसाः हन्तुं न शक्याः । रावणो विशेषणासहायेन सुग्रीवेण हन्तुं न शक्यः ॥ १७ ॥ तर्हि रावणवृत्तान्तः सर्वोप्याख्यायतामित्यत्राह-एवमिति । आगमः स्वयमवगमः । श्रवात् श्रवणात् । अत्र सुग्रीवेण युद्धाय निर्गमकाले तारया अङ्गदोक्तरामसुग्रीवसख्यकरणे

अपराधमङ्गीकृत्य सान्त्वयित्वा इदानीं विचार्यमाणे अपराध एव नास्तीत्याह-न चेति । निश्चयार्थं निश्चयरूपमर्थम्, सुग्रीवाभिप्रायमिति यावत् ॥ १० ॥ अविमृश्य अविचार्य ॥ ११ ॥ संरम्भः सम्भ्रमः ॥ १२-१४ ॥ अधुनैव रावणः किं न हन्यत इत्यत आह-शतकोटीत्यादि । किलेति वार्तायाम् ॥ १५ ॥ १६ ॥ तेनेति । अत्र नकारोऽनुषज्यते तेन राक्षसवधेन विना रावणवधस्याशक्यत्वेन असहायेन सहायरहितेन सुग्रीवेण क्रूरकर्मा रावणो विशेषतो रणे हन्तुं न शक्यश्च, न शक्य एवेति योजना ॥ १७ ॥ एवमाख्यातवानिति । ननु सहायरहितेन सुग्रीवेण रावणो हन्तुं न शक्य इति पूर्वोक्तं रावणबलादिकं च । तारायै वाली कदाऽब्रवीदिति चेत्,

अभिहिते एतादृशो रावणः, सुग्रीवो दुर्बलः, तं कथं रामोऽवलम्बत इति वालिनोक्तमिति ज्ञेयम् ॥ १८–२० ॥ रामानु०—अवात्तस्माद्ब्रवीम्यहमिति पाठः ॥ १८ ॥ कृतेति । अत्र सीतान्वेषणकार्यविषये । सुग्रीवेण पुरा त्वदागमनात्पूर्वमेव । संस्था व्यवस्था, त्रिपञ्चरात्रादूर्ध्वं नागन्तव्यमित्येवंरूपा । यथा येन प्रकारेण कृता तथा अद्य अस्मिन् दिने । तैरागन्तव्यम् ॥ २१ ॥ २२ ॥ तव हीति । हिशब्दः पादपूरणे । सर्वाः हरिवरवनिताः तवेदं मुखं निरीक्ष्य प्रथम

तांश्च प्रतीक्षमाणोऽयं विक्रान्तान् सुमहाबलान् । राघवस्यार्थसिद्ध्यर्थं न निर्याति हरीश्वरः ॥२०॥ कृताऽत्र संस्था सौमित्रे सुग्रीवेण यथा पुरा । अद्य तैर्वानरैः सर्वैरागन्तव्यं महाबलैः ॥२१॥ ऋक्षकोटिसहस्राणि गोलाङ्गूलशतानि च । अद्य त्वामुपयास्यन्ति जहि कोपमरिन्दम । कोट्योऽनेकास्तु काकुत्स्थ कपीनां दीप्ततेजसाम् ॥ २२ ॥ तव हि मुखमिदं निरीक्ष्य कोपात् क्षतजनिभे नयने निरीक्षमाणाः । हरिवरवनिता न यान्ति शान्तिं प्रथमभयस्य हि शङ्किताः स्म सर्वाः ॥ २३ ॥ इत्यार्षे श्रीरामायणे वाल्मी० श्रीमत्किष्किन्धाकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

भयस्य शङ्किताः वालिवधजनितभयशङ्किताः सत्यः । रोषाद्धेतोः । क्षतजसमे नयने निरीक्षमाणाः शान्तिं न यान्ति हि न यान्त्येव । प्रथमभयस्य शङ्किता इति कर्मणि षष्ठी । "न लोकाव्यय०—" इत्यादिना षष्ठीप्रतिषेधेपि तत्प्रयोग आर्षः ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

तारामुखेनाङ्गदोक्तरामसुग्रीवसख्यकरणवृत्तान्तश्रवणानन्तरमतिबलपराक्रमरावणनिरसनविषये मां विहाय दुर्बलं सुग्रीवं रामः कथमवलम्बत इति ताराया: प्रत्युत्तरत्वेनोक्तवानित्यवगम्यते ॥ टी०—पूर्वं सुग्रीवो रावणं हत्वा सीतां समानेष्यतीत्युक्तम् इदानीमसमर्थो रावणहनन इति तयैवोच्यते, एतत्पूर्वोत्तरविरुद्धमित्यत आह—आगम इति । आगमः सीताप्राप्तिलक्षणकार्यागमः, सुग्रीवेण भविष्यतीति न व्यक्तः न स्फुटः, तर्हि रावणहनने सुग्रीवो निमित्तमिति कथं ब्रवीषीत्यत आह—शापादिति । तस्य रावणस्य कर्मप्राप्तशापात् कपिभिरसहायैः, रावणो नङ्क्ष्यतीति नन्दिकेश्वरशापादित्यर्थः । शापात्तस्य ब्रवीम्यहम् इत्यस्य व्याख्यातुः पाठः ॥ १८–२० ॥ कृतेति । हे सौमित्रे ! अत्र सीतान्वेषणकार्यविषये । सुग्रीवेण पुरा त्वदागमनात्पूर्वमेव । संस्था व्यवस्था त्रिपञ्चरात्रादर्वागागन्तव्यमित्येवंरूपा यथा येन प्रकारेण कृता तथा अद्य अस्मिन् दिने तैर्महाबलैरागन्तव्यमिति योजना ॥ २१ ॥ २२ ॥ तवेति । हरिवरवनिताः तवेदं मुखं निरीक्ष्य प्रथमभयस्य शङ्किताः वालिवधजनितभयशङ्किताः सत्यः रोषाद्धेतोः क्षतजसमे नयने निरीक्षमाणाः शान्तिं न यान्ति हि न यान्त्येव । प्रथमभयस्येति कर्मणि षष्ठी ॥२३॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां पञ्चत्रिंशः सर्गः ॥३५॥

अथ लक्ष्मणसुग्रीवसौहृदभाषणं षट्त्रिंशे–इत्युक्त इत्यादि ॥ १ ॥ तस्मिन्निति । सुमहन्नासमिति " आन्महतः० " इत्याकाराभाव आर्षः । क्लिन्नम् आर्द्रम् ॥ २ ॥रामानु०–सुमहत् सुमहान्तम् ॥ २ ॥ तत इति । बहुगुणं बहुविधभोगप्रदम् । महत् दिव्यम् ॥ ३ ॥ ४ ॥ प्रनष्टेति । इदं पूर्वोक्तं सर्वम् ॥ ५ ॥



इत्युक्तस्तारया वाक्यं प्रश्रितं धर्मसंहितम् । मृदुस्वभावः सौमित्रिः प्रतिजग्राह तद्वचः ॥ १ ॥ तस्मिन् प्रतिगृहीते तु वाक्ये हरिगणेश्वरः । लक्ष्मणात्सुमहन्नासं वस्त्रं क्लिन्नमिवात्यजत् ॥ २ ॥ ततः कण्ठगतं माल्यं चित्रं बहुगुणं महत् । चिच्छेद विमदश्चासीत्सुग्रीवो वानरेश्वरः ॥ ३ ॥ स लक्ष्मणं भीमबलं सर्ववानरसत्तमः । अब्रवीत्प्रश्रितं वाक्यं सुग्रीवः संप्रहर्षयन् ॥ ४ ॥ प्रनष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् । रामप्रसादात्सौमित्रे पुनः प्राप्तमिदं मया ॥ ५ ॥ कः शक्तस्तस्य देवस्य ख्यातस्य स्वेन कर्मणा । तादृशं विक्रमं वीर प्रतिकर्तुमरिन्दम ॥ ६ ॥ सीतां प्राप्स्यति धर्मात्मा वधिष्यति च रावणम् । सहायमात्रेण मया राघवः स्वेन तेजसा ॥ ७ ॥ सहाय कृत्यं किं तस्य येन सप्त महाद्रुमाः । शैलश्च वसुधा चैव बाणेनैकेन दारिताः ॥ ८ ॥ धनुर्विस्फारयाणस्य यस्य शब्देन लक्ष्मण । सशैला कम्पिता भूमिः सहायैस्तस्य किन्नु वै ॥ ९ ॥ अनुयात्रां नरेन्द्रस्य करिष्येऽहं नरर्षभ । गच्छतो रावणं हन्तुं वैरिणं सपुरःसरम् ॥ १० ॥

क इति । तादृशं विक्रमं प्रतिकर्तुम्, तादृशस्य विक्रमस्य प्रतिकर्तुमित्यर्थः ॥ ६ ॥ सीतामिति । सहायमात्रेण मयेत्युपलक्षणे तृतीया । स्वयमेवार्थ

॥ १ ॥ तस्मिन्निति । स्नानानन्तरं क्लिन्नमार्द्रं वस्त्रमिव ॥ २ ॥ बहुगुणं बहुविधभोगप्रदम् । महत् दिव्यम् । चिच्छेद तत्याज, विनयेनेति भावः ॥ ३–५ ॥ क इति । कः शक्तः को दक्षः ॥ ६ ॥ सहायमात्रेण मयेति उपलक्षणे तृतीया । स्वयमेवार्थसाधकः अहं तु तस्य परिकरमात्रमिति भावः ॥ ७–९ ॥ अन्विति ।



स०–धर्मसंहिते प्रश्रितं वचः अवाक्यं यथा भवति तथा प्रतिजग्राह, प्रत्युत्तरं नोक्तवानिति यावत् । इति वाक्यम् उक्तः श्रावित इति वा ॥ १ ॥ सुमहात्रासम् अतिमहाभयम् । सुमहत्त्रासमितिपाठे–सुमहदिति न्यस्तं सद्वस्त्रपदेनान्वेति ॥ २ ॥

साधकः अहं तु तस्य परिकरमात्रमिति भावः ॥ ७–१० ॥ यदीति । अतिक्रान्तम् अतिक्रमणम् । क्षमितव्यं क्षन्तव्यम् ॥ ११ ॥ तनि०—इदं कृतापराधस्येति पूर्वोपदिष्टार्थस्यानुष्ठानम् । किंचिदिति अधिकातिक्रमणस्य प्रसादनेनानिवर्त्यत्वम्, यदीति स्वल्पस्याप्यसंभावना च द्योत्यते । विश्वासादिति बुद्धिपूर्वापराधव्यावृत्तिः । प्रणयेनेति अतिक्रमस्याभासत्वम् । प्रेष्यस्येति बुद्धिपूर्वकवास्तवापराधेपि क्षन्तव्यमिति व्यञ्जितम् । क्षमितव्यमित्युक्त्या अक्षमणे

यदि किंचिदतिक्रान्तं विश्वासात् प्रणयेन वा । प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति ॥ ११ ॥ इति तस्य ब्रुवाणस्य सुग्रीवस्य महात्मनः । अभवल्लक्ष्मणः प्रीतः प्रेम्णा चैवमुवाच ह ॥ १२ ॥ सर्वथा हि मम भ्राता सनाथो वानरेश्वर । त्वया नाथेन सुग्रीव प्रश्रितेन विशेषतः ॥ १३ ॥ यस्ते प्रभावः सुग्रीव यच्च ते शौचमार्जवम् । अर्हस्त्वं कपिराज्यस्य श्रियं भोक्तुमनुत्तमाम् ॥ १४ ॥ सहायेन च सुग्रीव त्वया रामः प्रतापवान् । वधिष्यति रणे शत्रूनचिरान्नात्र संशयः ॥ १५ ॥ धर्मज्ञस्य कृतज्ञस्य संग्रामेष्वनिवर्तिनः । उपपन्नं च युक्तं च सुग्रीव तव भाषितम् ॥ १६ ॥ दोषज्ञः सति सामर्थ्ये कोऽन्यो भाषितुमर्हति । वर्जयित्वा मम ज्येष्ठं त्वां च वानरसत्तम ॥ १७ ॥ सदृशश्चासि रामस्य विक्रमेण बलेन च । सहायो दैवतैर्दत्तश्चिराय हरिपुङ्गव ॥ १८ ॥ किंतु शीघ्रमितो वीर निष्क्राम त्वं मया सह । सान्त्वय स्ववयस्यं त्वं भार्याहरणकर्शितम् ॥ १९ ॥

प्रत्यवायोपि व्यञ्जितः । न कश्चिन्नापराध्यतीति विश्वासप्रणयपात्रभूतस्य स्वल्पापराधत्वे अयमपराधः सर्वत्र वर्जनीय इति भावः ॥ ११ ॥ १२–१५ ॥ उपपन्नम् अर्हम् । युक्तं युक्तियुक्तम् ॥ १६ ॥ दोषज्ञः स्वदोषज्ञः । लोके हि समर्थः पुरुषः स्वदोषमपह्नुते नतु प्रकाशयति, न तथा त्वामिति भावः ॥ १७–१९ ॥

नरेन्द्रस्य रामस्य । अनु अनुसृत्य यात्रां करिष्ये ॥ १० ॥ अतिक्रान्तम् अतिक्रमणम् । विश्वासात् आश्रितमपराधिनमपि न बाधत इति ज्ञानादित्यर्थः । प्रेष्यस्य परिचारकस्य क्षमितव्यम् । तत्र हेतुमाह कश्चिदिति । कश्चिदपि नापराध्यतीति न, परिचारकेषु मध्ये सर्वोप्यपराधी, तस्मात्क्षन्तव्यमिति भावः ॥ ११–१३ ॥ यस्ते प्रभावस्सुग्रीव यच्च ते शौचमार्जवम् इत्यत्र तेनेत्यध्याहार्यः ॥ १४ ॥ १५ ॥ धर्मज्ञस्येति । उपपन्नमर्हम् । युक्तं युक्तियुक्तम् ॥ १६ ॥ दोषज्ञः विद्वान् । "विद्वान् विपश्चिद्दोषज्ञः" इत्यमरः ॥ १७–१९ ॥

स्वोक्तपरुषवाक्यानां रामोक्तत्वशङ्का मा भूदिति स्वेनैवोक्तत्वमुपपादयन् स्वापराधं शमयति-यच्चेति । भाषितं सीतोद्देशेन श्रवणासह्यं विलापम् ॥ २० ॥ तनि०-शोकाभिभूतस्येत्यनेन रामः स्वभावतः परुषभाषणं न वक्तीति व्यज्यते । "उच्यमानोपि परुषं नोत्तरं प्रतिपद्यते " इति प्रसिद्धेरिति भावः । तादृशस्य रामस्य भाषणं श्रुत्वा मया त्वमुक्त इत्यनेन उक्तानुवादस्यादोषत्वं व्यञ्जितम् । तच्चेति । सूचनस्यापि यच्चवेदित्यनुवादितमयुक्तमित्यर्थः । अत्रेदं वेदितव्यम्-कार्याभिसन्धिसद्भावे जाग्रति स्वामिनः श्रीरामस्य सान्निधिं प्रति गन्तव्यत्वरां विस्मृत्य भोगप्रसङ्गसङ्गेनानन्यपरत्वात्समयातिलङ्घनापराधं कृतवति महाराजे लक्ष्मणक्रोधवेगं निरीक्ष्य मित्रश्रेष्ठेन हनुमता "कृतापराधस्य हि ते नान्यं पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ॥ " इति महाराजाय

यच्च शोकाभिभूतस्य श्रुत्वा रामस्य भाषितम् । मया त्वं परुषाण्युक्तस्तच्च त्वं क्षन्तुमर्हसि ॥ २० ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना । हनुमन्तं स्थितं पार्श्वे सचिवं त्विदमब्रवीत् ॥ १ ॥

हितोपदेशे कृते सति महाराजोपि बुद्ध्वा "यदि किंचिदतिक्रान्तं विश्वासात्प्रणयेन वा । प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति ॥ " इति कथनेन भगवद्विषये कृतापराधेनापि भागवतक्षमापणे कृते सति तन्मुखेन भगवानपराधान् क्षमयते । ततो भगवदपचाररहितः सन् तत्कैङ्कर्ययोग्यो भवतीत्येनमर्थं विशदीचकार । तदनन्तरम् "यच्च शोकाभिभूतस्य क्रोधाद्रामस्य भाषितम् । मया त्वं परुषाण्युक्तस्तच्च त्वं क्षन्तुमर्हसि ॥ " इति लक्ष्मणस्तावदात्मीयपरुषवाक्यानां शोकविवशरामक्रोधमवेक्ष्य तदनुरूपाणि वाक्यान्युक्तानीति सोपाधिकत्वमुपपाद्य सोपाधिकस्वापराधनिवृत्तये सुमित्रात्मजः सुग्रीवं प्रसादयन् सापराधेषु श्रीवैष्णवेषु पश्चात्तापेन कृतप्रायश्चित्तेष्वपराधान्निवृत्तेषु च सत्सु सापराधत्वदशायां स्वाचरितानामपचाराणां व्युदासार्थं ते प्रसादनीया इति शास्त्रार्थप्रकटनं कृतवानिति भावः ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥ अथ सर्ववानरसमानयनं सप्तत्रिंशे-एवमित्यादि ॥ १ ॥

स्वोक्तपरुषवाक्यानां रामोक्तत्वशङ्का मा भूदिति स्वेनैवोक्तमुपपादयन् स्वापराधं शमयति-यच्चेति । रामस्य भाषितं सीतोद्देशेन श्रवणासह्यविलापम् ॥ २० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां षट्त्रिंशः सर्गः ॥ ३६ ॥ १ ॥

महेन्द्रादय एव पञ्च शैलाः ॥२॥ तरुणेति । पश्चिमायां दिशि ये स्थिताः तेषु ये वानराः स्थिता इति योजना । अस्तगिरिपर्यन्तपर्वतेष्वित्यर्थः ॥३॥ आदित्यभवने उदयगिरौ । पद्माः चन्दनविशेषाः ॥ ४ ॥ ५ ॥ मनःशिलागुहावासा मनःशिलामयगुहावासाः । महारुणे महारुणाख्ये । यत्र यच्छब्दो नास्ति तत्राध्याहर्तव्यः ॥ ६–८ ॥ रामानु०–मनःशिलागुहावासाः इति सम्यक् ॥ ६ ॥ सामेति । कल्पैः उपायैः । समानय तदर्थं प्रेषय ॥ ९ ॥



महेन्द्रहिमवद्विन्ध्यकैलासशिखरेषु च । मन्दरे पाण्डुशिखरे पञ्चशैलेषु ये स्थिताः ॥ २ ॥ तरुणादित्यवर्णेषु भ्राजमानेषु सर्वतः । पर्वतेषु समुद्रान्ते पश्चिमायां तु ये दिशि ॥ ३ ॥ आदित्यभवने चैव गिरौ सन्ध्याभ्रसन्निभे । पद्मतालवनं भीमं संश्रिता हरिपुङ्गवाः ॥ ४ ॥ अञ्जनाम्बुदसंकाशाः कुञ्जरप्रतिमौजसः । अञ्जने पर्वते चैव ये वसन्ति प्लवङ्गमाः ॥५॥ मनःशिलागुहावासा वानराः कनकप्रभाः । मेरुपार्श्वगताश्चैव ये धूम्रगिरिसंश्रिताः ॥६॥ तरुणादित्यवर्णाश्च पर्वते च महारुणे । पिबन्तो मधु मैरेयं भीमवेगाः प्लवङ्गमाः ॥ ७ ॥ वनेषु च सुरम्येषु सुगन्धिषु महत्सु च । तापसानां च रम्येषु वनान्तेषु समन्ततः ॥ ८ ॥ तांस्तान् समानय क्षिप्रं पृथिव्यां सर्ववानरान् । सामदानादिभिः कल्पैराशु प्रेषय वानरान् ॥ ९ ॥ प्रेषिताः प्रथमं ये च मया दूता महाजवाः । त्वरणार्थं तु भूयस्त्वं हरीन्संप्रेषयापरान् ॥ १० ॥ ये प्रसक्ताश्च कामेषु दीर्घसूत्राश्च वानराः । इहानयस्व तान् सर्वान् शीघ्रं तु मम शासनात् ॥ ११ ॥ अहोभिर्दशभिर्ये हि नागच्छन्ति ममाज्ञया । हन्तव्यास्ते दुरात्मानो राजशासनदूषकाः ॥ १२ ॥ शतान्यथ सहस्राणां कोटयश्च मम शासनात् । प्रयान्तु कपिसिंहानां दिशो मम मते स्थिताः ॥ १३ ॥

प्रेषिता इति । प्रेषितदूतत्वरणार्थोक्तिः स्वस्य प्रकृतकार्ये पूर्वमेव सावधानतां लक्ष्मणाय द्योतयितुम् ॥ १० ॥ ये इति । दीर्घसूत्राः चिरंक्रियाः उद्योगं कुर्वाणा इव कालयापका इत्यर्थः ॥ ११ ॥ १२ ॥ रामानु०–अहोभिरिति हेतौ तृतीया ॥ १२ ॥ शतानीति । बहुसङ्ख्याभिधानं लक्ष्मणाय वानरासङ्ख्येयत्व
महेन्द्रेति । पञ्चशैलेषु परिगणितमहेन्द्रादिमन्दरान्तेषु । अस्तमयपर्वतं परितः सौवर्णाः षष्टिसहस्राणि गिरयस्सन्ति तेषु ॥ २॥३ ॥ आदित्यभवन इति । आदित्योऽस्मिन् भवति प्रादुर्भवतीत्यादित्यभवनम् उदयाद्रिः । ये स्थिता इति सम्बन्धः । पद्मतालेति । पद्मः चन्दनवृक्षविशेषः । पलाशाख्यो वृक्षो वा ॥४–१०॥ दीर्घसूत्राः

द्योतनार्थम् ॥१२॥ रामानु०-आनेतृबहुसंख्याभिधानमानेतव्यानामसंख्याततत्वं लक्ष्मणाय द्योतयितुम् ॥ १३ ॥ १४ ॥ त इति । गम्यत इति गतिः वासस्थानम् । पृथिव्यां सर्वान् हरीन् आनयन्तु इति संबन्धः ॥ १५ ॥ १६ ॥ ते पदमिति । पतत्रिज्योतिरध्वगाः पक्षिनक्षत्रमार्गगाः सन्तः । विष्णुविक्रान्तं

मेघपर्वतसंकाशाश्छादयन्त इवाम्बरम् । घोररूपाः कपिश्रेष्ठा यान्तु मच्छासनादितः ॥ १४ ॥ ते गतिज्ञा गतिं गत्वा पृथिव्यां सर्ववानराः । आनयन्तु हरीन् सर्वांस्त्वरिताः शासनान्मम ॥ १५ ॥ तस्य वानरराजस्य श्रुत्वा वायुसुतो वचः । दिक्षु सर्वासु विक्रान्तान् प्रेषयामास वानरान् ॥१६॥ ते पदं विष्णुविक्रान्तं पतत्रिज्योतिरध्वगाः । प्रयाताः प्रहिता राज्ञा हरयस्तत्क्षणेन वै ॥ १७ ॥ ते समुद्रेषु गिरिषु वनेषु च सरस्सु च । वानरा वानरान् सर्वान् रामहेतोरचोदयन् ॥ १८ ॥ मृत्युकालोपमस्याज्ञां राजराजस्य वानराः । सुग्रीवस्याययुः श्रुत्वा सुग्रीवभयदर्शिनः ॥ १९ ॥ ततस्तेऽञ्जनसंकाशा गिरेस्तस्मान्महाजवाः । तिस्रः कोटयः प्लवङ्गानां निर्ययुर्यत्र राघवः ॥ २० ॥ अस्तं गच्छति यत्रार्कस्तस्मिन् गिरिवरे स्थिताः । ततहेममहाभासस्तस्मात्कोट्यो दश च्युताः ॥ २१ ॥ कैलासशिखरेभ्यश्च सिंहकेसरवर्चसाम् । ततः कोटिसहस्राणि वानराणामुपागमन् ॥ २२ ॥ फलमूलेन जीवन्तो हिमवन्तमुपाश्रिताः । तेषां कोटिसहस्राणां सहस्रं समवर्तत ॥२३॥ अङ्गारकसमानानां भीमानां भीमकर्मणाम् । विन्ध्याद्वानरकोटीनां सहस्राण्यपतन् द्रुतम् ॥ २४ ॥

पदम् आकाशं प्रयाताः ॥ १७-१९ ॥ रामानु०-सुग्रीवस्याययुः श्रुत्वा सुग्रीवभयदर्शिनः इति पाठः ॥ १९ ॥ तत इति । यत्र येन हेतुना राघवो वर्तते ततः

चिरक्रियाः । उद्योगं कुर्वाणा इव कालयापका इत्यर्थः ॥ ११-१४ ॥ ते इति । गतिं गम्यत इति गतिः निलयं, पृथिव्यां सर्वान् हरीनानयन्त्विवति सम्बन्धः ॥ १५ ॥ १६ ॥ हरयः पतत्रिज्योतिरध्वगाः पक्षिनक्षत्रमार्गगाः । विष्णुविक्रान्तं पदमाकाशम् तत्क्षणेन प्रयाता इति सम्बन्धः ॥ १७ ॥ १८ ॥ अथ दूतमुखेन सुग्रीवाज्ञाश्रवणानन्तरं सर्वेपि कपयस्समागता इत्याह-मृत्युकालेति । मृत्युकालोपमस्य प्रलयकालतुल्यस्य ॥ १९ ॥ येन हेतुना राघवो वर्तते तस्माद्धेतोः

तस्माद्धेतोः । तस्मात् गिरेः अञ्जनगिरेः निर्ययुः ॥ २०–२४ ॥ क्षीरोदेति । अत्रापतन् द्रुतमित्यनुषज्यते । सङ्ख्या न विद्यत इति । उत्तरत्र संख्या



क्षीरोदवेलानिलयास्तमालवनवासिनः । नारिकेलाशनाश्चैव तेषां संख्या न विद्यते ॥ २५ ॥ वनेभ्यो गह्वरेभ्यश्च सरिद्भ्यश्च महाजवा । आगच्छद्वानरी सेना पिबन्तीव दिवाकरम् ॥ २६ ॥ ये तु त्वरयितुं याता वानराः सर्व वानरान् । ते वीरा हिमवच्छैलं ददृशुस्तं महाद्रुमम् ॥ २७ ॥ तस्मिन् गिरिवरे रम्ये यज्ञो माहेश्वरः पुरा । सर्व देवमनस्तोषो बभौ दिव्यो मनोहरः ॥ २८ ॥ अन्ननिष्यन्दजातानि मूलानि च फलानि च । अमृतास्वादकल्पानि ददृशुस्तत्र वानराः ॥ २९ ॥ तदन्नसंभवं दिव्यं फलं मूलं मनोहरम् । यः कश्चित्सकृदश्नाति मासं भवति तर्पितः ॥ ३० ॥ तानि मूलानि दिव्यानि फलानि च फलाशनाः । औषधानि च दिव्यानि जगृहुर्हरियूथपाः ॥ ३१ ॥ तस्माच्च यज्ञायतनात् पुष्पाणि सुरभीणि च । आनिन्युर्वानरा गत्वा सुग्रीवप्रियकारणात् ॥ ३२ ॥ ते तु सर्वे हरिवराः पृथिव्यां सर्ववानरान् । संचोदयित्वा त्वरिता यूथानां जग्मुरग्रतः ॥ ३३ ॥ ते तु तेन मुहूर्तेन यूथपाः शीघ्रगामिनः । किष्किन्धां त्वरया प्राप्ताः सुग्रीवो यत्र वानरः ॥ ३४ ॥ ते गृहीत्वौषधीः सर्वाः फलं मूलं च वानराः । तं प्रतिग्राहयामासु र्वचनं चेदमब्रुवन् ॥ ३५ ॥ सर्वे परिगताः शैलाः समुद्राश्च वनानि च । पृथिव्यां वानराः सर्वे शासनादुपयान्ति ते ॥ ३६ ॥

कीर्तनं प्रधानाभिप्रायेण ॥ २५ ॥ २६ ॥ रामानु०–वनेभ्यो गह्वरेभ्यश्च सरिद्भ्यश्च महाजवेति पाठः ॥ २६ ॥ ये त्विति । तुशब्दो हनुमत्प्रेरितवानरव्यावर्तकः, अञ्जनसङ्काशप्लवङ्गमानां तिस्रः कोटयः तस्माद्गिरेरञ्जनगिरेर्निर्ययुरिति योजना ॥२०–२४॥ क्षीरोदेति । अत्र अपतन् द्रुतमित्यनुषज्यते ॥२५॥२६॥ ये तु त्वरयितुं याता इत्युक्त्या एते वानराः पूर्वं नीलेन प्रेषिताः, नतु हनुमता । अयं निश्चयो विशेषवाचितुशब्दश्रवणात् लक्ष्मणसन्निधौ तदानीं प्रेषितानां तदानीमेवागमना सम्भवाच्च ॥२७॥२८॥ अन्नेति । अन्ननिष्यन्दजातानि होमद्रव्याज्यादिस्रवणाज्जातानि । तत्र यज्ञायतने ॥२९–३३॥ ते वानराकारणार्थं गता यूथपाः । तेन मुहूर्तेन ।

नीलेन पूर्वं प्रेरिता इत्यर्थः। तेषामेव लक्ष्मणसन्निधाने समागमनम्। [illegible] तं प्रसिद्धम् ॥ २७–३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥





एवं श्रुत्वा ततो हृष्टः सुग्रीवः प्लवगाधिपः। प्रतिजग्राह तत्प्रीतस्तेषां सर्वमुपायनम् ॥३७॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

प्रतिगृह्य च तत्सर्वमुपायनमुपाहृतम्। वानरान् सान्त्वयित्वा च सर्वानेव व्यसर्जयत् ॥ १ ॥ विसर्जयित्वा स हरीन् शूरांस्तान्कृतकर्मणः। मेने कृतार्थमात्मानं राघवं च महाबलम् ॥ २ ॥ स लक्ष्मणो भीमबलं सर्ववानरसत्तमम्। अब्रवीत्प्रश्रितं वाक्यं सुग्रीवं संप्रहर्षयन्। किष्किन्धाया विनिष्क्राम यदि ते सौम्य रोचते ॥ ३ ॥ तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य सुभाषितम्। सुग्रीवः परमप्रीतो वाक्यमेतदुवाच ह ॥ ४ ॥ एवं भवतु गच्छावः स्थेयं त्वच्छासने मया ॥ ५ ॥ तमेवमुक्त्वा सुग्रीवो लक्ष्मणं शुभलक्षणम्। विसर्जयामास तदा तारामन्याश्च योषितः ॥ ६ ॥ एतेत्युच्चैर्हरिवरान् सुग्रीवः समुदाहरत्। तस्य तद्वचनं श्रुत्वा हरयः शीघ्रमाययुः ॥ ७ ॥ बद्धाञ्जलिपुटाः सर्वे ये स्युः स्त्रीदर्शनक्षमाः। तानुवाच ततः प्राप्तान् राजाऽर्कसदृशप्रभः ॥ ८ ॥ उपस्थापयत क्षिप्रं शिबिकां मम वानराः ॥ ९ ॥ श्रुत्वा तु वचनं तस्य हरयः शीघ्रविक्रमाः। समुपस्थापयामासुः शिबिकां प्रियदर्शनाम् ॥ १० ॥

अथ रामेण सुग्रीवसमागमोऽष्टात्रिंशे–प्रतिगृह्येत्यादि। उपायनम् उपदाम् ॥ १–६ ॥ एतेति। एत आगच्छत ॥ ७–११ ॥



सप्तम्यर्थे तृतीया ॥ ३४–३७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां सप्तत्रिंशः सर्गः ॥ ३७ ॥
दूतागमनानन्तरं सुग्रीवः किमकार्षीदित्याह–प्रतिगृह्येति ॥ १ ॥ २ ॥ स लक्ष्मण इति सार्धश्लोकमेकं वाक्यम्। अत्रेतिकरणं द्रष्टव्यम् ॥ ३–६ ॥ एत आगच्छत ॥ ७ ॥ स्त्रीदर्शनक्षमाः अन्तःपुरयुवतिदर्शनयोग्याः वशीकृतेन्द्रिया इत्यर्थः। अर्कसदृशप्रभ इति च्छेदः ॥ ८ ॥ उपस्थापयत आनयत ॥ ९ ॥ श्रुत्वेति। शीघ्र

इत्युक्त्वेति । हरिभिः वाहकहरिभिः ॥ १२–१६ ॥ आसाद्येति । तथाऽभवन् कृताञ्जलिपुटा अभवन् ॥ १७ ॥ १८ ॥ रामानु०—तटाकमिव तं दृष्ट्वा रामः



तामुपस्थापितां दृष्ट्वा शिबिकां वानराधिपः । लक्ष्मणारुह्यतां शीघ्रमिति सौमित्रिमब्रवीत् ॥ ११ ॥ इत्युक्त्वा काञ्चनं यानं सुग्रीवः सूर्यसन्निभम् । बृहद्भिर्हरिभिर्युक्तमारुरोह सलक्ष्मणः ॥ १२ ॥ पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि । शुक्लैश्च वालव्यजनैर्धूयमानैः समन्ततः ॥ १३ ॥ शङ्खभेरीनिनादैश्च हरिभिश्चाभिनन्दितः । निर्ययौ प्राप्य सुग्रीवो राज्यश्रियमनुत्तमाम् ॥ १४ ॥ स वानरशतैस्तीक्ष्णैर्बहुभिः शस्त्रपाणिभिः । परिकीर्णो ययौ तत्र यत्र रामो व्यवस्थितः ॥ १५ ॥ स तं देशमनुप्राप्य श्रेष्ठं रामनिषेवितम् । अवातरन्महातेजाः शिबिकायाः सलक्ष्मणः ॥ १६ ॥ आसाद्य च ततो रामं कृताञ्जलिपुटोऽभवत् । कृताञ्जलौ स्थिते तस्मिन् वानराश्चाभवंस्तथा ॥ १७ ॥ तटाकमिव तद् दृष्ट्वा रामः कुड्मलपङ्कजम् । वानराणां महत्सैन्यं सुग्रीवे प्रीतिमानभूत् ॥ १८ ॥ पादयोः पतितं मूर्ध्ना तमुत्थाप्य हरीश्वरम् । प्रेम्णा च बहुमानाच्च राघवः परिषस्वजे ॥१९॥ परिष्वज्य च धर्मात्मा निषीदेति ततोऽब्रवीत् ॥ २० ॥ तं निषण्णं ततो दृष्ट्वा क्षितौ रामोऽब्रवीद्वचः ॥ २१ ॥ धर्ममर्थं च कामं च यस्तु काले निषेवते । विभज्य सततं वीर स राजा हरिसत्तम ॥ २२ ॥ हित्वा धर्मं तथाऽर्थं च कामं यस्तु निषेवते । स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ॥ २३ ॥ अमित्राणां वधे युक्तो मित्राणां संग्रहे रतः । त्रिवर्गफलभोक्ता तु राजा धर्मेण युज्यते ॥ २४ ॥

कुड्मलपङ्कजमिति पाठः ॥ १८ ॥ पादयोरिति । पूर्वं दूरादञ्जलिः कृतः संप्रति समीपे पादयोः पतनम् ॥ १९–२३ ॥ अमित्राणामिति । त्रिवर्गफलभोक्ता

विक्रमाः सत्वरपादविन्यासाः, राज्ञां कालविलम्बस्यासहिष्णुत्वादिति भावः ॥ १० ॥ ११ ॥ हरिभिः वाहकैः । युक्तम् अवलम्बितम् ॥ १२–१४ ॥ स इति । परिकीर्णः परिवेष्टितः ॥ १५ ॥१६॥ आसाद्येति । तथा अभवन् कृताञ्जलिपुटा अभवन् ॥ १७–२३ ॥ अमित्राणामिति । त्रिवर्गफलभोक्ता धर्मार्थकामफलाधिष्ठाता

यथाकालं धर्मार्थकामरूपफलभोक्ता । अयथाकालानुष्ठानवैषम्यं द्योतयति तुशब्दः । धर्मेण राजधर्मेण ॥ २४–२६ ॥ प्रनष्टेत्यादि सार्धश्लोकमेकं वाक्यम् । देव ! त्वत्प्रसादात्तव भ्रातुः प्रसादाच्च कपिराज्यादिकं पुनश्च प्राप्तम् ॥२७॥२८॥ एत इति । आदाय आहूय ॥ २९–३१ ॥ शतैरित्यादि ।

उद्योगसमयस्त्वेष प्राप्तः शत्रुविनाशन । संचिन्त्यतां हि पिङ्गेश हरिभिः सह मन्त्रिभिः ॥ २५ ॥ एवमुक्तस्तु सुग्रीवो रामं वचनमब्रवीत् ॥ २६ ॥ प्रनष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् । त्वत्प्रसादान्महाबाहो पुनः प्राप्तमिदं मया । तव देव प्रसादाच्च भ्रातुश्च जयतां वर ॥ २७ ॥ कृतं न प्रतिकुर्याद्यः पुरुषाणां स दूषकः ॥ २८॥ एते वानरमुख्याश्च शतशः शत्रुसूदन । प्राप्ताश्चादाय बलिनः पृथिव्यां सर्ववानरान् ॥२९॥ ऋक्षाश्चावहिताः शूरा गोलाङ्गूलाश्च राघव । कान्तारवनदुर्गाणामभिज्ञा घोरदर्शनाः ॥ ३० ॥ देवगन्धर्वपुत्राश्च वानराः कामरूपिणः । स्वैः स्वैः परिवृताः सैन्यैर्वर्तन्ते पथि राघव ॥ ३१ ॥ शतैः शतसहस्रैश्च कोटिभिश्च प्लवङ्गमाः । अयुतैश्चावृता वीराः शङ्कुभिश्च परन्तप ॥ ३२ ॥ अर्बुदैरर्बुदशतैर्मध्यैश्चान्तैश्च वानराः । समुद्रैश्च परार्धैश्च हरयो हरियूथपाः । आगमिष्यन्ति ते राजन् महेन्द्रसमविक्रमाः ॥ ३३ ॥ मेरुमन्दरसंकाशा विन्ध्यमेरुकृतालयाः । ते त्वामभिगमिष्यन्ति राक्षसं ये सबान्धवम् । निहत्य रावणं सङ्ख्ये ह्यानयिष्यन्ति मैथिलीम् ॥ ३४ ॥

अत्र केचित्पदमध्याहर्तव्यम् । केचित् प्लवङ्गमाः शतैः कपिशतैः आवृता आगमिष्यन्ति । केचिच्छतसहस्रैरावृता आगमिष्यन्ति । केचित्कोटिभिरावृता आगमिष्यन्ति । केचिदयुतैरावृता आगमिष्यन्ति । केचिच्छङ्कुभिः । केचिदर्बुदैः । केचिन्मध्यैः । केचिदन्तैरावृता आगमिष्यन्ति । केचिद्धरयः इत्यर्थः । अयथाकालानुष्ठानवैषम्यद्योतकस्तुशब्दः । धर्मेण राजधर्मेण ॥२४–२६॥ प्रनष्टेति सार्धश्लोकमेकं वाक्यम् । हे देव ! त्वत्प्रसादात् तव भ्रातुः प्रसादाच्च इदं राज्यादिकं पुनः प्राप्तमिति सम्बन्धः ॥२७॥२८॥ स्वस्योपकारविस्मरणं नास्तीति द्योतयितुमाह–एत इति । आदाय आहूय ॥ २९–३१ ॥ शतैरित्यादि । अत्र केचित्पदमध्याहर्तव्यम् । केचित् प्लवङ्गमाः शतैः कपिशतैः आवृता आगमिष्यन्ति । केचित्सहस्रैरावृताः केचिदर्बुदैः केचिदर्बुदशतैः केचिन्मध्यैः केचिदन्तैः केचित्समुद्रैः केचित्परार्धैरावृता आगमिष्यन्तीति योजना । हरियूथपा इत्येतत् प्रथमान्तविशेषणत्वेन सर्वत्र सम्बध्यते । शतसहस्रं लक्षम्, शतलक्षं

समुद्रैरावृता आगमिष्यन्ति केचित्परार्धैरावृता आगमिष्यन्तीति योजना । संख्यालक्षणमुक्तं ज्योतिःशास्त्रे—“ एकं दश शतमस्मात्सहस्रमयुतं ततः परं लक्षम् । प्रयुतं कोटिमथार्बुदवृन्दे खर्वं निखर्वं च । तस्मान्महासरोजं शङ्कुं सरितांपतिं त्वन्तम् । मध्यं परार्धमाहुर्यथोत्तरं दशगुणं तथा ज्ञेयम् ” इति । हरियूथपा इत्येतत्प्रथमान्तविशेषणत्वेन सर्वत्र संबध्यते ॥ ३२--३४ ॥ तत इति । प्रबुद्धनीलोत्पलतुल्यदर्शनः विकसितनीलोत्पल

ततस्तमुद्योगमवेक्ष्य बुद्धिमान् हरिप्रवीरस्य निदेशवर्तिनः । बभूव हर्षाद्वसुधाधिपात्मजः प्रबुद्धनीलोत्पलतुल्यदर्शनः ॥ ३५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे अष्टात्रिंशः सर्गः ॥ ३८ ॥

इति ब्रुवाणं सुग्रीवं रामो धर्मभृतां वरः । बाहुभ्यां सम्परिष्वज्य प्रत्युवाच कृताञ्जलिम् ॥ १ ॥ यदिन्द्रो वर्षते वर्षं न तच्चित्रं भवेत्क्वचित् । आदित्यो वा सहस्रांशुः कुर्याद्वितिमिरं नभः ॥ २ ॥ चन्द्रमा रश्मिभिः कुर्यात्पृथिवीं सौम्य निर्मलाम् । त्वद्विधो वापि मित्राणां प्रतिकुर्यात्परंतप ॥ ३ ॥ एवं त्वयि न तच्चित्रं भवेद्यत्सौम्य शोभनम् । जानाम्यहं त्वां सुग्रीव सततं प्रियवादिनम् ॥४॥ त्वत्सनाथः सखे सङ्ख्ये जेतास्मि सकलानरीन् । त्वमेव मे सुहृन्मित्रं साहाय्यं कर्तुमर्हसि ॥ ५ ॥

दर्शनीयवर्णः ॥३५॥ इति श्रीगोवि० श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने अष्टात्रिंशः सर्गः ॥३८॥ अथ सर्ववानरसेनासमागम एकोनचत्वारिंशे—इति ब्रुवाणमित्यादि ॥ १ ॥ यदिन्द्र इत्यादि । त्वद्विधः त्वादृशः सत्पुरुषः । मित्राणां प्रतिकुर्यात् प्रत्युपकारं कुर्यात् न तच्चित्रमिति

कोटिः, अयुतं दशसहस्रम्, कोटिलक्षं शङ्कुः, शङ्कुसहस्रमर्बुदम्, अर्बुदाद्दशगुणं मध्यम्, अस्माद्दशगुणोऽन्तः, अस्माद्विंशतिगुणस्समुद्रः, अस्मात्रिंशद्गुणः परार्धः । शतादयः परार्धान्ताः शब्दाः सङ्ख्यावाचकाः ॥ ३२–३४ ॥ तत इति । प्रबुद्धनीलोत्पलतुल्यदर्शनः विकसितनीलोत्पलवद्दर्शनीयवर्णः ॥ ३५ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायामष्टात्रिंशः ॥ ३८ ॥ १ ॥२॥ त्वद्विधः त्वत्सदृशः सत्पुरुषः मित्राणां प्रतिकुर्यात् प्रत्युपकारं कुर्यात् न तच्चित्रमिति सम्बन्धः ॥ ३॥ हे सौम्य ! त्वयि यच्छोभनं प्रत्युपकारलक्षणं भवेत् एतन्न चित्रमिति सम्बन्धः ॥ ४ ॥ सुहृत् शोभनहृदयः ॥ ५ ॥

टीका—वर्षते । आत्मनेपदमार्षम् । त्वद्विधः त्वादृशस्सत्पुरुषः प्रतिकुर्यान्न तच्चित्रमिति सम्बन्धः । यथेन्द्रादीनां प्रवर्षणादिशीलत्वं नाश्चर्यकरं तद्वत्त्वय्यपि प्रत्युपकारशीलत्वादिकं न विस्मयावहमित्यर्थः ॥ २–५ ॥

संबन्धः । शोभनं प्रत्युपकाररूपम् । सुहृत् शोभनहृदयः ॥ २–५ ॥ जहारेति । इन्द्रेण ईप्सितां पौलोमीं तत्पितुः पुलोमस्यानुमत्याऽनुह्लादो जहार । इन्द्रस्त्वनुमन्तारं पुलोमं हत्वा तां पुनरानीयोदवहदिति पौराणिकी कथा ज्ञेया ॥ ६ ॥ ७ ॥ समभिवर्तत समभ्यवर्तत । मूर्च्छता व्याप्नुवता

जहारात्मविनाशाय वैदेहीं राक्षसाधमः । वञ्चयित्वा तु पौलोमीमनुह्लादो यथा शचीम् ॥ ६ ॥ नचिरात्तं हनिष्यामि रावणं निशितैः शरैः । पौलोम्याः पितरं दृप्तं शतक्रतुरिवाहवे ॥ ७ ॥ एतस्मिन्नन्तरे चैव रजः समभिवर्तत । उष्णां तीव्रां सहस्रांशोश्छादयद्गगने प्रभाम् ॥ ८ ॥ दिशः पर्याकुलाश्चासन् रजसा तेन मूर्च्छता । चचाल च मही सर्वा सशैलवनकानना ॥ ९ ॥ ततो नगेन्द्रसंकाशैस्तीक्ष्णदंष्ट्रैर्महाबलैः । कृत्स्ना संछादिता भूमिरसङ्ख्येयैः प्लवङ्गमैः ॥ १० ॥ निमेषान्तरमात्रेण ततस्तैर्हरियूथपैः । कोटीशतपरीवारैः कामरूपिभिरावृता ॥ ११ ॥ नादेयैः पार्वतीयैश्च सामुद्रैश्च महाबलैः । हरिभिर्मेघनिर्ह्रादैरन्यैश्च वनचारिभिः ॥ १२ ॥ तरुणादित्यवर्णैश्च शशिगौरैश्च वानरैः । पद्मकेसरवर्णैश्च श्वेतैर्मेरुकृतालयैः ॥ १३ ॥ कोटीसहस्रैर्दशभिः श्रीमान् परिवृतस्तदा । वीरः शतवलिर्नाम वानरः प्रत्यदृश्यत ॥ १४ ॥

॥ ८ ॥ ९ ॥ अथ सेनासमुदायव्याप्तिमाह—तत इति । ततः रजोव्याप्त्यनन्तरम् ॥ १० ॥ निमेषेति । ततः सेनासमुदायव्याप्त्यनन्तरम् । नादेयैः

जहारेति । अत्रेन्द्रेणेप्सितां पौलोमीं तत्पितुः पुलोमस्यानुमत्या तामनुह्लादो जहार । इन्द्रस्त्वनुमन्तारं पुलोमं हत्वा ततः तां प्रत्यानीतवानिति पौराणिकी प्रसिद्धिरनुसन्धेया ॥ ६ ॥ ७ ॥ एतस्मिन्निति । एतस्मिन्नन्तरे रामसुग्रीवसंल्लापावसरे ॥ ८ ॥ मूर्च्छता व्याप्नुवता ॥ ९ ॥ ततः रजोव्याप्त्यनन्तरम् । अनेन श्लोकेन सेनासमुदायव्याप्तिरुच्यते ॥ १० ॥ ततः सेनासमुदायव्याप्त्यनन्तरम् ॥ ११ ॥ नादेयैः नदीतीरवनभवैः । "नद्यादिभ्यो ढक्" । पार्वतीयैः "पर्वताच्छः" । सामुद्रैः "तत आगतः" इत्यण् प्रत्ययः। अन्यैश्च वनचारिभिरावृतेति पूर्वेण सम्बन्धः ॥१२॥१३॥ वानरमात्रागमनमुक्त्वा इदानीं तत्तत्सङ्ख्याविशिष्ट

स०—शशिगौरैः चन्द्रवद्धवलैः । तस्यापि कलङ्कित्वात्तदपेक्षया धावल्यं वक्तुं श्वेतैरित्युक्तम् ॥ १३ ॥

नदीतीरवनभवैः । पार्वतीयैः पर्वतोत्पन्नैः । वनचारिभिः आवृतेति पूर्वेणान्वयः ॥ ११--१४ ॥ तत इति । तारायाः पिता सुषेणः ॥ १५ ॥ तथेति । रुमायाः पिता तारः ॥१६--२०॥ महाचलेति । कोटिभिः कोटिसंख्याकैः ॥ २१--२३ ॥ दरीमुखश्चेति । सुग्रीवं समुपस्थितः प्राप्तः ॥ २४ ॥

ततः काञ्चनशैलाभस्ताराया वीर्यवान् पिता । अनेकैर्दशसाहस्रैः कोटिभिः प्रत्यदृश्यत ॥१५॥ तथाऽपरेण कोटीनां सहस्रेण समन्वितः । पिता रुमायाः संप्राप्तः सुग्रीवश्वशुरो विभुः ॥ १६ ॥ पद्मकेसरसंकाशस्तरुणार्कनिभाननः । बुद्धिमान् वानरश्रेष्ठः सर्ववानरसत्तमः ॥ १७ ॥ अनीकैर्बहुसाहस्रैर्वानराणां समन्वितः । पिता हनुमतः श्रीमान् केसरी प्रत्यदृश्यत ॥ १८ ॥ गोलाङ्गूलमहाराजो गवाक्षो भीमविक्रमः । वृतः कोटिसहस्रेण वानराणामदृश्यत ॥ १९ ॥ ऋक्षाणां भीमवेगानां धूम्रः शत्रुनिबर्हणः । वृतः कोटिसहस्राभ्यां द्वाभ्यां समभिवर्तत ॥ २० ॥ महाचलनिभैर्घोरैः पनसो नाम यूथपः । आजगाम महावीर्यस्तिसृभिः कोटिभिर्वृतः ॥ २१ ॥ नीलाञ्जनचयाकारो नीलो नामाथ यूथपः । अदृश्यत महाकायः कोटिभिर्दशभिर्वृतः ॥ २२ ॥ ततः काञ्चनशैलाभो गवयो नाम यूथपः । आजगाम महावीर्यः कोटिभिः पञ्चभिर्वृतः ॥ २३ ॥ दरीमुखश्च बलवान् यूथपोऽभ्यमाययौ तदा । वृतः कोटिसहस्रेण सुग्रीवं समुपस्थितः ॥ २४ ॥ मैन्दश्च द्विविदश्चोभावश्विपुत्रौ महाबलौ । कोटिकोटिसहस्रेण वानराणामदृश्यताम् ॥ २५ ॥ गजश्च बलवान् वीरः कोटिभिस्तिसृभिर्वृतः । आजगाम महातेजाः सुग्रीवस्य समीपतः ॥ २६ ॥ ऋक्षराजो महातेजा जाम्बवान्नाम नामतः । कोटिभिर्दशभिः प्राप्तः सुग्रीवस्य वशे स्थितः ॥ २७ ॥ रुमणवान्नाम विक्रान्तो वानरो वानरेश्वरम् । आययौ बलवांस्तूर्णं कोटीशतसमावृतः ॥ २८ ॥

रामानु०—सुग्रीवं समुपस्थितमिति पाठः ॥ २४ ॥ मैन्दश्चेति । अदृश्यताम् अदृश्येताम् ॥२५--२७॥ रुमण्वान्नाम विक्रान्तो वानरो वानरेश्वरमाययौ ॥२८--३०॥ कपिवरागमनमाह—कोटीत्यादिना ॥ १४ ॥ तत इति । तारायाः पिता सुषेणः ॥ १५ ॥ रुमायाः पिता तारः ॥ १६--२० ॥ महाचलेति । तिसृभिः कोटिभिरुप

तत इति । ताराद्युतिः नक्षत्रतुल्यप्रभः । तारः रुमायाः पितुरन्योऽयम् ॥ ३१ ॥ रामानु० – ततस्ताराद्युतिस्तारो हरिर्भीमपराक्रमः इति पाठः ॥ ३१ ॥ ३२–३४ ॥ कैलासेति । कोटिसहस्रेणोपलक्षितैर्वानरैर्वृत इति संबन्धः ॥ ३५ ॥ नल इति । कोटीशतेनेत्याद्युपलक्षणे तृतीया ॥३६–३९॥ आगता इति । पृथिव्यां

ततः कोटिसहस्राणां सहस्रेण शतेन च । पृष्ठतोऽनुगतः प्राप्तो हरिभिर्गन्धमादनः ॥ २९ ॥ ततः पद्मसहस्रेण वृतः शङ्कुशतेन च । युवराजोऽङ्गदः प्राप्तः पितृतुल्यपराक्रमः ॥ ३० ॥ ततस्ताराद्युतिस्तारो हरिर्भीमपराक्रमः । पञ्चभिर्हरिकोटीभिर्दूरतः प्रत्यदृश्यत ॥ ३१ ॥ इन्द्रजानुः कपिर्वीरो यूथपः प्रत्यदृश्यत । एकादशानां कोटीनामीश्वरस्तैश्च संवृतः ॥ ३२ ॥ ततो रम्भस्त्वनुप्राप्तस्तरुणादित्यसन्निभः । अयुतेनावृतश्चैव सहस्रेण शतेन च ॥३३॥ ततो यूथपतिर्वीरो दुर्मुखो नाम वानरः । प्रत्यदृश्यत कोटिभ्यां द्वाभ्यां परिवृतो बली ॥ ३४ ॥ कैलासशिखराकारैर्वानरैर्भीमविक्रमैः । वृतः कोटिसहस्रेण हनुमान् प्रत्यदृश्यत ॥ ३५ ॥ नलश्चापि महावीर्यः संवृतो द्रुमवासिभिः । कोटीशतेन संप्राप्तः सहस्रेण शतेन च ॥३६॥ ततो दधिमुखः श्रीमान् कोटिभिर्दशभिर्वृतः । संप्राप्तोऽभिमतस्तस्य सुग्रीवस्य महात्मनः॥३७॥ शरभः कुमुदो वह्निर्वानरो रंह एव च । एते चान्ये च बहवो वानराः कामरूपिणः॥३८॥ आवृत्य पृथिवीं सर्वां पर्वतांश्च वनानि च। यूथपाः समनुप्राप्तास्तेषां सङ्ख्या न विद्यते॥३९॥ आगताश्च विशिष्टाश्च पृथिव्यां सर्ववानराः ॥४०॥ आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः । अभ्यवर्तन्त सुग्रीवं सूर्यमभ्रगणा इव॥४१

विशिष्टाश्च अप्राकृताः, देवयोनय इत्यर्थः।सर्ववानराश्च प्राकृतवानराश्च आगता एव॥४०॥आप्लवन्त इति । आप्लवन्तः लङ्घयन्तः।अभ्रगणाः मेघगणाः॥४१॥

लक्षितैर्महाचलनिभैर्वानरैर्वृत इति सम्बन्धः ॥ २१–३० ॥ तत इति । तारः रुमापितुरन्यः कश्चित् ॥ ३१ ॥ इन्द्रेति । तैः एकादशकोटिसङ्ख्याकैः कपिभिरित्यर्थः ॥ ३२–३४ ॥ कैलासेति । कोटिसहस्रेणोपलक्षितैः वानरैर्वृत इति सम्बन्धः ॥ ३५ ॥ कोटीशतेन सहस्रेण शतेन चेत्युपलक्षणे तृतीया ॥३६–३९॥ आगता इति । पृथिव्यां विशिष्टाश्च सर्वे वानराः प्राकृतवानराश्च ॥ ४० ॥ आप्लवन्तः आ समन्तात् प्लवन्तः लङ्घयन्तः ॥ ४१ ॥

रामानु०--सूर्यमभ्रगणा इवेति पाठः ॥ ४१ ॥ कुर्वाणा इति । न्यवेदयन् आत्मानमिति शेषः ॥ ४२ ॥ अपर इति । संयम्य वस्त्रादिकं संकुचितं कृत्वा । सन्नम्येति च पाठः ॥ ४३ ॥ सुग्रीवः प्राञ्जलिस्त्वरितः सन् सर्वान् रामे निवेदयित्वा स्थितः तानब्रवीच्च । तदेवाह--यथेति । भो वानरेन्द्राः ! पर्वतादिषु स्वानि बलानि यथासुखं निवेशयित्वा । बलज्ञो यूथपः । स्वं बलं प्रतिपत्तुं ज्ञातुम् ईष्टे ईशो भवेत् । लिङर्थे लट् । यद्वा रामे निवेदयित्वा तदधीनं कृत्वा

कुर्वाणा बहुशब्दांश्च प्रहृष्टा बाहुशालिनः । शिरोभिर्वानरेन्द्राय सुग्रीवाय न्यवेदयन् ॥ ४२ ॥ अपरे वानरश्रेष्ठाः संयम्य च यथोचितम् । सुग्रीवेण समागम्य स्थिताः प्राञ्जलयस्तदा ॥४३॥ सुग्रीवस्त्वरितो रामे सर्वांस्तान् वानरर्षभान् । निवेदयित्वा धर्मज्ञः स्थितः प्राञ्जलिरब्रवीत् ॥ ४४ ॥ यथासुखं पर्वतनिर्झरेषु वनेषु सर्वेषु च वानरेन्द्राः । निवेशयित्वा विधिवद्बलानि बलं बलज्ञः प्रतिपत्तुमीष्टे ॥ ४५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

अथ राजा समृद्धार्थः सुग्रीवः प्लवगेश्वरः । उवाच नरशार्दूलं रामं परबलार्दनम् ॥ १ ॥
आगता विनिविष्टाश्च बलिनः कामरूपिणः । वानरा वारणेन्द्राभा ये मद्विषयवासिनः ॥ २ ॥

अब्रवीत् तत्तत्स्वरूपमब्रवीत् । यथेति । वानरेन्द्र इति च पाठः । सुग्रीवः बलं प्रतिपत्तुमीष्टे स्म ॥४४॥ ४५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥ अथ सीतान्वेषणाय पूर्वस्यां दिशि सुग्रीवेण विनतप्रेषणं चत्वारिंशे--अथ राजेत्यादि॥१॥ आगता इति । मद्विषयवासिनः मदवगतदेशवासिनः। "विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि" इत्यमरः । यद्वा मद्राज्य

सुग्रीवाय न्यवेदयन्, आत्मानमिति शेषः ॥ ४२ ॥ संयम्य वस्त्रादिकं सङ्कुचितं कृत्वा ॥ ४३ ॥ सुग्रीव इति । सुग्रीवः प्राञ्जलिः त्वरितः सर्वान्वानरर्षभान् रामे निवेदयित्वा स्थितः तानब्रवीत्, भो वानरेन्द्राः ! पर्वतनिर्झरेषु वनेषु स्वानि बलानि यथासुखं निवेशयित्वा बलज्ञो यूथपः स्वं स्वं बलं प्रतिपत्तुं ज्ञातुमीष्टे ईशो भवेत् । व्यत्ययेन लिङर्थे लट् ॥ ४४ ॥ ४५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायाम् एकोनचत्वारिंशः सर्गः ॥ ३९ ॥ अथ सुग्रीवो रामाज्ञापुरस्सरमेव सीतान्वेषणं कारयितुं तदनुज्ञां प्रार्थयते--अथेति ॥ १ ॥ मद्विषयवासिनः मदवगत

वासिनः ॥ २ ॥ ३ ॥ ख्यातकर्मापदानाः, कर्म दूरलङ्घनादिक्रिया, अपदानं पूर्ववृत्त विस्मयनीयशत्रुनिरसनं, ख्याते कर्मापदाने येषां ते तथा। कोटच ग्रश इति बहुसंख्योपलक्षणम् ॥ ४ ॥ ५ ॥ गुरुहिते स्वामिहिते ॥ ६ ॥ त इति । बहुसाहस्रैर्भीमविक्रमैरनीकैः सहिताः । त इम इत्यङ्गुल्या निर्देशः ।

त इमे बहुविक्रान्तैर्हरिभिर्भीमविक्रमैः । आगता वानरा घोरा दैत्यदानवसन्निभाः ॥ ३ ॥ ख्यातकर्मापदानाश्च बलवन्तो जितक्लमाः । पराक्रमेषु विख्याता व्यवसायेषु चोत्तमाः ॥४॥ पृथिव्यम्बुचरा राम नानानगनिवासिनः । कोटचग्रश इमे प्राप्ता वानरास्तव किङ्कराः ॥ ५ ॥ निदेशवर्तिनः सर्वे सर्वे गुरुहिते रताः । अभिप्रेतमनुष्ठातुं तव शक्ष्यन्त्यरिन्दम ॥६॥ त इमे बहुसाहस्रैरनीकैर्भीमविक्रमैः । यन्मन्यसे नरव्याघ्र प्राप्तकालं तदुच्यताम् । त्वत्सैन्यं त्वद्वशे युक्तमाज्ञापयितुमर्हसि ॥ ७ ॥ काममेषामिदं कार्यं विदितं मम तत्त्वतः । तथापि तु यथातत्त्वमाज्ञापयितु मर्हसि ॥ ८ ॥ इति ब्रुवाणं सुग्रीवं रामो दशरथात्मजः । बाहुभ्यां संपरिष्वज्य इदं वचनमब्रवीत् ॥ ९ ॥ ज्ञायतां मम वैदेही यदि जीवति वा न वा । स च देशो महाप्राज्ञ यस्मिन् वसति रावणः ॥ १० ॥ अभिगम्य तु वैदेहीं निलयं रावणस्य च । प्राप्तकालं विधास्यामि तस्मिन् काले सह त्वया ॥ ११ ॥ नाहमस्मिन् प्रभुः कार्ये वानरेश न लक्ष्मणः । त्वमस्य हेतुः कार्यस्य प्रभुश्च प्लवगेश्वर ॥ १२ ॥

प्राप्तकालं कालोचितम् ॥ ७ ॥ एषां कार्यम् एभिः कर्तव्यम् । मम विदितं मया विदितम् ॥ ८–१२ ॥

देशवासिनः । यद्वा मद्राज्यवासिनः ॥ २ ॥ ३ ॥ ख्यातकर्मापदानाः, अत्र कर्मशब्दः अतिदूरलङ्घनक्रियावाची । अपदानशब्दः पूर्ववृत्तादिविस्मयनीयवीर्यं शत्रुनिरसनरूपक्रियावाची । कोटचग्रश इत्येतद्बहुसङ्ख्योपलक्षणम् ॥ ४ ॥ ५ ॥ निदेशेति । गुरुहिते स्वामिहिते । अभिप्रेतमभिलषितं कार्यम् ॥ ६ ॥ प्राप्तकालं कालोचितम् ॥ ७ ॥ काममिति । एषां कार्यम् एभिः कर्तव्यं मम मया विदितम्, तथापि त्वमाज्ञापयितुमर्हसि भवतः सर्वस्वामित्वादिति भावः ॥ ८–११ ॥ नाह

स०–रावणनिवास उपलब्धश्चेत्तत्र किं कार्यम्, किं रावणो हन्तव्यः उतेहानेतव्यः ? इत्यत आह–अधिगम्येति । अधिगम्य विज्ञाय । अनन्तरं तत्कालोचितं विधास्यामि ॥-११ ॥

सुहृद्विनीय इति च पाठः ॥१४–१६॥ सोमेत्यादि। देशेति। कार्याकार्यविनिश्चये विषये। देशकालनयैः देशोचितनीतिभिः कालोचितनीतिभिश्चेत्यर्थः। देशकालानुगुणनयप्रवर्तनं कर्तव्यमित्यर्थः॥१७–१९॥ नदीमित्यादि रजताकरामित्यन्तमेकं वाक्यम्। प्राप्येति शेषः। ततस्ततः सीतां मृगयद्भिर्भवद्भिः

त्वमेवाज्ञापय विभो मम कार्यविनिश्चयम्। त्वं हि जानासि यत्कार्यं मम वीर न संशयः ॥ १३ ॥ सुहृद्द्वितीयो विक्रान्तः प्राज्ञः कालविशेषवित्। भवानस्मद्धिते युक्तः सुकृतार्थोऽर्थवित्तमः ॥१४॥ एवमुक्तस्तु सुग्रीवो विनतं नाम यूथपम्। अब्रवीद्रामसान्निध्ये लक्ष्मणस्य च धीमतः ॥ १५ ॥ शैलाभं मेघनिर्घोषमूर्जितं प्लवगेश्वरः ॥ १६ ॥ सोमसूर्यात्मजैः सार्धं वानरैर्वानरोत्तम। देशकालनयैर्युक्तः कार्याकार्यविनिश्चये ॥ १७ ॥ वृतः शतसहस्रेण वानराणां तरस्विनाम्। अधिगच्छ दिशं पूर्वां सशैलवनकाननाम् ॥ १८ ॥ तत्र सीतां च वैदेहीं निलयं रावणस्य च। मार्गध्वं गिरिशृङ्गेषु वनेषु च नदीषु च ॥ १९ ॥ नदीं भागीरथीं रम्यां सरयूं कौशिकीं तथा। कालिन्दीं यमुनां रम्यां यामुनं च महागिरिम् ॥ २० ॥ सरस्वतीं च सिन्धुं च शोणं मणिनिभोदकम्। महीं कालमहीं चैव शैलकाननशोभिताम् ॥ २१ ॥ ब्रह्ममालान्विदेहांश्च मालवान् काशिकोसलान्। मागधांश्च महाग्रामान् पुण्ड्रान्वङ्गांस्तथैव च। पत्तनं कोशकाराणां भूमिं च रजताकराम् ॥ २२ ॥

भागीरथ्यादिकं प्राप्य एतत्पूर्वोक्तं सर्वं विचेतव्यमिति संबन्धः। अत्रेदमवधेयम्—शरावती नाम काचिन्नदी हिमवद्विन्ध्यमध्यदेशे वलयाकारेण प्रवहति। तदपेक्षया प्राचीदिगिदानीं विचेयत्वेनोच्यते, नतु किष्किन्धापेक्षया नापि मेर्वपेक्षयेति। यामुनं महागिरिं यमुनासंबन्धिनं पर्वतम् ॥ २० ॥ मह्यादयो

मिति। अस्मिन् कार्ये वानरप्रेषणरूपकार्ये। सुहृद्द्वितीयः सुहृल्लक्ष्मणापेक्षया द्वितीयत्वम्। नदीं भागीरथीमित्यारभ्य भूमिं च रजताकरामित्यन्तेन प्राप्येति शेषः। ततः सीतां मृगयद्भिर्भवद्भिः भागीरथ्यादिकं प्राप्य एतत्पूर्वोक्तं सर्वं विचेतव्यमिति सम्बन्धः। ननु मेरोः पूर्वदिगवस्थितोदयाचलपर्यन्तमन्वेष्टुं प्रेषितान् वानरान् प्रति मेरोर्दक्षिणदिगवस्थितभागीरथ्यादिनदीपर्वताद्यन्वेषणविधानं कथमुपपद्यत इति चेत्, हेमाचलविन्ध्यमध्यदेशवर्त्यार्यावर्तापेक्षया प्राच्यादिविभागो विवक्षितः, नतु मेर्वपेक्षया स्वावस्थितमाल्यवदपेक्षया वेति न दोषः ॥ १२–२० ॥ महीकालमह्यौ नद्यौ ॥ २१ ॥ कोशकाराणां स्वर्णकाराणाम् ॥२२॥२३॥

देशविशेषाः । मागधान् मगधदेशान् । महाग्रामान् महाग्रामयुक्तान् । कोशकाराणां राजविशेषाणाम् ॥२१-२३॥ समुद्रमित्यादि । समुद्रम् अवगाढान् प्रविष्टान् पर्वतान् । मन्दरस्य आयतां कोटिं च संश्रिताः ये कर्णप्रावरणादयः एतेषामालयाः सर्वे विचेया इति संबन्धः । काननौकस इति संबोधनम् ।

सर्वमेतद्विचेतव्यं मार्गयद्भिस्ततस्ततः । रामस्य दयितां भार्यां सीतां दशरथस्नुषाम् ॥२३॥ समुद्रमवगाढांश्च पर्वतान् पत्तनानि च । मन्दरस्य च ये कोटिं संश्रिताः केचिदायताम् ॥ २४ ॥ कर्णप्रावरणाश्चैव तथा चाप्योष्ठकर्णकाः । घोरलोहमुखाश्चैव जवनाश्चैकपादकाः ॥ २५ ॥ अक्षया बलवन्तश्च पुरुषाः पुरुषादकाः । किराताः कर्णचूडाश्च हेमाङ्गाः प्रियदर्शनाः ॥ २६ ॥ आममीनाशनास्तत्र किराता द्वीपवासिनः । अन्तर्जलचरा घोरा नरव्याघ्रा इति श्रुताः ॥ २७ ॥ एतेषामालयाः सर्वे विचेयाः काननौकसः ॥ २८ ॥ गिरिभिर्ये च गम्यन्ते प्लवनेन प्लवेन च । रत्नवन्तं यवद्वीपं सप्तराज्योपशोभितम् ॥२९॥ सुवर्णरूप्यकं चैव सुवर्णाकरमण्डितम् । यवद्वीपमतिक्रम्य शिशिरो नाम पर्वतः ॥ ३० ॥ दिवं स्पृशति शृङ्गेण देवदानवसेवितः । एतेषां गिरिदुर्गेषु प्रपातेषु वनेषु च । मार्गध्वं सहिताः सर्वे रामपत्नीं यशस्विनीम् ॥ ३१ ॥

कर्णप्रावरणाः आच्छादितकर्णाः । निष्कर्णा इत्यर्थः । ओष्ठे कर्णौ येषां ते ओष्ठकर्णकाः । लोहमुखाः लोहतुल्यमुखाः । कर्णेषु चूडा येषां ते कर्णचूडाः । आममीनाशना इति पूर्वोक्तकिराता व्यावर्त्यन्ते । द्वीपवासिनः द्वीपान्तरेपि वसन्तो मन्दरेपि वसन्तीत्यर्थः । नरव्याघ्राः अर्धनररूपा व्याघ्ररूपाश्चेत्यर्थः ॥२४-२८॥ एवं जम्बूद्वीपान्वेषणं विधाय द्वीपान्तरान्वेषणं विधत्ते—गिरिभिरित्यादि रामपत्नीं यशस्विनीमित्यन्तमेकं वाक्यम् । ये द्वीपाः गिरिभिर्गम्यन्ते ।

समुद्रमवगाढान् प्रविष्टान् पर्वतान् । पट्टणानि वनानि मन्दरस्य कोटिं च ये संश्रिताः एतेषामालयाः सर्वे विचेतव्या इति सम्बन्धः । काननौकस इति सम्बोधनम् । कामरूपिण इति च पाठः । नरव्याघ्राः नराश्च ते व्याघ्राश्च, नररूपा व्याघ्ररूपा इत्यर्थः । कर्णमेव प्रावरणं येषां ते कर्णप्रावरणाः । पर्णचोलाश्च इति पाठः । पर्णचोलाः पर्णकृतकञ्चुकाः । आममीनाशनाः अपक्वमत्स्याशनाः । किराता अल्पतनवः । "स्यात् किरातस्तु भूनिम्बे म्लेच्छे चाल्पतनावपि" इति विश्वः ॥ २४-२८ ॥ गिरिभिर्ये च गम्यन्ते इत्यारभ्य रामपत्नीं यशस्विनीमित्यन्तमेकं वाक्यम् । प्लवनेन लङ्घनेन च ये गम्यन्ते, प्लवेन उडुपेन च ये गम्यन्ते । यवद्वीपं यवकोटिपर्युपलक्षितद्वीपम्,

प्लवनेन लङ्घनेन च ये गम्यन्ते । प्लवेन उडुपेन ये गम्यन्ते । तान् द्वीपान् । सप्तराज्योपशोभितम् सप्तखण्डोपशोभितम् । यवद्वीपं च गच्छत । तं यव द्वीपमतिक्रम्य यः शिशिरो नाम पर्वतः शृङ्गेण दिवं स्पृशति तं गच्छत । एतेषां द्वीपादीनां गिरिदुर्गेषु वनेषु च । प्रपातेषु निर्झरेषु च । रामपत्नीं मार्गध्व मिति संबन्धः । यवद्वीपसुवर्णरूप्यकावपि लङ्काद्वीपवत् समुद्रान्तर्वर्तिनौ द्वीपविशेषौ॥२९-३१॥ एवं जम्बूद्वीपं लवणसमुद्रं चोक्त्वा प्लक्षद्वीपप्रदेशानाह—

ततो रक्तजलं शोणमगाधं शीघ्रगामिनम् । गत्वा पारं समुद्रस्य सिद्धचारणसेवितम् ॥ ३२ ॥ तस्य तीर्थेषु रम्येषु विचित्रेषु वनेषु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३३ ॥ पर्वतप्रभवा नद्यः सुरम्या बहुनिष्कुटाः । मार्गितव्या दरीमन्तः पर्वताश्च वनानि च ॥ ३४ ॥ ततः समुद्रद्वीपांश्च सुभीमान् द्रष्टुमर्हथ ॥ ३५ ॥ ऊर्मिमन्तं समुद्रं च क्रोशन्तमनिलोद्धतम् ॥ ३६ ॥ तत्रासुरा महाकायाश्छायां गृह्णन्ति नित्यशः । ब्रह्मणा समनुज्ञाता दीर्घकालं बुभुक्षिताः ॥३७॥ तं कालमेघप्रतिमं महोरगनिषेवितम् । अभिगम्य महानादं तीर्थेनैव महोदधिम् ॥३८॥

तत इत्यादिना । समुद्रस्य पारं लवणसमुद्रापरपारस्थम् । रक्तजलम् अगाधं शीघ्रगामिनं सिद्धचारणसेवितम् । शोणं शोणाख्यं नदं गत्वा । तस्य तीर्थेषु अवतारेषु वनेषु च वैदेह्या सह रावणो मार्गितव्यः । केवलं रावणं केवलं सीतां च दृष्ट्वा नागन्तव्यम्, रावणहननाय सीतानयनाय च उभावपि दृष्ट्वा आगन्तव्यमिति भावः ॥ ३२ ॥ ३३ ॥ प्लक्षद्वीपपर्वतादीनाह—पर्वतेति । निष्कुटा उद्यानविशेषाः ॥ ३४ ॥ अथेक्षुसमुद्रद्वीपानाह—तत इति ॥ ३५ ॥ इक्षुसमुद्रविशेषं वक्तुमाह—ऊर्मिमन्तमित्यर्धम् । ऊर्मिमन्तं समुद्रम्, इक्षुसमुद्रमित्यर्थः । अभिगच्छतेति शेषः । "लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम्" इति समुद्रक्रमः ॥ ३६ ॥ इक्षुसमुद्रस्य दुर्गमत्वं दर्शयति—तत्रेति । तत्र इक्षुसमुद्रे ॥ ३७ ॥ तमिति । तीर्थेनाभिगम्य उपायेनाभिगम्य ।

अस्तीति शेषः । सप्तराज्योपशोभितं सुवर्णरूप्यकं च यवद्वीपं चातिक्रम्य यः शिशिरो नाम पर्वतः शृङ्गेण दिवं स्पृशति । एतेषां गिरिदुर्गेषु वनेषु च रामपत्नीं मार्गध्वमिति सम्बन्धः । यवद्वीपसुवर्णरूप्यकावपि लङ्काद्वीपादिवत्समुद्रान्तर्वर्तिद्वीपविशेषौ ॥ २९-३१ ॥ तत इत्यादिना पर्वतांश्च वनानि च इत्यन्तेन प्लक्षद्वीप प्रदेशा उच्यन्ते । समुद्रस्य पारं लवणसमुद्रपारस्थम् । रक्तजलमगाधम् । शीघ्रगामिनं सिद्धचारणसेवितं शोणं शोणाख्यं नदं गत्वा तस्य तीर्थेषु अवतरणप्रदेशेषु वनेषु च वैदेह्या सह रावणो मार्गितव्य इति सम्बन्धः । ततो नित्यजलं भीममिति पाठे नित्यजलमिति तद्दस्य संज्ञा ॥ ३२-३४ ॥ समुद्रद्वीपान् इक्षुसमुद्रस्थित द्वीपान् ॥ ३५ ॥ ऊर्मिमन्तम् इक्षुसमुद्रम् । तत्र इक्षुसमुद्रे ॥ ३६ ॥ ३७ ॥ तम् इक्षुसमुद्रम् । तीर्थेन उपायेनाधिगम्य । "तीर्थं मन्त्राद्युपाये च" इति निघण्टुः ।

" तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने । पात्रोपायावतरणेषु " इति वैजयन्ती । छायाग्राहिपरिहारेण गन्तव्यमित्यर्थः । यद्वा तीर्थेनावतरणेन गन्तव्यं नान्येन । तेन छायाग्राहिपरिहारो भविष्यतीति भावः । ततो गताः इक्षुसमुद्रान्निर्गताः । तां कूटशाल्मलीं लोहितं नाम सागरं मधुसमुद्रं च द्रक्ष्यथ । गृहं चेति । तत्र शाल्मलिद्वीपे ॥ ३८-४० ॥ तत्र मधुसमुद्रे । सूर्यस्योदयनं प्रतीत्यतः परं निहता इत्यर्थम् । ततः परम्

ततो रक्तजलं भीमं लोहितं नाम सागरम् । गता द्रक्ष्यथ तां चैव बृहतीं कूटशाल्मलीम् ॥ ३९ ॥ गृहं च वैनतेयस्य नानारत्नविभूषितम् । तत्र कैलाससंकाशं विहितं विश्वकर्मणा ॥ ४० ॥ तत्र शैलनिभा भीमा मन्देहा नाम राक्षसाः । शैलशृङ्गेषु लम्बन्ते नानारूपा भयावहाः ॥ ४१ ॥ ते पतन्ति जले नित्यं सूर्यस्योदयनं प्रति । निहता ब्रह्मतेजोभिरहन्यहनि राक्षसाः । अभितप्ताश्च सूर्येण लम्बन्ते स्म पुनः पुनः ॥ ४२ ॥ ततः पाण्डरमेघाभं क्षीरोदं नाम सागरम् । गता द्रक्ष्यथ दुर्धर्षा मुक्ताहारमिवोर्मिभिः ॥ ४३ ॥ तस्य मध्ये महान् श्वेत ऋषभो नाम पर्वतः । दिव्यगन्धैः कुसुमितै राजतैश्च नगैर्वृतः ॥ ४४ ॥

अभितप्ताश्चेत्यर्धम् । लम्बन्ते वर्तन्त इत्यर्थः । ब्रह्मतेजोभिः गायत्रीप्रभावैः ॥ ४१ ॥ ४२ ॥ ततः पाण्डरेति । अत्र मधुसमुद्रानन्तरं सर्पिर्दधिसमुद्रयोः कुशक्रौञ्चद्वीपयोश्च वक्तव्यत्वेऽपि तान् विहाय क्षीरोदप्राप्त्यभिधानं तदुभयप्राप्तिमन्तरेण क्षीरोदप्राप्तेरसंभवात् । अतः अनुक्तावपि तावुक्तावेव समुद्रौ द्वीपौ चेति बोध्यम् । यद्वा लवणसमुद्रं तन्मध्यद्वीपांश्चोक्त्वा प्लक्षद्वीपशाल्मलिद्वीपकुशद्वीपक्रौञ्चद्वीपान् इक्षुसुरासर्पिर्दधिसमुद्रांश्च तन्त्रेण दर्शयति " ततः समुद्रद्वीपांश्च सुभीमान् द्रष्टुमर्हथ " इति । ततः ' ऊर्मिमन्तम् ' इत्यादिना इक्षुसमुद्रस्य विशेषणमुक्त्वा ' ततो रक्तजलम् ' इत्यादिना सुरासमुद्रस्य स्वरूपमुक्त्वा ततः शाल्मलिद्वीपवृत्तान्तं प्रदर्श्य अन्यत्र विशेषाभावात् क्षीरसमुद्रगमनं निर्दिशति--ततः पाण्डरमेघाभमित्यादिना । ऊर्मिभिर्मुक्ताहारं मुक्ताहारयुक्तमिव स्थितम् ॥ ४३ ॥ ४४ ॥



उपायेन गमनं नाम छायाग्राहिपरिहारेण गमनम् ॥ ३८ ॥ ततो गताः ततः इक्षुसमुद्राद्गताः निर्गताः। तां कूटशाल्मलिं लोहितं नाम सागरं मधुसमुद्रं च द्रक्ष्यथेति सम्बन्धः ॥ ३९ ॥ तत्र शाल्मलिद्वीपे ॥ ४० ॥ तत्र मधुसमुद्रे ॥ ४१ ॥ निहता इति । ब्रह्मतेजोभिः गायत्रीप्रभावैः ॥ टी०—ब्रह्मतेजोभिर्गायत्रीप्रभावैः । अत्र " रक्षांऽसि ह वा पुरोऽनुवाके " इत्यनुवाकार्थोऽनुसन्धेयः ॥ ४२ ॥ ततः पाण्डरमेघाभं क्षीरोदं नाम सागरम् इति । ' लवणेक्षुसुरासर्पिर्दधिदुग्धजलैस्समम् ' इत्युक्तप्रक्रियया मधुसमुद्रानन्तरं

सरश्चेति। नाम्ना सुदर्शनं सर इत्यन्वयः ॥४५॥ रामानु०—सरश्चेति। नाम्ना सुदर्शनं नाम राजहंससमाकुलमिति पाठः ॥ ४५ ॥ ४६ ॥ क्षीरोदमिति । जलोदं शुद्धजलसमुद्रम् ॥ ४७ ॥ रामानु०—जलोदं सागरश्रेष्ठमिति पाठः। घृतोदं सागरश्रेष्ठमिति पाठस्तु लेखकप्रमादकृतः ॥ ४७ ॥ तत्र शुद्धोदके । कृतं निक्षिप्तम् । कोपजम् और्व



सरश्च राजतैः पद्मैर्ज्वलितैर्हैमकेसरैः। नाम्ना सुदर्शनं नाम राजहंसैः समाकुलम् ॥ ४५ ॥ विबुधाश्चारणा यक्षाः किन्नराः साप्सरोगणाः। हृष्टाः समभिगच्छन्ति नलिनीं तां रिरंसवः ॥ ४६ ॥ क्षीरोदं समतिक्रम्य ततो द्रक्ष्यथ वानराः। जलोदं सागरश्रेष्ठं सर्वभूतभयावहम् ॥ ४७ ॥ तत्र तत्कोपजं तेजः कृतं हयमुखं महत्। अस्याहुस्तन्महावेगमोदनं सचराचरम् ॥४८॥ तत्र विक्रोशतां नादो भूतानां सागरौकसाम्। श्रूयते च समर्थानां दृष्ट्वा तद्वडवामुखम् ॥ ४९ ॥ स्वादूदस्योत्तरे देशे योजनानि त्रयोदश। जातरूपशिलो नाम महान् कनकपर्वतः॥ ५० ॥ तत्र चन्द्रप्रतीकाशं पन्नगं धरणीधरम्। पद्मपत्रविशालाक्षं ततो द्रक्ष्यथ वानराः ॥ ५१ ॥

कोपजम्। हयमुखं तत्प्रसिद्धम् महत्तेजः, वर्तत इति शेषः। अस्य तेजसः। सचराचरं महावेगम् तत्, जलमिति शेषः। ओदनमाहुः, संहारवेलायामिन्धनमाहुरित्यर्थः ॥ ४८ ॥ तत्रेति। समर्थानामपि वडवामुखं तत्तेजो दृष्ट्वा विक्रोशतां नादः श्रूयते ॥ ४९ ॥ स्वादूदस्य शुद्धजलसमुद्रस्य । उत्तरे देशे अपरे पारे ॥५०–५३॥ रामानु०—स्वादूदस्योत्तरे देशे इति पाठः ॥ ५० ॥ तत्र चन्द्रप्रतीकाशं पन्नगं धरणीधरम्। पद्मपत्रविशालाक्षं ततो द्रक्ष्यथ वानराः ॥ इति पाठः ॥५१॥ सर्पिर्दधिसमुद्रान्वेषणे वक्तव्ये, तौ विहाय क्षीरोदप्राप्तेरभिधानात्तदुभयप्राप्तिमन्तरेण क्षीरोदप्राप्तेरसम्भवात्तदुभयप्राप्तिरनुक्ताप्युक्तेत्यवगन्तव्या ॥ ४३–४६ ॥ जलोदं शुद्धोदकम् ॥ ४७ ॥ कोपजम् और्वकोपजम्। हयमुखं तन्महत्तेजः। तत्र शुद्धोदके। कृतं निक्षिप्तमिति सम्बन्धः। हयमुखं कृतं तत्तेजः तत्र वर्तत इति वा। अस्य तेजसः सचराचरं तद्, जलमिति शेषः। ओदनमाहुः संहारवेलायामिन्धनमाहुरित्यर्थः ॥ ४८ ॥ श्रूयते च समर्थानामित्यत्र चकारोऽप्यर्थः ॥ ४९–५३ ॥

स०—तत्कोपजम्। तच्छब्देन बुद्धिस्थ और्वः परामृश्यते। उक्तं च भारते आदिपर्वणि और्वे—"ततस्तत्कोपजं तात और्वाग्निं वरुणालये। उत्ससर्ज स चैवाप उपभुङ्क्ते महोदधौ। महद्धयशिरो भूत्वा यत्तं वेदविदो विदुः। तमग्निमुद्वमन् वक्त्रात्पिबत्यापो महोदधौ ॥" इति। अस्य तेजसः। सचराचरं जगत् ओदनं वदन्ति, ज्ञानिन इति शेषः। चराचरमोदनमिति चराचरात्तृत्वकथनेनास्य तेजसो भगवद्रूपत्वं प्रतीयते। "अत्ता चराचरग्रहणात्" इति सूत्रात्। तथा आचार्यैरपि—"अश्वं नत्वा वारवन्तं वन्द्याः" इति ऋचि "वारवान् वडवामुखः" इत्यादिना स्पष्टमुक्तेश्च ॥ ४८ ॥ तद्वडवामुखं दृष्ट्वा स्थितानामसमर्थानां तत्प्राप्य जीवितुं सामर्थ्यरहितानां सागरौकसां नादः आर्तस्वरः श्रूयते च ॥ ४९ ॥

इत्यर्थः ॥ ५४–५६ ॥ तत्र उदयपर्वत
पूर्वस्यामिति । पूर्वस्यां दिशि तन्निर्माणं कृतम् । पूर्वदिगवधित्वेन तालरूपः केतुः कल्पित इत्यर्थः ॥ ५४–५६ ॥ तत्र उदयपर्वत
कोटौ ॥ ५७ ॥ तत्र पूर्वमिति । विष्णुः त्रिविक्रमे त्रिविक्रमप्रस्तावे । तत्र सौमनसशृङ्गे । पूर्वं पदं कृत्वा द्वितीयं पदं मेरोः पश्चिमदिगवधिभूतस्य सावर्णि
मेरोः शिखरे चकार । पूर्वपश्चिमदिगवधिभूतयोरुदयाचलसावर्णिमेर्वोर्विष्णोः पदविन्यासः बलेः कृत्स्नराज्यग्रहणार्थः । भूमध्यस्थमेरौ पदविन्यासे

आसीनं पर्वतस्याग्रे सर्वभूतनमस्कृतम् । सहस्रशिरसं देवमनन्तं नीलवाससम् ॥५२॥ त्रिशिराः काञ्चनः केतुस्ताल
स्तस्य महात्मनः । स्थापितः पर्वतस्याग्रे विराजति सवेदिकः ॥ ५३ ॥ पूर्वस्यां दिशि निर्माणं कृतं तत् त्रिदशेश्वरैः
॥ ५४ ॥ ततः परं हेममयः श्रीमानुदयपर्वतः । तस्य कोटिर्दिवं स्पृष्ट्वा शतयोजनमायता ॥ ५५ ॥ जातरूपमयी
दिव्या विराजति सवेदिका । सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः । जातरूपमयैर्दिव्यैः शोभते सूर्यसन्निभैः
॥ ५६ ॥ तत्र योजनविस्तारमुच्छ्रितं दशयोजनम् । शृङ्गं सौमनसं नाम जातरूपमयं ध्रुवम् ॥ ५७ ॥ तत्र पूर्वं
पदं कृत्वा पुरा विष्णुस्त्रिविक्रमे । द्वितीयं शिखरे मेरोश्चकार पुरुषोत्तमः ॥ ५८ ॥ उत्तरेण परिक्रम्य जम्बूद्वीपं
दिवाकरः । दृश्यो भवति भूयिष्ठं शिखरं तन्महोच्छ्रयम् ॥ ५९ ॥ तत्र वैखानसा नाम वालखिल्या महर्षयः ।
प्रकाशमाना दृश्यन्ते सूर्यवर्णास्तपस्विनः ॥ ६० ॥

कृत्स्नाक्रमणं न लभ्येत । वस्तुतस्तु मेरोरेव शिखरे द्वितीयं पदं न्यस्तम् । मेरुशिखरस्य स्वर्गत्वात् । भूमावेकं स्वर्गे द्वितीयं तृतीयं ब्रह्मलोक इति
पौराणिकी गाथा ॥ ५८ ॥ उत्तरेणेति । दिवाकरः जम्बूद्वीपमुत्तरेण जम्बूद्वीपोत्तरभागे । "एनपा द्वितीया" इति द्वितीया । परिक्रम्य महोच्छ्रयं तत्
सौमनसं शिखरं, प्राप्येति शेषः । दृश्यो भवति, मेरोर्दक्षिणपार्श्ववर्तिनां दृश्यो भवतीत्यर्थः ॥ ५९ ॥ तत्रेति । वैखानसाः ब्रह्मनखोत्पन्नाः । वालखिल्याः ब्रह्म

पूर्वस्यामिति । पूर्वस्यां दिशि निर्माणं कृतम्, पूर्वदिगवधित्वेन तालरूपः केतुः त्रिदशेश्वरैः कल्पित इत्यर्थः॥५४–५७॥ तत्रेति। तत्र कोटचाम् । पूर्वं विष्णुः त्रिविक्रमे
त्रिविक्रमप्रस्तावे । तत्र सौमनसशृङ्गे पूर्वपदं कृत्वा द्वितीयपदं मेरोः पश्चिमदिगवधिभूतस्य सावर्णिनिवासमेरुशिखरे चकारेति सम्बन्धः ॥ ५८ ॥ उत्तरेणेति ।
अत्र प्राप्येत्यध्याहर्तव्यम् । दिवाकरः अस्तमयानन्तरं जम्बूद्वीपमुत्तरेण परिक्रम्य महोच्छ्रयं तत्सौमनसशिखरं प्राप्य भूयिष्ठं दृश्यो भवति, मेरोर्दक्षिणभागवर्तिनां

रोमोत्पन्नाः "ये नखास्ते वैखानसाः ये वालास्ते वालखिल्याः" इति श्रुतेः ॥ ६० ॥ अयम् उदयपर्वतपार्श्वस्थो द्वीपः सुदर्शनो नाम । सुदर्शनसंज्ञाऽन्वर्थेत्याह यस्येति । यस्य तेजसः । पुरः सन्निधौ । सर्वप्राणभृतामपि चक्षुः प्रकाशते विषयग्रहणशक्तं भवति । तत्तेजः सूर्याख्यं यस्मिन् द्वीपे प्रकाशते अयं द्वीपः



अयं सुदर्शनो द्वीपः पुरो यस्य प्रकाशते । यस्मिंस्तेजश्च चक्षुश्च सर्वप्राणभृतामपि ॥ ६१ ॥ शैलस्य तस्य शृङ्गेषु कन्दरेषु वनेषु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६२ ॥ काञ्चनस्य च शैलस्य सूर्यस्य च महात्मनः । आविष्टा तेजसा सन्ध्या पूर्वा रक्ता प्रकाशते ॥ ६३ ॥ पूर्वमेतत्कृतं द्वारं पृथिव्या भुवनस्य च । सूर्यस्योदयनं चैव पूर्वा ह्येषा दिगुच्यते ॥ ६४ ॥ तस्य शैलस्य पृष्ठेषु निर्झरेषु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६५॥ ततः परमगम्या स्यादिक् पूर्वा त्रिदशावृता । रहिता चन्द्रसूर्याभ्यामदृश्या तिमिरावृता ॥ ६६ ॥ शैलेषु तेषु सर्वेषु कन्दरेषु वनेषु च । ये च नोक्ता मया देशा विचेया तेषु जानकी ॥ ६७ ॥

सुदर्शनो नामेति योजना ॥ ६१ ॥ शैलस्येति । शैलस्य उदयशैलस्येत्यर्थः ॥ ६२ ॥ ६३ ॥ पूर्वमिति । हि यस्मादेतदुदयपर्वतः । द्वारशब्दापेक्षया नपुंसकत्वम् । पृथिव्याः भुवनस्य च पूर्वं द्वारं कृतं प्रथमद्वारत्वेन ब्रह्मणा सृष्ट्यादौ कल्पितम् । सूर्यस्य परितो भ्रमणाय प्रथमम् एतदुदयनं च कृत मुदयस्थानं कल्पितम् । तस्मादेषा पूर्वा दिगुच्यते ॥ ६४ ॥ तस्येत्यादि । सम्यगन्वेषणाय पुनरुक्तिः ॥ ६५ ॥ रामानु०—तस्य शैलस्य पृष्ठेष्विति पाठः ॥६५॥ त्रिदशावृता त्रिदशाधिष्ठिता । दिक् उदयाचलप्रदेशरूपा । ततः परम् उदयाद्रेः परम् अगम्या ॥ ६६ ॥ उपसंहरति—शैलेष्विति । ये मया नोक्तास्तेषु

दृश्यो भवतीत्यर्थः ॥ ५९ ॥ ६० ॥ अयमिति । अस्य तेजसः । पुरः सन्निधौ । अयं सुदर्शनो द्वीपः शोभनदर्शनोऽयं द्वीपः प्रकाशते । अयमिति शृङ्गग्राहिकया निर्देशात् जम्बूद्वीप उच्यते । यद्वा सुदर्शनाकारत्वात्सुदर्शनशब्देन जम्बूद्वीप उच्यते । सर्वप्राणभृतां चक्षुश्च यस्य तेजसः पुरः प्रकाशते तस्य शैलस्य कुञ्जेषु कन्दरेषु च वैदेह्या सह रावणो मार्गितव्य इति सम्बन्धः ॥ ६१–६३ ॥ पूर्वदिशो निर्वचनमाह—पूर्वमेतदिति । हि यस्मात्कारणात् पृथिव्या भुवनस्य च पूर्वद्वारं कृतं प्रथमद्वारं ब्रह्मणा सृष्ट्यादौ कल्पितम् । सूर्यस्य परितो भ्रमणाय प्रथमे तदुदयनं च कृतम् उदयस्थानं कल्पितम् । तस्माद्देषा पूर्वा दिगित्युच्यते ॥६४॥६५॥ तत इति । त्रिदशावृता इन्द्रादिदेवावृता । ततः परम् उदयाद्रेः परम् अगम्येति सम्बन्धः ॥ ६६ ॥ उक्तेष्वनुक्तप्रदेशाः ॥ ६७ ॥

शैलादिषु विचेया ॥ ६७ ॥ अमर्यादं ग्रामनगरादिमर्यादारहितम्, केवलान्धकारभूतमित्यर्थः ॥ ६८–७० ॥ महेन्द्रेति । महेन्द्रकान्ताम् इन्द्रप्रियाम् । निपुणेन नैपुण्येन ॥ ७१ ॥ इतिं श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः । अभास्करममर्यादं न जानीमस्ततः परम् ॥ ६८ ॥ अधिगम्य तु वैदेहीं निलयं रावणस्य च । मासे पूर्णे निवर्तध्वमुदयं प्राप्य पर्वतम् ॥६९॥ ऊर्ध्वं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम। सिद्धार्थाः सन्निवर्तध्वमधिगम्य च मैथिलीम् ॥ ७० ॥ महेन्द्रकान्तां वनषण्डमण्डितां दिशं चरित्वा निपुणेन वानराः । अवाप्य सीतां रघुवंशजप्रियां ततो निवृत्ताः सुखिनो भविष्यथ ॥ ७१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

ततः प्रस्थाप्य सुग्रीवस्तन्महद्वानरं बलम्। दक्षिणां प्रेषयामास वानरानभिलक्षितान् ॥ १ ॥ नीलमग्निसुतं चैव हनुमन्तं च वानरम् । पितामहसुतं चैव जाम्बवन्तं महाबलम् ॥ २ ॥ सुहोत्रं च शरारिं च शरगुल्मं तथैव च । गजं गवाक्षं गवयं सुषेणमृषभं तथा ॥ ३ ॥ मैन्दं च द्विविदं चैव विजयं गन्धमादनम् । उल्कामुखमसङ्गं च हुताशनसुतावुभौ ॥ ४ ॥ अङ्गदप्रमुखान्वीरान् वीरः कपिगणेश्वरः । वेगविक्रमसम्पन्नान् सन्दिदेश विशेषवित् ॥ ५ ॥ तेषामग्रेसरं चैव महद्बलमसङ्गगम् । विधाय हरिवीराणामादिशद्दक्षिणां दिशम् ॥ ६ ॥

अथ दक्षिणदिशि वानरप्रेषणमेकचत्वारिंशे–ततः प्रस्थाप्येत्यादि । अभिलक्षितान् दृष्टापदानान् ॥ १ ॥ नीलमित्यादि । अत्रोक्तः सुषेणस्तारापितुरन्यः ॥ २–४ ॥ वेगविक्रमसंपन्नप्रेषणे हेतुमाह विशेषविदितिं ॥ ५ ॥ रामानु०–संदिदेश विशेषविदिति पाठः ॥ ५ ॥ तेषामिति । असङ्गगम् अविलम्बगामि,

अभास्करं सूर्यरहितम् अत एव अमर्यादम् ॥६८–७१॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां चत्वारिंशः सर्गः ॥ ४०॥

तत इति । अभिलक्षितान् दृष्टापदानान् ॥१॥ नीलमित्यादिं । अत्रोक्तस्सुषेणस्तारापितुरन्यः ॥२–५॥ तेषां सहायमाज्ञापयति–तेषामिति। तेषां नीलादीनाम् ॥६॥

वेगवदिति यावत् । बलं सैन्यम् । अग्रेसरम् अग्रचरं विधाय ॥ ६ ॥ ये केचनेति । तान् समुद्देशान् ॥ ७ ॥ सहस्रशिरसमित्यादि । पूर्ववन्मध्यदेशापेक्षया विन्ध्यस्य दक्षिणत्वव्यपदेशः ॥ ८ ॥ रामानु०—सहस्रशिरसमित्यादिना पूर्वभागस्थान् देशाननुपदिशति ॥ ८ ॥ ॥ ९ ॥ १० ॥ तत्र सर्वमेवानुपश्यतेत्यन्तेन विन्ध्यस्य पश्चिमभागस्थांस्तद्दक्षिणपार्श्वस्थांश्च नदीनगरदेशाननुपदिशति—विदर्भानित्यादिना । पूर्वभागस्थान् देशाननुपदिशति नदीं गोदावरीमिति ।



ये केचन समुद्देशास्तस्यां दिशि सुदुर्गमाः । कपीशः कपिमुख्यानां स तेषां तानुदाहरत् ॥ ७ ॥ सहस्रशिरसं विन्ध्यं नानाद्रुमलतायुतम् । नर्मदां च नदीं दुर्गां महोरगनिषेविताम् ॥ ८ ॥ ततो गोदावरीं रम्यां कृष्णवेणीं महानदीम् । वरदां च महाभागां महोरगनिषेविताम् ॥ ९ ॥ मेखलामुत्कलां चैव दशार्णनगराण्यपि । अश्ववन्तीमवन्तीं च सर्वमेवानुपश्यत ॥ १० ॥ विदर्भानृषिकांश्चैव रम्यान्माहिषकानपि । तथा वङ्गान् कलिङ्गांश्च कौशिकांश्च समन्ततः ॥ ११ ॥ अन्वीक्ष्य दण्डकारण्यं सपर्वतनदीगुहम् । नदीं गोदावरीं चैव सर्वमेवानुपश्यत । तथैवान्ध्रांश्च पुण्ड्रांश्च चोलान् पाण्ड्यान् सकेरलान् ॥ १२ ॥ अयोमुखश्च गन्तव्यः पर्वतो धातुमण्डितः । विचित्रशिखरः श्रीमांश्चित्रपुष्पितकाननः ॥ १३ ॥ सचन्दनवनोद्देशो मार्गितव्यो महागिरिः ॥ १४ ॥ ततस्तामापगां दिव्यां प्रसन्नसलिलां शिवाम् । तत्र द्रक्ष्यथ कावेरीं विहितामप्सरोगणैः ॥ १५ ॥

दण्डकारण्यवर्तिगोदावरीखण्डमित्यर्थः ॥ ११ ॥ १२ ॥ अयोमुखः सह्यः ॥ १३ ॥ १४ ॥ तत इति । अप्सरोगणैः विहितां पूजितामित्यर्थः ॥ १५ ॥

तत्र विचेयप्रदेशानाह—ये केचनेति ॥ ७ ॥ तदेव विवृणोति—सहस्रशिरसमित्यादि । पूर्ववत् मध्यदेशापेक्षया विन्ध्याद्रेर्दक्षिणदिक्त्वव्यपदेशः । सहस्रशिरसं सहस्रशिखरम् ॥ ८ ॥ ९ ॥ वरारोहां महाभागां, वरः आरोहो दैर्घ्यं यस्यास्ताम् । " आरोहो दैर्घ्यमानयोः " इति विश्वः ॥ १० ॥ सहस्रशिरसमित्यादिना सर्वमेवानुपश्यतेत्यन्तेन विन्ध्यस्य पश्चिमभागस्थान् दक्षिणपार्श्वस्थांश्च नदीनगरदेशाननुपदिश्य विदर्भानित्यादिना पूर्वभागान् देशाननुपदिशति ॥ ११ ॥ नदीं

स०—अत्र नदीं गोदावरीमिति दण्डकारण्यस्थितगोदावरीप्रदेशग्रहणम्, एतच्च तत्रैव सीताया गमनाद्विशेषतस्तत्रान्वेषणार्थम् ॥ १२ ॥ अयोमुख इति मलयस्य नामान्तरम् । सचन्दनवनोद्देश इति तच्चिह्नदर्शनात् "तस्यामीनं नागस्याग्रे मलयस्य" इति वक्ष्यमाणत्वाच्च ॥ १३ ॥ १४ ॥ अप्सरोगणैर्विहृतां विहृतं विहरणम् अस्या अस्तीति मत्वर्थीयप्रत्ययान्तोऽयम् । ततश्च अप्सरोगणकर्तृकं यद्विहरणं तद्वतीमित्येकदेशेनान्वयो बोध्यः ॥ १५ ॥

तस्येति । तस्य प्रसिद्धस्य ॥ १६ ॥ १७ ॥ रामानु० ताम्रपर्णीं ग्राहजुष्टामिति पाठः ॥ १७ ॥ १८ ॥ तत इति । पाण्ड्यानां पाण्ड्यराजानाम् । युक्तं योग्यम् । कवाटम्, अनेन नगरं लक्ष्यते । मुक्तारूपैर्मणिभिः रत्नैः भूषितम्, तदुत्पत्तिदेशत्वादिति भावः ॥ १९ ॥ अथ महेन्द्रं वर्णयति—तत



तस्यासीनं नगस्याग्रे मलयस्य महौजसम् । द्रक्ष्यथादित्यसंकाशमगस्त्यमृषिसत्तमम् ॥१६॥ ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना । ताम्रपर्णीं ग्राहजुष्टां तरिष्यथ महानदीम् ॥१७॥ सा चन्दनवनैर्दिव्यैः प्रच्छन्ना द्वीपशालिनी । कान्तेव युवतिः कान्तं समुद्रमवगाहते ॥१८॥ ततो हेममयं दिव्यं मुक्तामणिविभूषितम् । युक्तं कवाटं पाण्ड्यानां गता द्रक्ष्यथ वानराः ॥१९॥ ततः समुद्रमासाद्य संप्रधार्यार्थनिश्चयम् । अगस्त्येनान्तरे तत्र सागरे विनिवेशितः ॥ २० ॥ चित्रनानानगः श्रीमान् महेन्द्रः पर्वतोत्तमः । जातरूपमयः श्रीमानवगाढो महार्णवम् ॥ २१ ॥ नाना विधैर्नगैः सर्वैर्लताभिश्चोपशोभितम् । देवर्षियक्षप्रवरैरप्सरोभिश्च सेवितम् ॥ २२ ॥ सिद्धचारणसङ्घैश्च प्रकीर्णं सुमनोहरम् । तमुपैति सहस्राक्षः सदा पर्वसु पर्वसु ॥ २३ ॥ द्वीपस्तस्यापरे पारे शतयोजनमायतः । अगम्यो मानुषैर्दीप्तस्तं मार्गध्वं समन्ततः । तत्र सर्वात्मना सीता मार्गितव्या विशेषतः ॥ २४ ॥

इत्यादिना । मार्गितव्या विशेषत इत्यन्तमेकान्वयम् । ततः पाण्ड्यनगरात् समुद्रमासाद्य अर्थनिश्चयं कर्तव्यसमुद्रलङ्घनाद्यर्थनिश्चयम् । संप्रधार्य कृत्वा । अगस्त्येन तत्र सागरे अन्तरे अवकाशे निवेशितः । श्रीमान् पुष्पफलादिसमृद्धिमान् । श्रीमान् कान्तिमान् । महेन्द्रोऽस्ति । तं पर्वतम् ।

गोदावरीमिति । अत्र गोदावरीशब्देन दण्डकारण्यवर्तिगोदावरीखण्ड उच्यते, अतो न पुनरुक्तिः ॥ १२–१८ ॥ ततो हेममयमिति । कवाटं पाण्ड्यानां नगरद्वार कवाटम् ॥ १९ ॥ तत इति । अर्थनिश्चयः सम्प्रधार्यः, भवद्भिरिति शेषः । दुर्गप्रदेशत्वादिति भावः । अत्र श्रीशब्दः पुष्पफलादिसमृद्धिपरः । द्वितीयः श्रीशब्दः शोभापरः ॥ २०–२३ ॥ द्वीप इति । तस्य समुद्रस्यापरे पारे परपारातिरिक्ते आन्तरालिके पार इत्यर्थः ॥ २४ ॥



स०–युवती कान्ता लज्जया यथा दिव्यदुकूलैः प्रच्छन्नसर्वस्वावयवा सती स्वकान्तं गच्छति तद्वदियमपि दिव्यदुकूलस्थानीयैश्चन्दनैश्चित्रैः प्रच्छन्नद्वीपजलादिसर्वावयवा सती स्वकान्तं समुद्रमवगाहते ॥ १८ ॥

पर्वसु पर्वसु समुद्रस्नानायागच्छति । तस्यापरे पारे आन्तरालिकतीरे द्वीपोऽस्ति तं मार्गध्वम् । तत्र सर्वात्मना सर्वप्रयत्नेन विशेषतः सीता मार्गितव्या इत्यर्थः ॥२०—२४॥ स हीति । एवं रावणालयावगमेऽपि इतरदिक्षु वानरप्रेषणं स्थानान्तरे सीतामादाय किं न गच्छेदिति शङ्कयेति बोध्यम् ॥२५—२६॥ ननु पूर्वं "न जाने निलयं तस्य सर्वथा पापरक्षसः" इत्युक्तम्, संप्रति "स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः" इत्युच्यते, अतो विरुद्धमिदमित्या



स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः । राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः ॥ २५ ॥ दक्षिणस्य समुद्रस्य मध्ये तस्य तु राक्षसी । अङ्गारकेति विख्याता छायामाकृष्य भोजनी ॥२६॥ एवं निस्संशयान् कृत्वा संशयान्नष्ट संशयाः । मृगयध्वं नरेन्द्रस्य पत्नीममिततेजसः ॥ २७ ॥ तमतिक्रम्य लक्ष्मीवान् समुद्रे शतयोजने । गिरिः पुष्पितको नाम सिद्धचारणसेवितः ॥ २८ ॥ चन्द्रसूर्यांशुसंकाशः सागराम्बुसमावृतः । भ्राजते विपुलैः शृङ्गैरम्बरं विलिखन्निव ॥ २९ ॥ तस्यैकं काञ्चनं शृङ्गं सेवते यं दिवाकरः । श्वेतं राजतमेकं च सेवते यं निशाकरः ॥ ३० ॥

शङ्कय परिहरति—एवमिति । एवं मदुक्तरीत्या । संशयान् संशयविषयभूतान् देशान् । निःसंशयान् संशयाविषयीभूतान् । निश्चितसदसद्भावान् कृत्वा नष्टसंशयाः सन्तः अमिततेजसो नरेन्द्रस्य पत्नीं मृगयध्वम् । यदृच्छादर्शनापरिस्फुटज्ञातमर्थं कथं निश्चयेन कथयामीति न जान इति पूर्वमुक्तम् । इदानीं तथाविधमप्यर्थमन्वेषणगौरवाय निश्चयेन ब्रवीमिति भावः ॥ २७ ॥ तमतिक्रम्येति । "परावरयोगे च" इति क्त्वाप्रत्ययः । एवं पूर्वत्रापरत्र च बोध्यम् ॥ २८ ॥ २९ ॥ तस्यैकमिति । दक्षिणायन इति शेषः ॥ ३० ॥ ३१ ॥

तस्य देशस्य रावणसम्बन्धितया सामान्येनैवावगतत्वेपि सुदृढान्वेषणार्थं तं देशं तदीयत्वेन निश्चित्योक्तवान् ॥२५॥ समुद्रे अप्रमत्तैर्गन्तव्यमित्यभिप्रायेण तत्रत्यं बाधकमाह—दक्षिणस्येति ॥ २६ ॥ एवं निस्संशयान् कृत्वा संशयान् नष्टसंशयाः यथा संशयतो रावणदेशो निश्चयेनान्विष्यते एवं संशयान् संशयितान् देशान्

टीका०—स हीति । 'न जाने निलयं तस्य सर्वथा पापरक्षसः' इत्यादिना पूर्वं रावणनिवासापरिज्ञानं प्रकटीकृतम् इदानीमेतत्कथमुच्यते ? इति चेत्, वालिवधात्पूर्वमेव रावणनिवासमुक्तं चेद्वालिवधमकृत्वैव स्वयमेव रावणं हत्वा सीतामानेष्यति, ततः स्वस्य राज्यप्राप्तिर्वालिवधश्च न भविष्यतीति भिया तदानीं नोक्तम्, इदानीं सर्वार्थपरिपूर्णत्वादुक्तवानित्यविरोधः । यद्वा यादृच्छिकदर्शनापरिस्फुटपरिज्ञातमर्थं कथं निश्चयेन कथयामीति न जान इति पूर्वमुक्तवान् । इदानीं त्वपरिस्फुटज्ञातमप्यर्थमन्वेषणगौरवाय निश्चयेन ब्रवीमीति निश्चित्याकथयत् । द्वितीयपक्षे तस्य देशस्य रावणसम्बन्धितया सामान्येनावगतत्वेपि सुदृढान्वेषणार्थं तं देशं तदीयत्वेन निश्चित्योक्तवान् ॥ २९ ॥ स०—एवं पूर्वोक्तप्रकारेण संशयान् संशयविषयान् समुद्रतरणच्छायाग्रहनिवारणादीन् प्रति । निस्संशयान् निर्गतः संशयो येषां तान् मया परं तीरं प्राप्यते नवा,

तमतिक्रम्येति । हे दुर्धर्षाः ! सूर्यवान् नाम पर्वतः, वर्तत इति शेषः । दुर्विगाहेनाध्वना उपलक्षितः । योजनानि चतुर्दश, पुष्पितकसूर्यवतोरन्तराल इति शेषः ॥ ३२ ॥ वराणां श्रेष्ठानामर्हाणीति वरार्हाणि । परं ततः परं देशम् ॥ ३३–३५ ॥ अगस्त्यभवनं विशेषयति–तत्र योजनेति । शरणं

न तं कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः । प्रणम्य शिरसा शैलं तं विमार्गत वानराः ॥ ३१ ॥ तमतिक्रम्य दुर्धर्षाः सूर्यवान्नाम पर्वतः । अध्वना दुर्विगाहेन योजनानि चतुर्दश ॥ ३२ ॥ ततस्तमप्यतिक्रम्य वैद्युतो नाम पर्वतः । सर्वकामफलैर्वृक्षैः सर्वकालमनोहरैः ॥ ३३ ॥ तत्र भुक्त्वा वरार्हाणि मूलानि च फलानि च । मधूनि पीत्वा मुख्यानि परं गच्छत वानराः ॥३४॥ तत्र नेत्रमनःकान्तः कुञ्जरो नाम पर्वतः । अगस्त्यभवनं यत्र निर्मितं विश्वकर्मणा ॥ ३५ ॥ तत्र योजनविस्तारमुच्छ्रितं दशयोजनम् । शरणं काञ्चनं दिव्यं नानारत्नविभूषितम् ॥ ३६ ॥ तत्र भोगवती नाम सर्पाणामालयः पुरी । विशालकक्ष्या दुर्धर्षा सर्वतः परिरक्षिता ॥ ३७ ॥ रक्षिता पन्नगैर्घोरैस्तीक्ष्णदंष्ट्रैर्महाविषैः । सर्पराजो महाप्राज्ञो यस्यां वसति वासुकिः । निर्याय मार्गितव्या च सा च भोगवती पुरी ॥ ३८ ॥ तत्र चानन्तरा देशा ये केचन सुसंवृताः ॥ ३९ ॥

गृहम् ॥ ३६ ॥ तत्रेत्यादि । निर्याय अगस्त्यभवनान्निर्गत्य ॥ ३७ ॥ ३८ ॥ तत्रेति । ये अनन्तराः अव्यवहिता देशाः । ते मार्गितव्या इति शेषः॥ ३९॥

निस्संशयान् कृत्वा निश्चितसदसद्भावान् कृत्वा नष्टसंशयाः नरेन्द्रपत्नीं मृगयध्वम् । यथा शङ्कासद्भावेपि रावणेऽपि लङ्काद्वीपेपि निश्चयेन मृग्यते, एवं शङ्का कारणवत्स्वन्येष्वपि देशेषु निश्चयेन मृगयतेत्यर्थः ॥ २७–३१ ॥ तमतिक्रम्य लङ्काद्वीपमतिक्रम्य ॥ ३२ ॥ ३३ ॥ अगस्त्यभवनमेव विशिनष्टि–तत्रेति । तत्र कुञ्जरपर्वते । योजनविस्तारं शतयोजनं शरणं गृहमिनि सम्बन्धः ॥ ३४–३७ ॥ निर्यायेति । सा भोगवती पुरी मार्गितव्या । तस्याः निर्याय निर्गत्य ॥ ३८ ॥ तत्र ये केचन सुसंवृताः अनन्तरदेशा, मार्गितव्या इति सम्बन्धः ॥ ३९ ॥

—छायाग्रहो निवार्यते वा नवा इत्यादिसंशयरहितानिति यावत् । कृत्वा नियोज्य तत्कार्यकरणाय तादृशानेव नियोज्येत्यर्थः । नष्टसंशयास्सन्तो मृगयध्वमित्यर्थः । एवमर्थाकरणे पूर्वोक्तच्छायाग्रहनिस्तरणोपाया कथनेनासङ्गत्यापत्तिः ॥ २७ ॥

तं च देशमतिक्रम्य, तस्माद्देशात्परत इत्यर्थः । ऋषभसंस्थितः ऋषभतुल्यसंस्थानः ॥ ४० ॥ गोशीर्षकं गोरोचनासदृशवर्णम् । पद्मकं पद्मदलसवर्णम् । हरिश्यामं तमालदलवर्णम् । अग्निसमप्रभम् अग्निसदृशवर्णम् । एवंविधं दिव्यं चन्दनं यत्रोत्पद्यते स ऋषभः पर्वतो वर्तत इति

तं च देशमतिक्रम्य महानृषभसंस्थितः । सर्वरत्नमयः श्रीमानृषभो नाम पर्वतः ॥ ४० ॥ गोशीर्षकं पद्मकं च हरिश्यामं च चन्दनम् । दिव्यमुत्पद्यते यत्र तच्चैवाग्निसमप्रभम् ॥ ४१ ॥ न तु तच्चन्दनं दृष्ट्वा स्प्रष्टव्यं च कदाचन । रोहिता नाम गन्धर्वा घोरा रक्षन्ति तद्वनम् ॥ ४२ ॥ तत्र गन्धर्वपतयः पञ्च सूर्यसमप्रभाः । शैलूषो ग्रामणीः शिग्रुः शुभ्रो बभ्रुस्तथैव च ॥ ४३ ॥ रविसोमाग्निवपुषां निवासः पुण्यकर्मणाम् । अन्ते पृथिव्या दुर्धर्षा स्तत्र स्वर्गजितः स्थिताः ॥ ४४ ॥ ततः परं न वः सेव्यः पितृलोकः सुदारुणः । राजधानी यमस्यैषा कष्टेन तमसा वृता ॥ ४५ ॥ एतावदेव युष्माभिर्वीरा वानरपुङ्गवाः । शक्यं विचेतुं गन्तुं वा नातो गतिमतां गतिः ॥४६॥ सर्वमेतत्समालोक्य यच्चान्यदपि दृश्यते । गतिं विदित्वा वैदेह्याः सन्निवर्तितुमर्हथ ॥४७॥ यस्तु मासान्निवृत्तोऽग्रे दृष्टा सीतेति वक्ष्यति । मत्तुल्यविभवो भोगैः सुखं स विहरिष्यति ॥ ४८ ॥ ततः प्रियतरो नास्ति मम प्राणाद् विशेषतः । कृतापराधो बहुशो मम बन्धुर्भविष्यति ॥ ४९ ॥

पूर्वेणान्वयः ॥ ४१–४८ ॥ ततः तस्मात् पुरुषात् प्रियतरो नास्ति । मम प्राणात् विशेषतः, सः प्रियतर इति शेषः ॥ ४९ ॥

ऋषभस्येव संस्थितिरवस्थानं यस्येति विग्रहः ॥ ४० ॥ गोशीर्षकं गोरोचनासदृशवर्णम्, पद्मकं पद्मदलसमानवर्णं, हरि कुङ्कुमसमानवर्णं, श्यामं तमालदलनिभम् । अग्निसमप्रभम् अग्निसदृशवर्णम् । तच्चन्दनं च यत्रोत्पद्यत इति सम्बन्धः ॥ ४१ ॥ तत्र काङ्क्षा न कर्तव्येत्याह–न त्विति । तत्र हेतुमाह रोहिता इति ॥ ४२ ॥ ४३ ॥ स्वर्गजितः प्राप्तस्वर्गा इत्यर्थः ॥ ४४ ॥ कष्टेन दुष्प्रवेशेन ॥ ४५–४८ ॥ ततः प्रियतरो नास्ति । तस्मात्प्रियतरो नास्ति । मम प्राणाद्विशेषतः,

स०–गोशीर्षकं गोमेदमणिः । पद्मकं पद्मरागमणिः । हरिश्यामम् इन्द्रनीलमणिः । चन्दनं चेत्येतावत्पदार्थजातं तथा अग्निसमप्रभं माणिक्यं च यत्रोत्पद्यते । तच्चैवेति पूर्वोक्तरत्नापेक्षयाऽस्य विशेषं सूचयति । यद्वा गोशीर्षादयस्सर्वे चन्दनप्रभेदाः ॥ ४१ ॥ मत्तुल्यविभवस्सन् सुखं यथा भवति तथा विहरिष्यति । तस्मै मदर्धराज्याधिपत्यं दास्यामीत्यभिप्रायः ॥ ४८ ॥

तदधिगुणं तदनुगुणम् । पुरुषार्थं पुरुषव्यापारम् । अत्र सर्यमनपर्यन्तमभिधानात् सप्तद्वीपसागरगमनमर्थसिद्धम् । एवमुत्तरसर्गयोरपि बोध्यम् । अत्र सार्धपञ्चाशत् श्लोकाः ॥५०॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥४१॥

अमितबलपराक्रमा भवन्तो विपुलगुणेषु कुलेषु च प्रसूताः । मनुजपतिसुतां यथा लभध्वं तदधिगुणं पुरुषार्थमारभध्वम् ॥५०॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे एकचत्वारिंशः सर्गः ॥४१॥

अथ प्रस्थाप्य सुग्रीवस्तान् हरीन् दक्षिणां दिशम् । अब्रवीन्मेघसङ्काशं सुषेणं नाम यूथपम् ॥ १ ॥ तारायाः पितरं राजा श्वशुरं भीमविक्रमम् । अब्रवीत्प्राञ्जलिर्वाक्यमभिगम्य प्रणम्य च ॥ २ ॥ मरीचिपुत्रं मारीचमर्चिष्मन्तं महाकपिम् । वृतं कपिवरैः शूरैर्महेन्द्रसदृशद्युतिम् ॥ ३ ॥ बुद्धिविक्रमसंपन्नं वैनतेयसमद्युतिम् । मरीचिपुत्रान् मारीचानर्चिर्माल्लान्महाबलान् ॥४॥ ऋषिपुत्रांश्च तान् सर्वान् प्रतीचीमादिशद्दिशम् । द्वाभ्यां शतसहस्राभ्यां कपीनां कपिसत्तमाः । सुषेणप्रमुखा यूयं वैदेहीं परिमार्गत ॥ ५ ॥ सुराष्ट्रान् सहबाह्लीकान् शूरान् भीमांस्तथैव च । स्फीतान् जनपदान् रम्यान् विपुलानि पुराणि च ॥६॥ पुन्नागगहनं कुक्षिं वकुलोद्दालकाकुलम् । तथा केतकषण्डांश्च मार्गध्वं हरियूथपाः ॥ ७ ॥

अथ पश्चिमदिशि वानरयोजनं द्विचत्वारिंशे–अथेत्यादि ॥१॥ ताराया इति । प्राञ्जलित्वादिकथनार्थमब्रवीदिति अतो न पौनरुक्त्यम् ॥ २ ॥ मरीचिपुत्रमिति । मारीचपदमन्वर्थसंज्ञेति द्योतयितुं मरीचिपुत्रमित्युक्तिः । मरीचिपुत्रान् मारीचानित्यत्रापि तथा । मारीचमिति ज्येष्ठ उक्तः । मारीचा इति तदनुजा उच्यन्ते । अर्चिर्माल्लान् आर्चिष्मतः ॥ ३–६ ॥ पुन्नागगहनं पुन्नागवनम् । कुक्षिः मध्यदेशविशेषः । उद्दालकाः वृक्षविशेषाः । केतक

न प्रियतर इति सम्बधः ॥ ४९ ॥ ५० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायामेकचत्वारिंशः सर्गः ॥४१॥

अथेति । प्रस्थाप्य प्रयाणोपदेशं कृत्वा । अयं पूर्वोक्तसुषेणादन्यः सोमपुत्रः सुषेण इति वेदितव्यम् ॥ १ ॥ तारायां इति । अब्रवीदिति पुनर्वचनं प्राञ्जलित्वाभिगमनादिविशेषकथनार्थम् ॥ २ ॥ महर्षिपुत्रं मारीचं महर्षेर्मरीचेः पुत्रं मारीचम् ॥ ३–६ ॥ पुन्नागगहनं कुक्षिमित्यादिना केतुमालप्रदेशानुपदिशति । कुक्षिर्देश

षण्डान् केतकवनानि । प्रत्यक् स्रोतो गच्छन्तीति प्रत्यक्स्रोतोगमाः । शिवाः पावनाः । कान्ताराः दुर्गममार्गाः । तान् मार्गध्वमिति पूर्वेण संबन्धः ॥ ७–८ ॥ ततः स्थलीमित्यादि श्लोकद्वयमेकान्वयम् । स्थल्यादिकं मार्गित्वा ततः तस्माद्देशात् पश्चिमं समुद्रमागम्य तिमिनक्रायुतजलमक्षोभ्यं तं द्रष्टुमर्हथ ॥ ९ ॥ १० ॥ रामानु०–तिमिनक्रायुतजलमक्षोभ्यमथ वानरा इति पाठः ॥ १० ॥ तत इति । कपयो भवदीयाः ॥ ११ ॥ तत्रेति । वेलातटनिविष्टेषु

प्रत्यक्स्रोतोगमाश्चैव नद्यः शीतजलाः शिवाः । तापसानामरण्यानि कान्तारा गिरयश्च ये ॥ ८ ॥ ततः स्थलीं मरुप्रायामत्युच्चशिरसः शिलाः । गिरिजालावृतां दुर्गां मार्गित्वा पश्चिमां दिशम् ॥ ९ ॥ ततः पश्चिममासाद्य समुद्रं द्रष्टुमर्हथ । तिमिनक्रायुतजलमक्षोभ्यमथ वानराः ॥ १० ॥ ततः केतकषण्डेषु तमालगहनेषु च । कपयो विहरिष्यन्ति नारिकेलवनेषु च ॥ ११ ॥ तत्र सीतां च मार्गध्वं निलयं रावणस्य च । वेलातटनिविष्टेषु पर्वतेषु वनेषु च ॥ १२ ॥ मुरचीपत्तनं चैव रम्यं चैव जटीपुरम् । अवन्तीमङ्गलोपां च तथा चालक्षितं वनम् । राष्ट्राणि च विशालानि पत्तनानि ततस्ततः ॥ १३ ॥ सिन्धुसागरयोश्चैव सङ्गमे तत्र पर्वतः । महान् हेमगिरिर्नाम शतशृङ्गो महाद्रुमः ॥ १४ ॥ तस्य प्रस्थेषु रम्येषु सिंहाः पक्षगमाः स्थिताः । तिमिमत्स्यगजांश्चैव नीडान्यारोपयन्ति ते ॥ १५ ॥ तानि नीडानि सिंहानां गिरिशृङ्गगताश्च ये । दृप्तास्तृप्ताश्च मातङ्गास्तोयदस्वननिःस्वनाः । विचरन्ति विशालेऽस्मिन् तोयपूर्णे समन्ततः ॥ १६ ॥

वेलायाम् अम्बुविकृतौ तटे च स्थितेषु । "अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि" इत्यमरः ॥ १२ ॥ मुरचीति । पूर्वस्यां दिश्यवन्त्यन्या । इयं चान्या । यत्र प्रविष्टा वननैरन्तर्येण न लक्ष्यन्ते तदलक्षितं नाम । मार्गध्वमित्यनुषङ्गः ॥ १३ ॥ सिन्धुर्नदविशेषः । तत्र पश्चिमादिशि । पक्षैर्गच्छन्तीति पक्षगमाः, सपक्षा इति विशेषणम् । नीडानि वृक्षाग्रस्थस्वावासस्थानानि । अत एव महाद्रुम इति पूर्वमुक्तम् ॥ १४ ॥ १५ ॥ तानीत्याद्यर्धत्रयम् । विशेषः । कान्तारा गिरयश्च एतानपि मार्गध्वमिति पूर्वेण सम्बन्धः ॥ ७–१० ॥ कपयो भवदीयाः ॥ ११ ॥ तत्रेति । पत्तनानि ततस्तत इत्येतत्पर्यन्तं मार्गध्वमित्यनुषज्यते ॥ १२ ॥ अवन्तीमङ्गलोपां चेति द्वे नगर्यौ ॥ १३ ॥ १४ ॥ पक्षगमाः पक्षाभ्यां गच्छन्तीति पक्षगमाः, सपक्षा इत्यर्थः । सिंहाः तिमिमत्स्यगजान्नीडान्यारोपयन्ति स्वावासस्थानानि प्रापयन्ति ॥ १५ ॥ तानीति । समन्ततः तोयपूर्णे अस्मिन्स्थले ये गजास्सन्ति गिरिशृङ्गगताश्च ये ते गजास्तानि नीडानि विचरान्ति

समन्ततस्तोयपूर्णेऽस्मिन् स्थले ये गजाः सन्ति गिरिशृङ्गगताश्च ये ते गजास्तानि नीडानि विचरन्ति, सिंहनीडाश्रयसानुषु विचरन्तीत्यर्थः । बाधक स्थानगमने हेतुमाह दृप्ता इति ॥ १६ ॥ तस्येति । कपिभिः, भवद्भिरिति शेषः ॥ १७ ॥ तत्र समुद्रे गतां पारियात्रस्य कोटिं शृङ्गम् ॥ १८ ॥

तस्य शृङ्गं दिवस्पर्शं काञ्चनं चित्रपादपम् । सर्वमाशु विचेतव्यं कपिभिः कामरूपिभिः ॥ १७ ॥ कोटिं तत्र समुद्रे तु काञ्चनीं शतयोजनाम् । दुर्दर्शां पारियात्रस्य गतां द्रक्ष्यथ वानराः ॥ १८ ॥ कोटयस्तत्र चतुर्विंशद्गन्धर्वाणां तरस्विनाम् । वसन्त्यग्निनिकाशानां घोराणां कामरूपिणाम् ॥ १९ ॥ पावकार्चिःप्रतीकाशाः समवेताः सहस्रशः । नात्यासादयितव्यास्ते वानरैर्भीमविक्रमैः ॥२०॥ नादेयं च फलं तस्माद्देशात् किंचित् प्लवङ्गमैः। दुरासदा हि ते वीराः सत्त्ववन्तो महाबलाः॥ २१ ॥ फलमूलानि ते तत्र रक्षन्ते भीमविक्रमाः । तत्र यत्नश्च कर्तव्यो मार्गितव्या च जानकी । न हि तेभ्यो भयं किंचित् कपित्वमनुवर्तताम् ॥ २२ ॥ तत्र वैडूर्यवर्णाभो वज्रसंस्थानसंस्थितः । नानाद्रुमलताकीर्णो वज्रो नाम महागिरिः ॥ २३ ॥ श्रीमान् समुदितस्तत्र योजनानां शतं समम् । गुहास्तत्र विचेतव्याः प्रयत्नेन प्लवङ्गमाः ॥ २४ ॥

रामानु०-कोटिं तत्र समुद्रस्येति पाठः ॥१८॥१९॥ पावकार्चिःप्रतीकाशा इत्यादि । नात्यासादयितव्याः नातिसमीपं प्राप्तव्याः । नादेयं न स्वीकार्यम् । तर्हि ते गन्धर्वा अस्मान् हनिष्यन्तीत्यत्राह-तत्रेति । यत्नः फलचापलनिवृत्तौ यत्नः कर्तव्यः । विशालत्वादन्वेषणे यत्नो वा । न किंचिद्भयम् । कपिसंचारस्य वनमात्रधर्मत्वादिति भावः । अनुवर्तताम् अनुवर्तमानानाम् ॥ २०-२२ ॥ रामानु०-नादेयमिति । न आदेयमिति च्छेदः । तेषां दुरासदत्वे तत्र कथं मार्गणं घटत इत्याशङ्क्याह तत्रेति। हि यस्मात् कारणात् कपित्वमनुवर्ततां प्राकृतकपित्वमनुवर्तमानानां भवतां तेभ्यो भयं न । तस्मात्तत्र यत्नः कर्तव्यः, जानकी मार्गितव्या चेति सम्बन्धः ॥२१॥२२॥ तत्र वैडूर्येत्यादिसार्धश्लोक एकान्वयः । श्रीमानिति । योजनानां शतं समं यथा भवति तथा समुदितः समुन्नतः ॥ २३ ॥ २४ ॥

सिंहनीडाश्रयसानुषु विचरन्तीत्यर्थः । बाधकबाहुल्येपि सञ्चारात पर्वतस्यातिरमणीयत्वमवगम्यते, जातिप्रयुक्तवैरैस्सिंहैर्बाध्यमाना अपि गजास्तद्गिरिं न जहतीति भावः ॥ १६-१८ ॥ कोटिमिति । तत्र समुद्रे पारियात्रस्य कोटिं द्रक्ष्यथेति सम्बन्धः ॥ १९ ॥ २० ॥ नादेयम् आदातुमर्हं न भवति ॥ २१ ॥ तेभ्यो गन्धर्वेभ्यो भयं नास्ति तेषां रामकार्यसहायत्वादिति भावः ॥ २२ ॥ तत्र वैडूर्येत्यादि सार्धश्लोकमेकं वाक्यम् । योजनानां शतं समं यथा तथा । समुदितः

चतुर्भागे चतुर्थभागे । समुद्रस्य लवणसमुद्रस्य ॥ २५ ॥ तत्र चक्रवत्पर्वते । पुरुषोत्तमो विष्णुः । "श्रीपतिः पुरुषोत्तमः" इत्यमरः । चक्रश्चक्रं हयग्रीवाख्यं दानवं हत्वा चक्रम्, पञ्चजनाख्यं दानवं हत्वा तदस्थिभूतं पाञ्चजन्याख्यं शङ्खं च जग्राह । कृष्णः पञ्चजनं हत्वा पाञ्चजन्यं जग्राहेत्युच्यते ।



चतुर्भागे समुद्रस्य चक्रवान्नाम पर्वतः । तत्र चक्रं सहस्रारं निर्मितं विश्वकर्मणा ॥ २५ ॥ तत्र पञ्चजनं हत्वा हयग्रीवं च दानवम् । आजहार ततश्चक्रं शङ्खं च पुरुषोत्तमः ॥ २६ ॥ तस्य सानुषु चित्रेषु विशालासु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २७ ॥ योजनानां ततः षष्टिर्वराहो नाम पर्वतः । सुवर्णशृङ्गः सुश्रीमानगाधे वरुणालये ॥२८॥ तत्र प्राग्ज्योतिषं नाम जातरूपमयं पुरम् । यस्मिन्वसति दुष्टात्मा नरको नाम दानवः ॥२९॥ तत्र सानुषु चित्रेषु विशालासु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३० ॥ तमतिक्रम्य शैलेन्द्रं काञ्चनान्तरनिर्दरः । पर्वतः सर्वसौवर्णो धाराप्रस्रवणायुतः ॥ ३१ ॥ तं गजाश्च वराहाश्च सिंहा व्याघ्राश्च सर्वतः । अभिगर्जन्ति सततं तेन शब्देन दर्पिताः ॥ ३२ ॥ यस्मिन् हरिहयः श्रीमान् महेन्द्रः पाकशासनः । अभिषिक्तः सुरै राजा मेघवान्नाम पर्वतः ॥ ३३ ॥ तमतिक्रम्य शैलेन्द्रं महेन्द्रपरिपालितम् । षष्टिं गिरिसहस्राणि काञ्चनानि गमिष्यथ ॥ ३४ ॥ तरुणादित्यवर्णानि भ्राजमानानि सर्वतः । जातरूपमयैर्वृक्षैः शोभितानि सुपुष्पितैः ॥ ३५ ॥ तेषां मध्ये स्थितो राजा मेरुरुत्तरपर्वतः । आदित्येन प्रसन्नेन शैलो दत्तवरः पुरा ॥ ३६ ॥

तद्विष्णववतारेऽप्यस्तीति ज्ञेयम् ॥२६-२८॥ तत्र वराहपर्वते ॥२९॥३०॥ तमतिक्रम्य तस्मात्परत इत्यर्थः । काञ्चनान्तरनिर्दरः सौवर्णमयान्तरप्रदेशवत्कन्दरः, अन्तर्बहिश्च सौवर्णकन्दरः इत्यर्थः ॥३१॥ तं गजाश्चेति । तेन शब्देन स्वशब्देन दर्पिता गजादयस्तं पर्वतमभिगर्जन्ति ॥३२॥ यस्मिन्निति । सम्यगुत्पन्नः ॥२३॥२४॥ चतुर्भागे समुद्रस्य लवणसमुद्रस्य ॥२५॥ कस्मिंश्चिद्देवासुरयुद्धे विष्णोरवतारः पुरुषोत्तमः पञ्चजनं हयग्रीवाख्यं दानवं च हत्वा सुदर्शनपाञ्चजन्यौ जग्राहेति पौराणिकी कथा ॥ २६-२८ ॥ तत्र वराहपर्वते ॥ २९ ॥ ३० ॥ तमिति । काञ्चनाः स्वर्णविकारा अन्तरानिर्दरा मध्यपाषाणसन्धयो यस्य सः ॥ ३१ ॥ तेन शब्देन स्वकीयध्वन्युत्पन्नप्रतिध्वनिना दर्पिता गजादयस्तं पर्वतमभिगर्जन्ति ॥ ३२-३६ ॥

हरिहयः श्यामवर्णाश्वयुक्तः । राजाऽभिषिक्तः राजत्वेनाभिषिक्तः ॥ ३३–३६ ॥ वरमेवाह–तेनैवमिति । प्रभया रक्ता भविष्यन्तीत्यन्वयः

तेनैवमुक्तः शैलेन्द्रः सर्व एव त्वदाश्रयाः । मत्प्रसादाद् भविष्यन्ति दिवा रात्रौ च काञ्चनाः ॥ ३७ ॥ त्वयि ये चापि वत्स्यन्ति देवगन्धर्वदानवाः । ते भविष्यन्ति रक्ताश्च प्रभया काञ्चनप्रभाः ॥ ३८ ॥ विश्वेदेवाश्च मरुतो वसवश्च दिवौकसः । आगम्य पश्चिमां सन्ध्यां मेरुमुत्तरपर्वतम् ॥ ३९ ॥ आदित्यमुपतिष्ठन्ति तैश्च सूर्योऽभिपूजितः । अदृश्यः सर्वभूतानामस्तं गच्छति पर्वतम् ॥ ४० ॥ योजनानां सहस्राणि दश तानि दिवाकरः । मुहूर्तार्धेन तं शीघ्रमभियाति शिलोच्चयम् ॥ ४१ ॥ शृङ्गे तस्य महद्दिव्यं भवनं सूर्यसन्निभम् । प्रासादगणसंबाधं विहितं विश्वकर्मणा ॥ ४२ ॥ शोभितं तरुभिश्चित्रैर्नानापक्षिसमाकुलैः । निकेतं पाशहस्तस्य वरुणस्य महात्मनः ॥ ४३ ॥ अन्तरा मेरुमस्तं च तालो दशशिरा महान् । जातरूपमयः श्रीमान् भ्राजते चित्रवेदिकः ॥ ४४ ॥ तेषु सर्वेषु दुर्गेषु सरस्सु च सरित्सु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ४५ ॥ यत्र तिष्ठति धर्मज्ञ स्तपसा स्वेन भावितः । मेरुसावर्णिरित्येव ख्यातो वै ब्रह्मणा समः ॥ ४६ ॥

॥ ३७ ॥ ३८ ॥ विश्वेदेवा इति । पश्चिमां सन्ध्याम् "अत्यन्तसंयोगे द्वितीया" । मेरुसदृशत्वान्मेरुम् । मेरुमागम्य आदित्यमुपतिष्ठन्ति पूजयन्ति । तेन आदित्येन ॥ ३७ ॥ ३८ ॥ विश्वेदेवादयः पश्चिमां सन्ध्याम् अस्मदपेक्षया उत्तरपर्वतं मेरुमासाद्य वर्तमानमादित्यमुपतिष्ठन्ति पूजयन्ति । अस्तगिरिसमीपस्थ सावर्णिमेरोरभिधानात् ततः पूर्वस्था अनुक्तास्समुद्रद्वीपादयोपि मार्गितव्यत्वेनोक्ता इत्यवगन्तव्यम् ॥ ३९ ॥ ४० ॥ मेरुपर्वतास्ताचलमध्यदेशप्रमाणं सूर्यस्य गतेर्वेगं चाह–योजनानामिति । दिवाकरस्तमस्ताख्यं शिलोच्चयमभिमुखीभूय मुहूर्तार्धेन मुहूर्तार्द्धो घटिकाया अपि स्वल्पकालं इति मन्तव्यम्, योजनानां दशसहस्राणि गच्छतीति सम्बन्धः । मेरोरस्ताचलस्य चान्तरमयुतयोजनपरमिति यावत् ॥ ४१–४३ ॥ अन्तरेति । अन्तरा मेरुमस्तं च सावर्णिमेरोरस्ताचलस्य च मध्ये ॥ ४४ ॥ ४५ ॥ यत्र मेरौ ॥ ४६ ॥ ४७ ॥

मन्त्रकरणाभावात्परस्मैपदम् । अस्तागिरिसमीपस्थसावर्णिमेरोरभिधानात्सर्वेऽपि समुद्रद्वीपादयोपि मार्गितव्यत्वेनोक्ताः ॥ ३९–४७ ॥ रामानु०–विश्वेदेवा इति । पश्चिमां सन्ध्याम् अस्मदपेक्षया पश्चिमसन्ध्यायाम् [illegible] प्रभवति । मन्त्रकरणाभावात्परस्मैपदम् । अस्तगिरिसमीपस्थ सावर्णिमेरोरभिधानात्ततः पूर्वस्था अनुक्ताः समुद्रद्वीपादयोपि मार्गितव्यत्वेनोक्ता इत्यवगन्तव्यम् । योजनानां सहस्राणि दश तानि दिवाकरः इति पाठः ॥ ३९–४७ ॥



एतावदिति । भास्करः रजनीक्षये जीवलोकस्य एतावत् उदयास्ताद्रिमध्यं वितिमिरं कृत्वा अस्तं गच्छतीति योजना ॥ ४८–५० ॥ सहैवेति । दिष्ट

प्रष्टव्यो मेरुसावर्णिर्महर्षिः सूर्यसन्निभः । प्रणम्य शिरसा भूमौ प्रवृत्तिं मैथिलीं प्रति ॥ ४७ ॥ एतावज्जीवलोकस्य भास्करो रजनीक्षये । कृत्वा वितिमिरं सर्वमस्तं गच्छति पर्वतम् ॥४८॥ एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः । अभास्करममर्यादं न जानीमस्ततः परम् ॥ ४९ ॥ अधिगम्य तु वैदेहीं निलयं रावणस्य च । अस्तपर्वतमासाद्य पूर्णे मासे निवर्तत । ऊर्ध्वं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम ॥ ५० ॥ सहैव शूरो युष्माभिः श्वशुरो मे गमिष्यति । श्रोतव्यं सर्वमेतस्य भवद्भिर्दिष्टकारिभिः ॥ ५१ ॥ गुरुरेष महाबाहुः श्वशुरो मे महाबलः । भवन्तश्चापि विक्रान्ताः प्रमाणं सर्वकर्मसु ॥ ५२ ॥ प्रमाणमेनं संस्थाप्य पश्यध्वं पश्चिमां दिशम् । [ भवन्तः परिपश्यन्तु यथा दृश्येत जानकी । ] दृष्टायां तु नरेन्द्रस्य पत्न्याममिततेजसः । कृतकृत्या भविष्यामः कृतस्य प्रतिकर्मणा ॥५३॥ अतोऽन्यदपि यत्कार्यं कार्यस्यास्य हितं भवेत् । संप्रधार्य भवद्भिश्च देशकालार्थसंहितम् ॥ ५४ ॥

कारिभिः आदिष्टकारिभिः ॥ ५१ ॥ रामानु०–श्वशुरो मे गमिष्यतीति पाठः ॥ ५१ ॥ ५२ ॥ प्रमाणमेनं संस्थाप्य पश्यध्वं पश्चिमां दिशमिति पाठः । प्रमाणं व्यवस्थापकम् । पश्यध्वं पश्यत । आत्मनेपदमार्षम् ॥ ५३ ॥ अतोऽन्यदिति । अस्य कार्यस्य सीतान्वेषणरूपस्य अन्यदपि यद्धितं भवेत्

एतावदिति । भास्करः रजनीक्षये जीवलोकस्य एतावत्सर्वमुदयास्तमयाद्रिमध्यं वितिमिरं कृत्वा अस्तं गच्छतीति योजना ॥ ४८–५१ ॥ भवन्तश्चेति । एवं सुषेणं प्रमाणं व्यवस्थापकम् ॥ ५२ ॥ ५३ ॥ अत इत्यादि । अस्य रामस्य यत्कार्यं प्रियमनुकूलं भवेत्तद्भवद्भिस्सम्प्रधार्य कर्तव्यमित्यर्थः ॥ ५४ ॥

देशकालार्थसंहितं तत्संप्रधार्य भवद्भिः कार्यमित्यन्वयः ॥ ५४ ॥ रामानु०–अतोऽन्यदपि यत्कार्यं कार्यस्यास्य हितं भवेत् । सम्प्रधार्य भवद्भिश्च देशकालार्थसंहितम् ॥ इति पाठः ॥ ५४ ॥ ॥ ५५ ॥ अत्र अष्टपञ्चाशत् श्लोकाः ॥ इति श्रीगोविन्दराज० श्रीरामा० मुक्ता० किष्किन्धाकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥४२॥

ततः सुषेणप्रमुखाः प्लवङ्गाः सुग्रीववाक्यं निपुणं निशम्य । आमन्त्र्य सर्वे प्लवगाधिपं ते जग्मुर्दिशं तां वरुणाभिगुप्ताम् ॥ ५५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदि० श्रीमत्किष्किन्धाकाण्डे द्विचत्वारिंशः सर्गः ॥४२॥

ततः संदिश्य सुग्रीवः श्वशुरं पश्चिमां दिशम् । वीरं शतवलिं नाम वानरं वानरर्षभः ॥ १ ॥ उवाच राजा धर्मज्ञः सर्ववानरसत्तमम् । वाक्यमात्महितं चैव रामस्य च हितं तथा ॥ २ ॥ वृतः शतसहस्रेण त्वद्विधानां वनौकसाम् । वैवस्वतसुतैः सार्धं प्रतिष्ठस्व स्वमन्त्रिभिः ॥ ३ ॥ दिशं ह्युदीचीं विक्रान्तां हिमशैलावतंसकाम् । सर्वतः परिमार्गध्वं रामपत्नीमनिन्दिताम् ॥ ४ ॥ अस्मिन् कार्ये विनिर्वृत्ते कृते दाशरथेः प्रिये । ऋणान्मुक्ता भविष्यामः कृतार्थार्थविदां वराः ॥ ५ ॥ कृतं हि प्रियमस्माकं राघवेण महात्मना । तस्य चेत् प्रतिकारोऽस्ति सफलं जीवितं भवेत् ॥ ६ ॥ अर्थिनः कार्यनिर्वृत्तिमकर्तुरपि यश्चरेत् । तस्य स्यात् सफलं जन्म किं पुनः पूर्वकारिणः ॥ ७ ॥ एतां बुद्धिमवस्थाय दृश्यते जानकी यथा । तथा भवद्भिः कर्तव्यमस्मत्प्रियहितैषिभिः ॥ ८ ॥ अयं हि सर्वभूतानां मान्यस्तु नरसत्तमः । अस्मासु चागतप्रीती रामः परपुरंजयः ॥ ९ ॥

अथोत्तरदिशि शतवलिप्रेषणं त्रिचत्वारिंशे–ततः संदिश्येत्यादि ॥ १ ॥ २ ॥ ३ ॥ रामानु०–प्रतिष्ठस्व स्वमन्त्रिभिरिति सम्यक् ॥ ३ ॥ हिमशैलावतंसकां हिमशैलालङ्काराम् ॥ ४ ॥ अस्मिन्निति । कृतार्थाश्चार्थविदश्च कृतार्थार्थविदः तेषां वराः ॥ ५–९ ॥

॥ ५५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां द्विचत्वारिंशस्सर्गः ॥ ४२ ॥ १–३ ॥ दिशमिति । विक्रान्तामाधिकाम् ॥ ४ ॥ सीतान्वेषणस्य फलमाह–अस्मिन्निति । अस्मिन्कार्ये सीतान्वेषणकार्ये । कृतार्थार्थविदां वराः इत्यत्र सवर्णदीर्घ आर्षः ॥ ५ ॥ ६ ॥ प्रत्युपकारस्यावश्यकर्तव्यत्वं कैमुत्यन्यायेन द्रढयति–अर्थिन इति । यः पुरुषः अकर्तुः पूर्वमुपकारमकुर्वतोपि अर्थिनः कार्यापेक्षिणः पुरुषस्य कार्यनिर्वृत्तिं

इमानि वक्ष्यमाणानि । नद्यः नदीः । तत्रेति । भरतान् इन्द्रप्रस्थादिप्रदेशान् । कुरून् दक्षिणकुरून् हिमवदन्तान् पुनः पुनरन्वीक्ष्य परिमार्गन्त्विति पूर्वेण संबन्धः ॥ १०–१३ ॥ लोध्रेति । पद्मकाश्चन्दनविशेषाः, साहचर्यात् ॥ १४ ॥ रामानु०—लोध्रपद्मकषण्डेष्वित्यत्र पद्मकशब्दश्चन्दनव्यतिरिक्तवृक्षविशेषवाची,

इमानि वनदुर्गाणि नद्यः शैलान्तराणि च । भवन्तः परिमार्गन्तु बुद्धिविक्रमसम्पदा ॥ १० ॥ तत्र म्लेच्छान्पुलिन्दांश्च शूरसेनांस्तथैव च । प्रस्थलान् भरतांश्चैव कुरूंश्च सह मद्रकैः ॥ ११ ॥ काम्बोजान् यवनांश्चैव शकानारट्टकानपि । बाह्लीकानृषिकांश्चैव पौरवानथ टङ्कणान् ॥ १२ ॥ चीनान् परमचीनांश्च नीहारांश्च पुनः पुनः । अन्वीक्ष्य दरदांश्चैव हिमवन्तं तथैव च ॥ १३ ॥ लोध्रपद्मकषण्डेषु देवदारुवनेषु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १४ ॥ ततः सोमाश्रमं गत्वा देवगन्धर्वसेवितम् । कालं नाम महासानुं पर्वतं तु गमिष्यथ ॥ १५ ॥ महत्सु तस्य शैलस्य निर्दरेषु गुहासु च । विचिनुध्वं महाभागां रामपत्नीं ततस्ततः ॥ १६ ॥ तमतिक्रम्य शैलेन्द्रं हेमगर्भं महागिरिम् । ततः सुदर्शनं नाम गन्तुमर्हथ पर्वतम् ॥ १७ ॥ ततो देवसखो नाम पर्वतः पतगालयः । नानापक्षिगणाकीर्णो विविधद्रुमभूषितः ॥ १८ ॥ तस्य काननषण्डेषु निर्झरेषु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १९ ॥ तमतिक्रम्य चाकाशं सर्वतः शतयोजनम् । अपर्वतनदीवृक्षं सर्वसत्त्वविवर्जितम् ॥ २० ॥

अकाले वनद्रव्यभूतलोध्रादिसहपाठात् ॥ १४ ॥ ॥ १५ ॥ १६ ॥ तं कालं नाम महागिरिमतिक्रम्य । ततः तस्मात् । सुदर्शनं पर्वतं गन्तुमर्हथ ॥ १७ ॥ तत इति । पतगालयः पक्षिणामावासभूतः । पक्षिणां वैविध्यमाह—नानापक्षिसमाकीर्ण इति ॥ १८ ॥ रामानु०—ततो देवसखो नाम पर्वतः पर्वतालया इति पाठः । पर्वतालयाः ! इति वानराणां संबोधनम् ॥ १८ ॥ १९ ॥ तमिति । तमतिक्रम्य तस्माद्देवसखाख्यपर्वतात्परम् । अपर्वतनदीवृक्षं शून्यारण्यस्थलम् । वर्तत इति शेषः ॥ २० ॥

चरेत् कुर्यात् तस्य जन्म सफलं स्यात्, पूर्वकारिणः किंपुनः ॥ ७–९ ॥ इमानीति । नद्यः नदीः ॥ १० ॥ भरतान् इन्द्रप्रस्थहस्तिनापुरप्रदेशान् । कुरून् कुरुक्षेत्रप्रदेशान् । म्लेच्छादीन् हिमवदन्तान् देशान् पुनः पुनरन्वीक्ष्य परिमार्गन्त्विति पूर्वेण सम्बन्धः ॥ ११–१७ ॥ तत इति । पर्वतालया इति कपिसम्बोधनम् ॥ १८ ॥ १९ ॥ तमतिक्रम्य देवसखाख्यपर्वतात्परम् । आकाशं शून्यावरणस्थलम्, वर्तत इति शेषः ॥ २०–२२ ॥

तं त्विति। कैलासमिति। यद्यपि कैलासो हिमवदेकदेश इति पुराणान्तरोक्तं तथापि तदविरुद्धं शेषम्, मध्ये शून्यप्रदेशोपि तावत्पर्यन्तं हिमवानिति ॥२१॥ तत्रेत्यादि। तत्र कैलासे। नलिनी मानसाख्यसरसी ॥२२॥२३॥ तत्रेति। तत्र कैलासे ॥ २४ ॥ तस्य कैलासस्य। पर्वतेषु पर्यन्तपर्वतेषु ॥ २५ ॥ बिलं



तं तु शीघ्रमतिक्रम्य कान्तारं रोमहर्षणम्। कैलासं पाण्डुरं शैलं प्राप्य हृष्टा भविष्यथ ॥ २१ ॥ तत्र पाण्डुरमेघाभं जाम्बूनदपरिष्कृतम्। कुबेरभवनं दिव्यं निर्मितं विश्वकर्मणा ॥ २२ ॥ विशाला नलिनी यत्र प्रभूतकमलोत्पला। हंसकारण्डवाकीर्णा ह्यप्सरोगणसेविता ॥ २३ ॥ तत्र वैश्रवणो राजा सर्वभूतनमस्कृतः। धनदो रमते श्रीमान् गुह्यकैः सह यक्षराट् ॥ २४ ॥ तस्य चन्द्रनिकाशेषु पर्वतेषु गुहासु च। रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २५ ॥ क्रौञ्चं तु गिरिमासाद्य बिलं तस्य सुदुर्गमम्। अप्रमत्तैः प्रवेष्टव्यं दुष्प्रवेशं हि तत्स्मृतम् ॥२६॥ वसन्ति हि महात्मानस्तत्र सूर्यसमप्रभाः। देवैरप्यर्चिताः सम्यग् देवरूपा महर्षयः ॥ २७ ॥ क्रौञ्चस्य तु गुहाश्चान्याः सानूनि शिखराणि च। निर्दराश्च नितम्बाश्च विचेतव्यास्ततस्ततः ॥ २८ ॥ क्रौञ्चस्य शिखरं चापि निरीक्ष्य च ततस्ततः। अवृक्षं कामशैलं च मानसं विहगालयम् ॥ २९ ॥ न गतिस्तत्र भूतानां देवदानवरक्षसाम्। स च सर्वैर्विचेतव्यः ससानुप्रस्थभूधरः ॥ ३० ॥

स्कन्दशक्तिकृतम् ॥ २६–२८ ॥ क्रौञ्चस्येत्यादि। शिखरं च प्रधानभूतं शिखरं च। अवृक्षं अवृक्षाख्यं प्रत्यन्तपर्वतम्। विहगालयं मानसं मानसाख्यं गिरिं च निरीक्ष्य ते विचेतव्या इति पूर्वेण संबन्धः ॥ २९ ॥ न गतिरिति। तत्र मानसाख्ये पर्वते। ससानुप्रस्थभूधरः, सानवः उपत्यकाः, प्रस्थाः

नलिनी मानसाख्यसरसी ॥ २३ ॥ २४ ॥ तस्य कैलासस्य। पर्वतेषु पर्यन्तपर्वतेषु ॥ २५ ॥ क्रौञ्चमिति। बिलं स्कन्दशक्तिकृतं रन्ध्रम् ॥ २६–२८ ॥ क्रौञ्चस्य शिखरं प्रधानभूतं शिखरं च अवृक्षम् अवृक्षाख्यप्रत्यन्तपर्वतं कामशैलं च मानसं मानसाख्यगिरिं ततो निरीक्ष्य विचेतव्या इति पूर्वेण सम्बन्धः ॥ २९ ॥ तत्र मानसाख्ये पर्वते। सः मानसपर्वतः। सानुः पर्वतपार्श्वसमतलः। प्रस्थस्तु विषमतलः ॥ ३० ॥

मध्यतटाः । भूधराः अधित्यकाः ॥ ३० ॥ क्रौञ्चं गिरिमतिक्रम्य क्रौञ्चगिरेः परतः । मैनाको नाम पर्वतः, वर्तत इति शेषः ॥ ३१ ॥ अश्वमुखीनां किंपुरुषस्त्रीणाम् ॥ ३२ ॥ तं देशमिति । आश्रमं सिद्धसेवितम्, अस्तीति शेषः ॥ ३३ ॥ तपःसिद्धाः अणिमाद्यष्टैश्वर्यसिद्धियुक्ताः ॥ ३४ ॥



क्रौञ्चं गिरिमतिक्रम्य मैनाको नाम पर्वतः । मयस्य भवनं यत्र दानवस्य स्वयं कृतम् ॥३१॥ मैनाकस्तु विचेतव्यः ससानुप्रस्थकन्दरः । स्त्रीणामश्वमुखीनां च निकेतास्तत्र तत्र तु ॥ ३२ ॥ तं देशं समतिक्रम्य आश्रमं सिद्धसेवितम् । सिद्धा वैखानसास्तत्र वालखिल्याश्च तापसाः ॥३३॥ वन्द्यास्ते तु तपास्सिद्धास्तपसा वीतकल्मषाः । प्रष्टव्या चापि सीतायाः प्रवृत्तिर्विनयान्वितैः ॥ ३४ ॥ हेमपुष्करसंछन्नं तस्मिन् वैखानसं सरः । तरुणादित्यसंकाशैर्हंसैर्विचरितं शुभैः ॥३५॥ औपवाह्यः कुबेरस्य सार्वभौम इति स्मृतः । गजः पर्येति तं देशं सदा सह करेणुभिः ॥३६॥ तत्सरः समतिक्रम्य नष्टचन्द्रदिवाकरम् । अनक्षत्रगणं व्योम निष्पयोदमनादितम् ॥३७॥ गभस्तिभिरिवार्कस्य स तु देशः प्रकाशते । विश्राम्यद्भिस्तपस्सिद्धैर्देवकल्पैः स्वयंप्रभैः ॥ ३८ ॥

रामानु०—प्रष्टव्या चापि सीतायाः प्रवृत्तिर्विनयान्वितैरिति पाठः ॥ ३४ ॥ ॥ ३५ ॥ औपवाह्यः राजार्हं वाहनम् । "राजवाहस्त्वौपवाह्यः" इत्यमरः ॥३६॥ अथ महामेरुपर्यन्तेलावृतप्रदेशानुपदिशति—तत्सर इति । उत्तरत्र "हिमवन्तं च मेरुं च समुद्रं च तथोत्तरम्" इति वक्ष्यमाणत्वादत्र मेरुकीर्तनप्रसक्तिरेव नास्तीति न भ्रमितव्यम् । व्योम, वर्तत इति शेषः । व्योम्नो नष्टचन्द्रदिवाकरादित्वं नियतमार्गवर्तिनां चन्द्रसूर्यादीनां मेरुनिकटे किरणसञ्चाराभावात् । तदुक्तं विष्णुपुराणे—" यावत्पुरस्तात्तपति तावत्पृष्ठे च पार्श्वयोः । ऋते हेमगिरेर्मेरोरुपरि ब्रह्मणः सभाम् ॥ " इति ॥ ३७ ॥ गभस्तिभिरिति । स देशः

क्रौञ्चं गिरिमतिक्रम्य क्रौञ्चगिरेः परं मैनाको नाम पर्वतो वर्तत इति शेषः ॥ ३१ ॥ स्त्रीणामश्वमुखीनां किम्पुरुषयोषिताम् ॥ ३२॥ आश्रमं सिद्धसेवितम्, अस्तीति शेषः ॥ ३३ ॥ तपस्सिद्धाः तपसा सिद्धाः अणिमाद्यष्टैश्वर्यसिद्धियुक्ताः ॥ ३४ ॥ ३५ ॥ औपवाह्यः राजवाहनम् । पर्येति अटति ॥ ३६ ॥ व्योम, वर्तत इति शेषः । व्योम्नो नष्टचन्द्रदिवाकरत्वं नियतमार्गवर्तिनां चन्द्रादीनां तत्र सञ्चाराभावात ॥ ३७॥ ३८ ॥

अर्कस्य गभस्तिभिरिव स्थितैः स्वयंप्रभैः स्वतःसिद्धज्ञानैः तपःसिद्धैः प्रकाशिते ॥३८॥ तं त्विति । निम्नगा, वर्तत इति शेषः ॥ ३९ ॥ उभयोरिति । तस्याः शैलोदायाः उभयोस्तीरयोः कीचका नाम वेणवः सन्ति । ते उभयतीरजाः कीचकाः अन्योन्यसंग्रथिततया गमनसाधनभूताः सन्तः सिद्धान् परं तीरं नयन्ति प्रत्यानयन्ति च ॥ ४० ॥ रामानु०—उभयोस्तीरयोस्तस्याः कीचका नाम वेणवः । ते नयन्ति परं तीरं सिद्धान् प्रत्यानयन्ति च ॥ इति पाठः ॥ ४० ॥ उत्तराः

तं तु देशमतिक्रम्य शैलोदा नाम निम्नगा ॥ ३९ ॥ उभयोस्तीरयोस्तस्याः कीचका नाम वेणवः । ते नयन्ति परं तीरं सिद्धान् प्रत्यानयन्ति च ॥ ४० ॥ उत्तराः कुरवस्तत्र कृतपुण्यप्रतिश्रयाः ॥ ४१ ॥ ततः काञ्चनपद्माभिः पद्मिनीभिः कृतोदकाः । नीलवैडूर्यपत्राभिर्नद्यस्तत्र सहस्रशः ॥ ४२ ॥ रक्तोत्पलवनैश्चात्र मण्डिताश्च हिरण्मयैः । तरुणादित्यसदृशैर्भान्ति तत्र जलाशयाः ॥ ४३ ॥ महार्हमणिपत्रैश्च काञ्चनप्रभकेसरैः । नीलोत्पलवनैश्चित्रैः स देशः सर्वतो वृतः ॥ ४४ ॥ निस्तुलाभिश्च मुक्ताभिर्मणिभिश्च महाधनैः । उद्धूतपुलिनास्तत्र जातरूपैश्च निम्नगाः ॥ ४५ ॥ सर्वरत्नमयैश्चित्रैरवगाढा नगोत्तमैः । जातरूपमयैश्चापि हुताशनसमप्रभैः ॥ ४६ ॥

कुरवः उत्तरकुरुसंज्ञकाः देशाः, वर्तन्त इति शेषः । कृतपुण्यानां प्रतिश्रयाः आश्रयभूताः आवासभूताः ॥ ४१ ॥ ततः कृतपुण्यप्रतिश्रयत्वाद्धेतोः । कृतपुण्यभोग्यभूमित्वात् उक्तविशेषा नद्यः सन्तीति भावः । पद्मिनीभिः पद्मलताभिः कृतोदकाः पर्याप्तोदकाः । "युगपर्याप्तयोः कृतम्" इत्यमरः ॥४२॥ रक्तेत्यविभक्तिकनिर्देशः । रक्तैरुत्पलवनैर्हैरण्मयैरुत्पलवनैः, तरुणादित्यसदृशैरुत्पलवनैश्चेत्यर्थः। तत्रात्र तेष्वेतेषु कुरुष्वित्यन्वयः॥४३॥ महार्हमणयो नील रत्नानि । तत्तुल्यपत्रैः॥४४॥ निस्तुलाभिः वर्तुलाभिः । "वर्तुलं निस्तुलं वृत्तम्" इत्यमरः । महाधनैः बहुमूल्यैः। उद्धूतपुलिनाः उन्नतपुलिनाः। निम्नगाः तमित्यादिश्लोकद्वयमेकं वाक्यम् । उभयोस्तीरयोर्जताः कीचकाः अन्योन्यसंग्रथिततया गमनसाधनभूतास्सन्तः सिद्धान् परं तीरं नयंति प्रत्यानयन्ति चेति सम्बन्धः ॥

टी०—देशं सिद्धाश्रमसरःप्रान्तदेशम् । तस्याः शैलोदाया उभयोस्तीरयोः कीचका नाम वेणवः सन्तीति शेषः । "वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इत्यमरः ॥ ३९ ॥ ४० ॥ उत्तरकुरुसंज्ञकाः तत्र, वर्तन्त इति शेषः । कृतपुण्यप्रतिश्रयाः, पुण्यानां प्रतिश्रया आश्रयभूताः ज्योतिष्टोमादयः ते कृता यैस्ते कृतपुण्यप्रतिश्रयाः । यद्वा कृतपुण्यानां सुकृतिनां प्रतिश्रया इति वा । ततः कृतपुण्यप्रतिश्रयत्वात् । काञ्चनपद्माभाः पद्मिनीभिः कृतोदकाश्च दिव्यसरसीभिः कृतजलक्रीडादिकाः । नीलवैडूर्येत्यादिना उत्तरकुरुदेशो वर्ण्यते—नीलवैडूर्याणि पत्राणि च तैराढ्याः नीलवैडूर्यपत्राढ्याः ॥ ४१–४४ ॥ निस्तुलाभिः वर्तुलाभिः " निस्तुलं वर्तुलं वृत्तम् " इत्यमरः ॥ ४५ ॥ नगोत्तमैः पर्वत

भान्तीति शेषः ॥४५॥ सर्वेति । नगोत्तमैः पर्वतश्रेष्ठैः । अवगाढाः प्रविष्टा इति निम्नगाविशेषणम् ॥ ४६ ॥ पत्ररथाकुलाः । पक्षिभिराकुलाः सर्वकामान् सर्वाभीष्टान् ॥४७॥४८॥ रामानु०—नानाकाराणि वासांसि फलन्त्यन्ये नगोत्तमाः इति पाठः । नगोत्तमाः वृक्षश्रेष्ठाः ॥ ४८ ॥ मुक्तेति । सर्वर्तुसुखसेव्यानि हेमन्ताद्यृतुष्वपि

नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः । दिव्यगन्धरसस्पर्शाः सर्वकामान् स्रवन्ति च ॥ ४७ ॥ नानाकाराणि वासांसि फलन्त्यन्ये नगोत्तमाः ॥४८॥ मुक्तावैडूर्यचित्राणि भूषणानि तथैव च । स्त्रीणां चाप्यनुरूपाणि पुरुषाणां तथैव च । सर्वर्तुसुखसेव्यानि फलन्त्यन्ये नगोत्तमाः ॥ ४९ ॥ महार्हाणि च चित्राणि हैमान्यन्ये नगोत्तमाः । शयनानि प्रसूयन्ते चित्रास्तरणवन्ति च ॥ ५० ॥ मनःकान्तानि माल्यानि फलन्त्यत्रापरे द्रुमाः । पानानि च महार्हाणि भक्ष्याणि विविधानि च ॥५१॥ स्त्रियश्च गुणसम्पन्ना रूपयौवनलक्षिताः । गन्धर्वाः किन्नराः सिद्धा नागा विद्याधरास्तथा । रमन्ते सहितास्तत्र नारीभिर्भास्करप्रभाः ॥ ५२ ॥ सर्वे सुकृतकर्माणः सर्वे रतिपरायणाः । सर्वे कामार्थसहिता वसन्ति सहयोषितः ॥ ५३ ॥ गीतवादित्रनिर्घोषः सोत्कृष्टहसितस्वनः । श्रूयते सततं तत्र सर्वभूतमनोहरः ॥ ५४ ॥ तत्र नामुदितः कश्चिन्नास्ति कश्चिदसत्प्रियः । अहन्यहनि वर्धन्ते गुणास्तत्र मनोरमाः ॥ ५५ ॥ समतिक्रम्य तं देशमुत्तरः पयसांनिधिः ॥ ५६ ॥ तत्र सोमगिरिर्नाम मध्ये हेममयो महान् । इन्द्रलोकगता ये च ब्रह्मलोकगताश्च ये । देवास्तं समवेक्षन्ते गिरिराजं दिवं गताः ॥५७॥ स तु देशो विसूर्योऽपि तस्य भासा प्रकाशते । सूर्यलक्ष्म्याऽभिविज्ञेयस्तपतेव विवस्वता ॥ ५८ ॥

सुखेन सेवितुं योग्यानि ॥ ४९—५२ ॥ सर्व इति । सहयोषितः योषित्सहिताः ॥ ५३ ॥ रामानु०—सहयोषित इत्येतदेकं पदम् ॥ ५३ ॥ गीतेति । सोत्कृष्टहसितस्वनः उत्कृष्टहासशब्दसहितः ॥ ५४ ॥ तत्रेति । असत्प्रियः अविद्यमानाङ्गनः । गुणाः सुखादयः ॥ ५५ ॥ समतिक्रम्येति । पयसांनिधिः लवणसमुद्रः, अस्तीति शेषः ॥ ५६ ॥ तत्र लवणसमुद्रे । मध्ये मध्यदेशे । ये दिवं गता इत्यनुषज्यते ॥ ५७ ॥ स देशः विसूर्योऽपि रात्रौ विगतसूर्योऽपि । श्रेष्ठैः ॥ ४६ ॥ पत्ररथाः पक्षिणः ॥ ४७—४९ ॥ नगोत्तमाः वृक्षश्रेष्ठाः ॥ ५०—५५ ॥ उत्तरः पयसान्निधिः उत्तरलवणसमुद्रः, अस्तीति शेषः ॥ ५६॥ तत्र लवणसमुद्रे । मध्ये मध्यमदेशे ॥ ५७ ॥ स देशो विसूर्योऽपि रात्रौ विगतसूर्योऽपि विगतसूर्यकिरणोपीति वा । तस्य सोमगिरेः भासा प्रकशते । कथमिव ? सूर्यलक्ष्म्याभिविज्ञेयः

तस्य सोमगिरेर्भासा प्रकाशते । कथमिव ? सूर्यलक्ष्म्या अभिविज्ञेयः ज्ञातव्यपदार्थको देशः तपता विवस्वतेव ॥ ५८ ॥ विश्वात्मा विश्वशरीरकः । भगवान् षाड्गुण्यपरिपूर्णो वासुदेवः । "एवमेव महान् शब्दो मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥" इत्युक्तेः । नचेदमपि शम्भु विशेषणम्, एकादशात्मकत्वविरोधात् । नहि विश्वात्मकत्वमेकादशात्मकत्वं चैकत्र संभवति । एकादशात्मकः एकादशमूर्तिः । शम्भुः रुद्रः । देवेशो ब्रह्मा । ब्रह्मर्षिपरिवारितः तत्र वसति । इयं च क्रिया सर्वत्रापि संबध्यते । यद्यत्र कश्चित् प्रकरणाभावात् विष्णुरत्र नोच्यत इति कथयेत् तर्हि रुद्रोपि नोच्येत । कथमिति चेत् ? शं भावयतीति शम्भुरिति व्युत्पत्त्या "शम्भू ब्रह्मत्रिलोचनौ" इति कोशकारवचनाच्च सर्वाण्यपि विशेषणानि ब्रह्मपराणि

भगवानपि विश्वात्मा शम्भुरेकादशात्मकः । ब्रह्मा वसति देवेशो ब्रह्मर्षिपरिवारितः ॥ ५९ ॥
न कथञ्चन गन्तव्यं कुरूणामुत्तरेण वः । अन्येषामपि भूतानां नातिक्रामति वै गतिः ॥ ६० ॥
स हि सोमगिरिर्नाम देवानामपि दुर्गमः । तमालोक्य ततः क्षिप्रमुपावर्त्तितुमर्हथ ॥ ६१ ॥

भवेयुरिति ॥ ५९ ॥ रामानु०—विश्वात्मा विश्वशरीरकः । भगवान् भगवच्छब्देन षाड्गुण्यपरिपूर्णो वासुदेवोऽभिधीयते । तत्र तस्यैव मुख्यत्वात् । तदुक्तं श्रीविष्णुपुराणे—"एवमेव महान् शब्दो मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥" इति । एकादशात्मकः एकादशमूर्तिः शम्भुः । देवेशो ब्रह्मा । ब्रह्मर्षिपरिवारितः तत्र वसति । वसतिक्रिया पूर्वत्रापि संबध्यते । ब्रह्मर्षिपरिवारित इत्येतच्च भगवान् शम्भुरित्यत्रापि संबध्यते । अन्यथा तस्य सन्निहितब्रह्ममात्रसंबन्धे आद्ययोरेकैकविशेषणत्वं तृतीयस्य द्विविशेषणत्वमिति वैरूप्यं स्यात् ॥ ५९ ॥ न कथञ्चनेति । कुरूणामुत्तरेण "षष्ठ्यपीष्यते" इत्यनेनैनपा योगे षष्ठी । अन्येषामपि शक्तिविशेषविशिष्टदैत्यादीनामपि ।

सूर्यप्रभया विज्ञेयो देशः तपता विवस्वतेवेति योजना ॥५८॥ भगवान् नारायणः रूढनामेदम् । स हि भगवच्छब्देन झटिति प्रतीयते । अयमत्र पदान्वयः—विश्वात्मा भगवान् ब्रह्मर्षिपरिवारितस्तत्र वसति । एकादशात्मकः शम्भुः ब्रह्मर्षिपरिवारितस्तत्र वसति । देवेशो ब्रह्मा ब्रह्मर्षिपरिवारितस्तत्र वसतीति योजना ॥ टी०—भगवानित्यादि । भगवान् षड्गुणैश्वर्यसम्पन्नः ब्रह्मा वेदात्मकः शम्भुः शिवः तत्र वसतीत्याशयः॥५९॥ न कथञ्चनेति । वः युष्माभिः । अन्येषामपि शक्तिविशेषविशिष्टदैत्यादीनामपि ॥६०॥६१॥

स०—भगवान् स्वोचितैश्वर्यादिगुणः । विश्वात्मा समस्तमनोनियामकः । एकादशात्मकः तद्गुणत्यागी । शम्भुस्तत्र वसति । अनेनात्र भगवच्छब्दस्य श्रवणात्तस्य नारायणे रूढत्वात्स एवात्र तेन ग्राह्य इति निरस्तम् । "एतस्यां साध्वि सन्ध्यायां भगवान् भूतभावनः । परीतो भूतपार्षद्भिः" इत्यादौ भागवतादौ मत्रेपि भगवच्छब्दप्रयोगात् । "अन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः" इति तु निरवधिकैश्वर्यादिमद्बोधकभगवच्छब्दविवक्षया प्रवृत्तमिति न तद्विरोधः । ब्रह्मा च वसति ॥ ५९ ॥

वः युष्माभिः, न गन्तव्यम् ॥ ६० ॥६१॥ एतावत् उत्तरकुरुदेशपर्यन्तम् । ततः परम् उत्तरकुरुदेशात् परम् । समुद्रद्वीपादिकम् अभास्करममर्यादं च प्रदेशं न जानीमः । ततः परस्य देशस्य सर्वैर्गन्तुमशक्यत्वेन मयापि अनवगतत्वादिति भावः ॥ ६२ ॥ सर्वमिति । यदन्यदपि नोक्तं च तत्रापि क्रियतां मतिः, गम्यत्वेनोक्तप्रदेशानां यत्पार्श्वादिकमनुक्तं तत्रापि अन्वेषणे मतिः कर्तव्येत्यर्थः ॥ ६३ ॥ ततः अन्वेषणानन्तरम् । विदेहजादर्शनजेन कर्मणा



एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः । अभास्करममर्यादं न जानीमस्ततः परम् ॥ ६२ ॥ सर्वमेतद्विचेतव्यं यन्मया परिकीर्तितम् । यदन्यदपि नोक्तं च तत्रापि क्रियतां मतिः ॥ ६३ ॥ ततः कृतं दाशरथेर्महत् प्रियं महत्तरं चापि ततो मम प्रियम् । कृतं भविष्यत्यनिलानलोपमा विदेहजादर्शनजेन कर्मणा ॥६४॥ ततः कृतार्थाः सहिताः सबान्धवा मयाऽर्चिताः सर्वगुणैर्मनोरमैः । चरिष्यथोर्वीं प्रतिशान्तशत्रवः सहप्रिया भूतधराः प्लवङ्गमाः ॥६५॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

दाशरथेर्महत्प्रियं कृतं भविष्यति । मम चापि ततः दाशरथिप्रियात् महत्तरं प्रियं कृतं भविष्यतीति योजना ॥ ६४ ॥ भूतधराः प्राणिभृतः, प्राणिभिरुपजीव्या इति यावत् ॥ ६५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥४३॥

एतावत् उत्तरकुरुदेशपर्यन्तम् । ततः परम् उत्तरकुरुदेशात्परं समुद्रद्वीपादिकम् अस्ति । अभास्करं [illegible] ...स्वाररहितम् अमर्यादम् । अज्ञातमर्यादाप्रदेशं न विजानीमः, ततः परस्य देशस्य सर्वैर्गन्तुमशक्यत्वेन मयाप्यनवगतत्वादिति भावः ॥६२॥ सर्वमिति । [illegible]दपि नोक्तं च तत्रापि क्रियतां मतिः, गम्यत्वेनोक्तप्रदेशानां यावत्पार्श्वादिकमनुक्तं तत्राप्यन्वेषणे मतिः कर्तव्येत्यर्थः ॥६३॥६४॥ तत इति । भूतधराः प्राणभृद्धराः प्राणिभिरुपजीव्याः सन्तः उर्वीं चरिष्यथेति सम्बन्धः । भूतधरामिति पाठे उर्वीविशेषणम्॥६५॥इति श्रीमहेश्वरतीर्थविरचि० श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां त्रिचत्वारिंशस्सर्गः ॥ ४३ ॥

स०—भूतधराः—धरन्तीति धराः भूतस्य धराः तीतालाभेन यथार्थवचनधराः न्यायमार्गधरा वा । " भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः " इति विश्वः ॥ ६५ ॥

अथ निश्चितकार्यसाधनसामर्थ्याय हनुमते अङ्गुलीयकदानं चतुश्चत्वारिंशे–विशेषेण त्वित्यादि । हनुमति विषये । अर्थं वक्ष्यमाणार्थम् उक्तवान् । विशेषार्थकथने हेतुमाह–स हीति । अर्थसाधने विषये निश्चितार्थः ॥ १ ॥ रामानु०–स विशेषेणेति पाठः । हनुमत्यर्थमुक्तवान् निक्षिप्तवान् । धातूनामनेकार्थत्वात् कर्माधिकरणवाचिपदसमभिव्याहृतो वचिर्निक्षेपे वर्तते ॥ १ ॥ संग्रहेणोक्तमर्थं विस्तरेण दर्शयति–अब्रवीच्चेत्यादिना ॥ २ ॥ भूमौ सजातीयप्रतिपक्षबहुलायाम् । अन्त

विशेषेण तु सुग्रीवो हनुमत्यर्थमुक्तवान् । स हि तस्मिन् हरिश्रेष्ठे निश्चितार्थोऽर्थसाधने ॥ १ ॥ अब्रवीच्च हनूमन्तं विक्रान्तमनिलात्मजम् । सुग्रीवः परमप्रीतः प्रभुः सर्ववनौकसाम् ॥ २ ॥ न भूमौ नान्तरिक्षे वा नाम्बरे नामरालये । नाप्सु वा गतिसङ्गं ते पश्यामि हरिपुङ्गव ॥ ३ ॥ सासुराः सहगन्धर्वाः सनागनरदेवताः । विदिताः सर्वलोकास्ते ससागरधराधराः ॥ ४ ॥ गतिर्वेगश्च तेजश्च लाघवं च महाकपे । पितुस्ते सदृशं वीर मारुतस्य महौजसः ॥ ५ ॥ तेजसा वापि ते भूतं समं भुवि न विद्यते । तद्यथा लभ्यते सीता तत् त्वमेवोपपादय ॥ ६ ॥

रिक्षे निरालम्बे मेघादिसञ्चारमार्गे । अम्बरे वातचक्राक्रान्तप्रदेशे । अमरालये प्रबलाधिष्ठिते स्वर्गे । अप्सु तिर्यक्सञ्चारानर्हासु वा गतिसङ्गं गतिविलम्बं न पश्यामि ॥ ३ ॥ ४ ॥ गतिः अप्रतिहतगतिः ॥५॥ तेजसेति । भूतं जन्तुः । तत् तस्मात्कारणात् । तत् सीतान्वेषणम् । उपपादय संपादय ॥ ६ ॥

स विशेषेणेति । अर्थं प्रयोजनमुक्तवान्निक्षिप्तवानित्यर्थः । टीका०–विशेषोपदेशस्तु–अयं रामः श्रीविष्णुरित्येवंरूपो हि । तथोक्तं नृसिंहपुराणे " वायुपुत्रसमीपं तु गत्वा तं वाक्यमब्रवीत् । शृणु मद्वचनं वीर हनुमन्मारुतात्मज । अयमिक्ष्वाकुदायादो राजा रामः प्रतापवान् । सर्वात्मा सर्वलोकेशो विष्णुर्मानुषरूपधृत् ॥ " इति ॥ अत्र हेतुमाह–स हीति । यस्मात्कारणात्सुग्रीवः अर्थसाधने विषये तस्मिन् हरिश्रेष्ठे निश्चितार्थः । अयं भावः–सीतान्वेषणाय सर्वास्वपि दिक्षु वानरान्नियुज्य हनुमतस्सर्वोत्तमत्वात् अनेनैव कार्यसिद्धिर्भविष्यतीति निश्चित्य तत्प्रशंसापूर्वकं त प्रत्यर्थमुक्तवानिति ॥ १ ॥ २ ॥ न भूमाविति । अन्तरिक्षे पतत्रिमेघसञ्चारप्रदेशे, अम्बरे तदुपरि सिद्धविद्याधरादिसञ्चरणप्रदेशे । अमरालये स्वर्गे । एतदुपरितनलोकानामप्युपलक्षणम् ॥ ३–५ ॥ तेज

स०–गतिसङ्गं गमनव्यवधानकरम् । अन्तरिक्षं पक्षिमार्गः । अम्बरं व्योम । अमरालयः स्वर्गः । यद्वा अम्बरे अमरालये इति सामानाधिकरण्येनान्वयः । अथवा अप्सु आलये सर्वप्रलये । हे अमर ! अविनाशिन् ! गतिसङ्गं ज्ञानप्रतिबन्धम् । " प्रलयकालेपि प्रतिभातपरात्परः " इत्युक्तेः । ना पुमान् अहं न पश्यामीति भावः ॥ ३ ॥ पितुः वायोः । गत्या गतिः सदृशी । वेगेन वेगः । तेजसा तेजः । लाघवेन लाघवं चेत्यन्वयो द्रष्टव्यः ॥ ५ ॥

नयपण्डितेत्यनन्तरमितिकरणं बोध्यम् । इत्यब्रवीदिति पूर्वेणान्वयः ॥ ७ ॥ ततः सुग्रीववचनात् हनूमति कार्यसमासङ्गं कार्यविपर्यासाक्तिम् अवगम्य अस्मिन् सुग्रीवेण स्वकार्यभारो निक्षिप्त इति ज्ञात्वेत्यर्थः । स्वयमपि हनुमन्तं कार्यसाधकं विदित्वा चिन्तयामास ॥ ८ ॥ चिन्ताप्रकारमाह--सर्वथेत्यादिना श्लोकद्वयेन । अन्ते इतिकरणं बोध्यम् । कार्यसाधने विषये निश्चितार्थः निश्चितकार्यसाधकः । हनुमानपि निश्चितार्थकरः ॥९॥ तदेवमिति । अस्य



त्वय्येव हनुमन् स्वस्ति बलं बुद्धिः पराक्रमः । देशकालानुवृत्तिश्च नयश्च नयपण्डित ॥ ७ ॥ ततः कार्यसमासङ्गमवगम्य हनूमति । विदित्वा हनुमन्तं च चिन्तयामास राघवः ॥८॥ सर्वथा निश्चितार्थोऽयं हनूमति हरीश्वरः । निश्चितार्थकरश्चापि हनुमान् कार्यसाधने ॥९॥ तदेवं प्रस्थितस्यास्य परिज्ञातस्य कर्मभिः । भर्त्रा परिगृहीतस्य ध्रुवः कार्यफलोदयः ॥ १० ॥ तं समीक्ष्य महातेजा व्यवसायोत्तरं हरिम् । कृतार्थ इव संवृत्तः प्रहृष्टेन्द्रियमानसः ॥ ११ ॥ ददौ तस्य ततः प्रीतः स्वनामाङ्कोपशोभितम् । अङ्गुलीयमभिज्ञानं राजपुत्र्याः परंतपः ॥ १२ ॥

कार्यफलोदयः अस्य संबन्धिनी कार्यसिद्धिः । ध्रुवः निश्चितः १० ॥ व्यवसायोत्तरं व्यवसायेन उत्तरं श्रेष्ठम् । कृतार्थः संवृत्त इव, अमन्यतेति शेषः ॥११॥ राजपुत्र्या अभिज्ञानम् अभिज्ञायतेऽनेनेत्यभिज्ञानम् । ननु त्यक्तसकलधनस्य वन्यवृत्त्या वर्तमानस्य कुतोऽङ्गुलीयकमिति चेत् इदमेकमेतत्कार्यार्थं रक्षितवान् । अत एवाङ्गुलीयमुन्मुच्येति नोक्तम् । यद्वा रामनामाङ्कितमङ्गुलीयकं सीतायाः कदाचिद्रावणागमनात् पूर्वं प्रणयपरत्वेन रामेण स्वीकृतमिति बोध्यम् । यद्वा भार्यास्नेहेन कनिष्ठिकायां सदा मुद्रिका धार्यत इति देशाचारः । यद्वा विवाहकाले जनकेन दत्तमिदं वरालङ्कारत्वेन ।

सेति । भूतं सत्त्वम् । तत्त्वामित्यत्र तदिति च्छेदः । तत् तथाशब्दार्थे । नयपण्डितेत्यत्रेतिकरणं द्रष्टव्यम् । तस्याब्रवीच्चेति पूर्वेण सम्बन्धः॥६॥७॥ अथ रामस्सुग्रीववचनैर्हनुमतो न दुर्लभमस्तीत्यालोच्य समनन्तरकर्तव्यं चिन्तयति–तत इति । ततः सुग्रीववचनात् हनुमति कार्यसमासङ्गमवगम्य सुग्रीवेण हनुमति कार्यभारो निवेशित इति बुद्ध्वा हनुमन्तं स्वयमेव कार्यसाधकं विदित्वा च राघवश्चिन्तयामास ॥ ८ ॥ चिन्ताप्रकारमाह–सर्वथेति श्लोकद्वयेन । कर्मभिः परिज्ञातस्य अस्य हनुमतः । फलोदय इत्यत्र इतिकरणं द्रष्टव्यम् । एतस्य चिन्तयामासेति पूर्वेण सम्बन्धः ॥९॥१०॥ तं समीक्ष्येति । व्यवसायोत्तरमुद्योगप्रधानम् ॥११॥ अभिज्ञायते

स०–हनुमान् निश्चितार्थतरः । इदं च " अत्यन्तमन्तरङ्गत्वात्प्रधानाङ्गं हि मारुतिः " इत्युक्तेः प्रधानाङ्गत्वाद्युक्तमिति भावः ॥ ९ ॥

"गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणम्" इत्युक्तेः ॥ १२ ॥ भवद्वचनमेवालं किमर्थमेतद्दीयते ? तत्राह—अनेनेति । पश्यति द्रक्ष्यति ॥ १३ ॥ हनुमन्तं प्रशंसति—व्यवसाय इति । सत्त्वयुक्तो विक्रमः बलं च विक्रमश्चेत्यर्थः ॥ १४ ॥ १५ ॥ प्रकर्षन् नयन् । हरिणामित्यत्र दीर्घाभाव आर्षः॥१६॥

अनेन त्वां हरिश्रेष्ठ चिह्नेन जनकात्मजा । मत्सकाशादनुप्राप्तमनुद्विग्नाऽनु पश्यति ॥ १३ ॥ व्यवसायश्च ते वीर सत्त्वयुक्तश्च विक्रमः । सुग्रीवस्य च सन्देशः सिद्धिं कथयतीव मे ॥ १४ ॥ स तं गृह्य हरिश्रेष्ठः स्थाप्य मूर्ध्नि कृताञ्जलिः । वन्दित्वा चरणौ चैव प्रस्थितः प्लवगोत्तमः ॥१५॥ स तत्प्रकर्षन् हरिणां बलं महद्बभूव वीरः पवनात्मजः कपिः । गताम्बुदे व्योम्नि विशुद्धमण्डलः शशीव नक्षत्रगणोपशोभितः ॥ १६ ॥ अतिबल बलमाश्रितस्तवाहं हरिवरविक्रम विक्रमैरनल्पैः । पवनसुत यथाऽभिगम्यते सा जनकसुता हनुमन् तथा कुरुष्व ॥ १७ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

पुनरपि गच्छन्तं प्रति रामवचनम्—अतिबलेति । अतिबलेति संबुद्धिः । हरिवरविक्रम ! सिंहश्रेष्ठविक्रम सुग्रीवतुल्यविक्रमेति वा । श्लोकान्ते इति रामोऽब्रवीदित्यध्याहार्यम् ॥१७॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

अनेनेत्यभिज्ञानमङ्गुलीयकम् ॥ १२ ॥ १३ ॥ 'अनुद्विग्नाऽनु पश्यति' इति कथनं कथमित्याशङ्क्याह—व्यवसाय इति । सिद्धिं कथयतीव मे इत्यत्र इत्यवादीदित्यध्याहर्तव्यम् ॥ १४ ॥ १५ ॥ स इति । हरिणामित्यत्र दीर्घाभाव आर्षः ॥ १६ ॥ अतिबलेति । तथा कुरुष्वेत्यनन्तरं इति च रामोऽब्रवीदित्यध्याहर्तव्यम् । अतिबलेति सम्बोधनम् ॥१७॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां चतुश्चत्वारिंशः सर्गः ॥४४॥

स०-हरिणां हरीणाम् । यद्वा हरः मनः येषामस्ति ते हरिणः मनस्विनः तेषाम् । जन्यजनकयोरभिमन्यमान निमानिनोः "ब्रह्मादिकं मुखन्" "महतश्चतुर्मुखात्" इत्यादिवदैक्यव्यपदेशात् हरिणां मनस्विनामित्यर्थः सम्भवतीति ज्ञेयम् ॥ १६ ॥

अथ प्रेषितानां वानराणां सन्नाह उच्यते पञ्चचत्वारिंशे–सर्वांश्चेत्यादि । सर्वानाहूय ततः समस्तान् सङ्घीभूतान् प्लवगान् अब्रवीत् । यद्वा सम इति च्छेदः । समः सर्वत्र पक्षपातरहितः । एतत्पूर्वोक्तं एवम् अस्मदुक्तप्रकारेण इत्यब्रवीदिति सम्बन्धः ॥१॥ तदिति । शलभा इति बहुत्वमात्रे दृष्टान्तः ॥ २ ॥ सीताधिगमे सीताधिगमनिमित्तम् । कृतः कृतसङ्केतः॥३॥ प्रतस्थे प्रस्थातुमुद्युक्तः । सर्गान्ते सुग्रीवसन्निधौ सन्नाहकथनात् ॥४–६॥ तत इति ।

सर्वांश्चाहूय सुग्रीवः प्लवगान् प्लवगर्षभः । समस्तानब्रवीद्भूयो रामकार्यार्थसिद्धये । एवमेतद्विचेतव्यं यन्मया परिकीर्तितम् ॥ १ ॥ तदुग्रशासनं भर्तुर्विज्ञाय हरिपुङ्गवाः । शलभा इव संछाद्य मेदिनीं संप्रतस्थिरे ॥ २ ॥ रामः प्रस्रवणे तस्मिन् न्यवसत्सहलक्ष्मणः । प्रतीक्षमाणस्तं मासं यः सीताधिगमे कृतः ॥ ३ ॥ उत्तरां तु दिशं रम्यां गिरिराजसमावृताम् । प्रतस्थे सहसा वीरो हरिः शतवलिस्तदा ॥ ४ ॥ पूर्वां दिशं प्रति ययौ विनतो हरियूथपः । ताराङ्गदादिसहितः प्लवगो मारुतात्मजः ॥५॥ अगस्त्यचरितामाशां दक्षिणां हरियूथपः । पश्चिमां तु भृशं घोरां सुषेणः प्लवगेश्वरः । प्रतस्थे हरिशार्दूलो दिशं वरुणपालिताम् ॥ ६ ॥ ततः सर्वा दिशो राजा चोदयित्वा यथातथम् । कपिसेनापतीन् मुख्यान् मुमोद सुखितः सुखम्॥७॥ एवं सम्बोधिताः सर्वे राज्ञा वानरयूथपाः । स्वां स्वां दिशमभिप्रेत्य त्वरिताः संप्रतस्थिरे ॥ ८ ॥ आनयिष्यामहे सीतां हनिष्यामश्च रावणम् । नदन्तश्चोन्नदन्तश्च गर्जन्तश्च प्लवङ्गमाः । क्ष्वेलन्तो धावमानाश्च विनदन्तो महाबलाः ॥ ९ ॥

मुमोद सुखितः सुखमिति । पूर्वं राज्यलाभेन सुखितो राजा सुखं यथा भवति तथा मुमोद उत्तरोत्तरं सुखं प्रापेत्यर्थः ॥ ७ ॥ एवमित्यादि । स्वां स्वां दिशं स्वांशभूमण्डलम् । आनयिष्यामह इत्यत्र इतिकरणं द्रष्टव्यम् । आनयिष्यामह इति नदन्त इत्यन्वयः । नदन्तः शब्दं कुर्वन्तः । उन्नदन्तः

॥ १ ॥ वानरप्रस्थानमाह–तदिति । शलभोपमानेन वानराणामसङ्ख्येयत्वमुक्तम् ॥ २ ॥ सीताधिगमे इतिं निमित्तसप्तमी ॥ ३–८ ॥ आनयिष्याम्ह इति । अत्रेति स० ––– न् वैरिहिंसकान् । 'षर्व हिंसायाम्' इति धातोः । यद्वा समस्तान् मासमध्ये नायाताश्चेन्मच्छिक्षाविषया इति पूर्वं सम्यङ् निरस्तान् । रामकार्यार्थसिद्धये कार्यं सीतालाभश्च अर्थो मोक्षश्च तयोस्सिद्ध्यर्थम्, एवञ्च नार्थानर्थतेति ज्ञेयम् ॥ १ ॥ अगस्त्यचरिताम् अगस्त्यस्य चरितम्, भावे क्तः । चरितं चरणं सञ्चारो यस्यास्सा ताम् । अगस्त्यचरितं चरित्रं यस्यामिति वा ॥ ६ ॥ सुखितः आज्ञानुसारिभिरिभिस्सुखं प्रापितः । सुखं सु शोभनानि खानि इन्द्रियाणि यस्मिन्कर्मणि तद्यथा भवति तथा मुमोद स्वयं तुतोष ॥ ७ ॥

पुनः सन्तोपातिशयेन उच्चैर्नदन्तः । गर्जन्तः आत्मश्लाघां कुर्वन्तः । क्ष्वेलन्तः सिंहनादं कुर्वन्तः । विनदन्तः विविधान् विकृतान्वा नादान्कुर्वन्तः । संप्रतस्थिरं इति पूर्वेणान्वयः ॥ ८ ॥ ९ ॥ रामानु०–गुणाद् सुखितः स्वयमित्यतः परम् एवं संचोदिताः सर्वे राज्ञा वानरयूथपाः । स्वां स्वां दिशमभिप्रेत्य त्वरिताः संप्रतस्थिरे ॥ आनयिष्यामहे सीतां हनिष्यामश्च रावणम् इति पाठक्रमः । अत्रेतिकरणं द्रष्टव्यम् । अस्याभिप्रेत्येत्यनेन सम्बन्धः ॥ ८ ॥ ९ ॥ अहमित्यादि सागरानित्यन्तमेकान्वयम् ॥ १०--१३ ॥

अहमेको हनिष्यामि प्राप्तं रावणमाहवे । ततश्चोन्मथ्य सहसा हरिष्ये जनकात्मजाम् ॥ १० ॥ वेपमानां श्रमेणाद्य भवद्भिः स्थीयतामिह । एक एवाहरिष्यामि पातालादपि जानकीम् ॥ ११ ॥ विमथिष्याम्यहं वृक्षान् पातयिष्याम्यहं गिरीन् । धरणीं दारयिष्यामि क्षोभयिष्यामि सागरान् ॥ १२ ॥ अहं योजनसङ्ख्यायाः प्लविता नात्र संशयः । शतं योजनसंख्यायाः शतं समधिकं ह्यहम् ॥ १३ ॥ भूतले सागरे वापि शैलेषु च वनेषु च । पातालस्यापि वा मध्ये न ममाच्छिद्यते गतिः ॥ १४ ॥ इत्येकैकं तदा तत्र वानरा बलदर्पिताः । ऊचुश्च वचनं तत्र हरिराजस्य सन्निधौ ॥ १५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

रामानु०–भवद्भिः स्थीयतामिति इति पाठः । अहं योजनसङ्ख्यायाः शतं प्लवितेत्येकस्य वचनम् । योजनसङ्ख्यायाः शतं समधिकमित्यन्यस्य । हिः प्रसिद्धौ ॥ १३ ॥ ॥ १४ ॥ १५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

करणं द्रष्टव्यम् । नदन्तः नादमात्रं कुर्वन्तः । उन्नदन्तः उच्चैर्नदन्तः । गर्जन्तः आत्मश्लाघां कुर्वन्तः । क्ष्वेलन्तः सिंहनादान् कुर्वन्तः । विनदन्तः विकृतनादान् कुर्वन्तः ॥ ९–१२ ॥ अहं योजनसङ्ख्यायाः शतं प्लविता नात्र संशय इत्येकस्य वचनम् । योजनसङ्ख्यायाः शतं समधिकमित्यन्यस्य ॥ १३ ॥ १४ ॥ इतीति । ऊचुश्च । अत्र चकारः प्रस्थानवीरवादयोस्समुच्चयवाचकः । उक्त्वा प्रतस्थिर इत्यर्थः ॥ १५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां पञ्चचत्वारिंशस्सर्गः ॥ ४५ ॥

अथ रामाय सुग्रीवेण स्वस्य सर्वभूमण्डलज्ञानमूलकथनं षट्चत्वारिंशे—गतेष्वित्यादि ॥ १ ॥ प्रणतात्मवान् प्रणतदेहवान् ॥ २ ॥ यदेति । केचिदत्र दुन्दुभिशब्देन उपचारान्मायाव्येवोच्यते मायाविनो वृत्तान्तस्यानुवादादित्याहुः । तन्न, महिषाकृतिमित्यस्य विरोधात् । 'तदा विवेश महिषः । महिषो विनशेदिति " इति पुनः पुनरुक्तेश्च रामेण विदितवृत्तान्तश्च न वचनमर्हति । तर्हि कथमुपपत्तिरिति चेत् ? उच्यते—पूर्वं मायाविवृत्तान्ताभिधानादत्र महिषवृत्तान्ताभिधानाच्च तदानीमुभावप्यागताविति वेदितव्यम् । तत्र महिषः कथंचित् स्वात्मानं गोपायित्वा वालिनि विनिर्गते पुनः मत्तः कदाचिदागत्य वालिना हत इत्यविरोधः । वक्ष्यत्येवमन्यत्रापि विषये । यथा रावणेन सीतोपप्लवे उद्युक्ते मन्दोदरीधान्यमालिन्यौ निवारिण्यौ, तत्रैका पूर्वमुक्ता अन्या वानरसन्निधावनुवादे । तस्मादयमृषेः स्वभाव इति बोध्यम् । परिकालयते पलाययति । कलतेर्मितो वृद्धिरार्षी ॥ ३ ॥ तत्रापि गुहायामपि । तज्जिघांसया मलयं विवेश ॥ ४ ॥ विनीतवत् विनययुक्तमिति क्रियाविशेषणम् ॥ ५ ॥ भ्रातृशोक एव विषं तेन अर्दितः, अभवमिति शेषः ॥ ६ ॥

गतेषु वानरेन्द्रेषु रामः सुग्रीवमब्रवीत् । कथं भवान् विजानीते सर्वं वै मण्डलं भुवः ॥ १ ॥ सुग्रीवस्तु ततो राममुवाच प्रणतात्मवान् । श्रूयतां सर्वमाख्यास्ये विस्तरेण नरर्षभ ॥ २ ॥ यदा तु दुन्दुभिं नाम दानवं महिषाकृतिम् । परिकालयते वाली मलयं प्रति पर्वतम् ॥ ३ ॥ तदा विवेश महिषो मलयस्य गुहां प्रति । विवेश वाली तत्रापि मलयं तज्जिघांसया ॥ ४ ॥ ततोऽहं तत्र निक्षिप्तो गुहाद्वारि विनीतवत् । न च निष्क्रमते वाली तदा संवत्सरे गते ॥ ५ ॥ ततः क्षतजवेगेन आपुपूरे तदा बिलम् । तदहं विस्मितो दृष्ट्वा भ्रातृशोकविषार्दितः ॥ ६ ॥

गतेष्विति । अत्रेतिकरणं द्रष्टव्यम् ॥ १ ॥ २ ॥ यदा तु दुन्दुभिर्नामेति पूर्वोक्तमायाविवृत्तान्तस्यैवेदानीमनूद्यमानत्वात् अत्र दुन्दुभिशब्देनाभेदोपचारात्तत्पुत्रो मायाव्येवोच्यते ॥ ३ ॥ विवेशेति । तत्रापि गुहायामपि । तज्जिघांसया मलयं मलयगुहां विवेशेति सम्बन्धः ॥ ४ ॥ विनीतवत् भृत्यवत् ॥ ५ ॥ तत इति ।

स०—अव्ययानामनेकार्थत्वात् वै इत्यर्थे । ततश्च इत्यत्रवीदित्यन्वयः ॥ १ ॥ प्रणतात्मवान् प्रणतश्चासावात्मा देहश्च सोऽस्यास्तीति तथा । एकदेशिनेत्यादिनिर्देशात् " न कर्मधारयात् " इति नत्रा निर्देशाच्च मत्वर्थीयनिषेधोऽनित्य इति प्रणतात्मवानिति साधुः । आत्मा मनोऽस्यास्तीत्यात्मवान् । प्रणतश्चासावात्मवांश्चेति वा ॥ २ ॥ दुन्दुभिरिति जनक इत्यादिवत्कुलनाम । मायावीति तन्मात्रनामेति दुन्दुभेः पितृत्वात्कथं मायाविनि पुत्रे तन्नामेति निरस्तम् । अथवा पितृनाम्ना लक्षणया पुत्रो गृह्यते ॥ ३ ॥

अथेति। अहं गुरुर्निहत इति कृतबुद्धिः, अभवमिति शेषः। विनशेत् विनश्येदित्यर्थः ॥७॥८॥ वसामि अवसम्। दानवर्षभं मायाविनम्॥९॥ भययन्त्रितः भयपरवशः ॥ १० ॥ परिकालयते निरकासयत् ॥ ११ ॥ सानुबन्धः सामात्यः। नदीः पश्यन्नहं प्रधावित इत्यन्वयः ॥ १२ ॥ १३ ॥ पश्यामि

अथाहं कृतबुद्धिस्तु सुव्यक्तं निहतो गुरुः। शिला पर्वतसङ्काशा बिलद्वारि मयावृता ॥ ७॥ अशक्नुवन्निष्क्रमितुं महिषो विनशेदिति। ततोऽहमागां किष्किन्धां निराशस्तस्य जीविते। राज्यं च सुमहत्प्राप्तं तारया रुमया सह ॥ ८॥ मित्रैश्च सहितस्तत्र वसामि विगतज्वरः। आजगाम ततो वाली हत्वा तं दानवर्षभम् ॥९॥ ततोऽहमददां राज्यं गौरवाद्भययन्त्रितः ॥ १० ॥ स मां जिघांसुर्दुष्टात्मा वाली प्रव्यथितेन्द्रियः। परिकालयते क्रोधाद्धावन्तं सचिवैस्सह ॥ ११ ॥ ततोऽहं वालिना तेन सानुबन्धः प्रधावितः। नदीश्च विविधाः पश्यन् वनानि नगराणि च ॥ १२॥ आदर्शतलसङ्काशा ततो वै पृथिवी मया। अलातचक्रप्रतिमा दृष्टा गोष्पदवत्तदा ॥ १३ ॥ पूर्वां दिशं ततो गत्वा पश्यामि विविधान् द्रुमान्। पर्वतांश्च नदी रम्याः सरांसि विविधानि च ॥ १४ ॥ उदयं तत्र पश्यामि पर्वतं धातुमण्डितम्। क्षीरोदं सागरं चैव नित्यमप्सरसालयम् ॥ १५॥ परिकाल्यमानस्तु वालिनाऽभिद्रुतस्तदा। पुनरावृत्य सहसा प्रस्थितोऽहं तदा विभो ॥ १६ ॥

अपश्यम् ॥ १४ ॥ रामानु०—पर्वतांश्च नदी रम्याः इति पाठः साधुः॥ १४ ॥ अप्सरसा अप्सरसाम्। पूर्वसवर्णदीर्घः। वालिनाभिद्रुतः परिकाल्यमानोऽहं

तद्रक्तपूर्णं बिलं दृष्ट्वा विस्मितः भ्रातृशोकविषार्दितश्चाभूवमिति शेषः ॥ ६ ॥ अथनानन्तरम्। गुरुः वाली सुव्यक्तं निहत इति गतबुद्धिः प्राप्तबुद्धिः आसमिति शेषः ॥ ७ ॥ विनशेत विनश्येदित्यर्थः ॥ ८ ॥ वसामि अवसम् ॥ ९ ॥ १० ॥ स मामिति। परिकालयते निरकासयत् ॥ ११ ॥ सानुबन्धः सामात्यः ॥ १२ ॥ अलातचक्रप्रतिमा अग्नियुक्तकाष्ठभ्रमणसमा, गैरिकादिधातुचित्रितचक्रवालपरिवृतत्वाद्भूमेरलातचक्रसाम्यम् ॥ १३–१६ ॥

स०—वाली सचिवैस्सह धावन्तं माम्। अवालीति। अवाली न विद्यते वाली यस्येत्यवाली। अहं मृत इति मत्वा एवं कृतवानिति अवाली सुग्रीव इति मत्वा प्रतिकालयता इत्यन्वये न पुनरुक्तिः ॥ ११ ॥

द्रुमादिकमपश्यमितिं पूर्वेणान्वयः ॥ १५ ॥ १६ ॥ रामानु०—उदयमित्याद्यर्धत्रयमेकं वाक्यम् । एतदनन्तरम् पुनरावृत्य सहसा प्रस्थितोऽहं तदा विभो । पुनरावर्तमानस्तु वालिनाभिद्रुतो द्रुतमिति पाठः ॥ १५ ॥ १६ ॥ पुनरित्यादि श्लोकद्वयमेकान्वयम् । अस्याः पूर्वस्याः दिशः पुनरावृत्य प्रस्थितोऽस्मि । आवर्तमानोऽहं

पुनरावर्तमानस्तु वालिनाऽभिद्रुतो द्रुतम् । दिशस्तस्यास्ततो भूयः प्रस्थितो दक्षिणां दिशम् ॥ १७ ॥ विन्ध्यपादप सङ्कीर्णां चन्दनद्रुमभूषिताम् । द्रुमशैलांस्ततः पश्यन् भूयो दक्षिणतोऽपरान् ॥१८॥ पश्चिमां तु दिशं प्राप्तो वालिना समभिद्रुतः । संपश्यन् विविधान् देशानस्तं च गिरिसत्तमम् । प्राप्य चास्तं गिरिश्रेष्ठमुत्तरां संप्रधावितः ॥ १९ ॥ हिमवन्तं च मेरुं च समुद्रं च तथोत्तरम् ॥ २० ॥ यदा न विन्दं शरणं वालिना समभिद्रुतः । तदा मां बुद्धिसंपन्नो हनुमान् वाक्यमब्रवीत् ॥ २१ ॥ इदानीं मे स्मृतं राजन् यथा वाली हरीश्वरः । मतङ्गेन तदा शप्तो ह्यस्मिन्नाश्रम मण्डले ॥२२॥ प्रविशेद्यदि वै वाली मूर्धाऽस्य शतधा भवेत् । तत्र वासः सुखोऽस्माकं निरुद्विग्नो भविष्यति॥२३॥ ततः पर्वतमासाद्य ऋश्यमूकं नृपात्मज । न विवेश तदा वाली मतङ्गस्य भयात्तदा ॥ २४ ॥

पुनर्वालिनाभिद्रुतोस्मि । विन्ध्यपादपेत्यनेन किष्किन्धाया दक्षिणतोपि विन्ध्यपर्वतशेषोऽस्तीति गम्यते ॥ १७–१९ ॥ हिमवन्तमिति । अपश्यमिति शेषः ॥ २० ॥ शरणं रक्षणम् । न विन्दं नाविन्दम् ॥ २१ ॥ इदानीमित्यादि । राजन् ! अस्मिन्नाश्रममण्डले वाली प्रविशेद्यदि तदाऽस्य मूर्धा शतधा भवेदिति मतङ्गेन पुरा हरीश्वरो यथाभिशप्तः तथा इदानीं मे स्मृतमिति योजना । निरुद्विग्नः निर्भयः । भावे निष्ठा । इति हनुमान् वाक्यमब्रवीदिति सम्बन्धः ॥ २२ ॥ २३ ॥ आसाद्य, स्थितोहमिति शेषः ॥ २४ ॥

दिश इति । तस्याः पूर्वस्याः दिशः पुनरावर्तमानः । विन्ध्यपादपसङ्कीर्णां दक्षिणां दिशं प्रस्थित इति सम्बन्धः ॥ १७ ॥ १८ ॥ प्राप्येति । सम्पश्यन्नित्यनुषज्यते । हिमवन्तं च मेरुं च उत्तरसमुद्रं च संपश्यन् उत्तरां दिशं सम्प्रधावित इति सम्बन्धः । हिमवन्तं च सम्पश्यन्नित्यभिधानात् पश्चिमदिशोपि हिमवत्पर्यन्तं पुनरावृत्य उत्तरां दिशं प्रधावित इत्यवगम्यते ॥ १९ ॥ २० ॥ यदा शरणं रक्षितारं न विन्दं नाविन्दम् । अडभाव आर्षः ॥ २१ ॥ इदानीमित्यादि सार्धश्लोकमेकं वाक्यम् । राजन् अस्मिन्नाश्रममण्डले वाली प्रविशेद्यदि अस्य मूर्द्धा शतधा भवेदिति मतङ्गेन पुरा हरीश्वरोऽभिशप्तः । तदिदानीं मे स्मृतमिति योजना ॥ २२–२४ ॥

अस्य ऋश्यमूकस्य गुहां सीताभरणस्थानभूताम् ॥२५॥ इति श्रीगोविन्द० श्रीरामा० मुक्ता० किष्किन्धाकाण्डव्याख्याने षट्चत्वारिंशः सर्गः॥४६॥
अथ दक्षिणेतरदिग्गतवानरागमनं सप्तचत्वारिंशे–दर्शनार्थं त्वित्यादि । यथोक्तं देशम् ॥ १ ॥ तदेव विवृणोति–सरांसीत्यादिना । कक्षान् गुल्मान् ।

एवं मया तदा राजन् प्रत्यक्षमुपलक्षितम् । पृथिवीमण्डलं कृत्स्नं गुहामस्यागतस्ततः ॥२५॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

दर्शनार्थं तु वैदेह्याः सर्वतः कपियूथपाः । व्यादिष्टाः कपिराजेन यथोक्तं जग्मुरञ्जसा ॥१॥ सरांसि सरितः कक्षा नाकाशं नगराणि च । नदीदुर्गांस्तथा शैलान् विचिन्वन्ति समन्ततः ॥ २ ॥ सुग्रीवेण समाख्याताः सर्वे वानर यूथपाः । प्रदेशान् प्रविचिन्वन्ति सशैलवनकाननान् ॥३॥ विचित्य दिवसं सर्वे सीताधिगमने धृताः । समायान्ति स्म मेदिन्यां निशाकालेषु वानराः ॥४॥ सर्वर्तुकामान् देशेषु वानराः सफलान् द्रुमान् । आसाद्य रजनीं शय्यां चक्रुः सर्वेष्वहस्सु ते ॥ ५ ॥ तदहः प्रथमं कृत्वा मासे प्रस्रवणं गताः । कपिराजेन संगम्य निराशाः कपियूथपाः ॥ ६ ॥

लतागृहानित्यर्थः । आकाशं वृक्षगुल्मादिरहितप्रदेशम् । नदीदुर्गान् नदीभिर्दुर्गमान् ॥ २ ॥ ३ ॥ विचित्येति । धृताः तत्पराः ॥४॥ विचित्येति श्लोकोक्तं विवृणोति–सर्वेति । सर्वर्तुकामान् काम्यन्त इति कामाः पुष्पफलादयः, सर्वर्तुसम्भवफलपुष्पादियुक्तानित्यर्थः । सफलान् वानरैरुपभुज्यमानत्वेन सफलान् । द्रुमानासाद्य । सर्वेष्वहस्सु एकमासान्तर्गतसर्वदिनेषु । रजनीं रजन्यामेव । शय्यां चक्रुः । अनेनाहारविश्रमादिकमहस्सु नास्तीत्यवगम्यते ॥ ५ ॥ तदहः प्रस्थानदिनं प्रथमं कृत्वा तदारभ्य मासे पूर्णे सति । निराशाः सीतान्वेषणे निरुत्साहाः सन्तः । कपिराजेन सङ्गम्य तस्मै स्वागमनं

एवमिति । गुहां मतङ्गाश्रमस्थऋश्यमूकगुहां सीताभरणनिक्षेपस्थानभूताम् ॥ २५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां षट्चत्वारिंशः सर्गः ॥ ४६ ॥ अथ प्रस्थितानां वानराणां वृत्तान्तमाह–दर्शनार्थमिति ॥ १ ॥ स सरांसि सरित्कक्षान् इति पाठः । सरित्कक्षान् नदीकच्छान् । नदीदुर्गान् नदीभिर्दुर्गमान् प्रदेशान् ॥ २ ॥ ३ ॥ धृता नियुक्ताः ॥ ४ ॥ ते वानराः सर्वेष्वहस्सु दिवसेषु सीतां विचित्य सर्वर्तुकामान् सार्वकालिकपुष्पफलयुक्तान् सफलान् तत्तत्कालीनफलयुक्तांश्च द्रुमानासाद्य फलादिभक्षणार्थं रजनीं रजन्यां शय्यां चक्रुरिति योजना । अनेन आहारविश्रमादिकम् अहस्सु नास्तीत्यवगम्यते ॥ ५ ॥ तदह इति । प्रस्थानविशिष्टमहः । निराशाः, अभवन्निति शेषः ॥ टीका–इदानीं तेषां प्रतिप्रयाणमाह–तदह इति । सङ्गम्य कपिराजेन, व्यादिष्टा

निवेद्येत्यर्थः । प्रस्रवणं माल्यवन्तं गताः ॥ ६ ॥ एवं सामान्येन वानरागमनमुक्त्वा प्रत्येकं च दर्शयति—विचित्येत्यादिना । सचिवैः सहायभूतैः ॥ ७ ॥ ८ ॥ उपचक्रमे उपागतः ॥ ९ ॥ प्रस्रवणपृष्ठस्थं प्रस्रवणाग्रस्थम् । रामेण सहासीनम्, रामेण सहितमित्यर्थः ॥ १० ॥ वनानि क्षुद्रवनानि । गह

विचित्य तु दिशं पूर्वां यथोक्तां सचिवैः सह । अदृष्ट्वा विनतः सीतामाजगाम महाबलः ॥ ७ ॥ उत्तरां च दिशं सर्वां विचित्य स महाकपिः । आगतः सह सैन्येन वीरः शतबलिस्तदा ॥ ८ ॥ सुषेणः पश्चिमामाशां विचित्य सह वानरैः । समेत्य मासे संपूर्णे सुग्रीवमुपचक्रमे ॥ ९ ॥ तं प्रस्रवणपृष्ठस्थं समासाद्याभिवाद्य च । आसीनं सह रामेण सुग्रीवमिदमब्रुवन् ॥ १० ॥ विचिताः पर्वताः सर्वे वनानि गहनानि च । निम्नगाः सागरान्ताश्च सर्वे जनपदाश्च ये ॥ ११ ॥ गुहाश्च विचिताः सर्वास्त्वया याः परिकीर्तिताः । विचिताश्च महागुल्मा लताविततसन्तताः ॥ १२ ॥ गहनेषु च देशेषु दुर्गेषु विषमेषु च । सत्त्वान्यतिप्रमाणानि विचितानि हतानि च ॥ १३ ॥ उदारसत्त्वाभिजनो महात्मा स मैथिलीं द्रक्ष्यति वानरेन्द्रः । दिशं तु यामेव गता तु सीता तामास्थितो वायुसुतो हनूमान् ॥ १४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

नानि महावनानि । सागरान्ताः समुद्रतीराणि । लताविततसन्तताः लताभिर्विततः व्याप्ताः सन्तताः निरन्तरा इति महागुल्मविशेषणम् ॥ ११ ॥ १२ ॥ गहनेषु दुष्प्रवेशेषु, नानाद्वीपेष्वित्यर्थः । दुर्गेषु दुःखेन गन्तव्येषु, निम्नोन्नतेष्वित्यर्थः । अतिप्रमाणानि अतिमात्रशरीराणि । विचितानि, किमयं रावणः उत नेतीति भावः ॥ १३ ॥ उदारसत्त्वः श्रेष्ठसत्त्वोऽभिजनो वंशो यस्य स उदारसत्त्वाभिजनः । महाबलवतः पुत्र इति सीतादर्शने प्रथमे

इति शेषः । प्रस्थानदिवसं प्रथममादिमं कृत्वा मासे संपूर्णे इति शेषः । सीतादर्शनाभावेन निराशास्सन्तः, प्रस्रवणमृष्यमूकं गता प्राप्ता इति सम्बन्धः ॥ ६ ॥ एकैकस्यागमनमाह—विचित्येत्यादिना ॥ ७–११ ॥ लताविततसन्तताः लताभिर्विततः सन्ततश्च तिर्यगूर्ध्वं च व्याप्ता इत्यर्थः ॥ १२ ॥ सत्त्वान्यतिप्रमाणानि, रावणभ्रान्त्येति भावः । तर्हि को वा स०—यां दिशं गता सीतेत्यनेन मनःपूर्वं रक्षःक्षयायैव गता, न तु स्वःसामर्थ्येन नीतेति ध्वनयति, अन्यथा नीतेत्यवक्ष्यत् ॥ १४ ॥

हेतुः । महात्मा महाधैर्य इति द्वितीयः । दिशं त्वित्यादिना तृतीयो हेतुः । इति अब्रुवन् वानरा इति पूर्वेणान्वयः । अस्मिन् सर्गे चतुर्दश श्लोकाः ॥ १४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूपणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

सह ताराङ्गदाभ्यां तु गत्वा स हनुमान् कपिः । सुग्रीवेण यथोद्दिष्टं तं देशमुपचक्रमे ॥ १ ॥ स तु दूरमुपागम्य सर्वैस्तैः कपिसत्तमैः । विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥ २ ॥ पर्वताग्रान्नदीदुर्गान् सरांसि विपुलान् द्रुमान् । वृक्षषण्डांश्च विविधान् पर्वतान् घनपादपान् ॥ ३ ॥ अन्वेषमाणास्ते सर्वे वानराः सर्वतो दिशम् । न सीतां ददृशुर्वीरा मैथिलीं जनकात्मजाम् ॥ ४ ॥ ते भक्षयन्तो मूलानि फलानि विविधानि च । अन्वेषमाणा दुर्धर्षा न्यवसंस्तत्र तत्र ह । स तु देशो दुरन्वेषो गुहागहनवान् महान् ॥ ५ ॥ निर्जलं निर्जनं शून्यं गहनं रोमहर्षणम् । त्यक्त्वा तु तं तदा देशं सर्वे वै हरियूथपाः ॥ ६ ॥ तादृशान्यप्यरण्यानि विचित्य भृशपीडिताः । देशमन्यं दुराधर्षं विविशुश्चाकुतोभयाः ॥७॥ यत्र वन्ध्यफला वृक्षा विपुष्पाः पर्णवर्जिताः । निस्तोयाः सरितो यत्र मूलं यत्र सुदुर्लभम् ॥८॥

अथ सीतान्वेषणाय दक्षिणां दिशं गतानामसुरनिरसनपर्यन्तो वृत्तान्तोऽष्टचत्वारिंशे–सह ताराङ्गदाभ्यामित्यादि ॥ १ ॥ पर्वताग्रान् विन्ध्याग्रप्रदेशान् । पर्वतान् पर्यन्तपर्वतान् ॥२॥ रामानु०–विचिनोति स्म विन्ध्यस्येति पाठः साधुः ॥ २ ॥ ३–७॥ रामानु०–ते भक्षयन्तो मूलानि फलानि विविधानि च । अन्वेषमाणा दुर्धर्षा न्यवसंस्तत्र तत्र ह । स तु देशो दुरन्वेषो गुहागहनवान्महान् । निर्जलं निर्जनं शून्यं गहनं रोमहर्षणम् । त्यक्त्वा तु तं तदा देशं सर्वे वै हरियूथपाः । तादृशान्यप्यरण्यानि विचित्य भृशपीडिताः । देशमन्यं दुराधर्षं विविशुश्चाकुतोभयाः । इति पाठक्रमः ॥ ५–७ ॥ वन्ध्यफलाः फलैर्वन्ध्याः, निष्फला इत्यर्थः ॥ ८ ॥ ९ ॥

सीतां द्रक्ष्यतीत्यपेक्षायामाह–उदारेति ॥ १३ ॥ १४ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां सप्तचत्वारिंशः सर्गः॥४७॥

इतरदिक्प्रस्थितवानरवृत्तान्तस्य अल्पत्वेन प्रथमत एव संवर्ण्य इदानीं दक्षिणदिक्प्रस्थितवानरवृत्तान्तमाह–सहेति ॥ १ ॥ २ ॥ पर्वतान् विन्ध्यस्य प्रत्यन्तपर्वतान् गोमन्तत्र्यम्बकादीन् । घनपादपानिति सर्वत्र विशेषणम् ॥ ३ ॥ ४ ॥ सः प्रसिद्धो देशः, अस्तीति शेषः ॥ ५–७ ॥ तैः प्रविष्टं देशं वर्णयति–यत्र वन्ध्य

स०–पर्वताग्रनदीदुर्गान् पर्वताग्रस्थिताश्च नद्यश्च ताभिर्दुर्गान् दुस्साध्यगमनान् स्थलविशेषान् विपुलद्रुमान् दुर्गविशेषणमेतत् । वृक्षषण्डानिति सकीचकैर्न्यायेन योज्यम् । घना मेघाः पादपेषु वृक्षेषु येषु । एतेन मेघमण्डलपर्यन्तमौन्नत्यं पर्वतानां द्योत्यते ॥ ३ ॥ वन्ध्यानि पुरोऽङ्कुरप्रोहाहेतवः फलानि येषां ते । वन्ध्यानि नीरसानि फलानि येषामिति वा, अथवा वन्ध्यानां फलमिव फलं येषां ते । अनुत्पन्नफला इति यावत् ॥ ८॥

स्निग्धपत्रा इत्यादि । अत्रापि न सन्तीत्यनुषज्यत इति केचित् । तन्न, भ्रमरैश्चापि वर्जिता इत्यस्यानन्वयात् । किंतु भ्रमरैरप्यनुपभुक्तं स्थलपद्मिनीमात्रमित्यर्थः । सर्वेऽपि महातटाकाः स्थलपद्मिनीत्वं गता इति भावः । अन्यं देशं विविशुरिति पूर्वेणान्वयः ॥ १० ॥ रामानु०—स्निग्धपत्रा इत्यादावपि

न सन्ति महिषा यत्र न मृगा न च हस्तिनः । शार्दूलाः पक्षिणो वापि ये चान्ये वनगोचराः ॥ ९ ॥ न यत्र वृक्षा नौषध्यो न लता नापि वीरुधः । स्निग्धपत्राः स्थले यत्र पद्मिन्यः फुल्लपङ्कजाः । प्रेक्षणीयाः सुगन्धाश्च भ्रमरैश्चापि वर्जिताः ॥ १० ॥ कण्डुर्नाम महाभागः सत्यवादी तपोधनः । महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः ॥ ११ ॥ तस्य तस्मिन्वने पुत्रो बालः षोडशवार्षिकः । प्रनष्टो जीवितान्ताय क्रुद्धस्तत्र महामुनिः ॥ १२ ॥ तेन धर्मात्मना शप्तं कृत्स्नं तत्र महद्वनम् । अशरण्यं दुराधर्षं मृगपक्षिविवर्जितम् ॥ १३ ॥ तस्य ते काननान्तांश्च गिरीणां कन्दराणि च । प्रभवानि नदीनां च विचिन्वन्ति समाहिताः ॥ १४ ॥ तत्र चापि महात्मानो नापश्यन् जनकात्मजाम् । हर्तारं रावणं वापि सुग्रीवप्रियकारिणः ॥ १५ ॥

न सन्तीत्यनुषज्यते । भ्रमरैश्चापि वर्जिता इति पाठः ॥ १० ॥ देशस्य तादृशत्वे निमित्तमृषिरित्याह—कण्डुरित्यादिना ॥ ११ ॥ तत्र वने विषये । जीवितान्ताय तस्य नाशाय कुपितः ॥ १२ ॥ अशरण्यम् अनाश्रयम् । अभवदिति शेषः ॥ १३ ॥ रामानु०—मृगपक्षिविवर्जितमिति पाठः ॥ १३ ॥ तस्येति । नदीनां प्रभवानि

फलेत्यादिना । वन्ध्यान्यनुपभोग्यानि फलानि येषां ते ॥ ८ ॥ ९ ॥ ओषध्यः व्रीह्यादयः । स्निग्धपत्रा इत्यादावपि न सन्तीत्यनुषज्यते ॥ १० ॥ तस्य देशस्योक्तरूपत्वे कारणमाह—कण्डुर्नामेत्यादिना ॥ ११ ॥ तस्येति । जीवितान्ताय जीवितान्तकराय । वनाय क्रुद्ध इत्यर्थः ॥ १२ ॥ १३ ॥ तस्य देशस्य । नदीशब्देन

स०—वनगोचराः वनविषयाः । यद्वा वनगौः वनभूमिः तत्र चरन्तीति तथा ॥ ९ ॥ न वल्ल्यो नापि वीरुधः इति पाठः । वल्ल्यः वृक्षालिङ्गिताः । वीरुधः स्थललताः शापानन्तरमित्यत्र शापात्पूर्वमित्युत्तरत्र स्निग्धपत्रा इत्यादौ च शेषो ज्ञेयः । नैतनुकर्षं कृत्वा व्याख्यानं पद्मिनीमहत्वकथनानुगुणमित्यनादरणीयम् । भ्रमरैश्च विवर्जिताः वर्जितविरुद्धाः विवर्जिताः अत्यक्ता इत्यर्थः । अथवा गतैः एकप्रघट्टरसपानतुन्दिलैरिन्दिन्दिरैर्विवर्जिताः सुगन्धाः सुगन्धयः, सुगन्धाः सुगन्धद्रव्याणि । पृथग्विशेष्यम् । अतो "गन्धस्येत्" इतीत्वं कथं नेति शङ्कानवकाशः ॥ १० ॥

गिरिगणमध्यप्रदेशाः ॥ १४ ॥ १५ ॥ सुरनिर्भयं सुरेभ्यो निर्भयम् ॥ १६ ॥ गाढं परिहिताः दृढं परिहितवसनाः अभवन् ॥ १७ ॥ संहितं दृढमित्यर्थः ॥ १८ ॥ रामानु०—तं दृष्ट्वेति । गाढं परिहिताः दृढं परिहितवाससः, स्थिता इति शेषः । दृष्ट्वा तान्पर्वतोपमान् इति पाठः । सोपि तानित्यत्र तच्छन्दस्य इत्यब्रवीदित्यनेन संबन्धः ॥१७॥ १८ ॥ ॥१९॥ पर्यस्तः पातितः ॥२०॥ तस्मिन्नसुरे निरुच्छ्वासे, मृत इत्यर्थः । तस्मिन्नसुरे रावणभ्रान्त्या तत्समीपवने चिरमन्वे

ते प्रविश्याशु तं भीमं लतागुल्मसमावृतम् । ददृशुः क्रूरकर्माणमसुरं सुरनिर्भयम् ॥ १६ ॥ तं दृष्ट्वा वानरा घोरं स्थितं शैलमिवापरम् । गाढं परिहिताः सर्वे दृष्ट्वा तान् पर्वतोपमान् ॥ १७॥ सोऽपि तान्वानरान् सर्वान् नष्टाः स्थेत्यब्रवीद्बली । अभ्यधावत संक्रुद्धो मुष्टिमुद्यम्य संहितम् ॥ १८ ॥ तमापतन्तं सहसा वालिपुत्रोऽङ्गदस्तदा । रावणोऽयमिति ज्ञात्वा तलेनाभिजघान ह ॥ १९ ॥ स वालिपुत्राभिहतो वक्त्राच्छोणितमुद्वमन् । असुरोऽभ्यपतद्भूमौ पर्यस्त इव पर्वतः ॥ २० ॥ तेपि तस्मिन्निरुच्छ्वासे वानरा जितकाशिनः । व्यचिन्वन् प्रायशस्तत्र सर्वं तद्गिरिगह्वरम् ॥ २१ ॥ विचितं तु ततः कृत्वा सर्वे ते काननं पुनः । अन्यदेवापरं घोरं विविशुर्गिरिगह्वरम् ॥ २२ ॥ ते विचित्य पुनः खिन्ना विनिष्पत्य समागताः । एकान्ते वृक्षमूले तु निषेदुर्दीनमानसाः ॥ २३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

षितवन्त इति बोध्यम् ॥ २१ ॥ अपरम् अदूरम् । "परं दूरान्यमुख्येषु" इति वैजयन्ती । गिरिगह्वरं गिरिमध्यप्रदेशम् ॥ २२ ॥ विनिष्पत्य विनिर्गत्य । समागताः सङ्घीभूताः । अस्मिन्सर्गे चतुर्विंशतिश्लोकाः ॥२३॥ इति श्रीगो० श्रीरामा० भुक्ता० किष्किन्धाकाण्डव्याख्याने अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

निस्तोयनदीप्रदेशा उच्यन्ते, "निस्तोयास्सरितो यत्र" इति पूर्वमभिधानात् । प्रभवानि उत्पत्तिस्थानानि ॥ १४–१६ ॥ गाढं परिहिताः दृढं परिधानं कृतवन्तः ॥ १७ ॥ अङ्गदः संहतं मुष्टिमुद्यम्यापतन्तमयं रावण इति ज्ञात्वा तस्य मूर्ध्नि तलेनाभिजघानेति सम्बन्धः ॥ १८–२१ ॥ विचितमिति । अपरं परं न भवतीत्यपरम्, सन्निकृष्टमित्यर्थः ॥ २२–२४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्ड० अष्टाचत्वारिंशः सर्गः ॥ ४८ ॥

स०—सुरनिर्भयं निर्गता भीर्यस्य स तथा । सुरेभ्यो निर्भयः सुरनिर्भयस्तम् । सुनिर्भयमिति पाठः स्फुटार्थः । न केवलं कर्मणाऽसुरप्रायत्वादसुरोऽयम् अपितु पितुरपि तज्जातित्वमित्याह—आसुरमिति । असुरस्यायमासुरः । "तस्येदम्" इत्यण् ॥ ११ ॥

पुनः प्रदेशान्तरान्वेषणमेकोनपञ्चाशे—अथाङ्गद इत्यादि। सह युगपत् ॥ १—५ ॥ दाक्ष्यम् उत्साहः "दक्ष उत्साहे" इत्युक्तेः। मनसश्चापराजयः, धैर्यमित्यर्थः ॥ ६ ॥ वनमेतत् विचीयताम् अन्विष्यताम् ॥ ७ ॥ रामानु०—विचयप्रकारमेवाह—खेदमिति। विचिन्वतामिति चिनोतेर्लोटि प्रथमपुरुषबहुवचने रूपम्।

अथाङ्गदस्तदा सर्वान् वानरानिदमब्रवीत्। परिश्रान्तो महाप्राज्ञः समाश्वस्य शनैर्वचः ॥ १ ॥ वनानि गिरयो नद्यो दुर्गाणि गहनानि च। दर्यो गिरिगुहाश्चैव विचितानि समन्ततः ॥ २ ॥ तत्र तत्र सहास्माभिर्जानकी न च दृश्यते। तद्वा रक्षो हृता येन सीता सुरसुतोपमा ॥ ३ ॥ कालश्च वो महान् यातः सुग्रीवश्चोग्रशासनः। तस्माद्भवन्तः सहिता विचिन्वन्तु समन्ततः ॥ ४ ॥ विहाय तन्द्रीं शोकं च निद्रां चैव समुत्थिताम्। विचिनुध्वं यथा सीतां पश्यामो जनकात्मजाम् ॥५॥ अनिर्वेदं च दाक्ष्यं च मनसश्चापराजयः। कार्यसिद्धिकराण्याहुस्तस्मादेतद् ब्रवीम्यहम् ॥६॥ अद्यापि तद्वनं दुर्गं विचिन्वन्तु वनौकसः। खेदं त्यक्त्वा पुनः सर्वैर्वनमेतद्विचीयताम् ॥ ७ ॥ अवश्यं क्रियमाणस्य दृश्यते कर्मणः फलम्। अलं निर्वेदमागम्य नहि नो मीलनं क्षमम् ॥ ८ ॥ सुग्रीवः कोपनो राजा तीक्ष्णदण्डश्च वानरः। भेतव्यं तस्य सततं रामस्य च महात्मनः ॥ ९ ॥

विचीयतामिति पाठे युष्माभिरिति शेषः ॥ ७ ॥ मीलनं नेत्रमीलनम्, कर्तव्यमकृत्वा तूष्णींभाव इत्यर्थः ॥ ८—१२ ॥

॥ १ ॥ २॥ तत्र तत्रेति। सहास्माभिरित्यात्मनि बहुवचनम्। अस्माभिः सह विचितानि, युष्माभिरिति शेषः ॥३॥ कालश्चेति। समयातिक्रमेण मारयिष्यतीति भावः ॥ ४ ॥ तन्द्रीं प्रमीलाम्, निद्रामालस्यमिति यावत् ॥ ५ ॥ किं तत्कार्यसाधकमित्यत आह—अनिर्वेदमिति। मनसश्चापराजयः मनोजय इत्यर्थः ॥ ६ ॥ हे वनौकसः! इदं दुर्गं वनम् अद्यापि विचिन्वन्तु, भवन्त इति शेषः। कथमिति चेत्? खेदं त्यक्त्वा पुनरेतद्वनं विचीयताम्, भवद्भिरिति शेषः ॥ ७ ॥ अवश्यमिति। निर्वेदमागम्यालम् कुतः? मीलनं नेत्रे निमील्यावस्थानम्, निरुद्योगमिति यावत्। नः अस्माकम्। न क्षमम् ॥ ८ ॥ विचयनाभावे बाधां सूचयति-सुग्रीव

स०—तथा रक्षोऽपहर्ता च सीतायाश्चैव दुष्कृती। इति पाठः। रक्षस्सु राक्षसेषु तन्मध्य इति यावत्। अपहर्ता कश्चिद्राक्षसः। यद्वा रक्षः राक्षसः। अपहर्ता अन्यः कोपि। अत्र च अपहर्तेति विप रीणतमन्वेति। तथैव दुष्कृतेति चेति ॥ ३ ॥

कन्दरान् भेदान् ॥ १३ ॥ विचिन्वन्तु वनं सर्वे इति, भवन्तः इति शेषः ॥ १४-२२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे



हितार्थमेतदुक्तं वः क्रियतां यदि रोचते । उच्यतां वा क्षमं यन्नः सर्वेषामेव वानराः ॥ १० ॥ अङ्गदस्य वचः श्रुत्वा वचनं गन्धमादनः । उवाचाव्यक्तया वाचा पिपासाश्रमखिन्नया ॥ ११ ॥ सदृशं खलु वो वाक्यमङ्गदो यदुवाच ह । हितं चैवानुकूलं च क्रियतामस्य भाषितम् ॥ १२ ॥ पुनर्मार्गामहै शैलान् कन्दरांश्च दरीस्तथा । काननानि च शून्यानि गिरिप्रस्रवणानि च ॥ १३ ॥ यथोद्दिष्टानि सर्वाणि सुग्रीवेण महात्मना । विचिन्वन्तु वनं सर्वे गिरिदुर्गाणि सर्वशः ॥१४॥ ततः समुत्थाय पुनर्वानरास्ते महाबलाः । विन्ध्यकाननसंकीर्णां विचेरुर्दक्षिणां दिशम् ॥ १५ ॥ ते शारदाभ्रप्रतिमं श्रीमद्रजतपर्वतम् । शृङ्गवन्तं दरीमन्तमधिरुह्य च वानराः ॥ १६ ॥ तत्र कोद्रवनं रम्यं सप्तपर्णवनानि च । व्यचिन्वंस्ते हरिवराः सीतादर्शनकांक्षिणः ॥१७॥ तस्याग्रमधिरूढास्ते श्रान्ता विपुलविक्रमाः । न पश्यन्ति स्म वैदेहीं रामस्य महिषीं प्रियाम् ॥ १८ ॥ ते तु दृष्टिगतं कृत्वा तं शैलं बहुकन्दरम् । अवारोहन्त हरयो वीक्षमाणाः समन्ततः ॥ १९ ॥ अवरुह्य ततो भूमिं श्रान्ता विगतचेतसः । स्थित्वा मुहूर्तं तत्राथ वृक्षमूलमुपाश्रिताः ॥ २० ॥ ते मुहूर्तं समाश्वस्ताः किञ्चिद्भग्नपरिश्रमाः । पुनरेवोद्यताः कृत्स्नां मार्गितुं दक्षिणां दिशम् ॥ २१ ॥ हनुमत्प्रमुखास्ते तु प्रस्थिताः प्लवगर्षभाः । विन्ध्यमेवादितस्तावद्विचेरुस्ते ततस्ततः ॥ २२ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥



इत्यादि । तस्य तस्मादित्यर्थः ॥ ९-११ ॥ सदृशमिति । अङ्गदः यद्वाक्यमुवाच तद्वाक्यं वो युष्माकं सदृशं खलु सम्मतं खल्विति सम्बन्धः ॥ १२ ॥ १३ ॥ यथोद्दिष्टानीति । विचिन्वन्तु, भवन्त इति शेषः ॥ १४-२२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायण० किष्किन्धाकाण्डव्याख्यायाम् एकोनपञ्चाशः सर्गः ॥४९॥

अथ ऋक्षबिले स्वयंप्रभादर्शनं पञ्चाशे–सहेत्यादि । नगेन्द्रस्य शार्दूलजुष्टेषु । विषमेषु विषमप्रदेशेषु शिलाः महाप्रस्रवणेषु सरितश्च विचिनोति स्मेति पूर्वेणान्वयः ॥ १ ॥ २ ॥ कालः सुग्रीवोक्तमासः । 'मासः पूर्णो बिलस्थानाम्' इत्युत्तरत्राङ्गदवचनस्य बिल एवान्यो मासो गत इत्यर्थो

सह ताराङ्गदाभ्यां तु सङ्गम्य हनुमान् कपिः । विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥ १ ॥ सिंहशार्दूलजुष्टेषु शिलाश्च सरितस्तथा । विषमेषु नगेन्द्रस्य महाप्रस्रवणेषु च ॥ २ ॥ आसेदुस्तस्य शैलस्य कोटिं दक्षिणपश्चिमाम् । तेषां तत्रैव वसतां स कालो व्यत्यवर्तत ॥ ३ ॥ स हि देशो दुरन्वेषो गुहागहनवान् महान् ॥ ४ ॥ तत्र वायुसुतः सर्वं विचिनोति स्म पर्वतम् । परस्परेण हनुमानन्योन्यस्याविदूरतः ॥ ५ ॥ गजो गवाक्षो गवयः शरभो गन्धमादनः । मैन्दश्च द्विविदश्चैव सुषेणो जम्बवान्नलः ॥ ६ ॥ अङ्गदो युवराजश्च तारश्च वनगोचरः । गिरिजालावृतान्देशान् मार्गित्वा दक्षिणां दिशम् । विचिन्वन्तस्ततस्तत्र ददृशुर्विवृतं बिलम् ॥ ७ ॥ दुर्गमृक्षबिलं नाम दानवेनाभिरक्षितम् । क्षुत्पिपासापरीताश्च श्रान्ताश्च सलिलार्थिनः । अवकीर्णं लतावृक्षैर्ददृशुस्ते महाबिलम् ॥ ८ ॥

वक्ष्यते ॥ ३ ॥ ननु विचेतव्यप्रदेशेषु बहुषु विद्यमानेषु कथमत्रैव मासं क्षपितवन्त इत्याशङ्क्याह–स हीति ॥ ४ ॥ तत्रेति । सङ्गम्येत्यध्याहार्यम् । वायुसुतः हनुमान् । अन्योन्यस्याविदूरतः परस्परेण सङ्गम्य सर्वं पर्वतं विचिनोति स्मेति संबन्धः ॥ ५ ॥ गज इत्यादि । चकाराद्धनूमांश्च । गजादयः गिरिजालावृतान् देशान्मार्गित्वा ततो दक्षिणां दिशं विचिन्वन्तः तत्र विवृतं विस्तृतं बिलं ददृशुरिति संबन्धः ॥ ६ ॥ ७ ॥ दानवेन मयेन ।

॥ १ ॥ सिंहेति । नगेन्द्रस्य सिंहशार्दूलजुष्टेषु विषयेषु शिलाश्च महाप्रस्रवणेषु सरितश्च विचिनोति स्मेति पूर्वेण सम्बन्धः ॥ २॥ आसेदुरिति । स कालः सुग्रीव कल्पितो मासरूपः व्यत्यवर्तत, व्यतीतप्राय इत्यर्थः । 'मासः पूर्णो बिलस्थानाम्' इत्युत्तरत्राङ्गदेनाभिधानात् । दक्षिणपश्चिमां दक्षिणपश्चिमयोरन्तरालम्, नैर्ऋतीमित्यर्थः ॥ ३ ॥ ४ ॥ तत्र सङ्गम्येत्यध्याहार्यम् । वायुसुतः अन्योन्यस्याविदूरतः परस्परेण सङ्गम्य सर्वं पर्वतं विचिनोति स्मेति सम्बन्धः । समन्ततो वानरा नविदूरे स्थापयित्वा सानुगह्वरादिविशिष्टं कृत्स्नं पर्वतं वायुसुतो महता वेगेन विचिनवानित्यर्थः ॥ ५–७ ॥ दुर्गमित्यादिसार्धश्लोकमेकं वाक्यम् । दुर्गं दुर्गमम्

ऋक्षविलं नाम ऋक्षबिलमिति प्रसिद्धम् । महाविलं दद्दशुरिति पुनरुक्तिर्गुणान्तरविधानाय ॥८॥ निष्क्रमन् निरक्रमन् ॥ ९ ॥ दुरतिक्रमं दुष्प्रवेशम् ॥१०॥ सञ्जातपरिशङ्काः किमिदं पातालम् उतान्यन्मायामयमिति सन्दिहानाः । असंहृष्टाः सन्तः अभ्यपद्यन्नभ्यपद्यन्त । नानेति श्लोको बिलविशे

ततः क्रौञ्चाश्च हंसाश्च सारसाश्चापि निष्क्रमन् । जलार्द्राश्चक्रवाकाश्च रक्ताङ्गाः पद्मरेणुभिः ॥ ९ ॥ ततस्तद्बिलमासाद्य सुगन्धि दुरतिक्रमम् । विस्मयव्यग्रमनसो बभूवुर्वानरर्षभाः ॥ १० ॥ सञ्जातपरिशङ्कास्ते तद्बिलं प्लवगोत्तमाः । अभ्यपद्यन्नसंहृष्टास्तेजोवन्तो महाबलाः ॥ ११ ॥ नानासत्त्वसमाकीर्णं दैत्येन्द्रनिलयोपमम् । दुर्दर्शमतिघोरं च दुर्विगाहं च सर्वशः ॥ १२ ॥ ततः पर्वतकूटाभो हनुमान् पवनात्मजः । अब्रवीद्वानरान् सर्वान् कान्तारवनकोविदः ॥ १३ ॥ गिरिजालावृतान् देशान्मार्गित्वा दक्षिणां दिशम् । वयं सर्वे परिश्रान्ता न च पश्याम मैथिलीम् ॥ १४ ॥ अस्माच्चापि बिलाद्धंसाः क्रौञ्चाश्च सह सारसैः । जलार्द्राश्चक्रवाकाश्च निष्पतन्ति स्म सर्वतः ॥ १५ ॥ नूनं सलिलवानत्र कूपो वा यदि वा ह्रदः । तथा चेमे बिलद्वारे स्निग्धास्तिष्ठन्ति पादपाः ॥ १६ ॥ इत्युक्त्वा तद्बिलं सर्वे विविशुस्तिमिरावृतम् । अचन्द्रसूर्यं हरयो ददृशू रोमहर्षणम् ॥ १७ ॥ निशाम्य तस्मात्सिंहांश्च तांस्तांश्च मृगपक्षिणः । प्रविष्टा हरिशार्दूला बिलं तिमिरसंवृतम् ॥ १८ ॥

षणम् ॥ ११ ॥ १२ ॥ कान्तारे दुर्गमार्गे वने कोविदः समर्थः ॥ १३ ॥ रामानु०—ततः पर्वतकूटाभो हनुमान् पवनात्मज इति पाठः ॥ १३ ॥ गिरिजालावृतान् देशान् दक्षिणां दिशम्, तादृशदेशरूपां दक्षिणां दिशामित्यर्थः ॥ १४ ॥ १५ ॥ नूनमिति । अस्तीति शेषः ॥ १६ ॥ इत्युक्त्वेति । हनुमदुक्तप्रकारेण सर्वेप्युक्त्वा विविशुः । तिमिरावृतं ददृशुश्च । अचन्द्रसूर्यं चन्द्रसूर्यकिरणरहितम् ॥ १७ ॥ तस्मान्निर्गच्छतः सिंहान् तांस्तान् नानाप्रकारान् मृगपक्षिणश्च ॥ १८ ॥



दानवेन मयेन बिलस्य विशिष्टतां द्योतयितुं ददृशुरिति पुनरभिधानम् ॥ ८–१० ॥ सञ्जातपरिशङ्का इत्यादि श्लोकद्वयमेकं वाक्यम् । सञ्जातपरिशङ्काः इदमेव रावणस्थानमिति सञ्जाता परिशङ्का ऊहा येषां ते तथोक्ताः ॥ ११ ॥ १२ ॥ कान्तारवनकोविदः कान्तारे दुर्गमार्गे वने च कोविदः ॥ १३ ॥ दक्षिणां दिशं दाक्षिणस्यां दिशीत्यर्थः ॥ १४–१६ ॥ इत्युक्त इति पाठे—इत्युक्ते सति सर्वे हरयः तद्बिलं विविशुः ॥ १७ ॥ हरिशार्दूलाः तस्मात् बिलात् निर्गच्छतः सिंहादीन् निशाम्य

वर्तते अयत्नपूर्वं प्रवर्तत इत्यर्थः ॥ १९ ॥ रामानु०—तेजः प्रभावः । "तेजः प्रभावे दीप्तौ च " इति विश्वः ॥ १९ ॥ प्रकाशं निस्तमस्कम् ॥ २० ॥ संग्रहेणोक्तं प्रपञ्चयति—ततस्तस्मिन्नित्यादि । अन्योन्यं सम्परिष्वज्य हस्तावलम्बनं कृत्वा॥२१॥परिपेतुःजग्मुः । कंचित्कालमित्यत्यन्तसंयोगे द्वितीया॥२२॥आलोकं

न तेषां सज्जते चक्षुर्न तेजो न पराक्रमः । वायोरिव गतिस्तेषां दृष्टिस्तमसि वर्तते ॥ १९ ॥ ते प्रविष्टास्तु वेगेन तद्बिलं कपिकुञ्जराः । प्रकाशमभिरामं च ददृशुर्देशमुत्तमम् ॥ २० ॥ ततस्तस्मिन् बिले दुर्गे नानापादपसङ्कुले । अन्योन्यं संपरिष्वज्य जग्मुर्योजनमन्तरम् ॥ २१ ॥ ते नष्टसंज्ञास्तृषिताः संभ्रान्ताः सलिलार्थिनः । परिपेतुर्बिले तस्मिन् कञ्चित्कालमतन्द्रिताः ॥ २२ ॥ ते कृशा दीनवदनाः परिश्रान्ताः प्लवङ्गमाः । आलोकं ददृशुर्वीरा निराशा जीविते तदा ॥ २३ ॥ ततस्तं देशमागम्य सौम्यं वितिमिरं वनम् । ददृशुः काञ्चनान् वृक्षान् दीप्तवैश्वानरप्रभान् ॥ २४॥ सालांस्तालांश्च पुन्नागान् ककुभान् वञ्जुलान् धवान् । चम्पकान् नागवृक्षांश्च कर्णिकारांश्च पुष्पितान् ॥ २५ ॥ स्तबकैः काञ्चनैश्चित्रै रक्तैः किसलयैस्तथा । आपीडैश्च लताभिश्च हेमाभरणभूषितान् ॥२६॥ तरुणादित्यसङ्काशान् वैडूर्यकृतवेदिकान् । विभ्राजमानान् वपुषा पादपांश्च हिरण्मयान् ॥ २७ ॥

प्रकाशम् ॥ २३–२५ ॥ आपीडैः शेखरैः लताभिश्च, उपशोभितानिति शेषः । हेमाभरणभूषितान् फलितहेमाभरणान् । पादपांश्च हिरण्मयान् रजतमयांश्च वृक्षान् ॥ २६ ॥ २७ ॥

दृष्ट्वा तद्बिलं प्रविष्टा इति योजना ॥१८॥ कथमन्धकारावृतबिलप्रवेश इत्यत्राह—न तेषामिति । तेजः प्रभावः, तेजआदि तद्बिलस्थतमसि न प्रवर्तत इत्यर्थः ॥१९॥ त इति । प्रकाशं तिमिररहितं देशं दूराद्ददृशुरित्यर्थः ॥ २० ॥ एवं सङ्ग्रहेणोक्त्वा सप्रपञ्चमाह—ततस्तस्मिन्नित्यादिना । अन्योन्यं सम्परिष्वज्य अन्योन्यं हस्तावलम्बनं कृत्वा ॥ २१ ॥ २२ ॥ आलोकं प्रकाशवन्तं देशम् । " आलोकौ दर्शनोद्द्योतौ " इत्यमरः ॥ २३–२५ ॥ स्तबकैरिति श्लोकद्वयमेकं वाक्यम् । आपीडैः शेखरैः । हेमाभरणभूषितान् फलितहेमाभरणान् । हिरण्मयान् रजतमयान् स्तबकादिभिश्च युतान् पादपान् ददृशुरिति पूर्वेण सम्बन्धः ॥ २६ ॥ २७ ॥

नीलवैडूर्येत्यादि श्लोकद्वयमेकान्वयम् । उक्तविशेषणविशिष्टाः पद्मिनीः उक्तविशेषणयुक्ता नलिनीश्च ददृशुरित्यन्वयः । अतो न पुनरुक्तिः ॥२८॥२९॥ मणिकाञ्चनानीत्यादि । हैमराजतभौमानीति शेषः । गृहमुख्यविशेषणं वा ॥ ३०–३६ ॥ रामानु०–हैमराजतभौमानि हेमरजतमयभूप्रदेशानि ॥३१॥३२॥

नीलवैडूर्यवर्णाश्च पद्मिनीः पतगावृताः । महद्भिः काञ्चनैः पद्मैर्वृता बालार्कसन्निभैः ॥ २८ ॥ जातरूपमयैर्मत्स्यैर्महद्भिश्च सकच्छपैः । नलिनीस्तत्र ददृशुः प्रसन्नसलिलावृताः ॥ २९ ॥ काञ्चनानि विमानानि राजतानि तथैव च । तपनीयगवाक्षाणि मुक्ताजालावृतानि च ॥ ३० ॥ हैमराजतभौमानि वैडूर्यमणिमन्ति च । ददृशुस्तत्र हरयो गृहमुख्यानि सर्वशः ॥ ३१ ॥ पुष्पितान् फलिनो वृक्षान् प्रवालमणिसन्निभान् । काञ्चनभ्रमरांश्चैव मधूनि च समन्ततः ॥ ३२ ॥ मणिकाञ्चनचित्राणि शयनान्यासनानि च । महार्हाणि च यानानि ददृशुस्ते समन्ततः ॥ ३३ ॥ हैमराजतकांस्यानां भाजनानां च सञ्चयान् । अगरूणां च दिव्यानां चन्दनानां च सञ्चयान् ॥ ३४ ॥ शुचीन्यभ्यवहार्याणि मूलानि च फलानि च । महार्हाणि च पानानि मधूनि रसवन्ति च ॥ ३५ ॥ दिव्यानामम्बराणां च महार्हाणां च संचयान् । कम्बलानां च चित्राणामजिनानां च संचयान् ॥ ३६ ॥ तत्र तत्र च विन्यस्तान् दीप्तान्वैश्वानरप्रभान् । ददृशुर्वानराः शुभ्रान् जातरूपस्य संचयान् ॥ ३७ ॥ तत्र तत्र विचिन्वन्तो बिले तस्मिन्महाबलाः । ददृशुर्वानराः शूराः स्त्रियं कांचिददूरतः ॥ ३८ ॥

काञ्चनचित्राणि शयनान्यासनानि चेत्यतः परम्–महार्हाणि च पानानि मधूनि रसवन्ति च । दिव्यानामम्बराणां च महार्हाणां च संचयान् । कम्बलानां च चित्राणामजिनानां च संचयान् । तत्र तत्र च विन्यस्तान् दीप्तान् वैश्वानरप्रभान् । ददृशुर्वानराः शुभ्रान् जातरूपस्य संचयान् । इत्येष पाठक्रमः ॥ ३१ ॥ शुभ्रान् निर्मलान् ॥ ३७–३९ ॥ नीलवैडूर्येत्यादि श्लोकद्वयमेकं वाक्यम् । पतगावृताः बालार्कसन्निभैर्महद्भिः काञ्चनैः काञ्चनमयैः पद्मैः वृताः । नीलवैडूर्यवर्णाः पद्मिनीः सकच्छपैः जातरूपमयैर्मत्स्यैर्वृताः । प्रसन्नसलिलावृताः नलिनीश्च ददृशुरिति योजना ॥ २८–३१ ॥ पुष्पितानिति । मधूनि पुष्परसाः “मधु मद्ये पुष्परसे” इत्यमरः ॥ ३२–३४ ॥ पानानि उदकानि ॥ ३५–३८ ॥

रामानु०—तां दृष्ट्वा भृशसंत्रस्ता इति पाठः ॥ ३९ ॥व्यवातिष्ठन्त दूरे स्थिता इत्यर्थः ॥ ४०॥ रामानु०—विस्मिता हरयस्तत्र व्यवातिष्ठन्त सर्वशः इत्यतः परम्—पप्रच्छ हनुमांस्तत्र कासि त्वं कस्य वा बिलमित्यर्धं केषुचित् कोशेषु दृश्यते । तेन विनापि कथासंगतेरविरोधः ॥ ४० ॥ पप्रच्छेत्यर्धस्य विवरणम्—ततो हनूमानिति । अस्मिन् सर्गे सार्धैकचत्वारिंशच्छ्लोकाः ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

तां दृष्ट्वा भृशसंत्रस्ताश्चीरकृष्णाजिनाम्बराम् । तापसीं नियताहारां ज्वलन्तीमिव तेजसा ॥ ३९ ॥ विस्मिता हरयस्तत्र व्यवातिष्ठन्त सर्वशः । पप्रच्छ हनुमांस्तत्र काऽसि त्वं कस्य वा बिलम् ॥ ४० ॥ ततो हनूमान् गिरिसन्निकाशः कृताञ्जलिस्तामभिवाद्य वृद्धाम् । पप्रच्छ का त्वं भवनं बिलं च रत्नानि हेमानि वदस्व कस्य ॥ ४१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

इत्युक्त्वा हनुमांस्तत्र पुनः कृष्णाजिनाम्बराम् । अब्रवीत्तां महाभागां तापसीं धर्मचारिणीम् ॥ १ ॥ इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् । क्षुत्पिपासापरिश्रान्ताः परिखिन्नाश्च सर्वशः ॥ २ ॥ महद्धरण्या विवरं प्रविष्टाः स्म पिपासिताः । इमांस्त्वेवंविधान् भावान् विविधानद्भुतोपमान् ॥ ३ ॥ दृष्ट्वा वयं प्रव्यथिताः संभ्रान्ता नष्टचेतसः । कस्यैते काञ्चना वृक्षास्तरुणादित्यसन्निभाः ॥ ४ ॥ शुचीन्यभ्यवहार्याणि मूलानि च फलानि च । काञ्चनानि विमानानि राजतानि गृहाणि च ॥ ५ ॥

अथ स्वयंप्रभया ऋक्षबिलवृत्तान्तोक्तिरेकपञ्चाशे—इत्युक्त्वेत्यादि॥१॥ परिखिन्नाः अध्वश्रमाखिन्नाः॥२॥ क्षुत्पिपासापरिश्रान्तत्वेपि पिपासैव प्रवेशहेतुरित्याशयेनोक्तम् पिपासिता इति । भावान् पदार्थान् ॥३ ॥ प्रव्यथिताः किमिदमसुरादिमायेति संजातव्यथाः । नष्टचेतसः कर्तव्यबुद्धिरहिताः॥४॥५॥ तामिति । संत्रस्ताः तदीयातिरिक्ततेजोदर्शनेनेति भावः॥३९॥४०॥ तत इति । वदस्व वद ॥४१॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां पञ्चाशस्सर्गः ॥ ५० ॥ १ ॥ २ ॥ भावान् पदार्थान् ॥ ३ ॥ वयं प्रव्यथिताः अलौकिकवस्तुसन्दर्शनजनितभयेनेति भावः ॥ ४–७ ॥

स०—वदस्व वद " भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः " इत्युक्तेरात्मनेपदता । प्रकाशमाना सती वदेत्यर्थः ॥ ४१ ॥

मणिजलावृतानि रत्नमयजालकानि । जालकगवाक्षयोर्भेद उक्तः ॥ ६ ॥ ७ ॥ आत्मानं त्वाम् । अनुभावं प्रभावम् । कस्य चैतत्तपोबलं तच्चेत्यर्थः ॥ ८ ॥ ९ ॥ मयो नाम त्रिपुराधिपतिः त्रिपुरे नष्टे स्वरक्षणार्थमिदं बिलं कृतवानिति मात्स्यपुराणे त्रिपुरदहनप्रस्तावेऽभिहितम् । मायया विचित्र

तपनीयगवाक्षाणि मणिजालावृतानि च । पुष्पिताः फलवन्तश्च पुण्याः सुरभिगन्धिनः ॥ ६ ॥ इमे जाम्बूनदमयाः पादपाः कस्य तेजसा । काञ्चनानि च पद्मानि जातानि विमले जले ॥ ७ ॥ कथं मत्स्याश्च सौवर्णाश्चरन्ति सह कच्छपैः । आत्मानमनुभावं च कस्य चैतत्तपोबलम् ॥ ८ ॥ अजानतां नः सर्वेषां सर्वमाख्यातुमर्हसि । एवमुक्ता हनुमता तापसी धर्मचारिणी । प्रत्युवाच हनूमन्तं सर्वभूतहिते रता ॥ ९ ॥ मयो नाम महातेजा मायावी दानवर्षभः । तेनेदं निर्मितं सर्वं मायया काञ्चनं वनम् ॥ १० ॥ पुरा दानवमुख्यानां विश्वकर्मा बभूव ह । येनेदं काञ्चनं दिव्यं निर्मितं भवनोत्तमम् ॥ ११ ॥ स तु वर्षसहस्राणि तपस्तप्त्वा महावने । पितामहाद्वरं लेभे सर्वमौशनसं धनम् ॥ १२ ॥ वनं विधाय बलवान् सर्वकामेश्वरस्तदा । उवास सुखितः कालं कंचिदस्मिन् महावने ॥ १३ ॥ तमप्सरसि हेमायां सक्तं दानवपुङ्गवम् । विक्रम्यैवाशनिं गृह्य जघानेशः पुरन्दरः ॥ १४ ॥ इदं च ब्रह्मणा दत्तं हेमायै वनमुत्तमम् । शाश्वताः कामभोगाश्च गृहं चेदं हिरण्मयम् ॥ १५ ॥

शक्त्या । मायावी मायायुक्तः । दानवर्षभ इत्यनेन नायमसुरतक्षा मय इति सूचितम् ॥ १०–१३ ॥ तं स्वपुत्रीं मन्दोदरीं रावणाय दत्तवन्तम् । एकान्ते हेमायां सक्तं विदित्वा । ईशः त्रैलोक्याधिपतिः अशनिं वज्रं गृहीत्वा जघान ॥ १४ ॥ रामानु०–गृह्य गृहीत्वा ॥ १४ ॥ इदं चेति–मयनाशानन्तरम् इदं वनं

कथं मत्स्याश्चेति । आत्मनस्त्वनुभावात्, तवानुभावादित्यर्थः ॥ ८ ॥ ९ ॥ मयो नामेति । मायया विचित्रशक्त्या ॥ १० ॥ ११ ॥ औशनसं धनं विचित्रनिर्माण प्रतिपादकशिल्पशास्त्रज्ञानम्, शिल्पस्योशनसा प्रणीतत्वात्तद्धनत्वव्यपदेशः ॥ १२ ॥ धनमिति । विधाय सर्वं वनं काञ्चनं कृत्वा ॥ १३ ॥ १४ ॥ इन्द्रमिति । स०–महत् वने इति छेदः । महावन इति पाठे वनविशेषणम् । महतो वनमिति वा । अथवा आदित्यादित एव निर्देशादनित्यताऽऽत्वस्य ज्ञापितेति । "तस्यैव महत्सुखत्वाच्चैषाम्" इत्यादिवदात्वाभावे ऐकपद्यं ज्ञेयम् ॥ १२ ॥

ब्रह्मणा हेमायै दत्तम् ॥ १५ ॥ १६ ॥ ममेति । सेदानीं ब्रह्मसदनं गतेत्याशयेनाह नृत्तेति ॥ १७ ॥ किं कार्यं किं प्रयोजनम् । कस्य हेतोः कस्मात् प्रयोजनात् ॥ १८ ॥ अस्मिन् सर्गे सार्धैकोनविंशतिश्लोकाः ॥ १९ ॥ इति श्रीगोवि॰ श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

दुहिता मेरुसावर्णेरहं तस्याः स्वयंप्रभा । इदं रक्षामि भवनं हेमाया वानरोत्तम ॥ १६ ॥ मम प्रियसखी हेमा नृत्तगीतविशारदा । तया दत्तवरा चास्मि रक्षामि भवनोत्तमम् ॥ १७ ॥ किं कार्यं कस्य वा हेतोः कान्ताराणि प्रपश्यथ । कथं चेदं वनं दुर्गं युष्माभिरुपलक्षितम् ॥ १८ ॥ इमान्यभ्यवहार्याणि मूलानि च फलानि च । भुक्त्वा पीत्वा च पानीयं सर्वं मे वक्तुमर्हथ ॥ १९ ॥ इत्यार्षे श्रीरामायणे श्रीमत्किष्किन्धाकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

अथ तानब्रवीत्सर्वान् विक्रान्तान् हरिपुङ्गवान् । इदं वचनमेकाग्रा तापसी धर्मचारिणी ॥ १ ॥ वानरा यदि वः खेदः प्रनष्टः फलभक्षणात् । यदि चैतन्मया श्राव्यं श्रोतुमिच्छामि कथ्यताम् ॥ २ ॥ तस्यास्तद्वचनं श्रुत्वा हनुमान् मारुतात्मजः । आर्जवेन यथातत्त्वमाख्यातुमुपचक्रमे ॥ ३ ॥ राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः । रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् ॥ ४ ॥ लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया । तस्य भार्या जनस्थानाद् रावणेन हृता बलात् ॥ ५ ॥

अथ हनुमता स्वागमनहेतुरुच्यते द्विपञ्चाशे–अथेत्यादि ॥ १ ॥ २ ॥ आर्जवेन अकपटेन ॥ ३–५ ॥

विचित्रनिर्माणसामर्थ्यगुणयोगात् अत्र ब्रह्मशब्दो दानवविश्वकर्ममयवाची ॥ १५ ॥ तर्हि त्वं का, किमर्थं चात्र तिष्ठसीत्यत आह–दुहितेति । तस्याः हेमाया इति सम्बन्धः ॥ १६ ॥ दत्तवरा, वरः पराप्रधृष्यत्वादिरूपः । युवयोः कः सम्बन्ध इत्यत आह ममेति । तथापि रक्षणसामर्थ्यं तव कथमित्यत आह तयेति ॥ १७ ॥ वानरागमनं पृच्छति–किं कार्यमिति ॥ १८ ॥ १९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्ड॰एकपञ्चाशः सर्गः ५१

अथ हनुमता स्वागमनहेतुरुच्यते द्विपञ्चाशे–अथेत्यादि ॥ १ ॥ वानरा इति । मया श्राव्यं मया श्रोतुं योग्यम् ॥ २ ॥ तस्या इति । आर्जवेन ऋजुस्वभावेन ॥ ३ ॥ टी॰–महेन्द्रवरुणोपमः महेन्द्रवरुणाभ्याम् उपमा साम्यं शौर्यगाम्भीर्यादौ यस्य स तथा ॥ ४–६ ॥

वीर इति । दक्षिणामाशां येन प्रस्थापिताः स राजाऽस्तीति पूर्वेणान्वयः ॥ ६–१२ ॥ रामानु०—वीरस्तस्य सखा राज्ञ इति पाठः । अगस्त्यचरितामाशां दक्षिणाम् । यमरक्षितामित्यस्य येन प्रस्थापिता वयमित्यनेन संबन्धः ॥ ६ ॥ ७ ॥ विचित्येति । बुभुक्षिताः परिश्रान्ता वृक्षमूलमुपाश्रिता इति पाठः ॥ ९ ॥ तेषामिति । अनुमान

वीरस्तस्य सखा राज्ञः सुग्रीवो नाम वानरः । राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥ ६ ॥ अगस्त्यचरितामाशां दक्षिणां यमरक्षिताम् । सहैभिर्वानरैर्घोरैरङ्गदप्रमुखैर्वयम् ॥ ७ ॥ रावणं सहिताः सर्वे राक्षसं कामरूपिणम् । सीतया सह वैदेह्या मार्गध्वमिति चोदिताः ॥ ८ ॥ विचित्य तु वयं सर्वे समग्रां दक्षिणां दिशम् । बुभुक्षिताः परिश्रान्ता वृक्षमूलमुपाश्रिताः ॥ ९ ॥ विवर्णवदनाः सर्वे सर्वे ध्यानपरायणाः । नाधिगच्छामहे पारं मग्नाश्चिन्तामहार्णवे ॥ १० ॥ चारयन्तस्ततश्चक्षुर्दृष्टवन्तो वयं बिलम् । लतापादपसंछन्नं तिमिरेण समावृतम् ॥ ११ ॥ अस्माद्धंसा जलक्लिन्नाः पक्षैः सलिलविस्रवैः । कुरराः सारसाश्चैव निष्पतन्ति पतत्त्रिणः । साध्वत्र प्रविशामेति मया तूक्ताः प्लवङ्गमाः ॥ १२ ॥ तेषामपि हि सर्वेषामनुमानमुपागतम् । गच्छाम प्रविशामेति भर्तृकार्यत्वरान्विताः ॥ १३ ॥ ततो गाढं निपतिता गृह्य हस्तौ परस्परम् । इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् ॥ १४ ॥ एतन्नः कार्यमेतेन कृत्येन वयमागताः । त्वां चैवोपगताः सर्वे परिद्यूना बुभुक्षिताः ॥ १५ ॥ आतिथ्यधर्मदत्तानि मूलानि च फलानि च । अस्माभिरुपभुक्तानि बुभुक्षापरिपीडितैः ॥ १६ ॥

मुपागतम् जलचरसत्त्वदर्शनेन जलबुद्धिर्जातेत्यर्थः । यद्वा भर्तृकार्यत्वरान्विताः सन्तो गच्छामः । बिलद्वारमिति शेषः । बिलं प्रविशाम इति अनुमानम् अङ्गीकरणम् ॥ १३ ॥ १४ ॥ परिद्यूनाः परिक्षीणाः ॥ १५–१८ ॥

अगस्त्यचरितामिति । दक्षिणामाशां प्रति येन प्रस्थापिता वयमिति सम्बन्धः । यमरक्षितामित्यनेन दुर्गमत्वमुक्तम् ॥ ७–१२ ॥ तेषामिति । तेषामपि हि सर्वेषाम् अनुमानमुपागतं जलक्लिन्नपक्षिनिर्गमरूपलिङ्गदर्शनाद्बिलप्रवेशनमङ्गीकृतमित्यर्थः ॥ १३ ॥ निपतिताः मिलिताः ॥ १४ ॥ त्वां चेति । परिद्यूनाः परिक्षीणाः ॥ १५ ॥ १६ ॥

स०—आतिथ्यधर्मदत्तानि अतिथये इमानि । आतिथ्यानि च तानि धर्मदत्तानि च "अतिथेर्न्यः" "क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि" इत्यमरः ॥ १६ ॥

सर्वैषामिति । संबन्धसामान्ये षष्ठी ॥१९॥ इति श्रीगोविन्दराज० श्रीरामायण० मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्विपञ्चाशः सर्गः॥ ५२ ॥
अथ बिलादुत्तीर्णानां वानराणां निर्वेदः त्रिपञ्चाशे—एवमुक्त इत्यादि ॥१॥ शरणमित्यादि । बिले च परिवर्तताम् इत्यनेन बहुकालं वानरैर्बिले स्थित

यत्त्वया रक्षिताः सर्वे म्रियमाणा बुभुक्षया । ब्रूहि प्रत्युपकारार्थं किं ते कुर्वन्तु वानराः ॥ १७ ॥ एवमुक्ता तु सर्वज्ञा वानरैस्तैः स्वयंप्रभा । प्रत्युवाच ततः सर्वानिदं वानरयूथपान् ॥१८॥ सर्वेषां परितुष्टाऽस्मि वानराणां तरस्विनाम् । चरन्त्या मम धर्मेण न कार्यमिह केनचित् ॥१९॥ इत्यार्षे श्रीरा० श्रीमत्किष्किन्धाकाण्डे द्विपञ्चाशः सर्गः॥५२॥

एवमुक्तः शुभं वाक्यं तापस्या धर्मसंहितम् । उवाच हनुमान् वाक्यं तामानिन्दितचेष्टिताम् ॥ १ ॥ शरणं त्वां प्रपन्नाः स्मः सर्वे वै धर्मचारिणि । यः कृतः समयोऽस्माकं सुग्रीवेण महात्मना ॥२॥ स च कालो ह्यतिक्रान्तो बिले च परिवर्तताम् । सा त्वमस्माद्बिलाद् घोरादुत्तारयितुमर्हसि ॥ ३ ॥ तस्मात्सुग्रीववचनादतिक्रान्तान् गतायुषः । त्रातुमर्हसि नः सर्वान् सुग्रीवभयकर्शितान् ॥४॥ महच्च कार्यमस्माभिः कर्तव्यं धर्मचारिणि । तच्चापि न कृतं कार्यमस्माभिरिहवासिभिः॥५॥ एवमुक्ता हनुमता तापसी वाक्यमब्रवीत् । जीवता दुष्करं मन्ये प्रविष्टेन निवर्तितुम् ॥६॥ तपसस्तु प्रभावेन नियमोपार्जितेन च । सर्वानेव बिलादस्मादुद्धरिष्यामि वानरान् ॥७॥ निमीलयत चक्षूंषि सर्वे वानरपुङ्गवाः । नहि निष्क्रमितुं शक्यमनिमीलितलोचनैः ॥ ८ ॥ ततः संमीलिताः सर्वे सुकुमाराङ्गुलैः करैः । सहसा पिदधुर्दृष्टिं हृष्टा गमनकाङ्क्षया ॥ ९ ॥ वानरास्तु महात्मानो हस्तरुद्धमुखास्तदा । निमेषान्तरमात्रेण बिलादुत्तारितास्तया ॥ १० ॥

मिति गम्यते ॥ २–१० ॥ रामानु०—वानरास्तु महात्मानो हस्तरुद्धमुखास्तदा । निमेषान्तरमात्रेण बिलादुत्तारितास्तया । इति पाठः ॥ १० ॥
॥ १७–१९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां द्विपञ्चाशः सर्गः ॥ ५२ ॥ १–१४ ॥
स०--किं ते कुर्वन्तु वानराः इति परोक्षनिर्देशो देवत्वात् स्वस्य तस्या अपि देवीत्वायुक्तः " परोक्षप्रिया इव हि देवाः " इति श्रुतेः ॥ १७ ॥
स०–अंगुलीनां समूहा आंगुलानि । सुकुमाराणि अंगुलानि येषां तैः एतेनादारुत्वादसङ्ख्याव्ययादित्वात्कथं पञ्चाविविति निरस्तम् ॥ ९ ॥

तत इति। विषमात् सङ्कटप्रदेशात् ॥ ११ ॥ रामानु०—धर्मचारिणी यान् बिलादुत्तारयामास तान् समाश्वास्य इदमब्रवीदिति सम्बन्धः ॥ ११ ॥ ॥ १२–१५ ॥ पादे दक्षिणपार्श्वे, दक्षिणपश्चिमकोटावित्यर्थः। "हिमवद्विन्ध्यशैलाभ्यां प्रायो व्याप्ता वसुन्धरा" इति भेषजकल्पोक्तिः ॥ १६ ॥ पुष्पातिभाराग्रान् पुष्पैरतिभाराणि अग्राणि येषां तान्। वासन्तिकान् वसन्तफलिनश्चूतादीन्। ये वसन्ते फलन्ति ते शिशिरे पुष्प्यन्ति। भयशङ्किताः सुग्रीवाद्भय

ततस्तान्वानरान्सर्वांस्तापसी धर्मचारिणी। निःसृतान् विषमात्तस्मात्समाश्वास्येदमब्रवीत् ॥ ११॥ एष विन्ध्यो गिरिः श्रीमान्नानाद्रुमलताकुलः। एष प्रस्रवणः शैलः सागरोऽयं महोदधिः ॥ १२ ॥ स्वस्ति वोऽस्तु गमिष्यामि भवनं वानरर्षभाः। इत्युक्त्वा तद्बिलं श्रीमत् प्रविवेश स्वयंप्रभा ॥ १३ ॥ ततस्ते ददृशुर्घोरं सागरं वरुणालयम्। अपारमभिगर्जन्तं घोरैरूर्मिभिरावृतम् ॥ १४॥ मयस्य मायाविहितं गिरिदुर्गं विचिन्वताम्। तेषां मासो व्यतिक्रान्तो यो राज्ञा समयः कृतः ॥ १५ ॥ विन्ध्यस्य तु गिरेः पादे सम्प्रपुष्पितपादपे। उपविश्य महात्मानश्चिन्तामापेदिरे तदा ॥ १६ ॥ ततः पुष्पातिभाराग्रान् लताशतसमावृतान्। द्रुमान् वासन्तिकान्दृष्ट्वा बभूवुर्भयशङ्किताः ॥ १७ ॥ ते वसन्तमनुप्राप्तं प्रतिबुद्ध्वा परस्परम्। नष्टसन्देशकालार्था निपेतुर्धरणीतले ॥ १८ ॥ ततस्तान्कपिवृद्धांस्तु शिष्टांश्चैव वनौकसः। वाचा मधुरयाऽऽभाष्य यथावदनुमान्य च ॥ १९ ॥ स तु सिंहवृषस्कन्धः पीनायतभुजः कपिः। युवराजो महाप्राज्ञ अङ्गदो वाक्यमब्रवीत् ॥ २० ॥

विषयशङ्कावन्तः ॥ १७ ॥ त इति। वसन्तम् अनुप्राप्तं प्रत्यासन्नम्। तदानीं हि शिशिरः। तथाहि—शरत्कालान्त मार्गशीर्षे मासि सेनां सन्निधाप्य पौषमासमवधिं कृत्वा प्रस्थापितवान्। स पौषो माघश्चातीतः। फाल्गुन एव प्रवृत्त इति। तेन वसन्तः प्रत्यासन्न एव, न प्राप्तः ॥ १८–२० ॥ मयस्येति। गिरिदुर्गम् ऋक्षबिलम् ॥ १५ ॥ विन्ध्यस्येति। चिन्ताम् अतः परं किं कुर्म इत्येवंरूपाम् ॥ १६ ॥ वासन्तिकान् द्रुमान् वसन्तकालफलिनो द्रुमान् चूतादीन्। ये वसन्ते फलन्ति ते शिशिरादौ पुष्प्यन्ति हि ॥१७॥ वसन्तं प्राप्तं वसन्तकालं प्रत्यासन्नम्। तदानीं शिशिरः कथम्? तथाहि—शरत्कालान्ते सुग्रीवो मार्गशीर्षे सेनां सन्निपात्य पौषमासमवधिं दत्त्वा सीतान्वेषणार्थमस्मान् प्रस्थापितवान्, स पौषोऽतीतः, मधुः प्रवृत्त इति, तेन वसन्तः प्रत्यासन्न एव न प्राप्त इति मन्तव्यम् ॥ १८ ॥ १९ ॥ स त्विति। सिंहवृषयोरिव स्कन्धौ यस्य स तथा ॥ २० ॥

शासनादित्यादि । वयमाश्वयुजे मासीति कालसंख्याव्यवस्थिताः कालसंख्यया नियमिताः। वयम् आश्वयुजे मासि हनुमच्चोदितेन सुग्रीवेण पञ्चदश रात्रसंख्यया नियम्य समाहूताः। ततो मार्गशीर्षे लक्ष्मणचोदितेन तेन दशरात्रसङ्ख्यया समाहूताः। ततः सीतान्वेषणे पौषमासमवधिं कृत्वा तेन प्रेषिताः। एवमाश्वयुजमासमारभ्य कालसङ्ख्याव्यवस्थितानामस्माकं कालविस्मरणं न युक्तमित्यर्थः । अन्ये तु–आश्वयुजे मासि दशम्यामुत्थितायामिति वत्सामीपिकाधिकरणविवक्षया सप्तमी। तेन "कार्त्तिके समनुप्राप्ते त्वं रावणवधे यत" इत्युक्तकालातिक्रमणप्रयुक्तरामकोपदर्शनात् कार्त्तिकान्तो

शासनात्कपिराजस्य वयं सर्वे विनिर्गताः। मासः पूर्णो बिलस्थानां हरयः किन्न बुध्यते ॥ २१ ॥ वयमाश्वयुजे मासि कालसङ्ख्याव्यवस्थिताः। प्रस्थिताः सोऽपि चातीतः किमतः कार्यमुत्तरम् ॥ २२ ॥ भवन्तः प्रत्ययं प्राप्ता नीतिमार्गविशारदाः। हितेष्वभिरता भर्तुर्निसृष्टाः सर्वकर्मसु ॥ २३ ॥ कर्मस्वप्रतिमाः सर्वे दिक्षु विश्रुतपौरुषाः। मां पुरस्कृत्य निर्याताः पिङ्गाक्षप्रतिचोदिताः ॥२४॥ इदानीमकृतार्थानां मर्तव्यं नात्र संशयः। हरिराजस्य सन्देश मकृत्वा कः सुखी भवेत् ॥ २५ ॥

विवक्षितः। सोपि चातीतः स मार्गणावधिभूतमार्गशीर्षमासः। अपिचेत्याभ्यां पदाभ्यां तदनन्तरभूतौ पौषमाघौ समुच्चीयेते । अतश्च फाल्गुन एव प्राप्त इति भाव इत्याहुः। अत उत्तरं किं कार्यम् ॥२१॥२२॥ प्रत्ययं विश्वासम् । नीतिमार्गे विशारदाः प्रगल्भाः। निसृष्टाः दक्षा इति यावत् ॥ २३–२५ ॥

शासनादिति । बिलस्थानां बिले परिवर्तमानानाम् अस्माकमवधित्वेन सुग्रीवपरिकल्पितमासः पूर्णः किं न बुद्धयते भवद्भिर्न ज्ञायते किम् ? खेदं त्यक्त्वा पुनरेतद्धनं विचेयं, भवद्भिरिति शेषः। इदानीं शिशिरर्तुलिङ्गभूतपुष्पदर्शनेन न जानीथ किमिति भावः ॥ २१ ॥ कालस्यातीतत्वमुपपादयन्नाह–वयमिति । वयमाश्वयुजे मासि हनुमच्चोदितेन सुग्रीवेण त्रिपञ्चरात्रसङ्ख्यया नियम्य समाहूताः। ततो मार्गशीर्षे लक्ष्मणचोदितेन तेन दशरात्रसङ्ख्यया समाहूताः । ततः सीतान्वेषणे पौषमासमवधिं दत्त्वा तेन प्रेषिताः। एवमाश्वयुजमासमारभ्य कालसङ्ख्यया व्यवस्थितानामस्माकं कालविस्मरणं न युक्तमित्यर्थः। यद्वा आश्वयुजे मासि दशम्यामुत्थितायामितिवत्सामीप्याधिकरणविवक्षया सप्तमी, तेन कार्त्तिकमास उच्यते "कार्त्तिके समनुप्राप्ते त्वं रावणवधे यत । एष नस्समयस्सौम्य प्रविश त्वं स्वमालयम्" इत्युक्तकालातिक्रमप्रयुक्तरामकोपदर्शनात् कार्त्तिकान्तो विवक्षितः। "प्रस्थिताः सोपि चातीतः किमतः कार्यमुत्तरम्।" इत्यत्र अपिचेत्यनेन मार्गणावधिभूतमार्गशीर्षानन्तरमासस्समुच्चीयते ॥ २२ ॥ भवन्त इति । प्रत्ययं विश्वासं प्राप्ताः ॥ २३–२७ ॥

स०–सर्वकर्मसु कर्तव्यत्वेनोपस्थितेषु प्रत्ययं प्रभुविश्वासम् यस्मै हितेषु अभिरताः तस्माद्भर्तुर्निसृष्टा इति यत्तच्छब्दाध्याहारेण योजनायां "चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः" इत्यनुकूलितं भवति । यद्वा हनुमदितरेषां हिताभिरतेरभावमावेदयति । भर्तुरिति षष्ठी ॥ २३ ॥

तस्मिन्निति । प्राया अन्तगमनाय उपवेशनं शयनं प्रायोपवेशनम् ॥ २६ ॥ २७ ॥ अप्रवृत्तौ अवार्तायाम् । प्रायोपविशनमिति गुणाभाव आर्षः ॥ २८ ॥ २९ ॥ रामानु०–ध्रुवं नो हिंसिता राजा सर्वान् प्रतिगतानितः । वधेनाप्रतिरूपेण श्रेयान्मृत्युरिहैव नः । इति पाठः ॥ २९ ॥ त्वां यौवराज्ये कृतवान् सुग्रीवः कथं

तस्मिन्नतीते काले तु सुग्रीवेण कृते स्वयम् । प्रायोपवेशनं युक्तं सर्वेषां च वनौकसाम् ॥ २६ ॥ तीक्ष्णः प्रकृत्या सुग्रीवः स्वामिभावे व्यवस्थितः । न क्षमिष्यति नः सर्वानपराधकृतो गतान् ॥ २७ ॥ अप्रवृत्तौ च सीतायाः पापमेव करिष्यति । तस्मात्क्षममिहाद्यैव प्रायोपविशनं हि नः ॥२८॥ त्यक्त्वा पुत्रांश्च दारांश्च धनानि च गृहाणि च । ध्रुवं नो हिंसिता राजा सर्वान् प्रतिगतानितः । वधेनाप्रतिरूपेण श्रेयान् मृत्युरिहैव नः ॥ २९ ॥ न चाहं यौवराज्येन सुग्रीवेणाभिषेचितः । नरेन्द्रेणाभिषिक्तोऽस्मि रामेणाक्लिष्टकर्मणा ॥ ३० ॥ स पूर्वं बद्धवैरो मां राजा दृष्ट्वा व्यतिक्रमम् । घातयिष्यति दण्डेन तीक्ष्णेन कृतनिश्चयः ॥ ३१ ॥ किं मे सुहृद्भिर्व्यसनं पश्यद्भिर्जीवितान्तरे । इहैव प्रायमासिष्ये पुण्ये सागररोधसि ॥ ३२ ॥ एतच्छ्रुत्वा कुमारेण युवराजेन भाषितम् । सर्वे ते वानरश्रेष्ठाः करुणं वाक्यमब्रुवन् ॥ ३३ ॥ तीक्ष्णः प्रकृत्या सुग्रीवः प्रियासक्तश्च राघवः । अदृष्टायां तु वैदेह्यां दृष्ट्वा चैव समागतान् ॥ ३४ ॥ राघवप्रियकामार्थं घातयिष्यत्यसंशयम् । न क्षमं चापराद्धानां गमनं स्वामिपार्श्वतः ॥ ३५ ॥

हिंस्यादित्यत्राह–न चाहमिति ॥ ३० ॥ ३१ ॥ मे जीवितान्तरे जीवितावधौ । व्यसनं पश्यद्भिः सुहृद्भिः किम् ? सुहृदो मद्व्यसनप्रदर्शनेन क्लेशयित्वा मम किं प्रयोजनमित्यर्थः ॥ ३२–३५ ॥

अप्रवृत्तौ वार्ताभावे । पापं वधम् । प्रायोपविशनम् अनशनदीक्षा । "प्रायश्चानशने मृत्याम्" इति कोशः । प्रायोपविशनमिति गुणाभाव आर्षः ॥ २८ ॥ तत्रैव वधो भवत्वित्यत आह–वधेनेति । वधादित्यर्थः । अप्रतिरूपेण अनर्हेणेत्यर्थः ॥ २९ ॥ पुत्रप्रीत्या त्वां युवराजं कृतवान् सुग्रीवः कथं हनिष्यतीत्याशङ्क्याह–न चाहमिति ॥३०॥३१॥ बन्धुषु विद्यमानेषु प्रायोपवेशनं न युक्तमित्यत आह–किं म इति । मे जीवितान्तरे जीवितावधौ व्यसनं पश्यद्भिः सुहृद्भिः किम् ? सुहृदो मद्व्यसनप्रदर्शनेन क्लेशयित्वा मम किं प्रयोजनमित्यर्थः ॥ ३२--३८ ॥

इहैवेति । सीतामन्विष्य तस्याः प्रवृत्तिं वृत्तान्तमुपलभ्य वीरं तं गच्छाम नोचेदिहैव यमक्षयं यमगृहं गमिष्यामः ॥ ३६-३८ ॥ श्रुत्वेति । अङ्गदस्याप्यनुकूलं तारस्य वचनं श्रुत्वेत्यन्वयः । विधानं कार्यम् । कर्मणि ल्युट् । असक्तम् अविलम्बम् । अस्मिन् सर्गे सार्धैकोनचत्वारिंशच्छ्लोकाः ॥ ३९ ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

इहैव सीतामन्विष्य प्रवृत्तिमुपलभ्य वा । नो चेद्गच्छाम तं वीरं गमिष्यामो यमक्षयम् ॥ ३६ ॥ प्लवङ्गमानां तु भयार्दितानां श्रुत्वा वचस्तार इदं बभाषे । अलं विषादेन बिलं प्रविश्य वसाम सर्वे यदि रोचते वः ॥ ३७ ॥ इदं हि मायाविहितं सुदुर्गमं प्रभूतवृक्षोदकभोज्यपेयकम् । इहास्ति नो नैव भयं पुरन्दरान्न राघवाद्वानरराजतोऽपि वा ॥ ३८ ॥ श्रुत्वाऽङ्गदस्यापि वचोऽनुकूलमूचुश्च सर्वे हरयः प्रतीताः । यथा न हिंस्येम तथा विधानमसक्तमद्यैव विधीयतां नः॥३९॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे त्रिपञ्चाशः सर्गः॥५३॥

तथा ब्रुवति तारे तु ताराधिपतिवर्चसि । अथ मेने हृतं राज्यं हनुमानङ्गदेन तत् ॥ १ ॥ बुद्ध्या ह्यष्टाङ्गया युक्तं चतुर्बलसमन्वितम् । चतुर्दशगुणं मेने हनुमान् वालिनः सुतम् ॥ २ ॥

अथ हनुमता अङ्गदमतभेदनपूर्वकमङ्गदस्य सुग्रीवसमीपगमनाय नियोजनं चतुष्पञ्चाशे—तथेत्यादि । राज्यं हृतं मेने । राज्यं कर्तुं सामर्थ्यमस्तीति मेन इत्यर्थः ॥ १ ॥ अष्टाङ्गया "ग्रहणं धारणं चैव स्मरणं प्रतिपादनम् । ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः" इत्युक्ताष्टाङ्गयुक्तया । चतुर्बलसमन्वितं बाहुबलमनोबलोपायबलबन्धुबलयुक्तम् । चतुर्दशगुणम् 'देशकालज्ञता दाढर्यं सर्वक्लेशसहिष्णुता । सर्वविज्ञानिता दाक्ष्यमूर्जः संवृतमन्त्रता ।

श्रुत्वाऽङ्गदस्यापि वचोऽनुकूलम् अङ्गदस्याप्यनुकूलं तारस्य वचनं श्रुत्वेत्यर्थः । प्रतीता हृष्टाः सन्तः । असक्तमविलम्बम् ॥ ३९ ॥ इति श्रीमहेश्वरतीर्थवि[रचितायां] श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां त्रिपञ्चाशः सर्गः ॥ ५३ ॥ अथ महाप्राज्ञो हनुमान् तारादिमतस्याप्रतिषिद्धत्वादङ्गदं तन्मतावलम्बिनमवगम्य तस्याशंसितं प्रतिषेधयति—तथेति । राज्यं हृतं मेने, राज्यं कर्तुं सामर्थ्यमस्तीति मेन इत्यर्थः ॥ १ ॥ सामर्थ्यमेव प्रतिपादयति—बुद्ध्या हीत्यादिना । अष्टाङ्गया अष्टगुणया । ते च गुणाः—" शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहोऽपोहोऽर्थविज्ञानं तद्विज्ञानं च धीगुणाः ॥" इति । चतुर्बलसमन्वितम् बाहुबलमनोबलोपायबलबन्धुबलसमन्वितम् । यद्वा चतुर्विधबलानि सामादयश्चतुरुपायाः। चतुर्दशगुणास्तु—"देशकालज्ञता दार्ढ्यं सर्वक्लेशसहिष्णुता । सर्वविज्ञानिता

अविसंवादिता शौर्यं शक्तिज्ञत्वं कृतज्ञता । शरणागतवात्सल्यममर्षित्वमचापलम् ॥ " इत्युक्तचतुर्दशगुणयुक्तम् ॥ २ ॥ आपूर्यमाणमित्यादि । तारस्य शुश्रूषमाणम् । नटस्य शृणोतीतिवत्कारकशेषत्वात् षष्ठी । शुक्रस्येव पुरंदरमिति । पुरन्दरशब्दसन्निधानादत्र शुक्रशब्दो बृहस्पतिपरः । यद्वा

आपूर्यमाणं शश्वच्च तेजोबलपराक्रमैः । शशिनं शुक्लपक्षादौ वर्धमानमिव श्रिया ॥३ ॥ बृहस्पतिसमं बुद्ध्या विक्रमे सदृशं पितुः । शुश्रूषमाणं तारस्य शुक्रस्येव पुरन्दरम् ॥४॥ भर्तुरर्थे परिश्रान्तं सर्वशास्त्रविदां वरम् । अभिसन्धातुमारेभे हनुमानङ्गदं ततः ॥ ५ ॥ स चतुर्णामुपायानां तृतीयमुपवर्णयन् । भेदयामास तान् सर्वान् वानरान्वाक्यसंपदा ॥ ६ ॥ तेषु सर्वेषु भिन्नेषु ततोऽभीषयदङ्गदम् । भीषणैर्बहुभिर्वाक्यैः कोपोपायसमन्वितैः ॥७॥ त्वं समर्थतरः पित्रा युद्धे तारेय वै धुरम् । दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥ ८ ॥

कस्यांचिदवस्थायां हितमुपदिशतः शुक्रस्य वचनं पुरन्दरः श्रुतवानित्यवगम्यते । गुरोरिव पुरन्दरमिति क्वचित्पाठः । अभिसंधातुम् अनुकूलयितुम् ॥ ३-५ ॥ स इति । चतुर्णां सामादीनाम् । तृतीयं भेदम् । " साम दानं च भेदश्च दण्डश्चेति यथाक्रमम् । " इति क्रमनियमात् ॥ ६ ॥ कोपरूप उपायः कोपोपायः दण्डः तत्समन्वितैः ॥ ७ ॥ त्वमिति । पित्रा पितुः ॥ ८ ॥

दाक्ष्यमूर्जस्संवृतमन्त्रता । अविसंवादिता शौर्यं शक्तिज्ञत्वं कृतज्ञता । शरणागतवात्सल्यममर्षित्वमचापलम् ॥ " इत्युक्तचतुर्दशगुणयुक्तम् ॥ २ ॥ ३ ॥ शुश्रूषमाणमिति । तारस्य शुश्रूषमाणम्, वाक्यमिति शेषः । ( तारमतपक्षपातिनमित्यर्थः । ) शुक्रस्येव पुरन्दरम् । पुरन्दरसान्निधानादत्र शुक्रशब्दो बृहस्पतिपरः । यद्वा स कस्याञ्चिदवस्थायां हितमुपदिशतः शुक्रस्य वचनं पुरन्दरः श्रुतवानिति गम्यते ॥ ४ ॥ भर्तुरिति । अभिसन्धातुं समाधातुम् । उक्तविचारान्निवर्तयितुमिति यावत् ॥ ५ ॥ स इति । चतुर्णां सामादीनां मध्ये तृतीयं भेदमनुवर्णयन् ॥ ६ ॥ तेष्विति । कोपोपायसमन्वितैः कोपजन्योपायः कोपोपायः दण्डः तत्समन्वितैः, कोपोपायाभ्यां समन्वितैरिति वा ॥ ७ ॥ त्वमिति । पितुः सुग्रीवात् । यथा पिता वाली कपिराज्यं युद्धे धुरं च दृढं धारयितुं शक्त इति सम्बन्धः ॥ ८ ॥

स०—शुक्लपक्षत्वेनादिः कृष्णपक्षस्य । समग्रः शुक्लपक्ष इत्यर्थः । तस्मिन् ॥ ३ ॥ शुश्रूषमाणम् आकर्णयन्तम् । तारस्य वच इति शेषः । कदापि नैतद्घटत इति सूचयितुमभूतोपमितिमाह—शुक्रस्येव पुरन्दरमिति । शुक्रस्य वाक्यं शुश्रूषमाणं पुरन्दरमित्यन्वयः ॥ ४ ॥

नित्यमिति । आज्ञाप्यम् आज्ञापनम् । भावे कृत्यप्रत्ययः । पुत्रदारान् विना पुत्रदारैर्विरहिताः । त्वयेति कर्तरि तृतीया । अस्य आज्ञाप्यमित्यनेन संबन्धः ॥ ९ ॥ अयं जाम्बवान्नीलः सुहोत्रश्च एते त्वां यथा नानुयुञ्जेयुः नानुवर्तेरन् तथाऽहमपि नानुवर्ते हि । त इमे सर्वे सामादिभिः सुग्रीवा

नित्यमस्थिरचित्ता हि कपयो हरिपुङ्गव । नाज्ञाप्यं विषहिष्यन्ति पुत्रदारान् विना त्वया ॥९॥ त्वां नैते ह्यनुयुञ्जेयुः प्रत्यक्षं प्रवदामि ते । यथाऽयं जाम्बवान्नीलः सुहोत्रश्च महाकपिः ॥ १० ॥ न ह्यहं त इमे सर्वे सामदानादिभि र्गुणैः । दण्डेन वा त्वया शक्याः सुग्रीवादपकर्षितुम् ॥ ११ ॥ विगृह्यासनमप्याहुर्दुर्बलेन बलीयसः । आत्मरक्षा करस्तस्मान्न विगृह्णीत दुर्बलः ॥ १२ ॥ यां चेमां मन्यसे धात्रीमेतद्बिलमिति श्रुतम् । एतल्लक्ष्मणबाणाना मीषत्कार्यं विदारणे ॥ १३ ॥

दपकर्षितुं न शक्याः ॥ १० ॥ ११ ॥ रामानु०—दण्डेन न त्वया शक्या इति पाठः ॥ ११ ॥ बलीयसः प्रबलस्य दुर्बलेन समं विगृह्य आसनमप्यवस्थानमपि कर्तव्यमाहुः, न तु दुर्बलस्य बलीयसा । तस्मात् आत्मरक्षाकरः स्वक्षेमकाम इति यावत् । दुर्बलः बलीयसा न विगृह्णीत विगृह्य नासीत ॥ १२ ॥ स्वतो बलाभावेपि दुर्गबलमस्तीत्याशङ्क्याह—यां चेति । यामिमां गुहां धात्रीं रक्षिकां मन्यसे । एतद्बिलमिति ताराच्छ्रुतम्, एतत् ऋक्षबिलं विदारणे

तथा चेदेभिस्सहास्मिन् बिल एव राज्यं करिष्यामीत्यत आह—नित्यमिति । आज्ञाप्यम् आज्ञापनम् । पुत्रदारान् विना पुत्रैर्दारैर्विरहिताः । त्वयेति कर्तरि तृतीया । त्वया आज्ञापनं न सहिष्यन्ति ॥ ९ ॥ त्वामिति । एते पुत्रदारादीन् त्यक्त्वा त्वां नानुयुञ्जेयु नानुवर्तेरन्नित्यर्थः । एते नानुयुञ्जेयुरित्युक्तम्, तानेवाह यथेति । यथा जाम्बवान्नीलः सुहोत्रश्च एते त्वां नानुयुञ्जेयुस्तथा अहमपि नानुवर्ते इति योजना । दण्डेनेत्यर्धमेकं वाक्यम् । सुग्रीवात् पूर्वोक्ता हरयः दण्डेन सुग्रीवादपकर्षितुं न शक्याः ॥१०॥११॥ ननु तथा ह्यहमेक एव सुग्रीवेण विगृह्य स्थास्यामीत्यत आह—विगृह्येति । विगृह्यासनमपि विगृह्यावस्थानमपि दुर्बलेन सह बलीयस एव कर्तव्यमाहुः, न तु दुर्बलस्य बलीयसा । तस्मादात्मरक्षाकरः स्वक्षेमकारी दुर्बलः बलीयसा न विगृह्णीत विगृह्य नासीतेति योजना ॥ १२॥ स्वतो बलाभावेपि दुर्गबल मस्तीत्याशङ्क्य परिहरति—यां चेति । यामिमां गुहां धात्रीं रक्षित्रीम् मन्यसे एतदृक्षबिलम् ऋक्षबिलमिति च ताराद्दतम् एतदृक्षबिलं विदारणे विदारणविषये लक्ष्मण

स०—इमां गुहाम् । इमां स्वयंप्रभां वा । धात्रीम् एकत्र रक्षयित्रीम् अपरत्र धारयित्रीम् । एतत् परिदृश्यमानं बिलम् । मन्यसे इतराशक्यस्थानं मन्यसे । एतद्विदारणं बुद्धिस्थं बिलविदारणम् । लक्ष्मणत्राणानां लक्ष्मणबाणैः । ईषत् कार्यमिति द्वे पदे, अल्पकार्यमित्यर्थः । तेन न खल्प्रसक्तिः । "स्वल्पं हि कृतम्" इत्युत्तरग्रन्थानुकूलमिदं व्याख्यानम् । खलभाव आर्ष इति व्याख्यानमेकपद्याश्रयेण तस्य प्रतिकूल मिति मन्तव्यम् ॥ १३ ॥

विषये लक्ष्मणबाणानामीषत्कार्यम्, अयत्नसाध्यमित्यर्थः ॥ १३ ॥ स्वल्पमिति । पुरा बिलवासिनं मयमुद्दिश्याशनिं वज्रं क्षिपतेन्द्रेण स्वल्पं कृतं द्वारमात्रं कृतम् । लक्ष्मणस्तु निशितैर्बाणैः पत्रपुटमिव भिन्द्याद्धि ॥१४॥ तद्विधाः तादृशाः, अपरिच्छिन्नवैभवा इति यावत् । गिरीणामपि दारणाः,

स्वल्पं हि कृतमिन्द्रेण क्षिपता ह्यशनिं पुरा । लक्ष्मणो निशितैर्बाणैर्भिन्द्यात्पत्रपुटं यथा ॥ १४ ॥ लक्ष्मणस्य तु नाराचा बहवः सन्ति तद्विधाः । वज्राशनिसमस्पर्शा गिरीणामपि दारणाः ॥ १५॥ अवस्थाने यदैव त्वमासिष्यसि परंतप । तदैव हरयः सर्वे त्यक्ष्यन्ति कृतनिश्चयाः ॥ १६ ॥ स्मरन्तः पुत्रदाराणां नित्योद्विग्ना बुभुक्षिताः । खेदिता दुःखशय्याभिस्त्वां करिष्यन्ति पृष्ठतः ॥१७॥ स त्वं हीनः सुहृद्भिश्च हितकामैश्च बन्धुभिः । तृणादपि भृशोद्विग्नः स्पन्दमानाद्भविष्यसि ॥ १८॥ न च जातु न हिंस्युस्त्वां घोरा लक्ष्मणसायकाः । अपवृत्तं जिघांसन्तो महावेगा दुरासदाः ॥ १९ ॥ अस्माभिस्तु गतं सार्धं विनीतवदुपस्थितम् । आनुपूर्व्यात्तु सुग्रीवो राज्ये त्वां स्थापयिष्यति ॥ २० ॥ धर्मकामः पितृव्यस्ते प्रीतिकामो दृढव्रतः । शुचिः सत्यप्रतिज्ञश्च न त्वां जातु जिघांसति ॥ २१ ॥

बिलस्य किमुतेति भावः ॥ १५ ॥ अवस्थाने बिले । यद्वा विगृह्यावस्थाने आसिष्यसि स्थास्यसि, विगृह्यावस्थानं यदाऽध्यवसिष्यसीत्यर्थः ॥ १६–१८ ॥ न चेति । लक्ष्मणसायकाः अपवृत्तं वृत्तहीनम्, स्वकार्याकरमित्यर्थः । त्वां न हिंस्युरिति न, हिंस्युरेवेत्यर्थः ॥ १९ ॥ आनुपूर्व्यात्

बाणानामीषत्कार्यम्, अयत्नसाद्ध्यमित्यर्थः॥१३॥ स्वल्पमिति । पुरा बिलवासिनं मयमुद्दिश्य अशनिं क्षिपतेन्द्रेण स्वल्पं कृतं द्वारमात्रमेव कृतम् न तु बिलभेदनम्, लक्ष्मणस्तु निशितैर्बाणैः पत्रपुटमिव भिन्द्याद्धि ॥ १४ ॥ लक्ष्मणस्य तथाविधं सामर्थ्यं कथमित्यत आह–लक्ष्मणस्येति । तद्भिदाः इति पाठे बिलभेदकाः ॥ १५ ॥ अवस्थान इति । अवस्थाने बिले । यद्वा अवस्थाने विगृह्यावस्थाने यथा आसिष्यसि स्थास्यसि, विगृह्यावस्थानं यथा अध्यवसिष्यसीत्यर्थः॥१६॥१७॥ ततः किमित्यत आह–स त्वमिति । भयोद्विग्नः भयचलितः ॥ १८ ॥ लक्ष्मणसायकाः असंवृत्तं वृत्तहीनम्, स्वकार्याकरमित्यर्थः । त्वां न हिंस्युरिति न, हिंस्युरेवेत्यर्थः ॥ टी०–न केवलं भयमेव, किन्तु अत्यन्तहानिरपीत्याह–न चेति । एतद्बिलं लक्ष्मणबाणानामेवालक्ष्यम् किमुत रामबाणानामित्यभिप्रायेण लक्ष्मणबाणग्रहणम ॥ १९ ॥ किष्किन्धाप्रवेशो तथा भविष्यतीत्याह–

क्रमप्राप्तेः ॥ २०–२२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुष्पञ्चाशः सर्गः ॥५४॥
अथ हरीणां प्रायोपवेशः पञ्चपञ्चाशे–श्रुत्वेत्यादि ॥ १ ॥ स्थैर्यं स्थिरबुद्धिता । आत्ममनःशौचम् आत्मशुद्धिः मनसः शौचम्, अन्तःकरणशुद्धिश्चे त्यर्थः । धैर्यं गाम्भीर्यम् ॥ २ ॥ मनःशौचाभावमुपपादयति–भ्रातुरिति । स कथं धर्मं जानीत इति वक्ष्यमाणमाकृष्यते । जीवत इत्यनेन भ्रातुर्मरणा

प्रियकामश्च ते मातुस्तदर्थं चास्य जीवितम् । तस्यापत्यं च नास्त्यन्यत् तस्मादङ्गद गम्यताम् ॥ २२ ॥
इत्यार्षे श्रीरामायणे वाल्मीकिये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

श्रुत्वा हनुमतो वाक्यं प्रश्रितं धर्मसंहितम् । स्वामिसत्कारसंयुक्तमङ्गदो वाक्यमब्रवीत् ॥ १ ॥ स्थैर्यमात्ममनः शौचमानृशंस्यमथार्जवम् । विक्रमश्चैव धैर्यं च सुग्रीवे नोपपद्यते ॥ २ ॥ भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् । धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः । कथं स धर्मं जानीते येन भ्रात्रा महात्मना ॥३॥ युद्धायाभि नियुक्तेन बिलस्य पिहितं मुखम् ॥४॥ सत्यात्पाणिगृहीतश्च कृतकर्मा महायशाः । विस्मृतो राघवो येन स कस्य तु कृतं स्मरेत् ॥५॥ लक्ष्मणस्य भयाद्येन नाधर्मभयभीरुणा । आदिष्टा मार्गितुं सीतां धर्ममस्मिन् कथं भवेत् ॥ ६ ॥

नन्तरं तद्भार्यापरिग्रहः कुलधर्मं इत्यवगम्यते ॥ ३ ॥ आनृशंस्याभावमुपपादयति–युद्धायेति । युद्धायाभिनियुक्तेन, द्वारान्निर्गतस्य शत्रोः युद्धाय वालिना नियुक्तेनेत्यर्थः ॥ ४ ॥ आर्जवाभावमुपपादयति–सत्यादिति । पाणिगृहीतः पाणौ गृहीतः ॥ ५ ॥ कथं तर्हि सेनामानीतवान् सुग्रीव इत्या शङ्क्याह–लक्ष्मणस्येति । नाधर्मभयभीरुणा, भयशब्दोऽत्र भयहेतुपरः, अधर्मरूपभयहेतोर्भीरुणा न च, किन्तु लक्ष्मणस्य भयात्, लक्ष्मणदण्ड

अस्माभिरिति । आनुपूर्व्यात् क्रमप्राप्तात् ॥ २०–२२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्ड० चतुष्पञ्चाशस्सर्गः ॥ ५४ ॥
॥ १ ॥ २ ॥ धर्मेण मातरं ज्येष्ठभ्रातृपत्नीत्वरूपधर्मप्रयोज्यमातृत्ववतीम् । भ्रात्रा वालिना । नियुक्तेन, त्वं बिलद्वारि तिष्ठ अहमन्तः प्रविश्य योत्स्यामीति युद्धाया भिनियुक्तेन दुरात्मना सुग्रीवेण बिलस्य मुखं पिहितम् आच्छादितम् । स कथं धर्मं जानीत इति सम्बन्धः ॥ ३ ॥ ४ ॥ सत्यादिति । पाणिगृहीतः पाणौ गृहीत वान् ॥ ५ ॥ तर्हि सीतागवेषणप्रयत्नः कथमकारीत्यत आह–लक्ष्मणस्येति । अधर्मभयभीरुणा अधर्मरूपं भयं हेतुः तस्मात् भीरुणा नादिष्टाः, किन्तु लक्ष्मणस्य

निमित्तभयादित्यर्थः ॥ ६॥७ ॥ तव यौवराज्यस्थापनं किं विस्मृतोऽसीत्यत्राह–राज्य इति । पुत्रः जनिष्यमाणः स्वपुत्रः ॥ ८ ॥ भिन्नमन्त्रः प्रकाशित विगृह्यावस्थानमन्त्रः । अपराद्धः कृतापराधः । यद्वा पितृहिंसनेन सञ्जातापराधः ॥ ९ ॥ उपांशुदण्डेन रहस्यदण्डरूपेण । उपपादयेत् प्रापयेत् ॥१०॥

तस्मिन् पापे कृतघ्ने तु स्मृतिहीने चलात्मनि । आर्यः को विश्वसेज्जातु तत्कुलीनो जिजीविषुः ॥ ७ ॥ राज्ये पुत्रः प्रतिष्ठाप्यः सगुणो निर्गुणोऽपि वा । कथं शत्रुकुलीनं मां सुग्रीवो जीवयिष्यति ॥ ८ ॥ भिन्नमन्त्रोऽपराद्धश्च हीनशक्तिः कथं ह्यहम् । किष्किन्धां प्राप्य जीवेयमनाथ इव दुर्बलः ॥ ९ ॥ उपांशुदण्डेन हि मां बन्धनेनो पपादयेत् । शठः क्रूरो नृशंसश्च सुग्रीवो राज्यकारणात् ॥ १० ॥ बन्धनाद्वाऽवसादान्मे श्रेयः प्रायोपवेशनम् । अनुजानीत मां सर्वे गृहं गच्छन्तु वानराः ॥ ११ ॥ अहं वः प्रतिजानामि नागमिष्याम्यहं पुरीम् । इहैव प्राय मासिष्ये श्रेयो मरणमेव मे ॥१२॥ अभिवादनपूर्वं तु राघवौ बलशालिनौ । अभिवादनपूर्वं तु राजा कुशलमेव च । वाच्यस्तातो यवीयान् मे सुग्रीवो वानरेश्वरः ॥ १३ ॥ आरोग्यपूर्वं कुशलं वाच्या माता रुमा च मे । मातरं चैव मे तारामाश्वासयितुमर्हथ ॥ १४ ॥ प्रकृत्या प्रियपुत्रा सा सानुक्रोशा तपस्विनी । विनष्टमिह मां श्रुत्वा व्यक्तं हास्यति जीवितम् ॥ १५ ॥ एतावदुक्त्वा वचनं वृद्धांस्तानभिवाद्य च । विवेश चाङ्गदो भूमौ रुदन् दर्भेषु दुर्मनाः ॥ १६ ॥ तस्य संविशतस्तत्र रुदन्तो वानरर्षभाः । नयनेभ्यः प्रमुमुचुरुष्णं वै वारि दुःखिताः ॥ १७ ॥

बन्धनाद्वाऽवसादान्म इति । वेति प्रसिद्धौ । बन्धनरूपावसादात् ॥ ११ ॥ १२ ॥ अभिवादनेति । राघवौ कुशलं वाच्यावित्यनुषङ्गः ॥ १३ ॥ रामानु०–अभिवादनपूर्वं तु राघवौ बलशालिनौ । अभिवादनपूर्वं तु राजा कुशलमेव च । वाच्यस्तातो यवीयान्मे सुग्रीवो वानरेश्वरः ॥ इति पाठक्रमः ॥ १३ ॥१४॥ तपस्विनी शोच नीया ॥ १५ ॥ १६ ॥ तस्य संविशतस्तस्मिन् संविशति । संवेशः शयनम् ॥ १७ ॥ १८ ॥



भयादेवादिष्टाः ॥ ६ ॥ स्मृतिहीने पूर्वोपकारस्मरणशून्ये ॥ ७ ॥ ८ ॥ भिन्नेति । भिन्नमन्त्रः प्रकाशितविगृह्यावस्थानविषयमन्त्रः ॥ ९–१६ ॥ तस्येति । समीप इति

तत्र विन्ध्ये ॥ १९ ॥ उदक्तीरं समुद्रस्योत्तरतीरम् । एतत् प्रायोपवेशनं क्षममिति, मत्वेति शेषः ॥२०॥ जनस्थानवधं जनस्थानस्थरक्षोवधम् ॥२१॥ आगतं भयं प्रायोपवेशनरूपभयनिमित्तं च । वदतां वदत्सु च स महीधरो भृशं सन्नादितानिर्दरान्तरो बभूवेत्युत्तरेणान्वयः । अस्मिन्सर्गे सार्धत्रयोविंशतिश्लोकाः ॥ २२–२३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

सुग्रीवं चैव निन्दन्तः प्रशंसन्तश्च वालिनम् । परिवार्याङ्गदं सर्वे व्यवसन् प्रायमासितुम् ॥१८॥ मतं तद्वालिपुत्रस्य विज्ञाय प्लवगर्षभाः । उपस्पृश्योदकं तत्र प्राङ्मुखाः समुपाविशन् ॥१९॥ दक्षिणाग्रेषु दर्भेषु उदक्तीरं समाश्रिताः । मुमूर्षवो हरिश्रेष्ठा एतत्क्षममिति स्म ह ॥ २० ॥ रामस्य वनवासं च क्षयं दशरथस्य च । जनस्थानवधं चैव वधं चैव जटायुषः ॥ २१ ॥ हरणं चैव वैदेह्या वालिनश्च वधं रणे । रामकोपं च वदतां हरीणां भयमागतम् ॥ २२ ॥ स संविशद्भिर्बहुभिर्महीधरो महाद्रिकूटप्रतिमैः प्लवङ्गमैः । बभूव सन्नादितनिर्दरान्तरो भृशं नदद्भिर्जलदैरिवोल्बणैः ॥ २३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

उपविष्टास्तु ते सर्वे यस्मिन् प्रायं गिरिस्थले । हरयो गृध्रराजश्च तं देशमुपचक्रमे ॥ १ ॥ संपातिर्नाम नाम्ना तु चिरञ्जीवी विहङ्गमः । भ्राता जटायुषः श्रीमान् प्रख्यातबलपौरुषः ॥ २ ॥ कन्दरादभिनिष्क्रम्य स विन्ध्यस्य महागिरेः । उपविष्टान् हरीन् दृष्ट्वा हृष्टात्मा गिरमब्रवीत् ॥ ३ ॥

अथ संपातिसंवादः षट्पञ्चाशे–उपविष्टा इत्यादि । उपचक्रमे प्राप्तमुपक्रान्तः ॥ १ ॥ संपातिरित्यादि श्लोकद्वयमेकान्वयम् ॥ २ ॥ ३ ॥

शेषः ॥ १७॥१८ ॥ मतमिति । तत्र विन्ध्ये ॥१९॥ दक्षिणाग्रेष्विति । उत्तरीयं समाहिता इति कर्तरि निष्ठा । उत्तरीयं संवासितवन्त इत्यर्थः । उदक्तीरं समाश्रिता इति च पाठः ॥ २० ॥ २१ ॥ हरीणां भयमागतं सम्पातिरूपं भयनिमित्तं प्राप्तम् । एतच्चानन्तरसर्गादौ स्पष्टीभविष्यति ॥ २२ ॥ भयनिमित्तागमने हेतुमाह–स संविशद्भिरिति । सन्नादितनिर्दरान्तरत्वस्य भयनिमित्तसम्पात्यागमनहेतुत्वात् । नदद्भिः सम्पातिदर्शनजनितभयेन नादं कुर्वद्भिः ॥ २३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां पञ्चपञ्चाशः सर्गः ॥ ५५ ॥ १–३ ॥

विधिः दैवम् । विधानेन योगक्षेमसंपादनेन । यथा यस्मात्कारणात्॥४॥ पराणां वानराणां मध्ये मृतं मृतं परं वानरं भक्षिष्य इत्येवं वच उवाचेत्यन्वयः॥५॥ रामानु०—पराणां श्रेष्ठानां वानराणां मध्ये परं वानरं मृतं मृतं मारयित्वा मारयित्वा भक्षिष्य इत्येवं वच उवाचेति संबन्धः । पूर्वत्र हरीणां भयमागतमिति वचनस्य परत्र पश्य सीतापदे

विधिः किल नरं लोके विधानेनानुवर्तते । यथाऽयं विहितो भक्ष्याश्चिरान्मह्यमुपागतः ॥ ४ ॥ परं पराणां भक्षिष्ये वानराणां मृतं मृतम् । उवाचेदं वचः पक्षी तान्निरीक्ष्य प्लवङ्गमान् ॥ ५ ॥ तस्य तद्वचनं श्रुत्वा भक्ष्यलुब्धस्य पक्षिणः । अङ्गदः परमायस्तो हनुमन्तमथाब्रवीत् ॥ ६ ॥ पश्य सीतापदेशेन साक्षाद्वैवस्वतो यमः । इमं देशमनुप्राप्तो वानराणां विपत्तये ॥ ७ ॥ रामस्य न कृतं कार्यं राज्ञो न च वचः कृतम् । हरीणामियमज्ञाता विपत्तिः सहसागता ॥ ८ ॥ वैदेह्याः प्रियकामेन कृतं कर्म जटायुषा । गृध्रराजेन यत्तत्र श्रुतं वस्तदशेषतः ॥ ९ ॥

शेनेत्याद्यङ्गदनिर्वेदवचनस्य च स्वयं मृतभक्षणे अनुपपन्नत्वान्मारयित्वा मारयित्वेति व्याख्यातम्॥ ५ ॥ परमायस्तः परमोद्विग्न इत्यर्थः ॥ ६ ॥ ७ ॥ रामानु०—इमं देशमनुप्राप्तः इति सम्यक् ॥ ७ ॥ अज्ञाता अचिन्तिता ॥ ८ ॥ रामानु०—हरीणामियमज्ञाता विपत्तिरिति पाठः ॥ ८ ॥ ९ ॥

विधिरिति । विधिः दैवम् । विधानेन योगक्षेमसम्पादनेन । नरं प्राणिनमनुवर्तते । यदा यस्मात्कारणात् । मह्यं विहितोऽयं भक्ष्यः वानररूपः चिरादिहागत इति सम्बन्धः ॥ ४ ॥ पराणां श्रेष्ठानां वानराणां मध्ये परं मुख्यं वानरं मृतं मृतं हत्वा हत्वा भक्षिष्य इत्येवं वच उवाचेति सम्बन्धः । अन्यथा स्वयंमृतभक्षणे पूर्वं वानराणां भयमागतमिति सम्पातिनिमित्तभयागमनवचनं, पश्य गृध्रापदेशेनेति वक्ष्यमाणमङ्गदनिर्वेदवचनं च नोपपद्यते । नहि स्वयंमृतभक्षिणः पक्ष्यादयो भयहेतवो भवन्ति । किञ्च क्षुधितः तदानीमामिषार्थं निर्गतः सः तेषां स्वयंमरणं नापेक्षते अतो हत्वा हत्वेति व्याख्यातम् ॥ ५ ॥ परमायस्तः परमश्रान्तः ॥ ६ ॥ ७ ॥ अज्ञाता विपत्तिः अचिन्तिता विपत् ॥ ८ ॥ ९ ॥

स०—विधिः दैवं कर्मफलं वा । विधानेनापूर्वकर्मानुरोधेन नरमनुवर्तते । सामान्येनोक्तं स्वस्मिन्निगमयन्नत्रगमयति—यथेति । चिरादुपोषितायेति शेषः । विहितो मह्यं मद्योग्यः । भक्ष्यः कपिपिशितरूपः । यद्वा मह्यमिति चतुर्थी द्वितीयार्थे । विहितो योग्यो भक्ष्यो मामुपागत इत्यन्वयः ॥ ४ ॥ सीतापदेशेन सीताव्याजेन प्राप्तप्रायोपवेशानामित्यर्थः । वानराणां विपत्तये साक्षाद्वैवस्वतो यमः अयं गृध्ररूपी इमं देशमनुप्राप्तः । गृध्रापदेशेनेति पाठे सुगमार्थः । शनैश्चरव्यावृत्तये यम इति । यमलक्षमभ्रंशाय वैवस्वत इति ॥ ७ ॥ पूर्वं पश्येति हनुमन्मात्रं सम्बोध्योक्तमिति त इति वक्तव्ये व इत्युक्तिः अङ्गदस्याङ्गस्मरणाभावेनेति ज्ञेयम् । यद्वा पूर्वं पश्येत्युक्तिर्मुख्यत्वाच्छ्रोतृषु हनुमतः सम्भवति । अत्र मुख्यामुख्योभयविवक्षया व इत्युक्तिः ॥ ९ ॥

स्नेहकारुण्ययन्त्रिताः स्नेहकारुण्याभ्यां बद्धाः । अन्योन्यं प्रत्येकं प्रत्येकम् ॥ १०-१२ ॥ परमां गतिं मुक्तिमित्यर्थः ॥ १३ ॥ १४ ॥ राम

तथा सर्वाणि भूतानि तिर्यग्योनिगतान्यपि। प्रियं कुर्वन्ति रामस्य त्यक्त्वा प्राणान् यथा वयम्। अन्योन्यमुपकुर्वन्ति स्नेहकारुण्ययन्त्रिताः ॥१०॥ तेन तस्योपकारार्थं त्यजतात्मानमात्मना। प्रियं कृतं हि रामस्य धर्मज्ञेन जटायुषा ॥११॥ राघवार्थे परिश्रान्ता वयं संत्यक्तजीविताः। कान्ताराणि प्रपन्नाः स्म न च पश्याम मैथिलीम्॥१२॥ स सुखी गृध्रराजस्तु रावणेन हतो रणे। मुक्तश्च सुग्रीवभयाद्गतश्च परमां गतिम्॥१३॥ जटायुषो विनाशेन राज्ञो दशरथस्य च। हरणेन च वैदेह्याः संशयं हरयो गताः॥१४॥ रामलक्ष्मणयोर्वास अरण्ये सह सीतया। राघवस्य च बाणेन वालिनश्च तथा वधः॥१५॥ रामकोपादशेषाणां राक्षसानां तथा वधः। कैकेय्या वरदानेन इदं हि विकृतं कृतम् ॥ १६ ॥

लक्ष्मणयोरित्यादि। रामवनवासमारभ्य प्रायोपवेशपर्यन्तं यदस्ति तत्सर्वमिदं विकृतं कैकेय्या वरदानेन कृतं हीति संबन्धः । इत्यङ्गदोऽब्रवीदिति तथेति सार्धश्लोकमेकं वाक्यम्। स्नेहकारुण्ययन्त्रिताः रामस्नेहकारुण्याभ्यां निबद्धाः वयं यथा तथा उपकुर्वन्ति उपकुर्वाणानि तिर्यग्योनिगतान्यपि सर्वाण्यपि भूतानि अन्योन्यं प्रत्येकंप्रत्येकम् रामस्य प्रियं कुर्वन्ति॥१०॥ जटायुषा रामस्य प्रियं कृतमित्युक्तं तदेव विवृणोति-तेनेति। तस्य रामस्य उपकारार्थम् आत्मानं त्यजता जटायुषा प्रियं कृतमिति सम्बन्धः ॥११॥ राघवार्थ इतिं। संत्यक्तजीविताः सन्त्यक्तजीविताशाः॥ १२ ॥ सुग्रीवभयान्मुक्तः सुग्रीवस्य वनचरेश्वरत्वेन वानराणामिव जटायुषोपि सुग्रीवनिमित्तकं भयं सम्भविष्यतीति आलोच्यैवमुक्तमिति भावः॥१३॥ जटायुषो विनाशेन दशरथस्य विनाशेन वैदेह्या हरणेनं च हरयः संशयं प्राणसंशयम् गता इति योजना। जटायुर्यदि न विनश्येत् सीता नापह्रियेत दशरथो यदि जीवेत रामादीनां वनात्प्रत्यानयनं सम्भवेदिति भावः। जटायुर्वैदेह्याः कृते रावणेन सह युद्धं कृत्वा रामसन्निधानमरणेन उत्तमगतिभागभूत, वयं तु रामसमीपे न वसामः, सीतामपि न पश्यामः अतो वृथा प्राणांस्त्यजाम इति दुःखातिशयोक्तिरिति ज्ञेयम् ॥ १४ ॥ उक्तहेतूनां कारणमाह-रामलक्ष्मणयोरित्यादिना श्लोकद्वयेन। रामादीनां वनवासः राक्षसानां खरादीनां वालिनो वधश्च इतीदं विकृतं कैकेय्या वरदानेन कृतं हीति सम्बन्धः । कैकेयीवरदानेन हेतुना रामवनवासमारभ्य प्रायोपवेशपर्यन्तं यदस्ति तत्सर्वं प्राप्तमिति भावः ॥ १५ ॥ १६ ॥

स०-स्नेहकारुण्ययन्त्रिताः उत्तमेषु स्नेहो भक्तिः। मध्यमेषु स्नेहः प्रीतिः। अधमेषु कारुण्यं कृपा। त्यजतेति तृतीयान्तं जटायुषो विशेषणम्। आत्मानं शरीरम्। आत्मना मनसा ॥ १० ॥ ११ ॥ सामान्यतस्तिर्यक्स्वामित्वं सुग्रीवस्येति सुग्रीवभयान्मुक्त इति जटायुषं प्रति वचनमुचितमिति भावः। यद्वा स्वेषां सुग्रीवाद्भयं यथा तथा सर्वेषामपि भयं तस्मादिति भ्रान्तिपरवशतयाऽङ्गदेनैवमुक्तमिति मन्तव्यम्। सुग्रीवभयात् सुग्रीवस्य भयं स्वकार्याकरणे यस्मात्स तथा रामः तस्मात् मुक्तः शरीरात् परमां गतिं गत इत्यन्वयः। अनेन सुग्रीवोऽपि परतन्त्र इति भीतोऽस्मान् भीषयतीति सूच्यते ॥ १३ ॥

संबन्धः॥१५॥१६॥ तदसुखमिति। समीक्ष्य ज्ञात्वेत्यर्थः। ज्ञानं च वचनश्रवणं वानराणां दर्शनं च। अस्य श्लोकस्यानन्तरं सर्गसमाप्तिर्भवितुमर्हति॥१७॥

रामानु०-तदसुखमिति। श्रुत्वेति शेषः। स गृध्रराडिति सम्यक्। अन्यथा वृत्तभङ्गः स्यात्। केषुचित्कोशेषु अस्य श्लोकस्यानन्तरं सर्गकरणं दृश्यते। केषुचित्सूर्यांशुदग्धपक्षत्वादिति

तदसुखमनुकीर्तितं वचो भुवि पतितांश्च समीक्ष्य वानरान्। भृशचलितमतिर्महामतिः कृपणमुदाहृतवान् स गृध्रराट् ॥१७॥ तत्तु श्रुत्वा तदा वाक्यमङ्गदस्य मुखोद्गतम्। अब्रवीद्वचनं गृध्रस्तीक्ष्णतुण्डो महास्वनः ॥ १८ ॥ कोऽयं गिरा घोषयति प्राणैः प्रियतमस्य मे। जटायुषो वधं भ्रातुः कम्पयन्निव मे मनः ॥१९॥ कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः। नामधेयमिदं भ्रातुश्चिरस्याद्य मया श्रुतम् ॥ २० ॥ इच्छेयं गिरिदुर्गाच्च भवद्भिरवतारितुम्। यवीयसो गुणज्ञस्य श्लाघनीयस्य विक्रमैः ॥ २१ ॥ अतिदीर्घस्य कालस्य तुष्टोऽस्मि परिकीर्तनात्। तदिच्छेयमहं श्रोतुं विनाशं वानरर्षभाः ॥ २२ ॥ भ्रातुर्जटायुषस्तस्य जनस्थाननिवासिनः। तस्यैव च मम भ्रातुः सखा दशरथः कथम् ॥२३॥ यस्य रामः प्रियः पुत्रो ज्येष्ठो गुरुजनप्रियः। सूर्यांशुदग्धपक्षत्वान्न शक्नोम्युपसर्पितुम्॥२४॥ इच्छेयं पर्वतादस्मादवतर्तुमरिन्दमाः॥२५॥ इत्यार्षे० श्रीरामायणे श्रीमत्किष्किन्धाकाण्डे षट्पञ्चाशः सर्गः॥५६॥

श्लोकस्यानन्तरं दृश्यते। प्रायेण सर्गसमाप्तिद्योतकवृत्तभेदसद्भावात् तदसुखमिति श्लोकानन्तरं सर्गकरणमुपपन्नमिति प्रतीयते ॥ १७ ॥ तीक्ष्णतुण्डः तीक्ष्णमुखः। "वक्त्रास्ये वदनं तुण्डम्" इत्यमरः ॥१८-२४॥ अत्र "कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः। सखा दशरथः कथम्" इत्येवमनुवादात् पूर्वमिदमप्यङ्गदेनोक्तमिति ध्येयम्। अस्मिन् सर्गे पञ्चविंशतिश्लोकाः ॥ २५ ॥ इति श्रीगो० श्रीरामा० मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

तदसुखमिति। वचः भ्रातृनिधनज्ञापकं वचः, श्रुत्वेति शेषः। वानरान् भुवि पतितांश्च समीक्ष्य ज्ञात्वा कृपणं भ्रातृवधप्रकारप्रश्नत्वादीनं वच इत्यनुषङ्गः। उदाहृतवान् पृष्टवान् ॥ १७-१९ ॥ कथमासीज्जनस्थाने युद्धम्, सखा दशरथः कथमित्यनुवादेन च तदुभयमप्यङ्गदेन पूर्वमुक्तमित्यवगन्तव्यम् ॥ २०-२५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां षट्पञ्चाशः सर्गः ॥ ५६ ॥

स०-गृध्रस्य स्वानुजमरणश्रवणतोऽङ्गस्मरणं नास्तीति सूचयितुं कविः पुनः तीक्ष्णतुण्डो वचनमब्रवीदिति वदति-तत्त्विति। यद्वा पूर्वं वानरान् प्रत्युदाहृतवानिति अत्र तु अङ्गदस्य मुखोद्गतं श्रुत्वा वचनमब्रवीदित्युक्त्या राजपुत्रत्वेनाङ्गदमात्रं प्रत्युक्तिरिति न पुनरुक्तिः ॥ १८ ॥

अथ सम्पातिप्रश्नोत्तरं सप्तपञ्चाशे—शोकादित्यादि । कर्मणा हिंसाकर्मणा ॥१॥ रौद्रीम् आत्मत्यागाध्यवसायरूपत्वेन क्रूराम् ॥२–४॥ बभूवेत्यादि ।

शोकाद् भ्रष्टस्वरमपि श्रुत्वा ते हरियूथपाः । श्रद्दधुर्नैव तद्वाक्यं कर्मणा तस्य शङ्किताः ॥ १ ॥ ते प्रायमुपविष्टास्तु दृष्ट्वा गृध्रं प्लवङ्गमाः । चक्रुर्बुद्धिं तदा रौद्रां सर्वान् नो भक्षयिष्यति ॥ २ ॥ सर्वथा प्रायमासीनान् यदि नो भक्षयिष्यति । कृतकृत्या भविष्यामः क्षिप्रं सिद्धिमितो गताः ॥ ३ ॥ एतां बुद्धिं ततश्चक्रुः सर्वे ते वानरर्षभाः । अवतार्य गिरेः शृङ्गाद् गृध्रमाहाङ्गदस्तदा ॥ ४ ॥ बभूवर्क्षरजा नाम वानरेन्द्रः प्रतापवान् । ममार्यः पार्थिवः पक्षिन् धार्मिकस्तस्य चात्मजौ ॥ ५ ॥ सुग्रीवश्चैव वाली च पुत्रावोघबलावुभौ । लोके विश्रुतकर्माऽभूद्राजा वाली पिता मम ॥ ६ ॥ राजा कृत्स्नस्य जगत इक्ष्वाकूणां महारथः । रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् ॥ ७ ॥ लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया । पितुर्निदेशनिरतो धर्म्यं पन्थानमाश्रितः । तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ॥ ८ ॥ रामस्य तु पितुर्मित्रं जटायुर्नाम गृध्रराट् । ददर्श सीतां वैदेहीं ह्रियमाणां विहायसा ॥ ९ ॥ रावणं विरथं कृत्वा स्थापयित्वा च मैथिलीम् । परिश्रान्तश्च वृद्धश्च रावणेन हतो रणे ॥ १० ॥ एवं गृध्रो हतस्तेन रावणेन बलीयसा । संस्कृतश्चापि रामेण गतश्च गतिमुत्तमाम् ॥ ११ ॥ ततो मम पितृव्येण सुग्रीवेण महात्मना । चकार राघवः सख्यं सोऽवधीत्पितरं मम ॥ १२ ॥ मम पित्रा विरुद्धो हि सुग्रीवः सचिवैः सह ॥ १३ ॥

आर्यः पितामहः । आत्मजौ औरसौ । ओघबलौ ओघसङ्ख्याकपुरुषबलौ । ओघसङ्ख्या च पूर्वोक्ता ॥ ५–८ ॥ रामस्य तु पितुर्मित्रमिति कथनात्

शोकादिति । कर्मणा शङ्किताः " मृतं मृतं च भक्षिष्ये " इति भक्षणकर्मप्रतिपादकवाक्येन भीताः ॥ १ ॥ रौद्रां बुद्धिम् आत्मत्यागाध्यवसायरूपत्वेन क्रूरां मतिम् ॥ २–४ ॥ आर्यः पितामहः ॥ ५ ॥ ओघबलौ ओघसङ्ख्याकपुरुषबलौ । ओघः सेनासमुदायः ॥ ६–१३ ॥

मैत्रीप्रकारं तु न जानामीत्युक्तं भवति ॥ ९–१३ ॥ रामानु०–रामस्येति । मम भ्रातुः सखा दशरथः कथमिति मैत्रीप्रकारे पृष्टे मित्रत्वमात्रं वदतोऽङ्गदस्य मैत्रीप्रकारं न जानामीति तात्पर्यम् ॥ ९ ॥ निहत्येति । अभिषेचयत् अभ्यषेचयत् ॥ १४–१७ ॥ संस्थां व्यवस्थाम् ॥ १८ ॥ १९ ॥ इति श्रीगोविन्द० रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥ अथ संपातिना सीतास्थानकथनमष्टपञ्चाशे–इत्युक्त इत्यादि ॥ १ ॥ यवीयानिति । आख्यात भूते लोट् ॥ २ ॥ ३ ॥ पुरेति, परस्परवेगातिशयख्यापनपरावित्यर्थः । आदित्यमुपयातौ सूर्यसमीपं गतौ स्वः ॥ ४ ॥

निहत्य वालिनं रामस्ततस्तमभिषेचयत् । स राज्ये स्थापितस्तेन सुग्रीवो वानराधिपः ॥ १४ ॥ राजा वानरमुख्यानां येन प्रस्थापिता वयम् । एवं रामप्रयुक्तास्तु मार्गमाणास्ततस्ततः ॥ १५ ॥ वैदेहीं नाधिगच्छामो रात्रौ सूर्यप्रभामिव । ते वयं दण्डकारण्यं विचित्य सुसमाहिताः ॥ १६ ॥ अज्ञानात्तु प्रविष्टाः स्म धर्मिण्या विवृतं बिलम् । मयस्य मायाविहितं तद्बिलं च विचिन्वताम् । व्यतीतस्तत्र नो मासो यो राज्ञा समयः कृतः ॥ १७ ॥ ते वयं कपिराजस्य सर्वे वचनकारिणः । कृतां संस्थामतिक्रान्ता भयात्प्रायमुपास्महे ॥ १८ ॥ क्रुद्धे तस्मिंस्तु काकुत्स्थे सुग्रीवे च सलक्ष्मणे । गतानामपि सर्वेषां तत्र नो नास्ति जीवितम् ॥ १९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥ इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः । सबाष्पो वानरान् गृध्रः प्रत्युवाच महास्वनः ॥ १ ॥ यवीयान् मम स भ्राता जटायुर्नाम वानराः । यमाख्यात हतं युद्धे रावणेन बलीयसा ॥ २ ॥ वृद्धभावादपक्षत्वाच्छृण्वंस्तदपि मर्षये । नहि मे शक्तिरस्त्यद्य भ्रातुर्वैरविमोक्षणे ॥ ३ ॥ पुरा वृत्रवधे वृत्ते परस्परजयैषिणौ । आदित्यमुपयातौ स्वौ ज्वलन्तं रश्मिमालिनम् ॥ ४ ॥

अभिषेचयत् अभ्यषेचयत् ॥ १४–१७ ॥ ते वयमिति । संस्थां व्यवस्थां मर्यादां वा ॥ १८ ॥ १९ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० किष्किन्धाकाण्डव्याख्यायां सप्तपञ्चाशः सर्गः ॥ ५७ ॥ इतीति । सबाष्पो वानरान् गृध्रः इति पाठः । स बाष्पं धारयन् क्रुद्धः इति पाठे क्रोधो रावणविषयः ॥ १–३ ॥ आदित्यमुपयातौ स्वः

स०–पूर्वं शक्तियुक्तस्य तवेदानीमशक्तिः कुत इत्यतो निमित्तमाह–पुरेति । पुरा वृत्रवधे इति कालविशेषकथनार्थमेव न तु वृत्रवधस्य प्रकृतोपयोगकथनमिति मानसमायसनीयम् । स्व इत्युत्तमपुरुषद्विवचनमेकत्र, अपरत्र स्मेति पाठः । तस्य चावर्सादितीत्यनेनान्वयः । ततो लडर्थकता । यदि बहुपुस्तकसंपुटीत्थु स्वरिति वर्तेत तदा स्वरन्तरिक्षं गृह्यते । अन्तरिक्षादिपदमपरिक्षिपन् परिक्षिपंश्च स्वःपदं कविरखगमयाञ्चकार भूम्यां मङ्गलं–

आवृत्त्याकाशमार्गे तु जवेन स्म गतौ भृशम् । मध्यं प्राप्ते दिनकरे जटायुरवसीदति ॥ ५ ॥ तमहं भ्रातरं दृष्ट्वा सूर्यरश्मिभिरर्दितम् । पक्षाभ्यां छादयामास स्नेहात्परमविह्वलः ॥ ६ ॥ निर्दग्धपक्षः पतितो विन्ध्येऽहं वानरर्षभाः । अहमस्मिन्वसन्भ्रातुः प्रवृत्तिं नोपलक्षये ॥ ७ ॥ जटायुषस्त्वेवमुक्तो भ्रात्रा सम्पातिना तदा । युवराजो महाप्राज्ञः प्रत्युवाचाङ्गदस्तदा ॥८॥ जटायुषो यदि भ्राता श्रुतं ते गदितं मया । आख्याहि यदि जानासि निलयं तस्य रक्षसः ॥ ९ ॥ अदीर्घदर्शनं तं वै रावणं राक्षसाधिपम् । अन्तिके यदि वा दूरे यदि जानासि शंस नः ॥१०॥ ततोऽब्रवीन्महातेजा ज्येष्ठो भ्राता जटायुषः । आत्मानुरूपं वचनं वानरान् संप्रहर्षयन् ॥ ११ ॥

आदित्यं प्राप्तावभूव । टीका–अपक्षत्वे हेतुमाह–पुरेति । स्वः अभूव ॥४ ॥ आवृत्त्येति । स्मशब्दस्य अवसीदतीत्यनेन सम्बन्धः ॥ ५ ॥ छादयामास आच्छादयम् ॥६–८॥ जटायुष इति । यदि भ्राता तर्हि रामदासोऽसीत्यभिप्रायः । मया गदितं 'तस्य भार्या जनस्थानात्' इत्यादिना उक्तम् ॥ ९ ॥ अदीर्घदर्शनम् आगाम्यनर्थानवेक्षक –गगनगमनान्तरायापनुत्त्यै कृतमिति । स्वःशब्दस्य मङ्गलार्थकत्वं तु स्वःशब्दस्य मङ्गलार्थत्वादादौ "स्वरव्ययम्" इति प्रयोग इत्यमरभानुदीक्षितव्याख्यातोऽवसेयम् । तत्पक्षे वसन्ददर्शेत्यादिवत्क्रियाप्रबन्धे लडिति लडेव लङर्थ इति बोध्यम् । जयैषिणौ परस्परं स्पर्धया राज्यं पणं कृत्वा वेगेन जयाभिलाषिणावुपयातौ । प्रातरिति शेषः । भ्रातरं यवीयांसम् । परमविह्वलः मरिष्यतीति चञ्चलचेताः । स्नेहात्पक्षाभ्यामाच्छादयामासम् । आच्छादयाम् आसम् इति पदद्वयम् । नित्ययोगाद्दामन्तेनास्तेराच्छादितवानिति तदर्थः । यत्तु नागोजिभट्टेन पुरा पूर्वं वृत्रवधे वृत्ते सति जटायुरहं च जयैषिणौ वृत्रवधेनेन्द्रस्यातिप्रबलत्वं निर्णीय तज्जयैषिणौ भूत्वा प्रथममाकाशमार्गेण स्वर्गं गतौ ततो गरुडवद् भृशं जवेन तं विजित्य प्रत्यावृत्त्यादित्यं दर्पादुपयातौ स्वः । अथ तमुपयातयोरावयोर्मध्ये जटायुस्सवितरि मध्यं प्राप्तेऽवसीदति स्मेति कतकः । अन्ये तु जयैषिणौ परस्परजयैषिणौ येनोत्पत्य आदित्यः प्रथमं प्राप्यते स आवयोः प्रबल इति प्रतिज्ञापूर्वमिति शेष इत्याहुः । तेषामावृत्त्येति पदस्य इन्द्रप्रसङ्गस्य चासङ्गतिरित्युक्तम् । तदिदमाभाणकं नातिवर्तते "गुणा दोषायन्ते" "आत्मदोषं न पश्यति" इति कतकमतमेव तन्मतमिति भाति पुनः स्वमतानुरन्यासाद्दूषितत्वाच्च । तच्च सौत्रासौत्रसंमतप्रामाण्यकभारतविरुद्धम् । तथाहि वनपर्वणि संपातिवाक्ये–"सम्पातिर्नाम तस्याहं ज्येष्ठो भ्राता जटायुषः । अन्योन्यस्पर्धयाऽऽरूढावावामादित्यसंसदम् । ततो दग्धाविमौ पक्षौ न दग्धौ तु जटायुषः" इति । भारतानुयायिवाल्मीकिरामायणसंग्रहरूपसंग्रहरामायणे च–"अरुणस्य सुतावावां तरुणत्वे (ति) न गर्वितौ । निजराज्यपणं कृत्वा पर्यैक्षावहि वेगिताम् । आवामनु गतौ सूर्यमुदयन्तमथोदये । आमध्याह्नगतेः शौर्यात्ततो मोहो महानभूत्" इत्युक्तेः । प्रत्यावर्तनं पतत्रिधर्मः । इन्द्रकथायाश्च कालविशेषप्रतिपत्तिजनकतामात्रेणोक्तिसम्भवाद्दूषणस्याल्पत्वादन्यपक्ष एव श्रेयानितिदिक् ॥ ४–६ ॥

स०–यदि जटायुषो भ्रातेति गदितं तर्हि मया श्रुतम् । रामसेवानुबन्धिनस्तत्सम्भाष्यत्वेन तव वचनस्य श्राव्यत्वमिति भावः । यदि तस्य तव यवीयसो भ्रातुर्घातकस्य रक्षसो निलयं जानासि तर्ह्याख्याहीत्यन्वयः । तस्येत्युक्त्या न इव तवापि तत्स्थानं तद्वधश्च ईप्सितमीप्सितश्चेति सूचयति ॥ ९ ॥ यदिद्वयस्य दूरे अन्तिके इति पदद्वयेनान्वयः ॥ १० ॥

नवेक्षकम् ॥ १०–१२ ॥ वारुणान् लोकान् अतलवितलादिलोकान् । त्रैविक्रमान् त्रिविक्रममितानुपरितनलोकानित्यर्थः । महासुरविमर्दान् देवासुरसङ्ग्रामान् ॥ १३–१५ ॥ रामानु०–त्रैविक्रमान् त्रिविक्रममितान् । गोबलीवर्दन्यायेन त्रिविक्रमशब्द उपरितनलोकमात्रवाची ॥ १३ ॥ अपविध्यन्ती छेद

निर्दग्धपक्षो गृध्रोऽहं हीनवीर्यः प्लवङ्गमाः । वाङ्मात्रेण तु रामस्य करिष्ये साह्यमुत्तमम् ॥ १२ ॥ जानामि वारुणान् लोकान् विष्णोस्त्रैविक्रमानपि । महासुरविमर्दान्वाप्यमृतस्य च मन्थनम् ॥ १३ ॥ रामस्य यदिदं कार्यं कर्तव्यं प्रथमं मया । जरया च हृतं तेजः प्राणाश्च शिथिला मम ॥ १४ ॥ तरुणी रूपसम्पन्ना सर्वाभरणभूषिता । ह्रियमाणा मया दृष्टा रावणेन दुरात्मना ॥ १५ ॥ क्रोशन्ती राम रामेति लक्ष्मणेति च भामिनी । भूषणान्यपविध्यन्ती गात्राणि च विधून्वती ॥ १६ ॥ सूर्यप्रभेव शैलाग्रे तस्याः कौशेयमुत्तमम् । असिते राक्षसे भाति यथा वा तडिदम्बुदे ॥ १७ ॥ तां तु सीतामहं मन्ये रामस्य परिकीर्तनात् । श्रूयतां मे कथयतो निलयं तस्य रक्षसः ॥ १८ ॥ पुत्रो विश्रवसः साक्षाद् भ्राता वैश्रवणस्य च । अध्यास्ते नगरीं लङ्कां रावणो नाम राक्षसः ॥ १९ ॥ इतो द्वीपः समुद्रस्य सम्पूर्णे शतयोजने । तस्मिन् लङ्का पुरी रम्या निर्मिता विश्वकर्मणा ॥ २० ॥

यन्ती ॥१६॥१७॥ रामानु०–सूर्यप्रभेति । तस्या उत्तमं कौशेयम् असिते राक्षसे शैलाग्रे सूर्यप्रभेव भाति । अम्बुद इवासिते राक्षसे विद्युद्यथा तथा भातीति योजना ॥ १७ ॥ १८ ॥ पुत्र इति । अध्यास्ते । "अधिशीङ्स्थासां कर्म" इति नगर्याः कर्मत्वम् ॥ १९–२४ ॥

मित्यर्थः ॥ १०–१२ ॥ वक्ष्यमाणकर्मणि प्रामाणिकत्वसम्पादनाय स्वज्ञानातिशयमाह–जानामीति । वारुणान् लोकान् अतलादिलोकान् त्रैविक्रमान् त्रिविक्रमक्रमितान् ऊर्ध्वलोकानित्यर्थः । महासुरविमर्दान् देवासुरसङ्ग्रामान् ॥ १३–१९ ॥ इतो द्वीपः अस्तीति शेषः । तस्मिन् द्वीपे ॥ २०–२४ ॥

स०–त्रयश्च ते विक्रमाश्च त्रिविक्रमाः । त्रयः पादविक्षेपाः तदाक्रान्ताः भूरादिलोकास्त्रैविक्रमाः । विष्णोर्वामनस्य । यद्वा विष्णोर्लोकान् श्रीभागातिरिक्तान् श्वेतद्वीपादीन् । त्रैविक्रमान् त्रिविक्रमाक्रान्तान् । अतो नैकदेशान्वयक्लेशः ॥ १३ ॥ रामस्य रामेतिनाम्नः । परिकीर्तनात् उच्चारात् । क्लेशसमये पतिनामग्रहणस्यादोषत्वात् । "भार्या पतेरपि" इत्यस्य स्वस्थचेतस्कभार्यापरत्वात् । नित्यापरोक्षीकृताध्यक्षत्वेन "दूराद्धूते च" इति प्रकृतिभावाभावात् रामरामेति सम्भवति । अनेन प्रकृतिभावाभावेन सीताप्रकृतिभावाभावोऽपि ध्वन्यते । स्मृतिमात्रत्वेनानाह्वानरूपत्वाद्वा तच्छास्त्रागोचरत्वात्प्रकृतिभावाभावः । "तद्दूरे तदन्तिके" इत्येकतरनिष्कर्षस्य दुष्करत्वाद्वा न प्रकृतिभावः प्रगृह्यसंज्ञायां "प्लुतप्रगृह्याः" इत्यादिना ॥ १८ ॥

तत्रैवेति । विक्रमध्वम् ।"वेः पादविहरणे" इत्यात्मनेपदम् । ज्ञानेन दिव्यज्ञानेन ॥२५॥ दूरस्थदर्शनं भवतः कुतो जातम् ? तत्राह—आद्य इत्यादिना । कुलिङ्गानां भूमिप्रत्यासन्नगगनचारिणाम् । धान्यजीविनः पक्षिविशेषाः कुलिङ्गाः । 'ये चान्ये धान्यजीविनः' इति वचनात् । बलिभोजानां काकानाम्

जाम्बूनदमयैर्द्वारैश्चित्रैः काञ्चनवेदिकैः । प्राकारेणार्कवर्णेन महता सुसमावृता ॥ २१ ॥ तस्यां वसति वैदेही दीना कौशेयवासिनी । रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता ॥ २२ ॥ जनकस्यात्मजां राज्ञस्तत्र द्रक्ष्यथ मैथिलीम् । लङ्कायामथ गुप्तायां सागरेण समन्ततः ॥ २३ ॥ संप्राप्य सागरस्यान्तं संपूर्णं शतयोजनम् । आसाद्य दक्षिणं तीरं ततो द्रक्ष्यथ रावणम्॥२४॥ तत्रैव त्वरिताः क्षिप्रं विक्रमध्वं प्लवङ्गमाः । ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ ॥२५॥ आद्यः पन्थाः कुलिङ्गानां ये चान्ये धान्यजीविनः । द्वितीयो बलिभोजानां ये च वृक्षफलाशिनः ॥ २६ ॥ भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररैः सह । श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमम् ॥२७॥ बलवीर्योपपन्नानां रूपयौवनशालिनाम् । षष्ठस्तु पन्था हंसानां वैनतेयगतिः परा । वैनतेयाच्च नो जन्म सर्वेषां वानरर्षभाः॥२८॥

॥ २६ ॥ भासा इति । भासाः जलवायसाः । "भासस्तु जलवायसः" इति निघण्टुः । श्येनविशेषा इत्यप्याहुः ॥ २७ ॥ बलेत्यादि । वैनतेयात् गरुडात् नः अस्माकं जन्म उत्पत्तिः । तेन तस्य या सप्तमी गतिः सैवास्माकमपीत्यर्थः । नन्वारण्यकाण्डे "द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च । तस्माज्जातोऽहमरुणात्संपातिस्तु ममाग्रजः॥" इति वचनेन जटायुपोक्तेनेदं विरुद्धमिति चेत् ? न—"वैनतेयात्" इत्यस्य विनतापुत्रादरुणादित्यर्थ

विक्रमध्वं गच्छत । ज्ञानेन दिव्यज्ञानेन ॥ २५ ॥ एतादृशं दिव्यज्ञानं भवतः कथमभूदित्याकाङ्क्षायां दिव्या वयमिति प्रतिपादयन्नाह—आद्य इत्यादि । 'ये चान्ये धान्यजीविनः' इत्यभिधानात् कुलिङ्गाः भूप्रत्यासन्नगगनचारिणः धान्यजीविनः पक्षिविशेषाः ॥ टीका—आद्य इति । आकाशे सप्त स्कन्धाः सन्ति, तेष्वाद्यः पन्थाः कुलिङ्गानां भूप्रत्यासन्नगगनचारिणाम् ॥ २६ ॥ भासाः जलवायसाः ॥ २७ ॥ हे वानरर्षभाः! वैनतेयाच्च नो जन्म, विनतापत्यादूरोरस्माकमुत्पत्तिः । सर्वेषाम् अस्मत्कुलीनानाम् । "वैनतेयाच्च नो जन्म" इत्यनेन दिव्यज्ञानहेतुत्वं प्रतिपादितम् । 'गर्हितं तु कृतं कर्म' इत्यस्य श्लोकस्य 'वृत्तिश्चरणयोधिनाम्' इत्यस्यानन्तरमवस्थाने कथायाः सुसङ्गतत्वात्तत्रैवायं द्रष्टव्यः ॥ २८ ॥

इत्यदोषात् । वैनतेयगतिरित्यत्र वैनतेययोररुणगरुडयोर्गतिरित्यर्थः । अनेन दिव्यज्ञानवत्त्वमात्मनः उक्तः ॥ २८ ॥ न केवलं दिव्यज्ञानम्, दिव्यचक्षुरप्यस्तीत्याह—इहस्थ इति । अपिशब्दो भिन्नक्रमः चक्षुरित्यनेन संबध्यते । सौवर्णमित्यनेन विशेषणेनातिदूरदर्शित्वमुक्तम् । आहारवीर्येण चक्षुष्या हारवलेनेत्यर्थः । निसर्गेण सौवर्णत्वनिबन्धनस्वभावेन ॥ २९ ॥ ३० ॥ वृत्तिः भक्ष्यग्रहणम् । चरणयोधिनां कुक्कुटानाम् । पादमूले पादविकीर्णप्रदेशे ।





इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा। अस्माकमपि सौवर्णं दिव्यं चक्षुर्बलं तथा ॥२९॥ तस्मादाहारवीर्येण निसर्गेण च वानराः । आयोजनशतात्साग्राद्वयं पश्याम नित्यशः॥३०॥ अस्माकं विहिता वृत्तिर्निसर्गेण च दूरतः। विहिता पादमूले तु वृत्तिश्चरणयोधिनाम् ॥३१॥ गर्हितं तु कृतं कर्म यन स्म पिशिताशिना । प्रतीकार्यं च मे तस्य वैरं भ्रातुः कृतं भवेत् ॥३२॥ उपायो दृश्यतां कश्चिल्लङ्घने लवणाम्भसः । अभिगम्य तु वैदेहीं समृद्धार्था गमिष्यथ ॥ ३३ ॥ समुद्रं नेतुमिच्छामि भवद्भिर्वरुणालयम् । प्रदास्याम्युदकं भ्रातुः स्वर्गतस्य महात्मनः ॥ ३४ ॥

वृत्तिः जीवनम् ॥ ३१ ॥ गर्हितमिति । येन पिशिताशिना गर्हितं कर्म सीतापहरणरूपं कृतम् । मे भ्रातुर्हेतोः प्रतीकार्यं तस्य वैरं कृतं प्रतिकृतं भवेत् । भवद्भिरिति शेषः । अयं श्लोकः चरणयोधिनामित्यनन्तरं निवेशनीय इत्याहुः ॥ ३२ ॥ रामानु०—गर्हितं तु कृतं कर्मेत्यस्य श्लोकस्य वृत्तिश्चरणयोधिनामित्यस्यानन्तरमवस्थाने कथायाः सुसंगतत्वात्तत्रैवायं द्रष्टव्यः ॥ ३२ ॥ एवं प्रासङ्गिकं परिसमाप्य प्रकृतमाह—उपाय इति । गमिष्यथेत्यत्र किष्किन्धामिति शेषः ॥ ३३ ॥ समुद्रमिति । नेतुमिच्छामि, मामिति शेषः । भवद्भिरिति करणे तृतीया ॥ ३४ ॥

न केवलं दिव्यज्ञानम्, दिव्यचक्षुरप्यस्तीत्याह—इहस्थ इति । अपिशब्दो भिन्नक्रमः चक्षुरित्यनेन सम्बध्यते । सौवर्णमिति विशेषणम् अतिदूरदर्शित्वद्योतनार्थम् । आहारवीर्येण आहारबलेन । निसर्गेण सौवर्णत्वनिबन्धनस्वभावेन ॥२९॥३०॥ अस्माकमिति । वृत्तिर्भक्ष्यग्रहणम् । पादमूले पादविकीर्णप्रदेशे । चरणयोधिनां कुक्कुटादीनाम् ॥ ३१ ॥ भवतां लङ्कागमनोद्योगो ममाप्युपकाराय भविष्यतीत्याशयेनाह—गर्हितमिति । येन पिशिताशिना रावणेन गर्हितं कर्म सीताहरणरूपं कृतं मया भ्रातुर्हेतोः प्रतीकार्यं तस्य वैरं कृतं प्रतिकृतं भवेत्, भवद्भिरिति शेषः । मया कर्तव्यो रावणविनाशो युष्माभिः कर्तव्य इति भावः॥३२॥ अतो लङ्घनोपायश्चिन्त्यताम् । अवश्यम्भाविनी कार्यसिद्धिरित्याह—उपाय इति । गमिष्यथ, किष्किन्धां प्रतीति शेषः ॥ ३३॥ समुद्रं नेतुमिति । मामिति शेषः ।भवद्भिरिति करणे

तीरं देशम्, तीरप्रदेशमित्यर्थः । तं देशं संपात्यावासभूतं देशं पुनः प्रत्यानयित्वा । प्रवृत्तिं वृत्तान्तम् उपलभ्य ते वानराः हृष्टाः बभूवुः ॥ ३५ ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने अष्टपञ्चाशः सर्गः ॥ ५८ ॥

ततो नीत्वा तु तं देशं तीरं नदनदीपतेः । निर्दग्धपक्षं सम्पातिं वानराः सुमहौजसः ॥ ३५ ॥ पुनः प्रत्यानयित्वा च तं देशं पतगेश्वरम् । बभूवुर्वानरा हृष्टाः प्रवृत्तिमुपलभ्य ते ॥ ३६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

ततस्तदमृतास्वादं गृध्रराजेन भाषितम् । निशम्य मुदिता हृष्टास्ते वचः प्लवगर्षभाः ॥ १ ॥
जाम्बवान् वानरश्रेष्ठः सह सर्वैः प्लवङ्गमैः । भूतलात्सहसोत्थाय गृध्रराजमथाब्रवीत् ॥ २ ॥
क्व सीता केन वा दृष्टा को वा हरति मैथिलीम् । तदाख्यातु भवान् सर्वं गतिर्भव वनौकसाम् ॥ ३ ॥
को दाशरथिबाणानां वज्रवेगनिपातिनाम् । स्वयं लक्ष्मणमुक्तानां न चिन्तयति विक्रमम् ॥ ४ ॥

ततस्तदमृतास्वादमित्यारभ्य पञ्च सर्गाः प्रक्षिप्ताः । सर्वकोशेष्वदर्शनात् तान् विनापि कथासङ्घट्टनात् पूर्वोक्तार्थविरोधस्फोरकत्वाच्च । तथाहि तृतीया ॥ ३४ ॥ तत इत्यादिश्लोकद्वयमेकं वाक्यम् । वानराः पतगेश्वरं सम्पातिं नदनदीपतेः तीरं देशं तीरप्रदेशं नीत्वा पुनः तं देशम् आवासभूतदेशं प्रत्यानयित्वा प्रवृत्तिं सीतावृत्तान्तमुपलभ्य ते वानराः हृष्टा बभूवुरिति सम्बन्धः ॥ ३५ ॥ ३६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायामष्टपञ्चाशः सर्गः ॥ ५८ ॥ तत इत्यादि । अमृतस्येवास्वादो यस्य तत् तथोक्तम्, अमृततुल्यमित्यर्थः ॥ १ ॥ २ ॥ अथ जाम्बवान् लूनपक्षः

स०—अमृतास्वादम् अमृतवन्मधुरम् । वदतो हृष्टाः । वदता उ इति पदम् । यस्य गृध्रराजस्य वदता वाग्मिता । ततः तेन गृध्रराजेन भाषितं वचः निशम्य ते प्लवगर्षभाः हृष्टाः । उ विस्मय इत्यर्थः । प्रायः प्रायोपवेशिनां हर्षोत्कर्षः क्वापि नावलोकित इति दैवगतिर्विचित्रेति विसिस्मिरे इति भावः । यद्वा वदतेति तृतीयैकवचनं गृध्रराजपदेनान्वेति । निशम्य तत्र संहृष्टा इति पाठे नायासः । वदतः इति पदे वा वदशब्दात्तृतीयान्तात्तसिः । तस्य गृध्रराजेनेत्यनेनान्वयः । वदत इति षष्ठी शेषे सती तृतीयार्थे वा ॥ १ ॥ विषम०—सीतां को हरति स्म, ह्रियमाणा च केन दृष्टा त्वयान्येनापि वा । हृता च क्व वा वर्तते इति सर्वं भवानाख्यातु । सामान्यतः श्रुत्वा प्रायोपवेशादुत्थितानां विशिष्य वदेत्यर्थः ॥ ३ ॥ स०—सीता...क्कर्ति नेताऽनङ्गस्मरण इत्याह—क इति । स्वयमिति दाशरथिबाणपदेनेव लक्ष्मणमुक्तपदेनाप्यन्वेति । स्वयं दाशरथिः स्वेच्छयैव दाशरथिर्दशरथस्यापत्यं रामः । तस्य बाणानामित्यर्थेवान्वयो वा । यद्वा दाशरथिपदेन रामरामानुजयोर्ग्रहणम् । स्वयंलक्ष्मणमुक्तानां स्वयं लक्ष्मणं स्वस्वनाम रामेति लक्ष्मणेति च मुक्तं शिल्पिभिर्येषु ते तथा । " लक्ष्मणं लाञ्छने नाम्नि " इति विश्वः ॥ ४ ॥

ते व्याख्यास्यन्ते–तत इत्यादि । हृष्टाः रोमाञ्चाञ्चिताः । बभूवुरिति शेषः ॥ १–१७ ॥ रामानु०–ततस्तदमृतास्वादमित्यारभ्य आभाजदाभिमुखा दिशं ययु र्जनकसुतापरिमार्गणोन्मुखा इत्यन्ताः पञ्च सर्गाः केषुचित् कोशेषु न दृश्यन्ते । केषुचित् दृश्यन्ते । तेषु पूर्वोक्तार्थविरोधः स्फुरति तान् विनापि कथापि संगच्छते । तथापि



स हरीन् प्रीतिसंयुक्तान् सीताश्रुतिसमाहितान् । पुनराश्वासयन् प्रीत इदं वचनमब्रवीत् ॥ ५ ॥ श्रूयतामिह वैदेह्या यथा मे हरणं श्रुतम् । येन चापि ममाख्यातं यत्र वाऽऽयतलोचना ॥ ६ ॥ अहमस्मिन् गिरौ दुर्गे बहुयोजनमायते । चिरान्निपतितो वृद्धः क्षीणप्राणपराक्रमः ॥ ७ ॥ तं मामेवं गतं पुत्रः सुपार्श्वो नाम नामतः । आहारेण यथाकालं बिभर्ति पततां वरः ॥८॥ तीक्ष्णकामास्तु गन्धर्वास्तीक्ष्णकोपा भुजङ्गमाः । मृगाणां तु भयं तीक्ष्णं ततस्तीक्ष्णक्षुधा वयम् ॥९॥ स कदाचित् क्षुधार्तस्य ममाहाराभिकाङ्क्षिणः । गतसूर्येऽहनि प्राप्तो मम पुत्रो ह्यनामिषः ॥ १० ॥ स मया वृद्धभावाच्च कोपाच्च परिभर्त्सितः । क्षुत्पिपासापरीतेन कुमारः पततां वरः॥ ११॥ स मामाहारसंरोधात् पीडितं प्रीतिवर्धनः । अनुमान्य यथातत्त्वमिदं वचनमब्रवीत् ॥ १२ ॥ अहं तात यथाकालमामिषार्थी खमाप्लुतः । महेन्द्रस्य गिरेर्द्वारमावृत्य च समास्थितः ॥ १३ ॥ ततः सत्त्वसहस्राणां सागरान्तरचारिणाम् । पन्थानमेकोऽध्यवसं सन्निरोद्धुमवाङ्मुखः ॥ १४ ॥

'स्थितस्य गतिश्चिन्तनीया' इति न्यायेन ते व्याख्यायन्ते ॥१॥२॥ अथ जाम्बवान् लूनपक्षः कन्दरान्तर्गतः सन् संपातिः दूरवृत्तं सीतापहरणादिकं केन प्रकारेणावगतवानिति मत्वा विशेषतोऽवगन्तुं पृच्छति–क्व सीतेत्यादिना ॥ ३ ॥ ४ ॥ स हरीनिति । सीताश्रुतिसमाहितान् सीतावृत्तान्तश्रवणे समाहितान् ॥ ५–९ ॥ स इति । क्षुधार्तस्य मम, समीपमिति शेषः ॥ १०–१५ ॥ कन्दरान्तर्गतस्सन् सम्पातिर्दूरवृत्तसीतापहरणादिकं केन प्रकारेणावगतवानिति मत्वा विशेषतोऽवगन्तुं पुनः पृच्छति–क्व सीतेत्यादिना ॥ ३ ॥ ४ ॥ स हरीनिति । सीताश्रुतिसमाहितान् सीतावृत्तान्तश्रवणे एकाग्रचित्तानित्यर्थः ॥ ५ ॥ श्रूयतामिति । यत्र दृष्टा येन चाख्यातं तत्सर्वं श्रूयताम् ॥ ६–९ ॥ स इति । क्षुधार्तस्य मम, समीपमिति शेषः ॥ १० ॥ ११ ॥ स मामिति । अनुमान्य सम्प्रार्थ्य । आहारसंरोधात आहाराभावात् ॥ १२–१५ ॥

स०–गन्धर्वाः चित्ररथाद्याः । तीक्ष्णकामाः तीक्ष्णः समयासमयपरीक्षां विना आयास्यन् कामः स्त्रीवाञ्छा येषां ते तथा । "स्त्रीकामा वै गन्धर्वाः" इति ब्राह्मणात् । ततः ततोऽप्याधिक्येन । तीक्ष्णा बहुवाराहारहेतुः क्षुधा क्षुत् येषां ते तथा । टाबन्तः क्षुधाशब्दः ॥ ९ ॥

रा०-सोऽहमभ्यवहारार्थीति सम्यक्॥१६॥१७॥ स यात इति । सभाजितः पूजितः ॥१८॥ दिष्ट्येति । असौ सकलत्रः सरक्ष्यवर्गः अतः कथंचित् गतः । अतस्ते स्वस्त्यासीत् असंशयम् इति मां महर्षयोऽब्रुवन्निति योजना ॥ १९ ॥ मे मया । प्रतिवेदितः ज्ञातः । सुपार्श्ववचनमिदम् ॥ २० ॥ २१ ॥

तत्र कश्चिन्मया दृष्टः सूर्योदयसमप्रभाम्। स्त्रियमादाय गच्छन् वै भिन्नाञ्जनचयप्रभः॥ १५ ॥ सोऽहमभ्यवहारार्थी तौ दृष्ट्वा कृतनिश्चयः । तेन साम्ना विनीतेन पन्थानमभियाचितः ॥ १६ ॥ न हि सामोपपन्नानां प्रहर्ता विद्यते क्वचित् । नीचेष्वपि जनः कश्चित् किमङ्ग बत मद्विधः ॥ १७ ॥ स यातस्तेजसा व्योम संक्षिपन्निव वेगतः । अथाहं खचरैर्भूतैरभिगम्य सभाजितः॥१८॥दिष्ट्या जीवसि तातेति ह्यब्रुवन् मां महर्षयः। कथञ्चित् सकलत्रोऽसौ गतस्ते स्वस्त्यसंशयम् । एवमुक्तस्ततोऽहं तैः सिद्धैः परमशोभनैः॥१९॥स च मे रावणो राजा रक्षसां प्रतिवेदितः। हरन् दाशरथेर्भार्यां रामस्य जनकात्मजाम् ॥२०॥ भ्रष्टाभरणकौशेयां शोकवेगपराजिताम् । रामलक्ष्मणयोर्नाम क्रोशन्तीं मुक्तमूर्द्धजाम्॥२१॥एष कालात्ययस्तावदिति कालविदां वरः । एतमर्थं समग्रं मे सुपार्श्वः प्रत्यवेदयत्॥२२॥

रामानु०—भ्रष्टाभरणकौशेयामिति पाठः ॥ २१ ॥ कालात्ययः कालातिक्रमहेतुः, रावणदर्शनमिति भावः ॥ २२–२४ ॥

सोऽहमिति । कृतनिश्चयः आहारो लब्ध इति कृतनिश्चयोऽहं तेन याचितः । (कृतनिश्चयः, अभवमिति शेषः । ) तर्हि किंनिमित्तं नावधीरित्यत आह तेनेति॥१६॥ नीचेष्वपि वर्तमानः कश्चिदपि जनः सामोपपन्नानां प्रहर्ता न विद्यते, मद्विधः किमुत ? अङ्गेत्यामन्त्रणे । बतेति खेदे । खेचरैर्भूतैः सिद्धचारणादिभिः ॥ १७॥ १८ ॥ दिष्ट्येति । असौ सकलत्रः सरक्ष्यवस्तुः कथञ्चिद्गतो हि । हे तात ! दिष्ट्या जीवसि, ते असंशयं स्वस्तीति मां महर्षयोऽब्रुवन्निति योजना । अहं तैरेवमुक्तः ॥१९॥२०॥ रामलक्ष्मणयोर्नाम क्रोशन्तीं जनकात्मजां हरन् स रक्षसां राजा रावण इति मे मया प्रतिवेदित इति सम्बन्धः ॥ २१ ॥ एष कालात्ययः कालातिक्रमः

स०—हे तात वत्स ! असौ स्वस्ति क्षेमेण कथञ्चिद्रामोपेक्षितः गतः अधुना अध्वनि वर्तत इत्याहुः । सकलत्र इति । कलत्रेण दुर्गस्थानेन लङ्कया सहितः सकलत्रः, अभूदिति शेषः । कथञ्चित् रावणेनायुष्यतेति वा । त्वं जीवसीति मां प्रति महर्षयोऽब्रुवन् । इति अब्रुवन्नित्येतत्सदृशाद्यसंहितनिर्देशाः विवक्षाभावात्साधवो ज्ञेयाः । यद्वा कथञ्चित्सकलत्रः तेन स्वेनैव कलत्रत्वेन सम्मततत्वः इत्यर्थो लभ्यते उभयथापि "महर्षयः" " सिद्धैः परमशोभनैः " इत्यत्रोत्तरत्र चोक्तेर्वक्ष्यमाणत्वान्महत्त्वादिमतां कथमेतेषां सीतायां रावणकलत्रत्वबुद्धिः परशोधनं च कथमिति निरस्तम् । " कलत्रं श्रोणिभार्ययोः । दुर्गस्थाने नृपादीनाम् " इति विश्वः॥ १९॥

वागिति । सर्वेषां वः युष्माकम् वाङ्मतिभ्यां प्रियं करिष्यामि हि । दाशरथेर्यत्कार्यं तन्ममैव ॥ २६–२८ ॥ कालसङ्गेन कालविलम्बेन ॥ २९ ॥



तच्छ्रुत्वापि हि मे बुद्धिर्नासीत्काचित्पराक्रमे । अपक्षो हि कथं पक्षी कर्म किञ्चिदुपक्रमे ॥ २३ ॥ यत्तु शक्यं मया कर्तुं वाग्बुद्धिगुणवर्तिना । श्रूयतां तत्प्रवक्ष्यामि भवतां पौरुषाश्रयम् ॥ २४ ॥ वाङ्मतिभ्यां तु सर्वेषां करिष्यामि प्रियं हि वः । यद्धि दाशरथेः कार्यं मम तन्नात्र संशयः ॥ २५ ॥ ते भवन्तो मतिश्रेष्ठा बलवन्तो मनस्विनः । प्रेषिताः कपिराजेन देवैरपि दुरासदाः ॥ २६ ॥ रामलक्ष्मणबाणाश्च निशिताः कङ्कपत्रिणः । त्रयाणामपि लोकानां पर्याप्तास्त्राणनिग्रहे ॥ २७ ॥ कामं खलु दशग्रीवस्तेजोबलसमन्वितः । भवतां तु समर्थानां न किञ्चिदपि दुष्करम् ॥ २८ ॥ तदलं कालसङ्गेन क्रियतां बुद्धिनिश्चयः । न हि कर्मसु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ २९ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

कालातिक्रमे एष हेतुरिति भावः ॥२२–२४॥ वागिति । सर्वेषां सर्वप्राणिनाम् । वाङ्मतिभ्यां प्रियं करिष्यामि हि । दाशरथेः वः दाशरथिसम्बन्धिनां युष्माकं यत्कार्यं तत्तु मम हि ममैव, अत्र संशयो नेति योजना ॥ २५ ॥ २६ ॥ लोकानां त्राणनिग्रहे त्राणे रक्षणे निग्रहे च ॥ २७ ॥ काममिति । न किञ्चिदपि दुष्करम्, भविष्यतीति शेषः ॥२८॥ तदिति । कालसङ्गेन कालविलम्बेन भविष्यदर्थज्ञापनेन तेन बुद्ध्या प्रियं कृतं भवतीति वेदितव्यम् ॥२९॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायाम् एकोनषष्टितमः सर्गः ॥ ५९ ॥

स०–पराक्रमं श्रुतवतोऽपि ते कुतो न पराक्रमे मतिरुदितेत्यत आह–अपक्ष इति । पूर्वं पक्षी इदानीमपक्षो हि यतः कथञ्चित्कर्म समारभे प्रारम्भं कुर्याम् । आरमेदिति पाठे–पारोक्षिकयुक्तिरिति मन्तव्यम् । परस्मैपदिता तु चान्द्री ॥ २३ ॥ वाग्बुद्धिगुणवर्तिना वाक् च बुद्धिश्च तयोर्गुणा येषां ते आर्याःताननुवर्तितुं शीलमस्यास्तीति स तथा । तेन मया कर्तुं यच्छक्यं तत्र तत् श्रूयताम् । पौरुषाश्रयं पौरुषस्य पराक्रमस्य आश्रयो यस्मिंस्तत् । यद्वा वाग्बुद्धिगुणवर्तिना वाग्बुद्धिहेतुको गुण उपकारः तन्मात्रानुवर्तिना ॥ २४ ॥ कपिराजेन सुग्रीवेण । प्रहिताः प्रेषिताः । देवैरपि दुरासदाः अतो मनस्विनः सीतान्वेषणमानसाः भवतेति शेषः ॥ २६ ॥ निशिताः शाणोल्लीढाः । विहिता इति पाठे 'दधातेर्हिः' इति हौ विहिताः कृता इत्यर्थः । विहिताः विशिष्टहितकराः विगतहिताश्च, साध्वसाधूनामिति वा । त्राणेन सहितो निग्रहः त्राणनिग्रहः तस्मिन् । यद्वा त्रयाणां लोकानां मध्ये विहिताः द्वेषिणः लोकानामित्यावर्तते । तेषां त्राणनिग्रहे पर्याप्ताः त्राणनिरोधे समर्था इति वा ॥ २७ ॥ भवतां तु समर्थानामित्यत्र तुशब्देन स्वयं समर्थानां तत्रापि रामानुगृहीतानां दुष्करं नेति विशेषं द्योतयति ॥ २८ ॥

ततः कृतोदकमित्यादि ॥१॥ तमिति । जनितप्रत्ययः जनितविश्वासो यथा भवति तथाऽब्रवीदिति योजना। वानरदर्शनरूपस्वकार्यतो जनितविश्वास इत्यर्थः ॥ २–४ ॥ विह्वलन्निव मूर्छन्निव ॥ ५ ॥ ६ ॥ रामानु०–ततस्तु सागरानित्यत्र सागरमित्यर्थः । विन्ध्यप्रदेशपतितस्य सकलसागरदर्शनस्य अनुपपन्नत्वात् । मतिः

ततः कृतोदकं स्नातं तं गृध्रं हरियूथपाः । उपविष्टा गिरौ दुर्गे परिवार्य समन्ततः ॥ १ ॥ तमङ्गदमुपासीनं तैः सर्वैर्हरिभिर्वृतम् । जनितप्रत्ययो हर्षात्सम्पातिः पुनरब्रवीत् ॥ २ ॥ कृत्वा निःशब्दमेकाग्राः शृण्वन्तु हरयो मम । तत्त्वं संकीर्तयिष्यामि यथा जानामि मैथिलीम् ॥ ३ ॥ अस्य विन्ध्यस्य शिखरे पतितोऽस्मि पुरा वने । सूर्यातप परीताङ्गो निर्दग्धः सूर्यरश्मिभिः ॥४॥ लब्धसंज्ञस्तु षड्रात्राद्विवशो विह्वलन्निव । वीक्षमाणो दिशः सर्वा नाभिजानामि किंचन ॥५॥ ततस्तु सागरान् शैलान् नदीः सर्वाः सरांसि च । वनान्युदधिवेलां च समीक्ष्य मतिरागमत् ॥६॥ हृष्ट पक्षिगणाकीर्णः कन्दरान्तरकूटवान् । दक्षिणस्योदधेस्तीरे विन्ध्योऽयमिति निश्चयः ॥ ७ ॥ आसीच्चात्राश्रमं पुण्यं सुरैरपि सुपूजितम् । ऋषिर्निशाकरो नाम यस्मिन्नुग्रतपा भवत् ॥८॥ अष्टौ वर्षसहस्राणि तेनास्मिन्नृषिणा विना । वसतो मम धर्मज्ञाः स्वगते तु निशाकरे ॥ ९ ॥

प्रत्यभिज्ञा ॥ ६ ॥ हृष्टेति । निश्चयः, अभूदिति शेषः ॥ ७ ॥ भवत् अभवत् ॥ ८॥ वर्षसहस्राणि, गतानीति शेषः ॥ ९–१७ ॥

तत इति । कृतोदकं जटायुर्निमित्तं कृतपारलौकिकक्रियमित्यर्थः । गृध्रं परिवार्य उपविष्टा इति सम्बन्धः ॥ . जनितप्रत्ययः । निशाकरमुनिनोक्तप्रकारेण रामदूतवानरागमनदर्शनात् पक्षप्ररोहाच्च निशाकरोक्तार्थे जनितविश्वासः ॥ २ ॥ कृत्वेतिं । स्ववृत्तान्तक[illegible]न्तकथनोपयुक्तमिति द्योतयितुं यथा जानामि मैथिलीमित्युक्तम् ॥ ३ ॥ अस्येति । निर्दग्धः निर्दग्धपक्षः । विवशः शरीरपारवश्ययुक्तः । विह्वलः दीनः । इवशब्दो वाक्यालङ्कारे ॥ ४ ॥ ५ ॥ ततस्त्विति । सागरान् सागरम् । मतिः प्रत्यभिज्ञा ॥ ६ ॥ तामेवाह–हृष्टपक्षीति । निश्चितः निश्चितवान् ॥ ७ ॥ ८ ॥ अष्टाविति । निशाकरे स्वर्गते तेन ऋषिणा

स०–आश्रमम् आश्रमः “ आश्रमोऽस्त्री ” इत्यमरः । उग्रतपेति लुप्तप्रथमाकप्रातिपदिकनिर्देशः । आगमशासनस्यानित्यत्वाद[illegible] वा सन्धिरार्ष इति वा । अथवा सुरैरपि सुपूजितं भवत्सत् आश्रममासीदित्यन्वयः । उग्रतरा ऋषिर्यस्मिन्नासीदित्याद्यन्वयः ॥ ८ ॥

सौम्येति । विकल एव वैकल्यम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । तस्य भावो वैकल्यता । व्रणिता सञ्जातव्रणा । ते नावगम्यत इत्यत्र त इति भिन्नं



अवतीर्य च विन्ध्याग्रात्कृच्छ्रेण विषमाच्छनैः । तीक्ष्णदर्भां वसुमतीं दुःखेन पुनरागतः ॥ १० ॥ तमृषिं द्रष्टुकामोऽस्मि दुःखेनाभ्यागतो भृशम् । जटायुषा मया चैव बहुशोऽधिगतो हि सः ॥ ११ ॥ तस्याश्रमपदाभ्याशे ववुर्वाताः सुगन्धिनः । वृक्षो वाऽपुष्पितः कश्चिदफलो वा न विद्यते ॥ १२ ॥ उपेत्य चाश्रमं पुण्यं वृक्षमूलमुपाश्रितः । द्रष्टुकामः प्रतीक्षेऽहं भगवन्तं निशाकरम् ॥ १३ ॥ अथापश्यमदूरस्थमृषिं ज्वलिततेजसम् । कृताभिषेकं दुर्धर्षमुपावृत्तमुदङ्मुखम् ॥ १४ ॥ तमृक्षाः सृमरा व्याघ्राः सिंहा नागाः सरीसृपाः । परिवार्योपगच्छन्ति धातारं प्राणिनो यथा ॥ १५ ॥ ततः प्राप्तमृषिं ज्ञात्वा तानि सत्त्वानि वै ययुः । प्रविष्टे राजनि यथा सर्वं सामात्यकं बलम् ॥ १६ ॥ ऋषिस्तु दृष्ट्वा मां प्रीतः प्रविष्टश्चाश्रमं पुनः । मुहूर्तमात्रान्निष्क्रम्य ततः कार्यमपृच्छत ॥ १७ ॥ सौम्य वैकल्यतां दृष्ट्वा रोम्णां ते नावगम्यते । अग्निदग्धाविमौ पक्षौ त्वक् चैव व्रणिता तव ॥ १८ ॥ गृध्रौ द्वौ दृष्टपूर्वौ मे मातरिश्वसमौ जवे । गृध्राणां चैव राजानौ भ्रातरौ कामरूपिणौ ॥ १९ ॥ ज्येष्ठो हि त्वं तु सम्पाते जटायुरनुजस्तव । मानुषं रूपमास्थाय गृह्णीतां चरणौ मम ॥ २० ॥

पदम् । हे सौम्य ! ते रोम्णां वैकल्यतां दृष्ट्वा नावगम्यते, स्वरूपमिति शेषः । रोमविकलत्वहेतुः अग्निदग्धाविति । दृश्येते इति शेषः । व्रणितेत्यत्र

विना अस्मिन् गिरौ वसतो मम अष्टौ वर्षसहस्राणि, व्यतीतानीति शेषः ॥ ९ ॥ ऋषेरन्तस्थानकाले मम पतनानन्तरम् ऋषिदर्शनप्रकारमाह–अवतीर्येत्यादि ॥ १० ॥ दर्शने निमित्तमाह–जटायुषेति । बहुश इत्यनेन पूर्वपरिचितः सूच्यते ॥ ११–१४ ॥ तमिति । धातारं पोषकम् । ययुः प्रापुः ॥ १५–१७ ॥ हे सौम्य !



स०–सुगन्धिनः गन्ध एषामस्ति ते गन्धिनः । शोभनाश्च ते गन्धिनश्चेति विग्रहः । योग्यतया शोभनत्वं गन्धे ज्ञेयम् । एतेन कथमिनित्यत्वं कर्मधारयाद्विनिरिति शङ्काद्वयं परास्तम् ॥ १२ ॥

दृश्यत इति शेषः ॥ १८–२१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

किं ते व्याधिसमुत्थानं पक्षयोः पतनं कथम्। दण्डो वाऽयं कृतः केन सर्वमाख्याहि पृच्छतः ॥ २१ ॥
इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे षष्टितमः सर्गः ॥ ६० ॥

ततस्तद्दारुणं कर्म दुष्करं साहसात्कृतम्। आचचक्षे मुनेः सर्वं सूर्यानुगमनं तदा ॥ १ ॥ भगवन् व्रणयुक्तत्वा लज्जया व्याकुलेन्द्रियः । परिश्रान्तो न शक्नोमि वचनं प्रतिभाषितुम् ॥ २ ॥ अहं चैव जटायुश्च सङ्घर्षाद्दर्पमोहितौ। आकाशं पतितौ वीरौ जिज्ञासन्तौ पराक्रमम् ॥ ३ ॥ कैलासशिखरे बध्वा मुनीनामग्रतः पणम् । रविः स्यादनुयातव्यो यावदस्तं महागिरिम् ॥ ४ ॥ अथावां युगपत्प्राप्तावपश्याव महीतले। रथचक्रप्रमाणानि नगराणि पृथक्पृथक् ॥ ५ ॥ क्वचिद्वादित्रघोषांश्च ब्रह्मघोषांश्च शुश्रुवः। गायन्तीश्चाङ्गना बह्वीः पश्यावो रक्तवाससः ॥ ६ ॥ तूर्णमुत्पत्य चाकाशमादित्यपथमाश्रितौ। आवामालोकयावस्तद्वनं शाद्वलसन्निभम् ॥ ७ ॥

ततस्तदित्यादि ॥ १ ॥ २ ॥ अहमिति । पतितौ प्राप्तौ ॥ ३–९ ॥

ते रोम्णां वैकल्यतां विकलत्वं दृष्ट्वा नावगम्यते, त्वत्स्वरूपमिति शेषः। रोमविकलत्वे हेतुः अग्निदग्धाविति ॥ १८- २१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां षष्टितमः सर्गः ॥ ६० ॥ १ ॥ २ ॥ अहमिति । आकाशं पतितौ प्राप्तौ । सङ्घर्षात् मत्सरात् ॥ ३ ॥ कैलासेति । पणबन्धनप्रकारमाह-रविरिति । यावदस्तं महागिरिम् अस्ताचलावधिकमावाभ्यां रविरनुसृत्य यातव्यस्स्यादित्येवंरूपं पणं बद्ध्वा युगपत् प्राप्तौ महीतले नगराण्यपश्यावेति सम्बन्धः। " यावत्तावच्च साकल्ये " इत्यमरः। यावदस्तं यानि तावत्पर्यन्तमिति भावः ॥ ४–६ ॥ तूर्णमिति । तत्स्थूलोन्नतवृक्षाधारत्वेन प्रसिद्धं वनम् ।

स०–दारुणं पणं निधाय दर्पादुत्सर्पणरूपं क्रूरं कर्म । दुष्करम् अनन्यसाध्यम् ॥ १ ॥ व्रणयुक्तत्वात् तरनतापनजनितव्रणयुक्तत्वात् । लज्जया अन्योन्यस्पर्धयेदं कार्यं कृतमिति लज्जया । वचनं सामान्यवचनमुद्दिश्य न शक्नोमि । परिभाषितुं व्यक्तं वक्तुं न शक्नोमीति किञ्चित्स्यध्याहृत्येनान्वयः। परिभाषितुं सम्यग्वक्तुं न शक्नोमि । वचनं मन्दवचन शृणुत्वेति शेषो वा । उच्यत इति वचनमभिप्रायस्तं परिभाषितुं न शक्नोमीति वा ॥ २॥

तीव्र इति । मोहः चित्तविभ्रमः । मूर्च्छा इन्द्रियैः सह मनस उपप्लवः । तमः अज्ञानम् ॥१०॥ नेति । याम्येत्यादिकं दिगन्तराणामुपलक्षणम् । नियतो लोकः नियतसन्निवेशो लोकः । युगान्ते अग्निना दग्धो हत इव, अदृश्यतेति शेषः ॥ ११ ॥ मनश्चेत्यादि । संश्रयम् आश्रयभूतं चक्षुरिन्द्रियम् ।

उपलैरिव संछन्ना दृश्यते भूः शिलोच्चयैः । आपगाभिश्च संवीता सूत्रैरिव वसुन्धरा ॥ ८ ॥ हिमवांश्चैव विन्ध्यश्च मेरुश्च सुमहान्नगः । भूतले संप्रकाशन्ते नागा इव जलाशये ॥ ९ ॥ तीव्रः स्वेदश्च खेदश्च भयं चासीत्तदाऽऽवयोः । समाविशति मोहश्च तमो मूर्च्छा च दारुणा ॥१०॥ न दिग्विज्ञायते याम्या नाग्नेयी न च वारुणी । युगान्ते नियतो लोको हतो दग्ध इवाग्निना ॥ ११ ॥ मनश्च मे हतं भूयः सन्निवर्त्य तु संश्रयम् । यत्नेन महता ह्यस्मिन् पुनः सन्धाय चक्षुषि । यत्नेन महता भूयो रविः समवलोकितः ॥ १२ ॥ तुल्यः पृथ्वीप्रमाणेन भास्करः प्रतिभाति नौ ॥ १३ ॥ जटायुर्मामनापृच्छ्य निपपात महीं ततः । तं दृष्ट्वा तूर्णमाकाशादात्मानं मुक्तवानहम् ॥ १४ ॥

सन्निवर्त्य स्वेन विप्रयुज्य भूयो भृशं हतं मे मनः महता यत्नेन अस्मिन् चक्षुषि पुनः संधाय महता यत्नेन भूयो रविः समवलोकित इति सम्बन्धः ॥ १२ ॥ रामानु०—मनश्च मे हतं भूयः सन्निवर्त्य तु संश्रयम् । यत्नेन महता ह्यस्मिन् पुनः सन्धाय चक्षुषि । यत्नेन महता भूयो रविः समवलोकितः । इति पाठः ॥ १२ ॥ १३ ॥ जटायुरिति । निपपात महीम्, महीं प्रति निपपातेत्यर्थः । पतन्तं दृष्ट्वा अहमाकाशात् पूर्वाधिष्ठिताकाशप्रदेशात् आत्मानं तूर्णं मुक्तवान्, जटायुषो

शाद्वलस्येव संस्थितिरवस्थानं यस्य तत् शाद्वलसंस्थिति । स्थूलोन्नतवृक्षनिकरोपि भूप्रदेशगततृणगणरूपेण प्रतीयत इत्यर्थः । एतादृशप्रतीतिरतिविप्रकर्ष निबन्धनेत्यवगन्तव्यम्॥७--९॥ तीव्र इति । मोहः चित्तविभ्रमः । अत्र मूर्च्छा नाम इन्द्रियैस्सह मनस उपप्लवः॥१०॥ नियतस्थानविशेषा याम्या दिक् न विज्ञायते । किमिव ? पूर्वं नियतः नियतस्थानविशेषः । युगान्ते अग्निना दग्धो हतो लोक इव ॥ ११ ॥ मन इति । संश्रयम् अवलोकनाश्रयभूतं चक्षुरिन्द्रियम् सन्निवर्त्य स्वेन विप्रयुज्य भूयो भृशम् हतं मूढं मे मनः महता यत्नेन अस्मिन् चक्षुषि पुनः सन्धाय महता यत्नेन भूयो रविः समवलोकित इति योजना ॥ १२ ॥ १३ ॥ जटायुः

स०—उपलैः अल्पशिलाभिः । पर्वता अपि खर्वतया दृश्यन्त इति भावः । सूत्रैः कटिसूत्रप्रायाभिः । आपगाभिः नदीभिः ॥८॥ नागाः गजाः । वक्रतया प्रायः स्थितेः सर्पा वा ॥९॥ मोहो वैचित्यम् । तमा विशति । आविशत् मां, ततः तं जटायुषम् दारुणा मूर्च्छा च आविशति आविशदित्यन्वयः । एवञ्च न पुनरुक्तिः तद्द्वयास्सामान्यविशेषाभावाश्रयणं च नेति ज्ञेयम् । न केवलं माम् अपितु तं चेति चः, समुच्चये ॥ १० ॥

रक्षणार्थं तदुपरि सत्वरमागच्छमित्यर्थः ॥ १४ ॥  पक्षाभ्यामिति । प्रमादात् सूर्यो धक्ष्यतीति बुद्ध्यवधानाभावात् ॥ १५–१७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥ एवमुक्त्वेत्यादि ॥ १–४ ॥ अरण्यमिति ।

पक्षाभ्यां च मया गुप्तो जटायुर्न प्रदह्यते। प्रमादात्तत्र निर्दग्धः पतन् वायुपथादहम् ॥ १५ ॥ आशङ्के तं निपतितं जनस्थाने जटायुषम् । अहं तु पतितो विन्ध्ये दग्धपक्षो जडीकृतः ॥१६॥ राज्येन हीनो भ्रात्रा च पक्षाभ्यां विक्रमेण च । सर्वथा मर्तुमेवेच्छन् पतिष्ये शिखराद्गिरेः॥१७॥इत्यार्षे० श्रीमत्किष्किन्धाकाण्डे एकषष्टितमः सर्गः६१

एवमुक्त्वा मुनिश्रेष्ठमरुदं दुःखितो भृशम्। अथ ध्यात्वा मुहूर्तं तु भगवानिदमब्रवीत् ॥ १ ॥ पक्षौ च ते प्रपक्षौ च पुनरन्यौ भविष्यतः । प्राणाश्च चक्षुषी चैव विक्रमश्च बलं च ते ॥ २ ॥ पुराणे सुमहत्कार्यं भविष्यति मया श्रुतम् । दृष्टं मे तपसा चैव श्रुत्वा च विदितं मम ॥ ३ ॥ राजा दशरथो नाम कश्चिदिक्ष्वाकुनन्दनः । तस्य पुत्रो महातेजा रामो नाम भविष्यति ॥ ४ ॥ अरण्यं च सह भ्रात्रा लक्ष्मणेन गमिष्यति । अस्मिन्नर्थे नियुक्तः सन् पित्रा सत्यपराक्रमः ॥ ५ ॥ नैर्ऋतो रावणो नाम तस्य भार्यां हरिष्यति। राक्षसेन्द्रो जनस्थानादवध्यः सुरदानवैः ॥ ६ ॥ सा च कामैः प्रलोभ्यन्ती भक्ष्यैर्भोज्यैश्च मैथिली । न भोक्ष्यति महाभागा दुःखे मग्ना यशस्विनी ॥ ७ ॥

अस्मिन्नर्थे अरण्यगमने ॥ ५ ॥ ६ ॥ काम्यन्त इति कामैः अपेक्षणीयैः । प्रलोभ्यन्ती प्रलोभ्यमाना ॥ ७ ॥

मह्यां प्रति निपपात । तं पतन्तं दृष्ट्वा आकाशात् पूर्वाधिष्ठिताकाशप्रदेशात् आत्मानं तूर्णं मुक्तवान् जटायुषो रक्षणार्थं तदुपरि सत्वरमागच्छमित्यर्थः । प्रमादादिति । पक्षयोर्विवृतत्वे सूर्यो धक्ष्यतीति बुद्ध्यभावात् ॥१४--१७॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायाम् एकषष्टितमः सर्गः ॥ ६१ ॥ एवमिति । एवं स्वव्यापारमुक्त्वा ॥ १ ॥ प्राणादयश्च भविष्यन्तीति वचनव्यत्ययः कर्तव्यः । प्रपक्षौ प्रधानपक्षौ । पूर्ववत्सर्वव्यवहारसमर्थावित्यर्थः ॥ २ ॥ पुराण इति । पुराणे शास्त्ररहस्ये श्रुत्वा स्थितस्य मम च तपसा दृष्टमिति सम्बन्धः ॥ ३–६ ॥ सा चेति । काम्यन्त इति कामाः

स०–सुरदानवैः सुरैः सहिता दानवास्तैः । एतेन “ येषां च विरोधः शाश्वतिकः ” इत्येकवद्भावाभावः कथमिति निरस्तम् ॥ ६ ॥ प्रलोभ्यन्ती प्रलोभ्यमाना । प्रलोभयितुं योग्याः प्रलोभ्याः, तद्वदाचरन्ती । वस्तुतस्तु न प्रलोभनीयेत्यर्थः । महाभागाऽदुःखमग्ना इति पाठः । अदुःखमग्ना भोज्याभावप्रयोज्यदुःखरहिता । नित्यतृप्तत्वात्तस्य दुरन्तत्वाद्वाऽभोजनमिति मन्तव्यम् । भोक्ष्यति भोक्ष्यते ॥ ७ ॥

परमान्नमिति । ज्ञात्वा, अनश(ना)नमिति शेषः ॥८–१३॥ त्वयापीति । नृपपुत्रयोः तत्प्रयोजनं त्वयापि कार्यं कर्तव्यम् । ब्राह्मणादीनां च कार्यमिति

परमान्नं तु वैदेह्या ज्ञात्वा दास्यति वासवः । यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ॥ ८ ॥ तदन्नं मैथिली प्राप्य विज्ञायेन्द्रादिदं त्विति । अग्रमुद्धृत्य रामाय भूतले निर्वपिष्यति ॥९॥ यदि जीवति मे भर्ता लक्ष्मणेन सह प्रभुः । देवत्वं गच्छतोर्वापि तयोरन्नमिदं त्विति ॥ १० ॥ एष्यन्त्यन्वेषकास्तस्या रामदूताः प्लवङ्गमाः । आख्येया राम महिषी त्वया तेभ्यो विहङ्गम ॥ ११ ॥ सर्वथा हि न गन्तव्यमीदृशः क गमिष्यसि । देशकालौ प्रतीक्षस्व पक्षौ त्वं प्रतिपत्स्यसे ॥ १२ ॥ नोत्सहेयमहं कर्तुमद्यैव त्वां सपक्षकम् । इहस्थस्त्वं तु लोकानां हितं कार्यं करिष्यसि ॥ १३ ॥ त्वयापि खलु तत्कार्यं तयोश्च नृपपुत्रयोः । ब्राह्मणानां सुराणां च मुनीनां वासवस्य च ॥ १४ ॥ इच्छाम्यहमपि द्रष्टुं भ्रातरौ रामलक्ष्मणौ । नेच्छे चिरं धारयितुं प्राणांस्त्यक्ष्ये कलेवरम् । महर्षिस्त्वब्रवीदेवं दृष्टतत्त्वार्थदर्शनः ॥ १५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

सम्बन्धः ॥ १४ ॥ १५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

अपेक्षणीयाः तैः प्रलोभ्यन्ती ॥७॥ परमान्नमिति । ज्ञात्वा, अनशन(ं)मिति शेषः॥८॥ तदिति । इन्द्रादिदं त्विति विज्ञानं पातिव्रत्यमहिम्नेति भावः । प्रकारान्तरेण रावणादागतं चेत्तत्परिहरतीति तात्पर्यम् । 'अग्रमुद्धृत्य रामाय भूतले निर्वपिष्यति' इत्यनेन पतिव्रताचार उक्तः । "भुक्तवत्येव भुञ्जीयात्स्वपत्यथ शयीत च" इति स्मरणात् ॥ १० ॥ ११ ॥ सर्वथेति । देशकालप्रतीक्षणस्य फलमाह–पक्षाविति ॥ १२ ॥ तव पक्षसम्पादनसामर्थ्यं किमिदानीं नास्तीत्यत्राह–नोत्सहेयमिति । अधुनैव पक्षसम्पादनं मया कृतं चेत्तवात्रावस्थानासम्भवादिहस्थेन त्वया कर्तव्यं न सिद्ध्यतीत्यर्थः ॥ १३ ॥ त्वयापीति । नृपपुत्रयोस्तत्प्रयोजनं त्वयापि कार्यं कर्तव्यं ब्राह्मणादीनां च कर्तव्यमिति सम्बन्धः ॥ १४ ॥ १५ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० किष्किन्धाकाण्डव्याख्यायां द्विषष्टितमः सर्गः ॥ ६२ ॥

स०–नित्यतृप्तापि वासवसेवां न लङ्घयाञ्चकारेत्याह–परमान्नमिति । ज्ञात्वा सेवा भवत्विति ज्ञात्वेति शेषः । सर्वान् सुपर्वणो विहाय व्यवहारसिद्ध्यै इन्द्रस्य प्रतिकृतिप्रविष्टत्वात्पायसप्रदो वासव इति चोक्तिर्युक्तिमतीति वासवग्रहणेन द्योतयति कविरित्यवधेयम् । सीताप्रकृतित्वमात्रत एव सेवेत्यप्यवसेयम् । तदन्नं प्राप्य । इन्द्रादिति पञ्चमी हेतौ । इन्द्रहेतुकमिदं दास्यतीति प्रकृतं दानं विज्ञाय ज्ञात्वा निर्वपिष्यति॥८॥९॥

एतैरित्यादि ॥१॥२॥ रामानु०—कन्दरात्तु विसर्पित्वा पर्वतस्य शनैः शनैरिति पाठः ॥ ३ ॥ अद्य त्विति । पूर्वं निशाकरमुनिप्रयाणानन्तरम् अष्टौ वर्षसहस्राणि व्यतीतानीत्युक्तवान् । अतः साग्रं वर्षशतं गतमित्येतदष्टवर्षसहस्रोपलक्षणम् ॥ ३ ॥ वितर्कैः विविधविचारैः ॥ ४–६ ॥ रामानु०—बुद्ध्यता च मया वीर्यमिति



एतैरन्यैश्च बहुभिर्वाक्यैर्वाक्यविदां वरः । मां प्रशस्याभ्यनुज्ञाप्य प्रविष्टः स स्वमाश्रमम् ॥ १ ॥ कन्दरात्तु विसर्पित्वा पर्वतस्य शनैः शनैः । अहं विन्ध्यं समारुह्य भवतः प्रतिपालये ॥ २ ॥ अद्य त्वेतस्य कालस्य साग्रं वर्षशतं गतम् । देशकालप्रतीक्षोऽस्मि हृदि कृत्वा मुनेर्वचः ॥ ३ ॥ महाप्रस्थानमासाद्य स्वर्गते तु निशाकरे । मां निर्दहति सन्तापो वितर्कैर्बहुभिर्वृतम् ॥ ४॥ उत्थितां मरणे बुद्धिं मुनिवाक्यैर्निवर्तये । बुद्धिर्या तेन मे दत्ता प्राणानां रक्षणाय तु । सा मेऽपनयते दुःखं दीप्तेवाग्निशिखा तमः ॥ ५ ॥ बुध्यता च मया वीर्यं रावणस्य दुरात्मनः । पुत्रः संतर्जितो वाग्भिर्न त्राता मैथिली कथम् ॥ ६ ॥ तस्या विलपितं श्रुत्वा तौ च सीताविनाकृतौ । न मे दशरथस्नेहात् पुत्रेणोत्पादितं प्रियम् ॥ ७ ॥ तस्य त्वेवं ब्रुवाणस्य सम्पातेर्वानरैः सह । उत्पेततुस्तदा पक्षौ समक्षं वनचारिणाम् ॥ ८ ॥ स दृष्ट्वा स्वां तनुं पक्षैरुद्गतैररुणच्छदैः । प्रहर्षमतुलं लेभे वानरांश्चेदमब्रवीत् ॥ ९ ॥ ऋषेर्निशाकरस्यैव प्रभावादमितात्मनः । आदित्यरश्मिनिर्दग्धौ पक्षौ मे पुनरुत्थितौ ॥१०॥ यौवने वर्तमानस्य ममासीद्यः पराक्रमः । तमेवाद्यानुगच्छामि बलं पौरुषमेव च ॥ ११ ॥

पाठः ॥ ६ ॥ ॥ ७ ॥ ८ ॥ अरुणच्छदैः अरुणबर्हिष्पत्रैः ॥ ९–१४ ॥

॥ १ ॥ २ ॥ अद्य त्वेतस्येति । पूर्वं निशाकरमुनिप्रयाणानन्तरम् । अष्टौ वर्षसहस्राणि मम व्यतीतानीत्युक्तत्वात् इदानीं साग्रं वर्षशतमित्येतदष्टवर्षसहस्रोपलक्षणम् ॥ ३ ॥ वितर्कैः विविधविचारैः ॥ टीका०—महाप्रस्थानसंज्ञकं व्रतम् । वितर्कैः विविधविचारैः । कदा वानरास्समेष्यन्ति कदा पक्षादिकं मम प्रादुर्भविष्यतीत्येवंरूपो विचारः ॥ ४ ॥ ९ ॥ बुद्ध्यतेति । तस्याः विलपितं श्रुत्वा मैथिली कथं न त्राता न गुप्ता इति वाग्भिस्संतर्जितः ॥ ६ ॥ ७ ॥ तस्येति । पक्षाविति प्रपक्षयोरुपलक्षणम् । अन्यथा उत्तरत्र पक्षैरिति बहुवचनायोगात् ॥ ८ ॥ अरुणच्छदैः अरुणबर्हिष्पत्रैः । अरुणप्रभैरिति पाठः ॥ ९ ॥ १० ॥ बलं पौराणमेव च इति पाठः । पुराणमेव पौराणम् । स्वार्थेऽण् । पुराणेषु

अथेति । अभिजिदभिमुखाः अभिजिन्मुहूर्तप्रतीक्षकाः ॥१५॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥ ६३ ॥ एवं प्रक्षिप्ताः पञ्च सर्गाः गताः ॥ एवं कृतोदकं सम्पातिं स्वस्थानमानीय प्रकृतकार्याय वानरा गता इत्याह—आख्याता इति ।

सर्वथा क्रियतां यत्नः सीतामधिगमिष्यथ । पक्षलाभो ममायं वः सिद्धिप्रत्ययकारकः ॥ १२ ॥ इत्युक्त्वा स हरीन् सर्वान् संपातिः पतगोत्तमः । उत्पपात गिरेः शृङ्गाज्जिज्ञासुः खगमो गतिम् ॥ १३ ॥ तस्य तद्वचनं श्रुत्वा प्रीति संहृष्टमानसाः । बभूवुर्हरिशार्दूला विक्रमाभ्युदयोन्मुखाः ॥ १४ ॥ अथ पवनसमानविक्रमाः प्लवगवराः प्रतिलब्ध पौरुषाः । अभिजिदभिमुखा दिशं ययुर्जनकसुतापरिमार्गणोन्मुखाः ॥ १५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

आख्याता गृध्रराजेन समुत्पत्य प्लवङ्गमाः । सङ्गम्य प्रीतिसंयुक्ता विनेदुः सिंहविक्रमाः ॥ १ ॥
संपातेर्वचनं श्रुत्वा हरयो रावणक्षयम् । हृष्टाः सागरमाजग्मुः सीतादर्शनकाङ्क्षिणः ॥ २ ॥
अभिक्रम्य तु तं देशं ददृशुर्भीमविक्रमाः । कृत्स्नं लोकस्य महतः प्रतिबिम्बमिव स्थितम् ॥ ३ ॥

समुत्पत्य हर्षेण तत्र लङ्घनं कृत्वा । सङ्गम्य पुनरन्योन्यं समेत्य विनेदुः ॥ १ ॥ हरयः सम्पातेर्वचनं श्रुत्वा सीतादर्शनकाङ्क्षिणः सन्तः रावणक्षयं रावणनिलयभूतं लङ्काद्वीपमुद्दिश्य सागरं तन्मार्गभूतं सागरम् आजग्मुरिति सम्बन्धः ॥ २ ॥ कृत्स्नस्य लोकस्य प्रतिबिम्बमिव प्रतिनिधिमिव ।

दिव्यानां यादृशं बलं श्रूयते तादृशमिति वा ॥ ११–१४ ॥ अभिजिदभिमुखाः अभिजिन्मुहूर्तप्रतीक्षकाः । “ सूर्याच्चतुर्थकं लग्नमभिजित्परिकीर्तितम् । सर्वदोषहरं चैव प्रशस्तं शुभकर्मसु ॥” इति ज्योतिश्शास्त्रे ॥ १५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां त्रिषष्टितमः सर्गः ॥ ६३ ॥ आख्याता इति । समुत्पत्य उत्थाय ॥ १ ॥ हरयः सम्पातेर्वचनं श्रुत्वा सीतादर्शनकाङ्क्षिणस्सन्तः रावणक्षयं प्रति रावणनिलयभूत लङ्काद्वीपमुद्दिश्य सागरं तन्मार्गभूतसमुद्रमाजग्मुरिति संबन्धः ॥ २ ॥ प्रतिबिम्बमिव प्रतिबिम्बाधारभूतादर्शतलमिवेत्यर्थः । अत्र सागरमित्यनुकृष्यते ॥ ३ ॥

इदं तटविशेषणम्, सर्वलोकस्थसमस्तवस्तुसंपूर्णमित्यर्थः। " प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया। प्रतिकृतिरर्चा पुंसि प्रतिनिधि

दक्षिणस्य समुद्रस्य समासाद्योत्तरां दिशम्। सन्निवेशं ततश्चक्रुर्हरिवीरा महाबलाः ॥ ४ ॥ सत्त्वैर्महद्भि र्विकृतैः क्रीडद्भिर्विविधैर्जले। व्यत्यस्तैः सुमहाकायैरूर्मिभिश्च समाकुलम् ॥ ५ ॥ प्रसुप्तमिव चान्यत्र क्रीडन्तमिव चान्यतः। क्वचित्पर्वतमात्रैश्च जलराशिभिरावृतम् ॥ ६ ॥ सङ्कुलं दानवेन्द्रैश्च पातालतलवासिभिः। रोमहर्षकरं दृष्ट्वा विषेदुः कपिकुञ्जराः ॥ ७ ॥ आकाशमिव दुष्पारं सागरं प्रेक्ष्य वानराः। विषेदुः सहसा सर्वे कथं कार्यमिति ब्रुवन् ॥ ८ ॥ विषण्णां वाहिनीं दृष्ट्वा सागरस्य निरीक्षणात्। आश्वासयामास हरीन् भयार्तान् हरिसत्तमः ॥ ९ ॥ तान् विषादेन महता विषण्णान् वानरर्षभान्। उवाच मतिमान् काले वालिसूनुर्महाबलः ॥ १० ॥ न विषादे मनः कार्यं विषादो दोषवत्तमः। विषादो हन्ति पुरुषं बालं क्रुद्ध इवोरगः ॥ ११ ॥ विषादो यं प्रसहते विक्रमे पर्युप स्थिते। तेजसा तस्य हीनस्य पुरुषार्थो न सिध्यति ॥ १२ ॥ तस्यां राज्यां व्यतीतायामङ्गदो वानरैः सह। हरिवृद्धैः समागम्य पुनर्मन्त्रममन्त्रयत् ॥ १३ ॥ सा वानराणां ध्वजिनी परिवार्याङ्गदं बभौ। वासवं परिवार्येव मरुतां वाहिनी स्थिता ॥ १४ ॥ कोऽन्यस्तां वानरीं सेनां शक्तः स्तम्भयितुं भवेत्। अन्यत्र वालितनयादन्यत्र च हनूमतः ॥ १५ ॥ ततस्तान् हरिवृद्धांश्च तच्च सैन्यमरिन्दमः। अनुमान्याङ्गदः श्रीमान् वाक्यमर्थवदब्रवीत् ॥ १६ ॥

रूपमोपमानं स्यात् ॥" इत्यमरः ॥ ३ ॥ सन्निवेशं स्थानम् ॥ ४–९ ॥ विषादेन विषादकारणेन ॥ १० ॥ ११ ॥ विषादो यं प्रसहते अभिभवति।

उत्तरां दिशमित्यत्र दिक्शब्देन तीरं लक्ष्यते। उत्तरं तटमिति सम्यक् ॥ ४–७ ॥ (समुद्रलङ्घनं कथं कर्तव्यमिति) ब्रुवन् ब्रुवन्तः। आर्षो वचनव्यत्ययः ॥८॥९॥ विषादेन विषादकारणेन ॥१०॥११॥ विषादो यं न सहते इति पाठः। यं (न) अभिभवति। पुरुषार्थो न सिद्ध्यति इत्यत्र इतिकरणं द्रष्टव्यम्। अस्य आश्वासयामासेति

सिद्ध्यतीत्यनन्तरम् इतिकरणं बोध्यम् ॥ १२–२३ ॥ सङ्गः प्रतिहतिः । ब्रुवध्वमित्यार्षो निर्देशः ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते



क इदानीं महातेजा लङ्घयिष्यति सागरम् । कः करिष्यति सुग्रीवं सत्यसन्धमरिन्दमम् ॥ १७ ॥ को वीरो योजनशतं लङ्घयेच्च प्लवङ्गमाः । इमांश्च यूथपान् सर्वान् मोक्षयेत्को महाभयात् ॥ १८ ॥ कस्य प्रभावाद्दारांश्च पुत्रांश्चैव गृहाणि च । इतो निवृत्ताः पश्येम सिद्धार्थाः सुखिनो वयम् ॥ १९ ॥ कस्य प्रसादाद्रामं च लक्ष्मणं च महाबलम् । अभिगच्छेम संहृष्टाः सुग्रीवं च महाबलम् ॥ २० ॥ यदि कश्चित्समर्थो वः सागर प्लवने हरिः । स ददात्विह नः शीघ्रं पुण्यामभयदक्षिणाम् ॥ २१ ॥ अङ्गदस्य वचः श्रुत्वा न कश्चित् किंचिदब्रवीत् । स्तिमितेवाभवत्सर्वा तत्र सा हरिवाहिनी ॥ २२ ॥ पुनरेवाङ्गदः प्राह तान् हरीन् हरिसत्तमः । सर्वे बलवतां श्रेष्ठा भवन्तो दृढविक्रमाः ॥ २३ ॥ व्यपदेश्यकुले जाताः पूजिताश्चाप्यभीक्ष्णशः । नहि वो गमने सङ्गः कदाचित्कस्यचित्क्वचित् । ब्रुवध्वं यस्य या शक्तिः प्लवने प्लवगर्षभाः ॥ २४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुःषष्टितमः सर्गः ॥ ६४ ॥

पूर्वेण सम्बन्धः॥१२–२०॥ यदीति । अभयदक्षिणाम् अहं यास्यामीत्येवंरूपाभयवचनमित्यर्थः॥२१॥न कश्चित्किञ्चिदब्रवीत् । नन्वमितयोजनदेशलङ्घनसमर्थवानराणामसमर्थानामिव शतयोजनपरिमितसमुद्रलङ्घनप्रसङ्गे कथं तूष्णीम्भाव इति चेत् ? अलङ्घ्यशासनसुग्रीवनियमितकालातिक्रमेण च्युतधैर्यत्वादप्रमेयरावणबलपरिज्ञानाच्चेत्यवगन्तव्यम् । तथा चोक्तं स्कान्दे–" नीलोऽङ्गदो हनूमांश्च जाम्बवानथ केसरी । समुद्रतीरमागम्य न शेकुः स्पन्दितुं पदम् । रावणस्य बलं ज्ञात्वा तीरे नदनदीपतेः ॥ " इति ॥ २२ ॥ २३ ॥ नहि व इति । सङ्गः प्रतिहतिः । ब्रुवध्वमिति निर्देशः छान्दसः ॥ २४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां चतुष्षष्टितमः सर्गः ॥ ६४ ॥

ततोऽङ्गदवच इत्यादि। गतौ गमनविषये। यद्यपि गजादयोऽपि शतयोजनलङ्घने शक्ताः, "भूतले सागरे वापि शैलेषु च वनेषु च। पातालस्यापि मध्ये वा न ममाच्छिद्यते गतिः।" इति सुग्रीवसन्निधौ वानरयूथपैः स्वस्वशक्तेः ख्यापितत्वात् "नहि वो गमने सङ्गः कदाचित्कस्यचित्क्वचित्" इति

ततोऽङ्गदवचः श्रुत्वा सर्वे ते वानरोत्तमाः। स्वं स्वं गतौ समुत्साहमाहुस्तत्र यथाक्रमम् ॥१॥ गजो गवाक्षो गवयः शरभो गन्धमादनः। मैन्दश्च द्विविदश्चैव सुषेणो जाम्बवांस्तथा ॥ २ ॥ आबभाषे गजस्तत्र प्लवेयं दशयोजनम्। गवाक्षो योजनान्याह गमिष्यामीति विंशतिम् ॥३॥ गवयो वानरस्तत्र वानरांस्तानुवाच ह। त्रिंशतं तु गमिष्यामि योजनानां प्लवङ्गमाः ॥ ४ ॥ शरभस्तानुवाचाथ वानरान् वानरर्षभः। चत्वारिंशद्गमिष्यामि योजनानां प्लवङ्गमाः ॥ ५ ॥ वानरस्तु महातेजा अब्रवीद्गन्धमादनः। योजनानां गमिष्यामि पञ्चाशत्तु न संशयः ॥६॥ मैन्दस्तु वानरस्तत्र वानरांस्तानुवाच ह। योजनानां परं षष्टिमहं प्लवितुमुत्सहे ॥ ७ ॥ ततस्तत्र महातेजा द्विविदः प्रत्यभाषत। गमिष्यामि न सन्देहः सप्ततिं योजनान्यहम् ॥ ८ ॥ सुषेणस्तु हरिश्रेष्ठः प्रोक्तवान् कपिसत्तमान्। अशीतिं योजनानां तु प्लवेयं प्लवगेश्वराः ॥ ९ ॥

पूर्वमङ्गदोक्तेश्च। तथापि रावणाधिष्ठितलङ्काप्रवेशसीतान्वेषणादिकं दुष्करमन्येनेति तत्साधकहनुमत्प्रोत्साहनाय तथोक्तवन्त इति ध्येयम् ॥ १-९ ॥

रामानु०-स्वं स्वं गतौ समुत्साहमिति पाठः। सुषेणो जाम्बवांस्तथेति पाठः ॥ १--३ ॥ गवयो वानरस्तत्र वानरांस्तानुवाच ह। इति पाठः ॥ ४ ॥ शरभस्तानुवाचाथ वानरान्वानरर्षभः।

तत इति। गतौ गमनविषये। स्वं स्वं स्वकीयं स्वकीयम् उत्साहमूचुरिति सम्बन्धः ॥ १॥२ ॥ 'आबभाषे गजस्तत्र प्लवेयं दशयोजनम्' इत्यादिना गजादीनां दशयोजनमात्रविषयस्वस्वप्लवनशक्तिकथनं न वास्तवम्। "भूतले सागरे वापि शैलेषूपवनेषु च। पातालस्यापि वा मध्ये न ममाच्छिद्यते गतिः" इति सुग्रीवसन्निधौ वानरयूथपैः स्वस्वशक्तेः प्रख्यापितत्वात् "नहि वो गमने सङ्गः कदाचित्कस्यचित् क्वचित्। ब्रुवध्वं यस्य या शक्तिर्गमने प्लवगर्षभाः ॥" इत्यङ्गदेन यूथपान्प्रति सन्निहितपूर्वसर्गे विधानाच्च। तर्हि प्लवेयं दशयोजनमित्यादिना किमर्थं स्वस्वप्लवनशक्तिन्यूनतामुक्तवन्त इति चेत्? सत्यम्, अधिकशक्तियुक्ता अप्येते रावणाधिष्ठितलङ्काप्रवेशः सीतान्वेषणं च दुष्करमिति मत्वा तादृशकार्यसाधकस्य वीरस्य हनुमतः प्रोत्साहनार्थं तथोक्तवन्त इति सर्वं समञ्जसम् ॥ ३ ॥ ४ ॥ चत्वारिंशद

इति पाठः ॥ ५-८ ॥ सुषेणस्तु कपिस्तत्र प्रोक्तवान् कपिसत्तमः । इति पाठः ॥ ९ ॥ तेषामिति । तेषां कथयतां तेषु कथयत्सु सत्सु ॥ १०-१४ ॥ त्रयाणां विक्रमाणां

तेषां कथयतां तत्र सर्वांस्ताननुमान्य च । ततो वृद्धतमस्तेषां जाम्बवान् प्रत्यभाषत॥१०॥ पूर्वमस्माकमप्यासीत् कश्चिद्गतिपराक्रमः । ते वयं वयसः पारमनुप्राप्ताः स्म साम्प्रतम् ॥ ११ ॥ किन्तु नैवं गते शक्यमिदं कार्यं मुपेक्षितुम् । यदर्थं कपिराजश्च रामश्च कृतनिश्चयौ ॥ १२ ॥ साम्प्रतं कालभेदेन या गतिस्तां निबोधत । नवतिं योजनानां तु गमिष्यामि न संशयः ।तांस्तु सर्वान् हरिश्रेष्ठाञ्जाम्बवान् पुनरब्रवीत् ॥१३॥ न खल्वेतावदेवासीद्गमने मे पराक्रमः । मया महाबलेश्चैव यज्ञे विष्णुः सनातनः ॥ १४ ॥ प्रदक्षिणीकृतः पूर्वं क्रममाणस्त्रिविक्रमम् । स इदानीमहं वृद्धः प्लवने मन्दविक्रमः ॥ १५ ॥ यौवने च तदाऽऽसीन्मे बलमप्रतिमं परैः । सम्प्रत्येतावतीं शक्तिं गमने तर्कयाम्यहम् ॥१६॥ नैतावता च संसिद्धिः कार्यस्यास्य भविष्यति । अथोत्तरमुदारार्थमब्रवीदङ्गदस्तदा ॥ १७ ॥ अनुमान्य महाप्राज्ञं जाम्बवन्तं महाकपिः । अहमेतद्गमिष्यामि योजनानां शतं महत् ॥१८॥ निवर्तने तु मे शक्तिः स्यान्न वेति न निश्चिता । तमुवाच हरिश्रेष्ठं जाम्बवान् वाक्यकोविदः ॥ १९ ॥

समाहारः त्रिविक्रमम् ॥ १५-१९ ॥ रामानु०-त्रिविक्रममात्रान् विक्रमान्वीक्षितुमिति भावः ॥ १९ ॥

पञ्चाशच्छब्दयोर्द्वितीयार्थे प्रथमा ॥ ५-९ ॥ तेषां कथयताम् तेषु कथयत्सु ॥ १० ॥ गतिपराक्रमः गत्यतिशय इति यावत् । पारम् अन्तम् ॥ ११ ॥ तर्हि उपेक्षणीयं किम् ? नेत्याह-किंत्विति । तत्र हेतुमाह यदर्थमिति ॥ १२-१४ ॥ त्रिविक्रमम् त्रयाणां विक्रमाणां पादविन्यासानां समाहारस्त्रिविक्रमम् । क्रममाणः सनातनः प्रभविष्णुः पूर्वं मया प्रदक्षिणीकृत इति सम्बन्धः । अनेन ब्रह्माण्डप्रदक्षिणमुक्तं भवति ॥ १५-१८ ॥ 'तमुवाच हरिश्रेष्ठो जाम्बवान्वाक्यकोविदः ' हरिश्रेष्ठ

स०-वयमिति । यद्यपि " अस्मदो द्वयोश्च " इत्यत्र " सविशेषणत्वे तु प्रतिषेधः " इति बहुवचनप्रतिषेधोऽस्ति, तथापि विधेयविशेषणतावरणेन " शैवा वयं-पञ्चाक्षरीजपपराः " इत्यादिवत्समाधिरवधेयः ॥ ११ ॥ जाम्बवतो बलस्खलनहेतुस्त्रिविक्रमक्रमणमिव तद्भ्रमणकाले मेरुसम्ताडनं जान्वोः पुराणान्तरोक्तमनुसन्धेयमिति मन्दविक्रम इति वदन् कविः सूचयामासेति बोध्यम् ॥ १९ ॥

ज्ञायत इति । हर्यृक्षसत्तमेति । ऋक्षत्वं वानरावान्तरजातिः, अतः सुग्रीवादेः ऋक्षराजत्वमिति ॥ २० ॥ काममिति । भवान् योजनानां शतं सहस्रं

ज्ञायते गमने शक्तिस्तव हर्यृक्षसत्तम ॥ २० ॥ कामं शतं सहस्रं वा नह्येष विधिरुच्यते । योजनानां भवान् शक्तो गन्तुं प्रतिनिवर्तितुम् ॥ २१ ॥ नहि प्रेषयिता तात स्वामी प्रेष्यः कथंचन । भवताऽयं जनः सर्वः प्रेष्यः प्लवगसत्तम ॥ २२ ॥ भवान्कलत्रमस्माकं स्वामिभावे व्यवस्थितः । स्वामी कलत्रं सैन्यस्य गतिरेषा परन्तप । तस्मात्कलत्रवत्तात प्रतिपाल्यः सदा भवान् ॥ २३ ॥ अपि चैतस्य कार्यस्य भवान् मूलमरिंदम । मूलमर्थस्य संरक्ष्यमेष कार्यविदां नयः । मूले हि सति सिद्ध्यन्ति गुणाः पुष्पफलोदयाः ॥ २४ ॥ तद्भवानस्य कार्यस्य साधने सत्यविक्रम ॥ २५ ॥ बुद्धिविक्रमसम्पन्नो हेतुरत्र परंतप । गुरुश्च गुरुपुत्रश्च त्वं हि नः कपिसत्तम ॥ २६ ॥ भवन्तमाश्रित्य वयं समर्था ह्यर्थसाधने । उक्तवाक्यं महाप्राज्ञं जाम्बवन्तं महाकपिः ॥ २७ ॥ प्रत्युवाचोत्तरं वाक्यं वालिसूनुरथाङ्गदः । यदि नाहं गमिष्यामि नान्ये वानरपुङ्गवाः ॥ २८ ॥

वा गन्तुं प्रतिनिवर्तितुं च कामं शक्तः । एष विधिः भृत्यैः स्वामिप्रस्थापनं नोच्यते न विधीयते ॥ २१ ॥ तदेव विवृणोति—नहीति ॥ २२ ॥ कलत्रं रक्षणीयं वस्तु ॥ २३–२३ ॥ रामानु०–तस्मात् कलत्रवत्तात प्रतिपाल्यः इति पाठः ॥ २३ ॥ गुणाः पुष्पफलोदयाः इति सम्यक् ॥ २४ ॥

इति जाम्बवतो व्यपदेशो हरिसाधर्म्यात्, अल्पमन्तरम् ऋक्षाणां हरीणां च अत एवासौ हर्यृक्षसत्तमेत्यङ्गदं सम्बोधयति । सजातीयस्य हि निर्धारणं भवति “ न निर्धारणे ” इति षष्ठीसमासस्य निषेधेपि मुनिप्रयोगात्साधुत्वम् सप्तमीसमासो वा ॥१९॥२०॥ काममिति । भवान् योजनानां शतं सहस्रं वा गन्तुं प्रतिनिवर्तितुं च कामं शक्तः । तथापि एष विधिः भृत्यैः स्वामिप्रस्थापनं नोच्यते न विधीयते हि ॥ २१ ॥ तदेव विवृणोति—नहीति । हे तात ! प्रेषयिता स्वामी । कथञ्चन केन प्रकारेणापि प्रेष्यो नहि ॥ २२ ॥ भवानिति । कलत्रं रक्षणीयं वस्तु । एषा गतिः लोकस्थितिरित्यर्थः ॥ २३ ॥ एतस्य कार्यस्य समुद्रलङ्घनस्य । अर्थस्य प्रयोजनस्य । उक्तार्थमर्थान्तरन्यासेनाह मूले हीति । वृक्षस्य चेति शेषः ॥ २४–२७ ॥ यदीति । नान्ये गमिष्यन्तीति व्यत्ययः । गतिसामर्थ्याभावादित्यर्थः ॥२८–३३॥

स०–हर्यृक्षसत्तम ! हरिणी पिङ्गे अक्षिणी येषां कपीनां तेषु सत्तमः । यद्वा हर्यक्षः सिंह इव सत्तमः श्रेष्ठः ॥ २० ॥

रामानु०—कोपे च हरिरीश्वरः इति सम्यक् ॥ ३० ॥ तत इति । प्रतीतं प्रख्यातम् ॥ ३४ ॥ रामानु०—ततः प्रतीतं प्लवतां वरिष्ठमिति पाठः । प्रतीतं प्रख्यातम् ॥ ३४ ॥



पुनः खल्विदमस्माभिः कार्यं प्रायोपवेशनम् । न ह्यकृत्वा हरिपतेः सन्देशं तस्य धीमतः ॥ २९ ॥ तत्रापि गत्वा प्राणानां पश्यामि परिरक्षणम् । न हि प्रसादे चात्यर्थं कोपे च हरिरीश्वरः ॥ ३० ॥ अतीत्य तस्य संदेशं विनाशो गमने भवेत् । तद्यथा ह्यस्य कार्यस्य न भवत्यन्यथा गतिः ॥ ३१ ॥ तद्भवानेव दृष्टार्थः संचिन्तयितुमर्हति । सोऽङ्गदेन तदा वीरः प्रत्युक्तः प्लवगर्षभः ॥ ३२ ॥ जाम्बवानुत्तरं वाक्यं प्रोवाचेदं ततोऽङ्गदम् । अस्य ते वीर कार्यस्य न किंचित्परिहीयते । एष सञ्चोदयाम्येनं यः कार्यं साधयिष्यति ॥ ३३ ॥ ततः प्रतीतं प्लवतां वरिष्ठमेकान्तमाश्रित्य सुखोपविष्टम् । संचोदयामास हरिप्रवीरो हरिप्रवीरं हनुमन्तमेव ॥ ३४ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

अनेकशतसाहस्रीं विषण्णां हरिवाहिनीम् । जाम्बवान् समुदीक्ष्यैवं हनुमन्तमथाब्रवीत् ॥ १ ॥
वीर वानरलोकस्य सर्वशास्त्रविशारद । तूष्णीमेकान्तमाश्रित्य हनुमन् किं न जल्पसि ॥ २ ॥
हनुमन् हरिराजस्य सुग्रीवस्य समो ह्यसि । रामलक्ष्मणयोश्चापि तेजसा च बलेन च ॥ ३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥ अनेकेत्यादि ॥ १-३ ॥

तत इति । प्रतीतं प्रख्यातम् । सुखोपविष्टं प्रकृतकार्यस्यानन्यसाध्यत्वात्स्वस्य सुकरत्वाच्चेति भावः ॥ ३४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां पञ्चषष्टितमः सर्गः ॥ ६५ ॥ १-३ ॥



स०—सुग्रीवस्य समोऽसि । इति संमतमिति शेषः । न केवलं मम तत्सम इति सम्मतम् किन्तु रामलक्ष्मणयोश्चापीति समुच्चयः । रामस्योत्तमत्वेन लक्ष्मणस्याधमत्वेनात्युक्तिनैच्योक्तिप्रसक्तिर्नैवं व्याख्यान इति मन्तव्यम् । सुग्रीवस्य सम इति राजत्वेन बहुमानार्थमुक्तिः । स्तुतिसमयत्वाद्रामलक्ष्मणयोश्चापि सम इत्युक्तिर्युक्तेति वा ॥ ३ ॥

अरिष्टनेमिनः काश्यपस्य । नकारान्तत्वमार्षम् ॥ ४ ॥ ५ ॥ पक्षयोरिति । अत्र समानपदमध्याहार्यम् । विक्रमादिकं तेन गरुत्मता समानम् । नावहीयते

अरिष्टनेमिनः पुत्रो वैनतेयो महाबलः । गरुत्मानिति विख्यात उत्तमः सर्वपक्षिणाम् ॥ ४ ॥ बहुशो हि मया दृष्टः सागरे स महाबलः । भुजगानुद्धरन् पक्षी महावेगो महायशाः ॥ ५ ॥ पक्षयोर्यद्बलं तस्य तावद्भुजबलं तव । विक्रमश्चापि वेगश्च न ते तेनावहीयते ॥६॥ बलं बुद्धिश्च तेजश्च सत्त्वं च हरिपुङ्गव । विशिष्टं सर्वभूतेषु किमात्मानं न बुध्यसे ॥ ७ ॥ अप्सराप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला । अञ्जनेति परिख्याता पत्नी केसरिणो हरेः ॥ ८ ॥ विख्याता त्रिषु लोकेषु रूपेणाप्रतिमा भुवि । अभिशापादभूत्तात वानरी कामरूपिणी ॥ ९ ॥ दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मनः । कपित्वे चारुसर्वाङ्गी कदाचित् कामरूपिणी ॥ १० ॥ मानुषं विग्रहं कृत्वा रूपयौवनशालिनी । विचित्रमाल्याभरणा महार्हक्षौमवासिनी । अचरत् पर्वतस्याग्रे प्रावृडम्बुदसन्निभे ॥ ११ ॥ तस्या वस्त्रं विशालाक्ष्याः पीतं रक्तदशं शुभम् । स्थितायाः पर्वतस्याग्रे मारुतोऽपहरच्छनैः ॥ १२ ॥

न न्यूनं भवति । तेनेति पञ्चम्यर्थे तृतीया ॥ ६ ॥ विशिष्टं श्रेष्ठम् ॥ ७ ॥ अप्सरेति निर्देश आर्षः ॥ ८–११ ॥ रामानु०—अभिशापादभूत्तात वानरी कामरूपिणी । दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मनः ॥ इति पाठक्रमः ॥ १० ॥ ११ ॥ रक्तदशं रक्ताग्रम् ॥ १२–१४ ॥

अरिष्टेति । अरिष्टनेमिनः अरिष्टनेमेः कश्यपस्य । नकारान्तत्वमार्षम् ॥ ४ ॥ ९ ॥ पक्षयोरिति । विक्रमादिकं तेन गरुत्मता, समानमिति शेषः । नावहीयते न न्यूनं भवतीत्यर्थः । यद्वा तेनेति पञ्चम्यर्थे तृतीया ॥ ६ ॥ ७ ॥ अप्सराप्सरसामिति निर्देश आर्षः ॥ ८–११ ॥ रक्तदशं रक्ताग्रम् ॥ १२–१४ ॥

स०—अरिष्टनेमिनः अरिष्टनेमेः कश्यपस्य । यद्यप्यरिष्टनेमिशब्दः प्रथमाष्टकषष्ठाध्यायषोडशवर्गीयप्रथमर्चद्वितीयार्धे "स्वस्तिनस्तार्क्ष्योऽरिष्टनेमिः" इति, तथाऽष्टमाष्टकाष्टमाध्यायषट्त्रिंशत्प्रथमर्चतृतीयपादे "अरिष्टनेमिं पृतनाजमाशुम्" इति गरुड एवायं शब्दः श्रुतः । व्याख्यातं चैतद्द्वयं तथा परैः, तथापि गरुडे तार्क्ष्यतार्क्ष्यपुत्रशब्द्वदयं पितापुत्रयोरुभयोरपि वाचक इति कश्यपस्येत्युक्तिस्सम्भवति । यद्वा अरिष्टोऽहिंसितश्चासौ नेमः प्रकाशश्च सोऽस्यास्तीत्यरिष्टनेमी कश्यपस्तस्य । अत इन् । न कर्मधारयादिति समाहितं प्राक् । "नेमः कीलेऽवधौ गर्ते प्रकाशे" इति विश्वः ॥ ४ ॥ महाबलः महत् बलम् उड्डीनमिति यावत्, यस्य स तथेत्यन्यतरस्यार्थः । तेन पुनरुक्तिरिव शारीरान्तरत्वाश्रयणं च नेति श्रेयम् । महाबलः महारूपवान् महास्थौल्यवान् वा । "बलं चन्द्रे रसे रूपे स्येमनि स्थौल्यसैन्ययोः" इति विश्वः ॥९॥

स तामिति । तां गतात्मा तद्गतचित्तः । तां पर्यष्वजतेति सम्बन्धः ॥ १५ ॥ १६ ॥ नेति । न हिंसामि पातिव्रत्यान्न प्रच्यावयामि॥१७॥ न केवलं पातिव्रत्य



स ददर्श ततस्तस्या वृत्तावूरू सुसंहतौ । स्तनौ च पीनौ सहितौ सुजातं चारु चाननम् ॥ १३ ॥ तां विशालायत श्रोणीं तनुमध्यां यशस्विनीम् । दृष्ट्वैव शुभसर्वाङ्गीं पवनः काममोहितः ॥ १४ ॥ स तां भुजाभ्यां दीर्घाभ्यां पर्यष्वजत मारुतः । मन्मथाविष्टसर्वाङ्गो गतात्मा तामनिन्दिताम् ॥ १५ ॥ सा तु तत्रैव सम्भ्रान्ता सुवृत्ता वाक्यमब्रवीत् । एकपत्नीव्रतमिदं को नाशयितुमिच्छति । अञ्जनाया वचः श्रुत्वा मारुतः प्रत्यभाषत ॥ १६ ॥ न त्वां हिंसामि सुश्रोणि माभूत्ते सुभगे भयम् । मनसास्मि गतो यत्त्वां परिष्वज्य यशस्विनीम् ॥१७॥ वीर्यवान् बुद्धिसम्पन्नस्तव पुत्रो भविष्यति । महासत्त्वो महातेजा महाबलपराक्रमः । लङ्घने प्लवने चैव भविष्यति मया समः ॥ १८ ॥ एवमुक्ता ततस्तुष्टा जननी ते महाकपे । गुहायां त्वां महाबाहो प्रजज्ञे प्लवगर्षभम् ॥ १९ ॥ अभ्युत्थितं ततः सूर्यं बालो दृष्ट्वा महावने । फलं चेति जिघृक्षुस्त्वमुत्प्लुत्याभ्युद्गतो दिवम् ॥ २० ॥

भङ्गाभावः, श्रेयोपि भविष्यतीत्याह—वीर्यवानिति ॥१८-२०॥ रामानु०—भविष्यति मया सम इत्यतः परम्—एवमुक्ता । गुहायाम् । अभ्युत्थितम् । फलं चेति जिघृक्षुस्त्व

स तामिति । तां गतात्मा तां पर्यष्वजतेति सम्बन्धः । सतीमिति वा पाठः ॥ १५ ॥ १६ ॥ न त्वामिति । त्वां न हिंसामि पातिव्रत्यान्न च्यावयामि मारुतोऽहं त्वां परिष्वज्य गतोऽस्मीति यत् अतस्ते भयं पातिव्रत्यप्रच्युतिनिमित्तं भयं मा भूदिति योजना ॥ १७ ॥ न केवलं पातिव्रत्यभङ्गाभावः, श्रेयोऽपि भविष्यतीत्याह—वीर्यवानिति ॥ १८ ॥ एवमुक्तेति । गुहायां मन्दरगुहायाम् ॥ १९ ॥ २० ॥

स०—काममोहितत्वादिप्रदर्शनं देवकार्यार्थमेव वायोरिति ज्ञातव्यम् ॥ १४ ॥ पर्यष्वजत आलिलिङ्ग । गतात्मा गर्भरूपेण तद्गतस्वांशः । सतां सद्भिः अनिन्दितां तामित्यन्वयः । कयोगलक्षणा षष्ठी । एतेन तामिति न पुनरुक्तमिव । तां गतात्मा तां पर्यष्वजतेति न क्लिष्टान्वयीत्यपि बोध्यम् । सतीमिति वा कचित्पाठः ॥ १५ ॥ महासत्त्वः महत् शुद्धं सत्त्वं गुणो यस्य स तथा । चतुर्मुखात्मकत्वाद्युक्तं वायोः सत्त्वात्मकत्वम् । लङ्घने समुद्रोपरि प्लवने । अप्लवने समुद्राद्युपर्यपि मन्दगमने ॥ १८ ॥

मिति पाठक्रमः । गुहायां मन्दरगुहायाम् ॥ १८–२० ॥ शतानि त्रीण्येतदनेकशतयोजनानामुपलक्षणम् । "बहुयोजनसाहस्रं क्रामत्येषः" इत्युत्तरकाण्डे वक्ष्यमाण

शतानि त्रीणि गत्वाऽथ योजनानां महाकपे । तेजसा तस्य निर्धूतो न विषादं गतस्ततः ॥ २१ ॥ तावदापततस्तूर्ण मन्तरिक्षं महाकपे । क्षिप्तमिन्द्रेण ते वज्रं क्रोधाविष्टेन धीमता ॥२२॥ तदा शैलाग्रशिखरे वामो हनुरभज्यत । ततो हि नामधेयं ते हनुमानिति कीर्त्यते ॥ २३ ॥ ततस्त्वां निहतं दृष्ट्वा वायुर्गन्धवहः स्वयम् । त्रैलोक्ये भृशसंक्रुद्धो न ववौ वै प्रभञ्जनः ॥२४॥ सम्भ्रान्ताश्च सुराः सर्वे त्रैलोक्ये क्षोभिते सति । प्रसादयन्ति संक्रुद्धं मारुतं भुवनेश्वराः ॥२५॥ प्रसादिते च पवने ब्रह्मा तुभ्यं वरं ददौ । अशस्त्रवध्यतां तात समरे सत्यविक्रम ॥ २६ ॥ वज्रस्य च निपातेन विरुजं त्वां समीक्ष्य च । सहस्रनेत्रः प्रीतात्मा ददौ ते वरमुत्तमम् ॥ २७ ॥ स्वच्छन्दतश्च मरणं ते भूयादिति वै प्रभो । स त्वं केसरिणः पुत्रः क्षेत्रजो भीमविक्रमः ॥२८॥ मारुतस्यौरसः पुत्रस्तेजसा चापि तत्समः । [ ईदृशस्य हि ते तात वर्णयामः कथं बलम् । कार्यं च लोकसंमान्यं कर्तुं शक्तस्त्वमेव हि । भवान् जीवातवेऽस्माकमञ्जना गर्भसंभवः । ] त्वं हि वायुसुतो वत्स प्लवने चापि तत्समः ॥ २९ ॥ वयमद्य गतप्राणा भवानस्त्रातु साम्प्रतम् । दाक्ष्यविक्रमसम्पन्नः पक्षिराज इवापरः ॥ ३० ॥

त्वात् ॥ २१–३० ॥ रामानु०–ततो हि नामधेयं ते हनुमानिति कीर्त्यते इत्यतः परं–ततस्त्वाम् । त्रैलोक्ये । सम्भ्रान्ताश्च । प्रसादयन्ति । प्रसादिते च । अशस्त्रवध्यताम् । वज्रस्य च । सहस्रनेत्रः । स्वच्छन्दतश्च । स त्वं केसरिणः । मारुतस्यौरसः पुत्रस्तेजसा चापि तत्समः । इत्येष पाठक्रमः । अन्यस्तु लेखकप्रमादकृतः ॥ २३--२९ ॥

शतानीति । शतानि त्रीण्येतदनेकयोजनसहस्राणामुपलक्षणम् । उत्तरश्रीरामायणे–" बहुयोजनसाहस्रं क्रामत्येष ततोऽम्बरम् । पितुर्बलाच्च बाल्याच्च भास्कराभ्याश

स०–हनुः गण्डाधोभागः । हनुमान् हनुर्हनूर्वाऽस्यास्तीति स तथा । " हनूमान् हनुमानपि " इति द्विरूपकोशः ॥२३॥ गन्धवहः पुत्रघातेन स्वहिंसावहः । प्रभञ्जनः प्रकर्षेण भञ्जयति कोपेनेदानीं जनानिति प्रगतं भञ्जनं यस्मादिति वा स तथा । गन्धवहः पुत्रसम्बन्धवहः । गन्धनं हिंसेत्युक्तेर्गन्धोपि हिंसा ॥ २४ ॥ क्षेत्रजः पुत्रः । औरसः आलिङ्गनसमये उरस्सम्बन्धेन जातः । " न मे हृषीकाणि पतन्त्यसत्पथे " इति श्रवण उक्तेर्वायोर्लोकानुकरणमिदमिति मन्तव्यम् ॥ २८ ॥ २९ ॥

त्रिविक्रम इति । पृथिवीत्यनेनाण्डकटाहमध्य उक्तः । तस्याः त्रिःसप्तकृत्वः क्रमणं मध्यप्रदेशे । यद्वा यावती महाबलिभूमिः तावती पृथिवी अत्र विवक्षिता । तस्याः प्रदक्षिणं तद्बहिः प्रदेशेन संगच्छते । यद्वा क्रमणानन्तरं जाम्बवान् विजयघोषणार्थं पृथिवीमात्रप्रदक्षिणं कृतवानिति प्रसिद्धिः ।

त्रिविक्रमे मया तात सशैलवनकानना । त्रिःसप्तकृत्वः पृथिवी परिक्रान्ता प्रदक्षिणम् ॥ ३१ ॥ तथा चौषधयोऽस्माभिः सञ्चिता देवशासनात् । निष्पन्नममृतं याभिस्तदासीन्नो महद्बलम् ॥ ३२ ॥ स इदानीमहं वृद्धः परिहीनपराक्रमः । साम्प्रतं कालमस्माकं भवान् सर्वगुणान्वितः ॥ ३३ ॥ तद्विजृम्भस्व विक्रान्तः प्लवतामुत्तमो ह्यसि । त्वद्वीर्यं द्रष्टुकामेयं सर्ववानरवाहिनी ॥३४॥ उत्तिष्ठ हरिशार्दूल लङ्घयस्व महार्णवम् । परा हि सर्वभूतानां हनुमन् या गतिस्तव ॥३५॥ विषण्णा हरयः सर्वे हनूमन् किमुपेक्षसे । विक्रमस्व महावेगो विष्णुस्त्रीन् विक्रमानिव ॥३६॥ ततस्तु वै जाम्बवता प्रचोदितः प्रतीतवेगः पवनात्मजः कपिः । प्रहर्षयंस्तां हरिवीरवाहिनीं चकार रूपं महदात्मनस्तदा ॥ ३७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्किष्किन्धाकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

अन्यत्सर्वमतिरोहितार्थम् ॥ ३१–३७ ॥ रामानु०—चकार रूपं महदात्मनस्तदा । इति पाठः ॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

मागतः ॥ " इति वक्ष्यमाणत्वात् ॥३१–३७॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां षट्षष्टितमः सर्गः ॥६६॥

स०—लङ्घयस्व महार्णवं स्वार्थे णिच् । णिचा महार्णवं व्यसनसमुद्रं कपीँल्लङ्घयस्वेति जाम्बवदाशय इति सूचयति । या तव गतिः समुद्रतरणं सा न केवलं कपिमोदनमात्रफला । अपितु सर्वभूतानां परा पूरयित्री । अभिमतस्येति शेषः । हे हनुमन् ! या तव गतिः रामाख्यादेवता सा सर्वभूतानां परा हि गतोऽतस्तत्सेवार्थमुत्तिष्ठेति योजना वा ॥ ३९ ॥ ततः कपीनामृषभेण चोदितः इति । न केवलं जाम्बवदुक्तिमात्रेण, किन्तु कपीनामृषभेण सुग्रीवेण चोदितः । यद्वा ऋषभेण श्रेष्ठेन वृद्धत्वेन माननीयेन चोदितः । कपीनां कपिः सुग्रीवः इनः स्वामी यस्यास्सा तां कपिवीरवाहिनीं प्रहर्षयन्नित्यन्वयः । पूर्वपद्यात् विष्णुः इवेति चानुवर्तते । तेन च पवनः आत्मजः पुत्रो यस्य सः विष्णुः त्रिविक्रमः । रूपमिव रूपं चकारेति दृष्टान्तदार्ष्टान्तिकभावः कथितः पुनरुक्तिपरिहारोपि जात इत्यवसेयम् । " अवर्धतोच्चैर्हनुमान्महाद्रौ " इत्याद्युक्तेः रूपं महच्चकार स्वीकृतवानित्यर्थः ॥ ३७ ॥

तं दृष्ट्वेत्यादि । जृम्भमाणं वर्धमानम् ॥ १—६ ॥ रामानु०—तं दृष्ट्वा जृम्भमाणं ते । वीर्येण । सहसा । विनेदुः । प्रहृष्टाः । त्रिविक्रमकृतोत्साहं नारायणमिव प्रजाः । इति पाठक्रमः । एषां श्लोकानां केषुचित्कोशेषु भ्रंशो लेखकप्रमादकृतः ॥ १—६ ॥ अशोभतेति । आदीप्तमम्बरीषमिव स्थितं जृम्भमाणस्य तस्य मुखं विधूमः पावक

तं दृष्ट्वा जृम्भमाणं ते क्रमितुं शतयोजनम् । वीर्येणापूर्यमाणं च सहसा वानरोत्तमम् ॥ १ ॥ सहसा शोकमुत्सृज्य प्रहर्षेण समन्विताः । विनेदुस्तुष्टुवुश्चापि हनुमन्तं महाबलम् ॥ २ ॥ प्रहृष्टा विस्मिताश्चैव वीक्षन्ते स्म समन्ततः । त्रिविक्रमकृतोत्साहं नारायणमिव प्रजाः ॥ ३ ॥ संस्तूयमानो हनुमान् व्यवर्धत महाबलः । समाविध्य च लांगूलं हर्षाच्च बलमेयिवान् ॥ ४ ॥ तस्य संस्तूयमानस्य वृद्धैर्वानरपुङ्गवैः । तेजसापूर्यमाणस्य रूपमासीदनुत्तमम् ॥ ५ ॥ यथा विजृम्भते सिंहो विवृद्धो गिरिगह्वरे । मारुतस्यौरसः पुत्रस्तथा सम्प्रति जृम्भते ॥ ६ ॥ अशोभत मुखं तस्य जृम्भमाणस्य धीमतः । अम्बरीषमिवादीप्तं विधूम इव पावकः ॥ ७ ॥ हरीणामुत्थितो मध्यात्संप्रहृष्टतनूरुहः । अभिवाद्य हरीन्वृद्धान् हनुमानिदमब्रवीत् ॥ ८ ॥ अरुजत्पर्वताग्राणि हुताशनसखोऽनिलः । बलवानप्रमेयश्च वायुराकाशगोचरः ॥ ९ ॥

इव अशोभत । अम्बरीषं भ्राष्ट्रम् । "क्लीबेऽम्बरीषं भ्राष्ट्रो ना" इत्यमरः ॥ ७ ॥ ८ ॥ अरुजदित्यादि । अनिलः गमनशीलः । "अन प्राणने" इत्यस्मा

स०—जृम्भमाणम् एधमानकायम् । शतयोजनं क्रमितुम् एकपातेन गन्तुम् । वेगेनापूर्यमाणमित्यनेन वेगकर्तृकपूरणकर्मीभूतमित्यर्थः उक्तः । तेन वेगस्य स्वाभाविकतयोद्बोधस्सूचितो भवति । सहसेत्यनेनालोचनां सूचयति । (तेन) कपयः सहसाः हसेन हासेन सहिता इति वा ॥१॥२॥ त्रिविक्रमं कृतोत्साहं कृते त्रिविष्टपादिव्यापनव्यापारे उत्साहो यस्य स तथा तम् ॥ ३ ॥ लांगूलं वालम् । समाविध्य विलोल्य । कपिजातिस्वभावोऽयम् ॥४—६॥ अम्बरीषोपमं दीप्तमिति पाठः । अम्बरीषोपमम् अम्बरीषेण स्वर्णेनोपमा यस्य स तथा । "अम्बरीषः" इत्यौणादिकसूत्रेण निपातितः शब्दः । "अम्बरीषं रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे। नरकस्य प्रभेदे च किशोरे भास्करेऽपि च । आम्रातकेऽनुपाते च" इति मेदिनी । "अम्बरीषो नृपान्तरे । मार्ताण्डे खण्डपरशौ" इति विश्वः । भ्राष्ट्रमिति व्याख्या भ्राष्ट्रकालिन्नस्तदनुरूपत्वायोगाद्विशेषाभिधानानालोचनमूलेत्युपेक्ष्या ॥ आदीप्तमम्बरीषमिव स्थितं जृम्भमाणस्य तस्य मुखं विधूमः पावक इव अशोभतेति सम्बन्धः । अम्बरीषमिवादीप्तमिति च पाठः । अम्बरीषं भ्राष्ट्रमिव स्थितम् "क्लीबेऽम्बरीषं भ्राष्ट्रो ना" इत्यमरः ॥ ७ ॥ ८ ॥ अरुजादित्यादि । अनिलः गमनशीलः ॥ ९ ॥

दौणादिक इलप्रत्ययः। शीघ्रवेगस्य शीघ्राः वैनतेयादयः तेषां वेग इव वेगो यस्य सः तस्य। तत्साम्यमसहमानस्ततोप्याधिक्यमाह शीघ्रगस्येति। यद्वा शीघ्रवेगस्य अत एव शीघ्रगस्य ॥ ९ ॥ १० ॥ उत्सहेयमिति। विस्तीर्णमिति मेरुविशेषणम्। वानरसेनाभयनिवृत्त्यर्थं स्वोत्कर्षमपि स्वयं

तस्याहं शीघ्रवेगस्य शीघ्रगस्य महात्मनः। मारुतस्यौरसः पुत्रः प्लवने नास्ति मत्समः ॥ १० ॥ उत्सहेयं हि विस्तीर्णमालिखन्तमिवाम्बरम्। मेरुं गिरिमसङ्गेन परिगन्तुं सहस्रशः ॥ ११ ॥ बाहुवेगप्रणुन्नेन सागरेणाहमुत्सहे। समाप्लावयितुं लोकं सपर्वतनदीह्रदम् ॥ १२ ॥ ममोरुजङ्घवेगेन भविष्यति समुत्थितः। समुच्छ्रितमहाग्राहः समुद्रो वरुणालयः ॥ १३ ॥ पन्नगाशनमाकाशे पतन्तं पक्षिसेविते। वैनतेयमहं शक्तः परिगन्तुं सहस्रशः ॥ १४ ॥

निवेदयति ॥११–१३॥ पन्नगाशनं स्वोचिताहारलाभाय निरवधिकत्वरासम्पन्नम्। यद्वा आहारग्रहणत्वरया सर्वेषां भयावहम्। पतन्तं नतु वर्तमानम्। आकाशे स्वोचितक्षेत्रे। पक्षिसेवित इति स्वपरिकरसम्पत्तिरुच्यते। वैनतेयं विनतापुत्रम्। अनेन कौमारावस्थायां बलवेगोत्कर्षः सूच्यते। अहं तस्यापि प्राणदातुः पुत्रः। परिगन्तुं परितो गन्तुं प्रदक्षिणीकर्तुम्। सहस्रशः एकयत्नेन सहस्रशः परिगन्तुं शक्तः। आजानसिद्धसामर्थ्योऽस्मि ॥१४॥

तस्येति। शीघ्रवेगस्य शीघ्रा वैनतेयादयः तेषां वेग इव वेगो यस्य तस्य। यद्वा वेगवत्साम्यमसहमानस्ततोप्याधिक्यमाह शीघ्रगस्येति। शीघ्रान् पुरतस्त्वरितं गच्छतो वैनतेयादीन गच्छतीति शीघ्रगः तस्य ॥१०॥ सम्प्रति हनूमान् वीरवादानाह–उत्सहेयमिति। असङ्गेन अविलम्बेन। परिगन्तुं परितः प्रदक्षिणं कर्तुम् ॥११॥ बाहुवेगेति। समाप्लावयितुं सम्यक् आसमन्तात् प्लावयितुम् ॥ १२ ॥ ममेति। ऊरू च जङ्घे च ऊरुजङ्घं तस्य वेगेन। प्राण्यङ्गत्वादेकवद्भावः ॥ १३ ॥ पक्षिसेविते आकाशे वैनतेयगतिः पदे त्यक्तस्य पदे स्थित्वा ततोऽधः पतन्तं पन्नगाशनं वैनतेयमुपर्यधो भ्रमणेन सहस्रशः परिगन्तुं शक्तः। पन्नगाशनं पतन्तमिति पदद्वयेन आमिषार्थः पतनवेगातिशयः सूच्यते ॥ १४ ॥

स०–शीघ्रवेगस्य शीघ्रं द्रुतं वेगः प्रवाहो यस्य स तथा तस्य सरिदादेः सकाशात् शीघ्रगः शीघ्रं गच्छतीति स तथा, "वेगो जवे प्रवाहे च" इति विश्वः। यद्वा अहंशीघ्रवेगस्येत्येकं पदम्। अहमित्यभिमान्यमानवाचिनाऽभिमानी गृह्यते। तथा च अहमा रुद्रेण शीघ्रवेगं मनः। तस्य सकाशाच्छीघ्रगस्तस्य ॥ १० ॥ **वरुणालयः** अब्धिः। समुद्रः मुद्रया उत्तरणाय करिष्यमाणसेतुरेखाचिह्नेन सह वर्तत इति स तथा। तथा हि सङ्ग्रहरामायणे–"सेतुं विधातुं हरिवाहिनीनां पुरैव कुर्वन्निव लक्ष्मरेखाम्" इति। एतेन नान्यतराधिक्यशङ्का वरुणालय इत्यस्य शुद्धयौगिकत्वाश्रयणेन परिहारश्चास्वारस्यान्न युक्तौ ॥ १३ ॥

उदयात् प्रस्थितम् उदयगिरेर्निर्गच्छन्तम् आदित्यं स्वस्थानात् प्राप्य तेन सह गन्तुं प्रारभ्य ततः पूर्वमेवास्तगिरिमासाद्यानस्तमितं ज्वलन्तं रश्मि मालिनमादित्यमभिगन्तुं प्रत्युद्गन्तुं समुत्सहे। ज्वलन्तमित्यनेन मध्याह्न एवाभिगमनं सूच्यते ॥ १५ ॥ ततः सूर्यप्रत्युद्गमनानन्तरम् । भूमिमसं

उदयात्प्रस्थितं वापि ज्वलन्तं रश्मिमालिनम् । अनस्तमितमादित्यमभिगन्तुं समुत्सहे ॥ १५ ॥ ततो भूमि मसंस्पृश्य पुनरागन्तुमुत्सहे। प्रवेगेनैव महता भीमेन प्लवगर्षभाः ॥ १६ ॥ उत्सहेयमतिक्रान्तुं सर्वानाकाशगोच रान्। सागरं शोषयिष्यामि दारयिष्यामि मेदिनीम् ॥ १७ ॥ पर्वतांश्चूर्णयिष्यामि प्लवमानः प्लवङ्गमाः । हरिष्याम्यूरुवेगेन प्लवमानो महार्णवम् ॥ १८ ॥ लतानां विविधं पुष्पं पादपानां च सर्वशः । अनुयास्यन्ति मामद्य प्लवमानं विहायसा ॥ १९ ॥ भविष्यति हि मे पन्थाः स्वातेः पन्था इवाम्बरे । चरन्तं घोरमाकाशमुत्पति ष्यन्तमेव वा ॥ २० ॥ द्रक्ष्यन्ति निपतन्तं च सर्वभूतानि वानराः। महामेघप्रतीकाशं मां च द्रक्ष्यथ वानराः ॥२१॥

स्पृश्य कुत्राप्यविश्रम्य भीमेन महता प्रवेगेन प्रारब्धवेगेनैव पुनरागन्तुं पुनरप्येकवारं सूर्यमभिगन्तुमुत्सह इत्यर्थः।शतयोजनस्थां लङ्कां गन्तुं किमुत ? इति भावः ॥ १६ ॥ उत्सहेयमिति । आकाशगोचरान् ग्रहनक्षत्रादीन् ॥ १७॥ १८ ॥ लतानामिति । पुष्पमिति जात्येकवचनम् ॥ १९ ॥ रामानु०—विविधमिति वैविध्याभिधानात् अनुयास्यन्ति पुष्पाणीति शेषः ॥ १९ ॥ भविष्यतीति । स्वातेः पन्थाः परिपूर्णताराच्छायापथः ॥ २०–२२ ॥

प्रस्थितम् उदयगिरेर्निर्गच्छन्तमादित्यं स्वस्थानात्प्राप्य तेन सह गन्तुं प्रारभ्य ततः पूर्वमेवास्तगिरिमासाद्य अनस्तमितं ज्वलन्तं रश्मिमालिनमभिगन्तुं प्रत्युद्गन्तुं समुत्सह इत्यर्थः । ज्वलन्तमिति विशेषणेन आदित्यस्यास्तगिरेः प्राच्यां दूरवर्तित्वं द्योत्यते ॥ १५ ॥ तत इति । ततः सूर्यप्रत्युद्गमनानन्तरं भूमिमसंस्पृश्य कुत्र चिदप्यविश्रम्य भीमेन महता वेगेनैव पुनरागन्तुमुत्सह इति सम्बन्धः । शतयोजनान्तरितलङ्कां गन्तुं किमुतेति भावः ॥ १६ ॥उत्सहेयमिति । आकाशगोचरान् ग्रहनक्षत्रादीन् ॥ १७ ॥१८ ॥ हरिष्यामीति । पुष्पमित्येतद् जात्येकवचनम् ॥१९॥ स्वातेः पन्था इव परिपूर्णतारापथ इव, पुष्पानुगतिचिह्नादिति भावः॥२०–२२॥

स०—प्रवेगेन एकपातेन । भीमेन द्विषताम् अभीमेन सतामित्यकारप्रश्लेषाप्रश्लेषाभ्यामर्थद्वयं ज्ञेयम् ॥ १६ ॥

वैनतेयस्येति । मम या शक्तिः सा मारुतस्य वैनतेयस्य वेति संबन्धः ॥ २३–२४ ॥ रामानु०–ऋत इति । सुपर्णराजानमित्यत्र टजभावः छान्दसः ॥ २४ ॥

दिवमावृत्य गच्छन्तं ग्रसमानमिवाम्बरम् । विधमिष्यामि जीमूतान् कम्पयिष्यामि पर्वतान् । सागरं क्षोभयिष्यामि प्लवमानः समाहितः ॥ २२ ॥ वैनतेयस्य सा शक्तिर्मम या मारुतस्य वा ॥ २३ ॥ ऋते सुपर्णराजानं मारुतं वा महाजवम् । न तद्भूतं प्रपश्यामि यन्मां प्लुतमनुव्रजेत् ॥ २४ ॥ निमेषान्तरमात्रेण निरालम्बनमम्बरम् । सहसा निपतिष्यामि घनाद्विद्युदिवोत्थिता ॥ २५ ॥ भविष्यति हि मे रूपं प्लवमानस्य सागरे । विष्णोर्विक्रममाणस्य पुरा त्रीन् विक्रमानिव ॥ २६ ॥ बुद्ध्या चाहं प्रपश्यामि मनश्चेष्टा च मे तथा । अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं प्लवङ्गमाः ॥ २७ ॥ मारुतस्य समो वेगे गरुडस्य समो जवे । अयुतं योजनानां तु गमिष्यामीति मे मतिः ॥२८॥ वासवस्य सवज्रस्य ब्रह्मणो वा स्वयंभुवः । विक्रम्य सहसा हस्तादमृतं तदिहानये ॥ २९ ॥ लङ्कां वापि समुत्क्षिप्य गच्छेयमिति मे मतिः । तमेवं वानरश्रेष्ठं गर्जन्तममितौजसम् ॥ ३० ॥

वैनतेयस्येति । मम या शक्तिः सा वैनतेयस्य मारुतस्य वेति सम्बन्धः । सुपर्णराजानमिति छान्दसः ॥ २३ ॥२४॥ उत्थिता उद्भूता ॥ २५ ॥ २६ ॥ न केवलं पराक्रमः किन्तु ज्ञानसम्पत्तिरप्यस्तीत्याह–बुद्ध्येति ॥२७॥ मारुतस्येति । वेगे मारुतस्य समः, अहमिति शेषः। अमितबलपराक्रमशाली हनुमान् वस्तुतः स्वोक्तविशेषणविशिष्टोपि दुःखसागरमग्नवानरवाहिनीसन्तोषार्थमेतादृशान्यौद्धत्यवचनान्युक्तवान् ‘ प्रहृष्टा हरयस्तत्र समुदैक्षन्त विस्मिताः ’इति वचनात् “ ज्ञातीनां विपुलः शोकस्त्वया तात प्रणाशितः ” इति जाम्बवद्वचनाच्चेत्यवगन्तव्यम् ॥ २८ ॥ सहसा बलेन समुत्क्षिप्य उद्धृत्य गच्छेयम् खे गच्छेयमित्यर्थः ॥२९॥३०॥

स० –अहं वैदेहीं द्रक्ष्यामि, तथा मे मम मनश्चेष्टा मनस्सम्बन्धिव्यापारोस्ति अतः प्लवङ्गमाः प्रमोदध्वमित्यन्वयः । ननु मनस्संशयं सम्पादयति न निश्चयम् । अतः कथं प्रमोदध्वमित्युक्तिरित्यत आह–बुद्ध्येति । अहं बुद्ध्या निश्चयहेतुभूतान्तःकरणविशेषेण । प्रपश्यामि विजानामि । यथोक्तम्–तृतीयस्कन्धगतस्य “ मनो बुद्धिरहङ्कारश्चित्तमित्यन्तरात्मनः । चतुर्धा दृश्यते भेदो वृत्त्या लक्षणरूपया ॥” इति श्लोकस्य तात्पर्ये “ बुद्धिरध्यवसानाय संशयं कुरुते मनः । अभिमाने त्वहङ्कारश्चित्तं स्मरणकारणम् ” इति स्कान्द इति । अहमहमिति द्विरभिधानं पृथक्पृथगन्वयायुक्तम् । समाकर्षेणान्वये सुकरे द्विर्वचनेनाहमेव द्रक्ष्यामि नान्यस्तथाविधोऽस्तीति सूच्यते ॥ २७ ॥ सवज्रस्य वासवस्य इन्द्रस्य स्वयम्भुवो ब्रह्मणश्च हस्तात्सहसा झटिति । अमृतं देवान्नम् । इह मह्याम् । आनये आनेष्यामि । सवज्रस्येत्यनेन पूर्वं क्षिप्तं मदुपरि न कार्यकारि जातमिति स्मारयति । ब्रह्मणो हस्तात विक्रम्य पराक्रमं कृत्वा । सहसा अमृतं स्वयं निस्सहायः । भुवः कर्मणि षष्ठी, भूमिमानये । इह एतत्काले भुवः भूप्रदेशानिति वा । बहुवचनमार्थे । भूम्यादिकं वा ॥ २९ ॥

स्थास्यामश्चैकपादेन, तथा सत्वराः स्मेत्यर्थः ॥ ३५ ॥ रामानु०—स्थास्यामश्चैकपादेन । त्वद्गतानि । ततस्तु । नेयं मम । इति पाठक्रमः । अनयोर्मध्ये स वेगवानिति श्लोकः

प्रहृष्टा हरयस्तत्र समुदैक्षन्त विस्मिताः । तस्य तद्वचनं श्रुत्वा ज्ञातीनां शोकनाशनम् ॥ ३१ ॥ उवाच परिसंहृष्टो जाम्बवान् हरिसत्तमम् । वीरकेसरिणः पुत्र हनुमन् मारुतात्मज ॥ ३२ ॥ ज्ञातीनां विपुलः शोकस्त्वया तात विनाशितः । तव कल्याणरुचयः कपिमुख्याः समागताः ॥ ३३ ॥ मङ्गलं कार्यसिद्ध्यर्थं करिष्यन्ति समाहिताः । ऋषीणां च प्रसादेन कपिवृद्धमतेन च । गुरूणां च प्रसादेन प्लवस्व त्वं महार्णवम् ॥ ३४ ॥ स्थास्यामश्चैकपादेन यावदागमनं तव । त्वद्गतानि च सर्वेषां जीवितानि वनौकसाम् । ततस्तु हरिशार्दूलस्तानुवाच वनौकसः ॥३५॥ नेयं मम मही वेगं लङ्घने धारयिष्यति । एतानीह नगस्यास्य शिलासङ्कटशालिनः । शिखराणि महेन्द्रस्य स्थिराणि च महान्ति च ॥३६॥ एषु वेगं करिष्यामि महेन्द्रशिखरेष्वहम् । नानाद्रुमविकीर्णेषु धातुनिःष्यन्दशोभिषु ॥ ३७॥ एतानि मम निष्पेषं पादयोः प्लवतां वराः । प्लवतो धारयिष्यन्ति योजनानामितः शतम् ॥ ३८ ॥ ततस्तं मारुतप्रख्यः स हरिर्मारुतात्मजः । आरुरोह नगश्रेष्ठं महेन्द्रमरिमर्दनः ॥ ३९ ॥

सर्गकरणं च लेखकप्रमादकृतम् ॥ ३५ ॥ नेयमित्यादि । शिलासङ्कटशालिनः शिलातुङ्गप्रदेशभूयिष्ठस्य । " संकटो दन्तुरे तुङ्गे विपद्रोगविशेषयोः " तस्येति । ज्ञातिशब्दोऽत्र बन्धुमात्रपरः ॥ ३१ ॥ ३२ ॥ कल्याणी रुचिः छाया येषां ते कल्याणरुचयः, हितकांक्षिण इत्यर्थः ॥ ३३ ॥ मङ्गलं मङ्गलानुशासनम् ॥ ३४ ॥ ३५ ॥ शिलासङ्कटशालिनः शिलातुङ्गप्रदेशभूयिष्ठस्य । " सङ्कटो दन्तुरे तुङ्गे " इति निघण्टुः ॥ ३६ ॥ धातुनिष्यन्दो धातुरसः तेन शोभन्त

स०—मङ्गलान्यर्थसिद्ध्यर्थमिति पाठः । अर्थेसिद्ध्यर्थं रामरामासन्दर्शनार्थसिद्ध्यर्थम् । मङ्गलानि मङ्गलहेतून् ॥ ऋषीणां रावणोपद्रुततत्संहारकामानामृषीणाम् । कपिवृद्धाः कपिषु बहुवयस्काः तेषां मतेन तद्बोधितक्रमादिसम्मत्या ॥ ३४ ॥ एकपादेन । अनेन तीव्रं त्वदागमनेन भाव्यमिति सूचयन्तीति सूच्यते । त्वद्गतानि । प्रेमविशेषादुक्तिर्लोके प्राणरूपत्वाद्वनूमति वास्तविकीति ज्ञेयम् ॥३५ ॥ महेन्द्रस्य तन्नामपर्वतस्याग्रेषु महेन्द्रशिखरेषु वेगं गमिष्यामि तानि महेन्द्रस्य शृङ्गाणि स्थिराणि महान्ति चेत्यन्वयः । महान्ति परिमाणतः । पूज्यानीति वा । स्थिराणि मद्वेगसहनशक्तिमन्ति । औत्सुक्यातिशयवशेन महेन्द्रस्य शिखराणीत्युक्तिः पुनरिति ज्ञेयम् । शिलासङ्कटशालिनः शिलानां सङ्कटाः उन्नतप्रदेशाः तैः शालन्ते शोभन्त इति ते तथा । " सङ्कटो दन्तुरे तुङ्गे " इति निघण्टुः । सङ्कटं समूहो वा ॥ ३६ ॥

इति विश्वः ॥ ३६--४० ॥ रामानु०--एषु वेगं करिष्यामि महेन्द्रशिखरेष्वहमित्यतः परम्--नानाद्रुमविकीर्णेषु । एतानि मम । ब्रुवतो धारयिष्यन्ति । ततस्तम् । इति पाठक्रमः । नित्यपुष्पफलद्रुममिति पाठः ॥ ३७--४० ॥ सलिलोत्पीडैः सलिलप्रवाहैः सङ्कुलम् ॥ ४१--४४ ॥ रामानु०--सलिलोत्पीडसंकुलमिति सम्यक् ॥ ४१ ॥

वृतं नानाविधैर्वृक्षैर्मृगसेवितशाद्वलम् । लताकुसुमसंबाधं नित्यपुष्पफलद्रुमम् ॥ ४० ॥ सिंहशार्दूलचरितं मत्तमातङ्गसेवितम् । मत्तद्विजगणोद्घुष्टं सलिलोत्पीडसङ्कुलम् ॥ ४१ ॥ महद्भिरुच्छ्रितं शृङ्गैर्महेन्द्रं स महाबलः । विचचार हरिश्रेष्ठो महेन्द्रसमविक्रमः ॥ ४२ ॥ पादाभ्यां पीडितस्तेन महाशैलो महात्मनः । रराज सिंहाभिहतो महान्मत्त इव द्विपः ॥ ४३ ॥ मुमोच सलिलोत्पीडान् विप्रकीर्णशिलोच्चयः ॥ ४४ ॥ वित्रस्तमृगमातङ्गः प्रकम्पितमहाद्रुमः । नागगन्धर्वमिथुनैः पानसंसर्गकर्कशैः ॥ ४५ ॥ उत्पतद्भिश्च विहगैर्विद्याधरगणैरपि । त्यज्यमानमहासानुः संनिलीनमहोरगः ॥ ४६ ॥ चलशृङ्गशिलोद्घातस्तदाभूत्स महागिरिः । निःश्वसद्भिस्तदाऽऽर्तैस्तु भुजङ्गैरर्धनिस्सृतैः ॥ ४७ ॥ सपताक इवाभाति स तदा धरणीधरः ॥४८॥ ऋषिभिस्त्राससंभ्रान्तैस्त्यज्यमानः शिलोच्चयः । सीदन्महति कान्तारे सार्थहीन इवाध्वगः ॥ ४९ ॥

पानसंसर्गकर्कशैः पानसंसर्गदृढैः । "कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम्" इत्यमरः । पानप्रवृत्तौ दृढाभिनिवेशैरित्यर्थः ॥ ४५ ॥ ४६ ॥ उद्घातः समूहः ॥ ४७ ॥ ४८ ॥ ऋषिभिरिति । सार्थहीनः, अभूदिति शेषः ॥ ४९ ॥ रामानु०--त्यज्यमानः शिलोच्चयः इति पाठः ॥ ४९ ॥

इति तथोक्तेषु ॥ ३७--४० ॥ सिंहेति । सलिलोत्पीडसङ्कुलं तत्र तत्र निस्सृतनिर्झरसलिलसङ्कुलम् ॥ ४१--४३ ॥ मुमोचेति । सलिलोत्पीडान् सलिलसमूहान् ॥४४॥ पानसंसर्गकर्कशैः पानसंसर्गदृढैः, पानप्रवृत्तौ दृढाभिनिवेशैरित्यर्थः ॥ ४५ ॥ ४६ ॥ चलशृङ्गशिलोद्घातः चलानां शृङ्गाणां शिलानां च उद्घाता आहतयो यस्मिन् स तथोक्तः ॥ ४७ ॥ ४८ ॥ सार्थहीनः सहायहीनोऽध्वगः पथिकः इव, अभूदिति शेषः ॥ ४९ ॥

स०--पानसंसर्गकर्कशैः पानेन संसर्गो परस्परतो कर्कशैः आसक्तैः ॥ ४९ ॥

स इति । वेगसमाहितात्मा वेगविषये समर्पितमनाः । मनः समाधाय मनः समाहितं कृत्वा ॥ ५० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे

स वेगवान् वेगसमाहितात्मा हरिप्रवीरः परवीरहन्ता । मनः समाधाय महानुभावो जगाम लङ्कां मनसा मनस्वी ॥ ५० ॥
इत्यार्षे श्रीरामायणे श्रीमद्वाल्मीकीये आदिकाव्ये चतुर्विंशत्सहस्रिकायां संहितायां श्रीमत्किष्किन्धाकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥

इत्थं शठारिगुरुवर्यपदारविन्दसेवारसाधिगतसर्वरहस्यबोधः । गोविन्दराजविबुधः प्रमुदे बुधानां कैष्किन्धकाण्डविषयां विततान टीकाम् ॥

वेगसमाहितात्मा वेगे गमने सम्यगाहितः अर्पितः आत्मा बुद्धिर्येन । मनः समाधाय मनस्समाधानं कृत्वा ॥ ५० ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीनारायणतीर्थशिष्यश्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां किष्किन्धाकाण्डव्याख्यायां सप्तषष्टितमः सर्गः ॥ ६७ ॥

महेशतीर्थरचिता रामपादसमर्पिता । किष्किन्धाकाण्डटीकेयं समाप्ता तत्त्वदीपिका ॥

टीका—इति श्रीमत्परमहंसपरिव्राजकाचार्यरामचन्द्रानन्दसरस्वतीस्वामिविरचिते श्रीरामायणटीकाशिरोमणौ किष्किन्धाकाण्डः समाप्तः ॥

इति किष्किन्धाकाण्डं समाप्तम् ॥

# ॥ इति श्रीमद्वाल्मीकिरामायणे किष्किन्धाकाण्डम् ॥

श्रीभूषणादिव्याख्याचतुष्टयालंकृतं मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृतटिप्पणीसंवलितं च ॥

# THE VĀLMĪKĪYA RĀMĀYAṆA

# श्रीमद्वाल्मीकीयरामायणम्

श्री-गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्यव्याख्यानचतुष्टयालङ्कृतम्

## सुन्दरकाण्डम्

# श्रीमद्वाल्मीकीयरामायणम्

# THE VALMIKIYARAMAYANA

श्री गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्याव्याख्याचतुष्टयालङ्कृतं
मुनिभावप्रकाशिका-सत्यतीर्थीयव्याख्योद्धृत टिप्पणी संवलितं च

# महापुराणम्

| | |
|---|---|
| १. ब्रह्म महापुराणम् | ११. लिंग महापुराणम् |
| २. पद्म महापुराणम् | १२. वाराह महापुराणम् |
| ३. विष्णु महापुराणम् | १३. स्कन्द महापुराणम् |
| ४. शिव महापुराणम् | १४. वामन महापुराणम् |
| ५. नारदीय महापुराणम् | १५. कूर्म महापुराणम् |
| ६. मार्कण्डेय महापुराणम् | १६. मत्स्य महापुराणम् |
| ७. अग्नि महापुराणम् | १७ गरुड महापुराणम् |
| ८. भागवत महापुराणम् | १८. ब्रह्माण्ड महापुराणम् |
| ९. भविष्य महापुराणम् | १९. वायु महापुराणम् |
| १०. ब्रह्मवैवर्त महापुराणम् | २०. विष्णुधर्मोत्तरपुराणम् |

हरिवंश पुराणम् : देवीभागवतम्
वासुकि पुराणम् : कालिका पुराणम्
कल्किपुराणम् : एकाम्रपुराणम्
सौर पुराणम् : नरसिंह पुराणम्

---

[महाभारत-नीलकंठी टीका सहित]

क्षेमराज श्रीकृष्णदासेन सम्पादितस्य मुम्बई श्री वेंकटेश्वरस्टीम मुद्रणालयेन प्रकाशितस्य पुनर्मुद्रणम्

# श्रीमद्वाल्मीकीयरामायणम्

# THE VALMIKIYARAMAYANA

[श्री-गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्यव्याख्या चतुष्टयालङ्कृतं
मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृत टिप्पणी संवलितम् च]

## चतुर्थ खण्ड :: सुन्दरकाण्डम्



NAG PUBLISHERS

Distributed by :
CHOWKHAMBA VIDYA BHAWAN
Chowk, Behind Benaras State Bank, Post Box -1069,
Varanasi-1 Ph. : 320404

NAG PUBLISHERS
11A/U. A. Jawahar Nagar, Delhi-7 (India)

**NAG PUBLISHERS**

(i) 11A/U. A. (Post Office Building), Jawahar Nagar, Delhi-110007
(ii) 8A/U.A. 3, Jawahar Nagar, Delhi-110007
(iii) Jalalpur Mafi (Chunar-Mirzapur) U. P.

I S B N 81-7081-232-1

1990

Price : Rs. 1800.00 (For 7 vols. set)



PRINTED IN INDIA

Published by Nag Sharan Singh for Nag Publishers 11A/U.A., Jawahar Nagar, Delhi-110007 and printed at New Gian offset Printers Delhi

# अथ श्रीवाल्मीकिरामायणे सुन्दरकाण्डम् ॥

श्रीभूषणादिव्याख्याचतुष्टयालंकृतं मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृतटिप्पणीसंवलितं च ॥

श्रीमते रामानुजाय नमः ॥ तत्त्वज्ञानसमुच्चयो घनदयासारस्य सारो महान्निष्कर्षः कमलानिवासचरणद्वन्द्वानुरागस्मृतेः ।
अङ्कुरः परिपाक एष जगतामक्षय्यपुण्यावलेरस्माकं निधिरक्षयो विजयते श्रीमान् शठारिर्गुरुः ॥ १ ॥
श्रीरामायणभूषायै प्रवृत्तो रामभक्तितः । व्याख्यां सुन्दरकाण्डस्य तिलकं करुयाम्यहम् ॥ २ ॥

उक्तं परत्वासाधारणं समस्तकल्याणगुणाकरत्वं किष्किन्धाकाण्डे । अत्र सर्वसंहर्तृत्वमुच्यते, वक्ष्यति हि तत् "ब्रह्मा स्वयंभूः" इत्यादिना । यद्वा पूर्वस्मिन् काण्डे सर्वथा मित्रसंरक्षणं कार्यमित्युक्तम् । अत्र दूतेन पतिव्रतया चैवं वर्तितव्यमित्यर्थः प्रतिपाद्यते । यद्वा पूर्वत्र सर्वरक्षणप्रवृत्तस्य विष्णोराचार्यरूपपुरुषकारलाभ उक्तः । अधुना आचार्यकृत्यमुच्यते । तत्र प्रथमे सर्गे शिक्षणीयशिष्यान्वेषणमुपपाद्यते—तत इत्यादि । ततः जाम्बवत्प्रोत्साहना

**ततो रावणनीतायाः सीतायाः शत्रुकर्शनः । इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥ १ ॥**

नन्तरम् । चारणाः सञ्चारिणो देवगायकाः तैराचरिते पथि आकाशे रावणनीतायास्सीतायाः पदं स्थानमन्वेष्टुमियेष । शत्रुकर्शनः तदन्वेषणविरोधिनिरसनसमर्थः । यद्वा चारणाचरिते पथि गत्वा सीतायाः पदमन्वेष्टुमियेष । यद्वा यथापाठमेवान्वयः । आकाशेऽपि पदन्यासान्वेषणसमर्थोऽयमिति बुद्धिचातुर्यातिशय उच्यते । अनेन शिष्यस्थानान्वेषणपरगुरुस्वरूपमुच्यते । ततः मुद्राप्रदानपूर्वकभगवदनुज्ञालाभानन्तरम् । शत्रुकर्शनः "गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः । अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते॥" इत्युक्तरीत्या अज्ञाननिवर्तनशीलो गुरुः । चारयन्ति आचारयन्ति धर्मानिति चारणाः पूर्वाचार्याः तैराचरिते पथि "महाजनो येन गतस्स पन्थाः" इत्युक्तसदाचारे, स्थित इति शेषः । रावयति असत्प्रलापान्कारयतीति रावणः अविवेकः, तेन नीतायाः स्ववशं प्रापितायाः सीतायाः अनादिभगवत्परतन्त्रचेतनस्य । सीताशब्देनायोनिजत्वोक्तेः स्त्रीलिङ्गेन पारतन्त्र्योक्तेश्च "स्त्रीप्रायमितरत्सर्वम्" इति ह्युक्तम् । पदं स्थानं संसारमण्डलमन्वेष्टुम्, सात्त्विकसंभाषणादिचिह्नं वा । तथोक्तम् "विष्णोः कटाक्षश्चाद्वेष आभिमुख्यं च सात्त्विकैः । संभाषणं षडे

श्रीमत्सुन्दरकाण्डे व्याख्येयानि व्याक्रियन्ते । पूर्वस्मिन् काण्डे "जगाम लङ्कां मनसा मनस्वी" इति मनसा गमनमुक्तम् । इदानीं कायेनापि गमनं कर्तुमैच्छदित्याह-ततो रावणनीताया इति । व इति गायत्र्याः द्वादशाक्षरं ततो रावणनीताया इत्यस्य श्लोकस्य चतुर्थाक्षरेण व इत्यनेन संगृह्णाति । अत्र गन्तुमिति पदमध्याहर्तव्यम् । शत्रुकर्शनो हनुमान् रावणनीतायाः रावणेनापहृतायाः सीतायाः पदं स्थानमन्वेष्टुं चारणाचरिते पथि सुरवर्त्मनि गन्तुमियेषेति योजना ॥ १ ॥

तानि त्वाचार्यप्रातिदेतवः" इति । यद्वा पदं व्यवसायमन्वेष्टुं कस्य चेतनस्य भगवत्प्राप्त्यध्यवसाय इत्यन्वेष्टुम् इयेष । "पदं व्यवसितत्राणस्थान लक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । अत्रैकादशसहस्रश्लोका गताः । द्वादशसहस्रस्यादिमोऽयं श्लोकः । अत्र गायत्र्याः द्वादशमक्षरं प्रयुक्तं तदव लोकनीयं विद्वद्भिः ॥१॥ रामानु०–श्रीमत्सुन्दरकाण्डे व्याख्येयानि व्याक्रियन्ते । पूर्वस्मिन्काण्डे मनसा गमनं कृतमित्युक्तम्, इदानीं कायेनापि गमनं कर्तुमैच्छदित्याशयेनाह–तत इत्यादि । अत्र गन्तुमिति पदमध्याहर्तव्यम् । शत्रुकर्शनो हनुमान् रावणनीतायाः सीतायाः पदं निवासस्थानम् अन्वेष्टुं चारणाचरिते पथि वर्त्मनि गन्तुमियेषेति योजना. ॥ १ ॥

दुष्करं निष्प्रतिद्वन्द्वं चिकीर्षन्कर्म वानरः । समुदग्रशिरोग्रीवो गवां पतिरिवाऽऽबभौ ॥२॥ अथ वैडूर्यवर्णेषु शाद्वलेषु महाबलः । धीरस्सलिलकल्पेषु विचचार यथासुखम् ॥ ३ ॥ द्विजान् वित्रासयन् धीमानुरसा पादपान् हरन् । मृगांश्च सुबहून्निघ्नन् प्रवृद्ध इव केसरी ॥ ४ ॥ नीललोहितमाञ्जिष्ठपत्रवर्णैस्सितासितैः । स्वभावविहितैश्चित्रैर्धातुभिः समलंकृतम् ॥ ५ ॥ कामरूपिभिराविष्टमभीक्ष्णं सपरिच्छदैः । यक्षकिन्नरगन्धर्वैर्देवकल्पैश्च पन्नगैः ॥६॥ स तस्य गिरिवर्यस्य तले नागवरायुते । तिष्ठन् कपिवरस्तत्र ह्रदे नाग इवाबभौ ॥ ७ ॥

दुष्करमिति । निष्प्रतिद्वन्द्वं यथा भवति तथा दुष्करं चिकीर्षन् समुदग्रशिरोग्रीवः समुन्नतशिरोग्रीवः गवां पतिः वृषभः ॥ २ ॥ रामानु०–दुष्करमिति । निष्प्रतिद्वन्द्वं प्रतिद्वन्द्वान्निष्क्रान्तम्, प्रतिबन्धकरहितमित्यर्थः ॥ २ ॥ अथेति । शाद्वलानां सलिलकल्पत्वं वैडूर्यवर्णतया ॥३॥ रामानु०–अथेति । वैडूर्यवर्णेषु हरितत्वसंवलित शौक्ल्यविशिष्टतया वैडूर्यवर्णत्वं शाद्वलानाम्, सलिलकल्पत्वं शैत्यमार्दवादिना ॥ ३ ॥ द्विजानिति । केसरीव बभाविति शेषः ॥ ४ ॥ रामानु०–द्विजानिति । केसरीव विचचारेति पूर्वेणान्वयः॥ ४ ॥ नीलेति, अत्र यच्छब्दोऽध्याहार्यः । यदेवंविधं तलं तत्र तिष्ठन्नित्यन्वयः । पत्रवर्णैः पत्रश्यामैः । "पलाशो हरितो हरित्" इति हलायुधः । सितासितैः कल्माषैः । स्वभावविहितैः स्वतस्सिद्धैः ॥ ५–७ ॥

दुष्करमिति । निष्प्रतिद्वन्द्वं प्रतिद्वन्द्वान्निष्क्रान्तम्, प्रतिबन्धकरहितमित्यर्थः । कर्म समुद्रलङ्घनकर्म । समुदग्रशिरोग्रीवः समुदग्रे शिरोग्रीवे यस्य स तथोक्तः, अत एव गवां पतिः वृषभ इवाबभौ ॥ २ ॥ अथेति । वैडूर्यवर्णेषु मरकतच्छायेषु सलिलकल्पेषु तद्वत् शीतलेष्वित्यर्थः ॥ ३॥ केसरीव विचचारेति पूर्वेण सम्बन्धः ॥४॥ नीलेत्यादिसार्धश्लोकमेकं वाक्यम् । अत्र यच्छब्दोऽध्याहर्तव्यः । नीलाद्रिपत्रसमानवर्णैः । माञ्जिष्ठः पाटलः । सितासितैः कल्माषवर्णैः । स्वभावविहितैः स्वभावसिद्धैः। ॥ १ ॥

स सूर्यायेति । स्वयंभुवे चतुर्मुखाय । भूतेभ्यः देवयोनिभ्यः ॥८॥ अञ्जलिमिति । आत्मयोनये स्वकारणभूताय । दक्षिणः समर्थः । हनुमान् प्राङ्मुखः सन् आत्मयोनये पवनाय अञ्जलिं कृत्वा ततो दक्षिणां दिशं गन्तुं ववृध इत्यन्वयः । हिः पादपूरणे । अञ्जलिं प्राङ्मुखः कुर्वन्निति पाठस्त्वयुक्तः, शतृप्रत्ययेन प्राङ्मुखत्वविशिष्टाञ्जलिकरणदक्षिणदिग्गमनोद्योगयोरेककालिकत्वप्रतीत्या विरोधात् । नहि प्राङ्मुखस्यैव सतो दक्षिणदिग्गमनोद्योगो

स सूर्याय महेन्द्राय पवनाय स्वयंभुवे । भूतेभ्यश्चाञ्जलिं कृत्वा चकार गमने मतिम् ॥ ८ ॥ अञ्जलिं प्राङ्मुखः कृत्वा पवनायात्मयोनये । ततोऽभिववृधे गन्तुं दक्षिणो दक्षिणां दिशम् ॥ ९ ॥ प्लवङ्गप्रवरैर्दृष्टः प्लवने कृतनिश्चयः । ववृधे रामवृद्ध्यर्थं समुद्र इव पर्वसु ॥ १० ॥ निष्प्रमाणशरीरस्सन् लिलङ्घयिषुरर्णवम् । बाहुभ्यां पीडयामास चरणाभ्यां च पर्वतम् ॥ ११ ॥ स चचालाचलश्चापि मुहूर्तं कपिपीडितः । तरूणां पुष्पिताग्राणां सर्वं पुष्पमशातयत् ॥ १२ ॥ तेन पादपमुक्तेन पुष्पौघेण सुगन्धिना । सर्वतः संवृतश्शैलो बभौ पुष्पमयो यथा ॥ १३ ॥ तेन चोत्तमवीर्येण पीड्यमानस्स पर्वतः । सलिलं सम्प्रसुस्राव मदं मत्त इव द्विपः ॥ १४ ॥

युज्यते ॥ ९ ॥ प्लवङ्गेति । रामवृद्ध्यर्थं रामप्रयोजनार्थम् ॥ १० ॥ निष्प्रमाणशरीरः निर्मर्यादशरीरः । बाहुभ्यामित्युक्तिर्वानरस्य चतुर्भिः सञ्चारात् ॥ ११ ॥ स चचालेति । चापीत्येकमव्ययमप्यर्थकम् । अशातयत् अगच्छत् । स्वार्थे णिच् ॥१२–१४॥ रामानु०—स चचालेति । अशातयत् अपातयदित्यर्थः । अत्राप्यचलः चित्रधातुभिस्समलंकृतम् । सपरिच्छदैः सालङ्कारैर्यक्षादिभिराविष्टं यत् तत्र तले तिष्ठन् बभौ ॥ ५–७ ॥ अथेष्टदेवताप्रार्थनापूर्वकं यात्रा समारब्धेत्याह—स सूर्यायेत्यादि ॥ ८ ॥ ९ ॥ रामवृद्ध्यर्थं रामाभ्युदयार्थम् ॥ १० ॥ ११ ॥ मुहूर्तम् अल्पकालम् । अशातयत् अपातयत् ॥ १२–१४ ॥

स०—सूर्याय स्वस्य विद्योपदेष्टृत्वाल्लोकदृष्ट्या । महेन्द्राय व्यवहारसिद्धपञ्च प्रकृतसीताप्रतिकृतिसंनिहितत्वात् । यथोक्तं भगवत्पादैः—"तस्यास्तु तां प्रतिकृतिं प्रविवेश शक्रः" इत्यादि । पवनाय पितृत्वात् । स्वयंभुवे सर्वगुरुत्वात्स्वस्य वरदानाद्वा । भूतेभ्यः विघ्ननिवारकेभ्यो देवेभ्यः । अञ्जलिं हस्तद्वयमेलनम् ॥ ८ ॥ वृद्ध्यर्थं स्वपितृत्वोपाधिना पुनरपि वायुं प्रणमति—अञ्जलिमिति । स्वयोनये स्वकारणाय । अथवा आत्मैव योनिः स्वोत्पत्तिकारणं यस्य तस्मै रामायेति वा ॥ ९ ॥ रामवृद्ध्यर्थं रामयशोवृद्ध्यर्थं यो ववृधे स 'प्लवङ्गप्रवरैर्दृष्ट' इत्यन्वयः । तेन न पौनरुक्त्यम् । अथवा अरामवृद्ध्यर्थमिति छेदः । अर्थस्तु न विद्यते रामो येषां स्वपक्षीयत्वेन ते अरामाः । यद्वा अरामाः रामविरुद्धाः तेषां वृद्ध्यर्थं छेदनार्थम् । "वृधु हिंसायाम्" इति धातुव्याख्यानात् । यद्वा वृद्धिरभिवृद्धिः तस्या अर्थो निवृत्तिस्तमुद्दिश्य । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः ॥ १० ॥

कर्ता ॥ १२ ॥ तेनेति । पुष्पौघेणेत्यत्र "कुमति च" इति णत्वम् । पुष्पमयो यथा पुष्पमय इव ॥ १३ ॥ पीड्यमान इति । रीतीः रेखाः काञ्चनाञ्जनरजतगर्भासु शिलासु विदीर्यमाणासु दृश्यमानास्तास्ता भेदधारा इत्यर्थः ॥ १५ ॥ मुमोचेति । समनःशिलाः धातुविशेषसहिताः । मध्यमेनार्चिषा मध्यमया

पीड्यमानस्तु बलिना महेन्द्रस्तेन पर्वतः । रीतीर्निर्वर्तयामास काञ्चनाञ्जनराजतीः ॥ १५ ॥ मुमोच च शिलाश्शैलो विशालास्समनश्शिलाः । मध्यमेनार्चिषा जुष्टो धूमराजीरिवानलः ॥ १६ ॥ गिरिणा पीड्यमानेन पीड्यमानानि सर्वतः । गुहाविष्टानि भूतानि विनेदुर्विकृतैस्स्वरैः ॥ १७ ॥ स महासत्त्वसन्नादश्शैलपीडानिमित्तजः । पृथिवीं पूरयामास दिशश्चोपवनानि च ॥१८॥ शिरोभिः पृथुभिस्सर्पा व्यक्तस्वस्तिकलक्षणैः । वमन्तः पावकं घोरं ददंशुर्दशनैश्शिलाः॥१९॥ तास्तदा सविषैर्दष्टाः कुपितैस्तैर्महाशिलाः । जज्वलुः पावकोद्दीप्ता बिभिदुश्च सहस्रधा ॥ २० ॥ यानि चौषधजालानि तस्मिन् जातानि पर्वते । विषघ्नान्यपि नागानां न शेकुश्शमितुं विषम् ॥ २१॥ भिद्यतेऽयं गिरिर्भूतैरिति मत्वा तपस्विनः ॥२२॥ त्रस्ता विद्याधरास्तस्मादुत्पेतुः स्त्रीगणैस्सह । पानभूमिगतं हित्वा हैममासवभाजनम् । पात्राणि च महार्हाणि करकांश्च हिरण्मयान् ॥ २३ ॥

ज्वालया, पार्श्वज्वाला हि न धूमनिवर्तिका ॥ १६ ॥ गिरिणेति । विकृतैः विकृतिमद्भिः, दैन्यव्यञ्जकैरित्यर्थः ॥ १७ ॥ स इति । सत्त्वसन्नादः भूतसन्नादः ॥ १८ ॥ शिरोभिरिति । स्वस्तिकं नाम फणोपरि दृश्यमानार्धचन्द्रकम् । ददंशुरिति । दंशनं कोपव्यापारः ॥ १९ ॥ ता इति । बिभिदुः भिन्नाः ॥२०॥ यानीति । अत्र तानीत्यध्याहार्यम् । शमितुं शमयितुम् ॥ २१ ॥ भिद्यत इत्यर्धमेकम् । उत्पेतुरित्यनुपज्यते ॥ २२ ॥ त्रस्ता इत्यादिसार्धश्लोकद्वय

महेन्द्रः काञ्चनाञ्जनराजतीः काञ्चनाञ्जनरजतमयीः । रीतीः पद्धतीः, धारा इत्यर्थः । निर्वर्तयामास प्रादुर्भावयामासेत्यर्थः ॥ १५ ॥ समनश्शिलाः धातुविशेष सहिताः । मध्यमेनार्चिषा जुष्टः, कालीकरालीविस्फुलिङ्गिनीधूम्रवर्णाविश्वरुचिलोहितामनोजवाभिधानासु सप्तस्वग्निजिह्वासु मध्यमया धूम्राख्यया विशिष्टः अग्निः धूमराजीरिव धूमनिचयानिव शैलः पर्वतः शिला मुमोचेति सम्बन्धः ॥ १६॥१७ ॥ स इति । महासत्त्वाः महाजन्तवः तेषां सन्नादः ॥ १८ ॥ शिरोभिरुप लक्षिताः । स्वस्तिकः फणस्थो नीलरेखाविशेषः ॥ १९ ॥ २० ॥ यानीति । शमितुं शमयितुम् ॥ २१ ॥ भूतैः पृथिव्यादिभिस्सह ॥ २२ ॥ २३ ॥

मेकान्वयम् । आसवभाजनं मद्यपात्रम् । पात्राणि भोजनपात्राणि । आर्षभाणि चर्माणि ऋषभचर्मापिनद्धानि खेटकानि । त्सरुः मुष्टिबन्धनम् ॥ २३ ॥ ॥ २४ ॥ कृतेति । कृतकण्ठगुणाः कृतकण्ठस्रजः । क्षीबाः मत्ताः । रक्ताक्षाः मधुपानात् । पुष्कराक्षाः स्वभावत इत्यर्थः ॥ २५ ॥ हारेति । पारिहार्यं वलयम् । तस्थुः तस्थुश्च ॥ २६ ॥ दर्शयन्तः प्रयोजयन्तः । महाविद्याम् अणिमाद्यष्टमहासिद्धिम् । विद्याधरमहर्षयः विद्याधराः महर्षय इवेत्युपमित

लेह्यानुच्चावचान् भक्ष्यान् मांसानि विविधानि च । आर्षभाणि च चर्माणि खड्गांश्च कनकत्सरून् ॥२४॥ कृतकण्ठगुणाः क्षीबा रक्तमाल्यानुलेपनाः । रक्ताक्षाः पुष्कराक्षाश्च गगनं प्रतिपेदिरे ॥ २५ ॥ हारनूपुरकेयूरपारिहार्यधराः स्त्रियः । विस्मितास्सस्मितास्तस्थुराकाशे रमणैस्सह ॥२६॥ दर्शयन्तो महाविद्यां विद्याधरमहर्षयः । सहितास्तस्थुराकाशे वीक्षांचक्रुश्च पर्वतम् ॥ २७ ॥ शुश्रुवुश्च तदा शब्दमृषीणां भावितात्मनाम् । चारणानां च सिद्धानां स्थितानां विमलेऽम्बरे ॥२८॥ एष पर्वतसङ्काशो हनूमान् मारुतात्मजः । तितीर्षति महावेगस्समुद्रं मकरालयम् ॥ २९ ॥ रामार्थं वानरार्थं च चिकीर्षन् कर्म दुष्करम् । समुद्रस्य परं पारं दुष्प्रापं प्राप्तुमिच्छति ॥ ३० ॥

समासः । " उपमितं व्याघ्रादिभिः सामान्याप्रयोगे " इत्यनुशासनात् । विद्याधरश्रेष्ठा इत्यर्थः । विद्याधरा महर्षयश्चेति द्वन्द्वसमासो न युक्तः, इति विद्याधराः श्रुत्वेत्युपरितनश्लोके विद्याधराणामेवोपादानात् ॥ २७ ॥ शुश्रुवुरिति । सा पुनरत्राकाशस्थितिः । शुश्रुवुः, विद्याधरा इति शेषः । इति विद्याधराः श्रुत्वेत्युपसंहारात् ॥ २८ ॥ २९ ॥ रामानु०-एष इति । तितीर्षति महावेगमिति पाठे क्रियाविशेषणम् ॥ २९ ॥ समुद्रं तितीर्षतीत्युक्तम् । तस्य प्रयोजनकथनायोक्तमनुवदति-रामार्थमिति ॥ ३०-३२ ॥

आर्षभाणि ऋषभचर्मपिनद्धानि । चर्माणि फलकानि । कनकत्सरून् सुवर्णखड्गमुष्टीन् ॥ २४ ॥ कण्ठगुणाः कण्ठस्रजः । क्षीबा मत्ताः ॥ २५ ॥ हारेति । पारिहार्यः वलयः " आवापकः पारिहार्यः कटकं वलयोऽस्त्रियाम् " इत्यमरः ॥ २६ ॥ विद्याधरमहर्षयः विद्याधरश्रेष्ठा इत्यर्थः । महाविद्याम् अणिमादिसिद्धिम् ॥ २७ ॥ शब्दं वाक्यम् ॥ २८ ॥ तमेवाह-एष इत्यादि ॥ २९ ॥ रामार्थमिति । वानरार्थं तेषां रामकार्ये तथाभिमानात् ॥ ३०-३२ ॥

आनुपूर्व्येणेति । आनुपूर्व्येण वृत्तं क्रमेण वृत्तम् ॥ ३३ ॥ ३४ ॥ लङ्घनोद्योगकालिकावस्थां वर्णयति—बाहू इत्यादिना । बाहू संस्तम्भयामास निश्चली चकार । कट्यां ससाद शरीरं संचुकोचेत्यर्थः । चरणौ संचुकोच च ॥ ३५ ॥ रामानु०—बाहू इति । संस्तम्भयामास पर्वतोपरि दृढविन्यासेन निष्पन्दीचकार ।

इति विद्याधराः श्रुत्वा वचस्तेषां महात्मनाम् । तमप्रमेयं ददृशुः पर्वते वानरर्षभम् ॥ ३१ ॥ दुधुवे च स रोमाणि चकम्पे चाचलोपमः । ननाद सुमहानादं सुमहानिव तोयदः ॥ ३२ ॥ आनुपूर्व्येण वृत्तं च लाङ्गूलं रोमभिश्चितम् । उत्पतिष्यन् विचिक्षेप पक्षिराज इवोरगम् ॥ ३३ ॥ तस्य लाङ्गूलमाविद्धमात्तवेगस्य पृष्ठतः । ददृशे गरुडेनेव ह्रियमाणो महोरगः ॥ ३४ ॥ बाहू संस्तम्भयामास महापरिघसन्निभौ । ससाद च कपिः कट्यां चरणौ संचुकोच च ॥ ३५ ॥ संहृत्य च भुजौ श्रीमान् तथैव च शिरोधराम् । तेजस्सत्त्वं तथा वीर्यमाविवेश स वीर्यवान् ॥ ३६ ॥ मार्गमालोकयन् दूरादूर्ध्वं प्रणिहितेक्षणः । रुरोध हृदये प्राणानाकाशमवलोकयन् ॥ ३७ ॥ पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुञ्जरः । निकुञ्च्य कर्णौ हनुमानुत्पतिष्यन् महाबलः । वानरान् वानरश्रेष्ठ इदं वचनमब्रवीत् ॥ ३८ ॥ यथा राघवनिर्मुक्तश्शरः श्वसनविक्रमः । गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम् ॥ ३९ ॥

कट्यां ससाद कटिप्रदेशे कृशो बभूव, चरणौ संचुकोच संकोचयामास च ॥ ३५ ॥ संहृत्येति । संहृत्य संकोच्य ॥ ३६ ॥ रामानु०—संहृत्येति । वीर्यवान् वीर्यमाविवेशेत्यभिधानात् पूर्वं विद्यमानमेव वीर्यं विशेषतोऽधिष्ठितवानित्यवगम्यते । तेजःसत्त्वयोरप्येवं द्रष्टव्यम् । तेजः पराभिभवनसामर्थ्यम् । सत्त्वं बलम् । वीर्यम् आकाशाद्यभिनिष्क्रमणसामर्थ्यम् ॥ ३६ ॥ मार्गमिति । प्राणान् उच्छ्वासरूपान् । प्राणनिरोधो व्योमोत्पतनार्थम् ॥ ३७–३९ ॥ रामानु०—यथेति । राघवशरदृष्टान्तेन स्वस्याविलम्बितत्वाप्रतिहतत्वामोघत्वादिकं

आनुपूर्व्यात् वृत्तं लाङ्गूलं विचिक्षेपेत्यन्वयः ॥ ३३ ॥ आविद्धं भुग्नम् ॥ ३४ ॥ बाहू संस्तम्भयामास पर्वतोपरि दृढविन्यासेन निष्पन्दीचकार । ससाद च कपिः कट्याम् इति कायप्रसारणात् कटिप्रदेशो कृशोऽभूदित्यर्थः । चरणौ संचुकोच सङ्कोचयामास ॥३५॥ तेजः पराभिभवने सामर्थ्यम् । सत्त्वं बलम् ॥ ३६–४० ॥

सूचितवान् ॥ ३९ ॥ नहीति । हिशब्दः पादपूरणे ॥ ४० ॥ यदीति । अकृतश्रमः अप्राप्तश्रमः । राक्षसराजानमित्यत्र टजभाव आर्षः । आनयिष्यामि आनेष्यामि ॥ ४१–४४ ॥ समुत्पततीति । तस्मिन् हनुमति वेगात्समुत्पतति सति । नगरोहिणः शैलरुहा वृक्षाः विटपान् संहृत्य आदाय, समुत्पेतु

नहि द्रक्ष्यामि यदि तां लङ्कायां जनकात्मजाम्। अनेनैव हि वेगेन गमिष्यामि सुरालयम् ॥४०॥ यदि वा त्रिदिवे सीतां न द्रक्ष्याम्यकृतश्रमः । बद्ध्वा राक्षसराजानमानयिष्यामि रावणम् ॥ ४१ ॥ सर्वथा कृतकार्योऽहमेष्यामि सह सीतया । आनयिष्यामि वा लङ्कां समुत्पाट्य सरावणाम् ॥ ४२ ॥ एवमुक्त्वा तु हनुमान् वानरान् वानरोत्तमः ॥ ४३ ॥ उत्पपाताथ वेगेन वेगवानविचारयन् । सुपर्णमिव चात्मानं मेने स कपिकुञ्जरः ॥ ४४ ॥ समुत्पतति तस्मिंस्तु वेगात्ते नगरोहिणः । संहृत्य विटपान् सर्वान् समुत्पेतुस्समन्ततः ॥ ४५ ॥ स मत्तकोयष्टिभकान् पादपान् पुष्पशालिनः । उद्वहन्नूरुवेगेन जगाम विमलेऽम्बरे ॥ ४६ ॥ ऊरुवेगोद्धता वृक्षा मुहूर्तं कपिमन्वयुः । प्रस्थितं दीर्घमध्वानं स्वबन्धुमिव बान्धवाः ॥ ४७ ॥ तमूरुवेगोन्मथितास्सालाश्चान्ये नगोत्तमाः । अनुजग्मुर्हनूमन्तं सैन्या इव महीपतिम् ॥ ४८ ॥ सुपुष्पिताग्रैर्बहुभिः पादपैरन्वितः कपिः । हनुमान् पर्वताकारो बभूवाद्भुतदर्शनः ॥ ४९ ॥ सारवन्तोऽथ ये वृक्षा न्यमज्जन् लवणाम्भसि । भयादिव महेन्द्रस्य पर्वता वरुणालये ॥ ५० ॥ स नाना कुसुमैः कीर्णः कपिस्साङ्कुरकोरकैः । शुशुभे मेघसङ्काशः खद्योतैरिव पर्वतः ॥ ५१ ॥

रित्यर्थः ॥ ४५ ॥ संग्रहेणोक्तं विवृणोति–स मत्तेत्यादिना । कोयष्टिभकः कोयष्टिः ॥ ४६ ॥ ४७ ॥ तमिति । तमूरुवेगेति पाठः । ऊरुवेगेन उन्मथिताः सालाः सालवृक्षाः । अन्ये नगोत्तमाः अन्ये वृक्षश्रेष्ठाः । सैन्याः सेनायां समवेताः पुरुषाः । "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः ॥४८॥४९॥ सारवन्तः स्थिरांशवन्तः । "सारो बले स्थिरांशे च" इत्यमरः ॥५०॥ स नानाकुसुमैरिति। मेघसङ्काशः स कपिरित्यन्वयः । खद्योतैः

आनयिष्यामि आनेष्यामि ॥ ४१–४४ ॥ समुत्पतति हनूमति समुद्गच्छति सति नगरोहिणः पर्वतस्थवृक्षाः विटपान् संहृत्य संक्षिप्य, वेगात् समुत्पेतुरित्यर्थः ॥ ४५–४९ ॥ सारवन्तः गुरुत्वातिशययुक्ताः ॥ ५० ॥ ५१ ॥

रात्राविति शेषः ॥ ५१ ॥ विमुक्ता इति । अवशीर्यन्त अवाशीर्यन्त । आगमशासनस्यानित्यत्वादडभावः । स्थितवन्त इत्यर्थः । निवृत्ताः बन्धूननुगम्य निवृत्ताः । सुहृत्पक्षे सलिल इति सामीप्ये सप्तमी । "उदकान्तात् स्निग्धो बन्धुमनुव्रजेत्" इत्युक्तेः ॥ ५२ ॥ रामानु०–विमुक्ता इति । तस्य वेगेन विमुक्ताः दूरगमनहेतुभूतवेगेन हेतुना विमुक्ताः गतसंबन्धाः अवशीर्यन्त । आगमशासनस्यानित्यत्वादडभावः । पुष्पाणि मुक्त्वा सलिले अवशीर्यन्तेत्यनेन प्रस्थितेभ्यः सहृद्भ्यो निवृत्तानामश्रुमोक्षण पूर्वकं शोकसागरे निमग्नानां सुहृदां समाधिर्ध्वन्यते ॥ ५२ ॥ लघुत्वेनोपपन्नं लघुत्वेन युक्तम् ॥ ५३ ॥ रामानु०–हनुमन्तमनुद्रुताः सारवन्तो वृक्षाः प्रथमं सागरे पतिताः अल्प

विमुक्तास्तस्य वेगेन मुक्त्वा पुष्पाणि ते द्रुमाः । अवशीर्यन्त सलिले निवृत्ताः सुहृदो यथा ॥ ५२ ॥ लघुत्वेनोपपन्नं तद्विचित्रं सागरेऽपतत् । द्रुमाणां विविधं पुष्पं कपिवायुसमीरितम् ॥ ५३ ॥ ताराचितमिवाकाशं प्रबभौ स महार्णवः ॥ ५४ ॥ पुष्पौघेणानुबद्धेन नानावर्णेन वानरः । बभौ मेघ इवाकाशे विद्युद्गणविभूषितः ॥ ५५ ॥ तस्य वेगसमाधूतैः पुष्पैस्तोयमदृश्यत । ताराभिरभिरामाभिरुदिताभिरिवाम्बरम् ॥ ५६ ॥ तस्याम्बरगतौ बाहू ददृशाते प्रसारितौ । पर्वताग्राद्विनिष्क्रान्तौ पञ्चास्याविव पन्नगौ ॥ ५७ ॥ पिबन्निव बभौ चापि सोर्मिजालं महार्णवम् । पिपासुरिव चाकाशं ददृशे स महाकपिः ॥ ५८ ॥ तस्य विद्युत्प्रभाकारे वायुमार्गानुसारिणः । नयने विप्रकाशेते पर्वतस्थाविवानलौ ॥ ५९ ॥

सारास्ततोऽप्यधिकं गत्वा जले विशीर्णा इत्युक्त्वा पुष्पाण्यप्यतिलघुत्ववत्तया मद्दूरं गत्वा पतितानीत्याह लघुत्वेनेति ॥ ५३ ॥ तारेत्यर्धमेकं वाक्यम् । ताराचितमिव आकाशं प्रबभौ स महार्णवः ॥ ५४ ॥ पुष्पौघेणेति । अनुबद्धेन व्याप्तेन ॥ ५५–५७ ॥ रामानु०–तस्येति । बाह्वोः पञ्चशाखत्वात् पञ्चास्यपन्नगदृष्टान्तः ॥ ५७ ॥ पिबन्निवेति । अर्णवं पिबन्निव आकाशं पिपासुरिवेत्याभ्यामस्य महानुद्योगस्सूच्यते । लङ्घनवेगेन सहसा क्षीयमाणे सागरविस्तारे स पीयमान इव भवति एव मम्बरं च । ततोऽतिवेगेन गच्छन् स महार्णवं पिबन्निव बभौ तथा आकाशमपीत्याहुः ॥ ५८ ॥ रामानु०–पिबन्निवेति । सागरप्रत्यासन्नप्रदेशगमनवेलायां महोदधिं तस्य हनूमतो वेगेन विमुक्ताः द्रुमाः पुष्पाणि मुक्त्वा सलिले अवशीर्यन्त । अडभाव आर्षः । सुहृदो यथेति । बन्धुप्रस्थापनार्थं गताः सुहृदो बन्धून् प्रस्थाप्य यथा निवर्तन्ते तथा द्रुमा निवृत्ता इत्यर्थः ॥ ५२–५७ ॥ पिबन्निवेति । अर्णवसमीपगमनवेलायामुदधिं पिबन्निव बभौ, उपरि गमनावस्थायाम् आकाशं पिपासुरिव

पिबान्निव बभौ, तदुपरि गमनावस्थायामाकाशं पिपासुरिव ददृशे ॥ ५८ ॥ ५९ ॥ पिङ्गे पिङ्गलवर्णे । पिङ्गाक्षाणां वानराणां मुख्यस्य । परिमण्डले मण्डलाकारे चन्द्रसूर्याविवेत्यभूतोपमा ॥ ६० ॥ मुखमिति । तत्सूर्यमण्डलं सन्ध्यासूर्यमण्डलम् ॥६१॥ लाङ्गूलमिति । समाविद्धम् उन्नतीकृतम् ॥ ६२ ॥ ६३ ॥

पिङ्गे पिङ्गाक्षमुख्यस्य बृहती परिमण्डले । चक्षुषी संप्रकाशेते चन्द्रसूर्याविवोदितौ ॥ ६० ॥ मुखं नासिकया तस्य ताम्रया ताम्रमाबभौ । सन्ध्यया समभिस्पृष्टं यथा तत्सूर्यमण्डलम् ॥ ६१ ॥ लाङ्गूलं च समाविद्धं प्लवमानस्य शोभते । अम्बरे वायुपुत्रस्य शक्रध्वज इवोच्छ्रितः ॥६२॥ लाङ्गूलचक्रेण महान् शुक्लदंष्ट्रोऽनिलात्मजः । व्यरोचत महाप्राज्ञः परिवेषीव भास्करः ॥ ६३ ॥ स्फिग्देशेनाभिताम्रेण रराज स महाकपिः । महता दारितेनेव गिरिर्गैरिकधातुना ॥ ६४ ॥ तस्य वानरसिंहस्य प्लवमानस्य सागरम् । कक्षान्तरगतो वायुर्जीमूत इव गर्जति ॥ ६५ ॥ खे यथा निपतन्त्युल्का ह्युत्तरान्ताद्विनिःसृता । दृश्यते सानुबन्धा च तथा स कपिकुञ्जरः ॥ ६६ ॥ पतत्पतङ्गसङ्काशो व्यायतः शुशुभे कपिः । प्रवृद्ध इव मातङ्गः कक्ष्यया बद्ध्यमानया ॥ ६७ ॥ उपरिष्टाच्छरीरेण च्छायया चावगाढया । सागरे मारुताविष्टा नौरिवासीत्तदा कपिः ॥ ६८ ॥

स्फिग्देशेन वालमूलप्रदेशेन ॥ ६४ ॥ गर्जति अगर्जत् ॥ ६५ ॥ खे यथेति । सानुबन्धा, सपुच्छा उल्का हि पुच्छयुक्ता निपतति ॥ ६६ ॥ रामानु०—खे यथेति । उल्कापातोपमया रावणस्य भाव्यशुभं सूच्यते ॥ ६६ ॥ पतदिति । पतङ्गः सूर्यः । व्यायतो दीर्घः । प्रवृद्ध इव दीर्घ इव, कक्ष्यायां बद्ध्यमानायां हि मातङ्गो दीर्घो भवति ॥ ६७ ॥ रामानु०—पतदिति । पतत्पतङ्गसंकाशः गच्छत्सूर्यसदृशः व्यायतः कपिः बध्यमानया कक्ष्यया प्रवृद्धः दीर्घभूतो मातङ्ग इव शुशुभ इति योजना । कक्ष्या इभमध्यबन्धनम् । "कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने ।" इत्यमरः॥ ६७ ॥ उपरिष्टादिति । नौर्जलावगाढेनाधोभागेन व्योमावगाढेन चोर्ध्वं ददृशे ॥ ५८ ॥ ५९ ॥ परिमण्डले वर्तुलाकारे ॥ ६०–६३ ॥ स्फिग्देशेन वालमूलप्रदेशेन ॥ ६४ ॥ गर्जति जगर्ज ॥ ६५ ॥ सानुबन्धा सूक्ष्मोल्कासहिता ॥ ६६ ॥ पतत्पतङ्गसङ्काशः गच्छत्सूर्यसदृशः । व्यायतः दीर्घाकारः । कपिः बध्यमानया कक्ष्यया गजमध्यबन्धनरज्ज्वा । प्रवृद्धः दीर्घीभूतो मातङ्ग इव शुशुभ इति योजना ॥ ६७ ॥ उपरिष्टात्स्थितशरीरेणावगाढया सागरान्तःप्रविष्टया छायया प्रतिबिम्बेन चैकाकारस्सन् सागरान्तर्मग्नमूला बहिष्ठोर्ध्वभागा मारुताविष्टा

भागेन गच्छति । अयं च उपरिगतशरीरेणाधोजलावगाढच्छायया चैकाकारस्सन् मारुतपूरितकटा नौरिवासीत् ॥ ६८ ॥ यं यमिति । सोन्माद इव समुद्रर्ष इव, समुद्धतजल इत्यर्थः ॥ ६९ ॥ रामानु०–यमिति । समुद्रः सोन्माद इव अपस्मारीव लक्ष्यते, भ्रमणफेनजलोद्गमनक्रोशनादिमत्त्वादियमुपमा ॥ ६९ ॥ सागरस्येति ।

यं यं देशं समुद्रस्य जगाम स महाकपिः । स स तस्योरुवेगेन सोन्माद इव लक्ष्यते ॥६९॥ सागरस्योर्मिजालाना मुरसा शैलवर्ष्मणाम् । अभिघ्नंस्तु महावेगः पुप्लुवे स महाकपिः ॥ ७० ॥ कपिवातश्च बलवान् मेघवातश्च निःसृतः । सागरं भीमनिर्घोषं कम्पयामासतुर्भृशम् ॥७१॥ विकर्षन्नूर्मिजालानि बृहन्ति लवणाम्भसि । पुप्लुवे कपि शार्दूलो विकिरन्निव रोदसी ॥ ७२ ॥ मेरुमन्दरसङ्काशानुद्धतान् स महार्णवे । अतिक्रामन्महावेगस्तरङ्गान् गणय न्निव ॥ ७३ ॥ तस्य वेगसमुद्धूतं जलं सजलदं तदा । अम्बरस्थं विबभ्राज शारदाभ्रमिवाततम् ॥ ७४ ॥ तिमिनक्र झषाः कूर्मा दृश्यन्ते विवृतास्तदा । वस्त्रापकर्षणेनेव शरीराणि शरीरिणाम् ॥ ७५ ॥ प्लवमानं समीक्ष्याथ भुजङ्गाः सागरालयाः । व्योम्नि तं कपिशार्दूलं सुपर्ण इति मेनिरे ॥ ७६ ॥

शैलवर्ष्मणां शैलतुल्यानाम् । "वर्ष्म देहप्रमाणयोः" इति सज्जनः ॥ ७० ॥ रामानु०–सागरस्येति । ऊर्मिजालानामित्यत्र "न लोकाव्यय०–" इति षष्ठ्या निषेधेपि ऋषिप्रयोगात् साधुत्वम् । उरसा उरश्शब्देन उरोवेगजनितो वायुर्लक्ष्यते ॥ ७० ॥ ७१ ॥ विकिरन्निव विभजन्निव । रोदसी द्यावापृथिव्यौ ॥ ७२ ॥ मेर्विति । अतिक्रामत् अत्यक्रामत् ॥ ७३ ॥ तस्येति । तस्य हनुमतः । वेगेन ऊरुवातेन । समुद्धूतं समुत्थापितम् । सजलदं जलं जलदो जलं चोद्धूतमित्यर्थः ॥ ७४ ॥ रामानु०–तस्येति । तस्य वेगसमुद्धूतमिति पाठः । जलं सजलदमित्यनेन समुद्धूतं जलं मेघमण्डलपर्यन्तमभूदित्यवगम्यते ॥७४ ॥ तिमीति । तिमयो महामत्स्याः, नक्राः ग्राहाः,

वायुप्रेरिता नौरिवासीदिति योजना ॥ ६८ ॥ सोन्माद इव समुद्रः अपस्मारीव लक्ष्यते, भ्रमणफेनजलोद्गमनघोषादिमत्त्वादियमुपमा ॥ ६९ ॥ शैलवर्ष्मणा शैल सदृशेन । उरश्शब्देन उरोवेगतो जनितवायुर्लक्ष्यते ॥ ७० ॥ ७१ ॥ विकर्षन्निव रोदसी द्यावापृथिव्यौ ऊर्मिजालानि विकिरन् विक्षिपन्निव पुप्लुव इति सम्बन्धः ॥ ७२ ॥ ७३ ॥ वेगसमुद्धुष्टं वेगेनोत्कीर्णम् अत एवाम्बरस्थम् अत एव सजलदं जलदसहचरं जलं शारदाभ्रमिव स्वयं च जलदविशेषवत् विबभ्राजेत्यर्थः । वेगसमुद्धूतमित्यपि पाठः ॥ ७४ ॥ शरीराणि अवयवाः ॥ ७५–७७ ॥

झषाः मकराः । विवृताः जलविभेदेन प्रकाशिताः ॥ ७५ ॥ ७६ ॥ दशयोजनविस्तीर्णेति । ननु त्रिंशद्योजनायतत्वे चतुर्थपदेपि लङ्काप्राप्तिः स्यात् मैनाकसंवादसुरसासंवादादिकं च विरुद्ध्येत । नहि बिम्बादधिकपरिमाणत्वं प्रतिबिम्बस्य संभवतीति न शङ्कनीयम्, छायाशब्दो हि नात्र प्रतिबिम्बपरः किन्त्वनातपपरः । प्रातरेव हि समुद्रतरणमुक्तम्, तदा तस्य छाया समुद्रे तथाप्रमाणा दृश्येतैव ॥ ७७ ॥ श्वेताभ्रेति । अभ्रघनः अभ्र

दशयोजनविस्तीर्णा त्रिंशद्योजनमायता । छाया वानरसिंहस्य जले चारुतराऽभवत् ॥ ७७ ॥ श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी । तस्य सा शुशुभे छाया वितता लवणाम्भसि ॥७८॥ शुशुभे स महातेजा महाकायो महाकपिः । वायुमार्गे निरालम्बे पक्षवानिव पर्वतः ॥ ७९ ॥ येनासौ याति बलवान् वेगेन कपिकुञ्जरः । तेन मार्गेण सहसा द्रोणीकृत इवार्णवः ॥ ८० ॥ आपाते पक्षिसङ्घानां पक्षिराज इव व्रजन् । हनुमान् मेघजालानि प्रकर्षन् मारुतो यथा ॥ ८१ ॥ पाण्डुरारुणवर्णानि नीलमाञ्जिष्ठकानि च । कपिनाऽऽकृष्यमाणानि महाभ्राणि चकाशिरे ॥ ८२ ॥ प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः । प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥ ८३ ॥ प्लवमानं तु तं दृष्ट्वा प्लवङ्गं त्वरितं तदा । ववर्षुः पुष्पवर्षाणि देवगन्धर्वदानवाः ॥ ८४ ॥ ततापं न हि तं सूर्यः प्लवन्तं वानरोत्तमम् । सिषेवे च तदा वायू रामकार्यार्थसिद्धये ॥ ८५ ॥ ऋषयस्तुष्टुवुश्चैनं प्लवमानं विहायसा । जगुश्च देवगन्धर्वाः प्रशंसन्तो महौजसम् ॥ ८६ ॥

मूर्तिः ॥७८॥ रामानु०—श्वेतेति । श्वेताभ्रघनराजीव । अत्र श्वेतशब्देन स्वच्छतोच्यते, घनशब्देन सान्द्रता । "घनं निरन्तरं सान्द्रम्" इत्यमरः । निर्मलाभ्रसान्द्रपंक्तिरिवेत्यर्थः॥७८॥७९॥ येनेति । द्रोणी कटाहः ॥ ८० ॥ आपात इति । आपाते मार्गे ॥ ८१—८४ ॥ ततापेति । रामकार्यं सीतान्वेषणम् तदेवार्थः प्रयोजनं तस्य सिद्धये लाभाय, तद्धेतुभूतहनुमच्छ्रमनिवर्तनायेत्यर्थः ॥ ८५ ॥ रामानु०—ततापेति । सिषेवे इत्यनेन पुत्रत्वेपि रामकार्यप्रवृत्तत्वात् पूज्यतैव द्योत्यते ॥ ८५ ॥ ८६ ॥

श्वेतेति । श्वेताभ्रघनराजीव, अत्र श्वेतशब्देन स्वच्छतोच्यते, घनशब्देन सान्द्रता, तथाच निर्मलाभ्रसान्द्रपङ्क्तिरित्यर्थः ॥ ७८—८० ॥ आपात इति । आपतन्ति

नागा इति । रक्षांसि दिक्पालकरक्षस्सम्बन्धीनि ॥ ८७ ॥ तस्मिन्निति । मानार्थी बहुमानार्थी । स्वयं सागरत्वादिति भावः ॥ ८८ ॥ साहाय्यमिति । सर्ववाच्यः सर्वप्रकारेण निन्द्यः । विवक्षतां वक्तुमिच्छताम् ॥ ८९–९१ ॥ रामानु०–साहाय्यमिति । विवक्षतां वक्तुमिच्छताम्, वागिन्द्रियवतामित्यर्थः ।



नागाश्च तुष्टुवुर्यक्षा रक्षांसि विबुधाः खगाः । प्रेक्ष्य सर्वे कपिवरं सहसा विगतक्लमम् ॥ ८७ ॥ तस्मिन् प्लवगशार्दूले प्लवमाने हनूमति । इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ॥ ८८ ॥ साहाय्यं वानरेन्द्रस्य यदि नाहं हनूमतः । करिष्यामि भविष्यामि सर्ववाच्यो विवक्षताम् ॥ ८९ ॥ अहमिक्ष्वाकुनाथेन सगरेण विवर्द्धितः । इक्ष्वाकुसचिवश्चायं नावसीदितुमर्हति ॥ ९० ॥ तथा मया विधातव्यं विश्रमेत यथा कपिः । शेषं च मयि विश्रान्तस्सुखेनातिपतिष्यति ॥ ९१ ॥ इति कृत्वा मतिं साध्वीं समुद्रश्छन्नमम्भसि । हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम् ॥ ९२ ॥ त्वमिहासुरसङ्घानां पातालतलवासिनाम् । देवराज्ञा गिरिश्रेष्ठ परिघः सन्निवेशितः ॥ ९३ ॥ त्वमेषां जातवीर्याणां पुनरेवोत्पतिष्यताम् । पातालस्याप्रमेयस्य द्वारमावृत्य तिष्ठसि ॥ ९४ ॥ तिर्यगूर्ध्वमधश्चैव शक्तिस्ते शैल वर्द्धितुम् । तस्मात्संचोदयामि त्वामुत्तिष्ठ गिरिसत्तम ॥ ९५ ॥

सर्ववाच्यो भविष्यामि सर्वनिन्दावाग्विषयो भविष्यामीत्यर्थः ॥ ८९ ॥ अहमिति । नावसीदितुमर्हतीति पाठः ॥ ९० ॥ शेषं मार्गशेषम् ॥ ९१ ॥ इतीति । हिरण्यनाभं हिरण्यशृङ्गम् नाभिशब्दो ह्यध्यक्षवाची, शृङ्गं च पर्वतस्याध्यक्षमेव । "नाभिरध्यक्षकस्तूर्योः" इति दर्पणः ॥ ९२ ॥ त्वमिति । परिघः अर्गलम् । "परिघो मुद्गरेऽर्गले" इति दर्पणः ॥ ९३ ॥ परिघत्वमेवाह–त्वमेषामिति ॥ ९४ ॥ तिर्यगिति । शक्तिः अस्तीति शेषः ॥ ९५ ॥ ९६ ॥

सञ्चरन्त्यस्मिन्नित्यापातो मार्गः ॥ ८१–८७ ॥ तस्मिन्निति । सागरः सगरसम्बन्धी अत एव इक्ष्वाकुकुलमानार्थी पूजार्थी ॥ ८८ ॥ चिन्ताप्रकारमेवाह–साहाय्यमिति । विवक्षतां वक्तुमिच्छताम्, वागिन्द्रियवतामित्यर्थः । सर्ववाच्यः सर्वनिन्दावाग्विषयो भविष्यामीत्यर्थः ॥ ८९ ॥ ९० ॥ शेषं मार्गशेषम् ॥ ९१ ॥ हिरण्यनाभं हिरण्यप्रधानम्, हिरण्मयमित्यर्थः । "नाभिः प्रधाने कस्तूर्याम्" इति विश्वः ॥ ९२ ॥ परिघस्सन्निवेशितः आयुधविशेषत्वेन सन्निवेशितः, अनेन पक्षच्छेदभयात् समुद्रप्रवेशानन्तरं पातालस्थराक्षसनिरोधार्थं देवराजेन मैनाकः स्थापित इत्यवगम्यते ॥ ९३ ॥ ९४ ॥ तिर्यगिति । वर्द्धितुं, शक्तिरस्तीति शेषः ॥ ९५ ॥

अस्येति । इक्ष्वाकोः कुले वंशे वर्तते शुश्रूषत इति इक्ष्वाकुकुलवर्ती तस्य पूज्यतमास्तव मत्सम्बन्धादिति भावः । यद्वा त्वदुपकारकवायुपुत्रमुद्दिश्य ॥ ९७ ॥ रामानु०—अस्येति । साहाय्यं सहायकर्म, सहकारित्वमिति यावत् । ब्राह्मणादित्वात् ष्यञ् । मम इक्ष्वाकवः पूज्या हि मद्वृद्धिहेतुत्वात् । तव परं पूज्यतमाः सगरविवृद्धमदन्तः

स एष कपिशार्दूलस्त्वामुपर्येति वीर्यवान् । हनूमान् रामकार्यार्थं भीमकर्मा खमाप्लुतः ॥९६॥ अस्य साह्यं मया कार्यमिक्ष्वाकुकुलवर्तिनः । मम हीक्ष्वाकवः-पूज्याः परं पूज्यतमास्तव ॥ ९७॥ कुरु साचिव्यमस्माकं न नः कार्यमतिक्रमेत् । कर्तव्यमकृतं कार्यं सतां मन्युमुदीरयेत् ॥९८॥ सलिलादूर्ध्वमुत्तिष्ठ तिष्ठत्वेष कपिस्त्वयि । अस्माकमतिथिश्चैव पूज्यश्च प्लवतां वरः॥९९॥ चामीकरमहानाभ देवगन्धर्वसेवित । हनुमांस्त्वयि विश्रान्तस्ततश्शेषं गमिष्यति ॥ [ स एष कपिशार्दूलस्त्वामुपर्येति वीर्यवान् ] ॥ १०० ॥ काकुत्स्थस्यानृशंस्यं च मैथिल्याश्च विवासनम् । श्रमं च प्लवगेन्द्रस्य समीक्ष्योत्थातुमर्हसि ॥ १०१ ॥ हिरण्यनाभो मैनाको निशम्य लवणाम्भसः । उत्पपात जलात्तूर्णं महाद्रुमलतायुतः ॥ १०२ ॥ स सागरजलं भित्त्वा बभूवाभ्युत्थितस्तदा । यथा जलधरं भित्त्वा दीप्तरश्मिर्दिवाकरः ॥ १०३ ॥ स महात्मा मुहूर्तेन पर्वतस्सलिलावृतः । दर्शयामास शृङ्गाणि सागरेण नियोजितः ॥ १०४ ॥ शातकुम्भनिभैश्शृङ्गैस्सकिन्नरमहोरगैः । आदित्योदयसङ्काशैरालिखद्भिरिवाम्बरम् ॥ १०५ ॥

प्रवेशमुखावस्थानादिफलभंक्तृत्वादिति भावः ॥ ९७ ॥ कुर्विति । कार्यं प्रयोजनं विश्रान्त्यादि । कर्तव्यं कार्यमकृतं सतां मन्युं कोपम् उदीरयेत् प्रेरयेत् उत्पादयेत् ॥ ९८ ॥ ९९ ॥ चामीकरेति । चामीकरमहानाभ स्वर्णमयमहाशृङ्ग ॥ १०० ॥ काकुत्स्थस्येति । काकुत्स्थस्यानृशंस्यं रामस्य सीताविषयां दयाम् ॥ १०१ ॥ हिरण्यनाभ इति । निशम्य, वचनमिति शेषः ॥ १०२–१०४ ॥ शातकुम्भेति । शातकुम्भनिभैः स्वर्णसदृशैः आदित्योदयसङ्काशैः आदित्योदयतुल्यैरित्यर्थः । शृङ्गैरुपलक्षितः शृङ्गाणि दर्शयामासेति योजना ॥ १०५ ॥

स एष इति । त्वामुपरि तवोपरि ॥ ९६ ॥ ९७ ॥ अतः साचिव्यकरणात् अस्माकं कार्यं प्रयोजनं नातिक्रमेत् न लुप्यतामित्यर्थः । कार्यातिक्रमे अरिष्टमाह कर्तव्यमिति ॥ ९८ ॥ ९९ ॥ चामीकर हिरण्यात्मक ॥ १०० ॥ आनृशंस्यं कृतज्ञत्वम् हिरण्यनाभ इति । निशम्य, वचनमिति शेषः । ॥ १–३ ॥ स महात्मेत्यादि श्लोक

तप्तेति । शस्त्रसङ्काशं नीलमित्यर्थः । “ शस्त्रमायुधलोहयोः ” इति विश्वः ॥ १०६ ॥ १०७ ॥ तमिति । निश्चितः निश्चितवान् । कर्तरि निष्ठा ॥ १०८ ॥ १०९ ॥ रामानु०–स तमिति । जीमूतमिव मारुत इत्यनेन पर्वतम् अनायासेन पातितवानिति द्योत्यते ॥ १०९ ॥ जहर्ष विसिष्मिये ॥ ११० ॥

तप्तजाम्बूनदैश्शृङ्गैः पर्वतस्य समुत्थितैः । आकाशं शस्त्रसङ्काशमभवत् काञ्चनप्रभम् ॥ १०६ ॥ जातरूपमयैः शृङ्गैर्भ्राजमानैस्स्वयंप्रभैः । आदित्यशतसङ्काशस्सोऽभवद्गिरिसत्तमः ॥ १०७ ॥ तमुत्थितमसङ्गेन हनुमानग्रतः स्थितम् । मध्ये लवणतोयस्य विघ्नोऽयमिति निश्चितः ॥ १०८ ॥ स तमुच्छ्रितमत्यर्थं महावेगो महाकपिः । उरसा पातयामास जीमूतमिव मारुतः ॥ १०९ ॥ स तदा पातितस्तेन कपिना पर्वतोत्तमः । बुद्ध्वा तस्य कपेर्वेगं जहर्ष च ननन्द च ॥ ११० ॥ तमाकाशगतं वीरमाकाशे समुपस्थितः । प्रीतो हृष्टमना वाक्यमब्रवीत्पर्वतः कपिम् । मानुषं धारयन् रूपमात्मनश्शिखरे स्थितः ॥ १११ ॥ दुष्करं कृतवान् कर्म त्वमिदं वानरोत्तम । निपत्य मम शृङ्गेषु विश्रमस्व यथासुखम् ॥ ११२ ॥ राघवस्य कुले जातैरुदधिः परिवर्द्धितः । स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः ॥ ११३ ॥ कृते च प्रतिकर्तव्यमेष धर्मस्सनातनः । सोऽयं त्वत्प्रतिकारार्थी त्वत्तः सम्मानमर्हति ॥ ११४ ॥ त्वन्निमित्तमनेनाहं बहुमानात्प्रचोदितः । तिष्ठ त्वं कपिशार्दूल मयि विश्रम्य गम्यताम् ॥ ११५ ॥

रामानु०–तदेति । जहर्ष च ननन्द चेति पदद्वयेन कायमनसोर्विकृतिरुच्यते । अस्य वेगेन ग्लानिराहित्यं बुद्ध्वा हृष्टमना बभूवेत्यर्थः ॥ ११० ॥ तमिति । प्रीतः प्रीतिद्योतकव्यापारः ॥ ११ ॥ १२ ॥ रामानु०–तमिति । प्रीतः सुखितः । हृष्टमनाः प्रसन्नमनाः ॥ ११ ॥ दुष्करमिति । विश्रमस्वेति श्रमिरात्मनेपदी कश्चिदस्ति । तथा चोक्तं भट्टमल्लेन–“ विश्राम्यतीति विश्रान्ती कश्चिद्विश्रमतेपि च ” इति ॥ १२ ॥ १३ ॥ कृत इति । कृते उपकारे त्वत्प्रतिकारार्थी त्वदातिथ्यकरणापेक्षी । त्वत्तः संमानमर्हतीति त्वया तत्कृतातिथ्यपरिग्रह इत्यर्थः ॥ ११४ ॥ त्वन्निमित्तमित्यादि श्लोकद्वयमेकं वाक्यम् । शातकुम्भमयैः शृङ्गैरुपलक्षितः ॥ ४ ॥ ५ ॥ शस्त्रसङ्काशं शस्त्रश्याममाकाशम्, काञ्चनप्रभं कनकगौरमासीदित्यर्थः ॥ ६ ॥ ७ ॥ असङ्गेन एकाकिना ॥ ८ ॥ ९ ॥ जहर्ष च ननन्द च इत्यनेन कायमनसोर्विकृतिरुच्यते ॥ ११०–१३ ॥ कृते चेति । कृते उपकारे सोऽयमुदधिः तत्प्रतिकारार्थी इति पाठः । तस्योपकारस्य प्रत्युपकारार्थी त्वत्तस्सम्मानमर्हति, त्वत्सकाशात् त्वत्स्वीकाररूपां पूजां प्राप्तुं योग्यो भवतीत्यर्थः ॥ ११४ ॥ त्वन्निमित्तमित्यादि श्लोकद्वयमेकं वाक्यम् । एष

एवास्य संमानमित्यर्थः ॥ ११४ ॥ ११५ ॥ चोदनाप्रकारमाह--योजनानामिति । प्रक्रमतामिति प्रचोदित इति पूर्वेणान्वयः ॥ ११६ ॥ रामानु०--त्वन्नि मित्तमित्यादिश्लोकद्वयमेकं वाक्यम् । एष कपिः योजनानां शतं चापि समाप्लुतः समापतितुमुपक्रान्तः तव सानुषु विश्रान्तः शेषं मार्गशेषं प्रक्रमतामिति त्वन्निमित्तम् अहम् अनेन सागरेण बहुमानात् प्रचोदितः, अतः कपिशार्दूल ! त्वं तिष्ठ मयि विश्रम्य गम्यतामित्यन्वयः॥ १५॥ १६॥ तदिति । तत्प्रसिद्धम् । कन्दः करहाटः । मूलं पादः । ततस्मात्॥ ११७॥ अस्माक

योजनानां शतं चापि कपिरेष समाप्लुतः । तव सानुषु विश्रान्तश्शेषं प्रक्रमतामिति ॥ ११६ ॥ तदिदं गन्धवत् स्वादु कन्दमूलफलं बहु । तदास्वाद्य हरिश्रेष्ठ विश्रान्तोऽनुगमिष्यसि ॥ ११७ ॥ अस्माकमपि सम्बन्धः कपिमुख्य त्वयाऽस्ति वै । प्रख्यातस्त्रिषु लोकेषु महागुणपरिग्रहः ॥ ११८ ॥ वेगवन्तः प्लवन्तो ये प्लवगा मारुतात्मज । तेषां मुख्यतमं मन्ये त्वामहं कपिकुञ्जर ॥ ११९ ॥ अतिथिः किल पूजार्हः प्राकृतोऽपि विजानता । धर्मं जिज्ञासमानेन किं पुनस्त्वादृशो महान् ॥ १२० ॥ त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः । पुत्रस्तस्यैव वेगेन सदृशः कपिकुञ्जर ॥ १२१ ॥ पूजिते त्वयि धर्मज्ञ पूजां प्राप्नोति मारुतः । तस्मात्त्वं पूजनीयो मे शृणु चाप्यत्र कारणम् ॥ १२२ ॥ पूर्वं कृतयुगे तात पर्वताः पक्षिणोऽभवन् । ते हि जग्मुर्दिशः सर्वा गरुडानिलवेगिनः ॥ १२३ ॥

मिति । प्रख्यात इति सम्बन्धविशेषणम् । महागुणानां परिग्रहो यस्मिन्स तथा॥ ११८॥ रामानु०--हनुमतः पूज्यतमत्वे हेत्वन्तरं दर्शयति--अस्माकमपीति । संबन्धः अतिथ्यतिथिमद्भावलक्षणः । महागुणपरिग्रहः, परिगृह्यत इति परिग्रहः, महागुणानां सतां परिग्रहः महागुणपरिग्रहः ॥ १८ ॥ ११९--१२२ ॥ रामानु०--अतिथिरिति । त्वादृशो महानिति पाठः ॥ १२० ॥ किंचातिथेस्तव पूजायां काम्यार्थसिद्धिवद्वायोरपि प्रत्युपकारसिद्धिः स्यादित्याह--त्वं हीत्यादिना ॥ १२१॥ संबन्धं विवृणोति--पूर्वमित्यादिना । पक्षिणः पक्षवन्तः । हिः

कपिः योजनानां शतं समाप्लुतः समाप्लवितुमुपक्रान्तः । शेषं मार्गशेषं प्रक्रमतामिति त्वन्निमित्तमनेन सागरेणाहं बहुमानात्प्रचोदितः, अतः कपिशार्दूल ! त्वं तिष्ठ मयि विश्रम्य गम्यतामित्यन्वयः ॥ १५ ॥ १६ ॥ तदिति । तद् प्रसिद्धम् ॥ १७ ॥ अस्माकमिति । महागुणपरिग्रहः महागुणेन वायुना परिगृह्यत इति तथा ॥ १८ ॥ १९ ॥ अतिथिरिति । त्वादृशो महानिति पाठः ॥ १२०--१२८ ॥

पादपूरणे ॥ १२३–१२६ ॥ अस्मिन्निति । समग्रः समग्रपक्षः, गुप्तसमग्रपक्षश्च यथा भवामि तथा अभिरक्षितोऽस्मीत्यर्थः ॥ १२७–१३० ॥
रामानु०–श्रममिति । मोक्षय मुञ्च । " मोक्ष निरसने " इति चौरादिको धातुः ॥ १३० ॥ १३१ ॥ प्रीतोस्मीति । कृतमातिथ्यं तव दर्शनादिनेति भावः । मन्युः कोपः,

ततस्तेषु प्रयातेषु देवसङ्घाः सहर्षिभिः । भूतानि च भयं जग्मुस्तेषां पतनशङ्कया ॥ १२४॥ ततः क्रुद्धः सहस्राक्षः पर्वतानां शतक्रतुः । पक्षांश्चिच्छेद वज्रेण तत्र तत्र सहस्रशः ॥ १२५ ॥ स मामुपगतः क्रुद्धो वज्रमुद्यम्य देवराट् । ततोऽहं सहसा क्षिप्तः श्वसनेन महात्मना ॥ १२६ ॥ अस्मिँल्लवणतोये च प्रक्षिप्तः प्लवगोत्तम । गुप्तपक्षसमग्रश्च तव पित्राऽभिरक्षितः ॥ १२७ ॥ ततोऽहं मानयामि त्वां मान्यो हि मम मारुतः । त्वया मे ह्येष सम्बन्धः कपिमुख्य महागुणः ॥ १२८ ॥ तस्मिन्नेवंगते कार्ये सागरस्य ममैव च । प्रीतिं प्रीतमनाः कर्तुं त्वमर्हसि महाकपे ॥ १२९ ॥ श्रमं मोक्षय पूजां च गृहाण कपिसत्तम । प्रीतिं च बहु मन्यस्व प्रीतोऽस्मि तव दर्शनात् ॥ १३० ॥ एवमुक्तः कपिश्रेष्ठस्तं नगोत्तममब्रवीत् ॥ १३१ ॥ प्रीतोऽस्मि कृतमातिथ्यं मन्युरेषोऽपनीयताम् । त्वरते कार्यकालो मे अहश्चाप्यतिवर्तते । प्रतिज्ञा च मया दत्ता न स्थातव्यमिहान्तरे ॥ १३२ ॥ इत्युक्त्वा पाणिना शैलमालभ्य हरिपुङ्गवः । जगामाकाशमाविश्य वीर्यवान् प्रहसन्निव ॥ १३३ ॥

मत्कृता पूजा न गृहीतेति कोपो निरस्यतामित्यर्थः । कार्यकालः त्वरते शीघ्रं गच्छेति मां प्रेरयति । अहश्चाप्यतिवर्तते, अत्र विलम्बः क्रियते चेदिद महोऽतिवर्तते इत्यर्थः । इह समुद्रे अन्तरे मध्ये मया न स्थातव्यमिति वानरसन्निधौ प्रतिज्ञा कृता ॥१३२॥ रामानु०–त्वरते कार्यकाल इति । कार्यः करणयोग्यः कालः कार्यकालः त्वरते त्वरयति । अहश्चाप्यतिवर्तते लङ्काद्वीपप्रवेशयोग्यमहश्चातिवर्तते। प्रतिज्ञा चेति । "यथा राघवनिर्मुक्तश्शरः श्वसनविक्रमः । गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम् ।" इति प्रतिज्ञा दत्ता तस्मादिहान्तरे न स्थातव्यम् ॥ १३२ ॥ इत्युक्त्वेति । प्रहसन्निव प्रसन्नमुख इवेत्यर्थः ॥ १३३ ॥ १३४ ॥ रामानु०–इत्युक्त्वेति । आलभ्य स्पृष्ट्वा । 
एवंगते प्राप्ते सति । कार्ये उपकाररूपकार्ये । प्रीतिं कर्तुमर्हसि, पूजास्वीकारेणेति भावः ॥ २९–१३१ ॥ मन्युः पूजानङ्गीकारनिबन्धनं दैन्यम् । कार्यकालः लङ्काप्रवेशकालः । त्वरते विलम्बं न सहते ॥ ३२ ॥ आलभ्य स्पृष्ट्वा । प्रहसन्निव प्रसन्नमुखस्सन् ॥ ३३ ॥ ३४ ॥

प्रहसन्निवेत्यत्र इवशब्दो हासप्रकर्षस्य पारमार्थ्यपरः प्रीतिसूचकः। मन्दस्मितं कुर्वन्नित्यर्थः ॥ १३३ ॥ स इति। उपपन्नाभिः रामकार्यसिद्धयुचिताभिः ॥ १३४ ॥ अथेति । हित्वा शैलमहार्णवौ मूर्तिमन्तौ तौ हित्वेत्यर्थः। अनेन शैलवत्समुद्रोऽपि मूर्तिमत्तया तत्राहश्यतेति सूचितम् ॥१३५॥१३६॥ तद्द्वितीयमिति । द्वितीयं समुद्र

स पर्वतसमुद्राभ्यां बहुमानादवेक्षितः। पूजितश्चोपपन्नाभिराशीभिरनिलात्मजः ॥ १३४ ॥ अथोर्ध्वं दूरमुत्पत्य हित्वा शैलमहार्णवौ। पितुः पन्थानमास्थाय जगाम विमलेऽम्बरे ॥ १३५ ॥ भूयश्चोर्ध्वगतिं प्राप्य गिरिं तमवलोकयन्। वायुसूनुर्निरालम्बे जगाम विमलेऽम्बरे ॥ १३६ ॥ तद् द्वितीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम्। प्रशशंसुः सुराः सर्वे सिद्धाश्च परमर्षयः ॥ १३७ ॥ देवताश्चाभवन् हृष्टास्तत्रस्थास्तस्य कर्मणा। काञ्चनस्य सुनाभस्य सहस्राक्षश्च वासवः ॥ १३८ ॥ उवाच वचनं धीमान् परितोषात् सगद्गदम्। सुनाभं पर्वतश्रेष्ठं स्वयमेव शचीपतिः ॥ १३९ ॥ हिरण्यनाभ शैलेन्द्र परितुष्टोऽस्मि ते भृशम्। अभयं ते प्रयच्छामि तिष्ठ सौम्य यथा सुखम् ॥ १४० ॥ साह्यं कृतं ते सुमहद्विक्रान्तस्य हनूमतः। क्रमतो योजनशतं निर्भयस्य भये सति ॥ १४१ ॥ रामस्यैष हि दूत्येन याति दाशरथेर्हरिः। सत्क्रियां कुर्वता तस्य तोषितोऽस्मि दृढं त्वया ॥ १४२ ॥ ततः प्रहर्षमगमद्विपुलं पर्वतोत्तमः। देवतानां पतिं दृष्ट्वा परितुष्टं शतक्रतुम् ॥ १४३ ॥

लङ्घनापेक्षया द्वितीयं तत्पर्वतजयरूपं कर्म॥१३७॥१३८॥ रामानु०—देवताश्चेति। तस्य मैनाकस्य कर्मणा देवता हृष्टा अभवन् सहस्राक्षश्च हृष्टोऽभवदिति वचनविपरिणामेन संबन्धः ॥ १३८ ॥ १३९॥१४०॥ साह्यमिति। भये सति समुद्रलङ्घनेऽस्य किं भविष्यतीत्यस्माकं भये सतीत्यर्थः ॥१४१॥ रामानु०—साह्यमिति। साह्यं सहायकर्म सहकारित्वमिति यावत्। ब्राह्मणादित्वात् ष्यञ्। ते त्वया निर्भयस्य भये सति अतिविस्तृतसमुद्रोपर्याकाशगमने समुद्रपतनादिभयनिमित्तसंभावनायामपि निर्भयस्य ॥१४१॥१४२—१४४॥

पितुः पन्थानं वायुमार्गम् ॥ ३५ ॥ ३६ ॥ तदिति। समुद्रलङ्घनं प्रथमं कर्म, द्वितीयं मैनाकगिरावविश्रम्य गमनम् ॥३७॥ देवताश्चेति। वासवश्च हृष्ट इति सम्बन्धः ॥ ३८–१४० ॥ साह्यमिति। साह्यं सहायकर्म, सहकारित्वमिति यावत्। ते तव मन्निमित्तभये सत्यपि निर्भयस्य हनूमतः साह्यं कृतम् अतः अभयं प्रयच्छामीति

रामानु०—स इति । बभूवावस्थितस्तदा तस्मिन् काले स्वस्थोऽभूदित्यर्थः । प्रतिप्रयाणवेलायामपि "पर्वतेन्द्रं सुनाभं च समुपस्पृश्य वीर्यवान्" इति मैनाकावस्थानाभिधानात् । सागरं मैनाकाधिष्ठित सागरप्रदेशम् ॥ १४४ ॥ १४५॥१४६ ॥ रामानु०—अयमिति । श्रीमान् अत्र श्रीशब्देन अतिदूरंसमुद्रलङ्घनेप्युपर्युपरिबलाभिवृद्धिमयुक्ता सुपमोच्यते ॥ १४६ ॥१४७–१५३॥

स वै दत्तवरः शैलो बभूवावस्थितस्तदा । हनुमांश्च मुहूर्तेन व्यतिचक्राम सागरम् ॥ १४४ ॥ ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । अब्रुवन्सूर्यसङ्काशां सुरसां नागमातरम् ॥ १४५ ॥ अयं वातात्मजः श्रीमान् प्लवते सागरोपरि । हनुमान्नाम तस्य त्वं मुहूर्तं विघ्नमाचर ॥ १४६ ॥ राक्षसं रूपमास्थाय सुघोरं पर्वतोपमम् । दंष्ट्राकरालं पिङ्गाक्षं वक्त्रं कृत्वा नभस्समम् ॥ १४७ ॥ बलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम् । त्वां विजेष्यत्युपायेन विषादं वा गमिष्यति ॥ १४८ ॥ एवमुक्ता तु सा देवी दैवतैरभिसत्कृता । समुद्रमध्ये सुरसा बिभ्रती राक्षसं वपुः ॥ १४९ ॥ विकृतं च विरूपं च सर्वस्य च भयावहम् । प्लवमानं हनूमन्तमावृत्येदमुवाच ह ॥ १५० ॥ मम भक्ष्यः(क्षः)प्रदिष्टस्त्वमीश्वरैर्वानरर्षभ । अहं त्वां भक्षयिष्यामि प्रविशेदं ममाननम् ॥ १५१ ॥ एवमुक्तः सुरसया प्राञ्जलिर्वानरर्षभः । प्रहृष्टवदनः श्रीमानिदं वचनमब्रवीत् ॥ १५२ ॥ रामो दाशरथिर्नाम प्रविष्टो दण्डकावनम् । लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ॥ १५३ ॥ अन्यकार्यविषक्तस्य बद्धवैरस्य राक्षसैः । तस्य सीता हृता भार्या रावणेन यशस्विनी ॥ १५४॥ तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात् । कर्तुमर्हसि रामस्य साह्यं विषयवासिनी ॥१५५॥ अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् । आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते ॥१५६ ॥

अन्येति । अन्यकार्यविषक्तस्य मारीचमृगग्रहणव्यासक्तस्य ॥ १५४ ॥ तस्या इति । विषयवासिनी रामराज्यवासिनी ॥ १५५ ॥ १५६ ॥ 

सम्बन्धः॥४१–४३॥सागरं मैनाकाधिष्ठितसिन्धुप्रदेशम्॥४४–४७॥त्वामुपायेन विजेष्यति वा विषादं दैन्यं गमिष्यति वेति ज्ञातुमिच्छामह इति सम्बन्धः॥४८–१५०॥ ईश्वरैः दैवतैः ॥ ५१–५३ ॥ अस्येति पाठः । कार्यविषक्तस्य मायामृगवधप्रस्थितस्य ॥ ५४ ॥ विषयवासिनि रामराज्यवासिनि ! त्रैलोक्यनाथत्वाद्रघुनाथस्येति

एवमिति । नातिवर्तेन्मां ममाननमप्रविश्य न गच्छेत् । अतिवर्तेदित्यत्र परस्मैपदमार्षम् । अत्र इतिकरणं द्रष्टव्यम् । अब्रवीन्नातिवर्तेन्मां कश्चिदेष वरो ममेत्यस्यानन्तरं तद्दृष्ट्वा व्यादितं वक्त्रं वायुपुत्रः सुबुद्धिमानित्यादिश्लोका द्रष्टव्याः । मध्ये तं प्रयान्तमित्यादयः केचन श्लोकाः प्रक्षिप्ताः असङ्गताश्च, शतयोजनायतत्वे वानरैर्लङ्कावासिभिश्च ज्ञातः स्यादिति विरोधात् । त इमे प्रक्षिप्तश्लोकाः—" तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत् । बलं जिज्ञासमाना वै नागमाता हनूमतः । प्रविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम । वर एष पुरा दत्तो मम धात्रेति सत्वरा । व्यादाय विपुलं वक्त्रं स्थिता

एवमुक्त्वा हनुमता सुरसा कामरूपिणी । अब्रवीन्नातिवर्तेन्मां कश्चिदेष वरो मम ॥ १५७ ॥ [ तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत् । बलं जिज्ञासमाना वै नागमाता हनूमतः ॥ १ ॥ प्रविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम । वर एष पुरा दत्तो मम धात्रेति सत्वरा ॥ २ ॥ व्यादाय वक्त्रं विपुलं स्थिता सा मारुतेः पुरः । एवमुक्तः सुरसया क्रुद्धो वानरपुङ्गवः ॥ ३ ॥ अब्रवीत् कुरु वै वक्त्रं येन मां विषहिष्यसे । इत्युक्त्वा सुरसां क्रुद्धो दशयोजनमायतः ॥ ४ ॥ दशयोजनविस्तारो बभूव हनुमांस्तदा । तं दृष्ट्वा मेघसङ्काशं दशयोजनमायतम् ॥ ५ ॥

सा मारुतेः पुरः । एवमुक्तः सुरसया क्रुद्धो वानरपुङ्गवः । अब्रवीत्कुरु वै वक्त्रं येन मां विषहिष्यसे । इत्युक्त्वा सुरसां क्रुद्धो दशयोजनमायतः । दशयोजनविस्तारो बभूव हनुमांस्तदा । तं दृष्ट्वा मेघसंकाशं दशयोजनमायतम् । चकार सुरसा चास्यं विंशद्योजनमायतम् । हनूमांस्तु ततः क्रुद्धस्त्रिंशद्योजनमायतः । चकार सुरसा वक्त्रं चत्वारिंशत्तथोच्छ्रितम् । बभूव हनुमान्वीरः पञ्चाशद्योजनोच्छ्रितः । चकार सुरसा वक्त्रं षष्टियोजनमायतम् । तथैव हनुमान्वीरस्सप्ततीयोजनोच्छ्रितः । चकार सुरसा वक्त्रमशीतीयोजनोच्छ्रितम् । हनुमानचलप्रख्यो नवतीयोजनोच्छ्रितः । चकार सुरसा वक्त्रं शतयोजनमायतम् " इति ॥ १५७ ॥ रामानु०—नाग(देव)माता हनूमत इत्यतः परं—प्रविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम । वर एष पुरा दत्तो मम धात्रेति सत्वरेति पाठः । एवमिति । विषहिष्यसे अभिभविष्यसि ग्रसिष्यसीत्यर्थः । इत्युक्त्वेति । दशयोजनमायतः दशयोजनविस्तारो बभूव हनुमानित्यनेन " दशयोजनविस्तीर्णा त्रिंशद्योजनमायता । छाया

भावः ॥ ५५॥५६ ॥ एवमिति । कश्चिदपि जनः नातिवर्तेत, मामिति शेषः । नातिवर्तेन्माम् इत्यपि पाठः ॥१५७॥ [ अथ वरदानं श्रुत्वापि जिगमिषन्तं मत्याह—

वानरसिंहस्य " इत्युक्तच्छायोचितं पाठमानान्तरं सुरसादर्शनात्पूर्वं संक्षिप्तवानित्यवगम्यते । चकार सुरसा चास्यं विंशद्योजनमायतमित्यतः परं हनूमांस्तु ततः क्रुद्धस्त्रिंशद्योजनमायत इत्यादिक्रमेण । चकार सुरसा वक्त्रं शतयोजनमायतमित्येष पाठक्रमः । एते श्लोकाः केषुचित्कोशेषु लेखकप्रमादात्पतिताः । सप्ततीयोजनोच्छ्रित इत्यादौ दीर्घ आर्षः ॥ १५७ ॥ प्रकृतं विलिख्यते–तद्दृष्ट्वा व्यादितं त्वास्यं वायुपुत्रः सुबुद्धिमान् । सुसंक्षिप्यात्मनः कायं बभूवाङ्गुष्ठमात्रकः इति ॥१५८॥ रामानु०–तद्दृष्ट्वा व्यादितं त्वास्यमिति । व्यादितं व्यात्तम् । इडागमस्त्वार्षः । अतिविस्तृतं वक्त्रं सूक्ष्मरूपेण प्रविश्याक्लेशेन निर्गन्तुमयं समीचीनः समय इति ज्ञानयोगात् सुबुद्धिमानिति विशेषणम् ॥ १५८ ॥

चकार सुरसा चास्यं विंशद्योजनमायतम् । तां दृष्ट्वा विस्तृतास्यां तु वायुपुत्रः सुबुद्धिमान् ॥ ६ ॥ हनूमांस्तु ततः क्रुद्धस्त्रिंशद्योजनमायतः । चकार सुरसा वक्त्रं चत्वारिंशत्तथोच्छ्रितम् ॥ ७ ॥ बभूव हनुमान् वीरः पञ्चाशद्योजनोच्छ्रितः । चकार सुरसा वक्त्रं षष्टियोजनमायतम् ॥ ८ ॥ तथैव हनुमान् वीरः सप्ततीयोजनोच्छ्रितः । चकार सुरसा वक्त्रमशीतीयोजनायतम् ॥ ९ ॥ हनुमानचलप्रख्यो नवतीयोजनोच्छ्रितः । चकार सुरसा वक्त्रं शतयोजनमायतम् ॥ १० ॥ ] तद्दृष्ट्वा व्यादितं त्वास्यं वायुपुत्रः सुबुद्धिमान् । [ दीर्घजिह्वं सुरसया सुघोरं नरकोपमम् । ] सुसंक्षिप्यात्मनः कायं बभूवाङ्गुष्ठमात्रकः ॥ १५८ ॥ सोऽभिपत्याशु तद्वक्त्रं निष्पत्य च महाजवः । अन्तरिक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ॥ १५९ ॥ प्रविष्टोऽस्मि हि ते वक्त्रं दाक्षायणि नमोऽस्तु ते । गमिष्ये यत्र वैदेही सत्यश्चासीद्वरस्तव ॥ १६० ॥ तं दृष्ट्वा वदनान्मुक्तं चन्द्रं राहुमुखादिव । अब्रवीत्सुरसा देवी स्वेन रूपेण वानरम् ॥ १६१ ॥ अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् । समानयस्व वैदेहीं राघवेण महात्मना ॥ १६२ ॥ तत्तृतीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् । साधु साध्विति भूतानि प्रशशंसुस्तदा हरिम् ॥ १६३ ॥

॥ १५९ ॥ प्रविष्टोऽस्मीति । दक्षस्यापत्यं दाक्षायणी, तत्त्वं च पूर्वं वरप्रदानकथनसमये तथैव कथितमित्यनुवादात् कल्प्यते॥१६०॥रामानु० –प्रविष्टोऽस्मि हीति । दाक्षायणीत्यनुवादात् स्ववरप्रदानकथनसमये हनुमन्तमुद्दिश्य स्वकीयं दाक्षायणीत्वमपि तथैव कथितमित्यवगन्तव्यम् । सत्यं चासीद्वरं तव, त्वदास्यं प्रविश्य निर्गमनात् ब्रह्मणा दत्तो वरस्सत्य आसीदित्यर्थः । वरशब्दस्य नपुंसकत्वमार्षम् ॥ १६० ॥ १६१ ॥ १६२ ॥ रामानु०–अर्थेति । समानयस्वेति पाठः। समानय संगमय ॥ १६२॥ १६३ ॥ १६४ ॥



तमिति । पन्नगमिति । विवक्षिष्यसे अभिभविष्यसि, प्रक्षिप्यमीत्यर्थः॥१-१०॥] तद् दृष्ट्वेति । सुरसया व्यादितमास्यम् ॥१५८–१६१॥समानय संयोजय॥६२॥ तृतीयं

आकाशगमनमतिदुष्करमित्यमुमर्थं कथयितुम् आकाशस्वरूपं वर्ण्यते-सेवित इत्यादिना श्लोकसप्तकेन। कैशिकाचार्यैः कैशिके रागविशेषे आचार्यैः विद्याधरविशेषैरित्यर्थः। वज्राशनिसमाघातैः पावकैः वज्राशनिसमाघातैर्हेतुभिर्जातैः पावकैः। हव्यं वहता देवेभ्यो हव्यवहनार्थं गतेन चित्रभानुना वह्निना। विश्वे विश्वगते, व्यापक इत्यर्थः। देवराजगजाक्रान्ते ऐरावतभिन्नदिग्गजाक्रान्ते। विताने वितानतुल्ये। वितत इति वितानविशेषणम् ॥ १६५–१७३ ॥

स सागरमनाधृष्यमभ्येत्य वरुणालयम्। जगामाकाशमाविश्य वेगेन गरुडोपमः ॥ १६४ ॥ सेविते वारिधाराभिः पतगैश्च निषेविते। चरिते कैशिकाचार्यैरैरावतनिषेविते ॥ १६५ ॥ सिंहकुञ्जरशार्दूलपतगोरगवाहनैः। विमानैः संपतद्भिश्च विमलैः समलंकृते ॥ १६६ ॥ वज्राशनिसमाघातैः पावकैरुपशोभिते। कृतपुण्यैर्महाभागैः स्वर्गजिद्भिरलंकृते ॥ १६७ ॥ वहता हव्यमत्यर्थं सेविते चित्रभानुना। ग्रहनक्षत्रचन्द्रार्कतारागणविभूषिते ॥ १६८ ॥ महर्षिगणगन्धर्वनागयक्षसमाकुले। विविक्ते विमले विश्वे विश्वावसुनिषेविते ॥ १६९ ॥ देवराजगजाक्रान्ते चन्द्रसूर्यपथे शिवे। विताने जीवलोकस्य वितते ब्रह्मनिर्मिते ॥ १७० ॥ बहुशः सेविते वीरैर्विद्याधरगणैर्वरैः। जगाम वायुमार्गे तु गरुत्मानिव मारुतिः ॥ १७१ ॥ प्रदृश्यमानस्सर्वत्र हनुमान् मारुतात्मजः। भेजेऽम्बरं निरालम्बं लम्बपक्ष इवाद्रिराट् ॥ १७२ ॥ प्लवमानं तु तं दृष्ट्वा सिंहिका नाम राक्षसी। मनसा चिन्तयामास प्रवृद्धा कामरूपिणी ॥ १७३ ॥

रामानु०—सेवित इति। कैशिकाचार्यैः। कैशिकं रागविशेषः तदाचार्यैः तुम्बुरुप्रभृतिभिरित्यर्थः। ऐरावतनिषेविते ऐरावतमिति ऋजुदीर्घमिन्द्रधनुरुच्यते। तेन निषेविते युक्ते "इन्द्रायुधं त्विन्द्रधनुस्तद्दीर्घमृजु रोहितम्। ऐरावतं च विद्युत्तु चञ्चला चपलेति च" इति वैजयन्ती। वज्राशनिसमाघातैः वज्राशन्योस्समः तुल्यः आघातः अभिघातः येषां तैः। विविक्त इति। विश्वे विशतीति विश्वः व्यापक इत्यर्थः। विताने उल्लोचभूते। "अस्त्री वितानमुल्लोचः" इत्यमरः। विद्याधरगणैर्वरैरित्यतः परम् जगाम वायुमार्गे तु गरुत्मानिव मारुतिरिति पाठक्रमः। उपरि तु हनुमान् मेघजालानीत्यादिसार्द्धश्लोकद्वयं प्रमादाल्लिखितम्। प्रदृश्यमानः सर्वत्रेति पाठः ॥ १६५–१७२ ॥

कर्म सुरसावक्त्रान्निष्क्रमणम् ॥ १६३ ॥ १६४ ॥ कैशिकाचार्यैः कैशिकं नृत्तादि तदाचार्यैस्तुम्बुरुप्रभृतिभिः। ऐरावतनिषेविते ऐरावतम् इति ऋजुदीर्घमिन्द्रधनुरुच्यते ॥ १६५ ॥ १६६ ॥ वज्राशनिसमाघातैः वज्राशन्योस्समः तुल्यः आघातोऽभिघातो येषां तैः पावकैः ॥ १६७ ॥ आकाशस्य एकोनपञ्चाशदग्निसम्बन्धमुक्त्वा तत्प्रधानभूतचित्रभानुसम्बन्धमाह—वहतेति ॥ १६८ ॥ विश्वे विश्वव्यापके। विश्वावसुः गन्धर्वराजः ॥ १६९–१७३ ॥

अद्येति । दीर्घस्य कालस्य दीर्घकाले गते सति अद्य आशिता आशित्री भुक्तवती भविष्यामि ॥ १७४ ॥ इतीति । समाक्षिपत् सम्यग्गृहीतवती ॥ १७५ ॥ समाक्षिप्त इति । पङ्गूकृतपराक्रमः कुण्ठितगतिः । प्रतिलोमेन प्रतिकूलेन ॥ १७६–१७८ ॥ छायाग्राहीति । तदिदं छायाग्राहि कपिराजेन कथितं नात्र संशय इति योजना ॥ १७९॥ १८० ॥ घनराजीवेति । समभिद्रवत् समभ्यद्रवत् ॥ १८१ ॥ स ददर्शेति । कायमात्रं देहप्रमाणम् ॥१८२॥

अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता । इदं हि मे महत्सत्त्वं चिरस्य वशमागतम् ॥१७४॥ इति संचिन्त्य मनसा छायामस्य समाक्षिपत् । छायायां गृह्यमाणायां चिन्तयामास वानरः ॥ १७५ ॥ समाक्षिप्तोऽस्मि सहसा पङ्गूकृतपराक्रमः । प्रतिलोमेन वातेन महानौरिव सागरे ॥ १७६ ॥ तिर्यगूर्ध्वमधश्चैव वीक्षमाणस्ततः कपिः । ददर्श स महत्सत्त्वमुत्थितं लवणाम्भसि ॥ १७७ ॥ तद्दृष्ट्वा चिन्तयामास मारुतिर्विकृताननम् । कपिराजेन कथितं सत्त्वमद्भुतदर्शनम् ॥१७८॥ छायाग्राहि महावीर्यं तदिदं नात्र संशयः । स तां बुद्ध्वाऽर्थतत्त्वेन सिंहिकां मतिमान् कपिः । व्यवर्धत महाकायः प्रावृषीव बलाहकः ॥१७९॥ तस्य सा कायमुद्वीक्ष्य वर्धमानं महाकपेः । वक्त्रं प्रसारयामास पातालान्तरसन्निभम् ॥१८०॥ घनराजीव गर्जन्ती वानरं समभिद्रवत् ॥ १८१ ॥ स ददर्श ततस्तस्या विवृतं सुमहन्मुखम् । कायमात्रं च मेधावी मर्माणि च महाकपिः ॥१८२॥ स तस्या विवृते वक्त्रे वज्रसंहननः कपिः । संक्षिप्य मुहुरात्मानं निष्पपात महाबलः ॥ १८३ ॥ आस्ये तस्या निमज्जन्तं ददृशुः सिद्धचारणाः । ग्रस्यमानं यथा चन्द्रं पूर्णं पर्वणि राहुणा ॥१८४॥ ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः । उत्पपाताथ वेगेन मनस्संपातविक्रमः॥१८५॥

स इति । मुहुस्संक्षिप्य संनिकर्षानुगुणं सङ्कुच्य ॥ १८३ ॥ १८४ ॥ तत इति । ततः तेन रूपेण मनस्संपातविक्रमः मनोवेगतुल्यगतिः ॥ १८५ ॥

रामानु०–तत इति । अथ वानरः मनःसंपातविक्रमस्सन् मनोगमनसमानगतिस्सन् तीक्ष्णैर्नखैस्तस्या मर्माण्युत्कृत्य ततः आस्यात् वेगेनोत्पपात आस्यपिधानात् पूर्वमेवोत्पपातेत्यर्थः ॥१८५॥

अद्येति । आशिता भुक्तवती । समाक्षिपत् जग्राह ॥ ७४–१७९ ॥ पातालान्तरसन्निभम् पातालविवरसदृशम् ॥ १८० ॥ ८१ ॥ कायमात्रं शरीरप्रमाणम्, स्वशरीरकबलनपर्याप्तमित्यर्थः । मुखं ददर्श । मर्माणि प्राणस्थानानि संक्षिप्य ॥८३–८४॥ मनस्सम्पातविक्रमः मनोगमनसमानगतिः ॥ १८५ ॥

तामिति । दृष्ट्या दूरादेव दर्शनेन । धृतया अस्य नियमनजननधाष्ट्येन । दाक्षिण्येन पाटवेन ॥ १८६ ॥ हतहदिति । विधुरा आर्ता ॥ १८७ ॥ भीममित्यादि । अरिष्टं शुभं यथा भवति तथा । यस्य सिंहिकारूपसत्त्वस्य । दृष्टिः आयतिक्षमसूक्ष्मेक्षणम् । मतिः अर्थतत्त्वनिश्चयः । क्रियावत्त्वं दाक्ष्यम् । यथा तव तथा यस्य चत्वारि सन्ति तत्त्वया हतम् । तान्येव चत्वार्याह धृतिरिति । या धृतिः स्वकर्मसु स्वानुकूलकार्येषु नावसीदति या दृष्टिर्नावसीदति या

तां तु दृष्ट्वा च धृत्या च दाक्षिण्येन निपात्य च। स कपिप्रवरो वेगाद्ववृधे पुनरात्मवान् ॥ १८६ ॥ हतहृत सा हनुमता पपात विधुराऽम्भसि। तां हतां वानरेणाशु पतितां वीक्ष्य सिंहिकाम् । भूतान्याकाशचारीणि तमूचुः प्लवगोत्तमम् ॥ १८७ ॥ भीममद्य कृतं कर्म महत्सत्त्वं त्वया हतम्। साधयार्थमभिप्रेतमरिष्टं प्लवतांवर ॥ १८८ ॥ यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव। धृतिर्दृष्टिर्मतिर्दाक्ष्यं स्वकर्मसु न सीदति ॥ १८९ ॥ स तैः सम्भावितः पूज्यः प्रतिपन्नप्रयोजनः। जगामाकाशमाविश्य पन्नगाशनवत्कपिः ॥ १९० ॥ प्राप्तभूयिष्ठपारस्तु सर्वतः प्रतिलोकयन् । योजनानां शतस्यान्ते वनराजिं ददर्श सः ॥ १९१ ॥ ददर्श च पतन्नेव विविधद्रुमभूषितम् । द्वीपं शाखामृगश्रेष्ठो मलयोपवनानि च ॥ १९२ ॥ सागरं सागरानूपं सागरानूपजान् द्रुमान् । सागरस्य च पत्नीनां मुखान्यपि विलोकयन् ॥ १९३ ॥स महामेघसङ्काशं समीक्ष्यात्मानमात्मवान् । निरुन्धन्तमिवाकाशं चकार मतिमान्मतिम् ॥ १९४ ॥

मतिर्नावसीदति यद्दाक्ष्यं नावसीदति एतानि चत्वारि यस्य सन्ति तत्त्वया हतमिति योजना ॥ १८८ ॥ १८९ ॥ स इति । संभावितः पूजितः । प्रतिपन्नप्रयोजनः प्राक्प्रतिभासितकार्यसारः, स च स्त्रीत्वे दोषे समानेपि सुरसाया जयप्रतिपत्तिः सिंहिकाया वधप्रतिपत्तिश्च ॥ १९० ॥ प्राप्तेति । प्राप्तभूयिष्ठपारः प्राप्तप्रायतीरः ॥ १९१ ॥ ददर्शेति । मलयोपवनानि लङ्कामलय इति दक्षिणतीरे स्थितमलयः तस्योपवनानि ॥ १९२ ॥ सागरमिति । सागरस्य

दृष्ट्या सूक्ष्मदर्शनेन । धृत्या धैर्येण । दाक्षिण्येन कौशलेन, क्षिप्रकारित्वेनेत्यर्थः । तस्याः संहारवैपुल्येन वा ॥ १८६ ॥ सा सिंहिका । हतहृत विदारितहृदया, अत एव विधुरा विह्वला ॥ ८७ ॥ अरिष्टं शुभम् ॥ ८८ ॥ ८९ ॥ प्रतिपन्नप्रयोजनः प्राप्तप्रकृतकार्यः ॥ १९० ॥ प्राप्तं प्राप्तप्रायं भूयिष्ठपारं महातीरं येन ॥ ९१ ॥ पतन् गच्छन् । मलयः लङ्कायां मलयो नाम गिरिः ॥ ९२ ॥ ९३ ॥ मतिं कर्तव्यनिश्चयम् ॥ १९४ ॥

पत्नीनां नदीनां त्रिकूटोत्पन्नानाम् । आत्मानं स्वशरीरम् । मतिं चकार मेन इति यावत् ॥ १९३ ॥ १९४ ॥ कथं मेन इत्यत्राह—कायवृद्धिमिति । ॥ १९५ ॥ तत इति । पुनः प्रकृतिमापेदे पुनर्निजाकारं प्राप्तवान् ॥ १९६ ॥ उक्तं शरीरसंक्षेपं दृष्टान्तार्थमनुवदति—तद्रूपमिति ॥ १९७ ॥ स चार्विति । प्रतिपन्नरूपः प्रतिपन्नस्वभावशरीरः, अभूदिति शेषः । समीक्षितात्मा समीक्षितदेहः । समवेक्षितार्थः निरूपितकार्यः । पूर्वोक्तोपसंहारश्लोक एषः ॥१९८॥

कायवृद्धिं प्रवेगं च मम दृष्ट्वैव राक्षसाः । मयि कौतूहलं कुर्युरिति मेने महाकपिः ॥ १९५ ॥ ततः शरीरं संक्षिप्य तन्महीधरसन्निभम् । पुनः प्रकृतिमापेदे वीतमोह इवात्मवान् ॥ १९६ ॥ तद्रूपमतिसंक्षिप्य हनुमान् प्रकृतौ स्थितः । त्रीन् क्रमानिव विक्रम्य बलिवीर्यहरो हरिः ॥ १९७ ॥ स चारुनानाविधरूपधारी परं समासाद्य समुद्रतीरम् । परै रशक्यः प्रतिपन्नरूपः समीक्षितात्मा समवेक्षितार्थः ॥ १९८ ॥ ततस्स लम्बस्य गिरेस्समृद्धे विचित्रकूटे निपपात कूटे । सकेतकोद्दालकनालिकेरे महाद्रिकूटप्रतिमो महात्मा ॥ १९९ ॥ ततस्तु संप्राप्य समुद्रतीरं समीक्ष्य लङ्कां गिरिवर्यमूर्ध्नि । कपिस्तु तस्मिन्निपपात पर्वते विधूय रूपं व्यथयन्मृगद्विजान् ॥ २०० ॥

रामानु०—स चार्विति । पूर्वोक्तार्थसङ्ग्रहश्लोकोऽयम् । चारुनानाविधरूपधारी तत्तत्कार्यानुगुण्येन परिगृहीतरमणीयस्थूलसूक्ष्मादिरूपः परैः । सिंहिकादिभिः अशक्यः अप्रधृष्यः । सः परं समुद्रतीरमासाद्य समीक्षितात्मा समालोकितातिप्रमाणस्वशरीरः । समवेक्षितार्थः समालोचितकार्यः । प्रतिपन्नरूपः अङ्गीकृतानुरूपशरीरः, अभूदिति शेषः ॥१९८॥ तत इति । लम्बस्य लम्बमानस्येव स्थितस्य, अविज्ञाताग्रस्येत्यर्थः । विचित्रकूटे विविधाश्चर्यसमूहे । "कूटस्त्वस्त्रियां पुञ्जपालयोः" इति दर्पणः । उद्दालकाः श्लेष्मातकाः ॥१९९॥ व्यथयन् मृगद्विजानित्यादिविशेषं वक्तुमुक्तमर्थमनुवदति—ततस्त्विति । समुद्रतीरं तीरोपर्याकाशम् । विधूय रूपं पूर्वरूपं विहाय । वृत्तमुपजातिः ॥२००॥

तामेवाह—कायवृद्धिमित्यादि । कौतूहलम् आश्चर्यधिया दिदृक्षाम् ॥ १९५ ॥ प्रकृतिं निजाकारम् । वीतमोहः निवृत्ताविद्यः ॥ ९६ ॥ उक्तशरीरसंक्षेपं दृष्टान्तकथनार्थमनुवदति—तद्रूपमिति ॥ ९७ ॥ नानाविधरूपधारी परैः शत्रुभिः अशक्यः अप्रधृष्यः । समीक्षितात्मा समालोकितातिप्रमाणस्वशरीरः । समवेक्षितार्थः आलोचितानन्तरकार्यः । प्रतिपन्नरूपः अङ्गीकृतपृषदंशदेहः, अभूदिति शेषः ॥ ९८ ॥ लम्बस्य लम्बाख्यस्य गिरेः । विचित्रकूटे विचित्राः कूटाः अवान्तरशिखराणि यस्मिन् तस्मिन् । कूटे शृङ्गे निपपातेति सम्बन्धः ॥ ९९ ॥ उक्तार्थं पुनः श्लोकद्वयेनाह—ततस्त्वित्यादि ॥ २०० ॥

अस्मिन् सर्गे सार्द्धैकाधिकद्विशतश्लोकाः ॥२०१॥ इति श्रीगोविन्द० श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥

स सागरमित्यादि ॥ १ ॥ रामानु०—त्रिकूटशिखरे लङ्कां स्थितामिति पाठः ॥ १ ॥ २ ॥ ३ ॥ समुद्रलङ्घने कुतो ग्लानिं नाध्यगच्छदित्यत्राह—शतानीति ॥४॥ रामानु०—समुद्रलङ्घने कुतः श्रमं नाध्यगच्छत्तत्राह—शतान्यहमिति । अहं सुबहून्यपि योजनानां शतानि क्रमेयं शतयोजनसंख्याकं सागरस्यान्तं किं पुनरिति, अमन्यतेति शेषः ॥ ४ ॥

स सागरं दानवपन्नगायुतं बलेन विक्रम्य महोर्मिमालिनम् । निपत्य तीरे च महोदधेस्तदा ददर्श लङ्काममरावतीमिव ॥ २०१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे प्रथमः सर्गः ॥ १ ॥

स सागरमनाधृष्यमतिक्रम्य महाबलः । त्रिकूटशिखरे लङ्कां स्थितां स्वस्थो ददर्श ह ॥ १ ॥ ततः पादपमुक्तेन पुष्पवर्षेण वीर्यवान् । अभिवृष्टः स्थितस्तत्र बभौ पुष्पमयो यथा ॥ २ ॥ योजनानां शतं श्रीमांस्तीर्त्वाप्युत्तमविक्रमः । अनिश्वसन् कपिस्तत्र न ग्लानिमधिगच्छति ॥ ३ ॥ शतान्यहं योजनानां क्रमेयं सुबहून्यपि । किं पुनः सागरस्यान्तं सङ्ख्यातं शतयोजनम् ॥ ४ ॥ स तु वीर्यवतां श्रेष्ठः प्लवतामपि चोत्तमः । जगाम वेगवान् लङ्कां लङ्घयित्वा महोदधिम् ॥ ५ ॥ शाद्वलानि च नीलानि गन्धवन्ति वनानि च । गण्डवन्ति च मध्येन जगाम नगवन्ति च ॥ ६ ॥ शैलांश्च तरुसंछन्नान् वनराजीश्च पुष्पिताः । अभिचक्राम तेजस्वी हनुमान् प्लवगर्षभः ॥७॥

॥५॥ शाद्वलानीति । गण्डवन्ति स्थूलोपलवन्ति । नामैकदेशे नामग्रहणेन गण्डशब्देन गण्डशैल उच्यते ॥ ६ ॥ ७ ॥ रामानु०—शाद्वलानीति । वनानि पर्वतस्थवनानि । गण्डवन्ति स्थूलपाषाणवन्ति । मध्येन मध्यमार्गेण । नगवन्ति प्रशस्तवृक्षयुक्तानि ॥६॥ शैलानिति । अत्र शैलशब्दः शृङ्गपरः लम्बाख्यगिरेरुपरितनस्योच्यमानत्वात् ॥ ७ ॥

॥२०१॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां प्रथमः सर्गः ॥ १ ॥ ॥१॥ तत इति । पुष्पमयो यथा पुष्पमयकपिरिवेत्यर्थः ॥२॥ अनिश्वसन् श्रमनिबन्धनदीर्घनिश्श्वासमकुर्वन् । तत्र लङ्घननिमित्ते । नाधिगच्छति नाध्यगच्छत् ॥ ३ ॥ अहं सुबहून्यपि योजनानां शतानि क्रमेयं शतयोजनं यथा तथा सङ्ख्यातं सागरस्यान्तं किं पुनरित्यमन्यतेति शेषः ॥ ४ ॥ ५ ॥ गण्डवन्ति स्थूलपाषाणवन्ति । नगवन्ति क्षुद्रगिरिवन्ति । शाद्वलानि

स इति। स तस्मिन्नित्यर्थे ददर्शेत्यपकृष्यते ॥ ८ ॥ रामानु०-स इति। तस्मिन्नचले लम्बगिरौ तिष्ठन् वनान्युपवनानि च ददर्शेत्यपकृष्य नम्यन्वनीयम् अन्यथा तच्छब्दोऽतिरिच्येत। नगाग्रे त्रिकूटशिखरे ॥ ८ ॥ सरलान् यूपसरलान्। कर्णिकारान् परिव्याधान्। खर्जूरान् कण्टकच्छदान्। प्रियालान् धनुःपटान्। मुचुलिन्दान् जम्बीरान्। प्रियङ्गून् फलिनः। गन्धपूर्णान् नीपान् असनान्। कोविदारान् चमरिकान् ॥ ९-११ ॥ आक्रीडान् सर्वसाधारणक्रीडा

स तस्मिन्नचले तिष्ठन् वनान्युपवनानि च। स नगाग्रे च तां लङ्कां ददर्श पवनात्मजः ॥ ८ ॥ सरलान् कर्णिकारांश्च खर्जूरांश्च सुपुष्पितान्। प्रियालान्मुचुलिन्दांश्च कुटजान् केतकानपि ॥ ९ ॥ प्रियङ्गून् गन्धपूर्णांश्च नीपान् सप्तच्छदांस्तथा। असनान् कोविदारांश्च करवीरांश्च पुष्पितान् ॥ १० ॥ पुष्पभारनिबद्धांश्च तथा मुकुलितानपि। पादपान् विहगाकीर्णान् पवनाधूतमस्तकान् ॥ ११ ॥ हंसकारण्डवाकीर्णा वापीः पद्मोत्पलायुताः। आक्रीडान् विविधान् रम्यान् विविधांश्च जलाशयान् ॥ १२ ॥ सन्ततान् विविधैर्वृक्षैः सर्वर्तुफलपुष्पितैः। उद्यानानि च रम्याणि ददर्श कपिकुञ्जरः ॥ १३ ॥ समासाद्य च लक्ष्मीवान् लङ्कां रावणपालिताम्। परिघाभिः सपद्माभिः सोत्पलाभिरलंकृताम् ॥ १४ ॥ सीतापहरणार्थेन रावणेन सुरक्षिताम्। समन्ताद्विचरद्भिश्च राक्षसैरुग्रधन्विभिः ॥ १५ ॥ काञ्चनेनावृतां रम्यां प्राकारेण महापुरीम्। गृहैश्च ग्रहसङ्काशैः शारदाम्बुदसन्निभैः ॥ १६ ॥

स्थानानि ॥ १२ ॥ उद्यानानि राजयोग्यानि। सर्वर्तुफलपुष्पितैः सर्वर्तुषु फलपुष्पाण्येषां सञ्जातानीति तैः ॥ १३ ॥ समासाद्येति। समासाद्य ददर्शेति क्रियाभेदाल्लङ्कापदावृत्तिः। लक्ष्मीवान् जयहेतुकान्तिमान्। उत्पलानि पद्मव्यतिरिक्तानि संरसिजानि ॥ १४ ॥ सीतापहरणम् अर्थः प्रयोजनं यस्य तेन। सुरक्षितत्वे हेतुरयम्। विचरद्भिश्चेत्यत्र चकारो भिन्नक्रमः। राक्षसैश्च सुरक्षिताम् ॥ १५ ॥ ग्रहसङ्काशैः नवग्रहतुल्यैः ॥ १६ ॥

वनानि च पश्यन्निति शेषः। मध्येन मार्गेण जगामेति सम्बन्धः ॥ ६ ॥ ७ ॥ सनगाग्रे शिखरसहिते अचले लम्बगिरौ तिष्ठन् ॥ ८-११ ॥ हंसेति। आक्रीडान् राजसम्बन्धित्वेपि साधारणोद्यानानि, उद्यानानि राज्ञामसाधारणानि ॥ १२ ॥ १३ ॥ लङ्कां लङ्कासमीपम् ॥ १४ ॥ सीतापहरणार्थेन सीतापहरणहेतुना अपहृत

पाण्डराभिः सुधालिप्तभूमिकत्वात्सिताभिः । प्रतोलीभिः वीथीभिः । अट्टालकाः अट्टाः । पताकाध्वजमालिनीं लतादिरेखाविचित्रितपटविशिष्टाः पताकाः, मत्स्यमकराद्याकारा ध्वजाः । व्रीह्यादित्वादिनिः ॥ १७ ॥ लतापङ्क्तयः लताकाररेखाः ॥ १८–२० ॥ वप्रेति । वप्रेत्यादावपि ददर्श

पाण्डराभिः प्रतोलीभिरुच्चाभिरभिसंवृताम् । अट्टालकशताकीर्णां पताकाध्वजमालिनीम् ॥ १७ ॥ तोरणैः काञ्चनै र्दिव्यैर्लतापङ्क्तिविचित्रितैः । ददर्श हनुमान् लङ्कां दिवि देवपुरीमिव ॥ १८ ॥ गिरिमूर्ध्नि स्थितां लङ्कां पाण्डुरैर्भवनैः शुभैः । ददर्श स कपिश्रेष्ठः पुरमाकाशगं यथा ॥ १९ ॥ पालितां राक्षसेन्द्रेण निर्मितां विश्वकर्मणा । प्लवमाना मिवाकाशे ददर्श हनुमान् पुरीम् ॥ २० ॥ वप्रप्राकारजघनां विपुलाम्बुनवाम्बराम् । शतघ्नीशूलकेशान्तामट्टालक वतंसकाम् । मनसेव कृतां लङ्कां निर्मितां विश्वकर्मणा ॥ २१ ॥ द्वारमुत्तरमासाद्य चिन्तयामास वानरः ॥ २२ ॥ कैलासशिखरप्रख्यामालिखन्तीमिवाम्बरम् । डीयमानामिवाकाशमुच्छ्रितैर्भवनोत्तमैः ॥ २३ ॥

हनुमान् कपिरित्यनुवर्तते । वप्रं प्राकारमूर्तिकः । प्राकारः सालः । विपुलाम्बु परिघारूपं नवाम्बरं यस्यास्सा । शतघ्नी यन्त्रविशेषः । वतंसः अवतंसः । भागुरिमतेनाल्लोपः । वस्तुतो विश्वकर्मणा निर्मितां विचार्यमाणे केनापि मनसा निर्मितामिव स्थितामित्युत्प्रेक्षा ॥ २१ ॥ रामानु०–वप्रेति । वप्रं चयः, प्राकाराधारवेदिकेति यावत् । "स्याच्चयो वप्रमस्त्रियाम्" इत्यमरः । प्राकारः सालः । विपुलाम्बुनवाम्बराम् अत्राम्बुशब्देन परिघान्तर्गतजलमुच्यते । अट्टालकाः वतंसः कर्णाभरणं यस्याः सा । मनसा कृतामिव स्थिताम् । विश्वकर्मणा निर्मितां लङ्काम्, ददर्शेत्यनुषज्यते ॥ २१ ॥ द्वारमिति । उत्तरं द्वारमासाद्य चिन्तयामास मनसा निरूपयामास, वैदेहीदर्शनोपायमिति शेषः ॥ २२ ॥ कैलासेत्यादि । डीयमानां गच्छन्तीम् "डीङ् विहायसा गतौ" इत्यस्माच्छानच् ॥ २३–३० ॥

द्रव्यत्वेन हेतुना सुरक्षितामित्यर्थः ॥ १५ ॥ १६ ॥ प्रतोल्यः रथ्याः, तासां पाण्डुरत्वमुच्चत्वं च तत्रत्यसौधसम्बन्धेन । अट्टालकशताकीर्णां प्राकारवेदिकोपरि युद्धार्थं परिकल्पितमञ्चविशेषशतसङ्कुलाम् । मत्स्याद्याकारा ध्वजाः, ततोऽन्याः पताकाः । लतापङ्क्तयः विचित्ररचनाविशेषाः । ददर्श हनुमान् पुरीम् इति पुनर्दर्शनाभिधानं विशेषान्तरविवक्षया उपमानान्तरविवक्षया च ॥ १७–२० ॥ लङ्कां स्त्रीत्वेन निरूपयति–वप्रेति । वप्रः चयः, प्राकाराधारवेदिकेति यावत् । "स्याच्चयो वप्रमस्त्रियाम्" इत्यमरः । विपुलाम्बुनवाम्बराम्, अत्राम्बुशब्देन परिघान्तर्गतजलमुच्यते । निर्मितामित्यत्र ददर्शेत्यनुषज्यते ॥ २१ ॥ चिन्तया मास, लङ्का केन प्रदेशेन गन्तव्येति चिन्तयामासेति भावः ॥ २२ ॥ डीयमानामिवाकाशं प्रत्युद्गच्छन्तीमिव स्थिताम् । डीयमानत्वादिविशेषणविशिष्टां लङ्कां

रामानु०—कैलासंत्यादि । आलिखन्तमिति लिङ्गव्यत्ययः । डीयमानामिव उद्गच्छन्तीमिव । डीयमानत्वादिविशेषणविशिष्टा या तस्या लङ्कायाः महतीं गुप्तिम्, सागरं च, रावणं घोरं रिपुं च निरीक्ष्य ज्ञात्वा वानरश्चिन्तयामासेति संबन्धः ॥ २३–२६ ॥ चिन्ताप्रकारमाह—आगत्यापीत्यादिना । अत्र अपिशब्देन दुस्तरसागरलङ्घनपूर्वकमागमनमेव दुर्घटमिति सूच्यते ॥ २७॥ न केवलं वानरैरसाध्या, किन्तु रामेणाप्यसाध्येत्याह--इमामिति । सः सालगिरिभूविदलनादिषु दृष्टपराक्रम इत्यर्थः ॥ २८ ॥ अवकाश इति । सान्त्वस्यावकाशाभावः आसुरप्रकृतित्वात् । दानस्यावकाशाभावः अर्थोपचितत्वात् । भेदस्यावकाशाभावः बलदर्पितत्वात् । युद्धस्यावकाशाभावः बुद्धिपराक्रमयुक्तत्वात् ॥ २९॥ चतुर्णामिति । गतिः प्राप्तिः, संभावितेति शेषः ॥३०॥

संपूर्णां राक्षसैर्घोरैर्नागैर्भोगवतीमिव । अचिन्त्यां सुकृतां स्पष्टां कुबेराध्युषितां पुरा ॥ २४ ॥ दंष्ट्रिभिर्बहुभिः शूरैः शूलपट्टिशपाणिभिः । रक्षितां राक्षसैर्घोरैर्गुहामाशीविषैरिव ॥ २५ ॥ तस्याश्च महतीं गुप्तिं सागरं च निरीक्ष्य सः । रावणं च रिपुं घोरं चिन्तयामास वानरः ॥ २६ ॥ आगत्यापीह हरयो भविष्यन्ति निरर्थकाः । नहि युद्धेन वै लङ्का शक्या जेतुं सुरैरपि ॥ २७ ॥ इमां तु विषमां दुर्गां लङ्कां रावणपालिताम् । प्राप्यापि स महाबाहुः किं करिष्यति राघवः ॥२८॥ अवकाशो न सान्त्वस्य राक्षसेष्वभिगम्यते । न दानस्य न भेदस्य नैव युद्धस्य दृश्यते ॥ २९ ॥ चतुर्णामेव हि गतिर्वानराणां महात्मनाम् । वालिपुत्रस्य नीलस्य मम राज्ञश्च धीमतः ॥ ३० ॥ यावज्जानामि वैदेहीं यदि जीवति वा न वा । तत्रैव चिन्तयिष्यामि दृष्ट्वा तां जनकात्मजाम् ॥ ३१ ॥

एवं विचार्य नायमेतद्विचारकाल इत्यनुशेते—यावदिति । यावत् यदा जीवति वा न वेति वैदेहीं जानामि । तत्रैव काले तां जनकात्मजां दृष्ट्वा चिन्तयिष्यामि । यद्वा यावच्छब्दोऽवधारणे । जानाम्येव जीवति वा नवेति जानाम्येव । यदि जीवति तदा तां जनकात्मजां दृष्ट्वा तत्रैव तत्काल एव चिन्त

तस्याः महतीं गुप्तिं च सागरं च रावणं घोरं रिपु च निरीक्ष्य ज्ञात्वा वानरः चिन्तयामासेति सम्बन्धः ॥ २३–२६ ॥ चिन्ताप्रकारमेवाह—आगत्यापीत्यादिना ॥ २७ ॥ २८ ॥ अवकाशो नेति । आसुरप्रकृत्या अर्थोपचयबलदर्पपराक्रमसम्पन्नत्वात् सामादीनामवकाशो नास्तीति भावः ॥ २९ ॥ गतिः प्राप्तिः, सम्भावितेति शेषः ॥३०॥ यावदिति । जीवति वा नवेति वैदेहीं जानामि यावत् जानाम्येव । यदि जीवति तां जनकात्मजां दृष्ट्वा तत्रैव तस्मिन् काल एव चिन्तयिष्यामीति योजना । यद्वा जीवति वा जीवतीति वैदेहीं न जानामि यावत् न जानाम्येव वा । उत यदि जीवति तां जनकात्मजां दृष्ट्वा तत्रैव तस्मिन्काल एव चिन्त

यिष्यामीत्यन्वयः ॥ ३१ ॥ तत इति । चिन्तयामास, वैदेहीदर्शनोपायमिति शेषः ॥ ३२--३४ ॥ लक्ष्यालक्ष्येति । लक्ष्यशरीरत्वे राक्षसा गृह्णीयुः । अलक्ष्यशरीरत्वे सर्वा लङ्का न विचेतुं शक्या । कृत्यं साधयितुं प्रवेष्टुं कृत्यसाधनाय प्रवेष्टुम् प्राप्तकालं युक्तम् ॥ ३५ ॥ तामिति । विनिश्चित्य

ततः स चिन्तयामास मुहूर्तं कपिकुञ्जरः । गिरिशृङ्गे स्थितस्तस्मिन् रामस्याभ्युदये रतः ॥ ३२ ॥ अनेन रूपेण मया न शक्या रक्षसां पुरी । प्रवेष्टुं राक्षसैर्गुप्ता क्रूरैर्बलसमन्वितैः ॥ ३३ ॥ उग्रौजसो महावीर्या बलवन्तश्च राक्षसाः । वञ्चनीया मया सर्वे जानकीं परिमार्गता ॥ ३४ ॥ लक्ष्यालक्ष्येण रूपेण रात्रौ लङ्कापुरी मया । प्रवेष्टुं प्राप्तकालं मे कृत्यं साधयितुं महत् ॥ ३५ ॥ तां पुरीं तादृशीं दृष्ट्वा दुराधर्षां सुरासुरैः । हनुमांश्चिन्तयामास विनिःश्वस्य मुहुर्मुहुः ॥ ३६ ॥ केनोपायेन पश्येयं मैथिलीं जनकात्मजाम् । अदृष्टो राक्षसेन्द्रेण रावणेन दुरात्मना ॥ ३७ ॥ न विनश्येत् कथं कार्यं रामस्य विदितात्मनः । एकामेकश्च पश्येयं रहिते जनकात्मजाम् ॥ ३८ ॥ भूताश्चार्था विपद्यन्ते देशकालविरोधिताः । विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥ ३९ ॥

सीतान्वेषणप्रकारं विनिश्चित्य, मुहुर्मुहुस्तमेव चिन्तयामासेत्यर्थः ॥ ३६ ॥ ३७ ॥ रामानु०–तामिति । विनिःश्वस्य मुहुर्मुहुरित्यनेन समुद्रलङ्घनादपि लङ्काप्रवेशस्य दुष्करत्वं द्योत्यते ॥ ३६ ॥ न विनश्येदिति । एकश्च पश्येयमिति । अत्रापि कथमित्यनुषञ्जनीयम् । रहिते एकान्ते ॥ ३८ ॥ रामानु०–रहिते जनरहिते ॥ ३८ ॥ पण्डितेन मुहुर्मुहुर्विचार्य कार्याणि कर्तव्यानि नतु पण्डितमानिना सकृद्विचार्य कर्तव्यानि । तथा सति दोषः स्यादित्याह--भूताश्चेति । भूताश्चार्थाः सम्यगुपायप्रयोगान्निष्पन्नप्राया अप्यर्थाः । विक्लवम् अधीरम्, अविमृश्यकारिणम् । दूतमासाद्य देशकालविरोधितास्सन्तः । सूर्योदये तमो यथा तम इव तद्दूतस्याविमृश्यकारित्वेन सद्य एव विपद्यन्ते नश्यन्तीत्यर्थः ॥ ३९ ॥

ष्यिष्यामीत्यर्थः ॥ ३१–३४ ॥ लक्ष्यालक्ष्येण रूपेण सूक्ष्मशरीरेण महत्कृत्यं सीतान्वेषणरूपं प्राप्तकालम् उचितमिति चिन्तयामासेति पूर्वेण सम्बन्धः ॥ ३५ ॥ तामिति । तां दृष्ट्वा चिन्तयामासेति सम्बन्धः । चिन्ताप्रकारमेवाह–केनेत्यादिना । तां पुरीमित्यादेः विचिन्वन्भवनमित्यन्तस्य ग्रन्थस्य हनुमान् चिन्तयामास इत्यनेन सम्बन्धः ॥ ३६–३८ ॥ भूताश्चार्थाः निष्पन्नान्यपि प्रयोजनानि । विक्लवम् अविवेकिनम् आसाद्य देशकालविरोधितास्सन्तः विपद्यन्ते नश्यन्तीति सम्बन्धः ॥ ३९ ॥

न केवलं कार्यहानिः किन्तु स्वाम्यादीनां बुद्धिशून्यतापि स्यादित्याह—अर्थेति । अत्रापि विक्लवं दूतमासाद्येत्यनुवर्तते । अर्थानर्थान्तरे अर्थानर्थयोः प्रयोजनसाधनयोः कार्याकार्ययोः अन्तरे विषये, निश्चिता राज्ञा सचिवैश्च निर्णीता बुद्धिः विक्लवं दूतमासाद्य न शोभते, अनर्थ

अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते। घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥४०॥ न विनश्येत्कथं कार्यं वैक्लव्यं न कथं भवेत्। लङ्घनं च समुद्रस्य कथं नु न वृथा भवेत् ॥ ४१ ॥ मयि दृष्टे तु रक्षोभी रामस्य विदितात्मनः। भवेद्व्यर्थमिदं कार्यं रावणानर्थमिच्छतः॥ ४२ ॥ नहि शक्यं क्वचित् स्थातुमविज्ञातेन राक्षसैः। अपि राक्षसरूपेण किमुतान्येन केनचित् ॥ ४३ ॥ वायुरप्यत्र न ज्ञातश्चरेदिति मतिर्मम । नह्यस्त्यविदितं किंचिद्राक्षसानां बलीयसाम् ॥ ४४ ॥ इहाहं यदि तिष्ठामि स्वेन रूपेण संवृतः। विनाशमुपयास्यामि भर्तुरर्थश्च हीयते ॥ ४५ ॥ तदहं स्वेन रूपेण रजन्यां ह्रस्वतां गतः । लङ्कामधिपतिष्यामि राघवस्यार्थसिद्धये ॥ ४६ ॥ रावणस्य पुरीं रात्रौ प्रविश्य सुदुरासदाम्। विचिन्वन् भवनं सर्वं द्रक्ष्यामि जनकात्मजाम् ॥ ४७ ॥

कारिणी भवतीत्यर्थः। इदमेव समर्थयते घातयन्तीति ॥४०॥ प्रागुक्तदोषाः स्वस्मिन्कथं न स्युरिति चिन्तयति—न विनश्येदिति । कार्यं रामकार्यम् । कथं केनोपायेन। न विनश्येत् किमद्यापराह्ण एव लङ्का प्रवेष्टव्या उत रात्रौ, किमनेनैव महता रूपेण प्रवेष्टव्या उत ह्रस्वेन रूपेणेत्यर्थः । वैक्लव्यं ममापाण्डित्यं कथं न भवेत् ॥४१॥ अपराह्णे प्रवेशदोषमाह—मयीति॥४२॥महता रूपेण प्रवेशं निराचष्टे—नहीति । स्वेन रूपेण स्वाभाविकमहता रूपेण।

किञ्च न केवलं कार्यहानिः किन्तु स्वाम्यादीनां बुद्धिशून्यतापि स्यादित्याह—अर्थेति । अर्थानर्थान्तरे कार्याकार्यविषये । निश्चितापि स्वामिना सचिवैस्सह निश्चितापि बुद्धिः विक्लवं दूतमासाद्येत्यनुकर्षः, न शोभते अकिञ्चित्करा भवतीत्यर्थः। तस्मात् दूतदोषादेव राज्ञां कार्यहानिरित्याह घातयन्ति हीति ॥ ४० ॥ प्रागुक्तदोषाः स्वस्मिन् यथा न स्युः तथा कर्तव्यमित्याह—नेति । कार्यं स्वामिकार्यम् । वैक्लव्यं बुद्धिहीनता । वैक्लव्यमित्यादौ स्वस्येति शेषः । तथा कर्तव्यमिति श्लोकशेषः ॥ ४१ ॥ प्रस्तुतकार्याविरोधाय यावदस्तमयं स्वगोपनमुचितमिति हृदि निधायाह—मयि दृष्ट इत्यादिना ॥ ४२-४५ ॥ स्वेन रूपेण

परिशेषाद्रात्रौ ह्रस्वरूपेणैव प्रवेष्टव्यमित्याह—तदहमिति ॥ ४२–४८ ॥ सूर्य इति । स्वेन रूपेण (?) वृषदंशकमात्रः बिडालप्रमाणः ॥४९॥ प्रदोषकाल इति । प्रविवेश प्रवेष्टुमुपक्रान्तः, चतुर्थे सर्गे प्रवेशस्य वक्ष्यमाणत्वात् । लङ्कादर्शनं तु त्रिकूटदर्शनस्थित्या ॥ ५० ॥ प्रासादेत्यादि । काञ्चनराजतैः

इति संचिन्त्य हनुमान् सूर्यस्यास्तमयं कपिः । आचकांक्षे तदा वीरो वैदेह्या दर्शनोत्सुकः ॥ ४८ ॥ सूर्ये चास्तं गते रात्रौ देहं संक्षिप्य मारुतिः । वृषदंशकमात्रः सन् बभूवाद्भुतदर्शनः ॥ ४९ ॥ प्रदोषकाले हनुमांस्तूर्णमुत्प्लुत्य वीर्यवान् । प्रविवेश पुरीं रम्यां सुविभक्तमहापथाम् ॥ ५० ॥ प्रासादमालावितता स्तम्भैः काञ्चनराजतैः । शातकुम्भमयैर्जालैर्गन्धर्वनगरोपमाम् ॥ ५१ ॥ सप्तभूमाष्टभूमैश्च स ददर्श महापुरीम् । तलैः स्फटिकसंकीर्णैः कार्तस्वरविभूषितैः ॥ ५२ ॥ वैडूर्यमणिचित्रैश्च मुक्ताजालविभूषितैः । तलैः शुशुभिरे तानि भवनान्यत्र रक्षसाम् ॥ ५३ ॥ काञ्चनानि विचित्राणि तोरणानि च रक्षसाम् । लङ्कामुद्द्योतयामासुः सर्वतः समलंकृताम् ॥ ५४ ॥

स्तम्भैः शातकुम्भमयैर्जालैश्च उपलक्षिताम् । गन्धर्वनगरोपमामिति । गन्धर्वनगरं नाम नानारत्नमयगोपुरप्रासादादियुक्तनगरादिवद्भासमानमभ्रचित्रम् तद्वदाश्चर्यावहामित्यर्थः । यथोक्तम् –"अनेकरत्नाकृति खे विराजते पुरं पताकाध्वजतोरणान्वितम् । यदा तदा हस्तिमनुष्यवाजिनां पिबत्यसृग्भूरि रणे वसुन्धरा ॥" इति ॥ ५१ ॥ सप्तभूमाष्टभूमैश्चेति । भूमिशब्देन आसनशयनादियोग्यं तलमुच्यते । सप्त भूमयो येषां ते सप्तभूमाः । "कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते" इत्यच् समासान्तः । एवमष्टभूमाः । सप्तभूमादिशब्देन तादृशाः प्रासादविशेषा उच्यन्ते । यद्वा प्रासादैरिति शेषः । तैरुपलक्षिताम् ॥५२–५४ ॥ रामानु०–प्रासादेत्यादि । अभ्रंलिहत्वातिविचित्रत्वाभ्यां गन्धर्वनगरोपम्यम् । स्फटिकसंकीर्णैः कार्तस्वरविभूषितैश्च तलैरुपलक्षितैः । सप्तभौमाष्टभौमाः, भूमिषु भवन्तीति भौमानि स्थलानि, सप्त भौमानि येषां ते सप्तभौमाः एवमष्टभौमाः, सप्तभौमाश्चाष्टभौमाश्च तैः, प्रसादैरिति शेषः । तैरुपलक्षितां पुरीं ददर्शेति योजना ॥ ५१॥ ५२ ॥ काञ्चनानीति ।

वानररूपेण ॥ ४६–४८ ॥ वृषदंशकमात्रः, वृषान् मूषिकान् दशतीति वृषदंशः मार्जारः । "ओतुर्बिडालो मार्जारः वृषदंशक आखुभुक्" इत्यमरः ॥ ४९ ॥ प्रदोषे प्रविवेश प्रवेष्टुमुपक्रान्तः, 'अद्वारेण महाबाहुः प्राकारमभिपुप्लुवे' इति चतुर्थे सर्गे साक्षात्प्रवेशस्य वक्ष्यमाणत्वात् ॥५०॥ प्रासादेति । स्तम्भादिभिरुपलक्षिताम् । भूमिषु भवन्तीति भौमानि तलानि, सप्त भौमानि येषां ते तथा । एवमष्टभौमाः । तैः प्रासादैरिति शेषः । तैरुपलक्षितां पुरीं स ददर्शेति योजना ॥५१–५३॥ रक्षसां

रक्षसां तोरणानि रक्षोगृहद्वारस्थतोरणानि ॥ ५४ ॥ अचिन्त्येति । विषण्णः हृष्टश्चेति । अचिन्त्या दुष्प्रवेशेति च विषण्णः, यतोऽद्भुताकारा अतो विस्मयनीयतया हृष्टः ॥ ५५ ॥ स इति । पूर्वश्लोकेनायमेकान्वयः । सुधाधवलनिम्नोन्नतविमानाकारभवनमालिनीमित्यर्थः ॥ ५६ ॥ रामानु०—स पाण्डुरेत्यस्य दृष्ट्वेति पूर्वेण सम्बन्धः । पाण्डुरोद्धिद्धविमानमालिनीं सुधाधौतोन्नतसप्तभूमगृहमालिनीम् । " विमानोऽस्त्री देवयाने सप्तभूमे च सद्मनि " इति वैजयन्ती ॥ ५६ ॥ इदानीं चन्द्रो

अचिन्त्यामद्भुताकारां दृष्ट्वा लङ्कां महाकपिः । आसीद्विषण्णो हृष्टश्च वैदेह्या दर्शनोत्सुकः ॥ ५५ ॥ स पाण्डुरोद्धिद्धविमानमालिनीं महार्हजाम्बूनदजालतोरणाम् । यशस्विनीं रावणबाहुपालितां क्षपाचरैर्भीमबलैः समावृताम् ॥ ५६ ॥ चन्द्रोऽपि साचिव्यमिवास्य कुर्वंस्तारागणैर्मध्यगतो विराजन् । ज्योत्स्नावितानेन वितत्य लोकमुत्तिष्ठते नैकसहस्ररश्मिः ॥५७॥ शङ्खप्रभं क्षीरमृणालवर्णमुद्गच्छमानं व्यवभासमानम् । ददर्श चन्द्रं स हरिप्रवीरः पोप्लूयमानं सरसीव हंसम् ॥५८॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे द्वितीयः सर्गः ॥२॥

दयकाल इत्याह—चन्द्रोपीति । मध्यगतः सन्निधानात्तारागणमध्यगतः । तारागणैरिति सहयोगे तृतीया । ज्योत्स्नावितानेन लोकं वितत्य व्याप्य उत्तिष्ठते आविर्भवति स्म । " उदोऽनूर्ध्वकर्मणि " इत्यात्मनेपदम् ॥ ५७ ॥५८ ॥ रामानु०—चन्द्र इति । चन्द्रोपि नैकसहस्ररश्मिः ज्योत्स्नावितानेन लोकं वितत्य अस्य साचिव्यं कुर्वन्निव विराजन् मध्यगतः तारागणैः सह उत्तिष्ठते प्रादुरभूदित्यन्वयः । अत्र तिष्ठतेः परस्मैपदित्वात् " उदोनूर्ध्वकर्मणि " इत्यात्मनेपदम् । नैकसहस्रराश्मिरित्यत्र नञर्थस्य नशब्दस्य सुप्सुपेति समासः । सागरमैनाकदिवाकरादिवच्चन्द्रोपि साचिव्यं कुर्वन् प्रादुरभूदित्यपिशब्देनावगम्यते ॥ ५७ ॥ शङ्खप्रभमिति । पोप्लूयमानम् उड्डीयमानम् ॥ ५८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्वितीयः सर्गः ॥ २ ॥

तोरणानि रक्षोगृहस्थद्वारतोरणानि ॥ ५४ ॥ विषण्णः लङ्काया दुर्धर्षत्वाद्विषण्णः, अत्यद्भुतत्व त हृष्टश्च ॥ ५५ ॥ पाण्डुरोद्धिद्धविमानमालिनीं धवलोन्नतसप्तभौमप्रासादपङ्क्तिमतीम् ॥ ५६ ॥ ज्योत्स्नावितानेन लोकान्विनतत्य विस्तारीकृत्य अस्य हनूमतः मैनाकसिन्धुवत् साचिव्यं कुर्वन्निव कुर्वन्नेव विराजन् मध्यगतः तारागणमध्यगतः तारागणैः सह उत्तिष्ठते प्रादुरभूदित्यन्वयः ॥ ५७ ॥ पोप्लूयमानं भृशं प्लवमानम् ॥ ५८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां द्वितीयः सर्गः ॥ २ ॥

स लम्बेत्यादि। लम्बे लम्बाख्ये। लम्बशिखरे लम्बगिरिशिखरे इति चाहुः। यद्वा लम्बे लम्बमान इव स्थिते। लम्बशिखरे त्रिकूटशिखरे। सत्त्वं व्यवसायम्। धैर्यमिति यावत्। विवेश प्राप ॥ १–३ ॥ रामानु०–पूर्वसर्गोक्तं लङ्काप्रवेशोपक्रमं विस्तरेणाह–स लम्बशिखर इत्यादिना। सः सागराक्लेशतरणेन प्रसिद्धः। महासत्त्वः समुद्र

स लम्बशिखरे लम्बे लम्बतोयदसन्निभे। सत्त्वमास्थाय मेधावी हनुमान्मारुतात्मजः॥१॥ निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः। रम्यकाननतोयाढ्यां पुरीं रावणपालिताम् ॥ २ ॥ शारदाम्बुधरप्रख्यैर्भवनैरुपशोभिताम्। सागरोपमनिर्घोषां सागरानिलसेविताम् ॥ ३ ॥ सुपुष्टबलसंघुष्टां यथैव विटपावतीम्। चारुतोरणनिर्यूहां पाण्डुरद्वारतोरणाम् ॥४॥ भुजगाचरितां गुप्तां शुभां भोगवतीमिव। तां सविद्युद्घनाकीर्णां ज्योतिर्मार्गनिषेविताम् ॥५॥ मन्दमारुतसञ्चारां यथेन्द्रस्यामरावतीम्। शातकुम्भेन महता प्राकारेणाभिसंवृताम् ॥ ६ ॥ किङ्किणीजालघोषाभिः पताकाभिरलंकृताम्। आसाद्य सहसा हृष्टः प्राकारमभिपेदिवान्॥७॥ विस्मयाविष्टहृदयः पुरीमालोक्य सर्वतः ॥८॥ जाम्बूनदमयैर्द्वारैर्वैडूर्यकृतवेदिकैः। वज्रस्फटिकमुक्ताभिर्मणिकुट्टिमभूषितैः। तप्तहाटकनिर्यूहै राजतामलपाण्डुरैः॥९॥

लङ्घनादवप्रतिहतशक्तिः हनुमान्। लम्बे लम्बमानाकारे। लम्बतोयदसन्निभे लम्बशिखरे लम्बपर्वतशिखरे। मेधावी तत्कालोचितकर्तव्यविषयप्रज्ञायुक्तः सन्। सत्त्वमास्थाय लङ्काप्राप्तिमात्रोपयुक्तलङ्घनशक्तिमास्थाय निशि विवेशेति सम्बन्धः॥ १ ॥ २ ॥ सागरेति। सागरोपमनिर्घोषां सागरनिर्घोषोपमनिर्घोषाम्॥३॥ विटपावतीम् अलकाम्। निर्यूहो मत्तवारणः। पाण्डुरद्वारतोरणां पाण्डुरे द्वारतोरणे यस्यास्ताम् ॥४–७॥ रामानु०–विटपावतीम् अलकाम्। "क्षयः पुण्यजनानां स्यादलका विटपावती" इति वचनात्। चारुतोरणनिर्यूहां निर्यूहो मत्तवारणः, तोरणस्य निर्यूहः तोरणनिर्यूहः, चारुः तोरणनिर्यूहो यस्यास्ताम्। पाण्डुरद्वारतोरणां पाण्डुरे सुधाधवलिते द्वारतोरणे यस्यास्ताम्। शातकुम्भेन स्वर्णविकारेण। प्राकारमभिपेदिवानिति। प्राकारशब्देन प्राकारसमीपो लक्ष्यते। 'अद्वारेण महाबाहुः प्राकारमभिपुप्लुवे' इत्युपरि वक्ष्यमाणत्वात् ॥ ४–७ ॥ विस्मयाविष्टहृदयः, अभूदिति शेषः ॥८॥ पुनर्हर्षहेतूनाह–जाम्बूनदमयैरित्यादिना। जाम्बूनदमयैर्द्वारैरित्यादौ सहयोगे तृतीया। वज्रस्फटिकमुक्ताभिरित्यत्रापि कृतवेदिकैरिति सम्बध्यते। स इति। लम्बे लम्बाकारे। लम्बशिखरे लम्बगिरिशृङ्गे। सत्त्वमास्थाय बलमास्थाय ॥१–३॥ सुपुष्टेति। विटपावतीम् अलकापुरीम्। चारुतोरणनिर्यूहां निर्यूहं मत्तवारणः, तोरणस्य निर्यूहः तोरणनिर्यूहः, चारुः तोरणनिर्यूहो यस्यां ताम्। पाण्डरद्वारतोरणाम् पाण्डरे सुधा धवलिते द्वारे तोरणं यस्यां ताम् ॥४–८॥ जाम्बूनद

राजतामलपाण्डुरैः अवयवैः ॥ ९ ॥ रामानु०–जाम्बूनदमयैर्द्वारैरित्युपलक्षणे तृतीया । राजहंसनिषेवितैरित्यन्तविशेषणविशिष्टैर्द्वारैरुपलक्षितां लङ्कां नगरीं समीक्ष्येति संबन्धः । वज्रस्फटिकमुक्ताभिः, भूषितैरिति शेषः । तप्तहाटकनिर्यूहैः तप्तहेममयमत्तवारणैः । राजतामलपाण्डुरैः रजतमयामलपाण्डुरोपरिप्रदेशैरित्यर्थः ॥ ९ ॥ स्फाटिकान्तरपांसुभिः स्फटिकमयाङ्गणपांसुभिः । सञ्जवनं चतुश्शालम् ॥ १०॥११॥ रामानु०–स्फाटिकान्तरपांसुभिः, अन्तरमवकाशः, अङ्गणमिति यावत् । स्फाटिकाः अन्तरपांसवो येषां तैः । चारुसञ्ज

वैडूर्यकृतसोपानैः स्फाटिकान्तरपांसुभिः । चारुसञ्जवनोपेतैः खमिवोत्पतितैः शुभैः ॥ १० ॥ क्रौञ्चबर्हिणसंघुष्टे राजहंसनिषेवितैः । तूर्याभरणनिर्घोषैः सर्वतः प्रतिनादिताम् ॥ ११ ॥ वस्वोकसाराप्रतिमां तां वीक्ष्य नगरीं ततः । खमिवोत्पतितुंकामां जहर्ष हनुमान् कपिः ॥ १२ ॥ तां समीक्ष्य पुरीं रम्यां राक्षसाधिपतेः शुभाम् । अनुत्तमामृद्धियुतां चिन्तयामास वीर्यवान् ॥ १३ ॥ नेयमन्येन नगरी शक्या धर्षयितुं बलात् । रक्षिता रावणबलैरुद्यतायुधधारिभिः ॥ १४ ॥ कुमुदाङ्गदयोर्वापि सुषेणस्य महाकपेः । प्रसिद्धेयं भवेद्भूमिर्मैन्दद्विविदयोरपि ॥ १५ ॥ विवस्वतस्तनूजस्य हरेश्च कुशपर्वणः । ऋक्षस्य केतुमालस्य मम चैव गतिर्भवेत् ॥ १६ ॥

वनोपेतैः रमणीयचतुःशालोपेतैः । " सभा सञ्जवनं त्विदम् । चतुःशालम् " इत्यमरः ॥ १० ॥ वस्वोकसारा अलका । यद्वा वस्वोकसारा पूर्वदिगवस्थिता शक्रपुरी । "वस्वोकसारा शक्रस्य पूर्वस्यां दिशि वै पुरी " इति पुराणवचनात् ॥१२–१४॥ वस्वोकसाराप्रतिमां, यथैव विटपावतीमित्यत्रालकासाम्यस्य पूर्वमुक्तत्वादत्र वस्वोकसाराप्रतिमामिति पूर्वदिगवस्थितशक्रपुरीसाम्यमुच्यते । " वस्वोकसारा शक्रस्य याम्या संयमनी तथा । पुरी सुखा जलेशस्य सोमस्य च विभावती ॥ " इति श्रीविष्णुपुराणवचनात् वस्वोकसाराशब्दस्य शक्रपुरीवाचकत्वम् ॥ १२ ॥ प्रसिद्धेयमिति । इयं लङ्का विदिता भवेत् ॥ १५ ॥ रामानु०–कुमुदेति । प्रसिद्धा दुष्प्रवेशत्वेन प्रसिद्धेयं नगरी कुमुदाङ्गदयोः महाकपेः सुषेणस्यापि मैन्दद्विविदयोरपि भूमिर्भवेद्विषयो भवेत् ॥ १५ ॥ विवस्वत इति । गतिस्तु सुग्रीवस्य कुशपर्वणः केतुमालस्य मम



मयैर्द्वारैरित्युपलक्षणे तृतीया। राजहंसनिषेवितैरित्यन्तविशेषणविशिष्टैर्द्वारैरुपलक्षितां लङ्कानगरीं समीक्ष्य हनुमान् जहर्षेति सम्बन्धः । वज्रस्फटिकमुक्ताभिः, भूषितैरिति शेषः । राजतामलपाण्डरैः रजतमयामलपाण्डरोपरिप्रदेशैः । चारुसञ्जवनोपेतैः रमणीयचतुश्शालोपेतैः । " सभा सञ्जवनं त्विदम् । चतुःशालम् " इत्यमरः ॥९–११॥ वस्वोकसारा पूर्वदिक्स्थेन्द्रपुरी । उत्पतितुंकामाम् उत्पतितुमिव स्थिताम्॥१२–१४॥ अन्येषामसाध्यत्वेऽप्येतेषां साध्येत्याह–कुमुदाङ्गदयोरिति ।

चैव भवेत् । पूर्वं नीलादीनामेव गतिरुक्ता । अत्र त्वन्येषामित्युक्तिश्चिन्ताप्रकारविशेषः ॥ १६ ॥ १७ ॥ रामानु०–विवस्वत इति । अत्र इयमित्यनुपज्यते । विवस्वत स्तनूजस्य कुशपर्वणो हरेश्च ऋक्षस्य केतुमालस्य मम चैव गतिर्भवेत् विषयो भवेत् । मम चेति पश्चान्निर्देशेन सर्वोत्तरेणापि हनुमता स्वनैच्यमनुसंहितामित्यवगम्यते ॥ १६ ॥ समीक्ष्येति । विक्रान्तं विक्रमम् । भावे निष्ठा । प्रीतिमानभवत्, रामलक्ष्मणाभ्यामनायासेन जेतुं शक्येति मत्वा प्रीतिमानभूदित्यर्थः ॥ १७ ॥ तां रत्नेत्यत्र ददर्शेत्यपकृष्यते । न त्वेकं वाक्यं

समीक्ष्य तु महाबाहू राघवस्य पराक्रमम् । लक्ष्मणस्य च विक्रान्तमभवत्प्रीतिमान् कपिः ॥ १७ ॥ तां रत्नवस
नोपेतां गोष्ठागारावतंसकाम् । यन्त्रागारस्तनीमृद्धां प्रमदामिव भूषिताम् ॥ १८ ॥ तां नष्टतिमिरां दीप्तैर्भास्वरैश्च
महागृहैः । नगरीं राक्षसेन्द्रस्य ददर्श स महाकपिः ॥ १९ ॥ अथ सा हरिशार्दूलं प्रविशन्तं महाबलम् । नगरी स्वेन रूपेण
ददर्श पवनात्मजम् ॥ २० ॥ सा तं हरिवरं दृष्ट्वा लङ्का रावणपालिता । स्वयमेवोत्थिता तत्र विकृताननदर्शना
॥ २१ ॥ पुरस्तात्कपिवर्यस्य वायुसूनोरतिष्ठत । मुञ्चमाना महानादमब्रवीत्पवनात्मजम् ॥ २२ ॥ कस्त्वं केन च
कार्येण इह प्राप्तो वनालय । कथयस्वेह यत्तत्त्वं यावत्प्राणा धरन्ति ते ॥ २३ ॥ न शक्यं खल्वियं लङ्का प्रवेष्टुं
वानर त्वया । रक्षिता रावणबलैरभिगुप्ता समन्ततः ॥ २४ ॥

श्लोकद्वयम्, तच्छब्दद्वयप्रयोगात्प्रथमे श्लोके स्त्रीसाम्योक्तेश्च ॥ १८–२३ ॥ रामानु०–तामिति । अत्र ददर्शेत्यपकृष्यते । यद्वा एकस्य तच्छब्दस्य प्रसिद्धिपरत्वेन श्लोकद्वयमेकं वाक्यम् ॥ १८ ॥ १९ ॥ अथेति । स्वेन रूपेण अधिदेवतारूपेण ॥ २० ॥ पुरस्तादिति । अतिष्ठत तस्मै स्वात्मानं प्रदर्शितवती । "प्रकाशनस्थेयाख्ययोश्च" इत्यात्मनेपदम् ॥ २२ ॥ क इति । ते तव प्राणाः यावद्धरन्ति ध्रियन्ते तावद्यत्तत्त्वं तत्कथयस्व कथय । "धृङ्, अवस्थाने" विकरणादिप्रत्यय आर्षः । यावत् प्राणान् हरामि त इति वा पाठः ॥ २३ ॥ नेति ।

प्रसिद्धा दुष्प्रवेशत्वेन प्रसिद्धेयं नगरी कुमुदाङ्गदादीनामपि भूमिः विषयः भवेत् । विवस्वतस्तनूजस्य सुग्रीवस्य कुशपर्वणः मम च गतिर्भवेत् गम्या भवेत् ॥ १५ ॥ १६ ॥ विक्रान्तं विक्रमम् । रामलक्ष्मणाभ्यामनायासेन जेतुं शक्येति मत्वा प्रीतिमानभूदित्यर्थः ॥ १७ ॥ तां रत्नेत्यादिश्लोकद्वयमेकं वाक्यम् । तत्रैकस्त च्छब्दः प्रसिद्धिपरःअपर प्रकृतपरामर्शी ॥ १८ ॥ १९ ॥ अथेति । स्वेन रूपेण अधिदेवतारूपेण ॥ २० ॥ २१ ॥ पुरस्तादिति । अतिष्ठत स्वात्मानं प्रकाशितवती ॥ २२ ॥ ते तव प्राणा यावद्धरन्ति ध्रियन्ते तावत् यत्तत्त्वं तत्कथयस्व ॥ २३–२७ ॥

अभिगुप्ता समावृतेत्यर्थः । अतो न रक्षितेत्यनेन पुनरुक्तिः ॥ २४–२६ ॥ रामानु०–न शक्यमिति । लिङ्गसामान्ये नपुंसकम् । तथा चोक्तम् भगवता भाष्यकारेण– " श्वमांसेनापि शक्यं क्षुदपहन्तुम् " इति । रावणबलैः समन्ततः अभिगुप्ता समन्ततः संवृता अत एव रक्षिता ॥ २४ ॥ अहमिति । आज्ञाप्रतीक्षा आज्ञानुवर्तिनी ॥ २८ ॥ अहं हि नगरी लङ्का स्वयमेव प्लवङ्गमेति । स्वयमेव सर्वतः सर्वं परिरक्षामीति संबन्धः ॥ ३० ॥ द्रक्ष्यामीति । इत्यर्थम् एतदर्थम् ॥ ३३ ॥ उपवनानि गृहोद्यानानि । काननानि शून्या

अथ तामब्रवीद्वीरो हनूमानग्रतः स्थिताम् । कथयिष्यामि ते तत्त्वं यन्मां त्वं परिपृच्छसि ॥ २५ ॥ का त्वं विरूपनयना पुरद्वारेऽवतिष्ठसि । किमर्थं चापि मां रुद्ध्वा निर्भर्त्सयसि दारुणा ॥ २६ ॥ हनुमद्वचनं श्रुत्वा लङ्का सा कामरूपिणी । उवाच वचनं क्रुद्धा परुषं पवनात्मजम् ॥ २७ ॥ अहं राक्षसराजस्य रावणस्य महात्मनः । आज्ञाप्रतीक्षा दुर्धर्षा रक्षामि नगरीमिमाम् ॥ २८ ॥ न शक्या मामवज्ञाय प्रवेष्टुं नगरी त्वया । अद्य प्राणैः परित्यक्तः स्वप्स्यसे निहतो मया ॥ २९ ॥ अहं हि नगरी लङ्का स्वयमेव प्लवङ्गम । सर्वतः परिरक्षामि ह्येतत्ते कथितं मया ॥ ३० ॥ लङ्काया वचनं श्रुत्वा हनुमान् मारुतात्मजः । यत्नवान् स हरिश्रेष्ठः स्थितः शैल इवापरः ॥ ३१ ॥ स तां स्त्रीरूपविकृतां दृष्ट्वा वानरपुङ्गवः । आबभाषेऽथ मेधावी सत्त्ववान् प्लवगर्षभः ॥ ३२ ॥ द्रक्ष्यामि नगरीं लङ्कां साट्टप्राकारतोरणाम् । इत्यर्थमिह संप्राप्तः परं कौतूहलं हि मे ॥ ३३ ॥ वनान्युपवनानीह लंकायाः काननानि च । सर्वतो गृहमुख्यानि द्रष्टुमागमनं हि मे ॥ ३४ ॥ तस्य तद्वचनं श्रुत्वा लंका सा कामरूपिणी । भूय एव पुनर्वाक्यं बभाषे परुषाक्षरम् ॥ ३५ ॥ मामनिर्जित्य दुर्बुद्धे राक्षसेश्वरपालिताम् । न शक्यमद्य ते द्रष्टुं पुरीयं वानराधम ॥ ३६ ॥

रण्यानि ॥ ३४ ॥ भूयः अतिशयेन परुषाक्षरमित्यन्वयः ॥ ३५ ॥ मामिति । शक्यमित्येतदव्ययम् । तदाह कालिदासः–" शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् । अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥" इति । पुरीरूपं वस्तु शक्यमिति शक्यपुर्योस्सामानाधिकरण्यं वा ॥ ३६ ॥ अहमिति । आज्ञाप्रतीक्षा आज्ञानुवर्तिनी ॥ २८–३३ ॥ वनानीति । उपवनानि कृत्रिमवनानि । वनानि क्षुद्राणि ॥ ३४ ॥ भूयः भृशं परुषाक्षरं वाक्यं पुनर्बभाषे

तत इति। यास्ये यास्यामि। इत्युवाचेति सम्बन्धः ॥ ३७ ॥ वेगिता सञ्जातवेगा ॥ ३८ ॥ संवर्तयामास सङ्कोचयामास ॥ ३९–४४ ॥ प्रसीदेति

ततः स कपिशार्दूलस्तामुवाच निशाचरीम्। दृष्ट्वा पुरीमिमां भद्रे पुनर्यास्ये यथागतम् ॥ ३७ ॥ ततः कृत्वा महानादं सा वै लङ्का भयावहम्। तलेन वानरश्रेष्ठं ताडयामास वेगिता ॥३८॥ ततः स कपिशार्दूलो लङ्कया ताडितो भृशम्। ननाद सुमहानादं वीर्यवान् पवनात्मजः ॥३९॥ ततः संवर्तयामास वामहस्तस्य सोऽङ्गुलीः। मुष्टिनाऽभिजघानैनां हनूमान् क्रोधमूर्च्छितः ॥ ४० ॥ स्त्री चेति मन्यमानेन नातिक्रोधस्स्वयं कृतः ॥ ४१ ॥ सा तु तेन प्रहारेण विह्वलाङ्गी निशाचरी। पपात सहसा भूमौ विकृताननदर्शना ॥४२॥ ततस्तु हनुमान् प्राज्ञस्तां दृष्ट्वा विनिपातिताम्। कृपां चकार तेजस्वी मन्यमानः स्त्रियं तु ताम् ॥ ४३ ॥ ततो वै भृशसंविग्ना लंका सा गद्गदाक्षरम्। उवाचागर्वितं वाक्यं हनुमन्तं प्लवङ्गमम् ॥ ४४ ॥ प्रसीद सुमहाबाहो त्रायस्व हरिसत्तम। समये सौम्य तिष्ठन्ति सत्त्ववन्तो महाबलाः ॥ ४५ ॥ अहं तु नगरी लङ्का स्वयमेव प्लवङ्गम। निर्जिताऽहं त्वया वीर विक्रमेण महाबल ॥ ४६ ॥ इदं तु तथ्यं शृणु वै ब्रुवन्त्या मे हरीश्वर। स्वयंभुवा पुरा दत्तं वरदानं यथा मम ॥ ४७ ॥

समये स्त्रीवधवर्जनव्यवस्थायाम्। सत्त्ववन्तः धैर्यवन्तः ॥ ४५ ॥ अहं त्वित्यर्धं भिन्नं वाक्यम्, एकवाक्यत्वेऽहंशब्दस्य पुनरुक्तिः ॥ ४६ ॥ ४७ ॥

इति सम्बन्धः ॥ ३५–३७ ॥ वेगिता सञ्जातवेगा ॥ ३८ ॥ ३९ ॥ अङ्गुलीः संवर्तयामास मुष्टिमाबबन्धेत्यर्थः ॥ ४० ॥ ४१ ॥ विकृताननदर्शना विकृताननदृष्टिः ॥ ४२–४४ ॥ प्रसीदेति। समये स्त्री न हन्तव्येति व्यवस्थायाम् ॥ ४५ ॥ दुर्जयत्वज्ञापनाय स्वस्वरूपं तावदाह–अहं त्विति। अहं स्वयं साक्षात् लङ्कानगर्येव लङ्कानगर्यधिष्ठात्री देवतैव, अधिष्ठानदेवतात्वादेवाहं दुर्जयेत्यर्थः। ततः किमत आह–निर्जितेति। दुर्जयाऽप्यहं त्वया बलान्निर्जिता अतः सत्यं सर्वे लङ्कान्तर्वर्तिनो राक्षसाः निर्जिता इति भावः ॥ ४६ ॥ स्वनिर्जयेन रक्षसां निर्जितत्वप्रतिपादनस्य कारणमाह–इदमित्यादिना। वरदानं दत्तम् वरदानं कृतमित्यर्थः ॥ ४७ ॥

वरदानस्वरूपमाह—यदेति। अत्र रावणस्य दिग्विजये नन्दिकेश्वरादिभिर्लङ्कायाः सद्यो विनाशशापे दत्ते सा ब्रह्माणं गत्वा प्रार्थयामास, विनाशो मे मा भूदिति। स च तस्यै वरमदात्, तव सद्यो विनाशो न भविष्यति यदा तु वानरस्त्वामभिभविष्यति तदा तु विनाशो भविष्यतीति कथोन्नीयते

यदा त्वां वानरः कश्चिद्विक्रमाद्वशमानयेत्। तदा त्वया हि विज्ञेयं रक्षसां भयमागतम्॥४८॥ स हि मे समयस्सौम्य प्राप्तोऽद्य तव दर्शनात् । स्वयम्भूविहितस्सत्यो न तस्यास्ति व्यतिक्रमः॥ ४९ ॥ सीतानिमित्तं राज्ञस्तु रावणस्य दुरात्मनः। रक्षसां चैव सर्वेषां विनाशः समुपागतः॥ ५० ॥ तत्प्रविश्य हरिश्रेष्ठ पुरीं रावणपालिताम् । विधत्स्व सर्वकार्याणि यानि यानीह वाञ्छसि ॥ ५१ ॥ प्रविश्य शापोपहतां हरीश्वरः शुभां पुरीं राक्षसमुख्यपालिताम् । यदृच्छया त्वं जनकात्मजां सतीं विमार्ग सर्वत्र गतो यथासुखम् ॥ ५२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे तृतीयः सर्गः ॥ ३ ॥

स निर्जित्य पुरीं श्रेष्ठां लङ्कां तां कामरूपिणीम्। विक्रमेण महातेजा हनूमान् कपिसत्तमः। अद्वारेण महाबाहुः प्राकारमभिपुप्लुवे ॥ १ ॥ प्रविश्य नगरीं लंकां कपिराजहितंकरः। चक्रेऽथ पादं सव्यं च शत्रूणां स तु मूर्धनि ॥२॥

॥ ४८-५१ ॥ प्रविश्येति । शापो नन्दिकेश्वरादिकृतः। यदृच्छयेत्यस्य गत इति सम्बन्धः। यदृच्छयाऽत्र प्राप्तस्त्वमित्यर्थः ॥ ५२ ॥ रामानु०—प्रविश्येति। हरीश्वरस्त्वं यदृच्छया स्वैरं विमार्गेति सम्बन्धः ॥ ५२ ॥ इति श्रीगोविन्द० श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने तृतीयः सर्गः॥३॥
स निर्जित्येत्यादि। अद्वारेणेत्यनेन लङ्कापरिभवो राक्षसैर्न ज्ञातुं शक्य इति द्योत्यते ॥ १ ॥ रामानु०—अद्वारेणेति। "ग्रामं वा नगरं वापि पत्तनं वा परस्य हि। विशेषात्समये सौम्य न द्वारेण विशेन्नृपः ॥" इत्युक्तप्रकारेण अद्वारेण प्रविष्टवान् ॥ १ ॥ प्रविश्येति। चक्र इति। शत्रुदेशप्रवेशे प्रथमं सव्यपादः कार्यः स तु शत्रोर्मूर्ध्नि

वरस्वरूपमाह—यदेति। अत्र रावणाधिक्षेपक्षुभितनन्दिकेश्वरशापात् सद्यः प्राप्तो विनाशः स्वयम्भूवरप्रसादात् वानरास्कन्दनपर्यन्तं प्रतिबद्ध इति कथाऽनुसन्धेया ॥ ४८-५१ ॥प्रविश्येति। यदृच्छया स्वैरम् ॥ ५२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां तृतीयः सर्गः ॥ ३ ॥
अद्वारेणेति। शत्रुस्थानमद्वारेण प्रवेष्टव्यमिति शास्त्रादद्वारेणेत्युक्तम् ॥ १ ॥ प्रविश्येति। प्रवेष्टुमुपक्रम्य सव्यं पादं चक्रे, अग्रे इति शेषः। सः अग्रतः कृत

कृतो भवेदिति राजशास्त्रम् । अनेन प्रथमं सव्यं पादं लङ्कायां कृतवानित्यर्थः सिद्धः । तदाह बृहस्पतिः—" प्रयाणकाले च गृहप्रवेशे विवाहकालेऽपि च दक्षिणाङ्घ्रिम् । कृत्वाऽग्रतः शत्रुपुरप्रवेशे वामं निदध्याच्चरणं नृपालः ॥ " इति ॥ २-४ ॥ रामानु०—प्रविश्येति । प्रविश्य प्रवेष्टुमुपक्रम्य । सव्यं पादं चक्रे अग्रत इति शेषः । "प्रयाणकाले च गृहप्रवेशे विवाहकालेऽपि च दक्षिणाङ्घ्रिम् । कृत्वाऽग्रतः शत्रुपुरप्रवेशे वामं निदध्याच्चरणं नृपालः ॥" इति बृहस्पतिवचनप्रकारेण सव्यं पादमग्रतः कृतवान् । सः अग्रतः

प्रविष्टः सत्त्वसंपन्नो निशायां मारुतात्मजः । स महापथमास्थाय मुक्तापुष्पविराजितम् ॥ ३ ॥ ततस्तु तां पुरीं लङ्कां रम्यामभिययौ कपिः ॥ ४ ॥ हसितोत्कृष्टनिनदैस्तूर्यघोषपुरस्सरैः । वज्राङ्कुशनिकाशैश्च वज्रजालविभूषितैः । गृहमेघैः पुरी रम्या बभासे द्यौरिवाम्बुदैः ॥ ५ ॥ प्रजज्वाल तदा लङ्का रक्षोगणगृहैः शुभैः ॥ ६ ॥ सिताभ्रसदृशैश्चित्रैः पद्मस्वस्तिकसंस्थितैः । वर्धमानगृहैश्चापि सर्वतः सुविभूषिता । [ गृहमुख्यैः पुरी रम्या बभासे द्यौरिवाम्बुदैः ] ॥ ७ ॥ तां चित्रमाल्याभरणां कपिराजहितंकरः । राघवार्थं चरन् श्रीमान् ददर्श च ननन्द च ॥ ८ ॥

पादः शत्रूणां मूर्धन्येव मूर्धन्येव कृतो भवति । अग्रतः सव्यपादनिक्षेपे शत्रवः पराभूताः स्युरिति भावः ॥ २ ॥ प्रविष्ट इति । महापथम् आस्थाय गम्यत्वेनावलम्ब्य प्रविष्ट इति संबन्धः ॥ ३ ॥ हसितेति । तूर्यघोषपुरस्सरैः हसितोत्कृष्टनिनदैः हसितानामुत्कृष्टस्वरैः युक्तेत्यर्थः । वज्राङ्कुशनिकाशैः वज्रमङ्कुशो यस्य सः वज्राङ्कुशः ऐरावतः तत्तुल्यैः तद्वच्छुभ्रैरित्यर्थः । वज्राङ्कुशतुल्यसंस्थानैर्वा । वज्रजालविभूषितैः वज्रो रत्नविशेषः । गृहमेघैः गृहश्रेष्ठैः । "उपमितं व्याघ्रादिभिः" इत्युपमितसमासः ॥ ५ ॥ रामानु०—हसितोत्कृष्टनिनदैः हसितोत्कृष्टनिनदैश्च । उपलक्षणे तृतीयान्तमेतत् गृहमुख्यविशेषणम् । वज्राङ्कुशनिकाशैः वज्रसंस्थानैरङ्कुशसंस्थानैश्च । वज्रजालविभूषितैः वज्राख्यरत्नालंकृतैः । गृहमुख्यैरिति पाठः । गृहमेघैरिति पाठे मेघशब्दः श्रेष्ठवाची ॥ ५ ॥ प्रजज्वालेत्यादि । पद्मस्वस्तिकसंस्थितैः पद्मस्वस्तिकनामभ्यां संस्थानविशेषाभ्यां

सव्यपादः शत्रूणां मूर्धन्येव कृतो भवति । अग्रतः सव्यपादनिक्षेपे शत्रवः पराभूताः स्युरिति भावः ॥२॥ प्रविष्ट इति । महापथमास्थाय गम्यत्वेनावलम्ब्य प्रविष्टः ॥ ३ ॥ ४ ॥ हसितानामुत्कृष्टनिनदैः अट्टहासैः वज्राङ्कुशनिकाशैः वज्रनिकाशैरङ्कुशनिकाशैश्च गृहमेघैः गृहश्रेष्ठैः । गृहमुख्यैरित्यपि पाठः ॥ ५ ॥ प्रजज्वालेति । प्रजज्वाल प्रचकाशे ॥ ६ ॥ पद्मस्वस्तिकसंस्थितैः पद्मस्वस्तिकनामभ्यां संस्थानविशेषाभ्यां संस्थितैः । वर्धमानगृहैः वर्धमाननाम्ना संस्थानेन संस्थितैः : स्वर्यस्ति लक्षणग्रहा आकल्पा चतुरश्राः । " चतुःशाला चतुर्द्वारा सर्वतोभद्रसंज्ञिता । पश्चिमद्वाररहिता मध्यावर्ता ह्यानना । दक्षिणद्वाररहिता वर्धमाना धनप्रदा ।

संस्थितैः । वर्द्धमानगृहैः वर्द्धमाननाम्ना संस्थानेन संस्थितैः गृहैः । तल्लक्षणानि वराहमिहिरसंहितायां व्यक्तानि विस्तरभयान्न लिख्यन्ते ॥ ६-९ ॥ रामानु०–तामिति । श्रीमान्, अत्र श्रीशब्देन स्वामिकार्यकरणरूपसंपदुच्यते । ददर्श च ननन्द च दुष्प्रवेशामपि लङ्कामक्लेशेन प्रविश्य सर्वतः पश्यामि तस्माद्रामसुग्रीवयोर्मनोरथसिद्धिरवश्यं भाविनीति ननन्देत्यर्थः ॥ ८ ॥ शुश्रावेति । त्रिस्थानस्वरभूषितं त्रिस्थानेषु उरःकण्ठशिरस्सु भवैः स्वरैर्भूषितम् । ते च मन्द्रमध्यताराः ॥ १० ॥

भवनाद्भवनं गच्छन् ददर्श पवनात्मजः । विविधाकृतिरूपाणि भवनानि ततस्ततः ॥ ९ ॥ शुश्राव मधुरं गीतं त्रिस्थानस्वरभूषितम् । स्त्रीणां मदसमृद्धानां दिवि चाप्सरसामिव ॥ १० ॥ शुश्राव काञ्चीनिनदं नूपुराणां च निस्वनम् । सोपाननिनदांश्चैव भवनेषु महात्मनाम् । आस्फोटितनिनादांश्च क्ष्वेलितांश्च ततस्ततः ॥ ११ ॥ शुश्राव जपतां तत्र मन्त्रान् रक्षोगृहेषु वै ॥ १२ ॥ स्वाध्यायनिरतांश्चैव यातुधानान् ददर्श सः । रावणस्तवसंयुक्तान् गर्जतो राक्षसानपि ॥ १३ ॥ राजमार्गं समावृत्य स्थितं रक्षोबलं महत् । ददर्श मध्यमे गुल्मे रावणस्य चरान् बहून् ॥ १४ ॥ दीक्षितान् जटिलान् मुण्डान् गोजिनाम्बरवाससः । दर्भमुष्टिप्रहरणानग्निकुण्डायुधांस्तथा ॥ १५ ॥

सोपाननिनदांश्च मणिहेमकृतानां सोपानानां नूपुरादिताडनेन ये निनदाः संभवन्ति तान् । आस्फोटितनिनादान् व्यत्यस्तकरतलाभ्यां भुजाग्रास्फालनशब्दान् । क्ष्वेलितान् सिंहनादान् ॥ ११ ॥ मन्त्रान् ऋग्वेदादीन् ॥ १२ ॥ स्वाध्यायनिरतान् ब्रह्मभागपाठनिरतान् ॥ १३ ॥ राजमार्गमिति । मध्यमे गुल्मे नगरमध्यस्थितसैन्यसमाजे । चरान् स्वजनवृत्तान्तजिज्ञासया प्रधानप्रेरितान् प्रणिधीन् ॥ १४ ॥ दीक्षितानित्यादि । गोजिनाम्बरधारिणः वृषभचर्मरूपवस्त्रधारिणः । दर्भमुष्टिप्रहरणान् " यथा वज्रं हरेः पाणौ तथा विप्रकरे कुशः " इति स्मरणादिति भावः । अग्निकुण्डायुधान् जयार्थं

प्राग्द्वाररहिता स्वस्तिकाख्या पुत्रधनप्रदा ॥ " इत्युक्तेः पद्मस्वस्तिकवर्द्धमानाख्यगृहाः प्रभुगृहभेदा इत्यर्थः ॥ ७-९ ॥ त्रिस्थानस्वरभूषितम्, उरःकण्ठशिरस्स्थानत्रयोत्पन्नैः मन्द्रमध्यमतारकैः स्वरैर्भूषितम् ॥ १० ॥ सोपाननिनदान् सोपानसञ्चरत्कान्ताजनमञ्जीरध्वनीनित्यर्थः । आस्फोटिताननिनादान् हर्षोत्पन्नक्रियाविशेषजनितशब्दान् क्ष्वेलितान् । सिंहनादान् ॥ ११-१३ ॥ मध्यमे गुल्मे नगरमध्यस्थसैन्यसङ्घे । चरान् नगरवृत्तान्तनिवेदकान् गूढचारानित्यर्थः ॥ १४ ॥ गोजिनाम्बरवाससः गोचर्मवाससः विवसनांश्च । दर्भमुष्टिप्रहरणान् अनिष्टनिवारकानुष्ठानसाधनतया दर्भमुष्टीनामायुधत्वम् । अग्निकुण्डायुधान् कृत्याद्युत्पादनद्वारा शत्रु

होमशीलान् ॥ १५ ॥ कूटमुद्गरपाणीन् कूटो नामायस्कारकूटसदृश आयुधविशेषः । "कूटोऽस्त्री पुञ्जमायाद्रिशृङ्गायोघनवेश्मसु । छले बाणान्तरे दम्भे भग्नशृङ्गवृषे तु ना ॥" इति शब्दरत्नाकरे । मुद्गरः द्रुघणः । "मुद्गरो द्रुघणो घनः" इति वैजयन्ती ॥ १६ ॥ करालान् भीमान् । "करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च" इति भागुरिः । भुग्नवक्त्रान् कुटिलवक्त्रान् । "आविद्धं कुटिलं भुग्नम्" इत्यमरः । विकटान् विषमाङ्गान् । शतघ्नी शतशङ्कुः

कूटमुद्गरपाणींश्च दण्डायुधधरानपि । एकाक्षानेककर्णांश्च लम्बोदरपयोधरान् ॥ १६ ॥ करालान् भुग्नवक्त्रांश्च विकटान् वामनांस्तथा । धन्विनः खड्गिनश्चैव शतघ्नीमुसलायुधान् ॥ १७ ॥ परिघोत्तमहस्तांश्च विचित्रकवचोज्ज्वलान् । नातिस्थूलान्नातिकृशान्नातिदीर्घातिह्रस्वकान् ॥ १८ ॥ नातिगौरान्नातिकृष्णान्नातिकुब्जान्नवामनान् । विरूपान् बहुरूपांश्च सुरूपांश्च सुवर्चसः । ध्वजीन् पताकिनश्चैव ददर्श विविधायुधान् ॥ १९ ॥ शक्तिवृक्षायुधांश्चैव पट्टिशाशनिधारिणः ॥ २० ॥ क्षेपणीपाशहस्तांश्च ददर्श स महाकपिः । स्रग्विणस्त्वनुलिप्तांश्च वराभरणभूषितान् ॥ २१ ॥ नानावेषसमायुक्तान् यथास्वैरगतान् बहून् । तीक्ष्णशूलधरांश्चैव वज्रिणश्च महाबलान् ॥ २२ ॥ शतसाहस्रमव्यग्रमारक्षं मध्यमं कपिः । रक्षोधिपतिनिर्दिष्टं ददर्शान्तःपुराग्रतः ॥ २३ ॥

अयोगदा । "अयःकण्टकसञ्छन्ना शतघ्नी परिकीर्तिता" इति वैजयन्ती । मुसलम् आयसोऽरत्निप्रमाणको दण्डः । "मुसलं त्वायसो दण्डो धार्योऽरत्निप्रमाणकः" इति शब्दरत्नाकरे ॥ १७ ॥ परिघः दण्डविशेषः । नातिदीर्घातिह्रस्वकानित्यत्र ह्रकारोपरि ऋकारोच्चारणं वृत्तभङ्गपरिहाराय । एवं ध्वजिनः इति वक्तव्ये ध्वजीनित्युक्तिश्च छन्दोभङ्गपरिहारायैव ॥ १८ ॥ १९ ॥ शक्तीत्यादि । पट्टिशः तीक्ष्णधारो लोहदण्डः । "पट्टिशो यो दीर्घदण्डस्तीक्ष्णधारः क्षुरोपमः" इति निघण्टुः ॥ २० ॥ क्षेपणी क्षेपणीयः । वेषः अलङ्कारः । यथास्वैरगतान् यथेष्टचारिणः ॥ २१ ॥ २२ ॥ शतेति । शतसहस्रमेव शतसाहस्रम् । स्वार्थे अण् । आरक्षं गुल्मम् । अन्तःपुराग्रतः अन्तर्नगराग्रतः रक्षोधिपतिनिर्दिष्टं मध्यमगुल्मभूतं रावणमूलबलं ददर्शेत्यर्थः ॥ २३ ॥

मारकतया अग्निकुण्डानामायुधत्वम् ॥१५॥१६॥ विकटान् विषमाङ्गान् ॥१७–२०॥ क्षेपणी क्षेपणीयः ॥२१॥२२॥ आरक्षम् आ समन्ताद्रक्षतीत्यारक्षं सैन्यम् । अन्तः

स तदेत्यादिश्लोकद्वयमेकान्वयम् । सः कपिः तत् आरक्षं दृष्ट्वा सः राक्षसेन्द्रस्य गृहं ददर्शेत्यन्वयः । क्रियाभेदात्तच्छब्दद्वयम् ॥ २४ ॥ २५ ॥ त्रिविष्टपेत्यादि । यानैः शिबिकादिभिः । विमानैः व्योमयानैः । हयगजैरित्यत्र गजशब्दः द्विदन्तगजपरः । अतो न वारणैरित्यनेन पुनरुक्तिः । मृगपक्षिभिश्च भूषितमित्यन्वयः । रक्षिभिर्यातुधानैर्गुप्तमिति सम्बन्धः । आविवेश जगाम । गृहप्रवेशस्य दूरं वक्ष्यमाणत्वात् ॥ २६–२८ ॥

स तदा तद्गृहं दृष्ट्वा महाहाटकतोरणम् । राक्षसेन्द्रस्य विख्यातमद्रिमूर्ध्नि प्रतिष्ठितम् ॥२४॥ पुण्डरीकावतंसाभिः परिघाभिरलंकृतम् । प्राकारावृतमत्यन्तं ददर्श स महाकपिः ॥ २५ ॥ त्रिविष्टपनिभं दिव्यं दिव्यनादविनादितम् । वाजिहेषितसंघुष्टं नादितं भूषणैस्तदा ॥२६॥ रथैर्यानैर्विमानैश्च तथा हयगजैः शुभैः । वारणैश्च चतुर्दन्तैः श्वेताभ्रनिचयोपमैः ॥ २७ ॥ भूषितं रुचिरद्वारं मत्तैश्च मृगपक्षिभिः । रक्षितं सुमहावीर्यैर्यातुधानैः सहस्रशः । राक्षसाधिपतेर्गुप्तमाविवेश महाकपिः ॥ २८ ॥ सहेमजाम्बूनदचक्रवालं महार्हमुक्तामणिभूषितान्तम् । परार्ध्यकालागरुचन्दनाक्तं स रावणान्तःपुरमाविवेश॥२९॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे चतुर्थः सर्गः ॥४॥

ततः स मध्यं गतमंशुमन्तं ज्योत्स्नावितानं महदुद्वमन्तम् ।
ददर्श धीमान् दिवि भानुमन्तं गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥ १ ॥

सहेमेति । हेम अन्यत्र जातं सुवर्णम् । जाम्बूनदं जम्बूनद्यां जातम् । चक्रवालं प्राकारमण्डलम् । रावणान्तःपुरं रावणान्तर्नगरम् ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥ ततः स मध्यमित्यादि । दिवि आकाशे मध्यं गतम् आकाशमध्यगतमित्यर्थः । लङ्काप्रवेशे चन्द्रोदयोक्तेः रावणनगरप्रवेशे अर्धरात्र इति सूच्यते । उत्तरश्लोके अभियान्तमित्यनेन



पुराग्रतः रावणगृहस्याग्रतः ॥ २३ ॥ स इत्यादिश्लोकद्वयमेकं वाक्यम् । द्वितीयस्तच्छब्दः प्रसिद्धिपरः ॥ २४–२६ ॥ ज्यैरिति । यानैः शिबिकादिभिः । आविवेश आससाद, साक्षात्प्रवेशस्य वक्ष्यमाणत्वात् ॥ २७ ॥२८॥ सहेमेति च्छेदः । हेमसहितं जाम्बूनदचक्रवालमहितं स्वर्णप्राकारमण्डलयुक्तम् । अन्तःपुरम् अन्तर्नगरम् आविवेश ॥ २९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां चतुर्थः सर्गः ॥ ४ ॥ तत इति । ततः प्रवेशानन्तरम् ।

नाभिगमनमुच्यतें । दक्षिणां दिशं गच्छतोऽभिमुखत्वासंभवात्. किन्तु गमनमात्रम् । सर्तदृशं सर्गेपि " प्रजगाम नभश्चन्द्रः" इति प्रकर्षेण गमनवचनं नभोमध्यातीतत्वमाचष्टे । अंशुमन्तमिति चन्द्र एवोच्यते । भानुमन्तं दीप्तिमन्तम् । वृषं श्वेतम् । अस्मिन्सर्गे छेकानुप्रासः न तु यमकम्. अर्थ भेदाभावात् । तदुक्तं काव्यप्रकाशे—" भिन्नार्थानां त्र्यादीनां वर्णानां विवृत्तिर्यमकम् " इति ॥ १ ॥ पापानि दुःखानि ॥ २ ॥ भुवि मन्दरो लक्ष्मीवान् ।

लोकस्य पापानि विनाशयन्तं महोदधिं चापि समेधयन्तम् । भूतानि सर्वाणि विराजयन्तं ददर्श शीतांशुमथा भियान्तम् ॥ २ ॥ या भाति लक्ष्मीर्भुवि मन्दरस्था तथा प्रदोषेषु च सागरस्था । तथैव तोयेषु च पुष्करस्था रराज सा चारुनिशाकरस्था ॥ ३ ॥ हंसो यथा राजतपञ्जरस्थः सिंहो यथा मन्दरकन्दरस्थः । वीरो यथा गर्वित कुञ्जरस्थश्चन्द्रो विबभ्राज तथाऽम्बरस्थः ॥ ४ ॥ स्थितः ककुद्मानिव तीक्ष्णशृङ्गो महाचलः श्वेत इवोच्चशृङ्गः । हस्तीव जाम्बूनदबद्धशृङ्गो रराज चन्द्रः परिपूर्णशृङ्गः ॥ ५ ॥ विनष्टशीताम्बुतुषारपङ्को महाग्रहग्राहविनष्टपङ्कः । प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को रराज चन्द्रो भगवान् शशाङ्कः ॥ ६ ॥

प्रदोषेषु सागरः । तोयेषु पद्मं श्रीमत् । तद्वत्तदानीं चन्द्रो विशिष्टलक्ष्मीको बभूवेत्यर्थः । अत्रान्यस्यान्यत्रासम्बन्धान्मन्दरादिलक्ष्मीरिवास्य लक्ष्मीरिति सादृश्याक्षेपान्निदर्शनालङ्कारः । तदुक्तं काव्यप्रकाशे निदर्शनायाम्—" अभिमान्यस्तु सम्बन्ध उपमापरिकल्पकः" इति ॥ ३ ॥ हंस इति । राजतपञ्जरस्थः गगनगर्भस्य ज्योत्स्नाक्षालितत्वात् । मन्दरकन्दरस्थः तस्य श्वेतगिरित्वात् । गर्वितकुञ्जरस्थः नीलरूपस्य नभस उपर्यवस्थानात् । अत्र पुष्टत्वादीनां साधारणधर्माणामनुपादानाल्लुप्तोपमालङ्कारः ॥ ४ ॥ स्थित इति । परिपूर्णशृङ्गः परिपूर्णकलः । अत्र शृङ्गशब्दस्य विषाणाद्यर्थ भेदेऽपि बिम्बप्रतिबिम्बभावेनौपम्यम् ॥ ५ ॥ विनष्टेति । शीताम्बु हिमाम्बु, तुषाराः पृषताः, पङ्कः तमः, विनष्टाः शीताम्बुतुषारा एव पङ्काः यस्मिन्

मध्यं गतं, गगनस्येति शेषः । यद्वा तारामध्यं गतम् अंशुमन्तं चन्द्रम् । भानुमन्तं दीप्तिमन्तम् ॥ १ ॥ लोकस्येति । पापशब्देन पापफलं दुःखमुच्यते, लोकाह्लादकत्वाच्चन्द्रस्य दुःखविनाशकत्वम् । यद्वा सूर्यचन्द्रादीनां लोकपावनत्वादिति भावः ॥ २ ॥ या लक्ष्मीः मन्दरादिस्थाने भाति सा लक्ष्मीः चारुनिशाकरस्था भातीति सम्बन्धः ॥ ३ ॥ ४ ॥ परिपूर्णशृङ्गः परिपूर्णकलः ॥ ५ ॥ महाग्रहग्राहविनष्टपङ्कः महाग्रहः सूर्यः तस्य ग्राहेण किरणसङ्क्रमेण विनष्टः विनाशितः पङ्कस्तमो

तथा। "तुषारः शीकरे हिमे" इति विश्वः। महाग्रहाणां शुक्रबृहस्पत्यादीनां ग्राहेण ग्रहणेन आच्छादनेन विनष्टः पङ्को मलं यस्य सः महाग्रहग्राह विनष्टपङ्कः, स्वतेजसा महाग्रहतिरस्कारेण व्यक्तनैर्मल्य इत्यर्थः। यद्वा महाग्रहः सूर्यः तस्य ग्राहेण किरणपरिग्रहेण विनष्टः विनाशितः पङ्कः तमः येन सः। तदा तरणिकिरणसङ्क्रमणेन देदीप्यमानमण्डल इत्यर्थः। तदुक्तं वराहमिहिरेण—" सलिल (समे) मये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम्।

**शिलातलं प्राप्य यथा मृगेन्द्रो महारणं प्राप्य यथा गजेन्द्रः। राज्यं समासाद्य यथा नरेन्द्रस्तथा प्रकाशो विरराज चन्द्रः ॥ ७ ॥ प्रकाशचन्द्रोदयनष्टदोषः प्रवृद्धरक्षःपिशिताशदोषः। रामाभिरामेरितचित्तदोषः स्वर्गप्रकाशो भगवान् प्रदोषः ॥ ८ ॥**

क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः॥" इति। प्रकाशलक्ष्म्याश्रयनिर्मलाङ्कः तेजस्समृद्धियोगात्स्पष्टकलङ्कः। अतिधवले चन्द्रे परभागयोगेन कलङ्कस्याप्यौज्ज्वल्यं भवतीत्यर्थः। शशाङ्क इति। भूच्छायामयः शशरूपः अङ्कः यस्य स तथा। "लोकच्छायामयं लक्ष्म तवाङ्के शशसन्निभम्" इति हरिवंशोक्तेः। भगवान्महाप्रभाववान् ॥ ६ ॥ शिलेति। प्रकाशः प्रकाशमानः ॥७॥ प्रकाशेन चन्द्रोदयेन नष्टः दोषः तिमिरं यस्मिन् सः। प्रवृद्धः रक्षसां पिशिताशनानां च दोषः सञ्चाररूपो यस्मिन् स तथा। रामाभिः अभिरामैः कान्तैश्च ईरितः त्यक्तः चित्तदोषः कोपाभिमानरूपः यस्मिन्।

येन तथोक्तः। चन्द्रस्य सूर्यकिरणसंक्रमणद्वारा तमोविनाशकत्वम्। तदुक्तम्—" सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम्। क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः॥" इति। विनष्टशीताम्बुतुषारपङ्कः शीताम्बु हिमं तस्य तुषाराः पृषतः त एव पङ्कः मालिन्यम्, विनष्टः शीताम्बुतुषारपङ्को यस्मिन् स तथा। एतदपि सूर्यकिरणसंक्रमणादित्यवगन्तव्यम्। प्रकाशलक्ष्म्याश्रयनिर्मलाङ्कः, प्रकाशसमृद्ध्याश्रयत्वात्सुव्यक्तचिह्नः इत्यर्थः ॥ ६ ॥ ७ ॥ प्रकाशचन्द्रोदयनष्टदोषः प्रकाशचन्द्रोदयेन नष्टः दोषः तिमिररूपदोषो यस्य स तथा। प्रवृद्धरक्षःपिशिताशदोषः प्रवृद्धः रक्षसां पिशितभक्षणरूपदोषो यस्मिन्। पिशितभक्षणस्य दोषत्वमहितजनहिंसाहेतुत्वात्। रामाभिरामेरितचित्तदोषः रामाः कान्ताः अभिरामाः रमणाः स्त्रीभिः कान्तैश्च ईरितः निरस्तः चित्तदोषः प्रणयकलहरूपो येन

स०—भगवान् पूर्वोक्तरीत्या माहात्म्यवान्। प्रदोषः रात्रिकालः। स्वर्गप्रकाशः स्वर्गस्थानवत्सुखकरः। कीदृशः प्रकाशचन्द्रोदयनष्टदोषः प्रकाशाय जातो यश्चन्द्रोदयस्तेन नष्टो दोषः अन्धकाराख्यः यस्य स तथा। प्रवृद्धः रक्षसां पिशिताशरूपः मांसभक्षणरूपो दोषो यस्मिन्। रामाभिः स्त्रीभिः अभिरामान् पतीन् प्रति इरितेन वचनेन चित्तदस्य चित्तं द्यति खण्डयतीति व्युत्पत्त्या मन्मथस्य उषः दाहः, निवृत्तिरिति यावत्, यस्मिन् कान्तासुरतसँल्लापजनितमन्मथोत्सवत्वानित्यर्थः। अथवा रामाभिरामाणां परस्परमीरितरूपप्रणयकलहाद्यचित्तदोषत्वानित्यर्थः। "उष दाहे" "घञर्थे कविधानम्" इति कः ॥ ८ ॥

स्वर्गप्रकाशः स्वर्गतुल्यः, तद्वदानन्दावह इत्यर्थः । भगवान् श्रीमान् । "भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः । प्रदोषः गत इति शेषः ॥ ८ ॥ तन्त्रीति स्पष्टम् ॥ ९ ॥ मत्ताः मधुमदक्षीबाः । प्रमत्ताः प्रस्तुतकार्यविस्मारिणः । मत्तप्रमत्तजनयोगात् कुलान्यपि तथोच्यन्ते । कुलानि गृहाणि । समाकुलानि समाकुलजनानि । वीरश्रिया वीरलक्ष्म्या । वीरः इते भिन्नं पदं वा कपिविशेषणम् ॥ १० ॥ परस्परं चेत्यादिश्लोकद्वयमेकान्वयम् । ददर्शेति सम्बध्यते । आक्षिपन्तीत्यादीनि शत्रन्तानि रक्षोविशेषणानि । आक्षिपन्ति अपहसन्ति । अधिनिक्षिपन्ति अन्योन्यस्योपरि दधन्ति ।

तन्त्रीस्वनाः कर्णसुखाः प्रवृत्ताः स्वपन्ति नार्यः पतिभिस्सुवृत्ताः । नक्तञ्चराश्चापि तथा प्रवृत्ता विहर्तुमत्यद्भुत रौद्रवृत्ताः ॥९॥ मत्तप्रमत्तानि समाकुलानि रथाश्वभद्रासनसङ्कुलानि । वीरश्रिया चापि समाकुलानि ददर्श धीमान् स कपिः कुलानि ॥ १० ॥ परस्परं चाधिकमाक्षिपन्ति भुजांश्च पीनानधिनिक्षिपन्ति । मत्तप्रलापानधिकं क्षिपन्ति मत्तानि चान्योन्यमधिक्षिपन्ति ॥ ११ ॥ रक्षांसि वक्षांसि च विक्षिपन्ति गात्राणि कान्तासु च विक्षिपन्ति । रूपाणि चित्राणि च विक्षिपन्ति दृढानि चापानि च विक्षिपन्ति ॥ १२ ॥ ददर्श कान्ताश्च समालभन्त्यस्तथाऽपरास्तत्र पुनः स्वपन्त्यः । सुरूपवक्त्राश्च तथा हसन्त्यः क्रुद्धाः पराश्चापि विनिःश्वसन्त्यः ॥ १३ ॥

अधिविक्षिपन्ति अधिकं मुञ्चन्ति । अधिक्षिपन्ति भर्त्सयन्ति । विक्षिपन्ति विवृण्वन्ति । चित्राणि रूपाणि विविधान् वेषान् । विक्षिपन्ति वितन्वन्ति चापानि चापान् विक्षिपन्ति विस्फारयन्ति ॥११॥१२॥ ददर्शेति । समालभन्त्यः अङ्गरागेणानुलिम्पन्त्यः । समालपन्त्य इति च पाठः । सर्वत्र व्यत्ययेन

स तथोक्तः । स्वर्गप्रकाशः सीतान्वेषणस्यानुकूलत्वेनानन्दहेतुतया प्रदोषकालस्य स्वर्गसदृशत्वोक्तिः, अत एव भगवान् पूज्यः, आदरणीय इति यावत् । अत्र विरराजेत्यनुषज्यते ॥ ८ ॥ ९ ॥ मत्तानि मदजनकद्रव्येण, अत एव प्रमत्तानि अनवहितानि, मत्तप्रमत्तजनयोगात् कुलानि भवनान्यपि तथोच्यन्ते । भद्रा गजाः ॥१०॥ परस्परं चेत्यादि श्लोकद्वयमेकं वाक्यम् । आक्षिपन्तीत्यादीनि शत्रन्तानि रक्षांसीत्यस्य विशेषणानि । आक्षिपन्ति आकर्षन्ति । भुजानधिनिक्षिपन्ति अन्योन्यस्योपरि निक्षिपन्ति । मत्तप्रलापानधिकं क्षिपन्ति मुञ्चन्ति, भर्त्सयन्तीत्यर्थः । अन्योन्यमधिक्षिपन्ति तिरस्कुर्वन्ति । रूपाणि चित्राणि च विक्षिपन्ति विविधान् वेषान्विदधति । चापानि विक्षिपन्ति विस्फारयन्ति । वक्षांसि विक्षिपन्ति विवृण्वन्ति । एतादृशरक्षांसि कपिर्ददर्शेति पूर्वक्रियया सम्बन्धः ॥११॥१२॥ ददर्शेति ।

द्वितीयार्थे प्रथमा ॥ १३ ॥ महागजैरिति । सा पुरीति शेषः । सुसद्भिः सुतरां सद्भिः । विनिःश्वसद्भिः युद्धयोग्यवीरालाभात् ॥ १४ ॥ बुद्धिप्रधानान् बुद्ध्या श्रेष्ठान् प्रधानबुद्धीन्वा, उत्तमबुद्धीनित्यर्थः । रुचिराभिधानान् शोभनव्यवहारान् । संश्रद्दधानान् आस्तिकान् । नानाविधानान्नानाकारान् । रुचिराभिधानान् हृद्यनाम्नः ॥ १५ ॥ आत्मगुणानुरूपान् आत्मगुणानुरूपव्यवहारान् ॥ १६ ॥ वराणां श्रेष्ठानाम् अर्हाः वरार्हाः । सुविशुद्ध

महागजैश्चापि तथा नदद्भिः सुपूजितैश्चापि तथा सुसद्भिः । रराज वीरैश्च विनिःश्वसद्भिर्ह्रदो भुजङ्गैरिव निःश्वसद्भिः ॥ १४ ॥ बुद्धिप्रधानान् रुचिराभिधानान् संश्रद्दधानान् जगतः प्रधानान् । नानाविधानान् रुचिराभिधानान् ददर्श तस्यां पुरि यातुधानान् ॥ १५ ॥ ननन्द दृष्ट्वा स च तान् सुरूपान्नानागुणानात्मगुणानुरूपान् । विद्योतमानान् स तदाऽनुरूपान् ददर्श कांश्चिच्च पुनर्विरूपान् ॥ १६ ॥ ततो वरार्हाः सुविशुद्धभावास्तेषां स्त्रियस्तत्र महानुभावाः । प्रियेषु पानेषु च सक्तभावा ददर्श तारा इव सुप्रभावाः ॥ १७ ॥ श्रिया ज्वलन्तीस्त्रपयोपगूढा निशीथकाले रमणोपगूढाः । ददर्श काश्चित्प्रमदोपगूढा यथा विहङ्गाः कुसुमोपगूढाः ॥ १८ ॥ अन्याः पुनर्हर्म्यतलोपविष्टास्तत्र प्रियाङ्केषु सुखोपविष्टाः । भर्तुः प्रिया धर्मपरा निविष्टा ददर्श धीमान् मदनाभिविष्टाः ॥ १९ ॥

भावाः कान्तेषु निर्मलहृदयाः । महानुभावाः पातिव्रत्यरूपमहाप्रभावाः । यद्वा महानुभावाः अनुभावाः कटाक्षभुजक्षेपादयः सुप्रभावाः । शोभनवैभवाः ॥ १७ ॥ श्रियेति । प्रमदोपगूढाः हर्षोपगूढाः । विहङ्गाः विहङ्गीः ॥१८॥ निविष्टाः ऊढाः. पाणिगृहीता इत्यर्थः । " निवेशः शिबिरोद्वाहविन्यासेषु "

समालभन्त्य इत्यादौ द्वितीयार्थे प्रथमा । समालभन्त्यः चन्दनादिना अनुलिम्पन्त्यः । " समालम्भो विलेपनम् " इत्यमरः ॥ १३ ॥ महागजैरिति । रराज, पुरीति शेषः ॥ १४ ॥ रुचिराभिधानान् रुचिरवचनान्, अन्यत्र रुचिरनामधेयान् । नानाविधानान् नानाव्यापारान् ॥ १५ ॥ ननन्देति । आत्मगुणानुरूपान् आत्मगुणानुरूपव्यापारान् ॥ १६ ॥ वरार्हाः श्रेष्ठभूषणानुलेपनादियोग्याः ॥ १७ ॥ प्रमदोपगूढाः हर्षपूर्णाः । विहङ्गाः विहङ्गीरित्यर्थः ॥ १८ ॥ निविष्टाः

इति विश्वः ॥ १९ ॥ अप्रावृताः अनवकुण्ठिताः । काञ्चनराजिवर्णाः कनकरेखाकाराः । तपनीयवर्णाः तप्तकाञ्चनवर्णाः । शशलक्ष्मवर्णाः चन्द्र पाण्डुराः । कान्तप्रहीणाः विरहिण्यः ॥ २० ॥ प्रियान्प्राप्य अभिसृत्य सुप्रीतियुक्ताः मनोभिरामाः रामाः प्रसमीक्ष्य गृहेषु रामाश्च ददर्श । अभिसारिकाः कुलपालिकाश्च ददर्शेत्यर्थः॥२१॥चन्द्रेति । वक्रनेत्रदर्शनं मानुषीत्वराक्षसीत्वविवेकार्थम् । आभरणदर्शनं स्वदृष्टसीताभरणतुल्याभरणदर्शनार्थम् ॥२२॥

अप्रावृताः काञ्चनराजिवर्णाः काश्चित्परार्ध्यास्तपनीयवर्णाः। पुनश्च काश्चिच्छशलक्ष्मवर्णाः कान्तप्रहीणा रुचिराङ्ग वर्णाः ॥ २० ॥ ततः प्रियान् प्राप्य मनोभिरामान् सुप्रीतियुक्ताः प्रसमीक्ष्य रामाः। गृहेषु हृष्टाः परमाभिरामा हरि प्रवीरः स ददर्श रामाः ॥ २१ ॥ चन्द्रप्रकाशाश्च हि वक्रमाला वक्राक्षिपक्ष्माश्च सुनेत्रमालाः । विभूषणानां च ददर्श मालाः शतह्रदानामिव चारुमालाः ॥ २२ ॥ न त्वेव सीतां परमाभिजातां पथि स्थिते राजकुले प्रजा ताम् । लतां प्रफुल्लामिव साधुजातां ददर्श तन्वीं मनसाऽभिजाताम् ॥ २३ ॥

रामानु०—चन्द्रप्रकाशाश्च हीति । वक्राणि अक्षिपक्ष्माणि यासां ताः “ डाबुभाभ्यामन्यतरस्याम् ” इति डाप् । सीतामन्वेषमाणस्य हनुमतः स्त्रीणां मुखनयनादिदर्शनं मानुषीत्वराक्षसीत्व विभागपरिज्ञानार्थम् । आभरणदर्शनं रामोक्तसीताभरणस्वरूपनिरूपणार्थम् । एतच्च–“ तां समीक्ष्य विशालाक्षीं राजपुत्रीमनिन्दिताम् । तर्कयामास सीतेति कारणैरुपपादयन् । वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत् । तान्याभरणजालानि शाखाशोभीन्यलक्षयत् ॥ ” इति राजपुत्रीत्वविशालाक्षीत्वाभरणदर्शनैः सीतात्वनिर्णयस्योपरि वक्ष्यमाणत्वादवगम्यते ॥ २२ ॥ न त्विति । परमाभिजाताम् अत्यन्ताभिरामाम् । साधुजातां सुरूपाम् । मनसाऽभिजाताम् अयोनिजामित्यर्थः ॥ २३ ॥ रामानु०-न त्विति । साधुजाता मित्येतल्लताविशेषणम् । मनसाभिजाताम् “ यस्मात्तु धर्षिता चाहमपापा चाप्यनाथवत् । तस्मात्तव वधार्थं वै उत्पत्स्येऽहं ध्रुवं पुनः ॥ ” इत्युत्तरश्रीरामायणोक्तप्रकारेण स्वसंकल्पेनावतीर्णां

ऊढाः, पाणिगृहीता इत्यर्थः । “ निवेशः शिबिरोद्वाहविन्यासेषु ” इत्यमरः ॥ १९ ॥ अप्रावृता इत्यादिश्लोकद्वयमेकं वाक्यम् । अत्र ददर्शेति क्रियायास्सर्वत्र सम्बन्धः । उत्तरीयरहिताः, काञ्चनराजिवर्णाः कनकरेखाकाराः, तपनीयवर्णाः तप्तस्वर्णवर्णाः, शशलक्ष्मवर्णाः चन्द्रवर्णाः, कान्तप्रहीणाः प्रियवियुक्ताः रामाश्च ददर्श, ततः प्रियान् प्रसमीक्ष्य प्राप्य सुप्रीतियुक्ता रामाश्च ददर्श । गृहेषु हृष्टाः रामाश्च ददर्शेति सम्बन्धः । यद्वा स हरिप्रवीरः मनोभिरामान् प्रियान् प्राप्य अभिसृत्य सुप्रीतियुक्ताः रामाः प्रसमीक्ष्य गृहेषु हृष्टाः स्वगृहेषु रमणं प्राप्य हृष्टाः परमाभिरामाश्च ददर्शेति सम्बन्धः । पूर्वोक्तानियतभर्तृकाभिसारिकासमभि व्याहारादुत्तरार्धेन स्वगृहप्राप्तरमणा वाराङ्गना उच्यन्ते ॥ २०–२१ ॥ न त्विति । साधुजातामित्येतल्लताविशेषणम् । परमाभिजाताम् अत्यन्ताभिरूपां मनसाभि

मित्यर्थः ॥ २३ ॥ सनातन इति । सनातने अविच्छिन्ने वर्त्मनि पातिव्रत्यधर्मे । रामेक्षणे अन्तो निश्चयो यस्यास्ताम् । श्रीमत् सीताचिन्तनश्रीमत् । विशिष्टाम् उत्कृष्टाम् ॥ २४ ॥ उष्णेति । सानुसृतास्रकण्ठीम् अनुगतास्रेण अनुगतबाष्पेण कण्ठेन सह वर्तमानाम् । पुरा रामपार्श्वावस्थान

सनातने वर्त्मनि सन्निविष्टां रामेक्षणान्तां मदनाभिविष्टाम् । भर्तुर्मनः श्रीमदनुप्रविष्टां स्त्रीभ्यो वराभ्यश्च सदा विशिष्टाम् ॥ २४ ॥ उष्णार्दितां सानुसृतास्रकण्ठीं पुरा वरार्होत्तमनिष्ककण्ठीम् । सुजातपक्ष्मामभिरक्तकण्ठीं वने प्रनृत्तामिव नीलकण्ठीम् ॥ २५ ॥ अव्यक्तरेखामिव चन्द्ररेखां पांसुप्रदिग्धामिव हेमरेखाम् । क्षतप्ररूढामिव बाण रेखां वायुप्रभिन्नामिव मेघरेखाम् ॥ २६ ॥

काले । वरार्होत्तमनिष्ककण्ठीं वरार्हः उत्तमश्च निष्कः कण्ठे यस्याः ताम् । उरःकण्ठसम्बन्धी भूषणविशेषो निष्कः । अभिरक्तकण्ठीं स्निग्धकण्ठीम् ॥ २५ ॥ अव्यक्तेति । अव्यक्तरेखाम् अव्यक्तस्वरूपां चन्द्ररेखां चन्द्रकलामिव स्थिताम् । अत्यन्तकृशत्वे कान्तिहीनत्वे च दृष्टान्तोऽयम् । पांसुप्रदिग्धां पांसुकलुपितां हेमरेखां कनकशलाकामिव स्थिताम् । स्वतःशुद्धस्वभावस्य आगन्तुकमालिन्ये दृष्टान्तोयम् । क्षतप्ररूढां क्षतेन प्ररूढाम् औषधादिना समाहिताम् । अन्तःशल्यदोषवतीं बहिस्समाहिताम् । बाणरेखां बाणक्षतिमिव स्थिताम् । अन्तर्वेदनातिशये दृष्टान्तोऽयम् । वायुप्रभिन्नामिव मेघरेखाम्, पुनरसमाधेयशैथिल्ये दृष्टान्तोऽयम् ॥ २६ ॥

जाताम् अयोनिजाम् ॥ २३ ॥ सनातने वर्त्मनि अविच्छेदेन प्रवृत्ते पातिव्रत्यरूपमार्गे । सन्निविष्टां सम्यङ्गनिष्ठिताम् ॥२४॥ उष्णार्दितां विरहतापपीडिताम् । अनुसृतास्रेण कण्ठेन सह वर्तत इति सानुसृतास्रकण्ठीम् । निष्कम् उरोभूषणम् । अव्यक्तरेखाम् अस्पष्टप्रकाशां चन्द्ररेखां चन्द्रकलाम् । पांसुप्रदिग्धाम् पांसुदूषिताम्,

स०-उष्णार्दितां रामविरहतप्ताम् । अनुसृतम् अस्रम् अश्रु यस्य स चासौ कण्ठश्च तेन सह वर्तत इति तथा ताम् । सानुसृतास्रकण्ठीमित्यादिस्थानत्रयेपि ङीबार्षः । यद्वा “ स्वाङ्गाच ” इति सूत्रस्थचशब्दसूचित “ अङ्गगात्रकण्ठेभ्य इति वक्तव्यम् ” इति वृत्तिकृदुक्तेर्ङीप् । न च “भाष्यानुक्तेरप्रामाणिका इति प्रामाणिकाः अप्रामाणिका एव ” इति भट्टोजिनागोजिभट्टोक्तेः कथमिति शङ्क्यम् । अनुवृत्त्यैव ङीषि सिद्धे चशब्दस्य वैयर्थ्यादेवमादिरूपाणां दुरुपपादनत्वावर्णनाच ‘ अप्रतिषिद्धमनुमतम् ’ इत्युक्तेर्महाभाष्यकारस्य मतमिति सूचितत्वात् कवेर्महत्त्वाच । अश्रुकण्ठामिति वा पाठ इति नागोजिभट्टोक्तिरनुप्रासभङ्गभीरुभिरनादरणीया । अभिरक्तकण्ठीं सुस्वराम् । नीलकण्ठीं मयूरीम् ॥ २९ ॥

सीतामिति । चिरस्यापश्यन् चिरकालं निरीक्ष्याप्यपश्यन् । अचिरस्य अचिरेण, सपदीत्यर्थः । मन्दो मुग्ध इव दुःखाभिहतो बभूव । “ मुग्धो मन्दो विवर्णश्च” इति हलायुधः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

सीतामपश्यन् मनुजेश्वरस्य रामस्य पत्नीं वदतां वरस्य । बभूव दुःखाभिहतश्चिरस्य प्लवङ्गमो मन्द इवाचिरस्य ॥ २७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे पञ्चमः सर्गः ॥ ५ ॥

स निकामं विमानेषु विषण्णः कामरूपधृक् । विचचार पुनर्लङ्कां लाघवेन समन्वितः ॥१॥ आससादाथ लक्ष्मीवान् राक्षसेन्द्रनिवेशनम् । प्राकारेणार्कवर्णेन भास्वरेणाभिसंवृतम् ॥ २ ॥ रक्षितं राक्षसैर्घोरैः सिंहैरिव महद्वनम् । समीक्षमाणो भवनं चकाशे कपिकुञ्जरः ॥ ३ ॥ रूप्यकोपहितैश्चित्रैस्तोरणैर्हेमभूषितैः । विचित्राभिश्च कक्ष्याभिर्द्वारैश्च रुचिरैर्वृतम् ॥४॥ गजास्थितैर्महामात्रैः शूरैश्च विगतश्रमैः । उपस्थितमसंहार्यैर्हयैः स्यन्दनयायिभिः ॥५॥

स निकाममित्यादि । विमानेषु विषण्णः विमानेषु सीतामदृष्ट्वा विषण्ण इत्यर्थः । लाघवेन वेगेन ॥१॥२॥ रामानु०-स इति । स लङ्कायामन्विष्टायामपि वैदेह्या अदर्शनेन विषण्णः । विचचार पुनर्लङ्कामिति सम्यक् । विचचार कपिर्लङ्कामिति पाठेपि वैदेह्या अन्वेषणेन विषण्णस्य हनुमतोऽन्वेषणकर्तृत्वाभिधानात् पुनरन्वेषणं कृतवानित्यय मर्थो लभ्यते ॥ १ ॥ आससादाथ लक्ष्मीवान् राक्षसेन्द्रनिवेशनम् इति । रावणभवनं प्रविष्टस्य हनुमतः पुनरपि रावणभवनप्राप्त्यभिधानान्मध्ये लङ्कान्वेषणाभिधानाच्च पूर्वं रावणभवनं प्रविष्टो हनुमान् तदानीं जाग्रद्रक्षःसंकीर्णतया सीतान्वेषणावसरोऽयं न भवतीति मत्वा ततो निष्क्रम्य पुनर्लङ्कां विचित्य राक्षसेन्द्रनिवेशनमाससादेत्यवगम्यते ॥२॥ रक्षितमिति । चकाशे जहर्षे त्यर्थः ॥ ३ ॥ रामानु०-रक्षितमिति । समीक्षमाणो भवनं चकाश इति । भवनमितस्ततो निरीक्षमाणः सन्नर्कवर्णभवनप्राकारतेजःसंबन्धात् सप्रकाशोऽभूदित्यर्थः । चचार कपिकुञ्जर इति वा पाठः ॥ ३ ॥ रूप्यकेत्यादि । रूप्यकोपहितैः रजतनिर्मितैः । कक्ष्याभिः प्रकोष्ठैः । असंहार्यैः अवध्यैः । स्यन्दनयायिभिः स्यन्दनवाहकैः ॥ ४ ॥५ ॥

हेमरेखां स्वर्णशलाकाम् । क्षतप्ररूढां क्षता च सा प्ररूढा च ताम्, अन्तर्व्रणां बहिश्छादितामित्यर्थः । यद्वा क्षते व्रणे प्ररूढां मलीनां बाणरेखां बाणशकल मित्यर्थः ॥ २५ ॥ २६ ॥ सीतामिति । चिरस्यापश्यन् चिरमन्विष्याप्यपश्यन् दुःखाभिभूतः अचिरस्य सद्य एव मन्द इव मूढ इव बभूव ॥ २७ ॥ इति श्रीमहेश्वरतीर्थ विरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां पञ्चमः सर्गः ॥ ५ ॥ १ ॥ २ ॥ रक्षितमिति । चकाशे विस्मयादुल्ललासेत्यर्थः । चचार कपि कुञ्जरः इति वा पाठः ॥ ३ ॥ रूप्यकोपहितैः रजतनिर्मितैः । कक्ष्याभिः प्रकोष्ठैः । “ कक्ष्या प्रकोष्ठे हर्म्यादेः ” इत्यमरः ॥ ४ ॥ महामात्रैः प्रधानैः । “ महामात्राः

रामानु०—रूप्यकाति । रूप्यकापहितैः रजतविहितैः । कक्ष्याभिः प्रकोष्ठैः । " कक्ष्या प्रकोष्ठे हर्म्यादेः " इत्यमरः । गजारथिभिरिति । महामात्रैः प्रधानैः । "महामात्राः प्रधानानि" इत्यमरः । असंहार्यैः संहर्तुमशक्यैः, अवध्यैरिति यावत् ॥ ४ ॥ ५ ॥ सिंहव्याघ्रतनुत्राणैः सिंहव्याघ्रचर्मपरिवृतैरित्यर्थः । महारथसमावासं महारथानां रक्षसामाकरम् । महारथमहास्वनं महतां रथानां महान् स्वनः यस्मिन् ॥ ६-८ ॥ रामानु०—सिंहव्याघ्रतनुत्राणैः सिंहव्याघ्रचर्मतनुत्राणः । महारथसमावासं रथिकविशेषाणामावासस्थानम् । महारथसमावापमिति पाठेपि महारथानां रथिकविशेषाणाम् आवापम् आवासभूतमित्यर्थः । महारथमहासनमिति पाठः । महारथं च तन्महासनं च महारथमहासनम् ॥ ६ ॥ ७ ॥ दृश्यैः दर्शनीयैः ।

सिंहव्याघ्रतनुत्राणैर्दान्तकाञ्चनराजतैः । घोषवद्भिर्विचित्रैश्च सदा विचरितं रथैः ॥ ६ ॥ बहुरत्नसमाकीर्णं परार्घ्यासनभाजनम् । महारथसमावासं महारथमहास्वनम् ॥ ७ ॥ दृश्यैश्च परमोदारैस्तैस्तैश्च मृगपक्षिभिः । विविधैर्बहुसाहस्रैः परिपूर्णं समन्ततः ॥ ८ ॥ विनीतैरन्तपालैश्च रक्षोभिश्च सुरक्षितम् । मुख्याभिश्च वरस्त्रीभिः परिपूर्णं समन्ततः ॥ ९ ॥ मुदितप्रमदारत्नं राक्षसेन्द्रनिवेशनम् । वराभरणसंह्रादैः समुद्रस्वननिस्वनम् ॥ १० ॥ तद्राजगुणसंपन्नं मुख्यैश्चागुरुचन्दनैः । महाजनैः समाकीर्णं सिंहैरिव महद्वनम् ॥ ११ ॥ भेरीमृदङ्गाभिरुतं शङ्खघोषनिनादितम् । नित्यार्चितं पर्वहुतं पूजितं राक्षसैः सदा ॥ १२ ॥

परमोदारैः अतिमहद्भिः । " उदारो दातृमहतोः " इत्यमरः ॥ ८ ॥ अन्तपालैः बाह्यरक्षिभिः । राक्षसेन्द्रनिवेशनं राक्षसेन्द्रा राक्षसश्रेष्ठाः निविशन्ते समीपे निवसन्त्यस्मिन्निति राक्षसेन्द्रनिवेशनमित्यर्थः । अन्यथा वक्ष्यमाणवेश्मपदेन पुनरुक्तिः स्यात् । संह्रादः शब्दः । समुद्रस्वनवन्निस्वनतीति समुद्रस्वननिस्वनम् । पचाद्यच् ॥ ९-१० ॥ रामानु०—अन्तपालैः बाह्यरक्षकैः ॥ ९ ॥ राक्षसेन्द्रनिवेशनं राक्षसेन्द्राणां निवेशनानि यस्मिन् तत् । समुद्रस्वननिस्वनं समुद्रस्वनयुक्तम् ॥ १० ॥ तत् प्रसिद्धम् । राजगुणसंपन्नं राजोपचारैर्धूपादिभिः संपन्नम् । अगुरुचन्दनैरित्यत्रापि संपन्नमिति संबध्यते । पर्वसु हुतं होमो यस्मिन् तत् पर्वहुतम् ११॥१२ प्रधानानि " इत्यमरः । असंहार्यैः अवार्यैः ॥ ५ ॥ सिंहव्याघ्रतनुत्राणैः तच्चर्मनिर्मितवर्मभिरित्यर्थः ॥ ६ ॥ महारथसमावासं महारथानां रथिकविशेषाणां समावासं स्थानम् । समावापमिति पाठेऽप्ययमेवार्थः । महारथं च तत महासनं च महारथमहासनम् ॥ ७ ॥ दृश्यैः दर्शनीयैः । परमोदारैः अतिमहद्भिः । " उदारो दातृमहतोः " इत्यमरः ॥ ८ ॥ अन्तपालैः बाह्यरक्षकैः ॥ ९ ॥ राक्षसेन्द्रनिवेशनम् निवासभूतम् । राजगुणाः राजोपचाराः तैः सम्पन्नम् ॥ १० ॥ ११ ॥ नित्यार्चितं

स०—"एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । अस्त्रशस्त्रप्रवीणश्च स महारथ उच्यते ॥" इत्युक्तलक्षणानां यस्समावापः उपवेशनवेदिका स यस्मिन् " आवापः परिक्षेपालवालयोः " इति विश्वः । महोरथानाम् उक्तलक्षणानामपि शत्रूणां महन् असनं गतिनिवृत्तिर्यस्मिन् । " असनं यात्रानिवृत्तिः " इति विश्वः ॥ ७ ॥

रामानु०—राजगुणसंपन्नं राजगुणाश्छत्रचामरादयः तैः सगृद्धम् । नित्यार्चितं गन्धपुष्पादिभिर्नित्यमर्चितम् । पर्वसु हुतं होमो यस्मिन् तत् पर्वहुतम् । रावणस्याहिताग्नित्वात्तद्गृहे पर्वसु दर्शपूर्णमासादिहोमसद्भावः । अस्याहिताग्नित्वं युद्धकाण्डे प्रसिद्धम् । पूजितं राक्षसैः सदा । स्वामिगृहत्वाद्राक्षसैः सदा नमस्कृतम् । "पूजा नमस्याऽपचितिः" इत्यमरः । नित्यार्चितं सर्वसुखमूर्जितमिति वा पाठः । पर्वयुतमिति पाठे पर्वशब्देनोत्सव उच्यते ॥ ११ ॥ १२ ॥ समुद्रमिव निःस्वनं निःशब्दम्, रावणभीत्या जनकोलाहलरहितमित्यर्थः । समुद्रस्वननिस्वनमिति तु बाह्यकक्ष्यापेक्षया ॥ १३ ॥ १४ ॥ रामानु०—समुद्रमिति । समुद्रमिव नितरां स्वनतीति निस्वनम् । पचाद्यच् ॥१३॥ चचारेति । रावणस्य

समुद्रमिव गम्भीरं समुद्रमिव निःस्वनम् । महात्मनो महद्वेश्म महारत्नपरिच्छदम् । महारत्नसमाकीर्णं ददर्श स महाकपिः ॥ १३ ॥ विराजमानं वपुषा गजाश्वरथसङ्कुलम् । लङ्काभरणमित्येव सोऽमन्यत महाकपिः ॥ १४ ॥ चचार हनुमांस्तत्र रावणस्य समीपतः ॥ १५ ॥ गृहाद् गृहं राक्षसानामुद्यानानि च वानरः । वीक्षमाणो ह्यसंत्रस्तः प्रासादांश्च चचार सः ॥ १६ ॥ अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम् । ततोऽन्यत् पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् ॥ १७ ॥ अथ मेघप्रतीकाशं कुम्भकर्णनिवेशनम् । विभीषणस्य च तदा पुप्लुवे स महाकपिः ॥ १८ ॥ महोदरस्य च गृहं विरूपाक्षस्य चैव हि । विद्युज्जिह्वस्य भवनं विद्युन्मालेस्तथैव च । वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः ॥ १९ ॥ शुकस्य च महातेजाः सारणस्य च धीमतः । तथा चेन्द्रजितो वेश्म जगाम हरियूथपः ॥ २० ॥ जम्बुमालेः सुमालेश्च जगाम हरिसत्तमः । रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैव च ॥ २१ ॥ वज्रकायस्य च तथा पुप्लुवे स महाकपिः । धूम्राक्षस्य च संपातेर्भवनं मारुतात्मजः ॥ २२ ॥

रावणगृहस्य ॥ १५–२२ ॥ रामानु०—चचारेति । तत्र पूर्वोक्तप्राकारवेष्टितस्थले । रावणस्य रावणभवनस्य समीपतः ॥ १५ ॥ गृहाद्गृहमिति । राक्षसानां रावणभ्रातृकुमारामात्यादीनां गृहाद्गृहम् । उद्यानानि च चचारेति योजना ॥ १६ ॥

गन्धादिभिः । पर्वहुतं पर्वसु हुतं होमो यस्मिन् तत्, रावणस्याहिताग्नित्वात् ॥ १२–१४ ॥ रावणस्य समीपतः रावणभवनस्य समीपतः ॥ १५–२४ ॥

विद्युद्रूपस्येत्यादि । विद्युज्जिह्वेन्द्रजिह्वानामिति बहुवचनं तन्नाम्नां बहूनां सत्त्वात् ॥ २३–२८ ॥ रावणस्येति । उपशायिन्यः पर्यायशायिनीः । रावणे शयाने जाग्रतीरित्यर्थः ॥ २९ ॥ ३० ॥ रामानु०–ददर्शेति । गुल्मान् सेनाः । " गुल्मो रुक्स्तम्बसेनासु " इत्यमरः ॥ ३० ॥ सितान् बद्धान् । " षिञ् बन्धने "

विद्युद्रूपस्य भीमस्य घनस्य विघनस्य च ॥ २३ ॥ शुकनासस्य वक्रस्य शठस्य विकटस्य च । ब्रह्मकर्णस्य दंष्ट्रस्य रोमशस्य च रक्षसः ॥ २४ ॥ युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य नादिनः । विद्युज्जिह्वेन्द्रजिह्वानां तथा हस्तिमुखस्य च ॥२५॥ करालस्य पिशाचस्य शोणिताक्षस्य चैव हि । क्रममाणः क्रमेणैव हनुमान् मारुतात्मजः ॥ २६ ॥ तेषु तेषु महार्हेषु भवनेषु महायशाः । तेषामृद्धिमतामृद्धिं ददर्श स महाकपिः ॥२७॥ सर्वेषां समतिक्रम्य भवनानि समन्ततः । आससादाथ लक्ष्मीवान् राक्षसेन्द्रनिवेशनम् ॥२८॥ रावणस्योपशायिन्यो ददर्श हरिसत्तमः । विचरन् हरिशार्दूलो राक्षसीर्विकृतेक्षणाः । शूलमुद्गरहस्ताश्च शक्तितोमरधारिणीः ॥ २९ ॥ ददर्श विविधान् गुल्मांस्तस्य रक्षःपतेर्गृहे । राक्षसांश्च महाकायान्नानाप्रहरणोद्यतान् ॥ ३० ॥ रक्तान् श्वेतान् सितांश्चैव हरींश्चापि महाजवान् । कुलीनान् रूपसम्पन्नान् गजान् परगजारुजान् ॥ ३१ ॥ निष्ठितान् गजशिक्षायामैरावतसमान् युधि । निहन्तॄन् परसैन्यानां गृहे तस्मिन् ददर्श सः ॥ ३२ ॥ क्षरतश्च यथा मेघान् स्रवतश्च यथा गिरीन् । मेघस्तनितनिर्घोषान् दुर्धर्षान् समरे परैः ॥ ३३ ॥

इत्यस्मात् क्तः । हरीन् अश्वान् । परगजानारुजन्ति पीडयन्तीति परगजारुजान् । क्षरतश्चेति श्लोकः पूर्वोक्तगजविशेषकः । क्षरतः किंचिद्वर्षतः । स्रवन्मदत्वे दृष्टान्तः । स्रवतः निर्झरिणः ॥ ३१–३३ ॥

विद्युज्जिह्वेन्द्रजिह्वानामिति बहुवचनमार्षम् । यद्वा तन्नामानो बहवः सन्ति॥२५–२८॥ उपशायिन्यः समीपशायिन्यः॥२९॥ ददर्शेति । गुल्मान् सेनाः। "गुल्मो रुक्स्तम्बसेनासु" इत्यमरः॥३०॥ हरीन् अश्वान् । कुलीनान् परगजारुजान् परगजानां भञ्जकान् ॥३१॥ निष्ठितान् गजशिक्षायां गजविद्याभ्यासे शिक्षितान् ॥३२–३५॥

सहस्रमिति । वाहिनीः सेनाः, पदातीनित्यर्थः । जाम्बूनदं जम्बूनदीप्रभवं स्वर्णम् । हेम केवलस्वर्णम्, उभयविधस्वर्णमयाभरणयुक्ता इत्यर्थः ॥ ३४ ॥ ३५ ॥ शिबिका इत्यादि । दारुपर्वतकान् क्रीडापर्वतकान् । कामस्य गृहकं रतिगृहम् । दिवागृहकं दिवाविनोदस्थानम् । रावणस्य

सहस्रं वाहिनीस्तत्र जाम्बूनदपरिष्कृताः । हेमजालपरिच्छन्नास्तरुणादित्यसन्निभाः ॥ ३४ ॥ ददर्श राक्षसेन्द्रस्य रावणस्य निवेशने ॥ ३५ ॥ शिबिका विविधाकाराः स कपिर्मारुतात्मजः । लतागृहाणि चित्राणि चित्रशाला गृहाणि च ॥ ३६ ॥ क्रीडागृहाणि चान्यानि दारुपर्वतकानपि । कामस्य गृहकं रम्यं दिवागृहकमेव च । ददर्श राक्षसेन्द्रस्य रावणस्य निवेशने ॥ ३७ ॥ स मन्दरगिरिप्रख्यं मयूरस्थानसंकुलम् । ध्वजयष्टिभिराकीर्णं ददर्श भवनोत्तमम् ॥ ३८ ॥ अनेकरत्नसङ्कीर्णं निधिजालं समन्ततः । धीरनिष्ठितकर्मान्तं गृहं भूतपतेरिव ॥ ३९ ॥ अर्चिर्भिश्चापि रत्नानां तेजसा रावणस्य च । विरराजाथ तद्वेश्म रश्मिमानिव रश्मिभिः ॥४०॥ जाम्बूनदमयान्येव शयनान्यासनानि च । भाजनानि च मुख्यानि ददर्श हरियूथपः ॥४१॥ मध्वासवकृतक्लेदं मणिभाजनसंकुलम् । मनोरममसम्बाधं कुबेरभवनं यथा । नूपुराणां च घोषेण काञ्चीनां निनदेन च ॥ ४२ ॥

निवेशने इति पाठः ॥३६॥३७॥ स इत्यादि । मयूरस्थानं क्रीडामयूरविश्रमस्थानम् । कपोतानामिव मयूराणामपि स्थानानि शिलाभिः कल्प्यन्त इति प्रसिद्धम् । धीरनिष्ठितकर्मान्तं धीरैः कृतकल्पकर्मकम् । भूतपतेः प्रमथाधिपस्य ॥३८॥३९॥ अर्चिर्भिरिति । रश्मिमान् सूर्यः ॥ ४० ॥४१॥ मध्वासव

लतागृहाणीति । चित्रशालागृहाणि चित्रशालायुक्तगृहाणि । दारुपर्वतकान् दारुमयक्रीडापर्वतान् । कामस्य गृहकं कामोद्दीपकं गृहम् । दिवागृहकं दिवाविहारोचित चित्रगृहम् । मयूरस्थानानि क्रीडामयूरस्थानानि ॥ ३६–३८ ॥ धीरनिष्ठितकर्मान्तं निष्ठिता निष्ठितवन्तः दृढव्रताः । धीराश्च ते निष्ठिताश्च धीरनिष्ठिताः तेषां कर्म तपोरूपं तस्यान्तः फलम्, महातपःफलमिति यावत् । भूतपतेः शिवस्य ॥ ३९–४१ ॥ मध्विति । मध्वासवकृतक्लेदं मध्वासवैः क्षौद्रविकारमद्यैः कृतद्रवम् ॥ ४२ ॥

विषम०—सहस्रं वाजिनः अनेकानश्वान् । हेमजालैरविच्छन्नाः इतिपाठः । सर्वतो भूषिता इति शिबिकाविशेषणम् ॥ ३४ ॥

कृतक्केदं मध्वासवैः मधुविकारमद्यैः कृतक्केदं कृतसेकम् । घोषवद्भिः नादवद्भिः । नादश्च दीर्घशब्दस्य विरामसमयसम्भवो ध्वनिः । व्यूढकक्ष्यं विशाल प्रकोष्ठम् । अस्मिन् सर्गे सार्द्धचतुश्चत्वारिंशच्छ्लोकाः॥४२–४४॥ इति श्रीगो० श्रीरामा०शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षष्ठः सर्गः॥६॥

मृदङ्गतलघोषैश्च घोषवद्भिर्विनादितम् । प्रासादसङ्घातयुतं स्त्रीरत्नशतसंकुलम् ॥ ४३ ॥ सुव्यूढकक्ष्यं हनुमान् प्रविवेश महागृहम्॥ ४४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे षष्ठः सर्गः ॥ ६ ॥

स वेश्मजालं बलवान् ददर्श व्यासक्तवैडूर्यसुवर्णजालम् । यथा महत् प्रावृषि मेघजालं विद्युत्पिनद्धं सविहङ्ग जालम् ॥ १ ॥ निवेशनानां विविधाश्च शालाः प्रधानशङ्खायुधचापशालाः । मनोहराश्चापि पुनर्विशाला ददर्श वेश्माद्रिषु चन्द्रशालाः ॥ २ ॥ गृहाणि नानावसुराजितानि देवासुरैश्चापि सुपूजितानि । सर्वैश्च दोषैः परिवर्जितानि कपिर्ददर्श स्वबलार्जितानि ॥ ३ ॥

स वेश्मजालमित्यादि । व्यासक्तवैडूर्यसुवर्णजालं वैडूर्यघटितसुवर्णमयजालकरन्ध्रम् ॥ १ ॥ निवेशनानां शालाः गृहान्तःशालाः । प्रधानैर्मुख्यैः शङ्खायुधचापैः शालन्ते प्रकाशन्त इतिं प्रधानशङ्खायुधचापशालाः । पचाद्यच् । वेश्मादिषु हर्म्यप्रासादादिषु । चन्द्रशालाः शिरोगृहाणि ॥ २ ॥

रामानु०–नानाविधानि कर्माणि यासां ताः नानाविधकर्माणः शालाश्च नानाविधकर्मशालाः । कक्ष्याश्च नानाविधकर्मशाला इत्ययं पाठः । निवेशनानां विविधाश्च शाला इति पाठे प्रधानभवनानां संबन्धिनीर्विविधाः शाला इत्यर्थः । प्रधानशङ्खायुधचापशालाः प्रधानैर्मुख्यैः शङ्खैरायुधैः चापैश्च शालन्त इति प्रधानशङ्खायुधचापशालाः ताः । पचाद्यच् । वेश्मान्यद्रय इव वेश्माद्रयः तेषु । वेश्मादिष्विति पाठे आदिशब्देन प्रासादादय उच्यन्ते । चन्द्रशालाः शिरोगृहाणि । "चन्द्रशाला शिरोगृहम्" इत्यमरः ॥ २ ॥ नानावसुराजितानि

घोषवद्भिः नादविशेषयुक्तैः । अनुक्तैरन्यैश्च । सुव्यूढकक्ष्यं सन्निवेशितप्रकोष्ठम् । व्यूहः पद्मस्वस्तिकादिरचनाविशेषः ॥ ४३ ॥ ४४ ॥ इति श्रीमहेश्वरतीर्थ विरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां षष्ठः सर्गः ॥ ६ ॥ स वेश्मेति । व्यासक्तवैडूर्यसुवर्णजालं खचितवैडूर्यस्वर्णगवाक्षम् । सविहङ्ग जालमित्युपमेयेपि योज्यम् ॥१॥ निवेशनानां गृहाणां सम्बन्धिनीः शालाः अवान्तरगृहाणि । प्रधानशङ्खायुधचापशालाः प्रधानैर्मुख्यैः शङ्खादिभिः शालन्त इति पचाद्यच् । वेश्माद्रिषु वेश्मान्यद्रय इव तेषु । चन्द्रशालाःशिरोगृहाणि । वेश्मादिष्विति पाठे–आदिशब्देन प्रासादादयश्च लक्ष्यन्ते ॥ २ ॥ स्वबलार्जितानि कुबेर

नानारत्नराजितानि ॥ ३ ॥ प्रयत्नाभिसमाहितानि प्रयत्नेन यथायोगं स्थापितानि। मयेनेति विश्वकर्मा लक्ष्यते । महीतले निर्मितानि । इवशब्देन मयस्य निर्मातृत्वव्याजमात्रम्। रावणप्रयत्नेनैव निर्मितानीत्यर्थः। यद्वा अन्यानि गृहाणि विश्वकर्मनिर्मितानि, इमानि तु मयं व्याजीकृत्य स्वयमुपाय प्रदर्शनमुखेन निर्मितानीति पूर्वगृहेभ्यो विशेष उच्यते ॥ ४ ॥ तदन्तर्वर्तिपुष्पकविमानं दर्शयति–तत इति । अप्रतिरूपरूपम् अप्रतिमसौन्दर्यम् ।

तानि प्रयत्नाभिसमाहितानि मयेन साक्षादिव निर्मितानि । महीतले सर्वगुणोत्तराणि ददर्श लङ्काधिपतेर्गृहाणि ॥ ४ ॥ ततो ददर्शोच्छ्रितमेघरूपं मनोहरं काञ्चनचारुरूपम् । रक्षोधिपस्यात्मबलानुरूपं गृहोत्तमं ह्यप्रतिरूपरूपम् ॥५॥ महीतले स्वर्गमिव प्रकीर्णं श्रिया ज्वलन्तं बहुरत्नकीर्णम्। नानातरूणां कुसुमावकीर्णं गिरेरिवाग्रं रजसाऽवकीर्णम् ॥ ६ ॥ नारीप्रवेकैरिव दीप्यमानं तडिद्भिरम्भोदवदर्च्यमानम् । हंसप्रवेकैरिव वाह्यमानं श्रिया युतं खे सुकृतां विमानम् ॥ ७ ॥ यथा नगाग्रं बहुधातुचित्रं यथा नभश्च ग्रहचन्द्रचित्रम् । ददर्श युक्तीकृतमेघचित्रं विमानरत्नं बहुरत्नचित्रम् ॥ ८ ॥

प्रकीर्णं दैवाद्च्युतम्। रजसा पुष्परजसा। नारीप्रवेकैः नारीश्रेष्ठैः। "प्रवेकानुत्तमोत्तमाः" इत्यमरः। इवशब्दो वाक्यालङ्कारे । अर्च्यमानं, सर्वैरिति शेषः। हंसप्रवेकैर्वाह्यमानं सुकृतां पुण्यकृतां विमानमिव स्थितमित्यन्वयः। युक्तीकृतमेघचित्रं पुञ्जीकृतमेघचित्रम्, चित्रमेघसङ्घातसदृशमित्यर्थः । विमानरत्नं पुष्पकम् ॥ ५–८ ॥ रामानु०–वैश्रवणं निर्जित्य गृहीतं पुष्पकं वर्ण्यते–तत इत्यादिना । ततः गृहदर्शनानन्तरम् । आत्मबलानुरूपम् आत्मनोऽप्रतिबलस्य सदृशम् । गृहोत्तममिति पुष्पकमुच्यते। पुष्पकस्यापि गृहलक्षणसद्भावात्। एतच्च पुष्पाह्वयमित्यनेन व्यक्तीभविष्यति। रजसा पुष्परजसा। तडिद्भिरिव स्थितैर्नारीप्रवेकैरम्भोदवद्दीप्यमानमिव स्थितमिति माक्रम्य हृतानि ॥३॥ प्रयत्नाभिसमाहितानि प्रयत्नेनाभितः सम्यगाहितानि,यथायोगं संस्थापितानीत्यर्थः। मयेन निर्मितानीव विश्वकर्मनिर्मितान्यपि मयेन विचित्र विधानेन समाहितत्वात् तेनैव साक्षान्निर्मितानीत्यर्थः ॥ ४ ॥ अथ पुष्पकं वर्णयति–तत इत्यादिना। आत्मबलानुरूपम् आत्मनोऽप्रतिबलस्य सदृशम् । गृहोत्तम मिति पुष्पकमुच्यते ॥ ५ ॥ बहुरत्नकीर्णं बहुरत्नपूर्णम्। रजसा पुष्परजसा ॥ ६ ॥ तडिद्भिः अम्भोदवत् । नारीप्रवेकैरिव नारीश्रेष्ठैरिव। इव एवार्थे । दीप्यमानम् अर्च्यमानम्। हंसप्रवेकैः वाह्यमानं सुकृतां विमानमिवेत्यन्वयः । वाह्यमानम् उह्यमानम्। स्वार्थे णिच् ॥ ७ ॥ युक्तीकृतमेघचित्रं समूहीकृतनानावर्णमेघवद्विचित्र

स०–प्रयत्नाभिसमाहितानि प्रयत्नेन, विश्वकर्मण इति शेषः ॥ ४ ॥

संबन्धः । नारीप्रवेकैः नारीश्रेष्ठैः । "प्रवेकानुत्तमोत्तमाः" इत्यमरः । अर्च्यमानं, सर्वैरिति शेषः । हंसप्रवेकैः खे वाह्यमानं सुकृतं विमानमिवेत्यन्वयः । वाह्यमानम् उह्यमानम् । आर्षः स्वार्थे णिच् । अत एव संप्रसारणाभावः । यद्वा हंसप्रवेकैर्वाह्यमानं स्वामिनेति शेषः । युक्तीकृतमेघचित्रं समूहीकृतनानावर्णमेघचित्रमित्यर्थः । विमानरत्नं पुष्पकम् ॥ ५–८ ॥ महीति । यत्रेति शेषः । यत्र विमाने पर्वतराजिपूर्णा मही कृता चित्ररूपेण लिखिता । एवमुत्तरत्रापि बोध्यम् । अत्र पूर्वपूर्वं प्रत्युत्तरोत्तरस्य विशेषवत्त्वादधिका

महीं कृता पर्वतराजिपूर्णा शैलाः कृता वृक्षवितानपूर्णाः । वृक्षाः कृताः पुष्पवितानपूर्णाः पुष्पं कृतं केसरपत्रपूर्णम् ॥ ९ ॥ कृतानि वेश्मानि च पाण्डुराणि तथा सुपुष्पाण्यपि पुष्कराणि । पुनश्च पद्मानि सकेसराणि धन्यानि चित्राणि तथा वनानि ॥ १० ॥ पुष्पाह्वयं नाम विराजमानं रत्नप्रभाभिश्च विवर्द्धमानम् । वेश्मोत्तमानामपि चोच्चमानं महाकपिस्तत्र महाविमानम् ॥ ११ ॥ कृताश्च वैडूर्यमया विहङ्गा रूप्यप्रवालैश्च तथा विहङ्गाः । चित्राश्च नानावसुभिर्भुजङ्गा जात्यानुरूपास्तुरगाः शुभाङ्गाः ॥ १२ ॥

लङ्कारः ॥ ९ ॥ रामानु०–महीत्यादि । यत्रेति शेषः । ददर्शेत्यनुषज्यते । मही कृतेत्यारभ्य पद्मिनि पद्महस्तेत्यन्तमेकं वाक्यम् । यत्र मह्यादयो लक्ष्म्यन्ताः पदार्थाः कृताः तत्पुष्पाह्वयं नाम महाविमानं ददर्शेति संबन्धः । मही कृता मही निर्मिता । एवमुत्तरत्रापि कृतशब्दार्थः ॥ ९ ॥ कृतानीति । अत्रापि यत्रेत्यध्याहार्यम् । पुष्कराणि पुष्करिण्यः ॥ १० ॥ पुष्पाह्वयं पुष्पकम् । उच्चमानम् अधिकमानम् । सर्वत्र ददर्शेत्यन्वयः ॥ ११ ॥ रामानु०–वेश्मोत्तमानामिति पञ्चम्यर्थे षष्ठी । वेश्मोत्तमेभ्योऽप्युच्चमानम् । यद्वा पूर्वं गृहोत्तमं ह्यप्रतिरूपरूपमिति पुष्पकस्य गृहोत्तमत्वप्रतिपादनेन सजातीयत्वान्निर्धारणे षष्ठी । तेषां मध्ये उच्चमानम् उन्नतमिति यावत् । आपिचोति निपातसमुदायो विशेषणान्तरसमुच्चयपरः ॥ ११ ॥ कृताश्चेति । यत्रेति शेषः । नानावसुभिः नानारत्नैः । जात्यानुरूपाः जात्या सदृशाः, स्पष्टजातिस्वभावा इत्यर्थः ॥ १२ ॥ रामानु०–जात्यानुरूपाः आरट्ट

मित्यर्थः । यद्वा इन्द्रचापमिश्रीकृतमेघचित्रम् । विमानरत्नं पुष्पकम् ॥ ८ ॥ महीत्यादि । यत्रेति शेषः । ददर्शेत्यनुषज्यते । मही कृतेत्यारभ्य पद्मिनि पद्महस्तेत्यन्तमेकं वाक्यम् । यत्र मह्यादयो लक्ष्म्यन्ताः पदार्थाः कृताः तत् पुष्पाह्वयं नाम विमानं ददर्शेति सम्बन्धः । यत्र पुष्पके पर्वतराजैः पूर्णा मही कृता चित्ररूपेण लिखिता, तत्र शैलादयोप्येवं लिखिता इति ज्ञेयाः ॥ ९ ॥ १० ॥ पुष्पाह्वयमिति । वेश्मोत्तमानामिति पञ्चम्यर्थे षष्ठी । तेभ्योप्युच्चमानम् उन्नतप्रमाणम् ॥ ११ ॥ तत्र कृत्रिमाः पक्ष्यादयश्च

जत्ववनायुजत्वादिविशिष्टाश्वाकारसदृशाः ॥ १२॥ प्रवालजाम्बूनदकृतानि पुष्पाणि पक्षेषु येषां ते प्रवालजाम्बूनदपुष्पपक्षाः । सलीलमावर्जितजिह्मपक्षाः सलीलमालम्बितवक्रपक्षाः । कामस्य पक्षा इव कामस्य सहाया इव ॥ १३ ॥ रामानु०–प्रवालजाम्बूनदमयानि पुष्पाणि पक्षेषु येषां ते तथोक्ताः । सलीलमावर्जित जिह्मपक्षाः सलीलमानमितवक्रपक्षाः । कामस्य साक्षात्पक्षा इव मदनस्य साक्षात्सहाया इव, कामोद्दीपका इति यावत् ॥ १३ ॥ नियुज्यमानाः स्वयमेवात्मानं नियोजयन्तः । कर्म

प्रवालजाम्बूनदपुष्पपक्षाः सलीलमावर्जितजिह्मपक्षाः । कामस्य साक्षादिव भान्ति पक्षाः कृता विहङ्गाः सुमुखाः सुपक्षाः ॥ १३ ॥ नियुज्यमानास्तु गजाः सुहस्ताः सकेसराश्चोत्पलपत्रहस्ताः । बभूव देवी च कृता सुहस्ता लक्ष्मीस्तथा पद्मिनि पद्महस्ता ॥१४॥ इतीव तद् गृहमभिगम्य शोभनं सविस्मयो नगमिव चारुशोभनम् । पुनश्च तत्परमसुगन्धि सुन्दरं हिमात्यये नगमिव चारुकन्दरम् ॥ १५ ॥

कर्तरि यक् । यत्र विमाने । पद्मिनि पद्माकरे । स्वयमेवोत्पलपत्राभिषेककर्मणि प्रवर्तमानाः । सुहस्ताः शोभनशुण्डादण्डाः । सकेसराः कृतजलावगाहत्वेनाङ्गलग्नकिञ्जल्काः । उत्पलपत्रहस्ताः उत्पलपत्रवर्षिणः । गजाश्च कृताः तदभिषिच्यमाना पद्महस्ता अत एव सुहस्ता लक्ष्मीश्च कृता बभूवेत्यर्थः ॥ १४ ॥ रामानु०–नियुज्यमानाः स्वयमेव व्याप्रियमाणाः । कर्मकर्तरि यक् । सकेसराः पद्माकरविहारिगजाकारनिर्माणात् सकेसरत्वम् । पद्मिनि पद्माकरे ॥ १४ ॥ इतीवेति । इवशब्दो वाक्यालङ्कारे । तद्गृहं तस्य रावणस्य गृहम् । सविस्मयः, अभूदिति शेषः । नगं पर्वतमिव स्थितम् । शोभनं शोभमानम् । चारुशोभनं चारुमङ्गलम् । इतीवेत्येकनिपातो वा प्रकारार्थः । इतीव तद्गृहम् अभिगम्य अभिगत्य । अद्भुतदर्शनात्पुनश्चाभिगम्य सविस्मयोऽभूदिति योजना ।

सन्तीत्याह–कृताश्चेत्यादिना । जात्यानुरूपाः जातितुरङ्गसदृशाः॥१२॥ प्रवालजाम्बूनदमयानि पुष्पाणि पक्षेषु येषां ते तथोक्ताः । सलीलमावर्जितजिह्मपक्षाः सलीलमावर्जिता आकुञ्चिताः जिह्मा वक्राः पक्षा येषां ते । कामस्य पक्षाः सहायाः, कामोद्दीपका इति यावत् ॥ १३ ॥ नियुज्यमानाः स्वयमेव व्याप्रियमाणाः यत्र कृत्रिमगजाः, सन्तीति शेषः । कर्मकर्तरि यक् । सकेसराः पद्माकरविहारिगजाकारनिर्माणात् सकेसरत्वादिकम् । पद्मिनि पद्माकरे पद्महस्ता लक्ष्मीः यत्र कृता, बभूवेति शेषः ॥१४॥ इतीवेति निपातसमुदायः प्रकारवाची । इति पूर्वोक्तप्रकारेण रमणीयं चारु शोभनं नगमिव पर्वतमिव स्थितम्, तद्गृहं रावणगृहम् अभिगम्य अभितो गत्वा सविस्मयः, अभूदिति शेषः । अभितो गत्वापि सस्त्रीकरावणावस्थितप्रदेशं नागममिति सविस्मयोऽभूदित्यर्थः । हिमात्यये वसन्तकाले । चारु

स०–हिमात्यये वसन्ते । हिमशब्देन तद्युक्तमासचतुष्टयग्रहणात् ॥ १५ ॥

रुचिरावृत्तमिदम् । "चतुर्ग्रहैरिह रुचिरा जभस्जगाः" इति लक्षणात् ॥ १५ ॥ रामानु०—इतीवेति । इतीव शोभनम् । इतीवेति निपातसमुदायः प्रकारवाची । "प्रासाद सङ्घातयुतं स्त्रीरत्नशतसंकुलम् । सुव्यूढकक्ष्यं हनुमान् प्रविवेश महागृहम्" इत्युक्तप्रकारेण रमणीयम् । चारुशोभनं चारुमङ्गलम् । नगमिव स्थितं तत् गृहमभिगम्य अभितो गत्वा सविस्मयः अभूदिति शेषः । अभितश्चरित्वापि सस्त्रीकरावणस्थितप्रदेशानधिगमात् सविस्मयोऽभूदित्यर्थः । हिमात्यये शीतकालात्यये । वसन्तकाल इति यावत् । चारुकन्दरं नगमिव परम सुगन्धि सुन्दरं तद्गृहं पुनश्चाभिगम्य अभितो गत्वा । सविस्मयोऽभूत्, परिच्छेदानधिगमादिति भावः ॥ १५ ॥ तत इति । अदृश्य अदृष्ट्वा । ऋषिनिपातनान्नञ्पूर्वेऽपि ल्यप् ।

ततः स तां कपिरभिपत्य पूजितां चरन् पुरीं दशमुखबाहुपालिताम् । अदृश्य तां जनकसुतां सुपूजितां सुदुःखितः पतिगुणवेगनिर्जिताम् ॥ १६ ॥ ततस्तदा बहुविधभावितात्मनः कृतात्मनो जनकसुतां सुवर्त्मनः । अपश्यतोऽभवदति दुःखितं मनः सुचक्षुषः प्रविचरतो महात्मनः ॥ १७ ॥ इत्यार्षे० श्रीरामायणे श्रीमत्सुन्दरकाण्डे सप्तमः सर्गः ॥ ७ ॥

सुदुःखितः, अभूदिति शेषः । पतिगुणवेगनिर्जितां भर्तृगुणजवेन वशीकृताम् ॥ १६ ॥ ततस्तदेति । बहुविधभावितात्मनः बहुविधं यथा भवति तथा चिन्तितात्मनः । कृतात्मनः निशितबुद्धेः । सुवर्त्मनः सदाचारसम्पन्नस्य । सुचक्षुषः दूरसूक्ष्मादिदर्शनेषु अप्रतिहतनयनतेजसः । महात्मनः महाधैर्यस्य ॥ १७ रामानु०—ततस्तदेति । बहुविधभावितात्मनः बहुविधभावितमनसः । बहुविधचिन्तान्वितचित्तस्येति यावत् । कृतात्मनः कृतप्रयत्नस्य । "आत्मा देहे धृतौ यत्ने स्वभावपरमात्मनोः" इति वैजयन्ती । सुवर्त्मनः शोभननीतिमार्गवर्तिन इत्यर्थः । सुचक्षुषः सकृदालोकनेन द्रष्टव्यं सर्वं करतलामलकवत्साक्षात्कर्तुं क्षमस्य ॥ १७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायण भूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥

कन्दरं नगमिव परमसुगन्धिसुन्दरं तद्गृहं पुनश्चाभिगम्य अभितो गत्वा सविस्मयोऽभूत्, परिच्छेदानधिगमादिति भावः ॥ १५ ॥ तत इति । तां पुरीं चरन् कपिः पतिगुणवेगनिर्जितां पतिगुणोत्कर्षवशीकृताम् । जनकात्मजाम् अदृश्य अदृष्ट्वा सुदुःखितः, अभूदिति शेषः ॥ १६ ॥ बहुविधभावितात्मनः बहुविधचिन्तान्वित चित्तस्येत्यर्थः । कृतात्मनः कृतप्रयत्नस्य । सुवर्त्मनः शोभननीतिमार्गवर्तिनः । सुचक्षुषः दूरसाक्षात्कारसमर्थस्येत्यर्थः ॥ १७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां सप्तमः सर्गः ॥ ७ ॥

स०—दृश्यस्य भावो दृश्यता । न विद्यते दृश्यता यस्यास्सा तथा । तामुद्दिश्य दुःखितोऽभूदिति वा । पतिगुणवेगनिर्जितां पत्युः रामस्य यो गुणवेगः गुणप्रवाहः तेन निर्जिताम् । पत्या रामेण कर्त्रा गुणवेगेन ज्याकर्षणवेगेन धनुर्भङ्गद्वारा निर्जितां नितरां प्राप्ताम् ॥ १६ ॥ बहुविधभावितात्मनः बहुप्रकारं ध्यातरामरूपस्वामिकस्य ॥ १७ ॥

पूर्वोक्तविमानवर्णनं विस्तृणीते—स तस्येत्यादि । प्रतप्तजाम्बूनदजालकृत्रिमं निष्टप्तस्वर्णविशेषकृतकृत्रिमपक्ष्यादिकम् ॥ १ ॥ तदिति । अप्रतिमेया प्रतिकारकृत्रिमम् अपरिच्छेद्याप्रतिक्रियकृत्रिमम् । तत्र हेतुमाह कृतं स्वयं साध्विति । विश्वकर्मणा स्वयं निर्मात्रा विश्वकर्मणा इदं साधु सुन्दरमिति श्लाघापूर्वं कृतम् । सर्वत्राप्रतिहतसञ्चारं चैतदित्याह—दिवं गतम् आकाशगतम् । वायुपथप्रतिष्ठितं वायुमार्गभूतान्तरिक्षस्थितम् । मध्ये भवनस्य संस्थित मिति पूर्वमुक्तत्वात् भूतलप्रत्यासन्नान्तरिक्षस्थितमित्यर्थः । आदित्यपथस्य लक्ष्मवत् लक्ष्म लक्षणं व्यावर्तकम्, व्यराजत प्रचकाश इत्यर्थः ॥ २ ॥

स तस्य मध्ये भवनस्य संस्थितं महद्विमानं मणिवज्रचित्रितम् । प्रतप्तजाम्बूनदजालकृत्रिमं ददर्श वीरः पवनात्मजः कपिः ॥ १ ॥ तदप्रमेयाऽप्रतिकारकृत्रिमं कृतं स्वयं साध्विति विश्वकर्मणा । दिवं गतं वायुपथप्रतिष्ठितं व्यराजतादित्यपथस्य लक्ष्मवत् ॥ २ ॥ न तत्र किंचिन्नकृतं प्रयत्नतो न तत्र किंचिन्नमहार्हरत्नवत् । न ते विशेषा नियताः सुरेष्वपि न तत्र किंचिन्नमहाविशेषवत् ॥ ३ ॥ तपःसमाधानपराक्रमार्जितं मनःसमाधानविचारचारिणम् । अनेकसंस्थानविशेषनिर्मितं ततस्ततस्तुल्यविशेषदर्शनम् ॥ ४ ॥

न तत्रेति । ते विशेषाः तद्विमानस्थितविशेषाः । सुरेष्वपि सुरालयेष्वपि ॥ ३ ॥ तपस्समाधानेत्यादि पञ्चश्लोकी कुलकम् । सर्वत्र ददर्शेति संबन्धः । तपस्समाधानपराक्रमार्जितं तपस्समाधानेन तपोनुष्ठानेन पराक्रमेण च अर्जितम् । मनस्समाधानविचारचारिणं समाधानमभिसन्धानम् । कर्मणि चैतत् । विचारो विविधा गतिः । मनोभिसंहितविविधगतिचारिणम् । अनेकसंस्थानविशेषनिर्मितम् अनेकैस्संस्थानविशेषैः विमानगोपुरादिसन्निवेशैः निर्मितम् ।

भूयः पुष्पकं वर्णयति—स तस्येत्यादिना । प्रतप्तजाम्बूनदजालकृत्रिमं तप्तहेमगवाक्षाणां कृत्रिमं निर्माणं यस्मिन् तत्, प्रतप्तजाम्बूनदसमूहैः निष्पन्नमिति वा ॥१॥ अप्रमेयाप्रतिकारकृत्रिमम् अपरिच्छेद्यमप्रतिकारमप्रतिनिर्माणं यथा भवति तथा निर्वृत्तम् । कृतं स्वयं साध्विति विश्वकर्मणा स्वयं साध्विति कृतम्, निर्माण वेलायां प्रशंसापूर्वकं कृतमित्यर्थः । दिवं गतम् आकाशगतं वायुपथप्रतिष्ठितम् अन्तरिक्षस्थितम् । आदित्यपथस्य लक्ष्मवत् आदित्यमार्गचिह्नमिव ॥ २ ॥ नकृतमित्यादौ नञर्थस्य नशब्दस्य "सुप्सुपा" इति समासः । तत्र विमाने । प्रयत्नतो न कृतमकृतम्, सर्वमपि प्रयत्नतः कृतमेवेत्यर्थः । ये विशेषा रचना विशेषाः तत्र नियताः प्रतिष्ठिताः ते सुरेष्वपि सुरविमानेष्वपि ॥ ३ ॥ तपस्समाधानं तपोनुष्ठानं तेन च पराक्रमेण चार्जितम् । मनस्समाधानविचारचारिणम्,

ततस्ततस्तुल्यविशेषदर्शनम् तत्र तत्र तुल्यं विशेषदर्शनं यस्मिन् ॥ ४ ॥ मनस्समाधाय मम एकाग्रीकृत्य । स्वयं मनस्वीति यावत् । दुरावरं दुर्वारम् । महर्द्धिनां महर्द्धीनाम् । "अपि मापं मषं कुर्याच्छन्दोभङ्गं न कारयेत्" इत्युक्तरीत्या वृत्तभङ्गभिया ह्रस्वोच्चारणम् । अग्र्यमुदाम् इन्द्रादीनाम् ॥५॥ विशेषमिति । विशेषमालम्ब्य विशेषसंस्थितं विशेषं गृहीत्वा विशेषेण संस्थितम् । सविशेषणविशेषसंस्थितमिति यावत् । सविशेषसंस्थानविशेष

मनस्समाधाय तु शीघ्रगामिनं दुरावरं मारुततुल्यगामिनम् । महात्मनां पुण्यकृतां महर्द्धिनां यशस्विनामग्र्यमुदामिवालयम् ॥ ५ ॥ विशेषमालम्ब्य विशेषसंस्थितं विचित्रकूटं बहुकूटमण्डितम् । मनोभिरामं शरदिन्दुनिर्मलं विचित्रकूटं शिखरं गिरेर्यथा ॥ ६ ॥ वहन्ति यं कुण्डलशोभितानना महाशना व्योमचरा निशाचराः । विवृत्तविध्वस्तविशाललोचना महाजवा भूतगणाः सहस्रशः ॥ ७ ॥

विशिष्टमित्यर्थः । कूटानां विचित्रत्वबहुत्वे विशेषणद्वयेन दर्शयति—विचित्रेत्यादिना । विचित्रकूटं शिखरं गिरेर्यथा । कूटम् अवान्तरशृङ्गम्, शिखरं महाशृङ्गमिति प्रयोगादवधार्यते ॥ ६ ॥ वहन्तीति । यं यत् । आर्षो व्यत्ययः । महाशनाः महाकाया इत्यर्थः । व्योमचराः व्योमचरसदृशसंस्थानाः । विवृत्तविध्वस्तविशाललोचनाः विवृत्तानि वर्तुलानि विध्वस्तानि भुग्नानि विशालानि लोचनानि येषां ते तथा । महाजवाः महाजवा इव स्थिताः । भूतगणाः गोपुरवाहका इव प्रतिमारूपेण स्थिताः । अन्यथा रावणान्तःपुरे पुरुषसञ्चारायोगात् कामगस्य विमानस्य वहनासंभवाच्च । यद्वा शिबिकावाहका इव

समाधीयन्त इति समाधानाः मनसः समाधानाः मनोहितसंहिताः ते च ते विचारा विविधमार्गास्तैः सञ्चरणशीलम्, मनोभिलषितसर्वदेशगमनशीलमित्यर्थः । यद्वा मनस्समाधानेन मनोनैश्चल्येन यत्र विचारः चिन्ता तत्र चरणशीलम्, मनस्सङ्कल्पितदेशगमनशीलमित्यर्थः । ततस्ततस्तुल्यविशेषदर्शनं तुल्यानां रमणीयत्वेन सदृशानां विशेषाणां दर्शनं यस्मिन् तत्, सर्वतो रमणीयमित्यर्थः ॥ ४ ॥ मन इति । मनस्समाधाय स्वामिचित्तं स्वहृदि निधाय, स्वामिचित्तं विदित्वेति यावत् । दुरावरं दुर्निवारम् । महर्धिनाम् । दीर्घाभावश्छान्दसः । अग्र्यमुदां महानन्दानामिन्द्रादीनामालयं त्रिविष्टपमिव स्थितमित्यर्थः ॥ ५ ॥ विशेषं विशिष्टदिव्यरत्नादिवस्तुजातम् । आलम्ब्य अवलम्ब्य विशेषसंस्थितं दिव्यसंस्थानविशेषेणावस्थितम् । बहुकूटमण्डितं बहुभिरवान्तरकूटैरलंकृतम् । विचित्रकूटं विचित्रशिखरम् ॥ ६ ॥ वहन्तीति । महद्दर्शनं येषां ते तथा । विवृत्तविध्वस्तविशाललोचनाः विवृत्तानि विघूर्णितानि विध्वस्तानि विपर्यस्तानि विशालानि लोचनानि येषां ते ।

स०—विवृत्तविध्वस्तविशाललोचनाः वि विरुद्धं स्वामिविरुद्धं वृत्तं चरित्रं विध्वस्तं येषां ते तथा । ते च ते विशाललोचनाश्चेति तथा ॥ ७ ॥

भूतगणा अधोभागे वहन्ति । तद्द्वारेणैव कामगत्वमपि, चेतनप्रेरणं विना अचेतनसञ्चारस्यात्यन्तमनुचितत्वाच्च ॥ ७ ॥ रामानु०—वहन्तीत्यनेन श्लोकेन विमानस्य राक्षसवाह्यत्वं प्रतीयते । कामगस्य दिव्यस्य तन्नोपपद्यते । एतद्विरोधपरिहारार्थं वहतेर्धातोः रक्षणार्थत्वस्वीकारोपि नोपपद्यते । अन्तःपुरमध्ये विमानरक्षणार्थं राक्षसावस्थानायोगात् । अतोऽत्र समाधानं विद्वद्भिश्चिन्त्यम् ॥ ७ ॥ उत्करः समूहः ॥ ८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टमः सर्गः ॥ ८ ॥ तस्येत्यादि । आलयवरिष्ठस्य पुष्पकस्य ॥ १ ॥ रामानु०—तस्यालयवरिष्ठस्य, स तस्य मध्ये भवनस्य संस्थितमिति पुष्पकाधारत्वेन प्रकृतस्वगृह

वसन्तपुष्पोत्करचारुदर्शनं वसन्तमासादपि कान्तदर्शनम् । स पुष्पकं तत्र विमानमुत्तमं ददर्श तद्वानरवीर सत्तमः ॥ ८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे अष्टमः सर्गः ॥ ८ ॥

तस्यालयवरिष्ठस्य मध्ये विपुलमायतम् । ददर्श भवनश्रेष्ठं हनुमान् मारुतात्मजः ॥ १ ॥ अर्द्धयोजनविस्तीर्णमायतं योजनं हि तत् । भवनं राक्षसेन्द्रस्य बहुप्रासादसङ्कुलम् ॥२॥ मार्गमाणस्तु वैदेहीं सीतामायतलोचनाम् । सर्वतः परिचक्राम हनुमानरिसूदनः ॥ ३ ॥ उत्तमं राक्षसावासं हनुमानवलोकयन् । आससादाथ लक्ष्मीवान् राक्षसेन्द्रनिवेशनम् ॥ ४ ॥ चतुर्विषाणैर्द्विरदैस्त्रिविषाणैस्तथैव च । परिक्षिप्तमसंबाधं रक्ष्यमाणमुदायुधैः ॥ ५ ॥

श्रेष्ठस्य । भवनश्रेष्ठं पुष्पकाख्यम् ॥ १ ॥ तद्भवनं कियत्प्रमाणमित्यत्राह—अर्द्धयोजनेति ॥२॥ सर्वतः पुष्पकादन्यत्र सर्वत्र । पुष्पकारोहणस्य पश्चाद् वक्ष्यमाणत्वात् ॥३॥ रामानु०—मार्गमाण इति । सर्वतः परिचक्राम । रावणभवनपर्यन्तवर्तितद्भ्रातृकुमारामात्यादिभवनेषु परितश्चचारेत्यर्थः । उत्तरश्लोके रावणगृहप्राप्तेरभिधानात् ॥३॥ उत्तममिति ।

निशाचराः वहन्ति वहन्तीव । इवशब्दोऽत्राध्याहर्तव्यः । तथा च विमाने निर्मितनिशाचराकाराः प्रतिमा वहन्तीवेत्यर्थः । तं विमानं ददर्शेत्युत्तरेण सम्बन्धः । अन्यथा कामगमनस्य अन्तःपुरे विद्यमानस्य राक्षसवहनरक्षणयोरयोगात् ॥ ७ ॥ वसन्तेति । वसन्तपुष्पोत्करचारुदर्शनं वसन्तकालीनपुष्पसमूहचारुदर्शनम् ॥ ८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् अष्टमः सर्गः ॥ ८ ॥ ॥ १ ॥ तस्येत्यादि श्लोकद्वयमेकं वाक्यम् । तस्यालयवरिष्ठस्य पूर्वोक्तपुष्पकस्य मध्ये भवनश्रेष्ठं भवनोत्तमं राक्षसेन्द्रस्य भवनं ददर्शेति सम्बन्धः ॥ २ ॥ मार्गमाण इति । सीतां मार्गमाणः सर्वतः पुष्पकादन्यत्र सर्वत्र परिचक्राम सञ्चचार पुष्पकारोहणस्योपरि वक्ष्यमाणत्वात् ॥ ३ ॥ उत्तममित्यादि श्लोकद्वयमेकं वाक्यम् । राक्षसावासमित्यनेन सर्वोप

राक्षसेन्द्रनिवेशनं पुष्पकमध्यस्थालयादन्यन्मूलस्थानम् ॥४॥५॥ राक्षसीभिरित्यादिश्लोकद्वयं आससादेति संबध्यते । रावणस्य निवेशनमिति पुनरुपादानमपूर्वविशेषणविवक्षया ॥ ६ ॥ नक्रः कुम्भीरः । तिमिङ्गिलः महामत्स्यः । झषः केवलमत्स्यः ॥७–९॥ रामानु०–हनुमता प्राप्तरावणभवनस्य राक्षसभवनानां च सर्वोत्तरतां दर्शयितुं तत्समृद्धिमनुसन्धत्ते–या हि वैश्रवण इत्यादिश्लोकद्वयेन । वैश्रवणेन्द्रयोर्ग्रहणमितरदिक्पालानामप्युपलक्षणम् । "रावणस्य गृहे सर्वा नित्यमेवानपायिनी" इत्यभिधानात सर्वदिक्पालानामैश्वर्यमेकस्मिन् रावणभवने सर्वदा वर्तत इत्यवगम्यते ॥ ८ ॥ या चेति । तद्विशिष्टा ततोऽप्यधिका । रक्षोगृहेषु रावणभ्रातृपुत्रामात्यादिराक्षसगृहेषु । अत्र ऋद्धेः सर्वशब्देनाविशेषितत्वात्कुबेराद्येकैकदिक्पालैश्वर्यं रक्षसां गृहेषु प्रत्येकं वर्तत इत्यर्थः ॥ ९ ॥ तस्य हर्म्यस्येत्यादि । पूर्वमुक्तार्थस्यापि पुनरुपन्यासः पुष्पकस्य मध्ये

राक्षसीभिश्च पत्नीभी रावणस्य निवेशनम् । आहृताभिश्च विक्रम्य राजकन्याभिरावृतम् ॥६॥ तन्नक्रमकराकीर्णं तिमिङ्गिलझषाकुलम् । वायुवेगसमाधूतं पन्नगैरिव सागरम् ॥ ७ ॥ या हि वैश्रवणे लक्ष्मीर्या चेन्द्रे हरिवाहने । सा रावणगृहे सर्वा नित्यमेवानपायिनी ॥ ८ ॥ या च राज्ञः कुबेरस्य यमस्य वरुणस्य च । तादृशी तद्विशिष्टा वा ऋद्धी रक्षोगृहेष्विह ॥ ९ ॥ तस्य हर्म्यस्य मध्यस्थं वेश्म चान्यत्सुनिर्मितम् । बहुनिर्यूहसङ्कीर्णं ददर्श पवनात्मजः ॥ १० ॥ ब्रह्मणोऽर्थे कृतं दिव्यं दिवि यद्विश्वकर्मणा । विमानं पुष्पकं नाम सर्वरत्नविभूषितम् । परेण तपसा लेभे यत्कुबेरः पितामहात् ॥ ११ ॥

रावणस्य निवासभवनमन्यदस्तीत्यस्यार्थस्य स्पष्टीभावार्थम् । निर्यूहः मत्तवारणः ॥ १० ॥ रामानु०–तस्येति । तस्य हर्म्यस्य पूर्वोक्तविशेषणविशिष्टस्य रावणभवनस्य । बहुनिर्यूहसंकीर्णम् निर्यूहो मत्तवारणः ॥ १० ॥ ब्रह्मणोऽर्थ इत्यादि । ब्रह्मणोऽर्थे कृतं यत्कुबेरस्तपसा लेभे तद्वेश्म ददर्शेति पूर्वेण सम्बन्धः॥ ११॥ जीव्यत्वात्सर्वराक्षससाधारणत्वमुक्तम् । राक्षसेन्द्रनिवेशनं रावणभवनम् । परिक्षिप्तं परिवेष्टितम् । उद्यतायुधैः, राक्षसैरिति शेषः ॥ ४ ॥ ५ ॥ राक्षसीभिरिति । रावणस्य निवेशनं निवेश्यन्ते परिगृह्यन्ते पत्न्योऽत्रेति निवेशनम्, रावणस्थानमित्यर्थः । अपश्यदिति शेषः । अत एव पत्नीभिरावृतम् ॥ ६–८ ॥ या चेत्यादि श्लोकद्वयेन रावणगृहसर्वराक्षसगृहवर्तमानां लक्ष्मीमनुसन्धत्ते । या लक्ष्मीः वैश्रवणादिषु नित्यानपायिनी सा सर्वापि रावणगृहे सर्वराक्षसगृहेषु च तादृशी तद्विशिष्टा ततोऽप्यधिका वेति सम्बन्धः । लक्ष्मीः शोभा । ऋद्धिः ऐश्वर्यम् ॥ ९ ॥ तस्य हर्म्यस्येत्यादिश्लोकत्रयस्य पवनात्मजः तद्विमानं ददर्शेति सम्बन्धः । निर्यूहो

स०–हरिवाहने "त्वक्केशवालरोमाणि सुवर्णाभानि यस्य तु । हरिः स वर्णतोऽश्वस्तु पीतकौशेयसप्रभः ॥". इति शालिहोत्रोक्तलक्षणोपेतो योऽश्वः स हरिरित्युच्यते । स वाहनं यस्य तस्मिन् । यद्वा हरिवाहने सूर्ये । "हरिवाहन इत्युक्तिः शचीरतिनिवस्वतोः" इति विश्वः । अनपायिनी अविश्लेषा ॥ ८ ॥

कुबेरमित्यादि। ईहामृगसमायुक्तैः वृकप्रतिकृतियुक्तैः। कार्तस्वरहिरण्मयैः कार्तस्वरं सुवर्णम्, हिरण्यं रजतम्। "कृताकृतं हेम रूप्यं हिरण्यमभिधीयते" इति रजतस्यापि हिरण्यत्वाभिधानात्॥ १२-१५॥ रामानु०–कुबेरमित्यारभ्य सर्वतः समलंकृतमित्यन्तमेकं वाक्यम्। अतो वक्ष्यमाणेन कूटागारशब्देन न पौनरुक्त्यम्। ईहामृगसमायुक्तैः कृत्रिमवृकयुक्तैः। कार्तस्वरहिरण्मयैः सुवर्णरजतमयैः। "कृताकृतं हेम रूप्यं हिरण्यमभिधीयते" इति रजतस्यापि हिरण्यत्वाभिधानात्॥ १२-१४॥

कुबेरमोजसा जित्वा लेभे तद्राक्षसेश्वरः॥ १२॥ ईहामृगसमायुक्तैः कार्तस्वरहिरण्मयैः। सुकृतैराचितं स्तम्भैः प्रदीप्तमिव च श्रिया॥ १३॥ मेरुमन्दरसङ्काशैरुल्लिखद्भिरिवाम्बरम्। कूटागारैः शुभाकारैः सर्वतः समलंकृतम्॥ १४॥ ज्वलनार्कप्रतीकाशं सुकृतं विश्वकर्मणा। हेमसोपानसंयुक्तं चारुप्रवरवेदिकम्॥ १५॥ जालवातायनैर्युक्तं काञ्चनैः स्फाटिकैरपि। इन्द्रनीलमहानीलमणिप्रवरवेदिकम्॥ १६॥ विद्रुमेण विचित्रेण मणिभिश्च महाधनैः। निस्तुलाभिश्च मुक्ताभिस्तलेनाभिविराजितम्॥ १७॥ चन्दनेन च रक्तेन तपनीयनिभेन च। सुपुण्यगन्धिना युक्तमादित्यतरुणोपमम्॥ १८॥ कूटागारैर्वराकारैर्विविधैः समलंकृतम्। विमानं पुष्पकं दिव्यमारुरोह महाकपिः॥ १९॥

जालवातायनैः जालानि तिर्यगूर्ध्वविन्यस्तफलकघटितानि, वातायनानि केवलानि रन्ध्राणि। अर्थवैशद्यार्थमेकार्थे शब्दद्वयप्रयोगो वा। महानीलाः सिंहलद्वीपोद्भवनीलरत्नानि। महाधनैः महामूल्यैः। निस्तुलाभिः सुवृत्ताभिः। तलेन, निर्मितेनेति शेषः। आदित्यतरुणोपमं तरुणादित्योपमम्। एतदन्ते लेभे तद्राक्षसेश्वर इति संबध्यते। अन्यथा कूटागारैरित्यनेन पुनरुक्तिः स्यात्॥ १६-१९॥ रामानु०–ज्वलनार्कप्रतीकाशमित्यारभ्य आरुरोह महाकपिरित्यन्तमेकं वाक्यम्। जालवातायनैर्युक्तं कुड्योपरिभागे अलङ्कारार्थं स्वस्तिकसर्वतोभद्राद्याकारेण यत्नवत्तया कृतं जालम्। वायुसञ्चारार्थं कृतो गवाक्षो वातायनम्। इन्द्रनीलमहानीलेति। मत्तवारणः॥ १०-१२॥ ईहामृगसमायुक्तैरित्यादीनामारुरोह महाकपिरित्युत्तरेण सम्बन्धः। ईहामृगाः कृत्रिममृगाः। कार्तस्वरहिरण्मयैः सुवर्णरजतमयैः॥ १३-१५॥ जालवातायनैर्युक्तं कुड्योपरिभागे अलङ्कारार्थं स्वस्तिकसर्वतोभद्राद्याकारेणायामवत्तया कृतं जालम्। वायुसञ्चारार्थं कृतो गवाक्षः वातायनम्। इन्द्रनीलः क्षीरस्य नैल्यप्रकाशोत्पादकः, महानीलः सिंहलद्वीपाकरोद्भूतः। विद्रुमेण महाधनैः मणिभिः निस्तुलाभिः वर्तुलाभिः मुक्ताभिश्च करणैः विचित्रेण तलेन कुट्टिमेन विराजितमिति सम्बन्धः॥ १६॥ १७॥ आदित्यतरुणोपमं तरुणादित्योपमम्॥ १८॥ १९॥

" क्षीरमध्ये क्षिपेन्नीलं क्षीरं नीलतां व्रजेत् । इन्द्रनीलमिति ख्यातमिति ... " इति ... लक्षणमिन्द्रनीलम् । " सिंहलाकरसंभूता महानीला इति स्मृताः " इत्युक्ता महानीला इति तयोर्भेदः । विद्रुमेण महाधनैर्मणिभिः निस्तुलाभिर्मुक्ताभिश्च करणैः विचित्रेण तलेनाभिविराजितमिति संबन्धः । आदित्यतरुणोपमं तरुणादित्योपमम् । उपसर्जनस्य परनिपात आर्षः ॥ १५–१९ ॥ जिघ्रत् अजिघ्रत् ॥ २०–२२ ॥ दन्तान्तरितरूपिकां दन्तैः व्यवहितरूपिकाम् । अन्तरान्तरा कृतदन्तफलकामिति

तत्रस्थः स तदा गन्धं पानभक्ष्यान्नसम्भवम् । दिव्यं संमूर्च्छितं जिघ्रद्रूपवन्तमिवानिलम् ॥ २० ॥ स गन्धस्तं महासत्त्वं बन्धुर्बन्धुमिवोत्तमम् । इत एहीत्युवाचेव तत्र यत्र स रावणः ॥ २१ ॥ ततस्तां प्रस्थितः शालां ददर्श महतीं शुभाम् । रावणस्य मनःकान्तां कान्तामिव वरस्त्रियम् ॥ २२ ॥ मणिसोपानविकृतां हेमजालविभूषिताम् । स्फाटिकैरावृततलां दन्तान्तरितरूपिकाम् ॥ २३ ॥ मुक्ताभिश्च प्रवालैश्च रूप्यचामीकरैरपि । विभूषितां मणिस्तम्भैः सुबहुस्तम्भभूषिताम् ॥ २४ ॥ समैर्ऋजुभिरत्युच्चैः समन्तात् सुविभूषितैः । स्तम्भैः पक्षैरिवात्युच्चैर्दिवं संप्रस्थितामिव ॥ २५ ॥ महत्या कुथयाऽऽस्तीर्णां पृथिवीलक्षणाङ्कया । पृथिवीमिव विस्तीर्णां सराष्ट्रगृहमालिनीम् ॥ २६ ॥ नादितां मत्तविहगैर्दिव्यगन्धाधिवासिताम् । परार्ध्यास्तरणोपेतां रक्षोधिपनिषेविताम् ॥ २७ ॥

यावत् ॥ २३ ॥ सुबहुस्तम्भभूषिताम् अवान्तरबहुस्तम्भभूषिताम् । सुबहुस्तम्भभूषितैरिति पाठे–सुबहुस्तम्भैः स्तम्भदार्ढ्यकारिपट्टैरलंकृतामित्यर्थः ॥ २४ ॥ अत्युच्चैः अत्यन्तोन्नतैः । दिवम् आकाशम् ॥ २५ ॥ कुथया आस्तरणेन । पृथिवीलक्षणाङ्कया सरित्समुद्रगिरिवनादिभिः पृथिवी

तत्रस्थ इति । जिघ्रत अजिघ्रत । रूपवन्तमिवानिलम् अरूपस्य वायोः गन्धवद्रेणुभूयस्त्वाद्रूपवत्त्वोत्प्रेक्षा ॥२०॥२१॥ ततस्तामित्यारभ्य तां शोकनाशिनीं दिव्यां श्रियस्सञ्जननीमिवेत्यन्तमेकं वाक्यम् । एकस्तच्छब्दः प्रस्थित इत्यनेन सम्बध्यते, अपरो ददर्शेत्यनेन । दन्तान्तरितरूपिकां दन्तैरन्तरितानि मध्ये निर्मितानि रूपाणि यस्यां ताम्- । सुबहुस्तम्भभूषितामित्यत्र बहुत्वविधानाय स्तम्भानुवादान्न पौनरुक्त्यम् । पक्षैरिव स्थितैः स्तम्भैर्दिवं सम्प्रस्थितामिवेत्युत्प्रेक्षा । पृथिवीलक्षणाङ्कया सरित्समुद्रगिरिराष्ट्रादिभिः पृथिवीलक्षणैरङ्कितया । कुथया परिस्तोमेन विशालचित्ररत्नकम्बलेनेत्यर्थः । कल्माषीमिव कल्माषीशब्देन वसिष्ठधेनुरुच्यते,

स०–बहूनां शत्रूणां स्तम्भः जडीभावः तेन विभूषितां यदाशया प्रवृत्ताश्शत्रवो जडीभवन्तीत्यर्थः । " स्तम्भौ स्थूणाजडीभावौ " इत्यमरः ॥ २४ ॥

लक्षणैरङ्कितया ॥ २६ ॥ २७ ॥ कल्माषीं शबलवर्णाम्, वसिष्ठधेनुमिव सर्वकामप्रदत्वेन कल्माषीसादृश्यम् ॥ २८ ॥ वर्णस्यापि प्रसाधिनीम् वर्णोत्कर्ष करीमित्यर्थः । तां शोकनाशिनीमिति । ततस्तामिति वर्तमाने पुनस्तच्छब्द उपसंहारार्थः । तां प्रति प्रस्थितः ददर्शेति वा संबन्धः ॥ २९ ॥ इन्द्रिया णीति, हनुमत इति शेषः ॥ ३० ॥ स्वर्गोऽयमिति । सामान्यतः स्वर्गोऽयम् । तत्रापि देवलोकः त्रयस्त्रिंशद्देवानां लोकः । तत्रापीन्द्रस्य पुरी अमरावती ।

धूम्रामगरुधूपेन विमलां हंसपाण्डुराम् । चित्रां पुष्पोपहारेण कल्माषीमिव सुप्रभाम् ॥ २८ ॥ मनस्संह्लाद जननीं वर्णस्यापि प्रसाधिनीम् । तां शोकनाशिनीं दिव्यां श्रियः सञ्जननीमिव ॥ २९ ॥ इन्द्रियाणीन्द्रियार्थैस्तु पञ्च पञ्चभिरुत्तमैः । तर्पयामास मातेव तदा रावणपालिता ॥३०॥ स्वर्गोऽयं देवलोकोऽयमिन्द्रस्येयं पुरी भवेत् । सिद्धिर्वेयं परा हि स्यादित्यमन्यत मारुतिः ॥३१॥ प्रध्यायत इवापश्यत् प्रदीपांस्तत्र काञ्चनान् । धूर्तानिव महा धूर्तैर्देवनेन पराजितान् ॥ ३२ ॥ दीपानां च प्रकाशेन तेजसा रावणस्य च । अर्चिर्भिर्भूषणानां च प्रदीप्तेत्यभ्य मन्यत ॥ ३३ ॥ ततोऽपश्यत्कुथासीनं नानावर्णाम्बरस्रजम् । सहस्रं वरनारीणां नानावेषविभूषितम् ॥ ३४ ॥ परि वृत्तेऽर्धरात्रे तु पाननिद्रावशं गतम् । क्रीडितेनोपरतं रात्रौ सुष्वाप बलवत्तदा ॥ ३५ ॥ तत्प्रसुप्तं विरुरुचे निःशब्दा न्तरभूषणम् । निःशब्दहंसभ्रमरं यथा पद्मवनं महत् ॥ ३६ ॥

परा सिद्धिः ब्रह्मणः स्थानमित्युत्तरोत्तरोत्कर्षः ॥ ३१ ॥ प्रध्यायत इति । प्रध्यायत इव निश्चलतया प्रकृष्टध्यानयुक्तानिव । धूर्तान् अक्षधूर्तान् । देवनेन द्यूतेन ॥ ३२ ॥ प्रदीप्ता शाला दग्धेति अभ्यमन्यत ॥ ३३ ॥ तत इत्यादि । कुथासीनं कुथशयितम् । नानावर्णाम्बरस्रजमिति हलन्तस्य स्रक्छब्दस्य भागुरिमतेन टाबन्तत्वादजन्तत्वोपपत्तिः ॥ ३४॥३५॥ तदिति । निःशब्दान्तरभूषणं निःशब्दविशेषाणि भूषणानि यस्य । " अथान्तरं रन्ध्रेप्यपरव्यत्र

अनेन सर्वानन्ददायिनी सूच्यते ॥ २२–२९ ॥ इन्द्रियाणीति । हनुमत इति शेषः । तर्पयामास, उक्तशालेति शेषः ॥ ३० ॥ स्वर्गः पातालादिः । देवलोकः वायु वरुणादिलोकः । इन्द्रपुरी अमरावती । परा सिद्धिः उत्कृष्टतपःफलभूतो ब्रह्मलोकः ॥ ३१ ॥ प्रध्यायत इव ध्याननिष्ठानिव । प्रत्यायत इति पाठे–झटिति प्रकाश सम्भाराद् प्रत्यागच्छत इव स्थितान् । काञ्चनान्, काञ्चनस्तम्भगतानित्यर्थः । धूर्तान् अक्षधूर्तान् । देवनेन द्यूतेन ॥ ३२ ॥ + कवाटजालैरिति । कवाटजालैः प्रभामुद्वमन्तीव स्थिता शाला प्रदीप्तेत्यभ्यमन्यतेति सम्बन्धः ॥ ३३ ॥ ३४ ॥ परिवृत्ते प्रवृत्ते सति ॥ ३५ ॥ निश्शब्दान्तरभूषणं निश्शब्दोदराणि भूषणानि

घानयोः । अवकाशावसरयोरवसानविनाशयोः । विशेषमध्यतादर्थ्येषु " इति दर्पणः । अतिनिद्रापरवशत्वेन निश्चलाङ्गतया निःशब्दभूषणमित्यर्थः ॥३६॥३७॥ प्रबुद्धानीति । अत्र वदनानीत्यनुषज्यते । तासां वदनानि क्षपाक्षये दिवसे पद्मानीव प्रबुद्धानि भूत्वा रात्रौ पुनः संवृतपत्राणि सङ्कुचित पत्राणि पद्मानीव बभुः॥३८॥ इमानीति । प्रार्थयन्ति प्रार्थयेरन् । मधुरसलुब्धतया अत्र पुनः पुनः पतेयुरित्यर्थः। व्यत्ययेन परस्मैपदम् । अनुदात्तत्वेन

तासां संवृतदन्तानि मीलिताक्षाणि मारुतिः । अपश्यत् पद्मगन्धीनि वदनानि सुयोषिताम् ॥ ३७ ॥ प्रबुद्धानीव पद्मानि तासां भूत्वा क्षपाक्षये । पुनः संवृतपत्राणि रात्राविव बभुस्तदा ॥ ३८ ॥ इमानि मुखपद्मानि नियतं मत्तषट्पदाः । अम्बुजानीव फुल्लानि प्रार्थयन्ति पुनः पुनः ॥ ३९ ॥ इति चामन्यत श्रीमानुपपत्त्या महाकपिः । मेने हि गुणतस्तानि समानि सलिलोद्भवैः ॥४०॥ सा तस्य शुशुभे शाला ताभिः स्त्रीभिर्विराजिता । शारदीव प्रसन्ना द्यौस्ताराभिरभिशोभिता ॥४१॥ स च ताभिः परिवृतः शुशुभे राक्षसाधिपः । यथा ह्युडुपतिः श्रीमांस्ताराभि रभिसंवृतः ॥ ४२ ॥ याश्च्यवन्तेऽम्बरात्ताराः पुण्यशेषसमावृताः । इमास्ताः सङ्गताः कृत्स्ना इति मेने हरिस्तदा ॥ ४३ ॥ ताराणामिव सुव्यक्तं महतीनां शुभार्चिषाम् । प्रभावर्णप्रसादाश्च विरेजुस्तत्र योषिताम् ॥ ४४ ॥ व्यावृत्त गुरुपीनस्रक्प्रकीर्णवरभूषणाः । पानव्यायामकालेषु निद्रापहृतचेतसः ॥ ४५ ॥

आत्मनेपदत्वात् । नियतं नूनम् । उपपत्त्या युक्त्या । उपपत्तिमेवाह मेन इति । तानि मुखानि । गुणतः सौरभादिगुणैः । सलिलोद्भवैः पद्मैः॥३९–४३॥ ताराणामिति । प्रभा कान्तिः । वर्णः रूपम् । प्रसादः प्रसन्नता ॥४४॥ व्यावृत्तेति । पानव्यायामकालेषु पानानन्तरं भाविरतिव्यापारसमयेषु । व्यावृत्त

यस्य तत् ॥ ३६ ॥ ३७ ॥ प्रबुद्धानीति । वदनानीत्यनुषज्यते । तासां वदनानि क्षपाक्षये दिवसे पद्मानीव प्रबुद्धानि भूत्वा रात्रौ पुनः संवृतपत्राणि पद्मानीव बभु रित्यन्वयः ॥ ३८ ॥ इमानीति । मत्तषट्पदाः इमानि मुखपद्मानि फुल्लान्यम्बुजानीव पुनः पुनः प्रार्थयन्ति प्रार्थयेरन् । नियतं नूनम् । प्रार्थयन्त इति पाठे प्रार्थय माना भवेयुरिति शेषः ॥ ३९ ॥ उपपत्त्या युक्त्या । इतीव इत्येवामन्यत उत्प्रेक्षितवान् । तामेवाह मेन इति । तानि मुखानि । गुणतः शैत्यसौरभ्यादिगुणैः, सलिलोद्भवैरम्बुजैः समानि मेने हीति योजना ॥ ४०–४३ ॥ ताराणामिति । प्रभा देहकान्तिः । वर्णः रूपम् । प्रसादः औज्ज्वल्यम् ॥ ४४ ॥ व्यावृत्तेति । पान

गुरुपीनस्रक्प्रकीर्णवरभूषणाः विपर्यस्तगुरुपीनस्रजः प्रकीर्णवरभूषणाश्च सत्यः निद्रापहृतचेतसः विरेजुः ॥ ४५ ॥ व्यावृत्ततिलकाः उन्मृष्टतिलकाः । उद्भ्रान्तनूपुराः स्वस्थानानवस्थितनूपुराः ॥ ४६ ॥ मुक्ताहारावृताः मुक्ताहारैरावृताः, छिन्नमुक्ताहारा इत्यर्थः । व्याविद्धरशनादामाः छिन्नकाञ्चीगुणाः । किशोर्यः प्रथमवयस्का वडवाः । वाहिताः मार्गश्रमनिवृत्त्यर्थं भूमौ प्रवेष्टनं कारिताः । सर्वत्र रेजुरित्यन्वयः ॥ ४७ ॥ ४८ ॥ चन्द्रांशुकिरणाभाः अंशुः

व्यावृत्ततिलकाः काश्चित् काश्चिदुद्भ्रान्तनूपुराः । पार्श्वे गलितहाराश्च काश्चित् परमयोषितः ॥ ४६ ॥ मुक्ताहारावृताश्चान्याः काश्चिद्विस्रस्तवाससः । व्याविद्धरशनादामाः किशोर्य इव वाहिताः ॥ ४७ ॥ सुकुण्डलधराश्चान्या विच्छिन्नमृदितस्रजः। गजेन्द्रमृदिताः फुल्ला लता इव महावने ॥४८॥ चन्द्रांशुकिरणाभाश्च हाराः कासांचिदुत्कटाः। हंसा इव बभुः सुप्ताः स्तनमध्येषु योषिताम् ॥ ४९ ॥ अपरासां च वैडूर्याः कादम्बा इव पक्षिणः । हेमसूत्राणि चान्यासां चक्रवाका इवाभवन् ॥ ५० ॥ हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः । आपगा इव ता रेजुर्जघनैः पुलिनैरिव ॥५१॥ किङ्किणीजालसङ्कोशास्ता हैमविपुलाम्बुजाः । भावग्राहा यशस्तीराः सुप्ता नद्य इवाबभुः ॥५२॥

सूर्यः । "अथांशुः स्यान्मयूखे सवितर्यपि" इति दर्पणः । चन्द्रसूर्ययोः किरणानामाभेवाभा येषां ते तथा । उत्कटाः स्थूलाः ॥४९–५१॥ अथासां नदीसमाधिं दर्शयति–किङ्किणीति । किङ्किणीजालसङ्कोशाः किङ्किणीजालान्येव संकोशा मुकुलानि यासां ताः। एतत्स्थाने सत्कोशा इति पाठान्तरदर्शनात् संकोशशब्दो मुकुलवाचीत्यवगम्यते । भावाः शृङ्गारचेष्टाः त एव ग्राहाः नक्राः यासां ताः । सुप्तिदशायामपि वासनावशाद्भावाभिव्यञ्जकसंस्थान

व्यायामकालेषु पानानन्तरगीतनृत्तादिव्यापारकालेषु । व्यावृत्तगुरुपीनस्रक्प्रकीर्णवरभूषणाः व्यावृत्ताः विपर्यस्ताः गुरुपीनस्रजश्च प्रकीर्णवरभूषणानि च यासां ताः तथाभूता विरेजुरिति पूर्वेण सम्बन्धः ॥४५॥ उद्भ्रान्तनूपुराः स्वस्थानानवस्थितनूपुराः । व्याविद्धरशनादामाः चलत्काञ्चीगुणाः । किशोर्यः बडवाः । वाहिताः अध्वश्रमनिवृत्त्यर्थं भूवेष्टनं कारिताः श्लथबन्धा भवन्ति तद्वदित्यर्थः ॥ ४६ ॥ ४७ ॥ सुकुण्डलेति । अस्मिन्विरेजुरित्यनुषज्यते ॥ ४८ ॥ अंशवः सूक्ष्मरश्मयः । किरणाः स्थूलरश्मयः ॥ ४९–५१ ॥ किङ्किणीजालान्येव सङ्कोशाः मुकुलाः यासां ताः । हेमानि हेमभूषणान्येव विपुलान्यम्बुजानि यासां ताः । भावग्राहाः भावाः

वत्त्वाद्भावग्राह्या इत्युक्तम् । यशस्तीराः यशःशब्देन यशोहेतुभूता पर्यन्तप्रसृतप्रभोच्यते सैव तीरं यासां ताः ॥ ५२ ॥ मृदुष्विति । संस्थिताः लग्नाः भूषणराजयः । भ्रमराणीव भ्रमरा इव । व्यत्यय आर्षः । कामुका इव बभूवुः । "भ्रमरः कामुके भृङ्गे" इति दर्पणः । केचित्तु भूषणानीति पाठं कल्पयित्वा भूषणराजयः भूषणविमर्दकृतरेखाः । विस्रस्तभूषणानामपि कासांचिद्भूषणानीव बभूवुरित्यर्थ इत्याहुः ॥ ५३ ॥ रामानु०–मृदुष्विति । भूषण

मृदुष्वङ्गेषु कासांचित् कुचाग्रेषु च संस्थिताः । बभूवुर्भूषणानीव शुभा भूषणराजयः ॥ ५३ ॥ अंशुकान्ताश्च कासांचिन्मुखमारुतकम्पिताः । उपर्युपरि वक्त्राणां व्याधूयन्ते पुनः पुनः ॥ ५४ ॥ ताः पताका इवोद्धूताः पत्नीनां रुचिरप्रभाः । ननावर्णसुवर्णानां वक्त्रमूलेषु रेजिरे ॥५५॥ ववल्गुश्चात्र कासांचित् कुण्डलानि शुभार्चिषाम् । मुखमारुतसंसर्गान्मन्दं मन्दं सुयोषिताम् ॥ ५६ ॥ शर्करासवगन्धैश्च प्रकृत्या सुरभिः सुखः । तासां वदननिःश्वासः सिषेवे रावणं तदा ॥५७॥ रावणाननशङ्काश्च काश्चिद्रावणयोषितः । मुखानि स्म सपत्नीनामुपाजिघ्रन् पुनः पुनः ॥ ५८ ॥ अत्यर्थं सक्तमनसो रावणे ता वरस्त्रियः । अस्वतन्त्राः सपत्नीनां प्रियमेवाचरंस्तदा ॥ ५९ ॥

राजयः भूषणविमर्दजनितरेखाः । विस्रस्तभूषणानामपि कासांचिद्भ भूषणस्थानदेशा भूषणानीव बभूवुरित्यर्थः ॥ ५३॥ अंश्विति । मुखमारुतकम्पिताः अंशुकान्ताः सूक्ष्मवस्त्रदशाः । उपर्युपरि वक्त्राणां वक्त्राण्युपर्युपरि । "धिगुपर्यादिषु त्रिषु । द्वितीयाऽऽम्रेडितान्तेषु" इति द्वितीयाभाव आर्षः । व्याधूयन्त इति श्यन्नार्षः । धूनातेः क्र्यादित्वात् ॥ ५४ ॥ ता इति । विधेयत्वात् स्त्रीलिङ्गता । नानावर्णसुवर्णानां नानाविधशोभनवर्णानाम् ॥ ५५ ॥ ववल्गुरिति । उपधानपरिसरे घनमणिखचिततया लम्बमानानि कुण्डलानि मन्दं मन्दं चेलुरित्यर्थः ॥ ५६–५८ ॥ अत्यर्थमिति । रावणे अत्यर्थं सक्तमनसः अस्वतन्त्राः पाननिद्रापरवशाः ताः सपत्नीभिराघ्रातमुखाः वरस्त्रियः तदा मुखाघ्राणसमये सपत्नीनां प्रियमेवाचरन् रावणोऽजिघ्रदिति बुद्ध्या स्वयमप्यजिघ्र

विलासा एव ग्राह्याः नक्रादयो यासां ताः । यशस्तीराः लक्षणया कान्तिरोधस इत्यर्थः ॥ ५२ ॥ मृदुष्विति । भूषणराजयः भूषणप्रमर्दनजनितरेखाः । विस्रस्तभूषणानामपि कासाञ्चिद्भूषणस्थानरेखाः भूषणानीव बभूवुरित्यर्थः ॥ ५३ ॥ ५४ ॥ ताः अंशुकान्ताः । नानावर्णसुवर्णानां नानावर्णाः सुवर्णाः शोभनवर्णाः यासां ताः ॥ ५५–५८ ॥ ननु ताः सपत्नीभिः कृतमुखाघ्राणं कथं सहन्त इत्यत आह–अत्यर्थमिति । अस्वतन्त्राः रागान्धाः । रावणे अत्यर्थं सक्तमनसः ताः सपत्नीभि

न्नित्यर्थः । अथवा कथं सपत्न्योपि सह स्वपन्तीत्याशङ्क्याह–अत्यर्थमिति ॥ ५९ ॥ पारिहार्या वलयः । अंशुकानि च, उपनिधायेत्यनुषज्यते ॥ ६० ॥ अन्या वक्षसि चान्यस्या इत्यादिश्लोकद्वये शिशियर इत्येतद्वचनविपरिणामेन यथायोगं सम्बध्यते उपनिधायेति च ॥ ६१ ॥ ६२ ॥

रामानु०–अन्या वक्षसीत्यादिश्लोकद्वये शिशियर इत्येतद्वचनविपरिणामेन यथायोगं सम्बध्यते उपनिधायेति च ॥ ६१ ॥ ६२ ॥ मालेव पुष्पमालेव । मत्तषट्पदस्थानीयाः

बाहूनुपनिधायान्याः पारिहार्यविभूषितान् । अंशुकानि च रम्याणि प्रमदास्तत्र शिशियरे ॥ ६० ॥ अन्या वक्षसि चान्यस्यास्तस्याः काश्चित्पुनर्भुजम् । अपरा त्वङ्कमन्यस्यास्तस्याश्चाप्यपरा भुजौ ॥६१॥ ऊरुपार्श्वकटीपृष्ठमन्योन्यस्य समाश्रिताः । परस्परनिविष्टाङ्ग्यो मदस्नेहवशानुगाः ॥६२॥ अन्योन्यभुजसूत्रेण स्त्रीमाला ग्रथिता हि सा । मालेव ग्रथिता सूत्रे शुशुभे मत्तषट्पदा ॥६३॥ लतानां माधवे मासि फुल्लानां वायुसेवनात् । अन्योन्यमालाग्रथितं संसक्तकुसुमोच्चयम् ॥ ६४ ॥ व्यतिवेष्टितसुस्कन्धमन्योन्यभ्रमराकुलम् । आसीद्वनमिवोद्धूतं स्त्रीवनं रावणस्य तत् ॥ ६५ ॥ उचितेष्वपि सुव्यक्तं न तासां योषितां तदा । विवेकः शक्य आधातुं भूषणाङ्गाम्बरस्रजाम् ॥ ६६ ॥

कशाः ॥ ६३ ॥ लतानामित्यादिश्लोकद्वयमेकान्वयम् । तत् रावणस्य स्त्रीवनं लतानां वनमिवासीदिति संबन्धः । विशेषणान्युभयत्र योज्यानि । वायुसेवनाद्धेतोः अन्योन्यमालाग्रथितम् अन्योन्यमालारूपेण ग्रथितं सुखमुखमारुतसेवनादन्योन्यमालाग्रथितमिति स्त्रीपक्षे । संसक्तकुसुमोच्चयम् अन्योन्यसंसक्तनीवीकम् संसक्तकुसुमसमूहं चेत्यर्थः । व्यतिवेष्टितसुस्कन्धम् अन्योन्यपरिवेष्टितांसम् अन्योन्यपरिवेष्टितप्रकाण्डं च । अन्योन्यं भ्रमरैश्चिकुरैराकुलम्, भ्रमरैः भृङ्गैराकुलं च । "भ्रमराश्चिकुरे भृङ्गे" इति विश्वः ॥ ६४ ॥ ६५ ॥ उचितेषु स्थानेषु स्थितानामपि भूषणाङ्गाम्बरस्रजां

राघ्रातमुखाः वरस्त्रियः, तदाघ्राणं पत्युः प्रियमिति मत्वा सपत्नीनां प्रियमेवाचरन् । रागान्धाः किं किं न कुर्वन्तीति भावः ॥ ५९ ॥ बाहूनिति । पारिहार्यविभूषितान् पारिहार्यैः वलयः । उपनिधाय उपधानं कृत्वा ॥ ६० ॥ अन्येत्यादिश्लोकद्वये शिशियर इत्येतद्यथायोगं वचनविपरिणामेन उपनिधायेति पदं चानुवर्तनीयम् ॥ ६१ ॥ ६२ ॥ मालेव पुष्पमालेव । उपमेये मत्तषट्पदस्थानीयाः कचभाराः ॥ ६३ ॥ लतानामित्यादिश्लोकद्वयमेकं वाक्यम् । तत् रावणस्य स्त्रीवनं लतानां वनमिवासीदिति सम्बन्धः । विशेषणान्युभयत्र योज्यानि ॥ ६४ ॥ ६५ ॥ उचितेष्विति । तदा तासां योषितामुचितेषु स्थानेषु स्थितानामपि भूषणाङ्गा

साधारण्यादेकतामापन्नानामिति भावः। विवेकः सुव्यक्तमाधातुं न शक्यः। अन्योन्यसंग्रथितत्वेन सुप्तत्वात्। इमा अस्या भूषणाङ्गाम्बरस्रजः इमा अपरस्या इति विवेकः कर्तुं न शक्य इत्यर्थः ॥ ६६ ॥ रावण इति। सुखसंविष्टे सुखसुप्ते। काञ्चनाः काञ्चनदीपस्तम्भस्था दीपाः अनिमिषास्सन्तः प्रेक्षन्त इव। अनेन रावणस्य जाग्रद्दशायां दीपैरपि ताः स्त्रियो निश्चलं द्रष्टुमशक्या इति गम्यते ॥ ६७ ॥ अथ सीतयैकया अका

रावणे सुखसंविष्टे ताः स्त्रियो विविधप्रभाः। ज्वलन्तः काञ्चना दीपाः प्रैक्षन्तानिमिषा इव ॥ ६७ ॥ राजर्षिपितृदैत्यानां गन्धर्वाणां च योषितः। राक्षसानां च याः कन्यास्तस्य कामवशं गताः ॥ ६८ ॥ युद्धकामेन ताः सर्वा रावणेन हृताः स्त्रियः। समदा मदनेनैव मोहिताः काश्चिदागताः ॥ ६९ ॥ न तत्र काश्चित् प्रमदाः प्रसह्य वीर्योपपन्नेव गुणेन लब्धाः। न चान्यकामापि न चान्यपूर्वा विना वरार्हां जनकात्मजां ताम् ॥ ७० ॥ न चाकुलीना न च हीनरूपा नादक्षिणा नानुपचारयुक्ता। भार्याऽभवत्तस्य न हीनसत्त्वा न चापि कान्तस्य न कामनीया ॥ ७१ ॥

म्यत्वं वक्तुं सर्वस्त्रीकाम्यत्वमाह—राजर्षीत्यादिना श्लोकत्रयेण। तस्य कामवशंगताः तं प्रति यः कामः तस्य वशंगताः। तं कामयित्वा स्वयमेवागतास्ताः न तु तेन कामयित्वा हृता इत्यर्थः ॥ ६८ ॥ हृताश्च काश्चन श्रूयन्ते, तत्र कथमित्यत्राह—युद्धेति। तासु हृतासु तासां संबन्धिभिस्सह युद्धं भविष्यतीति युद्धं कामयित्वाऽनेन हृताः नतु ताः कामयित्वा हृताः ॥६९॥ अमुमेवार्थं विवृणोति—न तत्रेति। तत्र तासु काश्चिदपि प्रमदाः प्रसह्य वीर्येण न लब्धाः। किंतु स्वसंवादेनैवेत्यर्थः। वीर्योपपन्नेन रावणेन न लब्धाः अपि तु गुणेन लब्धाः। अन्यकामा च काचित्तत्र नास्ति। अन्यपूर्वा च न। अन्यत्रासक्ता च न

म्बरस्रजां विवेकः सुव्यक्तमाधातुं न शक्यः, अन्योन्यसंग्रथितत्वेन सुप्तत्वात्। इमा अस्या भूषणाङ्गाम्बरस्रजः इमा अपरस्या इति विवेकः कर्तुं न शक्य इत्यर्थः ॥ ६६ ॥ रावण इति। सुखसंविष्टे सति काञ्चनाः काञ्चनस्तम्भगता दीपाः कर्तारः ताः स्त्रियः कर्म अनिमिषा इव प्रेक्षन्ते, अनेन जाग्रदवस्थायां दीपा अपि निश्चलतया न द्रष्टुमिच्छन्तीति ध्वन्यते ॥ ६७॥ राजर्षीति। तस्य योषितोऽभवन्निति सम्बन्धः ॥६८॥ युद्धकामेन ता हृताः आहृताः, तासु हृतासु तासां बन्धुभिः सह युद्धं भविष्यतीति युद्धं कामयित्वा तेनाहृताः, न तु ताः कामयित्वा ॥ ६९ ॥ एतमेवार्थं विवृणोति—न तत्रेति। तत्र आहृतासु काचिदपि प्रमदा वीर्योप

काचिदित्यर्थः॥७०॥७१॥ बभूवेति । राघवधर्मपत्नी ईदृशी यदि स्वयंवरात्पूर्वमेवास्य धर्मपत्नी चेत् । अस्य सुजातं सुकृतम् । इयमसाध्वी बुद्धिः कापेयत्वप्रमादकृता न तु स्वयं तस्य बुद्धिरिति द्योतयितुं साधुबुद्धेरित्युक्तम् । एवं प्रमादोपस्थितबुद्ध्या पश्चात्तापोऽभूदित्याह—पुनश्च सोऽचिन्तयदार्त रूप इति । यद्वा इमाः राक्षसराजभार्याः यथा स्वभर्त्रा विशिष्टास्सकलभोगयुक्ताश्च तथा राघवधर्मपत्नी ईदृशी यदि स्वभर्त्रा सहिता भोगयुक्ता च यदि

बभूव बुद्धिस्तु हरीश्वरस्य यदीदृशी राघवधर्मपत्नी । इमा यथा राक्षसराजभार्याः सुजातमस्येति हि साधुबुद्धेः॥७२॥

तदाऽस्य रावणस्य सुजातं शोभनं जन्मेति साधुबुद्धेः परसमृद्धिपरस्य हरीश्वरस्य स्वयमाधिपत्यार्हस्य बुद्धिर्बभूव । अयं रावणः राघवधर्मपत्नीं यदि प्रत्यर्पयेत्तदाऽस्य शोभनं जन्म स्यादिति बुद्धिर्जातेत्यर्थः ॥७२॥ रामानु०—बभूवेति । इमा राक्षसराजभार्याः यथा स्वभर्तृविशिष्टाः सकलभोगयुक्ताश्च तथा राघवधर्मपत्नी

पत्नेन रावणेन न लब्धा, किन्तु गुणेन सौन्दर्यादिगुणेन लब्धा ॥ ७० ॥ ७१ ॥ बभूवेति । इमाः राक्षसराजभार्याः यथा स्वभर्तृविशिष्टाः सकलभोगयुक्ताः तथा राघवधर्मपत्नी ईदृशी स्वभर्तृसहिता यदि अस्य रावणस्य सुजातं शोभनम् इति साधुबुद्धेः हरीश्वरस्य हनूमतः बुद्धिः बभूव । अयं रावणः राघवधर्मपत्नीं यदि प्रत्यर्पयेत् तदा अस्य जन्म शोभनं स्यादिति हरीश्वरस्य बुद्धिर्जातेत्यर्थः । यद्वा राघवधर्मपत्नी यथा रावणेन बलादानीता इमा राक्षसराजभार्यास्तथा यदि सुग्रीवेण बलाद्धृता यदि तदा हरीश्वरस्य सुग्रीवस्य सुजातं हीति साधुबुद्धेः सन्मन्त्रिबुद्धेः अस्य हनूमतः ईदृशी बुद्धिर्बभूवेत्यन्वयः । यद्वा इमा राक्षसराजभार्याः यथा रावणेनाहृता इत्यर्थः । राघवधर्मपत्नी ईदृशी यदि अनेनाहृता यदि तदा अस्य रावणस्य सुजातं किं सम्यग्भविष्यति किम् ? न भविष्यत्येवेति हरीश्वरस्य बुद्धिर्बभूव "मम दयिततरा हृता वनान्ताद्रजनिचरेण तदा विमथ्य सा । कथय मम रिपुं तमद्य वै प्लवगपते यमसादनं नयामि ॥" इति रामवाक्याद्रावणस्य न सम्यग्भविष्यतीत्यर्थः । यद्वा इमा राक्षसराजभार्याः यथा, मया दृष्टा इति शेषः । राघवधर्मपत्नी ईदृशी मया दृष्टा यदीत्यर्थः । तदा अस्य मम सुजातम् अस्य मम जन्म सफलमिति हरीश्वरस्य बुद्धिर्बभूव । "यश्च मासान्निवृत्तोऽग्रे दृष्टा सीतेति वक्ष्यति । मत्तुल्यविभवो भोगैस्सुखं स विहरिष्यति ॥ ततः प्रियतरो नास्ति मम प्राणाद्विशेषतः॥" इति सुग्रीववचनात् प्रभोः सुग्रीवस्य प्रियसम्पादकत्वेन मम जन्म सफलमिति भावः । यद्वा इमा राक्षसराजभार्याः यथा मया दृष्टाः, राघवधर्मपत्नी ईदृशी यदि दृष्टा यदि, अस्य सीताया अदर्शनहेतुना सुग्रीवरामादिभयात् प्रायोपवेशनायोद्युक्ताङ्गदादिवानरसमूहस्येत्यर्थः । सुजातमिति हरीश्वरस्य बुद्धिर्बभूव "अप्रवृत्तौ च सीतायाः पापमेव करिष्यति । तस्मात्क्षममिहैवाद्य प्रायोपविशनं हि नः । त्यक्त्वा पुत्रांश्च दारांश्च धनानि च गृहाणि च ॥" इति सीताऽदर्शनव्यथिताङ्गदादीनां पुनर्जीवितलाभात् सुजातमिति भावः । यद्वा इमा राक्षसराजभार्या यथा जीवन्तीत्यर्थः । राघवधर्मपत्नी ईदृशी जीवति यदि तदा अस्य रामस्य सुजातमिति हरीश्वरस्य बुद्धिर्बभूव "ज्ञायतां सौम्य वैदेही यदि जीवति वा नवा । नह्यहं जीवितुं शक्तस्तामृते जनकात्मजाम् ॥" इति सीताजीवितसंशयव्यथितस्य रामस्य सीताजीवितनिश्चये सति स्वजीवितलाभात्सुजातमिति भावः । यद्वा हे राक्षसराज ! इमाः स्त्रियो यथा भार्याः एवं राघव

ईदृशी स्वभर्तृसहिता यदि अस्य रावणस्य सुजातमिति साधुबुद्धेर्हरीश्वरस्य बुद्धिर्बभूव । अयं रावणः राघवधर्मपत्नीं यदि प्रत्यर्पयेत् तदा अस्य जन्म शोभनं स्यादिति साधुबुद्धेर्हरीश्वरस्य बुद्धिर्जातेत्यर्थः ॥ ७२ ॥ तनि०—रावणः स्वस्त्रीभिस्सह यथा सन्ततसंश्लेषेण तिष्ठति एवं रामः सीतया संश्लेषेण तिष्ठति चेद्रावणस्यैश्वर्यमविच्छिन्नं स्यात् । साधुबुद्धेः शत्रूणामपि हितमन्वेषयतः ॥ ७२ ॥ किंच चिन्तान्तरमाह—पुनश्चेति । अथ सः हनुमान् । सीता गुणतः पातिव्रत्यादिगुणतः ध्रुवं विशिष्टा हि । अस्याम् एतद्विषये । महात्मा महाकुलप्रसूतोपि अयं लङ्केश्वरः । अनार्यकर्म अपहरणरूपं कर्म कृतवान् । कष्टमिति आर्तरूपः अत्यन्तमार्तः । "प्रशंसायां रूपप्" । पुनश्चाचिन्तयत् । वैदेह्याः दृढव्रतत्वात्पातिव्रत्यभङ्गो न भवेदेव अपि तु मिथ्यापवादमेवोत्पादितवानिति भृशं दुःखितस्सन् चिन्तितवानित्यर्थः । यद्वा बभूवेत्यादि । राक्षसराजपत्नीवत्सीता स्वभर्त्रा सङ्गता चेत्सीतापहरणं न कृतवांश्चेत्तदाऽस्य सुजातमित्युक्तम् । तत्र निरतिशयसौन्दर्यादिशालिन्याः

## पुनश्च सोऽचिन्तयदार्तरूपो ध्रुवं विशिष्टा गुणतो हि सीता। अथायमस्यां कृतवान् महात्मा लङ्केश्वरः कष्टमनार्यं कर्म ॥ ७३ ॥ इत्यार्षे श्रीरामायणे श्रीमद्वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे नवमः सर्गः ॥ ९ ॥

मैथिल्याः रक्षस्त्रीसाम्यं चिन्तयता मया हीनोपमा कृतेति पश्चात्तापयुक्तस्सन् अचिन्तयत् । हि यस्मात्सीता गुणतः विशिष्टा अतः आर्तस्वरूपस्सन् अचिन्तयत् मया हीनोपमैव कृतेत्यचिन्तयत् । अथ अथापि अस्यां सीतायाम् । अनार्यकर्म धर्षणरूपं कर्म कृतवान् । कष्टं सर्वमिदं लङ्कैश्वर्यं भ्रष्टं भविष्यतीत्यचिन्तयच्चेत्यर्थः । यद्वा राघवधर्मपत्नी यथा रावणेन बलादानीता तथा राक्षसराजभार्याः बलात्सुग्रीवेण बन्दीकृताश्चेदस्य हरीश्वरस्य

धर्मपत्नी ईदृशी यदि अस्य तव सर्वसम्पत्समृद्धियुक्तपुत्रपौत्रादिसहितस्यास्य तवेत्यर्थः । सुजातं हि किं सम्यग्भविष्यति किम् ? न भविष्यतीति रावणस्य हितमुपदेष्टव्यमिति हरीश्वरस्य बुद्धिर्बभूव "तद्भवान् दृष्टधर्मार्थः तपःकृतपरिग्रहः । परदारान्महाप्राज्ञ नोपरोद्धुं त्वमर्हसि" इति हितोपदेशस्य वक्ष्यमाणत्वात् । यद्वा एतासां मध्ये सीता नास्तीति निश्चिनोति—बभूवेति । इमा राक्षसराजभार्या यथा, यादृग्रूपवत्य इत्यर्थः । यदि किमित्यर्थे । राघवधर्मपत्नी ईदृशी किम् ईदृग्रूपवती किम् ? किन्तु त्रिलोकसुन्दरीत्यर्थः । अत एवात्र नास्तीति शेषः । इत्यस्य हरीश्वरस्य सुजातं निश्चितं यथा तथा बुद्धिर्बभूव ॥ ७२ ॥ चिन्तान्तरमाह—पुनश्चेति । सीता गुणतः पातिव्रत्यादिगुणतः ध्रुवं विशिष्टा हि । अस्यामेतद्विषये । लङ्केश्वरः अनार्यकर्म अपहरणरूपं कर्म कृतवान् कष्टमिति महात्मा हनुमान्

स०—स महात्मा हनुमान् पुनश्चैवमचिन्तयत् । हि यस्मात् गुणतः पातिव्रत्यादिगुणैः सीता विशिष्टा श्रेष्ठा । अथ तस्मात् अस्यां सीतायां तद्विषये । अयं रावणः अनार्यकर्म अपहरणादिजुगुप्सितं कर्म कृतवान् अतो मृत्वा आर्तरूपस्सन् ध्रुवं कदाप्यनिवर्त्यतया शाश्वतं कष्टं एवकष्टाद्यं तमः, यास्यतीति शेषः । रावणदेहे जीवद्वयसमावेशात्सजीवस्य पूर्वश्लोके गतिरुक्ता । द्वितीयस्य त्वत्रेति विवेकः ॥ ७३ ॥

सुग्रीवस्य सुजातं हीति साधुबुद्धेः सन्मन्त्रिबुद्धेः अस्य हनुमतः बुद्धिर्बभूवेत्यर्थः । यद्वा इमा राक्षसराजभार्याः यथा रावणेऽनुरक्ताः ईदृशी राघवधर्मपत्नी यदि एवमनुरक्ता चेत् अस्य सुजातमिति साधुबुद्धेरपि बुद्धिर्बभूव । ऐश्वर्यातिशयदर्शनविस्मयादिति भावः । अत एव वक्ष्यति—अहो वीर्यमित्यादिना । एवं हठादुक्त्वाऽनुशयितवानित्याह—पुनश्चेति । हि यस्मात् सीता गुणतः पातिव्रत्येन विशिष्टा सर्वोत्कृष्टा अतः आर्तरूपः किं मया व्याहृतमित्यनुतप्तः सन् । अस्यामनार्यंकर्म कृतवानित्यचिन्तयत् । अस्मिन्सर्गे त्रिसप्ततिश्लोकाः ॥ ७३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे

तत्र दिव्योपमं मुख्यं स्फाटिकं रत्नभूषितम् । अवेक्षमाणो हनुमान् ददर्श शयनासनम् ॥ १ ॥
दान्तकाञ्चनचित्राङ्गैर्वैडूर्यैश्च वरासनैः । महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥ २ ॥
तस्य चैकतमे देशे सोऽग्र्यमालाविभूषितम् । ददर्श पाण्डुरच्छत्रं ताराधिपतिसन्निभम् ॥ ३ ॥
जातरूपपरिक्षिप्तं चित्रभानुसमप्रभम् । अशोकमालाविततं ददर्श परमासनम् ॥ ४ ॥

शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने नवमः सर्गः ॥ ९ ॥ तत्र दिव्योपममित्यादि । शयनासनं शयनस्यासनं खट्वामित्यर्थः । दान्तानि दन्तविकारभूतानि । काञ्चनानि काञ्चनमयानि च । अत एव चित्राणि नानावर्णानि अङ्गानि येषां तैः । प्रान्ते दन्तमयैः ततः परं काञ्चनमयैः । सर्वत्र वैडूर्यनिर्मितैरित्यर्थः । महाधनैः महामूल्यैः । वरासनैः शयनावरोहणकाले विश्रमाय स्थापितैः । उपपन्नम् आवृतम् ॥ १ ॥ २ ॥ रामानु०—तत्रेति । शयनासनम् आस्यतेऽस्मिन्नित्यासनम्, शयनासनं पर्यङ्काधारधिष्ण्यमिति यावत् ॥ १ ॥ तस्येति । एकतमे देशे शिरोभाग इत्यर्थः ॥ ३ ॥ रामानु०—तस्येति । तस्य चैकतमे देशे पर्यङ्काधारधिष्ण्यस्य कस्मिंश्चित्प्रदेशे ॥ ३ ॥ उक्तमेव पर्यङ्कं पुनर्वर्णयन्नाह—जातरूपपरिक्षिप्तमित्यादिना । चित्रभानोः सूर्यस्य ।

आर्तरूपस्सन् पुनश्चाचिन्तयदिति सम्बन्धः ॥ ७३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां नवमः सर्गः ॥ ९ ॥
तत्रेति श्लोकद्वयमेकं वाक्यम् । तत् प्रसिद्धम् । दिव्योपमम् इन्द्रशयनोपमम् । अवेक्षमाणः इतस्ततोऽवलोकयन् । शयनासनं शयनं च तदासनं च शयनासनं पर्यङ्कम्, उभयोपकारादुभयव्यपदेशः । यद्वा आस्यतेऽस्मिन्नित्यासनं शयनस्यासनं शयनासनम्, शयनगृहमित्यर्थः । वैडूर्यैर्वरासनैः उपपन्नमभित आवृतं शयनासनं ददर्शेति सम्बन्धः ॥ १ ॥ २ ॥ तस्येति । तस्य पर्यङ्कस्य । एकतमे देशे शिरोभागे ॥ ३ ॥ अथात्र रावणदर्शनाय पुनः पर्यङ्कदर्शनमाह—जातरूपेत्यादिश्लोक

आविकाजिनम् ऊर्णायुचर्म तेन पर्यङ्कस्योपरिफलका संधीयते। वरमाल्यानाम् अशोकातिरिक्तपुष्पाणाम् ॥४-६॥ रामानु०-तत्रैव प्रदेशे परमासनं च ददर्शे त्याह-जातरूपपरिक्षिप्तमित्यादिना श्लोकत्रयेण। परमासनं पर्यङ्कम्। अस्माच्छ्लोकात्प्राक् तस्य चैकतमे देश इति श्लोकः। एतस्मादनन्तरं केपुचित्कोशेपु लेखकप्रमादाल्लिखितः। वरमाल्यानां

वालव्यजनहस्ताभिर्वीज्यमानं समन्ततः । गन्धैश्च विविधैर्जुष्टं वरधूपेन धूपितम् ॥ ५ ॥ परमास्तरणास्तीर्ण माविकाजिनसंवृतम्। दामभिर्वरमाल्यानां समन्तादुपशोभितम्॥६॥ तस्मिन् जीमूतसङ्काशं प्रदीप्तोत्तमकुण्डलम् । लोहिताक्षं महाबाहुं महारजतवाससम् ॥ ७ ॥ लोहितेनानुलिप्ताङ्गं चन्दनेन सुगन्धिना । सन्ध्यारक्तमिवाकाशे तोयदं सतडिद्गणम् ॥ ८ ॥ वृतमाभरणैर्दिव्यैः सुरूपं कामरूपिणम्। सवृक्षवनगुल्माढ्यं प्रसुप्तमिव मन्दरम् ॥९॥ क्रीडित्वोपरतं रात्रौ वराभरणभूषितम्। प्रियं राक्षसकन्यानां राक्षसानां सुखावहम्। पीत्वाप्युपरतं चापि ददर्श स महाकपिः ॥ १० ॥ भास्वरे शयने वीरं प्रसुप्तं राक्षसाधिपम् ॥ ११ ॥ निःश्वसन्तं यथा नागं रावणं वानरर्षभः । आसाद्य परमोद्विग्नः सोऽपासर्पत् सुभीतवत् ॥१२॥ अथारोहणमासाद्य वेदिकान्तरमाश्रितः । सुप्तं राक्षसशार्दूलं प्रेक्षते स्म महाकपिः ॥ १३ ॥

वरपुष्पाणाम् ॥ ४-६ ॥ तस्मिन्नित्यादि। महारजतवाससं हेमचित्रितवाससम्। महारजतं हेम। महारजनवाससमिति पाठे कुसुम्भरागरञ्जितवस्त्रमित्यर्थः ॥ ७ ॥ ८ ॥ सवृक्षवनगुल्माढ्यं सवृक्षैर्वनैः गुल्मैश्चाढ्यम्। प्रसुप्तं निश्चलमित्यर्थः ॥९-१२॥ अथ अपसर्पणानन्तरम्। आरोहणं सोपानम् । आसाद्य

त्रयेण। जातरूपपरिक्षिप्तं स्वर्णनिर्मितं गन्धैर्जुष्टं दिव्यगन्धैरधिवासितम्। आविकाजिनसंवृतम् आविकाजिनम् ऊर्णायुचर्म। वरमाल्यानां वरपुष्पाणाम् ॥४-६॥ तस्मिन्निति। महारजतवाससं हेमविचित्रवसनम् ॥ ७ ॥ ८ ॥ सवृक्षवनगुल्माढ्यं पुष्पसहितवृक्षवरगुल्माढ्यं मन्दरमिव स्थितम्। बाहवो यस्य वृक्षाः नासादयो गुल्माः ॥ ९-११ ॥ यथा नागं गजमिव निश्वसन्तं रावणम् आसाद्य प्राप्य परमोद्विग्नः अयं पापी देवीं हतवानित्येतत्समीपेऽवस्थानमनुचितमिति खिन्नचित्तोऽपासर्पत्सुभीतवत् सुभीतो यथा भयहेतौ पिशाचादिसंमुखे स्थातुमशक्तोऽपसर्पति तद्वत् ॥१२॥ अथेति। आरोहणं सोपानम्। वेदिकान्तरं सोपानपर्वमध्यम् ॥१३॥

अधिरुह्य । वेदिकान्तरं सोपानपर्वमध्यम् ॥१३॥ रामानु०—अर्थात । अथ अपसर्पणानन्तरम् आरोहणमासाद्य वेदिकान्तरमाश्रितः सोपानमार्गेणान्यवेदिकामारूढ इत्यर्थः ॥१३॥ यस्य गन्धेनान्ये हस्तिनो भीता भवन्ति स गन्धहस्ती । प्रस्रवणं निर्झरम् ॥१४॥ काञ्चनाङ्गदेत्यादि । विक्षिप्तौ प्रसारितौ । विष्णुचक्रपरिक्षतौ विष्णुः

शुशुभे राक्षसेन्द्रस्य स्वपतः शयनोत्तमम्। गन्धहस्तिनि संविष्टे यथा प्रस्रवणं महत् ॥ १४ ॥ काञ्चनाङ्गदनद्धौ च ददर्श स महात्मनः । विक्षिप्तौ राक्षसेन्द्रस्य भुजाविन्द्रध्वजोपमौ ॥ १५ ॥ ऐरावतविषाणाग्रैरापीडनकृतव्रणौ । वज्रोल्लिखितपीनांसौ विष्णुचक्रपरिक्षतौ ॥ १६ ॥ पीनौ समसुजातांसौ सङ्गतौ बलसंयुतौ । सुलक्षणनखाङ्गुष्ठौ स्वङ्गुलीतललक्षितौ ॥ १७ ॥ संहतौ परिघाकारौ वृत्तौ करिकरोपमौ । विक्षिप्तौ शयने शुभ्रे पञ्चशीर्षाविवोरगौ ॥ १८ ॥ शशक्षतजकल्पेन सुशीतेन सुगन्धिना । चन्दनेन परार्ध्येन स्वनुलिप्तौ स्वलंकृतौ ॥ १९ ॥ उत्तमस्त्री विमृदितौ गन्धोत्तमनिषेवितौ । यक्षपन्नगगन्धर्वदेवदानवराविणौ ॥ २० ॥ ददर्श स कपिस्तस्य बाहू शयन संस्थितौ । मन्दरस्यान्तरे सुप्तौ महाही रूषिताविव ॥ २१ ॥ ताभ्यां स परिपूर्णाभ्यां भुजाभ्यां राक्षसेश्वरः । शुशुभेऽचलसङ्काशः शृङ्गाभ्यामिव मन्दरः ॥ २२ ॥

उपेन्द्रः । सङ्गतौ देहानुरूपौ । संहतौ दृढसन्धिबन्धौ । विक्षिप्तौ शयने निहितौ । पञ्चाङ्गुलिमत्तया पञ्चशीर्षावित्युक्तम् । एतदन्तस्य ददर्शेत्यनेनान्वयः अत्र द्विभुजत्वैकमुखत्वोक्तिः स्त्रीणां कामनीयत्वाय॥१५–१८॥ शशक्षतजेत्यादि । यक्षादीन् रावयितुं शीलमनयोरस्तीति तथा । ददर्शेति पुनरभिधानं विशेषणान्तरविवक्षया ॥ १९–२१ ॥ रामानु०—शशक्षतजकल्पेन शशरुधिरसदृशेन ॥ १९ ॥ ताभ्यामिति । परिपूर्णाभ्याम् दीर्घवृत्ताभ्यामित्यर्थः ॥ २२ ॥

गन्धहस्तिनि यस्य गन्धेन अन्ये गजा बिभ्यति स गन्धहस्ती ॥ १४ ॥ काञ्चनेति । विक्षिप्तौ दीर्घौ ॥ १५ ॥ वज्रोल्लिखितपीनांसौ वज्रेण उल्लिखितौ क्षतौ पीनांसौ ययोस्तौ ॥ १६ ॥ पीनाविति । समौ परस्परसदृशौ । सङ्गतौ दृढसन्धिबन्धौ । संहताविति पाठेऽप्ययमेवार्थः । विक्षिप्तौ प्रसारितौ । एतादृशौ बाहू ददर्शेति पूर्वेण सम्बन्धः । ददर्श स कपिरित्यत्र ददर्शेति क्रियापदावृत्तिर्विशेषणबाहुल्यात् ॥ १७–२१॥ ताभ्यामिति । भुजाभ्यामिति द्विभुजत्वं, महामुखादिति वक्ष्यमाण

चूतेत्यादि । निश्वासस्य चूतादिसुरभित्वं तदधिवासितरसावल्यादिमधुसेवनात् । मृष्टान्नरससंयुक्तः षड्रसपदार्थगन्धयुक्तः । पानगन्धपुरस्सरः पीयत इति पानं मधु तद्गन्धयुक्तः ॥ २३ ॥ २४ ॥ मुक्तामणीति । अपवृत्तेन स्थानात् किञ्चिच्चलितेन । अपविद्धेन पर्यस्तेन । क्षौमेण उत्तरीयरूपेण । विद्युद्गणैरिव विद्युत्समूहैरिव । रावणं तस्य पत्नीश्च ददर्शेत्यन्वयः ॥ २५–२९ ॥ रामानु०–विराजता वक्षसेत्युपलक्षणे तृतीया । वक्षसा विराजितमिति वा पाठः ॥ २६ ॥

चूतपुन्नागसुरभिर्वकुलोत्तमसंयुतः । मृष्टान्नरससंयुक्तः पानगन्धपुरस्सरः ॥ २३ ॥ तस्य राक्षससिंहस्य निश्चक्राम महासुखात् । शयानस्य विनिःश्वासः पूरयन्निव तद्गृहम् ॥ २४ ॥ मुक्तामणिविचित्रेण काञ्चनेन विराजितम् । मुकुटेनापवृत्तेन कुण्डलोज्ज्वलिताननम् ॥ २५ ॥ रक्तचन्दनदिग्धेन तथा हारेण शोभिना । पीनायतविशालेन वक्षसाऽभिविराजितम् ॥ २६ ॥ पाण्डरेणापविद्धेन क्षौमेण क्षतजेक्षणम् । महार्हेण सुसंवीतं पीतेनोत्तमवाससा ॥ २७ ॥ माषराशिप्रतीकाशं निःश्वसन्तं भुजङ्गवत् । गाङ्गे महति तोयान्ते प्रसुप्तमिव कुञ्जरम् ॥ २८ ॥ चतुर्भिः काञ्चनैर्दीपैर्दीप्यमानचतुर्दिशम् । प्रकाशीकृतसर्वाङ्गं मेघं विद्युद्गणैरिव ॥ २९ ॥ पादमूलगताश्चापि ददर्श सुमहात्मनः । पत्नीः स प्रियभार्यस्य तस्य रक्षःपतेर्गृहे ॥ ३० ॥ शशिप्रकाशवदनाश्चारुकुण्डलभूषिताः । अम्लानमाल्याभरणा ददर्श हरियूथपः ॥ ३१ ॥ नृत्तवादित्रकुशला राक्षसेन्द्रभुजाङ्कगाः । वराभरणधारिण्यो निषण्णा ददृशे हरिः ॥ ३२ ॥

पादेति । रक्षःपतेर्गृह इति परशेषः ॥ ३० ॥ ३१ ॥ नृत्तेति । राक्षसेन्द्रस्य भुजम् अङ्कं गच्छन्तीति राक्षसेन्द्रभुजाङ्कगाः । उत्सङ्गोपवेशनालिङ्गनाभ्यामेकमुखत्वं च रावणस्य कामरूपित्वात्सङ्गच्छते ॥ ३२ ॥ चूतेति । निश्वासस्य चूतादिसुरभित्वं तदधिवासितवस्तुसेवनादिद्वारा । मृष्टान्नरससंयुक्तः षड्रसपदार्थगन्धोपेतः । पानगन्धपुरस्सरः पीयत इति पानं मधु तद्गन्धयुक्तः ॥ २३ ॥ २४ ॥ मुक्तेति । अपवृत्तेन स्वस्थानात्किञ्चिच्चलितेन उपलक्षितम् ॥ २५ ॥ रक्तेति । एतादृशवक्षसा उपलक्षितम् । अपविद्धेन पर्यस्तेन क्षौमेण उत्तरीयतया धृतेनोपलक्षितम् ॥ २६–२८ ॥ चतुर्भिरिति । विद्युल्लतैरिति पाठे लिङ्गव्यत्यय आर्षः । विद्युद्गणैरिति वा पाठः । उक्तविशेषणविशिष्टं रावणं तस्य पादमूलगताः पत्नीश्च ददर्शेति सम्बन्धः । रक्षःपतेर्गृह इति परशेषः ॥ २९–३१ ॥ नृत्तेति ।

ललिता इत्यर्थः । वराभरणधारिण्य इति द्वितीयार्थे प्रथमा । निषण्णाः शयानाः । ददृश इत्यात्मनेपदमार्षम् ॥ ३२ ॥ वज्रेति । श्रवणान्तेष्वङ्गद दर्शनं बाहूनुपधाय शयनात् ॥ ३३–३५ ॥ अङ्गहारः नृत्तविशेषादङ्गविक्षेपविशेषः । तथोक्तं भरतशास्त्रे–" अङ्गानां योग्यदेशेषु हरणेन यथोचितम् । अङ्गनिर्वर्तनीयत्वादङ्गहारस्तथोच्यते ॥ " इत्यादि । कोमलैः सुकुमारैः । नृत्तशालिनी सुषुप्त्यवस्थायामपि वासनाबलेन नृत्तसन्निवेशविशिष्टा स्थिते

वज्रवैडूर्यगर्भाणि श्रवणान्तेषु योषिताम् । ददर्श तापनीयानि कुण्डलान्यङ्गदानि च ॥ ३३ ॥ तासां चन्द्रोपमैर्वक्त्रैः शुभैर्ललितकुण्डलैः । विरराज विमानं तन्नभस्तारागणैरिव ॥ ३४ ॥ मदव्यायामखिन्नास्ता राक्षसेन्द्रस्य योषितः । तेषु तेष्ववकाशेषु प्रसुप्तास्तनुमध्यमाः ॥ ३५ ॥ अङ्गहारैस्तथैवान्या कोमलैर्नृत्तशालिनी । विन्यस्तशुभसर्वाङ्गी प्रसुप्ता वरवर्णिनी ॥ ३६ ॥ काचिद्वीणां परिष्वज्य प्रसुप्ता संप्रकाशते । महानदीप्रकीर्णेव नलिनी पोतमाश्रिता ॥ ३७ ॥ अन्या कक्षगतेनैव मड्डुकेनासितेक्षणा । प्रसुप्ता भामिनी भाति बालपुत्रेव वत्सला ॥ ३८ ॥ पटहं चारुसर्वाङ्गी पीड्य शेते शुभस्तनी । चिरस्य रमणं लब्ध्वा परिष्वज्येव भामिनी ॥ ३९ ॥ काचिद्वंशं परिष्वज्य सुप्ता कमललोचना । रहः प्रियतमं गृह्य सकामेव च कामिनी ॥ ४० ॥

त्युच्यते ॥ ३६ ॥ काचिद्वीणामिति । महानदीप्रकीर्णा महानदीप्रसृता । नलिनी समूलनालदलं पद्मजालकम् । पोतं यानपात्रम् । वीणां परिष्वज्य प्रसुप्ता काचित् नद्यां प्लवमाना यदृच्छया पोतसंयुक्ता नलिनीव प्रकाशत इत्यर्थः ॥ ३७ ॥ मड्डुकेन वाद्यविशेषेण ॥ ३८ ॥ ३९ ॥ काचिद्वंशमिति । वंशं वेणुम् ॥ ४० ॥

राक्षसेन्द्रस्य भुजाङ्कगाः राक्षसेन्द्रस्य भुजावङ्कञ्च गच्छन्तीति तथा, वल्लभा इति यावत् । धारिण्यः धारिणीः । निषण्णाः शयिताः ॥ ३२–३४ ॥ मदेति । मदव्यायामः मदाधिक्यम् ॥ ३५ ॥ अङ्गहारैरिति । अङ्गहारैः अङ्गविक्षेपैः । नृत्तशालिनीति विशेषणात्सुषुप्त्यवस्थायामपि वासनाबलेन नृत्तसन्निवेशविशिष्टा स्थितेति सूचयति ॥ ३६ ॥ महानदीप्रकीर्णेव महानद्यां प्लवमाना स्त्री नलिनीपोतं नलिनी समूलनालदलं पद्मजालकं पोतं यदृच्छयाऽऽगतं प्लवमाश्रितवतीव वीणां परिष्वज्य प्रकाशत इति सम्बन्धः ॥ ३७ ॥ मड्डुको वाद्यभेदः ॥ ३८ ॥ पीड्य आलिङ्ग्येत्यर्थः ॥ ३९ ॥ ४० ॥

विपञ्चीमिति। विपञ्ची सप्ततन्त्री। षट्तन्त्री वीणा ॥४१॥४२॥ भुजेति। पणवेन मर्दलेन ॥ ४३ ॥ डिण्डिममिति । यथा पूर्वा तथैवासक्तडिण्डिमा अन्या तं डिण्डिमं परिगृह्य परिष्वज्य प्रसुप्ता। कथमिव ? तरुणं वत्समुपगुह्येव। डिण्डिमः पणवभेदः। यद्वा अन्या भामिनी डिण्डिमं परिगृह्यावलम्ब्य तथैव आसक्तडिण्डिमा आलिङ्गितान्यडिण्डिमा तरुणं रमणमुपगुह्य वत्सं पुत्रं परिगृह्येव प्रसुप्ता। यद्वा डिण्डिमं परिगृह्य वादनार्थं परिगृह्य तथैव

विपञ्चीं परिगृह्यान्या नियता नृत्तशालिनी। निद्रावशमनुप्राप्ता सहकान्तेव भामिनी ॥ ४१ ॥ अन्या कनकसङ्काशैर्मृदुपीनैर्मनोरमैः। मृदङ्गं परिपीड्याङ्गैः प्रसुप्ता मत्तलोचना ॥ ४२ ॥ भुजपार्श्वान्तरस्थेन कक्षगेन कृशोदरी। पणवेन सहानिन्द्या सुप्ता मदकृतश्रमा ॥ ४३ ॥ डिण्डिमं परिगृह्यान्या तथैवासक्तडिण्डिमा। प्रसुप्ता तरुणं वत्समुपगुह्येव भामिनी ॥ ४४ ॥ काचिदाडम्बरं नारी भुजसंयोगपीडितम्। कृत्वा कमलपत्राक्षी प्रसुप्ता मदमोहिता ॥ ४५ ॥ कलशीमपविध्यान्या प्रसुप्ता भाति भामिनी। वसन्ते पुष्पशबला मालेव परिमार्जिता ॥ ४६ ॥ पाणिभ्यां च कुचौ काचित् सुवर्णकलशोपमौ। उपगुह्याबला सुप्ता निद्राबलपराजिता ॥ ४७ ॥ अन्या कमलपत्राक्षी पूर्णेन्दुसदृशानना। अन्यामालिङ्ग्य सुश्रोणीं प्रसुप्ता मदविह्वला ॥ ४८ ॥

वादनकाल एव आसक्तडिण्डिमा अन्या तरुणं वत्समुपगुह्येव प्रसुप्ता ॥४४॥ काचिदिति। आडम्बरं तूर्यभेदम्। भुजसंभोगपीडितं भुजपरिणाहपीडितम्। भुजपरिश्लेषपीडितं वा ॥ ४५ ॥ रामानु०—आडम्बरस्तूर्यभेदः। "आडम्बरस्समारम्भे गजगर्जिततूर्ययोः" इति विश्वः ॥ ४५ ॥ कलशीमिति। अपविध्य पर्यस्य। अनेन सलिलसम्बन्धः सूच्यते। परिमार्जिता सलिललवसंमार्जिता। अपविद्धकलशनिर्गलितगन्धोदकसिक्ता काचित् वसन्ते म्लानिपरिहाराय सलिललवसमुक्षिता मालेव बभावित्यर्थः। पुष्पशबलेत्यनेन कलशस्थजलस्य कुङ्कुमादिरससिक्तत्वमुच्यते, सर्वाभरणभूषितत्वं वा। इयं च रावणस्य करकधारिणीति

विपञ्चीं वीणाभेदम् ॥ ४१ ॥ ४२ ॥ मदकृतश्रमा मदवती वादनेन कृतश्रमा च ॥ ४३ ॥ परिगृह्य अवलम्ब्य। तथैवासक्तडिण्डिमा आलिङ्गितान्यडिण्डिमा। तरुणं रमणं वत्सं पुत्रं च परिगृह्य प्रसुप्ता ॥ ४४ ॥ आडम्बरः तूर्यभेदः। भुजसंयोगः भुजसंश्लेषः ॥ ४५ ॥ कलशीम् सलिलसम्भृतामित्यर्थः। अपविध्य पर्यस्य, परिमार्जिता विपर्यस्तस्वकीयकलशोदकार्द्रीकृतशरीरा नारी वसन्ते म्लानिपरिहाराय परिमार्जिता जलसिक्ता अत एव पुष्पशबला, शबलपुष्पेत्यर्थः। मालेव

गम्यते ॥ ४६–४८ ॥ आतोद्यानि "ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् । चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ॥" इत्यमरः ॥ ४९–५१ ॥ किमिव गौरीमित्यत्राह–कनकवर्णाङ्गीमिति । इष्टाम्, रावणस्येति शेषः ॥५२॥ ५३ ॥ हर्षेणेत्यर्धम् ।

आतोद्यानि विचित्राणि परिष्वज्य वरस्त्रियः । निपीड्य च कुचैः सुप्ताः कामिन्यः कामुकानिव ॥ ४९ ॥ तासामेकान्तविन्यस्ते शयानां शयने शुभे । ददर्श रूपसम्पन्नामपरां स कपिः स्त्रियम् ॥५०॥ मुक्तामणिसमायुक्तैर्भूषणैः सुविभूषिताम् । विभूषयन्तीमिव तत् स्वश्रिया भवनोत्तमम् ॥ ५१ ॥ गौरीं कनकवर्णाङ्गीमिष्टामन्तःपुरेश्वरीम् । कपिर्मन्दोदरीं तत्र शयानां चारुरूपिणीम् ॥ ५२ ॥ स तां दृष्ट्वा महाबाहुर्भूषितां मारुतात्मजः । तर्कयामास सीतेति रूपयौवनसम्पदा ॥ ५३ ॥ हर्षेण महता युक्तो ननन्द हरियूथपः ॥ ५४ ॥ आस्फोटयामास चुचुम्ब पुच्छं ननन्द चिक्रीड जगौ जगाम । स्तम्भानरोहन्निपपात भूमौ निदर्शयन् स्वां प्रकृतिं कपीनाम् ॥ ५५ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे दशमः सर्गः ॥ १० ॥

हर्षेण युक्तः ननन्द उत्तरोत्तरमानन्दमवापेत्यर्थः ॥ ५४ ॥ रामानु०–हर्षेण रोमाञ्चेन ॥ ५४ ॥ तदेवोपपादयति–आस्फोटयामासेति । चिक्रीड, ननर्तेति यावत् । स्वां प्रकृतिं स्वासाधारणं चापल्यम् । अस्मिन्सर्गे सार्धचतुष्पञ्चाशच्छ्लोकाः ॥ ५५ ॥ इति० श्रीसुन्दरकाण्डव्याख्याने दशमःसर्गः ॥१०॥

भातीति सम्बन्धः ॥४६–४८॥ आतोद्यानि ततानद्धसुषिरघननामकानि चतुर्विधवाद्यानि । "ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् । चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ॥" इत्यमरः ॥ ४९ ॥ अथ प्रधानमहिषीदर्शनम्–तासामिति । एकान्तविन्यस्ते तासां शयनात्पृथग्विन्यस्ते । तां वक्ष्यमाणगुणाम् ॥ ५० ॥ ५१ ॥ गौरीं हरिद्राभाम् । किमिव गौरीमित्यत आह–कनकवर्णाभामिति । इष्टां रावणस्यातिप्रियाम् । अन्तःपुरस्त्रीणामीश्वरीं कपिर्मन्दोदरीं ददर्शेत्यन्वयः ॥ ५२ ॥ तर्कयामास सीतेति रूपयौवनसम्पदा । औचित्यमनालोच्य रूपयौवनसम्पन्मात्रदर्शनेन सीतेति विचारितवानित्यर्थः ॥ ५३ ॥ हर्षो मुखविकासादिः, आनन्दो मानसः ॥ ५४ ॥ सीतेति व्यामोहात्कापेयं प्रदर्शितवानित्याह–आस्फोटयामासेति । जगौ हर्षात् मन्दगानं कृतवानित्यर्थः । आस्फोटपुच्छचुम्बनादिर्जातिधर्मः । जगाम स्तम्भानित्यनुकर्षः । सर्वा अप्येताश्चेष्टाः इर्पाश्रिति बोध्यम् । एवं चेष्टायां हेतुः स्वां कपीनां प्रकृतिं निदर्शयन् इति ॥ ५५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां दशमः सर्गः ॥ १० ॥

अवधूयेत्यादि । तां बुद्धिं मन्दोदर्यां सीताबुद्धिम् । अवस्थितो बभूव स्वस्थचित्तो बभूव ॥ १ ॥ न रामेणेत्यादि । त्रिदशेष्वपीत्यनन्तरम् अन्येय मित्यर्धम् । पानभूमौ ततोऽन्यत्रेत्यर्थः ॥ २ ॥ ३ ॥ रामानु०—सीतां प्रति महाकपिरित्यतः परम् अन्येयमित्यर्धं प्रमादाल्लिखितम् । विद्यते त्रिदशेष्वपीत्यतः परमस्य स्थानम् । अत्र पुनरपि पानभूमौ स्त्रीणां रावणस्य च दर्शनाभिधानात् क्षणमन्यत्रान्विष्य विशेषेण मार्गितुं पुनः पानभूम्यादिकं दृष्टवानित्यवगम्यते ॥ २ ॥ ३ ॥ क्रीडितेनेत्यादि अपराः

अवधूय च तां बुद्धिं बभूवावस्थितस्तदा । जगाम चापरां चिन्तां सीतां प्रति महाकपिः ॥ १ ॥ न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी । न भोक्तुं नाप्यलङ्कर्तुं न पानमुपसेवितुम् ॥ २ ॥ नान्यं नरमुपस्थातुं सुराणा मपि चेश्वरम् । नहि रामसमः कश्चिद्विद्यते त्रिदशेष्वपि । अन्येयमिति निश्चित्य पानभूमौ चचार सः ॥ ३ ॥ क्रीडितेनापराः क्लान्ता गीतेन च तथाऽपराः । नृत्तेन चापराः क्लान्ताः पानविप्रहतास्तथा । मुरजेषु मृदङ्गेषु पीठिकासु च संस्थिताः ॥ ४ ॥ तथाऽऽस्तरणमुख्येषु संविष्टाश्चापराः स्त्रियः ॥ ५ ॥ अङ्गनानां सहस्रेण भूषितेन विभूषणैः । रूपसँल्लापशीलेन युक्तगीतार्थभाषिणा । देशकालाभियुक्तेन युक्तवाक्याभिधायिना ॥ ६ ॥

स्त्रिय इत्यन्तमेकं वाक्यम् । ददर्शेत्यनुषज्यते । क्रीडितेन क्रीडया । भावे निष्ठा । विप्रहताः क्लान्ता इत्यर्थः । संस्थिताः उपधानीकृत्य शयिताः । संविष्टाः सुप्ताः ॥ ४ ॥ ५ ॥ तत्र सीताया अदर्शनात् पुनरपि रावणस्थानमागत्य ददर्शेत्याह—अङ्गनानामिति । रूपसँल्लापशीलेन स्वसौन्दर्य

अवधूयेति । तां बुद्धिं तस्यां तद्बुद्धिम् । अवस्थितः स्वस्थचित्तः । सीतां प्रति तद्विषयामन्यांचिन्तां पूर्वचिन्ताविघटितां जगाम ॥ १ ॥ अविचारान्ममैतादृशी बुद्धिर्जातेत्याह—न रामेणेत्यादिश्लोकद्वयेन । अन्यं नरम् उपस्थातुमङ्गीकर्तुं नार्हति नाध्यवस्यति । तत्र हेतुः नहि रामेति । यद्येवमतोऽन्येयमनुभूतेति निश्चित्य तत्र गृहे पानभूमौ पानशालायां चचार, पुनस्सम्यगन्वेषणायेति शेषः ॥ २ ॥ ३ ॥ पानभूमावित्यारभ्य ददर्श हरियूथपः इत्यन्तमेकं वाक्यम् । रताभिरतसंसुप्त मित्यत्र विशेष्यत्वेन रावणमित्यध्याहर्तव्यम् । तथा च हरियूथपः पानभूमिं च उक्तविशेषणविशिष्टाः स्त्रियश्च अङ्गनासहस्रेण सह रावणं च ददर्शेति सम्बन्धः । क्रीडादिभिरुपलक्षिताः, पानविप्रहताः पानेन मत्ताः, संविष्टाः सुप्ताः । रूपसँल्लापशीलेन स्वस्वसौन्दर्यवर्णनस्वभावेनेत्यर्थः । युक्तगीतार्थभाषिणा युक्तमुपपन्नं यथा तथा गीतस्य भरतशास्त्रस्यार्थं भाषितुं शीलमस्येति तथा तेन, भरतशास्त्रार्थव्याख्यानचतुरेणेत्यर्थः । देशकालाभियुक्तेन देशकालाभिज्ञेनेत्यर्थः ।

वर्णनशीलेन, रावणविषयरूपप्रशंसाशीलेन वा । युक्तगीतार्थभाषिणा युक्तम् उपपन्नं गीतार्थं भाषितुं शीलमस्येति युक्तगीतार्थभाषी तेन । देशकालाभियुक्तेन देशकालाभिज्ञेनेत्यर्थः । अङ्गनानां सहस्रेण रताभिरतसंसुप्तमित्यन्वयः । रतशब्देन बाह्यसुरतमुच्यते । अभिरतशब्देन करणबन्धादिकमुच्यते । रताभिरतश्चासौ संसुप्तश्च तथा तम् । स्नातानुलिप्तादिवत्समासः । क्रीडाखेदेन सुप्तमित्यर्थः । रावणमिति शेषः ॥ ६-८ ॥ स इति ।

रताभिरतसंसुप्तं ददर्श हरियूथपः ॥ ७ ॥ तासां मध्ये महाबाहुः शुशुभे राक्षसेश्वरः । गोष्ठे महति मुख्यानां गवां मध्ये यथा वृषः ॥८॥ स राक्षसेन्द्रः शुशुभे ताभिः परिवृतः स्वयम् । करेणुभिर्यथाऽरण्ये परिकीर्णो महाद्विपः॥९॥ सर्वकामैरुपेतां च पानभूमिं महात्मनः । ददर्श हरिशार्दूलस्तस्य रक्षःपतेर्गृहे ॥ १० ॥ मृगाणां महिषाणां च वराहाणां च भागशः । तत्र न्यस्तानि मांसानि पानभूमौ ददर्श सः ॥ ११ ॥ रौक्मेषु च विशालेषु भाजनेष्वर्धभक्षितान् । ददर्श हरिशार्दूलो मयूरान् कुक्कुटांस्तथा ॥ १२ ॥ वराहवार्ध्राणसकान् दधिसौवर्चलायुतान् । शल्यान् मृगमयूरांश्च हनुमानन्ववैक्षत ॥ १३ ॥

परिकीर्णः परिवृतः ॥ ९ ॥ सर्वकामैरिति । पानभूमेः पुनर्दर्शनोक्तिस्तत्रत्यपदार्थकथनाय ॥ १० ॥ मृगाणामिति । भागशः पिण्डशः ॥ ११ ॥ रौक्मेष्विति । मयूरादिशब्दाः मयूरादिविकारमांसपराः ॥ १२ ॥ रामानु०—मयूरान् कुक्कुटानिति स्वरूपेण निर्देशात्तत्तदाकारविशिष्टतया ते पक्का इत्यवगम्यते ॥ १२ ॥ वराहेति । वार्ध्राणसाः छागविशेषाः । " त्रिपिबन्त्विन्द्रियक्षीणं यूपस्याग्रचरं तथा । रक्तवर्णं च राजेन्द्र च्छागं वार्ध्राणसं विदुः ॥ " इति स्मृतेः । पक्षिविशेष इत्यन्ये । खड्गमृग इत्यपरे । " वार्ध्राणसः खड्गमृगः " इति हलायुधः । दधिसौवर्चलायुतान् दधिसौवर्चलाभ्यां संस्कृतानित्यर्थः । सौवर्चलं

युक्तवाक्याभिधायिना अवसरोचितभाषिणा ॥ ४-६ ॥ रताभिरतसंसुप्तं रताभिरतश्चासौ संसुप्तश्च तम्, रतिश्रान्त्या सुप्तमित्यर्थः ॥ ७ ॥ ८ ॥ परिकीर्णः परिवेष्टितः ॥ ९ ॥ सस्त्रीकरावणगृहे पुनस्सम्यगन्विष्य पुनर्बहिः पानभूमिमागत्य विचिनोति—सर्वकामैरिति । पूर्वं नृत्यादियुक्ततत्स्थस्त्रीमात्रदर्शनम्, इदानीं तस्यास्सर्वकामोपेतत्वदर्शनम् ॥ १० ॥ तदेव प्रपञ्चयति—मृगाणामिति ॥ ११ ॥ १२ ॥ वराहः सूकरः, वार्ध्राणसः पक्षिविशेषः "कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः । स वै वार्ध्राणसः पक्षी" इति विष्णुधर्मोक्तेः । छागविशेषो वा ॥ " त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्ध्राणसं च तं प्राहुर्याज्ञिकाः श्राद्धकर्मणि ॥ "

रुचकाख्यो लवणविशेषः । " सौवर्चलेऽक्षरुचके " इत्यमरः । शल्यान् श्वाविधः । " श्वावित्तु शल्यः " इत्यमरः । मृगमयूरादीनां पुनः कथनं प्रदेशभेदात् ॥ १३ ॥ क्रकरान् पक्षिविशेषान् । "कृकणक्रकरौ समौ" इत्यमरः । सिद्धान् पक्वान् । एकशल्यान्मत्स्यविशेषान् । कृतनिष्ठितान् पर्याप्तपक्वान् । "युगपर्याप्तयोः कृतम्" इत्यमरः ॥१४॥१५॥ तथेत्यादि । आम्ललवणोत्तंसैः आम्लप्रधानैः लवणप्रधानैश्च । रागषाडवैः रागयुक्तैः पाडवैः । रागः श्वेत

क्रकरान् विविधान् सिद्धांश्चकोरानर्धभक्षितान् ॥ १४ ॥ महिषानेकशल्यांश्च च्छागांश्च कृतनिष्ठितान् । लेह्यानुच्चावचान् पेयान् भोज्यानि विविधानि च ॥ १५ ॥ तथाम्ललवणोत्तंसैर्विविधै रागषाडवैः । हारनूपुरकेयूरैरपविद्धैर्महाधनैः ॥ १६ ॥ पानभाजनविक्षिप्तैः फलैश्च विविधैरपि । कृतपुष्पोपहारा भूरधिकं पुष्यति श्रियम् ॥ १७ ॥ तत्र तत्र च विन्यस्तैः सुश्लिष्टैः शयनासनैः । पानभूमिर्विना वह्निं प्रदीप्तेवोपलक्ष्यते ॥ १८ ॥ बहुप्रकारैर्विविधैर्वरसंस्कारसंस्कृतैः । मांसैः कुशलसंयुक्तैः पानभूमिगतैः पृथक् ॥ १९ ॥

सर्षपः । " रागस्सिद्धार्थको ज्ञेयः " इति सूदशास्त्रम् । षाडवाः षड्रससंयोगकृता भक्ष्यविशेषाः । प्रदीपे त्वन्यथोक्तम्–" सितामध्वादिमधुरो द्राक्षादाडिमजो रसः । विरलश्चेत्कृतो रागस्सान्द्रश्चेत् षाडवः स्मृतः॥" इति ॥ १६–१८ ॥ बहुप्रकारैरित्यादि । कुशलसंयुक्तैः समर्थसूदसंयोजितैः । एवंभूतैः

इति स्मरणात् । त्रिपिबं त्रिभिः मुखेन कर्णाभ्यां च पिबतीति त्रिपिबम् । खड्गमृगो वा । " वार्ध्राणसः खड्गमृगः " इति हलायुधः । दधिसौवर्चलायुतान् दधिसौवर्चलाभ्यां संस्कृतानित्यर्थः । सौवर्चलं रुचकाख्यं लवणम् । "सौवर्चलं स्याद्रुचकम्" इत्यमरः । शल्यान्, शल्यः श्वावित् ॥ १३ ॥ क्रकरान् क्रकराख्यपक्षिविशेषान् । कृसरानिति पाठे–तैलादिमिश्रितौदनान् । सिद्धान् पक्वान् ॥ १४ ॥ एकशल्यान् मत्स्यविशेषान् । कृतनिष्ठितान् कृतेन हिङ्गुमरीचयादिना निष्ठितान् निष्पन्नान् पाकसंस्कारादिना संस्कृतानित्यर्थः ॥ १५ ॥ रागषाडवैः शर्कराक्षौद्रद्राक्षादाडिममधुरद्रव्याणां विकाराः विरलरसाः रागाः त एव वस्त्रगलिताः सान्द्राः षाडवाः । तदुक्तम्–" सितामध्वादिमधुरा रागास्ते स्वच्छतां गताः । ते सान्द्राः षाडवा लेह्यास्ते वस्त्रगलिताः " इति, " सितामध्वादिमधुरो द्राक्षादाडिमजो रसः । विरलश्चेत्कृतो रागः सान्द्रश्चेत्षाडवः स्मृतः॥" इति च ॥ १६ ॥१७॥ तत्र तत्रेत्यादि श्लोकद्वयमेकं वाक्यम् । पानभूमिः तैः प्रदीप्तेवोपलक्ष्यत इति सम्बन्धः ॥१८॥ बहुप्रकारैः बहूपादानभवैः अत एव विविधैः विविधरसवद्भिः, वरसंस्कारेण श्रेष्ठसंस्कारद्रव्ययोगेन संस्कृतैः, कुशलसंयुक्तैः निपुणपाचकपक्वैर्मांसैः ॥१९॥

मांसैः सह दृष्टा इति वक्ष्यमाणेनान्वयः ॥ १९ ॥ दिव्याः अमृतमथनोद्भूतवारुणीजातीयाः । प्रसन्नाः निष्कल्मषाः । कृतसुराः कृत्रिमसुराः । कृत्रिमसुरा एवाह शर्करेति । शर्करासवाः शर्करया कृताः । माध्वीकाः मधुना कृताः । पुष्पासवाः पुष्पमकरन्दकृताः । फलासवाः फलरसकृताः । तथोक्तमर्णवे— " पानकं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् । मधूत्थं शीधुमाध्वीकं मैरेयं नारिकेलजम् ॥ " इति ॥२०॥ वासचूर्णैः अधिवासचूर्णैः सह दृष्टाः, हनुमतेति

दिव्याः प्रसन्ना विविधाः सुराः कृतसुरा अपि । शर्करासवमाध्वीकपुष्पासवफलासवाः ॥२०॥ वासचूर्णैश्च विविधैर्दृष्टास्तैस्तैः पृथक् पृथक् । सन्तता शुशुभे भूमिर्माल्यैश्च बहुसंस्थितैः ॥ २१ ॥ हिरण्मयैश्च विविधैर्भाजनैः स्फाटिकैरपि । जाम्बूनदमयैश्चान्यैः करकैरभिसंवृता ॥ २२ ॥ राजतेषु च कुम्भेषु जाम्बूनदमयेषु च । पानश्रेष्ठं तदा भूरि कपिस्तत्र ददर्श सः ॥ २३ ॥ सोऽपश्यच्छातकुम्भानि शीधोर्मणिमयानि च । राजतानि च पूर्णानि भाजनानि महाकपिः ॥ २४ ॥ क्वचिदर्धावशेषाणि क्वचित् पीतानि सर्वशः । क्वचिन्नैव प्रपीतानि पानानि स ददर्श ह ॥ २५ ॥

शेषः । बहुप्रकारैर्मांसैः सह सुराः वासचूर्णैः सह हनुमता तत्र पानभूमौ दृष्टा इति सम्बन्धः । तैस्तैरित्याद्युत्तरशेषः । तैस्तैर्मांसविशेषैस्सुराविशेषैर्वासचूर्णैश्च पृथक्पृथक् सन्ततेति संबन्धः । बहुसंस्थितैः बहुसंस्थानैः ॥२१॥ हिरण्मयैरिति । अत्रापि संततेति पूर्वेणान्वयः। हिरण्मयैः रजतमयैः। "कृताकृतं हेम रूप्यं हिरण्यमभिधीयते" इति वचनात् । तैस्तैः पृथक्पृथक् सन्तता बहुसंस्थितैर्माल्यैर्हिरण्मयैः स्फाटिकैरपि भाजनैस्सन्तता जाम्बूनदमयैरन्यैः करकैश्चाभिसंवृता भूमिः शुशुभ इति सम्बन्धः ॥ २२ ॥ २३ ॥ शीधोः मद्यस्य ॥ २४ ॥ पानानि पानपात्राणि ॥ २५ ॥

दिव्याः सुराः समुद्रमथनोत्पन्नाः सुराः । कृतसुराः कृत्रिमसुराः । ता एवाह—शर्करासवेत्यादिना । शर्करासवाः शर्करया कृताः, माध्वीकाः मधुना कृताः । मार्द्वीका इति पाठे द्राक्षाफलविकारा वा । " मृद्वीका गोस्तनी द्राक्षा " इत्यमरः । पुष्पासवाः पुष्पमकरन्दकृताः । फलासवाः फलरसैः कृताः । वासचूर्णैः अधिवासचूर्णैः, सुगन्धिचूर्णैरित्यर्थः । सह उक्तसुरा दृष्टाः, कपिनेति शेषः । सन्ततेत्यादिसार्धश्लोकमेकं वाक्यम् । हिरण्मयैः रजतमयैः माल्यादिभिः संवृता भूमिः शुशुभ इति सम्बन्धः ॥ २०–२३ ॥ स इति । शीधोः मद्यस्य ॥ २४ ॥ अर्धावशेषाणि अर्धावशिष्टपानानि । पीतानि पीतासवानि । नैवप्रपीतानि पूर्णासवान्येव ।

क्वचिद्भक्ष्यानित्यादि निद्राबलपराजिता इत्यन्तमेकं वाक्यम् । क्वचित्प्रभिन्नैरित्यादिषु सहयोगे तृतीया, हेतौ तृतीया वा । प्रभिन्नत्वादालोलितत्वाच्च संपृक्तमाल्यानि माल्यमिश्राणीत्यर्थः । परस्परमित्यादि । पश्यन्वै विचचारेति पूर्वेणान्वयः ॥२६–२९॥ तासामिति । गात्रजं गात्रस्थम् । मन्दमनिलं

क्वचिद्भक्ष्यांश्च विविधान् क्वचित्पानानि भागशः । क्वचिदन्नावशेषाणि पश्यन् वै विचचार ह ॥ २६ ॥ क्वचित् प्रभिन्नैः करकैः क्वचिदालोलितैर्घटैः । क्वचित्संपृक्तमाल्यानि जलानि च फलानि च ॥ २७ ॥ शयनान्यत्र नारीणां शुभ्राणि बहुधा पुनः । परस्परं समाश्लिष्य काश्चित्सुप्ता वराङ्गनाः ॥ २८ ॥ काश्चिच्च वस्त्रमन्यस्याः स्वपन्त्याः परिधाय च । आहृत्य चाबलाः सुप्ता निद्राबलपराजिताः ॥ २९ ॥ तासामुच्छ्वासवातेन वस्त्रं माल्यं च गात्रजम् । नात्यर्थं स्पन्दते चित्रं प्राप्य मन्दमिवानिलम् ॥ ३० ॥ चन्दनस्य च शीतस्य शीधोर्मधुरसस्य च । विविधस्य च माल्यस्य धूपस्य विविधस्य च । बहुधा मारुतस्तत्र गन्धं विविधमुद्वहन् ॥ ३१ ॥ रसानां चन्दनानां च धूपानां चैव मूर्च्छितः । प्रववौ सुरभिर्गन्धो विमाने पुष्पके तदा ॥ ३२ ॥ श्यामा वदातास्तत्रान्याः काश्चित् कृष्णा वराङ्गनाः । काश्चित् काञ्चनवर्णाङ्ग्यः प्रमदा राक्षसालये ॥ ३३ ॥

प्राप्येव अत्यर्थं न स्पन्दत इत्यन्वयः ॥३०॥ चन्दनस्येत्यादि । उद्वहन् प्रववावित्यपकृष्यते ॥३१॥ रसादीनां सुरभिर्गन्धः विमाने मूर्च्छितः व्याप्तः सन् प्रववौ चचार ॥३२॥ रा०–चन्दनस्य अनुलेपनचन्दनस्य । धूपस्य गृहाधिवासार्थधूपस्य । स्नानानां चन्दनानां इति पाठः । स्नानार्हचन्दनानाम् । धूपानां केशाधिवासधूपानाम् । मारुतः एतेषां विविधं गन्धमुद्वहन् प्रववौ । अत एव सुरभिः घ्राणतर्पणो गन्धः विमाने पुष्पके मूर्च्छितः व्याप्त इति संबन्धः ॥३१॥३२॥ श्यामा इति । वदाताः अवदाताः । भागुरिमतेनाल्लोपः ।

पानानि पानभाजनानि ॥ २५ ॥ भागशः विभागेन । पानानि ददर्श इदममुकमिदममुकमिति विभज्य ददर्शेत्यर्थः ॥ २६ ॥ क्वचिदिति । करकैर्घटैरिति सहयोगे तृतीया ॥ २७ ॥ शून्यानि बहुधा पुनः इति पाठः । शून्यानि पतिशून्यानि, अत एव परस्परं समाश्लिष्येति । निद्राबलपराजिता इत्यन्तस्य पश्यन्वै विचचारेति पूर्वेण सम्बन्धः ॥ २८ ॥ २९ ॥ तासामिति । गात्रजं गात्रस्थम् ॥ ३० ॥ चन्दनस्येत्यादि । मारुतश्चन्दनादेश्च स्नानानां स्नानार्हचन्दनानां धूपानां विविधं गन्धमुद्वहन् प्रववौ । अत एव सुरभिः घ्राणतर्पणः गन्धः विमाने मूर्च्छितः व्याप्त इतिं सम्बन्धः ॥ ३१ ॥ ३२ ॥ श्यामा इति । राक्षसालये अन्तरमध्यबहिःकक्ष्योप

शुभ्रा इत्यर्थः ॥ ३३॥ तासामिति । चकारोऽप्यर्थकः । निद्रापरवशानामपि तासां रूपं प्रसुप्तानां पद्मिनीनां रूपमिव रम्यमासीदित्यर्थः ॥ ३४॥३५॥ निरीक्षमाण इत्यादि । धर्मसाध्वसशङ्कितः धर्मलोपभयाच्छङ्कितः । परदारावरोधस्य परदाररूपान्तःपुरस्य ॥ ३६ ॥ न हीति । मे दृष्टिः कदाचिदपि

तासां निद्रावशत्वाच्च मदनेन विमूर्च्छितम् । पद्मिनीनां प्रसुप्तानां रूपमासीद्यथैव हि ॥ ३४ ॥ एवं सर्वमशेषेण रावणान्तःपुरं कपिः । ददर्श सुमहातेजा न ददर्श च जानकीम् ॥ ३५ ॥ निरीक्षमाणश्च तदा ताः स्त्रियः स महा कपिः । जगाम महतीं चिन्तां धर्मसाध्वसशङ्कितः । परदारावरोधस्य प्रसुप्तस्य निरीक्षणम् ॥ ३६ ॥ इदं खलु ममात्यर्थं धर्मलोपं करिष्यति । नहि मे परदाराणां दृष्टिर्विषयवर्तिनी ॥ ३७ ॥ अयं चात्र मया दृष्टः परदारपरिग्रहः ॥ ३८ ॥ तस्य प्रादुरभूच्चिन्ता पुनरन्या मनस्विनः । निश्चितैकान्तचित्तस्य कार्यनिश्चयदर्शिनी ॥ ३९ ॥ कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः । नहि मे मनसः किंचिद्वैकृत्यमुपपद्यते ॥ ४० ॥ मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने । शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ॥ ४१ ॥

परदाराणां विषयवर्तिनी नहि, परदारसम्बन्धिविषयपरा नहीत्यर्थः । तथाप्ययं परदारपरिग्रहः दृष्टः, इदमसङ्गतमित्यर्थः ॥ ३७ ॥ ३८ ॥ तस्येति । निश्चितैकान्तचित्तस्य नियतैकरूपचित्तस्य ॥ ३९ ॥ रामानु०—तस्येति । निश्चिते निश्चये एकान्तं नियतं चित्तं यस्य तस्य । यद्वा नियतैकचित्तस्य ॥ ३९ ॥ काममिति । वैकृत्यं विकारः । उपपद्यते उत्पद्यते ॥ ४० ॥ रामानु०—विश्वस्ताः विस्रब्धाः ॥ ४० ॥ मन इति । शुभाशुभास्ववस्थासु शुभकरणाशुभकरणेषु विषयेषु । लक्षिते सर्वत्र सुप्ता इति शेषः ॥ ३३ ॥ तासामिति । निद्रापरवशत्वाच्च मदनेन मदनहेतुकरत्या च । विमूर्च्छितं क्रान्तम् तासां रूपं पद्मिनीनां रूपं यथा रमणीयं तथैवासीदित्यर्थः ॥ ३४ ॥ ३५ ॥ निरीक्षमाण इति । धर्मसाध्वसशङ्कितः धर्मलोपभयात शङ्कितः । परदारपरिग्रहः परदारा एव परिग्रहः ॥३६–३८॥ निश्चितैकान्त चित्तस्य निश्चयनियतचित्तस्य ॥ ३९ ॥ वैकृत्यं विकृतत्वम् ॥ ४०–४२ ॥

ति०—धर्मलोपं दर्शयति—परदारेति । परदारावरोधस्य । दारशब्दः स्त्रीसामान्यवाची । अवरोधशब्दः स्वधर्मयुक्तकुलस्त्रीवाची । प्रसुप्तस्येत्यनेन नग्नप्रायत्वं सूचितम् तत्समये वसनानां विपर्यासात् । किञ्च परदारा एव परिग्रहो भार्या यस्य सः अतिपापी रावणश्च दृष्टः । तादृशदर्शनमपि धर्मलोपकारीति भावः ॥ ३६–३८ ॥

इन्द्रियाणां प्रवर्तने मन एव हेतुः। सुव्यवस्थितं न तदभिलापि जातमित्यर्थः ॥ ४१ ॥ ननु परदारदर्शनमपि परिहरणीयम्, तत्किमर्थं कृतम् ? तत्राह-नान्यत्रेति। अन्यत्र स्त्रीव्यतिरिक्ते। संपरिमार्गणे कर्तव्ये। स्त्रीष्वेव हि स्त्रियो दृश्यन्ते ॥४२॥ यस्येति। योनिः जातिः, सजातीय इत्यर्थः ॥४३॥४४॥

नान्यत्र हि मया शक्या वैदेही परिमार्गितुम्। स्त्रियो हि स्त्रीषु दृश्यन्ते सदा सम्परिमार्गणे ॥४२॥ यस्य सत्त्वस्य या योनिस्तस्यां तत् परिमार्ग्यते। न शक्या प्रमदा नष्टा मृगीषु परिमार्गितुम् ॥४३॥ तदिदं मार्गितं तावच्छुद्धेन मनसा मया। रावणान्तःपुरं सर्वं दृश्यते न च जानकी ॥ ४४ ॥ देवगन्धर्वकन्याश्च नागकन्याश्च वीर्यवान्। अवेक्षमाणो हनुमान्नैवापश्यत जानकीम् ॥ ४५ ॥ तामपश्यन् कपिस्तत्र पश्यंश्चान्या वरस्त्रियः। अपक्रम्य तदा वीरः प्रध्यातुमुपचक्रमे ॥ ४६ ॥ स भूयस्तु परं श्रीमान् मारुतिर्यत्नमास्थितः। आपानभूमिमुत्सृज्य तद्विचेतुं प्रचक्रमे ॥ ४७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे एकादशः सर्गः ॥ ११ ॥

स तस्य मध्ये भवनस्य मारुतिर्लतागृहांश्चित्रगृहान्निशागृहान्। जगाम सीतां प्रति दर्शनोत्सुको न चैव तां पश्यति चारुदर्शनाम् ॥ १ ॥ स चिन्तयामास ततो महाकपिः प्रियामपश्यन् रघुनन्दनस्य ताम्। ध्रुवं हि सीता म्रियते यथा न मे विचिन्वतो दर्शनमेति मैथिली ॥ २ ॥

रामानु०—तत् तस्मात् ॥ ४४ ॥ देवेति। अपश्यत अपश्यत् ॥ ४५ ॥ ४६ ॥ स भूयस्तु परमिति। तत् रावणान्तःपुरम् ॥ ४७ ॥ इति श्रीगोविन्दराज विरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥ स तस्येत्यादि। निशागृहान् रात्रिनिवासयोग्य गृहान्। "गृहाः पुंसि च भूम्न्येव" इति पुँल्लिङ्गत्वम्। पश्यति अपश्यत् ॥ १ ॥ स इति। यथा यस्मात् कारणात्। विचिन्वतो मे मैथिली दर्शनं

योनिः जातिः ॥ ४३-४६ ॥ स इति। तत् रावणस्य गृहम् ॥ ४७ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० सुन्दरकाण्डव्याख्यायाम् एकादशः सर्गः ॥ ११ ॥ स तस्येति। निशागृहान् रात्रिनिवासयोग्यान् गृहान्। पश्यति अपश्यत् ॥ १ ॥ स इति। जानकी विचिन्वतो मे दर्शनं यथा यस्मान्नैति तथा तस्मात्

नैति तस्मात् म्रियते ममार । यद्वा अथवा नेति वाक्यं पठनीयम् । तदा अपश्यन्निति हेतुगर्भम् । अदर्शनात् मृता वा अथवा दर्शनं नैति । कुत्रचित् गहने प्रदेशे स्थिता वेत्यर्थः ॥ २ ॥ सेति । प्रतिदुष्टकर्मणा अतिदुष्टकर्मणा । वीप्सायां प्रतिः । "प्रति प्रतिनिधौ वीप्सालक्षणादौ" इत्यमरः । परे उत्कृष्टे । आर्यपथे सन्मार्गे ॥ ३ ॥ विरूपाणि न्यूनाधिकानि रूपाणि शरीरावयवाः यासां ताः । विकृताः विकृतवेषाः । विवर्चसो निस्तेजस्काः ।

सा राक्षसानां प्रवरेण जानकी स्वशीलसंरक्षणतत्परा सती । अनेन नूनं प्रतिदुष्टकर्मणा हता भवेदार्यपथे परे स्थिता ॥ ३ ॥ विरूपरूपा विकृता विवर्चसो महानना दीर्घविरूपदर्शनाः । समीक्ष्य सा राक्षसराजयोषितो भयाद्विनष्टा जनकेश्वरात्मजा ॥ ४ ॥ सीतामदृष्ट्वा ह्यनवाप्य पौरुषं विहृत्य कालं सह वानरैश्चिरम् । न मेऽस्ति सुग्रीवसमीपगा गतिः सुतीक्ष्णदण्डो बलवांश्च वानरः ॥ ५ ॥ दृष्टमन्तःपुरं सर्वं दृष्टा रावणयोषितः । न सीता दृश्यते साध्वी वृथा जातो मम श्रमः ॥ ६ ॥ किन्नु मां वानराः सर्वे गतं वक्ष्यन्ति सङ्गताः । गत्वा तत्र त्वया वीर किं कृतं तद्वदस्व नः । अदृष्ट्वा किं प्रवक्ष्यामि तामहं जनकात्मजाम् ॥ ७ ॥

महाननाः अतिविशालमुखाः । दीर्घाणि विरूपाणि दर्शनानि चक्षूंषि यासां ताः । राक्षसराजयोषितः रावणस्याज्ञाकारिणीः स्त्रियः ॥ ४ ॥ सीतामिति । पौरुषं शत्रुविषयपराक्रमम् । चिरं कालं विहृत्य अतिक्रम्येत्यर्थः । एवम्भूतस्य मे सुग्रीवसमीपगा तत्समीपगामिनी गतिः मार्गः नास्ति । सुग्रीवसमीप गतिः ममायोग्येत्यर्थः । तत्र हेतुमाह—सुतीक्ष्णेति । यत इति शेषः ॥ ५ ॥ ६ ॥ किन्न्विति सामान्येन निर्वेदोक्तिः । विशेषतश्चाह—गत्वेति । इत्युक्त इति शेषः । वदस्व न इत्युक्तः किं प्रवक्ष्यामि । यद्वा किन्न्विति पाठः । पूर्ववदर्धत्रयमेकं वाक्यम् । किन्न्विति पूर्वस्माद्विशेषोक्तिः । मां वानराः वदस्व नः इति वक्ष्यन्ति तदा अदृष्ट्वा किं प्रवक्ष्यामीति योजना ॥ ७ ॥

श्रुत्वं म्रियते ममारेति सम्बन्धः॥२॥ सेति । स्वशीलसंरक्षणं पातिव्रत्यसंरक्षणम् । प्रतिदुष्टकर्मणा अतिदुष्टकर्मणा । आर्यपथे सन्मार्गे ॥३॥ विरूपदर्शनाः विरूपाणि दर्शनानि चक्षूंषि दीर्घाश्च विरूपदर्शनाश्च तास्तथोक्ताः । राक्षसराजयोषितः रावणस्याज्ञाकारिणीः ॥ ४ ॥ सुग्रीवसमीपगा गतिः, गम्यत इति गतिर्मार्गः सुग्रीवसमीप सम्बन्धी मार्गो मे नास्ति, सुग्रीवसमीपं प्रति न गन्तव्यमिति भावः ॥५॥६॥ माऽस्तु तत्समीपगमनम्, जाम्बवदादिसमीपगमनमपि दुरन्तमित्याह—किन्न्वित्यादि ।

तर्हि अत्रैव कालविलम्बः क्रियतां तत्राह-ध्रुवमिति । कालस्य व्यतिवर्तने अस्मदागमनकालेऽतीते प्रायमुपैष्यन्ति, जाम्बवत्प्रभृतय इति शेषः ॥ ८ ॥ सामान्येन निर्वेदं प्रतिवक्ति-किं वेति । समुद्रलङ्घनरूपं महत् कर्म कृतवन्तं मां ते किं वक्ष्यन्ति किमपि वक्ष्यन्ति । यद्वा मद्वृत्तान्तं प्रशंसन् जाम्बवान् तदुत्साहकोऽङ्गदस्तदुपश्शृण्वन्तोऽन्ये च मां किं वा जुगुप्सितं वक्ष्यन्ति । "किं पृच्छायां जुगुप्सने" इत्यमरः ॥ ९ ॥ रामानु०-किं मामिति ।

ध्रुवं प्रायमुपैष्यन्ति कालस्य व्यतिवर्तने ॥ ८ ॥ किं वा वक्ष्यति वृद्धश्च जाम्बवानङ्गदश्च सः । गतं पारं समुद्रस्य वानराश्च समागताः ॥९॥ अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् । अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः ॥१०॥ करोति सफलं जन्तोः कर्म यत्तत्करोति सः । तस्मादनिर्वेदकृतं यत्नं चेष्टेऽहमुत्तमम् ॥ ११ ॥ भूयस्तावद्विचेष्यामि देशान् रावणपालितान् । आपानशाला विचितास्तथा पुष्पगृहाणि च ॥ १२ ॥ चित्रशालाश्च विचिता भूयः क्रीडागृहाणि च । निष्कुटान्तररथ्याश्च विमानानि च सर्वशः॥१३॥ [भूयस्तत्र विचेष्यामि न यत्र विचयः कृतः ।]

समुद्रस्य पारं तीरं गतं मां वृद्धो जाम्बवान् किं वक्ष्यति जुगुप्सितं वक्ष्यति जन्मप्रभृति मत्पराक्रमकथनेन प्रशस्य प्रेषयित्वा जाम्बवान् मां प्रति जुगुप्सितवाक्यो भविष्यति । सोऽङ्गदश्च बिलप्रवेशनोद्योगान्मया विघटितोऽङ्गदश्च जुगुप्सितवाक्यो भविष्यति । समागता वानराश्च सर्वथा कृतकार्योऽहमेष्यामीति मदुक्त्या जनितविश्वासा वानराश्च जुगुप्सितवाक्या भविष्यन्तीत्यर्थः ॥९॥ चिरं निर्वेदे कार्यहानिः स्यादिति मत्वा अनिर्वेदमवलम्बते-अनिर्वेद इति । अनिर्वेद उत्साहः तत्कृतं तत्प्रयुक्तं यत्नम् । चेष्टे, करोमीत्यर्थः । यत्करोति जन्तुरिति सिद्धम् । जन्तोस्सम्बन्धि तत्सर्वं कर्म सः अनिर्वेद एव सफलं करोतीत्यन्वयः ॥ १० ॥ ११ ॥ आपानेति । एता विचिताः अथापि पुनर्विचेष्यामीत्यनुपज्यते ॥ १२ ॥ निष्कुटाः गृहारामाः, अन्तररथ्याः अवान्तरवीथ्यः ॥ १३ ॥

तद्वदस्व नः इत्युक्त इति शेषः । तामदृष्ट्वा किं प्रवक्ष्यामीति सम्बन्धः । न किमपि वक्तुं शक्यमित्यर्थः ॥ ७ ॥ तत्र हेतुमाह-ध्रुवमिति । सीता न दृष्टेति वचनं श्रुत्वा ध्रुवं प्रायोपवेशनेन प्राणांस्त्यक्ष्यन्तीत्यर्थः ॥ ८ ॥ हेत्वन्तरमाह-किमिति । समुद्रस्य पारं तीरं गतं मां जाम्बवान् किं कुत्सितं वक्ष्यति । सोऽङ्गदः किं कुत्सितं वक्ष्यति । समागताः सीतान्वेषणार्थमागताः किं कुत्सितं वक्ष्यन्तीत्यर्थः ॥ ९ ॥ एवं क्षणमात्रं निर्विद्य पुनरुत्साहमवलम्ब्याह-अनिर्वेद इत्यादिना । अनिर्वेदः अलम्बुद्धिराहित्यम्, उत्साह इत्यर्थः । अनिर्वेदकृतम् उत्साहप्रयुक्तम् ॥ १०-१२ ॥ निष्कुटाः गृहारामाः । तन्मध्यगाः वीथीश्च ॥ १३ ॥

भूमीगृहान् भूमीबिलगृहान् । चैत्यगृहान् चतुष्पथमण्डपान् । गृहातिगृहकान् गृहानतीत्य दूरे स्वैरविहारार्थं निर्मितान् गृहान् ॥ १४ ॥ उत्पतन्नि पतन् पूर्वमुच्चस्थानान्यधिरुह्य ततोऽवरोहन् । अवघाटयन् पाटयन् ॥ १५ ॥ निष्पतन् निर्गच्छन् । प्रपतन्नुत्पतन् बिलगृहादीनि नीचस्थानानि प्रथम

इति संचिन्त्य भूयोऽपि विचेतुमुपचक्रमे । भूमीगृहांश्चैत्यगृहान् गृहातिगृहकानपि ॥ १४ ॥ उत्पतन्निपतंश्चापि तिष्ठन् गच्छन् पुनः पुनः । अपावृण्वंश्च द्वाराणि कपाटान्यवघाटयन् ॥ १५ ॥ प्रविशन्निष्पतंश्चापि प्रपतन्नुत्पतन्नपि । सर्वमप्यवकाशं स विचचार महाकपिः ॥ १६ ॥ चतुरङ्गुलमात्रोऽपि नावकाशः स विद्यते । रावणान्तःपुरे तस्मिन् यं कपिर्न जगाम सः ॥ १७ ॥ प्राकारान्तररथ्याश्च वेदिकाश्चैत्यसंश्रयाः । दीर्घिकाः पुष्करिण्यश्च सर्वं तेनावलोकितम् ॥ १८ ॥ राक्षस्यो विविधाकारा विरूपा विकृतास्तथा । दृष्टा हनुमता तत्र न तु सा जनकात्मजा ॥ १९ ॥ रूपेणाप्रतिमा लोके वरा विद्याधरस्त्रियः । दृष्टा हनुमता तत्र न तु राघवनन्दिनी ॥ २० ॥ नागकन्या वरारोहाः पूर्णचन्द्रनिभाननाः । दृष्टा हनुमता तत्र न तु सीता सुमध्यमा ॥ २१ ॥ प्रमथ्य राक्षसेन्द्रेण नागकन्या बलाद्धृताः । दृष्टा हनुमता तत्र न सा जनकनन्दिनी ॥ २२ ॥ सोऽपश्यंस्तां महाबाहुः पश्यंश्चान्या वरस्त्रियः । विषसाद मुहुर्धीमान् हनुमान् मारुतात्मजः ॥ २३ ॥

मधिरुह्य ततः समुद्गच्छन् ॥ १६ ॥ १७ ॥ प्राकारान्तररथ्याः प्राकारमध्यवर्तिवीथ्यः । वेदिकाश्चैत्यसंश्रयाः चैत्यवृक्षमूलपीठिकाबन्धाः ॥ १८–२१ ॥ प्रमथ्य

भूमीगृहान् भूबिलगृहान् । चैत्यगृहान् बुद्धायतनानि । गृहातिगृहकानपि गृहानतीत्य अनतिदूरे स्वैरविहारार्थं निर्मितगृहान् ॥ १४ ॥ उत्पतन् उन्नतमारुहन् । निपतन् ततोऽवरोहन् । निष्पतन् निष्क्रामन् । बिलगृहेष्ववतरन् । उत्पतन् पुनस्तेभ्य उद्गच्छन् ॥ १५–१७ ॥ प्राकारान्तररथ्याः प्राकारान्तरमध्यवर्तिमन्त्रिकुमारादिगृहवीथ्यः । वेदिकाश्चैत्यसंश्रयाः चतुष्पथवर्तिवृक्षाधारभूतवेदिकाः ॥ १८ ॥ १९ ॥ राघवनन्दिनी रामप्रिया ॥ २० ॥ २१ ॥ प्रमथ्य नागकन्या बलाद्धृता इत्यनेन वन्दीकृताना

स०–भूमीगृहान् भूविवरस्थगृहान् । चैत्यगृहान् देवायतनानि ॥ १४ ॥ अपावृण्वन् अपगतावरणानि कुर्वन् ॥ १५ ॥

प्रसह्य । बलाद्धृता नागकन्या इत्यभिधानादत्र बन्दीकृतानां ग्रहणम् । पूर्वश्लोके ऊढानां नागकन्यानामित्यपुनरुक्तिः ॥ २२–२५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥ विमानादित्यादि । इदानीं विमानादवतरणोक्त्या मध्ये विमानमधिरूढ इत्यवगम्यते । वेगवत्त्वे दृष्टान्तमाह–विद्युदिति ॥ १ ॥ सम्परिक्रम्येति । संपरिक्रम्य, प्राकारमिति शेषः ।

उद्योगं वानरेन्द्राणां प्लवनं सागरस्य च । व्यर्थं वीक्ष्यानिलसुतश्चिन्तां पुनरुपागमत् ॥२४॥ अवतीर्य विमानाच्च हनुमान् मारुतात्मजः । चिन्तामुपजगामाथ शोकोपहतचेतनः ॥२५॥इत्यार्षे० श्रीमत्सुन्दरकाण्डे द्वादशः सर्गः ॥ १२

विमानात्तु सुसंक्रम्य प्राकारं हरियूथपः । हनुमान् वेगवानासीद्यथा विद्युद् घनान्तरे ॥१॥ संपरिक्रम्य हनुमान् रावणस्य निवेशनात् । अदृष्ट्वा जानकीं सीतामब्रवीद्वचनं कपिः ॥ २ ॥ भूयिष्ठं लोलिता लङ्का रामस्य चरता प्रियम् । न हि पश्यामि वैदेहीं सीतां सर्वाङ्गशोभनाम् ॥ ३ ॥ पल्वलानि तटाकानि सरांसि सरितस्तथा । नद्योऽनूपवनान्ताश्च दुर्गाश्च धरणीधराः । लोलिता वसुधा सर्वा न तु पश्यामि जानकीम् ॥४॥ इह सम्पातिना सीता रावणस्य निवेशने । आख्याता गृध्रराजेन न च पश्यामि तामहम् ॥ ५॥ किन्नु सीताऽथ वैदेही मैथिली जनकात्मजा । उपतिष्ठेत विवशा रावणं दुष्टचारिणम् ॥ ६ ॥

अब्रवीत्, स्वयमिति शेषः ॥ २ ॥ लोलिता बहुशोऽन्विष्टेत्यर्थः ॥ ३ ॥ सरितः क्षुद्रनद्यः । अनूपवनान्ताः जलप्रायवनप्रदेशाः ॥ ४ ॥ ५ ॥ किंन्विति । सीता अयोनिजा । वैदेही जन्मभूमिप्रयुक्तातिशयवती । मैथिली आचारप्रधानकुलोत्कर्षवती । अथशब्दस्समुच्चये । एवंभूता जनकात्मजा

ग्रहणम् । पूर्वं तूढानां नागकन्यानाम् अतो न पुनरुक्तिः ॥ २२–२४ ॥ अवतीर्य विमानाच्चेति पुनरारुह्यावरुह्य चेत्यर्थः । विमान एवैतत्सर्वदर्शनमिति तत्त्वम् ॥२५॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां द्वादशः सर्गः ॥ १२ ॥ विमानादिति । स वेगवान् हनुमान् विमानात् प्राकारं संक्रम्य घनान्तरे विद्युदिवासीदित्यन्वयः । अनेनौपम्येन प्राकार इन्द्रनीलकृत इत्यवगम्यते ॥ १ ॥ निवेशनात्संपरिक्रम्य, प्राकारमिति शेषः ॥ २ ॥ भूयिष्ठं लोलिता बहुशोऽन्विष्टेत्यर्थः ॥ ३ ॥ सरितः क्षुद्रनद्यः । अनूपवनान्ताः जलप्रचुरप्रदेशाः ॥ ४ ॥ नन्वनुपलब्धिप्रमाणादभावनिश्चय एवास्त्वित्यत आह–इहेति । रावणनिवेशन एवाख्याता तद्वचश्च प्रमाणम् न तु दृश्यतेऽत्र किमिदमिति ॥ ५ ॥ किंन्विति । सीतेत्यनेन अयोनिजत्वप्रयुक्तं वैशिष्ट्यं द्योत्यते । अथशब्द

दुष्टचारिणं रावणं विवशा कामपरवशा सती उपतिष्ठेत किंतु ? नेत्यर्थः ॥ ६ ॥ रामानु०–किंन्विति । सीतेत्यनेन अयोनिजत्वप्रयुक्तवैशिष्टयं द्योत्यते । अथशब्दार्थो गुणसमुच्चयः । वैदेहीत्यनेन देशसंबन्धकृतवैशिष्टयम्, मैथिलीत्यनेन सदाचारयुक्तसत्पुरुषवासभूतनगरसंबन्धकृतवैशिष्टयम्, जनकात्मजेत्यनेन " कर्मणैव हि संसिद्धिमास्थिता जनकादयः " इति प्रसिद्धजनकसंबन्धकृतवैशिष्टयम् । एवंगुणविशिष्टा देवी दुष्टचारिणं रावणम् उपतिष्ठेत किन्तु मित्रत्वेन प्राप्नुयार्त्किनु ? न प्राप्नुयादेवेत्यर्थः । " उपाद्देवपूजासङ्गतिकरण मित्रकरणपथिष्विति वक्तव्यम् " इत्यात्मनेपदम् ॥ ६ ॥ अथास्या अदर्शने हेतूनुत्प्रेक्षते–क्षिप्रमित्यादिना । रामबाणानां रामबाणेभ्यः ॥ ७ ॥ अथवेति ।

क्षिप्रमुत्पततो मन्ये सीतामादाय रक्षसः । बिभ्यतो रामबाणानामन्तरा पतिता भवेत् ॥ ७ ॥ अथवा ह्रियमाणायाः पथि सिद्धनिषेविते । मन्ये पतितमार्याया हृदयं प्रेक्ष्य सागरम् ॥ ८ ॥ रावणस्योरुवेगेन भुजाभ्यां पीडितेन च । तया मन्ये विशालाक्ष्या त्यक्तं जीवितमार्यया ॥ ९ ॥ उपर्युपरि वा नूनं सागरं क्रमतस्तथा । विवेष्टमाना पतिता समुद्रे जनकात्मजा ॥ १० ॥ अहो क्षुद्रेण वाऽनेन रक्षन्ती शीलमात्मनः । अबन्धुर्भक्षिता सीता रावणेन तपस्विनी ॥ ११ ॥ अथवा राक्षसेन्द्रस्य पत्नीभिरसितेक्षणा । अदुष्टा दुष्टभावाभिर्भक्षिता सा भविष्यति ॥ १२ ॥

सागरं प्रेक्ष्य भीतं हृदयं सागरे पतितमिति मन्ये । हृदयस्य भयस्थानत्वेन तन्मूलतया तच्छरीरं लक्ष्यते ॥ ८ ॥ पीडितेन पीडनेन ॥ ९ ॥ उपर्युपरि सागरं सागरस्य सन्निहितोपरिप्रदेशे । " उपर्यध्यधसस्सामीप्ये " इति द्विर्वचनम् । " धिगुपर्यादिषु त्रिषु " इति द्वितीया ॥ १० ॥ अहो इति खेदे ॥ ११ ॥ दुष्टभावाभिः सापत्न्यप्रयुक्तक्रोधाभिः ॥ १२ ॥ १३ ॥

शार्थो गुणसमुच्चयपरः । वैदेहीत्यनेन देशसम्बन्धकृतवैशिष्टयम्, मैथिलीत्यनेन सदाचारयुक्तसत्पुरुषावासनगरसम्बन्धनिबन्धनवैशिष्टयम्, जनकात्मजेत्यनेन 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति प्रसिद्धजनकसम्बन्धकृतवैशिष्टयम् । एवङ्गुणविशिष्टा देवी दुष्टचारिणं रावणमुपतिष्ठेत किन्नु मित्रत्वेन प्राप्नुयात्किन्नु ? न प्राप्नुयादेवेत्यर्थः ॥ ६ ॥ अदर्शने हेतूनाह–क्षिप्रमित्यादिना । रामबाणानां बाणेभ्यः ॥ ७ ॥ रामपरोक्षं तथा भयायोगात्पक्षान्तरम्–अथवेति । हृदयं पतितं मन उत्क्रान्तम्, मनउत्क्रमणस्यैव मरणत्वात् ॥ ८ ॥ पीडितेन पीडनेन ॥ ९–१४ ॥

स०–क्षिप्रमिति । यद्यपि सम्पातिना लङ्कायां सीताऽस्तीत्यभिधानादेवमाद्युत्प्रेक्षा न शक्या कर्तुम् । तथापि सम्पात्युक्तरीत्याऽन्वेषणेऽपि यतो न दृश्यते अतस्तद्वचनमेव विचारणीयमिति मतिमतो हनुमतः सा युक्तेति ज्ञेयम् ॥ ७ ॥ अबन्धुः असन्निहितबन्धुः ॥ ११ ॥

हा रामेति । न्यस्तदेहा त्यक्तदेहा । भविष्यति भवेदित्यर्थः ॥ १४ ॥ निहिता भूगृहादौ गूढं स्थापिता । लालप्यते मुहुर्मुहुः प्रलपति ॥ १५ ॥ एवं निरुद्ध्यमानापि सीता रावणस्य वशं न व्रजेदित्याह–जनकस्येति । कथं व्रजेत् ? न व्रजेदेवेत्यर्थः ॥ १६ ॥ ननु किं चिन्तया, गत्वा यथावृत्तं निवेद्यतामित्याशङ्क्य तदनुचितमित्याह–विनष्टेति । विनष्टा भूगृहादौ स्थापनेनादर्शनं गता । " णश अदर्शने " इति धातोर्निष्ठा । प्रनष्टा

सम्पूर्णचन्द्रप्रतिमं पद्मपत्रनिभेक्षणम् । रामस्य ध्यायती वक्रं पञ्चत्व कृपणा गता ॥ १३ ॥ हा राम लक्ष्मणेत्येवं हाऽयोध्ये चेति मैथिली । विलप्य बहु वैदेही न्यस्तदेहा भविष्यति ॥ १४ ॥ अथवा निहिता मन्ये रावणस्य निवेशने । नूनं लालप्यते सीता पञ्जरस्थेव शारिका ॥ १५ ॥ जनकस्य सुता सीता रामपत्नी सुमध्यमा । कथमुत्पलपत्राक्षी रावणस्य वशं व्रजेत् ॥ १६ ॥ विनष्टा वा प्र(ण)नष्टा वा मृता वा जनकात्मजा । रामस्य प्रियभार्यस्य न निवेदयितुं क्षमम् ॥ १७ ॥ निवेद्यमाने दोषः स्याद्दोषः स्यादनिवेदने । कथन्नु खलु कर्तव्यं विषमं प्रतिभाति मे ॥ १८ ॥ अस्मिन्नेवं गते कार्ये प्राप्तकालं क्षमं च किम् । भवेदिति मतं भूयो हनुमान् प्रविचारयत् ॥ १९ ॥ यदि सीतामदृष्ट्वाऽहं वानरेन्द्रपुरीमितः । गमिष्यामि ततः को मे पुरुषार्थो भविष्यति ॥ २० ॥

समुद्रपतनादिना त्यक्तजीविता । ( " उपसर्गादसमासेपि णोपदेशस्य " इति णत्वम् । ) मृता रामविरहदुःखासहिष्णुतया स्वयं मृता ॥ १७ ॥ निवेद्यमाने वक्ष्यमाणो दोषः स्यात् । दोषः स्यादनिवेदने यथावृत्तानिवेदने स्वामिवञ्चनदोषः स्यात् । विषमं परस्परविरुद्धम् ॥ १८ ॥ अस्मिन्निति । हनुमान् अस्मिन्कार्ये एवं गते एवं विषमत्वं प्राप्ते सति । किं प्राप्तकालं कालोचितं क्षमं समर्थं च भवेदिति मतं पक्षम् । भूयः प्राविचारयत् ॥ १९ ॥ २० ॥

निहितां भूगृहादौ स्थापितां मन्ये ॥ १५ ॥ एवं पीड्यमानापि सीता रावणस्य वशं न व्रजेदित्याह–जनकस्येति ॥ १६ ॥ ननु किमेतादृशविचारेण ? गत्वा यथावृत्तं निवेद्यतामित्यत आह–विनष्टेत्यादि । दृश्यदेशे मायया अदर्शनं विनाशः, अदृश्यदेशे अवस्थानं प्रणाशः । रामविश्लेषजनितदुःखेन स्वयं मृता वा ॥ १७ ॥ दोषो वक्ष्यमाणः, अनिवेदने यथावृत्तान्ताकथने दोषः स्वामिवञ्चनकरणरूपः स्यात् ॥ १८ ॥ अस्मिन्निति । प्राप्तकालं कालोचितम् । क्षमं समर्थं किं

स०–रिपुभिर्योधयितुं शक्यो योध्यः । स न भवतीत्ययोध्यः, तस्य सम्बुद्धिः । हाऽयोध्येत्युपपन्नम् । ( हाऽयोध्येति च इति पाठो भवितुमर्हति ) ॥ १४ ॥

पुरुषार्थाभावमाह—ममेदमिति ॥ २१ ॥ २२ ॥ [illegible]  [illegible] । अप्रियमिति च्छेदः ॥ २३ ॥ परुषं श्रवण

ममेदं लङ्घनं व्यर्थं सागरस्य भविष्यति । प्रवेशश्चैव लङ्कायां राक्षसानां च दर्शनम् ॥ २१ ॥ किं मां वक्ष्यति सुग्रीवो हरयो वा समागताः । किष्किन्धां समनुप्राप्तं तौ वा दशरथात्मजौ ॥ २२ ॥ गत्वा तु यदि काकुत्स्थं वक्ष्यामि परमप्रियम् । न दृष्टेति मया सीता ततस्त्यक्ष्यति जीवितम् ॥ २३ ॥ परुषं दारुणं क्रूरं तीक्ष्णमिन्द्रिय तापनम् । सीतानिमित्तं दुर्वाक्यं श्रुत्वा स न भविष्यति ॥ २४ ॥ तं तु कृच्छ्रगतं दृष्ट्वा पञ्चत्वगतमानसम् । भृशानुरक्तो मेधावी न भविष्यति लक्ष्मणः ॥ २५ ॥ विनष्टौ भ्रातरौ श्रुत्वा भरतोऽपि मरिष्यति । भरतं च मृतं दृष्ट्वा शत्रुघ्नो न भविष्यति ॥ २६ ॥ पुत्रान् मृतान् समीक्ष्याथ न भविष्यन्ति मातरः । कौसल्या च सुमित्रा च कैकेयी च न संशयः ॥ २७ ॥ कृतज्ञः सत्यसन्धश्च सुग्रीवः प्लवगाधिपः । रामं तथागतं दृष्ट्वा ततस्त्यक्ष्यति जीवितम् ॥ २८ ॥ दुर्मना व्यथिता दीना निरानन्दा तपस्विनी । पीडिता भर्तृशोकेन रुमा त्यक्ष्यति जीवितम् ॥ २९ ॥ वालिजेन तु दुःखेन पीडिता शोककर्शिता । पञ्चत्वं च गते राज्ञि तारापि न भविष्यति ॥ ३० ॥ माता पित्रोर्विनाशेन सुग्रीवव्यसनेन च । कुमारोऽप्यङ्गदः कस्माद्धारयिष्यति जीवितम् ॥ ३१ ॥

कटुकम् । दारुणं भयंकरम् । क्रूरम् उग्रम् । तीक्ष्णम् असह्यम् । इन्द्रियतापनम् इन्द्रियक्षोभकम् । सीतानिमित्तं सीताविषयम् ॥ २४ ॥ तं त्विति ।

भवेद इति मतं पक्षं भूयः प्रविचारयत् अभ्यचारयत् ॥ १९–२३ ॥ परुषं कर्णकठोरम् । दारुणं भयङ्करम् । क्रूरमुग्रम् । तीक्ष्णमसह्यम् । इन्द्रियतापनम् इन्द्रिय क्षोभकम् । स रामः ॥ २४ ॥ पञ्चत्वगतमानसं मरणे कृतनिश्चयम् ॥ २५–३३ ॥

स०—सत्यसन्धः प्रागिति शेषः । यद्वा मनसा सीतां सम्बोध्य वदति—सतीति । असन्धः अनिष्पन्नस्वप्रतिज्ञः । अथवा अनुवादेन सीताया अनानयने प्राणांस्त्यक्ष्यामीति वाद उक्तः । ततश्च सत्यसन्ध इति यथावस्थितमन्वेति ॥ २८ ॥

पञ्चत्वगतमानसं मरणे कृतनिश्चयम् ॥ २९–३२ ॥ सान्त्वेनेति । मानेन प्रत्युत्थानादिना ॥ ३३ ॥ न वनेष्विति । निरोधेषु गृहादिसंवृत प्रदेशेषु ॥३४॥३५॥ विषमिति। प्रचरिष्यन्ति करिष्यन्तीत्यर्थः । शस्त्रं शस्त्रपतनम् ॥ ३६ ॥ घोरमिति । आरोदनम् आ समन्ताद्रोदनम् ॥ ३७–३९ ॥

भर्तृजेन तु दुःखेन ह्यभिभूता वनौकसः । शिरांस्यभिहनिष्यन्ति तलैर्मुष्टिभिरेव च ॥ ३२ ॥ सान्त्वेनानुप्रदानेन मानेन च यशस्विना । लालिताः कपिराजेन प्राणांस्त्यक्ष्यन्ति वानराः ॥ ३३ ॥ न वनेषु न शैलेषु न निरोधेषु वा पुनः । क्रीडामनुभविष्यन्ति समेत्य कपिकुञ्जराः ॥ ३४ ॥ सपुत्रदाराः सामात्या भर्तृव्यसनपीडिताः । शैलाग्रेभ्यः पतिष्यन्ति समेत्य विषमेषु च ॥ ३५ ॥ विषमुद्बन्धनं वापि प्रवेशं ज्वलनस्य वा । उपवासमथो शस्त्रं प्रचरिष्यन्ति वानराः ॥ ३६ ॥ घोरमारोदनं मन्ये गते मयि भविष्यति । इक्ष्वाकुकुलनाशश्च नाशश्चैव वनौकसाम् ॥ ३७ ॥ सोऽहं नैव गमिष्यामि किष्किन्धां नगरीमितः । न च शक्ष्याम्यहं द्रष्टुं सुग्रीवं मैथिलीं विना ॥३८॥ मय्यगच्छति चेहस्थे धर्मात्मानौ महारथौ । आशया तौ धरिष्येते वानराश्च मनस्विनः ॥ ३९ ॥ हस्तादानो मुखादानो नियतो वृक्षमूलिकः । वानप्रस्थो भविष्यामि ह्यदृष्ट्वा जनकात्मजाम् ॥ ४० ॥ सागरानूपजे देशे बहुमूलफलोदके । चितां कृत्वा प्रवेक्ष्यामि समिद्धमरणीसुतम् ॥ ४१ ॥ उपविष्टस्य वा सम्यग् लिङ्गिनीं साधयिष्यतः । शरीरं भक्षयिष्यन्ति वायसाः श्वापदानि च ॥ ४२ ॥

हस्तेति । हस्तादानः हस्तपतितभोजी । मुखादानः मुखपतितभोजी । वृक्षमूलिकः वृक्षमूलवासी ॥ ४० ॥ सागरानूपज इति । बहुमूलफलोदक इति स्वरूपकथनम् । अरणीसुतम् अरण्युत्पन्नम् ॥ ४१ ॥ उपविष्टस्य प्रायोपविष्टस्य । लिङ्गिनीम्, लिङ्गं संन्यासः अनशनं तद्वती लिङ्गिनी ताम् साधनेति। निरोधेषु गृहादिसंवृतप्रदेशेषु ॥३४–३८॥धरिष्यति, प्राणानिति शेषः॥३९॥ हस्तादानः हस्तपतितफलपर्णाद्याशी । मुखादानः मुखपतितभोजी। वृक्षमूलिकः वृक्षमूलवासी ॥ ४० ॥ अरणीसुतम् अग्निम् ॥ ४१ ॥ उपविष्टस्य प्रायोपविष्टस्य । लिङ्गिनं लिङ्गं शरीरमस्यास्तीति लिङ्गी तम्, आत्मानमित्यर्थः । साधयिष्यतः

यिष्यतः। लिङ्गिनमिति क्वचित्पाठः। तत्र लिङ्गं शरीरं तद्वान् लिङ्गी आत्मा तं साधयिष्यतः, शरीराद्वात्मानं मोचयिष्यत इत्यर्थः। श्वापदानि श्वापदाः व्याघ्रादयः ॥ ४२ ॥ न चैवमात्मत्यागे दोष इत्याह–इदमिति। निर्याणं मरणम्। आपः अपः ॥ ४३ ॥ सुजातेति। सुजातमूला आदौ लङ्काधिदेवता

इदं महर्षिभिर्दृष्टं निर्याणमिति मे मतिः। सम्यगापः प्रवेक्ष्यामि न चेत्पश्यामि जानकीम् ॥ ४३॥ सुजातमूला सुभगा कीर्तिमाला यशस्विनी। प्रभग्ना चिररात्रीयं मम सीतामपश्यतः ॥ ४४ ॥ तापसो वा भविष्यामि नियतो वृक्षमूलिकः। नेतः प्रतिगमिष्यामि तामदृष्ट्वाऽसितेक्षणाम् ॥ ४५ ॥ यदीतः प्रतिगच्छामि सीतामनधिगम्य ताम्। अङ्गदः सह तैः सर्वैर्वानरैर्न भविष्यति ॥ ४६ ॥ विनाशे बहवो दोषा जीवन् भद्राणि पश्यति। तस्मात्प्राणान् धरिष्यामि ध्रुवो जीवितसङ्गमः ॥ ४७ ॥ एवं बहुविधं दुःखं मनसा धारयन् मुहुः। नाध्यगच्छत्तदा पारं शोकस्य कपिकुञ्जरः ॥ ४८ ॥ रावणं वा वधिष्यामि दशग्रीवं महाबलम्। काममस्तु हृता सीता प्रत्याचीर्णं भविष्यति ॥ ४९॥

जयेन शोभनप्रारम्भा। सुभगा चन्द्रोदयेन रम्या। कीर्तिमाला मम कीर्तिमयमाला। यशस्विनी हनुमतो लङ्काप्रवेशरात्रिरिति लोके विख्याता। चिररात्री जागरणेन दीर्घभूता रात्रिः। प्रभग्ना समाप्ता। एवं कल्याणीयं रात्रिः सीतामपश्यतो मे व्यर्थैव जातेत्यर्थः। "कृदिकारादक्तिनः" इति दीर्घः ॥ ४४ ॥ आत्मत्यागापेक्षया तापसभाव एव ज्यायानित्याह–तापस इति। वाशब्दोऽवधारणे। "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः ॥ ४५ ॥ मा भूत् सुग्रीवसमीपगमनम्। अङ्गदादिभिस्संयुज्यतामित्याशङ्क्याह–यदीत इति ॥ ४६ ॥ विनाश इति। बहवो दोषाः पूर्वोक्तास्सर्वविनाशादयः। संगमः श्रेयस्संगमः ॥ ४७ ॥ ४८ ॥ रावणमिति। प्रत्याचीर्णं प्रत्याचरितम्, प्रतिकृतमिति यावत् ॥ ४९ ॥ रामानु०–रावणमिति। वाशब्दोऽवधारणे। हृता सीता काममस्तु यथा

शरीरान्मोचयिष्यतः। श्वापदानि श्वापदाः व्याघ्रादयः ॥ ४२ ॥ न चात्महत्यादोषोऽपीत्याह–इदमिति। निर्याणं मरणम्। आपः अपः ॥ ४३ ॥ सुजातमूला आदित आरभ्य सीतान्वेषणोपयुक्ततया शोभनमूला। सुभगा सीतान्वेषणसौकर्यापादकचन्द्रिकया मनोहरा। कीर्तिमाला कीर्तनं कीर्तिः सीतान्वेषणसहकारिणीति सर्वैः क्रियमाणा कीर्तिरेव माला यस्यास्सा। यशस्विनी हनुमल्लङ्काप्रवेशरात्रिरिति ख्यातिमती। चिररात्रिः चिरकालविशिष्टरात्रिः, दीर्घरात्रिरिति यावत्। अनेन रामकार्यसहायेच्छया रात्रिरपि वर्द्धितवतीत्यवगम्यते। सीतामपश्यतो मम प्रभग्ना निष्फला जातेत्यर्थः ॥ ४४ ॥ पूर्वोक्तयोः तापसपक्षमरणपक्षयोः प्रथमं पक्षमवलम्ब्याह–तापस इत्यादिना ॥ ४५ ॥ ४६ ॥ विनाश इति। जीवितसङ्गमः जीविते सङ्गमः श्रेयस्सङ्गमः ध्रुवः ॥ ४७ ॥ ४८ ॥ किं दैन्येन? विक्रमिष्यामी

तथा वा भवतु । रावणं वधिष्याम्येव । वधेन किं भविष्यतीत्यत्राह । प्रत्याचीर्णं भविष्यतीति । प्रत्याचीर्णं प्रत्याचरणम्, वैरनिर्यातनमिति यावत् ॥ ४९ ॥ पशुं पशुपतेरिवेति । पशुपतेः अग्नेः पशुम् अजमिव । "इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने" इति श्रुतेः । अनेन सुप्रापत्वमुक्तम् ॥५०॥ इतीति ! प्रथमं चिन्ताविचारः । ततो

अथवैनं समुत्क्षिप्य उपर्युपरि सागरम् । रामायोपहरिष्यामि पशुं पशुपतेरिव ॥ ५० ॥ इति चिन्तां समापन्नः सीतामनधिगम्य ताम् । ध्यानशोकपरीतात्मा चिन्तयामास वानरः ॥ ५१ ॥ यावत्सीतां हि पश्यामि रामपत्नीं यशस्विनीम् । तावदेतां पुरीं लङ्कां विचिनोमि पुनः पुनः ॥ ५२ ॥ संपातिवचनाच्चापि रामं यद्यानयाम्यहम् । अपश्यन् राघवो भार्यां निर्दहेत् सर्ववानरान् ॥ ५३ ॥ इहैव नियताहारो वत्स्यामि नियतेन्द्रियः । न मत्कृते विनश्येयुः सर्वे ते नरवानराः ॥ ५४ ॥ अशोकवनिका चेयं दृश्यते या महाद्रुमा । इमामधिगमिष्यामि न हीयं विचिता मया ॥ ५५ ॥ वसून् रुद्रांस्तथाऽऽदित्यानश्विनौ मरुतोऽपि च । नमस्कृत्वा गमिष्यामि रक्षसां शोकवर्धनः ॥ ५६ ॥ जित्वा तु राक्षसान् सर्वानिक्ष्वाकुकुलनन्दिनीम् । संप्रदास्यामि रामाय यथा सिद्धिं तपस्विने ॥ ५७ ॥ स मुहूर्तमिव ध्यात्वा चिन्तावग्रथितेन्द्रियः । उदतिष्ठन्महातेजा हनूमान् मारुतात्मजः ॥ ५८ ॥ नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै । नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ ५९ ॥

ध्यानं ज्ञातव्यविषयनिरन्तरप्रत्ययः । ततश्चिन्तांति दुरन्तचिन्तोच्यते ॥ ५१ ॥ चिन्ताप्रकारमाह—यावदिति ॥ ५२ ॥ यदि पूर्वमेव संपातिवचनप्रामाण्येन रामोऽत्रानीयेत तदा महान् प्रमादः स्यादित्याह—संपातीति ॥५३–५६॥ सिद्धिं तपःफलम् ॥५७॥५८॥ " सर्वान् देवान्नमस्यन्ति रामस्यार्थे यशस्विनः"



त्याह—रावणमिति । हृता सीता काममस्तु यथा तथा वा भवतु रावणं वधिष्याम्येव, तेन किं ? प्रत्याचीर्णं प्रत्याचरणम्, वैरनिर्यातनमिति यावत् ॥४९–५१॥ चिन्ता प्रकारमेवाह—यावदिति । पश्यामि विचिनोमीति च लट् भविष्यदर्थे ॥ ५२ ॥ सीतामदृष्ट्वैव सम्पातिवचनाद्रामस्समानीयेत तदा महाननर्थो भवेदित्याह—सम्पा तीति ॥ ५३ ॥ इहेति । विनश्येयुः सीतामदृष्ट्वा तत्र मद्गमनानन्तरमिति भावः ॥ ५४–५६ ॥ जित्वेति । सिद्धिमिव तपःफलमिव ॥ ५७ ॥ चिन्ताविग्रथितेन्द्रियः

इत्युक्तरीत्या अभिमतलाभत्वरया सर्वान्नमस्करोति–नमोऽस्त्विति ॥ ५९ ॥ स तेभ्यस्त्वित्यादिश्लोकद्वयमेकान्वयम् । नमस्कृत्यालोकनरूपक्रिया भेदात्तच्छन्दद्वयम् । नमस्कृत्य अशोकवनिकां प्रति उद्दिश्य सर्वा दिशस्समालोक्य अशोकवनिकां परिच्छेत्तुं तस्यास्सर्वा दिशो दृष्ट्वा तां स मनसा

स तेभ्यस्तु नमस्कृत्य सुग्रीवाय च मारुतिः। दिशः सर्वाः समालोक्य ह्यशोकवनिकां प्रति ॥ ६० ॥ स गत्वा मनसा पूर्वमशोकवनिकां शुभाम्। उत्तरं चिन्तयामास वानरो मारुतात्मजः ॥ ६१ ॥ ध्रुवं तु रक्षोबहुला भविष्यति वनाकुला। अशोकवनिका चिन्त्या सर्वसंस्कारसंस्कृता॥६२॥रक्षिणश्चात्र विहिता नूनं रक्षन्ति पादपान्। भगवानपि सर्वात्मा नातिक्षोभं प्रवाति वै ॥ ६३ ॥ संक्षिप्तोऽयं मयाऽऽत्मा च रामार्थे रावणस्य च । सिद्धिं मे संविधास्यन्ति देवाः सर्षिगणास्त्विह ॥ ६४ ॥

गत्वा उत्तरं चिन्तयामासेति योजना। अशोकशब्दः संक्षेपे व्याख्यातः ॥ ६० ॥ ६१ ॥ ध्रुवमिति । रक्षोबहुला रक्षकराक्षसबहुला । वनाकुला जलावृता द्रुमषण्डमण्डिता वा । सर्वसंस्कारैः कर्षणतृणनिरसनादिभिः संस्कृता कृतातिशयाधाना अशोकवनिका ध्रुवं चिन्त्या भविष्यति । अवश्यमन्वेषणीया भवेदित्यर्थः ॥ ६२ ॥ रक्षिण इति । अत्र अशोकवनिकायाम् । विहिताः नियुक्ताः । सर्वात्मा सर्वमाप्नोतीति सर्वात्मा वायुः । सोपि नातिक्षोभं प्रवाति । अतिकम्पनपूर्वकं नात्र सञ्चरतीत्यर्थः ॥ ६३ ॥ एवंभूतप्रदेशे भवतः कथं गमनमित्याशङ्क्याह–संक्षिप्त इति । मया अयमात्मा देहः । रामार्थे रामप्रयोजनसिद्ध्यर्थम् । रावणस्य चार्थे रावणादृश्यत्वार्थं च संक्षिप्तः अल्पीकृतः । एवं मया कार्यानुकूलो यत्नः कृतः, कार्यसिद्धिं तु देवा विधास्यन्ती

व्याकुलेन्द्रियः ॥ ५८ ॥ ५९ ॥ सुग्रीवाय चेत्यत्र नमश्चक्र इति करोतेर्विपरिणामः । अशोकवनिकां गतः, मनसेति शेषः । अशोकवनिकां प्रतीति पाठे–समालोकयदित्यालोकयतेर्विपरिणामः । अन्यथा तच्छन्दोऽतिरिच्यते ॥ ६० ॥ मनसा गत्वा, गन्तुं निश्चित्येत्यर्थः । उत्तरम् उत्तरकर्तव्यम् । वनाकुला काननावृता ॥ ६१ ॥ ॥ ६२ ॥ रक्षिण इति । अत्र अशोकवनिकायाम् । निहिताः नियुक्ताः । सर्वात्मा वायुः ॥ ६३ ॥ संक्षिप्त इति । रामार्थे रावणस्य चेति गूढवृत्त्या सीतादर्शनस्याकाङ्क्षितत्वात रावणदर्शनपरिहारार्थत्वाच्चोभयार्थत्वम् ॥ ६४–६६ ॥

त्याह--सिद्धिमिति । संविधास्यन्ति ददत्वित्यर्थः ॥ ६४ ॥ ब्रह्मेत्यादि । शर्वः रुद्रः ॥ ६५ ॥ ६६ ॥ उक्तमर्थं पुनः संग्रहेणाह--सिद्धिं सर्वाणि भूतानीति । भूतानां प्रभुः उक्तब्रह्मरुद्राद्यधिपतिः, परिशेषाद्विष्णुरित्यवगम्यते । पन्थाः गोचरः येषां ते पथिगोचराः मार्गवर्तिनः ॥ ६७ ॥ तादिति । तत्तस्मात्

ब्रह्मा स्वयम्भूर्भगवान् देवाश्चैव दिशन्तु मे । सिद्धिमग्निश्च वायुश्च पुरुहूतश्च वज्रभृत् ॥ ६५ ॥ वरुणः पाशहस्तश्च सोमादित्यौ तथैव च । अश्विनौ च महात्मानौ मरुतः शर्व एव च ॥ ६६ ॥ सिद्धिं सर्वाणि भूतानि भूतानां चैव यः प्रभुः । दास्यन्ति मम ये चान्ये ह्यदृष्टाः पथिगोचराः ॥ ६७ ॥ तदुन्नसं पाण्डुरदन्तमव्रणं शुचिस्मितं पद्मपलाशलोचनम् । द्रक्ष्ये तदार्यावदनं कदान्वहं प्रसन्नताराधिपतुल्यदर्शनम् ॥ ६८ ॥ क्षुद्रेण पापेन नृशंसकर्मणा सुदारुणालंकृतवेषधारिणा । बलाभिभूता ह्यबला तपस्विनी कथं नु मे दृष्टिपथेऽद्य सा भवेत् ॥ ६९ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

स मुहूर्तमिव ध्यात्वा मनसा चाधिगम्य ताम् । अवप्लुतो महातेजाः प्राकारं तस्य वेश्मनः ॥ १ ॥

स तु संहृष्टसर्वाङ्गः प्राकारस्थो महाकपिः । पुष्पिताग्रान् वसन्तादौ ददर्श विविधान् द्रुमान् ॥ २ ॥

कारणात् । उन्नता नासिका यस्य तदुन्नसम् । "उपसर्गाच्च" इति समासान्तोऽच् प्रत्ययः नसादेशश्च । अव्रणम् अनवद्यम् । तत् अभिज्ञाततत्वेन रामेण निवेदितम् ॥ ६८ ॥ सुदारुणालंकृतवेषधारिणा सुदारुणत्वेऽप्यापातप्रसन्नवेषधारिणा ॥ ६९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने त्रयोदशः सर्गः ॥ १३ ॥ स मुहूर्तमित्यादि । इवशब्दो वाक्यालङ्कारे । प्राकारम् अशोकवनिकाप्राकारम् । तस्य वेश्मनः रावणस्य गृहात् । अवप्लुतः प्राप्तः ॥१॥ स त्विति । संहृष्टसर्वाङ्गः पुलकितसर्वाङ्गः । वसन्तादौ "पौर्णमास्या मासान् संपाद्य" इति पक्षमनुसृत्य फाल्गुन

दास्यन्ति ददतीत्यर्थः । पथिगोचराः अदृष्टाश्च ये ते सिद्धिं दास्यन्ति ॥ ६७ ॥ तदिति । समुन्नता नासा यस्य तत् समुन्नसम् । अव्रणमनवद्यम् ॥६८॥ क्षुद्रेणेति । सुदारुणत्वेऽप्यलंकृतवेषधारिणा प्रसन्नवेषधारिणा, रावणेनेति शेषः ॥ ६९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां त्रयोदशस्सर्गः ॥१३॥ स इति । ताम् अशोकवनिकाम् मनसा अधिगम्य, तत्र मनो निधायेत्यर्थः । तस्य रावणस्य । वेश्मनः वेश्मप्राकारादित्यर्थः ।

पौर्णमासीप्रपूर्वदिनत्वेन वसन्तादावित्युक्तम् ॥ २ ॥ सालान् सर्जकान् । भव्यान् शुभानित्यशोकविशेषणम् । यद्वा भवं रुद्रमर्हन्तीति भव्यान् रुद्रप्रियपुष्पान् वृक्षविशेषान् । उद्दालकान् बहुवारकान् । नागवृक्षान् नागकेसरवृक्षान् । कपिमुखान् मर्कटकान् ॥ ३ ॥ ४ ॥ स प्रविश्येत्यादि ।

सालानशोकान् भव्यांश्च चम्पकांश्च सुपुष्पितान् । उद्दालकान्नागवृक्षांश्चूतान् कपिमुखानपि ॥ ३ ॥ अथाम्रवण संछन्नां लताशतसमावृताम् । ज्यामुक्त इव नाराचः पुप्लुवे वृक्षवाटिकाम् ॥ ४ ॥ स प्रविश्य विचित्रां तां विहगैरभिनादिताम् । राजतैः काञ्चनैश्चैव पादपैः सर्वतो वृताम् ॥ ५ ॥ विहगैर्मृगसङ्घैश्च विचित्रां चित्रकाननाम् । उदितादित्यसङ्काशां ददर्श हनुमान् कपिः ॥ ६ ॥ वृतां नानाविधैर्वृक्षैः पुष्पोपगफलोपगैः । कोकिलैर्भृङ्गराजैश्च मत्तैर्नित्यनिषेविताम् ॥ ७ ॥ प्रहृष्टमनुजे काले मृगपक्षिसमाकुले । मत्तबर्हिणसंघुष्टां नानाद्विजगणायुताम् ॥८॥ मार्गमाणो वरारोहां राजपुत्रीमनिन्दिताम् । सुखप्रसुप्तान् विहगान् बोधयामास वानरः ॥९॥ उत्पतद्भिर्द्विजगणैः पक्षैः सालाः समाहताः । अनेकवर्णा विविधा मुमुचुः पुष्पवृष्टयः ॥ १० ॥ पुष्पावकीर्णः शुशुभे हनुमान् मारुतात्मजः । अशोकवनिकामध्ये यथा पुष्पमयो गिरिः ॥ ११ ॥ दिशः सर्वाः प्रधावन्तं वृक्षषण्डगतं कपिम् । दृष्ट्वा सर्वाणि भूतानि वसन्त इति मेनिरे ॥ १२ ॥

काञ्चनैः काञ्चनमयैरिव स्थितैः ॥ ५ ॥ चित्रकाननां चित्रावान्तरवनाम्, चम्पकवनं चूतवनमित्येवंविधवनवतीम् ॥ ६ ॥ पुष्पाण्युपगच्छन्तीति पुष्पोपगाः पुष्पसंपन्नाः तैः, फलोपगैः फलसंपन्नैः ॥ ७ ॥ प्रहृष्टमनुजे काले वसन्ते । वसन्तस्य प्रचुरमन्मथत्वात् प्रहृष्टमनुजत्वम् ॥ ८ ॥ ९ ॥ सालाः वृक्षाः । "अनोकहः कुटः सालः" इत्यमरः । पुष्पवृष्टयः पुष्पवृष्टीः ॥ १०–१४ ॥

प्राकारं वनप्राकारम्, अवप्लुतः प्राप्तः ॥ १–३ ॥ अथेति । आम्रवणं चूतवनम् ॥ ४ ॥ ५ ॥ चित्रकाननां चित्रद्रुमषण्डाम् ॥ ६ ॥ पुष्पोपगफलोपगैः पुष्पाण्युपगच्छन्तीति पुष्पोपगाः पुष्पसंपन्नाः । एवं फलोपगाः ॥ ७ ॥ प्रहृष्टमनुजे प्रहृष्टजने काले, वसन्तादावित्यर्थः ॥ ८ ॥ ९ ॥ पुष्पवृष्टयः पुष्पवृष्टीः ॥ १०–१४ ॥

धूर्ताः अक्षधूर्ताः ॥ १५ ॥ १६ ॥ स्कन्धमात्राश्रयाः पुष्पादीनामनाश्रया इत्यर्थः । अत एव अगमाः अगम्याः, असेव्या इत्यर्थः । निर्धुताः कम्पिताः ॥ १७ ॥ निर्धूतेति । मृदितवर्णका मृष्टाङ्गरागा । "अङ्गरागस्समालम्भो वर्णकश्च विलेपनम्" इत्युक्तेः । निष्पीतशुभदन्तोष्ठी निष्पीततया शुभदन्त

वृक्षेभ्यः पतितैः पुष्पैरवकीर्णा पृथग्विधैः । रराज वसुधा तत्र प्रमदेव विभूषिता ॥ १३ ॥ तरस्विना ते तरव स्तरसाऽभिप्रकम्पिताः । कुसुमानि विचित्राणि ससृजुः कपिना तदा ॥ १४ ॥ निर्धूतपत्रशिखराः शीर्णपुष्पफलद्रुमाः । निक्षिप्तवस्त्राभरणा धूर्ता इव पराजिताः ॥ १५ ॥ हनूमता वेगवता कम्पितास्ते नगोत्तमाः । पुष्पपर्णफलान्याशु मुमुचुः पुष्पशालिनः ॥ १६ ॥ विहङ्गसङ्घैर्हीनास्ते स्कन्धमात्राश्रया द्रुमाः । बभूवुरगमाः सर्वे मारुतेनेव निर्धुताः ॥ १७ ॥ निर्धूतकेशी युवतिर्यथा मृदितवर्णका । निष्पीतशुभदन्तोष्ठी नखैर्दन्तैश्च विक्षता ॥ १८ ॥ तथा लांगूल हस्तैश्च चरणाभ्यां च मर्दिता । बभूवाशोकवनिका प्रभग्नवरपादपा ॥ १९ ॥ महालतानां दामानि व्यधमत्तरसा कपिः । यथा प्रावृषि विन्ध्यस्य मेघजालानि मारुतः ॥ २० ॥ स तत्र मणिभूमीश्च राजतीश्च मनोरमाः । तथा काञ्चनभूमीश्च ददर्श विचरन् कपिः ॥ २१ ॥ वापीश्च विविधाकाराः पूर्णाः परमवारिणा । महार्हैर्मणिसोपानैरुपपन्ना स्ततस्ततः ॥ २२ ॥ मुक्ताप्रवालसिकताः स्फाटिकान्तरकुट्टिमाः । काञ्चनैस्तरुभिश्चित्रैस्तीरजैरुपशोभिताः ॥ २३ ॥ फुल्लपद्मोत्पलवनाश्चक्रवाकोपकूजिताः । नत्यूहरुतसंघुष्टा हंससारसनादिताः ॥ २४ ॥ दीर्घाभिर्द्रुमयुक्ताभिः सरिद्भिश्च समन्ततः । अमृतोपमतोयाभिः शिवाभिरुपसंस्कृताः ॥ २५ ॥

तुल्योष्ठी ॥ १८ ॥ १९ ॥ महालतानामिति । लतानां दामानि प्रतानानि ॥ २०-२३ ॥ नत्यूहाः दात्यूहाः ॥ २४ ॥ २५ ॥



निर्धूतेति । धूर्ताः अक्षधूर्ताः ॥ १५ ॥ १६ ॥ स्कन्धमात्राश्रयाः स्कन्धानामेवाश्रयाः न तु पत्रपुष्पादीनाम् । अत एवागमाः अगम्याः, असेव्या इति यावत् । निर्धुताः कम्पिताः ॥ १७ ॥ मृदितवर्णका मृदिताङ्गरागा ॥ १८ ॥ १९ ॥ दामानि समूहान् ॥ २० ॥ २१ ॥ वापीरित्यादि सार्धश्लोकचतुष्टयमेकं वाक्यम् ।

सन्तानकाः कल्पवृक्षास्तैस्समावृताः । घनाः निबिडाः । नानागुल्मावृताश्च ताः घनाश्चेति समासः । करवीरकृतान्तराः करवीरैः कृतविशेषाः ॥२६॥२७॥
जगति लोके रम्यम्, एतत्सदृशं रम्यं किंचिन्नास्तीत्यर्थः । पर्वतं ददर्शेत्यन्वयः ॥ २८ ॥ रामानु०—शिलागृहैरिति । जगतिपर्वतं जगतीशब्दस्य



लताशतैरवतताः सन्तानकसमावृताः । नानागुल्मावृतघनाः करवीरकृतान्तराः ॥ २६ ॥ ततोऽम्बुधरसङ्काशं प्रवृद्धशिखरं गिरिम् । विचित्रकूटं कूटैश्च सर्वतः परिवारितम् ॥ २७ ॥ शिलागृहैरवततं नानावृक्षैः समावृतम् । ददर्श हरिशार्दूलो रम्यं जगति पर्वतम् ॥ २८ ॥ ददर्श च नगात्तस्मान्नदीं निपतितां कपिः । अङ्कादिव समुत्पत्य प्रियस्य पतितां प्रियाम् ॥ २९ ॥ जले निपतिताग्रैश्च पादपैरुपशोभिताम् । वार्यमाणामिव क्रुद्धां प्रमदां प्रियबन्धुभिः ॥ ३० ॥ पुनरावृत्ततोयां च ददर्श स महाकपिः । प्रसन्नामिव कान्तस्य कान्तां पुनरुपस्थिताम् ॥ ३१ ॥ तस्यादूरात्स पद्मिन्यो नानाद्विजगणायुताः । ददर्श हरिशार्दूलो हनुमान् मारुतात्मजः ॥ ३२ ॥ कृत्रिमां दीर्घिकां चापि पूर्णां शीतेन वारिणा । मणिप्रवरसोपानां मुक्तासिकतशोभिताम् ॥ ३३ ॥

ह्रस्वभाव आर्षः । जगती भूमिः मृदिति यावत् । तत्प्राधान्याज्जगतिपर्वतमित्युक्तम् । यद्वा जगतिपर्वत इति संज्ञा ॥ २८ ॥ अथ नद्याः कुपितया निर्गतया सखीसान्त्वनेन पुनरागतया साम्यं दर्शयति—ददर्श चेति । पुनरावृत्ततोयां वृक्षाग्रप्रतिहत्या पुनः पर्वताभिमुखतोयप्रवाहाम् । उपमाने उपमेये चान्वयाय ददर्शेति पदद्वयम् ॥ २९–३१ ॥ तस्येति । तस्य पर्वतस्य । पद्मिन्यः पद्मिनीः ॥ ३२ ॥ कृत्रिमां क्रियया निर्वृत्ताम्, निर्मितामित्यर्थः ॥ ३३–३५ ॥

उक्तविशेषणविशिष्टा वापीर्ददर्शेति पूर्वेणान्वयः ॥ २२–२५ ॥ लताशतैरिति । सन्तानकुसुमावृताः कल्पवृक्षकुसुमावृताः । करवीरकृतान्तराः करवीरैः कृतविशेषाः ॥ २६ ॥ गिरिं क्रीडापर्वतम् । तस्य विशेषणं जगतिपर्वतमिति । ह्रस्व आर्षः । जगती भूमिः, मृदिति यावत् । तत्प्राधान्याज्जगतिपर्वतमित्युक्तिः ॥ २७ ॥ २८ ॥ ददर्शेति । निपतितां निर्गताम् । अस्या नद्याः कुपितकान्तासाम्यं सार्धश्लोकद्वयेनाह—अङ्कादिति । पतितां क्रोधान्निर्गताम् । जले निपतिताग्रैः पादपैः प्रियबन्धुभिः वार्यमाणां क्रुद्धां प्रमदामिव शोभिताम् अत एव कान्तस्य प्रसन्नामत एव पुनरुपस्थितां कान्तामिव पुनरावृत्ततोयां ददर्शेति सम्बन्धः ॥ २९–३१ ॥ तस्येति । पद्मिन्यः पद्मिनीः ॥ ३२ ॥ कृत्रिमां दीर्घिकामित्यादिसार्धश्लोकद्वयस्य ददर्शेति पूर्वक्रियया सम्बन्धः ॥ ३३–३५ ॥

ये केचिदिति । सच्छत्राः सविताना इत्यर्थः। सवितर्दिकाः सवेदिकाः। सौवर्णवेदिकाः वितर्दिकारोहणार्थं सुवर्णमयसोपानवेदिकायुक्ताः ॥ ३६–३९ ॥ तामिति । काञ्चनैस्तरुगणैः उपलक्षितां तां शिंशुपाम् । किङ्किणीशतनिर्घोषाम्, किङ्किण्यः क्षुद्रघण्टिकाः तासां निर्घोषो यस्याः । यद्वा किङ्किणीभिः

विविधैर्मृगसङ्घैश्च विचित्रां चित्रकाननाम् । प्रासादैः सुमहद्भिश्च निर्मितैर्विश्वकर्मणा ॥ ३४ ॥ काननैः कृत्रिमैश्चापि सर्वतः समलंकृताम् ॥ ३५ ॥ ये केचित् पादपास्तत्र पुष्पोपगफलोपगाः । सच्छत्राः सवितर्दीकाः सर्वे सौवर्णवेदिकाः ॥ ३६ ॥ लताप्रतानैर्बहुभिः पर्णैश्च बहुभिर्वृताम् । काञ्चनीं शिंशुपामेकां ददर्श हनुमान् कपिः । वृतां हेममयीभिस्तु वेदिकाभिः समन्ततः ॥३७॥ सोऽपश्यद्भूमिभागांश्च गर्तप्रस्रवणानि च । सुवर्णवृक्षानपरान् ददर्श शिखिसन्निभान् ॥३८॥ तेषां द्रुमाणां प्रभया मेरोरिव दिवाकरः । अमन्यत तदा वीरः काञ्चनोऽस्मीति वानरः ॥ ३९ ॥ तां काञ्चनैस्तरुगणैर्मारुतेन च वीजिताम् । किङ्किणीशतनिर्घोषां दृष्ट्वा विस्मयमागमत् ॥ ४० ॥ स पुष्पिताग्रां रुचिरां तरुणाङ्कुरपल्लवाम् । तामारुह्य महाबाहुः शिंशुपां पर्णसंवृताम् ॥ ४१ ॥ इतो द्रक्ष्यामि वैदेहीं रामदर्शनलालसाम् । इतश्चेतश्च दुःखार्तां संपतन्तीं यदृच्छया ॥ ४२ ॥ अशोकवनिका चेयं दृढं रम्या दुरात्मनः । चम्पकैश्चन्दनैश्चापि वकुलैश्च विभूषिता ॥ ४३ ॥

शतमनन्ताः निर्घोषा यस्याः सा ताम् ॥४०॥ स पुष्पिताग्रामित्याद्यासर्गसमाप्त्येकं वाक्यम् ॥ ४१ ॥ इतो द्रक्ष्यामि इमामारुह्य द्रक्ष्यामि । ल्यब्लोपे पञ्चमी ॥ ४२ ॥ दुरात्मनः रावणस्य ॥ ४३–४५ ॥

सच्छत्रा इत्येतत् शयनासनादीनामप्युपलक्षणम् । सवितर्दीकाः सौवर्णवेदिकाश्चेति महावेदिकोपरिकृतकाञ्चनवेदिकाः, आसन्निति शेषः ॥ ३६ ॥ लताप्रतानैरिति सार्धश्लोकमेकं वाक्यम् ॥ ३७ ॥ ३८ ॥ तेषामिति । मेरोः प्रभयेव द्रुमाणां प्रभया काञ्चनः काञ्चनमयोऽस्मीत्यमन्यत ॥ ३९ ॥ तामिति । काञ्चनैस्तरुगणैरुपलक्षितां शिंशुपां दृष्ट्वा ॥ ४० ॥ स पुष्पिताग्रामिति । शिंशुपामारुह्य वक्ष्यमाणमचिन्तयदिति शेषः ॥ ४१ ॥ चिन्ताप्रकारमेवाह–इतो द्रक्ष्यामीत्यादिना ॥ ४२ ॥ चन्दनादिभिर्भूषिता रम्येयमशोकवनिका दुरात्मनो रावणस्य रावणसम्बन्धिनी । दृढं ध्रुवम् ॥ ४३ ॥

अथवेति पक्षान्तरे । विचक्षणा तापापनोदनचतुरा । अस्य वनस्य अशोकवनस्य । इह वनं नलिनीपरिसरवर्तिवनम् । रामचिन्तानुकर्शिता सती एष्यति । रामविश्लेषजनिततापापनोदनार्थमेतद्वनप्रदेशमागमिष्यतीत्यर्थः । सा आर्येति पदच्छेदः ॥ ४६ ॥ एष्यते एष्यति ॥ ४७ ॥ वनेचराणां स्पृहयते

इयं च नलिनी रम्या द्विजसङ्घनिषेविता । इमां सा राममहिषी नूनमेष्यति जानकी ॥ ४४ ॥ सा रामा राममहिषी राघवस्य प्रिया सती । वनसञ्चारकुशला नूनमेष्यति जानकी ॥४५॥ अथवा मृगशावाक्षी वनस्यास्य विचक्षणा । वनमेष्यति साऽऽर्येह रामचिन्तानुकर्शिता ॥ ४६ ॥ रामशोकाभिसंतप्ता सा देवी वामलोचना । वनवासे रता नित्य मेष्यते वनचारिणी ॥ ४७ ॥ वनेचराणां सततं नूनं स्पृहयते पुरा । रामस्य दयिता भार्या जनकस्य सुता सती ॥ ४८ ॥ सन्ध्याकालमनाः श्यामा ध्रुवमेष्यति जानकी । नदीं चेमां शिवजलां सन्ध्यार्थे वरवर्णिनी ॥ ४९ ॥ तस्याश्चाप्यनुरूपेयमशोकवनिका शुभा । शुभा या पार्थिवेन्द्रस्य पत्नी रामस्य सम्मता ॥ ५० ॥ यदि जीवति सा देवी ताराधिपनिभानना । आगमिष्यति साऽवश्यमिमां शिवजलां नदीम् ॥ ५१ ॥

वनेचरेभ्यस्स्पृहयते ॥४८॥ सन्ध्याकाले मनः यस्यास्सा सन्ध्याकालमनाः, सन्ध्योपासनतत्परेत्यर्थः । सन्ध्यार्थे एष्यति, प्रतिदिनमिति शेषः ॥४९–५१॥

इयमिति । द्विजसङ्घनिषेविता इयं च नलिनी रम्या, सा राममहिषी इमां नलिनीं नूनमेष्यतीति योजना ॥ ४४ ॥ वनसञ्चारकुशला राममहिषीत्वादुद्यानवनसञ्चार चतुरेत्यर्थः ॥ ४५ ॥ अथवेति पक्षान्तरे । वनस्यास्य अशोकवनस्य विचक्षणा वनसम्बन्धिसुखानुभवचतुरेत्यर्थः । इह वनं नलिनीपरिसरवर्तिवनम् । वने चराणां स्पृहयते, कुशलमिति शेषः ॥ ४६–४८ ॥ सन्ध्याकालमनाः सन्ध्याकाले मनो यस्यास्सा तथा, सन्ध्यावन्दनतत्परेत्यर्थः ॥ ४९–५१ ॥

ति० -सन्ध्या दिनरात्र्योः सन्धिरूपाऽनुष्ठानकालो यस्य कर्मणस्तत्र मनो यस्यास्सा तथा । सन्ध्यार्थे सन्ध्याकालक्रियमाणस्नानाद्यर्थे । पूर्ववदेवात्राप्युक्तस्यैवार्थस्यावृत्तिः । रात्रिशेषे हनुमतोऽस्य वचसः प्रवृत्तेः सन्ध्याशब्देनात्र प्रातःकालो विवक्षितः । तत्र कर्तव्यस्नानादौ चास्त्येव स्त्रीणामप्यधिकार इति कथं स्त्रीणां सन्ध्यावन्दनमिति परास्तं वेदितव्यम् । किञ्च सम्यग्भगवद्ध्यानस्यैव सन्ध्यापदार्थत्वेनास्त्येव तत्र स्त्रिया अधिकारः । गायत्रीमन्त्रेण तदर्थस्मरणपूर्वकध्याने तु द्विजस्यैवाधिकार इत्यन्यत् ॥ ४९ ॥

पर्णघने पर्णसमूहे। महात्मा स हनुमान्। पुष्पिताग्रत्नादिविशिष्टां तामारुह्य इतो द्रक्ष्यामीत्यारभ्य आगमिष्यति साऽवश्यमिमां शिवजलां नदीमित्यन्तेन यः प्रकार उक्तः एवमुक्तप्रकारेण मत्वा मनुजेन्द्रपत्नीं प्रतीक्षमाणः अवेक्षमाणः मार्गमाणः सुपुष्पिते पर्णघने निलीनश्च सन् सर्वं ददर्शेत्यन्वयः ॥ ५२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥

एवं तु मत्वा हनुमान् महात्मा प्रतीक्षमाणो मनुजेन्द्रपत्नीम्। अवेक्षमाणश्च ददर्श सर्वं सुपुष्पिते पर्णघने निलीनः ॥ ५२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

स वीक्षमाणस्तत्रस्थो मार्गमाणश्च मैथिलीम्। अवेक्षमाणश्च महीं सर्वां तामन्ववैक्षत ॥१॥ सन्तानकलताभिश्च पादपैरुपशोभिताम्। दिव्यगन्धरसोपेतां सर्वतः समलंकृताम् ॥ २ ॥ तां स नन्दनसङ्काशां मृगपक्षिभिरावृताम्। हर्म्यप्रासादसंबाधां कोकिलाकुलनिस्वनाम् ॥ ३ ॥ काञ्चनोत्पलपद्माभिर्वापीभिरुपशोभिताम्। बह्वासनकुथोपेतां बहुभूमिगृहायुताम् ॥४॥ सर्वर्तुकुसुमै रम्यां फलवद्भिश्च पादपैः। पुष्पितानामशोकानां श्रिया सूर्योदयप्रभाम् ॥५॥

स वीक्षमाण इत्यादि। सः तत्रस्थः शिंशुपास्थः। मैथिलीं मार्गमाणः मैथिलीमार्गणाद्धेतोः। "लक्षणहेत्वोः क्रियायाः" इति शानच्। वीक्षमाणः विविधं चक्षुर्विक्षिपन् महीं चावेक्षमाणः सर्वां ताम् अशोकवनिकाम् अन्ववैक्षतेत्यन्वयः ॥ १–३ ॥ बह्वासनैः कुथैः आस्तरणैश्चोपेताम्। भूमिगृहाणि बिलगृहाणि ॥ ४ ॥ सर्वर्तुकुसुमैः पादपैः रम्यामित्यन्वयः। सूर्योदयप्रभाम् उद्यत्सूर्यप्रभाम् ॥ ५ ॥

एवमिति। पर्णघने पर्णसान्द्रे पूर्वोक्तशिंशुपावृक्षे निलीनः, अभूदिति शेषः ॥५२॥ इति श्रीमहे० श्रीरामायणतत्त्व सुन्दरकाण्डव्याख्यायां चतुर्दशः सर्गः ॥ १४ ॥

स वीक्षमाण इति। सः हनुमान्। तत्रस्थः शिंशुपापर्णघनस्थः। शिंशुपा तीक्ष्णधारः। मैथिलीं मार्गमाणः मैथिलीमार्गणाद्धेतोः "लक्षणहेत्वोः क्रियायाः" इति शानच्। वीक्षमाणः विविधं चक्षुर्विक्षिपन्। महीं चावेक्षमाणः महीं प्रत्यधोवीक्षणं कुर्वन् सर्वां तामशोकवनिकामन्ववैक्षतेत्यन्वयः ॥ १–३ ॥ बह्वासनकुथोपेतां बह्वासनैः कुथास्तरणैश्चोपेताम्। भूमिगृहाः भूबिलगृहाः ॥ ४ ॥ सर्वर्तुकुसुमैः सर्वर्तुषु कुसुमानि येषु तैः पादपैरुपलक्षिताम्। सूर्योदयप्रभाम् उद्यत्सूर्यप्रभा

विहगैः निष्पत्रशाखां क्रियमाणामिव स्थिताम्। युगपत्पातिपक्षिपक्षविहतपत्रतया पत्ररहितशाखामिव स्थितामित्यर्थः ॥ ६ ॥ पुष्पावतंसकैः चञ्चु पुटलग्नपुष्पालंकृतैरित्यर्थः । आमूलेति । आमूलं पुष्पैर्निचितैः व्याप्तैः । पुन्नागादौ तथा दृष्टम् ॥ ७ ॥ पुष्पभारः पुष्पसमूहः स एवातिभारो

प्रदीप्तामिव तत्रस्थो मारुतिः समुदैक्षत । निष्पत्रशाखां विहगैः क्रियमाणामिवासकृत् ॥६॥ विनिष्पतद्भिः शतश श्चित्रैः पुष्पावतंसकैः । आमूलपुष्पनिचितैरशोकैः शोकनाशनैः ॥ ७ ॥ पुष्पभारातिभारैश्च स्पृशद्भिरिव मेदि नीम् । कर्णिकारैः कुसुमितैः किंशुकैश्च सुपुष्पितैः ॥ ८ ॥ स देशः प्रभया तेषां प्रदीप्त इव सर्वतः । पुन्नागाः सप्त पर्णाश्च चम्पकोद्दालकास्तथा ॥९॥ विवृद्धमूला बहवः शोभन्ते स्म सुपुष्पिताः । शातकुम्भनिभाः केचित् केचि दग्निशिखोपमाः । नीलाञ्जननिभाः केचित्तत्राशोकाः सहस्रशः ॥ १० ॥ नन्दनं विविधोद्यानं चित्रं चैत्ररथं यथा । अतिवृत्तमिवाचिन्त्यं दिव्यं रम्यं श्रियावृतम् ॥ ११ ॥ द्वितीयमिव चाकाशं पुष्पज्योतिर्गणायुतम् । पुष्परत्नशतै श्चित्रं पञ्चमं सागरं यथा ॥१२॥ सर्वर्तुपुष्पैर्निचितं पादपैर्मधुगन्धिभिः । नानानिनादैरुद्यानं रम्यं मृगगणैर्द्विजैः ॥ १३ ॥

येषां तैः । अशोकैरित्यादावुपलक्षणे तृतीया । अशोकादिभिरुपलक्षितां समुदैक्षतेति पूर्वेणान्वयः ॥ ८–१० ॥ पुनरशोकवनं विविधोपमानदर्शनेन वर्णयति–नन्दनमित्यादिना श्लोकचतुष्टयेन । उद्यानम् अशोकवनम् । अत्र ददर्शेत्यपकृष्यते । नन्दनम् इन्द्रक्रीडावनम् । विविधोद्यानं विविधवृक्षषण्डम् । चैत्ररथं कुबेरक्रीडावनम् । नन्दनमतिवृत्तमिव अतिक्रम्य स्थितामिव । चैत्ररथं यथा चैत्ररथमिव चित्रामित्यन्वयः । आकाशसाम्ये

मित्यर्थः ॥ ५ ॥ ६ ॥ पुष्पावतंसकैः पुष्पाण्यवतंसवत् प्रतीयमानानि येषां पक्षिणां तैः, युगपत्पातिबहुपक्षिपक्षपिहितपर्णतया पत्ररहितशाखामिव स्थितामित्यर्थः । किञ्च आमूलपुष्पनिचितैः मूलादारभ्य पुष्पपूर्णैः ॥ ७ ॥ पुष्पभारः पुष्पसमूहः । कुसुमितैः कर्णिकारादिभिरुपलक्षिताम् । अशोकवनिकामन्ववैक्षतेति पूर्वेण सम्बन्धः ॥ ८ ॥ स इति । तेषां वृक्षाणाम् प्रदीप्त इव, स्थित इति शेषः । पुन्नागा इत्यादि श्लोकद्वयमेकं वाक्यम् ॥ ९ ॥ १० ॥ अथ पुनः प्रकारान्तरेणाशोकवनं वर्णयति–नन्दनमित्यादिना। विविधोद्यानं नानाविधावान्तरवनं चित्रं यन्नन्दनम् इन्द्रोद्यानं, चैत्ररथं कुबेरोद्यानम्, तदुभयमतिवृत्तमतिक्रान्तमिव स्थितमित्यर्थः ।

साधारणधर्ममाह पुष्पेति । एवं सागरौपम्ये पुष्परत्नेति ॥ ११–१४ ॥ अशोकवनिकायामित्यादि । चैत्यप्रासादं चैत्यं बुद्धमन्दिरं तदाकारं प्रासादम् ॥ १५ ॥ १६ ॥ प्रांशुभावत्वात् दीर्घस्वभावत्वात् ॥ १७ ॥ मलिनसंवीतां मलिनवस्त्रेणावृताम्, मलिनैरङ्गैः संवीतां वा ॥ १८ ॥

अनेकगन्धप्रवहं पुण्यगन्धं मनोरमम् । शैलेन्द्रमिव गन्धाढ्यं द्वितीयं गन्धमादनम् ॥ १४ ॥ अशोकवनिकायां तु तस्यां वानरपुङ्गवः । स ददर्शाविदूरस्थं चैत्यप्रासादमुच्छ्रितम् ॥ १५ ॥ मध्ये स्तम्भसहस्रेण स्थितं कैलासपाण्डुरम् । प्रवालकृतसोपानं तप्तकाञ्चनवेदिकम् ॥ १६ ॥ मुष्णन्तमिव चक्षूंषि द्योतमानमिव श्रिया । विमलं प्रांशुभावत्वादुल्लिखन्तमिवाम्बरम् ॥ १७ ॥ ततो मलिनसंवीतां राक्षसीभिः समावृताम् । उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः ॥१८॥ ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् । मन्दं प्रख्यायमानेन रूपेण रुचिरप्रभाम् ॥ १९ ॥ पिनद्धां धूमजालेन शिखामिव विभावसोः । पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा ॥ २० ॥ सपङ्कामनलङ्कारां विपद्मामिव पद्मिनीम् । व्रीडितां दुःखसंतप्तां परिम्लानां तपस्विनीम् ॥ २१ ॥ ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम् । अश्रुपूर्णमुखीं दीनां कृशामनशनेन च ॥ २२ ॥

शुक्लपक्षादावित्यनेन वार्धिष्णुत्वं द्योतितम् । मन्दं प्रख्यायमानेन इदं तदिति कथञ्चित्प्रत्यभिज्ञायमानेन रूपेणोपलक्षिताम् ॥ १९ ॥ पिनद्धामिति मलिनसंवीतत्वे उपमा । पिनद्धां बद्धाम् । उत्तरीयराहित्यं द्योतयितुमेकेनेत्युक्तिः ॥ २० ॥ सपङ्कां भूमेराविर्भवन्तीमिव स्थिताम् । अनलङ्कारां पङ्कं निवर्त्य अलङ्कुर्वतोऽसन्निधानादलङ्काररहिताम् । रामागमनेऽप्ययमाश्रयो नोत्सादयितुमर्हतीत्येवं मन्यमानाम् । विपद्मामिव पद्मिनीं पद्मरहितां सरसीमिव स्थिताम् ॥ २१ ॥ ग्रहेण क्रूरग्रहेण । द्वितीय इवशब्दो वाक्यालङ्कारे । अश्विवति । कृशां दीनामिति पुनःपुनरुक्तिः कार्श्यदैन्ययोरतिशय



पुष्पज्योतिर्गणायुतम् पुष्पाण्येव ज्योतिर्गणा नक्षत्रगणाः । उद्यानम् अशोकवनम्, अपश्यदिति शेषः॥११–१४॥ अशोकवनिकायामित्यादि श्लोकत्रयमेकं वाक्यम् । चैत्यप्रासादं बुद्धाण्डाकारप्रासादम् । प्रांशुभावत्वात् उन्नतस्वरूपत्वात् ॥१५–१७॥ तत इत्यारभ्य दुःखसन्तप्तां व्यसनानामकोविदाम् इत्यन्तस्य ग्रन्थस्य ददर्शेति क्रियया सम्बन्धः । मलिनसंवीतां मलिनवस्त्रोपेताम् ॥१८॥ मन्दं प्रख्यायमानेन इदं तदिति कथञ्चिदूह्यमानेन रूपेणोपलक्षिताम्॥१९॥ क्लिष्टेन जीर्णेन ॥२०–२३॥

प्रदर्शनाय । अत्र उपवासकृशां कृशामनशनेनेत्युक्त्या पूर्वकाण्डान्ते इन्द्रदत्तपायसाशनवृत्तान्तः कल्पित इति तत्रैवोक्तम् ॥ २२ ॥ २३ ॥ नीलनागाभया कृष्णसर्पतुल्यया ॥ २४ ॥ नीरदापाये शरदि ॥ २५ ॥ उपपादिभिः उपपादनशीलैः । मन्दं प्रख्यायमानेनेत्यारभ्य सीतां समीक्ष्य उपपादिभिः कारणैस्सीतेति तर्कयामासेत्यन्वयः ॥ २६ ॥ एवं लिङ्गैः सीतेति विचार्य प्रत्यभिज्ञयापि तथा तर्कयामासेत्याह–ह्रियमाणेति । इति तर्कया

शोकध्यानपरां दीनां नित्यं दुःखपरायणाम् । प्रियं जनमपश्यन्तीं पश्यन्तीं राक्षसीगणम् ॥ २३ ॥ स्वगणेन मृगीं हीनां श्वगणाभिवृतामिव । नीलनागाभया वेण्या जघनं गतयैकया ॥ २४ ॥ नीलया नीरदापाये वनराज्या महीमिव । सुखार्हां दुःखसंतप्तां व्यसनानामकोविदाम् ॥ २५ ॥ तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् । तर्कयामास सीतेति कारणैरुपपादिभिः ॥ २६ ॥ ह्रियमाणा तदा तेन रक्षसा कामरूपिणा । यथारूपा हि दृष्टा वै तथारूपेयमङ्गना ॥ २७ ॥ पूर्णचन्द्राननां सुभ्रूं चारुवृत्तपयोधराम् । कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः ॥ २८ ॥ तां नीलकेशीं बिम्बोष्ठीं सुमध्यां सुप्रतिष्ठिताम् । सीतां पद्मपलाशाक्षीं मन्मथस्य रतिं यथा ॥ २९ ॥ इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव । भूमौ सुतनुमासीनां नियतामिव तापसीम् ॥ ३० ॥ निश्वासबहुलां भीरुं भुजगेन्द्रवधूमिव । शोकजालेन महता विततेन न राजतीम् ॥ ३१ ॥

मासेति शेषः ॥ २७ ॥ पूर्णचन्द्राननामित्यारभ्य विद्यां प्रशिथिलामिवेत्यन्तमेकं वाक्यम् । सुभ्रूं सुभ्रुवम् । उवङभाव आर्षः । कुर्वन्तीमिति । दशमासान् स्नानेन विना मलिनापि प्रभया दिशः वितिमिराः कुर्वन्तीमिति प्रभातिशयोक्तिः ॥ २८ ॥ सुप्रतिष्ठितां सुप्रतिष्ठितपादतलाम् ॥ २९ ॥ ३० ॥ न राजतीं

नीलनागाभया कृष्णसर्पतुल्यया । वनराज्या उपलक्षितां महीमिव स्थिताम् ॥ २४ ॥ २५ ॥ तामिति । तां पूर्वोक्तविशेषणविशिष्टाम् । उपपादिभिः उपपादनशीलैर्वक्ष्यमाणलिङ्गैः सीतेति तर्कयामास, संशयितवानित्यर्थः ॥ २६ ॥ कारणान्येवाह–ह्रियमाणेति । अतः सीतेयमिति तर्कयामासेति पूर्वेण सम्बन्धः ॥ २७ ॥ पूर्णचन्द्रेत्यादि । सुभ्रूं सुभ्रुवम् ॥ २८ ॥ २९ ॥ चन्द्रप्रभामिवेति सर्वानन्दकरत्वमुक्तम् ॥ ३० ॥ भुजगेन्द्रवधूमिवेति दुष्प्रधर्षत्वम् ॥ ३१ ॥

न राजन्तीम् । तां प्रसिद्धाम् ॥ ३१ ॥ स्मृतिं मन्वाद्युक्तिम् । सन्दिग्धां सन्दिग्धार्थाम् । ऋद्धिं सम्पदम् । निपतितां क्षीणाम् ॥ ३२ ॥ विहताम् अविश्वासबहुलाम् । प्रतिहताम् अलब्धकार्याम् । सोपसर्गां सविघ्नाम् । सकलुषां सकालुष्याम् । भावप्रधानो निर्देशः ॥ ३३ ॥ अभूतेन

संसक्तां धूमजालेन शिखामिव विभावसोः । तां स्मृतीमिव सन्दिग्धामृद्धिं निपतितामिव ॥ ३२ ॥ विहतामिव च श्रद्धामाशां प्रतिहतामिव । सोपसर्गां यथा सिद्धिं बुद्धिं सकलुषामिव ॥ ३३ ॥ अभूतेनापवादेन कीर्तिं निपतिता मिव । रामोपरोधव्यथितां रक्षोहरणकर्शिताम् ॥ ३४ ॥ अबलां मृगशावाक्षीं वीक्षमाणां ततस्ततः । बाष्पाम्बु परिपूर्णेन कृष्णवक्राक्षिपक्ष्मणा ॥ ३५ ॥ वदनेनाप्रसन्नेन निःश्वसन्तीं पुनः पुनः ॥ ३६ ॥ मलपङ्कधरां दीनां मण्ड नार्हाममण्डिताम् । प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम् ॥ ३७ ॥ तस्य सन्दिदिहे बुद्धिर्मुहुः सीतां निरीक्ष्य तु । आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥ ३८ ॥ दुःखेन बुबुधे सीतां हनुमाननलंकृताम् । संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥ ३९ ॥

असत्येन । रामोपरोधव्यथितां रामप्राप्तिनिरोधेन व्यथिताम् ॥ ३४–३७ ॥ पुनः सीताशब्दो व्यवहितानुस्मरणार्थः । आम्नायानां वेदानाम् । अयोगेन असम्बन्धेन । प्रशिथिलाम् अप्राप्तप्रतिष्ठाम् । विद्यां वेदबाह्यविद्याम् । यद्वा आम्नायानाम् अभ्यासानामभावेन प्रशिथिलाम् अस्थिरपदां विद्यामिव सीतां निरीक्ष्य तस्य हनुमतो बुद्धिः सन्दिदिहे इत्यन्वयः । कार्श्यमालिन्यादिना तिरोहितरूपत्वादिति भावः ॥ ३८ ॥ दुःखेनेति । संस्कारः शब्द व्युत्पत्तिः तेन हीनाम् अत एव विवक्षितादर्थान्तरं गतां विपरीतार्थामित्यर्थः । संस्कारहीनतया प्रतिपिपादयिषितार्थं वक्तुमशक्नुवन्तीमविवक्षितमर्थं

शिखामिव विभावसोरिति पातिव्रत्यम् । तां प्रसिद्धाम् । स्मृतिः मन्वादिवाक्यम् । दीर्घस्त्वार्षः । सन्दिग्धां संन्दिग्धार्थाम् ॥ ३२ ॥ सोपसर्गां सान्तरायाम् । सकलुषां सकपटाम् ॥ ३३ ॥ अभूतेनापवादेन मिथ्यापवादेन । रामोपरोधव्यथितां रामप्राप्तिनिरोधेन व्यथिताम् ॥ ३४–३७ ॥ तस्य हनूमतः बुद्धिः सन्दिदिहे कार्श्यमालिन्यादिना तिरोहितत्वादिति भावः । आम्नायानामयोगेन अभ्यासानामभावेन ॥ ३८ ॥ दुःखेनेति । दुःखेन कृच्छ्रेण । संस्कारेण यथा हीनां

स०–रामोपरोधव्यथितां रामाभिः राक्षसस्त्रीभिः य उपरोधः इतस्ततोगमनप्रतिबन्धस्तेन व्यथिताम् ॥ ३४ ॥

बोधयन्तीं वाचमिव । सम्यग्व्युत्पत्त्यभावादर्थान्तरं गतां व्युत्पत्त्यनन्तरं स्वार्थं प्रतिपादयन्तीमिव स्थितामित्यर्थः ॥ ३९ ॥ ४० ॥ वैदेह्या इति । शाखायां शोभन्त इति शाखाशोभीनि । भर्तृविरहकाले भूषणधारणस्यानुचितत्वात् स्वाङ्गेभ्य उन्मुच्य शाखायां न्यस्तानीत्यर्थः ॥ ४१ ॥ कर्णवेष्टौ कुण्डले। " कर्णिका तालपत्रं स्यात्कुण्डलं कर्णवेष्टनम् " इति सज्जनः। श्वदंष्ट्रः त्रिकर्णकाख्यः पुष्पाकारः कर्णपार्श्वभूषणविशेषः । " त्रिकर्णकः

तां समीक्ष्य विशालाक्षीं राजपुत्रीमनिन्दिताम् । तर्कयामास सीतेति कारणैरुपपादिभिः ॥ ४० ॥ वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत् । तान्याभरणजालानि शाखाशोभीन्यलक्षयत् ॥४१॥ सुकृतौ कर्णवेष्टौ च श्वदंष्ट्रौ च सुसंस्थितौ । मणिविद्रुमचित्राणि हस्तेष्वाभरणानि च । श्यामानि चिरयुक्तत्वात्तथा संस्थानवन्ति च ॥ ४२ ॥ तान्येवैतानि मन्येऽहं यानि रामोऽन्वकीर्तयत् ॥ ४३ ॥ तत्र यान्यवहीनानि तान्यहं नोपलक्षये । यान्यस्या नाव हीनानि तानीमानि न संशयः ॥ ४४ ॥ पीतं कनकपट्टाभं स्रस्तं तद्वसनं शुभम् । उत्तरीयं नगासक्तं तदा दृष्टं प्लवङ्गमैः ॥ ४५ ॥ भूषणानि च मुख्यानि दृष्टानि धरणीतले । अनयैवापविद्धानि स्वनवन्ति महान्ति च ॥४६॥

श्वदंष्ट्रश्च" इत्यभिधानरत्नमाला । हस्तेषु हस्तावयवेषु । श्यामानि विरहतापौष्ण्यवशाच्छ्यामीभूतानि । तथा चिरयुक्तत्वात् चिरधृतत्वात् संस्थानवन्ति हस्तेषु तत्तदाभरणसंस्थानानि दृश्यन्त इत्यर्थः ॥४२॥ तान्येवेत्यर्धमेकं वाक्यम् ॥ ४३ ॥ तत्र ऋश्यमूके यान्यवहीनानि पतितानि तान्यहं नोपलक्षये, अत्रेति शेषः । अस्याः सीतायाः सकाशाद्यानि नावहीनानि न पतितानि तानीमानि तत्तुल्यत्वात् ॥४४॥ प्लवङ्गमैः सुग्रीवादिप्लवङ्गमैः । यदुत्तरीयं

वाचमर्थान्तरं गताम् संस्कारो व्युत्पत्तिः तया हीनाम् अत एव विवक्षितादर्थान्तरं गतां विपरीतार्थं बोधयन्तीम्, सम्यक् व्युत्पत्त्यभावदशायामर्थान्तरं गता वाग्व्युत्पत्त्यनन्तरं स्वार्थं प्रदर्शयति तद्वत् । सीतां दुःखेन बुबुधे इत्यर्थः ॥ ३९ ॥ तामिति । कारणैः लिङ्गैः ॥ ४० ॥ तान्येवाह–वैदेह्या इत्यादि । शाखाशोभीनि शाखायां शोभन्त इति तथा । अनेन रामविश्लेषसमये भूषणधारणस्यानुचितत्वात् वैदेह्या भूषणानि स्वाङ्गेभ्य उन्मुच्य शाखायां न्यस्तानीत्यवगम्यते ॥ ४१ ॥ कर्णवेष्टौ कुण्डले । "कुण्डलं कर्णवेष्टनम्" इत्यमरः । श्वदंष्ट्रौ त्रिकर्णाख्यौ कुसुमाकारकर्णभूषणविशेषौ । "त्रिकर्णकः श्वदंष्ट्रश्च" इत्यभिधानरत्नमालायाम् । हस्तेषु हस्ततदवयवेषु । चिरयुक्तत्वात् चिरधृतत्वात् संस्थानवन्ति चिरमङ्गेष्ववस्थानवन्ति च ॥ ४२ ॥ ४३ ॥ तत्रेति । तत्र ऋश्यमूके । यान्याभरणानि अवहीनानि पतितानि यानि नावहीनानि तत्र न पतितानि अस्याः सकाशात्तानीमानीति सम्बन्धः ॥ ४४ ॥ स्रस्तमन्तरिक्षाद्भ्रष्टम् । नगासक्तम् वृक्षलग्नम् । प्लवङ्गमैः

दृष्टं यानि भूषणानि दृष्टानि तानि सर्वाण्यनयैव अपविद्धानि पातितानि । नगासक्तमित्यनेन पतनदशायामुत्तरीयाग्रं वृक्षे किञ्चित्सक्तमिति द्योत्यते ॥४५॥४६ ॥ इदमिति । इतरत् उत्सृष्टम् तदुत्तरीयं यथा यादृशवर्णयुक्तं यथा श्रीमत् इदम् इदानीं धार्यमाणं तद्वर्णं तथा श्रीमत् नूनमिति योजना ॥४७॥

इदं चिरगृहीतत्वाद्वसनं क्लिष्टवत्तरम् । तथापि नूनं तद्वर्णं तथा श्रीमद्यथेतरत् ॥ ४७ ॥ इयं कनकवर्णाङ्गी रामस्य महिषी प्रिया । प्रनष्टापि सती याऽस्य मनसो न प्रणश्यति ॥ ४८ ॥ इयं सा यत्कृते रामश्चतुर्भिः परितप्यते । कारुण्येनानृशंस्येन शोकेन मदनेन च ॥ ४९ ॥ स्त्री प्रनष्टेति कारुण्यादाश्रितेत्यानृशंस्यतः । पत्नी नष्टेति शोकेन प्रियेति मदनेन च ॥ ५० ॥ अस्या देव्या यथा रूपमङ्गप्रत्यङ्गसौष्ठवम् । रामस्य च यथारूपं तस्येयमसितेक्षणा ॥ ५१ ॥

इयमिति । या रामस्य प्रिया सती महिषीति कृत्वा प्रनष्टापि अस्य रामस्य मनसः सकाशात् न प्रणश्यति । सदा मनसा दृष्टा भवतीत्यर्थः । सा कनकवर्णाङ्गी इयम् । मया परिदृश्यमानेत्यर्थः ॥ ४८ ॥ रामः कारुण्यादिभिश्चतुर्भिः यत्कृते परितप्यते सेयम् ॥ ४९ ॥ कारुण्यादीनां परितापहेतुत्वं विभज्य दर्शयति—स्त्रीति । आपत्काले स्त्रियो रक्षणीयाः, तन्न कृतमिति कारुण्यात्परितप्यते । आनृशंस्यमक्रूरत्वम् । आश्रितसंरक्षणैकस्वभावत्वमिति यावत् । तस्मात् आश्रिता न रक्षितेति परितप्यते । "अर्धो वा एष आत्मनो यत्पत्नी" इत्युक्तरीत्या आत्मार्धभूता पत्नी नष्टेति शोकेन परितप्यते । प्रिया नष्टेति मदनेन परितप्यत इति योजना ॥५०॥ अथानयोरन्योन्याभिरूप्यानुगुण्यमाह—अस्या इति । अस्याः सीतायाः रूपं शरीरम् अङ्गप्रत्यङ्गसौष्ठवं च

सुग्रीवादिभिः ॥ ४५ ॥ ४६ ॥ चिरगृहीतत्वात् चिरधृतत्वात् । इतरत् स्रस्तमुत्तरीयं यथा यादृशवर्णयुक्तम् यथा श्रीमत् । इदमिदानीं धार्यमाणं तथावर्णं तथा श्रीमत् नूनमिति योजना ॥ ४७ ॥ इयमिति । इयं रामस्य प्रिया सती महिषीति कृत्वा प्रनष्टापि अस्य रामस्य मनसः सकाशात् न प्रणश्यति, सदानुचिन्तयतीत्यर्थः ॥ ४८ ॥ इयमिति । कारुण्यादिभिश्चतुर्भिर्यत्कृते परितप्यते सेयमिति सम्बन्धः ॥ ४९ ॥ कारुण्यादीनां परितापहेतुत्वं विभज्य दर्शयति—स्त्रीति । स्त्री प्रनष्टेति कारुण्यात् आपत्काले स्त्रियो रक्षणीयाः तन्न कृतमिति कारुण्यात् परितप्यते । आश्रितेत्यानृशंस्यतः, आनृशंस्यमक्रूरत्वम् । आश्रितसंरक्षकस्वभावत्वमिति यावत् । तस्मादाश्रिता न रक्षितेति परितप्यते । पत्नी नष्टेति शोकेन आत्मार्धभूतपत्नीनाशो जात इति शोकेन परितप्यते । प्रियेति मदनेन च प्रिया नष्टेति मदनेन परितप्यत इति योजना ॥ ५० ॥ अथ सीतारामयोरन्योन्याभिरूप्यानुगुण्यमाह—अस्या इति । अस्याः सीतायाः यथा यथाविधं रूपम् अङ्ग

यथा यथाविधम्, तथाविधमेव रामस्यापि रूपम् अङ्गप्रत्यङ्गसौष्ठवं च । तथा रामस्य रूपमङ्गप्रत्यङ्गसौष्ठवं च यथा यथाविधम्, तथाविधमेवास्या रूपमङ्गप्रत्यङ्गसौष्ठवं च । अतः इयमसितेक्षणा तस्य योग्येति शेषः ॥ ५१ ॥ तथाऽनयोरन्योन्यस्यानुरागमाह—अस्या इति । अस्या देव्याः मनस्तस्मिन् रामे प्रतिष्ठितम्, तेन हेतुना इयं मुहूर्तमपि जीवति । तस्य च मनोऽस्यां प्रतिष्ठितम्, तेन कारणेन स मुहूर्तमपि जीवति । तयोरन्योन्यं मनोनिवेशना भावे मुहूर्तजीवनमपि न घटत इति भावः ॥५२॥ माल्यवति शैले रामस्य सीताविरहक्लेशातिशयं निशाम्य हन्त वसिष्ठशिष्यः कस्याश्चित् स्त्रियाः कृते

अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् । तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति ॥ ५२ ॥ दुष्करं कृतवान् रामो हीनो यदनया प्रभुः । धारयत्यात्मनो देहं न शोकेनावसीदति ॥ ५३ ॥ दुष्करं कुरुते रामो य इमां मत्तकाशिनीम् । सीतां विना महाबाहुर्मुहूर्तमपि जीवति ॥ ५४ ॥

कथमेवमभूदिति विनिन्द्य परिहसितवान् स्वयं विरक्ततया, संप्रत्यस्या वैलक्षण्यातिशयदर्शनेन विशेषज्ञतया एतद्विरहे रामस्य देहधारणं सर्वात्मना अशक्यमित्याह—दुष्करमिति । दुष्करं कृतवान् रामः । इमां वियुज्य समाधानपरो रामः प्रकाममशक्यं कृत्यमकरोत् । हीनो यदनया प्रभुः । अनया विना देहं धृत्वाऽवस्थित इति यत्तदत्यन्तमशक्यम् । प्रभुः गजाश्वादिकं शिक्षयितुं राज्यं पालयितुं च जानाति । न प्रणयधारायां प्रथमांशमपि भुक्तवान् । धारयत्यात्मनो देहम् । किमिदं याचितकं शरीरं धारयति स्वस्यैव हि देहोऽयं देहं भोगायतनं हीदं न दुःखायतनम् "दिह उपचये" इत्यस्माद्धातोः "इगुपध०" इत्यादिना कः । तेनायमर्थो लभ्यते । सीताशरीरस्य परतन्त्रतया तत्त्यक्तुमयुक्तं नतु स्वाधीनशरीरस्य धारणं युक्तमिति भावः । विशेषज्ञेनापि कथमिदं त्यक्तुं शक्यम् । तत्राह न शोकेनावसीदति ॥५३॥ उक्तमर्थं किञ्चिद्विशेषान्तरेण दर्शयति—दुष्करं कुरुत इति ॥ ५४ ॥

प्रत्यङ्गसौष्ठवं तथाविधमेव रामस्यापि रूपं रामस्य यथाविधं रूपं तथाविधमेव अस्या रूपम् । अत एवेयमसितेक्षणा तस्य योग्येति शेषः ॥ ५१ ॥ अथानयो रन्योन्यानुरागमाह—अस्या इति । अस्याः सीतायाः मनः तस्मिन् रामे प्रतिष्ठितम् । तेन हेतुना इयं स च जीवतीति सम्बन्धः ॥ ५२ ॥ सीताविरहेण रामस्य शरीराकार्श्यं प्राणधारणं च विचित्रमित्याह—दुष्करमित्यादिश्लोकद्वयेन । मत्तकाशिनीं वरारोहाम् "वरारोहा मत्तकाशिनी" इत्यमरः । रामग्रहणं सीताया अप्युप

एवं दृष्ट्वा मलिनसंवीतत्वोपवासकृशत्वशोकध्यानपरायणत्वादिपतिव्रताधर्मयुक्तां सीतां दृष्ट्वा हृष्टः सन् मनसा रामं जगाम सस्मार । तं प्रभुं बुद्धिस्थं रामं प्रशशंस च पुनःप्राप्त्युपयुक्तपतिव्रताधर्मनिष्ठत्वदर्शनात् भाग्योत्तरो राम इत्यस्तौषीत् । यद्वा एतादृशसौन्दर्यवतीं सीतां दृष्ट्वा एतद्विरहितस्य महान् शोकः प्राप्तः अतः युक्तमेव कृतवान् राम इत्यस्तौषीत् ॥ ५५ ॥ इति श्रीगोविन्द० श्रीरामायण० शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥ प्रशस्य त्वित्यादि । प्रशस्तव्यां प्रशंसितव्याम् । रामं सीतां च प्रशस्येति । अस्या देव्या इत्यादिनोभयोरपि प्रशंसितत्वात् ॥ १ ॥

एवं सीतां तदा दृष्ट्वा हृष्टः पवनसंभवः । जगाम मनसा रामं प्रशशंस च तं प्रभुम् ॥ ५५ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

प्रशस्य तु प्रशस्तव्यां सीतां तां हरिपुङ्गवः । गुणाभिरामं रामं च पुनश्चिन्तापरोऽभवत् ॥ १ ॥

स मुहूर्तमिव ध्यात्वा बाष्पपर्याकुलेक्षणः । सीतामाश्रित्य तेजस्वी हनुमान् विललाप ह ॥ २ ॥

मान्या गुरुविनीतस्य लक्ष्मणस्य गुरुप्रिया । यदि सीतापि दुःखार्ता कालो हि दुरतिक्रमः ॥ ३ ॥

स इति । सीतामाश्रित्य सीतां विषयीकृत्य ॥ २ ॥ मान्येति । गुरुविनीतस्य गुरुभिः शिक्षितस्य । गुरुप्रिया रामप्रिया । कालो हि दुरतिक्रमः कालो दुरतिक्रम एवेत्ययमर्थः सिद्धो भवतीत्यर्थः । हिशब्दोऽवधारणे अव्ययानामनेकार्थत्वात् । जगद्रक्षकरामलक्ष्मणगुप्तायास्सीताया अपि यदीदृशं दुःखं लक्षणम् । सापि तं विना जीवतीति चित्रमेवेत्यर्थः ॥ ५३ ॥ ५४ ॥ एवं मलिनसंवीतत्वोपवासकृशत्वशोकध्यानपरायणत्वादिपतिव्रताधर्मयुक्तां सीतां दृष्ट्वा हृष्टस्सन् मनसा रामं जगाम सस्मार । तं प्रभुं बुद्धिस्थं रामं प्रशशंस च । पुनःप्राप्त्युपयुक्तपतिव्रताधर्मनिष्ठत्वदर्शनात् भाग्योत्तरो राम इत्यस्तौषीदिति भावः ॥ ५५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां पञ्चदशः सर्गः ॥ १५ ॥ प्रशस्येति । प्रशस्तव्यां प्रशंसितव्याम् ॥ १ ॥ स इति । सीतामाश्रित्य सीतामुद्दिश्य ॥ २ ॥ गुरुविनीतस्य गुरुभिः शिक्षितस्य । गुरुप्रिया रामप्रिया । सीतापि यदि दुःखार्ता, कालो दुरतिक्रमो हि,

स०–गुरुविनीतस्य बहुनम्रस्य लक्ष्मणस्य गुरुप्रिया ज्येष्ठभ्रातृभार्या मान्या । यद्वा गुरुविनीतस्य ब्रह्मादेर्लक्ष्मणस्य चेति व्यधिकरणषष्ठ्यौ । सर्वमान्या यदि सीता दुःखार्ता सेवाभूत । हि यतः ततः कालो हि दुरतिक्रमः । देव्या देवेन च स्वसमयावनाय कालो दुरतिक्रमः अनुलङ्घ्यस्वपराक्रम इव दर्शित इति भावः । यद्वा सुखार्हापि यद्दुःखार्त्तवदात्मानं दर्शयामास स हि ततः कालः रावणमृत्युः दुरतिक्रमः अनुलङ्घ्यः रावणेनेति शेषः ॥ ३ ॥

प्राप्तं तदा कालो दुरतिक्रम एवेति भावः ॥ ३ ॥ रामस्येति । व्यवसायज्ञा स्वयत्नं विहाय तद्व्यवसायमेव प्रेक्षमाणा ' एतद्व्रतं मम । अप्यहं जीवितं जह्याम् ' इत्येवं रामव्यवसायं जानन्तीत्यर्थः । लक्ष्मणस्य च धीमतः रामे मायामृगानुसारिण्यपि मारीचोऽयमिति तदानीमपि निश्चितवतो लक्ष्मणस्य । यद्वा सर्वेश्वरादप्याश्रितसंरक्षणे समुद्युक्तस्य । नात्यर्थं क्षुभ्यते अत्यर्थमिति क्षोभाभावविशेषणम्, क्षोभविशेषणत्वे यत्किंचित्क्षोभ प्राप्तः स्यात् । सत्तानाशकाले प्राप्तेपि क्षोभलेशरहितेत्यर्थः । देवी रामेण शिरसा वोढव्यवाञ्छभ्यवती । गङ्गेव जलदागमे, क्षोभहेतौ सत्यपि यथा गङ्गा न क्षुभ्यते तथेत्यर्थः ॥ ४ ॥ तुल्येति । तुल्यशीलवयोवृत्ताम्, शीलं स्वभावः, " अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् " इति प्रक्रियया तुल्य

रामस्य व्यवसायज्ञा लक्ष्मणस्य च धीमतः । नात्यर्थं क्षुभ्यते देवी गङ्गेव जलदागमे ॥ ४ ॥
तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम् । राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ॥ ५ ॥
तां दृष्ट्वा नवहेमाभां लोककान्तामिव श्रियम् । जगाम मनसा रामं वचनं चेदमब्रवीत् ॥ ६ ॥
अस्या हेतोर्विशालाक्ष्या हतो वाली महाबलः । रावणप्रतिमो वीर्ये कबन्धश्च निपातितः ॥ ७ ॥

स्वभावाम् । तुल्यवयस्काम् षोडशवार्षिकस्य द्वादशवार्षिकी तुल्या अन्यथा वैरस्यापत्तेः शास्त्रविरोधाच्च । अत एव विष्णुः—"वर्षैरेकगुणां भार्यामुद्वहेत् त्रिगुणो वरः । द्व्यष्टवर्षोऽष्टवर्षां वा वयोमात्रावरा च या ॥ " इति । तुल्यवृत्ताम् " दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम् " इति रामवृत्तम्, " पापानां वा शुभानां वा वधार्हाणां प्लवंगम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति ॥ " इत्युक्तवत्यास्सीताया वृत्तेन तुल्यम् । तुल्यशब्दोऽनुरूप परः । रामानुरूपशीलवयश्चारित्रामित्यर्थः । तुल्याभिजनलक्षणाम् अभिजनः कुलम्, लक्षणं सामुद्रिकं, सार्वभौमलक्षणवतो भार्याया यैस्सामुद्रिकलक्षणै र्भाव्यं तैर्युक्तामित्यर्थः । एवंविधत्वाद्राघवो वैदेहीमर्हति, वैदेही राघवमर्हति । लोके सौन्दर्यादिमतः सौन्दर्यादिसर्वसहिता न लभ्यते । सौन्दर्यादिमत्या न सौन्दर्यादिसर्ववान् । अनयोस्तु सर्वं सम्पन्नमिति विस्मयते । असितेक्षणेत्यधिकविशेषणदानाद्रामापेक्षया सीताया नयनसौन्दर्यमधिकमित्युच्यते । अत एव रामो वक्ष्यति—"न जीवेयं क्षणमपि विना तामसितेक्षणाम्" इति ॥ ५ ॥ ६ ॥ अस्या हेतोरिति । " सर्वनाम्नस्तृतीया च " इति षष्ठी ।

सकलजगद्रक्षकरामलक्ष्मणगुप्तायाः सीताया ईदृशं दुःखं प्राप्तं यतः अतः कालो दुरतिक्रम एवेत्यर्थः ॥ ३ ॥ व्यवसायज्ञा अभिप्रायज्ञा, पराक्रमज्ञेत्यर्थः ॥ ४ ॥ तुल्यशीलवयोवृत्ता रामानुरूपस्वभाववयश्चारित्रा । तुल्याभिजनलक्षणा अभिजनं कुलम्, लक्षणं सामुद्रिकोक्तम् ॥ ५ ॥ ६ ॥ अस्या हेतोः अनया हेतुनेत्यर्थः ॥ ७–१० ॥

अनया हेतुनेत्यर्थः ॥७-१०॥ ऐश्वर्यमिति । अस्या निमित्ते "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति षष्ठी सप्तम्यर्थे । अस्यां निमित्ते सत्यामित्यर्थः ॥ ११ ॥ १२ ॥ परिवर्तयेत् अधरोत्तरां कुर्यात् । अस्याः कृते एतदर्थम् । जगच्चापि, न केवलं मेदिनीं सर्वलोकानपि परिवर्तयेदित्यर्थः॥१३॥

विराधश्च हतः सङ्ख्ये राक्षसो भीमविक्रमः । वने रामेण विक्रम्य महेन्द्रेणेव शम्बरः ॥ ८ ॥ चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥ ९ ॥ खरश्च निहतः सङ्ख्ये त्रिशिराश्च निपातितः । दूषणश्च महातेजा रामेण विदितात्मना ॥१०॥ ऐश्वर्यं वानराणां च दुर्लभं वालिपालितम् । अस्या निमित्ते सुग्रीवः प्राप्तवान् लोकसत्कृतम् ॥ ११ ॥ सागरश्च मया क्रान्तः श्रीमान्नदनदीपतिः । अस्या हेतोर्विशालाक्ष्याः पुरी चेयं निरीक्षिता ॥ १२ ॥ यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत् । अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ॥ १३ ॥ राज्यं वा त्रिषु लोकेषु सीता वा जनकात्मजा । त्रैलोक्यराज्यं सकलं सीताया नाप्नुयात् कलाम् ॥१४॥ इयं सा धर्मशीलस्य मैथिलस्य महात्मनः । सुता जनकराजस्य सीता भर्तृदृढव्रता ॥१५॥ उत्थिता मेदिनीं भित्त्वा क्षेत्रे हलमुखक्षते । पद्मरेणुनिभैः कीर्णा शुभैः केदारपांसुभिः ॥ १६ ॥ विक्रान्तस्यार्यशीलस्य संयुगेष्वनिवर्तिनः । स्नुषा दशरथस्यैषा ज्येष्ठा राज्ञो यशस्विनी ॥ १७ ॥ धर्मज्ञस्य कृतज्ञस्य रामस्य विदितात्मनः । इयं सा दयिता भार्या राक्षसीवशमागता ॥ १८ ॥

राज्यं वेति । राज्यमुत्कृष्टं वा सीता उत्कृष्टा वा, इति विचार्यमाण इति शेषः । कलां लेशम् ॥ १४ ॥ भर्तृदृढव्रता भर्तरि दृढव्रता । केदारपांसुभिः यज्ञक्षेत्रपांसुभिः ॥ १५ ॥ १६ ॥ आर्यशीलस्य श्रेष्ठस्वभावस्य ॥ १७ ॥ १८ ॥

ऐश्वर्यमिति । अस्या निमित्त इति सप्तम्यर्थे षष्ठी । अस्यां निमित्तभूतायां सत्यामित्यर्थः ॥ ११ ॥ १२ ॥ रामः मेदिनीं किञ्च जगच्च, सर्वलोकानपीत्यर्थः । अस्याः कृते सीतार्थं परिवर्तयेद्यदि अधरोत्तरां कुर्यात्, संहरेदित्यर्थः । युक्तमित्येव मे मतिरिति सम्बन्धः ॥ १३ ॥ राज्यमुत्कृष्टं वा सीता उत्कृष्टा वा ? इति विचार्यमाणे सतीति शेषः । कलां लेशम् ॥ १४ ॥ भर्तृदृढव्रता भर्तरि दृढव्रता ॥ १५-१८ ॥

सर्वान् भोगान्, भुज्यन्ते इति भोगाः शुकसारिकाकन्तुकप्रभृतिभोगसाधनानि मातृप्रभृतींश्च । परित्यज्य परि विशेषेण पुनस्तत्राशालेशं विनैव त्यक्त्वा । अयं च परित्यागो न स्ववशेनेत्याह भर्तृस्नेहबलात्कृता । अभिमतविषयस्नेहातिरेकस्तादितरमखिलमपि त्याजयति हि । त्यक्तेषु स्मरणाभावेऽपि गन्तव्यदेशीयदुःखं वा किं स्मरति ? नेत्याह अचिन्तयित्वा दुःखानि । रामातिरिक्तवस्त्वनुभवे हि दुःखानुभवसम्भावनेति भावः । प्रविष्टा निर्जनं

सर्वान् भोगान् परित्यज्य भर्तृस्नेहबलात्कृता । अचिन्तयित्वा दुःखानि प्रविष्टा निर्जनं वनम् ॥ १९ ॥ सन्तुष्टा फलमूलेन भर्तृशुश्रूषणे रता । या परां भजते प्रीतिं वनेऽपि भवने यथा ॥ २० ॥ सेयं कनकवर्णाङ्गी नित्यं सुस्मितभाषिणी । सहते यातनामेतामनर्थानामभागिनी ॥२१॥ इमां तु शीलसम्पन्नां द्रष्टुमर्हति राघवः । रावणेन प्रमथितां प्रपामिव पिपासितः ॥ २२ ॥ अस्या नूनं पुनर्लाभाद्राघवः प्रीतिमेष्यति । राजा राज्यपरिभ्रष्टः पुनः प्राप्येव मेदिनीम् ॥ २३ ॥ कामभोगैः परित्यक्ता हीना बन्धुजनेन च । धारयत्यात्मनो देहं तत्समागमकांक्षिणी ॥ २४ ॥ नैषा पश्यति राक्षस्यो नेमान् पुष्पफलद्रुमान् । एकस्थहृदया नूनं राममेवानुपश्यति ॥२५॥ भर्ता नाम परं नार्या भूषणं भूषणादपि । एषा तु रहिता तेन भूषणार्हा न शोभते ॥२६॥ दुष्करं कुरुते रामो हीनो यदनया प्रभुः । धारयत्यात्मनो देहं न दुःखेनावसीदति ॥ २७ ॥

वनम्, भोगस्यैकान्तस्थलमिति ह्यस्या हृदि लग्नमिति भावः ॥ १९ ॥ २० ॥ यातनां तीव्रवेदनाम् । अनर्थानामभागिनी आपदामनर्हेत्यर्थः ॥ २१ ॥ प्रपां पानीयशालिकाम् । "प्रपा पानीयशालिका" इत्यमरः ॥ २२ ॥ २३ ॥ काम्यन्त इति कामाः ते च ते भोगाश्च स्रक्चन्दनादयः तैः ॥ २४ ॥ नैषा पश्यति राक्षस्यः राक्षसीर्न पश्यति । नेमान् पुष्पफलद्रुमान्, रामविरहक्लेशातिशयेन राक्षसीदर्शनवत् सुपुष्पफलवतां द्रुमाणामपि दर्शनमस्याः

भर्तृस्नेहबलात्कृता भर्तुः स्नेहबलाज्जीवतीत्यर्थः ॥ १९ ॥ २० ॥ यातनां तीव्रवेदनाम् । अनर्थानामभागिनी आपदामनर्हा ॥ २१ ॥ प्रपां पानीयशालाम् ॥ २२ ॥ २३ ॥ कामेति । कामभोगैः काम्यन्त इति कामाः ते च ते भोगाः स्रक्चन्दनादयः ॥ २४ ॥ राक्षस्यः राक्षसीः । एकस्थहृदया एकाग्रचित्ता ॥२५॥२६॥ प्रभुः रामः अनया हीनः सन् आत्मनो देहं धारयति शोकेन नावसीदतीति च यत् एतत् दुष्करं कुरुत इति सम्बन्धः ॥ २७ ॥

असह्यमित्यर्थः । एकस्थहृदया एकाग्रचित्ता । राममेवानुपश्यति ध्यायतीत्यर्थः । रामागमनसंभावनावती दिशोऽवलोकयतीति वाऽर्थः। यद्वा निरन्तरेण रामानुभवेन परिसरवर्ती कोऽपि पदार्थो न दृष्टिपथं गच्छतीत्यर्थः ॥ २५–२७ ॥ इमामिति । असितः केशान्तः यस्यास्ताम् । केशानामग्रे नैल्यं स्त्रीणां दुर्लभम् । अतस्तदेवाह असितकेशान्तां गुडालकावृतस्यापि व्यामोहकरीम् । शतपत्रनिभेक्षणां यद्यपीयमसितेक्षणा तथापि संस्थानविशेषे उपमेयम् ।

इमामसितकेशान्तां शतपत्रनिभेक्षणाम् । सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथितं मनः ॥ २८ ॥ क्षितिक्षमा पुष्करसन्निभाक्षी या रक्षिता राघवलक्ष्मणाभ्याम् । सा राक्षसीभिर्विकृतेक्षणाभिः संरक्ष्यते संप्रति वृक्षमूले ॥ २९ ॥ हिमहतनलिनीव नष्टशोभा व्यसनपरम्परयाऽतिपीड्यमाना । सहचररहितेव चक्रवाकी जनकसुता कृपणां दशां प्रपन्ना ॥ ३० ॥ अस्या हि पुष्पावनताग्रशाखाः शोकं दृढं वै जनयन्त्यशोकाः । हिमव्यपायेन च मन्दरश्मिरभ्युत्थितो नैकसहस्ररश्मिः ॥ ३१ ॥

कमलपत्राक्षस्यापि व्यामोहदायिनीम् । सुखार्हां रामोत्सङ्गे स्थातुमर्हाम् । दुःखितां राक्षसीमध्ये स्थितां दृष्ट्वा ममापि व्यथितं मनः, शाखामृगस्य ममापि मनो व्यथितम्, किमुत परमदयालो रामस्येति भावः । शोकहर्षयोरपदस्य ममापि मनो व्यथितम् किंपुनः कामिन इति वा ॥२८॥२९॥ हिमहतेति । हिमहतेति विशेषणेन नलिन्याः पूर्वं बहुकालशोभितत्वं सिद्धम्, तद्वन्नष्टशोभा द्वादशवर्षं निष्प्रतिबन्धं भोगान् भुञ्जानाया आगन्तुको हि विश्लेषः तेन हि नष्टशोभेत्युक्तम् । व्यसनपरम्परया विरह इव संश्लेषोपि मध्ये मध्ये नागत्य निवृत्तः व्यसनमेव नैरन्तर्येण वृत्तम् । अतिपीडचमाना अतिक्रम्य पीड्यमाना, आश्रयाननुरूपं व्यसनमनुभवन्तीत्यर्थः । सहचररहितेव चक्रवाकी लाभकालमवगम्य दुःखं सोढुमसमर्था । चक्रवाकीसाम्येनायमर्थो लभ्यते–सा हि रात्रिविरामकालं प्रबुध्य दुःखं सोढुमदक्षेति प्रसिद्धम् । जनकसुता एवं व्यसनं भविष्यतीति ज्ञात्वा न संवर्धिता, केवलं सुखसंवर्धितेत्यर्थः । कृपणां दशां प्रपन्ना । पूर्वोक्तनलिन्यादिकं नोपमानं भवितुमर्हति । किञ्चिदुक्तिमात्रम् । वाङ्मनसाऽपरिच्छेद्यां दुर्दशां प्राप्तेत्यर्थः ॥ ३० ॥ हिमव्यपायेन

इमामिति । ममापि, किमुत परमदयालो रामस्येति भावः ॥ २८ ॥ क्षितिरिव क्षमा क्षान्तिर्यस्याः सा क्षितिक्षमा ॥ २९ ॥ ३० ॥ अशोकाः शोकं जनयन्ति । हिमव्यपायेन नैकसहस्ररश्मिः मन्दरश्मिश्च अतीक्ष्णरश्मिः, शीतांशुरिति यावत् । अभ्युत्थितः सन्, शोकं जनयतीति शेषः ॥ ३१ ॥

वसन्तेन । नैकसहस्ररश्मिरभ्युत्थितः । मन्दरश्मिः सूर्यापेक्षया मन्दकरः, चन्द्र इति यावत् । शोकं जनयतीति वचनविपरिणामेन सम्बन्धः ॥ ३१ ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

इत्येवमर्थं कपिरन्ववेक्ष्य सीतेयमित्येव निविष्टबुद्धिः। संश्रित्य तस्मिन्निषसाद वृक्षे बली हरीणामृषभस्तरस्वी ॥ ३२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे षोडशः सर्गः ॥ १६ ॥

ततः कुमुदषण्डाभो निर्मलो निर्मलं स्वयम्। प्रजगाम नभश्चन्द्रो हंसो नीलमिवोदकम् ॥ १ ॥ साचिव्यमिव कुर्वन् स प्रभया निर्मलप्रभः। चन्द्रमा रश्मिभिः शीतैः सिषेवे पवनात्मजम् ॥ २ ॥ स ददर्श ततः सीतां पूर्णचन्द्रनिभाननाम्। शोकभारैरिव न्यस्तां भारैर्नावमिवाम्भसि ॥ ३ ॥ दिदृक्षमाणो वैदेहीं हनुमान् मारुतात्मजः । स ददर्शाविदूरस्था राक्षसीर्घोरदर्शनाः ॥ ४ ॥ एकाक्षीमेककर्णां च कर्णप्रावरणां तथा। अकर्णां शङ्कुकर्णां च मस्तकोच्छ्वासनासिकाम् ॥ ५ ॥

तत इत्यादि। प्रजगाम प्रकर्षेण जगाम, आकाशपरभागं प्राप्त इत्यर्थः ॥ १ ॥ २ ॥ स इति। शोकभारैर्न्यस्तामिव आक्रान्तामिव स्थिताम्। अत एव भारैर्न्यस्तां नावमिव स्थिताम् ॥ ३ ॥ दिदृक्षमाण इत्यादि। कर्णौ प्रावरणे शिरस आच्छादकौ यस्याः सा कर्णप्रावरणा ताम् । शङ्कुवत्कर्णौ इत्येवमिति । सीतेयमित्येव इयं सीतैवेति जातबुद्धिः तामेव बुद्धिं संश्रित्य ततःपरानुष्ठेयचिकीर्षया शिंशपावृक्ष एव निषसाद । तद्रात्रिशेषं परदिनं च स्थित इत्यर्थः। एवञ्च सरावणान्तःपुरा सर्वापि लङ्का याममत्रयेण समुद्रलङ्घनदिनरात्रावेव विचिता। तुर्ये यामे अशोकवनिकाप्रवेश इति बोध्यम् ॥ ३२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां षोडशः सर्गः ॥ १६ ॥ तत इति। नभः प्रजगाम आकाशपरभागं प्राप्तः ॥ १ ॥ साचिव्यमिति । सीतादर्शनादौ प्रभया स्वकान्त्या साचिव्यमिव साहाय्यमिव, दिवा क्वचिदेकान्तप्रदेशे स्थितत्वान्निद्राव्याकुलत्वाच्च न सम्यग्राक्षसीनां सीतायाश्च दर्शनम्, रात्रौ चन्द्रोदये सति तु पुनः समीपदेशे आगत्य स्थितस्य सम्यक् सर्वदर्शनम् ॥ २ ॥ शोकभारैः न्यस्तामिव अधोनीतामिव मज्जमाना

स०–कुमुदषण्डाभः कुमुदानां श्वेतोत्पलानां षण्डः समूहः तस्यामेवाभा यस्येति वा। तस्य आ सम्यक् मा कान्तिर्यस्मादिति वा। " सिते कुमुदकैरवे " इत्यमरः। निर्मलं स्वच्छम्। नीलमिवोदकमित्यनेन गगने नैल्यमपि ध्वनितम्। आकाशे नैल्यं च " आकाशो नीलिमोदेति " इति श्रुतेः ॥ १ ॥

यस्यास्तां शङ्कुकर्णाम् । मस्तकोच्छ्वासनासिकाम् ऊर्ध्वमुखनासिकामित्यर्थः ॥ ४–६ ॥ अतिकायोत्तमाङ्गीम् । अत्रातिकायशब्देन महत्त्वमुच्यते । महाशिरस्कामित्यर्थः । ध्वस्तकेशीं स्वल्पकेशीम् । अकेशीम् अनुत्पन्नकेशीम् । केशकम्बलधारिणीं कम्बलरूपकेशधारिणीम् । लम्बे कर्णललाटे यस्यास्सा लम्बकर्णललाटा ताम् । चुबुके ओष्ठः यस्याः सा चुबुकोष्ठी ताम् ॥ ७ ॥ ह्रस्वदीर्घाम् अधःकाये ऊर्ध्वकाये च क्वचित् ह्रस्वां क्वचिद्दीर्घा

अतिकायोत्तमाङ्गीं च तनुदीर्घशिरोधराम् । ध्वस्तकेशीं तथाऽकेशीं केशकम्बलधारिणीम् ॥ ६ ॥ लम्बकर्णललाटां च लम्बोदरपयोधराम् । लम्बोष्ठीं चुबुकोष्ठीं च लम्बास्यां लम्बजानुकाम् ॥ ७ ॥ ह्रस्वदीर्घां तथा कुब्जां विकटां वामनां तथा । करालां भुग्नवक्त्रां च पिङ्गाक्षीं विकृताननाम् ॥ ८ ॥ विकृताः पिङ्गलाः कालीः क्रोधनाः कलहप्रियाः । कालायसमहाशूलकूटमुद्गरधारिणीः ॥ ९ ॥. वराहमृगशार्दूलमहिषाजशिवामुखीः । गजोष्ट्रहयपादीश्च निखातशिरसोऽपराः ॥ १० ॥ एकहस्तैकपादाश्च खरकर्ण्यः श्वकर्णिकाः । गोकर्णीर्हस्तिकर्णीश्च हरिकर्णीस्तथाऽपराः ॥ ११ ॥ अनासा अतिनासाश्च तिर्यङ्नासा विनासिकाः । गजसन्निभनासाश्च ललाटोच्छ्वासनासिकाः ॥ १२ ॥ हस्तिपादा महापादा गोपादाः पादचूडिकाः । अतिमात्रशिरोग्रीवा अतिमात्रकुचोदरीः ॥ १३ ॥

मित्यर्थः । कुब्जां स्थगुमतीम् । विकटां स्थूलजङ्घाम् । करालां दन्तुराम् । “ करालो दन्तुरे तुङ्गे ” इत्यमरः । भुग्नवक्त्रां निम्नवक्त्राम् । विकृताननां नासिकोष्ठविरहिताननामित्यर्थः । एतदन्तस्य पूर्वेण ददर्शेत्यनेनान्वयः ॥ ८ ॥ विकृता इत्यादेरुत्तरेण ददर्शेत्यनेनान्वयः । एता एकाक्ष्यादिराक्षसीभ्योऽन्याः । विकृताः विकृतवेषाः ॥ ९ ॥ निखातशिरसः गात्रान्तर्वर्तिशिरसः ॥ १० ॥ हरिकर्णीः कपिकर्णीः ॥११॥१२॥ पादे चूडिका यासां मिवेत्यर्थः ॥ ३–५ ॥ अतिकायोत्तमाङ्गीम् अतिकायं महदुत्तमाङ्गं यस्यास्सा । तनुदीर्घशिरोधराम्, अस्थूलदीर्घकण्ठीमित्यर्थः । केशकम्बलधारिणीम्, कम्बला इव केशाः केशकम्बलाः तान् धारयितुं शीलमस्तीति तथा । लम्बकर्णललाटां लम्बे कर्णललाटे यस्यास्ताम् । चुबुकोष्ठीं चुबुके ओष्ठो यस्यास्ताम् ॥ ६ ॥ ७ ॥ कुब्जां स्थगुमतीम् । करालां दन्तुराम् । पिङ्गाक्षीमित्यन्तस्य पूर्वेण सम्बन्धः ॥ ८ ॥ विकृता इत्यादि श्लोकनवकमेकं वाक्यम् । निखातशिरसः गात्रान्तर्वर्तिशिरसः ॥ ९–१२ ॥ पादचूडिकाः पादे चूडा शिखा यासां ताः ॥ १३–१५ ॥

ताः पादचूडिकाः । " शिखा चूडा केशपाशी " इत्यमरः ॥ १६-१७ ॥ राक्षसीर्विकृताननाः इत्यत्र पुनः राक्षसीपदमविस्मरणार्थम् ॥ १६ ॥ १७ ॥ लक्ष्मीवान् सीतादर्शनजनितशोभायुक्तः ॥ १८ ॥ १९ ॥ च्युतां स्थानाच्चलिताम् । चारित्रव्यपदेशाढ्यां पतिव्रताधर्माचरणख्यातिसम्पन्नाम् । भर्तृ



अतिमात्रास्यनेत्राश्च दीर्घजिह्वानखास्तथा । अजामुखीर्हस्तिमुखीर्गोमुखीः सूकरीमुखीः ॥ १४ ॥ हयोष्ट्रखरवक्त्राश्च राक्षसीर्घोरदर्शनाः । शूलमुद्गरहस्ताश्च क्रोधनाः कलहप्रियाः ॥ १५ ॥ कराला धूम्रकेशीश्च राक्षसीर्विकृताननाः । पिबन्तीः सततं पानं सदा मांससुराप्रियाः ॥ १६ ॥ मांसशोणितदिग्धाङ्गीर्मांसशोणितभोजनाः । ता ददर्श कपिश्रेष्ठो रोमहर्षणदर्शनाः । स्कन्धवन्तमुपासीनाः परिवार्य वनस्पतिम् ॥ १७ ॥ तस्याधस्ताच्च तां देवीं राजपुत्रीमनिन्दिताम् । लक्षयामास लक्ष्मीवान् हनुमान् जनकात्मजाम् ॥ १८ ॥ निष्प्रभां शोकसन्तप्तां मलसङ्कुलमूर्धजाम् ॥ १९ ॥ क्षीणपुण्यां च्युतां भूमौ तारां निपतितामिव । चारित्रव्यपदेशाढ्यां भर्तृदर्शनदुर्गताम् ॥ २० ॥ भूषणैरुत्तमैर्हीनां भर्तृवात्सल्यभूषणाम् । राक्षसाधिपसंरुद्धां बन्धुभिश्च विनाकृताम् ॥ २१ ॥ वियूथां सिंहसंरुद्धां बद्धां गजवधूमिव । चन्द्ररेखां पयोदान्ते शारदाभ्रैरिवावृताम् । क्लिष्टरूपामसंस्पर्शादयुक्तामिव वल्लकीम् ॥ २२ ॥ सीतां भर्तृवशे युक्तामयुक्तां राक्षसीवशे ॥ २३ ॥ अशोकवनिकामध्ये शोकसागरमाप्लुताम् । ताभिः परिवृतां तत्र सग्रहामिव रोहिणीम् ॥ २४ ॥

दर्शनेन दुर्गतां दरिद्राम्, भर्तृदर्शनरहितामित्यर्थः ॥ २० ॥ भर्तृवात्सल्यभूषणां वात्सल्यपदमत्र स्नेहमात्रवाचि ॥ २१ ॥ पयोदान्ते वर्षान्ते । चन्द्ररेखायाः स्पष्टास्पष्टत्वद्योतनायेदं विशेषणम् । असंस्पर्शात् उद्वर्तनादिसंस्कारराहित्यात् । अयुक्ताम् अनारोपिततन्त्रीम् । वल्लकीं वीणाम् ॥ २२ ॥ सीता

राक्षसीर्विकृताननाः इत्यत्र अपरा इति शेषः । अतो न पौनरुक्त्यम् ॥ १६-१७ ॥ तस्याधस्तादित्यारभ्य वल्लकीमिव इत्यन्तमेकं वाक्यम् ॥ १८ ॥ १९ ॥ क्षीणेति । च्युताम्, दिव इति शेषः । चारित्रव्यपदेशाढ्यां पातिव्रत्यव्रतसम्पन्नाम् । भर्तृदर्शनदुर्गतां भर्तृदर्शनहीनाम् ॥ २० ॥ २१ ॥ पयोदान्ते वर्षान्ते । असंस्पर्शात् उद्वर्तनादिसंस्काराभावात् । अयुक्ताम् अनारोपिततन्त्रीम् ॥ २२ ॥ सीतामित्यादि श्लोकद्वयमेकं वाक्यम् । रक्षसां वशे अयुक्ताम् अयोग्याम् शोकसागरमाप्लुतां

मित्यादिपरशेषः । राक्षसीवशे अयुक्ताम् अनवस्थिताम्, तद्वचनान्यशृण्वन्तीमित्यर्थः ॥ २३ ॥ २४ ॥ लतां कुसुमितामिव तथा दर्शनीया मित्यर्थः ॥ २५ ॥ मलिनेनेत्यादिश्लोकद्वयमेकं वाक्यम् ॥२६॥२७ ॥ तामित्यादिश्लोकत्रयमेकं वाक्यम् । क्षमां क्षमामिव स्थिताम् । निर्गीर्णाध्यवसाना

ददर्श हनुमान् देवीं लतां कुसुमितामिव । सा मलेन च दिग्धाङ्गी वपुषा चाप्यलंकृता । मृणाली पङ्कदिग्धेव विभाति न विभाति च ॥ २५ ॥ मलिनेन तु वस्त्रेण परिक्लिष्टेन भामिनीम् ॥ २६ ॥ संवृतां मृगशावाक्षीं ददर्श हनुमान् कपिः । तां देवीं दीनवदनामदीनां भर्तृतेजसा । रक्षितां स्वेन शीलेन सीतामसितलोचनाम् ॥२७॥ तां दृष्ट्वा हनुमान् सीतां मृगशावनिभेक्षणाम् ॥ २८ ॥ मृगकन्यामिव त्रस्तां वीक्षमाणां समन्ततः । दहन्तीमिव निःश्वासैर्वृक्षान् पल्लवधारिणः ॥२९॥ सङ्घातमिव शोकानां दुःखस्योर्मिमिवोत्थिताम् । तां क्षमां सुविभक्ताङ्गीं विनाभरणशोभिनीम् । प्रहर्षमतुलं लेभे मारुतिः प्रेक्ष्य मैथिलीम् ॥३०॥ हर्षजानि च सोऽश्रूणि तां दृष्ट्वा मदिरेक्षणाम् । मुमोच हनुमांस्तत्र नमश्चक्रे च राघवम् ॥ ३१ ॥ नमस्कृत्वा स रामाय लक्ष्मणाय च वीर्यवान् । सीतादर्शनसंहृष्टो हनुमान् संवृतो ऽभवत् ॥ ३२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे सप्तदशः सर्गः ॥ १७ ॥

दभेदोक्तिः । तां दृष्ट्वा तां प्रेक्ष्येत्यनयोर्विशेषणविशेष्यभेदान्न पौनरुक्त्यम् । दूरप्रयुक्तस्यानुस्मरणार्थं वा पुनरुक्तिः ॥ २८–३० ॥ हर्षजानीति । राघवं नमश्चक्रे । उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीयस्त्वान्नमस्करोति देवानित्यादाविव द्वितीया ॥ ३१ ॥ नमस्कृत्वेति । संवृतः राक्षस्यदर्शनाय शिंशुपापर्णैर्गूढोऽभूत् ॥३२॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

तत्र मग्नाम् सग्रहां क्रूरग्रहाविष्टाम् ॥२३॥२४॥ लतामकुसुमामिवेति पाठः । आभरणपरिहारादिति भावः। वपुषाऽलंकृता स्वभावरमणीयेत्यर्थः । विभाति न विभाति चेति । स्वभावसौन्दर्यादसंस्काराच्चेति भावः । अत्र तां तामिति तच्छब्दावृत्त्या तत्तदवस्थाभेदस्य वर्णितत्वादपौनरुक्त्यम् ॥२५॥२६॥ भर्तृतेजसा भर्तृपराक्रमानुसन्धानेन अदीनहृदयाम् ॥२७–२९॥ दुःखस्य दुःखसागरस्य । अत्राधेयेनाधारनिगरणम् । क्षामाम् इति पाठः। क्षामां कृशाम् विनाऽऽभरणशोभिनीम् आभरणानुग्रहमनपेक्ष्यैव स्वसौन्दर्येण शोभमानाम्॥३०॥ नमश्चक्रे च राघवमिति । भगवतो राघवस्यानुग्रहादेवेयं मया दृष्टेति पुनः पुनः स्मृत्वा नमस्कारः॥३१॥ संवृतोऽभवत् राक्षसीनां दर्शनपरिहाराय सूक्ष्मरूपमवलम्ब्य वृक्षमूलसमीपशाखासु निलीनोऽभवत् ॥३२॥ इति श्रीमहे० श्रीरामायण०सुन्दरकाण्डव्याख्यायां सप्तदशः सर्गः ॥१७॥

तथेत्यादि । विप्रेक्षमाणस्य विचिन्वतश्च । विप्रेक्षमाणे विचिन्वति च तस्मिन्नित्यर्थः "यस्य च भावेन०—" इत्यर्थे षष्ठी ॥१॥ विरात्रे अपररात्रे । "अहस्सर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः" इत्यत्र चकारादव्ययादुत्तरस्य रात्रिशब्दस्य समासान्तोऽच् प्रत्ययः । ब्रह्मरक्षसां ब्राह्मणत्वविशिष्ट

तथा विप्रेक्षमाणस्य वनं पुष्पितपादपम् । विचिन्वतश्च वैदेहीं किंचिच्छेषा निशाऽभवत् ॥ १ ॥ षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् । शुश्राव ब्रह्मघोषांश्च विरात्रे ब्रह्मरक्षसाम् ॥ २ ॥ अथ मङ्गलवादित्रैः शब्दैः श्रोत्रमनोहरैः । प्राबुध्यत महाबाहुर्दशग्रीवो महाबलः ॥ ३ ॥ विबुध्य तु यथाकालं राक्षसेन्द्रः प्रतापवान् । स्रस्तमाल्याम्बरधरो वैदेहीमन्वचिन्तयत् ॥ ४ ॥ भृशं नियुक्तस्तस्यां च मदनेन मदोत्कटः । न स तं राक्षसः कामं शशाकात्मनि गूहितुम् ॥ ५ ॥ स सर्वाभरणैर्युक्तो बिभ्रच्छ्रियमनुत्तमाम् । तां नगैर्बहुभिर्जुष्टां सर्वपुष्पफलोपगैः ॥ ६ ॥ वृतां पुष्करिणीभिश्च नानापुष्पोपशोभिताम् । सदामदैश्च विहगैर्विचित्रां परमाद्भुताम् ॥ ७ ॥

रक्षसाम् । ब्रह्मघोषान् वेदघोषान् ॥ २–४ ॥ नियुक्तः प्रेरितः ॥ ५–७ ॥

तथेति । किञ्चिच्छेषा अपरयाममात्रशेषा । विचिन्वतः तस्याः स्पष्टदर्शनाय राक्षसीनिद्रारूपमवसरमन्वेषयतः ॥१॥ षडङ्गानि शिक्षादीनि । विरात्रिः विपर्यस्त रात्रिः, अपररात्र इत्यर्थः । अस्मिन् ब्रह्मरक्षसां ब्राह्मणत्वविशिष्टराक्षसानाम् ॥ २ ॥३॥ निद्रावशादेव स्रस्तमाल्याम्बरधरः ॥४॥ नियुक्तः प्रेरितः वस्तुतस्तु मदने सत्यपि मदेनोत्कटो न अत एव तस्यां सीतायां नियुक्तः नितरां युक्तः, विनीत इत्यर्थः । अत एव राक्षसः तं काममात्मनि गूहितुं न शशाकेति काकुः॥ ५–७ ॥

तिल०—भृशं नियुक्तः गूढाभिनिवेशचित्तः । कामं कामवेगम् । ईदृशेषु तीर्थस्यान्यथायोजनं भ्रान्त्यैव । रक्षसस्तमोगुणाविष्टस्य भगवन्मायामोहितस्याकार्येष्वेव प्रवृत्तेः । तथा क्रियमाण भगवद्ध्यानमपि पाप भोगोत्तरं जन्मान्तरे उत्तमफलायेति बोध्यम् । अत एव ऋक्षाश्वमेधनाम्नो राज्ञो दानस्तावकऋङ्मन्त्रः—" न युष्मे वाजबन्धवो निनित्सुश्च न मर्त्यः । अवद्यमधि दीधरत् " इति । अस्यार्थः—वाजमित्यन्ननाम, अन्न दानेन ये सर्वेषां बन्धवस्तेषां सम्बोधनम् । हे वाजबन्धवः । युष्मे युष्मासु । अधिरसत्यमर्थानुवादी । निनित्सुश्च निन्दनेच्छाशीलोपि मर्त्यः अवद्यं न दीधरत् न धारयति । भवदनुसन्धानेनैव निष्पापत्वादिति । एवञ्च भगवतो निन्दाबद्धभावेन ध्यानमपि नरकभोगोत्तरं जन्मान्तरे उत्तमफलाय, अत एवास्य मरणोत्तरं चतुर्थचतुर्युग्यां चेदिराजकुले जन्म, चतुर्विंशतिचतुर्युग्यां रामावतार इति हरिवंशोक्तेः । तावत्पर्यन्तं चैतत्पापफल भोग इत्यर्थायतमिति बोध्यम् ॥ ५ ॥

वीथीः उद्यानवीथीः ॥ ८ ॥ ९ ॥ महेन्द्रं देवगन्धर्वयोषित इव व्रजन्तं तम् अङ्गनाशतमात्रम् अनुव्रजत् अन्वव्रजत् ॥ १० ॥ तालवृन्तानि व्यजनानि ॥ ११ ॥ भृङ्गारैः कनकालुकाभिः । "भृङ्गारः कनकालुका" इत्यमरः । मण्डलाग्रान् असिविशेषान् । "मण्डलाग्रो नतार्थकः" इति वैजयन्ती ।

ईहामृगैश्च विविधैर्जुष्टां दृष्टिमनोहरैः । वीथीः संप्रेक्षमाणश्च मणिकाञ्चनतोरणाः ॥ ८ ॥ नानामृगगणाकीर्णां फलैः प्रपतितैर्वृताम् । अशोकवनिकामेव प्राविशत् सन्ततद्रुमाम् ॥ ९ ॥ अङ्गनाशतमात्रं तु तं व्रजन्तमनुव्रजत् । महेन्द्रमिव पौलस्त्यं देवगन्धर्वयोषितः ॥ १० ॥ दीपिकाः काञ्चनीः काश्चिज्जगृहुस्तत्र योषितः । वालव्यजनहस्ताश्च तालवृन्तानि चापराः ॥ ११ ॥ काञ्चनैरपि भृङ्गारैर्जह्रुः सलिलमग्रतः । मण्डलाग्रान् बृसीं चैव गृह्यान्याः पृष्ठतो ययुः ॥ १२ ॥ काचिद्रत्नमयीं स्थालीं पूर्णां पानस्य भामिनी । दक्षिणा दक्षिणेनैव तदा जग्राह पाणिना ॥ १३ ॥ राजहंसप्रतीकाशं छत्रं पूर्णशशिप्रभम् । सौवर्णदण्डमपरा गृहीत्वा पृष्ठतो ययौ ॥ १४ ॥ निद्रामदपरीताक्ष्यो रावणस्योत्तमाः स्त्रियः । अनुजग्मुः पतिं वीरं घनं विद्युल्लता इव ॥ १५ ॥ व्याविद्धहारकेयूराः समामृदितवर्णकाः । समागलितकेशान्ताः सस्वेदवदनास्तथा ॥ १६ ॥ घूर्णन्त्यो मदशेषेण निद्रया च शुभाननाः । स्वेदक्लिष्टाङ्गकुसुमाः सुमाल्याकुलमूर्धजाः ॥ १७ ॥ प्रयान्तं नैर्ऋतपतिं नार्यो मदिरलोचनाः । बहुमानाच्च कामाच्च प्रिया भार्यास्तमन्वयुः ॥ १८ ॥

बृसीम् आस्तरणम् । गृह्य गृहीत्वा ॥ १२ ॥ काचिदिति । पानस्य पूर्णां पीयत इति पानं मधु तस्य पूर्णां तेन पूर्णाम् । "पूरणगुण०—" इत्यादिना सुहितार्थयोगे षष्ठीसमासनिषेधज्ञापकादत्र षष्ठी । स्थालीं पात्रीम् ॥ १३–१५ ॥ व्याविद्धेति । व्याविद्धाः व्यत्यस्ततया न्यस्ताः । समामृदितवर्णकाः सम्मृष्टानुलेपनाः । "अङ्गरागः समालम्भो वर्णकश्च विलेपनम्" इति निघण्टुः ॥ १६–१८ ॥



वीथीः अशोकवनिकामार्गगमनवीथीः ॥ ८ ॥ ९ ॥ अङ्गनेति । अनुव्रजत् । अडभाव आर्षः ॥ १० ॥ दीपिकाः काञ्चनीः काञ्चनदण्डारोपितदीपिकाः ॥ ११ ॥ काञ्चनैः भृङ्गारैः कनकालुभिः । भृङ्गाराः धुत्तूरकुसुमसदृशजलपात्राणि । गृह्य गृहीत्वा ॥ १२ ॥ काचिदिति । पानेन पूर्णाम् ॥ १३–१५ ॥ समामृदितवर्णकाः

मदेनाश्चिता गतिर्यस्य स मदाश्चितगतिः ॥ १९ ॥ २० ॥ तं चेत्यादि । द्वारदेशम् अशोकवनद्वारदेशम् ॥ २१ ॥ गन्धतैलं गन्धवासित तैलम् ॥ २२ ॥ समक्षं प्रत्यक्षम् । अपविद्धशरासनम् अधृतशरासनम् ॥ २३ ॥ मथितामृतफेनाभं मथितं तक्रम् अमृतं धारोष्णं तयोर्यत् फेनं तदाभम् । " निरम्बु घोलं मथितं धारोष्णं त्वमृतं पयः " इत्युभयत्र वैजयन्ती । विमुक्तं स्वस्थानात्प्रचलितम् अङ्गदे सक्तं वस्त्रं सलीलं यथा भवति

स च कामपराधीनः पतिस्तासां महाबलः । सीतासक्तमना मन्दो मदाञ्चितगतिर्बभौ ॥ १९ ॥ ततः काञ्चीनिनादं च नूपुराणां च निःस्वनम् । शुश्राव परमस्त्रीणां स कपिर्मारुतात्मजः ॥ २० ॥ तं चाप्रतिमकर्माणमचिन्त्यबल पौरुषम् । द्वारदेशमनुप्राप्तं ददर्श हनुमान् कपिः ॥ २१ ॥ दीपिकाभिरनेकाभिः समन्तादवभासितम् । गन्धतैलाव सिक्ताभिर्ध्रियमाणाभिरग्रतः ॥ २२ ॥ कामदर्पमदैर्युक्तं जिह्मताम्रायतेक्षणम् । समक्षमिव कन्दर्पमपविद्धशरासनम् ॥ २३ ॥ मथितामृतफेनाभमरजो वस्त्रमुत्तमम् । सलीलमनुकर्षन्तं विमुक्तं सक्तमङ्गदे ॥ २४ ॥ तं पत्रविटपे लीनः पत्रपुष्पघनावृतः । समीपमिव संक्रान्तं निध्यातुमुपचक्रमे ॥ २५ ॥ अवेक्षमाणस्तु ततो ददर्श कपिकुञ्जरः । रूपयौवनसम्पन्ना रावणस्य वरस्त्रियः ॥२६॥ ताभिः परिवृतो राजा सुरूपाभिर्महायशाः । तन्मृगद्विजसंघुष्टं प्रविष्टः प्रमदावनम् ॥ २७ ॥ क्षीबो विचित्राभरणः शङ्कुकर्णो महाबलः । तेन विश्रवसः पुत्रः स दृष्टो राक्षसाधिपः ॥२८॥

तथा अनुकर्षन्तमित्यन्वयः ॥२४॥ तमिति । पत्रविटपे पत्रवति विटपे । लीनः छन्नः । पत्रपुष्पघनावृतः पत्रपुष्पसमूहावृतः । इवशब्दो वाक्यालङ्कारे । यद्वा दूरे समागतमपि तेजसा समीपे संक्रान्तमिव स्थितम् । तं निध्यातुं द्रष्टुमुपचक्रमे । "निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः ॥२५॥२६॥ प्रमदावनम् अन्तःपुरोद्यानम् ॥ २७ ॥ क्षीब इति । क्षीबः मत्तः । शङ्कुकर्णः गर्वेण स्तब्धकर्ण इत्यर्थः ॥ २८॥ २९ ॥

सम्यगामृष्टाङ्गरागाः ॥ १६–१८ ॥ मन्दो दुर्मतिः । मन्दं यथा तथा अञ्चिता गतिर्यस्य ॥ १९ ॥ २० ॥ द्वारदेशम् अशोकवनिकाप्राकारदेशम् ॥ २१ ॥ २२ ॥ अपविद्धशरासनं त्यक्तेक्षुचापम् । समक्षं प्रत्यक्षं कन्दर्पमिव स्थितम् ॥ २३ ॥ सलीलमनुकर्षन्तमिति । विमुक्तं स्वस्थानाच्चालितम् ॥ २४ ॥ पत्रविटपे पत्रबहुल विटपे । निध्यातुमीक्षितुम् ॥ २५ ॥ २६ ॥ ताभिरिति । प्रमदावनं प्रमदानां वनम् ॥ २७ ॥ क्षीबो मत्तः ॥ २८ ॥ २९ ॥

अवप्लुतः अवरूढः । रावणचेष्टास्सर्वा द्रष्टुं पूर्वस्थानादधःशाखां समाश्रित इत्यर्थः ॥ ३० ॥ सः हनुमान् । तथा पूर्वोक्तरीत्या । उग्रतेजास्सन्नपि । तस्य रावणस्य । तेजसा निर्धूतः सन् । पत्रगुह्यान्तरे पत्रगूढप्रदेशे । संवृतोऽभवत् गूढोऽभवत् ॥ ३१ ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टादशः सर्गः ॥ १८ ॥ तस्मिन्नित्यादिश्लोकद्वयमेकान्वयम् । ततः रावणागमना

वृतः परमनारीभिस्ताराभिरिव चन्द्रमाः । तं ददर्श महातेजास्तेजोवन्तं महाकपिः ॥२९॥ रावणोऽयं महाबाहुरिति संचिन्त्य वानरः । अवप्लुतो महातेजा हनुमान् मारुतात्मजः ॥३०॥ स तथा प्युग्रतेजाः सन् निर्धूतस्तस्य तेजसा । पत्रगुह्यान्तरे सक्तो हनुमान् संवृतोऽभवत् ॥३१॥ स तामसितकेशान्तां सुश्रोणीं संहतस्तनीम् । दिदृक्षुरसितापाङ्गा मुपावर्तत रावणः ॥३२॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे अष्टादशः सर्गः ॥१८॥

तस्मिन्नेव ततः काले राजपुत्री त्वनिन्दिता । रूपयौवनसम्पन्नं भूषणोत्तमभूषितम् ॥१॥ ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् । प्रावेपत वरारोहा प्रवाते कदली यथा ॥ २ ॥ आच्छाद्योदरमूरुभ्यां बाहुभ्यां च पयोधरौ । उपविष्टा विशालाक्षी रुदन्ती वरवर्णिनी ॥ ३ ॥ दशग्रीवस्तु वैदेहीं रक्षितां राक्षसीगणैः । ददर्श सीतां दुःखार्तां नावं सन्नामिवार्णवे ॥ ४ ॥ असंवृतायामासीनां धरण्यां संशितव्रताम् । छिन्नां प्रपतितां भूमौ शाखामिव वनस्पतेः ॥ ५ ॥ मलमण्डनचित्राङ्गीं मण्डनार्हाममण्डिताम् । मृणाली पङ्कदिग्धेव विभाति न विभाति च ॥ ६ ॥

नन्तरम् । तस्मिन्नेव काले तदागमनानन्तरकाल एव । भूषणोत्तमभूषितं रूपयौवनसम्पन्नं रावणं ततो दृष्ट्वैव तत्र दूरदेश एव दृष्ट्वा प्रावेपतेति संबन्धः ॥ १–५ ॥ मलमण्डनचित्राङ्गीं मलरूपमण्डनेन चित्राङ्गीम्, मलावृतामप्याश्चर्यावहदेहामित्यर्थः । मृणाली पङ्कदिग्धेवेत्यत्र येत्यध्याहार्यम् ॥ ६–८ ॥

अवप्लुतः रावणरूपचेष्टितावलोकनार्थमग्रविटपारूढ इत्यर्थः ॥ ३० ॥ पत्रगुह्यान्तरे पत्रगूढप्रदेशे ॥ ३१ ॥ उपावर्तत समीपं प्राप्तः ॥ ३२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायामष्टादशः सर्गः ॥ १८ ॥ तस्मिन्नित्यादिश्लोकद्वयमेकं वाक्यम् । तस्मिन्नेव काले आगमनकाल एव । तं रावणम् ॥ १ ॥ ततो दृष्ट्वा तत्र दूरदेशे एव दृष्ट्वा । ततः दर्शनानन्तरं प्रावेपतेति सम्बन्धः ॥ २ ॥ रुदन्ती उपविष्टाऽभूत् । भीतस्वभावोक्त्या स्वभावोक्तिरत्रालङ्कारः ॥३॥ दशग्रीव इति । सन्नां शीर्णाम् नावम् ॥ ४ ॥ संशितव्रताम् अतितीक्ष्णव्रताम् । मलमण्डनचित्राङ्गीं मलमेव मण्डनं तेन चित्राङ्गीं

आविष्टां मणिमन्त्राद्यभिभूताम् । धूप्यमानां सन्तप्यमानाम् । धूमः केतुरिव धूमकेतुः, केतुना ग्रहेणेत्यर्थः । यद्वा ग्रहेण ग्राहकेण आच्छादकेनेति धूमकेतुर्विशिष्यते ॥ ९ ॥ वृत्तेति । वृत्तं दृढं शीलं स्वभावो यस्य तत् तच्च तत् कुलं च तस्मिन् । आचारवति समयाचारवति । धार्मिके यज्ञादिधर्मप्रधाने एवंभूते कुले जाताम् । संस्कारमापन्नां विवाहरूपसंस्कारमापन्नाम् । अतः संस्कारद्वारा दुष्कुले पुनर्जातामिव स्थिताम् । कुमाराणा

समीपं राजसिंहस्य रामस्य विदितात्मनः । सङ्कल्पहयसंयुक्तैर्यान्तीमिव मनोरथैः ॥ ७ ॥ शुष्यन्तीं रुदतीमेकां ध्यानशोकपरायणाम् । दुःखस्यान्तमपश्यन्तीं रामां राममनुव्रताम् ॥८॥ वेष्टमानां तथाऽऽविष्टां पन्नगेन्द्रवधूमिव । धूप्यमानां ग्रहेणेव रोहिणीं धूमकेतुना ॥९॥ वृत्तशीलकुले जातामाचारवति धार्मिके। पुनः संस्कारमापन्नां जातामिव च दुष्कुले ॥१०॥ अभूतेनापवादेन कीर्तिं निपतितामिव। आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥ ११ ॥ सन्नामिव महाकीर्तिं श्रद्धामिव विमानिताम्। पूजामिव परिक्षीणामाशां प्रतिहतामिव ॥१२॥ आयतीमिव विध्वस्तामाज्ञां प्रतिहतामिव। दीप्तामिव दिशं काले पूजामपहृतामिव ॥ १३ ॥

मुपनयनमिव कुमारीणां विवाहो द्वितीयं जन्म। "वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः" इति स्मृतेः ॥ १०॥ ११॥ सन्नां क्षीणाम्। श्रद्धामिव विमानिताम् अवमानितामित्यर्थः । अवमाने हि कृते अवमन्तरि श्रद्धा मन्दीभवति । पूजामिव परिक्षीणां स्वल्पपूजाद्रव्यामित्यर्थः । प्रतिहतां निष्फलाम् ॥१२॥ आयतीं धनलाभम् । विध्वस्तां मन्दीभूताम् । प्रतिहताम् अननुष्ठिताम् । दीप्तां दाहयुक्ताम् । काले उत्पातकाले । पूजामपहृतामिव ।

कर्बुरगात्रीम्, तां ददर्शेति पूर्वेण सम्बन्धः॥ ५ ॥ ६ ॥ सङ्कल्पहयसंयुक्तैः सङ्कल्पाः एवमेवं करिष्यामीति विचाराः, त एव हयाः तत्संयुक्तैः मनोरथैः रामस्य समीपं यान्तीं गतामिव स्थिताम् ॥ ७ ॥ ८ ॥ आविष्टां मणिमन्त्रादिभिरभिभूताम् । धूप्यमानां सन्तप्यमानाम् ॥ ९ ॥ वृत्तशीलकुले जातां वृत्तं मर्यादानुल्लङ्घनम्, शीलं तत्स्वभावः । आचारवति विहितकर्मानुष्ठानवति । दुष्कुले संस्कारमापन्नां दुष्कुले पाणिग्रहणलक्षणं संस्कारं प्राप्ताम् अत एव दुष्कुले पुनर्जातामिव विवाहलक्षणं द्वितीयं जन्म गताम्, सत्कुलप्रसूतां दुष्कुलोढामित्यर्थः । स्त्रीणां विवाहस्योपनयनस्थानत्वात्तदेव द्वितीयं जन्मेति भावः ॥ १० ॥ ११ ॥ सन्नां क्षीणाम् । विमानिताम् अनादृताम् ॥ १२ ॥ आयतीमागामिफलम् । दीप्तां दह्यमानाम् । काले उत्पातकाले ॥ १३ ॥ १४ ॥

स०–धार्मिके एतादृशे पितृकुले जाता । सैव दुष्कुले वृत्तादिरहिते विवाहाख्यसंस्कारेण पुनर्जाता चेत्सा यथा वर्तेत तथा विद्यमानाम् ॥ १० ॥

अत्र पूजाशब्देन पूजाद्रव्यमुच्यते ॥ १३ ॥ विध्वस्तां हिमादिहताम् । तमोध्वस्तां तमस्संवृताम् । उपक्षीणां स्वल्पजलामित्यर्थः ॥ १४ ॥ परामृष्टां, शूद्रादिभिरिति शेषः ॥ १५ ॥ उत्कृष्टपर्णकमलाम् उद्धृतपत्रकमलाम् ॥ १६ ॥ विस्राविताम् रोधोभङ्गादिना अन्यनिर्गमितजलामित्यर्थः । मृजया उद्वर्तनाद्यङ्गशोधनेन ॥ १७ ॥ सुजाताङ्गीं सुन्दराङ्गीम् ॥ १८ ॥ आलितां बद्धाम् ॥ १९ ॥ २० ॥ अल्पाहारां तोयमात्राहारामित्यर्थः । यद्वा

पद्मिनीमिव विध्वस्तां हतशूरां चमूमिव । प्रभामिव तमोध्वस्तामुपक्षीणामिवापगाम् ॥ १४ ॥ वेदीमिव परामृष्टां शान्तामग्निशिखामिव । पौर्णमासीमिव निशां राहुग्रस्तेन्दुमण्डलाम् ॥ १५ ॥ उत्कृष्टपर्णकमलां वित्रासित विहङ्गमाम् । हस्तिहस्तपरामृष्टामाकुलां पद्मिनीमिव ॥ १६ ॥ पतिशोकातुरां शुष्कां नदीं विस्रावितामिव । परया मृजया हीनां कृष्णपक्षनिशामिव ॥ १७ ॥ सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् । तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ॥ १८ ॥ गृहीतामालितां स्तम्भे यूथपेन विनाकृताम् । निःश्वसन्तीं सुदुःखार्तां गजराजवधूमिव ॥ १९ ॥ एकया दीर्घया वेण्या शोभमानामयत्नतः । नीलया नीरदापाये वनराज्या महीमिव ॥ २० ॥ उपवासेन शोकेन ध्यानेन च भयेन च । परिक्षीणां कृशां दीनामल्पाहारां तपोधनाम् ॥२१॥ आयाचमानां दुःखार्तां प्राञ्जलिं देवतामिव । भावेन रघुमुख्यस्य दशग्रीवपराभवम् ॥ २२ ॥

अल्पाहारां मितभोजिनीमित्युत्तमस्त्रीलक्षणमुच्यते ॥ २१ ॥ आयाचमानामिति । रघुमुख्यस्य कर्तुः दशग्रीवपराभवं भावेन मनसा आयाचमानां प्रार्थयन्तीमिव स्थिताम् ॥ २२ ॥

परामृष्टाम् अपवित्रैरुपहताम् ॥ १५ ॥ उत्कृष्टपर्णकमलाम् उद्धृतपत्रपद्माम् ॥ १६ ॥ विस्रावितां रोधोभङ्गादिना निर्जलीकृताम् । मृजया उद्वर्तनाद्यङ्गपरिशोधनेन ॥ १७ ॥ १८ ॥ आलितां बद्धाम् ॥ १९–२१ ॥ आयाचमानामिति । प्राञ्जलिं बद्धाञ्जलिम् । रघुमुख्यस्य कर्तुः दशग्रीवविप्रकपराभवं भावेन मनसा देवता

स०—शोकेन रामविश्लेषजेन । ध्यानेन पत्युः । भयेन रावणजन्येन । अल्पाहारां पत्युच्छिष्टं विनाऽन्यस्य स्वीकारायोग्यत्वाच्छरीरयात्रार्थं नीरस्याशितानशितत्वोक्तेस्तद्ग्रहणस्यादोषत्वात् । पत्युर्नारायणावतारत्वेन तत्र तत्सान्निध्यविशेषात्तद्ग्रहो युक्तः । उपेन्द्रावतारत्वाद्रामस्य, इन्द्रस्य तदग्रजत्वात्तद्दत्तपायसाशनं गौरवतः स्वान्नत्वाच्च भोजनं युक्तमिति मन्तव्यम् ॥ २१ ॥

समीक्षमाणां रक्षकं समीक्षमाणाम् । सुपक्ष्मेति अन्ते ताम्रं मध्ये शुक्लमस्या लोचनमित्युच्यते ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥ स तामित्यादि । साकारैः सेङ्गितैः । "आकारस्त्विङ्गिताकृती" इत्यमरः ।

समीक्षमाणां रुदतीमनिन्दितां सुपक्ष्मताम्रायतशुक्ललोचनाम् । अनुव्रतां राममतीव मैथिलीं प्रलोभयामास वधाय रावणः ॥ २३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

स तां पतिव्रतां दीनां निरानन्दां तपस्विनीम् । साकारैर्मधुरैर्वाक्यैर्न्यदर्शयत रावणः ॥ १ ॥ मां दृष्ट्वा नागनासोरु गूहमाना स्तनोदरम् । अदर्शनमिवात्मानं भयान्नेतुं त्वमिच्छसि ॥ २ ॥ कामये त्वां विशालाक्षि बहु मन्यस्व मां प्रिये । सर्वाङ्गगुणसम्पन्ने सर्वलोकमनोहरे ॥ ३ ॥ नेह केचिन्मनुष्या वा राक्षसाः कामरूपिणः । व्यपसर्पतु ते सीते भयं मत्तः समुत्थितम् ॥ ४ ॥ स्वधर्मो रक्षसां भीरु सर्वथैव न संशयः । गमनं वा परस्त्रीणां हरणं संप्रमथ्य वा ॥ ५ ॥ एवं चैतदकामां तु न त्वां स्प्रक्ष्यामि मैथिलि । कामं कामः शरीरे मे यथाकामं प्रवर्तताम् ॥ ६ ॥

न्यदर्शयत, स्वाभिप्रायमिति शेषः । सीतायै स्वाभिप्रायं प्रकाशितवानित्यर्थः ॥ १ ॥ अदर्शनं अदृश्यत्वम् ॥ २ ॥ मां दृष्ट्वा भीतिर्न कर्तव्येत्याह—कामय इति ॥ ३ ॥ अन्ये च भयहेतवोऽत्र न सन्तीत्याह—नेहेति ॥ ४ ॥ परदारेच्छादोष इत्याशङ्क्याह—स्वधर्म इति । संप्रमथ्य बलात्कृत्य । कामम्

मायाचमानामिव प्रार्थयन्तीमिवेति सम्बन्धः ॥२२॥२३॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायामेकोनविंशः सर्गः ॥ १९ ॥

स इति । साकारैः साभिप्रायैः, सेङ्गितैरित्यर्थः । न्यदर्शयत, स्वाभिप्रायमिति शेषः ॥ १ ॥ अदर्शनम् अदृश्यत्वम् । भयादिव नेतुं नाययितुम् । वस्तुतस्तु पुत्रसमभृत्यदर्शनविषये भयादिकं नोचितमिति भावः ॥ २ ॥ कामय इति । वस्तुतस्तु—त्वां कामये, ईश्वरीत्वेनेति शेषः । अतो मां बहुमन्यस्व ॥ ३ ॥ नेहेति । मनुष्या राक्षसा वा, त्वद्भयकर्तार इति शेषः । वस्तुतस्तु—सर्वैश्वर्यास्तव न कुत्रापि भयशङ्केति भावः ॥ ४ ॥ यद्यपि परदारामिमर्शः स्वधर्मः तथापि नाहं त्वामकामयमानां स्प्रक्ष्यामीत्याह—स्वधर्म इत्यादिश्लोकद्वयेन । काममत्यर्थम् । यथाकामं यथेच्छं मे शरीरे कामः, तवेति शेषः । मयि तव इच्छा प्रवर्ततामिति भावः । स्वधर्म इत्यादिश्लोकद्वयस्य वास्तवार्थस्तु—कामुकः त्वं न विश्वसनीय इत्यत आह—स्वधर्म इत्यादि । यद्यपि रक्षसां परदाराहरणादिः स्वधर्मः स्वभावः । मे

अत्यन्तम् । यथाकामं यथेच्छम् ॥ ५ ॥ ६ ॥ देवीति । प्रणयस्व स्नेहं कुरु ॥७॥ एकवेणीति । एकवेणी असीमन्तितवेणी । धराशय्या भूशयनम् । औपयिकानि युक्तानि । " युक्तमौपयिकम् " इत्यमरः ॥ ८–१० ॥ स्त्रीरत्नमिति । मां प्राप्य हीति । हिः पादपूरणे अप्यर्थो वा । हे सुविग्रहे मां

देवि नेह भयं कार्यं मयि विश्वसिहि प्रिये । प्रणयस्व च तत्त्वेन मैवं भूः शोकलालसा ॥ ७ ॥ एकवेणी धराशय्या ध्यानं मलिनमम्बरम् । अस्थानेऽप्युपवासश्च नैतान्यौपयिकानि ते ॥ ८ ॥ विचित्राणि च माल्यानि चन्दनान्यगुरूणि च । विविधानि च वासांसि दिव्यान्याभरणानि च ॥ ९ ॥ महार्हाणि च पानानि शयनान्यासनानि च । गीतं नृत्तं च वाद्यं च लभ मां प्राप्य मैथिलि ॥ १० ॥ स्त्रीरत्नमसि मैवं भूः कुरु गात्रेषु भूषणम् । मां प्राप्य हि कथं नु स्यास्त्वमनर्हा सुविग्रहे ॥ ११ ॥ इदं ते चारु संजातं यौवनं व्यतिवर्तते । यदतीतं पुनर्नैति स्रोतः शीघ्रमपामिव ॥ १२ ॥ त्वां कृत्वोपरतो मन्ये रूपकर्ता स विश्वसृक् । न हि रूपोपमा त्वन्या तवास्ति शुभदर्शने ॥ १३ ॥

प्राप्यापि कथमनर्हा स्याः ॥ ११ ॥ १२ ॥ उपरतः निवृत्तः । अत्र इतिकरणं द्रष्टव्यम् । उत्तरोत्तरं सातिशयं रूपं सिसृक्षुर्विधाता त्वां सृष्ट्वा इतःपरं सातिशयं रूपं स्रष्टुं न शक्यत इति धिया सृष्टेरुपरत इति मन्य इत्यर्थः ॥ १३ ॥

शरीरे काममत्यर्थम् यथाकामं यथेच्छं कामः प्रवर्ततां नाम मन्मथविकारोऽस्तु नाम, तथाप्येतत्सर्वं ममेष्टदेवतायां त्वयि न घटत इति शेषः । अत एव अकामां मयि भृत्यत्वकामनारहिताम् । यद्वा अकामां विष्णुकामां त्वां न स्प्रक्ष्यामि त्वदाज्ञां विना पूजां कर्तुमपि बिभेमीति शेषः ॥ ५ ॥ ६ ॥ देवीति । प्रणयस्व प्रसीद ॥ ७ ॥ एकेति । धराशय्या भूशयनम् । नौपयिकानि न युक्तानि ॥ ८ ॥ विचित्राणीत्यादिः स्पष्टार्थः । वस्तुतस्तु–विचित्राणीत्यादिश्लोकद्वयमेकं वाक्यम् । मां प्राप्य, भृत्यत्वेनेति शेषः । माल्यादीनि लभ प्राप्नुहीति सम्बन्धः ॥ ९ ॥ १० ॥ स्त्रीरत्नमिति । मां प्राप्य हि प्राप्यापि भूषणादीनामनर्हा स्या इति सम्बन्धः॥११॥ इदमिति । यदिदं ते सञ्जातं यौवनं तत् व्यतिवर्तते अतिक्रम्य गच्छति । अतीतं न पुनरेति । अतो भुङ्क्ष्व भोगानिति शेषः । वस्तुतस्तु–त्वत्पूजाक्षमं मदीयमायुः व्यर्थं गच्छतीति खिद्यति–इदं ते इति । ते तव भृत्यस्य, ममेति शेषः । यौवनं दार्ढ्यावस्था यद् यतो भृत्यस्य ममायुः व्यर्थं गच्छति, अतो मम तव पूजार्थमनुज्ञां देहीति शेषः ॥१२॥ रूपकर्ता दिव्यरूपस्रष्टा त्वां कृत्वा निर्माय उपरतो दिव्यरूपनिर्माणाद्विरत इति मन्ये । उत्प्रेक्षायां हेतुः हि यतः तव रूपोपमा नास्ति यदि

त्वामिति । कः अतिवर्तेत ? न कोऽपीत्यर्थः ॥ १४–१९ ॥ असकृदिति । विमृदितध्वजाः भग्नध्वजाः । प्रत्यनीकेषु शत्रुषु मध्ये ॥ २० ॥ इच्छयेति ।

त्वां समासाद्य वैदेहि रूपयौवनशालिनीम् । कः पुमानतिवर्तेत साक्षादपि पितामहः ॥ १४ ॥ यद्यत् पश्यामि ते गात्रं शीतांशुसदृशानने । तस्मिंस्तस्मिन् पृथुश्रोणि चक्षुर्मम निबध्यते ॥ १५ ॥ भव मैथिलि भार्या मे मोहमेनं विसर्जय । बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः । सर्वासामेव भद्रं ते ममाग्रमहिषी भव ॥ १६ ॥ लोकेभ्यो यानि रत्नानि सम्प्रमथ्याहृतानि वै । तानि मे भीरु सर्वाणि राज्यं चैतदहं च ते ॥ १७ ॥ विजित्य पृथिवीं सर्वां नाना नगरमालिनीम् । जनकाय प्रदास्यामि तव हेतोर्विलासिनि ॥१८॥ नेह पश्यामि लोकेऽन्यं यो मे प्रतिबलो भवेत् । पश्य मे सुमहद्वीर्यमप्रतिद्वन्द्वमाहवे ॥ १९ ॥ असकृत् संयुगे भग्ना मया विमृदितध्वजाः । अशक्ताः प्रत्यनीकेषु स्थातुं मम सुरासुराः ॥ २० ॥ इच्छया क्रियतामद्य प्रतिकर्म तवोत्तमम् ॥ २१ ॥ सप्रभाण्यवसज्यन्तां तवाङ्गे भूषणानि च । साधु पश्यामि ते रूपं संयुक्तं प्रतिकर्मणा ॥ २२ ॥

प्रतिकर्म अलङ्कारः । "प्रतिकर्म प्रसाधनम्" इत्यमरः । अवसज्यन्ताम् अर्प्यन्ताम् । प्रतिकर्मणा संयुक्तं पश्यामि पश्येयम् ॥ २१ ॥ २२ ॥

पुनः स उत्तमरूपनिर्माणे यतेत न तथापि तवोपमेत्याशयः ॥ १३ ॥ त्वामिति । नातिवर्तेत न क्षुभ्येत । कः पुमानतिवर्तेत इति पाठे न कोप्यतिक्रमेतेत्यर्थः । वस्तुतस्तु-मदाराधने तव बुद्धिः कथं स्यादत आह–त्वामिति । त्वां लक्ष्मीम् "सीता लक्ष्मीर्भवान् विष्णुः" इति वक्ष्यमाणत्वात् । समासाद्य साक्षात्पितामहोऽपि नातिवर्तेत अनाराधितुं न शक्नुयात् पुमांस्तु को वा अतिवर्तेतेत्यर्थः ॥ १४ ॥ यद्यदिति । गात्रम् अवयवविशेषम् । तस्मिंस्तस्मिन् अवयवविशेषे चक्षुर्निबध्यते इष्टदेवतायास्तव दर्शनस्य मुक्तिसाधकत्वादिति भावः ॥ १५ ॥ भवेति प्रकृतार्थः स्पष्टः । वस्तुतस्तु–भवेति । मैथिली भार्या भंया कान्त्या आर्या श्रेष्ठा भव एतं मोहं मयि शत्रुत्वशङ्कां विसर्जय । मे मम उत्तमस्त्रीणां मम या अग्रमहिषी मन्दोदरी तस्याश्च मम च भव, ईश्वरीतिं शेषः ॥ १६ ॥ लोकेभ्य इत्यस्य वास्तवार्थस्तु– इष्टदेवतायै देव्यै रावणः स्वात्मात्मीयसमर्पणं करोति–लोकेभ्य इति श्लोकद्वयेन । अहमित्यनेनात्मसमर्पणम् । रत्नानीत्यादिना आत्मीयसमर्पणमिति ज्ञेयम् ॥ १७ ॥ तव हेतोः त्वत्प्रीत्यर्थम् ॥ १८ ॥ प्रतिबलो युद्धे जेता ॥ १९ ॥ प्रत्यनीकेषु शत्रुषु ॥ २० ॥ इच्छयेति । वस्तुतस्तु–मां लक्ष्मीम्, सम्पदमित्यर्थः ॥ २१ ॥ प्रतिकर्मणा युक्तं ते रूपं पश्यामि । भाविकमत्रालङ्कारः ॥ २२ ॥

प्रतिकर्मेति । दाक्षिण्येन सरलत्वेन । भुङ्क्ष्व अनुभव । "दक्षिणे सरलोदारौ" इत्यमरः ॥२३॥ यथेष्टमिति । ललस्व प्रीतिं कुरु । "लल ईप्सायाम्" इति धातुः ॥ २४ ॥ २५ ॥ रामानु०–ऋद्धिमित्यादि । ऋद्धिं संपदम् । श्रियं भाम् ॥ २५ ॥ एवमात्मानं प्रशस्य रामं निन्दति–किं करिष्यसीत्यादिना । निक्षिप्त

प्रतिकर्माभिसंयुक्ता दाक्षिण्येन वरानने । भुङ्क्ष्व भोगान् यथाकामं पिब भीरु रमस्व च ॥२३॥ यथेष्टं च प्रयच्छ त्वं पृथिवीं वा धनानि च । ललस्व मयि विस्रब्धा धृष्टमाज्ञापयस्व च । मत्प्रसादाल्ललन्त्याश्च ललन्तां बान्धवास्तव ॥ २४ ॥ ऋद्धिं ममानुपश्य त्वं श्रियं भद्रे यशश्च मे ॥ २५ ॥ किं करिष्यसि रामेण सुभगे चीरवाससा । निक्षिप्तविजयो रामो गतश्रीर्वनगोचरः । व्रती स्थण्डिलशायी च शङ्के जीवति वा न वा ॥ २६ ॥ नहि वैदेहि रामस्त्वां द्रष्टुं वाप्युपलप्स्यते । पुरोबलाकैरसितैर्मेघैर्ज्योत्स्नामिवावृताम् ॥ २७ ॥ न चापि मम हस्तात्त्वां प्राप्तुमर्हति राघवः । हिरण्यकशिपुः कीर्तिमिन्द्रहस्तगतामिव ॥ २८ ॥

विजयः त्यक्तविजय इत्यर्थः । स्थण्डिलशायी भूतलशायी ॥२६॥ नहीति । वाशब्दोऽवधारणे, द्रष्टुमपि नोपलप्स्यत एवेत्यर्थः । दर्शनमात्रफलमपि दर्शनं (च) न प्राप्स्यतीत्यर्थः पुरोऽग्रे बलाका येषां ते पुरोबलाकाः तैः । अनेन मेघानामतिविपुलतोच्यते । महामेघेष्वेव बलाकासञ्चार वर्णनात् ॥ २७ ॥ रामानु०–नहीति । वाशब्दोऽवधारणे । द्रष्टुं वा नोपलप्स्यत एवेत्यर्थः । पुरोबलाकैरसितैरिति विशेषणाद्वर्षासंबन्धिता द्योत्यते ॥ २७ ॥ न चापीति । हिरण्य

प्रतिकर्मेति । दाक्षिण्येन, मयीति शेषः॥२३॥ ललन्तां रमन्ताम् । वस्तुतस्तु–मत्प्रसादात् मयि प्रसादोऽनुग्रहः तस्मात् तव ललन्त्याः रमन्त्याः सत्याः बान्धवाश्च रमन्तामिति सम्बन्धः ॥ २४ ॥ ऋद्धिमित्यादीनां वास्तवार्थस्तु–रामाऽहं तेऽखिलसम्पत्समृद्धिं ददामि मां रामेण सह संयोजयेत्याशङ्क्य नाहं सम्पदाद्यर्थी किन्तु मोक्षकामी अतो यावन्मोक्षं त्वत्पादाब्जं न त्यजामीत्यभिप्रायेणाह–ऋद्धिं ममेत्यादिश्लोकचतुष्टयेन । हे सुभगे ! मम ऋद्ध्यादिकं पश्य । निक्षिप्तविजयः स्वतस्सिद्धविजय इत्यर्थः । वनगोचरः वनं जलं गोचरं निवासस्थानं यस्य सः नारायण इत्यर्थः । अत एव गतश्रीः गता प्राप्ता श्रीः लक्ष्मीः येन अत एव प्रतिभक्तसंरक्षणव्रतशीलः अत एव पितृवाक्यपरिपालनाय स्थण्डिलशायी यो रामः, अचीरवाससेति छेदः । चीरवासोरहितेन पीताम्बरधारिणेत्यर्थः । एतादृशेन तेन रामेण सह वा त्वम् इदानीं विद्यमानैश्वर्याद्यपेक्षया न किमपि करिष्यसीति शङ्के मन्ये अतो जीवति, मयि सतीति शेषः । रामस्त्वां द्रष्टुमपि नोपलप्स्यते न च मम हस्तात् त्वां राघवः प्राप्तुमर्हति, मद्वधानन्तरं रामस्त्वां द्रष्टुमप्युपलप्स्यते प्राप्तुमप्यर्हतीति भावः । हिरण्यकशिपुः कीर्तिमिन्द्रहस्तगता

कशिपुः कीर्तिमिन्द्रहस्तगतामिवेति वैधर्म्यदृष्टान्तः । अत्र कीर्तिशब्देन भार्या लक्ष्यते । हिरण्यकशिपुरिन्द्रहस्तगतां भार्यां पुनः प्राप्तवानित्येतत् भागवते प्रसिद्धम् । " व्यलुम्पत् राजशिबिरममरा राज्यकाङ्क्षिणः । इन्द्रस्तु राजमहिषीं मातरं मम चाग्रहीत् ॥ " इत्यादिप्रह्लाद

चारुस्मिते चारुदति चारुनेत्रे विलासिनि। मनो हरसि मे भीरु सुपर्णः पन्नगं यथा ॥ २९ ॥ क्लिष्टकौशेयवसनां तन्वीमप्यनलंकृताम् । त्वां दृष्ट्वा स्वेषु दारेषु रतिं नोपलभाम्यहम् ॥ ३० ॥ अन्तःपुरनिवासिन्यः स्त्रियः सर्वगुणान्विताः । यावन्त्यो मम सर्वासामैश्वर्यं कुरु जानकि ॥ ३१ ॥ मम ह्यसितकेशान्ते त्रैलोक्यप्रवराः स्त्रियः । तास्त्वां परिचरिष्यन्ति श्रियमप्सरसो यथा ॥ ३२ ॥ यानि वैश्रवणे सुभ्रु रत्नानि च धनानि च । तानि लोकांश्च सुश्रोणि मां च भुङ्क्ष्व यथासुखम् ॥ ३३ ॥ न रामस्तपसा देवि न बलेन न विक्रमैः । न धनेन मया तुल्यस्तेजसा यशसापि वा ॥ ३४ ॥ पिब विहर रमस्व भुङ्क्ष्व भोगान् धननिचयं प्रदिशामि मेदिनीं च । मयि लल ललने यथासुखं त्वं त्वयि च समेत्य ललन्तु बान्धवास्ते ॥ ३५ ॥

वचनात् ॥ २८–३० ॥ अन्तःपुरेति । ऐश्वर्यम् अन्तःपुरैश्वर्यम् । स्वामिनीत्वं कुरु प्राप्नुहीत्यर्थः ॥ ३१ ॥ ३२ ॥ भुङ्क्ष्व स्वाधीनं कुरु ॥ ३३ ॥ ॥ ३४ ॥ पिब, मद्यमिति शेषः । विहर सञ्चर । विहारशब्दस्य सञ्चारेऽपि प्रयोगात् ॥ ३५ ॥

मिव इति वैधर्म्यदृष्टान्तः । पुरा किल हिरण्यकशिपोर्भार्यां हृत्वा नारदमुखेन प्रार्थितः तस्मै पुनः प्रादादिति भागवते कथाऽस्ति । तथा च भार्याहरणमेव कीर्तिहरणमिति भावः ॥२६–२९॥ क्लिष्टकौशेयेत्यस्य वास्तवार्थस्तु–त्वां ममेष्टदेवतां दृष्ट्वा स्वेषु धनेषु दारेषु च रतिं नोपलभामि, इष्टदेवतायास्तव दर्शनमात्रेणानन्दपूर्णोऽहं सर्वतो निवृत्तोऽस्मीति भावः ॥ ३० ॥ ऐश्वर्यम् आधिपत्यम् ॥ ३१–३३ ॥ न राम इत्यस्य वास्तवार्थस्तु–रामः तपआदिना मया तुल्यो न भवति किन्तु निरवधिकषड्गुणैश्वर्यसम्पन्नो भगवान् श्रीरामो मत्तोऽप्यधिक एवेति भावः ॥ ३४ ॥ पिब, मध्विति शेषः । मयि लल रमस्व । वस्तुतस्तु-मयि भृत्ये सति लल ॥ ३५ ॥

स०–अनलंकृतामपि त्वां दृष्ट्वा स्वभार्यासु रतिं नोपलभामि नोपलभे । अलंकृतां पुनर्दृष्ट्वा तत्र रतिं नोपलभे इति किं वक्तव्यमित्यर्थः । एतेन सौन्दर्यातिशयो द्योत्यते ॥ ३० ॥

॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥ तस्येत्यादि ॥ १ ॥ दुःखार्तेत्यादि । तृणमिति । रावणस्य साक्षात्संभाषणानर्हत्वात्तृणव्यवधानकरणम् । प्रत्युवाचेति पुनरभिधानं वचनप्रकारविशेषकथनार्थम् । दुःखार्ताया अपि शुचिस्मितत्वाभिधानं वस्तुस्वभावेन सस्मितवत् प्रतीयमानत्वात् ॥ २ ॥ ३ ॥ तनि०—तृणमन्तरतः कृत्वेति । परपुरुषमुखं निरीक्ष्य

कुसुमिततरुजालसन्ततानि भ्रमरयुतानि समुद्रतीरजानि । कनकविमलहारभूषिताङ्गी विहर मया सह भीरु काननानि ॥ ३६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे विंशः सर्गः ॥ २० ॥

तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः। आर्ता दीनस्वरा दीनं प्रत्युवाच शनैर्वचः ॥ १ ॥ दुःखार्ता रुदती सीता वेपमाना तपस्विनी। चिन्तयन्ती वरारोहा पतिमेव पतिव्रता। तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता ॥ २ ॥ निवर्तय मनो मत्तः स्वजने क्रियतां मनः। न मां प्रार्थयितुं युक्तं सुसिद्धिमिव पापकृत् ॥ ३ ॥

वार्ता न कर्तव्येति मर्यादया वा तृणवदलक्षीकृत्य वा अस्मद्वक्ष्यमाणवचनं तृणसमानमित्ययं न लक्षीकरोतीति बुद्ध्या वा । "स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान् । स शूरः स च विक्रान्तो यं त्वं देवि निरीक्षसे ॥" इत्युक्तकटाक्षपातार्हो मा भूदिति वा । स्वामिना तृणमादाय काकासुरनिरासवत् अनेन तृणेनैव निरासः कार्य इति वा । अचेतनं चेतनं कृत्वा सम्बोधनेन वाक्यं वदामीति बुद्ध्या वा । आसन्नस्यास्य व्यवधानेन भाव्यमिति बुद्ध्या वा । पशुसमानस्य तव इदमेव भोग्यमिति बुद्ध्या वा । रामविरोधेन भवान् सानुबन्धो नशिष्यतीति तृणं छित्त्वा निवेदये इति वा तृणं मध्ये स्थापयित्वा ॥ २ ॥

कुसुमितेति । मया सह । वस्तुतस्तु–सह एकदैव मया, संवर्द्धितानीति शेषः । काननानि विहर ॥ ३६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां विंशस्सर्गः ॥ २० ॥ तस्येति । दीनमिति क्रियाविशेषणम् ॥ १ ॥ दुःखार्तेत्यादि । तृणमन्तरतः कृत्वा रावणस्य साक्षात्सम्भाषणानर्हत्वात् तृणव्यवधानकरणम् । प्रत्युवाचेति पुनरभिधानं वचनप्रकारविशेषकथनार्थम् । शुचिस्मितेति । वस्तुतः स्वभाववर्णनम् ॥ २ ॥ निवर्तयेति । स्वजने स्वीयभार्यादिजने । सिद्धिं मुक्तिम् ॥ ३ ॥

स०–प्रत्युवाचेति पूर्वं प्रतिज्ञातम् । तत्रेत्थंकारमाह–तृणमन्तरतः कृत्वा प्रत्युवाचेति । अतो न पुनर्वचनम् ॥ २ ॥ युक्तः योग्यः । सिद्धिं मोक्षम् युक्तस्त्वं सिद्धिमिव इति पाठः ॥ ३ ॥

अकार्यमिति । एकः पतिर्यस्यास्सा एकपत्नी तया । "नित्यं सपत्न्यादिषु" इति ङीप् ॥४॥ एवमिति । पृष्ठतः कृत्वा अनादृत्येत्यर्थः ॥५॥ नाहमिति । सती अहं तव औपयिकी युक्ता भार्या न किन्तु परिहार्या । साधूनां सतां धर्मं साधुधर्मम् । साधूनां व्रतं साधुव्रतम् । साधु सम्यक् चर ॥६॥ आत्मानमुपमां कृत्वा यथा तव दारा रक्ष्यास्तथाऽन्येषां दारा रक्ष्याः । तस्मात् स्वेषु दारेषु रम्यताम् ॥ ७ ॥ अतुष्टम् अतृप्तम् । निकृतिप्रज्ञम् निकृतौ शाठ्ये प्रज्ञा

अकार्यं न मया कार्यमेकपत्न्या विगर्हितम् । कुलं संप्राप्तया पुण्यं कुले महति जातया ॥ ४ ॥ एवमुक्त्वा तु वैदेही रावणं तं यशस्विनी । राक्षसं पृष्ठतः कृत्वा भूयो वचनमब्रवीत् ॥५॥ नाहमौपयिकी भार्या परभार्या सती तव । साधु धर्ममवेक्षस्व साधु साधुव्रतं चर ॥ ६ ॥ यथा तव तथाऽन्येषां दारा रक्ष्या निशाचर । आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम् ॥ ७ ॥ अतुष्टं स्वेषु दारेषु चपलं चलितेन्द्रियम् । नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् ॥ ८ ॥ इह सन्तो न वा सन्ति सतो वा नानुवर्तसे । तथाहि विपरीता ते बुद्धिराचारवर्जिता ॥ ९ ॥

यस्य तम् । पराभवम् आयुरैश्वर्यादिक्षयरूपम् ॥८॥ इह अतिविशालेऽपि दुर्जनसङ्कुले देशे । सन्तः त्वामनर्थान्निवारयन्तः । न सन्ति वा न सन्ति किम् ? सन्त्येव । श्रीविभीषणप्रभृतीनां सम्भवान्न सन्तीति कथं वक्तुं शक्यम् ? सतो वा नानुवर्तसे । " तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति

एकपत्न्या एकः पतिर्यस्यास्तया मया, पतिव्रतयेत्यर्थः । कुलं भर्तृकुलम् । पुण्यं पवित्रम् ॥४॥ पृष्ठतः कृत्वा पराङ्कृत्येत्यर्थः ॥ ५ ॥ परभार्या सती पतिव्रताहम् औपयिकी युक्ता भार्या न, साधूनां धर्मं साधुधर्मम् । साधूनां व्रतं साधुव्रतम् । वस्तुतस्तु—नाहमिति । अहं तव त्वया भार्या भर्तव्या न, किन्तु परभार्या परेण रामेण भार्या भर्तव्या ॥६॥ यथा तव निजदाराणां शुद्धिरिष्टा, एवमन्येषामपीत्यात्मदृष्टान्तादेव निश्चित्य त्वमपि परदारनिस्स्पृहः स्वदारनिरतो भवेत्यर्थः ॥७॥ अतुष्टम् अतृप्तम् । निकृतिप्रज्ञं निकृतौ शाठ्ये प्रज्ञा यस्य तम् । पराभवम् आयुरैश्वर्यादिक्षयरूपम् ॥ ८॥ इहेत्यादिश्लोकद्वयमेकं वाक्यम् । इह सन्तो न सन्ति वा सतो वा

स०—एकपत्न्या एकः पतिर्यस्याः सा रामकृतयज्ञफलभोक्त्री, पतिव्रतेति यावत् । तया विगर्हितं विनिन्दितम् । तर्हि कदापि गर्हितं त्वया नानुष्ठितं किमित्यतस्तथैवेत्याह—मयेति । मया यदकारि तत्सर्वं भर्तारं विष्णुमुद्दिश्यैवाकारीति विगर्हितं न कार्यमिति भावः ॥४॥ औपयिकी उपभोगयोग्या न । तत्र हेतुः—परभार्येति । तत्रापि न स्वैरिणीत्युदीरयति—सतीति । साधूनां सतां धर्मं धर्मशास्त्राद्याशंसितम् अवेक्षस्व । साधुव्रतं साधोः साध्व्याः पतिव्रताया मम व्रतं परित्यजनं चर । "वोतो गुणवचनात्" इति साधुस्साधुः ॥ ६ ॥ दाराः रक्ष्याः शीलतः संरक्षणीयाः । आत्मानं स्वम् । उपमां निदर्शनम् । स्वदारधर्षणं दुर्मर्षणं मम यथा तथान्येषामित्यत्र ॥ ७ ॥

ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥" इत्युक्तरीत्या प्रणिपातमन्तरेण न ते उपदिशन्ति । त्वं च तत्पादेषु कदाचिदपि न प्रणतवानसि । कथमिदं भवती जानातीत्याशङ्क्याह तथाहीति । तथाहि विपरीता ते बुद्धिः तव बुद्धिवैपरीत्यमेव तव शिष्टाननुवर्तनं सूचयतीत्यर्थः । परबुद्धेरप्रत्यक्षत्वात् कथं मदीया बुद्धिस्त्वया ज्ञायत इत्यत्राह आचारवर्जितेति । आचारवर्जिता, तव दुरनुष्ठानमेव तव बुद्धिं द्योतयतीति भावः ॥ ९ ॥ वच इति । पूर्वश्लोके

वचो मिथ्याप्रणीतात्मा पथ्यमुक्तं विचक्षणैः । राक्षसानामभावाय त्वं वा न प्रतिपद्यसे ॥ १० ॥ अकृतात्मानमासाद्य राजानमनये रतम् । समृद्धानि विनश्यन्ति राष्ट्राणि नगराणि च ॥ ११ ॥ तथेयं त्वां समासाद्य लङ्का रत्नौघ सङ्कुला । अपराधात्तवैकस्य नचिराद्विनशिष्यति ॥ १२ ॥ स्वकृतैर्हन्यमानस्य रावणादीर्घदर्शिनः । अभिनन्दन्ति भूतानि विनाशे पापकर्मणः ॥ १३ ॥ एवं त्वां पापकर्माणं वक्ष्यन्ति निकृता जनाः । दिष्ट्यैतद्व्यसनं प्राप्तो रौद्र इत्येव हर्षिताः ॥ १४ ॥ शक्या लोभयितुं नाहमैश्वर्येण धनेन वा । अनन्या राघवेणाहं भास्करेण प्रभा यथा ॥ १५ ॥

रावणस्याभाव उपन्यस्तः । अनेन राक्षसाभावपक्ष उपन्यस्यते । मिथ्याप्रणीतात्मा मिथ्यास्निग्धात्मा, स्नेहीति भावयन्निवेति यावत् । त्वं विचक्षणैः साधुभिरुक्तं पथ्यं हितं वचः राक्षसानामभावाय न प्रतिपद्यसे नाङ्गीकरोषि वा । राक्षसेषु स्नेहं भावयन् तद्विनाशमेव हृदि कृत्वा साधुवचनं न शृणोषीत्यर्थः ॥ १०–१२ ॥ रावणादीर्घदर्शिन इत्यत्र रावणेति संबुद्धिः । निकृताः त्वया वञ्चिताः ॥ १३ ॥ १४ ॥ शक्येति । अनेन रावणोक्त प्रलोभनानामुत्तरमुच्यते । ऐश्वर्येण अन्तःपुरस्त्रीणामीश्वरत्वेन । धनेन आभरणादिना वा । लोभयितुं वशयितुम् । अहं न शक्या । अत्र हेतुमाह

नानुवर्तसे विद्यमानानपि तान् धर्मजिज्ञासया नानुवर्तसे वा ? मिथ्या प्रणीतात्मा मिथ्या विनीतात्मा । त्वं विचक्षणैः विद्वद्भिरुक्तं पथ्यं वचः राक्षसानामभावाय न प्रतिपद्यसे नाङ्गीकरोषि वा ? तथाहि अत एव खलु तव बुद्धिः आचारवर्जिता विहिताचारविमुखा विपरीतानिषिद्धाचारपरेति योजना ॥ ९ ॥ १० ॥ ननु मया सज्जनोपदेशास्वीकारे कुतो राक्षसनाशप्रसङ्ग इत्यत्रोत्तरं वक्तुं लोकस्थितिमाह–अकृतेति । अकृतात्मानं सदुपदेशाग्राहिबुद्धिम् ॥ ११ ॥ तथेयमिति । राजापरा धतोऽशेषप्रजानाशस्य लोकप्रसिद्धत्वादिति भावः ॥ १२ ॥ स्वकृतैरपराधैः । रावणेति सम्बोधनम् । रौद्रः दिष्ट्या व्यसनं प्राप्त इति वक्ष्यन्तीति सम्बन्धः ॥ १३ ॥ ॥ १४ ॥ रावणोक्तप्रलोभनवाक्यानामुत्तरमाह–शक्येति । ऐश्वर्येण अन्तःपुरनियन्तृत्वेन ॥ १५ ॥

समन्येति । अहं नित्यानपायिनी । राघवेण रघुकुलावतीर्णेन विष्णुना अनन्या अविभक्ता । यत्र यत्र कुले विष्णुरवतरति तत्र तत्रावतीर्णा लक्ष्मीरित्यर्थः । तृतीयया तत्परतन्त्रा चास्मीति द्योत्यते । न केवलं तस्य परतन्त्राऽहम्, प्रत्युत तस्याप्यतिशयावहेति दृष्टान्तेन द्योतयति भास्करेणेति । प्रभा हि भास्करस्याप्यतिशयमावहति, तथैव हि मारीचो भवन्तं प्रति निवेदितवान्—"अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इति । किं तद्धितवचनमपि मोहेन

उपधाय भुजं तस्य लोकनाथस्य सत्कृतम् । कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् ॥ १६ ॥
अहमौपयिकी भार्या तस्यैव वसुधापतेः । व्रतस्नातस्य धीरस्य विद्येव विदितात्मनः ॥ १७ ॥
साधु रावण रामेण मां समानय दुःखिताम् । वने वाशितया सार्धं करेण्वेव गजाधिपम् ॥ १८ ॥

विस्मृतोऽसीति तत्त्वमाह ॥१५॥ उपधायेति । लोकनाथस्य सर्वैर्ब्रह्मादिदेवगणैः स्वस्वपदप्राप्तये नाथ्यमानस्य याच्यमानस्य । "नाथृ याच्ञायाम्" इति धातुः । तस्य रामस्य । सत्कृतं भुजं दक्षिणं भुजमित्यर्थः । उपधाय उपधानीकृत्य । तेन तत्परिष्वक्तत्वं गम्यते । एवं श्लाघिताऽहम् अन्यस्य ततो भोगं याचमानस्य कस्यचिदनामधेयस्य क्षुद्रस्य त्वादृशः भुजम् असत्कृतं कथं नामोपधास्यामि ? न कथंचिदपीत्यर्थः ॥१६॥ अहं तु शीलवयोवृत्ता तस्यैव तुल्यशीलवयोवृत्तस्य वसुधापतेः औपयिकी उचिता भार्या । "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति भूमिनाथस्याहं लक्ष्मीदेव्युचितेति हृदयम् । कथमिव ? व्रतस्नातस्य वेदव्रतैः स्नातस्य । धीरस्य धीमतः ब्राह्मणस्य । विदितात्मनः आत्मज्ञानवतः विद्येव योगाभ्यासरूपविद्येव ॥१७॥ पथिचोरं पानीययाचकवद्रावणमर्थयते-साध्विति । साधु रावण । मद्वियोगेन त्वत्कौर्यमधिकं जातमिति भावः । एवमुत्कटक्रौर्यं प्रति याचनात् स्वस्यातिशयो व्यज्यते । रामेण सर्वाङ्ग

उपधाय शीर्षोपधानं कृत्वा ॥१६॥ व्रतस्नातस्य विद्याव्रतस्नातस्य । विद्येव साङ्गवेदविद्येव ॥१७॥ समानय सङ्गमय । वने वासितया सार्धं करेण्वेव गजाधिपमिति । वने वासितां बद्धां करेणुं गजाधिपेन सार्धमिति विभक्तिविपरिणामेन योज्यम् । अन्यथा विरोधात् ॥ १८ ॥

स०—भुजमित्यनेन मत्परिरम्भणकामनया तव भुजानां छेदः "ये मैथ्याः परिरम्भणं चकमिरे तेषां भुजांश्चिच्छिदुः" इत्याद्युक्तेर्भावीति द्योतयति ॥ १६ ॥ विदितात्मनः अवगतभगवत्तत्त्वस्य । व्रतस्नातस्य ब्रह्मचर्यादिव्रतसङ्कल्पपूर्वं स्नातस्य अभिषिक्तस्य विप्रस्य विद्येव उपनिषदादिविद्येव । विप्रस्येत्यनेनोत्तरवर्णद्वयापेक्षया पृथग्जातेरेव मुख्याधिकारः यथाऽहं तथा मुख्या तस्यौपयिकीति सूचयति ॥ १७ ॥ यद्यपि नीधातुर्द्विकर्मक इति रामं मां समानयेति वक्तव्यम्, तथापि रामेणेति तृतीयया सहयोगः सार्वकालिकः, त्वया संमेलनं तु लोकदृष्ट्येति सूचयितुम् । गजाधिपेन करिणीमिवेति दार्ष्टान्तिकानुगुण्यार्थं वक्तव्यम् । तथापीत्थमुक्त्या तदाम्पत्यमक्लृप्तमिति द्योतयति ॥ १८ ॥

सुन्दरेण। मां तस्यानन्यार्हाम्, तद्वियोगे जीवितं धारयितुमशक्ताम् "नच सीता" इत्यादि। समानय सङ्गमय। तत्र हेतुः दुःखितामिति। करेण्वा गजवध्वा। वाशितया यौवनं गतया। "वाशिता युवतिः प्रोक्ता कलभः करिपोतकः" इति वचनात्। यद्वा वासितयेति पाठः। वने वासितया बद्धया। अत्र विभक्ति व्यत्यासः कार्यः, वने वासितां करेणुं गजाधिपेनेवेति। वस्तुतस्तु यथान्यास एवान्वेति। रामेण सङ्गमनं नाम रामाह्वानम्। नहि पुनरपि रामस्थानं तेन नेतुमीष्टे, किंत्वत्र राममाहूय समर्पणमेव। अत एव करेण्वा गजाधिपमित्युक्तम्॥१८॥एवं रावणे जननीत्वप्रतिपत्तिं विहाय कानिचिदसङ्गतानि जल्पति,

मित्रमौपयिकं कर्तुं रामः स्थानं परीप्सता। वधं चानिच्छता घोरं त्वयाऽसौ पुरुषर्षभः। विदितः स हि धर्मज्ञः शरणागतवत्सलः॥ १९ ॥ तेन मैत्री भवतु ते यदि जीवितुमिच्छसि। प्रसादयस्व त्वं चैनं शरणागतवत्सलम् ॥ २० ॥ मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि ॥ २१ ॥

देवी खिन्ना सती कोऽयमस्य स्वभावः कथमस्य कोऽप्युपदेष्टा सेत्स्यतीति इह सन्तो न वा सन्तीत्यादिना विचिन्त्य दयावती स्वयमेवोपदिशति मातृत्व प्रयुक्तवात्सल्येन—मित्रमिति। रामं शरणं गच्छेत्युक्ते तत्र रावणस्सहेत दुर्मानितया, आत्मसद्बुद्ध्यनुसारेण मित्रमित्याह। किंच शरणागतं स्वस्याधीनं मन्यते देवी देवश्च। अत एव रामो वक्ष्यति "मित्रभावेन संप्राप्तं न त्यजेयं कथंचन" इति। इयं च तथाऽऽह मित्रमिति। रामः मित्रं कर्तुं युक्तमित्यर्थः। मित्रशब्दापेक्षया औपयिकमिति नपुंसकानिर्देशः। स्थानं परीप्सता मार्गचोरस्यापि भूमौ पदानि स्थापयित्वा चौर्यं कर्तव्यम्। तवापि यदि स्थान मभीप्सितं तर्हि तमेव भजेत्यर्थः। शरणागतिदैन्यादपि मरणमेव वरमिति यदि मन्यसे तदानीं तद्भजनं कर्तव्यमित्याह—वधं चानिच्छता घोरम्। तव सम्यङ्मरणं न दास्यति त्वां संस्थाप्य त्वत्समक्षं त्वत्सन्तानजान् हिंसित्वा ततस्ते चित्रवधं करिष्यति, तं यदि नेच्छसि तदा प्रपत्तव्य इत्यर्थः। त्वया तत्प्रतीकारावलोकनेन त्वयाऽवश्यं तच्छरणागतिः कर्तव्या। एवं स रक्षक इत्यत्र किं प्रमाणम्? तत्राह—असौ निरन्तरप्रत्ययेनास्या रामः प्रत्यक्ष इव भासते। रावणस्यापि मायामृगानुसरणसमये तदाकारदर्शनजभयेन 'वृक्षेवृक्षे च पश्यामि' इत्युक्तरीत्या पुरःस्थित इव भासते। पुरुषर्षभः मत्कृता

मित्रमिति। स्थानं परीप्सता, लङ्कावासमिच्छतेत्यर्थः। अथवा घोरं वधं बहुविधपीडाकरवधम्। रामेण अनिच्छता वा त्वया पुरुषर्षभो रामः, मित्रं कर्तु मौपयिकम्, योग्य इत्यर्थः। सापराधं मां शरणागतत्वमात्रेण कथं रक्षिष्यतीति शङ्का न कर्तव्येत्याह—विदित इति ॥१९॥२०॥ निर्यातयितुं प्रत्यर्पयितुम् ॥२१॥

पराधेन कथं मामङ्गीकरिष्यतीत्यंवं त्वया न चिन्तनीयम्; आनुकूल्यलेशे सति सर्वमपराधं विस्मरिष्यति पुरुषधौरेयत्वात् । मित्रकरणप्रकारमाह प्रसादयस्वेति । त्वं चेत्यनेनाहमपि प्रसादयिष्यामीति सिद्धम् । प्रयतो भूत्वा मनःकालुष्यं त्यक्त्वेत्यर्थः । निर्यातयितुं प्रत्यर्पयितुम् ॥ १९–२१ ॥ एवमिति । सम्प्रदाय, स्थितायेति शेषः ॥ २२ ॥ उत्सृष्टम् इन्द्रमुक्तं वज्रम्, अन्तकश्च त्वद्विधं वर्जयेत् । राघवस्त्वद्विधं न वर्जयेदिति सम्बन्धः ॥ २३ ॥

एवं हि ते भवेत् स्वस्ति सम्प्रदाय रघूत्तमे । अन्यथा त्वं हि कुर्वाणो वधं प्राप्स्यसि रावण ॥२२॥ वर्जयेद्वज्रमुत्सृष्टं वर्जयेदन्तकश्चिरम् । त्वद्विधं तु न संक्रुद्धो लोकनाथः स राघवः ॥ २३ ॥ रामस्य धनुषः शब्दं श्रोष्यसि त्वं महास्वनम् । शतक्रतुविसृष्टस्य निर्घोषमशनेरिव ॥ २४ ॥ इह शीघ्रं सुपर्वाणो ज्वलितास्या इवोरगाः । इषवो निपतिष्यन्ति रामलक्ष्मणलक्षणाः ॥ २५॥ रक्षांसि परिनिघ्नन्तः पुर्यामस्यां समन्ततः । असम्पातं करिष्यन्ति पतन्तः कङ्कवाससः ॥ २६ ॥ राक्षसेन्द्रमहासर्पान् स रामगरुडो महान् । उद्धरिष्यति वेगेन वैनतेय इवोरगान् ॥ २७ ॥ अपनेष्यति मां भर्ता त्वत्तः शीघ्रमरिन्दमः । असुरेभ्यः श्रियं दीप्तां विष्णुस्त्रिभिरिव क्रमैः ॥ २८ ॥ जनस्थाने हतस्थाने निहते रक्षसां बले । अशक्तेन त्वया रक्षः कृतमेतदसाधु वै ॥ २९ ॥

महास्वनं महानादम्, नादो नाम स्वरावयवविशेषः ॥ २४ ॥ रामलक्ष्मणलक्षणाः रामलक्ष्मणनामाङ्काः ॥ २५ ॥ असम्पातम् अनवकाशम् ॥ २६ ॥ राक्षसेन्द्रमहासर्पानिति रूपकोक्तमेवोपमयाप्याह वैनतेय इति ॥ २७ ॥ न चापि मम हस्तात्त्वां प्राप्तुमर्हतीत्युक्तस्योत्तरमाह–अपनेष्यतीति ॥ २८ ॥ जनस्थान इति । एतत् युद्धं विना चौर्येणापहरणम् ॥ २९ ॥

एवमिति । मामित्यनुवर्तते । मां रघूत्तमे संप्रदाय दत्त्वा, स्थितायेति शेषः ॥२२॥ वर्जयेदिति । उत्सृष्टम् इन्द्रमुक्तं वज्रं कर्तृ, त्वद्विधं वर्जयेत, संक्रुद्धो राघवस्तु न वर्जयेत ॥ २३ ॥ महास्वनं महानादम्, नादो नाम कश्चिच्छब्दधर्मः ॥ २४ ॥ इहेति । रामलक्ष्मणलक्षणाः रामलक्ष्मणनामाङ्काः असंपातम् अनवकाशम् ॥२५ ॥ ॥ २६ ॥ राक्षसेन्द्ररूपान् महासर्पान् । उद्धरणशैघ्र्ये उपमा वैनतेय इवेति ॥२७॥ "न चापि मम हस्तात्त्वां प्राप्तुमर्हति राघवः" इत्यस्योत्तरमाह–अपनेष्यतीति ॥ २८ ॥ जनस्थान इति । एतत युद्धं विना चौर्येणापहरणम् ॥ २९ ॥

गोचरं गतयोः बाह्यदेशं गतयोः ॥३०॥३१॥ तस्य ते असमर्थतया चौरवृत्तेस्तव ताभ्यां रामलक्ष्मणाभ्यां विग्रहे सति युद्धे सति । युगग्रहणं संयुगे जयग्रहणम् । अस्थिरम् असम्भावितम् । यद्वा युगग्रहणं युद्धारम्भः। अस्थिरम् अध्रुवम्।किंतु ताभ्यां प्रसह्य वधस्ते सिद्ध इति दृष्टान्तेनाह वृत्रस्येवेति ।

आश्रमं तु तयोः शून्यं प्रविश्य नरसिंहयोः । गोचरं गतयोर्भ्रात्रोरपनीता त्वयाऽधम ॥ ३० ॥ नहि गन्धमुपाघ्राय रामलक्ष्मणयोस्त्वया । शक्यं सन्दर्शने स्थातुं शुना शार्दूलयोरिव ॥ ३१ ॥ तस्य ते विग्रहे ताभ्यां युगग्रहण मस्थिरम् । वृत्रस्येवेन्द्रबाहुभ्यां बाहोरेकस्य निग्रहः ॥ ३२ ॥ क्षिप्रं तव स नाथो मे रामः सौमित्रिणा सह । तोयमल्पमिवादित्यः प्राणानादास्यते शरैः ॥ ३३ ॥ गिरिं कुबेरस्य गतोऽपधाय वा सभां गतो वा वरुणस्य राज्ञः । असंशयं दाशरथेर्न मोक्ष्यसे महाद्रुमः कालहतोऽशनेरिव ॥ ३४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे एकविंशः सर्गः ॥ २१ ॥

वृत्रस्य एकस्य बाहोर्द्वाभ्यामिन्द्रस्य बाहुभ्यां सह विग्रहे सति निग्रह इव जय इव वृत्रस्यैकेन बाहुना इन्द्रस्य द्वयोर्बाह्वोरिव एकेन त्वया तयो द्वयोर्जयो न शक्य इत्यर्थः॥३२॥ सः नाथ इति पदच्छेदः॥३३॥ गिरिमिति। अपधाय अपक्रम्य। कुबेरस्य गिरिं कैलासम् । "कैलासः स्थानमलका" इत्यमरः ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

आश्रममिति । गोचरं गतयोः मायामृगरूपमिन्द्रियार्थं गतयोः ॥ ३० ॥ यस्माद्रामलक्ष्मणयोर्गन्धमाघ्राय शार्दूलयोः सन्दर्शने शुनेव समक्षं स्थातुं त्वया न शक्यम् ॥ ३१ ॥ तस्य ते युद्धासमर्थतया चौर्यवृत्तेः तव ताभ्यां रामलक्ष्मणाभ्यां सह विग्रहे युद्धे सति । युगग्रहणं युद्धजयः । अस्थिरम् अध्रुवम् । वृत्रस्यैकस्य बाहोः द्वाभ्यामिन्द्रस्य बाहुभ्यां सह विग्रहे सति निग्रह इव वृत्रस्यैकेन बाहुना इन्द्रस्य द्वयोर्बाह्वोरिव एकेन त्वया तयोः द्वयोः जयो न शक्य इत्यर्थः ॥ ३२ ॥ मे नाथः स राम इत्यन्वयः ॥ ३३ ॥ गिरिमिति । कुबेरस्य गिरिं गन्धमादनम् । अपधाय अतिक्रम्य । पुरीमिति पाठे–कुबेरस्य पुरीमित्येतदुपरितनलोकानामुप लक्षणम् । वरुणस्य सभामित्यनेन अधस्तनलोकानामुपलक्षणम् । तत्त्वदृष्ट्या अपरुषवचनं तं रावणमुद्दिश्य सीतयोक्तानां परुषवाक्यानामयमाशयः–रावणेन देवीं प्रति तत्त्वदृष्ट्या सौम्यरूपाण्येव वाक्यान्युक्तानि यद्यपि तथापि बाह्यदृष्ट्या परुषवाक्यवत् प्रतीयमानत्वेन देव्यपि तत्त्वदृष्टिं सङ्गोप्य बाह्यदृष्टिमनुसृत्य परुषवाक्यैरेव तस्योत्तरमाहेति ॥ ३४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् एकविंशः सर्गः ॥ २१ ॥

सीताया इत्यादि ॥१॥ सान्त्वयिता अनुनेता ॥२॥ सन्नियच्छति निरुणद्धि । द्रवतः धावतः । अमार्गमिति च्छेदः ॥३॥ वामः प्रतिकूलः । मनुष्याणां प्राणिनाम् । अनुक्रोशः कृपा । परिभवादिप्रदानेन मनुष्याणां प्रतिकूलः कामः यस्मिन् जने निबध्यते तस्मिंस्त्वनुक्रोशः स्नेहश्च जायते किल ॥ ४ ॥

सीताया वचनं श्रुत्वा परुषं राक्षसाधिपः । प्रत्युवाच ततः सीतां विप्रियं प्रियदर्शनाम् ॥१॥ यथा यथा सान्त्वयिता वश्यः स्त्रीणां तथा तथा । यथा यथा प्रियं वक्ता परिभूतस्तथा तथा ॥ २ ॥ सन्नियच्छति मे क्रोधं त्वयि कामः समुत्थितः । द्रवतोऽमार्गमासाद्य हयानिव सुसारथिः ॥ ३ ॥ वामः कामो मनुष्याणां यस्मिन् किल निबध्यते । जने तस्मिंस्त्वनुक्रोशः स्नेहश्च किल जायते ॥४॥ एतस्मात्कारणान्न त्वां घातयामि वरानने । वधार्हामवमानार्हां मिथ्या प्रव्रजिते रताम् ॥ ५ ॥ परुषाणीह वाक्यानि यानि यानि ब्रवीषि माम् । तेषु तेषु वधो युक्तस्तव मैथिलि दारुणः ॥ ६ ॥ एवमुक्त्वा तु वैदेहीं रावणो राक्षसाधिपः । क्रोधसंरम्भसंयुक्तः सीतामुत्तरमब्रवीत् ॥ ७ ॥ द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः । ततः शयनमारोह मम त्वं वरवर्णिनि ॥ ८ ॥

मिथ्या प्रव्रजिते कपटेन वन्यवृत्तिभाजि रामे । रतां सक्ताम् ॥५॥६॥ क्रोधसंरम्भसंयुक्तः क्रोधप्रणयाभ्यां संयुक्तः ॥७॥ द्वौ मासाविति । ते मया योऽवधिः

सीताया इत्यस्य वास्तवार्थस्तु–राक्षसाधिपः सीतायाः परुषम् अत एव विप्रियं वचनं श्रुत्वा प्रत्युवाचेति सम्बन्धः ॥ १ ॥ सान्त्वयिता अनुनेता । वश्यः वशं गतः ॥ २ ॥ सन्नियच्छति सन्निरुणद्धि । द्रवतः धावतः । अमार्गमिति छेदः । वस्तुतस्तु–इष्टदेवतायां समुत्थितः कामः इच्छा, समुत्पन्ना भक्तिरित्यर्थः । मे क्रोधं राक्षसजातेर्मम सर्वदा विद्यमानं नैजं क्रोधम्, क्रोधशब्देन कामक्रोधाद्यरिषड्वर्ग उच्यते । तं संनियच्छतीति सम्बन्धः ॥ ३ ॥ मनुष्याणां वामः प्रतिकूलः यस्मिन् जने कामो निबध्यते तस्मिन् जने शिक्षणीये तस्मिन् जने अनुक्रोशश्च स्नेहश्च जायते किलेति योजना ॥ ४ ॥ मिथ्या प्रव्रजिते रतां कपटवृत्ते रामे सक्ताम् । एतस्मादित्यादिश्लोकद्वयस्य वास्तवार्थस्तु–ननु मद्वधोद्युक्तः स्त्रीघातकश्च त्वं न संभाव्य इत्यत्राह–एतस्मादिति । एतस्मात्कारणात् त्वदर्थैकारणात् प्रव्रजिते मत्स्वामिनि, रामे इति शेषः । रतां त्वां ममेष्टदेवतां त्वां न घातयाम्येव, वधार्हामवमानार्हामपि स्त्रियं घातयामीति मिथ्येति सम्बन्धः ॥ ५ ॥ परुषाणीति । तव मां त्वदीयभृत्यं मामित्यर्थः । यानि यानि परुषवाक्यानि ब्रवीषि तेषु तेषु तेभ्यस्तेभ्यः दारुणो वधो युक्तः, ममेति शेषः ॥ ६ ॥ ७ ॥ द्वौ मासाविति । ते मया योऽवधिः कृतः " शृणु मैथिलि मद्वाक्यं मासान् द्वादश भामिनि " इत्यारण्यकाण्डे । द्वौ मासौ तत्र अवशिष्टौ द्वौ मासौ मे मया रक्षितव्यौ परिपालनीयौ, ततः तस्मात्कारणात् मम शयनमारोहेति योजना ॥ ८ ॥

कृतः "मासान् द्वादश भामिनि" इत्यारण्यकाण्डोक्ता द्वादशमासात्मकोऽवधिः कल्पितः। अत्र द्वौ मासाववशिष्टौ। तौ द्वौ मासौ मे मया रक्षितव्यौ प्रतीक्षणीयौ। ततः तस्मात्कारणात्। मम शयनमारोहेत्यन्वयः ॥८॥ प्रातराशार्थं मासद्वयान्तर्गतरात्रिसमाप्त्यनन्तरं हिंसायां कालविलम्बं विना प्रातःकालिकाशनार्थ

ऊर्ध्वं द्वाभ्यां तु मासाभ्यां भर्तारं मामनिच्छतीम्। मम त्वां प्रातराशार्थमारभन्ते महानसे ॥ ९ ॥ तां तर्ज्यमानां संप्रेक्ष्य राक्षसेन्द्रेण जानकीम्। देवगन्धर्वकन्यास्ता विषेदुर्विकृतेक्षणाः ॥ १० ॥ ओष्ठप्रकारैरपरा वक्रनेत्रैस्तथाऽपराः। सीतामाश्वासयामासुस्तर्जितां तेन रक्षसा ॥ ११ ॥ ताभिराश्वासिता सीता रावणं राक्षसाधिपम्। उवाचात्महितं वाक्यं वृत्तशौण्डीर्यगर्वितम् ॥ १२ ॥ नूनं न ते जनः कश्चिदस्ति निःश्रेयसे स्थितः। निवारयति यो न त्वां कर्मणोऽस्माद्विगर्हितात् ॥ १३ ॥

मित्यर्थः। आरम्भते आलभन्ते। रलयोरभेदः। "आलम्भस्स्पर्शहिंसयोः" इत्यमरः। महानसे पाकशालायाम् ॥९॥१०॥ ओष्ठप्रकारैः रुरुदिपतामोष्ठेषु भङ्गस्फुरणादयो ये विकारास्ते ओष्ठप्रकाराः, ओष्ठभङ्गादिरूपसंज्ञादिभिरित्यर्थः। एवं वक्रनेत्रैः वक्रनेत्रसंज्ञादिभिरित्यर्थः ॥११॥ वृत्तशौण्डीर्यगर्वितं वृत्तं पातिव्रत्यं तस्य शौण्डीर्यं बलं तेन गर्वितमिति क्रियाविशेषणम् ॥ १२ ॥ नूनमिति। ते निःश्रेयसे स्थितः कश्चिज्जनः नास्ति। यः अस्मात्

ऊर्ध्वमिति। प्रातराशार्थमित्यत्र प्रातश्शब्देन मासद्वयसमाप्त्यनन्तरप्रातःकाल उच्यते। एवमुक्त्वेत्यादिश्लोकत्रयस्य वास्तवार्थस्तु—क्रोधसंरम्भसंयुक्त इत्यनेन राक्षसस्वभावो वर्णितः। पतिवियोगदुःखितां निद्राहाररहितां प्रत्याह—द्वौ मासावित्यादिश्लोकद्वयेन। हे मे लक्ष्मि सीते! मया योऽवधिः कृतः 'मासान् द्वादश भामिनि प्रतीक्षस्व' इति यः समयः प्रार्थितः तन्मध्यतः परं रक्षितव्यौ प्रतीक्षणीयौ द्वौ मासावेव, द्वाभ्यां मासाभ्यामूर्ध्वं न, ततः तदनन्तरम् ते तव भर्तारम् अनिच्छन्तीं मामनङ्गीकुर्वाणाम् मम मां मदीयराज्यलक्ष्मीं च प्राप्स्यसीति शेषः। त्वां प्रार्थय इति शेषः। मम महानसे प्रातराशार्थं आलभन्ते पशून् तान् भक्षयेति शेषः। शयनमारोह शयनं कुर्वित्यर्थः ॥ ९ ॥ तामित्यस्य वास्तवार्थस्तु—तर्ज्यमानामिति। तासां तथा प्रतीतेरिति भावः ॥ १० ॥ ओष्ठेति। ओष्ठप्रकारैः ओष्ठभङ्गादिरूपसंज्ञाभिः वक्रनेत्रैः वक्त्रनेत्रसंज्ञाभिः ॥ ११ ॥ वृत्तशौण्डीर्यगर्वितं वृत्तं पातिव्रत्यम्, शौण्डीर्यं बलम्, पातिव्रत्यबलगर्वितमित्यर्थः ॥ १२ ॥ ते तव। निश्श्रेयसे स्थितः कश्चिज्जनोऽस्ति यः अस्माद्विगर्हितात्कर्मणः त्वां निवारयति। स च नास्ति नूनमिति योजना। तव इष्टप्रापकः अनिष्टनिवर्तकश्च नास्तीति भावः ॥ १३ ॥

विगर्हितात् कर्मणस्त्वां निवारयति स चापि नास्ति नूनमिति योजना। तवेष्टप्रापकः अनिष्टनिवारकश्च नास्तीत्यर्थः ॥ १३ ॥ १४ ॥ तस्य मोक्ष्यसे तस्मान्मोक्ष्यसे ॥ १५ ॥ यथा मातङ्गः शशश्च, सहितः युयुत्सादिना संगतः तथाऽन्योन्यसङ्गतो रामस्त्वं च। अत्र रावणः स्वस्य मातङ्गसाम्यमुक्त

मां हि धर्मात्मनः पत्नीं शचीमिव शचीपतेः। त्वदन्यास्त्रिषु लोकेषु प्रार्थयेन्मनसाऽपि कः ॥ १४ ॥ राक्षसाधम रामस्य भार्याममिततेजसः। उक्तवानसि यच्छापं क्व गतस्तस्य मोक्ष्यसे ॥ १५ ॥ यथा दृप्तश्च मातङ्गः शशश्च सहितो वने । तथा द्विरदवद्रामस्त्वं नीच शशवत् स्मृतः ॥ १६ ॥ स त्वमिक्ष्वाकुनाथं वै क्षिपन्निह न लज्जसे। चक्षुषोर्विषयं तस्य न तावदुपगच्छसि ॥ १७ ॥ इमे ते नयने क्रूरे विरूपे कृष्णपिङ्गले। क्षितौ न पतिते कस्मान्मामनार्य निरीक्षतः ॥ १८ ॥ तस्य धर्मात्मनः पत्नीं स्नुषां दशरथस्य च। कथं व्याहरतो मां ते न जिह्वा व्यवशीर्यते ॥ १९ ॥ असन्देशात्तु रामस्य तपसश्चानुपालनात्। न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह तेजसा ॥ २० ॥ नापहर्तुमहं शक्या तस्य रामस्य धीमतः। विधिस्तव वधार्थाय विहितो नात्र संशयः ॥ २१ ॥ शूरेण धनदभ्रात्रा बलैः समुदितेन च। अपोह्य रामं कस्माद्धि दारचौर्यं त्वया कृतम् ॥ २२ ॥

मिति भ्राम्येदिति परिहरति—तथेति। तत्र गज इव रामः। शश इव त्वम् ॥ १६ ॥ इक्ष्वाकुनाथं क्षिपन् मायामृगव्याजेन दूरं निस्सारयन्। इह स्वजनेषु न तावदुपगच्छसि। यद्युपगच्छसि तदा तत्प्रभावं वेत्स्यसीत्यर्थः ॥ १७–१९ ॥ असन्देशादिति। रामस्य भर्तुः। असन्देशात् अपकारिषु शपेथा इति सन्देशाभावात्। तपसः पातिव्रत्यरूपस्य। कुर्मि करोमि। उत्त्वविकरणप्रत्ययलोपावार्षौ। भस्मार्ह भस्मीकरणार्ह!। तेजसा पातिव्रत्यप्रभावेन ॥२०॥ तस्य रामस्य तस्मात् रामात्। विधिः चौर्येणापहरणम्। विहितः, दैवेनेति शेषः ॥२१॥ बलैस्समुदितेन बलेन सर्वश्रेष्ठेनेत्यर्थः। अपोह्य रामं मृगमनसापि कः प्रार्थयेत्? किं पुनर्वचसेति भावः ॥१४॥ तस्य तस्मात् ॥१५॥ दृप्तो मातङ्गः शशश्च यथा वने दैवात्। सहितौ इति पाठः, युयुत्सू भवतः तयोश्च शशो यथाऽतिक्षुद्रस्तथा रामेण संयुगे त्वं शशवत् क्षुद्रः रामो गजवदित्यर्थः ॥ १६ ॥ उपगच्छसि। व्यत्ययेन भूते लट् ॥१७–१९॥ रामस्य असन्देशात् रामानुज्ञाभावात् तपसः पातिव्रत्यतपसः। भस्मार्हा भस्मीकरणार्हा। कुर्मि करोमि। भस्मार्हा भस्म इति पाठः ॥ २० ॥ नेति। रामस्याहं रामसम्बन्धिन्यहम्। विधिः विधानं मदपहरणरूपम् विहितः, दैवेनेति शेषः ॥ २१ ॥ शूरेणेति। अपोह्य मायामृगच्छद्मना अन्यत्र नीत्वा ॥ २२–२५ ॥

च्छन्नाऽपवाद्य ॥ २२ ॥ विवृत्य विवर्त्य ॥ २३ ॥ सिंहस्येव चलगमने यस्यासौ सिंहसत्त्वगतिः । जिह्वाग्रे लोचने च दीप्तानि यस्य सोऽयं दीप्तजिह्वाग्र लोचनः ॥ २४ ॥ कोपेन चलम् अग्रं यस्य तत् चलाग्रं च तत् मुकुटं च तेन प्रांशुः दीर्घः । चित्रमाल्यवत्त्वेऽपि रक्तमाल्यवत्त्वं तत्प्राचुर्यादुक्तम् ।

सीताया वचनं श्रुत्वा रावणो राक्षसाधिपः । विवृत्य नयने क्रूरे जानकीमन्ववैक्षत ॥ २३ ॥ नीलजीमूतसङ्काशो महाभुजशिरोधरः । सिंहसत्त्वगतिः श्रीमान् दीप्तजिह्वाग्रलोचनः ॥ २४ ॥ चलाग्रमुकुटप्रांशुश्चित्रमाल्यानुलेपनः । रक्तमाल्याम्बरधरस्तप्ताङ्गदविभूषणः ॥२५॥ श्रोणीसूत्रेण महता मेचकेन सुसंवृतः । अमृतोत्पादनद्धेन भुजगेनेव मन्दरः ॥२६॥ ताभ्यां स परिपूर्णाभ्यां भुजाभ्यां राक्षसेश्वरः । शुशुभेऽचलसङ्काशः शृङ्गाभ्यामिव मन्दरः॥२७॥ तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विभूषितः । रक्तपल्लवपुष्पाभ्यामशोकाभ्यामिवाचलः ॥ २८ ॥ स कल्पवृक्षप्रतिमो वसन्त इव मूर्तिमान् । श्मशानचैत्यप्रतिमो भूषितोऽपि भयङ्करः ॥ २९ ॥ अवेक्षमाणो वैदेहीं कोपसंरक्तलोचनः । उवाच रावणः सीतां भुजङ्ग इव निःश्वसन् ॥ ३० ॥ अनयेनाभिसंपन्नमर्थहीनमनुव्रते । नाशयाम्यहमद्य त्वां सूर्यः सन्ध्यामिवौजसा ॥ ३१ ॥ इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः । सन्दिदेश ततः सर्वा राक्षसीर्घोरदर्शनाः ॥३२॥ एकाक्षीमेककर्णां च कर्णप्रावरणां तथा । गोकर्णीं हस्तिकर्णीं च लम्बकर्णीमकर्णिकाम् ॥३३॥

तप्ताङ्गदविभूषणः तप्तशब्देन तेजिष्ठत्वमुक्तम् ॥ २५ ॥ मेचकेन नीलेन । अमृतोत्पादनद्धेन अमृतोत्पादनार्थं नद्धेन ॥ २६ ॥ ताभ्यां प्रसिद्धाभ्याम् ॥ २७ ॥ २८ ॥ अलंकृतत्वे कल्पकसाम्यम् । भयंकरत्वे पुनश्चैत्यसाम्यम् । चैत्यं श्मशानवृक्षः, श्मशानमण्डपो वा । सीताया अत्यन्तभयंकरत्वज्ञापनाय रावणवर्णनं कृतम्॥२९–३१॥ इत्युक्त्वेत्यादि । प्रधानाप्रधानभूते द्वे एकाक्ष्यौ । अतो न पुनरुक्तिः। अथवा अक्षम् इन्द्रियम्, एकाक्षीम् एकैं

श्रोणीसूत्रेण रशनागुणेन । मेचकेन इन्द्रनीलतद्गुणत्वादानेवकत्वम्॥२६–३०॥ अनयेनेति श्लोकः केषुचित्कोशेषु नास्तीति कृत्वा न व्याख्यातः ॥३१॥३२॥ एकाक्षी

स०–अनयेन धौर्त्यवत्नासिकाच्छेदापायेन । अभिसम्पन्नं युक्तम् । अर्थहीनं निर्भाग्यम् । एतादृशं राममनुव्रते सीते ! त्वां नाशयामि । सन्ध्यां सन्ध्याकालिकं तमः ॥ ३१ ॥

केन्द्रियाम् । श्रोत्रनासादावेकमात्रवतीमित्यर्थः ॥३२–३६॥ प्रतिलोमानुलोमैः प्रतिकूलानुकूलाचरणैः । सामदानादिभेदनैः सामदानमुख्यैर्भेदैः । प्रथम प्रयुक्तसामदानैरित्यर्थः । आवर्जयत वशीकुरुत ॥३७॥३८॥ उपगम्येति । धान्यमालिनी रावणस्य कनिष्ठपत्नी । इदं मन्दोदर्या अप्युपलक्षणम् । उत्तरत्र

हस्तिपाद्यश्वपाद्यौ च गोपादीं पादचूलिकाम् । एकाक्षीमेकपादीं च पृथुपादीमपादिकाम् ॥ ३४ ॥ अतिमात्रशिरोग्रीवामतिमात्रकुचोदरीम् । अतिमात्रास्यनेत्रां च दीर्घजिह्वामजिह्विकाम् ॥ ३५ ॥ अनासिकां सिंहमुखीं गोमुखीं सूकरीमुखीम् । यथा मद्वशगा सीता क्षिप्रं भवति जानकी । तथा कुरुत राक्षस्यः सर्वाः क्षिप्रं समेत्य च ॥३६॥ प्रतिलोमानुलोमैश्च सामदानादिभेदनैः । आवर्जयत वैदेहीं दण्डस्योद्यमनेन च ॥ ३७ ॥ इति प्रतिसमादिश्य राक्षसेन्द्रः पुनः पुनः । काममन्युपरीतात्मा जानकीं पर्यतर्जयत् ॥३८॥ उपगम्य ततः क्षिप्रं राक्षसी धान्यमालिनी । परिष्वज्य दशग्रीवमिदं वचनमब्रवीत् ॥ ३९ ॥ मया क्रीड महाराज सीतया किं तवानया । विवर्णया कृपणया मानुष्या राक्षसेश्वर ॥ ४० ॥ नूनमस्या महाराज न दिव्यान् भोगसत्तमान् । विदधात्यमरश्रेष्ठस्तव बाहुबलार्जितान् ॥ ४१ ॥ अकामां कामयानस्य शरीरमुपतप्यते । इच्छन्तीं कामयानस्य प्रीतिर्भवति शोभना ॥ ४२ ॥

वानरान् प्रति हनुमद्वचने तथा वक्ष्यमाणत्वात् ॥३९॥४०॥ अस्यास्सीतायाः अमरश्रेष्ठो ब्रह्मा । दिव्यान् भोगान्न विदधाति, अस्या दिव्यभोगे भाग्यं

मिति द्विरुपादानं व्यक्तिभेदात् ॥ ३३–३६ ॥ प्रतिलोमेति । प्रतिलोमानुलोमैः प्रतिकूलानुकूलाचरणैः सामदानादिभेदनैः ॥ ३७–३९ ॥ मयेति । अकृपणयेति छेदः । अकृपणया पतिव्रतया सीतया किं करिष्यसि । अमानुष्येति छेदः । अमानुष्या अत एव विवर्णया मनुष्यभोगविलक्षणया, उत्तमवर्णयेत्यर्थः । मया सह क्रीडेति सम्बन्धः ॥ ४० ॥ नूनमिति । भोगसत्तमान् उत्तमभोगान् ॥ ४१ ॥ ४२ ॥

स०–पुनरेकाक्षीमित्युपादानं व्यक्तिभेदाभिप्रायेण अथवा पूर्वमेकाक्षीमिति मैथिलीविशेषणम् । एकस्मिन् रामे अक्षिणी यस्यास्सा तामित्यर्थः । एकमक्षि यस्याःसेत्येकत्र । अपरत्र च एकस्मिन् भागे अक्षिणी यस्याः सापि निर्नासिकाव्यवधानमक्षिद्वयमेकस्मिन् प्रदेशे वर्तत इति नैकाक्षीमिति पुनरुक्तम् ॥ ३४ ॥

नास्तीत्यर्थः॥४१-४५॥ सर्गार्थं संग्रहेण दर्शयति-स इति ॥४६॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे शृङ्गार०सुन्दरकाण्ड०द्वाविंशः सर्गः॥२२॥

एवमुक्तस्तु राक्षस्या समुत्क्षिप्तस्ततो बली । प्रहसन् मेघसङ्काशो राक्षसः स न्यवर्तत ॥ ४३ ॥ प्रस्थितः स दशग्रीवः कम्पयन्निव मेदिनीम् । ज्वलद्भास्करवर्णाभं प्रविवेश निवेशनम् ॥४४॥ देवगन्धर्वकन्याश्च नागकन्याश्च सर्वतः । परिवार्य दशग्रीवं विविशुस्तद्गृहोत्तमम् ॥ ४५ ॥ स मैथिलीं धर्मपरामवस्थितां प्रवेपमानां परिभर्त्स्य रावणः । विहाय सीतां मदनेन मोहितः स्वमेव वेश्म प्रविवेश भास्वरम् ॥ ४६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः । संदिश्य च ततः सर्वा राक्षसीर्निर्जगाम ह ॥ १ ॥ निष्क्रान्ते राक्षसेन्द्रे तु पुनरन्तःपुरं गते । राक्षस्यो भीमरूपास्ताः सीतां समभिदुद्रुवुः ॥ २ ॥ ततः सीतामुपागम्य राक्षस्यः क्रोधमूर्च्छिताः । परं परुषया वाचा वैदेहीमिदमब्रुवन् ॥ ३ ॥ पौलस्त्यस्य वरिष्ठस्य रावणस्य महात्मनः । दशग्रीवस्य भार्यात्वं सीते न बहु मन्यसे ॥ ४ ॥ ततस्त्वेकजटा नाम राक्षसी वाक्यमब्रवीत् । आमन्त्र्य क्रोधताम्राक्षी सीतां करतलोदरीम् ॥ ५ ॥ प्रजापतीनां षण्णां तु चतुर्थो यः प्रजापतिः । मानसो ब्रह्मणः पुत्रः पुलस्त्य इति विश्रुतः ॥ ६ ॥ पुलस्त्यस्य तु तेजस्वी महर्षिर्मानसः सुतः । नाम्ना स विश्रवा नाम प्रजापतिसमप्रभः ॥ ७ ॥

इत्युक्त्वेत्यादि ॥ १-५ ॥ प्रजापतीनामिति । "मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः" इति षट् प्रजापतयः । तेषां चतुर्थः पुलस्त्यः ॥६-१२॥

एवमिति । राक्षस्या धान्यमालिन्या ॥ ४३-४५ ॥ मदनेन मोहित इति तस्य स्वरूपकथनम् ॥ ४६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां द्वाविंशः सर्गः ॥ २२ ॥ अस्मिन् सर्गद्वयेऽपि विद्यमानभार्याशब्दस्य वास्तवार्थस्तु-भार्या भर्तव्या, भार्यात्वं भर्तव्यात्वमित्यर्थः । शत्रून् रावयति महाशब्दं कारयति स शत्रुरावणः ॥ १ ॥ २ ॥ ततः परं रावणगमनानन्तरम् लोकोक्तौ वा परमिति ॥ ३ ॥ भार्यात्वं भार्याभावम् । न बहुमन्यसे, मोहादिति शेषः ॥ ४ ॥ ततस्सर्वसाधारणैतद्वाक्यप्रयोगोत्तरम् एकजटा विशिष्याब्रवीत । करतलोदरीम् अतुन्दिलमध्यामित्यर्थः ॥५॥ प्रजापतीनामिति " मरीचि

प्रियामिति । सर्वासां मध्ये प्रियां बहुमताम् महाभागां च भार्यां मन्दोदरीं त्यक्त्वा त्वामुपैष्यति ॥ १३–१७ ॥ यस्य यस्मात् । तस्य न तिष्ठसि

तस्य पुत्रो विशालाक्षि रावणः शत्रुरावणः । तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ॥ ८ ॥ मयोक्तं चारु सर्वाङ्गि वाक्यं किन्नानुमन्यसे । ततो हरिजटा नाम राक्षसी वाक्यमब्रवीत् । विवर्त्य नयने कोपान्मार्जारसदृशेक्षणा ॥ ९ ॥ येन देवास्त्रयस्त्रिंशद्देवराजश्च निर्जिताः । तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ॥ १० ॥ ततस्तु प्रघसा नाम राक्षसी क्रोधमूर्च्छिता । भर्त्सयन्ती तदा घोरमिदं वचनमब्रवीत् ॥ ११ ॥ वीर्योत्सिक्तस्य शूरस्य सङ्ग्रामेष्वनिवर्तिनः । बलिनो वीर्ययुक्तस्य भार्यात्वं किं न लप्स्यसे ॥ १२ ॥ प्रियां बहुमतां भार्यां त्यक्त्वा राजा महाबलः । सर्वासां च महाभागां त्वामुपैष्यति रावणः ॥ १३ ॥ समृद्धं स्त्रीसहस्रेण नानारत्नोपशोभितम् । अन्तःपुरं समुत्सृज्य त्वामुपैष्यति रावणः ॥ १४ ॥ अन्या तु विकटा नाम राक्षसी वाक्यमब्रवीत् ॥ १५ ॥ असकृद्देवता युद्धे नागगन्धर्वदानवाः । निर्जिताः समरे येन स ते पार्श्वमुपागतः ॥ १६ ॥ तस्य सर्वसमृद्धस्य रावणस्य महात्मनः । किमद्य राक्षसेन्द्रस्य भार्यात्वं नेच्छसेऽधमे । ततस्तु दुर्मुखी नाम राक्षसी वाक्यमब्रवीत् ॥ १७ ॥ यस्य न सूर्यो न तपति भीतो यस्य च मारुतः । न वाति स्मायतापाङ्गे किं त्वं तस्य न तिष्ठसि ॥ १८ ॥ पुष्पवृष्टिं च तरवो मुमुचुर्यस्य वै भयात् । शैलाश्च सुस्रुवुः पानीयं जलदाश्च यदेच्छति ॥ १९ ॥ तस्य नैर्ऋत राजस्य राजराजस्य भामिनि किं त्वं न कुरुषे बुद्धिं भार्यार्थे रावणस्य हि ॥ २० ॥

तस्मै न तिष्ठसे । प्रकाशनार्थेऽप्यार्षत्वात्परस्मैपदं षष्ठी च ॥ १८ ॥ पुष्पवृष्टिमित्यादि । शैलाश्च जलदाश्च पानीयं रावणः यदेच्छति तदा मुञ्चन्तीति

रऽयङ्गिरसौ पुलस्त्यः पुलहः क्रतुः " इति षट् प्रजापतयः, तेषां चतुर्थः पुलस्त्यः ॥ ६ ॥ ७ ॥ तस्य पुत्र इत्यनेन कुलीनत्वं सूचितम् ॥ ८–११ ॥ किं किम र्थम ॥ १२ ॥ प्रियामिति । सर्वासां मध्ये बहुमतां प्रियां भार्यां मन्दोदरीमपि त्यक्त्वा त्वामुपैष्यतीति सम्बन्धः ॥ १३–१७ ॥ यस्य यस्मात् । तस्य न तिष्ठसे,

विपरिणम्यते ॥ १९ ॥ २० ॥ साधु ते कथितम् साधु गृहाणेति साधुशब्दद्वयस्य निर्वाहः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥ तत इत्यादि ॥ १ ॥ २ ॥ मानुषीति । न त्वं जातु भविष्यसि, तस्येति शेषः ।

साधु ते तत्त्वतो देवि कथितं साधु भामिनि । गृहाण सुस्मिते वाक्यमन्यथा न भविष्यसि ॥ २१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

ततः सीतामुपागम्य राक्षस्यो विकृताननाः । परुषं परुषा नार्य ऊचुस्तां वाक्यमप्रियम् ॥ १ ॥ किं त्वमन्तःपुरे सीते सर्वभूतमनोहरे । महार्हशयनोपेते न वासमनुमन्यसे ॥ २ ॥ मानुषी मानुषस्यैव भार्यात्वं बहु मन्यसे । प्रत्याहर मनो रामान्न त्वं जातु भविष्यसि ॥ ३ ॥ त्रैलोक्यवसुभोक्तारं रावणं राक्षसेश्वरम् । भर्तारमुपसङ्गम्य विहरस्व यथासुखम् ॥ ४ ॥ मानुषी मानुषं तं तु राममिच्छसि शोभने । राज्याद्भ्रष्टमसिद्धार्थं विक्लवं त्वमनिन्दिते ॥ ५ ॥ राक्षसीनां वचः श्रुत्वा सीता पद्मनिभेक्षणा । नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥ ६ ॥ यदिदं लोकविद्विष्टमुदाहरथ सङ्गताः । नैतन्मनसि वाक्यं मे किल्बिषं प्रतिभाति वः ॥ ७ ॥

मानुषीति हेतुगर्भम् । मानुषी त्वं मानुषं तमिच्छसि ॥ ३–६ ॥ किल्बिषं पापावहम् ॥ ७ ॥ ८ ॥

वश इति शेषः । तस्मै न तिष्ठस इति वाऽर्थः॥१८–२०॥साधु कथितं साधु गृहाण चेति सम्बन्धः॥२१॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां त्रयोविंशः सर्गः ॥ २३ ॥ १ ॥ २ ॥ मानुषीति । प्रत्याहर निवर्तय । न त्वं जातु, भविष्यसि, रामस्येति शेषः । मानुषीत्वस्य वास्तवार्थस्तु–मानुषीत्वं मानुषस्य मनुष्यावतारस्य रामस्य भार्यात्वमनुमन्यसे । तदुक्तम् अतः रामात् मनो न प्रत्याहर त्वं जातु भविष्यसि, रामस्येति शेषः ॥ ३ ॥ ॥ ४ ॥ मानुषीति । राज्याद्भ्रष्टं पितृवाक्यपरिपालनाय त्यक्तराज्यमित्यर्थः । असिद्धार्थम् अश्वासौ सिद्धार्थश्च असिद्धार्थः तम्, सिद्धसर्वप्रयोजनं विष्णुमित्यर्थः । विक्लवं दयालुम् ॥ ५ ॥ राक्षसीनामिति । नेत्राभ्यामुपलक्षिता ॥ ६ ॥ किल्बिषं किल्बिषविषयम् ॥ ७ ॥

स०–परुषमपि सरुषा पित्रा पुत्रं प्रत्युदीरितं शठ तर्हि न पठेत्येवमादि वाक्यमन्ततो गत्वा प्रायः प्रियपर्यवसायि दृष्टमित्यतोऽप्रियमित्युक्तम् ॥ १ ॥

सुवर्चलेत्यादिबहुदृष्टान्तप्रदर्शनं स्वस्याः पातिव्रत्यदार्ढ्यद्योतनाय ॥ ९-१३ ॥ अवलीनः छन्नः । राक्षसीरशृणोत् राक्षसीवाक्यान्यशृणोदित्यर्थः

न मानुषी राक्षसस्य भार्या भवितुमर्हति । कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ८ ॥ दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः । तं नित्यमनुरक्ताऽस्मि यथा सूर्यं सुवर्चला ॥ ९ ॥ यथा शची महाभागा शक्रं समुपतिष्ठति । अरुन्धती वसिष्ठं च रोहिणी शशिनं यथा ॥१० ॥ लोपामुद्रा यथाऽगस्त्यं सुकन्या च्यवनं यथा । सावित्री सत्यवन्तं च कपिलं श्रीमती यथा ॥ ११ ॥ सौदासं मदयन्तीव केशिनी सगरं यथा । नैषधं दमयन्तीव भैमी पतिमनुव्रता । तथाऽहमिक्ष्वाकुवरं रामं पतिमनुव्रता ॥ १२ ॥ सीताया वचनं श्रुत्वा राक्षस्यः क्रोधमूर्च्छिताः । भर्त्सयन्ति स्म परुषैर्वाक्यै रावणचोदिताः ॥ १३ ॥ अवलीनः स निर्वाक्यो हनुमान् शिंशुपाद्रुमे । सीतां सन्तर्जयन्तीस्ता राक्षसीरशृणोत् कपिः ॥ १४ ॥ तामभिक्रम्य संक्रुद्धा वेपमानां समन्ततः । भृशं संलिलिहुर्दीप्तान् प्रलम्बान् दशनच्छदान् ॥ १५ ॥ ऊचुश्च परमक्रुद्धाः प्रगृह्याशु परश्वधान् । नेयमर्हति भर्तारं रावणं राक्षसाधिपम् ॥ १६ ॥ संभर्त्स्यमाना भीमाभी राक्षसीभिर्वरानना । सा बाष्पमुपमार्जन्ती शिंशुपां तामुपागमत् ॥ १७ ॥ ततस्तां शिंशुपां सीता राक्षसीभिः समावृता । अभिगम्य विशालाक्षी तस्थौ शोकपरिप्लुता ॥ १८ ॥ तां कृशां दीनवदनां मलिनाम्बरधारिणीम् । भर्त्सयाञ्चक्रिरे सीतां राक्षस्यस्तां समन्ततः ॥ १९ ॥

॥ १४ ॥ नेयमर्हतीत्यत्रेतिकरणं बोध्यम् । अस्य ऊचुरित्यनेन सम्बन्धः ॥ १५ ॥ १६ ॥ सा भर्त्स्यमानेति पाठे—भर्त्सनोपगमनरूपक्रियाभेदात्

नेति । भार्या भर्तव्या ॥ ८ ॥ तं नित्यमित्यादि । अत्रातिदुर्दशास्वपि दृढव्रतत्वद्योतनाय नानाविधानेकसाध्वीनिदर्शनोपन्यास इत्यनुसन्धेयम् ॥ ९-१३ ॥ अवलीन इति । तर्जयन्तीरशृणोत् राक्षसीनां तर्जनवाक्यान्यशृणोदित्यर्थः ॥ १४ ॥ १५ ॥ ऊचुरिति नेयमर्हतीत्यूचुरिति सम्बन्धः ॥ १६ ॥ सा भर्त्स्यमाना, अभूदिति शेषः । सेति । सा तां हनुमदधिष्ठितां शिंशुपामुपागमदिति योजना ॥ १७-१९ ॥

स०—सामर्त्स्यमाना इति पाठः । सामर्त्स्यमानेति पदमेकम् । सां हिंसामुद्दिश्य भर्त्स्यमाना सामर्त्स्यमाना “ सा तु हिंसायाम् ” इति विश्वः । या सेत्यन्वयः । उपेत्यनेनातिसामीप्यं सूचयति ॥ १७ ॥

तच्छन्दद्वयम् । तां हनुमदधिष्ठितां शिंशुपाम् ॥ १७-१९ ॥ ततस्तां विनता नामेति । निर्णतोदरी उन्नतोदरी ॥ २० ॥ अतिकृतम् अतिमात्रकृतम्



ततस्तां विनता नाम राक्षसी भीमदर्शना । अब्रवीत् कुपिताकारा कराला निर्णतोदरी ॥ २० ॥ सीते पर्याप्तमेतावद्भर्तुः स्नेहो निदर्शितः । सर्वत्रातिकृतं भद्रे व्यसनायोपकल्पते ॥ २१ ॥ परितुष्टाऽस्मि भद्रं ते मानुषस्ते कृतो विधिः । ममापि तु वचः पथ्यं ब्रुवन्त्याः कुरु मैथिलि ॥२२॥ रावणं भज भर्तारं भर्तारं सर्वरक्षसाम् । विक्रान्तं रूपवन्तं च सुरेशमिव वासवम् ॥ २३ ॥ दक्षिणं त्यागशीलं च सर्वस्य प्रियदर्शनम् ॥ २४ ॥ मानुषं कृपणं रामं त्यक्त्वा रावणमाश्रय । दिव्याङ्गरागा वैदेहि दिव्याभरणभूषिता ॥ २५ ॥ अद्यप्रभृति सर्वेषां लोकानामीश्वरी भव । अग्नेः स्वाहा यथा देवी शचीवेन्द्रस्य शोभने ॥ २६ ॥ किं ते रामेण वैदेहि कृपणेन गतायुषा । एतदुक्तं च मे वाक्यं यदि त्वं न करिष्यसि । अस्मिन् मुहूर्ते सर्वास्त्वां भक्षयिष्यामहे वयम् ॥ २७ ॥ अन्या तु विकटा नाम लम्बमानपयोधरा । अब्रवीत् कुपिता सीतां मुष्टिमुद्यम्य गर्जती ॥ २८ ॥ बहून्यप्रियरूपाणि वचनानि सुदुर्मते । अनुक्रोशान्मृदुत्वाच्च सोढानि तव मैथिलि ॥ २९ ॥

॥ २१ ॥ मानुषो विधिः कृतः, मनुष्यजात्युचितपातिव्रत्यप्रकटनं कृतम् एतावत्कालमित्यर्थः॥२२-२८॥ बहूनीनि । सोढानि, रावणेनेति शेषः॥२९॥

निर्णतोदरी कृशोदरी ॥ २० ॥ अतिकृतम् अतिमात्राचरणम् ॥ २१ ॥ मानुषो विधिः मनुष्यजात्युचितपातिव्रत्यप्रकटनं कृतम्, किंतु एतावता अलमित्यर्थः । वास्तवार्थस्तु–परितुष्टाऽस्मीत्यादिश्लोकत्रयं कुलकम् । अस्यार्थः–हे मैथिलि ! मानुषं मनुष्यधर्मं भयं त्यक्त्वा । रावयतीति रावणं दशाननम्, तथापि कृपणम् भर्तारं भ्रियते शुश्रूषादिना स्वामिनामिति भर्ता भृत्यः तम् आश्रय, रावणं भृत्यत्वेन अङ्गीकुर्वित्यर्थः । विक्रान्तादिगुणयुक्तं रामं च भजेति सम्बन्धः ॥२२-२५॥ अद्येति । अग्नेः स्वाहा, इन्द्रस्य शची यथा तथा अद्यप्रभृति लोकानामीश्वरी भवेति सम्बन्धः । दिव्याङ्गरागेत्यादि श्लोकत्रयं कुलकम् । तस्य वास्तवार्थस्तु–हे वैदेहि ! गतायुषा प्राप्तायुषा रामेण, सङ्गमो भविष्यतीति शेषः । ते तव, कृपणेन कार्पण्येनेत्यर्थः । किं ? माऽस्तु । अग्नेः स्वाहा इन्द्रस्य शची यथा तथा अद्यप्रभृति



स०–गतायुषा अस्मदाहाररूपत्वाद्गतायुष्ट्वमिति भावः । सर्वास्त्वां भक्षयिष्याम इत्युक्त्या नैकापि त्वत्पक्षपातिनी वर्तत इति द्योतयति ॥ २७ ॥

न चेति । कालपुरस्सरं कालानुरूपम् ॥ ३०–३३ ॥ प्रीतिं रावणविषयप्रीतिम् । प्रहर्षं कालकृतमनोविकासम् ॥ ३४ ॥ रामानु०–भजेति । प्रीतिं स्नेहम् । प्रहर्षम् आनन्दम् । नित्यदैन्यतां नित्यं दैन्यं यस्याः सा नित्यदैन्या तस्या भावो नित्यदैन्यता ताम् ॥ ३४ ॥ ॥ ३५–३७ ॥ उत्पाट्य वा उत्पाट्यैव ॥ ३८॥३९ ॥ दौर्हृदः

न च नः कुरुषे वाक्यं हितं कालपुरस्सरम् ॥३०॥ आनीतासि समुद्रस्य पारमन्यैर्दुरासदम् । रावणान्तःपुरं घोरं प्रविष्टा चासि मैथिलि ॥ ३१ ॥ रावणस्य गृहे रुद्धामस्माभिस्तु सुरक्षिताम् । न त्वां शक्तः परित्रातुमपि साक्षात् पुरन्दरः ॥ ३२ ॥ कुरुष्व हितवादिन्या वचनं मम मैथिलि । अलमश्रुप्रपातेन त्यज शोकमनर्थकम् ॥ ३३ ॥ भज प्रीतिं प्रहर्षं च त्यजैतां नित्यदैन्यताम् । सीते राक्षसराजेन सह क्रीड यथासुखम् ॥ ३४ ॥ जानासि हि यथा भीरु स्त्रीणां यौवनमध्रुवम् । यावन्न ते व्यतिक्रामेत्तावत् सुखमवाप्नुहि ॥ ३५ ॥ उद्यानानि च रम्याणि पर्वतोपवनानि च । सह राक्षसराजेन चर त्वं मदिरेक्षणे ॥ ३६ ॥ स्त्रीसहस्राणि ते सप्त वशे स्थास्यन्ति सुन्दरि । रावणं भज भर्तारं भर्तारं सर्वरक्षसाम् ॥ ३७ ॥ उत्पाट्य वा ते हृदयं भक्षयिष्यामि मैथिलि । यदि मे व्याहृतं वाक्यं न यथावत् करिष्यसि ॥ ३८ ॥ ततश्चण्डोदरी नाम राक्षसी क्रोधमूर्च्छिता । भ्रामयन्ती महच्छूलमिदं वचनमब्रवीत् ॥ ३९ ॥ इमां हरिणलोलाक्षीं त्रासोत्कम्पिपयोधराम् । रावणेन हृतां दृष्ट्वा दौर्हृदो मे महानभूत् ॥ ४० ॥ यकृत्प्लीहमथोत्पीडं हृदयं च सबन्धनम् । अन्त्राण्यपि तथा शीर्षं खादेयमिति मे मतिः ॥ ४१ ॥

इच्छा ॥ ४० ॥ कुक्षिदक्षिणभागस्थः कालखण्डाख्यो मांसपिण्डो यकृत् । "स्त्रायुस्त्रियां कालखण्डयकृती तु समे इमे" इत्यमरः । प्लीहा तु गुल्माख्यो दिव्याङ्गरागादियुक्ता सती, सर्वेषामस्मदादीनां लोकानां चेश्वरी भव । मे मया उक्तमेतद्वाक्यं न करिष्यसि यदि तर्हि त्वामुद्दिश्य अस्मिन्मुहूर्ते सर्वा वयं भक्षयिष्यामहे, विषमिति शेषः । सुदुर्मते वस्तुनस्तु–सुदुष्टेष्वपि मतिः अनुग्राहिका यस्याः सा । कालपुरस्सरं कालोचितम् नो वाक्यं न च कुरुषे, नेनत्ते हितमिति शेषः ॥ २६–३२ ॥ तुल्यं सहेत्यर्थः । अलमश्रुनिपातेन इत्यपि पाठः ॥ ३३ ॥ प्रीतिं स्नेहम् । प्रहर्षम् आनन्दम् । नित्यदैन्यतां निरन्तरदैन्यत्वम । सीते इत्यस्य वास्तवार्थस्तु राक्षसराजेन, यत्किञ्चिदुक्तमिति शेषः । सह सहस्व, यथासुखं क्रीड ॥ ३४ ॥ तत्र हेतुः–जानासि हीति ॥ ३५ ॥ उद्यानानीत्यस्य वास्तवार्थस्तु–राक्षसराजेन सह एकदा, संवर्द्धितानीति शेषः । उद्यानानि च रावणं भर्तारं भृत्यत्वेन भज, अङ्गीकुर्वित्यर्थः ॥ ३६ ॥ ३७ ॥ उत्पाट्य वा उत्पाट्यैव ॥ ३८ ॥ ३९ ॥ दौर्हृदः इच्छा ॥ ४० ॥ यकृत्प्लीहमित्यादिना दौर्हृदस्य स्वरूपं कथयति–यकृत्प्लीहं महत्क्रोडमिति । यकृन्नाम हृदयस्य दक्षिण

वामभागस्थो मांसपिण्डविशेषः। नकारान्तस्य प्लीहन्‌शब्दस्य अकारान्तत्वमार्षम्। "अन्त्रं पुरीतद्गुल्मस्तु प्लीहा पुंसि" इत्यमरः । उत्पीडं तस्योपरि स्थितं मांसम्। हृदयम् पद्मकोशप्रतीकाशं मांसम्। बन्धनं तस्य धारणमधोमांसम्। उत्क्रोडमिति पाठे उत्क्रोडो हृदयस्य स्थानम्। अन्त्रं पुरीतत् ॥ ४१–४३ ॥ ततस्त्वजामुखी नामेत्यादि। पीलुकान् मांसखण्डान् ॥ ४४॥ पेयं लेह्यं चास्या उपदंशत्वेनोच्यते ॥ ४५ ॥४६ ॥ निकुम्भिला

ततस्तु प्रघसा नाम राक्षसी वाक्यमब्रवीत्। कण्ठमस्या नृशंसायाः पीडयाम किमास्यते ॥ ४२ ॥ निवेद्यतां ततो राज्ञे मानुषी सा मृतेति ह। नात्र कश्चन सन्देहः खादतेति स वक्ष्यति ॥४३॥ ततस्त्वजामुखी नाम राक्षसी वाक्यमब्रवीत्। विशस्येमां ततः सर्वाः समान् कुरुत पीलुकान् ॥४४॥ विभजाम ततः सर्वा विवादो मे न रोचते। पेयमानीयतां क्षिप्रं लेह्यमुच्चावचं बहु ॥ ४५ ॥ ततः शूर्पणखा नाम राक्षसी वाक्यमब्रवीत्। अजामुख्या यदुक्तं हि तदेव मम रोचते ॥ ४६ ॥ सुरा चानीयतां क्षिप्रं सर्वशोकविनाशिनी। मानुषं मांसमास्वाद्य नृत्यामोऽथ निकुम्भिलाम् ॥४७॥ एवं संभर्त्स्यमाना सा सीता सुरसुतोपमा। राक्षसीभिः सुघोराभिर्धैर्यमुत्सृज्य रोदिति ॥ ४८ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

नाम लङ्कायाः पश्चिमद्वारप्रदेशवासिनी भद्रकाली ॥ ४७ ॥ एवमिति। रोदिति अरुदत् ॥ ४८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥

भागस्थो मांसविशेषः। प्लीहा तु हृदि वामभागस्थो मांसविशेषः। "अन्त्रं पुरीतद् गुल्मस्तु प्लीहा पुंस्यथ वस्नसा" इत्यमरः। क्रोडं भुजान्तरम्, वक्षः गोमुखाकृतिमांसयुक्तमस्थि हृदयोपरिस्थितमांसविशेषो वा। अथोत्पीडमिति पाठे–उत्पीडं प्लीहोपरिस्थितं मांसम्। हृदयं च सबन्धनं नाडीबन्धनसहितं मुकुलाकारहृत्पद्माख्यं मांसविशेषम् ॥ ४१–४४ ॥ तत इति। पिण्डकान् मांसखण्डान ॥ ४५ ॥ ४६ ॥ सुरेति। निकुम्भिला नाम लङ्कायाः पश्चिमभागवर्तिनी काचन शक्तिः ॥ ४७ ॥ रोदिति अरुदत्। सुरसुतोपमा देवकन्योपमा। "स्त्रीसहस्राणि ते सप्त" इत्यारभ्य सर्गसमाप्तिपर्यन्तस्य वास्तवार्थस्तु–रावणं भर्तारं भज भृत्यत्वेनाङ्गीकुर्वित्यर्थः। उत्पाटयेति। हे मैथिलि! ते तुभ्यं व्याहृतं वाक्यम् रावणं भृत्यत्वेनाङ्गीकुर्विति वाक्यमित्यर्थः। यथावन्न करिष्यसि यदि मे मम हृदयमुत्पाट्य भक्षयिष्यामीति सम्बन्धः। सीतामुद्दिश्योक्तानि विकटायाः परुषवाक्यान्यसहमानानां चण्डोदरीप्रभृतीनां विविधप्रलापानाह–ततश्चण्डोदरी

तथा तासां वदन्तीनामित्यादि । तासां वदन्तीनां तासु वदन्तीषु ॥ १ ॥ एवमुक्तेति । मनस्विनी पातिव्रत्ये दृढमनाः ॥२॥ रामानु०—तथेति । तासां वदन्तीनां तासु वदन्तीषु सतीष्वित्यर्थः । अस्माच्छ्लोकात् परम् एवमुक्तेति श्लोकः । मनस्विनीति । पातिव्रत्ये दृढमनाः । अतः परं न मानुषीति श्लोकः ॥ १ ॥ २ ॥ खादत भक्षयत ॥ ३ ॥ शर्म सुखम् ॥ ४ ॥ रामानु०—न मानुषीति । कामं खादत यथेच्छं भक्षयत । अतः परं सा राक्षसीति श्लोकः । अतः परम् वेपत इति श्लोकः ॥ ३ ॥ ४ ॥ कोकैः ईहामृगैः ।

तथा तासां वदन्तीनां परुषं दारुणं बहु । राक्षसीनामसौम्यानां रुरोद जनकात्मजा ॥ १ ॥ एवमुक्ता तु वैदेही राक्षसीभिर्मनस्विनी । उवाच परमत्रस्ता बाष्पगद्गदया गिरा ॥२॥ न मानुषी राक्षसस्य भार्या भवितुमर्हति । कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ३ ॥ सा राक्षसीमध्यगता सीता सुरसुतोपमा । न शर्म लेभे दुःखार्ता रावणेन च तर्जिता ॥ ४ ॥ वेपते स्माधिकं सीता विशन्तीवाङ्गमात्मनः । वने यूथपरिभ्रष्टा मृगी कोकैरिवार्दिता ॥ ५ ॥ सा त्वशोकस्य विपुलां शाखामालम्ब्य पुष्पिताम् । चिन्तयामास शोकेन भर्तारं भग्नमानसा ॥ ६ ॥ सा स्नापयन्ती विपुलौ स्तनौ नेत्रजलस्रवैः । चिन्तयन्ती न शोकस्य तदाऽन्तमधिगच्छति ॥ ७ ॥

"कोकस्त्वीहामृगो वृकः" इत्यमरः ॥५॥ रामानु०—कोकैः ईहामृगैः । " कोकस्त्वीहामृगो वृकः " इत्यमरः । अतः परम् सा त्विति श्लोकः ॥ ५ ॥ अशोकस्य हनुमदधिष्ठितशिंशुपासन्निहितस्य ॥६॥ अन्तम् अवधिम् । अधिगच्छति अध्यगच्छत् ॥७॥ रामा०—अशोकस्य विपुलां शाखामालम्ब्य । हनुमदधिष्ठितशिंशुपामूलं प्राप्तायास्सीताया

इत्यादिना नृत्यामोऽथ निकुम्भिलामित्यन्तेन । तत इत्यादि श्लोकत्रयमेकं वाक्यम् । रावणेन हृतामिमां सीतां दृष्ट्वा मे मम दौर्हृदः स्नेहः अस्यामभूदिति शेषः । एवं परुषं वदन्त्या विकटायाः यकृत्प्लीहादीनि खादेयमिति मे मतिरिति चण्डोदरी नाम राक्षसी वचनमब्रवीदिति सम्बन्धः । ततस्तु प्रघसेत्यादिश्लोकद्वयमेकं वाक्यम् । नृशंसायाः क्रूरायाः अस्या विकटायाः कण्ठं पीडयामः । अमानुषीति छेदः । अमानुषी विकटा नाम राक्षसी । ततस्त्वजामुखीत्यादिश्लोकद्वयमेकं वाक्यम् । इमां विकटाम् ॥ ४८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां चतुर्विंशः सर्गः ॥ २४ ॥

तथा तासामिति ॥ १ ॥ मनस्विनी पातिव्रत्ये दृढमनाः ॥ २ ॥ कामं यथेच्छम् । सीताविलापस्य वास्तवार्थस्तु—श्रीरामवियोगेन घोरराक्षसपुरावस्थानेन विरूपराक्षसीसमागमेन च विविधप्रलापादिकमिति ज्ञेयम् । अस्मिन् काण्डे यत्र यत्र सीताप्रलापः तत्र तत्र एवमेवोहनीयः ॥ ३ ॥ ४ ॥ कोकैः वृकैः ॥ ५ ॥ अशोकस्य विपुलां शाखामालम्ब्य हनुमदधिष्ठितशिंशुपामूलं प्राप्तायास्सीताया अशोकशाखालम्बनाभिधानात् अशोकशाखाः शिंशुपाशाखाश्च सम्मिलिता वर्तन्त

अशोकशाखालम्बनाभिधानादशोकशिंशुपाशाखाः परस्परं संमिलिता वर्तन्त इत्यवगम्यते । अतः परं सा वेपमानेति श्लोकः ॥ ६ ॥ ७ ॥ राक्षसीनां राक्षसीभ्यः ॥ ८ ॥ सीतयेति व्यत्ययेन षष्ठ्यर्थे तृतीया । परिसर्पती परिसर्पन्ती । नुमभाव आर्षः ॥ ९ ॥ दुःखार्ता राक्षसीवचनश्रवणजदुःखार्ता । आर्ता रामविरहार्ता ॥ १० ॥

रामानु०–राक्षसीनां राक्षसीभ्यः । अतः परं तस्या इति श्लोकः । वेपन्त्या सीतयेत्यत्र षष्ठ्यर्थे तृतीया । परिसर्पती परिसर्पन्ती । नुमभाव आर्षः । अतः परं सा निःश्वसन्तीति श्लोकः । अतः

सा वेपमाना पतिता प्रवाते कदली यथा । राक्षसीनां भयत्रस्ता विवर्णवदनाऽभवत् ॥ ८ ॥ तस्याः सा दीर्घ विपुला वेपन्त्या सीतया तदा । ददृशे कम्पिनी वेणी व्यालीव परिसर्पती ॥ ९ ॥ सा निःश्वसन्ती दुःखार्ता शोकोपहतचेतना । आर्ता व्यसृजदश्रूणि मैथिली विललाप ह ॥ १० ॥ हा रामेति च दुःखार्ता हा पुनर्लक्ष्मणेति च । हा श्वश्रु मम कौसल्ये हा सुमित्रेति भामिनी ॥ ११ ॥ लोकप्रवादः सत्योऽयं पण्डितैः समुदाहृतः । अकाले दुर्लभो मृत्युः स्त्रिया वा पुरुषस्य वा ॥ १२ ॥ यत्राहमेवं क्रूराभी राक्षसीभिरिहार्दिता । जीवामि हीना रामेण मुहूर्तमपि दुःखिता ॥ १३ ॥ एषाऽल्पपुण्या कृपणा विनशिष्याम्यनाथवत् । समुद्रमध्ये नौः पूर्णा वायुवेगैरिवाहता ॥ १४ ॥ भर्तारं तमपश्यन्ती राक्षसीवशमागता । सीदामि खलु शोकेन कूलं तोयहतं यथा ॥ १५ ॥ तं पद्मदलपत्राक्षं सिंहविक्रान्तगामिनम् । धन्याः पश्यन्ति मे नाथं कृतज्ञं प्रियवादिनम् ॥ १६ ॥

परं हा रामेति श्लोकः ॥ ८–१० ॥ सुमित्रेत्यत्र सम्बुद्धावाप एकारादेशाभाव आर्षः ॥ ११ ॥ रामानु०–हा सुमित्रेतीत्यत्र एकाराभाव आर्षः ॥ ११ ॥ लोकप्रवाद इत्यादिश्लोकद्वयमेकं वाक्यम् । अकाले अप्राप्तकाले । दुर्लभ इत्यत्र इतिकरणं बोध्यम् ॥ १२ ॥ यत्र यतः ॥ १३ ॥ रामानु०–अतः परं लोकप्रवाद इत्यादिश्लोकद्वयमेकं वाक्यम् । दुर्लभ इत्यत्रेतिकरणं द्रष्टव्यम् । यत्र यतः । एवं पाठक्रमः । केषुचित्कोशेषु व्युत्क्रमस्तु लेखकप्रमादकृतः ॥ १२ ॥ १३ ॥ एषेति । पूर्णा, पदार्थैरिति शेषः ॥ १४ ॥ १५ ॥ मम धनं सर्वेषां स्वं भविष्यतीत्याह–तमिति । तम् "बहवो नृप कल्याणगुणाः पुत्रस्य सन्ति ते" इति प्रसिद्धम् ।

इत्यवगम्यते ॥ ६ ॥ ७ ॥ राक्षसीनां राक्षसीभ्यः ॥ ८ ॥ वेपन्त्या सीतयेत्यत्र षष्ठ्यर्थे तृतीया । परिसर्पती परिसर्पन्ती ॥ ९ ॥ १० ॥ हा सुमित्रेत्यत्र एकाराभाव आर्षः ॥ ११ ॥ लोकप्रवाद इत्यादिश्लोकद्वयमेकं वाक्यम । दुर्लभ इत्यत्र इतिकरणं द्रष्टव्यम् । यत्र यतः ॥ १२ ॥ १३ ॥ पूर्णा पदार्थैः ॥ १४ ॥ १५ ॥ पद्मदल

आत्मगुणानुक्त्वा विग्रहगुणानाह पद्मदलपत्राक्षम् । दलतीति दलं विकसितपद्माक्षमित्यर्थः । यद्वा दलतीति दलं गर्भपत्रम् । विस्पष्टार्थमेकार्थं शब्दद्वयं वा । सिंहविक्रान्तगामिनं विक्रान्तं विक्रमः गमनं तद्वत् गच्छतीति तथा ॥ १६ ॥ १७ ॥ पुरा जन्मान्तरे पूर्वजन्मनि । घोरं सुदारुणम् अत्यन्तघोर

सर्वथा तेन हीनाया रामेण विदितात्मना । तीक्ष्णं विषमिवास्वाद्य दुर्लभं मम जीवितम् ॥ १७ ॥ कीदृशं तु मया पापं पुरा जन्मान्तरे कृतम् । येनेदं प्राप्यते दुःखं मया घोरं सुदारुणम् ॥ १८ ॥ जीवितं त्यक्तुमिच्छामि शोकेन महता वृता । राक्षसीभिश्च रक्ष्यन्त्या रामो नासाद्यते मया ॥ १९ ॥ धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् । न शक्यं यत् परित्यक्तुमात्मच्छन्देन जीवितम् ॥ २० ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

प्रसक्ताश्रुमुखीत्येवं ब्रुवन्ती जनकात्मजा । अधोमुखमुखी बाला विलप्तुमुपचक्रमे ॥ १ ॥
उन्मत्तेव प्रमत्तेव भ्रान्तचित्तेव शोचती । उपावृत्ता किशोरीव विवेष्टन्ती महीतले ॥ २ ॥

मित्यर्थः ॥ १८ ॥ रक्ष्यन्त्या रक्ष्यमाणया ॥ १९ ॥ परवश्यतां भर्तृपरतन्त्रताम् । परस्वभूतं शरीरं न स्वेच्छया त्यक्तुं शक्यमित्यर्थः । आत्मच्छन्देन मदिच्छया ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

प्रसक्तेत्यादि । उन्मत्ता चित्तविभ्रमवती । "उन्मादश्चित्तविभ्रमः" इत्युक्तेः । प्रमत्ता अनवधाना । "प्रमादोऽनवधानता" इत्यमरः । भ्रान्तचित्ता

पत्राक्षं दलतीतिं दलं विकासितपद्मम्, तस्य पत्रमिवाक्षं विकसितपद्मपत्राक्षमित्यर्थः ॥ १६ ॥ तीक्ष्णं विषं वत्सनाभादिकमास्वाद्य स्थितस्येव मम मे जीवितं दुर्लभम् ॥ १७ ॥ १८ ॥ रक्ष्यन्त्या रक्ष्यमाणयेत्यर्थः ॥ १९ ॥ छन्देन इच्छया ॥ २० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां पञ्चविंशः सर्गः ॥ २५ ॥ प्रसक्ताश्रुमुखी प्रसक्तानि प्रवृत्तानि अश्रूणि मुखे यस्यास्सा । एवं ब्रुवन्ती वक्ष्यमाणरीत्या ब्रुवन्ती । विलप्तुं विलपितुम् ॥ १ ॥ उन्मत्तेव भूताविष्टेव । प्रमत्तेव मदकरद्रव्यसेवनात् प्रकर्षेण मत्तेव । भ्रान्तचित्तेव व्यामूढचित्तेव । उपावृत्ता किशोरीव श्रमापनोदनार्थं वेष्टिता बडवेव ॥ २ ॥

अनवस्थिताचित्ता । उपावृत्ता श्रमापनोदनार्थं वेष्टिता । किशोरीव बडवेव ॥ १ ॥२ ॥ राघवस्येत्यादि । प्रमत्तस्य अनवहितस्य ॥ ३॥४ ॥ न हीति । मे जीवितैर्जीवनैः कोऽप्यर्थो नास्ति । केवलजीवितस्यानपेक्षितत्वेप्यर्थसहितत्वेन तदपेक्षा स्यात् नेत्याह नैवार्थैर्न च भूषणैः । भूषणैरर्थैश्च सहितैर्जीवनैर्मे नार्थः । कुत इत्यत्राह वसन्त्या इति । राक्षसीमध्यवासाद्रामविरहाच्च सर्वोपकरणसहितमपि जीवितं नापेक्षितमित्यर्थः ॥ ५–१० ॥ प्रत्याख्यातं प्रत्या

राघवस्य प्रमत्तस्य रक्षसा कामरूपिणा । रावणेन प्रमथ्याहमानीता क्रोशती बलात् ॥३॥ राक्षसीवशमापन्ना भर्त्स्यमाना सुदारुणम् । चिन्तयन्ती सुदुःखार्ता नाहं जीवितुमुत्सहे ॥ ४ ॥ नहि मे जीवितैरर्थो नैवार्थैर्न च भूषणैः । वसन्त्या राक्षसीमध्ये विना रामं महारथम् ॥ ५ ॥ अश्मसारमिदं नूनमथवाप्यजरामरम् । हृदयं मम येनेदं न दुःखेनावशीर्यते ॥ ६ ॥ धिङ्मामनार्यामसतीं याऽहं तेन विना कृता । मुहूर्तमपि रक्षामि जीवितं पापजीविता ॥७॥ का च मे जीविते श्रद्धा सुखे वा तं प्रियं विना । भर्तारं सागरान्ताया वसुधायाः प्रियंवदम् ॥८॥ भिद्यतां भक्ष्यतां वापि शरीरं विसृजाम्यहम् । न चाप्यहं चिरं दुःखं सहेयं प्रियवर्जिता॥९॥ चरणेनापि सव्येन न स्पृशेयं निशाचरम् । रावणं किं पुनरहं कामयेयं विगर्हितम् ॥१०॥ प्रत्याख्यातं न जानाति नात्मानं नात्मनः कुलम् । यो नृशंसस्वभावेन मां प्रार्थयितुमिच्छति ॥ ११ ॥ छिन्ना भिन्ना विभक्ता वा दीप्तेवाग्नौ प्रदीपिता । रावणं नोपतिष्ठेयं किं प्रलापेन वश्चिरम् ॥१२॥ ख्यातः प्राज्ञः कृतज्ञश्च सानुक्रोशश्च राघवः । सद्वृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ॥ १३ ॥

ख्यानम् । भावे निष्ठा । आत्मानं स्वस्वरूपम् ॥ ११ ॥ छिन्नेति । छिन्ना द्विखण्डतया कृता । भिन्ना दलिता । विभक्ता अवयवशः कृता । दीप्तेव अग्नौ प्रदीपिता वा ॥ १२ ॥ एवं पातिव्रत्यदार्ढ्यमुक्त्वा रामस्यानागमने कारणानि बहुधा शङ्कते–ख्यात इत्यादिना । प्राज्ञः दोषवत्यपि गुणदर्शी । "न तेऽम्बा मध्यमा माता गर्हितव्या कथंचन" इत्युक्तम् । कृतज्ञः "कथंचिदुपकारेण कृतेनैकेन तुष्यति" इत्युक्तरीत्या स्वाश्रितैः कृतं किंचित्कारं सर्वदा मनसि

प्रमत्तस्य अनवहितस्य ॥ ३ ॥ ४ ॥ अर्थैः धनैः ॥ ५ ॥ ६ ॥ असतीम् असतीवत्परगृहस्थाम् ॥ ७–१० ॥ प्रत्याख्यातं निराकरणम् ॥ ११ ॥ छिन्ना लूना । भिन्ना विदारिता । विभक्ता शीर्णा ॥ १२ ॥ प्राज्ञत्वादिगुणो रामः मद्भाग्यसंक्षयान्निरनुक्रोश इति शङ्क इति सम्बन्धः ॥ १३–१८ ॥

कुर्वन्नित्यर्थः। सानुक्रोशः किंचित्कारकरणे "भृशं भवति दुःखितः" इत्युक्तरीत्या तेषां व्यसने सति अतिदुःखितः राघवः, जनित्वार्जितानां गुणान्तराणामुपसंग्रहणमिदम् । सद्वृत्तः परसमृद्ध्येकप्रयोजनः । ख्यातः एवं शत्रुगोष्ठ्यामपि प्रसिद्धः । निरनुक्रोशः शङ्के अस्यामप्यवस्थायां सुखप्रदानाभावात् नृशंसमाशङ्के । मद्भाग्यसंक्षयात् मद्भाग्यविपर्ययेणैवं वैपरीत्यं जातम् ॥ १३ ॥एकमात्रसहायः स किं करिष्यतीत्यत्राह–राक्षसानामिति । जनस्थाने

राक्षसानां सहस्राणि जनस्थाने चतुर्दश । येनैकेन निरस्तानि स मां किं नाभिपद्यते ॥ १४ ॥ निरुद्धा रावणेनाहमल्पवीर्येण रक्षसा । समर्थः खलु मे भर्ता रावणं हन्तुमाहवे ॥ १५ ॥ विराधो दण्डकारण्ये येन राक्षसपुङ्गवः । रणे रामेण निहतः स मां किं नाभिपद्यते ॥ १६ ॥ कामं मध्ये समुद्रस्य लङ्केयं दुष्प्रधर्षणा । न तु राघवबाणानां गतिरोधीह विद्यते ॥१७॥ किं तु तत्कारणं येन रामो दृढपराक्रमः । रक्षसाऽपहृतां भार्यामिष्टां नाभ्यवपद्यते॥ १८॥ इहस्थां मां न जानीते शङ्के लक्ष्मणपूर्वजः । जानन्नपि हि तेजस्वी धर्षणं मर्षयिष्यति ॥ १९ ॥ हृतेति योऽधिगत्वा मां राघवाय निवेदयेत् । गृध्रराजोऽपि स रणे रावणेन निपातितः ॥२०॥ कृतं कर्म महत्तेन मां तथाऽभ्यवपद्यता । तिष्ठता रावणद्वन्द्वे वृद्धेनापि जटायुषा ॥ २१ ॥ यदि मामिह जानीयाद्वर्तमानां स राघवः । अद्य बाणैरभिक्रुद्धः कुर्याल्लोकमराक्षसम् ॥ २२ ॥

रक्षसां चतुर्दश सहस्राणि एकेन येन रामेण निरस्तानि घातितानि सः नाभिपद्यते न रक्षति ॥१४ ॥ प्रबलो रावणः कथं निरस्य इत्यत्राह–निरुद्धेति ॥ १५ ॥ सामर्थ्यं निदर्शयति–विराध इति ॥ १६ ॥ अस्तु रामः समर्थः, तथापि समुद्रमध्यस्था लङ्का दुष्प्रधर्षेत्याशङ्क्याह–काममिति । गतिरोधि गतिप्रतिबन्धकम्, किंचिदिति शेषः ॥ १७ ॥ एतत्फलितमाह–किन्त्विति ॥१८ ॥ इहेति । लक्ष्मणपूर्वज इत्यनेन निरनुक्रोशत्वादिप्रसक्त्यभावः सूच्यते । मर्षयिष्यतीत्यत्र काकुरनुसन्धेया ॥ १९ ॥ इहास्तीत्यज्ञाने हेतुमाह–हृतेति॥२०॥ प्रसङ्गादाह–कृतमिति । अभ्यवपद्यता रक्षता। रावणद्वन्द्वे

इहस्थामिति। मर्षयिष्यतीत्यत्र काकुरनुसन्धेया। तथा च न सहिष्यतीत्यर्थः॥ १९॥ २०॥ मां तथाऽभ्यवपद्यता मन्मोचनार्थमागतेन। रावणद्वन्द्वे रावणयुद्धे ॥ २१–२२॥

रावणद्वन्द्वयुद्धे ॥ २१-२३ ॥ अहं यथा एवं रुदती रुदन्त्यस्मि । तथा निहतनाथानां राक्षसीनां गृहे गृहे भूयः भूरि रुदन्त्यः भविष्यन्तीत्यर्थः ॥ २४ ॥ अन्विष्येति । रक्षसां लङ्कामन्विष्य कुर्यात्, रिपुनाशनमिति शेषः ॥ २५ ॥ २६ ॥ दुष्प्रस्थानः दुर्मार्गः, दुराचार इति यावत् ॥ २७ ॥ अशुभानि अशुभसूचकानि । हतप्रभेत्यत्र लङ्केत्यनुकर्षः । लङ्का अचिरेण कालेन हतप्रभा भविष्यतीत्यत्र यादृशानि सूचकानि स्युः इह

विधमेच्च पुरीं लङ्कां शोषयेच्च महोदधिम् । रावणस्य च नीचस्य कीर्तिं नाम च नाशयेत् ॥ २३ ॥ ततो निहतनाथानां राक्षसीनां गृहे गृहे । यथाऽहमेवं रुदती तथा भूयो न संशयः ॥ २४ ॥ अन्विष्य रक्षसां लङ्कां कुर्याद् रामः सलक्ष्मणः । न हि ताभ्यां रिपुर्दृष्टो मुहूर्तमपि जीवति ॥ २५ ॥ चिताधूमाकुलपथा गृध्रमण्डलसङ्कुला । अचिरेण तु लङ्केयं श्मशानसदृशी भवेत् ॥ २६ ॥ अचिरेणैव कालेन प्राप्स्याम्येव मनोरथम् । दुष्प्रस्थानोऽयमाख्याति सर्वेषां वो विपर्ययम् ॥ २७॥ यादृशानीह दृश्यन्ते लङ्कायामशुभानि वै । अचिरेण तु कालेन भविष्यति हतप्रभा ॥२८॥ नूनं लङ्का हते पापे रावणे राक्षसाधमे । शोषं यास्यति दुर्धर्षा प्रमदा विधवा यथा ॥२९॥ पुण्योत्सवसमुत्था च नष्टभर्त्री सराक्षसी । भविष्यति पुरी लङ्का नष्टभर्त्री यथाऽङ्गना ॥ ३० ॥ नूनं राक्षसकन्यानां रुदन्तीनां गृहे गृहे । श्रोष्यामि नचिरादेव दुःखार्तानामिह ध्वनिम् ॥ ३१ ॥

लङ्कायां तादृशान्यशुभानि दृश्यन्त इत्यन्वयः ॥ २८॥ नूनमिति । दुर्धर्षेति लङ्काविशेषणम् ॥ २९ ॥ पुण्योत्सवेभ्यस्समुत्था निकृत्तपुण्योत्सवेत्यर्थः । सराक्षसी राक्षसीजनमात्रयुक्तेत्यर्थः । इयं लङ्कापुरी । नष्टभर्त्री सराक्षसी अर्थात् हतराक्षसा नष्टभर्त्री अङ्गना यथा अङ्गनेव पुण्योत्सव

यथाऽहमेवं रुदत्यस्मि तथा तासां गृहे गृहे रुदन्त्यो राक्षस्यो भूयो भूयिष्ठं भविष्यन्तीत्यर्थः ॥ २४ ॥ ननु ज्ञाने खल्विदं सम्भाव्येत, ज्ञानमेव दुर्लभम्, तत्राह-अन्विष्येति । अचिन्त्यसामर्थ्यत्वाद्दैवानुग्रहाच्च लङ्कामप्यन्विष्य मां ज्ञात्वा रक्षसां कुर्यात्, विनाशनमिति शेषः । विनाशस्यैषत्करत्वमाह नहीति ॥ २५॥ २६ ॥ अचिरेणेति । कुतः दुष्प्रस्थानः दुर्मार्गवर्तनं कर्तृ विपर्ययमाख्याति ॥ २७ ॥ यादृशानीति । यादृशानि दृश्यन्ते तैरेव हतप्रभा भविष्यतीति ज्ञायत इत्यर्थः॥ २८ ॥ शोषम्, ऐश्वर्यादिरिति शेषः ॥ २९ ॥ ३० ॥ ध्वनिं रोदनशब्दम् । दुःखार्तानामिवेति च पाठः ॥ ३१ ॥ ३२ ॥

समुत्था भविष्यतीत्यन्वयः ॥ ३०—३२ ॥ यदीति । रामः रावणस्य निवेशने मां वर्तमानाम् जानीयाद्यदि तदा लङ्का निर्दग्धा भविष्यतीति पूर्वेण सम्बन्धः ॥ ३३ ॥ समयः द्वादशमासात्मकः सङ्केतः । तस्य कालः आगतः सन्निहितः, मासद्वयमात्रपरिशेषादिति भावः ॥ ३४ ॥ पापकारिणः ये नैर्ऋताः अधर्माद्धेतोः अकार्यं न जानन्ति, तैर्महोत्पातस्संभविष्यति ॥ ३५ ॥ एतदेव विवृणोति—नैत इति ॥ ३६ ॥ ३७ ॥ यदीति ।

सान्धकारा हतद्योता हतराक्षसपुङ्गवा । भविष्यति पुरी लङ्का निर्दग्धा रामसायकैः ॥ ३२ ॥ यदि नाम स शूरो मां रामो रक्तान्तलोचनः । जानीयाद्वर्तमानां हि रावणस्य निवेशने ॥ ३३ ॥ अनेन तु नृशंसेन रावणेनाधमेन मे । समयो यस्तु निर्दिष्टस्तस्य कालोऽयमागतः ॥ ३४ ॥ अकार्यं ये न जानन्ति नैर्ऋताः पापकारिणः । अधर्मात्तु महोत्पातो भविष्यति हि साम्प्रतम् ॥ ३५ ॥ नैते धर्मं विजानन्ति राक्षसाः पिशिताशनाः । ध्रुवं मां प्रातराशार्थे राक्षसः कल्पयिष्यति ॥ ३६ ॥ साऽहं कथं करिष्यामि तं विना प्रियदर्शनम् । रामं रक्तान्तनयनमपश्यन्ती सुदुःखिता ॥३७॥ यदि कश्चित् प्रदाता मे विषस्याद्य भवेदिह । क्षिप्रं वैवस्वतं देवं पश्येयं पतिना विना ॥ ३८॥ नाजानाज्जीवतीं रामः स मां लक्ष्मणपूर्वजः । जानन्तौ तौ न कुर्यातां नोर्व्यां हि मम मार्गणम् ॥ ३९ ॥ नूनं ममैव शोकेन स वीरो लक्ष्मणाग्रजः । देवलोकमितो यातस्त्यक्त्वा देहं महीतले ॥ ४० ॥ धन्या देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । मम पश्यन्ति ये नाथं रामं राजीवलोचनम् ॥ ४१ ॥

पतिनेति नाभावः आर्षः॥३८॥ नाजानादिति । जीवतीं जीवन्तीम् । न न कुर्यातां कुर्यातामेव । तदाह वामनः—"संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ" यदीति । सः रामः मां रावणस्य निवेशने वर्तमानां जानीयाद्यदि तर्हि लङ्का रामसायकैर्निर्दग्धा भविष्यतीति पूर्वेण सम्बन्धः ॥ ३३ ॥ तर्हि जितं त्वयेत्याशङ्क्य सत्यम्, किन्तु ततः प्रागेव मामयं मारयिष्यतीत्याह—अनेनेत्यादिश्लोकत्रयेण । समयः "मासान् द्वादश भामिनि" इत्युक्तसमयः ॥ ३४ ॥ ननु, विभीषिकामात्रमेतत् कथमकार्यं करिष्यतीत्यत आह—अकार्यमिति । ये पापकारिणो नैर्ऋताः अधर्माद्धेतोरकार्यं न जानन्ति, तैर्महोत्पातः मद्वधरूपमहाननर्थः साम्प्रतं भविष्यति हि ॥ ३५ ॥ तदेव विवृणोति—नैत इति ॥ ३६—३८ ॥ तदेवं महावीरस्य मय्यनुरक्तस्य रामस्य ममानन्वेषणे कारणं मज्जीवनापरिज्ञानं वा स्वविपत्तिर्वा तात्त्विकवैराग्यं वा प्रवासदोषान्मयि प्रेमनाशो वा मामकगुणहीनता वा मद्भाग्यविपर्ययो वेति षट्कारणान्युत्प्रेक्षते—नाजानादित्यादिश्लोकषट्केन ॥ ३९—४१ ॥

इति ॥ ३९-४१ ॥ अथवेति । धर्मकामस्य तस्य कामानपेक्षिण इत्यर्थः । मया भार्यया कोऽर्थः । परमात्मनः उत्कृष्टस्वभावस्य ॥ ४२ ॥ दृश्यमान इति । सौहृदं नास्त्यपश्यतः अदृश्यमाने प्रीतिर्न भवति । तस्माददृश्यायां मयि रामस्य किं प्रीतिर्नासीदित्यर्थः । एवमाशङ्कितं प्रतिषेधति-नाशयन्तीति । कृतघ्नाः प्रथममुत्पन्नां प्रीतिं नाशयन्ति । न तु रामो नाशयिष्यति, मयि प्रीतिमिति शेषः ॥४३॥ किन्त्विति । न गुणाः दुष्कृतानि ॥४४॥

अथवा नहि तस्यार्थो धर्मकामस्य धीमतः । मया रामस्य राजर्षेर्भार्यया परमात्मनः ॥ ४२ ॥ दृश्यमाने भवेत् प्रीतिः सौहृदं नास्त्यपश्यतः । नाशयन्ति कृतघ्नास्तु न रामो नाशयिष्यति ॥ ४३ ॥ किन्तु मे न गुणाः केचित् किंवा भाग्यक्षयो मम । याऽहं सीदामि रामेण हीना मुख्येन भामिनी ॥ ४४ ॥ श्रेयो मे जीवितान्मर्तुं विहीनाया महात्मनः । रामादक्लिष्टचारित्राच्छूराच्छत्रुनिबर्हणात् ॥४५॥ अथवा न्यस्तशस्त्रौ तौ वने मूलफलाशिनौ । भ्रातरौ हि नरश्रेष्ठौ संवृत्तौ वनगोचरौ ॥ ४६ ॥ अथवा राक्षसेन्द्रेण रावणेन दुरात्मना । छद्मना सादितौ शूरौ भ्रातरौ रामलक्ष्मणौ ॥ ४७ ॥ साऽहमेवं गते काले मर्तुमिच्छामि सर्वथा । न च मे विहितो मृत्युरस्मिन् दुःखेऽपि वर्तति ॥४८॥ धन्याः खलु महात्मानो मुनयस्त्यक्तकिल्बिषाः । जितात्मानो महाभागा येषां न स्तः प्रियाप्रिये ॥४९

श्रेय इति । मर्तुमिति भावार्थे तुमुन्, मरणमित्यर्थः । महात्मनः रामाद्विहीनायाः महात्मना रामेण हीनायाः । तृतीयार्थे पञ्चमी ॥ ४५ ॥ अथवेति । न्यस्तशस्त्रौ संवृत्तौ किमिति संबन्धः ॥ ४६ ॥ सादितौ हतौ ॥ ४७ ॥ वर्तति वर्तमाने ॥ ४८ ॥ महात्मानः महाधैर्याः । त्यक्तकिल्बिषाः त्यक्तपापाः ।

अथवा नहीत्यादि सार्धश्लोकमेकं वाक्यम् । धर्मकामस्य न तु कामपरस्य । परमात्मनः आत्मारामस्येत्यर्थः ॥ ४२ ॥ अथ रामगुणाभिज्ञतया प्रेमनाशपक्षस्तत्रा सम्भावित इति स्वयमेवाह-दृश्यमान इति । केषाञ्चिद् दृश्यमाने, वस्तुनीति शेषः । सौहृदं यथा भवति तथा प्रीतिर्भवेत् । अपश्यतः अदृश्यमाने सति प्रीतिर्न भवेत् । कुतः ? कृतघ्नाः नाशयन्ति, प्रीतिमिति शेषः । रामस्तु न नाशयतीतिं सम्बन्धः । यद्वा सौहृदं स्नेहम् अपश्यतः पुंसः दृश्यमानेऽपि, सुहृदीति शेषः । प्रीतिर्न भवेत् किमुत अदृश्यमाने, कुतः ? कृतघ्नाः नाशयन्ति सौहृदमित्यलुकर्षः । कृतज्ञो रामस्तु न नाशयतीति सम्बन्धः ॥ ४३ ॥ ४४ ॥ अथास्यामवस्थायां स्वकर्तव्यमाह-श्रेय इति । मर्तुं श्रेयः, मरणमेव श्रेय इत्यर्थः ॥ ४५-४८ ॥ प्रियाप्रिये इष्टानिष्टे ॥ ४९ ॥

जितात्मानः जितान्तःकरणाः । महाभागाः महाभाग्याः ॥ ४९ ॥ प्रियान्न संभवेद्दुःखं किंतु सुखमेव भवेदित्यर्थः । प्रियात् अनुकूलवस्तुनः । अप्रियात् प्रतिकूलवस्तुनः । अधिकं भयम् अधिकं दुःखम् । ताभ्यां प्रियाप्रियाभ्याम् । नमस्तेषां त एव सर्वोत्तमा इत्यर्थः ॥ ५० ॥ साऽहमिति । साऽहं

प्रियान्न संभवेद्दुःखमप्रियादधिकं भयम् । ताभ्यां हि ये वियुज्यन्ते नमस्तेषां महात्मनाम् ॥ ५० ॥
साऽहं त्यक्ता प्रियेणेह रामेण विदितात्मना । प्राणांस्त्यक्ष्यामि पापस्य रावणस्य गता वशम् ॥ ५१ ॥
इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे षड्विंशः सर्गः ॥ २६ ॥

इत्युक्ताः सीतया घोरा राक्षस्यः क्रोधमूर्च्छिताः । काश्चिज्जग्मुस्तदाख्यातुं रावणस्य तरस्विनः ॥ १ ॥
ततः सीतामुपागम्य राक्षस्यो घोरदर्शनाः । पुनः परुषमेकार्थमनर्थार्थमथाब्रुवन् ॥ २ ॥
अद्येदानीं तवानार्ये सीते पापविनिश्चये । राक्षस्यो भक्षयिष्यन्ति मांसमेतद्यथासुखम् ॥ ३ ॥
सीतां ताभिरनार्याभिर्दृष्ट्वा सन्तर्जितां तदा । राक्षसी त्रिजटा वृद्धा शयाना वाक्यमब्रवीत् ॥ ४ ॥

तद्विलक्षणा अहम्, केवलप्रियपरेत्यर्थः । प्रियेण त्यक्ता अप्रियं प्राप्ता, प्राणांस्त्यक्ष्यामीत्यर्थः ॥ ५१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

इत्युक्ता इत्यादि । तत् मरणाध्यवसायम् ॥१॥ तत इत्यादि । एकार्थं पूर्वोक्तवचनैरेकाभिधेयम् । अनर्थार्थम् अनर्थफलकम् । एकाक्ष्यादयः पूर्वोक्तार्थमेव परुषवचनं पुनरब्रुवन्नित्यर्थः ॥ २ ॥ अद्य अस्मिन् दिने । इदानीम् अस्मिन् क्षणे । भक्षयिष्यन्तीत्यब्रुवन्निति पूर्वेण सम्बन्धः ॥ ३ ॥ सीता

प्रियादभिमताद्वस्तुनः दुःखं न सम्भवेत् किन्तु सुखं भवेत ! अप्रियादनभिमताद्वस्तुनः । अधिकं भयं भवेत् ताभ्यां प्रियाप्रियरूपविषयजन्यसुखभयाभ्यामित्यर्थः ॥ ५० ॥ ५१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां षड्विंशः सर्गः ॥ २६ ॥

इत्युक्ता इति । तत् मरणाध्यवसायम् ॥ १ ॥ एकार्थम् एकाभिधेयम् । अनर्थम् अनर्थफलकम् ॥२॥ अद्येदानीम् । अद्य अस्मिन् दिने । इदानीमस्मिन् क्षणे । अद्येत्यस्य वास्तवार्थस्तु—हे सीते ! पापनिश्चये अनार्ये अपराधे सति राक्षस्यस्तव मांसं भक्षयिष्यन्तीति काश्चन राक्षस्यः परुषमब्रुवन्निति पूर्वेण सम्बन्धः ॥ ३–५ ॥

मित्यादि । त्रिजटा विभीषणपुत्री । शयानेत्यनेन स्वप्नवृत्तान्तकथनत्वरोच्यते ॥४—७॥ निशीत्यनन्तरमितिकरणं द्रष्टव्यम् । काले उषःकाले यस्स्वप्नः तत्संश्रितम् ॥८॥९॥ आगतः, लङ्कामिति शेषः ॥ १० ॥ ११ ॥ राघवश्चेति । महागजमारूढ इति, शिबिकात इति शेषः । तथोक्तम् स्वप्नाध्याये—

आत्मानं खादतानार्या न सीतां भक्षयिष्यथ। जनकस्य सुतामिष्टां स्नुषां दशरथस्य च ॥ ५ ॥ स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः। राक्षसानामभावाय भर्तुरस्या भवाय च ॥ ६ ॥ एवमुक्तास्त्रिजटया राक्षस्यः क्रोधमूर्च्छिताः। सर्वा एवाब्रुवन् भीतास्त्रिजटां तामिदं वचः। कथयस्व त्वया दृष्टः स्वप्नोऽयं कीदृशो निशि ॥ ७ ॥ तासां श्रुत्वा तु वचनं राक्षसीनां मुखाच्च्युतम्। उवाच वचनं काले त्रिजटा स्वप्नसंश्रितम् ॥ ८ ॥ गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम् ॥ ९ ॥ युक्तां हंससहस्रेण स्वयमास्थाय राघवः। शुक्लमाल्याम्बरधरो लक्ष्मणेन सहागतः ॥ १० ॥ स्वप्ने चाद्य मया दृष्टा सीता शुक्लाम्बरावृता। सागरेण परिक्षिप्तं श्वेतं पर्वतमास्थिता। रामेण सङ्गता सीता भास्करेण प्रभा यथा ॥ ११ ॥ राघवश्च मया दृष्टश्चतुर्दन्तं महागजम्। आरूढः शैलसङ्काशं चचार सह लक्ष्मणः ॥ १२ ॥ ततस्तौ नरशार्दूलौ दीप्यमानौ स्वतेजसा। शुक्लमाल्याम्बरधरौ जानकीं पर्युपस्थितौ ॥ १३ ॥ ततस्तस्य नगस्याग्रे ह्याकाशस्थस्य दन्तिनः। भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता ॥ १४ ॥

" आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम् । विष्ठानुलेपो रुदितं मृतं च स्वप्नेष्वगम्यागमनं च धन्यम् ॥" इति । चचार, सीतां प्रतीति शेषः ॥१२॥१३॥ ततस्तस्य नगस्याग्र इति । अत्र द्वादशसहस्रं श्लोका गताः, त्रयोदशसहस्रस्यादिमोऽयं श्लोकः । गायत्र्यास्त्रयोदशमक्षरमत्र बोध्यम् ॥१४॥

स्वप्न इति । राक्षसानामभावाय विनाशाय । भवाय अभ्युदयाय ॥ ६ ॥ पूर्वं क्रोधमूर्च्छिताः पश्चात्त्रिजटावचनाद्भीता इत्यर्थः । काले प्रातःकाले । स्वप्नसंश्रितं प्रातःकालदृष्टस्वप्नदृष्टार्थविषयकम्, अनेन स्वप्नस्य शीघ्रफलदत्वं सूचितम् ॥ ७—१० ॥ सागरेण क्षीरसागरेण । परिक्षिप्तमावृतम् । सङ्गता, तत्रैव पर्वत इति शेषः । एतेन लङ्कायामेव रामस्य सीतादर्शनं सूचितम् ॥ ११—१३ ॥ तत इति । जानकीं पर्युपस्थितौ जानकीसमीपस्थितौ । तस्य इति गायत्र्यास्त्रयोदशाक्षरं ततस्तस्येत्यस्य श्लोकस्य चतुर्थाक्षरेण स्य इत्यनेन सङ्गृह्णाति । तस्य नगस्य पूर्वोक्तस्य श्वेतपर्वतस्येत्यर्थः । भर्त्रा परिगृहीतस्य रामेणाधिष्ठितस्य ॥ १४ ॥

भर्तुरिति । चन्द्रसूर्यौ पाणिना परिमार्जतीति । अत्र स्वप्नाध्यायवचनम्—"आदित्यमण्डलं वा तु चन्द्रमण्डलमेव वा । स्वप्ने गृह्णाति हस्ताभ्यां राज्यं संप्राप्नुयान्महत् ॥" इति ॥ १५–१७ ॥ अयमिह स्वप्नक्रमः—शिबिकास्थितो रामो दृष्टः, श्वेतपर्वतस्था सीता च । ततः शिबिकाया गजमारुह्य

भर्तुरङ्कात् समुत्पत्य ततः कमललोचना । चन्द्रसूर्यौ मया दृष्टा पाणिना परिमार्जती ॥ १५ ॥ ततस्ताभ्यां कुमाराभ्यामास्थितः स गजोत्तमः । सीतया च विशालाक्ष्या लङ्काया उपरि स्थितः ॥ १६ ॥ पाण्डुरर्षभयुक्तेन रथेनाष्टयुजा स्वयम् । इहोपयातः काकुत्स्थः सीतया सह भार्यया ॥ १७ ॥ लक्ष्मणेन सह भ्रात्रा सीतया सह वीर्यवान् ॥ १८ ॥ आरुह्य पुष्पकं दिव्यं विमानं सूर्यसन्निभम् । उत्तरां दिशमालोक्य जगाम पुरुषोत्तमः ॥ १९ ॥ एवं स्वप्ने मया दृष्टो रामो विष्णुपराक्रमः । लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया * ॥ २० ॥

लक्ष्मणेन सह पर्वतमभ्येत्य ततस्सीतां गजस्कन्धेऽधिरोप्य लङ्काया उपरि स्थित्वा ताभ्यां सहाष्टर्षभयुक्तेन रथेनेहागत्य स्वं देशं प्रति ताभ्यां पुष्पकमधिरुह्य गत इति । अन्ये श्लोकाः प्रक्षिप्ताः । तेन ते न व्याख्याता इत्याहुः । लक्ष्मणेन सह भ्रात्रेति । एतत्पादस्यानन्तरम्—सीतया सह वीर्यवान् ।

भर्तुरङ्कादिति । पर्वताग्रे गजस्कन्धे भर्तुरङ्के स्थित्वा तस्मात्समुत्पत्य । कायमूर्ध्वमायम्येत्यर्थः ॥ १५ ॥ १६ ॥ पाण्डुरर्षभेत्यादि सार्धश्लोकत्रयमेकं वाक्यम् । तस्मिन् गजे लङ्कोपरिस्थिते रामः सीतालक्ष्मणाभ्यां सह पाण्डुरवृषभाष्टयुक्तेन रथेनेहागत्य पुष्पकारूढस्ताभ्यां सहोत्तरां दिशं प्रस्थितो दृष्ट इति सम्बन्धः । इह

* [ साण्डं त्रिभुवनं सर्वं सर्वतः सचराचरम् । सर्वं ग्रस्तं मया दृष्टं रामेणाक्लिष्टकर्मणा ॥ १ ॥ क्षीरोदधिजले मध्ये श्वेतः शैलः समुच्छ्रितः । तस्य मूर्ध्नि ततः श्वेतश्चतुर्दन्तो महागजः ॥ २ ॥ तस्य पृष्ठे स्थितः श्रीमान्रामो राजीवलोचनः । ततः सीता समुत्पत्य भर्तुरङ्काश्रिता तदा । बाहुभ्यां सम्परिष्वज्य सम्पूर्णं चन्द्रमण्डलम् ॥ ३ ॥ ततोऽन्यत्र मया दृष्टो रामो राजीवलोचनः । आसीनः प्राङ्मुखः श्रीमानासने परमाद्भुते ॥ ४ ॥ अभिषिक्तस्तु काकुत्स्थः सर्वदेवैर्नमस्कृतः । सब्रह्मर्षिगणैस्सर्वैस्सर्वतीर्थजलेन च ॥ ५ ॥ शुक्लमाल्याम्बरधरा शुक्लमाल्यानुलेपना । साधु सा तत्र सुश्रोणी रराज जनकात्मजा ॥ ६ ॥ ततो देवास्सगन्धर्वास्सिद्धाश्च परमर्षयः । ब्रह्माणमग्रतः कृत्वा रामं तत्र ववन्दिरे ॥ ७ ॥ पुनरेव मया दृष्टो रामो रमयतां वरः । विष्णुरेव स्वयं भूत्वा तस्मिन्नास्ते वरासने ॥ ८ ॥ परं ब्रह्म परं तत्त्वं परं ज्ञानं परं तपः । परं बीजं परं क्षेत्रं परं कारणकारणम् ॥ ९ ॥ शङ्खचक्रगदः श्रीमान् पुण्डरीकायतेक्षणः । श्रीवत्सवक्षा नित्यश्रीरजेयः शाश्वतो ध्रुवः ॥ १० ॥ एवंभूतो महातेजा रामः कमललोचनः । सर्वलोकेश्वरः श्रीमान् ससर्ज रघुनन्दनः ॥ ११ ॥ ततोऽमरेन्द्राः पितरो मुनीन्द्रा गन्धर्वविद्याधरपन्नगेन्द्राः । कृताभिषेकं परिवार्य रामं प्रतुष्टुवुः प्राञ्जलयः प्रहृष्टाः ॥ १२ ॥ ततस्तु सर्वाप्सरसः प्रहृष्टा नृत्यन्ति गायन्ति समेत्य तत्र । वाद्यं प्रकुर्वन्ति समेत्य शङ्खा वंशाश्च वीणा मुरजाश्च भेर्यः ॥ १३ ॥ एते श्लोकाः प्रक्षिप्ताः ॥

स०—विष्णुः उपेन्द्ररूपी सन् ॥ ८ ॥ तत्स्वरूपं निरूपयति—परं ब्रह्मेति । कीदृशं ब्रह्म परं तत्त्वम् अत्यन्तानारोपितरूपम् । परं ज्ञानम् उत्तमज्ञानस्वरूपम् । परं तपः फलरूपम् । परं बीजम् अतिशयेन निमित्तकारणम् । परं क्षेत्रं मुख्याश्रयः । कारणकारणं प्रकृतिकालादिरूपकारणानामपि कारणम् ॥ ९ ॥ नित्यश्रीः अनपायलक्ष्मीवान् ॥ १० ॥ अत्र साण्डं त्रिभुवनमित्याद्येतदन्तं श्लोकजातं प्रक्षिप्तमिति कतकप्रभृतयः । अस्माभिस्तु गङ्गाजलमिश्ररथ्योदकवदुपादेयतया व्याख्यातम् ॥ ]

आरुह्य पुष्पकं दिव्यं विमानं सूर्यसन्निभम् । उत्तरां दिशमालोक्य जगाम पुरुषोत्तमः । एवं स्वप्ने मया दृष्टो रामो विष्णुपराक्रमः । लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया ॥ इति पाठक्रमः । विमाने पुष्पके स्थितः । साण्डं त्रिभुवनमित्यारभ्य रामः सत्यपराक्रम इत्यन्तो ग्रन्थः प्रक्षिप्तः प्रकृतासङ्गतश्च । विष्णुरेव स्वयं भूत्वेति प्रक्षिप्तवचनस्य विष्णुपराक्रम इत्यनेन विरोधात् ॥ १८–२१ ॥ रावणश्चेति । पिबन्निति । तैलसमुक्षित इत्यनेन तैलमित्युप

न हि रामो महातेजाः शक्यो जेतुं सुरासुरैः । राक्षसैर्वापि चान्यैर्वा स्वर्गः पापजनैरिव ॥ २१ ॥ रावणश्च मया दृष्टः क्षितौ तैलसमुक्षितः । रक्तवासाः पिबन् मत्तः करवीरकृतस्रजः ॥२२॥ विमानात् पुष्पकादद्य रावणः पतितो भुवि । कृष्यमाणः स्त्रिया दृष्टो मुण्डः कृष्णाम्बरः पुनः ॥ २३ ॥ रथेन खरयुक्तेन रक्तमाल्यानुलेपनः । पिबंस्तैलं हसन् नृत्यन् भ्रान्तचित्ताकुलेन्द्रियः । गर्दभेन ययौ शीघ्रं दक्षिणां दिशमास्थितः ॥२४॥ पुनरेव मया दृष्टो रावणो राक्षसेश्वरः । पतितोऽवाक्शिरा भूमौ गर्दभाद्भयमोहितः ॥ २५ ॥ सहसोत्थाय सम्भ्रान्तो भयार्तो मदविह्वलः । उन्मत्त इव दिग्वासा दुर्वाक्यं प्रलपन् बहु ॥ २६ ॥ दुर्गन्धं दुस्सहं घोरं तिमिरं नरकोपमम् । मलपङ्कं प्रविश्याशु मग्नस्तत्र स रावणः ॥ २७ ॥ कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी । काली कर्दमलिप्ताङ्गी दिशं याम्यां प्रकर्षति ॥ २८ ॥ एवं तत्र मया दृष्टः कुम्भकर्णो निशाचरः । रावणस्य सुताः सर्वे दृष्टास्तैलसमुक्षिताः ॥ २९ ॥ वराहेण दशग्रीवः शिंशुमारेण चेन्द्रजित् । उष्ट्रेण कुम्भकर्णश्च प्रयातो दक्षिणां दिशम् ॥ ३० ॥ एकस्तत्र मया दृष्टः श्वेतच्छत्रो विभीषणः ॥३१॥ शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः । शङ्खदुन्दुभिनिर्घोषैर्नृत्तगीतैरलंकृतः ॥३२॥

स्थाप्यते । करवीरकृतस्रज इत्यकारान्तत्वमार्षम् । "हलन्ताद्वा" इत्यापो विधानात् स्रक्छब्दस्याबन्तत्वेन वा निर्वाहः ॥ २२–३० ॥ एवं रावण

शैलारोहणादीनां शुभावेदकत्वम्–"आरोहणं गोवृषकुञ्जराणाम्" इत्यादिशास्त्रादवगन्तव्यम् ॥ १७–२१ ॥ रावणश्चेति । करवीरकृतस्रज इत्येतद्रथविशेषणम् ॥ २२–२६ ॥ मलानि पङ्कानि यस्मिन् तत् तिमिरम् ॥ २७–३२ ॥

स०–करवीरकृतस्रज इति रावणविशेषणम् । करवीरैः रक्तकरवीरपुष्पैः कृता स्रजा माला यस्य स तथा । "टापथैव" इत्याद्युक्तेः । विमानविशेषणत्वे तु पृथक्साक्षादपशकुनत्वाप्रतीत्यस्वारस्यम् । न च नागोजिभट्टेन टापर्थंवेत्यादेः शब्देन्दुशेखरेऽनङ्गीकृतत्वेन कथमेतदिति वाच्यम्, बहुप्रयोगविप्लवापत्तेः साहसमात्रं तदित्यवधेयम् । रक्तमाल्यानुलेपन इत्युत्तरग्रन्थानुगुण्याच्च ॥ २२ ॥ स्त्रिया सह मुण्डस्तया कृष्यमाण इत्यन्वयः । सुवासिनीकर्षणस्य हर्षहेतुत्वात् । अत उभयत्र तथाविधता युक्ता । अपशकुनान्तरलाभाच्च । अथवा स्त्रिया नीलवासोदन्तादिमत्या ॥ २३ ॥

विनाशसूचकमुक्त्वा विभीषणस्य राज्यप्राप्तिसूचकमाह—एकस्तत्र मया दृष्टः श्वेतच्छत्र इत्यादिना ॥ ३१–३२ ॥ वैहायसं विमानम् ॥ ३३–३८ ॥ अपगच्छत अपसरत । नश्यध्वम् अदर्शनं प्राप्नुत । आत्मनेपदमार्षम् । सीतामाप सीतामचिरेणाप्स्यतीत्यर्थः । सर्वैः राक्षसैस्सार्धम् घातयेत्, व इति

आरुह्य शैलसङ्काशं मेघस्तनितनिःस्वनम् । चतुर्दन्तं गजं दिव्यमास्ते तत्र विभीषणः । चतुर्भिः सचिवैः सार्धं वैहायस मुपस्थितः ॥ ३३ ॥ समाजश्च मया दृष्टो गीतवादित्रनिःस्वनः । पिबतां रक्तमाल्यानां रक्षसां रक्तवाससाम् ॥ ३४ ॥ लङ्का चेयं पुरी रम्या सवाजिरथकुञ्जरा । सागरे पतिता दृष्टा भग्नगोपुरतोरणा ॥ ३५ ॥ लङ्का दृष्टा मया स्वप्ने रावणेनाभिरक्षिता । दग्धा रामस्य दूतेन वानरेण तरस्विना ॥ ३६ ॥ पीत्वा तैलं प्रनृत्ताश्च प्रहसन्त्यो महा स्वनाः । लङ्कायां भस्मरूक्षायां प्रविष्टा राक्षसस्त्रियः ॥ ३७ ॥ कुम्भकर्णादयश्चेमे सर्वे राक्षसपुङ्गवाः । रक्तं निव सनं गृह्य प्रविष्टा गोमयह्रदे ॥ ३८ ॥ अपगच्छत नश्यध्वं सीतामाप स राघवः । घातयेत् परमामर्षी सर्वैः सार्धं हि राक्षसैः ॥ ३९ ॥ प्रियां बहुमतां भार्यां वनवासमनुव्रताम् । भर्त्सितां तर्जितां वापि नानुमंस्यति राघवः ॥ ४० ॥ तदलं क्रूरवाक्यैर्वः सान्त्वमेवाभिधीयताम् । अभियाचाम वैदेहीमेतद्धि मम रोचते ॥ ४१ ॥ यस्यामेवं विधः स्वप्नो दुःखितायां प्रदृश्यते । सा दुःखैर्विविधैर्मुक्ता प्रियं प्राप्नोत्यनुत्तमम् ॥ ४२ ॥ भर्त्सितामपि याचध्वं राक्षस्यः किं विवक्षया । राघवाद्धि भयं घोरं राक्षसानामुपस्थितम् ॥ ४३ ॥ प्रणिपातप्रसन्ना हि मैथिली जनका त्मजा । अलमेषा परित्रातुं राक्षस्यो महतो भयात् ॥ ४४ ॥

सिद्धम् । अपगच्छत नश्यध्वमित्युक्तेः रावणमित्यध्याहारो वा ॥ ३९ ॥ नानुमंस्यति न सहिष्यत इत्यर्थः ॥ ४० ॥ अभियाचाम, अभयमिति शेषः ॥ ४१ ॥ ४२ ॥ किं विवक्षया अस्माभिस्तदा भर्त्सिता कथं प्रसन्ना भविष्यतीति वक्तुमिच्छया किम् ? शङ्का न कर्तव्येत्यर्थः ॥ ४३ ॥ कुत

वैहायसं खेचरत्वम् ॥ ३३–३६ ॥ भस्मरूक्षायां भस्मना रूक्षायाम् ॥ ३७–३९ ॥ भर्त्सितां युष्मत्कृतभर्त्सनादिमतीम् । नानुमंस्यति नानुमंस्यते न क्षमिष्यते, अतस्तत्कर्त्रीर्वो घातयेदिति भावः ॥ ४० ॥ तदलमिति । अभियाचाम, अभयमिति शेषः ॥ ४१ ॥ ४२ ॥ भर्त्सितामिति । याचध्वम्, अभयमिति शेषः ।

इत्यत आह–प्रणिपातप्रसन्ना हीति ॥ ४४ ॥ स्वप्नदर्शनकथनेन सीतायाः शोभनं भावीत्यभिधाय शरीरलक्षणप्रदर्शनेनापि शुभं भावीत्याह–अपि चेति । लक्षणं दुःखप्राप्तिहेतुभूतं रेखोपरेखादिकम् ॥ ४५ ॥ तर्हि कुतस्तादृशदुःखानुभव इत्यत्राह–छायेति । छायावैगुण्यमात्रम् उपलक्षय इत्यनुषज्यते । वैहायसं विमानम् । उपस्थितां प्राप्ताम्, दिव्यभोगार्हामिति यावत् । अन्वयस्तु छायावैगुण्यमात्रं तूपलक्षये अतः अदुःखार्हां दिव्यभोगार्हा

अपि चास्या विशालाक्ष्या न किञ्चिदुपलक्षये । विरूपमपि चाङ्गेषु सुसूक्ष्ममपि लक्षणम् ॥ ४५ ॥ छायावैगुण्यमात्रं तु शङ्के दुःखमुपस्थितम् । अदुःखार्हामिमां देवीं वैहायसमुपस्थिताम् ॥ ४६ ॥ अर्थसिद्धिं तु वैदेह्याः पश्याम्यहमुपस्थिताम् । राक्षसेन्द्रविनाशं च विजयं राघवस्य च ॥४७॥ निमित्तभूतमेतत्तु श्रोतुमस्या महत् प्रियम् ॥४८॥ दृश्यते च स्फुरच्चक्षुः पद्मपत्रमिवायतम् । ईषच्च हृषितो वाऽस्या दक्षिणाया ह्यदक्षिणः ॥ ४९ ॥ अकस्मादेव वैदेह्या बाहुरेकः प्रकम्पते । करेणुहस्तप्रतिमः सव्यश्चोरुरनुत्तमः । वेपमानः सूचयति राघवं पुरतः स्थितम् ॥ ५० ॥

मिमां दुःखम् उपस्थितमिति शङ्क इति । अत्र छायावैगुण्यं नाम कान्तिवैकल्यम् । "छाया त्वनातपे कान्तौ" इत्यमरः । यद्वा छायाऽत्रानातपः तद्वैगुण्यं तस्य विषमत्वम् । सर्वलक्षणलक्षिताया अपि छायावैगुण्यमेतावद्दुःखकरमासीदिति भावः ॥ ४६ ॥ ४७ ॥ इदानीं रामवार्ताश्रवणसूचकमाह–निमित्तभूतमिति ॥ ४८ ॥ चक्षुरिति । अदक्षिणमित्येतदत्राप्यनुषज्यते । हृषितो वा हृष्ट इव पुलकित इव । पद्मपत्रमित्यनेन रोगादिदृष्टहेत्वन्तर राहित्यमुक्तम् ॥ ४९ ॥ अकस्मात् दृष्टहेत्वन्तरं विना ॥ ५० ॥

अभययाचनकारणमाह–राघवादिति ॥ ४३ ॥ ४४ ॥ न केवलं स्वप्नदर्शनमेवास्याः शुभावेदकम् किन्तु प्रत्यक्षदर्शनमपि बह्वस्तीत्यासर्गसमाप्तेराह–अपिचेत्यादिना । अङ्गेषु विरूपं लक्षणं नोपलक्षय इति सम्बन्धः ॥ ४५ ॥ छायावैगुण्यं कान्तिवैकल्यम्, वैवर्ण्यमिति यावत् । तावन्मात्रमुपलक्षय इत्यनुकृष्यते, एतावतैव अदुःखार्हां दुःखानर्हाम् प्रत्युत वैहायसमुपस्थितां दिव्यभोगार्हाम् इमाम् इदं दुःखमुपस्थितं प्राप्तमिति शङ्के, मन्य इत्यर्थः । अर्थसिद्धिं प्रयोजनसिद्धिम् । कुत इत्यत आह–राक्षसेन्द्रेति । राक्षसेन्द्रविनाशराघवविजयरूपम् ॥ ४६ ॥ ४७ ॥ महत्प्रियं श्रोतुम् एतत्स्वप्नदर्शनम् अस्या निमित्तभूतमिति सम्बन्धः ॥ ४८ ॥ हृषितो वा हृषित इव ॥ ४९ ॥ ५० ॥

एवं देहनिमित्तमुक्त्वा शाकुनमप्याह—पक्षीति । पक्षी पिङ्गलिका । शाखानिलयः प्रहृष्टः । पुनः पुनश्चोत्तमसान्त्ववादी भूयो भूयो मधुरवादी । उत्तरोत्तरमुत्तमसान्त्वस्वरवादी वा । सुस्वागतां शोभनबन्ध्वागमनामिति यावत् । "बन्धुस्वस्वजनास्समाः" इत्यमरः । वाचं स्वरमुदीरयानः चोदयतीव रामागमनं कथयतीव । यद्वा पूर्वोक्तराघव एव कर्म । राघवमुपपादयतीवेत्यर्थः । आचार्यास्तु—पक्षावस्य स्त इति पक्षी गरुत्मान् । भूम्नि प्रशंसायां च मत्वर्थीयः । तदुक्तम्—"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः" इति । तथाच पक्षौ विस्तार्य

पक्षी च शाखानिलयः प्रहृष्टः पुनः पुनश्चोत्तमसान्त्ववादी । सुस्वागतां वाचमुदीरयानः पुनः पुनश्चोदयतीव हृष्टः ॥५१॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

प्रदक्षिणं सञ्चरन् । शाखानिलयः कुसुमितपल्लवितशाखायां दृढतरं स्थितः । आर्द्रतरतरुभाग एव शाखात्वव्यपदेशः । प्रदक्षिणभ्रमणम् आर्द्रशाखावरोहणं दृढतरावस्थानं च शुभशंसीत्यर्थः । प्रहृष्टः तत्र फलभोजनादिना सन्तुष्टः । पुनःपुनश्चोत्तमसान्त्ववादी उत्तरोत्तरं सान्त्ववचनं कुर्वन्निव स्थितः । मा शुचः सद्यः समागमिष्यति ते भर्ता नायमवसरश्शोकस्य इत्येवं सान्त्वयन्निव स्थितः । तदुपरि सुस्वागतां वाचमुदीरयानः । एतावन्मात्रं न भवति तस्य सन्तापातिरेक इति कथयन्निव स्थितः । विरहक्लिष्टायास्सुस्वागतवचनं हि नाम प्रतियोगिनः सन्तापातिशयकथनमेव । उक्तं हि—"तपति तनुगात्रि ! मदनस्त्वामनिशं मां पुनर्दहत्येव । ग्लपयति यथा शशाङ्कं न तथाहि कुमुद्वतीं दिवसः" इति । पुनः पुनश्चोदयतीव प्रियागमने निश्चिते मज्जनालङ्करणादिकं किमर्थं न करोषीत्येवं सीतां चोदयतीवेत्युत्प्रेक्षा । हृष्टः, नायिकागमनकालिकहर्षः स्वस्यैवेत्येतद्वैलक्षण्यं हृषिततनूरुहैस्सूचयन्निव स्थितः ॥ इदं हि रामायणमुत्तमं काव्यम् । तथाहि—काव्यं तावत्त्रिविधम्, उत्तमं मध्यममधमं चेति । यत्र वाच्यातिशायिव्यङ्ग्यं तदुत्तमम् । स एव ध्वनिरित्युच्यते । यत्र वाच्यानतिशायिव्यङ्ग्यं तन्मध्यमं काव्यम् । तदेव गुणीभूतव्यङ्ग्यमित्युच्यते । यत्र व्यङ्ग्यमेव नास्ति तदधमम् । तदेव चित्रमित्युच्यते । व्यङ्ग्यं च पदगतं वाक्यगतं प्रबन्धगतं चेति त्रिविधं भवति । एतत्काण्डरूपप्रबन्धेन अनादिभगवत्सम्बन्धयुतश्चेतनस्योज्जीवने प्रवृत्तस्याचार्यस्य प्रवृत्तिरभिव्यज्यते । उक्तश्चायमर्थः "ततो रावणनीतायाः" इति श्लोके । अत्र लङ्कापदेन शरीरं द्योतितम् । एकाक्षीप्रभृतय इन्द्रियाणि । रावणकुम्भकर्णावहङ्कारममकारौ । इन्द्रजित्प्रभृतयः कामक्रोधलोभमोहमदमात्सर्यदम्भादयः । तादृशलङ्कानिरुद्धसीतासदृशश्चेतनः । तस्य भगवज्ज्ञानोपदेष्ट्राचार्यतुल्यो पक्षीति । पक्षी शाखानिलयं शाखास्थनीडं प्रविष्टः । उत्तमसान्त्ववादी उत्तमशान्तस्वरवादी । सुस्वागतां सुष्ठु शोभनमागतमित्येवंरूपां वाचमुदीरयानः उच्चरन्

मारुतिः । तादृशाचार्यलक्षणमनेन श्लोकेन सूच्यते–पक्षी । पक्षिशब्देन गमनसाधनत्वात् ज्ञानकर्मणी उच्येते । तदुक्तम्–"उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः । तथैव ज्ञानकर्मभ्यां नियता परमा गतिः॥" इति । ज्ञानकर्मणोरङ्गाङ्गिभावेनात्र समुच्चयो विवक्षितः । "ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन " इति श्रुतेः । अनेनाचार्यशब्दनिर्वचनमुक्तम्, " आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि । स्वयमाचरते यस्मात्तस्मादाचार्य उच्यते ॥" इति । शाखाशब्देन वेदशाखा उच्यन्ते । निलयशब्देन तदेकपरत्वम् त्यागे प्रत्यवायश्रवणात् । तदुक्तं शिक्षायाम्–" अधीतमपि यो वेदं विमुञ्चति नराधमः । भ्रूणहा स तु विज्ञेयो वियोनिमभिगच्छति॥"इति । किंच निलय इत्यनेन तदर्थविषयकश्रवणमनननिदिध्यासनरूपतदनुष्ठानान्युच्यन्ते । अनेनाचार्यलक्षणमुक्तम् । तथाहुः–"आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः । मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्राश्रयश्शुचिः । गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषतः । एवं लक्षणसंपन्नो गुरुरित्यभिधीयते॥" इति । प्रहृष्टः सदा सन्तुष्टहृदयः । अनेन सर्वदा सेवनीयत्वमुक्तम् । तथोक्तम्–"आह्लादशीत नेत्राम्बुः पुलकीकृतगात्रवान् । सदा परगुणाविष्टो द्रष्टव्यस्सर्वदेहिभिः ॥" इति । पुनः पुनश्चोत्तमसान्त्ववादी । उत्तमः "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इत्युक्तः परमात्मा, तद्विषयं सान्त्वं शिष्येभ्यो वदतीत्युत्तमसान्त्ववादी । "त्वं मेऽहं मे कुतस्तत्तदपि कुत इदं वेदमूलप्रमाणादेतच्चानादि सिद्धादनुभवविभवात्तर्हि साक्रोश एव । क्वाक्रोशः कस्य गीतादिषु मम विदितः कोऽत्र साक्षी सुधीस्स्याद्धन्त त्वत्पक्षपाती स इति नृकलहे मृग्यमध्यस्थ वत्त्वम् ॥ "इत्युक्तरीत्या भगवति मनुष्याणां कलहे " यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदपि वादस्ते मा गङ्गां मा कुरून् गमः ॥" इति सान्त्ववादशील इत्यर्थः । पुनः पुनरित्यनेन कर्षकः कदाचिन्न फलितमित्येतावता यथा कृषिं न परित्यजति पुनः पुनस्तत्रैव प्रवर्तते तथा आचार्योऽपि कदाचित् स्ववचनाश्रवणेपि न निवर्तते इत्युक्तम् । अनेनाचार्यस्य भगवतोऽप्यातिशय उक्तः । स हि पार्थाय गीतामुपदिश्य पुनराश्वमेधिके तेन पूर्वोक्तमर्थं विस्मृत्य पुनः पृष्टे नाहं वक्ष्यामीत्युक्तवान् "नूनमश्रद्दधानोऽसि दुर्मेधाश्चासि पाण्डव" इत्यादिना । किंच सुस्वागतां वाचमुदीरयानः । सुष्ठु संप्रदायाविच्छेदो यथा तथाचार्यपरम्परया स्वस्मै आगतां वाचम् अष्टाक्षरादिमन्त्रराजरूपां निर्हेतुकयैव दयया समुदीरयन् । " आचार्याणामसावसावित्या भगवत्तः" इति गुरुपरम्पराया अनुसन्धेयत्वमनेन सूचितम् ; पुनःपुनश्चोदयतीव । उक्तार्थस्यानुष्ठानाय चोदनां दर्शयति । अन्यथा ह्युपदेशोऽप्यनर्थक एव स्यात् । अत एवाहुर्निगमान्ताचार्याः–"स्वालित्ये शासितारम् " इति । हृष्टः, एतेन शिष्यशिक्षणं स्वप्रयोजनमाचार्यस्येत्युक्तम् ॥ ५१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

पुनः पुनश्चोदयतीव, शोभनमागतं प्रत्युद्गच्छेति सीतां पुनः पुनः प्रेरयतीवेत्यर्थः ॥ ५१ ॥ इति श्रीमहे० श्रीरामा० सुन्दरकाण्डव्याख्यायां सप्तविंशः सर्गः ॥२७॥

सा राक्षसेन्द्रस्येत्यादि ॥ १ ॥ २ ॥ सत्यमिति। यत्र येन किंचिज्जीवामि कुत्सितं जीवामि ॥ ३॥४॥ ननु आत्महनने महान् दोषः स्यादित्याशङ्क्य आह–नैवेति। दोषं दोषः। आर्षं नपुंसकत्वम् । अत्र आत्महनने कथमदोष इत्याशङ्क्य रावणकृतान्मरणादात्मनैव मरणं श्रेय इत्याह वध्येति। अप्रियदर्शनस्य अस्य रावणस्य। दुर्मरणत्वाविशेषेपि दुष्टराक्षसेन मरणमतिकष्टमिति भावः। तर्हि तदनुप्रवेशेनात्मा रक्ष्यताम् "सर्वत आत्मानं

सा राक्षसेन्द्रस्य वचो निशम्य तद्रावणस्याप्रियमप्रियार्ता। सीता वितत्रास यथा वनान्ते सिंहाभिपन्ना गजराजकन्या ॥ १ ॥ सा राक्षसीमध्यगता च भीरुर्वाग्भिर्भृशं रावणतर्जिता च। कान्तारमध्ये विजने विसृष्टा बालेव कन्या विललाप सीता ॥ २ ॥ सत्यं बतेदं प्रवदन्ति लोके नाकालमृत्युर्भवतीति सन्तः। यत्राहमेवं परिभर्त्स्यमाना जीवामि किंचित्क्षणमप्यपुण्या ॥ ३ ॥ सुखाद्विहीनं बहुदुःखपूर्णमिदं तु नूनं हृदयं स्थिरं मे। विशीर्यते यन्न सहस्रधाऽद्य वज्राहतं शृङ्गमिवाचलस्य ॥ ४ ॥ नैवास्ति दोषं मम नूनमत्र वध्याऽहमस्याप्रियदर्शनस्य। भावं न चास्याहमनुप्रदातुमलं द्विजो मन्त्रमिवाद्विजाय ॥ ५ ॥ नूनं ममाङ्गान्यचिरादनार्यः शस्त्रैः शितैश्छेत्स्यति राक्षसेन्द्रः। तस्मिन्ननागच्छति लोकनाथे गर्भस्थजन्तोरिव शल्यकृन्तः ॥ ६ ॥

गोपायेत्" इति श्रुतेरित्याशङ्क्याह–भावमिति। अस्य अस्मिन् रावणे भावं हृदयम् अनुप्रदातुं नालं न शक्ता। रामस्वत्वादस्य, न ह्यन्यस्य स्वमन्योऽन्यस्मै दातुमर्हतीति भावः। अनर्हश्चायं भावोऽन्यप्रदानस्येत्यमुमर्थं दृष्टान्तमुखेनाह द्विज इति। मन्त्रं वेदम्। अद्विजाय शूद्राय ॥ ५ ॥ नून

॥ १ ॥ विसृष्टा बाला कन्येव महादुर्भिक्षक्षोभवशात् बालकन्यायाः परित्यागः ॥ २ ॥ यत्र यतः ॥ ३॥४ ॥ आत्महनने दोषः स्यादित्यत आह–नैवेति। अत्र आत्महनने। दोषं दोषः नास्ति। कुतः ? वध्याऽहमिति। आत्महननाभावेपि मम रावणकर्तृकदुर्मरणस्य दुर्वारत्वात् दोषाभावोक्तिरिति भावः। ननु दुर्मरणाभावाय रावणानुकूलत्वं प्राप्यतामत आह–भावमिति। भावं चित्तम्। मन्त्रं वेदम्। अद्विजाय शूद्राय ॥ ५ ॥ स्त्रीणां व्यभिचारान्मरणमेव वरम्, कुलाकीर्तिकरजनापवादादीनामभावादिति भावः। तथाप्यात्मघातदोषस्यातिदोषत्वात्साहसमयुक्तमित्याशङ्क्य सत्यम्, विचित्रवधाद्विभेमीत्याशयेनाह–नूनमिति। लोकनाथे रामे अनाग

स०–तद्वचः प्रातराशाय कुरुतेत्यादिरूपं वचः। अप्रियार्ता उत्तरत्र किं भविष्यतीति मात्यप्रियेणार्ता ॥ १ ॥ विसृष्टा मात्रादिभिर्निर्घृण्यादिना शकुन्तलादिवत्त्यक्ता ॥ २ ॥ यत्र अस्यां दुर्दशायाम्। अपुण्या शीघ्रमरणप्रापकपुण्यरहिता ॥ ३ ॥

मिति । अनागच्छति, मासद्वयादर्वागिति शेषः । गर्भस्थजन्तोः निरुद्धनिर्गमस्य गर्भस्थजन्तोः । शल्यकृन्तः नापितः ॥ ६ ॥ चिराय दुःखिताया मम द्वौ मासौ वधस्यावधिभूतौ अधिगमिष्यतः । इदं दुःखं बत । कस्य दुःखमिव ? राजापराधात् बद्धस्य तथा निशान्ते वध्यस्य तस्करस्येव दुःखम् । यथेति पाठे इवशब्दो वाक्यालङ्कारे ॥ ७ ॥ हा रामेति । मूढो वात्यारूपो वातो यस्यास्सा मूढवाता, वात्याहतेत्यर्थः । "मूढस्तन्द्रितवात्ययोः" इति

दुःखं बतेदं मम दुःखिताया मासौ चिराधिगमिष्यतो द्वौ । बद्धस्य वध्यस्य तथा निशान्ते राजापराधादिव तस्करस्य ॥ ७ ॥ हा राम हा लक्ष्मण हा सुमित्रे हा राममातः सह मे जनन्या । एषा विपद्याम्यहमल्पभाग्या महार्णवे नौरिव मूढवाता ॥ ८ ॥ तरस्विनौ धारयता मृगस्य सत्त्वेन रूपं मनुजेन्द्रपुत्रौ । नूनं विशस्तौ मम कारणात् तौ सिंहर्षभौ द्वाविव वैद्युतेन ॥ ९ ॥ नूनं स कालो मृगरूपधारी मामल्पभाग्यां लुलुभे तदानीम् । यत्रार्यपुत्रं विससर्ज मूढा रामानुजं लक्ष्मणपूर्वजं च ॥ १० ॥ हा राम सत्यव्रत दीर्घबाहो हा पूर्णचन्द्रप्रतिमानवक्त्र । हा जीवलोकस्य हितः प्रियश्च वध्यां न मां वेत्सि हि राक्षसानाम् ॥ ११ ॥ अनन्यदेवत्वमियं क्षमा च भूमौ च शय्या नियमश्च धर्मे । पतिव्रतात्वं विफलं ममेदं कृतं कृतघ्नेष्विव मानुषाणाम् ॥ १२ ॥

विश्वः ॥८॥ तरस्विनाविति । मृगस्य रूपं धारयता सत्त्वेन जन्तुना । मम कारणात् मन्निमित्तम् । विशस्तौ हिंसितौ । द्वौ सिंहर्षभाविव द्वौ सिंहाविव द्वौ वृषभाविवेत्यर्थः । वैद्युतेन अशनिना ॥ ९ ॥ लुलुभे प्रलोभयामास । यत्र यस्मिन् काले । विससर्जेति सृजेर्लिट्युत्तमपुरुषैकवचनम् । "रामानुजं लक्ष्मण पूर्वजं च" "परस्परस्य सदृशौ" इत्युक्तपरस्परसादृश्यात्, बाल्यात् प्रभृति सुस्निग्धतया च परस्परनिरूपकभूतौ ॥ १० ॥ ११ ॥ अनन्यदेवत्वमिति ।

च्छति सति, मासद्वयादर्वागिति शेषः । गर्भस्थजन्तोः, मृतस्येति शेषः । अङ्गानि शल्यकृन्तः नापित इव राक्षसेन्द्रः मम जीवन्त्या एवाङ्गानि छेत्स्यतीति सम्बन्धः ॥ ६ ॥ दुःखमिति । चिराय दुःखिताया मम इदमेव दुःखम्, यौ द्वौ मासाववधिभूतौ तावागमिष्यतः । राजापराधाद्बद्धस्य । निशान्ते प्रातःकाले वध्यस्य तस्करस्य यथा यादृक् दुःखं तादृङ्ममागतमित्यर्थः ॥७॥ मूढवाता मूढो वात्यारूपो वातो यस्यास्सा तथा ॥८॥ तरस्विनाविति । मृगस्य मायामृगस्य रूपं धारयता सत्त्वेन जन्तुना । वैद्युतेन विद्युदग्निना ॥ ९ ॥ मृगरूपधारी कालः कर्ता । लुलुभे लोभयामास । यत्र यस्मिन् काले । विससर्ज व्यसृजम् ॥१०॥११॥ अनन्यदेवत्वं

अनन्यदेवत्वम् आश्रयणीया देवताऽन्याऽस्ति सा रक्षिष्यतीति बुद्धिर्मे नास्ति । "नारायणमुपागमत्" इत्यत्राप्यप्राधान्येन सह पत्न्येति ह्युक्तम् । नारायणमाराधयतो रामस्य परिचारिकाऽस्मीत्यर्थः । इयं क्षमा च । रावणपरुषाक्षराणि राक्षसीनां तर्जनभर्त्सनादीनि राममधुरालापश्रवणकुतूहलेन ह्यहं क्षान्तवती । भूमौ च शय्या 'तवाङ्के समुपाविशम्' इत्येवंविधभोगः कदाचिदपि किन्न सेत्स्यतीत्याशया हि मया भूमौ शयनं क्रियते । नियमश्च

मोघो हि धर्मश्चरितो मयाऽयं तथैकपत्नीत्वमिदं निरर्थम् । या त्वां न पश्यामि कृशा विवर्णा हीना त्वया सङ्गमने निराशा ॥ १३ ॥ पितुर्निदेशं नियमेन कृत्वा वनान्निवृत्तश्चरितव्रतश्च । स्त्रीभिस्तु मन्ये विपुलेक्षणाभिस्त्वं रंस्यसे वीतभयः कृतार्थः ॥ १४ ॥ अहं तु राम त्वयि जातकामा चिरं विनाशाय निबद्धभावा । मोघं चरित्वाऽथ तपोव्रतं च त्यक्ष्यामि धिग् जीवितमल्पभाग्या ॥ १५॥ सा जीवितं क्षिप्रमहं त्यजेयं विषेण शस्त्रेण शितेन वापि । विषस्य दाता नहि मेऽस्ति कश्चिच्छस्त्रस्य वा वेश्मनि राक्षसस्य ॥ १६ ॥ इतीव देवी बहुधा विलप्य सर्वात्मना राममनुस्मरन्ती । प्रवेपमाना परिशुष्कवक्त्रा नगोत्तमं पुष्पितमाससाद ॥ १७ ॥

धर्मे रक्षकत्वधर्मोऽपि तस्मिन्नेवेति मनीषया हि मया स्थितम् । 'न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह तेजसा' इत्युक्तिरपि तं दृष्ट्वैव । पतिव्रतात्वम् "एतद्व्रतं मम" इत्युक्तं व्रतं विना मम किञ्चिद्व्रतं नास्तीत्यर्थः । पत्युर्व्रतमेव व्रतं यस्यास्सा पतिव्रता तस्या भावः पतिव्रतात्वम् । विफलं ममेदम् अमोघमपि मोघमासीत् । कस्मादिति चेत्तत्राह कृतं कृतघ्नेष्विव मानुषाणाम् । "आत्मानं मानुषं मन्ये" इत्युक्तरीत्या मानुषत्वं रामस्याप्यस्ति । अतस्तदितरमानुषाणां मध्ये कृतघ्नेषु कृतं कार्यमिव । अस्य किं मूलमिति चेत्? ममेदं तस्मिन्न काचिन्न्यूनता ममैव दुष्कृतमत्र हेतुः ॥ १२ ॥ १३ ॥ पितुर्निदेशम् आज्ञाम्, नियमेन अविच्छेदेन कृत्वा चरितव्रतः चरितवन्यवृत्तिव्रतः वनान्निवृत्तश्च सन् । स्त्रीभिस्तु मत्तोऽपि विलक्षणाभिः स्त्रीभिः त्वं रंस्यसे । वीतभयः गतवनवासभयः । कृतार्थः निष्पन्नसर्वपुरुषार्थः । मद्विनाशेन पुनर्बह्वीरूढ्वा रंस्यस इति भावः ॥ १४ ॥ अहं त्विति । त्वयि जातकामा अत एव त्वयि निबद्धभावा निबद्धहृदया । विनाशाय त्वयि निबद्धभावेति दुःखातिरेकोक्तिः । तपः अनशनम् । व्रतं नियमम् । अल्पभाग्या जन्मान्तरसुकृतरहिता । इदानीमनुष्ठितानां तपोव्रतादीनां जन्मान्तरफलदत्वेन मोघत्वोक्तिः । अत एवाल्पभाग्येत्युक्तम् ॥ १५ ॥ सा जीवितमिति । वेश्मनि पत्येकदेवतात्वम् । कृतमुपकृतम् ॥ १२–१७ ॥

राक्षसस्य । एवं सम्यङ्मरणकारी क्रूरस्यास्य गृहे कथं लभ्यत इति भावः ॥ १६ ॥ १७ ॥ शोकेति । वेण्युद्ग्रथनं वेणीबन्धनम् । यमस्य मूलं
यमस्य समीपम् । अत्रेतिकरणं बोध्यम् । इति विचिन्त्य नगोत्तमं शिंशुपामाससाद । शिंशुपां तामुपागमदिति पूर्वमुक्तम् । तस्य सामीप्येन गमनमत्रो
च्यते । पुष्पितं शुभसूचनम् । यद्वा पुष्पितमाससाद अग्निप्रवेशं कुर्वन्तीवेत्यर्थः ॥ १८ ॥ उपस्थितेत्यर्धमेकं वाक्यम् । नगस्य शाखां गृहीत्वा उप

शोकाभितप्ता बहुधा विचिन्त्य सीताऽथ वेण्युद्ग्रथनं गृहीत्वा । उद्बध्य वेण्युद्ग्रथनेन शीघ्रमहं गमिष्यामि यमस्य
मूलम् ॥ १८ ॥ उपस्थिता सा मृदुसर्वगात्रा शाखां गृहीत्वाऽथ नगस्य तस्य ॥ १९ ॥ तस्यास्तु रामं प्रविचिन्त
यन्त्या रामानुजं स्वं च कुलं शुभाङ्ग्याः । शोकानिमित्तानि तथा बहूनि धैर्यार्जितानि प्रवराणि लोके । प्रादु
र्निमित्तानि तदा बभूवुः पुरापि सिद्धान्युपलक्षितानि ॥ २० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये
श्रीमत्सुन्दरकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

स्थिता ॥ १९ ॥ तस्यास्त्विति । स्वं च कुलं विचिन्तयन्त्या इत्यनेन दुर्मरणात् भीतत्वं व्यज्यते । शोकानिमित्तानि शुभसूचकानीत्यर्थः । धैर्या
र्जितानि अर्जितधैर्याणि, धैर्यकराणीत्यर्थः । लोके प्रवराणि लोके प्रसिद्धानीत्यर्थः, प्रवरं हि प्रसिद्धं भवति । प्रादुर्बभूवुरित्यन्वयः । पुरापि सिद्धान्युप
लक्षितानि पूर्वमपि फलव्याप्तत्वेन दृष्टानि । तान्युत्तरसर्गे विवरिष्यति ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने
सुन्दरकाण्डव्याख्याने अष्टाविंशः सर्गः ॥ २८ ॥

शोकाभितप्तेत्यादि सार्धश्लोकमेकं वाक्यम् । शोकाभितप्ता सीता बहुधा विचिन्त्य वेण्युद्ग्रथनं वेणीं गृहीत्वा वेण्युद्ग्रथनेन उद्बध्य उद्बन्धनं कृत्वा यमस्य
मूलं गमिष्यामीति नगस्य शाखां गृहीत्वा उपस्थिता अवस्थितेति सम्बन्धः ॥ १८ ॥ १९ ॥ तस्या इति सार्धश्लोकमेकं वाक्यम् । शोकानिमित्तानि शुभसूचकानी
त्यर्थः । धैर्यार्जितानि धैर्यसम्पादकानीत्यर्थः । पुरापि सिद्धान्युपलक्षितानि पूर्वमपि लब्धसंवादत्वेन दृष्टानि ॥ २० ॥ इति श्रीमहेश्वरतीर्थविरचितायां
श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् अष्टाविंशः सर्गः ॥ २८ ॥

तथागतामित्यादि। तथागतां "रहस्यं च प्रकाशं च" इत्युक्तरीत्या सर्वं यथावत्साक्षात्कृतवतो मुनेरपि तथाशब्दप्रयोगादित्थमिति परिच्छिद्य वक्तुमशक्य दुःखाम्। तां धर्मिस्वरूपातिरिक्तयत्किंचिदतिशयरहिताम्। व्यथिताम्। "आशंसायां भूतवच्च" इति निष्ठा। तथा च पूर्वोक्तं सर्वं धर्मिस्वरूपमात्रम्। इतः परमेव व्यसनानि भविष्यन्तीति मन्यमानाम्। "समा द्वादश तत्राहं राघवस्य निवेशने। भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी॥" इत्युक्तं

तथागतां तां व्यथितामनिन्दितां व्यपेतहर्षां परिदीनमानसाम्। शुभां निमित्तानि शुभानि भेजिरे नरं श्रिया जुष्ट मिवोपजीविनः॥ १॥ तस्याः शुभं वाममरालपक्ष्मराजीवृतं कृष्णविशालशुक्लम्। प्रास्पन्दतैकं नयनं सुकेश्या मीनाहतं पद्ममिवाभिताम्रम्॥ २॥ भुजश्च चार्वञ्चितपीनवृत्तः परार्ध्यकालागरुचन्दनार्हः। अनुत्तमेनाध्युषितः प्रियेण चिरेण वामः समवेपताशु॥ ३॥

भोगजातं सर्वमकिंचित्करमासीत्, दुःखमेव निरूपकमासीत्। अनिन्दितां रामविरहे यथा स्थातव्यं तथा स्थिताम्। एवमनवस्थाने निन्दितैव भवति। व्यपेतहर्षां हर्षः पूर्वमस्यामुषित्वा गत इति न ज्ञातामित्यर्थः। व्यपाभ्यामुपसर्गाभ्यां तथा प्रतीयते। परिदीनमानसां हर्षे समागतेऽप्याश्रयरहिताम्। परीत्यनेन तथाऽवगम्यते। शुभां गुणाधिकविषयविरहकृतविकृतित्वेन तद्दशाया एव नीराजना कर्तव्येत्येवं स्थिताम्। निमित्तानि शुभानि भेजिरे। निमि त्तानि तद्विषये शुभानि सूचयित्वा स्वसत्तां लेभिरे। नरं श्रिया जुष्टमिवोपजीविनः। आर्थिनो हि लक्ष्मीकटाक्षवद्विषये किंचित्कृत्य स्वप्रयोजनं लभन्ते, इमानि तु साक्षाल्लक्ष्मीविषये किंचित्कृत्य निमित्तस्वामित्वं लेभिर इत्यर्थः॥ १॥ शुभनिमित्तान्येवाह–तस्या इत्यादिना। अरालं वक्रम्। कृष्ण विशालशुक्लं मध्ये कनीनिकायां कृष्णं सर्वतो विशालं शुभ्रं च। अभिताम्रम् अभितस्ताम्रम्, प्रान्तरक्तमित्यर्थः। "प्रान्तरक्ते च नेत्रे" इति पद्मिनी

तथेति। उपजीविनः सेवकाः त इव॥ १॥ अरालानां वक्राणां पक्ष्मणाम् अक्षिरोम्णाम् राज्या पङ्क्त्या वृतम्। "पक्ष्माक्षिलोम्नि किञ्जल्के" इत्यमरः। कृष्ण विशालशुक्लं मध्ये कृष्णं सर्वतो विशालं शुक्लं च। अभितस्ताम्रम् अभिताम्रम्, प्रान्तरक्तमित्यर्थः॥ २॥ ३॥

स०–जुष्टमिवोपसेविन इति। उपसेविनः योगविभागादावन्तादिनिः। उपरोधिनं शीलमेषामित्यर्थे "सुप्यजातौ" इति वा णिनिः॥ १॥

लक्षणात् ॥ २ ॥ ३ ॥ गजेन्द्रेति । तयोः सुलक्षणवत्तया प्रसिद्धयोः । ऊरुः वाम इत्यनुपज्यते । सुजातः सुन्दरः ॥ ४ ॥ शुभमिति । शिखराग्रदत्याः वृत्ताग्रदन्तयुक्तायाः । "शिखरं निस्तुलं वृत्तम्" इत्युत्पलमाला । "शिखरं दाडिमफलबीजम्" इत्यन्ये नैघण्टुकाः । यद्वा शिखराकाराग्रदन्तायाः "अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च" इति दन्तस्य दत्रादेशः । वासः वस्त्रम् । परिस्रंसत पर्यस्रंसत । अडभाव आर्षः । ऊरुकम्पादिति भावः । स्थितायाः

गजेन्द्रहस्तप्रतिमश्च पीनस्तयोर्द्वयोः संहतयोः सुजातः । प्रस्पन्दमानः पुनरूरुरस्या रामं पुरस्तात् स्थितमाचचक्षे ॥ ४ ॥ शुभं पुनर्हेमसमानवर्णमीषद्रजोध्वस्तमिवामलाक्ष्याः । वासः स्थितायाः शिखराग्रदत्याः किंचित् परिस्रंसत चारुगात्र्याः ॥ ५ ॥ एतैर्निमित्तैरपरैश्च शुभ्रूः संबोधिता प्रागपि साधु सिद्धैः । वातातपक्लान्तमिव प्रनष्टं वर्षेण बीजं प्रतिसंजहर्ष ॥ ६ ॥ तस्याः पुनर्बिम्बफलाधरोष्ठं स्वक्षिभ्रु केशान्तमरालपक्ष्म । वक्त्रं बभासे सितशुक्लदंष्ट्रं राहोर्मुखाच्चन्द्र इव प्रमुक्तः ॥ ७ ॥

तिष्ठन्त्या इति वस्त्रस्रंसनानुगुणावस्थोक्तिः । यद्वा वासस्स्रंसनं कान्तागमनसूचकमिति भावः । शिखरदन्तत्वे सामुद्रिकम्–"स्निग्धास्समानुरूपाः सुपङ्क्तयः शिखरिणः श्लक्ष्णाः । दन्ता भवन्ति यासां तासां पादे जगत्सर्वम् ॥" इति, "यासां शिखरिणो दन्ता दीर्घं जीवन्ति ताः स्त्रियः" इति च ॥ ५ ॥ अपरैः पूर्वोक्तशकुनैः । सम्बोधिता सद्यः कान्तागमवार्ता भविष्यतीति बोधिता । वातातपक्लान्तं सम्यग्वातातपसंशोषितम् । प्रनष्टं भूमावदर्शनं गतम् । यद्वा प्रनष्टं प्रकर्षेण कृशीभूतम् । बीजं वर्षेणेव प्रतिसंजहर्ष । बीजस्य प्रहर्षो नाम अङ्कुरादिभावेन स्थूलीभूय बहिर्निर्गमः ॥ ६ ॥ स्वक्षिभ्रु शोभनाक्षिभ्रूयुक्तम् । केशाः अन्ते यस्य तत् केशान्तम् । उपरिभागप्रकीर्णालकमित्यर्थः । सितशुक्लदंष्ट्रम् अत्यन्तशुक्लदन्तम् । एकार्थे शब्दद्वय प्रयोगोऽतिशयज्ञापनाय । यथा मुग्धमनोज्ञ इति । नीरन्ध्रत्वेन संसक्तशुक्लदंष्ट्रमिति वाऽर्थः । "षिञ् बन्धने" इत्यस्माद्धातोर्निष्ठा ॥ ७ ॥

द्वयोर्मध्ये ऊरुः वाम इत्यनुषज्यते ॥ ४ ॥ शिखराग्रदत्याः शिखराकाराग्रदन्तायाः । वासः परिस्रंसत पर्यस्रंसत ॥ ५ ॥ साधुसिद्धैः सम्यक् सम्बन्धिभिः । संवादिभिरिति पाठान्तरम् ॥ ६ ॥ सितशुक्लदंष्ट्रम् पङ्क्तिबद्धधवलदन्तमित्यर्थः ॥ ७ ॥

स०–संहतयोः मांसलत्वेन श्लिष्टयोः । तयोर्द्वयोर्मध्ये ऊरुः प्रस्पन्दमानः रामं पुरःस्थितमाचचक्षे । शकुनप्रस्तावाद्वाम इत्यनुक्तावप्येकवचनेनैक इति प्रतीयते । न च मानान्तरेण वाम एवेत्यवगमेयम् ॥ ४ ॥

सेति । व्यपनीततन्द्री निरस्तजाड्या । हर्षविवृद्धसत्त्वा हर्षविकसितचित्ता । शुक्ले शुक्लपक्षे ॥ ८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥ २९ ॥ हनुमानपीत्यादि । विश्रान्तः पराक्रमशाली । सीतायास्त्रिजटायाश्च सर्वं सर्वं

सा वीतशोका व्यपनीततन्द्री शान्तज्वरा हर्षविवृद्धसत्त्वा । अशोभतार्या वदनेन शुक्ले शीतांशुना रात्रिरिवोदितेन ॥ ८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

हनुमानपि विश्रान्तः सर्वं शुश्राव तत्त्वतः । सीतायास्त्रिजटायाश्च राक्षसीनां च तर्जनम् ॥ १ ॥ अवेक्षमाणस्तां देवीं देवतामिव नन्दने । ततो बहुविधां चिन्तां चिन्तयामास वानरः ॥ २ ॥ यां कपीनां सहस्राणि सुबहून्ययुतानि च । दिक्षु सर्वासु मार्गन्ते सेयमासादिता मया ॥ ३ ॥ चारेण तु सुयुक्तेन शत्रोः शक्तिमवेक्षता । गूढेन चरता तावदवेक्षितमिदं मया ॥ ४ ॥ राक्षसानां विशेषश्च पुरी चेयमवेक्षिता । राक्षसाधिपतेरस्य प्रभावो रावणस्य च ॥ ५ ॥ युक्तं तस्याप्रमेयस्य सर्वसत्त्वदयावतः । समाश्वासयितुं भार्यां पतिदर्शनकांक्षिणीम् ॥ ६ ॥

वृत्तान्तम् । तर्जनं तर्जनवचनम् ॥ १ ॥ अवेक्षमाण इति । चिन्तां चिन्तयामास चिन्तां चकार ॥ २ ॥ यामिति, सर्ववानराभिलषितोऽर्थो मयैकेन लब्ध इति विस्मितवान् ॥ ३ ॥ इदं वक्ष्यमाणम् । तावत् कार्त्स्न्येन ॥ ४ ॥ ५ ॥ समाश्वासयितुं युक्तं न्याय्यम् ॥ ६ ॥

व्यपनीततन्द्री निरस्तजाड्या । हर्षविवृद्धसत्त्वा हर्षेण विकसितचित्ता सा सीता वदनेन कर्त्रा अशोभत । शुक्ले शुक्लपक्षे ॥ ८ ॥ इति श्रीमदीश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् एकोनत्रिंशः सर्गः ॥ २९ ॥ हनुमानिति । विश्रान्तः विगतव्यापारः । सीतायास्त्रिजटायाश्च सर्वं, वृत्तान्तमिति शेषः ॥ १ ॥ चिन्तां चिन्तयामास चिन्तां चकारेत्यर्थः ॥ २ ॥ ३ ॥ चारेणेति । इदं वक्ष्यमाणम् ॥ ४ ॥ राक्षसानां विशेषस्तारतम्यमैश्वर्यादिकृतम् । अस्य रावणस्य प्रभावश्चावेक्षितः ॥ ५ ॥ युक्तं न्याय्यम् ॥ ६ ॥

स०—यथा तस्येति । सर्वसत्त्वदयावतः, सर्वे अरिहिंसाविषये सत्त्ववान् बलवांश्चासौ दयावांश्च तस्य । सर्वसत्त्ववान् सर्वदयावांस्तस्येति वा, सर्वप्राणिषु दयावांस्तस्येति वा । समाश्वासयितुं मया, युक्तमिति शेषः ॥ ६ ॥

अहमिति । आश्वासयामि " वर्तमानसामीप्ये वर्तमानवद्वा " इति लट् ॥ ७ ॥ ८ ॥ दोषवत्त्वमुपपादयति—गते हीति ॥ ९ ॥ समाश्वासयितुं न्याय्यः, सीतासन्देशकथनेनेति शेषः ॥ १०–१२ ॥ सीताऽब्रवीद्वच इत्यत्रेतिकरणं द्रष्टव्यम् ॥ १३ ॥ १४ ॥ भर्तारं सुग्रीवम् । व्यर्थम् अनाश्वास्य गमने

अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् । अदृष्टदुःखां दुःखार्तां दुःखस्यान्तमगच्छतीम् ॥ ७ ॥ यद्यप्यहमिमां देवीं शोकोपहतचेतनाम् । अनाश्वास्य गमिष्यामि दोषवद् गमनं भवेत् ॥ ८ ॥ गते हि मयि तत्रेयं राजपुत्री यशस्विनी । परित्राणमविन्दन्ती जानकी जीवितं त्यजेत् ॥९॥ मया च स महाबाहुः पूर्णचन्द्रनिभाननः । समाश्वासयितुं न्याय्यः सीतादर्शनलालसः ॥ १० ॥ निशाचरीणां प्रत्यक्षमनर्हं चापि भाषणम् । कथं नु खलु कर्तव्यमिदं कृच्छ्रगतो ह्यहम् ॥११॥ अनेन रात्रिशेषेण यदि नाश्वास्यते मया । सर्वथा नास्ति सन्देहः परित्यक्ष्यति जीवितम् ॥ १२ ॥ रामश्च यदि पृच्छेन्मां किं मां सीताऽब्रवीद्वचः । किमहं तं प्रतिब्रूयामसम्भाष्य सुमध्यमाम् ॥ १३ ॥ सीतासन्देशरहितं मामितस्त्वरया गतम् । निर्दहेदपि काकुत्स्थः क्रुद्धस्तीव्रेण चक्षुषा ॥१४॥ यदि चोद्योजयिष्यामि भर्तारं रामकारणात् । व्यर्थमागमनं तस्य ससैन्यस्य भविष्यति ॥ १५ ॥

तदागमनपर्यन्तं देव्याः प्राणानवस्थानादिति भावः ॥ १५ ॥

आश्वासयामि आश्वासयिष्यामि ॥ ७ ॥ दोषवत् कार्यहानिदोषवत् ॥ ८ ॥ ९ ॥ समाश्वासयितुं न्याय्यः, सीतासन्देशकथनेनेति शेषः ॥ १० ॥ सीतासमाश्वासनं च कष्टमित्याह—निशाचरीणामिति । तासां प्रत्यक्षं सीतया अभिभाषणमयुक्तम् अयोग्यम, अत इदं कार्यं कथं कर्तव्यमित्येवं कृच्छ्रगतोऽहमस्मि ॥ ११ ॥ कालविलम्बश्च आश्वासनस्यायुक्त इत्याह—अनेनेति ॥ १२ ॥ सीतामब्रवीदित्यत्रेतिकरणं द्रष्टव्यम् ॥ १३ ॥ १४ ॥ यदि चेति । भर्तारं सुग्रीवमुद्योजयिष्यामि उद्योगं

स०—आश्वासयामीति वर्तमानसामीप्याल्लृडर्थे लट् । अथवा क्रियाप्रबन्धे लडित्युक्तेर्धात्वर्थमात्रे लड्वन्योन्येऽर्थे लडर्थे भविष्यतीति लट उपपत्तेः । अन्तं पारम् । नाधिगच्छन्तीम् । यद्वा दुःखस्य कर्मणि षष्ठी । दुःखं नह्यन्तं यन्नन्तं क्षणे क्षणे दुःखं नूतनयन्तमिति यावत् । तं रावणं प्रकारं वा । अधिगच्छतीं प्राप्नुवन्तीम् । रामाश्वासनपरतया शेषेण चार्थापयतस्तीर्थस्योत्तरश्लोक इव इतरेषां तदुत्तरश्लोकः साधक इत्युभयव्याकरणे समूले इति ज्ञेयम् । अदृष्टदुःखां दुःखस्य नह्यन्तमधिगच्छतीम् इति पाठः ॥ ७ ॥

राक्षसीनाम् अन्तरम् अवकाशं विच्छेदं वा, राक्षस्यसान्निधानसमयमित्यर्थः ॥ १६ ॥ अहं त्विति । अतितनुः अतिसूक्ष्मतनुः । संस्कृतां प्रयोगसौष्ठवलक्षणसंस्कारयुक्ताम् ॥ १७ ॥ गीर्वाणभाषया व्यवहारे दोषमाह–यदीति ॥ १८ ॥ अथ मानुषभाषया व्यवहर्तव्यत्वं निश्चिनोति–अवश्यमिति ।

अन्तरं त्वहमासाद्य राक्षसीनामिह स्थितः । शनैराश्वासयिष्यामि सन्तापबहुलामिमाम् ॥ १६ ॥ अहं त्वतितनुश्चैव वानरश्च विशेषतः । वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् ॥ १७ ॥ यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् । रावणं मन्यमाना मां सीता भीता भविष्यति । वानरस्य विशेषेण कथं स्यादभिभाषणम् ॥ १८॥ अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत् । मया सान्त्वयितुं शक्या नान्यथेयमनिन्दिता ॥ १९ ॥ सेयमालोक्य मे रूपं जानकी भाषितं तथा । रक्षोभिस्त्रासिता पूर्वं भूयस्त्रासं गमिष्यति ॥ २० ॥ ततो जातपरित्रासा शब्दं कुर्यान्मनस्विनी । जानमाना विशालाक्षी रावणं कामरूपिणम् ॥ २१ ॥ सीतया च कृते शब्दे सहसा राक्षसीगणः । नानाप्रहरणो घोरः समेयादन्तकोपमः ॥ २२ ॥ ततो मां संपरिक्षिप्य सर्वतो विकृताननाः । वधे च ग्रहणे चैव कुर्युर्यत्नं यथाबलम् ॥ २३ ॥ गृह्य शाखाः प्रशाखाश्च स्कन्धांश्चोत्तमशाखिनाम् । दृष्ट्वा विपरिधावन्तं भवेयुर्भयशङ्किताः ॥ २४ ॥ मम रूपं च सम्प्रेक्ष्य वने विचरतो महत् । राक्षस्यो भयवित्रस्ता भवेयुर्विकृताननाः ॥ २५ ॥

अत्र वाक्यस्य मानुषत्वं कोसलदेशवर्तिमनुष्यसंबन्धित्वं विवक्षितम् । तादृग्वाक्यस्यैव देवीपरिचितत्वात् ॥ १९ ॥ एवं मानुषभाषया व्यवहर्तव्यत्वं निश्चित्य संप्रति तयापि भाषयाऽनेन वानररूपेण पुरः स्थित्वाऽभिभाषणे दोषोऽस्तीति विचारयति–सेयमिति ॥ २० ॥ जानमाना जानाना । मुमागम आर्षः ॥ २१–२३ ॥ प्रशाखाः उपशाखाः । विपरिधावन्तं, मामिति शेषः ॥ २४–२६ ॥

करिष्यामि । तस्य सुग्रीवस्यागमनं व्यर्थम्, तदागमनपर्यन्तं देव्याः प्राणानवस्थानादिति भावः ॥ १५ ॥ अन्तरमवकाशम् । तासामनवधानसमयमित्यर्थः ॥ १६ ॥ अतितनुः सूक्ष्मः । संस्कृतां गीर्वाणाम् ॥ १७ ॥ संस्कृतभाषया व्यवहारे दोषमाशङ्क्य मानुषभाषयैव व्यवहर्तव्यमिति निश्चिनोति–यदि वाचमित्यादिश्लोकद्वयेन ॥ १८ ॥ १९ ॥ मानुषभाषया संभाषणेऽपि दोषोऽस्तीति विचारयति–सेयमिति । रूपं वानररूपम्, भाषितं मनुष्यरूपेण भाषितं च ॥ २० ॥ जानमाना मन्वाना । शब्दम् आर्तरवं कुर्यात् ॥ २१–२३ ॥ प्रशाखा उपशाखाः ॥ २४–२६ ॥

उद्विग्नकारिणः उद्वेगकारिणः ॥ २७ ॥ तैः परितः संरुद्धः अत एव रक्षसां बलं विधमन् प्रहरन् अहं महोदधेः परं पारं प्राप्तुं न शक्नुयामित्यन्वयः ॥ २८ ॥ अगृहीतार्था अविदितरामसन्देशार्था ॥ २९ ॥ ३० ॥ उद्देश इति । उद्देशे प्रदेशे । नष्टमार्गे अदृष्टमार्गे । उक्तविशेषणे उद्देशे वसति

ततः कुर्युः समाह्वानं राक्षस्यो रक्षसामपि । राक्षसेन्द्रनियुक्तानां राक्षसेन्द्रनिवेशने ॥ २६ ॥ ते शूलशक्तिनिस्त्रिंश विविधायुधपाणयः । आपतेयुर्विमर्देऽस्मिन् वेगेनोद्विग्नकारिणः ॥ २७ ॥ संरुद्धस्तैस्तु परितो विधमन् रक्षसां बलम् । शक्नुयां न तु संप्राप्तुं परं पारं महोदधेः ॥ २८ ॥ मां वा गृह्णीयुराप्लुत्य बहवः शीघ्रकारिणः । स्यादियं चागृहीतार्था मम च ग्रहणं भवेत् ॥ २९ ॥ हिंसाभिरुचयो हिंस्युरिमां वा जनकात्मजाम् । विपन्नं स्यात्ततः कार्यं रामसुग्रीवयोरिदम् ॥ ३० ॥ उद्देशे नष्टमार्गेऽस्मिन् राक्षसैः परिवारिते । सागरेण परिक्षिप्ते गुप्ते वसति जानकी ॥ ३१ ॥ विशस्ते वा गृहीते वा रक्षोभिर्मयि संयुगे । नान्यं पश्यामि रामस्य साहाय्यं कार्यसाधने ॥ ३२ ॥ विमृशंश्च न पश्यामि यो हते मयि वानरः । शतयोजनविस्तीर्णं लङ्घयेत महोदधिम् ॥ ३३ ॥ कामं हन्तुं समर्थोऽस्मि सहस्राण्यपि रक्षसाम् । नतु शक्ष्यामि संप्राप्तुं परं पारं महोदधेः ॥ ३४ ॥ असत्यानि च युद्धानि संशयो मे न रोचते । कश्च निस्संशयं कार्यं कुर्यात् प्राज्ञः ससंशयम् ॥ ३५ ॥

इत्यन्वयः ॥ ३१ ॥ विशस्ते वेति । सहाय एव साहाय्यः तम् । कार्यसाधने सीतादर्शननिवेदनलक्षणकार्यसाधने ॥ ३२ ॥ विमृशन्निति । यो लङ्घयेत तं न पश्यामीत्यन्वयः ॥ ३३ ॥ ३४ ॥ असत्यानि अनिश्चितजयापजयानि । क्लेशस्तु भूयानिति भावः । ततो नैतन्मम मतमित्याह संशय

उद्विग्नकारिणः उद्वेगकारिणः ॥२७॥२८॥ मामिति । मां वा गृह्णीयुः मम ग्रहणं भवेद्यदि इयं च सीता अगृहीतार्था स्यात् अविदितरामवृत्तान्ता स्यादिति सम्बन्धः ॥ २९ ॥ ३० ॥ उद्देशे प्रदेशे । नष्टमार्गे अदृष्टमार्गे ॥ ३१ ॥ कार्यसाधने सीतादर्शननिवेदनरूपकार्यकरणे ॥ ३२ ॥३३॥ पारं प्राप्तुं न शक्ष्यामि, युद्धश्रान्तत्वादिति भावः ॥ ३४ ॥ असत्यानीति । अनिश्चितजयापजयानीत्यर्थः । संशयः संशयितोऽर्थः । संशयरूपकार्यकारी मूढ इत्याशयेनाह क इति । कः प्राज्ञः ससंशयं

इति । संशयः संशयितार्थः । स च सङ्ग्रामः । अथापि तथाकरणे स एव कार्यहन्ता बुद्धिहीनो निन्दाभाजनं चेत्याशयेनाह—कश्चेति । प्राज्ञः कः ससंशयं कार्यं निस्संशयं निर्विचारम् कुर्यात् ?॥ ३५ ॥ अनभिभाषणे रामसंदेशानिवेदने । एष दोषः पूर्वोक्तसीतासंत्रासाक्रोशतन्निमित्त राक्षसागमनादिः । सीताभिभाषणे वानररूपेण पुरः स्थित्वाऽभिभाषणे ॥३६॥ भूताश्चार्थाः निष्पन्नार्थाः। विक्लवम् अविवेकिनम् दूतमासाद्य देशकाल

प्राणत्यागश्च वैदेह्या भवेदनभिभाषणे । एष दोषो महान् हि स्यान्मम सीताभिभाषणे ॥ ३६ ॥ भूताश्चार्था विनश्यन्ति देशकालविरोधिताः । विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥३७॥ अर्थानर्थान्तरे बुद्धिर्निश्चिताऽपि न शोभते । घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥३८॥ न विनश्येत् कथं कार्यं वैक्लव्यं न कथं भवेत् । लङ्घनं च समुद्रस्य कथं नु न वृथा भवेत् ॥ ३९ ॥ कथं नु खलु वाक्यं मे शृणुयान्नोद्विजेत वा । इति संचिन्त्य हनुमांश्चकार मतिमान् मतिम् ॥ ४० ॥

विरोधिताः सन्तः सूर्योदये तमो यथा विनश्यति तथा विनश्यन्तीति सम्बन्धः ॥ ३७ ॥ अत्र विक्लवं दूतमासाद्येत्यनुषज्यते । अर्थानर्थान्तरे कार्याकार्य विषये । निश्चितापि स्वामिना सचिवैः सह निश्चितापि बुद्धिः विक्लवं दूतमासाद्य न शोभते, अकिंचित्करा भवतीत्यर्थः । एतदेवोपपादयति घात यन्तीति ॥ ३८ ॥ प्रागुक्ता दूतदोषाः स्वस्मिन्यथा न स्युस्तथा कर्तव्यमित्याह—न विनश्येदिति । कार्यं स्वामिकार्यम् । कथं केन प्रकारेण न विन श्येत् । वैक्लव्यं बुद्धिहीनता मम कथं न भवेत् । समुद्रलङ्घनं कथं न वृथा भवेत्, तथा कर्तव्यमिति शेषः ॥३९॥ कथमिति । अत्र सीतेत्यध्याहार्यम् ।

कार्यं निस्संशयः निर्विकारस्सन् कुर्यात् ?॥ ३५ ॥ प्राणेति । एष दोषः पूर्वोक्तजयापजययोः संशयरूपदोषः । अनभिभाषणे रामसन्देशानिवेदने ॥३६॥ भूताश्चार्थाः निष्पन्ना अप्यर्थाः । विक्लवम् अविवेकिनम् दूतमासाद्य देशकालविरोधितास्सन्तः विनश्यन्ते नश्यन्ति, अयुक्तदेशायुक्तकालप्रयुक्तत्वादिति भावः॥ ३७॥ अर्थानर्थान्तरे कार्याकार्यविषये निश्चितापि स्वामिना सचिवैः सह निश्चितापि बुद्धिः । तत्र विक्लवं दूतमासाद्येत्यनुषज्यते, न शोभते अकिञ्चित्करा भवतीत्यर्थः । एतदेवोप पादयति हीति ॥ ३८ ॥ प्रागुक्ता दूतदोषाः स्वस्मिन् यथा न स्युः तथा कर्तव्यमित्याह -नेति । कार्यं स्वामिकार्यम् । वैक्लव्यं बुद्धिहीनता मम कथं न भवेत्, समुद्रस्य लङ्घनं कथं तु वृथा न भवेत्, तथा कर्तव्यमिति शेषः ॥ ३९ ॥ कथमिति । शृणुयात्, सीतेति शेषः । मतिं चकार सीतासम्भाषणोपायं निश्चितवानित्यर्थः ॥४०॥

हनुमान् मे वाक्यं सीता कथं केन प्रकारेण शृणुयात्कथं नोद्विजेतेति विचार्य मतिमान् प्रशस्तमतिः। मतिं तत्कालोचितकर्तव्यविषयाम्। चकार निष्पादयामास ॥ ४० ॥ राममिति। स्वबन्धुं राममनुकीर्तयन् "लक्षणहेत्वोः—" इति हेत्वर्थे शतृप्रत्ययः। नैनामुद्वेजयिष्यामि एनां मद्रूपप्रदर्शनमन्तरेण रामस्य कीर्तनेनैवानुद्विग्नां करिष्यामीत्यर्थः। तद्बन्धुगतमानसां स चासौ बन्धुश्च तद्बन्धुः रामः तद्गतमानसाम् ॥ ४१–४३ ॥ इतीति। जगतिपतेः इति दीर्घाभाव आर्षः। जगादेति वक्ष्यमाणसर्गार्थसंग्रहः ॥४४॥ इति श्रीगोविन्द० श्रीरामा०शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रिंशः सर्गः ३०

रामभक्लिष्टकर्माणं स्वबन्धुमनुकीर्तयन्। नैनामुद्वेजयिष्यामि तद्बन्धुगतमानसाम् ॥ ४१ ॥ इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः। शुभानि धर्मयुक्तानि वचनानि समर्पयन् ॥ ४२ ॥ श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन् गिरम्। श्रद्धास्यति यथा हीयं तथा सर्वं समादधे॥४३॥ इति स बहुविधं महानुभावो जगतिपतेः प्रमदामवेक्षमाणः। मधुरमवितथं जगाद वाक्यं द्रुमविटपान्तरमास्थितो हनूमान् ॥४४॥ इत्यार्षे० श्रीमत्सुन्दरकाण्डे त्रिंशः सर्गः ॥३०

एवं बहुविधां चिन्तां चिन्तयित्वा महाकपिः। संश्रवे मधुरं वाक्यं वैदेह्या व्याजहार ह ॥ १ ॥

एवमित्यादि। चिन्तां चिन्तयित्वा चिन्तां कृत्वा, कर्तव्यमर्थं निश्चित्येत्यर्थः। संश्रवे सम्यक् श्रूयतेऽस्मिन्निति संश्रवः समीपम्, समीपे व्याजहार। यद्वा "पाठ्ये गेये च मधुरम्" इति संश्रवे श्रवणे मधुरं ज्ञानप्रसरणद्वारा इन्द्रियेभ्यो निस्सृत्य विषयान् गृहीत्वा तदनन्तरं हि रसो जायते लोके, अत्र न तथा यत्र शब्दसंसर्गो जायते तत्र रसो जायत इत्यतिशयोक्तिः। मधुरं ज्ञानमपि तद्द्वारा रसजनकं वाक्यं पूर्वापरनिरूपणं विना स्वयं रसजनकम्। वैदेह्याः वैदेही

तदेवाह—राममिति। स्वबन्धुं स्वस्या देव्याः बन्धुम्। अनुकीर्तयन्। हेतौ शतृप्रत्ययः। अनुकीर्तनाद्धेतोः। नैनामुद्वेजयिष्यामि मद्रूपदर्शनमन्तरेण रामसङ्कीर्तनेनैव अनुद्विग्नां करिष्यामीत्यर्थः। स चासौ बन्धुश्च तद्बन्धुः रामः तं गतं मानसं यस्यास्सा ताम् ॥ ४१–४३ ॥ जगतिपतेः। दीर्घाभाव आर्षः। जगाद मनसा ॥४४॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां त्रिंशः सर्गः ॥ ३० ॥ एवमिति। चिन्तां चिन्तयित्वा, कर्तव्यमर्थं

स०—सुबन्धुमनुकीर्तयन्निति पाठः। सुबन्धुं कदाप्यवियोगिबान्धवम्। तद्बन्धुः सः तद्रूपी बन्धुः रामः। तद्गतचेतनां तस्य रामस्य बन्धुरासः कोवाऽऽगच्छेदिति तद्गतमानसां वा ॥ ४१ ॥ जगतिपतेः भूपतेः। "ङ्यापोः संज्ञाछन्दसोः" इति संज्ञात्वात् "जाह्नविवर्यकन्ययोः" इत्यादिवद्ध्रस्वः। अजगतिपतेरिति वा छेदः। अजस्य चतुर्मुखस्य गतिः उदरतो निस्सरणं सद्गतिर्वा यया सा अजगतिः रमा तस्याः पतिस्तस्येति वा॥४४

निमित्तम् । कुलानुरोधेन देहे निस्स्पृहायाः देहमपि दत्त्वा रसावहत्वमुच्यते ॥ १ ॥ राजेत्यादि । वितरणविक्रमादिजनितत्वेन कीर्तियशसोर्भेदोऽव गन्तव्यः ॥ २–४ ॥ पार्थिवव्यञ्जनैः राजलक्षणैः ॥ ५–७ ॥ तस्य पितुर्वचनाद्वनं प्रव्राजितः गतः । स्वार्थे णिच् ॥८॥ मृगयां परिधावता मृगयामुद्दिश्य

राजा दशरथो नाम रथकुञ्जरवाजिमान् । पुण्यशीलो महाकीर्तिरृजुरासीन्महायशाः ॥२॥ राजर्षीणां गुणश्रेष्ठस्तपसा चर्षिभिः समः । चक्रवर्तिकुले जातः पुरन्दरसमो बले ॥३॥ अहिंसारतिरक्षुद्रो घृणी सत्यपराक्रमः । मुख्यश्चेक्ष्वाकु वंशस्य लक्ष्मीवाँल्लक्ष्मिवर्धनः ॥४॥ पार्थिवव्यञ्जनैर्युक्तः पृथुश्रीः पार्थिवर्षभः । पृथिव्यां चतुरन्तायां विश्रुतः सुखदः सुखी ॥ ५ ॥ तस्य पुत्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः । रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मताम् ॥ ६ ॥ रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता । रक्षिता जीवलोकस्य धर्मस्य च परन्तपः ॥ ७ ॥ तस्य सत्याभिसन्धस्य वृद्धस्य वचनात् पितुः । सभार्यः सह च भ्रात्रा वीरः प्रव्राजितो वनम् ॥ ८ ॥ तेन तत्र महारण्ये मृगयां परिधावता । राक्षसा निहताः शूरा बहवः कामरूपिणः ॥ ९ ॥ जनस्थानवधं श्रुत्वा हतौ च खरदूषणौ । ततस्त्व मर्षापहृता जानकी रावणेन तु । वञ्चयित्वा वने रामं मृगरूपेण मायया ॥ १० ॥ स मार्गमाणस्तां देवीं रामः सीतामनिन्दिताम् । आससाद वने मित्रं सुग्रीवं नाम वानरम् ॥ ११ ॥ ततः स वालिनं हत्वा रामः परपुरञ्जयः । प्रायच्छत् कपिराज्यं तत् सुग्रीवाय महाबलः ॥ १२ ॥ सुग्रीवेणापि सन्दिष्टा हरयः कामरूपिणः । दिक्षु सर्वासु तां देवीं विचिन्वन्ति सहस्रशः ॥ १३ ॥ अहं संपातिवचनाच्छतयोजनमायतम् । अस्या हेतोर्विशालाक्ष्याः सागरं वेगवान् प्लुतः १४

परिधावता । अनेन लीलया खरादिवधः सूच्यते ॥ ९ ॥ जनस्थानवधं जनस्थानरक्षोवधम् । अमर्षेणापहृता अमर्षापहृता । मृगरूपेण मृगसौन्दर्येण प्रशस्तमृगेण वा । " प्रशंसायां रूपप् " ॥ १०–१४ ॥

निश्चित्येत्यर्थः । संश्रवे संश्रवणे मधुरम् । वैदेह्याः वैदेहीनिमित्तम् । यद्वा सम्यक् श्रूयते अस्मिन्निति संश्रवः तस्मिन् समीपदेशे, यत्रोक्तं सीतैव शृणुयान्नान्येत्यर्थः ॥१–४॥ पार्थिवेति । पार्थिवव्यञ्जनैः पार्थिवलक्षणैः ॥५–७॥ तस्येति । सत्याभिसन्धस्य सत्यसङ्कल्पस्य ॥ ८ ॥ ९ ॥ मृगरूपेण प्रशस्तमृगरूपेण ॥ १०–१४ ॥

यथारूपां यादृशशरीराम् । यथावर्णां यादृशरूपाम् । यथालक्ष्मीं यादृशकान्तिम् । राघवस्य राघवात् ॥ १५ ॥ १६ ॥ तत इति । सुकेशी नीलसूक्ष्मकेशी, वक्रिम्णः पूर्वमुक्तत्वात् ॥ १७ ॥ १८ ॥ सेति । पार्श्वम् आकाशं भूमिं चावेक्षमाणा । अधस्तादित्यनेन यथा भूमिं भित्त्वा कश्चिन्नरः रामनामानि कीर्तयेत्तथाऽन्यत्रापीत्यपिना संभावनोच्यते । शिंशुपावृक्षस्याधस्तात्तिर्यगूर्ध्वमिति वा। तमचिन्त्यबुद्धिं ददर्श । तद्वपुरवलोकनात्पूर्वं तस्य

यथारूपां यथावर्णां यथालक्ष्मीं च निश्चिताम् । अश्रौषं राघवस्याहं सेयमासादिता मया ॥ १५ ॥ विरराम्मैव मुक्त्वाऽसौ वाचं वानरपुङ्गवः । जानकी चापि तच्छ्रुत्वा विस्मयं परमं गता ॥ १६ ॥ ततः सा वक्रकेशान्ता सुकेशी केशसंवृतम् । उन्नम्य वदनं भीरुः शिंशुपावृक्षमैक्षत ॥ १७ ॥ निशम्य सीता वचनं कपेश्च दिशश्च सर्वाः प्रदिशश्च वीक्ष्य । स्वयं प्रहर्षं परमं जगाम सर्वात्मना राममनुस्मरन्ती ॥ १८ ॥ सा तिर्यगूर्ध्वं च तथाप्यधस्तान्निरीक्षमाणा तमचिन्त्यबुद्धिम् । ददर्श पिङ्गाधिपतेरमात्यं वातात्मजं सूर्यमिवोदयस्थम् ॥ १९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

हृदयमेवं परिच्छिनत्ति स्म । इह लङ्कायां प्रविश्यावरोधाराममध्यप्रवेशेनायं निपुणतरमतिरिति निश्चितवतीत्यर्थः । पिङ्गाधिपतेरमात्यं स्वरविशेषेणायं वानरः, तत्रापि न स्वतन्त्रः, किन्तु स्वसजातीयस्य राज्ञः कस्यचिदमात्योऽयम्, तद्राज्यकार्यमेतद्धस्तगतमिति निश्चितवती। वातात्मजं रामप्राणहेतुभूतमत्प्राणनहेतुत्वेन सर्वप्राणिप्राणनहेतुत्वेन वायुपुत्रोऽयमित्यवगतवती । सूर्यमिवोदयस्थं रामदिवाकरस्योदयसूचकमुदयगिरिस्थमरुणमिव स्थितम् । सूरः सूर्यः । "सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः" इत्यमरः । "सूरसूतोऽरुणोऽनूरुः" इत्युक्तेस्सूरस्य सम्बन्धी सूर्यः । दिगादित्वाद्यत् । भवतापि सम्बन्धः विशेष एव । यद्वा सूर्यशब्देन तत्संबन्ध्यरुणो लक्ष्यते । " सूर्योऽरुणे च सूर्ये च " इति निघण्टुरस्तीत्याहुः । औचित्यादत्र सूर्योऽरुणः ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥

यथेति । यथारूपां यादृग्रूपाम् । यथावर्णां यादृशवर्णाम् । यथालक्ष्मीं यादृशलक्ष्मीकाम् । राघवस्य राघवात् । अश्रौषं विनिश्चितं नूनम् सेयमासादितेत्यर्थः ॥ १५-१९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् एकत्रिंशः सर्गः ॥ ३१ ॥

ततः शाखान्तरे लीनमित्यादि श्लोकद्वयमेकान्वयम् । दृष्ट्वा पूर्वं सामान्यतो दृष्ट्वा भयाच्चलितमानसा सती विशेषतो ददर्श । वेष्टितार्जुनवस्त्रं वेष्टित धवलवस्त्रम् । तं पूर्वोक्तम् ॥ १--४ ॥ रुरोदेत्यर्द्धम् । मन्दं राक्षस्यः श्रुत्वा किमिदमिति विचारयिष्यन्तीति भयेनेति भावः ॥ ५ ॥ ६ ॥ सेति ।



ततः शाखान्तरे लीनं दृष्ट्वा चलितमानसा । वेष्टितार्जुनवस्त्रं तं विद्युत्सङ्घातपिङ्गलम् ॥ १ ॥ सा ददर्श कपिं तत्र प्रश्रितं प्रियवादिनम् । फुल्लाशोकोत्कराभासं तप्तचामीकरेक्षणम् ॥२॥ [साथ दृष्ट्वा हरिश्रेष्ठं विनीतवदवस्थितम् । ] मैथिली चिन्तयामास विस्मयं परमं गता । अहो भीममिदं रूपं वानरस्य दुरासदम् । दुर्निरीक्ष्यमिति ज्ञात्वा पुनरेव मुमोह सा ॥ ३ ॥ विललाप भृशं सीता करुणं भयमोहिता । रामरामेति दुःखार्ता लक्ष्मणेति च भामिनी ॥४॥ रुरोद बहुधा सीता मन्दं मन्दस्वरा सती ॥ ५ ॥ सा तं दृष्ट्वा हरिश्रेष्ठं विनीतवदुपस्थितम् । मैथिली चिन्तयामास स्वप्नोऽयमिति भामिनी ॥ ६ ॥ सा वीक्षमाणा पृथुभुग्नवक्त्रं शाखामृगेन्द्रस्य यथोक्तकारम् । ददर्श पिङ्गाधिपतेरमात्यं वातात्मजं बुद्धिमतां वरिष्ठम् ॥ ७ ॥ सा तं समीक्ष्यैव भृशं विसंज्ञा गतासुकल्पेव बभूव सीता । चिरेण संज्ञां प्रतिलभ्य भूयो विचिन्तयामास विशालनेत्रा ॥ ८ ॥

वीक्षमाणा विचारयन्ती । ददर्श पुनरनुकूलोऽयं स्यादिति ददर्शेत्यर्थः । भुग्नवक्त्रं वक्रमुखम् । यथोक्तकारम् आज्ञाकरम् ॥ ७ ॥ सा तमिति । विसंज्ञा मूर्च्छिता । गतासुकल्पा मृतप्राया । इवशब्दो वाक्यालङ्कारे । चिरेण संज्ञां प्रतिलभ्य कालेनैव प्रबोधकेन प्रबुद्धवतीत्यर्थः । विकृतवानरवेषदर्शनेन

तत इति । चलितमानसा, अभूदिति शेषः । वेष्टितार्जुनवस्त्रं संवेष्टितधवलवस्त्रस्वरूपम् । यद्वा वेष्टितम् अर्जुनं धवलं वस्त्रं यस्य सः वेष्टितार्जुनवस्त्रः तम् ॥ १ ॥ ददर्श विशेषतो ददर्शेत्यर्थः ॥२–६॥ वीक्षमाणा इदं वाक्यं राक्षस्यः श्रुतवत्यः किमिति शङ्कया परितो वीक्षमाणेत्यर्थः । शाखामृगेन्द्रस्य सुग्रीवस्य यथोक्तकारम्

[ स०–विनीतवत् स्वार्थे वतिः । विनीताः सन्त्यस्येति विनीतवान् । स चासाववस्थितश्च तं वा । अथवा विनीतं विनीतिः तद्वांश्चासाववस्थितश्च तम् । यद्वा विनीतं विशिष्टनीतं वदतीति स विनीतवद: विनीतवाग्मी । स चासौ वस्थितश्च तम ॥ ] ति०–यथोक्तकारं कामाज्ञाकरम् । यद्वा यथोक्तवेष्टितार्जुनवस्त्राद्याकारम् । छान्दसो ह्रस्वः ॥ स०–यथोक्तकारं वेष्टितार्जुनवस्त्राकारं वा । उपसर्गाणां च धातुलीनार्थबोधकत्वेनाङ्किकलोपिकारशब्द एवाकारवाची ॥ ७ ॥

मूर्च्छिता पुनः कालेन गतुद्वेत्यर्थः ॥ ८ ॥ स्वप्न इति । स्वप्ने स्वप्नस्थाने । स्वप्ने वानरदर्शनं बन्धुविनाशकरमिति भावः ॥ ९ ॥ एवं दर्शनस्य स्वप्नत्वं संभाव्य पुनर्याथार्थ्यमाह–स्वप्नोऽपीति । स्वप्नाभावे हेतुमाह नहि मेऽस्ति निद्रेति । निद्राभावे हेतुः शोकेनेत्यादिः । एवं प्रतिबन्धकेन निद्राभावमुक्त्वा सुखरूपहेत्वभावाच्च न निद्रेत्याह–सुखं हीति । इन्दुपूर्णप्रतिमाननेन पूर्णेन्दुप्रतिमाननेन ॥ १० ॥ रामेति । सदैव बुद्ध्या विचिन्त्य

स्वप्ने मयाऽयं विकृतोऽद्य दृष्टः शाखामृगः शास्त्रगणैर्निषिद्धः। स्वस्त्यस्तु रामाय सलक्ष्मणाय तथा पितुर्मे जनकस्य राज्ञः ॥ ९ ॥ स्वप्नोऽपि नायं नहि मेऽस्ति निद्रा शोकेन दुःखेन च पीडितायाः । सुखं हि मे नास्ति यतोऽस्मि हीना तेनेन्दुपूर्णप्रतिमाननेन ॥ १० ॥ रामेति रामेति सदैव बुद्ध्या विचिन्त्य वाचा ब्रुवती तमेव । तस्यानुरूपां च कथां तमर्थमेवं प्रपश्यामि तथा शृणोमि ॥ ११ ॥ अहं हि तस्याद्य मनोभवेन संपीडिता तद्गतसर्वभावा । विचिन्तयन्ती सततं तमेव तथैव पश्यामि तथा शृणोमि ॥ १२ ॥ मनोरथः स्यादिति चिन्तयामि तथापि बुद्ध्या च वितर्कयामि । किं कारणं तस्य हि नास्ति रूपं सुव्यक्तरूपश्च वदत्ययं माम् ॥ १३ ॥

तमेव राममेव वाचा ब्रुवती । तस्यानुरूपां विचिन्तितस्याभिवदनस्यानुरूपां कथां तथा शृणोमि । तमर्थं कथार्थमेवं प्रपश्यामि । एवम् उक्तप्रकारेण जानामीत्यन्वयः । तदर्थामिति पाठे अयमर्थः । तस्यानुरूपां रामकीर्तनस्यानुरूपाम् । तदर्थां स रामोऽर्थोऽभिधेयो यस्याः ताम् ॥११॥ उक्तमर्थं विवृणोति–अहं हीति ॥ १२ ॥ प्रथमम् इदं रामनामकथयितृदर्शनं मनोरथः अभिलाषमात्रमिति चिन्तयामि । तथापि तथा चिन्तायां सत्यामपि बुद्ध्या वितर्कयामि । मनोरथो न भवतीति विचारयामि । किं कारणमिति चेत् तस्य मनोरथस्य रूपं नास्ति । अयं वानरस्तु सुव्यक्तरूपश्च मां वदति च । तस्मान्मनोरथो न भवेदेवेत्यर्थः ॥ १३ ॥



आज्ञाकरम् ॥ ७–९ ॥ इन्दुपूर्णप्रतिमाननेन पूर्णेन्दुप्रतिमाननेन ॥ १० ॥ रामेति रामेति सदैव बुद्ध्या विचिन्त्य तमेव राममेव वाचा ब्रुवती तस्यानुरूपां चिन्तनस्य अभिवदनस्य च अनुरूपां कथां तथा शृणोमि तमर्थं कथार्थम् एवं प्रपश्यामि एतदुक्तप्रकारेणैव जानामीति योजना ॥ ११ ॥ १२ ॥ उक्तमर्थं विवृणोति– मनोरथः स्यादिति । बुद्ध्या चिन्तयामि तथा वितर्कयामि मनोरथो न भवतीति विचारयामि । किं कारणमिति चेत् तस्य मनोरथस्य रूपं रूप्यते प्राप्यतेऽनेनेति

अनेनोक्तं सत्यमस्त्विति देवताः प्रार्थयते—नम इति । हुताशनाय च अग्नये च ॥ १४ ॥ रामानु०—नमोऽस्त्विति । हुताशनाय चेति सम्यक् । अन्यथा वृत्तभङ्गः स्यात् ॥ १४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥ ३२ ॥

नमोऽस्तु वाचस्पतये सवज्रिणे स्वयम्भुवे चैव हुताशनाय च । अनेन चोक्तं यदिदं ममाग्रतो वनौकसा तच्च तथाऽस्तु नान्यथा ॥१४॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे द्वात्रिंशः सर्गः ॥३२॥

सोऽवतीर्य द्रुमात्तस्माद्विद्रुमप्रतिमाननः । विनीतवेषः कृपणः प्रणिपत्योपसृत्य च ॥ १ ॥ तामब्रवीन्महातेजा हनूमान् मारुतात्मजः। शिरस्यञ्जलिमाधाय सीतां मधुरया गिरा ॥ २ ॥ कानु पद्मपलाशाक्षि क्लिष्टकौशेयवासिनि । द्रुमस्य शाखामालम्ब्य तिष्ठसि त्वमनिन्दिते ॥ ३ ॥ किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम् । पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम् ॥ ४ ॥ सुराणामसुराणां वा नागगन्धर्वरक्षसाम् । यक्षाणां किन्नराणां वा का त्वं भवसि शोभने ॥ ५ ॥ का त्वं भवसि रुद्राणां मरुतां वा वरानने । वसूनां वा वरारोहे देवता प्रतिभासि मे ॥६॥

सोऽवतीर्येत्यादि । सः राक्षसीषु सुप्तासु लब्धावसर इत्यर्थः । कृपणः सीतादौस्थ्यदर्शनेन दीनः । जानन्नपि वैदेहीत्येव वाचयितुमब्रवीत् ॥ १–३ ॥ किमर्थमिति । तव नेत्राभ्याम् आनन्दाश्रुयोगार्हाभ्याम् । किमर्थं कस्य कुलच्छेदाय । यद्वा किमर्थं किं चेतसि कृत्वा। पुण्डरीकेत्यादि । हन्तैतत्सौन्दर्यं प्रणयिना रामेण दृष्टमासीदिति भावः ॥ ४ ॥ सुराणामित्यादिषु निर्धारणे षष्ठी । का त्वं कस्य सम्बन्धिनीत्यर्थः ॥ ५–७ ॥ रामानु०–विप्रकीर्णमिवो

रूपं प्रापकं नास्ति हि । कुतः ? अयं वानरः सुव्यक्तरूपश्च मां वदति च, तस्मान्मनोरथो न भवत्येवेत्यर्थः ॥ १३ ॥ १४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां द्वात्रिंशः सर्गः ॥ ३२॥ स इति । कृपणः दीनः, सीतादैन्यात् स्वयं कृपण इत्यर्थः । अत्र राक्षसीनां निद्राजाड्यात्, त्रिजटास्वप्नश्रवणजन्यभयानन्तरमात्मत्राणाय सीतैकशरणत्वेनापेक्षणाच्च सीताहनुमतोरयमप्रत्यूहसंलाप इत्यनुसन्धेयम् । अस्यार्थस्य अष्टपञ्चाशसर्गेऽङ्गदाग्रे हनुमतैव 'ततस्तास्सहितास्सर्वाः' इत्यादिना वक्ष्यमाणत्वादिति ॥ १ ॥ २ ॥ अथ लिङ्गैरेव सीतेति निश्चित्यापि तथैव वाचयितुमजानन्निव पृच्छति–कान्विति । इयं त्वं काऽसि ॥ ३ ॥ ४ ॥ सुराणां यक्षाणां किन्नराणां का त्वं भवसि, कस्य सम्बन्धिनी भवसीत्यर्थः ॥ ५-७ ॥

दकमित्यन्तः परं सुगमाणि। तश्लोकः । अनमु रि प्रमादलिखितः ॥ ६ ॥ का त्वमिति । हे कल्याणि ! त्वं का । अनिन्दितलोचने ! त्वं का भवसीति योजना ॥ ८ ॥ वसिष्ठं कोपयित्वेत्यत्रापि पतिता विबुधालयादित्यनुषज्यते । नासीत्यत्र काकुरनुसन्धेया ॥ ९ ॥ कोन्विति । अमुं लोकं गतम्, यमिति शेषः । परलोकं गतं यं पुत्रं पितरं भ्रातरं भर्तारं वा अनुशोचसि स क इत्यर्थः । गता त्वमित्यपि पाठः। अस्मात् स्वर्गादमुं मनुष्यलोकम् गता या त्वमनुशोचसि । तस्यास्ते

किन्नु चन्द्रमसा हीना पतिता विबुधालयात् । रोहिणी ज्योतिषां श्रेष्ठा श्रेष्ठसर्वगुणान्विता ॥ ७ ॥ का त्वं भवसि कल्याणि त्वमनिन्दितलोचने ॥ ८ ॥ कोपाद्वा यदि वा मोहाद्भर्तारमसितेक्षणे । वसिष्ठं कोपयित्वा त्वं नासि कल्याण्यरुन्धती ॥ ९ ॥ को नु पुत्रः पिता भ्राता भर्ता वा ते सुमध्यमे । अस्माल्लोकादमुं लोकं गतं त्वमनुशोचसि ॥ १० ॥ रोदनादतिनिःश्वासाद्भूमिसंस्पर्शनादपि । न त्वां देवीमहं मन्ये राज्ञः संज्ञावधारणात् ॥ ११ ॥ व्यञ्जनानि च ते यानि लक्षणानि च लक्षये । महिषी भूमिपालस्य राजकन्याऽसि मे मता ॥ १२ ॥ रावणेन जनस्थानाद् बलादपहृता यदि । सीता त्वमसि भद्रं ते तन्ममाचक्ष्व पृच्छतः ॥ १३ ॥ यथा हि तव वै दैन्यं रूपं चाप्यतिमानुषम् । तपसा चान्वितो वेषस्त्वं राममहिषी ध्रुवम् ॥ १४ ॥ सा तस्य वचनं श्रुत्वा रामकीर्तनहर्षिता । उवाच वाक्यं वैदेही हनुमन्तं द्रुमाश्रितम् ॥ १५ ॥

को वा पुत्रादिरिति योजना ॥ १० ॥ देवीं देवस्त्रियम् । संज्ञावधारणात् संज्ञायते अनयेति संज्ञा लक्षणम् । राजलक्षणनिश्चयादित्यर्थः ॥ ११ ॥ व्यञ्जनानि स्तनजघनादीनि । "व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽपि च" इति विश्वः । लक्षणानि शुभावर्तरेखादिसामुद्रिकलक्षणानि ॥ १२ ॥ १३ ॥ यथा यादृशम् ॥ १४ ॥ द्रुमाश्रितं द्रुममूलाश्रितम् । सोऽवतीर्येति द्रुमावतरणस्य पूर्वमुक्तत्वात् । यद्वा पूर्वमग्रादवतरणमुक्तमिति ज्ञेयम् ॥ १५ ॥

का त्वं भवसि कल्याणि त्वमनिन्दितलोचने । हे कल्याणि ! त्वं का ? अनिन्दितलोचने त्वं का भवसीति वाक्यभेदेन युष्मच्छब्दप्रयोगः तज्जिज्ञासातिशयद्योतनार्थः । वसिष्ठं कोपयित्वेत्यत्र पतिता विबुधालयादित्यनुषङ्गः ॥ ८ ॥ ९ ॥ को न्विति । अमुं लोकं परलोकं गतं त्वम् अनुशोचसि किम् ? यं कञ्चन बन्धुमिति शेषः ॥ १० ॥ ११ ॥ व्यञ्जनानि संस्थानविशेषविशिष्टतया उत्तमस्त्रीत्वव्यञ्जकानि स्तनजघनादीनि लक्षणानि भाग्यावेदनशुभरेखादीनि ॥१२॥१३॥ यथेति । यथा यादृशम् ॥ १४ ॥ द्रुमाश्रितं द्रुममूलाश्रितम् 'सोऽवतीर्य द्रुमात्' इति पूर्वोक्तत्वात् ॥ १५ ॥ १६ ॥

पृथिव्यामिति । शत्रुसैन्यप्रतापिनः शत्रुषु जीवत्सु न मे श्वशुरो जीवितवान् । स चेदिदानीं वर्तेत कथमहमेतादृशीमवस्थां आप्नुयामिति भावः ॥ १६ ॥ दुहितेति । सीता च नामेत्यत्र नामशब्दः प्रसिद्धौ ॥ १७ ॥ समा इति । अहम् एतादृशावस्था अहम् । तत्र मम श्वशुरगृहे द्वादश समाः द्वादश संवत्सरान् । अत्यन्तसंयोगे द्वितीया । तेनाविच्छिन्नैकरूपभोगभोक्तृत्वमुच्यते । मानुषानित्यनेन नात्मनो मानुषत्वं स्वाभाविक

पृथिव्यां राजसिंहानां मुख्यस्य विदितात्मनः । स्नुषा दशरथस्याहं शत्रुसैन्यप्रतापिनः ॥ १६ ॥ दुहिता जनकस्याहं वैदेहस्य महात्मनः । सीता च नाम नाम्नाऽहं भार्या रामस्य धीमतः ॥ १७ ॥ समा द्वादश तत्राहं राघवस्य निवेशने । भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥ १८ ॥ तत्र त्रयोदशे वर्षे राज्येनेक्ष्वाकुनन्दनम् । अभिषेचयितुं राजा सोपाध्यायः प्रचक्रमे ॥ १९ ॥ तस्मिन् संभ्रियमाणे तु राघवस्याभिषेचने । कैकेयी नाम भर्तारं देवी वचनमब्रवीत् ॥ २० ॥ न पिबेयं न खादेयं प्रत्यहं मम भोजनम् । एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ २१ ॥ यत्तदुक्तं त्वया वाक्यं प्रीत्या नृपतिसत्तम । तच्चेन्न वितथं कार्यं वनं गच्छतु राघवः ॥ २२ ॥

मिति सूच्यते । भोगान् भुञ्जाना अनुभवन्ती । काम्यन्त इति कामाः भोगोपकरणानि स्रक्चन्दनादीनि । तेषां समृद्धं समृद्धिः । भावे निष्ठा । तदस्या अस्तीति सर्वकामसमृद्धिनी । "अत इनिठनौ" इति इनिप्रत्ययः । अभवमिति शेषः ॥ १८ ॥ १९ ॥ तस्मिन्निति । संभ्रियमाणे संभारान् संपादयति सति । राघवस्याभिषेचने रामाभिषेकनिमित्तम् । देवी महिषी ॥ २० ॥ न पिबेयमिति । भुज्यत इति भोजनं खाद्यं पेयं च । रामो यद्यभिषिच्यते तदा मम संबन्धि यत् भोजनं तन्न पिबेयं न खादेयम् । एषः अयमभिषेकः जीवितस्यान्तश्च ॥ २१ ॥ यत्तदिति । तत्पूर्वोक्तं यद्वरदानरूपं

सीता च नामेति नामशब्दः प्रसिद्धौ ॥ १७ ॥ समा द्वादशेत्यत्र न्यवसमिति शेषः ॥ १८–२० ॥ मम भोजनमित्यत्र प्रथमार्थे षष्ठी ॥ २१ ॥ वाक्यं त्वदुक्तं सर्वं

स०—अहं प्रत्यहं निरन्तरम् मम भोजनं भोज्यं यद्वर्तते तन्न पिबेयम् न खादेयम् । कुत एतदित्यत आह—एष इति । एष इति बुद्धया विवेकेनाभिषेकेऽन्वेति । अथवा एष मे जीवितस्यान्तः एतच्च मम भोजनं पालनम् । तत्किमित्युक्ते, यदि रामोऽभिषिच्यते तर्ह्येषः अभिषेकः मे जीवितस्यान्तः । यदि नाभिषिच्यते तर्हि एतत् मम भोजनं पालनमिति । यदि नाभिषिच्यत इति पदानामावृत्त्याऽन्वयः । "भुज पालनाभ्यवहारयोः" इति धातुव्याख्यानात् ॥ २१ ॥

वाक्यं तन्न वितथं कार्यं चेत्तदा रामो वनं गच्छतु ॥ २२ ॥ स इति । देव्यास्संबन्धि स्वकृतं वरदानं स्मृत्वा कैकेय्याः वचनं श्रुत्वा मुमोह ॥ २३ ॥ ॥ २४ ॥ अभिषेकात्परं प्रियं पितुर्वचनं विवासयाचनारूपम्, पूर्वं मनसा आसाद्य अङ्गीकृत्य अथ वाचा प्रतिगृहीतवान्, मनःपूर्वकमङ्गीकृतवा

स राजा सत्यवाग् देव्या वरदानमनुस्मरन् । मुमोह वचनं श्रुत्वा कैकेय्याः क्रूरमप्रियम् ॥ २३ ॥ ततस्तु स्थविरो राजा सत्ये धर्मे व्यवस्थितः । ज्येष्ठं यशस्विनं पुत्रं रुदन् राज्यमयाचत ॥ २४ ॥ स पितुर्वचनं श्रीमानभिषेकात् परं प्रियम् । मनसा पूर्वमासाद्य वाचा प्रतिगृहीतवान् ॥ २५ ॥ दद्यान्न प्रतिगृह्णीयान्न ब्रूयात् किंचिदप्रियम् । अपि जीवितहेतोर्वा रामः सत्यपराक्रमः ॥ २६ ॥ स विहायोत्तरीयाणि महार्हाणि महायशाः । विसृज्य मनसा राज्यं जनन्यै मां समादिशत् ॥ २७ ॥ साऽहं तस्याग्रतस्तूर्णं प्रस्थिता वनचारिणी । न हि मे तेन हीनाया वासः स्वर्गेऽपि रोचते ॥ २८ ॥ प्रागेव तु महाभागः सौमित्रिर्मित्रनन्दनः । पूर्वजस्यानुयात्रार्थे द्रुमचीरैरलंकृतः ॥ २९ ॥ ते वयं भर्तुरादेशं बहुमान्य दृढव्रताः । प्रविष्टाः स्म पुराऽदृष्टं वनं गम्भीरदर्शनम् ॥ ३० ॥ वसतो दण्डकारण्ये तस्याहममितौजसः । रक्षसाऽपहृता भार्या रावणेन दुरात्मना ॥ ३१ ॥

नित्यर्थः ॥ २५ ॥ २६ ॥ उत्तरीयाणि वासांसि । जनन्यै कौसल्यायै । मां समादिशत्, तन्निकटे त्वया स्थातव्यमित्युक्तवानित्यर्थः ॥२७॥ साऽहमिति । अग्रतः प्रस्थाने हेतुमाह—न हीति ॥ २८ ॥ प्रागेवेति । प्रागेव यद्यपि रामानन्तरमेव लक्ष्मणेन द्रुमचीरादिस्वीकारः तथापि तस्य त्वरातिशयव्यञ्जनाय तथोक्तिः । महाभागः "अहं सर्वं करिष्यामि" इति प्रतिज्ञानुसारेण सर्वविधकैङ्कर्यकरणोचिताभिषेकविघ्नहेतुभाग्यसम्पन्नः । सौमित्रिः 'सृष्टस्त्वं वनवासाय' इत्युक्तवत्याः गर्भे सञ्जातः । मित्रनन्दनः स लक्ष्मणः सर्वविधकैङ्कर्यकर्तेत्यनुकूलैरभिनन्दनीयः । पूर्वजस्येत्यादि । रामकैङ्कर्यानुरूपत्वेन द्रुमचीरादीनामलङ्करणत्वमित्यर्थः ॥ २९ ॥ ते वयमिति । पुराऽदृष्टं पूर्वमदृष्टम् । अत्र गम्भीरशब्देन दुष्प्रवेशत्वम्, दर्शनशब्देन स्वरूपमप्युच्यते ॥ ३० ॥३१॥



करिष्यामीति शपथपूर्वकमुक्तमित्यर्थः ॥ २२-२६ ॥ स इति । उत्तरीयाणि वासांसीत्यर्थः ॥ २७-२९ ॥ ते वयमिति । पुरा अदृष्टमिति छेदः ॥ ३० ॥ ३१ ॥

द्वौ मासौ द्विमासरूपः कालः । मे जीवितानुग्रहः जीवितानुग्राहकः, जीवितधारणानुकूलः कृतः । त्यक्ष्यामि, स्वयमेवेति भावः ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

द्वौ मासौ तेन मे कालो जीवितानुग्रहः कृतः। ऊर्ध्वं द्वाभ्यां तु मासाभ्यां ततस्त्यक्ष्यामि जीवितम् ॥ ३२ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

तस्यास्तद्वचनं श्रुत्वा हनुमान् हरियूथपः । दुःखाद्दुःखाभिभूतायाः सान्त्वमुत्तरमब्रवीत् ॥ १ ॥
अहं रामस्य सन्देशाद्देवि दूतस्तवागतः । वैदेहि कुशली रामस्त्वां च कौशलमब्रवीत् ॥ २ ॥
यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः । स त्वां दाशरथी रामो देवि कौशलमब्रवीत् ॥ ३ ॥
लक्ष्मणश्च महातेजा भर्तुस्तेऽनुचरः प्रियः । कृतवाञ्छोकसन्तप्तः शिरसा तेऽभिवादनम् ॥ ४ ॥

तस्या इत्यादि । दुःखात् दुःखाभिभूतायाः उत्तरोत्तरं दुःखं प्राप्तायाः ॥ १ ॥ अहमिति । तव दूतः त्वां प्रति प्रेषितो दूतः ॥ २ ॥ य इति । वेद वेत्ति ।

जीवितानुग्रहः जीविताभ्यनुज्ञा । त्यक्ष्यामि जीवितं रावणेत्यादिके सतीति भावः ॥ ३२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ तस्या इति । दुःखाद्दुःखाभिभूतायाः सन्ततदुःखाभिभूताया इत्यर्थः ॥ १ ॥ तवागतः, समीपमिति शेषः ॥ २ ॥ ब्राह्ममस्त्रं यो वेद, अनेन सर्वास्त्रपारगत्वमुक्तम् । तदस्त्रस्वामिनः ब्रह्मणस्सर्वजगत्समष्टित्ववत् तदस्त्रस्यापि सर्वास्त्रसमष्टित्वात । वेदांश्चेत्यनेन सर्वकर्ममार्गपारगत्वम्, वेदविदां वरं इत्यनेन ज्ञानमार्गपारगत्वमुक्तम् ॥ ३ ॥ ४ ॥

स०–दुःखाद्दुःखाभिभूतायाः दुःखेनातन्तीति दुःखातस्तेषामिव यद्दुःखं तेनाभिभूतायाः । यद्वा दुःखात् सान्त्वमुत्तरमब्रवीदित्यन्वयः । दुश्च खं च तयोस्समाहारः द्वन्द्वैकवद्भावो वा उत्तरपदलोपिसमासान्तं वा । तस्मात् सीता एवं क्लिश्यतीति दुःखात्, स्वागमनप्रयोजनं जातमिति खात् सुखात् । "दुर्दुःखमिति संप्रोक्तं खं सुखं चोच्यते बुधैः" इति वचनाद्दुःखशब्द उभयवाची ॥ १ ॥ यो ब्राह्ममस्त्रं वेदांश्च वेदेत्यन्वयः । यद्वा वेदवेदेति द्विरभिधानेन उभयोरपि मुख्यतामभिप्रैति । यद्वा वेदान् व्याख्येयानृगादीन् । वेदवेदान् भारतादीन् व्याख्यानरूपान्विदन्ति ते तथा, तेषु वर इति । "इतिहासपुराणः पञ्चमो वेदानां वेदः" इत्युक्तेः ॥ ३ ॥

वेदविदां वेदार्थज्ञानवताम् ॥ ३ ॥ ४ ॥ सीते । प्रीतिसंहृष्टसर्वाङ्गी प्रीत्या पुलकितसर्वाङ्गी ॥ ५ ॥ दुःखबाहुल्येपि रामदर्शनप्रत्याशया कृच्छ्रेण जीवन्त्याः देव्याः जीवनफलस्य लब्धत्वात्तत्संवादिनीं गाथां स्तौति–कल्याणीति । कल्याणी सत्यार्था । मा प्रतिभाति मां प्रतिभाति । वर्ष शतादपीत्यन्ते इतिकरणं बोद्धव्यम् ॥ ६ ॥ तया सीतया तस्मिन् हनुमति विषये अद्भुता प्रीतिरुत्पादिता । परस्परेणेत्यादिकं वक्ष्यमाणस्य

सा तयोः कुशलं देवी निशम्य नरसिंहयोः । प्रीतिसंहृष्टसर्वाङ्गी हनुमन्तमथाब्रवीत् ॥ ५ ॥ कल्याणी बत गाथेयं लौकिकी प्रतिभाति मा । एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ ६ ॥ तया समागते तस्मिन् प्रीतिरुत्पादिता ऽद्भुता । परस्परेण चालापं विश्वस्तौ तौ प्रचक्रतुः ॥ ७ ॥ तस्यास्तद्वचनं श्रुत्वा हनुमान् हरियूथपः । सीतायाः शोकदीनायाः समीपमुपचक्रमे ॥ ८ ॥ यथा यथा समीपं स हनुमानुपसर्पति । तथा तथा रावणं सा तं सीता परिशङ्कते ॥ ९ ॥ अहो धिग् दुष्कृतमिदं कथितं हि यदस्य मे । रूपान्तरमुपागम्य स एवायं हि रावणः ॥ १० ॥

सर्गस्य संग्रहः ॥ ७ ॥ तस्या इति । उपचक्रमे, गन्तुमिति शेषः । प्रापेति वाऽर्थः ॥ ८ ॥ यथा यथेति । रावणं परिशङ्कते–समक्कुशलकथनेन सञ्जात रावणमायास्मरणा पुनः शङ्कितवतीत्यर्थः ॥ ९ ॥ मे मया अस्य पुरतः यत्कथितं तत् दुष्कृतम् अनुचितं कृतम् । इदम् अनालोच्य कथनं धिक् ।

प्रीतिसंहृष्टसर्वाङ्गी पुलकितसर्वगात्री ॥५॥ जीवितहारिदुःखबाहुल्येपि रामदर्शनप्रत्याशया कृच्छ्रेण जीवन्त्या देव्या जीवनफलस्य लब्धत्वात्तत्संवादिनीं गाथां स्तौति–कल्याणीति । जीवन्तं नरं वर्षशतादपि वर्षशतमध्ये वा आनन्द एतीति इयं लौकिकी गाथा जनवार्ता मा मां प्रति कल्याणी सत्यार्था प्रतिभाति । बतेति हर्षे ॥ ६ ॥ समागते तस्मिन् हनुमति तया कल्याणी बतेत्यादि वदन्त्या देव्या अद्भुता प्रीतिरुत्पादितेति सम्बन्धः ॥ ७ ॥ तस्या इति । समीपमुपचक्रमे, गन्तुमिति शेषः ॥ ८ ॥ ९ ॥ रामकुशलकथनेन सञ्जातविश्वासापि रावणमायाबाहुल्यं स्मृत्वा पुनरविश्वसन्त्याह–अहो इति । मे अस्य पुरतः यत्कथितं कथनं तद्दुष्कृतम् अनुचितं कृतम् इदमनालोच्य कथनं धिक् । अहो इति खेदे । खेदे हेतुमाह रूपान्तरमिति । यः पूर्वं मायया मामुपाहरत्, स एवायं

स०–जीवन्तं नरम् आनन्दः वर्षशतादेतीति लौकिकी लोकसिद्धा गाथा या सेयं मा मां प्रति कल्याणी कल्याणसूचिका प्रतिभाति । बत हर्षः विस्मयो वा । "जीवन्नरो भद्रशतानि पश्यति" इत्युक्तेः । अस्य स्वविषये सीतयोदाहृतत्वाज्जीवन्तीं स्त्रियमिति वक्तव्यम् । तथापि नरं जीवन्तमित्युक्तिः सर्वा अपि योषितः पुरुषे परतन्त्राः, तत्राप्यहं सदा तन्मात्रायत्तमङ्गलेति सूचयितुमिति मन्तव्यम् ॥ ६ ॥

अहो इति खेदे । खेदहेतुमाह—रूपान्तरमिति । वर्तत इति शेषः ॥ १० ॥ यद्यपि पूर्वं शिंशुपाशाखावलम्बनमुक्तं तथापि शिंशुपाशाखा अशोकसंवलितेति क्वचिच्छिंशुपेत्युच्यते क्वचिदशोक इति । अतो न कश्चिद्दोषः ॥ ११ ॥ भयवित्रस्ता भयहेतुना वित्रस्ता ॥ १२ ॥ १३ ॥ मायावी

तामशोकस्य शाखां सा विमुक्त्वा शोककर्शिता । तस्यामेवानवद्याङ्गी धरण्यां समुपाविशत् ॥ ११ ॥ हनुमानपि दुःखार्तां तां दृष्ट्वा भयमोहिताम् । अवन्दत महाबाहुस्ततस्तां जनकात्मजाम् । सा चैनं भयवित्रस्ता भूयो नैवाभ्युदैक्षत ॥१२॥ तं दृष्ट्वा वन्दमानं तु सीता शशिनिभानना । अब्रवीद्दीर्घमुच्छ्वस्य वानरं मधुरस्वरा ॥ १३ ॥ मायां प्रविष्टो मायावी यदि त्वं रावणः स्वयम् । उत्पादयसि मे भूयः सन्तापं तन्न शोभनम् ॥१४॥ स्वं परित्यज्य रूपं यः परिव्राजकरूपधृत् । जनस्थाने मया दृष्टस्त्वं स एवासि रावणः ॥ १५ ॥ उपवासकृशां दीनां कामरूप निशाचर । सन्तापयसि मां भूयः सन्तप्तां तन्न शोभनम् ॥ १६ ॥ अथवा नैतदेवं हि यन्मया परिशङ्कितम् । मनसो हि मम प्रीतिरुत्पन्ना तव दर्शनात् ॥ १७ ॥ यदि रामस्य दूतस्त्वमागतो भद्रमस्तु ते । पृच्छामि त्वां हरिश्रेष्ठ प्रिया रामकथा हि मे । गुणान् रामस्य कथय प्रियस्य मम वानर ॥ १८ ॥ चित्तं हरसि मे सौम्य नदीकूलं यथा रयः ॥ १९ ॥

स्वत एव मायावान् । "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः । इदानीं मायां प्रविष्टः आश्रितः । स्वयं रावणस्सन् मम सन्तापमुत्पादयसीति यदि उत्पादयसीति यत् तत्सन्तापोत्पादनं ते न शोभनम् । तत्राप्यभीष्टविरहसन्तापो भविष्यतीत्यर्थः ॥ १४–१६ ॥ हनुमन्तं रावणमाशङ्क्य तज्जनितमनःप्रसादमालोच्य तां शङ्कां निराचष्टे—अथवेति । मया यत् परिशङ्कितम् एतन्नैवं हि नैवमेव । कुत इत्यत आह मनस इति ॥ १७–१९ ॥

रावणः रूपान्तरमुपागम्य, वर्तत इति शेषः ॥ १० ॥ तामिति । अशोकस्य अशोकवनस्थशिंशुपावृक्षस्येत्यर्थः ॥ ११ ॥ तां धरण्युपविष्टाम् । अवन्दत नमस्कृतवान् । एनं दृष्ट्वा भयसन्त्रस्ता भूयः पुनरेनं नापश्यत् ॥ १२–१६ ॥ एवं रावणदौरात्म्याद्धनुमन्तं रावणमाशङ्क्य तद्दर्शनजनितमनःप्रसादमालोच्य तां शङ्कां

इह रामदूतागमनमत्यन्तासम्भावितमिति मत्वा पुनर्बहुधा शङ्कते—अहो इत्यादिना ॥ २० ॥ स्वप्नेऽपीति । स्वप्नेऽपि यद्यहं वीरम् । राक्षसीमध्यवास कृतं दुःखं स्वप्नदृष्टोऽपि निवर्तयितुं क्षम इति वीर्यातिशयोक्तिः । राघवं सहलक्ष्मणम् । विश्लेषदशायामुभयोर्दर्शनात् स्वप्नदर्शनेऽप्युभयोर्दर्शनं भवेत् । यद्वा तदानीमुभयोर्विश्लेषात्तौ किं परस्परं संयुक्तौ न वेति शङ्कते । पश्येयं नावसीदेयम् एवमुभयोस्स्वप्ने दर्शनेपि महत् दुःखं निवर्तेत, कथंचिद्

अहो स्वप्नस्य सुखता याऽहमेव चिराहृता । प्रेषितं नाम पश्यामि राघवेण वनौकसम् ॥ २० ॥ स्वप्नेऽपि यद्यहं वीरं राघवं सहलक्ष्मणम् । पश्येयं नावसीदेयं स्वप्नोऽपि मम मत्सरी ॥ २१ ॥ नाहं स्वप्नमिमं मन्ये स्वप्ने दृष्ट्वा हि वानरम् । न शक्योऽभ्युदयः प्राप्तुं प्राप्तश्चाभ्युदयो मम ॥ २२ ॥ किन्नु स्याच्चित्तमोहोऽयं भवेद्वातगतिस्त्वियम् । उन्मादजो विकारो वा स्यादियं मृगतृष्णिका ॥ २३ ॥ अथवा नायमुन्मादो मोहोऽप्युन्मादलक्षणः । संबुध्ये चाहमात्मानमिमं चापि वनौकसम् ॥ २४ ॥

जीवितं धारयेयम् । स्वप्नोपि मम मत्सरी । मद्दशां विज्ञाय राम इव स्वप्नोपि मयि मात्सर्यं करोति ॥ २१ ॥ २२ ॥ एवं यथार्थस्वप्नपक्षौ निरस्य पुनश्चतुरो विभ्रमपक्षानुत्प्रेक्षते—किन्नु स्यादिति । चित्तमोहः रामक्षेमवार्ताश्रवणकुतूहलकन्दलितनिरन्तरचिन्तासन्ततिपरिणतिविशेषरूपः कोपि मनसो विभ्रम इत्यर्थः । असत्यश्चित्तसङ्कल्पो वा । वातगतिः उपवासादिप्रयुक्तधातुक्षोभजो वातविकाररूपो भ्रमः । तदध्यारोपो वा यथा त्वरूपस्य वायोः पांसुपुञ्जरूपविशेषोऽध्यारोपः । उन्मादजो विकारो वा । उन्मादो नाम विरहिणां कश्चिदवस्थाविशेषः, तज्जो विकारो भ्रमः । मृगतृष्णिका अन्यस्यान्यरूपेणावभासः । चित्तमोहोन्मादावप्रकृतिस्थप्रतिभासविशेषौ । वातगतिमृगतृष्णिके तु प्रकृतिस्थस्य ॥२३॥ अनन्तरोक्तचतुष्टयं निराकरोति—अथवेत्यादिना ।

निराचष्टे—अथवेति । मया यत्परिशङ्कितम् एतन्नैवं हि नैवमेव । कुतः ? मनस इति ॥१७-१९॥ इह रामदूतागमनमत्यन्तासम्भावितमिति मत्वा पुनर्बहुधा शङ्कते—अहो इत्यादिना ॥ २०-२२ ॥ एवं यथार्थस्वप्नपक्षौ निरस्य पुनश्चतुरो विभ्रमपक्षानुत्प्रेक्षते--किं न्वित्यादि । चित्तमोहः निरन्तररामध्यानजनिततत्प्रेषितदूतदर्शनसम्भाषणादिविषयो भ्रमः । वातगतिः उपवासादिप्रयुक्तधातुक्षोभजातविकाररूपो भ्रम इत्यर्थः । उन्मादजो विकारः, उन्मादो नाम विरहिणां कश्चिदवस्थाविशेषः। मृगतृष्णिका सर्वशरीरिसाधारणो देशकालविशेषजन्यश्चाक्षुषो भ्रम इत्यर्थः ॥ २३ ॥ बाधाराहित्येन भ्रमचतुष्टयपक्षं निराचष्टे—अथवेति । अयं वानरतद्भाषणादि

अथवा अयं वानरतद्रूपणादिप्रतिभासः उन्मादो न । मोहोऽप्युन्मादलक्षणः उन्मादस्य लक्षणमिव लक्षणं यस्य स तथोक्तः । अतः उन्मादनिराकरणेनैव सोऽपि निराकृत इत्यर्थः । अनयोर्निराकरणमितरपक्षद्वयनिराकरणस्योपलक्षणं कुत इत्यत आह—संबुध्य इति । अहम् आत्मानमिमं वनौकसं



इत्येवं बहुधा सीता संप्रधार्य बलाबलम् । रक्षसां कामरूपत्वान्मेने तं राक्षसाधिपम् ॥ २५ ॥ एतां बुद्धिं तदा कृत्वा सीता सा तनुमध्यमा । न प्रतिव्याजहाराथ वानरं जनकात्मजा ॥२६॥ सीतायाश्चिन्तितं बुद्ध्वा हनुमान् मारुतात्मजः । श्रोत्रानुकूलैर्वचनैस्तदा तां सम्प्रहर्षयत् ॥ २७ ॥ आदित्य इव तेजस्वी लोककान्तः शशी यथा । राजा सर्वस्य लोकस्य देवो वैश्रवणो यथा । विक्रमेणोपपन्नश्च यथा विष्णुर्महायशाः ॥२८॥ सत्यवादी मधुरवाग् देवो वाचस्पतिर्यथा । रूपवान् सुभगः श्रीमान् कन्दर्प इव मूर्तिमान् ॥ २९ ॥ स्थानक्रोधः प्रहर्ता च श्रेष्ठो लोके महारथः ॥ ३० ॥ बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः ॥ ३१॥

चापि संबुध्ये सम्यक् जानामि ॥ २४ ॥ इत्येवमिति । बलाबलं मोहत्वादीनामबलत्वं रावणत्वस्य बलवत्त्वं च ॥ २५ ॥ २६ ॥ सीताया इति । संप्रहर्षयत् संप्राहर्षयत् ॥ २७ ॥ आदित्य इत्यादि । राजेति कुबेरस्य सर्वलोकराजत्वमुक्तम्—“ राजाधिराजाय प्रसह्यसाहिने नमो वयं वैश्रवणाय कुर्महे ” इति । सत्यमधुरवाक्त्वं बृहस्पतेर्वाचस्पतित्वादेव । रूपवान् सौन्दर्यवान् । सुभगः रमणीयः । श्रीमान् कान्तिमान् ॥ २८ ॥ २९॥ स्थाने क्रोधस्थाने क्रोधः यस्यासौ स्थानक्रोधः । प्रहर्ता क्रोधविषये प्रहर्ता । आदित्य इवेत्यादिना उक्तैर्विशेषणैर्विशिष्टो राम इति योज्यम् ॥३०॥ बाहुच्छाया

प्रतिभासः उन्मादो न भवति । मोहोऽप्युन्मादलक्षणः उन्मादस्य लक्षणमिव लक्षणं यस्य मोहस्य स तथोक्तः, अत उन्मादनिराकरणेनैव मोहोऽपि निराकृतः । उन्माद मोहयोर्निराकरणेन चित्तमोहमृगतृष्णिकयोर्निराकरणं कृतमिति द्रष्टव्यम् । सर्वेऽपि पक्षाः उन्मादमाया एव, भ्रमत्वाविशेषादिति भावः । कुतः ? अत आह सम्बुद्ध्य इति । यतः अहमात्मानम् इमं वनौकसं चापि सम्बुद्ध्ये सम्यक् जानामि, निर्बाधं जानामीत्यर्थः ॥ २४ ॥ बलाबलम् बलं रक्षसां कामरूपधारणं बलम्, अबलं रामदूतस्यापि वानरस्यात्रागमनासामर्थ्यमबलं सम्प्रधार्येत्यर्थः ॥ २५--२९ ॥ स्थानक्रोधः स्थाने क्रोधनीये विषये क्रोधो यस्य सः ॥ ३० ॥ यस्य बाहुच्छायामव

मित्यादि । लोकः महात्मनो यस्य बाहुच्छायाम् अवष्टब्धः आश्रितः । तं मृगरूपेण प्रशस्तमृगेण हेतुना आश्रमपदादपकृष्य शून्ये येनाप नीतासि तस्य रावणस्य यत्फलं मरणरूपं तत् द्रक्ष्यसीति योजना । यद्वा बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः असावादित्य इव तेजस्वीत्येवं

अपकृष्याश्रमपदान्मृगरूपेण राघवम् । शून्ये येनापनीताऽसि तस्य द्रक्ष्यसि यत्फलम् ॥ ३२ ॥ नचिराद्रावणं सङ्ख्ये यो वधिष्यति वीर्यवान् । रोषप्रमुक्तैरिषुभिर्ज्वलद्भिरिव पावकैः ॥ ३३ ॥ तेनाहं प्रेषितो दूतस्त्वत्सकाशमिहागतः । त्वद्वियोगेन दुःखार्तः स त्वां कौशलमब्रवीत् ॥ ३४ ॥ लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः । अभिवाद्य महाबाहुः स त्वां कौशलमब्रवीत् ॥ ३५ ॥ रामस्य च सखा देवि सुग्रीवो नाम वानरः । राजा वानरमुख्यानां स त्वां कौशलमब्रवीत् ॥ ३६ ॥ नित्यं स्मरति रामस्त्वां ससुग्रीवः सलक्ष्मणः । दिष्ट्या जीवसि वैदेहि राक्षसीवशमागता ॥ ३७ ॥ नचिराद्द्रक्ष्यसे रामं लक्ष्मणं च महाबलम् । मध्ये वानरकोटीनां सुग्रीवं चामितौजसम् ॥ ३८ ॥ अहं सुग्रीवसचिवो हनुमान्नाम वानरः । प्रविष्टो नगरीं लङ्कां लङ्घयित्वा महोदधिम् ॥ ३९ ॥ कृत्वा मूर्ध्नि पदन्यासं रावणस्य दुरात्मनः । त्वां द्रष्टुमुपयातोऽहं समाश्रित्य पराक्रमम् ॥ ४० ॥ नाहमस्मि तथा देवि यथा मामवगच्छसि । विशङ्का त्यज्यतामेषा श्रद्धत्स्व वदतो मम ॥ ४१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

योजना ॥ ३१-४० ॥ नाहमिति । वञ्चनार्थं परिगृहीतोऽपि इति मां यथाऽवगच्छसि तथा नास्मीत्यर्थः ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुस्त्रिंशः ॥ ३४ ॥



ष्टब्धः आश्रितो लोकः तं राघवं मृगरूपेण आश्रमादपकृष्य शून्ये येन रावणेनापनीतासि तस्य यत्फलं मरणरूपं तत् द्रक्ष्यसीति योजना ॥ ३१-४० ॥ नाहमस्मि तथेति नाहं मायावी, वानरोऽस्मीत्यर्थः ॥ ४१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां चतुस्त्रिंशः सर्गः ॥ ३४ ॥

तान्त्वित्यादि ॥ १ ॥ २ ॥ ति०—गुरुकुलवासयोग्यानां वानराणां वसिष्ठशिष्याणां च ईदृशसमागमः कथं जातः ? शास्त्रवश्यानामेव गुरुकुलवासयोग्यत्वात् ॥ २ ॥ यानीति । लिङ्गानि चिह्नानि ॥ ३ ॥ कीदृशमिति । संस्थानम् अवयवसंनिवेशः । रूपम् आकारः वर्णः कान्तिर्वा ॥ ४ ॥ ५ ॥ बतेत्यामन्त्रणे । जानन्ती त्वं दिष्ट्या मां परिपृच्छसीति संबन्धः । लक्षितानि त्वया दृष्टानि । मे मतः ॥ ६ ॥ ७ ॥ रामः सर्वाङ्गसुन्दरः । कमलपत्राक्षः कान्ति



तां तु रामकथां श्रुत्वा वैदेही वानरर्षभात् । उवाच वचनं सान्त्वमिदं मधुरया गिरा ॥ १ ॥ क्व ते रामेण संसर्गः कथं जानासि लक्ष्मणम् । वानराणां नराणां च कथमासीत् समागमः ॥ २ ॥ यानि रामस्य लिङ्गानि लक्ष्मणस्य च वानर । तानि भूयः समाचक्ष्व न मां शोकः समाविशेत् ॥ ३ ॥ कीदृशं तस्य संस्थानं रूपं रामस्य कीदृशम् । कथमूरू कथं बाहू लक्ष्मणस्य च शंस मे ॥ ४ ॥ एवमुक्तस्तु वैदेह्या हनुमान् मारुतात्मजः । ततो रामं यथातत्त्वमाख्यातुमुपचक्रमे ॥ ५ ॥ जानन्ती बत दिष्ट्या मां वैदेहि परिपृच्छसि । भर्तुः कमलपत्राक्षि संस्थानं लक्ष्मणस्य च ॥ ६ ॥ यानि रामस्य चिह्नानि लक्ष्मणस्य च यानि वै । लक्षितानि विशालाक्षि वदतः शृणु तानि मे ॥ ७ ॥ रामः कमलपत्राक्षः सर्वसत्त्वमनोहरः । रूपदाक्षिण्यसम्पन्नः प्रसूतो जनकात्मजे ॥ ८ ॥

प्रवाहे आवर्त इव अत्यन्ताकर्षकनयनशोभः । तादृशनयनसौन्दर्यसीमाभूमिमाह—सर्वसत्त्वमनोहरः । तिर्यग्जातितया विटपाद्विटपं प्लवतो ममापि चित्तापहारकः, अविशेषज्ञस्यापि मनोहर इत्यर्थः । रूपदाक्षिण्यसम्पन्नः रूपमित्येतद्विग्रहगुणानामुपलक्षणम् । दाक्षिण्यमित्यात्मगुणानामुपलक्षणम् । देहगुणैरात्मगुणैश्चान्वित इत्यर्थः । संपन्नः प्रसूतः, इदं सर्वं नागन्तुकं किन्तु औत्पत्तिकमित्यर्थः । अत्युत्कटं वदसि किमेवंविधोऽपरोऽप्यस्ति न वेत्यपेक्षायामाह—जनकात्मज इति । भवती च तादृशीत्यर्थः ॥ ८ ॥ ति०—रामः सर्वाङ्गसुन्दर इत्यर्थः । कमलपत्राक्षः सौन्दर्यप्रवाहमध्यगावर्तवदाकर्षकनयनशोभावान् ।

तां त्विति अर्दित्य इत्यादिक्रमम् ॥ १ ॥ २ ॥ यानि लिङ्गानि चिह्नानि ॥ ३ ॥ संस्थानम् अवयवसंनिवेशः । रूपम् आकारः ॥ ४ ॥ ५ ॥ जानन्तीति । बतेत्यामन्त्रणे । मां रामदूत इति जानन्ती सती दिष्ट्या मद्भाग्येन परिपृच्छसीति योजना ॥ ६ ॥ लक्षितानि त्वया दृष्टानि । मे मत्तः ॥ ७ ॥ रूपदाक्षिण्यसम्पन्नः रूपमित्येतद्विग्रहगुणानामुपलक्षणम् । प्रसूत इत्यनेन गुणानामुत्पत्तिसिद्धत्वमवगम्यते ॥ ८ ॥

नयनशोभाया अवधिः क इत्यपेक्षायामाह सर्वसत्त्वमनोहर इति । तिर्यग्जातीयत्वेन शाखाचङ्क्रमणरतस्य वानरस्यापि मनोहरत्वेन सर्वजनमनोहरः । रूपदाक्षिण्यसंपन्नः प्रसूतः स्वाभाविकानवधिकदिव्यदेहगुणगणः । जनकात्मजे त्वमेव तत्सदृशीति वक्तुं शक्या नान्येत्यर्थः । यद्वा रमयतीति रमन्ते योगिन इति च रामः । रामत्वमेवाह कमलपत्राक्ष इति । अथवा रामस्सौन्दर्यप्रवाहभूतः । कमलपत्राक्षः प्रवाहे आवर्तायमानश्रीनयनः । तेन हृदयाकर्षकत्वं व्यञ्जितम् । तच्च सकलजन्तुसाधारणमित्याह सर्वसत्त्वमनोहर इति । तत्र वानरजातीयमच्चित्ताकर्षणमेव प्रमाणमिति ध्वन्यते । स्वरूपविग्रहगुणैः सकलजन्तुमनोहरत्वं जन्मसिद्धमित्याह रूपदाक्षिण्यसम्पन्नः प्रसूत इति । तर्हि एवंविधः पुमान् विद्यते किमिति चेत् ? नेत्याह जनकात्मजे इति । तुल्यशीलेत्यादिना भवत्येव प्रसिद्धा न पुमान् कश्चिदिति भावः ॥८॥

तेजसाऽऽदित्यसङ्काशः क्षमया पृथिवीसमः । बृहस्पतिसमो बुद्ध्या यशसा वासवोपमः ॥९॥ रक्षिता जीवलोकस्य स्वजनस्याभिरक्षिता । रक्षिता स्वस्य वृत्तस्य धर्मस्य च परन्तपः ॥ १० ॥ रामो भामिनि लोकस्य चातुर्वर्ण्यस्य रक्षिता । मर्यादानां च लोकस्य कर्ता कारयिता च सः ॥ ११ ॥ अर्चिष्मानर्चितोऽत्यर्थं ब्रह्मचर्यव्रते स्थितः । साधूनामुपकारज्ञः प्रचारज्ञश्च कर्मणाम् ॥ १२ ॥ राजविद्याविनीतश्च ब्राह्मणानामुपासिता । श्रुतवान् शीलसम्पन्नो विनीतश्च परन्तपः ॥ १३ ॥ यजुर्वेदविनीतश्च वेदविद्भिः सुपूजितः । धनुर्वेदे च वेदेषु वेदाङ्गेषु च निष्ठितः ॥ १४ ॥ विपुलांसो महाबाहुः कम्बुग्रीवः शुभाननः । गूढजत्रुः सुताम्राक्षो रामो देवि जनैः श्रुतः ॥ १५ ॥

सङ्ग्रहेणोक्तान् गुणान्विवृणोति–तेजसेत्यादिना ॥ ९–११ ॥ ब्रह्मचर्यव्रते स्थितः गृहस्थत्वेऽप्यस्य ब्रह्मचर्यं नाम ऋतोरन्यत्र स्त्रीसङ्गमत्यागः । तदाह मनुः–"षोडशर्तुनिशाः स्त्रीणां तस्मिन् युग्मासु संविशेत् । ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च विवर्जयेत् ॥ " प्रचारज्ञः प्रयोगज्ञः । ऐहिकामुष्मिकाणां कर्मणां प्रचारं गतिं हेतुफलभावव्यवस्थां तत्त्वतो जानातीत्यर्थं इत्यप्याहुः ॥ १२ ॥ राजविद्याविनीतश्च । चतस्रो राजविद्याः–" आन्वीक्षकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः ॥" इत्युक्ताः, तासु विनीतः शिक्षितः । श्रुतवान् बहुश्रुतवान् । शीलसम्पन्नः सदाचारसम्पन्नः । पूर्वं यज्ञादिकर्मानुष्ठातृत्वमुक्तमिति न पुनरुक्तिः ॥१३॥ वेदेषु यजुर्व्यतिरिक्तवेदेषु । अनेन स्वस्य यजुर्वेदित्वं सूचितम् ॥१४॥ एवमात्मगुणानभिधाय

सङ्क्षेपेणोक्तान् गुणान् विवृणोति–तेजसेत्यादिना ॥ ९–११ ॥ अर्चिष्मानिति । अर्चितः, सद्भिरिति शेषः । ब्रह्मचर्यव्रते स्थितः, तत्र प्रसिद्ध इत्यर्थः । प्रचारज्ञः प्रयोगज्ञः ॥१२॥१३॥ यजुर्वेदविनीतः तस्मिन्द् रत इत्यर्थः ॥ १४ ॥ पूर्वमात्मगुणानभिधाय इदानीं विग्रहगुणानाह–विपुलांस इत्यादिना ॥ १५ ॥

विग्रहगुणानाशास्ते–विपुलांस इत्यादिना । गूढजत्रुः [illegible] ॥ १८ ॥ समः अन्यूनातिरिक्तदेहप्रमाणः ॥ १६ ॥ त्रिस्थिर इति । त्रिषु स्थानेषु स्थिरः । तथोक्तं सामुद्रिके–"उरश्च मणिबन्धश्च मुष्टिश्च नृपतेः स्थिराः" इति । त्रिप्रलम्बः त्रिषु प्रलम्बः । "दीर्घभ्रूबाहुमुष्कस्तु चिरजीवी धनी नरः" इति वचनात् । अन्यत्र तु "त्रयश्च यस्य विद्यन्ते प्रलम्बा मेढ्रबाहवः" इति । त्रिसमः त्रिषु समः । "केशाग्रं वृषणं जानु समा यस्य स भूपतिः" इति वचनात् । त्रिषु चोन्नतः । तदाह वराहमिहिरः–"उन्नतकुक्षिः क्षितिपः परिमण्डलोन्नतनाभयः क्षितिपाः । हृदयं न वेपनं पृथु समोन्नतं

दुन्दुभिस्वननिर्घोषः स्निग्धवर्णः प्रतापवान् । समः समविभक्ताङ्गो वर्णं श्यामं समाश्रितः ॥ १६ ॥
त्रिस्थिरस्त्रिप्रलम्बश्च त्रिसमास्त्रिषु चोन्नतः । त्रिताम्रस्त्रिषु च स्निग्धो गम्भीरस्त्रिषु नित्यशः ॥ १७ ॥
त्रिवलीवांस्त्र्यवनतश्चतुर्व्यङ्गस्त्रिशीर्षवान् । चतुष्कलश्चतुर्लेखश्चतुष्किष्कुश्चतुःसमः ॥ १८ ॥

मांसलं च नृपतीनाम् ॥" इति । त्रिताम्रः त्रिषु ताम्रः । "श्लिष्टाङ्गुली रुचिरताम्रनखौ सुपार्ष्णी पादौ करावपि सुरक्तनखात्मरेखौ" इति वचनात् । "नेत्रान्तनखपाण्यङ्घ्रितलैस्ताम्रैस्त्रिभिस्सुखी" इति च । त्रिषु स्निग्धः । "स्निग्धा भवन्ति वै येषां पादरेखाः शिरोरुहाः । तथा लिङ्गमणिस्तेषां महाभाग्यं विनिर्दिशेत् ॥" इति सामुद्रिकवचनात् । त्रिषु गम्भीरः । अत्र वररुचिः–"स्वरः सत्त्वं च नाभिश्च गम्भीरः शस्यते बुधैः" इति । ब्राह्मे तु–"स्वरे गतौ च नाभौ च गम्भीरास्त्रिषु शस्यते" इति । नित्यश इति सर्वत्र विशेषणीयम् । तेन रोगाद्युपाधिकृतरागादिनिवृत्तिः ॥१७॥ त्रिवलीवान् उदरे वलित्रयवान्, कण्ठे वलित्रयवान् वा । अत्र गर्गः–"स्थिरा त्रिरेखा सुभगोपपन्ना स्निग्धा सुमांसोपचिता सुवृत्ता । न चातिदीर्घा चतुरङ्गुला च ग्रीवा सुदीर्घा भवतीह धन्या ॥"

समः अन्यूनातिरिक्तदेहप्रमाणः ॥ १६ ॥ त्रिस्थिरः त्रिषु स्थानेषु स्थिरः । तदुक्तम्–"उरश्च मणिबन्धश्च मुष्टिश्च नृपतेः स्थिराः" इति । त्रिप्रलम्बः । तदुक्तम्–"प्रलम्बा यस्य स धनी त्रयो भ्रूमुष्कबाहवः" इति । मुष्कः वृषणः । त्रिसमः त्रिषु समः । तदुक्तम्–"केशाग्रं वृषणं जानु समं यस्य स भूपतिः" इति । त्रिषु चोन्नतः । तदुक्तम्–"नाभ्यन्तःकुक्षिवक्षोभिरुन्नतः क्षितिपो भवेत्" इति । त्रिताम्रः । तदुक्तम्–"नेत्रान्तनखपाण्यङ्घ्रितलैस्ताम्रैस्त्रिभिस्सुखी" इति । त्रिषु स्निग्धः तदुक्तम्–"स्निग्धा भवन्ति वै येषां पादरेखाः शिरोरुहाः । तथा लिङ्गमणिस्तेषां महाभाग्यं विनिर्दिशेत्" इति । त्रिषु गम्भीरः "स्वरे सत्त्वे च नाभौ च गम्भीरस्त्रिषु शस्यते" इति ॥ १७ ॥ त्रिवलीवान् उदरे कण्ठे वलित्रयवान् । "स्थिरा त्रिरेखा सुभगोपपन्नः स्निग्धा सुमांसोपचिता सुवृत्ता । न चातिदीर्घा चतुरङ्गुला च ग्रीवा च दीर्घा भवतीह धन्या" इति । त्र्यवनतः त्रीणि अवनतानि निम्नानि यस्य सः । तदुक्तम्–"पीनोपचितैर्निम्नैः क्षितिपतयश्चूचुकैः स्तनैः सुखिनः ।

इति । त्र्यवनतः त्रीण्यवनतानि निम्नानि यस्यासौ त्र्यवनतः । तानि स्तनचूचुकपादरेखाः । अत्र मिहिरः—" पीनोपचितैर्निम्नैः क्षितिपतयश्चूचुकैः स्तनैः सुखिनः । स्निग्धा निम्ना रेखा धनिनां तद्व्यत्ययेन निस्स्वानाम् ॥" इति । चत्वारि व्यङ्गानि ह्रस्वानि यस्यासौ चतुर्व्यङ्गः । अत्र वररुचिः—"ग्रीवा प्रजननं पृष्ठं ह्रस्वं जङ्घा च पूज्यते" इति । यद्वा चत्वारो व्यङ्गाः विकलाः यस्य सः चतुर्व्यङ्गः । ते च शिराविकलः पादः, रोमान्तरविकलो रोमकूपः, दैर्घ्यविकलो मेढ्रः, मांसविकलो बस्तिः । अत्र नारदः—"पादैः प्रस्वेदरहितैः शिराहीनैश्च पार्थिवः । एकरोमा भवेद्राजा द्विरोमा पण्डितो भवेत् । त्रिरोमा चतुरोमा च भवेद्भाग्यविवर्जितः । समपादोपविष्टस्य गुल्फं स्पृशति मेहनम् । यस्येश्वरं तं जानीयात्सुखिनं चैव मानवम् । निर्मांसः संहतो बस्तिर्येषां ते सुखभागिनः ॥" इति । त्रिशीर्षवान् त्रिभिर्लक्षणैर्युक्तं शीर्षं तदस्यास्तीति त्रिशीर्षवान् । तानि लक्षणान्यावर्ताः । "आवर्तत्रयरुचिरं यस्य शिरः स क्षितिभृतां नेता " इति कथनात् । यद्वा त्रिप्रकारं संवृत्तं छत्राकारं विशालं च शीर्षमस्यास्तीति त्रिशीर्षवान् । अत्र नारदः—" समवृत्तशिराश्चैव छत्राकारशिरास्तथा । एकछत्रां महीं भुङ्क्ते दीर्घमायुश्च विन्दति ॥" इति । चतस्रः कलाः वेदाः यस्य चतुष्कलः । अत्र शरीरलक्षणप्रकरणे कलाशब्दस्तत्सूचकरेखापरः । अत्र नन्दी—" मूलेऽङ्गुष्ठस्य वेदानां चतस्रस्तिस्र एव वा । एका द्वे वा यथायोगं रेखा ज्ञेया द्विजन्मनाम् ॥" इति । चतुर्लेखः ललाटे पादयोः पाण्योश्चतस्रो लेखा रेखा यस्य स चतुर्लेखः । " ललाटे यस्य दृश्यन्ते चतुस्त्रिद्व्येकरेखिकाः । शतद्वयं शतं षष्टिस्तस्यायुर्विंशतिस्तथा ॥" इति कात्यायनः । " यस्य पादतले वज्रध्वजशङ्खाङ्कुशोपमाः । रेखास्सम्यक् प्रकाशन्ते मनुजेन्द्रं तमादिशेत् ॥ " इति नारदः । " पाणौ चतस्रो रेखाश्च यस्य तिष्ठन्त्यभङ्गुराः " इति ब्रह्मा । चत्वारः किष्कवः यस्य स चतुष्किष्कुः । चतुर्विंशत्यङ्गुलात्मको हस्तः किष्कुः, षण्णवत्यङ्गुलोत्सेध इत्यर्थः । " षण्णवत्यङ्गुलोत्सेधो यः पुमान् स दिवौकसः " इति ब्राह्मपुराणवचनम् । चतुःसमः चत्वारः समा यस्य स चतुःसमः, ते च बाहुजानूरु

स्निग्धा निम्ना रेखा धनिनां तद्व्यत्ययेन निस्स्वानाम् ॥" इति । चतुर्व्यङ्गः चत्वारि व्यङ्गानि ह्रस्वानि यस्य सः । "ग्रीवा प्रजननं पृष्ठं ह्रस्वं जङ्घा च पूज्यते" इति । त्रिशीर्षवान् त्र्यावर्तयुक्तशीर्षवानित्यर्थः । " आवर्तत्रयरुचिरं यस्य शिरः क्षितिभृतां भवेन्नाथः " इति । चतुष्कलः चतस्रः कलाश्चत्वारो वेदा यस्य सः । अत्र कलाशब्देन तत्प्राप्तिसूचका अङ्गुष्ठमूलगताश्चतस्रो रेखा उच्यन्ते । तदुक्तम्—" मूलेऽङ्गुष्ठस्य वेदानां चतस्रस्तिस्र एव वा । एका द्वे वा यथायोगं रेखा ज्ञेया द्विजन्मनाम् ॥" इति । चतुर्लेखः ललाटे पादयोः पाण्योश्चतस्रो रेखा यस्य सः । "ललाटे यस्य दृश्यन्ते चतुस्त्रिद्व्येकरेखिकाः । शतद्वयं शतं षष्टिस्तस्यायुर्विंशतिस्तथा ॥" इति । " यस्य पादतले वज्रध्वजशङ्खाङ्कुशोपमाः । रेखाः सम्यक् प्रजायन्ते मनुजेन्द्रं तमादिशेत । " इति । "पाण्योश्चतस्रो रेखाश्च यस्य तिष्ठन्त्यभङ्गुराः" इति च । चतुष्किष्कुः चत्वारः किष्कवः प्रमाणं यस्य स तथोक्तः । किष्कुः चतुर्विंशत्यङ्गुलात्मको हस्तः " षण्णवत्यङ्गुलोत्सेधो यः पुमान् स दिवौकसः " इति । चतुस्समः । तदुक्तम्—" बाहुजानूरुजङ्घाश्च चत्वार्यथ समानि च । " इति ॥ १८ ॥

गण्डाः। तदुक्तं ब्रह्माण्डे—" बाहुजानूरुगण्डाश्च चत्वार्यथ समानि च " इति ॥ १८ ॥ चतुर्दशसमद्वन्द्वः चतुर्दशसङ्ख्यानि समानि द्वन्द्वानि यस्य सः। तथात्र सामुद्रिकम्—" भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुकौ । कूर्परौ मणिबन्धौ च जानुनी वृषणौ कटी । करौ पादौ स्फिजौ यस्य समौ ज्ञेयः स भूपतिः ॥" इति । चत्वारो दंष्ट्राकारा दन्ता यस्य स चतुर्दंष्ट्रः। तदाह मिहिरः—" स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः समाश्च

**चतुर्दशसमद्वन्द्वश्चतुर्दंष्ट्रश्चतुर्गतिः। महोष्ठहनुनासश्च पञ्चस्निग्धोऽष्टवंशवान् ॥ १९ ॥**

शुभाः " इति । चतुर्गतिः चतुर्णां सिंहशार्दूलगजवृषभाणां गतिरिव गतिर्यस्य सः। "गजसिंहगती वीरौ शार्दूलवृषभोपमौ " इति बालकाण्डोक्तेः। महोष्ठहनुनासश्च । ओष्ठस्य महत्त्वं बन्धुजीवबिम्बफलारुणमांसलत्वम्, हनोस्तु परिपूर्णमांसलत्वम्, नासिकाया दीर्घतुङ्गत्वम् । तथाच संहिता— " बन्धुजीवकुसुमोपमोऽधरो मांसलो रुचिरबिम्बरूपधृत् । पूर्णमांसलहनुस्तु भूमिपस्तुङ्गतुण्ड रुचिराकृतिस्तथा ॥" इति । तुण्डशब्देन नासिकोच्यते । पञ्चस्निग्धः । पञ्च स्निग्धाः अवयवाः यस्य सः, ते च वाक्यवक्त्रनखलोमत्वचः केशनेत्रदन्तत्वक्पादतलानि वा । अत्र वररुचिः—" चक्षुःस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम् । त्वचः स्नेहेन शयनं पादस्नेहेन वाहनम् ॥" इति । " स्निग्धनीलमृदुकुञ्चितास्तथा मूर्धजाः सुखकराः समं शिरः " इति मिहिरः। पूर्वं त्रिषु स्निग्ध इत्युक्तेः अत्र पञ्चस्निग्ध इतीदं मतभेदमाश्रित्योक्तम् । अष्टवंशवान् अष्टौ वंशाः आयतावयवा यस्य सः, आयताष्टावयव इत्यर्थः। अत्र सामुद्रिकम्—"पृष्ठवंशः शरीरं च हस्तपादाङ्गुली करौ । नासिका चक्षुषी कर्णौ प्रजनो यस्य चायताः ॥" इति । प्रजनस्यायतत्वमार्जवम् ॥१९॥

चतुर्दशसमद्वन्द्वः समपरिमाणचतुर्दशाङ्गद्वन्द्वयुक्त इत्यर्थः। तदुक्तम्—"भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुके । कूर्परौ मणिबन्धौ च जानुनी वृषणौ कटी । करौ पादौ स्फिजौ यस्य समौ ज्ञेयः स भूपतिः ॥ " इति । " कर्णाक्षिभ्रूगण्डनासादन्तोष्ठस्कन्धजत्रुणी । पादौ करौ स्तनावूरू स्फिजौ द्वन्द्वौ चतुर्दश ॥ " इति । "-समाश्च यस्य विद्यन्ते क्रमेणोपचितास्तथा " इति । चतुर्दंष्ट्रः दन्तपङ्क्तिद्वये प्रतिपार्श्वं चतस्रश्चतस्रो दंष्ट्रा दन्तविशेषा यस्य स तथोक्तः। यद्वा दन्तपङ्क्तिद्वयेऽपि मध्यदन्तचतुष्कमभितो द्वौ द्वौ दन्तविशेषा दंष्ट्रा अभिधीयन्ते । चतुर्गतिः चतुर्णां सिंहशार्दूलगजवृषभाणां गतिर्यस्य सः। महोष्ठहनुनासश्च ओष्ठस्य महत्त्वं बन्धुजपाकुसुमबिम्बफलारुणमांसलत्वम्, हनोस्तु परिपूर्णमांसलोन्नतत्वम्, नासिकायाः दीर्घोन्नतरुचिरपुटत्वम् । तदुक्तम्—" बन्धुजीवकुसुमोपमाधरो मांसलो रुचिरबिम्बरूपधृत् । पूर्णमांसलहनुस्तु भूमिपस्तुङ्गतुण्डरुचिराकृतिस्तथा " इति । तुण्डमिति नासिकोच्यते । पञ्चस्निग्धः " वाग्वक्त्रनखलोमानि त्वचश्च" इति । अष्टवंशवान् अष्टौ वंशा आयता अस्य सन्तीत्यष्टवंशवान् । " बाहू च नलकौ चोरू जङ्घे चेत्यष्टवंशकाः " इति । नलका अङ्गुलिः ॥ १९ ॥

दशपद्मः दश पद्माकारावयवाः यस्य सः दशपद्मः । " मुखनेत्रास्यजिह्वोष्ठतालुस्तननखाः करौ । पादौ च दश पद्मानि पद्माकाराणि यस्य च ॥ " इति । दशबृहत् दश बृहदवयवा यस्य सः । ते च–" उरः शिरो ललाटं च ग्रीवा बाहूंसनाभयः । पार्श्वपृष्ठस्वराश्चेति विशालास्ते शुभप्रदाः ॥ " इति सामुद्रिकम् । ब्राह्मे तु–" शिरोललाटे श्रवणे ग्रीवा वक्षश्च हृत्तथा । उदरं पाणिपादौ च पृष्ठं दश बृहन्ति च ॥ " इति । त्रिभिर्व्याप्तः । " त्रिभिर्व्याप्तिश्च यस्य

दशपद्मो दशबृहत् त्रिभिर्व्याप्तो द्विशुक्लवान् । षडुन्नतो नवतनुस्त्रिभिर्व्याप्नोति राघवः ॥ २० ॥

सत्यधर्मपरः श्रीमान् संग्रहानुग्रहे रतः । देशकालविभागज्ञः सर्वलोकप्रियंवदः ॥ २१ ॥

स्यात्तेजसा यशसा श्रिया " इति ब्राह्मोक्तरीत्या त्रिभिर्व्याप्तः । द्विशुक्लवान् द्वे दन्तनेत्रे शुक्ले यस्य सः द्विशुक्लवान् । षडुन्नतः षट् उन्नता अवयवा यस्य सः । ते च–" कक्षः कुक्षिश्च वक्षश्च घ्राणं स्कन्धो ललाटिका । सर्वभूतेषु निर्दिष्टा उन्नताङ्गाः शुभप्रदाः ॥" इति वररुचिः । अत्र मतभेदेनोक्तेर्न पुनरुक्तिः । मतभेदश्रवणं च रामस्य सकलशास्त्रोक्तमहापुरुषलक्षणपरिपूर्णत्वद्योतनाय । नवतनुः नव तनवः सूक्ष्मा यस्य । तानि च केशश्मश्रुनखलोमत्वगङ्गुलिपर्वशेफोबुद्धिदर्शनानि । " सूक्ष्माण्यङ्गुलिपर्वाणि केशलोमनखत्वचः । शेफश्च येषां सूक्ष्माणि ते नरा दीर्घजीविनः ॥ " इति वररुचिः । त्रिभिर्व्याप्नोति त्रिभिः पूर्वाह्णमध्याह्नापराह्णैः कालैः धर्मार्थकामान् व्याप्नोति अनुतिष्ठतीति । तदुक्तं ब्राह्मे–" धर्मार्थकामाः कालेषु त्रिषु यस्य स्वनिष्ठिताः " इति ॥ २० ॥ संग्रहानुग्रह इति । संग्रह अर्जनम् । अनुग्रहः फलदानम् ॥ २१ ॥

दशपद्मः दश पद्माकारा अवयवा यस्य सः । तथोक्तम्–" मुखनेत्रास्यजिह्वोष्ठतालुस्तननखाः करौ । पादौ च दश पद्मानि पद्माकाराणि यस्य च ॥ " इति । दशबृहत् " शिरोललाटे श्रवणे ग्रीवा वक्षश्च हृत्तथा । उदरं पाणिपादौ च पृष्ठं दश बृहन्ति च " इति । त्रिभिर्व्याप्तः " त्रिभिर्व्याप्तश्च यश्च स्यात्तेजसा यशसा श्रिया " इति । द्विशुक्लवान् द्वौ शुक्लौ शुद्धौ मातृपितृवंशौ यस्य सः । " द्वौ शुक्लौ तु शुभौ शुद्धौ वंशौ मातुः पितुस्तथा " इति । षडुन्नतः " कक्षः कुक्षिश्च वक्षश्च घ्राणस्कन्धौ ललाटिका । सर्वभूतेषु निर्दिष्टा उन्नताङ्गाः शुभप्रदाः " इति । नवतनुः नवसु स्थानेषु सूक्ष्मः । " सूक्ष्माण्यङ्गुलिपर्वाणि केशरोमनखत्वचः । शेफश्च येषां सूक्ष्माणि ते नरा दीर्घजीविनः ॥ अस्फुटिताग्रं सूक्ष्मं श्मश्रु शुभं मृदु च सन्ततं स्निग्धम् । सूक्ष्मदृक् सूक्ष्मबुद्धिश्च यो नरः स सुखी भवेत् । " इति । त्रिभिर्व्याप्नोतीति । त्रिभिः पूर्वाह्णमध्याह्नापराह्णकालैः धर्मार्थकामानवाप्नोति अनुतिष्ठतीति त्रिभिर्व्याप्नोति । ब्राह्मे–"धर्मार्थकामाः कालेषु त्रिषु यस्य स्वनिष्ठिताः" इति । ननु त्रिसमस्त्रिषु चोन्नतः त्रिषु स्निग्धः त्रिभिर्व्याप्त इत्युक्तं प्राक् । इह तु चतुस्समः षडुन्नतः पञ्चस्निग्धः त्रिभिर्व्याप्नोतीत्युच्यते,सत्यम्, मतभेदमाश्रित्योक्तत्वाददोषः । अन्येषामप्येवंविधानां सकलशास्त्रोक्तमहापुरुषलक्षणानाम् एकः सकलगुणारामो राम एव लक्ष्यमिति सूचनाय ॥ २० ॥ सङ्ग्रहानुग्रह इति । संग्रहः

भ्राता च तस्येति। द्वैमात्रः सपत्नीपुत्रः ॥ २२ ॥रामानु०—भ्राता च तस्येति । द्वैमात्रः द्वयोर्मात्रोरपत्यं पुमान् द्वैमात्रः । "मातुरुत्सङ्ख्यासंभद्रपूर्वायाः" इति अण् प्रत्ययः । उकाराभाव आर्षः । सुमित्रापत्यस्य लक्ष्मणस्य द्वैमातुरत्वं जन्मप्रभृति रामवत् कौसल्यया संवर्धितत्वात् ॥ २२ ॥ २३ ॥ मृगपतिं सुग्रीवम् । पूर्वजेन वालिना ।

भ्राता च तस्य द्वैमात्रः सौमित्रिरपराजितः। अनुरागेण रूपेण गुणैश्चैव तथाविधः ॥ २२ ॥ तावुभौ नरशार्दूलौ त्वद्दर्शनसमुत्सुकौ । विचिन्वन्तौ महीं कृत्स्नामस्माभिरभिसङ्गतौ ॥ २३ ॥ त्वामेव मार्गमाणौ तौ विचरन्तौ वसुन्धराम् । ददर्शतुर्मृगपतिं पूर्वजेनावरोपितम् ॥ २४ ॥ ऋश्यमूकस्य पृष्ठे तु बहुपादपसङ्कुले । भ्रातुर्भयार्तमासीनं सुग्रीवं प्रियदर्शनम् ॥ २५ ॥ वयं तु हरिराजं तं सुग्रीवं सत्यसङ्गरम् । परिचर्यास्महे राज्यात् पूर्वजेनावरोपितम् ॥ २६ ॥ ततस्तौ चीरवसनौ धनुःप्रवरपाणिनौ । ऋश्यमूकस्य शैलस्य रम्यं देशमुपागतौ ॥ २७ ॥ स तौ दृष्ट्वा नरव्याघ्रौ धन्विनौ वानरर्षभः । अवप्लुतो गिरेस्तस्य शिखरं भयमोहितः ॥ २८ ॥ ततः स शिखरे तस्मिन् वानरेन्द्रो व्यवस्थितः। तयोः समीपं मामेव प्रेषयामास सत्वरम् ॥२९॥ तावहं पुरुषव्याघ्रौ सुग्रीववचनात् प्रभू। रूपलक्षणसम्पन्नौ कृताञ्जलिरुपस्थितः ॥३०॥ तौ परिज्ञाततत्त्वार्थौ मया प्रीतिसमन्वितौ। पृष्ठमारोप्य तं देशं प्रापितौ पुरुषर्षभौ ॥ ३१ ॥ निवेदितौ च तत्त्वेन सुग्रीवाय महात्मने। तयोरन्योन्यसंलापाद्भृशं प्रीतिरजायत ॥३२॥

अवरोपितम्, राज्यादिति. शेषः ॥ २४--२६ ॥ रामानु०—वयन्त्विति । परिचर्य परिचर्यां कृत्वा । आस्महे तिष्ठाम इत्यर्थः ॥ २६ ॥ तत इति । पाणिनाविति आर्जनम, अनुग्रहः फलदानम् ॥ २१ ॥ द्वैमात्रः द्वयोर्मात्रोरपत्यं पुमान् द्वैमात्रः ॥ २२ ॥ अस्माभिः सुग्रीवमन्त्रिभिरित्यर्थः ॥ २३ ॥ मृगपतिं सुग्रीवम् । अवरोपितम् राजासनादिति शेषः ॥ २४ ॥ २५ ॥ वयमिति । परिचर्यास्महे परिचर्यां कृत्वा आस्महे, तिष्ठाम इत्यर्थः ॥ २६ ॥ पाणिनावित्यत्र इन्नन्तत्वमार्षम् ॥ २७–४० ॥

स०—धनुःप्रवरपाणिनौ पणो व्यवहार एव पाणः । धनुःप्रवराभ्यां पाणोऽनयोरस्तीति तथा । धनुःप्रवरपाणिनां नौ नायकावित्यर्थ इति वा । "नेता नश्च समाख्यातः" इति नानार्थपदमञ्जर्याम् । नान्तो वाऽयं शब्दः ॥ २७ ॥

नान्तत्वमार्षम् ॥ २७–३५ ॥ स श्रुत्वेति । [illegible] दुःखेऽप्यनुरागादिति भावः । यद्वा रामापेक्षया अत्यन्तनिष्प्रभः । रामः सीताविरहेण निष्प्रभोऽभूत्, सुग्रीवस्तु तयोस्ताडितया दर्शनाद्रामक्लेशदर्शनाच्चात्यर्थं निष्प्रभोऽभूत् ॥ ३६ ॥ ३७ ॥ तानीत्यादि ।

ततस्तौ प्रीतिसम्पन्नौ हरीश्वरनरेश्वरौ । परस्परकृताश्वासौ कथया पूर्ववृत्तया ॥३३॥ ततः स सान्त्वयामास सुग्रीवं लक्ष्मणाग्रजः । स्त्रीहेतोर्वालिना भ्रात्रा निरस्तमुरुतेजसा ॥ ३४ ॥ ततस्त्वन्नाशजं शोकं रामस्याक्लिष्टकर्मणः । लक्ष्मणो वानरेन्द्राय सुग्रीवाय न्यवेदयत् ॥३५॥ स श्रुत्वा वानरेन्द्रस्तु लक्ष्मणेनेरितं वचः । तदाऽऽसीन्निष्प्रभोऽत्यर्थं ग्रहग्रस्त इवांशुमान् ॥ ३६ ॥ ततस्त्वद्गात्रशोभीनि रक्षसा ह्रियमाणया । यान्याभरणजालानि पातितानि महीतले ॥ ३७ ॥ तानि सर्वाणि रामाय आनीय हरियूथपाः । संहृष्टा दर्शयामासुर्गतिं तु न विदुस्तव ॥ ३८ ॥ तानि रामाय दत्तानि मयैवोपहृतानि च । स्वनवन्त्यवकीर्णानि तस्मिन् विगतचेतसि ॥ ३९ ॥ तान्यङ्के दर्शनीयानि कृत्वा बहुविधं तव । तेन देवप्रकाशेन देवेन परिदेवितम् ॥ ४० ॥ पश्यतस्तानि रुदतस्ताम्यतश्च पुनः पुनः । प्रादीपयन् दाशरथेस्तानि शोकहुताशनम् ॥४१॥ शयितं च चिरं तेन दुःखार्तेन महात्मना । मयापि विविधैर्वाक्यैः कृच्छ्रादुत्थापितः पुनः ॥४२॥ तानि दृष्ट्वा महाबाहुर्दर्शयित्वा मुहुर्मुहुः । राघवः सहसौमित्रिः सुग्रीवे संन्यवेदयत् ॥४३॥

आनीय हरियूथपा इति । पूर्वं सुग्रीवेणानयनमुक्तं तद्धरियूथपद्वारेत्यत्रोच्यते । गतिं रावणस्थानम् ॥ ३८ ॥ तानीति । दत्तानि, सुग्रीवेणेति शेषः । मयैवोपहृतानि, पूर्वं पतनकाल इति शेषः, इदानीं हरियूथपैरानीतत्वोक्तेः । स्वनवन्ति आकाशात्पतनकाले ॥ ३९–४१ ॥ शयितं मूर्च्छितम् ॥ ४२ ॥ सुग्रीवे संन्यवेदयत् सुग्रीवहस्ते न्यस्तवानित्यर्थः ॥ ४३ ॥

पश्यत इति । तान्याभरणानि शोकहुताशनं प्रादीपयन्निति सम्बन्धः ॥ ४१–४३ ॥

स०—त्वन्नाशजं त्वदनुपलम्भजम् । "नाशो निधनानुपलम्भयोः" इति विश्वः ॥ ३५ ॥

अग्निपर्वतो नाम मेरुशिखरवर्ती कश्चिद्गिरिः। उक्तं च भारते—"अत्र माल्यवतः शृङ्गे दृश्यते हव्यवाट् सदा। नाम्ना संवर्तको नाम कालाग्निर्भरतर्षभ॥" इति॥ ४४–५१॥ ननु "वानराणां नराणां च कथमासीत्समागमः" इति वामदक्षिणहस्तवैषम्यमप्यविजानानां शाखायाश्शाखामाप्लुत्य

स तवादर्शनादार्ये राघवः परितप्यते। महता ज्वलता नित्यमग्निनेवाग्निपर्वतः॥ ४४॥ त्वत्कृते तम निद्रा च शोकश्चिन्ता च राघवम्। तापयन्ति महात्मानमग्न्यगारमिवाग्नयः॥ ४५॥ तवादर्शनशोकेन राघवः प्रविचाल्यते। महता भूमिकम्पेन महानिव शिलोच्चयः॥ ४६॥ काननानि सुरम्याणि नदीः प्रस्रवणानि च। चरन्न रतिमाप्नोति त्वामपश्यन्नृपात्मजे॥ ४७॥ स त्वां मनुजशार्दूलः क्षिप्रं प्राप्स्यति राघवः। समित्रबान्धवं हत्वा रावणं जनकात्मजे॥ ४८॥ सहितौ रामसुग्रीवावुभावकुरुतां तदा। समयं वालिनं हन्तुं तव चान्वेषणं तथा॥ ४९॥ ततस्ताभ्यां कुमाराभ्यां वीराभ्यां स हरीश्वरः। किष्किन्धां समुपागम्य वाली युद्धे निपातितः॥ ५०॥ ततो निहत्य तरसा रामो वालिनमाहवे। सर्वर्क्षहरिसङ्घानां सुग्रीवमकरोत् पतिम्॥ ५१॥ रामसुग्रीवयोरैक्यं देव्येवं समजायत। हनुमन्तं च मां विद्धि तयोर्दूतमिहागतम्॥ ५२॥ स्वराज्यं प्राप्य सुग्रीवः समानीय हरीश्वरान्। त्वदर्थं प्रेषयामास दिशो दश महाबलान्॥ ५३॥ आदिष्टा वानरेन्द्रेण सुग्रीवेण महौजसा। अद्रिराजप्रतीकाशाः सर्वतः प्रस्थिता महीम्॥ ५४॥

जीवतां तिरश्चां वसिष्ठशिष्यतया निरतिशयाचारसम्पन्नयोश्चक्रवर्तिपुत्रयोश्च कथं समागमो जात इति पृष्टम्, तस्य किमुत्तरमुक्तमित्यत्राह—रामसुग्रीवयोरिति। रामसुग्रीवयोरैक्यमेवं समजायत। एवमिति प्रत्यक्षनिर्देशः, स्वानुजे विद्यमानेऽपि यथाऽहं सुग्रीवदूतोऽन्तःपुरकार्यसमाधानायागतः तथा स तवेति। अग्निपर्वतः अग्न्यागारमपर्वतः॥ ४४–५४॥

स०—ताभ्यां रामलक्ष्मणाभ्याम्। छत्रिन्यायेनेयमुक्तिः। हरीश्वरः वाली॥ १०॥

तयोरैक्यं मैत्री जातेत्यर्थः । यद्वा एवं समजायत [illegible] [illegible]मिच्छामीत्यर्थः ॥५२-५४॥ सुग्रीववचनातुराः सुग्रीवाज्ञाभीताः । सुग्रीववचनानुगा इति च पाठः ॥ ५५ ॥ अङ्गद इति । त्रिभागबलसंवृतः तृतीयांशेन बलेन सैन्येन संवृत इत्यर्थः । वृत्तिविषये पूरणार्थत्वं संख्या



ततस्ते मार्गमाणा वै सुग्रीववचनातुराः । चरन्ति वसुधां कृत्स्नां वयमन्ये च वानराः ॥५५॥ अङ्गदो नाम लक्ष्मीवान् वालिसूनुर्महाबलः । प्रस्थितः कपिशार्दूलस्त्रिभागबलसंवृतः ॥५६॥ तेषां नो विप्रनष्टानां विन्ध्ये पर्वतसत्तमे । भृशं शोकपरीतानामहोरात्रगणा गताः ॥ ५७ ॥ ते वयं कार्यनैराश्यात् कालस्यातिक्रमेण च । भयाच्च कपिराजस्य प्राणांस्त्यक्तुं व्यवस्थिताः ॥ ५८॥ विचित्य वनदुर्गाणि गिरिप्रस्रवणानि च । अनासाद्य पदं देव्याः प्राणांस्त्यक्तुं समुद्यताः ॥५९॥ दृष्ट्वा प्रायोपविष्टांश्च सर्वान् वानरपुङ्गवान् । भृशं शोकार्णवे मग्नः पर्यदेवयदङ्गदः ॥ ६० ॥ तव नाशं च वैदेहि वालिनश्च वधं तथा । प्रायोपवेशमस्माकं मरणं च जटायुषः ॥६१॥ तेषां नः स्वामिसन्देशान्निराशानां मुमूर्षताम् । कार्यहेतोरिवायातः शकुनिर्वीर्यवान् महान् ॥६२॥ गृध्रराजस्य सोदर्यः सम्पातिर्नाम गृध्रराट् । श्रुत्वा भ्रातृवधं कोपादिदं वचनमब्रवीत् ॥६३॥ यवीयान् केन मे भ्राता हतः क्व च निपातितः । एतदाख्यातुमिच्छामि भवद्भिर्वानरोत्तमाः ॥ ६४ ॥ अङ्गदोऽकथयत्तस्य जनस्थाने महद्वधम् । रक्षसा भीमरूपेण त्वामुद्दिश्य यथातथम् ॥ ६५ ॥ जटायुषो वधं श्रुत्वा दुःखितः सोऽरुणात्मजः । त्वां शशंस वरारोहे वसन्तीं रावणालये ॥ ६६ ॥

शब्दस्येष्यते ॥ ५६ ॥ तेषामिति । विप्रनष्टानां बिले अदर्शनं गतानाम् ॥ ५७ ॥ ते वयमिति । कालस्य सुग्रीवकल्पितमासस्य । कपिराजस्य सुग्रीवात् ॥ ५८ ॥ ५९ ॥ दृष्ट्वेत्यादिश्लोकद्वयमेकं वाक्यम् । परिदेवनकर्माह–तवेति ॥ ६० ॥ ६१ ॥ तेषामिति । स्वामिसन्देशात् मासादूर्ध्वमनागतानां



तत इति । सुग्रीववचनातुराः सुग्रीवाज्ञाभीता इत्यर्थः ॥ ५५ ॥ ५६ ॥ विप्रनष्टानां बिलनिर्गमनमार्गाद्विभ्रष्टानामित्यर्थः ॥ ५७ ॥ कालस्य सुग्रीवकल्पितमासरूपकालस्य । कपिराजस्य कपिराजात् ॥ ५८ ॥ ५९ ॥ दृष्ट्वेत्यादिसार्धमेकं वाक्यम् । अत्र द्वितीयान्तान् दृष्ट्वा पर्यदेवयदिति सम्बन्धः ॥ ६० ॥ ६१ ॥ स्वामिसन्देशात

स०-महद्वधं महतो जटायुषो वधः महद्वधः तम् । परोपकारे प्राणत्यागान्महत्त्वम् ॥ ६५॥ त्वामाह सवरारोहे इति । वरारोहाभ्यां सहिता सवरारोहा तस्याः सम्बुद्धिः । अतो न स इत्यस्याधिक्यम् ॥६६॥

भयमित्येवंरूपात् । तेषां कार्यहेतोः ॥ ६२–६७ ॥ हृष्टाः उत्साहवन्तः । तुष्टा आनन्दवन्तः ॥ ६८ ॥ वेलोपान्तं वेला सिन्धुपूरः तस्योपान्तम् । "वेला

तस्य तद्वचनं श्रुत्वा सम्पातेः प्रीतिवर्धनम् । अङ्गदप्रमुखास्तूर्णं ततः संप्रस्थिता वयम् ॥ ६७ ॥ विन्ध्यादुत्थाय संप्राप्ताः सागरस्यान्तमुत्तरम् । त्वद्दर्शनकृतोत्साहा हृष्टास्तुष्टाः प्लवङ्गमाः ॥ ६८ ॥ अङ्गदप्रमुखाः सर्वे वेलोपान्तमुप स्थिताः । चिन्तां जग्मुः पुनर्भीतास्त्वद्दर्शनसमुत्सुकाः ॥ ६९ ॥ तथाऽहं हरिसैन्यस्य सागरं प्रेक्ष्य सीदतः । व्यव धूय भयं तीव्रं योजनानां शतं प्लुतः ॥ ७० ॥ लङ्का चापि मया रात्रौ प्रविष्टा राक्षसाकुला । रावणश्च मया दृष्टस्त्वं च शोकपरिप्लुता ॥ ७१ ॥ एतत्ते सर्वमाख्यातं यथावृत्तमनिन्दिते । अभिभाषस्व मां देवि दूतो दाशरथे रहम् ॥ ७२ ॥ तं मां रामकृतोद्योगं त्वन्निमित्तमिहागतम् । सुग्रीवसचिवं देवि बुध्यस्व पवनात्मजम् ॥ ७३ ॥ कुशली तव काकुत्स्थः सर्वशस्त्रभृतां वरः । गुरोराराधने युक्तो लक्ष्मणश्च सुलक्षणः ॥ ७४ ॥ तस्य वीर्यवतो देवि भर्तुस्तव हिते रतः । अहमेकस्तु संप्राप्तः सुग्रीववचनादिह ॥ ७५ ॥ मयेयमसहायेन चरता कामरूपिणा । दक्षिणा दिगनुक्रान्ता त्वन्मार्गविचयैषिणा ॥ ७६ ॥ दिष्ट्याऽहं हरिसैन्यानां त्वन्नाशमनुशोचताम् । अपनेष्यामि सन्तापं तवाभिगमशंसनात् ॥ ७७ ॥ दिष्ट्या हि मम न व्यर्थं देवि सागरलङ्घनम् । प्राप्स्याम्यहमिदं दिष्ट्या त्वद्द र्शनकृतं यशः ॥ ७८ ॥ राघवश्च महावीर्यः क्षिप्रं त्वामभिपत्स्यते । समित्रबान्धवं हत्वा रावणं राक्षसाधिपम् ॥ ७९ ॥

ऽम्बुधेस्तीरवृद्धयोः कालमर्यादयोरपि" इति दर्पणः ॥ ६९–७२ ॥ रामकृतोद्योगं रामकृतोत्साहम् ॥ ७३ ॥ गुरोः ज्येष्ठस्य आराधने शुश्रूषणे रतः लक्ष्मण श्च कुशली ॥ ७४ ॥ ७५ ॥ मयेयमिति । विचयैषिणा अन्वेषणेच्छुना ॥ ७६ ॥ दिष्ट्येति । तवाभिगमशंसनात् त्वत्समीपप्राप्तिकथनात् ॥ ७७–७९ ॥

मासादूर्ध्वमनागतानां वध एवेति सुग्रीववचनात् । मुमूर्षतां सताम् ॥ ६२–७६ ॥ दिष्ट्याऽहमिति । तवाभिगमशंसनात् तव समीपप्राप्तिशंसनात् । तवाधिगम शंसनादिति पाठे तव दर्शनशंसनात् ॥ ७७–७९ ॥

'बुद्ध्यस्व पवनात्मजम्' इति पवनात्मजत्वमुक्तम्, तत्कथं वानरस्येत्यपेक्षायामाह—माल्यवानिति । गच्छति अगच्छत् ॥ ८० ॥ सः गोकर्णं गतः । देवर्षिभिः तन्नत्यैः दिष्टः नियुक्तः । शम्बसादनं तीर्थोपद्रवकारिणमसुरं शम्बसादनाख्यम् । उद्धरत् उदहरत् । देवर्षिप्रार्थनया अवधीदित्यर्थः ॥ ८१ ॥

माल्यवान्नाम वैदेहि गिरीणामुत्तमो गिरिः । ततो गच्छति गोकर्णं पर्वतं केसरी हरिः ॥ ८० ॥ स च देवर्षिभिर्दिष्टः पिता मम महाकपिः । तीर्थे नदीपतेः पुण्ये शम्बसादनमुद्धरत् ॥ ८१ ॥ तस्याहं हरिणः क्षेत्रे जातो वातेन मैथिलि । हनुमानिति विख्यातो लोके स्वेनैव कर्मणा ॥ ८२ ॥ विश्वासार्थं तु वैदेहि भर्तुरुक्ता मया गुणाः । अचिराद् राघवो देवि त्वामितो नयिताऽनघे ॥ ८३ ॥ एवं विश्वासिता सीता हेतुभिः शोककर्शिता । उपपन्नैरभिज्ञानैर्दूतं तमवगच्छति ॥ ८४ ॥ अतुलं च गता हर्षं प्रहर्षेण च जानकी । नेत्राभ्यां वक्रपक्ष्मभ्यां मुमोचानन्दजं जलम् ॥ ८५ ॥ चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् । अशोभत विशालाक्ष्या राहुमुक्त इवोडुराट् ॥ ८६ ॥ हनुमन्तं कपिं व्यक्तं मन्यते नान्यथेति सा । अथोवाच हनूमांस्तामुत्तरं प्रियदर्शनाम् ॥ ८७ ॥ एतत्ते सर्वमाख्यातं समाश्वसिहि मैथिलि । किं करोमि कथं वा ते रोचते प्रतियाम्यहम् ॥ ८८ ॥ हतेऽसुरे संयति शम्बसादने कपिप्रवीरेण महर्षिचोदनात् । ततोऽस्मि वायुप्रभवो हि मैथिलि प्रभावतस्तत्प्रतिमश्च वानरः ॥ ८९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

हरिणः हरेः केसरिणः क्षेत्रे पत्न्याम् अञ्जनायां जातः पितुर्देशान्तरगमनकाले जातः । अनेनान्यक्षेत्रे कथमन्येनोत्पादनमिति शङ्का पराकृता ॥ ८२ ॥ नयिता नेता ॥ ८३ ॥ अवगच्छति अवागच्छत् ॥ ८४–८८ ॥ रामानु०—हनुमन्तमिति । मन्यते अमन्यत ॥ ८७ ॥ देवीनियुक्तार्थकरणे स्वस्य शक्तिरस्तीति

'बुद्ध्यस्व पवनात्मजम्' इति पवनात्मजत्वं तव प्रतिपादितम्, वानरस्य तव पवनात्मजत्वं कथमित्याकाङ्क्षायामाह—माल्यवानित्यादिना । गच्छति अगच्छत् ॥ ८० ॥ दिष्टः आदिष्टः नियुक्तः । शम्बसादन इति कश्चनासुरः । उद्धरत् उदहरत्, अवधीदित्यर्थः ॥ ८१ ॥ हरिणः हरेः । नकारान्तत्वमार्षम्, केसरिण इत्यर्थः ॥ ८२ ॥ नयिता नेता ॥ ८३ ॥ अवगच्छति अवागच्छत् ॥ ८४–८६ ॥ मन्यते अमन्यत ॥ ८७ ॥ ८८ ॥ देवीनियुक्तार्थकरणे स्वस्य शक्तिरस्तीति

स०—ततः मत्पितुस्तद्धननार्थं गमनानन्तरम् । वायुप्रभवोऽस्मि तदवकाशे वायुना जातोऽस्मि ॥ ८९ ॥

द्योतयितुं स्वमाहात्म्यमाह—हत इति । ततः अनुत्तमोऽयम्... ॥८९॥ इति श्रीगो० श्रीराम० शृङ्गार० सुन्दरकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥३५॥
भूय इत्यादि ॥ १ ॥ इत्थं सन्देशकथनादिना देवीं विश्वास्याभिज्ञानाङ्गुलीयकदानेन दृढं विश्वासयति—वानरोऽहमित्यादिना ॥ २ ॥ ३ ॥ गृहीत्वेति । गृहीत्वा देशान्तरादागतं बन्धुं दृष्ट्वेव स्वयं गृहीतवती । प्रेक्षमाणा । वर्तमानार्थेन शानचा दत्तदृष्टिं न विचालितवतीत्युच्यते । सा पूर्वं रावणत्वेन शङ्कितवती । भर्तुः करविभूषणं पाणिग्रहणकाले हस्तस्पृष्टमाभरणम् । करविभूषणमित्यनेन भोगातिशयात् प्रणयकोपे प्रवृत्ते परस्परमालोकनभाषणादि

भूय एव महातेजा हनुमान् मारुतात्मजः । अब्रवीत् प्रश्रितं वाक्यं सीताप्रत्ययकारणात् ॥ १ ॥
वानरोऽहं महाभागे दूतो रामस्य धीमतः । रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥ २ ॥
प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना । समाश्वसिहि भद्रं ते क्षीणदुःखफला ह्यसि ॥ ३ ॥
गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणम् । भर्तारमिव सम्प्राप्ता जानकी मुदिताऽभवत् ॥ ४ ॥
चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् । अशोभत विशालाक्ष्या राहुमुक्त इवोडुराट् ॥ ५ ॥

विरहदशायां काङ्क्षिते भाषणे मानातिशयेन मौने कृते रामोऽङ्गुलीयकं भूमौ च्यावयति स्म । तदा व्याजेन च्युतमङ्गुलीयकमिति सीतयाऽभिहिते प्रणयकोपशैथिल्यात् परस्परसंश्लेषो भूयोऽप्यभूत् । एवं घटकभूतं करविभूषणं भर्तारमिव संप्राप्ता अङ्गुलीयकदर्शनात्तस्य कान्तस्य करं स्मृतवती, तत्स्मृत्या बाहुं तत्स्मरणेन तद्विग्रहम् । एवं भावनाप्रकर्षेण तं पुरःस्थितमिव मत्वा तमालिङ्गितवती । जननीवुद्ध्या मुनिस्सम्प्राप्तेवेत्याह, जननी कृतभोगस्यावर्ण्यत्वात् । जानकी शोकहर्षाभ्यां क्लेष्टुमनर्हे कुले जाता । मुदिताऽभवत् इयमिदानीं मुदिता उदर्के किं भविष्यतीति न जान

ज्ञापयितुं स्वमाहात्म्यमाह—हतेऽसुर इति ॥८९॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां पञ्चत्रिंशः सर्गः ॥ ३५ ॥
अथ दृढतरविश्वासाय रामाङ्गुलीयकं दातुमाह—भूय इति । प्रत्ययः विश्वासः ॥ १ ॥ सन्देशकथनादिना देवीं विश्वास्य अभिज्ञानाङ्गुलीयकप्रदानेनापि दृढं विश्वासयति—वानरोऽहमित्यादिना ॥ २-५ ॥

स०—क्षीणदुःखफला दुःखं तमआदिरूपं फलं येषां ते दुःखफलाः राक्षसाः । क्षीणाः दुःखफला यया निमित्तेन सा तथा । दुःखरूपं यत् फलं तत्क्षीणं यस्यां सा वा । एष्यन्निश्चयेनेदं वचनम् ॥ ३ ॥

इत्याहार्षः ॥४॥५॥ प्रियं कृत्वा संमानं कृत्वा ॥६॥ विक्रान्त इत्यादिपदत्रयेण तद्व्युत्क्रमेण ज्ञानशक्तिबलान्युच्यन्ते। इदं राक्षसपदमिति प्रज्ञोक्ता। त्वयैकेनेति सामर्थ्यम्। प्रधर्षितामिति विक्रमः ॥७॥८॥ प्राकृतं क्षुद्रम्। संभ्रमः व्यग्रता ॥९॥ अर्हस इति । यद्यपीति निपातसमुदायो यस्मा

ततः सा ह्रीमती बाला भर्तृसन्देशहर्षिता। परितुष्टा प्रियं कृत्वा प्रशशंस महाकपिम् ॥६॥ विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम। येनेदं राक्षसपदं त्वयैकेन प्रधर्षितम् ॥७॥ शतयोजनविस्तीर्णः सागरो मकरालयः। विक्रमश्लाघनीयेन क्रमता गोष्पदीकृतः॥८॥ नहि त्वां प्राकृतं मन्ये वानरं वानरर्षभ। यस्य ते नास्ति संत्रासो रावणान्नापि सम्भ्रमः ॥९॥ अर्हसे च कपिश्रेष्ठ मया समभिभाषितुम् । यद्यपि प्रेषितस्तेन रामेण विदितात्मना ॥१०॥ प्रेषयिष्यति दुर्धर्षो रामो न ह्यपरीक्षितम्। पराक्रममविज्ञाय मत्सकाशं विशेषतः ॥११॥ दिष्ट्या च कुशली रामो धर्मात्मा सत्यसङ्गरः। लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः ॥१२॥ कुशली यदि काकुत्स्थः किन्नु सागरमेखलाम्। महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ॥१३॥

दित्यर्थे। अव्ययानामनेकार्थत्वात् ॥१०-१२॥ अथ प्रणयरोषेण दूतसन्निधौ रामं गर्हते—कुशलीति । काकुत्स्थः परपरिभवासहकुले जातः । अनेन परपरिभव एव परिहरणीयः न स्वीय इति नियमोऽस्ति किम्। किंनु सागरमेखलां महीं दहति। अत्र काकुत्स्थः दहति किंनु न दहतीत्यर्थः । सागरमेखलामिति विशेषणेन द्रवद्रव्यस्यैकेन कठिनद्रव्यस्य नैकेन बाणेन भवितव्यं किम्। सागरं सलिलमेव तैलं कृत्वा महीं दग्धुं समर्थो न किमित्यर्थः। यद्वा स्वपत्नीं वा सुरक्षितपरिधानां करोतीति भावः । अनादिकृतमर्यादा मही कथं दग्धुं शक्येत्यत्राह युगान्तेति । महीमर्यादा

तत इति। प्रियं कृत्वा आदरं कृत्वेत्यर्थः ॥६॥ विक्रान्तः शूरः । समर्थः देशकालोचितकृत्यचतुरः । प्राज्ञः सर्वशास्त्रतत्त्वज्ञः । पदं स्थानम् ॥७॥८॥ सन्त्रासः, समुद्रादिति शेषः ॥९॥ यद्यपीत्यवधारणे। मया समभिभाषितुम् अर्हसे यद्यपि, अर्हस्येवेत्यर्थः । कुतः ? विदितात्मना रामेण प्रेषित इति सम्बन्धः। यद्वा अप्यवधारणे। यदि यस्मात् विदितात्मना रामेण प्रेषितः तस्मात् मया समभिभाषितुमर्हस्येवेति सम्बन्धः ॥१०-१४॥

स०—ह्रीमती पत्यौ यद्गत्यौत्सुक्यं कपिरपि ममापश्यदिति लज्जावती। प्रियं कृत्वा रावणादिविकल्पं विधूय प्रेमास्पदमेव कृत्वा मत्वा वा ॥६॥

तन्नयनरागपर्यन्तैवेति भावः। किं न सागरमेखलामित्यपि पाठः । काकुत्स्थः कुशली यदि तदा महीं किं न दहति । शक्तश्चेद्दहत्येव, न दहति अतो न शक्त इत्यर्थः ॥ १३ ॥ पक्षान्तरमाह—अथवेति ॥ १४ ॥ कच्चिदिति । न व्यथितः न कृशः । उत्तराणि कार्याणि मत्प्राप्तिसाधकानि

अथवा शक्तिमन्तौ तौ सुराणामपि निग्रहे। ममैव तु न दुःखानामस्ति मन्ये विपर्ययः॥ १४ ॥ कच्चिन्न व्यथितो रामः कच्चिन्न परितप्यते। उत्तराणि च कार्याणि कुरुते पुरुषोत्तमः ॥ १५ ॥ कच्चिन्न दीनः सम्भ्रान्तः कार्येषु च न मुह्यति। कच्चित् पुरुषकार्याणि कुरुते नृपतेः सुतः ॥ १६ ॥ द्विविधं त्रिविधोपायमुपायमपि सेवते। विजिगीषुः सुहृत् कच्चिन्मित्रेषु च परन्तपः ॥ १७ ॥ कच्चिन्मित्राणि लभते मित्रैश्चाप्यभिगम्यते । कच्चित् कल्याणमित्रश्च मित्रैश्चापि पुरस्कृतः ॥१८॥ कच्चिदाशास्ति देवानां प्रसादं पार्थिवात्मजः। कच्चित् पुरुषकारं च दैवं च प्रतिपद्यते ॥ १९ ॥ कच्चिन्न विगतस्नेहः प्रसादान्मयि राघवः। कच्चिन्मां व्यसनादस्मान्मोक्षयिष्यति वानर ॥ २० ॥

कच्चित्कुरुते ? ॥ १५ ॥ न दीनः कच्चित् सम्भ्रान्तः सन् कार्येषु न मुह्यति कच्चिदित्यन्वयः । पुरुषकार्याणि पुरुषेण कर्तव्यानि ॥ १६ ॥ तान्येवाह—द्विविधमिति। परन्तपो रामः मित्रेषु विषये सुहृत्सन् द्विविधं सामदानरूपमुपायमपि सेवते कच्चित्। चकारेणामित्रास्समुच्चीयन्ते। अमित्रेषु विषये विजिगीषुस्सन् त्रिविधोपायं दानभेददण्डान् सेवते प्रयुङ्क्ते कच्चित् ?। सुहृत्सु कदाचिदपि भेददण्डौ न कार्यौ, शत्रुषु न सामेति भावः। योजनान्तरे विजिगीषुसुहृत्पदयोः प्रयोजनं मृग्यम् ॥ १७ ॥ अभिगम्यते लभ्यते । मित्रस्य कंचिदुपकारं कृत्वा स्वयमुपकारं मित्रादपेक्षते कच्चिदित्यर्थः । कल्याणमित्रः पुरस्कृतमित्र इत्यर्थः ॥ १८ ॥ आशास्ति आशास्ते। पुरुषकारं स्वबलम्। एकैकस्यानर्थहेतुत्वादिति भावः ॥ १९ ॥ २० ॥

कच्चिदिति । उत्तराणि च कार्याणि पुरुषकारान् ॥ १५ ॥ दीनो न सम्भ्रान्त इत्यनुषङ्गः ॥ १६ ॥ द्विविधमिति । सुहृत् परंतपो रामः विजिगीषुः सन् त्रिविधोपायं सामदानभेदरूपमुपायम्। उपायमपि दण्डोपायमपि । मित्रेषु चकारादमित्रेषु च द्विविधं यथा भवति तथा सेवते कच्चित् ?। मित्रेषु सामदाने, अमित्रेषु भेददण्डौ चेत्येवं विभज्य प्रयुङ्क्ते कच्चित् ? ॥ १७ ॥ मित्राणि लभते स्वयत्नेन मित्रैश्च स्वयत्नतोऽभिगम्यते । कल्याणमित्रः सौमित्रिः मित्रैः पुरस्कृतः बहुमतः कच्चित् ? ॥१८॥ आशास्ति आशास्ते, प्रार्थयत इत्यर्थः ॥ १९ ॥ २० ॥

सुखानामिति । अनूचित इति दीर्घ आर्षः । उत्तरम् उत्कृष्टम् ॥२१॥ रामानु०—सुखानामिति । अनुचित एवानौचितः । "प्रज्ञादिभ्यश्च" इति स्वार्थे अण्प्रत्ययः । उत्तरं दुःखम् उत्कृष्टं दुःखम् ॥२१॥ २२ ॥ मन्निमित्तेन मया हेतुना । अन्यमनाः कार्यान्तरासक्तः ॥ २३ ॥ कच्चिदक्षौहिणीमिति । ध्वजिनीं सेनाम् ॥ २४—२७ ॥

सुखानामुचितो नित्यमसुखानामनूचितः । दुःखमुत्तरमासाद्य कच्चिद्रामो न सीदति ॥ २१ ॥ कौसल्यायास्तथा कच्चित् सुमित्रायास्तथैव च । अभीक्ष्णं श्रूयते कच्चित् कुशलं भरतस्य च ॥ २२ ॥ मन्निमित्तेन मानार्हः कच्चिच्छोकेन राघवः । कच्चिन्नान्यमना रामः कच्चिन्मां तारयिष्यति ॥ २३ ॥ कच्चिदक्षौहिणीं भीमां भरतो भ्रातृवत्सलः । ध्वजिनीं मन्त्रिभिर्गुप्तां प्रेषयिष्यति मत्कृते ॥ २४ ॥ वानराधिपतिः श्रीमान् सुग्रीवः कच्चिदेष्यति । मत्कृते हरिभिर्वीरैर्वृतो दन्तनखायुधैः ॥ २५ ॥ कच्चिच्च लक्ष्मणः शूरः सुमित्रानन्दवर्धनः । अस्त्रविच्छरजालेन राक्षसान् विधमिष्यति॥२६॥रौद्रेण कच्चिदस्त्रेण ज्वलता निहतं रणे । द्रक्ष्याम्यल्पेन कालेन रावणं ससुहृज्जनम्॥२७॥ कच्चिन्न तद्धेमसमानवर्णं तस्याननं पद्मसमानगन्धि । मया विना शुष्यति शोकदीनं जलक्षये पद्ममिवातपेन ॥ २८ ॥ धर्मापदेशात्त्यजतश्च राज्यं मां चाप्यरण्यं नयतः पदातिम् । नासीद्व्यथा यस्य न भीर्न शोकः कच्चिच्च धैर्यं हृदये करोति ॥ २९ ॥

हेमशब्देन तद्वर्ण उच्यते । अभेदेन हेमवत्स्पृहणीयमित्यर्थः । मया विनेति जलक्षयस्थानम् । शोकदीनमित्यातपस्थानम् ॥ २८ ॥ धर्मापदेशाद्धर्मोद्देशार्थम्, धर्ममुद्दिश्येत्यर्थः । यद्वा धर्मव्याजाद्धेतोः । राज्यत्यागाद्व्यथा नासीत् । अरण्यसञ्चाराद्भीर्नासीत् । मत्पादसञ्चाराच्छोको नासीत् । सः

सुखानामिति । अनुचित एव अनौचितः । उत्तरं दुःखम् उत्कृष्टं दुःखम् ॥ २१ ॥ २२ ॥ शोकेन राघव इति । परितप्यत इति शेषः ॥ २३–२७ ॥ हेमसमानवर्णं हेमवर्णवत् स्पृहणीयवर्णमित्यर्थः ॥ २८ ॥ धर्मापदेशात् धर्मोद्देशेन, धर्ममुद्दिश्येति यावत् । राज्यत्यागात् व्यथा मनश्चलनम्, अरण्यसञ्चाराद्भीतिः, सीतापादसञ्चाराच्छोकः यस्य नास्ति सः हृदये धैर्यं करोति कच्चिदिति सम्बन्धः ॥ २९ ॥

तादृशधैर्ययुक्तो रामो मद्विश्लेषेऽपि हृदये धैर्यं करोति कच्चित् ? ॥ २९ ॥ धैर्याकरणे हेतुमाह—न चास्येति । प्रवृत्तिं मदानयनवार्ताम् । प्रणयरोषपक्षे किमेष पितृवचनपरिपालनाय वनं प्राप्तः ? न, किन्तु ममैव हिंसायै इति भावः । रामस्यैव दोषः न ममेति सीतयोक्ते वयमेव किं सम्यक् स्थितवन्तः रामविश्लेषानन्तरक्षणे न तनुस्त्यक्ता हीत्येवं हनुमदाशयं ज्ञात्वाऽऽह—न चास्येति । रामस्य मात्रादयः अन्यो बन्धुश्च स्नेहाद्विशिष्टा न भवन्ति । लोके

न चास्य माता न पिता च नान्यः स्नेहाद्विशिष्टोऽस्ति मया समो वा । तावत्त्वहं दूत जिजीविषेयं यावत् प्रवृत्तिं शृणुयां प्रियस्य ॥ ३० ॥ इतीव देवी वचनं महार्थं तं वानरेन्द्रं मधुरार्थमुक्त्वा । श्रोतुं पुनस्तस्य वचोऽभिरामं रामार्थयुक्तं विरराम रामा ॥ ३१ ॥ सीताया वचनं श्रुत्वा मारुतिर्भीमविक्रमः । शिरस्यञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ॥ ३२

कस्यचिन्माता पिता भ्रातेत्येवं स्नेहो विसृत्वरो भवति । नचैवं रामस्य मात्रादिषु संभावितः । सर्वोऽपि मय्येकमार्गः कृतः । यावत्प्रियस्य प्रवृत्तिं शृणुयां शृणोमि तावज्जिजीविषेयं जीवेयम् । इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं जीवनमिहाभिधीयते । रामः 'न मांसं राघवो भुङ्क्ते' इत्युक्तरीत्या भोजनम् 'अनिद्रः सततं रामः' इति निद्रां च हित्वा समुद्रं बद्ध्वा समागच्छन् तापार्तैं प्रपां गते तस्यां भिन्नपानीयपात्रायां सत्यामिव मयि नष्टायां न जीवेत् । अतस्तदागमनपर्यन्तं मया जीवितव्यं परतन्त्रशरीरत्वात् । तदागमनानन्तरमपि यदि जीविष्यामि तदेत्थं वदेदिति भावः । एतावत्पर्यन्तं वानरेति संबोध्य संप्रति दूतेत्याह, रामविषयप्रणयरोषस्य दूतपर्यन्तं व्यापनात् । तेन प्रहितः खलु भवानपीति भावः । प्रणयरोषाभावपक्षेपि—न चास्येति । अस्य माता चास्मिन् स्नेहात् मत्तः न विशिष्टा मया न समा च । यथाऽहमस्मिन् स्निग्धा तथा नान्य इत्यर्थः । एतदेवोत्तरार्धेन समर्थयति तावदिति ॥ ३० ॥ इतीव पूर्वं कतिपयानर्थान् विविच्योक्तवान्, संप्रति प्रणयधारासूक्ष्ममृपीणामपदं हि, तत इतीवेत्याह । देवी वल्लभाया व्यवहारो बहिष्ठानां न प्रतिभाति हि । वचनं महार्थं न केवलं बहिष्ठानाम् देशिकानामस्माकमपीत्यर्थः, महार्थमित्युक्तेः । तं वानरेन्द्रम् सुग्रीवस्य शेषत्वेऽभिषिक्तत्वेऽपि पारतन्त्र्ये हनुमानभिषिक्त इत्यर्थः । मधुरार्थं माधुर्येण मध्ये हनुमान्न वक्तुमारभतेति भावः । उक्त्वा स तदीयाश्च यथाऽभिवर्धन्ते

इदानीं धैर्याकरणे किं कारणमित्याशङ्क्य मद्वियोग एव कारणमित्याशयेनाह—न चास्येति । अस्य रामस्य अस्मिन् समये माता च स्नेहान्मत्तो विशिष्टा मया न समा च यथा अहमस्मि तथा पिता च न भवतीत्यर्थः । अत एव प्रवृत्तिं मदानयनोद्योगवार्ताम् ॥ ३० ॥ रामार्थयुक्तं राम एवाभिधेयः तद्युक्तम् ॥ ३१ ॥ ३२ ॥

तथोक्त्वा । श्रोतुं पुनस्तस्य वचोऽभिरामं स्ववचनानुकूलोत्तरं श्रोतुम् । रामार्थयुक्तं रामप्रयोजनयुक्तम्, रामरूपाभिधेययुक्तं वा । विरराम स्वयं चिरभाषणात् स्वामिन्यां भाषमाणायां मध्ये भृत्येनोक्त्ययोगाच्च तूष्णींभूतस्यावकाशप्रदानमकरोत् । रामा पारम्पर्य्यं विना साक्षाद्वचःसौन्दर्यदर्शनं रामेण न लब्धं हीति मुनिः खिद्यति॥३१॥३२॥ न त्वामिति । रामः "न जीवेयं क्षणमपि विना तामसितेक्षणाम्" इत्यध्यवसायी कथं नागच्छेत् । कमललोचने

न त्वामिहस्थां जानीते रामः कमललोचने। तेन त्वां नानयत्याशु शचीमिव पुरन्दरः ॥ ३३ ॥ श्रुत्वैव तु वचो मह्यं क्षिप्रमेष्यति राघवः । चमूं प्रकर्षन् महतीं हर्यृक्षगणसङ्कुलाम् ॥ ३४ ॥ विष्टम्भयित्वा बाणौघैरक्षोभ्यं वरुणालयम् । करिष्यति पुरीं लङ्कां काकुत्स्थः शान्तराक्षसाम् ॥३५॥ तत्र यद्यन्तरा मृत्युर्यदि देवाः सहासुराः । स्थास्यन्ति पथि रामस्य स तानपि वधिष्यति ॥ ३६ ॥ तवादर्शनजेनार्ये शोकेन स परिप्लुतः । न शर्म लभते रामः सिंहार्दित इव द्विपः ॥ ३७ ॥ मलयेन च विन्ध्येन मेरुणा मन्दरेण च । दर्दुरेण च ते देवि शपे मूलफलेन च ॥ ३८ ॥ यथा सुनयनं वल्गु बिम्बोष्ठं चारुकुण्डलम् । मुखं द्रक्ष्यसि रामस्य पूर्णचन्द्रमिवोदितम् ॥ ३९ ॥

त्वन्नयनसौन्दर्यं दर्पणतलेऽपि किन्न दृष्टवती भवती । एतत्सौन्दर्यवतीं कथं त्वां विना स तिष्ठेत् । तेन अनेन हेतुना । आशु त्वां नानयति । शचीं पुरन्दर इव । अनुह्लादहस्तगतां शचीमिन्द्रः कञ्चित्कालमविज्ञाय ज्ञानानन्तरं यथा आनीतवान् तथेति भावः ॥ ३३ ॥ मह्यं मम । व्यत्ययेन षष्ठ्यर्थे चतुर्थी ॥ ३४ ॥ समुद्रं कथमतिक्रमिष्यतीत्यत्राह–विष्टम्भयित्वेति । विष्टम्भयित्वा स्तब्धं कृत्वेत्यर्थः ॥ ३५ ॥ तत्रेति । स्थास्यन्ति, प्रतिबन्धकतयेति शेषः ॥ ३६ ॥ ३७॥ गिरीणां स्वजीवनस्थानत्वात्तैः शपति–मलयेनेति । दर्दुरो नाम मलयपरिसरवर्ती चन्दनप्रभवः कश्चित्पर्वतः ॥३८॥ यथेति । तथा

न त्वामिति । शचीं पुरन्दर इवेति । अनुह्लादनीतां शचीं पुरन्दरः कञ्चित्कालमविज्ञाय ततो ज्ञात्वा यथा आनीतवान् तद्वदित्यर्थः ॥ ३३ ॥ मह्यं मम ॥ ३४ ॥ विष्टम्भयित्वा अपविध्येत्यर्थः ॥ ३५ ॥ तत्र त्वदानयनरूपकार्ये । मृत्युर्यदि अन्तरा पथि रामस्य स्थास्यति, देवा यदि स्थास्यन्ति, विघ्नकारित्वेनेति शेषः । तानपि वधिष्यतीति योजना ॥ ३६ ॥ ३७ ॥ स्वोक्तार्थे देवीविश्वासार्थं स्वोपजीवनिवासफलमूलादिना शपथं करोति–दर्दुरेणेति । दर्दुरेण पर्वतेन यथा रामस्य मुखं द्रक्ष्यसि अस्मिन्नर्थे दर्दुरादिना शपे विश्वासयामीति श्लोकत्रयस्य सम्बन्धः ॥ ३८ ॥ ३९ ॥

शप इति पूर्वेणान्वयः ॥ ३९ ॥ क्षिप्रमिति । नाकपृष्ठो नाम इन्द्रस्यासाधारणस्वर्गस्थानविशेषः ॥ ४० ॥ न मांसमिति । "दृङ्मनःसङ्गसङ्कल्पजागराः कृशताऽरतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥" इति दशावस्थास्वरतिरनेनोच्यते । मांसाद्यभोजनम् अरत्या ततः पूर्वं तद्भोजनोक्तेः । वन्यं वने भवं कन्दमूलादिकम् । सुविहितं वानप्रस्थयोग्यत्वेन विहितम् । भक्तम् अन्नम् । पञ्चमं प्रातःसङ्गवमध्याह्नापराह्णसायंरूपेषु कालेषु पञ्चमकालिकं

क्षिप्रं द्रक्ष्यसि वैदेहि रामं प्रस्रवणे गिरौ । शतक्रतुमिवासीनं नाकपृष्ठस्य मूर्धनि ॥ ४० ॥ न मांसं राघवो भुङ्क्ते न चापि मधु सेवते । वन्यं सुविहितं नित्यं भक्तमश्नाति पञ्चमम् ॥ ४१ ॥ नैव दंशान्न मशकान् न कीटान्न सरीसृपान् । राघवोऽपनयेद्गात्रात् त्वद्गतेनान्तरात्मना ॥ ४२ ॥ नित्यं ध्यानपरो रामो नित्यं शोकपरायणः । नान्यच्चिन्तयते किञ्चित् स तु कामवशं गतः ॥ ४३ ॥ अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः । सीतेति मधुरां वाणीं व्याहरन् प्रतिबुद्ध्यते ॥ ४४ ॥ दृष्ट्वा फलं वा पुष्पं वा यद्वाऽन्यत् सुमनोहरम् । बहुशो हा प्रियेत्येवं श्वसंस्त्वामभिभाषते ॥ ४५ ॥

शरीरधारणमात्रोपयुक्तं भुङ्क्त इत्यर्थः ॥ ४१ ॥ अथ मनःसङ्गावस्थामाह—नैवेति । दंशास्तु वनमक्षिकाः तान् । मशकांश्चेत्यनेन दंशमशकापरिज्ञानमुक्तम् । कीटसरीसृपोक्त्या उपरिशरीरं चरतामनिवृत्तिरुच्यते । तत्र हेतुः त्वद्गतेनान्तरात्मना । परकायप्रविष्टस्य कथं त्यक्तशरीरविकृतिज्ञानम् ? तत्र स्थितः खलु तत्रत्यपीडां ज्ञास्यतीति भावः ॥४२॥४३॥ तथाऽस्य जागरावस्थामाह—अनिद्र इति । अनिद्रः सततं रामः निद्रया सर्वदा कालक्षेपार्होऽपि सन्त तमनिद्रोऽभूत् । सुप्तोऽपि चेत्यनेन परगतार्थानुसन्धानाभाव उच्यते । नरोत्तमः अभिमतविश्लेषे तथाऽवस्थानमेव हि पुरुषोत्तमस्य लक्षणमिति

नागराजस्य ऐरावतस्य । नाकपृष्ठस्येति पाठे सर्वोपरीत्यर्थः ॥४०॥ वन्यं मूलफलादिकम् । सुविहितं परिग्राह्यत्वेन आरण्यकशास्त्रचोदितम् । भक्तम् अन्नम् । पञ्चमं पञ्चानामन्नानां पूरणम् । वानप्रस्था हि मूलफलादिकं पञ्चधा कृत्वा देवपित्रतिथिभृतेभ्यस्तद्भागान् दत्त्वा पञ्चमं स्वयं भुञ्जते । पञ्चमकालसिद्धं पञ्चममिति वा । प्रातस्सङ्गवमध्याह्नापराह्णसायाह्नेषु पंचसु कालेषु चतुरो भोजनकालानतीत्य पञ्चमे काले भुङ्क्त इत्यर्थः । यद्वा "षोडशारण्यवासिनः" इत्युक्तवानप्रस्थभोज्यस्य पञ्चमांशं भुङ्क्ते । अनेन रामस्यात्यल्पाहारतोक्ता ॥ ४१–४३ ॥ अनिद्र एव कथञ्चित्सुप्तोऽपीति सम्बन्धः ॥ ४४–४६ ॥

भावः । सीतेति अप्राकृतसौन्दर्याद्यनुसंधानेन वासनावशाद्विलपति । मधुरां वाणीम् वासनावशाद्विलपत्यपि शब्दस्वभावाद्रसना जलस्यन्दिनी भवती त्यर्थः । प्रतिबुद्ध्यते क्लेशहीनदशाविगमात्पुनरपि बाधकोद्दीपनसन्दर्शनेन बाधादिः स्थित इत्यर्थः ॥ ४४–४६ ॥ सा रामेति । रामसद्भावातिशङ्कया कश्चिच्छोकः सीतायाः रामविहरेण कश्चिच्छोकः । तत्राद्यो हनुमदुक्त्या निवृत्तः, द्वितीयस्तु वर्तत इत्याह रामस्य शोकेन समानशोका । तद्विरहकृत

स देवि नित्यं परितप्यमानस्त्वामेव सीतेत्यभिभाषमाणः । दृढव्रतो राजसुतो महात्मा तवैव लाभाय कृतप्रयत्नः ॥ ४६ ॥ सा रामसङ्कीर्तनवीतशोका रामस्य शोकेन समानशोका । शरन्मुखे साम्बुदशेषचन्द्रा निशेव वैदेहसुता बभूव ॥ ४७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

सीता तद्वचनं श्रुत्वा पूर्णचन्द्रनिभानना । हनूमन्तमुवाचेदं धर्मार्थसहितं वचः ॥ १ ॥
अमृतं विषसंसृष्टं त्वया वानर भाषितम् । यच्च नान्यमना रामो यच्च शोकपरायणः ॥ २ ॥
ऐश्वर्ये वा सुविस्तीर्णे व्यसने वा सुदारुणे । रज्ज्वेव पुरुषं बद्ध्वा कृतान्तः परिकर्षति ॥ ३ ॥

त्वेन तत्तुल्यशोका । अधिकशोकस्तु निवृत्त इति भावः । यद्वा रामसङ्कीर्तनेन वीतशोकापि 'नैव दंशान्न मशकान्' इत्यादिश्रवणेन रामतुल्यशोका प्रकाशाप्रकाशशरन्मुखनिशेवाभूदित्यर्थः ॥ ४७ ॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥३६॥
सीतेत्यादि ॥ १ ॥ अमृतमिति । यच्च नान्यमना इत्यमृतत्वे हेतुः । यच्च शोकपरायण इति विषसंसृष्टत्वे ॥ २ ॥ रामवियोगो न स्वबुद्धिकृत

सा रामेति । रामसङ्कीर्तनवीतशोका 'अनिद्रः सततं रामः' इति रामसङ्कीर्तनेन वीतशोका । 'न मांसं राघवो भुङ्क्ते' इत्युक्तशोकेन हेतुना समानशोका सा साम्बुदशेषः चन्द्रो यस्यास्सा साम्बुदशेषचन्द्रा प्रकाशाप्रकाशयुक्ता निशेव बभूवेत्यर्थः ॥ ४७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां षट्त्रिंशः सर्गः ॥ ३६ ॥ ॥ १ ॥ यच्च अनन्यमना इति वाक्यमाख्यायते तदमृतं, यच्च शोकपरायण इति वाक्यमाख्यायते तद्विषम् ॥ २ ॥ कृतान्तः दैवम् ॥ ३ ॥

इत्याह—ऐश्वर्य इति। कृतान्तः दैवम् ॥ ३ ॥ विधिः दैवम् । असंहार्यः अनिवार्यः ॥ ४—७ ॥ दशमो मासः दशममासान्तः ॥ ८ ॥ निर्यातनं प्रत्य

विधिर्नूनमसंहार्यः प्राणिनां प्लवगोत्तम। सौमित्रिं मां च रामं च व्यसनैः पश्य मोहितान् ॥ ४ ॥ शोकस्यास्य कदा पारं राघवोऽधिगमिष्यति । प्लवमानः परिश्रान्तो हतनौः सागरे यथा ॥ ५ ॥ राक्षसानां वधं कृत्वा सूद यित्वा च रावणम्। लङ्कामुन्मूलितां कृत्वा कदा द्रक्ष्यति मां पतिः ॥ ६ ॥ स वाच्यः सन्त्वरस्वेति यावदेव न पूर्यते। अयं संवत्सरः कालस्तावद्धि मम जीवितम् ॥ ७ ॥ वर्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गम । रावणेन नृशंसेन समयो यः कृतो मम ॥ ८ ॥ विभीषणेन च भ्रात्रा मम निर्यातनं प्रति । अनुनीतः प्रयत्नेन न च तत् कुरुते मतिम् ॥ ९ ॥ मम प्रतिप्रदानं हि रावणस्य न रोचते । रावणं मार्गते सङ्ख्ये मृत्युः कालवशं गतम् ॥ १० ॥ ज्येष्ठा कन्याऽनला नाम विभीषणसुता कपे। तया ममेदमाख्यातं मात्रा प्रहितया स्वयम् ॥ ११ ॥ [ अविन्ध्यो नाम मेधावी विद्वान् राक्षसपुङ्गवः । द्युतिमाञ्छीलवान् वृद्धो रावणस्य सुसंमतः ॥ रामक्षयमनुप्राप्तं रक्षसां प्रत्य चोदयत् । न च तस्य स दुष्टात्मा शृणोति वचनं हितम् ॥ ] असंशयं हरिश्रेष्ठ क्षिप्रं मां प्राप्स्यते पतिः । अन्तरात्मा हि मे शुद्धस्तस्मिंश्च बहवो गुणाः ॥ १२ ॥ उत्साहः पौरुषं सत्त्वमानृशंस्यं कृतज्ञता । विक्रमश्च प्रभावश्च सन्ति वानर राघवे ॥ १३ ॥ चतुर्दश सहस्राणि राक्षसानां जघान यः । जनस्थाने विना भ्रात्रा शत्रुः कस्तस्य नोद्विजेत् ॥ १४ ॥

र्पणम् ॥ ९—१२ ॥ उत्साह इति । लोकोत्तरेषु कार्येषु स्थेयान् प्रयत्न उत्साहः । पौरुषं तादृक्कार्यकरणम् । सत्त्वं बलम् । आनृशंस्यम् अक्रूरत्वम् । कृतज्ञता उपकारज्ञत्वम् । विक्रमः शौर्यम् । प्रभावः शक्तिः ॥ १३ ॥ १४ ॥

असंहार्यः अनिवार्यः ॥ ४-८ ॥ निर्यातनं प्रत्यर्पणम् । तत्र निर्यातनं प्रति ॥ ९-११ ॥ पतिः प्राप्स्यते । कुतः ? अन्तरात्मेति ॥ १२ ॥ गुणानेवाह—उत्साह इति । लोकोत्तरेषु कार्येषु स्थेयान् प्रयत्नः उत्साहः । पौरुषं तादृक्कार्यकरणम् । सत्त्वं बलम् । आनृशंस्यम् अक्रौर्यम् । विक्रमः शौर्यम् । प्रभावः शक्तिः ॥ १३ ॥ तस्य

न स इति । तुलयितुं चालयितुम् ॥ १५-२२ ॥ त्वद्दर्शनेति । नाकराजस्य मूर्धनि नाकपृष्ठसंज्ञकस्य मूर्धनि । नगराजस्येति पाठे मेरोरित्यर्थः ॥२३॥



न स शक्यस्तुलयितुं व्यसनैः पुरुषर्षभः । अहं तस्य प्रभावज्ञा शक्रस्येव पुलोमजा ॥ १५ ॥ शरजालांशुमाञ्छूरः कपे रामदिवाकरः । शत्रुरक्षोमयं तोयमुपशोषं नयिष्यति ॥ १६ ॥ इति संजल्पमानां तां रामार्थे शोककर्शिताम् । अश्रुसम्पूर्णनयनामुवाच वचनं कपिः ॥१७॥ कृत्वैव तु वचो मह्यं क्षिप्रमेष्यति राघवः । चमूं प्रकर्षन् महतीं हर्यृक्षगणसङ्कुलाम् ॥१८॥ अथवा मोचयिष्यामि त्वामद्यैव वरानने । अस्माद्दुःखादुपारोह मम पृष्ठमनिन्दिते ॥ १९ ॥ त्वां तु पृष्ठगतां कृत्वा सन्तरिष्यामि सागरम् । शक्तिरस्ति हि मे वोढुं लङ्कामपि सरावणाम् ॥ २० ॥ अहं प्रस्रवणस्थाय राघवायाद्य मैथिलि । प्रापयिष्यामि शक्राय हव्यं हुतमिवानलः ॥ २१ ॥ द्रक्ष्यस्यद्यैव वैदेहि राघवं सह लक्ष्मणम् । व्यवसायसमायुक्तं विष्णुं दैत्यवधे यथा ॥ २२ ॥ त्वद्दर्शनकृतोत्साहमाश्रमस्थं महाबलम् । पुरन्दरमिवासीनं नाकराजस्य मूर्धनि ॥ २३ ॥ पृष्ठमारोह मे देवि मा विकाङ्क्षस्व शोभने । योगमन्विच्छ रामेण शशाङ्केनेव रोहिणी ॥ २४ ॥ कथयन्तीव चन्द्रेण सूर्येण च महार्चिषा । मत्पृष्ठमधिरुह्य त्वं तराकाशमहार्णवौ ॥ २५ ॥ न हि मे संप्रयातस्य त्वामितो नयतोऽङ्गने । अनुगन्तुं गतिं शक्ताः सर्वे लङ्कानिवासिनः ॥ २६ ॥

मा विकाङ्क्षस्व मोपेक्षिष्ठाः ॥ २४ ॥ कथयन्तीवेति । चन्द्रेण कथयन्तीव चन्द्रेण भाषमाणेव तरेत्यन्वयः ॥ २५-२७ ॥

तस्मात ॥ १४ ॥ तुलयितुं चलयितुम् ॥ १५-१९ ॥ समुद्रलङ्घनपूर्वकं देवीप्रापणे स्वस्य महती शक्तिरस्तीति देवीं विश्वासयति-त्वां हीति ॥ २०-२३ ॥ मा विकाङ्क्षस्व मोपेक्षिष्ठा इत्यर्थः ॥ २४ ॥ मत्पृष्ठमधिरुह्य महार्चिषा चन्द्रेण सूर्येण च कथयन्तीव सम्भाषमाणेव आकाशमहार्णवौ तरेति सम्बन्धः । तथा अत्युन्नत



स०-त्वत्पृष्ठारोहणे किं फलमित्यत आह-कथयन्तीतिं । त्वं मत्पृष्ठारोहिणीति रोहिणी अतिसुखात्मकत्वाच्छशी रामः । यद्वा शशी रामः "नक्षत्राणामहं शशी" इति श्रीभगवदुक्तेः । कथयन्तीव सङ्गमिष्यसि रामेण सङ्गस्यमित्यालापनसमय एव सङ्गमिष्यसि । अनेनातित्वरा द्योत्यते ॥ २९ ॥

मैथिली त्विति। हर्षविस्मितसर्वाङ्गी हर्षेण पुलकितसर्वाङ्गी ॥ २८–३१ ॥ न मे जानाति सत्त्वं वा प्रभावं वाऽसितेक्षणा । तस्मात्पश्यतु वैदेही

यथैवाहमिह प्राप्तस्तथैवाहमसंशयः । यास्यामि पश्य वैदेहि त्वामुद्यम्य विहायसम् ॥२७॥ मैथिली तु हरिश्रेष्ठात् श्रुत्वा वचनमद्भुतम् । हर्षविस्मितसर्वाङ्गी हनुमन्तमथाब्रवीत् ॥ २८ ॥ हनुमन् दूरमध्वानं कथं मां वोढुमिच्छसि । तदेव खलु ते मन्ये कपित्वं हरियूथप ॥२९॥ कथं वाऽल्पशरीरस्त्वं मामितो नेतुमिच्छसि । सकाशं मानवेन्द्रस्य भर्तुर्मे प्लवगर्षभ ॥३०॥ सीताया वचनं श्रुत्वा हनुमान् मारुतात्मजः। चिन्तयामास लक्ष्मीवान् नवं परिभवं कृतम् ॥३१॥ न मे जानाति सत्त्वं वा प्रभावं वाऽसितेक्षणा । तस्मात् पश्यतु वैदेही यद्रूपं मम कामतः ॥ ३२ ॥ इति सञ्चिन्त्य हनुमांस्तदा प्लवगसत्तमः । दर्शयामास वैदेह्याः स्वरूपमरिमर्दनः ॥ ३३ ॥ स तस्मात् पादपाद्धीमा नाप्लुत्य प्लवगर्षभः । ततो वर्धितुमारेभे सीताप्रत्ययकारणात् ॥ ३४ ॥ मेरुमन्दरसङ्काशो बभौ दीप्तानलप्रभः । अग्रतो व्यवतस्थे च सीताया वानरोत्तमः ॥ ३५ ॥ हरिः पर्वतसङ्काशस्ताम्रवक्त्रो महाबलः । वज्रदंष्ट्रनखो भीमो वैदेहीमिदमब्रवीत् ॥ ३६ ॥ सपर्वतवनोद्देशां साट्टप्राकारतोरणाम् । लङ्कामिमां सनाथां वा नयितुं शक्तिरस्ति मे ॥ ३७ ॥ तदवस्थाप्यतां बुद्धिरलं देवि विकांक्षया । विशोकं कुरु वैदेहि राघवं सहलक्ष्मणम् ॥ ३८ ॥

यद्रूपं मम कामतः ॥ इति पाठः । अन्यथापाठे वक्ष्यमाणेन विरोधस्स्यात् ॥३२॥ स्वरूपं स्वस्य शरीरम् ॥ ३३ ॥ एतदेवाह–स तस्मादिति । अयं श्लोको वर्धनार्थं वृक्षादवरोहणं दर्शयति स्म। अनेन सोऽवतीर्य द्रुमादिति पूर्वं द्रुमाग्रात्सीतासमीपस्थशाखायामवतरणमुक्तम्, अत्र भूमाविति बोध्यम् ॥ ३४ ॥ मेरुमन्दरेति । अग्रतो व्यवतस्थे, सम्भाषणाय वृक्षमूलगतो बभूवेत्यर्थः ॥ ३५–३७ ॥ अवस्थाप्यतां निश्चलीक्रियताम् । विकांक्षया

यथा त्वां गृहीत्वा गच्छामीति भावः ॥ २५–२७ ॥ मैथिलीति । हर्षविस्मितसर्वाङ्गी हर्षेण पुलकितसर्वाङ्गीत्यर्थः ॥ २८–३३ ॥ पादपात् पादपमूलात् आप्लुत्य शरीरवर्धनवेगकृतशाखाभङ्गध्वनिना राक्षस्यो ज्ञास्यन्तीति मत्वा अन्यत्रापसृतवानित्यर्थः ॥ ३४ ॥ अग्रतो योग्यप्रदेशे व्यवतस्थे ॥ ३५–३७ ॥ विकाङ्क्षया

उपेक्षया ॥ ३८–४१ ॥ संप्रधार्या विचारणीया ॥ ४२ ॥ स्वप्रापणे प्रधानं दोषं हृदि कृत्वा आपाततो दोषमाह—अयुक्तमिति ॥ ४३ ॥ उपर्युपरि

तं दृष्ट्वा भीमसङ्काशमुवाच जनकात्मजा । पद्मपत्रविशालाक्षी मारुतस्यौरसं सुतम् ॥ ३९ ॥ तव सत्त्वं बलं चैव विजानामि महाकपे। वायोरिव गतिं चापि तेजश्चाग्नेरिवाद्भुतम् ॥४०॥ प्राकृतोऽन्यः कथं चेमां भूमिमागन्तुमर्हति। उदधेरप्रमेयस्य पारं वानरपुङ्गव ॥ ४१ ॥ जानामि गमने शक्तिं नयने चापि ते मम। अवश्यं संप्रधार्याशु कार्यं सिद्धिर्महात्मनः॥ ४२ ॥ अयुक्तं तु कपिश्रेष्ठ मम गन्तुं त्वयाऽनघ । वायुवेगसवेगस्य वेगो मां मोहयेत्तव ॥ ४३ ॥ अहमाकाशमापन्ना ह्युपर्युपरि सागरम् । प्रपतेयं हि ते पृष्ठाद्भयाद्वेगेन गच्छतः ॥ ४४ ॥ पतिता सागरे चाहं तिमिनक्रझषाकुले । भवेयमाशु विवशा यादसामन्नमुत्तमम् ॥ ४५ ॥ न च शक्ष्ये त्वया सार्धं गन्तुं शत्रुविनाशन । कलत्रवति सन्देहस्त्वय्यपि स्यादसंशयः ॥४६॥ ह्रियमाणां तु मां दृष्ट्वा राक्षसा भीमविक्रमाः । अनुगच्छेयुरादिष्टा रावणेन दुरात्मना ॥ ४७ ॥ तैस्त्वं परिवृतः शूरैः शूलमुद्गरपाणिभिः । भवेस्त्वं संशयं प्राप्तो मया वीर कलत्रवान् ॥ ४८ ॥ सायुधा बहवो व्योम्नि राक्षसास्त्वं निरायुधः । कथं शक्ष्यसि संयातुं मां चैव परिरक्षितुम् ॥ ४९ ॥

सागरमिति । "उपर्यध्यधसस्सामीप्ये" इति द्विर्वचनम् । "धिगुपर्यादिषु त्रिषु" इति द्वितीया ॥ ४४ ॥ यादसां जलजन्तूनाम् ॥ ४५ ॥ कलत्रवति रक्ष्यवति त्वयि सन्देहः स्यात्, मयि रक्ष्यायां त्वयि विपत्सन्देहः स्यादित्यर्थः ॥ ४६ ॥ एतदेव प्रपञ्चयति—ह्रियमाणामित्यादिना ॥ ४७ ॥ त्वं तैः परिवृतो भवेः । कलत्रवान् रक्ष्यवान् त्वं संशयं प्राप्तश्च भवेरिति योजना ॥ ४८ ॥ सायुधा इति । संयातुं सम्यग्योद्धुम् ॥ ४९ ॥

उपेक्षया, अश्रद्धयेत्यर्थः ॥ ३८–४३ ॥ अहमिति । सागरं सागरोल्लङ्घनमुद्दिश्येत्यर्थः । उपर्युपरि वेगेन गच्छतस्ते पृष्ठात् आकाशमापन्नाऽहं भयात् प्रपतेयमिति सम्बन्धः ॥ ४४ ॥ ४५ ॥ कलत्रवति रक्ष्यद्रव्यवति त्वय्यपि सन्देहः प्राणसन्देहः ॥ ४६ ॥ ४७ ॥ तैः. परिवृतो भवेः संशयं प्राप्तो भवेरिति वाक्यभेदेन युष्मच्छब्दयोर्निर्वाहः । कलत्रवान् रक्ष्यभारवानित्यर्थः ॥ ४८ ॥ ४९ ॥

पूर्वश्लोकोक्तं समर्थयति-युद्ध्यमानस्येत्यादिना ॥ ५० ॥ अथेति । साम्पराये युद्धे ॥ ५१ ॥ अथवेति । विमुखस्य युद्धपरवशस्येत्यर्थः ॥ ५२–५५ ॥

युद्ध्यमानस्य रक्षोभिस्तव तैः क्रूरकर्मभिः । प्रपतेयं हि ते पृष्ठाद् भयार्ता कपिसत्तम ॥ ५० ॥ अथ रक्षांसि भीमानि महान्ति बलवन्ति च । कथंचित् साम्पराये त्वां जयेयुः कपिसत्तम ॥ ५१ ॥ अथवा युद्ध्यमानस्य पतेयं विमुखस्य ते । पतितां च गृहीत्वा मां नयेयुः पापराक्षसाः ॥ ५२ ॥ मां वा हरेयुस्त्वद्धस्ताद् विशसेयुरथापि वा । अव्यवस्थौ हि दृश्येते युद्धे जयपराजयौ ॥ ५३ ॥ अहं वापि विपद्येयं रक्षोभिरभितर्जिता । त्वत्प्रयत्नो हरिश्रेष्ठ भवेन्निष्फल एव तु ॥ ५४ ॥ कामं त्वमसि पर्याप्तो निहन्तुं सर्वराक्षसान् । राघवस्य यशो हीयेत्त्वया शस्तैस्तु राक्षसैः ॥ ५५ ॥ अथवाऽऽदाय रक्षांसि न्यसेयुः संवृते हि माम् । यत्र ते नाभिजानीयुर्हरयो नापि राघवौ । आरम्भस्तु मदर्थोऽयं ततस्तव निरर्थकः ॥ ५६ ॥ त्वया हि सह रामस्य महानागमने गुणः ॥ ५७ ॥ मयि जीवितमायत्तं राघवस्य महात्मनः । भ्रातॄणां च महाबाहो तव राजकुलस्य च ॥ ५८ ॥ तौ निराशौ मदर्थं तु शोकसन्तापकर्शितौ । सह सर्वर्क्षहरिभिस्त्यक्ष्यतः प्राणसंग्रहम् ॥ ५९ ॥ भर्तृभक्तिं पुरस्कृत्य रामादन्यस्य वानर । न स्पृशामि शरीरं तु पुंसो वानरपुङ्गव ॥ ६० ॥

संवृते गूढप्रदेशे ॥ ५६ ॥ ५७ ॥ रामानु०—अतो ममावस्थानं रामाय विज्ञाप्य तेन सहागमनं मच्छ्रेयस्स्यादित्याह—त्वया हीति ॥ ५७ ॥ मयीति । तव राजकुलस्य सुग्रीवराज तथापि साहसकरणं न कर्तव्यमित्याशयेनाह—युद्ध्यमानस्येत्यादिश्लोकद्वयेन ॥ ५० ॥ ५१ ॥ तत्र पतनपक्षे अनर्थमाह—अथवेति । ते पृष्ठादिति शेषः ॥ ५२ ॥ पराजयपक्षे अत्यनर्थमाह—मां वेति । पराजयं सम्भावयति अव्यवस्थौ हीति ॥ ५३ ॥ अथ मा भूतां पतनपराजयौ, रक्षस्तर्जनैरेव मे मरणं स्यादित्याह—अहं वेति ॥ ५४ ॥ इदानीं हनुमतः सर्वशक्तिमङ्गीकृत्य युक्त्यन्तरमाह—काममिति । शस्तैः निहतैः ॥ ५५ ॥ पराजयपक्षे दोषान्तरमाह—अथवेति । संवृते गूढप्रदेशे । आरम्भः समुद्रलङ्घनादिप्रयत्नः ॥ ५६ ॥ किमत्र हितमत आह—त्वयेति ॥ ५७ ॥ मम नाशाद्दर्शनयोर्न केवलं त्वदारम्भवैकल्यम्, दुरन्तो महाननर्थः स्यादित्याशयेनाह—मयीत्यादिना । राघवस्य जीवितं मयि आयत्तं मज्जीविताधीनं जीवितमित्यर्थः । राजकुलस्य सुग्रीवकुलस्य ॥ ५८ ॥ प्राणसंग्रहं प्राणसर्वस्वम् ॥ ५९ ॥ ननु रावणाङ्गसंस्पर्शः

कुलस्य॥५८–६०॥अनीशा स्वयं किंचित्कर्तुमसमर्था । विनाथा विगतस्वामिका । विवशा विचेष्टा ॥६१॥६२॥ श्रुता इति । प्रथमहिशब्दो गुणप्रसिद्धौ । द्वितीयो निस्समत्वप्रसिद्धौ ॥६३–६५॥ हर्षितां हर्षमासादिताम्, उत्तरोत्तरहर्षवतीमित्यर्थः । अनया भक्तिकया उपायान्तरं स्वरूपविरुद्धं भगवत्प्राप्तौ

यदहं गात्रसंस्पर्शं रावणस्य बलाद्गता । अनीशा किं करिष्यामि विनाथा विवशा सती ॥६१॥ यदि रामो दशग्रीव मिह हत्वा सबान्धवम् । मामितो गृह्य गच्छेत तत्तस्य सदृशं भवेत् ॥ ६२ ॥ श्रुता हि दृष्टाश्च मया पराक्रमा महात्मनस्तस्य रणावमर्दिनः । न देवगन्धर्वभुजङ्गराक्षसा भवन्ति रामेण समा हि संयुगे ॥६३॥ समीक्ष्य तं संयति चित्रकार्मुकं महाबलं वासवतुल्यविक्रमम् । सलक्ष्मणं को विषहेत राघवं हुताशनं दीप्तमिवानिलेरितम् ॥ ६४ ॥ सलक्ष्मणं राघवमाजिमर्दनं दिशागजं मत्तमिव व्यवस्थितम् । सहेत को वानरमुख्य संयुगे युगान्तसूर्यप्रतिमं शरार्चिषम् ॥ ६५ ॥ स मे हरिश्रेष्ठ सलक्ष्मणं पतिं सयूथपं क्षिप्रमिहोपपादय । चिराय रामं प्रति शोककर्शितां कुरुष्व मां वानरमुख्य हर्षिताम् ॥६६॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमत्सुन्दरकाण्डे सप्तत्रिंशः सर्गः॥३७॥

स एवोपाय इति दर्शितः ॥ ६६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७॥

कथं स्यादित्यत आह-भर्तुर्भक्तिमिति । यस्मात्कारणात् । भर्तुर्भक्तिं पुरस्कृत्य भर्तुर्भक्त्या लक्ष्मणःप्रस्थापितः तस्मात् रावणस्य गात्रसंस्पर्शं बलाद्गतेति सम्बन्धः।हा सीते लक्ष्मणेति मारीचवाक्यं श्रुत्वा रामानर्थशङ्कया भर्तृभक्त्या लक्ष्मणप्रस्थापनात् प्राप्तोऽयमनर्थो न कामकृत इति भावः । अनीशा स्वयं किंचित्कर्तुमशक्नुवती । विवशा विचेष्टा। विनाथा विगतस्वामिका, असन्निहितनाथेत्यर्थः ॥ ६० ॥ ६१ ॥ अथ सिद्धान्तमाविष्करोति--यदीति । राक्षसवधरावणवधपूर्वकं मत्प्रापणं रामस्य सदृशम् अन्यमुखेन मत्प्रापणमनुचितमिति भावः ॥ ६२ ॥ नचाशक्तिचिन्ता रामे कार्येत्याह–श्रुताहीति ॥६३–६५॥ हरिश्रेष्ठ ! स त्वं मे पतिमिहोपपादय, इहानयेत्यर्थः । चिराय चिरकालं शोककर्शितां मां हर्षितां कुरु ॥ ६६ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां सप्तत्रिंशः सर्गः ॥ ३७ ॥

स०-रणावमर्दिनः रणे वैर्यवमर्दी । रणे अवन्ति रक्षयन्ति आगच्छन्ति स्वानिति वा रणावाः, तान्मर्दयतीति वा ॥ ६३ ॥ वासवतुल्यविक्रमं वासवोऽपि तुल्यविक्रमः शौर्यतानुसारिपराक्रमो येन स तथा । इतरोऽर्थः स्फुटः ॥ ६४ ॥ सयूथपं ससुग्रीवम् । कपिश्रेष्ठ वानरवीरेति प्रलापकालत्वाद्विरुक्तिः । यद्वा रामं प्रति शोककर्शितां नरसिंह रामेण हर्षितां कुरुष्वेत्यर्थः ॥ ६६ ॥

ततः स इत्यादि । तच्छ्रुत्वा तेन वाक्येन हर्षितः वाक्यमुवाच ॥ १ ॥ युक्तरूपं युक्ततरमित्यर्थः । "प्रशंसायां रूपप्" । प्राशस्त्यं चात्र प्रकृत्यर्थवैशिष्ट्यम् । स्त्रीस्वभावस्य भीरुत्वादेः । साध्वीनां पतिव्रतानाम् । विनयस्य वृत्तस्य ॥ २ ॥ विस्तीर्णं मामधिष्ठाय शतयोजनमायतं सागरं व्यतिवर्तितुं

ततः स कपिशार्दूलस्तेन वाक्येन हर्षितः । सीतामुवाच तच्छ्रुत्वा वाक्यं वाक्यविशारदः ॥ १ ॥ युक्तरूपं त्वया देवि भाषितं शुभदर्शने । सदृशं स्त्रीस्वभावस्य साध्वीनां विनयस्य च ॥ २ ॥ स्त्रीत्वं न तु समर्थं हि सागरं व्यतिवर्तितुम् । मामधिष्ठाय विस्तीर्णं शतयोजनमायतम् ॥ ३ ॥ द्वितीयं कारणं यच्च ब्रवीषि विनयान्विते । रामादन्यस्य नार्हामि संस्पर्शमिति जानकि ॥४॥ एतत्ते देवि सदृशं पत्न्यास्तस्य महात्मनः । का ह्यन्या त्वामृते देवि ब्रूयाद्वचनमीदृशम् ॥ ५ ॥ श्रोष्यते चैव काकुत्स्थः सर्वं निरवशेषतः । चेष्टितं यत्त्वया देवि भाषितं मम चाग्रतः ॥ ६ ॥ कारणैर्बहुभिर्देवि रामप्रियचिकीर्षया । स्नेहप्रस्कन्नमनसा मयैतत् समुदीरितम् ॥ ७ ॥ लङ्काया दुष्प्रवेशत्वाद्दुस्तरत्वान्महोदधेः । सामर्थ्यादात्मनश्चैव मयैतत् समुदीरितम् ॥ ८ ॥

तत्तु स्त्रीत्वं न समर्थं हि । स्त्री न समर्थेत्यर्थः । यद्वा सागरस्य शतयोजनम् आयतं विस्तीर्णं च मामधिष्ठायापि स्त्रीत्वं व्यतिवर्तितुम् अपगन्तुं न समर्थं हि । सागरस्य शतयोजनं यावत्तावदायतं तथा विस्तीर्णं च मामधितिष्ठन्त्या अपि तव स्त्रीत्वं भीरुत्वं नापगच्छतीत्यर्थः ॥ ३-५ ॥ श्रोष्यत इति । त्वया चेष्टितम् उद्बन्धनादिकम् । भाषितं रावणं तृणीकृत्य फणितम्, मम प्रत्युत्तरत्वेन कथितं च ॥ ६ ॥ बहुभिः कारणैः बहुभिरुपायैः । स्नेहप्रस्कन्नमनसा स्नेहशिथिलमनसा ॥७॥ लङ्काया इति । दुष्प्रवेशलङ्काप्रवेशे दुस्तरसागरतरणे च मम शक्तिरस्तीति ज्ञापयितुमेवमुक्तमित्यर्थः ॥८॥

॥ १ ॥ युक्तरूपं युक्ततमम् । प्रशंसायां रूपप्प्रत्ययः । स्त्रीस्वभावस्य भीरुत्वादेः । साध्वीनां त्वादृशीनां पतिव्रतानां विनयस्य वृत्तस्य सदृशम् ॥ २ ॥ संक्षेपेणोक्तमर्थं श्लोकद्वयेन विवृणोति—स्त्रीत्वमित्यादिना । विस्तीर्णमपि मामधिष्ठाय शतयोजनमायतं सागरं व्यतिवर्तितुं तत्तु स्त्रीत्वं न समर्थं हि स्त्री न समर्थेत्यर्थः । यद्वा स्त्रीत्वमित्यत्र स्त्री इति छेदः । समर्थमिति लिङ्गव्यत्यय आर्षः । स्त्रीभूता त्वं सागरं व्यतिवर्तितुं न समर्था हीत्यर्थः । स्त्रीणां भीरुस्वभावत्वात्तत्तु भूषणमेवेति भावः । सागरस्य निवर्तितुमिति पाठे सागरस्य यादृक्छतयोजनं तावदायतं विस्तीर्णमपि मामधिष्ठाय निवर्तितुमुपगन्तुं स्त्री त्वं न समर्थेति योजना ॥ ३-५ ॥ श्रोष्यते चेति । चेष्टितम् उद्बन्धनादिकं ममाग्रतः भाषितं रावणं तृणीकृत्य कथितं च ॥ ६ ॥ कारणैः त्वद्दुःखहेतून् दृष्ट्वेत्यर्थः ॥ ७ ॥ ८ ॥

रघुबन्धुना रघुवंश्येन । " सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः " इत्यमरः । रघुवंश्यानां बन्धुना तत्कीर्तिसम्पादकेनेत्यर्थः । समानेतुं सङ्गमयितुम् । इच्छामि ऐच्छम् ॥ ९ ॥ १० ॥ एवमिति । बाष्पप्रग्रथिताक्षरं बाष्पेण विग्रिताक्षरम् । एकान्तवृत्तान्तस्मरणात् बाष्पः ॥ ११ ॥ इद मित्यादिश्लोकद्वयमेकान्वयम् । चित्रकूटस्य पादे चित्रकूटपर्यन्तपर्वते । मन्दाकिन्या अदूरे सिद्धैराश्रिते प्राज्यमूलफलोदके तस्मिन्देशे तापसाश्रम

इच्छामि त्वां समानेतुमद्यैव रघुबन्धुना । गुरुस्नेहेन भक्त्या च नान्यथैतदुदाहृतम् ॥ ९ ॥ यदि नोत्सहसे यातुं मया सार्धमनिन्दिते । अभिज्ञानं प्रयच्छ त्वं जानीयाद्राघवो हि तत् ॥ १० ॥ एवमुक्ता हनुमता सीता सुरसुतोपमा । उवाच वचनं मन्दं बाष्पप्रग्रथिताक्षरम् ॥ ११ ॥ इदं श्रेष्ठमभिज्ञानं ब्रूयास्त्वं तु मम प्रियम् । शैलस्य चित्रकूटस्य पादे पूर्वोत्तरे पुरा ॥ १२ ॥ तापसाश्रमवासिन्याः प्राज्यमूलफलोदके । तस्मिन् सिद्धाश्रमे देशे मन्दाकिन्या ह्यदूरतः ॥ १३ ॥ तस्योपवनषण्डेषु नानापुष्पसुगन्धिषु । विहृत्य सलिलक्लिन्ना तवाङ्के समुपाविशम् ॥ १४ ॥ ततो मांससमायुक्तो वायसः पर्यतुण्डयत् । तमहं लोष्टमुद्यम्य वारयामि स्म वायसम् ॥ १५ ॥ दारयन् स च मां काकस्तत्रैव परिलीयते । न चाप्युपारमन्मांसाद्भक्षार्थी बलिभोजनः ॥ १६ ॥

वासिन्याः तापसाश्रमे वसन्त्याः मम इदं वक्ष्यमाणं श्रेष्ठमभिज्ञानं प्रियं प्रति त्वं ब्रूया इति योजना ॥ १२ ॥ १३ ॥ रामाय सीतया वक्तव्यं वचनं हनुमन्तं प्रत्युच्यते—तस्येत्यादि ॥१४॥ तत इति । मांससमायुक्तः मांसप्रतिलुब्धः । "आयुक्तकुशलाभ्यां च" इत्यत्र आयुक्तशब्दस्य तात्पर्यपरतया व्याख्यानात् । लोष्टं मृत्पिण्डम् । पर्यतुण्डयत्पर्यखण्डयत्, स्तनान्तर इति शेषः । " तुडि तोडने " इत्ययं धातुश्चौरादिकः ॥ १५ ॥ दारयन्निति । रघुबन्धुना रघुसगोत्रेण रामेण त्वां समानेतुं सङ्गमयितुमिच्छामीत्युदाहृतम् । एतत् गुरुस्नेहेन अन्यथा नेति सम्बन्धः ॥ ९–११ ॥ इदमित्यादि श्लोकद्वयमेकं वाक्यम् । चित्रकूटस्य पादे चित्रकूटस्य समीपपर्वते पूर्वोत्तरे ईशान्यकोणे मन्दाकिन्या ह्यदूरतः सिद्धाश्रमे प्राज्यं बहु बहुमूलफलोदके तस्मिन देशे वृत्तं तापसाश्रमवासिन्या मम इदं वक्ष्यमाणं श्रेष्ठमभिज्ञानं प्रियं प्रति त्वं ब्रूया इति योजना ॥ १२ ॥ १३ ॥ तवाङ्के समुपाविशमिति । ननु हनुमन्तमुद्दिश्याभिज्ञानं वक्तुमुपक्रान्ता देवी रामं सम्बोध्य किमर्थं कथयतीति चेत् ? सत्यम्, मह्यमभिज्ञानं वक्तुमुपक्रान्ता त्वामेवाभिमुखीकृत्य एवमुत्तरं प्रादादिति हनुमता रामाय वाचयितुमिति न दोषः ॥ १४ ॥ तत इति । पर्यतुण्डयत पर्यखण्डयत, स्तनान्तर इति शेषः ॥ १५ ॥ १६ ॥

परिलीयते अन्तर्हितो भवति स्म । बलिभोजनः काकः ॥ १६ ॥ उत्कर्षन्त्यां च रशनां काकोत्सारणार्थमिति शेषः ॥ १७ ॥ भक्षगृध्रेन भक्षलोलुपेन । दारिता विदारिता । त्वामुपागता पुनरुत्सङ्गमाविशमित्येताभ्यां काकोत्सारणार्थमङ्कादुत्थानमनुधावनं च कृतं देव्येत्यवगम्यते । रामाङ्के

उत्कर्षन्त्यां च रशनां क्रुद्धायां मयि पक्षिणि । स्रस्यमाने च वसने ततो दृष्टा त्वया ह्यहम् ॥ १७ ॥ त्वयाऽपहसिता चाहं क्रुद्धा संलज्जिता तदा । भक्षगृध्रेन काकेन दारिता त्वामुपागता ॥ १८ ॥ आसीनस्य च ते श्रान्ता पुनरुत्सङ्गमाविशम् । क्रुद्ध्यन्ती च प्रहृष्टेन त्वयाऽहं परिसान्त्विता ॥ १९ ॥ बाष्पपूर्णमुखी मन्दं चक्षुषी परिमार्जती । लक्षिताऽहं त्वया नाथ वायसेन प्रकोपिता ॥ २० ॥ परिश्रमात् प्रसुप्ता च राघवाङ्केऽप्यहं चिरम् । पर्यायेण प्रसुप्तश्च ममाङ्के भरताग्रजः । स तत्र पुनरेवाथ वायसः समुपागमत् ॥ २१ ॥ ततः सुप्तप्रबुद्धां मां रामस्याङ्कात् समुत्थिताम् । वायसः सहसाऽऽगम्य विददार स्तनान्तरे ॥ २२ ॥ पुनः पुनरथोत्पत्य विददार स मां भृशम् । ततः समुक्षितो रामो मुक्तैः शोणितबिन्दुभिः ॥ २३ ॥ वायसेन ततस्तेन बलवत्क्लिश्यमानया । स मया बोधितः श्रीमान् सुखसुप्तः परन्तपः ॥ २४ ॥

केवलं स्थिताऽस्मि । तदा काको मां किंचिद्दारयत् । तं दृष्ट्वा तत्पलायनार्थं स्वयमायासं कुर्वन्तीं तदशक्त्या रुदन्तीं मां रामः परिहासपूर्वकं सान्त्वितवानित्यर्थः । अनेन स्वरक्षणे स्वयं प्रवृत्तश्चेदीश्वर उपेक्षते, स्वयमप्रवृत्तौ स रक्षतीति द्योतितम् ॥ १८–२३ ॥ वायसेनेति । सः निखिललोकविदितनिरतिशयसौन्दर्यप्रसिद्धः । मया बोधितः मयैवाहं हता, स्वापकालिकश्रीविशेषाननुभवात् । लोके कश्चित्सञ्चारदशायां सुन्दर इव भाति शयने दुर्लक्षणादिभिर्दोषा दृश्यन्ते न तथाऽयम् । श्रीमान् स्वापकालिकश्रीरुच्यते । सुखसुप्तः तत्त्वानुगुणैव हि सुप्तिरपि । परन्तपः शयनमेव सकलशत्रुनिवर्तनक्षममित्यर्थः । सुप्तः श्रीमान् । लोके स्थानगमनशयनादिदशायां रूपवानिव लक्ष्यते कश्चित् । संशयने प्रकाशितप्रच्छन्नदोषतया

उत्कर्षन्त्यामिति । पक्षिणा वसने स्रस्यमाने सति रशनामुत्कर्षन्त्याम् आकृष्यमाणायां मयि क्रुद्धायां सत्यां ततः तदा त्वया अहं दृष्टाऽस्मीति सम्बन्धः ॥ १७ ॥ भक्षगृध्रेन भक्षलोलुपेन । दारिता विदारिता । त्वामुपागता पुनरुत्सङ्गमाविशमित्येताभ्यां काकोत्सारणार्थम् अङ्कादुत्थानमनुधावनं च देव्या कृतमित्यवगम्यते ॥ १८–२१ ॥ त्वयि स्वपिति मयि जाग्रत्यामित्यर्थः । सुप्तप्रबुद्धां राघवाङ्के सुप्त्वा ततः प्रबुद्धामत एव राघवाङ्कादुत्थितां वायसः पुनरागम्य स्तनान्तरे

जुगुप्सितो भवति । अयं तु शयनावस्थायामेव नीराजना कर्तव्या दृष्टिदोषपरिहारायेत्येवं स्थितः ॥ २४ ॥ वितुन्नां दारिताम् ॥ २५ ॥ पञ्चवक्त्रेण व्यात्तमुखेन । "पचि विस्तारे" इत्यस्मात्पचाद्यच् । कार्यातिशयद्योतनार्थं वा पञ्चसङ्ख्याकवक्त्रत्वोक्तिः । नागनासोरु नागहस्तोरु । कुपितपञ्च

स मां दृष्ट्वा महाबाहुर्वितुन्नां स्तनयोस्तदा । आशीविष इव क्रुद्धः श्वसन् वाक्यमभाषत ॥ २५ ॥ केन ते नागनासोरु विक्षतं वै स्तनान्तरम् । कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ॥ २६ ॥ वीक्षमाणस्ततस्तं वै वायसं समुदैक्षत । नखैः सरुधिरैस्तीक्ष्णैर्मामेवाभिमुखं स्थितम् ॥ २७ ॥ पुत्रः किल स शक्रस्य वायसः पततां वरः । धरान्तरगतः शीघ्रं पवनस्य गतौ समः ॥२८॥ ततस्तस्मिन् महाबाहुः कोपसंवर्तितेक्षणः । वायसे कृतवान् क्रूरां मतिं मतिमतां वरः ॥ २९ ॥ स दर्भं संस्तराद् गृह्य ब्राह्मेणास्त्रेण योजयत् । स दीप्त इव कालाग्निर्जज्वालाभिमुखो द्विजम् ॥३०॥ स तं प्रदीप्तं चिक्षेप दर्भं तं वायसं प्रति । ततस्तं वायसं दर्भः सोऽम्बरेऽनुजगाम ह ॥३१॥ अनुसृप्तस्तदा काको जगाम विविधां गतिम् । लोककाम इमं लोकं सर्वं वै विचचार ह ॥ ३२ ॥ स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः । त्रींल्लोकान् संपरिक्रम्य तमेव शरणं गतः ॥ ३३ ॥

वक्त्रक्रीडासमं तव स्तनविदारणमिति भावः ॥ २६ ॥ २७॥ ननु वायसमात्रे किमर्थमस्त्रं मुक्तमित्याशङ्क्याह–पुत्रः किलेति । इदं रक्षणानन्तरं तेनैवोक्तमिति ज्ञेयम् । किलेति प्रसिद्धौ । इन्द्रपुत्रत्वेन प्रसिद्धो जयन्त एव वायसरूपेणागत इत्याहुः । वायसरूपोऽन्यः पुत्र इत्यप्याहुः ॥ २८ ॥ २९ ॥ स दर्भमिति । संस्तरात् आस्तरणात् । गृह्य गृहीत्वा । अस्त्रेण अस्त्रमन्त्रेण । योजयत् अयोजयत्, अभिमन्त्रितवानित्यर्थः । द्विजं काकम् ॥३०॥३१॥ अनुसृप्तः अनुसृतः । विविधां गतिं विविधं स्थानम् । लोककामः लोकयितृकामः रक्षकापेक्षीत्यर्थः ॥ ३२ ॥ भगवद्व्यतिरिक्ता बान्धवाभासा न रक्षका इत्याह–स पित्रेति । सः पुरुषकारभूतायामपि कृतापराधः सः आर्द्रापराधः । पित्रा च परित्यक्तः अस्त्रक्षतिभीततया प्रथमं पितरं रक्षकं

विददार व्यलिखत ॥ २२–२६ ॥ वीक्षमाण इतस्ततः, प्रान्तदेशमित्यर्थः ॥ २७ ॥ धरान्तरगतः भूमिं प्राप्तः ॥२८॥ कोपेन संवर्तिते विवर्तिते ईक्षणे येन सः ॥२९॥ दर्भं संस्तरात् गृह्य गृहीत्वा योजयत् अयोजयत् । द्विजं काकम् ॥ ३० ॥ ३१ ॥ अनुसृप्तः अनुसृतः । लोककामः रक्षकजनाकाङ्क्षी ॥ ३२ ॥ पित्रा परित्यक्तः,

गतः तेन त्रैलोक्याधिपतिना च त्यक्तः। "इन्द्रो महेन्द्रः सुरनायको वा" इति [illegible]। परित्यक्तः त्यागोऽपि नापाततः बुद्धिपूर्वं त्यक्तः। "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्" इति न्यायात्। यद्वा परित्यक्तः भार्यापुत्रादिभिस्सह त्यक्तः। चकारेण माता समुच्चीयते। न केवलं हितपरेण पित्रा, प्रियपरया मात्रा च परित्यक्तः, "सीता नारीजनस्यास्य योगक्षेमं विधास्यति" इति स्वरक्षकभूतायामपि सापराधत्वादिति भावः। पित्रपेक्षया मातुर्वात्सल्यातिशयात्तामेव प्रथमं गच्छति स्म ततः पितरम्। पित्रा त्यागवचनान्मात्रा त्यागः सिद्ध एवेति चकारेण सूचितम्।

स तं निपतितं भूमौ शरण्यः शरणागतम्। वधार्हमपि काकुत्स्थः कृपया पर्यपालयत् ॥ ३४ ॥

पितृभ्यां त्यागेऽपि बान्धवा न त्यजन्ति। किं पितरौ सर्वथा त्यक्ष्यत इति तैरपि त्यक्त इत्याह सुरैश्च। "कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे" इति रामनयने रक्ते तेऽपि बिभ्यति हि। एवं पूर्वसजातीयैस्त्यक्तत्वेऽपि परिगृहीतपक्षिरूपसजातीयैः किं त्यक्त इत्यपेक्षायां तथेत्याह चकारेण। "पक्षिणोऽपि प्रयाचन्ते सर्वभूतानुकम्पिनम्" इति पक्षिणामपि शरण्यत्वात्, स्वनायकगरुडस्वामित्वाच्च पक्षिभिरपि परित्यक्तः। समहर्षिभिः पित्रादिबन्धूनामरक्षकत्वेऽपि आनृशंस्यप्रधाना महर्षयो रक्षिष्यन्तीति गतः, तैरपि प्रकामं दूरदर्शिभिः परित्यक्तः। आनृशंस्यविषयव्यवस्थाऽस्तीति तैस्त्यक्त इत्यर्थः। एतदङ्गीकारे वयमपि संसर्गदोषेण नश्येम। अस्माभिस्त्यागेऽनन्यगतिकत्वाद्राम एनं स्वीकरिष्यतीति तैस्त्यक्तः। महर्षिभिः "यो विष्णुं सततं द्वेष्टि तं विद्यादन्त्यरेतसम्" इति विष्णुद्वेषेण चण्डालत्वात् "चण्डालः पक्षिणां काकः" इत्युक्तेश्च चण्डालो नास्मद्वाटमागच्छेदिति त्यक्तः। एवं रक्षकान्तरादर्शनान्नष्टगजो घटमप्यन्वेषत इति न्यायेन स्वैरविवृतद्वारान्सर्वान् गृहान् गत इत्याह त्रीन् लोकान् संपरिक्रम्य। परिक्रम्य एतदेव नवकृत्वो गतः। संपरिक्रम्य गृहस्थैरविज्ञाततया कवाटमूलेषु लीनश्चेत्यर्थः। अपि कदाचित् कृपैषामुत्पद्येतेति मत्वा पुनः पुनर्गत इत्यर्थः। अमुं निष्कास्य कवाटबन्धनं सर्वैः कृतमित्यर्थः। ततः किं कृतमित्यत्राह तमेव शरणं गतः। रक्षकत्वेन प्राप्तापेक्षया हिंसकत्वेन स्थितस्य मुखमेव शीतलमित्यवस्थितः। अतस्तमेव शरणं गतः। "यदि वा रावणस्स्वयम्" इत्येवं स्थितो हि रामः। तमेव सर्वलोकशरण्यमेव। तमेव 'दोषो यद्यपि न त्यजेयम्' इति स्थितम्। शरणं गतः निवासं गतः। न तूपायतया गतः। "निवासवृक्षः साधूनाम्" इत्युक्तेः ॥३३॥ स तमिति। सः रक्षणैकस्वभावः। तं प्रातिकूल्यैकनिरतम्। भूमौ निपतितं

स्वर्गेऽपीति शेषः। पित्रेत्युपलक्षणं ब्रह्मान्तानाम् ॥ ३३ ॥ पर्यपालयद, प्राणरक्षणेनेति शेषः ॥ ३४ ॥ ३५ ॥

देवजातितया भूमिमस्पृशन्तपि भूमौ पतितम्। भूमौ दुष्पुत्रं पितरि शिक्षमाणे स यथा मातुः पादयोः पतति तथाऽपतत्। शरण्यः सर्वावस्थास्वपि शरणवरणार्हः। शरणागतम् अनन्यगतिकतया स्वमुपागतम्। वधार्हमपि रामसिद्धान्तेनापि वधार्हम्। काकुत्स्थः कृपया पर्यपालयत् कुलोचितस्वभावेन रक्षितवान्। कृपया अस्मदाद्यारब्धं कार्यं प्रबलकर्मणा न समाप्यते तथा तेनारब्धमपि कृपया न पूर्यंत इति भावः ॥ ३४ ॥ न शर्मेत्यादि । परिद्यूनं

न शर्म लब्ध्वा लोकेषु तमेव शरणं गतः ॥ ३५ ॥ परिद्यूनं विषण्णं च स तमायान्तमब्रवीत् । मोघं कर्तुं न शक्यं तु ब्राह्ममस्त्रं तदुच्यताम् ॥ ३६ ॥ हिनस्तु दक्षिणाक्षि त्वच्छर इत्यथ सोऽब्रवीत् । ततस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् । दत्त्वा स दक्षिणं नेत्रं प्राणेभ्यः परिरक्षितः ॥ ३७ ॥ स रामाय नमस्कृत्वा राज्ञे दशरथाय च । विसृष्टस्तेन वीरेण प्रतिपेदे स्वमालयम् ॥ ३८ ॥ मत्कृते काकमात्रे तु ब्रह्मास्त्रं समुदीरितम् । कस्माद्यो मां हरत्त्वत्तः क्षमसे तं महीपते ॥ ३९ ॥ स कुरुष्व महोत्साहः कृपां मयि नरर्षभ । त्वया नाथवती नाथ ह्यनाथा इव दृश्यते ॥ ४० ॥ आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतः ॥ ४१ ॥

परितप्तम्। तदुच्यतामित्यनन्तरम् हिनस्तु दक्षिणाक्षि त्वच्छर इत्यथ सोऽब्रवीदित्यर्धमनुसन्धेयम् ॥ ३५–३७ ॥ रामानु०–तदुच्यतामिति प्रश्नानन्तरं हिनस्ति स्म स दक्षिणमिति वचनादत्रलक्ष्यत्वेन दक्षिणाक्षिप्रदानपरं प्रतिवचनं काकेन कृतमित्यवगम्यते ॥ ३७ ॥ दशरथाय स्वलोकस्थतया पूर्वमेव मित्रभूताय ॥ ३८ ॥ समुदीरितं प्रमुक्तम् । हरत् अहरत् ॥ ३९ ॥ सः परदुःखं दृष्ट्वा न सहामहे इत्युक्तवान् । त्वं महोत्साहः एतदनुष्ठानपर्यन्तं कुर्वन् मयि अत्यन्तदुःखितायां कृपां परदुःखासहिष्णुत्वं प्रकाशयितुमर्हसि । नरोत्तम ! एवं न करोषि चेत्तव नरोत्तमत्वस्य हानिरेव स्यात् । तस्मादेतद्वचनमनुष्ठानपर्यन्तं कृत्वा मां जीवयित्वा तव नरोत्तमत्वं परिपालयेति भावः । अनाथा इव अनाथेव । आर्षो गुणाभावः । आनृशंस्यं परो धर्मः । नात्रारोपणानन्तरं परिद्यूनं परितप्तम् । मोघमिति । उच्यतामिति प्रश्नानन्तरं हिनस्ति स्म स दक्षिणमिति वचनादत्रलक्ष्यत्वेन दक्षिणाक्षि काकेन दत्तमित्यवगम्यते ॥ ३६–३८ ॥ एवं हनूमते रामैकसंवेद्यमभिज्ञानमभिधाय दुःखावेशाद्राममेव बुद्धिस्थं सम्बोध्य सोपालम्भं प्रार्थयते–मत्कृतेत्यादिसार्धचतुष्टयेन । यः त्वत्तो मामहरत् तं रावणं कस्मात् क्षमसे, रक्षसि इत्यर्थः ॥ ३९ ॥ स त्वम् । आनृशंस्यम् अक्रौर्यम् ॥ ४० ॥ ४१ ॥

वेतनाभ्यर्थनवत्संश्लेषदशायां तवात्यन्ताभिमतो धर्मः क इति मया पृष्टे मद्दुःखं [illegible] परमो धर्म इति ममाभिमतं तथैव मत्स्वभाव इति त्वया रहस्योद्भेदनं कृतम्। त्वत्त एव न तु दूतमुखेन। मया श्रुतः इदं श्रवणमात्रपर्यवसायि जातम्, न त्वनुष्ठानपर्यवसायीति रामं पृच्छेति भावः। एवं पृच्छन्त्याः सीतायाः प्रत्युत्तरं दिशतो रामस्य च कोऽभिप्राय इति चेदुच्यते। एतस्य संश्लेषस्य विच्छेदो भवति चेत् किं करिष्यामीति

जानामि त्वां महावीर्यं महोत्साहं महाबलम्। अपारपारमक्षोभ्यं गाम्भीर्यात् सागरोपमम्। भर्तारं ससमुद्राया धरण्या वासवोपमम् ॥ ४२ ॥ एवमस्त्रविदां श्रेष्ठः सत्यवान् बलवानपि। किमर्थमस्त्रं रक्षस्सु न योजयति राघवः ॥ ४३ ॥ न नागा नापि गन्धर्वा नासुरा न मरुद्गणाः। रामस्य समरे वेगं शक्ताः प्रतिसमाधितुम् ॥ ४४ ॥ तस्य वीर्यवतः कश्चिद् यद्यस्ति मयि संभ्रमः। किमर्थं न शरैस्तीक्ष्णैः क्षयं नयति राक्षसान् ॥ ४५ ॥ भ्रातुरादेशमादाय लक्ष्मणो वा परन्तपः। कस्य हेतोर्न मां वीरः परित्राति महाबलः ॥ ४६ ॥ यदि तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ। सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः ॥४७॥ ममैव दुष्कृतं किंचिन्महदस्ति न संशयः। समर्थावपि तौ यन्मां नावेक्षेते परन्तपौ ॥ ४८ ॥

कातरतया पृष्टवती। सोऽपि मद्विरहक्लेशेन ताम्यन्तीं त्वां न कदाचिदपि पश्येयमित्युक्तवान्। अयमर्थोऽप्यरण्यकाण्डे "अप्यहं जीवितं जह्याम्" इति श्लोकप्रघट्टिकादौ दर्शितः ॥ ४० ॥ ४१ ॥ जानामीति। अपारपारं दुरधिगमपारम्, असीममित्यर्थः। दुरधिगमगुणसीममित्यर्थो वा ॥ ४२ ॥

रामा०—जानामीति। अपारपारम् "पार कर्मसमाप्तौ" इति धातोर्निष्पन्नत्वादत्र पारशब्देन कर्मसमाप्तिरुच्यते। अपाराः पाराः कर्मसमाप्तयो यस्य स तथोक्तः। निरवधिकापदान इत्यर्थः ॥४२॥

॥ ४३ ॥ प्रतिसमाधितुं प्रतिबद्धुम् ॥ ४४ ॥ संभ्रमः भाववृत्तिः ॥ ४५ ॥ ४६ ॥ उपेक्षतः उपेक्षेते। यदि तौ, सङ्गताविति शेषः ॥ ४७॥ समर्थौ विरोधिवर्गमुन्मूल्य मद्रक्षणानुगुणशक्तिमन्तौ। परन्तपौ इतः पूर्वं प्रतिपक्षनिर्दहनं कुर्वन्तौ। एवम्भूतावपि तौ मां प्राणपर्यन्तं रक्षणप्रवृत्त्यर्हदशां प्राप्तां मां नावेक्षेते इति यत् न कटाक्षयत इति यत् अस्य निमित्तं तयोर्वा मयि वा किंचिद्भवितुमर्हति। तत्र तद्विषये तादृशनिमित्तप्रसक्तिर्नास्ति सामर्थ्य

अपारपारं दूरपारम्, अप्राप्यगुणसीमान्तम् ॥ ४२–४४ ॥ सम्भ्रमः त्वरा ॥ ४५ ॥ ४६ ॥ यदि ताविति। सङ्गताविति शेषः। उपेक्षतः उपेक्षेते ॥ ४७ ॥ किंचिद

परन्तपत्वादिदर्शनात्। परिशेषान्ममैव पापम् अस्य निमित्तं भवितुमर्हति। यद्वा ममैव "द्विषन्तः पापकृत्याम्" इत्युक्तरीत्या अन्यतो नागतमित्यर्थः। किंचित् न हि वयं सर्वज्ञाः अस्माभिरज्ञातं किंचिद्भवितुमर्हति । महत् प्रारब्धफलतयाऽनुभवं विना दुष्परिहरम्। अस्ति न संशयः । कार्ये सति कारणे किमस्ति सन्देहः । यद्वा किंचिदनिर्वचनीयम् महद्दुष्कृतमस्तीत्यनेन " किं त्वाऽमन्यत वैदेहः " इत्यादिनोक्तो भगवदपचारः । उक्तं हि

वैदेह्या वचनं श्रुत्वा करुणं साश्रुभाषितम्। अथाब्रवीन्महातेजा हनूमान् मारुतात्मजः ॥ ४९ ॥ त्वच्छोकविमुखो रामो देवि सत्येन मे शपे। रामे दुःखाभिपन्ने च लक्ष्मणः परितप्यते ॥ ५० ॥ कथंचिद्भवती दृष्टा न कालः परिशोचितुम् ॥ ५१ ॥ इमं मुहूर्तं दुःखानां द्रक्ष्यस्यन्तमनिन्दिते। तावुभौ पुरुषव्याघ्रौ राजपुत्रौ महाबलौ ॥ ५२ ॥ त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ॥५३॥ हत्वा च समरे क्रूरं रावणं सहबान्धवम्। राघवस्त्वां विशालाक्षि नेष्यति स्वां पुरीं प्रति। ब्रूहि यद्राघवो वाच्यो लक्ष्मणश्च महाबलः ॥ ५४ ॥ सुग्रीवो वापि तेजस्वी हरयोऽपि समागताः। इत्युक्तवति तस्मिंश्च सीता सुरसुतोपमा। उवाच शोकसन्तप्ता हनुमन्तं प्लवङ्गमम् ॥५५॥ कौसल्या लोकभर्तारं सुषुवे यं मनस्विनी। तं ममार्थे सुखं पृच्छ शिरसा चाभिवादय ॥ ५६ ॥

" कीदृशं तु मया पापं पुरा देहान्तरे कृतम् " इति। देहान्तरे बालशरीरे ॥ ४८ ॥ वैदेह्या इति । साश्रु यथा तथा भाषितमुक्तम् ॥ ४९ ॥ त्वच्छोकेति। त्वच्छोकविमुखः त्वच्छोकेन विमुखः विषयान्तरपराङ्मुखः। प्रत्युत त्वय्येव दत्तचित्त इत्यर्थः ॥ ५० ॥ ५१ ॥ इमं मुहूर्तम् अस्मिन् मुहूर्ते। सप्तम्यर्थे द्वितीया ॥ ५२–५५ ॥ मनस्विनी लोकभर्तारं सुषुवे। लोके स्त्रियः इहलोकपरलोकयोः स्वरक्षणार्थं पुत्रान् सुवते नैवं मे श्वश्रूः। मनस्विनी विपुलमनस्का। सर्वलोकरक्षकः पुत्रो मे भवेदिति व्रतमनुष्ठाय लोकोपकाराय पुत्रं सूतवती। एवंभूतः कौसल्यासङ्कल्पः कथं मोघस्स्यात्। अहमत्र लोके न किमन्तर्भूता। तं ममार्थे सुखं पृच्छ अस्मद्रक्षणं न मया प्रार्थ्यं तच्चिन्ता तस्यैव, अस्मत्त्वरा तु विलम्बासहिष्णुतया, तस्मात् किमपि ॥ ४८ ॥ ४९ ॥ त्वच्छोकविमुखः त्वद्विश्लेषशोकेन स्वशरीररक्षणे पराङ्मुखः त्वद्देशगमनायेत्यर्थः ॥ ५० ॥ इमं मुहूर्तम् अस्मिन् मुहूर्ते ॥ ५१-५६ ॥

तत्सत्ता चेन्मद्रक्षणस्य न कापि हानिः ।-अतस्तत्सत्तैवास्माभिराशास्यते । तेन तस्य सुखमस्ति किमिति मया पृष्टमिति वद । एवंच लोकवदस्माभिश्च तस्मात्किंचिदपेक्षितं चेत् लोकैर्यत्कार्यं तत् कार्यं मयापि कार्यमित्याह शिरसा चाभिवादय । अहं तं शिरसा प्रणतवत्यस्मीति तमभिवादय । प्रणिपातं कुर्वित्यर्थः । कथं नायिका नायकं शिरसा प्रणमेदिति चेत् आचारप्रधानजनककुलनन्दिन्यैवमनुष्ठितमिति किमत्र प्रमाणं प्रष्टव्यम् ? । प्रणयरोषेणैवमाहेति चेन्न । हनुमद्वचनेन तस्य शान्तत्वात् । ननु ममार्थे मत्कार्यसिद्ध्यर्थं तं प्रणमेत्यर्थः किं न स्यादिति चेत्, ममार्थ इत्यस्योभयत्रान्वयात् । पूर्व

स्रजश्च सर्वरत्नानि प्रिया याश्च वराङ्गनाः । ऐश्वर्यं च विशालायां पृथिव्यामपि दुर्लभम् ॥५७॥ पितरं मातरं चैव संमान्याभिप्रसाद्य च । अनुप्रव्रजितो रामं सुमित्रा येन सुप्रजाः ॥ ५८ ॥ आनुकूल्येन धर्मात्मा त्यक्त्वा सुख मनुत्तमम् । अनुगच्छति काकुत्स्थं भ्रातरं पालयन् वने ॥ ५९ ॥ सिंहस्कन्धो महाबाहुर्मनस्वी प्रियदर्शनः । पितृवद्वर्तते रामे मातृवन्मां समाचरन् ॥ ६० ॥ ह्रियमाणां तदा वीरो न तु मां वेद लक्ष्मणः ॥ ६१ ॥

मत्र मया पृष्टमिति पृच्छेत्यर्थस्यावश्यकत्वादत्रापि मया प्रणतमिति प्रणमेत्यस्य स्वरसत्वात् ॥ ५६ ॥ तनि०—लोके स्त्रियः स्वजीवनदशायां पोषकं पर त्रोत्तारकं च पुत्रमभिलषन्ति । कौसल्या तु विपुलमनस्कतया सर्वलोकरक्षकं पुत्रं प्रार्थ्य व्रताचरणेन लब्धवती । तत्प्रार्थना विफला किम् । अहं लोकशब्दान्तर्भूता न भवामि किम् । जलसमीपस्थितस्य सस्यस्य शुष्कतावत् सर्वावस्थास्वप्यनुसृताया मम रक्षणे तत्प्रार्थना संकुचिता किम् । तं ममार्थे सुखं पृच्छ मम रक्षणं न प्रार्थनीयम्, तस्य मनसि तिष्ठत्येव, किन्तु त्वया तस्य सुखजननेन भाव्यम् । तस्यावस्थाने अस्मद्रक्षणं भविष्यतीति तदेवाशास्यते । शिरसा चाभिवादय अग्निसाक्षिकं गृहीतपाणिना च रक्षणं कार्यं तन्न क्रियते, इतरसाधारण्येन वा रक्षणं क्रियताम् । तैर्यत्क्रियते तन्मयाप्यभिवादनं क्रियते इत्यस्मदर्थमभिवादनं कुरु ॥ ५६ ॥ स्रजश्चेति, सन्तीति शेषः । स्रगादयः सन्ति पृथिव्यां दुर्लभमैश्वर्यमप्यस्ति । तथा पितरं मातरं चैव संमान्य सुमित्रा येन सुप्रजाः सः राममनु प्रव्र जितः ॥ ५७ ॥ ५८ ॥ आनुकूल्येन भक्त्येत्यर्थः ॥ ५९ ॥ समाचरन् परिचरन् ॥ ६० ॥ ६१ ॥

पृथिव्यामपि दुर्लभमित्यत्र त्यक्त्वेत्याकृष्य योज्यम् । अनुप्रव्रजितो राममित्यत्र स इति शेषः ॥ ५७–५९ ॥ समाचरन् परिचरन् ॥ ६०–६२ ॥

वृद्धोपसेवीत्यादि । यस्यां धुरि यस्मिन्कार्यनिर्वाह इत्यर्थः ॥ ६२ ॥ ६३ ॥ यमिति । आर्यं श्वशुरं दशरथं नानुस्मरेत्, पितृवत्सम्यग्रक्षकत्वादिति भावः ॥ ६४ ॥ रामः यथा दुःखक्षयकरो भवेत्तथा वक्तव्यमित्यर्थः । कार्यनियोगे कार्यसङ्कटने । प्रमाणं व्यवस्थापकः ॥ ६५ ॥

वृद्धोपसेवी लक्ष्मीवान् शक्तो न बहु भाषिता । राजपुत्रः प्रियः श्रेष्ठः सदृशः श्वशुरस्य मे ॥ ६२ ॥ मम प्रियतरो नित्यं भ्राता रामस्य लक्ष्मणः । नियुक्तो धुरि यस्यां तु तामुद्वहति वीर्यवान् ॥ ६३ ॥ यं दृष्ट्वा राघवो नैव वृत्तमार्यमनुस्मरेत् । स ममार्थाय कुशलं वक्तव्यो वचनान्मम । मृदुर्नित्यं शुचिर्दक्षः प्रियो रामस्य लक्ष्मणः ॥ ६४ ॥ यथा हि वानरश्रेष्ठ दुःखक्षयकरो भवेत् । त्वमस्मिन् कार्यनियोगे प्रमाणं हरिसत्तम ॥ ६५ ॥ राघवस्त्वत्समारम्भान्मयि यत्नपरो भवेत् ॥ ६६ ॥ इदं ब्रूयाश्च मे नाथं शूरं रामं पुनः पुनः । जीवितं धारयिष्यामि मासं दशरथात्मज ॥ ६७ ॥ ऊर्ध्वं मासान्न जीवेयं सत्येनाहं ब्रवीमि ते । रावणेनोपरुद्धां मां निकृत्या पापकर्मणा ॥ ६८ ॥ त्रातुमर्हसि वीर त्वं पातालादिव कौशिकीम् । ततो वस्त्रगतं मुक्त्वा दिव्यं चूडामणिं शुभम् । प्रदेयो राघवायेति सीता हनुमते ददौ ॥ ६९ ॥

त्वत्समारम्भात्त्वदुत्साहात् ॥६६॥ इदमित्यादि । ऊर्ध्वं मासात्, रावणकृतमासद्वयावधिं न सहिष्य इति भावः । निकृत्या वञ्चनेन॥६७॥६८॥ पातालादिव कौशिकीम् । अत्रेतिकरणं द्रष्टव्यम् । इदं च ब्रूया इति पूर्वेणान्वयः । कौशिकः इन्द्रः तत्सम्बन्धिनी श्रीः कौशिकी तामिव । एवं ब्रह्मपुराणे श्रूयते– पुरा वृत्रवधे ब्रह्महत्याभिभूतं निश्श्रीकमिन्द्रं भगवान्नारायणो देवैस्सह वैष्णवेनाश्वमेधेन निष्कल्मषं कृत्वा त्रैलोक्यराज्येऽभिषिच्य पुरातनीं पौरन्दरीं श्रियमुपाह्वयत् । ततोऽशरीरवाक्याद्गवाक्षतीर्थवर्तिनीं तामुपश्रुत्य स देवदेवो देवाश्च तत्र जग्मुः । ततस्तान् दृष्ट्वा सा श्रीः पातालं प्रविवेश । तत्र प्रवेष्टु



यस्यां धुरि यं लक्ष्मणं नियुज्यैव स्वयं तां धुरं राम उद्वहति ॥६३॥ राघवः यं दृष्ट्वा वृत्तमतीतम् आर्यं दशरथं नानुस्मरेत् पितृवत्सम्यग्रक्षकत्वात् पितरं न स्मरतीति भावः ॥ ६४ ॥ यथेति । दुःखक्षयकरो भवेल्लक्ष्मणः तथा कर्तव्यमिति शेषः । त्वमेव कार्यनियोगे कार्यसङ्कटने प्रमाणं व्यवस्थापकः यतः अतो राघवः मयि यत्नपरो भवेदिति सम्बन्धः ॥६५–६७॥ ऊर्ध्वं मासान्न जीवेयमिति । रावणदत्तमासद्वयावधिमपि न सहिष्य इति भावः। निकृत्या तिरस्कारेण॥६८॥ पातालादिव

मशङ्कन्तो देवाः पुनरप्यशरीरं वाक्यं युष्मासु सर्वलक्षणसम्पन्नस्तां प्रतिनेतुमर्हतीत्युपश्रुत्य तमेव पुरुषोत्तमं प्रार्थयामासुः । स तत्र प्रविश्य पातालात् तां समुद्धृत्य तैस्सह शक्राय प्रादादिति । महाभारते तु—उतथ्यस्य भार्यां यमुनायां स्नान्तीं वरुणो हृत्वा पातालमनयत् । तामुतथ्यो नारदेन याचित्वा तामलब्ध्वा कुपितः पातालह्रदशोषेण तामवापेति श्रूयते । सा कौशिकीति केचित्कथयन्ति ॥ ६९ ॥ प्रतिगृह्येति । मणिरत्नं मणिश्रेष्ठम् ।

प्रतिगृह्य ततो वीरो मणिरत्नमनुत्तमम् । अङ्गुल्या योजयामास न ह्यस्य प्राभवद्भुजः ॥७०॥ मणिरत्नं कपिवरः प्रतिगृह्याभिवाद्य च । सीतां प्रदक्षिणं कृत्वा प्रणतः पार्श्वतः स्थितः ॥ ७१ ॥ हर्षेण महता युक्तः सीतादर्शनजेन सः । हृदयेन गतो रामं शरीरेण तु विष्ठितः ॥७२॥ मणिवरमुपगृह्य तं महार्हं जनकनृपात्मजया धृतं प्रभावात् । गिरिरिव पवनावधूतमुक्तः सुखितमनाः प्रतिसंक्रमं प्रपेदे ॥७३॥ इत्यार्षे० श्रीमत्सुन्दरकाण्डे अष्टात्रिंशः सर्गः ॥ ३८ ॥

अङ्गुल्या योजयामास, चूडामणेरधिष्ठानस्य पृष्ठे या केशसरणिः तत्राङ्गुलिं प्रावेशयदित्यर्थः । एवं तनीयसी किमङ्गुलिरित्यत्राह—न हीति । अस्य हनुमतः भुजः न प्राभवन्न स्थूलोऽभवत् । न तदानीं स महाकायः भुजश्च न स्थूलः तेनाङ्गुलिस्तनीयसीत्यर्थः । एतेन देव्यै प्रदर्शितं महद्रूपं विहाय पुरप्रवेशकालिकं सूक्ष्मरूपमङ्गीकृतवानित्यवगम्यते ॥ ७० ॥ मणिरत्नमिति । प्रणतः नम्रगात्रः ॥ ७१ ॥ ७२ ॥ मणिवरमिति । पवनावधूतमुक्तः महावातकम्पितः तेन रहितश्चेत्यर्थः । प्रतिसंक्रमं प्रतिप्रयाणं प्रपेदे प्राप्तुमुद्युक्तः । अस्मिन्सर्गे सार्धत्रिसप्ततिश्लोकाः ॥ ७३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टात्रिंशः सर्गः ॥ ३८ ॥

कौशिकीमिति । कौशिकीं देवेन्द्रस्य श्रियम् । पुरा किल वृत्रवधाद्ब्रह्महत्याभिभूतस्येन्द्रस्य लक्ष्मीं पातालप्रविष्टां देवप्रार्थितो भगवानादिनारायणः पातालादुद्धृत्य पुनरिन्द्राय श्रियं प्रायच्छदिति पौराणिकी कथाऽत्रानुसन्धेया ॥ ६९ ॥ मणिरत्नं मणिश्रेष्ठम् । अङ्गुल्या योजयामास अङ्गुल्या दधार । चूडामणेरधिष्ठानस्य हेमपुष्पस्य केशप्रवेशार्थं यो रन्ध्रः तत्र अङ्गुलीं प्रावेशयदित्यर्थः । ननु तदानीं हनूमतोऽसूक्ष्मरूपत्वात्तन्मणिविवरे सूक्ष्मरूपभूतासञ्जनमेव समञ्जसमत आह—नहीति । अस्य हनुमतो भुजः सूक्ष्मोऽपि न प्राभवन्न माति स्म, तत्र न प्राविशदित्यर्थः । न प्राभवद्भुज इति प्रतिषेधस्य प्रसक्तिपूर्वकत्वात् प्रसक्तेः सूक्ष्मरूप एव सम्भवात् भुजप्रतिषेधेन देव्यै प्रदर्शितमात्रं रूपं विहाय सूक्ष्मरूपेण स्थितवानित्यवगम्यते ॥ ७०-७२ ॥ मणिवरमिति । पवनावधूतमुक्तः महावातकम्पविक्षिप्तः । प्रतिसंक्रमं प्रतिप्रयाणम् । प्रपेदे प्रारभत ॥७३॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायामष्टात्रिंशः सर्गः ॥ ३८ ॥

मणिमित्यादि । अभिज्ञातं सम्यक् ज्ञातम् ॥ १ ॥ त्रयाणामिति "अधीगर्थदयेशां कर्मणि" इति षष्ठी । विवाहकाले शिरोमणिदातृत्वात्पित्रोः ग्रहीतृत्वाच्च मम स्मरणमिति भावः । पाणिग्रहणोत्सवे मम श्वशुराभ्यां प्रथमं शिरोभूषणतया एष दत्तः । अतः तीनस्मान् युगपत् स्मरिष्यतीत्यर्थ इत्याह कश्चित् । तदनुचितम् । " मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे । वधूकाले तथा बद्धमधिकं मूर्ध्नि शोभते " इत्युपरि वक्ष्यमाणत्वाद्विवाह

मणिं दत्त्वा ततः सीता हनुमन्तमथाब्रवीत् । अभिज्ञानमभिज्ञातमेतद्रामस्य तत्त्वतः ॥ १ ॥ मणिं तु दृष्ट्वा रामो वै त्रयाणां संस्मरिष्यति । वीरो जनन्या मम च राज्ञो दशरथस्य च ॥ २ ॥ स भूयस्त्वं समुत्साहे चोदितो हरिसत्तम । अस्मिन् कार्यसमारम्भे प्रचिन्तय यदुत्तरम् ॥ ३ ॥ त्वमस्मिन् कार्यनियोगे प्रमाणं हरिसत्तम । हनुमन् यत्नमास्थाय दुःखक्षयकरो भव । तस्य चिन्तयतो यत्नो दुःखक्षयकरो भवेत् ॥ ४ ॥ स तथेति प्रतिज्ञाय मारुतिर्भीमविक्रमः । शिरसाऽऽवन्द्य वैदेहीं गमनायोपचक्रमे ॥५॥ ज्ञात्वा संप्रस्थितं देवी वानरं मारुतात्मजम् । बाष्पगद्गदया वाचा मैथिली वाक्यमब्रवीत् ॥ ६ ॥ कुशलं हनुमन् ब्रूयाः सहितौ रामलक्ष्मणौ ॥ ७ ॥ सुग्रीवं च सहामात्यं वृद्धान् सर्वांश्च वानरान् । ब्रूयास्त्वं वानरश्रेष्ठ कुशलं धर्मसंहितम् ॥ ८ ॥ यथा स च महाबाहुर्मां तारयति राघवः । अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि ॥ ९ ॥

काले रामजनन्या अनागमनाच्च ॥ २ ॥ ३ ॥ त्वमिति । कार्यनियोगे कार्यसङ्कटने । प्रमाणं व्यवस्थापकः । चिन्तयतस्तस्य तवेति शेषः ॥ ४ ॥ स तथेति । आवन्द्येति पदच्छेदः ॥ ५ ॥ ६ ॥ कुशलमिति । ब्रूया इति । धर्मसंहितं धर्मसहितम् । धर्मपुरस्सरम् कुशलं ब्रूया इत्यर्थः ॥ ७ ॥ ८ ॥ दुःखाम्बुसंरोधात् । अम्बूनि संरुध्यन्ते अनेनेत्यम्बुसंरोधः जलधिः । समाधातुं राममनुकूलयितुम् ॥ ९ ॥

मणिं दत्त्वा रामस्यैतदभिज्ञातमभिज्ञानमित्यब्रवीदिति सम्बन्धः ॥ १ ॥ त्रयाणां संस्मरिष्यति । त्रयाणामिति कर्मणि षष्ठी । पाणिग्रहणकाले मम जननी इमं मणिं दशरथसन्निधौ जनकहस्तादादाय शिरोभूषणतया मह्यं दत्तवती अतो मम जननीं दशरथं जनकं मां च स्मरिष्यतीत्यर्थः ॥ २ ॥ ३ ॥ कार्यनियोगे कार्यसङ्कटने । प्रमाणं व्यवस्थापकः ॥ ४–८ ॥ दुःखाम्बुसंरोधात् अम्बुसंरोधो जलधिः । दुःखसागरादित्यर्थः । समाधातुं वक्तुमित्यर्थः ॥ ९–११ ॥

जीवन्तीं सम्भावयति जीवन्तीं करोतीत्यर्थः। तत्तथा अव्ययमेतत् । वचनस्य प्रयोजनमाह—वाचेति । वाचा धर्मं वाचिकधर्मम् ॥ १० ॥ तमेव धर्ममुपपादयति द्वाभ्याम्—नित्यमित्यादि ॥ ११–१५ ॥ पर्जन्यम् इन्द्रम् । "पर्जन्यौ रसदब्देन्द्रौ" इत्यमरः ॥ १६ ॥ स हीति । त्वन्निमित्त इति ।

जीवन्तीं मां यथा रामः सम्भावयति कीर्तिमान् । तत्तथा हनुमन् वाच्यं वाचा धर्ममवाप्नुहि ॥ १० ॥ नित्यमुत्साह युक्ताश्च वाचः श्रुत्वा त्वयेरिताः । वर्धिष्यते दाशरथेः पौरुषं मदवाप्तये ॥ ११ ॥ मत्सन्देशयुता वाचस्त्वत्तः श्रुत्वैव राघवः । पराक्रमविधिं वीरो विधिवत् संविधास्यति ॥ १२ ॥ सीताया वचनं श्रुत्वा हनुमान् मारुतात्मजः । शिरस्यञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ॥ १३ ॥ क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्वृतः । यस्ते युधि विजित्यारीन् शोकं व्यपनयिष्यति ॥ १४ ॥ नहि पश्यामि मर्त्येषु नासुरेषु सुरेषु वा । यस्तस्य क्षिपतो बाणान् स्थातुमुत्सहतेऽग्रतः ॥ १५ ॥ अप्यर्कमपि पर्जन्यमपि वैवस्वतं यमम् । स हि सोढुं रणे शक्तस्तव हेतोर्विशेषतः ॥ १६ ॥ स हि सागरपर्यन्तां महीं शासितुमीहते । त्वन्निमित्तो हि रामस्य जयो जनकनन्दिनि ॥ १७ ॥ तस्य तद्वचनं श्रुत्वा सम्यक् सत्यं सुभाषितम् । जानकी बहुमेनेऽथ वचनं चेदमब्रवीत् ॥ १८ ॥ ततस्तं प्रस्थितं सीता वीक्षमाणा पुनः पुनः । भर्तृस्नेहान्वितं वाक्यं सौहार्दादनुमानयत् ॥ १९ ॥ यदि वा मन्यसे वीर वसैकाहमरिन्दम । कस्मिंश्चित् संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ २० ॥

जयः, भविष्यतीति शेषः ॥ १७ ॥ सम्यक् सोपपत्तिकम् । सत्यं परमार्थम् । सुभाषितं श्रुतिमधुरम् ॥ १८ ॥ वचनं चेदमब्रवीदित्युक्तं विवृणोति—ततस्तमिति । भर्तृस्नेहान्वितम् आत्मनि यो भर्तुः स्नेहस्तेनान्वितम् । स्वविषयभर्तृस्नेहप्रकाशकमिति यावत् । अनुमानयदन्वमानयत् । वक्ष्यमाणोक्तिरूपं संमानवचनमब्रवीदित्यर्थः ॥ १९–२२ ॥

उक्तार्थमेवादरेण पुनराह—मत्सन्देशयुता इति ॥ १२–१८ ॥ तत इति । भर्तुः स्नेहान्वितम् आत्मनि यो भर्तुः स्नेहः तेनान्वितम्, रामस्य स्वविषये स्नेहप्रकाशकमिति यावत् । वाक्यं पूर्वोक्तं हनुमतो वचनम् । अनुमानयत् सम्मानयन्ती इति पूर्वेण सम्बन्धः ॥ १९ ॥ यदीति । एकाहं वस, तेन किम् ? कस्मिंश्चिदिति॥२०॥

तवेति । दुःखाद्दुःखपरामृष्टां पूर्वदुःखादधिकेन दुःखेन स्पृष्टाम् । दीपयन्निव वर्धयन्निवेत्यर्थः ॥ २३ ॥ अयमिति । अयं वक्ष्यमाणः, तिष्ठतीव मूर्ती भूत इत्यर्थः ॥ २४–२६ ॥ समाधानं परिहारम् ॥ २७ ॥ अहमेव साधयिष्यामीत्याशङ्क्याह–काममिति । हे परवीरघ्न ! त्वम् अस्य कार्यस्य सर्व



मम चेदल्पभाग्यायाः सान्निध्यात्तव वानर । अस्य शोकस्य महतो मुहूर्तं मोक्षणं भवेत् ॥ २१ ॥ गते हि हरि शार्दूल पुनरागमनाय तु । प्राणानामपि सन्देहो मम स्यान्नात्र संशयः ॥ २२ ॥ तवादर्शनजः शोको भूयो मां परितापयेत् । दुःखाद्दुःखपरामृष्टां दीपयन्निव वानर ॥ २३ ॥ अयं च वीर सन्देहस्तिष्ठतीव ममाग्रतः । सुमहां स्त्वत्सहायेषु हर्यृक्षेषु हरीश्वर ॥ २४ ॥ कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम् । तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ २५ ॥ त्रयाणामेव भूतानां सागरस्यास्य लङ्घने । शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥२६॥ तदस्मिन् कार्यनियोगे वीरैवं दुरतिक्रमे । किं पश्यसि समाधानं त्वं हि कार्यविदां वरः ॥२७॥ काममस्य त्वमेवैकः कार्यस्य परिसाधने । पर्याप्तः परवीरघ्न यशस्यस्ते फलोदयः ॥२८॥ बलैः समग्रैर्यदि मां रावणं जित्य संयुगे । विजयी स्वपुरीं यायात् तत्तु मे स्याद्यशस्करम् ॥ २९ ॥ शरैस्तु सङ्कुलां कृत्वा लङ्कां परबलार्दनः । मां येद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ ३० ॥

राक्षसवधपूर्वकमत्प्रापणरूपस्य परिसाधने कामं पर्याप्तः शक्तः । एवं चेत्फलोदयः शक्तिसमृद्धिः । ते यशस्यः तव यशस्करः । न तु ममेति भावः ॥२८॥ तर्हि तव किं यशस्यमित्याकाङ्क्षायामाह–बलैरिति । जित्य जित्वा । मां, गृहीत्वेति शेषः । यायात्, राम इति च शेषः ॥२९॥ एतन्न केवलं मम,

मम चेदिति श्वो गमिष्यसि चेदित्यर्थः ॥ २१–२२ ॥ तवेति । दुःखाद्दुःखपरामृष्टाम् अतिदुःखं प्राप्तामित्यर्थः । दुःखं दुःखपरामृष्टामिति पाठे–दुःखं मां दीपयत् ज्वलयदिव परितापयेदिति सम्बन्धः ॥ २३ ॥ सन्देहः वक्ष्यमाणः । तिष्ठतीव ममाग्रतः, मूर्तीभूत इति शेषः हर्यृक्षेषु विषये ॥ २४ ॥ सन्देहमेवाह–कथं न्वित्यादि ॥ २५ ॥ २६ ॥ कार्यनियोगे कार्यसङ्कटने । समाधानम् उपाय इत्यर्थः ॥ २७ ॥ माऽस्तु रामादीनामत्रागमनम् अहमेव सर्वं साधयिष्यामीत्यत आह–काममिति । अस्य कार्यस्य रावणादिवधपूर्वकमन्मोक्षणस्य कामं पर्याप्तः शक्तः, एवं चेत्फलोदयः शक्तिसमृद्धिः ते तवैव यशस्करः न तु ममेति भावः॥ २८॥ तर्हि तव किं यशस्करमत आह–बलैरिति । माम्, गृहीत्वेति शेषः। यायात, राम इति शेषः ॥ २९ ॥ एतद्रामस्यापि यशस्करमित्याह–शरैरिति ॥ ३० ॥

रामस्यापीत्याह—शूरैरिति ॥ ३० ॥ तदिति । तस्य अनुरूपं विक्रान्तं यथा भवेत्तथा उपपादय कुरु ॥ ३१ ॥ अर्थोपहितम् अर्थयुक्तम् । सहितम् परस्परसङ्गतम् । हेतुसंहितं युक्तियुक्तम् । शेषं पूर्वमनुक्तम् उत्तरं वाक्यमब्रवीत् ॥ ३२–३४ ॥ तस्येति । मनःसङ्कल्पसंपाताः मनोव्यापारतुल्यगमनाः ।

तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः । भवेदाहवशूरस्य तथा त्वमुपपादय ॥३१॥ तदर्थोपहितं वाक्यं सहितं हेतुसंहितम् । निशम्य हनुमान् शेषं वाक्यमुत्तरमब्रवीत् ॥ ३२ ॥ देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः । सुग्रीवः सत्त्वसम्पन्नस्तवार्थे कृतनिश्चयः ॥ ३३ ॥ स वानरसहस्राणां कोटीभिरभिसंवृतः । क्षिप्रमेष्यति वैदेहि राक्षसानां निबर्हणः ॥ ३४ ॥ तस्य विक्रमसम्पन्नास्सत्त्ववन्तो महाबलाः । मनस्सङ्कल्पसंपाता निदेशे हरयः स्थिताः ॥३५॥ येषां नोपरि नाधस्तान्न तिर्यक् सज्जते गतिः । न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥ ३६ ॥ असकृत् तैर्महोत्साहैः ससागरधराधरा । प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥ ३७ ॥ मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः । मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ॥ ३८ ॥ अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः । नहि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥३९॥ तदलं परितापेन देवि शोको व्यपैतु ते । एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः ॥४०॥ मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ । त्वत्सकाशं महासत्त्वौ नृसिंहावागमिष्यतः ॥४१॥ तौ हि वीरौ नरवरौ सहितौ रामलक्ष्मणौ । आगम्य नगरीं लङ्कां सायकैर्विधमिष्यतः ॥ ४२ ॥

न सज्जते न विलम्बते ॥३५–३७॥ प्रत्यवरः हीनः । पूर्वं चतुर्णामेवात्र गतिरिति विचारप्रकारमात्रमुक्तम् । अत्र तु परमार्थः । यद्यपि बले हनुमानधिकः तथापि वेगे सुग्रीवसन्निहिता नीलादयः सर्वे तुल्या एवेति नानृतोक्तिः ॥ ३८ ॥ ३९ ॥ तदलमिति । एकोत्पातेन एकयत्नेन ॥४०॥ ४१ ॥ तौ हीति ।

विक्रान्तं विक्रमः ॥ ३१ ॥ अर्थोपहितम् अर्थयुक्तम् । सहितं परस्परं सङ्गतम् । हेतुसंहितं युक्तियुक्तम् । शेषं प्रागनुक्तम् ॥३२–३४॥ तस्येति । मनःसङ्कल्पसंपाताः मनोवेगसदृशवेगवन्त इत्यर्थः ॥ ३५–३९ ॥ एकोत्पातेन एकप्लुतेन ॥ ४०–४२ ॥

विधमिष्यतः दहिष्यतः ॥ ४२ ॥ ४३ ॥ तदिति । कालकांक्षिणी भव दिवसगणनायां तत्परा भवेत्यर्थः । नचिरात् अचिरात् ॥ ४४–४६ ॥ एवमिति । पुनरब्रवीदिति दाढर्याय पुनरुक्तिः ॥४७–४९॥ शैलाम्बुदेति । द्रक्ष्यसीति शेषः ॥ ५० ॥ ५१ ॥ मा रुदः रोदनं मा कुरु ॥५२॥५३॥ नास्मिन्निति ।

सगणं रावणं हत्वा राघवो रघुनन्दनः । त्वामादाय वरारोहे स्वपुरं प्रतियास्यति ॥ ४३ ॥ तदाश्वसिहि भद्रं ते भव त्वं कालकांक्षिणी । नचिराद्द्रक्ष्यसे रामं प्रज्वलन्तमिवानलम् ॥४४॥ निहते राक्षसेन्द्रेऽस्मिन् सपुत्रामात्यबान्धवे । त्वं समेष्यासि रामेण शशाङ्केनेव रोहिणी ॥४५॥ क्षिप्रं त्वं देवि शोकस्य पारं यास्यसि मैथिलि । रावणं चैव रामेण निहतं द्रक्ष्यसेऽचिरात् ॥४६॥ एवमाश्वास्य वैदेहीं हनुमान् मारुतात्मजः । गमनाय मतिं कृत्वा वैदेहीं पुनरब्रवीत् ॥४७॥ तमरिघ्नं कृतात्मानं क्षिप्रं द्रक्ष्यसि राघवम् । लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपस्थितम् * ॥४८॥ नखदंष्ट्रायुधान् वीरान् सिंहशार्दूलविक्रमान् । वानरान् वारणेन्द्राभान् क्षिप्रं द्रक्ष्यसि सङ्गतान् ॥४९॥ शैलाम्बुदनिकाशानां लङ्कामलयसानुषु । नर्दतां कपिमुख्यानामार्ये यूथान्यनेकशः ॥ ५० ॥ स तु मर्मणि घोरेण ताडितो मन्मथेषुणा । न शर्म लभते रामः सिंहार्दित इव द्विपः ॥ ५१ ॥ मा रुदो देवि शोकेन मा भूत् ते मनसोऽप्रियम् । शचीव पत्या शक्रेण भर्त्रा नाथवती ह्यसि ॥५२॥ रामाद्विशिष्टः कोऽन्योऽस्ति कश्चित् सौमित्रिणा समः । अग्निमारुतकल्पौ तौ भ्रातरौ तव संश्रयौ ॥५३॥ नास्मिंश्चिरं वत्स्यसि देवि देशे रक्षोगणैरध्युषितेऽतिरौद्रे । न ते चिरादागमनं प्रियस्य क्षमस्व मत्सङ्गमकालमात्रम् ॥५४॥ इत्यार्षे श्रीरामायणे वाल्मी० श्रीमत्सुन्दरकाण्डे एकोनचत्वारिंशः सर्गः ॥३९॥

मत्सङ्गमकालमात्रं मम रामेण सङ्गमकालमात्रम् ॥५४॥ इति श्रीगोविन्द० श्रीरामा० शृङ्गारतिल० सुन्दरकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥३९॥

कालकाङ्क्षिणी भव दिवसगणनायां तत्परा भव ॥ ४४–४९ ॥ यूथान्यनेकश इत्यत्र द्रक्ष्यसीत्यनुषङ्गः ॥ ५०–५३ ॥ मत्सङ्गमकालमात्रं मम रामेण सङ्गमकालमात्रमित्यर्थः ॥ ५४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् एकोनचत्वारिंशः सर्गः ॥ ३९ ॥



* सुग्रीवसहितं शूरं वानरैः परिवारितम् । इत्यधिकं कुत्रचित् दृश्यते ।

श्रुत्वेत्यादि ॥ १ ॥ त्वामिति । अर्धसञ्जातसस्या अर्धोत्पन्नसस्या ॥ २ ॥ ३ ॥ अभिज्ञानं चेति । काकस्यैकाक्षिशातनीं क्षिप्ताम् इषीकाम् इषीकतृण रूपमभिज्ञानं पूर्वोक्तं दद्याः । अन्यच्च वक्ष्यामीति भावः । तदेवाह—मन इति । तिलके पूर्वतिलके प्रनष्टे सति । गण्डपार्श्वे गण्डस्थले गण्डशैलपार्श्वे वा ।

श्रुत्वा तु वचनं तस्य वायुसूनोर्महात्मनः । उवाचात्महितं वाक्यं सीता सुरसुतोपमा ॥ १ ॥ त्वां दृष्ट्वा प्रियवक्तारं संप्रहृष्यामि वानर । अर्धसञ्जातसस्येव वृष्टिं प्राप्य वसुन्धरा ॥ २ ॥ यथा तं पुरुषव्याघ्रं गात्रैः शोकाभिकर्शितैः । संस्पृशेयं सकामाऽहं तथा कुरु दयां मयि ॥ ३ ॥ अभिज्ञानं च रामस्य दद्या हरिगणोत्तम । क्षिप्तामिषीकां काकस्य कोपादेकाक्षिशातनीम् ॥ ४ ॥ मनःशिलायास्तिलको गण्डपार्श्वे निवेशितः । त्वया प्रनष्टे तिलके तं किल स्मर्तुमर्हसि ॥ ५ ॥ स वीर्यवान् कथं सीतां हृतां समनुमन्यसे । वसन्तीं रक्षसां मध्ये महेन्द्रवरुणोपमः ॥ ६ ॥ एष चूडामणिर्दिव्यो मया सुपरिरक्षितः । एतं दृष्ट्वा प्रहृष्यामि व्यसने त्वामिवानघ ॥ ७ ॥ एष निर्यातितः श्रीमान् मया ते वारिसम्भवः । अतः परं न शक्ष्यामि जीवितुं शोकलालसा ॥ ८ ॥ असह्यानि च दुःखानि वाचश्च हृदयच्छिदः । राक्षसीनां सुघोराणां त्वत्कृते मर्षयाम्यहम् ॥ ९ ॥ धारयिष्यामि मासं तु जीवितं शत्रुसूदन । मासादूर्ध्वं न जीविष्ये त्वया हीना नृपात्मज ॥ १० ॥

मनःशिलायास्तिलकः मनःशिलाकृततिलकः । तत् मनःशिलातिलकनिर्माणं स्मर्तुमर्हसि । इदमप्यभिज्ञानं दद्या इति योजना ॥ ४–६ ॥ एष इति । प्रहृष्यामीति । अस्य चूडामणेस्त्वया बहुशो लालितत्वेन त्वत्स्मारकत्वादिति भावः ॥ ७ ॥ वारिसम्भवः, रत्नं हि रत्नाकरे उत्पद्यते । अतः परं आत्महितम् आत्मदुःखोद्धारप्रयोजनम् ॥ १ ॥ अर्धसञ्जातानि अर्धवयःप्राप्तानि । ततः परं जलाभावाद्दग्धशेषाणि सस्यानि यस्यास्सा । यथा दैवात्सम्पन्नवृष्ट्या सम्पन्नसस्या भवति तथा अहमपि प्राप्तजीवितनाशा अमृतोपमात्त्वद्दर्शनाद् धृतजीवितेति भावः ॥ २ ॥ ३ ॥ अभिज्ञानान्तरं दास्यामीत्याह—अभिज्ञानमित्यादि । एकाक्षिशातनीं क्षिप्तामिषीकाम् इषीकामनु ॥ ४ ॥ तिलके प्रनष्टे मनश्शिलायास्तिलकः त्वया गण्डपार्श्वे निवेशितः किल, तं स्मर्तुमर्हसीत्यभिज्ञानं च रामस्य रामाय दत्तं भवतीति योजना ॥ ५–८ ॥ असह्यानीति । त्वत्कृते त्वत्प्राप्त्याशया ॥ ९ ॥ १० ॥

स०—मासादूर्ध्वमित्युक्तिस्तु कालेऽधिके सत्यपि तीव्रागमनाभिप्रायेण वा दिनेषु सत्स्वपि आत्मघाताभिप्रायेण वेति ज्ञातव्यम् ॥ १० ॥

 माशात्परम् ॥ ८–१० ॥ विषजन्तं विलम्बमानम् ॥ ११–१२ ॥ कथंचिदिति । इमं मुहूर्तम् अस्मिन्मुहूर्ते ॥ १४–२३ ॥ इमं चेति । शिवश्च 

घोरो राक्षसराजोऽयं दृष्टिश्च न सुखा मयि । त्वां च श्रुत्वा विषज्जन्तं न जीवेयमहं क्षणम् ॥ ११ ॥ वैदेह्या वचनं श्रुत्वा करुणं साश्रुभाषितम् । तथाऽब्रवीन्महातेजा हनुमान् मारुतात्मजः ॥ १२ ॥ त्वच्छोकविमुखो रामो देवि सत्येन ते शपे । रामे दुःखाभिभूते तु लक्ष्मणः परितप्यते ॥ १३ ॥ कथंचिद् भवती दृष्टा न कालः परिशोचितुम् । इमं मुहूर्तं दुःखानामन्तं द्रक्ष्यसि भामिनि ॥ १४ ॥ तावुभौ पुरुषव्याघ्रौ राजपुत्रावरिन्दमौ । त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ॥ १५ ॥ हत्वा तु समरे क्रूरं रावणं सहबान्धवम् । राघवौ त्वां विशालाक्षि स्वां पुरीं प्रापयिष्यतः ॥ १६ ॥ यत्तु रामो विजानीयादभिज्ञानमनिन्दिते । प्रीतिसञ्जननं तस्य भूयस्त्वं दातुमर्हसि ॥ १७ ॥ साऽब्रवीद्दत्तमेवेति मयाऽभिज्ञानमुत्तमम् । एतदेव हि रामस्य दृष्ट्वा मत्केशभूषणम् । श्रद्धेयं हनुमन् वाक्यं तव वीर भविष्यति ॥ १८ ॥ स तं मणिवरं गृह्य श्रीमान् प्लवगसत्तमः । प्रणम्य शिरसा देवीं गमनायोपचक्रमे ॥ १९ ॥ तमुत्पातकृतोत्साहमवेक्ष्य हरिपुङ्गवम् । वर्धमानं महावेगमुवाच जनकात्मजा ॥ २० ॥ अश्रुपूर्णमुखी दीना बाष्पगद्गदया गिरा ॥ २१ ॥ हनुमन् सिंहसङ्काशौ भ्रातरौ रामलक्ष्मणौ । सुग्रीवं च सहामात्यं सर्वान् ब्रूया ह्यनामयम् ॥ २२ ॥ यथा च स महाबाहुर्मां तारयति राघवः । अस्माद्दुःखाम्बुसंरोधात् त्वं समाधातुमर्हसि ॥ २३ ॥ इमं च तीव्रं मम शोकवेगं रक्षोभिरेभिः परिभर्त्सनं च । ब्रूयास्तु रामस्य गतः समीपं शिवश्च तेऽध्वाऽस्तु हरिप्रवीर ॥ २४ ॥

तेऽध्वाऽस्तु हरिप्रवीरेति । शिवः अव्याहत इत्यर्थः ॥ २४ ॥ 

विषज्जन्तमिति पाठे क्लिश्यन्तम् ॥ १२–१३ ॥ इमं मुहूर्तम् अस्मिन्मुहूर्ते ॥ १४–१९ ॥ उत्पातकृतोत्साहम् उत्पाते उत्पतने कृतोत्साहम् ॥ २०–२४ ॥

स इति । अल्पावशेषम् अल्पावशिष्टम् । प्रसमीक्ष्य विचार्य ॥२५॥ इति श्रीगो० श्रीरामा० शृङ्गार० सुन्दरकाण्डव्याख्याने चत्वारिंशः सर्गः ॥४०॥
स चेत्यादि ॥ १ ॥ अल्पेति। "अभिगम्य तु वैदेहीं निलयं रावणस्य च" इत्युक्तकार्यद्वये सीतादर्शनरूपं कार्यं जातम् । इदं कार्यं रावणनिलयपरिज्ञान
रूपम् । अल्पशेषम् अल्पावशिष्टम् । सान्तःपुरलङ्कायाः सम्यक् परिज्ञातत्वेऽपि राक्षसबलाबलरावणहृदयाद्यपरिज्ञानात्कार्यस्याल्पशेषत्वोक्तिः । इह

स राजपुत्र्या प्रतिवेदितार्थः कपिः कृतार्थः परिहृष्टचेताः । अल्पावशेषं प्रसमीक्ष्य कार्यं दिशं ह्युदीचीं मनसा जगाम ॥ २५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

स च वाग्भिः प्रशस्ताभिर्गमिष्यन् पूजितस्तया । तस्माद्देशादपक्रम्य चिन्तयामास वानरः ॥ १ ॥ अल्पशेषमिदं कार्यं दृष्टेयमसितेक्षणा । त्रीनुपायानतिक्रम्य चतुर्थ इह दृश्यते ॥ २ ॥ न साम रक्षस्सु गुणाय कल्पते न दानमर्थोपचितेषु युज्यते । न भेदसाध्या बलदर्पिता जनाः पराक्रमस्त्वेव ममेह रोचते ॥ ३ ॥ न चास्य कार्यस्य पराक्रमादृते विनिश्चयः कश्चिदिहोपपद्यते । हतप्रवीरा हि रणे हि राक्षसाः कथंचिदीयुर्यदिहाद्य मार्दवम् ॥ ४ ॥

राक्षसबलाबलरावणहृदयपरिज्ञानरूपकार्यें । त्रीनुपायानतिक्रम्य सामदानभेदानतिक्रम्य । चतुर्थो लक्ष्यते साधनतया दण्ड एव दृश्यत इत्यर्थः ॥२॥
उपपत्तिपूर्वकमेतदेव विवृणोति--न सामेति । "अनित्यो विजयो यस्माद्दृश्यते युद्ध्यमानयोः । पराजयश्च संग्रामे तस्माद्युद्धं विसर्जयेत् ॥" इति युद्धस्य
अव्यवस्थितफलकत्वेऽपि 'सर्वं बलवतः पथ्यम्' इति न्यायेन सर्वातिशायिबलपराक्रमस्य मम पराजयप्रसङ्ग एव नास्तीत्यभिप्रायेणाह पराक्रम

अल्पावशेषम् अल्पावशिष्टम् । प्रसमीक्ष्य विचार्य ॥ २५ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां चत्वारिंशः सर्गः ॥४०॥
॥ १ ॥ चिन्ताप्रकारमाह--अल्पशेषमित्यादिना कपीश्वरालयमित्यन्तेन । द्वयमिह कार्यम् देवीदर्शनं परबलादिपरिज्ञानं चेति । तत्र देवीदर्शनस्य महतः प्रधान
कृत्यस्य निष्पन्नत्वादितरस्य त्वानुषङ्गिकत्वादल्पशेषमित्यभिप्रायः । तत्र निष्पन्नं सन्दर्शयति दृष्टेयमिति । इतरनिष्पत्तौ उपायं निर्धारयति त्रीनिति । इह राक्षस
बलाबलरावणहृदयपरिज्ञानरूपे कार्ये त्रीनुपायान् सामदानभेदानतिक्रम्य चतुर्थो दृश्यते साधनतया दण्डो दृश्यते ॥ २॥ उपपत्तिपूर्वकम् एतदेव विवृणोति--न सामेति ।
रक्षस्सु सामप्रयोगः फलाय कल्पते, न शठेष्वित्याशयेनाह रक्षस्स्विति । जयापजययोरव्यवस्थितावित्याशङ्क्य 'सर्वं बलवतः पथ्यम्' इतिवत्सर्वातिशायि
बलपराक्रमस्य मम पराजयप्रसङ्ग एव नास्तीत्यभिप्रायेणाह पराक्रम इति ॥ ३ ॥ उक्तं सामाद्युपायमुपसंहरति--न चेति । विनिश्चयः उपायः । तथापि पराक्रमे किं

इति। मम तु इह रक्षोविषये पराक्रम एव रोचत इति संबन्धः ॥ ३ ॥ ४ ॥ "अभिगम्य तु वैदेहीं निलयं रावणस्य च" इत्यनुज्ञातस्यातिरिक्तकार्य करणे दोषमाशङ्क्य परिहरति–कार्य इति । कार्ये विहिते कर्तव्ये, बहूनि कार्याणि ॥ ५ ॥ न हीति । अल्पस्यापि कर्मणः एको हेतुस्साधको न किमुत महतः कर्मण इति भावः। बहुधा बहुभिर्हेतुभिः ॥६॥ पूर्वोक्तसमर्थनायाह–इहैवेति । अहमिहैव । परात्मसंमर्दविशेषतत्त्ववित् परात्मनोर्युद्धतारतम्यतत्त्व

कार्ये कर्मणि निर्दिष्टे यो बहून्यपि साधयेत् । पूर्वकार्याविरोधेन स कार्यं कर्तुमर्हति ॥ ५ ॥ न ह्येकः साधको हेतुः स्वल्पस्यापीह कर्मणः । यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ॥ ६ ॥ इहैव तावत् कृतनिश्चयो ह्यहं यदि व्रजेयं प्लवगेश्वरालयम् । परात्मसंमर्दविशेषतत्त्ववित् ततः कृतं स्यान्मम भर्तृशासनम् ॥ ७ ॥ कथं नु खल्वद्य भवेत् सुखागतं प्रसह्य युद्धं मम राक्षसैः सह । तथैव खल्वात्मबलं च सारवत् संमानयेन्मां च रणे दशाननः ॥८॥

वित् कृतनिश्चयः कृतबलाबलनिश्चयः सन् यदि प्लवगेश्वरालयं व्रजेयं ततः भर्तृशासनं सीतादर्शनरावणनिलयसम्यक्परिज्ञानविषयं शासनम् । तावत् साकल्येन कृतं स्यात् । अन्यथा राक्षसबलाबलं कीदृशमिति भर्त्रा पृष्टे निरुत्तरः स्यामिति भावः ॥ ७ ॥ कथं न्विति । युद्धं कथं सुखागतं सुखेन प्राप्तं भवेत्तथा कर्तव्यमित्यर्थः । युद्धस्य फलमाह–तथैवेत्यादिना सार्द्धश्लोकेन । तथैव खलु युद्धकरणे खलु । सः दशाननः । रणे आत्मबलं स्वपक्षबलं

कारणमत आह हतेति । हताः प्रवीराः मुख्याः येषां ते हतप्रवीराः । यतः कनिपयवधे शेषा मार्दवमीयुः अतः पराक्रम एव रोचत इत्यर्थः ॥ ४ ॥ "अभिगम्य तु वैदेहीं निलयं रावणस्य च" इत्यननुज्ञातव्यतिरिक्तकार्यकरणे दोषमाशङ्क्य परिहरति–कार्य इति । कार्ये कर्तव्ये कर्मणि, बहूनि कार्याणि ॥ ५ ॥ स्वल्पस्यापि कर्मणः एको हेतुः न साधको भवति, किमुत महतः कर्मण इति भावः । अर्थं कार्यं बहुधा बहूपायसाध्यं यो वेद ॥ ६ ॥ ननु स्वामिना निर्दिष्टसीतादर्शनं कृत मेव, अन्यत्तु सुग्रीवसन्निधौ भविष्यतीत्यत आह–इहैवेति । परात्मसम्मर्दविशेषनत्त्वविदहं परस्य आत्मनश्च सम्मर्दे युद्धतारतम्यं तस्य तत्त्ववित् कृतनिश्चयः कृत बलाबलनिश्चयस्सन् यदि प्लवगेश्वरालयं व्रजेयं ततो मम भर्तृशासनं सीतादर्शनरावणनिलयसम्यक्परिज्ञानविषयं शासनं तावत् साकल्येन कृतं स्यात्, अन्यथा राक्षसबलाबलं कीदृशमिति भर्त्रा पृष्टो निरुत्तरस्स्यामिति भावः ॥७॥ युद्धं सुखागतं सुखेन प्राप्तं भवेत् तथा, कर्तव्यमिति शेषः । युद्धस्य फलमाह–तथैवेत्यादिना

मां च । सारवत् मानयेत्परिच्छिन्द्यात् ॥ ८ ॥ बलप्रयायिना सेनान्या सह वर्तते इति सबलप्रयायी तम् । तस्य हृदि स्थितं मतं सीताविषयाध्यवसायं बलं च मत्वा सुखेन इतः अस्मात् स्थानात् पुनः व्रजे व्रजिष्यामि ॥ ९ ॥ इदमिति । नेत्रमनःकान्तम्, वर्तत इति शेषः ॥ १० ॥ ११ ॥ तत

ततः समासाद्य रणे दशाननं समन्त्रिवर्गं सबलप्रयायिनम् । हृदि स्थितं तस्य मतं बलं च वै सुखेन मत्वाऽहमितः पुनर्व्रजे ॥ ९ ॥ इदमस्य नृशंसस्य नन्दनोपममुत्तमम् । वनं नेत्रमनःकान्तं नानाद्रुमलतायुतम् ॥ १० ॥ इदं विध्वंसयिष्यामि शुष्कं वनमिवानलः । अस्मिन् भग्ने ततः कोपं करिष्यति दशाननः ॥ ११ ॥ ततो महत् साश्वमहारथद्विपं बलं समादेक्ष्यति राक्षसाधिपः । त्रिशूलकालायसपट्टसायुधं ततो महद्युद्धमिदं भविष्यति ॥ १२ ॥ अहं तु तैः संयति चण्डविक्रमैः समेत्य रक्षोभिरसह्यविक्रमः । निहत्य तद्रावणचोदितं बलं सुखं गमिष्यामि कपीश्वरालयम् ॥ १३ ॥ ततो मारुतवत् क्रुद्धो मारुतिर्भीमविक्रमः । ऊरुवेगेन महता द्रुमान् क्षेप्तुमथारभत् ॥ १४॥ ततस्तु हनुमान् वीरो बभञ्ज प्रमदावनम् । मत्तद्विजसमाघुष्टं नानाद्रुमलतायुतम् ॥ १५ ॥ तद्वनं मथितैर्वृक्षैर्भिन्नैश्च सलिलाशयैः । चूर्णितैः पर्वताग्रैश्च बभूवाप्रियदर्शनम् ॥ १६ ॥ नानाशकुन्तविरुतैः प्रभिन्नैः सलिलाशयैः । ताम्रैः किसलयैः क्लान्तैः क्लान्तद्रुमलतायुतम् । न बभौ तद्वनं तत्र दावानलहतं यथा ॥ १७ ॥

इति । समादेक्ष्यति नियोजयिष्यति । इदम् अव्यवहितोत्तरकालिकम् । कपीश्वरालयमित्यनन्तरमितिकरणं द्रष्टव्यम् । इति चिन्तयामासेत्यन्वयः ॥ १२॥ ॥ १३॥ ततः तेन चिन्तितेन हेतुना॥ १४॥ प्रमदावनम् अन्तःपुरवनम् । "प्रमदावनमन्तःपुरोचितम्" इत्यमरः ॥ १५॥ पर्वताग्रैः क्रीडापर्वताग्रैः ॥ १६॥ १७
रामानु०—नानाशकुन्तविरुतैः प्रभिन्नैस्सलिलाशयैरित्यतः परम् ताम्रैः किसलयैः क्लान्तैः क्लान्तद्रुमलतायुतम् । न बभौ तद्वनं तत्र दावानलहतं यथा इति पाठक्रमः ॥ १७ ॥

सार्धेन । तथैव खलु युद्धकरणे खलु, दशाननः आत्मबलं स्वपक्षबलं मां च सारवद् सम्मानयेद् सम्यक् परिच्छिन्द्यात् ॥ ८ ॥ सबलप्रयायिनं ससैन्यम्, हृदि स्थितं मतं दृढतनिश्चयम् ॥ ९–१२ ॥ कपीश्वरालयमित्यत्र इतिशब्दो द्रष्टव्यः । तस्य चिन्तयामासेति पूर्वेण सम्बन्धः ॥ १३–१९ ॥

व्याकुलावरणाः आवरणादुपघ्नाद्व्याकुलाः । विह्वलाः स्त्रिय इव॥१८॥ व्यालमृगैः श्वापदादिहिंस्रमृगैः । निर्धुतैः पीडितैः । गृहैः केवलगृहैः ॥१९॥सेति । शोच्यत इति शोकः । प्रतानं विततिः । अशोकम् अशोच्यम् लताप्रतानं यस्यास्सा अशोकलताप्रताना । दशास्यप्रमदावनस्य भोगवर्धनेन रावण वनितारक्षकस्य । प्रमदावनस्य अन्तःपुरोद्यानस्य । सा वनस्थली तृणगुल्मलतादिविशिष्टप्रदेशः।कपेर्बलाद्धि विह्वला लुलिता शोकलताप्रताना च

व्याकुलावरणा रेजुर्विह्वला इव ता लताः ॥ १८ ॥ लतागृहैश्चित्रगृहैश्च नाशितैर्महोरगैर्व्यालमृगैश्च निर्धुतैः । शिलागृहैरुन्मथितैस्तथा गृहैः प्रनष्टरूपं तदभून्महद्वनम् ॥ १९ ॥ सा विह्वलाऽशोकलताप्रताना वनस्थली शोकलताप्रताना । जाता दशास्यप्रमदावनस्य कपेर्बलाद्धि प्रमदावनस्य ॥ २० ॥ स तस्य कृत्वाऽर्थपतेर्महाकपिर्महद्व्यलीकं मनसो महात्मनः । युयुत्सुरेको बहुभिर्महाबलैः श्रिया ज्वलंस्तोरणमास्थितः कपिः ॥२१॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

जाता । यद्वा शोकलताश्शोकरताः । रलयोरभेदः । अप्प्रतानाः अप्सु प्रतानाः कमलकल्हारादयोऽस्यां सा शोकलताप्प्रताना । म्लानजलजेति यावत् । दशास्यप्रमदावनस्य रावणप्रमदावनस्य । "ङ्यापोस्संज्ञाच्छन्दसोर्बहुलम्" इति बहुलवचनाद्ध्रस्वाभावः । दशास्यप्रमदावनस्य वनस्थलीत्यत्र शिलापुत्रकस्य शरीरमितिवदुपचारात् षष्ठी । प्रमदावनस्य सीतारूपप्रमदापालकस्य । वनस्थली कपेर्बलाद्विह्वला शोकलताप्रताना च जाता । अशोकलतेत्युपलक्षणम् ॥ २० ॥ स इति । अर्थपतेः राज्ञो रावणस्य । मनसः व्यलीकम् अप्रियम् पीडनं वा । "अलीकं त्वप्रियाकार्यवैलक्ष्यानृतपीडने" इति निघण्टुः । युयुत्सुः योद्धुमिच्छुः । तोरणम् उद्यानबहिर्द्वारम् । "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

सा विह्वलेति । प्रमदावनस्य अन्तःपुरविहारवनस्येत्यर्थः । "स्यादेतदेव प्रमदावनमन्तःपुरोचितम्" इत्यमरः । "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्" इति बहुलग्रहणादनियतो ह्रस्वः । अत एव दशास्यप्रमदावनस्य दशास्यप्रमदानां स्त्रीणां भोगसंवर्द्धनद्वारा अवनस्य रक्षकस्य । अशोकलताप्रताना अशोकलतासमूहा वनस्थली तृणगुल्मलताजलाशयादिभिः पूर्णभूमिः कपेर्बलात् शोकलताप्रताना, शोच्यत इति शोकः शोच्यलताप्रताना जातेति योजना ॥ २० ॥ स इति । अर्थपतेः राज्ञो रावणस्य । व्यलीकम् अप्रियम् ॥ २१ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् एकचत्वारिंशः सर्गः ॥ ४१ ॥

ततः पक्षीत्यादि ॥ १-४ ॥ ततस्तामित्यादि । उतशब्दो वार्थे । "उताप्यर्थविकल्पयोः" इत्यमरः । संवादो वा कथं कृत इति पप्रच्छुरिति पूर्वेण सम्बन्धः । कः किन्नामकः । कस्य कस्य सम्बन्धी पुरुषः । कुतः कस्माद्देशादागतः । किन्निमित्तं किं प्रयोजनमुद्दिश्य । संवादं किं कृतवान् किमुद्दिश्य

ततः पक्षिनिनादेन वृक्षभङ्गस्वनेन च । बभूवुस्त्राससंभ्रान्ताः सर्वे लङ्कानिवासिनः ॥ १ ॥ विद्रुताश्च भयत्रस्ता विनेदुर्मृगपक्षिणः । रक्षसां च निमित्तानि क्रूराणि प्रतिपेदिरे ॥ २ ॥ ततो गतायां निद्रायां राक्षस्यो विकृताननाः । तद्वनं ददृशुर्भग्नं तं च वीरं महाकपिम् ॥ ३ ॥ स ता दृष्ट्वा महाबाहुर्महासत्त्वो महाबलः । चकार सुमहद्रूपं राक्षसीनां भयावहम् ॥ ४ ॥ ततस्तं गिरिसङ्काशमतिकायं महाबलम् । राक्षस्यो वानरं दृष्ट्वा पप्रच्छुर्जनकात्मजाम् ॥ ५ ॥ कोऽयं कस्य कुतो वाऽयं किंनिमित्तमिहागतः । कथं त्वया सहानेन संवादः कृत इत्युत ॥ ६ ॥ आचक्ष्व नो विशालाक्षि मा भूत्ते सुभगे भयम् । संवादमसितापाङ्गे त्वया किं कृतवानयम् ॥ ७ ॥ अथाब्रवीत्तदा साध्वी सीता सर्वाङ्गसुन्दरी । रक्षसां भीमरूपाणां विज्ञाने मम का गतिः ॥ ८ ॥ यूयमेवाभिजानीत योऽयं यद्वा करिष्यति । अहिरेव ह्यहेः पादान् विजानाति न संशयः ॥ ९ ॥

कृतवान् । सर्वस्यापि पप्रच्छुरिति पूर्वेणान्वयः ॥ ५-७ ॥ अथाब्रवीदित्यादि । अयं यः यादृशः । यद्वा कार्यं करिष्यति तद्यूयमेवाभिजानीतेति

॥ १ ॥ प्रतिपेदिरे प्राप्तानि ॥ २ ॥ गतायां निद्रायाम्, वनभङ्गध्वनिनेत्यर्थः ॥ ३-५ ॥ कोयमिति । उतशब्दो वार्थे । संवादो वा कथं कृत इति पप्रच्छुरिति पूर्वेण सम्बन्धः ॥ ६ ॥ आचक्ष्वेति । त्वया संवादं किं कृतवान् किमुद्दिश्य संवादं कृतवान् । पप्रच्छुरिति पूर्वेण सम्बन्धः ॥ ७ ॥ का गतिः क उपायः ॥ ८ ॥ योऽयं यद्वा

ति०—त्वयाऽनेन कथं संवादः कृत इति च पप्रच्छुः । यद्यपि ता निद्रिताः वनभङ्गध्वनिना जागरिता इति संवादज्ञानस्यैवाभावात् कथं प्रश्नो निरवसरः । तथापि निद्रामध्ये किञ्चिज्जागरेणैषत्संवादश्रवणेपि देवमायया पुनर्निद्रेति तत्प्रश्नोपपत्तिरित्याहुः । सीतायास्तद्दर्शनेऽपि निर्भयप्रसन्नमुखतयाऽवस्थानदर्शनादयं कश्चिदेतत्परिचित एतद्वृत्तान्तज्ञानार्थमेव प्रायेणागत इति सम्भाव्यानया संवादकरणं च सम्भाव्य तत्प्रश्न निर्वाह इति कतकः ॥ ६ ॥

संबन्धः । नैनं जानामीति । "विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे । (विप्रस्य) मित्रस्य चार्थेप्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि ॥"

अहमप्यस्य भीताऽस्मि नैनं जानामि कोन्वयम् । वेद्मि राक्षसमेवैनं कामरूपिणमागतम् ॥ १० ॥ वैदेह्या वचनं श्रुत्वा राक्षस्यो विद्रुता दिशः । स्थिताः काश्चिद्गताः काश्चिद्रावणाय निवेदितुम् ॥ ११ ॥ रावणस्य समीपे तु राक्षस्यो विकृताननाः । विरूपं वानरं भीममाख्यातुमुपचक्रमुः ॥ १२ ॥ अशोकवनिकामध्ये राजन् भीमवपुः कपिः । सीतया कृतसंवादस्तिष्ठत्यमितविक्रमः ॥ १३ ॥ न च तं जानकी सीता हरिं हरिणलोचना । अस्माभिर्बहुधा पृष्टा निवेदयितुमिच्छति ॥ १४ ॥ वासवस्य भवेद्दूतो दूतो वैश्रवणस्य वा । प्रेषितो वाऽपि रामेण सीतान्वेषण काङ्क्षया ॥ १५ ॥ तेन त्वद्भुतरूपेण यत्तत्तव मनोहरम् । नानामृगगणाकीर्णं प्रमृष्टं प्रमदावनम् ॥ १६ ॥ न तत्र कश्चिदुद्देशो यस्तेन न विनाशितः । यत्र सा जानकी सीता स तेन न विनाशितः ॥ १७ ॥ जानकीरक्षणार्थं वा श्रमाद्वा नोपलभ्यते । अथवा कः श्रमस्तस्य सैव तेनाभिरक्षिता ॥ १८ ॥ चारुपल्लवपुष्पाढ्यं यं सीता स्वयमास्थिता । प्रवृद्धः शिंशुपावृक्षः स च तेनाभिरक्षितः ॥ १९ ॥ तस्योग्ररूपस्योग्र त्वं दण्डमाज्ञातुमर्हसि । सीता संभाषिता येन तद्वनं च विनाशितम् ॥ २० ॥

इति स्मरणादसत्योक्तिः ॥८-१०॥ वैदेह्या इति । दिशः दिक्षु, वनस्य पार्श्वेष्वित्यर्थः । विद्रुताः विलीनाः । निवेदितुं निवेदयितुम् ॥ ११-१५॥ प्रमृष्टं भग्नमित्यर्थः ॥ १६-१९ ॥ तस्येति । हे उग्र ! त्वम् आज्ञातुम् आज्ञापयितुम् ॥ २० ॥ २१ ॥

करिष्यति तद्यूयमेव जानीतेति सम्बन्धः ॥ ९ ॥ अस्य अस्मात् भीताऽस्मि ॥१०॥ वैदेह्या वचनम् अज्ञानप्रतिपादकम्, अनेनात्मत्राणादौ मृषावादो न दोषायेति ध्वनितम् । काश्चिद्विद्रुताः काश्चिद्दृढं स्थिता एव काश्चिद्रावणाय निवेदितुं गताः॥११-१३॥न निवेदयितुमिच्छति प्रायेणेयं तं जानातीति तासामाशयः॥१४-१६॥ उद्देशः प्रदेशः ॥ १७-१९ ॥ आज्ञातुम् आज्ञापयितुम् ॥ २० ॥

संवर्तितेक्षणः परिवर्तितेक्षणः ॥ २२ ॥ २३ ॥ नाम प्रसिद्धौ । किंकर इति प्रसिद्धानित्यर्थः ॥ २४ ॥ किंकराणां सङ्ख्यां निर्दिशति–तेषामिति ॥२५॥ निर्ययुरिति । सर्वं इति विशेष्यम् । कूटो नाम अयस्कारकूटसदृश आयुधविशेषः । मुद्गरः द्रुघणः ॥ २६ ॥ अवस्थितं युद्धाय सन्नद्धमित्यर्थः ॥ २७ ॥

मनःपरिगृहीतां तां तव रक्षोगणेश्वर । कः सीतामभिभाषेत यो न स्यात्त्यक्तजीवितः ॥ २१ ॥ राक्षसीनां वचः श्रुत्वा रावणो राक्षसेश्वरः । हुताग्निरिव जज्वाल कोपसंवर्तितेक्षणः ॥ २२ ॥ तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नास्रबिन्दवः । दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिन्दवः ॥२३॥ आत्मनः सदृशाञ्छूरान् किङ्करान्नाम राक्षसान् । व्यादिदेश महातेजा निग्रहार्थं हनूमतः ॥२४॥ तेषामशीतिसाहस्रं किङ्कराणां तरस्विनाम् ॥ २५ ॥ निर्ययुर्भवनात् तस्मात् कूटमुद्गरपाणयः । महोदरा महादंष्ट्रा घोररूपा महाबलाः । युद्धाभिमनसः सर्वे हनुमद्ग्रहणोन्मुखाः ॥ २६ ॥ ते कपीन्द्रं समासाद्य तोरणस्थमवस्थितम् । अभिपेतुर्महावेगाः पतङ्गा इव पावकम् ॥ २७ ॥ ते गदाभिर्विचित्राभिः परिघैः काञ्चनाङ्गदैः । आजघ्नुर्वानरश्रेष्ठं शरैश्चादित्यसन्निभैः ॥ २८ ॥ मुद्गरैः पट्टिशैः शूलैः प्रासतोमरशक्तिभिः । परिवार्य हनूमन्तं सहसा तस्थुरग्रतः ॥ २९ ॥ हनुमानपि तेजस्वी श्रीमान् पर्वतसन्निभः । क्षितावाविध्य लांगूलं ननाद च महास्वनम् ॥ ३० ॥ स भूत्वा सुमहाकायो हनुमान् मारुतात्मजः । धृष्टमास्फोटयामास लङ्कां शब्देन पूरयन् ॥ ३१ ॥

परिघैः परिघणातनैः । काञ्चनाङ्गदैः काञ्चनपटैः ॥ २८ ॥ मुद्गरैरिति । पट्टिशो नाम लोहदण्डः तीक्ष्णधारः क्षुरोपम आयुधविशेषः । अत्रेत्थंभूतलक्षणे तृतीया । प्रासः कुन्तः । तोमरः आयुधविशेषः ॥ २९ ॥ श्रीमानिति तात्कालिकहर्षकृतकान्तिरुच्यते ॥ ३० ॥ धृष्टमिति क्रियाविशेषणम् ॥ ३१ ॥

सीतया सह सम्भाषणस्य अपराधत्वं साधयन्ति–मनःपरिगृहीतामिति । राजपरिग्रहसम्भाषणं पुंसोऽपराध इति भावः ॥ २१–२४ ॥ व्यादिष्टाः किङ्कराः कियन्त इत्यत आह–तेषामिति । निर्ययुरित्याद्युत्तरशेषः ॥ २५॥२६॥ अवस्थितं युद्धाय सन्नद्धम् ॥ २७ ॥ काञ्चनाङ्गदैः काञ्चनभूषणैः ॥ २८–३१ ॥

तस्येत्यादि । सानुनादिना सप्रतिध्वनिना । यद्वा अनुनादिनः पर्वतगुहादयः तत्सहितेन । यद्वा सानुषु प्रतिध्वनिं कुर्वता । उच्चैश्चेदमघोषयदिति । स हनुमान् इदं वक्ष्यमाणं वचनमुच्चैरघोषयत्॥३२॥घोषणवचनमाह—जयतीत्यादि । अभिपालितः वालिवधेन ॥३३॥अक्लिष्टकर्मण इत्यनेन स्वदास्यं न

तस्यास्फोटितशब्देन महता सानुनादिना । पेतुर्विहङ्गा गगनादुच्चैश्चेदमघोषयत् ॥ ३२ ॥ जयत्यतिबलो रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ ३३ ॥ दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः । हनुमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥३४॥ न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् । शिलाभिस्तु प्रहरतः पादपैश्च सहस्रशः ॥ ३५ ॥ अर्दयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम् । समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥३६॥ तस्य सन्नादशब्देन तेऽभवन् भयशङ्किताः । ददृशुश्च हनूमन्तं सन्ध्यामेघमिवोन्नतम् ॥ ३७ ॥ स्वामिसन्देशनिश्शङ्कास्ततस्ते राक्षसाः कपिम् । चित्रैः प्रहरणैर्भीमैरभिपेतुस्ततस्ततः ॥ ३८ ॥ स तैः परिवृतः शूरैः सर्वतः स महाबलः । आससादायसं भीमं परिघं तोरणाश्रितम् । स तं परिघमादाय जघान रजनीचरान् ॥ ३९ ॥ स पन्नगमिवादाय स्फुरन्तं विनतासुतः । विचचाराम्बरे वीरः परिगृह्य च मारुतिः ॥ ४० ॥

कर्मकृतम्, किन्तु स्वरूपप्रयुक्तमित्युच्यते॥३४॥प्रतिबलं समानबलम् । प्रहरतः, राक्षसानिति शेषः । प्रहारमात्रेण वा हनुमद्विशेषणम्॥३५॥अर्दयित्वेति । मिषतां पश्यताम् । अनादरे षष्ठी ॥ ३६ ॥ सन्ध्यामेघमिवेति रक्तवर्णत्वात् ॥३७॥ ततस्तत इति । अनेनास्य समीपं सहसा गन्तुमशक्ता इत्यवगम्यते ॥ ३८ ॥ ३९ ॥ स पन्नगमिति सपरियत्वमात्रे दृष्टान्तः । परिगृह्य, परिघमिति शेषः । स्फुरन्तं पन्नगमादाय विनतासुत इव स वीरो मारुतिः परिघं

तस्येति । आस्फोटितशब्देन क्ष्वेलाशब्देन । सानुनादिना सप्रतिध्वनिना । इन्नन्तो बहुव्रीहिः ॥ ३२ ॥ स्वयं जयार्थं स्वामिनं स्तौति—जयतीति ॥ ३३–३५ ॥ अर्दयित्वेति । मिषतां पश्यताम् । अनादरे षष्ठी ॥ ३६ ॥ तस्येति । सन्नादशब्देन सन्नादजनितशब्देन, आस्फोटितस्वनजनितप्रतिध्वनिनेत्यर्थः ॥ ३७ ॥ प्रहरणैः अभिपेतुः आयुधैः प्राहरन्नित्यर्थः ॥ ३८ ॥ ३९ ॥ परिगृह्येत्यत्र परिघः कर्म ॥ ४० ॥

परिगृह्याम्बरे विचचारेति सम्बन्धः ॥ ४० ॥ ४१ ॥ तस्मात् भयान्मुक्ताः दूरस्थाः इत्यर्थः ॥ ४२ ॥ ४३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥ ततः स किङ्करानित्यादि ॥ १ ॥ वनमित्यादि । ध्वंसन

[ सूदयामास वज्रेण दैत्यानिव सहस्रदृक् । ] स हत्वा राक्षसान् वीरान् किङ्करान् मारुतात्मजः । युद्धकांक्षी पुनर्वीरं स्तोरणं समुपाश्रितः ॥ ४१ ॥ ततस्तस्माद्भयान्मुक्ताः कतिचित्तत्र राक्षसाः । निहतान् किङ्करान् सर्वान् रावणाय न्यवेदयन् ॥४२॥ स राक्षसानां निहतं महद्बलं निशम्य राजा परिवृत्तलोचनः । समादिदेशाप्रतिमं पराक्रमे प्रहस्त पुत्रं समरे सुदुर्जयम् ॥ ४३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमत्सुन्दरकाण्डे द्विचत्वारिंशः सर्गः ॥४२॥ ततः स किङ्करान् हत्वा हनुमान् स्थानमास्थितः ॥ १ ॥ वनं भग्नं मया चैत्यप्रासादो न विनाशितः । तस्मात् प्रासादमप्येव भीमं विध्वंसयाम्यहम् । इति सञ्चिन्त्य मनसा हनुमान् दर्शयन् बलम् ॥ २ ॥ चैत्यप्रासादमाप्लुत्य मेरुशृङ्गमिवोन्नतम् । आरुरोह हरिश्रेष्ठो हनुमान् मारुतात्मजः ॥ ३ ॥ आरुह्य गिरिसङ्काशं प्रासादं हरियूथपः । बभौ स सुमहातेजाः प्रतिसूर्य इवोदितः ॥४॥ संप्रधृष्य च दुर्धर्षं चैत्यप्रासादमुत्तमम् । हनुमान् प्रज्वलन् लक्ष्म्या पारियात्रोपमोऽभवत् ॥ ५ ॥ स भूत्वा सुमहाकायः प्रभावान्मारुतात्मजः । धृष्टमास्फोटयामास लङ्कां शब्देन पूरयन् ॥ ६ ॥ तस्यास्फोटितशब्देन महता श्रोत्रघातिना । पेतुर्विहङ्गमास्तत्र चैत्यपालाश्च मोहिताः ॥ ७ ॥

फलमाह दर्शयन् बलमिति । बलदर्शनार्थमित्यर्थः ॥ २ ॥ ध्वंसनप्रकारमाह—चैत्येति । चैत्यं देवायतनम्, तद्रूपः प्रासादः चैत्यप्रासादः तम् । आप्लुत्य तोरणाल्लङ्घयित्वा । हरिश्रेष्ठो हनुमान् मारुतात्मज इत्यस्योत्तरश्लोकेनान्वयः । हरियूथपत्वेऽप्यहरिर्भविष्यतीति तद्व्यावृत्त्यर्थं हरिश्रेष्ठ इत्युक्तम् । प्रतिसूर्यः द्वितीयसूर्य इत्यर्थः । अनेन सूर्योदयस्सूचितः ॥ ३ ॥ ४ ॥ संप्रधृष्येति । संप्रधृष्य आक्रम्य । पारियात्रो नाम कुलपर्वतः ॥ ५–११ ॥

॥ ४१–४३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां द्विचत्वारिंशः सर्गः ॥ ४२ ॥ अथ रावणसन्दिष्टसेनान्तरागमनात्पूर्वं तूष्णीं स्थित्वा न किञ्चित् प्रयोजनमिति विचार्य प्रासादभङ्गादि चिकीर्षति—तत इति । ध्यानमास्थित इति पाठः । ध्यानं विचारः ॥ १ ॥ चैत्यप्रासादः

चैत्यस्थान् चैत्यपालान् ॥१२-१६॥ प्रासादस्येति । पवनात्मजः भ्रामयामासेत्यन्वयः । शतधारं धारा कोटिः । वज्रवत् स्थितमित्यर्थः, यद्वा शतधा अरमिति च्छेदः । अरं शीघ्रम् ॥ १७ ॥ रामानु०–प्रासादस्येति । महान्तस्य महाग्रस्य, अत्युन्नतशिखरस्येत्यर्थः । महार्हस्येति वा पाठः ॥ १७ ॥ तत्रेति । अग्निः सम

अस्त्रविज्जयतां रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ ८ ॥ दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः । हनुमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥ ९ ॥ न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् । शिलाभिस्तु प्रहरतः पादपैश्च सहस्रशः ॥१०॥ अर्दयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम् । समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥११॥ एवमुक्त्वा विमानस्थश्चैत्यस्थान् हरियूथपः । ननाद भीमनिर्ह्रादो रक्षसां जनयन् भयम् ॥१२॥ तेन शब्देन महता चैत्यपालाः शतं ययुः । गृहीत्वा विविधानस्त्रान् प्रासान् खड्गान् परश्वधान् । विसृजन्तो महाकाया मारुतिं पर्यवारयन् ॥१३॥ ते गदाभिर्विचित्राभिः परिघैः काञ्चनाङ्गदैः । आजघ्नुर्वानरश्रेष्ठं बाणैश्चादित्यसन्निभैः ॥ १४ ॥ आवर्त इव गङ्गायास्तोयस्य विपुलो महान् । परिक्षिप्य हरिश्रेष्ठं स बभौ रक्षसां गणः ॥ १५ ॥ ततो वातात्मजः क्रुद्धो भीमरूपं समास्थितः ॥ १६ ॥ प्रासादस्य महान्तस्य स्तम्भं हेमपरिष्कृतम् । उत्पाटयित्वा वेगेन हनुमान् पवनात्मजः । ततस्तं भ्रामयामास शतधारं महाबलः ॥ १७ ॥ तत्र चाग्निः समभवत् प्रासादश्चाप्यदह्यत ॥ १८ ॥ दह्यमानं ततो दृष्ट्वा प्रासादं हरियूथपः । स राक्षसशतं हत्वा वज्रेणेन्द्र इवासुरान् । अन्तरिक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ॥ १९ ॥

भवत्, भ्रामितस्तम्भैः स्तम्भान्तरसङ्घट्टनादिति भावः ॥ १८ ॥ १९ ॥



रक्षःकुलदेवताप्रासादः ॥ २–१५ ॥ वातात्मजः पवनात्मजः । भीमरूपं समास्थितः आस्थितवान् ॥ १६ ॥ महान्तस्य महाग्रस्य, अत्युन्नतशिखरस्येत्यर्थः । महार्हस्य इति च पाठः ॥ १७ ॥ तत्र भ्रामितस्तम्भैः स्तम्भान्तरसङ्घट्टनेन अग्निरभूदित्यर्थः ॥ १८ ॥ १९ ॥

राक्षसानामुत्साहभङ्गं कारयितुमाह—मादृशानामित्यादि ॥२०-२२॥ ओघबलाः ओघाख्यसङ्ख्याकबलाः ॥ २३-२५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥४३॥ संदिष्ट इत्यादि ॥१॥ विवृत्तनयनः मण्डलीकृतनयनः ॥२॥

मादृशानां सहस्राणि विसृष्टानि महात्मनाम् । बलिनां वानरेन्द्राणां सुग्रीववशवर्तिनाम् ॥ २० ॥ अटन्ति वसुधां कृत्स्नां वयमन्ये च वानराः ॥ २१ ॥ दशनागबलाः केचित् केचिद्दशगुणोत्तराः । केचिन्नागसहस्रस्य बभूवुस्तुल्य विक्रमाः ॥ २२ ॥ सन्ति चौघबलाः केचित् केचिद्वायुबलोपमाः । अप्रमेयबलाश्चान्ये तत्रासन् हरियूथपाः ॥२३॥ ईदृग्विधैस्तु हरिभिर्वृतो दन्तनखायुधैः । शतैः शतसहस्रैश्च कोटीभिरयुतैरपि । आगमिष्यति सुग्रीवः सर्वेषां वो निषूदनः ॥ २४ ॥ नेयमस्ति पुरी लङ्का न यूयं न च रावणः । यस्मादिक्ष्वाकुनाथेन बद्धं वैरं महात्मना ॥ २५ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

सन्दिष्टो राक्षसेन्द्रेण प्रहस्तस्य सुतो बली । जम्बुमाली महादंष्ट्रो निर्जगाम धनुर्धरः ॥ १ ॥

रक्तमाल्याम्बरधरः स्रग्वी रुचिरकुण्डलः । महान् विवृत्तनयनश्चण्डः समरदुर्जयः ॥ २ ॥

धनुः शक्रधनुःप्रख्यं महद्रुचिरसायकम् । विस्फारयानो वेगेन वज्राशनिसमस्वनम् ॥ ३ ॥

तस्य विस्फारघोषेण धनुषो महता दिशः । प्रदिशश्च नभश्चैव सहसा समपूर्यत ॥ ४ ॥

रुचिरसायकं रुचिरसायकार्हम् । विस्फारयानः विस्फारयमाणः, ज्याकर्षणं कुर्वन्नित्यर्थः । वज्राशनिसमस्वनमिति विस्फारणक्रियाविशेषणम् ॥ ३ ॥ तस्येति । नभस्समपूर्यत, दिशः प्रदिशश्च समपूर्यन्तेति विपरिणामेनानुषङ्गः ॥ ४ ॥ ५ ॥

राक्षसहृदयानि विदारयितुमाह—मादृशानामित्यादि ॥ २०-२२ ॥ सन्ति चेति । ओघबलाः ओघसङ्ख्यासङ्ख्यातगजबलाः ॥ २३-२५ ॥ इति श्रीमहेश्वरतीर्थ विरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां त्रिचत्वारिंशः सर्गः ॥४३॥१ ॥ २ ॥ धनुरिति । विस्फारयानः विस्फारयमाणः ॥३॥ समपूर्यत

स०—स्रग्वी सुवर्णमालः । “ प्रहस्तपुत्रस्त्विह जम्बुमाली प्रामञ्जनिं प्राप्य सुवर्णमाली ॥ इति संग्रहरामायणोक्तेः ॥ २ ॥ नभः आकाशम् । दिशः प्रदिशश्च यदात्मिकास्तत्समपूर्यत । “ साक्षिसिद्धमेव गगनं तद्भागा एव दिशो न द्रव्यान्तरम्”, इति सुधोक्तेः ॥ ४ ॥

तोरणविटङ्कं तोरणस्य कपोतपालिका। "कपोतपालिकायां तु विटङ्कं पुन्नपुंसकम्" इत्यमरः। स्तम्भोपरि तिर्यङ्निहितदार्वित्यर्थः ॥ ६ ॥ एकेनेत्येतदर्धचन्द्रस्यापि विशेषणम्। अर्धचन्द्राकाराग्रशरेणेत्यर्थः। कर्णिना कर्णवच्छरेण ॥ ७ ॥ अम्बुजं रक्तपद्मम्। भास्कररश्मिना विद्धम् अत



रथेन खरयुक्तेन तमागतमुदीक्ष्य सः। हनुमान् वेगसम्पन्नो जहर्ष च ननाद च ॥ ५ ॥ तं तोरणविटङ्कस्थं हनुमन्तं महाकपिम्। जम्बुमाली महाबाहुर्विव्याध निशितैः शरैः ॥ ६ ॥ अर्धचन्द्रेण वदने शिरस्येकेन कर्णिना। बाह्वोर्विव्याध नाराचैर्दशभिस्तं कपीश्वरम् ॥७॥ तस्य तच्छुशुभे ताम्रं शरेणाभिहतं मुखम्। शरदीवाम्बुजं फुल्लं विद्धं भास्कररश्मिना ॥८॥ तत्तस्य रक्तं रक्तेन रञ्जितं शुशुभे मुखम्। यथाऽऽकाशे महापद्मं सिक्तं चन्दनबिन्दुभिः ॥ ९ ॥ चुकोप बाणाभिहतो राक्षसस्य महाकपिः ॥ १० ॥ ततः पार्श्वेऽतिविपुलां ददर्श महतीं शिलाम्। तरसा तां समुत्पाट्य चिक्षेप बलवद्बली। तां शरैर्दशभिः क्रुद्धस्ताडयामास राक्षसः ॥ ११ ॥ विपन्नं कर्म तद् दृष्ट्वा हनुमांश्चण्डविक्रमः। सालं विपुलमुत्पाट्य भ्रामयामास वीर्यवान् ॥ १२ ॥ भ्रामयन्तं कपिं दृष्ट्वा सालवृक्षं महाबलम्। चिक्षेप सुबहून् बाणान् जम्बुमाली महाबलः ॥१३॥ सालं चतुर्भिश्चिच्छेद वानरं पञ्चभिर्भुजे। उरस्येकेन बाणेन दशभिस्तु स्तनान्तरे ॥ १४ ॥ स शरैः पूरिततनुः क्रोधेन महता वृतः। तमेव परिघं गृह्य भ्रामयामास वेगतः ॥ १५ ॥ अतिवेगोऽतिवेगेन भ्रामयित्वा बलोत्कटः। परिघं पातयामास जम्बुमालेर्महोरसि ॥ १६ ॥

एव फुल्लमित्यर्थः ॥ ८ ॥ रक्तं स्वत एव रक्तम्। रक्तेन शोणितेन। महापद्मं रक्तोत्पलम्। चन्दनबिन्दुभिः रक्तचन्दनबिन्दुभिः ॥ ९ ॥ चुकोपेत्यर्धम्। राक्षसस्य राक्षसविषये ॥ १०–१३ ॥ सालमिति। पञ्चभिर्भुजे इत्यादौ विव्याधेत्यध्याहारः ॥ १४–१६ ॥



दिगादिसमुदायगोचरमेकवचनम् ॥ ४ ॥ जहर्ष स्वबलानुरूपशत्रुप्राप्त्या ॥ ५ ॥ तोरणविटङ्कस्थं तोरणकपोतपालिकास्थम्। विटङ्को नाम तोरणस्तम्भयोरुपरि तिर्यङ्निहितदारुः ॥ ६ ॥ कर्णिना अङ्कुशाकाराग्रशरविशेषेण ॥ ७ ॥ अम्बुजं रक्ताम्बुजम् ॥ ८ ॥ चन्दनबिन्दुभिः रक्तचन्दनबिन्दुभिः ॥ ९–१६ ॥

तस्य चैवेति। नाश्वा इति अश्वशब्देनात्र खरा उच्यन्ते । "रथेन खरयुक्तेन" इति पूर्वमुक्तत्वात् ॥ १७–२० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ ततस्त इत्यादि। भवनात् तस्मात् रावणभवनात् ।

तस्य चैव शिरो नास्ति न बाहू न च जानुनी । न धनुर्न रथो नाश्वास्तत्रादृश्यन्त नेषवः ॥ १७॥ स हतस्तरसा तेन जम्बुमाली महाबलः । पपात निहतो भूमौ चूर्णिताङ्गविभूषणः ॥ १८ ॥ जम्बुमालिं च निहतं किङ्करांश्च महाबलान् । चुक्रोध रावणः श्रुत्वा कोपसंरक्तलोचनः ॥ १९ ॥ स रोषसंवर्तितताम्रलोचनः प्रहस्तपुत्रे निहते महाबले । अमात्यपुत्रानतिवीर्यविक्रमान् समादिदेशाशु निशाचरेश्वरः ॥ २० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

ततस्ते राक्षसेन्द्रेण चोदिता मन्त्रिणः सुताः । निर्ययुर्भवनात्तस्मात् सप्त सप्तार्चिवर्चसः ॥ १ ॥
महाबलपरीवारा धनुष्मन्तो महाबलाः । कृतास्त्रास्त्रविदां श्रेष्ठाः परस्परजयैषिणः ॥ २ ॥

सप्तार्चिवर्चस इत्यत्र सप्तार्चीति इकारान्तत्वमार्षम् ॥ १ ॥ कृतास्त्राः शिक्षितास्त्राः । आर्षः सन्धिः । कृतास्त्राणामस्त्रविदां च श्रेष्ठा इति वा । ज्ञानशिक्षे उभे अप्येषां स्त इति भावः । परस्परजयैषिणः प्रत्येकं हनुमज्जयैषिण इत्यर्थः ॥ २ ॥

नाश्वाः 'रथेन खरयुक्तेन' इत्युक्तत्वादश्वशब्देन खरा उच्यन्ते ॥ १७–२० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ तत इति । सप्तार्चिवर्चसः अर्चीति इकारान्तत्वमार्षम् ॥ १ ॥ कृतास्त्रास्त्रविदां श्रेष्ठाः कृतास्त्राणाम् अस्त्रविदां च श्रेष्ठाः । परस्पर

स०– चूर्णिताङ्ग इव द्रुमः इति पाठः । चूर्णिताङ्गः चूर्णीकृतशाखः, चूर्णीकृतावयवो राक्षसोऽपि ॥ १८ ॥ क्रोधसंरक्तलोचनः पूर्वं किङ्करनाशात् पुनर्जम्बुमालिनं निहतं श्रुत्वा पूर्वापेक्षया बहुकोपं कृतवानित्यर्थः ॥ १९ ॥ अतिवीर्यविक्रमान् वीर्यं वैरिपराक्रमः । तदतिक्रम्य पराक्रमो येषां तान् ॥ २० ॥ सप्तार्चिवर्चसः सप्तार्चाः प्रतिमारूपाः काली कराली इत्याद्याः अस्य सन्तीति सप्तार्ची वह्निः, तद्वद्वर्चो येषां ते तथा । यद्वा इकारान्तोऽर्चिशब्दोऽर्चिःशब्दपर्यायः । सप्त अर्चयोऽर्चीषि शिखा यस्य सोऽग्निः " अर्चिर्मयूरशिखयोः " इति विश्वः । इकारान्तोऽप्यस्ति । " अग्नेर्भ्राजन्ते अर्चयः " इतीति भानुदीक्षितलेखात् ॥ १ ॥ परस्परजयैषिणः परस्परमुत्कर्षापेक्षाः ॥ २ ॥

हेमजालपरिक्षिप्तैः सुवर्णजालविनिर्मितैः । स्वासाधारणचिह्नयुक्तं ध्वजम् । केवलचित्रवस्त्रालंकृता पताका । तोयदस्वननिर्घोषैः तोयदस्वनतुल्यनिर्घोषवद्भिः ॥ ३–८ ॥ स शरान् मोघयामास, यथा शराः स्वस्मिन्न पतन्ति तथा चकारेत्यर्थः । रथवेगं च मोघयामासेत्यन्वयः ; यथा रथवेगास्स्व



हेमजालपरिक्षिप्तैर्ध्वजवद्भिः पताकिभिः । तोयदस्वननिर्घोषैर्वाजियुक्तैर्महारथैः ॥ ३ ॥ तप्तकाञ्चनचित्राणि चापान्यमितविक्रमाः । विस्फारयन्तः संहृष्टास्तडित्वन्त इवाम्बुदाः ॥ ४॥ जनन्यस्तु ततस्तेषां विदित्वा किङ्करान् हतान् । बभूवुः शोकसम्भ्रान्ताः सबान्धवसुहृज्जनाः ॥५॥ ते परस्परसङ्घर्षात्तप्तकाञ्चनभूषणाः । अभिपेतुर्हनूमन्तं तोरणस्थमवस्थितम् ॥ ६ ॥ सृजन्तो बाणवृष्टिं ते रथगर्जितनिःस्वनाः । वृष्टिमन्त इवाम्भोदा विचेरुर्नैर्ऋताम्बुदाः ॥ ७ ॥ अवकीर्णस्ततस्ताभिर्हनुमाञ्छरवृष्टिभिः । अभवत् संवृताकारः शैलराडिव वृष्टिभिः ॥ ८ ॥ स शरान् मोघयामास तेषामाशुचरः कपिः । रथवेगं च वीराणां विचरन् विमलेऽम्बरे ॥९॥ स तैः क्रीडन् धनुष्मद्भिर्व्योम्नि वीरः प्रकाशते । धनुष्मद्भिर्यथा मेघैर्मारुतः प्रभुरम्बरे ॥ १० ॥ स कृत्वा निनदं घोरं त्रासयंस्तां महाचमूम् । चकार हनुमान् वेगं तेषु रक्षस्सु वीर्यवान् ॥ ११॥ तलेनाभ्यहनत् कांश्चित् पादैः कांश्चित् परन्तपः । मुष्टिनाऽभ्यहनत् कांश्चिन्नखैः कांश्चिद् व्यदारयत् ॥ १२ ॥ प्रममाथोरसा कांश्चिदूरुभ्यामपरान् कपिः । केचित्तस्य निनादेन तत्रैव पतिता भुवि ॥ १३ ॥ ततस्तेष्ववसन्नेषु भूमौ निपतितेषु च । तत्सैन्यमगमत्सर्वं दिशो दश भयार्दितम् ॥ १४ ॥

प्रहाराय न भवन्ति तथा समचरदित्यर्थः ॥ ९ ॥ १० ॥ वेगं संहारोद्योगम् ॥ ११ ॥ पादैः कांश्चिदिति बहुवचनं वानराणां द्विपात्सु चतुष्पात्सु च जयैषिणः अहमहमिकया परस्परोत्कर्षापेक्षिण इत्यर्थः ॥ २–१४ ॥



स०–राक्षसानां शरवर्षेण कार्ष्ण्येन च मेघसमता । पूर्वमखण्डतः शरसारागमनादेकवचनं वृष्टिमिति प्रत्येकं पृथक्पृथगवनाद्वृष्टिभिरिति बहुवचनं च सम्भवतः ॥ ७ ॥ ८ ॥

ग्रहणात् ॥ १२–१४ ॥ नीडं ध्वजावयवविशेषः ॥ १५ ॥ स्रवन्त्यः नद्यः । विकृतं यथा तथा ननाद प्रतिध्वानवती बभूव ॥ १६ ॥ १७ ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

विनेदुर्विस्वरं नागा निपेतुर्भुवि वाजिनः । भग्ननीडध्वजच्छत्रैर्भूश्च कीर्णाऽभवद्रथैः ॥ १५ ॥ स्रवता रुधिरेणाथ स्रवन्त्यो दर्शिताः पथि । विविधैश्च स्वरैर्लङ्का ननाद विकृतं तदा ॥ १६ ॥ स तान् प्रवृद्धान् विनिहत्य राक्षसान् महाबलश्चण्डपराक्रमः कपिः । युयुत्सुरन्यैः पुनरेव राक्षसैस्तमेव वीरोऽभिजगाम तोरणम् ॥ १७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

हतान् मन्त्रिसुतान् बुद्ध्वा वानरेण महात्मना । रावणः संवृताकारश्चकार मतिमुत्तमाम् ॥ १ ॥ स विरूपाक्षयूपाक्षौ दुर्धरं चैव राक्षसम् । प्रघसं भासकर्णं च पञ्च सेनाग्रनायकान् ॥ २ ॥ सन्दिदेश दशग्रीवो वीरान्नयविशारदान् । हनुमद्ग्रहणव्यग्रान् वायुवेगसमान् युधि ॥ ३ ॥ यात सेनाग्रगाः सर्वे महाबलपरिग्रहाः । सवाजिरथमातङ्गाः स कपिः शास्यतामिति ॥ ४ ॥ यत्तैश्च खलु भाव्यं स्यात्तमासाद्य वनालयम् । कर्म चापि समाधेयं देशकालविरोधिनम् ॥ ५ ॥ न ह्यहं तं कपिं मन्ये कर्मणा प्रतितर्कयन् । सर्वथा तन्महद्भूतं महाबलपरिग्रहम् । भवेदिन्द्रेण वा सृष्टमस्मदर्थं तपोबलात् ॥ ६ ॥

हतानित्यादि । संवृताकारः अन्तर्मनाः । मतिं चिन्ताम् ॥ १ ॥ स इति ॥ २॥३ ॥ इति वक्ष्यमाणप्रकारेण ॥ ४ ॥ तमेवाह–यत्तैरित्यादिना । यत्तैः यतमानैः । अप्रमत्तैरिति यावत् । यतेः कर्तरि क्तः । समाधेयं परिहर्तव्यम् । देशकालविरोधिनं देशकालविरोधीत्यर्थः ॥५॥ महद्भूतम्, मन्य इत्यनुषज्यते ।
विनेदुरिति । नीडो रथावयवविशेषः ॥ १५–१७ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥
हतानिति । संवृताकारः गूढाकारः, अतः सञ्जातशङ्क इत्यर्थः । उत्तमां मतिं धैर्यम् ॥ १–३ ॥ इतीत्थं वक्ष्यमाणप्रकारेण कपिः शास्यताम् । यत्तैः यतमानैः, अप्रमत्तैरिति यावत् । किञ्चात्र देशकालाविरुद्धं कर्म कार्यमित्याह–कर्म चेति । देशकालविरोधिनं देशकालविरोधीत्यर्थः । आर्षो लिङ्गविभक्तिव्यत्ययः । कर्म समाधेयं परिहर्तव्यम् । देशकालाविरोधिनमिति पाठे समाधेयं कर्तव्यम् ॥ ४ ॥ ५ ॥ अत्र हेतुमाह–हीति । सर्वथेति । इन्द्रेण वेति वाशब्दादन्येन वेत्यर्थः । अस्मदर्थम्

इन्द्रेण वा, अन्यैर्वेति शेषः । वाशब्दस्य विकल्पार्थस्य प्रयोगात् ॥ ६ ॥ ७ ॥ व्यलीकम् अप्रियम् ॥ ८ ॥ नावमान्य इति । अत्र त्रयोदशसहस्रश्लोकाः



सनागयक्षगन्धर्वा देवासुरमहर्षयः । युष्माभिः सहितैः सर्वैर्मया सह विनिर्जिताः ॥ ७ ॥ तैरवश्यं विधातव्यं व्यलीकं किंचिदेव नः । तदेव नात्र सन्देहः प्रसह्य परिगृह्यताम् ॥ ८ ॥ नावमान्यो भवद्भिश्च हरिर्धीरपराक्रमः । दृष्टा हि हरयः पूर्वं मया विपुलविक्रमाः ॥ ९ ॥ वाली च सहसुग्रीवो जाम्बवांश्च महाबलः । नीलः सेनापतिश्चैव ये चान्ये द्विविदादयः ॥१०॥ नैवं तेषां गतिर्भीमा न तेजो न पराक्रमः । न मतिर्न बलोत्साहौ न रूपपरिकल्पनम् ॥ ११ ॥ महत्सत्त्वमिदं ज्ञेयं कपिरूपं व्यवस्थितम् । प्रयत्नं महदास्थाय क्रियतामस्य निग्रहः ॥ १२ ॥ कामं लोकास्त्रयः सेन्द्राः ससुरासुरमानवाः । भवतामग्रतः स्थातुं न पर्याप्ता रणाजिरे ॥ १३ ॥ 'तथापि तु नयज्ञेन जयमाकांक्षता रणे आत्मा रक्ष्यः प्रयत्नेन युद्धसिद्धिर्हि चञ्चला ॥ १४ ॥ ते स्वामिवचनं सर्वे प्रतिगृह्य महौजसः । समुत्पेतुर्महावेगा हुताशसमतेजसः ॥ १५ ॥ रथैर्मत्तैश्च मातङ्गैर्वाजिभिश्च महाजवैः । शस्त्रैश्च विविधैस्तीक्ष्णैः सर्वैश्चोपचिता बलैः ॥ १६ ॥ ततस्तं ददृशुर्वीरा दीप्यमानं महाकपिम् । रश्मिमन्तमिवोद्यन्तं स्वतेजोरश्मिमालिनम् ॥ १७ ॥

गताः । अयं चतुर्दशसहस्रस्यादिः । धीति गायत्र्याश्चतुर्दशाक्षरम् ॥ ९ ॥ १० ॥ गतिः वेगः । रूपपरिकल्पनं यथेष्टरूपग्रहणम् ॥ ११ ॥ महदिति । इत्थं महत्सत्त्वं किमपि कपिरूपं सत् व्यवस्थितमिति ज्ञेयमित्यर्थः ॥ १२–१६ ॥ स्वतेजोरश्मिमालिनं स्वतेजसा सूर्यम् । रश्मिमन्तमिवेत्यत्र उपमा,

अस्मन्निग्रहार्थम् ॥ ६ ॥ अत्र हेतुः–सनागेत्यादि श्लोकद्वयमेकं वाक्यम् । परिगृह्यताम्, कपिरिति शेषः ॥ ७ ॥ ८ ॥ नावमान्य इत्यस्य श्लोकस्य एकादशाक्षरेण धी इति गायत्र्याश्चतुर्दशाक्षरं सङ्गृह्णाति ॥ ९ ॥ १० ॥ नैव तेषामित्यादौ सर्वत्र ईदृक्छब्दोऽध्याहर्तव्यः । तथा चेत्थं योजना । तेषां वाल्यादीनां हनुमतो भीमा गतिः तेजआदिकं च यथा तथा ईदृक् नास्तीति सम्बन्धः । रूपपरिकल्पनं यथेप्सितरूपपरिग्रहणम् ॥ ११ ॥ प्रयत्नमित्यार्षं क्लीबत्वम् ॥ १२ ॥ कामं यद्यपीत्यर्थः ॥ १३ ॥ नयज्ञेन नीतिज्ञेन । आत्मा स्वदेहः । युद्धसिद्धिः युद्धे जयः ॥ १४–१७ ॥

अत्र रूपकमिति भिदा ॥ १७ ॥ तोरणस्थमिति । उत्साहः लोकोत्तरकार्येषु स्थेयान् प्रयत्नः । महासत्त्वं महाध्यवसायम् । "द्रव्यासुव्यवसायेषु सत्त्व मस्त्री तु जन्तुषु" इत्यमरः । द्वितीयबलशब्दश्शक्तिवचनः । "बलं रूपेऽस्थनि स्थौल्ये शक्तिरेतश्चमूषु च" इति वैजयन्ती ॥ १८ ॥ १९ ॥ तीक्ष्णाः

तोरणस्थं महोत्साहं महासत्त्वं महाबलम् । महामतिं महावेगं महाकायं महाबलम् ॥ १८ ॥ तं समीक्ष्यैव ते सर्वे दिक्षु सर्वास्ववस्थिताः । तैस्तैः प्रहरणैर्भीमैरभिपेतुस्ततस्ततः ॥ १९ ॥ तस्य पञ्चायसास्तीक्ष्णाः शिताः पीतमुखाः शराः । शिरस्युत्पलपत्राभा दुर्धरेण निपातिताः ॥ २० ॥ स तैः पञ्चभिराविद्धः शरैः शिरसि वानरः । उत्पपात नदन् व्योम्नि दिशो दश विनादयन् ॥ २१ ॥ ततस्तु दुर्धरो वीरः सरथः सज्यकार्मुकः । किरन् शरशतैस्तीक्ष्णै रभिपेदे महाबलः ॥ २२ ॥ स कपिर्वारयामास तं व्योम्नि शरवर्षिणम् । वृष्टिमन्तं पयोदान्ते पयोदमिव मारुतः ॥ २३ ॥ अर्द्यमानस्ततस्तेन दुर्धरेणानिलात्मजः । चकार कदनं भूयो व्यवर्धत च वेगवान् ॥ २४ ॥ स दूरं सहसोत्पत्य दुर्धरस्य रथे हरिः । निपपात महावेगो विद्युद्राशिर्गिराविव ॥ २५ ॥ ततः स मथिताष्टाश्वं रथं भग्नाक्षकूबरम् । विहाय न्यपतद्भूमौ दुर्धरस्त्यक्तजीवितः ॥ २६ ॥ तं विरूपाक्षयूपाक्षौ दृष्ट्वा निपतितं भुवि । सञ्जातरोषौ दुर्धर्षावुत्पेततुररिन्दमौ ॥ २७ ॥

क्रूराः । शिताः निशिताः । पीतमुखाः समीचीनायसनिर्मितत्वेन पीतरेखाग्राः । उत्पलपत्राभाः, उत्पलपत्राणि यथा निपात्यन्ते तथा निपातिता इत्यर्थः ॥ २०–२२ ॥ वारयामास स्ववेगेन प्रापयामासेत्यर्थः ॥ २३ ॥ कदनं युद्धम् ॥ २४ ॥ विद्युद्राशिः अशनिः ॥ २५ ॥ कूबरः युगन्धरः ॥ २६–२८ ॥

सत्त्वं चित्तम् ॥ १८ ॥ दिक्षु सर्वास्ववस्थिताः द्राक् तत्समीपमागन्तुं चकिता इति भावः ॥ १९ ॥ तीक्ष्णाः मर्मच्छिदः । पीतमुखाः पीतानि रुधिराणि मुखानि शल्यानि येषां ते तथा, शत्रुशोणितरञ्जिता इत्यर्थः । उत्पलपत्राभाः तद्वर्णाः । यद्वा पीतमुखाः फलभागे स्वर्णरूषिताः । उत्पलपत्राभा एव न तु तत्पीडार्हा इत्यर्थः ॥ २०–२२ ॥ कपिर्व्योम्नि स्थित्वा तं स्वनादेन हुङ्कारादिरूपेण वारयामास । पयोदान्ते जलदात्ययवर्षाकालान्ते ॥ २३ ॥ २४ ॥ स दूरमिति । विद्युद्राशिः

वेगं विनिहत्य परिहृत्य ॥ २९-३८ ॥ ध्वजिनीपतीन् सेनापतीन् । कृतक्षणः दत्तावसरः, अभूदिति शेषः ॥ ३९ ॥ इति श्रीगोविन्दराजविरचिते



स ताभ्यां सहसोत्पत्य विष्ठितो विमलेऽम्बरे । मुद्गराभ्यां महाबाहुर्वक्षस्यभिहतः कपिः ॥ २८ ॥ तयोर्वेगवतोर्वेगं विनिहत्य महाबलः । निपपात पुनर्भूमौ सुपर्णसमविक्रमः ॥ २९ ॥ स सालवृक्षमासाद्य तमुत्पाट्य च वानरः । तावुभौ राक्षसौ वीरौ जघान पवनात्मजः ॥३०॥ ततस्तांस्त्रीन् हतान् ज्ञात्वा वानरेण तरस्विना । अभिपेदे महावेगः प्रसह्य प्रघसो हरिम् ॥३१॥ भासकर्णश्च संक्रुद्धः शूलमादाय वीर्यवान् । एकतः कपिशार्दूलं यशस्विनमवस्थितम् ॥ ३२ ॥ पट्टिशेन शिताग्रेण प्रघसः प्रत्ययोधयत् । भासकर्णश्च शूलेन राक्षसः कपिसत्तमम् ॥ ३३ ॥ स ताभ्यां विक्षतैर्गात्रैरसृग्दिग्धतनूरुहः । अभवद्वानरः क्रुद्धो बालसूर्यसमप्रभः ॥ ३४ ॥ समुत्पाट्य गिरेः शृङ्गं समृगव्यालपादपम् । जघान हनुमान् वीरो राक्षसौ कपिकुञ्जरः ॥ ३५ ॥ ततस्तेष्ववसन्नेषु सेनापतिषु पञ्चसु । बलं तदवशेषं च नाशयामास वानरः ॥ ३६ ॥ अश्वैरश्वान् गजैर्नागान् योधैर्योधान् रथै रथान् । स कपिर्नाशयामास सहस्राक्ष इवासुरान् ॥ ३७ ॥ हतैर्नागैश्च तुरगैर्भग्नाक्षैश्च महारथैः । हतैश्च राक्षसैर्भूमी रुद्धमार्गा समन्ततः ॥ ३८ ॥ ततः कपिस्तान् ध्वजिनीपतीन् रणे निहत्य वीरान् सबलान् सवाहनान् । समीक्ष्य वीरः परिगृह्य तोरणं कृतक्षणः काल इव प्रजाक्षये ॥३९॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६॥

श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥



अशनिसङ्काशः ॥ २५-२७ ॥ ताभ्यां कर्तृभ्याम्, मुद्गराभ्यां करणाभ्याममिहतः ॥ २८-३१ ॥ एकतः अवस्थितावित्यन्वयः । एकत्र स्थितावित्यर्थः ॥ ३२-३८ ॥ ध्वजिनीपतीन् सेनापतीन् परिगृह्य आश्रित्य, स्थित इति शेषः । कृतक्षणः लब्धावसरः ॥ ३९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां षट्चत्वारिंशः सर्गः ॥ ४६ ॥

सेनापतीनित्यादि। समीक्ष्य विज्ञाय ॥ १ ॥ रामानु०—सेनापतीनिति। समीक्ष्य विज्ञाय। प्रसमैक्षताग्रत इति पाठः ॥१॥ द्विजातिमुख्यैः हविषा उदीरितः अभिवर्धितः पावक इवेत्यन्वयः ॥ २ ॥ ३ ॥ ततो महदित्यनेनोक्तं विस्तरेणाह—ततस्तपस्संग्रहेत्यादिना। तपस्सङ्ग्रहसञ्चयार्जितं तपोनुष्ठानसमूहसम्पादितम् ॥ ४ ॥ समाहितं सज्जीकृतम्। अष्टासिनिबद्धबन्धुरम् अष्टासिभिर्निबद्धम् अत एव बन्धुरं सुन्दरम्। "बन्धुरं सुन्दरे नम्रे" इति विश्वः।

सेनापतीन् पञ्च स तु प्रमापितान् हनूमता सानुचरान् सवाहनान्। समीक्ष्य राजा समरोद्धतोन्मुखं कुमारमक्षं प्रसमैक्षताग्रतः ॥ १ ॥ स तस्य दृष्ट्यर्पणसंप्रचोदितः प्रतापवान् काञ्चनचित्रकार्मुकः। समुत्पपाताथ सदस्युदीरितो द्विजातिमुख्यैर्हविषेव पावकः ॥ २ ॥ ततो महद्बालदिवाकरप्रभं प्रतप्तजाम्बूनदजालसंततम्। रथं समास्थाय ययौ स वीर्यवान् महाहरिं तं प्रति नैर्ऋतर्षभः ॥ ३ ॥ ततस्तपःसंग्रहसञ्चयार्जितं प्रतप्तजाम्बूनदजालशोभितम्। पताकिनं रत्नविभूषितध्वजं मनोजवाष्टाश्ववरैः सुयोजितम् ॥ ४ ॥ सुरासुराधृष्यमसङ्गचारिणं रविप्रभं व्योमचरं समाहितम्। सतूणमष्टासिनिबद्धबन्धुरं यथाक्रमावेशितशक्तितोमरम् ॥ ५ ॥ विराजमानं प्रतिपूर्णवस्तुना सहेमदाम्ना शशिसूर्यवर्चसा। दिवाकराभं रथमास्थितस्ततः स निर्जगामामरतुल्यविक्रमः ॥ ६ ॥

यद्वा अष्टासिभिर्निबद्धं बन्धुरं यस्य स तथा। बन्धुरं फलकासङ्घाट इत्याहुः। अन्ये घण्टा इत्यप्याहुः। तदानीम् अष्टासिश्चासौ निबद्धबन्धुरश्चेति समासः। यथाक्रमावेशितशक्तितोमरं पङ्क्तितया स्थापितशक्तितोमरम् ॥ ५ ॥ प्रतिपूर्णवस्तुना समग्रोपकरणेन। शरधनुःकवचादीन्युपकरणानि।

प्रमापितान् मारितान्। समरोद्धतोन्मुखं समरोद्धतश्चासौ समरायोन्मुखश्च तम्। आक्षं समक्षमवस्थितम् अक्षाख्यं कुमारम्। निशम्य दृष्ट्वा प्रसमैक्षत युद्धार्थमाज्ञापयामासेत्यर्थः ॥ १ ॥ द्विजातिमुख्यैर्हविषा उदीरितः पावक इति सम्बन्धः ॥ २ ॥ जाम्बूनदजालेन तत्समूहेन सन्ततं व्याप्तम् ॥ ३ ॥ ततो महदित्यादिश्लोकोक्तमेवार्थं प्रपञ्चयति—ततस्तप इत्यादिश्लोकत्रयेण। तपस्सङ्ग्रहसञ्चयार्जितं तपोनुष्ठानसमूहसम्पादितम् ॥ ४ ॥ समाहितं सज्जीकृतम्। अष्टासिनिबद्धबन्धुरम् अष्टाभिरसिभिर्निबद्धम् अत एव बन्धुरं सुन्दरम् ॥ ५ ॥ परिपूर्णवस्तुना समग्रसमरोपकरणेन। सः अक्षः शशिसूर्यवर्चसा हेमदाम्ना विराजमानं रथमास्थितो

स०—समरोद्धतोन्मुखं समरोद्धताः वैरिणः तदुन्मुखः तदभिमुखः तम्। आक्षम् अक्षाणां नेत्राणामिन्द्रियाणामयं विषयः आक्षः तम्। नेत्रविषयमिति यावत्। प्रसमैक्षताक्षम् इति पाठः ॥ १ ॥

प्रतिपूर्णमस्तिनेति पाठे आस्तिना धनेनेत्यर्थः । हेमदाम्ना हेममयाश्वादिबन्धनरज्जुना । शशिसूर्यवर्चसा दामसु किञ्चित्सितवर्णं किञ्चित्सूर्यवत्पीतवर्णमित्यर्थः । प्रतिपूर्णवस्तुना शशिसूर्यवर्चसा हेमदाम्ना च विराजमानमित्यन्वयः । यद्वा क्वचिच्छशिवर्चसा क्वचित्सूर्यवर्चसा च विराजमानमित्यन्वयः ।

स पूरयन् खं च महीं च साचलां तुरङ्गमातङ्गमहारथस्वनैः । बलैः समेतैः स हि तोरणस्थितं समर्थमासीनमुपागमत् कपिम् ॥ ७ ॥ स तं समासाद्य हरिं हरीक्षणो युगान्तकालाग्निमिव प्रजाक्षये । अवस्थितं विस्मितजातसंभ्रमः समैक्षताक्षो बहुमानचक्षुषा ॥ ८ ॥ स तस्य वेगं च कपेर्महात्मनः पराक्रमं चारिषु पार्थिवात्मजः । विधारयन् स्वं च बलं महाबलो हिमक्षये सूर्य इवाभिवर्धते ॥ ९ ॥ स जातमन्युः प्रसमीक्ष्य विक्रमं स्थिरं स्थितः संयति दुर्निवारणम् । समाहितात्मा हनुमन्तमाहवे प्रचोदयामास शरैस्त्रिभिः शितैः ॥ १० ॥ ततः कपिं तं प्रसमीक्ष्य गर्वितं जितश्रमं शत्रुपराजयोर्जितम् । अवैक्षताक्षः समुदीर्णमानसः स बाणपाणिः प्रगृहीतकार्मुकः ॥ ११ ॥ स हेमनिष्काङ्गदचारुकुण्डलः समाससादाशुपराक्रमः कपिम् । तयोर्बभूवाप्रतिमः समागमः सुरासुराणामपि सम्भ्रमप्रदः ॥ १२ ॥ ररास भूमिर्न ततापं भानुमान् ववौ न वायुः प्रचचाल चाचलः । कपेः कुमारस्य च वीक्ष्य संयुगं ननाद च द्यौरुदधिश्च चुक्षुभे ॥ १३ ॥

वितानादिषु शशिवर्चसा हेममयरथाङ्गेषु सूर्यवर्चसा । दिवाकराभमित्याकाशचारित्वे दृष्टान्तः । अतो न रविप्रभमित्यनेन पुनरुक्तिः । तच्छन्दद्वयं च पूर्वानुस्मरणार्थम् ॥६॥ सः अक्षः । हिः प्रसिद्धौ ॥ ७॥ हरीक्षणः सिंहप्रेक्षणः । प्रजाक्षये अवस्थितं प्राणिनाशे प्रवृत्तम् । विस्मितश्चासौ जातसम्भ्रमश्च विस्मितजातसम्भ्रमः ॥ ८ ॥ स तस्येति । विधारयन् निर्धारयन् । विचारयन्निति च पाठः ॥ ९–१२ ॥ ररासेति । न ततापं भानुमान् । सूर्योदयः पूर्वं निर्जगामेति सम्बन्धः । दिवाकराभमित्यादि पुनर्वचनं रविप्रभमित्यस्यानुस्मरणार्थम् ॥ ६ ॥ तोरणस्थितं तोरणाश्रयम् । आसीनम् उपविष्टम् ॥ ७ ॥ हरीक्षणः सिंहदृष्टिः ॥ ८ ॥ अभिवर्द्धते तेजसा अभ्यवर्धतेत्यर्थः ॥ ९ ॥ स्थिरं स्थितः सः प्रसमीक्ष्यविक्रमं दर्शनीयपराक्रमम् । संयति रणे । दुःखं निवारणं यस्य तम् । त्रिभिः शरैः प्रचोदयामास युद्धाय प्रेरयामास ॥ १० ॥ ११ ॥ आशुपराक्रमः तीक्ष्णपौरुषः । समागमः संप्रहारः ॥१२॥ ररासेति । अक्षयुद्धसमये सूर्योदयाभावात्

सूचितः सः न ततापेत्युच्यते ॥ १३ ॥ समाधिसंयोगविमोक्षतत्त्ववित् समाधिः लक्ष्यवेदनं संयोगः शरसन्धानं विमोक्षः तद्विसर्गः तेषां तत्त्ववित् यथार्थवित् ॥ १४ ॥ रक्तसिक्तत्वे दृष्टान्तः नवोदितेति । शराचितत्वे दृष्टान्तः आदित्य इवांशुमालिक इति ॥ १५॥ आपूर्यत व्यवर्धत ॥ १६ ॥ मन्दराग्रस्थः

ततः स वीरः सुमुखान् पतत्रिणः सुवर्णपुङ्खान् सविषानिवोरगान् । समाधिसंयोगविमोक्षतत्त्वविच्छरानथ त्रीन् कपिमूर्ध्न्यपातयत् ॥ १४ ॥ स तैः शरैर्मूर्ध्नि समं निपातितैः क्षरन्नसृग्दिग्धविवृत्तलोचनः । नवोदितादित्यनिभः शरांशुमान् व्यराजतादित्य इवांशुमालिकः ॥१५॥ ततः स पिङ्गाधिपमन्त्रिसत्तमः समीक्ष्य तं राजवरात्मजं रणे । उदग्रचित्रायुधचित्रकार्मुकं जहर्ष चापूर्यत चाहवोन्मुखः ॥ १६ ॥ स मन्दराग्रस्थ इवांशुमालिको विवृद्धकोपो बलवीर्यसंयुतः । कुमारमक्षं सबलं सवाहनं ददाह नेत्राग्निमरीचिभिस्तदा ॥ १७ ॥ ततः स बाणासनचित्रकार्मुकः शरप्रवर्षो युधि राक्षसाम्बुदः । शरान् मुमोचाशु हरीश्वराचले बलाहको वृष्टिमिवाचलोत्तमे ॥ १८ ॥ ततः कपिस्तं रणचण्डविक्रमं विवृद्धतेजोबलवीर्यसंयुतम् । कुमारमक्षं प्रसमीक्ष्य संयुगे ननाद हर्षाद्घनतुल्यविक्रमः ॥ १९ ॥

मन्दरो नाम भूमध्यपर्वतः । तदग्रे मध्याह्ने वर्तत इत्यौग्र्योक्तिः ॥ १७ ॥ रामानु०—मन्दराग्रस्थः मन्दरो नाम सालग्रामपर्वतोत्तरभागे भारतखण्डमध्ये वर्तमानः कश्चन पर्वतः तदग्रस्थः । अनेन उत्तरायणे मध्याह्नागतत्वमुक्तं भवति ॥ १७ ॥ ततस्स बाणासनेति । बाणासनचित्रकार्मुकः बाणाः अस्यन्ते क्षिप्यन्तेऽनेनेति बाणासनः बाणविमोक्षकचित्रकार्मुक इत्यर्थः ॥ १८ ॥ रामानु०—तत इति । बाणासनचित्रकार्मुकः बाणानामासनं बाणान् क्षिपत् चित्रं च कार्मुकं यस्य स तथोक्तः । बाणासनचक्रकार्मुक

देशान्तरस्थोऽपि सूर्यः एतज्ज्ञात्वा न ततापेति भावः ॥१३ ॥ समाधिसंयोगविमोक्षतत्त्ववित् समाधिः लक्ष्ये दृष्टिः, संयोगः शरसन्धानम्, विमोक्षः तद्विसर्गः तेषां तत्त्ववित् तेषु विशारद इत्यर्थः ॥ १४ ॥ असृग्दिग्धश्चासौ विवृत्तनेत्रश्च । विवृत्तलोचन इति पाठे अवसरोचितचक्षुरित्यर्थः । नवोदितादित्यनिभः रक्तवर्ण इत्यर्थः । शरांशुमान् स्वमस्तकस्थशररूपांशुमान् । अंशुमालावान् सूर्य इव व्यराजत ॥ १५ ॥ आपूर्यत व्यवर्द्धत ॥ १६ ॥ मन्दराग्रस्थः मन्दराग्रे मध्याह्नकालीनः सूर्यः इत्यर्थः ॥ १७ ॥ बाणासनचित्रकार्मुकः बाणानामासनं बाणान् क्षिपच्चित्रं कार्मुकं यस्य स तथोक्तः । बाणासनचक्रकार्मुक इत्यपि पाठः ॥ १८ ॥ १९॥

इति पाठे बाणान् क्षिपच्चक्राकारं कार्मुकं यस्य सः ॥ १८ ॥ १९–२२ ॥ स तानिति । विमोक्षयन् शरीरे असंयोजयन् । लाघवातिशयेनेति भावः ॥ २३ ॥ आस्तृणन्तम् आच्छादयन्तम् । विशिखैः विविधशिखैः । चिन्तां जगाम कथमेतादृशमेनं वधिष्यामीत्येवम् ॥ २४ ॥ इदमेवोपपादयाति–ततश्शरैरित्या

स बालभावाद्युधि वीर्यदर्पितः प्रवृद्धमन्युः क्षतजोपमेक्षणः । समाससादाप्रतिमं कपिं रणे गजो महाकूपमिवावृतं तृणैः ॥ २० ॥ स तेन बाणैः प्रसभं निपातितैश्चकार नादं घननादनिस्वनः । समुत्पपाताशु नभः स मारुतिर्भुजोरुविक्षेपणघोरदर्शनः ॥ २१ ॥ समुत्पतन्तं समभिद्रवद्बली स राक्षसानां प्रवरः प्रतापवान् । रथी रथिश्रेष्ठतमः किरन् शरैः पयोधरः शैलमिवाश्मवृष्टिभिः ॥ २२ ॥ स तान् शरांस्तस्य हरिर्विमोक्षयंश्चचार वीरः पथि वायुसेविते । शरान्तरे मारुतवद्विनिष्पतन् मनोजवः संयति चण्डविक्रमः ॥ २३ ॥ तमात्तबाणासनमाहवोन्मुखं खमास्तृणन्तं विशिखैः शरोत्तमैः । अवैक्षताक्षं बहुमानचक्षुषा जगाम चिन्तां च स मारुतात्मजः ॥ २४ ॥ ततः शरैर्भिन्नभुजान्तरः कपिः कुमारवीरेण महात्मना नदन् । महाभुजः कर्मविशेषतत्त्ववविद्विचिन्तयामास रणे पराक्रमम् ॥२५॥ अबालवद्बालदिवाकरप्रभः करोत्ययं कर्म महन्महाबलः । न चास्य सर्वाहवकर्मशोभिनः प्रमापणे मे मतिरत्र जायते ॥ २६ ॥ अयं महात्मा च महांश्च वीर्यतः समाहितश्चातिसहश्च संयुगे । असंशयं कर्मगुणोदयादयं सनागयक्षैर्मुनिभिश्च पूजितः ॥ २७ ॥ पराक्रमोत्साहविवृद्धमानसः समीक्षते मां प्रमुखागतः स्थितः । पराक्रमो ह्यस्य मनांसि कम्पयेत् सुरासुराणामपि शीघ्रगामिनः ॥ २८ ॥

दिना ॥ २५ ॥ २६ ॥ अतिसहः अतिसोढा । कर्मगुणोदयात् युद्धकर्मोत्कर्षाभिवृद्धेः ॥ २७–२९ ॥

तृणैरावृतं महाकूपं गजपातनार्थं कृतगर्तम् ॥ २० ॥ घननादनिस्वनः मेघशब्दसदृशशब्दः । भुजयोरूर्वोर्विक्षेपणेन घोरं दर्शनं यस्य सः ॥ २१ ॥ समभिद्रवत् अभ्यद्रवत् ॥ २२ ॥ शरान् विमोक्षयन् व्यर्थीकुर्वन् । तदुपायः शरान्तरे इति ॥ २३ ॥ आस्तृणन्तम् आच्छादयन्तम् ॥२४॥२५॥ प्रमापणे हनने ॥२६॥ समाहितः

परस्य शत्रोः । प्रवेगम् तर्कयन् आलोचयन् । स्वकर्मयोगं विधाय युद्धक्रमं च सङ्कल्प्य । पूर्वमश्वान् हत्वा ततो रथं भङ्क्ष्यामीति निश्चित्येत्यर्थः ॥३०॥
रामानु०—स्वकर्मयोगं विधाय स्वकर्तव्यचिन्तां कृत्वा । मतिं च चक्रेऽस्य वधे महाकपिरिति पाठः ॥ ३०॥ विवर्तने सव्यापसव्यभ्रमणेऽपि । भारसहान् रथभारसहान् ॥३१॥

न खल्वयं नाभिभवेदुपेक्षितः पराक्रमो ह्यस्य रणे विवर्धते । प्रमापणं त्वेव ममास्य रोचते न वर्धमानोऽग्निरुपेक्षितुं क्षमः ॥२९॥ इति प्रवेगं तु परस्य तर्कयन् स्वकर्मयोगं च विधाय वीर्यवान् । चकार वेगं तु महाबलस्तदा मतिं च चक्रेऽस्य वधे महाकपिः ॥३०॥ स तस्य तानष्ट हयान् महाजवान् समाहितान् भारसहान् विवर्तने । जघान वीरः पथि वायुसेविते तलप्रहारैः पवनात्मजः कपिः॥३१॥ ततस्तलेनाभिहतो महारथः स तस्य पिङ्गाधिपमन्त्रिनिर्जितः। प्रभग्ननीडः परिमुक्तकूबरः पपात भूमौ हतवाजिरम्बरात्॥३२॥ स तं परित्यज्य महारथो रथं सकार्मुकः खड्गधरः खमुत्पतन् । तपोभियोगादृषिरुग्रवीर्यवान् विहाय देहं मरुतामिवालयम् ॥३३॥ ततः कपिस्तं विचरन्तमम्बरे पतत्त्रिराजानिलसिद्धसेविते । समेत्य तं मारुततुल्यविक्रमः क्रमेण जग्राह स पादयोर्दृढम् ॥ ३४ ॥ स तं समाविध्य सहस्रशः कपिर्महोरगं गृह्य इवाण्डजेश्वरः । मुमोच वेगात् पितृतुल्यविक्रमो महीतले संयति वानरोत्तमः ॥ ३५ ॥ स भग्नबाहूरुकटीशिरोधरः क्षरन्नसृङ्निर्मथितास्थिलोचनः । स भग्नसन्धिः प्रविकीर्णबन्धनो हतः क्षितौ वायुसुतेन राक्षसः। महाकपिर्भूमितले निपीड्य तं चकार रक्षोधिपतेर्महद्भयम् ॥ ३६ ॥

तलेनाभिहतः अत एव पिङ्गाधिपमन्त्रिनिर्जितः, हनुमता निर्जित इत्यर्थः । प्रभग्ननीडः प्रभग्नरथाङ्गः । कूबरः युगन्धरः । वाजिरिति इकारान्तत्वमार्षम् ॥ ३२ ॥ मरुतामालयमुत्पतन् ऋषिरिव, अभवदिति शेषः ॥ ३३ ॥ ३४ ॥ गृह्य इवेत्यत्र गुणाभाव आर्षः ॥ ३५ ॥ प्रविकीर्णबन्धनः

अवहितः । अतिसहः अतिसहिष्णुः ॥ २७–२९ ॥ इतीति । स्वकर्मयोगं विधाय स्वकर्तव्यचिन्तां कृत्वा पूर्वमश्वान् हत्वा पश्चाद्रथं भङ्क्ष्यामीति निश्चित्येत्यर्थः ॥ ३० ॥ विवर्तने रथगतिषु सञ्चरणसमये हयान् जघान ॥ ३१ ॥ प्रभग्ननीडः प्रभग्नरथगर्तः । कूबरः युगन्धरः ॥ ३२ ॥ मरुतामालयमुत्पतन् ऋषिरिव, बभूवेति शेषः ॥ ३३ ॥ ३४ ॥ समाविध्य भ्रामयित्वा गृह्य इव । असन्धिलयवावार्षौ । गृहीत्वेवेत्यर्थः ॥ ३५ ॥ ३६ ॥

प्रविकीर्णकक्ष्यादिबन्धनः । प्रभिन्नसन्धिरिति सन्धिबन्धभङ्गस्योक्तत्वात् ॥ ३६ ॥ चक्रचरैः ज्योतिश्चक्रचरैः, नभश्चक्रचरैर्वा ॥ ३७ ॥ ३८ ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥



महर्षिभिश्चक्रचरैर्महाव्रतैः समेत्य भूतैश्च सयक्षपन्नगैः । सुरैश्च सेन्द्रैर्भृशजातविस्मयैर्हते कुमारे स कपिर्निरीक्षितः ॥ ३७ ॥ निहत्य तं वज्रिसुतोपमप्रभं कुमारमक्षं क्षतजोपमेक्षणम् । तमेव वीरोऽभिजगाम तोरणं कृतक्षणः काल इव प्रजाक्षये ॥ ३८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥
ततः स रक्षोधिपतिर्महात्मा हनूमताऽक्षे निहते कुमारे । मनः समाधाय तदेन्द्रकल्पं समादिदेशेन्द्रजितं सरोषम् ॥ १ ॥ त्वमस्त्रविच्छस्त्रविदां वरिष्ठः सुरासुराणामपि शोकदाता । सुरेषु सेन्द्रेषु च दृष्टकर्मा पितामहाराधनसञ्चितास्त्रः ॥ २ ॥ तवास्त्रबलमासाद्य नासुरा न मरुद्गणाः । न शेकुः समरे स्थातुं सुरेश्वरसमाश्रिताः ॥ ३ ॥ न कश्चित् त्रिषु लोकेषु संयुगे नगतश्रमः । भुजवीर्याभिगुप्तश्च तपसा चाभिरक्षितः । देशकालविभागज्ञस्त्वमेव मतिसत्तमः ॥ ४ ॥ न तेऽस्त्यशक्यं समरेषु कर्मणा न तेऽस्त्यकार्यं मतिपूर्वमन्त्रणे । न सोऽस्ति कश्चित् त्रिषु संग्रहेषु वै न वेद यस्तेऽस्त्रबलं बलं च ते ॥ ५ ॥

ततस्त्वित्यादि । मनः समाधाय धैर्यं कृत्वेत्यर्थः ॥ १ ॥ त्वमिति । अस्त्रवित् ब्रह्मास्त्रवित् । सञ्चितास्त्रः सञ्चितास्त्रविशेषः ॥ २ ॥ तव अस्त्रबलमासाद्य असुराः न, नश्यन्तीत्यर्थः ॥ ३ ॥ त्रिषु लोकेषु तव संयुगे नगतश्रमः अप्राप्तश्रमः कश्चिन्न । "सुप्सुपा" इति समासः । सर्वे प्राप्तश्रमा इत्यर्थः । हरिहयादयोऽपि श्रमं प्राप्नुवन्तीत्यर्थः । मतिसत्तमः मतिश्रेष्ठ इत्यर्थः ॥ ४ ॥ समरेषु कर्मणा पुरुषकारेण ते अशक्यं नास्तीत्यर्थः । तथा मतिपूर्वमन्त्रणे

चक्रचरैः ज्योतिश्चक्रवर्तिभिः ॥ ३७ ॥ वज्रिसुतः इन्द्रसुतः ॥ ३८ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० सुन्दरकाण्डव्याख्यायां सप्तचत्वारिंशः सर्गः ॥ ४७ ॥
तत इति । मनस्समाधाय पुत्रनाशखिन्नमपि चेतो धीरतया अप्रकाशितभयं प्रतिष्ठाप्य ॥ १ ॥ पितामहाराधनेन सञ्चितास्त्रः प्राप्तब्रह्मास्त्रोऽसीत्यर्थः ॥ २ ॥ तव अस्त्रबलमासाद्य आभिमुख्येन स्थित्वा सुरेश्वरसमाश्रिताश्च न शेकुः ॥ ३ ॥ कश्चिदपि न गतश्रमो न, सर्वे प्राप्तश्रमा इत्यर्थः ॥ ४ ॥ समरेषु कर्मणा पराक्रमेण ते

विवेकपूर्वविचारे। अकार्यम् अज्ञातकार्यम्, ज्ञातुमशक्यं कार्यं नास्तीत्यर्थः। संग्रहेषु संगृह्यन्ते भोक्तृत्वेन स्वीक्रियन्ते भोक्तृभिरिति संग्रहाः लोकाः तेषु त्रिष्वपि यस्तवास्त्रबलं शारीरं बलं च न वेद स नास्ति, सर्वलोकप्रख्यातशस्त्रास्त्रबलसम्पन्नस्त्वमित्यर्थः॥ ५॥ रणावमर्दे रणसङ्कटे। निश्चितार्थं

ममानुरूपं तपसो बलं च ते पराक्रमश्चास्त्रबलं च संयुगे। न त्वां समासाद्य रणावमर्दे मनः श्रमं गच्छति निश्चितार्थम्॥ ६॥ निहताः किङ्कराः सर्वे जम्बुमाली च राक्षसः। अमात्यपुत्रा वीराश्च पञ्च सेनाग्रयायिनः॥ ७॥ बलानि सुसमृद्धानि साश्वनागरथानि च। सहोदरस्ते दयितः कुमारोऽक्षश्च सूदितः॥ ८॥ न हि तेष्वेव मे सारो यस्त्वय्यरिनिषूदन॥ ९॥ इदं हि दृष्ट्वा मतिमन्महद्बलं कपेः प्रभावं च पराक्रमं च। त्वमात्मनश्चापि समीक्ष्य सारं कुरुष्व वेगं स्वबलानुरूपम्॥ १०॥ बलावमर्दस्त्वयि सन्निकृष्टे यथा गते शाम्यति शान्तशत्रौ। तथा समीक्ष्यात्मबलं परं च समारभस्वास्त्रविदां वरिष्ठ॥ ११॥

निश्चितजयरूपार्थम्। त्वाम् आसाद्य विचिन्त्य मे मनः श्रमं न गच्छति विषादं न गच्छतीत्यर्थः॥ ६–८॥ त्वयि मे यस्सारः उत्कर्षप्रत्ययः सः तेषु नास्त्येव हीति योजना॥ ९॥ इदं किङ्कराद्यक्षकुमारान्तमारकम्। मतिमत् प्रशस्तमतियुक्तम्। बलं शारीरम्। प्रभावम् अन्तःशक्तिम्। पराक्रमं पौरुषम्॥ १०॥ बलेति। शान्तशत्रौ शमितशत्रौ, शत्रुशमनस्वभावे इति यावत्। "वा दान्तशान्त०–" इत्यादिना निपातनाण्णिलोप इडभावश्च। त्वयि संनिकृष्टे कपेरासन्ने सति। यथा बलावमर्दः सेनाक्षयः शाम्यति तथा आत्मबलं परं परबलं च समीक्ष्य समारभस्व। बलनाशात्पूर्वमेव शत्रुशान्तिं

अशक्यं नास्ति। मतिपूर्वमन्त्रणे बुद्धिपूर्वकं विचारिते। अकार्यम् अकार्यविषयज्ञानं नास्ति। भोक्तृभिः कर्मणा संगृह्यन्त इति सङ्ग्रहा लोकाः तेषु त्रिषु। ते अस्त्रबलं स्वाभाविकं बलं च यो न वेद स कश्चिन्नास्ति, सर्वे जानन्तीत्यर्थः॥ ५॥ रणावमर्दे रणसङ्कटविषये मनश्च त्वां समासाद्य चिन्तयित्वा निश्चितार्थं निश्चितविजयरूपप्रयोजनं सत् श्रमं विषादं न गच्छतीत्यर्थः॥ ६॥ प्रकृतमाह–निहता इति॥ ७॥ ८॥ अरिनिषूदन! त्वयि मे यः सारः उत्कर्षप्रत्ययः स तेषु नास्त्येव हीति योजना॥ ९॥ इदं किङ्कराद्यक्षकुमारान्तमारकम्। मतिमत् प्रशस्तमतियुक्तम्। बलं शारीरम्। प्रभावं माहात्म्यम्। पराक्रमं पौरुषम्॥ १०॥ अस्त्रविदां वरिष्ठ! शान्तशत्रौ त्वयि गते इतो निर्गते, सन्निकृष्टे हनुमत्समीपं प्राप्ते सति बलावमर्दः सेनानाशः यथा शाम्यति सेनाक्षयो यथा न स्यात् तथा आत्मबलं परं च समीक्ष्य समारभस्व, स्वसेनानाशात्पूर्वमेव शत्रुसंहारं कुर्वित्यर्थः॥ ११॥

कुर्वित्यर्थः ॥११॥ न वीरेति । हे वीर! गणशोचि गणानां शोचयितरि। शोचतेर्ण्यन्तात् क्विप्। एकदाऽनेकप्रहर्तरीत्यर्थः। एवंभूते हनुमति निमित्ते। सेनाः नावन्ति न रक्षन्ति। युगपदनेकविनाशके सेना अप्रयोजिकेत्यर्थः। अतः सेनाभिः सह मा गच्छेत्यर्थः। उपायान्तरं प्रतिषेधति न वज्रमिति। अलसारं

न वीर सेना गणशोच्यवन्ति न वज्रमादाय विशालसारम्।
न मारुतस्यास्य गतेः प्रमाणं न चाग्निकल्पः करणेन हन्तुम् ॥ १२ ॥

हनुमद्विषये जीर्णसारं वज्रं वज्राख्यमायुधविशेषम् आदाय न विश, तत्समीपमिति शेषः। तत्र हेतुमाह न मारुतस्येति। अस्य गतिप्रमाणं मारुतस्य न चायं सेनाभिर्जेतुं शक्य इत्याह–न वीरेति। हे वीर! गणशोचि गणान् शोचयतीति गणशोक् हनुमान् तस्मिन्निमित्ते सेनाः नावन्ति न रक्षन्ति। गणशोच्य

स०–हनुमद्बलाकर्णनदीप्तहृदयः सेनादिसत्त्वभ्रमतो न साहसं कुर्विति सुतं प्रति शंसति–नेति। हे वीर आरब्धान्तगामिन्! गणशः सङ्घीभूताः सेनाः न नोपयुक्ताः। तत्र हेतुश्च्यवन्तीति। स्वामिनं गमयित्वा पलायन्ते। उत्वमार्षम्। विशालसारं वज्रमादायापि न प्रयोजनम्, मारुतस्य हनूमतः गतेः प्रमाणम् इयत्ता न नास्ति। करणेन सेनादिरूपेण। अग्निकल्पोऽयं न च न शक्य इति शेषः। यद्वा नवीर न विद्यते वीरो यस्मादन्य इति नवीरः तत्सम्बुद्धिः। सेनाः गणशः अ च्यवन्ति न च्यवन्ति स्वस्थलाद्रणाङ्गणं प्रति नोपसर्पन्ति। "अमानोनाः प्रतिषेधे" इत्यनुशिष्टम् अ इत्यव्ययम्। ततश्च अ च्यवन्ति इति पदद्वयम्। अथवा नसेना इत्यनेनाक्षेपो ज्ञायते, अतः समासोपपत्तिः। विशालसारं वज्रं तन्नामकायुधमादायापि न नागच्छतस्तत्र कृत्यम्, अतद्वीवर इति भावः। यद्वा हे नवीरगणश स्वसदृशसुखद! सेनाः उच्च्यवन्ति परिसर्पन्ति। न च च्यवन्ति उच्च्यवन्तीत्यत्र एकचकारद्विचकारपदयोरुच्चारणवैलक्षण्यावश्यम्भावात्कथमेवं पदमिति वाच्यम्। "असिद्धवदत्राभात्" इति सूत्रमहाभाष्ये "न ह्यजानतरस्यैकस्य वाऽनेकस्य वोच्चारणे श्रवणं प्रति विशेषोऽस्ति" इत्युक्तेः। इदंप्रकारस्तु भाष्यदीपिकायुक्तिवात्यायामस्मत्कृतायां विस्तरत उद्धितस्ततोऽनुसन्धेयः। कुतस्सेनाप्रयोजनं नास्तीत्यत आह नेति। विशालसारं वज्रमादाय न नायाति। एकवचनेन एकं वज्रमादाय नायाति किन्तु बहुवज्रानादायायातो वासवापेक्षयाऽयमतिशयितबल इत्यवलेपो न कार्य इति भावः। यथोक्तं संग्रहे–"नन्वेकवज्रो रिपुमेति वज्री दशास्य घोरा नखनामवज्राः।" इति। यो मारुतः अग्निकल्पः अग्निसदृशः। आवम्येन न "अग्निर्वै देवानामवमः" इति श्रुतेः। अतः करणेन कस्य आत्मनः रणेन युद्धेन असज्जातियुद्धेन, मायामयेनेति यावत्। यद्वा कशब्दः कुत्सितवाची। कपटेत्यत्र कापट्यं कुत्सितपटत्वं च विवक्ष्यत इति छेषकविसंप्रदायात्। केन कुत्सितेन रणेन हन्तुं न न हन्तुं योग्य इत्यर्थः। केनापि करणेन हन्तुं न शक्य इति। अलसारं पर्याप्तबलम्। वज्रमिव वज्रं दृढं हनुमन्तम्। आदाय विशलङ्कामिति शेषः। हे अलस न्यायमार्गेण युद्धं कर्तुमसमर्थ! अरम् अलम् अत्यन्तम्। रलयोरभेदात्। वर्जनात् वैरिवर्जनाद्वज्रो हरिः तद्वान्। अर्शआद्यच्। तं हनुमन्तमादायेति पूर्ववत्। यत्तु नागोजिभट्टेन तत्रापतेत्रायतिसमानार्थत्वेन पञ्चमीप्राप्तौ सप्तमी स्वार्थी। अलतेर्ञतोः पर्याप्त्यर्थत्वेन पर्याप्तसारमिति व्याख्यातुं योग्यम्। कुण्ठेत्यर्थस्य ततोऽलामादिति तीर्थोपरि साहसं कृतम्, तत्तु प्रथमपक्षे तदुक्त्यैव द्वितीयपक्षे कुण्ठधारमित्युक्त्यैव न युक्तम्। तथाहि शब्देन्दुशेखरे–"ततश्च सम्बन्धसामान्ये षष्ठ्येव समासः। "भीत्रार्थानाम्" इति हेतुत्वप्रकारकबोधे तृतीयावाधनार्थं विभक्तिप्रकरणे न कृतम्। कारकत्वप्रयुक्तकार्यानापत्तेरिति भावः। किञ्च हेतुत्वाविवक्षायां सम्बन्धित्वेन विवक्षया षष्ठीसूत्रारम्भेपि बोध्या। अभ्युच्चयेनाहेत्यादि"। "क्विति च" इत्यादाविव गणशोचीति निमित्तसप्तम्युपपत्तेः। मारुतस्येति। किञ्चिद्रूतमित्युक्तिस्तु तद्बलासहिष्णुतयेति ज्ञेयम् ॥ १२ ॥

नास्ति, मारुतादप्यतिशयितगतिप्रमाण इत्यर्थः । अतस्तस्य यया कयापि दिशा समागम्य प्रहर्तरि न वज्रं किञ्चित्करमिति भावः । यदि समीपमागमिष्यति तदा मुष्ट्यादिभिरेव निहन्यत इत्याशङ्क्याह न चेति । अग्निकल्पो हनुमान् करणेन मुष्ट्यादिना हन्तुं न शक्यः । अग्नितुल्ये मुष्ट्यादिप्रहाराप्रवृत्तेरिति भावः ॥१२॥ तर्हि कथं कर्तव्यम् ? तत्राह–तमिति । तं पूर्वोक्तमर्थम् एवं सम्यक् प्रसमीक्ष्य विचार्य । स्वकर्मसाम्यात्स्वकार्यसिद्ध्यर्थम् । फल



तमेवमर्थं प्रसमीक्ष्य सम्यक् स्वकर्मसाम्याद्धि समाहितात्मा । स्मरंश्च दिव्यं धनुषोऽस्त्रवीर्यं व्रजाक्षतं कर्म समारभस्व ॥ १३ ॥ न खल्वियं मतिः श्रेष्ठा यत्त्वां संप्रेषयाम्यहम् । इयं च राजधर्माणां क्षत्रस्य च मतिर्मता ॥ १४ ॥

स्यापि हेतुत्वात्पञ्चमी । साम्यं समत्वम् अन्यूनातिरिक्तत्वम् । समाहितात्मा एकाग्रचित्तः । दिव्यं धनुस्सम्बन्धि अस्त्रवीर्यमस्त्रबलं स्मरन् व्रज । अस्त्रबलं विना स निग्रहीतुमशक्यः । तेन तन्मन्त्रं स्मरन्नेव गच्छेति भावः ॥ १३ ॥ न खल्विति । अहं त्वां संप्रेषयामीति यत् इयं मतिः न श्रेष्ठा खलु नोचितेत्यर्थः । इयं मतिः त्वत्प्रेषणविषया मतिः । राजधर्माणां राजनीतिस्वरूपधर्माणाम् । क्षत्रस्य तदनुष्ठातुः क्षत्रियस्य च मता उचिता ।

वन्तीति पाठे सङ्ख्शोपि नावन्ति । तत्र हेतुः नेति । मारुतस्य मारुतेः । गतेः परसेनाक्रमणार्थगमनस्य । प्रमाणम् इयत्ता नास्ति । मारुतेः सर्वदिग्गमनशीलतया कया दिशा समागत्य सेनाः प्रहरिष्यतीति न ज्ञायत इति भावः । यद्वा अस्य हनुमतो गतेः प्रमाणं मारुतस्य वायोरपि नास्ति, ततोऽप्यधिक इत्यर्थः । किञ्च अग्निकल्पः अग्निसदृशः अत एव करणेन मुष्ट्यादिना हन्तुं न, शक्य इति शेषः । अतः वज्रं वज्रप्रायमप्यायुधम् अलसारं कुण्ठितधारम्, तदादाय न विश रणं न प्रविश ॥ १२ ॥ तर्हि किं कर्तव्यमित्यत आह–तमिति । तमर्थं पूर्वोक्तमर्थम् एवं प्रसमीक्ष्य उक्तप्रकारेण निरूप्य स्वकर्मसाम्यात् स्वकार्यार्जिताद्धेतोः समाहितात्मा समाहितमनाः सन् दिव्यमस्त्रवीर्यं धनुषश्च वीर्यं स्मरन् अक्षतं यथा भवति तथा कर्म समारभस्व व्रजेति योजना ॥ १३ ॥ अहं त्वां प्रेषयामीति यद् इयं मतिर्न श्रेष्ठा खलु नोचितेत्यर्थः । इयं मतिः त्वत्प्रेषणविषया मतिः । राजधर्माणां राजनीतिरूपधर्माणां क्षत्रियस्य तदनुष्ठातुः क्षत्रियस्य च । मता उचितेत्यर्थः ॥ १४ ॥

स०–एवम् एवंविधं तं हनुमन्तम् अर्थं त्वत्प्रयोजनं च प्रसमीक्ष्य स्वकर्मसाम्यात् स्वव्यापारानुगुण्यात् । समाहितात्मा अस्य हनुमतः अस्य धनुषो वीर्यं च स्मरन् व्रज । ते कर्म व्यापारः अक्षतं फलपर्यवसायि यथा स्यात्तथा समारभस्व ॥ १३ ॥ मतिश्रेष्ठ बुद्ध्या वरिष्ठ । यदित्यव्ययं तृतीयार्थे । यया मत्या त्वां प्रेषयिष्यामि इयं मतिर्नेत्यर्थः । अथवा संप्रेषयिष्यामीति यत् इयं प्रेरणा न, नोचितेत्यर्थः । इयं प्रेरणविषया मतिः राज्ञां धर्माः राजधर्माः एषां सन्तीति राजधर्माः तेषामस्माकम् । क्षत्रियस्य च मता उचिता, नान्येषामिति भावः । अतो नानिष्टप्रसक्तिः । एतेन स्वस्य क्षत्रियत्वाभावेपि क्षत्रधर्मानुष्ठानात् पुत्रप्रेषणं युक्तमिति सूचयति ॥ १४ ॥

यद्यपि बालस्य प्रेषणमनुचितं तथापि स्वीयेषु सत्सु प्रधानगमनं नीतिशास्त्रविरुद्धमिति त्वां प्रेषयामीति भावः ॥ १४ ॥ नानाशस्त्रैः वैशारद्यं प्रहरण सामर्थ्यम् । अवश्यं बोद्धव्यम् स्मर्तव्यामित्यर्थः । रणे विजयश्च काम्यः प्रार्थनीयः । जयार्थं सर्वाण्यस्त्राणि स्मर्तव्यानीत्यर्थः ॥१५॥ तत इति । दक्षसुत

नानाशस्त्रैश्च संग्रामे वैशारद्यमरिन्दम । अवश्यमेव बोद्धव्यं काम्यश्च विजयो रणे ॥ १५ ॥ ततः पितुस्तद्वचनं निशम्य प्रदक्षिणं दक्षसुतप्रभावः । चकार भर्तारमदीनसत्त्वो रणाय वीरः प्रतिपन्नबुद्धिः ॥ १६ ॥ ततस्तैः स्वगणै रिष्टैरिन्द्रजित् प्रतिपूजितः । युद्धोद्धतः कृतोत्साहः सग्रामं प्रत्यपद्यत ॥१७॥ श्रीमान् पद्मपलाशाक्षो राक्षसाधिपतेः सुतः । निर्जगाम महातेजाः समुद्र इव पर्वसु ॥ १८ ॥ स पक्षिराजोपमतुल्यवेगैर्व्यालैश्चतुर्भिः सिततीक्ष्णदंष्ट्रैः । रथं समायुक्तमसङ्गवेगं समारुरोहेन्द्रजिदिन्द्रकल्पः ॥१९॥ स रथी धन्विनां श्रेष्ठः शस्त्रज्ञोऽस्त्रविदां वरः । रथेनाभिययौ क्षिप्रं हनूमान् यत्र सोऽभवत् ॥२०॥ स तस्य रथनिर्घोषं ज्यास्वनं कार्मुकस्य च । निशम्य हरिवीरोऽसौ संप्रहृष्टतरोऽभवत् ॥ २१ ॥ सुमहच्चापमादाय शितशल्यांश्च सायकान् । हनुमन्तमभिप्रेत्य जगाम रणपण्डितः ॥ २२ ॥

प्रभावः दक्षसुता देवाः । तथोक्तं श्रीविष्णुपुराणे—"मनसा त्वेव भूतानि पूर्वं दक्षोऽसृजत्तथा । देवानृषीन्सगन्धर्वानुरगान् पक्षिणस्तथा॥" इति॥१६॥ततस्तैरिति । युद्धोद्धतः कृतोत्साह इति पाठः ॥ १७ ॥ १८ ॥ स इति । पक्षिराजोपमतुल्यवेगैः पक्षिराजोपमैः अन्योन्यतुल्यवेगैश्च । व्यालैः हिंस्रपशुभिः, सिंहैरिति यावत् । सिंहाश्च रक्षसां वाहनानि भवन्ति । "सर्पहिंस्रपशू व्यालौ" इत्यमरः ॥ १९ ॥ २० ॥ ज्यास्वनमित्यत्र ज्या इति लुप्तषष्ठीविभक्तिकं

हे अरिन्दम ! सङ्ग्रामे नानाशस्त्रैः वैशारद्यं सामर्थ्यम्, तवास्तीति शेषः । अतः अवश्यमेव योद्धव्यम् । रणे विजयः काम्यः प्रार्थनीय एव ॥१५॥ दक्षसुतप्रभावः दक्षसुता देवाः तत्सदृशप्रभावः ॥१६॥ स्वगणैः इष्टैः सभास्थैः राक्षसैः । युद्धे उद्धतश्चासौ कृतोत्साहश्च । संप्रपद्यत सम्प्रापद्यत ॥१७॥१८॥ पक्षिराजोपमतुल्यवेगैः

स०—अथ राज्ञः क्षत्रियस्य च कृत्यमाह—नानेति । नानाशास्त्रेषु धर्मार्थनीत्यादिशास्त्रेषु संग्रामे च वैशारद्यं, संपाद्यमिति शेषः । यस्य रणे विजयः काम्यो भवति तेनोक्तं नानाशास्त्रम् अवश्यं बोद्धव्यमेवेत्यर्थः। यद्वा परस्य नानाशास्त्रेषु यद्वैशारद्यमस्ति तद्योद्धाऽवश्यमेव बोद्धव्यम् । बुद्ध्वापि रणे स्वस्य विजयः प्रार्थ्य एव । अहं जेष्याम्येवेति बुद्ध्या युद्धमारम्भणीयमेव, न तु तादृशशत्रोरपि निवर्तितव्यमित्यर्थः । केचित्तु नानाशस्त्रैरिति योद्धव्यमिति च पठित्वा नानाशस्त्रप्रकरणकसंग्रामे वैशारद्यं सामर्थ्यं तवास्ति, अतस्त्वयाऽवश्यं योद्धव्यमेव रणे जयश्च प्रार्थनीय एवेति व्याचक्षते ॥ १९ ॥

पृथक्पदम् । कार्मुकस्येत्यत्र स्वनमिति वा अध्याहारः ॥ २१ ॥ २२ ॥ तस्मिन्निति । संयति युद्धे । जातहर्षे जातोत्साहे ॥ २३ ॥ चक्रचराः सञ्चारिणः ॥ २४ ॥ २५ ॥ तडिद्दूर्जितनिःस्वनम् । अत्र तडिच्छब्देन तत्सङ्घातोऽशनिरुच्यते । विद्युत्सङ्घातनिस्वनमिति पूर्वमुक्तत्वात् । अशनिवद

तस्मिंस्ततः संयति जातहर्षे रणाय निर्गच्छति बाणपाणौ । दिशश्च सर्वाः कलुषा बभूवुर्मृगाश्च रौद्रा बहुधा विनेदुः ॥ २३ ॥ समागतास्तत्र तु नागयक्षा महर्षयश्चक्रचराश्च सिद्धाः । नभः समावृत्य च पक्षिसङ्घा विनेदुरुच्चैः परम प्रहृष्टाः ॥ २४ ॥ आयान्तं सरथं दृष्ट्वा तूर्णमिन्द्रजितं कपिः । विननाद महानादं व्यवर्धत च वेगवान् ॥ २५ ॥ इन्द्रजित्तु रथं दिव्यमास्थितश्चित्रकार्मुकः । धनुर्विस्फारयामास तडिदूर्जितनिःस्वनम् ॥ २६ ॥ ततः समेतावति तीक्ष्णवेगौ महाबलौ तौ रणनिर्विशङ्कौ । कपिश्च रक्षोधिपतेश्च पुत्रः सुरासुरेन्द्राविव बद्धवैरौ ॥ २७ ॥ स तस्य वीरस्य महारथस्य धनुष्मतः संयति संमतस्य । शरप्रवेगं व्यहनत् प्रवृद्धश्चचार मार्गे पितुरप्रमेये ॥ २८ ॥ ततः शरानायततीक्ष्णशल्यान् सुपत्रिणः काञ्चनचित्रपुङ्खान् । मुमोच वीरः परवीरहन्ता सुसन्नतान् वज्रनिपातवेगान् ॥ २९ ॥ ततस्तु तत्स्यन्दननिःस्वनं च मृदङ्गभेरीपटहस्वनं च । विकृष्यमाणस्य च कार्मुकस्य निशम्य घोषं पुनरुत्पपात ॥ ३० ॥ शराणामन्तरेष्वाशु व्यवर्तत महाकपिः । हरिस्तस्याभिलक्ष्यस्य मोघयँल्लक्ष्यसंग्रहम् ॥ ३१ ॥

दृढनिस्वनमित्यर्थः ॥ २६ ॥ तत इति । सुरासुरेन्द्राविव समेतावित्यन्वयः ॥ २७ ॥ स तस्येति । शरप्रवेगं व्यहनत् चचार चेत्यन्वयः ॥ २८–३० ॥ रामानु०—सुपत्रिण इति । पत्रिणः प्रशस्तपत्राः । शोभनाश्च ते पत्रिणश्चेति विग्रहः ॥ २९ ॥ शराणामिति । अभिलक्ष्यस्य लक्ष्यवेधने प्रसिद्धस्य । लक्ष्यसंग्रहं लक्ष्यसंग्रहणम्, लक्ष्यविषयदृष्टिमिति यावत् । मोघयन् वितथयन् ॥ ३१ ॥ रामानु०—शराणामन्तरेष्वाशु व्यवर्तत महाकपिरिति पाठः । अभिलक्ष्यस्य लक्ष्यवेधप्रसिद्धस्य ।

पक्षिराजोपमैः तुल्यवेगैः अन्योन्यसमवेगैश्च । व्यालैः हिंस्रपशुभिः ॥१९–२३॥ चक्रचराः ज्योतिश्चक्रसञ्चारिणः ॥२४॥२५ ॥ तडिदूर्जितनिस्वनं तडिच्छब्देनाशनि रुच्यते ॥ २६–२८ ॥ सुपत्रिणः प्रशस्तपत्राः ॥ २९ ॥ ३० ॥ अभिलक्ष्यस्य लक्ष्यवेधनप्रसिद्धस्य । तस्य इन्द्रजितः । लक्ष्यसंग्रहं लक्ष्यसङ्ग्रहणम् । लक्ष्यविषय

मोचयन वितथीकुर्वन् । मोहयन्निति पाठे विपर्यासयन्नित्यर्थः । लक्ष्यसंग्रहं लक्ष्यसंग्रहणम्, लक्ष्यविषयदृष्टिमिति यावत् ॥ ३१ ॥ समभिवर्तत समभ्यवर्तत उत्पपात चेत्यन्वयः ॥ ३२ ॥ मनोग्राहि मनआकर्षकम् ॥ ३३ ॥ अन्तरं छिद्रम् ॥ ३४ ॥ अमोघेषु शरेषु संपतत्स्वपि लक्ष्ये लक्ष्यभूते हनुमति विहन्यमाने

शराणामग्रतस्तस्य पुनः समभिवर्तत । प्रसार्य हस्तौ हनुमानुत्पपातानिलात्मजः ॥ ३२ ॥ तावुभौ वेगसम्पन्नौ रणकर्मविशारदौ । सर्वभूतमनोग्राहि चक्रतुर्युद्धमुत्तमम् ॥ ३३ ॥ हनूमतो वेद न राक्षसोऽन्तरं न मारुतिस्तस्य महात्मनोऽन्तरम् । परस्परं निर्विषहौ बभूवतुः समेत्य तौ देवसमानविक्रमौ ॥ ३४ ॥ ततस्तु लक्ष्ये स विहन्यमाने शरेष्वमोघेषु च संपतत्सु । जगाम चिन्तां महतीं महात्मा समाधिसंयोगसमाहितात्मा ॥ ३५ ॥ ततो मतिं राक्षसराजसूनुश्चकार तस्मिन् हरिवीरमुख्ये । अवध्यतां तस्य कपेः समीक्ष्य कथं निगच्छेदिति निग्रहार्थम् ॥ ३६ ॥ ततः पैतामहं वीरः सोऽस्त्रमस्त्रविदां वरः । सन्दधे सुमहातेजास्तं हरिप्रवरं प्रति ॥ ३७ ॥

स्वयं तेभ्यो विमुच्यमाने सति । हन्तेर्गत्यर्थात्कर्मकर्तरि लटश्शानजादेशः । समाधिसंयोगसमाहितात्मा सम्यगाधीयत इति समाधिः लक्ष्यं तस्मिन् संयोगे शरसन्धाने समाहितात्मा अप्रमत्तचित्तः । स महात्मा इन्द्रजित् । महतीं चिन्तां जगाम ॥ ३५ ॥ रामानु०—अमोघेषु शरेषु संपतत्स्वपि लक्ष्ये लक्ष्यभूते हनुमति विहन्यमाने स्वयमेव तेभ्यो विमुच्यमाने सति । हन्तेर्गत्यर्थात् कर्मकर्तरि लटश्शानजादेशः । समाधिसंयोगसमाहितात्मा समाधीयत इति समाधिः लक्ष्यं तस्मिन् संयोगे शरसन्धाने च समाहितात्मा अप्रमत्तचित्तः महात्मा स इन्द्रजित् महतीं चिन्तां जगामेति योजना । शरेषु मोघेष्विति पाठे—संपतत्सु शरेषु मोघेषु सत्सु लक्ष्ये लक्ष्यभूते हनुमति विहन्यमाने च सति सः चिन्तां जगामेति संबन्धः ॥ ३५ ॥ अवध्यतां तस्य कपेस्समीक्ष्य निग्रहार्थं कथं निगच्छेत् नीचतां गच्छेदिति मतिं चकार ॥ ३६ ॥ ३७ ॥

दृष्टिमिति यावत । मोचयन वितथीकुर्वन । मोहयन्निति पाठे—विपर्यासयन् व्यवर्ततेति सम्बन्धः ॥ ३१ ॥ अभिवर्तत अभ्यवर्तत । ततः शरमोक्षसमये पुनरुत्पपात ॥ ३२ ॥ ३३ ॥ अन्तरं रन्ध्रम् ॥३४॥ अमोघेषु शरेषु सम्पतत्स्वपि लक्ष्ये लक्ष्यभूते हनुमति विहन्यमाने स्वयमेव शरेभ्यो विमुच्यमाने सति, शरैरभिद्यमाने सती त्यर्थः । हन्तेर्गत्यर्थात्कर्मकर्तरि लटः शानजादेशः । समाधिसंयोगसमाहितात्मा समाधीयत इति समाधिः लक्ष्यं तस्मिन् संयोगे शरसन्धाने समाहितात्मा अप्रमत्त चित्तः लक्ष्यसन्धानशरसन्धानदत्तचित्त इत्यर्थः । शरेषु मोघेष्वित्यपि पाठः ॥ ३५ ॥ राक्षसराजसूनुः तस्य कपेः अवध्यतां समीक्ष्य निग्रहार्थं बन्धनार्थम् कथं

निजग्राह बबन्ध ॥ ३८–४० ॥ ब्रह्मास्त्रमभिमन्त्रितम्, विदित्वेति शेषः ॥ ४१ ॥ लोकगुरोः प्रभावात् अस्य बन्धस्य मोक्षणे मे शक्तिर्नास्तीत्येवं मत्वा एवं विहितः इन्द्रजिता अनेन प्रकारेण कृतः आत्मयोनेरस्त्रबन्धः मया अनुवर्तितव्य इत्यन्वयः ॥४२॥ पितामहानुग्रहं विमोक्षहेतुभूतमनुग्रहम्

अवध्योऽयमिति ज्ञात्वा तमस्त्रेणास्त्रतत्त्ववित् । निजग्राह महाबाहुर्मारुतात्मजमिन्द्रजित् ॥ ३८ ॥ तेन बद्धस्ततोऽस्त्रेण राक्षसेन स वानरः। अभवन्निर्विचेष्टश्च पपात च महीतले ॥ ३९ ॥ ततोऽथ बुद्ध्वा स तदस्त्रबन्धं प्रभोः प्रभावाद् विगतात्मवेगः । पितामहानुग्रहमात्मनश्च विचिन्तयामास हरिप्रवीरः ॥ ४० ॥ ततः स्वायम्भुवैर्मन्त्रैर्ब्रह्मास्त्रमभिमन्त्रितम् । हनूमांश्चिन्तयामास वरदानं पितामहात् ॥ ४१ ॥ न मेऽस्य बन्धस्य च शक्तिरस्ति विमोक्षणे लोकगुरोः प्रभावात् । इत्येव मत्वा विहितोऽस्त्रबन्धो मयाऽऽत्मयोनेरनुवर्तितव्यः ॥ ४२ ॥ स वीर्यमस्त्रस्य कपिर्विचार्य पितामहानुग्रहमात्मनश्च । विमोक्षशक्तिं परिचिन्तयित्वा पितामहाज्ञामनुवर्तते स्म ॥ ४३ ॥ अस्त्रेणापि हि बद्धस्य भयं मम न जायते । पितामहमहेन्द्राभ्यां रक्षितस्यानिलेन च ॥ ४४ ॥ ग्रहणे चापि रक्षोभिर्महान् मे गुणदर्शनः । राक्षसेन्द्रेण संवादस्तस्माद्गृह्णन्तु मां परे ॥ ४५ ॥

॥ ४३ ॥ स्वस्यादित्यग्रासानन्तरं पितामहमहेन्द्राभ्यामनिलेन च रक्षितत्वान्न मे भयमित्यर्थः ॥ ४४ ॥ ग्रहण इति । गुणदर्शनः गुणपर्यवसायी

निगच्छेत् निश्चेष्टां गच्छेत् इति तस्मिन् हरिवीरमुख्ये मतिं चकारेति सम्बन्धः ॥ ३६ ॥ ३७ ॥ निजग्राह बबन्ध ॥ ३८ ॥ ३९ ॥ सः हनुमान् स्वस्य तदस्त्रबन्धं ब्रह्मास्त्रबन्धम् । कृतं बुद्ध्वापि प्रभोः ब्रह्मणः प्रभावात् वरदानात् विगताल्पवेगः विगतः अप्राप्तः अल्पोऽपि वेगः पीडा येन तादृशः, अभीतचित्त इति यावत् । आत्मनः पितामहानुग्रहं मुहूर्तमात्रेण मदस्त्रनिरोधमुक्तिरित्येवंरूपम् । विगताल्पवेग इति पाठः ॥ ४० ॥ ब्रह्मास्त्रमभिमन्त्रितम्, विदित्वेति शेषः ॥ ४१ ॥ अथेन्द्रजिदभिप्रायानुवादपूर्वकं स्वकर्तव्यमाह—न म इति । लोकगुरोः प्रभावादस्य बन्धस्य विमोक्षणे मम शक्तिर्नास्ति इत्येवं मत्वा एवं विहितः इन्द्रजिता अनेन प्रकारेण कृतः, तत आत्मयोनेरस्त्रबन्धः मया अनुवर्तितव्य इत्यन्वयः ॥ ४२ ॥ विमोक्षशक्तिं मुहूर्तानन्तरभाविनीं तां परिचिन्तयित्वा मुहूर्तमात्रं पितामहाज्ञामनुवर्तते स्म ॥ ४३ ॥ पितामहमहेन्द्राभ्यां रक्षितस्यानिलेन चेत्युक्तिः आदित्यग्रासप्रवृत्त्यनन्तरमिति ज्ञेयम् ॥ ४४ ॥ ४५ ॥

संवादः ॥ ४५ ॥ ४६ ॥ ततस्तमिति । शणवल्कैः शणत्वग्भिः । संहतैः सज्जीकृतैः । द्रुमचीरैः वल्कलैः ॥ ४७ ॥ स इति । राक्षसेन्द्रः कौतूहलात् मां द्रष्टुं व्यवस्येदिति निश्चितार्थस्सन् बन्धनादिकं रोचयामासेति सम्बन्धः ॥ ४८ ॥ ४९ ॥ अन्येन शणवल्कलादिना । बद्धः अस्त्रं नानुवर्तते,

स निश्चितार्थः परवीरहन्ता समीक्ष्यकारी विनिवृत्तचेष्टः । परैः प्रसह्याभिगतैर्निगृह्य ननाद तैस्तैः परिभर्त्स्यमानः ॥ ४६ ॥ ततस्तं राक्षसा दृष्ट्वा निर्विचेष्टमरिन्दमम् । बबन्धुः शणवल्कैश्च द्रुमचीरैश्च संहतैः ॥४७॥ स रोचयामास परैश्च बन्धं प्रसह्य वीरैरभिनिग्रहं च । कौतूहलान्मां यदि राक्षसेन्द्रो द्रष्टुं व्यवस्येदिति निश्चितार्थः ॥ ४८ ॥ स बद्धस्तेन वल्केन विमुक्तोऽस्त्रेण वीर्यवान् । अस्त्रबन्धः स चान्यं हि न बन्धमनुवर्तते ॥ ४९ ॥ अथेन्द्रजित्तु द्रुमचीरबद्धं विचार्य वीरः कपिसत्तमं तम् । विमुक्तमस्त्रेण जगाम चिन्तां नान्येन बद्धो ह्यनुवर्ततेऽस्त्रम् ॥५०॥ अहो महत् कर्म कृतं निरर्थकं न राक्षसैर्मन्त्रगतिर्विमृष्टा । पुनश्च नास्त्रे विहतेऽस्त्रमन्यत् प्रवर्तते संशयिताः स्म सर्वे॥५१॥ अस्त्रेण हनुमान् मुक्तो नात्मानमवबुध्यत । कृष्यमाणस्तु रक्षोभिस्तैश्च बन्धैर्निपीडितः ॥ ५२ ॥

नास्त्रेण बद्ध इव वर्तत इत्यर्थः ॥ ५० ॥ अहो इति । मन्त्रगतिः ब्रह्मास्त्रमन्त्रपद्धतिः । न विमृष्टा न पर्यालोचितेत्यर्थः । बन्धान्तरेण सहानवस्थानरूपं ब्रह्मास्त्रस्वभावमनालोच्य शणबन्धादिकं राक्षसैः कृतमिति भावः । अस्त्रे विहते ब्रह्मास्त्रे प्रतिहते । अन्यदस्त्रं न प्रवर्तते, न प्रभवतीत्यर्थः । तदेव ब्रह्मास्त्रं प्रयुज्यतामित्याशङ्क्याह–पुनश्चेति । पुनर्न प्रवर्तते, प्रयुक्तं ब्रह्मास्त्रं पुनर्न प्रभवतीत्यर्थः । सर्व इत्यनन्तरमितिकरणं बोध्यम् । इति चिन्तां जगामेति पूर्वेण सम्बन्धः ॥ ५१ ॥ अस्त्रेणेति । नावबुद्ध्यत नावधृतवान् ॥ ५२–५७ ॥

स इति । समीक्ष्य विचार्य करोतीति समीक्ष्यकारी ॥४६ ॥ शणवल्कैः शणत्वग्भिः । संहतैः त्रिगुणितैः ॥ ४७ ॥ सः हनुमान् राक्षसेन्द्रः कौतूहलान्मां द्रष्टुं व्यवस्येदिति निश्चितार्थस्सन् बन्धनादिकं रोचयामासेति सम्बन्धः ॥ ४८ ॥ अस्त्रबन्धमोक्षोऽपि तथैवाजायतेत्याह–स इति । वल्केन तज्जन्यरज्ज्वैव बद्धः अस्त्रेण तु विमुक्तः । कुतस्तत्राह अस्त्रबन्धो मन्त्रबन्धोऽन्यं बन्धं नानुवर्तते इतरबन्धेन सह न तिष्ठति, तस्मिन् सति मन्त्रबन्धो नश्यतीत्यर्थः ॥ ४९ ॥ द्रुमचीरबद्धम् अत एव अस्त्रेण विमुक्तं विचार्य अन्येन शणवल्कलादिना बद्धो हनुमान् अस्त्रमनुवर्तते अस्त्रेण बद्ध इव वर्तते इत्यपि विचार्य चिन्तां जगामेति सम्बन्धः ॥ ५० ॥ अथात्मानमुपालभते–अहो इति । महत्कर्म ब्रह्मास्त्रेण हनुमद्बन्धनकर्म राक्षसैः निरर्थकं कृतम् । कुतः ? मन्त्रधृतिः न शक्या,

अतीत्येति । परिचारवृद्धान् अमात्यवृद्धान् ॥ ५८–६१ ॥ कार्यार्थं कर्तव्यार्थम् । अर्थस्य कर्तव्यार्थस्य । मूलं निमित्तम्, प्रेषयितारमित्यर्थः । अनयोः

हन्यमानस्ततः क्रूरै राक्षसैः काष्ठमुष्टिभिः । समीपं राक्षसेन्द्रस्य प्राकृष्यत स वानरः ॥५३॥ अथेन्द्रजित्तं प्रसमीक्ष्य मुक्तमस्त्रेण बद्धं द्रुमचीरसूत्रैः । व्यदर्शयत्तत्र महाबलं तं हरिप्रवीरं सगणाय राज्ञे ॥ ५४ ॥ तं मत्तमिव मातङ्गं बद्धं कपिवरोत्तमम् । राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ ५५ ॥ कोऽयं कस्य कुतो वाऽत्र किं कार्यं को व्यपाश्रयः । इति राक्षसवीराणां तत्र संजज्ञिरे कथाः ॥५६॥ हन्यतां दह्यतां वापि भक्ष्यतामिति चापरे । राक्षसास्तत्र संक्रुद्धाः परस्परमथाब्रुवन् ॥ ५७ ॥ अतीत्य मार्गं सहसा महात्मा स तत्र रक्षोधिपपादमूले । ददर्श राज्ञः परिचारवृद्धान् गृहं महारत्नविभूषितं च ॥ ५८ ॥ स ददर्श महातेजा रावणः कपिसत्तमम् । रक्षोभिर्विकृताकारैः कृष्यमाणमितस्ततः ॥ ५९ ॥ राक्षसाधिपतिं चापि ददर्श कपिसत्तमः । तेजोबलसमायुक्तं तपन्तमिव भास्करम् ॥६०॥ स रोषसंवर्तितताम्रदृष्टिर्दशाननस्तं कपिमन्ववेक्ष्य । अथोपविष्टान् कुलशीलवृद्धान् समादिशत्तं प्रति मन्त्रिमुख्यान् ॥ ६१ ॥ यथाक्रमं तैः स कपिर्विपृष्टः कार्यार्थमर्थस्य च मूलमादौ । निवेदयामास हरीश्वरस्य दूतः सकाशादहमागतोऽस्मि ॥ ६२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे अष्टचत्वारिंशः सर्गः ॥४८॥

विपृष्ट इत्यनेन संबन्धः । श्लोकान्त इतिकरणं बोध्यम् । वक्ष्यमाणसङ्ग्रहोऽयम् ॥ ६२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

ब्रह्मास्त्रमन्त्रधारणमशक्यमित्यर्थः । नच पुनः करणं शक्यमित्याह पुनश्चेति । न प्रवर्तते प्रयुक्तं ब्रह्मास्त्रं पुनर्न प्रभवतीत्यर्थः । अतः संशयिताः स्म सर्व इति चिन्तां जगामेति पूर्वेण सम्बन्धः ॥ ५१–५५ ॥ कोऽयमिति । अत्र रावणपुरे । को व्यपाश्रयः को वा आश्रयः ॥ ५६ ॥ ५७ ॥ अतीत्येति । परिचारवृद्धान् अमात्यवृद्धान् ॥ ५८–६१ ॥ कार्यार्थं कर्तव्यार्थम् । अर्थस्य च मूलम् अर्थकारणम् । कार्यं प्रति प्रेषयितारमिति यावत् । पृष्टस्सन् दूतस्सन् अहमागतोस्मीति निवेदयामासेति सम्बन्धः ॥६२॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

ततः स इत्यादि । कर्मणा तस्य विस्मितः, युद्धार्थं रावणेनागन्तव्यमिति मया यत्नः कृतः । स तु नागतः आसनस्थ एव इन्द्रजिन्मुखेन मां निबध्यानीतवान् इति नित्यानयनकर्मणा जातविस्मय इत्यर्थः ॥ १ ॥ भ्राजमानमित्यादि । वज्रसंयोगसंयुक्तैः वज्रकीलनेन संबद्धैः । अत्र भ्राजमानमित्यनुषज्यते ॥ २ ॥ ३ ॥

ततः स कर्मणा तस्य विस्मितो भीमविक्रमः । हनुमान् रोषताम्राक्षो रक्षोधिपमवैक्षत ॥ १ ॥ भ्राजमानं महार्हेण काञ्चनेन विराजता । मुक्ताजालावृतेनाथ मुकुटेन महाद्युतिम् ॥ २ ॥ वज्रसंयोगसंयुक्तैर्महार्हमणिविग्रहैः । हैमैराभरणैश्चित्रैर्मनसेव प्रकल्पितैः ॥ ३ ॥ महार्हक्षौमसंवीतं रक्तचन्दनरूषितम् । स्वनुलिप्तं विचित्राभिर्विविधाभिश्च भक्तिभिः ॥ ४ ॥ विवृतैर्दर्शनीयैश्च रक्ताक्षैर्भीमदर्शनैः । दीप्ततीक्ष्णमहादंष्ट्रैः प्रलम्बदशनच्छदैः ॥ ५ ॥ शिरोभिर्दशभिर्वीरं भ्राजमानं महौजसम् । नानाव्यालसमाकीर्णैः शिखरैरिव मन्दरम् ॥ ६ ॥ नीलाञ्जनचयप्रख्यं हारेणोरसि राजता । पूर्णचन्द्राभवक्रेण सबलाकमिवाम्बुदम् ॥ ७ ॥ बाहुभिर्बद्धकेयूरैश्चन्दनोत्तमरूषितैः । भ्राजमानाङ्गदैः पीनैः पञ्चशीर्षैरिवोरगैः ॥८॥ महति स्फाटिके चित्रे रत्नसंयोगसंस्कृते । उत्तमास्तरणास्तीर्णे सूपविष्टं वरासने ॥ ९ ॥ अलंकृताभिरत्यर्थं प्रमदाभिः समन्ततः । वालव्यजनहस्ताभिरारात् समुपसेवितम् ॥ १० ॥ दुर्धरेण प्रहस्तेन महापार्श्वेन रक्षसा । मन्त्रिभिर्मन्त्रतत्त्वज्ञैर्निकुम्भेन च मन्त्रिणा ॥ ११ ॥

भक्तिभिः पङ्क्तिभिः । इत्थंभूतलक्षणे तृतीया । यथा पङ्क्तयो भवन्ति तथाऽनुलिप्त इत्यर्थः ॥ ४–५ ॥ पूर्णचन्द्राभवक्रेण पूर्णचन्द्रतुल्यनायकरत्नेन । वक्रं नायकरत्नम् अभितोलग्नमुक्तामणिमण्डलम् ॥ ७ ॥ केयूरं भुजोपरि धार्यमाणमाभरणम् । अङ्गदं बाहुमध्यस्थाभरणम् ॥ ८–१० ॥ मन्त्रिभिः

तत इति । कर्मणा तस्य विस्मितः स्वयं सिंहासनादचलित एव ब्रह्मास्त्रेण स्वबन्धनकर्माविस्मित इत्यर्थः ॥ १ ॥ २ ॥ वज्रसंयोगसंयुक्तैः वज्रकीलेन सम्बद्धैः आभरणैर्भ्राजमानमित्यनुषङ्गः ॥ ३ ॥ भक्तिभिः कस्तूर्यादिरचनाविशेषैः ॥ ४–१० ॥ मन्त्री बुद्धिसहायः ॥ ११ ॥ १२ ॥



स०—तस्य रावणस्य । कर्मणा स्वयं महाराज इति साक्षादसम्भाष्य मन्त्रिमुखेन वाचयामासेत्यवरूपकर्मणेत्यर्थः ॥ कतक०—तस्य इन्द्रजितः । यत्तु रावणस्येति तन्न । तेन हनूमति कस्यापि कर्मणोऽकृतत्वात् ॥ १ ॥

प्रशस्तमन्त्रैः । अतस्साचिवैरित्यपुनरुक्तिः ॥ ११--१७ ॥ अयं रावणकृतः अधर्मः बलवान्न स्याद्यदि । तदाऽयं राक्षसेश्वरः सशक्रस्य सुरलोकस्यापि रक्षिता स्यात् ॥ १८ ॥ अस्येति । तेन कर्मभिः कृतेन पूर्वोक्तेनाधर्मेण हेतुना ॥ १९ ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गार

सुखोपविष्टं रक्षोभिश्चतुर्भिर्बलदर्पितैः । कृत्स्नं परिवृतं लोकं चतुर्भिरिव सागरैः ॥ १२ ॥ सचिवैर्मन्त्रतत्त्वज्ञैरन्यैश्च शुभबुद्धिभिः । अन्वास्यमानं रक्षोभिः सुरैरिव सुरेश्वरम् ॥ १३ ॥ अपश्यद्राक्षसपतिं हनुमानतितेजसम् । विष्ठितं मेरुशिखरे सतोयमिव तोयदम् ॥ १४ ॥ स तैः संपीड्यमानोऽपि रक्षोभिर्भीमविक्रमैः । विस्मयं परमं गत्वा रक्षोधिपमवैक्षत ॥ १५ ॥ भ्राजमानं ततो दृष्ट्वा हनुमान् राक्षसेश्वरम् । मनसा चिन्तयामास तेजसा तस्य मोहितः ॥ १६ ॥ अहो रूपमहो धैर्यमहो सत्त्वमहो द्युतिः । अहो राक्षसराजस्य सर्वलक्षणयुक्तता ॥ १७ ॥ यद्यधर्मो न बलवान् स्यादयं राक्षसेश्वरः । स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ॥ १८ ॥ अस्य क्रूरैर्नृशंसैश्च कर्मभिर्लोककुत्सितैः । तेन बिभ्यति खल्वस्माल्लोकाः सामरदानवाः ॥ १९ ॥ अयं ह्युत्सहते क्रुद्धः कर्तुमेकार्णवं जगत् । इति चिन्तां बहुविधामकरोन्मतिमान् हरिः । दृष्ट्वा राक्षसराजस्य प्रभावममितौजसः ॥ २० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

तिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥

सचिवः कार्यसहायः ॥ १३ ॥ १४ ॥ रक्षोधिपमवैक्षत न तु रक्षःकृतपीडामित्यर्थः ॥ १५–१७ ॥ अयमधर्मः रावणकृतोऽधर्मः न स्याद्यदि अयं राक्षसेश्वरः बलवान् स्यात् सशक्रस्य सुरलोकस्य रक्षितापि स्यादिति सम्बन्धः ॥ १८ ॥ क्रूरैः भीषणैः । नृशंसैः परद्रोहाचरणशीलैः । तेन पूर्वोक्तेनाधर्मेण च ॥ १९ ॥ २० ॥
इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् एकोनपञ्चाशः सर्गः ॥ ४९ ॥

तमुद्वीक्ष्येत्यादि ॥ १ ॥ २॥ बाणः महाबलिसुतः । अनेन तेनापि किञ्चित् शप्तमिति गम्यते । अत्रेतिकरणं द्रष्टव्यम् ॥ ३ ॥ ४ ॥ दुरात्मा पृच्छ्यतामिति । अस्य विवरणम् कुत इत्यादि । कुतः कस्माद्देशादागतः । किं वाऽस्य कारणम् अस्य कः प्रेरकः । मत्पुरीम्, प्रतीति शेषः । आयोधने युद्धे ।

तमुद्वीक्ष्य महाबाहुः पिङ्गाक्षं पुरतः स्थितम् । कोपेन महताऽऽविष्टो रावणो लोकरावणः ॥ १ ॥ शङ्काहतात्मा दध्यौ स कपीन्द्रं तेजसावृतम् । किमेष भगवान्नन्दी भवेत् साक्षादिहागतः ॥ २ ॥ येन शप्तोऽस्मि कैलासे मया सञ्चालिते पुरा । सोऽयं वानरमूर्तिः स्यात् किंस्विद्बाणोपि वाऽसुरः ॥ ३ ॥ स राजा रोषताम्राक्षः प्रहस्तं मन्त्रिसत्तमम् । कालयुक्तमुवाचेदं वचो विपुलमर्थवत् ॥ ४ ॥ दुरात्मा पृच्छ्यतामेष कुतः किं वाऽस्य कारणम् । वनभङ्गे च कोऽस्यार्थो राक्षसीनां च तर्जने ॥ ५ ॥ मत्पुरीमप्रधृष्यां वाऽऽगमने किं प्रयोजनम् । आयोधने वा किं कार्यं पृच्छ्यतामेष दुर्मतिः ॥ ६ ॥ रावणस्य वचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत् । समाश्वसिहि भद्रं ते न भीः कार्या त्वया कपे ॥ ७ ॥ यदि तावत्त्वमिन्द्रेण प्रेषितो रावणालयम् । तत्त्वमाख्याहि मा भूत्ते भयं वानर मोक्ष्यसे ॥ ८ ॥ यदि वैश्रवणस्य त्वं यमस्य वरुणस्य च । चाररूपमिदं कृत्वा प्रविष्टो नः पुरीमिमाम् । विष्णुना प्रेषितो वापि दूतो विजयकाङ्क्षिणा ॥ ९ ॥ न हि ते वानरं तेजो रूपमात्रं तु वानरम् ॥ १० ॥ तत्त्वतः कथयस्वाद्य ततो वानर मोक्ष्यसे । अनृतं वदतश्चापि दुर्लभं तव जीवितम् । अथवा यन्निमित्तं ते प्रवेशो रावणालये ॥ ११ ॥ एवमुक्तो हरिश्रेष्ठस्तदा रक्षोगणेश्वरम् ॥ १२ ॥

किं कार्यं किं प्रयोजनम् ॥ ५-७ ॥ यदि तावत्त्वमिन्द्रेणेत्यादि । यदि वैश्रवणस्येत्यादेः दूतो विजयकाङ्क्षिणेत्यन्तस्य तत्त्वमाख्याहीति पूर्वेण संबन्धः ॥ ८ ॥ ९ ॥ न हीत्यादि । अथवेति । यन्निमित्तं कृत्वा ते प्रवेशः तन्निमित्तं कथयस्वेति पूर्वेण संबन्धः ॥ १० ॥ ११ ॥ एवमुक्त इत्यादि । रक्षोगणेश्वर



आविष्टः, आसीदिति शेषः ॥१॥ तेजसावृतं, दध्वेति शेषः । शङ्काहतात्मेत्युक्तां शङ्कामेवाह–नन्दी वानरमुख्य एषः प्रमथगणाधिपः॥२॥ शप्तः मन्मुखसदृशमुखैस्तव नाशो भविष्यतीति शप्तः । सोऽयमिति । बाणो बलिसुतः महासुरः । इति दध्याविति पूर्वेण सम्बन्धः ॥ ३ ॥ कालयुक्तं कालोचितम् ॥४॥ कुतः कस्माद्देशादागतः । किंवाऽस्य कारणम् अस्य को वा प्रेषकः ॥५॥ मत्पुरीमिति, उद्दिश्येति शेषः ॥ ६–१० ॥ यन्निमित्तं कृत्वा ते प्रवेशः तन्निमित्तं कथयस्वेति पूर्वेण सम्बन्धः । अथवा

मित्यनेन प्रहारं प्रहस्तं पृष्ठतः कृतवानिति गम्यते ॥१२॥१३॥ एषा वानरता । राक्षसेन्द्रस्य, तवेति शेषः ॥ १४॥१५ ॥ प्रतियुद्धाः प्रतिप्रहृताः ॥१६॥ ममापीति तवेवेत्यर्थः । तर्हि कथं बद्धोऽसीत्याशङ्क्याह राजानमिति ॥ १७ ॥ पीडितः बद्धस्सन् । अस्त्रेण विमुक्तः । हिशब्दोऽवधारणे । ब्रह्मास्त्रस्य

अब्रवीन्नास्मि शक्रस्य यमस्य वरुणस्य वा । धनदेन न मे सख्यं विष्णुना नास्मि चोदितः ॥१३॥ जातिरेव मम त्वेषा वानरोऽहमिहागतः । दर्शने राक्षसेन्द्रस्य दुर्लभे तदिदं मया ॥१४॥ वनं राक्षसराजस्य दर्शनार्थे विनाशितम् । ततस्ते राक्षसाः प्राप्ता बलिनो युद्धकांक्षिणः ॥ १५ ॥ रक्षणार्थं तु देहस्य प्रतियुद्धा मया रणे । अस्त्रपाशैर्न शक्योऽहं बद्धुं देवासुरैरपि ॥ १६ ॥ पितामहादेव वरो ममाप्येषोऽभ्युपागतः । राजानं द्रष्टुकामेन मयास्त्रमनुवर्तितम् ॥ १७ ॥ विमुक्तो ह्यहमस्त्रेण राक्षसैस्त्वभिपीडितः । केनचिद्राजकार्येण संप्राप्तोऽस्मि तवान्तिकम् ॥ १८ ॥ दूतोऽहमिति विज्ञेयो राघवस्यामितौजसः । श्रूयतां चापि वचनं मम पथ्यमिदं प्रभो ॥ १९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

साधनान्तरासहत्वादिति भावः । अस्तु सर्वमेतन्मद्दर्शनार्थम्, मद्दर्शनं वा किमर्थम् ? तत्राह–केनचिदिति ॥ १८ ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चाशः सर्गः ॥५० ॥

यन्निमित्तस्ते इति पाठे बहुव्रीहिः ॥ ११–१३ ॥ दर्शन इति । राक्षसेन्द्रस्य, तवेति शेषः । दर्शने दुर्लभे सति । राक्षसेन्द्रस्य तव दर्शनार्थं तदिदं वनं नाशितमिति सम्बन्धः ॥ १४ ॥ १५ ॥ रक्षणार्थमिति । प्रतियुद्धाः प्रहृताः ॥ १६ ॥ ननु तवास्त्रबन्धाभावे किमिति ब्रह्मास्त्रेण बद्धो राक्षसैः पीड्यस इत्यत आह–राजानमिति । अस्त्रविमुक्तोऽपि कार्यवशाद् बुद्धिपूर्वकमेवाहमेभिः पीड्ये एतन्ममाकिञ्चित्करमिति भावः ॥ १७–१९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां पञ्चाशः सर्गः ॥ ५० ॥

तं समीक्ष्येत्यादि । समीक्षणोक्तिक्रियाभेदात्तच्छब्दद्वयम् ॥ १ ॥ अहं रामदूत एव, सन्देशस्तु सुग्रीवस्येति भावः । सुग्रीवसन्देशात् सुग्रीवसन्देशाद्धेतोः, सन्देशप्रापणार्थमित्यर्थः । " सन्देशवाग्वाचिकं स्यात् " इत्यमरः । इह लङ्कायाम् । भ्राता भ्रातृवद्धितकरः । अब्रवीत् अप्राक्षीत् । यद्यपि

तं समीक्ष्य महासत्त्वं सत्त्ववान् हरिसत्तमः । वाक्यमर्थवदव्यग्रस्तमुवाच दशाननम् ॥ १ ॥ अहं सुग्रीवसन्देशादिह प्राप्तस्तवालयम् । राक्षसेन्द्र हरीशस्त्वां भ्राता कुशलमब्रवीत् ॥ २ ॥ भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः । धर्मार्थोपहितं वाक्यमिह चामुत्र च क्षमम् ॥ ३ ॥ राजा दशरथो नाम रथकुञ्जरवाजिमान् । पितेव बन्धुर्लोकस्य सुरेश्वरसमद्युतिः ॥ ४ ॥ ज्येष्ठस्तस्य महाबाहुः पुत्रः प्रियकरः प्रभुः । पितुर्निदेशान्निष्क्रान्तः प्रविष्टो दण्डकावनम् ॥ ५ ॥ लक्ष्मणेन सह भ्रात्रा सीतया चापि भार्यया । रामो नाम महातेजा धर्म्यं पन्थानमाश्रितः ॥ ६ ॥ तस्य भार्या वने नष्टा सीता पतिमनुव्रता । वैदेहस्य सुता राज्ञो जनकस्य महात्मनः ॥ ७ ॥

सुग्रीवेण न सन्दिष्टं तथापि दूतोक्तं सर्वं स्वाम्युक्तमेवेत्याशयेनोक्तम् ॥ २ ॥ भ्रातुरिति । समादेशं सन्देशरूपमिति वाक्यविशेषणम् । इह अस्मिँल्लोके । अमुत्र परलोके । क्षमम् अभ्युदयसाधनम् ॥ ३–५ ॥ रामानु०–रावणहृदयपरिज्ञानार्थं तत्कालोदितप्रतिभया सुग्रीवसन्देशं कल्पयित्वा वदति–भ्रातुरिति । समादेशं सन्देशम् । सुग्रीवसन्देशस्य रामप्रयोजनपरत्वात्सन्देशोपयोगितया रामसुग्रीवयोस्सख्यादिकं राजा दशरथ इत्यारभ्य–भ्रमता च मया दृष्टा गृहे ते जनकात्मजेत्यन्तेन प्रतिपादयन् तद्भवानित्यादिना कृत्वा सुखमवाप्नुयादित्यन्तेन सुग्रीवसन्देशं वदति ॥ ३–५ ॥ धर्म्यं धर्मादनपेतम् । " धर्मपथ्यर्थन्यायादनपेते " इति यत्प्रत्ययः ॥ ६ ॥ ७ ॥ रामानु०–धर्म्यं धर्मादनपेतम् । " धर्मपथ्यर्थन्यायादनपेते " इति यत्प्रत्ययः ॥ ६ ॥

अथ सुग्रीवसन्देशकथनव्याजेन सामदण्डान्यतरविषयत्वनिश्चयाय न्यायानुसारी न वेति जिज्ञासति–तमित्यादि ॥१॥ अहमिति । वालिरावणयोस्सखित्वसम्बन्धत्वाद्भ्रातृत्वम् । कुशलमब्रवीत् अप्राक्षीदित्यर्थः ॥ २ ॥ समादेशं सन्देशरूपं वाक्यमिति सामानाधिकरण्यम् ॥ ३ ॥ ननु किं तत्सुग्रीवसन्दिष्टमित्याकाङ्क्षायां

स०–राक्षसेभ हरीशः इति पाठः । हे राक्षसेभ राक्षसश्रेष्ठ ! वालिरावणयोर्भ्रातृसौहार्दात्तत्प्रकाशिका मृदूक्तिर्भ्रातेति । हरीशः कुशलमब्रवीत् त्वत्कुशलमुद्दिश्य पृच्छेति मामब्रवीत् । राक्षसेभहरीशः, न शृणोषि तेनोक्तं चेत्तव हननमनायासेन कृत्वा सीतां नेष्यतीत्यान्तरङ्गिकोऽर्थः राक्षसेभस्य हरीशः महासिंह इत्येकपदतायां ज्ञेयः । तथा भ्रातेत्यनेन त्वद्राज्यग्रहणेऽपि योग्यता तस्यास्तीति सूचयति ॥ २ ॥

स मार्गमाण इति । सुग्रीवेण, मयेति शेषः । यद्वा लोके वक्तारः स्वात्मानमन्यमिव निर्दिशन्त्यौद्धत्यातिशयात् । यद्वा अत्रानुवादात् पूर्वं सुग्रीवेणैवं वक्तव्यमिति पठितं तथैव हनुमान् पठतीति समादेशप्राधान्यादन्यवाक्यमपि तथोच्यत इति केचित् प्राहुः । यद्वा सुग्रीवसन्देशस्य रामप्रयोजनपर

स मार्गमाणस्तां देवीं राजपुत्रः सहानुजः । ऋश्यमूकमनुप्राप्तः सुग्रीवेण समागतः ॥ ८ ॥ तस्य तेन प्रतिज्ञातं सीतायाः परिमार्गणम् । सुग्रीवस्यापि रामेण हरिराज्यं निवेदितम् ॥९॥ ततस्तेन मृधे हत्वा राजपुत्रेण वालिनम् । सुग्रीवः स्थापितो राज्ये हर्यृक्षाणां गणेश्वरः ॥१०॥ त्वया विज्ञातपूर्वश्च वाली वानरपुङ्गवः । रामेण निहतः सङ्ख्ये शरेणैकेन वानरः ॥ ११ ॥ स सीतामार्गणे व्यग्रः सुग्रीवः सत्यसङ्गरः । हरीन् संप्रेषयामास दिशः सर्वा हरीश्वरः ॥ १२ ॥ तां हरीणां सहस्राणि शतानि नियुतानि च । दिक्षु सर्वासु मार्गन्ते ह्यधश्चोपरि चाम्बरे ॥ १३ ॥ वैनतेयसमाः केचित् केचित्तत्रानिलोपमाः । असङ्गगतयः शीघ्रा हरिवीरा महाबलाः ॥ १४ ॥ अहं तु हनुमान्नाम मारुतस्यौरसः सुतः । सीतायास्तु कृते तूर्णं शतयोजनमायतम् ॥ १५ ॥ समुद्रं लङ्घयित्वैव तां दिदृक्षुरिहागतः । भ्रमता च मया दृष्टा गृहे ते जनकात्मजा ॥ १६ ॥

त्वात्सन्देशोपयोगितया रामसुग्रीवयोस्सख्यादिकं दर्शयति–राजा दशरथ इत्यादिना ॥ ८–११ ॥ स इति । सत्यसङ्गरः सत्यप्रतिज्ञः । " कर्बुरे च प्रतिज्ञाजिसंविदापत्सु सङ्गरः " इत्यमरः ॥ १२ ॥ रामानु०–सत्यसङ्गरः सत्यप्रतिज्ञः । " कर्बुरे च प्रतिज्ञाजिसंविदापत्सु सङ्गरः " इत्यमरः ॥ १२ ॥ तामिति । अधश्चोपरि चाम्बरे, पाताले भूमौ आकाशे चेत्यर्थः ॥ १३ ॥ वैनतेयेति । असङ्गगतय इति शीघ्रत्वे हेतुः ॥ १४ ॥ अहन्त्विति । औरसस्सुतः क्षेत्रजत्वव्यावृत्तये औरसपदम् । सीतायास्तु कृते सीतालाभाय तां दिदृक्षुरिति योज्यम् ॥ १५ ॥ १६ ॥

यन्मयोच्यते तदेव तदीयाशयेन हनुमान् स्वयमेव सर्वं सन्दिशति-राजा दशरथ इत्यादिना जानकी प्रतिदीयतामित्यन्तेन ॥ ४–१० ॥ त्वयेति । त्वया विज्ञात पूर्वश्च वालीति मर्मोक्तिः । स तेन निहत इति पाठः । रामोत्कर्षश्च प्रतिपादित इति ज्ञेयम् ॥ ११–१५ ॥ त्वां दिदृक्षुरिहागत इति पाठः । त्वां सुग्रीवभ्रातरं रावणम्, तस्मिन् दृष्टे सर्वलोकवृत्तान्तज्ञः स सीतागतिं वक्ष्यतीति सुग्रीवेणोक्तत्वात्त्वां दिदृक्षुरिहागतः, दैवात्पङ्गूपरि गङ्गानिपतनवत् तव गृहे भ्रमता मया

एवं सुग्रीवसंबन्धं प्रतिपाद्य सुग्रीवसन्देशं वदति—तद्भवानित्यादिना । दृष्टधर्मार्थः शास्त्रेण विदितधर्मार्थस्वरूप इत्यर्थः । तपःकृतपरिग्रहः तपसि विषये कृतस्वीकारः । यद्वा तपसा स्वयं कृतपरिग्रहः । स्वारसिकतपस्क इति यावत् । हेतुगर्भे विशेषणे ॥ १७ ॥ धर्मविरुद्धेषु धर्मशास्त्र



तद्भवान् दृष्टधर्मार्थस्तपःकृतपरिग्रहः । परदारान् महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ॥१७॥ न हि धर्मविरुद्धेषु बह्वपायेषु कर्मसु । मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १८ ॥ कश्च लक्ष्मणमुक्तानां रामकोपानुवर्तिनाम् । शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि ॥ १९ ॥ न चापि त्रिषु लोकेषु राजन् विद्येत कश्चन । राघवस्य व्यलीकं यः कृत्वा सुखमवाप्नुयात् ॥२०॥ तत्त्रिकालहितं वाक्यं धर्म्यमर्थानुबन्धि च । मन्यस्व नरदेवाय जानकी प्रतिदीयताम् ॥ २१ ॥ दृष्टा हीयं मया देवी लब्धं यदिह दुर्लभम् । उत्तरं कर्म यच्छेषं निमित्तं तत्र राघवः ॥ २२ ॥

विरुद्धेषु । धर्मविरुद्धत्वेऽपि यत्सौख्यावहं तत्कार्यमित्यत्राह बह्वपायेष्विति । बहुहानिकरेष्वित्यर्थः । अपायाः कथंचित्परिह्रियन्त इत्याशङ्क्याह मूलघातिष्विति । स्वविनाशकरेष्वित्यर्थः । कर्मसु परदारापहारेषु । न सज्जन्ते नोद्युक्ता भवन्ति ॥ १८ ॥ रामकोपानुवर्तिनां रामकोपानुसारेण निर्गतानामित्यर्थः ॥ १९ ॥ व्यलीकम् अप्रियम् । "व्यलीकं त्वप्रियेऽनृते" इत्यमरः ॥ २० ॥ तादिति । तत्तस्मात् अधर्मावहत्वात् रामापराधस्य परिहर्तव्यत्वाच्च । त्रिकालहितं भूतभविष्यद्वर्तमानकालहितम् । दारुणाधर्मस्य स्वपूर्वपुरुषविनाशकत्वेन तत्परिहारस्य भूतकालहितत्वं मन्यस्व । मत्वा प्रतिदीयतामिति योज्यम् ॥२१॥ जानकीहरणे किं मानं तत्राह—दृष्टा हीति । यत् सीतादर्शनम् दुर्लभम् । इतरवानरालभ्यं

जानकी दृष्टा ॥१६॥ दृष्टधर्मार्थः धर्मार्थशास्त्रपारदृश्वा । तपःकृतपरिग्रहः कृततपःपरिग्रहः, महातपस्सम्पन्न इत्यर्थः । यस्मादेतादृशस्त्वं तस्मात्परदारानुपरोद्धुं नार्हसीति योजना ॥ १७ ॥ अनेन मम का हानिरित्यत आह—नहीति । धर्मविरुद्धेषु अधर्मेष्वित्यर्थः । अधर्मफलमाह बह्वपायेषु बह्वनर्थेषु । ननु सर्वापायप्रतीकारसमर्थस्य किमियं वाचोयुक्तिः ? तत्राह मूलघातिषु । मूलतो विनष्टः किं प्रतिकरिष्यतीति भावः ॥ १८ ॥ ननु सर्वमूलफलच्छेदिनो मे को मूलच्छेदीत्यत आह—कश्चेत्यादि ॥ १९ ॥ व्यलीकम् अपराधम् ॥ २० ॥ तद्वाक्यं सुग्रीवोक्तम् । त्रिकालहितं सीतानुपरोधेन पूर्वापराधनाशात् वर्तमानैश्वर्याविरोधात् भाविशुभहेतुत्वाच्च त्रिकालहितम् । धर्म्यं धर्मादनपेतम् अर्थानुबन्धि च मन्यस्व जानीहि अतो नरदेवाय जानकी प्रतिदीयतामिति सम्बन्धः ॥ २१ ॥ न च सीताऽत्र नास्तीत्यपह्नोतुं शक्यमित्याह—दृष्टा हीति । यत् सीतादर्शनरूपं वस्तु दुर्लभं सीतान्वेषणप्रेषितैः सर्वैरपि वानरैः प्राप्तुमशक्यं तदिह मया लब्धम् । यावद्राज्ञतं तावत्

तल्लब्धम् । तर्हि सा नीयतामित्यत्राह—उत्तरमिति । सीतादर्शनोत्तरं यच्छेषं कर्म सीतानयनं तत्र राघवो निमित्तम् । आज्ञप्तस्यैव मया कर्तव्यत्वादिति भावः ॥ २२ ॥ दृष्टयाऽपि मद्दर्शंवदया सीतया रामः किं करिष्यतीत्याशङ्क्याह—लक्षितेयमिति । तथेति वाचामगोचरत्वोक्तिः । नेयं तव वश्या प्रत्युत पन्नगीव तव प्राणहारिणीति भावः ॥ २३ ॥ नेयमिति । ओजसा अमरपक्षे प्रतापेन । अन्नपक्षे जाठराग्निना ॥ २४ ॥ तपःकृच्छ्रलब्धमिदं मह

लक्षितेयं मया सीता तथा शोकपरायणा । गृह्य यां नाभिजानासि पञ्चास्यामिव पन्नगीम् ॥ २३ ॥
नेयं जरयितुं शक्या सासुरैरमरैरपि । विषसंसृष्टमत्यर्थं भुक्तमन्नमिवौजसा ॥ २४ ॥
तपस्सन्तापलब्धस्ते योऽयं धर्मपरिग्रहः । न स नाशयितुं न्याय्यमात्मप्राणपरिग्रहः ॥ २५ ॥
अवध्यतां तपोभिर्यां भवान् समनुपश्यति । आत्मनः सासुरैर्देवैर्हेतुस्तत्राप्ययं महान् ॥ २६ ॥

जीवनं वृथा मा नाशयेत्याह—तप इति । तपस्सन्तापः तपश्चर्या । ओदनपाकं पचतीतिवन्निर्देशः । तेन लब्धः । परिगृह्यत इति परिग्रहः फलं धर्मपरिग्रहः धर्मफलम् । तादृशो योऽयमात्मप्राणपरिग्रहः आत्मनः प्राणानां च परिग्रहः स्वीकारः, जीवनमिति यावत् । स नाशयितुं न न्याय्यं न युक्तम् । अव्ययमेतत् । तपःक्लेशलब्धं तद्व्यतिरिक्तधर्मफलभूतं च यज्जीवनमायुः तन्न विनाशयेत्यर्थः । चकाराभावादित्थमेव योजना ॥ २५ ॥ सर्वावध्यस्येह मे कोऽयमायुर्विनाशक इत्याशङ्क्य परिहरति—अवध्यतामिति । तपोभिरार्जितां सासुरैर्देवैर्याम् आत्मनोऽवध्यतां भवान् समनुपश्यति । तत्रापि

कृतम् । उत्तरकर्तव्यं तु रामायत्तमित्याह उत्तरमिति ॥ २२ ॥ पञ्चास्यां पन्नगीमिव यां गृह्य गृहीत्वा नाभिजानासि तथा शोकपरायणा वाचामगोचरशोकतत्परा इयं सीता मया लक्षितेति सम्बन्धः । परमपतिव्रता सीता शोकपरायणा सती लङ्कायां रुद्धेति कृत्वा लङ्का विनङ्क्ष्यतीति भावः ॥ २३ ॥ ओजसा आहारशक्तिबलेन ॥ २४ ॥ तपस्सन्तापलब्धः तपश्चर्यालब्धो योऽयं धर्मपरिग्रहः आत्मप्राणपरिग्रहः आत्मप्राणानां परिग्रहः, तवायुर्वर्द्धक इति यावत् । नाशयितुं न न्याय्य इति योजना ॥ २५ ॥ पितामहवरावध्यस्य मे कथं बिभीषिकेत्याशङ्क्याह—अवध्यतामिति । तपोभिर्हेतुभिः सासुरैर्देवैरात्मनो यामवध्यतां भवान् समनुपश्यति तत्रापि यथा अवध्यत्वे तथैव वध्यत्वेपि अयं हेतुरिति योजना ॥ २६ ॥

स॰-पञ्चास्यामित्यनेन आस्यस्थानीयानि रामो लक्ष्मणो राजाऽहं चेति चत्वारि स्वयं सीतेत्येकं चेति पञ्च आस्यानि यस्यास्सा ताम्, विस्तृतमुखीं वा ॥ २३ ॥

अवध्यतायां सत्यामपि । अयं वक्ष्यमाणः । हेतुः भवद्वधहेतुरस्ति । महान् अपरिहार्यः ॥ २६ ॥ तमेव हेतुमाह–सुग्रीव इति । न च राक्षस इति पाठस्सम्यक् । न च मानुष इति पाठे प्रतिषेधप्रसक्तिरपि नास्तीत्युच्यते । “ तृणभूता हि मे सर्वे प्राणिनो मानुषादयः ” इत्युत्तरश्रीरामायणे मनुष्यादिभिरवध्यत्वस्याप्रार्थितत्वात् । न च तिर्यञ्च इति न प्रसज्य च प्रतिषिध्यत इति भावः । तस्मात्सुग्रीवात् ॥ २७ ॥ ननु किमनेनोपदेशेन, कृतानि

सुग्रीवो न हि देवोऽयं नासुरो न च राक्षसः । न दानवो न गन्धर्वो न यक्षो न च पन्नगः । तस्मात् प्राणपरित्राणं कथं राजन् करिष्यसि ॥ २७ ॥ न तु धर्मोपसंहारमधर्मफलसंहितम् । तदेव फलमन्वेति धर्मश्चाधर्मनाशनः ॥ २८ ॥

मया पापानि तैश्चावश्यं फलप्रदैर्भवितव्यमित्याशङ्क्याह–न त्विति । तुशब्द उक्तशङ्काव्यावर्तकः । धर्मः उपसंह्रियतेऽनेनेति धर्मोपसंहारं धर्मफलम् । फलेन धर्मस्योपसंह्रियमाणत्वात् । क्लीबत्वमार्षम् । तत् अधर्मफलसंहितं न भवति । कुत इत्यत्राह–तदेव फलमन्वेतीति । धर्मफलमेवानुवर्तते । नन्वधर्मे च विद्यमाने कथं तत्फलाननुवृत्तिस्तत्राह धर्मश्चाधर्मनाशन इति । च उक्तशङ्कानिवृत्त्यर्थः । विरोधिनि धर्मे जाग्रति कथमधर्मवार्ताऽपीत्यर्थः । “ धर्मेण पापमपनुदति ” इति श्रुतेः । यद्वा व्यत्ययो वा किं न स्यात्तत्राह धर्मश्चेति । चोऽवधारणे । धर्म एवाधर्मनाशनः तथा श्रुतेः । न त्वधर्मः

कोऽसौ हेतुस्तत्राह–सुग्रीव इत्यादि । यद्यपि मानुषाद्वध्यत्वं न प्रार्थितम् तथाप्यङ्गीकृत्योत्तरमाह–नच मानुष इति । नासुरो नच राक्षसः इति पाठः सम्यक् । फलितमाह–तस्मादिति ॥ २७ ॥ ननु महता पूर्वसञ्चितेनैव धर्मेण मम त्राणं भविष्यतीत्याशङ्क्य रोगराज्यादिवद्धर्माधर्मफलयोः सम्भूयानुभवासिद्धेरात्मत्राणसिद्धिः, उताधर्मबाधेन धर्मफलानुभवश्चेति द्वेधा विकल्प्याद्यस्यासम्भवमाह–न त्विति । धर्मोपसंहारं धर्मस्य फलविनाश्यत्वात धर्मः उपसंह्रियतेऽनेनेति धर्मोपसंहारं धर्मफलं सुखं तत अधर्मफलसंहितं न भवति, अधर्मेण सह भोग्यं न भवतीत्यर्थः । तीव्रतपःपरदारापहरणभवदीयधर्माधर्मफलयोरवध्यत्ववध्यत्वयोः जीवनतदभावयोः सहावस्थानविरोधात रोगराज्यादिवत्सम्भूयानुभवो न सम्भवतीति भावः । द्वितीयं दूषयति तदेवेति । तत धर्मफलमेवान्वेति, धर्मफलं धर्मफलेन सह तिष्ठतीति यावत । धर्मो नाधर्मनाशनः अधर्मबाधेन धर्मफलानुभवो न घटत इति भावः । यद्वा ननु, येभ्योऽवध्यत्वं न प्रार्थितं तेभ्योऽपि पूर्वोपार्जितो महासुकृतसञ्चय एव रक्षिष्यतीत्याशङ्क्य एवञ्चेत्तुल्यन्यायतया त्वत्कृतोऽधर्मनिचयोऽपि त्वां नाशयिष्यतीत्याह न त्विति । धर्मोपसंहारं धर्मस्य फलविनाश्यत्वात् धर्मः उपसंह्रियतेऽनेनेति धर्मोपसंहारं धर्मफलं सुखं, तत अधर्मफलसंहितं विफलकारणकत्वाद्दुःखसंहितं न भवतीत्यर्थः । किन्तु तदेव फलमन्वेति सुखमेव फलत्वेनानुवर्तते । तुः चार्थे । तेन अधर्मफलमपि धर्मफलसंहितं न भवति, अधर्मफलमेव फलत्वेनानुवर्तत इति लभ्यते । नन्वधर्मं धर्मो नाशयिष्यतीत्याशङ्क्याह धर्मश्चेति । अत्र नञ् अनुवर्तते । धर्मोऽधर्मनाशनो न भवति । पूर्वकृतो धर्मः इदानीं कृताधर्मनाशनो न भवतीत्यर्थः । चकारादेवमधर्मोऽपि धर्मनाशनो न

प्रमाणाभावादिति भावः । ननु यदि धर्मः अधर्मेनाभिभूतः ... इत्याशङ्क्याह-प्राप्तमिति । तावच्छब्दः कार्त्स्न्यवाची । कृत्स्नं धर्मफलम् । फलमस्येति । तथा च क्षिप्रं धर्मभावे अन्यथा सद्यस्ते विनाशो भविष्यतीति भावः । अत्र कर्तव्यत्वेन विधेय

प्राप्तं धर्मफलं तावद्भवता नात्र संशयः । फलमस्याप्यधर्मस्य क्षिप्रमेव प्रपत्स्यसे ॥ २९ ॥ जनस्थानवधं बुद्ध्वा बुद्ध्वा वालिवधं तथा । रामसुग्रीवसख्यं च बुध्यस्व हितमात्मनः ॥ ३० ॥ कामं खल्वहमप्येकः सवाजिरथकुञ्जराम् । लङ्कां नाशयितुं शक्तस्तस्यैष तु न निश्चयः ॥ ३१ ॥ रामेण हि प्रतिज्ञातं हर्यृक्षगणसन्निधौ । उत्सादनममित्राणां सीता यैस्तु प्रधर्षिता ॥ ३२ ॥ अपकुर्वन् हि रामस्य साक्षादपि पुरन्दरः । न सुखं प्राप्नुयादन्यः किं पुनस्त्वद्विधो जनः ॥ ३३ ॥ यां सीतेत्यभिजानासि येयं तिष्ठति ते वशे । कालरात्रीति तां विद्धि सर्वलङ्काविनाशिनीम् ॥ ३४ ॥ तदलं कालपाशेन सीताविग्रहरूपिणा । स्वयं स्कन्धावसक्तेन क्षममात्मनि चिन्त्यताम् ॥ ३५ ॥

मानो धर्मस्सीताप्रदानपूर्वकरामविषयशरणागतिरेव । शूरस्याशौर्यप्रवृत्त्या धर्मफलं सर्वं क्षीणमिति हनुमताऽवगतमिति मन्तव्यम् ॥ २८ ॥ २९ ॥ मा भूद्धर्मापेक्षा कार्योपस्थितिरवेक्ष्यतामित्याह-जनस्थानेति । रामसुग्रीवसख्यं चेति परोक्षनिर्देशस्य गतिः पूर्वमुक्ता ॥ ३० ॥ कामम् अत्यन्तम् । अहं सुग्रीवः । एषः तन्नाशनम् । तस्य रामस्य । निश्चयः निश्चयविषयः ॥ ३१ ॥ कथमित्यत्राह-रामेणेति । हर्यृक्षगणसन्निधौ वृद्धसभाया प्रतिज्ञातमनतिक्रमणीयमिति भावः ॥ ३२ ॥ ३३ ॥ कालरात्रीति काचिच्छक्तिरिति वदन्ति । "सभा च कालरात्रिश्च भैरवी गणनायिका" इत्यमरशेषः ॥ ३४ ॥ तदिति ।

भवतीति लभ्यते । धर्माधर्मयोर्वस्तुभेदकावेनाद्व्याधीति भावः ॥ २८ ॥ ननु महतः पुण्यफलानुभवस्य समाप्त्यनन्तरम् अधर्मफलानुभवो भविष्यतीत्यत्राह-प्राप्तमिति । धर्मफलं तावत् साकल्येन प्राप्तं भुक्तम् । अस्याधर्मस्य सीताहरणरूपस्य ॥ २९ ॥ मानुषो रामः किं मां करिष्यतीति मा शङ्केत्याशयेनाह-जनस्थानेति ॥ ३० ॥ काममिति । एष तु मत्कर्तृकलङ्कादिनाशस्तु । तस्य रामस्य । न निश्चयः न सम्मत इत्यर्थः ॥ ३१ ॥ कुत इत्यत आह-रामेणेति ॥ ३२ ॥ अतिबलशालिनो मे सीतापहारेण रामादिभिः किमित्यत आह-अपकुर्वन् हीति ॥ ३३ ॥ कालरात्री महाप्रलयकर्त्री भगवतः शक्तिः ॥ ३४ ॥ विग्रहः शरीरम् । स्कन्धावसक्तेन स्कन्धसम्बन्धकरणेन । आत्मनि आत्मत्राणे ॥ ३५ ॥

कालपाशेन यमपाशेन । अतस्सीतां रामाय देहीति हृदयम् ॥ ३५ ॥ अट्टः अट्टालः । प्रतोलिका वीथिका ॥ ३६ ॥ स्वानीति । मन्त्रीन् मन्त्रिणः । इकारान्तत्वमार्षम् ॥ ३७ ॥ सत्यमिति । रामदासस्येत्यनेन रामसामर्थ्यपरिज्ञानभुक्तम् । दूतस्येत्यनेन हितोपदेशाधिकारः । वानरस्येति माध्यस्थ्यम् ॥ ३८ ॥ सर्वानिति । लोकान् भूरादीन् । सभूतान् पृथिव्यप्तेजोवाय्वाकाशरूपपञ्चमहाभूतयुक्तान् । सचराचरान् चतुर्मुखद्वारा सृष्टजङ्गमाजङ्गम

सीतायास्तेजसा दग्धां रामकोपप्रपीडिताम् । दह्यमानामिमां पश्य पुरीं साट्टप्रतोलिकाम् ॥ ३६ ॥ स्वानि मित्राणि मन्त्रींश्च ज्ञातीन् भ्रातॄन् सुतान् हितान् । भोगान् दारांश्च लङ्कां च मा विनाशमुपानय ॥ ३७ ॥ सत्यं राक्षसराजेन्द्र शृणुष्व वचनं मम । रामदासस्य दूतस्य वानरस्य विशेषतः ॥ ३८ ॥ सर्वान् लोकान् सुसंहृत्य सभूतान् सचराचरान् । पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः ॥ ३९ ॥ देवासुरनरेन्द्रेषु यक्षरक्षोगणेषु च । विद्याधरेषु सर्वेषु गन्धर्वेषूरगेषु च ॥ ४० ॥ सिद्धेषु किन्नरेन्द्रेषु पतत्रिषु च सर्वतः ॥ ४१ ॥ सर्वभूतेषु सर्वत्र सर्वकालेषु नास्ति सः । यो रामं प्रतियुद्ध्येत विष्णुतुल्यपराक्रमम् ॥४२॥ सर्वलोकेश्वरस्यैवं कृत्वा विप्रियमुत्तमम् । रामस्य राजसिंहस्य दुर्लभं तव जीवितम् ॥ ४३ ॥ देवाश्च दैत्याश्च निशाचरेन्द्र गन्धर्वविद्याधरनागयक्षाः । रामस्य लोकत्रयनायकस्य स्थातुं न शक्ताः समरेषु सर्वे ॥ ४४ ॥ ब्रह्मा स्वयम्भूश्चतुराननो वा रुद्रस्त्रिनेत्र स्त्रिपुरान्तको वा । इन्द्रो महेन्द्रः सुरनायको वा त्रातुं न शक्ता युधि रामवध्यम् ॥ ४५ ॥

युक्तान् । संहृत्य प्रलयावसाने रुद्रद्वारा स्वयं च संहृत्य पुनः कल्पादौ तथैव "धाता यथापूर्वमकल्पयत्" इति श्रुत्युक्तरीत्या स्रष्टुं समर्थः । तत्र प्रमाणमाह महायशा इति । "न तस्येशे कश्चन तस्य नाम महद्यशः" इति हि श्रुतिः । श्रुतिस्मृतिषु तथा प्रसिद्ध इत्यर्थः ॥ ३९–४४ ॥ रामानु० -सर्वभूतेषु सर्वत्र सर्वकालेषु नास्ति सः । इति पाठस्साधुः ॥ ४२ ॥ मा भूवन् शक्तास्सामान्यदेवाः, ईश्वरास्तु शक्ताः स्युरित्याशङ्क्याह–ब्रह्मेति । अत्र

प्रतोलिका रथ्या ॥ ३६ ॥ मन्त्रीन् मंत्रिणः ॥ ३७ ॥ सत्यमिति । रामदासस्येत्यादिविशेषणत्रयेण स्वस्य रामसामर्थ्यपरिज्ञानं हितोपदेशाधिकारं माध्यस्थ्यं च सूचितम् ॥ ३८–४४ ॥ ब्रह्मेति । ब्रह्मा स्वयम्भूरित्यादिविशेषणानि तेषां सामर्थ्यविशेषद्योतनार्थम् । इन्द्रः परमैश्वर्यवानिन्द्रः । "इदि परमैश्वर्ये" इति धातुः । स०–ब्रह्मेत्यादिपादत्रयेपि त्रिवारमुक्तिर्दार्ढ्याय, भट्टिकाव्ये–"जहिहि जहीहि जहाहि रामभार्याम्" इतिवत् । यद्वा ब्रह्मा बृहस्पतिः "ब्रह्मापि तन्न जानाति" इति गीताभाष्यप्रमेयदीपिकायां 'ब्रह्मा

विशेषणान्तरोपादानं तेषां सामर्थ्यविशेषद्योतनार्थम् । पतत्प्रकर्षत्वपरिहाराय व्युत्क्रमेण योजनीयम् । इन्द्रः परमैश्वर्यवान् । "इदि परमैश्वर्ये" इत्यस्माद्धातोः "ऋज्रेन्द्राग्र–" इत्यादिना निपातनात्साधुत्वम् । त्रैलोक्याधिपतिरपि त्रातुं न शक्त इत्यर्थः । तस्य त्रैलोक्याधिपतित्वेऽपि परनिरसनसामर्थ्याभावादशक्ततेत्यत्राह–महेन्द्र इति । वृत्रहननप्रसिद्धसामर्थ्योऽपि न शक्तः । "यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वम्" इति श्रौतनिर्वचनम् । स्वयं चतुरोऽपि सहायसम्पत्त्यभावान्न शक्त इत्यत्राह सुरनायक इति । स्वतुल्यत्रयस्त्रिंशत्कोटिसुरगणसहायोऽपि न शक्त इत्यर्थः । मा भूत्क्षुद्र इन्द्रश्शक्तः, सर्वसंहारको रुद्रस्तु शक्तस्स्यात्तत्राह रुद्र इति । संहारकाले प्रजाः रोदयतीति रुद्रः । "रोदेर्णिलुक् च" इति रप्रत्ययः । कालविशेषे संहारकोऽपीदानीमप्राप्तकालत्वादशक्त इत्यत्राह त्रिनेत्र इति । निटिलनयनदहनज्वालाविलोपितमदनोऽपीत्यर्थः । काकतालीयत्वशङ्काव्युदासायाह त्रिपुरान्तक इति । प्रबलतरमहासुरसंहारकोऽपीत्यर्थः । मा भूत्तस्य शक्तिः "ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठाय" इत्युक्तरीत्या रुद्रस्यापि पिता ब्रह्मा शक्तस्स्यात्, तत्राह ब्रह्मेति । बृंहतीति ब्रह्मा । "बृंहेरम् नलोपश्च" इति मनिन् अमागमो नकारलोपश्च । रुद्रपिता स्वयं कर्मवश्यः कथं शक्नुयात् तत्राह स्वयंभूरिति । कर्मवश्यत्वेऽपीतरसाधारण्येनानुत्पन्नः स्वयंभूः । स्वयंभूत्वेपि सहायसंपत्त्यभावात्कथं त्रायेतेत्यत्राह चतुरानन इति । युगपदेव सर्ववेदोच्चारणसम्पादितातिशयोऽपि न शक्तः । प्रत्येकमशक्तत्वेऽपि किं संभूयागताश्शक्नुवन्ति ? तत्राह न शक्ता इति । बहुवचनेनायमर्थो लभ्यते–वधमर्हतीति वध्यः । दण्डादित्वाद्यः । रामस्य वध्यो रामवध्यः । तं त्रातुं न शक्ताः । 'स्थानविन्निग्रहस्य च' इत्युचितवधार्हस्य त्राता कः । युधि युद्धे न शक्ताः किन्तु शरणं गत्वा त्रातुं शक्ता इत्यर्थः । अत्र "हिरण्यगर्भस्समवर्तताग्रे । न सन्न चासीच्छिव एव केवलः । इन्द्रो मायाभिः पुरुरूप ईयते" इति परदेवतात्वेन प्रसक्तात्रिकादधिकत्वमुक्तम् । राम इत्यनेन वेदान्तोदितानां सद्ब्रह्मादिसामान्यशब्दानां हिरण्यगर्भशिवेन्द्रादिविशेषशब्दानां च व्यक्तिविशेषपरत्वं व्यञ्जितम् । त्रातृत्वेन प्रसक्तप्रधानदेवतानिराकरणप्रकरणे विष्णोरनुपादानात् पारिशेष्याद्राम एव विष्णुरिति प्रतिपादितम् ॥ ४९ ॥

यो वृत्रहा स महेन्द्रः "महान्वा अयमभूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वम्" इति श्रुतेः । त्रैलोक्ययन्तृत्ववृत्रहन्तृत्वसर्वसुरसंवृतत्वादिधर्मविशिष्टो वज्रपाणिर्वा । रुद्रः संहारकाले प्रजाः संहरन् रोदयतीति रुद्रः । रुतं शब्दं वेदात्मानं ब्रह्मणे कल्पादौ रातीति वा रुद्रः। यद्वा रुता नादेन सकलं जगदिदं द्रावयतीति

-बृहस्पतिः' इति व्याख्यानात् । अस्वयंभूः स्वयम्भूभिन्नः स्वयम्भूसदृशो वायुः । चतुराननो विरिञ्चः । वाशब्दस्सर्वत्रान्वेति । रुद्रः क्रूरो यमः । त्रिनेत्रो रुद्रः । त्रिपुरान्तेन रुद्रेण कं शिरो यस्य दक्षस्य विनाशकस्य वा । इन्द्रः शचीपतिः । अमहेन्द्रः वृत्रहेतरः तत्सदृशः कामः । सुरनायकः सुरसेनानायकः षण्मुखः ॥ ४९ ॥

अस्माच्छ्लोकात्परं स सौष्ठवेति श्लोकः । तस्य तद्वचनमिति श्लोकस्तु उत्तरसर्गादिः । अत्र स प्रमादाल्लिखितः ॥ ४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥ तस्य तद्वचनं श्रुत्वेति श्लोकस्सर्गस्य प्रथमः ॥ १ ॥ दौत्यं

स सौष्ठवोपेतमदीनवादिनः कपेर्निशम्याप्रतिमोऽप्रियं वचः । दशाननः कोपविवृत्तलोचनः समादिशत्तस्य वधं महाकपेः ॥ ४६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः । आज्ञापयद्वधं तस्य रावणः क्रोधमूर्च्छितः ॥ १ ॥
वधे तस्य समाज्ञप्ते रावणेन दुरात्मना । निवेदितवतो दौत्यं नानुमेने विभीषणः ॥ २ ॥
तं रक्षोधिपतिं क्रुद्धं तच्च कार्यमुपस्थितम् । विदित्वा चिन्तयामास कार्यं कार्यविधौ स्थितः ॥ ३ ॥

दूतकर्म । ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । तन्निवेदितवतः उक्तवतः । नानुमेने, वधानमत्यनुवर्तनीयम् । निवेदितमतो दूत्यामिति पाठान्तरम् । मन्यत इति मतिः कार्यम् । निवेदितमतो निवेदितकार्यांशे यथार्थवादित्वेनावध्ये हनुमति दूत्यं दूतसंबन्धितया रावणादिष्टं वधम् । "दूतवणिग्भ्यां चेति वक्तव्यम्" इति भावकर्मणोर्विहितो यप्रत्ययः अर्थानुगुण्यात्सम्बन्धमात्रे गमयितव्यः ॥ २ ॥ तच्च कार्यं दूतवधरूपकार्यम् । कार्यम् अनन्तरानुष्ठेयम् । कार्यविधौ कार्यकरणे । स्थितः निश्चितार्थः, साध्वसाधुविवेकनिश्चितकार्य इत्यर्थः ॥ ३ ॥

रञ्जयतीति नादात्मकत्वाद्रुद्रः । यद्वा रुता नादेन प्रणवरूपेण वेदरूपेण वा द्रावयतीति इष्टमर्थं गमयतीति वा रुद्रः । यद्वा रुतं संसारदुःखं दुःखहेतुं वा द्रावयतीति रुद्रः । तदुक्तम्–"रुद्दुःखं दुःखहेतुं वा तद्द्रावयति यः प्रभुः । रुद्र इत्युच्यते तस्माच्छिवः परमकारणम् ॥" इति । एवं व्युत्पत्तियुक्तरुद्रत्वशत्रुभस्मीकरणसमर्थफाललोचनयुक्तत्वत्रिपुरान्तकत्वादिधर्मविशिष्टो महेश्वरो वा । बृंहति बृंहयतीति वा ब्रह्मा । स्वयम्भूः स्वयमेव स्वतन्त्रो भवति न परतन्त्र इति स्वयम्भूः । बृहत्त्वनित्यस्वतन्त्रत्वबहुमुखत्वकार्यनिर्वाहकत्वादिधर्मविशिष्टो विरिञ्चिर्वा युधि रामवध्यं त्रातुं न शक्ता इत्यर्थः ॥ ४५ ॥ ४६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् एकपञ्चाशः सर्गः ॥ ५१ ॥१॥ वध इति । निवेदितमतो इति पाठः । मन्यत इति मतिः कार्यम् । निवेदितस्वागमनकार्ये हनुमति । अनेनास्य यथादिष्टार्थवादित्वेनानपराधित्वादवध्यत्वमुक्तम् । अतोऽस्मिन्विषये दूत्यं दूतसम्बन्धिनं रावणनिर्दिष्टं वधं नानुमेने ॥ २ ॥ तच्च

निश्चितार्थ इति । आपूज्येति च्छेदः ॥ ४ ॥ परावरज्ञाः त्याज्योपादेयविवेकयुक्ताः ॥५॥ प्रमापणं मारणम् ॥ ६ ॥ भूतानामिति निर्धारणे षष्ठी । भूतानां मध्ये ॥ ७ ॥ शास्त्रविपश्चित्त्वं विविधं पश्यतीति विपश्चित् तस्य भावः विपश्चित्त्वम्, शास्त्रविषयं विविधज्ञानोपेतत्वमिति यावत् ॥८॥ दूतदण्डः दूतयोग्य

निश्चितार्थस्ततः साम्नाऽऽपूज्य शत्रुजिदग्रजम् । उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ॥ ४ ॥ क्षमस्व रोषं त्यज राक्षसेन्द्र प्रसीद मद्वाक्यमिदं शृणुष्व । वधं न कुर्वन्ति परावरज्ञा दूतस्य सन्तो वसुधाधिपेन्द्राः ॥५॥ राजधर्मविरुद्धं च लोकवृत्तेश्च गर्हितम् । तव चासदृशं वीर कपेरस्य प्रमापणम् ॥६॥ धर्मज्ञश्च कृतज्ञश्च राजधर्मविशारदः । परावरज्ञो भूतानां त्वमेव परमार्थवित् ॥७॥ गृह्यन्ते यदि रोषेण त्वादृशोऽपि विपश्चितः । ततः शास्त्रविपश्चित्त्वं श्रम एव हि केवलम् ॥ ८ ॥ तस्मात् प्रसीद शत्रुघ्न राक्षसेन्द्र दुरासद । युक्तायुक्तं विनिश्चित्य दूतदण्डो विधीयताम् ॥९॥ विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः । रोषेण महताविष्टो वाक्यमुत्तरमब्रवीत् ॥ १० ॥ न पापानां वधे पापं विद्यते शत्रुसूदन । तस्मादेनं वधिष्यामि वानरं पापचारिणम् ॥ ११ ॥ अधर्ममूलं बहुरोषयुक्तमनार्यजुष्टं वचनं निशम्य । उवाच वाक्यं परमार्थतत्त्वं विभीषणो बुद्धिमतां वरिष्ठः ॥ १२ ॥ प्रसीद लङ्केश्वर राक्षसेन्द्र धर्मार्थयुक्तं वचनं शृणुष्व । दूता न वध्याः समयेषु राजन् सर्वेषु सर्वत्र वदन्ति सन्तः ॥ १३ ॥ असंशयं शत्रुरयं प्रवृद्धः कृतं ह्यनेनाप्रियमप्रमेयम् । न दूतवध्यां प्रवदन्ति सन्तो दूतस्य दृष्टा बहवो हि दण्डाः ॥ १४ ॥

दण्डः ॥ ९–१२ ॥ प्रसीदेति । सर्वेषु सर्वत्र सर्वदेशेषु सर्वजातिष्वित्यर्थः ॥ १३ ॥ न केवलं दूतोऽयम् अक्षादिवधेन शत्रुश्च, तथाच हन्तव्य

कार्य दूतवधरूपं कार्यम् । कार्यविधौ कर्तव्यविधाने स्थितः, कार्यकरणे कृतनिश्चय इत्यर्थः ॥ ३ ॥ शत्रुजितं च तदग्रजं च ॥ ४ ॥ रोषं त्यज, परावरज्ञाः त्याज्योपादेयविवेकयुक्ताः ॥ ५ ॥ प्रमापणं मारणम् ॥ ६ ॥ ७ ॥ शास्त्रविपश्चित्त्वं शास्त्रपाण्डित्यसम्पादनम् । श्रमः केवलं श्रम एव, व्यर्थप्रयास एवेत्यर्थः ॥ ८ ॥ दूतदण्डः दूते विहितो दण्डः ॥ ९ ॥ १० ॥ पापचारिणं राजद्रोहिणम् ॥ ११ ॥ अधर्मस्य मूलम् अधर्मैकलम् । दोषः अपकीर्तिरूपः ॥ १२ ॥ समयेषु स्वस्वामि

इत्याशङ्क्याह–असंशयमिति । दूतवध्यां दूतवधम् । विरूपं भवेत्कयन । हन्तेर्वधादेश आर्षः ॥१४॥ लक्षणसन्निपातः दूतयोग्याङ्कनसंबन्धः । नः अस्माभिः ॥ १५ ॥ धर्मार्थविनीतबुद्धिः धर्मार्थयोरिशिक्षितबुद्धिः । परावरप्रत्ययनिश्चितार्थः उत्कृष्टापकृष्टपरिज्ञाननिश्चितार्थः । अस्मिन् विषये इदं कार्यं परम्



वैरूप्यमङ्गेषु कशाभिघातो मौण्डयं(ढ्यं) तथा लक्षणसन्निपातः । एतान् हि दूते प्रवदन्ति दण्डान् वधस्तु दूतस्य न नः श्रुतोऽपि ॥ १५ ॥ कथं च धर्मार्थविनीतबुद्धिः परावरप्रत्ययनिश्चितार्थः । भवद्विधः कोपवशे हि तिष्ठेत् कोपं नियच्छन्ति हि सत्त्ववन्तः ॥ १६ ॥ न धर्मवादे न च लोकवृत्ते न शास्त्रबुद्धिग्रहणेषु चापि । विद्येत कश्चित्तव वीर तुल्यस्त्वं ह्युत्तमः सर्वसुरासुराणाम् ॥ १७ ॥ न चाप्यस्य कपेर्घाते कञ्चित् पश्याम्यहं गुणम् । तेष्वयं पात्यतां दण्डो यैरयं प्रेषितः कपिः॥ १८॥ साधुर्वा यदिवाऽसाधुः परैरेष समर्पितः । ब्रुवन् परार्थं परवान् न दूतो वधमर्हति ॥१९॥ अपि चास्मिन् हते राजन् नान्यं पश्यामि खेचरम् । इह यः पुनरागच्छेत् परं पारं महोदधेः ॥ २० ॥

इदमवरमिति विवेकनिश्चितकार्यं इत्यर्थः । नियच्छन्ति निगृह्णन्ति । सत्त्ववन्तः व्यवसायवन्तः ॥ १६ ॥ धर्मवादे धर्मशास्त्रे । लोकवृत्ते लौकिकाचारे । शास्त्रबुद्धिग्रहणेषु शास्त्रशब्देन शास्त्रार्थं उच्यते । शास्त्रार्थज्ञानतद्धारणेष्वित्यर्थः ॥ १७ ॥ न केवलं दूतस्य वधे शास्त्रविरोधः गुणमपि न कंचित्पश्यामि अतः एतत्प्रेषकेष्वेव वधरूपो दण्डः पात्यतामित्याह–न चेत्यादि ॥ १८ ॥ साधुर्वेति । समर्पितः प्रेषितः ॥ १९ ॥ अस्मिन् हते सति वृत्तान्तनिवेदकाभावाद्रामलक्ष्मणयोरिहागमनाभावेन तव शत्रुक्षयो न स्यात्, विमुक्तेऽस्मिन् एतन्निवेदितवृत्तान्तयोस्तयोरिहागमनादयत्नेन तव शत्रुनाशो भवेदित्यभिप्रेत्याह–अपि चेत्यादिना । इह परं पारम् इह विद्यमानं महोदधेः परं पारम्, इदं दक्षिणकूलमित्यर्थः ॥ २० ॥ २१ ॥

नियोगानुष्ठानकालेषु ॥ १३ ॥ १४ ॥ लक्षणसन्निपातः दूतयोग्याङ्कनसम्बन्धः । न नः श्रुतोऽपि नोऽस्माभिः न श्रुतः ॥ १५ ॥ परावरप्रत्ययनिश्चितार्थः उत्कृष्टापकृष्टज्ञानेन निश्चितकार्यः । अस्मिन विषये इदं कार्यं परम् इदमवरमिति विवेकेन निश्चितप्रयोजन इत्यर्थः । भवद्विधः त्वादृशः । सत्त्ववन्तः बलवन्तः ॥ १६ ॥ न तु तवान्येनोपदेष्टव्यांशोऽस्तीत्याह–न धर्मवाद इति ॥ १७ ॥ १८ ॥ परुषवक्ताऽयमवश्यं हन्तव्य इत्यत आह–साधुरिति । समर्पितः प्रेषितः ॥ १९ ॥ अस्मिन् हते सति वृत्तान्तनिवेदकाभावाद्रामलक्ष्मणयोरिहागमनाभावेन तव शत्रुक्षयो न स्यात् । विमुक्ते त्वस्मिन्नेतन्निवेदितवृत्तान्तयोस्तयोरिहागमनाद्यत्नेन तव शत्रु

अस्मिन् विनष्ट इति । दीर्घपथावरुद्धौ दूरमार्गेण निरुद्धगमनावित्यर्थः । एतच्छ्लोकानन्तरं पराक्रमोत्साहमनस्विनां चेति श्लोकः । ततो हिताश्चेति श्लोकः । अथ तदेकदेशेनेति श्लोकः । अथ निशाचराणामिति सर्गान्तश्लोकः । अयमेव पाठक्रमः समीचीनः । अन्येप्यत्र सर्गे श्लोकाः कल्पिता

तस्मान्नास्य वधे यत्नः कार्यः परपुरञ्जय । भवान् सेन्द्रेषु देवेषु यत्नमास्थातुमर्हति ॥ २१ ॥ अस्मिन् विनष्टे नहि दूतमन्यं पश्यामि यस्तौ नरराजपुत्रौ । युद्धाय युद्धप्रिय दुर्विनीतावुद्योजयेद्दीर्घपथावरुद्धौ ॥२२॥ पराक्रमोत्साहमनस्विनां च सुरासुराणामपि दुर्जयेन । त्वया मनोनन्दन नैर्ऋतानां युद्धायतिर्नाशयितुं न युक्ता ॥ २३ ॥ हिताश्च शूराश्च समाहिताश्च कुलेषु जाताश्च महागुणेषु । मनस्विनः शस्त्रभृतां वरिष्ठाः कोट्यग्रतस्ते सुभृताश्च योधाः ॥२४॥ तदेकदेशेन बलस्य तावत् केचित्तवादेशकृतोऽभियान्तु । तौ राजपुत्रौ विनिगृह्य मूढौ परेषु ते भावयितुं प्रभावम् ॥ २५ ॥ निशाचराणामधिपोऽनुजस्य विभीषणस्योत्तमवाक्यमिष्टम् । जग्राह बुद्ध्या सुरलोकशत्रुर्महाबलो राक्षसराजमुख्यः ॥ २६ ॥ इत्यार्षे श्रीरामायणे० श्रीमत्सुन्दरकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

दृश्यन्ते ॥ २२–२४ ॥ रामानु०–अस्मिन्निति । उद्योजयेद्दीर्घपथावरुद्धावित्यतः परं पराक्रमोत्साहमनस्विनां चेति श्लोकः । ततः परं हिताश्चेति श्लोकः । तदनन्तरं तदेकदेशेनेति । ततो निशाचराणामिति सर्गान्तश्लोकः । अयमेव समीचीनः पाठक्रमः ॥ २२–२४ ॥ तदिति । तत्तस्मात्कारणात् । एकदेशेनेति सहयोगे तृतीया । बलस्य सैन्यस्य ॥ २५ ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

नाशो भवेदित्याशयेनाह–अपिचेत्यादि । इह पारम् इदं पारमित्यर्थः । नान्यं पश्यामि योऽत्रागच्छेदित्यर्थः ॥२०॥ तस्मात पुनरागन्तुकाभावात ॥ २१ ॥ नन्वस्मिन् हते अन्यस्यानागमने च का मम क्षतिः ? इष्टमेवेदम्, तत्राह–अस्मिन विनष्ट इति । तौ राजपुत्रौ द्वौ य उद्योजयेत तं न पश्यामि । ननु तदुद्योगाभावोऽपि ममेष्ट एव, नेत्याह युद्धप्रियेति सम्बोधनेन । युद्धप्रियस्य तव तयोरनागमनमेव क्षतिरिति भावः ॥ २२ ॥ महावीरस्य तव न कुत्रापि भयशङ्केत्याशयेनाह–पराक्रमेत्यादिना ॥ २३ ॥ हिताश्चेति । समाहिताः दानमानाभ्यां वशीकृता इत्यर्थः । सुभृताः सद्भृत्याः योधाश्च वर्तन्ते खलिवति शेषः ॥ २४ ॥ तत् तस्मात्कारणात बलस्य सैन्यस्य एकदेशेन एकांशेन सह आदेशकृतः आज्ञाकारिणः केचित्कतिचित भावयितुं प्रकाशयितुम् ॥ २५ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां द्विपञ्चाशः सर्गः ॥ ५२ ॥

तस्येत्यादि । देशकालहितं देशकालोचितमिति विभीषणवचनविशेषणम् ॥ १ ॥ दूतवध्या दूतवधः ॥ २ ॥३ ॥ तत इति । समित्रेति । मित्राणि आप्ताः, समसुखदुःखा वा सहाया वा । ज्ञातयः भ्रात्रादयः । वान्धवाः सम्बन्धिनः । सुहृज्जनाः स्निग्धजनाः ॥ ४ ॥ आज्ञापयदिति । प्रदीप्तेन लाङ्गूलेन





तस्य तद्वचनं श्रुत्वा दशग्रीवो महाबलः । देशकालहितं वाक्यं भ्रातुरुत्तरमब्रवीत् ॥ १ ॥ सम्यगुक्तं हि भवता दूतवध्या विगर्हिता । अवश्यं तु वधादन्यः क्रियतामस्य निग्रहः ॥ २ ॥ कपीनां किल लाङ्गूलमिष्टं भवति भूषणम् । तदस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ॥ ३ ॥ ततः पश्यन्त्विमं दीनमङ्गवैरूप्यकर्शितम् । समित्रज्ञातयः सर्वे बान्धवाः ससुहृज्जनाः ॥ ४ ॥ आज्ञापयद्राक्षसेन्द्रः पुरं सर्वं सचत्वरम् । लाङ्गूलेन प्रदीप्तेन रक्षोभिः परिणीयताम् ॥ ५ ॥ तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्शिताः । वेष्टयन्ति स्म लाङ्गूलं जीर्णैः कार्पासकैः पटैः ॥ ६ ॥ संवेष्ट्यमाने लाङ्गूले व्यवर्धत महाकपिः । शुष्कमिन्धनमासाद्य वनेष्विव हुताशनः । तैलेन परिषिच्याथ तेऽग्निं तत्राभ्यपातयन् ॥ ७ ॥ लाङ्गूलेन प्रदीप्तेन राक्षसांस्तानपातयत् । रोषामर्षपरीतात्मा बालसूर्यसमाननः ॥ ८ ॥ लाङ्गूलं संप्रदीप्तं तु द्रष्टुं तस्य हनूमतः । सहस्त्रीबालवृद्धाश्च जग्मुः प्रीता निशाचराः ॥ ९ ॥ स भूयः सङ्गतैः क्रूरै राक्षसैर्हरिसत्तमः । निबद्धः कृतवान् वीरस्तत्कालसदृशीं मतिम् ॥ १० ॥

युक्तो हनुमान् सचत्वरं सर्वं पुरं परिणीयतां परितो नीयताम् इत्याज्ञापयदित्यन्वयः ॥ ५-७ ॥ लाङ्गूलेनेति । अपातयत् लाङ्गूलभ्रामणेन

तस्य विभीषणस्य ॥ १ ॥ दूतवध्या दूतवधः २ ॥ दग्धेन लाङ्गूलेनोपलक्षितो गच्छतु, स्वस्वामिसमीपमिति शेषः ॥ ३ ॥ मित्राण्याप्ताः ये समसुखदुःखाः, ज्ञातयः भ्रात्रादयः, बान्धवाः सम्बन्धिनः, सुहृज्जनाः स्निग्धजनाः ॥ ४ ॥ परिणीयतामित्याज्ञापयदिति योजना ॥ ५ ॥ ६ ॥ शुष्कमिति । आरण्यका यथा शुष्कमिन्धनमासाद्य हुताशनमुत्पादयन्ति तथा जीर्णपटवेष्टितं लाङ्गूलं तैलेन परिषिच्य तत्र तेऽग्निमुपपादयन् । हुताशन इति पाठे-वृद्धौ दृष्टान्तोऽयम् । उपपादयन्नित्यस्य समयोजयन्नित्यन्ये । तान् बद्ध्वा नेतॄन् ॥ ७-९ ॥ सङ्गतैः मिलितैः राक्षसैः स भूयः निबद्ध इति सम्बन्धः । बन्धसंहारशक्तावपि स नोचित इत्यचिन्तय

अद्रावयदित्यर्थः ॥ ८–१० ॥ न मे शक्ताः न मे पर्याप्ता इत्यर्थः । मम निग्रहे न समर्था इति यावत् ॥ ११ ॥ यदीति । भर्तृहितार्थाय रामहितार्थाय । चरन्तं प्रवर्तमानम्, मामिति शेषः । भर्तृशासनात् रावणशासनात् यदि बध्नन्ति, तावता मे निष्कृतिः प्रतिक्रिया न कृता । इदं बन्धनमकिञ्चित्करमिति भावः ॥ १२ ॥ रामस्य प्रीत्यर्थमिदं विपहिष्ये । रावणादिवधस्य स्वेनैव कर्तव्यत्वेन रामाभिमतत्वाद्राक्षसानामहमीदृशं

कामं खलु न मे शक्ता निबद्धस्यापि राक्षसाः । छित्त्वा पाशान् समुत्पत्य हन्यामहमिमान् पुनः ॥ ११ ॥ यदि भर्तृहितार्थाय चरन्तं भर्तृशासनात् । बध्नन्त्येते दुरात्मानो न तु मे निष्कृतिः कृता ॥ १२ ॥ सर्वेषामेव पर्याप्तो राक्षसानामहं युधि । किं तु रामस्य प्रीत्यर्थं विषहिष्येऽहमीदृशम् ॥ १३ ॥ लङ्का चारयितव्या वै पुनरेव भवेदिति । रात्रौ न हि सुदृष्टा मे दुर्गकर्मविधानतः ॥ १४ ॥ अवश्यमेव द्रष्टव्या मया लङ्का निशाक्षये ॥ १५ ॥ कामं बद्धस्य मे भूयः पुच्छस्योद्दीपनेन च । पीडां कुर्वन्तु रक्षांसि न मेऽस्ति मनसः श्रमः ॥ १६ ॥ ततस्ते संवृताकारं सत्त्ववन्तं महाकपिम् । परिगृह्य ययुर्हृष्टा राक्षसाः कपिकुञ्जरम् ॥ १७ ॥

बन्धनाकर्षणादिरूपं परिभवं सहिष्य इति भावः । रामस्य प्रीत्यर्थमित्यत्र च्छन्दोभङ्ग आर्षः ॥ १३ ॥ लङ्केति । लङ्का रात्रौ दुर्गकर्मविधानतः दुर्गकर्मविधानाद्धेतोः । न हि सुदृष्टा नैव सुदृष्टा । यद्वा दुर्गकर्मविधानतः नगरगुप्तिविशेषज्ञानपूर्वकमित्यर्थः । न दृष्टेति हेतोर्मया लङ्का पुनश्चारयितव्या भवेत् । विचरित्वा द्रष्टव्या भवेदित्यर्थः । अयं च प्रातःकालः न तूषःकालः । प्रातःकालेऽपि तथा व्यवहारोपपत्तेः ॥ १४ ॥ १५ ॥ काममिति । मनसः श्रम इत्यनन्तरमितिकरणं बोध्यम् ॥ १६ ॥ संवृताकारं गूढस्वभावम् । महाकपिमिति बुद्ध्या महत्त्वम् । कपिकुञ्जरमिति सजातीयश्रेष्ठ्यम् ॥ १७

दित्याह कृतवानिति ॥ १० ॥ निबद्धस्यापि मे न शक्ताः मम निग्रहे न समर्था इत्यर्थः ॥ ११ ॥ भर्तुः स्वामिनो रामस्य । भर्तृशासनात् रावणशासनात् । निष्कृतिः प्रतिक्रिया न कृता मया कृतस्य कार्यस्य बन्धनमात्रं प्रतिक्रिया न भवतीति भावः ॥ १२ ॥ सर्वेषां, हनन इति शेषः । अहं पर्याप्तः, रामस्य प्रीत्यर्थम् ईदृशमवमानं विषहिष्ये, सर्वराक्षससंहारस्य रामेण प्रतिज्ञातत्वादिति भावः ॥ १३ ॥ दुर्गकर्मविधानतः विधानाद्धेतोः रात्रौ लङ्का न हि सुदृष्टा, अतो मे मया लङ्का पुनश्चारयितव्या भवेत् शोधयितव्या भवेदिति योजना । यद्वा दुर्गकर्मविधानतः नगरगुप्तिविशेषज्ञानपूर्वकमित्यर्थः । अनेन उषःकालः सम्प्राप्त इत्यवगम्यते ॥ १४ ॥ १५ ॥ मनसः

स्वकर्मभिः आस्फोटनसिंहनादैरित्यर्थः। तां पुरीं घोषयन्तः। अत्यन्तसंयोगे द्वितीया। चारयन्ति स्म, तमिति शेषः ॥१८॥ चारयामास शोधयामास ॥१९॥ चत्वरान् गृहबहिरङ्गणानि ॥२०॥ शृङ्गाटकानि चतुष्पथानि। रथ्याः महावीथीः। उपरथ्याः अवान्तरवीथीः। गृहकान्तरान्



शङ्खभेरीनिनादैस्तं घोषयन्तः स्वकर्मभिः। राक्षसाः क्रूरकर्माणश्चारयन्ति स्म तां पुरीम् ॥१८॥ अन्वीयमानो रक्षोभिर्ययौ सुखमरिन्दमः। हनुमांश्चारयामास राक्षसानां महापुरीम् ॥१९॥ अथापश्यद्विमानानि विचित्राणि महाकपिः। संवृतान् भूमिभागांश्च सुविभक्तांश्च चत्वरान् ॥२०॥ वीथीश्च गृहसंबाधाः कपिः शृङ्गाटकानि च। तथा रथ्योपरथ्याश्च तथैव गृहकान्तरान्। गृहांश्च मेघसङ्काशान् ददर्श पवनात्मजः ॥२१॥ चत्वरेषु चतुष्केषु राजमार्गे तथैव च। घोषयन्ति कपिं सर्वे चारीक इति राक्षसाः ॥२२॥ स्त्रीबालवृद्धा निर्जग्मुस्तत्र तत्र कुतूहलात्। तं प्रदीपितलाङ्गूलं हनुमन्तं दिदृक्षवः ॥२३॥ दीप्यमाने ततस्तस्य लांगूलाग्रे हनूमतः। राक्षस्यस्ता विरूपाक्ष्यः शंसुर्देव्यास्तदप्रियम् ॥२४॥ यस्त्वया कृतसंवादः सीते ताम्रमुखः कपिः। लाङ्गूलेन प्रदीप्तेन स एष परिणीयते ॥२५॥ श्रुत्वा तद्वचनं क्रूरमात्मापहरणोपमम्। वैदेही शोकसन्तप्ता हुताशनमुपागमत् ॥२६॥

गृहकाणि क्षुद्रगृहाणि, अन्तराणि प्रच्छन्नद्वाराणि अन्तर्द्वाराणीत्यर्थः। "तोरणोऽस्त्री बहिर्द्वारं प्रच्छन्नद्वारमन्तरम्" इति वैजयन्ती। अक्लीवत्वमार्षम् ॥२१॥ चत्वरेष्विति। चत्वरेषु चतसृणां रथ्यानां संभेदेषु। चतुष्केषु चतुस्तम्भमण्डपेषु। चार एव चारीकः। स्वार्थे कप्रत्ययः। आर्षो दीर्घः ॥२२॥२३॥ शंसुः शशंसुः। आर्षो द्विर्वचनाभावः ॥२४॥ परिणीयते परितो नीयते ॥२५॥ उपागमत् उपासितवती ॥२६॥

श्रममित्यत्र चिन्तासमाप्तिद्योतकमितिकरणं द्रष्टव्यम् ॥१६॥१७॥ शङ्खेति। स्वकर्मभिः आस्फोटसिंहनादैः तां पुरीं घोषयन्तः तं चारयन्ति स्मेति सम्बन्धः ॥१८॥ चारयामास चोदयामासेत्यर्थः ॥१९॥ चत्वरान् गृहबहिरङ्गणानि ॥२०॥ गृहसम्बाधाः गृहैः सम्बाधाः निबिडाः रथ्याः। शृङ्गाटकानि चतुष्पथानि। उपरथ्याः क्षुद्रवीथीः। चत्वरेषु चतसृणां रथ्यानां सम्बन्धेषु। चतुष्केषु चतुस्तम्भमण्टपेषु। चार एव चारीकः ॥२१-२३॥ शंसुः शशंसुः ॥२४॥ परिणीयते परितो नीयते ॥२५॥ आत्मापहरणोपमं तादृग्दुःखजनकमित्यर्थः। हुताशनमुपागमत उपासितवती ॥२६॥

तस्य हनुमतः । मङ्गलाभिमुखी अदाहपरा । प्रयता शुद्धिमती । "पावकः प्रयतः पूतः" इत्यमरः ॥२७॥ यद्यस्तीति । पतिशुश्रूषादिपदं तत्फलपरम् । शीतो भव, तेनेति शेषः । एकपत्नीत्वं पातिव्रत्यम् ॥२८॥ किंचिदनुक्रोश इति समस्तं पदम् । तस्य रामस्य । भाग्यशेषः इदानीं निरन्तरदुःखानुभवात्

मङ्गलाभिमुखी तस्य सा तदाऽऽसीन्महाकपेः । उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् ॥ २७ ॥ यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः । यदि चास्त्येकपत्नीत्वं शीतो भव हनूमतः ॥ २८ ॥ यदि किंचिदनुक्रोशस्तस्य मय्यस्ति धीमतः । यदि वा भाग्यशेषो मे शीतो भव हनूमतः ॥२९॥ यदि मां वृत्तसम्पन्नां तत्समागमलालसाम् । स विजानाति धर्मात्मा शीतो भव हनूमतः ॥ ३० ॥ यदि मां तारयेदार्यः सुग्रीवः सत्यसङ्गरः । अस्माद्दुःखाम्बुसंरोधाच्छीतो भव हनूमतः ॥३१॥ ततस्तीक्ष्णार्चिरव्यग्रः प्रदक्षिणशिखोऽनलः । जज्वाल मृगशावाक्ष्याः शंसन्निव शिवं कपेः ॥ ३२ ॥ हनुमज्जनकश्चापि पुच्छानलयुतोऽनिलः । ववौ स्वास्थ्यकरो देव्याः प्रालेयानिलशीतलः ॥ ३३ ॥ दह्यमाने च लाङ्गूले चिन्तयामास वानरः ॥ ३४ ॥

भाग्यप्रसक्तिरेव नास्तीति मन्यमानाया इदं वचनम् ॥२९॥ मम पातिव्रत्यं यदि हनुमान् जानाति तदा शीतो भवेत्याह—यदि मामिति ॥ ३० ॥ यदि मां तारयेदिति । मत्तारणे इदमेव ज्ञापकमिति भावः ॥३१॥ तत इति । ततः सीतोपगमात् । कपेरनलः कपिवालाग्निः मृगशावाक्ष्याः सीतायाः शुभं शंसन्निव प्रदक्षिणशिखो जज्वालेत्यन्वयः ॥ ३२ ॥ हनुमदिति । अनिलश्च पुच्छानलयुतोऽपि । प्रालेयानिलशीतलः हिममारुतवच्छीतलस्सन् । देव्याः सीतायाः स्वास्थ्यकरः सुखकरः ववौ । अस्मात्परं दह्यमाने च लाङ्गूल इति श्लोकः । अनयोः श्लोकयोर्मध्ये केचन श्लोकाः कतिपयकोशेषु दृश्यन्ते । बहुकोशेषु

प्रयतां शुद्धिमती ॥२७॥ यदि एकपत्नीत्वम् एकः पतिर्यस्याः सा एकपत्नी तस्या भावस्तत्त्वम्, पातिव्रत्यमित्यर्थः ॥ २८ ॥ तस्य रामस्य ॥ २९–३१ ॥ मृगशावाक्ष्याः सीतायाः, महिम्नेति शेषः । अनलः पुच्छानलः । प्रदक्षिणशिखः प्रदक्षिणाकारज्वालस्सन् कपेः शिवं शंसन्निव जज्वालेति सम्बन्धः ॥३२॥ किञ्च हनुमजनकः अनिलः पुच्छानलयुतः हनुमत्पुच्छानलसंयुतोऽपि देव्याः, प्रभावादिति शेषः । कपेरित्यनुकर्षः । प्रालेयानिलशीतलः हिममारुतवच्छीतलस्सन् स्वास्थ्यकरः सुखकरः ववाविति सम्बन्धः ॥ ३३ ॥ ३४ ॥

अदर्शनादर्थाधिक्याभावाच्च ते अनादरणीयाः ॥ ३३ ॥ ३४ ॥ रामानु०—हनुमज्जनक इति । अनिलः पुच्छानलयुतोपि । प्रालेयानिलशीतङ्गः हिममारुतवच्छीतलस्सन् । देव्याः स्वास्थ्यकरो ववाविति सम्बन्धः । अस्मात्परतः दह्यमाने च लाङ्गूल इति श्लोकः । अनयोः श्लोकयोर्द्वयोर्मध्ये नरमावाक्यभूताः केचन श्लोकाः कतिपयकोशेषु दृश्यन्ते । बहुकोशेषु अदर्शनादर्थौचित्याभावाच्च ते अनादरणीयाः ॥ ३३ ॥ ३४ ॥ प्रदीप्त इति । रुजं पीडाम् । शिशिरस्येव सम्पातः शिशिरस्य चन्दनोशीरादेः संपातः सङ्घट्ट इव स्थितः । अत्यन्तशीतल इत्यर्थः । एतेन हेतुविशेषं न पश्यामीत्युक्तम् ॥ ३५ ॥ हेतुविशेषान्निश्चिनोति—अथवेत्यादिना । प्लुवता मया सरितां पतौ ।

प्रदीप्तोऽग्निरयं कस्मान्न मां दहति सर्वतः । दृश्यते च महाज्वालः करोति न च मे रुजम् । शिशिरस्येव सम्पातो लाङ्गूलाग्रे प्रतिष्ठितः ॥ ३५ ॥ अथवा तदिदं व्यक्तं यद् दृष्टं प्लवता मया । रामप्रभावादाश्चर्यं पर्वतः सरितां पतौ ॥ ३६ ॥ यदि तावत् समुद्रस्य मैनाकस्य च धीमतः । रामार्थं सम्भ्रमस्तादृक् किमग्निर्न करिष्यति ॥ ३७ ॥ सीतायाश्चानृशंस्येन तेजसा राघवस्य च । पितुश्च मम सख्येन न मां दहति पावकः ॥ ३८ ॥ भूयः स चिन्तयामास मुहूर्तं कपिकुञ्जरः ॥ ३९ ॥

आर्षं घिसंज्ञाकार्यम् । समुद्रमध्ये पर्वतः पर्वतरूपं यदाश्चर्यम् अद्भुतरूपं वस्तु दृष्टं तद्वदिदमग्नेः शैत्यं रामप्रभावात् सञ्जातं व्यक्तं निश्चितम् ॥ ३६ ॥ एतदेवोपपादयति—यदीति । संभ्रमः त्वरा । किमग्निर्न करिष्यति, संभ्रममिति शेषः । रामार्थं मैनाकस्य संभ्रमो यदि स्यादग्नेस्तादृशस्संभ्रमः कुतो न भविष्यतीत्यर्थः ॥ ३७ ॥ आनृशंस्येन दयया ॥ ३८ ॥ स चिन्तयामास, अनन्तरकर्तव्यमिति शेषः ॥ ३९ ॥

दृश्यत इति । मे रुजं न करोति प्रत्युत शिशिरस्य सम्पात इव हिमसङ्घात इव वर्तते । अत्र हेतुं न पश्यामीति शेषः ॥ ३५ ॥ हेतुविशेषान् निश्चिनोति—अथवेत्यादि । प्लवता मया सरितां पतौ रामप्रभावात् पर्वतः पर्वतरूपमाश्चर्यं यत् यस्मात्कारणात् दृष्टं तस्मात्कारणात् इदम् अग्नेः शैत्यमपि रामप्रभावात्सञ्जातम् व्यक्तं निश्चितमिति योजना ॥ ३६ ॥ कुत इत्यत आह—यदीति । सम्भ्रमः त्वरा. यदि तदा अग्निः किं किमिति न करिष्यति, शैत्यमिति शेषः ॥ ३७ ॥ सीताया इति । आनृशंस्येन कृपया ॥ ३८ ॥ भूयः स चिन्तयामास । अनन्तरकर्तव्यमिति शेषः ॥ ३९ ॥

ति०—ननु समुद्रप्रेरणेन मैनाकोत्थानं युज्यते, अग्नेस्तु स्वभाववैपरीत्यं कुतस्तत्राह—यदीति । तावदिति वाक्यालङ्कारे । रामार्थं रामोपकारार्थम् । तादृक् सम्भ्रमो यदि आदरपूर्वकं त्वरा यदि । तदा रामेण नित्यमुपासितोऽग्निः रामोपकारार्थं कथमपि शैत्यं किं न करिष्यतीत्यर्थः ॥ ३७ ॥

चिन्तितमेवाह—उत्पपातेति । पुरद्वारमिति । विभक्तरक्षस्सम्बाधं वियुक्तरक्षस्सञ्चारम् ॥ ४० ॥ स इति । अवशातयत् अवाशातयत्, अच्यावय दित्यर्थः ॥ ४१—४३ ॥ निहत्वा निहत्य । ल्यबभाव आर्षः । लाङ्गूलकृतार्चिमाली लाङ्गूले कृतज्वालामालः । अर्चिमाली तेजःपुञ्जवानादित्य इव



उत्पपाताथ वेगेन ननाद च महाकपिः । पुरद्वारं ततः श्रीमान् शैलशृङ्गमिवोन्नतम् । विभक्तरक्षस्सम्बाधमाससादा निलात्मजः ॥ ४० ॥ स भूत्वा शैलसङ्काशः क्षणेन पुनरात्मवान् । ह्रस्वतां परमां प्राप्तो बन्धनान्यवशातयत् ॥ ४१ ॥ विमुक्तश्चाभवच्छ्रीमान् पुनः पर्वतसन्निभः । वीक्षमाणश्च ददृशे परिघं तोरणाश्रितम् ॥ ४२ ॥ स तं गृह्य महाबाहुः कालायसपरिष्कृतम् । रक्षिणस्तान् पुनः सर्वान् सूदयामास मारुतिः ॥ ४३ ॥ स तान्निहत्वा रणचण्ड विक्रमः समीक्षमाणः पुनरेव लङ्काम् । प्रदीप्तलाङ्गूलकृतार्चिमाली प्रकाशतादित्य इवार्चिमाली ॥ ४४ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

वीक्षमाणस्ततो लङ्कां कपिः कृतमनोरथः । वर्धमानसमुत्साहः कार्यशेषमचिन्तयत् ॥ १ ॥
किं नु खल्ववशिष्टं मे कर्तव्यमिह साम्प्रतम् । यदेषां रक्षसां भूयः सन्तापजननं भवेत् ॥ २ ॥
वनं तावत् प्रमथितं प्रकृष्टा राक्षसा हताः । बलैकदेशः क्षपितः शेषं दुर्गविनाशनम् ॥ ३ ॥

प्रकाशत प्राकाशत । अनित्यत्वादडभावः । अर्चीतीकारान्तत्वमार्षम् ॥ ४४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥ वीक्षमाण इत्यादि । कृतमनोरथः पर्याप्तमनोरथः ॥ १ ॥ २ ॥ बलैकदेशः सेनैकदेशः । क्षपितः

विभक्तरक्षःसम्बाधं वियुक्तरक्षस्सञ्चारमित्यर्थः ॥ ४० ॥ शैलसङ्काशो महान् भूत्वा ह्रस्वतां प्राप्त इत्यनेन देहसौक्ष्म्यात्स्वयमेव बन्धगलनमुक्तम् । एवं रीत्या बन्धनान्यवशातयत् ॥ ४१ ॥ विमुक्तस्त्वनन्तरं पुनः पर्वताकारोऽभवत् ॥ ४२ ॥ ४३ ॥ प्रदीप्तलाङ्गूलकृतार्चिमाली पुच्छावृतज्वलन इत्यर्थः। अत्र रेफाभावः आर्षः ॥ ४४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां त्रिपञ्चाशः सर्गः ॥ ५३ ॥ ॥ १ ॥ यदेषां भूयस्सन्तापजननं भवेत् तादृशमेव साम्प्रतं कर्तव्यं किमिति कार्यशेषमचिन्तयदित्यर्थः ॥ २ ॥ तदेव निश्चिनोति शेषं दुर्गविनाशनमिति ॥ ३ ॥

नाशितः । दुर्गविनाशनं पुरविनाशनम् । शेषम् अवशिष्टम् ॥ ३ ॥ कर्म पूर्वोक्तं वनभङ्गादिकम्, समुद्रलङ्घनं दूत्यं वा । सुखपरिश्रमं सफलायासम् । शक्यमेतदित्याह अल्पयत्नेनेति । अस्मिन्कार्ये, कृते सतीति शेषः ॥४॥ केनोपायेनेदं सुकरमित्याशङ्क्य तमाह-यो हीति । यः अग्निः । अतिशीतलतया

दुर्गे विनाशिते कर्म भवेत् सुखपरिश्रमम् । अल्पयत्नेन कार्येऽस्मिन् मम स्यात् सफलः श्रमः ॥ ४ ॥ यो ह्ययं मम लांगूले दीप्यते हव्यवाहनः । अस्य सन्तर्पणं न्याय्यं कर्तुमेभिर्गृहोत्तमैः ॥५॥ ततः प्रदीप्तलाङ्गूलः सविद्युदिव तोयदः । भवनाग्रेषु लङ्काया विचचार महाकपिः ॥ ६ ॥ गृहाद् गृहं राक्षसानामुद्यानानि च वानरः । वीक्षमाणो ह्यसन्त्रस्तः प्रासादांश्च चचार सः ॥ ७ ॥ अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम् । अग्निं तत्र स निक्षिप्य श्वसनेन समो बली ॥ ८ ॥ ततोऽन्यत् पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् । मुमोच हनुमानग्निं कालानल शिखोपमम् ॥ ९ ॥ वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः । शुकस्य च महातेजाः सारणस्य च धीमतः । तथा चेन्द्रजितो वेश्म ददाह हरियूथपः ॥ १० ॥ जम्बुमालेः सुमालेश्च ददाह भवनं ततः ॥ ११ ॥ रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैव च । ह्रस्वकर्णस्य दंष्ट्रस्य रोमशस्य च रक्षसः ॥ १२ ॥ युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य रक्षसः । विद्युज्जिह्वस्य घोरस्य तथा हस्तिमुखस्य च ॥ १३ ॥ करालस्य पिशाचस्य शोणिताक्षस्य चैव हि । कुम्भ कर्णस्य भवनं मकराक्षस्य चैव हि ॥ १४ ॥

मम महोपकारं कृतवान् । अस्य सन्तर्पणं न्याय्यमित्यर्थः॥५॥ तत इत्यादि । अत्र बन्धविकसनाय पूर्वं तनुसङ्कोचे कृतेपि कार्यार्थमग्निवर्तिः स्थापितेति बोध्यम् । सविद्युदिव तोयद इति सर्वत आवृत्य सञ्चारे दृष्टान्तः ॥ ६–९ ॥ वज्रदंष्ट्रस्येत्यादि सार्धश्लोकः ॥ १० ॥ जम्बुमालेरित्यर्धम् ॥ ११ ॥ रश्मि



कर्म समुद्रलङ्घनादिकम् । सुखपरिश्रमं सफलप्रयासम् । न चाशक्यमेतदित्याह अल्पयत्नेनेति । अस्मिन् कार्ये दुर्गविनाशकार्ये, कृते सतीति शेषः ॥४ ॥ केनोपायेन दुर्गविनाशनं स्यात् ? अत आह-यो हीति ॥ ५ ॥ तोयदः सन्ध्यातोयदः, हनुमतो रक्तवर्णत्वात् ॥ ६ ॥ उद्यानानि गृहारामाः ॥७॥ प्रहस्तस्य प्रधानमन्त्रित्वा

केतोरित्यादिपञ्चश्लोकी । वर्जयित्वेति । विभीपणगृहं प्रति वर्जयित्वेति सम्बन्धः ॥ १२–१६ ॥ तेषु तेष्विति । भवनेष्विति गृहविशेषणं समृद्धिमत्परम् । ऋद्धिं मणिमुक्ताप्रवालादिकाम् ॥१७॥१८॥ तत इत्यादि । सर्वमङ्गलशोभिते सर्वमङ्गलद्रव्ययुक्ते ॥१९॥२०॥ श्वसनेनेति । पूर्वं रावणादिभीतावग्न्यनिलौ

यज्ञशत्रोश्च भवनं ब्रह्मशत्रोस्तथैव च । नरान्तकस्य कुम्भस्य निकुम्भस्य दुरात्मनः ॥१५॥ वर्जयित्वा महातेजा विभीषणगृहं प्रति । क्रममाणः क्रमेणैव ददाह हरिपुङ्गवः ॥१६॥ तेषु तेषु महार्हेषु भवनेषु महायशाः । गृहेष्वृद्धिमतामृद्धिं ददाह स महाकपिः ॥ १७ ॥ सर्वेषां समतिक्रम्य राक्षसेन्द्रस्य वीर्यवान् । आससादाथ लक्ष्मीवान् रावणस्य निवेशनम् ॥ १८ ॥ ततस्तस्मिन् गृहे मुख्ये नानारत्नविभूषिते । मेरुमन्दरसङ्काशे सर्वमङ्गलशोभिते ॥ १९ ॥ प्रदीप्तमग्निमुत्सृज्य लाङ्गूलाग्रे प्रतिष्ठितम् । ननाद हनुमान् वीरो युगान्तजलदो यथा ॥ २० ॥ श्वसनेन च संयोगादतिवेगो महाबलः । कालाग्निरिव जज्वाल प्रावर्धत हुताशनः ॥ २१ ॥ प्रदीप्तमग्निं पवनस्तेषु वेश्मस्वचारयत् । अभूच्छ्वसनसंयोगादतिवेगो हुताशनः ॥ २२ ॥ तानि काञ्चनजालानि मुक्तामणिमयानि च । भवनान्यवशीर्यन्त रत्नवन्ति महान्ति च ॥ २३ ॥ तानि भग्नविमानानि निपेतुर्वसुधातले । भवनानीव सिद्धानामम्बरात् पुण्यसंक्षये ॥ २४ ॥ संजज्ञे तुमुलः शब्दो राक्षसानां प्रधावताम् । स्वगृहस्य परित्राणे भग्नोत्साहगतश्रियाम् । नूनमेषोऽग्निरायातः कपिरूपेण हा इति ॥ २५ ॥

इदानीं राक्षसक्षयं देवबलोदयं च प्रत्यासन्नं विदित्वा निश्शङ्कावभूतामिति भावः ॥ २१–२४ ॥ संजज्ञ इत्यादि । स्वगृहस्य परित्राणे भग्नोत्साह

दादौ तद्गृहेऽग्निप्रक्षेपः, प्रथमं तत्सम्भावनस्यौचित्यात् ॥ ८–१५ ॥ वर्जयित्वेति । विभीपणगृहं प्रति वर्जयित्वेति सम्बन्धः । ददाहेति । क्रमेणैव ददाहेत्यर्थः । विभीषणेन स्वस्य वधतो रक्षणाद्विभीषणगृहं वर्जयित्वा प्रतिगृहं क्रममाणो ददाहेत्यन्वयः ॥ १६ ॥ ददाह स महाकपिरिति । पूर्वं रावणाद्भीनोप्यग्निः सीतातेजस्सम्बन्धेन निश्शङ्कं ददाहेत्युक्तम् ॥ १७–२० ॥ श्वसनेनेति । पूर्वं रावणादतिभीतावग्न्यनिलौ इदानीं राक्षसबलक्षयं देवबलोदयञ्च प्रत्यासन्नं विदित्वा निश्शङ्कावभूतामिति भावः ॥२१॥ अचारयदिति हेतौ, यतश्चारयति स्म ततश्चारणाद्धेतोस्तानि व्यशीर्यन्तेत्यन्वयः ॥२२॥२३॥ भग्नविमानानि भग्नप्रासादानि ॥२४॥ भग्नोत्साहो

गतश्रियामिति पाठः । स्वगृहस्य परित्राणे भग्नोत्साहोर्जितश्रियामिति पाठे उत्साहश्च ऊर्जितश्रीश्च उत्साहोर्जितश्रियौ भग्ने उत्साहोर्जितश्रियौ येषा मिति विग्रहः । स्वगृहस्य परित्राणे भग्नोत्साहानां श्रीमतां राक्षसानामिति वाऽर्थः । हा इति "निपात एकाजनाङ्" इति प्रकृतिभावः ॥ २५ ॥ क्रन्दन्त्य इति । काश्चित् स्त्रियः हर्म्येभ्यः पेतुरिति सम्बन्धः । सुकेशवंश्यानां जननमात्रे रुद्रेण मातृतुल्यत्ववरप्रदानेपि तदितरेषु तदभावात् स्तनन्धय

क्रन्दन्त्यः सहसा पेतुः स्तनन्धयधराः स्त्रियः । काश्चिदग्निपरीतेभ्यो हर्म्येभ्यो मुक्तमूर्धजाः ॥ २६ ॥ पतन्त्यो रेजिरे ऽभ्रेभ्यः सौदामिन्य इवाम्बरात् ॥ २७ ॥ वज्रविद्रुमवैदूर्यमुक्तारजतसंहितान् । विचित्रान् भवनान् धातून् स्यन्दमानान् ददर्श सः ॥२८॥ नाग्निस्तृप्यति काष्ठानां तृणानां हरियूथपः । नाग्नेर्नापि विशस्तानां राक्षसानां वसुन्धरा ॥ २९ ॥ क्वचित् किंशुकसङ्काशाः क्वचिच्छाल्मलिसन्निभाः । क्वचित् कुङ्कुमसङ्काशाः शिखा वह्नेश्चकाशिरे ॥ ३० ॥ हनूमता वेगवता वानरेण महात्मना । लङ्कापुरं प्रदग्धं तद्रुद्रेण त्रिपुरं यथा ॥ ३१ ॥

धरत्वम् । अन्यजातीयाश्च राक्षसास्तत्र सन्त्येव ॥ २६ ॥ अम्बरात् पतन्त्यः अभ्रेभ्यो मेघेभ्यः पतन्त्यः सौदामिन्यः तडित इव रेजिरे ॥ २७ ॥ वज्रेति । भवनानिति पुंल्लिङ्गत्वमार्षम् । धातून् सुवर्णादीन् । "धातुस्तु गैरिके स्वर्णे" इति दर्पः । स्यन्दमानान् स्यन्दतः । अग्नितप्तत्वेन द्रवीभूतस्वर्णादी नित्यर्थः ॥ २८ ॥ नाग्निरिति । काष्ठानां तृणानां चेति सम्बन्धसामान्ये षष्ठी । काष्ठैस्तृणैश्चेत्यर्थः । "पूरणगुण–" इत्यादिना षष्ठी वा । अग्निः काष्ठैः तृणैश्च न तृप्यति । हरियूथपः अग्नेः न तृप्यति अग्निना न तृप्यति, अग्निप्रक्षेपणेन न तृप्यतीत्यर्थः । एवं वसुन्धरा विशस्तानां राक्षसानां विशस्तैः राक्षसैः न तृप्यतीति योज्यम् । अनेन राक्षसशवाकीर्णा भूरभूदित्यर्थः ॥२९॥ रामानु०–नाग्निरिति । तृणानां च यथा तथा । हनुमान् राक्षसेन्द्राणां वधे किंचिन्न तृप्यति । न हनूमद्विशस्तानां राक्षसानां वसुन्धरा ॥ इति पाठः ॥२९॥ शिखाः ज्वालाः ॥ ३० ॥ ननु एतावत्पर्यन्तमल्पबलतया स्थितस्य हनुमतः कथमेतादृशी शक्तिरित्य त्राह रुद्रेण त्रिपुरं यथेति । "विष्णुरात्मा भगवतो भवस्यामिततेजसः । तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे महेश्वरे ॥" इत्युक्तरीत्या विष्णवाप्यायिततेजसा

जितश्रियां भग्नोत्साहाश्चोर्जितश्रियश्चेति विशेषणसमासः । स्तनन्धयः शिशुः ॥ २५ ॥ २६ ॥ अभ्रेभ्यो मेघेभ्यः ॥ २७ ॥ २८ ॥ नाग्निरिति । तृणानां काष्ठानां स०–यथा अग्निर्न तृप्यति तथा हनुमान् राक्षसानां वह्निना वधे सति किञ्चिन्न तृप्यति स्वल्पं वा न तृप्यति । यद्वा एवं बहुत्वे सत्यपि किञ्चिदिदमिति न तृप्यति ॥ २९ ॥

रुद्रेण त्रिपुरं यथा दग्धं तथाऽनेनेति भावः ॥ ३१ ॥ लङ्कापुरपर्वताग्रे लङ्कापुराधारत्रिकूटशिखरे । तदाधारत्वात्तस्यास्तथा निर्देशः । पर्वताग्रस्थलङ्कापुर इति परनिपातो वा । चूडावलयं ज्वालाजालमित्यर्थः । तत् प्रसार्य विस्तार्य । प्रदीप्तः विसृष्टः, गृहेष्विति शेषः ॥ ३२ ॥ दिविस्पृक् अभ्रंलिहः

ततस्तु लङ्कापुरपर्वताग्रे समुत्थितो भीमपराक्रमोऽग्निः । प्रसार्य चूडावलयं प्रदीप्तो हनूमता वेगवता विसृष्टः ॥ ३२ ॥ युगान्तकालानलतुल्यवेगः समारुतोऽग्निर्ववृधे दिविस्पृक् । विधूमरश्मिर्भवनेषु सक्तो रक्षश्शरीराज्यसमर्पितार्चिः ॥ ३३ ॥ ❋ आदित्यकोटीसदृशः सुतेजा लङ्कां समाप्तां परिवार्य तिष्ठन् । शब्दैरनेकैरशनिप्ररूढैर्भिन्दन्निवाण्डं प्रबभौ महाग्निः ॥ ३४ ॥ तत्राम्बरादग्निरतिप्रवृद्धो रूक्षप्रभः किंशुकपुष्पचूडः । निर्वाणधूमाकुलराजयश्च नीलोत्पलाभाः प्रचकाशिरेऽभ्राः ॥ ३५ ॥

" हृद्द्युभ्यां ङेरलुग्वक्तव्यः " इति सप्तम्या अलुक् । रक्षश्शरीराज्यसमर्पितार्चिः रक्षश्शरीराण्येवाज्यानि तैस्समर्पितार्चिः उत्थापितज्वालः ॥ ३३ ॥ आदित्यकोटीति । समाप्तां निःशेषाम् । अशनिप्ररूढैः अशनिवन्निष्ठुरैः । अण्डं ब्रह्माण्डम् ॥ ३४ ॥ अम्बरात् अम्बरपर्यन्तम् । किंशुकपुष्पचूडः

तृणैः काष्ठैरित्यर्थः ॥ २९-३१ ॥ लङ्कापुरपर्वताग्रे लङ्कापुराधारत्रिकूटशिखरे । चूडावलयं ज्वालासमूहं प्रसार्य समुत्थितोऽग्निः विसृष्टः, गृहेष्विति शेषः । भीमपराक्रमः भयङ्करवेगः ॥ ३२ ॥ दिविस्पृक् अभ्रंलिह इत्यर्थः । रक्षश्शरीराज्यसमर्पितार्चिः रक्षश्शरीराण्येवाज्यानि तैः समर्पितार्चिः उत्थापितज्वालः ॥ ३३ ॥ आदित्येति श्लोकद्वयमेकं वाक्यम् । अम्बरात् अम्बरपर्यन्तं प्रवृद्धः । किंशुकपुष्पचूडः तत्सवर्णज्वालः । अग्निः हनुमद्विसृष्टोऽग्निः । अशनिप्ररूढैः अशनिवन्निष्ठुरैरनेकैः शब्दैः समाप्तां निश्शेषां लङ्कां परिवार्य परिवेष्ट्य तिष्ठन् ब्रह्माण्डं भिन्दन् महाग्निः प्रलयोऽग्निरिव प्रबभौ ॥ ३४ ॥ तत्र तदा निर्वाणधूमाकुलराजयः पूर्व

[ ❋ स तामत्यर्थतो वह्निर्लङ्कां राक्षससंकुलाम् । ज्वालामालापरिक्षेपैरदहन्मारुतात्मजः ॥ १ ॥ तेन शब्देन वित्रस्ता धर्षितास्तेन चाग्निना । अभिपेतुस्तदा घोरा हनूमन्तं निशाचराः ॥ २ ॥ तं प्रदीप्तैश्च शूलाग्रैः प्रासैः खड्गैः परश्वधैः । हनूमन्तं महावेगैराश्रिपन्भीमतर्पभाः ॥ ३ ॥ ते राक्षसा भीमबला नानाप्रहरणान्विताः । निहत्य च स तांस्तत्र दिवमेवोत्पपात ह ॥ ४ ॥ स च विक्रम्य सहसा संक्रामंश्च गृहाद्गृहम् । लङ्कामादीपयामास वायुपुत्रः प्रतापवान् ॥ ५ ॥ स लाङ्गूलोपसक्ताग्निर्मुक्तो मृत्युगृहादिव । लङ्कां पर्यदहत्कृत्स्नां खे ग्रहः सम्पतन्निव ॥ ६ ॥ तोरणेषु गवाक्षेषु रम्येषु शिखरेषु च । तिष्ठन्ति स्म प्रपश्यन्ति राक्षसाः प्लवगोत्तमम् ॥ ७ ॥ हुताशनज्वालसमावृता सा हतप्रवीरा हृतसर्वशोभना । हनूमतः क्रोधबलाभिभूता बभूव कालोपहतेव लङ्का ॥ ८ ॥ स सम्भ्रमत्रस्तविषण्णराक्षसां समुज्ज्वलज्ज्वालहुताशनाङ्किताम् । ददर्श लङ्कां हनुमान् महामनाः स्वयम्भुवः कोपहतामिवावनिम् ॥ ९ ॥ गृहाग्रशृङ्गाग्रतले विचित्रे प्रतिष्ठितो वानरराजसिंहः । प्रदीप्तलाङ्गूलकृतार्चिमाली व्यराजतादित्य इवार्चिमाली ॥ १० ॥ ]
एते श्लोकाः केषुचित्कोशेषु दृश्यन्ते, व्याख्यातास्च महेश्वरतीर्थैः ॥

स तामिति । वह्निः ज्वालामालापरिक्षेपैः ज्वालासमूहानां प्रसारणैः । लङ्काम् अत्यर्थमदहदिति सम्बन्धः । सः हनुमान् ॥ १-४ ॥ स चेति । संक्रामन् गच्छन् ॥ ५ ॥ स इति । लांगूलोपसक्ताग्निः लांगूलस्थितोऽग्निः । मृत्युगृहान्मुक्त इव, तथा अतिभीकर इत्यर्थः ॥ ६ ॥ ७ ॥ हुताशनेति । कालोपहतेव प्रलयकालोपहतेव ॥ ८-१० ॥

तत्तुल्यशिखः । निर्वाणधूमाकुलराजयः पूर्वपूर्वदग्धभवनाग्निनिर्वाणसमयोत्थितधूमैः व्याप्तपङ्क्तयः । अत एव नीलोत्पलाभाः निर्वाणधूमानां नीलवर्णत्वा दिति भावः । अभ्राः मेघाः । पुंल्लिङ्गत्वमार्षम् ॥ ३५ ॥ अथ रक्षोवचनम्—वज्रीत्यादि । महेन्द्रः वज्रीत्यादि विशेषणं सामर्थ्यविशेषद्योतनार्थम् । उत्तर

वज्री महेन्द्रस्त्रिदशेश्वरो वा साक्षाद्यमो वा वरुणोऽनिलो वा । रुद्रोऽग्निरर्को धनदश्च सोमो न वानरोऽयं स्वयमेव कालः ॥३६ ॥ किं ब्रह्मणः सर्वपितामहस्य सर्वस्य धातुश्चतुराननस्य । इहागतो वानररूपधारी रक्षोपसंहारकरः प्रकोपः ॥३७॥ किं वैष्णवं वा कपिरूपमेत्य रक्षोविनाशाय परं सुतेजः । अनन्तमव्यक्तमचिन्त्यमेकं स्वमायया साम्प्रतमागतं वा ॥ ३८ ॥ इत्येवमूचुर्बहवो विशिष्टा रक्षोगणास्तत्र समेत्य सर्वे । सप्राणिसङ्घां सगृहां सवृक्षां दग्धां पुरीं तां सहसा समीक्ष्य ॥ ३९ ॥ ततस्तु लङ्का सहसा प्रदग्धा सराक्षसा साश्वरथा सनागा । सपक्षिसङ्घा समृगा सवृक्षा रुरोद दीना तुमुलं सशब्दम् ॥ ४० ॥

त्राप्येवमेव गतिः । यमकालयोर्मूर्तिभेदान्न पुनरुक्तिः ॥ ३६ ॥ रक्षोपसंहारकर इत्यत्र आर्षस्सलोपः । प्रकोपः प्रकोपकृतमूर्तिविशेषः ॥ ३७ ॥ किं वैष्णवमिति । अत्राद्यो वाशब्दोऽवधारणे । "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः । द्वितीयो वितर्के । अनन्तं त्रिविधपरिच्छेदरहितम् । अव्यक्तं चक्षुराद्यगोचरम् । अचिन्त्यं केवलमनसोऽप्यविषयम् । एकम् अद्वितीयं यद्वैष्णवं सुतेजः पूज्यं धाम तदेव स्वमायया स्वासाधारणया आश्चर्यशक्त्या कपिरूपमेत्य साम्प्रतमागतं वा इति योजना । वैष्णवमिति स्वार्थे अण् । विष्णुशरीरान्तर्वर्तीति वाऽर्थः ॥ ३८ ॥ विशिष्टाः ज्ञानाधिकाः ॥३९ ॥ ४० ॥

दग्धभवनात् निर्वाणसमयोत्थितधूमैर्व्याकुलपङ्क्तयः अभ्राः प्रचकाशिरे इति सम्बन्धः । अभ्रा इति पुंल्लिङ्गत्वमार्षम् ॥३५॥ वज्रीति । वज्रित्वत्रिदशेश्वरत्वविशिष्टो महेन्द्र इत्यर्थः । रुद्रोऽग्निः रुद्रतृतीयनयनसम्बन्ध्यग्निः ॥ ३६ ॥ ३७ ॥ अनन्तं त्रिविधपरिच्छेदरहितम् । अव्यक्तं चक्षुराद्यगोचरम् । अचिन्त्यं मनसोऽविषयम् । एकमद्वितीयम् । वैष्णवं सुतेजः स्वमायया शक्त्या कपिरूपमेत्य रक्षोविनाशायागतं किं वेति योजना ॥३८॥ विशिष्टा महाबलाः प्रहस्तादय इत्यर्थः । समीक्ष्य

हा तातेति । युगपदेव शोके दूराह्वाने च हाशब्दो वर्तते । हा जीवितमित्यत्र [illegible] अर्थः । [illegible]मिति शेष इत्यन्ये। "अभितःपरितस्समयानिक षाहाप्रतियोगेऽपि " इति द्वितीया वा। दरिद्रैरशोच्यत्वाद्विशिनष्टि—भोगयुतं सुपुण्यमिति । सुखाढ्यं सुकृतैकफलं चेत्यर्थः । घोरतरः तीव्रतरः । अत एव सुभीमः भयङ्करः ॥ ४१ ॥ परिवृत्तयोधा परिवृत्तभटा ॥४२॥ हनुमान्महामना इति पाठः । हनुमान् महात्मेति पाठे विषमवृत्तं वा । स्वयंभुकोपो

हा तात हा पुत्रक कान्त मित्र हा जीवितं भोगयुतं सुपुण्यम् । रक्षोभिरेवं बहुधा ब्रुवद्भिः शब्दः कृतो घोरतरः सुभीमः ॥ ४१ ॥ हुताशनज्वालसमावृता सा हतप्रवीरा परिवृत्तयोधा । हनूमतः क्रोधबलाभिभूता बभूव शापोप हतेव लङ्का ॥ ४२ ॥ स सम्भ्रमत्रस्तविषण्णराक्षसां समुज्ज्वलज्ज्वालहुताशनाङ्किताम् । ददर्श लङ्कां हनुमान् महामनाः स्वयम्भुकोपोपहतामिवावनिम् ॥ ४३॥ भङ्क्त्वा वनं पादपरत्नसङ्कुलं हत्वा तु रक्षांसि महान्ति संयुगे । दग्ध्वा पुरीं तां गृहरत्नमालिनीं तस्थौ हनूमान् पवनात्मजः कपिः ॥ ४४ ॥ त्रिकूटशृङ्गाग्रतले विचित्रे प्रतिष्ठितो वानरराजसिंहः । प्रदीप्तलाङ्गूलकृतार्चिमाली व्यराजतादित्य इवांशुमाली ॥ ४५ ॥ स राक्षसांस्तान् सुबहूंश्च हत्वा वनं च भङ्क्त्वा बहुपादपं तत् । विसृज्य रक्षोभवनेषु चाग्निं जगाम रामं मनसा महात्मा ॥ [ ततो महात्मा हनुमान् मनस्वी निशाचराणां क्षतकृत् कृतार्थः । रामस्य नाथस्य जगत्त्रयाणां श्रीपादमूलं मनसा जगाम ॥ ] ॥ ४६ ॥ ततस्तु तं वानरवीरमुख्यं महाबलं मारुततुल्यवेगम् । महामतिं वायुसुतं वरिष्ठं प्रतुष्टुवुर्देवगणाश्च सर्वे ॥ ४७ ॥ भङ्क्त्वा वनं महातेजा हत्वा रक्षांसि संयुगे । दग्ध्वा लङ्कापुरीं रम्यां रराज स महाकपिः ॥ ४८ ॥ तत्र देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । दृष्ट्वा लङ्कां प्रदग्धां तां विस्मयं परमं गताः ॥ ४९ ॥

पहतां प्रलये भगवता दग्धामित्यर्थः ॥ ४३ ॥ भङ्क्त्वेति । रत्नशब्दः श्रेष्ठवाची । तस्थौ सङ्कल्पितकार्यस्य परिसमाप्तत्वादुपरतोद्योगोऽभूदि त्यर्थः ॥ ४४ ॥ ४५ ॥ जगाम रामं मनसेति । कृतकृत्यत्वाद्रामं गन्तुमियेषेत्यर्थः ॥ ४६ ॥ वरिष्ठमिति, बलवतामिति शेषः ॥ ४७–५० ॥

इत्येवमूचुरित्यन्वयः ॥ ३९ ॥ ४० ॥ सुपुण्यम् अतिशयेनार्जितं पुण्यम् ॥ ४१ ॥ परिवृत्तयोधा परावृत्तभटा ॥ ४२ ॥ ४३॥ तस्थौ सङ्कल्पितकार्यस्य परिसमाप्तत्वा

रामानु०—रराज स महाकपिरित्यतः परमुत्तरसर्गादिभूतो 'लङ्कां समस्तां संदीप्य' इत्ययं श्लोकः केषुचित्कोशेषु प्रमादाल्लिखितः ॥ ४८ ॥ देवाश्चेति । परामित्यस्य विवरणम् अतुल्यरूपामिति । अस्मिन् सर्गे एकपञ्चाशच्छ्लोकाः । ततो महात्मेति श्लोकः स राक्षसानिति श्लोकोक्तार्थकतया बहुकोशेष्वदर्शनाच्च प्रक्षिप्तः ।

तं दृष्ट्वा वानरश्रेष्ठं हनुमन्तं महाकपिम् । कालाग्निरिति सञ्चिन्त्य सर्वभूतानि तत्रसुः ॥ ५० ॥ देवाश्च सर्वे मुनिपुङ्गवाश्च गन्धर्वविद्याधरनागयक्षाः । भूतानि सर्वाणि महान्ति तत्र जग्मुः परां प्रीतिमतुल्यरूपाम् ॥ ५१ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

लङ्कां समस्तां सन्दीप्य लाङ्गूलाग्निं महाबलः । निर्वापयामास तदा समुद्रे हरिसत्तमः ॥ १ ॥ सन्दीप्यमानां विध्वस्तां त्रस्तरक्षोगणां पुरीम् । अवेक्ष्य हनुमान् लङ्कां चिन्तयामास वानरः ॥ २ ॥ तस्याभूत् सुमहांस्त्रासः कुत्सा चात्मन्यजायत । लङ्कां प्रदहता कर्म किंस्वित् कृतमिदं मया ॥ ३ ॥ धन्यास्ते पुरुषश्रेष्ठा ये बुद्ध्या कोपमुत्थितम् । निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ॥ ४ ॥ क्रुद्धः पापं न कुर्यात् कः क्रुद्धो हन्याद् गुरूनपि । क्रुद्धः परुषया वाचा नरः साधूनधिक्षिपेत् ॥ ५ ॥ वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित् । नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ॥ ६ ॥ यः समुत्पतितं क्रोधं क्षमयैव निरस्यति । यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ७ ॥

बहुकोशेष्वेतत्सर्गसमाप्तिविपर्ययः उत्तरसर्गारम्भविपर्ययश्च दृश्यते ॥ ५१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामा० शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुष्पञ्चाशः सर्गः ॥ ५४ ॥ लङ्कामित्यादि । लाङ्गूलाग्निं समुद्रे निर्वापयामासेत्यन्वयः ॥ १ ॥ २ ॥ तस्येति । कुत्सा निन्दा ॥ ३–८ ॥

दुष्परतोद्योगोऽभूदित्यर्थः ॥ ४४–५१ ॥ लङ्कामिति । निर्वापयामास लांगूलाग्निं शमयामास ॥ ५२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां चतुष्पञ्चाशः सर्गः ॥ ५४ ॥ १ ॥ २ ॥ 'कुत्सा चात्मन्यजायत' इत्युक्तां कुत्सामाह—लङ्कामिति । किंस्वित् कर्म कृतं कुत्सितमेव कृतमित्यर्थः ॥ ३ ॥ उक्तकुत्सितकार्यमूलं कोप इति निश्चित्य तद्रहितान् स्तौति—धन्या इति । दुःखातिशयादेव महात्मपदपौनरुक्त्यं न दोषाय ॥ ४ ॥ क्रुद्धः पापं न कुर्याद्यः इति पाठे—क्रुद्धो यः कश्चित्पापं कुर्यान्न, नञ् काकुः । अपितु कुर्यादेव, अकरणमशक्यमेवेत्यर्थः । तदेव दर्शयति क्रुद्धो हन्यादिति ॥ ५ ॥ न विजानाती

यदीति । जानक्यपि यदि दग्धेत्यन्वयः ॥९॥१०॥ ईषत्कार्यमिति । इदं कार्यम् अन्वेषणपूर्वकरावणनिलयपरिज्ञानसीतादर्शनतन्निवेदनरूपं महत्कार्यम् ईषत्कार्यम् ईषदवशिष्टकार्यम् असमग्रप्रायमेव कृतमासीत् । रामनिवेदनमात्रावशेषं कृतमासीदित्यर्थः । किन्तु इदानीं क्रोधाभिभूतेन क्रोधान्धेन मया तस्य

धिगस्तु मां सुदुर्बुद्धिं निर्लज्जं पापकृत्तमम् । अचिन्तयित्वा तां सीतामग्निदं स्वामिघातकम् ॥ ८ ॥ यदि दग्धा त्वियं लङ्का नूनमार्यापि जानकी । दग्धा तेन मया भर्तुर्हतं कार्यमजानता ॥ ९ ॥ यदर्थमयमारम्भस्तत्कार्यमवसादितम् । मया हि दहता लङ्कां न सीता परिरक्षिता ॥ १० ॥ ईषत्कार्यमिदं कार्यं कृतमासीन्न संशयः । तस्य क्रोधाभिभूतेन मया मूलक्षयः कृतः ॥ ११ ॥ विनष्टा जानकी नूनं न ह्यदग्धः प्रदृश्यते । लङ्कायां कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥ १२ ॥ यदि तद्विहतं कार्यं मम प्रज्ञाविपर्ययात् । इहैव प्राणसंन्यासो ममापि ह्यद्य रोचते ॥ १३ ॥ किमग्नौ निपताम्यद्य आहोस्विद्वडवामुखे । शरीरमाहो सत्त्वानां दद्मि सागरवासिनाम् ॥ १४ ॥ कथं हि जीवता शक्यो मया द्रष्टुं हरीश्वरः । तौ वा पुरुषशार्दूलौ कार्यसर्वस्वघातिना ॥ १५ ॥ मया खलु तदेवेदं रोषदोषात् प्रदर्शितम् । प्रथितं त्रिषु लोकेषु कपित्वमनवस्थितम् ॥ १६ ॥ धिगस्तु राजसं भावमनीशमनवस्थितम् । ईश्वरेणापि यद्रागान्मया सीता न रक्षिता ॥ १७ ॥

कार्यस्य मूलक्षयः कृतः न संशयः, विफलीकृतमित्यर्थः ॥११॥ सीतानाशे तत्तथैव, स एव तु कुत इत्यत्राह—विनष्टेति ॥१२॥ यदीति । विहतं यदि सीतानाशाद्विनष्टं यदि । प्राणसंन्यासः प्राणत्यागः ॥१३–१५॥ मयेति । कपित्वं कापेयम् । अनवस्थितं चापलात्मकमित्यर्थः ॥१६॥ धिगस्त्विति । राजसं भावं

त्येतदेव स्पष्टयति नाकार्यमिति । क्रुद्धस्याकार्यमयुक्तबुद्ध्या करणीयं न किञ्चिदप्यस्ति, अतो गुरुहननाद्यपि करोत्येवेत्यर्थः ॥ ६–८ ॥ यदीति । यदि जानकी दग्धा भर्तुः कार्यं हतमिति सम्बन्धः ॥ ९ ॥ एतदेव विवृणोति–यदर्थमिति ॥ १० ॥ ईषदिति । अन्वेषणपूर्वकरावणनिलयपरिज्ञानसीतादर्शनतन्निवेदनरूपं महत् कार्यम् ईषत्कार्यं कृतमासीत्, रामनिवेदनमात्रावशिष्टं यथा भवति तथा कृतमासीदित्यर्थः। अतः इदानीं क्रोधाभिभूतेन मया तस्य कार्यस्य मूलक्षयः कृतः न संशय इति योजना ॥ ११ ॥ ननु सीताविनाशनिश्चयस्ते कथम् ? तत्राह–विनष्टेति ॥ १२ ॥ १३ ॥ दद्मि ददामि ॥१४॥१५॥ अनवस्थितम् अव्यवस्थितम् ॥१६॥ राजसं

रजोगुणनिबन्धनचेष्टाविशेषम् । अनीशं नियामकरहितम्, स्वतन्त्रमिति यावत् । अनार्यभावं कुत्सितभावम् । ईश्वरेणापि रक्षणसमर्थेनापि । रागात् मात्सर्यात् । "रागोऽनुरागे मात्सर्ये रक्तवर्णे कुसुम्भके" इति यादवः । यद्वा रागात् रजोगुणात् । आग्रहादिति यावत् ॥ १७–२१ ॥ इतीति । निमित्ता

विनष्टायां तु सीतायां तावुभौ विनशिष्यतः । तयोर्विनाशे सुग्रीवः सबन्धुर्विनशिष्यति ॥१८॥ एतदेव वचः श्रुत्वा भरतो भ्रातृवत्सलः । धर्मात्मा सहशत्रुघ्नः कथं शक्ष्यति जीवितुम् ॥१९॥ इक्ष्वाकुवंशे धर्मिष्ठे गते नाशमसंशयम् । भविष्यन्ति प्रजाः सर्वाः शोकसन्तापपीडिताः ॥२०॥ तदहं भाग्यरहितो लुप्तधर्मार्थसंग्रहः । रोषदोषपरीतात्मा व्यक्तं लोकविनाशनः ॥२१॥ इति चिन्तयस्तस्य निमित्तान्युपपेदिरे । पूर्वमप्युपलब्धानि साक्षात्पुनरचिन्तयत् ॥ २२ ॥ अथवा चारुसर्वाङ्गी रक्षिता स्वेन तेजसा । न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्तते ॥२३॥ न हि धर्मात्मनस्तस्य भार्याममिततेजसः । स्वचारित्राभिगुप्तां तां स्प्रष्टुमर्हति पावकः ॥२४॥ नूनं रामप्रभावेन वैदेह्याः सुकृतेन च । यन्मां दहनकर्माऽयं नादहद्धव्यवाहनः ॥२५॥ त्रयाणां भरतादीनां भ्रातॄणां देवता च या । रामस्य च मनःकान्ता सा कथं विनशिष्यति ॥२६॥ यद्वा दहनकर्माऽयं सर्वत्र प्रभुरव्ययः । न मे दहति लाङ्गूलं कथमार्यां प्रधक्ष्यति ॥२७॥

न्युपपेदिरे शुभशंसिनिमित्तानि प्रादुर्बभूवुरित्यर्थः ॥ २२ ॥ एवं लोकदृष्ट्या अनर्थमाशङ्क्य तत्त्वदृष्ट्या समाधत्ते—अथवेत्यादिना । नाग्निरग्नौ प्रवर्तते अग्निरग्निं न दहतीत्यर्थः ॥ २३ ॥ २४ ॥ दहनकर्मा भस्मीकरणस्वभावः । यत्प्रभावादयं मां नादहत् स तामेव कथं दहतीत्यर्थः ॥ २५–३२ ॥



भावं रजोगुणनिबन्धनचेष्टाविशेषम् । अनीशं नियामकरहितम्, स्वतन्त्रमिति यावत् । ईश्वरेणापि रक्षणसमर्थेनापि । रागात् मात्सर्यात्, आग्रहाद्विति यावत् ॥१७॥ उभौ रामलक्ष्मणौ ॥ १८–२१ ॥ इतीति । निमित्तानि शुभशंसीनि । उपपेदिरे प्रादुर्बभूवुः ॥ २२ ॥ नाग्निरग्नौ प्रवर्तते अग्निरग्निं न दहतीत्यर्थः ॥ २३ ॥ २४ ॥ नून मिति । दहनकर्मा भस्मीकरणस्वभावः । अयं हव्यवाहनः । मां तत्किङ्करं मां यत् यतो नादहत् अतस्तां स्प्रष्टुं नार्हतीति पूर्वेण सम्बन्धः ॥ २५ ॥ त्रयाणां भरत लक्ष्मणशत्रुघ्नानां देवतात्वात्तस्यामगन्यप्रवृत्ती रामभयाच्चेति भावः ॥ २६ ॥ सर्वत्र प्रभुरपि यत्सेवकत्वान्मे लांगूलं न दहति ततस्तां कथं प्रधक्ष्यति ? ॥ २७ ॥

विस्मयोऽद्भुत एव न इति। अयं विस्मयः अद्भुत एव। 'अद्भुतमाश्चर्यं कल्याणं च' इत्युणादिवृत्तिः। यद्वा विस्मयः आश्चर्यम्। अद्भुतः अभूतपूर्व इत्यर्थः। अद्भुतः अद्भुतरसः। तस्य स्थायीभावो विस्मयः। तथा च अद्भुत एव अद्भुतरसतां प्राप्त एव महानयं विस्मयः, न विस्मयमात्र इत्यर्थः ॥ ३३ ॥

पुनश्चाचिन्तयत्तत्र हनुमान् विस्मितस्तदा। हिरण्यनाभस्य गिरेर्जलमध्ये प्रदर्शनम् ॥ २८ ॥ तपसा सत्यवाक्येन अनन्यत्वाच्च भर्तरि। अपि सा निर्दहेदग्निं न तामग्निः प्रधक्ष्यति ॥ २९ ॥ स तथा चिन्तयंस्तत्र देव्या धर्मपरिग्रहम्। शुश्राव हनुमान् वाक्यं चारणानां महात्मनाम् ॥ ३० ॥ अहो खलु कृतं कर्म दुष्करं हि हनूमता। अग्निं विसृजता ऽभीक्ष्णं भीमं राक्षसवेश्मनि॥ ३१ ॥ प्रपलायितरक्षःस्त्रीबालवृद्धसमाकुला। जनकोलाहलाध्माता क्रन्दन्तीवाद्रिकन्दरे ॥ ३२ ॥ दग्धेयं नगरी सर्वा साट्टप्राकारतोरणा। जानकी न च दग्धेति विस्मयोऽद्भुत एव नः ॥ ३३ ॥ स निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः। ऋषिवाक्यैश्च हनुमानभवत् प्रीतमानसः ॥ ३४ ॥ ततः कपिः प्राप्तमनोरथार्थस्तामक्षतां राजसुतां विदित्वा। प्रत्यक्षतस्तां पुनरेव दृष्ट्वा प्रतिप्रयाणाय मतिं चकार ॥ ३५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

निमित्तैः दक्षिणाक्षिस्पन्दादिभिः। दृष्टार्थैः दृष्टफलसंवादैः। कारणैः सीतापातिव्रत्यरामप्रभावादिभिः। ऋषिवाक्यैः चारणवाक्यैः ॥ ३४ ॥ पूर्वं देवीप्रभावात्सिन्धौ मद्विश्रान्तिनिमित्तगिरिदर्शनहेतुनापि देवीमग्निर्न दहतीत्याह—पुनश्चेति। तत्र तस्मिन् समये। विस्मितो हनुमान् जलमध्ये सागरान्तर्देशे। हिरण्यनाभस्य गिरेः प्रदर्शनं पुनरचिन्तयत्। एतेन पर्वतादीनामपि सर्वेषां रामाज्ञावशवर्तित्वं सूचितम्। तेन सीताया नाग्नेर्भीतिरिति सूचितम् ॥ २८ ॥ २९ ॥ देव्या धर्मपरिग्रहम्, धर्मप्रभावमित्यर्थः। चिन्तयन् हनुमान् चारणानां वाक्यं शुश्रावेति सम्बन्धः ॥ ३०–३२ ॥ विस्मयः आश्चर्यम्। अद्भुतः अभूतपूर्व इत्यर्थः ॥ ३३ ॥ निमित्तैः दक्षिणाक्षिस्पन्दनादिभिः। कारणैः सीतापातिव्रत्यरामप्रभावादिभिः। ऋषिवाक्यैः चारणवाक्यैरित्यर्थः। दृष्टार्थैः दृष्टफलसंवादैः ॥ ३४ ॥ विदित्वा

स०—सः हनुमान्। धर्मपरिग्रहं धारकत्वाद्धर्मो भगवान् रामः, तत्परिग्रहं भार्याम्। चिन्तयन् देव्या विषये चारणानां शुश्राव, वच इति शेषः। धर्मपरिग्रहं रक्षकधर्मसम्पत्तिं वा ॥ ३० ॥ प्राप्तमनोरथार्थः प्राप्तसीतादर्शनरूपमनोरथफलः ॥ ३५ ॥

चारणवाक्यैर्विदित्वा पुनः प्रत्यक्षं दृष्ट्वा ततः प्रतिप्रयाणार्थं मतिं चकार, प्रतियास्यामीति सङ्कल्पितवानित्यर्थः ॥ ३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

ततस्तु शिंशुपामूले जानकीं पर्यवस्थिताम् । अभिवाद्याब्रवीद्दिष्ट्या पश्यामि त्वामिहाक्षताम् ॥ १ ॥ ततस्तं प्रस्थितं सीता वीक्षमाणा पुनः पुनः । भर्तृस्नेहान्वितं वाक्यं हनुमन्तमभाषत ॥ २ ॥ काममस्य त्वमेवैकः कार्यस्य परिसाधने । पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ ३ ॥ शरैस्तु सङ्कुलां कृत्वा लङ्कां परबलार्दनः । मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ ४ ॥ तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः । भवत्याहवशूरस्य तथा त्वमुपपादय ॥ ५ ॥ तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् । निशम्य हनुमांस्तस्या वाक्यमुत्तरमब्रवीत् ॥ ६ ॥ क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्वृतः । यस्ते युधि विजित्यारीन् शोकं व्यपनयिष्यति ॥ ७ ॥ एवमाश्वास्य वैदेहीं हनुमान् मारुतात्मजः । गमनाय मतिं कृत्वा वैदेहीमभ्यवादयत् ॥ ८ ॥

॥ १ ॥ प्रस्थितं प्रस्थानोद्युक्तम् ॥ २ ॥ वनभङ्गाक्षवधादिना हनुमतश्शक्तिं विज्ञाय असौ रामाय निवेद्य स्वयमेव सकलराक्षससंहारपूर्वकं मम नेता मा भूदित्यभिप्रायेणाह—काममिति । अस्य कार्यस्य सर्वराक्षसवधपूर्वकमत्प्रापणरूपकार्यस्य । बलोदयः सत्त्वप्रकर्षः, सैन्योत्थापनं वा । ते यशस्यः यशस्करः । न तु रामस्येति भावः ॥३॥ तर्हि रामस्य किं यशस्करमित्यत्राह—शरैरिति । तत् स्वपराक्रमेण मन्नयनम् । तस्य काकुत्स्थस्य । सदृशम् । एतदेव ममाभिलषितम्, अन्यथा मे कथं वीरपत्नीत्वमिति भावः ॥ ४ ॥ तच्च त्वदायत्तमेवेत्याह—तद्यथेति । विक्रान्तं विक्रमणम् ॥५-८॥



पूर्वं चारणैर्विदित्वा पुनः प्रत्यक्षतो दृष्ट्वा ततः प्रतिप्रयाणाय मतिं चकारेति सम्बन्धः ॥ ३९ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां पञ्चपञ्चाशः सर्गः ॥ ५५ ॥ १ ॥ २ ॥ काममिति । अस्य कार्यस्य सर्वराक्षससंहारपूर्वकमत्प्रापणरूपकार्यस्य परिसाधने त्वमेक एव कामं पर्याप्तः, तथापि बलोदयः ते तवैव । यशस्यः यशस्करः, न तु रामस्येति शेषः ॥३॥ तर्हि रामस्य किं यशस्करमित्यत्राह—शरैरिति ॥४॥ तदिति । विक्रान्तं विक्रमणम् ॥५-८॥

अरिष्टम् अरिष्टाख्यम् ॥ ९ ॥ अथैनं गिरिं [illegible] । पद्मकाः [illegible] । परिधानालेख्यस्थानीयतया विशेषणमिति बोध्यम् । सपरिधानमिव, स्थितमिति शेषः । उत्तरार्धे सोत्तरीयत्वोत्प्रेक्षणात् ॥१०॥ शुभैः तरुणैः । करैः अंशुभिः हस्तैश्च । बोध्यमानमिव स्थितम् । तत्र ज्ञापकमाह उद्धूतैरिति । उद्धूतैः उद्गतैः लोचनैरिव स्थितैः धातुभिः उन्मिषन्तं पश्यन्तमिव स्थितम् ॥ ११ ॥ तोयौघनिस्वनैः गिरिनदीघोषैः । मन्द्रैः गम्भीरैः । प्राधीतमिव प्राध्येतुं प्रवृत्तमिव । आदिकर्मणि कर्तरि क्तः । अधीयानमिवेत्यर्थः । प्रस्रवणस्वनैः पर्वतमूलाद्बहिः प्रवहन्ति

ततः स कपिशार्दूलः स्वामिसन्दर्शनोत्सुकः । आरुरोह गिरिश्रेष्ठमरिष्टमरिमर्दनः ॥९॥ तुङ्गपद्मकजुष्टाभिर्नीलाभिर्वनराजिभिः । सोत्तरीयमिवाम्भोदैः शृङ्गान्तरविलम्बिभिः ॥ १० ॥ बोध्यमानमिव प्रीत्या दिवाकरकरैः शुभैः । उन्मिषन्तमिवोद्धूतैर्लोचनैरिव धातुभिः ॥ ११ ॥ तोयौघनिस्वनैर्मन्द्रैः प्राधीतमिव पर्वतम् । प्रगीतमिव विस्पष्टैर्नानाप्रस्रवणस्वनैः ॥१२॥ देवदारुभिरत्युच्चैरूर्ध्वबाहुमिव स्थितम् । प्रपातजलनिर्घोषैः प्राक्रुष्टमिव सर्वतः ॥१३॥ वेपमानमिव श्यामैः कम्पमानैः शरद्घनैः । वेणुभिर्मारुतोद्धूतैः कूजन्तमिव कीचकैः ॥ १४ ॥

जलानि प्रस्रवणानि तेषां स्वनैः । प्रगीतमिव गातुं प्रवृत्तमिव, गायन्तमिवेत्यर्थः । आदिकर्मणि कर्तरि क्तः ॥ १२ ॥ ऊर्ध्वबाहुमिवेति तपोविशेष उच्यते । प्रपातजलनिर्घोषैः प्रपाताः भृगवः । "प्रपातस्त्वतटो भृगुः" इत्यमरः । तेषां जलानि तेभ्यः पतन्तो निर्झरा इत्यर्थः । तेषां निर्घोषैः प्राक्रुष्टमिव आक्रोशन्तमिव । पूर्ववत् क्तः ॥१३॥ शरदि ये घना भवन्ति ते शरद्घनाः । शरत्कालपुष्पिणस्सप्तच्छदादयः तैः शुभ्रीभूतैः जरया कम्पमानमिव स्थितमित्यर्थः । शरद्धनैरिति पाठे बहुवार्षिकवृक्षैरित्यर्थः । शरवणैरिति वाऽर्थः । तकारान्तोऽप्यस्ति । शरवणे जातस्य कृपाचार्यस्य शारद्वत इति नाम

अरिष्टम् अरिष्टाख्यं पर्वतम् ॥ ९ ॥ पद्मकः वृक्षविशेषः । सोत्तरीयमिव सपरिधानमिव ॥ १० ॥ उद्धूतैः उद्गतैः ॥ ११ ॥ प्राधीतमिव अध्येतुमुपक्रान्तमिव । कर्तरि क्तः । प्रगीतं गातुमुपक्रान्तम्, गायन्तमिवेत्यर्थः । प्रस्रवणस्वनैः पर्वतमूलाद्बहिः प्रवहन्ति जलानि प्रस्रवणानि तेषां स्वनैः ॥ १२ ॥ प्रपातजलनिर्घोषैः प्रपाताः भृगवः तेषां जलानि भृगुदेशेभ्यः पतन्तो निर्झरा इत्यर्थः । तेषां निर्घोषैः उत्क्रुष्टं क्रोशन्तमिवेत्यर्थः । कर्तरि क्तः ॥ १३ ॥ शरदि

इति ॥ १४ ॥ आशीविषोत्तमैः निश्वसन्तमिव दर्शनात्। कीचकैः कीचकाख्यैर्वेणुभिः। तदाहामरः—"वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इति ॥ १४ ॥ आशीविषोत्तमैः निश्वसन्तमिव दर्शनात् । कीचकैः कीचकाख्यैर्वेणुभिः । गह्वरैः गुहाभिः ध्याननिरुद्धेन्द्रिय सर्पश्रेष्ठनिश्वासैर्निश्वसन्तमिव । अमर्षात् हनुमति क्रोधादित्यर्थः । नीहारकृतगम्भीरैः नीहारपूर्णैः गम्भीरैश्च । गह्वरैः गुहाभिः ध्याननिरुद्धेन्द्रिय

निःश्वसन्तमिवामर्षाद्घोरैराशीविषोत्तमैः । नीहारकृतगम्भीरैर्ध्यायन्तमिव गह्वरैः ॥ १५ ॥ मेघपादनिभैः पादैः प्रक्रान्तमिव सर्वतः । जृम्भमाणमिवाकाशे शिखरैरभ्रमालिभिः ॥ १६ ॥ कूटैश्च बहुधाकीर्णैः शोभितं बहुकन्दरैः । सालतालाश्वकर्णैश्च वंशैश्च बहुभिर्वृतम् ॥ १७ ॥ लतावितानैर्विततैः पुष्पवद्भिरलंकृतम् । नानामृगगणाकीर्णं धातुनिष्यन्दभूषितम् । बहुप्रस्रवणोपेतं शिलासञ्चयसङ्कटम् ॥ १८ ॥ महर्षियक्षगन्धर्वकिन्नरोरगसेवितम् । लतापादपसङ्घातं सिंहाध्युषितकन्दरम् ॥ १९ ॥ व्याघ्रसङ्घसमाकीर्णं स्वादुमूलफलद्रुमम् ॥ २० ॥ तमारुरोह हनुमान् पर्वतं पवनात्मजः । रामदर्शनशीघ्रेण प्रहर्षेणाभिचोदितः ॥ २१ ॥ तेन पादतलाक्रान्ता रम्येषु गिरिसानुषु । सघोषाः समशीर्यन्त शिलाश्चूर्णीकृतास्ततः ॥ २२ ॥

स्थानीयैः ध्यायन्तमिव स्थितम् । निरुद्धेन्द्रियद्वारा ध्यानारूढमिव स्थितमित्यर्थः ॥१५॥ मेघपादनिभैः मेघावरोहनिभैः पादैः प्रत्यन्तपर्वतैः । प्रक्रान्तमिव गन्तुमुद्युक्तमिव । पूर्ववत् क्तः । जृम्भमाणमिव गात्रभङ्गं कुर्वाणमिव । अभ्रमालिभिः मेघमालावद्भिः ॥ १६ ॥ बहुधाकीर्णैः हनुमत्पादस्पर्शेन शिथिलैरित्यर्थः । धातुनिष्यन्दः धातुस्रावः । लतापादपानां सङ्घातो यस्मिन्निति व्यधिकरणबहुव्रीहिः ॥ १७–२० ॥ रामदर्शनशीघ्रेण रामदर्शनत्वरावता ॥ २१ ॥ चूर्णीकृताः समशीर्यन्त, यथा चूर्णीकृता भवन्ति तथा समशीर्यन्तेत्यर्थः ॥ २२ ॥

वनैः शरद्वनैः सप्तपर्णादिशारदवृक्षसङ्घैरित्यर्थः ॥ १४ ॥ नीहारकृतानि कृतनीहाराणि, नीहाररुद्धानीत्यर्थः । तैर्गम्भीरैश्च गह्वरैर्ध्यायन्तमिव निरुद्धेन्द्रियद्वारा ध्यानारूढमिव स्थितमित्यर्थः ॥१५॥ मेघपादनिभैः पादैः मेघपादाः मेघप्ररोहाः तेषां निभैः पादैः प्रत्यन्तपर्वतैः । प्रक्रान्तमिव गच्छन्तमिव । जृम्भमाणमिव गात्रभङ्गं कुर्वाणमिव । अभ्रमालिभिः अभ्रङ्कषैः ॥ १६ ॥ १७ ॥ धातुनिष्यन्दभूषितं धातुनिष्यन्दाः धातुनिर्गमाः । शिलासञ्चयसङ्कटं शिलाबाहुल्यनिरन्ध्रम् ॥ १८–२० ॥ रामदर्शनशीघ्रेण उत्कटेन । दक्षिणादुत्तरं पारं, जिगमिषुरिति शेषः ॥ २१–२८ ॥

दक्षिणात् दक्षिणपारात् । प्रार्थयन्, गन्तुमिति शेषः ॥ २३ ॥ २४ ॥ स हरिशार्दूल इति सम्बन्धः । पितृतुल्यवेगवत्त्वं सूचयति–मारुतस्येति ॥ २५ ॥ तैर्भूतैः तत्रत्यजन्तुभिः ॥ २६ ॥ रुग्णाः शीर्णा इति यावत् । शक्रायुधहताः वज्रहताः ॥ २७ ॥ नभो भिन्दन् भिन्दन्निव । महत्तायां

स तमारुह्य शैलेन्द्रं व्यवर्धत महाकपिः। दक्षिणादुत्तरं पारं प्रार्थयन् लवणाम्भसः ॥ २३ ॥ अधिरुह्य ततो वीरः पर्वतं पवनात्मजः। ददर्श सागरं भीमं मीनोरगनिषेवितम् ॥ २४ ॥ स मारुत इवाकाशं मारुतस्यात्मसम्भवः । प्रपेदे हरिशार्दूलो दक्षिणादुत्तरां दिशम् ॥ २५ ॥ स तदा पीडितस्तेन कपिना पर्वतोत्तमः । ररास सह तैर्भूतैः प्रविशन् वसुधातलम् । कम्पमानैश्च शिखरैः पतद्भिरपि च द्रुमैः ॥ २६ ॥ तस्योरुवेगोन्मथिताः पादपाः पुष्पशालिनः । निपेतुर्भूतले रुग्णाः शक्रायुधहता इव ॥ २७ ॥ कन्दरान्तरसंस्थानां पीडितानां महौजसाम् । सिंहानां निनदो भीमो नभो भिन्दन् स शुश्रुवे ॥ २८ ॥ स्रस्तव्याविद्धवसना व्याकुलीकृतभूषणाः । विद्याधर्यः समुत्पेतुः सहसा धरणीधरात् ॥ २९ ॥ अतिप्रमाणा बलिनो दीप्तजिह्वा महाविषाः । निपीडितशिरोग्रीवा व्यवेष्टन्त महाहयः ॥ ३० ॥ किन्नरोरगगन्धर्वयक्षविद्याधरास्तदा। पीडितं तं नगवरं त्यक्त्वा गगनमास्थिताः ॥ ३१ ॥ स च भूमिधरः श्रीमान् बलिना तेन पीडितः । सवृक्षशिखरोदग्रः प्रविवेश रसातलम् ॥ ३२ ॥ दशयोजनविस्तारस्त्रिंशद्योजनमुच्छ्रितः । धरण्यां समतां यातः स बभूव धराधरः ॥ ३३ ॥

तात्पर्यम् ॥ २८ ॥ स्रस्तानि व्याविद्धानि च वसनानि यासां ताः स्रस्तव्याविद्धवसनाः ॥ २९ ॥ निपीडितशिरोग्रीवाः, शिथिलपतितशिलातलैरिति शेषः ॥ ३० ॥ ३१ ॥ सवृक्षशिखरोदग्रः सवृक्षैः शिखरैः उदग्रः श्रेष्ठः ॥ ३२॥ ३३ ॥

त्रस्तव्याविद्धवसना इति पाठः । त्रस्तेन त्रासेन व्याविद्धानि व्यत्यस्तानि वसनानि यासां ताः ॥ २९ ॥ व्यवेष्टन्त कुण्डलीकृतशरीरा अजायन्त । व्यचेष्टन्तेति पाठे–पीडया अलुठन्नित्यर्थः ॥ ३० ॥ ३१ ॥ सवृक्षशिखरोदग्रः सवृक्षैः शिखरैः उदग्रः उन्नतः ॥ ३२ ॥ ३३ ॥

कल्लोलास्फालवेलान्तं तरङ्गैरास्फाल्यमानतीरोपान्तम् ॥३४॥ इति श्रीगोविन्द० श्रीरामा० शृङ्गार० सुन्दरकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥५६॥
'उत्पपात नभो हरिः' इत्युक्तम् । तल्लङ्घनं रूपकेण चतुर्भिर्वर्णयति—सचन्द्रेत्यादिना । कारण्डवः जलकुक्कुटः । कादम्बः कलहंसः । "कादम्बः कल

स लिलङ्घयिषुर्भीमं सलीलं लवणार्णवम् । कल्लोलास्फालवेलान्तमुत्पपात नभो हरिः ॥ ३४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

[ आप्लुत्य च महावेगः पक्षवानिव पर्वतः । ] सचन्द्रकुमुदं रम्यं सार्ककारण्डवं शुभम् । तिष्यश्रवणकादम्बमभ्रशैवालशाद्वलम् ॥ १ ॥ पुनर्वसुमहामीनं लोहिताङ्गमहाग्रहम् । ऐरावतमहाद्वीपं स्वातीहंसविलोलितम् ॥ २ ॥ वातसङ्घातजातोर्मिचन्द्रांशुशिशिराम्बुमत् । भुजङ्गयक्षगन्धर्वप्रबुद्धकमलोत्पलम् ॥ ३ ॥ हनुमान् मारुतगतिर्महानौरिव सागरम् । अपारमपरिश्रान्तः पुप्लुवे गगनार्णवम् ॥ ४ ॥

हंसः स्यात् " इत्यमरः । अभ्रशैवालशाद्वल मेघस्य शैवालत्वेन पर्यन्तस्थशाद्वलत्वेन च रूपणम् ॥१॥ लोहिताङ्गः अङ्गारकः स एव महाग्रहः महाग्राहः यस्य तम् । ऐरावतस्याभ्रमातङ्गत्वेनाभ्रगामित्वात्तत्र संभवः । विलोलितम् अवगाढम् ॥ २ ॥ वातसङ्घातजातोर्मय एव चन्द्रांशवः तैः शीतलजलवत् । भुजङ्गादीनां कमलोत्पलत्वेन रूपणं तत्तद्वर्णभेदेन । अत्र गगनस्यार्णवत्वेन चन्द्रादीनां तदवयवकुमुदादित्वेन च रूपणात्सावयवरूपकम् । तस्य नौरिव

कल्लोलास्फालवेलान्तम् आस्फाल्यत इत्यास्फालः कल्लोलानामास्फालो वेलान्तो यस्य तम् ॥ ३४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां षट्पञ्चाशः सर्गः ॥५६॥ [लङ्घनीयं गगनमर्णवत्वेन निरूपयति—आप्लुत्येत्यादिना ।] चन्द्र एव कुमुदम् । कारण्डवः जलपक्षिविशेषः । कादम्बः कलहंसः ॥ १ ॥ लोहिताङ्गः अङ्गारकः । ऐरावतः इन्द्रगजः ॥ २ ॥ चन्द्रांशुशिशिराम्बुमत् चन्द्रांशव एव शिशिराम्बु तदस्यास्तीति तद्वत् । भुजङ्गयक्षगन्धर्वा एव प्रबुद्धकमलोत्पलानि यस्मिन् तत् । अत्र गगनस्यार्णवत्वेन चन्द्रादीनां तदवयवकुमुदादित्वेन च निरूपणात् सावयवरूपकम् ॥ ३ ॥ ४ ॥

स०–गगनार्णवमिति नपुंसकत्वमार्षम् । नपुंसको वाऽर्णवशब्दः । " असमदीयं गुणार्णवम् " इत्यनुव्याख्यानसुधायां पूर्वमाचारकिंचन्तताामाश्रित्यानन्तरं पचाद्यचि अर्णवमिति त्रिलिङ्गः साधुरित्युक्तेः । गगनार्णवः प्रसिद्धार्णव इव । न पुनस्स एवेति आचारकिंचन्ततादिकमुपपन्नम् ॥ ४ ॥

इत्युपमया तिलतण्डुलवत्संसृष्टिः ॥३॥४॥ अथ तदेवोत्प्रेक्षया वर्णयति—ग्रसमान इवेत्यादिना ॥५॥६॥ पाण्डरेति । व्यक्ताव्यक्तवाचित्वेन अरुणशब्दयोः कथंचिदपौनरुक्त्यमुन्नेयम् । यद्वा "अरुणः कृष्णलोहितः" इत्यमरशेषः । महाभ्राणि चकाशिरे, हनुमत्सम्पर्कादित्यर्थः । अन्यथा वाजपेयशरद्वर्णनवत्

ग्रसमान इवाकाशं ताराधिपमिवोल्लिखन् । हरन्निव सनक्षत्रं गगनं सार्कमण्डलम् ॥५॥ मारुतस्यात्मजः श्रीमान् कपिर्व्योमचरो महान् । हनुमान् मेघजालानि विकर्षन्निव गच्छति ॥ ६ ॥ पाण्डरारुणवर्णानि नीलमाञ्जिष्ठकानि च । हरितारुणवर्णानि महाभ्राणि चकाशिरे ॥ ७ ॥ प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः । प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥ ८ ॥ विविधाभ्रघनापन्नगोचरो धवलाम्बरः । दृश्यादृश्यतनुर्वीरस्तदा चन्द्रायतेऽम्बरे ॥ ९ ॥ तार्क्ष्यायमाणो गगने बभासे वायुनन्दनः । दारयन् मेघवृन्दानि निष्पतंश्च पुनः पुनः ॥ १० ॥ नदन्नादेन महता मेघस्वनमहास्वनः । प्रवरान् राक्षसान् हत्वा नाम विश्राव्य चात्मनः ॥ ११ ॥ आकुलां नगरीं कृत्वा व्यथयित्वा च रावणम् । अर्दयित्वा बलं घोरं वैदेहीमभिवाद्य च ॥१२॥ आजगाम महातेजाः पुनर्मध्येन सागरम् ॥१३॥ पर्वतेन्द्रं सुनाभं च समुपस्पृश्य वीर्यवान् । ज्यामुक्त इव नाराचो महावेगोऽभ्युपागतः ॥१४॥ स किंचिदनु संप्राप्तः समालोक्य महागिरिम् । महेन्द्रं मेघसङ्काशं ननाद हरिपुङ्गवः ॥ १५ ॥

अभ्रवर्णनस्यासङ्गतत्वापातः । हनुमतस्तेजस्वीत्यनेन मेघानां नानावर्णत्वापत्तिः सूर्येन्दुसम्पर्कवत्॥७॥८॥ विविधेष्वभ्रघनेषु मेघसङ्घातेषु । आपन्नगोचरः प्राप्तविषयः । लब्धमार्ग इति यावत् । धवलाम्बरः शुक्लवासाः । दृश्यादृश्यतनुः मेघान्तःप्रवेशनिष्क्रमणाभ्यामिति भावः । चन्द्रायते चन्द्र इवाचरति ॥९॥ तार्क्ष्य इवाचरन् तार्क्ष्यायमाणः । उभयत्र " उपमानादाचारे " " कर्तुः क्यङ् स लोपश्च " इति क्यङ् ॥ १०—१३ ॥ सुनाभं मैनाकम् ॥१४॥ किंचि

ताराधिपमुल्लिखन्निव, नखैरिति शेषः । हरन्निव गृह्णन्निव ॥५॥६॥ महाभ्राणीत्यस्य कपिना कृष्यमाणानीति शेषः ॥ ७ ॥ ८ ॥ विविधेति । विविधाभ्रघनापन्नगोचरः विविधेष्वभ्रघनेषु मेघसङ्घातेष्वापन्नः प्राप्तः गोचरो मार्गो येन सः । दृश्यादृश्यतनुः मेघान्तःप्रवेशनिष्क्रमाभ्यामिति भावः ॥ ९—१३ ॥ सुनाभं मैनाकम्॥१४—१७॥

दनुसंप्राप्तः मैनाकात्परं कंचित् प्रदेशं प्राप्तः ॥ १५ ॥ १६ ॥ लालसः साभिलाषः । तं देशं सुहृदावाससमीपप्रदेशम् ॥ १७ ॥ नानद्यमानस्य पुनः पुनर्भृशं नदत इत्यर्थः । फलतीव दलतीव ॥ १८ ॥ वातनुन्नस्य वातसङ्घट्टितस्य । घोषम् ऊरुवेगमिति, ऊरुवेगजन्यं घोषमित्यर्थः ॥ १९ ॥ २० ॥

स पूरयामास कपिर्दिशो दश समन्ततः । नदन्नादेन महता मेघस्वनमहास्वनः ॥ १६ ॥ स तं देशमनुप्राप्तः सुहृद्दर्शनलालसः । ननाद हरिशार्दूलो लाङ्गूलं चाप्यकम्पयत् ॥१७॥ तस्य नानद्यमानस्य सुपर्णचरिते पथि । फलतीवास्य घोषेण गगनं सार्कमण्डलम् ॥ १८ ॥ ये तु तत्रोत्तरे तीरे समुद्रस्य महाबलाः । पूर्वं संविष्ठिताः शूरा वायुपुत्रदिदृक्षवः ॥ १९ ॥ महतो वायुनुन्नस्य तोयदस्येव गर्जितम् । शुश्रुवुस्ते तदा घोषमूरुवेगं हनूमतः ॥ २० ॥ ते दीनमनसः सर्वे शुश्रुवुः काननौकसः । वानरेन्द्रस्य निर्घोषं पर्जन्यनिनदोपमम् ॥२१॥ निशम्य नदतो नादं वानरास्ते समन्ततः । बभूवुरुत्सुकाः सर्वे सुहृद्दर्शनकाङ्क्षिणः ॥ २२ ॥ जाम्बवान् स हरिश्रेष्ठः प्रीतिसंहृष्टमानसः । उपामन्त्र्य हरीन् सर्वानिदं वचनमब्रवीत् ॥२३॥ सर्वथा कृतकार्योऽसौ हनूमान्नात्र संशयः । न ह्यस्याकृतकार्यस्य नाद एवंविधो भवेत् ॥२४॥ तस्य बाहूरुवेगं च निनादं च महात्मनः । निशम्य हरयो हृष्टाः समुत्पेतुस्ततस्ततः ॥ २५ ॥ ते नगाग्रान्नगाग्राणि शिखराच्छिखराणि च । प्रहृष्टाः समपद्यन्त हनूमन्तं दिदृक्षवः ॥ २६ ॥ ते प्रीताः पादपाग्रेषु गृह्य शाखाः सुविष्ठिताः । वासांसीव प्रशाखाश्च समाविध्यन्त वानराः ॥ २७ ॥

ते दीनमनस इति । अनिष्टश्रवणशङ्कयेति भावः ॥ २१–२४ ॥ तस्येति । निशम्य ज्ञात्वेत्यर्थः । यद्वा दृष्ट्वा चेत्यध्याहार्यम् । अन्यथा बाहूरुवेगंपदानन्वयात् ॥२५॥ समुत्पेतुरित्युक्तं विवृणोति–ते नगाग्रादिति । नगाग्रात् वृक्षाग्रात् । समपद्यन्त सङ्घीभूताः ॥२६॥ प्रीता इति हेतुगर्भं विशेषणम् ।



फलतीव दलतीव । ये पूर्वं संविष्ठिताः ते तोयदनिस्वनमिव ऊरुवेगं तज्जन्यं घोषं शुश्रुवुरित्यन्वयः ॥ १८–२० ॥ वानरेन्द्रस्य निर्घोषं तदीयसिंहनादम् ॥ २१ ॥ सुहृद्दर्शनकाङ्क्षिणः तेन शब्देन हनुमानेवैतीति निश्चित्य तद्दर्शनलालसाः ॥ २२–२४ ॥ बाहूरुवेगं तज्जन्यशब्दं निनादं च कण्ठशब्दं च ॥ २५ ॥ नगाग्रात् स्वाश्रयादूर्ध्वदेशस्थानि नगाग्राणीत्यर्थः ॥ २६ ॥ पादपाग्रेषु निष्ठिताः प्रशाखाः शाग्रशाखाः वासांसीव समाविध्यन्त व्याधुन्वन् ॥ २७ ॥ २८ ॥

यथा मनुष्याः दूरस्थस्वकीयानयनाय वासांसि धून्वन्ति तथा [illegible] गृहीत्वा प्रशाखाः प्रागग्रशाखाः समाविद्धयन्त पर्यभ्रामयन् ॥ २७ ॥२८॥ अभ्रघनसङ्काशम् अभ्रसमूहतुल्यम् ॥ २९ ॥ निपपात निर्भरमाक्रान्तवान् ॥ ३० ॥ पपातेति । अच्छिन्नपक्षस्य

गिरिगह्वरसंलीनो यथा गर्जति मारुतः । एवं जगर्ज बलवान् हनूमान् मारुतात्मजः ॥ २८ ॥ तमभ्रघनसङ्काशमापतन्तं महाकपिम् । दृष्ट्वा ते वानराः सर्वे तस्थुः प्राञ्जलयस्तदा ॥ २९ ॥ ततस्तु वेगवांस्तस्य गिरेर्गिरिनिभः कपिः । निपपात महेन्द्रस्य शिखरे पादपाकुले ॥ ३० ॥ हर्षेणापूर्यमाणोऽसौ रम्ये पर्वतनिर्झरे । छिन्नपक्ष इवाकाशात् पपात धरणीधरः ॥ ३१ ॥ ततस्ते प्रीतमनसः सर्वे वानरपुङ्गवाः । हनुमन्तं महात्मानं परिवार्योपतस्थिरे । परिवार्य च ते सर्वे परां प्रीतिमुपागताः ॥ ३२ ॥ प्रहृष्टवदनाः सर्वे तमरोगमुपागतम् । उपायनानि चादाय मूलानि च फलानि च । प्रत्यर्चयन् हरिश्रेष्ठं हरयो मारुतात्मजम् ॥ ३३ ॥ हनुमांस्तु गुरून् वृद्धान् जाम्बवत्प्रमुखांस्तदा । कुमारमङ्गदं चैव सोऽवन्दत महाकपिः ॥ ३४ ॥ स ताभ्यां पूजितः पूज्यः कपिभिश्च प्रसादितः । दृष्टा सीतेति विक्रान्तः संक्षेपेण न्यवेदयत् ॥ ३५ ॥

पातासम्भवाच्छिन्नपक्ष इत्युक्तम् ॥३१॥३२॥ प्रहृष्टवदनाः प्रसन्नमुखाः, आसन्निति शेषः । अरोगं कुशलिनमित्यर्थः । उपायनानि उपहारान् ॥३३॥ हनुमांस्त्वित्यादि । कुमारमङ्गदं चेति, स्वामित्वादिति भावः ॥ ३४–३९ ॥

अभ्रघनसङ्काशं मेघसमूहसदृशम् ॥ २९ ॥ ततो गिरेः अरिष्टाख्याद्रेः प्लुतः कपिः तस्य महेन्द्रस्य गिरेः शिखरे निपपात, अनेनाविश्रममागमनं ध्वनितम् ॥ ३० ॥ छिन्नपक्षो धरणीधर इवाकाशात्पपात । हर्षेणापूर्यमाणः पूर्यमाणहृदयः । पर्वतनिर्झरे निर्झरप्रवर्तके शिखरे इत्यर्थ इत्येके । श्रमनिवृत्तये जल एव पतित इत्यन्ये ॥ ३१–३४ ॥ ताभ्यां जाम्बवदङ्गदाभ्याम् । प्रसादितः प्रसन्नदृष्ट्या कारितात्मनिरीक्षणः ॥ ३५–४१ ॥

स०–छिन्नपक्षः धरणीधरः पर्वत इव पपात, अनेन मान्द्याभावः सूच्यते । छिदिति भावे सम्पदादिक्विबन्तः । छित् छिदा न ययोस्तौ छिन्नौ । नशब्दो निषेधार्थकः । तस्य छिच्छब्दानन्तरत्वं जन इत्यादिवद् बोध्यम् । ततश्च अच्छिन्नौ पक्षौ यस्य सः । एवञ्चेत् हर्षापूर्यमाणता विवक्षितस्थललाभो विजयेनागमनं चेति बह्वर्थलाभो भवतीति बोध्यम् ॥३१॥ परां पूर्वप्रीतितोऽप्युत्कृष्टाम् । सन्तोषातिशयेन सर्वे इति द्विरुक्तिः । सर्वे रुद्रे । लुप्तोपमेयम् । ते दूताः त्रिपुरं हत्वा आयाते रुद्रे इति वा । “ सर्वो ह्येष रुद्रः ” इति श्रुतेः । “ सर्वश्शर्वः कालंजरः शिवः ” इति नामनिधानात् ॥ ३२ ॥

भवन् अभवन्। अनित्यत्वादडभावः ॥ ४० ॥ क्ष्वेलन्ति सिंहनादं कुर्वन्ति। नदन्ति अव्यक्तशब्दं कुर्वन्ति। गर्जन्ति वृषभनादं कुर्वन्ति। किलिकिलां स्वजात्युचितकिलिकिलाशब्दम् ॥ ४१ ॥ केचिदिति । अञ्चितायतदीर्घाणि अत्र दीर्घपदसन्निधानादायतपदं स्थूलपरम् । प्रविव्यधुः लाङ्गूला



निषसाद च हस्तेन गृहीत्वा वालिनः सुतम्। रमणीये वनोद्देशे महेन्द्रस्य गिरेस्तदा ॥३६॥ हनुमानब्रवीद्धृष्टस्तदा तान् वानरर्षभान् ॥३७॥ अशोकवनिकासंस्था दृष्टा सा जनकात्मजा। रक्ष्यमाणा सुघोराभी राक्षसीभिरनिन्दिता ॥३८॥ एकवेणीधरा बाला रामदर्शनलालसा। उपवासपरिश्रान्ता जटिला मलिना कृशा ॥३९॥ ततो दृष्टेति वचनं महार्थममृतोपमम् । निशम्य मारुतेः सर्वे मुदिता वानरा भवन् ॥४०॥ क्ष्वेलन्त्यन्ये नदन्त्यन्ये गर्जन्त्यन्ये महाबलाः। चक्रुः किलिकिलामन्ये प्रतिगर्जन्ति चापरे ॥४१॥ केचिदुच्छ्रितलाङ्गूलाः प्रहृष्टाः कपिकुञ्जराः। अञ्चितायतदीर्घाणि लांगूलानि प्रविव्यधुः ॥४२॥ अपरे च हनूमन्तं वानरा वारणोपमम्। आप्लुत्य गिरिशृङ्गेभ्यः संस्पृशन्ति स्म हर्षिताः ॥ ४३ ॥ उक्तवाक्यं हनूमन्तमङ्गदस्तमथाब्रवीत् । सर्वेषां हरिवीराणां मध्ये वचनमुत्तमम् ॥ ४४ ॥ सत्त्वे वीर्ये न ते कश्चित् समो वानर विद्यते। यदवप्लुत्य विस्तीर्णं सागरं पुनरागतः ॥ ४५ ॥ [जीवितस्य प्रदाता नस्त्वमेको वानरोत्तम। त्वत्प्रसादात् समेष्यामः सिद्धार्था राघवेण ह ॥] अहो स्वामिनि ते भक्तिरहो वीर्यमहो धृतिः। दिष्ट्या दृष्टा त्वया देवी रामपत्नी यशस्विनी ॥ ४६ ॥ दिष्ट्या त्यक्ष्यति काकुत्स्थः शोकं सीतावियोगजम्। ततोऽङ्गदं हनूमन्तं जाम्बवन्तं च वानराः ॥ ४७ ॥ परिवार्य प्रमुदिता भेजिरे विपुलाः शिलाः। श्रोतुकामाः समुद्रस्य लङ्घनं वानरोत्तमाः ॥ ४८ ॥

न्युद्धृत्य भूमावताडयन्नित्यर्थः ॥ ४२ ॥ अपरे चेति । संस्पृशन्ति आलिङ्गन्तीत्यर्थः ॥ ४३ ॥ ४४ ॥ सत्त्व इति। अवप्लुत्य विस्तीर्णमित्यङ्गदेतरव्यावृत्तिः। पुनरागत इत्यङ्गदव्यावृत्तिः ॥ ४५–५० ॥



अञ्चितायतदीर्घाणि दीर्घशब्दसन्निधानादायतशब्देन स्थौल्यमुच्यते ॥ ४२–४५ ॥ अहो इति । तत्र स्वामिभक्त्यादिकमाश्चर्यमित्यर्थः ॥ ४६–४८ ॥

कीर्तिमतेति हनुमद्विशेषणम् । यशस्विनेत्यङ्गदविशेषणम् । भृत्यकीर्त्या स्वामिनः कीर्तिः । अन्यथा पौनरुक्त्यात् । यद्वा बुद्धिमत्त्वजन्या कीर्तिः । शौर्यजन्यं यशः ॥ ५१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥

दर्शनं चापि लङ्कायाः सीताया रावणस्य च । तस्थुः प्राञ्जलयः सर्वे हनुमद्वदनोन्मुखाः ॥ ४९ ॥ तस्थौ तत्राङ्गदः श्रीमान् वानरैर्बहुभिर्वृतः । उपास्यमानो विबुधैर्दिवि देवपतिर्यथा ॥ ५० ॥ हनूमता कीर्तिमता यशस्विना तथा ऽङ्गदेनाङ्गदबद्धबाहुना । मुदा तदाध्यासितमुन्नतं महन्महीधराग्रं ज्वलितं श्रियाऽभवत् ॥५१॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

ततस्तस्य गिरेः शृङ्गे महेन्द्रस्य महाबलाः । हनुमत्प्रमुखाः प्रीतिं हरयो जग्मुरुत्तमाम् ॥ १ ॥ तं ततः प्रीतिसंहृष्टः प्रीतिमन्तं महाकपिम् । जाम्बवान् कार्यवृत्तान्तमपृच्छदनिलात्मजम् ॥ २ ॥ कथं दृष्टा त्वया देवी कथं वा तत्र वर्तते । तस्यां वा स कथंवृत्तः क्रूरकर्मा दशाननः ॥ ३ ॥ तत्त्वतः सर्वमेतन्नः प्रब्रूहि त्वं महाकपे । श्रुतार्थाश्चिन्तयिष्यामो भूयः कार्यविनिश्चयम् ॥४॥ यश्चार्थस्तत्र वक्तव्यो गतैरस्माभिरात्मवान् । रक्षितव्यं च यत्तत्र तद्भवान् व्याकरोतु नः ॥ ५ ॥ स नियुक्तस्ततस्तेन संप्रहृष्टतनूरुहः । प्रणम्य शिरसा देव्यै सीतायै प्रत्यभाषत ॥ ६ ॥

ततस्तस्येत्यादि ॥ १ ॥ तमिति । कार्यवृत्तान्तं कार्यविषयवृत्तान्तम्, सीतादर्शनविषयवृत्तान्तम् ॥ २ ॥ कथमिति । कथं केन प्रकारेण । कथंवृत्तः कीदृग्व्यापारः ॥ ३ ॥ तत्त्वत इति । तत्त्वकथनस्य प्रयोजनमाह–श्रुतार्था इत्यादि ॥ ४ ॥ यश्चेति । तत्र रामसन्निधौ योऽर्थो वक्तव्यः वक्तुमर्हः

विबुधैर्देवैरुपास्यमान इत्यर्थः ॥ ५० ॥ हनूमतेति । यशस्विनेति अङ्गदविशेषणम् । अतो न पुनरुक्तिः ॥ ५१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां सप्तपञ्चाशः सर्गः ॥ ५७ ॥ हनुमत्प्रमुखाः, परस्परं मिलिता इति शेषः ॥ १ ॥ कार्यविषयं वृत्तान्तम् ॥ २ ॥ दशाननः कथंवृत्तः कीदृग्व्यापारः ॥ ३ ॥ ४ ॥ यश्चेति । तत्र रामसन्निधौ । रक्षितव्यं गोपनीयम्, अवक्तव्यमिति यावत् । आत्मवान् भवान् ॥ ५–७ ॥

यच्च रक्षितव्यं गोप्तव्यं तत् । आत्मवान् बुद्धिमान् । भवान् व्याकरोतु ॥ ५ ॥ ६॥ प्रत्यक्षमेवेति । इदं न वक्तव्यमेवेति भावः । आप्लुतः आप्लुतोस्मि । पारं, गन्तुमिति शेषः । समाहितः एकाग्रः । इत्येतद्भवतां प्रत्यक्षमेवेति सम्बन्धः ॥ ७ ॥ गच्छत इत्यादि । विघ्नरूपमिव, वस्तुतो न तथेति भावः ।

प्रत्यक्षमेव भवतां महेन्द्राग्रात् खमाप्लुतः । उदधेर्दक्षिणं पारं कांक्षमाणः समाहितः ॥७॥ गच्छतश्च हि मे घोरं विघ्नरूपमिवाभवत् । काञ्चनं शिखरं दिव्यं पश्यामि सुमनोहरम् ॥ ८ ॥ स्थितं पन्थानमावृत्य मेने विघ्नं च तं नगम् ॥ ९ ॥ उपसङ्गम्य तं दिव्यं काञ्चनं नगसत्तमम् । कृता मे मनसा बुद्धिर्भेत्तव्योऽयं मयेति च ॥१०॥ प्रहतं च मया तस्य लांगूलेन महागिरेः । शिखरं सूर्यसङ्काशं व्यशीर्यत सहस्रधा॥ ११॥ व्यवसायं च तं बुद्ध्वा स होवाच महागिरिः । पुत्रेति मधुरां वाणीं मनः प्रह्लादयन्निव ॥ १२ ॥ पितृव्यं चापि मां विद्धि सखायं मातरिश्वनः । मैनाकमिति विख्यातं निवसन्तं महोदधौ ॥ १३ ॥ पक्षवन्तः पुरा पुत्र बभूवुः पर्वतोत्तमाः । छन्दतः पृथिवीं चेरुर्बाधमानाः समन्ततः ॥ १४ ॥ श्रुत्वा नगानां चरितं महेन्द्रः पाकशासनः । चिच्छेद भगवान् पक्षान् वज्रेणैषां सहस्रशः ॥ १५ ॥ अहं तु मोक्षितस्तस्मात्तव पित्रा महात्मना । मारुतेन तदा वत्स प्रक्षिप्तोऽस्मि महार्णवे ॥ १६ ॥ रामस्य च मया साह्ये वर्तितव्यमरिन्दम । रामो धर्मभृतां श्रेष्ठो महेन्द्रसमविक्रमः ॥ १७ ॥

पश्यामीत्यादौ व्यत्ययेन लट् । शिखरं विघ्नरूपमिवाभवत् तत् पश्यामीति योजना ॥ ८ ॥ स्थितमिति । मेने इति लिटुत्तमपुरुषैकवचनं परोक्षत्वाद्यभावेपि च्छान्दसम् । अमनिपीत्यर्थः ॥ ९ ॥ उपसङ्गम्येति । गमनदशायामसुरसा पातयामासेति सूचितं विवृणोति भेत्तव्योऽयमित्यादिना ॥ १०–१२ ॥ पितृव्यं चेति । पितृव्यत्वे हेतुमाह सखायमिति । पितृसखत्वात् पितृव्यत्वव्यपदेश इत्यर्थः ॥ १३ ॥ छन्दतः यथेच्छम् ॥ १४ ॥ ॥ १५ ॥ मोक्षणप्रकारमाह प्रक्षिप्तोऽस्मि महार्णव इति ॥ १६ ॥ साह्ये साहाय्ये । साहाय्यकरणे हेतुमाह रामो धर्मभृतां श्रेष्ठ इति ॥ १७ ॥

पश्यामि अपश्यम् ॥ ८ ॥ मेने इति लिडुत्तमपुरुषैकवचनम् ॥ ९–११ ॥ व्यवसायं स्वभेदनरूपम् ॥ १२ ॥ १३ ॥ छन्दतः स्वेच्छयेत्यर्थः ॥ १४ ॥ चरितं प्रजाबाधनरूपम् ॥ १५ ॥ मोचनप्रकारमाह–मारुतेनेति ॥ १६ ॥ साह्ये साहाय्ये । तत्र हेतुः–धर्मभृतां श्रेष्ठ इत्यादि ॥ १७ ॥

उद्यतम् उद्युक्तम् ॥१८॥ अनुज्ञातः, अस्मीति शेषः । वपुष्मता पुष्कलवपुषा । मानुषेण शरीरेणान्तर्हितः । शैलेन तु शरीरेण महोदधौ सागरोपरि, स्थित इति शेषः । 'स वै दत्तवरः शैलो बभूवावस्थितस्तथा' इति प्रथमसर्गोक्तेः । प्रतिप्रयाणे च–'पर्वतेन्द्रं सुनाभं च समुपस्पृश्य वीर्यवान्' इत्युक्तम् ।

एतच्छ्रुत्वा वचस्तस्य मैनाकस्य महात्मनः । कार्यमावेद्य तु गिरेरुद्यतं च मनो मम ॥ १८ ॥ तेन चाहमनुज्ञातो मैनाकेन महात्मना । स चाप्यन्तर्हितः शैलो मानुषेण वपुष्मता । शरीरेण महाशैलः शैलेन च महोदधौ ॥ १९ ॥ उत्तमं जवमास्थाय शेषं पन्थानमास्थितः । ततोऽहं सुचिरं कालं वेगेनाभ्यगमं पथि ॥ २० ॥ ततः पश्याम्यहं देवीं सुरसां नागमातरम् । समुद्रमध्ये सा देवी वचनं मामभाषत ॥ २१ ॥ मम भक्षः प्रदिष्टस्त्वममरैर्हरिसत्तम । अतस्त्वां भक्षयिष्यामि विहितस्त्वं चिरस्य मे ॥ २२ ॥ एवमुक्तः सुरसया प्राञ्जलिः प्रणतः स्थितः । विवर्णवदनो भूत्वा वाक्यं चेदमुदीरयम् ॥ २३ ॥ रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् । लक्ष्मणेन सह भ्रात्रा सीतया च परन्तपः ॥ २४ ॥ तस्य सीता हृता भार्या रावणेन दुरात्मना । तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात् ॥ २५ ॥ कर्तुमर्हसि रामस्य साहाय्यं विषये सती । अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् ॥ २६ ॥ आगमिष्यामि ते वक्त्रं सत्यं प्रतिश्रृणोमि ते ॥ २७ ॥ एवमुक्ता मया सा तु सुरसा कामरूपिणी । अब्रवीन्नातिवर्तेत कश्चिदेष वरो मम ॥ २८ ॥ एवमुक्तः सुरसया दशयोजनमायतः । ततोऽर्धगुणविस्तारो बभूवाहं क्षणेन तु । मत्प्रमाणानुरूपं च व्यादितं तु मुखं तया ॥ २९ ॥

'हिरण्यनाभं शैलेन्द्रं काञ्चनं पश्य मैथिलि' इति रामेण चोक्तम् ॥ १९–२५॥ कर्तुमिति । विषये सती स्वराज्ये वसन्ती ॥२६–२८॥ एवमुक्त इति । तत

उद्यतम् अग्रे चलितम् ॥ १८ ॥ वपुष्मता पौष्कल्यवता । मानुषेण शरीरेणान्तर्हितः । शैलेन शिलारूपेण शरीरेण तु महोदधौ सागरोपरि, स्थित इति शेषः ॥ १९–२१ ॥ ममेति । प्रदिष्टः दत्तः । विहितः लब्धः ॥ २२–२५ ॥ विषये सती विषयवासिनी ॥ २६ ॥ २७ ॥ नातिवर्तेत नातिक्रमेत । मां प्राप्तो मदाहारतां प्राप्तो न गच्छेदित्यर्थः ॥ २८ ॥ ततोऽर्द्धगुणविस्तारः ततो दशयोजनादर्धस्य पञ्चयोजनस्य गुण आवृत्तिः तद्विस्तारो दशयोजनविस्तारः । प्रथमसर्गे दशयोजन

इति । अर्धगुणविस्तारः अत्रार्धशब्दः एकदेशवाची । किंचिदधिकविस्तारोऽभवमित्यर्थः । एवमेवार्थः, प्रथमतगौंकृशतयोजनविस्तारस्तु विरुद्धः । तद्ग्रन्थः कल्पितश्चेत्युक्तम् । मत्प्रमाणेति । व्यादितं व्यात्तम् ॥ २९ ॥ तद्दृष्ट्वेति । ह्रस्वत्वं विशेषयति अङ्गुष्ठमात्रक इति ॥ ३० ॥ ३१ ॥ अर्थसिद्ध्यै

तद्दृष्ट्वा व्यादितं चास्यं ह्रस्वं ह्यकरवं वपुः । तस्मिन् मुहूर्ते च पुनर्बभूवाङ्गुष्ठमात्रकः ॥ ३० ॥ अभिपत्याशु तद्वक्त्रं निर्गतोऽहं ततः क्षणात् । अब्रवीत् सुरसा देवी स्वेन रूपेण मां पुनः ॥ ३१ ॥ अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् । समानय च वैदेहीं राघवेण महात्मना । सुखी भव महाबाहो प्रीतास्मि तव वानर ॥ ३२ ॥ ततोऽहं साधु साध्वीति सर्वभूतैः प्रशंसितः ॥ ३३ ॥ ततोऽन्तरिक्षं विपुलं प्लुतोऽहं गरुडो यथा । छाया मे निगृहीता च न च पश्यामि किंचन ॥ ३४ ॥ सोऽहं विगतवेगस्तु दिशो दश विलोकयन् । न किंचित्तत्र पश्यामि येन मेऽपहृता गतिः ॥ ३५ ॥ ततो मे बुद्धिरुत्पन्ना किं नाम गगने मम । ईदृशो विघ्न उत्पन्नो रूपं यत्र न दृश्यते ॥ ३६ ॥ अधोभागे न मे दृष्टिः शोचता पातिता मया । ततोऽद्राक्षमहं भीमां राक्षसीं सलिलेशयाम् ॥ ३७ ॥ प्रहस्य च महानादमुक्तोऽहं भीमया तया । अवस्थितमसम्भ्रान्तमिदं वाक्यमशोभनम् ॥ ३८ ॥ क्वासि गन्ता महाकाय क्षुधिताया ममेप्सितः । भक्षः प्रीणय मे देहं चिरमाहारवर्जितम् ॥ ३९ ॥ बाढमित्येव तां वाणीं प्रत्यगृह्णामहं ततः । आस्यप्रमाणादधिकं तस्याः कायमपूरयम् । तस्याश्चास्यं महद्भीमं वर्धते मम भक्षणे ॥ ४० ॥

इति । समानय संयोजय ॥ ३२ ॥ ततोऽहमिति । साधु साध्वीति दीर्घश्छान्दसः ॥ ३३–३६ ॥ अधोभागे नेति । सलिलेशयां सलिले स्थिताम् ॥ ३७ ॥ अवस्थितं दृढभूतम् । असम्भ्रान्तम् अव्यग्रम् ॥ ३८ ॥ ३९ ॥ तस्याः आस्यप्रमाणादधिकं यथा तथा कायम् आत्मदेहम् अपूरयम् अवर्धयम् ।

विस्तारोक्त्यानुगुण्येनैवं व्याख्यातम् ॥ २९ ॥ ह्रस्वम्, स्वशरीरमिति शेषः ॥ ३० ॥ ३१ ॥ समानय सङ्गमय ॥ ३२ ॥ साधु साध्वीत्यत्र दीर्घ आर्षः ॥ ३३ ॥ ३४ ॥ न पश्यामि नापश्यम् । येन गतिर्विहता तत्किञ्चिन्न पश्यामि नापश्यमित्यन्वयः ॥ ३५–३७ ॥ अवस्थितं निश्चेष्टम् । तथाप्यसम्भ्रान्तं भयहीनम् मां लक्षीकृत्येदं वाक्यमहमुक्त इत्यन्वयः ॥ ३८ ॥ ममेप्सितः भक्षस्त्वं मतो मे देहं प्रीणयेत्यन्वयः ॥ ३९ ॥ तस्या आस्यप्रमाणादधिकं कायम् आत्मनः कायम् अपूरयम् ।

मयि वृद्धे साप्यवर्धिष्टेत्यर्थः ॥ ४० ॥ अयं कामरूपीति माम्, साधु सम्यक्, न बुबुधे न ज्ञातवती । मम कृतं निकृतं मया कृतां निकृतिं वा न बुबुधे ॥४१॥ निकृतिमेव दर्शयति—ततोऽहमिति ॥४२॥ विसृष्टभुजा विसृष्टसन्धिकभुजा ॥४३॥ श्रृणोमीति । हतेत्यनन्तरमितिकरणं बोध्यम् ॥४४॥ कृत्य

न च मां साधु बुबुधे मम वा निकृतं कृतम् ॥ ४१ ॥ ततोऽहं विपुलं रूपं संक्षिप्य निमिषान्तरात् । तस्या हृदयमादाय प्रपतामि नभःस्थलम् ॥ ४२ ॥ सा विसृष्टभुजा भीमा पपात लवणाम्भसि । मया पर्वतसङ्काशा निकृत्तहृदया सती ॥ ४३ ॥ श्रृणोमि खगतानां च सिद्धानां चारणैः सह । राक्षसी सिंहिका भीमा क्षिप्रं हनुमता हता ॥ ४४ ॥ तां हत्वा पुनरेवाहं कृत्यमात्ययिकं स्मरन् । गत्वा चाहं महाध्वानं पश्यामि नगमण्डितम् ॥ ४५ ॥ दक्षिणं तीरमुदधेर्लङ्का यत्र च सा पुरी । अस्तं दिनकरे याते रक्षसां निलयं पुरम् । प्रविष्टोऽहमविज्ञातो रक्षोभिर्भीमविक्रमैः ॥ ४६ ॥ तत्र प्रविशतश्चापि कल्पान्तघनसन्निभा । अट्टहासं विमुञ्चन्ती नारी काप्युत्थिता पुरः ॥ ४७ ॥ जिघांसन्तीं ततस्तां तु ज्वलदग्निशिरोरुहाम् । सव्यमुष्टिप्रहारेण पराजित्य सुभैरवाम् ॥ ४८ ॥ प्रदोषकाले प्रविशं भीतयाऽहं तयोदितः । अहं लङ्कापुरी वीर निर्जिता विक्रमेण ते ॥ ४९ ॥ यस्मात्तस्माद्विजेतासि सर्वरक्षांस्यशेषतः ॥५०॥ तत्राहं सर्वरात्रं तु विचिन्वन् जनकात्मजाम् । रावणान्तःपुरगतो न चापश्यं सुमध्यमाम् ॥५१॥

मात्ययिकं स्मरन् प्राणान्तिकं तत्कर्म विचिन्तयन्नित्यर्थः ॥ ४५–४८ ॥ रामानु०–जिघांसन्तीमित्यादि । प्राविशं प्राविशम् ॥ ४८ ॥ ४९ ॥ भीतयेत्यादि । भीतया तया नार्या । अशेषत इत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ ४९ ॥ ५० ॥ सर्वरात्रं सर्वां रात्रिम् । "अहःसर्व–" इत्यादिना समासान्तोऽच् । अत्यन्त

वर्द्धते अवर्द्धत ॥ ४० ॥ सा मां न बुबुधे अयं कामरूपीति मां न ज्ञातवतीत्यर्थः । मम कृतं विकृतं सा मया कृतं विकारस्वरूपं वा न बुबुधे ॥ ४१ ॥ तद्विकृतं किमित्यत आह–ततोऽहमिति । हृदयमादाय हृदयं निकृत्य । प्रपतामि प्रापतम् ॥ ४२ ॥ विसृष्टभुजा विस्रंसितभुजा ॥ ४३ ॥ श्रृणोमीति । सिंहिका हनुमता हतेति द्युगतानां देवानां वाचः श्रृणोमीति सम्बन्धः ॥ ४४ ॥ कृत्यम् आत्ययिकं प्राणान्तिकं कर्म चिन्तयन्नित्यर्थः ॥ ४५–४७ ॥ मां जिघांसन्तीं ज्वलदग्नितुल्यकेशपाशाम् ॥ ४८ ॥ प्रविशं प्राविशम् ॥ ४९ ॥ ५० ॥ सर्वरात्रं सर्वां रात्रिम् । तत्राहं मध्यरात्रे तु इति पाठः साधुः ॥ ५१ ॥

संयोगे द्वितीया । तत्र लङ्कायाम् । विचिन्वन् अनन्तरं रावणान्तःपुरमपि गतः सन् तुमध्यमां नापश्यम् ॥ ५१ ॥ ५२ ॥ रामानु०-तत्रेति । सर्वरात्रं सर्वां रात्रिम् । "अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः" इत्यच्प्रत्ययः । "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । तत्राहं मध्यरात्रे त्विति पाठः साधुः ॥ ५१ ॥ तत इति । उपलक्षये

ततः सीतामपश्यंस्तु रावणस्य निवेशने । शोकसागरमासाद्य न पारमुपलक्षये ॥ ५२ ॥ शोचता च मया दृष्टं प्राकारेण समावृतम् । काञ्चनेन विकृष्टेन गृहोपवनमुत्तमम् ॥ ५३ ॥ स प्राकारमवप्लुत्य पश्यामि बहुपादपम् ॥ ५४ ॥ अशोकवनिकामध्ये शिंशुपापादपो महान् । तमारुह्य च पश्यामि काञ्चनं कदलीवनम् ॥ ५५ ॥ अदूरे शिंशुपावृक्षात् पश्यामि वरवर्णिनीम् । श्यामां कमलपत्राक्षीमुपवासकृशाननाम् ॥ ५६ ॥ तदेकवासःसंवीतां रजोध्वस्तशिरोरुहाम् । शोकसन्तापदीनाङ्गीं सीतां भर्तृहिते स्थिताम् ॥ ५७ ॥ राक्षसीभिर्विरूपाभिः क्रूराभिरभिसंवृताम् । मांसशोणितभक्षाभिर्व्याघ्रीभिर्हरिणीमिव ॥ ५८ ॥ सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः । एकवेणीधरा दीना भर्तृचिन्तापरायणा ॥ ५९ ॥ भूमिशय्या विवर्णाङ्गी पद्मिनीव हिमागमे । रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया । कथंचिन्मृगशावाक्षी तूर्णमासादिता मया ॥ ६० ॥

उपालक्षयम् ॥ ५२ ॥ विकृष्टेन विप्रकृष्टेन । अतिदीर्घेणेति यावत् ॥ ५३ ॥ बहुपादपम् अनेकपादपप्रमाणमिति प्राकारविशेषणम् ॥ ५४ ॥ शिंशुपापादपः, अस्तीति शेषः ॥ ५५ ॥ शिंशुपावृक्षात् शिंशुपावृक्षस्य । श्यामां यौवनमध्यस्थाम् । तदेकवासस्संवीतां येन वाससा हृता तेनैकवाससा संवीताम् । यद्वा तेन तत्कालदृष्टेन पूर्वदृष्टेन एकेन वाससा संवीताम्, वेषान्तरनिस्स्पृहामित्यर्थः । मानसिकत्वकायिकत्वभेदेन शोकसन्तापयोर्भेदः ॥ ५६–५८ ॥ सामयेति । आमयः खेदः तेन सह वर्तत इति सामया । मर्तव्ये मरणे । "कृत्यल्युटो बहुलम्" इति साधुः ॥ ५९ ॥ ६० ॥

उपलक्षये उपालक्षयम् ॥ ५२ ॥ विकृष्टेन विप्रकृष्टेन, अतिदीर्घेणेति यावत् ॥ ५३ ॥ बहुपादपं गृहोपवनं गृहारामं दृष्टमिति सम्बन्धः ॥ ५४–५६ ॥ तदेकवासः संवीतां तेन तत्कालदृष्टेन पूर्वधृतेनैव वाससा संवीताम् ॥ ५७ ॥ राक्षसीभिरिति । व्याघ्रीपरिवृतां हरिणीमिव तामपश्यमिति सम्बन्धः । राक्षसीमध्ये ताभिरेव तर्ज्यमाना सदुःखा मया कथञ्चिदासादितेत्यन्वयः ॥ ५८ ॥ सामया आमयसहिता, दुःखसहितेत्यर्थः, अतस्तूर्णमासादिता मयेत्यनेन न पुनरुक्तिः । मर्तव्यकृत

पश्यन् परामृशन् ॥ ६१ ॥ ६२ ॥ गहने पर्णगूढप्रदेशे। 'पर्णघने निलीनः' इत्यधस्तादप्युक्तेः ॥ ६३--६५ ॥ रामानु०--परिरभ्य, वितत्रासेति शेषः ॥ ६५ ॥ परमोद्विग्नाम् अतीवोद्भ्रान्तहृदयाम् । ततस्ततः वीक्षमाणां नानादिक्षु वीक्षमाणाम् । त्राणमित्यनुषज्यते ॥६६॥ अवाक्छिराः अवनतमूर्द्धा । प्रपतितः,

तां दृष्ट्वा तादृशीं नारीं रामपत्नीं यशस्विनीम् । तत्रैव शिंशुपावृक्षे पश्यन्नहमवस्थितः ॥ ६१ ॥ ततो हलहलाशब्दं काञ्चीनूपुरमिश्रितम् । शृणोम्यधिकगम्भीरं रावणस्य निवेशने ॥६२॥ ततोऽहं परमोद्विग्नः स्वं रूपं प्रतिसंहरन् । अहं तु शिंशुपावृक्षे पक्षीव गहने स्थितः ॥ ६३ ॥ ततो रावणदाराश्च रावणश्च महाबलः । तं देशं समनुप्राप्ता यत्र सीताऽभवत् स्थिता ॥६४॥ तद् दृष्ट्वाऽथ वरारोहा सीता रक्षोमहाबलम् । सङ्कुच्योरू स्तनौ पीनौ बाहुभ्यां परिरभ्य च ॥ ६५ ॥ वित्रस्तां परमोद्विग्नां वीक्षमाणां ततस्ततः । त्राणं किंचिदपश्यन्तीं वेपमानां तपस्विनीम् ॥ ६६ ॥ तामुवाच दशग्रीवः सीतां परमदुःखिताम् । अवाक्छिराः प्रपतितो बहुमन्यस्व मामिति ॥ ६७ ॥ यदि चेत्त्वं तु दर्पान्मां नाभिनन्दसि गर्विते । द्वौ मासावन्तरं सीते पास्यामि रुधिरं तव ॥ ६८ ॥ एतच्छ्रुत्वा वचस्तस्य रावणस्य दुरात्मनः । उवाच परमक्रुद्धा सीता वचनमुत्तमम् ॥ ६९ ॥ राक्षसाधम रामस्य भार्याममिततेजसः । इक्ष्वाकुकुलनाथस्य स्नुषां दशरथस्य च । अवाच्यं वदतो जिह्वा कथं न पतिता तव ॥ ७० ॥ किंचिद्वीर्यं तवानार्य यो मां भर्तुरसन्निधौ । अपहृत्यागतः पाप तेनादृष्टो महात्मना ॥ ७१ ॥

भूमाविति शेषः ॥ ६७ ॥ द्वौ मासौ अन्तरम् अवधिः । ततः पास्यामीति योज्यम् ॥ ६८--७० ॥ किंचिद्वीर्यं कुत इत्यत्राह--यो मामिति । भर्तुरसन्निधौ

निश्चया मरणकृतनिश्चयेत्यर्थः ॥ ५९--६१ ॥ शृणोमि श्रुतवान् । रावणस्य निवेशने तत्समीपे । यद्वा निवेशने सीतासमीपप्रवेशनकाले ॥ ६२ ॥ गहने स्थितः अत्र गहनशब्देन पर्णसंहतिगूढप्रदेश उच्यते ॥ ६३ ॥ परिरभ्य, वितत्रासेति शेषः ॥ ६४--७० ॥ तदसन्निधौ अपहृत्य तेनादृष्ट इति लङ्कामागतः अन्यथा तदैव

तेन भर्त्रा अदृष्टः सन् यो मामपहृत्यागतः तस्य तव किंचिद्वीर्यमिति योज्यम् ॥ ७१ ॥ ७२ ॥ जानक्येति । घोरत्वसिद्धये चितास्थ इत्युक्तम् ॥ ७३ ॥ आरब्धः, रावण इति शेषः । हा हा कृतं हा हेत्येतत्कृतम् ॥ ७४ ॥ समुत्पत्य, रावणसमीपं गतेति शेषः । मण्डोदरी मण्डनभूतोदरी ।



न त्वं रामस्य सदृशो दास्येऽप्यस्य न युज्यसे । यज्ञीयः सत्यवादी च रणश्लाघी च राघवः ॥ ७२ ॥ जानक्या परुषं वाक्यमेवमुक्तो दशाननः । जज्वाल सहसा कोपाच्चितास्थ इव पावकः ॥ ७३ ॥ विवर्त्य नयने क्रूरे मुष्टिमुद्यम्य दक्षिणम् । मैथिलीं हन्तुमारब्धः स्त्रीभिर्हा हा कृतं तदा ॥ ७४ ॥ स्त्रीणां मध्यात् समुत्पत्य तस्य भार्या दुरात्मनः । वरा मण्डोदरी नाम तया स प्रतिषेधितः ॥७५॥ उक्तश्च मधुरां वाणीं तया स मदनार्दितः । सीतया तव किं कार्यं महेन्द्रसमविक्रम ॥७६॥ [ मया सह रमस्वाद्य मद्विशिष्टा न जानकी । ]देवगन्धर्वकन्याभिर्यक्षकन्याभिरेव च । सार्धं प्रभो रमस्वेह सीतया किं करिष्यसि ॥ ७७ ॥ ततस्ताभिः समेताभिर्नारीभिः स महाबलः । प्रसाद्य सहसा नीतो भवनं स्वं निशाचरः ॥७८॥ याते तस्मिन् दशग्रीवे राक्षस्यो विकृताननाः । सीतां निर्भर्त्सयामासुर्वाक्यैः क्रूरैः सुदारुणैः ॥७९॥ तृणवद्भाषितं तासां गणयामास जानकी । गर्जितं च तदा तासां सीतां प्राप्य निरर्थकम् ॥८०॥

"मडि भूषायाम्" इत्यस्माद्धातोः पचाद्यच् । मन्दोदरी वा । डडयोरभेदः । दम्भो दाडिममित्यादिवत् । यद्वा मन्दत्वं चाल्पत्वम् । "मूढाल्पापटुनिर्भाग्या मन्दाः" इत्यमरः । सूक्ष्मोदरी इत्यर्थः । मन्दा स्थूलपिपीलिकेत्याचक्षते । तस्या इव कृशमस्या उदरमित्यर्थः । ननु पूर्वं धान्यमालिन्या प्रतिषिद्ध इत्युक्तम्, संप्रति मण्डोदर्येत्युच्यते । विप्रतिषिद्धमिदम् । मैवम् । उभाभ्यामपि प्रतिषिद्धत्वेनान्यतरोक्तावविरोधात् । मण्डोदर्यादिनामपरिज्ञानं च हनुमतस्तदीयव्यवहारात् ॥ ७५–७७ ॥ ताभिः देवकन्याभिः । अनेन मण्डोदर्यादिवदन्यासामपि निवारयितृत्वमुक्तम् ॥ ७८ ॥ क्रूरैः क्रूरशब्दैः । सुदारुणैः अर्थतोपि क्रूरैः ॥ ७९ ॥ तृणवत् गणयामासेत्यन्वयः ॥ ८० ॥



ते हननं स्यादित्यर्थः ॥ ७१ ॥ सादृश्यसम्भावनापि दूरापास्तेत्याह दास्येपीति ॥ ७२–७४ ॥ पूर्वं धान्यमालिन्या प्रतिषिद्धमित्युक्तम्, इदानीं मण्डोदरीत्य

वृथागर्जितनिश्चेष्टाः वृथागर्जितेन निर्व्यापाराः ॥८१॥ ततस्ता इति । तूष्णीं रक्षतेति रावणोक्ता इति शेषः । परिक्षिप्य परिवार्य ॥ ८२ ॥ सुदुःखिता प्रशुशोच, उत्तरोत्तरं दुःखितवतीत्यर्थः ॥ ८३–८६ ॥ अलं शक्ता । " अलं भूषणपर्याप्तिशक्तिवारणवाचकम् " इत्यमरः । परित्रातुम्, एपेति शेषः

वृथागर्जितनिश्चेष्टा राक्षस्यः पिशिताशनाः । रावणाय शशंसुस्ताः सीताध्यवसितं महत् ॥ ८१ ॥ ततस्ताः सहिताः सर्वा विहताशा निरुद्यमाः । परिक्षिप्य समन्तात्तां निद्रावशमुपागताः ॥ ८२ ॥ तासु चैव प्रसुप्तासु सीता भर्तृहिते रता । विलप्य करुणं दीना प्रशुशोच सुदुःखिता ॥ ८३ ॥ तासां मध्यात् समुत्थाय त्रिजटा वाक्यमब्रवीत् । आत्मानं खादत क्षिप्रं न सीता विनशिष्यति ॥ ८४ ॥ जनकस्यात्मजा साध्वी स्नुषा दशरथस्य च । स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ॥ ८५ ॥ रक्षसां च विनाशाय भर्तुरस्या जयाय च ॥ ८६ ॥ अलमस्मात् परित्रातुं राघवाद्राक्षसीगणम् । अभियाचाम वैदेहीमेतद्धि मम रोचते ॥ ८७ ॥ यस्या ह्येवंविधः स्वप्नो दुःखितायाः प्रदृश्यते । सा दुःखैर्विविधैर्मुक्ता सुखमाप्नोत्यनुत्तमम् ॥ ८८ ॥ प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ॥८९॥ ततः सा ह्रीमती बाला भर्तुर्विजयहर्षिता । अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः ॥ ९० ॥ तां चाहं तादृशीं दृष्ट्वा सीताया दारुणां दशाम् । चिन्तयामास विक्रान्तो न च मे निर्वृतं मनः ॥ ९१ ॥

॥ ८७ ॥ ८८ ॥ अपराधिजनप्राणत्राणे हेतुमाह–प्रणिपातेति ॥ ८९ ॥ ततः त्रिजटावाक्यानन्तरम् । भर्तुर्विजयहर्षिता त्रिजटाकथितस्वप्नसूचितराम विजयहर्षिता । तत् त्रिजटास्वप्नवाक्यम् । शरणं हि व इत्यत्रेतिकरणं द्रष्टव्यम् ॥ ९० ॥ न च मे निर्वृतम् किन्तु दुःखितमित्यर्थः ॥ ९१ ॥

भिधानादुभाभ्यामपीति कल्पनीयम् ॥ ७५–८६ ॥ अलमस्मात्परित्रातुमिति । इयं सीतेति शेषः ॥ ८७–८९ ॥ ततः त्रिजटावाक्यानन्तरम् । भर्तुर्विजयहर्षिता त्रिजटाकथितस्वप्नसूचितरामविजयहर्षिता । तत् त्रिजटास्वप्नवाक्यम् तथ्यं यदि वः शरणं भवेयमित्यवोचदिति सम्बन्धः ॥ ९० ॥ चिन्तयामासेति लिङ्गुत्तम

स०–राक्षसीगणं राघवात्परित्रातुम् अलं समर्था । प्रसादिता सीतेति शेषः । तस्मादभियाचाम प्रार्थयामः ॥ ८७ ॥

विधिः उपायः ॥ ९२--१०१ ॥ रामानु०-तन्मे शंसितुमर्हसीत्यतः परं-तस्यास्तद्वचनं श्रुत्वा ह्यहमप्यब्रवं वचः । इत्यर्धं द्रष्टव्यम् । केषुचित्कोशेषु प्रमादात्पातितम् ॥ ९४-९५ ॥ तादिति । त्वया आज्ञप्तमिच्छामि त्वत्कर्तृकमाज्ञापनमिच्छामीत्यर्थः । किंशब्दः क्षेपे । रामलक्ष्मणयोः पार्श्वं त्वां नयामि । उत्तरं किम् एवमेवं वदेत्याज्ञापनरूपमुत्तरं किमित्यर्थः ॥ ९८ ॥

सम्भाषणार्थं च मया जानक्याश्चिन्तितो विधिः । इक्ष्वाकूणां हि वंशस्तु ततो मम पुरस्कृतः ॥९२॥ श्रुत्वा तु गदितां वाचं राजर्षिगणपूजिताम् । प्रत्यभाषत मां देवी बाष्पैः पिहितलोचना ॥ ९३ ॥ कस्त्वं केन कथं चेह प्राप्तो वानरपुङ्गव । का च रामेण ते प्रीतिस्तन्मे शंसितुमर्हसि ॥ ९४ ॥ तस्यास्तद्वचनं श्रुत्वा ह्यहमप्यब्रवं वचः । देवि रामस्य भर्तुस्ते सहायो भीमविक्रमः । सुग्रीवो नाम विक्रान्तो वानरेन्द्रो महाबलः ॥ ९५ ॥ तस्य मां विद्धि भृत्यं त्वं हनुमन्तमिहागतम् । भर्त्राऽहं प्रेषितस्तुभ्यं रामेणाक्लिष्टकर्मणा ॥ ९६ ॥ इदं च पुरुषव्याघ्रः श्रीमान् दाशरथिः स्वयम् । अङ्गुलीयमभिज्ञानमदात्तुभ्यं यशस्विनि ॥ ९७ ॥ तदिच्छामि त्वयाऽऽज्ञप्तं देवि किं करवाण्यहम् । रामलक्ष्मणयोः पार्श्वं नयामि त्वां किमुत्तरम् ॥ ९८ ॥ एतच्छ्रुत्वा विदित्वा च सीता जनकनन्दिनी । आह रावणमुत्साद्य राघवो मां नयत्विति ॥९९॥ प्रणम्य शिरसा देवीमहमार्यामनिन्दिताम् । राघवस्य मनोह्लादमभिज्ञानमयाचिषम् ॥ १०० ॥ अथ मामब्रवीत् सीता गृह्यतामयमुत्तमः । मणिर्येन महाबाहू रामस्त्वां बहुमन्यते ॥१०१॥ इत्युक्त्वा तु वरारोहा मणिप्रवरमद्भुतम् । प्रायच्छत् परमोद्विग्ना वाचा मां संदिदेश ह ॥१०२॥ ततस्तस्यै प्रणम्याहं राजपुत्र्यै समाहितः । प्रदक्षिणं परिक्रामिमिहाभ्युद्गतमानसः ॥ १०३ ॥

इत्युक्त्वेति । वाचा मां संदिदेशेति । स्वरामैकवेद्यं प्रागुक्तं काकासुरवृत्तान्तं तिलकनिर्माणादिकं च सन्दिष्टवतीत्यर्थः ॥ १०२ ॥ परिक्रामं



पुरुषैकवचनम् ॥९६॥ मम मया पुरस्कृतः स्तुतः ॥९२-९७॥ त्वया आज्ञप्तमिच्छामि त्वत्कर्तृकमाज्ञापनमिच्छामीत्यर्थः ॥९८-१०१॥ इत्युक्त्वेति । वाचा मां सन्दिदेश स्वरामैकवेद्यं प्रागुक्तं काकासुरवृत्तान्तं तिलकनिर्माणादिकं च सन्दिष्टवतीत्यर्थः ॥ १०२ ॥ इहाभ्युद्गतमानसः इहागन्तुं निश्चितमानसः ॥ १०३ ॥

पर्यङ्कामम् । इहाभ्युद्गतमानसः इहाभ्युद्गते इहाभ्यागमने मानसं यस्य स तथा ॥ १०३–१०५ ॥ एतत् उपयानं यद्यन्यथा भवेत् यदि नोपेयाता मित्यर्थः । तदा द्वौ मासौ मम जीवितम् ततः परं न जीवामीत्यर्थः । न मां द्रक्ष्यति मासद्वयाभ्यन्तरे मां न द्रक्ष्यति चेत् तदा म्रिय इति योज्यम् ।

उत्तरं पुनरेवेदं निश्चित्य मनसा तया । हनुमन् मम वृत्तान्तं वक्तुमर्हसि राघवे ॥ १०४ ॥ यथा श्रुत्वैव नचिरात्तावुभौ रामलक्ष्मणौ । सुग्रीवसहितौ वीरावुपेयातां तथा कुरु ॥ १०५ ॥ यद्यन्यथा भवेदेतद्द्वौ मासौ जीवितं मम । न मां द्रक्ष्यति काकुत्स्थो म्रिये साऽहमनाथवत् ॥ १०६ ॥ तच्छ्रुत्वा करुणं वाक्यं क्रोधो मामभ्यवर्तत । उत्तरं च मया दृष्टं कार्यशेषमनन्तरम् ॥ १०७ ॥ ततोऽवर्धत मे कायस्तदा पर्वतसन्निभः । युद्धकांक्षी वनं तच्च विनाशयितुमारभे ॥ १०८ ॥ तद्भग्नं वनषण्डं तु भ्रान्तत्रस्तमृगद्विजम् । प्रतिबुद्धा निरीक्षन्ते राक्षस्यो विकृताननाः ॥ १०९ ॥ मां च दृष्ट्वा वने तस्मिन् समागम्य ततस्ततः । ताः समभ्यागताः क्षिप्रं रावणायाचचक्षिरे ॥ ११० ॥ राजन् वनमिदं दुर्गं तव भग्नं दुरात्मना । वानरेण ह्यविज्ञाय तव वीर्यं महाबल ॥ १११ ॥ दुर्बुद्धेस्तस्य राजेन्द्र तव विप्रियकारिणः । वधमाज्ञापय क्षिप्रं यथाऽसौ विलयं व्रजेत् ॥ ११२ ॥ तच्छ्रुत्वा राक्षसेन्द्रेण विसृष्टा भृशदुर्जयाः । राक्षसाः किङ्करा नाम रावणस्य मनोनुगाः ॥ ११३ ॥ तेषामशीतिसाहस्रं शूलमुद्गरपाणिनाम् । मया तस्मिन् वनोद्देशे परिघेण निषूदितम् ॥ ११४ ॥ तेषां तु हतशेषा ये ते गत्वा लघुविक्रमाः । निहतं च महत्सैन्यं रावणायाचचक्षिरे ॥ ११५ ॥

मासशब्दोऽत्र पक्षपरः । "पक्षा वै मासाः" इति श्रुतेः ॥ १०६ ॥ उत्तरम् अनन्तरम् । अनन्तरम् अनन्तरकर्तव्यम्, उत्तरकार्यमित्यर्थः ॥ १०७–११५ ॥

रामानु०—शूलमुद्गरपाणिनामित्यत्र दीर्घाभाव आर्षः ॥ ११४ ॥

मम वृत्तान्तं त्वयाऽनुभूतं मद्विषयं रावणराक्षसीवृत्तान्तम् ॥ १०४ ॥ १०५ ॥ यदि यस्मात् अन्यथा अनागमने द्वौ मासौ मम जीवितं भवेत् । अनाथवत् म्रिये राक्षसीकृतवधे नेति भावः ॥ १०६ ॥ उत्तरं कार्यशेषं लङ्कानाशनरूपम् ॥ १०७–१०९ ॥ समागम्य मिलित्वा ॥ ११०–११३ ॥ शूलमुद्गरपाणिनामित्यत्र दीर्घाभाव आर्षः ॥ ११४–१२४ ॥

ततो मे बुद्धिरुत्पन्ना वक्ष्यमाणकार्यविषयेत्यर्थः । तादृशं बुद्धिकार्यमाह चैत्येत्यादिना । चैत्यप्रासादं नगरमध्यस्थप्रासादम् । ललामभूतः



ततो मे बुद्धिरुत्पन्ना चैत्यप्रासादमाक्रमम् । तत्रस्थान् राक्षसान् हत्वा शतं स्तम्भेन वै पुनः । ललामभूतो लङ्कायाः स वै विध्वंसितो मया ॥११६॥ ततः प्रहस्तस्य सुतं जम्बुमालिनमादिशत् । राक्षसैर्बहुभिः सार्धं घोररूपैर्भयानकैः ॥ ११७ ॥ तमहं बलसम्पन्नं राक्षसं रणकोविदम् । परिघेणातिघोरेण सूदयामि सहानुगम् ॥ ११८ ॥ तच्छ्रुत्वा राक्षसेन्द्रस्तु मन्त्रिपुत्रान् महाबलान् ॥११९॥ पदातिबलसम्पन्नान् प्रेषयामास रावणः । परिघेणैव तान् सर्वान्नयामि यमसादनम् ॥१२०॥ मन्त्रिपुत्रान् हतान्छ्रुत्वा समरे लघुविक्रमान् । पञ्च सेनाग्रगाञ्छूरान् प्रेषयामास रावणः ॥ १२१ ॥ तानहं सहसैन्यान् वै सर्वानेवाभ्यसूदयम् । ततः पुनर्दशग्रीवः पुत्रमक्षं महाबलम् ॥ १२२ ॥ बहुभी राक्षसैः सार्धं प्रेषयामास रावणः । तं तु मन्दोदरीपुत्रं कुमारं रणपण्डितम् ॥ १२३ ॥ सहसा खं समुत्क्रान्तं पादयोश्च गृहीतवान् । चर्मासिनं शतगुणं भ्रामयित्वा व्यपेषयम् । तमक्षमागतं भग्नं निशम्य स दशाननः॥१२४॥ तत इन्द्रजितं नाम द्वितीयं रावणः सुतम् । व्यादिदेश सुसंक्रुद्धो बलिनं युद्धदुर्मदम् ॥ १२५ ॥ तच्चाप्यहं बलं सर्वं तं च राक्षसपुङ्गवम् । नष्टौजसं रणे कृत्वा परं हर्षमुपागमम् ॥ १२६ ॥ महतापि महाबाहुः प्रत्ययेन महाबलः । प्रेषितो रावणेनैव सह वीरैर्मदोत्कटैः ॥ १२७ ॥ सोऽविषह्यं हि मां बुद्ध्वा स्वबलं चावमर्दितम् । ब्राह्मेणास्त्रेण स तु मां प्रावध्नाच्चातिवेगितः ॥ १२८ ॥

अलङ्कारभूतः ॥ ११६–११९ ॥ पदातिबलसम्पन्नान् पदातिप्रभृतिसैन्यसंपन्नान् ॥ १२०–१२१ ॥ रामानु०–चर्मासिनमित्यत्र इकाराभावस्त्वार्षम् ॥ १२४ ॥ द्वितीयं प्रेषितपुत्रापेक्षया द्वितीयम् ॥ १२५ ॥

द्वितीयं प्रेषितपुत्रापेक्षया द्वितीयम् ॥ १२५–१२८ ॥

अभिवध्नन्ति अभ्यबध्नन् ॥ १२९ ॥ अस्याहमित्यादि । अस्याः सीतायाः । विसन्धिरार्षः ॥ १३२ ॥ १३३ ॥ रामानु०—अस्या इति । अस्याहमित्यत्र अस्याः इति पदच्छेदः । सन्धिरार्षः । अहं प्राप्तः अहं हनुमानित्यहंशब्दद्वयस्य निर्वाहः ॥ १३२ ॥ धर्मार्थकामसहितमिति । तत्र धर्मसाहित्यात् हितं परत्र उप

रज्जुभिश्चाभिबध्नन्ति ततो मां तत्र राक्षसाः । रावणस्य समीपं च गृहीत्वा मामुपानयन् ॥ १२९ ॥ दृष्ट्वा सम्भाषितश्चाहं रावणेन दुरात्मना । पृष्टश्च लङ्कागमनं राक्षसानां च तं वधम् ॥ १३० ॥ तत्सर्वं च मया तत्र सीतार्थमिति जल्पितम् ॥ १३१ ॥ अस्याहं दर्शनाकांक्षी प्राप्तस्त्वद्भवनं विभो । मारुतस्यौरसः पुत्रो वानरो हनुमानहम् ॥ १३२ ॥ * रामदूतं च मां विद्धि सुग्रीवसचिवं कपिम् । सोऽहं दूत्येन रामस्य त्वत्सकाशमिहागतः ॥ १३३ ॥ सुग्रीवश्च महातेजाः स त्वां कुशलमब्रवीत् । धर्मार्थकामसहितं हितं पथ्यमुवाच च ॥ १३४ ॥ वसतो ऋश्यमूके मे पर्वते विपुलद्रुमे । राघवो रणविक्रान्तो मित्रत्वं समुपागतः ॥ १३५ ॥ तेन मे कथितं राज्ञा भार्या मे रक्षसा हृता । तत्र साहाय्यमस्माकं कार्यं सर्वात्मना त्वया ॥ १३६ ॥ मया च कथितं तस्मै वालिनश्च वधं प्रति । तत्र साहाय्यहेतोर्मे समयं कर्तुमर्हसि ॥ १३७ ॥ वालिना हृतराज्येन सुग्रीवेण महाप्रभुः । चक्रेऽग्निसाक्षिकं सख्यं राघवः सहलक्ष्मणः ॥ १३८ ॥ तेन वालिनमुत्पाट्य शरेणैकेन संयुगे । वानराणां महाराजः कृतः स प्लवतां प्रभुः ॥ १३९ ॥

कारकम् अर्थसाहित्यात्पथ्यम् इहोपकारकं चेत्यर्थः ॥ १३४–१३७ ॥ सुग्रीवश्चेत्यादिना सुग्रीवोक्तं कियदनूद्य संप्रति शेषं स्वयं [illegible] सन्नाह—वालिनेति ॥ १३८–१४२ ॥ रामानु०—वालिनेति । सुग्रीवेण, मयेति शेषः । चक्रेऽग्निसाक्षिकं सख्यमिति पाठः ॥ १३८ ॥ वानराणां महाराजः कृतः, अहमिति शेषः ॥ १३९ ॥

अभिबध्नन्ति अभ्यबध्नन ॥ १२९–१३१ ॥ अस्याहं दर्शनाकाङ्क्षीत्यत्र सन्धिरार्षः । त्वद्भवनं प्राप्तोऽहं हनुमानहमित्यस्मच्छब्दद्वयस्य निर्वाहः ॥ १३२ ॥ १३३ ॥ धर्मकामार्थसहितं धर्मसहितत्वात् हितम् परलोकोपयोगि । अर्थकामयुक्तत्वात्पथ्यम् ॥ १३४–१३७ ॥ सुग्रीवेण, मयेति शेषः ॥ १३८ ॥ वानराणां महाराजः कृतः, अह

* [ शृणु चापि समादेशं यदहं प्रब्रवीमि ते । राक्षसेश हरीशस्त्वां वाक्यमाह समाहितम् ॥ ] इत्यधिकः पाठः ।

स०—समोऽक्षितेन शत्रुणेति समाहितः । पूर्वं वालिमुखतः सख्येऽपि इदानीं रामसाहाय्येन शत्रुं त्वामित्यर्थः ॥

तस्येति । तेन साहाय्यस्यास्माभिः कर्तव्यत्वेन प्रस्थापितः, दूत इति शेषः ॥ १४० ॥ विधमन्ति यावदिति । "यावत्पुरानिपातयोर्लट्" इति लडर्थे लट् ॥ १४१ ॥ वानराणामिति । ये हि निमन्त्रिताः युद्धसाहाय्यार्थमाहूताः देवतानां सकाशं गच्छन्ति तेषां वानराणां प्रभावः पुरा केन न विदितः, त्वया विज्ञात एवेति भावः ॥ १४२ ॥ इदं वचस्सुग्रीवोक्तमेव

तस्य साहाय्यमस्माभिः कार्यं सर्वात्मना त्विह । तेन प्रस्थापितस्तुभ्यं समीपमिह धर्मतः । क्षिप्रमानीयतां सीता दीयतां राघवाय च ॥ १४० ॥ यावन्न हरयो वीरा विधमन्ति बलं तव ॥ १४१ ॥ वानराणां प्रभावो हि न केन विदितः पुरा । देवतानां सकाशं च ये गच्छन्ति निमन्त्रिताः ॥१४२॥ इति वानरराजस्त्वामाहेत्यभिहितो मया । मामैक्षत ततः क्रुद्धश्चक्षुषा प्रदहन्निव ॥ १४३ ॥ तेन वध्योऽहमाज्ञप्तो रक्षसा रौद्रकर्मणा । मत्प्रभावमविज्ञाय रावणेन दुरात्मना ॥ १४४ ॥ ततो विभीषणो नाम तस्य भ्राता महामतिः । तेन राक्षसराजोऽसौ याचितो मम कारणात् ॥ १४५ ॥ नैवं राक्षसशार्दूल त्यज्यतामेष निश्चयः । राजशास्त्रव्यपेतो हि मार्गः संसेव्यते त्वया ॥ १४६ ॥ दूतवध्या न दृष्टा हि राजशास्त्रेषु राक्षस । दूतेन वेदितव्यं च यथार्थं हितवादिना ॥ १४७ ॥ सुमहत्यपराधेऽपि दूतस्यातुलविक्रम । विरूपकरणं दृष्टं न वधोऽस्तीति शास्त्रतः ॥१४८॥ विभीषणेनैवमुक्तो रावणः संदिदेश तान् । राक्षसानेतदेवास्य लाङ्गूलं दह्यतामिति ॥ १४९ ॥ ततस्तस्य वचः श्रुत्वा मम पुच्छं समन्ततः । वेष्टितं शणवल्कैश्च जीर्णैः कार्पासजैः पटैः ॥ १५० ॥

मयोक्तमित्याह—इतीति ॥१४३–१४५॥ नैवमिति । कर्तव्यमिति शेषः । राजशास्त्रम् राजधर्मशास्त्रम् ॥१४६॥ वेदितव्यं वक्तव्यमित्यर्थः ॥४७–५०॥

मिति शेषः ॥ १३९ ॥ तस्य रामस्य तेन साहाय्यस्य कर्तव्यत्वेन प्रस्थापितः, दूत इति शेषः । तुभ्यं तव । धर्मतः कलहं विनेत्यर्थः । सीता दीयताम् ॥ १४० ॥ विपक्षे बाधकमाह—यावदिति । विधमन्ति विधमिष्यन्ति ॥ १४१ ॥ लङ्कानाशने वानराणां सामर्थ्यमस्तीत्याशयेनाह—वानराणामिति । ये निमन्त्रिताः युद्धसाहाय्यार्थमाहूताः देवतानां सकाशं गच्छन्ति तेषां वानराणां प्रभावः पुरा त्वया न विदितः न विज्ञातो हीति योजना ॥ १४२॥१४३ ॥ मत्प्रभावं वरदानलब्धावध्यत्वरूपम् ॥ १४४ ॥ तत इत्यादि श्लोकत्रयमेकं वाक्यम् । शास्त्रेण दूतवध्या न दृष्टा, विरूपकरणं ताडनं वा शास्त्रतः दृष्टमिति राक्षसराजः रावणः तेन विभीषणेन

यन्त्रितस्य आवृतस्य ॥ १५१ ॥ तत इति । नगरद्वारमागतास्सन्तः राजमार्गे अघोषयन्निति योजना ॥ १५२–१५४ ॥ पुच्छेन चेति । अट्टं वलभिः ॥ १५५–१५८ ॥ विस्मयोदन्तभाषितां भाषितविस्मयोदन्ताम्, उक्ताद्भुतवार्तामित्यर्थः । विस्मयवृत्तान्तव्यवहृतामिति वा ॥ १५९ ॥ निमित्तै

राक्षसाः सिद्धसन्नाहास्ततस्ते चण्डविक्रमाः । तदाऽदह्यन्त मे पुच्छं निघ्नन्तः काष्ठमुष्टिभिः । बद्धस्य बहुभिः पाशैर्यन्त्रितस्य च राक्षसैः ॥ १५१ ॥ ततस्ते राक्षसाः शूरा बद्धं मामग्निसंवृतम् । अघोषयन् राजमार्गे नगरद्वारमागताः ॥ १५२ ॥ ततोऽहं सुमहद्रूपं संक्षिप्य पुनरात्मनः ॥ १५३ ॥ विमोचयित्वा तं बन्धं प्रकृतिस्थः स्थितः पुनः । आयसं परिघं गृह्य तानि रक्षांस्यसूदयम् । ततस्तन्नगरद्वारं वेगेनाप्लुतवानहम् ॥ १५४ ॥ पुच्छेन च प्रदीप्तेन तां पुरीं साट्टगोपुराम् । दहाम्यहमसम्भ्रान्तो युगान्ताग्निरिव प्रजाः ॥ १५५ ॥ विनष्टा जानकी व्यक्तं न ह्यदग्धः प्रदृश्यते । लङ्कायां कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥ १५६ ॥ दहता च मया लङ्कां दग्धा सीता न संशयः । रामस्य हि महत् कार्यं मयेदं वितथीकृतम् ॥ १५७ ॥ इति शोकसमाविष्टश्चिन्तामहमुपागतः ॥ १५८ ॥ अथाहं वाचमश्रौषं चारणानां शुभाक्षराम् । जानकी न च दग्धेति विस्मयोदन्तभाषिताम् ॥ १५९ ॥ ततो मे बुद्धिरुत्पन्ना श्रुत्वा तामद्भुतां गिरम् । अदग्धा जानकीत्येवं निमित्तैश्चोपलक्षिता ॥ १६० ॥ दीप्यमाने तु लाङ्गूले न मां दहति पावकः । हृदयं च प्रहृष्टं मे वाताः सुरभिगन्धिनः ॥ १६१ ॥ तैर्निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः । ऋषिवाक्यैश्च सिद्धार्थैरभवं हृष्टमानसः ॥ १६२ ॥

श्चोपलक्षिता शकुनादिभिश्च सीता न दग्धेति ज्ञातेत्यर्थः ॥ १६० ॥ हृदयं प्रहृष्टम्, आसीदिति शेषः । सुरभिगन्धिनः, आसन्निति शेषः ॥ १६१ ॥ दृष्टार्थैः दृष्टफलैः । निमित्तैः शकुनैः । कारणैः नेत्रस्फुरणादिभिः । महागुणैः फलव्याप्तैः । सिद्धार्थैः अबाधितार्थैः । तत्र हेतुत्वेन ऋषिपदोपादानम् ॥ १६२ ॥

याचित इति सम्बन्धः ॥ १४५–१५० ॥ यन्त्रितस्य निरुद्धस्य ॥ १५१–१५८ ॥ विस्मयोदन्तभाषितां विस्मयवृत्तान्तविषयव्यवहाराम् । विस्मयोदन्तभाषिणाम् इति वा पाठः ॥ १५९ ॥ निमित्तैः शुभसूचकैः ॥ १६० ॥ निमित्तान्याह–दीप्यमान इत्यादि ॥ १६१ ॥ दृष्टार्थैः दृष्टसंवादैः । महागुणैः कारणैः मत्प्रवृत्तिकारणैः सीता

पुनरित्यर्धमेकं वाक्यम् । विसृष्टः प्रेषितोऽस्मि ॥ १६२ ॥ तत्र लङ्कासमीपे । सामीप्ये सप्तमी । तत्र वर्तमानम् अरिष्टं पर्वतम् ॥ १६४ ॥ तत इति ।



पुनर्दृष्ट्वा च वैदेहीं विसृष्टश्च तया पुनः ॥ १६३ ॥ ततः पर्वतमासाद्य तत्रारिष्टमहं पुनः । प्रतिप्लवनमारेभे युष्मद्दर्शनकांक्षया ॥ १६४ ॥ ततः पवनचन्द्रार्कसिद्धगन्धर्वसेवितम् । पन्थानमहमाक्रम्य भवतो दृष्टवानिह ॥ १६५ ॥ राघवस्य प्रभावेन भवतां चैव तेजसा । सुग्रीवस्य च कार्यार्थं मया सर्वमनुष्ठितम् ॥ १६६ ॥ एतत्सर्वं मया तत्र यथावदुपपादितम् । अत्र यन्न कृतं शेषं तत्सर्वं क्रियतामिति ॥ १६७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

एतदाख्याय तत्सर्वं हनुमान् मारुतात्मजः । भूयः समुपचक्राम वचनं वक्तुमुत्तरम् ॥ १ ॥ सफलो राघवोद्योगः सुग्रीवस्य च संभ्रमः । शीलमासाद्य सीताया मम च प्रवणं मनः ॥ [ आर्यायाः सदृशं शीलं सीतायाः प्लवगर्षभाः ]॥२॥

भवतो दृष्टवानिह । भवतः युष्मान् । इह समुद्रतीरे ॥ १६५ ॥ राघवस्येति । भवतां चैव तेजसा भवदनुग्रहेणेत्यर्थः । सुग्रीवस्य च कार्यार्थम्, स्वामिकार्यस्यावश्यकर्तव्यत्वादिति भावः । कार्यार्थं कार्यवस्तु । क्लीबत्वमार्षम् । अस्यानुवादवाक्यविस्तरस्य प्रयोजनं वानराणां श्रवणकुतूहलातिशयप्रकाशनम् । अस्मिन् सर्गे सार्धपट्षष्ट्युत्तरशतश्लोकाः ॥ १६६ ॥ १६७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टपञ्चाशः सर्गः ॥ ५८ ॥ एतदिति । तदेतदाख्याय उत्तरं वचनं वक्तुमुपचक्रामेत्यन्वयः ॥ १ ॥ अथ संप्रत्येव रावणं जित्वा

रामरूपैः ॥१६२॥१६३॥ आरेभे लिङुत्तमपुरुषैकवचनम् ॥१६४॥ तत इत्यनन्तरम्—अहं पन्थानमाक्रम्य भवतो दृष्टवानिह इति पाठः । अन्यथाऽहंशब्दपौनरुक्त्यात् ॥ १६५–१६७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् अष्टपञ्चाशः सर्गः ॥५८ ॥ १ ॥ सफल इति । सम्भ्रमः

स०—राघवोद्योगः सीतावृत्तान्तज्ञानोत्साहः । सुग्रीवस्य सङ्क्रमः सुग्रीवेण सह सख्यं च । सीतायाः शीलं पातिव्रत्यादिसद्वृत्तम् । आसाद्य प्राप्य । दृष्ट्वा सफल इति ज्ञातः । एतादृश्याः स्त्रिया अन्यस्याः काप्यभावेनास्या विषये बहुलायासोपि यत्नः कर्तव्य एवेति भावः । आर्यायाः पार्वत्याः सदृशं शीलं सीतायाः । अथवा आर्यायाः सीतायाः शीलं सीताया एव सदृशमित्यनन्वयालङ्कारः ॥ २ ॥

सीतया सहैवास्माभिः प्रतियातव्यमिति हृदि निधायाह—सफल इति। संभ्रमः त्वरा, उत्साह इति यावत्। कुतस्साफल्यमित्याशङ्क्य सीतापातिव्रत्योपलम्भादित्याह—शीलमिति। शीलं वृत्तम्, पातिव्रत्यमिति यावत्। अहं तु प्रागेव तदेकशरण इत्याह—मम चेति। प्रवणं प्रह्वं तत्परमिति यावत्। सीताचारित्रस्य न किंचिदसाध्यमस्तीति भावः ॥ २ ॥ तर्हि तं दुरात्मानं रावणं स्पृशन्तमेव किमिति नादहदित्याशङ्क्य तस्यापि तपस्सम्पत्ति

तपसा धारयेल्लोकान् क्रुद्धो वा निर्दहेदपि। सर्वथाऽतिप्रवृद्धोऽसौ रावणो राक्षसाधिपः। तस्य तां स्पृशतो गात्रं तपसा न विनाशितम् ॥ ३ ॥ न तदग्निशिखा कुर्यात् संस्पृष्टा पाणिना सती। जनकस्यात्मजा कुर्याद्यत् क्रोधकलुषीकृता ॥ ४ ॥

सद्भावादित्याह—तपसेत्यादिना। यद्वा रावणतपःकथनद्वारा सीतायाः पातिव्रत्यातिशयमाह—तपसेत्यादिना। तपसा अतिप्रवृद्ध इत्यन्वयः। कोपप्रसादाभ्यां सर्वलोकनिग्रहानुग्रहसमर्थोऽसौ रावणः सर्वथा महातपस्संपन्नः। अत एव सीतास्पर्शेऽप्यविनाशित इत्यर्थः ॥ ३ ॥ तर्हि सीताशीलं दुर्बलमस्माकं किमुपकरिष्यतीत्याशङ्क्य नेत्याह—न तदिति। सीताशीलमेव बलीयस्त्वादुपकरिष्यतीत्यर्थः। क्रोधकलुषीकृतेति वचनाद्भर्तृमुखेन वैरनिर्यातनं वीरपत्नीधर्मः। अन्यथा महालाघवं भर्तुरित्यद्यापि पारतन्त्र्यपालनाय तादृक्क्रोधाकरणाद्रावणो जीवतीति गम्यते। एतदेवोक्तं प्राक्—"असन्देशात्तु रामस्य तपसश्चानुपालनात्। न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह तेजसा॥" इति ॥ ४ ॥

त्वरा, उत्साह इत्यर्थः। कुतः साफल्यमित्याशङ्क्य सीतापातिव्रत्यादित्याह—शीलमिति। शीलं सद्वृत्तम्। पातिव्रत्यमिति यावत्। आसाद्य दृष्ट्वेत्यर्थः। मम मनः प्रवणं प्रह्वम्, अभूदिति शेषः। सीतापातिव्रत्यस्य न किञ्चिदसाध्यमस्तीति मम निश्चयोऽभूदिति भावः ॥ २ ॥ तर्हि दुरात्मानं रावणं किमिति नादहदित्याशङ्क्य तस्यापि तपस्सम्पत्तिमत्त्वादित्याह—तपसेति सार्धश्लोकेन। सर्वथाऽसौ तपसाऽतिप्रवृद्धः। कोपप्रसादाभ्यां सर्वलोकनिग्रहानुग्रहसमर्थोऽसौ रावणो महातपस्सम्पन्न इत्यर्थः। अत एव तां सीतां स्पृशतोऽपि तस्य गात्रं तपसा न विनाशितमिति सम्बन्धः ॥ ३ ॥ तर्हि सीताशीलं दुर्बलमस्माकं किमुपकरिष्यतीत्याशङ्क्य दुर्बलं न भवतीत्याह—न तदिति। जनकस्यात्मजा क्रोधकलुषीकृता सती यत्कुर्यात् पाणिना स्पृष्टा अग्निशिखा तन्न कुर्यादिति सम्बन्धः। क्रोधकलुषीकृतेति विशेषणात् भर्तृमुखेन वैरनिर्यातनं वीरपत्नीधर्मः। अन्यथा महल्लाघवं भर्तुरित्यद्यापि भर्तृवीर्यपरिपालनाय तादृक्क्रोधाकरणात् रावणो जीवति अत एव प्राक् 'असन्देशात्तु

स०—सर्वथा सर्वप्रकारेण तपोबलादिनाऽतिप्रकृष्टः अभिवृद्धः। कथमेवं ज्ञायत इत्यत आह—यस्येति। सर्वथा रावणतपोबलेन सीतायाः कोपातिशयानुदयात्तस्य जीवनमिति फलितार्थः ॥ ३ ॥

एवं स्थिते युष्मदनुमत्या भृत्यविजयोऽपि स्वामिन एवेति कृत्वा सीतारामपदावलम्बादहमेव रावणं निर्जित्य सीतापुरस्कारेणैव राघवौ द्रक्ष्या मीत्याह—जाम्बवदिति ॥ ५ ॥ ६ ॥ न चाशक्तिशङ्का कार्येति बहुधा प्रपञ्चयन्नाह—अहमित्यादिना ॥ ७–९ ॥ ब्राह्ममित्यादि । अभ्यनुज्ञातः अभ्यनु

जाम्बवत्प्रमुखान् सर्वाननुज्ञाप्य महाहरीन् । अस्मिन्नेवंगते कार्ये भवतां च निवेदिते ॥ ५ ॥ न्याय्यं स्म सह वैदेह्या द्रष्टुं तौ पार्थिवात्मजौ ॥ ६ ॥ अहमेकोऽपि पर्याप्तः सराक्षसगणां पुरीम् । तां लङ्कां तरसा हन्तुं रावणं च महाबलम् ॥ ७ ॥ किं पुनः सहितो वीरैर्बलवद्भिः कृतात्मभिः । कृतास्त्रैः प्लवगैः शूरैर्भवद्भिर्विजयैषिभिः ॥ ८ ॥ अहं तु रावणं युद्धे ससैन्यं सपुरस्सरम् । सहपुत्रं वधिष्यामि सहोदरयुतं युधि ॥ ९ ॥ ब्राह्ममैन्द्रं च रौद्रं च वायव्यं वारुणं तथा । यदि शक्रजितोऽस्त्राणि दुर्निरीक्षाणि संयुगे ॥ १० ॥ तान्यहं विधमिष्यामि निहनिष्यामि राक्षसान् । भवतामभ्यनुज्ञातो विक्रमो मे रुणद्धि तम् ॥ ११ ॥ मयाऽतुला विसृष्टा हि शैलवृष्टिर्निरन्तरा । देवानपि रणे हन्यात् किं पुनस्तान्निशाचरान् ॥ १२ ॥ सागरोऽप्यतियाद्वेलां मन्दरः प्रचलेदपि । न जाम्बवन्तं समरे कम्पयेदरि वाहिनी ॥ १३ ॥ सर्वराक्षससङ्घानां राक्षसा ये च पूर्वकाः । अलमेको विनाशाय वीरो वालिसुतः कपिः ॥ १४ ॥

ज्ञानात् । पञ्चम्यास्तसिः । मे विक्रमः तं रावणम् रुणद्धि हन्तीत्यर्थः ॥ १०–१२ ॥ अतियात् आर्षं ह्रस्वत्वम् ॥ १३ ॥ सर्वेति । पूर्वकाः,

रामस्य' इत्युक्तमिति भावः ॥ ४ ॥ भृत्यजयोऽपि स्वामिन एवेति कृत्वा सीतापातिव्रत्यमहिम्ना रावणं वयमेव जित्वा देव्या सह राघवौ द्रक्ष्याम इत्याह—जाम्बवत्प्रमुखानिति । अस्मिन् कार्ये एवंगते भवतां निवेदिते सति जाम्बवत्प्रमुखान् सर्वाननुज्ञाप्य वैदेह्या सह तौ पार्थिवात्मजौ द्रष्टुं न्याय्यं स्मेति सम्बन्धः । जाम्बवदादयो यद्यनुजानीयुः तदा राक्षसान् हत्वा देव्या सहैव रामसमीपं गमिष्याम इति भावः ॥ ५ ॥ ६ ॥ न चाशक्तिशङ्का कार्येत्याह—अहमेकोऽपीत्यादि ॥ ७ ॥ कृतास्त्रैः देवांशत्वादस्त्रप्रयोगसमर्थैः ॥ ८–१० ॥ अभ्यनुज्ञातः अभ्यनुज्ञानादित्यर्थः । मे विक्रमः तम् इन्द्रजितं रुणद्धि वारयति, आक्रमतीत्यर्थः । भवतामनुज्ञया इन्द्रजितमपि वधिष्यामीति भावः ॥ ११ ॥ १२ ॥ इदानीं सर्वेऽपि भवन्तस्तद्वधे समर्था इत्याह—सागरोऽपीति ॥१३॥ ये च पूर्वकाः, तेषामपीति शेषः ॥१४–२१ ॥

तेषामिति शेषः ॥ १४–२१ ॥ मयैवेति । दग्धत्वेप्यङ्गारावस्था भवति साऽपि नास्तीत्याह–भस्मीकृतेति ॥ २२ ॥ नामविश्रावणमेवाह–जयतीति ।

पनसस्योरुवेगेन नीलस्य च महात्मनः । मन्दरोऽप्यवशीर्येत किं पुनर्युधि राक्षसाः ॥ १५ ॥ सदेवासुरयक्षेषु गन्धर्वोरगपक्षिषु । मैन्दस्य प्रतियोद्धारं शंसत द्विविदस्य वा ॥ १६ ॥ अश्विपुत्रौ महाभागावेतौ प्लवगसत्तमौ । एतयोः प्रतियोद्धारं न पश्यामि रणाजिरे ॥ १७ ॥ पितामहवरोत्सेकात् परमं दर्पमास्थितौ । अमृतप्राशिनावेतौ सर्ववानरसत्तमौ ॥ १८ ॥ अश्विनोर्माननार्थं हि सर्वलोकपितामहः । सर्वावध्यत्वमतुलमनयोर्दत्तवान् पुरा ॥ १९ ॥ वरोत्सेकेन मुक्तौ च प्रमथ्य महतीं चमूम् । सुराणाममृतं वीरौ पीतवन्तौ प्लवङ्गमौ ॥ २० ॥ एतावेव हि संक्रुद्धौ सवाजिरथकुञ्जराम् । लङ्कां नाशयितुं शक्तौ सर्वे तिष्ठन्तु वानराः ॥ २१ ॥ मयैव निहता लङ्का दग्धा भस्मीकृता पुनः । राजमार्गेषु सर्वत्र नाम विश्रावितं मया ॥ २२ ॥ जयत्यतिबलो रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ २३ ॥ अहं कोसलराजस्य दासः पवनसम्भवः । हनुमानिति सर्वत्र नाम विश्रावितं मया ॥ २४ ॥ अशोकवनिकामध्ये रावणस्य दुरात्मनः । अधस्ताच्छिंशुपावृक्षे साध्वी करुणमास्थिता ॥ २५ ॥ राक्षसीभिः परिवृता शोकसन्तापकर्शिता । मेघलेखापरिवृता चन्द्रलेखेव निष्प्रभा । अचिन्तयन्ती वैदेही रावणं बलदर्पितम् ॥ २६ ॥ पतिव्रता च सुश्रोणी अवष्टब्धा च जानकी ॥ २७ ॥

जयति सर्वोत्कर्षेण वर्तते । तदुक्तं हरिणा–"जयिर्जयाभिभवयोरान्यथेंऽसावकर्मकः । उत्कर्षप्राप्तिराद्यार्थौं द्वितीयेऽर्थे सकर्मकः ॥" इति ॥ २३ ॥ २४ ॥ अथ सीतादुर्दशाविमर्शेऽपि सम्प्रत्यसौ समानेतव्येत्याशयेन तद्दशां दर्शयति–अशोकेत्यादिना ॥ २५ ॥ २६ ॥ पतिव्रता चेत्यादि ।

मयेति । नाम विश्रावितम्, सुग्रीवादेरिति शेषः ॥ २२ ॥ तदेवाह–जयतीति ॥ २३ ॥ २४ ॥ सीतादुर्दशाविमर्शेऽपि संप्रति सा समानेतव्येत्याशयेन तद्दशां वर्णयति–अशोकवनिकेत्यादि ॥ २५ ॥ अचिन्तयन्ती अगणयन्ती ॥ २६ ॥ अवष्टब्धा निरुद्धा ॥ २७ ॥

पौलोमीव पुरन्दरे इति । नहुषनिर्बन्ध इति भावः ॥२८-२९॥ प्रमदावने अशोकवनिकायाम् । विनिवृत्तार्था त्यक्तप्रयोजना । रावणप्रलोभनवाक्यैरवशीकृतेत्यर्थः । सर्वमर्थं रामोद्योगादिकम् । दर्शिता बोधिता ॥३०-३३॥ समुदाचारः चारित्रमिति यावत् । नन्वेवंमाहात्म्या सीता स्वयमेव रावणं किमिति



अनुरक्ता हि वैदेही रामं सर्वात्मना शुभा । अनन्यचित्ता रामे च पौलोमीव पुरन्दरे ॥ २८ ॥ तदेकवासः संवीता रजोध्वस्ता तथैव च । शोकसन्तापदीनाङ्गी सीता भर्तृहिते रता ॥ २९ ॥ सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः । राक्षसीभिर्विरूपाभिर्दृष्टा हि प्रमदावने ॥ ३० ॥ एकवेणीधरा दीना भर्तृचिन्तापरायणा । अधःशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ॥ ३१ ॥ रावणाद् विनिवृत्तार्था मर्तव्यकृतनिश्चया । कथंचिन्मृगशावाक्षी विश्वासमुपपादिता ॥ ३२ ॥ ततः सम्भाषिता चैव सर्वमर्थं च दर्शिता । रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता ॥ ३३ ॥ नियतः समुदाचारो भक्तिर्भर्तरि चोत्तमा । यन्न हन्ति दशग्रीवं स महात्मा कृतागसम् । निमित्तमात्रं रामस्तु वधे तस्य भविष्यति ॥ ३४ ॥ सा प्रकृत्यैव तन्वङ्गी तद्वियोगाच्च कर्शिता । प्रतिपत्पाठशीलस्य विद्येव तनुतां गता ॥ ३५ ॥ एवमास्ते महाभागा सीता शोकपरायणा । यदत्र प्रतिकर्तव्यं तत्सर्वमुपपद्यताम् ॥ ३६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

न हन्तीत्याशङ्क्याह—यन्न हन्तीति । दशग्रीवं न हन्तीति यत् तत्र कारणं स दशाननः महात्मा महानुभावः । शापनिबन्धनदुर्मरणाभावादिति भावः । अतस्तस्य वधे रामस्तु राम एव निमित्तमात्रं भविष्यति । तथा तस्योत्कर्षात् । सीता तु निमित्तकारणमिति शेषः । भर्त्रैव वैरनिर्यातनं वीरपत्नीधर्मः अन्यथा भर्तुर्महल्लाघवमिति मनीषया न स्वयं हन्ति न त्वसामर्थ्यादिति भावः ॥३४॥३५॥ फलितमुपसंहरति—एवमिति । उपपद्यताम् अनुष्ठीयताम् ।



पौलोमीव पुरन्दरे इति, नहुषवद्धापीति भावः ॥ २८--३१ ॥ रावणाद्विनिवृत्तार्था विनिवृत्तः अर्थः प्रयोजनं यस्यास्सा, रावणप्रलोभनवाक्यैरवशीकृतेत्यर्थः ॥३२॥ दर्शिता उक्तेत्यर्थः ॥ ३३ ॥ नियतः समुदाचारः दृढपातिव्रत्यं भर्तरि उत्तमा भक्तिश्च दशग्रीवं न हन्तीति यत अतः स दशाननो महात्मा शापनिबन्धनदुर्मरणा

अस्मिन् सर्गे सार्द्धपट्त्रिंशच्छ्लोकाः ॥ ३६ ॥ इति श्रीगोविन्द० श्रीरामा० शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥
तस्येत्यादि ॥ १ ॥ अयुक्तं त्विति । वानरा इति सम्बोधनम् ॥२–६॥ अथ जाम्बवानङ्गदवाक्यं बहुमन्यमानस्सुहृद्भावेन प्रतिषेधति–न तावदिति ।

तस्य तद्वचनं श्रुत्वा वालिसूनुरभाषत ॥१॥ अयुक्तं तु विना देवीं दृष्टवद्भिश्च वानराः । समीपं गन्तुमस्माभी राघवस्य महात्मनः ॥२॥ दृष्टा देवी न चानीता इति तत्र निवेदनम् । अयुक्तमिव पश्यामि भवद्भिः ख्यातविक्रमैः ॥ ३ ॥ न हि नः प्लवने कश्चिन्नापि कश्चित्पराक्रमे । तुल्यः सामरदैत्येषु लोकेषु हरिसत्तमाः ॥ ४ ॥ तेष्वेवं हतवीरेषु राक्षसेषु हनूमता । किमन्यदत्र कर्तव्यं गृहीत्वा याम जानकीम् ॥ ५ ॥ तमेवं कृतसङ्कल्पं जाम्बवान् हरिसत्तमः । उवाच परमप्रीतो वाक्यमर्थवदर्थवित् ॥ ६ ॥ न तावदेषा मतिरक्षमा नो यथा भवान् पश्यति राजपुत्र । यथा तु रामस्य मतिर्निविष्टा तथा भवान् पश्यतु कार्यसिद्धिम् ॥७॥ इत्यार्षे० श्रीमत्सुन्दरकाण्डे षष्टितमः सर्गः ॥६०॥

अक्षमा अयुक्ता न किन्तु युक्तैवेत्यर्थः । यद्यपि सम्यगुक्तं समर्थैश्चापि रामाज्ञानुसारेण कर्तव्यम् न स्वातन्त्र्येणेत्यर्थः । अस्मिन् सर्गे सार्धषट्श्लोकाः ॥ ७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

भावादिति भावः । देव्या तस्य वधाकरणे हेतुमाह निमित्तमात्रमिति । तुशब्दोऽवधारणे, निमित्तमात्रं सीतेति भावः । तस्य वधे राम एव भविष्यति ॥३४--३६॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् एकोनषष्टितमः सर्गः ॥ ५९ ॥ १ ॥ २ ॥ दृष्टा देवी न चानीतेति भवद्भिर्निवेदितुं न युक्तमिव पश्यामीति सम्बन्धः ॥ ३ ॥ ४ ॥ तेष्विति । हनुमता तेषु राक्षसेषु हतशेषेषु सत्सु । अत्र राक्षसेषु अन्यत् किं कर्तव्यम् ? न किमपि किन्तु जानकीं गृहीत्वा यामेति सम्बन्धः ॥ ५ ॥ ६ ॥ जाम्बवानङ्गदस्य मतं बहुमान्य सुहृद्भावेन निवर्तयति–न तावदिति । हे राजपुत्र ! यथा भवान् पश्यति एषा मतिः नः अस्माकम् अक्षमा न अयुक्ता न किन्तु युक्तैव तथापि यथा रामस्य मतिर्निविष्टा अवस्थिता तथा भवान् कार्यसिद्धिं पश्यत्विति सम्बन्धः ॥७॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां षष्टितमः सर्गः ॥ ६० ॥

तत इत्यादि ॥ १ ॥ प्रीतिमन्त इत्यादि ॥ २ ॥ ३ ॥ सभाज्यमानं सम्पूज्यमानम् । वहन्त इव दृष्टिभिरिति । प्रीतिपूर्वकानिमिषदर्शनाद्दृष्टिष्वारोप्य नयन्त इवेत्युत्प्रेक्षा ॥४॥ अर्थनिर्वृत्तिम् अर्थसिद्धिम् । समाधाय निश्चित्य सङ्कल्प्य वा । समृद्धार्थाः सिद्धकार्याः । कर्मसिद्धिभिः कार्यसिद्धिभिः उन्नताः

ततो जाम्बवतो वाक्यमगृह्णन्त वनौकसः । अङ्गदप्रमुखा वीरा हनूमांश्च महाकपिः ॥ १ ॥ प्रीतिमन्तस्ततः सर्वे वायुपुत्रपुरस्सराः । महेन्द्राद्रिं परित्यज्य पुप्लुवुः प्लवगर्षभाः ॥ २ ॥ मेरुमन्दरसङ्काशा मत्ता इव महागजाः । छादयन्त इवाकाशं महाकाया महाबलाः ॥ ३ ॥ सभाज्यमानं भूतैस्तमात्मवन्तं महाबलम् । हनुमन्तं महावेगं वहन्त इव दृष्टिभिः ॥ ४ ॥ राघवे चार्थनिर्वृत्तिं कर्तुं च परमं यशः । समाधाय समृद्धार्थाः कर्मसिद्धिभिरुन्नताः ॥ ५ ॥ प्रियाख्यानोन्मुखाः सर्वे सर्वे युद्धाभिनन्दिनः । सर्वे रामप्रतीकारे निश्चितार्था मनस्विनः ॥ ६ ॥ प्लवमानाः खमाप्लुत्य ततस्ते काननौकसः । नन्दनोपममासेदुर्वनं द्रुमलतायुतम् ॥ ७ ॥ यत्तन्मधुवनं नाम सुग्रीवस्याभिरक्षितम् । अधृष्यं सर्वभूतानां सर्वभूतमनोहरम् ॥ ८ ॥ यद्रक्षति महावीर्यः सदा दधिमुखः कपिः । मातुलः कपिमुख्यस्य सुग्रीवस्य महात्मनः ॥ ९ ॥ ते तद्वनमुपागम्य बभूवुः परमोत्कटाः । वानरा वानरेन्द्रस्य मनःकान्ततमं महत् ॥१०॥ ततस्ते वानरा हृष्टा दृष्ट्वा मधुवनं महत् । कुमारमभ्ययाचन्त मधूनि मधुपिङ्गलाः ॥११॥

इतरेभ्य उत्कृष्टाः ॥ ५ ॥ रामप्रतीकारे रामप्रत्युपकारे । पुप्लुवुरिति पूर्वेण सम्बन्धः ॥ ६–९ ॥ परमोत्कटाः परमोत्सुकाः ॥१०॥ मधुपिङ्गलाः मधुवत्



अगृह्णन्त युक्तियुक्तत्वेनामन्यन्त ॥ १ ॥ पुप्लुवुः प्लवन्तो जग्मुः ॥ २ ॥ आकाशं छादयन्त इवेत्युत्प्रेक्षा ॥ ३ ॥ सभाज्यमानं पूज्यमानम् । वहन्त इव दृष्टिभिरिति प्रीतिपूर्वकानिमिषदर्शनाद् दृष्टीनां वाहकत्वोत्प्रेक्षा ॥ ४ ॥ अर्थनिर्वृत्तिं कार्यसिद्धिम् । समाधाय निश्चित्य पुप्लुवुरिति पूर्वेण सम्बन्धः ॥ ५ ॥ रामप्रतीकारे रामस्य प्रत्युपकारे ॥ ६ ॥ वनं सुग्रीवस्य मधुवनम् ॥ ७–९ ॥ परमोत्कटाः परमोत्सुकाः ॥ १० ॥ मधुपिङ्गलाः मधुवत्पिङ्गलवर्णाः ॥ ११ ॥

पिङ्गलवर्णाः वानराः ॥ ११ ॥ अनुमान्य अनुमतिं कारयित्वा । निसर्गं विसर्जनम्, अनुमतिमिति यावत् ॥ १२ ॥ ततश्चेति । पूर्वमेव सीतादर्शनात् प्रहृष्टाः ततः मधुवनभङ्गे अङ्गदेनानुमतास्सन्तस्ततो मुदिताः तत्प्रेरिताः प्रनृत्यन्तोऽभवन् ॥ १३ ॥ रामानु०—मुदिताश्च ततश्चेति पाठः ॥ १३ ॥ मधुवनभङ्गा

ततः कुमारस्तान् वृद्धाञ्जाम्बवत्प्रमुखान् कपीन् । अनुमान्य ददौ तेषां निसर्गं मधुभक्षणे ॥१२॥ ततश्चानुमताः सर्वे सम्प्रहृष्टा वनौकसः । मुदिताः प्रेरिताश्चापि प्रनृत्यन्तोऽभवंस्ततः ॥ १३ ॥ गायन्ति केचित् प्रणमन्ति केचि न्नृत्यन्ति केचित् प्रहसन्ति केचित् । पतन्ति केचिद्विचरन्ति केचित् प्लवन्ति केचित् प्रलपन्ति केचित् ॥ १४ ॥ परस्परं केचिदुपाश्रयन्ते परस्परं केचिदुपाक्रमन्ते । परस्परं केचिदुपब्रुवन्ते परस्परं केचिदुपारमन्ते ॥ १५ ॥ द्रुमाद् द्रुमं केचिदभिद्रवन्ते क्षितौ नगाग्रान्निपतन्ति केचित् । महीतलात् केचिदुदीर्णवेगा महाद्रुमाग्राण्यभिसम्प तन्ति॥१६॥ गायन्तमन्यः प्रहसन्नुपैति हसन्तमन्यः प्ररुदन्नुपैति । रुदन्तमन्यः प्रणुदन्नुपैति नुदन्तमन्यः प्रणदन्नु पैति ॥ १७ ॥ समाकुलं तत्कपिसैन्यमासीन्मधुप्रपानोत्कटसत्त्वचेष्टम् । न चात्र कश्चिन्न बभूव मत्तो न चात्र कश्चिन्न बभूव तृप्तः ॥ १८ ॥ ततो वनं तत्परिभक्ष्यमाणं द्रुमांश्च विध्वंसितपत्रपुष्पान् । समीक्ष्य कोपाद्दधिवक्त्र नामा निवारयामास कपिः कपींस्तान् ॥ १९ ॥

भ्यनुज्ञानकृतं वानरहर्षविकारमेव वर्णयति सर्गशेषेण—गायन्ति केचित् प्रणमन्ति केचिन्नृत्यन्ति केचित्प्रहसन्ति केचित् । पतन्ति केचिद्विचरन्ति केचित्प्लवन्ति केचित्प्रलपन्ति केचित् ॥ इति पाठः । प्रणमन्ति अवाक्छिरसः पतन्ति । पतन्ति ऊर्ध्वपादाः पृष्ठेन पतन्ति ॥१४–१७॥ समाकुलमिति । मधुप्रपानोत्कटसत्त्वचेष्टं मत्तचित्तचेष्टम् ॥ १८ ॥ रामानु०—मधुप्रपानोत्कटसत्त्वचेष्टमिति सम्यक् ॥ १८ ॥ १९–२२ ॥

अनुमान्य अनुमतिं कारयित्वा । निसर्गम् अनुज्ञामित्यर्थः ॥१२॥ अनुमताः मधुपानादौ कृतानुमतिकाः । हर्षमुदोर्बाह्याभ्यन्तरकृतो भेदः ॥१३॥ तत्र बाह्यमानन्द सूचकमाह—गायन्तीति ॥ १४–१७ ॥ मधुप्रपानोत्कटसत्त्वचेष्टं मधुप्रपाने उत्कटसत्त्वचेष्टम्, मत्तचित्तचेष्टमित्यर्थः ॥ १८–२१ ॥

नखैरिति। निर्विषयं निर्गतमधुमूलादिभोग्यवस्तुकं चक्रुरित्यर्थः ॥ २३ ॥ रामानु०–इथ सम्प्रहारिकः ॥ २३ ॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकषष्टितमः सर्गः ॥६१॥ तानित्यादि। तान् दधिमुखकलहव्याकुलितान्। अन्ये तु तानुवाचेत्यादिना



स तैः प्रवृद्धैः परिभर्त्स्यमानो वनस्य गोप्ता हरिवीरवृद्धः। चकार भूयो मतिमुग्रतेजा वनस्य रक्षां प्रति वानरेभ्यः ॥ २० ॥ उवाच कांश्चित् परुषाणि धृष्टमसक्तमन्यांश्च तलैर्जघान। समेत्य कैश्चित् कलहं चकार तथैव साम्नोप जगाम कांश्चित् ॥ २१ ॥ स तैर्मदात् सम्परिवार्य वाक्यैर्बलाच्च तेन प्रतिवार्यमाणैः। प्रधर्षितस्त्यक्तभयैः समेत्य प्रकृष्यते चाप्यनवेक्ष्य दोषम् ॥२२॥ नखैस्तुदन्तो दशनैर्दशन्तस्तलैश्च पादैश्च समापयन्तः। मदात् कपिं तं कपयः समग्रा महावनं निर्विषयं च चक्रुः ॥२३॥ इत्यार्षे श्रीरामायणे० श्रीमत्सुन्दरकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

तानुवाच हरिश्रेष्ठो हनुमान् वानरर्षभः। अव्यग्रमनसो यूयं मधु सेवत वानराः। अहमावारयिष्यामि युष्माकं परिपन्थिनः ॥ १ ॥ श्रुत्वा हनुमतो वाक्यं हरीणां प्रवरोऽङ्गदः। प्रत्युवाच प्रसन्नात्मा पिबन्तु हरयो मधु ॥ २ ॥ अवश्यं कृतकार्यस्य वाक्यं हनुमतो मया। अकार्यमपि कर्तव्यं किमङ्ग पुनरीदृशम् ॥ ३ ॥ अङ्गदस्य मुखाच्छ्रुत्वा वचनं वानरर्षभाः। साधु साध्विति संहृष्टा वानराः प्रत्यपूजयन् ॥४॥ पूजयित्वाऽङ्गदं सर्वे वानरा वानरर्षभम्। जग्मुर्मधुवनं यत्र नदीवेगा इव द्रुतम् ॥ ५ ॥

पूर्वसर्गोक्तं संक्षेपेणानूद्य उपरि गच्छतीत्याचक्षते। अपरे तु सर्गमुखे केचिच्छ्लोकाः पतिताः इत्याहुः ॥१॥२॥ अङ्गेति सम्बोधने निपातः ॥ ३ ॥ अङ्गदस्य स्वामिनः मुखाद्वचनं हनुमदुक्तं श्रुत्वा ॥ ४ ॥ जग्मुर्मधुवनमिति प्रदेशभेदविवक्षया। यद्वा दधिमुखनिवारणेन भीतानां हनुमदङ्गदाभ्यां पुनरनु



स तैरिति। तेन दधिमुखेन। बलाच्च प्रतिवार्यमाणैस्त्यक्तभयैः समेत्य सम्परिवार्य मदाद्वाक्यैः प्रधर्षणदोषमनवेक्ष्य प्रकृष्यत इति सम्बन्धः ॥२२॥ निर्विषयं चक्रुः निर्गतमधुफलादिभोज्यं चक्रुरित्यर्थः ॥ २३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् एकषष्टितमः सर्गः ॥ ६१ ॥ पुनरुक्तमेव विस्तरेणाह–तानिति ॥ १॥ श्रुत्वेति। पिबन्त्विति प्रत्युवाचेति सम्बन्धः ॥ २–४ ॥ जग्मुर्मधुवनमिति पुनर्वचनं प्रदेशभेदविवक्षयेति द्रष्टव्यम् ॥ ५॥

ज्ञापनेन पुनर्जग्मुरित्यर्थः ॥५॥ वीर्यतः बलात् । अतिसर्गादङ्गदाभ्यनुज्ञानात् । दृष्ट्वा श्रुत्वा च मैथिलीं दर्शनश्रवणाभ्यां च हेतुना। वनपालानाक्रम्य आक्षिप्य ॥६॥७॥ सक्तान् वनपालने रतान् ॥८॥ मधूनि मधुपटलानि । द्रोणमात्राणि द्रोणप्रमाणानि आढकप्रमाणानि । निघ्नन्ति स्म पीतावशिष्टानि मधु

ते प्रविष्टा मधुवनं पालानाक्रम्य वीर्यतः ॥ ६ ॥ अतिसर्गाच्च पटवो दृष्ट्वा श्रुत्वा च मैथिलीम् । पपुः सर्वे मधु तदा रसवत् फलमाददुः ॥ ७ ॥ उत्पत्य च ततः सर्वे वनपालान् समागतान् । ताडयन्ति स्म शतशः सक्तान् मधुवने तदा ॥ ८ ॥ मधूनि द्रोणमात्राणि बाहुभिः परिगृह्य ते । पिबन्ति सहिताः सर्वे निघ्नन्ति स्म तथाऽपरे ॥ ९ ॥ केचित्पीत्वाऽपविध्यन्ति मधूनि मधुपिङ्गलाः । मधूच्छिष्टेन केचिच्च जघ्नुरन्योन्यमुत्कटाः ॥ १० ॥ अपरे वृक्षमूले तु शाखां गृह्य व्यवस्थिताः । अत्यर्थं च मदग्लानाः पर्णान्यास्तीर्य शेरते ॥ ११ ॥ उन्मत्तभूताः प्लवगा मधुमत्ताश्च हृष्टवत् । क्षिपन्ति च तदाऽन्योन्यं स्खलन्ति च तथाऽपरे ॥ १२ ॥ केचित् क्ष्वेलां प्रकुर्वन्ति केचित् कूजन्ति हृष्टवत् । हरयो मधुना मत्ताः केचित् सुप्ता महीतले ॥ १३ ॥ कृत्वा केचिद्धसन्त्यन्ये केचित् कुर्वन्ति चेतरत् । कृत्वा केचिद्वदन्त्यन्ये केचिद् बुद्ध्यन्ति चेतरत् ॥ १४ ॥

पटलानि भिन्दन्ति स्म ॥९॥ अपविध्यन्ति अवक्षिपन्ति । मधूच्छिष्टेन सिक्थकेन । "मधूच्छिष्टं तु सिक्थकम्" इत्यमरः । उत्कटाः मत्ताः ॥१०॥११॥ हृष्टवत् हर्षयुक्तमिति क्रियाविशेषणम् । हृष्टाहमिति वार्थः । क्षिपन्ति उत्क्षिप्य पातयन्ति । स्खलन्ति पादेन नुदन्तीत्यर्थः ॥ १२ ॥ क्ष्वेलां सिंहनादम् । "क्ष्वेला तु सिंहनादः स्यात्" इत्यमरः । कूजन्ति पक्षिवच्छब्दायन्ते ॥ १३ ॥ अन्ये अवाच्यं किंचिद्ग्राम्यं कर्म कृत्वा हसन्ति । इतरत्

ते प्रविष्टाः पटवः समर्थाः हरयः मैथिलीं दृष्ट्वा स्ववर्गस्थहनुमद्दर्शनेन सर्वे हृष्टवन्तः श्रुत्वा हनुमन्मुखेन अतिसर्गादङ्गदाभ्यनुज्ञानाद् मधुवनं प्रविष्टाः वीर्यतः बलात्पालानाक्रम्य मधु पपुः रसवत्फलमाददुरिति योजना ॥६॥७॥ मधुवने सक्तान् मधुरक्षणार्थं लग्नान् ॥ ८॥ मधूनि मधुपटलानि । निघ्नन्ति छिन्दन्ति ॥ ९ ॥ अपविध्यन्ति क्षिपन्ति ॥१०॥ मधुमत्ताः अत एव उन्मत्तभूताः उन्मत्तसदृशा इत्यर्थः । हृष्टवत् हृष्टाः ॥१२॥१३॥ अद्य किञ्चिदवाच्यं कर्म कृत्वा हसन्ति । केचिद

तद्विलक्षणं ग्राम्यं कर्म केचित्कुर्वन्ति । केचिदन्यत् ग्राम्यं कर्म कृत्वा अस्माभिरिदं कृतमिति वदन्ति उच्चारयन्ति । केचिदितरद्वुध्यन्ति एवं करिष्यामीति सङ्कल्पयन्तीत्यर्थः ॥ १४ ॥ १५ ॥ जानुभिः प्रकृष्टाः । जानून्यवलम्ब्य कृष्टा इत्यर्थः । देवमार्गम् अपानद्वारम् । देवशब्दो वायुवाची ।

येऽप्यत्र मधुपालाः स्युः प्रेष्या दधिमुखस्य तु । तेऽपि तैर्वानरैर्भीमैः प्रतिषिद्धा दिशो गताः ॥ १५ ॥ जानुभिस्तु प्रकृष्टाश्च देवमार्गं प्रदर्शिताः । अब्रुवन् परमोद्विग्ना गत्वा दधिमुखं वचः ॥ १६ ॥ हनूमता दत्तवरैर्हतं मधुवनं बलात् । वयं च जानुभिः कृष्टा देवमार्गं च दर्शिताः ॥१७॥ ततो दधिमुखः क्रुद्धो वनपस्तत्र वानरः । हतं मधुवनं श्रुत्वा सान्त्वयामास तान् हरीन् ॥ १८ ॥ इहागच्छत गच्छामो वानरान् बलदर्पितान् । बलेन वारयिष्यामो मधु भक्षयतो वयम् ॥ १९ ॥ श्रुत्वा दधिमुखस्येदं वचनं वानरर्षभाः । पुनर्वीरा मधुवनं तेनैव सहसा ययुः ॥ २० ॥ मध्ये चैषां दधिमुखः प्रगृह्य तरसा तरुम् । समभ्यधावद्वेगेन ते च सर्वे प्लवङ्गमाः ॥२१॥ ते शिलाः पादपांश्चापि पर्वतांश्चापि वानराः । गृहीत्वाऽभ्यगमन् क्रुद्धा यत्र ते कपिकुञ्जराः ॥ २२ ॥ ते स्वामिवचनं वीरा हृदयेष्ववसज्य तत् । त्वरया ह्यभ्यधावन्त सालतालशिलायुधाः ॥२३॥ वृक्षस्थांश्च तलस्थांश्च वानरान् बलदर्पितान् । अभ्यक्रामंस्ततो वीराः पालास्तत्र सहस्रशः ॥ २४ ॥

उपनिषदि वायुलोके देवलोकशब्दप्रयोगात् । दर्शिताः दर्शनं कारिताः । दृशेरुपसङ्ख्यानादणिकर्तुः कर्मत्वम् । "ण्यन्तात्कर्तुश्च कर्मणः" इति तस्यैवाभिधेयत्वं च ॥ १६–१८ ॥ गच्छाम इति तैः साहित्येन बहुवचनम् । आत्मनि बहुवचनं वा ॥ १९–२३ ॥

इतरत् ग्राम्यकर्म कुर्वन्ति । केचित् अन्यत्कर्म कृत्वा तद्वदन्ति । केचिदन्यत्कर्म बुद्ध्यन्ति मनसा सङ्कल्पयन्ति ॥ १४॥१५ ॥ प्रकृष्टाः प्रहृता इत्यर्थः । देवमार्गम् अपानं दर्शिताः ॥ १६ ॥ १७ ॥ तान् स्वसम्बन्धिनः पालान् ॥ १८–२६ ॥

ति०—जानुभिः प्रघृष्टाः जानुषु गृहीत्वा आकृष्टाः । देवमार्गं दर्शिताः पादौ गृहीत्वोर्ध्वं प्रक्षिप्ता इत्यर्थः ॥ स०—जानुभिः प्रघृष्टाः पश्चात्ताडितास्सन्तो देवमार्गं सुरवर्त्म दर्शिताः पश्चाज्जानुसन्ताडने मुखोर्ध्वीभवनेनाकाशावलोकनस्य जायमानत्वादेवमुक्तिः । पायुद्वारं वा । कपीनां हेलनसमये गुदप्रदर्शनस्य भागवतदशमोत्तरार्धे बलरामद्विविदप्रस्तावे अन्यत्रापि बहुशो दृष्टत्वात् ॥ १६ ॥

गतायुष इत्यधिक्षेपवचनम् ॥ ३४ ॥ वध्या ह्येत इति । अमर्षप्रभवः अक्षमाजन्यः । रोषस्य तज्जन्यत्वं च यो यस्मै न सहते तस्मै क्रुद्ध्यतीति प्रसिद्धम्

अथ दृष्ट्वा दधिमुखं क्रुद्धं वानरपुङ्गवाः । अभ्यधावन्त वेगेन हनुमत्प्रमुखास्तदा ॥२५॥ तं सवृक्षं महाबाहुमापतन्तं महाबलम् । आर्यकं प्राहरत्तत्र बाहुभ्यां कुपितोऽङ्गदः ॥ २६ ॥ मदान्धश्च न वेदैनमार्यकोऽयं ममेति सः । अथैनं निष्पिपेषाशु वेगवद्वसुधातले ॥ २७ ॥ स भग्नबाहूरुभुजो विह्वलः शोणितोक्षितः । मुमोह सहसा वीरो मुहूर्तं कपिकुञ्जरः ॥ २८ ॥ स समाश्वस्य सहसा संक्रुद्धो राजमातुलः । वानरान् वारयामास दण्डेन मधुमोहितान् ॥ २९ ॥ स कथंचिद्विमुक्तस्तैर्वानरैर्वानरर्षभः । उवाचैकान्तमाश्रित्य भृत्यान् स्वान् समुपागतान् ॥ ३० ॥ एते तिष्ठन्तु गच्छामो भर्ता नो यत्र वानरः । सुग्रीवो विपुलग्रीवः सह रामेण तिष्ठति ॥ ३१ ॥ सर्वं चैवाङ्गदे दोषं श्रावयिष्यामि पार्थिवे । अमर्षी वचनं श्रुत्वा घातयिष्यति वानरान् ॥३२॥ इष्टं मधुवनं ह्येतत् सुग्रीवस्य महात्मनः । पितृपैतामहं दिव्यं देवैरपि दुरासदम् ॥ ३३ ॥ स वानरानिमान् सर्वान् मधुलुब्धान् गतायुषः । घातयिष्यति दण्डेन सुग्रीवः ससुहृज्जनान् ॥ ३४ ॥ वध्या ह्येते दुरात्मानो नृपाज्ञापरिभाविनः । अमर्षप्रभवो रोषः सफलो नो भविष्यति ॥ ३५ ॥ एवमुक्त्वा दधिमुखो वनपालान् महाबलः । जगाम सहसोत्पत्य वनपालैः समन्वितः ॥ ३६ ॥ निमेषान्तरमात्रेण स हि प्राप्तो वनालयः । सहस्रांशुसुतो धीमान् सुग्रीवो यत्र वानरः ॥ ३७ ॥ रामं च लक्ष्मणं चैव दृष्ट्वा सुग्रीवमेव च । समप्रतिष्ठां जगतीमाकाशान्निपपात ह ॥ ३८ ॥

॥ ३५ ॥ ३६ ॥ निमेषान्तरेति । निमेषान्तरमात्रेण निमेषावकाशमात्रेण । वनालयः वानरः ॥ ३७ ॥ रामं चेति । समप्रतिष्ठां समतलाम् । जगतीं

आर्यकः सुग्रीवमातुलत्वात्पूज्यः ॥ २७–३० ॥ भर्ता राजा ॥ ३१–३४ ॥ अमर्षप्रभवः अक्षमाजन्यः ॥ ३५–३७ ॥ समप्रतिष्ठां समास्पदां समतलाम् । जगतीं

भूमिम् ॥३८॥३९॥ अस्मिन्सर्गे चत्वारिंशच्छ्लोकाः ॥४०॥ इति श्रीगोविन्द० श्रीरामायण० शृङ्गार० सुन्दरकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥६२॥ तत इत्यादि। उद्विग्नहृदयः भीतहृदयः। मातुलस्यापि पादपतनं स्वामित्वानुसारेण ॥ १ ॥ २ ॥ ३ ॥ नैवेति। न निसृष्टपूर्वं यथेच्छभोगाय न

सन्निपत्य महावीर्यैः सर्वैस्तैः परिवारितः। हरिर्दधिमुखः पालैः पालानां परमेश्वरः ॥ ३९ ॥ स दीनवदनो भूत्वा कृत्वा शिरसि चाञ्जलिम्। सुग्रीवस्य शुभौ मूर्ध्ना चरणौ प्रत्यपीडयत् ॥ ४० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

ततो मूर्ध्ना निपतितं वानरं वानरर्षभः। दृष्ट्वैवोद्विग्नहृदयो वाक्यमेतदुवाच ह॥१॥ उत्तिष्ठोत्तिष्ठ कस्मात् त्वं पादयोः पतितो मम। अभयं ते भवेद्वीर सर्वमेवाभिधीयताम् ॥ २ ॥ [ किं सम्भ्रमाद्धितं कृत्स्नं ब्रूहि यद्वक्तुमर्हसि। कच्चिन्मधुवने स्वस्ति श्रोतुमिच्छामि वानर ॥*] स तु विश्वासितस्तेन सुग्रीवेण महात्मना। उत्थाय सुमहाप्राज्ञो वाक्यं दधिमुखोऽब्रवीत् ॥ ३ ॥ नैवर्क्षरजसा राजन्न त्वया नापि वालिना। वनं निसृष्टपूर्वं हि भक्षितं तच्च वानरैः ॥ ४ ॥ एभिः प्रधर्षिताश्चैव वानरा वनरक्षिभिः। मधून्यचिन्तयित्वेमान् भक्षयन्ति पिबन्ति च ॥ ५ ॥ शिष्टमत्रापविध्यन्ति भक्षयन्ति तथाऽपरे। निवार्यमाणास्ते सर्वे भ्रुवौ वै दर्शयन्ति हि ॥ ६ ॥

दत्तपूर्वम्। वानरैः अङ्गदप्रमुखैः। अन्यथा सुग्रीववाक्ये अङ्गदानुवादविरोधात्। भक्षितमिति वनैकदेशमधुपटलविषयम् ॥ ४ ॥ एभिरिति। अचिन्तयित्वा अगणयित्वा। मधूनीति फलानामुपलक्षणम्। भक्षयन्ति पिबन्ति चेत्युक्तेः। यद्वा मधून्येव भक्षयन्ति भक्षवत्कुर्वन्तीत्यर्थः ॥ ५ ॥ शिष्टम्

भुवम् ॥ ३८-४० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां द्विषष्टितमः सर्गः ॥ ६२ ॥ १-३ ॥ नैवेति। निसृष्टपूर्वं सर्वेषां यथेच्छभोगाय पूर्वं त्यक्तं न भवति ॥ ४ ॥ अचिन्तयित्वा इमानविगणय्य भक्षयन्ति पिबन्ति फलानि भक्षयन्ति मधु पिबन्तीत्यर्थः ॥ ५ ॥ ६ ॥



स०-सम्भ्रमात्किम् किं प्रयोजनम्। यद्वक्तुमर्हसि तद्ब्रूहि। कस्मात्सम्भ्रमः किं सम्भ्रमः तस्मात्। इदं पादयोः पतनम्। यतस्त्वमर्हसि योग्योसि। अर्हति इत्यर्हः स इवाचरतीति व्युत्पत्त्या पूज्योसीत्यर्थ इति वा ॥*

अवशिष्टं मधुपटलम् । अत्र मधुवने । अपविध्यन्ति ध्वंसयन्ति । भक्षयन्ति मधुपटलमित्यर्थः ॥ ६ ॥ हिशब्दः पादपूरणे । सम्प्रधर्षणचिह्नस्य दृश्य मानत्वाभिप्रायेण प्रसिद्धिपरो वा ॥ ७–१३ ॥ आर्येत्यादि । अङ्गदप्रमुखैरिति अत्र विशिष्यानुवादाद्दधिमुखवाक्ये वानरपुङ्गवैरित्यत्रापि विशेषपरत्वं

इमे हि संरब्धतरास्तथा तैः संप्रधर्षिताः । वारयन्तो वनात्तस्मात् क्रुद्धैर्वानरपुङ्गवैः ॥ ७ ॥ ततस्तैर्बहुभिर्वीरैर्वानरै र्वानरर्षभ । संरक्तनयनैः क्रोधाद्धरयः प्रविचालिताः ॥८॥ पाणिभिर्निहताः केचित् केचिज्जानुभिराहताः । प्रकृष्टाश्च यथाकामं देवमार्गं च दर्शिताः ॥ ९ ॥ एवमेते हताः शूरास्त्वयि तिष्ठति भर्तरि । कृत्स्नं मधुवनं चैव प्रकामं तैः प्रभक्ष्यते ॥ १० ॥ एवं विज्ञाप्यमानं तं सुग्रीवं वानरर्षभम् । अपृच्छत्तं महाप्राज्ञो लक्ष्मणः परवीरहा ॥ ११ ॥ किमयं वानरो राजन् वनपः प्रत्युपस्थितः । कं चार्थमभिनिर्दिश्य दुःखितो वाक्यमब्रवीत् ॥ १२ ॥ एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना । लक्ष्मणं प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ १३ ॥ आर्य लक्ष्मण संप्राह वीरो दधिमुखः कपिः । अङ्गदप्रमुखैर्वीरैर्भक्षितं मधु वानरैः ॥ १४ ॥ विचित्य दक्षिणामाशामागतैर्हरिपुङ्गवैः ॥ १५ ॥ नैषामकृतकृत्यानामीदृशः स्यादुपक्रमः । आगतैश्च प्रमथितं यथा मधुवनं हि तैः ॥ १६ ॥ धर्षितं च वनं कृत्स्न मुपयुक्तं च वानरैः ॥ १७ ॥ वनं यदाभिपन्नास्ते साधितं कर्म वानरैः । दृष्टा देवी न सन्देहो न चान्येन हनूमता । न ह्यन्यः साधने हेतुः कर्मणोऽस्य हनूमतः ॥ १८ ॥ कार्यसिद्धिर्मतिश्चैव तस्मिन् वानरपुङ्गवे । व्यवसायश्च वीर्यं च श्रुतं चापि प्रतिष्ठितम् ॥ १९ ॥

बोध्यम् ॥ १४ ॥ १५ ॥ वनं प्रमथितं भग्नम् । धर्षितम् आक्रान्तम् । मधु च भक्षितम् । यथा येन कारणेन । एषामकृतकृत्यानामीदृश उपक्रमो न स्यादिति मन्य इति योजना ॥ १६ ॥ १७॥ कृतकृत्यत्वं विशेषयति—वनमित्यादिना ॥ १८–२३ ॥

इमे मद्भृत्याः ॥ ७–१० ॥ अपृच्छदिति । सहैव वसतो लक्ष्मणस्य " कञ्चार्थमभिनिर्दिश्य दुःखितो वाक्यमब्रवीत् " इति प्रश्नकरणात् दधिमुखेन वनभङ्गादिकं स्वजात्युचितभाषयोक्तमित्यवगन्तव्यम् । उपांशूक्तमिति वा द्रष्टव्यम् ॥ ११–१६ ॥ उपयुक्तं भुक्तम् ॥ १७ ॥ वनमिति । अभिपन्नाः प्राप्ताः ॥ १८–२५ ॥

न चेति। वनमिति। मधुवनधर्षणमेव सीतादर्शने लिङ्गमिति भावः। दत्तवरं दिव्यमित्यनेन ऋक्षरजसे ब्रह्मणा दत्तमित्यवगम्यते ॥ २४ ॥ २५ ॥
श्रुत्वेति। द्वितीयसुग्रीवशब्दस्य शोभनग्रीव इत्यवयवार्थो विवक्षितः। क्रियाभेदेनापुनरुक्तिर्वा ॥ २६ ॥ २७॥ इच्छामीति । हनुमत्प्रधानान् हनुम



जाम्बवान् यत्र नेता स्यादङ्गदश्च महाबलः। हनूमांश्चाप्यधिष्ठाता न तस्य गतिरन्यथा ॥२०॥ अङ्गदप्रमुखैर्वीरैर्हतं मधुवनं किल। वारयन्तश्च सहितास्तथा जानुभिराहताः ॥ २१ ॥ एतदर्थमयं प्राप्तो वक्तुं मधुरवागिह । नाम्ना दधिमुखो नाम हरिः प्रख्यातविक्रमः ॥ २२ ॥ दृष्टा सीता महाबाहो सौमित्रे पश्य तत्त्वतः। अभिगम्य तथा सर्व पिबन्ति मधु वानराः ॥ २३ ॥ न चाप्यदृष्ट्वा वैदेहीं विश्रुताः पुरुषर्षभ । वनं दत्तवरं दिव्यं धर्षयेयुर्वनौकसः॥२४॥ ततः प्रहृष्टो धर्मात्मा लक्ष्मणः सहराघवः। श्रुत्वा कर्णसुखां वाणीं सुग्रीववदनाच्च्युताम् । प्राहृष्यत भृशं रामो लक्ष्मणश्च महाबलः ॥ २५ ॥ श्रुत्वा दधिमुखस्येदं सुग्रीवस्तु प्रहृष्य च। वनपालं पुनर्वाक्यं सुग्रीवः प्रत्यभाषत ॥२६॥ प्रीतोऽस्मि सोऽहं यद्युक्तं वनं तैः कृतकर्मभिः। मर्षितं मर्षणीयं च चेष्टितं कृतकर्मणाम् ॥२७॥ इच्छामि शीघ्रं हनुमत्प्रधानान् शाखामृगांस्तान् मृगराजदर्पान्। द्रष्टुं कृतार्थान् सह राघवाभ्यां श्रोतुं च सीताधिगमे प्रयत्नम् ॥ २८ ॥ प्रीतिस्फीताक्षौ सम्प्रहृष्टौ कुमारौ दृष्ट्वा सिद्धार्थौ वानराणां च राजा । अङ्गैः संहृष्टैः कर्मसिद्धिं विदित्वा बाह्वोरासन्नां सोऽतिमात्रं ननन्द ॥२९॥ इत्यार्षे श्रीरामायणे० श्रीमत्सुन्दरकाण्डे त्रिषष्टितमः सर्गः॥६३॥

त्प्रमुखान्। कृतार्थान् कृतकृत्यान्। प्रयत्नं प्रयासम्। तेभ्यः श्रोतुमिच्छामीत्यन्वयः ॥ २८ ॥ अथ प्रत्युपकारार्थं सुग्रीवः स्वोद्योगसाफल्यदर्शनात् भृशं ननन्देत्याह-प्रीतिस्फीताक्षाविति । प्रीत्या सन्तोषेण। संप्रहृष्टौ, रोमस्विति शेषः। हृषितरोमाणावित्यर्थः। " हृषेर्लोमसु " इति विकल्पादिड

श्रुत्वेति अत्र द्वितीयसुग्रीवशब्दः शोभनग्रीवपरः ॥ २६ ॥ २७ ॥ इच्छामीति । सीताधिगमप्रयत्नं सीताधिगमे कृतप्रयत्नं च श्रोतुमिच्छामीति सम्बन्धः ॥ २८ ॥ अथ रामप्रत्युपकारार्थी सुग्रीवः स्वोद्योगसाफल्यदर्शनाद्भृशं ननन्देत्याह-प्रीतीति । प्रीतिस्फीताक्षौ प्रीत्या सन्तोषेण विकसितनेत्रौ । सम्प्रहृष्टौ पुलकितगात्रौ ।

स०-स्ववेदनावेदनवागपि रामकार्यसूचकत्वात् मधुरवाक् ॥ २२ ॥

भावः । एवम् अङ्गैः संहृष्टैरित्यत्रापि द्रष्टव्यम् । कर्मसिद्धिं बाह्वोरासन्नां हस्तप्राप्ताम्, । विदित्वा निश्चित्येत्यर्थः । जागतं वैश्वदेवीवृत्तम् । "पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ" इति लक्षणात् । अस्मिन्सर्गे एकोनत्रिंशच्छ्लोकाः ॥२९॥ इति श्रीगो० श्रीरामा० शृङ्गार० सुन्दरकाण्ड० त्रिषष्टितमः सर्गः ॥६३॥

सुग्रीवेणैवमुक्तस्तु हृष्टो दधिमुखः कपिः । राघवं लक्ष्मणं चैव सुग्रीवं चाभ्यवादयत् ॥ १ ॥ स प्रणम्य च सुग्रीवं राघवौ च महाबलौ । वानरैः सहितैः शूरैर्दिवमेवोत्पपात ह ॥ २ ॥ स यथैवागतः पूर्वं तथैव त्वरितं गतः । निपत्य गगनाद्भूमौ तद्वनं प्रविवेश ह ॥ ३ ॥ स प्रविष्टो मधुवनं ददर्श हरियूथपान् । विमदानुत्थितान् सर्वान् मेहमानान् मधूदकम् ॥ ४ ॥ स तानुपागमद्वीरो बद्ध्वा करपुटाञ्जलिम् । उवाच वचनं श्लक्ष्णमिदं हृष्टवदङ्गदम् ॥ ५ ॥ सौम्य रोषो न कर्तव्यो यदेभिरभिवारितः । अज्ञानाद्रक्षिभिः क्रोधाद्भवन्तः प्रतिषेधिताः ॥ ६ ॥

सुग्रीवेणेत्यादि । सहितैः स्नेहातिरेकेणान्योन्यं युक्तैः । वानरैः सहितैरिति पाठः ॥ १–३ ॥ विमदानित्यत्र हेतुमाह–मेहमानानिति । मेहमानान् मेहयतः, मूत्रयत इत्यर्थः । एतेन मूत्रणान्मधूनि जीर्णानीति गम्यते । अत एव विमदत्वम् । मधूनि च उदकानि च मधूदकमिति द्वन्द्वैकवद्भावः । उदकानि चात्र अनुपानत्वेन पीतानि । तदाह बाहटः–"अनुपानं हिमं वारि यवगोधूमयोर्हितम् । दध्नि मद्ये बिसे क्षौद्रे कोष्णं पिष्टमयेषु च ॥" इति ॥४॥ स तानिति । करपुटाञ्जलिं करतलयोरञ्जलिम्, सम्यक् संयुक्तकरतलाञ्जलिमित्यर्थः ॥ ५ ॥ एभिः वानरैः अभिवारितः अभिवारितोऽसीति यत् अत्रार्थे रोषो न कर्तव्यः । भवन्त इति पूजायां बहुवचनम् । न च हनुमदादिकमादाय बहुवचनम्, उत्तरश्लोकेऽपि युवराजस्त्वमित्युक्तेः । अज्ञानात् क्रोधात्, अज्ञानप्रयुक्तक्रोधादित्यर्थः । अभिवारितमिति पाठे लिङ्गव्यत्यय आर्षः । केचित्तु अज्ञानात् क्रोधाच्च भवन्तः प्रतिषेधिता इत्येतत् परि

संहृष्टैः पुलकितैः अङ्गैरुपलक्षितः । कर्मसिद्धिं कार्यसिद्धिम् । बाह्वोरासन्नां हस्तप्राप्ताम् । विदित्वा निश्चित्य ॥ २९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां त्रिषष्टितमः सर्गः ॥ ६३ ॥ ॥ १–३ ॥ स प्रविष्ट इति । विमदत्वे हेतुमाह मेहमानान्मधूदकमिति । मेहमानान् मूत्रयतः । एतेन मूत्रणान्मधूनां जीर्णता विज्ञेया, अतो विमदान् । मधूनि च उदकानि च मधूदकमिति द्वन्द्वैकवद्भावः । उदकानि चानुपानत्वेन पीतानीति द्रष्टव्यम् ॥ ४ ॥ ५ ॥ हे सौम्य! एभिरज्ञानात्क्रोधाच्च भवन्तः प्रतिषेधिता इति यत् एतत्परिवारितं परितो वारणं प्रति रोषो न कर्तव्य इति योजना ॥ ६ ॥

वारितं परिवारणं प्रति रोषो न कर्तव्य इति योजयन्ति ॥ ६ ॥ क्रोधाद्वारणे कृते कुतो रोषो न कर्तव्यस्स्यादित्याशङ्क्य क्रोधस्याज्ञानकृतत्वादित्याह—युवराज इति । दोषः निवारणरूपापराधः ॥ ७ ॥ आख्यातं हीति । उपयातम् आगमनम् ॥८–११॥ शङ्क इति । अयं वृत्तान्तः अस्मदागमनवृत्तान्तः

युवराजस्त्वमीशश्च वनस्यास्य महाबल । मौर्ख्यात् पूर्वं कृतो दोषस्तं भवान् क्षन्तुमर्हति ॥७॥ आख्यातं हि मया गत्वा पितृव्यस्य तवानघ । इहोपयातं सर्वेषामेतेषां वनचारिणाम् ॥ ८ ॥ स त्वदागमनं श्रुत्वा सहैभिर्हरियूथपैः । प्रहृष्टो न तु रुष्टोऽसौ वनं श्रुत्वा प्रधर्षितम् ॥ ९ ॥ प्रहृष्टो मां पितृव्यस्ते सुग्रीवो वानरेश्वरः । शीघ्रं प्रेषय सर्वां स्तानिति होवाच पार्थिवः ॥ १० ॥ श्रुत्वा दधिमुखस्येदं वचनं श्लक्ष्णमङ्गदः । अब्रवीत्तान् हरिश्रेष्ठो वाक्यं वाक्य विशारदः ॥ ११ ॥ शङ्के श्रुतोऽयं वृत्तान्तो रामेण हरियूथपाः । तत्क्षमं नेह नः स्थातुं कृते कार्ये परन्तपाः ॥ १२॥ पीत्वा मधु यथाकामं विश्रान्ता वनचारिणः । किं शेषं गमनं तत्र सुग्रीवो यत्र मे गुरुः ॥ १३ ॥ सर्वे यथा मां वक्ष्यन्ति समेत्य हरियूथपाः । तथाऽस्मि कर्ता कर्तव्ये भवद्भिः परवानहम् ॥ १४ ॥ नाज्ञापयितुमीशोऽहं युव राजोऽस्मि यद्यपि । अयुक्तं कृतकर्माणो यूयं धर्षयितुं मया ॥ १५ ॥

॥१२॥ किं शेषं न किंचिदपि शिष्टमित्यर्थः । किन्तु मे गुरुः सुग्रीवो यत्र वर्तते तत्र गमनमेव शेषमित्यर्थः । किंशेषं गमनं तच्च सुग्रीवो यत्र मे गुरुः इति पाठे—अस्माकं गमनं किंशेषं किंचिच्छेषम् । तच्च गमनशेषं च सुग्रीवो यत्र तत्र गमनामिति संबन्धः ॥१३॥ विनयपूर्वकं सर्वसंमेलनं समर्थयते—सर्व इति । तथास्मि कर्ता आह्वानं करिष्यामीत्यर्थः । कर्तव्ये कार्ये । भवद्भिः अहं परवान्, भवद्भिर्यथा नियुक्तं तथा करिष्यामि । गन्तव्यमित्युक्ते गमिष्यामः स्थातव्यमित्युक्ते स्थास्यामः इत्यर्थः ॥ १४ ॥ युवराजत्वात् भवानेव कर्तव्याकर्तव्यनियन्तेत्यत आह—नाज्ञापयितुमिति । ईशः स्वतन्त्रः । कृतकर्माणः

दोषः कृतः, मदीयैरिति शेषः ॥ ७–११ ॥ शङ्के, दधिमुखस्य परावृत्त्यागमनात् ॥ १२ ॥ किं शेषम् न किमपि शिष्टमित्यर्थः । गमनम्, कर्तव्यमिति शेषः ॥ १३ ॥ १४ ॥ नाज्ञापयितुमिति । अयुक्तमित्येतदव्ययम् । अयुक्ताः अनर्हा इत्यर्थः । धर्षयितुं नियन्तुम् ॥ १५–१७ ॥

कृतोपकाराः यूयं मया धर्षयितुम् अनादर्तुम्, परतन्त्रीकर्तुमिति यावत् । अयुक्तम् अयुक्ता इत्यर्थः । आर्षमव्ययमेतत् । शक्यमितिवत्सामान्योपक्रमा न्नपुंसकैकत्वनिर्देश इत्यप्याहुः ॥ १५ ॥ १६ ॥ अहमिति मन्यते गर्विष्ठो भवतीति यावत् ॥ १७॥ सन्नतिः विनयः ॥ १८ ॥ कृतक्षणाः कृताव

ब्रुवतश्चाङ्गदस्यैवं श्रुत्वा वचनमव्ययम् । प्रहृष्टमनसो वाक्यमिदमूचुर्वनौकसः ॥ १६ ॥ एवं वक्ष्यति को राजन् प्रभुः सन् वानरर्षभ । ऐश्वर्यमदमत्तो हि सर्वोऽहमिति मन्यते ॥ १७ ॥ तव चेदं सुसदृशं वाक्यं नान्यस्य कस्यचित् । सन्नतिर्हि तवाख्याति भविष्यच्छुभयोग्यताम् ॥ १८ ॥ सर्वे वयमपि प्राप्तास्तत्र गन्तुं कृतक्षणाः । स यत्र हरिवीराणां सुग्रीवः पतिरव्ययः ॥ १९ ॥ त्वया ह्यनुक्तैर्हरिभिर्नैव शक्यं पदात्पदम् । क्वचिद्गन्तुं हरिश्रेष्ठ ब्रूमः सत्यमिदं तु ते ॥ २० ॥ एवं तु वदतां तेषामङ्गदः प्रत्यभाषत । बाढं गच्छाम इत्युक्त्वा खमुत्पेतुर्महाबलाः ॥ २१ ॥ उत्पतन्तमनूत्पेतुः सर्वे ते हरियूथपाः । कृत्वाऽऽकाशं निराकाशं यन्त्रोत्क्षिप्ता इवाचलाः ॥२२॥ [ अङ्गदं पुरतः कृत्वा हनुमन्तं च वानरम् । ] तेऽम्बरं सहसोत्पत्य वेगवन्तः प्लवङ्गमाः । विनदन्तो महानादं घना वातेरिता यथा ॥ २३ ॥ अङ्गदे समनुप्राप्ते सुग्रीवो वानराधिपः । उवाच शोकोपहतं रामं कमललोचनम् ॥ २४ ॥ समाश्वसिहि भद्र ते दृष्टा देवी न संशयः । नागन्तुमिह शक्यं तैरतीते समये हि नः ॥ २५ ॥

सराः, अवसरप्रतीक्षा इति यावत् ॥ १९ ॥ २० ॥ बाढमित्यङ्गीकारे । इतिशब्दः काकाक्षिन्यायेन पूर्वापरयोरन्वेति । एवं तेषां वदतां तेषु वदत्सु अङ्गदः बाढमिति प्रत्यभाषत । गच्छाम इत्युक्त्वापि उत्पपात ॥ २१ ॥ निराकाशं निरवकाशम् ॥ २२ ॥ तेऽम्बरमिति । अत्र जग्मुरित्यध्या

सन्नतिः विनयः नम्रता । भविष्यतीं शुभयोग्यतां भाविनीं भाग्योन्नतिमाख्याति सूचयति ॥ १८-२० ॥ एवं वदतां तेषां पुरतः अङ्गदो बाढमित्यभ्यभाषत । महाबलास्ते गच्छाम इत्युक्त्वा खमुत्पेतुरिति योजना ॥ २१ ॥ उत्पतन्तमङ्गदम् । निराकाशं निरवकाशम् ॥ २२ ॥ अङ्गदमित्यादिसार्धश्लोकमेकं वाक्यम् । ते वानराः अङ्गदं हनुमन्तं च पुरतः कृत्वा अम्बरं सहसोत्पत्य, जग्मुरिति शेषः ॥ २३ ॥ अङ्गदे समनुप्राप्ते सुग्रीवो वानरेश्वरः उवाचेति अङ्गदागमनात्प्रागिति

हार्यम् ॥२३–२५॥ विनिपातिते विघ्निते ॥२६॥ अकृतकृत्यानाम् अकृतकार्याणाम् । ईदृशः मधुवनभङ्गरूपः । उपक्रमः उद्योगः । यदि स्यात्तदाऽङ्गदो दीनवदनत्वादिविशिष्टो भवेत् ॥ २७ ॥ पितृपैतामहमिति । पिता चासौ पितामहश्च । पित्रा ब्रह्मणा ऋक्षरजसे दत्तं पितृपैतामहम् । प्लवगेश्वरः अङ्गदः ॥ २८ ॥ कौसल्येति । हे राम । कौसल्या सुप्रजाः सुप्रजावती । " नित्यमसिच् प्रजामेधयोः " इत्यसिच्प्रत्ययः । एवं देव्यवस्थानज्ञानेन भवतस्सत्ता

न मत्सकाशमागच्छेत् कृत्ये हि विनिपातिते। युवराजो महाबाहुः प्लवतां प्रवरोऽङ्गदः ॥ २६ ॥ यद्यप्यकृतकृत्यानामीदृशः स्यादुपक्रमः । भवेत् स दीनवदनो भ्रान्तविप्लुतमानसः ॥ २७ ॥ पितृपैतामहं चैतत् पूर्वकैरभिरक्षितम् । न मे मधुवनं हन्यादहृष्टः प्लवगेश्वरः ॥ २८ ॥ कौसल्या सुप्रजा राम समाश्वसिहि सुव्रत । दृष्टा देवी न सन्देहो न चान्येन हनूमता ॥ २९ ॥ न ह्यन्यः कर्मणो हेतुः साधनेऽस्य हनूमतः । हनूमति हि सिद्धिश्च मतिश्च मतिसत्तम । व्यवसायश्च वीर्यं च सूर्य तेज इव ध्रुवम् ॥३०॥ जाम्बवान् यत्र नेता स्यादङ्गदश्च बलेश्वरः । हनुमांश्चाप्यधिष्ठाता न तस्य गतिरन्यथा॥३१॥ मा भूश्चिन्तासमायुक्तः सम्प्रत्यमितविक्रम ॥३२॥ ततः किलकिलाशब्दं शुश्रावासन्नमम्बरे । हनुमत्कर्मदृप्तानां नर्दतां काननौकसाम् । किष्किन्धामुपयातानां सिद्धिं कथयतामिव ॥ ३३ ॥

लाभादिदानीं कौसल्या सुप्रजावती, अभूदिति शेषः ॥ २९ ॥ ३० ॥ यत्र कार्ये । नेता मन्त्री । बलेश्वरः सेनापतिः । अधिष्ठाता संरक्षक इत्यर्थः । तस्य कार्यस्य । गतिः सिद्धिः । अन्यथा विपरीता न भवेत् । संप्रति चिन्तासंयुक्तो मा भूः ॥३१॥३२॥ सिद्धिं कथयतामिव । उत्साहेनेति शेषः ॥३३॥

द्रष्टव्यम् । आगमनस्य वक्ष्यमाणत्वादिति भावः ॥ २४–२६ ॥ ननु मधुवनधर्षणमात्रेण कथं कार्यसिद्धिः ? कापेयादिनापि सम्भवादित्याशङ्क्य, सत्यम् अन्येषां तादृशत्वेपि अङ्गदस्तु नैतादृश इत्याशयेनाह–यद्यपीत्यादिश्लोकद्वयेन । अकृतकृत्यानामन्येषां वानराणाम् । ईदृश उपक्रमः मधुवनभङ्गहर्षव्यापारो यद्यपि स्यात् तथापि तत्र अङ्गदस्तु दीनवदनो भ्रान्तविप्लुतमानसश्च भवेत् । कुतः ? पितृपैतामहं पितृपितामहपरम्परागतं मे मधुवनं जनकात्मजामदृष्ट्वा न हन्यात् ॥ २७ ॥ २८ ॥ हे राम ! कौसल्या सुप्रजाः सीतायाः स्थितिपरिज्ञानेन भवतः सत्तालाभात् इदानीं कौसल्या सुपुत्रवत्यभूदिति भावः ॥ २९ ॥ ३० ॥ अधिष्ठाता

आयताञ्चितलाङ्गूलः आयतः दीर्घीकृतः आञ्चितः माल्यवच्छृङ्गे समास्थापितः ॥ ३४ ॥ ३५ ॥ प्रहृष्टाः 'सञ्जातपुलकाः ॥ ३६ ॥ नियता मिति । अक्षतत्वेप्यनियतत्वे वैयर्थ्यम् नियतत्वेपि क्षतत्वे च तथा । ततः आवश्यकमुभयं संग्रहेण दर्शयति । अस्मिन्सर्गे सार्धैकोनचत्वारिंशत्

ततः श्रुत्वा निनादं तं कपीनां कपिसत्तमः । आयताञ्चितलाङ्गूलः सोऽभवद्धृष्टमानसः ॥ ३४ ॥ आजग्मुस्तेऽपि हरयो रामदर्शनकांक्षिणः । अङ्गदं पुरतः कृत्वा हनूमन्तं च वानरम् ॥ ३५ ॥ तेऽङ्गदप्रमुखा वीराः प्रहृष्टाश्च मुदाऽन्विताः । निपेतुर्हरिराजस्य समीपे राघवस्य च ॥ ३६ ॥ हनुमांश्च महाबाहुः प्रणम्य शिरसा ततः । नियतामक्षतां देवीं राघवाय न्यवेदयत् ॥ ३७ ॥ [ दृष्टा देवीति हनुमद्वदनादमृतोपमम् । आकर्ण्य वचनं रामो हर्षमाप सलक्ष्मणः ॥ ] निश्चितार्थस्ततस्तस्मिन् सुग्रीवः पवनात्मजे । लक्ष्मणः प्रीतिमान् प्रीतं बहुमानादवैक्षत ॥ ३८ ॥ प्रीत्या च रममाणोऽथ राघवः परवीरहा । बहुमानेन महता हनुमन्तमवैक्षत ॥ ३९ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

ततः प्रस्रवणं शैलं ते गत्वा चित्रकाननम् । प्रणम्य शिरसा रामं लक्ष्मणं च महाबलम् ॥ १ ॥ युवराजं पुरस्कृत्य सुग्रीवमभिवाद्य च । प्रवृत्तिमथ सीतायाः प्रवक्तुमुपचक्रमुः ॥ २ ॥ रावणान्तःपुरे रोधं राक्षसीभिश्च तर्जनम् । रामे समनुरागं च यश्चायं समयः कृतः । एतदाख्यान्ति ते सर्वे हरयो रामसन्निधौ ॥ ३ ॥ वैदेहीमक्षतां श्रुत्वा रामस्तूत्तरमब्रवीत् ॥ ४ ॥

श्लोकाः ॥ ३७–३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुष्षष्टितमः सर्गः ॥ ६४ ॥ तत इति ॥ १ ॥ प्रवृत्तिं वार्ताम् ॥ २ ॥ रोधं निरोधम् । यश्चायं समयः कृ[त]ः, मासद्वयादूर्ध्वं हनिष्यामीति यः सङ्केतो रावणेन कृत इत्यर्थः ।

कार्यकरणोद्योगवान् ॥ ३१–३३ ॥ आयताश्चितलांगूल इति स्वभावोक्त्यलङ्कारः ॥ ३४–३६ ॥ नियतां पातिव्रत्यव्रतसम्पन्नाम् ॥ ३७–३९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां चतुष्षष्टितमः सर्गः ॥ ६४ ॥ १ ॥ २ ॥ रावणान्तःपुर इति । समयः मासद्वयावधि

मासशब्दः पक्षपर इत्युक्तं प्राक् । तमिति शेषः ॥ २-६ ॥ श्रुत्वा [illegible]  स्मरणकृत इति बोध्यम् । सीताया दर्शनं यथेति । येन प्रकारेण सीतादर्शनं जातं तेन प्रकारेणोवाचेत्यन्वयः ॥ ७ ॥ दिदृक्षया न तु श्रोतुमिच्छया मार्गमाण इत्यर्थः ॥ ८ ॥ तत्र लङ्घने कृते सति ॥ ९ ॥

क्व सीता वर्तते देवी कथं च मयि वर्तते । एतन्मे सर्वमाख्यात वैदेहीं प्रति वानराः ॥ ५ ॥ रामस्य गदितं श्रुत्वा हरयो रामसन्निधौ । चोदयन्ति हनूमन्तं सीतावृत्तान्तकोविदम् ॥६॥ श्रुत्वा तु वचनं तेषां हनुमान् मारुतात्मजः । प्रणम्य शिरसा देव्यै सीतायै तां दिशं प्रति । उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं यथा ॥ ७ ॥ समुद्रं लङ्घयित्वाऽहं शतयोजनमायतम् । अगच्छं जानकीं सीतां मार्गमाणो दिदृक्षया ॥ ८॥ तत्र लङ्केति नगरी रावणस्य दुरात्मनः । दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे ॥ ९ ॥ तत्र दृष्टा मया सीता रावणान्तःपुरे सती । संन्यस्य त्वयि जीवन्ती रामा राम मनोरथम् ॥ १० ॥ दृष्टा मे राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः । राक्षसीभिर्विरूपाभी रक्षिता प्रमदावने ॥ ११ ॥ दुःखमासाद्यते देवी तथाऽदुःखोचिता सती ॥ १२ ॥ रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता । एकवेणीधरा दीना त्वयि चिन्तापरायणा ॥ १३ ॥ अधःशय्या विवर्णाङ्गी पद्मिनीव हिमागमे । रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया । देवी कथंचित् काकुत्स्थ त्वन्मना मार्गिता मया ॥ १४ ॥ इक्ष्वाकुवंशविख्यातिं शनैः कीर्तयताऽनघ । सा मया नरशार्दूल विश्वासमुपपादिता ॥ १५ ॥

हे राम। रामा सीता त्वयि मनोरथं स्वाभिलाषम् संन्यस्य जीवन्ती, त्वदभिलाषेण धृतजीवितेत्यर्थः ॥ १० ॥ ११ ॥ दुःखमित्यर्धम् । आसाद्यते आसीदति । आर्षो यत् ॥ १२ ॥ एकवेणीधरा त्रिधाविभागं विना बद्धः केशपाशः एकवेणीत्युच्यते । अधःशय्या स्थण्डिलशायिनी । मर्तव्ये मरणे कृतरूपसमयः । तं चेति शेषः ॥ ३-५ ॥ चोदयन्ति प्रेरयन्ति स्म ॥ ६ ॥ सीतायै प्रणम्य तां दिशं प्रति प्रणम्येत्याकर्षः । उवाचेति । सीताया दर्शनं यथा येन प्रकारेण जातं तत्सर्वं वाक्यमुवाचेत्यर्थः ॥ ७ ॥ देव्या दिदृक्षया तां मार्गमाणोऽगच्छम् ॥ ८ ॥ ९ ॥ हे राम ! त्वयि मनोरथं संन्यस्य सम्यङ्न्यस्य जीवन्ती धृतप्राणा ॥ १०-१३ ॥ अधश्शय्या स्थण्डिलशयना ॥ १४ ॥ १५ ॥

निश्चया ॥ १३–१५ ॥ सर्वमर्थं च दर्शिता सुग्रीवसख्यप्रभृतिसर्वमर्थं च बोधिता ॥ १६ ॥ समुदाचारः परपुरुषाचिन्तकत्वादिः । त्वयि भक्तिश्च, वर्तत इति शेषः । तपसा अनशनेन ॥ १७ ॥ १८ ॥ अभिज्ञानं चिह्नभूतं वाक्यम्, तवान्तिके पूर्वं यथा येन प्रकारेण जातं तथा दत्तमित्यर्थः । तदेव दर्शयति

ततः सम्भाषिता देवी सर्वमर्थं च दर्शिता । रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता ॥ १६ ॥ नियतः समुदाचारो भक्तिश्चास्यास्तथा त्वयि ॥ १७ ॥ एवं मया महाभागा दृष्टा जनकनन्दिनी । उग्रेण तपसा युक्ता त्वद्भक्त्या पुरुषर्षभ ॥ १८ ॥ अभिज्ञानं च मे दत्तं यथा वृत्तं तवान्तिके । चित्रकूटे महाप्राज्ञ वायसं प्रति राघव ॥ १९ ॥ विज्ञाप्यश्च नरव्याघ्रो रामो वायुसुत त्वया । अखिलेनेह यद् दृष्टमिति मामाह जानकी ॥ २० ॥ अयं चास्मै प्रदातव्यो यत्नात् सुपरिरक्षितः । ब्रुवता वचनान्येवं सुग्रीवस्योपशृण्वतः ॥ २१ ॥ एष चूडामणिः श्रीमान् मया सुपरिरक्षितः । मनःशिलायास्तिलको गण्डपार्श्वे निवेशितः ॥ २२ ॥ त्वया प्रनष्टे तिलके तं किल स्मर्तुमर्हसि । एष निर्यातितः श्रीमान् मया ते वारिसम्भवः ॥ २३ ॥ एतं दृष्ट्वा प्रमोदिष्ये व्यसने त्वामिवानघ । जीवितं धारयिष्यामि मासं दशरथात्मज । ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता ॥ २४ ॥ इति मामब्रवीत्सीता कृशाङ्गी धर्मचारिणी । रावणान्तःपुरे रुद्धा मृगीवोत्फुल्ललोचना ॥ २५ ॥ एतदेव मयाऽऽख्यातं सर्वं राघव यद्यथा । सर्वथा सागरजले सन्तारः प्रविधीयताम् ॥ २६ ॥

चित्रकूट इति, सदस्यवक्तव्यत्वात् सूचनोक्तिः ॥ १९ ॥ अखिलेनेति । रावणागमनादिकमित्यर्थः ॥ २० ॥ अयं चास्मा इत्यादि । सुग्रीवस्योपशृण्वतः सुग्रीवे समीपे शृण्वति सति । एवम् एष चूडामणिरित्यारभ्य रक्षसां वशमागतेत्यन्तवक्ष्यमाणप्रकारेण । वचनानि रामं प्रति मयोक्तवचनानि । ब्रुवता त्वया ॥ २१ ॥ अयं मणिरित्यर्थः । प्रदातव्यः ॥ २२–२४ ॥ मृगीवोत्फुल्ललोचना, त्रासातिशयादिति भावः ॥ २५ ॥ सन्तीर्यतेऽनेनेति सन्तारः सेतुः ॥ २६ ॥

सर्वमर्थं च दर्शिता ज्ञापिता ॥ १६–२२ ॥ एष इति । निर्यातितः प्रेषितः । वारिसम्भवो मणिः ॥ २३ ॥ एतम् अङ्गुलीयकम् ॥ २४–२६ ॥

स०—मनःशिलायास्तिलकं तत्स्मरस्वेति चाब्रवीत् इति पाठे—स्मरस्व स्मर । स्व स्वतन्त्रेति रामसम्बोधनं वा ॥ २२ ॥

तावितिं । पूर्ववद्देश्वदेवीवृत्तम् । समुद्रतरणे [illegible] सजातीयेभ्यः पूर्वमुक्तमपि प्रभुसन्निधावात्मश्लाघायां पर्यवस्येदिति नोक्तमिति ध्येयम् । स्ववृत्तान्तं सर्वमाख्यातवानिति सामान्येन वक्तुं युक्तत्वेऽप्यङ्गदसन्निधौ प्रपञ्चनं गोप्यविशेषगोपनार्थम् । अत्र त्वप्रपञ्चनम्



तौ जाताश्वासौ राजपुत्रौ विदित्वा तच्चाभिज्ञानं राघवाय प्रदाय । देव्या चाख्यातं सर्वमेवानुपूर्व्याद्वाचा सम्पूर्णं वायुपुत्रः शशंस ॥ २७ ॥ इत्यार्षे श्रीरामायणे वाल्मी० आदि० श्रीमत्सुन्दरकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥ एवमुक्तो हनुमता रामो दशरथात्मजः । तं मणिं हृदये कृत्वा प्ररुरोद सलक्ष्मणः ॥१॥ तं तु दृष्ट्वा मणिश्रेष्ठं राघवः शोककर्शितः । नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ॥ २ ॥ यथैव धेनुः स्रवति स्नेहाद्वत्सस्य वत्सला । तथा ममापि हृदयं मणिरत्नस्य दर्शनात् ॥३॥ मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे । वधूकाले यथा बद्धमधिकं मूर्ध्नि शोभते ॥ ४ ॥ अयं हि जलसम्भूतो मणिः सज्जनपूजितः । यज्ञे परमतुष्टेन दत्तः शक्रेण धीमता ॥ ५ ॥

अकथनीयाकथनार्थं चेति ज्ञेयम् । अस्मिन्सर्गे सार्धसप्तविंशतिश्लोकाः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥ एवमित्यादि ॥ १ ॥ २ ॥ यथा वत्सला वत्से स्नेहवती धेनुः । वत्सस्य स्नेहाद्वत्सविषयकस्नेहात् । स्रवत्येव द्रवत्येव । तथा मणिरत्नस्य मणिश्रेष्ठस्य दर्शनान्मम हृदयं द्रवति ॥ ३ ॥ मणेरागतिमाह–मणिरत्नमिति । मे श्वशुरेण जनकेन । वधूकाले वधूप्रतिग्रहकाले, विवाहकाल इत्यर्थः । यथा शोभते तथा बद्धमित्यन्वयः ॥ ४ ॥ जनकेनापि कुतस्तल्लब्धम् ? तत्राह–अयं हीति ॥ ५ ॥

॥ २७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां पञ्चषष्टितमः सर्गः ॥ ६५ ॥ ॥ १ ॥ तमिति । नेत्राभ्यामश्रुपूर्णाभ्याम् उपलक्षितः ॥ २ ॥ स्रवति द्रवति । वत्सस्येत्यत्रापि दर्शनादिति सम्बध्यते । हृदयमित्यत्रापि स्नेहाद्द्रवतीति सम्बन्धः ॥ ३ ॥ अथ सीताया मणेरागतिमाह–मणिरत्नमिति । मे श्वशुरेण जनकराजेन । वधूकाले विवाहकाले । वैदेह्या मूर्ध्नि शोभतेति सम्बन्धः ॥४॥ जनकस्यापि कुत आगतोऽत आह–अयं हीति ॥५॥

ति०–वधूकाले वधूत्वसम्पादके काले । सीतामातृहस्ताद्गृहीत्वा दशरथहस्ते दत्तम् । तच्च तस्मिन् काले यथाऽधिकं शोभते तथा मूर्ध्नि बद्धमित्यर्थः । स०–वधूत्वगकाले वैदेह्या मूर्ध्नि बद्धं यथा अधिकं अशोभत तथा इदानीमपि शोभते । कालतस्तत्प्रकाशतिरोधानं नास्तीति महत्त्वं रत्नस्य ध्वन्यते ॥ ४ ॥

'मणिं तु दृष्ट्वा रामो वै त्रयाणां संस्मरिष्यति' इति सीतयोक्तप्रकारेण स्मरति–इममिति। इमं दृष्ट्वा तातस्य दशरथस्य। वैदेहस्य जनकस्य। दर्शन मद्यावगतः प्राप्तोस्मि। तदा ताभ्यां तस्या मूर्ध्नि बद्धत्वादिति भावः। इह वैदेहग्रहणं सीताजनन्या अप्युपलक्षणम्। सीतावाक्ये 'वीरो जनन्या

इमं दृष्ट्वा मणिश्रेष्ठं यथा तातस्य दर्शनम्। अद्यास्म्यवगतः सौम्य वैदेहस्य तथा विभोः ॥ ६ ॥ अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः। अस्याद्य दर्शनेनाहं प्राप्तां तामिव चिन्तये ॥७॥ किमाह सीता वैदेही ब्रूहि सौम्य पुनः पुनः। पिपासुमिव तोयेन सिञ्चन्ती वाक्यवारिणा॥८॥ इतस्तु किं दुःखतरं यदिमं वारिसम्भवम्। मणिं पश्यामि सौमित्रे वैदेहीमागतं विना ॥ ९ ॥ चिरं जीवति वैदेही यदि मासं धरिष्यति। क्षणं सौम्य न जीवेयं विना तामसितेक्षणाम् ॥ १० ॥ नय मामपि तं देशं यत्र दृष्टा मम प्रिया। न तिष्ठेयं क्षणमपि प्रवृत्तिमुपलभ्य च ॥ ११ ॥ कथं सा मम सुश्रोणी भीरुभीरुः सती सदा। भयावहानां घोराणां मध्ये तिष्ठति रक्षसाम् ॥ १२ ॥ शारदस्तिमिरोन्मुक्तो नूनं चन्द्र इवाम्बुदैः। आवृतं वदनं तस्या न विराजति राक्षसैः ॥ १३ ॥

मम च' इत्युक्तेः। तत्र त्रयाणां संस्मरिष्यतीति त्रयग्रहणं वहुमात्रोपलक्षणम्। इह वैदेहस्यापि स्मरणोक्तेः ॥ ६–८ ॥ इतस्त्विति। आगतं मणिमित्यन्वयः ॥ ९–११ ॥ भीरुभीरुः अत्यन्तभीरुः ॥ १२ ॥ १३ ॥

यथा सीताद्दर्शनम् अवगतः प्राप्तस्तथा तातस्य दशरथस्य प्राप्तः तद्धस्ते जनकेन दानात्तस्य स्मरणम्, तथा वैदेहस्य राज्ञो जनकस्य सपत्नीकस्य दर्शनं प्राप्त इत्यर्थः ॥ ६–८ ॥ वैदेहीं विना आगतं मणिं पश्यामीति सम्बन्धः। इतः किं दुःखतरम् ॥ ९ ॥ यदि मासं धरिष्यति जीविष्यति तदा चिरं जीवति, जीविष्यतीत्यर्थः। तां विना यथाऽहं न जीवेयं तथा मां विना सापि न जीविष्यतीत्यर्थः ॥ १० ॥ प्रवृत्तिमुपलभ्य क्षणमपि न तिष्ठेयं स्थातुं न शक्यमित्यर्थः ॥ ११ ॥ भीरुभीरुः अत्यन्तं भीरुः ॥ १२ ॥ अम्बुदैरावृतस्तिमिरोन्मुक्तः शारदश्चन्द्र इव तस्या वदनं न राजति ॥ १३ ॥

स०–यदि वैदेही चिरं जीवति तर्हि मासं धरिष्यति। यदि मासं धरिष्यति तर्ह्येव चिरं जीवतीति तज्जीवनं मज्जीवनव्याप्तम्। व्यतिरेकेणाह–क्षणमिति। तामसितेक्षणां विना क्षणमहं न जीवेयं यथा तथा ऽयं सीतापि मां विना नजीवा न विद्यते जीवो यस्यास्सेति योजना। यद्वा वैदेही यदि मासं धरिष्यति प्राणान् तर्हि चिरं जीवति वार्ताज्ञानानन्तरं मया तु तथा जीवितुमशक्यमित्याह–क्षणमिति ॥ १० ॥ प्रवृत्तिं वार्ताम्, निराहारत्वादिप्रवृत्तिं वा ॥ ११ ॥

तत्त्वतः, सङ्कोचेन न किंचित् गोपनीयामिति भावः ॥ १४ ॥ मधुरा मधुरालापा । मधुरालापा, येन तद्वचनानुवादेपि भवद्वचनं मधुरं भवतीत्यर्थः ॥ १५ ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥ एवमित्यादि ॥ १ ॥ २ ॥ पूर्वं





किमाह सीता हनुमंस्तत्त्वतः कथयाद्य मे । एतेन खलु जीविष्ये भेषजेनातुरो यथा ॥ १४ ॥ मधुरा मधुरालापा किमाह मम भामिनी । मद्विहीना वरारोहा हनुमन् कथयस्व मे ॥ [दुःखाद्दुःखतरं प्राप्य कथं जीवति जानकी ।] ॥ १५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

एवमुक्तस्तु हनुमान् राघवेण महात्मना । सीताया भाषितं सर्वं न्यवेदयत राघवे ॥ १ ॥ इदमुक्तवती देवी जानकी पुरुषर्षभ । पूर्ववृत्तमभिज्ञानं चित्रकूटे यथातथम् ॥ २ ॥ सुखसुप्ता त्वया सार्धं जानकी पूर्वमुत्थिता । वायसः सहसोत्पत्य विरराद स्तनान्तरे ॥ ३ ॥ पर्यायेण च सुप्तस्त्वं देव्यङ्के भरताग्रज । पुनश्च किल पक्षी स देव्या जनयति व्यथाम् ॥ ४ ॥ पुनः पुनरुपागम्य विरराद भृशं किल । ततस्त्वं बोधितस्तस्याः शोणितेन समुक्षितः ॥ ५ ॥ वायसेन च तेनैव सततं बाध्यमानया । बोधितः किल देव्या त्वं सुखसुप्तः परन्तप ॥ ६ ॥ तां तु दृष्ट्वा महाबाहो दारितां च स्तनान्तरे । आशीविष इव क्रुद्धो निःश्वसन्नभ्यभाषथाः ॥ ७ ॥ नखाग्रैः केन ते भीरु दारितं तु स्तनान्तरम् । कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ॥ ८ ॥ निरीक्षमाणः सहसा वायसं समवैक्षथाः । नखैः सरुधिरैस्तीक्ष्णैस्तामेवाभिमुखं स्थितम् ॥ ९ ॥

सङ्कुचितं विस्तृणीते–सुखेत्यादिना । उभावपि पर्यायेण सुप्ताविति त्वया सार्धमित्युक्तम् ॥ ३–६ ॥ तां त्वित्यादि । दारितां विदारिताम् ॥ ७–१९ ॥



एतेन तद्वाक्यश्रवणरूपेण ॥ १४ ॥ मधुरा मधुराकारा ॥ १५ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० सुन्दरकाण्डव्याख्यायां षट्षष्टितमः सर्गः ॥ ६६ ॥
एवमित्यादि ॥ १ ॥ २ ॥ पूर्वं सङ्कुचितं विस्तृणीते–सुखेत्यादिना । उभावपि पर्यायेण सुप्ताविति त्वया सार्धमित्युक्तम् ॥ ३–६ ॥ दारितां विदारिताम् ॥ ७–१९ ॥

सुतः किल स शक्रस्य वायसः पततां वरः । धरान्तरचरः शीघ्रं पवनस्य गतौ समः ॥ १० ॥ ततस्तस्मिन् महाबाहो कोपसंवर्तितेक्षणः । वायसे त्वं कुथाः क्रूरां मतिं मतिमतां वर ॥ ११ ॥ स दर्भं संस्तराद् गृह्य ब्रह्मास्त्रेण ह्ययोजयः । स दीप्त इव कालाग्निर्जज्वालाभिमुखः खगम् ॥ १२ ॥ क्षिप्तवांस्त्वं प्रदीप्तं हि दर्भं तं वायसं प्रति । ततस्तु वायसं दीप्तः स दर्भोऽनुजगाम ह ॥ १३ ॥ स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः । त्रींल्लोकान् संपरिक्रम्य त्रातारं नाधिगच्छति ॥ १४ ॥ पुनरेवागतस्त्रस्तस्त्वत्सकाशमरिन्दम । स तं निपतितं भूमौ शरण्यः शरणागतम् ॥ १५ ॥ वधार्हमपि काकुत्स्थ कृपया पर्यपालयः ॥ १६ ॥ मोघमस्त्रं न शक्यं तु कर्तुमित्येव राघव । भवांस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् ॥ १७ ॥ राम त्वां स नमस्कृत्य राज्ञे दशरथाय च । विसृष्टस्तु तदा काकः प्रतिपेदे स्वमालयम् ॥ १८ ॥ एवमस्त्रविदां श्रेष्ठः सत्त्ववाञ्छीलवानपि । किमर्थमस्त्रं रक्षस्सु न योजयति राघवः ॥ १९ ॥ न नागा नापि गन्धर्वा नासुरा न मरुद्गणाः । न च सर्वे रणे शक्ता रामं प्रतिसमासितुम् ॥ २० ॥ तस्य वीर्यवतः कश्चिद्यद्यस्ति मयि सम्भ्रमः । क्षिप्रं सुनिशितैर्बाणैर्हन्यतां युधि रावणः ॥ २१ ॥ भ्रातुरादेशमाज्ञाय लक्ष्मणो वा परन्तपः । स किमर्थं नरवरो न मां रक्षति राघवः ॥ २२ ॥ शक्तौ तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ । सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः ॥ २३ ॥ ममैव दुष्कृतं किंचिन्महदस्ति न संशयः । समर्थौ सहितौ यन्मां नावेक्षेते परन्तपौ ॥ २४ ॥ वैदेह्या वचनं श्रुत्वा करुणं साश्रुभाषितम् । पुनरप्यहमार्यां तामिदं वचनमब्रुवम् ॥ २५ ॥ त्वच्छोकविमुखो रामो देवि सत्येन ते शपे । रामे दुःखाभिभूते तु लक्ष्मणः परितप्यते ॥ २६ ॥

न नागा इति । प्रतिसमासितुं प्रतिमुखं स्थातुम् ॥ २०-२५ ॥ त्वच्छोकविमुखः त्वच्छोकेन कार्यान्तरविमुखः ॥ २६ ॥

नयते नेष्यते । वर्तमानसामीप्ये वर्तमानवत् प्रयोगः ॥ २९ ॥ ३० ॥ साऽभिवीक्ष्य दिशः इति । दिगवलोकनं राक्षस्यो दृष्ट्वा रावणाय वक्ष्यन्तीति भयेन ।





कथंचिद्भवती दृष्टा न कालः परिशोचितुम् । इमं मुहूर्तं दुःखानामन्तं द्रक्ष्यसि भामिनि ॥ २७ ॥ तावुभौ नरशार्दूलौ राजपुत्रावनिन्दितौ । त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ॥ २८ ॥ हत्वा च समरे रौद्रं रावणं सहबान्धवम् । राघवस्त्वां वरारोहे स्वां पुरीं नयते ध्रुवम् ॥ २९ ॥ यत्तु रामो विजानीयादभिज्ञानमनिन्दिते । प्रीतिसञ्जननं तस्य प्रदातुं त्वमिहार्हसि ॥ ३० ॥ साऽभिवीक्ष्य दिशः सर्वा वेण्युद्ग्रथनमुत्तमम् । मुक्त्वा वस्त्राद्ददौ मह्यं मणिमेतं महाबल ॥ ३१ ॥ प्रतिगृह्य मणिं दिव्यं तव हेतो रघूद्वह । शिरसा तां प्रणम्यार्यामहमागमने त्वरे ॥ ३२ ॥ गमने च कृतोत्साहमवेक्ष्य वरवर्णिनी । विवर्धमानं च हि मामुवाच जनकात्मजा ॥ ३३ ॥ अश्रुपूर्णमुखी दीना बाष्पसन्दिग्धभाषिणी । ममोत्पतनसम्भ्रान्ता शोकवेगसमाहता ॥ ३४ ॥ हनुमन् सिंहसङ्काशावुभौ तौ रामलक्ष्मणौ । सुग्रीवं च सहामात्यं सर्वान् ब्रूया ह्यनामयम् ॥ ३५ ॥ यथा च स महाबाहुर्मां तारयति राघवः । अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि ॥ ३६ ॥ इमं च तीव्रं मम शोकवेगं रक्षोभिरेभिः परिभर्त्सनं च । ब्रूयास्तु रामस्य गतः समीपं शिवश्च तेऽध्वाऽस्तु हरिप्रवीर ॥ ३७ ॥ एतत्तवार्या नृपराजसिंह सीता वचः प्राह विषादपूर्वम् । एतच्च बुद्ध्वा गदितं मया त्वं श्रद्धत्स्व सीतां कुशलां समग्राम् ॥ ३८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमत्सुन्दरकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

वेण्यामुद्ग्रथ्यत इति वेण्युद्ग्रथनम्, वेणीधार्यमित्यर्थः । मुक्त्वा वस्त्रादिति । वस्त्राञ्चलेन ग्रथितं मणिं मुक्त्वा ततः ददावित्यर्थः । अस्मिन् भवती मया दृष्टा अतः परं परिशोचितुं न कालः, तव योग्य इति शेषः । चिरं ल[illegible]गासितुं न कालो योग्य इति वा । इमं मुहूर्तम् अस्मिन्नेव मुहूर्ते इत्यर्थः ॥ २७–३० ॥ वेण्युद्ग्रथितं शिरसि कतिपयकेशरचितवेण्युद्ग्रथितम् । वस्त्रान्मुक्त्वा वस्त्रान्तर्ग्रथितमुन्मुच्य ददावित्यर्थः ॥ ३१ ॥ त्वरे त्वरावान् जात इत्यर्थः ॥ ३२ ॥ विवर्ध

सर्गे सार्धसप्तत्रिंशच्छ्लोकाः ॥३१–३८॥ इति श्रीगोविन्द॰ श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥
अथेत्यादि । हे नरव्याघ्र ! तव स्नेहात्, मयीति शेषः । सौहार्दात् सुहृद्भावात्, आप्तत्वादिति यावत् । अनुमान्य सम्मान्य । उत्तरं ततः परम् उत्तरं

अथाहमुत्तरं देव्या पुनरुक्तः ससम्भ्रमः । तव स्नेहान्नरव्याघ्र सौहार्दादनुमान्य वै ॥ १ ॥ एवं बहुविधं वाच्यो रामो दाशरथिस्त्वया । यथा मामाप्नुयाच्छीघ्रं हत्वा रावणमाहवे ॥ २ ॥ यदि वा मन्यसे वीर वसैकाहमरिन्दम । कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ ३ ॥ मम चाप्यल्पभाग्यायाः सान्निध्यात्तव वीर्यवन् । अस्य शोकविपाकस्य मुहूर्तं स्याद्विमोक्षणम् ॥ ४ ॥ गते हि त्वयि विक्रान्ते पुनरागमनाय वै । प्राणानामपि सन्देहो मम स्यान्नात्र संशयः ॥ ५ ॥ तवादर्शनजः शोको भूयो मां परितापयेत् । दुःखाद्दुःखपराभूतां दुर्गतां दुःखभागिनीम् ॥ ६ ॥ अयं च वीर सन्देहस्तिष्ठतीव ममाग्रतः । सुमहांस्त्वत्सहायेषु हर्यृक्षेषु हरीश्वर ॥ ७ ॥ कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम् । तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ ८ ॥ त्रयाणामेव भूतानां सागरस्यास्य लङ्घने । शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥ ९ ॥

कार्यं वा । पुनर्देव्याऽहमुक्त इत्यन्वयः । ससम्भ्रमः गमनत्वरान्वित इत्यर्थः ॥ १ ॥ २ ॥ शोकविपाकस्य शोकवृद्धेरित्यर्थः ॥ ३–९ ॥ रामानु॰–प्राणानामपि सन्देहो मम स्यान्नात्र संशयः इत्यतः परं तवादर्शनजः शोक इति श्लोकः । अतः परम् अयं च वीर सन्देह इति श्लोकः । केषुचित्कोशेष्वेतच्छ्लोकद्वयं प्रमादात्पतितम् ॥ ५–७ ॥

मानम्, समुद्रतरणायेति शेषः ॥ ३३–३८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां सप्तषष्टितमः सर्गः ॥ ६७ ॥
अथेति । हे नरव्याघ्र ! तव स्नेहात्, मयीति शेषः । सौहार्दात् सुहृद्भावात्, आप्तत्वादिति यावत् । अनुमान्य सम्मान्य च । उत्तरं ततः परम् उत्तरं कार्यं वा पुनः पुनर्देव्या ससम्भ्रमः गमनत्वरान्वितः अहम् उक्त इत्यन्वयः ॥ १ ॥ किमुक्तम् ? तदाह–एवमित्यादि ॥ २ ॥ यदीत्यादि श्लोकद्वयमेकं वाक्यम् । हे वीर ! यदि वा मन्यसे एकाहं वस । तावता किमायातम् ? अत आह कस्मिंश्चिदिति । अरिन्दम ! कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि चेत् तव सान्निध्याद्अल्पभाग्याया मम अस्य महतः शोकविपाकस्य शोकरूपस्य पापपरिणामस्य फलस्येत्यर्थः । मुहूर्तं मोक्षणं स्यादिति योजना ॥ ३ ॥ ४ ॥ पुनरागमनाय प्रतीक्षमाणाया मम

कार्यनिर्योगे कार्यगतौ । दुरतिक्रमे दुर्निर्वहे ॥ ९-२२ ॥ तदलमिति । मन्युः दैन्यम् । "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः ॥ २३-२८ ॥





तदस्मिन् कार्यनिर्योगे वीरैवं दुरतिक्रमे । किं पश्यसि समाधानं ब्रूहि कार्यविदां वर ॥१०॥ काममस्य त्वमेवैकः कार्यस्य परिसाधने । पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ ११ ॥ बलैः समग्रैर्यदि मां हत्वा रावणमाहवे । विजयी स्वां पुरीं रामो नयेत्तत् स्याद्यशस्करम् ॥१२॥ यथाऽहं तस्य वीरस्य वनादुपधिना हृता । रक्षसा तद्भया देव तथा नार्हति राघवः ॥ १३ ॥ बलैस्तु सङ्कुलां कृत्वा लङ्कां परबलार्दनः । मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ १४ ॥ तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः । भवत्याहवशूरस्य तथा त्वमुपपादय ॥ १५ ॥ तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् । निशम्याहं ततः शेषं वाक्यमुत्तरमब्रुवम् ॥ १६ ॥ देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः । सुग्रीवः सत्त्वसम्पन्नस्तवार्थे कृतनिश्चयः ॥ १७ ॥ तस्य विक्रमसम्पन्नाः सत्त्ववन्तो महाबलाः । मनस्सङ्कल्पसम्पाता निदेशे हरयः स्थिताः ॥१८॥ येषां नोपरि नाधस्तान्न तिर्यक्सज्जते गतिः । न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥ १९ ॥ असकृत्तैर्महाभागैर्वानरैर्बलदर्पितैः । प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥२०॥ मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः । मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ॥ २१ ॥ अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः । न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥२२॥ तदलं परितापेन देवि मन्युर्व्यपैतु ते । एकोत्पातेन वै लङ्कामेष्यन्ति हरियूथपाः ॥२३॥ मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ । त्वत्सकाशं महाभागे नृसिंहावागमिष्यतः ॥ २४ ॥



प्राणानामपि सन्देहः स्यादिति सम्बन्धः ॥ ५-१० ॥ यद्यपि त्वमेव पर्याप्तः, सकलराक्षसवधपूर्वं मन्मोचन इति शेषः । तथापि ईदृशो बलोदयस्तवैव यशस्यः यशोवर्धकः स्यात् ॥ ११ ॥ यदि तु रामो रावणं हत्वा मां नयेत् तदा तन्नयनं तस्य यशस्करं स्यात् ॥ १२-२२ ॥ तदलमिति । मन्युः दैन्यम् ॥ २३-२८ ॥

तव शोकेनापि 'नैव दंशान्' इत्यादिमदुक्त्या श्रुतेन । तदा मम पुरस्तादभिपीडिता। अदीनभाषिणा मया। शिवाभिः इष्टाभिः वाग्भिः अभिप्रसादिता

अरिघ्नं सिंहसङ्काशं क्षिप्रं द्रक्ष्यसि राघवम् । लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपस्थितम् ॥ २५ ॥ नखदंष्ट्रायुधान् वीरान् सिंहशार्दूलविक्रमान् । वानरान् वारणेन्द्राभान् क्षिप्रं द्रक्ष्यसि सङ्गतान् ॥२६॥ शैलाम्बुदनिकाशानां लङ्कामलयसानुषु । नर्दतां कपिमुख्यानामचिराच्छ्रोष्यसि स्वनम् ॥ २७ ॥ निवृत्तवनवासं च त्वया सार्धमरिन्दमम् । अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम् ॥ २८ ॥ ततो मया वाग्भिरदीनभाषिणा शिवाभिरिष्टाभिरभिप्रसादिता । जगाम शान्तिं मम मैथिलात्मजा तवापि शोकेन तदाऽभिपीडिता ॥ २९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशत्सहस्रिकायां संहितायां श्रीमत्सुन्दरकाण्डे अष्टषष्टितमः सर्गः ॥६८॥ सुन्दरकाण्डः समाप्तः ॥

शान्तिं दुःखनिवृत्तिं जगाम॥२९॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टषष्टितमः सर्गः ॥६८॥

इत्थं कौशिकवंशमौक्तिकमणिर्गोविन्दराजाभिधो वात्स्यश्रीशठकोपदेशिकपदद्वन्द्वैकसेवारतः ।
पूर्वाचार्यकृता विलोक्य विविधा व्याख्या मुहुर्जानकीकान्तस्याप्रतिमाज्ञयैव तिलकं सौन्दर्यकाण्डे व्यधात् ॥ १ ॥

तत इति । तव शोकेनापि 'नैव दंशान्' इत्यादिपूर्वमुक्तया मदुक्त्या श्रुतेन त्वच्छोकेनापि मम पुरस्तदाऽभिपीडिता । अदीनभाषिणा मया शिवाभिरिष्टाभिः वाग्भिरभिप्रसादिता शान्तिं दुःखनिवृत्तिं जगामेति योजना ॥ २९ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीनारायणतीर्थशिष्यश्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् अष्टषष्टितमः सर्गः ॥ ६८ ॥

---

महेशतीर्थरचिता रामपादसमर्पिता । व्याख्या सुन्दरकाण्डस्य समाप्ता तत्त्वदीपिका ॥

श्रीमत्सुन्दरकाण्डपठनश्रवणयोः फलम् । ब्रह्माण्डपुराणे सप्तचत्वारिंशदुत्तरशततमे अध्याये—
काण्डस्य सुन्दराख्यस्य श्रवणात्पठनादपि । मां प्राप्नुयाज्जगद्धेतुं नात्र सन्देह इष्यते ॥

## ॥ इति श्रीमद्वाल्मीकिरामायणे सुन्दरकाण्डम् ॥

श्रीभूषणादिव्याख्याचतुष्टयालंकृतं मुनिभावप्रकाशिका–तिलक-सत्यतीर्थीयादिव्याख्योद्धृतटिप्पणीसंवलितञ्च ।

# श्रीमद्वाल्मीकीयरामायणम्

# THE VALMIKIYARAMAYANA

श्री गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्याव्याख्याचतुष्टयालङ्कृतं मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृत टिप्पणी संवलितं च







स्वामी दिव्यानन्द पुरी धर्मार्थ ट्रस्ट
वाराणसी

# महापुराणम्

| | |
|---|---|
| १. ब्रह्म महापुराणम् | ११. लिंग महापुराणम् |
| २. पद्म महापुराणम् | १२. वाराह महापुराणम् |
| ३. विष्णु महापुराणम् | १३. स्कन्द महापुराणम् |
| ४. शिव महापुराणम् | १४. वामन महापुराणम् |
| ५. नारदीय महापुराणम् | १५. कूर्म महापुराणम् |
| ६. मार्कण्डेय महापुराणम् | १६. मत्स्य महापुराणम् |
| ७. अग्नि महापुराणम् | १७ गरुड महापुराणम् |
| ८. भागवत महापुराणम् | १८. ब्रह्माण्ड महापुराणम् |
| ९. भविष्य महापुराणम् | १९. वायु महापुराणम् |
| १०. ब्रह्मवैवर्त महापुराणम् | २०. विष्णुधर्मोत्तरपुराणम् |

हरिवंश पुराणम् : देवीभागवतम्
वासुकि पुराणम् : कालिका पुराणम्
कल्किपुराणम् : एकाम्रपुराणम्
सौर पुराणम् : नरसिंह पुराणम्



[महाभारत-नीलकंठी टीका सहित]

क्षेमराज श्रीकृष्णदासेन सम्पादितस्य मुम्बई श्री वेंकटेश्वर स्टीम मुद्रणालयेन प्रकाशितस्य पुनर्मुद्रणम्

# श्रीमद्वाल्मीकीयरामायणम्

# THE VALMIKIYA RAMAYANA

[श्री-गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्यव्याख्या चतुष्टयालङ्कृतं
मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृत टिप्पणी संवलितम् च]

## पञ्चम खण्ड :: युद्धकाण्डम्

NAG PUBLISHERS

NAG PUBLISHERS
11A/U. A. Jawahar Nagar, Delhi-7 (India)

**NAG PUBLISHERS**

(i) 11A/U. A. (Post Office Building), Jawahar Nagar, Delhi-110007

(ii) 8A/U.A. 3, Jawahar Nagar, Delhi-110007

(iii) Jalalpur Mafi (Chunar-Mirzapur) U. P.

I S B N 81-7081-232-1

1990

Price : Rs. 1800.00 (For 7 vols. set)



**PRINTED IN INDIA**

**Published by Nag Sharan Singh for Nag Publishers 11A/U.A., Jawahar Nagar, Delhi-110007 and printed at New Gian offset Printers Delhi**

# अथ श्रीमद्वाल्मीकिरामायणे युद्धकाण्डम् ॥

श्रीभूषणादिव्याख्याचतुष्टयालंकृतं मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृतटिप्पणीसंवलितं च ॥

श्रीरङ्गेशाय नमः ॥ आचार्यं शठकोपदेशिकवरं प्राचार्यपारम्परीमध्यानम्य सनारदं कुशलवाचार्यं मुनीनां वरम् ।
पूर्वाचार्यकृता विलोक्य बहुधा व्याख्याः सतां प्रीतये कुर्वे संप्रति युद्धकाण्डविवृतिं श्रीमत्किरीटाभिधाम् ॥

उक्तं पुरुषकारभूताया लक्ष्म्याः कृत्यं सुन्दरकाण्डे । अथोपायकृत्यं वक्तुं षष्ठः काण्ड आरभ्यते । तत्र स्वामिना कृतकार्ये भृत्ये एवं वर्तितव्यमित्यमुमर्थमुपदेष्टुं सुग्रीवादीनामुत्साहं वर्धयन् समाहृतसीतावृत्तान्तं हनुमन्तं रामः सत्करोति प्रथमे सर्गे—श्रुत्वेति । अत्र गायत्र्यक्षरं मकारः । यथावत्

श्रीरामचन्द्राय नमः ॥ श्रुत्वा हनुमतो वाक्यं यथावदभिभाषितम् । रामः प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् ॥ १ ॥
कृतं हनुमता कार्यं सुमहद्भुवि दुर्लभम् । मनसाऽपि यदन्येन न शक्यं धरणीतले ॥ २ ॥

यथावस्थितप्रकारेण । अभिभाषितम् उक्तम् । उत्तरं प्रियश्रवणोत्तरकालार्हम् ॥ १ ॥ अथ "प्रत्यक्षे गुरवः स्तुत्याः परोक्षे मित्रबान्धवाः । कर्मान्ते दासभृत्याश्च न कदाचन पुत्रकाः ॥" इति वचनात्कर्मान्ते दासं स्तौति—कृतमित्यादिना । अत्र महदित्यनेन सागरतरणमुच्यते । सुमहदित्यनेन लङ्काप्रवेशः । दुर्लभमित्यनेन लङ्काधर्षणम् । मनसापि न शक्यमित्यनेन पुनर्निर्गमः । प्रथमं सागर एव न तर्तुं शक्यः । तीर्त्वापि तं लङ्का न प्रवेष्टुम् । प्रविश्यापि न धर्षयितुम् । धर्षयित्वापि न ततो निर्गन्तुमिति भावः ॥ २ ॥ रामानु०—सीतावृत्तान्तश्रवणजनितहर्षातिशयाद्धुत्तमदूतलक्षणवैशिष्ट्यकथनेन सुग्रीवादीनां पुरतो हनुमन्तं स्तौति—

अथ श्रीमद्युद्धकाण्डे व्याख्येयानि व्याक्रियन्ते । एवमपारं पारावारं गोवत्सपदवत्समुत्तीर्य निरातङ्कं लङ्कां प्रविष्टेन सीतान्वेषणपूर्वकमशोकवनभङ्गादिकर्मातिमानुषं पौरुषं कृत्वा प्रतिनिवृत्तेन हनुमता प्रत्यभिज्ञानपूर्वकमभिभाषितं सीतावृत्तान्तं श्रुत्वा रामस्तदाकर्णनमुदितमनाः कृतकार्ये भृत्यजने स्वामिना एवं भवितव्यमिति सदाचारमुपदेष्टुं सुग्रीवादिहरिवीराणामुत्साहमुत्पादयितुं च समाहृतप्रेयसीवृत्तान्तं हनुमन्तमस्तौषीदित्याह—श्रुत्वेति । गायत्र्याः म इति पञ्चदशाक्षरं श्रुत्वा हनुमत इत्यस्य श्लोकस्य पञ्चमाक्षरेण म इत्यनेन संगृह्णाति । उत्तरं प्रियश्रवणोत्तरकालार्हम् ॥ १ ॥ भुवि दुर्लभं सुमहत् यत्कार्यं हनुमतः कार्यं

स०—मारुतेरीरितं श्रुत्वा राघवः श्लाघापूर्वकमन्यत्तस्मै दातुमचक्षाणः स्वात्मानमेव ददावित्याह—श्रुत्वेत्यादिना । रामः हनुमतो यथावत्सम्यगभिभाषितं वचनम् अवाक्यं निश्शब्दं यथा भवति तथा श्रुत्वा उत्तरं प्रत्युत्तररूपं तत्कालोचिततयोत्तमं वाक्यमब्रवीत् ॥ १ ॥ सुमहतां महात्मनां देवानां या भूः स्वर्गादिरूपं स्थानम् तस्यामपि दुर्लभम् असाध्यं यत्कार्यं सीतासन्दर्शनरूपं तत् धरणीतले हनुमता कृतम् । अन्येन हनुमतो भिन्नेन । न शक्यम्, कर्तुमिति शेषः ॥ २ ॥

कृतमित्यादिना ॥ २ ॥ महत्त्वमुपपादयति–न हीति । गरुडवायू मिलित्वा तरेताम् । अथ त्वेक एवातरदित्यर्थः ॥ ३ ॥ सुमहत् मनसापि न शक्यमित्येतत्तयमप्युपपादयति–देवदानवेत्यादिना सार्द्धश्लोकेन । सत्त्वं बलम् आश्रित्य । श्वसन् जीवन् । निष्क्रमेत् निष्कामेत् । लङ्कां प्रविश्य स्वबलेन पुनर्निर्गच्छन् हनुमतोऽन्यः कोपि नास्तीत्यर्थः ॥ ४ ॥ दुर्लभत्वमुपपादयति–को विशेदिति ॥५॥ न केवलं स्वामिनियुक्तकार्यकरणेन भृत्यकार्यं निर्व्यूढमनेन,

न हि तं परिपश्यामि यस्तरेत महार्णवम् । अन्यत्र गरुडाद्वायोरन्यत्र च हनूमतः ॥३॥ देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् । अप्रधृष्यां पुरीं लङ्कां रावणेन सुरक्षिताम् ।[ यो वीर्यबलसम्पन्नो द्विषद्भिरनिवारितः । ] प्रविष्टः सत्त्वमाश्रित्य श्वसन् को नाम निष्क्रमेत् ॥ ४ ॥ को विशेत् सुदुराधर्षां राक्षसैश्च सुरक्षिताम् । यो वीर्यबलसम्पन्नो न समः स्याद्धनूमतः ॥ ५ ॥ भृत्यकार्यं हनुमता सुग्रीवस्य कृतं महत् । स्वयं विधाय स्वबलं सदृशं विक्रमस्य च ॥ ६ ॥ यो हि भृत्यो नियुक्तस्सन् भर्त्रा कर्मणि दुष्करे । कुर्यात्तदनुरागेण तमाहुः पुरुषोत्तमम् ॥ ७ ॥

किन्त्वनियुक्तप्रकृतकार्यानुकूलकार्यान्तरकरणेनापि महत्कार्यं संसाधितमित्याह–भृत्येति । विक्रमः अतिशक्तिः । "विक्रमस्त्वतिशक्तिता" इत्यमरः । विक्रमस्य सदृशं स्वबलम् अशोकवनिकाभङ्गादिकं पौरुषम् । स्वयम् आत्मनः स्वामिनियोगं विना विधाय । सुग्रीवस्य भृत्यकार्यं भृत्येन कर्तव्यं महत् अधिकं कृतमित्यर्थः ॥ ६ ॥ हनुमत उत्तमभृत्यत्वं दर्शयितुमुत्तममध्यमाधमभृत्यानां क्रमेण लक्षणमाह–यो हीत्यादिना । यो भृत्यः भर्त्रा स्वामिना । दुष्करे कर्मणि नियुक्तः तत् कृत्वा । अनुरागेण स्वामिभक्त्यतिशयेन । तदपेक्षितमनियुक्तमपि कार्यं कुर्यात् । तं पुरुषोत्तमम् उत्तमभृत्यम् आहुः ॥ ७ ॥ रामानु०–कुर्यात्तदनुरागेणेति पाठः । धातूनामनेकार्थत्वादत्रानुरागशब्दोऽनुबन्धवचनः । तदनुबन्धेन प्रकृतकार्यानुबन्धेन अनियुक्तमपि कार्यं यः कुर्यादित्यर्थः । भृत्यस्तु यः परं कार्यं न कुर्यादित्यधिककार्याकर्तुर्मध्यमभृत्यत्वाभिधानादेवं व्याख्यातम् । तदनन्तरं युर्य इति पाठे यच्छन्दोऽतिरिच्यते ॥ ७ ॥

तद्धरणीतले अन्येन मनसाऽपि न शक्यम्, कर्तुमिति शेषः ॥ २ ॥ ३ ॥ देवदानवयक्षाणामित्यत्र तृतीयार्थे षष्ठी । निष्क्रमेत् निष्कामेत् ॥४॥ यो वीर्यबलसम्पन्नोऽपि हनुमतः समो न स्यात् स को वा लङ्कां विशेदित्यन्वयः ॥५॥ हनुमता सुग्रीवस्य महद्भृत्यकार्यं समुद्रलङ्घनलङ्काप्रवेशसीतादर्शनरूपं कृतम् । एवं विधाय इति पाठे उक्तप्रकारेण भृत्यकार्यं कृत्वा विक्रमस्य सदृशं स्वबलं च कृतम्, स्वविक्रमानुरूपम् अशोकवनभङ्गादिकं कृतमित्यर्थः ॥ ६॥ हनुमतो भृत्योत्तमत्वं दर्शयितुमुत्तम

स०–तरेत तरेत् । अन्यत्र अन्यम् ॥ ३ ॥ देवदानवयक्षाणामिति कर्तरि षष्ठी ॥ ४ ॥

नियुक्तो य इति । भर्त्रा नियुक्तः यो भृत्यः युक्तः उत्साहियुक्तः समर्थश्च । नृपतेः स्वामिनः प्रियं परं कार्यं स्वामिनिर्दिष्टादधिकं कार्यं न कुर्यात् तं मध्यमं नरं मध्यमभृत्यम् आहुः । भृत्यस्तु यः परं कार्यं न कुर्यान्नृपतेः प्रियम् । भृत्योऽभृत्यस्समर्थोऽपि तमाहुर्मध्यमं नरम् ॥ इति पाठान्तरम् । तत्रत्वयमर्थः--यस्तु भृत्यस्समर्थोऽपि परं कार्यं न कुर्यात् उक्तमात्रमेव कुर्यात्स भृत्योऽभृत्यः उक्तानुष्ठानात् भृत्यः, अधिकाकरणादभृत्यः । ततस्तं

नियुक्तो यः परं कार्यं न कुर्यान्नृपतेः प्रियम् । भृत्यो युक्तः समर्थश्च तमाहुर्मध्यमं नरम् ॥ ८ ॥
नियुक्तो नृपतेः कार्यं न कुर्याद्यः समाहितः । भृत्यो युक्तः समर्थश्च तमाहुः पुरुषाधमम् ॥ ९ ॥
तन्नियोगे नियुक्तेन कृतं कृत्यं हनूमता । न चात्मा लघुतां नीतः सुग्रीवश्चापि तोषितः ॥ १० ॥

मध्यममाहुरिति ॥ ८ ॥ समाहितः कार्यान्तराव्यग्रः । युक्तः समर्थश्च यो भृत्यो नियुक्तोऽपि नृपतेः कार्यं नृपतेः उक्तमात्रमपि कार्यं सम्यक्तया न कुर्यात् तं पुरुषाधमम् अधमभृत्यम् आहुः ॥९॥ उक्तेषु त्रिविधभृत्येषूत्तमभृत्योऽयमित्याह--तदिति । तत् उत्तमभृत्यलक्षणलक्षितत्वात् । नियुज्यतेऽस्मिन्निति नियोगः कार्यं तस्मिन्नियुक्तेन उत्तमभृत्येन कृत्यं कर्तव्यं कार्यं हनुमता कृतम् । किंचात्मा स्वयं लघुतां न नीतः, राक्षसैरपराजितत्वात् । सुग्रीवश्चापि तोषितः उक्तकार्यातिरिक्तकार्यकरणात् ॥ १० ॥

मध्यमाधमभृत्यानां लक्षणमाह--यो हीत्यादिश्लोकत्रयेण । यो हि भृत्यो भर्त्रा दुष्करे कर्मणि नियुक्तस्तदनुरागेण नियुक्तकार्यानुकूल्येनोपलक्षितम् अनियुक्तमपि कार्यान्तरं कुर्यात् तं पुरुषोत्तममाहुः ॥ ७ ॥ यो भृत्यः नियुक्तः समर्थस्सन्नपि युक्तः उत्साही सन् नृपतेः प्रियं परं कार्यं स्वामिसन्दिष्टात्कार्यादधिकं कार्यं न कुर्यात् किन्तु नियुक्तमेव कुर्यात् तं भृत्यं मध्यममाहुः । भृत्यस्तु यः परं कार्यं न कुर्यान्नृपतेः प्रियम् । भृत्योऽभृत्यः समर्थोऽपि तमाहुर्मध्यमं नरम् ॥ इत्यपि पाठः क्वचित् । अस्यार्थः--यस्तु भृत्यः समर्थोऽपि परं कार्यं न कुर्यात्, उक्तमात्रमेव कुर्यात् सः भृत्योऽभृत्यः, उक्तानुष्ठानात् भृत्यः, अकृतकार्यानुकूलकार्यान्तराननुष्ठानादभृत्यः । ततस्तं मध्यममाहुः ॥ ८ ॥ यो भृत्यः नियुक्तोऽपि नृपतेः कार्यं न कुर्यात् नियुक्तमपि कार्यं न कुर्यादित्यर्थः ॥ ९ ॥ उत्तमोत्तमभृत्यलक्षणं हनुमति प्रदर्शयति--तन्नियोग इति । तदिति छेदः । नियोगे सीतान्वेषणमात्रे नियुक्तेन हनुमता तव नियुक्तमपि कृत्यं कृतम् । न चात्मा लघुतां नीतः रक्षोभिरपराजितत्वात् ।

न केवलं सुग्रीवतोषणम्, धर्मपरिरक्षणं चास्माकमासीदित्याह—अहमिति। धर्मतः धर्मे। सप्तम्यर्थे तसिः। धर्मतः परिरक्षिताः धर्मे स्थापिताः। धर्मस्थापनं चात्राधर्मान्मोचनम्। यदि हनुमता सीता न दृश्येत तदाऽहं तावदात्मानं जह्याम्, ततो लक्ष्मणादयश्च। तत आत्महानिरूपोऽधर्मस्सर्वेषां स्यादिति भावः। यद्वा वैदेहीदर्शनरूपेण धर्मेण उपकारेण सर्वे वयं परिरक्षिताः निरपवादाः कृताः स्मेति भावः ॥ ११ ॥ एवं निरांतशयानन्दकरं वचनं

अहं च रघुवंशश्च लक्ष्मणश्च महाबलः। वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ॥ ११ ॥
इदं तु मम दीनस्य मनो भूयः प्रकर्षति। यदिहास्य प्रियाख्यातुर्न कुर्मि सदृशं प्रियम् ॥ १२ ॥
एष सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः। मया कालमिमं प्राप्य दत्तश्चास्तु महात्मनः ॥ १३ ॥

कथयतो हनुमतः तत्सदृशप्रत्युपकारालाभात् खिद्यते—इदं त्विति। प्रकर्षति व्याकुलयति सन्तापयति वा। कुर्मि करोमि ॥१२॥ स च सन्तापस्सर्वस्वदानरूपेण प्रत्युपकारेण विना न शाम्यति। तस्य सर्वस्वदानस्य मया क्रियमाणः परिष्वङ्ग एव प्रतिनिधिर्भवत्वित्याह—एष इति। तुशब्दोऽवधारणे। इमं प्रत्युपकारार्हं कालं प्राप्य मया दत्तोऽयं परिष्वङ्ग एव सर्वस्वभूतोऽस्तु, सर्वस्वदानसदृशोऽस्त्विति सम्बन्धः। एषः स्वानुभवसिद्धः, इच्छागृहीताभिमतोरुदेहत्वेन स्वस्य निरवधिकभोग्यतया स्थितः। लोके स्वस्य रस्यं हि स्वाभिमताय दिशति। सर्वस्वभूतः एतद्व्यतिरिक्तप्रदाने इदं न दत्तमिति न्यूनता स्यात्, एतत्प्रदाने तु सर्वं दत्तम्, एतद्विग्रहस्य सर्वाश्रयत्वात्। परिष्वङ्गो हनूमतः अमृताशिनो हि तृणकवलादिकं न देयम्। "स्नेहो मे

सुग्रीवश्चापि तोषितः नियुक्तकार्यानुकूलकार्यान्तरकरणादिति भावः ॥ १० ॥ अहमिति। धर्मतः। सार्वविभक्तिकस्तसिः। धर्मतः परिरक्षिताः धर्मे स्थापिताः अधर्मान्निवर्तिता इति यावत्। यदि हनुमान् वैदेहीं नाद्राक्षीत तदाऽहं जीवितं जह्याम्, मद्वियोगासहिष्णवो लक्ष्मणादयश्च तथा कुर्युः। तथाचात्महननरूपाधर्मः सर्वेषां सम्भवेदिति भावः॥११॥एवं हनुमत्कर्म मां सुखयत्येव, किन्तु तस्य प्रत्युपकाराकरणजनितविषादः प्रेयसीवृत्तान्तश्रवणानन्दमपि तिरोधाय मां सन्तापयतीत्याह—इदं त्वित्यादिना। कुर्मि करोमि ॥ १२॥ स सन्तापः सर्वस्वदानरूपेण प्रत्युपकारेण विना न शाम्यति तस्य चेदानीमसम्भवान्मदीयः परिष्वङ्ग एव प्रतिनिधि

स०—एतत्कालोचितमिदमित्यालोच्य दत्तवान्वानरेन्द्राय राघवेन्द्र इत्याह—एष इत्यादिना। सर्वस्वभूतः सहभोगहेतुत्वात्कृतोपकारसमग्रफलरूपः। एषः परिष्वङ्गः आलिङ्गनरूपः। इमं कालम् एतादृशं समयं प्राप्य। महात्मनः तस्य हनुमतो दत्तः। मया रमया महात्मनो मम च सर्वस्वभूतः एषोपि इमम् अकालं सायुज्यसूचकस्य तस्येदानीमयोग्यत्वात्तत्कालभिन्नं कालं प्राप्यापि मया दत्त इति वा। तुशब्दस्तु राममारुतयोर्विशेषद्योतकः। अनेन कृपापारवश्यं द्योत्यते ॥ १३ ॥

परमो राजन् " इत्येतद्विग्रहे प्रेमवतः स एव दातव्यः । मया कालमिमं प्राप्य दत्तः । अयं किञ्चिदपि मत्तोऽनपेक्षमाणो वर्त्तते । कदा मयाऽस्मै किञ्चिद्दत्तं स्यादिति सोत्कण्ठेन मया स्थितं संप्रत्यप्रतिषेधसमयलाभाद्दत्तवानस्मि । तस्य महात्मनः महास्वभावस्य, महोदारस्येत्यर्थः । देहद्वयमुपकृतवतः किमेकदेहप्रदानमुचितमिति भावः । वेण्युदग्रथनसमये सीतां संरक्ष्य दत्त्वा ' अवगाह्यार्णवं स्वप्स्ये ' इति दशायां रामदेहं च सीतासन्देशवचनेनाजी

इत्युक्त्वा प्रीतिहृष्टाङ्गो रामस्तं परिषस्वजे । हनूमन्तं महात्मानं कृतकार्यमुपागतम् ॥ १४ ॥ ध्यात्वा पुनरुवा चेदं वचनं रघुनन्दनः । हरीणामीश्वरस्यैव सुग्रीवस्योपशृण्वतः ॥ १५ ॥ सर्वथा सुकृतं तावत् सीतायाः परिमार्गणम् । सागरं तु समासाद्य पुनर्नष्टं मनो मम ॥ १६ ॥ कथं नाम समुद्रस्य दुष्पारस्य महाम्भसः । हरयो दक्षिणं पारं गमिष्यन्ति समाहिताः ॥ १७ ॥ यद्यप्येष तु वृत्तान्तो वैदेह्या गदितो मम । समुद्रपारगमने हरीणां किमिवोत्तरम् ॥ १८ ॥

वयद्धि । एवं देहद्वयं दत्तवतः किमेकदेहदानमुचितमिति भावः ॥ १३ ॥ रामानु०—मया कालमिमं प्राप्य दत्तश्चास्तु महात्मनः इति पाठः ॥ १३ ॥ प्रीतिहृष्टाङ्गः प्रीत्या पुलकितगात्रः । महात्मानमित्यादिविशेषणानि परिष्वङ्गहेतवः ॥ १४ ॥ एवं हनुमन्तं स्तुत्वा सागरस्य दुस्तरत्वं विचार्य विषण्णस्सन् प्रयास कृतं सीतान्वेषणं निरर्थकमिति मन्वान आह—ध्यात्वेति । एवकारो भिन्नक्रमः । ध्यात्वा दुस्तरं सागरं सर्ववानरवाहिनीसहितोऽहं कथं सन्तरिष्यामीति सञ्चिन्त्य । सुग्रीवस्योपशृण्वतः सुग्रीवे उपशृण्वत्येव । व्यत्ययेन सप्तम्यर्थे षष्ठी ॥ १५ ॥ सर्वथा सर्वप्रकारेण समुद्रतरणान्तःपुरप्रवेशादिना । सुकृतं तावत् सुष्ठु कृतमेव । परिमार्गणम् अन्वेषणम् । किंतु सागरं समासाद्य सागरस्य दुस्तरत्वमालोच्य । पुनर्नष्टं मनो मम, सीतावृत्तान्तश्रवणेन हृष्ट मपि मे मनः पुनर्नष्टं प्रकृतं विषादं पुनः प्राप्तमित्यर्थः ॥ १६ ॥ विषादमेव प्रकटयति—कथमिति । दुष्पारस्य दुष्प्रापतीरस्य । " पार तीर कर्म समाप्तौ " इत्यस्माद्धातोः खच्प्रत्ययः । महाम्भसः अगाधजलस्य । समाहिताः सङ्गताः ॥ १७ ॥ सर्वथेति श्लोकोक्तं विवृणोति—यदीति । वैदेह्याः

भवतीत्याह—एष इत्यादि ॥ १३ ॥ प्रीतिहृष्टाङ्गः प्रीत्या पुलकितगात्रः ॥ १४ ॥ ध्यात्वा सर्ववानरसहितोऽहं कथं सिन्धुं तरिष्यामीति सञ्चिन्त्येत्यर्थः । सुग्रीवस्योपशृण्वतः । सप्तम्यर्थे षष्ठी ॥ १५ ॥ सागरं तु समासाद्य, दुस्तरतामालोच्येत्यर्थः । पुनर्नष्टं मनो मम सीतावृत्तान्तश्रवणेन हृष्टं मे मनः प्रकृतविषादं पुनरपि प्राप्तमित्यर्थः ॥ १६ ॥ समाहिताः मिलिताः ॥ १७ ॥ वैदेह्या वृत्तान्तो गदितो यद्यपि गदित एव, हरीणां समुद्रपारगमने उत्तरं किम् उत्तरकालोचितं साधनं

वृत्तान्तः गदितो यद्यपि गदित एव । हरीणां समुद्रपारगमने उत्तरं किम् उत्तरकालोचितं साधकं किम्? न किमपीत्यर्थः । इवशब्दो वाक्यालङ्कारे ॥ १८ ॥ इत्युक्त्वेति । ध्यानमुपागमत् सागरतरणोपायचिन्तामकरोदित्यर्थः । शत्रुनिबर्हणमहाबाहुपदाभ्यां सागरशोषणादिकमेवोपायमचिन्तयदिति द्योत्यते ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥



इत्युक्त्वा शोकसम्भ्रान्तो रामः शत्रुनिबर्हणः । हनुमन्तं महाबाहुस्ततो ध्यानमुपागमत् ॥ १९ ॥
इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे प्रथमः सर्गः ॥ १ ॥

तं तु शोकपरिद्यूनं रामं दशरथात्मजम् । उवाच वचनं श्रीमान् सुग्रीवः शोकनाशनम् ॥ १ ॥
किं त्वं सन्तप्यसे वीर यथाऽन्यः प्राकृतस्तथा । मैवं भूस्त्यज सन्तापं कृतघ्न इव सौहृदम् ॥ २ ॥
सन्तापस्य च ते स्थानं न हि पश्यामि राघव । प्रवृत्तावुपलब्धायां ज्ञाते च निलये रिपोः ॥ ३ ॥

एवं शोकसम्भ्रान्तं राममवलोक्य समदुःखतया तच्छोकमसहमानः सुग्रीवः " आपद्युन्मार्गगमने कार्यकालात्ययेषु च । अपृष्टोऽपि हितान्वेषी ब्रूयात् कल्याणभाषितम् ॥ " इति नीतिशास्त्रमनुस्मरन् शोकनिवारकं वचनमुवाचेत्याह–तं त्विति । तुशब्दः पूर्वस्माद्वैलक्षण्यपरः । तं तु शोकपरिद्यूनम् रामः प्रीतिसमायुक्त इति प्रीतियुक्तत्वदशायामेव शोकपरिद्यूनं शोकपरितप्तम् । दशरथात्मजं महाराजपुत्रत्वेन शोकलेशानर्हं रामम् । श्रीमान् " शुचिता त्यागिता शौर्यं समानसुखदुःखता । अनुरागश्च दाक्षिण्यं सत्यता च सुहृद्गुणाः ॥ " इति कामन्दकोक्तरीत्या मित्रगुणसम्पन्न इत्यर्थः । शोकनाशनं रामहृदयान्तर्गतशोकनिवर्तनक्षमं वचनमुवाच ॥ १ ॥ प्राकृतः क्षुद्रः । मैवं भूः प्राकृत इव मा भूः ॥ २ ॥ निमित्ताभावमुपपादयति–संतापस्य चेति । चोऽवधारणे । सन्तापस्य स्थानमेव निमित्तमेव न पश्यामि । एतावत्पर्यन्तं सीतानुपलम्भनरूपं निमित्तमासीत् इदानीं तु नास्तीत्यर्थः ।

किमित्यर्थः ॥ १८ ॥ शोकसम्भ्रान्तः विदितेऽपि सीतावृत्तान्ते तत्प्राप्तिप्रतिबन्धकसद्भावात्कलुषितान्तःकरण इत्यर्थः ॥ १९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां प्रथमः सर्गः ॥ १ ॥ तमिति । शोकपरिद्यूनं शोकपरितप्तम् ॥ १ ॥ २ ॥ चोऽवधारणे । स्थानं च निमित्त

स्थानम् अवकाशः । "अवकाशे स्थितौ स्थानम्" इत्यमरः । प्रवृत्तौ सीतावृत्तान्ते । "वार्ता प्रवृत्तिर्वृत्तान्तः" इत्यमरः ॥३॥ त्वद्गुणपर्यालोचनायामपि न शोकावकाश इत्याह—मतिमानित्यादिना । मतिमान् आगामिगोचरज्ञानवान् । शास्त्रवित् नीतिशास्त्रज्ञः । प्रज्ञाऽस्यास्तीति प्राज्ञः । "प्रज्ञादिभ्यश्च" इत्यण्प्रत्ययः । ऊहापोहज्ञ इत्यर्थः । पण्डा निर्णयात्मकं ज्ञानं साऽस्य सञ्जातेति पण्डितः, परिच्छेत्तेत्यर्थः। पापिकां पापयुक्ताम् । अनुत्साहकारिणीमिति यावत् । इमां बुद्धिं त्यज । कृतात्मा योगी । अर्थदूषणीं मोक्षरूपपुरुषार्थनिवर्तिकां बुद्धिमिव ॥ ४ ॥ नापि सागरदुस्तरत्वं सन्तापनिमित्त

मतिमाञ्छास्त्रवित् प्राज्ञः पण्डितश्चासि राघव। त्यजेमां पापिकां बुद्धिं कृतात्मेवार्थदूषणीम् ॥४॥ समुद्रं लङ्घयित्वा तु महानक्रसमाकुलम् । लङ्कामारोहयिष्यामो हनिष्यामश्च ते रिपुम् ॥ ५ ॥ निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः । सर्वथा व्यवसीदन्ति व्यसनं चाधिगच्छति ॥ ६ ॥ इमे शूराः समर्थाश्च सर्वे नो हरियूथपाः । त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकम् ॥ ७ ॥ एषां हर्षेण जानामि तर्कश्चास्मिन् दृढो मम ॥ ८ ॥

मित्याह—समुद्रमिति । न क्रमन्त इति नक्राः गजग्राहिमत्स्याः । महानक्रसमाकीर्णमपि समुद्रं लङ्घयित्वा लङ्कामारोहयिष्यामः, सेनामिति शेषः । ते रिपुं रावणं हनिष्यामश्च, समुद्रलङ्घनलङ्कारोहणशत्रुवधार्थं न सन्तापः कार्य इत्यर्थः ॥ ५ ॥ एवं कारणाभावाच्छोकस्य नावकाश इत्युक्तम् । सत्यपि कारणे स त्याज्य इत्याह—निरुत्साहस्येति । शोकपर्याकुलात्मनः शोकव्याकुलमनसः, अत एव निरुत्साहस्य । सर्वार्थाः सर्वप्रयोजनानि । व्यवसीदन्ति नश्यन्ति । सः शोकं व्यसनं चाप्नोति । शोकादनुत्साहः, अनुत्साहाद्दैन्यम्, दैन्यादर्थनाशः, अर्थनाशाच्चापत्प्राप्यत इत्यर्थः । तस्माच्छोकस्त्याज्य इति भावः ॥ ६ ॥ नापि सहायानुपपत्तिश्शोकनिमित्तमित्याह—इम इति । शूराः पराक्रमशालिनः । समर्थाः उपायकुशलाः । नः अस्माकं सम्बन्धिनः । सर्वे इमे हरियूथपाः त्वत्प्रियार्थं पावकमपि प्रवेष्टुं कृतोत्साहाः । किमुतान्यत्कर्तुमिति भावः ॥ ७ ॥ कुत एषामुत्साहस्त्वया

मेव न पश्यामि ॥ ३ ॥ त्वदीयगुणविचारणायामपि शोकोऽनुचितस्तवेत्याह—मतिमानित्यादि । शास्त्रवित् नीतिशास्त्रज्ञः । मतिमान् आगामिगोचरार्थज्ञः । प्राज्ञः ऊहापोहकुशलः । पण्डितः परिच्छेत्ता अर्थतत्त्वज्ञो वा । कृतात्मा ज्ञातात्मस्वरूपो योगी । अर्थदूषणीम् अपवर्गदूषणीम् । बुद्धिमिव विषयेषूपादेयत्वबुद्धिमिव । यद्वा अर्थदूषणीं प्रयोजनहानिकरीम् । पापिकाम् अशुभात्मिकाम् । कलुषितां बुद्धिं त्यजेत्यर्थः ॥ ४ ॥ समुद्रतरणेऽपि चिन्ता न कार्येत्याह—समुद्रमिति । आरोहयिष्यामः आरोक्ष्यामः ॥ ५ ॥ शोकस्यानर्थमूलत्वं दर्शयति—निरुत्साहस्येत्यादि । व्यसनं कर्तृ ॥ ६ ॥ ७ ॥ कुतोऽयं निश्चय इत्यत्राह—एषामित्यादि । हर्षेण

अवगत इत्याह—एषामिति अर्धमेकं वाक्यम् । एषां यूथपानां हर्षेण मुखप्रसादानुमानेन जानामि, एषाम् उत्साहमिति शेषः । अस्मिन्नुत्साहे मम दृढः अप्रशिथिलः तर्कश्चास्ति ॥ ८ ॥ फलितमाह—विक्रमेणेति । पापकर्माणं सीताहरणरूपपापकर्मयुक्तं ते रिपुं रावणं हत्वा सीतां विक्रमेण यथा समानेष्ये तथा त्वमुत्साहं कर्तुमर्हसि ॥ ९ ॥ रामानु०—शोकाक्रान्तस्य तव दर्शनेन ममाप्युत्तरकर्तव्यं न स्फुरति । तस्माच्छोकं परित्यज्य यथा ममोत्साहो भवेत्तथा यत्नं कुर्विति भावः ॥ ९ ॥

विक्रमेण समानेष्ये सीतां हत्वा यथा रिपुम् । रावणं पापकर्माणं तथा त्वं कर्तुमर्हसि ॥९॥ सेतुरत्र यथा बद्धयेद्यथा पश्येम तां पुरीम् । तस्य राक्षसराजस्य तथा त्वं कुरु राघव ॥ १० ॥ दृष्ट्वा तां तु पुरीं लङ्कां त्रिकूटशिखरे स्थिताम् । हतं च रावणं युद्धे दर्शनादुपधारय ॥ ११ ॥ अबद्ध्वा सागरे सेतुं घोरे तु वरुणालये । लङ्का न मर्दितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ १२ ॥ सेतुर्बद्धः समुद्रे च यावल्लङ्कासमीपतः । सर्वं तीर्णं च वै सैन्यं जितमित्युपधारय ॥१३॥ इमे हि समरे शूरा हरयः कामरूपिणः ॥ १४ ॥ [ शक्ता लङ्कां समानेतुं समुत्पाट्य सराक्षसाम् । ]

तथा त्वं कर्तुमर्हसीत्युक्तं विशिनष्टि—सेतुरिति । अत्र समुद्रे सेतुर्यथा बद्धयेत यथा तां पुरीं पश्येम तथा त्वं कुरु, तथोपायं चिन्तयेत्यर्थः ॥ १० ॥ दर्शनमात्रेण किं सेत्स्यति ? तत्राह—दृष्ट्वेति । तां पुरीं दृष्ट्वा दर्शनादेव हेतोः रावणं हतमवधारय ॥ ११ ॥ सेतुर्बध्य इति कोऽयं निर्बन्ध इत्याशङ्क्य अन्यथा अशक्यत्वमन्वयव्यतिरेकाभ्यामाह—अबद्ध्वेत्यादिश्लोकद्वयेन । अबद्ध्वा सागर इत्यादि स्पष्टम् । सेतुरिति । लङ्कासमीपतः लङ्कासमीपे । यावत् यावत्काले सेतुर्बद्धो भवति तावत्काले सर्वं सैन्यं तीर्णं जितं चेत्युपधारय । कर्तरि निष्ठा ॥ १२ ॥ १३ ॥ तरणमात्रेण जयित्वे हेतुमाह—

हर्षकार्येण मुखविकासादिना अस्मिन् एषां पावकप्रवेशाद्युत्साहे मम तर्कं ऊहापोहबुद्धिः । दृढः अव्यभिचरितः । अत्र विक्रमेण रावणं हत्वा सीतां यथा समानये समानेष्यामि तथा त्वं कर्तुमर्हसीति सम्बन्धः ॥ ८ ॥ ९ ॥ अत्र समुद्रे । बध्येत् बध्येत ॥१०॥ त्रिकूटशिखरे स्थितां लङ्कां तां पुरीं दृष्ट्वा तस्मादेव दर्शनात् रावणं हतमुपधारयेति योजना ॥ ११ ॥ सेतुबन्धनस्यावश्यकरणीयत्वं व्यतिरेकेणान्वयेन चाह—अबद्ध्वेत्यादिश्लोकद्वयेन । लङ्कासमीपतः लङ्कासमीपाभिव्याप्तसमुद्रे सेतुर्यावद् बद्धो भवति तावदेव सर्वं सैन्यं तीर्णं वै तीर्णमेव । जितमिति चावधार्यताम् । तीर्णं जितमिति कर्तरि निष्ठा । अत्रावधारणचकाराभ्यां राक्षससैन्य कृतविघ्नबाहुल्ये सत्यपि अप्रतिहतं तरिष्यति जेष्यति चेत्युक्तं भवति ॥१२॥१३॥ सैन्यस्य जेतृत्वोपयोगिशक्तिमाह—इमे हीति । अस्योत्तरार्धं—शक्ता लङ्कां समानेतुं

स०—यथा रिपुं हत्वा सीतां विक्रमेण पराक्रमेण । वेः गरुडस्य क्रम इव क्रमस्तेन समानेष्ये । तयेत्युत्साहं कर्तुमर्हसि । यथाऽहं समानेष्ये तथा त्वमुत्साहं मम प्रोत्साहनं कर्तुमर्हसीति वा ॥ ९ ॥

इमे हीति। अर्धमेकं वाक्यम् ॥ १४ ॥ उपसंहरति–तदिति। तत् उक्तरीत्या शोकनिमित्तासम्भवात्। विक्लवा शोकपरवशा। अत एव सर्वार्थनाशिनी बुद्धिः। अलं मा भूत्। "अलं भूषणपर्याप्तिशक्तिवारणवाचकम्" इत्यमरः। तत्र हेतुमाह–पुरुषस्येति। शौर्यापकर्षणः शौर्यनाशनः ॥ १५ ॥
रामानु०–शोकस्यानर्थकारित्वप्रदर्शनेन प्रसक्तं शोकं निवारयति–तदलमित्यादिना ॥ १५ ॥ न केवलं शोकत्यागः सत्त्वावलम्बनं च कार्यमित्याह–यत्त्विति। शौण्डीर्यं

तदलं विक्लवा बुद्धी राजन् सर्वार्थनाशिनी। पुरुषस्य हि लोकेऽस्मिन् शोकः शौर्यापकर्षणः ॥ १५ ॥ यत्तु कार्यं मनुष्येण शौण्डीर्यमवलम्बता। अस्मिन् काले महाप्राज्ञ सत्त्वमातिष्ठ तेजसा ॥ १६ ॥ शूराणां हि मनुष्याणां त्वद्विधानां महात्मनाम्। विनष्टे वा प्रनष्टे वा शोकः सर्वार्थनाशनः ॥ १७ ॥ त्वं तु बुद्धिमतां श्रेष्ठः सर्वशास्त्रार्थकोविदः। मद्विधैः सचिवैः सार्धमरिं जेतुमिहार्हसि ॥ १८ ॥ न हि पश्याम्यहं कंचित्त्रिषु लोकेषु राघव। गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे ॥ १९ ॥ वानरेषु समासक्तं न ते कार्यं विपत्स्यते। अचिराद्द्रक्ष्यसे सीतां तीर्त्वा सागरमक्षयम् ॥ २० ॥ तदलं शोकमालम्ब्य क्रोधमालम्ब भूपते। निश्चेष्टाः क्षत्रिया मन्दाः सर्वे चण्डस्य बिभ्यति ॥ २१ ॥

शौर्यम्। "शौण्डी गर्वे" इति धातोरौणादिके ईरन्प्रत्यये शौण्डीरश्शूरः अस्य भावश्शौण्डीर्यं तत् अवलम्बता अवलम्बमानेन। शौर्यप्रधानेनेत्यर्थः। मनुष्येण पुरुषेण। यत्कार्यं सम्पाद्यं तत्सत्त्वं धैर्यम् बलं वा। तेजसा पराक्रमेण सह अस्मिन्काले आतिष्ठ अवलम्बस्व ॥ १६ ॥ ननु नायं शोकस्सागरतरणादिनिमित्तकः किंतु सीतानवलोकनादिनिमित्त इत्यत्राह–शूराणामिति। विनष्टे अन्तर्हिते। "णश अदर्शने" इति धातोर्निष्ठा ॥ १७ ॥ पुनश्च रामं प्रोत्साहयति–त्वमिति। इह इदानीम् ॥ १८ ॥ न हि तिष्ठेत् स्थातुं न शक्नुयात् ॥ १९ ॥ वानरेषु समासक्तं वानरमूलमित्यर्थः। न विपत्स्यते न विनङ्क्ष्यति ॥ २० ॥ उपसंहरति–तदिति। आलम्ब्यालम् नालम्बस्वेत्यर्थः। "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति क्त्वाप्रत्ययः।

समुत्पाट्य सराक्षसाम् इति ॥ १४ ॥ उक्तमर्थमुपसंहरति–तदलमिति। विक्लवा बुद्धिरलं माऽस्तु। रामस्य हृदयस्थशोकं निराकर्तुमुक्तमेवार्थं पुनरप्याह पुरुषस्येति ॥ १५ ॥ शौण्डीर्यं शौर्यम् अवलम्बता मनुष्येण पुरुषेण यत्सत्त्वं यद्धैर्यं तदातिष्ठेत्यन्वयः ॥ १६ ॥ विनष्टे तिरोहिते। प्रनष्टे प्रध्वस्ते वा, वस्तुनि विषये ॥ १७ ॥ १८ ॥ त्वच्छौर्यपर्यालोचनयाऽपि शोको न कार्य इत्याह–न हीति। तिष्ठेत् स्थातुं शक्नुयात् ॥ १९ ॥ न विपत्स्यते न विनङ्क्ष्यति ॥ २० ॥ शोकमालम्ब्यालं नालम्बस्व।

क्रोधस्यालम्ब्यत्वे हेतुमाह—निश्चेष्टा इति । निश्चेष्टाः निरुद्योगाः क्षत्रियाः मन्दाः मन्दभाग्याः । चण्डस्य चण्डात् । "चण्डस्त्वत्यन्तकोपनः" इत्यमरः ॥ २१ ॥ एवं सेतुबन्धेन सर्वार्थसिद्धेः शोको न कार्य इत्युक्त्वा सेतुबन्धोपायो विचार्यतामित्याह—लङ्घनार्थमिति । लङ्घनार्थं लङ्घनहेतुम् । "अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने । व्यवहारे धनुश्शास्त्रे वस्तुहेतुनिवृत्तिषु ॥" इति वैजयन्ती ॥२२॥ सेतुबन्धोपाये निर्णीते ततः परं सुकरमित्याह-

लङ्घनार्थं च घोरस्य समुद्रस्य नदीपतेः । सहास्माभिरिहोपेतः सूक्ष्मबुद्धिर्विचारय ॥ २२ ॥ सर्वं तीर्णं च मे सैन्यं जितमित्युपधारय ॥ २३ ॥ इमे हि हरयः शूराः समरे कामरूपिणः । तानरीन् विधमिष्यन्ति शिलापादपवृष्टिभिः ॥ २४ ॥ कथंचित् सन्तरिष्यामस्ते वयं वरुणालयम् । हतमित्येव तं मन्ये युद्धे समितिनन्दन ॥ २५ ॥ किमुक्त्वा बहुधा चापि सर्वथा विजयी भवान् । निमित्तानि च पश्यामि मनो मे संप्रहृष्यति ॥ २६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे द्वितीयः सर्गः ॥ २ ॥

सर्वमिति । अर्धमेकं वाक्यम् ॥ २३ ॥ उक्तेऽर्थे पूर्वोक्तं हेतुमनुवदति—इमे हीति । विधमिष्यन्ति धक्ष्यन्ति ॥ २४ ॥ मा भूत्सेतुबन्धः प्रकारान्तरेणापि समुद्रं तीर्त्वा शत्रून् हनिष्यामीत्याह—कथंचिदिति । कथंचित् केनाप्युपायेन । नन्दतीति नन्दनः । नन्द्यादित्वात् ल्युः । समितयां युद्धे नन्दन युद्धोत्सुकेति यावत् ॥ २५ ॥ निमित्तानुसारेणापि भवतो जयसिद्धिरित्याह—किमुक्त्वेति । सर्वथा सेतुं बद्ध्वा अबद्ध्वा वा । निमित्तानि नेत्रस्फुरणादीनि । मनो मे संप्रहृष्यतीति । मनःसंप्रहर्षश्च कार्यसिद्धिनिमित्तमिति भावः ॥२६॥ इति श्रीगोवि० श्रीरामा० रत्नकिरीटा० युद्धकाण्डव्याख्याने द्वितीयः सर्गः ॥२॥

क्रोधालम्बने हेतुमाह निश्चेष्टा इति । निश्चेष्टाः निरुद्योगाः क्षत्रियाः । मन्दा मन्दभाग्याः । सर्वे जनाः चण्डस्य चण्डात् अतिकोपनात् बिभ्यति ॥ २१ ॥ तदुक्तप्रकारेण वा प्रकारान्तरेण वा सागरतरणे हेतुं विचारयेत्याह—लङ्घनार्थमित्यादि । लङ्घनार्थं लङ्घनहेतुम् । "अर्थः स्याद्विषये मोक्षे वस्तुहेतुनिवृत्तिषु" इति वैजयन्ती ॥ २२ ॥ सर्वमित्यर्धमेकं वाक्यम् । अत्र यावत्तावच्छब्दावध्याहार्यौ । जितमिति भावे निष्ठा । मे सैन्यं यावत्तीर्णं तावत्तेन जितमित्युपधारय । लङ्घिते तस्य तैस्सैन्यम् इति क्वचित्पाठः । तस्यार्थः—समुद्रे लङ्घिते तैर्वानरैः तस्य रावणस्य सैन्यं जितमित्युपधारयेत्यर्थः ॥२३॥ जेतृत्वशक्तिमाह—इमे हीत्यादि ॥२४॥ कथञ्चित्सन्तरिष्यामः येनकेनाप्युपायेनेत्यर्थः ॥ २५ ॥ निमित्तमेवाह मन इति ॥ २६ ॥ इति श्रीमहेश्वर० श्रीरामायण० युद्धकाण्डव्याख्यायां द्वितीयः सर्गः ॥ २ ॥

एवं मानुषभावनानुसारेण समुद्रस्य दुस्तरत्वेन शोकापन्नोऽपि सुहृदुपदेशेन प्रतिष्ठापितधैर्यो रामः नीतिशास्त्रानुसारेण संहार्यशत्रुदुर्गस्वरूपशोधनाय पृच्छति—सुग्रीवस्येत्यादिना । सारग्राहित्वमाह परमार्थविदिति । हेतुमत् युक्तियुक्तम् । वचः श्रुत्वा प्रतिजग्राह ॥ १ ॥ तपसा तपःप्रभावेन । तरसेति पाठे तरसा वेगेन । लङ्घने तरणे ॥ २॥ एवमुपायचिन्तनेन समुद्रस्य दुस्तरत्वमविगणय्य दुर्गस्वरूपं पृच्छति--कतीति । दुर्गायाः दुष्प्रापायाः लङ्कायाः कति

सुग्रीवस्य वचः श्रुत्वा हेतुमत् परमार्थवित् । प्रतिजग्राह काकुत्स्थो हनुमन्तमथाब्रवीत् ॥ १ ॥ तपसा सेतुबन्धेन सागरोच्छोषणेन वा । सर्वथा सुसमर्थोऽस्मि सागरस्यास्य लङ्घने ॥ २ ॥ कति दुर्गाणि दुर्गाया लङ्काया ब्रूहि तानि मे । ज्ञातुमिच्छामि तत्सर्वं दर्शनादिव वानर ॥ ३ ॥ बलस्य परिमाणं च द्वारदुर्गक्रियामपि । गुप्तिकर्म च लङ्कायां रक्षसां सदनानि च ॥ ४ ॥ यथासुखं यथावच्च लङ्कायामसि दृष्टवान् । सर्वमाचक्ष्व तत्त्वेन सर्वथा कुशलो ह्यसि ॥५॥ श्रुत्वा रामस्य वचनं हनूमान् मारुतात्मजः । वाक्यं वाक्यविदां श्रेष्ठो रामं पुनरथाब्रवीत् ॥ ६ ॥

दुर्गाणि कति दुर्गप्राकाराः सन्तीत्यर्थः । जलगिरिवनस्थलात्मकानि दुर्गाणि । तत् दुर्गविशेषवत्त्वं मे ब्रूहि । पूर्वमेवोक्तमित्यत्राह ज्ञातुमिति । तत्पूर्वं श्रुतं सर्वम् । दर्शनादिव प्रत्यक्षत इव । विशदं ज्ञातुमिच्छामि । बलस्य सेनायाः । परिमाणम् इयत्ताम् । द्वारदुर्गक्रियां द्वारेषु दुर्गक्रियाम् कीलखनन जलौघप्लवनकरणादिभिः दुर्गमत्वकरणम् । गुप्तिकर्म प्राकारपरिघादिनिर्माणम् । सदनानि गृहाणि । ज्ञातुमिच्छामीति पूर्वेणान्वयः ॥३॥ ४ ॥ यथेति । यथासुखं निश्शङ्कम् । यथावत्तत्त्वेन । लङ्कायां पूर्वोक्तं सर्वं दृष्टवानसि । तत्त्वेन दृष्टप्रकारेणैव आचक्ष्व व्यक्तं वद । सर्वथा द्रष्टुं वक्तुं च ॥ ५॥ अथाब्रवीत् ॥ १ ॥ २ ॥ कतीत्यादि । दुर्गाया गन्तुमशक्यायाः लङ्कायाः कति दुर्गाणि जलगिरिवनस्थलात्मकेषु दुर्गेषु कति दुर्गप्राकाराः तानित्यर्थः । ब्रूहि तानीति सम्यक् । दर्शनादिव प्रत्यक्षत इव । बलस्येत्यादि । परिमाणमियत्ताम् । द्वारदुर्गक्रियां द्वारेषु दुर्गक्रियाम् कीलखननपरिघयन्त्रविशेषकरणादिकाम् । गुप्तिकर्म प्राकाराट्टालकादि निर्माणम् ॥ ३ ॥ ४ ॥ यथासुखं विस्रब्धम्, निश्शङ्कमिति यावत् । यथा येन प्रकारेण सर्वथा कुशलोऽसि, वक्तुं द्रष्टुं चेति शेषः ॥ ५ ॥ ६ ॥

स०—परमार्थवत् परमार्थः अवतारमुख्यार्थः रावणमारणादिः तद्वत् । तद्घटकमिति यावत् ॥ १ ॥ ति०—तपसा तपःकार्यसङ्कल्पसिद्ध्या, अत एव सकलसत्पुरवर्तिप्राणिनां कमलोकनयनं वक्ष्यमाणं सङ्गच्छते । सेतुबन्धेन गङ्गायां गाङ्गेयेन शरैरिव । सागरोच्छोषणेन, दिव्यास्त्रबलतः इति शेषः ॥ २ ॥

कात्स्न्येनाब्रवीत् । "मङ्गलानन्तरारम्भप्रश्नकात्स्न्येंष्वथो अथ" इत्यमरः ॥ ६ ॥ दुर्गकर्मविधानतः दुर्गकर्म प्राकारपरिखाखननादि, तद्विधानतः तन्निर्माणेन गुप्तेति सम्बन्धः । राक्षसाः स्निग्धाः स्वामिनि भक्ताः । तेजसा, संपादितामिति शेषः । विभागं तत्र तत्र विभज्य स्थापनम् । बलौ



श्रूयतां सर्वमाख्यास्ये दुर्गकर्मविधानतः । गुप्ता पुरी यथा लङ्का रक्षिता च यथा बलैः ॥७॥ राक्षसाश्च यथा स्निग्धा रावणस्य च तेजसा । परां समृद्धिं लङ्कायाः सागरस्य च भीमताम् । विभागं च बलौघस्य निर्देशं वाहनस्य च ॥ ८ ॥ एवमुक्त्वा कपिश्रेष्ठः कथयामास तत्त्वतः ॥ ९ ॥ हृष्टप्रमुदिता लङ्का मत्तद्विपसमाकुला । महती रथसम्पूर्णा रक्षोगणसमाकुला । वाजिभिश्च सुसम्पूर्णा सा पुरी दुर्गमा परैः ॥ १० ॥ दृढबद्धकवाटानि महापरिघवन्ति च । द्वाराणि विपुलान्यस्याश्चत्वारि सुमहान्ति च ॥ ११ ॥ तत्रेषूपलयन्त्राणि बलवन्ति महान्ति च । आगतं परसैन्यं तु तत्र तैः प्रतिहन्यते ॥ १२ ॥ द्वारेषु संस्कृता भीमाः कालायसमयाः शिताः । शतशो रचिता वीरैः शतघ्न्यो रक्षसां गणैः ॥ १३ ॥

घस्य चतुरङ्गबलसमूहस्य । निर्दिश्यते इयत्तया परिच्छिद्यतेऽनेनेति निर्देशः सङ्ख्या ताम् ॥ ७॥ ८ ॥ एवमित्यर्धम् । एवमुक्त्वा उक्तरीत्या वक्ष्यमाणं संग्रहेण प्रतिज्ञाय ॥ ९ ॥ हृष्टप्रमुदिता अत्यन्तहृष्टजना ॥१०॥ दृढेति । आयसकीलादिभिर्दृढघटितकवाटानि । महापरिघवन्ति महार्गलवन्ति । "अर्गले काचके वंशे योगे प्राकारगोपुरे । अस्त्रे घटे मुद्गरे च परिघः परिपठ्यते" इति निघण्टुः । सुमहान्ति उन्नतानि ॥ ११ ॥ तत्र तेषु द्वारेषु । इषूपलयन्त्राणि शरशिलाक्षेपकयन्त्राणि । बलवन्ति दृढानि । महान्ति विपुलानि, सन्तीति शेषः । तैः यन्त्रैः तत्र द्वारेषु प्रतिहन्यते प्रतिबध्यते ॥१२॥ संस्कृताः

दुर्गकर्मविधानतः लङ्का यथा गुप्तेति सम्बन्धः ॥ ७ ॥ तेजसा, सम्पादितामिति शेषः । विभागमिति । बलौघस्य चतुरङ्गबलसमूहस्य विभागं हस्त्यश्वावान्तरभेदं तत्र तत्र विभज्य स्थापनम् । निर्देशं निर्दिश्यते इयत्तया अनेनेति निर्देशः सङ्ख्या ताम् ॥ ८ ॥९॥ हृष्टप्रमुदिता मुदितोद्धतराक्षसेत्यर्थः ॥१०॥ महापरिघवन्ति महार्गलवन्ति । "परिघो योगभेदे स्यान्मुद्गरेऽर्गलघातयोः" इति विश्वः । द्वाराणि, सन्तीति शेषः ॥ ११ ॥ तत्र तेषु इषूपलयन्त्राणि बाणशिलामोचनयन्त्राणि ॥ १२ ॥ द्वारेषु द्वारप्रदेशेषु । संस्कृताः सज्जीकृताः । कालायसमयाः अयस्सारमयाः । शतघ्नी नाम सकृत्प्रयोगाच्छतमारकाः चतुर्हस्तास्ति

सज्जीकृताः। शिताः तीक्ष्णाः। कालायसमया अयस्सारमयाः। क्लीबभाव आर्षः। "अनोऽश्मायस्सरसां जातिसंज्ञयोः" इति समासान्तः। शतं घ्नन्तीति शतघ्न्यः मुद्गरविशेषाः। "अमनुष्यकर्तृके च" इति ठक्। शतशः बहुशः। रचिताः स्थापिताः॥ १३॥ सौवर्ण इति। तस्याः प्राकारो

सौवर्णश्च महांस्तस्याः प्राकारो दुष्प्रधर्षणः। मणिविद्रुमवैडूर्यमुक्ताविरचितान्तरः॥ १४॥
सर्वतश्च महाभीमाः शीततोयवहाः शुभाः। अगाधा ग्राहवत्यश्च परिखा मीनसेविताः॥ १५॥
द्वारेषु तासां चत्वारः सङ्क्रमाः परमायताः। यन्त्रैरुपेता बहुभिर्महद्भिर्गृहपंक्तिभिः॥ १६॥
त्रायन्ते सङ्क्रमास्तत्र परसैन्यागमे सति। यन्त्रैस्तैरवकीर्यन्ते परिखासु समन्ततः॥ १७॥
एकस्त्वकम्प्यो बलवान् सङ्क्रमः सुमहादृढः। काञ्चनैर्बहुभिस्स्तम्भैर्वेदिकाभिश्च शोभितः॥ १८॥

दुष्प्रधर्षणः, दुरारोह इत्यर्थः। मणयः पद्मरागाः॥ १४॥ सर्वतः प्राकारमभितः। परिखाः, सन्तीति शेषः। शीततोयत्वेन दुष्प्रवेशत्वमुक्तम्॥१५॥ द्वारेषु द्वारसमीपप्रदेशेषु। सामीप्ये सप्तमी। तासां परिखाणां सम्बन्धिनः परिखोपरिक्लृप्ता इत्यर्थः। संक्रमाः दारुफलकानिर्मितसञ्चारमार्गाः। "संक्रमः क्रमणे सम्यक् द्वारसञ्चारयन्त्रके" इति विश्वः। परमायताः अतिविपुलाः। यन्त्रैरिति। यन्त्रैः संक्रमावकीर्यकैः। महद्भिरिति यन्त्रविशेषणम्। गृह पङ्क्तिभिः रक्षिजनावासस्थानपङ्क्तिभिः। उपेताः, सन्तीति शेषः॥ १६॥ संक्रमाणामुपयोगमाह--त्रायन्त इति। तत्र द्वारप्रदेशेषु। परसैन्यागमे सति संक्रमाः त्रायन्ते, पुरीमिति शेषः। कथमित्यत्राह यन्त्रैरिति। यन्त्रैः संक्रमफलकविक्षेपयन्त्रैः। परिखासु परिखोपरि। समन्ततः अवकीर्यन्ते क्षिप्यन्ते। सर्वथा परिखाजलोपरि फलका निक्षिप्यन्ते। शत्रुसैन्यागमे तु ता उत्क्षिप्यन्ते। तेन दुर्गपरिखाजलेन प्राकारसमीपगमनं न शक्यत इति श्लोकतात्पर्यम्॥ १७॥ एक इति। तेषु संक्रमेषु। एकः उत्तरद्वारस्थः। बलवान् स्थौल्यवान्। सुमहादृढः अत्यन्तवृद्धसङ्घटनः। अत एवाकम्प्यः। स्तम्भैः

प्रमाणा मुद्गरविशेषाः। "शतघ्नी च चतुर्हस्ता कथिता लोहकण्टकी" इति वैजयन्ती॥ १३–१५॥ द्वारेषु द्वारप्रदेशेषु तासां संक्रमाः परिखाणां सम्बन्धिनः संक्रमाः, सन्तीति शेषः। संक्रमो नाम पुरद्वारप्रदेशेषु परिखोपरि सञ्चरणार्थं मञ्चरूपेण बद्धो मार्गविशेषः। "संक्रमः क्रमणे सम्यग्द्वारसञ्चारयन्त्रके" इति विश्वः॥ १६॥ संक्रमाणामुपयोगमाह–त्रायन्त इति। तत्र तेषु द्वारप्रदेशेषु परसैन्यागमे सति तानि परसैन्यानि तैः स्वनिष्ठैर्यन्त्रैः परिखासु समन्ततः अवकीर्यन्ते

संक्रमाधारार्थं परिखासु स्थापितैः स्तम्भैः वेदिकाभिः रक्षिजनाधाराथाभिर्वितर्दिकाभिः ॥ १८ ॥ प्रकृतिसम्पन्नः द्यूतादिव्यसनरूपविचाररहितः। अप्रमत्तः सावधानः । बलानां सैन्यानाम् । अनुदर्शने प्रतिदिनमवलोकननिमित्तम् । उत्थितः जागरूकः । स्वयं युयुत्सुः सर्वदा युद्धोद्यतः, तिष्ठतीति शेषः ॥ १९ ॥ लङ्का पुनः लङ्का तु, निरालम्बा टङ्कच्छेदमसृणीकृतत्रिकूटशिखरस्थितत्वादारोहणालम्बनरहिता । देवदुर्गा देवैरपि दुष्प्रापा । लङ्का



स्वयं प्रकृतिसम्पन्नो युयुत्सू राम रावणः । उत्थितश्चाप्रमत्तश्च बलानामनुदर्शने ॥ १९ ॥ लङ्का पुनर्निरालम्बा देवदुर्गा भयावहा । नादेयं पार्वतं वान्यं कृत्रिमं च चतुर्विधम् ॥ २० ॥ स्थिता पारे समुद्रस्य दूरपारस्य राघव । नौपथोऽपि च नास्त्यत्र निरादेशश्च सर्वतः॥२१॥ शैलाग्रे रचिता दुर्गा सा पूर्देवपुरोपमा । वाजिवारणसम्पूर्णा लङ्का परमदुर्जया ॥ २२ ॥ परिखाश्च शतघ्न्यश्च यन्त्राणि विविधानि च । शोभयन्ति पुरीं लङ्कां रावणस्य दुरात्मनः ॥२३॥

नादेयादिरूपेण चतुर्विधं दुर्गं च चतुर्विधदुर्गप्राकारवतीत्यर्थः । नादेयं नद्यां भवम्, जलदुर्गमित्यर्थः । पार्वतं पर्वतस्थम् । वनानां समूहो वन्या तत्सम्बन्धि वान्यम् । कृत्रिमं क्रियया निर्वृत्तम् । प्राकारपरिखादिमत् स्थलमित्यक्षरार्थः ॥ २० ॥ दूरे पारं यस्य सः दूरपारः तस्य, विशालस्येत्यर्थः । पारे दक्षिणतीरे स्थिता । अत्र समुद्रे । नौपथः नौसञ्चारश्च नास्ति । अत एव सर्वतः निरादेशश्च, आदेशो वार्तासञ्चारः तद्रहितः अयं देश इत्यर्थः ॥ २१ ॥ वनगिरिदुर्गवत्त्वमाह—शैलाग्र इति ॥ २२ ॥ कृत्रिमदुर्गवत्त्वमाह—परिखा इति ॥ २३ ॥

क्षिप्यन्ते, ततस्त्रायन्ते पुरीं रक्षन्तीत्यर्थः । यद्वा तैर्यन्त्रैः परिखासु समन्ततः अवकीर्यन्ते । परेषां परिखामुखेन प्राकारसमीपप्राप्तिनिवारणार्थं शिलादयो विक्षिप्यन्ते अतस्तत्र द्वारेषु संक्रमास्त्रायन्ते, पुरीं रक्षन्तीत्यर्थः ॥ १७ ॥ १८ ॥ प्रकृतिमापन्नः स्वभावस्थः अक्षोभ्यान्तःकरण इत्यर्थः । उत्थितः जागरूकः । अप्रमत्तः प्रमादरहितः, सावधान इत्यर्थः । यदा रावणो युयुत्सुर्भवति तदा तस्मिन् संक्रमे सेनादर्शनार्थं तिष्ठतीति भावः ॥ १९ ॥ निरालम्बा अतिश्लक्ष्णोत्तुङ्गत्रिकूटस्थितत्वादारोहणालम्बनरहितेत्यर्थः । देवदुर्गा देवैरपि दुष्प्रापा । चतुर्विधदुर्गमत्रास्तीत्याह—नादेयमिति ॥ २० ॥ दूरपारस्य दूरस्थितपरतीरस्य समुद्रस्य पारे स्थिता । नौपथश्चापि नास्ति नौसञ्चारमार्गोऽपि नास्ति, अत एव सर्वशो निरादेशश्च सर्वदिग्वार्ता सञ्चाररहितप्रदेश इत्यर्थः । अनेन जलदुर्गवत्त्वं सूचितम् ॥ २१ ॥ शैलाग्रे रचितेत्यनेन वनगिरिदुर्गवत्त्वं सूचितं भवति ॥ २२ ॥ परिखाश्चेत्यादिना कृत्रिमदुर्गवत्त्वं सूच्यते ॥ २३ ॥

स०—निरालम्बा अम्बरलम्बिनीति निरालम्बेव निरालम्बा नितरां दृढा इति यावत् । आलम्बः पर्वतशिखरादिरूप आश्रयो यस्याः सा । देवदुर्गा देवानामपि दुस्साध्यगमना । निरालम्बादेव प्रतीयमानाऽऽश्रयाभावादेव दुर्गेति वा । दुर्गो दुष्टां गतिमापन्नो दुःखं प्राप्तो वा तस्याभयावहेति वा ॥ २० ॥

विभागं च बलौघस्येति रामप्रश्नस्योत्तरमाह—अयुतमिति । अत्र लङ्कायां सर्वे पूर्वद्वारस्थाः । अयुतं दशसहस्रम् । अग्रे सेनाग्रे युद्ध्यन्त इत्यग्रयोधिनः । खड्गैरग्रयोधिनः सर्वे अयुतसङ्ख्याकाः । सर्वेऽपि तथाविधा इत्यर्थः ॥२४॥ नियुतमिति । अत्र लङ्कायाम् । चतुरङ्गेण सैन्येन सह रक्षसां नियुतं दक्षिण द्वारमाश्रितम् । तत्र चतुरङ्गबलेषु । योधाः पदातयः । अनुत्तमाः अत्यन्तशूराः । भवन्तीत्यर्थः ॥ २५ ॥ सर्वे पश्चिमद्वारवासिनः । सर्वास्त्रकोविदाः

अयुतं रक्षसामत्र पूर्वद्वारं समाश्रितम् । शूलहस्ता दुराधर्षाः सर्वे खड्गाग्रयोधिनः ॥ २४ ॥ नियुतं रक्षसामत्र दक्षिणद्वारमाश्रितम् । चतुरङ्गेण सैन्येन योधास्तत्राप्यनुत्तमाः ॥ २५ ॥ प्रयुतं रक्षसामत्र पश्चिमद्वारमाश्रितम् । चर्मखड्गधराः सर्वे तथा सर्वास्त्रकोविदाः ॥ २६ ॥ न्यर्बुदं रक्षसामत्र उत्तरद्वारमाश्रितम् । रथिनश्चाश्ववाहाश्च कुलपुत्राः सुपूजिताः ॥ २७ ॥ शतशोऽथ सहस्राणि मध्यमं स्कन्धमाश्रिताः । यातुधाना दुराधर्षाः साग्रकोटिश्च रक्षसाम् ॥ २८ ॥ ते मया सङ्क्रमा भग्नाः परिखाश्चावपूरिताः । दग्धा च नगरी लङ्का प्राकाराश्चावसादिताः ॥२९॥ बलैकदेशः क्षपितो राक्षसानां महात्मनाम् ॥ ३० ॥

समस्तास्त्रज्ञाः ॥२६ ॥ अश्ववाहाश्चेति चकारेण गजवाहास्समुच्चीयन्ते । कुलपुत्राः सत्कुलप्रसूताः, विश्वसनीया इति यावत् । सुपूजिताः रावणेन बहु मताः, किङ्करा इति शेषः ॥२७॥ रामानु०—कुलपुत्राः कुलोद्भूताः पुत्राः । सत्कुलप्रसूता इत्यर्थः ॥ २७ ॥ अथेति कात्स्न्र्ये । शतशः सहस्राणि अनेकसहस्राणि । दुराधर्षाः यातुधानाः राक्षसाः । मध्यमं स्कन्धं नगरमध्यमस्थानम् आश्रिताः। सर्वसङ्ख्यामाह—साग्रेति । रक्षसां साग्रकोटिः पूर्णकोटिः । अत्र लङ्कायाम्, अस्तीति शेषः ॥ २८ ॥ एवं दुर्गप्राकारवर्णनेन लघूनां भीतिर्मा भूदिति स्वकृतं दर्शयति—ते मयेति । परिखा इत्यादावपि तच्छब्दोऽनुसन्धेयः ॥२९॥ बलैकदेश इत्यर्धमेकान्वयम् । बलैकदेशः, सेनाचतुर्थांश इत्यर्थः । महात्मनां महाकायानाम् ॥ ३० ॥

खड्गाग्रयोधिनः खड्गैरग्रयोधिनः ॥ २४ ॥ नियुतमिति । अत्र सैन्येनेति इत्थम्भूतलक्षणे तृतीया । चतुरङ्गसैन्यप्रकारेण योधा इत्यर्थः ॥ २५ ॥ २६ ॥ कुलपुत्राः किङ्कराः । यद्वा कुले जाताः पुत्राः किङ्कराः, सत्कुलप्रसूता इत्यर्थः ॥ २७ ॥ स्कन्धं सैन्यस्थानम् ॥ २८ ॥ यद्येवं दुर्गा लङ्का कथमस्मद्बलसाध्येति शङ्कां निराचष्टे—ते मयेति । ते संक्रमाः परिखामार्गा मया भग्नाः । परिखाश्चावपूरिताः, शिलेष्टकादिभिरिति शेषः ॥ २९ ॥ महात्मनां महाधृतीनाम् ॥ ३० ॥

तपसा सेतुबन्धेनेत्येवं रामोक्तमेव सम्यगित्याह–येनेति । मार्गेण उपायेन । तराम तरिष्यामः । ध्यत्ययेन लोट् । वरुणालयं समुद्रम् ॥ ३१ ॥ पक्षान्तरमाह–अङ्गद इत्यादिसार्द्धश्लोकद्वयेन । अङ्गदादयः प्लवमानाः समुद्रं लङ्घितवन्तः । सखातां सपरिखाम् । सप्रतोरणां सबहिर्द्वाराम् । आनयिष्यन्ति, बलशेषेण किम् उक्ताङ्गदादिव्यतिरिक्तबलशेषेण किं प्रयोजनमिति योजना ॥ ३२ ॥ ३३ ॥ एवमिति । सर्वसंग्रहम् संगृह्यत इति

येन केन च मार्गेण तराम वरुणालयम् । हतेति नगरी लङ्का वानरैरवधार्यताम् ॥ ३१ ॥ अङ्गदो द्विविदो मैन्दो जाम्बवान् पनसो नलः । नीलः सेनापतिश्चैव बलशेषेण किं तव ॥ ३२ ॥ प्लवमाना हि गत्वा तां रावणस्य महापुरीम् । सपर्वतवनां भित्त्वा सखातां सप्रतोरणाम् । सप्राकारां सभवनामानयिष्यन्ति राघव ॥ ३३ ॥ एवमाज्ञापय क्षिप्रं बलानां सर्वसंग्रहम् । मुहूर्तेन तु युक्तेन प्रस्थानमभिरोचय ॥ ३४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे तृतीयः सर्गः ॥ ३ ॥

श्रुत्वा हनुमतो वाक्यं यथावदनुपूर्वशः । ततोऽब्रवीन्महातेजा रामः सत्यपराक्रमः ॥ १ ॥
यां निवेदयसे लङ्कां पुरीं भीमस्य रक्षसः । क्षिप्रमेनां मथिष्यामि सत्यमेतद् ब्रवीमि ते ॥ २ ॥

संग्रहः, बलानां मध्ये सर्वसारभूतं बलम् अङ्गदादिकम् आज्ञापय । एवं प्लवमाना इत्याद्युक्तरीत्या आज्ञापयेत्यर्थः । युक्तेन यात्रायोग्येन ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥ एवं लङ्काया दुर्गकर्मबलपरिमाणादौ हनुमता कथिते रामः कियन्मात्रमिदमिति न्यक्कृत्य तदानीमेव दण्डयात्रामाज्ञापयति–श्रुत्वेति । महातेजाः महाबलः । सत्यपराक्रमः अमोघविक्रमः । आभ्यां निर्भयत्वे हेतुरुक्तः । अब्रवीत्, सुग्रीवमिति शेषः ॥ १ ॥ यामिति । निवेदयसे हनुमन्मुखेन निवेदयसि । मथिष्यामि शरैर्ध्वंसयिष्यामि ॥ २ ॥

मार्गेण उपायेन तराम तरिष्यामः ॥ ३१ ॥ सर्वसैन्यतरणोपायचिन्तया किम् ? कतिपययूथपा एव समुद्रं लङ्घयित्वा पर्वतवनादिविशिष्टां लङ्कामुत्पाट्यानेष्यन्तीत्याह–अङ्गद इत्यादिना । आनयिष्यन्ति आनेष्यन्ति बलशेषेण किं तवेत्यन्वयः ॥ ३२ ॥ ३३ ॥ बलानां सर्वसंग्रहं सङ्गृह्यत इति सङ्ग्रहः सारः सर्वसारभूतमाज्ञापय, बलानां मध्ये सर्वसारभूतानेवं कुरुतेत्याज्ञापयेत्यर्थः ॥ ३४ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां तृतीयः सर्गः ॥ ३ ॥ ॥ १ ॥ हनुमतोक्तमङ्गदादिमुखेन कार्यनिर्वहणमङ्गीकुर्वन्नाह–यामिति ॥ २ ॥

कुत इत्यत्राह–युक्त इति । युक्तः यात्रार्हः । तत्र हेतुः । विजयः विजयावहः । विजयावहत्वे हेतुमाह दिवाकरः । मध्यं दिने मध्यं प्राप्तः । अभिजिन्मुहूर्त इत्यर्थः । तदुक्तं विद्यामाधवीये–" आर्द्रोरगमित्रमखावसुजलविश्वाभिजिद्विरिञ्चेन्द्राः । ऐन्द्राग्निमूलवरुणार्यमभगतारा दिवा मुहूर्ताः स्युः " इति । नन्वभिजिन्मुहूर्ता दक्षिणयात्रासु निषिद्धाः । यथा ज्यौतिष्करत्नाकरे–" भुक्तौ दक्षिणयात्रायां प्रतिष्ठायां द्विजन्मनि । आधाने च ध्वजारोहे मृत्युदः स्यात्सदाऽभिजित् ॥" इति । उच्यते–लङ्का हि दक्षिणपूर्वस्यां किष्किन्धायाः, अतो नेयं दक्षिणयात्रेति नोक्तदोषः ॥ ३ ॥ मुहूर्तविशेषे प्रयाणस्य फलं

**अस्मिन् मुहूर्ते सुग्रीव प्रयाणमभिरोचये । युक्तो मुहूर्तो विजयः प्राप्तो मध्यं दिवाकरः ॥ ३ ॥ अस्मिन् मुहूर्ते विजये प्राप्ते मध्यं दिवाकरे । सीतां हृत्वा तु मे जातु क्वासौ यास्यति यास्यतः ॥ ४ ॥ सीता श्रुत्वाऽभियानं मे आशामेष्यति जीविते । जीवितान्तेऽमृतं स्पृष्ट्वा पीत्वा विषमिवातुरः ॥ ५ ॥**

दर्शयति–अस्मिन्निति । दिवाकरे मध्यं प्राप्ते विजयाख्ये अस्मिन्मुहूर्ते यास्यतो मे यास्यति मयि । असौ रावणः । सीतां हृत्वा जातु कदाचित् क्व यास्यति, यत्र कुत्रापि यान्तं तं हनिष्यामीत्यर्थः । सीतां हृत्वा तु मे यात्विति पाठे यातु राक्षसः । " नैर्ऋतो यातुरक्षसी " इत्यमरः । यद्वा यातु गच्छतु । क्व यास्यतीत्यन्वयः ॥ ४ ॥ अद्यैव सागरतरणोपायचिन्तां विना निर्गमस्य फलमाह–सीतेति । मे अभियानं प्रस्थानं सीता श्रुत्वा जीविते आशामेष्यति । श्रवणं च त्रिजटादिभ्य इति ज्ञेयम् । निर्गमं विना केवलं विचाराकुलेष्वस्मासु जीविते सा निराशा स्यादिति भावः । कथमिव ? विषं पीत्वा आतुरः पीडितः पुरुषः जीवितान्ते प्राणात्यये प्राप्ते अमृतं स्पृष्ट्वेव ॥ ५ ॥

अस्मिन्नेव मुहूर्ते प्रयाणमभिरोचय । कुतः ? युक्त इति । यतो दिवाकरो मध्यं मध्यन्दिनं प्राप्तः अतो मुहूर्तो विजयावहः अभिजित्संज्ञको युक्तः प्राप्तः ॥ ३ ॥ तत्र प्रयाणस्य फलमाह–अस्मिन्निति । अस्मिन्मुहूर्ते यास्यतो मे मयि यात्रां कुर्वति सति, असौ रावणः सीतां हृत्वा जातु क्व यास्यति कदाचिदपि कुत्रापि न यास्यतीत्यर्थः ॥ ४ ॥ तदानीमेव यात्रायाः फलमाह–सीतेति । आतुरो व्याधितः जीवितान्ते जीवितान्तसमये । अमृतं स्पृष्ट्वेत्यन्वयः ॥ ५ ॥

स०–राजत्वात्सुग्रीवं कटाक्षीकृत्याह–अस्मिन्निति । अस्मिन् अभिजिन्नामके मुहूर्ते प्रयाणमितोऽस्मन्निर्गममभिरोचये । अभिरोचयेति पाठे–अनुमोदस्वेत्यर्थः । सुग्रीवप्रयाणमित्येकपदेन हनुमदाभिमुख्येन वचनमित्यङ्गीकारे " अभिप्रयाम सुग्रीव सर्वानीकसमावृताः " इत्यग्रिमग्रन्थानानुगुण्यं स्फुटम् । मध्यं नभोमध्यम् । दिवाकरो यतः प्राप्तः तस्मात् विजये विजयप्रदे मुहूर्ते । युक्तः, निर्गम इति शेषः । युक्तो मुहूर्तो विजयः इति प्रथमान्तपाठः स्फुटार्थः ॥ ३ ॥

तर्हि कदाऽस्माभिः प्रस्थाप्यम् ? तत्राह—उत्तरेति । अद्य दिने उत्तराफल्गुनीनक्षत्रं वर्तते । श्वः उत्तरदिने हस्तेन योक्ष्यते, चन्द्र इति शेषः । हस्तो रामस्य निधनतारा । उत्तराफल्गुनी तु साधनतारा । अतोऽद्यैव सर्वानीकसमावृतास्सन्तः अभिप्रयाम गच्छेम । अत्रोत्तराफल्गुनीत्यनेन स दिवसः फाल्गुन पौर्णमासीत्यवगम्यते । इदमुत्तरत्र प्रतिपादयिष्यते ॥६॥ यानि निमित्तानि धन्यानि तानि प्रादुर्भवन्ति । अतो रावणं निहत्य सीतामानयिष्यामि । जानकीमिति विशेषणेन जनकप्रीत्यर्थं चावश्यं सा अनेतव्येति यज्यते ॥ ७ ॥ उपरिष्टादुपरि स्फुरमाणमिदं मम नयनम् । मनोरथं मनोरथविषयभूतं जयम् ।

उत्तराफल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते । अभिप्रयाम सुग्रीव सर्वानीकसमावृताः ॥ ६ ॥ निमित्तानि च धन्यानि यानि प्रादुर्भवन्ति च । निहत्य रावणं सीतामानयिष्यामि जानकीम् ॥७॥ उपरिष्टाद्धि नयनं स्फुरमाणमिदं मम । विजयं समनुप्राप्तं शंसतीव मनोरथम् ॥ ८ ॥ ततो वानरराजेन लक्ष्मणेन च पूजितः । उवाच रामो धर्मात्मा पुनरप्यर्थकोविदः ॥ ९ ॥ अग्रे यातु बलस्यास्य नीलो मार्गमवेक्षितुम् । वृतः शतसहस्रेण वानराणां तरस्विनाम् ॥ १० ॥ फलमूलवता नील शीतकाननवारिणा । पथा मधुमता चाशु सेनां सेनापते नय ॥ ११ ॥ दूषयेयुर्दुरात्मानः पथि मूलफलोदकम् । राक्षसाः परिरक्षेथास्तेभ्यस्त्वं नित्यमुद्यतः ॥ १२ ॥

समनुप्राप्तं सम्यक् समीपे प्राप्तम् । शंसतीव स्पष्टं बोधयतीत्यर्थः । तथोक्तं ज्योतिश्शास्त्रे—"नेत्रस्याधः स्फुरणमसकृत्सङ्गरे भङ्गहेतुर्नेत्रोपान्ते हरति नयनं नेत्रमूले च मृत्युः । नेत्रस्योर्ध्वे हरति सकलं मानसं दुःखजातं वामे चैवं फलमविकलं दक्षिणे वैपरीत्यम् ॥" इति । एवं वचने विद्यमाने दक्षिणनयनमिति व्याख्यानं चिन्त्यम् ॥ ८ ॥ पूजितः युक्तमिति श्लाघितः । अर्थकोविदः नीतिशास्त्रनिपुणः ॥ ९ ॥ नीतिशास्त्रमनुस्मरन् सेनासंविधानं दर्शयति—अग्र इति । स्पष्टम् ॥ १० ॥ मार्गमवेक्षितुं यात्विति सुग्रीवं प्रत्युक्तमात्रेण सन्निहितं नीलं प्रत्याह—फलेति ॥ ११ ॥ मार्गशोधनप्रकारमाह—दूषयेयुरिति ।

पुनर्वसौ जातस्य मम श्वस्तु नैधनतारा, अद्य साधनतारा, अतोऽद्यैव प्रयाणं कर्तव्यमित्याशयेनाह—उत्तरेत्यादि । हस्तेन योक्ष्यते, चन्द्रमा इति शेषः ॥ ६ ॥ यानि निमित्तानि धन्यानि शुभसूचकानि तानि प्रादुर्भवन्ति अतो रावणं निहत्य सीतामानयिष्यामि आनेष्यामीति सम्बन्धः ॥ ७ ॥ नयनम्, दक्षिणमिति शेषः । मनोरथं मनोरथविषयम् ॥ ८–११ ॥ दूषयेयुः, विषादिनेति शेषः । मूलफलोदकमित्येकवद्भावः । परिरक्षेथाः रक्षेः ॥ १२ ॥

दूषयेयुः, विषादिनेति शेषः। परिरक्षेथा इत्यात्मनेपदमार्षम्। उद्यतः सावधान इत्यर्थः ॥ १२ ॥ श्लोकान्तरमाह—निम्नेष्विति। निम्नेषु गर्तप्रदेशेषु। वनदुर्गेषु वनैः जलैः दुर्गेषु दुर्गमप्रदेशेषु। "जीवनं भुवनं वनम्" इत्यमरः। वनेषु काननेषु च। निहितं रन्ध्रे प्रहारार्थं स्थापितम्। बलं परसैन्यम्। वनौकसः वानराः। अभिप्लुत्य अभित उत्प्लुत्य पश्येयुः ॥ १३ ॥ श्लोकान्तरमाह—यदिति। यत्किंचिद्बलं फल्गु असारम् तत् अत्रैव किष्किन्धाया

निम्नेषु वनदुर्गेषु वनेषु च वनौकसः। अभिप्लुत्याभिपश्येयुः परेषां निहितं बलम् ॥ १३ ॥ यत्त फल्गु बलं किंचित् तदत्रैवोपयुज्यताम्। एतद्धि कृत्यं घोरं नो विक्रमेण प्रयुद्ध्यताम् ॥ १४ ॥ सागरौघनिभं भीममग्रानीकं महाबलाः। कपिसिंहाः प्रकर्षन्तु शतशोऽथ सहस्रशः ॥ १५ ॥ गजश्च गिरिसङ्काशो गवयश्च महाबलः। गवाक्षश्चाग्रतो यान्तु गवां दृप्ता इवर्षभाः ॥ १६ ॥ यातु वानरवाहिन्या वानरः प्लवतां वरः। पालयन् दक्षिणं पार्श्वमृषभो वानरर्षभः ॥ १७ ॥ गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः। यातु वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः ॥ १८ ॥

मेव उपयुज्यतां स्थाप्यताम्। किंचिदित्यनेन तादृशं बलमत्र दुर्लभमिति सूचितम्। अत्र युक्तिं वक्ति एतदिति। एतत् घोरं कृत्यं विक्रमेण प्रयुद्ध्यताम्। आर्षः शतृप्रत्ययः। विक्रमेण शक्त्या ये युद्ध्यन्ते तेषामेव नान्येषामित्यर्थः। विक्रमेणोपयुज्यतामिति पाठे विक्रमेणोपयुज्यमानानाम्, विक्रमयुक्तानामित्यर्थः। क्रियापदत्वे संप्रधारणायां लोट् वेदितव्यः ॥ १४ ॥ अथ "यतश्च बलमाशङ्की ततो विस्तारयेद्बलम्" इत्युक्तरीत्या बहवो बलिनोऽग्रे सेनां कर्षन्त्वित्याह—सागरेति। सागरौघनिभं सागरस्य प्रवाहो यदि भवेत्तत्तुल्यमित्यर्थः। शतशोऽथ सहस्रशः शतशस्सहस्रशश्च सङ्घीभूयेत्यर्थः ॥ १५ ॥ "अथ सेनाबलाध्यक्षौ सर्वदिक्षु निवेशयेत्" इत्युक्तरीत्या निवेशयति—गज इति। गवामिति गवामग्रे दृप्ताः वृषभा इवेति संबन्धः ॥ १६ ॥ यात्विति। दक्षिणं पश्चिमपार्श्वमित्यर्थः। "यतश्च भयमाशङ्कि तां प्राचीं परिकल्पयेत्" इति कामन्दकोक्तेः। प्लवतां वानराणाम् ॥ १७ ॥ गन्धेति।

निम्नादिषु निहितं रन्ध्रे प्रहारार्थं लीनम् ॥१३॥ फल्गु बलं निस्सारं सैन्यम्। अत्रैवोपयुज्यतां किष्किन्धायामेव स्थाप्यताम्। अत्र हेतुमाह एतदिति। घोरं भयावहं नः एतद्युद्धरूपं कृत्यम्। विक्रमेण प्रयुज्यतां विक्रमेण प्रयुज्यमानानाम्, विक्रमेण युक्तानामिति नान्येषामित्यर्थः। विक्रमेण प्रयुज्यतामिति पाठे विक्रमेण शक्त्या ये युद्ध्यन्ते तेषामेव एतद्युद्धरूपं कृत्यं नान्येषामित्यर्थः ॥ १४–१७ ॥ गन्धेति। यस्य मदगन्धादितरे हस्तिनो द्रवन्ति स गन्धहस्ती ॥ १८ ॥

गन्धहस्ती मत्तगजः । तरस्वी बलवान् । सव्यं प्राचीभागम् । अधिष्ठितः अधिष्ठाता । कर्तरि क्तः ॥ १८ ॥ यास्यामीति । मध्यगमनप्रयोजनमाह अभिहर्षयन्निति । 'प्रहर्षयेद्बलं व्यूह्य' इत्युक्तेः । ईश्वरः इन्द्रः, तथैवौचित्यात् । गवां पतिमिवेश्वर इति वा पाठः ॥ १९ ॥ अङ्गदेनेति । अङ्गदेन संयातु अङ्गदमारुह्य संयात्वित्यर्थः । सार्वभौमेन उत्तरदिग्गजेन । भूतेशः यक्षेशः । द्रविणाधिपतिः धनाधिपतिः । अत्र त्वं च शिविका

यास्यामि बलमध्येऽहं बलौघमभिहर्षयन् । अधिरुह्य हनूमन्तमैरावतमिवेश्वरः ॥ १९ ॥ अङ्गदेनैष संयातु लक्ष्मण श्रान्तकोपमः । सार्वभौमेन भूतेशो द्रविणाधिपतिर्यथा ॥ २० ॥ जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः । ऋक्षराजो महासत्त्वः कुक्षिं रक्षन्तु ते त्रयः ॥ २१ ॥ राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः । व्यादिदेश महावीर्यान् वानरान् वानरर्षभः ॥ २२ ॥ ते वानरगणाः सर्वे समुत्पत्य युयुत्सवः । गुहाभ्यः शिखरेभ्यश्च आशु पुप्लुविरे तदा ॥ २३ ॥ ततो वानरराजेन लक्ष्मणेन च पूजितः । जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ॥ २४ ॥ शतैः शतसहस्रैश्च कोटीभिरयुतैरपि । वारणाभैश्च हरिभिर्ययौ परिवृतस्तदा ॥ २५ ॥ तं यान्तमनुयाति स्म महती हरिवाहिनी ॥ २६ ॥ हृष्टाः प्रमुदिताः सर्वे सुग्रीवेणाभिपालिताः । आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः । क्ष्वेलन्तो निनदन्तस्ते जग्मुर्वै दक्षिणां दिशम् ॥ २७ ॥

मारुह्य आवाभ्यामागच्छेति सिद्धम् ॥ २० ॥ जाम्बवानिति । ऋक्षराजः जाम्बवद्भ्राता । कुक्षिं पश्चाद्भागम् । जाम्बवान् सुषेणः वेगदर्शी चेति त्रयः महासत्त्वः ऋक्षराजश्च कुक्षिं रक्षन्त्वित्यन्वयः ॥ २१ ॥ राघवस्येति । व्यादिदेश रामोक्तं सर्वं कुरुतेत्याज्ञापयामास ॥ २२ ॥ त इति । पुप्लुविरे प्लुतगतिं चक्रिरे ॥ २३ ॥ तत इति । पूजितः पुरस्कृत इत्यर्थः । धर्मात्मा नीतिरूपधर्मज्ञ इत्यर्थः ॥ २४ ॥ शतैरिति । ययौ, राम इति शेषः ॥ २५ ॥ तमिति । हरिवाहिनी पूर्वोक्तबलवानरभिन्ना ॥ २६ ॥ गच्छतामवस्थाविशेषान् दर्शयति—हृष्टाः इत्यादिना । हृष्टा गर्विताः । आप्लुवन्तः मण्डलाकारं

ईश्वरः इन्द्रः ॥ १९ ॥ सार्वभौमेनं उत्तरदिग्गजेन । भूतेशो यक्षेशः ॥ २० ॥ जाम्बवानित्यस्य विशेषणम् ऋक्षराज इति ॥२१--२५॥ तं यान्तमित्यर्धमेकं वाक्यम् ॥२६॥ आप्लवन्तः आ समन्तात् प्लवमानाः, दूरं पतन्त इत्यर्थः । प्लवन्तः केवलं लङ्घयन्तः । क्ष्वेलन्तः सिंहनादान् कुर्वन्तः । "क्ष्वेला तु सिंहनादः स्यात्" इति

भ्रमन्त इत्यर्थः। गर्जन्तः मेघध्वनिं कुर्वन्तः। घनगर्जितमिति प्रसिद्धिः। क्ष्वेलन्तः सिंहनादं कुर्वन्तः। "क्ष्वेला तु सिंहनादः स्यात्" इत्यमरः। निनदन्तः अव्यक्तं शब्दायमानाः "णद अव्यक्ते शब्दे" इति धातुः ॥ २७ ॥ भक्षयन्तः पिबन्तः। उद्वहन्तः विलासार्थं हस्ते धारयन्तः ॥ २८ ॥ अन्योन्य मिति। सहसा तरसा। निर्वहन्ति उद्वहन्ति। क्षिपन्ति पातयन्ति। अन्ये पतन्तः सन्तः। परान् पातयितॄन्। आक्षिपन्ति प्रतीकारकरणासामर्थ्येन

भक्षयन्तः सुगन्धीनि मधूनि च फलानि च। उद्वहन्तो महावृक्षान् मञ्जरीपुञ्जधारिणः ॥ २८ ॥ अन्योन्यं सहसा दृप्ता निर्वहन्ति क्षिपन्ति च। पततश्चाक्षिपन्त्यन्ये पातयन्त्यपरे परान् ॥२९॥ रावणो नो निहन्तव्यः सर्वे च रजनीचराः। इति गर्जन्ति हरयो राघवस्य समीपतः ॥३०॥ पुरस्तादृषभो वीरो नीलः कुमुद एव च। पन्थानं शोधयन्ति स्म वानरैर्बहुभिः सह ॥ ३१ ॥ मध्ये तु राजा सुग्रीवो रामो लक्ष्मण एव च। बहुभिर्बलिभिर्भीमैर्वृताः शत्रुनिबर्हणाः ॥ ३२ ॥ हरिः शतवलिर्वीरः कोटीभिर्दशभिर्वृतः। सर्वामेको ह्यवष्टभ्य ररक्ष हरिवाहिनीम् ॥ ३३ ॥ कोटीशतपरीवारः केसरी पनसो गजः। अर्कश्चातिबलः पार्श्वमेकं तस्याभिरक्षति ॥ ३४ ॥

परिभाषणं कुर्वन्तीत्यर्थः। अपरे शक्ताः। परान् पातयितॄन् पातयन्ति ॥ २९ ॥ रावण इति। नः अस्माभिरित्यर्थः ॥ ३० ॥ पुरस्तादिति। अत्र पूर्वं रामेण मार्गरक्षणाय ये नीलादयो नियुक्ताः ततोऽन्ये कुमुदादयस्तु रामभक्त्युत्साहेन स्वयमेव प्रवृत्ता इति ज्ञेयम्। ऋषभो दक्षिणपार्श्वरक्षणाय नियुक्तो भक्त्या पराक्रमातिशयेन च अत्रापि रक्षणं कृतवानिति ज्ञेयम् ॥ ३१ ॥ मध्ये त्विति। जग्मुरिति शेषः ॥ ३२ ॥ अवष्टभ्य अधिष्ठाय ॥३३॥ गजस्याग्रभागनियुक्तस्यापि पार्श्वरक्षणं भक्त्यतिशयात्। अत्र कार्यकरणात्केसर्यादयश्च पूर्वं नियुक्ता एवेत्याहुः। अत्र पूर्वनियुक्तानां गन्धमादनादीना

निघण्टुः ॥ २७ ॥ उद्वहन्तः जग्मुरित्यन्वयः ॥ २८ ॥ सहसा बलेन निर्वहन्ति उद्वहन्ति ॥ २९ ॥ ३० ॥ पुरस्तादित्यत्र मार्गशोधकत्वेन कुमुदऋषभयोरप्युपादानात् प्रागपि नीलेन सहैतावपि मार्गशोधने नियुक्ताविति मन्तव्यम्। अत्र ऋषभशब्देन दक्षिणपार्श्वनियुक्तादृषभादन्य उच्यते ॥ ३१ ॥ मध्य इति। बहुभिर्वृताः, जग्मुरिति शेषः ॥ ३२ ॥ ३३ ॥ गजः पूर्वभागनियुक्तादन्यः। पार्श्वमेकं पश्चाद्भागम् ऋषभगन्धमादनयोः पूर्वमेव दक्षिणसव्यपार्श्वयोर्विनियोगात्। तस्य बलस्य। अभि

मप्युपलक्षणम् । एकं पार्श्वं सव्यं पार्श्वम् । अभिरक्षतीत्यस्य प्रत्येकमभिसम्बन्धः । व्यत्ययेन लट् ॥ ३४ ॥ ऋक्षैरावृतत्वं जाम्बवत एव । तत्सं बन्धात् सुषेणस्यापि । जघनं पश्चाद्भागम् ॥ ३५ ॥ संपतन् । मार्गशोधनाय पुरो गच्छन्नपि पर्यपालयत् सेनापतित्वात् सर्वतो ररक्षेत्यर्थः ॥ ३६ ॥

सुषेणो जाम्बवांश्चैव ऋक्षैश्च बहुभिर्वृतौ । सुग्रीवं पुरतः कृत्वा जघनं संररक्षतुः ॥ ३५ ॥ तेषां सेनापतिर्वीरो नीलो वानरपुङ्गवः । सम्पतन् पततां श्रेष्ठस्तद्बलं पर्यपालयत् ॥ ३६ ॥ दरीमुखः प्रजङ्घश्च रम्भोऽथ रभसः कपिः । सर्वतश्च ययुर्वीरास्त्वरयन्तः प्लवङ्गमान् ॥३७॥ एवं ते हरिशार्दूला गच्छन्तो बलदर्पिताः । अपश्यंस्ते गिरिश्रेष्ठं सह्यं द्रुमलतायुतम् । सरांसि च सुफुल्लानि तटाकानि वनानि च ॥ ३८ ॥ रामस्य शासनं ज्ञात्वा भीमकोपस्य भीतवत् । वर्जयन्नगराभ्याशांस्तथा जनपदानपि ॥३९॥ सागरौघनिभं भीमं तद्वानरबलं महत् । उत्ससर्प महाघोषं भीमघोष इवार्णवः ॥ ४० ॥ तस्य दाशरथेः पार्श्वे शूरास्ते कपिकुञ्जराः । तूर्णमापुप्लुवुः सर्वे सदश्वा इव चोदिताः ॥ ४१ ॥ कपिभ्यामुह्यमानौ तौ शुशुभाते नरोत्तमौ । महद्भ्यामिव संस्पृष्टौ ग्रहाभ्यां चन्द्रभास्करौ ॥ ४२ ॥

दरीमुख इति । स्पष्टम् ॥३७॥ अपश्यन्, दूरादिति शेषः । सुफुल्लानि सुफुल्लपद्मकह्लाराणि ॥३८॥ भीतवत् भीतम् । कर्तरि क्त(वतु)प्रत्ययः । वर्जयत् दूरतः परिहरत् उत्ससर्प जगामेति सम्बन्धः । सागरौघनिभमिति विपुलतायां साम्यम् । भीमघोष इवार्णव इति घोषे ॥ ३९ ॥ ४० ॥ दाशरथेः पार्श्वे इति । तन्मुखोल्लासायेति भावः ॥ ४१ ॥ हनुमदङ्गदाभ्यामुह्यमानौ रामलक्ष्मणौ । महाग्रहाभ्यां शुक्रबृहस्पतिभ्याम् । संस्पृष्टौ संयुक्तौ । चन्द्रसूर्यौ रक्षति अभ्यरक्षत् ॥ ३४ ॥ सुषेण इत्यादि । जाम्बवदादीनां पूर्वं कुक्षिरक्षणे नियुक्तत्वात् सुग्रीवं पुरतः कृत्वा जघनं संररक्षतुरित्यस्य सुग्रीवस्य पृष्ठतः कुक्षिं पश्चिमभागं ररक्षतुरित्यर्थः ॥ ३५ ॥ नीलः पुरोमार्गशोधकस्सन्नपि प्लवनवेगातिशयवत्तया परितः सर्वतो ररक्षेत्यर्थः ॥ ३६ ॥ ३७ ॥ एवमित्यादिसार्धश्लोकमेकं वाक्यम् ॥ ३८ ॥ भीतवत् भीतार्हम् ॥ ३९–४१ ॥ ग्रहाभ्यां राहुकेतुभ्याम् ॥ ४२ ॥ ४३ ॥

स०–ग्रहाभ्यां शुक्रबृहस्पतिभ्याम् । " कविकाव्ययुतज्योत्स्नाकान्तवत् स व्यरोचत । " इत्युक्तेः । लक्ष्मणपक्षे चन्द्रो निदर्शनम् । रामपक्षे भास्करः । ततश्च कविकाव्याभ्यां सकान्तिश्चन्द्र इव वाहनसाहित्येन सकान्तिर्लक्ष्मणः । सूर्यप्रकाशाभिभूतप्रकाशस्तयोरिव रामप्रकाशाभिभवो वाहनरुचोरिति निदर्शनविवेको द्रष्टव्यः ॥ ४२ ॥

विव शुशुभाते । अत्र उपमाने चतुर्ग्रहसंयोगस्य नक्षत्रविनाशहेतुत्वात् हनुमदङ्गदाभ्यां रामलक्ष्मणयोगस्य महासेनाविनाशकत्वं गम्यत इत्यलङ्कारेण वस्तुध्वनिः । संस्पृष्टपदेन हनुमदङ्गदयोर्लाघवातिशयकथनात् पदगतवस्तुना वस्तुध्वनिः ॥ ४२ ॥ रामाल्तु०–ग्रहाभ्यां चन्द्रभास्करावि‍ति पाठः ॥ ४२ ॥ पुनः सुदूरगमनसूचनायाह–तत इति । स्पष्टम् ॥ ४३ ॥ परिपूर्णार्थः परिपूर्णमनोरथः । स्मृतिमान् निमित्तशास्त्रार्थस्मरणवान् । प्रतिभानवान् तात्का

ततो वानरराजेन लक्ष्मणेन च पूजितः । जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ॥ ४३ ॥ तमङ्गदगतो रामं लक्ष्मणः शुभया गिरा । उवाच परिपूर्णार्थः स्मृतिमान् प्रतिभानवान् ॥ ४४ ॥ हृतामवाप्य वैदेहीं क्षिप्रं हत्वा च रावणम् । समृद्धार्थस्समृद्धार्थामयोध्यां प्रतियास्यसि ॥ ४५ ॥ महान्ति च निमित्तानि दिवि भूमौ च राघव । शुभानि तव पश्यामि सर्वाण्येवार्थसिद्धये ॥४६॥ अनुवाति शुभो वायुः सेनां मृदुहितः सुखः । पूर्णवल्गुस्वराश्चेमे प्रवदन्ति मृगद्विजाः॥४७॥ प्रसन्नाश्च दिशः सर्वा विमलश्च दिवाकरः । उशनाश्च प्रसन्नार्चिरनु त्वां भार्गवो गतः॥४८॥

लिकबुद्धिमान् ॥ ४४ ॥ वक्ष्यमाणनिमित्तश्रवणे श्रद्धामुत्पादयितुं प्रथमं तत्फलं दर्शयति–हृतामिति । रावणं हत्वा वैदेहीमवाप्स्यसीति क्रमः ॥ ४५॥ कुतोऽयं निश्चय इत्यत्राह–महान्तीति । महान्ति दुर्लभानि । दिवि भूमौ च यानि शुभानि निमित्तानि सर्वाणि तवार्थसिद्धये पश्यामि, अर्थसिद्धिकराणि पश्यामीत्यर्थः ॥ ४६॥ अनुवातीति । सुखः सुखकरः, शीत इत्यर्थः । मृदुहितः मृदुः मार्दवयुक्तः, हितः अनुकूल इत्यर्थः । शुभः भाविशुभसूचकः वायुः सेनाम् अनुवाति अनुसृत्य वाति । पूर्णवल्गुस्वराः अन्यूनापरुषस्वराः सन्तः प्रवदन्ति ॥ ४७ ॥ भौमनिमित्तान्युक्त्वा दिव्यनिमित्तान्याह–प्रसन्ना इत्यादि । त्वामनुगतः तवानुकूलदिशि स्थित इत्यर्थः । यद्वा अनुगतः पश्चाद्भागं गतः । पुरः शुक्रस्य यात्रासु प्रतिषेधादिति भावः । तथोक्तम् ज्यौतिषे–"प्रतिशुक्रं प्रतिबुधं प्रतिभौमं गतो नृपः । अपि शक्रेण सदृशो हतसैन्यो निवर्तते ॥" इति । उशनाश्च प्रसन्नार्चिरनु त्वां भार्गवो गतः

स्मृतिमान् अनुभूतार्थाविस्मरणशीलः । प्रतिभानवान् तत्कालोचितप्रज्ञः ॥ ४४ ॥ ४५ ॥ कुतोऽयं निश्चय इत्यत्राह–महान्तीति । तवार्थसिद्धये कार्यसिद्धये ॥४६॥ निमित्तान्येवाह–अनुवातीति । शिवः शुभसूचकः । अध्वश्रान्तिहरणात् हितश्च । सुखः सुखस्पर्शो वायुः मृदु मन्दं यथा तथा सेनामनुवाति अनुसृत्य वाति । मृदुहितसुखपदैः क्रमेण शैत्यमान्द्यसौरभ्याण्युच्यन्ते ॥४७॥ भौमानि निमित्तान्युक्त्वा दिव्यान्याह–प्रसन्न इत्यादि । उत्तरश्लोकप्रथमपादोऽप्युशनसो विशेषणम्॥४८॥

इत्यनेनावतारकाले जातकफलसूचनवद्रामस्यानुकूलं गोचारफलं दर्शयति विपरीतफलं राक्षसानां च । तथाहि–किष्किन्धातः आग्नेयदिग्वर्तिनीं लङ्कां प्रति गच्छतो रामस्यानुकूलः शुक्र इत्युच्यते । सूर्यस्थराशेः पुरोराशिस्थो हि भवति शुक्रः । सूर्यश्च तदानीं मीनस्थः । उत्तराफल्गुनी ह्यद्येति प्रयाणदिन कथनात् फाल्गुनपौर्णमास्यां हि रामस्य दण्डयात्रेति पूर्वमुक्तम् । तदा च शुक्रो मेषस्थः । अतो रामस्य कर्कटराशेर्मेषो हि दशमोऽनुकूलः । पूर्वोक्त दिग्वर्तिनीं लङ्कां प्रति गच्छतो रामस्य पश्चात् स्थितत्वाच्च शुक्रोऽनुकूल एव । शुक्रानुकूल्योक्तिर्बृहस्पत्याद्यानुकूल्योपलक्षणम् । स ह्यवतारकाले कर्कटकस्थः । तदपेक्षयाऽष्टात्रिंशद्वर्षयुद्धयात्राकालः । तथा च त्रिरावृत्त्या षट्त्रिंशद्वर्षेषु गतेषु रामस्याष्टात्रिंशद्वर्षे युद्धारम्भे गुरोः सिंहस्थितिः सिद्धा । गुरु द्वितीयता रामस्यानुकूला । शनिश्चावतारकाले तुलावर्गोत्तमस्थः । द्वितीयावृत्तौ तुलावृश्चिकयोः पञ्चवर्षेण गतयोः सार्द्धवर्षद्वयेनातीतेन धनुरतीत्य तदानीं

ब्रह्मराशिर्विशुद्धश्च शुद्धाश्च परमर्षयः । अर्चिष्मन्तः प्रकाशन्ते ध्रुवं सर्वे प्रदक्षिणम् ॥ ४९ ॥

मकरस्थितियोग्योऽपि कथंचिद्धनुर्वर्गोत्तमस्थ एव शनिः । राहुस्तु अवतारकाले सिंहस्थः । ततोऽष्टात्रिंशद्वर्षेऽस्मिन् कर्कटकस्थितियोग्योप्यतिचारादिभि मिथुनस्थः । तत्सप्तमे धनुषि केतुः । उक्तं चात्रापि–"मूलो मूलवता स्पृष्टो धूप्यते धूमकेतुना" इति । धूमाकारः केतुर्धूमकेतुः । तथाच धनुषि शनि केतू रामस्य षष्ठस्थावनुकूलौ । अङ्गारकस्तु रामरावणयुद्धप्रसङ्गे "आक्रम्याङ्गारकस्तस्थौ विशाखे अपि चाम्बरे" इत्युक्त्या विशाखाचतुर्थपादे वृश्चिक राशौ तिष्ठति । रामस्य पञ्चमाङ्गारकत्वफलमिदम्, यदेतद्ब्रह्मास्त्रबन्धरुधिरमोहादि । बुधस्य प्रतिमासं रोहिणीस्थत्वयोगेऽपि रामरावणयुद्धप्रसङ्गे–"प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियाम् । समाक्रम्य बुधस्तस्थौ प्रजानामशुभावहः ॥" इत्युक्तं प्रजानामशुभावहत्वमतिचारवशादेव । स च रामस्य दशमस्थोऽनुकूलः । चन्द्रश्च उत्तराफल्गुनीस्थत्वात् कन्यास्थः । अतस्तृतीयचन्द्रो रामस्यानुकूलः । सूर्यो नवमस्थो रामस्यानुकूलः । राहुस्तु मिथुनस्थत्वाद् द्वादशस्थ इति किंचिद्बाधकः । राक्षसानामिदं सर्वं विपरीतम् । तथाहि–राक्षसानां हि नक्षत्रं मूलम् । तथाच धनू राशिः । तदपेक्षया पञ्चमस्थः शुक्रः प्रतिकूलः । जन्मराशिस्थौ शनिकेतू च प्रतिकूलौ । राहुस्तु सप्तमस्थः किंचिदनुकूलः । द्वादशस्थाङ्गारकश्च प्रतिकूलः । गुरुस्तु नवमस्थोऽनुकूलः । चतुर्थस्थः सूर्यः पञ्चमस्थो बुधश्च नानुकूलौ । दशमस्थश्चन्द्रः किंचिदनुकूलः । एवं प्रायेण ग्रहगोचारफलं राक्षसानां विपरीतमेवेति ॥ ४८ ॥ ब्रह्मराशिः

ब्रह्मराशिः वेदानां राशिभूतः, अधीतसर्ववेद इत्यर्थः । अत एव विशुद्धः उशनाश्च त्वामनुगतः, अनेन प्रतिशुक्रता नास्तीत्युक्तम् । ब्रह्मराशिरित्यस्य पादस्य

अधीतसर्ववेद इत्यर्थः। विशुद्धः पापग्रहासंयुक्तः । इदं ध्रुवमपि मार्गविशेषणम् । सप्तर्षयः सप्तर्षयः । दक्षिणां दिशं प्रति गताः । प्रदक्षिणम् तिष्ठद्गुप्रभृतित्वात्साधुः । आवर्तमाना इति शेषः ॥ ४९ ॥ त्रिशङ्कुरिति । पुरोहितः विश्वामित्रः । "सृजन् दक्षिणमार्गस्थान् सप्तर्षीनपरान् पुनः ।" इति बालकाण्डोक्तरीत्या विश्वामित्रसृष्टसप्तर्ष्यन्तर्गतवसिष्ठो वा । पितामहवरः पितामहेषु कूटस्थेषु श्रेष्ठः । इक्ष्वाकूणां प्रधानकूटस्थ

त्रिशङ्कुर्विमलो भाति राजर्षिः सपुरोहितः । पितामहवरोऽस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ५० ॥
विमले च प्रकाशेते विशाखे निरुपद्रवे । नक्षत्रवरमस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ५१ ॥
नैर्ऋतं नैर्ऋतानां च नक्षत्रमभिपीड्यते । मूलो मूलवता स्पृष्टो धूप्यते धूमकेतुना ॥ ५२ ॥

इत्यर्थः ॥५० ॥ विमले चेति । निरुपप्लवे क्रूरग्रहानाक्रान्ते । विशाखे इति द्विवचनं नक्षत्रद्वयात्मकत्वात् । विशाखाख्यं नक्षत्रवरमित्यर्थः । विशाखाया इक्ष्वाकुनक्षत्रत्वं ज्योतिषदर्पणे दर्शितम्–"अश्विन्यां यदि केतुः" इत्यारभ्य "इक्ष्वाकुकुलनाथस्तु हान्यतो यदि भवेद्विशाखास्थस्तु" इति ॥ ५१ ॥ स्वानुकूल्यमुक्त्वा परप्रातिकूल्यमाह–नैर्ऋतमिति । नैर्ऋतं नैर्ऋतदैवतम् । नैर्ऋतानां राक्षसानाम् । किं तन्नैर्ऋतं तस्य पीडा केनेत्या काङ्क्षायामाह–मूल इति । मूलवता अन्तिकवता । "मूलं वशीकृतौ स्वीये शीर्षे तारान्तिकादिषु" इति वैजयन्ती । तेन धूमकेतुना स्पृष्टो मूलः मूलनक्षत्रं धूप्यते सन्ताप्यते । "धूप सन्तापे" इति धातुः ॥ ५२ ॥

पूर्वशेषं विहायान्योऽर्थ उच्यते । ब्रह्मराशिरित्यत्र ब्रह्मराशिशब्देन "तत्रासते महात्मान ऋषयो येऽग्निहोत्रिणः । भूतारम्भकृतं ब्रह्म शंसन्तो ऋत्विगुद्यताः ॥ प्रारभन्ते लोककामास्तेषां पन्थास्स दक्षिणः ।" इति श्रीविष्णुपुराणोक्ताः पितृयाणमार्गस्था लोकाभिवृद्धिकामा महर्षय उच्यन्ते । तेषां राशिः सङ्घः विशुद्धः प्रसन्नः। परमर्षयः सप्तर्षयः। ध्रुवम् औत्तानपादिम् प्रदक्षिणं यथा तथा, आवर्तमाना इति शेषः । प्रकाशन्त इति सम्बन्धः । सप्तर्षिसन्निवेशप्रकारस्तु–"पूर्वभागे तु भगवान् मरीचिरुपरि स्थितः। वसिष्ठश्च सभार्योऽस्मात्पुरस्तादङ्गिरा मुनिः । ततोऽत्रिस्तस्य चासन्नः पुलस्त्यः पुलहः क्रतुः ॥" इति ॥ ४९ ॥ सपुरोहितः सवसिष्ठः । "सृजन् दक्षिणमार्गस्थान् सप्तर्षीनपरान् पुनः" इत्युक्तविश्वामित्रसृष्टसप्तर्षिमण्डलस्थवसिष्ठेन सहित इत्यर्थः। मे पितामहवरः पितामहश्रेष्ठः ॥ ५० ॥ विमले निरुपद्रवे अङ्गारकादिदुष्टग्रहाक्रमणरहिते ॥ ५१ ॥ नैर्ऋतं नैर्ऋतदेवत्यम् । किं तन्नक्षत्रं केन वा पीड्यत इत्याशङ्कायामाह–मूल इति । मूलवता अन्तिकवता। "मूलं वशीकृतौ स्वीये शीर्षे तारान्तिकादिषु" इति वैजयन्ती। तेन सामीप्यवता धूमकेतुना उत्पातग्रहेण स्पृष्टो मूलो मूलनक्षत्रं धूप्यते सन्ताप्यते "अग्न्युत्पातौ धूमकेतू" इत्यमरः ॥ ५२ ॥

ततः किमित्यत्राह—सर्वमिति । एतन्नक्षत्रपीडनमेव राक्षसानां विनाशाय सर्वम् अशुभसूचकानिमित्तजातं समुपस्थितमित्यर्थः । तदेवोपपादयति—काल इति । कालगृहीतानां मृत्युगृहीतानां नक्षत्रं काले अन्तकाले ग्रहपीडितं भवति ॥ ५३ ॥ पुनरपि विजयसूचकान्याह—प्रसन्ना इत्यादिना । द्रुमाः यथर्तुकुसुमाः ऋतुमनतिक्रम्य जातानि कुसुमानि येषां ते तथोक्ताः । अकालकुसुमोत्पत्तिर्ह्युत्पातः । स इदानीं नास्तीत्यर्थः । तथोक्तं वराह

सर्वं चैतद्विनाशाय राक्षसानामुपस्थितम् । काले कालगृहीतानां नक्षत्रं ग्रहपीडितम् ॥ ५३ ॥
प्रसन्नाः सुरसाश्चापो वनानि फलवन्ति च । प्रवान्त्यभ्यधिकं गन्धान् यथर्तुकुसुमा द्रुमाः ॥ ५४ ॥
व्यूढानि कपिसैन्यानि प्रकाशन्तेऽधिकं प्रभो । देवानामिव सैन्यानि सङ्ग्रामे तारकामये ॥ ५५ ॥
एवमार्य समीक्ष्यैतान् प्रीतो भवितुमर्हसि । इति भ्रातरमाश्वास्य हृष्टः सौमित्रिरब्रवीत् ॥ ५६ ॥
अथावृत्य महीं कृत्स्नां जगाम महती चमूः । ऋक्षवानरशार्दूलैर्नखदंष्ट्रायुधैर्वृता ॥ ५७ ॥

मिहिरेण—"शीतोष्णानां विपर्यासः फलपुष्पमकालजम् । अशोष्याणां विशोषश्च फलं षाण्मासिकं भवेत् ॥" इति ॥ ५४ ॥ व्यूढानीति । व्यूढानि कृतव्यूहानि । तारकस्य तारकासुरस्य आमयो वधो यस्मिन् सः तारकामयः तस्मिन् । यद्वा तारकाया बृहस्पतिपत्न्याः आमयो मनोव्याधिः यस्मिन् । तादृश सङ्ग्रामसंज्ञेयम् । तथोक्तं श्रीविष्णुपुराणे—"एवं च तयोरतीवोग्रः सङ्ग्रामस्तारकानिमित्तस्तारकामयो नामाभवत्" इति ॥ ५५ ॥ एवमिति । आश्वास्याब्रवीत् आश्वासनपूर्वकमब्रवीत् । अनेन प्रथमसर्गान्तोक्तः श्लोकोऽनुवृत्त इति ज्ञायते ॥ ५६ ॥ पुनरपि सेनायाः दूरगमनमाह—अथेति । ऋक्षवानरशार्दूलैः ऋक्षशार्दूलैः वानरशार्दूलैश्च । शार्दूलशब्दः श्रेष्ठवाची ॥ ५७ ॥

ततः किमित्यत आह—सर्वमिति । काले अन्तकाले प्राप्ते कालगृहीतानां मृत्युगृहीतानां नक्षत्रं ग्रहपीडितं धूमकेतुग्रहसन्तप्तं भवतीति यत् एतच्च एतत् नैर्ऋतनक्षत्रपीडनमेव राक्षसानां विनाशाय सर्वमुपस्थितम् राक्षसविनाशसूचकानेकनिमित्तजातं समुपस्थितमित्यर्थः । यद्वा एतत् नैर्ऋतनक्षत्रपीडनं सर्वम् अस्मत्कुलनक्षत्रविशाखौज्ज्वल्यादिकं पूर्वोक्तं सर्वं च राक्षसनाशायोपस्थितमित्यन्वयः ॥ ५३ ॥ पुनरपि विजयसूचकान्याह—प्रसन्ना इति ॥ ५४ ॥ तारकामये आमयशब्देन बाधकत्वाद्वधो लक्ष्यते । तारकस्य तारकासुरस्य आमयो वधो यस्मिन् स तथोक्तः तस्मिन् । यद्वा तारकानाम बृहस्पतिपत्नी, तन्निमित्तत्वात्सङ्ग्रामस्य तारकामय इति संज्ञा । तथाऽऽह श्रीविष्णुपुराणे—"एवं च तयोरतीवोग्रः सङ्ग्रामस्तारकानिमित्तस्तारकामयो नामाभवत्" इति ॥५५॥ एवमिति । एवमुक्तप्रकारेण भ्रातरमाश्वास्य

करात्रैरिति । अन्तर्दधे आच्छादयामास ॥ ५८ ॥ सपर्वतेति । हरिवाहिनी दक्षिणां महीम् अम्बुसन्ततिर्द्यामिव छादयन्ती ययाविति संबन्धः ॥५९॥ उत्तरन्त्यामिति । सन्ततं निरन्तरं यथा भवति तथा उत्तरन्त्याम् । विपरीतवत् वैपरीत्यवत् । भावप्रधानो निर्देशः । बहुयोजनं च यथा भवति तथा

कराग्रैश्चरणाग्रैश्च वानरैरुत्थितं रजः । भीममन्तर्दधे लोकं निवार्य सवितुः प्रभाम् ॥ ५८ ॥ सपर्वतवनाकाशां दक्षिणां हरिवाहिनी । छादयन्ती ययौ भीमा द्यामिवाम्बुदसन्ततिः ॥ ५९ ॥ उत्तरन्त्यां च सेनायां सततं बहुयोजनम् । नदीस्रोतांसि सर्वाणि सस्यन्दुर्विपरीतवत् ॥ ६० ॥ सरांसि विमलाम्भांसि द्रुमाकीर्णांश्च पर्वतान् । समान् भूमिप्रदेशांश्च वनानि फलवन्ति च । मध्येन च समन्ताच्च तिर्यक्चाधश्च साऽविशत् ॥६१॥ समावृत्य महीं कृत्स्नां जगाम महती चमूः ॥६२॥ ते हृष्टमनसः सर्वे जग्मुर्मारुतरंहसः । हरयो राघवस्यार्थे समारोपितविक्रमाः ॥ ६३ ॥ हर्षवीर्यबलोद्रेकान् दर्शयन्तः परस्परम् । यौवनोत्सेकजान् दर्पान् विविधांश्चक्रुरध्वनि ॥६४॥ तत्र केचिद् द्रुतं जग्मुरुत्पेतुश्च तथाऽपरे । केचित् किलकिलां चक्रुर्वानरा वनगोचराः ॥६५॥ प्रास्फोटयंश्च पुच्छानि सन्निजघ्नुः पदान्यपि । भुजान् विक्षिप्य शैलांश्च द्रुमानन्ये बभञ्जिरे ॥ ६६ ॥

सस्यन्दुः ॥ ६० ॥ सरांसीत्यादिसार्द्धश्लोक एकान्वयः । यथायोग्यं च संबन्धः । सरांसि शीतलसलिलतया मध्येनाविशत् । पर्वतान् द्रुमाकीर्णतया तिर्यगाविशत् । समान् भूमिप्रदेशान् समन्तादाविशत् । वनानि फलवत्तया अध आविशत् ॥ ६१ ॥ समावृत्येत्यर्धम् ॥ ६२ ॥ त इत्यादि । मारुतरंहसः वायुवेगाः । समारोपितविक्रमाः, अभिवृद्धविक्रमा इत्यर्थः । उद्रेकशब्दोऽतिशयवाची । दर्पान् दर्पजव्यापारान् ॥६३॥ ६४ ॥ तान् विवृणोति—तत्रेत्यादिना । किलकिलेति वानरशब्दानुकरणम् ॥ ६५ ॥ प्रास्फोटयन् भूमाववास्फालयन् सन्निजघ्नुः, भूमाविति शेषः । भुजानिति । भुजान्

हे आर्य ! एतान् समीक्ष्य प्रीतो भवितुमर्हसीति सौमित्रिरब्रवीदिति सम्बन्धः ॥५६॥५७॥ कराग्रैरिति । अन्तर्दधे अन्तर्धापयत् ॥५८॥५९॥ बहुयोजनमिति क्रियाविशेषणम् । विपरीतवत् वैपरीत्यवत् बहुयोजनं यथा तथा नदीस्रोतांसि सस्यन्दुरिति सम्बन्धः ॥ ६० ॥ सरांसीत्यादिसार्धमेकं वाक्यम् ॥ ६१ ॥ समावृत्येत्यर्धमेकं वाक्यम् ॥ ६२ ॥ त इति । असाध्यमपि साहसवशात् साधयिष्याम इति समारोपितविक्रमाः ॥ ६३–६५ ॥ प्रास्फोटयन् पुच्छानि भूमावताडयन् । विक्षिप्य

विक्षिप्य प्रसार्य द्रुमान् शैलांश्च बभञ्जिरे ॥ ६६ ॥ गिरिगोचराः गिरिचराः । क्ष्वेलां सिंहनादम् ॥ ६७ ॥ ऊरुवेगैरिति । ममृदुः मर्दनं चक्रुः ॥ ६८ ॥ शतैरिति । श्रीमद्यथा भवति तथा परिवृता आसीदिति सम्बन्धः ॥ ६९ ॥ सा स्मेति । सेना इनेन स्वामिना सहिता, स्वस्वस्वामियुक्तेत्यर्थः ॥ ७० ॥

आरोहन्तश्च शृङ्गाणि गिरीणां गिरिगोचराः । महानादान् विमुञ्चन्ति क्ष्वेलामन्ये प्रचक्रिरे ॥ ६७ ॥ ऊरुवेगैश्च ममृदुर्लताजालान्यनेकशः । जृम्भमाणाश्च विक्रान्ता विचिक्रीडुः शिलाद्रुमैः ॥६८॥ शतैः शतसहस्रैश्च कोटीभिश्च सहस्रशः । वानराणां तु घोराणां श्रीमत्परिवृता मही ॥ ६९ ॥ सा स्म याति दिवारात्रं महती हरिवाहिनी । हृष्टा प्रमुदिता सेना सुग्रीवेणाभिरक्षिता ॥ ७० ॥ वानरास्त्वरितं यान्ति सर्वे युद्धाभिनन्दिनः । प्रमोक्षयिषवः सीतां मुहूर्तं क्वापि नासत ॥७१॥ ततः पादपसम्बाधं नानामृगसमायुतम् । सह्यपर्वतमासेदुर्मलयं च महीधरम् ॥ ७२ ॥ काननानि विचित्राणि नदीप्रस्रवणानि च । पश्यन्नतिययौ रामः सह्यस्य मलयस्य च ॥ ७३ ॥ वकुलांस्तिलकांश्चूतानशोकान् सिन्धुवारकान् । करवीरांश्च तिमिशान् भञ्जन्ति स्म प्लवङ्गमाः ॥ ७४ ॥ अङ्कोलांश्च करञ्जांश्च प्लक्षन्यग्रोधतिन्दुकान् । जम्बूकामलकान्नीपान् भञ्जन्ति स्म प्लवङ्गमाः ॥ ७५ ॥

प्रमोक्षयिषवः मोचयितुमिच्छवः । सनि द्विर्वचनाभाव आर्षः । "मोक्ष निरसने" इत्यस्माद्धातोः सन् ॥ ७१ ॥ ततः दिवारात्रान्ते ॥ ७२ ॥ सह्यस्य मलयस्य च काननानीत्यन्वयः । सह्यमलयौ नाम मार्गवर्तिनौ कौचित्पर्वतौ ॥ ७३ ॥ वकुलान् केसरवृक्षान् । तिलकान् क्षुरकवृक्षान् । चूताः प्रसिद्धाः, अशोकाश्च । सिन्धुवारकान् निर्गुण्डीवृक्षान् । करवीराः प्रसिद्धाः । तिमिशान् नेमिवृक्षान् ॥ ७४ ॥ अङ्कोलान् निकोचकवृक्षान् । करञ्जान् नक्तमालवृक्षान् । प्लक्षान् जटीवृक्षान् । न्यग्रोधान् वटान् । तिन्दुकान् स्फूर्जकवृक्षान् । जम्बूकामलकाः प्रसिद्धाः । नीपाः कदम्बाः ॥ ७५ ॥

प्रसार्य ॥ ६६–६९ ॥ सा स्मेति । सेना इनेन स्वामिना सहिता ॥ ७० ॥ ७१ ॥ सह्यपर्वतमासेदुर्मलयं च महीधरम् इति पाठः ॥ ७२–८३ ॥

स०—श्रीमत्परिवृता श्रीमद्भिः सुघोराणां वानराणां मध्ये श्रीमद्भिः परिवृता । श्रीमत्परिवृता श्रियं राक्षससम्पदं मथ्नन्तीति श्रीमथः तैः परिवृतेति सुघोराणां वानराणां मही जातेति वा ॥ ६९ ॥

दिवारात्रम् अहोरात्रम्, याममात्रवास इत्याशयः । उत्तरत्र दिवेति [illegible] 'मुहूर्तं क्वापि नावसन्' इत्युत्तरग्रन्थस्वारस्यात् । शेषं विनाऽन्वयसम्भवाच ॥७०॥

प्रस्तरेषु शिलासु, स्थिताः इति शेषः । वायुवेगः वानरसेनावेगजवायुवेगः ॥ ७६ ॥ ७७ ॥ वानराणां धातुरेणुरूषितत्वं वक्तुं पर्वतस्य धातुमत्तामाह— अधिकमिति । अर्धमेकं वाक्यम् । शैलराजः सह्यः ॥ ७८ ॥ विघट्टितः उत्थापितः ॥ ७९ ॥ गिरिप्रस्थेत्यादिसार्द्धपञ्चश्लोक्येकान्वया । पुष्पिताः

प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः । वायुवेगप्रचलिताः पुष्पैरवकिरन्ति तान् ॥ ७६ ॥ मारुतः सुखसंस्पर्शो वाति चन्दनशीतलः । षट्पदैरनुकूजद्भिर्वनेषु मधुगन्धिषु ॥ ७७ ॥ अधिकं शैलराजस्तु धातुभिः सुविभूषितः ॥ ७८ ॥ धातुभ्यः प्रसृतो रेणुर्वायुवेगविघट्टितः । सुमहद्वानरानीकं छादयामास सर्वतः ॥ ७९ ॥ गिरिप्रस्थेषु रम्येषु सर्वतः संप्रपुष्पिताः । केतक्यः सिन्धुवाराश्च वासन्त्यश्च मनोरमाः ॥ ८० ॥ माधव्यो गन्धपूर्णाश्च कुन्दगुल्माश्च पुष्पिताः । चिरिबिल्वा मधूकाश्च वकुलाः प्रियकास्तथा ॥ ८१ ॥ स्फूर्जकास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः । चूताः पाटलयश्चैव कोविदाराश्च पुष्पिताः ॥८२॥ मुचुलिन्दार्जुनाश्चैव शिंशुपाः कुटजास्तथा । धवाः शाल्मलयश्चैव रक्ताः कुरबकास्तथा ॥८३॥ हिन्तालास्तिमिशाश्चैव चूर्णका नीपकास्तथा । नीलाशोकाश्च वरणा अङ्कोलाः पद्मकास्तथा । प्लवमानैः प्लवङ्गैस्तु सर्वे पर्याकुलीकृताः ॥ ८४ ॥

इत्येतत्सर्वविशेषणम् । अतस्तस्य बहुशः प्रयोगः । वसन्ते पुष्प्यन्तीति वासन्त्यः । इदं माधवीविशेषणम् । "कालात्साधुपुष्प्यत्पच्यमानेषु" इत्यण् । गन्धैः पूर्णाः गन्धपूर्णाः, कुन्दाः । चिरिबिल्वाः नक्तमालाः । मधूकाः गुडपुष्पाः । वञ्जुलाः वानीराः । प्रियकाः बन्धूकाः । स्फूर्जकाः तिन्दुकवृक्षाः । नागवृक्षाः नागकेसराः । पाटलयः पाटलाः । कोविदाराः चमरिकाः । मुचुलिन्दाः खर्जूरविशेषाः । अर्जुनाः ककुभाः । शिंशुपाः पिच्छिलाः । कुटजाः जयवृक्षाः । धवाः धुन्धुरवृक्षाः । शाल्मलयः मोचाः । " पिच्छिला पूरणी मोचा चिरायुः शाल्मलिर्द्वयोः " इत्यमरः । हिन्तालाः तालविशेषाः । चूर्णकाः आमलकविशेषाः । नीपकाः कदम्बाः । वरणाः वारुणाः । पद्मकाः सुगन्धिपुष्पा वृक्षविशेषाः । एवम्भूता वृक्षाः प्लवमानैः प्लवङ्गैः पर्याकुली

प्लवमानैरित्यर्धं भिन्नं वाक्यम् ॥ ८४ ॥

कृता इत्यन्वयः ॥ ८०–८४ ॥ वाप्य इत्यादि जलाशया इत्यन्तमेकं वाक्यम् । जलाशयाः जलपूर्णा इति वापीविशेषणम् । अत्रापि पर्याकुलीकृता इत्यनुषज्यते । कारण्डवाः जलकुक्कुटाः । प्लवैः जलकाकैः । क्रौञ्चैः प्रसिद्धैः । तीरवनमृगानाह—वराहेत्यादिना । तरक्षुभिः मृगादनैः । व्यालैः दुष्टगजैः ।

वाप्यस्तस्मिन् गिरौ शीताः पल्वलानि तथैव च । चक्रवाकानुचरिताः कारण्डवनिषेविताः । प्लवैः क्रौञ्चैश्च सङ्कीर्णा वराहमृगसेविताः ॥ ८५ ॥ ऋक्षैस्तरक्षुभिः सिंहैः शार्दूलैश्च भयावहैः । व्यालैश्च बहुभिर्भीमैः सेव्यमानाः समन्ततः ॥ ८६ ॥ पद्मैः सौगन्धिकैः फुल्लैः कुमुदैश्चोत्पलैस्तथा । वारिजैर्विविधैः पुष्पै रम्यास्तत्र जलाशयाः ॥ ८७ ॥ तस्य सानुषु कूजन्ति नानाद्विजगणास्तथा ॥ ८८ ॥ स्नात्वा पीत्वोदकान्यत्र जले क्रीडन्ति वानराः । अन्योन्यं प्लावयन्ति स्म शैलमारुह्य वानराः ॥ ८९ ॥ फलान्यमृतगन्धीनि मूलानि कुसुमानि च । बुभुजुर्वानरास्तत्र पादपानां मदोत्कटाः ॥ ९० ॥ द्रोणमात्रप्रमाणानि लम्बमानानि वानराः । ययुः पिबन्तो हृष्टास्ते मधूनि मधुपिङ्गलाः ॥ ९१ ॥ पादपानवभञ्जन्तो विकर्षन्तस्तथा लताः । विधमन्तो गिरिवरान् प्रययुः प्लवगर्षभाः ॥९२॥ वृक्षेभ्योऽन्ये तु कपयो नर्दन्तो मधुदर्पिताः । अन्ये वृक्षान् प्रपद्यन्ते प्रपतन्त्यपि चापरे ॥ ९३ ॥

सौगन्धिकैः कह्लारैः । वारिजैरिति । एवमिति शेषः ॥ ८५–८७ ॥ तस्य सानुष्वित्यर्धमेकं वाक्यम् । कूजन्ति चुकूजुः । तत्सैन्यदर्शनादिति भावः ॥ ८८ ॥ स्नात्वेति । अत्र जले वापीजले । प्लावयन्ति सिञ्चन्ति ॥ ८९ ॥ शैलमारुह्येत्युत्तरशेषः । अमृतगन्धीनि अमृतस्वादूनि । मदोत्कटाः मदमत्ताः ॥ ९० ॥ द्रोणमात्रेति । द्रोणमात्रप्रमाणानि द्रोणं शिवद्वयम्, तत्प्रमाणमधुपूर्णानि । मधूनि मधुपटलानि । मधुपिङ्गलाः मधुवत्पिङ्गलवर्णाः ॥ ९१ ॥ पादपानिति । विधमन्तः दहन्तः । " ध्मा शब्दाग्निसंयोगयोः " इति धातुः ॥ ९२ ॥ वृक्षेभ्य इति । अन्ये वृक्षेभ्यः वृक्षेभ्योऽन्यत्र । अत्रापि ययु

वाप्य इत्यादि सार्धमेकं वाक्यम् । तस्मिन् गिरौ सह्यपर्वते वाप्यः चक्रवाकानुचरितत्वविशिष्टा इत्यर्थः । कारण्डवः जलकुक्कुटः । प्लवः बकविशेषः ॥ ८५ ॥ तरक्षुः मृगादनः । ऋक्षादिभिस्सेव्यमानं तदीयं वनं सह्यगिरावासीदिति शेषः ॥ ८६ ॥ ८७ ॥ तस्येति । तस्य सानुषु सह्यगिरिसानुषु ॥ ८८–९० ॥ मधूनि मधुपटलानि ॥ ९१ ॥ ९२ ॥ अन्ये वृक्षेभ्यः, अन्यत्र ययुरिति शेषः ॥ ९३ ॥

रित्यनुषज्यते ॥ ९३ ॥ बभूवेति । इवशब्दो वाक्यालङ्कारे । अन्ये तु–तत्र तदानीम् पक्कैः कलमकेदारैः पक्वशालिक्षेत्रैः सम्पूर्णा वसुन्धरेव यथा भवेत् तथा तैर्हरिपुङ्गवैः संपूर्णा वसुधा बभूवेति योजयन्ति । अपरे तु–कलमकेदारैर्यथा कलमकेदारसदृशैः हरिपुङ्गवैः संपूर्णा वसुधा वसुन्धरेव कलमकेदारभूरिव बभूवेत्याहुः । उपमानद्वित्वं व्यञ्जयितुमुपमावाचकद्वयं प्रयुञ्जते कवयः । यथा–" उद्धृत्य मेघैस्तत एव तोयमर्थं मुनीन्द्रैरिव

बभूव वसुधा तैस्तु सम्पूर्णा हरियूथपैः । यथा कलमकेदारैः पक्कैरिव वसुन्धरा ॥ ९४ ॥ महेन्द्रमथ सम्प्राप्य रामो राजीवलोचनः । अध्यारोहन्महाबाहुः शिखरं द्रुमभूषितम् ॥९५॥ ततः शिखरमारुह्य रामो दशरथात्मजः । कूर्ममीनसमाकीर्णमपश्यत् सलिलाकरम् ॥ ९६ ॥ ते सह्यं समतिक्रम्य मलयञ्च महागिरिम् । आसेदुरानुपूर्व्येण समुद्रं भीमनिस्वनम् ॥ ९७ ॥ अवरुह्य जगामाशु वेलावनमनुत्तमम् । रामो रमयतां श्रेष्ठः ससुग्रीवः सलक्ष्मणः ॥ ९८ ॥ अथ धौतोपलतलां तोयौघैः सहसोत्थितैः । वेलामासाद्य विपुलां रामो वचनमब्रवीत् ॥९९ ॥ एते वयमनुप्राप्ताः सुग्रीव वरुणालयम् । इहेदानीं विचिन्ता सा या नः पूर्वं समुत्थिता ॥ १०० ॥ अतः परमतीरोऽयं सागरः सरितां पतिः । न चायमनुपायेन शक्यस्तारितुमर्णवः ॥ १०१ ॥

संप्रणीताः । आलोकयामास हरिः पतन्तीर्नदीः स्मृर्तावेंदमिवाम्बुराशिम् ॥" इति ॥ ९४ ॥ महेन्द्रमिति । अथ सह्यमलयातिक्रमणानन्तरम् । राजीवलोचन इति समुद्रदर्शनाय महेन्द्रशिखरारोहणकुतूहलित्वमुक्तम् ॥ ९५ ॥ तत इति । स्पष्टम् ॥ ९६ ॥ ९७ ॥ वेलावनस्योन्नतत्वादवरुह्येत्युक्तम् । रमयतां श्रेष्ठ इत्यनेन समुद्रसम्भ्रमप्रदर्शनेन लक्ष्मणादिरञ्जकत्वं व्यञ्जितम् ॥ ९८ ॥ अथेति । स्पष्टम् ॥ ९९ ॥ एत इति । विचिन्ता समुद्रतरणोपायचिन्ता ॥ १०० ॥ अत इति । अतीरः अविद्यमानतीरः । जलप्राय इति यावत् । अनुपायेन उपायं विनेत्यर्थः । प्रसज्यप्रतिषेधे नञ्समासः ॥१०१॥

कलमकेदारैः पक्वशालिक्षेत्रैः सम्पूर्णा वसुन्धरेव यथा भवेत् तथा तैर्हरिपुङ्गवैः सम्पूर्णा वसुधा बभूवेत्यन्वयः । यद्वा पक्कैः कलमकेदारैर्यथा पक्वकलमकेदारसदृशैः हरिपुङ्गवैः संपूर्णा वसुधा वसुन्धरेव कलमकेदारभूमिरिव बभूवेत्यन्वयः । यद्वा इवशब्दस्तथार्थे । पक्कैः कलमकेदारैः वसुन्धरा यथा पूर्णा तथा हरिपुङ्गवैः वसुधा पूर्णा बभूवेति योजना ॥ ९४–९६ ॥ अत्रानुक्तमपि वासत्रयमन्यद्बोध्यम्, अग्निवेश्योक्तेः । ते सर्वे वानराः आनुपूर्व्येण सेनासन्निवेशक्रमेण ॥ ९७ ॥ अवरुह्य, महेन्द्रादित्यर्थः ॥ ९८ ॥ तोयौघैः तरङ्गैः ॥ ९९ ॥ विचिन्ता समुद्रतरणोपायचिन्ता ॥ १०० ॥ अतीरः अविद्यमानप्रत्यासन्नतीरः । अनुपायेन उपायाभावेन, उपायं विनेत्यर्थः ॥ १०१ ॥ १०२ ॥

मन्त्रः कार्यविचारः । प्रस्तूयताम् आरभ्यताम् । इति वक्ष्यमाणप्रकारेण ॥ १०२ ॥ इतीति । इतीवेत्यनेन सेनानिवेशनियोगे सागरतरणोपायविचारः अहृदयो हेतुः । वस्तुतस्तु सीताहरणक्लेश एव हेतुरिति व्यज्यते ॥ १०३ ॥ सर्वा इति । स्पष्टम् ॥ १०४ ॥ कुतः कुतश्चिद्धेतोः । शूराः वानराः ।

तदिहैव निवेशोऽस्तु मन्त्रः प्रस्तूयतामिति । यथेदं वानरबलं परं पारमवाप्नुयात् ॥ १०२ ॥ इतीव स महाबाहुः सीताहरणकर्शितः । रामः सागरमासाद्य वासमाज्ञापयत्तदा ॥ १०३ ॥ सर्वाः सेना निवेश्यन्तां वेलायां हरिपुङ्गव । सम्प्राप्तो मन्त्रकालो नः सागरस्यास्य लङ्घने ॥ १०४ ॥ स्वां स्वां सेनां समुत्सृज्य मा च कश्चित् कुतो व्रजेत् । गच्छन्तु वानराः शूरा ज्ञेयं छन्नं बलं च नः ॥ १०५ ॥ रामस्य वचनं श्रुत्वा सुग्रीवः सहलक्ष्मणः । सेनां न्यवेशयत्तीरे सागरस्य द्रुमायुते ॥ १०६ ॥ विरराज समीपस्थं सागरस्य च तद्बलम् । मधुपाण्डुजलः श्रीमान् द्वितीय इव सागरः ॥ १०७ ॥ वेलावनमुपागम्य ततस्ते हरिपुङ्गवाः । विनिविष्टाः परं पारं कांक्षमाणा महोदधेः ॥ १०८ ॥ तेषां निविशमानानां सैन्यसन्नाहनिःस्वनः । अन्तर्धाय महानादमर्णवस्य प्रशुश्रुवे ॥ १०९ ॥

गच्छन्तु सर्वतः सञ्चरन्तु । किमर्थमित्यत्राह—ज्ञेयमिति । नः अस्माकम् भयं भयनिमित्तम् छन्नं ज्ञेयम्, तत्र तत्र निलीनैः शत्रुभिः प्रायशः प्रहारसम्भवादिति भावः ॥ १०५ ॥ रामस्येति । द्रुमायुते द्रुमैर्युक्ते । मिश्रणार्थाद्यौतेर्निष्ठा ॥ १०६ ॥ सागरस्य समीपस्थं तद्बलम् मधुपाण्डुजलः मधुवत्पिङ्गलजलः द्वितीयः सागर इव विरराजेत्युत्प्रेक्षा ॥ १०७ ॥ वेलेति । स्पष्टम् ॥ १०८ ॥ तेषामिति । अन्तर्धाय, स्थित इति शेषः ॥ १०९ ॥

वासमाज्ञापयदित्यस्य इहैव निवेशोऽस्त्वित्युक्तनिवेशनप्रकारविशेषविधानार्थत्वान्न पुनरुक्तिः ॥ १०३ ॥ १०४ ॥ स्वां स्वामिति । शूराः वानराः गच्छन्तु, बलनिवेशनार्थं गच्छन्त्वित्यर्थः । स्वां स्वां सेनां वानरो वानरसेनाम् ऋक्षः ऋक्षसेनां समुत्सृज्य कश्चिदपि कुतोऽपि मा व्रजेत । कुतः ? अस्माकं भयनिमित्तं छन्नं ज्ञेयं शङ्कनीयम् । तत्रतत्र लीनैः शत्रुभिः प्रायशः प्रहरणसम्भवादिति भावः ॥ १०५ ॥ १०६ ॥ विरराजेति । सागरस्य समीपस्थं तद्बलम् । मधुपाण्डुजलः मधुवत्पिङ्गलवर्णजलः द्वितीयः सागर इवेत्युत्प्रेक्षा । "हरिणः पाण्डुरः पाण्डुः" इत्यमरः । मधुपानोत्कटं श्रीमद्द्वितीय इव सागरः । इति वा पाठः ॥ १०७ ॥ १०८ ॥ सैन्यसन्नाहनिस्वनः सैन्यसञ्चारध्वनिः ॥ १०९ ॥

सेति । त्रेधा त्रिप्रकारैः । वलयत्रयाकारेणेति यावत् । वानरगोपुच्छभल्लूकभेदेन भेदेनेति वा  ॥ ११० ॥ पश्यमाना पश्यन्ती सती । हृष्टा, अभूदिति शेषः ॥ १११ ॥ दूरं पारं यस्य दूरपारम्, विशालमित्यर्थः । असंबाधं संबाधरहितम्, अक्षोभ्यमित्यर्थः । रक्षोगणनिषेवितं समुद्रे रक्षांसि वसन्तीति प्रसिद्धिः ॥ ११२ ॥ चण्डनक्रैः करणैः ग्रहः ग्रहणं यस्य स तथोक्तः तम् । "सूर्यादौ ग्रहणे युद्धे पूतनादावनुग्रहे । उपरागे च निर्बन्धे स्वर्भानौ च

सा वानराणां ध्वजिनी सुग्रीवेणाभिपालिता । त्रिधा निविष्टा महती रामस्यार्थपराऽभवत् ॥ ११० ॥ सा महार्णवमासाद्य हृष्टा वानरवाहिनी । वायुवेगसमाधूतं पश्यमाना महार्णवम् ॥ १११ ॥ दूरपारमसम्बाधं रक्षोगणनिषेवितम् । पश्यन्तो वरुणावासं निषेदुर्हरियूथपाः ॥ ११२ ॥ चण्डनक्रग्रहं घोरं क्षपादौ दिवसक्षये । हसन्तमिव फेनौघैर्नृत्यन्तमिव चोर्मिभिः ॥ ११३ ॥ चन्द्रोदयसमुद्धूतं प्रतिचन्द्रसमाकुलम् ॥ ११४ ॥ [ पिनष्टीव तरङ्गाग्रैरर्णवः फेनचन्दनम् । तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः॥ ] चण्डानिलमहाग्राहैः कीर्णं तिमितिमिङ्गिलैः ॥ ११५ ॥

ग्रहः स्मृतः ॥" इति निघण्टुः । दिवसक्षये क्षपादौ, सन्ध्यायामित्यर्थः । घोरं वर्धमानत्वाद्भयङ्करम् ॥ ११३ ॥ समुद्धूतम् उल्लसितम् । प्रतिवीचि प्रतिबिम्बितचन्द्रत्वात् प्रतिचन्द्रैः समाकुलम् । चण्डानिलमहाग्राहैः चण्डानिलसदृशवेगमहाग्राहैरित्यर्थः । तिमयः शतयोजनायता महामत्स्याः । तानपि भक्षयितुं क्षमास्तिमिङ्गिलाः । तिमीन्निगिरन्तीति व्युत्पत्तेः । "गॄ निगरणे" इति धातुः । "ग्रोऽचि" इति लत्वम् । तदुक्तं पुराणे—"अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः । तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति सागरे ॥" इति ॥ ११४ ॥ ११५ ॥

वानराणां ध्वजिनी, ऋक्षगोलाङ्गूलानामपि वानरावान्तरजातीयत्वात्सर्वेषामपि वानरत्वोक्तिः । त्रिधा निविष्टा ऋक्षवानरगोलाङ्गूलभेदेन त्रिधा निविष्टेत्यर्थः ॥ ११० ॥ पश्यमाना पश्यन्ती । हृष्टा, अभूदिति शेषः । दूरपारमित्यादि सार्धचतुष्टयमेकं वाक्यम् । अगाधमसुरालयमित्यन्तस्य पश्यन्तो निषेदुरित्यनेनान्वयः । असम्बाधं सम्बाधरहितम्, अक्षोभ्यमित्यर्थः । चण्डनक्रग्रहं चण्डनक्रैः करणैः ग्रहः ग्रहणं यस्य स तथोक्तम् । दिवसक्षये सति क्षपादौ निशामुखे घोरं वर्धमानत्वाद्भयङ्करमित्यर्थः । प्रतिचन्द्रसमाकुलं प्रतिबिम्बितचन्द्रत्वात् प्रतिबिम्बसमाकुलत्वम् । चण्डानिलमहाग्राहैः चण्डानिलसदृशमहाग्राहैरित्यर्थः । तिमितिमिङ्गिलैः तिमयः शतयोजनायामा महामत्स्याः । "अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः" इति वचनाद् । तिमिङ्गिलाः तन्निगरणशीलाः मत्स्यविशेषाः ॥११-१५॥

दीप्तभोगैः शिरोरत्नकान्त्या प्रकाशितफणैरिव स्थितैः । महासत्त्वैः जलगजशिशुमारादिभिः । सुदुर्गं यादोभिः । दुर्गमार्गं दुर्गमम्, नौपथसञ्चारायोग्य मित्यर्थः । योगरूढिभ्यां वरुणावासवरुणालयपदद्वयनिर्वाहः ॥११६॥ रामानु०—अगाधमसुरालयमित्येतदन्तं पश्यन्त इत्यस्य कर्म ॥११६॥ तदानीं सागरमुत्प्रेक्षते—मकरैरिति । नागभोगैः सर्पकायैः । विगाढाः प्रविष्टाः । वातलोलिताः वायुचलिताः । अत एव प्रवृद्धाः जलराशयः तरङ्गाः । उत्पेतुश्च निपेतुश्च, उत्पत्य

दीप्तभोगैरिवाकीर्णं भुजङ्गैर्वरुणालयम् । अवगाढं महासत्त्वैर्नानाशैलसमाकुलम् । सुदुर्गं दुर्गमार्गं तमगाधमसुरालयम् ॥ ११६ ॥ मकरैर्नागभोगैश्च विगाढा वातलोलिताः । उत्पेतुश्च निपेतुश्च प्रवृद्धा जलराशयः ॥ ११७ ॥ अग्निचूर्णमिवाविद्धं भास्वराम्बु महोरगम् । सुरारिविषयं घोरं पातालविषमं सदा ॥ ११८ ॥ सागरं चाम्बरप्रख्यमम्बरं सागरोपमम् । सागरं चाम्बरं चेति निर्विशेषमदृश्यत ॥ ११९ ॥

निपेतुरिति भावः ॥ ११७ ॥ अथ सागराम्बरयोः सर्वथा साम्यं वर्णयति—अग्निचूर्णमित्यादिना । रात्रौ सागरस्य सलिलशीकराः अग्निचूर्णा इव दृश्यन्त इति प्रसिद्धिः, अतो भास्वराण्यम्बूनि शीकररूपाणि यस्य तथोक्तम् । अत एवाविद्धम् आकीर्णम् अग्निचूर्णमिव सागरे दृश्यते । अम्बरं च कीर्णैर्नक्षत्रैस्तथा दृश्यते । भास्वराम्बु विमलतुहिनं च । महान्त उरगा यस्मिन् तन्महोरगम् । इदमप्युभयत्रापि समानम् । आकाशे गन्धर्वादीनामिव नागानामपि सञ्चारसम्भवात्, राह्वादिरूपोरगसम्भवाद्वा । सुरारयः असुरा राक्षसाश्च तेषां विषयम् आवासभूतम् । इदमप्युभयत्र तुल्यम् । पातालविषमं पातालवत् गम्भीरम् । इदमप्युभयत्र तुल्यम् । घोरं भयङ्करम् । इदमप्युभयत्र तुल्यम् । एवमुक्तविशेषणविशिष्टं सागरं सागरः अम्बरप्रख्यम् अम्बराभम्, उक्तविशेषणविशिष्टमम्बरं च सागरोपममदृश्यतेत्याकृष्य योजना ॥ ११८ ॥ न केवलं साम्यम्, सर्वथा साम्यं चेत्याह—सागरमिति । क्लीबत्वमार्षम् ॥ ११९ ॥

दीप्तभोगैरिव तेजोतिशयेनोज्ज्वलदेहैरिव स्थितैः भुजङ्गैराकीर्णं वरुणालयमित्यस्य रूढत्वाद्वरुणावासमित्यनेन न पुनरुक्तिः ॥ ११६ ॥ जलराशयः ऊर्मयः ॥ ११७ ॥ अग्निचूर्णमित्यादिना द्वयेन सागराम्बरयोस्साम्यं प्रतिपाद्यते । भास्वराम्बु चन्द्रकिरणसम्पर्कात् भास्वराणि शीकररूपाम्बूनि यस्य तत् । अतः आविद्धम् आकीर्णम् अग्निचूर्णमिव अग्निकणसमूह इव स्थितम् । अम्बरं तु नक्षत्रगणैस्तथा । महोरगं महान्तः उरगा यस्मिन् तत् इत्येतदुभयत्र समानम् । सुरारिविषयम्, सुरारयोऽसुरा राक्षसाश्च तेषां विषयमावासभूतम्, इदमप्युभयत्र समानम् । पातालविषयमिति पाठः । पातालस्य विषय इव विषयो यस्य तत्, पातालवदतिगम्भीरमित्यर्थः । इदमप्युभयत्रापि समानम् । एवमुक्तविशेषणविशिष्टं सागरमम्बरप्रख्यम् उक्तविशेषणविशिष्टमम्बरं च सागरोपमम् अतः सागरं

प्रकारान्तरेणापि उक्तं साम्यं दर्शयति—संपृक्तमिति । संपृक्तं संसृष्टम्, तुल्यवर्णमिति यावत् । हिशब्दो हेतौ । तादृग्रूपे अन्योन्यतुल्यरूपे । तारारत्न समाकुले सागराम्बरे दृश्येते स्म ॥ १२० ॥ मेघवीचिमालयोर्बिम्बप्रतिबिम्बभावेनोपमानत्वम् ॥ १२१ ॥ अन्योन्यमिति । प्रथमं सक्ताः अथ आहता इत्यन्वयः ॥१२२॥ रत्नौघेत्यादिश्लोकद्वयम् । रत्नौघजलयोः सन्नादो यस्मिन् । अनेन वेगवद्वायुजनितक्षोभातिशयादन्तर्गतरत्नानामुद्गमनमवगम्यते ।

सम्पृक्तं नभसाप्यम्भः सम्पृक्तं च नभोऽम्भसा । तादृग्रूपे स्म दृश्येते तारारत्नसमाकुले ॥ १२० ॥ समुत्पतित मेघस्य वीचिमालाकुलस्य च । विशेषो न द्वयोरासीत् सागरस्याम्बरस्य च ॥ १२१ ॥ अन्योन्यमाहताः सक्ताः सस्वनुर्भीमनिस्वनाः । ऊर्मयः सिन्धुराजस्य महाभेर्य इवाहवे ॥ १२२ ॥ रत्नौघजलसन्नादं विषक्तमिव वायुना । उत्पतन्तमिव क्रुद्धं यादोगणसमाकुलम् ॥१२३॥ ददृशुस्ते महोत्साहा वाताहतजलाशयम् । अनिलोद्धूतमाकाशे प्रवल्गन्तमिवोर्मिभिः ॥ १२४ ॥

वायुना विषक्तमिव वायुना एकीभूतमिव । यादोगणसमाकुलं यादांसि जलजन्तवः, तेषां गणेन समाकुलम् । वाताहतजलाशयं जलाशयः समुद्रः वाता हतश्चासौ जलाशयश्चेति कर्मधारयः तम् । ऊर्मिभिः आकाशे वल्गन्तमिव स्थितम् । एतन्निरूपणार्थमेव अनिलोद्धूतमिति पुनरुक्तिः ॥१२३॥१२४॥

चाम्बरं च निर्विशेषं निर्भेदमदृश्यत । सागरमिति लिङ्गव्यत्यय आर्षः ॥ ११८ ॥ ११९ ॥ निर्विशेषत्वमेव प्रकारान्तरेणाह—सम्पृक्तमित्यादिद्वाभ्याम् । संपृक्तं संसृष्टम्, तुल्यमिति यावत् । हिर्हेतौ । हि यस्मात् नभसा तुल्यवर्णमम्भः, अम्भसा तुल्यवर्णं नभश्च यतश्चाम्भोनभसी यथायोगं तारारत्नसमाकुले तस्मात्तादृग्रूपे अन्योन्यतुल्यरूपे दृश्येते ॥ १२० ॥ समुत्पतितमेघस्याम्बरस्य वीचिमालाकुलस्य सागरस्य चेत्यन्वयः ॥ १२१ ॥ सक्ताः निरन्तराः अन्योन्यैः परस्परमाहताः सस्वनुः ॥ १२२ ॥ रत्नौघेत्यादि श्लोकद्वयमेकं वाक्यम् । अनिलोद्धूतम् अत एव रत्नौघजलसन्नादं रत्नौघजलौघयोः सन्नादो यस्मिन् तम्, अनेन वेगवद्वायुजनित क्षोभातिशयात्तदन्तर्गतरत्नानामुद्गमनमवगम्यते । वायुना विषक्तमिव मिश्रीभूतमिव एकीभूतमिति यावत् । क्रुद्धं यादोगणसमाकुलमित्यनेन क्रूरयादोगण समाकुलत्वात् क्रुद्धमिव स्थितम् । वाताहतजलाशयं वातोद्धूतह्रदम्, सागरमिति शेषः ॥ १२३ ॥ १२४ ॥

स०—तारारत्नसमाकुले एकं नभस्तारासमाकुलम्, अपरं रत्नसमाकुलमिति ते । तारारत्नैः नक्षत्रश्रेष्ठैः तथा तारारत्नैः मुक्ताश्रेष्ठैरिति नागोजिभट्टः । तत्पक्षे "तारः शुद्धमौक्तिके" इति विश्वोक्तेः स्त्रीलिङ्गस्ताराशब्दस्तद्वाची मृग्यः । तारेषु मुक्तासु श्रारत्नैः अतिश्रेष्ठैरिति तद्विनेयैः क्लिष्टकल्पनया समाधेयम् ॥ १२० ॥

तत इति । विशेषाभिधानार्थत्वान्न पुनरुक्तिः । भ्रान्तोर्मिजलसन्नादमिति । घूर्णिततरङ्गजलसन्नादो यस्मिन् तम् । प्रलोलमिव उद्भ्रान्तमिव ॥ १२५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥

ततो विस्मयमापन्ना ददृशुर्हरयस्तदा। भ्रान्तोर्मिजलसन्नादं प्रलोलमिव सागरम् ॥ १२५ ॥
इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे चतुर्थः सर्गः ॥ ४ ॥
सा तु नीलेन विधिवत् स्वारक्षा सुसमाहिता। सागरस्योत्तरे तीरे साधु सेना निवेशिता ॥ १ ॥
मैन्दश्च द्विविदश्चोभौ तत्र वानरपुङ्गवौ । विचेरतुश्च तां सेनां रक्षार्थं सर्वतो दिशम् ॥ २ ॥
निविष्टायां तु सेनायां तीरे नदनदीपतेः । पार्श्वस्थं लक्ष्मणं दृष्ट्वा रामो वचनमब्रवीत् ॥ ३ ॥
शोकश्च किल कालेन गच्छता ह्यपगच्छति । मम चापश्यतः कान्तामहन्यहनि वर्धते ॥ ४ ॥

एवं कृतज्ञत्वमित्रानुरोधित्वपरीक्ष्यकारित्वमहोत्साहत्वादिशरण्यत्वौपयिका रामगुणा दर्शिताः । अथ रामस्य कारुण्यरूपं प्रधानगुणं दर्शयितुं सर्गान्तरमारभते—सा त्विति । स्वारक्षा आ समन्ताद्रक्षन्तीत्यारक्षाः, शोभनाः आरक्षाः यस्याः सा तथोक्ता । विधिवत् नीतिशास्त्रोक्तरीत्या । सुसमाहिता निराकुला निवेशिता ॥ १ ॥ मैन्द इति । दिशमिति जात्येकवचनम् । दिश इत्यर्थः । 'उभसर्वतसोः' इत्यादिना द्वितीया । सर्वत इति सप्तम्यर्थे तसिः। दिशां सर्वेषु प्रदेशेष्वित्यर्थः ॥ २ ॥ ३ ॥ समुद्रवेलावनाद्युद्दीपकदर्शनादुद्भूतं विरहशोकं सोढुमशक्नुवन् सौमित्रिं प्रत्याह—शोकश्चेत्यादिना । प्रथमश्चकारोऽवधारणे द्वितीयस्त्वर्थः । शोकः इष्टवस्त्वन्तरवियोगजनितः शोकः । गच्छता कालेन अपगच्छति, किलेत्यैतिह्ये । गच्छत्येवेति प्रसिद्धमिति

प्रलोलमिव उद्भ्रान्तमिव ॥ १२५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां चतुर्थः सर्गः ॥४॥ सा त्विति । स्वारक्षा आ समन्ताद्रक्षन्तीत्यारक्षाः, शोभना आरक्षा यस्यास्सा ॥ १ ॥ मैन्दश्चेति । दिशमिति जात्येकवचनम् । षष्ठ्यर्थे द्वितीया । दिशां सर्वतः दिशां सर्वेषु प्रदेशेष्वित्यर्थः ॥ २ ॥ ३॥ समुद्रवेलावनाद्युद्दीपकवस्तुदर्शनादुद्बुद्धविरहवेगं सोढुमशक्नुवन् वाचा विवृणोति—शोकश्चेत्यादि । मम चेत्यत्र चस्त्वर्थे । इष्टवस्त्वन्तरवियोगजनितः शोकः कालेनापगच्छति । प्रियाविरहजनितस्तु न तथेत्यर्थः ॥ ४ ॥

लौकिका वदन्ति । कान्तामपश्यतो मम तु शोकः अहन्यहनि वर्धते । लौकिकशोकविलक्षणो मम शोक इति भावः ॥ ४ ॥ ननु शत्रुहृताया दूरे स्थितायास्तस्याः प्रत्याहरणसमर्थस्य तव किं शोकेनेत्याशङ्क्य न तद्विषयोऽयं शोकः किंतूपभोगयोग्यस्य प्रियावयसो वैफल्यानुस्मरणादित्याह—न म इति । दुःखमिति । प्रिया दूरे स्थितेति मे न दुःखम्, सुग्रीवेण प्रस्थानेन तस्य निवर्त्यत्वात् । प्रबलरक्षसा हृतेति मे दुःखं नास्ति, तस्य तच्छिरः

> न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति वा । एतदेवानुशोचामि वयोऽस्या ह्यतिवर्तते ॥ ५ ॥
> वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश । त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः ॥ ६ ॥
> तन्मे दहति गात्राणि विषं पीतमिवाशये । हा नाथेति प्रिया सा मां ह्रियमाणा यदब्रवीत् ॥ ७ ॥

कृन्तनापनोद्यत्वात् । एतदेवानुशोचामि इदमेकमेव शोकनिमित्तम् । वयोऽस्या ह्यतिवर्तते, गतं यौवनं न प्रत्याहर्तुं शक्यमिति भावः । अत्र यौवन मतिवर्तत इति नार्थः, नित्ययौवनत्वात्तस्याः । किंतु वयोऽतिवर्तते, व्यर्थतयैव यातीति भावः । मानुषभावानुसारेण चेदं वचनम् ॥ ५ ॥ प्रियास्पृष्ट द्रव्यस्पर्शस्य विनोदहेतुत्वात्तत्सम्पादनार्थं वायुं प्रार्थयते—वाहीति । हे वात ! मे कान्ता यतः यत्र वसति तत्र वाहि गच्छ । तत्र गत्वा किं करणीयमित्यत्राह तामिति । न चैतदन्यतः सेत्स्यतीति सदृष्टान्तं दर्शयति—दृष्टिसमागमः चन्द्रे यथा चन्द्राधीनः, तथा मे तद्गात्रसंस्पर्शोऽपि त्वयि त्वदधीनः । यथा तदव लोकितं चन्द्रं पश्यन् तत्प्रणालिकया तां दृष्टवानस्मि तद्वत् तदङ्गस्पृष्टं त्वां स्पृशन् तामेव स्पृष्टवान् भवेयमित्यर्थः ॥६॥ न केवलं वयोतिवर्तनस्मरण मेव व्यथाहेतुः, किंतु कारणान्तरमप्यस्तीत्याह—तदिति । तद्वचनं मे आशये हृदये स्थितं सत्, सदा स्मर्यमाणं सदित्यर्थः । पीतं विषमिव गात्राणि

वयोऽस्या ह्यतिवर्तते मद्भोगसाधनमस्या वयोऽतिवर्तत इत्येतदेवानुशोचामि ॥ ५ ॥ इदानीं प्रियजनस्पृष्टद्रव्यस्पर्शस्य कालविनोदहेतुत्वात्तत्सम्पादनार्थं वायुं प्रार्थयते—वाहीति । हे वात ! कान्ता यतो यत्र वर्तते तं देशं वाहि गच्छ । गत्वा किं करणीयम् ? तत्राह तां स्पृष्ट्वेति । यद्वा यतो यत्र कान्ता वर्तते तत्र वाहि सञ्चर स्वात्मानं स्पृशन्तं वायुं प्रत्येवमुक्तम्, मद्गात्रसंस्पर्शस्तस्यास्सिद्ध्येदिति भावः । तां स्पृष्ट्वा मामपि स्पृशेत्यनेन तस्याः स्पर्शस्सिद्ध्यतीत्युक्तम् । न चैतदन्यतः सेत्स्यतीति सदृष्टान्तं दर्शयति त्वयीति । दृष्टिसमागमः चन्द्रे चन्द्राधीनो यथा तथा मे तद्गात्रसंस्पर्शोऽपि त्वयि त्वदधीनः । यथा चन्द्रं पश्यन् तत्प्रणालिकया तां दृष्टवानस्मि, तद्वत्तदङ्गस्पृष्टं त्वां स्पृशन् तामेव स्पृष्टवान् भवेयमित्यर्थः ॥ ६॥ आशये उदरे, स्थितमिति शेषः । यद्वा आशये हृदये स्थितं हा नाथेति तद्वचनमित्यन्वयः॥७॥

प्रत्यवयवं दहति । किं तद्वचनम् ? तत्राह हा नाथेति । सा सर्वान् भोगान् परित्यज्य मया सहागता । ह्रियमाणा सती रावणेन हरणसमये "न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह तेजसा" इत्युक्तरीत्या पातिव्रत्याग्निना भस्मीकर्तुं समर्थापि "तत्तस्य सदृशं भवेत्" इत्युक्तरीत्या हा नाथेति मन्नाथत्वमेव पुरस्कृत्य मां यदब्रवीत् तन्मे गात्राणि दहति । एतेन रामशोकः सीताविषयकारुण्यमित्यवगम्यते । परदुःखदुःखित्वं हि कारुण्यम् ॥ ७ ॥ अथ सन्तापो जलप्रवेशं विना न शाम्यतीति वक्तुं तस्याग्नित्वं सावयवं रूपयति—तद्वियोगेति । मदनाग्निवर्धकत्वेन वियोगस्येन्धनरूपत्वम् । सन्ततत्वेन

तद्वियोगेन्धनवता तच्चिन्ताविपुलार्चिषा । रात्रिंदिवं शरीरं मे दह्यते मदनाग्निना ॥ ८ ॥
अवगाह्यार्णवं स्वप्स्ये सौमित्रे भवता विना । कथंचित् प्रज्वलन् कामः स मा सुप्तं जले दहेत् ॥ ९ ॥
बह्वेतत्कामयानस्य शक्यमेतेन जीवितुम् । यदहं सा च वामोरूरेकां धरणिमाश्रितौ ॥ १० ॥

चिन्ताया ज्वालात्वरूपणम् । रात्रिंदिवमिति । "अचतुर—" इत्यादिना सूत्रेण साधुत्वम् । शीतलाशीतलकालाविशेषेण दह्यत इत्यर्थः ॥ ८ ॥ अवगाह्येति । सौमित्रे ! कान्तास्मारकेण भवता विना अर्णवमवगाह्य स्वप्स्ये । अनेन लक्ष्मणस्य शेषावतारत्वमुक्तम् । अर्णवशयनं हि शेषिणैव । किं प्रयोजनमित्यत्राह—कथंचिदिति । इदानीं प्रज्वलन् स कामः जले सुप्तं मां कथंचिद्दहेत् कृच्छ्राद्दहेत् । मन्दीभवेदित्यर्थः ॥ ९ ॥ एवं दुःसहदुःखाक्रान्तस्यापि मम जीवनधारणशक्तिस्तया सह एकधरण्याश्रयणात्तज्जीवनप्रवृत्त्युपलम्भाच्च जायत इत्याह—बह्वित्यादिना श्लोकद्वयेन । अहं सा वामोरूश्च एकां धरणिमाश्रिताविति यत् एतद्बहु भूरि जीवनसाधनम् । अतः एतेन कामयानस्य विरहिणो मम जीवितुं शक्यम् । एकशय्याश्रयणन्यायेन कामिनोरेकधरण्याश्रयणमपि जीवनसाधनं भवतीत्यभिप्रायः ॥ १० ॥ रामानु०—कामयानस्येत्यत्र "ताच्छील्य—" इत्यादिना शानच् ॥ १० ॥

रात्रिंदिवं रात्रौ च दिवा चेत्यर्थः ॥८॥ प्रज्वलन् कामो जले सुप्तं मां कथञ्चिद्दहेत मन्दीभवेत् । कथञ्चित्प्रज्वलन् कामः स मा सुप्ते जने दहेदिति पाठे—जने सुप्ते सति कथञ्चित्प्रज्वलन् कामः स मा दहेत् स कामः तं जनं न बाधेदित्यर्थः । तस्माद्भवता विना त्वां विहाय अर्णवमवगाह्य स्वप्स्य इति सम्बन्धः ॥ ९ ॥ जीवनहारिहेतुसद्भावेऽपि महज्जीवनकारणमस्तीति चित्तसमाधानं करोति—बह्विति । सा वामोरूरहं च एकां धरणिमाश्रिताविति यत् एतत् बहु भूरिजीवनसाधनम् अत

केदारस्येति । जीवन्तीं तां शृणोमीति यत् तेन । निरूदकः निरुदकः । केदारः वप्रम् । सोदकस्य केदारस्य उपस्नेहेन उपक्लेदेनेव जीवामि ॥ ११ ॥ कदेति । स्पष्टम् ॥१२॥ रसायनं शरीरसिद्धिकरमौषधविशेषम् । आतुरः रोगी । "आतुरोऽभ्यमितोऽभ्यान्तः" इत्यमरः ॥१३॥ संहतौ श्लिष्टौ ॥१४॥

केदारस्येव केदारः सोदकस्य निरूदकः । उपस्नेहेन जीवामि जीवन्तीं यच्छृणोमि ताम् ॥ ११ ॥ कदा नु खलु सुश्रोणीं शतपत्रायतेक्षणाम् । विजित्य शत्रून् द्रक्ष्यामि सीतां स्फीतामिव श्रियम् ॥ १२ ॥ कदा नु चारु बिम्बोष्ठं तस्याः पद्ममिवाननम् । ईषदुन्नम्य पास्यामि रसायनमिवातुरः ॥ १३ ॥ तस्यास्तु संहतौ पीनौ स्तनौ तालफलोपमौ । कदा नु खलु सोत्कम्पौ श्लिष्यन्त्या मां भजिष्यतः ॥ १४ ॥ सा नूनमसितापाङ्गी रक्षोमध्यगता सती । मन्नाथा नाथहीनेव त्रातारं नाधिगच्छति ॥ १५ ॥ कथं जनकराजस्य दुहिता सा मम प्रिया । राक्षसीमध्यगा शेते स्नुषा दशरथस्य च ॥ १६ ॥ कदाऽविक्षोभ्यरक्षांसि सा विधूयोत्पतिष्यति । विधूय जलदान्नीलान् शशिरेखा शरत्स्विव ॥ १७ ॥ स्वभावतनुका नूनं शोकेनानशनेन च । भूयस्तनुतरा सीता देशकालविपर्ययात् ॥१८॥ कदा नु राक्षसेन्द्रस्य निधायोरसि सायकान् । सीतां प्रत्याहरिष्यामि शोकमुत्सृज्य मानसम् ॥ १९ ॥

सेति । स्पष्टम् ॥ १५ ॥ कथमिति । स्पष्टम् ॥ १६ ॥ कदेति । अविक्षोभ्यरक्षांसीत्येकं पदम् । अविक्षोभ्याणि दुराधर्षाणि रक्षांसि ॥१७॥ स्वभावेति । देशकालविपर्ययात् देशकालयोर्व्यत्यासात् । सुखावहयोर्देशकालयोरपगमात्तद्विरुद्धयोरुपगमाच्चेत्यर्थः ॥ १८ ॥ सीतां प्रत्याहरिष्यामि शोकमुत्सृज्य मानसमिति । सीतां प्रत्याहृत्य कदा नु शोकमुत्स्रक्ष्यामीत्यर्थः । आस्यं व्यादाय स्वपितीतिवत्साधुः ॥ १९ ॥

एतत्कामयानस्य कामिनो ममैतेन जीवितुं शक्यम् कामिनोरेकशय्याश्रयणवत् एकधरण्याश्रयणमपि जीवनसाधनमिति भावः ॥ १० ॥ जीवनहेत्वन्तरमाह– केदारस्येति । निरूदकः निरुदकः । उपस्नेहेन उपक्लेदेन ॥ ११ ॥ स्फीतां श्रियमिव समृद्धां राज्यलक्ष्मीमिव ॥ १२ ॥ रसायनं शरीरसिद्धिकरमौषधम् । आतुरो रोगी ॥ १३ ॥ संहतौ श्लिष्टौ ॥ १४–१६ ॥ अविक्षोभ्यरक्षांसि इत्येकं पदम् । अविक्षोभ्याणिं दुराधर्षाणि रक्षांसि विधूय उत्पतिष्यतीतिं सम्बन्धः ॥ १७ ॥ स्वभावतनुका प्रकृत्या कृशशरीरा । देशकालविपर्ययात् देशकालव्यत्यासात्, सुखसाधनभूतदेशकालयोरभावादित्यर्थः ॥ १८ ॥ सीतां प्रत्याहरिष्यामि शोकमुत्सृज्य

कदा न्विति । स्पष्टम् ॥ २० ॥ शुक्केतरं मलिनम् ॥ २१ ॥ एवमिति । विलपतः विलपति सति ॥ २२ ॥ आश्वासित इत्यर्थम् । उपासत उपास्त । भ्रातुरपि लक्ष्मणस्य पुरतो रघुनाथस्यैवंविधवचनप्रयोगस्तस्य सर्वविधसेवकत्वात् । अतो नानौचित्यम् ॥ २३॥२४ ॥ रामानु०—आश्वासित इति । उपासत उपास्त । वचनव्यत्यय आर्षः । उपागमदिति वा पाठः ॥ २३ ॥ इति श्रीगोविन्द० श्रीरामायण० रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

कदा नु खलु मां साध्वी सीता सुरसुतोपमा । सोत्कण्ठा कण्ठमालम्ब्य मोक्ष्यत्यानन्दजं पयः ॥ २० ॥ कदा शोकमिमं घोरं मैथिलीविप्रयोगजम् । सहसा विप्रमोक्ष्यामि वासः शुक्केतरं यथा ॥ २१ ॥ एवं विलपतस्तस्य तत्र रामस्य धीमतः । दिनक्षयान्मन्दरुचिर्भास्करोऽस्तमुपागमत् ॥ २२ ॥ आश्वासितो लक्ष्मणेन रामः सन्ध्यामुपासत ॥ २३ ॥ स्मरन् कमलपत्राक्षीं सीतां शोकाकुलीकृतः ॥ २४ ॥ इत्यार्षे० श्रीमद्युद्धकाण्डे पञ्चमः सर्गः ॥ ५ ॥

लङ्कायां तु कृतं कर्म घोरं दृष्ट्वा भयावहम् । राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना । अब्रवीद्राक्षसान् सर्वान् ह्रिया किंचिदवाङ्मुखः ॥ १ ॥ धर्षिता च प्रविष्टा च लङ्का दुष्प्रसहा पुरी । तेन वानरमात्रेण दृष्टा सीता च जानकी ॥ २ ॥

एवं रामवृत्तान्तमुक्त्वा हनुमन्निर्गमकालानन्तरकालिकं रावणवृत्तान्तं वक्तुमुपक्रमते—लङ्कायामिति । घोरं दुर्दर्शम् । शक्रेणेव शक्रतुल्येन । "इवेन सह नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्" इति विभक्तेरलोपः ॥ १ ॥ वानरमात्रेण वानरजातीयेन । वानरेष्वल्पेनेति यावत् ॥ २ ॥

मानसमिति सीतां प्रत्याहृत्य कदानु शोकमुत्स्रक्ष्यामीत्यर्थः । एतत् मुखं व्यादाय स्वपितीतिवदपूर्वकालेऽपि क्त्वाप्रत्ययस्साधुः॥१९॥२०॥ शुक्केतरं मलिनम् ॥२१॥ एवमिति । विलपतः सतः ॥ २२ ॥ आश्वासित इत्यस्य श्लोकस्योत्तरार्धं तु—स्मरन् कमलपत्राक्षीं सीतां शोकाकुलीकृतः इत्येतत् । स्मरन्निति हेतौ शतृप्रत्ययः । सीतास्मरणाद्धेतोः शोकाकुलीकृतो रामो लक्ष्मणेनाश्वासितः सन्ध्यामुपासत । उपागमदिति वा पाठः ॥ २३ ॥ २४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां पञ्चमः सर्गः ॥५॥ लङ्कायामिति । हनुमता शक्रेणेव कृतं घोरं कर्म दृष्ट्वा राक्षसानब्रवीत् ॥ १॥ ह्रीबीजमाह—धर्षितेति । ॥ २०॥

स०—महात्मना शक्रेणेवेत्यनेन हनुमत्कृतकर्मणः "इन्द्रो वृत्रं हत्वा महानास" इत्युक्तरीत्या महेन्द्रकृतिसाध्यत्वेपि रावणसुतजितेन्द्रप्रयत्नाविषयत्वं सूचयति ॥ १ ॥

चैत्यः प्रासादः नगरप्रधानभूतः प्रासादः । आविला दाहेन आकुला ॥ ३ ॥ अनन्तरं किं वा युक्तं यन्नः समर्थं हितम् । " समर्थस्त्रिषु शक्तिस्थे सम्बन्धार्थे हितेऽपि च " इत्यमरः । यत् कृतम् अनुष्ठितम् । सुकृतं स्वनुष्ठितम् । भवेत्फलवद्भवेत् । तादृशं किम् उच्यतां करिष्यामि । वो भद्रमस्त्वित्यन्वयः ॥ ४ ॥ बलवतस्तव किं मन्त्रेणेत्याशङ्क्य सर्वेषामपि विजयस्य मन्त्रमूलत्वान्मयाऽपि मन्त्रः करणीय इत्याह–मन्त्रमूलमिति ॥ ५ ॥

प्रासादो धर्षितश्चैत्यः प्रवरा राक्षसा हताः । आविला च पुरी लङ्का सर्वा हनुमता कृता ॥ ३ ॥ किं करिष्यामि भद्रं वः किं वा युक्तमनन्तरम् । उच्यतां नः समर्थं यत् कृतं च सुकृतं भवेत् ॥४॥ मन्त्रमूलं हि विजयं प्राहुरार्या मनस्विनः । तस्माद्वै रोचये मन्त्रं रामं प्रति महाबलाः ॥ ५ ॥ त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः । तेषां तु समवेतानां गुणदोषौ वदाम्यहम् ॥ ६ ॥ मन्त्रिभिर्हितसंयुक्तैः समर्थैर्मन्त्रनिर्णये । मित्रैर्वापि समानार्थैर्बान्धवैरपि वा हितैः॥७॥ सहितो मन्त्रयित्वा यः कर्मारम्भान् प्रवर्तयेत् । दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥८॥ एकोऽर्थं विमृशेदेको धर्मे प्रकुरुते मनः । एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ॥ ९ ॥ गुणदोषावनिश्चित्य त्यक्त्वा धर्मव्यपाश्रयम् । करिष्यामीति यः कार्यमुपेक्षेत् स नराधमः ॥ १० ॥

मन्त्रस्य करणीयत्वेऽपि स्वयमेव संमन्त्र्यताम्, किं बहुभिरित्याशङ्क्य बहुभिः सह मन्त्रयितुरेवोत्तमत्वं वक्तुं प्रतिज्ञापूर्वकं क्रमेण मन्त्रयितृभेदानाह–त्रिविधा इत्यादिना । समवेतानां सङ्कीर्णस्वरूपाणाम्, लक्षणज्ञानं विना विवेक्तुमशक्यानामित्यर्थः । गुणदोषौ उत्तमलक्षणं गुणम् । अधमलक्षणं दोषम् । मध्यमलक्षणं मिश्रणम् ॥ ६ ॥ हितसंयुक्तैः हितपरैः । समानार्थैः समानसुखदुःखैः । कर्मारम्भान् आरम्भणीयकर्माणि । दैवे दैवसमाश्रयणे कुरुते ॥ ७ ॥ ८ ॥ धर्मे पूर्वोक्तदैवसमाश्रयणे । मनः मनःपूर्वं यत्नम् ॥ ९ ॥ गुणदोषौ हिताहिते । अनिश्चित्य दैवव्यपाश्रयं त्यक्त्वा करिष्यामी

आक्रान्तेत्यर्थः । वानरमात्रेण एकेन निरायुधेन चेत्यर्थः ॥ २ ॥ ३ ॥ किं करिष्यामीति । अनन्तरं किं वा युक्तम् अर्हम् यद् नः समर्थं हितं यत्कृतमनुष्ठितं साधु कृतं स्वनुष्ठितं भवेत् तादृशं किम् उच्यतां करिष्यामि वो भद्रमस्त्वित्यर्थः ॥ ४ ॥ ५ ॥ त्रिविधा इति । समवेतानां सङ्कीर्णस्वरूपाणां लक्षणज्ञानं विना विवेक्तुमशक्यानामित्यर्थः । गुणदोषौ उत्तमलक्षणं गुणम् । अधमलक्षणं दोषम् । मध्यमलक्षणं मिश्रणम् ॥ ६ ॥ मन्त्रिभिरित्यादि । हितसंयुक्तैः हितपरैः । समानार्थैः समानसुखदुःखैः । कर्मारम्भान् आरम्भणीयकर्माणि ॥ ७ ॥ ८ ॥ एक इति । धर्मे प्रकुरुते मन इत्यनेन दैवाश्रयणमुक्तम् ॥ ९ ॥ गुणदोषौ हिताहिते अनिश्चित्य धर्म

त्युपक्रम्य यः कार्यमुपेक्षेत् उपेक्षेत न समाप्नुयात् ॥ १० ॥ यथेति । स्पष्टम् ॥ ११ ॥ उक्तमेवार्थं मन्त्रेऽप्यतिदिशति—ऐकमत्यमिति । ऐकमत्यम् एकां मतिमुपागम्य । शास्त्रदृष्टेन स्वभ्यस्तशास्त्रेण । राजदन्तादित्वात्परनिपातः । तद्रूपेण चक्षुषा उपलक्षिताः मन्त्रिणः यत्र मन्त्रे निरताः तम् उत्तममन्त्रमाहुः ॥ १२ ॥ बह्वय इति । यत्र मन्त्रे । मन्त्रिणां मतयः बह्व्यः बहुधा भूत्वापि अर्थनिर्णये अर्थनिर्णयरूपफलविषये एकतां प्राप्ता भवन्ति

यथेमे पुरुषा नित्यमुत्तमाधममध्यमाः । एवं मन्त्रा हि विज्ञेया उत्तमाधममध्यमाः ॥ ११ ॥ ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा । मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम् ॥ १२ ॥ बह्व्योऽपि मतयो भूत्वा मन्त्रिणामर्थ निर्णये । पुनर्यत्रैकतां प्राप्ताः स मन्त्रो मध्यमः स्मृतः ॥ १३ ॥ अन्योन्यं मतिमास्थाय यत्र सम्प्रतिभाष्यते । न चैकमत्ये श्रेयोऽस्ति मन्त्रः सोऽधम उच्यते ॥ १४ ॥ तस्मात् सुमन्त्रितं साधु भवन्तो मतिमत्तमाः । कार्यं सम्प्रतिपद्यन्तामेतत् कृत्यं मतं मम ॥ १५ ॥

स मन्त्रो मध्यमः स्मृतः, नीतिज्ञैरिति शेषः ॥ १३ ॥ यत्र मन्त्रे । मन्त्रिभिः अन्योन्यं मतिं स्वां स्वां बुद्धिम् । आस्थाय प्रधानीकृत्य । संप्रतिभाष्यते व्यवह्रियते । अनेनोत्तममन्त्रव्यावृत्तिरुक्ता । मध्यममन्त्रव्यावृत्त्यर्थमाह—न चेति । ऐकमत्ये तेषां मन्त्रिणां श्रेयश्च प्रीतिश्च नास्ति, स मन्त्रोऽधम उच्यते ॥ १४ ॥ सुमन्त्रितं सुनिश्चितम् । साधु समीचीनम् । कार्यं संप्रतिपद्यन्ताम् ऐकमत्येन जानन्तु । एतत् ऐकमत्येन सुनिश्चितं कार्यम् । मम कृत्यम्

व्यपाश्रयश्च त्यक्त्वा करिष्यामीत्युपक्रम्य यः कार्यमुपेक्षेत् उपेक्षेत न समाप्नुयात् स नराधमः ॥ १० ॥ ११ ॥ शास्त्रदृष्टेन स्वदृष्टशास्त्रेण तद्रूपेण चक्षुषा उपलक्षिताः मन्त्रिणः ऐकमत्यम् एकमतित्वं प्राप्य यत्र मन्त्रे निरताः तं मन्त्रमुत्तममाहुरिति सम्बन्धः ॥ १२ ॥ बह्व्योऽपीति । यत्र मन्त्रे मन्त्रिणां मतयो बह्व्योऽपि बहुमार्गा भूत्वाऽपि पुनः पश्चादर्थनिर्णये अर्थनिश्चयरूपफले एकतामविरोधं प्राप्ताः स मध्यमः । बह्व्योऽपि मतयो गत्वेति पाठे मन्त्रिणो ह्यर्थनिर्णये इति पाठः । तदा यत्र मन्त्रे मन्त्रिणो बह्व्यो मतयः बह्वीर्मतीर्गत्वा प्राप्य अर्थनिर्णये पुनरैकमत्यं प्राप्ताः स मध्यम इति सम्बन्धः ॥ १३ ॥ अन्योन्यमिति । यत्र मन्त्रे अन्योन्यं मतिमास्थाय परस्परं भिन्नमतत्वं प्राप्य सम्प्रतिभाष्यते विरुद्धभाषणं क्रियते नचैकमत्ये श्रेयोऽस्ति ऐकमत्यविषयं श्रेयो नास्ति ऐकमत्यजनकप्रतिपादनं नास्तीति यावत् । स मन्त्रोऽधम इति योजना ॥ १४ ॥ उपसंहरति—तस्मादिति । सुमन्त्रितं यथा तथा भवन्तः कार्यं संप्रतिपद्यन्ताम् एतन्मन्त्रणमेव कृत्यं मम मतमिति सम्बन्धः॥१५॥

अतिशयेन कर्तव्यम् ॥ १५ ॥ गतं तु गतमेव, किं मन्त्रकरणे इतः किं नश्छिन्नमित्यत आह–वानराणामिति । अभ्येति अभ्येष्यति । "वर्तमानसामीप्ये वर्तमानवद्वा" इति वर्तमाननिर्देशः । उपरोधकः उपरोद्धुम् । क्रियार्थायां क्रियायां ण्वुल् ॥१६॥ सागरे विद्यमाने कथमस्मानुपरोत्स्यति ? तत्राह–

वानराणां हि वीराणां सहस्रैः परिवारितः । रामोऽभ्येति पुरीं लङ्कामस्माकमुपरोधकः ॥१६॥ तरिष्यति च सुव्यक्तं राघवः सागरं सुखम् ॥ १७ ॥ तरसा युक्तरूपेण सानुजः सबलानुगः । समुद्रमुच्छोषयति वीर्येणान्यत् करोति वा ॥ १८ ॥ अस्मिन्नेवङ्गते कार्ये विरुद्धे वानरैः सह । हितं पुरे च सैन्ये च सर्वं सम्मन्त्र्यतां मम ॥ १९ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे षष्ठः सर्गः ॥ ६ ॥

इत्युक्ता राक्षसेन्द्रेण राक्षसास्ते महाबलाः । ऊचुः प्राञ्जलयः सर्वे रावणं राक्षसेश्वरम् । द्विषत्पक्षमविज्ञाय नीतिबाह्यास्त्वबुद्धयः । [अविज्ञायात्मपक्षं च राजानं भीषयन्ति हि] ॥ १ ॥ राजन् परिघशक्त्यृष्टिशूलपट्टिशसङ्कुलम् । सुमहन्नो बलं कस्माद्विषादं भजते भवान् ॥ २ ॥

तरिष्यतीति सार्द्धश्लोकः । उच्छोषयति उच्छोषयिष्यति । अन्यत् सेतुबन्धादिकं वा करोति करिष्यति ॥ १७ ॥ १८ ॥ अस्मिन् लङ्कानिरोधनरूपे कार्ये । एवंगते उक्तरीत्या प्रवृत्ते । वानरैः सह विरुद्धे विरोधे च प्राप्ते । भावे निष्ठा । पुरादिषु हितं यत्तत्सर्वं संमन्त्र्यतामित्यर्थः ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥

एवं रावणवचनमाकर्ण्य अविदितरघुनाथप्रभावा मदोद्धता राक्षसास्तद्बलवर्णनपूर्वकं रावणं प्रशंसन्ति–इत्युक्ता इत्यादिना । सार्धश्लोक एकान्वयः । द्विषत्पक्षं द्विषद्बलम् । " पक्षो मासार्धके पार्श्वे गृहे सूर्यविरोधयोः । केशादेः परितो वृन्दे बले सखिसहाययोः ॥" इति विश्वः ॥ १ ॥ परिघः परितो

मन्त्रस्य को विषय इत्याकाङ्क्षायामाह–वानराणामिति । अभ्येति अचिरादेष्यति । उपरोधकः उपरोद्धुम् ॥ १६ ॥ तरसा बलेन युक्तरूपेण अत्यन्तमुचितेन सबलानुगः बलोपेतानुचरसहितः ॥ १७ ॥ सागरं कथं तरिष्यतीत्यत्राह–समुद्रमिति । उच्छोषयति उच्छोषयिष्यति । अन्यत् सेतुबन्धादिकं करिष्यति ॥ १८ ॥ अस्मिन् लङ्कानिरोधरूपे कार्ये एवङ्गते मदुक्तरीत्या प्रवृत्ते वानरैः सह विरुद्धे विरोधे च प्राप्ते मम पुरादिषु हितं यत् तत्सर्वं सम्मन्त्र्यतामित्यन्वयः ॥ १९ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां षष्ठः सर्गः ॥ ६ ॥ इत्युक्ता इत्यादिसार्धश्लोकमेकं वाक्यम् । द्विषत्पक्षं द्विषद्बलम् ॥ १ ॥ परिघ

हननक्षमो गदाविशेषः । "परिघः परिघातनः" इत्यमरः । शक्तिः दीर्घयष्टिः । ऋष्टिः असिः । "खड्गे तु निस्त्रिंशचन्द्रहासासिऋष्टयः" इत्यमरः । शूलं प्रसिद्धम् । पट्टिशः खड्गविशेषः । तैः सङ्कुलं व्याप्तं बलमस्ति । समग्रबले एवं विद्यमाने कस्माद्धेतोः भवान् विषादं भजत इति योजना । अत्र सुमहन्नो बलमित्यत्र बलं नास्तीति प्रामादिका भाव्यनर्थसूचिकाखिलोक्तिः ॥ २ ॥ रामानु०–एवं रावणवचः श्रुत्वा अविदितरामबला राक्षसाः सुरासुरविदितं भवदीयबलं विस्मृत्य मानुषमात्राच्छत्रोः किमर्थं शङ्कस इति प्रशंसापूर्वकं रावणं प्रोत्साहयन्ति–राजन्नित्यादिना ॥ २ ॥ तिष्ठतु सैन्यम्, त्वमेक एव समस्तशत्रुविद्रावणक्षम इत्याशये

त्वया भोगवतीं गत्वा निर्जिताः पन्नगा युधि ॥ ३ ॥ कैलासशिखरावासी यक्षैर्बहुभिरावृतः । सुमहत् कदनं कृत्वा वश्यस्ते धनदः कृतः ॥ ४ ॥ स महेश्वरसख्येन श्लाघमानस्त्वया विभो । निर्जितः समरे रोषाल्लोकपालो महाबलः ॥ ५ ॥ विनिहत्य च यक्षौघान् विक्षोभ्य च विगृह्य च । त्वया कैलासशिखराद्विमानमिदमाहृतम् ॥ ६ ॥ मयेन दानवेन्द्रेण त्वद्भयात् सख्यमिच्छता । दुहिता तव भार्यार्थे दत्ता राक्षसपुङ्गव ॥ ७ ॥ दानवेन्द्रो मधुर्नाम वीर्योत्सिक्तो दुरासदः । विगृह्य वशमानीतः कुम्भीनस्याः सुखावहः ॥ ८ ॥ निर्जितास्ते महाबाहो नागा गत्वा रसातलम् । वासुकिस्तक्षकः शङ्खो जटी च वशमाहृताः ॥ ९ ॥ अक्षया बलवन्तश्च शूरा लब्धवराः पुनः । त्वया संवत्सरं युद्ध्वा समरे दानवा विभो ॥ १० ॥ स्वबलं समुपाश्रित्य नीता वशमरिन्दम । मायाश्चाधिगतास्तत्र बहवो रक्षसाधिप ।

[ निर्जिताः समरे रोषाल्लोकपाला महाबलाः । देवलोकमितो गत्वा शक्रश्चापि विनिर्जितः ॥ ] ॥ ११ ॥

नाह–त्वयेत्यादिना । सार्धश्लोक एकान्वयः । भोगवतीं सर्पराजनगरीम् । कदनं युद्धम् ॥ ३ ॥ ४ स इति । स्पष्टम् ॥ ५ ॥ विमानं पुष्पकम् ॥ ६ ॥ दुहिता मन्दोदरी । यद्यपि मयेनाभिजात्यभ्रमाद्दत्तेत्युत्तरे वक्ष्यति, तथाप्यत्र प्रशंसायां भयाद्दत्तेत्युक्तम् ॥ ७ ॥ दानवेन्द्रः मधुः । कुम्भीनसी रावणभगिनी । सुखमावहतीति सुखावहः, भर्ता ॥ ८ ॥ जटी सर्पविशेषस्य नाम । त्वया भोगवतीमित्यत्र तक्षकादिभिन्नकर्कोटकादिजयोक्तिरिति न पौनरुक्त्यम् ॥ ९ ॥ अक्षया इत्यादिश्लोकद्वयमेकान्वयम् । लब्धवराः, ब्रह्मणेति शेषः । अक्षयाः चूर्णीकरणेऽपि पुनरुत्पत्तिमत्त्वेन क्षयरहिता इत्यर्थः । दानवाः शक्त्यृष्टिशूलपट्टिशसङ्कुलं बलं नः, अस्तीति शेषः ॥ २–५ ॥ विमानं पुष्पकम् ॥ ६ ॥ दुहिता मन्दोदरी ॥ ७ ॥ कुम्भीनस्यास्तव स्वसुः सुखावहः भर्ता ॥ ८ ॥ जटी नागविशेषः ॥ ९ ॥ अक्षया इत्यादि श्लोकद्वयम् । दानवाः कालकेयाः । तत्र तत्संवासान्मायाश्चाधिगता इति सम्बन्धः ॥ १०–१२ ॥

कालकेयाः । तत्र कालकेयसकाशात् । बहवः [illegible] । " [illegible] " इति पाठे [illegible] ॥ १० ॥ ११ ॥ चतुर्विधबलानुगाः रथगजतुरग पदातिभेदेन चतुर्विधानि बलानि पृष्ठगानि येषां ते तथा ॥ १२॥ मृत्युदण्डेत्यादिश्लोकद्वयमेकान्वयम् । मृत्युदण्डः यमदण्डः स एव महाग्राहः महानक्रः यस्मिन् । शाल्मलयः कण्टकशाल्मलिवृक्षाकारायुधविशेषाः त एव द्रुमाः तैर्मण्डितम् । मृत्युः यमः । प्रतिषेधितः युद्धादपक्रामितः ॥ १३ ॥ १४ ॥

शूराश्च बलवन्तश्च वरुणस्य सुता रणे । निर्जितास्ते महाबाहो चतुर्विधबलानुगाः ॥ १२ ॥ मृत्युदण्डमहाग्राहं शाल्मलिद्रुममण्डितम् । कालपाशमहावीचिं यमकिङ्करपन्नगम् ॥ १३ ॥ अवगाह्य त्वया राजन् यमस्य बलसागरम् । जयश्च विपुलः प्राप्तो मृत्युश्च प्रतिषेधितः ॥ १४ ॥ सुयुद्धेन च ते सर्वे लोकास्तत्र विलोलिताः ॥ १५ ॥ क्षत्रियै र्बहुभिर्वीरैः शक्रतुल्यपराक्रमैः । आसीद्वसुमती पूर्णा महद्भिरिव पादपैः ॥ १६ ॥ तेषां वीर्यगुणोत्साहैर्न समो राघवो रणे । प्रसह्य ते त्वया राजन् हताः परमदुर्जयाः ॥ १७ ॥ तिष्ठ वा किं महाराज श्रमेण तव वानरान् । अयमेको महाबाहुरिन्द्रजित् क्षपयिष्यति ॥ १८ ॥ अनेन हि महाराज माहेश्वरमनुत्तमम् । इष्ट्वा यज्ञं वरो लब्धो लोके परमदुर्लभः ॥ १९ ॥ शक्तितोमरमीनं च विनिकीर्णान्त्रशैवलम् । गजकच्छपसम्बाधमश्वमण्डूकसङ्कुलम् ॥ २० ॥ रुद्रादित्यमहाग्राहं मरुद्वसुमहोरगम् । रथाश्वगजतोयौघं पदातिपुलिनं महत् ॥ २१ ॥

सुयुद्धेनेत्यर्धम् । सुयुद्धेन स्वल्पयुद्धेनेत्यर्थः । विलोलिताः द्राविताः ॥ १५ ॥ क्षत्रियैः अनरण्यप्रभृतिभिः ॥ १६ ॥ तेषामिति । न समो राघव इति । तेभ्योऽपि निहीनबलः सुखेन निग्राह्य इति भावः ॥ १७ ॥ तिष्ठ वेति । स्पष्टम् ॥ १८ ॥ माहेश्वरं महेश्वरप्रीतिकरम् ॥ १९ ॥ शक्तितोमरेत्यादिश्लोक

मृत्युदण्डेत्यादि श्लोकद्वयम् । शाल्मलिद्रुमभूषितं शाल्मलयः आयुधविशेषाः त एव द्रुमाः तैर्भूषितम् ॥१३-१८ ॥ माहेश्वरं महेश्वरप्रीतिकरम् । इष्ट्वा कृत्वा ॥१९॥ युद्धं सागरत्वेन निरूपयति—शक्तितोमरेत्यादिना । विनिकीर्णानि व्याप्तानि ॥ २० ॥ महत् महान्तम् ॥ २१ ॥

नयमेकान्वयम् । दैवतपतिः इन्द्रः ॥ २०–२२ ॥ पितामहेति । स्पष्टम् ॥ २३ ॥ विसृज प्रेषय । यावन्नयति नेष्यति ॥ २४ ॥ अयुक्ता असम्भाविता । प्राकृतात् क्षुद्रात् हनुमतः ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥



अनेन हि समासाद्य देवानां बलसागरम् । गृहीतो दैवतपतिर्लङ्कां चापि प्रवेशितः ॥ २२ ॥ पितामहनियोगाच्च मुक्तः शम्बरवृत्रहा । गतस्त्रिविष्टपं राजन् सर्वदेवनमस्कृतः ॥ २३ ॥ तमेव त्वं महाराज विसृजेन्द्रजितं सुतम् । यावद्वानरसेनां तां सरामां नयति क्षयम् ॥ २४ ॥ राजन्नापदयुक्तेयमागता प्राकृताज्जनात् । हृदि नैव त्वया कार्या त्वं वधिष्यसि राघवम् ॥२५॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदि०श्रीमद्युद्धकाण्डे सप्तमः सर्गः ॥७॥

ततो नीलाम्बुदनिभः प्रहस्तो नाम राक्षसः । अब्रवीत् प्राञ्जलिर्वाक्यं शूरः सेनापतिस्तदा ॥ १ ॥ देवदानवगन्धर्वाः पिशाचपतगोरगाः । न त्वां धर्षयितुं शक्ताः किं पुनर्वानरा रणे ॥ २ ॥ सर्वे प्रमत्ता विश्वस्ता वञ्चिताः स्म हनूमता । न हि मे जीवतो गच्छेज्जीवन् स वनगोचरः ॥ ३ ॥

एवं मन्त्रिभिः सह संमन्त्र्य भूयोऽभिहिते सकलसचिवप्रधानः प्रहस्तः स्वाभिमतमर्थं राज्ञे निवेदयति–तत इति । स्पष्टम् ॥ १ ॥ देवेति । स्पष्टम् ॥ २ ॥ हनुमतः पौरुषं प्रत्यक्षतो दृष्ट्वा कथमेवमुच्यत इत्यत्राह–सर्व इति । विश्वस्ताः परिभवितुमस्मान् कोऽपि न शक्त इति विश्वस्ताः विस्रब्धाः । दैवतपतिः इन्द्रः ॥ २२ ॥ २३ ॥ विसृज प्रेषय । यावन्नयति नेष्यति । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् ॥ २४ ॥ अयुक्ता असम्भाविता ॥२५॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां सप्तमः सर्गः ॥ ७ ॥ १ ॥ २ ॥ हनुमतः पौरुषं प्रत्यक्षतो दृष्ट्वापि कथमेवं ब्रूष इत्यत्राह–सर्व इत्यादि । प्रमत्ताः भोगादिपरवशाः । विश्वस्ताः अस्मान् परिभवितुं कोऽपि न शक्तिमानिति विप्रलब्धाः अत एव वञ्चिताः । प्रामादिकः परिभवो न न्यूनतामावहतीति भावः । जीवत इत्यनादरे षष्ठी ॥ ३ ॥



स०–दैवतपतिः इन्द्रः । लङ्कायां तत्रापि कारागृह इति शेषः । सागरमित्यर्धर्चादिः अतो महदिति पूर्वश्लोकस्थविशेषणं युक्तम् । "दीप्तानलार्कद्युतिमप्रमेयम्" इत्यत्र प्रमेयदीपिकायामप्रमेयत्वस्य द्युताविव महदित्यस्य बहुव्रीहिघटकपुलिनपदार्थे वाऽन्वयः । अतो नपुंसकत्वोपपत्तिः । महान्तमिति लिङ्गविपर्यासो वा । दैवतशब्दग्रहणेन तेषां नपुंसकत्वं ध्वन्यते ॥ २२ ॥

प्रामादिकशब्दपरिभवो न न्यूनतामापादयतीति भावः ॥३॥ रामानु०–प्रमत्ताः अनवहिताः । विश्वस्ताः एको वानरः किं करिष्यतीत्यवज्ञया विस्रब्धाः, अत एव वञ्चिताः । नहीति । जीवत इत्यनादरे षष्ठी ॥ ३ ॥ सर्वामिति । स्पष्टम् ॥ ४ ॥ रामानु०–करोमि अचिरादेव करिष्यामि । " वर्तमानसामीप्ये वर्तमानवद्वा " इति भविष्यदर्थे लट् ॥ ४ ॥



सर्वां सागरपर्यन्तां सशैलवनकाननाम् । करोम्यवानरां भूमिमाज्ञापयतु मा भवान् ॥ ४ ॥ रक्षां चैव विधास्यामि वानराद्रजनीचर । नागमिष्यति ते दुःखं किञ्चिदात्मापराधजम् ॥ ५ ॥ अब्रवीत्तु सुसंक्रुद्धो दुर्मुखो नाम राक्षसः । इदं न क्षमणीयं हि सर्वेषां नः प्रधर्षणम् ॥ ६ ॥ अयं परिभवो भूयः पुरस्यान्तःपुरस्य च । श्रीमतो राक्षसेन्द्रस्य वानरेण प्रधर्षणम् ॥७॥ अस्मिन् मुहूर्ते हत्वैको निवर्तिष्यामि वानरान् । प्रविष्टान् सागरं भीममम्बरं वा रसातलम् ॥ ८ ॥ ततोऽब्रवीत् सुसंक्रुद्धो वज्रदंष्ट्रो महाबलः । प्रगृह्य परिघं घोरं मांसशोणितरूषितम् ॥ ९ ॥ किं वो हनुमता कार्यं कृपणेन तपस्विना । रामे तिष्ठति दुर्धर्षे ससुग्रीवे सलक्ष्मणे ॥१०॥ अद्य रामं ससुग्रीवं परिघेण सलक्ष्मणम् । आगमिष्यामि हत्वैको विक्षोभ्य हरिवाहिनीम् ॥ ११ ॥ इदं ममापरं वाक्यं शृणु राजन् यदीच्छसि । उपाय कुशलो ह्येव जयेच्छत्रूनतन्द्रितः ॥ १२ ॥

आत्मापराधः सीताहरणरूपो व्यतिक्रमः ॥ ५ ॥ हि यस्माद्वानरेण कृतमिदं कर्म सर्वेषां नः प्रधर्षणरूपम् । भूयः तदुपरि पुरस्यान्तःपुरस्य च परिभवरूपम् । अथ च राक्षसेन्द्रस्य प्रधर्षणरूपम् अतो न क्षमणीयमित्यर्थः ॥ ६ ॥ ७ ॥ ततः किं करिष्यसीत्यत आह–अस्मिन्निति । स्पष्टम् ॥ ८ ॥ रामानु०–निवर्तिष्यामि निवर्तिष्ये ॥ ८ ॥ तत इति । स्पष्टम् ॥ ९ ॥ कृपणेन गूढसञ्चारप्रकटितभयेन । तपस्विना शोच्येन ॥ १० ॥ रामानु०–तपस्विना तपस्व्याहारभूतफलाशिनेत्यर्थः ॥ १० ॥ अद्येति । स्पष्टम् ॥ ११ ॥ तद्वाक्यं किमित्याकाङ्क्षायामुपायप्रतिपादकं वाक्यं वक्तुमादावुपायं प्रशंसति–

करोमि करिष्यामि ॥ ४ ॥ आत्मापराधजं सीतापहरणरूपापराधजम् ॥५॥ इदमित्यादि सार्धश्लोकमेकं वाक्यम् । हि यस्मात् वानरेण कृतमिदं प्रधर्षणं सर्वेषां ना प्रधर्षणरूपं भूयस्तदुपरि पुरस्यान्तःपुरस्य च परिभवरूपम् अथ राक्षसेन्द्रप्रधर्षणमक्षवधादिरूपम् अतो न क्षमणीयमित्यन्वयः ॥ ६–९ ॥ किमिति । कृपणेन प्रकाश सञ्चरणे भयात् गूढं रात्रौ कृतकार्येण । तपस्विना शोच्येन ॥ १० ॥ अद्य राममित्यस्य वास्तवार्थस्तु–लक्ष्मणं रामं विनेति शेषः । सुग्रीवं हत्वा आगमिष्यामीति

उपायेति ॥ १२ ॥ विवक्षितमुपायमेवाह–कामरूपेत्यादिना । निश्चिताः निश्चितवन्तः । राक्षसा वा सहस्राणीति । सहस्रशब्दस्य सङ्ख्येयपरत्वेऽपि शब्दस्वाभाव्यान्नपुंसकत्वम् । किमिति ब्रूयुस्तत्राह–प्रेषिता इति । अस्यान्ते इतिकरणं द्रष्टव्यम् ॥ १३–१५ ॥ ते वयं तत्र समीपे याम । यामेति

कामरूपधराः शूराः सुभीमा भीमदर्शनाः । राक्षसा वा सहस्राणि राक्षसाधिप निश्चिताः ॥ १३ ॥ काकुत्स्थमुपसङ्गम्य बिभ्रतो मानुषं वपुः । सर्वे ह्यसम्भ्रमा भूत्वा ब्रुवन्तु रघुसत्तमम् ॥ १४ ॥ प्रेषिता भरतेन स्म भ्रात्रा तव यवीयसा । [ तवागमनमुद्दिश्य कृत्यमात्ययिकं त्विति ॥ ] स हि सेनां समुत्थाप्य क्षिप्रमेवोपयास्यति ॥ १५ ॥ ततो वयमितस्तूर्णं शूलशक्तिगदाधराः । चापबाणासिहस्ताश्च त्वरितास्तत्र याम ह ॥ १६ ॥ आकाशे गणशः स्थित्वा हत्वा तां हरिवाहिनीम् । अश्मशस्त्रमहावृष्ट्या प्रापयाम यमक्षयम् ॥ १७ ॥ एवं चेदुपसर्पेतामनयं रामलक्ष्मणौ । अवश्यमपनीतेन जहतामेव जीवितम् ॥ १८ ॥ कौम्भकर्णिस्ततो वीरो निकुम्भो नाम वीर्यवान् । अब्रवीत् परमक्रुद्धो रावणं लोकरावणम् ॥ १९ ॥ सर्वे भवन्तस्तिष्ठन्तु महाराजेन सङ्गताः । अहमेको हनिष्यामि राघवं सहलक्ष्मणम् । सुग्रीवं च हनूमन्तं सर्वानेव च वानरान् ॥ २० ॥

लोटि रूपम् ॥ १६ ॥ आकाश इति । स्पष्टम् ॥ १७ ॥ एवं कृते किं स्यादित्यत्राह–एवं चेदिति । रामलक्ष्मणौ अनयम् अस्मत्कृतकैतवापरिज्ञानेन विश्वासं यद्युपसर्पेतां ततस्तेन अपनीतेन अपनयेन जीवितं जहतामेव, जह्यातामेवेत्यर्थः ॥ १८ ॥ कौम्भकर्णिरिति । स्पष्टम् ॥ १९ ॥ सर्व इत्यादि

सम्बन्धः ॥ ११ ॥ १२ ॥ राक्षसा वेत्यादि श्लोकद्वयमेकं वाक्यम् । सहस्रशब्दस्य नित्यनपुंसकत्वाद्राक्षसा इत्यनेन सामानाधिकरण्यम् । निश्चिताः निश्चितवन्तः इति कृत्वा भरतेन प्रेषिता इति ब्रुवन्त्वित्यन्वयः ॥ १३ ॥ १४ ॥ स हि सेनामित्यर्धं भिन्नं वाक्यम् । सः रामः ॥ १५ ॥ ततः किम् ? तत्राह–तत इति । ते वयं तत्र तत्समीपं यामेत्यन्वयः । यामेति लोड्डुत्तमपुरुषबहुवचनम् ॥१६॥१७॥ एवं चेदिति । रामलक्ष्मणौ अनयम् एवं चेदुपसर्पेताम् अस्मत्कैतवाज्ञानेन स्वकीयत्वबुद्धिजनितविस्रब्धत्वरूपानीतिम् एवं मदुक्तरीत्या यद्यवगच्छेतामित्यर्थः । अतस्तेनापनीतेन अपनयेन अवश्यं रामलक्ष्मणौ जीवितं जहतामेव, त्यजेतामेवेत्यर्थः ॥ १८ ॥ कौम्भकर्णिः कुम्भकर्णापत्यम् ॥ १९ ॥ सर्व इत्यादि सार्धश्लोकमेकं वाक्यम् । अहमित्यस्य वास्तवार्थस्तु–राघवादीन्, विनेति शेषः । वानरान् विनेष्यामीति सम्बन्धः ॥ २०–२२ ॥

सार्धश्लोकमेकं वाक्यम् ॥ २० ॥ तत इत्यादिसार्धश्लोकद्वयमेकान्वयम् । मधुवारुणीं मधुरूपां वारुणीम् । रणकुञ्जरं रणाप्रधृष्यम् । स्वःस्था इत्यमङ्गलोक्तिः ॥ २१–२४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टमः सर्गः ॥ ८॥

ततो वज्रहनुर्नाम राक्षसः पर्वतोपमः । क्रुद्धः परिलिहन् वक्त्रं जिह्वया वाक्यमब्रवीत् ॥ २१ ॥ स्वैरं कुर्वन्तु कार्याणि भवन्तो विगतज्वराः । एकोऽहं भक्षयिष्यामि तान् सर्वान् हरियूथपान् ॥ २२ ॥ स्वस्थाः क्रीडन्तु निश्चिन्ताः पिबन्तो मधुवारुणीम् ॥२३॥ अहमेको वधिष्यामि सुग्रीवं सहलक्ष्मणम् । अङ्गदं च हनूमन्तं रामं च रणकुञ्जरम् ॥ २४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे अष्टमः सर्गः ॥ ८ ॥

ततो निकुम्भो रभसः सूर्यशत्रुर्महाबलः । सुप्तघ्नो यज्ञहा रक्षो महापार्श्वो महोदरः ॥ १ ॥ अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः । इन्द्रजिच्च महातेजा बलवान् रावणात्मजः ॥ २ ॥ प्रहस्तोऽथ विरूपाक्षो वज्रदंष्ट्रो महाबलः । धूम्राक्षश्चातिकायश्च दुर्मुखश्चैव राक्षसः ॥ ३ ॥ परिघान् पट्टिशान् प्रासान् शक्तिशूलपरश्वधान् । चापानि च सबाणानि खड्गांश्च विपुलान् शितान् ॥ ४ ॥ प्रगृह्य परमक्रुद्धाः समुत्पत्य च राक्षसाः । अब्रुवन् रावणं सर्वे प्रदीप्ता इव तेजसा ॥ ५ ॥ अद्य रामं वधिष्यामः सुग्रीवं च सलक्ष्मणम् । कृपणं च हनूमन्तं लङ्का येन प्रधर्षिता ॥ ६ ॥

अथ निकुम्भमतमेवानुसरन्तः सर्वेऽपि प्रधाना अहमहमिकया समुत्थाय शत्रुवधोद्युक्ताः । तमुद्योगं नीतिशास्त्रज्ञो विभीषणः प्रतिषिद्धवानित्याह—तत इत्यादि श्लोकषट्कमेकं वाक्यम् । आदौ निकुम्भोपादानं निकुम्भमतानुसरणसूचनार्थम् । समुत्पत्य आसनेभ्यः समुत्थाय । प्रधर्षितेत्यनन्तरमिति

मधुवारुणीं मधुरूपां वारुणीम् । रणकुञ्जरं रणाप्रधृष्यम् ॥२३॥२४॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् अष्टमः सर्गः ॥८॥

तत इत्यादि श्लोकषट्कमेकं वाक्यम् । तस्य अद्य रामं वधिष्याम इत्यब्रुवन्निति क्रियया सम्बन्धः । वस्तुतस्तु लक्ष्मणं रामं विना सुग्रीवादीन् वधिष्याम इति सम्बन्धः।

करणं द्रष्टव्यम् ॥ १–६ ॥ तानिति । क्रियाभेदात्तानित्यस्य न पुनरुक्तिः ॥ ७ ॥ प्रहस्तादीनां प्रधानानां संनिहितत्वाद्रावणिं वा रावणं वा प्रत्युक्तिः । मध्ये कांचित्सचिवान् प्रति वोक्तिः । विक्रमस्य नायमवसर इति दर्शयितुं सामान्येन विक्रमकालानाह–अप्युपायैरिति । तातेत्यभिमुखीकरणाय सम्बोधनम् । त्रिभिः सामदानभेदरूपैः उपायैरपि योऽर्थः लब्धुं न शक्यते तस्य सिद्ध्यै तान् नीतिशास्त्रप्रसिद्धान् विक्रमकालान् युक्तानाहुः । तदुक्तं कामन्द

तान् गृहीतायुधान् सर्वान् वारयित्वा विभीषणः । अब्रवीत् प्राञ्जलिर्वाक्यं पुनः प्रत्युपवेश्य तान् ॥ ७ ॥
अप्युपायैस्त्रिभिस्तात योऽर्थः प्राप्तुं न शक्यते । तस्य विक्रमकालांस्तान् युक्तानाहुर्मनीषिणः ॥ ८ ॥
प्रमत्तेष्वभियुक्तेषु दैवेन प्रहतेषु च । विक्रमास्तात सिद्ध्यन्ति परीक्ष्य विधिना कृताः ॥ ९ ॥
अप्रमत्तं कथं तं तु विजिगीषुं बले स्थितम् । जितरोषं दुराधर्षं प्रधर्षयितुमिच्छथ ॥ १० ॥

केन–" सामादीनामुपायानां त्रयाणां विफले नये । विनयेन्नयसम्पन्नो दण्डं दण्ड्येषु दण्डभृत् ॥" इति । तथा च नायं दण्डस्य काल इत्युक्तम् ॥ ८ ॥ न केवलं दण्डस्याकालिकत्वम्, दण्डचत्वं च ते शत्रोर्नास्तीत्यभिप्रायेणाह–प्रमत्तेष्विति । प्रमत्तेषु अनवधानेषु, विषयासक्तेष्वित्यर्थः । अभियुक्तेषु ज्ञानिषु, विरक्तेष्विति यावत् । यद्वा सामन्तैराक्रान्तेषु । दैवेन भाग्येन । प्रहतेषु क्षीयमाणसम्पत्स्वित्यर्थः । चकाराद्बालवृद्धादिषु । विधिना नीतिशास्त्रोक्तरीत्या । परीक्ष्य मन्त्रिभिर्विचार्य । कृताः विक्रमाः विग्रहाः सिद्ध्यन्ति, नान्यत्रेत्यर्थः । यथाऽऽह कामन्दकः–" बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः । भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा । विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् । अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः । दैवोपहतकश्चैव दैवचिन्तक एव च । दुर्भिक्षव्यसनोपेतो बलव्यसनसंयुतः । अदेशस्थो बहुरिपुर्युक्तोऽकालेन यश्च सः । सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी । एतैः सन्धिं न कुर्वीत विगृह्णीयात्तु केवलम् ॥" इति ॥ ९ ॥ रामस्तु न तादृश इत्याह–अप्रमत्तमिति । अप्रमत्तं



समुत्पत्य उत्थाय ॥१–७॥ अपीति । त्रिभिरप्युपायैः सामदानभेदैः । तस्य अर्थस्य प्राप्तय इति विपरिणामः । विक्रमकालान् दण्डकालान् । तान् प्रसिद्धान् । उक्तान् शास्त्रचोदितान् ॥८॥ तानेव कालानाह–प्रमत्तेष्वित्यादि । प्रमत्तेषु अनवहितेषु । अभियुक्तेषु शत्रुभिराक्रान्तेषु । दैवेन प्रहतेषु दैवोपहतेषु । विधिना शास्त्ररीत्या ॥९॥ प्रमादादिदोषराहित्यं रामे दर्शयति–अप्रमत्तमिति । जितरोषमित्यनेन पापाभावात् दैवोपहतत्वाभाव उक्तः । इतरविशेषणत्रयेण अन्योपरुद्धत्वाभावः । राक्षसा

सावधानम् । तुशब्दोऽवधारणे । बले स्थितं स्थिरबलमित्यर्थः । जितरोषम् अकाले रोषरहितमित्यर्थः । इच्छथेति पूर्वं रावणं प्रति वचनम्, अत्र सर्वान् प्रतीति बहुवचनम् ॥ १० ॥ राम इदानीं देवानुपहत इत्यत्र उदाहरणमाह—समुद्रमिति । स्पष्टम् ॥ ११ ॥ बलानीति । परेषां रामादीनाम् ॥ १२ ॥ अनपराधिनि निष्कारणवैरकरणमप्यपरमनुचितमित्याह—किं चेत्यादि ॥ १३ ॥ रामानु०—किं चेत्यस्य किमिति पदच्छेदः । किन्तु राक्षसराजस्येति वा पाठः ॥ १३ ॥ खरवध एव प्रथमापराध इत्याशङ्क्याह—खर इति । दुर्वृत्ततया स्ववधप्रवृत्तखरवधे रामस्य नापकारगन्धोऽपीति भावः । निहतो यदि,

समुद्रं लङ्घयित्वा तु घोरं नदनदीपतिम् । कृतं हनुमता कर्म दुष्करं तर्कयेत वा ॥ ११ ॥ बलान्यपरिमेयानि वीर्याणि च निशाचराः । परेषां सहसाऽवज्ञा न कर्तव्या कथंचन ॥१२॥ किं च राक्षसराजस्य रामेणापकृतं पुरा । आजहार जनस्थानाद्यस्य भार्यां यशस्विनः ॥ १३ ॥ खरो यद्यतिवृत्तस्तु रामेण निहतो रणे । अवश्यं प्राणिनां प्राणा रक्षितव्या यथाबलम् ॥ १४ ॥ अयशस्यमनायुष्यं परदाराभिमर्शनम् । अर्थक्षयकरं घोरं पापस्य च पुनर्भवम् ॥ १५ ॥ एतन्निमित्तं वैदेह्या भयं नः सुमहद्भवेत् । आहृता सा परित्याज्या कलहार्थे कृतेन किम् ॥ १६ ॥

तत्र को दोष इति शेषः । दोषाभावमाह—अवश्यमिति ॥ १४ ॥ प्रथमं रामेणापकृतत्वेऽप्यनेकदोषमूलं सीतापहरणं न कार्यमित्याह—अयशस्यमिति । पुनर्भवं जन्मान्तरम्, मृत्यन्तरमिति यावत् ॥ १५ ॥ एवं सामान्यतः परदाराभिमर्शनस्यानर्थहेतुत्वमुक्त्वा प्रकृते तद्दर्शयति—एतदिति । एतस्मान्निमित्तादित्यर्थः । "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति पञ्चम्यर्थे प्रथमा । अयशस्यत्वादिहेतोर्वैदेह्याः सकाशात्सुमहद्भयं भवेत् । तर्हि किमिदानीं कर्तव्यम् ? तत्राह—आहृतेति । उत्तमं वस्तु कथं त्यक्तव्यम् ? तत्राह कलहार्थे कृतेन किमिति । कलहार्थे विषये कृतेन कर्मणा किमित्यर्थः । "अर्थाभिमुख्येन इच्छथेत्युक्तिः । अत एवोपरि निशाचरा इति सम्बोधनम् ॥ १० ॥ समुद्रमित्यादि श्लोकद्वयमेकं वाक्यम् । 'कृतं हनुमता कर्म दुष्करं तर्कयेत वा' इति पाठः । को वा तर्कयेतेत्यर्थः । बलान्यपरिमेयानि, कृतानीति शेषः ॥११॥१२॥ किंचेत्यादि श्लोकद्वयमेकं वाक्यम् । किंचेत्यत्र किमिति छेदः । खरदूषणादिवधाद्रामस्य पूर्वापकारित्वमाशङ्क्य परिहरति—खर इति । यस्मात्तस्मादित्यध्याहार्यम् । यस्मादवश्यं प्राणिनां प्राणा रक्षितव्याः तस्मादतिवृत्तः । स्वयमेव रामं हन्तुं प्रवृत्तः खरस्तु निहतो यदि, एतावता रामेण पुरा राक्षसराजस्य किमपकृतम् ? नापकृतमित्यर्थः ॥ १३ ॥ १४ ॥ अयशस्यमित्यादि श्लोकद्वयम् । परदाराभिमर्शनम् अयशस्यादिरूपं पुनस्तदुपरि पापस्य च भवम् उत्पत्तिस्थानम् । एतन्निमित्तम् एतस्मात्कारणात् आहृता वैदेही नो भयं भयनिमित्तम् । वैदेही भयमिति पाठः ।

स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने। व्यवहारे धने शास्त्रवस्तुहेतुनिवृत्तिषु॥" इति वैजयन्ती॥ १६॥ बहुदोषप्रदर्शनपूर्वकं सीताप्रदानस्यावश्य कर्तव्यतामाह—न नः क्षममित्यादिना॥ १७॥ यावद्दारयते दारयिष्यति। "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट्। राम इति शेषः॥१८॥

न नः क्षमं वीर्यवता तेन धर्मानुवर्तिना। वैरं निरर्थकं कर्तुं दीयतामस्य मैथिली॥ १७॥ यावन्न सगजां साश्वां बहुरत्नसमाकुलाम्। पुरीं दारयते बाणैर्दीयतामस्य मैथिली॥ १८॥ यावत् सुघोरा महती दुर्धर्षा हरिवाहिनी। नावस्कन्दति नो लङ्कां तावत्सीता प्रदीयताम्॥ १९॥ विनश्येद्धि पुरी लङ्का शूराः सर्वे च राक्षसाः। रामस्य दयिता पत्नी स्वयं न यदि दीयते॥२०॥ प्रसादये त्वां बन्धुत्वात्कुरुष्व वचनं मम। हितं पथ्यमहं ब्रूमि दीयतामस्य मैथिली॥ २१॥ पुरा शरत्सूर्यमरीचिसन्निभान् नवाग्रपुङ्खान् सुदृढान्नृपात्मजः। सृजत्यमोघान् विशिखान् वधाय ते प्रदीयतां दाशरथाय मैथिली॥ २२॥ त्यज स्वकोपं सुखधर्मनाशनं भजस्व धर्मं रतिकीर्तिवर्द्धनम्। प्रसीद जीवेम सपुत्रबान्धवाः प्रदीयतां दाशरथाय मैथिली॥ २३॥ विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः। विसर्जयित्वा तान् सर्वान् प्रविवेश स्वकं गृहम्॥ २४॥ इत्यार्षे श्रीरामायणे॰ श्रीमद्युद्धकाण्डे नवमः सर्गः॥ ९॥

यावत् यदा। तावत्तदा। नावस्कन्दति न रुणद्धि॥ १९॥ शूरा इति। विनश्येयुरिति व्यत्ययेन योजनीयम्। स्वयं न यदि दीयत इति पाठः॥ २०॥ ब्रूमि ब्रवीमि। अस्य अस्मै॥ २१॥ अग्रं शल्यम्, पुङ्खं शरमूलम्, नवे अग्रपुङ्खे येषां ते। अत एव सुदृढान् पुरा सृजति स्रक्ष्यति। दशरथस्यायं दाशरथः। "तस्येदम्" इति सम्बन्धार्थे अण्। सम्बन्धश्चात्र पुत्रत्वम्। दाशरथाय दाशरथये॥ २२॥ रतिः सुखम्॥ २३॥ विभीषणेति। सर्वं प्रातरालोचयिष्याम इति विभीषणप्रमुखान् विसृज्येत्यर्थः॥२४॥ इति श्रीगोविन्द॰ श्रीरामा॰रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने नवमः सर्गः॥९॥



अतः सा परित्याज्या। कलहार्थे कलहप्रयोजनविषये कृतेन, कर्मणेति शेषः। किमिति योजना॥ १५॥ १६॥ अस्य अस्मै॥ १७॥ यावद्दारयते दारयिष्यति "यावत्पुरा—"इत्यादिना भविष्यदर्थे लट्। तावत् दीयताम्॥ १८॥ नावस्कन्दति नारोक्ष्यति॥ १९॥ २०॥ ब्रूमि ब्रवीमि॥२१॥ पुरा सृजति स्रक्ष्यति। नवाग्रपुङ्खान् नवानि अग्राणि पुङ्खाश्च येषां तान्॥ २२–२४॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां नवमः सर्गः॥ ९॥

अथ हितपरो विभीषणः सत्त्वोत्तरकाले रावणस्योपदेष्टुं तद्गृहं गत इत्याह—तत इत्यादि, प्रविवेश महाद्युतिरित्यन्तमेकं वाक्यम् । ततः प्रत्युषसी त्यनेन लङ्कादाहानन्तरमेकमहो गतमित्यवगम्यते । प्राप्तधर्मार्थनिश्चयः सीताप्रदानमेवास्माकं धर्मोऽर्थश्चेति कृतनिश्चयः । भीमकर्मा परमार्थतो रावणस्य हितत्वेऽप्यनभिमतार्थविज्ञापनरूपसाहसकरणात् भीमकर्मेत्युक्तिः । राक्षसाधिपतेः अग्रजस्य । आलयं निवासभूतं वेश्म प्रविवेशेति सम्बन्धः ॥ १ ॥ शैलाग्रचयसङ्काशं गिरिशिखरचयसदृशम् । अनेकशृङ्गयुक्तत्वादिति भावः । शैलशृङ्गमिवोन्नतमित्यौन्नत्ये दृष्टान्तः । सुविभक्तमहाकक्ष्यं सुष्ठु

ततः प्रत्युषसि प्राप्ते प्राप्तधर्मार्थनिश्चयः । राक्षसाधिपतेर्वेश्म भीमकर्मा विभीषणः ॥ १ ॥ शैलाग्रचयसङ्काशं शैलशृङ्गमिवोन्नतम् । सुविभक्तमहाकक्ष्यं महाजनपरिग्रहम् ॥ २ ॥ मतिमद्भिर्महामात्रैरनुरक्तैरधिष्ठितम् । राक्षसैश्चाप्तपर्याप्तैः सर्वतः परिरक्षितम् ॥ ३ ॥ मत्तमातङ्गनिश्वासैर्व्याकुलीकृतमारुतम् । शङ्खघोषमहाघोषं तूर्यनादानुनादितम् ॥ ४ ॥ प्रमदाजनसम्बाधं प्रजल्पितमहापथम् । तप्तकाञ्चननिर्यूहं भूषणोत्तमभूषितम् ॥ ५॥ गन्धर्वाणामिवावासमालयं मरुतामिव । रत्नसञ्चयसम्बाधं भवनं भोगिनामिव ॥ ६ ॥

विभक्तमहाप्रकोष्ठम् । " कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने " इत्यमरः । महाजनैः विद्वद्भिः परिगृह्यत इति महाजनपरिग्रहम् । तदधिष्ठितमित्यर्थः ॥ २ ॥ महामात्रैः प्रधानैः । " महामात्राः प्रधानाः स्युः " इत्यमरः । आप्तपर्याप्तैः कार्यकरणदक्षैरिति महामात्रविशेषणम् ॥३॥ व्याकुलीकृतमारुतं चक्रवातीकृतवायुम् । शङ्खघोषमहाघोषं शङ्खघोषेण महान् घोषो यस्य तथोक्तम् । तूर्यनादानुनादितं तूर्यनादेन सञ्जातप्रतिध्वनिम् ॥ ४ ॥ प्रजल्पितमहापथं सञ्जातमहाकलकलमहामार्गम् । तप्तकाञ्चननिर्यूहं द्रुतकनकमयमत्तवारणम् । " निर्यूहो मत्तवारणः " इत्यमरः । भूषणोत्तमैः तोरणवितानप्रभृतिभिर्भूषितम् ॥ ५ ॥ गन्धर्वाणामिवावासम्, तौर्यत्रिकमुखरितत्वादिति भावः । मरुतां देवानाम् आलयमिव, निरवधिकैश्वर्यसम्पन्नत्वादिति

तत इत्यादि श्लोकसप्तकमेकं वाक्यम् । प्राप्तधर्मार्थनिश्चयः प्राप्तो धर्मार्थनिश्चयो येन सः । राक्षसाधिपतेर्वेश्म प्रविवेश विभीषणः इति पाठे तूत्तरषट्कस्यैतत्प्रपञ्चार्थत्वात् अग्रजस्यालयं वीरः प्रविवेश महाद्युतिरित्यनेनापौनरुक्त्यम् । राक्षसाधिपतेर्वेश्म भीमकर्मा विभीषणः इति पाठे राक्षसाधिपतेरग्रजस्यालयं नित्यनिवासभूतं वेश्मेत्यन्वयः । अस्मिन् पाठे तु वेश्मालययोरपौनरुक्त्यम् । " आकेशग्रहणान्मित्रमहितेभ्यो निवारयेत् " इति न्यायेन सर्वात्मना हितमेव वक्तव्यमित्यभिप्रेत्य रावणानभिमतहितोपदेशे प्रवृत्तत्वाद्भीमकर्मेत्युक्तिः । शैलाग्रचयसङ्काशं बहुभिः स्वशिखरैः गिरिनिकरसन्निकाशमित्यर्थः । महामात्रैः प्रधानपुरुषैः । आप्तपर्याप्तैः

भावः । रत्नसञ्चयैः सम्बाधं सम्पूर्णम् । अत एव भोगिनां सर्पाणां भवनमिव स्थितम् ॥ ६ ॥ तेजोविस्तृतरश्मिवान् तेजः शरीरकान्तिस्तदेव विस्तृत रश्मिरस्यास्तीति तथा । महाद्युतिः महाप्रभः । अभ्रमिवेत्युपमया तद्भवनं विभीषणस्य तेजोपहारकमिति व्यज्यते । एवं गृहोत्कर्षवर्णनं रावणस्य अनीत्या सर्वमेकपदे नष्टमिति ज्ञापनाय ॥ ७ ॥ पुण्यान् पुण्यकरान् । पुण्याहघोषान् पुण्याहमन्त्रघोषान् । विजयसंश्रितान् विजयफलकानित्यर्थः ।

तं महाभ्रमिवादित्यस्तेजोविस्तृतरश्मि(मा)वान् । अग्रजस्यालयं वीरः प्रविवेश महाद्युतिः ॥ ७ ॥ पुण्यान् पुण्याह घोषांश्च वेदविद्भिरुदाहृतान् । शुश्राव सुमहातेजा भ्रातुर्विजयसंश्रितान् ॥ ८ ॥ पूजितान् दधिपात्रैश्च सर्पिर्भिः सुमनोक्षतैः । मन्त्रवेदविदो विप्रान् ददर्श सुमहाबलः ॥ ९ ॥ स पूज्यमानो रक्षोभिर्दीप्यमानः स्वतेजसा । आसनस्थं महाबाहुर्ववन्दे धनदानुजम् ॥ १० ॥ स राजदृष्टिसम्पन्नमासनं हेमभूषितम् । जगाम समुदाचारं प्रयुज्याचारकोविदः ॥ ११ ॥ स रावणं महात्मानं विजने मन्त्रिसन्निधौ । उवाच हितमत्यर्थं वचनं हेतुनिश्चितम् ॥ १२ ॥

उदाहृतान् उच्चारितान् ॥ ८ ॥ दधिपात्रैः दधियुक्तपात्रैः । मन्त्रवेदविदः मन्त्रब्राह्मणविदः । मन्त्राः कर्मसु विनियुक्ताः "इषे त्वा" इत्यादयः । कर्मचोदना ब्राह्मणानि ॥ ९ ॥ पूज्यमानः श्लाघ्यमानः ॥ १० ॥ दृष्टिसम्पन्नं दृष्ट्या निवेदितमित्यर्थः । समुदाचारं जयशब्दप्रयोगादिसमुदाचारम् । जगाम आरुरोह ॥ ११ ॥ विजने मन्त्रिव्यतिरिक्तजनरहिते । हेतुनिश्चितं हेतुभिर्युक्तिभिर्निश्चितम् ॥ १२ ॥

आप्तैः हितैः पर्याप्तैः कार्यनिर्वहणसमर्थैः । निर्यूहो द्वारम् । "निर्यूहश्शिखरे द्वारे" इति विश्वः । गन्धर्वागारमिवालयं तौर्यत्रिकसुखरितत्वात् । आलयं मरुतामिव ऐश्वर्यातिशयात् । भवनं भोगिनामिव परैः प्रवेष्टुमशक्यत्वाच्च । आलयापेक्षया तमित्युक्तिः । तेजोविस्तृतरश्मिवान् तेजः स्वशरीरस्थं तेन विस्तृता विसृता विश्रुता वा रश्मयो यस्य । अनेन पाठत्रयं सूचितम् ॥ १–७ ॥ पुण्यानिति । विजयसंश्रितान् विजयमुद्दिश्य प्रवृत्तान् ॥८॥ पूजितांस्ति लपात्रैश्चेति पाठः । तिलपात्रैः दान विशेषैः । सर्पिर्भिः आज्यावेक्षणदानैः । मन्त्रवेदाविदः मन्त्रब्राह्मणविदः,कर्मणि विनियुक्तो वेदभागो मन्त्रः, कर्मचोदना ब्राह्मणानि ॥९॥१०॥ राजदृष्टिसम्पन्नं राजदृष्ट्येक्षितम् । समुदाचारं प्रयुज्य विजयप्रयोगादिविनयप्रकाशकाचारं कृत्वा ॥ ११ ॥ स रावणमित्यादि श्लोकद्वयमेकं वाक्यम् । हेतुनिश्चितं युक्तिनिश्चितार्थम् ।

प्रसाद्य स्तुतिवचनेन प्रसन्नं कृत्वा सान्त्वेनोपस्थितक्रमः । उपस्थितक्रमः ज्ञातक्रमः । देशकालार्थसंवादी देशकालप्रयोजनानुसारी । दृष्टलोकपरावरः लोके ये परावरे उत्कृष्टापकृष्टे ते दृष्टे ज्ञाते येन तथोक्तः, रामस्य धार्मिकत्वं रावणस्याधार्मिकत्वं च जानातीत्यर्थः ॥ १३ ॥ प्रथमं रावणसंवादाय दुर्निमित्तानि दर्शयति—यदेति । यदाप्रभृति यत्कालमारभ्य । क्रियाविशेषणमिदम् । एवं तदाप्रभृतीत्यपि । अशुभानि निमित्तानि अशुभसूचकनिमित्तानि ॥ १४ ॥ सस्फुलिङ्गः अग्निकणसहितः । सधूमार्चिः धूमाकुलज्वालासहितः । सधूमकलुषोदयः धूमेन कलुषः उदयः आवि



प्रसाद्य भ्रातरं ज्येष्ठं सान्त्वेनोपस्थितक्रमः । देशकालार्थसंवादी दृष्टलोकपरावरः ॥ १३ ॥
यदाप्रभृति वैदेही सम्प्राप्तेमां पुरीं तव । तदाप्रभृति दृश्यन्ते निमित्तान्यशुभानि नः ॥ १४ ॥
सस्फुलिङ्गः सधूमार्चिः सधूमकलुषोदयः । मन्त्रसन्धुक्षितोऽप्यग्निर्न सम्यगभिवर्धते ॥ १५ ॥
अग्निष्ठेष्वग्निशालासु तथा ब्रह्मस्थलीषु च । सरीसृपाणि दृश्यन्ते हव्येषु च पिपीलिकाः ॥ १६ ॥
गवां पयांसि स्कन्नानि विमदा वीरकुञ्जराः । दीनमश्वाः प्रहेषन्ते न च ग्रासाभिनन्दिनः ॥ १७ ॥

र्भावो धूमकलुषोदयः, तेन सहितः सधूमकलुषोदयः, । शान्तः शान्तो ज्वलन्नित्यर्थः । मन्त्रसन्धुक्षितः मन्त्रवद्भिर्हविर्भिर्योजितः ॥ १५ ॥ अग्नयस्तिष्ठन्त्यत्रेत्यग्निष्ठाः महानसाः तेषु । अग्निशालासु अग्निहोत्रशालासु । ब्रह्मस्थलीषु वेदाध्ययनस्थानेषु । सरीसृपाणि सर्पाः । लिङ्गव्यत्यय आर्षः । हविष्येषु देवताभ्यो देयेषु आज्यपुरोडाशादिषु ॥१६॥ स्कन्नानि शुष्काणि "स्कन्दिर् गतिशोषणयोः" इति धातोर्निष्ठा । "रदाभ्यां निष्ठातो नः पूर्वस्य च दः"

उपस्थितक्रमः अनुष्ठितवन्दनादिक्रियाक्रमः । देशकालार्थसंवादी देशकालप्राप्यमत्प्रयोजनसंवादीत्यर्थः । दृष्टलोकपरावरः भावप्रधानोऽयं निर्देशः । दृष्टं लोकस्य परत्वमुत्कृष्टत्वम् अवरत्वमपकृष्टत्वं च येन सः ॥ १२–१४ ॥ सस्फुलिङ्ग इति । सधूमकलुषोदयः धूमकलुषस्य उदय आविर्भावो धूमकलुषोदयः तेन सहितस्तथा । मन्त्रसन्धुक्षितः मन्त्रवद्भिर्हविर्भिर्योजितः ॥ १५ ॥ अग्निस्तिष्ठन्त्येष्विति अग्निष्ठाः महानसाः तेषु । अग्निशालासु अग्निहोत्रशालासु । ब्रह्मस्थलीषु ब्रह्म वेदः तस्य स्थलीषु, वेदाध्ययनस्थानेष्वित्यर्थः । सरीसृपाणि सर्पाः, लिङ्गव्यत्यय आर्षः ॥ १६ ॥ स्कन्नानि गालेनानि । यद्वा स्कन्नानि शुष्काणि "स्कन्दिर् गतिशोषणयोः",

स०—मन्त्रसञ्चहुतोऽप्यग्निरिति पाठः । मन्त्रसञ्चहुतः विहितमन्त्रसमूहहुतोऽप्यग्निः सधूमार्चिः सस्फुलिङ्गः सधूमकलुषोदयः । मन्त्रसञ्चहुत इत्यनेन कर्त्रादिवैगुण्यनिमित्तो नाग्नेरयं भावः किन्तु नोऽनर्थसूचक इति सूचयति ॥ १५ ॥

इति नत्वम् । वीरकुञ्जराः मत्तगजाः । प्रद्वेषन्ते हेषारवं कुर्वन्ति । ह्वेषा अश्वशब्दः ॥ १७ ॥ अश्वतरा महाखराः । भिन्नरोमाः स्वस्थानात् भिन्नरोमाणः गलितरोमाणः ऊर्ध्वरोमाणो वा । अकारान्तत्वमार्षम् । स्रवन्ति अश्रूणि मुञ्चन्ति । विधानैः चिकित्साभिः । चिन्तिताः अनुसंहिताः, चिकित्सिता अपीत्यर्थः । स्वभावे प्रकृतौ । नावतिष्ठन्ते प्रकृतिस्था न भवन्तीत्यर्थः ॥ १८ ॥ वायसा इति । सङ्घशो व्याहरन्ति सङ्घशः समवेता इति च

खरोष्ट्राश्वतरा राजन् भिन्नरोमाः स्रवन्ति नः । न स्वभावेऽवतिष्ठन्ते विधानैरपि चिन्तिताः ॥ १८ ॥ वायसाः सङ्घशः क्रूरा व्याहरन्ति समन्ततः । समवेताश्च दृश्यन्ते विमानाग्रेषु सङ्घशः ॥ १९ ॥ गृध्राश्च परिलीयन्ते पुरीमुपरि पिण्डिताः । उपपन्नाश्च सन्ध्ये द्वे व्याहरन्त्यशिवं शिवाः ॥ २० ॥ क्रव्यादानां मृगाणां च पुरद्वारेषु सङ्घशः । श्रूयन्ते विपुला घोषाः सविस्फूर्जथुनिस्वनाः ॥ २१ ॥ तदेवं प्रस्तुते कार्ये प्रायश्चित्तमिदं क्षमम् । रोचते यदि वैदेही राघवाय प्रदीयताम् ॥ २२ ॥

सम्बन्धः ॥ १९ ॥ पुरीमुपरि उपर्युपरि गृहेष्वित्यर्थः । पिण्डिताः मण्डलीभूताः सन्तः । परिलीयन्ते श्लिष्यन्ति । सन्ध्ये द्वे, अत्यन्तसंयोगे द्वितीया । शिवाः जम्बुकाः । उपपन्नाः नगरसमीपं प्राप्ताः ॥ २० ॥ क्रव्यादानां मांसभक्षकाणाम् । मृगाणां श्वादीनामित्यर्थः । सविस्फूर्जथुनिस्वनाः विस्फूर्जथुः अशनिघोषः । तद्रूपस्वनसहिताः ॥ २१ ॥ एवमुपस्थितदुर्निमित्तजातस्य प्रायश्चित्तं सीताप्रदानमेवेत्याह—तदेवमिति । तत् दुर्निमित्तदर्शनात्

इति धातोर्निष्ठा ॥ १७ ॥ भिन्नरोमाः ऊर्ध्वरोमाणः । अकारान्तत्वमार्षम् । स्रवन्ति मुञ्चन्ति, अश्रूणीति शेषः । विधानैः चिकित्साशास्त्रोक्तप्रकारैः चिन्तिताः चिकित्सिता अपि स्वभावेन यथापूर्वं न तिष्ठन्ति ॥ १८ ॥ १९ ॥ पुरीमुपरि पुर्या उपरि । पिण्डिताः मिलिताः । परिलीयन्ते पतन्ति । उपपन्नाः समीपं प्राप्ताः । सन्ध्ये द्वे सन्ध्ययोर्द्वयोः ॥ २० ॥ सविस्फूर्जथुनिस्वनाः विस्फूर्जथुरशनिः तन्निस्वनेन सहिताः ॥ २१ ॥ उक्तस्य दुर्निमित्तस्य प्रायश्चित्तमाह—तदिति । एवं प्रस्तुते संप्राप्ते अकार्ये अनर्थसूचकनिमित्ते जाते इदं वक्ष्यमाणम् क्षमं समर्थम् प्रायश्चित्तं मम मह्यं रोचते । वीरेति पाठे—मह्यमिति शेषः । प्रायश्चित्तमेवाह वैदेहीति ॥ २२ ॥

स०—वायसाः समन्ततो व्याहरन्ति । ते च साधारणाः केचनेत्याह—क्रूराः सङ्घश इति । न केवलं व्याहरन्ति किन्तु सङ्घशः विमानाग्रेषु समवेताश्च दृश्यन्ते । रामरामास्पर्शमात्रमाहात्म्येनास्मन्नेत्रशातनं जातं त्वं च जागृहीति सूचयितुम्, अदाने च माव्यनर्थं सूचयितुं चैवमिति भावः ॥ १९ ॥

तत्सूच्ये कार्ये पराजये। एवं लङ्कादहनादिरूपेण प्रस्तुते प्रसक्ते सति । क्षमम् अशुभनिवारणसमर्थम् इदं प्रायश्चित्तम् । इदंशब्दार्थमाह–वैदेहीति ॥ २२ ॥ एवमनभिमतभाषणेन राजा कुप्यतीति समाधत्ते–इदमिति । मोहात् कार्यतत्त्वापरिज्ञानात् । लोभात् जीवनलोभाद्वाऽपि । यदि व्याहृतम् । तत्रापि तथापि । मयि दोषम् अपराधं कर्तुं नार्हसि ॥ २३ ॥ अयं दोषः पूर्वोक्तदुर्निमित्तसूचितोऽनर्थः । सर्वस्योपलक्ष्यते । संबन्धसामान्ये षष्ठी ।



इदं च यदि वा मोहाल्लोभाद्वा व्याहृतं मया । तत्रापि च महाराज न दोषं कर्तुमर्हसि ॥२३॥ अयं च दोषः सर्वस्य जनस्यास्योपलक्ष्यते । रक्षसां राक्षसीनां च पुरस्यान्तःपुरस्य च ॥ २४ ॥ श्रावणे चास्य मन्त्रस्य निवृत्ताः सर्व मन्त्रिणः । अवश्यं च मया वाच्यं यद्दृष्टमपि वा श्रुतम् ॥ २५ ॥ सम्प्रधार्य यथान्यायं तद्भवान् कर्तुमर्हति ॥२६॥ इति स्म मन्त्रिणां मध्ये भ्राता भ्रातरमूचिवान् । रावण राक्षसश्रेष्ठं पथ्यमेतद्विभीषणः ॥ २७ ॥ हितं महार्थं मृदु हेतुसंहितं व्यतीतकालायतिसम्प्रतिक्षमम् । निशम्य तद्वाक्यमुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत् ॥ २८ ॥

सर्वेणापि लक्ष्यत इत्यर्थः ॥ २४ ॥ प्रहस्तादिषु विद्यमानेषु भवतैव किमुच्यते तत्राह–श्रावणे चेति । तेषां त्वच्चित्तमात्रानुसारित्वादिति भावः । श्रावणे त्वां प्रति विज्ञापने च । त्वं पुनः कथं वक्तुं प्रगल्भसे तत्राह–अवश्यमिति । भ्रातृत्वादिति भावः ॥ २५ ॥ सम्प्रधार्येत्यर्धम् । यथान्यायं यथायोग्यम् । संप्रधार्य मनस्येव निश्चित्य । तत् संप्रधारितं कार्यम् ॥ २६ ॥ इत्येतदूचिवानित्यन्वयः । ऊचिवान् उक्तवान् । "क्वसुश्च" इति लिटः क्वस्वादेशः ॥ २७ ॥ महार्थं प्रयोजनव्याप्तम् । मृदु सान्त्वपूर्वम् । हेतुसंहितं युक्तियुक्तम् । व्यतीतकालायतिसंप्रतिक्षमं व्यतीतकालः भूतकालः, आयतिः भविष्यत्कालः, संप्रति वर्तमानकालः तत्र क्षमम् । अकीर्तिनाशकत्वेन सीतापहरणप्रायश्चित्तत्वेन वाऽप्यतीतकालक्षमम् । सुखवर्धकत्वेन वर्तमानकालक्षमम् । धर्मावहत्वेनायतिक्षमम् । उपस्थितज्वरः प्राप्तक्रोध इत्यर्थः । प्रसङ्गवान् परिगृहीतार्थेऽभिनिवेशवान् ॥ २८ ॥

मोहात् कार्यतत्त्वापरिज्ञानात् । लोभात् जीवनलोभाद्वा यदि व्याहृतम् तत्रापि तथापि मयि दोषमपराधम् ॥ २३ ॥ अविद्यमानदुर्निमित्तमुक्त्वा किमर्थं भीषयसे इत्याशङ्क्याह–अयमिति । अयं दोषः पूर्वोक्तदुर्निमित्तरूपः । सर्वस्येत्यादिषु तृतीयार्थे षष्ठी । सर्वस्य जनस्योपलक्ष्यते सर्वैर्जनैर्दृश्यत इत्यर्थः ॥ २४ ॥ अयं दोषस्तर्ह्यन्यैर्मन्त्रिभिः किमिति न निवेद्यत इत्याशङ्क्य त्वद्भयात् श्रावयन्तीत्याह–श्रावणे चेति ॥ २५–२७ ॥ हितमिति । व्यतीतकालायतिसम्प्रतिक्षमं व्यतीत

भयं भयजनकं पुरुषम् । रामो युद्धेन सीतां प्राप्स्यतीति पूर्वं विभाषणोक्तस्य परिहारमाह–सुरैरिति । कथं (तिष्ठति) स्थास्यति ? स्थातुमेव न शक्तः कुतो योत्स्यति, कुतस्तरां सीतां प्राप्स्यतीति भावः ॥ २९ ॥ राघवं तृणीकृत्य कथमेवमाहेत्याशङ्क्य तन्निदानं दर्शयति–इतीति । नाशनः हिंसकः । चण्डविक्रमः उग्रविक्रमः । आप्तवादिनं युक्तवादिनम् ॥३०॥इति श्रीगोविन्द० श्रीरामायण०रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने दशमः सर्गः ॥१०॥

भयं न पश्यामि कुतश्चिदप्यहं न राघवः प्राप्स्यति जातु मैथिलीम् । सुरैः सहेन्द्रैरपि सङ्गतः कथं ममाग्रतः स्थास्यति लक्ष्मणाग्रजः ॥ २९ ॥ इतीदमुक्त्वा सुरसैन्यनाशनो महाबलः संयति चण्डविक्रमः । दशाननो भ्रातरमाप्तवादिनं विसर्जयामास तदा विभीषणम् ॥ ३० ॥ इत्यार्षे श्रीरामायणे० श्रीमद्युद्धकाण्डे दशमः सर्गः ॥१०॥

स बभूव कृशो राजा मैथिलीकाममोहितः । असम्मानाच्च सुहृदां पापः पापेन कर्मणा ॥१॥ [ अतीव कामसंपन्नो वैदेहीमनुचिन्तयन् । ] अतीतसमये काले तस्मिन् वै युधि रावणः । अमात्यैश्च सुहृद्भिश्च मन्त्रकालममन्यत ॥ २ ॥

अथ परेद्युर्विभीषणाद्युपदेशेऽतिचिन्ताव्याकुलस्य रावणस्य निर्णयहेतुमन्त्रकरणाय सभाप्राप्तिं दर्शयति–स बभूवेत्यादि । पापः पापी । "गुणवचनेभ्यो मतुपो लुगिष्टः" इति मतुपो लुक् । असम्मानात् अनादरात् । सुहृदां विभीषणादीनाम् । कर्तरि षष्ठी । विभीषणोक्ते तूष्णीं स्थितत्वेन प्रहस्तादीनामप्यनादरः सिद्ध एव । पापेन कुत्सितेन सीतापहरणरूपेण कर्मणा । हेतौ तृतीया । मैथिलीकाममोहित इति हेतुगर्भविशेषणम् । तथा च मैथिलीविषयकाममोहात् सुहृदनादरात् पापहेतुसीताहरणाच्च कृशः । चिन्ताकुलो बभूवेत्यर्थः ॥ १ ॥ अतीतेति । तस्मिन् काले मन्त्रयोग्यकाले । अतीतसमये अतीतावसरे सति । युधि च सत्यां युद्धे च प्राप्ते सति । अमात्यैश्च सुहृद्भिश्च मन्त्रस्य प्राप्तकालममन्यत । मुनिहृदयं तु कालेऽतीतसमये

कालः भूतकालः । आयतिः उत्तरकालः । सम्प्रति वर्तमानकालः तत्र क्षमं योग्यम् । उपस्थितज्वरः प्राप्तक्रोधः । प्रसङ्गवान् प्रकृष्टोपसङ्गवान् स्वगृहीतार्थाभिनिवेशवानित्यर्थः ॥२८–३०॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां दशमः सर्गः ॥ १० ॥ स बभूवेति । असम्मानात् अनादरात् । सुहृदां विभीषणादीनाम् । पापेन कर्मणा पापहेतुभूतसीतापहरणेन । हेतौ तृतीया ॥ १ ॥ मन्त्रकालममन्यत मन्त्रकालं प्राप्तममन्यत

स०–अतीतसमये अतीतो भवति समयः द्वादशमासात्मकः सीताप्राप्तौ सङ्केतरूपो यस्मिंस्तस्मिन् काले । अनुचिन्तयन् तत्प्राप्तिमिति शेषः । युधि युद्धविषये अमात्यादिभिः सह प्राप्तकालं योग्यमालोचनमित्यमन्यत । युधि युद्धे । अतीतसमये विभीषणोक्तदिशा प्रतिबद्धे सति काले तत्काले मन्त्रणं प्राप्तकालं योग्यमित्यमन्यतेति वा ॥ २ ॥

रावणायुःकालेऽतीते सति । युधि अमात्यादिभिः सह आत्मानं प्राप्तकालं प्राप्तमृत्युम् अमन्यतेति । वै प्रसिद्धौ ॥ २ ॥ हेमजालविततं स्वर्णमयगवाक्षव्याप्तम् । स्वर्णसमूहनिर्मितमिति वा । विनीताश्वं शिक्षिताश्वयुक्तम् । उपगम्य प्रदक्षिणीकृत्य ॥ ३ ॥ सभां मन्त्रशालाम् ॥ ४ ॥ चर्म खेटः ॥ ५ ॥

स हेमजालविततं मणिविद्रुमभूषितम् । उपगम्य विनीताश्वमारुरोह महारथम् ॥ ३ ॥ तमास्थाय रथश्रेष्ठं महामेघसमस्वनम् । प्रययौ राक्षसश्रेष्ठो दशग्रीवः सभां प्रति ॥ ४ ॥ असिचर्मधरा योधाः सर्वायुधधरास्तथा । राक्षसा राक्षसेन्द्रस्य पुरतः सम्प्रतस्थिरे ॥५॥ नानाविकृतवेषाश्च नानाभूषणभूषिताः । पार्श्वतः पृष्ठतश्चैनं परिवार्य ययुस्ततः ॥ ६ ॥ रथैश्चातिरथाः शीघ्रं मत्तैश्च वरवारणैः । अनूत्पेतुर्दशग्रीवमाक्रीडद्भिश्च वाजिभिः ॥ ७ ॥ गदापरिघहस्ताश्च शक्तितोमरपाणयः । परश्वधधराश्चान्ये तथाऽन्ये शूलपाणयः ॥ ८ ॥ ततस्तूर्यसहस्राणां सञ्जज्ञे निस्वनो महान् । तुमुलः शङ्खशब्दश्च सभां गच्छति रावणे ॥ ९ ॥ स नेमिघोषेण महान् सहसाऽभिविनादयन् । राजमार्गं श्रिया जुष्टं प्रतिपेदे महारथः ॥ १० ॥ विमलं चातपत्राणं प्रगृहीतमशोभत । पाण्डरं राक्षसेन्द्रस्य पूर्णस्ताराधिपो यथा ॥ ११ ॥ हेममञ्जरिगर्भे च शुद्धस्फटिकविग्रहे । चामरव्यजने चास्य रेजतुः सव्यदक्षिणे ॥ १२ ॥

ततः रावणालयात् । नानाविकृतवेषाः नानाविधतया विशिष्य कृतालङ्काराः, राक्षसा इति शेषः ॥ ६ ॥ आक्रीडद्भिः धारामण्डलगमनादिकं कुर्वद्भिः ॥ ७ ॥ गदेति । अत्र प्रतिपदमन्य इत्यनुषञ्जनीयम् अनूत्पेतुरिति च ॥ ८ ॥ ततः स्वालयात् ॥ ९ ॥ नेमिः रथचक्रधारा ॥ १० ॥ विमलमिति । भासा विमलमित्यर्थः ॥ ११ ॥ हेममञ्जरिगर्भे हेमसूत्रगर्भे । इकारान्तत्वमार्षम् । शुद्धस्फटिकविग्रहे शुद्धस्फटिकसदृशाकारे । चामरव्यजने चामर

त्यर्थः । " अतीतसमये काले तस्मिन् वै युधि रावणः । अमात्यैश्च सुहृद्भिश्च प्राप्तकालममन्यत ॥" इति पाठे तु मन्त्रस्येति शेषः । तस्मिन् काले मन्त्रयोग्यकाले । अतीतसमये अतीतावसरे युधि च प्राप्ते सति अमात्यैः सुहृद्भिश्च मन्त्रस्य प्राप्तकालममन्यतेति योजना । वास्तवार्थे-स बभूवेत्यादि श्लोकद्वयमेकं वाक्यम् । अतीव कामसम्पन्नः अत एव पापेन कर्मणा । अथापि मैथिलीमनुचिन्त ·न, स्वेष्टदेवनात्वेनेति शेषः । अत एव मैथिलीकाममोहितः मैथिलीभृत्यो भविष्यामीति च सम्बन्धः । काममोहितः सुहृद्गामसम्मानाच्च कर्यो बभूव मन्त्रकालं प्राप्तमन्येतेति योजना ॥ २–६ ॥ रथैश्चेत्यादिश्लोकद्वयमेकं वाक्यम् । ॥ ७–१० ॥ आतपत्राणम् आतपत्रम् । हेममञ्जरिगर्भे हेममयपल्लवितलतागर्भे शुद्धस्फटिकसदृशाकारे चामरव्यजने चामरवालनिर्मिते च ते व्यजने च सव्यदक्षिणे

रूपव्यजने । सव्यदक्षिणे सव्यदक्षिणयोः । " सर्वो द्वन्द्वो विभाषयैकवद्भवति " इत्येकवद्भावः ॥ १२ ॥ त इति । स्पष्टम् ॥ १३ ॥ सुविहितां सुष्ठु निर्मिताम् ॥ १४ ॥ सुवर्णेत्यादिश्लोकद्वयमेकान्वयम् । विशुद्धस्फटिकान्तरां निर्मलस्फटिकानिर्मितमध्यप्रदेशाम् । रुक्मपट्टोत्तरच्छदां कनकमयपट्ट वस्त्रास्तरणाम् ॥ १५ ॥ १६ ॥ वैडूर्यमयं वैडूर्यप्रचुरम् । प्रियकाजिनसंवृतं प्रियकमृगस्याजिनेन संवृतम् । " प्रियको लोमभिर्युक्तो मृदूच्च

ते कृताञ्जलयः सर्वे रथस्थं पृथिवीस्थिताः । राक्षसा राक्षसश्रेष्ठं शिरोभिस्तं ववन्दिरे ॥ १३ ॥ राक्षसैः स्तूयमानः सन् जयाशीर्भिररिन्दमः । आससाद महातेजाः सभां सुविहितां शुभाम् ॥ १४ ॥ सुवर्णरजतस्थूणां विशुद्ध स्फटिकान्तराम् । विराजमानो वपुषा रुक्मपट्टोत्तरच्छदाम् ॥ १५ ॥ तां पिशाचशतैः षड्भिरभिगुप्तां सदा शुभाम् । प्रविवेश महातेजाः सुकृतां विश्वकर्मणा ॥ १६ ॥ तस्यां तु वैडूर्यमयं प्रियकाजिनसंवृतम् । महत् सोपाश्रयं भेजे रावणः परमासनम् ॥ १७ ॥ ततः शशासेश्वरवद् दूतान् लघुपराक्रमान् । समानयत मे क्षिप्रमिहैतान् राक्षसानिति ॥ १८ ॥ कृत्यमस्ति महज्जातं समर्थ्यमिह नो महत् ॥ १९ ॥

मसृणैर्घनैः" इति वैजयन्ती । सोपाश्रयं सावष्टम्भम्, सोपधानमिति यावत् ॥ १७ ॥ ईश्वरवत् राजार्हम् । इह सभायाम् एतान् एतन्नगरस्थान् । इति शशासेत्यन्वयः । तमेव प्रकारमाह—कृत्यमित्यर्धेन । महद्यथा तथा समर्थ्यं यत्नेन निर्वाह्यं जातं प्राप्तं महत्कृत्यमस्तीति शशास । महद्भ्यो रामादिभ्यो जातमिति वा । महदित्यनेन तदानीं चारमुखेन रामादेः समुद्रतीरगमनं रावणो ज्ञातवानिति गम्यते ॥ १८ ॥ १९ ॥ रामानु०—तत इति । ईश्वरवत् ईशानवत् । कृत्यमिति । एको महच्छब्दः क्रियाविशेषणम् । इह महज्जातं कृत्यमस्ति तत् महद् भूरि यथा तथा समर्थ्यं समर्थनीयम् । कर्मणि घञ् । समर्थ्यमिह नो भवेदिति वा पाठः । पूर्वश्लोकान्तस्थमितिकरणमत्र द्रष्टव्यम् । इति शशासेति संबन्धः । अनेन सैन्यस्य रामलक्ष्मणयोश्च समुद्रतीरगमनं चारमुखेन ज्ञातवानित्यवगम्यते ॥ १८ ॥ १९ ॥

सव्यदक्षिणपार्श्वयोरित्यर्थः ॥ ११–१३ ॥ राक्षसैरित्यादि श्लोकद्वयमेकं वाक्यम् । विरचितां, विश्वकर्मणेति शेषः । विशुद्धस्फटिकान्तरां शुद्धस्फटिकनिबद्धमध्य प्रदेशाम् । रुक्मपट्टोत्तरच्छदां रुक्मप्रचुरपट्टवस्त्रोत्तरच्छदाम् ॥ १४–१६ ॥ प्रियकाजिनसंवृतम् प्रियको मृगविशेषः तस्याजिनेन संवृतं सोपाश्रयं सावष्टम्भम्, सोपधानमिति यावत् ॥ १७ ॥ ततः शशासेत्यादिसार्धश्लोकमेकं वाक्यम् । एको महच्छब्दः क्रियाविशेषणम् । महद्यथा तथा समर्थ्यं शक्तेन निर्वाह्यं जातं

राक्षसा इत्यादिसार्धश्लोकः। विहरमाणानीति शेषः। विहारो विहारस्थलम्। विहारादिषु आस्थाय विहरमाणानि रक्षांसि। अभीतवत् अभीताः। चोदयन्तः चोदनार्थं लङ्कायामनुगेहं परिचक्रमुरित्यन्वयः ॥२०॥ ते रथान् रुचिरानेके हृतानेके पृथग्घयान्। नागानन्येऽधिरुरुहुर्जग्मुश्चैके पदातयः॥ इति पाठः। ॥ २१ ॥ रामानु०–त इति। रथान्तचराः रथमध्यस्थिताः। जग्मुरित्यर्थः। हयानित्यत्राप्यधिरुरुहुरिति संबध्यते। जग्मुरेके पदातयः केचित्पदातयः सन्तो जग्मुरितिं सम्बन्धः ॥ २१ ॥

राक्षसास्तद्वचः श्रुत्वा लङ्कायां परिचक्रमुः। अनुगेहमवस्थाय विहारशयनेषु च। उद्यानेषु च रक्षांसि चोदयन्तो ह्यभीतवत् ॥ २० ॥ ते रथान् रुचिरानेके हृतानेके पृथग्घयान्। नागानन्येऽधिरुरुहुर्जग्मुश्चैके पदातयः ॥ २१ ॥ सा पुरी परमाकीर्णा रथकुञ्जरवाजिभिः। सम्पतद्भिर्विरुरुचे गरुत्मद्भिरिवाम्बरम् ॥ २२ ॥ ते वाहनान्यवस्थाप्य यानानि विविधानि च। सभां पद्भिः प्रविविशुः सिंहा गिरिगुहामिव ॥ २३ ॥ राज्ञः पादौ गृहीत्वा तु राज्ञा ते प्रतिपूजिताः। पीठेष्वन्ये बृसीष्वन्ये भूमौ केचिदुपाविशन् ॥ २४ ॥ ते समेत्य सभायां वै राक्षसा राजशासनात्। यथार्हमुपतस्थुस्ते रावणं राक्षसाधिपम् ॥ २५ ॥ मन्त्रिणश्च यथा मुख्या निश्चयार्थेषु पण्डिताः। अमात्याश्च गुणोपेताः सर्वज्ञा बुद्धिदर्शनाः ॥ २६ ॥

गरुत्मद्भिः पक्षिभिः ॥ २२ ॥ वाहनानि शिबिकादीनि। यानानि अश्वादीनि। अवस्थाप्य बहिर्निक्षिप्य ॥ २३ ॥ अन्ये पुरोहितादयः। पीठेषु सुवर्णादिकृतासनेषु। अन्ये श्रोत्रियाः। बृसीषु दर्भमयासनेषु। केचित्पुत्रादयः। भूमौ सामान्यास्तरणमात्रयुक्तायां भूमौ ॥ २४ ॥ त इति। क्रियाभेदात्तच्छब्दद्वयम्। उपतस्थुः समीपे तस्थुः। यथार्हं यथाक्रमम् ॥ २५ ॥ मन्त्रिणश्चेत्यादिसपादश्लोकः। यथा यथाक्रमम्। यथामुख्या इत्येकं पदं वा। मुख्याननतिक्रम्य स्थिताः। अनव्ययत्वमार्षम्। निश्चयार्थेषु अर्थनिश्चयेषु। अमात्याः कर्मणि सहायाः। मन्त्रिणः बुद्धिसहायाः। यद्वा अमा सह तिष्ठन्तीत्य

प्राप्तं महत्कृत्यमस्ति अतो राक्षसान् समानयतेति दूतानीश्वरवच्छशासेति योजना। अनेन ससैन्यस्य सुग्रीवस्य रामलक्ष्मणयोश्च समुद्रतीरागमनं चारमुखेन ज्ञातवानित्यवगम्यते ॥ १८ ॥ १९ ॥ राक्षसा इत्यादिसार्धः। अवस्थाय, विहरमाणानीति शेषः। विहारशयनेषु उद्यानेषु च विहरमाणानि रक्षांसि अभीतवत् चोदयन्तः अभीता आह्वयन्तो लङ्कायामनुगेहं परिचक्रमुरित्यन्वयः ॥ २०–२५ ॥ मन्त्रिण इत्यादि सपादश्लोकमेकं वाक्यम्। यथा यथावत्। निश्चयार्थेषु अर्थ

मात्याः । "अन्ययात्यप्" । आप्ता इत्यर्थः । बुद्धिदर्शनाः बुद्धिचक्षुषः ॥ २६ ॥ शूरा इत्युत्तरशेषः । अन्यथा क्रियापदपौनरुक्त्यम् । सभाया मिति । सुखाय क्षेमाय । क्षेमं विचारयितुम् । "क्रियार्थोपपदस्य–" इत्यादिना चतुर्थी ॥ २७ ॥ तत इति । युग्या अश्वाः । युगं वहन्तीति "तद्वहति रथयुगप्रासङ्गम्" इति यत् ॥ २८ ॥ स इति । नाम शशंस । अभिवादनमकरोदित्यर्थः । शुकः प्रहस्तश्चेति । ववन्दाते इत्यर्थः ॥ २९ ॥

समेयुस्तत्र शतशः शूराश्च बहवस्तदा । सभायां हेमवर्णायां सर्वार्थस्य सुखाय वै । रम्यायां राक्षसेन्द्रस्य समेयुस्तत्र सङ्घशः । [ राक्षसा राक्षसश्रेष्ठं परिवार्योपतस्थिरे ] ॥ २७ ॥ ततो महात्मा विपुलं सुयुग्यं वरं रथं हेमविचित्रिताङ्गम् । शुभं समास्थाय ययौ यशस्वी विभीषणः संसदमग्रजस्य ॥ २८ ॥ स पूर्वजायावरजः शशंस नामाथ पश्चाच्चरणौ ववन्दे । शुकः प्रहस्तश्च तथैव तेभ्यो ददौ यथार्हं पृथगासनानि ॥ २९ ॥ सुवर्ण नानामणिभूषणानां सुवाससां संसदि राक्षसानाम् । तेषां परार्घ्यागरुचन्दनानां स्रजश्च गन्धाश्च ववुः समन्तात् ॥ ३० ॥ न चुक्रुशुर्नानृतमाह कश्चित् सभासदो नैव जजल्पुरुच्चैः । संसिद्धार्थाः सर्व एवोग्रवीर्या भर्तुः सर्वे ददृशु श्चाननं ते ॥ ३१ ॥ स रावणः शस्त्रभृतां मनस्विनां महाबलानां समितौ मनस्वी । तस्यां सभायां प्रभया चकाशे मध्ये वसूनामिव वज्रहस्तः ॥ ३२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये श्रीमद्युद्धकाण्डे एकादशः सर्गः ॥ ११ ॥

स्रजश्च गन्धाः स्रजां गन्धाः ॥ ३० ॥ न चुक्रुशुः न घोषं चक्रुः । न जजल्पुः न क्रमोक्तीश्चक्रुः । सभासदः सभागताः । संसिद्धेत्यर्धे वृत्तभेदश्चिन्त्यः ॥ ३१ ॥ समितौ सङ्घे । "सङ्घे सभायां समितिः" इत्यमरः । सभायाम् आस्थानमण्डपे ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥

निर्णयेष्वधिमन्त्रिणः अमात्याश्च उपमन्त्रिणः । बुद्धिदर्शनाः बुद्धिः दर्शनं चक्षुर्येषां ते तथा । यद्वा अमात्याः कर्मणि सहायाः, मन्त्रिणो बुद्धिसहायाः समेयु रित्यन्वयः । शूराश्चेत्युत्तरशेषः । सुखाय क्षेमाय क्षेमं विचारयितुम् ॥ २६–३० ॥ संसिद्धार्थाः पूर्णमनोरथाः ॥ ३१ ॥ ३२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकादशः सर्गः ॥ ११ ॥

अथ सर्वमेलनानन्तरं नगररक्षाविधानपूर्वकं स्वाभिमतानुसारेण रावणो मन्त्रमर्थयते स तामित्यादि । समितौ युद्धे जयतीति समितिंजयः । "संज्ञायां भृतॄवृजि-" इत्यादिना खचि मुमागमः । तां पूर्वोक्ताम् । सेनेति । कृतविद्याः अभ्यस्तधनुर्विद्याः । चतुर्विधाः रथिकहस्तिपकसादिपदातिरूपेण चतुर्विधाः । अधिकरक्षायां पूर्वापेक्षया सावधानरक्षायाम् । यथा स्युः यथा जागरूकाः स्युः । तथा व्यादेष्टुमर्हसि । अत्र इतिकरणं बोध्यम् ॥ १ ॥ २ ॥



स तां परिषदं कृत्स्नां समीक्ष्य समितिंजयः । प्रचोदयामास तदा प्रहस्तं वाहिनीपतिम् ॥ १ ॥ सेनापते यथा ते स्युः कृतविद्याश्चतुर्विधाः । योधानधिकरक्षायां तथा व्यादेष्टुमर्हसि ॥ २ ॥ स प्रहस्तः प्रणीतात्मा चिकीर्षन् राजशासनम् । विनिक्षिपद्बलं सर्वं बहिरन्तश्च मन्दिरे ॥ ३ ॥ ततो विनिक्षिप्य बलं पृथङ्नगरगुप्तये । प्रहस्तः प्रमुखे राज्ञो निषसाद जगाद च ॥ ४ ॥ निहितं बहिरन्तश्च बलं बलवतस्तव । कुरुष्वाविमनाः क्षिप्रं यदभिप्रेतमस्तु ते ॥ ५ ॥ प्रहस्तस्य वचः श्रुत्वा राजा राज्यहिते रतः । सुखेप्सुः सुहृदां मध्ये व्याजहार स रावणः ॥ ६ ॥ प्रियाप्रिये सुखं दुःखं लाभालाभौ हिताहिते । धर्मकामार्थकृच्छ्रेषु यूयमर्हथ वेदितुम् ॥ ७ ॥

स इति । सः सर्वेषु विद्यमानेष्वपि रावणविस्रम्भपात्रभूतः । प्रणीतात्मा निश्चितबुद्धिः । मन्दिरे रावणगृहे । विनिक्षिपत् विन्यक्षिपत् न्यधात् ॥ ३ ॥ प्रमुखे अग्रे ॥ ४ ॥ अविमनाः स्वस्थहृदयः यदभिप्रेतं तत्कुरुष्व । तत् अभीष्टम् ते अस्तु सिद्ध्यतु ॥ ५ ॥ सुखेप्सुः कामपुरुषार्थेच्छुः, न विजयेच्छुः ॥ ६ ॥ मन्त्रणीयं वक्तुमनास्तेषामाभिमुख्यं संपादयितुं प्रथमं तान् प्रशंसति-प्रियाप्रिये इति । धर्मकामार्थकृच्छ्रेषु धर्मकामार्थसङ्कटेषु विषये । धर्मादिष्विदानीं को वा सेव्य इति सन्देहे तदनुष्ठानफलभूते प्रियाप्रिये सुखदुःखसाधने वस्तुनी । सुखं दुःखम्, लाभालाभौ लाभ इष्टप्राप्तिः अलाभः तन्नाशः ॥ १ ॥ सेनापत इति । ये कृतविद्याः अभ्यस्तसर्वविद्याः । चतुर्विधाः रथिकहस्तिपसादिपदातिरूपेण चतुर्विधा योधाः, सन्तीति शेषः । अधिकरक्षायां यथा स्युः यथा जागरूकाः स्युः तान् तथा व्यादेष्टुं अर्हसीत्यर्थः । योधान्नगररक्षायामिति च पाठः ॥ २ ॥ प्रणीतात्मा विनीतात्मा प्रहस्तः राजशासनं चिकीर्षन् सर्वबलं मन्दिरे बहिरन्तश्च विनिक्षिप्य ततो नगरगुप्तये बलं पृथक् विनिक्षिप्य, आगत इति शेषः । प्रहस्तो राज्ञः प्रमुखे निषसाद अभिप्रेतं कुरुष्वेति जगाद चेति योजना ॥ ३-६ ॥ प्रियाप्रिये इति । धर्मकामार्थकृच्छ्रेषु धर्मकामार्थसङ्कटेषु विषये । धर्मादिष्विदानीं को वा सेव्य इति सन्देहे तत्तदनुकूलभूते प्रियाप्रिये प्रिया

तौ च । हिताहिते हितम् उत्तरकालफलवत् अहितं तद्विपरीतं ते च । वदितुमर्हथ । प्रियाप्रियादिफलस्वरूपनिर्धारणाय धर्मादिसन्देहं निराकर्तुं समर्था इत्यर्थः ॥ ७ ॥ कथमर्हामि इत्यपेक्षायां तत्कार्यमुखेन दर्शयति—सर्वेति । स्पष्टम् ॥ ८ ॥ इदानीमपि तथैवास्त्वित्याह—स सोमेति । ग्रहाः सोमभिन्नाः सूर्यादयः । मरुद्भिः सोमादिभिन्नैर्देवैः ॥ ९ ॥ पूर्वोक्तस्यैवार्थस्य पुनरपि वक्ष्यमाणत्वात्तत्र पुनः कथने हेतुं दर्शयति—अहमिति । तुरवधारणे । सर्वान्

सर्वकृत्यानि युष्माभिः समारब्धानि सर्वदा । मन्त्रकर्मनियुक्तानि न जातु विफलानि मे ॥ ८ ॥ स सोमग्रहनक्षत्रै र्मरुद्भिरिव वासवः । भवद्भिरहमत्यर्थं वृतः श्रियमवाप्नुयाम् ॥ ९ ॥ अहं तु खलु सर्वान् वः समर्थयितुमुद्यतः । कुम्भकर्णस्य तु स्वप्नान्नेममर्थमचोदयम् ॥ १० ॥ अयं हि सुप्तः षण्मासान् कुम्भकर्णो महाबलः । सर्वशस्त्रभृतां मुख्यः स इदानीं समुत्थितः ॥ ११ ॥ इयं च दण्डकारण्याद्रामस्य महिषी प्रिया । रक्षोभिश्चरिताद्देशादानीता जनकात्मजा ॥ १२ ॥ सा मे न शय्यामारोढुमिच्छत्यलसगामिनी । त्रिषु लोकेषु चान्या मे न सीतासदृशी मता ॥ १३ ॥ तनुमध्या पृथुश्रोणी शारदेन्दुनिभानना । हेमबिम्बनिभा सौम्या मायेव मयनिर्मिता ॥ १४ ॥

वः समर्थयितुं ज्ञापयितुम् उद्यत एव पूर्वमेवोद्यतः । किंतु कुम्भकर्णस्य स्वप्नाद्धेतोः इममर्थं नाचोदयं तस्य नावेदयम् । अतः कथ्यत इत्यर्थः ॥ १० ॥ कुम्भकर्णस्य स्वप्नादित्युक्तमेव स्पष्टयति—अयमिति । षण्मासानित्यत्यन्तसंयोगे द्वितीया । इदानीं समुत्थितः । अतः पूर्वं नावेदयमित्यर्थः ॥ ११ ॥ उत्तरत्र सीताप्रत्यर्पणं विना रामजयो विचार्यतामिति वक्तुकामस्तस्या दुस्त्यजत्वं दर्शयितुं तामेव स्तौति—इयमित्यादिना । रक्षोभिश्चरिताद्देशात् जनस्थानादित्यर्थः । सा मयाऽऽनीतेत्युक्तिरजानन्तं कुम्भकर्णं प्रति ॥ १२ ॥ अलसगामिनी मन्दगामिनी । त्यज तामनिच्छन्तीम्, प्रतिगृहाणेतरामित्यत्राह—त्रिष्विति ॥ १३ ॥ असदृशत्वमुपपादयति—तनुमध्येत्यादिना । हेमबिम्बनिभा स्वर्णप्रतिमातुल्या । सौम्या रम्या । मायेव प्रतिक्षणमपूर्ववदाश्चर्यावहवस्तुवत्

प्रियसाधने सुखे सुखकरोपाये दुःखे दुःखकरोपाये । लाभः इष्टप्राप्तिः, अलाभः तदभावः तस्मिन् । हिताहिते इति पाठः ॥ ७–९ ॥ पूर्वेद्युः कथितोऽर्थः इदानीं किमर्थं कथ्यत इत्याशङ्क्य पुनः कथने हेतुमाह—अहं त्विति । तुः अवधारणे । अहं सर्वान् वः समर्थयितुं ज्ञापयितुम् उद्यत एव, निवेदितवानित्यर्थः । किन्तु स्वप्नाद्धेतोरिममर्थं कुम्भकर्णस्य नावेदयम् । अतः कथ्यत इत्यर्थः । अबोधयमिति पाठेऽप्ययमेवार्थः ॥ १० ॥ षण्मासान् षट्सु मासेषु । अत्यन्तसंयोगे द्वितीया ॥ ११–१३ ॥ सीताप्रत्यर्पणं विना राघवजयोपायो विचार्यतामिति वक्तुकामस्तस्या दुस्त्यजत्वं दर्शयितुं स्तौति—तनुमध्येत्यादि । हेमबिम्बनिभा सुवर्णप्रतिमा

स्थिता ॥ १४ ॥ क्रमेणारोक्ष्यतीत्याशङ्क्य मन्मथो विलम्बं न सहत इत्याह—सुलोहितेति । सुप्रतिष्ठितौ समतलौ । दृष्ट्वा, स्थितस्येति शेषः । शरीरजः कामः ॥ १५ ॥ सोऽपि निगृह्यतामित्याशङ्क्याह—हुतेत्यादि । अर्धमेकं वाक्यम् । अर्चिश्शब्दस्य इकारान्तत्वमार्षम् । सौरीमिव प्रभामित्यस्य दृष्ट्वेत्यादिशेषपूरणेन सम्बन्धः ॥१६॥ उन्नसमिति । उन्नसम् उन्नतनासिकम् । "उपसर्गाच्च" इति नसादेशः । अवशः विवशः । तदधीनः कथं निगृहीया

सुलोहिततलौ श्लक्ष्णौ चरणौ सुप्रतिष्ठितौ । दृष्ट्वा ताम्रनखौ तस्या दीप्यते मे शरीरजः॥ १५॥ हुताग्नेरर्चिसङ्काशामेनां सौरीमिव प्रभाम्॥ १६॥ [दृष्ट्वा सीतां विशालाक्षीं कामस्य वशमेयिवान् । ] उन्नसं वदनं वल्गु विपुलं चारुलोचनम् । पश्यंस्तदा वशस्तस्याः कामस्य वशमेयिवान् ॥ १७ ॥ क्रोधहर्षसमानेन दुर्वर्णकरणेन च । शोकसन्तापनित्येन कामेन कलुषीकृतः ॥१८॥ सा तु संवत्सरं कालं मामयाचत भामिनी । प्रतीक्षमाणा भर्तारं राममायतलोचना ॥ १९ ॥ तन्मया चारुनेत्रायाः प्रतिज्ञातं वचः शुभम् । श्रान्तोऽहं सततं कामाद्यातो हय इवाध्वनि ॥ २० ॥

मिति भावः । वल्गु सुन्दरम् ॥ १७ ॥ कामवश्यत्वमेव विवृणोति—क्रोधेति । क्रोधहर्षयोः समानेन क्रोधे हर्षे चैकरूपेण । दुर्वर्णकरणेन वैवर्ण्यकारिणा । शोकसन्तापनित्येन शोके मनोव्यथायां सन्तापे शरीरपीडायां च नित्येन अनपायेन कामेन । कलुषीकृतः व्याकुलचित्तोऽस्मि ॥ १८ ॥ यद्येवं सा प्रसह्यापि शय्यामारोप्यताम्, तत्राह—सा त्विति । संवत्सरं कालं संवत्सररूपं कालम् । संवत्सराभ्यन्तरे रामो यदि नागतः तदा तथा करिष्यामीत्ययाचतेत्यर्थः । इदं चारोप्योक्तम् । वस्तुतो रावणेनैव तथा प्रतिज्ञानादिति भावः ॥ १९ ॥ चारुनेत्राया इति प्रतिश्रवणहेतुः । नयनसौन्दर्यपारवश्येन

सदृशी । माया प्रतिक्षणमपूर्ववदाश्चर्यावहवस्तुविशेषः ॥ १४ ॥ चरणौ दृष्ट्वा, स्थितस्येति शेषः ॥ १५ ॥ हुताग्नेरित्यर्द्धमेकं वाक्यम् । अत्रापि दृष्ट्वेत्यनुषज्यते ॥१६ ॥ उन्नसमिति । तस्या वदनं पश्यन् अवशः विवशस्सन् कामस्य वशमेयिवानिति सम्बन्धः ॥ १७ ॥ क्रोधहर्षसमानेन क्रोधहर्षयोस्समानेन क्रोधहर्षावस्थयोर्बाधकत्वेनैकरूपेण । दुर्वर्णकरणेन वैवर्ण्यकारिणा । शोकसन्तापनित्येन शोकसन्तापावस्थयोर्बाधकत्वेन नियतेन, अनेनाक्षवधादिजनितदुःखित्वाद्यवस्थास्वपि कामस्य बाधकत्वमुक्तं भवति ॥ १८ ॥ तह्योदित आरभ्य प्रतिकूलया सीतया किं प्रयोजनम् ? सा त्यज्यतामित्याशङ्क्य " सा मे न शय्यामारोढुमिच्छत्यलसगामिनी " इत्यवशादागतसत्यवचनसूचितं तदनुरागाभावं सङ्गोप्य स्वकृतस्यावधेस्तत्प्रार्थनापूर्वकत्वमारोप्याह—सा त्वित्यादिना । कालमवधित्वेनायाचत 'इयं च दण्डकारण्यात्' इत्यारभ्य—'श्रान्तोऽहं सततं कामात्' इत्यन्तस्य ग्रन्थसन्दर्भस्य वास्तवार्थस्तु—पूजार्थमानीतां त्रैलोक्यमोहिनीं ममेष्टदेवतां सीतां स्थण्डिलशायिनीं दुःखाक्रान्तां दृष्ट्वा अहमतिदुःखमनुभवामीत्याशयेनाह—सा मे नेति । मे शय्यां मदर्पितां शय्यामित्यर्थः । एतादृशविशेषणविशिष्टा सीता दुःखार्हा न भवतीति

तद्वचनमङ्गीकृतवानस्मीति भावः । अध्वनि दीर्घमार्गे ॥ २० ॥ कथमेनामुपलप्स्यसे तामुपनेतुमुद्युक्तौ सपरिकरे दाशरथावित्यत आह–कथमिति । उत्तरन्ति उत्तरिष्यन्ति । सत्त्वानि झषव्यतिरिक्तजन्तवः ॥२१॥ तर्हि किमिदानीं विचार्यम् ? तत्राह–अथवेति । यस्य यथा मतिः तथा ब्रूतेत्यर्थः ॥२२॥ विभीषणमतव्यावृत्त्यर्थं स्वमतमाह–मानुषादिति । सपादश्लोकमेकं वाक्यम् । मानुषात् भयाभावे हेतुमाह तदेति । अजयमिति च्छेदः । लङुत्तमैक

कथं सागरमक्षोभ्यमुत्तरन्ति वनौकसः । बहुसत्त्वझषाकीर्णं तौ वा दशरथात्मजौ ॥ २१ ॥ अथवा कपिनैकेन कृतं नः कदनं महत् । दुर्ज्ञेयाः कार्यगतयो ब्रूत यस्य यथा मतिः ॥ २२ ॥ मानुषान्मे भयं नास्ति तथापि तु विमृश्यताम् । तदा देवासुरे युद्धे युष्माभिः सहितोऽजयम् । ते मे भवन्तश्च तथा सुग्रीवप्रमुखान् हरीन् ॥२३॥ परे पारे समुद्रस्य पुरस्कृत्य नृपात्मजौ । सीतायाः पदवीं प्राप्तौ सम्प्राप्तौ वरुणालयम् ॥ २४ ॥ अदेया च यथा सीता वध्यौ दशरथात्मजौ । भवद्भिर्मन्त्र्यतां मन्त्रः सुनीतं चाभिधीयताम् ॥ २५ ॥

वचनम् । इन्द्रं जितवतो मे मनुष्यः कियानिति भावः । ते मे भवन्तश्च तथा । ते देवासुरे युद्धे जेतारो भवन्तः । तथा सहायभूताः वर्तन्त इत्यर्थः ॥ २३ ॥ सुग्रीवप्रमुखान् हरीनित्युत्तरशेषः । प्राप्तौ ज्ञातवन्तौ । वरुणालयं समुद्रम् । संप्राप्तौ प्राप्नुतां नाम का नः क्षतिरिति भावः ॥ २४ ॥ विमृश्यतामित्युक्तं विमर्शप्रकारं दर्शयति–अदेयेति । मन्त्रो मन्त्र्यतां मन्त्रः क्रियतामित्यर्थः । सुनीतं सुनिश्चितम् ॥ २५ ॥

सूचयितुं तामनुवर्णयति–त्रिलोकेष्वित्यादिना । किञ्च सुलोहितेति । तस्याः सकलकलुषहरणौ चरणौ दृष्ट्वा हुताग्नेरर्चिस्सङ्काशामेनाम्, दुःखितामिति शेषः । दृष्ट्वा मे शरीरजः सीतानिमित्तजः, अग्निरिति शेषः । दीप्यत इत्यर्थः । रमस्व स्वदारेषु, किमेतादृशचिन्तयेत्यत आह–उन्नसमित्यादि श्लोकद्वयेन । उक्तविशेषणविशिष्ट कामेन कलुषीकृतोऽपि अत्रशोऽपि तस्या दुःखितायाः, सीताया इति शेषः । वदनं पश्यन्नहं कामस्य वशमेयिवान् कामवशं प्राप्स्यामि किमिति काकुः । त्वद्गृहे जगदम्बायास्सीताया विद्यमानायास्तत्यास्तव का हानिरित्याशङ्क्य तस्या मद्गृहावस्थितिकालोऽपि समाप्तप्राय एवेत्याशयेनाह–सा तु संवत्सरमिति ॥१९–२२॥ मानुषान्मे भयमिति सपादश्लोकमेकं वाक्यम् । यदि अप्यर्थे । तदा देवासुरयुद्धे युष्माभिस्सहितो जयं प्राप्तवानस्मि यद्यपि, मे मने भवन्तस्तथा तादृक् सहायाः यद्यपि, मानुषान्मे भयं नास्ति यद्यपि, तथापि तु विमृश्यतामिति सम्बन्धः । सुग्रीवप्रमुखानिति । सीतायाः पदवीं वीरौ संप्राप्तौ वरुणालयम् । इति पाठे–पदवीम्, ज्ञात्वेति शेषः । पदवीं प्राप्तौ सम्प्राप्तौ वरुणालयम् इति पाठे–पदवीं प्राप्तौ ज्ञातवन्तौ सन्तौ वरुणालयं सम्प्राप्ताविति सम्बन्धः ॥ २३ ॥ २४ ॥ अदेयेत्यादि । सुनीतं सुष्ठु निर्णीतं कार्यम् । वास्तवार्थे–अवध्याविति छेदः ॥ २५ ॥

मा भूद्रामस्य समुद्रतरणे तव जये वा शक्तिः, तत्सहायस्यान्यस्य कस्यचित् स्यात्तत्राह—नहीति। वानरैः सह सागरं तीर्त्वा, आगन्तुमिति शेषः। रामादन्यस्य शक्तिं न पश्यामि अतो मम निश्चयेन जय इत्यन्वयः ॥ २६ ॥ कामपरीतस्य कामेन विपरीतस्य, कामातुरतया विपरीतबुद्धेरित्यर्थः। परिदेवितं परिदेवनम्, तद्वदसङ्गतभाषणमित्यर्थः ॥ २७॥ "मन्त्रिभिर्हितसंयुक्तैः समर्थैर्मन्त्रनिर्णये। सहितो मन्त्रयित्वा यः कर्मारम्भान् प्रवर्तयेत्" इत्युक्तो

न हि शक्तिं प्रपश्यामि जगत्यन्यस्य कस्यचित्। सागरं वानरैस्तीर्त्वा निश्चयेन जयो मम ॥ २६ ॥ तस्य कामपरीतस्य निशम्य परिदेवितम्। कुम्भकर्णः प्रचुक्रोध वचनं चेदमब्रवीत् ॥ २७ ॥ यदा तु रामस्य सलक्ष्मणस्य प्रसह्य सीता खलु सा इहाहृता। सकृत् समीक्ष्यैव सुनिश्चितं तदा भजेत चित्तं यमुनेव यामुनम् ॥ २८ ॥ सर्वमेतन्महाराज कृतमप्रतिमं तव। विधीयेत सहास्माभिरादावेवास्य कर्मणः ॥ २९ ॥

त्तममन्त्रयितृभावे, "एकोऽर्थं विमृशन्नेको धर्मं प्रकुरुते मनः। एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम्॥" इत्युक्तमध्यममन्त्रयितृभावेऽपि नावस्थितोऽसीत्याह—यदेति। यदा सकृत्समीक्ष्यैव स्वयमेव विचार्य। रामस्य सीता इहाहृता तदैव चित्तं कर्तृ यमुना यामुनं पर्वतमिव सुनिश्चितं सुनिश्चयं भजेत खलु। स एवास्माभिः सह विचारकालः। इदानीं विचारणं गते जले सेतुबन्धनमिति भावः ॥ २८॥ तदा कृते किं स्यादित्यत्राह—सर्वमिति। कृतमिति कर्मणि

न हीति। अत्रागन्तुमिति शेषः। जगति कस्यचिदन्यस्य शत्रोर्वानरैस्सह सागरं तीर्त्वा अत्रागन्तुं शक्तिं न पश्यामि हि, अतो निश्चयेन मम जयः इत्यन्वयः। निश्चये न जये मम इति पाठे मम जये अन्यस्य कस्यचिदपि निश्चये शक्तिं न पश्यामीति योज्यम्। नाहि शक्तिमित्यस्य वास्तवार्थस्तु—अन्यस्य शक्तिं न पश्यामि, रामं विनेति शेषः। एवं निश्चये सति मम जयो नेत्यन्वयः ॥२६॥२७॥ ननु पूर्वमेव करणीयमेतदिदानीं क्रियमाणं गतोदकसेतुबन्धनसदृशमित्याह—यदा त्विति। यदा तु सलक्ष्मणस्य रामस्य सीता सकृत्समीक्ष्यैवास्माभिस्सहाविचार्य स्वयमेव विचारयतेहाहृता तदैव खलु सकृत्समीक्ष गत्वेलायामेवासकृदस्माभिस्सह विचारितं चेच्चित्तं कर्तृ सुनिश्चितं निश्चयं भजेत खलु प्राप्नुयाद्धि। कथमिव यमुना यामुनं यामुनाख्यगिरिमिव। अस्माभिस्सह विचारस्य स एव काल इति फलितार्थः। तदैवैतन्मन्त्रकरणे फलमाह—सर्वमिति। कृतमिति कर्मणि निष्ठा। तव सर्वमेतत्कृतं मन्त्रात्मकं कर्म। अस्य सीताहरणरूपस्य कर्मणः आदावेव प्रागेव अस्माभिः सह विधीयेत विहितं चेदप्रतिममनुत्तमं भवेदित्यर्थः। तदा न कृतम्। अतोऽधुना क्रियमाणो विचारः गतजलसेतुबन्धसदृश इति भावः ॥ २८ ॥ २९ ॥

निष्ठा । एतत्कृतं सर्वं मन्त्रकर्म । अस्य कर्मणः सीताहरणरूपस्य । आदावेव यदि विधीयेत तदा अप्रतिमं समञ्जसं स्यादित्यर्थः ॥ २९ ॥ आदौ विचार्य कृतस्य साफल्यप्रदर्शनपुरस्सरमविचार्यकृतस्य फलवैपरीत्यं दर्शयति श्लोकद्वयेन—न्यायेनेति । न्यायेन विचारणेन ॥ ३० ॥ अनुपायेन क्रियमाणानि कर्माणि विपरीतानि विपर्यस्तानि यानि तानि च दुष्यन्ति दोषवन्ति च भवन्ति । न केवलं निष्फलानि प्रत्युतानर्थकराण्यपि भवन्तीत्यर्थः । अप्रयतेषु

न्यायेन राजकार्याणि यः करोति दशानन । न स सन्तप्यते पश्चान्निश्चितार्थमतिर्नृपः ॥ ३० ॥
अनुपायेन कर्माणि विपरीतानि यानि च । क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ३१ ॥
यः पश्चात् पूर्वकार्याणि कर्माण्यभिचिकीर्षति । पूर्वं चापरकार्याणि न स वेद नयानयौ ॥ ३२ ॥
चपलस्य तु कृत्येषु प्रसमीक्ष्याधिकं बलम् । क्षिप्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः ॥ ३३ ॥

अशुचिषु अपात्रेषु, दीयमानानीति शेषः ॥ ३१ ॥ अकालकृतं मन्त्रकरणमनुचितमित्याह—य इति । पूर्वकार्याणि पूर्वं कर्तव्यानि मन्त्रकर्माणि । अपरकार्याणि उत्तरकालकर्तव्यकर्मारम्भान् । पूर्वं मन्त्रविचारात्पूर्वम् ॥ ३२ ॥ इदानीमसमीक्ष्यकारिणो बलमपि निरर्थकमित्याह—चपलस्येति । यद्वा प्राप्तामप्यनीतिं बलेन समीकरिष्यामीत्यत्राह चपलस्येति । कृत्येषु क्षिप्रं चपलस्य असमीक्ष्यकारिणः । बलमधिकमाभिमुख्येन जेतुमशक्यम् । समीक्ष्य विचार्य । अन्ये शत्रवः । खं रन्ध्रम् । प्रपद्यन्ते असमीक्ष्यकरणरूपावसरं लब्ध्वा अभिभवन्तीत्यर्थः । द्विजाः हंसाः । अलङ्घ्यस्य क्रौञ्चस्य क्रौञ्चाख्यपर्वतस्य लङ्घनाय खं रन्ध्रं यथा प्रपद्यन्ते तद्वदित्यर्थः । क्रौञ्चस्यौन्नत्येनालङ्घ्यत्वात् सुब्रह्मण्यशक्तिविदारणकृतरन्ध्रेण

आदावेव विचार्य कृतस्य कर्मणस्साफल्यमाह—न्यायेनेति । न्यायेन विचारेण । सन्तप्यते सन्तपति ॥ ३० ॥ विचारविधुरं कालातीतं च कर्म निष्फलं भवतीत्याह—अनुपायेनेति । अनुपायेन अविचारितोपायेन । विपरीतानि व्यस्तानि । अप्रयतेषु अपात्रेषु ॥ ३१ ॥ मन्त्रविचारानन्तरकर्तव्यसीतापहरणं मन्त्रविचारात्पूर्वं कृतवतः सीतापहरणात्पूर्वकर्तव्यमन्त्रविचारमिदानीं चिकीर्षतस्तव नीत्यनीतिज्ञता नास्तीत्याह—यः पश्चादिति । पूर्वकार्याणि पूर्वकर्तव्यानि ॥ ३२ ॥ इदानीमसमीक्ष्यकारिणो बलमपि निरर्थकमित्याह—चपलस्येति । बलवतोऽपि कृत्येषु चपलस्य असमीक्ष्यकारिणः पुरुषस्य अधिकं बलं समीक्ष्य स्वस्मादधिकं बलं समालोच्य तस्य खं रन्ध्रम् अन्ये शत्रवः प्रपद्यन्ते द्वितीयपादस्थखशब्दस्य काकाक्षिवदुभयत्राप्यन्वयः । द्विजाः हंसाः । अलङ्घ्यस्य क्रौञ्चस्य लङ्घनाय खं स्कन्दशक्तिकृतं रन्ध्रं

हंसास्तमतिक्रम्य गच्छन्तीति प्रसिद्धिः ॥ ३३ ॥ सापायं च त्वत्कृतं कर्मेत्याह–त्वयेति । महत् दुष्करम् । सापायमित्यर्थः । अप्रतिचिन्तितम् अनालोचितम् । इदं सीताहरणरूपं कार्यम् । सापायत्वमेवाह–दिष्ट्येति ॥ ३४ ॥ सर्वमेतन्महाराजेत्युपक्रम्योक्तमुपसंहरति--तस्मादिति । तर्हि का गतिरित्यपेक्षायां मयि जीवति कस्ते भार इत्याह अहमिति । अनघेति । त्वं तु निर्व्यसनो भवेत्यर्थः । समीकरिष्यामि नीत्यनीती तुल्ये करिष्यामीत्यर्थः ॥ ३५ ॥ तदेवाह–अहमिति सार्धश्लोकः । विशांपते प्रजानां पते । अतिमानुषवैभवौ तौ कथं जय्यौ ? तत्राह यदीति । तौ दश

त्वयेदं महदारब्धं कार्यमप्रतिचिन्तितम् । दिष्ट्या त्वां नावधीद्रामो विषमिश्रमिवामिषम् ॥ ३४ ॥ तस्मात्त्वया समारब्धं कर्म ह्यप्रतिमं परैः । अहं समीकरिष्यामि हत्वा शत्रूंस्तवानघ ॥ ३५ ॥ अहमुत्सादयिष्यामि शत्रूंस्तव विशांपते । यदि शक्रविवस्वन्तौ यदि पावकमारुतौ । तावहं योधयिष्यामि कुबेरवरुणावपि ॥ ३६ ॥ गिरिमात्रशरीरस्य महापरिघयोधिनः । नर्दतस्तीक्ष्णदंष्ट्रस्य बिभियाद्वै पुरन्दरः ॥ ३७ ॥ पुनर्मां स द्वितीयेन शरेण निहनिष्यति । ततोऽहं तस्य पास्यामि रुधिरं काममाश्वस ॥ ३८ ॥

रथात्मजौ शक्रविवस्वन्तौ यदि स्याताम् तथापीत्यर्थः ॥ ३६ ॥ स्वस्य योधनसामर्थ्यविशेषं दर्शयति–गिरीति । गिरिमात्रशरीरस्य गिरिप्रमाणदेहस्य । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति मात्रच् प्रत्ययः । पञ्चम्यर्थे षष्ठी ॥ ३७ ॥ शरवर्षिणो रामस्य पुरतः कथं स्थातुं शक्तस्तत्राह–पुनरिति । सः रामः । पुनर्मां प्रथममेकेन शरेण निहत्य पुनरपि द्वितीयेन शरेण मां हनिष्यति । ततः तावदेवेत्यर्थः । अत्राश्लीलमपि ध्वन्यते । मां द्विती

यथा प्रपद्यन्ते तद्वदित्यर्थः ॥ ३३ ॥ भवत्वेवं मया किं चापलं कृतम् ? येन शत्रूणां मयि रन्ध्रं स्यादत आह–त्वयेति । अप्रतिचिन्तितम् अविचारितम् । महत् प्राणावसानपर्यवसायि इदं सीतापहरणरूपकार्यं त्वया धूर्तसहायेनारब्धं कृतम् अतो रन्ध्रं प्राप्तम् । तत् दैववशात्परिहृतमित्याह–दिष्ट्येति ॥ ३४ ॥ त्वत्कृताकृत्यपरिगणनेन किम् ? इदानीं सर्वं मच्छौर्येण प्रतिविधास्यामीत्याह–तस्मादिति । अप्रतिमं तवाननुरूपम् परैर्मद्व्यतिरिक्तैः, अप्रतिसमाधेयमिति शेषः ॥ ३५ ॥ रामस्य अधिकबलं विचिन्त्याह–अहमिति सार्धश्लोकमेकं वाक्यम् । यदीति । तौ रामलक्ष्मणौ शक्रविवस्वन्तौ यदि, स्यातामिति शेषः । तथापि योधयिष्यामि योत्स्यामीत्यर्थः ॥ ३६॥ ३७ ॥ पुनरिति । सः रामः मामेकेन शरेण निहत्य पुनर्द्वितीयेन शरेण निहनिष्यति यदि तदा ततःपूर्वमेव तस्य रुधिरम् अहं कामं पास्यामि ।

यं न शरेणावश्यं निहनिष्यति । तस्य रामस्य ततस्तस्माद्धननात् । कर्तरि षष्ठी । रुधिरं स्वरुधिरं पास्यामि । कामम् अत्यर्थम् । आश्वस निश्वसेति ॥ ३८॥ 'आत्मानमरक्षन् परघाती वीरो न श्लाघ्यः' इति न्यायेन परवत् स्वस्यापि वधे न कोऽप्यतिशय इत्यत्राह—वधेनेति । अत्राप्यर्थान्तरम् । वधेन स्वविनाशेन दाशरथेः सुखावहं जयं तव सकाशादाहर्तुं यतिष्ये । रामं हत्वा रामं गत्वा । " हन हिंसागत्योः " इति धातुः । खादामि किं जीवामि

वधेन वै दाशरथेः सुखावहं जयं तवाहर्तुमहं यतिष्ये । हत्वा च रामं सह लक्ष्मणेन खादामि सर्वान् हरियूथमुख्यान् ॥ ३९ ॥ रमस्व कामं पिब चाग्र्यवारुणीं कुरुष्व कार्याणि हितानि विज्वरः । मया तु रामे गमिते यमक्षयं चिराय सीता वशगा भविष्यति ॥ ४० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमद्युद्धकाण्डे द्वादशः सर्गः ॥ १२ ॥

रावणं क्रुद्धमाज्ञाय महापार्श्वो महाबलः । मुहूर्तमनुसञ्चिन्त्य प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥

किमिति काकुरनुसन्धेया ॥३९॥ रमस्वेति । अत्राप्यर्थान्तरम् । मया रामे विषये अक्षयं यथा भवति तथा गमिता प्रापिता इयं सीता रामस्य वशगा भविष्यति । रमस्वेत्यादौ काकुः ॥४०॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वादशः सर्गः ॥ १२॥ अथ रावणस्य दुर्मन्त्रिमतानुसारित्वमाह—रावणमित्यादि । क्रुद्धं कुम्भकर्णोक्तनयापरिज्ञानवचनेनेत्यर्थः । मुहूर्तमनुसञ्चिन्त्य रावणक्रोधनिवारणोपायं

आश्वसेति योजना । पुनरित्यादिश्लोकत्रयस्य वास्तवार्थस्तु—रणमूर्द्धनि स्वकर्तव्यं विज्ञापयति । पुनरिति । सः रामः एकेन शरेण मां प्रहृत्य पुनर्द्वितीयेन शरेण निहनिष्यति ततः ततःप्रागेव तस्य रामस्य सम्बन्धि, वानराणामिति शेषः । रुधिरं पास्यामि कामामाश्वस ॥ ३८ ॥ श्रीरामजये मम सामर्थ्यं नास्तीति विज्ञापयति—वधे नेति । दाशरथेर्वधे सति तव सुखावहं जयमाहर्तुं न यतिष्ये किन्तु लक्ष्मणेन सह, रामं विनेति शेषः । सर्वान् हरियूथमुख्यान् हत्वा खादामीति सम्बन्धः ॥ ३९ ॥ रमस्वेति । मया रामे विषये यमक्षयं गमिते सति सीता अवशम् अस्य विष्णुरूपरामस्य वशमागमिष्यतीति सम्बन्धः ॥ ४० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां द्वादशः सर्गः ॥१२॥ रावणमिति । मुहूर्तमनुसञ्चिन्त्य रावणक्रोधनिवारणोपायं विचार्य

स०—मुहूर्तमनुसञ्चिन्त्य अप्रियोक्तौ मम विप्रियं तदप्रियोक्तौ सर्वप्रियहानिः कथं कर्तव्यमिति ध्यात्वा ॥ १ ॥

विचार्येत्यर्थः ॥१॥ य इति । खलुर्वाक्यालङ्कारे । दुष्करं सीताहरणं श्रमेण कृत्वा तत्सम्भोगमकुर्वाणस्त्वं क्षौद्राकाङ्क्षयाऽतिगहनं वनं प्रविश्य तदपिबन् जन इव मूढोऽसीति भावः ॥ २ ॥ शत्रुषु विद्यमानेष्वधर्मावहमिदं कथं कुर्यामित्यत्राह—ईश्वरस्येति । सर्वनियन्तुस्तव को वा नियन्ताऽस्ति । अतो धर्मान्न भेतव्यमिति भावः । शत्रून् मूर्धस्वाक्रम्य तान् तृणीकृत्येत्यर्थः । अर्थान्तरं तु रामस्येश्वरः कोऽस्ति । स निग्रहीतुं न शक्य इत्यर्थः । शत्रून्

यः खल्वपि वनं प्राप्य मृगव्यालसमाकुलम् । न पिबेन्मधु सम्प्राप्तं स नरो बालिशो भवेत् ॥ २ ॥
ईश्वरस्येश्वरः कोऽस्ति तव शत्रुनिबर्हण । रमस्व सह वैदेह्या शत्रूनाक्रम्य मूर्धसु ॥ ३ ॥
बलात् कुक्कुटवृत्तेन वर्तस्व सुमहाबल । आक्रम्याक्रम्य सीतां वै तथा भुङ्क्ष्व रमस्व च ॥ ४ ॥

रामम् । पूजायां बहुवचनम् । दशस्वपि मूर्धस्वाक्रम्य शिरसा प्रणम्येत्यर्थः । वैदेह्या सह रमस्व वैदेह्यां यथा स्वभर्ता रमते तथा त्वमपि स्वदारेषु रमस्व । वैदेह्या सह रामं प्रणम्येति वा योजना ॥ ३ ॥ किं करोमि सा हि न मामभिलषतीत्यत्राह—बलादिति । कुक्कुटवृत्तेन कुक्कुटवृत्त्या । भावे क्तः । कुक्कुटो वञ्चनामार्गेण स्वदयितामाक्रमते । तथा त्वमपीत्यर्थः । कुक्कुटानां कामुककुक्कुटसङ्गे कोपो जातिधर्मः । तथा सीतामनुभव यथा कुक्कुटाः सुखिनः तद्वदित्यर्थः । यथाऽऽह वात्स्यायनः—“क्रुद्धामाक्रम्य भोगस्तु कौक्कुटः सोऽपि सौख्यदः ।” इति । भुङ्क्ष्व भोगं भज । रमस्व निर्विचारो भवेत्यर्थः । मुनिहृदयं तु कुक्कुटवृत्तेनान्यत्र वर्तस्व सीतां तु बलात् भुङ्क्ष्व रक्ष । “भुज परिपालनाभ्यवहारयोः” इति धातुः । आत्मनेपद

इत्यर्थः ॥ १ ॥ दुष्करं सीताहरणं श्रमेण कृत्वा तत्सम्भोगमकुर्वाणस्त्वं मधुकांक्षया दुर्गमं वनं प्रविश्य तदपिबन् जन इव मूढोऽसीति भावः ॥ २ ॥ ३ ॥ अनङ्गीकारे कथमनुभव इत्यत्राह—बलादिति । रमस्व सह वैदेह्येत्यादिसार्धश्लोकस्य वास्तवार्थस्तु—कुक्कुटवृत्तेनेत्यत्र कुक्कुटवृत्ते न इति छेदः । हे महाबल रावण ! वैदेह्या किम् ? अत आक्रम्याक्रम्य वा प्रकारान्तरेण वा तां वैदेहीं सीतां न भुङ्क्ष्व न रमस्व च । कुक्कुटवृत्ते कुक्कुटव्यापारे, चापल्य इति यावत् । न वर्तस्व किन्तु बलात्

स०—प्रथमतः सीतानयनं न कर्तव्यम् । कृतं चेत् सीताननुभवो भवतो न योग्य इति प्रोत्साहयति—य इते ॥ २ ॥ “सा किं न रम्या स ंच किं न रन्ता गरीयसी केवलमीश्वरेच्छा” इत्यादिवदीश्वरेच्छानुसारिता चेतरस्य, न तवेत्याह—ईश्वरस्येति ॥ ३ ॥

मार्षम् ॥ ४ ॥ एतन्निमित्तमागामिभयमनिवार्यं कथमेवं क्रियतामित्यत्राह—लब्धेति । एवं लब्धकामस्य ते पश्चात्कामलाभानन्तरम् यत् भयमागमिष्यति । प्राप्तं तदानीमागतम् । अप्राप्तकालं प्राप्तकालमित्यस्य "प्राप्तापन्ने च द्वितीयया" इति समासः। तथा न भवतीत्यप्राप्तकालम् । आगामीति यावत् । प्रतिसहिष्यसि अभिभविष्यसीत्यर्थः ॥५॥ तिष्ठतु भवान् त्वद्भ्रातृपुत्रावेव प्रतिपक्षप्रतिषेधे शक्तावित्याह—कुम्भकर्ण इति ॥६॥ विभीषणमतं खण्डयति—उपप्रदानमिति। अकुशलैः युद्धासमर्थैः। कृतं दानादिकम् । अतिक्रम्य त्यक्त्वा । दण्डेन बलात्कारेण । अर्थेषु प्रयोजनेषु सिद्धिं रोचय ॥७॥

लब्धकामस्य ते पश्चादागमिष्यति यद्भयम् । प्राप्तमप्राप्तकालं वा सर्वं प्रतिसहिष्यसि ॥ ५ ॥ कुम्भकर्णः सहास्माभिरिन्द्रजिच्च महाबलः । प्रतिषेधयितुं शक्तौ सवज्रमपि वज्रिणम् ॥ ६ ॥ उपप्रदानं सान्त्वं वा भेदं वा कुशलैः कृतम् । समतिक्रम्य दण्डेन सिद्धिमर्थेषु रोचय ॥७॥ इह प्राप्तान् वयं सर्वान् शत्रूंस्तव महाबल । वशे शस्त्रप्रतापेन करिष्यामो न संशयः ॥ ८ ॥ एवमुक्तस्तदा राजा महापार्श्वेन रावणः । तस्य संपूजयन् वाक्यमिदं वचनमब्रवीत् ॥ ९ ॥ महापार्श्व निबोध त्वं रहस्यं किंचिदात्मनः । चिरवृत्तं तदाख्यास्ये यदवाप्तं मया पुरा ॥१०॥ पितामहस्य भवनं गच्छन्तीं पुञ्जिकस्थलाम् । चञ्चूर्यमाणामद्राक्षमाकाशेऽग्निशिखामिव ॥ ११ ॥

रामादयो यत्र वर्तन्ते तत्र गत्वा योद्धव्यमित्युक्तं निकुम्भादिमतं दूषयन्नाह—इहेति । इह लङ्कापरिसरे । शस्त्रप्रतापेन शस्त्रबलेन। वशे करिष्यामः निग्रहीष्याम इत्यर्थः ॥ ८ ॥ एवमिति । संपूजयन् स्वचित्तानुगुणयुक्तमिति श्लाघयन्नित्यर्थः ॥ ९ ॥ महापार्श्वेति संबोधनम् । प्रमुदितोऽस्मीति शेषः। चिरवृत्तं रहस्यं किंचित् । अस्तीति शेषः । यत्पुरा मयाऽवाप्तं तदाख्यास्य इति योजना ॥ १० ॥ पितामहस्येति । गच्छन्तीम्, पितामहवन्दनायेति

शत्रून् मूर्द्धस्वाक्रम्य रमस्वेति सम्बन्धः ॥ ४ ॥ सीतानुभवनिमित्तकमागामिभयमनिवार्यं कथमेवं कर्तव्यमित्यत्राह—लब्धकामस्येति । लब्धकामस्य प्राप्तसीतानुभवस्य पश्चात् सीतानुभवानन्तरम् प्राप्तं तदानीमेवागतं प्राप्तकालम् आगामिकाले प्राप्यं वा यद्भयमागमिष्यति तत्सर्वं प्रतिसहिष्यसि प्रतिसहिष्यसे, अभिभविष्यसीत्यर्थः ॥ ५ ॥ भयाभिभवे शक्तिं प्रदर्शयति—कुम्भकर्ण इति ॥ ६ ॥ उपप्रदानमिति । अकुशलैः युद्धासमर्थैः कृतं सामादिकम् । समतिक्रम्य त्यक्त्वा । दण्डेन दण्डोपायेन । अर्थेषु सिद्धिं रोचय ॥ ७–१० ॥ पितामहस्येति । चञ्चुर्यमाणां मद्भीत्या निलीय चरन्तीम्। शापस्य भीतः शापाद्भीतः ॥ ११–२० ॥

स०—ननूत्तरकाण्डे रम्भानिमित्तं नलकूबरशापः परदाराणां बलात्सङ्गे श्रूयते । यथोक्तम् "[illegible] दिव्याभरणभूषिता । सर्वाप्सरोवरा रम्भा पूर्णचन्द्रनिभानना ॥" इत्यारभ्य "नलकूबरमासाद्य"—

शेषः। पुञ्जिकस्थला नाम काचिदप्सराः। चञ्चूर्यमाणा भीत्या निलीय गच्छन्तीम्। "लुपसदचर—" इत्यादिना भावगर्हायां यङ्। सञ्चरणात्मकस्य भावस्य गर्हा निलयनम्। "चरफलोश्च" इति नुक्। "उत्परस्यातः" इत्युकारः। अग्निशिखामिवेति तेजोविशेषोक्तिः। यद्वा द्रावकत्वोक्तिः। अत एवोक्तम्—"अङ्गारसदृशी नारी घृतकुम्भसमः पुमान्" इति। सञ्चार्यमाणामिति पाठे—परिचारिकादर्शितमार्गामित्यर्थः ॥११॥ विवसना कृता सा मया

सा प्रसह्य मया भुक्ता कृता विवसना ततः। स्वयम्भूभवनं प्राप्ता लोलिता नलिनी यथा ॥ १२ ॥
तस्य तच्च तदा मन्ये ज्ञातमासीन्महात्मनः। अथ सङ्कुपितो देवो मामिदं वाक्यमब्रवीत् ॥ १३ ॥
अद्यप्रभृति यामन्यां बलान्नारीं गमिष्यसि। तदा ते शतधा मूर्धा फलिष्यति न संशयः ॥ १४ ॥
इत्यहं तस्य शापस्य भीतः प्रसभमेव ताम्। नारोपये बलात् सीतां वैदेहीं शयने शुभे ॥ १५ ॥

भुक्तेत्यन्वयः ॥ १२ ॥ तत् धर्षणम्। मन्य इत्यनेन शापमात्रं मया श्रुतम्। धर्षणश्रवणं तु मया ऊहितमिति गम्यते ॥ १३ ॥ अद्येत्यादि। अद्यप्रभृति—इत्याद्युक्त्वा "उत्ससर्ज तदा शापं राक्षसेन्द्राय दारुणम्। अकामा तेन यस्मात्त्वं बलाद्भद्रे प्रधर्षिता। तस्मात्स युवतीमन्यां नाकामामुपयास्यति ॥" इत्यादि। तथा भारते वनपर्वणि रामोपाख्याने सीतां प्रति त्रिजटावाक्यम्—"नलकूबरशापेन रक्षिता ह्यसि नन्दिनि। शापो ह्येष पुरा पापो वधूं रम्भां परामृशन् ॥" इति। तथाच कथमत्र पुञ्जिकस्थलीनिमित्तं ब्रह्मशापोत्कीर्तनम्? नच पूर्वं रम्भानिमित्तशापः। अनन्तरं पुञ्जिकस्थलीकृतः शापः इत्येकस्यैव शापद्वयाङ्गीकारे बाधकाभाव इति वाच्यम्; तथात्वे नलकूबरशापेन तदनन्तरभाविपुञ्जिकस्थलीधर्षणकाले तच्छिरःस्फोटापत्तेः। ब्रह्मशापानन्तरं रम्भासम्भोगे तु सुतरां तस्य दुर्निवारत्वात्। तस्मात्कथमत्रेति चेत्? उच्यते—कल्पे कल्पे अवान्तरवैचित्र्यस्य बहुलमुपलम्भात्कल्पान्तरवृत्तां ब्रह्मशापकथां समाधौ समीक्ष्य कविरवादीदिति। अथवा नलकूबरशापस्य पतिव्रताधर्षणविषयत्वेन स्वैरिणीविषयत्वाभावेन न पुञ्जिकस्थलीसङ्गात्तच्छिरसस्सहस्रधा भेदः। यथोक्तं तत्रैवोत्तररामायणे—"तेन निस्सीमतां प्रीतिमापुस्सर्वाः पतिव्रताः" इति। अन्यथा पतिव्रता इति न स्यात् स्याच्च स्त्रिय इति। यद्वा रम्भानिमित्तशापस्य कामनारहितस्त्रीबलात्कारविषयत्वम्। पुञ्जिकस्थल्या अन्तः कामो वर्तत इति ज्ञायते। अतो न तन्मरणमभूत्। यथोक्तं तत्रैव—"नाकामामुपयास्यसि" इति। अत्र चञ्चूर्यमाणां रावणलज्जया स्वाङ्गे निलीयमानामिवेति। प्रसह्योक्तिस्तु स्त्रीस्वभावेन लज्जयाऽनङ्गीकारप्रदर्शनादिति ज्ञेयम्। यत्तु नागोजिभट्टेन क्वचिदेवमेव कुबेरपुत्रनलकूबरशापोऽपि रम्भानिबन्धनः श्रूयते। तत्रोपपत्तिश्चिन्त्या। अस्य प्रथमत्वे तस्यां बलात्कारासम्भवात्। तस्य प्रथमत्वे अस्यां बलात्कारासम्भवादिति केचित्। नलकूबरशापस्य तपोबलेनाकिञ्चित्करत्वादयमेव शापो ब्रह्मास्त्रवदप्रतिक्रियः पाश्चात्य इत्यन्ये इत्युक्तम्। तत्र नलकूबरशापेनेत्युक्तभारतवचने तस्यैव पुरस्करणम्। "तस्मिन्नुदाहृते शापे ज्वलिताग्निसमप्रभे। देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता। पितामहमुखाश्चैव सर्वे देवाः प्रहर्षिताः। ज्ञात्वा लोकगतिं सर्वे" इत्यत्रैवोत्तरकाण्डे ब्रह्मायनुमत्या शापस्य दुष्परिहरतेव "श्रुत्वा तु स दशग्रीवस्तं शापं रोमहर्षणम्। नारीषु मिथुनीभावं नाकामास्वभ्यरोचयत् ॥" इत्यनेन शापेनैवाकामकामिनीसम्भोगविरुधिता च कथं सङ्गत इति विचार्यम्, अत एव तेन केचिदन्ये चेत्युक्तमिति मन्तव्यम् ॥ ११ ॥

एतत्क्षणमारभ्य । क्रियाविशेषणमेतत् । तदा गमनकाले एव फलिष्यति निशीर्णो भविष्यति इति एवंप्रकारस्य शापस्य, शापादित्यर्थः । प्रसभं नारोपय इत्यन्वयो न बलादित्यनेन पौनरुक्त्यात् । किंतु प्रसभं शापस्येत्यन्वयः । वैदेहीमित्यनेन महाकुलप्रसूततया तच्छापादपि भीतोऽस्मीत्यवगम्यते ॥ १४ ॥ १५ ॥ रामानु०—अथेत्यादि । तदा ते शतधा मूर्धा फलिष्यति न संशय इत्यनेन रावणविषये रम्भानिबन्धननलकूबरशापे विद्यमानेऽपि तस्य प्राकृतदेवत्वात्तत्पुत्रत्वाच्च तच्छापमनादृत्य पुञ्जिकस्थलायामपि प्रवृत्तं रावणं पश्चात्पितामहः शप्तवान् । अत एव रावणोऽप्यनुल्लङ्घनीयं पितामहवाक्यमेवोक्तवानित्यवगम्यते । इत्यहमिति । शापस्य भीतः शापाद्भीतः॥१३–१५॥

सागरस्येव मे वेगो मारुतस्येव मे गतिः । नैतद्दाशरथिर्वेद ह्यासादयति तेन माम् ॥ १६ ॥
यस्तु सिंहमिवासीनं सुप्तं गिरिगुहाशये । क्रुद्धं मृत्युमिवासीनं प्रबोधयितुमिच्छति ॥ १७ ॥
न मत्तो निशितान् बाणान् द्विजिह्वानिव पन्नगान् । रामः पश्यति सङ्ग्रामे तेन मामभिगच्छति ॥ १८ ॥
क्षिप्रं वज्रोपमैर्बाणैः शतधा कार्मुकच्युतैः । राममादीपयिष्यामि उल्काभिरिव कुञ्जरम् ॥ १९ ॥
तच्चास्य बलमादास्ये बलेन महता वृतः । उदयन् सविता काले नक्षत्राणामिव प्रभाम् ॥ २० ॥

एवं न युक्ता बलात्कर्तुं सीतेत्युक्त्वा अस्माभिः सह कुम्भकर्णेन्द्रजितौ योत्स्यत इति महापार्श्ववचनस्यासहायशूरे मयि विद्यमाने किमन्येनेति परिहारमाह—सागरस्येति । एतत् वेगगतिमत्त्वम् । आसादयति, सेनामिति शेषः । स्वार्थण्यन्तो वा । तेन अवेदनेन ॥ १६ ॥ स्वप्रभावावेदनेनाहितमाह—यस्त्विति । सुप्तं सिंहमिवासीनं सिंहमिव स्थितमित्यर्थः । मृत्युमित्यत्रापि सुप्तमित्यनुषज्यते । अन्यथा प्रबोधयितुमिच्छतीत्यनेनानन्वयः । क्रुद्धं क्रोधार्हम् । यथा सुप्तं सिंहं मृत्युं वा प्रबोधयितुमिच्छन् पुरुषोऽनभिज्ञ एव । तद्वत् तूष्णीं स्थितं मां प्रकोपयन् रामोऽपीति भावः ॥१७॥ रामो मत्पराक्रमं न वेत्त्येव तत्तिष्ठतु मद्बाणवेगं वा जानाति, नैवेत्याह—नेति । लेलिहानतादृशां द्योतयितुं द्विजिह्वानित्युक्तम् ॥ १८ ॥ आदीपयिष्यामि सन्तापयिष्यामि । उल्काभिः निर्गतज्वालकाष्ठैः । कुञ्जरपलायनार्थमुल्काः प्रदर्शयन्तीति प्रसिद्धिः ॥ १९ ॥ एवं रामं पलाययित्वा तस्य सेनां हनिष्यामीत्याह—तच्चेति । आदास्ये खण्डयिष्ये । “ दो अवखण्डने ” इति धातुः ॥ २० ॥

देवानामप्यजय्योऽस्मि कथं मनुष्यादीनां जय्यो भविष्यामीत्याशयेनाह—न वासवेनेति । सहस्रचक्षुषेति तस्याभिमानातिशयोक्तिः । युधा युद्धेन न शक्योऽस्मि । जेतुमिति शेषः । उत्तरार्धेन कुवेरेणापि न जेतुं शक्य इति सिद्धम् । अत्र वंशस्थवृत्तम् ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥



न वासवेनापि सहस्रचक्षुषा युधाऽस्मि शक्यो वरुणेन वा पुनः । मया त्वियं बाहुबलेन निर्जिता पुरी पुरा वैश्रवणेन पालिता ॥ २१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

निशाचरेन्द्रस्य निशम्य वाक्यं स कुम्भकर्णस्य च गर्जितानि । विभीषणो राक्षसराजमुख्यमुवाच वाक्यं हितमर्थयुक्तम् ॥१॥ वृतो हि बाह्वन्तरभोगराशिश्चिन्ताविषः सुस्मिततीक्ष्णदंष्ट्रः । पञ्चाङ्गुलीपञ्चशिरोऽतिकायः सीतामहाहिस्तव केन राजन् ॥ २ ॥

एवं दुर्मन्त्रिभिः प्रभुचित्तानुसारेण कथिते तदसहमानो विभीषणः परमार्थं हितमुपदिशति—निशेति । स कुम्भकर्णस्येत्यत्र स इति छेदः । गर्जितानि निरर्थकवचनानि । अर्थयुक्तं कर्तव्यार्थबोधयुक्तम् ॥ १ ॥ अदेया न यथा सीतेति रावणवचनं प्रति वक्तुं सीतामहित्वेन रूपयति—वृत इति । बाह्वन्तरं वक्षः तदेव भोगराशिः फणापरिणाहो यस्य स तथा । यद्वा बाह्वन्तरे वक्षसि भोगराशिः सौख्यसम्पत् सैव बाह्वन्तरभोगराशिः तिर्यक् प्रसारितयोर्बाह्वो र्यदन्तरं तत्प्रमाणो भोगराशिः शरीरपरिणाहो यस्येत्यावृत्त्या रूपकनिर्वाहः । चिन्तैव विषं विरोधिप्राणहरत्वात् तत् यस्य सः चिन्ताविषः । सुस्मितं स्वाभाविकमन्दस्मितम् तदेव शुभ्रत्वेन कामुकहृदयहारित्वेन च तीक्ष्णा दंष्ट्रा यस्य सः सुस्मिततीक्ष्णदंष्ट्रः । चिन्तावशेन वदनोपधानीकृतपाणेः पञ्चाङ्गुल्य एव पञ्चशिरोरूपातिकायो यस्य सः पञ्चाङ्गुलीपञ्चशिरोतिकायः । सीतामहाहिः स्पर्शमात्रेण मारकाहिः । तव त्वया केन हेतुना वृतः, सर्वथा

न वासवेनेति । वासवेन यथा जेतुं न शक्योऽस्मि वरुणेनापि तथैवेत्यर्थः ॥ २१ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायण० युद्धकाण्डव्याख्यायां त्रयोदशः सर्गः ॥ १३ ॥

निशाचरेन्द्रस्येति । अर्थयुक्तं कर्तव्यार्थबोधकमित्यर्थः ॥ १ ॥ परावरज्ञो विभीषणः कुम्भकर्णादिप्रजल्पितमसहमानस्सन् परमहितमुपदिशति—वृतो हीति । बाह्वन्तरभोगराशिः बाह्वन्तरं बाहुमध्यं तदेव भोगराशिः सर्पशरीरपरिणाहो यस्य सः । पञ्चाङ्गुल्य एव पञ्च शिरांसि यस्य सः पञ्चाङ्गुलीपञ्चशिराः अतिकायो यस्य

त्यक्तव्य एवेति भावः । राजन्निति सान्त्वोक्तिः ॥ २ ॥ न केवलं तवैवानर्थहेतुः सीता किंतु तावकीनस्य सर्वस्येत्याह—यावदिति । "यावत्पुरानिपातयोर्लट्" इति लट् । तावदिति शेषः ॥ ३ ॥ यावदिति । स्पष्टम् ॥ ४ ॥ भित्त्वेति । तावच्छब्दो वाक्यालङ्कारे । प्राणान्ते भवाः प्राणान्तिकाः, प्राणहारिण इत्यर्थः । साक्षाद्राजानं प्रत्युक्तेरयुक्तत्वात् प्रहस्तं प्रति प्राणहरत्वोक्तिः । विकत्थसे आत्मानं श्लाघसे । "कत्थ श्लाघायाम्" इति धातुः ॥ ५ ॥

यावन्न लङ्कां समभिद्रवन्ति वलीमुखाः पर्वतकूटमात्राः । दंष्ट्रायुधाश्चैव नखायुधाश्च प्रदीयतां दाशरथाय मैथिली ॥ ३ ॥ यावन्न गृह्णन्ति शिरांसि बाणा रामेरिता राक्षसपुङ्गवानाम् । वज्रोपमा वायुसमानवेगाः प्रदीयतां दाशरथाय मैथिली ॥ ४ ॥ भित्त्वा न तावत् प्रविशन्ति कायं प्राणान्तिकास्तेऽशनितुल्यवेगाः । शिताः शरा राघवविप्रमुक्ताः प्रहस्त तेनैव विकत्थसे त्वम् ॥ ५ ॥ न कुम्भकर्णेन्द्रजितौ न राजा तथा महापार्श्वमहोदरौ वा । निकुम्भकुम्भौ च तथाऽतिकायः स्थातुं न शक्ता युधि राघवस्य ॥ ६॥ जीवंस्तु रामस्य न मोक्ष्यसे त्वं गुप्तः सवित्राप्यथवा मरुद्भिः । न वासवस्याङ्कगतो न मृत्योर्नभो न पातालमनुप्रविष्टः ॥ ७ ॥ निशम्य वाक्यं तु विभीषणस्य ततः प्रहस्तो वचनं बभाषे । न नो भयं विद्म न दैवतेभ्यो न दानवेभ्यो ह्यथवा कुतश्चित् ॥ ८ ॥

रामानु०—यावन्न गृह्णन्ति शिरांसि बाणा इत्यतः परं केषुचित् कोशेषु दृश्यमानः भित्त्वा न तावत् प्रविशन्ति कायमिति श्लोकः प्रहस्तोद्देशेन प्रवृत्तस्य तीक्ष्णा न तावादित्यस्यानन्तरं द्रष्टव्यः । अन्यथा प्रकरणविरोधः स्यात् ॥ ५ ॥ तर्हि कुम्भकर्णादयो रामं वारयिष्यन्तीत्यत्राह—न कुम्भकर्णेति । इदमपि प्रहस्तं प्रति वचनम् ॥ ६ ॥ राज्ञः असामर्थ्यं विशिष्य दर्शयति—जीवन्निति । रामस्य रामात् । विभक्तिव्यत्ययः । जीवन्न विमोक्ष्यसे प्राणपर्यन्तं न त्वां रामो विमोक्ष्यतीति भावः । अङ्कगतोऽपि पुत्रभावेनाङ्कस्थितोऽपीत्यर्थः । मृत्योरित्यत्रापि अङ्कगत इत्यनुषज्यते । नभः पातालं वाऽनुप्रविष्टः न मोक्ष्यस इति योजना ॥७ ॥ अस्माकं कुतश्चित् भयं न विद्म ! विसर्गलोपश्छान्दसः । एवं सामान्येनोक्त्वा विशिष्य दर्शयति न दैवतेभ्य इत्यादिना । भयं न विद्म इति सर्वत्रान्वेति ॥ ८ ॥

सः अतिकायः, पञ्चाङ्गुलीपञ्चशिराश्चासौ अतिकायश्च तथाविधः । चिन्ताविषः दुःखकलुषितचिन्तैव विषं यस्य सः । सुस्मितमेव तीक्ष्णा दंष्ट्रा यस्य सः एतादृशसीतामहाहिस्त्वया केन हेतुना वृतः, अनर्थसम्पादनाय गृहीत इत्यर्थः ॥ २–४ ॥ भित्त्वेति । प्राणान्तिकाः प्राणान्तकराः ॥ ५–१० ॥

पतगोत्तमेभ्यः गरुडेभ्यः । नरेन्द्रपुत्रात् मानुषबालादित्यर्थः । कथं नो भवितेत्यपि ध्वन्यते ॥ ९ ॥ महात्मा महाबुद्धिः । धर्मार्थकामेषु, स्वामिन इति शेषः ॥ १० ॥ प्रहस्तेति । महोदरोक्तत्वेन पूर्वमनुक्तमप्यनेनावगम्यते पूर्वमुक्तमिति । अर्थजातं यथा ब्रवीथ तथा रामं प्रति तत्कार्यजातं न शक्यम्, कर्तुमिति शेषः । अधर्मबुद्धेः स्वर्गं प्रति गतिर्यथा न शक्या तथैवेत्यर्थः ॥ ११ ॥ अशक्यत्वमेव विशदयति—वधस्त्विति । अर्थविशारदस्य कार्यदक्षस्य रामस्य वधः, अप्लुवस्य

न यक्षगन्धर्वमहोरगेभ्यो भयं न सञ्चे पतगोत्तमेभ्यः । कथं नु रामाद् भविता भयं नो नरेन्द्रपुत्रात् समरे कदाचित् ॥ ९ ॥ प्रहस्तवाक्यं त्वहितं निशम्य विभीषणो राजहितानुकांक्षी । ततो महात्मा वचनं बभाषे धर्मार्थकामेषु निविष्टबुद्धिः ॥ १० ॥ प्रहस्त राजा च महोदरश्च त्वं कुम्भकर्णश्च यथाऽर्थजातम् । ब्रवीथ रामं प्रति तन्न शक्यं यथा गतिः स्वर्गमधर्मबुद्धेः ॥ ११ ॥ वधस्तु रामस्य मया त्वया वा प्रहस्त सर्वैरपि राक्षसैर्वा । कथं भवेदर्थविशारदस्य महार्णवं तर्तुमिवाप्लवस्य ॥ १२ ॥ धर्मप्रधानस्य महारथस्य इक्ष्वाकुवंशप्रभवस्य राज्ञः । प्रहस्त देवाश्च तथाविधस्य कृत्येषु शक्तस्य भवन्ति मूढाः ॥ १३ ॥ तीक्ष्णा नता यत्तव कङ्कपत्रा दुरासदा राघवविप्रमुक्ताः । भित्त्वा शरीरं प्रविशन्ति बाणाः प्रहस्त तेनैव विकत्थसे त्वम् ॥ १४ ॥

नौरहितस्य महार्णवं तर्तुं तरितुम्, शक्तिरिति शेषः । शक्तिरिव कथं भवेत् न कथंचिदपि संभवतीत्यर्थः । एतेन वध्यौ दशरथात्मजावित्युक्तस्योत्तरमुक्तम् ॥ १२ ॥ उक्तमर्थं कैमुतिकन्यायेन द्रढयति—धर्मेति । धर्मप्रधानस्य "अप्यहं जीवितं जह्याम्" इत्युक्तरीत्या धर्मविरोधे तृणीकृतसकलेतरपुरुषार्थस्य । महारथस्य रणे आत्मानं सारथिं च रक्षन् शत्रुसंहारक्षमो महारथः तस्य । "आत्मानं सारथिं चाश्वान् रक्षन् युद्ध्येत यो नरः । स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः ॥" इत्युक्तेः । इक्ष्वाकुवंशप्रभवस्य जन्मसिद्धनिरतिशयपराक्रमस्य । राज्ञः सकलप्रकृतिमण्डलरञ्जकस्य । तथाविधस्य विराधकबन्धवालिप्रभृतिवधविदितवैभवस्य । शक्तस्य कार्यदक्षस्य । रामस्य कृत्येषु रणव्यापारेषु विषये देवाश्च मूढा भवन्ति अविदिततदीयव्यापारा भवन्तीत्यर्थः । किं पुनर्भवादृशा इति भावः ॥ १३ ॥ तीक्ष्णाः तीक्ष्णाग्राः, झटितिभेदनक्षमा इत्यर्थः । नताः नतपर्वाणः, ऋजव इत्यर्थः । सपदि

प्रहस्तेति । तन्न शक्यम्, कर्तुमिति शेषः । स्वर्गं स्वर्गमुद्दिश्य ॥ ११ ॥ अर्थविशारदस्य कार्यनिपुणस्य । तर्तुम्, शक्तिरिति शेषः ॥ १२–१४ ॥

भित्त्वा निर्गन्तुं क्षमा इति भावः । कङ्कपत्राः कङ्कानां पत्राण्येव पत्राणि येषां ते तथोक्ताः । कङ्कपक्षनिबद्धत्वेन महावेगा इत्यर्थः । अत एव दुरासदाः ॥ १४ ॥ रावणादयः सर्वेऽपि न समर्था इति योज्यम् ॥ १५ ॥ देवान्तक इति । अतिरथः अतिशयितरथः । महात्मा महाशरीरः । अद्रिसमानसारः गिरितुल्यबलः । "सारो बले स्थिरांशे च" इत्यमरः । देवान्तकादयो रावणपुत्राश्च राघवस्य युधि स्थातुं न शक्ताः ॥ १६॥ अमित्रप्रतिमैः कार्यतो

न रावणो नातिबलस्त्रिशीर्षो न कुम्भकर्णोऽस्य सुतो निकुम्भः । न चेन्द्रजिद्दाशरथिं प्रसोढुं त्वं वा रणे शक्रसमं समर्थाः ॥ १५ ॥ देवान्तको वापि नरान्तको वा तथातिकायोऽतिरथो महात्मा । अकम्पनश्चाद्रिसमानसारः स्थातुं न शक्ता युधि राघवस्य ॥ १६ ॥ अयं हि राजा व्यसनाभिभूतो मित्रैरमित्रप्रतिमैर्भवद्भिः । अन्वास्यते राक्षसनाशनार्थे तीक्ष्णः प्रकृत्या ह्यसमीक्ष्यकारी ॥ १७ ॥ अनन्तभोगेन सहस्रमूर्ध्ना नागेन भीमेन महाबलेन । बलात्परिक्षिप्तमिमं भवन्तो राजानमुत्क्षिप्य विमोचयन्तु ॥ १८ ॥ यावद्धि केशग्रहणात् सुहृद्भिः समेत्य सर्वैः परिपूर्णकामैः । निगृह्य राजा परिरक्षितव्यो भूतैर्यथा भीमबलैर्गृहीतः ॥ १९ ॥

रिपुतुल्यैः नाम्ना मित्रैः भवद्भिः त्वत्प्रमुखैः । व्यसनाभिभूतः सप्तव्यसनैराक्रान्तः । प्रकृत्या तीक्ष्णः उग्रः । असमीक्ष्यकारी अविमृश्यकारी । अयं राजा राक्षसनाशनार्थम् अन्वास्यते अनुस्त्रियते । अस्य राजत्वासमीक्ष्यकारित्वव्यसनाभिभूतत्वान्यपुरस्कृत्य तीक्ष्णत्वमेव पुरस्कुर्वन्तो भवन्तोऽभिभवन्ति । सर्वराक्षसविनाशं न जानन्तीति भावः । सप्तव्यसनस्वरूपमुक्तं कामन्दकेन–"वाग्दण्डयोस्तु पारुष्यमर्थदूषणमेव च । पानं स्त्री मृगया द्यूतं व्यसनं सप्तधा प्रभोः॥" इति ॥१७॥ एवं प्रहस्तप्रमुखान् मन्त्रिमुख्यान्निर्भर्त्स्य संप्रति कर्तव्यमुपदिशति–अनन्तेति । अनन्तभोगेन अपरिच्छिन्नकायेन । सहस्रमूर्ध्ना अत एव भीमेन । न केवलं भीमत्वमात्रं महाबलेन नागेन, शेषेणेत्यर्थः । परिक्षिप्तं परिवेष्टितम् । रामद्वेषो महासर्पवेष्टनतुल्य इति भावः ॥ १८ ॥ ननु समयोऽतीतः किं कुर्म इत्यत्राह–यावदिति । परिपूर्णकामैः अवाप्तसर्वाभीष्टैरित्यर्थः । राजतो लब्धकामैः राजकार्ये अवश्यं यतितव्यमिति

न रावण इति । दाशरथिं प्रसोढुं दाशरथिपराक्रमं सोढुमित्यर्थः ॥१५॥१६॥ अयम् अन्वास्यते अस्य चित्तानुकरणं क्रियत इत्यर्थः ॥१७॥ परिक्षिप्तं परिवेष्टितम् । रघुनाथेन वैरकरणं महासर्पवेष्टनमिवेति निदर्शनालङ्कारः ॥ १८ ॥ यावत्केशग्रहणं राजा निगृह्य रक्षितव्यः अकार्यप्रवृत्तोऽयं राजा केशेष्वाकृष्यापि निवारणीयः

भावः । सर्वैः सुहृद्भिः समेत्य ऐकमत्यं प्राप्येति यावत् । राजा भीमबलैः भृत्यैः गृहीतः पुरुष इव निगृह्य बलात्कृत्य यावत्केशग्रहणात् शत्रुभिः केशग्रहणपर्यन्तं परिरक्षितव्यः । "आकेशग्रहणान्मित्रमकृत्येभ्यो निवर्तयेत्" इति प्रसिद्धिं दर्शयति हिशब्दः । यद्वा आकेशग्रहणान्निगृह्य परिरक्षितव्यः अकार्यप्रवृत्तोऽयं राजा केशेष्वाकृष्यापि निवारणीय इत्यर्थः ॥ १९ ॥ संहारिणा विनाशकेन । राघवसागरेण लक्ष्मणसमुद्रेण । प्रच्छाद्यमानः । ततः काकुत्स्थपातालमुखे रामवडवाग्निमुखे । "पातालं वडवाग्नौ च" इति नानार्थरत्नमाला । पतन् सोऽयं राजा तरसा आरम्भकाल एव तारयितुं भवद्भिः

संहारिणा राघवसागरेण प्रच्छाद्यमानस्तरसा भवद्भिः । युक्तस्त्वयं तारयितुं समेत्य काकुत्स्थपातालमुखे पतन् सः ॥ २० ॥ इदं पुरस्यास्य सराक्षसस्य राज्ञश्च पथ्यं ससुहृज्जनस्य । सम्यग्घि वाक्यं स्वमतं ब्रवीमि नरेन्द्रपुत्राय ददाम पत्नीम् ॥ २१ ॥ परस्य वीर्यं स्वबलं च बुद्ध्वा स्थानं क्षयं चैव तथैव वृद्धिम् । तथा स्वपक्षेऽप्यनुमृश्य बुद्ध्या वदेत् क्षमं स्वामिहितं च मन्त्री ॥२२॥ इत्यार्षे श्रीरामायणे वाल्मी० श्रीमद्युद्धकाण्डे चतुर्दशः सर्गः ॥१४॥

हस्तप्रदानेनोत्तारयितुम् । युक्तः अर्हः । अत्र प्रच्छाद्यमानः पतन्निति प्रयोगौ वर्तमानसामीप्यात्, लक्ष्मणः प्रथमं ग्रहीष्यति ततो रामः अतो न जीवितुं शक्यम् । अतः प्रथममेव राजा निवर्तनीय इति भावः । सुवारिणेति पाठान्तरम् । तत्र सागरपक्षे सुजलेनेत्यर्थः । राघवपक्षे वारः स्यन्दनः । शोभनो वारः सुवारः सोऽस्यास्तीति सुवारी तेन । "सूर्यादिदिवसे वृन्दे कुन्दवृक्षे परिक्रमे । मद्यपात्रे स्यन्दने च वारो वरुणसेनयोः" इति निघण्टुः॥२०॥ मा दिशतु रामाय राजा वैदेहीम्, वयमेव बलाद्धि ददामः यदि हितमाकाङ्क्षितमित्याह–इदमिति । स्वमतं स्वस्य सिद्धान्तभूतम् । इदंशब्दार्थमाह नरेन्द्रेति ॥ २१ ॥ वयमपि सम्यगेव ब्रूमः शत्रुर्हन्तव्य इति तत्राह–परस्येति । मन्त्री परस्य शत्रोः वीर्यं स्वबलं स्वराजबलं च बुद्ध्वा, स्वराजपरराजयो र्बलं परीक्ष्येत्यर्थः । तथैव बलाबलपरीक्षावत् परस्य स्थानं संपदां साम्यम्, क्षयं वृद्धिं च बुद्ध्वा । तथा परस्येव स्वपक्षेऽपि बुद्ध्या सूक्ष्मदृष्ट्या स्थान

इत्यर्थः ॥ १९ ॥ सुवारिणा राघवसागरेणेति पाठः । शोभनो वारः वृन्दं सोऽस्यास्तीति सुवारी तेन । सागरपक्षे तु सुवारिणा शोभनजलेन ॥ २० ॥ इदमिति । ददामेति प्रार्थनायां लोट् ॥ २१ ॥ परस्येति । स्वबलं स्वबुद्धिबलम् । स्थानं पूर्वावस्थासाम्यम् । क्षयम् पूर्वावस्थातः शक्तिसिद्ध्योरपचयः क्षयः । वृद्धिम् पूर्वावस्थात उपचयो वृद्धिः ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां चतुर्दशः सर्गः ॥ १४ ॥

क्षयवृद्धीः अनुमृश्य आलोच्य । क्षमं युक्तं स्वामिहितं च वदेत् । परस्य क्षये स्ववृद्धौ यानम्, परस्य वृद्धौ स्वस्य क्षये सन्धिम् परस्य स्वस्य च साम्ये आसनं च स्वामिने कथयेदित्यर्थः । अत्र प्रकृते परस्य वृद्धेः रावणस्य नगरदहनतनयनाशादिना क्षयस्य दर्शनाच्च सीताप्रदानेन सन्धिरेव साधुरिति मन्त्रिभिर्भवत्स्वामिने निवेदनीयमिति भावः ॥२२॥ इति श्रीगोविन्दराजवि॰ श्रीरामायण॰ रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्दशः सर्गः॥१४॥

बृहस्पतेस्तुल्यमतेर्वचस्तन्निशम्य यत्नेन विभीषणस्य । ततो महात्मा वचनं बभाषे तत्रेन्द्रजिन्नैर्ऋतयोधमुख्यः ॥ १ ॥ किं नाम ते तात कनिष्ठवाक्यमनर्थकं चैव सुभीतवच्च । अस्मिन् कुले योऽपि भवेन्न जातः सोऽपीदृशं नैव वदेन्न कुर्यात् ॥ २ ॥ सत्त्वेन वीर्येण पराक्रमेण शौर्येण धैर्येण च तेजसा च । एकः कुलेऽस्मिन् पुरुषो विमुक्तो विभीषणस्तात कनिष्ठ एषः ॥ ३ ॥

अथेन्द्रजितो दुर्बुद्धिमुपन्यस्य दूषयति—बृहस्पतेरिति । ततो विभीषणवचनानन्तरम् । तत्र राक्षसेषु । यत्नेन निशम्य, असह्यतयेति भावः ॥ १ ॥ किन्नामेति । हे तात ते कनिष्ठवाक्यम् । अनर्थकं प्रयोजनशून्यम् । अनुष्ठातुरभावादिति भावः । सुभीतवत् सुभीतिमत् । किन्नाम कीदृशं जुगुप्सितमित्यर्थः । नामशब्दः कुत्सनद्योतकः । "नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने" इति वैजयन्ती । तदेवोपपादयति—अस्मिन्निति । आद्योऽपिशब्दः प्रश्ने । अपि ननु । अस्मिन् कुले पौलस्त्यवंशे । यो जातो न भवेत् । अन्यस्मिन् कुले यो जातः सोऽपि ईदृशं न वदेत् न कुर्यात् । ईदृग्वचनार्थं नानुतिष्ठेत् । ईदृग्वचनं वक्तृश्रोत्रोरुभयोरपि निन्दनीयम् । यद्वा हे तात कनिष्ठ ! ते वाक्यं किं नाम, जुगुप्सितमित्यर्थः । जुगुप्सितत्वमेवाह—अस्मिन्निति । न कुर्यात् न चिन्तयेत् । अत्र करोतिश्चिन्ताक्रियायां वर्तते । मुख्यस्य करणार्थस्यासम्भवात् सर्वधात्वर्थेषु करोत्यर्थस्य सम्भवाच्च ॥ २ ॥ एतद्वाक्यमेतत्स्वभावस्य सदृशमित्याह—सत्त्वेनेति । सत्त्वेन बलेन । वीर्येण प्रभावेन । "वीर्यं बले प्रभावे च" इत्यमरः । पराक्रमेण उद्योगेन । "शौर्योद्योगौ परा

अथेन्द्रजितो दुर्बुद्धिमुपन्यस्य दूषयति—बृहस्पतेरिति ॥ १ ॥ तात ! ते कनिष्ठवाक्यं किं नाम कीदृशम्, गर्हितमित्यर्थः । सुभीतवत् सुभीतिमत्, आद्योऽपिशब्दः प्रश्ने । अपि ननु । अस्मिन् कुले पौलस्त्यवंशे यो जातो न भवेत् अन्यस्मिन् कुले यो जातः सोऽपीदृशं नैव वदेत न कुर्यात् । करोतेः क्रियासामान्यत्वान्न चिन्तयेदित्यर्थः ॥ २ ॥ सत्त्वेन बलेन, वीर्येण प्रभावेन, शौर्येण उत्साहेन, तेजसा पराभिभवसामर्थ्येन ॥ ३ ॥

क्रमौ" इत्यमरः । शौर्येण साहसिक्येन । धैर्येण स्थैर्येण । तेजसा गर्वेण । पराभिभवासहनमीति यावत् ॥ ३ ॥ एवं रावणं प्रत्युक्त्वा विभीषणं निर्भर्त्सयति--किन्नामेत्यादिना । राक्षसेति हीनसम्बोधनमाग्रहकृत्यम् । तौ राजपुत्रौ किं नाम न किंचिदपि, अतिदुर्बलावित्यर्थः । कुत इत्यत्राह--अस्माकमेकेनेति । अस्माकं मध्ये सुप्राकृतेन अतिक्षुद्रेणापि एकेन राक्षसेन एतौ निहन्तुं शक्यौ हि । अतः भीरो ! कुतोऽस्मान् भीषयसे स्वयं भीतोऽस्मान् भीषयसे । नास्माकं किंचित् भयमिति भावः ॥४॥ भयाभावे पूर्ववृत्तं संवादयति--त्रिलोकेति । नन्वित्यामन्त्रणे ! त्रिलोकनाथ इत्यैश्वर्यमुक्तम् । देवराज इति

किं नाम तौ राक्षस राजपुत्रावस्माकमेकेन हि राक्षसेन । सुप्राकृतेनापि रणे निहन्तुं शक्यौ कुतो भीषयसे स्म भीरो ॥ ४ ॥ त्रिलोकनाथो ननु देवराजः शक्रो मया भूमितले निविष्टः । भयार्दिताश्चापि दिशः प्रपन्नाः सर्वे तथा देवगणाः समग्राः ॥ ५ ॥ ऐरावतो विस्वरमुन्नदन् स निपातितो भूमितले मया तु । विकृष्य दन्तौ तु मया प्रसह्य वित्रासिता देवगणाः समग्राः ॥ ६ ॥ सोऽहं सुराणामपि दर्पहन्ता दैत्योत्तमानामपि शोकदाता । कथं नरेन्द्रात्मजयोर्न शक्तो मनुष्ययोः प्राकृतयोः सुवीर्यः ॥ ७ ॥ अथेन्द्रकल्पस्य दुरासदस्य महौजसस्तद्वचनं निशम्य । ततो महार्थं वचनं बभाषे विभीषणः शस्त्रभृतां वरिष्ठः ॥ ८ ॥

सैन्यसामग्री दार्शिता । मया हेतुना । भूमितले निविष्टः स्थितः । निवेशित इत्यर्थ इत्यन्ये ॥५॥ ऐरावत इति । उन्नदन् उद्घुष्यन् । विकृष्य उत्पाट्य । ताभ्यां सर्वे देवगणाः वित्रासिताः । हेतुभेदेन देवानां भयान्तरमत्रोक्तमिति न पुनरुक्तिः ॥६॥ स्ववृत्तप्रदर्शनफलमाह--सोऽहमिति । मनुष्ययोरिति देवासुरव्यावृत्तिः । प्राकृतयोरिति इन्द्रव्यावृत्तिः । नरेन्द्रात्मजयोरिति बाल्योक्तिः । कथं न शक्तोऽस्मि अतः कुतो भीषयसे इति पूर्वेणान्वयः ॥७॥ अथेति । इन्द्रकल्पस्येत्यादिविशेषणत्रयेण पूर्वोक्तस्य यथार्थत्वमुक्तम् । शस्त्रभृतां वरिष्ठ इत्यनेनाभीरुत्वमुक्तम् । महार्थमित्यनेन वक्ष्यमाणार्थस्येन्द्रजिता

हे राक्षस ! राजपुत्रौ किंनाम न किञ्चिदपि दुर्बलावित्यर्थः । कुत इत्यत्राह--अस्माकमिति ॥ ४ ॥ भूमितले भूतले । निविष्टः निवेशितः । कारागृहे निबद्ध इत्यर्थः ॥ ५ ॥ विकृष्य उत्कृष्य ॥ ६--९ ॥

दुर्ज्ञेयत्वमुक्तम् ॥ ८ ॥ न तातेति । अनेन निकृष्टवयस्त्वमुक्तम् । बालत्वेऽपि कस्यचित्सुमतिः सम्भवति साऽपि नास्तीत्याह अद्यापीति । अविपक्वबुद्धिः अपरिणतबुद्धिः । निश्चयाभावं दर्शयति तस्मादिति । विप्रलप्तं विप्रलपितम् ॥ ९ ॥ न केवलं स्वाज्ञानस्य स्वविनाश एव फलं किन्तु पितृविनाशोऽपीत्याह–पुत्रेति । हे इन्द्रजित् ! त्वं पुत्रप्रवादेन पुत्रप्रसिद्ध्या । इत्थंभावे तृतीया । मित्रस्य मुखमिव मुखं यस्य सः तथोक्तः । मित्रवद्भासमान

न तात मन्त्रे तव निश्चयोऽस्ति बालस्त्वमद्याप्यविपक्वबुद्धिः । तस्मात्त्वया ह्यात्मविनाशनाय वचोऽर्थहीनं बहु विप्रलप्तम् ॥ ९ ॥ पुत्रप्रवादेन तु रावणस्य त्वमिन्द्रजिन्मित्रमुखोऽसि शत्रुः । यस्येदृशं राघवतो विनाशं निशम्य मोहादनुमन्यसे त्वम् ॥ १० ॥ त्वमेव वध्यश्च सुदुर्मतिश्च स चापि वध्यो य इहानयत्त्वाम् । बालं दृढं साहसिकं च योऽद्य प्रावेशयन्मन्त्रकृतां समीपम् ॥ ११ ॥ मूढः प्रगल्भोऽविनयोपपन्नस्तीक्ष्णस्वभावोऽल्पमतिर्दुरात्मा । मूर्खस्त्वमत्यन्तसुदुर्मतिश्च त्वमिन्द्रजिद् बालतया ब्रवीषि ॥ १२ ॥ को ब्रह्मदण्डप्रतिमप्रकाशानर्चिष्मतः कालनिकाशरूपान् । सहेत बाणान् यमदण्डकल्पान् समक्षमुक्तान्द् युधि राघवेण ॥ १३ ॥

इत्यर्थः । शत्रुरसि । शत्रुत्वमेवोपपादयति–यस्येति । त्वं यस्य रावणस्य ईदृशं पुत्रमित्रविनाशपर्यन्तं राघवतो रामात् विनाशं निशम्य मन्मुखाच्छ्रुत्वा मोहादनुमन्यसे तस्य रावणस्य त्वं शत्रुरसीत्यर्थः । मोहादित्यनेन मित्रमुखत्वमुपपादितम् । अनुमन्यस इत्यनेन शत्रुत्वम् ॥ १० ॥ एवमनुमोदनस्य दण्डमाह–त्वमेवेति । त्वमेव वध्यः दण्ड्यः किमित्यर्थः । किन्तु यस्त्वाम् इह सभायाम् आनयत् प्रावेशयच्च स एव वध्यः ॥ ११ ॥ सुदुर्मतिश्चेति चशब्ददर्शितान् दोषानाह–मूढ इति । मूढः कृत्याकृत्यविवेकशून्यः । प्रगल्भः धृष्टः, पण्डितम्मन्य इति यावत् । अविनयोपपन्नः अशिक्षित इत्यर्थः । तीक्ष्णस्वभावः क्रूरप्रकृतिः । दुरात्मा दुष्टान्तःकरणः । मूर्खः अविमृश्यकारी । अत्यन्तसुदुर्मतिः । प्रहस्तो दुर्मतिः महापार्श्वादिः सुदुर्मतिः । त्वमत्यन्तसुदुर्मतिरित्यर्थः । त्वमेवम्भूतोऽसि अतस्त्वं बालतया ब्रवीषि इति सम्बन्धः ॥१२॥ दुर्मतित्वे हेतुमाह–क इति । ब्रह्मदण्डप्रतिमप्रकाशान् ब्रह्मदण्डसदृश

पुत्रप्रवादेन पुत्रव्यपदेशेन रावणस्य त्वं मित्रमुखः मित्रवद्भासमानःशत्रुरसि । कुतः ? यस्येति । यस्य रावणस्य ॥१०॥ ११॥ मूढः जडः । प्रगल्भः पण्डितम्मन्यः । अविनयोपपन्नः, सद्भिरशिक्षित इत्यर्थः । मूर्खः अविवेकी ॥ १२ ॥ ब्रह्मदण्डप्रतिमप्रकाशान् ब्रह्मदण्डतुल्यप्रभावान् । कालनिकाशरूपान् मृत्युतुल्यरूपान् ॥ १३ ॥

प्रभान् । ब्रह्मदण्डो नाम युगान्तसमुत्थितोऽग्निवर्णो धूमकेतुरित्येके । ब्रह्मशाप इत्यन्ये । आर्चिष्मतः ज्वालावतः । "अर्चिर्हेतिः शिखा स्त्रियाम्" इत्यमरः । कालनिकाशरूपान् अन्तकसदृशरूपान् । समक्षमुक्तान् समीपे मुक्तान् ॥ १३ ॥ कृतस्याकृत्यस्य प्रायश्चित्तं राजानं प्रत्याह—धनानीति । रत्नानि श्रेष्ठ वस्तूनि । "रत्नं स्वजातौ श्रेष्ठेऽपि" इत्यमरः । धनानि द्रव्याणि ॥१४॥ इति श्रीगोविन्द० श्रीरामा० रत्न० युद्धकाण्डव्याख्याने पञ्चदशः सर्गः ॥१५॥

धनानि रत्नानि विभूषणानि वासांसि दिव्यानि मणींश्च चित्रान् । सीतां च रामाय निवेद्य देवीं वसेम राजन्निह वीतशोकाः ॥ १४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम् । अब्रवीत् परुषं वाक्यं रावणः कालचोदितः ॥ १ ॥

इत्थं हितमुक्तवन्तं विभीषणं प्रति रावणस्य परुषभाषणं षोडशे—सुनिविष्टमिति । सुसन्निवेशम् अर्थानुसन्धानविरहेऽपि श्रवणमात्रेणात्यन्तप्रीतिजनकम् । तेनार्थस्याननुकूलत्वेऽपि श्रवणस्यापरित्याज्यत्वमुक्तम् । सुनिविष्टम् उक्तवन्तमिति क्रियाविशेषणं वा । तेन मनस्यलग्नं चेदनादरणीयं वा स्यात् । मनसि सम्यग्लग्नं यथा भवति तथा उक्तवन्तम् । हितं न केवलं श्रवणप्रियम्, अतिदुर्दशानिस्तरणोपायतया पथ्यम् । श्रवणकटुत्वेऽपि पथ्यत्वपर्यालोचनया अपरित्याज्यम् । वाक्यं यावद्वक्तव्यार्थपूर्णम् उक्तवन्तम् । "नासंवत्सरवासिने प्रब्रूयात्" इत्युक्तरीत्या गुरूपसदनयुक्तस्य पादयोः पतितस्य वक्तव्यस्य दुरवस्थां दृष्ट्वोक्तवन्तं विभीषणम् । अन्येन चेदुक्तं परित्याज्यम् । साक्षादनुजतया प्रत्यासन्नेनोक्तं कथं त्याज्यम् । परुषं वाक्यमब्रवीत् । श्रवणसमनन्तरं स्थितोऽस्मि गतसन्देह इति वा वक्तव्यम् । त्वया महोपकारः कृत इति स्तोत्रं वा कर्तव्यम् । सदृशप्रत्युपकाराभावेनानुतापो वा कर्तव्यः । तद्विहाय शत्रून् प्रति वक्तव्यमुक्तवान् । अब्रवीदित्यनेन यथा सुनिविष्टमुक्तं तथा मनसि सुलग्नं यथा भवति तथा व्यक्तमुक्तवान् । एवमुक्तवन्तं प्रत्यपि परुषोक्तौ हेतुद्वयमाह—रावण इत्यादि । रावयति रोदयतीति रावणः । परहिंसायां जगद्विदितः । रौतीति रवणः स एव रावणः । स्वार्थेऽण्प्रत्ययः । अस्थाने पदं दत्त्वा स्वयमप्याक्रन्दन्नित्यर्थः । कालचोदितः । भ्राता रामं शरणं गच्छेत्युक्तवान् कालस्तत्र कर्तव्यमिति स्वयं द्विधा भज्येयमिति । अतः स्वप्रकृत्यनुगुणं काल

धनानि श्रेष्ठवस्तूनि निवेद्य समर्प्य ॥ १४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां पञ्चदशः सर्गः ॥ १५ ॥
सुनिविष्टमिति । सुनिविष्टं सुष्ठु विनीतिनिष्ठमिति यावत् ॥ १ ॥

मनुसृतवानिति भावः ॥ १ ॥ परुषमेवाह—वसेदिति । सपत्नेन बाह्यशत्रुणा । मित्रप्रवादेन मित्रवदवभासमानेनेत्यर्थः । शत्रुसेविना शत्रुपक्षपातिना । सहजशत्रुणेत्यर्थः । शत्रुसर्पसहवासादपि सहजशत्रुसहवासः सुदूरं परिहर्तव्य इति भावः। अतस्त्वया अस्मान्नगरात् सद्यो गन्तव्यमिति द्योत्यते ॥ २ ॥ अत्र शत्रुसेवित्वे हेतून् त्रिभिर्दर्शयति—जानामीत्यादिभिः । सर्वलोकेषु सर्वजनेषु मध्ये । शीलं स्वभावम् । शीलमेवाह हृष्यन्तीति । अस्मद्व्यसनेन लब्धहर्षस्त्वमेवं गर्जसीति भावः ॥ ३ ॥ प्रधानमिति । ज्ञातयः । प्रधानं स्वजातिश्रेष्ठम् । साधनं कार्यसाधकम् । वैद्यं विद्वांसम् । प्राधान्यादिष्वेकैक

वसेत् सह सपत्नेन क्रुद्धेनाशीविषेण वा । न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ॥ २ ॥ जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस । हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा ॥ ३ ॥ प्रधानं साधनं वैद्यं धर्मशीलं च राक्षस । ज्ञातयो ह्यवमन्यन्ते शूरं परिभवन्ति च ॥ ४ ॥ नित्यमन्योन्यसंहृष्टा व्यसनेष्वाततायिनः । प्रच्छन्नहृदया घोरा ज्ञातयस्तु भयावहाः ॥५॥ श्रूयन्ते हस्तिभिर्गीताः श्लोकाः पद्मवने क्वचित् । पाशहस्तान्नरान् दृष्ट्वा शृणु तान् गदतो मम ॥ ६ ॥ नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः। घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः ॥७॥

गुणयोगेऽपि ज्ञातयोऽवमन्यन्ते, न बहुमन्यन्ते अवसरे परिभवन्ति चेत्यर्थः ॥ ४ ॥ एवं ज्ञातीनां ज्ञातिषु व्यसने हर्षः उत्कर्षेऽसूया चेति शीलद्वय मुक्तम्। अथ भयावहत्वरूपं शीलान्तरमाह—नित्यमिति । प्रतिच्छन्नहृदयाः गूढाभिप्रायाः । अत एव नित्यमन्योन्यसंहृष्टाः बहिः स्नेहवन्त इव स्थिताः। घोराः क्रूरकर्माणः । अत एव व्यसनेषु सत्सु आततायिनः द्रोहकारिणः । अतस्त्वमस्मासु व्यसने प्रहर्तुमिच्छसीति भावः ॥ ५ ॥ उक्तं ज्ञातीनां भया वहत्वं हस्तिगीतेन संवादयति—श्रूयन्त इत्यादिना । क्वचित्पद्मवने । पाशहस्तान् पाशाः गजग्रहणरज्जवः ते हस्तेषु येषां ते तथोक्तान् । स्वबन्धनोद्युक्ता निति यावत् । नरान् ज्ञातिगजगोप्तॄन् गजग्राहिपुरुषान् दृष्ट्वा हस्तिभिः गीताः पठिताः श्लोकाः श्रूयन्ते । वक्तृपरम्परया तान् श्लोकान् गदतः वदतः मम मत्तः शृणु ॥ ६ ॥ तानेव त्रीन् श्लोकानुपादत्ते—नाग्निरित्यादि । नः अस्माकम् । अग्निः आश्रयाशोऽपि न भयावहः । अन्यानि लोकविलक्षणानि

शत्रुसेविना शत्रुपक्षपातिना ॥ २ ॥ ३ ॥ साधनं कार्यसाधकम् । वैद्यं विद्वांसम् । अवमन्यन्ते परिभवन्ति च ॥ ४ ॥ नित्यम् इतरकालेषु व्यसनेष्वापत्सु च । आततायिनः द्रोहकारिणः ॥ ५ ॥ उक्तं ज्ञातीनां भयावहत्वं हस्तिगीतामुखेन संवादयितुमाह—श्रूयन्त इति ॥ ६ ॥ नेति । स्वार्थप्रयुक्ताः स्वार्थपराः ॥ ७ ॥ ८ ॥

अग्नितोऽपि क्षणान्नाशकराणि । शस्त्राणि आयुधानि च । न भयावहानि । [illegible] क्लेशकराश्च न भयावहाः । किंतु घोराः निर्दयाः स्वार्थप्रयुक्ताः स्वप्रयोजनपराः ज्ञातयः भयावहाः । अग्न्यादिभ्योऽप्यधिकं ज्ञातिभ्यो भयमित्यर्थः ॥ ७ ॥ उक्तं ज्ञातिभयातिरेकं सयुक्तिकमुपपादयति—उपायमिति । अस्माकं ग्रहणे एते ज्ञातिरूपा हस्तिनः उपायं वक्ष्यन्ति अत्रोपायकथने संशयो नास्ति । अतः कृत्स्नादग्न्यादिभयात् ज्ञातिभयं सुकष्टम् । प्रकृष्टं भयमित्यर्थः, इदमस्माभिः विदितं ज्ञातं च ॥ ८ ॥ स्निग्धेषु ज्ञातिषु कुतो भयसम्भावनेत्याशङ्क्याह—विद्यत इति । गोसम्पत्त्याद्युपादानं दृष्टान्ता

उपायमेते वक्ष्यन्ति ग्रहणे नात्र संशयः । कृत्स्नाद्भयाज्ज्ञातिभयं सुकष्टं विदितं च नः ॥ ८ ॥
विद्यते गोषु सम्पन्नं विद्यते ब्राह्मणे दमः । विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् ॥ ९ ॥
ततो नेष्टमिदं सौम्य यदहं लोकसत्कृतः । ऐश्वर्यमभिजातश्च ज्ञातीनां मूर्ध्न्यवस्थितः ॥ १० ॥
यथा पुष्करपर्णेषु पतितास्तोयबिन्दवः । न श्लेषमुपगच्छन्ति तथाऽनार्येषु सङ्गतम् ॥ ११ ॥
यथा मधुकरस्तर्षाद्रसं विन्दन्न विद्यते । तथा त्वमपि तत्रैव तथाऽनार्येषु सौहृदम् ॥ १२ ॥

र्थम् । गोषु सम्पन्नं सम्पत्तिः । तद्धेतुत्वमित्यर्थः । विद्यते अस्ति । "विद सत्तायाम्" इति धातुः । दमः इन्द्रियनिग्रहः । चापल्यं चञ्चलत्वम् । ज्ञातितः ज्ञातिषु । भयं भयकरत्वम् ॥ ९ ॥ प्रधानं साधनमिति श्लोकोक्तं निदर्शयति—तत इति । अहं लोकसत्कृतः ऐश्वर्यम् अभिजातः प्राप्तः । रिपूणां मूर्ध्न्यवस्थितश्चेति यत् इदं ततः ज्ञातीनामसहिष्णुत्वात् तव नेष्टम् ॥ १० ॥ रामानु०—सौम्येत्याक्षेपोक्तिः ॥ १० ॥ चिरं सह वसति विभीषणे कथमकार्यमाशङ्कसे इत्यपेक्षाया मनार्यस्य चिरसंवासोऽप्रयोजक इत्याह—यथेति । पुष्करपर्णेषु पद्मपत्रेषु । पतितास्तोयबिन्दवः यथा श्लेषम् ऐक्यं नोपगच्छन्ति तथा अनार्येषु दुष्टेषु विषये । सङ्गतं सम्बन्धः । श्लेषं स्नेहबन्धं नोपयातीत्यर्थः ॥ ११ ॥ त्वदुपजीविनस्त्वयि कथं स्नेहबन्धाभाव इत्यत्राह—यथेति । यथा मधुकरः तर्षात् अभि

सम्पन्नं सम्पत्तिः ॥ ९ ॥ अहम् ऐश्वर्यमभिजातः प्राप्तः लोकसत्कृत इति यत् इदं ज्ञातीनामसह्यत्वात्तव नेष्टम् ॥ १० ॥ ११ ॥ तर्षात् अभिलाषात् । रसं मकरन्दं पिबन् तत्र रसाधारे कुसुमे न विद्यते न तिष्ठति । त्वमपि तथा मधुकर इव । अनार्येषु सङ्गतं तथा तादृशमित्यर्थः ॥ १२ ॥

लाषात्। रसं मकरन्दम्। विन्दन् पिबन्। तत्र रसाधारे पुष्पे। न विद्यते न तिष्ठति। रसप्रदानोपकारं जानन् तत्र न स्निह्यतीत्यर्थः। त्वमपि तथा मधुकर इव। अनार्येषु दुर्जनेषु सौहृदं तथा हि। उपजीव्यविषये न जायत इत्यर्थान्तरन्यासः ॥ १२ ॥ रामानु०-यथेति। मधुकरः तर्षात् तृष्णातः रसं विन्दन् पिबन् तत्र रसाधारे यथा न सक्तो भवति त्वमपि तथैव। अनार्येषु सौहृदं तथा तथा खल्वित्यर्थः ॥ १२ ॥ तथापि कृतस्नेहः कुतोऽपलप्यते तत्राह–यथेति। अनार्येषु सौहृदं गजस्नानवत्तैरेव दुष्यत इत्यर्थः ॥ १३ ॥ रामानु०-यथा पूर्वमिति। गजः पूर्वं स्नात्वा हस्तेन रजो गृह्य गृहीत्वा आत्मनो देहं यथा दूषयति अनार्येषु सौहृदं तथा तादृशम्।

यथा पूर्वं गजः स्नात्वा गृह्य हस्तेन वै रजः। दूषयत्यात्मनो देहं तथाऽनार्येषु सौहृदम् ॥ १३ ॥
यथा शरदि मेघानां सिञ्चतामपि गर्जताम्। न भवत्यम्बुसंक्लेदस्तथाऽनार्येषु सौहृदम् ॥ १४ ॥
अन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर। अस्मिन् मुहूर्ते न भवेत्त्वां तु धिक् कुलपांसनम् ॥ १५ ॥
इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः। उत्पपात गदापाणिश्चतुर्भिः सह राक्षसैः ॥ १६ ॥

गजा इवानार्याः पूर्वं कृतं स्नेहं स्वयमेव नाशयन्तीत्यर्थः ॥ १३ ॥ दृष्टोऽपि स्नेहो न फलपर्यवसायीत्याह–यथेति। शरदि सिञ्चतां वर्षताम् मेघानां सम्बन्धी अम्बुसंक्लेदः अम्बुसेचनं यथा न भवति तथाऽनार्येषु सौहृदम्। शरन्मेघवर्षणवदनार्येषु सौहृदमनुपकारकमित्यर्थः ॥ १४ ॥ रामानु०-यथेति। शरदि सिञ्चतां जलं मुञ्चतां गर्जतां च मेघानां संबन्धी अम्बुसंक्लेदः भुवि सम्यगार्द्रताहेतुस्तोयधारा न भवति यथा। अनार्येषु सौहृदं तथा। शरदि मेघा इव अनार्याः आपातत उपकुर्वन्त इव प्रतीयमाना वस्तुतो नोपकुर्वन्तीत्यर्थः ॥ १४ ॥ एवं सामान्येन विनिन्द्य साक्षादपि निन्दति–अन्य इति। अन्यः अनुजादन्यः एवंविधम् अतिपरुषम् एतत्पूर्वोक्तं वाक्यं ब्रूयात् वदेच्चेत् अस्मिन्मुहूर्तेऽस्मिन् क्षण एव न भवेत् विनश्येत्। नाशयेयमिति यावत्। त्वां तु भ्रात्राभासं धिक् त्यक्ष्यामीत्यर्थः। कुलपांसनं राक्षसकुलावद्यकरम् ॥ १५ ॥ इत्युक्त इति। न्यायवाद्यपि इति पूर्वोक्तरीत्या परुषमुक्तस्सन् उत्पपात सन्तप्तसिकतामयभूमिस्थित इव उद्गतः ॥ १६ ॥

यथेति। गजः पूर्वं स्नात्वा हस्तेन रजो गृह्य गृहीत्वा आत्मनो देहं यथा दूषयति अनार्येषु सङ्गतं तथा तादृशम्। गज इव अनार्याः पूर्वं कृतं स्नेहं स्वयमेव नाशयन्तीत्यर्थः ॥ १३ ॥ शरदि सिञ्चतां जललवान् मुञ्चतां मेघानां यथा आर्द्रीभावो न भवति, मेघा इव अनार्याः आपातत उपकुर्वन्त इव प्रतीयमाना अपि वस्तुतो नोपकुर्वन्तीत्यर्थः ॥ १४–१६ ॥

एवमाकाशे उत्पतन्नपि पुनस्तस्मिन्ननुतापेन अपि नाम समुद्भवेत् समीची मतिरिति द्वितोपदेशे प्रावर्ततेत्याह—अब्रवीदिति । अन्तरिक्षगतः श्रीमान् । "परित्यक्ता मया लङ्का मित्राणि च धनानि च" इति समुत्थितस्य का नाम श्रीः ? उच्यते—प्रतिकूलनिवृत्तिपूर्वकानुकूलरामविषयाभिमुख्यश्रीसमेत इत्यर्थः ॥ १७ ॥ रामानु०—अत्र श्रीशब्देन सोपाधिकप्रतिकूलसंबन्धपरित्यागपूर्वकनिरुपाधिकस्वामिसंबन्धावलम्बनरूपा श्रीरुच्यते ॥ १७ ॥ स त्वमित्यर्धमेकं वाक्यम् । स त्वं परुषवादी त्वम् । भ्रातासि प्रतिवक्तुमनर्होऽसि अतो यद्यदिच्छसि तद्वद ॥ १८ ॥ तर्हि किमर्थमुद्गतोऽसि प्रतिवचनाभावात्

अब्रवीच्च तदा वाक्यं जातक्रोधो विभीषणः । अन्तरिक्षगतः श्रीमान् भ्रातरं राक्षसाधिपम् ॥ १७ ॥ स त्वं भ्राताऽसि मे राजन् ब्रूहि मां यद्यदिच्छसि ॥ १८ ॥ ज्येष्ठो मान्यः पितृसमो न च धर्मपथे स्थितः । इदं तु परुषं वाक्यं न क्षमाम्यनृतं तव ॥ १९ ॥ सुनीतं हितकामेन वाक्यमुक्तं दशानन । न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः ॥ २० ॥ सुलभाः पुरुषा राजन् सततं प्रियवादिनः । अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ २१ ॥ बद्धं कालस्य पाशेन सर्वभूतापहारिणा । न नश्यन्तमुपेक्षेयं प्रदीप्तं शरणं यथा ॥ २२ ॥ दीप्तपावकसङ्काशैः शितैः काञ्चनभूषणैः । न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः ॥ २३ ॥

क्षमापि क्रियतां तत्राह—ज्येष्ठ इति । ज्येष्ठस्त्वं पितृसमः मान्यः । किंतु धर्मपथे न स्थितोऽसि । अतस्त्वदुक्तमनृतं परुषं न क्षमामि न क्षमे ॥ १९ ॥ रामानु०—इदमिति । वसेत्सह सपत्नेनेत्यादिना यदुक्तं तदिदम् ॥ १९ ॥ स्ववाक्याश्रवणे निमित्तं सामान्यतो दर्शयति—सुनीतमिति । स्पष्टम् ॥ २० ॥ सुलभा इति । प्रियवादिन इत्युपलक्षणं प्रियश्रोतारश्च ॥ २१ ॥ तर्ह्यश्रोतारं प्रति किमर्थं वदसि ? तत्राह—बद्धमिति । सर्वभूतापहारिणा निर्दयेनेत्यर्थः । नोपेक्षेयम् नोपेक्षेय । शरणं गृहम् ॥ २२ ॥ दीप्तेति । स्पष्टम् ॥ २३ ॥

अब्रवीदित्यादि—ज्येष्ठो मान्य इत्यन्ते वाक्यसमाप्तिः । न च धर्मपथे स्थित इति परशेषः । यतो न धर्मपथे स्थितः अतः इदं न क्षमामीति सम्बन्धः ॥ १७-१९ ॥ सुनीतं सुनिर्मितम् । उपेक्षेयम् उपेक्षेय । शरणं गृहम् ॥ २२-२४ ॥

शौर्यबलास्त्रशालिनो मे कुतो विपदाशङ्केत्यत्राह—शूरा इति । कालाभिपन्नाः मृत्युगृहीताः । सीदन्ति शीर्यन्ति । वालुकाः सिकताः ॥ २४ ॥ तदिति । मर्षयतु, भवानिति शेषः ॥ २५ ॥ स्वस्तीत्यर्धम् ॥ २६ ॥ निवार्यमाणस्येति । स्पष्टम् ॥ २७ ॥ रामानु०—परीतकालाः परीतः प्रत्यासन्नः कालो मृत्युर्येषां ते तथोक्ताः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे । कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ २४ ॥ तन्मर्षयतु यच्चोक्तं गुरुत्वाद्धितमिच्छता । आत्मानं सर्वथा रक्ष पुरीं चेमां सराक्षसाम् ॥ २५ ॥ स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥ २६ ॥ [ नूनं न ते रावण कश्चिदस्ति रक्षोनिकायेषु सुहृत् सखा वा । हितोपदेशस्य स मन्त्रवक्ता यो वारयेत्त्वां स्वयमेव पापात् ॥ ] निवार्यमाणस्य मया हितैषिणा न रोचते ते वचनं निशाचर । परीतकाला हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥२७॥ इत्यार्षे श्रीरामायणे० श्रीमद्युद्धकाण्डे षोडशः सर्गः ॥१६॥

इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः । आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः ॥ १ ॥

एवमष्टभिः सर्गैः—“ आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥ आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ॥” इत्युक्तेषु शरणागत्यङ्गेषु प्रपित्सोर्विभीषणस्यानुकूल्यसङ्कल्पप्रातिकूल्यवर्जने दर्शिते । पुनः पुनरुपदेशादिना महाविश्वासो दर्शितः । अथ कार्पण्यप्रदर्शनपूर्वकं शरणागतिस्वरूपं दर्शयितुमुपक्रमते—इत्युक्त्वेत्यादिना । तत्र रावणेन तिरस्कारे सत्यस्य देश एवास्माभिस्त्याज्यः । परमधार्मिकश्रीरामाश्रयस्तु कर्तव्य इति धार्मिकस्य विभीषणस्य धर्मे मतिरासीदित्यृषिः प्रस्तौति—इतीति । इत्युक्त्वा “प्रदीयतां दाशरथाय मैथिली” इति मर्षयतु, भवानिति शेषः ॥ २५ ॥ २६ ॥ परीतकालाः परीतः प्रत्यासन्नः कालो येषां ते । यद्वा परीतः परिवृतः कालः मृत्युरिव अहिः तेन गतान्यायूंषि येषां ते तथोक्ताः ॥२७॥ इति श्रीमहेश्वर० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां षोडशः सर्गः ॥ १६ ॥ एवं परावरज्ञो विभीषणः दुर्मानिना रावणेन धिक्कृतः तं परित्यज्य अन्तरिक्षस्थितः सन् रावणस्यानुकूलबुद्ध्युत्पत्तिप्रत्याशया पुनरपि हितोपदेशं कृत्वा तत्रापि रावणाभिमुखमनालोक्य तेन सह संसर्गायोग्यत्वं सम्यङ्निश्चित्य त्वरया श्रीरामं प्राप्तुकामः श्रीरामनिवासभूमिं प्राप्तवानित्याह—इत्युक्त्वेति । रावणानुजो विभीषणः यत्र सलक्ष्मणो रामः तत्राजगामेति सम्बन्धः ।

कर्तव्यसौकर्यं " यावन्न गृह्णन्ति शिरांसि बाणाः " इत्यकरणे प्रत्यवायं चोक्त्वा । परुषं सज्जीकजनसुखावहस्य मलयमारुतस्य विरहिणि दुःखकरत्व वद्विभीषणोदितं हितम् आश्रयदोषेण परुषम् । वाक्यं हितपरिपूर्णम् । उक्त्वा हितज्ञो भ्राता भ्रातरमापन्नं परितत्याजेत्यपयशो यावता शक्यं परि मार्ष्टुं तावत्पर्यन्तमुक्त्वा । परुषत्वे हेतुः रावणमिति । प्रबलदुर्बलविचारमन्तरेण सर्वरावकस्य शत्रुबलोपवर्णने परुषं भवत्येव । रावणानुजः रावणानु जत्वेऽपि सत्त्वोत्तरतया कथनीयं हितमुक्तवानित्यृषिः स्तौति । हितकथने ज्येष्ठभावोऽप्यप्रयोजकः । अत एवोक्तं मनुना—"पितॄनध्यापयामास शिशुराङ्गि रसः कविः । पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् । अज्ञं हि बालमित्याहुः पितेत्येव च मन्त्रदम् ॥ " इति । आजगाम रावणगोष्ठ्यां स्वस्य सम्बन्धाभावेन रामगोष्ठ्याः स्वगृहत्वेनाजगामेत्युक्तम्, न तु जगामेति । मुहूर्तेन "वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुखजनसंवास वैशसम् ॥ " इति न्यायेनाङ्गारनिकरपरिक्षिप्ते वर्त्मनि पदन्यासवत् रावणसदनावस्थित्यनर्हत्वं विगलितबन्धनरज्जोर्वत्सस्य मातुरूधःस्पर्शमन्तरेण मध्यदेशादर्शनवदतिवेगागमनं चोक्तम् । यत्र रामः रामापेक्षया तद्देशसम्बन्धस्य प्राप्यत्वमुक्तम् । "सुभगश्चित्रकूटोऽसौ गिरिराजोपमो गिरिः । यस्मिन् वसति काकुत्स्थः कुबेर इव नन्दने ॥ " इतिवत् । रामस्य लक्ष्मणो व्यावर्तक इति सलक्ष्मण इत्युक्तम् । यद्वा पुरुषकारसान्निध्यमनेनोच्यते । अनेन श्लोकेन भगवद्विमुखानां देशस्य त्याज्यत्वं तत्सम्बन्धिदेशस्य परमप्राप्यत्वं चोक्तम् । यद्वा " सा काशीति न चाकशीति " इत्याद्युक्तरीत्या भगवद्देश स्यापि भागवताभिमानाभावे परित्याज्यत्वाल्लक्ष्मणसान्निध्यमुक्तम् । ननु विश्रवःपितामहवरप्रदानविभवविदितनिखिलधर्मवृन्देन " विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः " इति तत्र तत्र धार्मिकतया प्रशंसितेन विभीषणेन " ज्येष्ठो भ्राता पितृसमः " इति पितृवदनुवर्तनीयो ज्येष्ठभ्राता बाल्यात् प्रभृति परिपोषकश्च सन् रावणः सपदि सन्निहिते शत्रौ क्षुद्रबुद्धिनेव दूरं कथं परित्यक्तः ? त्यजतु नाम कथंचित् । अथापि न युक्तमभिगन्तुं तस्य प्रहर्ता रम् । अभिगच्छतु नाम नोचितमस्य स्थानमभिलषितुम् । अभिलषतु नाम नौपयिकमस्य वधोपायं निर्देष्टुम् । अत्र केचित्—रावणस्य निरवधिकदोष दूषितत्वात् " गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥ " इति स्मरणाद्विभीषणेन त्यक्तो रावण इत्याहुः । त्रय्यन्तगुरवस्तु पितामहवरप्रसादेन लब्धविज्ञानत्वाद्रामं सर्ववेदान्तवेद्यं सर्वलोकेश्वरभूतं सर्वलोकशरण्यं मुक्तप्राप्यं नारायणाख्यं परं ब्रह्म लोका

ननु " ज्येष्ठभ्राता पिता चैव यश्च विद्यां प्रयच्छति । त्रयस्ते पितरो ज्ञेया धर्मश्चेदत्र कारणम् ॥" इति स्मृतेः ज्येष्ठभ्रातृत्वेन पितृसमं परित्यागानर्हं रावणं परित्यज्य रामसमीपगमनं विभीषणस्य विरुद्धमिति चेद, सत्यम्; " गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥ " इत्यादिना

तुजिघृक्षयाऽवतीर्णमिति निर्विचिकित्समवगच्छति। यथा मन्दोदरीप्रभृतयः। एवं तत्त्वज्ञानसम्पन्नस्य विशेषसामान्यधर्मप्राबल्यदौर्बल्यविवेकेन सामान्य धर्मपरित्यागो विशेषधर्मपरिग्रहश्चोपपद्यते। ज्येष्ठभ्रात्रनुवर्तनं हि त्रैवर्गिकफलसाधनतया ज्येष्ठानुवर्तनद्वारा परमात्माराधने पर्यवसानस्य वक्तव्यत्वात् मोक्षपर्यवसानेऽपि परमात्मोपासनाङ्गत्वाच्च सामान्यधर्मः। रामानुवर्तनं तु साक्षात्परमात्मसमाराधनत्वात् यज्ञादिधर्मसाध्यत्वेन प्रधानत्वाच्च विशेषधर्मः। उभयोश्चाप्यविरोधे सत्युभयमप्यनुवर्तनीयम्। विरोधे तु सामान्यधर्मं परित्यज्य विशेषधर्मोऽनुवर्तनीयः। अतो विभीषणोऽपि इयन्तं कालं कृतं रावणा नुवर्तनमपरित्यज्यैव मम रामानुवर्तनमपि किं सिद्ध्येदित्याशया तस्मै हितं पुनःपुनरुपदिदेश। एवमपि तस्यासुरप्रकृतितयाऽनपनोद्यं रामवैरमिति निश्चित्यातः परम् एतदनुवर्तने स्वात्मविनाशकं रामविषयकं वैरं मय्यपि स्यादिति भीतः सन् "वरं हुतवहज्वाला–" इत्यादिन्यायेनात्यन्तदुस्सहां तत्सङ्गतिं तत्याज। विशेषधर्मं रामानुवर्तनं चाङ्गीचकारेत्यतोऽयं परो धर्म एवेति कृतप्रशङ्का दूरोत्सारिता। नाप्ययं राज्यकाङ्क्षया रामं शरणमुपजगाम तदपेक्षाया अदर्शनात्। तथाहि शरणागतिसमये "त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः" इत्यन्यविषयवैराग्यस्य तेन कण्ठरवेणोक्तत्वात्। पश्चाद्रामाय विज्ञापने क्रियमाणे "परित्यक्ता मया लङ्का मित्राणि च धनानि च। भवद्गतं मे राज्यं च जीवितं च सुखानि च॥" इति सर्वविधपुरुषार्थ त्वेन त्वामेवाहमुपेयिवानिति कथनाच्च। "अहं हत्वा दशग्रीवं सप्रहस्तं सबान्धवम्। राजानं त्वां करिष्यामि सत्यमेतत् ब्रवीमि ते॥" इत्यनाकाङ्क्षित राजत्वकरणोक्तिः कूलङ्कषरामप्रीतिसागरपरीवाहरूपानुषङ्गिकभोगप्रदानपरा। यथाहुः—"आयुरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान्। ददाति ध्यायतां नित्यमपवर्गप्रदो हरिः॥" इति। अतो यदुक्तं हनुमता "राज्यं प्रार्थयमानस्तु बुद्धिपूर्वमिहागतः" इति। यच्च रामेणोक्तं "राज्यकाङ्क्षी विभीषणः" इति तत्सर्वं रामभक्त्याविलाशयस्य सुग्रीवस्य व्यामोहप्रशमनाय नीतिशास्त्रोक्तराजवृत्तान्तप्रदर्शनमात्रपरमिति मन्तव्यम्। हनुमद्रामवाक्यस्य विभी षणवाक्यस्य चान्योन्यविरोधप्रसङ्गे "अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीयः" इति न्यायेन विभीषणवाक्यस्य प्राबल्यात्। अत एव "राजानं त्वां करिष्यामि" इति ब्रुवतो रामस्य प्रतिवचनमनुक्त्वा परिचरणमात्रमेव विभीषणः प्रार्थयामास "राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणे। करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम्॥" इति। तस्यानुमत्यभावेपि बलाद्राज्यस्वीकार उत्तरकाण्ड उक्तः—"यावत् प्रजा धरिष्यन्ति तावत्त्वं वै विभीषण। राक्षसेन्द्र महावीर्य लङ्कास्थस्त्वं धरिष्यसि। शापितस्त्वं सखित्वेन कार्यं ते मम शासनम्। प्रजाः संरक्ष धर्मेण नोत्तरं वक्तुमर्हसि॥" इति। इत्थमनन्य उत्पथप्रवृत्तस्य गुरोरपि परित्यागश्रवणात् उत्पथगामिनं सोपाधिकं गुरुं रावणं परित्यज्य निरुपाधिकाखिलजगद्गुरुं स्मृतमात्रेण सकलकल्मषहरणप्रवीण

प्रयोजनत्वादेवास्मै रामः कुलधनं श्रीरङ्गनाथं ददौ। धर्मसंस्थापनार्थमेवावतीर्णस्य रामस्य नियोगेनावशिष्टां राक्षसजातिं सन्मार्गे प्रवर्तयितुं तस्य राज्याङ्गीकरणम्। इदमप्याज्ञानुविधायित्वात् कैङ्कर्यकोटावन्तर्भूतमिति विभीषणमतात्पर्यम्। अतो यथावद्विदितधर्मो लक्ष्मणोऽपि "अहं तावन्महाराजे पितृत्वं नोपलक्षये। भ्राता भर्ता च बन्धुश्च पिता च मम राघवः॥" इति सोपाधिकपितरं दशरथं परित्यज्य निरुपाधिकसकलविधबन्धुं राममेव "अग्रतस्ते गमिष्यामि पन्थानमकुतोभयम्। अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते॥" इति रामपरिचरणमेव फलं प्रार्थयामास। "स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः" इति राघवं शरणमुपागतश्च। तथा विभीषणोऽपि सोपाधिकबन्धुं भ्रातरं परित्यज्य कैङ्कर्यापेक्षयैव सर्वविधसहजबन्धुं रामं शरणं गत इति बोध्यम्। अत एव रामप्राप्त्यपेक्षया रावणपरित्यागवेलायामन्तरिक्षगतः श्रीमानिति प्रशंसितः 'स तु नागवरः श्रीमान्' 'लक्ष्मणो लक्ष्मि



**तं मेरुशिखराकारं दीप्तामिव शतह्रदाम्। गगनस्थं महीस्थास्ते ददृशुर्वानराधिपाः॥ २॥**

सम्पन्नः' इतिवत्। तस्मान्नाधर्मशङ्का विभीषणे। ननु यद्येवं तर्हि "ययोर्वीर्यमुपाश्रित्य प्रतिष्ठा काङ्क्षिता मया। तावुभौ मम नाशाय प्रसुप्तौ पुरुषर्षभौ। जीवन्नपि विपन्नोऽस्मि नष्टराज्यमनोरथः। प्राप्तप्रतिज्ञश्च रिपुः सकामो रावणः कृतः॥" इति नागपाशबन्धनसमये स्वस्य राज्यनाशकृत निर्वेदः कथमुपपद्यते इति चेत्? न; तत्रापि प्रतिष्ठाशब्दस्य रामकैङ्कर्यपरत्वात्। नष्टराज्यमनोरथ इत्यत्रापि राज्यशब्दो "भवद्गतं मे राज्यं च" इत्युक्तकैङ्कर्यसाम्राज्यपरः। एतेन "राज्यं प्राप्स्यसि धर्मज्ञ लङ्कायां नात्र संशयः" इति सुग्रीववचनं तु तदाशयाज्ञानकृतमिति न कश्चिद्दोष इति प्राहुः। अत एव चतुरशीतौ वक्ष्यति विभीषणः—"यदाज्ञप्तं महाबाहो त्वया गुल्मनिवेशनम्। तत्तथाऽनुष्ठितं वीर त्वद्वाक्यसमनन्तरम्॥" इति॥ १॥ रावणसमीपादुत्पतनसमय एव सुग्रीवादयो विभीषणमपश्यन्नित्याह—तमिति। तं दवाग्नेर्निर्गत्य शीतलह्रदे पतितुमिवागच्छन्तम्। मेरुशिखराकारम् उन्नतत्वपीवरत्वरत्नबहुलत्वादिभिर्मेरुशिखरतुल्यम्। किञ्च प्रतिपक्षत्यागलाभेन स्थिरतया स्थितत्वं प्रकाशमानत्वं पारतन्त्र्यज्ञापकत्वम्, तेन रामस्य शृङ्गलाभः रावणस्य शृङ्गभङ्गश्चोच्यते। दीप्तामिव शतह्रदाम् तेजिष्ठत्वगगनसञ्चाराभ्यां विद्युद्दृष्टान्तः। रामभक्ता वानरा नास्मान् प्रवेशयिष्यन्तीति कम्पः, अप्रवेशे जीवनं न सिद्ध्यतीति त्वरा चेत्येतद्द्वयं तेन गम्यते। गगनस्थमिति। दूरत एव ददृशुरिति भावः॥ २॥

श्रीरामनामधेयं कौसलेयं राममाजगामेति न दोषः॥ १॥ तमिति। मेरुशिखराकारमिति उन्नतत्वपीवरत्वरत्नबहुलत्वादिभिर्मेरुशिखरदृष्टान्तः। नोदिष्टत्व

तनि०—गगनस्थं रावणगोष्ठीतो निर्गमनसमय एव ददृशुः । महीस्थाः भूमौ परितो रक्षणनियुक्ता आकाशस्थमपि ददृशुरिति जागरूकत्वातिरेकः । यद्वा महीस्थाः तत्र तत्र वृक्षादिषु स्थिताः सर्वे तदात्व एव गगनस्थं दृष्ट्वा रामं पर्यवारयन् । वानराधिपाः अत्यन्तं सावधानतया विद्यमानत्वाद्वानरानपि ऋषिः स्तौति वानराधिपा इति । ददृशुः एको दृष्ट्वा अन्यस्मै न दर्शितवान् किंतु युगपदेव सर्वे ददृशुः । अनेन न केवलं प्रतिकूलसमूहान्निर्गमनमेव विभीषणस्य प्रयोजनम् किंतु अनुकूलकटाक्ष विषयत्वं लब्धमित्युक्तम् ॥ २ ॥ अथ सुग्रीवो लङ्कापुरीदेशादागमनमायुधसन्नाहं च दृष्ट्वा प्रहर्तुमेवागच्छतीति विचार्य तमर्थं वानरैः सह चिन्तयामासे त्याह—तमिति । तम् अत्यन्ताभिनिवेशेन शीघ्रमागतम् । आत्मपञ्चमम् आत्मना पञ्चत्वसङ्ख्यापूरकमित्यर्थः । अनलशरभसंपातिप्रघसनामभि

[ स हि मेघाचलप्रख्यो महेन्द्रसमविक्रमः । सर्वायुधधरो वीरो दिव्याभरणभूषितः ॥
ये चाप्यनुचरास्तस्य चत्वारो भीमविक्रमाः । तेऽपि सर्वायुधोपेता भूषणैश्चापि भूषिताः ॥ ]
तमात्मपञ्चमं दृष्ट्वा सुग्रीवो वानराधिपः । वानरैः सह दुर्द्धर्षश्चिन्तयामास बुद्धिमान् ॥ ३ ॥
चिन्तयित्वा मुहूर्तं तु वानरांस्तानुवाच ह । हनुमत्प्रमुखान् सर्वानिदं वचनमुत्तमम् ॥ ४ ॥

श्चतुर्भी राक्षसैर्युक्तमिति यावत् । अनलादिगतसङ्ख्यापूरण एव विभीषणस्य प्राधान्यमुक्तम् । रामविषयप्रेमास्पदत्वं तु समानम् । सुग्रीवः गगनस्थ दर्शनार्थं शीघ्रं शिर उन्नम्य दर्शनेन तात्कालिकग्रीवासौन्दर्यमृषिः स्तौति । वानराधिपः । शीघ्रमुत्थाय दर्शनं वानरसेनाया अपि स्वस्यैव रक्षकत्वेन रामविषयप्रीतेश्च 'राघवार्थे पराक्रान्ताः' इत्युक्तेभ्यो वानरेभ्योऽपि स्वस्यैव निरवधिकप्रीतिमत्ताज्ञापकत्वेन च । दुर्धर्षः शरणागतस्यापि पश्चादाक्रुष्टपाद त्वापादकत्वेन अनभिभवनीयः स्थितः । बुद्धिमान् वानरैः सह चिन्तयामास । स्वयं समर्थत्वेऽपि तानप्यनुसृत्य चिन्तनं कार्यगौरवात् । चारो वा शत्रु र्वेति चिन्तयामास । आगमनमुखविकासादिना निर्दुष्टत्वनिश्चयेऽपि रामविषयप्रेमपारवश्येन चिन्तितवानिति बुद्धेः प्राशस्त्यम् ॥ ३ ॥ विभीषणे सपरि करे सविधस्थे मन्त्रविलम्बो न युक्त इति झटिति मनसा निश्चित्य सचिवादीन् प्रति निर्णीतमाह—चिन्तयित्वेति । चिन्ताया निर्णयान्तत्वादत्र चिन्त यित्वेति निर्णयवाची । नायं चारो नापि दूतः अपितु बाधक एवेति निश्चित्य ॥ ४ ॥ तनि०—मुहूर्तम् अल्पकालेन । रावणः उत्तरकूल अनावृते स्थितं रामं गगनस्थाराभ्यां शतह्रदादृष्टान्तः ॥ २ ॥ आत्मपञ्चमम् आत्मना पञ्चमं पञ्चसङ्ख्यापूरकम् ॥ ३ ॥

शीघ्रं हत्वा आगन्तव्यमिति प्रेषितवान् मन्त्रेण विलम्बे कृतेऽयमतिशेत इति झटिति निश्चितवान् । तुशब्दः निश्चयानन्तरं पूर्वावस्थापेक्षया वैलक्षण्यं द्योतयति । तानुवाच प्रेमपरवशानुवाच ह । स्वामिपरिकरसमवायप्रकार आश्चर्यकर इति ऋषिरभिनन्दति हेति । हनुमत्प्रमुखान् । गौरवकाले जाम्बवत्प्रमुखानिति वक्तव्यम् । मन्त्रविचारकाले तु बुद्धिमत्त्वप्राधान्यात् हनुमत्प्रमुखानित्युक्तिः । सर्वान् । रामविषयप्रेमातिशयः सर्वेषामविशेष इति सर्वानित्युक्तिः । इदं वचनम् । अर्थमन्तरेणापि वचनसन्निवेशस्य श्रुतिप्रियत्वमभिनन्दति ऋषिः । उत्तमं सर्वोत्कृष्टम् ॥ ४ ॥ स्वनिर्णीतार्थमाह—एष इति । एषः बाधकतैकान्तक्रौर्यसम्पन्नः । सर्वायुधो

एष सर्वायुधोपेतश्चतुर्भिः सह राक्षसैः । राक्षसोऽभ्येति पश्यध्वमस्मान् हन्तुं न संशयः ॥ ५ ॥
सुग्रीवस्य वचः श्रुत्वा सर्वे ते वानरोत्तमाः । सालानुद्यम्य शैलांश्च इदं वचनमब्रुवन् ॥ ६ ॥
शीघ्रं व्यादिश नो राजन् वधायैषां दुरात्मनाम् । निपतन्तु हताश्चैते धरण्यामल्पतेजसः ॥ ७ ॥

पेतः मनःस्थितक्रौर्यानुकूलहिंसापरिकरसंपूर्णः । अनुकूलस्य प्रतिकूलतानिश्चयवत् रामविषयप्रेमान्धतया एकायुधस्य बहुत्वनिश्चयः । एकायुधग्रहणचातुर्यदर्शनेन सर्वायुधग्रहणेष्वपि नैपुण्यं ज्ञायत इति वा तथोक्तम् । स्वामिपीडने ब्रह्मास्त्रसदृशशरणागतिरेतस्य हस्ते विद्यत इति वा । उत्पपात गदापाणिरित्यत्र सर्वायुधोपलक्षणमित्यन्ये । राक्षसः सर्पजातिरितिवत् क्रौर्यातिशयोक्तिः । पश्यध्वं पश्यत । अस्मान् हन्तुम् । अस्मासु कस्यचिद्धनने हि शेषं जीविष्यति मूलभूतरामहनने सर्वविनाश इति बहुवचनार्थः ॥ ५ ॥ वानराश्च सुग्रीववाक्यानुसारेणोद्योगं चक्रुरित्याह—सुग्रीवस्येत्यादि श्लोकद्वयेन । अल्पतेजस इति । अस्मद्बलस्य गजकवलप्राया इत्यर्थः ॥ ६ ॥ ७ ॥ तनि०—सुग्रीवस्य साहसकृत्यनिर्वाहकस्य । वचः श्रुत्वा अनुमतिं लब्ध्वा । सालानुद्यम्य शैलांश्च शैलवृक्षतारतम्यानादरेण सहसा हस्तसुलभान् स्वीकृत्य । आदरातिशयेन प्रत्येकमुभयपरिकरत्वमुक्तम्, रामकैङ्कर्यानुकूलवृत्तेर्लक्ष्मणस्य युगपच्छत्रचामरग्रहणवत् । राक्षसहननं हि रामकैङ्कर्यम् । इदं वचनं स्वशेषत्वसिद्धये सुग्रीवानुमतिमप्यनवेक्ष्य तेषां वधनिश्चयोपपादकं वचनमब्रुवन् । गुणप्रधानभावमौचित्यं वाऽनपेक्ष्य सर्वे अब्रुवन् । अस्वतन्त्राणामनुमतिविलम्बे स्वतन्त्रप्रहारे च पारतन्त्र्यहानिः स्यात् सा यथा न भवति तथा शीघ्रमाज्ञापय । नः वधोद्युक्तानस्मान् । वधोद्युक्ता यूयं किं ममानुमत्येत्यत्राह—राजन्निति । राजाज्ञा खल्वनुवर्तनीयेति भावः । वधाय गृहीत्वा बद्धाश्चेदत्र स्थित्वा कथंचिदनर्थं कुर्युः अतो वधायैवानुमतिर्देया । एषां दुरात्मनाम् आकारेणैव दौरात्म्यं दृश्यते खलु । निपतन्तु हताः सर्वे हताः पतन्तु । यथा पुनराकाशं नोत्पतन्ति तथा भूमावेव निपातयिष्याम इति भावः । युद्धे जयाजयौ पाक्षिकावित्यत आह अल्पतेजसः अल्पबलाः । अस्मद्बलस्य गजकवलप्राया इति भावः ॥ ६ ॥ ७ ॥

तेषामिति । अनादरे चेयं षष्ठी । वदन्तु नामैते वानरा यत् किंचित्, सर्वज्ञः परमकारुणिकः सर्वलोकशरण्यो रामो मामवश्यं रक्षिष्यत्येवेति महाविश्वासेन तेषामन्योन्यभाषणमनादृत्य प्रहरणोद्यतानामपि तेषामाभिमुख्येनाजगाम । आगत्यापि निर्विशङ्कः सन् सर्वेषामात्मानं प्रकाशयन्नाकाशे एव स्थितवानित्यर्थः । अत्र खस्थो व्यतिष्ठतेति द्विः प्रयोगो निर्भयत्वेन निष्कम्पावस्थानसूचनार्थः ॥ ८ ॥ अथ पुरुषकारलेशमनपेक्ष्य सर्वानपि प्रातिबन्धिनो निवार्य मां रक्षिष्यतीति महाविश्वासशाल्यपि विभीषणः सहसा रामं शरणं नोपजगाम । किंतु दूरत एव स्थितः प्रातिकूल्यप्रवृत्तानेव सुग्री

तेषां सम्भाषमाणानामन्योन्यं स विभीषणः । उत्तरं तीरमासाद्य खस्थ एव व्यतिष्ठत ॥ ८ ॥
उवाच च महाप्राज्ञः स्वरेण महता महान् । सुग्रीवं तांश्च संप्रेक्ष्य सर्वान् वानरयूथपान् ॥ ९ ॥

वादीन् पुरुषकारभूतान् कृत्वोवाचेत्याह—उवाच चेति । उवाच च चकारेण स्वीकारे स्वागमनमेव पर्याप्तम्,वचनमप्युक्तवान् । पद्भ्यामभिगमाच्चेत्यागमनमपि भारायेति मन्यमानस्य तदुपरि वाक्यं क्षते क्षारवत् । महाप्राज्ञ इत्यनेनान्तरङ्गपुरुषकारेणैव कृपालुरपि राजा शरणमुपगन्तव्य इति परिज्ञानं वानराणां मत्प्रतिकूलसंरम्भोऽपि न मद्द्वेषकृतः किंतु रामभक्तिप्रकर्षकारितः । अतो गुण एवायमिति जानन्, यदि रामपरिचारका एते नाङ्गीकुर्युः किं रामाङ्गीकारेण ? अतो रामाङ्गीकारादप्येतदन्तर्भाव एव मम पुरुषार्थ इति ज्ञानं च विवक्षितम् । स्वरेण महतेति । पुरुषकारभूतानां सर्वेषां सर्वलोक

तेषामित्यनादरे षष्ठी । वानरा यत् किमपि वदन्तु नाम सर्वज्ञः परमकारुणिकः सर्वलोकशरण्यश्च श्रीरामोऽवश्यं मां रक्षिष्यत्येवेति महाविश्वासेन तेषामन्योन्यभाषणमप्यनादृत्य प्रहरणोद्युक्तानामपि तेषामाभिमुख्येनाभिजगाम । आगम्यापि निर्विशङ्कस्सन् सर्वेषामात्मानं प्रकाशयन् आकाश एव स्थितवानित्यर्थः । अत्र खस्थ एव व्यतिष्ठतेति तिष्ठतेर्द्विः प्रयोगः निर्भयत्वेन निष्कम्पावस्थानसूचनार्थः ॥८॥ एते वानरा मदीयमभिप्रायमविज्ञायासौ रावणसम्बन्धीति योद्धुमुद्युञ्जन्ते । रामसमाश्रयणमेतेभ्यो निवेद्य एतत्पुरुषकारमुखेनैव रामलक्ष्मणौ समाश्रयिष्यामीत्यभिप्रेत्याब्रवीदित्याह--उवाचेति । महाप्राज्ञ इत्यनेन अन्तरङ्गपुरुषपुरुषकारेणैव कृपालुरपि राजा शरणमुपगन्तव्य इति परिज्ञानम्, वानराणां मत्प्रातिकूलसंरम्भोऽपि न मद्द्वेषकृतः किन्तु श्रीरामभद्रभक्तिप्रकर्षपारवश्यकारितः, अतो गुण एवायमिति ज्ञानम्, यदि श्रीरामपरिचारका एते नाङ्गीकुर्युः तदा किं रामाङ्गीकारेण ? रामाङ्गीकारादप्येतदङ्गीकार एव मम पुरुषार्थ इति ज्ञानं च विवक्षितम् । स्वरेण महतेति पुरुषकारभूतानां सर्वेषां सर्वलोक[illegible] महत्त्वमौपाधिकसम्बन्धपरित्यागपूर्वकनिरुपाधिकस्वामिसमाश्रयणान्मुख्यकृतम् । " रावणो नाम दुर्वृत्तः " इत्यारभ्य "विभीषणमुपस्थितम्" इत्यन्तेन प्रकरणेन " आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् ।

विचार्येत्यर्थः ॥१॥ य इति । खलुर्वाक्यालङ्कारे । दुष्करं सीताहरणं श्रमेण कृत्वा तत्सम्भोगमकुर्वाणस्त्वं क्षौद्राकाङ्क्षयाऽतिगहनं वनं प्रविश्य तदपिबन् जन इव मूढोऽसीति भावः ॥ २ ॥ शत्रुषु विद्यमानेष्वधर्मावहमिदं कथं कुर्यामित्यत्राह—ईश्वरस्येति । सर्वनियन्तुस्तव को वा नियन्ताऽस्ति । अतो धर्मान्न भेतव्यमिति भावः । शत्रून् मूर्धस्वाक्रम्य तान् तृणीकृत्येत्यर्थः । अर्थान्तरं तु रामस्येश्वरः कोऽस्ति । स निग्रहीतुं न शक्य इत्यर्थः । शत्रून्



यः खल्वपि वनं प्राप्य मृगव्यालसमाकुलम् । न पिबेन्मधु सम्प्राप्तं स नरो बालिशो भवेत् ॥ २ ॥
ईश्वरस्येश्वरः कोऽस्ति तव शत्रुनिबर्हण । रमस्व सह वैदेह्या शत्रूनाक्रम्य मूर्धसु ॥ ३ ॥
बलात् कुक्कुटवृत्तेन वर्तस्व सुमहाबल । आक्रम्याक्रम्य सीतां वै तथा भुङ्क्ष्व रमस्व च ॥ ४ ॥

रामम् । पूजायां बहुवचनम् । दशस्वपि मूर्धस्वाक्रम्य शिरसा प्रणम्येत्यर्थः । वैदेह्या सह रमस्व वैदेह्यां यथा स्वभर्ता रमते तथा त्वमपि स्वदारेषु रमस्व । वैदेह्या सह रामं प्रणम्येति वा योजना ॥ ३ ॥ किं करोमि सा हि न मामभिलषतीत्यत्राह—बलादिति । कुक्कुटवृत्तेन कुक्कुटवृत्त्या । भावे क्तः । कुक्कुटो वञ्चनामार्गेण स्वदयितामाक्रमते । तथा त्वमपीत्यर्थः । कुक्कुटानां कामुककुक्कुटसङ्गे कोपो जातिधर्मः । तथा सीतामनुभव यथा कुक्कुटाः सुखिनः तद्वदित्यर्थः । यथाऽऽह वात्स्यायनः—"क्रुद्धामाक्रम्य भोगस्तु कौक्कुटः सोऽपि सौख्यदः ।" इति । भुङ्क्ष्व भोगं भज । रमस्व निर्विचारो भवेत्यर्थः । मुनिहृदयं तु कुक्कुटवृत्तेनान्यत्र वर्तस्व सीतां तु बलात् भुङ्क्ष्व रक्ष । "भुज परिपालनाभ्यवहारयोः" इति धातुः । आत्मनेपद

इत्यर्थः ॥ १ ॥ दुष्करं सीताहरणं श्रमेण कृत्वा तत्सम्भोगमकुर्वाणस्त्वं मधुकाङ्क्षया दुर्गमं वनं प्रविश्य तदपिबन् जन इव मूढोऽसीति भावः ॥ २ ॥ ३ ॥ अनङ्गीकारे कथमनुभव इत्यत्राह—बलादिति । रमस्व सह वैदेह्येत्यादिसार्धश्लोकस्य वास्तवार्थस्तु—कुक्कुटवृत्तेनेत्यत्र कुक्कुटवृत्ते न इति छेदः । हे महाबल रावण! वैदेह्या किम् ? अत आक्रम्याक्रम्य वा प्रकारान्तरेण वा तां वैदेहीं सीतां न भुङ्क्ष्व न रमस्व च । कुक्कुटवृत्ते कुक्कुटव्यापारे, चापल्य इति यावत् । न वर्तस्व किन्तु बलात्

स०—प्रथमतः सीतानयनं न कर्तव्यम् । कृतं चेत् सीताननुभवो भवतो न योग्य इति प्रोत्साहयति—य इ ते ॥ २ ॥ "सा किं न रम्या स च किं न रन्ता गरीयसी केवलमीश्वरेच्छा" इत्यादिवदीश्वरेच्छानुसारिता चेतरस्य, न तवेत्याह—ईश्वरस्येति ॥ ३ ॥

मार्षम् ॥ ४ ॥ एतन्निमित्तमागामिभयमनिवार्यं कथमेवं क्रियतामित्यत्राह—लब्धेति । एवं लब्धकामस्य ते पश्चात्कामलाभानन्तरम् यत् भयमागमिष्यति । प्राप्तं तदानीमागतम् । अप्राप्तकालं प्राप्तकालमित्यस्य "प्राप्तापन्ने च द्वितीयया" इति समासः । तथा न भवतीत्यप्राप्तकालम् । आगामीति यावत् । प्रतिसहिष्यसि अभिभविष्यसीत्यर्थः ॥५॥ तिष्ठतु भवान् त्वद्भ्रातृपुत्रावेव प्रतिपक्षप्रतिषेधे शक्तावित्याह—कुम्भकर्ण इति ॥६॥ विभीषणमतं खण्डयति—उपप्रदानमिति । अकुशलैः युद्धासमर्थैः । कृतं दानादिकम् । अतिक्रम्य त्यक्त्वा । दण्डेन बलात्कारेण । अर्थेषु प्रयोजनेषु सिद्धिं रोचय ॥७॥

लब्धकामस्य ते पश्चादागमिष्यति यद्भयम् । प्राप्तमप्राप्तकालं वा सर्वं प्रतिसहिष्यसि ॥ ५ ॥ कुम्भकर्णः सहास्माभिरिन्द्रजिच्च महाबलः । प्रतिषेधयितुं शक्तौ सवज्रमपि वज्रिणम् ॥ ६ ॥ उपप्रदानं सान्त्वं वा भेदं वा कुशलैः कृतम् । समतिक्रम्य दण्डेन सिद्धिमर्थेषु रोचय ॥७॥ इह प्राप्तान् वयं सर्वान् शत्रूंस्तव महाबल । वशे शस्त्रप्रतापेन करिष्यामो न संशयः ॥ ८ ॥ एवमुक्तस्तदा राजा महापार्श्वेन रावणः । तस्य संपूजयन् वाक्यमिदं वचनमब्रवीत् ॥ ९ ॥ महापार्श्व निबोध त्वं रहस्यं किंचिदात्मनः । चिरवृत्तं तदाख्यास्ये यदवाप्तं मया पुरा ॥१०॥ पितामहस्य भवनं गच्छन्तीं पुञ्जिकस्थलाम् । चञ्चूर्यमाणामद्राक्षमाकाशेऽग्निशिखामिव ॥ ११ ॥

रामादयो यत्र वर्तन्ते तत्र गत्वा योद्धव्यमित्युक्तं निकुम्भादिमतं दूषयन्नाह—इहेति । इह लङ्कापरिसरे । शस्त्रप्रतापेन शस्त्रबलेन । वशे करिष्यामः निग्रहीष्याम इत्यर्थः ॥ ८ ॥ एवमिति । संपूजयन् स्वचित्तानुगुणयुक्तमिति श्लाघयन्नित्यर्थः ॥ ९ ॥ महापार्श्वेति संबोधनम् । प्रमुदितोऽस्मीति शेषः । चिरवृत्तं रहस्यं किंचित् । अस्तीति शेषः । यत्पुरा मयाऽवाप्तं तदाख्यास्य इति योजना ॥ १० ॥ पितामहस्येति । गच्छन्तीम्, पितामहवन्दनायेति

शत्रून् मूर्द्धस्वाक्रम्य रमस्वेति सम्बन्धः ॥ ४ ॥ सीतानुभवनिमित्तकमागामिभयमनिवार्यं कथमेवं कर्तव्यमित्यत्राह—लब्धकामस्येति । लब्धकामस्य प्राप्तसीतानुभवस्य पश्चात् सीतानुभवानन्तरम् प्राप्तं तदानीमेवागतं प्राप्तकालम् आगामिकाले प्राप्यं वा यद्भयमागमिष्यति तत्सर्वं प्रतिसहिष्यसि प्रतिसहिष्यसे, अभिभविष्यसीत्यर्थः ॥ ५ ॥ भयाभिभवे शक्तिं प्रदर्शयति—कुम्भकर्ण इति ॥ ६ ॥ उपप्रदानमिति । अकुशलैः युद्धासमर्थैः कृतं सामादिकम् । समतिक्रम्य त्यक्त्वा । दण्डेन दण्डोपायेन । अर्थेषु सिद्धिं रोचय ॥ ७-१० ॥ पितामहस्येति । चञ्चूर्यमाणां मन्दगत्या निलीय चरन्तीम् । शापस्य भीतः शापाद्भीतः ॥ ११-२० ॥

स०—ननूत्तरकाण्डे रम्भानिमित्तं नलकूबरशापः परदाराणां बलात्सङ्गे श्रूयते । यथोक्तम्—"एतस्मिन्नन्तरे तत्र दिव्याभरणभूषिता । सर्वाप्सरोवरा रम्भा पूर्णचन्द्रनिभानना ॥" इत्यारभ्य "नलकूबरमासाद्य"—

शेषः। पुञ्जिकस्थला नाम काचिदप्सराः। चड्क्रूर्यमाणां भीत्या निलीय गच्छन्तीम्। "लुपसद्—" इत्यादिना भावगर्हायां यङ्। सञ्चरणात्मकस्य भावस्य गर्हा निलयनम्। "चरफलोश्च" इति नुक्। "उत्परस्यातः" इत्युकारः। अग्निशिखामिवेति तेजोविशेषोक्तिः। यद्वा द्रावकत्वोक्तिः। अत एवोक्तम्—"अङ्गारसदृशी नारी घृतकुम्भसमः पुमान्" इति। सञ्चार्यमाणामिति पाठे—परिचारिकादर्शितमार्गामित्यर्थः ॥ ११ ॥ विवसना कृता सा मया

सा प्रसह्य मया भुक्ता कृता विवसना ततः। स्वयम्भूभवनं प्राप्ता लोलिता नलिनी यथा ॥ १२ ॥
तस्य तच्च तदा मन्ये ज्ञातमासीन्महात्मनः। अथ सङ्कुपितो देवो मामिदं वाक्यमब्रवीत् ॥ १३ ॥
अद्यप्रभृति यामन्यां बलान्नारीं गमिष्यसि। तदा ते शतधा मूर्धा फलिष्यति न संशयः ॥ १४ ॥
इत्यहं तस्य शापस्य भीतः प्रसभमेव ताम्। नारोपये बलात् सीतां वैदेहीं शयने शुभे ॥ १५ ॥

भुक्तेत्यन्वयः ॥ १२ ॥ तत् धर्षणम्। मन्य इत्यनेन शापमात्रं मया श्रुतम्। धर्षणश्रवणं तु मया ऊहितमिति गम्यते ॥ १३ ॥ अद्येत्यादि। अद्यप्रभृति —इत्याद्युक्त्वा "उत्ससर्ज तदा शापं राक्षसेन्द्राय दारुणम्। अकामा तेन यस्मात्त्वं बलाद्भद्रे प्रधर्षिता। तस्मात्स युवतीमन्यां नाकामामुपयास्यति ॥" इत्यादि। तथा भारते वनपर्वणि रामोपाख्याने सीतां प्रति त्रिजटावाक्यम्—"नलकूबरशापेन रक्षिता ह्यसि नन्दिनि। शापो ह्येष पुरा पापो वधूं रम्भां परामृशन् ॥" इति। तथाच कथमत्र पुञ्जिकस्थलीनिमित्तं ब्रह्मशापोत्कीर्तनम्? नच पूर्वं रम्भानिमित्तशापः। अनन्तरं पुञ्जिकस्थलीकृतः शापः इत्येकस्यैव शापद्वयाङ्गीकारे बाधकाभाव इति वाच्यम्; तथात्वे नलकूबरशापेन तदनन्तरमावि पुञ्जिकस्थलीधर्षणकाले तच्छिरःस्फोटापत्तेः। ब्रह्मशापानन्तरं रम्भासम्भोगे तु सुतरां तस्य दुर्निवारत्वात्। तस्मात्कथमत्रेति चेत्? उच्यते—कल्पे कल्पे अवान्तरवैचित्र्यस्य बहुलमुपलम्भात्कल्पान्तरवृत्तां ब्रह्मशापकथां समाधौ समीक्ष्य कविरवादीदिति। अथवा नलकूबरशापस्य पतिव्रताधर्षणविषयत्वेन स्वैरिणीविषयत्वाभावेन न पुञ्जिकस्थलीसङ्गात्तच्छिरसस्सहस्रधा भेदः। यथोक्तं तत्रैवोत्तररामायणे—"तेन निस्सीमतां प्रीतिमापुस्सर्वाः पतिव्रताः" इति। अन्यथा पतिव्रता इति न स्यात् स्याच्च स्त्रिय इति। यद्वा रम्भानिमित्तशापस्य कामनारहितस्त्रीबलात्कारविषयत्वम्। पुञ्जिकस्थल्या अन्तः कामो वर्तत इति ज्ञायते। अतो न तन्मरणमभूत्। यथोक्तं तत्रैव—"नाकामामुपयास्यसि" इति। अत्र चङ्क्रूर्यमाणां रावणलज्जया स्वाङ्गे निलीयमानामिवेति। प्रसह्योक्तिस्तु स्त्रीस्वभावेन लज्जयाऽनङ्गीकारप्रदर्शनादिति ज्ञेयम्। यत्तु नागोजिभट्टेन क्वचिदेवमेव कुबेरपुत्रनलकूबरशापोऽपि रम्भानिबन्धनः श्रूयते। तत्रोपपत्तिश्चिन्त्या। अस्य प्रथमत्वे तस्यां बलात्कारासम्भवात्। तस्य प्रथमत्वे अस्यां बलात्कारासम्भवादिति केचित्। नलकूबरशापस्य तपोबलेनाकिञ्चित्करत्वादयमेव शापो ब्रह्मास्त्रवदप्रतिक्रियः पाश्चात्य इत्यन्ये इत्युक्तम्। तत्र नलकूबरशापेनेत्युक्तभारतवचने तस्यैव पुरस्करणम्। "तस्मिन्नुदाहृते शापे ज्वलिताग्निसमप्रभे। देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता। पितामहमुखाश्चैव सर्वे देवाः प्रहर्षिताः। ज्ञात्वा लोकगतिं सर्वे" इत्यत्रैवोत्तरकाण्डे ब्रह्माद्यनुमत्या शापस्य दुष्परिहरतैव "श्रुत्वा तु स दशग्रीवस्तं शापं रोमहर्षणम्। नारीषु मिथुनीभावं नाकामास्वभ्यरोचयत् ॥" इत्यनेन शापेनैवाकामकामिनीसम्भोगविरुद्धिता च कथं सङ्गत इति विचार्यम्, अत एव तेन केचिदन्ये चेत्युक्तमिति मन्तव्यम् ॥ ११ ॥

एतत्क्षणमारभ्य। क्रियाविशेषणमेतत्। तदा गमनकाले एव फलिष्यति निःशीर्णो भविष्यति इति एवंप्रकारस्य शापस्य, शापादित्यर्थः। प्रसभं नारोपय इत्यन्वयो न बलादित्यनेन पौनरुक्त्यात्। किंतु प्रसभं शापस्येत्यन्वयः। वैदेहीमित्यनेन महाकुलप्रसूततया तच्छापादपि भीतोऽस्मीत्यवगम्यते ॥ १४ ॥ १५ ॥ रामानु०—अयेत्यादि। तदा ते शतधा मूर्धा फलिष्यति न संशय इत्यनेन रावणविषये रम्भानिबन्धननलकूबरशापे विद्यमानेऽपि तस्य प्राकृतदेवत्वात्तत्पुत्रत्वाच्च तच्छापमनादृत्य पुञ्जिकस्थलायामपि प्रवृत्तं रावणं पश्चात्पितामहः शप्तवान्। अत एव रावणोऽप्यनुल्लङ्घनीयं पितामहवाक्यमेवोक्तवानित्यवगम्यते। इत्यहमिति। शापस्य भीतः शापाद्भीतः॥१३–१५॥

सागरस्येव मे वेगो मारुतस्येव मे गतिः। नैतद्दाशरथिर्वेद ह्यासादयति तेन माम् ॥ १६ ॥
यस्तु सिंहमिवासीनं सुप्तं गिरिगुहाशये। क्रुद्धं मृत्युमिवासीनं प्रबोधयितुमिच्छति ॥ १७ ॥
न मत्तो निशितान् बाणान् द्विजिह्वानिव पन्नगान्। रामः पश्यति सङ्ग्रामे तेन मामभिगच्छति ॥ १८ ॥
क्षिप्रं वज्रोपमैर्बाणैः शतधा कार्मुकच्युतैः। राममादीपयिष्यामि उल्काभिरिव कुञ्जरम् ॥ १९ ॥
तच्चास्य बलमादास्ये बलेन महता वृतः। उदयन् सविता काले नक्षत्राणामिव प्रभाम् ॥ २० ॥

एवं न युक्ता बलात्कर्तुं सीतेत्युक्त्वा अस्माभिः सह कुम्भकर्णेन्द्रजितौ योत्स्यत इति महापार्श्ववचनस्यासहायशूरे मयि विद्यमाने किमन्येनेति परिहारमाह—सागरस्येति। एतत् वेगगतिमत्त्वम्। आसादयति, सेनामिति शेषः। स्वार्थण्यन्तो वा। तेन अवेदनेन ॥ १६ ॥ स्वप्रभावावेदनेनाहितमाह—यस्त्विति। सुप्तं सिंहमिवासीनं सिंहमिव स्थितमित्यर्थः। मृत्युमित्यत्रापि सुप्तमित्यनुषज्यते। अन्यथा प्रबोधयितुमिच्छतीत्यनेनानन्वयः। क्रुद्धं क्रोधार्हम्। यथा सुप्तं सिंहं मृत्युं वा प्रबोधयितुमिच्छन् पुरुषोऽनभिज्ञ एव। तद्वत् तूष्णीं स्थितं मां प्रकोपयन् रामोऽपीति भावः ॥१७॥ रामो मत्पराक्रमं न वेत्त्येव तत्तिष्ठतु मद्बाणवेगं वा जानाति, नैवेत्याह—नेति। लेलिहानतादृशां द्योतयितुं द्विजिह्वानित्युक्तम् ॥ १८ ॥ आदीपयिष्यामि सन्तापयिष्यामि। उल्काभिः निर्गतज्वालकाष्ठैः। कुञ्जरपलायनार्थमुल्काः प्रदर्शयन्तीति प्रसिद्धिः ॥ १९ ॥ एवं रामं पलाययित्वा तस्य सेनां हनिष्यामीत्याह—तच्चेति। आदास्ये खण्डयिष्ये। "दो अवखण्डने" इति धातुः ॥ २० ॥

देवानामप्यजय्योऽस्मि कथं मनुष्यादीनां जय्यो भविष्यामीत्याशयेनाह—न वासवेनेति । सहस्रचक्षुषेति तस्याभिमानातिशयोक्तिः । युधा युद्धेन न शक्योऽस्मि । जेतुमिति शेषः । उत्तरार्धेन कुबेरेणापि न जेतुं शक्य इति सिद्धम् । अत्र वंशस्थवृत्तम् ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

न वासवेनापि सहस्रचक्षुषा युधाऽस्मि शक्यो वरुणेन वा पुनः । मया त्वियं बाहुबलेन निर्जिता पुरी पुरा वैश्रवणेन पालिता ॥ २१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

निशाचरेन्द्रस्य निशम्य वाक्यं स कुम्भकर्णस्य च गर्जितानि । विभीषणो राक्षसराजमुख्यमुवाच वाक्यं हितमर्थयुक्तम् ॥१॥ वृतो हि बाह्वन्तरभोगराशिश्चिन्ताविषः सुस्मिततीक्ष्णदंष्ट्रः । पञ्चाङ्गुलीपञ्चशिरोऽतिकायः सीतामहाहिस्तव केन राजन् ॥ २ ॥

एवं दुर्मन्त्रिभिः प्रभुचित्तानुसारेण कथिते तदसहमानो विभीषणः परमार्थं हितमुपदिशति—निशेति । स कुम्भकर्णस्येत्यत्र स इति छेदः । गर्जितानि निरर्थकवचनानि । अर्थयुक्तं कर्तव्यार्थबोधयुक्तम् ॥ १ ॥ अदेया न यथा सीतेति रावणवचनं प्रति वक्तुं सीतामहित्वेन रूपयति—वृत इति । बाह्वन्तरं वक्षः तदेव भोगराशिः फणापरिणाहो यस्य स तथा । यद्वा बाह्वन्तरे वक्षसि भोगराशिः सौख्यसम्पत् सैव बाह्वन्तरभोगराशिः तिर्यक् प्रसारितयोर्बाह्वो र्यदन्तरं तत्प्रमाणो भोगराशिः शरीरपरिणाहो यस्येत्यावृत्त्या रूपकनिर्वाहः । चिन्तैव विषं विरोधिप्राणहरत्वात् तत् यस्य सः चिन्ताविषः । सुस्मितं स्वाभाविकमन्दस्मितम् तदेव शुभ्रत्वेन कामुकहृदयहारित्वेन च तीक्ष्णा दंष्ट्रा यस्य सः सुस्मिततीक्ष्णदंष्ट्रः । चिन्तावशेन वदनोपधानीकृतपाणेः पञ्चाङ्गुल्य एव पञ्चशिरोरूपातिकायो यस्य सः पञ्चाङ्गुलीपञ्चशिरोतिकायः । सीतामहाहिः स्पर्शमात्रेण मारकाहिः । तव त्वया केन हेतुना वृतः, सर्वथा

न वासवेनेति । वासवेन यथा जेतुं न शक्योऽस्मि वरुणेनापि तथैवेत्यर्थः ॥ २१ ॥ इति श्रीमहेश्वरतीर्थ॰ श्रीरामायण॰ युद्धकाण्डव्याख्यायां त्रयोदशः सर्गः ॥ १३ ॥

निशाचरेन्द्रस्येति । अर्थयुक्तं कर्तव्यार्थबोधकमित्यर्थः ॥ १ ॥ परावरज्ञो विभीषणः कुम्भकर्णादिप्रजल्पितमसहमानस्सन् परमहितमुपदिशति—वृतो हीति । बाह्वन्तरभोगराशिः बाह्वन्तरं बाहुमध्यं तदेव भोगराशिः सर्पशरीरपरिणाहो यस्य सः । पञ्चाङ्गुल्य एव पञ्च शिरांसि यस्य सः पञ्चाङ्गुलीपञ्चशिराः अतिकायो यस्य

त्यक्तव्य एवेति भावः । राजन्निति सान्त्वोक्तिः ॥ १ ॥ न केवलं तवैवानर्थहेतुः सीता किंतु तावकीनस्य सर्वस्येत्याह–यावदिति । " यावत्पुरानिपातयो र्लट् " इति लट् । तावदिति शेषः ॥ ३ ॥ यावदिति । स्पष्टम् ॥ ४ ॥ भित्त्वेति । तावच्छब्दो वाक्यालङ्कारे । प्राणान्ते भवाः प्राणान्तिकाः, प्राण हारिण इत्यर्थः । साक्षाद्राजानं प्रत्युक्तेरयुक्तत्वात् प्रहस्तं प्रति प्राणहरत्वोक्तिः । विकत्थसे आत्मानं श्लाघसे । " कत्थ श्लाघायाम् " इति धातुः ॥ ५ ॥

यावन्न लङ्कां समभिद्रवन्ति वलीमुखाः पर्वतकूटमात्राः । दंष्ट्रायुधाश्चैव नखायुधाश्च प्रदीयतां दाशरथाय मैथिली ॥ ३ ॥ यावन्न गृह्णन्ति शिरांसि बाणा रामेरिता राक्षसपुङ्गवानाम् । वज्रोपमा वायुसमानवेगाः प्रदीयतां दाशरथाय मैथिली ॥ ४ ॥ भित्त्वा न तावत् प्रविशन्ति कायं प्राणान्तिकास्तेऽशनितुल्यवेगाः । शिताः शरा राघवविप्रमुक्ताः प्रहस्त तेनैव विकत्थसे त्वम् ॥ ५ ॥ न कुम्भकर्णेन्द्रजितौ न राजा तथा महापार्श्वमहोदरौ वा । निकुम्भकुम्भौ च तथाऽतिकायः स्थातुं न शक्ता युधि राघवस्य ॥ ६॥ जीवंस्तु रामस्य न मोक्ष्यसे त्वं गुप्तः सवित्राप्यथवा मरुद्भिः । न वासवस्याङ्कगतो न मृत्योर्नभो न पातालमनुप्रविष्टः ॥ ७ ॥ निशम्य वाक्यं तु विभीषणस्य ततः प्रहस्तो वचनं बभाषे । न नो भयं विद्म न दैवतेभ्यो न दानवेभ्यो ह्यथवा कुतश्चित् ॥ ८ ॥

रामानु०–यावन्न गृह्णन्ति शिरांसि बाणा इत्यतः परं केषुचित् कोशेषु दृश्यमानः भित्त्वा न तावत् प्रविशन्ति कायमिति श्लोकः प्रहस्तोद्देशेन प्रवृत्तस्य तीक्ष्णा न तावदित्यस्यानन्तरं द्रष्टव्यः । अन्यथा प्रकरणविरोधः स्यात ॥ ५ ॥ तर्हि कुम्भकर्णादयो रामं वारयिष्यन्तीत्यत्राह–न कुम्भकर्णेति । इदमपि प्रहस्तं प्रति वचनम् ॥ ६ ॥ राज्ञः असामर्थ्यं विशिष्य दर्शयति–जीवन्निति । रामस्य रामात् । विभक्तिव्यत्ययः । जीवन्न विमोक्ष्यसे प्राणपर्यन्तं न त्वां रामो विमोक्ष्यतीति भावः । अङ्कगतोऽपि पुत्रभावेनाङ्कस्थितोऽपीत्यर्थः । मृत्योरित्यत्रापि अङ्कगत इत्यनुषज्यते । नभः पातालं वाऽनुप्रविष्टः न मोक्ष्यस इति योजना ॥७॥ अस्माकं कुतश्चित् भयं न विद्म ! विसर्गलोपश्छान्दसः । एवं सामान्येनोक्त्वा विशिष्य दर्शयति न दैवतेभ्य इत्यादिना । भयं न विद्म इति सर्वत्रान्वेति ॥ ८ ॥



सः अतिकायः, पञ्चाङ्गुलीपञ्चशिराश्चासौ अतिकायश्च तथाविधः । चिन्ताविषः दुःखकलुषितचिन्तैव विषं यस्य सः । शुस्मितमेव तीक्ष्णा दंष्ट्रा यस्य सः एतादृश सीतामहाहिस्त्वया केन हेतुना धृतः, अनर्थसम्पादनाय गृहीत इत्यर्थः ॥ ३–४ ॥ भित्त्वेति । प्राणान्तिकाः प्राणान्तकराः ॥ ५–१० ॥

पतगोत्तमेभ्यः गरुडेभ्यः । नरेन्द्रपुत्रात् मानुषबालादित्यर्थः । कथं नो भविता [illegible] ॥ ९ ॥ महात्मा महाबुद्धिः। धर्मार्थकामेषु, स्वामिन इति शेषः॥ १०॥ प्रहस्तेति । महोदरोक्तत्वेन पूर्वमनुक्तमप्यनेनावगम्यते पूर्वमुक्तमिति । अर्थजातं यथा ब्रवीथ तथा रामं प्रति तत्कार्यजातं न शक्यम्, कर्तुमिति शेषः । अधर्मबुद्धेः स्वर्गं प्रति गतिर्यथा न शक्या तथैवेत्यर्थः ॥ ११ ॥ अशक्यत्वमेव विशदयति—वधस्त्विति । अर्थविशारदस्य कार्यदक्षस्य रामस्य वधः, अप्लवस्य

न यक्षगन्धर्वमहोरगेभ्यो भयं न सङ्ख्ये पतगोत्तमेभ्यः । कथं नु रामाद् भविता भयं नो नरेन्द्रपुत्रात् समरे कदाचित् ॥ ९ ॥ प्रहस्तवाक्यं त्वहितं निशम्य विभीषणो राजहितानुकांक्षी । ततो महात्मा वचनं बभाषे धर्मार्थ कामेषु निविष्टबुद्धिः ॥ १० ॥ प्रहस्त राजा च महोदरश्च त्वं कुम्भकर्णश्च यथाऽर्थजातम् । ब्रवीथ रामं प्रति तन्न शक्यं यथा गतिः स्वर्गमधर्मबुद्धेः ॥ ११ ॥ वधस्तु रामस्य मया त्वया वा प्रहस्त सर्वैरपि राक्षसैर्वा । कथं भवेदर्थ विशारदस्य महार्णवं तर्तुमिवाप्लवस्य ॥ १२ ॥ धर्मप्रधानस्य महारथस्य इक्ष्वाकुवंशप्रभवस्य राज्ञः । प्रहस्त देवाश्च तथाविधस्य कृत्येषु शक्तस्य भवन्ति मूढाः ॥ १३ ॥ तीक्ष्णा नता यत्तव कङ्कपत्रा दुरासदा राघवविप्र मुक्ताः । भित्त्वा शरीरं प्रविशन्ति बाणाः प्रहस्त तेनैव विकत्थसे त्वम् ॥ १४ ॥

नौरहितस्य महार्णवं तर्तुं तरितुम्, शक्तिरिति शेषः । शक्तिरिव कथं भवेत् न कथंचिदपि संभवतीत्यर्थः । एतेन वध्यौ दशरथात्मजावित्युक्तस्योत्तरमुक्तम् ॥ १२ ॥ उक्तमर्थं कैमुतिकन्यायेन द्रढयति—धर्मेति । धर्मप्रधानस्य "अप्यहं जीवितं जह्याम्" इत्युक्तरीत्या धर्मविरोधे तृणीकृतसकलेतर पुरुषार्थस्य । महारथस्य रणे आत्मानं सारथिं च रक्षन् शत्रुसंहारक्षमो महारथः तस्य । "आत्मानं सारथिं चाश्वान् रक्षन् युद्ध्येत यो नरः । स महारथ संज्ञः स्यादित्याहुर्नीतिकोविदाः ॥" इत्युक्तेः । इक्ष्वाकुवंशप्रभवस्य जन्मसिद्धनिरतिशयपराक्रमस्य । राज्ञः सकलप्रकृतिमण्डलरञ्जकस्य । तथाविधस्य विराधकबन्धवालिप्रभृतिवधविदितवैभवस्य । शक्तस्य कार्यदक्षस्य । रामस्य कृत्येषु रणव्यापारेषु विषये देवाश्च मूढा भवन्ति अविदिततदीयव्यापारा भवन्तीत्यर्थः । किं पुनर्भवादृशा इति भावः ॥ १३ ॥ तीक्ष्णाः तीक्ष्णाग्राः, झटितिभेदनक्षमा इत्यर्थः । नताः नतपर्वाणः, ऋजव इत्यर्थः । सपदि



प्रहस्तेति । तन्न शक्यम्, कर्तुमिति शेषः । स्वर्गं स्वर्गमुद्दिश्य ॥ ११ ॥ अर्थविशारदस्य कार्यनिपुणस्य । तर्तुम्, शक्तिरिति शेषः ॥ १२–१४ ॥

भित्त्वा निर्गन्तुं क्षमा इति भावः । कङ्कपत्राः कङ्कानां पत्राण्येव पत्राणि येषां ते तथोक्ताः । कङ्कपक्षनिबद्धत्वेन महावेगा इत्यर्थः । अत एव दुरासदाः ॥ १४ ॥ रावणादयः सर्वेऽपि न समर्था इति योज्यम् ॥ १५ ॥ देवान्तक इति । अतिरथः अतिशयितरथः । महात्मा महाशरीरः । अद्रिसमानसारः गिरितुल्यबलः । "सारो बले स्थिरांशे च" इत्यमरः । देवान्तकादयो रावणपुत्राश्च राघवस्य युधि स्थातुं न शक्ताः ॥ १६॥ अमित्रप्रतिमैः कार्यतो

न रावणो नातिबलस्त्रिशीर्षो न कुम्भकर्णोऽस्य सुतो निकुम्भः । न चेन्द्रजिद्दाशरथिं प्रसोढुं त्वं वा रणे शक्रसमं समर्थाः ॥ १५ ॥ देवान्तको वापि नरान्तको वा तथातिकायोऽतिरथो महात्मा । अकम्पनश्चाद्रिसमानसारः स्थातुं न शक्ता युधि राघवस्य ॥ १६ ॥ अयं हि राजा व्यसनाभिभूतो मित्रैरमित्रप्रतिमैर्भवद्भिः । अन्वास्यते राक्षसनाशनार्थे तीक्ष्णः प्रकृत्या ह्यसमीक्ष्यकारी ॥ १७ ॥ अनन्तभोगेन सहस्रमूर्ध्ना नागेन भीमेन महाबलेन । बलात्परिक्षिप्तमिमं भवन्तो राजानमुत्क्षिप्य विमोचयन्तु ॥ १८ ॥ यावद्धि केशग्रहणात् सुहृद्भिः समेत्य सर्वैः परिपूर्णकामैः । निगृह्य राजा परिरक्षितव्यो भूतैर्यथा भीमबलैर्गृहीतः ॥ १९ ॥

रिपुतुल्यैः नाम्ना मित्रैः भवद्भिः त्वत्प्रमुखैः । व्यसनाभिभूतः सप्तव्यसनैराक्रान्तः । प्रकृत्या तीक्ष्णः उग्रः । असमीक्ष्यकारी अविमृश्यकारी । अयं राजा राक्षसनाशनार्थम् अन्वास्यते अनुस्रियते । अस्य राजत्वासमीक्ष्यकारित्वव्यसनाभिभूतत्वान्यपुरस्कृत्य तीक्ष्णत्वमेव पुरस्कुर्वन्तो भवन्तोऽभिभवन्ति । सर्वराक्षसविनाशं न जानन्तीति भावः । सप्तव्यसनस्वरूपमुक्तं कामन्दकेन—"वाग्दण्डयोस्तु पारुष्यमर्थदूषणमेव च । पानं स्त्री मृगया द्यूतं व्यसनं सप्तधा प्रभोः ॥" इति ॥१७॥ एवं प्रहस्तप्रमुखान् मन्त्रिमुख्यान्निर्भर्त्स्य संप्रति कर्तव्यमुपदिशति—अनन्तेति । अनन्तभोगेन अपरिच्छिन्नकायेन । सहस्रमूर्ध्ना अत एव भीमेन । न केवलं भीमत्वमात्रं महाबलेन नागेन, शेषेणेत्यर्थः । परिक्षिप्तं परिवेष्टितम् । रामद्वेषो महासर्पवेष्टनतुल्य इति भावः ॥ १८ ॥ ननु समयोऽतीतः किं कुर्म इत्यत्राह—यावदिति । परिपूर्णकामैः अवाप्तसर्वाभीष्टैरित्यर्थः । राजतो लब्धकामैः राजकार्ये अवश्यं यतितव्यमिति



न रावण इति । दाशरथिं प्रसोढुं दाशरथिपराक्रमं सोढुमित्यर्थः ॥१५॥१६॥ अयम् अन्वास्यते अस्य चित्तानुकरणं क्रियत इत्यर्थः ॥१७॥ परिक्षिप्तं परिवेष्टितम् । रघुनाथेन वैरकरणं महासर्पवेष्टनमिवेति निदर्शनालङ्कारः ॥ १८ ॥ यावत्केशग्रहणं राजा निगृह्य रक्षितव्यः अकार्यप्रवृत्तोऽयं राजा केशेष्वाकृष्यापि निवारणीयः

भावः । सर्वैः सुहृद्भिः समेत्य ऐकमत्यं प्राप्येति यावत् । [illegible] निगृह्य बलात्कृत्य यावत्केशग्रहणात् शत्रुभिः केशग्रहणपर्यन्तं परिरक्षितव्यः । "आकेशग्रहणान्मित्रमकृत्येभ्यो निवर्तयेत्" इति प्रसिद्धिं दर्शयति हिशब्दः । यद्वा आकेशग्रहणान्निगृह्य परिरक्षितव्यः अकार्यप्रवृत्तोऽयं राजा केशेष्वाकृष्यापि निवारणीय इत्यर्थः ॥ १९ ॥ संहारिणा विनाशकेन । राघवसागरेण लक्ष्मणसमुद्रेण । प्रच्छाद्यमानः । ततः काकुत्स्थपातालमुखे रामवडवाग्निमुखे । "पातालं वडवाग्नौ च" इति नानार्थरत्नमाला । पतन् सोऽयं राजा तरसा आरम्भकाल एव तारयितुं भवद्भिः

संहारिणा राघवसागरेण प्रच्छाद्यमानस्तरसा भवद्भिः । युक्तस्त्वयं तारयितुं समेत्य काकुत्स्थपातालमुखे पतन् सः ॥ २० ॥ इदं पुरस्यास्य सराक्षसस्य राज्ञश्च पथ्यं ससुहृज्जनस्य । सम्यग्घि वाक्यं स्वमतं ब्रवीमि नरेन्द्रपुत्राय ददाम पत्नीम् ॥ २१ ॥ परस्य वीर्यं स्वबलं च बुद्ध्वा स्थानं क्षयं चैव तथैव वृद्धिम् । तथा स्वपक्षेऽप्यनुमृश्य बुद्ध्या वदेत् क्षमं स्वामिहितं च मन्त्री ॥२२॥ इत्यार्षे श्रीरामायणे वाल्मी॰ श्रीमद्युद्धकाण्डे चतुर्दशः सर्गः ॥१४॥

हस्तप्रदानेनोत्तारयितुम् । युक्तः अर्हः । अत्र प्रच्छाद्यमानः पतन्निति प्रयोगौ वर्तमानसामीप्यात्, लक्ष्मणः प्रथमं ग्रहीष्यति ततो रामः अतो न जीवितुं शक्यम् । अतः प्रथममेव राजा निवर्तनीय इति भावः । सुवारिणेति पाठान्तरम् । तत्र सागरपक्षे सुजलेनेत्यर्थः । राघवपक्षे वारः स्यन्दनः । शोभनो वारः सुवारः सोऽस्यास्तीति सुवारी तेन । "सूर्यादिदिवसे वृन्दे कुन्दवृक्षे परिक्रमे । मद्यपात्रे स्यन्दने च वारो वरुणसेनयोः" इति निघण्टुः॥२०॥ मा दिशतु रामाय राजा वैदेहीम्, वयमेव बलाद्धि ददामः यदि हितमाकाङ्क्षितमित्याह–इदमिति । स्वमतं स्वस्य सिद्धान्तभूतम् । इदंशब्दार्थमाह नरेन्द्रेति ॥ २१ ॥ वयमपि सम्यगेव ब्रूमः शत्रुर्हन्तव्य इति तत्राह–परस्येति । मन्त्री परस्य शत्रोः वीर्यं स्वबलं स्वराजबलं च बुद्ध्वा, स्वराजपरराजयो र्बलं परीक्ष्येत्यर्थः । तथैव बलाबलपरीक्षावत् परस्य स्थानं संपदां साम्यम्, क्षयं वृद्धिं च बुद्ध्वा । तथा परस्येव स्वपक्षेऽपि बुद्ध्या सूक्ष्मदृष्ट्या स्थान

इत्यर्थः ॥ १९ ॥ सुवारिणा राघवसागरेणेति पाठः । शोभनो वारः वृन्दं सोऽस्यास्तीति सुवारी तेन । सागरपक्षे तु सुवारिणा शोभनजलेन ॥ २० ॥ इदमिति । ददामेति प्रार्थनायां लोट् ॥ २१ ॥ परस्येति । स्वबलं स्वबुद्धिबलम् । स्थानं पूर्वावस्थासाम्यम् । क्षयम् पूर्वावस्थातः शक्तिसिद्ध्योरपचयः क्षयः । वृद्धिम् पूर्वावस्थात उपचयो वृद्धिः ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां चतुर्दशः सर्गः ॥ १४ ॥

क्षयवृद्धीः अनुमृश्य आलोच्य । क्षमं युक्तं स्वामिहितं च वदेत् । परस्य क्षये स्ववृद्धौ यानम्, परस्य वृद्धौ स्वस्य क्षये सन्धिम् परस्य स्वस्य च साम्ये आसनं च स्वामिने कथयेदित्यर्थः । अत्र प्रकृते परस्य वृद्धेः रावणस्य नगरदहनतनयनाशादिना क्षयस्य दर्शनाच्च सीताप्रदानेन सन्धिरेव साधुरिति मन्त्रिभिर्भवत्स्वामिने निवेदनीयमिति भावः ॥२२॥ इति श्रीगोविन्दराजवि॰ श्रीरामायण॰ रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्दशः सर्गः॥१४॥

बृहस्पतेस्तुल्यमतेर्वचस्तन्निशम्य यत्नेन विभीषणस्य । ततो महात्मा वचनं बभाषे तत्रेन्द्रजिन्नैर्ऋतयोधमुख्यः ॥ १ ॥ किं नाम ते तात कनिष्ठवाक्यमनर्थकं चैव सुभीतवच्च । अस्मिन् कुले योऽपि भवेन्न जातः सोऽपीदृशं नैव वदेन्न कुर्यात् ॥ २ ॥ सत्त्वेन वीर्येण पराक्रमेण शौर्येण धैर्येण च तेजसा च । एकः कुलेऽस्मिन् पुरुषो विमुक्तो विभीषणस्तात कनिष्ठ एषः ॥ ३ ॥

अथेन्द्रजितो दुर्बुद्धिमुपन्यस्य दूषयति—बृहस्पतेरिति । ततो विभीषणवचनानन्तरम् । तत्र राक्षसेषु । यत्नेन निशम्य, असह्यतयेति भावः ॥ १ ॥ किन्नामेति । हे तात ते कनिष्ठवाक्यम् । अनर्थकं प्रयोजनशून्यम् । अनुष्ठातुरभावादिति भावः । सुभीतवत् सुभीतिमत् । किन्नाम कीदृशं जुगुप्सितमित्यर्थः । नामशब्दः कुत्सनद्योतकः । "नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने" इति वैजयन्ती । तदेवोपपादयति—अस्मिन्निति । आद्योऽपिशब्दः प्रश्ने । अपि ननु । अस्मिन् कुले पौलस्त्यवंशे । यो जातो न भवेत् । अन्यस्मिन् कुले यो जातः सोऽपि ईदृशं न वदेत् न कुर्यात् । ईदृग्वचनार्थं नानुतिष्ठेत् । ईदृग्वचनं वक्तृश्रोत्रोरुभयोरपि निन्दनीयम् । यद्वा हे तात कनिष्ठ ! ते वाक्यं किं नाम, जुगुप्सितमित्यर्थः । जुगुप्सितत्वमेवाह—अस्मिन्निति । न कुर्यात् न चिन्तयेत् । अत्र करोतिश्चिन्ताक्रियायां वर्तते । मुख्यस्य करणार्थस्यासम्भवात् सर्वधात्वर्थेषु करोत्यर्थस्य सम्भवाच्च ॥ २ ॥ एतद्वाक्यमेतत्स्वभावस्य सदृशमित्याह—सत्त्वेनेति । सत्त्वेन बलेन । वीर्येण प्रभावेन । "वीर्यं बले प्रभावे च" इत्यमरः । पराक्रमेण उद्योगेन । "शौर्योद्योगौ परा



अथेन्द्रजितो दुर्बुद्धिमुपन्यस्य दूषयति—बृहस्पतेरिति ॥ १ ॥ तात ! ते कनिष्ठवाक्यं किं नाम कीदृशम्, गर्हितमित्यर्थः । सुभीतवत् सुभीतिमत्, आद्योऽपिशब्दः प्रश्ने । अपि ननु । अस्मिन् कुले पौलस्त्यवंशे यो जातो न भवेत् अन्यस्मिन् कुले यो जातः सोऽपीदृशं नैव वदेत् न कुर्यात् । करोतेः क्रियासामान्यत्वान्न चिन्तयेदित्यर्थः ॥ २ ॥ सत्त्वेन बलेन, वीर्येण प्रभावेन, शौर्येण उत्साहेन, तेजसा पराभिभवसामर्थ्येन ॥ ३ ॥

क्रमौ" इत्यमरः। शौर्येण साहसिक्येन। धैर्येण स्थैर्येण। तेजसा गर्वेण। पराभिभवासहनेनेति यावत् ॥ ३ ॥ एवं रावणं प्रत्युक्त्वा विभीषणं निर्भर्त्सयति--किन्नामेत्यादिना। राक्षसेति हीनसम्बोधनमाग्रहकृत्यम्। तौ राजपुत्रौ किं नाम न किंचिदपि, अतिदुर्बलावित्यर्थः। कुत इत्यत्राह—अस्माकमेकेनेति। अस्माकं मध्ये सुप्राकृतेन अतिक्षुद्रेणापि एकेन राक्षसेन एतौ निहन्तुं शक्यौ हि। अतः भीरो! कुतोऽस्मान् भीषयसे स्वयं भीतोऽस्मान् भीषयसे। नास्माकं किंचित् भयमिति भावः ॥४॥ भयाभावे पूर्ववृत्तं संवादयति—त्रिलोकेति। नन्वित्यामन्त्रणे! त्रिलोकनाथ इत्यैश्वर्यमुक्तम्। देवराज इति

किं नाम तौ राक्षस राजपुत्रावस्माकमेकेन हि राक्षसेन। सुप्राकृतेनापि रणे निहन्तुं शक्यौ कुतो भीषयसे स्म भीरो ॥ ४ ॥ त्रिलोकनाथो ननु देवराजः शक्रो मया भूमितले निविष्टः। भयार्दिताश्चापि दिशः प्रपन्नाः सर्वे तथा देवगणाः समग्राः ॥ ५ ॥ ऐरावतो विस्वरमुन्नदन् स निपातितो भूमितले मया तु। विकृष्य दन्तौ तु मया प्रसह्य वित्रासिता देवगणाः समग्राः ॥ ६ ॥ सोऽहं सुराणामपि दर्पहन्ता दैत्योत्तमानामपि शोकदाता। कथं नरेन्द्रात्मजयोर्न शक्तो मनुष्ययोः प्राकृतयोः सुवीर्यः ॥ ७ ॥ अथेन्द्रकल्पस्य दुरासदस्य महौजसस्तद्वचनं निशम्य। ततो महार्थं वचनं बभाषे विभीषणः शस्त्रभृतां वरिष्ठः ॥ ८ ॥

सैन्यसामग्री दर्शिता। मया हेतुना। भूमितले निविष्टः स्थितः। निवेशित इत्यर्थ इत्यन्ये ॥५॥ ऐरावत इति। उन्नदन् उद्घुष्यन्। विकृष्य उत्पाट्य। ताभ्यां सर्वे देवगणाः वित्रासिताः। हेतुभेदेन देवानां भयान्तरमत्रोक्तमिति न पुनरुक्तिः ॥६॥ स्ववृत्तप्रदर्शनफलमाह—सोऽहमिति। मनुष्ययोरिति देवासुरव्यावृत्तिः। प्राकृतयोरिति इन्द्रव्यावृत्तिः। नरेन्द्रात्मजयोरिति बाल्योक्तिः। कथं न शक्तोऽस्मि अतः कुतो भीषयसे इति पूर्वेणान्वयः ॥७॥ अथेति। इन्द्रकल्पस्येत्यादिविशेषणत्रयेण पूर्वोक्तस्य यथार्थत्वमुक्तम्। शस्त्रभृतां वरिष्ठ इत्यनेनाभीरुत्वमुक्तम्। महार्थमित्यनेन वक्ष्यमाणार्थस्येन्द्रजिता

हे राक्षस! राजपुत्रौ किंनाम न किञ्चिदपि दुर्बलावित्यर्थः। कुत इत्यत्राह—अस्माकमिति ॥ ४ ॥ भूमितले भूतले। निविष्टः निवेशितः। कारागृहे निबद्ध इत्यर्थः ॥ ५ ॥ विकृष्य उत्कृष्य ॥ ६–९ ॥

दुर्नेयत्वमुक्तम् ॥ ८ ॥ न तातेति । अनेन निकृष्टवयस्त्वमुक्तम् । बालत्वेऽपि कस्यचित्सुमतिः सम्भवति साऽपि नास्तीत्याह अद्यापीति । अविपक्व बुद्धिः अपरिणतबुद्धिः । निश्चयाभावं दर्शयति तस्मादिति । विप्रलप्तं विप्रलपितम् ॥ ९ ॥ न केवलं स्वाज्ञानस्य स्वविनाश एव फलं किन्तु पितृ विनाशोऽपीत्याह—पुत्रेति । हे इन्द्रजित् ! त्वं पुत्रप्रवादेन पुत्रप्रसिद्ध्या । इत्थंभावे तृतीया । मित्रस्य मुखमिव मुखं यस्य सः तथोक्तः । मित्रवद्भासमान

न तात मन्त्रे तव निश्चयोऽस्ति बालस्त्वमद्याप्यविपक्वबुद्धिः । तस्मात्त्वया ह्यात्मविनाशनाय वचोऽर्थहीनं बहु विप्रलप्तम् ॥ ९ ॥ पुत्रप्रवादेन तु रावणस्य त्वमिन्द्रजिन्मित्रमुखोऽसि शत्रुः । यस्येदृशं राघवतो विनाशं निशम्य मोहादनुमन्यसे त्वम् ॥ १० ॥ त्वमेव वध्यश्च सुदुर्मतिश्च स चापि वध्यो य इहानयत्त्वाम् । बालं दृढं साहसिकं च योऽद्य प्रावेशयन्मन्त्रकृतां समीपम् ॥ ११ ॥ मूढः प्रगल्भोऽविनयोपपन्नस्तीक्ष्णस्वभावोऽल्पमतिर्दुरात्मा । मूर्ख स्त्वमत्यन्तसुदुर्मतिश्च त्वमिन्द्रजिद् बालतया ब्रवीषि ॥ १२ ॥ को ब्रह्मदण्डप्रतिमप्रकाशानर्चिष्मतः कालनिकाश रूपान् । सहेत बाणान् यमदण्डकल्पान् समक्षमुक्तान्द् युधि राघवेण ॥ १३ ॥

इत्यर्थः । शत्रुरसि । शत्रुत्वमेवोपपादयति—यस्येति । त्वं यस्य रावणस्य ईदृशं पुत्रमित्रविनाशपर्यन्तं राघवतो रामात् विनाशं निशम्य मन्मुखा च्छ्रुत्वा मोहादनुमन्यसे तस्य रावणस्य त्वं शत्रुरसीत्यर्थः । मोहादित्यनेन मित्रमुखत्वमुपपादितम् । अनुमन्यस इत्यनेन शत्रुत्वम् ॥ १० ॥ एवमनु मोदनस्य दण्डमाह—त्वमेवेति । त्वमेव वध्यः दण्ड्यः किमित्यर्थः । किन्तु यस्त्वाम् इह सभायाम् आनयत् प्रावेशयच्च स एव वध्यः ॥ ११ ॥ सुदुर्मति श्चेति चशब्ददर्शितान् दोषानाह—मूढ इति । मूढः कृत्याकृत्यविवेकशून्यः । प्रगल्भः धृष्टः, पण्डितम्मन्य इति यावत् । अविनयोपपन्नः अशिक्षित इत्यर्थः । तीक्ष्णस्वभावः क्रूरप्रकृतिः । दुरात्मा दुष्टान्तःकरणः । मूर्खः अविमृश्यकारी । अत्यन्तसुदुर्मतिः । प्रहस्तो दुर्मतिः महापार्श्वादिः सुदुर्मतिः । त्वमत्यन्त सुदुर्मतिरित्यर्थः । त्वमेवम्भूतोऽसि अतस्त्वं बालतया ब्रवीषि इति सम्बन्धः ॥ १२ ॥ दुर्मतित्वे हेतुमाह—क इति । ब्रह्मदण्डप्रतिमप्रकाशान् ब्रह्मदण्डसदृश

पुत्रप्रवादेन पुत्रव्यपदेशेन रावणस्य त्वं मित्रमुखः मित्रवद्भासमानःशत्रुरसि । कुतः ? यस्येति । यस्य रावणस्य ॥ १० ॥ ११ ॥ मूढः जडः । प्रगल्भः पण्डितम्मन्यः । अविनयोपपन्नः, सद्भिरशिक्षित इत्यर्थः । मूर्खः अविवेकी ॥ १२ ॥ [illegible] । कालनिकाशरूपान् मृत्युतुल्यरूपान् ॥ १३ ॥

प्रभान् । ब्रह्मदण्डो नाम युगान्तसमुत्थितोऽग्निवर्णो धूमकेतुरित्येके । ब्रह्मशाप इत्यन्ये । अर्चिष्मतः ज्वालावतः । "अर्चिर्हेतिः शिखा स्त्रियाम्" इत्यमरः । कालनिकाशरूपान् अन्तकसदृशरूपान् । समक्षमुक्तान् समीपे मुक्तान् ॥ १३ ॥ कृतस्याकृत्यस्य प्रायश्चित्तं राजानं प्रत्याह–धनानीति । रत्नानि श्रेष्ठ वस्तूनि । "रत्नं स्वजातौ श्रेष्ठेऽपि" इत्यमरः । धनानि द्रव्याणि ॥१४॥ इति श्रीगोविन्द० श्रीरामा० रत्न० युद्धकाण्डव्याख्याने पञ्चदशः सर्गः ॥१५॥

धनानि रत्नानि विभूषणानि वासांसि दिव्यानि मणींश्च चित्रान् । सीतां च रामाय निवेद्य देवीं वसेम राजन्निह वीतशोकाः ॥ १४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम् । अब्रवीत् परुषं वाक्यं रावणः कालचोदितः ॥ १ ॥

इत्थं हितमुक्तवन्तं विभीषणं प्रति रावणस्य परुषभाषणं षोडशे–सुनिविष्टमिति । सुसन्निवेशम् अर्थानुसन्धानविरहेऽपि श्रवणमात्रेणात्यन्तप्रीतिजनकम् । तेनार्थस्याननुकूलत्वेऽपि श्रवणस्यापरित्याज्यत्वमुक्तम् । सुनिविष्टम् उक्तवन्तमिति क्रियाविशेषणं वा । तेन मनस्यलग्नं चेदनादरणीयं वा स्यात् । मनसि सम्यग्लग्नं यथा भवति तथा उक्तवन्तम् । हितं न केवलं श्रवणप्रियम्, अतिदुर्दशानिस्तरणोपायतया पथ्यम् । श्रवणकटुत्वेऽपि पथ्यत्वपर्यालोचनया अपरित्याज्यम् । वाक्यं यावद्वक्तव्यार्थपूर्णम् उक्तवन्तम् । "नासंवत्सरवासिने प्रब्रूयात्" इत्युक्तरीत्या गुरूपसदनयुक्तस्य पादयोः पतितस्य वक्तव्यस्य दुरवस्थां दृष्ट्वोक्तवन्तं विभीषणम् । अन्येन चेदुक्तं परित्याज्यम् । साक्षादनुजतया प्रत्यासन्नेनोक्तं कथं त्याज्यम् । परुषं वाक्यमब्रवीत् । श्रवणसमनन्तरं स्थितोऽस्मि गतसन्देह इति वा वक्तव्यम् । त्वया महोपकारः कृत इति स्तोत्रं वा कर्तव्यम् । सदृशप्रत्युपकाराभावेनानुतापो वा कर्तव्यः । तद्विहाय शत्रून् प्रति वक्तव्यमुक्तवान् । अब्रवीदित्यनेन यथा सुनिविष्टमुक्तं तथा मनसि सुलग्नं यथा भवति तथा व्यक्तमुक्तवान् । एवमुक्तवन्तं प्रत्यपि परुषोक्तौ हेतुद्वयमाह–रावण इत्यादि । रावयति रोदयतीति रावणः । परहिंसायां जगद्विदितः । रौतीति रवणः स एव रावणः । स्वार्थेऽण्प्रत्ययः । अस्थाने पदं दत्त्वा स्वयमप्याक्रन्दन्नित्यर्थः । कालचोदितः । भ्राता रामं शरणं गच्छेत्युक्तवान् कालस्तत्र कर्तव्यमिति स्वयं द्विधा भज्येयमिति । अतः स्वप्रकृत्यनुगुणं काल

धनानि श्रेष्ठवस्तूनि निवेद्य समर्प्य ॥ १४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां पञ्चदशः सर्गः ॥ १५ ॥ सुनिविष्टमिति । सुनिविष्टं सुष्ठु विनीतिनिष्ठमिति यावत् ॥ १ ॥

मनुसृतवानिति भावः ॥ १ ॥ परुषमेवाह—वसेदिति । सपत्नेन बाह्यशत्रुणा । मित्रप्रवादेन मित्रवदवभासमानेनेत्यर्थः । शत्रुसेविना शत्रुपक्षपातिना । सहजशत्रुणेत्यर्थः । शत्रुसर्पसहवासादपि सहजशत्रुसहवासः सुदूरं परिहर्तव्य इति भावः । अतस्त्वया अस्मान्नगरात् सद्यो गन्तव्यमिति द्योत्यते ॥ २ ॥ अत्र शत्रुसेवित्वे हेतून् त्रिभिर्दर्शयति—जानामीत्यादिभिः । सर्वलोकेषु सर्वजनेषु मध्ये । शीलं स्वभावम् । शीलमेवाह हृष्यन्तीति । अस्मद्व्यसनेन लब्धहर्षस्त्वमेवं गर्जसीति भावः ॥ ३ ॥ प्रधानमिति । ज्ञातयः । प्रधानं स्वजातिश्रेष्ठम् । साधनं कार्यसाधकम् । वैद्यं विद्वांसम् । प्राधान्यादिष्वेकैक

वसेत् सह सपत्नेन क्रुद्धेनाशीविषेण वा । न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ॥ २ ॥ जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस । हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा ॥ ३ ॥ प्रधानं साधनं वैद्यं धर्मशीलं च राक्षस । ज्ञातयो ह्यवमन्यन्ते शूरं परिभवन्ति च ॥ ४ ॥ नित्यमन्योन्यसंहृष्टा व्यसनेष्वाततायिनः । प्रच्छन्नहृदया घोरा ज्ञातयस्तु भयावहाः ॥५॥ श्रूयन्ते हस्तिभिर्गीताः श्लोकाः पद्मवने क्वचित् । पाशहस्तान्नरान् दृष्ट्वा शृणु तान् गदतो मम ॥ ६ ॥ नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः । घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः ॥७॥

गुणयोगेऽपि ज्ञातयोऽवमन्यन्ते, न बहुमन्यन्ते अवसरे परिभवन्ति चेत्यर्थः ॥ ४ ॥ एवं ज्ञातीनां ज्ञातिषु व्यसने हर्षः उत्कर्षेऽसूया चेति शीलद्वय मुक्तम् । अथ भयावहत्वरूपं शीलान्तरमाह—नित्यमिति । प्रतिच्छन्नहृदयाः गूढाभिप्रायाः । अत एव नित्यमन्योन्यसंहृष्टाः बहिः स्नेहवन्त इव स्थिताः । घोराः क्रूरकर्माणः । अत एव व्यसनेषु सत्सु आततायिनः द्रोहकारिणः । अतस्त्वमस्मासु व्यसने प्रहर्तुमिच्छसीति भावः ॥ ५ ॥ उक्तं ज्ञातीनां भया वहत्वं हस्तिगीतेन संवादयति—श्रूयन्त इत्यादिना । क्वचित्पद्मवने । पाशहस्तान् पाशाः गजग्रहणरज्जवः ते हस्तेषु येषां ते तथोक्तान् । स्वबन्धनोद्युक्ता निति यावत् । नरान् ज्ञातिगजगोप्तॄन् गजग्राहिपुरुषान् दृष्ट्वा हस्तिभिः गीताः पठिताः श्लोकाः श्रूयन्ते । वक्तृपरम्परया तान् श्लोकान् गदतः वदतः मम मत्तः शृणु ॥ ६ ॥ तानेव त्रीन् श्लोकानुपादत्ते—नाग्निरित्यादि । नः अस्माकम् । अग्निः आश्रयाशोऽपि न भयावहः । अन्यानि लोकविलक्षणानि



शत्रुसेविना शत्रुपक्षपातिना ॥ २ ॥ ३ ॥ साधनं कार्यसाधकम् । वैद्यं विद्वांसम् । अवमन्यन्ते परिभवन्ति च ॥ ४ ॥ नित्यम् इतरकालेषु व्यसनेष्वापत्सु च । आततायिनः द्रोहकारिणः ॥ ५ ॥ उक्तं ज्ञातीनां भयावहत्वं हस्तिगीतामुखेन संवादयितुमाह—श्रूयन्त इति ॥ ६ ॥ नेति । स्वार्थप्रयुक्ताः स्वार्थपराः ॥ ७ ॥ ८ ॥

अग्नितोऽपि क्षणान्नाशकराणि । शस्त्राणि आयुधानि च न भयावहानि । पाशाः मरणादप्यतिदुस्सहपारवश्यक्लेशकराश्च न भयावहाः । किंतु घोराः निर्दयाः स्वार्थप्रयुक्ताः स्वप्रयोजनपराः ज्ञातयः भयावहाः । अग्न्यादिभ्योऽप्यधिकं ज्ञातिभ्यो भयमित्यर्थः ॥ ७ ॥ उक्तं ज्ञातिभयातिरेकं सयुक्तिकमुपपादयति—उपायमिति । अस्माकं ग्रहणे एते ज्ञातिरूपा हस्तिनः उपायं वक्ष्यन्ति अत्रोपायकथने संशयो नास्ति । अतः कृत्स्नादग्न्यादिभयात् ज्ञातिभयं सुकष्टम् । प्रकृष्टं भयमित्यर्थः, इदमस्माभिः विदितं ज्ञातं च ॥ ८ ॥ स्निग्धेषु ज्ञातिषु कुतो भयसम्भावनेत्याशङ्क्याह—विद्यत इति । गोसम्पत्त्याद्युपादानं दृष्टान्तार्थम् । गोषु सम्पन्नं सम्पत्तिः । तद्धेतुत्वमित्यर्थः । विद्यते आस्ति । "विद सत्तायाम्" इति धातुः । दमः इन्द्रियनिग्रहः । चापल्यं चञ्चलत्वम् । ज्ञातितः ज्ञातिषु । भयं भयकरत्वम् ॥९॥ प्रधानं साधनमिति श्लोकोक्तं निदर्शयाति—तत इति । अहं लोकसत्कृतः ऐश्वर्यम् अभिजातः प्राप्तः । रिपूणां मूर्ध्न्यवस्थितश्चेति यत् इदं ततः ज्ञातीनामसहिष्णुत्वात् तव नेष्टम् ॥१०॥ रामानु०—सौम्येत्याक्षेपोक्तिः ॥ १० ॥ चिरं सह वसति विभीषणे कथमकार्यमाशङ्कसे इत्यपेक्षाया मनार्यस्य चिरसंवासोऽप्रयोजक इत्याह—यथेति । पुष्करपर्णेषु पद्मपत्रेषु । पतितास्तोयबिन्दवः यथा श्लेषम् ऐक्यं नोपगच्छन्ति तथा अनार्येषु दुष्टेषु विषये । सङ्गतं सम्बन्धः । श्लेषं स्नेहबन्धं नोपयातीत्यर्थः ॥११ ॥ त्वदुपजीविनस्त्वयि कथं स्नेहबन्धाभाव इत्यत्राह—यथेति । यथा मधुकरः तर्षात् अभि

उपायमेते वक्ष्यन्ति ग्रहणे नात्र संशयः । कृत्स्नाद्भयाज्ज्ञातिभयं सुकष्टं विदितं च नः ॥ ८ ॥
विद्यते गोषु सम्पन्नं विद्यते ब्राह्मणे दमः । विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् ॥ ९ ॥
ततो नेष्टमिदं सौम्य यदहं लोकसत्कृतः । ऐश्वर्यमभिजातश्च ज्ञातीनां मूर्ध्न्यवस्थितः ॥ १० ॥
यथा पुष्करपर्णेषु पतितास्तोयबिन्दवः । न श्लेषमुपगच्छन्ति तथाऽनार्येषु सङ्गतम् ॥ ११ ॥
यथा मधुकरस्तर्षाद्रसं विन्दन्न विद्यते । तथा त्वमपि तत्रैव तथाऽनार्येषु सौहृदम् ॥ १२ ॥

सम्पन्नं सम्पत्तिः ॥ ९ ॥ अहम् ऐश्वर्यमभिजातः प्राप्तः लोकसत्कृत इति यत् इदं ज्ञातीनामसह्यत्वात्तव नेष्टम् ॥ १० ॥ ११ ॥ तर्षात् अभिलाषात् । रसं मकरन्दं पिबन् तत्र रसाधारे कुसुमे न विद्यते न तिष्ठति । त्वमपि तथा मधुकर इव । अनार्येषु सङ्गतं तथा तादृशमित्यर्थः ॥ १२ ॥

लाषात् । रसं मकरन्दम् । विन्दन् पिबन् । तत्र रसाधारे पुष्पे । न विद्यते न तिष्ठति । रसप्रदानोपकारं जानन् तत्र न स्निह्यतीत्यर्थः । त्वमपि तथा मधुकर इव । अनार्येषु दुर्जनेषु सौहृदं तथा हि । उपजीव्यविषये न जायत इत्यर्थान्तरन्यासः ॥ १२ ॥ रामानु०–यथेति । मधुकरः तर्पात् तृष्णातः रसं विन्दन् पिबन् तत्र रसाधारे यथा न सक्तो भवति त्वमपि तथैव । अनार्येषु सौहृदं तथा तथा खल्वित्यर्थः ॥ १२ ॥ तथापि कृतस्नेहः कुतोऽपलप्यते तत्राह–यथेति । अनार्येषु सौहृदं गजस्नानवत्तैरेव दुष्यत इत्यर्थः ॥ १३ ॥ रामानु०–यथा पूर्वमिति । गजः पूर्वं स्नात्वा हस्तेन रजो गृह्य गृहीत्वा आत्मनो देहं यथा दूषयति अनार्येषु सौहृदं तथा तादृशम् ।

यथा पूर्वं गजः स्नात्वा गृह्य हस्तेन वै रजः । दूषयत्यात्मनो देहं तथाऽनार्येषु सौहृदम् ॥ १३ ॥
यथा शरदि मेघानां सिञ्चतामपि गर्जताम् । न भवत्यम्बुसंक्लेदस्तथाऽनार्येषु सौहृदम् ॥ १४ ॥
अन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर । अस्मिन् मुहूर्ते न भवेत्त्वां तु धिक् कुलपांसनम् ॥ १५ ॥
इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः । उत्पपात गदापाणिश्चतुर्भिः सह राक्षसैः ॥ १६ ॥

गजा इवानार्याः पूर्वं कृतं स्नेहं स्वयमेव नाशयन्तीत्यर्थः ॥ १३ ॥ दृष्टोऽपि स्नेहो न फलपर्यवसायीत्याह–यथेति । शरदि सिञ्चतां वर्षताम् मेघानां सम्बन्धी अम्बुसंक्लेदः अम्बुसेचनं यथा न भवति तथाऽनार्येषु सौहृदम् । शरन्मेघवर्षणवदनार्येषु सौहृदमनुपकारकमित्यर्थः ॥ १४ ॥ रामानु०–यथेति । शरदि सिञ्चतां जलं मुञ्चतां गर्जतां च मेघानां संबन्धी अम्बुसंक्लेदः भुवि सम्यगार्द्रताहेतुस्तोयधारा न भवति यथा । अनार्येषु सौहृदं तथा । शरदि मेघा इव अनार्याः आपातत उपकुर्वन्त इव प्रतीयमाना वस्तुतो नोपकुर्वन्तीत्यर्थः ॥ १४ ॥ एवं सामान्येन विनिन्द्य साक्षादपि निन्दति–अन्य इति । अन्यः अनुजादन्यः एवंविधम् अतिपरुषम् एतत्पूर्वोक्तं वाक्यं ब्रूयात् वदेच्चेत् अस्मिन्मुहूर्तेऽस्मिन् क्षण एव न भवेत् विनश्येत् । नाशयेयमिति यावत् । त्वां तु भ्रात्राभासं धिक् त्यक्ष्यामीत्यर्थः । कुलपांसनं राक्षसकुलावद्यकरम् ॥ १५ ॥ इत्युक्त इति । न्यायवाद्यपि इति पूर्वोक्तरीत्या परुषमुक्तस्सन् उत्पपात सन्तप्तसिकतामयभूमिस्थित इव उद्गतः ॥ १६ ॥

यथेति । गजः पूर्वं स्नात्वा हस्तेन रजो गृह्य गृहीत्वा आत्मनो देहं यथा दूषयति अनार्येषु सङ्गतं तथा तादृशम् । गज इव अनार्याः पूर्वं कृतं स्नेहं स्वयमेव नाशयन्तीत्यर्थः ॥ १३ ॥ शरदि सिञ्चतां जललवान् मुञ्चतां मेघानां यथा आर्द्रीभावो न भवति, मेघा इव अनार्याः आपातत उपकुर्वन्त इव प्रतीयमाना अपि वस्तुतो नोपकुर्वन्तीत्यर्थः ॥ १४–१६ ॥

एवमाकाशे उत्पतन्नपि पुनस्तस्मिन्ननुतापेन अपि नाम प्रमुखोऽभवेत् [illegible] इति द्वितीयोपदेशे प्रावर्ततेत्याह—अब्रवीदिति । अन्तरिक्षगतः श्रीमान् । "परित्यक्ता मया लङ्का मित्राणि च धनानि च" इति समुत्थितस्य का नाम श्रीः ? उच्यते—प्रतिकूलनिवृत्तिपूर्वकानुकूलरामविषयाभिमुख्यश्रीसमेत इत्यर्थः ॥ १७ ॥ रामानु०—अत्र श्रीशब्देन सोपाधिकप्रतिकूलसंबन्धपरित्यागपूर्वकनिरुपाधिकस्वामिसंबन्धावलम्बनरूपा श्रीरुच्यते ॥ १७ ॥ स त्वामित्यर्धमेकं वाक्यम् । स त्वं परुषवादी त्वम् । भ्रातासि प्रतिवक्तुमनर्होऽसि अतो यद्यदिच्छसि तद्वद ॥ १८ ॥ तर्हि किमर्थमुद्गतोऽसि प्रतिवचनाभावात्

अब्रवीच्च तदा वाक्यं जातक्रोधो विभीषणः । अन्तरिक्षगतः श्रीमान् भ्रातरं राक्षसाधिपम् ॥ १७ ॥ स त्वं भ्राताऽसि मे राजन् ब्रूहि मां यद्यदिच्छसि ॥ १८ ॥ ज्येष्ठो मान्यः पितृसमो न च धर्मपथे स्थितः । इदं तु परुषं वाक्यं न क्षमाम्यनृतं तव ॥ १९ ॥ सुनीतं हितकामेन वाक्यमुक्तं दशानन । न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः ॥ २० ॥ सुलभाः पुरुषा राजन् सततं प्रियवादिनः । अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ २१ ॥ बद्धं कालस्य पाशेन सर्वभूतापहारिणा । न नश्यन्तमुपेक्षेयं प्रदीप्तं शरणं यथा ॥ २२ ॥ दीप्तपावकसङ्काशैः शितैः काञ्चनभूषणैः । न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः ॥ २३ ॥

क्षमापि क्रियतां तत्राह—ज्येष्ठ इति । ज्येष्ठस्त्वं पितृसमः मान्यः । किंतु धर्मपथे न स्थितोऽसि । अतस्त्वदुक्तमनृतं परुषं न क्षमामि न क्षमे ॥ १९ ॥ रामानु०—इदमिति । वसेत्सह सपत्नेनेत्यादिना यदुक्तं तदिदम् ॥ १९ ॥ स्ववाक्याश्रवणे निमित्तं सामान्यतो दर्शयति—सुनीतमिति । स्पष्टम् ॥ २० ॥ सुलभा इति । प्रियवादिन इत्युपलक्षणं प्रियश्रोतारश्च ॥ २१ ॥ तर्ह्यश्रोतारं प्रति किमर्थं वदसि ? तत्राह—बद्धमिति । सर्वभूतापहारिणा निर्दयेनेत्यर्थः । नोपेक्षेयम् नोपेक्षेय । शरणं गृहम् ॥ २२ ॥ दीप्तेति । स्पष्टम् ॥ २३ ॥

अब्रवीदित्यादि—ज्येष्ठो मान्य इत्यन्ते वाक्यसमाप्तिः । न च धर्मपथे स्थित इति परश्लोकः । यतो न धर्मपथे स्थितः अतः इदं न क्षमामीति सम्बन्धः ॥ १७-१९ ॥ सुनीतं सुनिर्मितम् । उपेक्षेयम् उपेक्षेय । शरणं गृहम् ॥ २०-२४ ॥

शौर्यबलास्त्रशालिनो मे कुतो विपदाशङ्केत्यत्राह—शूरा इति । कालाभिपन्नाः मृत्युगृहीताः । सीदन्ति शीर्यन्ति । वालुकाः सिकताः ॥ २४ ॥ तदिति । मर्षयतु, भवानिति शेषः ॥ २५ ॥ स्वस्तीत्यर्धम् ॥ २६ ॥ निवार्यमाणस्येति । स्पष्टम् ॥ २७ ॥ रामानु०—परीतकालाः परीतः प्रत्यासन्नः कालो मृत्युर्येषां ते तथोक्ताः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे । कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ २४ ॥ तन्मर्षयतु यच्चोक्तं गुरुत्वाद्धितमिच्छता । आत्मानं सर्वथा रक्ष पुरीं चेमां सराक्षसाम् ॥ २५ ॥ स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥ २६ ॥ [ नूनं न ते रावण कश्चिदस्ति रक्षोनिकायेषु सुहृत् सखा वा । हितोपदेशस्य स मन्त्रवक्ता यो वारयेत्त्वां स्वयमेव पापात् ॥ ] निवार्यमाणस्य मया हितैषिणा न रोचते ते वचनं निशाचर । परीतकाला हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २७ ॥ इत्यार्षे श्रीरामायणे० श्रीमद्युद्धकाण्डे षोडशः सर्गः ॥ १६ ॥

इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः । आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः ॥ १ ॥

एवमष्टभिः सर्गैः—"आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥ आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ॥" इत्युक्तेषु शरणागत्यङ्गेषु प्रपित्सोर्विभीषणस्यानुकूल्यसङ्कल्पप्रातिकूल्यवर्जने दर्शिते । पुनः पुनरुपदेशादिना महाविश्वासो दर्शितः । अथ कार्पण्यप्रदर्शनपूर्वकं शरणागतिस्वरूपं दर्शयितुमुपक्रमते—इत्युक्त्वेत्यादिना । तत्र रावणेन तिरस्कारे सत्यस्य देश एवास्माभिस्त्याज्यः । परमधार्मिकश्रीरामाश्रयस्तु कर्तव्य इति धार्मिकस्य विभीषणस्य धर्मे मतिरासीदित्यृषिः प्रस्तौति—इतीति । इत्युक्त्वा "प्रदीयतां दाशरथाय मैथिली" इति मर्षयतु, भवानिति शेषः ॥ २५ ॥ २६ ॥ परीतकालाः परीतः प्रत्यासन्नः कालो येषां ते । यद्वा परीतः परिवृतः कालः मृत्युरिव अहिः तेन गतान्यायूंषि येषां ते तथोक्ताः ॥ २७ ॥ इति श्रीमहेश्वर० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां षोडशः सर्गः ॥ १६ ॥ एवं परावरज्ञो विभीषणः दुर्मानिना रावणेन धिक्कृतः तं परित्यज्य अन्तरिक्षस्थितः सन् रावणस्यानुकूलबुद्ध्युत्पत्तिप्रत्याशया पुनरपि हितोपदेशं कृत्वा तत्रापि रावणाभिमुखमनालोक्य तेन सह संसर्गायोग्यत्वं सम्यङ्निश्चित्य त्वरया श्रीरामं प्राप्तुकामः श्रीरामनिवासभूमिं प्राप्तवानित्याह—इत्युक्त्वेति । रावणानुजो विभीषणः यत्र सलक्ष्मणो रामः तत्राजगामेति सम्बन्धः ।

कर्तव्यसौकर्यं " यावन्न गृह्णन्ति शिरांसि बाणाः " इत्यत्रापि प्रत्ययार्थं चोक्त्वा । परुषं सकलजनसुखावहस्य मलयमारुतस्य विरहिणि दुःखकरत्व वद्विभीषणोदितं हितम् आश्रयदोषेण परुषम् । वाक्यं हितपरिपूर्णम् । उक्त्वा हितज्ञो भ्राता भ्रातरमापन्नं परितत्याजेत्यपयशो यावता शक्यं परि मार्ष्टुं तावत्पर्यन्तमुक्त्वा । परुषत्वे हेतुः रावणमिति । प्रबलदुर्बलविचारमन्तरेण सर्वरावकस्य शत्रुबलोपवर्णने परुषं भवत्येव । रावणानुजः रावणानु जत्वेऽपि सत्त्वोत्तरतया कथनीयं हितमुक्तवानित्यृषिः स्तौति । हितकथने ज्येष्ठभावोऽप्यप्रयोजकः । अत एवोक्तं मनुना—"पितॄनध्यापयामास शिशुराङ्गि रसः कविः । पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् । अज्ञं हि बालमित्याहुः पितेत्येव च मन्त्रदम् ॥ " इति । आजगाम रावणगोष्ठ्यां स्वस्य सम्बन्धाभावेन रामगोष्ठ्याः स्वगृहत्वेनाजगामेत्युक्तम्, न तु जगामेति । मुहूर्तेन "वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुखजनसंवास वैशसम् ॥ " इति न्यायेनाङ्गारनिकरपरिक्षिप्ते वर्त्मनि पदन्यासवत् रावणसदनावस्थित्यनर्हत्वं विगलितबन्धनरज्जोर्वत्सस्य मातुरूधःस्पर्शमन्तरेण मध्यदेशादर्शनवदतिवेगागमनं चोक्तम् । यत्र रामः रामापेक्षया तद्देशसम्बन्धस्य प्राप्यत्वमुक्तम् । "सुभगश्चित्रकूटोऽसौ गिरिराजोपमो गिरिः । यस्मिन् वसति काकुत्स्थः कुबेर इव नन्दने ॥ " इतिवत् । रामस्य लक्ष्मणो व्यावर्तक इति सलक्ष्मण इत्युक्तम् । यद्वा पुरुषकारसान्निध्यमनेनोच्यते । अनेन श्लोकेन भगवद्विमुखानां देशस्य त्याज्यत्वं तत्सम्बन्धिदेशस्य परमप्राप्यत्वं चोक्तम् । यद्वा " सा काशीति न चाकशीति " इत्याद्युक्तरीत्या भगवद्देश स्यापि भागवताभिमानाभावे परित्याज्यत्वाल्लक्ष्मणसान्निध्यमुक्तम् । ननु विश्रवःपितामहवरप्रदानविभवविदितनिखिलधर्मवृन्देन " विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः " इति तत्र तत्र धार्मिकतया प्रशंसितेन विभीषणेन " ज्येष्ठो भ्राता पितृसमः " इति पितृवदनुवर्तनीयो ज्येष्ठभ्राता बाल्यात् प्रभृति परिपोषकश्च सन् रावणः सपदि सन्निहिते शत्रौ क्षुद्रबुद्धिनेव दूरं कथं परित्यक्तः ? त्यजतु नाम कथंचित् । अथापि न युक्तमभिगन्तुं तस्य प्रहर्ता रम् । अभिगच्छतु नाम नोचितमस्य स्थानमभिलषितुम् । अभिलषतु नाम नौपयिकमस्य वधोपायं निर्देष्टुम् । अत्र केचित्—रावणस्य निरवधिकदोष दूषितत्वात् " गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥ " इति स्मरणाद्विभीषणेन त्यक्तो रावण इत्याहुः । त्रय्यन्तगुरवस्तु पितामहवरप्रसादेन लब्धविज्ञानत्वाद्रामं सर्ववेदान्तवेद्यं सर्वलोकेश्वरभूतं सर्वलोकशरण्यं मुक्तप्राप्यं नारायणाख्यं परं ब्रह्म लोका

ननु " ज्येष्ठभ्राता पिता चैव यश्च विद्यां प्रयच्छति । त्रयस्ते पितरो ज्ञेया धर्मश्चेदत्र कारणम् ॥ " इति स्मृतेः ज्येष्ठभ्रातृत्वेन पितृसमं परित्यागानर्हं रावणं परित्यज्य रामसमीपगमनं विभीषणस्य विरुद्धमिति चेत्, सत्यम्; " गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥ " इत्यादिना

नुजिघृक्षयाऽवतीर्णमिति निर्विचिकित्समवगच्छति। यथा मन्दोदरीप्रभृतयः। एवं तत्त्वज्ञानसम्पन्नस्य विशेषसामान्यधर्मप्राबल्यदौर्बल्यविवेकेन सामान्य धर्मपरित्यागो विशेषधर्मपरिग्रहश्चोपपद्यते। ज्येष्ठभ्रात्रनुवर्तनं हि त्रैवर्गिकफलसाधनतया ज्येष्ठानुवर्तनद्वारा परमात्माराधने पर्यवसानस्य वक्तव्यत्वात् मोक्षपर्यवसानेऽपि परमात्मोपासनाङ्गत्वाच्च सामान्यधर्मः। रामानुवर्तनं तु साक्षात्परमात्मसमाराधनत्वात् यज्ञादिधर्मसाध्यत्वेन प्रधानत्वाच्च विशेषधर्मः। उभयोश्चाप्यविरोधे सत्युभयमप्यनुवर्तनीयम्। विरोधे तु सामान्यधर्मं परित्यज्य विशेषधर्मोऽनुवर्तनीयः। अतो विभीषणोऽपि इयन्तं कालं कृतं रावणा नुवर्तनमपरित्यज्यैव मम रामानुवर्तनमपि किं सिद्ध्येदित्याशया तस्मै हितं पुनःपुनरुपदिदेश। एवमपि तस्यासुरप्रकृतितयाऽनपनोद्यं रामवैरमिति निश्चित्यातः परम् एतदनुवर्तने स्वात्मविनाशकं रामविषयकं वैरं मय्यपि स्यादिति भीतः सन् "वरं हुतवहज्वाला–" इत्यादिन्यायेनात्यन्तदुस्सहां तत्सङ्गतिं तत्याज। विशेषधर्मं रामानुवर्तनं चाङ्गीचकारेत्यतोऽयं परो धर्म एवेति कृतप्रशङ्का दूरोत्सारिता। नाप्ययं राज्यकाङ्क्षया रामं शरणमुपजगाम तदपेक्षाया अदर्शनात्। तथाहि शरणागतिसमये "त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः" इत्यन्यविषयवैराग्यस्य तेन कण्ठरवेणोक्तत्वात्। पश्चाद्रामाय विज्ञापने क्रियमाणे "परित्यक्ता मया लङ्का मित्राणि च धनानि च। भवद्गतं मे राज्यं च जीवितं च सुखानि च॥" इति सर्वविधपुरुषार्थ त्वेन त्वामेवाहमुपेयिवानिति कथनाच्च। "अहं हत्वा दशग्रीवं सप्रहस्तं सबान्धवम्। राजानं त्वां करिष्यामि सत्यमेतत् ब्रवीमि ते॥" इत्यनाकाङ्क्षित राजत्वकरणोक्तिः कूलङ्कषरामप्रीतिसागरपरीवाहरूपानुषङ्गिकभोगप्रदानपरा। यथाहुः–"आयुरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान्। ददाति ध्यायतां नित्यमपवर्गप्रदो हरिः॥" इति। अतो यदुक्तं हनुमता "राज्यं प्रार्थयमानस्तु बुद्धिपूर्वमिहागतः" इति। यच्च रामेणोक्तं "राज्यकाङ्क्षी विभीषणः" इति तत्सर्वं रामभक्त्याविलाशयस्य सुग्रीवस्य व्यामोहप्रशमनाय नीतिशास्त्रोक्तराजवृत्तान्तप्रदर्शनमात्रपरमिति मन्तव्यम्। हनुमद्रामवाक्यस्य विभी षणवाक्यस्य चान्योन्यविरोधप्रसङ्गे "अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीयः" इति न्यायेन विभीषणवाक्यस्य प्राबल्यात्। अत एव "राजानं त्वां करिष्यामि" इति ब्रुवतो रामस्य प्रतिवचनमनुक्त्वा परिचरणमात्रमेव विभीषणः प्रार्थयामास "राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणे। करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम्॥" इति। तस्यानुमत्यभावेपि बलाद्राज्यस्वीकार उत्तरकाण्ड उक्तः–"यावत् प्रजा धरिष्यन्ति तावत्त्वं वै विभीषण। राक्षसेन्द्र महावीर्य लङ्कास्थस्त्वं धरिष्यसि। शापितस्त्वं सखित्वेन कार्यं ते मम शासनम्। प्रजाः संरक्ष धर्मेण नोत्तरं वक्तुमर्हसि॥" इति। इत्थमनन्य उत्पथप्रवृत्तस्य गुरोरपि परित्यागश्रवणात् उत्पथगामिनं सोपाधिकं गुरुं रावणं परित्यज्य निरुपाधिकाखिलजगद्गुरुं स्मृतमात्रेण सकलकलुषहरणप्रवीण

प्रयोजनत्वादेवास्मै रामः कुलधनं श्रीरङ्गनाथं ददौ । धर्मसंरक्षणार्थमेवावतीर्णस्य रामस्य नियोगेनावशिष्टां राक्षसजातिं सन्मार्गे प्रवर्तयितुं तस्य राज्याङ्गीकरणम् । इदमप्याज्ञानुविधायित्वात् कैङ्कर्यकोटावन्तर्भूतमिति विभीषणतात्पर्यम् । अतो यथावद्विदितधर्मो लक्ष्मणोऽपि "अहं तावन्महाराजे पितृत्वं नोपलक्षये । भ्राता भर्ता च बन्धुश्च पिता च मम राघवः ॥" इति सोपाधिकपितरं दशरथं परित्यज्य निरुपाधिकसकलविधबन्धुं राममेव "अग्रतस्ते गमिष्यामि पन्थानमकुतोभयम् । अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥" इति रामपरिचरणमेव फलं प्रार्थयामास । "स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः" इति राघवं शरणमुपागतश्च । तथा विभीषणोऽपि सोपाधिकबन्धुं भ्रातरं परित्यज्य कैङ्कर्यापेक्षयैव सर्वविधसहजबन्धुं रामं शरणं गत इति बोध्यम् । अत एव रामप्राप्त्यपेक्षया रावणपरित्यागवेलायामन्तरिक्षगतः श्रीमानिति प्रशंसितः 'स तु नागवरः श्रीमान्' 'लक्ष्मणो लक्ष्मिसम्पन्नः' इतिवत् । तस्मान्नाधर्मशङ्का विभीषणे । ननु यद्येवं तर्हि "ययोर्वीर्यमुपाश्रित्य प्रतिष्ठा काङ्क्षिता मया । तावुभौ मम नाशाय प्रसुप्तौ पुरुषर्षभौ । जीवन्नपि विपन्नोऽस्मि नष्टराज्यमनोरथः । प्राप्तप्रतिज्ञश्च रिपुः सकामो रावणः कृतः ॥" इति नागपाशबन्धनसमये स्वस्य राज्यनाशकृतनिर्वेदः कथमुपपद्यते इति चेत् ? न; तत्रापि प्रतिष्ठाशब्दस्य रामकैङ्कर्यपरत्वात् । नष्टराज्यमनोरथ इत्यत्रापि राज्यशब्दो "भवद्गतं मे राज्यं च" इत्युक्तकैङ्कर्यसाम्राज्यपरः । एतेन "राज्यं प्राप्स्यसि धर्मज्ञ लङ्कायां नात्र संशयः" इति सुग्रीववचनं तु तदाशयाज्ञानकृतमिति न कश्चिद्दोष इति प्राहुः । अत एव चतुरशीतौ वक्ष्यति विभीषणः—"यदाज्ञप्तं महाबाहो त्वया गुल्मनिवेशनम् । तत्तथाऽनुष्ठितं वीर त्वद्वाक्यसमनन्तरम् ॥" इति ॥ १ ॥

तं मेरुशिखराकारं दीप्तामिव शतह्रदाम् । गगनस्थं महीस्थास्ते ददृशुर्वानराधिपाः ॥ २ ॥

रावणसमीपादुत्पतनसमय एव सुग्रीवादयो विभीषणमपश्यन्नित्याह—तमिति । तं दवाग्नेर्निर्गत्य शीतलह्रदे पतितुमिवागच्छन्तम् । मेरुशिखराकारम् उन्नतत्वपीवरत्वरत्नबहुलत्वादिभिर्मेरुशिखरतुल्यम् । किञ्च प्रतिपक्षत्यागलाभेन स्थिरतया स्थितत्वं प्रकाशमानत्वं पारतन्त्र्यज्ञापकत्वम्, तेन रामस्य शृङ्गलाभः रावणस्य शृङ्गभङ्गश्चोच्यते । दीप्तामिव शतह्रदाम् तेजिष्ठत्वगगनसञ्चाराभ्यां विद्युद्दृष्टान्तः । रामभक्ता वानरा नास्मान् प्रवेशयिष्यन्तीति कम्पः, अप्रवेशे जीवनं न सिद्ध्यतीति त्वरा चेत्येतद्द्वयं तेन गम्यते । गगनस्थमिति । दूरत एव ददृशुरिति भावः ॥ २ ॥

श्रीरामनामधेयं कौसलेयं राममाजगामेति न दोषः ॥ १ ॥ तमिति । मेरुशिखराकारमिति उन्नतत्वपीवरत्वरत्नबहुलत्वादिभिर्मेरुशिखरदृष्टान्तः । नोदिष्ठत्व

तनि०—गगनस्थं रावणगोष्ठीतो निर्गमनसमय एव ददृशुः । महीस्थाः भूमौ परितो रक्षणनियुक्ता आकाशस्थमपि ददृशुरिति जागरूकत्वातिरेकः । यद्वा महीस्थाः तत्र तत्र वृक्षादिषु स्थिताः सर्वे तदात्व एव गगनस्थं दृष्ट्वा रामं पर्यवारयन् । वानराधिपाः अत्यन्तं सावधानतया विद्यमानत्वाद्वानरानपि ऋषिः स्तौति वानराधिपा इति । ददृशुः एको दृष्ट्वा अन्यस्मै न दर्शितवान् किंतु युगपदेव सर्वे ददृशुः । अनेन न केवलं प्रतिकूलसमूहान्निर्गमनमेव विभीषणस्य प्रयोजनम् किंतु अनुकूलकटाक्ष विषयत्वं लब्धमित्युक्तम् ॥ २ ॥ अथ सुग्रीवो लङ्कापुरीदेशादागमनमायुधसन्नाहं च दृष्ट्वा प्रहर्तुमेवागच्छतीति विचार्य तमर्थं वानरैः सह चिन्तयामासे त्याह—तमिति । तम् अत्यन्ताभिनिवेशेन शीघ्रमागतम् । आत्मपञ्चमम् आत्मना पञ्चत्वसङ्ख्यापूरकमित्यर्थः । अनलशरभसंपातिप्रघसनामभि

[ स हि मेघाचलप्रख्यो महेन्द्रसमविक्रमः । सर्वायुधधरो वीरो दिव्याभरणभूषितः ॥
ये चाप्यनुचरास्तस्य चत्वारो भीमविक्रमाः । तेऽपि सर्वायुधोपेता भूषणैश्चापि भूषिताः ॥ ]
तमात्मपञ्चमं दृष्ट्वा सुग्रीवो वानराधिपः । वानरैः सह दुर्द्धर्षश्चिन्तयामास बुद्धिमान् ॥ ३ ॥
चिन्तयित्वा मुहूर्तं तु वानरांस्तानुवाच ह । हनुमत्प्रमुखान् सर्वानिदं वचनमुत्तमम् ॥ ४ ॥

श्चतुर्भी राक्षसैर्युक्तमिति यावत् । अनलादिगतसङ्ख्यापूरण एव विभीषणस्य प्राधान्यमुक्तम् । रामविषयप्रेमास्पदत्वं तु समानम् । सुग्रीवः गगनस्थ दर्शनार्थं शीघ्रं शिर उन्नम्य दर्शनेन तात्कालिकश्रीवासौन्दर्यमृषिः स्तौति । वानराधिपः । शीघ्रमुत्थाय दर्शनं वानरसेनाया अपि स्वस्यैव रक्षकत्वेन रामविषयप्रीतेश्च 'राघवार्थे पराक्रान्ताः' इत्युक्तेभ्यो वानरेभ्योऽपि स्वस्यैव निरवधिकप्रीतिमत्ताज्ञापकत्वेन च । दुर्धर्षः शरणागतस्यापि पश्चादाकृष्टपाद त्वापादकत्वेन अनभिभवनीयः स्थितः । बुद्धिमान् वानरैः सह चिन्तयामास । स्वयं समर्थत्वेऽपि तानप्यनुसृत्य चिन्तनं कार्यगौरवात् । चारो वा शत्रु र्वेति चिन्तयामास । आगमनमुखविकासादिना निर्दुष्टत्वनिश्चयेऽपि रामविषयप्रेमपारवश्येन चिन्तितवानिति बुद्धेः प्राशस्त्यम् ॥ ३ ॥ विभीषणे सपरि करे सविधस्थे मन्त्रविलम्बो न युक्त इति झटिति मनसा निश्चित्य सचिवादीन् प्रति निर्णीतमाह—चिन्तयित्वेति । चिन्ताया निर्णयान्तत्वादत्र चिन्त यित्वेति निर्णयवाची । नायं चारो नापि दूतः अपितु बाधक एवेति निश्चित्य ॥ ४ ॥ तनि०—मुहूर्तम् अल्पकालेन । रावणः उत्तरकूल अनावृते स्थितं रामं गगनसञ्चाराभ्यां शतह्रदादृष्टान्तः ॥ २ ॥ आत्मपञ्चमम् आत्मना पञ्चमं पञ्चसङ्ख्यापूरकम् ॥ ३-७ ॥

शीघ्रं हत्वा आगन्तव्यमिति प्रेषितवान् मन्त्रेण विलम्बे [illegible] इति निश्चितवान् । तुशब्दः निश्चयानन्तरं पूर्वावस्थापेक्षया वैलक्षण्यं द्योतयति । तानुवाच प्रेमपरवशानुवाच ह । स्वामिपरिकरसमवायप्रकार आश्चर्यंकर इति ऋषिरभिनन्दति हेति । हनुमत्प्रमुखान् । गौरवकाले जाम्बवत्प्रमुखानिति वक्तव्यम् । मन्त्रविचारकाले तु बुद्धिमत्त्वप्राधान्यात् हनुमत्प्रमुखानित्युक्तिः । सर्वान् । रामविषयप्रेमातिशयः सर्वेषामविशेष इति सर्वानित्युक्तिः । इदं वचनम् । अर्थमन्तरेणापि वचनसन्निवेशस्य श्रुतिप्रियत्वमभिनन्दति ऋषिः । उत्तमं सर्वोत्कृष्टम् ॥ ४ ॥ स्वनिर्णीतार्थमाह—एष इति । एषः बाधकतैकान्तक्रौर्यसम्पन्नः । सर्वायुधोपेतः मनःस्थितक्रौर्यानुकूलहिंसापरिकरसंपूर्णः । अनुकूलस्य प्रतिकूलतानिश्चयवत् रामविषयप्रेमान्धतया एकायुधस्य बहुत्वानिश्चयः । एकायुधग्रहणचातुर्यदर्शनेन सर्वायुधग्रहणेष्वपि नैपुण्यं ज्ञायत इति वा तथोक्तम् । स्वामिपीडने ब्रह्मास्त्रसदृशशरणागतिरेतस्य हस्ते विद्यत इति वा । उत्पपात गदापाणिरित्यत्र सर्वायुधोपलक्षणमित्यन्ये । राक्षसः सर्पजातिरितिवत् क्रौर्यातिशयोक्तिः । पश्यध्वं पश्यत । अस्मान् हन्तुम् । अस्मासु कस्यचिद्धनने हि शेषं जीविष्यति मूलभूतरामहनने सर्वविनाश इति बहुवचनार्थः ॥ ५ ॥ वानराश्च सुग्रीववाक्यानुसारेणोद्योगं चक्रुरित्याह—सुग्रीवस्येत्यादि श्लोकद्वयेन । अल्पतेजस इति । अस्मद्बलस्य गजकवलप्राया इत्यर्थः ॥ ६ ॥ ७ ॥ तनि०—सुग्रीवस्य साहसकृत्यनिर्वाहकस्य । वचः श्रुत्वा अनुमतिं लब्ध्वा । सालानुद्यम्य शैलांश्च शैलवृक्षतारतम्यानादरेण सहसा हस्तसुलभान् स्वीकृत्य । आदरातिशयेन प्रत्येकमुभयपरिकरत्वमुक्तम्, रामकैङ्कर्यानुकूलवृत्तेर्लक्ष्मणस्य युगपच्छत्रचामरग्रहणवत् । राक्षसहननं हि रामकैङ्कर्यम् । इदं वचनं स्वशेषत्वसिद्धये सुग्रीवानुमतिमप्यनवेक्ष्य तेषां वधनिश्चयोपपादकं वचनमब्रुवन् । गुणप्रधानभावमौचित्यं वाऽनपेक्ष्य सर्वे अब्रुवन् । अस्वतन्त्राणामनुमतिविलम्बे स्वतन्त्रप्रहारे च पारतन्त्र्यहानिः स्यात् सा यथा न भवति तथा शीघ्रमाज्ञापय । नः वधोद्युक्तानस्मान् । वधोद्युक्ता यूयं किं ममानुमत्येत्यत्राह—राजन्निति । राजाज्ञा खल्वनुवर्तनीयेति भावः । वधाय गृहीत्वा बद्धाश्चेदत्र स्थित्वा कथंचिदनर्थं कुर्युः अतो वधायैवानुमतिर्देया । एषां दुरात्मनाम् आकारेणैव दौरात्म्यं दृश्यते खलु । निपतन्तु हताः सर्वे हताः पतन्तु । यथा पुनराकाशं नोत्पतन्ति तथा भूमावेव निपातयिष्याम इति भावः । युद्धे जयाजयौ पाक्षिकावित्यत आह अल्पतेजसः अल्पबलाः । अस्मद्बलस्य गजकवलप्राया इति भावः ॥ ६ ॥ ७ ॥

एष सर्वायुधोपेतश्चतुर्भिः सह राक्षसैः । राक्षसोऽभ्येति पश्यध्वमस्मान् हन्तुं न संशयः ॥ ५ ॥
सुग्रीवस्य वचः श्रुत्वा सर्वे ते वानरोत्तमाः । सालानुद्यम्य शैलांश्च इदं वचनमब्रुवन् ॥ ६ ॥
शीघ्रं व्यादिश नो राजन् वधायैषां दुरात्मनाम् । निपतन्तु हताश्चैते धरण्यामल्पतेजसः ॥ ७ ॥

तेषामिति । अनादरे चेयं षष्ठी । वदन्तु नामैते वानरा यत् किंचित्, सर्वज्ञः परमकारुणिकः सर्वलोकशरण्यो रामो मामवश्यं रक्षिष्यत्येवेति महाविश्वासेन तेषामन्योन्यभाषणमनादृत्य प्रहरणोद्यतानामपि तेषामाभिमुख्येनाजगाम । आगत्यापि निर्विशङ्कः सन् सर्वेषामात्मानं प्रकाशयन्नाकाशे एव स्थितवानित्यर्थः । अत्र खस्थो व्यतिष्ठतेति द्विः प्रयोगो निर्भयत्वेन निष्कम्पावस्थानसूचनार्थः ॥ ८ ॥ अथ पुरुषकारलेशमनपेक्ष्य सर्वानपि प्रातिबन्धिनो निवार्य मां रक्षिष्यतीति महाविश्वासशाल्यपि विभीषणः सहसा रामं शरणं नोपजगाम । किंतु दूरत एव स्थितः प्रातिकूल्यप्रवृत्तानेव सुग्री

तेषां सम्भाषमाणानामन्योन्यं स विभीषणः । उत्तरं तीरमासाद्य खस्थ एव व्यतिष्ठत ॥ ८ ॥
उवाच च महाप्राज्ञः स्वरेण महता महान् । सुग्रीवं तांश्च संप्रेक्ष्य सर्वान् वानरयूथपान् ॥ ९ ॥

वादीन् पुरुषकारभूतान् कृत्वोवाचेत्याह—उवाच चेति । उवाच च चकारेण स्वीकारे स्वागमनमेव पर्याप्तम्, वचनमप्युक्तवान् । पद्भ्यामभिगमाच्चेत्यागमनमपि भारायेति मन्यमानस्य तदुपरि वाक्यं क्षते क्षारवत् । महाप्राज्ञ इत्यनेनान्तरङ्गपुरुषकारेणैव कृपालुरपि राजा शरणमुपगन्तव्य इति परिज्ञानं वानराणां मत्प्रतिकूलसंरम्भोऽपि न मद्द्वेषकृतः किंतु रामभक्तिप्रकर्षकारितः । अतो गुण एवायमिति जानन्, यदि रामपरिचारका एते नाङ्गीकुर्युः किं रामाङ्गीकारेण ? अतो रामाङ्गीकारादप्येतदन्तर्भाव एव मम पुरुषार्थ इति ज्ञानं च विवक्षितम् । स्वरेण महतेति । पुरुषकारभूतानां सर्वेषां सर्वलोक

तेषामित्यनादरे षष्ठी । वानरा यत् किमपि वदन्तु नाम सर्वज्ञः परमकारुणिकः सर्वलोकशरण्यश्च श्रीरामोऽवश्यं मां रक्षिष्यत्येवेति महाविश्वासेन तेषामन्योन्यभाषणमप्यनादृत्य प्रहरणोद्युक्तानामपि तेषामाभिमुख्येनाभिजगाम । आगम्यापि निर्विशङ्कस्सन् सर्वेषामात्मानं प्रकाशयन् आकाश एव स्थितवानित्यर्थः । अत्र खस्थ एव व्यतिष्ठतेति तिष्ठतेर्द्विः प्रयोगः निर्भयत्वेन निष्कम्पावस्थानसूचनार्थः ॥८॥ एते वानरा मदीयमभिप्रायमविज्ञायासौ रावणसम्बन्धीति योद्धुमुद्युञ्जन्ते । रामसमाश्रयणमेतेभ्यो निवेद्य एतत्पुरुषकारमुखेनैव रामलक्ष्मणौ समाश्रयिष्यामीत्यभिप्रेत्याब्रवीदित्याह--उवाचेति । महाप्राज्ञ इत्यनेन अन्तरङ्गपुरुषपुरुषकारेणैव कृपालुरपि राजा शरणमुपगन्तव्य इति परिज्ञानम्, वानराणां मत्प्रतिकूलसंरम्भोऽपि न मद्द्वेषकृतः किन्तु श्रीरामभद्रभक्तिप्रकर्षपारवश्यकारितः, अतो गुण एवायमिति ज्ञानम्, यदि श्रीरामपरिचारका एते नाङ्गीकुर्युः तदा किं रामाङ्गीकारेण ? रामाङ्गीकारादप्येतदङ्गीकार एव मम पुरुषार्थ इति ज्ञानं च विवक्षितम् । स्वरेण महतेति पुरुषकारभूतानां सर्वेषां सर्वलोकशरण्यस्य चार्तरवश्रवणाय महास्वरप्रयोगः । महान् तत्र महत्त्वमौपाधिकसम्बन्धपरित्यागपूर्वकनिरुपाधिकस्वामिसमाश्रयणान्मुख्यकृतम् । " रावणो नाम दुर्वृत्तः " [illegible] " आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् ।

शरण्यस्य च स्वार्तरवश्रवणाय महास्वरप्रयोगः । रामविषये चैवंविधार्तरवोच्चारणं भाग्याधिकस्यैवेति विवक्षया महानित्युक्तिः । यथोक्तं लक्ष्मीतन्त्रे— "आकिञ्चन्यैकशरणाः केचिद्भाग्याधिकाः पुनः । मामेव शरणं प्राप्य मामेवान्ति समश्नुते" इति ॥ ९ ॥ अत्र प्रथमं स्वदोषान् पुरस्करोति—रावण इति । रावणं लोकरावणमिति न्यायेन रावयतीति व्युत्पत्तिसंभवान्नामैव क्रूरमित्यर्थः । न केवलं नामैव क्रूरम्, व्यापारोऽपि नृशंस इत्याह दुर्वृत्त इति । जातिरपि तथाविधेत्याह राक्षस इति । न केवलं स्वयमेव क्रूरः क्रूरानेकपरिकरसमवेतश्चेत्याह—राक्षसेश्वरः इति । रावणस्यैवंविधत्वे तव किमायातमित्यत्राह—

रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः । तस्याहमनुजो भ्राता विभीषण इति श्रुतः ॥ १० ॥
तेन सीता जनस्थानाद्धृता हत्वा जटायुषम् । रुद्धा च विवशा दीना राक्षसीभिः सुरक्षिता ॥ ११ ॥

तस्याहमिति । यद्यहमग्रजः स्यां तर्हि तदाज्ञाननुवर्तित्वेन धनदवत्तद्दोषैर्न लिप्येयम् । अनुजत्वेन तन्मनीषिताः सर्वे दोषास्तदाज्ञया मया कृता इति भावः ॥ १० ॥ राघवस्य तु प्रियापहारनिरोधादिभिः समाश्रितहननाच्च विशेषतस्तेनापकृतमित्याह—तेनेति । स्पष्टम् ॥ ११ ॥ तनि०—पूर्वोक्तदोषाः प्रायश्चित्तनिवर्त्याः । न क्षमामीत्युक्तभागवतापचारोऽप्यस्तीत्याह—तेनेति । तेन उक्तसकलदोषवता । हृता 'अनन्या राघवेणाहम् । जलान्मत्स्याविवोद्धृतौ' इत्याद्युक्तरीत्या रामविश्लेषानर्हा हृता । सीता गर्भवासादिक्लेशाभावेन परमपदादजहत्स्वभावतया अत्यन्तसौकुमार्या । जनस्थानात् पुष्पापचयादिभोगानामेकान्तस्थानतया अयोध्यात उत्कृष्टत्वेन सम्मतात् । जटायुषं हत्वा 'मम प्राणा हि' इत्युक्तरीत्यात्यन्ताभिमतं जटायुषमवधीत् । यदि सीतया सह जटायुषमपि कारागारे निवेशितवान् तदा मोचनं स्यात् । तथा न कृतम् । स्वस्य सपरिवारस्य विनाशार्थमेवं कृतवान् । रुद्धा च प्रमादाद्धरणेऽपि पश्चात्तापेन पुनर्न त्यक्ता किंतूच्छ्वासनिश्वासासञ्चारस्थले रुद्धा । विवशा न्यस्तपाणिपादाचलनेन रामविश्लेषदुःखेन आश्वासकान्तराभावेन च स्वबलहानिं प्रकाशयन्ती स्थिता । रामभोगपरम्परया हृष्टामेतादृशावस्थाविशिष्टां कृतवान् । राक्षसीभिः सुरक्षिता

रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा । आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ।" इति भगवच्छास्त्रोक्ता षडङ्गा शरणागतिः प्रदर्शिता ॥ ९ ॥ रावणः रावयतीति व्युत्पत्त्या नाम्नैव लोककण्टकत्वं द्योत्यते । दुर्वृत्त इत्यनेन कृत्याकरणाकृत्यकरणरूपदोषवत्त्वमुच्यते । राक्षस इत्यनेन जात्या क्रौर्यमुच्यते । राक्षसेश्वर इत्यनेन भृत्यसम्बन्धप्रयुक्तदोषवत्त्वमुच्यते । तस्याहमनुजो भ्रातेत्यनेन स्वस्य रावणसम्बन्धनिबन्धनदोषवत्त्वमुक्तं भवति । अनेन "उपायेनैव सिद्ध्यन्ति ह्युपाया विविधास्तथा । इति या गर्वहानिस्तद्दैन्यं कार्पण्यमुच्यते ॥" इत्युक्तगर्वहानिलक्षणं कार्पण्यरूपमङ्गं प्रदर्शितम् ॥ १० ॥ ११ ॥

विकृतभयंकरवेषवचोभिरेकाक्ष्येककर्णीप्रभृतिभिः आश्वासकनवव्याकरणपण्डितस्यापि यथा न प्रवेशस्तथा रक्षिता ॥ ११ ॥ अस्त्वेवं ततः किमित्यत्राह—तमिति । हेतुभिर्वाक्यैः हेतुप्रतिपादकैर्वाक्यैः । न्यदर्शयम् अबोधयम् । बोधितमेवार्थमाह साध्विति । निर्यात्यतां प्रत्यर्प्यताम् ॥ १२ ॥ तनि०—सीताहरणसमकालमेवागमनं ममोचितं तथा अकृत्वा तस्य हितं वक्तुं विलम्बितोऽहमेव पापीयानित्याह—तमहमिति । तमुक्तद्रोहयुक्तम् अहं पापिष्ठं ज्ञात्वापि हितवक्ता विविधैः सामादिभिर्वाक्यैः पूर्णार्थैः हेतुभिः खरवधादिभिर्लिङ्गैरबोधयं सुप्तमिव प्राबोधयम् । बोधितमर्थमाह साधु निर्यात्यतां सीतेति । निर्यातनं प्रतिदानम् । साधु अनुतापाकिञ्चन्यादिप्रदर्शनेन । सीता रामाय, तदीय एव वस्तुनि तस्मै दत्तेऽपि स्वकीयं दत्तमिति मन्वानाय । पुनः पुनः तस्येच्छाभावेऽपि मद्वचः कुर्यादिति प्रत्याशया प्रलपितम् ॥ १२ ॥

तमहं हेतुभिर्वाक्यैर्विविधैश्च न्यदर्शयम् । साधु निर्यात्यतां सीता रामायेति पुनः पुनः ॥ १२ ॥
स च न प्रतिजग्राह रावणः कालचोदितः । उच्यमानं हितं वाक्यं विपरीत इवौषधम् ॥ १३ ॥
सोऽहं परुषितस्तेन दासवच्चावमानितः । त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥ १४ ॥
सर्वलोकशरण्याय राघवाय महात्मने । निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् ॥ १५ ॥

स चेति । विपरीतः मुमूर्षुः ॥ १३ ॥ एवमीश्वरस्य निर्हेतुककरुणाकृतेन रावणावमानेन प्रयोजनान्तरवैमुख्यं जातम् । ततश्च परमपुरुषार्थभूतरामप्राप्त्यर्थं राममेव शरणमुपगतोऽस्मीत्याह—सोऽहमिति । अत्र पुत्रान् दारानिति 'परित्यक्ता मया लङ्का मित्राणि च धनानि च ' इति वक्ष्यमाणानां लङ्काराज्यादीनामुपलक्षणम् । अत्र फलान्तरानिर्देशात् 'राक्षसानां वधे साह्यम्' इत्यादिवचनस्य स्वेनैव वक्ष्यमाणत्वाच्च रामपरिचरणस्यैव फलत्वपक्षो युक्तः ॥ १४ ॥ एवं शरण्यस्य विज्ञाप्यमर्थमुक्त्वा तद्विज्ञापनाय पुरुषकारभूतान् प्रार्थयते—सर्वलोकशरण्यायेति । शरणे रक्षणे साधुः शरण्यः । "तत्र

तमहमिति । हेतुभिः हेतुमद्भिः । न्यदर्शयं न्यबोधयम् । बोधितार्थमेवाह साध्विति । निर्यात्यतां प्रत्यर्प्यताम् । अनेन "चराचराणि भूतानि सर्वाणि भगवद्वपुः । ततस्तदानुकूल्यं मे कर्तव्यमिति निश्चयः ॥" इत्युक्तमानुकूल्यसङ्कल्परूपमङ्गं प्रदर्शितम् ॥ १२ ॥ स चेति । विपरीतः मुमूर्षुः ॥१३॥ दासवच्चावमानित इत्यनेन ईश्वरस्य निर्हेतुककरुणापरिपाकभूतेनैव रावणावमानेन प्रयोजनान्तरवैमुख्यं जातम् । ततश्च परमपुरुषार्थरूपरामप्राप्त्यर्थं राममेव शरणमुपगतोस्मीत्याह—त्यक्त्वेति । त्यक्त्वा पुत्रांश्च दारांश्चेत्यनेन प्रातिकूल्यवर्जनरूपमङ्गं प्रदर्शितम् । राघवं शरणं गत इत्यनेन आत्मनिक्षेपरूपमङ्गं प्रदर्शितम् ॥ १४ ॥ सर्वलोकशरण्याय अधिकारिभेदमन्तरेण सुरनरवानरतिर्यक्स्थावरान्तानां सर्वेषां समाश्रयणीयाय राघवाय । "अन्येऽपि सन्त्येव नृपाः पृथिव्यां मान्धातुरेते तनयाः

साधुः ” इति यत्प्रत्ययः । शरणं भवितुमर्हः शरण्य इति निरुक्तिः । अनालोचितकुलविद्यावृत्तादिविशेषाशेषलोकशरण्यायेत्यर्थः । अतः सञ्चित विविधापराधस्य रावणस्यापि युष्माकमिवात्रांशोऽस्ति किमुत तत्सम्बन्धिनः । परंतु रुच्यभावादेव स स्वांशं न लब्धवान् । मम त्वाभिमुख्येनागतस्य दुरपनोदोऽंशलाभ इति भावः । अत्र शरण्याङ्गभूतं सुलभत्वपरत्वरूपं गुणद्वयं प्राधान्येन दर्शयति राघवाय महात्मन इति । सुलभत्वेऽप्यनिष्टानां लोष्टा नाम् उत्कर्षेऽप्यसुलभानां मेरुप्रभृतीनां चानुपादेयत्वादुभयमप्यपेक्षितम् । 'यत्तदनिर्देश्यम्' इत्यादिवेदान्तगोचरस्य परब्रह्मणः सकलमनुजतिर्यङ्नसाक्षा

एतत्तु वचनं श्रुत्वा सुग्रीवो लघुविक्रमः । लक्ष्मणस्याग्रतो रामं संरब्धमिदमब्रवीत् ॥ १६ ॥

त्कारक्षममनुजावतारात् केयमन्या सौलभ्यकाष्ठेति भावः । महात्मने एवमवतारेऽप्यजहत्स्वभावतया निखिलहेयप्रत्यनीकत्वे सति ज्ञानशक्त्याद्यनन्त कल्याणगुणैकतानाय । निवेदयत अत्र प्रत्यक्षस्य स्वागमनस्य निवेदने प्रयोजनाभावात् स्वापराधपरिपूर्तिः इहामुत्रफलभोगविरागः शरणागतिलक्षण निरपायोपायपरिग्रहः रामकैङ्कर्याभिलाषः तत्परिचारकान्तर्भावश्चेत्येतेऽर्था विज्ञापनीया इत्यर्थः । क्षिप्रमित्यनेन यावच्छरण्यः स्वयमेव परिग्रहीष्यति ततः पूर्वमेव विज्ञापनेन युष्माभिः सुहृत्कार्यमाचरणीयमिति भावः । विभीषणम् रावणवन्नाहं प्रतिकूलः किन्तु 'विभीषणस्तु धर्मात्मा' इत्यनुकूल एव । उप स्थितम् अतिहीनस्याप्युपगमनमेव हि रामाङ्गीकारे बीजमिति भावः ॥१५॥ अथ सुग्रीवो रामप्रेमातिशयजनिताव्यामोहात् 'अतिस्नेहः पापशङ्की' इति

प्रसूताः । किन्त्वर्थिनामर्थितदानदीक्षाकृतव्रतश्लाघ्यमिदं कुलं तत् ॥ ” इत्यादिवचनैः प्रसिद्धवैभवे रघुवंशे अवतीर्णाय । अनेन अर्थिनां प्रार्थनावैफल्यं नास्तीति द्योतितम् । महात्मने परमात्मने । मां राममेव सर्वविधबन्धुत्वेनाश्रितम् । क्षिप्रं क्षिप्रमित्यनेन शीतलसुरभिसलिलं पद्माकरं दृष्टवतस्तृषितस्येव विलम्बासहत्वं द्योत्यते । निवेदयत विज्ञापयत । “ वाचा धर्ममवाप्नुहि ” इति न्यायेन अक्लेशेन भवतां महानुपकारः सेत्स्यतीति भावः । सर्वलोकशरण्यायेत्यनेन श्लोकेन “ अप्रार्थितो न गोपायेदिति तत्प्रार्थनामतिः । गोपायिता भवत्येवं गोप्तृत्ववरणं स्मृतम् ॥ ” इत्युक्तं गोप्तृत्ववरणरूपमङ्गं प्रदर्शितम् । उपस्थितं समीपं प्राप्य स्थितम् । अनेन “ रक्षिष्यत्यनुकूलान्न इत्येवं सुदृढा मतिः । स विश्वासो भवेच्चात्र सर्वदुष्कृतिनाशनः ॥” इत्युक्तं विश्वासरूपमङ्गं प्रदर्शितम् । ननु इक्ष्वाकुवंशस्य राज्ञो रामभद्रस्य सर्वलोकशरण्यत्वं परत्वं च विभीषणेन कथमुक्तमिति चेत् ? उच्यते–“ परमापद्गतस्यापि धर्मे मम मतिर्भवेत् । या या मे जायते बुद्धिर्येषु येष्वाश्रयेषु च । सा सा भवतु धर्मिष्ठा तं तं धर्मं च पालयेत् ॥” इति प्रार्थितेन ब्रह्मणा–“ धर्मिष्ठत्वं तथा वत्स तथा चैतद्भविष्यति । ” इति दत्तवरत्वेन रामं सकलजगद्रक्षणार्थमिक्ष्वाकुवंशेऽवतीर्णं परमधर्मरूपं परमपुरुषं नारायणं ज्ञात्वा तथोक्तवानिति सर्वं समञ्जसम् ॥१५॥ क्रूरहृदयोऽयमस्मासु पापमाचरेदतो विभीषणो

न्यायेन तस्य सर्वशक्तित्वमपि विस्मृत्य शरणागतवत्सलो रामः शरणागतिशब्दश्रवणमात्रेण गूढहृदयमेनं परिगृह्णीयात् ॥ १६ ॥ ततः क्रूरहृदयोऽयं रामे किमिव पापमाचरेदित्यस्थानभयशङ्काव्याकुलितः शीघ्रं रामसमीपं गत्वा स्वसमानहृदयं लक्ष्मणमपि सहायीकृत्य विभीषणो निग्राह्य इति विज्ञापयामासेत्याह–एतदिति । तुशब्देन पूर्वोक्तविशेष उच्यते । लघुविक्रमः शीघ्रगमनः । संरब्धं प्रेमभरात् त्वरितोदिताक्षरम् ॥१७॥ मन्त्र इति । मन्त्रः

रावणस्यानुजो भ्राता विभीषण इति श्रुतः । चतुर्भिः सह रक्षोभिर्भवन्तं शरणं गतः ॥ १७ ॥
मन्त्रे व्यूहे नये चारे युक्तो भवितुमर्हसि । वानराणां च भद्रन्ते परेषां च परन्तप ॥ १८ ॥
अन्तर्धानगता ह्येते राक्षसाः कामरूपिणः । शूराश्च निकृतिज्ञाश्च तेषु जातु न विश्वसेत् ॥ १९ ॥
प्रणिधी राक्षसेन्द्रस्य रावणस्य भवेदयम् । अनुप्रविश्य सोऽस्मासु भेदं कुर्यान्न संशयः ॥ २० ॥
अथवा स्वयमेवैष छिद्रमासाद्य बुद्धिमान् । अनुप्रविश्य विश्वस्ते कदाचित् प्रहरेदपि ॥ २१ ॥

कार्याकार्यविचारः । व्यूहः सेनास्कन्दनिवेशः । नयः विचार्य निश्चितानामुपायानां स्वस्वविषये प्रयोगः । चारः गूढप्रेषणम् । वानराणां परेषां राक्षसानां च मन्त्रादिषु विषये युक्तः अवहितः । भवितुमर्हसि, वानराणां मन्त्रादीन् प्रयोजय । शत्रूणां मन्त्रादींस्तु सम्यक् जानीहि । एवं सति तव भद्रं भविष्यतीत्यर्थः ॥ १८ ॥ अस्त्वेवम्, ततः किमित्याशङ्क्य प्रकृतं विज्ञापयति–अन्तर्धनेति । अन्तर्धानगताः अदृश्यचारिणः । निकृतिज्ञाः कपटोपायवेदिनः ॥ १९ ॥ विश्वासे वा किमयं करिष्यतीत्याशङ्क्य भेदं दण्डं वा करिष्यतीत्याह–प्रणिधिरिति । प्रणिधिः चारः । "यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः । चारश्च गूढपुरुषः" इत्यमरः । भेदं मित्रभेदम् ॥ २० ॥ अथवेति । अपिः सम्भावनायाम् ॥ २१ ॥

न ग्राह्य इति सुग्रीवः श्रीरामाय विज्ञापयामासेत्याह–एतस्त्वित्यादिना । लघुविक्रमः शीघ्रगमनः । संरब्धं त्वरितोदिताक्षरं यथा तथा ॥ १६ ॥ १७ ॥ मन्त्र इति । एतेषु विषयसप्तमी । मन्त्रे कार्याकार्यविचारे । व्यूहे सेनानिवेशे । नये विचार्य विनिश्चितानामुपायानां तत्तद्विषयप्रयोगे । चारे गूढपुरुषप्रेषणे । वानराणां परेषां राक्षसानां च मन्त्रादिषु विषये युक्तोऽवहितो भवितुमर्हसि । वानराणां मन्त्रादीन् प्रयोजय, शत्रूणां मन्त्रादीन् चारमुखेन सम्यग् जानीहि । एवं सति ते भद्रं भविष्यतीत्यर्थः ॥ १८ ॥ अन्तर्धानगता अदृश्यसञ्चारस्वभावाः । निकृतिज्ञाः गूढविप्रियकरणाभिज्ञाः ॥ १९ ॥ प्रणिधिः चारः ॥ २० ॥ २१ ॥

शत्रुसकाशादागतस्यास्य परिग्रहे शत्रोर्बलक्षयः अस्माकं बलवृद्धिश्च स्यादित्याशङ्क्य द्विषद्बलव्यतिरिक्तमेव बलं ग्राह्यमित्याह—मित्रेति । मित्रबलं
मित्रसम्बन्धिबलम् । अटवीबलम् आटविकजनरूपं बलम् । मौलं परम्परागतं सैन्यम् । भृत्यबलं तादात्विकभृतिप्रदानोपजीविबलम् ॥ २२ ॥
न केवलं द्विषद्बलत्वमात्रम् अन्येऽप्यपरिग्राह्यताहेतवः सन्तीत्याह—प्रकृत्येति । प्रकृत्या जात्येत्यर्थः ॥ २३ ॥ नन्वयं शरणागतः कथं परित्याज्य इत्या
शङ्क्य शरणागतिलक्षणमायोपायेन विश्वासमुत्पाद्य त्वयि प्रहर्तुं प्रवृत्तत्वान्नास्यापरिग्राह्यत्वमात्रम्, किंतु सहायैः सह वध्यत्वमित्याह—रावणेनेत्यादि

मित्राटवीबलं चैव मौलं भृत्यबलं तथा। सर्वमेतद्बलं ग्राह्यं वर्जयित्वा द्विषद्बलम् ॥ २२ ॥
प्रकृत्या राक्षसेन्द्रस्य भ्राताऽमित्रस्य ते प्रभो। आगतश्च रिपोः पक्षात् कथमस्मिन् हि विश्वसेत् ॥ २३ ॥
रावणेन प्रणिहितं तमवेहि विभीषणम्। तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ २४ ॥
राक्षसो जिह्मया बुद्ध्या सन्दिष्टोऽयमुपागतः। प्रहर्तुं मायया च्छन्नो विश्वस्ते त्वयि राघव ॥ २५ ॥
प्रविष्टः शत्रुसैन्यं हि प्राज्ञः शत्रुरतर्कितः। निहन्यादन्तरं लब्ध्वा उलूक इव वायसान् ॥ २६ ॥

श्लोकद्वयमेकं वाक्यम् । प्रणिहितं प्रणिधिकर्मणा नियुक्तम् । अस्य शरणागतिर्विप्रलम्भकृतेति भावः। क्षमवतां युक्तव्यापारवताम् । क्षमं हितम् । "क्षमं
शक्ते हिते त्रिषु" इत्यमरः ॥२४॥ प्रणिधिरप्येष नः किं करिष्यतीत्यत्राह—राक्षस इति। सन्दिष्टः, रावणेनेति शेषः। प्रहर्तुं सन्दिष्ट इति सम्बन्धः॥२५॥
यदा शाठ्यं दृश्यते तदाऽसौ हन्यताम् तत्राह—प्रविष्ट इति। प्राज्ञ इति हेतुगर्भं विशेषणम्। प्राज्ञत्वादतर्कितः अस्मज्जिघांसयाऽयमागत इति तैरविचारितः।
शत्रुकुलादागतस्यास्य परिग्रहे शत्रोर्बलस्य क्षयः, अस्माकं बलवृद्धिश्च स्यादित्याशङ्क्य तस्यापरिग्राह्यत्वमाह—मित्रेति । अटवीबलम् आरण्यजनबलम् । मौलं मूल
बलम् । भृत्यबलं भृत्युपजीविबलम् ॥२२॥ न केवलमस्मिन् द्विषद्बलत्वमात्रम्, किन्त्वस्यापरिग्राह्यताहेतवस्सन्तीत्याह—प्रकृत्येति ॥२३॥ नन्वयं शरणागतः कथं परि
त्याज्य इत्याशङ्क्य शरणागतिलक्षणमायोपायेन विश्वासमुत्पाद्य त्वयि प्रहर्तुं प्रवृत्तत्वान्नास्यापरिग्राह्यत्वमात्रम्, किन्तु सहायैस्सह वध्यत्वं चेत्याह—रावणेनेत्यादिना ।
तं शरणागतशब्दोच्चारिणं रावणानुजम् । क्षमवतां युक्तव्यापारवताम् ॥२४॥ राक्षस इत्यादि श्लोकद्वयमेकं वाक्यम्। सन्दिष्टः, रावणेनेति शेषः। प्रातः स्वनिवासाव

स०—तस्य बलिष्ठस्य कथं निग्रह इत्यत आह क्षमवतां वरेति । क्षमाः शक्ता एषां सन्तीति क्षमवन्तः तेषु वर । एतेन त्वत्सेनानायकैरस्माभिरपि तन्निग्रहः सुसाध्यः किमु त्वयेति सूचयति । " क्षमं युक्ते
क्षमान्विते । वाच्यवच्छक्तहितयोः क्षमा भूमितितिक्षयोः ॥" इति विश्वः । एतेन तितिक्षार्थे क्षमशब्दमङ्गीकृत्य ह्रस्वत्वस्यार्षत्ववर्णनं परास्तम्। सति गत्यन्तरे तस्यायुक्तत्वात्क्षमाकथनस्य कथाऽसङ्गतत्वाच्च ॥ २४ ॥

अत एव तेषां सैन्यं प्रविष्टः सन् कदाचित् अन्तरं छिद्रं लब्ध्वा हन्यादित्यर्थः । प्रविष्टोऽप्येकाकी कथं बहून् हनिष्यतीत्याशङ्क्य छिद्रसद्भितस्य युज्यत इति दृष्टान्तमुखेन प्रकटयति उलूक इति ॥ २६ ॥ तर्हि किं कर्तव्यम् ? तत्राह—वध्यतामिति । वध्यतां केवलनिरसने कृते मारीचवदनर्थकारी स्यादिति भावः । तीव्रेण दण्डेन । वालिवदेकेन बाणेन न हन्तव्यः । किंतु शिरसि वर्तिं कृत्वा दीपारोपणं कार्यम् । सचिवैः सह प्रथमं तेषां शिरांसि छित्त्वा विभीषणहस्ते दत्त्वा ततोऽयं वद्ध्यताम् । तत्र हेतुमाह रावणस्येत्यादि ॥ २७ ॥ एवं सुग्रीवो विभीषणविषयवक्तव्यमुक्त्वा अतः परमनेन यत्किंचिदुक्तं

वध्यतामेष दण्डेन तीव्रेण सचिवैः सह । रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥ २७ ॥
एवमुक्त्वा तु तं रामं संरब्धो वाहिनीपतिः । वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥ २८ ॥
सुग्रीवस्य तु तद्वाक्यं श्रुत्वा रामो महायशाः । समीपस्थानुवाचेदं हनुमत्प्रमुखान् हरीन् ॥ २९ ॥
यदुक्तं कपिराजेन रावणावरजं प्रति । वाक्यं हेतुमदर्थ्यं च भवद्भिरपि तच्छ्रुतम् ॥ ३० ॥
सुहृदा ह्यर्थकृच्छ्रेषु युक्तं बुद्धिमता सता । समर्थेनापि सन्देष्टुं शाश्वतीं भूतिमिच्छता ॥ ३१ ॥

चेदुत्तरं वक्ष्याम इति तूष्णीं स्थित इत्याह--एवमुक्त्वेति ॥ २८ ॥ अथ शरणागतवत्सलो रामः सुग्रीवस्य संरम्भप्रतिक्षेपाय यत्किंचिद्व्याजमपेक्षमाणो विभीषणस्य विश्वासातिरेकेण किंचिद्विलम्बेऽपि भावं निवेदयतेति वदतस्तस्य तदन्तर्भावापेक्षां च सम्यगालोच्य प्रतिक्षेपकमुखेनैव तदानयनं कर्तुं कामो हनुमदादीनुवाचेत्याह--सुग्रीवस्येति । स्पष्टम् ॥२९॥ रामः सुग्रीववचनोपलालनपूर्वकमन्यानपि सचिवान् स्वं स्वं मतं पृच्छति—यदुक्तमित्यादि श्लोकद्वयेन । हेतुमत् युक्तियुक्तम् । अर्थ्यम् अर्थः प्रयोजनं तस्मादनपेतम् ॥ ३० ॥ सुहृदेति । न ह्येकेन सुहृदोपदिष्टे सत्यन्यैस्तूष्णीं स्थातव्यम् ।

शत्रूणां वासमागतः । अतर्कितः प्रवेशवेलायाम् अस्माज्जिघांसयाऽयमागत इति तैरविचारितः । अत एव तेषां सैन्यं प्रविष्टः स्थितस्सन् कदाचिदन्तरं लब्ध्वा निहन्या दिति सम्बन्धः । प्रविष्टोऽप्ययमेकाकी कथं बहून् हनिष्यतीत्याशङ्क्य छिद्रे सति तत्सम्भवतीति दृष्टान्तमाह उलूक इति ॥ २५–२९ ॥ श्रीरामस्सुग्रीववचनो पलालनपूर्वकमन्यानपि सचिवान् स्वं स्वं मतं पृच्छति—यदुक्तमित्यादिश्लोकद्वयेन । हेतुमत् युक्तियुक्तम् । अर्थ्यम् अर्थः प्रयोजनम् तस्मादनपेतं वाक्यं भवद्भि रपि विश्रुतम् । अर्थकृच्छ्रेषु कार्यसङ्कटेषु बुद्धिमता समर्थेन श्रेयस्कामेन सुहृदा सुहृदन्तरेणापि सन्देष्टुमुपदेष्टुं युक्तमेव, अतो यूयमपि स्वं स्वं मतं ब्रूतेति

अपि तु बुद्धिमता समर्थेन शाश्वतीं भूतिमिच्छता श्रेयस्कामेन सुहृदा सुहृदन्तरेणापि । अर्थकृच्छ्रेषु कार्यसङ्कटेषु । उपदेष्टुं युक्तमेव । अतो यूयमपि वदतेत्यर्थः ॥ ३१ ॥ इत्येवमिति । स्पष्टम् ॥ ३२ ॥ सोपचारप्रशंसावाक्यमेवाह--अज्ञातमिति । अत्र सर्वज्ञ इत्युक्ते प्रायिकत्वशङ्का स्यादिति तन्नि वृत्त्यर्थं व्यतिरेकोक्तिः । त्रिषु लोकेषु कृतकमकृतकं कृतकाकृतकमित्युक्तेषु । आत्मानं सुहृत्तया सूचयन्नस्मान् पृच्छसीत्यन्वयः । अयं वानराणां सुहृदितीमां कीर्तिं लोके ख्यापयितुं तवायं प्रश्न इत्यर्थः । पूजयन्निति पाठे तु अस्मान् प्रत्येकं मानयन्नस्मान् पृच्छसीत्यर्थः । प्रत्येकं माननाभिप्रायेणैव

इत्येवं परिपृष्टास्ते स्वं स्व मतमतन्द्रिताः । सोपचारं तदा राममूचुर्हितचिकीर्षवः ॥ ३२ ॥
अज्ञातं नास्ति ते किञ्चित् त्रिषु लोकेषु राघव । आत्मानं सूचयन् जानन् पृच्छस्यस्मान् सुहृत्तया ॥ ३३ ॥
त्वं हि सत्यव्रतः शूरो धार्मिको दृढविक्रमः । परीक्ष्यकारी स्मृतिमान् निसृष्टात्मा सुहृत्सु च ॥ ३४ ॥

आत्मानमित्येकवचनप्रयोगः । यद्वा आत्मानम् आत्मस्वभावम् । जानन् राजनीतिमिति यावत् । पूजयन् पालयन् । यद्वा सुहृत्तया शोभनहृदय तया हेतुना आत्मानं स्वं पूजयन् । कार्यविचारेषु अस्मदपेक्षया स्वयमेव शोभनहृदय इति स्वप्रभावमभिव्यञ्जयितुमिति भावः । अस्मन्मतानि पूर्वपक्षीकृत्य स्वमतमेव सिद्धान्तयितुमिति भावः ॥ ३३ ॥ स्वपूजनार्थमस्मान् पृच्छसीत्यत्र हेतुमाह--त्वमिति । सत्यव्रतः शरणागतरक्षणव्रतस्य सापराधरावणादिष्वपि विफलीकर्तुमशक्यत्वात् । परीक्ष्यकारी सर्वज्ञः सन्नपि सम्यग्घेतुभिर्विमृश्याचरणशीलः । सुहृत्सु निसृष्टात्मा सुहृत्परतन्त्री कृतात्मस्वरूपः । पूर्वश्लोके सुहृत्त्वमात्रमुक्तम् । अत्र तु सुहृत्परतन्त्रत्वमिति भेदः ॥ ३४ ॥

शेषः ॥ ३० ॥ ३१ ॥ सोपचारं सप्रशंसम् ॥ ३२ ॥ तदेवाह--अज्ञातमिति । त्रिषु लोकेष्विति सर्वलोकोपलक्षणम् । आत्मानं सुहृत्तया सूचयन् अस्मान् पृच्छ सीत्यन्वयः । अयं वानराणां सुहृदितीमां कीर्तिं लोके ख्यापयितुं तवायं प्रश्न इत्यर्थः । पूजयन्निति पाठे तु--आत्मानम् अस्मान् प्रत्येकं पूजयन् मानयन् अस्मान् पृच्छसि । यद्वा आत्मानं पूजयन जानन्निति स्वभावं परिपालयन् ॥ ३३ ॥ त्वं हि इति पदद्वयम् अखिलवानरगुणवैलक्षण्यं कथयति । शरणागतव्रतस्य साप राधरावणादिष्वपि विफलीकर्तुमशक्यत्वात्सत्यव्रतः शरणागतरक्षणधर्मनिष्ठान्वितः । परीक्ष्यकारी सर्वज्ञस्सन्नपि सम्यग्घेतुभिर्विमृश्याचरणशीलः । सुहृत्सु

तस्मादिति । तस्मात् भवत उक्तगुणत्वात् । तावत् क्रमेण । हेतुतः युक्तिभिः । ब्रुवन्तु ॥ ३५ ॥ सुग्रीवानन्तरमङ्गदस्य युवराजतया प्रधानत्वात् प्रथममङ्गदो जगादेत्याह-इत्युक्त इति । विभीषणपरीक्षार्थम्, तदुपायप्रतिपादकमिति शेषः ॥ ३६ ॥ शत्रोरिति । असौ शरणागतोऽपि शत्रोः सकाशात् प्राप्तत्वादनुकूलो नेति शङ्क्य एव । अतः सहसा परीक्षामन्तरेण विश्वासयोग्यो न कर्तव्यः किन्तु परीक्ष्य प्रवेष्टव्य इति सुग्रीव वचनाद्विशेषः ॥ ३७ ॥ विश्वासकरणे अनिष्टमाह-छादयित्वेति । शठबुद्धयः कुटिलबुद्धयः । आत्मभावं स्वाभिप्रायम् । छादयित्वा स्वाभिप्राय

तस्मादेकैकशस्तावत् ब्रुवन्तु सचिवास्तव । हेतुतो मतिसम्पन्नाः समर्थाश्च पुनः पुनः ॥३५॥ इत्युक्ते राघवायाथ मतिमानङ्गदोऽग्रतः । विभीषणपरीक्षार्थमुवाच वचनं हरिः ॥ ३६ ॥ शत्रोः सकाशात् सम्प्राप्तः सर्वथा शङ्क्य एव हि । विश्वासयोग्यः सहसा न कर्तव्यो विभीषणः ॥३७॥ छादयित्वाऽऽत्मभावं हि चरन्ति शठबुद्धयः । प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुमहान् भवेत् ॥ ३८ ॥ अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत ह । गुणतः सङ्ग्रहं कुर्याद्दोषतस्तु विवर्जयेत् ॥३९॥ यदि दोषो महांस्तस्मिंस्त्यज्यतामविशङ्कितम् । गुणान् वापि बहून् ज्ञात्वा सङ्ग्रहः क्रियतां नृप॥४०॥

सूचकेङ्गितादिकमपि स्थगयित्वेत्यर्थः । चरन्ति यावद्रन्ध्रलाभं स्वैरसञ्चारं कुर्वन्ति । रन्ध्रेषु अनवधानेषु सत्सु । प्रहरन्ति हिंसन्ति ॥ ३८ ॥ त्यागो पादानोपयुक्तं परीक्षाप्रकारमाह-अर्थानर्थाविति । अर्थानर्थौ गुणदोषौ विनिश्चित्य कस्मिंश्चित्कर्मणि नियोगेन निश्चित्य व्यवसायं त्यागसङ्ग्रहोचिताध्यव सायं भजेत । तत्र गुणतः गुणनिश्चयेन सङ्ग्रहम् अङ्गीकारं कुर्यात् । दोषतः दोषनिश्चयेन तु विसर्जयेत् ॥ ३९ ॥ ननु सर्वात्मना गुणी दोषी वा दुर्लभः अतः कथं सङ्ग्रहत्यागव्यवस्थितिरित्यत्राह-यदीति । तस्मिन् विभीषणे महान् दोषो यदि स्यात् तदा असौ अविशङ्कितम् अविशङ्कं त्यज्यताम् ।

निसृष्टात्मा सुहृन्निवेशितान्तःकरणः । सुहृदधीनमनस्क इत्यर्थः ॥ ३४ ॥ हेतुतः हेतुगर्भितं स्वं स्वं मतं ब्रुवन्तु ॥ ३५ ॥ इत्युक्त इत्यादि श्लोकपञ्चकमेकं वाक्यम् । इत्युक्त इति, सचिवैरिति शेषः । विभीषणपरीक्षा अर्थः प्रयोजनं यस्य तत् ॥ ३६॥३७॥ शीघ्रं विश्वासानर्हत्वे हेतुमाह-छादयित्वेति । सोऽनर्थस्सुमहान् भवेदिति ॥३८ ॥ अतः कस्मिंश्चित्कर्मणि एनं नियुज्य तत्रास्य गुणदोषौ परीक्ष्य पश्चात्सङ्ग्रहः परित्यागो वा क्रियतामित्याह-अर्थानर्थाविति । अर्थानर्थौ गुणदोषौ । व्यवसायं सङ्ग्रहविसर्जनाध्यवसायं भजेत । ततः गुणतः गुणे सति सङ्ग्रहं कुर्यात् । दोषतः दोषे सति विसर्जयेदिति सम्बन्धः ॥ ३९ ॥ उभयोरपि सद्भावे तु

बहून् गुणान् ज्ञात्वा सङ्ग्रहः क्रियतां वा । स्वल्पदोषवत्त्वेऽपि बहुगुणो ग्राह्यः । स्वल्पगुणवत्त्वेऽपि बहुदोषस्त्याज्य इति भावः ॥ ४० ॥ विनियोगं विना गुणदोषपरिज्ञानं न सम्भवति, सहसा विनियोगे च मन्त्रहानिः स्यादिति पूर्वास्वरसाच्छरभ आह—शरभस्त्वति । तुशब्दः पूर्वस्माद्वैलक्षण्यपरः । साद्ध्यं साध्यार्थकम् । अनेनाङ्गदपक्षस्यासाध्यार्थत्वं द्योतितम् । अस्मिन् विभीषणविषये । प्रतिविधीयतां प्रेष्यताम् ॥ ४१ ॥ प्रणिधायेति । प्रणिधाय चारं

शरभस्त्वथ निश्चित्य साद्ध्यं वचनमब्रवीत् । क्षिप्रमस्मिन्नरव्याघ्र चारः प्रतिविधीयताम् ॥ ४१ ॥
प्रणिधाय हि चारेण यथावत् सूक्ष्मबुद्धिना । परीक्ष्य च ततः कार्यो यथान्याय्यं परिग्रहः ॥ ४२ ॥
जाम्बवांस्त्वथ सम्प्रेक्ष्य शास्त्रबुद्ध्या विचक्षणः । वाक्यं विज्ञापयामास गुणवद्दोषवर्जितम् ॥ ४३ ॥
बद्धवैराच्च पापाच्च राक्षसेन्द्राद् विभीषणः । अदेशकाले सम्प्राप्तः सर्वथा शङ्क्यतामयम् ॥ ४४ ॥
ततो मैन्दस्तु सम्प्रेक्ष्य नयापनयकोविदः । वाक्यं वचनसम्पन्नो बभाषे हेतुमत्तरम् ॥ ४५ ॥

प्रेषयित्वा । सूक्ष्मबुद्धिना चारेण यथावन्नीतिशास्त्रोक्तरीत्या परीक्ष्य ततो यथान्याय्यं न्यायादनपेतं न्याय्यं निर्णीतार्थमनतिक्रम्य । परिग्रहः विभीषण परिग्रहः कार्यः ॥४२॥ नियोगेन चारेण वा नायं परीक्ष्यः अविस्रम्भहेतूनां बहूनां सम्भवादिति जाम्बवान् पक्षान्तरमुपक्षिपति—जाम्बवानिति । गुणवत् युक्तिमत् । दोषवर्जितम् अनपायमिति पूर्वोक्तमतद्वयव्यावृत्तिः ॥ ४३ ॥ बद्धेति । बद्धवैरात् दृढवैरात् । पापात् पापकर्मणः । अदेशे दूरतया साम्प्रतिकभयाभावेन आगमनप्रयोजनरहिते । अकाले स्वामिपरित्यागानर्हकाले ॥ ४४ ॥ सर्वथा शङ्क्यत्वेऽपि सुकरोपायेन गुणदोषपरीक्षाया अकरणे सुखोपनतमित्रहानिः स्यादिति मैन्दो मतान्तरमाह—तत इति । हेतुमत्तरम् अतिशयेन हेतुयुक्तम् ॥ ४५ ॥

तयोर्भूयस्त्वाल्पत्वे परीक्ष्य परित्यागसङ्ग्रहौ कार्यावित्याह—यदि दोष इति ॥ ४० ॥ अथ शरभः, तिष्ठतु नियोगः इदानीमेव चारमुखेन गुणदोषौ परीक्ष्य सङ्ग्रहः परित्यागो वा कर्तव्य इत्याह—शरभस्त्विति श्लोकद्वयमेकं वाक्यम् । अत्र तुशब्दः अङ्गदमताद्वैषम्यं द्योतयति । साध्यं कर्तव्यार्थपरं वचनम् ॥ ४१ ॥ प्रणिधायेति । प्रणिधाय चारं प्रेषयित्वा सूक्ष्मबुद्धिना चारेण यथावत्परीक्ष्य च ततः यथान्याय्यं परिग्रहः कार्यो हीति योजना ॥ ४२ ॥ अथ जाम्बवान् किमस्मिन् परीक्षया अविश्वासे बहुसम्भवात्परित्याज्य एवेत्याह—जाम्बवानित्यादिश्लोकद्वयेन । पापात् पापकर्मणः । अदेशकाले अदेशे शत्रुसमीपदेशे अकाले रात्रौ । यद्वा अकाले स्वामिपरित्यागानर्हकाले ॥ ४३ ॥ ४४ ॥ अथ मैन्दः शङ्कनीयत्वमभ्युपगम्यैव गुणदोषपरीक्षायामुपायान्तरमाह—ततो मैन्द इत्यादिश्लोकत्रयेण । हेतुमत्तरम्

वचनमिति । मधुरेण वचसा रावणस्य वचनमयं विभीषणः शनैः पृच्छयतामिति सम्बन्धः । पृच्छयतामित्यत्र अज्ञातपुरुषमुखेनेति शेषः । उत्तरत्र तथैव हनुमताऽनुवादात् ॥४६॥ एवंविधपरीक्षणेनास्य तत्त्वतो भावं विज्ञाय यदि दुष्टः तदा तदनुरूपम् अदुष्टश्चेत्तदनुरूपं च बुद्धिपूर्वं परीक्षापूर्वकं करिष्यसीत्यर्थः ॥ ४७ ॥ एवं सुग्रीवेणेदानीं वध्यत्वं प्रतिपादितम् । अङ्गदादिभिस्तु गुणदोषपरीक्षापूर्वकं परिग्रहपरित्यागौ सिद्धान्तितौ । अथ सचिवोत्तमो हनुमान् सुग्रीवमतं राजमतत्वादत्यन्ताविचारमूलत्वाच्चोपेक्ष्य अङ्गदादिमतमेकैकानुवादपूर्वकं दूषयित्वा इदानीमेव दोषाभावस्य निर्णेतुं

वचनं नाम तस्यैष रावणस्य विभीषणः । पृच्छयतां मधुरेणायं शनैर्नरवरेश्वर ॥ ४६ ॥ भावमस्य तु विज्ञाय तत स्तत्त्वं करिष्यसि । यदि दुष्टो न दुष्टो वा बुद्धिपूर्वं नरर्षभ ॥४७॥ अथ संस्कारसम्पन्नो हनूमान् सचिवोत्तमः । उवाच वचनं श्लक्ष्णमर्थवन्मधुरं लघु ॥४८॥ न भवन्तं मतिश्रेष्ठं समर्थं वदतां वरम् । अतिशाययितुं शक्तो बृहस्पतिरपि ब्रुवन् ॥४९॥ न वादान्नापि सङ्घर्षान्नाधिक्यान्न च कामतः । वक्ष्यामि वचनं राजन् यथार्थं राम गौरवात् ॥५०॥

शक्यत्वात् सहसैव परिग्राह्य इति सिद्धान्तयति सर्गशेषेण—अथेति । संस्कारसम्पन्नः शास्त्राभ्यासदृढतरसंस्कारयुक्तः । लघु अविस्तृतम् ॥४८॥ भवतः उपदेशार्थं न मम प्रवृत्तिः भवतः सर्वप्रकारोत्कृष्टत्वात् केनाप्याकारेणातिशयितस्य कस्यचिदभावादित्याह—न भवन्तमिति । स्पष्टम् ॥ ४९ ॥ वादात् अतिशयेन युक्तियुक्तम् ॥४५॥ मधुरेण वचसा रावणस्य रावणसम्बन्धि वचनम् अयं विभीषणः शनैः पृच्छयतां रावणवृत्तान्तं गूढपुरुषमुखेन पृच्छयतामित्यर्थः । उपरि हनुमता मैन्दमतदूषणप्रस्तावे अज्ञातपुरुषैरित्यनुवादात ॥ ४६ ॥ भावमिति । एवंविधपरीक्षणेन अस्य तत्त्वं यथार्थं भावमभिप्रायं विज्ञाय यदि दुष्टस्तदा तदनुरूपम्, अदुष्टश्चेत तदनुरूपं च बुद्धिपूर्वं परीक्षापूर्वकं यत्कर्तव्यं तत्करिष्यसीति सम्बन्धः ॥ ४७ ॥ एवञ्च सुग्रीवेणेदानीमेव वध्यत्वं प्रतिपादितम् । अङ्गदादिभिस्तु गुणदोषपरीक्षापूर्वकं परिग्रहपरित्यागौ समर्थितौ । अथ सचिवोत्तमो हनुमान् सुग्रीवमतं राजवचनत्वादत्यन्ताविचारमूलत्वाच्चोपेक्ष्याङ्गदादिमत मेकैकानुवादपूर्वकं दूषयित्वेदानीमेव तद्दोषाभावस्य निर्णेतुं शक्यत्वाक्षविलम्बेनास्य परिग्रहो युक्त इति स्वसिद्धान्तमाह—अथेत्यादिसर्गशेषेण । संस्कारसम्पन्नः सकलशास्त्राभ्यासजनितसंस्कारयुक्तः । समर्थं विवक्षितार्थप्रतिपादनशक्तम् । मधुरं श्रवणमात्रेण सुखकरम् । लघु नातिविस्तरं वचनमुवाचेति सम्बन्धः ॥ ४८ ॥ न भवन्तमिति । ब्रुवन् बृहस्पतिरपि मतिश्रेष्ठं समर्थं भवन्तम् अतिशाययितुम् अतिशयितुं न शक्त इत्युवाचेति पूर्वेण सम्बन्धः ॥ ४९ ॥ साभ्यात्मतर्क कौशलादिप्रदर्शनार्थं न मद्वचनप्रवृत्तिरित्याह—न वादादिति । वादात् तर्ककौशलात् । सङ्घर्षात् सचिवेषु स्पर्धावशात् । आधिक्यादहं धीमान् नीतिमान् वाग्मी च

तर्ककौशलात् । सङ्घर्षात् सचिवेषु स्पर्धावशात् । आधिक्यात् अहं मतिमान् वाग्मी चेत्याधिक्याभिमानात् । कामतः स्वैरभाषणेच्छातः, विभीषण पक्षपाताद्वा । तर्हि किमर्थं प्रवृत्तिस्तत्राह—गौरवादिति । मयि त्वत्कृतात्सम्मानात् ॥५०॥ पूर्वोक्तेषु चतुर्षु मतेषु प्रथममङ्गदमतं दूषयति—अर्थानर्थेति । अर्थानर्थयोर्निमित्तं निर्णयोपायः । सचिवैः अङ्गदेन, तादात्त्विकसंरम्भपरिहाराय नामानुक्तिर्बहुवचनं च, यदुक्तं तत्र दोषं प्रपश्यामि । कुतः? क्रिया एवं

अर्थानर्थनिमित्तं हि यदुक्तं सचिवैस्तव । तत्र दोषं प्रपश्यामि क्रिया न ह्युपपद्यते ॥ ५१ ॥
ऋते नियोगात् सामर्थ्यमवबोद्धुं न शक्यते । सहसा विनियोगो हि दोषवान् प्रति भाति मा ॥ ५२ ॥
चारप्रणिहितं युक्तं यदुक्तं सचिवैस्तव । अर्थस्यासम्भवात्तत्र कारणं नोपपद्यते ॥ ५३ ॥

प्रकारेण क्रिया नोपपद्यते हि ॥ ५१ ॥ अनुपपत्तिमेव दर्शयति—ऋत इति । नियोगाद्राजकार्येषु नियोगात् । ऋते विना । "अन्यारादितरर्ते—" इत्यादिना पञ्चमी । सामर्थ्यं साधुत्वम् । सहसा विनियोगः गुणदोषपरीक्षामन्तरेण कुत्रचिन्महति राजकार्ये विनियोजनम् । मा मां प्रति । दोषवान् भाति । तथा च सत्यां गुणदोषपरीक्षायां नियोगः, नियोगे सति गुणदोषपरीक्षणमित्यन्योन्याश्रयः । अतोऽनुपपन्नमङ्गदमतमिति भावः ॥५२॥ अथ शरभमतं प्रयोजनाभावेन खण्डयति—चारेति । अत्रेतिशब्दोऽध्याहर्तव्यः । चारप्रणिहितं चारप्रणिधानं युक्तमिति तव सचिवैर्यदुक्तम्, शरभेण यदुक्तमित्यर्थः । तत्र तस्मिन्मते । अर्थस्य चारप्रयोजनस्य दूरतिरोहितदर्शनादेरसम्भवात् चारप्रणिधानलक्षणं कारणम् उपायः, न युज्यत इत्यर्थः । अत्यासन्ने

इत्याधिक्याभिमानात् । कामतः स्वैरभाषणेच्छातः । तर्हि किमर्थं प्रवृत्तिः? तत्राह गौरवात् कार्यगौरवाद्धेतोः । यद्वा त्वत्कृतात्सम्मानात् ॥ ५० ॥ तत्र प्रथममङ्गदमतं दूषयति—अर्थेति । अर्थानर्थनिमित्तं विभीषणगुणदोषनिश्चयनिमित्तम् । सचिवैः अङ्गदेन यदुक्तं तत्र तस्मिन्नर्थे दोषं प्रपश्यामि । कुतः क्रिया पूर्वोक्तप्रकारेण परीक्षणक्रिया तदिदानीं नोपपद्यते हि ॥ ५१ ॥ अनुपपत्तिमेवाह—ऋते नियोगादिति । नियोगात्कस्मिंश्चित्कर्मणि नियोजनात् ऋते । सामर्थ्यं सद्गुणवत्त्वम् अवबोद्धुं न शक्यते । अस्तु विनियोगः का हानिरित्यत आह सहसा विनियोगः गुणदोषावपरीक्ष्य महत्सु कार्येषु विनियोगः मा मां प्रति । दोषवान् प्रतिभाति । ततश्च गुणदोषपरीक्षायां सत्यां नियोगः । नियोगे च सति गुणदोषपरीक्षणमित्यन्योन्याश्रयदोषग्रस्तमिदं मतमिति भावः ॥ ५२ ॥ शरभमतं प्रयोजनाभावेन दूषयति—चारेति । चारप्रणिहितं चारप्रेषणं युक्तमिति तव सचिवैः शरभेण यदुक्तम् तत्र तस्मिन्मते तु अर्थस्य चारकर्तव्यप्रयोजनस्यासम्भवात् कारणं चारप्रणिधानलक्षणोपायो नोपपद्यते चारप्रेषणस्य दूरतिरोहितविषयत्वाभावात् [illegible] विफलत्वात् तन्न युक्तमिति भावः । चारणं नोपपद्यते इति पाठे तु—

स्वचक्षुर्विषये सम्यक्परिदृश्यमाने व्यवधानरहिते [illegible] दर्शनलक्षणचारप्रयोजनाभावादयमुपायो न युज्यत इति भावः । चारणं नोपपद्यत इति पाठे तु–चारयितव्यस्यान्तःपुरसमाजतीर्थादिरूपस्य विषयस्याभावाच्चारसञ्चारणं न घटत इत्यर्थः ॥५३ ॥ अदेशकाले संप्राप्त इत्यस्य जाम्बवन्मतस्यासारत्वात्तन्निराकरणेन सर्वं निराकृतप्रायमिति तत्स्वरूपासिद्ध्या दूषयति–अदेशेति सार्द्धश्लोक एकान्वयः । अयं विभीषणः । अदेशकाले संप्राप्त इति यत् । तत्र तद्विषये । यथातथा याथातथ्येन । स एष देशः कालश्च भवतीति मे यथामति इयं विवक्षाऽस्ति तां

अदेशकाले सम्प्राप्त इत्ययं यद्विभीषणः । विवक्षा तत्र मेऽस्तीयं तां निबोध यथामति । स एष देशः कालश्च भवतीति यथातथा ॥ ५४ ॥ पुरुषात् पुरुषं प्राप्य तथा दोषगुणावपि । दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि । युक्तमागमनं तस्य सदृशं तस्य बुद्धितः ॥ ५५ ॥ अज्ञातरूपैः पुरुषैः स राजन् पृच्छ्यतामिति । यदुक्तमत्र मे प्रेक्षा काचिदस्ति समीक्षिता ॥ ५६ ॥

निबोधेत्यन्वयः ॥ ५४ ॥ विवक्षितमेव सोपपत्तिकं विशदयति–पुरुषादित्यादिसार्धश्लोकेन । पुरुषात् अधमपुरुषाद्रावणात् । पुरुषम् उत्तमपुरुषं भवन्तम् । प्राप्य मनसा विमृश्य । तथा दोषगुणावपि युवयोर्विमृश्य । तथा रावणे दौरात्म्यं राक्षसकुलविनाशहेतुभूतसीतापहरणतत्प्रत्यर्पणानपेक्षित्वादिकम् । त्वयि विक्रमं खरदूषणप्रमुखराक्षसवधादिकम्, वालिवधपूर्वकसुग्रीवराज्यप्रदानम्, अतिदुस्तरसमुद्रतरणोद्योगं च दृष्ट्वा । तस्य बुद्धितः बुद्धेः सदृशं तस्य आगमनं युक्तमिति सम्बन्धः । यदा प्रतिकूले दोषदर्शनमनुकूले गुणज्ञानं च स एव देशः कालश्च भवति । इदं तथ्यमिति भावः ॥ ५५ ॥ मैन्दमतं प्रतिक्षिपति श्लोकत्रयेण–अज्ञातेति । अज्ञातरूपैः अपरिचितस्वरूपस्वभावैः । समीक्षिता सम्यक्परीक्षिता । प्रेक्षा

चारणं चारप्रेषणम् ॥५३॥ जाम्बवतोक्तं शङ्कनीयत्वविषयम् अदेशकालागतत्वहेतुं स्वरूपासिद्ध्या दूषयति–अदेशकाल इत्यादिना । अयं विभीषणः अदेशकाले सम्प्राप्त इति यद् तत्र तद्विषये यथातथा याथार्थ्येन स एष देशः कालश्च भवतीति मे यथामति इयं विवक्षा अस्ति तां निबोधेति सम्बन्धः ॥ ५४ ॥ विवक्षितमेव सोपपत्तिकं विशदयति–पुरुषादिति । पुरुषादधमपुरुषाद्रावणात् । पुरुषम् उत्तमपुरुषं भवन्तं प्राप्य मनसा विमृश्य तथा उभयोः दोषगुणावपि विमृश्य दौरात्म्यं सीताप्रत्यर्पणाभावादिलक्षणं रावणे दृष्ट्वा विक्रमं च तथा त्वयि कबन्धखरदूषणप्रमुखराक्षसवधादिकम् अतिबलपराक्रमवालिवधपूर्वकसुग्रीवराज्यस्थापनम् अतिदुस्तरसागरतरणोद्योगं च त्वयि दृष्ट्वा ज्ञात्वा तस्य बुद्धितः बुद्धिसदृशं तस्यागमनं युक्तमिति योजना ॥ ५५ ॥ चारप्रेषणं मित्रामित्रविषये

युक्तिरूपा बुद्धिः ॥ ५६ ॥ क्वचिद्गुणवत्यपि मित्रे दोषदर्शिहेतुत्वेनानैकान्तोऽयं गुणदोषनिर्णयोपाय इत्याह—पृच्छ्यमान इति । बुद्धिमानपि पुमान् अपरिचितैः पृच्छ्यमानः सन् अविश्वासादेवैते पृच्छन्ति कस्मिन् वचस्युक्ते को वाऽनर्थः समापद्यत इति प्रतिवचनरूपं वच उद्दिश्य सहसा विविधां शङ्कां प्राप्नुयात् । तथा सति सुखागतं स्वस्मिन्दोषराहित्येन विश्वासोपगतमपि मित्रं मिथ्या पृष्टं सत् तेन प्रश्नेन हेतुना प्रदुष्येत दुष्टं भवेदित्यर्थः ॥ ५७ ॥ क्वचिन्निष्प्रयोजनश्चायमुपाय इत्याह--अशक्य इति । भृशम् अत्यर्थम् । स्वस्मिन्नैपुण्यं पश्यतापि मिथ्या प्रश्ना अन्तःस्वभावैः अन्तर्हित

पृच्छ्यमानो विशङ्केत सहसा बुद्धिमान् वचः । तत्र मित्रं प्रदुष्येत मिथ्या पृष्टं सुखागतम् ॥ ५७ ॥
अशक्यः सहसा राजन् भावो वेत्तुं परस्य वै । अन्तःस्वभावैर्गीतैस्तैर्नैपुण्यं पश्यता भृशम् ॥ ५८ ॥
न त्वस्य ब्रुवतो जातु लक्ष्यते दुष्टभावता । प्रसन्नं वदनं चापि तस्मान्मे नास्ति संशयः ॥ ५९ ॥

स्वाभिप्रायैः । परस्य गीतैः भाषितैः । पराभिप्रायः सहसा ज्ञातुमशक्य इत्यर्थः । छद्मना प्रष्टुर्गूढमभिप्रायं ज्ञात्वा । अहृदयवाचामहृदया एव प्रतिवाचो भवन्तीति न्यायेन परेणापि स्वाभिप्रायानाविष्करणादिति भावः ॥ ५८ ॥ एवं पूर्वोक्तेषु पक्षेषु दोषानुद्भाव्य सम्प्रत्यात्मना परीक्ष्यकक्षीकृतं पक्ष

अकिञ्चित्करम्, मित्रस्य शङ्काजनकत्वात् । अमित्रस्य शठत्वेन तदभिप्रायादर्शनाच्च । अतो मैन्दमतं दुष्टमित्यनूद्य निराकरोति--अज्ञातरूपैरित्यादिश्लोकत्रयेण । अज्ञातरूपैः अपरिचितस्वरूपस्वभावैः स विभीषणः पृच्छ्यतामिति मैन्देन यदुक्तम् अत्र अस्मिन्मते समीक्षिता सम्यक् परीक्षिता प्रेक्षाबुद्धिर्युक्तिर्वा काचिदस्ति ॥ ५६ ॥ का पुनस्तद्बुद्धिरित्यत आह--पृच्छ्यमान इति । बुद्धिमानपि पुमानपरिचितैः पृच्छ्यमानस्सन् विशङ्केत अविश्वासादेते मां पृच्छन्ति कस्मिन् वचस्युक्ते को वाऽनर्थस्समापतेदिति प्रतिवचनरूपं वचनमुद्दिश्य सहसा विविधां शङ्कां प्राप्नुयात् तथा सति सुखागतं स्वस्मिन् दोषराहित्येन विश्वासोपगतम् अयत्नलब्धं मित्रं मिथ्यापृष्टं छद्मना पृष्टं सत् तेन प्रश्नेन हेतुना प्रदुष्येत दुष्टं भवेत् । छद्मना प्रश्ने कृते मित्रहानिर्भवेदित्यर्थः ॥ ५७ ॥ किञ्चिन्निष्प्रयोजनश्चाय मुपाय इत्याह--अशक्य इति । भृशमत्यर्थं स्वस्मिन्नैपुण्यं पश्यता निपुणत्वं जानता, नैपुण्यं मन्यतेत्यर्थः । अन्तस्स्वभावैः आपाततः प्रसन्नार्थत्वेऽपि गूढाभिप्रायैः तैर्गीतैः प्रश्नरूपभाषितैः परस्य भावः अभिप्रायः सहसा वेत्तुं न शक्यः । छद्मना प्रष्टुः गूढमभिप्रायं ज्ञात्वा अहृदयवाचामहृदया एव प्रतिवाचो भवन्तीति न्यायेन परेणापि स्वाभिप्रायानाविष्करणादिति भावः ॥ ५८ ॥ एवं मतान्तराणि निराकृत्य इङ्गिताकारभाषणचेष्टितरूपैरुपपत्तिभिस्तस्य निर्दुष्टता ज्ञातुं शक्या, अतोऽयं विभीषणो ग्राह्य एवेत्याह—न त्वस्येत्यादिना । संशयः दुष्टभावत्वसंशयः ॥ ५९ ॥

मुपक्षिपति—न त्वित्यादिना। ब्रुवतो बहुव्याहरतोऽस्य ॥ ५९ ॥ एवमस्येङ्गिताकाराभ्यामदुष्टत्वमुक्त्वा चेष्टाभाषणाभ्यां च तद्दर्शयति—अशङ्कितेति। शठः गूढविप्रियकारी ॥ ६० ॥ ननु परमवञ्चकः पुरुषो भावं निगूहयति, कथं तेन विश्वास इत्यत्राह—आकार इति। आकारः मुखविकारः ॥ ६१ ॥ एवं दोषाभावमुक्त्वा गुणमुचितज्ञत्वरूपं दर्शयितुं नीतिमर्यादां दर्शयति—देशेति। देशकालोपपन्नं देशकालाभ्यां युक्तम् प्रयोगेण उचितपुरुषप्रयोगेण

अशङ्कितमतिः स्वस्थो न शठः परिसर्पति। न चास्य दुष्टा वाक्चापि तस्मान्नास्तीह संशयः ॥ ६० ॥ आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम्। बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ॥ ६१ ॥ देशकालोपपन्नं च कार्यं कार्यविदां वर। स्वफलं कुरुते क्षिप्रं प्रयोगेणाभिसंहितम् ॥ ६२ ॥ उद्योगं तव सम्प्रेक्ष्य मिथ्यावृत्तं च रावणम्। वालिनश्च वधं श्रुत्वा सुग्रीवं चाभिषेचितम्। राज्यं प्रार्थयमानश्च बुद्धिपूर्वमिहागतः ॥ ६३ ॥ एतावत्तु पुरस्कृत्य युज्यते तत्र सङ्ग्रहः। यथाशक्ति मयोक्तं तु राक्षसस्यार्जवं प्रति। त्वं प्रमाणं तु शेषस्य श्रुत्वा बुद्धिमतां वर ॥ ६४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे सप्तदशः सर्गः ॥ १७ ॥

अभिसंहितं युक्तम्। उचितेषु देशकालपुरुषेषु प्रयुक्तमित्यर्थः। कार्यं क्रिया। स्वफलं स्वोचितफलम्। क्षिप्रम् अप्रतिबन्धम्। कुरुते, कर्तरीति शेषः ॥ ६२ ॥ एतेनाप्येवमेव कार्यं प्रयुक्तमित्याशयेनाह—उद्योगमिति सार्धश्लोक एकान्वयः ॥ ६३ ॥ फलितमाह—एतावदिति सार्धश्लोकेन। स्ववचनं

किञ्च शठः अशङ्कितमतिः स्वस्थः निर्भयस्सन् न परिसर्पति नागच्छति अयमशङ्कितमतिः स्वस्थः आगच्छति। अतः शठो न भवतीत्यर्थः। किञ्च अस्य वागपि दुष्टा न तस्मादिह विभीषणे संशयो नास्तीत्यर्थः ॥ ६० ॥ दुष्टस्याप्येतादृशधर्मस्स्वाकारगोपनेन सम्भवतीत्याशङ्क्य तन्न घटत इत्याह—आकार इति। सः आकारः भावं विवृणोतीति सम्बन्धः ॥ ६१ ॥ यद्ययमदुष्टः अस्यां वेलायामत्रागमने किमस्य प्रयोजनमित्याशंक्य देशकालौचित्यं ज्ञात्वा अयमागत इति वक्तुं सामान्येन नीतिमाह—देशकालेति। देशकालोपपन्नं देशकालाभ्यां युक्तम्। प्रयोगेणाभिसंहितं सम्यगनुष्ठानेनाभिसम्पादितम्। कार्यं क्रियत इति कार्यं कर्म कर्तृ, स्वफलं स्वस्य फलम् क्षिप्रं कुरुते, कर्तुरिति शेषः ॥ ६२ ॥ उद्योगमित्यादि सार्धमेकं वाक्यम् ॥ ६३ ॥ अतो निर्दोषत्वादयं परिग्राह्य इत्याह—एताव

स०—प्रयोगेणाभिसंहितम् प्रयोगेण प्रकृष्टयोगेनोपायेन दैवरूपेणाभिसंहितं सम्बद्धम्। यद्वा प्रयोगोऽनुष्ठानम्। स्वात्मानमेव सफलं कुरुत इति वा। क्षिप्रं प्रयोगेणाभिसंहितम् अदीर्घसमीक्षया कृतं कर्तारं सफलं सविशरणम्। नष्टमिति यावत्। देशकालोपपन्नं च कार्यं सफलं कुरुते विभीषणकार्यं च देशकालोपपन्नमिति सफलमेवेति भावः ॥ ६२ ॥ तवोद्योगं रावणमारणविषयम्। मिथ्यावृत्तम् असदाचारम्। वालिनः रावणादपि बलिनः निष्कम्पप्रवृत्तावयं हेतुः। राज्यं रावणसाम्राज्यम्। ज्येष्ठमारणकनिष्ठाभिषेचनयोः सुग्रीवनिदर्शनेन निश्चित्य रावणमारणस्वस्यापनार्थमयमायात इति नाचातुरी तस्येति भावः ॥ ६३ ॥

निगमयति—यथाशक्तीति । यथाशक्ति बुद्धिशक्तिमनतिक्रम्य । आर्जवं निर्दोषत्वम् । मद्वाक्यं श्रुत्वा यत्कर्तव्यमकर्तव्यं वा तस्य सर्वस्य त्वं तु त्वमेव प्रमाणं प्रमातेत्यर्थः ॥ ६४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

एवं सुग्रीवादिभिः स्वस्वमते प्रतिपादिते स्वाभिमतमपि रामो वक्तुं प्रारभते—अथेति । वायुसुतस्य, वचनमिति शेषः । प्रसन्नात्मा सुग्रीवादिवाक्यैः कलुषीकृते मनसि सति हनुमद्वाक्येन प्रसन्नमनाः । दुर्धर्षः पूर्वपक्षैरक्षोभ्यः । तत्र हेतुमाह श्रुतवानिति । वसिष्ठादिभ्यः श्रुतकपोतकण्डूपाख्यानादिमान् ।

अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य ह । प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितम् ॥ १ ॥
ममापि तु विवक्षाऽस्ति काचित्प्रति विभीषणम् । श्रोतुमिच्छामि तत्सर्वं भवद्भिः श्रेयसि स्थितैः ॥ २ ॥
मित्रभावेन सम्प्राप्तं न त्यजेयं कथंचन । दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम् ॥ ३ ॥

आत्मनि स्थितं चित्तावस्थितम् ॥ १ ॥ सर्वमतप्रतिक्षेपरूपेण स्ववाक्येन किमेते व्याकुलितमनसो भवेयुरिति शङ्कया रामः सचिवाननुपच्छन्दयति—ममापीति । तुशब्दः पक्षान्तरवद्धनुमत्पक्षमपि व्यावर्तयति । ममापि विभीषणं प्रति काचिद्युष्मत्पक्षैः सह परिगणनायोग्या विवक्षा अस्ति । अतः तत्सर्वं मद्विवक्षितं हेतुसाध्यरूपं सर्वमर्थजातम् । श्रेयसि स्थितैः अस्मच्छ्रेयोनिरतैः । भवद्भिः युष्माभिः । श्रोतुमिच्छामि, भवद्भिः श्रुत्वा परीक्षणं कार्यमिति ममेच्छास्तीत्यर्थः ॥२॥ एवं सचिवाननुगुणीकृत्य स्वस्वभावकथनव्याजेन स्वविवक्षितं सहेतुकं दर्शयति—मित्रभावेनेति । मतान्तरेषु सदोषत्वान्न परिग्राह्यत्विति । एतावत्तु पुरस्कृत्य पूर्वोक्तधर्मजातं पुरस्कृत्य । स्ववचनं निगमयति यथाशक्तीति । आर्जवं निर्दोषत्वम् । मद्वाक्यं श्रुत्वा यत्कर्तव्यं त्वया तस्य सर्वस्य त्वमेव प्रमाणं परिच्छेत्ता ॥ ६४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां सप्तदशः सर्गः ॥ १७ ॥

अथ श्रीरामः सुग्रीववाक्यजनिते मनःकालुष्ये हनुमद्वाक्यैः किञ्चित्प्रशमिते सति प्रसन्नचित्तः स्वमतं वक्तुमुपक्रमते—अथेति । वायुसुतस्य, वचनमिति शेषः । श्रुतवान् सामान्यविशेषशास्त्रज्ञः । आत्मनि स्थितं स्वमतम् ॥ १ ॥ अथ सर्वमतप्रतिक्षेपरूपेण स्ववाक्येनेतरे व्याकुलितमनसो भवेयुरिति शङ्कया रामः सचिवाननुपलालयति—ममापीति । ममापि विभीषणं प्रति काचिद्युष्मत्पक्षैस्सह परिगणनायोग्या विवक्षाऽस्ति, तत्सर्वं मद्विवक्षितहेतुसाध्यादिरूपमर्थजातं श्रेयसि स्थितैरस्मच्छ्रेयोनिरतैः भवद्भिः श्रोतुमिच्छामि, मन्मतमपि श्रुत्वा भवद्भिः परीक्षणं कार्यमिति ममेच्छाऽस्तीत्यर्थः ॥ २ ॥ एवं सचिवाननुपलाल्य स्वकीयस्वभाव

स०—अयं हनुमदुक्तप्रकारेण निर्दोष एव यद्यपि । यदि तस्य दोषः [illegible] । तदपि तस्य दोषः स्यात्तथापि न त्यजेयमिति वा ॥ ३ ॥

इति हेतुसाध्ये अपि दुष्टे। मारुतिमते तु परिग्राह्यत्वरूपं साध्यं समीचीनमपि निर्दोषत्वादिति हेतुरसमीचीनः। किंतु शरणागतोऽहमिति वाक्यप्रयोक्तृत्व
मेव तत्र मुख्यहेतुरित्यभिप्रायेण मित्रभावेनेति हेतुनिर्देशः। मित्रभावेन वास्तवमित्रत्वाभावेऽपि मित्रत्वाभिनयमात्रेणापीत्यर्थः। मित्रभावः शरणागत
त्वम्। "राघवं शरणं गतः" "शरण्यं शरणं गतः" इति पूर्वोत्तरत्र च तस्यैव कथनात्। अन्यत्रापि—"विदितः स हि धर्मज्ञः शरणागतवत्सलः"
इति शरणागतिशब्देनोपक्रम्य "तेन मैत्री भवतु ते यदि जीवितुमिच्छसि" इति मैत्रीशब्देन परिसमापनात्। यद्वा मित्रशब्दः स्वाभिप्रायेण शरणा
गते गौरवारोपाद्युज्यते। न त्यजेयं त्यक्तुं न शक्नोमि। सर्वशक्तेरपि मम शरणागतशब्दश्राविणः परित्यागे शक्तिसम्भावनामपि न पश्यामीत्यर्थः।
कथंचन दृष्टादृष्टानर्थशतानुबन्धित्वे तत्परिग्रहस्य सुहृदामनभिमतत्वे मत्प्राणपरित्यागे प्रस्तुतेऽपीत्यर्थः। दोषो यद्यपि तस्य स्यात् यद्यपि सुग्रीवा
दिभिरुक्ता दोषा नास्मिन् सन्ति, सन्तु वा ततोऽपि भूयांसः। अथाप्यशक्यमहं कथं करोमीत्यर्थः। स्याच्छब्दः दुष्टोऽपि शरणागतशब्दप्रयोक्ता
मया परिगृहीत इति मम महद्यशो भवेदित्येवमर्थम्। अदुष्टपरिग्रहे गुणो मन्दः, दुष्टपरिग्रहे तु मम शरणागतरक्षणधर्म उत्तेजितो भवतीति भावः।
करुणया दुष्टपरिग्रहे शिष्टगर्हा स्यादित्यत्राह सतामेतदिति। एतद्दुष्टस्यापि शरणागतस्य सङ्ग्रहणम्। सतां शिष्टानाम्। अगर्हितं गर्हितादन्यत्,
पूजितमित्यर्थः। पूजितत्वं च कपोतोपाख्यानादिभिः प्रपञ्चयिष्यते। एवं च शास्त्रेषु दोषाणां परित्यागहेतुत्वोक्तिः शरणागतव्यतिरिक्तविषयेति विषय
व्यवस्थाऽभिप्रेता। अत एव दोषाधिक्येन वधार्हस्यापि शरणागतस्य रक्षणमेव कार्यमिति श्रुतिराह "तस्मादपि वध्यं प्रपन्नं न प्रति प्रयच्छन्ति"
इति। आचार्ययोजना—मित्रस्य स्नेहिनो भावो मित्रत्वम्, तेन आशालेशमात्रेण। अद्वेषमाभिमुख्यमात्रं वा अस्मदङ्गीकारे प्रयोजकम् न तु पूर्णभक्तिरिति
भावः। तथोक्तम् "त्वामामनन्ति कवयः करुणामृताब्धे ज्ञानक्रियाभजनलभ्यमलभ्यमन्यैः। एतेषु केन वरदोत्तरकोसलस्थाः पूर्वं सदूर्वमभजन्त हि
जन्तवस्त्वाम् ॥" इति। यद्वा मित्रभावेन मित्राक्रियया। "भावो लीलास्वभावयोः। जन्त्वभिप्रायचेष्टासु भूतौ विद्वत्पदार्थयोः। क्रियायामात्मनि" इति
नानार्थरत्नमाला। मित्रभावनयेति यावत्। अहृदयशरणोक्त्येत्यर्थः। तदप्युक्तम् "शरणवरणवागियं योदिता न भवति बत सापि धीपूर्विका" इति।
शरणागतभावेनेति वक्तव्ये मित्रभावेनेत्युक्तिः स्वाश्रयणाय कतिचित्पदानि कुर्वत्यपि स्वसहशबुद्धिकारिणो भगवतोऽभिप्रायेण। देव्यापि शरणागति



कथनेन स्वमतं दर्शयति—मित्रेति। मित्रभावेन वास्तवामित्रस्वभावेनापि मित्रत्वाभिनयमात्रेण संप्राप्तं कथञ्चन न त्यजेयम्, सर्वदेशकालावस्थास्वपि त्यक्तुं न शक्नुया
मित्यर्थः। ननु स्वस्मिन् शरणागतभूमिकामारोप्य शत्रुपक्षादागतोऽयं दुष्ट एव कथमेनमवलम्बस इत्याशङ्क्याह—दोष इति। दोषो यद्यपि तस्य शत्रुपक्षादागतस्य

मभिदधत्या "तेन मैत्री भवतु ते यदि जीवितुमिच्छसि" इत्युक्तम् । यद्वा मित्रभावेन मित्रत्वेन हेतुना । "सुहृदं सर्वभूतानाम्" इत्युक्तरीत्या अस्मदीय सहजसौहार्दं पुरस्कृत्येत्यर्थः । यद्वा मित्रभावेन आनुकूल्यसङ्कल्पादिपूर्वकमित्यर्थः । यद्वा मितात्त्रायत इति मित्रम् । ईश्वरोपकारं परिच्छिद्य तत्सदृशो पकारप्रवृत्तस्य भावेनेत्यर्थः । यद्वा विश्वसनीयस्थलं मित्रम् "तन्मित्रं यत्र विश्वासः" इत्युक्तत्वात् । विश्वासिनो भावेनेत्यर्थः । सम्प्राप्तं तस्याशालेश मात्रेण "ह्रीरेषा हि ममातुला" इत्युक्तरीत्या मम तन्निवासगमने प्राप्तेऽपि स्वयमेव प्राप्तं कथं त्यजेयम् । सम्प्राप्तं सम्यक्प्राप्तम् । पादुके द्वारि विन्यस्य देववन्दनकारिन्यायेनान्यत्र चित्तप्राप्तिमन्तरेण "परित्यक्ता मया लङ्का मित्राणि च धनानि च" इति विरोधिनिवृत्तिपूर्वकं प्राप्तमित्यर्थः । यद्वा सम्प्राप्तं माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायण इति न्यायेन मयि त्यक्तसकलविधबन्धुभावमाचरन्तम् । यद्वा मदन्तरङ्गानुचरपुरस्कारेण प्राप्तम् । यद्वा सम्प्राप्तं लङ्कायां स्थित्वा राघवं शरणं गतोऽस्मीत्युक्तं चेत् "अतन्द्रितचमूपति—" इत्याद्युक्तन्यायेन मम तत्र गन्तव्यतायामपि तस्यागमनेन पङ्गोरुपरि गङ्गानिपतनवदस्मत्प्रयोजनमेव कृतम् । सम्प्राप्तं प्राप्तिरेवास्माकमपेक्षिता, न तु स्तुत्यर्चनध्यानप्रणामादिः । समित्यनेन मानसवाचिककायिकरूपपूर्ण प्रपदनमुच्यते । न त्यजेयं त्यक्तुं न शक्नोमि । सर्वशक्तेरपि मम शरणागतशब्दश्राविणः परित्यागे शक्तिसम्भावनामपि न पश्यामीत्यर्थः । सम्प्राप्तं न त्यजेयम्, "शरणागतसस्यमालिनीयं वृषशैलेशकृषीवलं धिनोति" इत्युक्तरीत्या रक्षापेक्षां प्रतीक्षमाणोऽहं कथं सम्प्राप्तं त्यजेयम् । न त्यजेयं तत्स म्बन्धेन रावणविषयाकारापेक्षी कथं तमेव त्यजेयम् । अत एव हि घण्टाकर्णपक्षपातेन तदनुजस्यापि मुक्तिं ददौ । अत एव च मालाकारविषय पक्षपातेन युष्मत्सन्ततिजातानां दीर्घमायुर्भविष्यतीत्युक्तवान् । न त्यजेयम् आगमनमात्रेण श्लाघनीये त्यागसम्भावना कुतः ? सम्भावनायां लिङ् । त्यागसम्भावनायां खलु साधनोद्योगः । तस्य त्यागे स्वसत्ता चेत् साधनोद्योगः स्यात् । सैव न निर्वहति कथमुद्योगः । तत्स्वीकारा भावे स्वसत्ता न सिद्धयति चेत् तत्स्वीकारेऽस्मत्सत्ता न सिद्धयतीत्यस्मत्त्यागः स्यात् स कथमुपपद्यत इति चेत्तत्राह कथंचन । "अप्यहं जीवितं जह्याम्" इत्युक्तरीत्या नवप्रसववात्सल्येन वत्सला गौः पूर्ववत्सानिव युष्मानपि त्यक्ष्यामि न त्वाश्रितम् । यद्वा कथंचन सर्वदेशसर्वकाल सर्वावस्थास्वपीत्यर्थः । यद्वा कथंचन शरणागतस्य गुणाभावेऽपि दोषप्राचुर्येऽपि तत्परिग्रहस्य सर्वानभिमतत्वेऽपि दृष्टादृष्टानिष्टशतानुबन्धित्वेऽपि शरणागतस्य दोषो यद्यपि वस्तुतो दोष एव नास्ति । यद्यपि स्यात् भवेदस्तु नाम तथापि न त्यजेयमित्यर्थः । यद्वा यद्यस्मिन् दोषो नास्ति भवेदपि तस्य दोष स्तस्यैव स्यात् तिष्ठतु तद्दोषोऽस्मान् किं करिष्यतीति भावः । अतो मित्रभावेन सम्प्राप्तमेनं कथञ्चन न त्यजेयमिति सम्बन्धः । ननु दुष्टजनपरिग्रहस्य शिष्टगर्हि तत्वाच्छास्त्रविरुद्धत्वादयुक्तमेतदित्याशङ्कय, सत्यमेवैतद् दुष्टजनमात्रपरिग्रहप्रतिपादकं शास्त्रं सामान्यविषयम् "शत्रुमपि वध्यं प्रपन्नं न प्रति प्रयच्छन्ति" इत्येव

मत्प्राणपरित्यागे प्रस्तुतेऽपीत्यर्थः । किंच, दोषो यद्यपि तस्य स्यात् अस्मदभिप्रायेण दोषो नास्त्येव अस्थानभयशङ्किनो भवतोऽभि प्रायेण तस्य दोषोऽस्ति चेत् स्यात् । अङ्गीकारेऽव्ययमिदम् । दोषभोग्यत्वरूपवात्सल्यैकस्वभावस्य मे आश्रितदोषो ह्युपादेय इति भावः । सुकुमारस्य राजकुमारस्य सुगन्धिमूलमृल्लेशवदस्य दोषभोग्यत्वम् । यद्वा दोषो यद्यपि स्यात् तस्य शरणागतस्य न दोषः । "यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इत्युक्तरीत्या दोषो न श्लिष्येदित्याशयः । यद्वा दोषो यद्यपि स्यात् स तस्य हि शरणागतिरूप निरतिशयगुणशालिनो दोषो न त्याज्यकोटिमाटीकते सुगन्धिमूलमृल्लेशवत् । यद्वा दोषो यद्यपि तस्य दोषोऽस्ति चेत्तत्सम्बन्धी खलु दोषः । सः

सुग्रीवस्त्वथ तद्वाक्यमाभाष्य च विमृश्य च । ततः शुभतरं वाक्यमुवाच हरिपुङ्गवः ॥ ४ ॥

तस्मादपि श्लाघ्यः स्यात् । प्रार्थनायां लिङ् । अस्माभिः प्रार्थितः खलु । गुणवान् रक्षितश्चेत् गुणवत्ताप्रतिकरः दोषवान् रक्षितश्चेदतिशयोऽस्माकमिति भावः । यद्वा दोषो यद्यपि अस्मद्बधापेक्षया तस्य स्यात् तस्यापेक्षितफलसिद्धिः स्यात् कपोतोपाख्यानानुगुणेयं योजनेति श्रीवत्साङ्कमिश्रा आहुः । कथं तर्ह्येतन्महामन्त्रिणो निन्दन्तीत्यत्राह–सतामेतदगर्हितम् । एतदाश्रितदोषाङ्गीकरणं सताम् अगर्हितम् अनिन्दितम् । अस्मत्पक्षपातिनामस्थानभयशङ्किनां निन्दितत्वेऽपि परमार्थदर्शिनां कपोतादीनां च न निन्दितमिति भावः । यद्वा एवं दुष्टापरित्यागे प्रत्यवायपरिहारो वा पुरुषार्थसिद्धिर्वा पापक्षयो वेति चेन्नैतदित्याह–सतामिति । सद्रोष्टीष्वस्मद्गर्हापरिहार एव फलं स्वमारणोद्योगवतामपि रक्षकाः कपोतादयः तेषामगर्हितम् । यद्वा दुष्टजनपरिग्रहस्य शिष्टगर्हितत्वाच्छास्त्रनिन्दितत्वाच्चायुक्तमित्याशङ्क्य सत्यमेतद्दुष्टजनत्याज्यत्ववचनं सामान्यविषयम् । 'तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति' इत्येवमादिशरणागतापरित्यागविषयविशेषशास्त्रस्य सद्भावात् । दुष्टस्यापि शरणागतस्य संरक्षणे शिष्टगर्हणा नास्ति प्रत्युत श्रेय एवेत्याह सतामेतदगर्हितमिति । एतत् दुष्टशरणागतपरिग्रहणम् । सतां सामान्यविशेषशास्त्रविदाम् । अगर्हितं गर्हितादन्यत्, पूजनीयमित्यर्थः । सर्वशक्तेः काचिदशक्तिः, सर्वज्ञस्य किञ्चिदज्ञानं च मित्रभावेनेति श्लोकेन दर्शितमिति गोविन्दयतिनः प्रत्यवदन् ॥ ३ ॥ अथ सुग्रीवो रामप्रकृतिमाकर्ण्य

मादिशरणागतापरित्यागविषये विशेषशास्त्रस्य सद्भावाद दुष्टजनस्यापि शरणागतस्य रक्षणे शिष्टगर्हणा नास्ति, प्रत्युत श्रेय एवेत्याह सतामेतदगर्हितम् । एतच्छरणागतदुष्टजनपरिग्रहणं सतां सामान्यविशेषशास्त्रविदाम् अगर्हितम् गर्हितादन्यत, पूजनीयमित्यर्थः ॥ ३ ॥ एवं श्रीरामेण स्वमते कथितेऽपि सुग्रीवः पुनरपि विभीषणं प्रति शङ्कमानस्तत्परित्याज्यतामाह–सुग्रीवस्त्विति । तद्वाक्यं रामवाक्यम् । आभाष्य अनूद्य । ततः विमर्शानन्तरम् ॥ ४ ॥

अतिसाहसमेतदित्यत्यन्तं भीतभीतः प्राह–सुग्रीव इति । आभाष्य अनूद्य । शुभतरं नीतिशास्त्ररहस्यमूलत्वात्स्वामिविषयप्रेमातिशयनिबन्धनत्वाच्च शुभतरं वाक्यमुवाच । अत्र लक्ष्मणमित्युक्तत्वादुपसंहारे सहलक्ष्मण इत्युक्तत्वाच्चोभयोरपि वचनमुभावपिप्रति प्रतिवचनं च बोध्यम् ॥४॥ सुदुष्ट इत्यर्धमेकं वाक्यम् । अस्माभिः पूर्वमुक्तैश्छिद्रान्वेषित्वादिदोषैर्युक्तो भवतु वा मा वा, कृतघ्नः स एष रजनीचरः । किं किमर्थम् ? परित्याज्य एवेत्यर्थः ॥ ५ ॥

सुदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः ॥५॥ ईदृशं व्यसनं प्राप्तं भ्रातरं यः परित्यजेत् । को नाम स भवेत्तस्य यमेष न परित्यजेत् ॥ ६ ॥ वानराधिपतेर्वाक्यं श्रुत्वा सर्वानुदीक्ष्य च । ईषदुत्स्मयमानस्तु लक्ष्मणं पुण्यलक्षणम् । इति होवाच काकुत्स्थो वाक्यं सत्यपराक्रमः ॥ ७ ॥ अनधीत्य च शास्त्राणि वृद्धाननुपसेव्य च । न शक्यमीदृशं वक्तुं यदुवाच हरीश्वरः ॥ ८ ॥ अस्ति सूक्ष्मतरं किंचिद्यदत्र प्रतिभाति मे । प्रत्यक्षं लौकिकं वापि विद्यते सर्वराजसु ॥ ९ ॥

रामानु०–दुष्टत्वादुष्टत्वयोर्ग्राह्योऽयमिति वदन्तं रामं प्रति उभयथाऽपि त्याज्य इति सोपपत्तिकमाह–सुदुष्ट इत्यादिना । सुदुष्टो वाप्यदुष्टो वा एष रजनीचरः । किं किमर्थम् ? अनेन साध्यं प्रयोजनं किमपि नास्तीत्यर्थः ॥ ५ ॥ कृतघ्नतामेवाह–ईदृशमिति । यं बन्धुम् । एष व्यसने प्राप्ते न परित्यजेत्स कस्तस्य भवेत् न कोऽपीत्यर्थः । भ्रातरं परित्यजन् सर्वानपि परित्यजेदेवेति भावः । ईदृशं व्यसनम् लङ्कादहनपुत्रवधादिकमारभ्य समुद्रतीरनिवेशपर्यन्तं व्यसनमित्यर्थः ॥ ६ ॥ अथ सूक्ष्म धर्मानभिज्ञस्य सुग्रीवस्य नीतिमर्यादयैवोत्तरं वक्तुमारभते–वानराधिपतेरिति । सार्द्धश्लोकः । ईषदुत्स्मयमानः धर्मरहस्यमिदं मम परमशक्तिं शरणागत संरक्षणव्रतं च सम्यगपरिज्ञाय यत्किंचिद्वदत्ययमिति मन्दस्मयं कुर्वन् ॥ ७ ॥ प्रथमं तद्वचनमुपलालयति–अनधीत्येति ॥ ८ ॥ अस्तीति । सूक्ष्मतरं

सुदुष्ट इत्यादि सार्धश्लोकमेकं वाक्यम् । सुदुष्टो वा अस्माभिः पूर्वमुक्तच्छिद्रहर्तृत्वादिदोषयुक्तो वा । अदुष्टः उक्तदोषैरयुक्तो वा कृतघ्नस्स एष रजनीचरः, किं किमर्थम् ? परित्याज्य एवेत्यर्थः ॥५॥ कृतघ्नतामेवाह–ईदृशमिति । यो विभीषणः ईदृशं व्यसनं प्राप्तं भ्रातरं परित्यजेत् तस्य विभीषणस्य को नाम भवेत् न कोऽपीत्यर्थः । ईदृशस्साक्षाज्ज्येष्ठभ्रातृपरित्यागी सर्वानपि व्यसने परित्यजेदिति भावः । यद्वा यः विभीषणः ईदृशं व्यसनं प्राप्तं भ्रातरं परित्यजेत् त्यक्तवान् स एषः यं कमि त्यर्थः स एष विभीषणः कं न परित्यजेत् तस्य को नाम भवेत् । एवंविधमेनं को वा परिगृह्णीयादित्यर्थः ॥६॥ अथ रामस्सुग्रीववाक्यं श्रुत्वा तत्प्रशंसन् लक्ष्मणादी नवलोक्य राजनीतिमर्यादयैतद्वाक्यस्योत्तरं वक्तुमारभते–वानराधिपतेरित्यादिसार्धश्लोकद्वयेन । ईषदुत्स्मयमानः मम परमां शक्तिं शरणागतसंरक्षणवृत्तं च सम्यगपरिज्ञाय यत्किञ्चिद्वदतीति मन्दस्मितं कुर्वन्नित्यर्थः ॥ ७ ॥ ८ ॥ अथ रामः स्वयुक्तेरुपरि नीतिशास्त्रानुसारेण कक्ष्यान्तरमारूढत्वात् सुग्रीववाक्यं प्रशस्य

लौकिकं लोकसिद्धम् । यत्सर्वेष्वपि राजसु विद्यते मे प्रति
किंचित्, अर्थस्वरूपमिति शेषः । तदेवार्थस्वरूपं विशिनष्टि प्रत्यक्षमिति । प्रत्यक्षं दृष्टम् । लौकिकं लोकसिद्धम् । यत्सर्वेष्वपि राजसु विद्यते मे प्रति
भाति च तत्सूक्ष्मतरं किंचिद्धर्मस्वरूपमस्तीति सम्बन्धः ॥ ९ ॥ तदेवार्थस्वरूपमाह—अमित्रा इति । तत्कुलीनाः ज्ञातयः । प्रातिदेश्याः समनन्तर
देशाधिपाश्च । व्यसनेषु समुपस्थितेषु प्रहर्तारः अमित्राः शत्रवः कीर्तिताः । तस्माद्व्यसनप्रहर्तृज्ञातित्वात् ॥ १० ॥ व्यसनिनं रावणं परित्यज्यागमने
कारणान्तरमस्तीत्याह—अपापा इति । अपापास्तत्कुलीना नरेन्द्राः । हितान् हितपरान् । स्वकान् ज्ञातीन् मानयन्त्येव । तेषामपि नरेन्द्राणां

अमित्रास्तत्कुलीनाश्च प्रातिदेश्याश्च कीर्तिताः । व्यसनेषु प्रहर्तारस्तस्मादयमिहागतः ॥ १० ॥ अपापास्तत्कुलीना
श्च मानयन्ति स्वकान् हितान् । एष प्रायो नरेन्द्राणां शङ्कनीयस्तु शोभनः ॥ ११ ॥ यस्तु दोषस्त्वया प्रोक्तो
ह्यादानेऽरिबलस्य च । तत्र ते कीर्तयिष्यामि यथाशास्त्रमिदं शृणु । न वयं तत्कुलीनाश्च राज्यकाङ्क्षी च राक्षसः ॥ १२

शोभनो गुणवानेष ज्ञातिः प्रायः शङ्कनीयः । लोके पापभूयिष्ठतया शोभनोऽपि प्रायेण शङ्कनीयः । पापिनस्तु नरेन्द्रस्य तादृशो ज्ञातिः शङ्क
नीय इति किमु वक्तव्यम् । अतोऽयं रावणेन शङ्कितस्तेन सह विरुद्ध्यैवागत इत्यर्थः ॥ ११ ॥ एवं रावणपरित्यागे हेतुमुक्त्वा स्वापरित्यागे हेतुं
वक्तुं प्रतिजानीते—यस्त्विति । अरिबलस्य विभीषणस्य दोषः 'को नाम स भवेत्तस्य' इत्यादिनोक्तः । तत्र विषये । यथाशास्त्रं नीतिशास्त्रमनतिक्रम्य ।

भ्रातृपरित्यागिविभीषणागमने नीतिशास्त्रानुसारं राजधर्मोऽस्तीत्याह—अस्तीति । अत्र विभीषणागमनरूपकार्ये प्रत्यक्षं परिदृश्यमानं लौकिकं लोकव्यवहारसिद्धं
यद्राजसु विद्यते मे प्रतिभाति च तत्सूक्ष्मतरं किञ्चिदर्थरूपम् अस्तीति सम्बन्धः ॥९॥ तदेव प्रदर्शयति—अमित्रा इति । तत्कुलीनाः ज्ञातयः । प्रातिदेश्याः प्रति
देशे वसन्तीति प्रातिदेश्याः, समनन्तरदेशवर्तिनो राजानश्च व्यसनेषूपस्थितेषु प्रहर्तारः सन्तः अमित्राः शत्रव इति कीर्तिताः । तस्माद्व्यसनप्रहर्तृज्ञातित्वात् व्यस
निनं रावणं प्रहर्तुमयं विभीषण इहागत इत्यर्थः ॥१०॥ एवं ज्ञातयो व्यसनेषु राजानं प्रहरन्तीत्युक्त्वा ये धार्मिष्ठा राजानो ज्ञातीन् परिपालयन्ति तेऽपि प्रज्ञाशौर्या
द्युन्मेषशालिनं ज्ञातिं शङ्कन्त इत्याह—अपापा इति । अपापास्तत्कुलीनाश्च नरेन्द्राः स्वकान् हितान् ज्ञातीन् मानयन्ति तेषामपि नरेन्द्राणां शोभनः प्रज्ञाशौर्या
द्युन्मेषशाली ज्ञातिस्तु प्रायो बहुलं शङ्कनीय एव । पापकर्मणस्तु नरेन्द्रस्य तादृशो ज्ञातिश्शङ्कनीय इति किमु वक्तव्यम् । अतश्शङ्कितेन रावणेन सह विरुद्ध्य
अयं विभीषणोऽत्रागत इति निश्चितार्थः ॥११॥ एवमुक्तप्रकारेण विभीषणस्य रावणपरित्यागे व्यसनिज्ञातिप्रहर्तृत्वं शोभनज्ञातित्वं च हेतुद्वयमस्ति, बान्धवपरित्यागे
तु हेतुर्नास्तीति कृत्वा ' को नाम स भवेत्तस्य ' इति सुग्रीवोक्तं न युक्तियुक्तमिति भावः । शत्रुसम्बन्धित्वमात्रमवलम्ब्यास्मिन् यो दोषः कथितः स दोषोऽप्यस्मिन्

इदमुत्तरम् । न वयमिति । न वयं तत्कुलीनाः राक्षसराज्यार्हाः, अस्माकं तद्राज्ये आकाङ्क्षाभावात् । मम रावणस्येव तस्मिन्नरित्वशङ्काप्रसक्ति र्नास्ति । अतो नास्मान् त्यक्ष्यतीति भावः । किंच राक्षसो विभीषणस्तु राज्यकाङ्क्षी अस्मन्मुखेन रावणं घातयति । अतः स्वकार्यविघातभयादपि नास्माकमपकारं करोतीत्यर्थः ॥ १२ ॥ ननु मूर्खा राक्षसाः कथमेवं विमृश्यकारिण इत्याशङ्क्य नायं नियम इत्याह—पण्डिता इति । अर्धमेकं वाक्यम् । राक्षसा अपीत्यर्थः ॥१३॥ पुनरप्यस्य रावणेन विरुध्यागमनमेव प्रतिपादयन् परिग्राह्यत्वं निगमयति—अव्यग्रा इति सार्धश्लोकेन । ते ज्ञातयः

> पण्डिता हि भविष्यन्ति तस्माद्ग्राह्यो विभीषणः ॥ १३ ॥ अव्यग्राश्च प्रहृष्टाश्च न भविष्यन्ति सङ्गताः । प्रवादश्च महानेष ततोऽस्य भयमागतम् । इति भेदं गमिष्यन्ति तस्माद्ग्राह्यो विभीषणः ॥ १४ ॥ न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः । मद्विधा वा पितुः पुत्राः सुहृदो वा भवद्विधाः ॥ १५ ॥

अव्यग्राः प्रहृष्टाश्च सन्तः कदाचिदप्यन्योन्यसङ्गताः न भविष्यन्ति न भवन्तीति । अनेनैव हेतुना ज्ञातयोऽवसरे भेदं गमिष्यन्ति गच्छन्ति । अस्य च भीतस्यैव महान् प्रणादः श्रूयते । अतो बलीयसो रावणात् अस्य भयमागतं तेन च भयेनात्मत्राणार्थमागत इति परिग्राह्योऽयमित्यर्थः ॥ १४ ॥ ननु दुष्टोऽपि ज्येष्ठोऽनुवर्तनीय एवेत्याशङ्क्य यद्यप्ययं धर्मः तथापि न सर्वत्र सम्भवतीत्याह—न सर्वे इति । मद्विधा वा पितुः पुत्राः इति भूतार्थकथनत्वात्

नास्तीत्यतोऽयं परिग्राह्य इत्याह—यस्त्वित्यादिना । अखिलस्य विभीषणस्य । यथाशास्त्रं राजनीतिशास्त्रमनतिक्रम्य । नेति । न वयं तत्कुलीनाः । चकारात्प्राति देश्याश्च न भवाम इत्यर्थः । अतो नास्मानयं छिद्रेषु प्रहरति अस्मत्सापेक्षश्चायम्, यतो राज्यकांक्षी अस्मन्मुखेन रावणं घातयामीति वीक्षते । अतः स्वकार्यविघात भयादपि नास्माकमपकारं करोतीति भावः ॥ १२ ॥ ननु मूर्खा राक्षसाः कथमेवं विमृश्यकारिण इत्याशङ्क्य नायं नियम इत्याह—पण्डिता हीति । राक्षसा अपि पण्डिता भविष्यन्ति तस्माद्विभीषणो ग्राह्य इति सम्बन्धः ॥ १३ ॥ पुनरप्यस्य रावणेन विरुध्यागमनमेव प्रतिपादयन् परिग्राह्यत्वं निगमयति—अव्यग्राश्चेत्या दिना सार्धश्लोकेन । ते पण्डिताः ज्ञातयः अव्यग्राः अपर्याकुलाः तुष्टाश्च सन्तः कदाचिदपि अन्योन्यं सङ्गताः न भविष्यन्तीति अनेनैव हेतुना ज्ञातयोऽवसरे भेदं च गमिष्यन्ति । किञ्च अस्य च भीतस्यैव महान् प्रणादः श्रूयते । अतः बलीयसो रावणात् अस्य विभीषणस्य भयमागतम् । तेन भयेन चात्मत्राणार्थमिहागतः, तस्मात्परिग्राह्यो विभीषण इत्यर्थः । प्रवादश्च महानेष इति पाठं तु—ज्ञातिभ्यो भयागमने अपवादश्च 'घोराः स्वार्थप्रयुक्ताश्च ज्ञातयो नो भयावहाः' इति हस्तिगीतादिरूपो लोकप्रवादोऽपीत्यर्थः ॥ १४ ॥ इत्युक्तप्रकारेण ज्ञातित्वप्रयुक्तदोषस्य शङ्कनीयत्वं शोभन इत्युक्तप्रकारेण राजदोषस्य च सार्वत्रिकत्व

स०—भ्रातृषु सौभ्रात्रं दुर्मिलमिति न वक्तुं युक्तम् । भरते भक्तिभरितता त्वयि त्वदनुभूतैव वर्तत इत्यतः क्वचित्क एवैवंभावो भ्रात्रादिष्वित्याह—नेति । सर्वे भ्रातरो भरतोपमा न भवन्ति । स लोकविलक्षण

नात्मप्रशंसादोषः । यथा 'कृपावानविकत्थनः' इत्युक्तलक्षणेन धीरोदात्तेन दुष्यन्तेन "सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इत्युक्तम् । यथा च हनुमता "पन्नगाशनमाकाशे पतन्तं पक्षिसेविते । वैनतेयमहं शक्तः परिगन्तुं सहस्रधा ॥" इति । दण्डिना च काव्यादर्शे प्रथमपरिच्छेदे—"स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः । अपि त्वनियमो दृष्टस्तथा त्वन्यैरुदीरणात् ॥" इति । यद्वा पूर्वश्लोकार्थस्य भरतेऽतिप्रसङ्गं परिहरति—सर्व इति । तातेति सान्त्वोक्तिः । सर्वे भ्रातरः भरतोपमा न भवन्ति । कैकेयीवरप्राप्तं पित्रा दत्तमपि राज्यं परित्यज्य वनं गतं मामनुसृत्य तवैव



एवमुक्तस्तु रामेण सुग्रीवः सहलक्ष्मणः । उत्थायेदं महाप्राज्ञः प्रणतो वाक्यमब्रवीत् ॥ १६ ॥
रावणेन प्रणिहितं तमवैमि विभीषणम् । तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ १७ ॥

राज्यं त्वमेव गृहाण, अहं त्वद्दास्यं करिष्यामीति वदन् भरतादन्यः कश्चिदस्ति किमिति भावः । एवंविधप्रसक्त्यभावाल्लक्ष्मणस्यानुपादानम् । अत्र दृष्टान्तमाह मद्विधा इत्यादिना । मद्विरहमात्रेण लोकान्तरं गतः पिता । तत्तुल्यपितृमानस्मत्सदृशः कश्चिदस्ति किमित्यर्थः । यद्वा मद्विधाः पितुः पुत्राः सन्तु वा मा वा भरतसमा भ्रातरस्त्वत्समाः सुहृदश्च न सन्तीत्यर्थः । सुहृदो वा भवद्विधाः । वर्षरात्रसमये स्थितेन मया अत्यन्तकुपितेन लक्ष्मणेन चात्यन्तं परुषमुक्तेऽपि अस्मासु प्रेमातिशयमेव प्रकटयन् त्वत्समः को वाऽस्तीति भावः । यद्वा मद्विधा वा पितुः पुत्रा न भवन्ति । निरतिशयपितृवात्सल्यभूतोऽस्मत्तुल्यो नास्तीत्यर्थः ॥ १५ ॥ अथ सुग्रीवो नीतिमुखेन विभीषणस्य त्याज्यतां प्रतिपादयितुमशक्तः परिग्रहे चाविदितभावोऽयं रामे

माशङ्क्य परिहरति—न सर्व इति । सर्वे भ्रातरः भरतोपमा न भवन्ति । पितृदत्तराज्यप्राप्तिसद्भावेऽपि तदनङ्गीकारेण ज्ञातित्वप्रयुक्तदोषं परिहृतवान् । राज्यप्राप्तिशङ्कागन्धमात्रस्याप्यसम्भवात् लक्ष्मणस्यानुपादानम् । ज्येष्ठत्वेन स्वस्यैव राज्यप्राप्तेरसाधारणत्वेऽपि पितृवचनगौरवेण कनिष्ठे भरते राज्यप्रदानात् मद्विधा वा पितुः पुत्रा न भवन्तीत्युक्तवान् । भूतार्थकथनरूपत्वान्नात्मप्रशंसादोषः । तदुक्तं दण्डिना—"स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः" इति । 'शङ्कनीयस्तु शोभनः' इत्युक्तदोषविषयशङ्का सुग्रीवस्य मा भूदिति सुहृदो वा भवद्विधाः इत्युक्तवान् । यद्वा मद्विधा वा पितुः पुत्रास्सन्तु वा । भरतसमा भ्रातरः भवद्विधाः सुहृदश्च न सन्तीति सम्बन्धः ॥ १५ ॥ अथ सुग्रीवो नीतिमुखेन शरणागतविभीषणस्य त्याज्यतां प्रतिपादयितुमशक्तः परिग्रहे विभीषणोऽस्मासु कंचा अनर्थमुत्पादयिष्यतीति भिया एतस्य विभीषणस्य शरणागतेरुपेक्षया स्वेन लक्ष्मणेन च क्रियमाणं शरणागतिद्वयं सबलं मन्यमानः शरणागतिपूर्वकं

—इति भावः । लक्ष्मणस्य च स्वसमखेदमोदत्वेन सहैवावस्थानाद्राज्यप्राप्तेरहन्ताहेतोरभावेन चानुक्तिः नतु सौहार्दावमर्देनेति हृदयम् । भ्रातृप्रस्तावे पितापुत्राचारोक्तिः प्रसङ्गसङ्गत्या । सर्वे भ्रातरो भरतोपमा नेत्यनेन मारिततारारमणस्य मर्मोक्तीर्तनं मन्यमानस्तं सुमुखीकर्तुं सुहृद इत्याद्युक्तिश्चेति ज्ञेयम् ॥ १९ ॥

कमनर्थमुत्पादयिष्यतीति प्रेमवशेन व्याकुलो विभीषणशरणागतेरेकस्याः सलक्ष्मणेन स्वेन क्रियमाणं शरणागतिद्वयं प्रबलमभिमन्यमानः शरणा

गतिपूर्वकं विभीषणनिग्रहं प्रार्थयते--एवमित्यादिचतुःश्लोकैः ॥ १६ ॥ १७ ॥ राक्षस इत्यादि । अत्र मयि लक्ष्मण इति स्वस्य लक्ष्मणस्य चानर्थ
कथनं स्वव्यसनादपि स्वाश्रितव्यसनं रामस्यात्यन्तारुन्तुदमिति तत्प्रदर्शनेन विभीषणापरिग्रहसमर्थनार्थम् ॥ १८ ॥ १९ ॥ एवमुक्त्वेति । मौनमुपा
गमत्, प्रणयरोषादिति भावः ॥ २० ॥ अथ रामः स्वस्य सर्वशक्तित्वप्रदर्शनेन सुग्रीवस्यातिशङ्कां निवार्य शरणागतरक्षणरूपस्य स्वव्रतस्य धर्मशास्त्र

राक्षसो जिह्मया बुद्ध्या सन्दिष्टोऽयमिहागतः । प्रहर्तुं त्वयि विश्वस्ते प्रच्छन्नो मयि वाऽनघ ॥ १८ ॥ लक्ष्मणे वा महाबाहो स वध्यः सचिवैः सह । रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥ १९ ॥ एवमुक्त्वा रघुश्रेष्ठं सुग्रीवो वाहिनीपतिः । वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥ २० ॥ सुग्रीवस्य तु तद्वाक्यं रामः श्रुत्वा विमृश्य च । ततः शुभतरं वाक्यमुवाच हरिपुङ्गवम् ॥ २१ ॥ सुदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः । सूक्ष्ममप्यहितं कर्तुं ममाशक्तः कथंचन ॥ २२ ॥ पिशाचान् दानवान् यक्षान् पृथिव्यां चैव राक्षसान् । अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर ॥ २३ ॥

सिद्धत्वात्तस्यापरित्याज्यतां प्रतिपादयति—सुग्रीवस्य त्वित्यादिना । विमृश्य मयि प्रेमातिशयेनैवमुक्तमिति विचार्य ॥ २१ ॥ सुग्रीवस्य भयं निवर्त
यति—सुदुष्ट इति । स एष रजनीचरः सुदुष्टो वा अदुष्टो वा भवतु किं करिष्यति । तदेव विवृणोति—सूक्ष्ममिति । सूक्ष्ममपीत्यनेन साक्षान्मयि मदा
श्रितेषु मत्सम्बन्धिसम्बन्धिष्वपि न शक्त इति भावः ॥ २२ ॥ कथं न शक्त इत्याकाङ्क्षायां स्वशक्तिं दर्शयति—पिशाचानिति । पृथिव्याम्, विद्यमाना

विभीषणनिग्रहं प्रार्थयते—एवमुक्त इत्यादि मौनमुपागमदित्यन्तेन । अत्र मयि लक्ष्मणे वेति स्वस्य लक्ष्मणस्य च विभीषणेन करिष्यमाणानर्थकथनं स्वव्यसना
दपि स्वाश्रितव्यसनं रामस्यात्यन्तमरुन्तुदमिति मत्वा विभीषणेन करिष्यमाणानर्थमुक्त्वा तत्परिग्रहमसहमानः प्रणयरोषात् मौनमुपागमदित्यर्थः ॥ १६-२० ॥
अथ रामः स्वस्य सर्वशक्तित्वप्रदर्शनेन सुग्रीवस्यातिशङ्कां निवार्य शरणागतरक्षणरूपस्वमतस्य धर्मशास्त्रसिद्धत्वात्तस्यापरित्याज्यतां प्रतिपादयति–सुग्रीवस्य
त्विति । सुग्रीवस्य वाक्यं श्रुत्वा तद्विमृश्य । अस्यायमर्थः–प्रथमतः कृतविभीषणशरणागत्यपेक्षया पश्चात्कृतसुग्रीवलक्ष्मणशरणागतेर्दौर्बल्यं च “ तस्मादपि
वध्यं प्रपन्नं न प्रति प्रयच्छन्ति ” इति श्रुत्यर्थानुसारि शरणागतरक्षणरूपस्वधर्मं च पर्यालोच्येत्यर्थः ॥ २१ ॥ असौ राक्षसोऽन्तःप्रविष्टस्सन् अनवहिताया

निति शेषः । त्वं तावत्सकलैः स्वबलैः सह तिष्ठ । अहमेक एव पर्याप्त इत्यभिप्रायेणाह हरिगणेश्वरेति । अङ्गुल्यग्रेण शस्त्रास्त्रादिप्रसङ्गशून्येन अङ्गुल्यन्तरनिरपेक्षेण एकस्यामप्यङ्गुल्यामंशान्तरव्यापारवर्जितेन । तत्रापि हस्तपादादिविशेषविवक्षाशून्येन अग्रमात्रेण । हन्यां हन्तुं शक्तः । न केवलं लङ्कामात्रनिवासिनो राक्षसान् किन्तु स्थानान्तरनिवासिनोऽपीति विवक्षया पृथिव्यां चैवेति निर्देशः । न केवलमेकजातीयानामेव लक्ष्यत्वम् किन्तु सर्वेषामपीत्यभिप्रायेणाह--तानिति । तर्हि लङ्कामात्रनिवासिनो राक्षसान् किमिति न हंसीत्यत्राह इच्छन्निति । इच्छाभावादेव तद्वधाभावः, न त्वशक्त्येति

श्रूयते हि कपोतेन शत्रुः शरणमागतः । अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ २४ ॥

भावः ॥ २३ ॥ एवमस्मादपकारशङ्का नास्तीत्युक्त्वा भवतु वाऽयमपकारी तस्मादेवापकारान्मम प्राणा गच्छन्तु वा । अथापि नायं निग्राह्यः नापि परित्याज्यः, किन्त्ववश्यं रक्ष्य एवेति कपोतोपाख्यानेन प्रतिपादयति–श्रूयते हीति, प्रसिद्धेयमाख्यायिकेत्यर्थः । कपोतेन धर्माधिकारशून्येन तिर्यङ्मात्रेण, एतेनाप्यनुष्ठितत्वे किमु वक्तव्यमस्माकम् । कपोतेन एकेनासहायेन कृतं किमुत ससहायैरस्माभिः । शत्रुः कपोतस्य मृगयुः स्वयं भार्यापहारी वैरी, विभीषणस्त्वस्माकं न तथा । तथाप्यरक्षणे किमस्मत्पौरुषेण । शरणमागतः कपोताध्युषितद्रुमस्थलं यदृच्छया प्राप्तः । "सोऽञ्जलिं शिरसा बद्ध्वा वाक्यमाह वनस्पतिम् । शरणं हि गतोऽस्म्यद्य देवतामिहवासिनीम् ॥" इति स्वावासवनस्पतिदेवतां प्रत्युक्तवान् न तु कपोतम् । विभीषणस्तु 'राघवं शरणं गतः' इति अस्मत्कूटस्थरघुराक्षससंवादोक्तशरणागतराक्षसरक्षणं पुरस्कृत्य मां प्राप्तः । यद्वा शरणं "शाखिनः पक्षिणां गृहम्" इत्युक्तरीत्या वनस्पतिरूपं गृहं प्राप्तः, न तु शरणागतिं चक्रे । "शरणं गृहरक्षित्रोः" इत्यमरः । अर्चितश्च लुब्धकत्वात्सहजशत्रुत्वात् भार्यापहर्तृत्वाच्चापन्नोऽप्यसावित्युपेक्षणस्य तद्वधोपायान्वेषणस्य च कर्तव्यत्वे प्राप्तेऽप्यतिथिं देवत्वेन मत्वा शीतनिवारणायाग्निमानीय पूजितः । वयं तु "वध्यतामेष तीव्रेण दण्डेन सचिवैः सह" इत्यनुबन्धिपर्यन्तं सम्यगर्चयामः । यथान्यायम् यावत्क्षुन्निवृत्ति सन्मित्रागम इव

मवस्थायामस्मान् वधिष्यतीति सुग्रीवोक्तदोषस्यावकाशो नास्तीत्याह–सुदुष्ट इति । किं किमप्यहितम् ॥ २२ ॥ २३ ॥ एवं विभीषणस्य परिग्राह्यत्वे नीतिशास्त्रं लोकव्यवहारं स्वशक्तिं च प्रदर्श्य अशक्तेनापि पुरुषेण स्वप्राणव्ययेनापि शरणागत. संरक्षणीय इत्यत्रेतिहासं प्रमाणयति–श्रूयते हीत्यादिना । कपोतेन शास्त्रानधिकारिणा क्षुद्रजन्तुना । शत्रुः, अत्र शत्रुशब्देन भार्याहर्तृत्वेन शत्रुभूतो व्याध उच्यते । शरणं गृहम्, स्वनिवासभूतवृक्षमित्यर्थः । यथान्यायमर्चितः यथोचितं पूजितः, कपोतोपाख्यानकथिताग्न्यानयनशीतनिवारणाद्युपचारेणार्चित इत्यर्थः । स्वैश्च मांसैः स्वशरीरमांसैर्निमन्त्रितो भोजनार्थं नियोजितः ॥ २४ ॥

समग्रादरेणान्तर्विषादलेशं विना आदृतः। यद्वा प्रियवचनादिभिः वञ्चनां विनेत्यर्थः। स्वैश्च मांसैर्निमन्त्रितः। बहिः कतिचिदाहारानानीय स्वकीय द्रव्यान्तराणि कतिपयानि शरीरैकदेशान्वा दत्त्वा नोपचचार, किन्त्वङ्गीकृतात्मत्वेनाभिमन्यमानः श्रीक्षिरप्याद्यं धर्मसाधनमित्यादरणीयैः शरीरमांसैः शरभङ्ग इव 'इदमेकं महत्तपः' इति मत्वा वह्नावह्नाय पतति स्म। निमन्त्रितः भोजनार्थं नियोजितः ॥ २४ ॥ उक्तमेवार्थं दृढीकुर्वन् स्वस्य कैमुत्यमाह—स हि तमिति। स कपोतः वयमिव धर्मानुष्ठानयोग्यजातौ शरण्यवंशे वा नोत्पन्नः। तं जात्या स्वभावेन च क्षुद्रसमाचारम्

स हि तं प्रतिजग्राह भार्याहर्तारमागतम्। कपोतो वानरश्रेष्ठ किं पुनर्मद्विधो जनः ॥ २५ ॥

'पक्षिणां कालसंमितः' इत्यखिलपक्षिजातिविरोधिनं तस्य कपोतस्यान्तिकं प्रति यदृच्छयाऽभ्येत्य पतितम् उपायान्तरशून्यं विपरीतानुष्ठानैक निरतम् अनुतापलेशेन वा अनुकूलवादप्रसङ्गेन वाऽनन्वितं प्रतिजग्राह। स्वात्मत्यागेनाङ्गीकृत्यावति स्म। पूर्वश्लोके शत्रुरिति सामान्येनोक्तमर्थं तद्वृत्ति प्रदर्शनेन विशिनष्टि—भार्याहर्तारमिति। एवमेव रावण आगतश्चेदस्माभिः कार्यं इत्यभिप्रायः। आगतम् अस्याङ्गीकाराय कृतमुपायानुष्ठानं कपोता वासद्रुमस्थलं प्रत्यागमनमात्रमेव। तद्विना वनस्पतिदेवतां प्रत्युक्तं शरणशब्दं कपोतो नाशृणोत्। अत्र स हीत्यनेनैव कपोतानुवादे लब्धेऽपि पुनः कपोतग्रहणं श्येनकपोतोपाख्यान इव नायं परिगृहीतकपोतशरीरो देवो मुनिर्वा, किन्तु प्राकृतः कपोत इति ज्ञापनार्थम्। अयं कपोतः प्राक्तनधर्म विशेषैर्गजेन्द्रादिवत्तिर्यक्त्वेप्येवंधर्मानुष्ठानयोग्यो बभूव। कपोत इत्यनेन तिर्यक्त्वं शास्त्रानधिकारित्वं बुद्धिमान्द्यं च सूचितम्। वानरश्रेष्ठ! पुनरप्येक स्तिर्यक् शत्रुं किरातं ररक्षेत्येनां कथां शृणु। वानरः कश्चिद्व्याघ्राद्भीतं स्वावासद्रुममागतं किरातं ररक्ष। तदानीं वृक्षमूलस्थो व्याघ्रस्तस्मिन्वानरे

उक्तार्थदृढीकरणाय स्वस्य कैमुत्यमाह—स हि तमिति। सः हृतभार्यः कपोतः। कपोत इत्यनेन तिर्यक्त्वाच्छास्त्रानाधिकारित्वं बुद्धिमान्द्यञ्च सूचितम्। भार्या हर्तारमप्यागतं किरातं प्रतिजग्राह आभिमुख्येनाङ्गीचकार, किम्पुनर्मद्विधो जनः सकलशास्त्राधिकारी सकलधर्मरहस्यवेदी सकलधर्मानुष्ठानपरश्च मादृशो जनः

स०—स हि सोऽपि अनेनापकृतोऽपीत्यर्थः। प्रतिजग्राह प्रतिहतभार्याविचनश्रवणानन्तरमपि प्रीतिपूर्वकं जग्राहेति सूचयति। सहितं हितेन सहितं यथा भवति तथेति वा। तिर्यक्तमाधानं तिर्यङ्ग्दर्शनेन शीघ्रं भवतीति वा भार्यापहर्तृभ्रातृग्रहणे भार्यापहर्तृसत्कारकर्तृनिदर्शनमुचितमिति वा आदौ कपोतेतिहासो बोधितो रामेणेति ज्ञेयम्। "मुनिरुवाच। धर्मनिश्चयसंयुक्तां कामार्थसहितां कथाम्। शृणुष्वावहितो राजन् गदतो मे महाभुज॥" इत्यारभ्य पञ्चाध्याय्या शान्तिपर्वण्यपारद्धर्नोक्ता कपोतव्याधकथाऽत्रानुसन्धेया ॥ २५ ॥

सुप्ते निषादं समीक्ष्य त्वां रक्षामि वानरं पातयेत्युवाच। ततः पापैकनिरतः किरातः स्वरक्षणकारिणं वानरं पातयामास। अनन्तरं वानरं पतितं गृहीत्वा व्याघ्रः त्वां जह्यां स्वोपकारिद्रोहिणं निषादं जहीति मनुष्यमांसलुब्धत्वादुवाच। ततो धर्मवित्स वानरः प्राणात्ययदशात्वादहृदयं तत्त्यागमङ्गीकृत्य व्याघ्रमुक्तस्तरुमारुह्य स्वस्यापकर्तारं किरातं पश्चादपि गत्यन्तराभावान्निजवासद्रुमस्थितिहेतुना शरणागत इत्यरक्षत्। अवान्यानराविपत्ये स्थितः सन् स्वजातिधर्म इति शरणागतरक्षणं किन्नावलम्बते। किं पुनर्मद्विधो जनः कपोतचरितं पश्यतां मादृशां किं वक्तव्यम्। मद्विधः शरणागतरक्षणाय

ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा। शृणु गाथां पुरा गीतां धर्मिष्ठां सत्यवादिना ॥ २६ ॥

समुच्छ्रितध्वजे रघुवंशे जातः "षष्टिर्वर्षसहस्राणि लोकस्य चरता हितम्। पाण्डरस्यातपत्रस्य च्छायायां जरितं मया ॥" इत्युक्तरीत्या लोकरक्षणदीक्षितस्य दशरथस्य पुत्रः वसिष्ठविश्वामित्रादिशिष्यः महायोगिना जनकेन कृतसम्बन्धः 'रामो विग्रहवान् धर्मः' इति प्रसिद्धः "मर्यादानां च लोकस्य कर्ता कारयिता च सः" इति सर्वलोकानुकृतधर्मानुष्ठानः अहं सम्प्रति शरणागतहिंसां कुर्यां चेल्लोकः कीदृग्विधः स्यात्। मद्विधः मम वृत्तं पश्चाद्वक्ष्यते। सामान्येन 'धर्मसेतुर्नृपाणाम्' इति मादृशानां संमतत्वेन स्थितः मद्विधः मादृशः शरणागतत्यागं न करोति। अवध्यवधोन्मुखानां रावणादीनां खल्वीदृशं कार्यं रोचते। जनः शरणागतत्यागकृत्कीदृशोत्पत्तिमान् स्यात् ॥ २५ ॥ ननु शास्त्रानधिकारिणस्तिरश्चोऽनुष्ठानमनुपादेयम् न च चोदनामन्तरेण प्रकृतिमात्रेण धर्मत्वं सिद्ध्यतीत्याशङ्क्य कण्डुमुनि[illegible] विधानं दर्शयति—ऋषेरिति। कण्वस्य पुत्रेणेत्यनेन महाकुलप्रसूतत्वम्, परमर्षिणेति यथार्थदर्शित्वम्, सत्यवादिनेति यथादृष्टार्थवादित्वं चोच्यते। तेन परमाप्तत्वं दर्शितम्। वेदवचनादिसिद्धम्। पुरा गीतां कण्डुकल्पितेयमिति न मन्तव्यम्। ऋच एव सामत्वात्पुरा विद्यमानामेवेदानीं गीयमानां गीताम्। एतत्कृतत्वेऽपि साम्ध्वनिवत्समस्तपापापनोदनक्षमाम्। धर्मिष्ठां वेदोक्तधर्मोपमेयस्मृत्युक्तप्रतिपादिकाम्। अनेन परमप्रयोजनत्वमुक्तम्। सत्यवादिनीमिति पाठे—अबाधितार्थप्रतिपादिनीं गाथाम् अनेकार्थोचितसुलभाभ्यस



अकृतापकारमयमेव शरण्य इति प्राप्तं पुरुषं प्रतिगृह्णीयादिति किमुतेति भावः ॥ २५ ॥ स वध्यः सचिवैः सह इति सुग्रीवोक्तं शरणागतस्य विभीषणस्य

स०—पिपीलिकाशिविवादच्छिकत्वान्न तच्चेष्टा धर्मे प्रमाणीत्यादित्यतो महर्षिगीतां गाथां कथयति—ऋषेरिति। रामोक्तेस्तिर्यग्गतिर्यगादिविषयत्वादेवमादिनिदर्शनं युक्तमिति भावः। "नहि पितुः पाण्डित्येन पुत्रः पण्डितो भवति" इति न्यायेनातत्सदृशपुत्रगीतेत्यतस्तं विशिनष्टि—परमर्षिणेति। पितुः ऋषित्वम् एतस्य परमर्षित्वमिति तद्गीता(गाथा)कथा आदर्तव्येत्यनेन सूचयति ॥ २६ ॥

नीयत्वाय सङ्कुचितशब्दां शृणु, इतः पूर्वमेतद्गाथानाकर्णनेन खलु त्वमेवमाविलात्माऽसि एतामवहितमनाः शृणु ॥ २६ ॥ अथ कण्डुगाथायां चतुःश्लोक्यामाद्यश्लोकेन पूर्णप्रपत्त्यसिद्धावपि गत्यन्तरशून्यतया आत्मनिक्षेपाभिप्रायव्यञ्जकशरणागतिशकलतुल्याञ्जलिबन्धादिमात्रविधानमपि हानिं न नयेत् तत्करणमनुग्रहावहमित्याह–बद्धाञ्जलिपुटमिति । अनुकूलबुद्धिवाग्वृत्त्यभावेऽप्यञ्जलिमात्रमेवालम् । "अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी" इति स्वतन्त्रस्याप्याशु दयाजननी मुद्रा खल्वियम् । दीनम् एवमञ्जलिबन्धमात्रं विनापि कार्पण्यद्योतनावस्थानमेवालम् । याचन्तम् अञ्जल्याद्य

बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् । न हन्यादानृशंस्यार्थमपि शत्रुं परन्तप ॥ २७ ॥
आर्तो वा यदि वा दृप्तः परेषां शरणागतः । अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ॥ २८ ॥

भावेऽपि कार्पण्याद्योतनेऽप्यहृदयप्रार्थनैवालम् । शरणागतम् अञ्जलिबन्धादित्रयेप्यविद्यमाने रक्षकनिवासस्थलाभिगमनमेवालम् । पूर्वं स्वरक्षाभरनिक्षेपरूपशरणागतिशकलान्युक्त्वा शरणागतमिति पूर्णप्रपत्तिरुक्तेति वा स्यात् । अपि शत्रुं साक्षाच्छत्रुमपि न हन्यात् । अयं शास्त्रार्थ ऐहिकाभ्युदयार्थो वा परलोकार्थो वा प्रत्यवायपरिहारार्थो वेत्युक्ते सति तेभ्यः प्राक्प्रयोजनान्तरमाह आनृशंस्यार्थमिति । अघातुकत्वसिद्ध्यर्थमित्यर्थः । नृशंसोऽयमिति लोकापवादपरिहारार्थमिति यावत् । यद्वा आनृशंस्यं सकलधर्मसारभूतो दयागुणः तद्रक्षणार्थं वा । यथोक्तं सीतया "आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतः" इति । परन्तपेति । कण्डुरपि कंचिद्राजानं प्रत्युक्तवानिति गम्यते । परन्तप ! शरणागते किं पौरुषप्रकटनेन प्रत्यर्थिषु खलु तत्कर्तव्यमिति भावः ॥ २७ ॥ पूर्वं न हन्यादिति स्वेन क्रियमाणं हननमात्रं प्रतिषिद्धम् । अत्र स्वेतरक्रियमाणशरणागतपीडायामपि शरणागते आर्तत्वदृप्तत्वविभागानालोचनेन प्राणान् हित्वा तद्रक्षणं कार्यमित्याह–आर्तो वेति । आर्तः स्वाभिमतसम्भवे विलम्बाक्षमतीव्रसंवेगवान् वा, शरणागमनवेलायामपि स्वापराधनिमित्तभयादिमान् वेत्यर्थः । दृप्तस्तु विलम्बाविलम्बावनादृत्य फलसिद्धिमात्रसक्तः । अस्यां वेलायां विनयस्वापराधभयशून्यो वा । मुमुक्षुपक्षे संसारजुगुप्सानुसन्धानेन सद्य एव देहनिवृत्तिकाम आर्तः । दृप्तः शरीरावसाने मुक्तिकामः । यद्वा आकिञ्चन्यानन्यगतित्वपुरस्सरं प्रपन्न आर्तः । स्तोभ

त्याज्यत्वं परिहर्तुं कण्डुमहर्षिगीतगाथामाह–ऋषेरित्यादि । धर्मिष्ठां धर्मपराम् । सत्यवादिनीमबाधितार्थप्रतिपादिनीम् ॥ २६ ॥ आनृशंस्यार्थमघातुकत्वसिद्ध्यर्थं न हन्यादिति सम्बन्धः । परंतपेति कण्डुरपि यं कञ्चित्सम्बोध्योपदिशति ॥ २७ ॥ आर्त इति । परेषां शत्रूणां मध्ये आर्तः स्वाभिमते विलम्बाक्षमावान् ।

हेलनादिरूपेण शरणागतोऽस्मीति ब्रुवन् दृप्तः। परेषां शरणागतः स्वव्यतिरिक्तशरणागतः। यद्वा परेषामिति निर्धारणे षष्ठी। परेषां मध्ये शरणागतोऽरिः वैरे हृदि विद्यमानेपि शरणागतिशब्दमात्रमभिदधानः पुरुषः । कृतात्मना निश्चितमनस्केन, धर्मशास्त्रविश्वासशालिनेत्यर्थः । प्राणान् परित्यज्य रक्षितव्यः, अस्थिरान् प्राणान्परित्यज्य स्थिरं शरणागतरक्षणं कर्तव्यम् । कृतात्मनेति विशेषणेन विदुषोऽतिक्रमे दण्डभूयस्त्वमुक्तम् । शरणागतरक्षणशास्त्रस्य निरवकाशत्वात् " सर्वथैवात्मानं गोपायेत् " इति शास्त्रस्य सावकाशत्वात् तद्व्यतिरिक्तविषयेऽप्यवस्थाप्यमिति भावः ॥ २८ ॥

स चेद्भयाद्वा मोहाद्वा कामाद्वापि न रक्षति। स्वया शक्त्या यथासत्त्वं तत्पापं लोकगर्हितम् ॥ २९ ॥
विनष्टः पश्यतस्तस्यारक्षिणः शरणागतः। आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः ॥ ३० ॥

एवं शरणागतरक्षणधर्मे चोदनामभिधाय तदरक्षणे प्रत्यवायमाह–स चेदिति। भयात् तद्रक्षणे तच्छत्रुसकाशात् तस्माद्वा । किरातन्यायेन स्वस्यापि भयमुत्प्रेक्ष्य ततो हेतोः। मोहात् शास्त्रार्थापरिज्ञानात् । कामात् स्वच्छन्दवृत्तिस्वाभाव्यात्, तच्छत्रुसकाशात्किंचिल्लाभापेक्षणाद्वा । स्वया शक्त्या स्वकीयेन केनचित्सामर्थ्यप्रकारेण । स्वसहायसम्पादनस्वकीयद्रव्यदानादिना शरीरत्यागपर्यन्तेनोपायकलापेनेत्यर्थः। यथासत्त्वं सत्त्वमनतिक्रम्य शक्तौ सत्यामपि येन केनचिच्छलेन शक्तिवञ्चनामकृत्वा । तत् अरक्षणम् । पापं प्रत्यवायहेतुः । अनेन निरयहेतुत्वमुक्तम् । न केवलं परलोकबाधकम्, इह लोकेऽपि सर्वजनगर्हितमित्याह लोकगर्हितमिति ॥ २९ ॥ न केवलमैहिकानर्थहेतुत्वमात्रम् पूर्वसञ्चितसकलसुकृत विनाशकमपीत्याह–विनष्ट इति । यः कश्चिदयं कञ्चिच्छरणमागतः । तमरक्षिणस्तस्य पश्यतः रक्षकत्वेन वृते समर्थे च तस्मिन् पश्यति ।

दृप्तः शरणागमनवेलायामपि गूढहृदयतयाऽनुपशान्तशत्रुभावः। अरिः कृतात्मना प्राणानपि परित्यज्य रक्षितव्य इति सम्बन्धः ॥ २८ ॥ सः भयात्तद्रक्षणे शत्रोः सकाशात्तस्माद्वा स्वस्यापि भयमुत्प्रेक्ष्य ततो हेतोर्वा मोहाच्छास्त्रार्थापरिज्ञानाद्वा कामात्तच्छत्रोस्सकाशात्किञ्चित्फलापेक्षणाद्वा स्वया शक्त्या स्वकीयेन केन चित्सामर्थ्येन सहायसम्पादनस्वकीयद्रव्यदानादिना वा यथान्यायं न्याय्यमनतिक्रम्य न रक्षति, शरणागतमिति शेषः। तत् पापं तच्छरणागतारक्षणं पापं पापहेतुः। न केवलं पापहेतुः,इह लोकेऽपि सर्वजनगर्हितमित्याह लोकगर्हितमिति॥२९॥ न केवलमैहिकामुष्मिकानर्थहेतुत्वमात्रम्, पूर्वसञ्चितसकलसुकृतविनाशकत्वमपीत्याह– विनष्ट इति। यः कश्चित् यं कञ्चिच्छरणमुपगतः रक्षिणस्तस्य पश्यतः रक्षकत्वेन [illegible] समर्थे [illegible] पश्यत्येव तेनारक्षितः तदरक्षणेनैव स्वशत्रुसकाशाद

तेनारक्षणेनैव स्वशत्रुसकाशाद्विनष्टश्चेत् तस्य अरक्षकस्य सम्बन्धि अनादिकालसञ्चितं सर्वं सुकृतमादाय गच्छति । अस्यारक्षकस्य समार्जित सकलसुकृतक्षयो भवतीत्यर्थः ॥ ३० ॥ कण्डुवचनचतुःश्लोकीतात्पर्यं सङ्ग्रहेणाह—एवं दोषो महानत्र प्रपन्नानामरक्षणे इत्यर्धेन ॥ ३१ ॥ विस्तरेणाह—अस्वर्ग्यमित्यादिना । अस्वर्ग्यं स्वर्गविरुद्धम्, नरकहेतुभूतमित्यर्थः । अयशस्यम् अकीर्तिकरम् । बलवीर्यविनाशनम्, ययोः शारीरबलवीर्ययोः सतो रेव शरणागतो न रक्षितः तयोर्विनाशकमित्यर्थः । अत्र अरक्षणमिति विशेष्यमनुषज्यते ॥ ३२ ॥ एवं शरणागतरक्षणे कण्डुवचनं प्रमाणयित्वा धर्म

एवं दोषो महानत्र प्रपन्नानामरक्षणे ॥ ३१ ॥ अस्वर्ग्यं चायशस्यं च बलवीर्यविनाशनम् ॥ ३२ ॥ करिष्यामि यथार्थं तु कण्डोर्वचनमुत्तमम् ॥ ३३ ॥ धर्मिष्ठं च यशस्यं च स्वर्ग्यं स्यात्तु फलोदये ॥ ३४ ॥ सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ॥ ३५ ॥

संस्थापनप्रवृत्तस्य ममैतदवश्यं पालनीयमित्याह—करिष्यामीति । उत्तमं लोकाद्दृतम् ॥ ३३ ॥ न केवलमकरणे प्रत्यवायबाहुल्यम्, करणे दृष्टादृष्टाभ्यु दया बहवः सन्तीत्यपि कण्डुवचनतात्पर्यमिति रामः स्वयमाह—धर्मिष्ठमिति । पापनिवर्तकधर्मोपेतत्वं विवक्षितम् । फलहेतुधर्मोपेतत्वस्य स्वर्ग्यमित्य नेनैव सिद्धत्वात् । फलोदये फलप्रदानकाले समुपस्थिते । स्वर्ग्यं स्वर्गहेतुरित्यर्थः । अत्र प्रतिपाद्यगतं धर्मिष्ठत्वादिकं प्रतिपादकवचने समुपचर्यते ॥३४॥ एवं " श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ " इति याज्ञवल्क्योक्तधर्मप्रमाणेषु श्रूयत इत्यनेन " तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति " इत्यादिना श्रुतिः, कण्डुगाथामुखेन स्मृतिः, कपोतादिना शिष्टाचारः, प्रतिपक्षनिरसनपूर्वकं बलवदुपपादनेन स्वप्रियत्वं चेत्येवं चतुर्षु प्रमाणेषु प्रपन्नरक्षणरूपपरमधर्मविषयेषु दर्शितेषु सम्प्रति तत्र प्रमाणं पञ्चमं दर्शयति—सकृदेवेति ।

विनष्टश्चेत्तस्यारक्षकस्य सम्बन्धि अनादिकालसञ्चितं सर्वं सुकृतमादाय गच्छति तत्प्राप्यपुण्यलोकान् स्वयमध्यास्ते ॥ ३० ॥ ३१ ॥ अस्वर्ग्यमित्यादिसार्धश्लोकमेकं वाक्यम् । कण्डोर्वचनम् । अस्वर्ग्यम् अयशस्यं बलवीर्यविनाशनं च, अरक्षितमिति शेषः । धर्मिष्ठं पापनिवर्तकधर्महेतुकम् । यशस्यं कीर्तिकरम् । फलोदये फलप्रदानकाले समुपस्थिते स्वर्ग्यं स्वर्गप्रदं च स्यात्, रक्षितुरिति शेषः । अतस्तद्वचनं यथार्थं करिष्यामि, कण्डुनोक्तप्रकारेणावश्यमार्तरक्षणं करिष्यामीत्यर्थः । एवं धर्मशास्त्रप्रसिद्धं शरणागतरक्षणरूपं धर्ममवश्यमनुतिष्ठामीत्युक्तम् ॥ ३२-३४ ॥ तिष्ठतु नामैतत्, सर्वलोकस्वामिनस्सर्वलोकशरण्यस्य सर्वज्ञस्य सर्वशक्तेः परमकारुणिकस्य ममानादिसङ्कल्पसिद्धतया सहज[illegible]याह—सकृदेवेति । एकवारमेव प्रपन्नायेति गत्यर्थस्य पदेः ज्ञानार्थत्वान्मानसप्रपत्तिरुक्ता ।

सकृदेव एकवारमेव । उपायान्तरेष्वावृत्तिः शास्त्रार्थः प्रपत्तौ त्वनावृत्तिः । " सकृदेव हि शास्त्रार्थः कृतोऽयं तारयेन्नरम् " इत्युक्तेः । प्रपन्नाय "गत्यर्था ज्ञानार्थाः" इति न्यायेनात्र मानसप्रपत्तिरुच्यते । तवास्मीति तु वाचिकी । उभयोरन्यतरेण युक्तायापीत्यर्थः । यद्वा प्रपन्नायेत्युपायः कथ्यते । तवास्मीति च याचत इति तच्छेषवृत्तिलक्षणफलविशेषप्रार्थना । एवम्भूतायाधिकारिणे । सर्वभूतेभ्य इति " भीत्रार्थानां भयहेतुः " इत्यपादानत्वम् । भयहेतुतया शङ्कितेभ्यः सर्वभूतेभ्यः । अभयं भयाभावं ददामि । अभयमेव मोक्षो नाम । "अथ सोऽभयं गतो भवति । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति" इति ब्रह्मविद्याफलत्वेन श्रवणात् । एतत् तवास्मीति फलविशेषयाच्ञेति पक्षस्यानुकूलम् । पक्षान्तरे त्रैवर्गिकफलानामप्येतदुपलक्षणम् । स्वस्य सकल

आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया । विभीषणो वा सुग्रीव यदि वा रावणः स्वयम् ॥ ३६ ॥

फलप्रदत्वात् । एतद्व्रतं मम व्रतवदिदं कस्यांचिदपि दशायां परित्यागायोग्यमित्यर्थः । अत्र सर्वभूतेभ्य इत्यपि चतुर्थी । प्रपन्नसम्बन्धिभ्योऽपि सर्वभूतेभ्योऽभयं ददामि । " पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम् ॥ " इत्युक्तेः ॥ ३५ ॥ एवमुक्ते सत्यसम्भव दुरतं प्रशान्तप्रेमान्ध्यतया प्रसन्नमुखं विभीषणाभिमुखं सुग्रीवमालोक्य तमेव तदानयने नियुङ्क्ते—आनयैनमिति । निवेदयतेति सपरिवारान् युष्मान् पुरुष कारतया वृतवन्तमेनं यूयमेवानयत तथा सत्येतावत्पर्यन्तमस्वीकारकृतदुःखमस्य निवर्तेत । हरिश्रेष्ठ ! तस्य दुःखनिवृत्तये त्वमेव गत्वाऽऽनयसि चेन्मयि स्नेहवद्भ्यो हरिभ्यः श्रेष्ठं भवन्तमतिक्रम्य किमहं स्वीकरोमि । दत्तमस्याभयं मया अस्य स्वबन्धुत्यागपूर्वकं स्वनिकर्षकीर्तनपुरस्सरं चागतस्य

तवास्मीति च याचते उभयोरन्यतरेणापि युक्तायेत्यर्थः । यद्वा प्रपन्नायेत्युपायः कथ्यते । तवास्मीति तच्छेषवृत्तिलक्षणा फलविशेषप्रार्थना । एवंविधायाधिकारिणे । सर्वभूतेभ्य इति " भीत्रार्थानां भयहेतुः " इति पञ्चमी । भयहेतुतया शङ्कितेभ्यो भूतेभ्यः ब्रह्मपर्यन्तसर्वभूतेभ्योऽभयं भयाभावं ददामि । अभयमेव मोक्षो नाम " अथ सोऽभयं गतो भवति, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति " इति ब्रह्मविद्याफलत्वेन श्रवणात्तवास्मीति फलविशेषमाप्नोति । पक्षस्यानुकूलं पक्षान्तरं चातुर्वर्गिकफलानामप्येतदुपलक्षणम् । स्वस्य सकलफलप्रदत्वादेतद्व्रतं मम सत्यसन्धस्य कस्याञ्चिद्दशायामपरित्यागयोग्यमादाय सिद्धं सदाचरण शीलमित्यर्थः । ददामीति वर्तमानप्रयोगेणाभयप्रदानस्य यावदात्मभावित्वं द्योत्यते ॥३५॥ स्वयं विभीषणो वा अन्यो वेति न ज्ञायते, कथमेवमविचार्याभयं दीयत इत्याशङ्क्यायं विभीषणो वा भवतु यदि वा रावणो वा भवतु । राघवं शरणं गत इति वाक्यश्रवणानन्तरमेव अभयमस्मै दत्तम्, किं विचारेणेत्याह—आनयैन मिति । अयं विभीषणो वा भवतु यदि वा रावणः स्वयम्, विभीषणवेषधारी [illegible] वा भवतु अस्य मया शरणागतरक्षणव्रतैकदीक्षादक्षेण

मया मित्रभावेनैवालमिति मन्यमानेन अभयं दत्तम्, शरणशब्दश्रवणकाल एवेति शेषः । कथमानयेयमित्याकुलितं समाधत्ते विभीषणो वेत्यादिना। विभीषणोवा "विभीषणस्तु धर्मात्मा" इति विभीषणस्वीकारो धर्मवत्स्वीकारतया नोत्कर्षाय। रावणस्य नृशंसस्येति रावणस्वीकार एवोत्कर्षः स्यादिति । विभीषणस्वीकारे तत्परिकराश्चत्वार एव रक्षिताः स्युः । रावणस्वीकारे तु लङ्कास्थाः सर्वेऽपि रक्षिताः स्युरिति महान् लाभः । सुग्रीव ! अस्माकमागतोऽतिशयो युष्माकं तुल्यः खलु, 'एकं दुःखं सुखं च नौ' इत्युक्तेः । यदि वा रावणः स्वयं यत्सम्बन्धेन विभीषणेऽप्यतिशङ्का स एवास्तु।

रामस्य तु वचः श्रुत्वा सुग्रीवः प्लवगेश्वरः । प्रत्यभाषत काकुत्स्थं सौहार्देन प्रचोदितः ॥ ३७ ॥
किमत्र चित्रं धर्मज्ञ लोकनाथ सुखावह। यत्त्वमार्य प्रभाषेथाः सत्त्ववान् सत्पथे स्थितः ॥ ३८ ॥

स्वयम् सीतामपुरस्कृत्य स्वयमागतो रावणो वाऽस्तु। यद्वा स्वयम् अयं यदि विभीषणो न भवति किंतु कामरूपी रावण एव विभीषणभूमिकां परिगृह्य यद्यागतः तथाप्यस्याभयं मया दत्तम् । त्वमपि रावणोऽयं न तु विभीषण इति विज्ञापनायापि पुनर्नागच्छेः, किंत्वानयैवेत्यर्थः ॥ ३६ ॥ अथ सुग्रीवः क्वचिदप्यसम्भावितं रामस्य शरणागते स्वस्मिंश्च सौहार्दातिशयमालोच्य विस्मयपरवश आह-रामस्येति । सौहार्देन प्रचोदितः सर्वानपि दोषाननालोच्य विपरीतप्रवृत्तान् पूर्वसुहृदो नानाप्रकारैरनुनीय ' यदि वा रावणः स्वयम् ' इति वदतो रामचन्द्रस्य कोऽयं सौहार्दातिशय इति विस्मयेन प्रेरित इत्यर्थः ॥ ३७ ॥ एवं विस्मयातिशयाद्वक्तुमुपक्रान्तो रामस्य स्वाभाविकान् कल्याणगुणौघानालोच्य सहजधर्मत्वादेतद्रामे नाश्चर्यकरमित्याह-किमिति। धर्मज्ञ। धर्मसूक्ष्मतत्त्वज्ञस्य तव धर्मानुष्ठानं किमाश्चर्यम्। लोकनाथ। भृत्यवर्गसंरक्षणं स्वामिनः किं चित्रम्। सुखावह। स्वयमवाप्तसमस्तकामत्वेन परप्रयोजनैकपरायणस्य सर्वसुखकारिणस्तव शरणागतेषु समाश्रितेष्वस्मासु सुखकारित्वे को वा विस्मयः। आर्य समीचीनम् । सत्त्ववान् प्रशस्ताध्यवसायवान् । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु"इत्यमरः। दृढव्रतस्य व्रतपरिपालनं किमद्भुतम्। यद्वा सत्त्वं बलम्, सर्वशक्तेस्तव

अभयं दत्तम्, त्वमपि रावणोऽयं न तु विभीषण इति विज्ञापनाय पुनः पुनर्नागच्छेः किन्त्वानयैवेत्यर्थः ॥३६॥३७॥ अथ सुग्रीवः क्वचिदप्यसम्भावितशरणागतरक्षणं स्वस्मिन् सौहार्दातिशयं चालोच्य विस्मयपरवश आह-किमत्रेति । धर्मज्ञ शरणागतरक्षणधर्मरहस्यज्ञ ! लोकनाथ सर्वजनस्वामिन् ! सुखावह सर्वजनानन्दकारिन् ! त्वं सत्त्ववान् सत्त्वगुणैकनिष्ठः सत्पथे स्थितस्सन् आर्य कल्याणं प्रभाषेथा इति यत् अत्र किं चित्रम् ? धर्मसंस्थापनार्थमेवावतीर्णस्य तव शरणागत

समाश्रितभयनिवारणं किमाश्चर्यम् । सत्पथे स्थितः, धर्मसंस्थापनार्थमेवावतीर्णस्य शरणागतरक्षणरूपविशेषधर्मानुष्ठानं नाश्चर्यमित्यर्थः । प्रपन्नसंरक्षणे धर्मज्ञत्वादिष्वन्यतम एव गुणः पर्याप्तः, किमुत सर्वेऽपि समुदिता इति भावः ॥३८॥ किमस्मत्प्रशंसनेन त्वन्मनःप्रवृत्तौ खलु विभीषणो ग्राह्यः स्यात्तत्राह—ममेति। मम 'वध्यतामेष तीव्रेण दण्डेन' इत्युक्तवतोऽपि। न केवलमस्मिन्नर्थे मदन्तःकरणप्रवृत्तिरेकमेव प्रमाणम्, प्रमाणान्तराण्यपि सन्तीत्याह अनुमानादिति। अनुमानात् त्वया हनुमता चोक्तयुक्तिकदम्बात् भावात् भावबोधकान्मुखप्रसादादिलिङ्गात् । सर्वतः सर्वत्र, अन्तर्बहिश्च

**मम चाप्यन्तरात्माऽयं शुद्धं वेत्ति विभीषणम् । अनुमानाच्च भावाच्च सर्वतः सुपरीक्षितः ॥ ३९ ॥ तस्मात् क्षिप्रं सहास्माभिस्तुल्यो भवतु राघव । विभीषणो महाप्राज्ञः सखित्वं चाभ्युपैतु नः ॥४०॥ ततस्तु सुग्रीववचो निशम्य तद्धरीश्वरेणाभिहितं नरेश्वरः । विभीषणेनाशु जगाम सङ्गमं पतत्रिराजेन यथा पुरन्दरः ॥ ४१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे अष्टादशः सर्गः ॥ १८ ॥**

इत्यर्थः । यद्वा अनुमानात् हृदयप्रकाशकमुखविकासादिलिङ्गात् । भावादार्तध्वनिप्रकाशितमृदुस्वभावात् । चशब्देन वध्यतामपीत्युक्तावस्थायां न त्यजेयमिति कालेऽप्येकरूपत्वं समुच्चीयते । सुपरीक्षितः संशयविपर्ययराहित्येन परीक्षितः । अन्तरात्मा अन्तःकरणम् । चापीति रामान्तःकरणसमुच्चयार्थः ॥ ३९ ॥ पूर्वमानयैनमिति नियुक्तमनुतिष्ठति—तस्मादिति । क्षिप्रं पूर्वमज्ञानवशान्मया पापमाचरितम् । तत्त्वविचारे त्वयं क्षणमात्रं विलम्बो नर्ह इति भावः । तुल्यो भवतु निवेदयत मामिति पुरुषकारकरणायाभ्यर्थितानां नृशंसानामस्माकं पुरुषकारत्वं सम्पादयितुमेव तवायं प्रयासश्च सिद्धः । इतः परमस्माभिः पुरुषकारव्यापारः क्रियत इत्यर्थः । एवं विभीषणस्य पुरुषार्थमर्थयित्वा तत्सख्यरूपं स्वेषां पुरुषार्थमर्थयते—विभीषण इति । महाप्राज्ञः फलसाधनोपयोगिज्ञानवान् । न केवलं ममैव, सर्वेषामिदं फलं समानमिति दर्शयितुं नः सखित्वमित्युक्तम् ॥ ४० ॥ एवं सुहृत्तरसुग्रीवा

रक्षणरूपविशेषधर्मानुष्ठानं नाश्चर्यमेवेत्यर्थः । प्रपन्नसंरक्षणे धर्मज्ञत्वादिष्वन्यतम एव गुणः पर्याप्तः किमुत सर्वेऽपि समुदिताश्चेदिति भावः ॥३८॥ मम "वध्यतामेष तीव्रेण दण्डेन" इत्युक्तवतः अन्तरात्मा अन्तःकरणं विभीषणं शुद्धं वेत्ति । किञ्चानुमानात् त्वदुक्तयुक्तिसमूहात्, भावात् अभिप्रायबोधकमुखप्रसादाल्लिङ्गात् । सर्वतः अन्तर्बहिश्च सुपरीक्षितः शुद्धत्वेन सम्यङ्निश्चितः ॥ ३९ ॥ ४० ॥ तत इति । नरेश्वरः यथोक्तं यथावदुक्तं तद्वचनं 'मम चाप्यन्तरात्माऽयं शुद्धं वेत्ति विभीषणम्'



स०—हरीश्वरेण हनुमताऽभिहितं विभीषणेन सङ्गमं सख्यं जगाम, मनसेति शेषः । पतत्रिराजेन गरुडेन पुरन्दरो यथा अमृतहरणकाले सख्यं जगाम तद्वत् ॥ ४१ ॥

भ्यनुज्ञानानन्तरं शरण्यस्य शरणागतसङ्गमविशेषं दर्शयति ततः इति । सुग्रीववचो निशम्य ततो हरीश्वरेणाभिहितं विभीषणेन सङ्गमं जगामेत्य न्वयः । अभिहितं हे विभीषण । राघवस्तवाभयं दत्तवान् राघवमुपयाहीत्येवं सुग्रीवोक्तम् । नरेश्वरः सङ्गमं जगामेति सङ्गमोऽपि कर्तुरीप्सिततमत्वकथनेन रामस्यायं लाभ इति गम्यते । न त्यजेयं कथंचनेत्यादिभिः सुग्रीवादिवाक्यरूपविरोधिनिरसनपूर्वकं श्रीविभीषणस्वीकारं प्रतिश्रुत्य कथंचित्सुग्रीवादि वाक्यजनितं विलम्बमविषह्य त्वरया रक्षितुं स्वयमेव तेन सङ्गत इत्याह विभीषणेनाशु जगाम सङ्गममिति । आशु त्वरितम् । आश्रितसंश्लेषे स्वयं त्वरातिशयवानिति भावः । पुरन्दरो यथा पतत्रिराजेन सङ्गमं स्वलाभममन्यत तथाऽयमपीति दृष्टान्ताभिप्रायः । यद्वा सुग्रीवस्य बुद्धिः पुनर्विपरीता चेत्कार्यहानिरिति शीघ्रं जगाम ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टादशः सर्गः ॥१८॥

राघवेणाभये दत्ते सन्नतो रावणानुजः । विभीषणो महाप्राज्ञो भूमिं समवलोकयन् ।
खात्पपातावनौ हृष्टो भक्तैरनुचरैः सह ॥ १ ॥

एवं शरण्यस्य शरणागतसङ्गमरूपफलमुक्त्वा शरणागतस्य शरण्यसेवाख्यपुरुषार्थलाभमाह—राघवेणेत्यादिसार्धश्लोक एकान्वयः । अभये स्वापेक्षिते सर्वभूताभये दत्ते । सन्नतः 'गुणैर्दास्यमुपागतः' इति न्यायेन पूर्वश्रुतेभ्योऽप्यधिकानां रामकल्याणगुणानां साक्षात्कारेण सम्यक्प्रह्वीभूताङ्गः । महाप्राज्ञः निरपायोपायपरिग्रहेण परमपुरुषार्थलाभाद्वेदशास्त्राभ्यासातिशयजनितप्रज्ञातिशयस्य फलमिदानीं निर्वृत्तमिति भावः । भूमिं समवलोकयन् अन्तरङ्गसचिवसमूहसम्मर्दनिरवकाशेऽपि रामपुरोदेशे सचिवैरेव सयूथ्यतामापन्नस्य विभीषणस्य स्वपरिषन्मध्ये दत्तं भूतलावकाशं सम्यक्पश्यन् । खादवनौ पपातेति प्राथमिको दूरप्रणाम उच्यते । प्रणामाद्ययोग्यस्थानमाकाशं परित्यज्य पाणिपादशिरःप्रभृतिभिरष्टाङ्गैर्भूमिं प्राप्तवानित्यर्थः ।

इत्यादि सुग्रीववचनं निशम्य ततः हरीश्वरेणाभिहितं विभीषणसङ्गमं जगामेति सम्बन्धः ॥ ४१ ॥ इति श्रीमहे० श्रीरामा० युद्धकाण्ड० अष्टादशः सर्गः ॥ १८ ॥
राघवेणेति । सन्नतः स्वामिसन्निधौ पादपुरस्सरावरोहणमनुचितमिति मत्वा प्रह्वीभूतशिरस्कस्सन्नित्यर्थः । भूमिम् आनयनोद्युक्तैः सुग्रीवादिभिरित आगच्छेति

स०—सन्नतः प्रवणः । सत्स्वभावत्वात्सत्सु नत इति वा । भूमिं समवलोकयत्, अवतरणायेति भावः । हृष्टः महालाभो जात इति प्रीतमनाः । रामस्य पादयोः, अनेन न केवलमयमम्बरचर ऐहिकफलावलम्बी, किन्तु मोक्षज्ञानानन्दाद्यर्थी चेति सूचयति । यथोक्तं बृहदारण्यकोपनिषद्भाष्ययोः "सुवरिति प्रतिष्ठे द्वे एते प्रतिष्ठे द्वे एते अक्षरे" "स्वित्यानन्दस्समुद्दिष्टो वरिति ज्ञानमुच्यते । मोक्षदानेन तद्दानात्सुवरस्य पदद्वयम् ।

नन्वपेक्षितमभयं दत्तमेव पुनः किमर्थं प्रणनामेत्यत्राह हृष्ट इति । रामस्य स्वरूपरूपगुणानुभवजनितहर्षविवशीकृतशरीर एव प्रणतः । न तु किमपि प्रयोजनमुद्दिश्येत्यर्थः । भक्तैरनुचरैः सहेति "राघवं शरणं गतः । निवेदयत माम्" इति विभीषणस्यैकस्यैवोपायानुष्ठानश्रवणेऽपि तदनुबन्धिनां तद्भक्तिवशादेव रामपरिचरणं समानमित्युच्यते। उक्तं हि "पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम् ॥" इति ॥ १ ॥ पूर्वं वाचिका प्रपत्तिः कृता, सम्प्रति कायिकशरणागतिं प्रयुङ्क्ते—स त्विति । स तु पूर्वस्माद्विलक्षणः, संशयविपर्ययनिवृत्त्या अनुकूलत्व

**स तु रामस्य धर्मात्मा निपपात विभीषणः । पादयोः शरणान्वेषी चतुर्भिः सह राक्षसैः ॥ २ ॥**
**अब्रवीच्च तदा रामं वाक्यं तत्र विभीषणः । धर्मयुक्तं च युक्तं च साम्प्रतं सम्प्रहर्षणम् ॥ ३ ॥**

निर्णयविषय इत्यर्थः । धर्मात्मा सर्वावस्थास्वप्यप्रच्युतशरणागतिधर्मनिष्ठावान् । वध्यतामिति शङ्क्यतामिति न त्यजेयमिति आनयैनमिति अस्माभिस्तुल्यो भवत्विति चोक्तासु सर्वावस्थास्वप्यविचारेणैकरूपचित्त इत्यर्थः । अनेन विभीषणस्य महाविश्वास उक्तः । शरणान्वेषी कृतशरणवरणः । विभीषणः, रामस्य स्वस्मिन् पक्षपातातिशयद्योतकाभिरामाकारस्य । पादयोः स्तनन्धयस्य मातृस्तनवत् श्रीपादावेव स्वस्य भोग्यभूताविति पपात, अन्यैरागत्य प्रशिथिलानवयवान् सम्यग्योजयित्वा यथोत्थाप्येत तथा पपात । चतुर्भिः सह राक्षसैः, करचरणाद्यवयववत्तत्परतन्त्रैरित्यर्थः । तत्रानुकूल्यसङ्कल्पप्रातिकूल्यवर्जनवत्त्वमुक्तम् । धर्मात्मेति महाविश्वासः शरणान्वेषीति गोप्तृत्ववरणं पपातेत्यात्मनिक्षेप इति साङ्गशरणागतिः कृता भवति ॥ २ ॥ एवं कायिकी शरणागतिरुक्ता, अथ वाचिकीं दर्शयति—अब्रवीदिति । तदा पादपतनसमये । तत्र सुग्रीवादीनां सर्वेषामेकमत्यवति सदसि ।

निर्दिष्टां भुवम् । हृष्टः अभिमतवस्तुलाभजनितप्रीतियुक्तः ॥ १ ॥ पादयोर्निपपातेत्यनेन स्तनन्धयस्य मातुः स्तनाविव शरणागतस्य शरण्यस्य पादारविन्दद्वयमेव भोग्यत्वेन परमप्राप्यमिति द्योत्यते ॥ २ ॥ अब्रवीदिति । तत्र सुग्रीवादिसचिवसमेतरामसन्निधौ । युक्तं युक्तियुक्तम् । साम्प्रतं संप्रहर्षणं सद्यस्सन्तोषकरम् ॥ ३ ॥

—दक्षिणश्चेति सव्यश्च" इति । अथ अवतरणानन्तरम् । चतुर्भिस्सचिवैः सह सहितः । यः निपपाता नितरां पान्ति जगदिति निपाः ब्रह्माद्याः तान् पाति स्वभावेन न फलाशयेति निपपाता । तं रामं प्रति विभीषणोऽब्रवीदिति श्लोकद्वयस्यैकान्वयः । अथवा स्वयं पादयोर्निपपात । स्वामित्वात्तस्य प्रथमतः प्रणामः । अथ अनन्तरं स विभीषणः चतुर्भिः सचिवैस्सह निपपात । अथवा खात्पपातेति पूर्वम् । अनन्तरं रामस्य समीपत इति शेषः । अथ तदनन्तरं चतुर्भी राक्षसैस्सह रामस्य पादयोर्निपपात । एतं विशेषं तुशब्द उद्बोधयति । अथ विभीषणस्य रामपादनिपतनानन्तरम् । स रावणः चतुर्भी राक्षसैः कुम्भकर्णमहापार्श्वेन्द्रजित्प्रहस्तैस्सह निपपातेति मध्य एव्यनयेन कविवचनं वा चतुर्भिरभिहितैस्सहेतरराक्षसैर्वा रामप्रणिपातस्तन्निपातहेतुरिति भावः ॥ १ ॥ २ ॥

रामं पूर्वं सुग्रीवादिपुरुषकारभूतान् प्रति, सम्प्रति शरण्यमेव । धर्मयुक्तं शरणागत्यङ्गानुकूल्यसङ्कल्पादिधर्मयुक्तम् । युक्तं समर्थकारुणिकशरण्यविषयतया योग्यम् । साम्प्रतं सम्प्रहर्षणम् पूर्वं 'राघवं शरणं गतः' इत्युक्तिदशायां सुग्रीवादीनां श्रुतिकटुकं जातम्, इदानीं सर्वसम्प्रहर्षणम् ॥ ३ ॥ अनुज इति । पूर्वं निवेदयतेत्यत्र पुरुषकारभूतान् प्रत्युक्तम्, इदानीं साक्षाच्छरण्यं प्रतीति न पुनरुक्तिः । पूर्वार्धेन स्वदोषख्यापनादाकिञ्चन्यमुक्तम् । सर्वभूतानां शरण्यं रावणस्यापि शरणं भवामीति कृतसङ्कल्पम् । भवन्तं ज्ञानशक्त्यादिपरिपूर्णम् ॥ ४ ॥ अनन्तरं प्राप्यान्तरनिरसनपूर्वकं त्वमेव प्राप्य इत्याह—

अनुजो रावणस्याहं तेन चाप्यवमानितः । भवन्तं सर्वभूतानां शरण्यं शरणागतः ॥ ४ ॥
परित्यक्ता मया लङ्का मित्राणि च धनानि वै । भवद्गतं मे राज्यं च जीवितं च सुखानि च ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा रामो वचनमब्रवीत् । वचसा सान्त्वयित्वैनं लोचनाभ्यां पिबन्निव ॥ ६ ॥

परित्यक्तेति । लङ्का वासस्थानम् । मित्राणि सुहृदः । धनानि तद्द्वारा समागतानि, सोपाधिकानि वस्तूनि प्राप्यान्तराणि त्यक्तानीत्यर्थः । भवद्गतं त्वदधीनम् । राज्यमिति सर्वपरिग्रहोपलक्षणम् । जीवितमिति धारकपोषकभोग्योपलक्षणम् । सुखानि ऐहिकामुष्मिकरूपाणि । इदं सर्वं भवद्गतं भवत्कैङ्कर्यान्तर्गतम्, भवत्कैङ्कर्यं विना अन्यन्नाहमभ्यर्थयामीत्यर्थः ॥ ५ ॥ तस्येति । तस्य सर्वपरिग्रहत्यागपूर्वकं रामे न्यस्तभरस्य । तद्वचनं रामकैङ्कर्यमेव सकलभोग्यजातमिति वाक्यम् । सान्त्वयित्वा शरणं गत इत्युक्तिसमय एव स्वीकार्योऽसि एतावत्पर्यन्तं विलम्बः क्षन्तव्य इति सान्त्ववचनान्युक्त्वा

'त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणङ्गतः' इत्यादि सुग्रीवादिसर्ववानरसन्निधौ कृतं प्रलपनं शरण्यरामप्रीतिवर्द्धनाय पुनरप्यनुसन्धत्ते—अनुज इति ॥ ४ ॥ परित्यक्तेति । मे राज्यादिकं सर्वं भवद्गतं वै भवदधीनमेव ॥ ५–११ ॥

स०—भवन्तं सर्वभूतानां शरण्यम् अनेनाग्रजस्य महाद्रोहेण सहवासायोग्यतां स्वस्य श्रीरामे भगवदवतारतामतिं च सूचयति ॥४॥ मित्राणि पूर्वं मित्रवदनुक्तानि । परित्यक्तानीति लिङ्गवचनव्यत्यासेन वा यस्यां मित्राणि धनानि च सा लङ्का परित्यक्तेति वाऽन्वयः । मे राज्यम् । जीवितं जीवनम् । सुखानि ऐहलौकिकानि पारलौकिकानि च भवद्गतानि पूर्वस्मात्परित्यक्ता मया लङ्केत्यावृत्तं सद्भवद्गतेति विपरिणतेनान्वेति । परित्यक्तः आमयो रोगरूपी प्राकाराद्यङ्गभङ्गकारित्वाद्रावणः यया सा लङ्का भवद्गता । एतेन एकां मूलनगरीं स्थापयित्वा वा स्वस्यास्त्विति रामेण गृहीत्वा राज्यप्रदानं नाभिप्रेतं विभीषणेन रामपदान्यताङ्गेनेति भावः ॥ ५ ॥

लोचनाभ्यां पिबन्निव सान्त्ववचनेन तस्य हृदयमार्द्रं कृत्वा अत्यादरेण विलोकयन्नित्यर्थः ॥ ६ ॥ एवं विभीषणेन कायिककैङ्कर्ये प्रार्थिते कायिककैङ्कर्यं पश्चात् भविष्यतीति सम्प्रति वाचिककैङ्कर्यं कुर्वीति दर्शयति–आख्याहीति । अत्र भवदीयानामित्यनुक्त्वा राक्षसानामित्युक्तेरयं राक्षसजातिर्न भवति किन्त्विक्ष्वाकुवंश्य इति रामो मेने इति गम्यते। भ्रमरकीटन्यायेन सद्यः स्वसाम्यप्रदं हि भगवदाश्रयणवैभवम् ॥ ७ ॥ एवमिति।

आख्याहि मम तत्त्वेन राक्षसानां बलाबलम् ॥ ७ ॥ एवमुक्त तदा रक्षो रामेणाक्लिष्टकर्मणा । रावणस्य बलं सर्व माख्यातुमुपचक्रमे ॥ ८ ॥ अवध्यः सर्वभूतानां गन्धर्वासुररक्षसाम्। राजपुत्र दशग्रीवो वरदानात् स्वयम्भुवः ॥ ९ ॥ रावणानन्तरो भ्राता मम ज्येष्ठश्च वीर्यवान् । कुम्भकर्णो महातेजाः शक्रप्रतिबलो युधि ॥ १० ॥ राम सेनापतिस्तस्य प्रहस्तो यदि वा श्रुतः। कैलासे यन सङ्ग्रामे माणिभद्रः पराजितः ॥ ११ ॥ बद्धगोधाङ्गुलित्राण स्त्ववध्यकवचो युधि। धनुरादाय यस्तिष्ठन्नदृश्यो भवतीन्द्रजित् ॥१२॥ संग्रामसमयव्यूहे तर्पयित्वा हुताशनम् । अन्तर्धानगतः शत्रूनिन्द्रजिद्धन्ति राघव ॥ १३ ॥ महोदरमहापार्श्वौ राक्षसश्चाप्यकम्पनः । अनीकस्थास्तु तस्यैते लोकपालसमा युधि ॥ १४ ॥

स्पष्टम् ॥ ८ ॥ अवध्य इति । सर्वभूतानामित्येतद्गन्धर्वादिव्यतिरिक्तपरम् । राजपुत्रेति सम्बुद्ध्या मानुषवध्यत्वं द्योतयति ॥ ९ ॥ प्रतिबलः समान बलः ॥ १० ॥ कैलासे, वर्तमान इति शेषः। माणिभद्रः कुबेरसेनापतिः । यदि वा श्रुत इति, हनुमत इति शेषः ॥ ११॥ बद्धेति। अङ्गुलीस्त्रायत इत्य ङ्गुलित्राणम् अङ्गुलिकवचम्। "गोधा तलं ज्याघातवारणे" इत्यमरः। अनेन निरन्तरशरसन्धायीति गम्यते। अवध्यकवचः अभेद्यकवचः। युधि अदृश्यो भवतीत्यन्वयः। हनुमद्ग्राहकत्वेन प्रसिद्धत्वात्तस्य रावणपुत्रत्वानुक्तिः ॥ १२ ॥ कुतोऽस्यादृश्यत्वशक्तिः अदृश्यश्च किं करोतीत्याह– सङ्ग्रामेति। सङ्ग्रामसमयकृतव्यूहे। तर्पयित्वा होमैः प्रीणयित्वा ॥ १३ ॥ महोदर इत्यादि श्लोकद्वयम् । अनीकस्थाः सेनापतयः । एते महोदरादयः।



बद्धगोधाङ्गुलित्राणः गोधा ज्याघातवारणम् । अङ्गुलित्राणमङ्गुलिवारणम् ॥ १२ ॥ सङ्ग्रामसमयव्यूहे सङ्ग्रामसमयकृतव्यूहे ॥ १३ ॥ १४ ॥

दशकोटिसहस्राणि, सन्तीति शेषः॥१४॥१५॥ स तैरित्यर्द्धम् ॥१६॥ न केवलं योधयत्, पराजितवांश्च ते लोकपाला इत्याह—सह देवैरित्यर्धमेकं वाक्यम्। देवैः लोकपालभिन्नैः। ते लोकपालाः। महात्मना महाधैर्येण ॥ १७ ॥ अन्वीक्ष्य आलोच्य। सर्वं कर्तव्याकर्तव्यम् ॥ १८ ॥ यानीति । कर्मापदानानि "अपदानं कर्मवृत्तम्" इत्यमरः। कारिकलभ इत्यत्रेव कर्मशब्दप्रयोगः। शौर्यकृतव्यापारा इत्यर्थः। अवगच्छामि अवधारयामीत्यर्थः ॥ १९॥ आलो

दशकोटिसहस्राणि रक्षसां कामरूपिणाम्। मांसशोणितभक्षाणां लङ्कापुरनिवासिनाम् ॥ १५ ॥ स तैस्तु सहितो राजा लोकपालानयोधयत् ॥ १६ ॥ सह देवैस्तु ते भग्ना रावणेन महात्मना ॥ १७ ॥ विभीषणवचः श्रुत्वा रामो दृढपराक्रमः। अन्वीक्ष्य मनसा सर्वमिदं वचनमब्रवीत् ॥ १८ ॥ यानि कर्मापदानानि रावणस्य विभीषण। आख्यातानि च तत्त्वेन ह्यवगच्छामि तान्यहम् ॥ १९ ॥ अहं हत्वा दशग्रीवं सप्रहस्तं सबान्धवम्। राजानं त्वां करिष्यामि सत्यमेतद् ब्रवीमि ते ॥ २० ॥ रसातलं वा प्रविशेत् पातालं वापि रावणः। पितामहसकाशं वा न मे जीवन् विमोक्ष्यते ॥ २१ ॥ अहत्वा रावणं सङ्ख्ये सपुत्रबलबान्धवम्। अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैर्भ्रातृभिः शपे ॥ २२ ॥ श्रुत्वा तु वचनं तस्य रामस्याक्लिष्टकर्मणः। शिरसाऽऽवन्द्य धर्मात्मा वक्तुमेवोपचक्रमे ॥ २३ ॥

चितमर्थमाह—अहमित्यादिना ॥ २० ॥ रसातलं भूविवरम्। पातालम् अधोलोकम्। पितामहसकाशं स्ववरप्रदसमीपम्। उपरितनलोकावधिभूतं सत्य लोकं वा। मे मत्तः ॥ २१ ॥ उक्तमर्थं व्यतिरेकमुखेन द्रढयन् सत्यमेतद्ब्रवीमि त इत्युक्तं विवृणोति—अहत्वेति। सङ्ख्ये युद्धे। तैः प्रसिद्धैः। भ्रातृभि रिति हेतुविवक्षया तृतीया ॥ २२ ॥ स्वानभिमतराज्यप्रदानप्रतिज्ञानात् वन्दनपूर्वकं स्वाभिमतं कैङ्कर्यमेव प्रयोजनान्तरनिवृत्तयेऽर्थयते—श्रुत्वेत्या

दशकोटीति प्रधानराक्षसविवक्षया ॥ १५-२० ॥ रसातलं भूमिसान्निहितलोकम्। पातालम् अधोलोकावधिभूतं लोकम्। पितामहसकाशं ब्रह्मलोकम्। मे, पुरतः इति शेषः ॥ २१ ॥ अहत्वेति। तैस्सौभ्रात्रसम्पन्नतया प्रसिद्धैः ॥ २२ ॥ २३ ॥

स०—रामप्रतिज्ञां श्रुत्वा विभीषणोऽपि प्रतिश्रृणोतीत्याह—वक्तुमेवेति। एवकारेण सर्वस्वामिनो रामस्य साहाय्यकरणवचनमुपहास्यम्, तथापि लौकिकरीत्यनुपालनार्थमिदमिति सूचयति ॥ २३ ॥

दिना । आवन्योति च्छेदः ॥ २३ ॥ राक्षसानामिति । साह्यं साहाय्यम् । सहशब्दः सहायवाची । यथाप्राणं यथाबलम् ॥ २४ ॥ एवं कैङ्कर्य व्यतिरिक्तफलमनाकाङ्क्षमाणं विभीषणं परिष्वङ्गेन वशीकृत्यानुषङ्गिकमपि फलं मत्प्रदत्तमङ्गीकर्तव्यमित्यभिप्रायेण लक्ष्मणमादिशति–इतीति । तेनेति । तेन समुद्रजलेन । महाप्राज्ञं कैङ्कर्यपर्यन्तस्वशेषत्वस्वरूपज्ञम् । मयि प्रसन्ने सतीत्यनेन अभिषेको विभीषणेनानाकाङ्क्षित इति गम्यते । मानद बहुमानप्रद, मत्प्रसादे सति फलप्रदस्त्वमिति भावः ॥ २५ ॥ २६ ॥ एवमिति । मध्ये वानरमुख्यानामित्यनेन महत्समाजे

राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणम् । करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम् ॥ २४ ॥ इति ब्रुवाणं रामस्तु परिष्वज्य विभीषणम् । अब्रवील्लक्ष्मणं प्रीतः समुद्राज्जलमानय ॥ २५ ॥ तेन चेमं महाप्राज्ञमभिषिञ्च विभीषणम् । राजानं रक्षसां क्षिप्रं प्रसन्ने मयि मानद ॥ २६ ॥ एवमुक्तस्तु सौमित्रिरभ्यषिञ्चद्विभीषणम् । मध्ये वानरमुख्यानां राजानं राजशासनात् ॥ २७ ॥ तं प्रसादं तु रामस्य दृष्ट्वा सद्यः प्लवङ्गमाः । प्रचुक्रुशुर्महात्मानं साधु साध्विति चाब्रुवन् ॥ २८ ॥ अब्रवीच्च हनूमांश्च सुग्रीवश्च विभीषणम् ॥ २९ ॥ कथं सागरमक्षोभ्यं तराम वरुणालयम् । सैन्यैः परिवृताः सर्वे वानराणां महौजसाम् ॥ ३० ॥

कृतमलङ्घनीयमिति द्योत्यते । राजशासनादित्यनेनालङ्घनीयं राजशासनमिति विभीषणोऽनुमेन इति भाव्यते ॥ २७ ॥ प्रचुक्रुशुः हर्षनादं चक्रुः । महात्मानं रामम् । अब्रुवन् प्राशंसन्नित्यर्थः ॥ २८ ॥ अथ समयान्तरे कुत्रचिदेकान्ते प्रदेशे हनुमत्सुग्रीवौ स्थलज्ञं विभीषणं वानरसेनातरणोपाय मपृच्छतामित्याह–अब्रवीचेति । इदमर्धमेकं वाक्यम् ॥ २९ ॥ कथमिति । दुस्तरत्वे हेतुः अक्षोभ्यमिति । तत्रापि हेतुः वरुणालयमिति ॥ ३० ॥

राक्षसानामिति । साह्यं साहाय्यम् ॥ २४–३० ॥

स०–राजानं लङ्कायाः । राजशासनात् रामाज्ञयाः । रावणावरजस्य स्वावरजेनाभिषेचनं युक्तमिति वा इदानीं रावणमारणदीक्षाबन्धाद्व्यापारान्तरस्याकरणीयतया वा साक्षात्पितामह एवाभिषेकयोग्यो नान्य इति वा लक्ष्मणेनाभिषेचनमिति मन्तव्यम् । राजशासनात् राजा रावणः तच्छासनं शिक्षां तृणीकृत्येति वा । ल्यब्लोपनिमित्ता पञ्चमी ॥ २७ ॥

बुद्धिमन्तो भवन्त एव विचारयन्तीत्यत्राह—उपायं नाधिगच्छाम इति । सर्वे, वयमिति शेषः ॥ ३१ ॥ समुद्रमित्यर्धम् । लक्ष्मणव्यावृत्तये राजेत्युक्तिः ॥ ३२ ॥ शरणवरणं व्याजीकृत्य समुद्रः प्रत्यासक्त्यतिशयात्सद्य उपायं दिशेदित्यभिप्रायेणाह—खानित इति । खानितः, स्वपुत्रैरिति शेषः । न केवल मुत्पत्तिमात्रं तन्मूलम्, किंत्वतिशयोऽपि तदधीन इत्याह अप्रमेयो महोदधिरिति । सगरेण रामकूटस्थेन । महामतिः उपकारज्ञ इत्यर्थः ॥ ३३ ॥

उपायं नाधिगच्छामो यथा नदनदीपतिम् । तराम तरसा सर्वे ससैन्या वरुणालयम् । एवमुक्तस्तु धर्मज्ञः प्रत्युवाच विभीषणः ॥ ३१ ॥ समुद्रं राघवो राजा शरणं गन्तुमर्हति ॥ ३२ ॥ खानितः सगरेणायमप्रमेयो महोदधिः । कर्तुं मर्हति रामस्य ज्ञात्वा कार्यं महामतिः ॥ ३३ ॥ एवं विभीषणेनोक्तो राक्षसेन विपश्चिता । आजगामाथ सुग्रीवो यत्र रामः सलक्ष्मणः ॥ ३४ ॥ ततश्चाख्यातुमारेभे विभीषणवचः शुभम् । सुग्रीवो विपुलग्रीवः सागरस्योपवेशनम् ॥ ३५ ॥ प्रकृत्या धर्मशीलस्य राघवस्याप्यरोचत ॥ ३६ ॥ स लक्ष्मणं महातेजाः सुग्रीवं च हरीश्वरम् । सत्क्रियार्थं क्रियादक्षः स्मितपूर्वमुवाच ह ॥ ३७ ॥

एवमिति । राक्षसेनेति स्थलज्ञतोक्ता । विपश्चितेति तात्कालिकबुद्धिमत्ता । आजगामेत्यनेन कालान्तरे देशान्तरे सुग्रीवादिप्रश्न इति गम्यते ॥ ३४ ॥ ततश्चेति । विपुलग्रीव इत्यनेन कुतूहलित्वमुक्तम् । आरेभ इत्यनेन आरम्भमात्र एव सूक्ष्मज्ञतया रामेण सहसा सुग्रीवविवक्षितं ज्ञातमित्युच्यते । उपवेशनम् उपासनम् ॥ ३५ ॥ प्रकृत्येत्यर्द्धमेकं वाक्यम् । अरोचत तदुपवेशनमित्यनुषङ्गः ॥ ३६ ॥ स इति । महातेजाः तात्कालिकहर्षप्रकाशक ।

उपायैरिति । उपायैः कैश्चिदुपायैः नदनदीपतिमधिगच्छामः अधिगमिष्यामः । ससैन्याः सर्वे तरसा वरुणालयं यथा तराम तदृशोपायान् वदेति शेषः उपायं नाधिगच्छामः इति पाठे—ससैन्या नदनदीपतिं वरुणालयं यथा तराम तादृशमुपायं नाधिगच्छामः, न जानीम इत्यर्थः ॥ ३१ ॥ ३२ ॥ शरणवरण मात्रेण कथमसौ कार्यं करिष्यतीत्याशङ्क्य कार्यकरणोपयुक्तं राघवसमुद्रयोः सम्बन्धं दर्शयति—खानित इति ॥ ३३ ॥ यत्र रामो वर्तते तं देशं लक्ष्मणस्सुग्रीव श्चाजगामेति सम्बन्धः ॥ ३४ ॥ ततश्चेति । सागरस्योपवेशनम् उपासनं राघवस्याप्यरोचत ॥ ३५ ॥ ३६ ॥ स इति । सत्क्रियार्थं लक्ष्मणसुग्रीवयोस्सम्मानार्थं

देहकान्तिमान् । अन्यान्विहाय सुग्रीवं प्रति वचने हेतुः हरीश्वरमिति । सत्क्रियार्थं विभीषणमन्त्रबहुमानार्थम् । क्रियादक्षः स्वयं कार्यकरणसमर्थोऽपि ॥ ३७ ॥ ३८ ॥ पण्डितः मन्त्रसमर्थः । उभाभ्यामिति चतुर्थी । अर्थं प्रयोजनम् । सम्प्रधार्य निश्चित्य । यत्कार्यमुभाभ्यां रोचते तदुच्यतामिति सम्बन्धः ॥ ३९ ॥ समुदाचारः अञ्जलिबन्धाद्युपचारः तत्संयुक्तमिति क्रियाविशेषणम् ॥ ४० ॥ अस्मिन्काले उपायमन्तरा दर्शनकाले । सुखावहम्

विभीषणस्य मन्त्रोऽयं मम लक्ष्मण रोचते । ब्रूहि त्वं सहसुग्रीवस्तवापि यदि रोचते ॥ ३८ ॥ सुग्रीवः पण्डितो नित्यं भवान् मन्त्रविचक्षणः । उभाभ्यां संप्रधार्यार्थं रोचते यत्तदुच्यताम् ॥ ३९ ॥ एवमुक्तौ तु तौ वीरावुभौ सुग्रीवलक्ष्मणौ । समुदाचारसंयुक्तमिदं वचनमूचतुः ॥ ४० ॥ किमर्थं नौ नरव्याघ्र न रोचिष्यति राघव । विभीषणेन यच्चोक्तमस्मिन् काले सुखावहम् ॥ ४१ ॥ अबद्ध्वा सागरे सेतुं घोरेऽस्मिन् वरुणालये । लङ्का नासादितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ४२ ॥ विभीषणस्य शूरस्य यथार्थं क्रियतां वचः । अलं कालात्ययं कृत्वा समुद्रोऽयं नियुज्यताम् । यथा सैन्येन गच्छामः पुरीं रावणपालिताम् ॥ ४३ ॥ एवमुक्तः कुशास्तीर्णे तीरे नदनदीपतेः । संविवेश तदा रामो वेद्यामिव हुताशनः ॥ ४४ ॥ इत्यार्षे श्रीरामायणे वाल्मी० श्रीमद्युद्धकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

अयत्नेन कार्यसाधकम् । नौ आवयोः ॥ ४१ ॥ रामशरणागतेः फलं सेतुबन्धनमित्याशयेनाह—अबद्ध्वेति । घोरे तिमितिमिङ्गिलादिसत्त्वाधिष्ठितत्वेन दुस्तरे । सेन्द्रैरिति । किंपुनरस्माभिरिति भावः ॥ ४२ ॥ शूरस्य मन्त्रशूरस्य । यथार्थं परमाप्तोक्तत्वादिति भावः । नियुज्यतां प्रार्थ्यताम् । यथेति । तथा नियुज्यतामिति पूर्वेणान्वयः ॥ ४३ ॥ संविवेश संवेशनमकरोत् । वेद्यामिव हुताशन इत्यनेन ज्वलिष्यमाणत्वं व्यज्यते ॥ ४४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥

स्मितपूर्वमुवाचेति सम्बन्धः ॥ ३७–३९ ॥ एवमिति । समुदाचारसंयुक्तं सोपचारमित्यर्थः ॥ ४०–४२ ॥ विभीषणस्येति । समुद्रोऽयं नियुज्यताम् समुद्रस्सेतुबन्धाय प्रार्थ्यताम् ॥ ४३ ॥ एवमिति । हुताशनदृष्टान्तेन तत्तेजोयुक्ततया कार्पण्याभावः सूचितः ॥ ४४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकोनविंशः सर्गः ॥ १९ ॥

अथ विभीषणनिर्गमनानन्तरं लङ्कावृत्तान्तं प्रस्तौति—तत इत्यादिना । निविष्टां समुद्रतीरस्थाम् । ध्वजिनीं सेनाम् । वीर्यवानिति दर्शनसाम र्थ्योक्तिः ॥ १ ॥ चार इत्यादि सार्द्धश्लोकः । दुरात्मनः दुर्बुद्धेः, अकाले चारप्रेषितुरित्यर्थः ॥ २ ॥ एष इति । अगाधः सेनापक्षे दुष्प्रवेश इत्यर्थः । अप्रमेयः अपरिच्छेद्यः ॥ ३ ॥ पुत्राविति । पदं स्थानम् प्रति आगतौ ॥ ४ ॥ एतावित्यर्द्धमेकम् ॥ ५ ॥ बलमिति । पूर्वं सेनासन्निवेशमात्रमुक्तम् ।

ततो निविष्टां ध्वजिनीं सुग्रीवेणाभिपालिताम् । ददर्श राक्षसोऽभ्येत्य शार्दूलो नाम वीर्यवान् ॥ १ ॥ चारो राक्षस राजस्य रावणस्य दुरात्मनः । तां दृष्ट्वा सर्वतो व्यग्रं प्रतिगम्य स राक्षसः । प्रविश्य लङ्कां वेगेन रावणं वाक्य मब्रवीत् ॥ २ ॥ एष वानरऋक्षौघो लङ्कां समभिवर्तते । अगाधश्चाप्रमेयश्च द्वितीय इव सागरः ॥ ३ ॥ पुत्रौ दशरथ स्येमौ भ्रातरौ रामलक्ष्मणौ । उत्तमायुधसम्पन्नौ सीतायाः पदमागतौ ॥ ४ ॥ एतौ सागरमासाद्य सन्निविष्टौ महा द्युती ॥ ५ ॥ बलमाकाशमावृत्य सर्वतो दशयोजनम् ॥ ६ ॥ तत्त्वभूतं महाराज क्षिप्रं वेदितुमर्हसि । तव दूता महाराज क्षिप्रमर्हन्त्यवेक्षितुम् ॥ ७ ॥ उपप्रदानं सान्त्वं वा भेदो वाऽत्र प्रयुज्यताम् ॥ ८ ॥

अत्र तद्विस्तार उच्यते । आकाशम् अवकाशम् । सर्वतः चतुःपार्श्वेषु । दशयोजनपरिमितमवकाशमावृत्य स्थितम् ॥ ६ ॥ तत्त्वभूतमिति । मया सामान्यतो ज्ञातं यथार्थभूतं यथा भवति तथा ज्ञातुमर्हसीत्यर्थः ॥ ७ ॥ उपप्रदानमित्यर्द्धमेकं वाक्यम् । दण्डस्य त्ववकाश एव नास्तीति भावः ।

॥ १ ॥ चार इति । सर्वतः सर्वां तां वानरध्वजिनीम् अव्यग्रं यथा तथा दृष्ट्वा वेगेन लङ्कामाविश्य राजानमब्रवीदिति सम्बन्धः ॥ २ ॥ एष इति सेनापक्षे अगाधत्वं दुष्प्रवेशत्वम् ॥ ३ ॥ पुत्राविति । सीतायाः पदमागतौ सीतास्थानमुद्दिश्यागतौ ॥ ४ ॥ ५ ॥ बलं चेत्यत्र सन्निविष्टमिति व्यत्ययेनानुषङ्गः । आकाशमवकाशम् ॥ ६ ॥ तत्त्वभूतमेतन्मदुक्तं यथार्थमित्यर्थः । समनन्तरकर्तव्यमेवाह तव दूता इति ॥ ७–१० ॥

स०—सीतायाः पदं त्राणमुद्दिश्य अत्र वर्तत इति चिह्नं ज्ञात्वा वा शब्दं हनुमद्बोधितं श्रुत्वा वा । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः ॥ ४ ॥ उपप्रदानं सीताया रामसमीपं गत्वा दानम् । सान्त्वं सीतादानं विना अमूल्यरत्नादिदानेन समाधानम् । भेदः मित्रभेदः । चतुर्थोपायभूतो दण्डस्तु रामसेनावलोकनानन्तरम् अयमशक्य इति शार्दूलेन नोपन्यस्तः ॥ ८ ॥

अत्र रामविषये ॥ ८ ॥ शार्दूलस्येत्यर्द्धत्रयमेकान्वयम् । अर्थः कर्तव्यार्थः ॥ ९ ॥ भेदप्रयोगमुपदर्शयति—सुग्रीवमिति । मम वचनाद्ब्रूहि मयोक्तमिति ब्रूहि । अक्लीबं सधाष्टर्चमित्यर्थः । श्लक्ष्णया पारुष्यरहितया । परया श्राव्यया ॥ १० ॥ वचनमेवाह—त्वमिति । वचनगाम्भीर्यव्यञ्जनाय गुरुवृत्तारम्भः । हे महाराज । त्वं कुलप्रसूतः । सूर्यपुत्रत्वादिति भावः । तेन निष्कारणवैरं त्वया कर्तुमनुचितमिति व्यज्यते । महाबलः अल्पबलं राममवलम्बितुं नार्हसी

शार्दूलस्य वचः श्रुत्वा रावणो राक्षसेश्वरः । उवाच सहसा व्यग्रः संप्रधार्यार्थमात्मनः । शुकं नाम तदा रक्षो वाक्यमर्थविदांवरम् ॥ ९ ॥ सुग्रीवं ब्रूहि गत्वा त्वं राजानं वचनान्मम । यथासन्देशमक्लीबं श्लक्ष्णया परया गिरा ॥ १० ॥ त्वं वै महाराज कुलप्रसूतो महाबलश्चर्क्षरजस्सुतश्च । न कश्चिदर्थस्तव नास्त्यनर्थस्तथा हि मे भ्रातृसमो हरीश ॥ ११ ॥ अहं यद्यहरं भार्यां राजपुत्रस्य धीमतः । किं तत्र तव सुग्रीव किष्किन्धां प्रति गम्यताम् ॥ १२ ॥ न हीयं हरिभिर्लङ्का शक्या प्राप्तुं कथंचन । देवैरपि सगन्धर्वैः किं पुनर्नरवानरैः ॥ १३ ॥ स तथा राक्षसेन्द्रेण सन्दिष्टो रजनीचरः । शुको विहङ्गमो भूत्वा तूर्णमाप्लुत्य चाम्बरम् ॥ १४ ॥

त्यर्थः । ऋक्षरजस्सुतः ब्रह्मपौत्रत्वेन मम बन्धुभूतोऽसीत्यर्थः । तव रामावलम्बने कश्चिदर्थो नास्ति । अनवलम्बने अनर्थश्च नास्ति । अफलं वैरं तव नोचितमिति भावः । वालिसम्बन्धेन भ्रातृसमत्वान्मय्येव प्रणयं कुर्वित्यभिप्रायेणाह—तथा हीति ॥ ११ ॥ सीतापहरणमेव त्वत्कृतो महाननर्थ इत्यत्राह—अहमिति । राजपुत्रस्य तवेति पदाभ्यां नरवानरयोः कः सम्बन्ध इत्युक्तम् । धीमत इति सुग्रीवविशेषणम् । तत्र हरणविषये । किम् का हानिरित्यर्थः ॥ १२ ॥ "आरब्धस्यान्तगमनम्" इति न्यायेन प्रक्रान्तं कार्यं कथं त्यज्यतामित्यत्राह—न हीति । उक्तमर्थं कैमुतिकन्यायेन द्रढयति—देवैरिति । अत्र नरग्रहणात् पूर्वार्धे हरिपदं नरोपलक्षकं बोध्यम् । त्वमेवामुमर्थमालोचयेति भावः । इयं लङ्का प्राप्तुं न शक्येत्युत्तरार्धेऽनुषज्यते ॥ १३ ॥ अम्बरमाप्लुत्य,

त्वमिति । अर्थः उपकारः । अनर्थः अपकारः । अर्थानर्थयोरभावेऽपि भ्रातृसमः ॥ ११ ॥ १२ ॥ मद्वचनमनादृत्यागतेनापि त्वया किमपि कर्तुं न शक्यमित्याह—न हीयमिति ॥ १३ ॥ स तथेति । आप्लुत्य चाम्बरम्, जगामेति शेषः ॥ १४ ॥

स०—त्वं मे भ्रातृसमः वालिरावणयोः सख्यान्मदनुजसम इत्युक्तिः । एवं दैवान्निस्सृतया वाण्या वालिन इव रावणस्यापि वधो रामाद्भविष्यतीति सूच्यते ॥ ११ ॥

आजगामेति शेषः ॥१४॥ उपर्युपरि सागरं सागरस्याध्यवहितोपरिप्रदेशे । "उपर्यध्यधसः सामीप्ये" इति द्विर्वचनम् । आम्रेडितान्तत्वात् "उभसर्वतसोः—" इति द्वितीया ॥ १५ ॥ तमिति । प्रापयन्तं श्रावयन्तम् । प्रापद्यन्त पर्यवारयन् ॥ १६ ॥ निगृहीतः बद्धः ॥ १७ ॥ वानरैरित्यादि । दूतोऽप्यनुक्त

स गत्वा दूरमध्वानमुपर्युपरि सागरम् । संस्थितो ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत् । सर्वमुक्तं यथादिष्टं रावणेन दुरात्मना ॥ १५ ॥ तं प्रापयन्तं वचनं तूर्णमाप्लुत्य वानराः । प्रापद्यन्त दिवं क्षिप्रं लोप्तुं हन्तुं च मुष्टिभिः ॥ १६ ॥ स तैः प्लवङ्गैः प्रसभं निगृहीतो निशाचरः । गगनाद्भूतले चाशु परिगृह्य निपातितः ॥ १७ ॥ वानरैः पीड्यमानस्तु शुको वचनमब्रवीत् । न दूतान् घ्नन्ति काकुत्स्थ वार्यन्तां साधु वानराः ॥ १८ ॥ यस्तु हित्वा मतं भर्तुः स्वमतं सम्प्रभाषते । अनुक्तवादी दूतः सन् स दूतो वधमर्हति ॥ १९ ॥ शुकस्य वचनं श्रुत्वा रामस्तु परिदेवितम् । उवाच मा वधिष्टेति घ्नतः शाखामृगर्षभान् ॥२०॥ स च पत्रलघुर्भूत्वा हरिभिर्दर्शिते भये । अन्तरिक्षस्थितो भूत्वा पुनर्वचनमब्रवीत् ॥२१॥ सुग्रीव सत्त्वसम्पन्न महाबलपराक्रम । किं मया खलु वक्तव्यो रावणो लोकरावणः ॥२२॥

कारी वध्य एवेत्याशङ्क्य नाहं तथा अनुक्तकारीत्याशयेनाह—यस्त्विति ॥ १८ ॥ १९ ॥ परिदेवितं परिदेवनरूपं वचनम् । मा वधिष्टेति प्रत्येको त्त्यभिप्रायेणैकवचनम् । वधिष्टेतीत्यत्र आर्षः सन्धिः ॥ २० ॥ पत्रलघुः लघुपत्रः । वानरैः प्रायेण लूनपक्ष इत्यर्थः । भये दर्शिते दार्शितेऽपि ॥२१॥ रामानु०—पक्षलघुः पक्षैर्लघुः । लूनपक्ष इति यावत् । दार्शितेभय इत्यत्र अभय इति पदच्छेदः ॥ २१ ॥ स्ववाक्यश्रवणाय सुग्रीवं प्रशंसति—सुग्रीवेति । लोकरावणः

स गत्वेति । उपर्युपरि सागरं सागरस्य समीपोपरिप्रदेशे । रावणेनोक्तं सर्वमिदं वाक्यं यथादिष्टमब्रवीदिति सम्बन्धः ॥ १५ ॥ लोप्तुम्, पक्षाविति शेषः॥१६–१९॥ परिदेवितं वचनं परिदेवनरूपं वाक्यम् ॥ २० ॥ स च पक्षलघुरिति । पक्षलघुः, पक्षैर्लघुः लूनपक्ष इति यावत् ॥ २१–२५ ॥

स०—पक्षलघुः कपिभिर्लुप्तात्पपक्षः पूर्वं भूत्वा अनन्तरं रामाज्ञया हरिभिरभये दर्शिते दत्ते सति पक्षैः छिन्नप्ररूढैः लघुः शीघ्रगामी भूत्वेत्यर्थो वा । यत्तु लूनपक्षत्वेऽन्तरिक्षगमनासम्भवः । रामाज्ञाननुष्ठान प्रसक्तश्चेति कैश्चिदभिहितम्, तत्तु शुकरूपस्य मायिकत्वेन पक्षच्छेदेऽपि मायया पुनः प्ररोहणस्य सम्भवादन्तरिक्षगमनसम्भवेन रामाज्ञातः पूर्वमेव कतिपयतल्लोपनेन तदाज्ञाभङ्गस्याप्यभावेन चायुक्तमिति ज्ञेयम् ॥२१॥

इत्यनेन प्रतिवचनानादाने मां हनिष्यतीति भावः ॥ २२ ॥ स एवमिति । लोके कश्चिदधिपतिरपि तज्जातीयो न भवति । तद्व्यावर्तनाय प्लवङ्गमाना मृषभ इत्युक्तम् । महाबलः तृणीकृतरावण इत्यर्थः । अदीनसत्त्वः अदीनमनस्कः । अत्र वंशस्थोपेन्द्रवज्रेन्द्रवज्रायोगादुपजातिवृत्तभेदः ॥ २३ ॥ भ्रातृसमोऽसीत्यस्योत्तरमाह—न मेऽसीति । मे मित्रं नासीत्यर्थः । अनुकम्प्यः दयनीयश्च नासि । मे उपकर्ता च नासि । मे प्रियोऽपि नासि । अतः

स एवमुक्तः प्लवगाधिपस्तदा प्लवङ्गमानामृषभो महाबलः । उवाच वाक्यं रजनीचरस्य चारं शुकं तूर्णमदीनसत्त्वः ॥२३॥ न मेऽसि मित्रं न तथाऽनुकम्प्यो न चोपकर्ताऽसि न मे प्रियोऽसि । अरिश्च रामस्य सहानुबन्धः स मेऽसि वालीव वधार्ह वध्यः ॥ २४ ॥ निहन्म्यहं त्वां ससुतं सबन्धुं सज्ञातिवर्गं रजनीचरेश । लङ्कां च सर्वां महता बलेन क्षिप्रं करिष्यामि समेत्य भस्म ॥ २५ ॥ न मोक्ष्यसे रावण राघवस्य सुरैः सहेन्द्रैरपि मूढ गुप्तः । अन्तर्हितः सूर्यपथं गतो वा तथैव पातालमनुप्रविष्टः [ गिरीश पादाम्बुजसङ्गतो वा हतोऽसि रामेण सहानुजस्त्वम् ] ॥ २६ ॥ तस्य ते त्रिषु लोकेषु न पिशाचं न राक्षसम् । त्रातारमनुपश्यामि न गन्धर्वं न चासुरम् ॥ २७ ॥

कथं भ्रातृसमोऽसीति भावः । प्रत्युत मित्रशत्रुत्वाच्छत्रुरेवासीत्याह अरिश्चेति । ननु नोपकर्तृत्वादिना मित्रम्, किन्तु सख्युर्वालिनो भ्रातृत्वादित्यत आह स मेऽसीति । सः अरिभूतस्त्वमपि वालीव मे वध्योऽसि । अरिमित्रस्याप्यरित्वादिति भावः । इदमेव मनसि कृत्वोक्तं वधार्हेति । अनेन 'अहं यद्वदरं भार्याम्' इत्येतद्वृत्तोत्तरम् ॥२४॥ न हीयं हरिभिर्लङ्केत्यस्योत्तरमाह—निहन्मीति । ज्ञातिवर्गः कुम्भकर्णादिः । विभीषणस्तु न ज्ञातिरिति भावः । सुतादयः किमर्थं हन्तव्या इत्यपेक्षायां राजापराधादित्याह रजनीचरेशेति । बलेन सेनया ॥ २५ ॥ मयि लङ्कास्थे खल्वेवं करिष्यसि स्थलान्तरं गमिष्यामीति शङ्कायामाह—न मोक्ष्यस इति । राघवस्य राघवात् । पञ्चम्यर्थे षष्ठी । मूढेति सम्बुद्धिः । सूर्यपथं सूर्यद्वारं गतः सन् अन्तर्हितोऽपि न मोक्ष्यसे ॥ २६ ॥ त्रिदशेश्वरेऽपि त्रातुमनीश्वरे का वार्ता क्षुद्राणामित्याह—तस्येति । तस्य रामशरविद्धस्य ॥ २७ ॥

नेति । राघवस्य राघवात् ॥ २६–३२ ॥

स०—प्लवगाधिपः एवमुक्तोऽभूत् । एवमुक्तः प्लवङ्गमानामृषभः सुग्रीवः । रजनीचरस्य रावणस्य चारं दूतं दीनं शुकं प्रत्युवाच । प्लवगान् आधितः मनोव्यथातः पातीति वा । तथा प्लवङ्गेषु मानः चित्तोन्नतिर्यस्य सः प्लवङ्गमानः । स चासौ न विद्यते मृषा मिथ्यावचनं येषां ते अमृषाः तेषामिन्द्र इव [illegible] इति यावत् । [illegible] "मानश्चित्तोन्नतौ" इति च विश्वः । अदीनसत्त्वः अदीनान्तःकरणः ॥२३॥

यदि रामसहाये स्थितोऽसि तर्हि ते जटायुषोऽवस्था स्यादित्यत्राह–अवधीरिति । अर्द्धमेकं वाक्यम् । जरया वृद्धम् अत एवाक्षमम् असमर्थम् । जटायुष मवधीरिति यत्तत्र ते किं,वीर्यमिति शेषः । नाहं तादृश इति भावः ॥२८॥ भार्याहरणकाले किमप्यकुर्वन् रामः किमिदानीं करिष्यतीत्यत्राह–किं न्विति । ते त्वया । सन्निधिरेव सान्निध्यम् । विशालाक्षीत्यनेन सीताहरणं रामस्यात्यन्तासह्यमित्युच्यते । गृह्य गृहीत्वा । न बुध्यसे, भाव्यनर्थमिति शेषः ॥ २९ ॥ न बुध्यस इत्युक्तं विवृणोति–महाबलमिति । महात्मानं महाबुद्धिम् ॥ ३० ॥ तत इति । हरिसत्तमः इङ्गितप्रेक्षणादिज्ञ इति यावत् ॥ ३१ ॥

अवधीर्यज्जरावृद्धमक्षमं किं जटायुषम्॥२८॥ किं नु ते रामसान्निध्ये सकाशे लक्ष्मणस्य वा । हृता सीता विशालाक्षी यां त्वं गृह्य न बुद्ध्यसे ॥२९॥ महाबलं महात्मानं दुर्द्धर्षममरैरपि । न बुद्ध्यसे रघुश्रेष्ठं यस्ते प्राणान् हरिष्यति ॥ ३० ॥ ततोऽब्रवीद्वालिसुतस्त्वङ्गदो हरिसत्तमः ॥ ३१ ॥ नायं दूतो महाराज चारिकः प्रतिभाति मे । तुलितं हि बलं सर्वमनेनात्रैव तिष्ठता । गृह्यतां मा गमल्लङ्कामेतद्धि मम रोचते ॥ ३२ ॥ ततो राज्ञा समादिष्टाः समुत्प्लुत्य वलीमुखाः । जगृहुश्च बबन्धुश्च विलपन्तमनाथवत्॥३३॥ शुकस्तु वानरैश्चण्डैस्तत्र तैः सम्प्रपीडितः । व्याक्रोशत महात्मानं रामं दशरथात्मजम् । लुप्येते मे बलात्पक्षौ भिद्येते च तथाऽक्षिणी ॥ ३४ ॥ यां च रात्रिं मरिष्यामि जाये रात्रिं च यामहम् । एतस्मिन्नन्तरे काले यन्मया ह्यशुभं कृतम् । सर्वं तदुपपद्येथा जह्यां चेद्यदि जीवितम् ॥ ३५॥

नायमिति । चारिकः चारः । स्वार्थे ठक् । दूतो हि न वध्यः चारस्तु वध्य एवेति भावः । तुलितं तुलया मितम्, परिच्छिद्य ज्ञातमिति यावत् ॥ ३२ ॥ रामानु०–नायमिति । चारः चरणं तदस्यास्तीति चारिकः । "अत इनिठनौ" इति ठन् । तुलितम् इयत्तया परिच्छिन्नम् ॥ ३२ ॥ राज्ञा सुग्रीवेण ॥ ३३ ॥ शुकस्त्वित्यादि सार्द्धश्लोक एकान्वयः । चण्डैः अत्यन्तकोपनैः । पितृसम्बन्धकीर्तने दया भवेदिति दशरथात्मजमित्युक्तम् । पक्षौ पूर्वलुप्तशेषौ ॥ ३४ ॥ यामित्यादि सार्द्धश्लोक एकान्वयः । रात्रिशब्दोऽहोरात्रवचनः । यां च रात्रिं यस्मिंश्च दिवसे मरिष्यामि । यस्मिंश्च जाये अजाये । "अनित्यमागमशासनम्" लुप्येते इत्यादिश्लोकद्वयम् । यां च रात्रिमित्यत्र रात्रिशब्दः अहोरात्रवचनः । अहमेवं वानरपीडया यदि जीवितं जह्यां तदा यां च रात्रिं यस्यां रात्र्यां जाये जातवानस्मि यां च रात्रिं, यस्यां रात्र्यां मरिष्यामि एतस्मिन्नन्तरे काले जन्ममरणयोर्मध्यवर्तिनि काले मया यदशुभं कर्म कृतम् तत्सर्वं त्वमुपपद्येथाः

इत्यण्डभावः । जातोऽस्मि । एतस्मिन्नन्तरे जननमरणयोर्मध्यकाले । मया यदशुभं कृतं तत्सर्वं निरपराधस्य मे घातयिता त्वम् उपपद्येथाः प्राप्नुहि । चोदिति प्रसिद्ध्यर्थमव्ययम् ॥ ३५ ॥ नाघातयदिति । नाघातयद्वधान्न्यवर्तयत् । मुच्यतां बन्धनान्मुच्यताम् । निर्यापणं तु दक्षिणकूले ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥





नाघातयत्तदा रामः श्रुत्वा तत्परिदेवनम् । वानरानब्रवीद्रामो मुच्यतां दूत आगतः ॥ ३६ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे विंशः सर्गः ॥ २० ॥

ततः सागरवेलायां दर्भानास्तीर्य राघवः । अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः । बाहुं भुजगभोगाभ मुपधायारिसूदनः ॥ १ ॥ जातरूपमयैश्चैव भूषणैर्भूषितं पुरा ॥ २ ॥

एवं प्रासङ्गिकं परिसमाप्य एकान्तरितपूर्वसर्गान्तोदितकथाशेषमुपक्षिपति–तत इत्यादिसार्द्धश्लोक एकान्वयः । ततः शुकमोक्षणानन्तरम् । सागरवेलायां शर्कराप्रचुरायाम् । दर्भान् शिताग्रकुशान् आस्तीर्य । राघवः सर्वशरण्यकुलप्रसूतः । महोदधेः अञ्जलिं कृत्वा भुजगभोगाभम् अहिकायवदतिमृदुलं बाहुम् उपधाय उपधानीकृत्य । प्राङ्मुखः सन् प्रतिशिश्ये । प्रतीत्यनेन तदानीं सागराभिमुखमपरः सागर इव स्थित इत्यवगम्यते । अरिसूदन इत्यनेन तादृशदशायामपि शत्रूणामधृष्यतया स्थित इत्युच्यते । अत्र विशेषणमहिम्ना अतिसुकुमारस्य कथमतिकठिनावनितलशयनम्, अखिलरक्षकस्य कथमन्यतो रक्षापेक्षेति वाल्मीकेः खेदो द्योत्यते ॥१॥ अमुमेवार्थं प्रपञ्चयति सार्द्धसप्तश्लोकैः–जातरूपमयैरित्यादिभिः । जातरूपमयैः चकारात्

प्राप्नुहीत्यर्थः ॥३४॥३५॥ नेति । मुच्यतां दूत आगत इति बन्धमोक्षणं दक्षिणकूले ॥ ३६ ॥ इति श्रीमहे० श्रीरामा० युद्धकाण्डव्याख्यायां विंशः सर्गः ॥ २० ॥
तत इत्यादि सार्धश्लोकमेकं वाक्यम् । अरिसूदनो राघवः प्राङ्मुखस्सन् महोदधेरञ्जलिं कृत्वा भुजगभोगाभं बाहुमुपधाय प्रतिशिश्य इति सम्बन्धः । प्रतिशिश्ये आभिमुख्येन शयितवान् ॥ १ ॥ २ ॥

स०–सागरवेलायां समुद्रतीरे । महोदधेः अञ्जलिं कृत्वा बद्ध्वा । प्राङ्मुखस्सन् प्रतिशिश्ये । शयनप्रतिनिधिं कृतवान् । प्रतिना निर्दोषस्य रामस्य स्वाभाविकी निद्रा न वक्तुं शक्येति तत्प्रतिनिधिभूतं चक्षुर्निमीलनमात्रमिति सूचयति ॥ १ ॥

रत्नमयैः । एवकारो योगव्यवच्छेदार्थः । पुरा अयोध्यावासकाले अवतारात्पूर्वं वा ॥ २ ॥ वरकाञ्चनेति परमनारीभुजविशेषणम् । भुजैः हस्तैः । तदेकदेशलक्षणा । परमनारीणां सैरन्ध्रिकाणाम् । अनेकधा स्नानालङ्करणादिषु चन्दनागरुकुङ्कुमप्रभृतिभिः बहुप्रकारेण । अभिमृष्टम् संमृष्टम् ॥ ३ ॥ अधिवासितं सञ्जातगन्धम् । बालसूर्येति विशेषणात् द्वितीयचन्दनशब्दो रक्तचन्दनपरः । तच्च कुङ्कुमम् । "कुङ्कुमं घुसृणं प्रोक्तं लोहितं रक्तचन्दनम्" इति हलायुधः । आदौ चन्दनागरुभ्यां चर्चितम् अथ कुङ्कुमैरिति बोध्यम् । कश्चिदाह–परमनारीणामित्यनेन सीताव्यतिरिक्ताश्च भार्याः सन्तीति । तन्न;

> वरकाञ्चनकेयूरमुक्ताप्रवरभूषणैः । भुजैः परमनारीणामभिमृष्टमनेकधा ॥ ३ ॥
> चन्दनागरुभिश्चैव पुरस्तादधिवासितम् । बालसूर्यप्रतीकाशैश्चन्दनैरुपशोभितम् ॥ ४ ॥

नहि बालकाण्डे कुत्रचिद्रामस्य दारान्तरोद्वाहः प्रतिपाद्यते, प्रत्युत " रामस्तु सीतया सार्द्धं विजहार बहूनृतून् । मनस्वी तद्गतस्तस्या नित्यं हृदि समर्पितः ॥" इति सीतया सह निरन्तरभोग एवोच्यते । अत एव सीताप्याह " समा द्वादश तत्राहं राघवस्य निवेशने । भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥ " इति अत्यन्तसंयोगे द्वितीयया निरन्तरभोगम् । तत्कुतोऽस्य दारान्तरावकाशः ? ननु " रामस्य दयिता भार्या " इति विशेषणाद्रोहिणी यथेति ताराणामन्यतमया रोहिण्या दृष्टान्तीकरणाच्च भार्यान्तरं तस्य व्यज्यत इति चेन्न; दयितो भ्रातुरितिवदनुगमनानर्हत्वाय तथा विशेषितत्वात् । किं भरतो रामस्य न दयितः ? " तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु । " " न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः । " इत्यादिविरोधात् रामवाञ्छ्यातिशयेन सौकुमार्यातिशयेन च राजगृह एवावस्थाय दिव्यसुखानुभवयोग्यावपि सीतालक्ष्मणौ राममनुगताविति हि तत्र मुनिहृदयम् । रोहिणी चेयमन्या, प्रसिद्धाया नित्यानुगमनासम्भवात् । ननु च " हृष्टाः खलु भविष्यन्ति रामस्य परमाः स्त्रियः । अप्रहृष्टा भविष्यन्ति स्नुषास्ते भरतक्षये॥ " इति स्नुषासाहचर्याद्रामस्य स्त्रियः पत्न्यो बह्व्यः सन्तीति गम्यते । सुन्दरकाण्डेऽपि " स्त्रीभिस्तु मन्ये विपुलेक्षणाभि

वरकाञ्चनेति । तदेव विशिनष्टि–भुजैरित्यादिना । भुजैः परमनारीणामभिमृष्टमिति रामस्यैकदारत्वात् परमनारीशब्देन श्रेष्ठपरिचारिका विवक्षिताः ।

स०–परमनारीणां कौसल्यादीनाम् । परमाश्च ते अरयो न भवन्तीति नार्यो ब्रह्माद्या भक्ताः तेषाम् । अथवा स्वदत्तपारम्यो वरुणस्तस्य नार्यो गङ्गाद्याः तासां बाहुभिस्तरङ्गैः । स्वेष्ववतारेषु रमाया अन्यवतारबाहुविध्येन नारीणामिति बहुवचनबोधितबहुविधता सम्भवतीति नैकाकामिनीमतवतीपहतिरिति ज्ञेयम् ॥ ४ ॥

स्त्वं रंस्यसे वीतभयः कृतार्थः ” इति सीतया चोच्यते । अत्रापि ‘भुजैः परमनारीणामभिमृष्टमनेकधा ’ इत्युक्तम् । तस्माद्बह्व्यः पत्न्यो रामस्य सन्तीत्यवगम्यते । मैवम्; रामस्य परमाः स्त्रिय इति रामसम्बन्धिन्यः कौसल्यासीतातद्दासीप्रभृतय उच्यन्ते । पूजायां बहुवचनेन सीतैवोच्यते । ते स्नुषा इतिवत् । न हि भरतस्यानेकाः स्त्रियः सन्तीत्यत्र प्रमाणमस्ति । त्वं रंस्यस इत्यत्रापि लौकिकरीतिमनुसृत्य सीतोक्तवती । परमनारीणामित्यत्रापि अलङ्कर्त्रीणामित्यर्थ उक्तः । यद्वा अभिमृष्टम् अभिमर्शनार्हम् । आशंसायां क्तः । परमनार्यः श्रीभूमिनीलाः । आत्मानं मानुषं राम एव हि मन्यते

शयने चोत्तमाङ्गेन सीतायाः शोभितं पुरा । तक्षकस्येव सम्भोगं गङ्गाजलनिषेवितम् ॥ ५ ॥

ऋषिस्तु रामस्य विष्णुत्वं व्यक्तीकरोत्येव । “ जज्ञे विष्णुः सनातनः ” इत्याह । ननु राजसूयाश्वमेधाद्यनुष्ठानान्यथानुपपत्त्या रामस्यानेकपत्न्यः कल्प्यन्ते, कामं कल्प्यन्तां न ता इह सम्बध्यन्ते । तासां केवलं धर्मार्थं वृतानां परिग्रष्टुं रन्तुं चायोग्यत्वात् । वस्तुतो न ताः कल्प्याः, सीतयैव प्रतिमया यज्ञे पत्नीकार्यनिर्वाहस्योत्तरकाण्डे दर्शितत्वात् । न च पत्नीप्रतिनिधिभावो न भट्टाचार्येण कथ्यत इति वाच्यम्, न हि वचनविरोधे न्यायः प्रभवतीति न्यायात् । वचनं च हेमाद्रिस्मृतिनिबन्धने दर्शितम् “ यदि दुष्टभार्यो दूरभार्यो वा स्यात्तदा दर्भपुञ्जीलं तत्स्थाने निधायाग्निमाधाय कुर्यात् ” इति । धर्मसंस्थापनार्थं प्रवृत्तस्य रामस्याचारादपरं किं नाम मानमपेक्षणीयम् । वस्तुत आचार एव प्रथमं प्रमाणं श्रुत्या पूर्वाचारं प्रदर्श्यैव कर्मविधानात् । आपस्तम्बोऽप्यत एव “ धर्मज्ञसमयः प्रमाणं वेदाश्च ” इत्याचारमेव प्रथमं प्रमाणमाह । अत एव स्मरन्ति च स्मर्तारः—“ श्रुतिर्विभिन्ना स्मृतयो विभिन्ना न चानृषेर्दर्शनमस्ति किंचित् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः॥” इति । तस्मात् “चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति ।” इत्युक्तरामाचार एव समीचीनं प्रमाणम्, तद्विरुद्धाश्च न्याया न प्रभवन्ति । यद्यपि राजसूयाश्वमेधानां महिषीवद्वावातापरिवृत्तिभ्यामपि भवितव्यम् । तथापि तल्लोपे तत्कार्याननुष्ठानमेव । तस्य कर्मवैकल्याहेतुत्वात् । यथा पङ्ग्वन्धादेर्यज्ञे विष्णुक्रमाज्यावेक्षणादिलोपेन न यज्ञलोपः । तत्तन्मन्त्रोच्चारणस्यैव कार्यत्वात् । तस्मात्केवलन्यायसञ्चारेणापन्यायमार्गो नानुसरणीयः । किन्तु सर्वाचारप्रवर्तकसर्वकर्मधुरन्धरभगवदवतार रामचन्द्राचार एव विवेकिभिरनुवर्तनीय इति सर्वमवदातम् ॥ ४ ॥ शयने हंसतूलिकामये तल्पे । गङ्गानिषेवितं गङ्गाजले वर्तमानम् । तक्षकस्य

चन्दनागरुभिः स्नानीयभूतैः बालसूर्यप्रतीकाशैश्चन्दनैः, कुङ्कुमैरिति यावत् । सीताया उत्तमाङ्गेन पुरा शोभितम् । तक्षकस्येति । सम्भोगं सम्यग् भोगम् ।

सम्भोगं कायमिव स्थितम् । सीताया उत्तमाङ्गेन शोभितं चेति शोभना ॥ ५ ॥ संयुगे युद्धे । युगसङ्काशं गोपुरार्गलवत् प्रतिभटनिवारकम् । अत एव शत्रूणां शोकवर्धनम् । सागरोऽन्ते यस्यासौ सागरान्तः भूमण्डलम्, तस्य व्यपाश्रयम् आलम्बनभूतम् ॥ ६ ॥ सव्यम् अप्रदक्षिणं यथा भवति तथा । अस्यता इषून् क्षिपता । स्वेनैव हेतुना ज्याघातेन करणेन विगतत्वचं ज्याकिणाङ्कितमित्यर्थः । महापरिघसन्निभम् उत्तमपरिघाख्यायुधवत् दृढम् ॥ ७ ॥ गोसहस्रप्रदातारम्, करणे कर्तृत्वोपचारः । महद्भुजं भुजोत्तमम् । तथैव प्रायशः पाठः । आत्वाभाव आर्षः । एवंभूतं दक्षिणं बाहुमुपधाय । दक्षिणः

संयुगे युगसङ्काशं शत्रूणां शोकवर्द्धनम् । सुहृदानन्दनं दीर्घं सागरान्तव्यपाश्रयम् ॥ ६ ॥ अस्यता च पुनः सव्यं ज्याघातविगतत्वचम् । दक्षिणो दक्षिणं बाहुं महापरिघसन्निभम् ॥७॥ गोसहस्रप्रदातारमुपधाय महद्भुजम् । अद्य मे मरणं वाऽथ तरणं सागरस्य वा ॥ ८ ॥ इति रामो मतिं कृत्वा महाबाहुर्महोदधिम् । अधिशिश्ये स विधिवत् प्रयतो नियतो मुनिः ॥९॥ तस्य रामस्य सुप्तस्य कुशास्तीर्णे महीतले । नियमादप्रमत्तस्य निशास्तिस्रोऽतिचक्रमुः ॥ १० ॥ स त्रिरात्रोषितस्तत्र नयज्ञो धर्मवत्सलः । उपासत तदा रामः सागरं सरितां पतिम् ॥ ११ ॥

दाक्षिण्यवान् । महाबाहुः सर्वाभयप्रदः रामः, अद्य मे तरणं वा सागरस्य, मरणं वा भवत्विति मतिं कृत्वा । विधिवत् शास्त्रोक्तरीत्या । प्रयतः कायिकनियमयुक्तः । नियतः वाचिकनियमवान् । मुनिः मानसनियमोपेतश्च सन् । महोदधिमुद्दिश्याधिशिश्य इति योजना ॥ ८ ॥ ९ ॥ सुप्तस्य शयानस्य । नियमादप्रमत्तस्य अत एवाप्रच्युतनियमस्येत्यर्थः । तिस्रो निशाः त्रीण्यहानि ॥ १० ॥ तिसृष्वपि रात्रिषूपासनमविच्छिन्नमित्याह—स इति । त्रिरात्रोषितः त्रिरात्रं शयानः । तत्र समुद्रतीरे । सर्वशक्तेः कुत एवं निर्बन्ध इत्याशङ्क्य धर्मप्रवर्तनार्थमित्याशयेनाह नयज्ञो धर्मवत्सल इति । शरणागतधर्मे

सागरान्तव्यपाश्रयं सागरान्तं भूचक्रं तस्य व्यपाश्रयमाश्रयम् ॥३–६॥ अस्यतेति । पुनर्मुहुर्मुहुः सव्यं यथा तथा अस्यता स्वेन कृता ये ज्याघातास्तैर्विहतत्वचम्, ज्याघातकिणाङ्कितमित्यर्थः । जातरूपमयैर्भूषितमित्यादि भुजोत्तममित्यन्तविशेषणविशिष्टं दक्षिणं बाहुमुपधाय रामः 'अद्य मे मरणं वाऽथ तरणं सागरस्य वा' इति मतिं कृत्वा महोदधिमुद्दिश्य अधिशिश्य इति सम्बन्धः । विशेषणान्तरवैशिष्ट्यकथनार्थमधिशिश्य इति पुनरभिधानम् । प्रयतः परिशुद्धः । मुनिः मौनी ॥ ७–९ ॥ अप्रमत्तस्य अस्खलितस्य॥१०॥ सः 'अङ्गुल्यग्रेण तान् हन्याम्' इत्यादिभिः प्रकटितवीर्यः । नयज्ञः आदौ साम प्रयोज्यमिति नीतिज्ञः । धर्मवत्सलः अनपराधिन्याक्रमण

स०—अत्र बाहुं भुजगभोगाभमित्युपक्रम्य गोसहस्रप्रदातारमित्येतच्छ्लोकपर्यन्तं प्रतिश्लोकं विशेष्येण बाह्वादिशब्देन भवितव्यमिति दर्शयितुं बाहुं भुजगभोगाभं दक्षिणं बाहुं भुजोत्तममिति त्रिवारमुक्तिः ॥ ७ ॥

प्रीतिमान् । सरितां पतिं स्वगोष्ठ्यां कान्तापुरुषकारमुखेन समाश्रयणदर्शनात् स्वयमपि तथैवाचरदिति भावः ॥ ११ ॥ न च दर्शयते, आत्मानमिति शेषः । मन्दः अज्ञः । ननु रामेण सम्यक्कृता शरणागतिः कुतो न फलिता ? उच्यते—अनधिकारिणा कृतत्वात् ब्राह्मणकृतराजसूयवत् ।

न च दर्शयते मन्दस्तदा रामस्य सागरः । प्रयतेनापि रामेण यथार्हमभिपूजितः ॥ १२ ॥ समुद्रस्य ततः क्रुद्धो रामो रक्तान्तलोचनः । समीपस्थमुवाचेदं लक्ष्मणं शुभलक्षणम् ॥ १३ ॥ अवलेपः समुद्रस्य न दर्शयति यत्स्वयम् ॥ १४ ॥ प्रशमश्च क्षमा चैव आर्जवं प्रियवादिता । असामर्थ्यं फलन्त्येते निर्गुणेषु सतां गुणाः ॥ १५ ॥ आत्मप्रशंसिनं दुष्टं धृष्टं विपरिधावकम् । सर्वत्रोत्सृष्टदण्डं च लोकः सत्कुरुते नरम् ॥ १६ ॥ न साम्ना शक्यते कीर्तिर्न साम्ना शक्यते यशः । प्राप्तुं लक्ष्मण लोकेऽस्मिन् जयो वा रणमूर्द्धनि ॥ १७ ॥

न च शरणागतावधिकारी रामः, अकिञ्चनो हि तत्राधिकारी ॥ १२ ॥ समुद्रस्य समुद्रविषये । सम्बन्धसामान्ये षष्ठी । रक्तान्ते लोचने यस्य सः रक्तान्तलोचनः । अनेन मन्दकोपत्वमुक्तम् । शुभलक्षणं स्वस्य हृदयकोपमवगम्य कृतमन्दहासम् ॥ १३ ॥ अवलेप इति । स्वयं न दर्शयतीति यत् अयं समुद्रस्यावलेप इत्यन्वयः ॥ १४ ॥ प्रशमः अक्रोधता । क्षमा अपराधसहिष्णुता । आर्जवं परचित्तानुसारित्वम्, अकौटिल्यं वा । प्रियभाषिता प्रियवादित्वमित्येते गुणाः निर्गुणेषु असामर्थ्यं फलन्ति, असमर्थत्वबुद्धिं जनयन्तीत्यर्थः ॥ १५ ॥ कं पुनः समर्थं निर्गुणो मन्यते ? तत्राह—आत्मेति । आत्मप्रशंसिनम् आत्मस्तुतिपरम् । दुष्टं वञ्चकम् । धृष्टं निर्दयमित्यर्थः । विपरिधावकं सर्वपलायनकरम् । सर्वत्र सगुणेषु निर्गुणेषु च । उत्सृष्टदण्डं क्लप्तदण्डम् । लोकः अज्ञो जनः ॥ १६ ॥ न साम्नेति । बलकृता प्रथा यशः । पराक्रमकृता कीर्तिः । जयो वेत्यत्रापि न साम्ना प्राप्तुं शक्यते

मनुचितामिति यो धर्मः तस्मिन् वत्सलः । उपासत उपास्त ॥ ११ ॥ एवं यथाशास्त्रं शरणागतत्वेऽपि फलप्रदानाभिमुख्याभावात् सागरस्य सापराधत्वं दर्शयति—न च दर्शयत इति । न दर्शयते, आत्मानमिति शेषः ॥१२॥ समुद्रस्य समुद्राय क्रुद्धः ॥ १३ ॥ अवलेप इत्यर्धं भिन्नं वाक्यम् । स्वयमात्मानं न दर्शयतीति यत् अयं समुद्रस्यावलेपो गर्वः, दृश्यतामिति शेषः ॥ १४ ॥ प्रशमः चित्तप्रसादः । क्षमा अपराधसहिष्णुत्वम् । आर्जवं करणत्रयैकरूप्यम् । प्रियवादिता चेत्येते सतां गुणा निर्गुणेषु पुरुषेषु विषये असामर्थ्यं फलन्ति, दुष्टजनाः सर्वशक्तियुक्तोऽपि प्रशमादिपरश्चेत् तमसमर्थं मन्यन्त इत्यर्थः । अतोऽयं दण्डस्यैव विषय इति भावः ॥ १५ ॥ विपरिधावकम् अमार्गवर्तिनम् ॥ १६ ॥ कीर्तिः गुणप्रख्यापनम्, यशः शौर्यप्रख्यापनम् ॥ १७ ॥ १८ ॥

इत्यनुषञ्जनीयम् ॥ १७ ॥ मद्बाणनिर्भिन्नैः अत एव जलोपरि प्लुवद्भिः मकरैः । निरुद्धतोयं व्याप्ततोयम् ॥ १८ ॥ भोगिनां महाकायानाम् । भूम्नि मतुप् । "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः । नागानां सर्पाणाम् । महाभोगानि महाशरीराणि । क्लीबत्वमार्षम् । करिणां मत्स्यानां गजाकारमत्स्यानाम् । छिन्नानीति लिङ्गव्यत्ययेनानुषङ्गः । करान् शुण्डादण्डान् । "मत्स्यविशेषो मकरः करिमकरो भवति तद्विशेषश्च " इति

अद्य मद्बाणनिर्भिन्नैर्मकरैर्मकरालयम् । निरुद्धतोयं सौमित्रे प्लवद्भिः पश्य सर्वतः ॥१८॥ महाभोगानि मत्स्यानां करिणां च करानिह । भोगिनां पश्य नागानां मया छिन्नानि लक्ष्मण ॥ १९ ॥ सशङ्खशुक्तिकाजालं समीनमकरं शरैः । अद्य युद्धेन महता समुद्रं परिशोषये ॥२०॥ क्षमया हि समायुक्तं मामयं मकरालयः । असमर्थं विजानाति धिक् क्षमामीदृशे जने ॥ २१ ॥ न दर्शयति साम्ना मे सागरो रूपमात्मनः ॥२२॥ चापमानय सौमित्रे शरांश्चाशीविषोपमान् । सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः ॥ २३ ॥

हलायुधः ॥१९॥ सशङ्खेति । स्पष्टः ॥२०॥ क्षमैकसाराणां भवतामीदृशी फणितिरनुचितेत्याशङ्क्याह—क्षमयेति । सागरशोषणे प्रवृत्तोऽप्येतावत्पर्यन्तं क्षमया गृहीतचरणोऽस्मि । सुप्तप्रमत्तकुपितानां भावज्ञानं दृष्टमिति न्यायेन स्वरूपं प्रकटयति मामिति । माम् इतरनैरपेक्ष्येण स्थितम् । असमर्थं विजानाति कार्यकरणाक्षमं मन्यते । विजानाति मकरालयः । अयोध्याधिपतिः कोसलाधिपतिरितिवत् स्वमात्मानं मन्यते, कतिपयमीनग्रहणगर्त्त इति न जानाति । धिक् क्षमाम् इतः परं क्षमां नाङ्गीकुर्मः । विनियोगकाले हि क्षमा स्वीकार्या । अद्य क्रोध एवाङ्गीकर्तव्यः । इक्ष्वाकूणां कदाचिदपि क्षमा किं त्याज्येत्यत्राह ईदृशे जन इति । ईदृशे जने प्राप्तरक्षःसहवासदोषे ॥ २१ ॥ न दर्शयतीत्यर्थमेकं वाक्यम् ॥ २२ ॥ अपि कदाचिदात्मानं दर्शयेदिति करुणया समुद्रं वाचा निर्भर्त्स्य कर्मणाऽपि निर्भर्त्सयितुमुपक्रमते—चापमानयेति । एवं विलम्ब्य करणं क्रमेण निर्भर्त्स्य कार्यं कारयितुम् । अन्यथा सद्य एव शोषयेत् । चापमानय निर्गुणं वशीकर्तुं सगुणमानयेत्याशयः । चापमानय अस्यानम्रत्वं निवर्तयितुं नम्रं चापमानय ।

भोगिनां महाशरीराणां नागानां सर्पाणां महाभोगानि महाभोगान् । लिङ्गव्यत्यय आर्षः ॥ १९ ॥ युद्धेन बाणप्रहारेण ॥ २०–२४ ॥

समुद्रस्य शेषशय्यात्वेन तस्मिन्किंचित्सौहार्दवता लक्ष्मणेन क्षणं विलम्बः कृतः । अत आह सौमित्र इति । सुमित्रावचनमेव कर्तव्यम् ज्येष्ठवचनं तु न कर्तव्यमिति नियमोऽस्ति । यद्वा सौमित्रे ! "रामे प्रमादं माकार्षीः" इति मात्रोपदिष्टं मा विस्मार्षीः । अथ चापमात्र मानीतं तदाह शरांश्चेति । लीलाप्रयोगार्हेषु केषुचिदानीतेष्वाह आशीविषोपमानिति । दृष्टिविषाः सर्पा आशीविषा इत्युच्यन्ते । किमर्थं शरा नयनमिति विलम्ब्य सौमित्रिणा पृष्ट आह सागरमिति । एकेनैव दग्धुं सामर्थ्येऽपि शरानित्युक्तिस्तत्सम्बन्धेन सप्तसागरानपि शोषयितुमिच्छया ।

अद्याक्षोभ्यमपि क्रुद्धः क्षोभयिष्यामि सागरम् ॥ २४ ॥ वेलासु कृतमर्यादं सहसोर्मिसमाकुलम् । निर्मर्यादं करिष्यामि सायकैर्वरुणालयम् ॥ २५ ॥ महार्णवं क्षोभयिष्ये महादानवसङ्कुलम् ॥ २६ ॥ एवमुक्त्वा धनुष्पाणिः क्रोधविस्फारितेक्षणः । बभूव रामो दुर्धर्षो युगान्ताग्निरिव ज्वलन् ॥ २७ ॥ सम्पीड्य च धनुर्घोरं कम्पयित्वा शरै जगत् । मुमोच विशिखानुग्रान् वज्रानिव शतक्रतुः ॥ २८ ॥

कोपातिशयेन स्वबलमज्ञात्वा वा तादृशोक्तिः । शोषयिष्यामीति वदतः किं शरेणेति न शङ्कनीयम् । "छिन्नं भिन्नं शरैर्दग्धम्" इति राम शराणां दाहकत्वसंभवात् । अन्तरेणापि चतुर्थभूतजगन्निर्वाहं करिष्यामीति भावः । सागरम्, यद्ययं ज्ञातिविरोधमाचरति तर्हि वयमपि ज्ञाति कृत्यं कुर्म इति भावः । सागरं शोषयिष्यामि अनेकसहस्रखातमेक एव हरिष्यामि । किं तत इत्यत्राह–पद्भ्यामिति । एकैकस्य पदद्वयं गमन साधनमिति द्विवचनम् । वानराणां हि द्वावेव पादौ द्वौ हस्तौ ग्रहणभक्षणादीनां ताभ्यामेवं दर्शनात् । अनेन कृतस्य कार्यविच्छेदस्यानुरूपमसुं वानरपादाभ्यामेव दर्शयिष्यामीति भावः ॥ २३ ॥ पक्षान्तरमाह–अद्येति । अर्धमेकं वाक्यम् ॥ २४ ॥ पुनः पक्षान्तरमेवाह–वेलास्विति । वेलासु चतुर्षु तीरेषु । कृतमर्यादं कृतव्यवस्थम्, कदाचिदपि वेलाम् अनतिवर्तमानमित्यर्थः । निर्मर्यादं करिष्यामि अव्यवस्थं करिष्यामि । भूतले प्लाव यिष्यामीत्यर्थः ॥ २५ ॥ समुद्रेण चिरपरिपोषिता दानवादय एतं रक्षिष्यन्तीत्यत्राह–महार्णवमिति । दानवैः सह क्षोभयिष्यामीत्यर्थः ॥ २६ ॥ एव मिति । विस्फारितेक्षणः विवर्तितनयनः ॥ २७ ॥ संपीड्य दृढमुष्टिना मध्यमवलम्ब्य । कम्पयित्वा भयकम्पितं कृत्वा । जगत् जगत्स्थजन्तून् । वज्रा

वेलास्विति । वेलासु कृतमर्यादं वेलासु सागर[illegible] कृतमर्यादं [illegible] । [illegible] कृतनियममित्यर्थः । निर्मर्यादं लङ्घितवेलं

नित्यभूतोपमा ॥ २८ ॥ तेजसा ज्वलन्त इत्यन्वयः । प्रविशन्ति प्राविशन् । त्रस्तपन्नगमिति क्रियाविशेषणम् ॥ २९ ॥ तोयवेगः तरङ्गविततिः । मारुत रवः वातजन्यरवः । समारुतरवः वातसङ्घट्टनजन्यरवसहित इत्यर्थः ॥ ३० ॥ तीरे महोर्मिमालावितत‍ः । अन्तस्तरङ्गजालक्षुब्धशङ्खशुक्तिसमावृतः । सज्वालशरप्रवेशेन सधूमः । मध्ये शराग्निशोषणेन परिवृत्तोर्मिश्चासीदित्यन्वयः ॥ ३१ ॥ व्यथिता इति । आपातालं शराः प्रविष्टा इति भावः ॥ ३२ ॥

ते ज्वलन्तो महावेगास्तेजसा सायकोत्तमाः । प्रविशन्ति समुद्रस्य सलिलं त्रस्तपन्नगम् ॥२९॥ तोयवेगः समुद्रस्य सनक्रमकरो महान् । सम्बभूव महाघोरः समारुतरवस्तदा ॥ ३० ॥ महोर्मिमालावितत‍ः शङ्खशुक्तिसमावृतः । सधूमपरिवृत्तोर्मिः सहसाऽऽसीन्महोदधिः ॥ ३१ ॥ व्यथिताः पन्नगाश्चासन् दीप्तास्या दीप्तलोचनाः । दानवाश्च महावीर्याः पातालतलवासिनः ॥३२॥ ऊर्मयः सिन्धुराजस्य सनक्रमकरास्तदा । विन्ध्यमन्दरसङ्काशाः समुत्पेतुः सहस्रशः ॥ ३३ ॥ आघूर्णिततरङ्गौघः सम्भ्रान्तोरगराक्षसः । उद्वर्तितमहाग्राहः संवृत्तः सलिलाशयः ॥ ३४ ॥ ततस्तु तं राघवमुग्रवेगं प्रकर्षमाणं धनुरप्रमेयम् । सौमित्रिरुत्पत्य समुच्छ्वसन्तं मा मेति चोक्त्वा धनुराललम्बे ॥ ३५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकविंशः सर्गः ॥ २१ ॥

तात्कालिकतरङ्गौन्नत्यं वर्णयति—ऊर्मय इति ॥ ३३ ॥ उक्तानुवादेन विशेषान्तरमाह—आघूर्णितेति । आघूर्णितसम्भ्रान्तोद्वर्तितपदान्येकार्थानि ॥ ३४ ॥ ततस्त्विति । तुशब्देन पूर्वसन्धानाद्वैषम्यमुक्तम् । अप्रमेयम् अपरिच्छेद्यवैभवम् । प्रकर्षमाणम्, अमोघशरसन्धानायेति भावः । समुच्छ्वसन्तम्, कोपेनेति शेषः । तं राघवम् । उत्पत्य झटित्यागत्य । मा मेत्युक्त्वा एतादृशं धनुराकर्षणं मा कुर्वित्युक्त्वा । भयातिशयाद्वीप्सा । अनिवर्तमाने तस्मिन् धनुराललम्बे ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

करिष्यामि ॥ २५–३५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकविंशः सर्गः ॥ २१ ॥

प्रथमं वानरसेनातरणाय सागरं शरणं गत्वा तस्मिन्ननागते चापमानयेति वाचा भीषयित्वा तथाप्यनाविष्कृतनिजरूपं तं शरैः प्रक्षोभ्य तावताप्यनागतस्य तस्य भीतिमुत्पादयितुं ब्रह्मास्त्रसन्धानायोपक्रमत इत्याह—अथेत्यादिना। सपातालं पातालपर्यन्तमित्यर्थः ॥ १ ॥ शरेति । शरनिर्दग्धतोयस्य निर्जलस्येत्यर्थः । परिशुष्कस्य भूम्यन्तर्गतजलशून्यस्य । शोषितसत्त्वस्य दग्धसत्त्वस्येत्यर्थः । ते महान् पांसुः अतिसूक्ष्मो रेणुः उत्पद्यते । वर्तमानसामीप्ये वर्तमानप्रयोगः । महावर्षेऽपि पुनर्यथा जललवोऽपि न तिष्ठति तथा करिष्यामीति भावः ॥ २ ॥ ननु सकलजलशोषणेन पातालमात्रपरिशोषात्तत्र गमना

अथोवाच रघुश्रेष्ठः सागरं दारुणं वचः । अद्य त्वां शोषयिष्यामि सपातालं महार्णव ॥ १ ॥ शरनिर्दग्धतोयस्य परिशुष्कस्य सागर । मया शोषितसत्त्वस्य पांसुरुत्पद्यते महान् ॥ २ ॥ मत्कार्मुकविसृष्टेन शरवर्षेण सागर । पारं तेऽद्य गमिष्यन्ति पद्भिरेव प्लवङ्गमाः ॥३॥ विचिन्वन्नाभिजानासि पौरुषं वापि विक्रमम् । दानवालय सन्तापं मत्तो नाधिगमिष्यसि ॥४॥ ब्राह्मेणास्त्रेण संयोज्य ब्रह्मदण्डनिभं शरम् । संयोज्य धनुषि श्रेष्ठे विचकर्ष महाबलः॥५॥

सम्भवादाकाशेन गन्तव्यं ततो वरमिदानीं तथा गमनं किं कोपेनेत्यत्राह—मत्कार्मुकेति । शरवर्षेण शरजालेन सेतुस्थानीयेन । सेतुबन्धादिक्लेशो मे न भवतीति भावः ॥ ३ ॥ पौरुषं बलं विक्रमं पराक्रमं च विचिन्वन् विशेषेण पर्यालोचयितुं नाभिजानासि । "लक्षणहेत्वोः—" इति शतृप्रत्ययः । इदमज्ञानं सहवासकृतमित्याशयेन दानवालयेति संबोधनम् । मत्तो भाविनं सन्तापं च नाधिगमिष्यसि न ज्ञास्यसि । मत्पराक्रममजानन् मत्तो भाविब्रह्मास्त्रपीडामपि न ज्ञास्यस्येवेति भावः ॥ ४ ॥ ब्रह्मदण्डः ब्रह्मशापः । तद्वदमोघमित्यर्थः । यद्वा ब्रह्मदण्डः केतुविशेषः । तथोक्तं नारदसंहितायाम्—"पितामहात्मजः क्रूरस्त्रिवर्णः शिखरान्वितः । ब्रह्मदण्डाह्वयः केतुः सर्वभूतविनाशनः॥" इति । ब्राह्मेणास्त्रेण ब्रह्मास्त्रमन्त्रेण । संयोज्य अभिमन्त्र्य । तद्धनुर्विचकर्ष ॥५॥



॥ १ ॥ शरनिर्दग्धतोयस्य शरवर्षेण शोषितस्य, तवेति शेषः ॥ २ ॥ ३ ॥ विचिन्वन्निति । विक्रमं जलोपरि शरसेतुबन्धनजलस्तम्भनतच्छोषणादिशक्तित्वरूपम् । विचिन्वन् विशेषेण पर्यालोचयन् । नाभिजानासि पौरुषं शास्त्रवश्यत्वसौजन्यनिबन्धनं शरणवरणरूपं पुरुषकृत्यं नाभिजानासि । मत्तो भाविनं सन्तापं नावगमिष्यसि न ज्ञास्यसि, सर्वशक्तेरपि धर्मशीलतया शरणागतस्य फलप्रदानाभावे महाननर्थो भविष्यतीत्यमुमर्थं न जानासीत्यर्थः ॥४॥ ब्रह्मदण्डनिभं

अथास्त्रसन्धानस्य मरुकान्तारवर्तिनां युगपद्दिनाद्यसेतुत्वात्तत्काले बहुनिमित्तोत्पातान् दर्शयति—तस्मिन्नित्यादिना । शरसन्धानकालिकं लोकस्य भयं दर्शयतीत्यप्याहुः । रोदसी द्यावापृथिव्यौ । सम्पफालेव भिन्ने इव । एकवचनमार्षम् । " द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी " इत्यमरः ॥६॥७॥ तिर्यक् चेति श्लोकद्वयमेकान्वयम् । चन्द्रभास्करौ नक्षत्रैः सह तिर्यक् वक्रं यथा भवति तथा सङ्गतौ तिर्यग्जग्मतुः, भयादिति भावः ।

तस्मिन् विकृष्टे सहसा राघवेण शरासने । रोदसी सम्पफालेव पर्वताश्च चकम्पिरे ॥ ६ ॥ तमश्च लोकमावव्रे दिशश्च न चकाशिरे । परिचुक्षुभिरे चाशु सरांसि सरितस्तथा ॥ ७ ॥ तिर्यक् च सह नक्षत्रैः सङ्गतौ चन्द्रभास्करौ । भास्करांशुभिरादीप्तं तमसा च समावृतम् ॥८॥ प्रचकाशे तदाऽऽकाशमुल्काशतविदीपितम् । अन्तरिक्षाच्च निर्घाता निर्जग्मुरतुलस्वनाः ॥ ९ ॥ पुस्फुरुश्च घना दिव्या दिवि मारुतपङ्क्तयः ॥ १० ॥ बभञ्ज च तदा वृक्षान् जलदानुद्वहन्नपि । अरुजंश्चैव शैलाग्रान् शिखराणि प्रभञ्जनः ॥ ११ ॥

आदीप्तम् ईषद्दीप्तम्, मन्दरश्मित्वात्तमसावृतत्वाच्च सूर्यस्येति भावः । समावृतं सम्यगावृतम् । उल्काशतविदीपितम् । उल्कालक्षणमुक्तं वराहमिहिरेण—" उल्का शिरांसि विशाला निपतन्ती वर्द्धते च तनुपुच्छा " इति । निर्घातलक्षणं तेनैवोक्तम्—" पवनः पवनाभिहतो गगनादवनौ यदा समापतति । भवति तदा निर्घातः स च पापो दीर्घखगविरुतः ॥ " इति ॥ ८ ॥ ९ ॥ पुस्फुरुः चेरुः । मारुतपङ्क्तयः आवहोद्वहादिवातस्कन्धाः । दिव्याः श्लाघ्याः ॥ १० ॥ उद्वहन् ऊर्ध्वं नयन् । शैलाग्रान् पर्वताग्रप्रदेशान् । शिखराणि खण्डपर्वतान् । अरुजन् अपीडयत् । बहुवचनमार्षम् ॥ ११ ॥

शरं ब्राह्मेणास्त्रेण ब्रह्मास्त्रमन्त्रेण संयोज्याभिमन्त्र्येति सम्बन्धः ॥ ५ ॥ रोदसी द्यावाभूमी ॥ ६ ॥ ७ ॥ चन्द्रभास्करौ नक्षत्रैस्सह तिर्यक् सङ्गतौ तिर्यग्यथा तथा सङ्गतौ व्युत्क्रमेण पथा गन्तुमुपक्रान्तावित्यर्थः । " भास्करांशुभिरादीप्तं तमसा च समावृतम् " इत्यनेन विरुद्धयोस्तेजस्तिमिरयोस्सामानाधिकरण्यमभूदिति सूच्यते ॥ ८ ॥ ९ ॥ मारुतपङ्क्तयः वातस्कन्धाः । पुस्फुरुश्चेति वा पाठः ॥ १० ॥ शैलाग्रान् शैलोच्चप्रदेशान् ॥ ११ ॥

स०—रोदसी द्यावापृथिव्यौ । सम्पफाल विशीर्णे । एकवचनमार्षमिति नागोजिभट्टादयः । वस्तुतस्तु "रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक् । सहप्रयोगेऽप्यनयो रोदः स्यादपि रोदसी" इति विश्वोक्तेः रोदसी तन्त्रन्यायेन द्यौः पृथिवी च । संपफाल विशीर्णेत्यर्थः । रोदसीत्यव्ययमप्यस्तीति भानुदीक्षितः ॥६॥ विषम०—प्रास्फुटन् प्रचेलुः । बभञ्ज चेति । मारुतपंक्तिरिति शेषः । उद्वहन्, मारुतसमूह इति शेषः । अम्रेडथ्येष एव कर्ता, शैलाग्रान् पर्वतप्रदेशान् । अरुजन् अपीडयत् । बहुवचनमार्षम् । शिखराणि खण्डपर्वतान् बभञ्ज चेत्यन्वयः ॥ १० ॥ ११ ॥

ते वैद्युताग्नयः तदा महाशनयोऽभवन् । अशनिस्वरूपं मिहिरेणोक्तम्—" अशनिः स्वनेन महता युक्ता नृगजाश्वतरुपशुमुखेषु । निपतति विदारयन्ती धरातलं चक्रसंस्थाना ॥" इति ॥१२॥ यानीत्यादि श्लोकद्वयमेकं वाक्यम् । यानि भूतानि दृश्यानि मनुष्यादीनि । अदृश्यानि पिशाचादीनि । तानि सर्वाणि भूतानि सन्त्रस्तानि । अत एवोद्विजन्ति कम्पमानानि सन्ति । अशनेः समम् अशनिस्वरसमं यथा तथा चुक्रुशुः तथा भैरवस्वनं मुमुचुः । ततः शिशियरे

दिविस्पृशो महामेघाः सङ्गताः समहास्वनाः । मुमुचुर्वैद्युतानग्नींस्ते महाशनयस्तदा ॥ १२ ॥ यानि भूतानि दृश्यानि चुक्रुशुश्चाशनेः समम् । अदृश्यानि च भूतानि मुमुचुर्भैरवस्वनम् ॥ १३ ॥ शिशियरे चापि भूतानि सन्त्रस्तान्युद्विजन्ति च । सम्प्रविव्यथिरे चापि न च पस्पन्दिरे भयात् ॥ १४ ॥ सह भूतैः सतोयोर्मिः सनागः सह राक्षसः । सहसाऽभूत्ततो वेगाद्भीमवेगो महोदधिः ॥ १५ ॥ योजनं व्यतिचक्राम वेलामन्यत्र सम्प्लवात् । तं तदा समतिक्रान्तं नातिचक्राम राघवः । समुद्धतममित्रघ्नो रामो नदनदीपतिम् ॥ १६ ॥ ततो मध्यात् समुद्रस्य सागरः स्वयमुत्थितः । उदयन् हि महाशैलान्मेरोरिव दिवाकरः ॥ १७ ॥

सुप्तानि, सुप्तवद्भूमौ पतितानीत्यर्थः । तत्रापि सम्प्रविव्यथिरे चिन्तया दुःखितानि । भयान्न पस्पन्दिरे न चलितानि ॥ १३ ॥ १४ ॥ अथ समुद्रराजस्योत्थानं सूचयति—सह भूतैरित्यादिना । ततो वेगात्पूर्वसर्गान्तोक्ताद्रामवेगात् । सहसा शरसन्धानसमय एव । भीमवेगोऽभूत् भीमप्रवाहवेगोऽभूत् । केवलशरमोक्षकृतात् क्षोभात् ब्रह्मास्त्रमोक्षारम्भे महान् क्षोभोऽभूदित्यर्थः ॥ १५ ॥ वेगफलं दर्शयति—योजनमित्यादिना । सार्धश्लोक एकान्वयः । संप्लवात् वारिपूरेण वेलामन्यत्र वेलां विनेत्यर्थः । अथवा संप्लवादन्यत्र प्रलयं विना । वेलां योजनं योजनपर्यन्तं व्यतिचक्राम अतिक्रान्तवान् । योजनमन्तर्जीर्णोऽभूदित्यप्याहुः । तं समतिक्रान्तं पलायमानं नातिचक्राम पलायमानं प्रति शस्त्रप्रयोगरूपातिक्रमं न चकार ॥ १६ ॥ तत इति । समुद्रस्य मध्यात्

वैद्युतान् विद्युत्सङ्घातान् ॥ १२ ॥ अशनेः समम् अशनिघोषतुल्यं यथा तथा चुक्रुशुः ॥ १३ ॥ उद्विजन्ति आकम्पन्ति ॥ १४ ॥ सहेति । ततो वेगात् प्रथमप्रयुक्तकेवलबाणप्रयोगकृतात् । क्षोभात् उदधिः भीमवेगोऽभूत ब्रह्मास्त्रसन्धानेनातिभयङ्करक्षोभोऽभूदित्यर्थः ॥ १५ ॥ महोदधिः संप्लवात् वारिपूरेण वेलामन्यत्र योजनं

स०-तथाशब्द उपमायाम् । तं तथा चोरमिव स्थितम् । चोरं स्वगृहे स्थापयिता यथा चोरसदृशो भवति तथा स्वदारचोरस्य रावणस्य स्वगर्भे स्थापनात् समुद्रश्चोरसदृशस्तम् । द्वितीयेन तमित्यनेन समुद्रपरामर्शः । "तकारः कीर्तितश्चोरे" इति विश्वः । एतेन न पौनरुक्त्यम् । समतिक्रान्तम् अतिक्रान्तवेलम् अत एवोद्धतम् उत्कृष्टमपि तं नदनदीपतिम् । रामः नातिचक्राम नावधीत् । भीषणार्थमेवास्त्रसंयोजनं न वस्तुतः सत्यसङ्कल्पत्वात् । नातिचक्राम स्वधैर्यान्न चचालेति वा, अत्र पक्षे द्धृति शेषः ॥ १६ ॥ सागरः वरुणः मेरोरिव विद्यमानात् उदयाद्रेर्महाशैलात् शृङ्गात् दिवाकर इव । मेरोर्धनुषो—

उन्नतात्। स्वयं सागरः समुद्राभिमानिदेवता। [illegible] ॥ १७ ॥ [illegible] जम्बूनदीप्रभवं स्वर्णम् । रक्तमाल्यं रक्तैकवर्ण्यमाला । जातरूपमयैः आकरजसुवर्णप्रचुरैः । तपनीयविभूषितैः रत्नकीलनार्हद्रुतकनकविभूषितैः । रत्नानां संबन्धिभिर्भूषणोत्तमैः । एकावली मुक्तावली। तरलं नायकरत्नम्। आघूर्णितः चलितः। कालिका मेघपङ्क्तिः। "मेघजालेऽपि कालिका" इत्यमरः। तया अनिलेन च सङ्कुलः क्षुभितः। मेघानिलौ समुद्रस्य सहचरा

पन्नगैः सह दीप्तास्यैः समुद्रः प्रत्यदृश्यत । स्निग्धवैडूर्यसङ्काशो जाम्बूनदविभूषितः ॥ १८ ॥ रक्तमाल्याम्बरधरः पद्मपत्रनिभेक्षणः । सर्वपुष्पमयीं दिव्यां शिरसा धारयन् स्रजम् ॥ १९ ॥ जातरूपमयैश्चैव तपनीयविभूषितैः । आत्मजानां च रत्नानां भूषितो भूषणोत्तमैः ॥२०॥ धातुभिर्मण्डितः शैलो विविधैर्हिमवानिव । एकावलीमध्यगतं तरलं पाण्डरप्रभम् ॥२१॥ विपुलेनोरसा बिभ्रत् कौस्तुभस्य सहोदरम् । आघूर्णिततरङ्गौघः कालिकानिलसङ्कुलः ॥२२॥ [देवतानां सुरूपाणां नानारूपाभिरीश्वरः। गङ्गासिन्धुप्रधानाभिरापगाभिः समावृतः ॥] उद्वर्तितमहाग्राहः सम्भ्रान्तोरगराक्षसः । सागरः समुपक्रम्य पूर्वमामन्त्र्य वीर्यवान् । अब्रवीत् प्राञ्जलिर्वाक्यं राघवं शरपाणिनम् ॥२३॥

विति प्रसिद्धिः ॥१८–२२॥ उद्वर्तितेत्यादिसार्द्धश्लोक एकान्वयः । उद्वर्तितः उद्भ्रामितः । समुपक्रम्य समुपागम्य । स्वसौजन्यं पुरस्कर्तुं पूर्वम् आमन्त्र्य

व्यतिचक्राम रामशरसन्धानक्षुब्धं सत्सागरजलं वेलां विसृज्य योजनमात्रं परावृत्तम् वेलामुल्लङ्घ्य योजनमात्रं बहिर्गतं वेत्यर्थः । तं सापराधं सागरं नातिचक्राम नाभ्यभवत्, नावधीदित्यर्थः। परमकारुणिकेन श्रीरामेण समुद्रभयोत्पादनार्थमेव ब्रह्मास्त्रं संहितम्, न तु तद्वधार्थमिति भावः ॥ १६–१९ ॥ जातरूपेति । तपनीयविभूषणैः रत्नकीलितस्वर्णभूषणैः। आत्मजानां स्वस्मिन्नुत्पन्नानाम् ॥ २० ॥ २१ ॥ कालिकानिलसङ्कुलः मेघपटलसम्मिलितवायुना सङ्कुलः "मेघजालेऽपि कालिका" इत्यमरः ॥ २२ ॥ समुपक्रम्य समुपागम्य ॥ २३ ॥

—भयादुत्थित इति वा "मेरुर्भूधरधन्वनोः" इति विश्वः ॥ १७ ॥ सर्वपुष्पमयीं यावत्पुष्पयुक्ताम् । शिरसि धारयन्नित्यनेन रामसत्कारार्थमिति ज्ञायते । एकैकस्य देवस्य एकैकं पुष्पं युक्तम्, अयुक्तं चैकं श्रीनारायणरूपिणो रामस्य । रामस्तत्कुसुमयुक्ता युक्ता माला । यथोक्तं भागवते नवमे । रुक्मिणीशविजये च प्रमाणान्तरोक्तार्थसंग्राहकं—"सिन्धुः शिरस्यर्हणं प्रतिगृह्य रूपी" इति । "या पै चम्पकसम्पदाब्जवसतेर्दूर्वाश्रिया स्वात्मनः केतक्या विभवेन क्वचित्सनस्याम्भोजकान्त्या विधोः । सन्नीलोत्पलशोभया दिनमणेः श्रीमत्तुलस्याऽमता हेरम्बस्य हरेः परं समुदिता सा मालिका शोभते ॥" इति । यद्वा वरुणाभरणप्रस्तावात्तत्स्रग्वा ॥ १९ ॥ समुपक्रम्य पादाभ्यामागत्य पूर्वमामन्त्र्य अहं भो रामाम्भोनिधिर्देवं वन्दे त्वामिति सम्बोध्य । शरपाणिनं बाणपाणिम् । पणो ग्लहः, स एव पाणः प्रज्ञादिः । शरैः पाणः—

आहूय । प्रकृष्टो मूर्ध्नि कृतोऽञ्जलिः यस्यासौ प्राञ्जलिः । शरपाणिनमिति नकारान्तत्वमार्षम् । स्वविरोधिनो मरुवासिनो रामेण घातयितुं स्वयं रावण भीतत्वेन तत्संहारक्षममस्य पराक्रमं परीक्षितुं च समुद्र एतावत्पर्यन्तं विलम्बितवानिति बोध्यम् ॥ २३ ॥ किं विभोस्तव मया कर्तव्यम्, किं गाधत्वम्, उत जलस्तम्भनम्, आहोस्वित्सेतुबन्धनानुकूल्यमित्याशङ्क्य न तावदाद्यः पक्ष इत्याह श्लोकद्वयेन—पृथिवीति । सौम्य प्रसन्न । अनेनाञ्जलिकरणान

पृथिवी वायुराकाशमापो ज्योतिश्च राघव । स्वभावे सौम्य तिष्ठन्ति शाश्वतं मार्गमाश्रिताः ॥ २४ ॥
तत्स्वभावो ममाप्येष यदगाधोऽहमप्लवः । विकारस्तु भवेद्गाध एतत्ते प्रवदाम्यहम् ॥ २५ ॥
न कामान्न च लोभाद्वा न भयात् पार्थिवात्मज । ग्राहनक्राकुलजलं स्तम्भयेयं कथंचन ॥ २६ ॥

न्तरमेव रामः प्रसन्न इति गम्यते । पृथिव्यादयः पञ्च पदार्थाः शाश्वतं नित्यं मार्गं मर्यादाम् आश्रिताः सन्तः स्वभावे काठिन्यतिर्यग्गमनावकाशप्रदाना गाधत्वोर्ध्वज्वलनादिस्वस्वभावे तिष्ठन्ति, स्वस्वभावं नातिक्रामन्तीत्यर्थः ॥ २४ ॥ एषु कस्ते स्वभाव इत्यत आह—तदिति । तत् तस्मात् सर्वेषां पृथिव्यादीनां स्वस्वभावानतिलङ्घित्वात् । अहम् अगाधः अप्लुवः अलङ्घ्यश्चेति यत् एषः ममापि स्वभावः । तस्मादेवमेव मया स्थातव्यम् । गाधः प्लुवविषयोऽहमिति यत् एषः मम विकारः अन्यथाभावः । तथा मया न स्थातुं शुक्तम् । एतत् उक्तस्वरूपं मे प्रवदामि प्रावदम् । प्रददामीति पाठेऽप्यय मेवार्थः । धातूनामनेकार्थत्वात् ॥ २५ ॥ द्वितीयपक्षोऽप्यनुपपन्न इत्याह—न कामादिति । कामात् अर्थेच्छया । लोभात् लब्धवस्तुत्यागासहिष्णुतया । स्वकीयापराधं परिहर्तुं पातनिकामाह—पृथिवीत्यादि । स्वभावे स्वस्याधिकारे ॥२४॥ तव स्वभावः कीदृश इत्यत आह—तत्स्वभाव इति । अहमप्लवः अगाध इति यत् एष ममापि स्वभावः, गाधस्तु विकारो भवेत् । एतत्ते प्रवदामि प्रावदम् । तत्तस्मात्कारणात् तव समक्षं नागममिति शेषः ॥२५॥ तर्हि मा भूत्स्वभावहानिः, घनीभवनेनास्माकं मार्गं प्रयच्छेत्याशङ्क्य तथात्वे जलचरजन्तुपीडा स्यात् । प्रकारान्तरेण मार्गं करिष्यामीत्याह—न कामादित्यादिश्लोकद्वयेन । कामात् अभिलाषात् ।

—रिपुप्राणरूपः सोऽस्यास्तीति स तथा वा तम् । न च भारते वनपर्वणि " सागरस्तु ततः स्वप्ने दर्शयामास राघवम् " इति स्वप्ने रामस्य सागर आत्मानं दर्शयामासेत्युक्त्या अत्र च समुत्थितः प्राञ्जलिरिति वचः पूर्वम् अत्र च " सागरः समुपक्रम्य पूर्वमामन्त्र्य वीर्यवान् । अब्रवीत्प्राञ्जलिर्वाक्यम् " इति वाक्यं विरुद्धमिति वाच्यम्; भागवते नवमे " सिन्धुः शिरस्यर्हणं प्रतिगृह्य रूपी पादारविन्दमुपगम्य बभाष एतत् " इत्युक्तेः प्रत्यक्षत एव जाग्रद्दशायामेव दर्शनम् । भागवतस्योत्तरत्वेनैतदनुरोधेन प्रतिशिश्य इति पूर्वोदीरितं स्वप्ने स्वापे कृते सति नदनदीभर्त्ता राघवं स्वं दर्शयामासेति भारतश्लोकार्थोपपत्तेः । अत्रैव यादोगणैर्वृत इत्युक्तिस्वारस्याच्च । स्वप्ने चेदेकमात्रदर्शनेन भाविकार्यसिद्धेस्तत्संवृततथाऽऽगमनमनुपयुक्तम् । प्रत्यक्षतस्तु सहनयन [illegible] प्रदर्शनेन देवदयोदयहेतुरिति सहनयनं युक्तम् ॥ २३ ॥

भयात् दण्डभयात् । पार्थिवात्मजेत्यनेन सर्वमर्यादास्थापकोऽस्मीति द्योतयति । न स्तम्भयेयं पीडाकरत्वादिति भावः ॥ २६ ॥ तृतीयं तु पक्षं कक्षी करोमीत्याह—विधास्य इत्यादिसार्धश्लोकेन । येन यथाऽहं विषहिष्ये शक्ष्यामि तथा विधास्ये । किं तच्छक्यमित्यपेक्षायामाह ग्राहेत्यादि । यावत्सेना तरिष्यति तावत् ग्राहा न प्रहरिष्यन्ति । जलेऽपि हि केचिद्गमिष्यन्ति । हरीणां तरणे विषये । यथा स्थलं भवति यथा सेतुमार्गो भवति तथा करिष्यामि

विधास्ये राम येनापि विषहिष्ये ह्यहं तथा । ग्राहा न प्रहरिष्यन्ति यावत् सेना तरिष्यति ॥ २७ ॥ हरीणां तरणे राम करिष्यामि यथा स्थलम् ॥ २८ ॥ तमब्रवीत्तदा राम उद्यतो हि नदीपते । अमोघोऽयं महाबाणः कस्मिन् देशे निपात्यताम् ॥ २९ ॥ रामस्य वचनं श्रुत्वा तं च दृष्ट्वा महाशरम् । महोदधिर्महातेजा राघवं वाक्यमब्रवीत् ॥ ३० ॥ उत्तरेणावकाशोऽस्ति कश्चित् पुण्यतमो मम । द्रुमकुल्य इति ख्यातो लोके ख्यातो यथा भवान् ॥ ३१ ॥ उग्रदर्शनकर्माणो बहवस्तत्र दस्यवः । आभीरप्रमुखाः पापाः पिबन्ति सलिलं मम ॥ ३२ ॥

सेतुबन्धद्रव्यापकर्षणादिविघ्नं न करिष्यामीत्यर्थः ॥ २७ ॥ २८ ॥ उद्यतः कृतसन्धानः ॥ २९ ॥ महातेजाः स्वाभिमतलाभेन जनितकान्तिः ॥ ३० ॥ उत्तरेण समीपवर्तिन्युत्तरभागे । "एनबन्यतरस्यामदूरेऽपञ्चम्याः" इत्येनप् । ममावकाशः मध्यप्रदेश इत्यर्थः । पुण्यतमः चारुतमः । "पुण्यं तु चार्वपि" इत्यमरः । द्रुमेषु कुल्या यस्यासौ द्रुमकुल्यः । "कुल्याऽल्पा कृत्रिमा सरित्" इत्यमरः ॥ ३१ ॥ उग्रे दर्शनकर्मणी येषां ते उग्रदर्शनकर्माणः ।

लोभात् स्वकीयवस्तुपरित्यागासहिष्णुत्वात् । रागादनुरागाच्च नक्राकुलजलं न स्तम्भयेयं भयाद्वा न स्तम्भयेयम्, कथञ्चन अन्येन हेतुना न स्तम्भयेयम्, किन्तु अहमपि येन विषहिष्ये यावत्सेना तरिष्यति तावद्ग्राहा अपि यथा सेनां न प्रहरिष्यन्ति तथा विधास्य इति योजना ॥ २६ ॥ २७ ॥ तमेव प्रकारमाह—हरीणामिति । हरीणां तरणे विषये स्थलं यथा करिष्यामि, सेतुबन्धनसमये सेतुबन्धनसाधनखातमृद्दारुपर्वतादीनां निमज्जनं यथा न भवति तथा करिष्यामीत्यर्थः । यद्वा सेनातरणमार्गप्रकाशनप्रकारमाह—न कामादित्यादिसार्धद्वाभ्याम् । कामात् यत्किञ्चिद्वस्त्वभिलाषात् नक्राकुलजलं न स्तम्भयेयम्, लोभात् स्वकीयवस्तुपरित्यागासहिष्णुत्वान्न स्तम्भयेयम्, कथञ्चन प्रकारान्तरेणापि न स्तम्भयेयम्, किन्तु हे पार्थिवात्मजेत्यनेन दशरथेऽवतीर्णेश्वरेत्युक्तं भवति । ईश्वरत्वादेव भयात् त्वद्भयात् रागात् त्वयि भक्त्या च वानररूपान्तरङ्गभक्तसहितत्वत्पादारविन्दरजोवहनभाग्यं मया लब्धमिति भक्त्या जलं स्तम्भयेयमित्यर्थः । अब्रवीत्प्राञ्जलि वाक्यं राघवं शरपाणिनम् इत्युक्त्या भयान्मार्गप्रदत्वोक्तिः ॥ २८ ॥ उद्यतः संयोजितः ॥ २९ ॥ ३० ॥ उत्तरेणेति । उत्तरतीरसमीपदेशवर्तिद्रुमकुल्याख्योऽवकाशो देशः अस्तीति सम्बन्धः ॥ ३१ ॥ उग्रदर्शनकर्माणः उग्रे दर्शनकर्मणी येषां ते तथा ॥ ३२ ॥ ३३ ॥

दस्यवः शत्रवः । "दस्युशात्रवशत्रवः" इत्यमरः । दस्यवः चोरा वा । आभीराः महाशूद्राः ॥ ३२ ॥ तत्र द्रुमकुल्ये । तेषु आभीरप्रमुखेषु ॥ ३३ ॥ सागरदर्शनात्सागरमतेन । यद्वा अङ्गुल्या निर्दिश्य सागरेण प्रदर्शनात् ॥ ३४ ॥ तेन शरमोक्षणेन ॥ ३५ ॥ ननाद जलनिर्गमेनेति भावः । व्रण मुखात् व्रणमुखद्वारेण ॥ ३६ ॥ सः व्रणमुखं व्रणकूपः इत्यभिविश्रुतो बभूव । सततमिति । तस्येति शेषः ॥ ३७ ॥ अवदारणशब्दः, बाणस्येति



तैस्तु संस्पर्शनं प्राप्तैर्न सहे पापकर्मभिः । अमोघः क्रियतां राम तत्र तेषु शरोत्तमः ॥ ३३ ॥ तस्य तद्वचनं श्रुत्वा सागरस्य स राघवः । मुमोच तं शरं दीप्तं वीरः सागरदर्शनात् ॥ ३४ ॥ तेन तं मरुकान्तारं पृथिव्यां खलु विश्रुतम् । निपातितः शरो यत्र दीप्ताशनिसमप्रभः ॥ ३५ ॥ ननाद च तदा तत्र वसुधा शल्यपीडिता । तस्माद्व्रणमुखात्तोयमुत्पपात रसातलात् ॥ ३६ ॥ स बभूव तदा कूपो व्रण इत्यभिविश्रुतः । सततं चोत्थितं तोयं समुद्रस्येव दृश्यते ॥ ३७ ॥ अवदारणशब्दश्च दारुणः समपद्यत ॥ ३८ ॥ तस्मात्तद्बाणपातेन त्वपः कुक्षिष्व शोषयत् ॥ ३९ ॥ विख्यातं त्रिषु लोकेषु मरुकान्तारमेव तत् ॥ ४० ॥ शोषयित्वा ततः कुक्षिं रामो दशरथात्मजः । वरं तस्मै ददौ विद्वान् मरवेऽमरविक्रमः ॥ ४१ ॥

शेषः ॥ ३८ ॥ तस्मादित्यर्धम् । तद्बाणपातेन तस्य बाणस्य पातेन । कुक्षिषु अवटेषु स्थिता अपः पूर्वं पापस्पृष्टानि जलानि । तस्मात् द्रुमकुल्यात् । अशोषयत् न्यवारयदित्यर्थः ॥३९॥ पूर्वं रामबाणपातेन पृथिव्यां विश्रुतत्वमुक्तम्, सम्प्रति विरोधिनिरसनात् त्रिषु लोकेषु विख्यातत्वमाह–विख्यातमिति । मरुकान्तारमेव मरुकान्तारनामैव । विख्यातं प्रसिद्धमभूदित्यर्थः ॥४०॥ शोषयित्वेति । कुक्षिं समुद्रमध्यप्रदेशम् । मरुकान्तारं शोषयित्वा दग्ध्वा । कथं

सागरदर्शनात् सागरोपदेशात् ॥ ३४ ॥ तेन रामेण । दीप्ताशनिसमप्रभः शरो यत्र निपातितः तत्स्थलं पृथिव्यां मरुकान्तारमिति विश्रुतं खलु पूर्वमेव प्रसिद्धं हीत्यर्थः ॥३५॥ सततमिति । मरुभूमौ रामबाणव्रणादुत्थितं तोयं स्वादूदकं समुद्रस्येव समुद्रसलिलमिव दृश्यत इत्यर्थः ॥ ३६–३८ ॥ तस्मादिति । तद्बाणपातेन कुक्षिष्ववटेष्वपः आभीरादीनां जीवनसाधनभूताः पुरातनीरपः तस्माद्देशादशोषयत् निरासयत्, राम इति शेषः । यद्वा पूर्वमपः पापिष्ठाभिस्पृष्टाः ताः तस्मात्पापिष्ठाभिस्पर्शनाद्धेतोः तद्बाणपातेनाशोषयत्, राम इति शेषः । कुक्षिं समुद्रकुक्षिं ततो मोक्षयित्वा पुरातनपापिष्ठानाभीरजनान्मोचयित्वा ॥ ३९–४१ ॥

मनुष्यत्वं भावयतो वरदानमित्यत्राह अमरविक्रम इति । "सत्येन लोकान् जयति" इति न्यायेन वशीकृतसर्वलोक इत्यर्थः ॥ ४१ ॥ वरं सिद्धिमुखेन दर्शयति श्लोकद्वयेन—पशव्य इत्यादि। पशव्यः पशुभ्यो हितः पशूपभोग्यबालतृणादिसमृद्ध इत्यर्थः। अल्परोगः आरम्भ एव विनष्टरोगः। रसः मधु। आयुतः समन्ताद्युक्तः। स्नेहः घृतम्। औषधमोषधिसमूहः। एवमेतैः एवम्प्रकारैः। गुणैः भोग्यैः। युक्तः संयुक्तः। शिवः पन्थाः शोभनप्रदेश इत्यर्थः ॥४२॥४३॥

पशव्यश्चाल्परोगश्च फलमूलरसायुतः । बहुस्नेहो बहुक्षीरस्सुगन्धिर्विविधौषधः ॥ ४२ ॥ एवमेतैर्गुणैर्युक्तो बहुभिः सततं मरुः। रामस्य वरदानाच्च शिवः पन्था बभूव ह ॥४३॥ तस्मिन् दग्धे तदा कुक्षौ समुद्रः सरितां पतिः । राघवं सर्वशास्त्रज्ञमिदं वचनमब्रवीत् ॥ ४४ ॥ अयं सौम्य नलो नाम तनुजो विश्वकर्मणः। पित्रा दत्तवरः श्रीमान् प्रतिमो विश्वकर्मणा ॥४५॥ एष सेतुं महोत्साहः करोतु मयि वानरः । तमहं धारयिष्यामि तथा ह्येष यथा पिता ॥४६॥ एवमुक्त्वोदधिर्नष्टः समुत्थाय नलस्तदा । अब्रवीद्वानरश्रेष्ठो वाक्यं रामं महाबलः ॥ ४७ ॥ अहं सेतुं करिष्यामि विस्तीर्णे वरुणालये । पितुः सामर्थ्यमास्थाय तत्त्वमाह महोदधिः॥४८॥ दण्ड एव वरो लोके पुरुषस्येति मे मतिः । धिक् क्षमामकृतज्ञेषु सान्त्वं दानमथापि वा ॥ ४९ ॥

तस्मिन्निति । स्पष्टम् ॥ ४४ ॥ एवं सेतुनिर्माणानुकूलं स्थास्यामीत्युक्तवान्, सम्प्रति वरदानसन्तुष्टो वाक्सहायमाचरति—अयमिति । दत्तवरः मत्तुल्यः पुत्रस्ते भविष्यतीति मात्रे दत्तवरः ॥ ४५ ॥ एष इति । तं सेतुम् तथा ह्येष यथा पितेति । पिता यथा यादृशशक्तिमान् तादृशोऽयमित्यर्थः ॥ ४६ ॥ एवमिति । उदधिः नष्टः अन्तर्हितः ॥ ४७ ॥ अहमिति । पितुः सामर्थ्यं पित्रा दत्तं सामर्थ्यम् ॥ ४८ ॥ अथ वानरान् प्रत्याह—दण्ड इत्यादिश्लोकद्वयेन ।

पशव्य इति । पशव्यः पशुभ्यो हितः ॥ ४२ ॥ ४३ ॥ कुक्षौ दग्धे शोषितजले ॥ ४४ ॥ पित्रा विश्वकर्मणा दत्तवरः आकाशजलोपरिस्थायिगमनशीलविमानादिनिर्माणादिस्वकर्मकुशलेन सदृशसामर्थ्यः ॥ ४५ ॥ एष इति । नलः सेतुं बद्धुं कथं शक्नुयात्तत्राह—यथेति । यथा पिता विश्वकर्मा एष नलस्तथेति सम्बन्धः ॥ ४६ ॥ नष्टः अन्तर्हितः ॥ ४७–४९ ॥

अतो राघवायेति परोक्षनिर्देशः । "हिमवान् मन्दरो मेरुः" इत्यादिवत् । मध्ये कविवाक्यं वा । दण्ड एव परः समीचीनोपायः । क्षमां सान्त्वं साम दानं वा धिक्, क्षमादयो नोपाया इत्यर्थः ॥ ४९ ॥ उक्तेऽर्थे हेतुमाह–अयं हीति । हि यस्मात्सागरः सगरखानितः प्रत्युपकारानभिज्ञ इत्यर्थः । दण्डभयात् सेतुकर्मदिदृक्षया गाधं ददावित्यन्वयः । सेतुकर्मदिदृक्षा च दण्डभयादेवास्य जातेत्यर्थः ॥ ५० ॥ पूर्वोक्तस्य पितृतुल्यसामर्थ्यलाभस्य हेतुं दर्शयति–

अयं हि सागरो भीमः सेतुकर्मदिदृक्षया । ददौ दण्डभयाद्गाधं राघवाय महोदधिः ॥ ५० ॥ मम मातुर्वरो दत्तो मन्दरे विश्वकर्मणा । औरसस्तस्य पुत्रोऽहं सदृशो विश्वकर्मणा ॥ ५१ ॥ स्मारितोऽस्म्यहमेतेन तत्त्वमाह महोदधिः । न चाप्यहमनुक्तो वै प्रब्रूयामात्मनो गुणान् ॥ ५२ ॥ समर्थश्चाप्यहं सेतुं कर्तुं वै वरुणालये । काममद्यैव बध्नन्तु सेतुं वानरपुङ्गवाः ॥ ५३ ॥ ततोऽतिसृष्टा रामेण सर्वतो हरियूथपाः । अभिपेतुर्महारण्यं हृष्टाः शतसहस्रशः ॥ ५४ ॥ ते नगान्नगसङ्काशाः शाखामृगगणर्षभाः । बभञ्जुर्वानरास्तत्र प्रचकर्षुश्च सागरम् ॥ ५५ ॥

ममेति । मया सदृशः पुत्रस्तव भविष्यतीत्येवंरूपो वरः । अयं चार्थः 'औरसस्तस्य पुत्रोऽहं सदृशो विश्वकर्मणा' इत्यनुवादात्सिद्धः ॥ ५१ ॥ तर्हि तावत्पर्यन्तं किमर्थं नोक्तवानसीत्यत्राह–स्मारित इति । एतेन समुद्रेण । अनुक्तौ निमित्तान्तरमप्याह–नचेति । अनुक्तः अन्येनानुक्तः । स्वेनैवोक्तौ महा कर्मारम्भे विश्वासो न भवेदिति भावः ॥ ५२ ॥ न केवलमुक्तिमात्रं समर्थश्चापीत्याह–समर्थश्चेति । बध्नन्तु बन्धनाय शिलादिकमानयन्त्वित्यर्थः ॥ ५३ ॥ अतिसृष्टाः नियुक्ताः ॥ ५४ ॥ नगान् वृक्षान् । नगसङ्काशाः गिरिसङ्काशाः । वानराधिपतित्वेऽपि मनुष्यत्वं सम्भवति निषादस्थपत्यधिकरणपूर्वपक्ष-

अयमिति । अयं सागरः दण्डभयात्सेतुकर्मदिदृक्षया गाधं ददावित्यन्वयः । ननु रामसम्बन्धित्वमात्रेण हनुमते मैनाकद्वारेण कृतोपकारः सागरस्साक्षाद्रामे समागत्य प्रसन्ने सति अमुमुपायं प्रथमत एवाविलम्बेन किमर्थं नोपदिष्टवानिति चेत्? सत्यम्; मया च विलम्बे क्रियमाणे विलम्बमसहमानो रामो मयि कोपादस्त्रं सन्धास्यति एतस्मिन्नन्तरे तं प्रसादयित्वा संहितेनास्त्रेण मम शत्रून्मारयित्वा पश्चादुपकरिष्यामीति धिया स्थित इति न दोषः ॥ ५० ॥ स्वस्य पितृसदृशत्वं दर्शयितुं वरागमनप्रकारमाह–मम मातुरिति । मम मातुर्वरो दत्तः मया सदृशस्तव पुत्रो भविष्यतीत्येवंरूपः ॥ ५१ ॥ नलस्समुद्रोपदेशात्प्रागेवैतत्सामर्थ्यं किं नावदत् ? तत्राह–न चेति ॥ ५२ ॥ ५३ ॥ तत इति । सानवं प्रतीति शेषः ॥ ५४–५७ ॥

न्यायात् अत आह वानरा इति । तत्र तदानीम् । प्रचक्रमुः आनयन्ति स्म ॥ ५५ ॥ सेतुबन्धनसाह्यकृतां वृक्षाणां कृतार्थतां व्यञ्जयितुं तान् परिगणयति श्लोकद्वयेन–ते सालैरित्यादिना ॥ ५६ ॥ ५७ ॥ अथैषामानयनशैघ्र्यमाह–समूलानिति । हरयस्तरूनित्युत्तरशेषः ॥ ५८ ॥ वृक्षेषून्मूलितेषु गुल्मादीनाजह्रुरित्याह–तालानिति । तालान् क्षुद्रतालान् । खदिरान् अरिमेदकान् ॥ ५९ ॥ भूरुहेषु लुतेषु पाषाणपर्वतादीनाजह्रुरित्याह–हस्तीति ।

ते सालैश्चाश्वकर्णैश्च धवैर्वंशैश्च वानराः । कुटजैरर्जुनैस्तालैस्तिलकैस्तिमिशैरपि ॥ ५६ ॥ बिल्वैश्च सप्तपर्णैश्च कर्णिकारैश्च पुष्पितैः । चूतैश्चाशोकवृक्षैश्च सागरं समपूरयन् ॥५७॥ समूलांश्च विमूलांश्च पादपान् हरिसत्तमाः । इन्द्रकेतूनिवोद्यम्य प्रजह्रुर्हरयस्तरून् ॥५८॥ तालान् दाडिमगुल्मांश्च नारिकेलान् विभीतकान् । वकुलान् खदिरान्निम्बान् समाजह्रुः समन्ततः ॥५९॥ हस्तिमात्रान् महाकायाः पाषाणांश्च महाबलाः । पर्वतांश्च समुत्पाट्य यन्त्रैः परिवहन्ति च ॥ ६० ॥ प्रक्षिप्यमाणैरचलैः सहसा जलमुद्धतम् । समुत्पतितमाकाशमुपासर्पत्ततस्ततः ॥ ६१ ॥ समुद्रं क्षोभयामासुर्वानराश्च समन्ततः । सूत्राण्यन्ये प्रगृह्णन्ति व्यायतं शतयोजनम् ॥ ६२ ॥ नलश्चक्रे महासेतुं मध्ये नदनदीपतेः । स तथा क्रियते सेतुर्वानरैर्घोरकर्मभिः ॥६३ ॥ दण्डानन्ये प्रगृह्णन्ति विचिन्वन्ति तथा परे ॥६४॥

हस्तिमात्रान् गजप्रमाणान् । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति मात्रच्प्रत्ययः । यन्त्रैः शकटादिभिः ॥ ६० ॥ प्रक्षिप्यमाणैरिति । उद्धतम् उत्पतितम् आसीत् । समुत्पतितं सत् आकाशं ततस्ततः तत्र तत्र उपासर्पत् प्रससार ॥ ६१ ॥ समुद्रमिति । सूत्राणि शतयोजनं व्यायतम् आकृष्टं यथा भवति तथा प्रगृह्णन्ति प्रागृह्णन्, आर्जवार्थम् । व्यत्ययेन लकारः ॥ ६२ ॥ घोरकर्मभिः युगपदनेकपर्वतानयनकर्मभिः । तथा नलक्रियानुसारेण ॥६३॥ दण्डान् सूत्रबद्धदण्डान्, वानरत्वराकरणदण्डान् वा । विचिन्वन्ति विशेषेण चयनं कुर्वन्ति । नलबद्धसेतोरुपरि शिलाश्चितवन्त इत्यर्थः ॥६४॥

समूलानिति । हरयस्तरूनित्यस्योत्तरेण सम्बन्धः ॥ ५८ ॥ ५९ ॥ यन्त्रैः आनयनसाधनैः । समुद्रं क्षोभयामासुर्वानराश्च समन्ततः इति पाठः ॥ ६० ॥ ६१ ॥ सूत्राणीति । शतयोजनं व्यायतं सूत्राणि प्रगृह्णन्ति। व्यायतं व्यायामः। शतयोजनदीर्घपर्यन्तस्य न्यूनातिरिक्तपरिहारार्थं सूत्राण्यगृह्णन्नित्यर्थः ॥६२॥६३॥ दण्डानिति

वानरा इति । बबन्धिरे, सेतुप्रदेशानिति शेषः ॥ ६५ ॥ पुष्पिताग्रैरिति । मार्दवार्थमुपरि बबन्धुरित्यर्थः ॥ ६६ ॥ अथ वानराणां पर्वतानयनं वर्णयति–पाषाणांश्चेति । गृह्य गृहीत्वा ॥ ६७ ॥ शिलानामिति । निपात्यताम् आर्षं परस्मैपदम् । तुमुलः सङ्कुलः ॥ ६८ ॥ चतुर्दशयोजनपरिमित

वानराः शतशस्तत्र रामस्याज्ञापुरस्सराः । मेघाभैः पर्वताग्रैश्च तृणैः काष्ठैर्बबन्धिरे ॥ ६५ ॥ पुष्पिताग्रैश्च तरुभिः सेतुं बध्नन्ति वानराः ॥६६॥ पाषाणांश्च गिरिप्रख्यान् गिरीणां शिखराणि च । दृश्यन्ते परिधावन्तो गृह्य वारणसन्निभाः ॥ ६७ ॥ शिलानां क्षिप्यमाणानां शैलानां च निपात्यताम् । बभूव तुमुलः शब्दस्तदा तस्मिन् महोदधौ ॥ ६८ ॥ कृतानि प्रथमेनाह्ना योजनानि चतुर्दश । प्रहृष्टैर्गजसङ्काशैस्त्वरमाणैः प्लवङ्गमैः ॥ ६९ ॥ द्वितीयेन तथा चाह्ना योजनानि तु विंशतिः । कृतानि प्लवगैस्तूर्णं भीमकायैर्महाबलैः ॥ ७० ॥ अह्ना तृतीयेन तथा योजनानि कृतानि तु । त्वरमाणैर्महाकायैरेकविंशतिरेव च ॥ ७१ ॥ चतुर्थेन तथा चाह्ना द्वाविंशतिरथापि च । योजनानि महावेगैः कृतानि त्वरितैस्तु तैः ॥ ७२ ॥ पञ्चमेन तथा चाह्ना प्लवगैः क्षिप्रकारिभिः । योजनानि त्रयोविंशत्सुवेलमधिकृत्य वै ॥ ७३ ॥

सेतुर्बद्ध इत्यर्थः । एवमुत्तरेष्वपि योज्यम् ॥ ६९ ॥ द्वितीयेनेति । प्रतिदिनं योजनाधिक्यमुत्साहातिरेकात् ॥ ७०–७२ ॥ पञ्चमेनेति । त्रयोविंशत्

प्रत्येकं बन्धनीयसेतुविभागार्थं मानदण्डान् गृह्णन्ति । विचिन्वन्ति समविषमभागं परीक्षन्ते । यद्वा सेतुबन्धनार्थं पर्वताद्यानेतॄन् वानरान् त्वरयितुं दण्डान् यष्टीः गृह्णन्ति धारयन्ति । विचिन्वन्ति श्रमात्तत्र तत्र छायासु लीनान्वानरानन्वेषयन्ति ॥ ६४ ॥ बबन्धिरे, सेतुप्रदेशानिति शेषः । नलबद्धसेतोरुपरिप्रदेशा वानरैः सज्जीकृता इत्यर्थः ॥ ६५–६७ ॥ निपात्यतां पात्यमानानाम् ॥ ६८ ॥ योजनानि चतुर्दशेत्यत्र चतुर्दशयोजनप्रमाणस्सेतुर्विरचित इत्यर्थः । एवमन्यत्रापि द्रष्टव्यम् ॥ ६९–७२ ॥ पञ्चदिनैः शतयोजनं बबन्ध । सुवेलं वेलासमीपम् । सामीप्येऽव्ययीभावः । परपारसमीपमधिकृत्येत्यर्थः ॥ ७३ ॥ ७४ ॥

स०–सुवेलं सुशोभना प्राप्याशान्तरवेला यस्मिन् कर्मणि तद्यथा भवति तथा । अधिकृत्येति केचित् । वस्तुतस्तु सुवेलं तन्नामकं पर्वतम् । यद्वक्ष्यति "ते सुवेलस्य शैलस्य" इति । ननु वनपर्वणि "दशयोजनविस्तारं त्रिंशद्योजनमायतम् । बबन्धुर्वानरास्सेतुं प्रथमे दिवसे तदा । [illegible] द्वितीये च [illegible] । एवं त्रिभिर्दिनैर्बद्धः सेतुर्नवतियोजनम् । चतुर्थे तु दिने सार्धे यामे ते च वलीमुखाः । दृष्ट्वा

त्रयोविंशतिः । आर्षो व्यत्ययः । अधिकृत्य अवधिं कृत्वा ॥ ७३ ॥ अस्य पिता यथा यादृशशक्तिविशिष्टः तथा तादृशशक्तिविशिष्ट इत्यर्थः ॥ ७४ ॥
स नलेनेति । सुभगः शोभनमाहात्म्यवान् । स्वातीपथः छायापथः । स्वातीवीथिर्वा । सा चाकाशे सूर्यादीनां मध्यमार्गे मध्यमा वीथिः । तदुक्तं वायु
पुराणे—"सूर्यादीनां त्रयो मार्गा दक्षिणोत्तरमध्यमाः" इति प्रक्रम्य "तथा द्वे चापि फल्गुन्यौ मघा चैवार्षभी मता । हस्तश्चित्रा तथा स्वाती मध्यवीथ्यभि

स वानरवरः श्रीमान् विश्वकर्मात्मजो बली । बबन्ध सागरे सेतुं यथा चास्य पिता तथा ॥ ७४ ॥
स नलेन कृतः सेतुः सागरे मकरालये । शुशुभे सुभगः श्रीमान् स्वातीपथ इवाम्बरे ॥ ७५ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । आगम्य गगने तस्थुर्द्रष्टुकामास्तदद्भुतम् ॥ ७६ ॥
दशयोजनविस्तीर्णं शतयोजनमायतम् । ददृशुर्देवगन्धर्वा नलसेतुं सुदुष्करम् ॥ ७७ ॥

विश्रुता । ज्येष्ठा विशाखाऽनूराधा वीथिराजगवी मता । एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥" इति ॥ ७५ ॥ तत इति । स्पष्टः ॥ ७६ ॥ नल

स नलेनेति । स्वातीपथः छायापथः, स्वातीवीथिर्वा । सा चाकाशे सूर्यादीनां मध्यमे मार्गे मध्यमा वीथिः । सूर्यादीनामारोहणावरोहणस्थानानि वायव्यपुराणे दर्शितानि—" सर्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः । स्थानं जारद्गवं मध्यं तथैरावतमुत्तरम् । वैश्वानरं दक्षिणतो निर्दिष्टमिह तत्त्वतः ॥" इति । तदेवं मध्य मोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथित्रयेण त्रिधा भिद्यते । "अश्विनी कृत्तिका याम्या नागवीथीति शब्दिता । रोहिण्यार्द्रा मृगशिरा गजवीथ्यभिधीयते । पुष्याश्लेषे तथाऽऽदित्यो वीथी चैरावती स्मृता । एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते । तथा द्वे चापि फल्गुन्यौ मघा चैवार्षभी मता । हस्तश्चित्रा तथा स्वाती गोवीथीति तु शब्दिता । ज्येष्ठा विशाखानूराधा वीथिराजगवी मता । एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते । मूलाषाढोत्तराषाढा अजवीथ्यभिशब्दिता । श्रवणं च धनिष्ठा च मार्गी शतभिषक् तथा । वैश्वानरी भाद्रपदी रेवती चैव कीर्तिता । एतास्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यते ॥ " इति ॥ ७५–७७ ॥

—लङ्केति रामाय शशंसुः" इति चतुर्थे दिने दशयोजनानीत्याहृत्य शतयोजनो भवति सेतुर्दशयोजनविस्तारश्चेति दिनचतुष्टये सेतुसमाप्त्युक्तेः । तथा पद्मपुराणे पुष्करखण्डे त्रिशेऽध्याये "एष सेतुर्मया बद्धस्समुद्रे वरुणालये । त्रिभिर्दिनैस्समाप्ति मे नीतो वानरसत्तमैः ॥" इति त्रिभिर्दिनैस्सेतुसमाप्त्युक्तेश्च भारते चतुर्दिन्युक्तिश्च कथम्, कथञ्चात्र पञ्चदिन्युक्तिरिति चेन्न । हिरण्याक्षवधस्य भागवते तृतीयस्कन्धे कर्णमूलताडनेन तथा पुनस्तत्रैव दंष्ट्रयेति यथा कथनं कल्पभेदेनेति व्यवस्था श्रीतात्पर्येण कृता कृता च वामाङ्गुष्ठनखनिर्भिन्नेति भागवतस्य दक्षिणाङ्गुष्ठनखनिर्भिन्नेति पुराणान्तरस्य च वाराहादिकल्पभेदेनेति तथा भारतरामायणयोरपि विरोधसमाधिरवधेयः । अवत्रेयश्च पद्मपुराणाविरोधः । तथो चोक्तं स्कान्दे उमासंहिताद्वादशाध्याये " कदाचिद्धनुषा सेतुः कदाचिद्विशिखेन च । दार्वादिना कदाचिच्च कल्पे कल्पे व्यवस्थितिः ॥" इति । एवं दिनेष्वपि कल्पभेदेन समाधानं ज्ञेयम् । अथवा पञ्चषासु पुस्तकसम्पुटीषु नैते श्लोकास्सन्ति सन्ति च क्वचिदेवेत्येते प्रक्षिप्ता इति ज्ञेयम् ॥ ७३ ॥

संबन्धी सेतुर्नलसेतुः तम् ॥ ७७ ॥ निर्विघ्नसेतुबन्धेन जातं वानरहर्षं दर्शयति—आप्लवन्त इति । अर्द्धमेकं वाक्यम् । आप्लवन्तः आभिमुख्येन प्लवन्तः दूरं प्लवन्तः, आसन्निति शेषः ॥ ७८ ॥ रामानु०—आप्लवन्त इति । प्लवङ्गमाश्च ददृशुरिति संबन्धः । यद्वा अभूवन्निति शेषः ॥ ७८ ॥ अचिन्त्यम् इतः पूर्वं मनसापि चिन्तयितुमनर्हम् । असह्यं कस्यापि यत्नाविषयम् । अद्भुतम् आश्चर्यकरम् । रोमहर्षणं पुलकावहम् ॥ ७९ ॥ तानीति । सेतुं बध्नन्तः सेतुबन्धनसह

आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥७८॥ तदचिन्त्यमसह्यं च अद्भुतं रोमहर्षणम् । ददृशुः सर्वभूतानि सागरे सेतुबन्धनम् ॥ ७९ ॥ तानि कोटिसहस्राणि वानराणां महौजसाम् । बध्नन्तः सागरे सेतुं जग्मुः पारं महोदधेः ॥ ८० ॥ विशालः सुकृतः श्रीमान् सुभूमिः सुसमाहितः । अशोभत महासेतुः सीमन्त इव सागरे ॥८१॥ ततः पारे समुद्रस्य गदापाणिर्विभीषणः । परेषामभिघातार्थमतिष्ठत् सचिवैः सह ॥ ८२ ॥ सुग्रीवस्तु ततः प्राह रामं सत्यपराक्रमम् । हनुमन्तं त्वमारोह अङ्गदं चापि लक्ष्मणः ॥ ८३ ॥ अयं हि विपुलो वीर सागरो मकरालयः । वैहायसौ युवामेतौ वानरौ तारयिष्यतः ॥८४॥ अग्रतस्तस्य सैन्यस्य श्रीमान् रामः सलक्ष्मणः । जगाम धन्वी धर्मात्मा सुग्रीवेण समन्वितः ॥ ८५ ॥ अन्ये मध्येन गच्छन्ति पार्श्वतोऽन्ये प्लवङ्गमाः । सलिले प्रपतन्त्यन्ये मार्गमन्ये न लेभिरे ॥ ८६ ॥

कारिणः ॥ ८० ॥ सुकृतः दृढतया कृतः सुकृतकरो वा । श्रीमान् ऋजुत्वेन कान्तिमान् । सुभूमिः निम्नोन्नतत्वरहितः । सुसमाहितः निर्विवरः ॥ ८१ ॥ पारे दक्षिणतीरे ॥ ८२ ॥ लक्ष्मण इत्यत्र आरोहत्विति पुरुषविपरिणामः कर्तव्यः ॥ ८३ ॥ आरोहणहेतुमाह—अयमिति । विपुलः शतयोजनं पद्भ्यां गमने बहुकालविलम्बो भविष्यतीति भावः । वैहायसौ अपादचारिणौ । इति सुग्रीवः प्राहेति पूर्वेणान्वयः ॥ ८४ ॥ अग्रत इति । स्पष्टः ॥ ८५ ॥ रामानु०—अग्रत इति । सुग्रीवेण समन्वितो जगामेत्यनेन सुग्रीवस्यापि विहायसा गमनं द्योत्यते ॥ ८५ ॥ अन्य इति । न लेभिरे मार्गालाभात्तीर एव कंचित् कालं स्थिताः

आप्लवन्तः प्लवन्त इत्यत्र, अभूवन्निति शेषः । गर्जन्तः प्लवङ्गमाश्च ददृशुः ॥ ७८ ॥ अचिन्त्यम् अचिन्त्यरचनम् । असह्यं भगवत्सम्बन्धं विना केनापि कर्तुम् शक्यम् ॥ ७९ ॥ बध्नन्त इत्यत्र लिङ्गव्यत्यय आर्षः ॥ ८० ॥ ८१ ॥ परेषां राक्षसानाम् ॥ ८२ ॥ ८३ ॥ वैहायसौ विहायसा गच्छन्तौ ॥ ८४–८६ ॥

इत्यर्थः ॥८६॥ केचिदित्यर्द्धमेकं वाक्यम् । वैहायसं विहायस्सम्बन्धि गतं गमनं येषां ते तथोक्ताः । सुपर्णाः गरुडाः ॥८७॥ अन्तर्दधे तिरश्चकार ॥८८॥ वानराणां राज्ञो वाहिनीत्यन्वयः । राज्ञेति पाठे राज्ञा सुग्रीवेण सहेत्यर्थः । तीरे दक्षिणतीरे ॥ ८९ ॥ इत्थमकुण्ठदशकण्ठकण्ठाटवीत्रुटनानिदर्शनभूतं सेतुनिर्माणनैपुण्यमालोक्य समुपजातमानन्दसन्दोहमा रावणनिबर्हणादनुद्घाटनीयमप्यन्तर्नियन्तुमशक्नुवन्तस्ताहशहर्षप्रकर्षबलात्कारेण देवा यथोचितं

केचिद्वैहायसगताः सुपर्णा इव पुप्लुवुः ॥ ८७ ॥ घोषेण महता तस्य सिन्धोर्घोषं समुच्छ्रितम् । भीममन्तर्दधे भीमा तरन्ती हरिवाहिनी ॥ ८८ ॥ वानराणां हि सा तीर्णा वाहिनी नलसेतुना । तीरे निविविशे राज्ञो बहुमूलफलोदके ॥ ८९ ॥ तदद्भुतं राघवकर्म दुष्करं समीक्ष्य देवाः सह सिद्धचारणैः । उपेत्य रामं सहसा महर्षिभिः समभ्यषिञ्चन् सुशुभैर्जलैः पृथक् ॥ ९० ॥ जय स्वशत्रून् नरदेव मेदिनीं ससागरां पालय शाश्वतीः समाः । इतीव रामं नरदेवसत्कृतं शुभैर्वचोभिर्विविधैरपूजयन् ॥९१॥ इत्यार्षे श्रीरामायणे० श्रीमद्युद्धकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

राममपूजयन्नित्याह—तदित्यादिना श्लोकद्वयेन । दुष्करं रामादन्यैर्मनसापि कर्तुमशक्यम् । पृथक् प्रत्येकं समभ्यषिञ्चन् ॥ ९० ॥ जयेति च्छेदः । स्वशत्रून् आश्रितशत्रूणमेवास्य शत्रुत्वादिति भावः । नरदेवसत्कृतं नरैश्च देवैश्च सत्कृतम् । अपूजयन् अस्तुवन् । स्तुतिर्हि वाचिका पूजा ॥ ९१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥

वैहायसगताः विहायस्सम्बन्धि गतं गमनं येषां ते तथोक्ताः ॥ ८७ ॥ हरिवाहिनी सागरस्य घोषम् अन्तर्दधे अन्तरधापयदिति सम्बन्धः ॥ ८८ ॥ वाहिनी राज्ञा सुग्रीवेण निविविशे निविष्टा ॥ ८९ ॥ अथ समुद्रे सेतुबन्धनहृष्टैर्देवैस्तदानीमेव रामस्य राज्याभिषेकः रामेण विभीषणस्यैवेत्याह—तदद्भुतमिति । राघवकर्म राघवाज्ञाजन्यत्वात् । सुशुभैर्जलैः आकाशगङ्गादिजलैः ॥ ९० ॥ नरदेवसत्कृतं नरैर्देवैश्च सत्कृतम् ॥ ९१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां द्वाविंशः सर्गः ॥ २२ ॥ ( कतकरीत्याऽयमेकविंशः सर्गः ॥ )

एवं रामो नलसेतुना तीर्णमहार्णवो महासमरसूचकान् महोत्पातान् दृष्ट्वा चिरप्रार्थिताभीष्टसिद्धिर्भविष्यतीति सन्तुष्टो दृष्टानि निमित्तानि निमित्तज्ञाय लक्ष्मणाय दर्शयति—निमित्तानीति । निमित्तज्ञत्वे लक्ष्मणादप्याधिक्यं दर्शयितुं लक्ष्मणपूर्वज इत्युक्तम् । सम्परिष्वङ्गश्चिरप्रार्थितसमरस्यासन्नत्वात् । निमित्तापेक्षणस्यावश्यकत्वमुक्तं कामन्दके—“ निमित्तान्येव शंसन्ति शुभाशुभफलोदयम् । तस्मादेतानि शास्त्रज्ञो राजा समुपलक्षयेत् ॥” इति ॥ १ ॥

निमित्तानि निमित्तज्ञो दृष्ट्वा लक्ष्मणपूर्वजः । सौमित्रिं सम्परिष्वज्य इदं वचनमब्रवीत् ॥ १ ॥ परिगृह्योदकं शीतं वनानि फलवन्ति च । बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ॥२॥ लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् । निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥३॥ वाताश्च कलुषा वान्ति कम्पते च वसुन्धरा । पर्वताग्राणि वेपन्ते पतन्ति च महीरुहाः ॥ ४ ॥ मेघाः क्रव्यादसङ्काशाः परुषाः परुषस्वनाः । क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥ ५ ॥

शीतमुदकं शीतोदकवत्प्रदेशम् । वनानि जलसमीपस्थानि । परिगृह्य वासार्थं स्वीकृत्य । व्यूह्य गरुडरूपेण सन्निवेश्य । तथा व्यक्तीभविष्यति ॥ २ ॥ लोकक्षयकरं क्षुद्रजनक्षयकरम् । विशिष्य प्रवीराणां निबर्हणं विनाशकम् । भयमिति युद्धमुच्यते ॥ ३ ॥ भयदर्शने लिङ्गान्याह—वाता इत्यादि । महीरुहाः पतन्ति अकस्मादिति भावः । अत्रात्यन्तानिष्टकरो भूकम्पः सन्ध्याकालिक इति ज्ञेयम् । तथोक्तं वसिष्ठेन—“यामत्रयाच्च भूकम्पो द्विजातीना मरिष्टदः । अरिष्टदः क्षितीशानां सन्ध्ययोरुभयोरपि ॥” इति ॥ ४ ॥ मेघा इति । क्रव्यादसङ्काशाः वृकवर्णाः, श्येनादिसंस्थाना इति वा । परुषाः दुर्दर्शाः, रूक्षा इति यावत् । परुषस्वनाः श्रुतिकटुस्वनाः । अत एव क्रूराः भयङ्कराः । मिश्रम्, उदकमिति शेषः । क्रूरमिति क्रियाविशेषणम् । अत्र

॥ १ ॥ परिगृह्येति । शीतोदकं फलवन्ति वनानि च परिगृह्य आश्रित्य च बलौघं संविभज्य व्यूह्य तिष्ठेमेति सम्बन्धः । सशीतोदकसफलवनप्रदेशे बलौघं गरुडादिव्यूहं कृत्वा तिष्ठेमेत्यर्थः ॥ २ ॥ भीमं महत् ॥ ३ ॥ कलुषाः रजोव्याप्ताः ॥ ४ ॥ क्रव्यादसङ्काशाः गृध्रश्येनादिसदृशाः । शोणितबिन्दुभिर्मिश्रं यथा

स०—भयं तत्साधनम् । निबर्हणं नाशश्च । योग्यतया भयम् ऋक्षवानराणाम् । राक्षसानां निबर्हणमित्यन्वेतव्यम् । अन्यथा सर्वज्ञस्य रामस्य निमित्तोपन्यासो निर्मरणवानरऋक्षविषये मोघः स्यात् । अथवा ‘ तारापिता तान्निरुजश्चकार ” इति तद्वन्वमादनानिलोज्जीविताः ब्रह्मवराच्च जीविताश्चेत्येतत्पूर्वतनीं मृतिं विवक्षित्वा प्रवर्हणवचनमर्हति ऋक्षवानरपक्षेऽपि ॥ ३ ॥ परुषस्वराः प्रखरस्वराः । अत एव परुषाः श्रोत्रोल्वणाः । क्रूराः मनउद्वेजकाः ॥ ५ ॥

मिहिरः—"दिव्युल्कापतनं चैव दिवा नक्षत्रदर्शनम्। दिवाऽशनिस्तथा [illegible]॥" इति ॥ ५ ॥ रक्तचन्दनं कुङ्कुमम्, रक्तचन्दनतुल्यमेव वतीत्यर्थः। परमदारुणा, भवतीति शेषः। अग्निमण्डलम् अग्निपिण्डः ॥ ६ ॥ दीनाः दीनाकृतयः। जनयन्तः सूचयन्तः ॥ ७ ॥ रजन्यामिति। अर्धमेकं वाक्यम्। अप्रकाशः निष्प्रभः। सन्तापयति, शीतस्य सन्तापकरणं ह्युत्पात इति भावः ॥ ८ ॥ कृष्णा रक्ताश्चांशवः पर्यन्ते यस्य सः तथोक्तः। सर्वान्ते



रक्तचन्दनसङ्काशा सन्ध्या परमदारुणा। ज्वलतः प्रपतत्येतदादित्यादग्निमण्डलम् ॥ ६ ॥ दीना दीनस्वराः क्रूराः सर्वतो मृगपक्षिणः। प्रत्यादित्यं विनर्दन्ति जनयन्तो महद्भयम् ॥ ७ ॥ रजन्यामप्रकाशस्तु सन्तापयति चन्द्रमाः ॥ ८ ॥ कृष्णरक्तांशुपर्यन्तो लोकक्षय इवोदितः। ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषः सुलोहितः ॥ ९ ॥ आदित्ये विमले नीलं लक्ष्म लक्ष्मण दृश्यते ॥ १० ॥ रजसा महता चापि नक्षत्राणि हतानि च। युगान्तमिव लोकानां पश्य शंसन्ति लक्ष्मण ॥ ११ ॥ काकाः श्येनास्तथा गृध्रा नीचैः परिपतन्ति च। शिवाश्चाप्यशिवान्नादान्नदन्ति सुमहाभयान् ॥ १२ ॥

कृष्णमण्डलः तदनन्तरं रक्तमण्डल इत्यर्थः। सुलोहितः मध्ये अत्यन्तरक्तवर्णः। लोकक्षये प्रलये उदितः परिवेष इव स्थितः। रूक्षः क्रूरः। अप्रशस्तः अप्रसिद्धः, इतः पूर्वमदृष्ट इत्यर्थः। परिवेषः, दृश्यत इति शेषः। अत्र वर्णत्रयकथनेन मण्डलत्रयकथनात्सायङ्कालिकत्वाच्च परिवेषस्य नृपक्षयकरत्वं सूच्यते। तथाह काश्यपः—" द्विमण्डलश्चमूपघ्नो नृपघ्नो यस्त्रिमण्डलः " इति। " दिनकरपरिवेषः पूर्वयामे तु पीडा दिनकरपरिवेषो वृष्टियुद्धं द्वितीये। दिनकरपरिवेषं क्षेममाहुस्तृतीये दिनकरपरिवेषः सर्वनाशश्चतुर्थे ॥" इति ॥ ९ ॥ नीलं लक्ष्म छिद्ररूपम्। तदाह वराहः—"अपर्वणि तथा राहुग्रहणं चन्द्रसूर्ययोः। चन्द्रार्कमण्डलच्छिद्रं दृष्ट्वा जनपदक्षयः ॥" इति। यद्वा नीलं लक्ष्म चन्द्र इव कलङ्को दृश्यते। एतदेवौत्पातिकं नैल्यमधिकृत्य 'यदादित्यस्य रोहितं रूपम्' इत्यारभ्य 'यत् कृष्णं तदन्नस्य' इत्युच्यते ॥ १० ॥ रजसा मालिन्येन। युगान्तं प्रलयम् ॥ ११ ॥ नीचैः दुर्बलैः। आधिक

तथा ॥ ५ ॥ ६ ॥ प्रत्यादित्यं सूर्यसम्मुखम् ॥ ७ ॥ रजन्यामित्यर्धं भिन्नं वाक्यम् ॥ ८ ॥ कृष्णरक्तांशुपर्यन्तः कृष्णाश्च रक्ताश्च अंशवो येषां ते कृष्णरक्तांशवः तादृशाः पर्यन्ताः यस्य स तथोक्तः। लोकक्षय इव लोकनाशसमय इव परिवेष उदित इति सम्बन्धः ॥ ९ ॥ १० ॥ रजसा मालिन्येन ॥ ११–१६ ॥

बलानां दुर्बलैः परिभवोऽप्युत्पात इतिं । शिवाः गोमायवः । " स्त्रियां शिवा भूरिमायुगोमायुः " इत्यमरः । नादान् नदन्ति नादान्कुर्वन्तीत्यर्थः ॥ १२ ॥ उक्तोत्पातफलमाह—शैलैरिति । मांसशोणितकर्दमा मांसशोणितरूपकर्दमवती ॥ १३ ॥ क्षिप्रं सत्वरम् । जवेन वेगेन ॥ १४ ॥

शैलैः शूलैश्च खड्गैश्च विसृष्टैः कपिराक्षसैः । भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ॥ १३ ॥ क्षिप्रमद्यैव दुर्धर्षां पुरीं रावणपालिताम् । अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥ १४ ॥ इत्येवमुक्त्वा धर्मात्मा धन्वी सङ्ग्रामहर्षणः । प्रतस्थे पुरतो रामो लङ्कामभिमुखो विभुः ॥१५॥ सविभीषणसुग्रीवास्ततस्ते वानरर्षभाः । प्रतस्थिरे विनर्दन्तो निश्चिता द्विषतां वधे ॥१६॥ राघवस्य प्रियार्थं तु धृतानां वीर्यशालिनाम् । हरीणां कर्मचेष्टाभिस्तुतोष रघुनन्दनः ॥ १७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

इत्येवमिति । पुरतः प्रतस्थ इति उत्साहातिशयोक्तिः । विभुः समर्थः ॥ १५ ॥ निश्चिताः निश्चयवन्तः । अत्र प्रस्थानं शीतोदकफलवद्वनपरिग्रहार्थं परिगृह्योदकमित्यादिना प्रथमं तस्य कर्तव्यतया अभिहितत्वात् ॥ १६ ॥ धृतानां धैर्यवताम् । कर्मचेष्टाभिः युद्धकर्मादिविषयचेष्टाभिः लाङ्गूलोत्थापनादिभिः । तुतोषेत्यनेन इदं दुर्गप्रदेशं दृष्ट्वा वानरा निरुत्साहा भवेयुरिति पूर्वं राममनसि स्थितमित्यवगम्यते ॥ १७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

राघवस्येति । धृतानामवहितानाम् ॥ १७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां त्रयोविंशः सर्गः ॥ २३ ॥

स०—अरामः पुत्रत्वेन तत्सदृशः तद्भिन्नो लक्ष्मणः । पुरतो रामः । अपुरतः तत्पश्चाल्लक्ष्मणः । सरैः मुक्ताहारादिभिर्न विद्यते मा शोभा इदानीं यस्येति वा सरामः इदानीं दूरितभार्यात्वेनारामः सर्वाभिरामोऽपि रिपूणाममनोहर इति वा अरामः । धर्मात्मेति क्वचित्पाठो व्याख्यातृसाहसासहः । इत्येवमुक्त्वा धन्वी स रामः संग्रामधर्षणः । इति पाठः ॥ १५ ॥ राघवस्य स्वस्य प्रियार्थं भार्यार्थम् । यत्कर्म अन्वेषणरूपं तदनुरूपाभिश्चेष्टाभिः । रघुनन्दनो रामस्तुतोष राघवशब्देन मुखतो गृहीतस्य पुना रघुनन्दनपदेन ग्रहणम् " अनुग्रहार्थं स ऋषेरवाप सलक्ष्मणोऽस्त्रं मुनितो हि केवलम् । " इत्यादिवत्सम्भवति । राघवस्य लक्ष्मणस्य । प्रियार्थं प्रियावहप्रयोजनमुद्दिश्य यत्कर्म तदनुरूपचेष्टाभिः रघुनन्दनो रामः [illegible] रघुनन्दनो [illegible] ॥ १७ ॥

अथ रावणस्य वानरसेनागमनश्रवणम्--सेत्यादि । राज्ञा रामेण । व्यवस्थिता शीतोदकादिकं परिगृह्य स्थिता । वीरसमितिः वीरसङ्घः । " सङ्घे सभायां समितिः" इत्यमरः । शशिना व्यवस्थिता कृतमर्यादा ॥१॥ सागरवर्चसा सागरवदपरिच्छिन्नेनेत्यर्थः ॥ २॥ ततः सेनानिवेशानन्तरम्, निष्कोलाहले सतीत्यर्थः । आक्रुष्टं सेनाक्रोशम् । भावे क्तः । भेरीमृदङ्गसंघुष्टमिति समुच्चयः ॥ ३ ॥ घोषवत्तरं राक्षसघोषादधिकघोषवत्, क्रियाविशेषणम् ॥४॥ दृप्तानां पूर्णानाम् । आकाशस्यैव शब्दाश्रयत्वादम्बर इत्युक्तम् । यद्वा " प्लवगसैन्यमुलूकजिताजितम् " इतिवदम्बरशब्दस्तत्पर्यायं नभश्शब्दं लक्ष

सा वीरसमिती राज्ञा विरराज व्यवस्थिता । शशिना शुभनक्षत्रा पौर्णमासीव शारदी ॥ १ ॥ प्रचचाल च वेगेन त्रस्ता चैव वसुन्धरा । पीड्यमाना बलौघेन तेन सागरवर्चसा ॥ २ ॥ ततः शुश्रुवुराक्रुष्टं लङ्कायां काननौकसः । भेरीमृदङ्गसंघुष्टं तुमुलं रोमहर्षणम् ॥३॥ बभूवुस्तेन घोषेण संहृष्टा हरियूथपाः । अमृष्यमाणास्तं घोषं विनेदुर्घोषवत्तरम् ॥ ४ ॥ राक्षसास्तु प्लवङ्गानां शुश्रुवुश्चापि गर्जितम् । नर्दतामिव दृप्तानां मेघानामम्बरे स्वनम् ॥ ५ ॥ दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् । जगाम मनसा सीतां दूयमानेन चेतसा ॥ ६ ॥ अत्र सा मृगशावाक्षी रावणेनोपरुध्यते । अभिभूता ग्रहेणेव लोहिताङ्गेन रोहिणी ॥ ७ ॥

यित्वा श्रावणमासमाह ॥ ५ ॥ दृष्ट्वेति । चिह्नयुक्तो ध्वजः, केवलचेला पताकेति भिदा । चेतसा उपलक्षितः मनसा जगाम, सस्मारेत्यर्थः ॥ ६ ॥ स्मरणप्रकारमाह—अत्रेति । एतच्छ्लोकान्ते प्रकारवचनमितिकरणं द्रष्टव्यम् । सा साकेते सकलभोगार्हा । मृगशावाक्षी मृगानुसरणसमये यद्धरिणदर्शनकुतूहलेन मृगशिशुवत्तरलतरं विलोचनयुगलं तदेवाद्यापि मनसि परिवर्तते तदाह । यद्वा मृगशावे मारीचमये अक्षिणी यस्या इति विग्रहः ॥ ७ ॥

सेति । समितिः सभा । " सभासमितिसंसदः " इत्यमरः । राज्ञा रामेण । व्यवस्थिता निर्व्यूढा ॥ १ ॥ सागरवर्चसा सागरनिभेन ॥ २ ॥ आक्रुष्टम् आक्रोशम्, कोलाहलमिति यावत् । सङ्घुष्टं सङ्घोषम् । दूयमानेन चेतसा उपलक्षितः सीतां मनसा जगाम, सस्मारेत्यर्थः ॥ ३–६ ॥ स्मरणप्रकारमाह—अत्र सेति । अस्यान्ते

स०—सागरस्य वर्चो येन सः तेन । बलौघेन सेनासङ्घेन वसुन्धरा वेगेन पीडयमाना त्रस्तेव प्रचचाल ॥ २ ॥ दूयमानेनेति मनःपदेन चेतःपदेनाप्यन्वेति । ततश्च दूयमानेन चेतसा सहितां सीतां दूयमानेन मनसा जगामेत्यन्वयः कृतो ज्ञेयः । " वृद्धो यूना—" इत्यादिवत्सहेति लाभः । दूयमानेन मनसा विशिष्टाम् । वैशिष्ट्यं तृतीयार्थ इति वा ॥ ६ ॥

दीर्घमिति । अथ युद्धयात्रासमये कान्तास्मरणव्यसनमनुचितमिति तन्नियमितवानिति सूचयति दीर्घमुष्णं च निश्वस्येत्यनेन । तत्कालहितं युद्धयात्रासमये हितम् । शोकविस्मारकनगरशोभावर्णनरूपं वचनम् । यद्वा अङ्गदः सह नीलेनेत्यादि वाक्यं तत्कालहितम् । तत्साहचर्याद्दाढ्यं नगरमितिवत् आलिखन्तीमित्यादिकं सर्वं वाक्यजातं तत्कालहितमित्युक्तम् ॥ ८ ॥ आलिखन्तीं स्पृशन्तीम् । उत्थिताम् उन्नताम् । नगाग्रे त्रिकूटशिखरे ॥ ९ ॥ रामानु०-मनसेव कृतां लङ्कां नगाग्रे विश्वकर्मणेति पाठः ॥ ९ ॥ विष्णोः आदित्यस्य पदं स्थानम्, आकाशमध्यमिति भावः । विमानम् अनेकतलप्रासादः ॥ १० ॥ रामानु०–विष्णोः पदं विष्णुपादभूतम् ॥ १० ॥ फलभूतानि पुष्पाणि यासां ताः फलपुष्पाः मल्लिकादयः ताभिरुपगम्यन्त इति तथा । अतो न पुष्पितैरित्यनेन पौनरुक्त्यम् । संघुष्टं सङ्घोषः । भावे क्तः । नानाविधानि पतङ्गसंघुष्टानि येषां तैः ॥ ११ ॥ मत्तविहङ्गानि । विहङ्गशब्दोऽत्र कोकिलपरः । अनेन सदा फलवत्त्वमुक्तम् । प्रलीनभ्रमराणि मधुपानपरवशतया निष्पन्दभ्रमराणि । अनेन सदा पुष्पवत्त्वमुक्तम् । कोकिलाकुलं षण्डं पुष्पसमूहो येषां तानि कोकिलाकुलषण्डानि । अनेन सदा पल्लवितत्वमुक्तम् । कोकिलानां पल्लवप्रियत्वात् । वनानीत्यनुषञ्जनीयम् । दोधवीति पुनः पुनः कम्पयति । "धूञ् कम्पने" इत्यस्माद्यङ्लुक् ॥ १२ ॥

दीर्घमुष्णं च निश्वस्य समुद्वीक्ष्य च लक्ष्मणम् । उवाच वचनं वीरस्तत्कालहितमात्मनः ॥ ८ ॥ आलिखन्तीमिवाकाशमुत्थितां पश्य लक्ष्मण । मनसेव कृतां लङ्कां नगाग्रे विश्वकर्मणा ॥ ९ ॥ विमानैर्बहुभिर्लङ्का सङ्कीर्णा भुवि राजते । विष्णोः पदमिवाकाशं छादितं पाण्डरैर्घनैः ॥ १० ॥ पुष्पितैः शोभिता लङ्का वनैश्चैत्ररथोपमैः । नानापतङ्गसंघुष्टैः फलपुष्पोपगैः शुभैः ॥ ११ ॥ पश्य मत्तविहङ्गानि प्रलीनभ्रमराणि च । कोकिलाकुलषण्डानि दोधवीति शिवोऽनिलः ॥ १२ ॥

इतिकरणं द्रष्टव्यम् । लोहिताङ्गेन अङ्गारकेण ॥ ७ ॥ यद्यप्यालिखन्तीमिवेत्यादिलङ्कावर्णनावाक्यस्य तत्कालहितत्वं नास्ति, तथाप्येतद्वाक्यानन्तरमङ्गदस्सह नीलेनेत्यादिना तत्कालहितेन सेनारक्षणनियोगवाक्येन साहचर्यादालिखन्तीमिवेत्यादि सर्वं वाक्यं तत्कालहितमिति मन्तव्यम् ॥ ८ ॥ ९ ॥ विमानैः सप्तभूमिकप्रासादैः सङ्कीर्णा निबिडा । अत्रोपमा । पाण्डरैर्घनैस्सङ्कीर्णं विष्णोर्व्यापनशीलस्य वायुमयस्य ब्रह्मणः पदं प्रचारस्थानमाकाशमिव ॥ १० ॥ ११ ॥ दोधवीति

इतीत्यर्धमेकं वाक्यम् ॥ १२ ॥ शास्त्रदृष्टेन नीतिशास्त्रज्ञानेन। कर्मणा प्रयोगेण। बलं सेनाम्। विभजन् व्यूहयन् व्यूहहेतोः। शशास कपिसेनाया इत्याद्युत्तरशेषः ॥ १४ ॥ शासनप्रकारमाह—कपिसेनाया इत्यादि। अङ्गदो नीलेन सह स्वबलमादाय कपिसेनायाः उरसि उरःस्थाने तिष्ठेदित्यन्वयः ॥ १५ ॥ वानरौघसमावृतः कपिसमूहसहितः ॥ १६ ॥ गन्धहस्ती मत्तगजः ॥ १७ ॥ मूर्ध्नीत्यर्धमेकं वाक्यम्। युक्तः सावधानः ॥ १८ ॥ वानर

इति दाशरथी रामो लक्ष्मणं समभाषत ॥ १३ ॥ बलं च तद्वै विभजन् शास्त्रदृष्टेन कर्मणा। शशास कपिसेनाया बलमादाय वीर्यवान् ॥ १४ ॥ अङ्गदः सह नीलेन तिष्ठेदुरसि दुर्जयः ॥ १५ ॥ तिष्ठेद्वानरवाहिन्या वानरौघसमावृतः। आश्रित्य दक्षिणं पार्श्वमृषभो वानरर्षभः ॥ १६ ॥ गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः। तिष्ठेद्वानरवाहिन्याः सव्यं पार्श्वं समाश्रितः ॥१७॥ मूर्ध्नि स्थास्याम्यहं युक्तो लक्ष्मणेन समन्वितः ॥१८॥ जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः। ऋक्षमुख्या महात्मानः कुक्षिं रक्षन्तु ते त्रयः ॥ १९ ॥ जघनं कपिसेनायाः कपिराजोऽभिरक्षतु। पश्चार्धमिव लोकस्य प्रचेतास्तेजसा वृतः ॥ २० ॥ सुविभक्तमहाव्यूहा महावानररक्षिता। अनीकिनी सा विबभौ यथा द्यौः साभ्रसम्प्लवा ॥ २१ ॥

इति वेगदर्शिविशेषणम्। ऋक्षमुख्यपदं वानराणामप्युपलक्षणम्। महात्मानः महाबुद्धयः। कुक्षिं कुक्षिस्थानम् ॥१९॥ जघनं चरमभागम्, पुच्छमिति यावत्। कपिराजः सुग्रीवः। पश्चार्धमिति। "अपरस्यार्धे पश्चभावो वक्तव्यः" इत्यपरशब्दस्य पश्चादेशः। अर्धशब्दोऽंशवाची। पश्चिमां दिशमित्यर्थः ॥२०॥ सुविभक्तमहाव्यूहा सुष्ठु कृतगरुडव्यूहा। उत्तरत्र शार्दूलवचने 'गारुडं व्यूहमाश्रित्य' इति वक्ष्यमाणत्वात्। साभ्रसम्प्लवा समेघसञ्चारा ॥२१॥

पुनः पुनः कम्पयते ॥ १२ ॥ १३ ॥ शास्त्रदृष्टेन कर्मणा सेनाविभजनशास्त्रोक्तप्रकारेण। बलं स्वबलमादाय कपिसेनाया उरसि तिष्ठेदित्यन्वयः ॥ १४ ॥ १५ ॥ वानरौघसमावृतः ऋषभः वानरवाहिन्या दक्षिणं पार्श्वमाश्रित्य तिष्ठेदित्यन्वयः ॥ १६–१९ ॥ पश्चार्द्धं पश्चिमां दिशम्। लोकस्य भूलोकस्य ॥ २० ॥ साभ्रसंप्लवा

आसेदुः आसादितुमुद्युक्ताः । विमर्दयिषवः मर्दयितुमिच्छवः । सनि द्वित्वाभाव आर्षः ॥२२॥ शिखरैः साधनैः विकिराम चूर्णयाम । मनांसि दधिरे निश्चयं चक्रुरित्यर्थः ॥ २३–२६ ॥ सितौ बद्धौ । " षिञ् बन्धने " इत्यस्माद्धातोर्निष्ठा । तत्र हेतुमाह लूनपक्षश्च दृश्यस इति । चो हेत्वर्थः । यस्माल्लून पक्षो दृश्यसे तस्मात् सिताविति सम्बन्धः । अनेकचित्तानां चञ्चलचित्तानामित्यर्थः । अनेन पुनः पुनर्बन्धविसर्जने ध्वन्येते । तेषां वानराणां वशमागतो

प्रगृह्य गिरिशृङ्गाणि महतश्च महीरुहान् । आसेदुर्वानरा लङ्कां विमर्दयिषवो रणे ॥२२॥ शिखरैर्विकिरामैनां लङ्कां मुष्टिभिरेव वा । इति स्म दधिरे सर्वे मनांसि हरिसत्तमाः ॥ २३ ॥ ततो रामो महातेजाः सुग्रीवमिदमब्रवीत् । सुविभक्तानि सैन्यानि शुक एष विमुच्यताम् ॥ २४ ॥ रामस्य वचनं श्रुत्वा वानरेन्द्रो महाबलः । मोचयामास तं दूतं शुकं रामस्य शासनात् ॥२५॥ मोचितो रामवाक्येन वानरैश्चाभिपीडितः । शुकः परमसन्त्रस्तो रक्षोधिपमुपागमत् ॥ २६ ॥ रावणः प्रहसन्नेव शुकं वाक्यमभाषत । किमिमौ ते सितौ पक्षौ लूनपक्षश्च दृश्यसे । कच्चिन्नानेकचित्तानां तेषां त्वं वशमागतः ॥ २७ ॥ ततः स भयसंविग्नस्तथा राज्ञाऽभिचोदितः । वचनं प्रत्युवाचेदं राक्षसाधिपमुत्तमम् ॥ २८ ॥ सागरस्योत्तरे तीरे ब्रुवंस्ते वचनं तथा । यथासन्देशमक्लिष्टं सान्त्वयं श्लक्ष्णया गिरा ॥२९ ॥

न कच्चिदित्यन्वयः ॥ २७ ॥ संविग्नः सम्भ्रान्तः । तथापि चोदितः मत्सन्देशस्य किमुत्तरं सुग्रीवेण दत्तं वदेति चोदित इत्यर्थः ॥ २८ ॥ सान्त्वयम् असान्त्वयम्, सुग्रीवमिति शेषः ॥ २९ ॥

अभस्वारसहिता ॥ २१ ॥ विमर्दयिषवः विमर्दयितुमिच्छवः ॥२२॥२३॥ शुक एष विमुच्यतामिति । पूर्वं 'मुच्यतां दूत आगतः' इत्यत्र ताडनादिदुःखान्मुच्यतामित्येवार्थः । तेन बद्ध्वा स्थापित इत्यवगम्यते॥२४-२६॥ किमिति । पक्षौ सितौ बद्धौ किम् ? अत एव लूनपक्षश्च दृश्यसे । अनेकचित्तानां चलचित्तानां वशं नागतः कच्चिदिति सम्बन्धः ॥२७॥२८॥ सागरस्योत्तरे तीरे, स्थित्वेति शेषः । श्लक्ष्णया गिरा सान्त्वयन्, वानरानिति शेषः । सन्देशवचनं यथा तथा अब्रुवमिति सम्बन्धः २९

स०–विमुच्यताम् बन्धनात् । पूर्वं विमुच्यतामित्युक्तिस्ताडनादिविमोचनविषयिणी । इयं तु लङ्कां प्रतिगन्तुं मुच्यतामित्येतत्परेति मुक्तयुक्तिविवेकः ॥ २४ ॥ वानरैश्च निपीडितः प्राक् । परमसन्त्रस्तः पुरस्सरकपयस्ताडयेयुरिति वा इयदालस्यं कृत इति रावणः क्रुद्धो हनिष्यतीति वा तथा । अत एव पुनर्मायया लूनपक्षत्वमुच्यमानं युज्यते । इतः परं रामाज्ञानन्तरम् असन्त्रस्तः कपिपीडनभयरहितः ॥ २६ ॥

लोप्तुं विनाशयितुम् ॥ ३० ॥ अत्र वानरेषु । विषये तेषां । तादृशाः क्रूराः । उक्तेरेवावकाशो नास्ति । प्रत्युक्तेः का कथेति भावः । रावणप्रसादार्थं मध्ये राक्षसाधिपेति सम्बुद्धिः । त्वत्तोऽप्येतेऽतिशयितेति इति ज्ञापनार्थं वा ॥ ३१ ॥ वक्ष्यमाणयोः सीताप्रदानयुद्धयोर्मध्ये सीताप्रदानस्य साधिष्ठत्वं दर्शयितुं

क्रुद्धैस्तैरहमुत्प्लुत्य दृष्टमात्रैः प्लवङ्गमैः । गृहीतोऽस्म्यपि चारब्धो हन्तुं लोप्तुं च मुष्टिभिः ॥ ३० ॥ नैव सम्भाषितुं शक्याः सम्प्रश्नोऽत्र न लभ्यते । प्रकृत्या कोपनास्तीक्ष्णा वानरा राक्षसाधिप ॥ ३१ ॥ स च हन्ता विराधस्य कबन्धस्य खरस्य च । सुग्रीवसहितो रामः सीतायाः पदमागतः ॥ ३२ ॥ स कृत्वा सागरे सेतुं तीर्त्वा च लवणोदधिम् । एष रक्षांसि निर्धूय धन्वी तिष्ठति राघवः ॥ ३३ ॥ ऋक्षवानरसङ्घानामनीकानि सहस्रशः । गिरिमेघनिकाशानां छादयन्ति वसुन्धराम् ॥ ३४ ॥ राक्षसानां बलौघस्य वानरेन्द्रबलस्य च । नैतयोर्विद्यते सन्धिर्देवदानवयोरिव ॥ ३५ ॥ पुरा प्राकारमायान्ति क्षिप्रमेकतरं कुरु । सीतां वाऽस्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् ॥ ३६ ॥ शुकस्य वचनं श्रुत्वा रावणो वाक्यमब्रवीत् । रोषसंरक्तनयनो निर्दहन्निव चक्षुषा ॥ ३७ ॥ यदि मां प्रति युद्ध्येरन् देवगन्धर्वदानवाः । नैव सीतां प्रयच्छामि सर्वलोकभयादपि ॥ ३८ ॥

रामपराक्रमं वर्णयति—स चेति । तदव्याहतपराक्रमस्य भूयः सन्दर्शनादस्मानवश्यं हनिष्यत्येवेति भावः ॥ ३२ ॥ निर्धूय तृणीकृत्य । एष इत्यतिसन्निहितत्वमुच्यते ॥ ३३ ॥ सङ्घानामनीकानीत्यनेन सङ्घारब्धत्वोक्त्या महानीकत्वं सूचितम् ॥ ३४ ॥ इदानीं तव वचनावकाशाभावेऽपि पुनः प्रकारान्तरेण गच्छेत्याशङ्क्याह—राक्षसानामिति । सन्धिः योगमात्रम् ॥ ३५ ॥ सम्प्रति कर्तव्यमुपदिशति—पुरेति । पुरा आयान्ति आयास्यन्ति । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् । एकतरमित्युक्तं विशदयति सीतामिति ॥ ३६ ॥ ३७ ॥ यदीति । सर्वलोकभयात् सर्वलोकेभ्यो भयात् ॥ ३८ ॥

अहं तथा ब्रुवन् लोप्तुं पक्षभागे छेत्तुं मुष्टिभिर्हन्तुं चारब्धः ॥ ३० ॥ संप्रश्नः सम्यक् प्रश्नः, मिथः संवादः ॥ ३१ ॥ ३२ ॥ निर्धूय तृणीकृत्य ॥ ३३ ॥ ३४ ॥ सन्धिः सन्धानं नास्त्येव ॥ ३५ ॥ पुरा आयान्ति आयास्यन्ति । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् । एकतरं वक्ष्यमाणयोरन्यतरत् । तदेवाह सीतामिति ॥ ३६ ॥ ३७ ॥ सर्वलोक

स०—सर्वलोकः सर्वज्ञः हरो वा हरिर्वा हिरण्यगर्भो वा, तस्माद्भयादपि नैव प्रदास्यामीत्यन्वयः । सर्वलोकभयात् पुत्रादिलोकनाशभयादपीति वा ॥ ३८ ॥

स्वमनोरथं दर्शयति—कदेत्यादिना॥३९॥ तूणीशयैः चिरात् समराभावेन केवलतूणीरस्थैः। गणशः सङ्घशः। उल्काभिः निर्गतज्वाला(ल)काष्ठैः। ताभिः कुञ्जरमभिद्रावयन्तीति प्रसिद्धिः ॥४०॥ तच्चेति। तत् बलं 'स च हन्ता विराधस्य' इत्यादिना भवदुक्तबलम्। आदास्ये तिरस्करोमीत्यर्थः ॥४१–४३॥



रामानु०-सागरस्य जगदाप्लवनोद्यतस्य ॥ ४२ ॥ न जानातीत्यर्धम्। पुरा न जानाति इतः परं ज्ञास्यतीत्यर्थः ॥ ४४ ॥ अथ रूपकव्याजेन युद्धस्यात्मनो

कदा नामाभिधावन्ति राघवं मामकाः शराः। वसन्ते पुष्पितं मत्ता भ्रमरा इव पादपम् ॥ ३९ ॥ कदा तूणीशयैर्दीप्तैर्गणशः कार्मुकच्युतैः। शरैरादीपयाम्येनमुल्काभिरिव कुञ्जरम् ॥ ४० ॥ तच्चास्य बलमादास्ये बलेन महता वृतः। ज्योतिषामिव सर्वेषां प्रभामुद्यन् दिवाकरः ॥ ४१ ॥ सागरस्येव मे वेगो मारुतस्येव मे गतिः। न हि दाशरथिर्वेद तेन मां योद्धुमिच्छति ॥ ४२ ॥ न मे तूणीशयान् बाणान् सविषानिव पन्नगान्। रामः पश्यति सङ्ग्रामे तेन मां योद्धुमिच्छति ॥ ४३ ॥ न जानाति पुरा वीर्यं मम युद्धे स राघवः ॥ ४४ ॥ मम चापमयीं वीणां शरकोणैः प्रवादिताम्। ज्याशब्दतुमुलां घोरामार्तभीतमहास्वनाम् ॥ ४५ ॥ नाराचतलसन्नादां तां ममाहितवाहिनीम्। अवगाह्य महारङ्गं वादयिष्याम्यहं रणे ॥ ४६ ॥

विनोदनकरत्वमाह—ममेत्यादिना। ममाहितवाहिनीमेव महारङ्गं विपुलनृत्तशालाम् अवगाह्य प्रविश्य। शरैरेव कोणैः वीणावादनदण्डैः। प्रवादितां शब्दिताम्। ज्याशब्द एव तुमुलः तुमुलस्वनो यस्यास्ताम्। आर्तभीतमहास्वनाम् आर्तभीतशब्देन तत्स्वनो लक्ष्यते। एवं नाराचतलशब्देनापि तत्स्वनः। आर्तभीतानां स्वन एव महास्वनो यस्यास्ताम्। नाराचतलस्वन एव सन्नादो यस्यास्ताम्। घोराम् अन्यैर्वादयितुमशक्याम्। मम चापमयीं वीणामिति व्यस्तरूपकम्। रणे रणस्थजने, शृण्वतीति शेषः। वीणाया मन्द्रमध्यतारभेदेन स्वरत्रयसम्भवादत्रापि स्वरत्रयमुक्तम् ॥ ४५ ॥ ४६ ॥



भयात् सर्वलोकनिमित्तभयात् ॥ ३८ ॥ अभिधावन्ति धाविष्यन्ति ॥ ३९ ॥ ४० ॥ अस्य रामस्य बलमादास्ये तिरस्करिष्यामि ॥ ४१–४३ ॥ न जानातीत्यर्धं भिन्नं वाक्यम् ॥ ४४ ॥ मम चापीत्यादिश्लोकद्वयमेकं वाक्यम्। ममाहितवाहिनीं नाम महारङ्गमवगाह्य प्रविश्य शरकोणैः शरवादनदण्डैः प्रवादिताम्।

न वासवेनेति । सहस्रचक्षुष्ट्वं गर्वहेतुत्वेनोक्तम् । दिग्विजये वरुणपुत्रैरपि युद्धकरणात् स्वयमित्युक्तम् । वासवादिभिः शराग्निना यथा घर्षयितुं न शक्यो ऽस्मीति योजना ॥ ४७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥

अथ शुकसारणप्रेषणं पञ्चविंशे—सबल इत्यादि । दशरथात्मज इति मनुष्यत्वोक्तिः । श्रीमानिति मदातिशयोक्तिः । शुकः पूर्वस्मादन्यः, सारण

न वासवेनापि सहस्रचक्षुषा यथाऽस्मि शक्यो वरुणेन वा स्वयम् । यमेन वा धर्षयितुं शराग्निना महाहवे वैश्रवणेन वा पुनः ॥ ४७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

सबले सागरं तीर्णे रामे दशरथात्मजे । अमात्यौ रावणः श्रीमानब्रवीच्छुकसारणौ ॥ १ ॥

समग्रं सागरं तीर्णं दुस्तरं वानरं बलम् । अभूतपूर्वं रामेण सागरे सेतुबन्धनम् ॥ २ ॥

सागरे सेतुबन्धं तु न श्रद्दध्यां कथंचन । अवश्यं चापि सङ्ख्येयं तन्मया वानरं बलम् ॥ ३ ॥

साहित्यात् ॥१॥ समग्रं विशालम् । दुस्तरं तरितुमशक्यम् । सागरं कर्म । वानरं वानरसम्बन्धि बलं कर्तृ । तीर्णम् अतरत् । कर्तरि क्तः । सेतुबन्धनम्, रामेण कृतमिति शेषः ॥ २ ॥ सेतुबन्धं रामेण कृतम् । कथंचन आप्तपुरुषोदितत्वेऽपि । अपि च तथापि । सङ्ख्येयं ज्ञातव्यम् ॥ ३ ॥

ज्याशब्दतुमुलां ज्याशब्द एव तुमुलः शब्दो यस्यास्ताम् । आर्तभीतमहास्वनाम् आर्तभीतशब्दौ तदारवे उपचर्येते । आर्तानां रव एव महास्वनो यस्यास्ताम् । नाराचतलसन्नादां नाराचतलशब्दौ तदारवे उपचर्येते । नाराचतलरव एव सन्नादो यस्यास्ताम् । मम चापमयीं वीणां वादयिष्यामीत्यन्वयः । तुमुलमहास्वरसन्नादशब्दैर्वीणाया मन्द्रमध्यमतारा उच्यन्ते तेऽत्र सूचिताः ॥ ४५-४७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्ध० चतुर्विंशः सर्गः ॥२४॥

सबल इति । पूर्वप्रेषितशुकोक्तवृत्तान्तज्ञापनपूर्वकं प्रेषणादमात्यत्वेन विशेषणाच्चात्र शुकोऽन्य इत्यवगम्यते ॥ १ ॥ वानरं बलं दुस्तरं सागरं तीर्णमिति, रामेण

स० –चारात्प्राचीनादयमन्योऽमात्यत्वेनोक्तेः, अथवाऽयं स एव । परिचितसैन्यकत्वात् । अमात्यस्यात्याप्तत्वेन प्रथमप्रतिपत्त्यर्थं प्रेषणस्यौचित्यात् । अत एव पक्षीभूय प्रतिपक्षिसेनाप्रवेशोऽपि सम्भवति । न च चारः इत्युक्त्याऽयमन्य इति वाच्यम्; चतुर्दशश्लोके—"राक्षसेन्द्रस्य मन्त्रिणौ । लङ्कायास्समनुप्राप्तौ चारौ" इत्युक्तेर्मन्त्रिणोऽपि चारतासम्भवात् । छत्रिन्यायेन वा अमात्यत्वोक्तिरिति भवतु चार एवायम् "अवश्यं चापि सङ्ख्येयम्" इत्युत्तरत्र सेनासङ्ख्यारूपादिविशेषविवित्सानुज्ञानात्सामान्यतस्तज्ज्ञानिना सहान्यप्रेषणस्य न्याय्यत्वात् ॥ १ ॥

भवन्तावित्यादि चतुःश्लोक्येकान्वया। तस्माद्भवन्तौ अनुपलक्षितौ परैरविज्ञातौ सन्तौ। वानरं सैन्यं प्रविश्य। परिमाणं वानराणामियत्ताम्। तेषां वीर्यं बलपरिच्छेदम्। ये प्लवङ्गमाः मुख्याः प्रधानभूताः तान् ॥ ४ ॥ ये रामस्य सुग्रीवस्य च सम्मता मन्त्रिणः। ये नारीरभटाः पूर्वमभिवर्तन्ते। ये च प्लवङ्गमाः वस्तुतः शूराः तान् सर्वान् ॥५॥ सागरे सगरखानिते। सलिलार्णवे लवणजलसमुद्रे। स सेतुः वानरतरणार्थसेतुश्च। यथा येन प्रकारेण बद्धः तं

भवन्ता वानरं सैन्यं प्रविश्यानुपलक्षितौ। परिमाणं च वीर्यं च ये च मुख्याः प्लवङ्गमाः ॥ ४ ॥ मन्त्रिणो ये च रामस्य सुग्रीवस्य च सम्मताः। ये पूर्वमभिवर्तन्ते ये च शूराः प्लवङ्गमाः ॥ ५ ॥ स च सेतुर्यथा बद्धः सागरे सलिलार्णवे। निवेशं यद्यथा तेषां वानराणां महात्मनाम् ॥ ६ ॥ रामस्य व्यवसायं च वीर्यं प्रहरणानि च। लक्ष्मणस्य च वीर्यं च तत्त्वतो ज्ञातुमर्हथः ॥ ७ ॥ कश्च सेनापतिस्तेषां वानराणां महौजसाम्। एतज्ज्ञात्वा यथा तत्त्वं शीघ्रमागन्तुमर्हथः ॥ ८ ॥ इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ। हरिरूपधरौ वीरौ प्रविष्टौ वानरं बलम् ॥ ९ ॥ ततस्तद्वानरं सैन्यमचिन्त्यं रोमहर्षणम्। सङ्ख्यातुं नाध्यगच्छेतां तदा तौ शुकसारणौ ॥१०॥ संस्थितं पर्वताग्रेषु निर्दरेषु गुहासु च। समुद्रस्य च तीरेषु वनेषूपवनेषु च ॥११॥ तरमाणं च तीर्णं च तर्तुकामं च सर्वशः। निविष्टं निविशच्चैव भीमनादं महाबलम्। तद्बलार्णवमक्षोभ्यं ददृशाते निशाचरौ ॥ १२ ॥

प्रकारम्। तेषां निवेशं निवासम्। उत्पत्तिस्थानं वा। क्लीबत्वमार्षम्। यद्यथा यादृशप्रकारः ॥ ६ ॥ रामस्य व्यवसायं कर्तव्यविषयनिश्चयम्। वीर्यं बलम्। प्रहरणानि आयुधानि। लक्ष्मणस्य व्यवसायं बलं च तत्त्वतः पारमार्थ्येन ज्ञातुमर्हथ इत्यन्वयः ॥ ७–९ ॥ नाध्यगच्छेतां नाज्ञासिष्टाम् ॥१०॥ अज्ञानहेतुमाह सार्द्धश्लोकद्वयेन–संस्थितमिति। निर्दरेषु दलितपर्वतप्रदेशेषु। उपवनेषु आरामेषु। "आरामः स्यादुपवनम्" इत्यमरः ॥ ११ ॥ १२ ॥

सागरे सेतुबन्धनं कृतमिति चैतदुभयमपि अभूतपूर्वमिति सम्बन्धः ॥ २ ॥३॥ परिमाणं चेत्यादिना तत्त्वतो ज्ञातुमर्हथ इत्यनेन सम्बन्धः। ये च मुख्याः प्लवङ्गमाः तांश्च ये पूर्वमभिवर्तन्ते, युद्धायेति शेषः। ये च शूरास्तांश्च सागरे सगरविरचिते सलिलार्णवे लवणजलसमुद्रे ॥ ४–९ ॥ तत इति। नाध्यगच्छेतां नाशक्नुताम् ॥ १० ॥ तत्र हेतुमाह–संस्थितमित्यादिश्लोकद्वयेन। तद महाबलम्। शुकसारणनिरीक्षणवेलायामुक्तप्रकारमभूदित्यर्थः ॥ ११ ॥ तद्बलार्णवमित्यर्धं भिन्नं

स०–सागरे सगरपुत्रखातत्वात्तत्सम्बन्धिनि। अर्णवशब्दो रूढः समुद्र इत्येतमात्रार्थकः। सलिलार्णवे जलसमुद्रे इत्यर्थः। "... ..." ... तथा च सलिलानि गच्छन्ति अर्णांसि यस्मिन्निति स वा तस्मिन् ॥ ६

रामानु०—तादिति । तद्बलार्णवमित्येकं पदम् । ददृशाते ददृशतुः ॥ १२ ॥ ताविति । अथ विभीषणः ददर्श आचचक्षे चेत्यन्वयः ॥ १३ ॥ लङ्कायाः इति पञ्चमी । परपुरं जयतीति परपुरंजयः । "संज्ञायां भृतॄवृजिधारिसहितपिदमः" इति खच् ॥ १४–१६ ॥ दशरथात्मजः महापुरुषप्रसूतत्वेन सहजकारुण्यः ।

तौ ददर्श महातेजाः प्रच्छन्नौ च विभीषणः । आचचक्षेऽथ रामाय गृहीत्वा शुकसारणौ ॥ १३ ॥ तस्येमौ राक्षसेन्द्रस्य मन्त्रिणौ शुकसारणौ । लङ्कायाः समनुप्राप्तौ चारौ परपुरञ्जय ॥१४॥ तौ दृष्ट्वा व्यथितौ रामं निराशौ जीविते तदा । कृताञ्जलिपुटौ भीतौ वचनं चेदमूचतुः ॥१५॥ आवामिहागतौ सौम्य रावणप्रहिताबुभौ । परिज्ञातुं बलं कृत्स्नं तवेदं रघुनन्दन ॥ १६ ॥ तयोस्तद्वचनं श्रुत्वा रामो दशरथात्मजः । अब्रवीत् प्रहसन् वाक्यं सर्वभूतहिते रतः ॥१७॥ यदि दृष्टं बलं कृत्स्नं वयं वा सुपरीक्षिताः। यथोक्तं वा कृतं कार्यं छन्दतः प्रतिगम्यताम् ॥१८॥ अथ किंचिददृष्टं वा भूयस्तद्द्रष्टुमर्हथः । विभीषणो वा कार्त्स्न्येन भूयः सन्दर्शयिष्यति॥१९॥ न चेदं ग्रहणं प्राप्य भेतव्यं जीवितं प्रति । न्यस्तशस्त्रौ गृहीतौ वा न दूतौ वधमर्हथः ॥२०॥ पृच्छमानौ विमुञ्चैतौ चारौ रात्रिंचरावुभौ । शत्रुपक्षस्य सततं विभीषण विकर्षणौ ॥ २१ ॥ प्रविश्य नगरीं लङ्कां भवद्भ्यां धनदानुजः । वक्तव्यो रक्षसां राजा यथोक्तं वचनं मम ॥२२॥ यद्बलं च समाश्रित्य सीतां मे हृतवानसि । तद्दर्शय यथाकामं ससैन्यः सहबान्धवः॥२३॥

प्रहसन् रावणबुद्धिमान्द्यस्मरणात् प्रहासः । सर्वभूतहिते रतः रिपूणामपि वत्सलः ॥ १७ ॥ यथोक्तं रावणेन यथोक्तम् । छन्दतः यथेच्छातः ॥ १८ ॥ अथेति पक्षान्तरे । भूयः अतिशयेन । दूतौ, युवामिति शेषः ॥ १९ ॥ २० ॥ विभीषणं प्रत्याह—पृच्छमानाविति । सततं पृच्छमानत्वदशायामपि शत्रुपक्षस्य विकर्षणौ बाधकाविति यावत् ॥२१॥ पुनर्दूतौ प्रत्याह—प्रविश्येति ॥२२॥ यदिति । यथाकामं यथेच्छम् । शरणं वा आगच्छेति भावः ॥२३ ॥ वाक्यम् । ददृशाते ददृशतुः ॥ १२–२० ॥ विभीषणं प्रत्याह—पृच्छमानाविति । हे विभीषण ! शत्रुपक्षस्य विकर्षणौ विविधं कर्षणं सामादिना इतस्ततः कर्षणं ययोस्तौ । सततं पृच्छमानौ अभयं पृच्छन्तौ एतौ विमुञ्चेत्यर्थः ॥ २१ ॥ पुनश्चारौ प्रत्याह—प्रविश्येत्यादिना ॥ २२–२४ ॥

स०—वयं वा सुसमीक्षिताः इति पाठः । सुसमीक्षिताः अतिसम्यगवलोकिताः । वयं वा सुसमाहिता इति पाठे—सुसमाहिताः स्वस्थचित्ताः, प्रतिभटभीतिरहिता इति यावत् । दृष्टमिति विपरिणतं सत् दृष्टाः—

श्वः काल्ये परेद्युः प्रातःकाले ॥ २४ ॥ क्रोधं मोक्ष्ये क्रोधकार्यं करिष्य इत्यर्थः । वज्रवान् अभ्यस्तवज्र इत्यर्थः ॥ २५ ॥ रामानु०–श्वः काले वज्रवान् वज्र मिति पाठः ॥ २५ ॥ इतीत्यादिसार्धश्लोक एकान्वयः । प्रतिनन्द्य अभिष्टुत्य ॥ २६ ॥ मुक्तौ, आवामिति शेषः । धर्मात्मना दूतवधमनिच्छतेत्यर्थः । अमिततेजसेत्यनेन अस्मत्त्यागे भीतिहेतुता न शङ्क्येत्यर्थः ॥ २७ ॥ एकस्थानेत्यादि श्लोकत्रयमेकान्वयम् । यत्र एकस्थानम् ऐकमत्यम्, एकप्रदेशं



श्वः काल्ये नगरीं लङ्कां सप्राकारां सतोरणाम् । राक्षसं च बलं पश्य शरैर्विध्वंसितं मया ॥ २४ ॥ क्रोधं भीममहं मोक्ष्ये ससैन्ये त्वयि रावण । श्वः काल्ये वज्रवान् वज्रं दानवेष्विव वासवः ॥२५॥ इति प्रतिसमादिष्टौ राक्षसौ शुक सारणौ । जयेति प्रतिनन्द्यैतौ राघवं धर्मवत्सलम् । आगम्य नगरीं लङ्कामब्रूतां राक्षसाधिपम् ॥ २६ ॥ विभीषण गृहीतौ तु वधार्हौ राक्षसेश्वर । दृष्ट्वा धर्मात्मना मुक्तौ रामेणामिततेजसा ॥२७ ॥ एकस्थानगता यत्र चत्वारः पुरुष र्षभाः । लोकपालोपमाः शूराः कृतास्त्रा दृढविक्रमाः ॥ २८ ॥ रामो दाशरथिः श्रीमान् लक्ष्मणश्च विभीषणः । सुग्रीवश्च महातेजा महेन्द्रसमविक्रमः ॥ २९ ॥ एते शक्ताः पुरीं लङ्कां सप्राकारां सतोरणाम् । उत्पाट्य सङ्क्रामयितुं सर्वे तिष्ठन्तु वानराः ॥ ३० ॥

वा गताः । एते शक्ताः पुरीं लङ्कामित्याद्यन्वयः । कृतास्त्राः शिक्षितास्त्राः । छत्रिणो गच्छन्तीतिवदयं निर्देशः, सुग्रीवस्याकृतास्त्रत्वात् ॥२८॥२९॥ उत्पाट्य श्वः काले इति पाठः । श्व इत्यर्थः ॥ २५–२७ ॥ एकस्थानगता इत्यादिश्लोकत्रयमेकं वाक्यम् । यत्र लङ्कामर्दनरूपकार्ये । एकस्थानगताः ऐकमत्यं प्राप्ताः । तत्र कार्ये विषये । सर्वे वानरास्तिष्ठन्तु, उक्तविशेषणा रामादयश्चत्वार एव लङ्कामुत्पाट्य संक्रामयितुमन्यत्र क्षेप्तुं शक्ता इति सम्बन्धः ॥ २८–३० ॥ –इत्यन्वेति । "अस्मदो द्वयोश्च" इति वयमिति सम्भवति । ननु न सम्भवति सविशेषणत्वादिति चेन्न; "नच विदितवेद्या अपि वयम्" "शैवा वयं न खलु तत्र विचारणीयं पञ्चाक्षरीजपपरा नितराम्" इत्यादिव द्विधेयविशेषणत्वाददोषः । असुसमाहिताः रावणं सगणं तृणीकृत्यानवधानेनैव स्थिता इति वा । प्रति गम्यतां स्वस्वामिसन्निधिम् ॥ १८ ॥

स०–ननु "वधं न कुर्वन्ति परावरज्ञा दूतस्य" इत्यारभ्य "युक्तायुक्तं विनिश्चित्य दूतदण्डो विधीयताम् । विभीषणवचः श्रुत्वा" इत्यन्तेन ग्रन्थेन विभीषणकृतदूतघातप्रतिषेधबोधनावगतेः अत्र पुनः "विभीषणगृहीतौ तु वधार्थम्" इत्युक्तिः कथमिति चेत्, सत्यम्–शङ्केरंस्तत्त्यागे कपयो मयीति तथाऽऽत्मानं दर्शयामासेति युक्ततोक्तेर्ज्ञेया । मरिष्यन्नयनस्य परिश्रमकर एव यमदूत इति नीतेरभावादारमव्या ऽतथाकार्यमपि तथेति वा ॥ २७ ॥

उद्धृत्य । संक्रामयितुम् अन्यत्र क्षेप्तुम् । सर्वे एतच्चतुष्टयभिन्नाः ॥ ३० ॥ प्रहरणादिकं यादृशं तदवलोकने राम एको वधिष्यतीति मन्यावहे इत्यर्थः ॥ ३१ ॥ नन्वसहायशूरोऽपि रामः सेनाहननादनुत्साहः स्यात्, तत् क्रियतामित्यत्राह—रामलक्ष्मणेति । सुग्रीवेण च अङ्गदादिना च सहिता सा अपरिच्छिन्ना । हरिवाहिनी चपलकपिसेना । रामलक्ष्मणगुप्ता रामेण 'रामस्य दक्षिणो बाहुः' इति रामदक्षिणबाहुभूतेन लक्ष्मणेन च गुप्ता सती ।

यादृशं तस्य रामस्य रूपं प्रहरणानि च । वधिष्यति पुरीं लङ्कामेकस्तिष्ठन्तु ते त्रयः ॥ ३१ ॥ रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी । बभूव दुर्धर्षतरा सेन्द्रैरपि सुरासुरैः ॥३२॥ [ व्यक्तः सेतुस्तथा बद्धो दशयोजनविस्तृतः । शतयोजनमायामस्तीर्णा सेना च सागरम् । निविष्टो दक्षिणे तीरे रामः स च नदीपतेः । तीर्णस्य तरमाणस्य बलस्यान्तो न विद्यते ॥ ] प्रहृष्टरूपा ध्वजिनी वनौकसां महात्मनां सम्प्रति योद्धुमिच्छताम् । अलं विरोधेन शमो विधीयतां प्रदीयतां दाशरथाय मैथिली ॥ ३३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्ध काण्डे पञ्चविंशः सर्गः ॥ २५ ॥

सुग्रीवस्य रक्ष्यकोटावेवान्वयः, न तु रक्षककोटौ । तन्मन्त्रिणा हनुमतैव "जयत्यतिबलो रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ " इत्युक्तेः । दुर्धर्षतरा बभूव तरसा मनसापि धर्षयितुमशक्येत्यवगम्यते । न केवलं मनुष्यादिभिः किन्तु सुरैरपि । न केवलं सुरैरेव किन्तु सुरासुरैः विरोधं विहाय कृतसौहार्दैरपि । न केवलमनायकैस्तैः, किन्तु सेन्द्रैरपि । स्वस्वातन्त्र्यं विहाय नायकाज्ञानुवर्तिभिरित्यर्थः ॥ ३२ ॥ महात्मनां दृढमनस्कानाम् । सम्प्रति सद्य एव । योद्धुमिच्छताम् । प्रहृष्टरूपा हर्षद्योतकाकारयुक्ता, भवतीति शेषः । अतस्तद्विरोधेनालम् । शमः क्रोधनिवृत्तिः । विधीयतां क्रियताम्, मैथिली प्रदीयतां च ॥ ३३ ॥ रामानु०--प्रहृष्टरूपा अत्यन्तं प्रहृष्टा । "प्रशंसायां रूपप्" ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

यादृशं रामस्य रूपं प्रमाणानि च यादृशानि तद्विमर्शो स एव वधिष्यतीति मन्यावहे इत्यर्थः ॥ ३१ ॥ ३२ ॥ प्रहृष्टरूपा अत्यन्तं प्रहृष्टा ॥ ३३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां पञ्चविंशः सर्गः ॥ २५ ॥

अथ रावणाय सारणेन वानरयूथपतीनां वीर्यादिकथनपूर्वकं तत्प्रदर्शनं षड्विंशे तदिति । अक्लीबम् अकातरम् । प्रत्यभाषत अनिन्ददित्यर्थः ॥ १ ॥ यदीति । अभियुञ्जीरन् युद्धयेरन् । सर्वलोकभयात् सर्वलोकेभ्यो भयात् ॥ २ ॥ त्वमित्यादिसार्द्धश्लोकः । सपत्नः शत्रुः ॥ ३ ॥ इत्युक्त्वेत्यादिसार्ध

तद्वचः पथ्यमक्लीबं सारणेनाभिभाषितम् । निशम्य रावणो राजा प्रत्यभाषत सारणम् ॥ १ ॥ यदि मामभियुञ्जीरन् देवगन्धर्वदानवाः । नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ २ ॥ त्वं तु सौम्य परित्रस्तो हरिभिर्निर्जितो भृशम् । प्रतिप्रदानमद्यैव सीतायाः साधु मन्यसे । को हि नाम सपत्नो मां समरे जेतुमर्हति ॥ ३ ॥ इत्युक्त्वा परुषं वाक्यं रावणो राक्षसाधिपः ॥ ४ ॥ आरुरोह ततः श्रीमान् प्रासादं हिमपाण्डरम् । बहुतालसमुत्सेधं रावणोऽथ दिदृक्षया ॥ ५ ॥ ताभ्यां चराभ्यां सहितो रावणः क्रोधमूर्च्छितः । पश्यमानः समुद्रं च पर्वतांश्च वनानि च । ददर्श पृथिवीदेशं सुसम्पूर्णं प्लवङ्गमैः ॥ ६ ॥ तदपारमसङ्ख्येयं वानराणां महद्बलम् । आलोक्य रावणो राजा परिपप्रच्छ सारणम् ॥ ७ ॥ एषां वानरमुख्यानां के शूराः के महाबलाः । के पूर्वमभिवर्तन्ते महोत्साहाः समन्ततः ॥ ८ ॥ केषां शृणोति सुग्रीवः के वा यूथपयूथपाः । सारणाचक्ष्व तत्त्वेन के प्रधानाः प्लवङ्गमाः ॥ ९ ॥ सारणो राक्षसेन्द्रस्य वचनं परिपृच्छतः । आचचक्षेऽथ मुख्यज्ञो मुख्यांस्तांस्तु वनौकसः ॥ १० ॥

श्लोकः । ततः तस्मात्पूर्वस्थानात् । बहुतालसमुत्सेधम् अनेकतालवृक्षतुल्यौन्नत्यम् । यद्वा वितताङ्गुष्ठमध्यमामितस्तालः । तदाह सज्जनः—“ प्रादेशतालगोकर्णवितस्त्यश्च यथाक्रमम् । भवन्ति वितताङ्गुष्ठप्रदेशिन्यादिभिः सह ॥” इति । अत्र द्वितीयो रावणशब्दो रावयतीति व्युत्पत्त्या क्रियानिमित्तकः । दिदृक्षया वानरबलदिदृक्षया ॥ ४ ॥ ५ ॥ चराभ्यां चाराभ्याम् । क्रोधमूर्च्छितः क्रोधेन व्याप्तः । पृथिवीदेशं त्रिकूटाधःप्रदेशम् ॥ ६ ॥ अपारम् उत्तरावधिरहितम् ॥ ७ ॥ येषामिति । इयं निर्धारणे षष्ठी ॥ ८ ॥ केषामिति । वचनमिति शेषः । प्रधानाः सेनापतयः ॥ ९ ॥ वचनं, निशम्येति शेषः ॥ १० ॥

॥ १–२ ॥ इत्युक्त्वेत्यादिश्लोकद्वयमेकं वाक्यम् । बहुतालसमुत्सेधं बहुतालौन्नत्यसमानौन्नत्यम् । दिदृक्षया वानरबलदर्शनेच्छया ॥ ४ ॥ ५ ॥ पश्यमानः पश्यन् ॥ ६–८ ॥ केषां

त्रिभिर्नीलं वर्णयति—एष इत्यादि । य एष इत्यन्वयः । तिष्ठते तिष्ठति ॥ ११-१३ ॥ अथाङ्गदं वर्णयति—बाहू इत्यादिना स्वेनानीकेन दुर्जयः इत्यन्तेन । बाहू प्रगृह्य उत्क्षिप्य । अभि उद्दिश्य मुखं यस्यासावभिमुखः । विजृम्भते जृम्भणं करोति ॥ १४ ॥ पद्मकिञ्जल्कसन्निभः पद्मकेसरवत्

एष योऽभिमुखो लङ्कां नर्दंस्तिष्ठति वानरः । यूथपानां सहस्राणां शतेन परिवारितः ॥११॥ यस्य घोषेण महता सप्राकारा सतोरणा । लङ्का प्रवेपते सर्वा सशैलवनकानना ॥ १२ ॥ सर्वशाखामृगेन्द्रस्य सुग्रीवस्य महात्मनः । बलाग्रे तिष्ठते वीरो नीलो नामैष यूथपः ॥ १३ ॥ बाहू प्रगृह्य यः पद्भ्यां महीं गच्छति वीर्यवान् । लङ्कामभिमुखः क्रोधादभीक्ष्णं च विजृम्भते ॥ १४ ॥ गिरिशृङ्गप्रतीकाशः पद्मकिञ्जल्कसन्निभः ॥ १५ ॥ स्फोटयत्यभिसंरब्धो लाङ्गूलं च पुनः पुनः। यस्य लाङ्गूलशब्देन स्वनन्ति प्र दिशो दश ॥१६॥ एष वानरराजेन सुग्रीवेणाभिषेचितः। यौवराज्येऽङ्गदो नाम त्वामाह्वयति संयुगे ॥१७॥ वालिनः सदृशः पुत्रः सुग्रीवस्य सदा प्रियः। राघवार्थे पराक्रान्तः शक्रार्थे वरुणो यथा ॥ १८ ॥ एतस्य सा मतिः सर्वा यद् दृष्टा जनकात्मजा । हनूमता वेगवता राघवस्य हितैषिणा ॥ १९ ॥ बहूनि वानरेन्द्राणामेष यूथानि वीर्यवान् । परिगृह्याभियाति त्वां स्वेनानीकेन दुर्जयः ॥ २० ॥

पीतवर्ण इत्यर्थः ॥ १५ ॥ स्फोटयति भूमौ ताडयति । अभिसंरब्धः कुपितः । प्रस्वनन्तीत्यन्वयः ॥ १६ ॥ अभिषेचितः अभिषिक्तः । आह्वयति आह्वयते । स्पर्धाविषयेऽप्यात्मनेपदाभाव आर्षः ॥ १७ ॥ पराक्रान्तः पराक्रमितुमुद्यतः ॥ १८ ॥ हनूमता सीता दृष्टेति यत् सा मतिः एतस्याङ्गदस्य एतद्बुद्धिमूलं हनुमतः सीतादर्शनमिति भावः । अङ्गदपुरस्कारेण हनुमतः समागमात् ॥ १९ ॥ बहूनीति । स्वेनानीकेनेति दुर्जयत्वकारणोक्तिः

शृणोति, वाक्यमिति शेषः ॥ ९--१२ ॥ तिष्ठते तिष्ठति ॥ १३ ॥ बाहू प्रगृह्येत्यादि स्वेनानीकेन दुर्जयः इत्येतदन्तम् अङ्गदवर्णनम् । बाहू प्रगृह्य उत्क्षिप्य । अभिषेचितः अभिषिक्तः । पराक्रान्तः पराक्रमितुमुद्यतः ॥१४--१८॥ एतस्य अङ्गदस्य । हनुमता जनकात्मजा दृष्टेति यत् सा सर्वा मतिरेतस्येति, अङ्गदोपदेशादेव हनुमता सीता दृष्टेति भावः ॥ १९ ॥ २० ॥

अतो न पुनरुक्तिः ॥ २० ॥ अनु वालीति । एतस्योत्तरार्धं वीरस्तिष्ठति सङ्गाम इति। वालिसुतस्य अनु पश्चात्। सेतुहेतुः सेतुकर्ता । सङ्ग्रामे सङ्ग्राम निमित्तम् ॥ २१ ॥ नलपरिवारानाह—ये त्वित्यादिना मर्दितुमित्यन्तेन । श्लोकत्रयमेकान्वयम् । विष्टभ्य उन्नम्य । क्ष्वेलयन्ति सिंहनादं कुर्वन्ति । नदन्ति गर्जन्ति । उत्थाय, आसनादिति शेषः । विजृम्भन्ते कोपेन गात्रविनामं कुर्वन्ति । य एवंविधा वानराः ये च चन्दनवासिनः चन्दनवनवासिनः ।

अनु वालिसुतस्यापि बलेन महता वृतः । वीरस्तिष्ठति सङ्ग्रामे सेतुहेतुरयं नलः ॥२१॥ ये तु विष्टभ्य गात्राणि क्ष्वेलयन्ति नदन्ति च । उत्थाय च विजृम्भन्ते क्रोधेन हरिपुङ्गवाः ॥ २२ ॥ एते दुष्प्रसहा घोराश्चण्डाश्चण्डपराक्रमाः । अष्टौ शतसहस्राणि दशकोटिशतानि च ॥ २३ ॥ य एनमनुगच्छन्ति वीराश्चन्दनवासिनः । एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥२४॥ श्वेतो रजतसङ्काशश्चपलो भीमविक्रमः । बुद्धिमान् वानरो वीरस्त्रिषु लोकेषु विश्रुतः ॥ २५ ॥ तूर्णं सुग्रीवमागम्य पुनर्गच्छति सत्वरः । विभजन् वानरीं सेनामनीकानि प्रहर्षयन् ॥ २६ ॥

एते एनं नलमनुगच्छन्तीति सम्बन्धः । चन्दनवानरा इति पाठे मध्यमपदलोपिसमासः । चन्दनवासिनो वानरा इति । एषैवेति सन्धिरार्षः । आशंसते प्रार्थयते ॥ २२–२४ ॥ अथ द्वाभ्यां श्वेताख्यं वानरं वर्णयति—श्वेत इत्यादि । अन्वर्थनामेत्याह रजतेति । चपलः युद्धचपलः ॥ २५ ॥ रामानु०—श्वेतः श्वेताख्यः ॥ २५ ॥ अनीकानि पुनर्गच्छतीत्यन्वयः । विभजन् निबिडां सेनां भित्त्वा गच्छन्नित्यर्थः । अत्र चपल इत्यनेन अद्यैव लङ्कां ध्वंसयामीति निवेदनार्थं गत्वा तेन सान्त्वितः पुनर्गच्छतीत्यवगम्यते ॥ २६ ॥

अनु वालिसुतस्य वालिसुतस्यानु अनन्तरम् ॥ २१ ॥ ये तु विष्टभ्येत्यादि अनीकानि प्रहर्षयन्नित्यन्तं श्वेताख्यवानरवर्णनम् । ये गात्राणि विष्टभ्य क्ष्वेलयन्ति य एनं श्वेताख्यमनुगच्छन्ति एते दुष्प्रसहाः चन्दनवासिनः चन्दनवनवासिन इति सम्बन्धः ॥ २२–२५ ॥ यः अनीकानि प्रहर्षयन् वानरीं सेनां विभजन् सुग्रीवमागम्य पुनर्गच्छति एष श्वेत एव वानरः स्वेनानीकेन लङ्कां मर्दितुम् आशंसते प्रार्थयतीति सम्बन्धः ॥ २६ ॥

स०–चन्दनवासिनः तन्नामकगिरिविशेषवासिनः । अथवा चन्दनभूयिष्ठत्वान्मलयः तत्र वासिनो वा । एषैव एष एव । सन्धिरार्षः । एषा या प्रसिद्धा त्वदावासभूता तां लङ्कां मर्दितुमिति वा ॥ २४ ॥

चतुर्भिः कुमुदं वर्णयति--यः पुरेत्यादि । पुरेत्यनेनास्य सुग्रीवसमीप एव वसतीति गम्यते । पर्यैति परितः सञ्चरति । नाम्ना सङ्कोचनो नाम यः प्रसिद्धः तं पर्वतमित्यन्वयः । तत्र गोमतीतीरे ॥२७॥ परिकर्षति आनयति ॥ २८ ॥ घोरकर्मणो यस्य लाङ्गूलमाश्रिताः वालाः रोमाणि । दैर्घ्यस्यावधिमाह

यः पुरा गोमतीतीरे रम्यं पर्यैति पर्वतम् । नाम्ना सङ्कोचनो नाम नानानगयुतो गिरिः । तत्र राज्यं प्रशास्त्येष कुमुदो नाम यूथपः ॥ २७ ॥ योऽसौ शतसहस्राणां सहस्रं परिकर्षति ॥ २८ ॥ यस्य वाला बहुव्यामा दीर्घा लाङ्गूलमाश्रिताः । ताम्राः पीताः सिताः श्वेताः प्रकीर्णा घोरकर्मणः ॥ २९ ॥ अदीनो रोषणश्चण्डः सङ्ग्राममभिकांक्षति । एषोऽप्याशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ ३० ॥ यस्त्वेष सिंहसङ्काशः कपिलो दीर्घलोचनः । निभृतः प्रेक्षते लङ्कां दिधक्षन्निव चक्षुषा ॥ ३१ ॥ विन्ध्यं कृष्णगिरिं सह्यं पर्वतं च सुदर्शनम् । राजन् सततमध्यास्ते रम्भो नामैष यूथपः ॥ ३२ ॥ शतं शतसहस्राणां त्रिंशच्च हरिपुङ्गवाः । यमेते वानराः शूराश्चण्डाश्चण्डपराक्रमाः । परिवार्यानुगच्छन्ति लङ्कां मर्दितुमोजसा ॥ ३३ ॥ यस्तु कर्णौ विवृणुते जृम्भते च पुनः पुनः । न च संविजते मृत्योर्न च युद्धाद्विधावति ॥ ३४ ॥ प्रकम्पते च रोषेण तिर्यक् च पुनरीक्षते । पश्यन् लाङ्गूलमपि च क्ष्वेलते च महाबलः ॥ ३५ ॥ महाजवो वीतभयो रम्यं साल्वेयपर्वतम् । राजन् सततमध्यास्ते शरभो नाम यूथपः ॥ ३६ ॥

बहुव्यामा इति । "व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्" इत्यमरः । अदीन इत्यत्र य इत्युपस्कार्यम् ॥ २९ ॥ ३० ॥ अथ सार्धैस्त्रिभी रम्भं वर्णयति--यस्त्वेष इत्यादि ॥ ३१--३३ ॥ अथ शरभं वर्णयति--यस्तु कर्णावित्यादि । संविजते बिभेति ॥ ३४--३७ ॥

यः पुरेत्यादिना सार्धेन कुमुदवर्णनम् ॥ २७ ॥ योऽसावित्यारभ्य स्वेनानीकेनेत्यन्तं चण्डाख्यवर्णनम् । यस्य वालाः रोमाणि बहुव्यामाः दीर्घबाहुद्वयप्रमाणाः । सिताश्वेताः अश्वेता नीलाश्च सिताश्वेताः पीताश्च ॥ २८ ॥ २९ ॥ चण्डः चण्डाख्यः ॥ ३० ॥ यस्त्वेष इत्यारभ्य लङ्कां मर्दितुमोजसा इत्यन्तं रम्भाख्यवर्णनम् । निभृतः एकाग्रः ॥ ३१--३३ ॥ यस्तु कर्णावित्यारभ्य चत्वारिंशत्तथैव चेत्यन्तं शरभाख्यवर्णनम् । न संविजते न बिभेति ॥ ३४--३७ ॥

रामानु०—एतस्येति । चत्वारिंशत्तथैव चेति पाठः । एतद्बुत्तरशेषः ॥ ३७ ॥ अथ पनसं वर्णयति—यस्तु मेघ इत्यादिना ॥ ३८—४० ॥ रामानु०—भेरीणामिति । घोषः शाखामृगेन्द्राणामिति पाठः ॥ ३९ ॥ एनं पनसम् । येषां यूथपानां यूथानि च भागशः स्वस्वांशासङ्ख्येन एनं पर्युपासत इति संबन्धः ॥ ४१ ॥ विनतं वर्णयति—यस्त्वित्यादि । प्रवल्गन्तीम् उत्साहेन प्लवमानाम् । समुद्रस्य पारे स्थिताम् । अत एव द्वितीयः सागर इव, स्थितामिति शेषः । विनतविशेषणं

एतस्य वलिनः सर्वे विहारा नाम यूथपाः । राजन् शतसहस्राणि चत्वारिंशत्तथैव च ॥ ३७ ॥ यस्तु मेघ इवाकाशं महानावृत्य तिष्ठति । मध्ये वानरवीराणां सुराणामिव वासवः ॥ ३८ ॥ भेरीणामिव सन्नादो यस्यैष श्रूयते महान् । घोषः शाखामृगेन्द्राणां सङ्ग्राममभिकांक्षताम् ॥ ३९ ॥ एष पर्वतमध्यास्ते पारियात्रमनुत्तमम् । युद्धे दुष्प्रसहो नित्यं पनसो नाम यूथपः ॥ ४० ॥ एनं शतसहस्राणां शतार्धं पर्युपासते । यूथपा यूथपश्रेष्ठं येषां यूथानि भागशः ॥ ४१ ॥ यस्तु भीमां प्रवल्गन्तीं चमूं तिष्ठति शोभयन् । स्थितां तीरे समुद्रस्य द्वितीय इव सागरः ॥ ४२ ॥ एष दर्दरसङ्काशो विनतो नाम यूथपः । पिबंश्चरति पर्णासां नदीनामुत्तमां नदीम् ॥ ४३ ॥ षष्टिः शतसहस्राणि बलमस्य प्लवङ्गमाः ॥ ४४ ॥ त्वामाह्वयति युद्धाय क्रोधनो नाम यूथपः । विक्रान्ता बलवन्तश्च यथायूथानि भागशः ॥ ४५ ॥ यस्तु गैरिकवर्णाभं वपुः पुष्यति वानरः । अवमत्य सदा सर्वान् वानरान् बलदर्पितान् ॥ ४६ ॥

वा ॥ ४२ ॥ दर्दरो नाम गङ्गासमीपस्थः पर्वतः । पर्णासां पर्णासाख्यां नदीम् ॥ ४३ ॥ विनतसेनासङ्ख्यामाह—षष्टिरिति । षष्टिः शतसहस्राणि प्लवङ्गमाः अस्य विनतस्य बलं सेनेत्यर्थः ॥ ४४ ॥ एकेन क्रोधनमाह—त्वामिति । उत्तरार्धे अस्येत्यध्याहार्यम् । यथायूथानि यथायूथम् । अमभावश्छान्दसः । भागशः भागत्वेन स्थिताः वानराः विक्रान्ता बलवन्तश्चेति योजना ॥ ४५ ॥ श्लोकेन गवयं वर्णयति—यस्त्वित्यादिना । गैरिकं रक्तवर्णधातुविशेषः । यस्तु मेघ इत्यारभ्य येषां यूथानि भागशः इत्यन्तं पनसाख्यवानरवर्णनम् ॥ ३८ ॥ शाखामृगेन्द्राणां मध्ये यस्य घोषो भेरीणां सन्नाद इव श्रूयत इति सम्बन्धः ॥ ३९ ॥ ४० ॥ एनमिति । येषां यूथपानां यूथानि भागशः प्रत्येकं वर्तन्ते तेऽर्धशतसहस्राणि शतार्धं सहस्राणि यूथपा एनं पनसं पर्युपासत इति सम्बन्धः ॥ ४१ ॥ यस्तु भीमामित्यादिसार्धश्लोक एकं वाक्यम् । पिबंश्चरतीत्यारभ्य यथायूथानि भागशः इत्यन्तं क्रोधनाख्यवानरवर्णनम् । वपुः पुष्यति पोषयति, युद्धहर्षादभि

" धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः " इत्यमरः । तद्वर्ण इवाभा यस्येति विग्रहः । गैरिकवर्ण इवाभातीति गैरिकवर्णाभमिति वा । पुष्यति युद्धहर्षा दभिवर्धयतीत्यर्थः ॥ ४६ ॥ ४७ ॥ उपसंहरति—एत इति । यूथपाः अङ्गदादयः । यूथपश्रेष्ठाः सुग्रीवादयः । एषां यूथपानां यूथानि भागशः पृथक् विद्यन्त इति शेषः ॥ ४८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

गवयो नाम तेजस्वी त्वां क्रोधादभिवर्तते । एनं शतसहस्राणि सप्ततिः पर्युपासते । एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ ४७ ॥ एते दुष्प्रसहा घोरा बलिनः कामरूपिणः । यूथपा यूथपश्रेष्ठा एषां यूथानि भागशः ॥ ४८ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे षड्विंशः सर्गः ॥ २६ ॥

तांस्तु तेऽहं प्रवक्ष्यामि प्रेक्षमाणस्य यूथपान् । राघवार्थे पराक्रान्ता ये न रक्षन्ति जीवितम् ॥ १ ॥
स्निग्धा यस्य बहुव्यामा वाला लांगूलमाश्रिताः । ताम्राः पीताः सिताः श्वेताः प्रकीर्णा घोरकर्मणः ॥ २ ॥
प्रगृहीताः प्रकाशन्ते सूर्यस्येव मरीचयः । पृथिव्यां चानुकृष्यन्ते हरो नामैष यूथपः ॥ ३ ॥



पुनरुक्तेभ्योऽप्युत्कृष्टान् प्रधानयूथपतीन् वक्तुं प्रतिजानीते–तांस्त्वित्यादि । ये राघवार्थे पराक्रान्ताः सन्तः जीवितं न रक्षन्ति तान् यूथपान् ते तुभ्यं प्रवक्ष्यामीत्यन्वयः ॥ १ ॥ द्वाभ्यां हरं वर्णयति–स्निग्धा इति । वालाः रोमाणि बहुव्यामाः बहुव्यामप्रमाणाः । व्यामो नाम प्रसारितबाहुद्वयप्रमाणम् । प्रगृहीताः उत्क्षिप्ताः । प्रकीर्णाः विरलाः सूर्यस्य मरीचय इव मेघेषु शक्रचापादिरूपेण प्रसृता रश्मय इव प्रकाशन्ते । कदाचित् पृथिव्यामनुकृष्यन्ते । एष

वर्धयतीति यावत ॥ ४२--४८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां षड्विंशः सर्गः ॥ २६ ॥ ( अत्र सर्गच्छेदोऽपाङ्क्तो वृत्तभेदाभावादेकप्रकरणत्वाच्चेति कतकः ॥ ) तांस्त्विति । तेषां प्रसिद्धानां वानराणां मध्ये ये राघवार्थे जीवितं न रक्षन्ति तान् यूथपान् प्रेक्षमाणस्य ते प्रवक्ष्यामि ॥ १ ॥ बहुव्यामाः अतिदीर्घाः वालाः । सिताः श्लिष्टाः । प्रकीर्णाः विश्लिष्टाः ॥ २ ॥ प्रगृहीता उत्क्षिप्ताः । एष हरो नामेत्यन्वयः । हरो

यूथपो हरो नाम ॥ २ ॥ ३ ॥ यमित्यादिसार्धश्लोक एकान्वयः । यं हरम् । हरस्य हरिराजकिङ्करत्वेन तदीया अपि यूथपा हरिराजकिङ्करा एवेति न विरोधः ॥ ४ ॥ ऋक्षसेनां वर्णयति–नीलानित्यादि । अनिर्देश्यान् प्रत्येकं निर्देष्टुमशक्यान् । परं पारमिवोदधेः समुद्रस्यापरं तीरमिव स्थितमित्यर्थः । विषमेषु निम्नोन्नतप्रदेशेषु ॥ ५–७ ॥ पर्जन्यः वर्षदेवता ॥ ८ ॥ ९ ॥ यवीयान् कनिष्ठः, अयमिति शेषः । विशिष्टः अधिकः ॥ १० ॥ गुरुवर्ती गुरु

यं पृष्ठतोऽनुगच्छन्ति शतशोऽथ सहस्रशः । द्रुमानुद्यम्य सहसा लङ्कारोहणतत्पराः । यूथपा हरिराजस्य किङ्कराः समुपस्थिताः ॥ [ एष कोटिसहस्रेण वानराणां महौजसाम् । आकांक्षते त्वां सङ्ग्रामे जेतुं परपुरंजय । ] ॥४॥ नीलानिव महामेघांस्तिष्ठतो यांस्तु पश्यसि ॥५॥ असिताञ्जनसङ्काशान् युद्धे सत्यपराक्रमान् । असङ्ख्येयाननिर्देश्यान् परं पारमिवोदधेः ॥ ६ ॥ पर्वतेषु च ये केचिद्विषमेषु नदीषु च । एते त्वामभिवर्तन्ते राजनृक्षाः सुदारुणाः ॥ ७ ॥ एषां मध्ये स्थितो राजन् भीमाक्षो भीमदर्शनः । पर्जन्य इव जीमूतैः समन्तात् परिवारितः ॥ ८ ॥ ऋक्षवन्तं गिरिश्रेष्ठमध्यास्ते नर्मदां पिबन् । सर्वर्क्षाणामधिपतिर्धूम्रो नामैष यूथपः ॥ ९ ॥ यवीयानस्य तु भ्राता पश्यैनं पर्वतोपमम् । भ्रात्रा समानो रूपेण विशिष्टस्तु पराक्रमैः ॥१०॥ स एष जाम्बवान्नाम महायूथपयूथपः । प्रक्रान्तो गुरुवर्ती च संप्रहारेष्वमर्षणः ॥ ११ ॥ एतेन साह्यं सुमहत् कृतं शक्रस्य धीमता । देवासुरे जाम्बवता लब्धाश्च बहवो वराः ॥१२॥ आरुह्य पर्वताग्रेभ्यो महाभ्रविपुलाः शिलाः । मुञ्चन्ति विपुलाकारा न मृत्योरुद्विजन्ति च ॥ १३ ॥

शुश्रूषकः ॥११॥ रामानु०–संप्रहारेषु युद्धेषु । "संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः" इत्यमरः ॥ ११ ॥ देवासुरे देवासुरयुद्धे ॥१२॥ जाम्बवतः सैनिकान् वर्णयति लाङ्गूलजातिः ॥ ३ ॥ ४ ॥ नीलानित्यादि ऋक्षास्सुदारुणा इत्यन्तमेकं वाक्यम् । महोदधेः परं पारमिव अनिर्देश्यान् नीलान् महामेघानिव तिष्ठतः असिताञ्जनसङ्काशान् यान् पश्यसि ये केचित्पर्वतेषु नदीषु च वर्तन्ते एतेषु दारुणा ऋक्षास्त्वामभिवर्तन्ते त्वदभिमुखं वर्तन्त इति सम्बन्धः ॥ ५–७ ॥ एषामित्यादि श्लोकद्वयमेकं वाक्यम् ॥ ८ ॥ ९ ॥ यवीयानस्येत्यारभ्य लब्धाश्च बहवो वरा इत्यन्तमेकं वाक्यम् । अस्य धूम्रस्य । यवीयान् कनिष्ठः । गुरुवर्ती गुरुशुश्रूषकः । सम्प्रहारेषु युद्धेषु । साह्यं साहाय्यम् ॥ १०–१२ ॥ अथ तत्सैन्यवर्णनम्–आरुह्येति । उद्विजन्ति बिभ्यति ॥ १३ ॥ स०–अस्य धूम्रस्य । यवीयान् कनिष्ठः । रूपेण ऋक्षाकारेण । विशिष्टः उत्तमः । एतेन जाम्बवन्त इव धूम्रस्यापि [illegible] ॥ सौहार्दाद्भ्रातेव वा ॥ १० ॥

द्वाभ्याम्—आरुह्येत्यादि । पर्वताग्राणीत्यर्थात्सिद्धम् । [illegible] । राक्षसानां पिशाचानां च सदृशा इत्यन्वयः ॥ १३ ॥ १४ ॥ द्वाभ्यां दम्भं वर्णयति—यं त्विति । अभिसंरब्धं कुपितम् । प्लवमानमिव सदा प्लुवमानमिव स्थितं प्रेक्षन्ते, आश्चर्येणेति शेषः । बलेन पर्युपास्ते बलेन प्रीणयतीत्यर्थः ॥१५॥१६॥ त्रिभिः सन्नादनं वर्णयति—यः स्थितमिति । यो गच्छन् योजने योजनदूरे स्थितं शैलं पार्श्वेन (सेवते) गच्छति,



राक्षसानां च सदृशाः पिशाचानां च लोमशाः । एतस्य सैन्या बहवो विचरन्त्यग्नितेजसः ॥ १४ ॥ यं त्वेनमभिसंरब्धं प्लवमानमिव स्थितम् । प्रेक्षन्ते वानराः सर्वे स्थिता यूथपयूथपम् ॥ १५ ॥ एष राजन् सहस्राक्षं पर्युपास्ते हरीश्वरः । बलेन बलसम्पन्नो दम्भो नामैष यूथपः ॥ १६ ॥ यः स्थितं योजने शैलं गच्छन् पार्श्वेन सेवते । ऊर्ध्वं तथैव कायेन गतः प्राप्नोति योजनम् ॥ १७ ॥ यस्मान्न परमं रूपं चतुष्पादेषु विद्यते । श्रुतः सन्नादनो नाम वानराणां पितामहः ॥ १८ ॥ येन युद्धं पुरा दत्तं रणे शक्रस्य धीमता । पराजयश्च न प्राप्तः सोऽयं यूथपयूथपः ॥ १९ ॥ यस्य विक्रममाणस्य शक्रस्येव पराक्रमः । एष गन्धर्वकन्यायामुत्पन्नः कृष्णवर्त्मनः ॥ २० ॥

अस्य गमनकाले एकपदप्रक्षेपदशायाम् एकयोजनपरिमितः पर्वतः पार्श्वस्थो भवति, योजनायतशरीर इत्यर्थः । कायेनोर्ध्वं गतः सन् योजनं प्राप्नोति, योजनोन्नतकाय इत्यर्थः । अत एव चतुष्पादेषु यस्मात् परमं परं रूपं शरीरं न विद्यते । शक्रस्य रणे शक्रस्यासुरैः सह युद्धे । येनासुरेभ्यो युद्धं दत्तं तदा पराजयश्चासुरेभ्यो न प्राप्तः सोऽयं सन्नादन इति श्रुतो नाम ॥१७–१९॥ कस्यायं पुत्र इत्यत्राह—यस्येति । विक्रममाणस्य पराक्रमं कुर्वतः । यस्य पराक्रमः शक्रस्येव, तत्पराक्रमसदृशपराक्रम इत्यर्थः ॥ २० ॥ रामानु०—यस्य विक्रममाणस्येत्यारभ्य स्वेनानीकेन मर्दितुमित्यन्तं कथनाख्यवानरविषयम् ॥ २० ॥

लोमशाः अधिकरोमवन्तः ॥ १४ ॥ प्लवमानमिव स्थितं प्लवमानत्वेन वर्तमानम् । स्थिता यूथपयूथपा इति च पाठः ॥ १५ ॥ १६ ॥ यः सन्नादनाख्यो गच्छन् योजने स्थितं शैलं पार्श्वेन सेवते स्पृशति । अनेन योजनपरिमितमस्य स्थौल्यमित्युक्तं भवति । तथैव गतः गमनवेलायां कायेन ऊर्ध्वमुपरि योजनं प्राप्नोति स्पृशति, अनेन योजनोन्नतवानित्युक्तं भवति ॥ १७ ॥ १८ ॥ पुरा युद्धकाले ॥ १९ ॥ यस्य विक्रममाणस्य इत्यारभ्य स्वेनानीकेन मर्दितुमित्यन्तं कथनाख्य

किमर्थमुत्पादित इत्यत्राह–तदेत्यर्धम् । तदा प्रसिद्धे ॥ २१ ॥ क्रथनं वर्णयति सार्धैस्त्रिभिः–यस्येत्यादिना । यस्य गिरेः वैश्रवणः कुबेरो राजा । यो गिरिः जम्बूं जम्बूवृक्षम् उपनिषेवते, जम्बूयुक्त इत्यर्थः । यः ते भ्रातुः कुबेरस्य विहारसुखदः । तत्र पर्वते युद्धेष्वकत्थनः क्रथनो नामैष यूथपो वसतीति संबन्धः ॥ २२–२४ ॥ यो गङ्गामित्यादि सार्धश्लोकसप्तकं प्रमाथिविषयम् । हस्तिनां वानराणां च अन्योन्यं पूर्ववैरमनुस्मरन् यः गङ्गामनु

तदा दैवासुरे युद्धे साह्यार्थं त्रिदिवौकसाम् ॥ २१ ॥ यस्य वैश्रवणो राजा जम्बूमुपनिषेवते । यो राजा पर्वतेन्द्राणां बहुकिन्नरसेविनाम् ॥ २२ ॥ विहारसुखदो नित्यं भ्रातुस्ते राक्षसाधिप । तत्रैष वसति श्रीमान् बलवान् वानरर्षभः ॥२३॥ युद्धेष्वकत्थनो नित्यं क्रथनो नाम यूथपः । वृतः कोटिसहस्रेण हरीणां समुपस्थितः । एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥२४॥ यो गङ्गामनु पर्येति त्रासयन् हस्तियूथपान् । हस्तिनां वानराणां च पूर्ववैरमनुस्मरन् ॥२५॥ एष यूथपतिर्नेता गच्छन् गिरिगुहाशयः । गजान् योधयते वन्यान् गिरींश्चैव महीरुहान् ॥ २६ ॥ हरीणां वाहिनीमुख्यो नदीं हैमवतीमनु । उशीरबीजमाश्रित्य पर्वतं मन्दरोपमम् ॥ २७ ॥

गङ्गासमीपे । "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीया । हस्तियूथपान् त्रासयन् पर्येति परितश्चरति । अत्रेयं पौराणिकी कथा–पुरा किल शम्बसादनो नामासुरो गजरूपेण मुनीन् बाधमानस्तैर्मुनिभिश्चोदितेन केसरिणा हनुमत्पित्रा हतः । ततस्तुष्टैर्मुनिभिर्महापराक्रमो हनुमान् पुत्रस्ते भविष्यतीति केसरिणे वरो दत्तः । ततः प्रभृति हस्तिनां वानराणां च परस्परं वैरमभूदिति । गच्छन्नेव गमनकाल एव रिपूणां नाशयिता । गिरिगुहायां शेते वर्तत इति गिरिगुहाशयः । गजानिति । गजैर्वृक्षान् वृक्षैर्गजांश्च हन्तीत्यर्थः ॥ २५ ॥ २६ ॥ हैमवतीमनु गङ्गासमीपे स्थितम् उशीरबीजाख्यं

वानरवर्णनम् । कृष्णवर्त्मनः अग्नेः त्रिदिवौकसां साह्यार्थमुत्पन्न इत्यन्वयः ॥ २० ॥ २१ ॥ यस्येति । यस्य गिरेः वैश्रवणः कुबेरो राजा । यो गिरिः जम्बूमुपनिषेवते, जम्बूवृक्षयुक्त इत्यर्थः ॥२२॥ यो गिरिः ते भ्रातुः कुबेरस्य विहारसुखदः । तत्र पर्वते एष क्रथनो नाम वानरः वसतीति सम्बन्धः ॥२३॥२४॥ यो गङ्गामित्यारभ्य यत्रैतद्बहुलं रजः इत्यन्तं प्रमाथिवानरवर्णनम् । हस्तिनां वानराणां च पूर्ववैरमनुस्मरन्निति । पुरा किल सागरतीरे हस्त्याकारः शम्बसादनो नाम राक्षसः स मुनीनबाधत तैर्मुनिभिश्चोदितो हनुमत्पिता केसरी हस्तिरूपं तमसुरं हतवान् । तत आरभ्य करिणां वानराणां च विरोधस्समभूदिति पौराणिकी कथा ॥ २५ ॥ २६ ॥ नदीं हैमवतीमनु शीतलजलां गङ्गां प्राप्य स्थितमुशीरबीजाख्यं पर्वतमाश्रित्य रमत इति सम्बन्धः ॥ २७–२९ ॥

पर्वतमाश्रित्य रमत इति योजना । हरिवाहिनीमुख्यत्वेऽपि भिन्नजातीयत्वभ्रमव्युदासार्थं वानरश्रेष्ठ इत्युक्तम् ॥ २७ ॥ २८ ॥ रामानु०—"कर्मप्रवचनीययुक्ते द्वितीया" इति हैमवतीमिति द्वितीया ॥ २७ ॥ वीरस्य भावो वीर्यम्, उत्साह इत्यर्थः । विक्रमः परादभ्यत्यभिभवः । बलशालिनां वानराणामित्यर्थसिद्धम् । शतसहस्राणां सहस्रम् सहस्रलक्षमित्यर्थः । नेता नायकः ॥ २९ ॥ प्रमाथिनं वर्णयति—स एष इति । दुर्धरः दुर्धर्षः । प्रमाथी नाम

रमते वानरश्रेष्ठो दिवि शक्र इव स्वयम् । एनं शतसहस्राणां सहस्रमनुवर्तते ॥ २८ ॥ वीर्यविक्रमदृप्तानां नर्दतां बलशालिनाम् । स एष नेता चैतेषां वानराणां महात्मनाम् ॥ २९ ॥ स एष दुर्धरो राजन् प्रमाथी नाम यूथपः । वातेनेवोद्धतं मेघं यमेनमनुपश्यसि ॥ ३० ॥ अनीकमपि संरब्धं वानराणां तरस्विनाम् । उद्धूतमरुणाभासं पवनेन समन्ततः । विवर्तमानं बहुधा यत्रैतद्बहुलं रजः ॥ ३१ ॥ एतेऽसितमुखा घोरा गोलांगूला महाबलाः । शतं शतसहस्राणि दृष्ट्वा वै सेतुबन्धनम् ॥ ३२ ॥ गोलांगूलं महावेगं गवाक्षं नाम यूथपम् । परिवार्याभिवर्तन्ते लङ्कां मर्दितुमोजसा ॥ ३३ ॥ भ्रमराचरिता यत्र सर्वकामफलद्रुमाः । यं सूर्यस्तुल्यवर्णाभमनु पर्येति पर्वतम् ॥ ३४ ॥

प्रमाथिनामकः । वातेनोद्धतं मेघमिव यमेनमनुपश्यसि एष प्रमाथीति सम्बन्धः ॥ ३० ॥ यत्र अनीके । समन्ततः पवनेनोद्धूतम् अरुणाभासम् अरुणकान्ति बहुलम् एतद्रजः बहुधा विवर्तमानं भवति, संरब्धं तत् तरस्विनां वानराणामनीकमपि पश्यसि । तदप्यस्य प्रमाथिन इत्यर्थः ॥ ३१ ॥ गवाक्षमाह श्लोकद्वयेन—एत इति । असितमुखाः गोलाङ्गूलाः सेतुबन्धनं दृष्ट्वा उत्साहेन शतं शतसहस्राणि च सन्तः गवाक्षं नाम स्वयूथपतिं परिवार्य लङ्काम् ओजसा स्वतेजसा मर्दितुमभिवर्तन्ते । अत्र यूथपत्यपेक्षया यूथानां बलोत्साहाधिक्यं व्यज्यते ॥ ३२ ॥ ३३ ॥ अथ चतुर्भिः केसरिणं वर्णयति—भ्रमरेति । यत्र पर्वते । सर्वकामफलाः सर्वैः काम्यन्त इति सर्वकामाः सर्वाभीष्टार्थाः तान् फलन्तीति सर्वकामफलाः, ते च ते द्रुमाश्च यत्रानीकेषु पवनेन उद्धूतं बहुलं रजो दृश्यते तदनीकं वातेनोद्धतं मेघमिव यमेनमनुपश्यसि स एष प्रमाथी नाम यूथप इत्यन्वयः ॥ ३० ॥ ३१ ॥ एत इत्यादि श्लोकद्वयमेकं वाक्यम् । शतसहस्राणि गोलाङ्गूलाः सेतुबन्धनं दृष्ट्वा गोलाङ्गूलं गवाक्षं नाम यूथपं परिवार्य लङ्कां मर्दितुमभिवर्तन्त इति सम्बन्धः । शतं शतसहस्राणि, शतलक्षमित्यर्थः । सेतुबन्धनं नलसमीपे तत्सहायतया स्थित्वा सेतुबन्धनकर्तारम् ॥ ३३ ॥ ३४ ॥ भ्रमराचरिता इत्यारभ्य केसरी नाम यूथप इत्यन्तं

सर्वकामफलद्रुमाः । अमरैः आचरिताः व्याप्ताः भवन्ति, अनेन वृक्षाणां सर्वापेक्षितप्रदत्वं सदा पुष्पितत्वं चोक्तम् । यं पर्वतं सूर्यः तुल्यवर्णाभं तुल्य प्रकारकान्तिकं यथा तथा अनु समीपे पर्येति सञ्चरति । दृश्यते हि सूर्यस्तत्सन्निधाने काञ्चनवर्णः ॥ ३४ ॥ ३५ ॥ यस्मिन्पर्वतसत्तमे सर्वकामफलाः सर्वैः काम्यमानफलाः । अनेन स्वादुफलत्वमुक्तम् । सदा फलसमन्विताः सर्वकालं फलयुक्ता इत्यर्थः । काञ्चनपर्वते मेरौ ॥ ३६ ॥ ३७ ॥ अथ शतवलि



यस्य भासा सदा भान्ति तद्वर्णा मृगपक्षिणः । यस्य प्रस्थं महात्मानो न त्यजन्ति महर्षयः ॥ ३५ ॥ सर्वकाम फला वृक्षाः सदा फलसमन्विताः । मधूनि च महार्हाणि यस्मिन् पर्वतसत्तमे ॥ ३६ ॥ तत्रैष रमते राजन् रम्ये काञ्चनपर्वते । मुख्यो वानरमुख्यानां केसरी नाम यूथपः ॥ ३७ ॥ षष्टिर्गिरिसहस्राणां रम्याः काञ्चनपर्वताः । तेषां मध्ये गिरिवरस्त्वमिवानघ रक्षसाम् ॥ ३८ ॥ तत्रैते कपिलाः श्वेतास्ताम्रास्या मधुपिङ्गलाः । निवसन्त्युत्तम गिरौ तीक्ष्णदंष्ट्रा नखायुधाः ॥ ३९ ॥ सिंहा इव चतुर्दंष्ट्रा व्याघ्रा इव दुरासदाः । सर्वे वैश्वानरसमा ज्वलिताशी विषोपमाः ॥ ४० ॥ सुदीर्घाञ्चितलाङ्गूला मत्तमातङ्गसन्निभाः । महापर्वतसङ्काशा महाजीमूतनिस्वनाः ॥ ४१ ॥

वानरसेनाश्लाघनपूर्वकं वर्णयति–षष्टिरित्यारभ्य हरिरित्यन्तेन । गिरिसहस्राणां षष्टिरस्ति । ते रम्याः काञ्चनपर्वता भवन्ति । गिरिवरः मेरुः । अस्ति ह्यस्तगिरेः पूर्वतश्चापरो मेरुः ॥ ३८ ॥ ३९ ॥ वैश्वानरसमाः वैश्वानरः अग्निः तद्वदुग्रा इत्यर्थः । ज्वलिताशीविषाः कुपितसर्पाः आशिषि दंष्ट्रायां विषं येषां ते आशीविषाः । "आशीरुरगदंष्ट्रायां प्रियवाक्याभिलाषयोः" इत्यमरः । पृषोदरादित्वात् सलोपः । तद्वत्कोपना इत्यर्थः ॥ ४० ॥ अञ्चित लाङ्गूलाः उदञ्चितलाङ्गूलाः । मत्तेत्यादिना महाकायत्वमुक्तम् । पर्वतसङ्काशा इत्यनेन दार्ढ्यमुक्तम् ॥ ४१ ॥

केसर्याख्यवानरवर्णनम् । यत्र यस्मिन् काञ्चनपर्वते । सर्वकामफलद्रुमः सर्वैः काम्यन्त इति सर्वकामानि फलानि येषां ते तथोक्ताः ते च ते द्रुमाश्च सर्वकामफलद्रुमाः । यं काञ्चनपर्वतम् । यस्य काञ्चनपर्वतस्य । यस्मिन् काञ्चनपर्वते । अस्ताद्रिसमीपवर्तीनि सावर्णिनिवासमेरौ ॥ ३४–३७ ॥ तमेव विशिनष्टि–षष्टिरिति । गिरि सहस्राणां षष्टिरस्ति ते काञ्चनपर्वताः तेषां मध्ये गिरिवरो मेरुरस्तीति सम्बन्धः ॥ ३८ ॥ मेरुस्थवानरान् वर्णयति–तत्रैत इत्यादिना ॥ ३९–४१ ॥

भीमभीमाः भीमप्रकाराः, प्रकारः सादृश्यम्, भीमसदृशाः ईषद्भीमा इत्यर्थः । "प्रकारे गुणवचनस्य" इति द्विर्भावः । तादृशगमनस्वराः ते वानराः । ते तव लङ्कां समीक्ष्य मर्दयन्तीव तस्थुः मर्दयन्त इव तिष्ठन्ति । आर्षो लिङ्गव्यत्ययः ॥ ४२ ॥ उपतिष्ठति उपतिष्ठते । एषैवेति सन्धिरार्षः । पौरुषे

वृत्तपिङ्गलरक्ताक्षा भीमभीमगतिस्वराः । मर्दयन्तीव ते सर्वे तस्थुर्लङ्कां समीक्ष्य ते ॥४२॥ एष चैषामधिपतिर्मध्ये तिष्ठति वीर्यवान् । जयार्थी नित्यमादित्यमुपतिष्ठति बुद्धिमान् ॥ ४३ ॥ नाम्ना पृथिव्यां विख्यातो राजन् शत वलीति यः । एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ ४४ ॥ विक्रान्तो बलवान् शूरः पौरुषे स्वे व्यवस्थितः । रामप्रियार्थं प्राणानां दयां न कुरुते हरिः ॥ ४५ ॥ गजो गवाक्षो गवयो नलो नीलश्च वानरः । एकैक एव यूथानां कोटीभिर्दशभिर्वृतः ॥ ४६ ॥ तथाऽन्ये वानरश्रेष्ठा विन्ध्यपर्वतवासिनः । न शक्यन्ते बहुत्वात्तु सङ्ख्यातुं लघु विक्रमाः ॥ ४७॥ सर्वे महाराज महाप्रभावाः सर्वे महाशैलनिकाशकायाः । सर्वे समर्थाः पृथिवीं क्षणेन कर्तुं प्रवि ध्वस्तविकीर्णशैलाम् ॥४८॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे सप्तविंशः सर्गः॥२७॥

सारणस्य वचः श्रुत्वा रावणं राक्षसाधिपम् । बलमादिश्य तत्सर्वं शुको वाक्यमथाब्रवीत् ॥ १ ॥

पराक्रमे । प्राणानां प्राणेषु ॥ ४३–४७ ॥ सर्व इति । प्रविध्वस्तविकीर्णशैलां प्रविध्वस्ताः चूर्णिताः विकीर्णा विक्षिप्ताः शैलाः यस्याः सा तां तथा ॥ ४८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

एवं सारणेनोक्तं श्रुत्वा शुकस्तेन कात्स्न्येनानुक्तेः स्वयं तत् सर्वं दर्शयत्यष्टाविंशे सर्गे—सारणस्येति । शुकः सारणस्य वचः श्रुत्वा तेन कार्त्स्न्येनानुक्तेः स्वयं तत्सर्वं बलम् आदिश्य अङ्गुल्या निर्दिश्य । रावणम् । अथ कार्त्स्न्येन अब्रवीत् । "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः ।

ते वानराः । ते तव लङ्कां समीक्ष्य मर्दयन्तीव मर्दयन्त इव तस्थुरिति सम्बन्धः । आर्षो लिङ्गव्यत्ययः ॥ ४२–४८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायण तत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां सप्तविंशः सर्गः ॥ २७ ॥ सारणस्येति । आदिश्य निर्दिश्य ॥ १ ॥

सविनयोक्तिद्योतनाय राक्षसाधिपमित्युक्तम् ॥ १ ॥ न्यग्रोधान् वटान् । गाङ्गेयान् गङ्गातटरुहान् । हैमवतान् हिमवत्पर्वतोद्भवान् । दैत्यदानवसङ्काशाः दैत्यदानवतुल्यबलाः ॥२॥३॥ शङ्कवृन्दादिस्वरूपमुत्तरत्र स्वयमेव वक्ष्यति । वृन्दशतादिसङ्ख्याः, सन्तीति शेषः ॥४ ॥ सुग्रीवसाचिवाः सुग्रीवसहायाः "मन्त्री सहायः सचिवः" इत्यमरः । देवगन्धर्वैः देवेभ्यो गन्धर्वेभ्यश्चेत्यर्थः । उत्पन्नाः कामरूपिण इति । कामरूपित्वेन उत्पन्ना इत्यर्थः । पूर्वं कामरूपित्व

स्थितान् पश्यसि यानेतान् मत्तानिव महाद्विपान् । न्यग्रोधानिव गाङ्गेयान् सालान् हैमवतानिव ॥ २ ॥ एते दुष्प्रसहा राजन् बलिनः कामरूपिणः । दैत्यदानवसङ्काशा युद्धे देवपराक्रमाः ॥ ३ ॥ एषां कोटिसहस्राणि नव पञ्च च सप्त च । तथा शङ्खसहस्राणि तथा वृन्दशतानि च ॥ ४ ॥ एते सुग्रीवसाचिवाः किष्किन्धानिलयाः सदा । हरयो देवगन्धर्वैरुत्पन्नाः कामरूपिणः ॥ ५ ॥ यौ तौ पश्यसि तिष्ठन्तौ कुमारौ देव रूपिणौ । मैन्दश्च द्विविदश्चोभौ ताभ्यां नास्ति समो युधि ॥ ६ ॥ ब्रह्मणा समनुज्ञातावमृतप्राशिनावुभौ । आशंसेते युधा लङ्कामेतौ मर्दितुमोजसा ॥७॥ [ यावेतावेतयोः पार्श्वे स्थितौ पर्वतसन्निभौ । सुमुखोऽसुमुखश्चैव मृत्युपुत्रौ पितुः समौ । प्रेक्षन्तौ नगरीं लङ्कां कोटिभिर्दशभिर्वृतौ ॥ ] यं तु पश्यसि तिष्ठन्तं प्रभिन्नमिव कुञ्जरम् । यो बलात् क्षोभयेत् क्रुद्धः समुद्रमपि वानरः ॥ ८ ॥ एषोऽभिगन्ता लङ्काया वैदेह्यास्तव च प्रभो । एनं पश्य पुरा दृष्टं वानरं पुनरागतम् ॥ ९ ॥

मुक्तम् । तस्य इदानीमौत्पत्तिकत्वमुच्यत इति न पुनरुक्तिः ॥५॥ कुमारौ युवानौ । देवेति रावणं प्रति संबुद्धिः । रूपिणौ प्रशस्तरूपौ । प्रशंसायां मत्वर्थीय इनिप्रत्ययः । यौ पश्यसि तौ मैन्दश्च द्विविदश्चेत्युच्येते इत्यर्थः । युधि ताभ्यां समो नास्तीत्यत्र हेतुं दर्शयति—ब्रह्मणेति । समनुज्ञातौ सन्तौ अमृतप्राशिनावित्यर्थः ॥६॥७॥ हनुमन्तं वर्णयति—यं त्वित्यादिना । प्रभिन्नं मत्तम् । "प्रभिन्नो गर्जितो मत्तः" इत्यमरः ॥८॥ अभिगन्तेति । वैदेहीपक्षे अभिगमनम्



गाङ्गेयान् गङ्गातटरुहान् ॥ २ ॥ ३ ॥ एषां कोटीति सुग्रीवसचिवसङ्ख्या । सर्वबलसङ्ख्यां तु सर्गान्ते वक्ष्यति ॥ ४ ॥ ५ ॥ याविति । कुमारौ तरुणौ ॥ ६॥ ७॥ प्रभिन्नं मत्तम् ॥ ८ ॥ एष हनुमान् तव लङ्काया अभिगन्ता, वैदेह्या अभिगन्ता अन्वेषी ॥ ९ ॥ १० ॥

अन्वेषणम् । रावणपक्षे दर्शनम् ॥९॥ ज्येष्ठ इति । अत्र एष इत्यध्याहार्यम् । केसरिणः पुत्रः तस्य क्षेत्रजः पुत्रः ॥ १० ॥ बलरूपसमन्वितः प्रशस्त बलसमन्वितः । प्रशंसायां रूपप् प्रत्ययः । यथा सततगः सततग इव । सततगः वायुः ॥ ११ ॥ उद्यन्तमित्यादि । बालः बाल्यावस्थः । किलेत्यैतिह्ये । पिपासितः स्तन्यापेक्षः, क्षुधित इति यावत् । त्रियोजनसहस्रं त्रियोजनसहस्रपरिमाणम् । "द्विगोर्नित्यम्" इति प्रमाणप्रत्ययस्य लुक् । हनुमत्पितुः

ज्येष्ठः केसरिणः पुत्रो वातात्मज इति श्रुतः । हनुमानिति विख्यातो लङ्घितो येन सागरः ॥ १० ॥ कामरूपी हरिश्रेष्ठो बलरूपसमन्वितः । अनिवार्यगतिश्चैव यथा सततगः प्रभुः ॥ ११ ॥ उद्यन्तं भास्करं दृष्ट्वा बालः किल पिपासितः । त्रियोजनसहस्रं तु अध्वानमवतीर्य हि ॥ १२ ॥ आदित्यमाहरिष्यामि न मे क्षुत् प्रतियास्यति । इति सञ्चिन्त्य मनसा पुरैष बलदर्पितः ॥ १३ ॥ अनाधृष्यतमं देवमपि देवर्षिदानवैः । अनासाद्यैव पतितो भास्करोदयने गिरौ ॥ १४ ॥ पतितस्य कपेरस्य हनुरेका शिलातले । किंचिद्भिन्ना दृढहनोर्हनुमानेष तेन वै ॥ १५ ॥ सत्यमागमयोगेन ममैष विदितो हरिः । नास्य शक्यं बलं रूपं प्रभावो वाऽपि भाषितुम् ॥ १६ ॥ एष आशंसते लङ्कामेको मर्दितुमोजसा ॥ १७ ॥

केसरिणः कनकाचलवासित्वात्तस्य चात्युन्नतत्वादादित्यस्य तच्छिखरस्य च मध्यमाद्धा त्रिसहस्रयोजनपरिमित इत्युक्तम् । अत एव अवतीर्येत्युक्तम्, नतूत्पत्येति । यद्वा आदित्यस्य भूमेरुपरि लक्षयोजनान्तरत्वात् त्रियोजनसहस्रमित्येतदनेकसहस्रोपलक्षणम् ॥ १२ ॥ आहरिष्यामि भक्षयिष्यामि । इति संचिन्त्य मनसा पुरैष बलदर्पित इत्यनन्तरं त्रियोजनसहस्रमित्यर्धं योज्यम् ॥ १३ ॥ देवं सूर्यम् । भास्कर उदयतेऽस्मिन्निति भास्करोदयनः तस्मिन् गिरौ । हनुः तालुप्रदेशः । अनासाद्येत्यत्र तत्तेजसेत्युपस्कार्यम् । "तेजसा तस्य निर्धूतः" इति किष्किन्धाकाण्डोक्तेः । यद्यप्युत्तरकाण्डे इन्द्रवज्रेण पतनमुक्तम् तथापि तदपि हेत्वन्तरमिति ज्ञेयम् ॥ १४ ॥ १५ ॥ कथमियं कथा त्वया विदितेत्यत्राह—सत्यमिति । आगमः आप्तवाक्यम्, तदेव

सततगः वायुः ॥ ११ ॥ पिपासितः स्तन्यपानापेक्षी, क्षुधित इति यावत् । त्रियोजनसहस्रमादित्यस्य भूमेरुपरि लक्षयोजनान्तरत्वात्त्रियोजनसहस्रमित्येतदनेक योजनसहस्रोपलक्षणम् ॥ १२ ॥ प्रतियास्यति, भूलोकवर्तिफलैरिति शेषः ॥ १३ ॥ अनासाद्य, भास्करमिति शेषः । भास्करोदयने इति बहुव्रीहिः ॥ १४ ॥ १५ ॥ सत्यमिति । आगमयोगेन आगमः आप्तोपदेशः स [illegible] ॥ १६ ॥ १७ ॥

योग उपायः तन। यद्वा आप्तवाक्यश्रवणेन। मम मया। रूपं वपुः। भावितुं न शक्यम्, कामरूपदर्शनादिति भावः ॥ १६ ॥ १७ ॥ अथ रामं वर्णयति—यश्चैष इत्यादिना। अनन्तरः अन्तरम् अवकाशः तद्रहितः स्कन्धारूढत्वेन पूर्वोक्तहनुमतोऽत्यन्तसन्निहित इत्यर्थः। शूरः हनुमदारूढत्वेन प्रकटितशौर्यः। श्यामः कनकमयशिखरारूढकालाम्बुदकमनीयविग्रहः। पद्मनिभेक्षणः दिव्यविग्रहमहातटाकस्थविकासितकमललोभनीय

यश्चैषोऽनन्तरः शूरः श्यामः पद्मनिभेक्षणः। इक्ष्वाकूणामतिरथो लोके विख्यातपौरुषः ॥ १८ ॥ यस्मिन्न चलते धर्मो यो धर्मं नातिवर्तते। यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः ॥ १९ ॥ यो भिन्द्याद्गगनं बाणैः पर्वतानपि दारयेत्। यस्य मृत्योरिव क्रोधः शक्रस्येव पराक्रमः ॥ २० ॥ यस्य भार्या जनस्थानात् सीता चापहृता त्वया। स एष रामस्त्वां योद्धुं राजन् समभिवर्तते ॥ २१ ॥ यस्यैष दक्षिणे पार्श्वे शुद्धजाम्बूनदप्रभः। विशालवक्षास्ताम्राक्षो नीलकुञ्चितमूर्धजः ॥ २२ ॥

विलोचनः। अनरण्यादिवदयं न मन्तव्यः। किंत्विक्ष्वाकूणां मध्ये अतिरथः अतिशयितरथः, अपराजितरथ इत्यर्थः। अत्र न वयमेव प्रमाणम्, लोके विख्यातपौरुषः खरवधादिना ख्यातं भवद्भिर्वालिवधेन विशेषेण ख्यातं पौरुषं यस्य तथोक्तः ॥१८॥ न केवलं पौरुषम्, धर्मोऽप्यस्यैव स्वमित्याह—यस्मिन्निति। यस्मिन् धर्मो न चलति जाबालिप्रभृतिभिराकुलितोऽप्यप्रकम्पितः। यो धर्मं नातिवर्तते भरतसीतादिभिः कृतेऽपि अतिबन्धे पितृवचनमुनिप्रतिज्ञाधर्मं नातिवर्तते। खरयुद्धेऽपसर्पणं बाणपातावकाशलाभार्थम्। छद्मना वालिवधस्त्वन्यथानुपपत्त्या अवश्यमाश्रितविषयप्रतिज्ञाया निर्वोढव्यतया च। न केवलं पौरुषधर्मौ, अस्त्रबलं चास्यैवेत्याह—य इति। ब्राह्ममस्त्रं ब्रह्मास्त्रमन्त्रं वेदांश्च वेद जानाति। ब्रह्मास्त्रमन्त्रस्य वेदान्तर्गतत्वेऽपि प्राधान्यात् पृथगुक्तिः। वेदविदां वेदार्थविदां वरः उपदेष्टृभ्यो वसिष्ठादिभ्योऽप्युत्कृष्टः। ॥ १९ ॥ उक्तं पौरुषमेव प्रपञ्चयति—यो भिन्द्यादित्यादि। गगनं गगनस्थविमानादि। आदिशब्देन पातालादिकमुच्यते ॥२०॥ संप्रति कोपोद्भवे मूलमाह—यस्य भार्येति ॥ २१॥ अथ लक्ष्मणं वर्णयति—यस्यैष



रामं वर्णयति—यस्यैष इति। यस्य दर्शितस्य हनुमतः अनन्तरः समीपवर्ती ... सर्वदुष्करमपि तस्य सुकरमिति तात्पर्यम्॥२०-२५॥

इत्यादिना । दक्षिणे, रामस्येति शेषः । शुद्धजाम्बूनदप्रभः स्वर्णवर्णः । ताम्राक्षः त्वद्विषयकोपेनेति भावः ॥ २२ ॥ सर्वेति । शास्त्रशब्दो नीतिशास्त्रव्यतिरिक्तपरः ॥ २३ ॥ प्राणो बहिश्चर इत्यनेन प्राणसंरक्षकत्वमुच्यते ॥ २४ ॥ २५ ॥ यस्त्विति । पक्षं पार्श्वम् । रक्षोगणेति । चतुर्णामेव रक्षसां गणतुल्यविक्रमत्वात्तथोक्तम् । राजा, त्वद्राज्यस्येति शेषः । अत्र हीति गायत्र्याः षोडशाक्षरम् ॥ २६ ॥ राजत्वं कुत इत्यत्राह—

एषोऽस्य लक्ष्मणो नाम भ्राता प्राणसमः प्रियः । नये युद्धे च कुशलः सर्वशास्त्रविशारदः ॥ २३ ॥ अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान् बली । रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ २४ ॥ न ह्येष राघवस्यार्थे जीवितं परिरक्षति । एषैवाशंसते युद्धे निहन्तुं सर्वराक्षसान् ॥ २५ ॥ यस्तु सव्यमसौ पक्षं रामस्याश्रित्य तिष्ठति । रक्षोगणपरिक्षिप्तो राजा ह्येष विभीषणः ॥ २६ ॥ श्रीमता राजराजेन लङ्कायामभिषेचितः । त्वामेव प्रतिसंरब्धो युद्धायैषोऽभिवर्तते ॥ २७ ॥ यं तु पश्यसि तिष्ठन्तं मध्ये गिरिमिवाचलम् । सर्वशाखामृगेन्द्राणां भर्तारमपराजितम् ॥ २८ ॥ तेजसा यशसा बुद्ध्या ज्ञानेनाभिजनेन च । यः कपीनतिबभ्राज हिमवानिव पर्वतान् ॥ २९ ॥ किष्किन्धां यः समध्यास्ते गुहां सगहनद्रुमाम् । दुर्गां पर्वतदुर्गस्थां प्रधानैः सह यूथपैः ॥ ३० ॥ यस्यैषा काञ्चनी माला शोभते शतपुष्करा । कान्ता देवमनुष्याणां यस्यां लक्ष्मीः प्रतिष्ठिता ॥ ३१ ॥

श्रीमतेति । श्रीमता अवाप्तसमस्तकामत्वेन लङ्काराज्यानभिलाषिणेत्यर्थः । राजराजेन विभीषणादिराजत्वानिर्वाहे स्वस्य राजराजत्वं न निर्वहेदिति मन्वानेन । लङ्कायां निमित्ते । लङ्कायां राजेति वाऽन्वयः ॥ २७ ॥ अथ सुग्रीवं वर्णयति—यं त्वित्यादि । मध्ये रामविभीषणयोर्मध्ये । अचलं निश्चलम् ॥ २८ ॥ बुद्ध्या ऊहापोहरूपज्ञानेन । ज्ञानेन शास्त्रजन्यज्ञानेन । अभिजनेन कुलेन । अतिबभ्राज अतिशय्य बभ्राज ॥ २९ ॥ गहनं वनम् । दुर्गां प्राकारादिना दुर्गमाम् । पर्वतदुर्गस्थां पर्वतरूपदुर्गे स्थिताम् ॥ ३० ॥ शतपुष्करा शतपद्मा । कान्ता काम्यमाना । लक्ष्मीः वीरलक्ष्मीः । तद्धारणे कदाचिदपि

हीति गायत्र्याः षोडशाक्षरं रक्षोगणपरिक्षिप्त इत्यस्य श्लोकस्य एकादशाक्षरेण 'हि' इत्यनेन संगृह्णाति । राक्षोगणपरिक्षिप्तः गणशब्देन चत्वार एवोच्यन्ते । परिक्षिप्तः व्याप्तः ॥ २६ ॥ राजराजेन श्रीरामेण ॥ २७ ॥ सुग्रीवं वर्णयति—यं त्विति ॥ २८ ॥ अतिबभ्राज अतिक्रम्यातिशयेन बभ्राजेत्यर्थः ॥ २९ ॥ ३० ॥ पुष्करं पद्मम् ॥ ३१ ॥ ३२ ॥

पराजयो न भवतीति सदा वाली तां वहति स्मेति प्रसिद्धिः । तद्धारणादेव हि रामस्तदनभिमुख एव वालिनं हतवान्॥३१॥ प्रतिपादितः प्रापितः॥३२॥ उक्तानुक्तसकलवानरसङ्ख्यां वक्तुं प्रथमतः सङ्ख्यामेव दर्शयति–शतमित्यादिना । शतपर्यन्तसङ्ख्यायाः स्फुटत्वात्तदूर्ध्वसङ्ख्या अत्र सङ्कीर्त्यन्ते ।



एतां च मालां तारां च कपिराज्यं च शाश्वतम् । सुग्रीवो वालिनं हत्वा रामेण प्रतिपादितः ॥ ३२ ॥ शतं शतसहस्राणां कोटिमाहुर्मनीषिणः । शतं कोटिसहस्राणां शङ्ख इत्यभिधीयते ॥ ३३ ॥ शतं शङ्खसहस्राणां महाशङ्ख इति स्मृतः । महाशङ्खसहस्राणां शतं वृन्दमिति स्मृतम् ॥ ३४ ॥ शतं वृन्दसहस्राणां महावृन्दमिति स्मृतम् । महावृन्दसहस्राणां शतं पद्ममिति स्मृतम् ॥ ३५ ॥ शतं पद्मसहस्राणां महापद्ममिति स्मृतम् । महापद्म सहस्राणां शतं खर्वमिहोच्यते ॥ ३६ ॥ शतं खर्वसहस्राणां महाखर्वमिति स्मृतम् । महाखर्वसहस्राणां समुद्र मभिधीयते ॥ ३७ ॥ शतं समुद्रसाहस्रमोघ इत्यभिधीयते । शतमोघसहस्राणां महौघ इति विश्रुतः ॥ ३८ ॥ एवं कोटिसहस्रेण शङ्खानां च शतेन च । महाशङ्खसहस्रेण तथा वृन्दशतेन च ॥ ३९ ॥ महावृन्दसहस्रेण तथा पद्म शतेन च । महापद्मसहस्रेण तथा खर्वशतेन च ॥ ४० ॥ समुद्रेण शतेनैव महौघेन तथैव च । एष कोटिमहौघेन समुद्रसदृशेन च ॥ ४१ ॥ विभीषणेन सचिवै राक्षसैः परिवारितः । सुग्रीवो वानरेन्द्रस्त्वां युद्धार्थमभि वर्तते ॥४२॥ महाबलवृतो नित्यं महाबलपराक्रमः ॥ ४३ ॥

शतसहस्राणां लक्षाणां शतं कोटिरित्याहुः ॥ ३३–३८ ॥ एवं कोटिसहस्रेणेत्याद्यवान्तरसङ्ख्याभेदकीर्तनमवान्तरसेनाप्रतिभेदात् । समुद्रसदृशेन सागरसदृशेन । विभीषणेनेति । सचिवैः राक्षसैरुपलक्षितेन विभीषणेन परिवारितः सुग्रीवः त्वामभि त्वां प्रति युद्धार्थं वर्तते ॥ ३९–४३ ॥ रामानु०–एष इति । समुद्रसदृशेन सागरवदपरिच्छेद्येनेत्यर्थः ॥ ४१ ॥





अथ सर्वबलसङ्ख्यां दर्शयितुं सङ्ख्यास्वरूपं दर्शयति–शतमिति ॥ ३३–३८ ॥ अथ बलसङ्ख्यामाह–एवं कोटीति ॥ ३९–४३ ॥

इमामिति । प्रज्वलितग्रहोपमां क्रूरग्रहोपमाम् । यथेति । यथा ते जयो न स्यात् प्रत्युत परैः पराजय एव स्यात् तथा यत्नः क्रियतामिति ध्वन्यते ॥ ४४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टाविंशः सर्गः ॥ २८ ॥

इमां महाराज समीक्ष्य वाहिनीमुपस्थितां प्रज्वलितग्रहोपमाम् । ततः प्रयत्नः परमो विधीयतां यथा जयः स्यान्न परैः पराजयः ॥ ४४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

शुकेन तु समाख्यातांस्तान् दृष्ट्वा हरियूथपान् । समीपस्थं च रामस्य भ्रातरं स्वं विभीषणम् ॥ १ ॥ लक्ष्मणं च महावीर्यं भुजं रामस्य दक्षिणम् । सर्ववानरराजं च सुग्रीवं भीमविक्रमम् ॥ २ ॥ [ गजं गवाक्षं गवयं मैन्दं द्विविदमेव च । अङ्गदं चैव बलिनं वज्रहस्तात्मजात्मजम् । हनूमन्तं च विक्रान्तं जाम्बवन्तं च दुर्जयम् । सुषेणं कुमुदं नीलं नलं च प्लवगर्षभम् ॥ ] किंचिदाविग्नहृदयो जातक्रोधश्च रावणः । भर्त्सयामास तौ वीरौ कथान्ते शुकसारणौ ॥ ३ ॥ अधोमुखौ तौ प्रणतावब्रवीच्छुकसारणौ । रोषगद्गदया वाचा संरब्धः परुषं वचः ॥ ४ ॥ न तावत् सदृशं नाम सचिवैरुपजीविभिः । विप्रियं नृपतेर्वक्तुं निग्रहप्रग्रहे प्रभोः ॥ ५ ॥

अथ रावणेन चारप्रेषणादि प्रतिपाद्यत एकोनत्रिंशे—शुकेनेत्यादिश्लोकत्रयम् । सर्ववानरराजं चेत्यत्र चकारो हनुमदादिसमुच्चयार्थः । आविग्नहृदयः भीतहृदयः । तथापि जातक्रोधः परस्तवाकर्णनेन कुपित इत्यर्थः । कथान्ते वचनान्ते ॥ १–३ ॥ रोषगद्गदया कोपस्खलितया । संरब्धः कुपितः ॥४॥ न तावदिति । तावत् प्रथमतः । निग्रहप्रग्रहे निग्रहानुग्रहयोः । प्रभोः शक्तस्य । नृपतेः विप्रियं वक्तुं न सदृशं नाम । नामेति नीतिशास्त्रप्रसिद्धिः ॥ ५ ॥

प्रज्वलितग्रहोपमां प्रज्वलितग्रहज्वालोपमाम् ॥४४॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् अष्टाविंशः सर्गः ॥२८॥

॥१॥२॥ कथान्ते वृत्तान्तश्रवणसमाप्तिसमये । भर्त्सयामास स्वकीयभीताकारगोपनार्थोऽयं व्यापारः ॥३॥ अधोमुखौ, भर्त्सनेनेति शेषः ॥४॥ प्रग्रहे अनुग्रहे ॥ ५ ॥

विप्रियपदोक्तं विशदयति—रिपूणामिति । अभिवर्तताम् अभिवर्तमानानाम् । अप्रस्तवे अनवसरे । स्तवं वक्तुं सदृशं नाम सदृशं किमु ? युद्धारम्भसमयो हि परस्तुत्यनर्ह इति भावः ॥ ६ ॥ आचार्या इति । यद्यस्मात् राजशास्त्राणां सारं प्रतिपाद्यसारभूतम् अनुजीव्यम् अनुजीविकृत्यम् । न गृह्यते न ज्ञायते । अतः वां युवाभ्याम् । गुरवः महान्तः । वृद्धाः ज्ञानवयःशीलसम्पन्नाः । आचार्याः नीतिशास्त्रोपदेष्टारः । वृथा पर्युपासिताः,

रिपूणां प्रतिकूलानां युद्धार्थमभिवर्तताम् । उभाभ्यां सदृशं नाम वक्तुमप्रस्तवे स्तवम् ॥ ६ ॥ आचार्या गुरवो वृद्धा वृथा वां पर्युपासिताः । सारं यद्राजशास्त्राणामनुजीव्यं न गृह्यते । गृहीतो वा न विज्ञातो भारो ज्ञानस्य वोह्यते ॥ ७ ॥ ईदृशैः सचिवैर्युक्तो मूर्खैर्दिष्ट्या धराम्यहम् ॥ ८ ॥

तदुपासनफलादर्शनान्निरर्थकमाराधिता इत्यर्थः । ननु चिरोपासितगुरोरज्ञानं न साम्प्रतम्, तत्राह गृहीतो वेति । गृहीतो वाऽर्थः । न विज्ञातः न विशेषेण ज्ञातः, विस्मृत इत्यर्थः । तर्हि कथं ज्ञातृत्वप्रवाद इत्यत्राह भार इति । ज्ञानस्य भारः उह्यते वा । जातमपि ज्ञानं नानुष्ठानपर्यवसायीत्यर्थः । यद्वा ज्ञानस्य भार उह्यते । ज्ञानभारभरणाभिमान एव क्रियते न तु तत्कार्यमित्यर्थः ॥ ७ ॥ आवयोरज्ञत्वे कथमेतावत्पर्यन्तमस्मन्मत्यनुसारेण तव राज्यभरणम् ? तत्राह—ईदृशैरिति । ईदृशैः एवं नीतिशास्त्रलेशानभिज्ञैरित्यर्थः । धरामि, राज्यमिति शेषः । " धृञ् धारणे " इति

अप्रस्तवे स्तुत्यनर्हकाले । सदृशं नाम सदृशं किमु ? अभिवर्तताम् अभितो वर्तमानानाम् ॥ ६ ॥ यद्यस्मात् राजशास्त्राणां सारं सारभूतम् अनुजीव्यम् अनुजीविकर्म । न गृह्यते न ज्ञायते, अत आचार्यादयो वां युवाभ्याम् वृथा पर्युपासिताः तदुपासनफलादर्शनान्निरर्थकमाराधिताः इत्यर्थः । आचार्या उपनयनपूर्वकं साङ्गवेदाध्यापकाः । गुरवः पित्रादयः । वृद्धाः ज्ञानवयोवृद्धाः । एतच्छास्त्रधारणं भारायैव कल्पत इत्याह :गृहीत इति । गृहीतो वा अभ्यस्तोऽपि न विज्ञातः औचित्यापर्यालोचनया सम्यङ्न चिन्तितः । ज्ञानस्य ज्ञानसाधनस्य शास्त्रस्य । भारो वा भार एव । उह्यत इति भारशब्दावृत्त्या योजनीयम् ॥ ७ ॥ धरामि,

स०—रिपूणां शत्रूणाम् । ननु " रिपोरपि गुणा वाच्याः " इत्याद्युक्तेस्तत्स्तुतिर्युक्तेत्यतो वक्ति—प्रतिकूलानामिति । विरुद्धाचरणवतामित्यर्थः । स्तुतिस्तु अप्रतिकूलशत्रुजातीयविषयेति भावः । तत्प्राह—युद्धार्थमिति । अप्रस्तवे तद्विषयकप्रश्नाभावे । स्तवं गुणकीर्तनम् । वक्तुं सदृशं नाम सदृशं किल काकुः । यद्वा उभाभ्यामेवाप्रस्तवे स्तवं वक्तुं सदृशं नाम नान्येषामिति वा । स्तवशब्दार्थीभूतगुणकीर्तनस्य नपुंसकविवक्षया " अजानता महिमानं तवेदं ' उदीचामातः स्थाने यकपूर्वायाः ' ' मातुरुत्संख्यासंभद्रपूर्वायाः " इत्यादिवच्च स्तवमित्युक्तिस्सम्भवतीति मन्तव्यमिति केचित् । वस्तुतस्तु " सम्बन्धमनुवर्तिष्यते " इति भाष्याल्लिङ्गानामतन्त्रत्वाद्वा ॥ ६ ॥

भौवादिको धातुः । धरामि जीवामीति वा ॥ ८ ॥ मा परुषं वचो वक्तुं युवयोर्मृत्योः सकाशात् भयं नास्ति किन्तु ? वक्तुम्, उद्यतयोर्युवयोरिति शेष इत्यप्याहुः । परुषोक्तिमात्रे कुतो मृत्युरित्यत्राह–यस्येति । शासतो मे जिह्वैव शुभाशुभं प्रयच्छति । शासने प्रवृत्तस्य मे जिह्वाचलनमेव मृत्युं श्रेयो वा प्रयच्छतीत्यर्थः ॥ ९ ॥ राजदोषः राजकोपः । दहनस्पृष्टवनपादपास्थितिसम्भवादप्यसम्भाविता राजदोषस्पृष्टजनास्थितिरिति भावः । तिष्ठन्ते

किन्नु मृत्योर्भयं नास्ति वक्तुं मां परुषं वचः । यस्य मे शासतो जिह्वा प्रयच्छति शुभाशुभम् ॥ ९ ॥ अप्येव दहनं स्पृष्ट्वा वने तिष्ठन्ति पादपाः । राजदोषपरामृष्टास्तिष्ठन्ते नापराधिनः ॥ १० ॥ हन्यामहं त्विमौ पापौ शत्रुपक्ष प्रशंसकौ । यदि पूर्वोपकारैस्तु न क्रोधो मृदुतां व्रजेत् ॥ ११ ॥ अपध्वंसत गच्छध्वं सन्निकर्षादितो मम । नहि वां हन्तुमिच्छामि स्मराम्युपकृतानि वाम् ॥ १२ ॥ हतावेव कृतघ्नौ तौ मयि स्नेहपराङ्मुखौ ॥ १३ ॥ एवमुक्तौ तु सव्रीडौ तावुभौ शुकसारणौ । रावणं जयशब्देन प्रतिनन्द्याभिनिस्सृतौ ॥ १४ ॥ अब्रवीत्तु दशग्रीवः समीपस्थं महोदरम् । उपस्थापय मे शीघ्रं चारान्नीतिविशारदान् । महोदरस्तथोक्तस्तु शीघ्रमाज्ञापयच्चरान् ॥ १५ ॥ तत श्चाराः संत्वरिताः प्राप्ताः पार्थिवशासनात् । उपस्थिताः प्राञ्जलयो वर्धयित्वा जयाशिषा ॥ १६ ॥ तानब्रवीत्ततो वाक्यं रावणो राक्षसाधिपः । चारान् प्रत्यायितान् शूरान् भक्तान् विगतसाध्वसान् ॥ १७ ॥

तिष्ठन्ति ॥ १० ॥ स्वमनः प्रत्याह–हन्यामिति ॥ ११ ॥ अपध्वंसत स्थानात् प्रच्यवध्वम् । परस्मैपदं बहुवचनं चार्षम् । गच्छध्वं गच्छत । सन्निकर्षात् दृष्टिविषयात् ॥ १२ ॥ हतावित्यर्धम् । कृतघ्नत्वस्नेहपराङ्मुखत्वे एव तयोर्वध इति भावः ॥ १३ ॥ प्रतिनन्द्य प्रशस्य । अभिनिस्सृतौ निर्गतौ ॥ १४ ॥ अब्रवीदिति । चारानुपस्थापयेत्यब्रवीदित्यन्वयः ॥ १५ ॥ १६ ॥ तानिति । प्रत्यय एव प्रत्यायः तं प्राप्ताः प्रत्यायिताः तान्, विश्वसनीयानित्यर्थः ।

राज्यमिति शेषः । दिष्ट्या जीवामीति वा ॥ ८ ॥ किन्न्विति । वक्तुम्, उद्यतयोः युवयोरिति शेषः ॥ ९ ॥ अपीति । राजदोषपरामृष्टाः राजक्रोधविषयी भूताः । तिष्ठन्ते तिष्ठन्ति ॥ १० ॥ पूर्वोपकारैः युद्धादौ कृतैः मे क्रोधो मृदुतां न व्रजेद्यदि तदा इमौ पापौ हन्यामिति सम्बन्धः ॥ ११ ॥ अपध्वंसत अधिकाराद् भ्रश्यत । परस्मैपदबहुवचनप्रयोगश्छान्दसः ॥ १२ ॥ हतावेवेति । कृतघ्नत्वस्नेहपराङ्मुखत्वे एव युवयोर्वध इत्यर्थः ॥ १३ ॥ प्रतिनन्द्याभिनिस्सृतौ । अयमेव तयोः राक्षसत्वप्रापकशापस्यान्त इत्यन्यत्र स्पष्टम् ॥ १४–१६ ॥ प्रत्यायितान् प्रत्ययो विश्वासः प्राप्तप्रत्ययान्, विश्वसनीयानित्यर्थः ॥ १७ ॥

विगतसाध्वसान् विगतशत्रुभयान् ॥ १७ ॥ इत इति । व्यवसायं कर्तव्यनिश्चयम् । परीक्षथ परीक्षध्वम् । शिथिलव्यवसायश्चेदमुं भीपयाम इति भावः । अस्य रामस्य मन्त्रिषु ये अभ्यन्तराः अन्तरङ्गभूता इत्यर्थः । तेन रामेण प्रीत्या सङ्गताः, मित्रभूता इत्यर्थः । तानपि परीक्षध्वम् । तच्छैथिल्ये तान् भेत्स्याम इत्याशयः ॥१८॥ कथं स्वपिति किमेकः स्वपिति उत जाग्रद्भिरनेकैरावृतः स्वपिति ? आद्ये सुप्ते युद्धं प्रवर्तयिष्याम इति हृदयम् । कथं जागर्ति किं चिन्ताकुलः उतानाकुल इत्यर्थः । आद्ये व्याक्षिप्तं प्रहरिष्यामीत्याकूतम् । किमन्यच्च करिष्यति किं कञ्चित्कालं विलम्ब्य नगरमुपरोत्स्यति

इतो गच्छत रामस्य व्यवसायं परीक्षथ । मन्त्रिष्वभ्यन्तरा येऽस्य प्रीत्या तेन समागताः ॥ १८ ॥ कथं स्वपिति जागर्ति किमन्यच्च करिष्यति । विज्ञाय निपुणं सर्वमागन्तव्यमशेषतः ॥ १९ ॥ चारेण विदितः शत्रुः पण्डितै-र्वसुधाधिपैः । युद्धे स्वल्पेन यत्नेन समासाद्य निरस्यते ॥ २० ॥ चारास्तु ते तथेत्युक्त्वा प्रहृष्टा राक्षसेश्वरम् । शार्दूलमग्रतः कृत्वा ततश्चक्रुः प्रदक्षिणम् ॥ २१ ॥ ततस्ते तं महात्मानं चारा राक्षससत्तमम् । कृत्वा प्रदक्षिणं जग्मुर्यत्र रामः सलक्ष्मणः ॥ २२ ॥ ते सुवेलस्य शैलस्य समीपे रामलक्ष्मणौ । प्रच्छन्ना ददृशुर्गत्वा ससुग्रीव विभीषणौ ॥ २३ ॥ प्रेक्षमाणाश्चमूं तां च बभूवुर्भयविक्लवाः ॥ २४ ॥ ते तु धर्मात्मना दृष्टा राक्षसेन्द्रेण राक्षसाः ॥ २५ ॥ विभीषणेन तत्रस्था निगृहीता यदृच्छया । शार्दूलो ग्राहितस्त्वेकः पापोऽयमिति राक्षसः ॥ २६ ॥

उत सद्य इति । आद्ये क्रमेण वञ्चयिष्यामीति तात्पर्यम् । निपुणं प्रच्छन्नमिति यावत् । क्रियाविशेषणमिदम् । सर्वम् उक्तं स्वापादिकम् अशेषतः सर्वप्रकारेण विज्ञायागन्तव्यम् । अशेषतः अशेषैश्चारैरिति वाऽर्थः । अशेषत इत्युत्तरशेषो वा ॥ १९ ॥ उक्तमाशयं विवृणोति—चारेणेति । पण्डितैः निपुणैः वसुधाधिपैः । चारेण चारद्वारेण । अशेषतो विदितः शत्रुः युद्धे स्वल्पेन यत्नेन समासाद्य निरस्यते ॥ २० ॥ चाराः शार्दूलमग्रतः कृत्वा प्रधानीकृत्य । राक्षसेश्वरं रावणम् । प्रदक्षिणं चक्रुः ॥ २१ ॥ कृत्वा प्रदक्षिणमित्यनुवादो मध्ये विलम्बाभावद्योतनार्थम् ॥ २२ ॥ प्रच्छन्नाः वेषान्तरधारिणः ॥ २३ ॥ भयविक्लवाः भयेन दीनाः ॥ २४ ॥ धर्मात्मना राक्षसेन्द्रेण, विभीषणेनेत्यर्थः ॥ २५ ॥ निगृहीताः तर्जिता इत्यर्थः । मन्त्रेषु विचारेषु अभ्यन्तराः परमान्तरङ्गाः मन्त्रिणः ॥ १८–२१ ॥ शार्दूलः प्रधानचारो गृहीतः । एको ग्राहितः इत्यत्र हेतुः पापोऽयमिति । अलिदुष्ट इत्यर्थः ॥२६ ॥

ग्राहितः ग्रहणं प्रापितः ॥ २६ ॥ मोचित इति । मोचितः, प्रहारादिति शेषः ॥ २७ ॥ वानरैरिति । अर्दिताः पीडिताः । विक्रान्तैरित्यत्र विक्रममात्रोक्तेः लघुविक्रमैरित्यत्र जवमात्रं विक्रमस्य विशेष्यते ॥ २८ ॥ तत इति । बहिर्नित्यचराः परराष्ट्रेषु वृत्तान्तज्ञानाय सदा सञ्चारशीलाः । समीपवासिनमिति पुंस्त्वमार्षम् ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥ २९ ॥

मोचितः सोऽपि रामेण वध्यमानः प्लवङ्गमैः । आनृशंस्येन रामस्य मोचिता राक्षसाः परे ॥२७॥ वानरैरर्दितास्ते तु विक्रान्तैर्लघुविक्रमैः । पुनर्लङ्कामनुप्राप्ताः श्वसन्तो नष्टचेतसः ॥ २८ ॥ ततो दशग्रीवमुपस्थितास्तु ते चारा बहिर्नित्यचरा निशाचराः । गिरेः सुवेलस्य समीपवासिनं न्यवेदयन् भीमबलं महाबलाः ॥ २९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

ततस्तमक्षोभ्यबलं लङ्काधिपतये चराः । सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १ ॥ चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् । जातोद्वेगोऽभवत् किंचिच्छार्दूलं वाक्यमब्रवीत् ॥२॥ अयथावच्च ते वर्णो दीनश्चासि निशाचर । नासि कच्चिदमित्राणां क्रुद्धानां वशमागतः ॥ ३ ॥ इति तेनानुशिष्टस्तु वाचं मन्दमुदीरयत् । तदा राक्षसशार्दूलं शार्दूलो भयविह्वलः ॥ ४ ॥ न ते चारयितुं शक्या राजन् वानरपुङ्गवाः ॥ ५ ॥

अथशार्दूलादिचारवचनं त्रिंशे—तत इति । सुवेले सुवेलसमीपे । सामीप्ये सप्तमी । सुवेलस्य समीप इति पूर्वमुक्तत्वात् ॥ १ ॥ चाराणां चारेभ्यः ॥२॥ रामाद्य०–प्राप्तं रामं महाबलमिति पाठः ॥ २ ॥ शत्रुगृहीतत्वेन तेषां स्वरूपं किं न ज्ञातमिति भावः ॥३॥ अनुशिष्टः पृष्टः । उदीरयत् । अडभाव आर्षः ॥४॥ चारयितुं चारविषयीकर्तुम् । न शक्याः चारसञ्चारविषया न भवन्तीत्यर्थः ॥ ५ ॥

सोऽपि शार्दूलोऽपि । परे शार्दूलसहायभूतास्ते च मोचिताः ॥ २७ ॥ २८ ॥ बहिर्नित्यचराः परराष्ट्रेषु तत्रत्यवृत्तान्तजिज्ञासया सदा सञ्चरणशीलाः ॥ २९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकोनत्रिंशः सर्गः ॥ २९ ॥ ॥ १ ॥ चाराणां चारेभ्यः ॥ २ ॥ ३ ॥ उदीरयदिति अडभाव आर्षः ॥ ४ ॥ चारयितुम् चारविषयीकर्तुम् ॥ ५ ॥

सम्प्रश्नः परीक्षणम् । अत्र वानरेषु ॥ ६ ॥ प्रविष्टमात्रे प्रविष्ट एव । अचारिते चाराविषयीकृते ॥ ७ ॥ बलादित्यादि । रक्षोभिः विभीषणसाचिवैः । विचालितः भुवि परिवर्तितः ॥ ८ ॥ परिणीतः परितो नीतः । सर्वतः परिणीय सर्वेषां निकटे चारोऽयमिति घोषणपूर्वकं परिणीयेत्यर्थः । रामसंसदं रामसभाम् ॥ ९ ॥ विह्वलः मूर्च्छितः । मूर्च्छानिवृत्तावपि चलितेन्द्रियः । याचमानः, त्राणमिति शेषः । परित्रात इत्यनुवादात् ॥ १० ॥ राघवे

विक्रान्ता बलवन्तश्च राघवेण च रक्षिताः । नापि सम्भाषितुं शक्याः सम्प्रश्नोऽत्र न लभ्यते ॥६॥ सर्वतो रक्ष्यते पन्था वानरैः पर्वतोपमैः । प्रविष्टमात्रे ज्ञातोऽहं बले तस्मिन्नचारिते ॥ ७ ॥ बलाद्गृहीतो रक्षोभिर्बहुधाऽस्मि विचालितः । जानुभिर्मुष्टिभिर्दन्तैस्तलैश्चाभिहतो भृशम् ॥ ८ ॥ परिणीतोऽस्मि हरिभिर्बलवद्भिरमर्षणैः । परिणीय च सर्वत्र नीतोऽहं रामसंसदम् ॥ ९ ॥ रुधिरादिग्धसर्वाङ्गो विह्वलश्चलितेन्द्रियः । हरिभिर्वध्यमानश्च याचमानः कृताञ्जलिः ॥१०॥ राघवेण परित्रातो जीवामीति यदृच्छया ॥११॥ एष शैलैः शिलाभिश्च पूरयित्वा महार्णवम् । द्वारमाश्रित्य लङ्काया रामस्तिष्ठति सायुधः ॥१२॥ गरुडव्यूहमास्थाय सर्वतो हरिभिर्वृतः । मां विसृज्य महातेजा लङ्कामेवाभिवर्तते ॥१३॥ पुरा प्राकारमायाति क्षिप्रमेकतरं कुरु । सीतां वाऽस्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् ॥१४॥

णेत्यर्धम् । जीवामीति यदृच्छया, इदानीं जीवनं यादृच्छिकमित्यर्थः । यद्वा इतीति स्वशरीरप्रदर्शनम् । 'अयथावच्च ते वर्णो दीनश्चासि निशाचर' इति ह्युक्तम् ॥ ११ ॥ एष इति । द्वारमाश्रित्य तिष्ठतीति वर्तमानसामीप्ये वर्तमानवत्प्रयोगः ॥ १२ ॥ गरुडेति । स्पष्टः ॥ १३ ॥ पुरा प्राकारम् आयाति, आयास्यतीत्यर्थः । " यावत्पुरानिपातयोर्लट् " । एकतरं द्वयोरेकम् । " एकाच्च प्राचाम् " इति तरप् । एकतरमित्युक्तं विवृणोति सीतामिति ॥ १४ ॥

हरिभिरिति । हरिभिर्वध्यमानो जीवामीति कृताञ्जलिस्सन् याचमानोऽहं यदृच्छया राघवेण परित्रात इति सम्बन्धः ॥ १०–१३ ॥ पुरेति । प्राकारं पुरा आयाति



स०–गरुडव्यूहमास्थाय प्रस्थानसमर्थत्वात् साक्षाद्गरुडारोहे [illegible] विचिन्त्य तत्र स्थित इति ध्वनिः ॥ १३ ॥

मनसा प्रेक्ष्य आलोच्य तं शार्दूलमुवाचेत्यन्वयः ॥ १५ ॥ सीताऽस्मै प्रदीयतामित्यस्योत्तरमाह—यदीति । युद्ध्येरन् तथापि सीतां न प्रदास्यामि । सर्वलोकेभ्यो भयादपि न प्रदास्यामीति योजना ॥ १६ ॥ एवं प्रथमपक्षस्यानुपपत्त्या द्वितीयपक्षं करिष्यमाणः तत्र ज्ञातव्यविशेषं पृच्छति—एवमित्यादि श्लोकत्रयम् । भवता सेना चारिता चारविषयीकृता, सम्यक् दृष्टेत्यर्थः । अत्र सेनायाम् । के शूराः ॥ १७ ॥ ये दुरासदाः ते कीदृशाः

मनसा तं तदा प्रेक्ष्य तच्छ्रुत्वा राक्षसाधिपः । शार्दूलं सुमहद्वाक्यमथोवाच स रावणः ॥ १५ ॥ यदि मां प्रति युद्ध्येरन् देवगन्धर्वदानवाः । नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ १६ ॥ एवमुक्त्वा महातेजा रावणः पुनरब्रवीत् । चारिता भवता सेना केऽत्र शूराः प्लवङ्गमाः ॥ १७ ॥ कीदृशाः किंप्रभाः सौम्य वानरा ये दुरासदाः । कस्य पुत्राश्च पौत्राश्च तत्त्वमाख्याहि राक्षस ॥ १८ ॥ तथाऽत्र प्रतिपत्स्यामि ज्ञात्वा तेषां बलाबलम् । अवश्यं बलसङ्ख्यानं कर्तव्यं युद्धमिच्छताम् ॥ १९ ॥ तथैवमुक्तः शार्दूलो रावणेनोत्तमश्चरः । इदं वचनमारेभे वक्तुं रावणसन्निधौ ॥ २० ॥ अथर्क्षरजसः पुत्रो युधि राजा सुदुर्जयः । गद्गदस्याथ पुत्रोऽत्र जाम्बवानिति विश्रुतः ॥ २१ ॥

कीदृशाकाराः । किंप्रभाः किंप्रभावाः । कस्य पुत्राः कस्य पौत्राश्च । तत्त्वं तेषां वानराणां भावमाख्याहि ॥ १८ ॥ १९ ॥ कथने किं प्रयोजनमित्यत्राह—तथेति । तथा एवमाख्याते सति । तेषां बलाबलं ज्ञात्वा अत्र वानरेषु प्रतिपत्स्यामि प्रतिपत्स्ये, कर्तव्यं ज्ञास्यामीत्यर्थः ॥ २० ॥ अथेत्युत्तरवचनारम्भे । द्वितीयोऽथशब्दः पादपूरणे । राजा सुग्रीवः । पाञ्चालीन्यायेन गद्गदेन पोषितत्वात्तत्पुत्रो जाम्बवान् । तस्य ब्रह्मणो जृम्भारम्भसम्भूतत्वात् ॥ २१ ॥

आयास्यति । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् । एकतरम् अन्यतरत् । तदेवाह सीतामिति ॥ १४–१६ ॥ चारितेति । वानराणां सेनेति योजना ॥ १७ ॥ १९ ॥ कथने किमित्यत आह—तथेति । तथ एवमाख्याते सति । तेषां बलाबलं ज्ञात्वा प्रतिपत्स्यामि प्रतिपत्स्ये, कर्तव्यं ज्ञास्यामीत्यर्थः ॥ १९ ॥ २० ॥ राजा सुग्रीवः । गद्गदः क्षेत्रद्वारा जाम्बवतः पिता । यद्यपि जाम्बवतः 'जृम्भमाणस्य सहसा मम वक्त्रादजायत' इति ब्रह्ममुखादुत्पत्तिरुक्ता, तथापि जृम्भणसमये उद्गताया ब्रह्मशक्तेर्गद्गदक्षेत्रमाविश्य तद्रूपेण परिणामाददोषः ॥ २१ ॥

स०–आख्याहि सुव्रतेति पठः । अनेन अनृतभाषणे प्रत्यवेयामिति परिज्ञानमस्तीति सूच्यते ॥ १८ ॥ गद्गदस्य द्वितीयजन्मानि । नचैवं वचने किं कल्पकमिति वाच्यम् । देवानामुत्पत्तेर्नानाविधाया भारतभागवतादौ प्रोक्तिरेवेत्यवेहि । अत्रापि " जाम्बवान् जृम्भमाणस्य मम वक्त्रादजायत " इत्येक [illegible] जल्पनं च कल्पयिष्यतोऽमुमर्थ मितिज्ञेयम् ॥ २१ ॥

गद्गदस्यैवेति । अन्यः पुत्रः धूम्रः । जाम्बवान् धूम्रश्चेति गद्गदस्य द्वौ पुत्रावित्यर्थः । यस्य पुत्रेणैकेन महता रक्षसाम् अक्षादीनां कदनं हननं कृतम्, स केसरी शतक्रतोर्गुरुः बृहस्पतिः तस्य पुत्रः । सापेक्षत्वेऽपि गमकत्वात् समासः ॥ २२ ॥ धर्मस्य देवतायाः । ननु "वरुणो जनयामास सुषेणं नाम वानरम्" इति बालकाण्डोक्तम् । सत्यमुक्तम् । स एवात्र धर्मशब्देनोच्यते । शार्दूलो वा भयाकुलोऽन्यथा श्रुतवान् । अन्योऽयं सुषेण इत्यप्याहुः ।

गद्गदस्यैव पुत्रोऽन्यो गुरुपुत्रः शतक्रतोः । कदनं यस्य पुत्रेण कृतमेकेन रक्षसाम् ॥ २२ ॥ सुषेणश्चापि धर्मात्मा पुत्रो धर्मस्य वीर्यवान् । सौम्यः सोमात्मजश्चात्र राजन् दधिमुखः कपिः ॥ २३ ॥ सुमुखो दुर्मुखश्चात्र वेगदर्शी च वानरः । मृत्युर्वानररूपेण नूनं सृष्टः स्वयंभुवा ॥ २४ ॥ पुत्रो हुतवहस्याथ नीलः सेनापतिः स्वयम् । अनिलस्य च पुत्रोऽत्र हनुमानिति विश्रुतः ॥२५॥ नप्ता शक्रस्य दुर्धर्षो बलवानङ्गदो युवा । मैन्दश्च द्विविदश्चोभौ बलिनावश्विसम्भवौ ॥ २६ ॥ पुत्रा वैवस्वतस्यात्र पञ्च कालान्तकोपमाः । गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ २७ ॥ दश वानरकोटयश्च शूराणां युद्धकांक्षिणाम् । श्रीमतां देवपुत्राणां शेषं नाख्यातुमुत्सहे ॥ २८ ॥

एवमन्यत्रापि ज्ञेयम् ॥ २३ ॥ मृत्युरेव स्वयंभुवा सुमुखादिवानररूपेण सृष्टः, सुमुखादयो मृत्युतुल्या इत्यर्थः । यद्वा सुमुखादयो मृत्युपुत्रा इत्यर्थः ॥ २४ ॥ रामानु०–मृत्युर्वानररूपेण नूनं सृष्टः स्वयंभुवा । सुमुखादयो मृत्युपुत्रा इति यावत् ॥ २४ ॥ पुत्रो हुतवहस्येति । अनिलस्य पुत्रः औरसः । एवं तत्र तत्र पितृद्वयनिर्देशो वीजित्वक्षेत्रित्वाभ्यामिति मन्तव्यम् ॥ २५ ॥ अत्र नप्तृशब्दोऽर्थसामर्थ्यात् पौत्रे वर्तते ॥२६॥ पुत्रा इति । स्पष्टः ॥ २७ ॥ दशेति । वानरकोटय इत्यत्र वानरेत्यविभक्तिकनिर्देशः । "सुपां सुलुक्" इत्यादिना षष्ठ्या लुक् । वानराणामित्यर्थः । शेषं जन्मस्थानादि । नोत्सहे न शक्नोमि ॥२८॥

गद्गदस्यैवेति । अन्यः पुत्रः धूम्राख्यः । यस्य केसरिणः पुत्रेण हनुमता रक्षसां कदनं कृतम् । केसरी शतक्रतोर्गुरुः बृहस्पतिः तस्य पुत्र इति ॥ २२ ॥ २३ ॥ मृत्युरेव स्वयम्भुवा सुमुखादिवानररूपेण सृष्टः, सुमुखादयो मृत्युतुल्या इति भावः ॥ २४–२७ ॥ दशवानरकोटय इत्यत्र वानरेति लुप्तविभक्तिकं षष्ठ्यन्तं पदम् । आख्यातुं नोत्सहे न शक्नोमि ॥ २८–३० ॥

सिंहसंहननः रमणीयावयवसन्निवेशवान् । “ वराङ्गरूपोपेतो यः सिंहसंहननो हि सः ” इत्यमरः ॥ २९ ॥ ३० ॥ वक्तुमिति । ये जनस्थानगताः ते यावन्तः ते सर्वेऽपि हता इत्यर्थः । “यावत्तावच्च साकल्ये” इत्यमरः ॥३१॥ लक्ष्मण इति । चशब्देन दशरथस्य पुत्र इत्याकृष्यते । मातङ्गानामिवर्षभः

पुत्रो दशरथस्यैष सिंहसंहननो युवा । दूषणो निहतो येन खरश्च त्रिशिरास्तथा ॥ २९ ॥ नास्ति रामस्य सदृशो विक्रमे भुवि कश्चन । विराधो निहतो येन कबन्धश्चान्तकोपमः ॥ ३० ॥ वक्तुं न शक्तो रामस्य नरः कश्चिद् गुणान् क्षितौ । जनस्थानगता येन यावन्ता राक्षसा हताः ॥ ३१ ॥ लक्ष्मणश्चात्र धर्मात्मा मातङ्गानामिवर्षभः । यस्य बाणपथं प्राप्य न जीवेदपि वासवः ॥ ३२॥ श्वेतो ज्योतिर्मुखश्चात्र भास्करस्यात्मसम्भवौ । वरुणस्य च पुत्रोऽन्यो हेमकूटः प्लवङ्गमः ॥३३॥ विश्वकर्मसुतो वीरो नलः प्लवगसत्तमः । विक्रान्तो बलवानत्र वसुपुत्रः सुदुर्धरः ॥३४॥ राक्षसानां वरिष्ठश्च तव भ्राता विभीषणः । परिगृह्य पुरीं लङ्कां राघवस्य हिते रतः ॥ ३५ ॥ इति सर्वं समाख्यातं तवेदं वानरं बलम् । सुवेलेऽधिष्ठितं शैले शेषकार्ये भवान् गतिः ॥ ३६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे त्रिंशः सर्गः ॥ ३० ॥

गजश्रेष्ठ इव स्थितः ॥ ३२ ॥ ३३ ॥ सुदुर्धरः सुदुर्धरनामा ॥ ३४ ॥ राक्षसानामिति । लङ्कां रामात् परिगृह्य तस्य हिते रतो विभीषणस्तव भ्रातेत्यन्वयः ॥ ३५ ॥ गतिः प्रमाणम् । अत्र वानरजन्मोक्तेः प्रायशो बालकाण्डोक्तविरोधादेतत्सर्गं विनापि पूर्वोत्तरकथासङ्घट्टनाच्च सर्गोऽयं कल्पित इत्याहुः ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

वक्तुमिति । जनस्थानगता यावन्तो राक्षसाः ते सर्वे येन निहताः तस्य गुणान् वक्तुं न शक्त इति सम्बन्धः ॥ ३१–३३ ॥ विश्वकर्मेति । दुर्धरः दुर्धराख्यः ॥ ३४ ॥३५ ॥ गतिः प्रमाणम् । नन्वत्र सर्गे धर्मस्य पुत्रः सुषेणः । वैवस्वतपुत्रौ शरभगन्धमादनावित्युच्येते । बालकाण्डे तु “वरुणो जनयामास सुषेणं नाम वानरम् । शरभं जनयामास पर्जन्यस्तु महाबलम् । धनदस्य सुतः श्रीमान् वानरो गन्धमादनः ॥ ” इति त्रयाणामन्यत उत्पत्तिरुक्ता । सत्यम्; सुषेणादिसंज्ञावतामनेकेषामपि सत्त्वान्न विरोधः ॥ ३६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां त्रिंशः सर्गः ॥ ३० ॥

अथ सीतामोहनमेकत्रिंशे । कथासङ्घटनाय पूर्वसर्गोक्तमनुवदति–तत इति । स्पष्टः ॥ १ ॥ रामानु०–ततस्तमक्षोभ्यबलमित्यनुवादः पूर्वसर्गादौ च कृतः । पूर्वमेव मया सृष्टो जाम्बवानृक्षपुङ्गवः । जृम्भमाणस्य सहसा मम वक्त्रादजायत ॥ इति जृम्भमाणपितामहवक्त्राद्भुत्पन्नत्वेन प्रसिद्धस्य जाम्बवतः पूर्वसर्गे गद्गदपुत्रत्वेनाभिधानाद्विरोधः स्फुरति । पूर्वसर्गमन्तरेणापि कथा सङ्गच्छते । तथापि स्थितस्य गतिश्चिन्तनीयेति न्यायेन पूर्वसर्गो व्याख्यातः ॥ १ ॥ चाराणां चारेभ्यः । जातोद्वेगः जातसम्भ्रमः । सचिवान् मन्त्रिणः



ततस्तमक्षोभ्यबलं लङ्काधिपतये चराः । सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १ ॥ चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् । जातोद्वेगोऽभवत् किञ्चित् सचिवानिदमब्रवीत् ॥२॥ मन्त्रिणः शीघ्रमायान्तु सर्वे वै सुसमाहिताः । अयं नो मन्त्रकालो हि संप्राप्त इति राक्षसाः ॥ ३ ॥ तस्य तच्छासनं श्रुत्वा मन्त्रिणोऽभ्यागमन् द्रुतम् । ततः स मन्त्रयामास सचिवै राक्षसैः सह ॥ ४ ॥ मन्त्रयित्वा स दुर्धर्षः क्षमं यत् समनन्तरम् । विसर्जयित्वा सचिवान् प्रविवेश स्वमालयम् ॥ ५ ॥ ततो राक्षसमाहूय विद्युज्जिह्वं महाबलम् । मायाविदं महामायः प्राविशद्यत्र मैथिली ॥ ६ ॥ विद्युज्जिह्वं च मायाज्ञमब्रवीद्राक्षसाधिपः । मोहयिष्यावहे सीतां मायया जनकात्मजाम् ॥ ७ ॥ शिरो मायामयं गृह्य राघवस्य निशाचर । त्वं मां समुपतिष्ठस्व महच्च सशरं धनुः ॥ ८ ॥ एवमुक्तस्तथेत्याह विद्युज्जिह्वो निशाचरः । [ दर्शयामास तां मायां सुप्रयुक्तां स रावणे । ] तस्य तुष्टोऽभवद्राजा प्रददौ च विभूषणम् ॥ ९ ॥ अशोकवनिकायां तु सीतादर्शनलालसः । नैर्ऋतानामधिपतिः संविवेश महाबलः ॥ १० ॥

समीपस्थान् ॥ २ ॥ हे राक्षसाः ! अयं नो मन्त्रकालः संप्राप्तः इति हेतोः मन्त्रिणः समायान्त्विति इदं वाक्यमब्रवीदिति पूर्वेण सम्बन्धः । यद्वा इदमब्रवीदित्यस्य वाक्यान्तस्थेनेतिशब्देन संबन्धः । राक्षसा इत्युत्तरशेषः । अथवा हे मन्त्रिणः ! भवन्तः आयान्तु समीपमिति सचिवानब्रवीत् । राक्षसा इति मन्त्रिविशेषणम् । सचिवै राक्षसैरित्यनुवादात् । सुसमाहिताः नीतिकुशला इत्यर्थः ॥ ३ ॥ ४ ॥ मन्त्रयित्वेति । समनन्तरं रामस्य समीपागमनानन्तरम् । यत् क्षमं कर्तुमुचितं तन्मन्त्रयित्वेति योजना ॥ ५–७ ॥ शिर इति । गृह्य गृहीत्वा ॥ ८ ॥ तस्य तस्मिन् ॥ ९ ॥ लालसः साभिलाषः ॥ १० ॥ ११ ॥ ॥ १ ॥ चाराणामिति । चाराणां चारेभ्यः ॥ २ ॥ हे राक्षसाः ! अयं नो मन्त्रकालः सम्प्राप्त इति हेतोः मन्त्रिणः समायान्त्वितीदं वाक्यमब्रवीदिति पूर्वेण

उपास्यमानाम् अनुव्रताम् ॥ १२ ॥ उपसृत्येति । प्रहर्षं नाम कीर्तयन् प्रहर्षवार्तां कीर्तयन्निव । नामेत्यपरमार्थे ॥ १३ ॥ वल्गसे जल्पसि, मां निष्ठुरमवद इत्यर्थः ॥१४॥ मूलम् आधारभूतम् । सर्वतः कात्स्न्येन । व्यसनेन निमित्तेन, प्रार्थनां विनेत्यर्थः॥१५॥मृतेन रामेण । भवस्वेत्यात्मने पद

ततो दीनामदैन्यार्हां ददर्श धनदानुजः । अधोमुखीं शोकपरामुपविष्टां महीतले ॥ ११ ॥ भर्तारमेव ध्यायन्ती मशोकवनिकां गताम् । उपास्यमानां घोराभी राक्षसीभिरितस्ततः* ॥ १२ ॥ उपसृत्य ततः सीतां प्रहर्षं नाम कीर्तयन् । इदं च वचनं धृष्टमुवाच जनकात्मजाम् ॥१३॥ सान्त्व्यमाना मया भद्रे यमुपाश्रित्य वल्गसे । खरहन्ता स ते भर्ता राघवः समरे हतः ॥१४॥ छिन्नं ते सर्वतो मूलं दर्पस्ते विहतो मया । व्यसनेनात्मनः सीते मम भार्या भविष्यसि ॥ १५ ॥ विसृजेमां मतिं मूढे किं मृतेन करिष्यसि । भवस्व भद्रे भार्याणां सर्वासामीश्वरी मम ॥१६॥ अल्पपुण्ये निवृत्तार्थे मूढे पण्डितमानिनि । शृणु भर्तृवधं सीते घोरं वृत्रवधं यथा ॥ १७ ॥ समायातः समुद्रान्तं मां हन्तुं किल राघवः । वानरेन्द्रप्रणीतेन बलेन महता वृतः ॥ १८ ॥

मार्षम् ॥ १६ ॥ निवृत्तार्थे एतावत्पर्यन्तं निवृत्तपुरुषार्थे । पण्डितमानिनि । "क्यङ्मानिनोश्च" इति ह्रस्वत्वम् ॥ १७ ॥ समुद्रान्तं समुद्रतीरम् ।

सम्बन्धः ॥ ३–१२ ॥ उपसृत्येति । प्रहर्षं नाम कीर्तयन् प्रहर्षं कीर्तयन् हे सीते ! इति सम्बोधयन् ॥१३॥१४॥ छिन्नमिति । सर्वतः कात्स्न्येन, आत्मनः तव व्यसने नैव हेतुना मम भार्या भविष्यसि, मत्प्रार्थनां विना त्वमेव मम भार्या भविष्यसीति भावः ॥ टीका–ते मूलम् अस्मदपरिग्रहनिदानं सर्वथा सर्वप्रकारेण छिन्नम् । ते दर्पश्च मया विहतः । एवं करणेन किं ते जातं तत्राह–आत्मनस्तव व्यसनेन मम भार्या भविष्यसि, गत्यन्तराभावात्स्वयमेवेति शेषः ॥ १५ ॥ एतां मतिं रामविषयां मतिम् । भवस्व भवेत्यर्थः ॥ १६ ॥ निवृत्तार्थे निवृत्तपुरुषार्थे । कथमिदं त्वया साधितमिति चेदुपायेनेत्याह शृण्विति ॥ १७ ॥ वानरेन्द्रेण प्रणीतेन आनीतेन ॥ १८ ॥ १९ ॥

* राक्षसीभिर्वृतां सीतां पूर्णचन्द्रनिभाननाम् । उत्पातमेघजालाभिश्चन्द्ररेखामिवावृताम् ॥ भूषणैरुत्तमैः कैश्चिन्मङ्गलार्थमलंकृताम् । चरन्तीं मारुतोद्धूतां क्षितां पुष्पलतामिव ॥ हर्षशोकान्तरे मग्नां विपादस्य विलक्षणाम् । स्तिमितामिव गाम्भीर्यान्नदीं भागीरथीमिव ॥ इत्यधिकः पाठः केषुचित्पुस्तकेषु दृश्यते ॥

प्रणीतेन आनीतेन ॥ १८ ॥ स रामः समुद्रस्योत्तरं तीरं महता बलेन पीड्य पीडयित्वा दिवाकरे अस्तं प्रयाति सति निविष्टः ॥१९॥ अथेति । कात्स्न्यें अथशब्दः । अध्वनि परिश्रान्तमत एव स्थितम् । अर्द्धरात्रे सुखसंसुप्तं बलं प्रथममासाद्य चारैश्चारितमभूत् ॥२०॥ यत्र बले । रामः सलक्ष्मणोऽवस्थितः । तदस्य बलं प्रहस्तप्रणीतेन महता बलेन हतम् ॥ २१ ॥ पट्टिशानित्यादिश्लोकद्वयम् । पट्टिशान् असिविशेषान् । परिघान् अर्गलानि । चक्रान् क्षुद्र

स निविष्टः समुद्रस्य पीड्य तीरमथोत्तरम् । बलेन महता रामो व्रजत्यस्तं दिवाकरे ॥ १९ ॥ अथाध्वनि परिश्रान्त मर्धरात्रे स्थितं बलम् । सुखसंसुप्तमासाद्य चारितं प्रथमं चरैः ॥ २० ॥ तत्प्रहस्तप्रणीतेन बलेन महता मम । बलमस्य हतं रात्रौ यत्र रामः सलक्ष्मणः॥२१॥ पट्टिशान् परिघांश्चक्रान् दण्डान् खड्गान् महायसान् । बाणजालानि शूलानि भास्वरान् कूटमुद्गरान् ॥२२॥ यष्टीश्च तोमरान् शक्तीश्चक्राणि मुसलानि च । उद्यम्योद्यम्य रक्षोभिर्वानरेषु निपातिताः ॥ २३ ॥ अथ सुप्तस्य रामस्य प्रहस्तेन प्रमाथिना । असक्तं कृतहस्तेन शिरश्छिन्नं महासिना ॥ २४ ॥ विभीषणः समुत्पत्य निगृहीतो यदृच्छया । दिशः प्रव्राजितः सर्वैर्लक्ष्मणः प्लवगैः सह ॥ २५ ॥ सुग्रीवो ग्रीवया सीते भग्नया प्लवगाधिपः । निरस्तहनुकः शेते हनुमान् राक्षसैर्हतः ॥ २६ ॥ जाम्बवानथ जानुभ्यामुत्पतन्निहतो युधि । पट्टिशैर्बहुभिश्छिन्नो निकृत्तः पादपो यथा ॥ २७ ॥

चक्राणि । महायसान् महायसानीर्मितान् । दण्डविशेषणमेतत् । कूटमुद्गरान् अयःकीलकीलितगदाः । यष्टीः केवलदण्डान् । तोमरान् स्थूलाग्रगदाः । प्रासान् क्षेपणीः । चक्राणि महाचक्राणि । पट्टिशादीनुद्यम्योद्यम्य वानरेषु निपातिताः, त इति शेषः ॥ २२ ॥ २३ ॥ प्रमथ्नाति प्रहरतीति प्रमाथिः तेन । कृतहस्तेन शिक्षितहस्तेन कर्त्रा । महासिना करणेन । असक्तम् अविलम्बितं यथा भवति तथा छिन्नमित्यन्वयः ॥ २४ ॥ विभीषणः समुत्पत्य गतोऽपि निगृहीत इत्यर्थः । प्रव्राजितः पलायितः ॥ २५ ॥ सुग्रीव इति । ग्रीवया, उपलक्षित इति शेषः॥ २६ ॥ जानुभ्यां जानुनोः निहतः । अथ पट्टिशैश्छिन्नः अध्वनि परिश्रान्तं स्थितम् । अर्धरात्रे सुखसंसुप्तं बलं समासाद्य । चरैः चारितम्, अभूदिति शेषः । पट्टसादीनुद्यम्योद्यम्य पट्टसादयो वानरेषु निपातिता इत्यर्थः ॥ २०–२३ ॥ अथेति । प्रमाथिना प्रमथनशीलेन । कृतहस्तेन सुशिक्षितहस्तेन । असक्तं यथा तथा शिरश्छिन्नमिति सम्बन्धः ॥ २४–२९ ॥

जाम्बवान् निकृत्तः पादप इवाभूत् ॥ २७ ॥ व्यायतौ दीर्घशरीरौ । मध्ये कटिस्थाने ॥ २८ ॥ अनुतिष्ठति शेते । पनसः पनसफलम् । तथा खण्डित इत्यर्थः ॥ २९ ॥ निष्कूजः निःशब्दः ॥ ३० ॥ राक्षसैरासाद्य शरैश्छिन्नः निपतिताङ्गदोऽङ्गदः क्षितौ पतितः ॥ ३१ ॥ शायिताः शयानाः । अपरे हरयः

मैन्दश्च द्विविदश्चोभौ निहतौ वानरर्षभौ । निश्वसन्तौ रुदन्तौ च रुधिरेण परिप्लुतौ । असिना व्यायतौ छिन्नौ मध्ये ह्यरिनिषूदनौ ॥ २८ ॥ अनुतिष्ठति मेदिन्यां पनसः पनसो यथा ॥२९॥ नाराचैर्बहुभिश्छिन्नः शेते दर्यां दरीमुखः । कुमुदस्तु महातेजा निष्कूजः सायकैः कृतः ॥ ३० ॥ अङ्गदो बहुभिश्छिन्नः शरैरासाद्य राक्षसैः । पतितो रुधिरो द्गारी क्षितौ निपतिताङ्गदः ॥ ३१ ॥ हरयो मथिता नागै रथजातैस्तथाऽपरे । शायिता मृदिताश्चाश्वैर्वायुवेगैरिवाम्बुदाः ॥ ३२ ॥ प्रहृताश्चापरे त्रस्ता हन्यमाना जघन्यतः । अभिद्रुतास्तु रक्षोभिः सिंहैरिव महाद्विपाः ॥ ३३ ॥ सागरे पतिताः केचित् केचिद्गगनमाश्रिताः । ऋक्षा वृक्षानुपारूढा वानरीं वृत्तिमाश्रिताः ॥ ३४ ॥ सागरस्य च तीरेषु शैलेषु च वनेषु च । पिङ्गलास्ते विरूपाक्षैर्बहुभिर्बहवो हताः ॥ ३५ ॥ एवं तव हतो भर्ता ससैन्यो मम सेनया । क्षतजार्द्रं रजोध्वस्तमिदं चास्याहृतं शिरः ॥ ३६ ॥ ततः परमदुर्धर्षो रावणो राक्षसाधिपः । सीतायामुपशृण्वन्त्यां राक्षसीमिदमब्रवीत् ॥ ३७ ॥ राक्षसं क्रूरकर्माणं विद्युज्जिह्वं त्वमानय । येन तद्राघवशिरः सङ्ग्रामात् स्वयमाहृतम् ॥ ३८ ॥ विद्युज्जिह्वस्ततो गृह्य शिरस्तत् सशरासनम् । प्रणामं शिरसा कृत्वा रावणस्याग्रतः स्थितः ॥ ३९ ॥ तमब्रवीत्ततो राजा रावणो राक्षसं स्थितम् । विद्युज्जिह्वं महाजिह्वं समीपपरिवर्त्तिनम् ॥ ४० ॥

वायुवेगैरम्बुदा इव नागै रथजातैश्च मृदिताः ॥ ३२ ॥ त्रस्ताः अत एवाभिद्रुताः । जघन्यतः पृष्ठतः । हन्यमानाः अपरे हरयः सिंहैः द्विपा इव प्रहृताः ॥ ३३ ॥ ३४ ॥ पिङ्गलाः वानराः । विरूपाक्षैः वानरैः ॥ ३५ ॥ ३६ ॥ राक्षसीं समीपवर्तिनीं कांचित् ॥ ३७ ॥ ३८ ॥ विद्युज्जिह्व इति । ततः राक्षसीं

निष्कूजः निश्शब्दः ॥ ३०–३६ ॥ राक्षसीं सीतासमीपवर्तिनीम् ॥ ३७–४१ ॥

प्रत्याज्ञापनवचनश्रवणानन्तरमेव ॥ ३९ ॥ ४० ॥ पश्चिमामवस्थाम्, मरणमित्यर्थः ॥ ४१ ॥ उप समीपे । अन्तरधीयत अपागच्छत् ॥ ४२ ॥ चिक्षेप आचकर्ष । विद्युज्जिह्वहस्तादित्यर्थः । त्रिषु लोकेषु विख्यातम्, वैष्णवत्वादिति भावः ॥ ४३ ॥ ४४ ॥ स इति । विद्युजिह्वेत्यत्र तल्लोप आर्षः। सहैव



अग्रतः कुरु सीतायाः शीघ्रं दाशरथेः शिरः । अवस्थां पश्चिमां भर्तुः कृपणा साधु पश्यतु ॥ ४१ ॥ एवमुक्तं तु तद्रक्षः शिरस्तत् प्रियदर्शनम् । उपनिक्षिप्य सीतायाः क्षिप्रमन्तरधीयत ॥ ४२ ॥ रावणश्चापि चिक्षेप भास्वरं कार्मुकं महत् । त्रिषु लोकेषु विख्यातं सीतामिदमुवाच च ॥ ४३ ॥ इदं तत्तव रामस्य कार्मुकं ज्यासमायुतम् । इह प्रहस्तेनानीतं हत्वा तं निशि मानुषम् ॥ ४४ ॥ स विद्युजिह्वेन सहैव तच्छिरो धनुश्च भूमौ विनिकीर्य रावणः । विदेहराजस्य सुतां यशस्विनीं ततोऽब्रवीत्तां भव मे वशानुगा ॥ ४५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

युगपदेव । विनिकीर्य शिरो धनुश्च युगपत् सीतायाः पुरतः स्थापयित्वेत्यर्थः । विद्युज्जिह्वः शिरः प्रक्षिप्तवान्, स्वयं धनुरिति ज्ञेयम् । वशानुगेत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ ४५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥

एवमुक्तमिति । अन्तरधीयत अपागच्छत् ॥ ४२ ॥ चिक्षेप आचकर्ष ॥४३॥४४॥ सहैव युगपदेव । विनिकीर्य सीतायाः पुरतः स्थापयित्वा ॥ ‘ उपसृत्य ततस्सीतां प्रहर्षन्नाम कीर्तयन् ’ इत्यारभ्य सर्गसमाप्तिपर्यन्तस्य वास्तवार्थस्तु–रावणस्तु देवीं स्पष्टं देवतात्वेन ज्ञात्वाऽपि रामहस्ताद्वधेच्छुरपि रावणो रामेण सह वैरं सम्पाद्य मृत इति इतरराक्षसवञ्चनाय देवीमोहनार्थमिव श्रीराममायाशिरआदिकं प्रदर्श्य रामवधशङ्कया मोहितां देवीं रहसि प्रियवचनैस्समाश्वासयति–उपसृत्येत्यारभ्य सर्गसमाप्तिपर्यन्तेन । उपसृत्य समीपं प्राप्य प्रहर्षन् प्रहर्षयन् दुष्टं वचनम् इतरराक्षसदृष्ट्या दुष्टमित्यर्थः । सान्त्व्यमानेति । रामस्य कापि हानिर्नास्तीति मया सान्त्व्यमानाऽपि यं राममुपाश्रित्य उद्दिश्य वल्गसे दुःखेन धावसीत्यर्थः । खरहन्तां स ते भर्ता समरे हतोऽथ किम्, न हत एवेत्यर्थः । अतो दुःखं मा प्राप्नुहीति शेषः । मम दुःखेन तव का हानिरित्याशङ्क्याह–छिन्नमिति । हे सीते ! आत्मनस्तव व्यसनेन हेतुना ते त्वया ते मम त्वदीयभृत्यस्य ममेत्यर्थः । दर्पः मया लक्ष्म्या सह सर्वतः सर्वप्रकारेण निहतः मूलं च लक्ष्म्यागमननिमित्तमपि [illegible] अतो [illegible] शेषः । अतो दुःखं मा प्राप्नुहीत्यर्थः । विसृजे

अथ सीताप्रलापो द्वात्रिंशे—सा सीतेत्यादिश्लोकत्रयमेकं वाक्यम् । हनुमता पूर्वं कथितम् । सुग्रीवप्रतिसंसर्गं रामस्य सुग्रीवप्रतिसम्बन्धम् । रावणमुखाच्छ्रुत्वेति शेषः । यद्वा दृष्ट्वा ज्ञात्वेत्यर्थः । ज्ञानं च सुग्रीवप्रतिसम्बन्धस्य स्मरणम् । अन्यत्र साक्षात्कारः ॥ १ ॥ नयने इति द्वितीया । भर्तुः सदृशम् भर्तुर्मुखसदृशमित्यर्थः । इदं नयनादावप्यन्वेति । केशान्तदेशं ललाटम् ॥ २ ॥ अभिज्ञानैः चिह्नैः । "प्रज्ञानं चाप्यभिज्ञानम्" इत्यमरः । अभि

सा सीता तच्छिरो दृष्ट्वा तच्च कार्मुकमुत्तमम् । सुग्रीवप्रतिसंसर्गमाख्यातं च हनूमता ॥ १ ॥
नयने मुखवर्णं च भर्तुस्तत्सदृशं मुखम् । केशान् केशान्तदेशं च तं च चूडामणिं शुभम् ॥ २ ॥
एतैः सर्वैरभिज्ञानैरभिज्ञाय सुदुःखिता । विजगर्हेऽत्र कैकेयीं क्रोशन्ती कुररी यथा ॥ ३ ॥
सकामा भव कैकेयि हतोऽयं कुलनन्दनः । कुलमुत्सादितं सर्वं त्वया कलहशीलया ॥ ४ ॥

ज्ञाय तदेव शिर इति प्रत्यभिज्ञायेत्यर्थः । अत्र रामविषये ॥ ३ ॥ सकामेति । हे कैकेयि ! सकामा भव, सम्पूर्णकामा भवेत्यर्थः । कः काम इत्यत्राह

त्यादि सार्धश्लोक एकं वाक्यम् । हे भद्रे हे अमूढे हे सर्वज्ञे ! एतां मिथ्याकल्पितरामविपद्विषयिणीं मतिं विसृज । मम मद्भार्याणां च ईश्वरी भव । अल्पपुण्ये निवृत्तार्थे नष्टपुरुषार्थे । पण्डितमानिनि मूढे मृते मृतकल्पे एतादृशविशेषणविशिष्टे मयि, कृपयेति शेषः । किं यद्यर्थे । एवं न करिष्यसि यदि दुःखं न त्यजसि यदीत्यर्थः । तर्ह्यहं सद्यो मरिष्यामीति शेषः । नन्वेता राक्षस्यः किमिति रामविपत्तिं कथयन्तीत्याशङ्क्य तदसंहमानः कुपित आह—शृण्विति । भर्तृवधं भर्तृवधविषयवचनमित्यर्थः । त्वं शृणु, अहं त्वेतादृशमिथ्यावचनं श्रोतुं न सह इति शेषः । रामवधविषयराक्षस्युक्तिरसङ्गतेति दर्शयितुं राक्षस्युक्तिं स्वयमनुवदति—'समायातः समुद्रान्तं मां हन्तुं किल राघवः' इत्यारभ्य 'क्षतजार्द्रं रजोध्वस्तमिदं चास्याहृतं शिरः' इत्यन्तेन । मां हन्तुं किल राघव इत्यत्र किलशब्दो 'वानरेन्द्रप्रणीतेन' इत्यारभ्य 'एवं तव हतो भर्ता ससैन्यो मम सेनया' इत्यन्तं सर्वत्र योज्यः। तर्हि राक्षस्युक्तिः सर्वात्मना मिथ्या किमित्याशङ्क्य, नहि; त्वन्मोहनार्थं राक्षसैर्मायया रामशिरआदिकं कल्पितमित्याशयेनाह—क्षतजार्द्रमिति । देव्यास्तच्छिरोदिदृक्षायां तदानेतुं राक्षसस्याह्वाने राक्षसीं नियोजयति—ततः परमदुर्धर्ष इत्यादिना । अग्रतः कुर्विति अवस्थां पश्चिमां भर्तुः इत्याद्युक्तिरितरराक्षसवञ्चनाय ज्ञातव्या । स विद्युज्जिह्वेनेत्यस्य वास्तवार्थस्तु—मे वशानुगेत्यत्र अवशानुगेति छेदः । हे मे लक्ष्मीः ! अवशानुगा अस्य विष्णो रामस्य वशमनुगच्छतीत्यवशानुगा भवेत्यर्थः ॥४५॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० युद्धकाण्डव्याख्यायाम् एकत्रिंशः सर्गः॥३१॥
सेति । सुग्रीवप्रतिसंसर्गं हनुमता पूर्वं कथितसुग्रीवरामसम्बन्धं दृष्ट्वा ज्ञात्वा, रावणाच्छ्रुत्वेति वा शेषः ॥१॥ केशान्तदेशं ललाटम् । अभिज्ञानैर्लक्षणैरभिज्ञाय ॥२-४॥

हत इति । कलहशीलया कलहस्वभावया, कलहप्रयोजनयेति यावत् । त्वया सर्वं कुलं रघुवंशः उत्सादितं भवति । तथा कुलनन्दनोऽयं रामो हतः । प्रव्राजनव्याजेन रामहननमेव त्वया सङ्कल्पितं तदिदानीं विपरीतफलं ते जातम् । कुलतन्तुभूतरामहननेन तदेकपराः सर्वे भरतादयो हता एव । कलह एव ते प्रयोजनं फलितमिति भावः ॥ ४ ॥ हेत्वन्तराभावादिदमेव रामवनप्रव्राजने हेतुरित्याह—आर्येणेति । आर्येण सर्वप्रियकारिणेत्यर्थः ।

आर्येण किं ते कैकेयि कृतं रामेण विप्रियम् । यन्मया चीरवसनस्त्वया प्रस्थापितो वनम् ॥ ५ ॥
एवमुक्त्वा तु वैदेही वेपमाना तपस्विनी । जगाम जगतीं बाला छिन्ना तु कदली यथा ॥ ६ ॥
सा मुहूर्तात् समाश्वस्य प्रतिलभ्य च चेतनाम् । तच्छिरः समुपाघ्राय विललापायतेक्षणा ॥ ७ ॥
हा हतास्मि महाबाहो वीरव्रतमनुव्रत । इमां ते पश्चिमावस्थां गतास्मि विधवा कृता ॥ ८ ॥
प्रथमं मरणं नार्या भर्तुर्वैगुण्यमुच्यते । सुवृत्त साधुवृत्तायाः संवृत्तस्त्वं ममाग्रतः ॥ ९ ॥

यत् येन कारणेन मया सह चीरवसनो रामः प्रस्थापितः तादृशं विप्रियं किं कृतम् ॥ ५ ॥ एवमिति । तपस्विनी शोचनीया । जगतीं भूमिं जगाम । मूर्च्छितेत्यर्थः । बाला मृदुबुद्धिरित्यर्थः ॥ ६ ॥ समाश्वस्य उच्छ्वासं प्राप्य । चेतनां ज्ञानम् । आयतेक्षणा अश्रुमिश्रत्वेन शिरोवलोकनार्थं विस्तृतविलोचनेत्यर्थः ॥७॥ वीरव्रतं शत्रुमहत्वा न निवर्तिष्य इति सङ्कल्पम् । अनुव्रत अनुप्राप्त । गताऽस्मि दृष्टवत्यस्मि । गत्यर्था ज्ञानार्था इति न्यायात् । अतो विधवा कृता ॥८॥ प्रथमं भर्तुर्मरणं भार्यादोषनिमित्तकं भवति तत्त्वत्र न पश्यामीत्याह—प्रथममिति । प्रथमं भर्तुर्मरणं नार्या वैगुण्यं वैगुण्यहेतुकम् । सुवृत्तस्त्वं साधुवृत्ताया ममाग्रतः संवृत्तः मृतः, कथमिदं सङ्गच्छत इति भावः । अस्मिन् पक्षे न सुवृत्तपदस्वारस्यम् । यद्वा भवन्मरणस्य मद्दोष एव हेतुरित्याह—प्रथममिति । विगुण एव वैगुण्यम् । स्वार्थे ष्यञ् । प्रथमं भर्तृमरणं भार्यादोषनिमित्तकमिति सुप्रसिद्धम् । अतो हे सुवृत्त साधुवृत्त !



आर्येण रामेणेत्यन्वयः । चीरवसनं दत्त्वा मया सह प्रव्राजित इत्यन्वयः ॥ ५ ॥ ६ ॥ तच्छिरस्समुपास्थाय इति पाठः । समुपास्थाय स्वसमीपे स्थापयित्वा ॥ ७ ॥ वीरव्रतमनुव्रत वीरव्रतस्याचरणशील । गतास्मि प्राप्तास्मि ॥ ८ ॥ प्रथमं भर्तृमरणं नार्या वैगुण्यं दुश्चारित्रहेतुकमुच्यते । तथा सति साधुवृत्ताया मम

साधुवृत्तायाः सम्यग्जीवनवत्याः । ममाग्रतस्त्वं मृतोऽसि । मद्वैगुण्यहेतुकं त्वन्मरणमिति भावः । सुवृत्तेत्यनेन त्वद्वैगुण्यहेतुकं न भवतीति ज्ञापितम् ॥ ९ ॥ स्वस्य वैगुण्यसद्भावे निदर्शनमाह—दुःखादिति । दुखाद्दुःखम् अत्यन्तदुःखम् । प्रपन्नायाः वनप्रस्थानं प्रथमं दुःखम्, तस्मादपि दुःखं रावणेनापहरणम्, तत् प्राप्ताया इत्यर्थः । सम्प्रति भर्तृमरणेन शोकसागरे निमग्नायाः । इयं च षष्ठी "यस्य च भावेन भावलक्षणम्" इत्यस्मि

दुःखाद्दुःखं प्रपन्नाया मग्नायाः शोकसागरे । यो हि मामुद्यतस्त्रातुं सोऽपि त्वं विनिपातितः ॥ १० ॥
सा श्वश्रूर्मम कौसल्या त्वया पुत्रेण राघव । वत्सेनेव यथा धेनुर्विवत्सा वत्सला कृता ॥ ११ ॥
आदिष्टं दीर्घमायुस्ते यैरचिन्त्यपराक्रम । अनृतं वचनं तेषामल्पायुरसि राघव ॥ १२ ॥
अथवा नश्यति प्रज्ञा प्राज्ञस्यापि सतस्तव । पचत्येनं यथा कालो भूतानां प्रभवो ह्ययम् ॥ १३ ॥

न्नर्थे । शोकसागरे मग्नायाः शोकसागरे मग्नायां मयि । दुःखाद्दुःखं प्रपन्नायाः प्रपन्नायां सत्याम् । यो मां त्रातुमुद्यतः स त्वमपि विनिपातित इति सम्बन्धः ॥ १० ॥ न केवलं ममैव दुःखम्, मातुश्चेत्याह—सेति । सा मम श्वश्रूः कौसल्या वत्सला धेनुर्यथा धेनुरिव त्वया हतेन पुत्रेण वत्सेनेव विवत्सा कृता ॥ ११ ॥ रामानु०—वत्सेनेव त्वया धेनुर्यथा धेनुरिव सेति यथेवशब्दयोर्निर्वाहः ॥ ११ ॥ यैः ब्राह्मणैः दीर्घमायुरित्यादिष्टम् उपदिष्टम् । तेषां वचन मनृतमासीत् । अनृतत्वे हेतुमाह अल्पायुरसीति । अचिन्त्यपराक्रमेत्यनेन ते पराक्रमं दृष्ट्वा तैरुक्तम्, न तु शास्त्रं दृष्ट्वेति गम्यते ॥ १२ ॥ अथवा तेषामनृतवादित्वं नास्त्येव किन्तु तवैव भाग्यविपर्यासात्तेषामपि प्रज्ञा नष्टेति पक्षान्तरमवलम्बते—अथवेति । प्रभवत्यस्मादिति प्रभवः । भूतानां

अग्रतः संवृत्तः, ममापचारं विनैव कथं मृतोऽसीत्यर्थः ॥ ९ ॥ दुःखादित्यादिसार्धश्लोक एकं वाक्यम् । यस्त्वं मां त्रातुमुद्यतः सोऽपि त्वं संहृत्य राक्षसैर्विनि पातितस्सन् मम कारणान्निहतः । अतो दुःखाद् दुःखं प्रपन्नायाः शोकसागरे मग्नायाः मम, इतः परं मरणमेव वरमिति शेषः ॥१०॥ वत्सला कौसल्या वत्सेन त्वया धेनुर्यथा धेनुरिव विवत्सा कृतेति योजना ॥ ११ ॥ आदिष्टमिति । अनृतत्वे हेतुमाह अल्पायुरसीति ॥ १२ ॥ अथवा न तेषामनृतवादित्वम्, तव भाग्यविपर्ययात्

स०—प्राज्ञस्यापि सतस्तव बुद्धिमत्त्वेन सम्प्रतिपन्नस्यापि तव प्रज्ञा नश्यत्यथवा नष्टा किमित्यर्थः । अव्ययानामनेकार्थत्वादथवेति किमर्थः । एतादृशस्यापि बुद्धिभ्रंश ईशायत्त इत्याह—पचतीति । हि यतः भूतानां कालः प्रभवः उत्पादकः । भूतानां कालः संहारकश्च । तत एनं भूतसङ्घं पचति पाचयति । तत्तत्कर्मानुरोधेन बुद्धिभ्रंशं वा सद् बुद्धिं वा दत्त्वा तत्तत्फलं भोजयति । अथवा अथवेति श्लोकः पूर्वोक्तपक्ष एव

कारणभूतः । अयं कालः परमात्मा । यथा येन प्रकारेण  एवं त्वमसि विषयभूतम् । पचति पक्वकर्माणं करोति । तथा प्राज्ञस्य भविष्यदर्थवेदिनोऽपि सतः सत्पुरुषस्य प्रज्ञा । तव त्वयि विषयें । नश्यति नष्टेत्यर्थः । यद्वा पूर्वमचिन्त्यपराक्रमेति तव कथं विपत्तिरित्यभिप्रायेण सम्बोधितम् । तत्र पक्षान्तरमाह—अथवेति । एनं रामम् । येन प्रकारेण कालः पचति तथाऽस्य प्राज्ञस्यापि प्रज्ञा नश्यति । अतो विपत्तिरियमिति भावः ॥ १३ ॥ हि यस्माद् व्यसनानां वर्जने प्रतिरोधे कुशलोऽसि । अतः अदृष्टम् अचिन्तितं सौप्तिकत्वेनादृष्टं वा मृत्युम् । कस्मादापन्नः कथमापन्नोऽसीत्यर्थः ॥ १४ ॥

अदृष्टं मृत्युमापन्नः कस्मात्त्वं नयशास्त्रवित् । व्यसनानामुपायज्ञः कुशलो ह्यसि वर्जने ॥ १४ ॥
तथा त्वं सम्परिष्वज्य रौद्रयाऽतिनृशंसया । कालरात्र्या ममाच्छिद्य हृतः कमललोचन ॥ १५ ॥
उपशेषे महाबाहो मां विहाय तपस्विनीम् । प्रियामिव समाश्लिष्य पृथिवीं पुरुषर्षभ ॥ १६ ॥

रौद्रया क्रूरया । कालरात्र्या यस्यां रात्रौ समुद्रतीरे निविष्टोऽसि तया रात्र्या । सम्परिष्वज्य । मम मत्तः । आच्छिद्य अपहृत्य । तथा हृतोऽसीति सम्बन्धः । यद्वा मयेतिं पाठः । रौद्रया अतिनृशंसया । अत्यन्तनिर्दयया कालरात्र्या कर्त्र्या । मया करणभूतया । संपरिष्वज्य आच्छिद्य बलात्कृत्य । तथा हृत इति । कालरात्रिर्नाम सर्वभूतापहारिणी काचन शक्तिः । यद्वा मया कालरात्र्येति व्यस्तरूपकम् । सम्परिष्वज्य त्वमाच्छिद्य बलाद्धृतोऽसीति, घोरवैधव्यलक्षणयुक्तत्वेन क्रूराया मे परिष्वङ्ग एव तेऽन्तहेतुरासीदित्यर्थः । शिरश्छेदादेरश्लीलत्वेन तथेत्युक्तम् । कमललोचनेति हेतुगर्भम् । कमललोचनत्वात् त्वं कालरात्र्या हृतोऽसि । परिकरानुप्राणितरूपकालङ्कारः ॥१५॥ उपशेष इति । तपस्विनीं शोचनीयाम् । प्रियां मत्तः प्रियाम् ।

तेषामपि प्रज्ञा नष्टेति पक्षान्तरमवलम्बते—अथवेति । भूतानां प्रभवः कालो यथा येन कारणेन एनं त्वां पचति मारयति तेन कारणेन प्राज्ञस्यापि सतः भविष्यदर्थज्ञानवतोऽपि सत्पुरुषस्य त्वद्विषये प्रज्ञा नश्यतीत्यर्थः ॥ १३ ॥ अदृष्टमिति । व्यसनानां वर्जने प्रतिरोधे कुशलोऽसि अथवाप्येतादृशोपायज्ञः । अदृष्टमचिन्तितं मृत्युं कस्मादापन्नः कथं प्राप्नोषीति योजना ॥ १४ ॥ कमललोचन ! मया हेतुना, रौद्रया नृशंसया कालरात्र्या सम्परिष्वज्य आच्छिद्य

-पक्षान्तरमाश्रित्य प्रवृत्तः । प्राज्ञस्यापि सतः दैवज्ञसदृशस्य तव विषये प्रज्ञा नश्यति नष्टा, अतस्तद्वचनानृतीभवनमुचितम् । तन्नाशे निमित्तमाह पचतीति । एनं दैवज्ञं भूतानां प्रभवः कालः प्रभवोऽस्यास्तीत्यच् प्रभवत्यस्मिन्निति वा उत्पत्तिकालः । तथा यथावचनमनृतं भवेत्तथा पचति परिपाकं नयति, तस्यातिसूक्ष्मत्वादिति भावः । पूर्वं दैवज्ञैरिति बहुवचनम् अत्र प्राज्ञस्येत्येकवचनं च वक्तारो बहुलाः, प्रज्ञा तु त्वदेकोच्छ्रायविषयेति सम्भवतः ॥ १३

स०—प्रियामिव मदपेक्षया पृथिवीं नारीं तद्रूपां रमणीम्, आलिङ्ग्येति शेषः । यद्वा प्रियां तपस्विनीं नारीं भार्यां सामिव पृथिवीं पितृपितामहादिपालितामपि विहाय इह रक्षोरक्षितक्षितौ शेष इत्यर्थः ॥ १६

पुरुषर्षभेत्यनेन दक्षिणस्य शठत्वमनुचितमिति द्योत्यते ॥ १६ ॥ अर्चितमिति । मया सह । तव त्वया । यदर्चितं तत्ते धनुः इदम् एतादृशंजातमित्यर्थः ॥ १७ ॥ पित्रेति । सर्वैः पितृभिः सार्धं स्थितेन दशरथेन समागत इति संबन्धः ॥१८॥ दिवीति । महत्कर्मकृतां महाकर्मकृताम् । आत्वाभाव आर्षः । प्रियं कर्मफलत्वेन काङ्क्षणीयं पुण्यम् । आत्मनो राजर्षिवंशम् इक्ष्वाकुप्रमुखम्, दिवि नक्षत्रभूतः विमानस्थः सन् समवेक्षसे पश्यसि ॥ १९ ॥ किमिति ।

अर्चितं सततं यत्तत् गन्धमाल्यैर्मया तव । इदं ते मत्प्रियं वीर धनुः काञ्चनभूषणम् ॥ १७ ॥
पित्रा दशरथेन त्वं श्वशुरेण ममानघ । सर्वैश्च पितृभिः सार्धं नूनं स्वर्गे समागतः ॥ १८ ॥
दिवि नक्षत्रभूतस्त्वं महत्कर्मकृतां प्रियम् । पुण्यं राजर्षिवंशं त्वमात्मनः समवेक्षसे ॥ १९ ॥
किं मां न प्रेक्षसे राजन् किं मां न प्रतिभाषसे । बालां बाल्येन सम्प्राप्तां भार्यां मां सहचारिणीम् ॥ २० ॥
संश्रुतं गृह्णता पाणिं चरिष्यामीति यत्त्वया । स्मर तन्मम काकुत्स्थ नय मामपि दुःखिताम् ॥ २१ ॥

बालां बाल्येन संप्राप्ताम् बाल्य एव त्वयोढामित्यर्थः । भार्यां सदा भर्तुं योग्याम् । माम् एतादृशावस्थामापन्नां सहचारिणीं मां किं न प्रेक्षसे किं न प्रतिभाषस इति सम्बन्धः ॥ २० ॥ संश्रुतमिति । मम पाणिं गृह्णता त्वया चरिष्यामि सहचरिष्यामीति यत् संश्रुतं प्रतिज्ञातम् तत् स्मर । स्मृत्वा

बलात्कृत्य त्वं तथा हत इति योजना । कालरात्रिः सर्वभूतापहारिणी काचन शक्तिः ॥ १५ ॥ १६ ॥ मया सह तव त्वया अर्चितं धनुरिदमेतादृशं जातमित्यर्थः ॥ १७ ॥ सर्वैः पितृभिस्सार्धं स्थितेन दशरथेन समागत इति सम्बन्धः ॥ १८ ॥ महत्कर्मकृतां महान्तश्च ते कर्मकृतश्च तेषां प्रियं कर्मफलत्वेन काङ्क्षणीयम् आत्मनः पुण्यं राजर्षिवंशं दिवि नक्षत्रभूतस्त्वं समुपेक्षस इति सम्बन्धः ॥ १९ ॥ २० ॥ त्वया सह चरिष्यामीति मम पाणिं गृह्णता भवता यत्संश्रुतं

स०—सर्वैः पितृभिः पितामहादिभिस्सार्धं स्थितेन, त्वदपेक्षया पूर्वं गतत्वात् । पित्रा श्वशुरेण दशरथेन स्वर्गे समागतः मिलितः । "पितामहाद्याश्च पितरो नाम कीर्तिताः" इत्यैतरेयभाष्योक्तेः पितामहादीनां पितृशब्दवाच्यता सम्भवति । अनघेत्यनेन पुण्यलभ्यस्वर्गगतियोग्यतां सूचयति ॥ १८ ॥ दिवि नक्षत्रभूतस्त्वं महत्कर्मकृतं महतां कर्म महत्कर्म तत्कृतं महात्मनां पुण्यकर्मफलत्वेन प्राप्यं राजर्षिवंशम् इक्ष्वाकुवंशम् किमुपेक्षसे । बहुकर्म कृत्वाऽस्माकमिक्ष्वाकुवंशसम्भवः स्यादिति काङ्क्षितं वंशं किमुपेक्षसे, उपेक्ष्य गत इति यावत् । दिवि नक्षत्रभूतं प्रकाशमानमिति यावत् । महत्कर्मकृतं पुण्यं राजर्षिवंशं पित्रादिकं यथा राम ईक्षसे पश्यसि तत्र गतः । तथा पुण्यम् आत्मनो मम राजर्षिवंशं जनकवंशम् किमुपेक्षसे [illegible] ॥ १९ ॥

मामपि त्वत्समीपं नय ॥ २१ ॥ कस्मादिति । त्यक्त्वा मां विहाय दुःखितां मामपि प्रेयसीमपि माम् । अपहाय अस्माल्लोकात् अमुं लोकं परलोकम् । कस्माद्धेतोः गतोऽसि ॥ २२ ॥ कल्याणैरिति । यदित्यर्थे यत्तदित्यपि प्रयुज्यते । कल्याणैः मङ्गलैः । शुभैश्चन्दनादिभिर्वा सुवर्णाभरणैर्वा । उचितम् अभ्यस्तं यत्तच्छरीरं मयैव परिष्वक्तं नान्यया । एतदद्य क्रव्यादैः श्येनादिभिः विपरिकृष्यते । अत्र मयैवेत्यनेन रामस्य दारान्तरं नास्तीति गम्यते ॥ २३ ॥ अग्निष्टोमेति । वनवासनिवृत्त्यनन्तरं त्वम् आप्तदक्षिणैः पर्याप्तदक्षिणैः अग्निष्टोमादिभिर्यज्ञैः । इष्टवान् कृतदेवपूजनो भूत्वा । अग्नि



कस्मान्मामपहाय त्वं गतो गतिमतां वर । अस्माल्लोकादमुं लोकं त्यक्त्वा मामपि दुःखिताम् ॥ २२ ॥
कल्याणैरुचितं यत्तत् परिष्वक्तं मयैव तु । क्रव्यादैस्तच्छरीरं ते नूनं विपरिकृष्यते ॥ २३ ॥
अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः । अग्निहोत्रेण संस्कारं केन त्वं तु न लप्स्यसे ॥ २४ ॥
प्रव्रज्यामुपपन्नानां त्रयाणामेकमागतम् । परिप्रक्ष्यति कौसल्या लक्ष्मणं शोकलालसा ॥ २५ ॥
स तस्याः परिपृच्छन्त्या वधं मित्रबलस्य ते । तव चाख्यास्यते नूनं निशायां राक्षसैर्वधम् ॥ २६ ॥

होत्रेण यज्ञीयवह्निना संस्कारं केन हेतुना न लप्स्यसे ? अत्र वनवासात्पूर्वमग्न्याधानाद्यभावात्तन्निवृत्त्यनन्तरमाधानाग्निष्टोमादिकमनुष्ठाय पश्चात् क्रमप्राप्तायुरवसाने यज्ञीयाग्निभिः संस्कारं प्राप्तुं योग्यस्त्वं कथमेवं मध्ये मरणं प्राप्तोऽसीति भावः । अनेन वनवासात्पूर्वं रामेण यज्ञादिकं नानुष्ठितमिति सूच्यते । अयमर्थोऽयोध्याकाण्डे सम्यक्प्रतिपादितः ॥ २४ ॥ प्रव्रज्यामिति । प्रव्रज्यां प्रवासम् । "व्रजयजोर्भावे क्यप्" इति क्यप् । उपपन्नानां प्राप्तानाम् । त्रयाणां रामादीनां मध्ये एकं लक्ष्मणमागतम् । शोकलालसा शोकमन्दा कौसल्या परिप्रक्ष्यति ॥२५॥ स इति । सः लक्ष्मणः ।

तत् स्मर । हे काकुत्स्थ ! दुःखितां मामपि नयेति सम्बन्धः ॥ २१ ॥ २२ ॥ कल्याणैरिति । यत्त्वदीयं कल्याणैर्मङ्गलैरुचितं यत् तच्छरीरं मयैव परिष्वक्तं तदेवाद्य क्रव्यादैर्विपरिकृष्यत इति सम्बन्धः ॥ २३ ॥ अग्निहोत्रेण वैतानाग्निना ॥ २४ ॥ प्रव्रज्यां प्रवासम् ॥ २५ ॥ मित्रबलस्य वानरबलस्य ॥ २६ ॥

स०—त्वामपहाय अगतिमताम् अगतिरिति मतां गतिरहितेति सम्मतां मां रमारूपिणीं माम । दुःखितां तद्वद्दिघमानां मां कस्मात्यक्त्वा गत इत्यन्वयः । दुःखातिशयाद्वा पुनरुक्तिः । "परिहासे प्रलापे च वागनर्थापि दृश्यते ।" अनर्था निरर्था । चरितार्थत्वेनानधिकार्येति दीपिकाव्याख्यानात् ॥ २२ ॥

परिपृच्छन्त्यास्तस्याः ते मित्रबलस्य वधं तव वधं चाख्यास्यते ॥२६॥ सेति । सुप्तं हतं सुप्तत्वदशायां हतमित्यर्थः । अवदीर्णेन भिन्नेन हृदयेनोपलक्षिता सा न भविष्यति न जीविष्यति ॥ २७ ॥ ममेति । अनार्यायाः दुःशीलायाः मम हेतोः मन्निमित्तम् । अनर्हः एतादृशसौप्तिकवधानर्हः । सागरमुत्तीर्य गोष्पदे हतः, खरतरखरादीन् हत्वा क्षुद्रेण प्रहस्तेन हत इत्यर्थः ॥ २८ ॥ रामानु०—अनर्हः एतादृशवधानर्हः । गोष्पदे हतः । अतिबलपराक्रमखरदूषणादिचतुर्दशसहस्र राक्षसापेक्षया हन्तुः प्रहस्तस्य गोष्पदत्वोक्तिः ॥ २८ ॥ स्वकुलपांसनी स्वकुलदूषणी । अहं मोहात् अज्ञानात् दाशरथेनोढाऽस्मि । अतो रामस्य भार्यैव मृत्यु

सा त्वां सुप्तं हतं श्रुत्वा मां च रक्षोगृहं गताम् । हृदयेनावदीर्णेन न भविष्यति राघव ॥ २७ ॥ मम हेतोरनार्याया ह्यनर्हः पार्थिवात्मजः । रामः सागरमुत्तीर्य सत्त्ववान् गोष्पदे हतः ॥२८॥ अहं दाशरथेनोढा मोहात् स्वकुलपांसनी । आर्यपुत्रस्य रामस्य भार्या मृत्युरजायत ॥२९॥ नूनमन्यां मया जातिं वारितं दानमुत्तमम् । याऽहमद्येह शोचामि भार्या सर्वातिथेरपि ॥३०॥ साधु पातय मां क्षिप्रं रामस्योपरि रावण । समानय पतिं पत्न्या कुरु कल्याणमुत्तमम् ॥ ३१ ॥ शिरसा मे शिरश्चास्य कायं कायेन योजय । रावणानुगमिष्यामि गतिं भर्तुर्महात्मनः * ॥ ३२ ॥

रजायत ॥ २९ ॥ नूनमिति । मया अन्यां जातिं प्राप्य । यद्वा अन्यां जातिम् अन्यस्मिन् जन्मनि । उत्तमं दानं वारितम्, कन्यादानं वारितमित्यर्थः । तत्र हेतुमाह येति । सर्वे अतिथयो यस्य तस्य सर्वातिथेः । सर्वरक्षितुरित्यर्थः । सर्वातिथिपूजकस्येति वाऽर्थः । भार्यापि याऽहम् इह जन्मनि अद्य भोगकाल एव शोचामि ॥ ३० ॥ साध्विति । समानय योजय । उत्तमं कल्याणं पतिसंयोगरूपम् ॥ ३१ ॥ ३२ ॥

न भविष्यति न जीविष्यति ॥ २७ ॥ अनर्हः । एवंविधवधानर्हः । सागरमुत्तीर्य गोष्पदे हतः, दुर्धरान् खरादीन् हत्वा दुर्बलेन प्रहस्तेन हत इत्यर्थः ॥२८॥ स्वकुलपांसनी अहं दाशरथेन रामेण यस्मादूढा आर्यपुत्रस्य रामस्य भार्या भार्यैव मृत्युरजायतेति सम्बन्धः ॥२९॥ अन्यां जातिम् अन्यस्मिन्नपि जन्मनीत्यर्थः । उत्तमं दानमित्यनेन कन्यादानं विवक्षितम् । सर्वातिथेः सर्वे अतिथयो यस्य तस्य सर्वातिथिपूजकस्य भार्याऽहं शोचामीति सम्बन्धः ॥३०॥ समानय योजय ॥३१–३२॥

* मुहूर्तमपि नेच्छामि जीवितुं पापजीविता । श्रुतं मया वेदविदां ब्राह्मणानां पितुर्गृहे ॥ यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः । क्षमा यस्मिन् दमस्त्यागः सत्यं धर्मः कृतज्ञता ॥ अहिंसा चैव भूतानां तमृते का गतिर्मम ॥ इत्यधिकः पाठः केषुचित्पुस्तकेषु दृश्यते ॥

शिरः धनुश्च । तत्र पुरोदेशे ॥ ३३ ॥ एवमिति । लालप्यमानायां प्रलपन्त्याम् । भर्तारं रावणम् । अनीकस्थः द्वाररक्षी । ननु लौकिकीषु काचिदिव सीता भर्तृशिरस्साक्षात्कारेऽपि चिरं रुदित्वा विलप्य कथं जीवितं धारयति स्म ? उच्यते—अनयोर्दिव्यदम्पत्योः परस्परसत्तैव जीवितधारणे निमित्तम्, नतु ज्ञानाज्ञाने । अतो भर्तुर्जीवितवैकल्याभावात्सा जीवति स्म ॥ ३४ ॥ विजयस्वेति । अनुप्राप्तम्, द्वारीति शेषः ॥ ३५ ॥ वयमिति ।

इति सा दुःखसन्तप्ता विललापायतेक्षणा । भर्तुः शिरो धनुस्तत्र समीक्ष्य च पुनः पुनः ॥ ३३ ॥ एवं लालप्यमानायां सीतायां तत्र राक्षसः । अभिचक्राम भर्त्तारमनीकस्थः कृताञ्जलिः ॥ ३४ ॥ विजयस्वार्यपुत्रेति सोऽभिवाद्य प्रसाद्य च । न्यवेदयदनुप्राप्तं प्रहस्तं वाहिनीपतिम् ॥ ३५ ॥ अमात्यैः सहितैः सर्वैः प्रहस्तः समुपस्थितः । तेन दर्शनकामेन वयं प्रस्थापिताः प्रभो ॥३६॥ नूनमस्ति महाराज राजभावात् क्षमान्वितम् । किंचिदात्ययिकं कार्यं तेषां त्वं दर्शनं कुरु ॥ ३७ ॥ एतच्छ्रुत्वा दशग्रीवो राक्षसप्रतिवेदितम् । अशोकवनिकां त्यक्त्वा मन्त्रिणां दर्शनं ययौ ॥ ३८ ॥ स तु सर्वं समर्थ्यैव मन्त्रिभिः कृत्यमात्मनः । सभां प्रविश्य विदधे विदित्वा रामविक्रमम् ॥३९॥

भयेन बहुवचनम्, बहूनामन्तःपुरे समागमासम्भवात् ॥ ३६ ॥ प्रहस्तेन प्रेषितोऽपि कथमनवसरे समागतोऽसीत्याशङ्क्याह—नूनमिति । राजभावात् राजत्वाद्धेतोः । क्षमान्वितम्, तदानीमेव कर्तव्यत्वेऽपि तव राजभावात् क्षमया त्वदाज्ञाप्रतीक्षणेनान्वितम् । आत्ययिकम् आतिपातिकम् । किंचित् कार्यमस्ति नूनम् । तत्तस्मात्तेषां प्रहस्तादीनां दर्शनं कुर्वित्यन्वयः ॥ ३७ ॥ ३८ ॥ स रावणः । रामविक्रमं विदित्वा सभां प्रविश्य आत्मनः सर्वं कृत्यं मन्त्रिभिः सह समर्थ्य निश्चित्य विदधे, प्रकृतकार्यमिति शेषः ॥ ३९ ॥

एवमिति । भर्तारं रावणम् । अनीकस्थः द्वाररक्षी राक्षसः ॥३४॥ आर्यपुत्रशब्दो यद्यपि स्त्रीभिर्भर्तरि प्रयोज्यते प्रायेण, तथापि पूज्यमात्रे सामान्यतः प्रयोगोऽपि बोध्यः ॥ ३५ ॥ ३६ ॥ प्रहस्तेन प्रेषितोऽपि कथमनवसरे समागतोऽसीत्याशङ्क्याह—नूनमिति । हे महाराज ! राजभावात् क्षमान्वितं तदानीमेव कर्तव्यत्वेऽपि तव राजभावात् राजत्वाद्धेतोः क्षमया त्वदाज्ञाप्रतीक्षणेनान्वितम्, आत्ययिकं प्रयाससाध्यं किञ्चित्कार्यमस्ति नूनम्, तस्मात्तेषां प्रहस्तादीनां दर्शनं कुर्विति योजना ॥३७॥ मन्त्रिणां दर्शनम्, उद्दिश्येति शेषः ॥ ३८ ॥ समर्थ्य निश्चित्य ॥ ३९ ॥ ४० ॥

निर्याणं निर्गमनम् ॥ ४० ॥ समर्थ्यैत्युक्तं विवृणोति-राक्षसेन्द्र इति । रामकार्यविनिश्चयं रामविषये स्वकृत्यानिश्चयम् ॥ ४१ ॥ ४२ ॥ स्फुटकोणाहतेन उल्बणवादनदण्डाहतिजनितेन । कार्ये कारणोपचारः । वक्तव्यं च न कारणमिति । युद्धार्थं निर्यातेति पुरे प्रवदन्ति चेद्बलाध्यक्षाः तदानीं देव्याः सन्निधौ



अन्तर्धानं तु तच्छीर्षं तच्च कार्मुकमुत्तमम् । जगाम रावणस्यैव निर्याणसमनन्तरम् ॥ ४० ॥ राक्षसेन्द्रस्तु तैः सार्धं मन्त्रिभिर्भीमविक्रमैः । समर्थयामास तदा रामकार्यविनिश्चयम् ॥ ४१ ॥ अविदूरस्थितान् सर्वान् बलाध्यक्षान् हितैषिणः । अब्रवीत् कालसदृशो रावणो राक्षसाधिपः ॥ ४२ ॥ शीघ्रं भेरीनिनादेन स्फुटकोणाहतेन मे । समानयध्वं सैन्यानि वक्तव्यं च न कारणम् ॥ ४३ ॥ ततस्तथेति प्रतिगृह्य तद्वचो बलाधिपास्ते महदात्मनो बलम् । समानयंश्चैव समागमं च ते न्यवेदयन् भर्तरि युद्धकांक्षिणि ॥ ४४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

कथितं स्वकीयं रामसैन्यवधवृत्तान्तवाक्यमसत्यमिति तस्याः विदितं स्यादिति भावः ॥ ४३ ॥ आत्मनः आत्मनाम् । भर्तरि विषये ॥ ४४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥ ३२ ॥

राक्षसेन्द्र इति । रामकार्यविनिश्चयं रामविषयस्वकर्तव्यनिश्चयमित्यर्थः ॥ ४१ ॥ ४२ ॥ शीघ्रमिति । स्फुटकोणाहतेन उल्बणवादनदण्डहतेन । न च वक्तव्यं कारणं देव्याः पुरतः स्वोक्तं रामहननविषयवाक्यमसत्यमिति सीता ज्ञास्यतीति शङ्कया वक्तव्यं च न कारणमित्युक्तम् । "सा सीता तच्छिरो दृष्ट्वा तच्च कार्मुकमुत्तमम्" इत्यारभ्य "इति सा दुःखसन्तप्ता विललापायतेक्षणा" इत्यन्तानां सीताप्रलापवाक्यानां वास्तवार्थोऽयमाशयः—सीताऽपि रामशिरआदिकं मायाकल्पितमिति ज्ञात्वाऽपि तत्सत्यमिति मत्वेव मिथ्याप्रलापादिना राक्षसान् वञ्चयितुं बहुविधं प्रलपति ॥ ४३ ॥ ४४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां द्वात्रिंशः सर्गः ॥ ३२ ॥

अथ सरमा सीतां समाश्वासयति त्रयस्त्रिंशे—सीतामिति । मोहितां रामविषयविपरीतज्ञानवतीम् । सरमा विभीषणभार्या । प्रणयिनीं स्नेहवतीम् ॥ १ ॥ २ ॥ नतु राक्षस्यास्तस्याः कथं सख्यमाश्वासनं वेत्यत्राह—सा हीति । हि यस्माद्रावणादिष्टा रक्षन्ती सा आत्मना रक्ष्यमाणया मित्रं सखी कृता अत इत्यर्थः । रक्षन्ती तत्रतत्रावसरे सीताया योगक्षेमविधानं कुर्वतीत्यर्थः । रावणादिष्टा योगक्षेमे रावणेनादिष्टा । सानुक्रोशा सदया । अनेन सख्य

सीतां तु मोहितां दृष्ट्वा सरमा नाम राक्षसी । आससादाथ वैदेहीं प्रियां प्रणयिनीं सखीम् ॥ १ ॥ मोहितां राक्षसेन्द्रेण सीतां परमदुःखिताम् । आश्वासयामास तदा सरमा मृदुभाषिणी ॥ २ ॥ सा हि तत्र कृता मित्रं सीतया रक्ष्यमाणया । रक्षन्ती रावणादिष्टा सानुक्रोशा दृढव्रता ॥ ३ ॥ सा ददर्श ततः सीतां सरमा नष्टचेतनाम् । उपावृत्योत्थितां ध्वस्तां वडवामिव पांसुलाम् ॥ ४ ॥ तां समाश्वासयामास सखीस्नेहेन सुव्रता ॥ ५ ॥

करणे हेतुरुक्तः । दृढव्रता दृढप्रतिज्ञा । अनेन सख्यस्याप्रच्युतिर्दर्शिता ॥ ३ ॥ रामानु०—सा हीति । विभीषणभार्यायाः सरमायाः रक्षन्ती रावणादिष्टेति सीतारक्षणे रावणनियोगः प्रतीयते । उपरि " सखीस्नेहेन तद्भीरु मया सर्वं प्रतिश्रुतम् । लीनया गहने शून्ये भयमुत्सृज्य रावणात् ॥ " इति रावणभयाद् गूढावस्थानेन रावणोक्तवाक्यश्रवणं च प्रतीयते । विभीषणभार्याया रावणेन नियोगोऽनुचित इव प्रतिभाति । रावणनियुक्तत्वे तद्भयाद्गूढावस्थानमनुपपन्नमिति प्रतीयते । अत्र परिहारो विद्वद्भिश्चिन्तनीयः ॥ ३ ॥ आसादनानन्तरं तदवस्थादर्शनमाह—सेति । नष्टचेतनां विपरीतज्ञानवतीम् । उपावृत्य लुठित्वा । ध्वस्तां धूल्युपहताम् । वडवाम् अश्वस्त्रियम् । पांसुलां पांसुमतीम् ॥ ४ ॥ तामिति । पूर्वं करस्पर्शादिना समाश्वासनमुक्तम् । इदानीं रावणवृत्तान्तप्रदर्शनेनेति ज्ञेयम् ॥ ५ ॥

सीतामिति । सरमा विभीषणभार्या । विभीषणपत्नीयं सरमा सीतायां भक्तिमती । सा हि रावणेन ज्ञातसात्त्विकभावा अतिभर्त्सनेन नाशमाशङ्क्य सीताश्वासनार्थं सन्दिष्टेति बोध्यम् । प्रणयिनी स्नेहवती ॥ १ ॥ २ ॥ ननु विभीषणभार्यायाः सरमायाः कथं सख्यम् आश्वासनं वा ? तत्राह—सा हीति । हि यस्माद्रावणादिष्टा सीतां रक्षन्ती सा आत्मना रक्ष्यमाणया सीतया मित्रं सखी कृता । " ज्येष्ठा कन्याऽनला नाम विभीषणसुता कपे । तया ममेदमाख्यातं मात्रा प्रहितया स्वयम् " इति सुन्दरकाण्डे सीतयोक्तत्वात् अत्रापि सानुक्रोशेत्युक्तत्वाच्च विभीषणभार्यायास्सरमायास्सीतायास्सखित्वं तत्समाश्वासनञ्च युक्तमिति भावः । तत्र अशोकवनिकायाम् । सानुक्रोशा दुःखितेषु सदया । दृढव्रता प्राणैरपि मयैव रक्षणीयेति दृढप्रतिज्ञा ॥ ३ ॥ उपावृत्य लुठित्वा । ध्वस्तां पीडिताम् । अध्वश्रमेण

समाश्वसिहीत्यादि । स्वयं साक्षात् प्रत्युक्तं प्रलापरूपम्, सखीस्नेहेन सखीविषयस्नेहेन प्रतिश्रुतम् । प्रतिरुपसर्गमात्रम् ॥ ६ ॥ तदानीमसन्निहितया त्वया कथं श्रुतमित्यत्राह—लीनयेति । लीनया छन्नया । गगने कुत्रचित्तरुरन्ध्रे । गहन इति पाठे आवृत इत्यर्थः । शून्ये निर्जने । कथं घोराद्रावणा द्भयं त्यक्तम् ? तत्राह—तवेति । तव हेतोः त्वन्निमित्तम् । मे जीवितमपि न प्रियम् । तत्र हेतुर्विशालाक्षीति । तव नयनसौन्दर्यं पश्यन्त्या मे कथं त्वत्पीडा सोढव्येति भावः । ननु विभीषणभार्या कथं सीतारक्षणे रावणेन नियोगार्हा, नियोगे वा कथं तस्याः रावणभयाद्गूढावस्थानम् ? उच्यते—विभीषणा

समाश्वसिहि वैदेहि मा भूत्ते मनसो व्यथा। उक्ता यद्रावणेन त्वं प्रत्युक्तं च स्वयं त्वया । सखीस्नेहेन तद्भीरु मया सर्वं प्रतिश्रुतम् ॥ ६ ॥ लीनया गगने शून्ये भयमुत्सृज्य रावणात् । तव हेतोर्विशालाक्षि न हि मे जीवितं प्रियम् ॥ ७ ॥ स सम्भ्रान्तश्च निष्क्रान्तो यत्कृते राक्षसाधिपः । तच्च मे विदितं सर्वमभिनिष्क्रम्य मैथिलि ॥ ८ ॥ न शक्यं सौप्तिकं कर्तुं रामस्य विदितात्मनः । वधश्च पुरुषव्याघ्रे तस्मिन्नैवोपपद्यते ॥ ९ ॥

वस्थानकाले सीतायोगक्षेमपरामर्शायान्तरङ्गभूता सरमा नियुक्ता । तन्निर्गमनादिदानीमन्तरङ्गवार्ताश्रवणे भीताऽऽसीदिति न विरोधः । नियोगश्च दासीमुखेन । अदर्शनं च स्नुषात्वादिति च बोध्यम् । अन्येयं सरमेत्येके ॥ ७ ॥ मे मया । यत्कृते यन्निमित्तम् । अभिनिष्क्रम्य बहिर्निर्गम्य ॥ ८ ॥ मा भूदस्मदवगमः उपपत्तिश्च तत्र नास्तीत्याह—न शक्यमिति । सौप्तिकं सुप्तौ मारणम् । न केवलमशक्यत्वम्, रामस्य पुरुषधौरेयतया वधयोग्यतापि

शोकेन च ॥४॥५॥ स्वयं रावणः त्वया प्रत्युक्त इति सम्बन्धः । सखीस्नेहेन हेतौ तृतीया ॥ ६ ॥ लीनयेति रावणाद्भयमुत्सृज्य गहने आवृतप्रदेशे शून्ये निर्जने लीनया तत् रावणेनोक्तं श्रुतमिति सम्बन्धः ॥ ७ ॥ सः रावणः यत्कृते निष्क्रान्तः तच्च तदपि विदितमिति सम्बन्धः ॥ ८ ॥ सौप्तिकं कर्म सुप्तमारणम् । वधः जाग्रदवस्थायां हननम् ॥ ९ ॥

स०—अत्यनावश्यकत्वादनन्तरं वदिष्यामीत्यादौ भववार्ताजीवातुं सीताया वदिष्यन्ती ततोऽप्यादौ मोहमपहन्तीत्याह—न शक्यमिति । सौप्तिकं स्वापसमयव्यापारः । तत्र निमित्तमाह—विजितेति । विजितात्मनः जितमनस्कस्य । विदितात्मन इति पाठे—विदितः अयं फलिष्यतीति ज्ञातः आत्मा यत्नो येन स तथेत्यर्थः । पुरुषव्याघ्रे जाग्रति सति वधश्च स्वप्नो वा जागरकालिको वा नोपपद्यते ॥ ९ ॥

नास्तीत्याह वधश्चेति ॥ ९ ॥ एवं वानरवधोऽप्यनुपपन्न इत्याह—न त्विति । स्वबलाद्रामबलाच्च न वानरा हन्तुं शक्या इत्यर्थः ॥ १० ॥ न केवलं बला दिना, सौभाग्यलक्षणादिभिरप्यतदर्हो राम इत्याह श्लोकत्रयेण—दीर्घेत्यादिना । श्रीमान् कान्तिमान् । प्रतापवान् तेजिष्ठः । संहननोपेतः शोभनावयव संस्थानः । लक्ष्मणेन सह रक्षितेत्यन्वयः । श्रीमान् विजयश्रीमान् ॥ ११–१३ ॥ कथं तर्हि शिरःप्रभृतिप्रापणम् ? तत्राह—अयुक्तेति । अयुक्तबुद्धि

न त्वेव वानरा हन्तुं शक्याः पादपयोधिनः । सुरा देवर्षभेणेव रामेण हि सुरक्षिताः ॥ १० ॥ दीर्घवृत्तभुजः श्रीमान् महोरस्कः प्रतापवान् । धन्वी संहननोपेतो धर्मात्मा भुवि विश्रुतः ॥ ११ ॥ विक्रान्तो रक्षिता नित्यमात्मनश्च परस्य च । लक्ष्मणेन सह भ्रात्रा कुलीनो नयशास्त्रवित् ॥ १२ ॥ हन्ता परबलौघानामचिन्त्यबलपौरुषः । न हतो राघवः श्रीमान् सीते शत्रुनिबर्हणः ॥ १३ ॥ अयुक्तबुद्धिकृत्येन सर्वभूतविरोधिना । इयं प्रयुक्ता रौद्रेण माया मायाविदा त्वयि ॥ १४ ॥ शोकस्ते विगतः सर्वः कल्याणं त्वामुपस्थितम् । ध्रुवं त्वां भजते लक्ष्मीः प्रियं प्रीतिकरं शृणु ॥ १५ ॥ उत्तीर्य सागरं रामः सह वानरसेनया । सन्निविष्टः समुद्रस्य तीरमासाद्य दक्षिणम् ॥ १६ ॥

कृत्येन अनर्हबुद्धिव्यापारेण । मायाशिरोदर्शनबुद्धेस्तत्कृत्यस्य चात्मलाघवहेतुत्वादिति भावः ॥ १४ ॥ भजते, भविष्यत्सामीप्ये लट्प्रयोगः । प्रियं प्रियवचनम् ॥ १५ ॥ सन्निविष्टः स्थितः ॥ १६ ॥

सर्ववानरहननमप्यशक्यमित्याह—न त्वेवेति ॥ १० ॥ आजानुबाहुत्वादिभाग्यलक्षणे धार्मिकत्वे पौरुषे नयज्ञतायां चेत्येतेषु विचारितेषु तस्य वध्यत्वमिह नास्ती त्याह—दीर्घवृत्तभुज इत्यादिश्लोकत्रयेण ॥ ११–१३ ॥ कथं तर्हि तदीयधनुश्शिरसोरानयनम् ? तत्राह—अयुक्तेति । अयुक्तबुद्धिकृत्येन अनर्हबुद्धिव्यापारेण ॥ १४ ॥ तव भाग्यलक्षणे विचार्यमाणे तव शोकोऽनर्ह इत्याशयेनाह—शोक इति । प्रियं प्रियवचनम् । भजते भजिष्यति ॥ १५ ॥ १६ ॥

स०—देवर्षभेण नारायणेन सुरा इव वानराः रामेण हि यतः सुरक्षिताः अतो न हन्तुं शक्या इत्यन्वयः ॥ १० ॥ प्रियं प्रियवचनम् । ते त्वां भजते, सर्वेऽपि प्रियवक्तारो भविष्यन्तीति भावः । ते तव विषये । प्रियं मम वचनं शृणु । त्वां ध्रुवं भजते, धव इति शेषः । लक्ष्मीश्च भजते । हे भवति ! ते प्रियवचनमिति नागोजिभट्टव्याख्यानं मूलकोशेषु पञ्चषेषु भवतिपाठादर्शनात् । "श्रुवः शृ च" इति श्रादेशे शृणुशब्दो लभ्वादिरिति भवतीकारगौरवानापादक इति चासमञ्जसम् ॥ १६ ॥

सागरान्तस्थैः सागरतीरस्थैः ॥१७॥ तीर्णः तीर्णवान् । प्रवृत्तिर्वार्ता ॥१८॥ एष मन्त्रयत इति सांनिध्यद्योतनाय॥१९॥ सीतया सह शुश्रावेत्यन्वयः सर्वोद्योगेन सर्वप्रयत्नेन, जनितमिति शेषः। शब्दं सिंहनादम् ॥२०॥ दण्डनिर्घातवादिन्याः दण्डाहत्या शब्दायमानायाः ॥ २१ ॥ भेरिका, ताडचत इति शेषः। तोयदनिस्वनं तोयदनिस्वनतुल्यम् ॥ २२ ॥ कल्प्यन्ते आकल्प्यन्ते, अलंक्रियन्त इत्यर्थः। युज्यन्ते रथवाजिनः रथेषु वाजिनो

अनेन प्रेषिता ये च राक्षसा लघुविक्रमाः। राघवस्तीर्ण इत्येव प्रवृत्तिस्तैरिहाहृता ॥१८॥ स तां श्रुत्वा विशालाक्षि प्रवृत्तिं राक्षसाधिपः। एष मन्त्रयते सर्वैः सचिवैः सह रावणः ॥ १९ ॥ इति ब्रुवाणा सरमा राक्षसी सीतया सह। सर्वोद्योगेन सैन्यानां शब्दं शुश्राव भैरवम् ॥ २० ॥ दण्डनिर्घातवादिन्याः श्रुत्वा भेर्या महास्वनम्। उवाच सरमा सीतामिदं मधुरभाषिणी ॥२१॥ सन्नाहजननी ह्येषा भैरवा भीरु भेरिका। भेरीनादं च गम्भीरं शृणु तोयदनिस्वनम् ॥२२॥ कल्प्यन्ते मत्तमातङ्गा युज्यन्ते रथवाजिनः। हृष्यन्ते तुरगारूढाः प्रासहस्ताः सहस्रशः ॥ २३ ॥ तत्र तत्र च सन्नद्धाः सम्पतन्ति पदातयः। आपूर्यन्ते राजमार्गाः सैन्यैरद्भुतदर्शनैः। वेगवद्भिर्नदद्भिश्च तोयौघैरिव सागरः ॥ २४ ॥ शस्त्राणां च प्रसन्नानां चर्मणां वर्मणां तथा। रथवाजिगजानां च भूषितानां च रक्षसाम् ॥ २५ ॥

(Opening verse fragment at top of main text:) दृष्टो मे परिपूर्णार्थः काकुत्स्थः सहलक्ष्मणः। स हि तैः सागरान्तस्थैर्बलैस्तिष्ठति रक्षितः ॥ १७ ॥

युज्यन्त इत्यर्थः। रथेत्यविभक्तिकनिर्देशो वा। हृष्यन्ते हर्षव्यापारं कुर्वन्ति ॥ २३ ॥ तत्र तत्रेति सार्धश्लोकः। सम्पतन्ति सङ्गीभवन्ति। सैन्यैः सेनासमवेतरथगजतुरगपदातिभिः। अद्भुतदर्शनैः, अलङ्कारविशेषैरिति शेषः। वेगवद्भिर्नदद्भिश्चेति पाठः॥२४॥ शस्त्राणामित्यादिश्लोकद्वयम्। प्रसन्नानां

सागरान्तस्थैः सागरतीरस्थैः ॥१७॥१८॥ तां प्रवृत्तिं राघवस्य सबलोत्तरणवार्ताम्। इतो निर्गत्येति शेषः। मन्त्रयते विचारयति ॥१९॥ शब्दं सिंहनादम्॥२०॥२१॥ सन्नाहो युद्धाय सन्नहनम् ॥ २२–२४ ॥ चर्मणां फलकानाम्। प्रसन्नानां शाणोल्लेखेन निर्मलानाम्। चर्म फलकम्। वर्म कवचम् ॥ २५ ॥

स०–परिपूर्णार्थः अलक्ष्यीकृतरक्षोप्यक्षत्वात्। सहितैः हितैः सक्षेमैर्वा तिष्ठति यः स दृष्टः ॥१७॥ यदयं रावणः प्रहस्ताद्वतो गतः तन्मे विदितमित्युक्तं, तदिदानीमावेदयति–अनेनेति। प्रवृत्तिः वार्ता ॥१८॥

निर्मलानाम् । चमणां फलकानाम् । भूषितानाम् अत एव प्रभां विसृजताम् उत्पादयताम् । उत्थिताम् ऊर्ध्वं प्रसृताम् । रूपं तेजः । नानौषधीवनदाहेन नानावर्णत्वं सिद्धम् । पश्येत्यत्रापि प्रभैव कर्म । यद्वा विसृज तामिति च्छेदः । तां प्रसिद्धाम् प्रभां पश्य । विसृज, शोकमिति शेषः ॥ २५ ॥ २६ ॥ घण्टानां गजघण्टानाम् । रथानां निस्वनं नेमिसङ्घट्टनजम् । हेषम् आणानामिति च्छेदः । आङ्पूर्वात् "अण शब्दे" इत्यस्माद्धातोः पचाद्यच् । आणानां शब्दायमानानाम् । हेषं शब्दम् । स्त्रीलिङ्गाभावः आर्षः । निस्वनमिति वा अनुवर्त्यते । तूर्यध्वनिं यथा तूर्यध्वनिमिव ॥२७॥ सम्भ्रमः सन्नाहः ।

प्रभां विसृजतां पश्य नानावर्णां समुत्थिताम् । वनं निर्दहतो घर्मे यथा रूपं विभावसोः ॥ २६ ॥ घण्टानां शृणु निर्घोषं रथानां शृणु निस्वनम् । हयानां हेषमाणानां शृणु तूर्यध्वनिं यथा ॥ २७ ॥ उद्यतायुधहस्तानां राक्षसेन्द्रानुयायिनाम् । सम्भ्रमो रक्षसामेष तुमुलो रोमहर्षणः ॥ २८ ॥ श्रीस्त्वां भजति शोकघ्नी रक्षसां भयमागतम् ॥ २९ ॥ रामः कमलपत्राक्षोऽदैत्यानामिव वासवः । विनिर्जित्य जितक्रोधस्त्वामचिन्त्यपराक्रमः । रावणं समरे हत्वा भर्ता त्वाऽधिगमिष्यति ॥ ३० ॥

तुमुलः सान्द्रः, दृश्यत इति शेषः ॥ २८ ॥ ध्रुवं त्वां भजते लक्ष्मीरित्युपक्रान्तमुपसंहरति–श्रीरिति । शोकघ्नी श्रीः विजयलक्ष्मीः भजति । भविष्यत्सामीप्ये लट्प्रयोगः ॥ २९ ॥ राम इत्यादिसार्द्धश्लोक एकान्वयः । कमलपत्राक्षः "श्रीर्न त्यजति रक्ताक्षम्" इति सामुद्रिकोक्तरीत्याऽवश्यं श्रीरूप तिष्ठति । तत्रापि श्रेष्ठे तत्रापि चक्षुषी इति नयनसौभाग्यलक्षणमव्यभिचारीति भावः । न केवलं सौभाग्यलक्षणेन श्रीः, प्रभावादपीत्याह अदैत्याना मिति । अदैत्यानां देवानां मध्ये वासव इव स्थितः । सर्वश्रेष्ठ इत्यर्थः । अचिन्त्यपराक्रमः एकेन शरेण मरुकान्तारवासिसकलदस्युवारणादप्रमेयपराक्रमः । तर्हि तादृशः किमिदानीं विलम्बत इत्यत्राह–जितक्रोध इति । रावणस्याभिमुखमनागमनात् क्रोधावकाशमलभमानस्तिष्ठतीति भावः । दैत्यानामिति द्वितीयार्थे षष्ठी वा । दैत्यान् वासव इव रावणं समरे हत्वा विनिर्जित्य शत्रुगृहादपनीय त्वामभिगमिष्यतीति योजना ॥ ३० ॥

प्रभां विसृजताम् उत्पादयताम् । पश्येत्यत्रापि प्रभैव कर्म ॥ २६–२९ ॥ राम इत्यादिसार्धश्लोक एकं वाक्यम् । वासवो यथा दैत्यानां निकटस्थां स्वीयलक्ष्मीमाहृतवान् एवं रामः रावणं समरे हत्वा विनिर्जित्य शत्रुगृहादपनीय त्वा त्वामधिगमिष्यतीति योजना ॥ ३० ॥

रामानु०—दैत्यानामित्यत्रापि समरशब्दो योजनीयः ॥३०॥ विष्णुना उपेन्द्रेण॥३१॥एवं शंसन्त्यास्ते किं फलम् ? तत्राह—आगतस्येति। चिरप्रवासादागतस्य दयिता दर्शने कोऽपि विकासो भवेत्स मया द्रष्टव्य इति भावः ॥ ३२ ॥ महोरस इत्यत्र समासान्तविधेरनित्यत्वात् कवभावः । समागम्य परिष्वज्य स्थितस्य तस्योरसि अश्रूणि वर्तयिष्यसीति योजना ॥ ३३ ॥ जघनं गतां नितम्बावलम्बिनीम् । बहून् मासान् धृतां बहुमासैर्धृताम् । अत्यन्तसंयोगे द्वितीया ।

विक्रमिष्यति रक्षस्सु भर्ता ते सहलक्ष्मणः। यथा शत्रुषु शत्रुघ्नो विष्णुना सह वासवः ॥३१॥ आगतस्य हि रामस्य क्षिप्रमङ्कगतां सतीम् । अहं द्रक्ष्यामि सिद्धार्थां त्वां शत्रौ विनिपातिते ॥३२॥ अश्रूण्यानन्दजानि त्वं वर्तयिष्यसि शोभने। समागम्य परिष्वज्य तस्योरसि महोरसः ॥३३॥ अचिरान्मोक्ष्यते सीते देवि ते जघनं गताम् । धृतामेतां बहून् मासान् वेणीं रामो महाबलः ॥ ३४ ॥ तस्य दृष्ट्वा मुखं देवि पूर्णचन्द्रमिवोदितम् । मोक्ष्यसे शोकजं वारि निर्मोकमिव पन्नगी ॥ ३५ ॥ रावणं समरे हत्वा नचिरादेव मैथिलि । त्वया समग्रः प्रियया सुखार्हो लप्स्यते सुखम् ॥ ३६ ॥ समागता त्वं वीर्येण मोदिष्यसि महात्मना । सुवर्णेण समायुक्ता यथा सस्येन मेदिनी ॥ ३७ ॥ गिरिवरमभितोऽनुवर्तमानो हय इव मण्डलमाशु यः करोति । तमिह शरणमभ्युपेहि देवं दिवसकरं प्रभवो ह्ययं प्रजानाम् ॥ ३८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

रामवियोगात्प्रभृति बद्धामेतां वेणीं मोक्ष्यते मोक्षयिष्यति । आर्षमात्मनेपदम् ॥ ३४ ॥ निर्मोकं त्वचम् । निर्मोकदृष्टान्तेन शोकाश्रुणो निःशेष निवृत्तिरुच्यते । अश्रुमूलं शोकं त्यक्ष्यसीति भावः ॥ ३५ ॥ समग्रः संपूर्णमनोरथः ॥ ३६ ॥ सस्येन समायुक्ता मेदिनी सुवर्णेण यथा तथा महात्मना रामेण समायुक्ता त्वं वीर्येण तच्छौर्येण मोदिष्यसि ॥ ३७ ॥ अथानिष्टनिवारणाय इष्टप्राप्तये च सूर्यनमस्कारं विदधाति—गिरिवरमिति । यः देवः ।

विष्णुना उपेन्द्रेण ॥ ३१–३३ ॥ मोक्ष्यते मोक्ष्यति । जघनं गतां नितम्बपर्यन्तावलम्बिनीम् ॥३४॥ निर्मोकं त्वचम् ॥३५॥ समग्रः सम्पूर्णमनोरथः ॥ ३६ ॥ सस्येन समायुक्ता मेदिनी सुवर्णेण यथेति सम्बन्धः ॥ ३७ ॥ गिरिवरं मेरुम् । मण्डलं प्रदक्षिणम् ॥ ३८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ 

गिरिवरं मेरुम् । अभितः परितः । "अभितःपरितः—" इत्यादिना द्वितीया । अनुवर्तमानः आनुकूल्येन चरन्, प्रादक्षिण्येन चरन्नित्यर्थः । इयोऽश्व इव मण्डलं मण्डलगतिम् आशु त्रिंशन्मुहूर्तैनैव करोति । देवं द्योतमानम् । दिवसकरं शरणं रक्षणम् । अभ्युपेहि गच्छ । वरणीयत्वे हेतुमाह प्रभव इति । अयं दिवसकरः प्रजानां देवतिर्यङ्मनुष्यस्थावराणां प्रभवः कारणम् । हिः प्रसिद्धौ । वर्षादिद्वारा जगदाप्यायक इत्यर्थः । "अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥" इत्युक्तेः । न पुनरत्र जगत्कारणत्वोक्तिः । अश्वोपमानेन स्वातिरिक्तपुरुषप्रेर्यत्वाभिधानात् । "भीषाऽस्माद्वातः पवते, भीषोदेति सूर्यः" इति श्रुतेः ॥२८॥ इति श्रीगो० श्रीरामा० रत्न० युद्धकाण्ड० त्रयस्त्रिंशः सर्गः॥३३॥

अथ तां जातसन्तापां तेन वाक्येन मोहिताम् । सरमा ह्लादयामास पृथिवीं द्यौरिवाम्भसा ॥ १ ॥ ततस्तस्या हितं सख्याश्चिकीर्षन्ती सखी वचः । उवाच काले कालज्ञा स्मितपूर्वाभिभाषिणी ॥ २ ॥ उत्सहेयमहं गत्वा त्वद्वाक्यमसितेक्षणे । निवेद्य कुशलं रामे प्रतिच्छन्ना निवर्तितुम् ॥ ३॥ न हि मे क्रममाणाया निरालम्बे विहायसि । समर्थो गतिमन्वेतुं पवनो गरुडोऽपि वा ॥४॥ एवं ब्रुवाणां तां सीता सरमां पुनरब्रवीत् । मधुरं श्लक्ष्णया वाचा पूर्वं शोकाभिपन्नया ॥ ५ ॥ समर्था गगनं गन्तुमपि वा त्वं रसातलम् । अवगच्छाम्यकर्तव्यं कर्तव्यं ते मदन्तरे ॥ ६ ॥

अथ सरमया रावणाशयपरिज्ञानं चतुस्त्रिंशे—अथ तामित्यादि । अथेति प्रथमश्लोकेन पूर्वसर्गोक्तानुवादः । तेन वाक्येन ह्लादयामासेत्यन्वयः । यद्वा तेन वाक्येन रावणवाक्येन ॥ १ ॥ सख्याः सीतायाः । सखी सरमा ॥ २ ॥ कुशलं कुशलप्रतिपादकं त्वद्वाक्यमित्यन्वयः । निवर्तितुमुत्सहेयं समर्थेत्यर्थः ॥ ३ ॥ बहुदूरं कथं गन्तुमर्हसीत्यत्राह—न हीति । क्रममाणायाः गच्छन्त्याः ॥ ४ ॥ मधुरं मधुरार्थकम् । श्लक्ष्णयेति वाङ्माधुर्योक्तिः । पूर्वं शोकाभिपन्नया सम्प्रति हृष्टयेत्यर्थः ॥ ५ ॥ सन्देशमाहरिष्यामीति वदन्तीं सरमां प्रति न गन्तव्यमित्युक्ते सख्यहानिः, रामं प्रति प्रेषणं

अथेति । तेन वाक्येन ह्लादयामासेति सम्बन्धः ॥ १ ॥ सख्यं सखीकृत्यम् ॥ २ ॥ कुशलं कुशलप्रश्नरूपं त्वद्वाक्यम् ॥ ३ ॥ ४ ॥ एवमिति । पूर्वं समाश्वासनात् पूर्वम् । शोकाभिपन्नया वाचाऽब्रवीदिति ॥ ५ ॥ मदन्तरे मद्विषये । अकर्तव्यमपि कर्तुमशक्यमपि । ते त्वया कर्तव्यमित्यवगच्छामीति सम्बन्धः ॥ ६ ॥

"तत्तस्य सदृशं भवेत्" इति स्थितायाः सीताया न युक्तम्, अतो व्याजेन निपुणं परिहरति–समर्थेति । मदन्तरे मद्विषये । अन्यैरकर्तव्यं कर्तुमशक्यं कार्यं त्वया कर्तव्यं कर्तुं शक्यमित्यवगच्छामि । यद्वा मद्विषये ते कर्तव्यम् अवश्यकरणीयं जानामीत्यर्थः ॥ ६ ॥ रावणं गत्वा स किं करोतीति ज्ञातुमिच्छामि, त्वत्कर्तृकं रावणज्ञानमिच्छामीत्यर्थः ॥ ७ ॥ तस्य ज्ञानस्य किं प्रयोजनमित्यत्राह–स हीति । पीतमात्रा सद्यः पीता । वारुणी

मत्प्रियं यदि कर्तव्यं यदि बुद्धिः स्थिरा तव । ज्ञातुमिच्छामि तं गत्वा किं करोतीति रावणः ॥ ७ ॥
स हि मायाबलः क्रूरो रावणः शत्रुरावणः । मां मोहयति दुष्टात्मा पीतमात्रेव वारुणी ॥ ८ ॥ तर्जापयति मां नित्यं भर्त्सापयति चासकृत् । राक्षसीभिः सुघोराभिर्या मां रक्षन्ति नित्यशः ॥ ९ ॥ उद्विग्ना शङ्किता चास्मि न स्वस्थं च मनो मम । तद्भयाच्चाहमुद्विग्ना अशोकवनिकां गता ॥ १० ॥ यदि नाम कथा तस्य निश्चितं वापि यद्भवेत् । निवेदयेथाः सर्वं तत् परो मे स्यादनुग्रहः ॥ ११ ॥ सा त्वेवं ब्रुवतीं सीतां सरमा वल्गुभाषिणी । उवाच वदनं तस्याः स्पृशन्ती बाष्पविक्लवम् ॥ १२ ॥

मद्यम् ॥ ८ ॥ तर्जापयति तर्जनं कारयति । भर्त्सापयति भर्त्सनं कारयति । आत्वपुगागमावार्षौ । या राक्षस्यो मां रक्षन्ति ताभिस्तर्जापयतीति सम्बन्धः । नासाग्रे अङ्गुलिन्यासनयनभ्रामणदन्तदर्शनप्रभृतिमुखचेष्टाभिर्भीजननं तर्जनम् । हनिष्यति दहिष्यतीत्यादिवाचा भीजननं भर्त्सनम् ॥ ९ ॥ कुत उद्विग्नेत्यत्राह तद्भयाचेति । कुतः शङ्कितेत्यत्राह अशोकवनिकां गतेति ॥ १० ॥ तस्य रावणस्य यदि नाम कथा यदि वार्ताऽस्ति । यच्च तस्य निश्चितम् अध्यवसाय इति यावत् । तत्सर्वं निवेदयेथाः । ततश्च मे परोऽनुग्रहः उपकारः कृतः स्यात् । या हि नामेति पाठः सम्यक् ॥ ११ ॥ सा त्विति । वल्गु सुन्दरं यथा तथा भाषितुं शीलमस्या अस्तीति वल्गुभाषिणी । बाष्पविक्लवं बाष्पव्याकुलम्, वदनं स्पृशन्ती परिमृजन्ती ॥१२॥ रामानु०–उवाच कर्तव्यमेवाह–मत्प्रियमिति । तं रावणं गत्वा रावणः किं करोतीति ज्ञातुमिच्छामि, त्वत्कर्तृकं रावणवृत्तान्तज्ञानमिच्छामीत्यर्थः ॥ ७ ॥ पीतमात्रेव वारुणी सद्यः पीता वारुणी, वारुणीपानहेतुना रावणो मां मोहयतीत्यर्थः ॥८–११॥ सा त्विति । बाष्पविक्लवं स्पृशन्ती बाष्पमोचनमपमार्जयन्ती ॥ १२–१९ ॥

वदनं तस्याः स्पृशन्ती बाष्पविक्लवमिति पाठः ॥ १२ ॥ एष त इति । तदा गच्छामीति पाठः । गृह्य ज्ञात्वा । उपावृत्तां च पुनरागतामेव पश्य तत्र सन्देहो नास्तीत्यर्थः ॥ १३–१५ ॥ स्वामेव आत्मानमेव, सरमामित्यर्थः । आत्मवाचिनः स्वशब्दस्य आबन्तत्वमार्षम् । भ्रष्टपद्मां पद्मासनहीनामित्यर्थः ॥ १६ ॥



एष ते यद्यभिप्रायस्तदा गच्छामि जानकि । गृह्य शत्रोरभिप्रायमुपावृत्तां च पश्य माम् ॥ १३ ॥ एवमुक्त्वा ततो गत्वा समीपं तस्य रक्षसः । शुश्राव कथितं तस्य रावणस्य समन्त्रिणः ॥१४॥ सा श्रुत्वा निश्चयं तस्य निश्चयज्ञा दुरात्मनः । पुनरेवागमत् क्षिप्रमशोकवनिकां तदा ॥१५॥ सा प्रविष्टा पुनस्तत्र ददर्श जनकात्मजाम् । प्रतीक्षमाणां स्वामेव भ्रष्टपद्मामिव श्रियम् ॥ १६ ॥ तां तु सीता पुनः प्राप्तां सरमां वल्गुभाषिणीम् । परिष्वज्य च सुस्निग्धं ददौ च स्वयमासनम् ॥ १७ ॥ इहासीना सुखं सर्वमाख्याहि मम तत्त्वतः । क्रूरस्य निश्चयं तस्य रावणस्य दुरात्मनः ॥१८॥ एवमुक्ता तु सरमा सीतया वेपमानया । कथितं सर्वमाचष्ट रावणस्य समन्त्रिणः ॥१९॥ जनन्या राक्षसेन्द्रो वै त्वन्मोक्षार्थं बृहद्वचः । अविद्धेन च वैदेहि मन्त्रिवृद्धेन बोधितः ॥ २० ॥ दीयतामभिसत्कृत्य मनुजेन्द्राय मैथिली । निदर्शनं ते पर्याप्तं जनस्थाने यदद्भुतम् ॥ २१ ॥

सुस्निग्धं स्नेहयुक्तं यथा तथा ॥ १७ ॥ इहेति । सुखमासीनेत्यन्वयः ॥ १८ ॥ वेपमानया किंवा भयं वक्ष्यतीति कम्पमानया ॥ १९ ॥ जनन्या कैकसीनाम्न्या अविद्धेन अविद्धाख्येन मन्त्रिवृद्धेन च राक्षसेन्द्रस्त्वन्मोक्षार्थं बृहद्वचनं बोधितः ॥ २० ॥ तदेव वचनं दर्शयति–दीयतामिति । जनस्थाने यदद्भुतं खरवधादिकं कृतं तदेव पर्याप्तं प्रमाणान्तरनिरपेक्षं निदर्शनं दृष्टान्तः, करिष्यमाणस्य रामपराक्रमस्येति शेषः ॥ २१ ॥

जनन्येति । जनन्या कैकस्या । अविद्धेन अविद्धाख्येन च मैथिली दीयतामिति बोधित इति सम्बन्धः ॥ २० ॥ जनस्थाने अद्भुतं खरादिवधं यत्कृतं तदेव पर्याप्तं

स०–स्वामेव आत्मीयामागतिम् । "आत्मीयायामिति । आत्मज्ञातिधनेषु तु स्त्रीत्वमेव नास्तीति भावः" इति मनोरमोक्तेरात्मवाचकत्वे स्वशब्दस्य स्त्रीलिङ्गत्वासम्भवात् । स्विकायामित्यादिश्रीहर्षादिप्रयोगाणामात्मीयत्वसंज्ञात्वादिना निर्वाहस्य तत्रैवोक्तेश्च । "अर्थान्तरे तु न स्त्री" इति कौमुदीवाक्यं धृत्वा आत्मज्ञातिधनेष्वित्यर्थ इति तत्त्वसुबोधिन्यभिधानाच्च । भ्रष्टपद्मां कमलं कन्दुकीकृत्य खेलनसमये हस्तविच्युतलतादिलीननालिकां श्रियं लक्ष्मीमिव ॥ १६ ॥

तिष्ठतु रामः तद्भृत्यो हनुमानेव सर्वान् राक्षसान् जेतुं समर्थ इत्याशयेन तत्पराक्रमं वर्णयति—लङ्घनमिति । दर्शनं सीतादर्शनम् । मानुषः मनुष्यसम्बन्धी पुरुषः । कः कुर्यात् । "तस्येदम्" इत्यण् । स्वदूतमुखेनानेककार्यकारी रामो देव एवेति भावः ॥२२॥ अविद्धेन तन्नाम्ना । मन्त्रिवृद्धैरिति पूजायां बहु वचनम् । बह्विति क्रियाविशेषणम् ॥२३॥ हि यस्मात्सामात्यस्य एष निश्चयो वर्तते इति तस्मात् युद्धे अमृतः सन् त्वां मोक्तुं नोत्सहतीति । इतिर्हेतौ ।

लङ्घनं च समुद्रस्य दर्शनं च हनूमतः । वधं च रक्षसां युद्धे कः कुर्यान्मानुषो भुवि ॥ २२ ॥ एवं स मन्त्रिवृद्धैश्चा विद्धेन बहु भाषितः । न त्वामुत्सहते मोक्तुमर्थमर्थपरो यथा ॥ २३ ॥ नोत्सहत्यमृतो मोक्तुं युद्धे त्वामिति मैथिलि । सामात्यस्य नृशंसस्य निश्चयो ह्येष वर्तते ॥ २४ ॥ तदेषा निश्चिता बुद्धिर्मृत्युलोभादुपस्थिता । भयान्न शक्तस्त्वां मोक्तुमनिरस्तस्तु संयुगे । राक्षसानां च सर्वेषामात्मनश्च वधेन हि ॥२५॥ निहत्य रावणं सङ्ख्ये सर्वथा निशितैः शरैः । प्रतिनेष्यति रामस्त्वामयोध्यामसितेक्षणे ॥ २६ ॥

इति निश्चय इत्यन्वय इत्येके । इति मन्य इत्यपरे । इह मैथिलीति केषुचित्पाठः ॥ २४ ॥ रामानु०—नोत्सहतीति । इति मैथिलीत्यत्र इतिशब्दस्य निश्चय इत्यनेन सम्बन्धः ॥ २४ ॥ एतादृशाध्यवसायस्य किं निमित्तमित्यपेक्षायां मरणलोभ एवेत्याह—तदेषेत्यादिसार्द्धश्लोकः । तत् तस्येत्यर्थः । राक्षसानामात्मनश्च वधेन अनिरस्तः अनिराकृतः केवलभयात्त्वां मोक्तुं न शक्तः, नोत्सहत इत्यर्थः ॥ २५ ॥ कथं तर्हि मे निर्गमनमित्यत आह—निहत्येति । एतत्सर्वं प्रमाणान्तरानपेक्षम् । निदर्शनं करिष्यमाणस्य रघुनाथपराक्रमस्य दृष्टान्त इत्यर्थः ॥ २१ ॥ तिष्ठतु रघुनाथः, तदनुचरो हनुमानेव सर्वान राक्षसान जेतुं समर्थः इत्याशयेन तत्पराक्रमं वर्णयति—लङ्घनमिति । दर्शनम्, सीताया इति शेषः । मानुषः पुरुषः ॥ २२ ॥ २३ ॥ नोत्सहतीति । हि यस्मात् तस्य सामात्यस्य एष निश्चयः न त्यक्ष्यामीति निश्चयो वर्तते तस्माद्युद्धे अमृतस्सन् त्वां त्यक्तुं नोत्सहतीति मन्य इत्यर्थः ॥ २४ ॥ राक्षसानाम् आत्मनश्च वधेनानिरस्तः अनिराकृतः भयात्त्वां मोक्तुं न शक्तः नोत्सहत इत्यर्थः ॥ २५ ॥ तर्हि मम निर्गमो न सम्भवेदित्यत आह—निहत्येति ॥ २६ ॥ २७ ॥

स०-नोत्सहति । चुरादिरयमाधृषीयः परस्मैपदे वर्तते " स एवायं नागः सहति कलभेभ्यः परिभवम् " इत्यादिप्रयोगात् । सामात्यस्य अविन्ध्यादिव्यतिरिक्तमन्त्रिसहितस्य ॥ २४ ॥ मृत्युलोभात् मृत्युदेव्या एपु विद्यमानाल्लाभ्यात् ॥ २५ ॥

तव नेत्रसौभाग्यलक्षणादित्यभिप्रायेणाह—असितेक्षण इति ॥ २६ ॥ सरमोक्तस्योपश्रुतिनिमित्तं दर्शयन्नेव कथाशेषं दर्शयति—एतस्मिन्निति । अत्र भेर्यादिशब्दो भेर्यादिशब्दपरः । वानरसैन्यानामपि भेर्यादिकमस्तीति किष्किन्धाकाण्डे दर्शितम् ॥ २७ ॥ श्रुत्वेति । श्रेयो न पश्यन्ति नृपस्य दोष इति । रावणस्य दोषे निमित्तभूते जीवनभूतमात्मनः श्रेयो न पश्यन्ति॥२८॥ इति श्रीगो० श्रीरामा० रत्न० युद्धकाण्डव्याख्याने चतुस्त्रिंशः सर्गः॥३४॥

एतस्मिन्नन्तरे शब्दो भेरीशङ्खसमाकुलः । श्रुतो वानरसैन्यानां कम्पयन् धरणीतलम् ॥ २७ ॥ श्रुत्वा तु तद्वानर सैन्यशब्दं लङ्कागता राक्षसराजभृत्याः । नष्टौजसो दैन्यपरीतचेष्टाः श्रेयो न पश्यन्ति नृपस्य दोषे ॥ २८ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

तेन शङ्खविमिश्रेण भेरीशब्देन राघवः । उपयाति महाबाहू रामः परपुरञ्जयः ॥ १ ॥ तं निनादं निशम्याथ रावणो राक्षसेश्वरः । मुहूर्तं ध्यानमास्थाय सचिवानभ्युदैक्षत ॥ २ ॥ अथ तान् सचिवांस्तत्र सर्वानाभाष्य रावणः । सभां सन्नादयन् सर्वामित्युवाच महाबलः । जगत्सन्तापनः क्रूरो गर्हयन् राक्षसेश्वरः ॥ ३ ॥

अथ माल्यवदुपदेशः पञ्चत्रिंशे—तेनेति । शङ्खविमिश्रेण शङ्खशब्दविमिश्रेण । उपयाति उपाययौ ॥१॥ ध्यानमास्थाय किं मयेदानीं कर्तव्यमिति ध्यानं कृत्वेत्यर्थः ॥ २ ॥ अथेत्यादि । आभाष्य सम्बोध्य । सभाम् आस्थानमण्डपम् । उदीक्षणाशयमुद्घाटयति—गर्हयन्निति । गर्हयन्नुवाच गर्हात्मिकां वाच

श्रेयो न पश्यन्ति । नृपस्य रावणस्य दोषैः निमित्तभूतैः जीवनभूतमात्मनः श्रेयो नास्तीति मेनिर इत्यर्थः ॥ २८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां चतुस्त्रिंशः सर्गः ॥ ३४ ॥ तेनेति । उपयाति उपयातः ॥ १ ॥ २ ॥ अथ तानित्यादिसार्धश्लोक एकं वाक्यम् । आभाष्य सम्बोध्य । गर्हयन्नुवाच सचिवगर्हात्मिकां वाचमुवाचेत्यर्थः ॥ ३ ॥

स०—भेरीशब्देन नादिना इति पाठः । नादिना प्रतिध्वनिमता । नादिना न विद्यन्ते आदिनो राक्षसा येन तादृशेन " आदिनो राक्षसाः प्रोक्ताः " इति भागवतदशमस्कन्धतात्पर्यात् । परपुरं वैरिनगरम् । महाबाहू राम उपयाति । जयश्च तमुपयाति । पुरमिति शेषो वा ॥ [illegible]

मुवाचेत्यर्थः॥३॥ गर्हाप्रकारमाह श्लोकद्वयेन—तरणमिति। तूष्णीकान् तूष्णींशीलान्। "शीले को मलोपश्च" इति कप्रत्ययो मलोपश्च। "तूष्णींशीलस्तु तूष्णीकः" इत्यमरः। निरुत्साहानित्यर्थः॥४॥५॥ पितामहस्य पुत्रः पैतामहः। पितृव्य इत्यर्थः। कैकसी सुमालिपुत्रीत्युत्तररामायणेऽभिधानान्माल्यवत स्तद्भ्रातृत्वाच्च पितामहशब्दस्य नियतसापेक्षत्वान्नासामर्थ्यदोषः। पितेत्यर्थ इत्येके। वृद्धो मातामहोऽब्रवीदिति क्वचित्पाठः॥६॥ नीतिमार्गपर्यालोच

तरणं सागरस्यापि विक्रमं बलसञ्चयम्। यदुक्तवन्तो रामस्य भवन्तस्तन्मया श्रुतम्॥ ४॥
भवतश्चाप्यहं वेद्मि युद्धे सत्यपराक्रमान्। तूष्णीकानीक्षतोऽन्योन्यं विदित्वा रामविक्रमम्॥ ५॥
ततस्तु सुमहाप्राज्ञो माल्यवान् नाम राक्षसः। रावणस्य वचः श्रुत्वा मातुः पैतामहोऽब्रवीत्॥ ६॥
विद्यास्वभिविनीतो यो राजा राजन्नयानुगः। स शास्ति चिरमैश्वर्यमरींश्च कुरुते वशे॥ ७॥

नायां बलवता रामेण सन्धिः करणीय इत्यभिप्रायेण प्रथमं नयस्य श्रेयोहेतुत्वं दर्शयति—विद्येति। विद्यासु आन्वीक्षिकीत्रयीवार्तादण्डनीत्याख्यासु चतसृषु विद्यासु। अभिविनीतः अभितः शिक्षितः। अत एव नयानुगः नीतिशास्त्रानुसारी यो राजा सः चिरम् ऐश्वर्यम् ईश्वरत्वं शास्ति अधितिष्ठति। तमिममर्थं विशदमुक्तवान् कामन्दकः—"आन्वीक्षिकीं त्रयीं वार्तां दण्डनीतिं च पार्थिवः। तद्विद्भिस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वितः॥ आन्वीक्षिक्यात्म विज्ञानं धर्माधर्मौ त्रयीस्थितौ। अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयानयौ॥ विद्याश्चतस्र एवैता योगक्षेमाय देहिनाम्। विद्याविनीतो नृपतिर्न कृच्छ्रे

गर्हाप्रकारमेवाह—तरणमित्यादिश्लोकद्वयेन। तूष्णीकान् निरुत्साहान्। वेद्मीत्युवाचेति पूर्वेण सम्बन्धः॥४॥५॥ मातुः पैतामहः पितामहस्य पुत्रः पैतामहः, मातुः पितेति यावत्। रावणस्य वचः श्रुत्वा इति मातामहोऽब्रवीत्। इति क्वचित्पाठः। तत्र सन्ध्यभाव आर्षः॥६॥ नीतिमार्गपर्यालोचनायां बलवता रामेण सन्धिः करणीय इत्यभिप्रायेण प्रथमं नयस्य श्रेयोहेतुत्वं दर्शयति—विद्यास्विति। विद्यासु आन्वीक्षिकीत्रयीवार्तादण्डनीत्याख्यासु। नयानुगः नीतिमार्गानुसारी।

स०—अस्य रामस्य। सागरस्य तरणविक्रमं बलेन सहितं पौरुषं चेति यदुक्तवन्तः तच्छ्रुतमिति गर्हयन्। गर्हणं चोक्तस्याप्यनुक्तप्रायीकरणम्। सागरस्यास्य इति पाठः॥४॥ अथ आरामविक्रमं राम विषये वने मया कृतं भार्याहरणविक्रमम्। विदित्वा ज्ञात्वापि तूष्णीकान् तूष्णीं स्थितान् निरुत्साहानिति यावत्। अन्योन्यम् ईक्षतः ईक्षमाणान् वेद्मि, इदं किमिति शेषः। रामविक्रमं रामस्य विक्रमं लङ्काभूमिकापादविक्षेपम्, तन्मात्रमिति यावत्। युद्धमुखमनवलोक्यैवंभावो न क्वाप्यवलोकित इति भावः॥५॥

ष्ववसीदति ॥" इति ॥ ७ ॥ नयानुग इत्युक्तं तत्र नयस्वरूपमाह—सन्दधान इति । कालेन स्वबलक्षयकालेन । सन्दधानः सन्धानं कुर्वन् । स्वबल वृद्धिकालेन विगृह्णन् विग्रहं कुर्वन् । ऐश्वर्येच्छुना कालानुरूपं सन्धिविग्रहौ कार्यावित्यर्थः । एवं कुर्वतः फलमाह स्वपक्षेति ॥ ८ ॥ सन्धेर्विग्रहस्य च कालं विविच्य दर्शयति—हीयमानेनेति । हीयमानेन हीयमानबलेन, समेन समबलेन च राज्ञा स्वशत्रुणा सह सन्धिः कर्तव्यः । न शत्रुमिति । ज्यायान्

सन्दधानो हि कालेन विगृह्णंश्चारिभिः सह । स्वपक्षवर्धनं कुर्वन् महदैश्वर्यमश्नुते ॥ ८ ॥ हीयमानेन कर्तव्यो राज्ञा सन्धिः समेन च । न शत्रुमवमन्येत ज्यायान् कुर्वीत विग्रहम् ॥९॥ तन्मह्यं रोचते सन्धिः सह रामेण रावण । यदर्थ मभियुक्ताः स्म सीता तस्मै प्रदीयताम् ॥ १० ॥ यस्य देवर्षयः सर्वे गन्धर्वाश्च जयैषिणः । विरोधं मा गमस्तेन सन्धिस्ते तेन रोचताम् ॥११॥ असृजद्भगवान् पक्षौ द्वावेव हि पितामहः । सुराणामसुराणां च धर्माधर्मौ तदाश्रयौ ॥१२॥

अधिकबलस्तु शत्रुं नावमन्येत नोपेक्षेत । किन्तु तेन सह विग्रहं कुर्वीत । हीयमानः समः सन्धिं कुर्यात् । अधिको विग्रहं कुर्यादित्यर्थः ॥ ९ ॥ अस्त्वेवं प्रस्तुते किमुपन्यस्तं तत्राह—तदिति । तत्तस्मात् । एवं नीतिशास्त्रस्थितेः हीयमानस्य तव बलवता रामेण सन्धिर्मह्यं रोचत इत्यर्थः । बलवता सन्धि र्दानेन विना न फलति । तच्च सीताप्रत्यर्पणादेव सेत्स्यतीत्याह—यदर्थमिति । यदर्थम् अभियुक्ताः स्म विरुद्धाः स्म । सा सीता तस्मै रामाय प्रदीय ताम् ॥ १० ॥ कथं रामस्य बलवत्त्वम् ? तत्राह—यस्येति । देवाश्च ऋषयश्च देवर्षयः । ते तुभ्यम् । रामस्य दैवबलवत्त्वात् बलवत्त्वमित्यर्थः ॥११॥ देवादीनां रामजयकाङ्क्षित्वे को हेतुरित्याशङ्क्य देवादीनां धर्मपक्षपातित्वाद्धर्मस्य रामाश्रयत्वादित्यभिप्रेत्याह—असृजदित्यादिना । भगवान् सर्वज्ञः पितामहः ।

शास्ति अधितिष्ठति ॥७॥ नयः कीदृश इत्यपेक्षायामाह—सन्दधान इति । कालेन सन्दधानः स्वबलक्षयकालेन सन्धानं कुर्वन् । कालेन विगृह्णन् स्वबलवृद्धिकालेन विग्रहं कुर्वन् । एवं कुर्वतः फलमाह स्वपक्षवर्द्धनमिति ॥८॥ संक्षेपोक्तं नयं विवृणोति—हीयमानेनेति । हीयमानेन समेन च राज्ञा शत्रुणा सह सन्धिः कर्तव्यः । सः राजा ज्यायान् अधिकश्चेत् शत्रुमवमन्येत तिरस्कुर्यात्, तेन सह विग्रहं च कुर्यादित्यर्थः । न शत्रुमवमन्येतेति पाठे—दुर्बलमपि शत्रुं नावमन्येतेत्यर्थः ॥ ९ ॥ प्रकृते किं कृतमित्यत्राह—तन्मह्यमिति । तस्मादेवं नीतिशास्त्रे स्थिते हीयमानस्य तव बलवता रामेण सन्धिः मह्यं रोचत इत्यर्थः । बलवता सह सन्धानं कथं घटत इत्या शङ्क्य तच्च सीताप्रत्यर्पणात् सेत्स्यतीत्याह यदर्थमिति । यदर्थं सीतार्थम् । अभियुक्ताः अभिनिवेशयुक्ताः । सा सीता तस्मै प्रदीयताम् । रामेण सन्धिर्मह्यं रोचत इत्यनेन रामस्य समुद्रबन्धनादिहेतुभूतपौरुषशक्तिवृद्धिः सूचिता ॥ १० ॥ न केवलं पौरुषबलम्, दैवबलमप्यस्तीत्याह—यस्येति । तेन दैवपौरुषबलयुक्तेन रामेण सन्धिस्तु रोचताम् । ते तुभ्यं दैवपुरुषबलहीनाय रोचताम् ॥११॥ अस्मान्विहाय [illegible] कथमित्याशङ्क्य स्वपक्षभूतधर्माश्रयणादिति प्रतिपाद

हि यस्मात्। सुराणाम् असुराणां च पक्षौ अवलम्बभूतौ। द्वावेव धर्माधर्मौ असृजत् । अतः धर्माधर्मौ तदाश्रयौ सुरासुराश्रयौ। असुरशब्देनात्रासुरप्रकृतयो राक्षसादयश्च विवक्षिताः ॥ १२ ॥ अनयोः कतरः केषां पक्ष इत्यत्राह—धर्मो हीति । महात्मनामिति हेतुगर्भविशेषणम् । महास्वभावानामित्यर्थः । समीचीनप्रकृतीनामिति यावत्। अमहात्मनामित्यसुरादिविशेषणं चार्थसिद्धम् । तथा च धर्मस्य देवपक्षत्वाद्रामस्य तदाश्रयत्वाद्देवादयो रामपक्षपातिन

धर्मो हि श्रूयते पक्षो ह्यमराणां महात्मनाम् । अधर्मो रक्षसां पक्षो ह्यसुराणां च रावण ॥ १३ ॥
धर्मो वै ग्रसतेऽधर्मं ततः कृतमभूद्युगम् । अधर्मो ग्रसते धर्मं ततस्तिष्यः प्रवर्तते ॥ १४ ॥
तत्त्वया चरता लोकान् धर्मो विनिहतो महान् । अधर्मः प्रगृहीतश्च तेनास्मद्बलिनः परे ॥ १५ ॥

इति भावः ॥ १३ ॥ एवं देवादिपक्षपाताद्रामस्य बलीयस्त्वमुपपाद्य धर्मस्य प्राबल्यादपि तदाह—धर्म इति । अत्र यदेति शेषः। धर्मः अधर्मं यदा ग्रसते अभिभवति तदा कृतं युगम् अभूत् भवति पुरुषेषु प्रवर्तते । आर्षः कालव्यत्ययः । अधर्मो यदा धर्मं ग्रसते तदा तिष्यः कलिः प्रवर्तते । "तिष्यः कलौ च पुष्ये च" इत्यमरः ॥१४॥ रामानु०—ततस्तिष्यः प्रवर्तत इति पाठः । अत्र यदेत्यध्याहार्यम् । यदा कृतं युगमभूत् । "तपः शौचं दया सत्यम्" इति श्रीभागवतोक्तप्रकारेण धर्मपादचतुष्टयविशिष्टं कृतयुगं भवति । धर्मवृद्धिर्भवतीत्यर्थः । तदा धर्मः अधर्मं ग्रसते । अनेन धर्मपक्षपातिनां वृद्धिरधर्मपक्षपातिनां हानिश्च सूचिता । यदा तिष्यः प्रवर्तते । "अधर्मं गौः" इत्यादिना श्रीभागवतोक्तसङ्गमदानृताद्यधर्मपादचतुष्टयविशिष्टं कलियुगं प्रवर्तते। अधर्मवृद्धिर्भवतीत्यर्थः। ततः तदा । अधर्मः अभिवृद्धाधर्मः धर्मं ग्रसते ।अनेनाधर्मपक्षपातिनां वृद्धिः धर्मपक्षपातिनां हानिश्च सूचिता ॥१४॥ ततः किमित्यपेक्षायां त्वय्यधर्मेण कलेः प्रवेशात्कृतापेक्षया कलेर्दुर्बलत्वादस्मदपेक्षया रामो बलवानित्याह—तदिति । लोकान् चरता, दिग्विजयार्थमिति शेषः । विनिहतः, परदारपरिग्रहार्थमिति शेषः । अस्मदिति पञ्चमीबहुवचनम् । परे शत्रवो रामादयो धार्मिकाः । यद्वा कृतं युगमिति

यितुं धर्माधर्मयोस्सुरासुरपक्षत्वं दर्शयति—असृजदित्यादिना । भगवान् पितामहः धर्माधर्मौ सुराणामसुराणां च द्वौ पक्षावसृजत् अतो धर्माधर्मौ तदाश्रयौ तेषां सुराणामसुराणां च आश्रयावित्यर्थः ॥ १२ ॥ १३ ॥ धर्माधर्मयोः को वा श्रेयानित्याकांक्षायामाह—धर्म इति । अत्र यदाशब्दोध्याहर्तव्यः । धर्मो यदा अधर्मं ग्रसते नाशयति ततस्तदा कृतयुगमभूत्, अनेन धर्मपक्षपातिनां वृद्धिः अधर्मपक्षपातिनां हानिश्च सूचिता । यदा अधर्मो धर्मं ग्रसते तदा तिष्यः कलियुगं प्रवर्तते, अनेन अधर्मपक्षपातिनां वृद्धिः धर्मपक्षपातिनां हानिश्च सूचिता । अतो धर्म एव श्रेयानिति भावः ॥ १४ ॥ अधर्मवृद्ध्या राक्षसानां प्राबल्यम्, धर्मवृद्ध्या सुराणां प्राबल्यं च क्रमेण प्रदर्शयति—तत्त्वयेत्यादिश्लोकद्वयेन । लोकान् चरता दिग्विजयार्थं लोकान् सञ्चरता त्वया धर्मो विनिहतः धर्मवृद्धिहेतुभूतयज्ञ

शब्दसमुदायेन शुभं लक्ष्यते । तिष्य इत्यनेनाशुभम् । यदा धर्मः अधर्मं ग्रसते तदा शुभं भवति । यदा अधर्मो धर्मं ग्रसते तदा अशुभं भवतीत्यर्थः । एवं भवतु मया किं कृतमित्यत्राह तदिति । तत् धर्माधर्मयोरेवंरूपत्वात् त्वया शुभहेतुर्धर्मो विनिहतः अशुभहेतुरधर्मश्च परिगृहीतः । तेन पराजयरूपा शुभहेत्वधर्मकृद्भ्योऽस्मज्जयरूपशुभहेतुधर्मपराः परे बलिन इत्यर्थः॥१५॥अधर्मं स्वीकृत्य धर्मे निहते तेषां सुराणां बलवत्त्वं कथमित्याशङ्क्याधर्मस्या श्रयनाशकत्वादित्यभिप्रायेणाह–स इति । सः अधर्मः । ते प्रमादात् अविमृश्यकरणात् । विवृद्धः । नः अस्मान् । ग्रसते नाशयति । सुरभावनः सुरा

स प्रमादाद्विवृद्धस्तेऽधर्मोऽभिग्रसते हि नः । विवर्धयति पक्षं च सुराणां सुरभावनः ॥ १६ ॥ विषयेषु प्रसक्तेन यत्किञ्चित्कारिणा त्वया । ऋषीणामग्निकल्पानामुद्वेगो जनितो महान् ॥ १७ ॥ तेषां प्रभावो दुर्धर्षः प्रदीप्त इव पावकः ॥ १८ ॥ तपसा भावितात्मानो धर्मस्यानुग्रहे रताः । मुख्यैर्यज्ञैर्यजन्त्येते नित्यं तैस्तैर्द्विजातयः ॥१९॥ जुह्वत्यग्नींश्च विधिवद्वेदांश्चोच्चैरधीयते । अभिभूय च रक्षांसि ब्रह्मघोषानुदैरयन् ॥ २० ॥

नुकूलः सन् सुराणां पक्षं विवर्धयति ॥ १६ ॥ स्वकृतस्याधर्मस्य सुरपक्षवृद्धिहेतुत्वं कथमित्याशङ्क्य ऋषीणामुद्वेगजननद्वारा धर्मप्रवर्तकत्वादित्याह–विषयेष्विति । विषयेषु प्रसक्तेन अत एव यत्किञ्चित्कारिणा देवर्षिप्रमुखानां कन्यापत्नीहरणादिकं कुर्वता । ऋषीणामुद्वेगः मनस्तापः । जनितः कृतः ॥ १७ ॥ अग्निकल्पत्वमुपपादयति–तेषामिति ॥ १८ ॥ उद्वेगात्किं कृतवन्तस्तत्राह–तपसेति । भावितात्मानः पूतात्मानः । धर्मस्यानुग्रहे संवर्धने

दानतपःप्रभृतयो विनाशिता इत्यर्थः । अधर्मः स्वपक्षभूताधर्मः प्रगृहीतः परहिंसापरदारपरद्रव्यापहरणादिना संवर्द्धितः इत्यर्थः । तत् तस्मात् परे त्वच्छत्रवः अस्मद्बलिनः अस्मत्तो बलिनोऽभूवन्नित्यर्थः ॥ १५ ॥ सुरभावनः सुरान् भावयति वर्धयतीति तथा । सः अधर्मः ते विषयासक्तस्य तव प्रमादात् यज्ञदानादीनां विघ्नकरणाद्धेतोः विवृद्धः स्यात् । इदानीं नः अधर्माश्रयानस्मान् ग्रसते हि ग्रसत एव सुराणां पक्षं विवर्द्धयति चेति योजना ॥ १६ ॥ रावणप्रमादजनिताधर्म वृद्धिप्रकारं विवृणोति–विषयेष्वित्यादिना । यत्किञ्चित्कारणात् यस्मात्कस्माच्चित्कारणात् विषयेषु प्रसक्तेन देवर्षिप्रमुखानां कन्यापत्नीहरणादिकं कुर्वता त्वया तेषामृषीणां प्रदीप्तः पावक इव दुर्द्धर्षः दुस्सहः उद्वेगः क्रोधो जनित इत्यर्थः ॥ १७ ॥ १८ ॥ उद्वेगाद् किं कृतवन्तस्तत्राह–तपसेत्यादिना । तपसा भावितात्मानः पूतात्मानः धर्मस्यानुग्रहे धर्मसंवर्धने रताः ॥ १९ ॥ उदीरयन्निति पाठे अडभाव आर्षः । ब्रह्मघोषान् वेदघोषान् ॥ २० ॥

रताः । मुख्यैः श्रेष्ठैः । तैस्तैः अग्निष्टोममारभ्य विश्वसृजामयनपर्यन्तैः । अग्नीनुद्दिश्य जुह्वति होमं कुर्वन्ति । देवतोद्देशेन द्रव्यत्यागो यागः । त्यक्तस्याग्नौ प्रक्षेपो होम इत्यनयोर्भेदः । आभिभूय अगणयित्वा । ब्रह्मघोषान् उदैरयन् उच्चारयन्ति स्म । वेदांश्चोच्चैरधीयत इत्यस्य विवरणमिदम् ॥ १९ ॥ २० ॥ तपःप्रभृतिकर्मणः फलमाह—दिश इत्यादिना । सर्वा दिशः प्रति विद्रुताः, राक्षसा इति शेषः । उष्णगे ग्रीष्मे । स्तनयित्नुरिव मेघ इव । जातावेकवचनम् ॥ २१ ॥ २२ ॥ बलिनोऽपि देवाः ब्रह्मदत्तवरमहिम्नापि न प्रहर्तुं शक्नुयुरिति चेत्तत्राह—देवदानवेत्यादिना । देवदानवयक्षेभ्य एवावध्यत्ववरो गृहीतः ।

दिशोऽपि विद्रुताः सर्वाः स्तनयित्नुरिवोष्णगे । ऋषीणामग्निकल्पानामग्निहोत्रसमुत्थितः ॥ २१ ॥ आदत्ते रक्षसां तेजो धूमो व्याप्य दिशो दश । तेषु तेषु च देशेषु पुण्येष्वेव दृढव्रतैः । चर्यमाणं तपस्तीव्रं सन्तापयति राक्षसान् ॥ २२ ॥ देवदानवयक्षेभ्यो गृहीतश्च वरस्त्वया ॥ २३ ॥ मानुषा वानरा ऋक्षा गोलाङ्गूला महाबलाः । बलवन्त इहागम्य गर्जन्ति दृढविक्रमाः ॥ २४ ॥ उत्पातान् विविधान् दृष्ट्वा घोरान् बहुविधांस्तथा । विनाशमनुपश्यामि सर्वेषां रक्षसामहम् ॥२५॥ खराभिस्तनिता घोरा मेघाः प्रतिभयङ्कराः । शोणितेनाभिवर्षन्ति लङ्कामुष्णेन सर्वतः ॥२६॥

न तु मानुषादिभ्य इति भावः ॥ २३ ॥ तर्हि किमायातमित्यत्राह—मानुषा इति । द्वयोरपि बहुवचनं पूजायाम् । महाबलाः महासैन्याः । इह लङ्कायाम् ॥ २४ ॥ न केवलं परागमनेन किंत्वशुभनिमित्तदर्शनेनापि भयमुत्प्रेक्ष्यमित्याह—उत्पातानिति । उत्पातान् विविधान् दिव्यान्तरिक्षभौमभेदभिन्नान् । बहुविधान् भौमादिषु प्रत्येकं विविधान् । अनुपश्यामि तर्कयामि ॥ २५ ॥ खराभिस्तनिताः परुषगर्जिताः । घोराः विरूपाः । प्रतिभय

सर्वा दिशः विप्रद्रुताः, राक्षसा इति शेषः । विद्रवणे दृष्टान्तः स्तनयित्नुरिति । मेघ इव, जातावेकवचनम् । उष्णगे उष्णकाले ॥ २१ ॥ २२ ॥ तपोयागादिकं कामं कुर्वन्तु, ब्रह्मदत्तं सुरासुरैरवध्यत्वमस्ति खल्वित्याशङ्क्य, सत्यम्, रामसुग्रीवादयो न सुरासुरा इत्यभिप्रेत्याह—देवदानवेत्यादिसार्धेन । देवदानवेभ्य एवावध्यत्वं गृहीतम्, न मानुषादिभ्य इत्यभिप्रायः ॥ २३ ॥ २४ ॥ न केवलं परबलानुगमनेन भयम् किन्त्वशुभनिमित्तदर्शनेनापीत्याह—उत्पातानिति । विविधान् दिव्यन्तरिक्षभौमभेदभिन्नान् बहुविधान् ॥ २५–२७ ॥

स०—उष्णगे ग्रीष्मर्तुगते सूर्ये स्तनयित्नुर्वलाहक इव विप्रद्रुताः विप्रद्रुतानि रक्षांसि । पलायन एव प्रकृष्टकार इति प्रयुक्तिप्रयुक्तः पुँल्लिङ्गनिर्देशः रक्षांसीति प्रकृतत्वात् । राक्षसा इति शेषो वा ॥ २१ ॥

क्रूराः प्रतीत्युपसर्गमात्रम्, भयंकरा इत्यर्थः ॥ २६ ॥ ध्वस्ताः धूसराः । अत एव विवर्णाः विगतवर्णाः ॥ २७ ॥ व्यालाः दुष्टाः । वाश्यन्ति वाशितं कुर्वन्ति, कुत्सितरुतं कुर्वन्तीत्यर्थः । समवायान् सङ्घान् ॥ २८ ॥ कालिकाः नीलवर्णाः स्त्रियः पूतनाप्रमुखा इति यावत् । शक्तय इत्येके । पाण्डरे दन्तैरुपलक्षिताः सत्यः । प्रतिभाष्य प्रतिकूलमाभाष्य । गृहाणि गृहस्थितवस्तूनि मुष्णन्त्यः हसन्ति । एवं दृश्यन्त इत्यर्थः ॥ २९ ॥ रामानु०–कालिकाः

रुदतां वाहनानां च प्रपतन्त्यस्रबिन्दवः । ध्वजा ध्वस्ता विवर्णाश्च न प्रभान्ति यथा पुरा ॥२७॥ व्याला गोमायवो गृध्रा वाश्यन्ति च सुभैरवम् । प्रविश्य लङ्कामनिशं समवायांश्च कुर्वते ॥ २८ ॥ कालिकाः पाण्डरैर्दन्तैः प्रहसन्त्यग्रतः स्थिताः । स्त्रियः स्वप्नेषु मुष्णन्त्यो गृहाणि प्रतिभाष्य च ॥ २९ ॥ गृहाणां बलिकर्माणि श्वानः पर्युपभुञ्जते । खरा गोषु प्रजायन्ते मूषिका नकुलैः सह ॥ ३० ॥ मार्जारा द्वीपिभिः सार्धं सूकराः शुनकैः सह । किन्नरा राक्षसैश्चापि समीयुर्मानुषैः सह ॥ ३१ ॥

शक्तयः । स्त्रियः स्त्रीः । प्रतिभाष्य प्रतिकूलमाभाष्य । स्वप्नेषु गृहाणि मुष्णन्ति अग्रतः स्थिता हसन्ति चेति सम्बन्धः ॥ २९ ॥ बलिकर्माणि बलिकर्मसाधनानि हवींषि । नकुलैः सह, वर्तन्त इति शेषः ॥ ३० ॥ समीयुः संयन्ति । द्वीपिभिः व्याघ्रैः । मानुषैः, राक्षसा इति शेषः । मानुषाश्चात्रोत्पातजनिता एव ॥ ३१ ॥ रामानु०–बलिकर्माणि बलिद्रव्याणि । किन्नरा राक्षसैश्चापि समीयुर्मानुषैः सहेत्यर्धं केषुचित्कोशेषु दृश्यते । तस्मिन्विरोधोऽस्ति लङ्कायां मानुषाभावात् ॥ ३१ ॥

तेषामेव प्रत्येकं बहुविधत्वं दर्शयति–व्याला इति । समवायान् समूहान् ॥ २८ ॥ कालिकाः पूतनाप्रमुखशक्तयः । पाण्डरैः दन्तैः उपलक्षिताः स्त्रियः स्त्रीः प्रतिभाष्य प्रतिकूलमाभाष्य प्रत्याख्याय । स्वप्नेषु गृहाणि गृहवर्तीनि द्रव्याणि मुष्णन्त्योऽग्रतः स्थिता हसन्तीति सम्बन्धः ॥ २९ ॥ बलिकर्माणि बलिकर्म

स०–कालिकाः ग्रामस्थाः महाकालीभद्रकालीत्यादयः । प्रतिभाष्य श्रोतृभयदाविभाषां कृत्वा । पाण्डरैर्दन्तैः अग्रतः स्थिताः सत्यः प्रहसन्ति । दन्तानां पाण्डरत्वोक्त्या उक्त्या च विरुद्धभाषणभीषणहसनादीनां निश्चितं मरणम् । किञ्चिद्व्यवधानेन भविष्यतीति सूचयति ॥ २९ ॥ श्वानः सारमेयाः । पर्युपसेवत इति पाठः । उपसेवते उपसेवन्ते न वायसाः । “ पुनः श्वानो भविष्यति ” “ श्वानसूकरमार्जार–” इत्यादिप्रयोगादकारान्तो वा श्वानशब्दः । श्वा नः अस्माकमिदमिति पर्युपसेवते । नः बलिकर्माणि श्वा उपसेवते इति वा ॥ ३० ॥

कालचोदिताः दैवप्रेरिताः। विनाशाय विनाशसूचनायेत्यर्थः। "वाताय कपिला विद्युत्" इत्यादिवत्। कपोताः कपोताख्या विहङ्गा इत्यन्वयः ॥ ३२ ॥ वेश्मसु मधुरसँल्लापार्थं पोषिताः शारिकाः मधुरभाषणानि विहाय वीचीकूचीति क्रूरं वाश्यन्तीत्यर्थः ॥ ३३ ॥ पक्षिणः काकादयः मृगाश्च पूर्वं निर्जिता अपि पुनः कलहैषिणः सन्तः। ग्रथिताः पुञ्जीभूताः। पतन्ति धावन्ति। प्रत्यादित्यं रुदन्ति चेत्यन्वयः ॥ ३४ ॥ कराल इति। करालः

पाण्डुरा रक्तपादाश्च विहङ्गाः कालचोदिताः। राक्षसानां विनाशाय कपोता विचरन्ति च ॥ ३२ ॥ वीचीकूचीति वाश्यन्त्यः शारिका वेश्मसु स्थिताः ॥ ३३ ॥ पतन्ति ग्रथिताश्चापि निर्जिताः कलहैषिणः। पक्षिणश्च मृगाः सर्वे प्रत्यादित्यं रुदन्ति च ॥ ३४ ॥ करालो विकटो मुण्डः परुषः कृष्णपिङ्गलः। कालो गृहाणि सर्वेषां काले कालेऽन्ववेक्षते ॥ ३५ ॥ एतान्यन्यानि दुष्टानि निमित्तान्युत्पतन्ति च। ज्ञात्वा प्रधार्य कार्याणि क्रियतामायतिक्षमम् ॥३६॥* इदं वचस्तत्र निशम्य माल्यवान् परीक्ष्य रक्षोधिपतेर्मनः पुनः। अनुत्तमेषूत्तमपौरुषो बली बभूव तूष्णीं समवेक्ष्य रावणम् ॥३७॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे पञ्चत्रिंशः सर्गः ॥३५॥

भयङ्करः। विकटः विकटाङ्गः। विकल इति पाठे हीनाङ्ग इत्यर्थः। परुषः परुषवर्णः। कालः मृत्युः। काले काले सायं प्रातश्च। गृहाण्यन्ववेक्षते, अन्वीक्षमाण इव दृश्यत इत्यर्थः ॥ ३५ ॥ एतानि ज्ञात्वा कर्माणि कर्तव्यानि। प्रधार्य निर्धार्य। यत् आयतिक्षमम् उत्तरकालार्हम् तत्क्रियताम्। कर्माणि च सीताप्रदानादीनि ॥ ३६ ॥ इदमिति। अनुत्तमेषु मन्त्रिश्रेष्ठेषु। उत्तमपौरुषो माल्यवान्। इदं वचः तत्र सभायाम्। निशम्य श्रावयित्वा।

साधनद्रव्याणि ॥ ३०–३३ ॥ प्रत्यादित्यं रुदन्ति आदित्यमवलोक्य रुदन्तीत्यर्थः ॥ ३४ ॥ करालो भयङ्करः। विकलः विकलाङ्गः। कालो मृत्युः ॥ ३५ ॥ एतानि ज्ञात्वा कार्याणि कर्तव्यानि। प्रधार्य निर्धार्य। यदायतिक्षमम् उत्तरकालोचितम् तत् क्रियतामित्यर्थः ॥ ३६ ॥ इदमितिं। अनुत्तमेषु निकृष्टेषु राक्षसेषु। उत्तम

स०—इदं वचः रावणं प्रति निगद्य तस्य रक्षोधिपतेः मनः पुनः पुनः परीक्ष्य अनिवर्तनं ज्ञात्वा रावणं समवेक्ष्य तूष्णीं बभूवेत्यन्वयः। "अर्थनिबन्धनेयं संज्ञा" इत्युक्तेः वचो रावणं निगद्येति द्विकर्मकता। अनुत्तमेषु असदृशेषु राक्षसेषु। यद्वा अनुत्तमेषु नीचेषु रक्षोधिपतेः मनः परीक्ष्य स्वयमुत्तमपौरुष इति तूष्णीं बभूव ॥ ३७ ॥

* विष्णुं मन्यामहे रामं मानुषं रूपमास्थितम्। न हि मानुषमात्रोऽसौ राघवो दृढविक्रमः ॥ येन बद्धः समुद्रस्य स सेतुः परमाद्भुतः। कुरुष्व नरराजेन सन्धिं रामेण रावण ॥ इति श्लोकद्वयं प्राक्षिप्तमिति प्राचीनैर्न व्याख्यातमिति कतकः ॥ सत्यतीर्थैस्तु—सः चारैः कथितः। येन सेतुर्बद्धः तेन रामेण सन्धिं कुरुष्व ॥ इति व्याख्यातम् ॥

अन्तर्भावितण्यर्थोऽयम् । रावणं रावणाकारम् । समवेक्ष्य इङ्गितादिदर्शनपुरःसरं दृष्ट्वा रक्षोधिपतेर्मनः परीक्ष्य अनिवर्त्यं ज्ञात्वा तूष्णीं बभूव । उपदेशाद्विररामेत्यर्थः ॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

अथ लङ्कागुप्तिकरणं षट्त्रिंशे—तत्त्विति । हितमुक्तं हितं यथा भवति तथा उक्तम् । न मर्षयति नामर्षयत् ॥ १ ॥ परिवृत्ताक्षः घूर्णिताक्षः ॥ २ ॥ पर

तत्तु माल्यवतो वाक्यं हितमुक्तं दशाननः । न मर्षयति दुष्टात्मा कालस्य वशमागतः ॥ १ ॥ स बद्ध्वा भ्रुकुटिं वक्त्रे क्रोधस्य वशमागतः । अमर्षात् परिवृत्ताक्षो माल्यवन्तमथाब्रवीत् ॥ २ ॥ हितबुद्ध्या यदहितं वचः परुषमुच्यते । परपक्षं प्रविश्यैव नैतच्छ्रोत्रं गतं मम ॥ ३ ॥ मानुषं कृपणं राममेकं शाखामृगाश्रयम् । समर्थं मन्यसे केन त्यक्तं पित्रा वनालयम् ॥ ४ ॥ रक्षसामीश्वरं मां च देवतानां भयङ्करम् । हीनं मां मन्यसे केन ह्यहीनं सर्वविक्रमैः ॥ ५ ॥ वीरद्वेषेण वा शङ्के पक्षपातेन वा रिपोः । त्वयाऽह परुषाण्युक्तः परप्रोत्साहनेन वा ॥ ६ ॥

पक्षं प्रविश्यैव शत्रुषु स्नेहमनुसृत्यैव । हितबुद्ध्या हितमित्ययं ज्ञास्यतीति बुद्ध्या । अहितं परुषं च यद्वच उक्तम् एतत् मम श्रोत्रं न गतमित्यन्वयः ॥ ३ ॥ भवतः परपक्षानुसारश्च न युक्त इत्याह—मानुषमिति । मानुषं जात्या हीनबलम् । कृपणं प्रकृत्या हीनम् । एकम् असहायम् । शाखामृगाश्रयं क्षुद्रसहायम् । पित्रा त्यक्तं निर्धनम् । वनालयं राज्यहीनम् । रामं केन कथंप्रकारेण समर्थं प्रबलं मन्यसे ॥ ४ ॥ स्वस्मिन् तद्वैपरीत्यमाह—रक्षसामिति । हीनं दुर्बलम् ॥ ५ ॥ एवं परप्राबल्यस्वदौर्बल्ययोरभावेऽपि परुषोक्तौ हेतुमाशङ्कते—वीरद्वेषेणेति । वीरद्वेषेण सजातीयवीरद्वेषेण । रिपोः पक्ष

पौरुषो माल्यवान् । तत्र सभायाम् । निगद्येति पाठेऽपि श्रावयित्वा रावणं समवेक्ष्य रक्षोधिपतेर्मनः परीक्ष्य अनिवर्तनं ज्ञात्वा तूष्णीं बभूव, किमपि नोवाचेत्यर्थः ॥३७॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां पञ्चत्रिंशः सर्गः ॥३५॥ १ ॥ २ ॥ हितबुद्ध्येति । परपक्षं प्रविश्य अनुसृत्य ॥ ३ ॥ मानुषमित्यादिश्लोकद्वयस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु—वनालयं वनं जलमुदधिः आलयः शयनस्थानं यस्य तम्, वटपत्रशायिनं नारायणमित्यर्थः । अत एव पित्रा त्यक्तम्, जन्मादिरहितमित्यर्थः । ईश्वरस्य जन्माद्यभावादेव पित्राद्यभावः । अत एव एकम् अद्वितीयम् । अत एव शाखामृगाश्रयं शाखाभिः वेदशाखाभिर्मृग्यत इति शाखामृगः वेदवेद्यः सर्वेश्वरः स चासावाश्रयश्चेति तम् । [illegible] मानुषं मनुष्यरूपेणावतीर्णम् अत एव कृपणं कृपालुं रामं समर्थं मन्यसे किल, तद्युक्तमेव । केन हेतुना रक्षसामीश्वरं सर्वपराक्रमैर्हीनं मामहीनं मन्यस इत्यर्थः ॥ ४–७ ॥

पातेन शत्रौ पक्षपातेन ॥ ६ ॥ परप्रोत्साहनेनेत्येतदुपपादयति—प्रभवन्तमिति । प्रभवन्तं प्रभावयुक्तम् । पदस्थं परिपक्वबुद्धिम् । परप्रोत्साहनाभावे पण्डितस्य पदस्थविषयकपरुषवचनं नोपपद्यत इत्यर्थः ॥ ७ ॥ अस्तु त्वदुक्तं परमार्थः, तथापि दुर्लभवस्तुविशेषः कथं त्याज्य इत्याह—आनीयेति ।

प्रभवन्तं पदस्थं हि परुषं कोऽभिधास्यति । पण्डितः शास्त्रतत्त्वज्ञो विना प्रोत्साहनाद्रिपोः ॥७॥ आनीय च वनात् सीतां पद्महीनामिव श्रियम् । किमर्थं प्रतिदास्यामि राघवस्य भयादहम् ॥८॥ वृतं वानरकोटीभिः ससुग्रीवं सलक्ष्मणम् । पश्य कैश्चिदहोभिस्त्वं राघवं निहतं मया ॥ ९ ॥ द्वन्द्वे यस्य न तिष्ठन्ति दैवतान्यपि संयुगे । स कस्माद्रावणो युद्धे भयमाहारयिष्यति ॥१०॥ द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित् । एष मे सहजो दोषः स्वभावो दुरतिक्रमः ॥ ११ ॥ यदि तावत् समुद्रे तु सेतुर्बद्धो यदृच्छया । रामेण विस्मयः कोऽत्र येन ते भयमागतम् ॥ १२ ॥

किमर्थं केन हेतुना । राघवस्य राघवात् ॥ ८ ॥ ९ ॥ द्वन्द्वे द्वन्द्वयुद्धे । युद्धे रामयुद्धे ॥ १० ॥ अत्यन्तहितपरं वृद्धं मातामहं कथमेवं परुषमुक्तवानस्मीत्यनुतापेनाह--द्विधेति । राम आगत्य भयं जनयिष्यतीति त्वयोक्तम् । न केवलं भयमात्रम् । द्विधा भज्येयं शिरश्छेदं प्राप्नुयाम् । एवमपि न नमेयम् । कस्यचित् न केवलं रामस्य ततोऽपि शतगुणबलवतोऽपि द्विधा भङ्गादपि कस्यचिन्नमनमत्यन्तदुस्सहमित्यर्थः । तर्हि हीयमानेन सन्धिः कार्यः इति नीतिशास्त्रविरोधः स्यात्तत्राह एष मे सहजो दोष इति । यदि दोषत्वमनुमतं तर्हि स त्याज्य एवेत्याशङ्क्याह स्वभाव इति । न हि तिक्तो निम्बो मधुरायत इति भावः ॥ ११ ॥ अथ सेतुबन्धेन विस्मयसे चेत् तदपि काकतालीयम् अतो मा भूत्ते भयमित्याह--यदीति । तावत् समुद्रे स्वल्पसमुद्रे

आनीय च वनादित्यादिश्लोकद्वयस्य प्रातीतिकार्थः स्पष्टः । रामहस्ताद्वधेच्छयैव वनात्सीतामानीय राघवस्य भयात् किमर्थं प्रतिदास्यामीत्यर्थः ॥ ८ ॥ एवं चेदत्र राम आयास्यति किम् ? तत्राह—वृतमिति । कैश्चिदहोभिः मया हेतुना निहतम् आगतमित्यर्थः । "हन हिंसागत्योः" इति धातोरेवमर्थः । वानरकोटीभिर्वृतं ससुग्रीवं सलक्ष्मणं राघवं पश्य, द्रक्ष्यसीत्यर्थः ॥ ९ ॥ एवं चेत्तर्हि कथं न बिभेषीत्यत्राह—द्वन्द्व इति । यस्य मम ॥ १० ॥ मानहानिकरं त्वद्वाक्यं न ग्राह्यमित्याशयेनाह—द्विधेति । एवमनया रीत्या द्विधा भज्येयमपि शत्रुणा भज्यमानोऽपि कस्यचिदपि न नमेयं तु न नमेयमेव । तदेतन्नयविरुद्धम्, तत्राह एष

इत्यर्थः ॥ १२ ॥ अर्णवं तीर्त्वा स्थितो राम इत्यर्थः ॥ १३ ॥ संरब्धम् अहङ्कारयुक्तम् । व्रीडित इति । स्वोपदेशवैफल्यादिति भावः ॥ १४ ॥ यथोचितमिति । प्रत्युत्थानादिनेति भावः ॥ १५ ॥ मन्त्रयित्वा कर्तव्यं विचार्य । विमृश्य निश्चित्य ॥ १६ ॥ स इति । व्यादिदेश, रक्षणायेति

स तु तीर्त्वार्णवं रामः सह वानरसेनया । प्रतिजानामि ते सत्यं न जीवन् प्रतियास्यति ॥ १३ ॥ एवं ब्रुवाणं संरब्धं रुष्टं विज्ञाय रावणम् । व्रीडितो माल्यवान् वाक्यं नोत्तरं प्रत्यपद्यत ॥ १४ ॥ जयाशिषा च राजानं वर्धयित्वा यथोचितम् । माल्यवानभ्यनुज्ञातो जगाम स्वं निवेशनम् ॥ १५ ॥ रावणस्तु सहामात्यो मन्त्रयित्वा विमृश्य च । लङ्कायामतुलां गुप्तिं कारयामास राक्षसः ॥ १६ ॥ स व्यादिदेश पूर्वस्यां प्रहस्तं द्वारि राक्षसम् । दक्षिणस्यां महावीर्यौ महापार्श्वमहोदरौ ॥ १७ ॥ पश्चिमायामथो द्वारि पुत्रमिन्द्रजितं तथा । व्यादिदेश महामायं बहुभी राक्षसैर्वृतम् ॥ १८ ॥ उत्तरस्यां पुरद्वारि व्यादिश्य शुकसारणौ । स्वयं चात्र भविष्यामि मन्त्रिणस्तानुवाच ह ॥ १९ ॥ राक्षसं तु विरूपाक्षं महावीर्यपराक्रमम् । मध्यमेऽस्थापयद् गुल्मे बहुभिः सह राक्षसैः ॥ २० ॥ एवं विधानं लङ्कायाः कृत्वा राक्षसपुङ्गवः । कृतकृत्यमिवात्मानं मन्यते कालचोदितः ॥ २१ ॥ विसर्जयामास ततः स मन्त्रिणो विधानमाज्ञाप्य पुरस्य पुष्कलम् । जयाशिषा मन्त्रिगणेन पूजितो विवेश चान्तःपुरमृद्धिमन्महत् ॥ २२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

शेषः ॥ १७ ॥ १८ ॥ उत्तरस्यामिति । भविष्यामीत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ १९ ॥ मध्यमे गुल्म इति । गुल्मो नाम नगरमध्यचैत्यस्थानम् ॥ २० ॥ विधानं रक्षणसंविधानम् ॥ २१ ॥ पुष्कलं समग्रम् ॥ २२ ॥ इति श्रीगोविन्द० श्रीरामा० रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥



इति । दोषश्चेत् किमिति न त्यज्यते ? तत्राह स्वभाव इति ॥ ११ ॥ १२ ॥ स त्वित्यस्य वास्तवार्थस्तु–रामः वानरसेनया सह अर्णवं तीर्त्वा जीवन् प्रतियास्यतीति ते सत्यं प्रतिजानामि न सन्देहः । अथापि मे स्वभावो दुरतिक्रमः इति पूर्वेण सम्बन्धः ॥ १३–१८ ॥ उत्तरस्यामिति । स्वयं चात्र भविष्यामीत्यत्र इतिकरणं द्रष्टव्यम् ॥ १९–२२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां षट्त्रिंशः सर्गः ॥ ३६ ॥

अथ रामस्य सेनागुप्तिविधानं सप्तत्रिंशे—नरवानरेत्यादिश्लोकत्रयमेकान्वयम् । सहदायादः सबान्धवः । "दायादौ सुतबान्धवौ" इत्यमरः । इदं विशेषणं सर्वत्र यथार्हमन्वेति । अमित्रविषयं शत्रुदेशम् । समर्थयन् अमन्त्रयन् ॥ १—३ ॥ रामानु०—समर्थयन् अमन्त्रयन् । अडभाव आर्षः ॥ ३ ॥ अथ विचारप्रकारमेवाह—इयमित्यादिना । सा हनुमता पूर्वमुक्ता । कार्यसिद्धिं विजयसिद्धिम् । पुरस्कृत्य प्रधानीकृत्य । विनिर्णये निमित्ते मन्त्रयध्वम् । विजयसाधक

नरवानरराजौ तौ स च वायुसुतः कपिः । जाम्बवानृक्षराजश्च राक्षसश्च विभीषणः ॥ १ ॥ अङ्गदो वालिपुत्रश्च सौमित्रिः शरभः कपिः । सुषेणः सहदायादो मैन्दो द्विविद एव च ॥ २ ॥ गजो गवाक्षः कुमुदो नलोऽथ पनसस्तथा । अमित्रविषयं प्राप्ताः समवेताः समर्थयन् ॥ ३ ॥ इयं सा लक्ष्यते लङ्का पुरी रावणपालिता । सासुरोरगगन्धर्वैरमरैरपि दुर्जया ॥ ४ ॥ कार्यसिद्धिं पुरस्कृत्य मन्त्रयध्वं विनिर्णये । नित्यं सन्निहितो ह्यत्र रावणो राक्षसाधिपः ॥ ५ ॥ तथा तेषु ब्रुवाणेषु रावणावरजोऽब्रवीत् । वाक्यमग्राम्यपदवत् पुष्कलार्थं विभीषणः ॥ ६ ॥ अनलः शरभश्चैव सम्पातिः प्रघसस्तथा । गत्वा लङ्कां ममामात्याः पुरीं पुनरिहागताः ॥ ७ ॥ भूत्वा शकुनयः सर्वे प्रविष्टाश्च रिपोर्बलम् । विधानं विहितं यच्च तद्दृष्ट्वा समुपस्थिताः ॥ ८ ॥ संविधानं यदाहुस्ते रावणस्य दुरात्मनः । राम तद्ब्रुवतः सर्वं यथातत्त्वेन मे शृणु ॥ ९ ॥ पूर्वं प्रहस्तः सबलो द्वारमासाद्य तिष्ठति । दक्षिणं च महावीर्यौ महापार्श्वमहोदरौ ॥ १० ॥

कार्यनिर्णयाय मन्त्रः प्रवर्त्यतामित्यर्थः ॥ ४ ॥ ५ ॥ अग्राम्यपदवत् संस्कृतपदवत् । सर्वेषां स्फुटप्रतिपत्तये स्वदेशभाषापदरहितमुक्तवानित्यर्थः ॥६॥ अनल इत्यादिश्लोकत्रयम् । विधानं नगररक्षणसंविधानम् । ते दुरात्मनो रावणस्य यत्संविधानमाहुः तद्यथातत्त्वेन याथार्थ्येन ब्रुवतः मे मत्तः शृणु ॥ ७—९ ॥ पूर्वमिति । स्पष्टः ॥ १० ॥

॥ १ ॥ सहदायादः सबन्धुवर्गः ॥ २ ॥ अमित्रविषयं शत्रुदेशम् । समर्थयन् अमन्त्रयन् ॥ ३ ॥ या दुरासदेति श्रूयते सेयं लङ्केत्यर्थः ॥ ४ ॥ कार्यसिद्धिं पुरस्कृत्य विनिर्णये निमित्ते मन्त्रयध्वं शत्रुहननकार्यनिश्चयाय मन्त्रः क्रियतामित्यर्थः ॥ ५ ॥ अग्राम्यपदवत् अग्राम्यार्थपदवत् ॥ ६ ॥ ७ ॥ विधानं लङ्कारक्षणम् ॥ ८—१४ ॥

पट्टिशासिधनुष्मद्भिः शूलमुद्गरपाणिभिः । बहुभी राक्षसैः प्रधानराक्षसैर्वृतः । नानाप्रहरणैः शूरैरावृतः । रावणात्मजः इन्द्रजित् पश्चिमद्वारम्, आसाद्य तिष्ठतीत्यनुकृष्यते ॥ ११ ॥ असंविग्नः अकम्पितहृदयः । राक्षसैः प्रधानभूतैः ॥ १२ ॥ १३ ॥ बलेन सेनया । राक्षसैः मुख्यैः ॥ १४ ॥

इन्द्रजित् पश्चिमद्वारं राक्षसैर्बहुभिर्वृतः । पट्टिशासिधनुष्मद्भिः शूलमुद्गरपाणिभिः । नानाप्रहरणैः शूरैरावृतो रावणात्मजः ॥ ११ ॥ राक्षसानां सहस्रैस्तु बहुभिः शस्त्रपाणिभिः । युक्तः परमसंविग्नो राक्षसैर्बहुभिर्वृतः ॥ १२ ॥ उत्तरं नगरद्वारं रावणः स्वयमास्थितः ॥ १३ ॥ विरूपाक्षस्तु महता शूलखड्गधनुष्मता । बलेन राक्षसैः सार्धं मध्यमं गुल्ममास्थितः ॥ १४ ॥ एतानेवंविधान् गुल्मान् लङ्कायां समुदीक्ष्य ते । मामकाः सचिवाः सर्वे पुनः शीघ्रमिहागताः ॥ १५ ॥ गजानां च सहस्रं च रथानामयुतं पुरे । हयानामयुते द्वे च साग्रकोटिश्च रक्षसाम् ॥ १६ ॥ विक्रान्ता बलवन्तश्च संयुगेष्वाततायिनः । इष्टा राक्षसराजस्य नित्यमेते निशाचराः ॥ १७ ॥

गुल्मान् सेनाः । " गुल्मो रुक्स्तम्बसेनासु " इत्यमरः ॥ १५ ॥ गजानां गजयोधिनाम् । रथानां हयानामित्यत्राप्येवं द्रष्टव्यम् । हयानां साग्रकोटिः द्वे अयुते चेत्यन्वयः । एते एतावन्तः । यद्वा गजानामित्यादिशब्दा गजादिपराः । एवमुत्तरोत्तराधिकसङ्ख्योच्यते । हयानां द्वे अयुते । रक्षसां साग्रकोटिः पूर्णा कोटिः । एते रावणस्येष्टा अन्तरङ्गाः, स्वसेविन इत्यर्थः ॥ १६ ॥ आततायिनः क्रूरा इत्यर्थः ॥ १७ ॥

एतानिति । गुल्मान् गणान् ॥ १५ ॥ गजानां गजयोधिनाम् । सहस्रं, सन्नद्धमिति शेषः । रथानां रथिनाम् अयुतम्, अत्रापि सन्नद्धमिति शेषः । हयानामयुते द्वे सन्नद्धे रक्षसां साग्रकोटिस्सन्नद्धेत्यर्थः ॥ १६ ॥ १७ ॥

स०–परमसंविग्नः परं यथा भवति तथा असंविग्नः विभीः तिष्ठतीत्यन्वयः । शुकसारणावेदितमहाबलस्मरणादन्तःकरणे भीत इति व्याख्या स्तुतिप्रस्तावाननुगुणा । यदि वक्तव्या भीतिस्तर्हि हनुमतैकलेन कृतस्य कर्मणो दृष्टत्वेन वक्तव्या । श्रवणापेक्षया स्वसाक्षिणः प्राबल्यात् ॥ १२ ॥ आततायिनः स्वयमेव सीतोपरोधापराधं कृत्वा शस्त्रपाणय इत्याततायिनः । यद्वा संयुगे युद्धे इषवः आत्यन्ते सदा सम्यक् क्षिप्यन्ते येन तदिष्वातं धनुः तेन तायन्ते पालयन्ति जनानिति संयुगेष्वाततायिनः । " तायृ सन्तानपालनयोः " इति धातोः । यद्वा परदारापहर्तृसम्बन्धित्वादाततायिनः । " क्षेत्रदारापहर्ता च " इत्युक्तेः । निशाचराः यूथपाः ॥ १७ ॥

अत्र राक्षसेषु । एकैकस्य राक्षसस्य । सहस्राणां सहस्रं दशलक्षसङ्ख्याविशिष्टः परिवारः । इदानीं युद्धार्थं युद्धनिमित्तम् उपतिष्ठत इत्यन्वयः ॥ १८ ॥ एतामिति सार्धश्लोकः । तान् मन्त्रिभूतान् । दर्शनानन्तरं सचिवैः प्रयोज्यकर्तृभिः । लङ्कायां सर्वां प्रवृत्तिमित्यनुषज्यते । रामाय प्रत्य वेदयत्, सचिवैरपि तं वृत्तान्तमावेदयदित्यर्थः ॥ १९ ॥ राममित्यादि श्लोकत्रयम् । उत्तरम् अनन्तरवक्तव्यम् ॥ २० ॥ दिग्विजयकालिकबलादाधुनिक

एकैकस्यात्र युद्धार्थे राक्षसस्य विशांपते । परिवारः सहस्राणां सहस्रमुपतिष्ठते ॥ १८ ॥ एतां प्रवृत्तिं लङ्कायां मन्त्रिप्रोक्तां विभीषणः । एवमुक्त्वा महाबाहू राक्षसांस्तानदर्शयत् । लङ्कायां सचिवैः सर्वां रामाय प्रत्यवेदयत् ॥ १९ ॥ रामं कमलपत्राक्षमिदमुत्तरमब्रवीत् । रावणावरजः श्रीमान् रामप्रियचिकीर्षया ॥ २० ॥ कुबेरं तु यदा राम रावणः प्रत्ययुद्ध्यत । षष्टिः शतसहस्राणि तदा निर्यान्ति राक्षसाः ॥ २१ ॥ पराक्रमेण वीर्येण तेजसा सत्त्वगौरवात् । सदृशा येऽत्र दर्पेण रावणस्य दुरात्मनः ॥ २२ ॥ अत्र मन्युर्न कर्तव्यो रोषये त्वां न भीषये । समर्थो ह्यसि वीर्येण सुराणामपि निग्रहे ॥ २३ ॥

बलमधिकमिति कथयितुं पूर्वबलं परिगणयति—कुबेरमिति । निर्यान्ति निर्ययुः । पराक्रमेण पराभिभवसामर्थ्येन । वीर्येण युद्धे स्वयमविकृतत्वेन । तेजसा प्रतापेन । सत्त्वगौरवात् धैर्यातिशयेनेत्यर्थः । दर्पेण च । रावणस्य अत्र ये सदृशास्तादृशा राक्षसा इति पूर्वेणान्वयः ॥ २१ ॥ २२ ॥ स्वामिसन्निधौ शत्रुबलवर्णनमयुक्तमित्याशङ्क्य परिहरति—अत्रेति । अत्र बलवर्णने सति । मन्युः क्रोधः न कर्तव्यः । रोषये शत्रुनिरसनाय रोष

एकैकस्येति । अत्र परिगणितगजयोधिप्रभृतिचतुर्विधराक्षसेषु एकैकस्य राक्षसस्य सहस्राणां सहस्रं परिवारो युद्धार्थमुपतिष्ठते उपतिष्ठतीति सम्बन्धः ॥ १८ ॥ विभीषणः मन्त्रिप्रोक्तां लङ्कायां प्रवृत्तिम् एवमुक्त्वा तान् राक्षसान् मन्त्रीन् अदर्शयदित्यर्थः । लङ्कायां सर्वां, प्रवृत्तिमिति शेषः । सचिवैस्तैरेव मन्त्रिभिः रामाय प्रत्यवेदयत् ॥ १९ ॥ राममिति । ततो राममिदमुत्तरमब्रवीदिति सम्बन्धः ॥ २० ॥ स्वोक्तमिदानीन्तनबलं प्रभूततरमिति ज्ञापयितुं तस्य पुरातनबलस्य इयत्तामाह—कुबेरमिति द्वाभ्याम् । सत्त्वगौरवात् धैर्यातिशयेन । अत्र लङ्कायाम्, स्थिता इति शेषः ॥२१॥२२॥ अत्र रावणबलवर्णनविषये मन्युर्न कर्तव्यः । रोषये रोषमुत्पादये ।

मुत्पादये । न भीषये शत्रुबलवर्णनेन न भीतिमुत्पादये । रोषोत्पादनस्य फलमाह समर्थो हीति ॥ २३ ॥ तत् राक्षसबलस्य व्यूढत्वात् । महता बलेन वृतो भवानपि । चतुरङ्गेण रावणसेनावच्चतुरवयवेन । व्यूह्य विभज्य । निर्मथिष्यसि । मध्यमपुरुषत्वमार्षम् । चतुरङ्गकार्यकरत्वाच्चतुरङ्गत्व

तद्भवांश्चतुरङ्गेण बलेन महता वृतः । व्यूह्येदं वानरानीकं निर्मथिष्यसि रावणम् ॥ २४ ॥ रावणावरजे वाक्यमेवं ब्रुवति राघवः । शत्रूणां प्रतिघातार्थमिदं वचनमब्रवीत् ॥ २५ ॥ पूर्वद्वारे तु लङ्काया नीलो वानरपुङ्गवः । प्रहस्तप्रतियोद्धा स्याद्वानरैर्बहुभिर्वृतः ॥ २६ ॥ अङ्गदो वालिपुत्रस्तु बलेन महता वृतः । दक्षिणे बाधतां द्वारे महापार्श्वमहोदरौ ॥ २७ ॥ हनुमान् पश्चिमद्वारं निपीड्य पवनात्मजः । प्रविशत्वप्रमेयात्मा बहुभिः कपिभिर्वृतः ॥ २८ ॥ दैत्यदानवसङ्घानामृषीणां च महात्मनाम् । विप्रकारप्रियः क्षुद्रो वरदानबलान्वितः ॥ २९ ॥ परिक्रामति यः सर्वान् लोकान् सन्तापयन् प्रजाः । तस्याहं राक्षसेन्द्रस्य स्वयमेव वधे धृतः ॥ ३० ॥ उत्तरं नगरद्वारमहं सौमित्रिणा सह । निपीड्याभिप्रवेक्ष्यामि सबलो यत्र रावणः ॥ ३१ ॥ वानरेन्द्रश्च बलवानृक्षराजश्च वीर्यवान् । राक्षसेन्द्रानुजश्चैव गुल्मो भवतु मध्यमः ॥ ३२ ॥

मित्यन्ये ॥२४॥ प्रतिघातार्थं प्रतिक्रियार्थम् ॥२५॥ पूर्वद्वारे, स्थित्वेति शेषः ॥ २६॥२७॥ अप्रमेयात्मेति । मायाविन इन्द्रजितोऽयमेवार्ह इति भावः ॥ २८ ॥ स्वस्य चोत्तरद्वारनिरोधहेतुमाह–दैत्यदानवेत्यादि श्लोकत्रयम् । विप्रकारप्रियः प्रियविप्रकारः । “ वा प्रियस्य ” इति पूर्वनिपातः । विप्रकारः पीडा क्षुद्रः क्षुद्रबुद्धिः । प्रजाः सन्तापयन् लोकान् परिक्रामतीत्यन्वयः । तस्याहमिति श्लोके यत्तच्छब्दाध्याहारेणाहंशब्दद्वयनिर्वाहः । योऽहं धृतः निश्चितः सोऽहं प्रवेक्ष्यामीत्यन्वयः । स्वयमेव अद्वारेण । यद्वा तस्याहमित्यर्धान्तमेकं वाक्यम् । उत्तरमित्यादि भिन्नं वाक्यम् ॥२९–३१॥ गुल्मो भवतु



रोषोत्पादनफलमाह–समर्थो हीति ॥ २३ ॥ चतुरङ्गेण [illegible] चतुरङ्गत्वोक्तिः ॥ २४ ॥ २५ ॥ पूर्वद्वारे नीलः, तिष्ठत्विति शेषः ॥ २६–३१ ॥ वानरेन्द्र इति । गुल्मो भवतु मध्यमः बलवद्भ्यां रावणेन्द्रजिद्भ्यामधिष्ठितयोरुत्तरपश्चिमयोर्मध्ये भवत्वित्यभिप्रायः ॥ ३२ ॥

मध्यमः, मध्यमरोना भवत्वित्यर्थः । बलवद्भ्यां रावणेन्द्रजिद्भ्यामधिष्ठितयोरुत्तरपश्चिमयोः मध्यमगुल्मो भवत्वित्यर्थः ॥ ३२ ॥ न चैवेति । संज्ञा सङ्केतः ॥ ३३ ॥ अस्य प्रयोजनमाह–वानरा इति । नः अस्माकम् । वानरा एवास्मिन् स्वजने चिह्नं भविष्यतीति, अस्माकं वानरत्वमेवात्मीयत्व ज्ञापकं भविष्यतीत्यर्थः । यदि वानरा अपि कामरूपधारणेन युद्ध्येयुः । राक्षसानामपि तादृशत्वादात्मपरविवेको न स्यात् । वानरत्वन्तु जघन्यतया

न चैव मानुषं रूपं कार्यं हरिभिराहवे । एषा भवतु संज्ञा नो युद्धेऽस्मिन् वानरे बले ॥ ३३ ॥ वानरा एव नश्चिह्नं स्वजनेऽस्मिन् भविष्यति ॥ ३४ ॥ वयं तु मानुषेणैव सप्त योत्स्यामहे परान् । अहमेष सह भ्रात्रा लक्ष्मणेन महौजसा । आत्मना पञ्चमश्चायं सखा मम विभीषणः ॥ ३५ ॥ स रामः कृत्यसिद्ध्यर्थमेवमुक्त्वा विभीषणम् । सुवेलारोहणे बुद्धिश्चकार मतिमान् मतिम् । रमणीयतरं दृष्ट्वा सुवेलस्य गिरेस्तटम् ॥ ३६ ॥ ततस्तु रामो महता बलेन प्रच्छाद्य सर्वां पृथिवीं महात्मा । प्रहृष्टरूपोऽभिजगाम लङ्कां कृत्वा मतिं सोऽरिवधे महात्मा ॥ ३७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

न ते भजिष्यन्तीति भावः । इदानीं मानुषरूपपरिग्रहप्रतिषेधसामर्थ्यादितः पूर्वं मानुषरूपं परिगृह्य स्थिता इति गम्यते ॥ ३४ ॥ वयं त्विति । मानुषेण मनुष्यसंबन्धिना, रूपेणेति शेषः । विभीषणादीनामपि मानुषरूपसंस्थानसादृश्यादेवमुच्यते ॥ ३५ ॥ स राम इत्यादिसार्धश्लोक एकान्वयः । कृत्यसिद्ध्यर्थं कार्यसिद्ध्यर्थम् । सुवेलारोहणे विषये बुद्धिः बुद्धिमान् । मतुब्लोप आर्षः । मतिम् इच्छाम् । सुवेलारोहणे बुद्धिं चकार मतिमान् मतिमिति च पाठः । सुवेलारोहणबुद्धिमेव मतिं चकार, नान्यामित्यर्थः । आरोहणेच्छाहेतुमाह रमणीयतरमिति । सौन्दर्यावलोकनमेव तदारोहण

संज्ञा सङ्केतः ॥ ३३ ॥ किमर्थमेतत आह–वानरा इति । नः अस्माकं वानरा एव अस्मिन् स्वजने चिह्नं भविष्यति अस्माकं वानरत्वमेवात्मीयत्वज्ञापकं भविष्यतीत्यर्थः । यदि वानरा अपि कामरूपधारणेन युद्ध्येयुः राक्षसानामपि तादृक्त्वादात्मपरबलविवेको न स्यादिति भावः ॥ ३४ ॥ वयमिति । मानुषेण, रूपेणेति शेषः । विभीषणादीनां मानुषरूपसंस्थानसादृश्यादेवमुच्यते ॥ ३५ ॥ कृत्यसिद्ध्यर्थं कृत्यं कर्तव्यमेव सिद्धिः प्रयोजनं यस्य तम् । विभीषणविशेषणमिदम् । सुवेलारोहणेबुद्धिश्चकार मतिमान् मतिं सुवेलारोहणे प्रवृत्ता बुद्धिर्यस्य सः सुवेलारोहणेबुद्धिः । अलुक्त्वमार्षम् । मतिमान् आगामिगोचरबुद्धिमान् ।

हेतुः, नतु लङ्काप्राप्तिः। अत एव लङ्कोपरोधायावरोहणं वक्ष्यति ततस्त्विति। पृथिवीं सुवेलकटकभूमिम्। महात्मा महाबुद्धिः। प्रहृष्टरूपः अतिशयेन प्रहृष्टः। "प्रशंसायां रूपप्" । लङ्कां लङ्कैकदेशं सुवेलम्। महात्मा महाधृतिरिति द्वितीयमहात्मशब्दार्थः। अभिजगाम आरोहणायेति भावः ॥ ३६ ॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥



स तु कृत्वा सुवेलस्य मतिमारोहणं प्रति। लक्ष्मणानुगतो रामः सुग्रीवमिदमब्रवीत् ॥ १ ॥
विभीषणं च धर्मज्ञमनुरक्तं निशाचरम्। मन्त्रज्ञं च विधिज्ञं च श्लक्ष्णया परया गिरा ॥ २ ॥
सुवेलं साधुशैलेन्द्रमिमं धातुशतैश्चितम्। अध्यारोहामहे सर्वे वत्स्यामोऽत्र निशामिमाम् ॥ ३ ॥
लङ्कां चालोकयिष्यामो निलयं तस्य रक्षसः। येन मे मरणान्ताय हृता भार्या दुरात्मना ॥ ४ ॥
येन धर्मो न विज्ञातो न तद्वृत्तं कुलं तथा। राक्षस्या नीचया बुद्ध्या येन तद् गर्हितं कृतम् ॥ ५ ॥

अथ लङ्कादर्शनार्थं सुवेलारोहणमष्टात्रिंशे—स त्वित्यादिश्लोकद्वयमेकान्वयम्। धर्मज्ञत्वादि सुग्रीवस्यापि विशेषणम्। सुवेलो नाम लङ्कासमतुङ्गताको गिरिविशेषः ॥ १ ॥ विधिज्ञं कार्यज्ञम् ॥ २ ॥ चितं व्याप्तम्। अध्यारोहामहे आरोक्ष्यामः। अयं च समुद्रतरणदिवसवृत्तान्तः पूर्वं सङ्क्षेपेणोक्तः, अद्य सविशेषमुच्यते ॥ ३ ॥ लङ्कामित्यादिश्लोकद्वयमेकान्वयम्। लङ्कालोकने निमित्तमाह—निलयमिति। मे भार्येति सम्बन्धः। मरणान्ताय मरणरूपफलाय। तत् प्रसिद्धम्। वृत्तं धर्मशास्त्रविहितस्वकुलाचारः। कुलं स्वकुलातिशयः। एतत्सर्वं भार्यापहरणनिवृत्तिहेतुः तन्नासीदित्यर्थः ॥४॥ तर्हि केन

मतिं चकार सुवेलारोहणेच्छां चकारेत्यर्थः। बुद्धिमिति द्वितीयान्तपाठे तु सुवेलारोहणे मतिं मननात्मिकाम्। बुद्धिं निश्चयात्मिकां चकारेत्यर्थः। यद्वा बुद्धिं तात्कालिकरूपां मतिं चकार अर्थनिर्धारणरूपां चकारेत्यर्थः। 'अर्थनिर्धारणं मतिः' इति तज्ज्ञाः ॥ ३६ ॥ ३७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां सप्तत्रिंशः सर्गः ॥ ३७ ॥ १ ॥ विधिज्ञं कार्यविदम् ॥ २ ॥ अध्यारोहामहे आरोक्ष्यामहे ॥ ३ ॥ मरणान्ताय मरणरूपफलायेत्यर्थः ॥ ४ ॥ नीचया क्रूरया। राक्षस्या राक्षससम्बन्धिन्या। बुद्ध्या हेतुना येन रावणेन धर्मादिकं न ज्ञातं तेन तत्कुलं गर्हितमिति सम्बन्धः ॥ ५–१२ ॥

स०—मरणान्ताय मरणेन रक्षःकुलस्य सहितोऽन्तो नाशः [illegible] राक्षससम्बन्धिन्या। तत्रापि नीचया। विभीषणं सुग्रीवकर्तृकप्रियुक्तिः ॥१॥

हेतुना कृतमित्यत्राह राक्षस्येति । तत् भार्यापहरणम् ॥ ५ ॥ एतादृशस्य निलयदर्शने किं फलम् ? तत्राह—तस्मिन्निति । वर्तते उत्पद्यते । तर्हि तन्मात्रवधे यत्नः क्रियतामित्यत्राह—यस्येति ॥ ६ ॥ अन्यस्य दोषेणान्यवधः किमर्थं क्रियत इत्यत्राह—एक इति । एकः पापं कुरुते नीचेन तेन कर्त्रा आत्मापचारेण तद्दोषेण कारणेन कुलं तत्संबन्धिनः सर्वे विनश्यन्ति ॥ ७ ॥ संमन्त्रयन् वदन् । उपारुहत् उपारुक्षत् ॥ ८ ॥ पृष्ठत इत्यादि सार्धश्लोकः ।

तस्मिन् मे वर्तते रोषः कीर्तिते राक्षसाधमे । यस्यापराधान्नीचस्य वधं द्रक्ष्यामि रक्षसाम् ॥ ६ ॥ एको हि कुरुते पापं कालपाशवशं गतः । नीचेनात्मापचारेण कुलं तेन विनश्यति ॥ ७ ॥ एवं सम्मन्त्रयन्नेव सक्रोधो रावणं प्रति । रामः सुवेलं वासाय चित्रसानुमुपारुहत् ॥ ८ ॥ पृष्ठतो लक्ष्मणश्चैनमन्वगच्छत् समाहितः । सशरं चापमुद्यम्य सुमहद्विक्रमे रतः । तमन्वरोहत् सुग्रीवः सामात्यः स विभीषणः ॥ ९ ॥ हनुमानङ्गदो नीलो मैन्दो द्विविद एव च ॥ १० ॥ गजो गवाक्षो गवयः शरभो गन्धमादनः । पनसः कुमुदश्चैव हरो रम्भश्च यूथपः ॥ ११ ॥ जाम्बवांश्च सुषेणश्च ऋषभश्च महामतिः । दुर्मुखश्च महातेजास्तथा शतवलिः कपिः ॥ १२ ॥ एते चान्ये च बहवो वानराः शीघ्रगामिनः । ते वायुवेगप्रवणास्तं गिरिं गिरिचारिणः । अध्यारोहन्त शतशः सुवेलं यत्र राघवः ॥ १३ ॥ ते त्वदीर्घेण कालेन गिरिमारुह्य सर्वतः । ददृशुः शिखरे तस्य विषक्तामिव खे पुरीम् ॥ १४ ॥

समाहितः सावधानः ॥ ९ ॥ सामात्य इत्युक्तं विवृणोति—हनुमानित्यादिचतुःश्लोकी । हनुमानिति पृथगुक्त्या रामलक्ष्मणौ पश्चामेवारूढाविति गम्यते ॥ १०–१२ ॥ ते प्रसिद्धाः । एते चान्ये च । वायुवेगप्रवणाः वायुवेगेन गच्छन्तः । "प्रुङ् गतौ" इति धातोर्बहुलग्रहणात्कर्तरि ल्युट् । अत एव शीघ्रगामिनः सन्तः अध्यारोहन्त ॥ १३ ॥ ते रामादयः । तस्य प्रसिद्धस्य त्रिकूटस्य । खे विषक्ताम् आकाशे लम्बमानामिव स्थिताम् । पुरीं लङ्कां

वायुवेगप्रवणाः वायुवेगगतयः "प्रुङ् गतौ" इति धातोः रूपम् ॥ १३ ॥ तस्य प्रसिद्धस्य त्रिकूटाद्रेः शिखरे विषक्तां खे चरन्तीमिव स्थितां पुरीं ददृशुरिति

सर्वतो ददृशुः ॥ १४ ॥ वानराश्च ददृशुरित्याह—तामिति । स्पष्टः ॥ १५ ॥ प्राकारस्य चयः वप्रम्, तत्र स्थितैः । "स्याच्चयो वप्रमस्त्रियाम्" इत्यमरः ॥ १६ ॥ १७ ॥ प्रतिरञ्जितः रक्तवर्णीकृतः । पूर्णचन्द्रप्रदीप्तेति । अनेन पौर्णमास्यां सुवेलारोहणमित्युक्तम् । प्रथमायां युद्धारम्भ इत्याहुः । यद्वा पूर्णचन्द्रतुल्यप्रदीपवतीति वाऽर्थः । सम्भवन्ति हि वानरसेनायामपि प्रकाशार्थमारोपिता दीपाः ॥१८॥ हरि वाहिनीपतिः । वानरसेना निर्वाहकः ॥१९॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टात्रिंशः सर्गः ॥ ३८ ॥

तां शुभ्रां प्रवरद्वारां प्राकारपरिशोभिताम् । लङ्कां राक्षससम्पूर्णां ददृशुर्हरियूथपाः ॥ १५ ॥ प्राकारचयसंस्थैश्च तदा नीलैर्निशाचरैः । ददृशुस्ते हरिश्रेष्ठाः प्राकारमपरं कृतम् ॥१६॥ ते दृष्ट्वा वानराः सर्वे राक्षसान् युद्धकांक्षिणः । मुमुचुर्विविधान्नादांस्तत्र रामस्य पश्यतः ॥ १७ ॥ ततोऽस्तमगमत् सूर्यः सन्ध्यया प्रतिरञ्जितः । पूर्णचन्द्रप्रदीप्ता च क्षपा समभिवर्तते ॥ १८ ॥ ततः स रामो हरिवाहिनीपतिर्विभीषणेन प्रतिनन्द्य सत्कृतः । सलक्ष्मणो यूथपयूथसंवृतः सुवेलपृष्ठे न्यवसद्यथासुखम् ॥ १९ ॥ इत्यार्षे श्रीरामायणे० श्रीमद्युद्धकाण्डे अष्टात्रिंशः सर्गः ॥ ३८ ॥

तां रात्रिमुषितास्तत्र सुवेले हरिपुङ्गवाः । लङ्कायां ददृशुर्वीरा वनान्युपवनानि च ॥ १ ॥
समसौम्यानि रम्याणि विशालान्यायतानि च । दृष्टिरम्याणि ते दृष्ट्वा बभूवुर्जातविस्मयाः ॥ २ ॥

अथ लङ्कादर्शनमेकोनचत्वारिंशे—तामिति । तां रात्रिमित्यत्यन्तसंयोगे द्वितीया । ददृशुः प्रातरिति सिद्धम् । वनानि अकृत्रिमाणि । उपवनानि कृत्रिमाणि ॥ १ ॥ समानि च तानि सौम्यानि च समसौम्यानि निम्नोन्नतत्वरहितानि स्निग्धानि चेत्यर्थः । अत एव रम्याणि रमणीयानि । विशालानि विपुलानि ।



सम्बन्धः ॥ १४ ॥ १५ ॥ प्राकारचयसंस्थैः प्राकारस्य चयो वप्रं तत्र संस्थैः नीलैर्निशाचरैः कृतमपरं प्राकारमिव ददृशुः, प्राकारचयस्थान् निशाचरान् प्राकारबुद्ध्या ददृशुरित्यर्थः ॥ १६ ॥ १७ ॥ पूर्णचन्द्रप्रदीप्तेति विशेषणात्सुवेलारोहणं पौर्णमास्यामित्यवगम्यते, तेन प्रतिपदि युद्धारम्भः ॥ १८ ॥ १९ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० युद्धकाण्डव्याख्यायाम् अष्टात्रिंशः सर्गः ॥ ३८ ॥ १ ॥ समसौम्यानि समानि सौम्यानीत्यर्थः । दैर्घ्यविशालैस्समानि दुष्टमृगाद्युपद्रवराहित्येन

आयतानि दीर्घाणि । दृष्टिरम्याणि नयनाकर्षणानि वनान्युपवनानि चेत्यनुकृष्यान्वयः ॥२॥ चम्पकेत्यादिश्लोकचतुष्टयमेकान्वयम् । नागमाला नागकेसरमाला ॥ ३॥ हिन्तालैरित्यादि । उपलक्षितेति शेषः ॥४॥ दिव्यैः पारिजातादिभिः । अत्राप्युपलक्षितेति शेषः । विचित्रेत्यादि पदद्वयमपि दिव्यद्रुम विशेषणम् । शाद्वलैरित्यादावप्युपलक्षणे तृतीया । लङ्काशब्दश्चात्र सुवेलपरः । उत्तरत्र वानरप्रवेशोक्तेः । शुशुभे शोभमाना दृश्यत इत्यन्वयः ॥ ५ ॥ ६ ॥

चम्पकाशोकपुन्नागसालतालसमाकुला । तमालवनसञ्छन्ना नागमालासमावृता ॥ ३ ॥ हिन्तालैरर्जुनैर्नीपैः सप्तपर्णैश्च पुष्पितैः । तिलकैः कर्णिकारैश्च पाटलैश्च समन्ततः ॥ ४ ॥ शुशुभे पुष्पिताग्रैश्च लतापरिगतैर्द्रुमैः । लङ्का बहुविधैर्दिव्यैर्यथेन्द्रस्यामरावती ॥ ५ ॥ विचित्रकुसुमोपेतै रक्तकोमलपल्लवैः । शाद्वलैश्च तथा नीलैश्चित्राभिर्वनराजिभिः ॥ ६ ॥ गन्धाढ्यान्यभिरम्याणि पुष्पाणि च फलानि च । धारयन्त्यगमास्तत्र भूषणानीव मानवाः ॥७॥ तच्चैत्ररथसङ्काशं मनोज्ञं नन्दनोपमम् । वनं सर्वर्तुकं रम्यं शुशुभे षट्पदायुतम् ॥ ८ ॥ नत्यूहकोयष्टिभकैर्नृत्यमानैश्च बर्हिभिः । रुतं परभृतानां च शुश्रुवुर्वननिर्झरे ॥ ९ ॥ नित्यमत्तविहङ्गानि भ्रमराचरितानि च । कोकिलाकुलषण्डानि विहगाभिरुतानि च ॥ १० ॥ भृङ्गराजाभिगीतानि भ्रमरैः सेवितानि च । कोणालकविघुष्टानि सारसाभिरुतानि च ॥११॥ विविशुस्ते ततस्तानि वनान्युपवनानि च । हृष्टाः प्रमुदिता वीरा हरयः कामरूपिणः ॥ १२

गन्धेति । तत्र वनेषु धारयन्ति अधारयन् । अगमाः वृक्षाः ॥७॥ सर्वे ऋतवो यस्मिन् तत्सर्वर्तुकम् । "शेषाद्विभाषा" इति कप्प्रत्ययः । षट्पदायुतं षट्पदैः आ समन्ताद्युतम् ॥८॥ वननिर्झरे नत्यूहैः कोयष्टिभकैः जलकुक्कुटविशेषैः नृत्यमानैः नृत्यद्भिः बर्हिणैश्च सहितानां परभृतानां रुतं शुश्रुवुरिति योजना ॥९॥ वनरामणीयकाकृष्टास्तत्र विविशुरित्याह—नित्येत्यादिना कामरूपिण इत्यन्तेन श्लोकत्रयेण । विहङ्गाः वक्ष्यमाणकोकिलादिव्यतिरिक्ताः । षण्डाः वृक्षसमूहाः । विहङ्गभृङ्गसञ्चारस्य तन्नादस्य च वनशोभाहेतुत्वात्तत्सञ्चारमुक्त्वा तन्नादमाह—विहगेत्यादिना । विहगानामभिरुतं येषु तानि विहगाभिरुतानि । एवमुत्तरत्रापि विग्रहः ॥ १० ॥ कोणालकः खञ्जनः । सारसाभिरुतानीत्यनेन वनादीनां सरस्समीपवर्तित्वमुक्तम् ॥ ११ ॥ हृष्टाः पुलकिताः । सौम्यानीति यावत् ॥२-७॥ सर्वर्तुकं सर्वे ऋतवो यस्मिन् तत् सर्वर्तुकम्॥८॥ नृत्यमानैः नृत्यद्भिः बर्हिणैर्युक्तं वनं शुशुभ इति सम्बन्धः ॥९॥ कोकिलाकुलषण्डानि

प्रमुदिताः सन्तुष्टाः । वीराः शत्रुवनप्रवेशेऽपि निर्भयाः । कामरूपिणः सूक्ष्मविपुलप्रवेशानुगुणस्थूलसूक्ष्मशरीरवन्तः ॥ १२ ॥ तेषामिति । स्पष्टः ॥ १३ ॥ अन्ये त्वित्यादिसार्धश्लोकद्वयमेकान्वयम् । स्पष्टम् ॥ १४ ॥ १५ ॥ रजश्चेत्यर्धमेकं वाक्यम् । चरणोत्थितं वानरपादाहतिजनितम् । रजः ऊर्ध्वं जगाम उत्थितमित्यर्थः ॥ १६ ॥ अत्र ऋक्षादयो लङ्कावनवासिनः । भीताः दर्शनादेव भीताः । तेन शब्देन वित्रस्ताः विशेषेण त्रस्ताः । दश दिशो जग्मुः, यथायथं

तेषां प्रविशतां तत्र वानराणां महौजसाम् । पुष्पसंसर्गसुरभिर्ववौ घ्राणसुखोऽनिलः ॥ १३ ॥ अन्ये तु हरिवीराणां यूथान्निष्क्रम्य यूथपाः । सुग्रीवेणाभ्यनुज्ञाता लङ्कां जग्मुः पताकिनीम् ॥ १४ ॥ वित्रासयन्तो विहगांस्त्रासयन्तो मृगद्विपान् । कम्पयन्तश्च तां लङ्कां नादैस्ते नदतां वराः । कुर्वन्तस्ते महावेगा महीं चरणपीडिताम् ॥ १५ ॥ रजश्च सहसैवोर्ध्वं जगाम चरणोत्थितम् ॥ १६ ॥ ऋक्षाः सिंहा वराहाश्च महिषा वारणा मृगाः । तेन शब्देन वित्रस्ता जग्मुर्भीता दिशो दश ॥ १७ ॥ शिखरं तत् त्रिकूटस्य प्रांशु चैकं दिविस्पृशम् । समन्तात् पुष्पसञ्छन्नं महारजतसन्निभम् ॥ १८ ॥ शतयोजनविस्तीर्णं विमलं चारुदर्शनम् । श्लक्ष्णं श्रीमन्महच्चैव दुष्प्रापं शकुनैरपि । मनसाऽपि दुरारोहं किं पुनः कर्मणा जनैः ॥ १९ ॥

जग्मुरित्यर्थः ॥ १७ ॥ एवं त्रिकूटस्य प्रथमशिखरं सुवेलाख्यमुक्त्वा मध्यमशिखरं वर्णयति—शिखरं तदित्यादिना । सार्धश्लोकद्वयमेकान्वयम् । तत् प्रसिद्धम् । प्रांशु पार्श्ववर्तिशिखरद्वयापेक्षया उन्नतम् । एकम् अद्वितीयम्, मध्यममित्यर्थः । स्पृशतीति स्पृशम् । इगुपधलक्षणः कप्रत्ययः । समन्तात् पुष्पसञ्छन्नम् अत एव महारजतसन्निभं पृथुरजतसन्निभम् । यद्वा सुवर्णसन्निभमिति स्वरूपोक्तिः । चारुदर्शनं सुन्दरदर्शनम् । एवंभूतं शिखरम् अदृश्य तेत्यध्याहारः ॥ १८ ॥ १९ ॥





कोकिलाकुलाः षण्डा वृक्षषण्डा येषु तानि ॥ १०–१७ ॥ दिवं स्पृशतीति दिविस्पृशम् । समन्तात्पुष्पसञ्छन्नम् अत एव महारजतसन्निभं, महारजतं काञ्चनम् ॥ १८–२ ॥

निविष्टेत्यादिश्लोकपञ्चकमेकान्वयम् । सालेन प्राकारेण । प्रासादैरिति । प्रासादादिलक्षणं प्रागेव लिखितम् । आतपापाये वर्षारम्भसमये । मध्यमं वैष्णवं पदमिति । त्रिविक्रमावतारे त्रिभिः पदैः सर्वलोकक्रमणे मध्यमपदेनान्तरिक्षं क्रान्तमिति आकाशं मध्यमं वैष्णवं पदमित्युच्यते ॥ २०-२२ ॥



निविष्टा तत्र शिखरे लङ्का रावणपालिता । शतयोजनविस्तीर्णा त्रिंशद्योजनमायता ॥ २० ॥ सा पुरी गोपुरैरुच्चैः पाण्डराम्बुदसन्निभैः । काञ्चनेन च सालेन राजतेन च शोभिता ॥ २१ ॥ प्रासादैश्च विमानैश्च लङ्का परम भूषिता । घनैरिवातपापाये मध्यमं वैष्णवं पदम् ॥२२॥ यस्यां स्तम्भसहस्रेण प्रासादः समलंकृतः । कैलासशिखराकारो दृश्यते खमिवोल्लिखन् ॥ २३ ॥ चैत्यः स राक्षसेन्द्रस्य बभूव पुरभूषणम् । बलेन रक्षसां नित्यं यः समग्रेण रक्ष्यते ॥२४॥ मनोज्ञां काननवतीं पर्वतैरुपशोभिताम् । नानाधातुविचित्रैश्च उद्यानैरुपशोभिताम् ॥२५॥ नानाविहगसंघुष्टां नानामृगनिषेविताम् । नानाकाननसन्तानां नानाराक्षससेविताम् ॥ २६ ॥ तां समृद्धां समृद्धार्थां लक्ष्मीवान् लक्ष्मणाग्रजः । रावणस्य पुरीं रामो ददर्श सह वानरैः ॥२७॥ तां महागृहसम्बाधां दृष्ट्वा लक्ष्मणपूर्वजः । नगरीममरप्रख्यो विस्मयं प्राप वीर्यवान् ॥ २८ ॥

यस्यामिति । उल्लिखन् व्याप्नुवन् ॥ २३ ॥ चैत्य इति । नगरमध्यचतुष्पथं चैत्यम्, तत्र भवश्चैत्यः । राक्षसेन्द्रस्य पुरभूषणमित्यन्वयः । यः समग्रेण रक्षसां शतेन नित्यं रक्ष्यते । यश्च राक्षसेन्द्रस्य पुरभूषणं बभूव । स्तम्भसहस्रेण समलंकृतः कैलासशिखराकारः खमुल्लिखन्निव स्थितः चैत्यः स प्रासादः यस्यां दृश्यते तादृशी रावणपालितत्वादिविशेषणविशिष्टा तत्र शिखरे निविष्टा लङ्का अदृश्यतेत्यध्याहारेणान्वयः ॥ २४ ॥ एवं वानराणामग्रगतानां लङ्कादर्शनमुक्त्वा रामस्यापि तद्दर्शनमाह—मनोज्ञामित्यादि श्लोकत्रयमेकान्वयम् । पर्वतैः क्रीडाशैलैः । नानाधातुविचित्रैः इति पर्वतविशेषणम् । उद्यानैः कृत्रिमवनैः ॥ २५ ॥ नानाकाननेति । पूर्वं काननवत्त्वमुक्तम्, अत्र तन्नानात्वमिति भिदा ॥ २६ ॥ समृद्धाम् उन्नताम् । समृद्धार्थां समृद्धद्रव्याम् । लक्ष्मीवान् नगरदर्शनजप्रीतिविकसितकान्तिः ॥ २७ ॥ अमरप्रख्यः देवसदृशः ॥ २८ ॥

सा पुरीति । सालेन प्राकारेण ॥ २१ ॥ प्रासादैरिति । आतपापाये वर्षाकाले । मध्यमं वैष्णवं पदम् आकाशम् ॥ २२-२८ ॥

पुनः सङ्केतेनाह—तामिति । रत्नानि श्रेष्ठवस्तूनि । संविधानं रक्षणम् ॥२९॥ इति श्रीगो॰ श्रीरामा॰ रत्न॰ युद्धकाण्ड॰ एकोनचत्वारिंशः सर्गः ॥३९॥
अथ सुग्रीवरावणयोर्द्वन्द्वयुद्धकथनं चत्वारिंशे । अत्र प्रथमश्लोकः पूर्वोक्तानुवादः—तत इति । योजनद्वयमण्डलं योजनद्वयविस्तारमण्डलम् ॥१॥ स्थित्वे त्यादि । सुन्यस्तां सुष्ठु निवेशिताम् ॥ २ ॥ तस्यामित्यादि सार्द्धश्लोकत्रयमेकान्वयम् । अत्र ददर्शेत्यनुपज्यते । श्वेते चामरे पर्यन्ते पार्श्वद्वये यस्य सः



तां रत्नपूर्णां बहुसंविधानां प्रासादमालाभिरलंकृतां च । पुरीं महायन्त्रकवाटमुख्यां ददर्श रामो महता बलेन ॥ २९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

ततो रामः सुवेलाग्रं योजनद्वयमण्डलम् । आरुरोहससुग्रीवो हरियूथपसंवृतः ॥ १ ॥ स्थित्वा मुहूर्तं तत्रैव दिशो दश विलोकयन् । त्रिकूटशिखरे रम्ये निर्मितां विश्वकर्मणा । ददर्श लङ्कां सुन्यस्तां रम्यकाननशोभिताम् ॥ २ ॥ तस्यां गोपुरशृङ्गस्थं राक्षसेन्द्रं दुरासदम् ॥ ३ ॥ श्वेतचामरपर्यन्तं विजयच्छत्रशोभितम् । रक्तचन्दनसंलिप्तं रत्नाभरणभूषितम् ॥ ४ ॥ नीलजीमूतसङ्काशं हेमसञ्छादिताम्बरम् । ऐरावतविषाणाग्रैरुत्कृष्टकिणवक्षसम् ॥ ५ ॥ शशलोहितरागेण संवीतं रक्तवाससा । सन्ध्यातपेन संवीतं मेघराशिमिवाम्बरे ॥ ६ ॥ पश्यतां वानरेन्द्राणां राघवस्यापि पश्यतः । दर्शनाद्राक्षसेन्द्रस्य सुग्रीवः सहसोत्थितः ॥ ७ ॥

श्वेतचामरपर्यन्तः, उभयतो वीज्यमानचामर इत्यर्थः । विजयच्छत्रं विजयसूचकच्छत्रम् । रत्नाभरणं पद्मरागाभरणम् । हेमसञ्छादिताम्बरं तत्र तत्र सुवर्णचित्राम्बरम् । सुवर्णसूत्रिताम्बरमिति वाऽर्थः । उत्कृष्टकिणवक्षसम् उपपादितकिणवक्षसम् । उत्कृष्टस्य उल्लिखितस्य किणः वक्षसि यस्य स तथेति वाऽर्थः । शशलोहितरागेण शशरुधिरसमानरागेण । रक्तशब्दविवरणमिदम् । रक्तवाससा उत्तरीयेण संवीतं परिवीतम् ॥३–६॥ " हतं च रावणं सङ्ख्ये

॥ २९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायामेकोनचत्वारिंशस्सर्गः ॥ ३९ ॥ तत इति । योजनद्वयमण्डलं योजनद्वयप्रमाणविस्तारम् ॥१–४॥ हेमसञ्छादिताम्बरं तत्र तत्र हेमविचित्राम्बरम् । उत्कृष्टकिणवक्षसम् उत्कृष्टा उत्पादिताः किणाः प्रहारकिणाः वक्षसि यस्य तम् ॥ ५ ॥ शशलोहितं शशरुधिरम् । एतादृशविशेषणविशिष्टं राक्षसेन्द्रं, दृष्ट्वेति शेषः ॥६॥ पश्यतामिति श्लोकद्वयमेकं वाक्यम् । पश्यतामित्यादावनादरे षष्ठी ॥७॥

दर्शनादवधारय" इति रामसन्निधौ पूर्वं प्रतिज्ञातमर्थं साधयितुमुत्थितः सुग्रीव इत्याह — पश्यतामित्यादिना । पश्यतामित्यनादरे षष्ठी । अत्रानादरणमनुक्त्वा गमनम् । सप्तम्यर्थे षष्ठी वा । दर्शनात् दर्शनमात्रात् ॥ ७॥ क्रोधवेगेन, कथं मत्स्वामिनोऽग्रे स्वयं राजोपचारेण तिष्ठति दुरात्मेति कोपातिशयेनेत्यर्थः । सत्त्वेन मनोबलेन । बलेन कायबलेन । पुप्लुवे, गोपुरमुद्दिश्येति शेषः ॥ ८ ॥ गोपुरस्थले स्थित्वेत्यन्वयः । अन्तरात्मना मनसा ॥९॥ रामाभिप्रायेण

क्रोधवेगेन संयुक्तः सत्त्वेन च बलेन च । अचलाग्रादथोत्थाय पुप्लुवे गोपुरस्थले ॥ ८ ॥ स्थित्वा मुहूर्तं सम्प्रेक्ष्य निर्भयेनान्तरात्मना । तृणीकृत्य च तद्रक्षः सोऽब्रवीत् परुषं वचः ॥ ९ ॥ लोकनाथस्य रामस्य सखा दासोऽस्मि राक्षस । न मया मोक्ष्यसेऽद्य त्वं पार्थिवेन्द्रस्य तेजसा ॥ १० ॥ इत्युक्त्वा सहसोत्पत्य पुप्लुवे तस्य चोपरि । आकृष्य मुकुटं चित्रं पातयित्वाऽपतद्भुवि ॥ ११ ॥ समीक्ष्य तूर्णमायान्तमाबभाषे निशाचरः । सुग्रीवस्त्वं परोक्षं मे हीनग्रीवो भविष्यसि ॥ १२ ॥ इत्युक्त्वोत्थाय तं क्षिप्रं बाहुभ्यामाक्षिपत्तले । कन्तुवत्तं समुत्थाय बाहुभ्यामाक्षिपद्धरिः ॥ १३ ॥ परस्परं स्वेदविदिग्धगात्रौ परस्परं शोणितदिग्धदेहौ । परस्परं श्लिष्टनिरुद्धचेष्टौ परस्परं शाल्मलिकिंशुकौ यथा ॥ १४ ॥

सखा, वस्तुतो दासोऽस्मीति भावः । मया मत्तः । औद्धत्यं परिहरति पार्थिवेन्द्रस्य तेजसेति ॥ १० ॥ ११ ॥ आयान्तं, सुग्रीवमिति शेषः । परोक्षं ममासन्निधाने त्वं सुग्रीवः शोभनग्रीवः, प्रत्यक्षं तु हीनग्रीवो भविष्यसीत्यर्थः ॥१२॥ तले गोपुरतले । आक्षिपत् अपातयत् । कन्तुवत्समुत्थाय कन्तुकवज्झटित्युत्पत्येत्यर्थः ॥ १३ ॥ परस्परमित्यादि श्लोकद्वयमेकान्वयम् । आरम्भे दृढपरीरम्भेण स्वेदसिक्तगात्रौ । ततः खरतरनखक्षतेन शोणितलिप्त

पुप्लुवे, गोपुरमुद्दिश्येति शेषः । गोपुरस्थल इत्यस्य स्थित्वेत्युत्तरेण सम्बन्धः ॥ ८ ॥ ९ ॥ लोकनाथस्येति । रामाभिप्रायेण सखित्वम्, सुग्रीवाभिप्रायेण दासत्वमिति भावः ॥१०॥११॥ त्वं मे परोक्षे असन्निधाने सुग्रीवः शोभनग्रीवः । इदानीं सन्निधाने तु हीनग्रीवो भविष्यसीत्यर्थः ॥ १२ ॥ कन्तुवत् समुत्थायेति सम्बन्धः ॥ १३ ॥ परस्परं शाल्मलिकिंशुकौ यथा शाल्मलिकिंशुकाविव ॥ १४ ॥

शरीरौ । ततो दृढाश्लिष्टतया निरुद्धचेष्टौ निष्पन्दौ । ततः परस्परत्यागे कुसुमितशाल्मलीकिंशुकाविव स्थितौ । तौ वानरराक्षसेन्द्रौ । मुष्टिप्रहारैः । मुष्टीनां व्यथायां तलप्रहारैः । तत्पीडायाम् अरत्निघातैः निष्कानिष्ठमुष्टियुक्तप्रकोष्ठप्रहारैः । "अरत्निस्तु निष्कनिष्ठेन मुष्टिना" इत्यमरः । तद्बाधायां कराग्रघातैः । असह्यरूपम् अत्यन्तासह्यम् । प्रशंसायां रूपप्प्रत्ययः । युद्धं चक्रतुः ॥ १४ ॥ १५ ॥ कृत्वेत्यादिसार्द्धश्लोक एकान्वयः । नियुद्धं मल्लयुद्धं

मुष्टिप्रहारैश्च तलप्रहारैररत्निघातैश्च कराग्रघातैः । तौ चक्रतुर्युद्धमसह्यरूपं महाबलौ वानरराक्षसेन्द्रौ ॥ १५ ॥
कृत्वा नियुद्धं भृशमुग्रवेगौ कालं चिरं गोपुरवेदिमध्ये । उत्क्षिप्य चाक्षिप्य विनम्य देहौ पादक्रमाद्गोपुरवेदिलग्नौ ।
अन्योन्यमाविध्य विलग्नदेहौ तौ पेततुः सालनिखातमध्ये ॥ १६ ॥ उत्पेततुर्भूतलमस्पृशन्तौ स्थित्वा मुहूर्तं त्वभि
निश्वसन्तौ । आलिङ्ग्य चावल्ग्य च बाहुयोक्त्रैः संयोजयामासतुराहवे तौ ॥ १७ ॥ संरम्भशिक्षाबलसम्प्रयुक्तौ
सञ्चेरतुः सम्प्रतियुद्धमार्गैः । शार्दूलसिंहाविव जातदर्पौ गजेन्द्रपोताविव सम्प्रयुक्तौ ॥ १८ ॥

बाहुयुद्धं वा । "नियुद्धं बाहुयुद्धं स्यात्" इत्यमरः । गोपुरवेदिमध्ये चिरं कालं नियुद्धं कृत्वा । तत उत्क्षिप्य परस्परमूर्ध्वं क्षिप्त्वा । आक्षिप्य आकृष्य । परस्परं देहौ विनम्य विनाम्य । पादक्रमात् पादविन्यासविशेषात् । गोपुरवेदिलग्नौ पदात्पदं पश्चाच्चलित्वा पुनर्युद्धार्थमवसरप्रतीक्षतया गोपुरवेदिकायां निश्चलं स्थितावित्यर्थः । आविध्य बाहुभ्यां संवेष्ट्य विलग्नदेहौ श्लिष्टदेहौ सन्तौ । सालनिखातयोः प्राकारपरिखयोर्मध्ये पेततुः ॥ १६ ॥ लाघवातिशयेन भूतलमस्पृष्ट्वैव उत्पेततुः । ततो मुहूर्तं तूष्णीं स्थित्वा श्रमवशादभिनिश्वसन्तौ पुनरालिङ्ग्य स्वयमेव स्वशरीरमालिङ्ग्य आवल्ग्य आप्लुत्य बाहुयोक्त्रैः बाहुपाशैः संयोजयामासतुः, देहाविति शेषः । निबिडं बबन्धतुरित्यर्थः ॥ १७ ॥ संरम्भः अभिनिवेशः । शिक्षा अभ्यासः । बलं शक्तिः । एतैः संप्रयुक्तौ संयुक्तौ सन्तौ सम्प्रतियुद्धमार्गैः चातुर्येण परस्परग्रहणानुकूलक्रमैरित्यर्थः । सम्प्रति तदानीमित्यर्थ इत्येके । शार्दूलसिंहौ शार्दूलश्रेष्ठौ ।



अरत्निघातैः निष्कानिष्ठमुष्टियुक्तप्रकोष्ठप्रहारैः । असह्यरूपम् अत्यन्तासह्यम् । प्रशंसायां रूपप् ॥१५॥ नियुद्धं बाहुयुद्धम् । विनम्य विनाम्य । पदक्रमात् पादविन्यासविशेषात् ॥ १६ ॥ उत्पेततुरिति । निपातानन्तरं लाघवातिशयेन भूतलमस्पृशन्तावेवोत्प्लुत्य तदनन्तरं श्रमात् श्रमवशादभिनिश्वसन्तौ मुहूर्तं तूष्णीं स्थित्वा पुनरावल्ग्य आलिङ्ग्य च बाहुयोक्त्रैः बहुपाशैः परस्परं संयोजयामासतुः निबिडं बबन्धतुरित्यर्थः ॥ १७ ॥ संरम्भोऽभिनिवेशः । शिक्षा अभ्यासः । बलं शक्तिः ।

संप्रयुक्तौ सन्तौ । गजेन्द्रपोतौ कलभौ ॥१८॥ संहृत्य संयोज्य । उराभ्यामन्योन्यमापीड्य धरण्यां युगपन्निपेततुः । अथ उद्यम्य उद्धृत्य अधिक्षिपन्तौ पातयन्तौ । एवं बहुयुद्धमार्गैः बहुयुद्धप्रकारैः संचक्रमाते सञ्चेरतुः॥ १९॥ खुरल्यां श्रमजयाय कृतोऽभ्यासो व्यायामः, तद्रूपा या शिक्षा तद्बलेन तदतिशयेन संप्रयुक्तौ संयुक्तौ । वार्यन्ते एभिरिति वारणाः आलानस्तम्भाः । वारणवारणाभैः बाहूत्तमैः अन्योन्यमाशु निवारयन्तावपि क्लमं श्रमं न जग्मतुः ॥ २० ॥ चिरेणेत्यर्द्धम् । चिरेण कालेन बहुकालेन । संप्रयुक्तौ युद्ध्यमानौ तौ । मण्डलमार्गं चक्राकारमार्गम् । चेरतुः चक्रतुरित्यर्थः । अयं च वक्ष्यमाण

संहृत्य चापीड्य च तावुरोभ्यां निपेततुर्वै युगपद्धरण्याम् । उद्यम्य चान्योन्यमधिक्षिपन्तौ सञ्चक्रमाते बहुयुद्धमार्गैः ॥ १९ ॥ व्यायामशिक्षाबलसम्प्रयुक्तौ क्लमं न तौ जग्मतुराशु वीरौ । बाहूत्तमैर्वारणवारणाभैर्निवारयन्तौ वरवारणाभौ ॥ २० ॥ चिरेण कालेन तु सम्प्रयुक्तौ सञ्चेरतुर्मण्डलमार्गमाशु ॥ २१ ॥ तौ परस्परमासाद्य यत्तावन्योन्यसूदने । मार्जाराविव भक्षार्थे वितस्थाते मुहुर्मुहुः ॥२२॥ मण्डलानि विचित्राणि स्थानानि विविधानि च । गोमूत्रिकाणि चित्राणि गतप्रत्यागतानि च ॥ २३ ॥

मार्गान्तराणामप्युपलक्षणम् ॥ २१ ॥ तदेव प्रपञ्चयति—तावित्यादिना । परस्परमासाद्य अन्योन्यसूदने अन्योन्यहिंसने यत्तौ यत्नवन्तौ । भक्ष्यत इति भक्षः भक्ष्यद्रव्यम् । तदर्थे तन्निमित्तम् । मार्जाराविव वितस्थाते विशेषेण तस्थतुः । "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् । भक्षग्रहणदत्तावधानौ मार्जाराविव निश्चलं तस्थतुरित्यर्थः । मुहुर्मुहुरित्यनेन मध्ये मध्ये मण्डलादिसञ्चारो व्यज्यते ॥२२ ॥ मण्डलानीत्यादिचतुःश्लोक्येकान्वया । मण्डलानि परिभ्रमणविशेषान् । यथाह भरतः—"एकपादप्रचारो यः स चारीत्यभिधीयते । द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् । करणानां समायोगात्खण्डमित्यभिधीयते । खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत् ॥" इति । विचित्राणि सव्यमपसव्यं सव्यापसव्यमर्द्धभ्रमणमित्यादिभेदाद्भिन्नानि ।

एतैः संयुक्तौ ॥ १८ ॥ व्यायामशिक्षाबलसंप्रयुक्तौ युद्धसञ्चाराभ्यासबलयुक्तौ । वारणवारणाभैः वारणा गजाः तेषां वारणानि अर्गलानि तत्सदृशैः । मण्डलमार्गं पादभ्रमणविशेषमार्गं सञ्चेरतुः । मण्डलस्य लक्षणं भरतेनोक्तम्—"एकपादप्रचारो यस्स चारीत्यभिधीयते । द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् । करणानां समायोगात्खण्डमित्यभिधीयते । खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत् । गदायुद्धे नियुद्धे च चक्रशस्त्रादिमोचने ॥" इति ॥१९–२२ ॥ स्थानानि विविधानि

स्थानानि व्याघ्रसिंहादितुल्यावस्थानानि वैष्णवादिस्थानानि । पादयोः पूर्वापरतिर्यग्विक्षेपादिका विन्यासविशेषा इति यावत् । तदाह भरतः—"वैष्णवं समपादं च वैशाखं मण्डलं तथा । प्रत्यालीढमथालीढं स्थानान्येतानि षण्नृणाम् ॥" इति । षश्चेति धनुर्वेदे । एषां लक्षणादिकथने ग्रन्थगौरवं स्यादिति तन्नाद्रियते । गोमूत्रिकाणि गोमूत्रसरणिसदृशानि गमनानि । गोमूत्रशब्दात्तदाकारगमनवाचकान्मत्वर्थे ठन्प्रत्ययः । गोमूत्रिकाणां चित्रत्वं गमनागमनादिभेदात् । गतप्रत्यागतानि उपसर्पणापसर्पणानि । एते उभयगतिप्रचारभेदाः ॥ २३ ॥ तिरश्चीनगतानि तिर्यग्गमनानि । वक्रगतानि सव्याप

तिरश्चीनगतान्येव तथा वक्रगतानि च । परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ॥ २४ ॥
अभिद्रवणमाप्लावमास्थानं च सविग्रहम् । परावृत्तमपावृत्तमवद्रुतमवप्लुतम् ॥ २५ ॥
उपन्यस्तमपन्यस्तं युद्धमार्गविशारदौ । तौ सञ्चेरतुरन्योन्यं वानरेन्द्रश्च रावणः ॥ २६ ॥

सव्यसञ्चरणानि । परिमोक्षं स्थानचालनेन प्रहाराणां मोघकरणम् । वर्जनं प्रतिप्रयोगेन परिहरणम् । परिधावनम् एकस्य तिष्ठतः समन्तादन्यस्य गमनागमनम् ॥ २४ ॥ अभिद्रवणम् आभिमुख्येन शीघ्रं गमनम् । आप्लावम् अल्पाङ्गत्वानल्पाङ्गत्वादिभिर्विनम्य गमनम्, ईषद्गमनं वा मण्डूकवद् गमनमित्यर्थः । आस्थानं च सविग्रहं विग्रहसहितमास्थानम् । विगृह्य केवलासनं प्रगृह्य निर्भयावस्थानमिति वाऽर्थः । परावृत्तं पराङ्मुखगमनम् । अपावृत्तं स्थित्वैव पश्चाच्चलनम् । अवद्रुतं जिघृक्षया शरीरं सङ्कुच्यावनम्य गमनम् । अवप्लुतं प्रतियोधिनं पादेन प्रहर्तुमधोमुखेन प्लवनम् ॥ २५ ॥ उपन्यस्तं प्रतियोधिबाहुग्रहणार्थं स्वबाहुप्रसारणम् । अपन्यस्तं प्रतियोधिग्रहणवञ्चनार्थं स्वबाह्वोरपक्षेपणम् । एवं खड्गविद्या मल्लशास्त्रादिषूपदिश्यते ।

पादयोः पूर्वापरविक्षेपादिविन्यासविशेषाः । तदुक्तं भरतेन—" वैष्णवं समपादं च वैशाखं मण्डलं तथा । प्रत्यालीढमनाविद्धं स्थानान्येतानि षण्नृणाम् ॥" इति । गोमूत्रिकाणि गोमूत्ररेखाकारकुटिलगमनविशेषान् । गतप्रत्यागतानि उपसर्पणापसर्पणानि ॥ २३ ॥ तिरश्चीनगतानि तिर्यग्गमनानि । वक्रगतानि सव्यापसव्यसंचरणानि । परिमोक्षं प्रहाराणां परप्रयुक्तप्रहाराणां स्थानचलनादिना वितथीकरणम् । वर्जनं स्वप्रहारवैफल्यापादकस्थाने स्वकर्तृकप्रहारवर्जनम् । परिधावनम् एकस्य तिष्ठतः समन्तादन्यस्य भ्रमणम् ॥२४॥ अभिद्रवणम् आभिमुख्येन शीघ्रगमनम् । आप्लावमीषद्गमनम्, अवस्थानं कृत्वा गमनमिति यावत् । आस्थानं च सविग्रहं विगृह्याभिमुख्येनावस्थानम् । परावृत्तं पराङ्मुखगमनम् । अपावृत्तं स्थित्वैव पार्श्वतोऽपसर्पणम् । अवद्रुतं जिघृक्षया झटिति नम्रीभूय गमनम् । अवप्लुतं प्रतियोधिनं पादे प्रहर्तुमधोमुखेन प्लवनम् ॥२५॥ उपन्यस्तं प्रतियोधिबाहुग्रहणार्थं स्वबाहुप्रसारणम् । अपन्यस्तं प्रतियोधिग्रहणवञ्चनार्थं स्वबाह्वोरपक्षेपणम् ॥२६॥

तत्तन्निदर्शने नितान्तं ग्रन्थगौरवं स्यात् । अतस्तदुपेक्ष्यते ॥ २६ ॥ एतस्मिन्नित्यादिश्लोकद्वयमेकान्वयम् । अन्तरे अवकाशे । मायाबलं परितोऽनेक रावणप्रदर्शनम् । आरब्धुमुपसंपेदे कर्तुमुपचक्रमे । तं मायोपक्रमम् । जितेन जयेन काशते प्रकाशत इति जितकाशी । रावणस्य मायाबलोपक्रम एव निर्मायं युद्ध्यमानस्य सुग्रीवस्य जय इति ज्ञेयम् । जितक्लमः जितश्रमः । बलिना चिरं मल्लयुद्धकरणादिति भावः । अत्र प्रासादे स्थित एव रावणो वञ्चितः

एतस्मिन्नन्तरे रक्षो मायाबलमथात्मनः । आरब्धुमुपसम्पेदे ज्ञात्वा तं वानराधिपः ॥ २७ ॥ उत्पपात तदाऽऽकाशं जितकाशी जितक्लमः । रावणः स्थित एवात्र हरिराजेन वञ्चितः ॥ २८ ॥ अथ हरिवरनाथः प्राप्य सङ्ग्रामकीर्तिं निशिचरपतिमाजौ योजयित्वा श्रमेण । गगनमतिविशालं लङ्घयित्वाऽर्कसूनुर्हरिवरगणमध्ये रामपार्श्वं जगाम ॥२९॥ इति स सवितृसूनुस्तत्र तत्कर्म कृत्वा पवनगतिरनीकं प्राविशत् सम्प्रहृष्टः । रघुवरनृपसूनोर्वर्धयन् युद्धहर्षं तरुमृगगणमुख्यैः पूज्यमानो हरीन्द्रः ॥३०॥ इत्यार्षे श्रीरामायणे० श्रीमद्युद्धकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

पुनरागमने प्रतारितः ॥ २७ ॥ २८ ॥ अथेति । हरिवरनाथः क्षणेन रावणहरणार्हपरिकरनियन्ता । रामभक्तिरेव स्वयंगमनहेतुरिति भावः । प्राप्य सङ्ग्रामकीर्तिम्, रामस्य युद्धादागतां कीर्तिं स्वयमाजहारेति भावः । निशिचरपतिम्, तत्सदृशेष्वनेकेषु विद्यमानेष्वपि तान् तृणीकृत्य तेनैव युद्धं कृतवानिति भावः । आजौ, रावणवन्न च्छद्मना युद्धकृत् किन्तु मर्यादयेति भावः । योजयित्वा श्रमेण इतः पूर्वं तदज्ञातेन श्रमेण योजयित्वा । योजनं हि पूर्वमसम्भावितस्यैव रावणस्य श्रमफलम् । आत्मनस्तु कीर्तिरिति भावः । गगनमतिविशालं लङ्घयित्वाऽर्कसूनुः स्वस्यादित्यपुत्रत्वज्ञापनायाकाशमध्वनालङ्घयत् । अर्कसूनुः अज्ञातगमनवेगः । हरिवरगणमध्ये विनयेन स्वातिशयमप्रकाशयन् वानरेष्वन्यतम इति स्थितः । रामपार्श्वं जगाम रावणाशिरोऽनादायागतोऽहं कथमस्याग्रे तिष्ठेयमिति पार्श्वे स्थितः । निशिचरपतिं श्रमेण योजयित्वा जगामेत्यनेन रामस्य प्रतिज्ञाहानिर्मा प्रसाक्षीदिति रावणमहत्त्वैवागत इति सूचितम् । मायाप्रयोगारम्भे समागमनं स्वेनापि मायाप्रयोगे रामस्य कोपः स्यादित्याशयात् ॥ २९ ॥ इतीति । रघुवरनृपसूनोः रामस्य । तरुमृगगणमुख्यैः वानरगणमुख्यैः ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामाय० रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

आरब्धुमुपसम्पेदे कर्तुमुद्युक्तवान् ॥२७–३०॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां चत्वारिंशः सर्गः ॥ ४० ॥

अथ लङ्कावरोध एकचत्वारिंशे—अथेति । तस्मिन्सुग्रीवे । निमित्तानि युद्धलिङ्गानि । "निमित्तं हेतुलक्ष्मणोः" इत्यमरः ॥ १ ॥ असंमन्त्र्येति । जनेश्वराः राजानः । न कुर्वन्ति अस्मादृशपरिजने विद्यमाने न कुर्वन्तीत्यादरोक्तिः ॥ २ ॥ संशये संशयपदे । त्वत्साहसेऽस्मदादीनां जीवनं दुर्लभमिति भावः ॥ ३ ॥ इदानीमित्यादि श्लोकद्वयम् । इदानीम् अद्यप्रभृति । अचिन्तितम् अविचारितम् । एवंविधं साहसं मा कृथाः । कुत इत्यत्राह त्वयीति । त्वयि



अथ तस्मिन्निमित्तानि दृष्ट्वा लक्ष्मणपूर्वजः । सुग्रीवं सम्परिष्वज्य तदा वचनमब्रवीत् ॥ १ ॥ असंमन्त्र्य मया सार्द्धं तदिदं साहसं कृतम् । एवं साहसकर्माणि न कुर्वन्ति जनेश्वराः ॥ २ ॥ संशये स्थाप्य मां चेदं बलं च सविभीषणम् । कष्टं कृतमिदं वीर साहसं साहसप्रिय ॥ ३ ॥ इदानीं मा कृथा वीर एवंविधमचिन्तितम् । त्वयि किंचित् समापन्ने किं कार्यं सीतया मम ॥४॥ भरतेन महाबाहो लक्ष्मणेन यवीयसा । शत्रुघ्नेन च शत्रुघ्न स्वशरीरेण वा पुनः ॥ ५ ॥ त्वयि चानागते पूर्वमिति मे निश्चिता मतिः । जानतश्चापि ते वीर्यं महेन्द्रवरुणोपम ॥६॥ हत्वाऽहं रावणं युद्धे सपुत्रबलवाहनम् । अभिषिच्य च लङ्कायां विभीषणमथापि च । भरते राज्यमावेश्य त्यक्ष्ये देहं महाबल ॥७॥

किञ्चित्समापन्ने, वानरेति संबोधनं प्राप्ते मम सीतया किं कार्यं किं प्रयोजनम् ? अभिनववत्सवात्सल्येन पूर्ववत्समनभिलपन्ती वत्सला गौरिव नित्यानपायिनीमपि सीतामनादृत्य तदानीमाश्रिते वानरमात्रेऽत्यभिनिवेशं कुर्वतो रामस्य वात्सल्यातिशय उच्यते । सीतया "अर्धो वा एष आत्मनो यत्पत्नी" इत्यर्धशरीरभूतया न मे किञ्चित्कार्यम् ॥ ४ ॥ भरतेन यवीयसेति कनिष्ठत्वमुच्यते । "भ्राता स्वा मूर्तिरात्मनः" इत्युक्तभरतादिनाऽपि न मे किञ्चित्प्रयोजनम् । स्वशरीरेण वा, "आत्मानं सर्वथा रक्षेद्दारैरपि धनैरपि" इत्युक्तशरीरेण वा किं क्रियते ? ॥५॥ एतदेव प्रपञ्चयति—त्वयीत्यादिना । पूर्वं त्वय्यनागते सति । इति वक्ष्यमाणप्रकारेण मे मतिः निश्चिता आसीत् । जानतश्चापीति विशेषणेन अस्थाने भयशङ्कित्वोक्त्या वात्सल्यातिशय उक्तः॥६॥ इतिशब्दार्थमाह—हत्वेति । प्रतिज्ञानिर्वाहार्थमिति भावः । अभिषिच्येति । अन्यथा शरणागतिवैफल्यादिति भावः । भरत इति । अन्यथा कुलधर्मोच्छेदा



अथेति । तस्मिन् सुग्रीवे । निमित्तानि युद्धलक्षणानि दृष्ट्वा । "निमित्तं हेतुलक्ष्मणोः" इत्यमरः ॥ १ ॥ २ ॥ संशये सन्देहपदे ॥ ३ ॥ इदानीमद्यप्रभृति । त्वयि किञ्चित्समापन्ने हानिं गते सतीत्यर्थः ॥४॥५॥ त्वयि अनागते [illegible] ते वीर्यं जानतश्चापि मे मतिः पूर्वं निश्चितेत्यन्वयः ॥ ६–८ ॥

दिति भावः । महाबलेत्यनन्तरमितिकरणस्यान्वयः ॥ ७ ॥ तमेवमित्यादिसार्धश्लोकः । पौरुषं त्वद्दास्यरूपं पुरुषधर्ममित्यर्थः । अत एव हि पूर्वं रावणान्तिके दासोस्मीत्युक्तवान् । जानन्नित्यनेन दासस्य कर्मैवेदं न तु साहसमित्युच्यते ॥ ८ ॥ ९ ॥ अथ रामस्योत्साहविशेषं दर्शयति—इत्येवमिति । लक्ष्मिसम्पन्नमित्यत्र "इको ह्रस्वोऽङ्यो गालवस्य" इति ह्रस्वः । लक्ष्मीरत्र निमित्तदर्शनजः सन्तोषः ॥ १० ॥ परिगृह्येति । संविभज्य तत्तद्यूथपा

तमेवंवादिनं रामं सुग्रीवः प्रत्यभाषत ॥ ८ ॥ तव भार्यापहर्तारं दृष्ट्वा राघव रावणम् । मर्षयामि कथं वीर जानन् पौरुषमात्मनः ॥९॥ इत्येवंवादिनं वीरमभिनन्द्य स राघवः । लक्ष्मणं लक्ष्मिसम्पन्नमिदं वचनमब्रवीत् ॥ १० ॥ परिगृह्योदकं शीतं वनानि फलवन्ति च । बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ॥११॥ लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् । निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ १२ ॥ वाताश्च परुषा वान्ति कम्पते च वसुन्धरा । पर्वताग्राणि वेपन्ते पतन्ति धरणीरुहाः ॥ १३ ॥ मेघाः क्रव्यादसङ्काशाः परुषाः परुषस्वनाः । क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥ १४ ॥ रक्तचन्दनसङ्काशा सन्ध्या परमदारुणा । ज्वलच्च निपतत्येतदादित्यादग्निमण्डलम् ॥ १५ ॥ आदित्यमभिवाश्यन्ति जनयन्तो महद्भयम् । दीना दीनस्वरा घोरा अप्रशस्ता मृगद्विजाः ॥ १६ ॥ रजन्यामप्रकाशश्च सन्तापयति चन्द्रमाः । कृष्णरक्तान्तपर्यन्तो यथा लोकस्य संक्षये ॥ १७ ॥

धीनं कृत्वा । व्यूह्य गरुडादिरूपेण स्थापयित्वा ॥ ११ ॥ लोकक्षयकरं लोकक्षयसूचकम् । भीमं भयंकरम् । भयं भयनिमित्तम् । न केवलं लोकस्य, प्रवीराणां चेत्याह—निबर्हणमिति । विनाशसूचकमित्यर्थः ॥ १२ ॥ तदेव भयनिमित्तं प्रपञ्चयति—वाता इति । पतन्ति, अनिमित्तमिति शेषः ॥ १३ ॥ क्रव्यादसङ्काशाः श्येनादिसदृशसंस्थानाः । परुषाः क्रूरवेषाः । क्रूराः लोकक्षयसूचकाः । मिश्रं, जलमिति शेषः ॥ १४ ॥ १५ ॥ आदित्यमभि आदित्याभिमुखम् । दीनाः दीनवेषाः । दीनस्वराः दैन्यसूचकस्वरवन्तः । अत एव घोराः भयङ्कराः । अप्रशस्ताः हीनाः शिवादयः ॥ १६ ॥ कृष्णरक्तान्त

जानन्विक्रममात्मनः स्वस्य परपराक्रमसंहारसामर्थ्यं जानन् स्वानुभवेनावगच्छन् कथं मर्षयामि ? ॥९॥ अभिनन्द्य सौहृदस्यातिबलसम्पत्तेरिदमेव युक्तमिति श्लाघां कृत्वेत्यर्थः ॥ १० ॥ शीतमुदकम्, तद्वतो जलाशयान् ॥ ११–१८ ॥

पर्यन्तः कृष्णान्तो रक्तपर्यन्तश्चेत्यर्थः ॥ १७ ॥ ह्रस्वः [illegible] । रूक्षः [illegible] । अप्रशस्तः अशुभकरः । सुलोहितः रक्तमध्यः । परिवेषः लोकस्य संक्षये यथा, तथा दृश्यत इति शेषः ॥ १८ ॥ आदित्येत्यादिसार्धश्लोकः । लक्ष्म चन्द्रकलङ्क इवेत्यर्थः । तथैव छान्दोग्ये—"यदादित्यस्य कृष्णं रूपम्" इत्यत्र उत्पातकाले तथा दृश्यत इति व्याख्यातम् । नक्षत्राणि यथावत् यथाप्रकारेण न दृश्यन्ते, मलिनानि दृश्यन्त इत्यर्थः । उक्तं निमित्तजातं लोकस्य युगान्तं शंसतीवाभिवर्तत इति योजना ॥ १९ ॥ नीचैः ह्रस्वं वेदिकास्थानं परिपतन्ति प्राप्नुवन्ति । शिवा इति अप्रशस्तमृग

ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषः सुलोहितः ॥ १८ ॥ आदित्यमण्डले नीलं लक्ष्म लक्ष्मण दृश्यते । दृश्यन्ते न यथावच्च नक्षत्राण्यभिवर्तते । युगान्तमिव लोकस्य पश्य लक्ष्मण शंसति ॥ १९ ॥ काकाः श्येनास्तथा गृध्रा नीचैः परिपतन्ति च । शिवाश्चाप्यशिवा वाचः प्रवदन्ति महास्वनाः ॥ २० ॥ क्षिप्रमद्य दुराधर्षां लङ्कां रावणपालिताम् । अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥ २१ ॥ इत्येवं संवदन् वीरो लक्ष्मणं लक्ष्मणाग्रजः । तस्मादवातरच्छीघ्रं पर्वताग्रान्महाबलः ॥ २२ ॥ अवतीर्य च धर्मात्मा तस्माच्छैलात् स राघवः । परैः परमदुर्धर्षं ददर्श बलमात्मनः ॥ २३ ॥ सन्नह्य तु ससुग्रीवः कपिराजबलं महत् । कालज्ञो राघवः काले संयुगायाभ्यचोदयत् ॥ २४ ॥ ततः काले महाबाहुर्बलेन महता वृतः । प्रस्थितः पुरतो धन्वी लङ्कामभिमुखः पुरीम् ॥२५॥ तं विभीषणसुग्रीवौ हनुमान् जाम्बवान्नलः । ऋक्षराजस्तथा नीलो लक्ष्मणश्चान्वयुस्तदा ॥ २६ ॥

जात्युक्तावपि पुनरुक्तिरशुभाधिक्यात् ॥ २० ॥ क्षिप्रमिति । अभियामेति वर्तमानकाले लोट् ॥ २१ ॥ २२ ॥ तस्मात्सुवेलात् । बलमित्यनेन सर्वं बलं न सुवेलमारुहदिति गम्यते ॥ २३ ॥ राघवः ससुग्रीवः सन् । कपिराजबलं कपिश्रेष्ठानां बलम् । सन्नह्य प्रोत्साह्य । काले युद्धकाले । संयुगाय युद्धाय अभ्यचोदयत् ॥ २४ ॥ काले प्रातःकाले ॥ २५ ॥ २६ ॥

नक्षत्राणि यथावत् स्वरूपेण न दृश्यन्ते । उक्तं दुर्निमित्तजातं लोकस्य युगान्तं शंसतीव अभिवर्तत इति सम्बन्धः ॥ १९ ॥ नीचैः क्षुद्रजन्तुभिस्सह ॥ २०--२३ ॥ सन्नह्येति । सन्नह्य युद्धसन्नाहं कृत्वा । काले युद्धयोग्यसमये ॥ २४--२६ ॥

पृतना सेना ॥ २७ ॥ कुञ्जरप्रख्याः गजतुल्याः परवारणाः [illegible] ॥ २८ ॥ २९ ॥ पताकेत्यादिश्लोकद्वयम् । पताकमालिनीमित्यत्र "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" इति ह्रस्वः । उद्यानं कृत्रिमवनम् । चित्रवप्रां चित्रचयाम् । यथानिवेशं यथास्थानम्, रामवचोऽन्यूनं स्वं स्वं



ततः पश्चात् सुमहती पृतनर्क्षवनौकसाम् । प्रच्छाद्य महतीं भूमिमनुयाति स्म राघवम् ॥ २७ ॥ शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् । जगृहुः कुञ्जरप्रख्या वानराः परवारणाः ॥ २८ ॥ तौ तु दीर्घेण कालेन भ्रातरौ रामलक्ष्मणौ । रावणस्य पुरीं लङ्कामासेदतुररिन्दमौ ॥२९॥ पताकमालिनीं रम्यामुद्यानवनशोभिताम् । चित्रवप्रां सुदुष्प्रापामुच्चैःप्राकारतोरणाम् ॥ ३० ॥ तां सुरैरपि दुर्धर्षां रामवाक्यप्रचोदिताः । यथानिवेशं सम्पीडच न्यविशन्त वनौकसः ॥ ३१ ॥ लङ्कायास्तूत्तरद्वारं शैलशृङ्गमिवोन्नतम् । रामः सहानुजो धन्वी जुगोप च रुरोध च ॥ ३२ ॥ लङ्कामुपनिविष्टश्च रामो दशरथात्मजः । लक्ष्मणानुचरो वीरः पुरीं रावणपालिताम् । उत्तरद्वारमासाद्य यत्र तिष्ठति रावणः ॥ ३३ ॥ नान्यो रामाद्धि तद्द्वारं समर्थः परिरक्षितुम् । रावणाधिष्ठितं भीमं वरुणेनेव सागरम् ॥३४॥ सायुधै राक्षसैर्भीमैरभिगुप्तं समन्ततः । लघूनां त्रासजननं पातालमिव दानवैः ॥ ३५ ॥

स्थानमनतिक्रम्येत्यर्थः । संपीडच उपरुध्य ॥ ३० ॥ ३१ ॥ जुगोप परपरिभवादात्मीयं बलं ररक्षेत्यर्थः । रुरोधेत्यनेन 'शिखरं तत्त्रिकूटस्य प्रांशु चैकं दिविस्पृशम्' इत्युक्तत्रिकूटशिखरारोहणमर्थसिद्धम् ॥ ३२ ॥ लङ्कामित्यादिसार्द्धश्लोक एकान्वयः । लक्ष्मणानुचरो वीर इति पाठः । रावणो यत्र तिष्ठति तदुत्तरद्वारमासाद्य लङ्कामुपनिविष्ट इत्यन्वयः ॥ ३३ ॥ रामानु०—लक्ष्मणानुचरो राम इति पाठे रमयतीति व्युत्पत्त्या रामविशेषणम् ॥ ३३ ॥ रामेणैव निरोद्धव्यत्वे हेतुमाह—नान्य इत्यादिश्लोकद्वयेन । लघूनाम् अल्पसाराणाम् ॥ ३४ ॥ ३५ ॥

ऋक्षवनौकसां पृतना ॥ २७–३० ॥ यथानिवेशं रामनिदेशमनतिक्रम्य । सम्पीडच लङ्कां रुद्ध्वा ॥ ३१ ॥ उत्तरद्वारं रुरोध । जुगोप, आत्मीयबलमिति शेषः ॥ ३२–३४ ॥ तद्द्वारं तद्द्वाररोधिकां सेनाम् । लघूनाम् अधीराणाम् ॥ ३५ ॥

विन्यस्तानि, द्वारोपान्तवेदिकादिष्विति शेषः ॥ ३६ ॥ मैन्देन द्विविदेन चेत्यादिना प्रतिद्वारमधिकयूथपतिगमनस्यात्रोक्तत्वात् पूर्वं रामेण ते नियुक्ताः इति ज्ञेयम् ॥ ३७–३९ ॥ मध्यम इति । दुर्जयरावणेन्द्रजिदधिष्ठितयोरुत्तरपश्चिमद्वारयोर्मध्ये तदुभयद्वारनिरोधकानां काकाक्षिन्यायेन साहाय्यं कर्तुं सुग्रीवः स्वयमतिष्ठदिति ज्ञेयम् । " पश्चिमेन तु रामस्य सुग्रीवः सहजाम्बवान् । अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः ॥ " इति वक्ष्यमाणत्वात् ।

विन्यस्तानि च योधानां बहूनि विविधानि च । ददर्शायुधजालानि तत्रैव कवचानि च ॥ ३६ ॥ पूर्वं तु द्वारमासाद्य नीलो हरिचमूपतिः । अतिष्ठत् सह मैन्देन द्विविदेन च वीर्यवान् ॥३७॥ अङ्गदो दक्षिणद्वारं जग्राह सुमहाबलः । ऋषभेण गवाक्षेण गजेन गवयेन च ॥ ३८ ॥ हनुमान् पश्चिमद्वारं ररक्ष बलवान् कपिः । प्रमाथिप्रघसाभ्यां च वीरैरन्यैश्च सङ्गतः ॥ ३९ ॥ मध्यमे च स्वयं गुल्मे सुग्रीवः समतिष्ठत । सह सर्वैर्हरिश्रेष्ठैः सुपर्णश्वसनोपमैः ॥ ४० ॥ वानराणां तु षट्त्रिंशत् कोट्यः प्रख्यातयूथपाः । निपीड्योपनिविष्टाश्च सुग्रीवो यत्र वानरः ॥ ४१ ॥ शासनेन तु रामस्य लक्ष्मणः सविभीषणः । द्वारे द्वारे हरीणां तु कोटिं कोटिं न्यवेशयत् ॥ ४२ ॥ पश्चिमेन तु रामस्य सुग्रीवः सहजाम्बवान् । अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः ॥ ४३ ॥ ते तु वानरशार्दूलाः शार्दूला इव दंष्ट्रिणः । गृहीत्वा द्रुमशैलाग्रान् हृष्टा युद्धाय तस्थिरे ॥ ४४ ॥ सर्वे विकृतलाङ्गूलाः सर्वे दंष्ट्रानखायुधाः । सर्वे विकृतचित्राङ्गाः सर्वे च विकृताननाः ॥ ४५ ॥

सुपर्णः गरुडः ॥ ४०–४३ ॥ वानरशार्दूलाः वानरश्रेष्ठाः । शैलाग्रानिति पुंस्त्वमार्षम् ॥ ४४ ॥ विकृतलाङ्गूलाः ऊर्ध्वं प्रसारितपुच्छाः । विकृत

विन्यस्तानि, प्राकारोपरिप्रदेशेष्विति शेषः ॥ ३६–३९ ॥ मध्यमे गुल्म इति । अतिदुर्जयरावणेन्द्रजिदधिष्ठितयोरुत्तरपश्चिमद्वारयोर्मध्ये वायुदिशि तदुभयद्वार निरोधकानां काकाक्षिन्यायेन साहाय्यं कर्तुं सुग्रीवः स्वयं समतिष्ठतेत्यर्थः ॥ ४० ॥ प्रख्यातयूथपाः षट्त्रिंशत्कोट्यः । अप्रख्यातानां यूथपानां तत्सेनानां च गणनाभाव इति भावः ॥ ४१ ॥ ४२ ॥ अदूरात्पश्चिमेन आसन्नपृष्ठभागावष्टम्भेन ॥ ४३–४५ ॥

चित्राङ्गा इत्यत्र विकृतत्वं कोपरक्तमुखनेत्रत्वम् । अत एव चित्रं चित्रवर्णम् अङ्गं येषां ते तथोक्ता इति विग्रहः । विकृताननाः राक्षसविडम्बनाय कुटिलितमुखाः ॥ ४५ ॥ दशगुणोत्तराः शतनागबला इत्यर्थः ॥ ४६ ॥ सन्तीति । ओघबलाः ओघसङ्ख्याकनागबलाः । शतगुणोत्तराः ओघसङ्ख्याकनागबलेभ्यः शतगुणेन उत्तराः श्रेष्ठा इत्यर्थः । अप्रमेयबलाः अपरिच्छेद्यबलाः ॥४७॥ अद्भुतः आश्चर्यभूतः । विचित्रः वानरगोपुच्छभल्लूकजुष्टतया

दशनागबलाः केचित् केचिद्दशगुणोत्तराः । केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ॥ ४६ ॥ सन्ति चौघबलाः केचित् केचिच्छतगुणोत्तराः । अप्रमेयबलाश्चान्ये तत्रासन् हरियूथपाः ॥ ४७ ॥ अद्भुतश्च विचित्रश्च तेषामासीत् समागमः । तत्र वानरसैन्यानां शलभानामिवोद्यमः ॥ ४८ ॥ परिपूर्णमिवाकाशं सञ्छन्नेव च मेदिनी । लङ्कामुपनिविष्टैश्च सम्पतद्भिश्च वानरैः ॥ ४९ ॥ शतं शतसहस्राणां पृथगृक्षवनौकसाम् । लङ्काद्वाराण्युपाजग्मुरन्ये योद्धुं समन्ततः ॥५०॥ आवृतः स गिरिः सर्वैस्तैः समन्तात् प्लवङ्गमैः ॥ ५१ ॥ अयुतानां सहस्रं च पुरीं तामभ्यवर्तत ॥ ५२ ॥ वानरैर्बलवद्भिश्च बभूव द्रुमपाणिभिः । संवृता सर्वतो लङ्का दुष्प्रवेशापि वायुना ॥ ५३ ॥

नानावर्णः । तत्र लङ्कायाम् । तेषां वानरसैन्यानां समागमः आगमनं शलभानां शरभाणाम् अष्टापदमृगाणाम् उद्यमः समागम इव आसीत्, तथा भयङ्करोऽभूदित्यर्थः । यद्वा यथा शलभानां समागमो युगपत् भवति तथेति युगपत्पतने दृष्टान्तः ॥ ४८ ॥ परिपूर्णमिति । अत्र इवशब्दद्वयमपि वाक्यालङ्कारे । उपनिविष्टैः पृथिवी पूर्णा । सम्पतद्भिः आगच्छद्भिस्तु आकाशं पूर्णम् । भूमाववकाशाभावादिति भावः ॥ ४९ ॥ शतसहस्राणाम् ऋक्षवनौकसां शतं पूर्वनियुक्तेभ्योऽतिरिक्तं लङ्काद्वाराण्युपाजगाम । अन्ये वानराः समन्ततः युद्धार्थमुपाजग्मुरित्यन्वयः ॥५०॥ आवृत इत्यर्धमेकं वाक्यम् । स गिरिः त्रिकूटः ॥ ५१ ॥ अयुतानामित्यर्धम् । अयुतानां सहस्रं च तां पुरीमभ्यवर्ततेत्यनेन पूर्वोक्तस्य द्वारावरणस्यानन्तरम् अयुतानां सहस्रं च पुरीं तां पर्यवारयदित्युच्यते ॥ ५२ ॥ दुष्प्रवेशा बभूवेत्यन्वयः ॥ ५३ ॥

दशगुणोत्तराः दशगुणाधिकाः ॥ ४६ ॥ ओघबलाः ओघसङ्ख्याकनागबलाः ॥ ४७–४९ ॥ शतसहस्राणां शतम् ऋक्षवनौकसः पूर्वनियुक्तव्यतिरिक्ताः । योद्धुं लङ्काद्वाराणि पृथक् पृथगुपाजग्मुः, अन्ये समन्तत उपाजग्मुरिति योजना ॥ ५० ॥ आवृत इति । स गिरिः त्रिकूटः ॥ ५१–५४ ॥

अभिनिपीडिताः उपरुद्धाः राक्षसाः । विस्मयमाश्चर्यं जग्मुः ॥ ५४ ॥ तत्र त्रिकूटशिखरे । भिन्नस्य भिन्नमर्यादस्य सागरस्येव अभिवर्ततः अभिवर्तमानस्य बलौघस्य । सलिलस्वनो यथा स्यात् तथा महाञ्छब्दो बभूवेति योजना । अतो न यथाशब्दवैयर्थ्यम् ॥ ५५ ॥ तेनेति । सशैलवन काननेत्यत्र वनम् उद्यानम् ॥ ५६ ॥ सुग्रीवेणेति रक्ष्यसाहित्यमुच्यते ॥ ५७ ॥ राघव इत्यादि सार्धश्लोकद्वयमेकान्वयम् । वधे विषये । आनन्तर्यम्

राक्षसा विस्मयं जग्मुः सहसाऽभिनिपीडिताः । वानरैर्मेघसङ्काशैः शक्रतुल्यपराक्रमैः ॥ ५४ ॥ महान् शब्दोऽभवत्तत्र बलौघस्याभिवर्ततः । सागरस्येव भिन्नस्य यथा स्यात् सलिलस्वनः ॥ ५५ ॥ तेन शब्देन महता सप्राकारा सतोरणा । लङ्का प्रचलिता सर्वा सशैलवनकानना ॥ ५६ ॥ रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी । बभूव दुर्धर्षतरा सर्वैरपि सुरासुरैः ॥ ५७ ॥ राघवः सन्निवेश्यैवं सैन्यं स्वं रक्षसां वधे । सम्मन्त्र्य मन्त्रिभिः सार्धं निश्चित्य च पुनः पुनः । आनन्तर्यमभिप्रेप्सुः क्रमयोगार्थतत्त्ववित् ॥ ५८ ॥ विभीषणस्यानुमते राजधर्ममनुस्मरन् । अङ्गदं वालितनयं समाहूयेदमब्रवीत् ॥ ५९ ॥

अनन्तरकर्तव्यम् । अभिप्रेप्सुः प्राप्तुमिच्छुः । संमन्त्र्य दूतः प्रेषणीय इति विचार्य । निश्चित्य अङ्गद एव प्रेषणीय इति निर्धार्य । क्रमयोगार्थतत्त्ववित् क्रमयुक्ता योगाः सामाद्युपायाः तेषामर्थः फलं तस्य तत्त्वं याथार्थ्यं वेत्तीति तथोक्तः । राजधर्ममनुस्मरन् युयुत्सया शत्रुपुरं प्रत्यागता राजानः युद्धार्थं दूतमुखेन प्रथममाह्वयन्तीत्येवंरूपं राजधर्ममनुस्मरन् । विभीषणस्यानुमते अनुमतौ सत्याम् अङ्गदं समाहूयेदमब्रवीदिति सम्बन्धः ॥ ५८ ॥ ५९ ॥

महानिति । तत्र त्रिकूटशिखरे । भिन्नस्य सागरस्येवाभिवर्तनतः अभिवर्तमानस्य बलौघस्य सलिलस्वनो यथा स्यात् तथा महान्निस्वनोऽभवदिति योजना ॥५५–५७॥ राघव इत्यादि सार्धश्लोकद्वयमेकम् । आनन्तर्यम् अनन्तरकर्तव्यम् । अभिप्रेप्सुः प्राप्तुमिच्छुः । क्रमयोगार्थतत्त्ववित् क्रमो नीतिः, योगाः सामाद्युपायाः, तेषामर्थं फलम्, तस्य तत्त्वं याथार्थ्यं च वेत्तीति तथा । राजधर्ममनुस्मरन् युयुत्सया शत्रुपुरं प्रत्यागता राजानो युद्धार्थं दूतमुखेन प्रथमं शत्रुमाह्वयन्तीत्येवंरूपं राजधर्ममनुस्मरन्नित्यर्थः । धर्मराजमनुस्मरन्निति पाठे–राजदन्तादित्वात् धर्मशब्दस्य पूर्वनिपातः । विभीषणस्य अनुमते अनुमतौ सत्याम अङ्गदं समाहूयेदमब्रवीदिति सम्बन्धः । विभीषणमते स्थित्वेति पाठे–युद्धे रावणो भवन्तं शरणं प्राप्नुयाद्यदि तदा लङ्काराज्यं तस्यैव दातव्यमित्येवंरूपे विभीषणमते स्थित्वेत्यर्थः ॥५८–५९॥

हे सौम्य ! गतव्यथः गतश्रमः सन् । लङ्कां पुरीं तत्प्राकारं लङ्घयित्वा भयं त्यक्त्वा दशग्रीवं मद्वचनात् ब्रूहि, मयोक्तमिति ब्रूहीत्यर्थः । कपे इत्यनेन लङ्घनसामर्थ्यं द्योतयति ॥ ६० ॥ भ्रष्टश्रीक भ्रष्टप्रायद्रविण ! गतैश्वर्य गतप्रायनियन्तृत्व । सम्पदि भ्रष्टायामपि लोके नियन्तृत्वं सम्भवति तदपि नास्तीत्यर्थः । तदुभयाभावेपि जीवनाशा सम्भवति सापि नास्तीत्याह मुमूर्षो इति । तदानीमपि ज्ञानं संभवति तदपि नास्तीत्याह नष्टचेतनेति ॥ ६१ ॥

गत्वा सौम्य दशग्रीवं ब्रूहि मद्वचनात् कपे । लङ्घयित्वा पुरीं लङ्कां भयं त्यक्त्वा गतव्यथः ॥ ६० ॥ भ्रष्टश्रीक गतैश्वर्य मुमूर्षो नष्टचेतन । ऋषीणां देवतानां च गन्धर्वाप्सरसां तथा ॥ ६१ ॥ नागानामथ यक्षाणां राज्ञां च रजनीचर । यच्च पापं कृतं मोहादवलिप्तेन राक्षस ॥ [ तस्य पापस्य सम्प्राप्ता व्युष्टिरद्य दुरासदा ] ॥ ६२ ॥ नूनमद्य गतो दर्पः स्वयम्भूवरदानजः । यस्य दण्डधरस्तेऽहं दाराहरणकर्शितः । दण्डं धारयमाणस्तु लङ्काद्वारे व्यवस्थितः ॥ ६३ ॥ पदवीं देवतानां च महर्षीणां च राक्षस । राजर्षीणां च सर्वेषां गमिष्यसि मया हतः ॥ ६४ ॥ बलेन येन वै सीतां मायया राक्षसाधम । मामतिक्रामयित्वा त्वं हृतवांस्तन्निदर्शय ॥ ६५ ॥

नागानां सर्पाणाम् । अवलिप्तेन गर्वितेन त्वया ऋषिप्रमुखानां यत्पापं कृतं यो द्रोहः कृतः । तस्य कारणभूतः स्वयंभूवरदानजो दर्पो गतः गतप्राय इत्यन्वयः । तत्र हेतुमाह यस्येति । दण्डधरः नियन्ता अहं यस्य ते दण्डं धारयमाणः करिष्यमाण इत्यर्थः ॥ ६२ ॥ ६३ ॥ एवंविधस्य नियमने तव किं भविष्यतीत्यत्राह—पदवीमिति । पदवीं तेषु कृतं परिभवं तमपि गमिष्यसीत्यर्थः । यद्वा पदवीं लोकम् । युद्धे स्थितः सन् तेषां लोकं गमिष्यसि । युद्धे स्थित्वा सर्वपापविशुद्धः सन् गतिं गमिष्यसि । ततस्तूर्णमागच्छेति भावः ॥ ६४ ॥ मायया मारीचमायया । माम् अतिक्रामयित्वा अपवाह्य । ल्यबभाव आर्षः । येन बलेन यद्बलमवलम्ब्य सीतां हृतवानसि तद्बलं निदर्शयेत्यन्वयः ॥ ६५ ॥

गतव्यथः गतश्रमः ॥ ६० ॥ नागानामित्यादिसार्धश्लोक एकं वाक्यम् । हे रजनीचर ! नागानां यक्षाणां च अवलिप्तेन त्वया यच्च पापं कृतं यो द्रोहः कृतः, तस्य कारणभूतः स्वयम्भूवरदानजो यो दर्पः अद्य गत इति योजना । तत्र हेतुमाह यस्येति । यस्य ते तव दण्डं धारयमाणः करिष्यमाणः लङ्काद्वारे व्यवस्थित इति सम्बन्धः ॥ ६१–६३ ॥ एवंविधस्य मम नियमने तव किं भविष्यतीत्यत्राह—पदवीमिति । युद्धे स्थितस्सन् देवतादीनां पदवीं पुण्यलोकं गमिष्यसीति सम्बन्धः ।

मैथिलीमुपादाय समर्प्य मां शरणं नाभ्येषि चेदिमं लोकमराक्षसं कर्तास्मि । शरणागतौ तु सर्वं क्षमिष्य इति भावः । मैथिलीमुपादायेत्यनेन स्वर्ण स्तेये स्वर्णप्रत्यर्पणमन्तरेण प्रायश्चित्तानधिकारवत्सीताप्रत्यर्पणाभावे शरणागतौ तु नाधिकार इत्युक्तम् । रावणेन शरणागतौ कृतायां विभीषणाय कोसलराज्यं दास्यामीत्यभिप्रायः ॥ ६६ ॥ शरणागत्यकरणे स्वकर्तव्यमाह—धर्मात्मेति । यद्वा शरणागतौ प्राणत्राणं करिष्यामि न तु राज्यं

अराक्षसमिमं लोकं कर्तास्मि निशितैः शरैः । न चेच्छरणमभ्येषि मामुपादाय मैथिलीम् ॥ ६६ ॥
धर्मात्मा रक्षसां श्रेष्ठः सम्प्राप्तोऽयं विभीषणः । लङ्कैश्वर्यं ध्रुवं श्रीमानयं प्राप्नोत्यकण्टकम् ॥ ६७ ॥
न हि राज्यमधर्मेण भोक्तुं क्षणमपि त्वया । शक्यं मूर्खसहायेन पापेनाविदितात्मना ॥ ६८ ॥
युद्धयस्व वा धृतिं कृत्वा शौर्यमालम्ब्य राक्षस । मच्छरैस्त्वं रणे शान्तस्ततः पूतो भविष्यसि ॥ ६९ ॥
यद्वा विशसि लोकांस्त्रीन् पक्षिभूतो मनोजवः । मम चक्षुष्पथं प्राप्य न जीवन् प्रतियास्यसि ॥ ७० ॥

दास्यामीत्यभिप्रायेणाह धर्मात्मेति । धर्मात्मा धर्मबुद्धिः । रक्षसां श्रेष्ठः राक्षसनायक इत्यर्थः । अयं विभीषणः । सम्प्राप्तः मां प्रपन्नः । तस्मात् लङ्कैश्वर्यमयं प्राप्नोति उत्तरक्षणे प्राप्स्यतीत्यर्थः । श्रीमान् तदनुगुणानुकूल्यवान् । एवं क्रियाभेदादयंशब्दद्वयोपपत्तिः ॥ ६७ ॥ एवं विभीषणस्य राज्ययोग्यतामुक्त्वा रावणस्य तदभावमाह—न हीति । अधर्मेण धर्मरहितेन । अत एव पापेन पापिष्ठेन । अत एवाविदितात्मना अस्वाधीनमनस्केन । मूर्खसहायेन त्वया न शक्यमित्यन्वयः ॥ ६८ ॥ सीतामादाय शरणमागतोऽसि चेद्विभीषणाय राज्यं दत्त्वा त्वत्प्राणान् रक्षामि अन्यथा युद्धयस्वेत्याह—

"राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा । राजा त्वशासन् पापस्य तदवाप्नोति किल्बिषम् ॥" इति वचनात् उभयोरपि रूपं फलं भविष्यतीति भावः ॥ ६४ ॥ ६५ ॥ यदि मरणभीत्या युयुत्सा नास्ति तदापि ते हितं ब्रवीमीत्याह—अराक्षसमिति ॥ ६६ ॥ शरणागतिरपि राज्यकाङ्क्षया न कर्तव्येत्यभिप्रायेणाह—धर्मात्मेति । अयं विभीषणः सम्प्राप्तः, मामिति शेषः । लङ्कैश्वर्यं श्रीमानयम् अकण्टकं ध्रुवं प्राप्तो हि प्राप्त एवेति वाक्यभेदेन अयंशब्दद्वयनिर्वाहः ॥ ६७ ॥ ६८ ॥ यदि शरणव्रजनं तवानभिमतं तर्हि युद्धयस्वेत्याह—युद्धयस्वेति । शान्तः हतः ॥ ६९ ॥ ७० ॥





स०—मूर्खसहायेन अनेन महान्तो न सन्ति वक्तारस्तव समीप इति सूच्यते । एतावत्कालपर्यन्तं राज्यभोजकादृष्टेन भुक्तं नक्तञ्चरराज्यम् । इतः परमधर्मशासके मय्युपायाते तद्भोगयोगस्तव कथं स्यादिति भावः ॥ ६७ ॥

युद्धयस्वेति । शान्तः मृतः । पूत इति । युद्धे अपरावृत्त्या मृतेः सर्वपापप्रायश्चित्तत्वादिति भावः ॥ ६९ ॥ ७० ॥ क्रियतामौर्ध्वदेहिकमिति अराक्षसकरणेन श्राद्धकर्त्रभावात्स्वयमेव जीवच्छ्राद्धं कुर्वित्यर्थः । सुदृष्टेति । म्रियमाणा हि चरमकालेन पुत्रकलत्रादिमुखदर्शनं कुर्वन्ति तद्वदिति भावः । मयि स्थितं मदायत्तम्, अवश्यं त्वां नाशयामीत्यर्थः ॥ ७१ ॥ मूर्तिमान् करचरणादिसंस्थानवान् । हव्यवाट् अग्निः ॥ ७२ ॥ अतिपत्य



ब्रवीमि त्वां हितं वाक्यं क्रियतामौर्ध्वदेहिकम् । सुदृष्टा क्रियतां लङ्का जीवितं ते मयि स्थितम् ॥ ७१ ॥ इत्युक्तः स तु तारेयो रामेणाक्लिष्टकर्मणा । जगामाकाशमाविश्य मूर्तिमानिव हव्यवाट् ॥ ७२ ॥ सोऽतिपत्य मुहूर्तेन श्रीमान्रावणमन्दिरम् । ददर्शासीनमव्यग्रं रावणं सचिवैः सह ॥ ७३ ॥ ततस्तस्याविदूरे स निपत्य हरिपुङ्गवः । दीप्ताग्निसदृशस्तस्थावङ्गदः कनकाङ्गदः ॥ ७४ ॥ तद्रामवचनं सर्वमन्यूनाधिकमुत्तमम् । सामात्यं श्रावयामास निवेद्यात्मानमात्मना ॥ ७५ ॥ दूतोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः । वालिपुत्रोऽङ्गदो नाम यदि ते श्रोत्रमागतः ॥ ७६ ॥ आह त्वां राघवो रामः कौसल्यानन्दवर्धनः । निष्पत्य प्रतियुद्धयस्व नृशंस पुरुषो भव ॥७७॥

प्राप्य । अव्यग्रं ददर्शेत्यन्वयः । श्रीमानित्यनेन हर्षवत्त्वमुच्यते ॥ ७३ ॥ ७४ ॥ तदिति । उत्तमं पथ्यम् । सामात्यं, रावणमिति शेषः । आत्मना स्वयम् । आत्मानं निवेद्य आत्मनो वालिपुत्रत्वादिनिवेदनपूर्वकं रामवचनं कथयामासेत्यर्थः ॥ ७५ ॥ दूत इति । यदि ते श्रोत्रमागतः, मां श्रुतवानसि किमित्यर्थः ॥७६॥ आह त्वामिति । राघव इत्यादिना छद्मना न योत्स्यत इत्युक्तम् । कौसल्यानन्दवर्धन इत्यनेन बहुतपःप्रभावजनिततया धार्मिकत्वमुक्तम् । निष्पत्य पुरान्निर्गत्य । पुरुषो भव शूरो भवेत्यर्थः । पुरुषाधमेति पाठे–पुरोपरोधेऽप्यानिर्गमने नूनं पुरुषाधम एवासीति भावः ॥ ७७ ॥

सुदृष्टा क्रियताम्, दुर्गसंरक्षणादिभिरिति शेषः ॥ ७१ ॥ मूर्तिमान् हव्यवाट्, वानरवेषोऽग्निरित्यर्थः ॥ ७२ ॥ अतिपत्य अतिक्रम्य, मार्गमिति शेषः ॥ ७३ ॥ ७४ ॥ तद्रामवचनमिति संक्षेपकथनं वक्ष्यमाणस्य ॥ ७५ ॥ तस्यैव प्रपञ्चः–दूतोऽहमिति । यदीत्यसन्दिग्धे सन्दिग्धवचनं वेदाः प्रमाणं चेदितिवत् । श्रोत्रमागत एव, एतेन स्वस्य स्वीयानां च बलादि तुभ्यं न वाच्यमेव, त्वया ज्ञातत्वादिति भावः ॥ ७६ ॥ निष्पत्य पुराद्विनिष्क्रम्य । पुरुषो भव शूरो भव ॥ ७७ ॥

स०–और्ध्वदेहिकं मृत्यनन्तरं लोकान्तरे सुखप्रापकं दानादिकं क्रियताम् । अनुशतिकादित्वादुभयपदवृद्धिः । अनेन पुत्रा अप्यसन्त इति सर्वनाशे कर्ता कोऽपि न जीविष्यतीति द्योत्यते । "प्रियैर्दत्तं प्रियं भवेत्" इति दशरथोक्तेर्विभीषणेन कृतं सदपि तव सम्मतं न भवेदित्येवमुक्तिः ॥ ७१ ॥

हन्तेति, अहमिति शेषः । निरुद्विग्नाः निर्भयाः ॥७८॥ उद्धरिष्यामि उन्मूलयिष्यामि । कण्टकं बाधकमित्यर्थः ॥७९॥८०॥ आपन्नः प्राप्तः बभूव ॥८१॥ दुर्मेधाः दुर्बुद्धिः, न दूतो वध्य इति शास्त्रानभिज्ञ इत्यर्थः । असकृच्छशासेत्यन्वयः । यद्वा दुर्मेधा इत्यङ्गदमेवाह ॥ ८२ ॥ ८३ ॥ यातुधानगणे विषये

हन्तास्मि त्वां सहामात्यं सपुत्रज्ञातिबान्धवम् । निरुद्विग्नास्त्रयो लोका भविष्यन्ति हते त्वयि ॥ ७८ ॥ देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् । शत्रुमद्योद्धरिष्यामि त्वामृषीणां च कण्टकम् ॥ ७९ ॥ विभीषणस्य चैश्वर्यं भविष्यति हते त्वयि । न चेत् सत्कृत्य वैदेहीं प्रणिपत्य प्रदास्यसि ॥ ८० ॥ इत्येवं परुषं वाक्यं ब्रुवाणे हरिपुङ्गवे । अमर्षवशमापन्नो निशाचरगणेश्वरः ॥ ८१ ॥ ततः स रोषताम्राक्षः शशास सचिवांस्तदा । गृह्यतामेष दुर्मेधा वध्यतामिति चासकृत् ॥ ८२ ॥ रावणस्य वचः श्रुत्वा दीप्ताग्निसमतेजसः । जगृहुस्तं ततो घोराश्चत्वारो रजनीचराः ॥ ८३ ॥ ग्राहयामास तारेयः स्वयमात्मानमात्मवान् । बलं दर्शयितुं वीरो यातुधानगणे तदा ॥ ८४ ॥ स तान् बाहुद्वये सक्तानादाय पतगानिव । प्रासादं शैलसङ्काशमुत्पपाताङ्गदस्तदा ॥ ८५ ॥ तेऽन्तरिक्षाद्विनिर्धूतास्तस्य वेगेन राक्षसाः । भूमौ निपतिताः सर्वे राक्षसेन्द्रस्य पश्यतः ॥ ८६ ॥ ततः प्रासादशिखरं शैलशृङ्गमिवोन्नतम् । ददर्श राक्षसेन्द्रस्य वालिपुत्रः प्रतापवान् ॥ ८७ ॥ तत्पफाल पदाक्रान्तं दशग्रीवस्य पश्यतः । पुरा हिमवतः शृङ्गं वज्रिणेव विदारितम् ॥ ८८ ॥

स्वबलं दर्शयितुम् । आत्मवान् धृतिमान् । स्वयम् आत्मानं ग्राहयामास ग्रहीतुमनुमेने ॥ ८४–८७ ॥ पफाल व्यशीर्यत ॥ ८८ ॥



निरुद्विग्नाः निर्भयाः ॥ ७८ ॥ ७९ ॥ सत्कृत्य प्रणिपत्य, मामिति शेषः । वैदेहीं न प्रदास्यसि चेत् त्वयि हते विभीषणस्यैश्वर्यं भविष्यतीति योजना । वैदेहीं न प्रदास्यसि चेत्त्वां हत्वा विभीषणाय राज्यं दास्यामीत्यर्थः ॥ ८०–८६ ॥ प्रासादशिखरं, दृष्ट्वेति शेषः । यद्वा तच्चक्राम पदाक्रान्तवान् । चक्राम राक्षसेन्द्रस्य इति पाठः ॥ ७ ॥ तदाक्रान्तं च प्रासादशिखरं पफाल शतधा विशीर्णमभूत् ॥ ८८–९० ॥

विश्राव्य विशेषेण श्रावयित्वा ॥ ८९ ॥ ९० ॥ प्रासादधर्षणात् प्रासादभञ्जनात् । पश्यन् तर्कयन् । निःश्वासपरमः अधिकनिश्वासः ॥९१॥ राम इति । अङ्गदागमनं, दृष्ट्वेति शेषः ॥ ९२ ॥ संवृतः, बभूवेति शेषः । उत्तरश्लोकेनैकवाक्यत्वे हरिकपिशब्दयोः पौनरुक्त्यं स्यात् ॥ ९३ ॥ न्यूनताव्यावृत्त्यर्थं सर्वाणीत्युक्तम् । कपिः सुषेणः । पर्यक्रामत परितश्चचार । नक्षत्राणि नक्षत्रनिरूपितराशीनित्यर्थः ॥ ९४ ॥ तेषामित्यादि । अक्षौहिणिशतमित्यत्र

भङ्क्त्वा प्रासादशिखरं नाम विश्राव्य चात्मनः । विनद्य सुमहानादमुत्पपात विहायसम् ॥ ८९ ॥ व्यथयन् राक्षसान् सर्वान् हर्षयंश्चापि वानरान् । स वानराणां मध्ये तु रामपार्श्वमुपागतः ॥ ९० ॥ रावणस्तु परं चक्रे क्रोधं प्रासादधर्षणात् । विनाशं चात्मनः पश्यन्निश्वासपरमोऽभवत् ॥ ९१ ॥ रामस्तु बहुभिर्हृष्टैर्निनदद्भिः प्लवङ्गमैः । वृतो रिपुवधाकाङ्क्षी युद्धायैवाभ्यवर्तत ॥ ९२ ॥ सुषेणस्तु महावीर्यो गिरिकूटोपमो हरिः । बहुभिः संवृतस्तत्र वानरैः कामरूपिभिः ॥९३॥ चतुर्द्वाराणि सर्वाणि सुग्रीववचनात् कपिः । पर्यक्रामत दुर्धर्षो नक्षत्राणीव चन्द्रमाः ॥ ९४ ॥ तेषामक्षौहिणिशतं समवेक्ष्य वनौकसाम् । लङ्कामुपनिविष्टानां सागरं चाभिवर्तताम् ॥ ९५ ॥ राक्षसा विस्मयं जग्मुस्त्रासं जग्मुस्तथाऽपरे । अपरे समरोद्धर्षाद्धर्षमेव प्रपेदिरे ॥ ९६ ॥ कृत्स्नं हि कपिभिर्व्याप्तं प्राकारपरिखान्तरम् । ददृशू राक्षसा दीनाः प्राकारं वानरीकृतम् ॥ ९७ ॥

“ ङ्यापोः संज्ञाछन्दसोर्बहुलम् ” इति ह्रस्वः । अनेकाक्षौहिणीमित्यर्थः । सागरं चाभिवर्ततां सागरसमीपे वर्तमानानामित्यर्थः ॥ ९५ ॥ राक्षसाः, धीरा इति शेषः । अपरे अधीरा इत्यर्थः । उद्धर्षात् गर्वात् ॥ ९६ ॥ कृत्स्नमिति । हरिभिर्व्याप्तं प्राकारपरिखान्तरं प्राकारपरिखयोरन्तरालम् । वानरीकृतं वानरप्रचुरतया कृतम्, अपरमिव प्राकारं ददृशुरित्यर्थः ॥ ९७ ॥

पश्यन् एकोऽपि समग्रं मम बलं पराभूय निर्भयं गच्छति । एवंविधेष्वनेकेषु मन्नाशोद्यतेषु कथं जीवनमिति पर्यालोचयन्नित्यर्थः ॥ ९१–९३ ॥ पर्यक्रामत सर्वं बलरक्षार्थं सर्वद्वारवृत्तान्तग्रहणार्थं च परितश्चचार ॥ ९४ ॥ अक्षौहिणिशतम् “ अक्षादूहिन्याम्–” इति वृद्धिः । आर्षो ह्रस्वः । यावन्तोऽक्षौहिण्यां गजाश्वरथ

दादेत्यर्थम् ॥ ९८ ॥ तस्मिन्निति । स्पष्टः ॥९९॥ इति श्रीगोविन्द० श्रीरामायण० रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥४१॥ अथ युद्धारम्भो द्विचत्वारिंशे–तत इति । तत्र तस्मिन् काले ॥ १ ॥ विधानं रक्षणविधिम् । द्विगुणं पूर्वस्मादधिकम् ॥ २ ॥ स इति ।

हाहाकारं प्रकुर्वन्ति राक्षसा भयमोहिताः ॥ ९८ ॥ तस्मिन् महाभीषणके प्रवृत्ते कोलाहले राक्षसराजधान्याम् । प्रगृह्य रक्षांसि महायुधानि युगान्तवाता इव संविचेरुः ॥९९॥ इत्यार्षे० श्रीमद्युद्धकाण्डे एकचत्वारिंशः सर्गः ॥४१॥

ततस्ते राक्षसास्तत्र गत्वा रावणमन्दिरम् । न्यवेदयन् पुरीं रुद्धां रामेण सह वानरैः ॥ १ ॥ रुद्धां तु नगरीं श्रुत्वा जातक्रोधो निशाचरः । विधानं द्विगुणं कृत्वा प्रासादं सोऽध्यरोहत ॥ २ ॥ स ददर्शावृतां लङ्कां सशैलवनकाननाम् । असङ्ख्येयैर्हरिगणैः सर्वतो युद्धकाङ्क्षिभिः ॥ ३ ॥ स दृष्ट्वा वानरैः सर्वां वसुधां कवलीकृताम् । कथं क्षपयितव्याः स्युरिति चिन्तापरोऽभवत् ॥ ४ ॥ स चिन्तयित्वा सुचिरं धैर्यमालम्ब्य रावणः । राघवं हरियूथांश्च ददर्शायतलोचनः ॥ ५ ॥ राघवः सह सैन्येन मुदितो नाम पुप्लुवे । लङ्कां ददर्श गुप्तां वै सर्वतो राक्षसैर्वृताम् ॥ ६ ॥ दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् । जगाम सहसा सीतां दूयमानेन चेतसा ॥ ७ ॥ अत्र सा मृगशावाक्षी मत्कृते जनकात्मजा । पीड्यते शोकसन्तप्ता कृशा स्थण्डिलशायिनी ॥ ८ ॥

सर्वत आवृतामित्यन्वयः ॥ ३ ॥ कवलीकृताम् आच्छादितम् । कपिलीकृतामिति पाठे–वानरवर्णेन कपिलीकृताम् । क्षपयितव्याः नाशयितव्याः, एत इति शेषः ॥ ४ ॥ आयतलोचन इत्यनेन विस्मयातिशय उच्यते ॥ ५ ॥ पुप्लुवे नाम पूर्वस्थानात् प्राकारसन्निकृष्टं प्रदेशं प्राप इत्यर्थः ॥ ६ ॥ दूयमानेनेति । सीतां स्मृत्वा दुःखितोऽभूदित्यर्थः ॥ ७ ॥ मृगशावाक्षीत्यनेन शोकानर्हत्वमुच्यते । स्थण्डिलशायिनी भूतलशायिनी ॥ ८ ॥

पद्मास्तथस्तत्सङ्ख्या वानरा इत्यर्थः । शलशब्दोऽनन्तवाची । सागरं चाभिवर्तता सागरपर्यन्तमभिव्याप्य वर्तमानानामित्यर्थः ॥ ९५–९९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायण० युद्धकाण्ड० एकचत्वारिंशः सर्गः ॥ ४१ ॥ १ ॥ [illegible] । विधानं दुर्गसंरक्षणम् ॥ २ ॥ ३ ॥ कपिलीकृताम् कपिलवर्णसदृशीकृताम् ॥ ४ ॥ ५ ॥ पुप्लुवे वेगेन प्राकारसमीपं प्राप्त इत्यर्थः ॥ ६ ॥ दूयमानेन सन्तप्यमानेन चेतसा उपलक्षितः । मनसा जगाम सस्मारेत्यर्थः ॥ ७ ॥ मत्कृते

पीड्यमानां, राक्षसीभिरिति शेषः । धर्मात्मेत्यनेन दयालुत्वमुच्यते ॥ ९ ॥ वचने आज्ञापनरूपे । सङ्घर्षमाणाः स्पर्धमानाः । अनादयन् लङ्कामिति शेषः ॥ १० ॥ विकिराम चूर्णयाम । मनांसि दधिरे निश्चयं चक्रुरित्यर्थः ॥ ११ ॥ शिखराणि पर्वतखण्डान् । 'शिखरं शैलखण्डकम्' इति सङ्ग्रहकारः । तिष्ठन्ति अतिष्ठन् ॥ १२ ॥ प्रेक्षतः प्रेक्षमाणमनादृत्य तान्यनीकानि वानरानीकानि । भागशः स्वस्वनियुक्तप्रदेशे । लङ्कां लङ्काप्राकारम् । राघवप्रिय

पीड्यमानां स धर्मात्मा वैदेहीमनुचिन्तयन् । क्षिप्रमाज्ञापयामास वानरान् द्विषतां वधे ॥ ९ ॥ एवमुक्ते तु वचने रामेणाक्लिष्टकर्मणा । सङ्घर्षमाणाः प्लवगाः सिंहनादैरनादयन् ॥ १० ॥ शिखरैर्विकिरामैनां लङ्कां मुष्टिभिरेव वा । इति स्म दधिरे सर्वे मनांसि हरियूथपाः ॥ ११ ॥ उद्यम्य गिरिशृङ्गाणि शिखराणि महान्ति च । तरूंश्चो त्पाट्य विविधांस्तिष्ठन्ति हरियूथपाः ॥ १२ ॥ प्रेक्षतो राक्षसेन्द्रस्य तान्यनीकानि भागशः । राघवप्रियकामार्थं लङ्कामारुरुहुस्तदा ॥ १३ ॥ ते ताम्रवक्त्रा हेमाभा रामार्थे त्यक्तजीविताः । लङ्कामेवाभ्यवर्तन्त सालतालशिलायुधाः ॥ १४ ॥ ते द्रुमैः पर्वताग्रैश्च मुष्टिभिश्च प्लवङ्गमाः । प्राकाराग्राण्यरण्यानि ममन्थुस्तोरणानि च ॥ १५ ॥ परिखाः पूरयन्ति स्म प्रसन्नसलिलायुताः । पांसुभिः पर्वताग्रैश्च तृणैः काष्ठैश्च वानराः ॥ १६ ॥ ततः सहस्रयूथाश्च कोटी यूथाश्च वानराः । कोटीशतयुताश्चान्ये लङ्कामारुरुहुस्तदा ॥ १७ ॥ काञ्चनानि प्रमृद्नन्तस्तोरणानि प्लवङ्गमाः । कैलासशिखराभाणि गोपुराणि प्रमथ्य च ॥ १८ ॥

कामार्थं रामप्रीतिसिद्ध्यर्थमित्यर्थः ॥ १३ ॥ त्यक्तजीविताः "आशंसायां भूतवच्च" इति क्तः ॥ १४ ॥ अरण्यानि उद्यानानि । तोरणानि बहिर्द्वाराणि । ममन्थुः बभञ्जुरित्यर्थः ॥ १५ ॥ १६ ॥ कोटीशतयुताः कोटीशतयूथयुताः ॥ १७ ॥ काञ्चनानीत्यादिश्लोकद्वयम् । काञ्चनानि काञ्चन
मन्निमित्तम् । शोकसन्तताऽपि पीड्यते मदर्थं रामस्य महान् क्लेशो जायत इति खिन्ना भवतीत्यर्थः ॥ ८ ॥ ९ ॥ सङ्घर्षमाणाः अग्रे भवितुं परस्परं स्पर्धमानाः ॥ १० ॥ विकिराम विदारयाम ॥ ११ ॥ शिखराणि पर्वतखण्डान् "शृङ्गं स्यात्पर्वतस्याग्रं शिखरं खण्डशैलकम्" इति यादवः ॥ १२ ॥ राघवप्रियकामार्थं प्रियविषयः कामो मनोरथः तत्सिद्ध्यर्थम्, राघवस्य प्रियविषयमनोरथसिद्धये इत्यर्थः ॥ १३–१८ ॥

कृतानि । प्रमृद्नन्तः चूर्णयन्तः । आप्लुवन्तः प्लुवन्तश्च गमनागमने कुर्वन्तः ॥ १८–२० ॥ इत्येवमिति । घोषयन्तः घुष्यन्तः । गर्जन्तः सिंहनादं कुर्वन्तः ॥ २१ ॥ वीरबाहुरित्यादिसार्धश्लोक एकान्वयः । एतस्मिन्नन्तरे प्रसिद्धाः वीरबाह्वादयः प्राकारं निपीड्योपनिविष्टाः सन्तः । स्कन्धावारस्य

आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः । लङ्कां तामभिधावन्ति महावारणसन्निभाः ॥ १९ ॥ जयत्यतिबलो रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ २० ॥ इत्येवं घोषयन्तश्च गर्जन्तश्च प्लवङ्गमाः । अभ्यधावन्त लङ्कायाः प्राकारं कामरूपिणः ॥ २१ ॥ वीरबाहुः सुबाहुश्च नलश्च वनगोचरः । निपीड्योपनिविष्टास्ते प्राकारं हरियूथपाः । एतस्मिन्नन्तरे चक्रुः स्कन्धावारनिवेशनम् ॥ २२ ॥ पूर्वद्वारं तु कुमुदः कोटीभिर्दशभिर्वृतः । आवृत्य बलवांस्तस्थौ हरिभिर्जितकाशिभिः ॥ २३ ॥ साहाय्यार्थं तु तस्यैव निविष्टः प्रघसो हरिः । पनसश्च महाबाहुर्वानरैर्बहुभिर्वृतः ॥ २४ ॥ दक्षिणं द्वारमागम्य वीरः शतवलिः कपिः । आवृत्य बलवांस्तस्थौ विंशत्या कोटिभिर्वृतः ॥ २५ ॥ सुषेणः पश्चिमद्वारं गतस्तारापिता हरिः । आवृत्य बलवांस्तस्थौ षष्टिकोटिभिरावृतः ॥ २६ ॥

शिबिरस्य, निवेशनं निर्माणं चक्रुः । युद्धेऽन्तरान्तरा विश्रमार्थं वासस्थानं स्कन्धावारः । यद्वा व्यूहीभावेन सेनास्थापनं स्कन्धावारः ॥ २२ ॥ निवेशनप्रकारमेवाह–पूर्वद्वारमित्यादिना । कुमुदः पूर्वद्वारमावृत्य तस्थौ । ईशानकोणे स्थित्वा पूर्वद्वारमाक्रम्य स्थितवानित्यर्थः ॥ २३ ॥ २४ ॥ शतवलिः दक्षिणद्वारमावृत्य तस्थौ । आग्नेयकोणे स्थित्वा दक्षिणद्वारमाक्रम्य स्थितवानित्यर्थः ॥ २५ ॥ सुषेणः पश्चिमद्वारं गतः आवृत्य तस्थौ ।

आप्लवन्तः समन्तात्प्लवन्तः । प्लवन्तः प्राकाराभिमुखं प्लवन्तः ॥ १९–२१ ॥ स्कन्धावारनिवेशनं स्कन्धावारस्य सेनानिवेशस्य निवेशनं व्यूहीभावेन स्थापनम् ॥ २२ ॥ स्कन्धावारनिवेशप्रकारमाह–पूर्वद्वारमित्यादिना । कुमुदः पूर्वद्वारमावृत्य तस्थौ, ईशानकोणे स्थित्वा पूर्वद्वारमाक्रम्य स्थितवानित्यर्थः ॥ २३ ॥ २४ ॥ शतवलिर्दक्षिणद्वारमावृत्य तस्थौ आग्नेयकोणे स्थित्वा दक्षिणद्वारमाक्रम्य स्थितवानित्यर्थः ॥ २५ ॥ सुषेणः पश्चिमद्वारं प्राप्तः आवृत्य तस्थौ नैर्ऋतकोणे स्थित्वा

नैर्ऋतकोणे स्थित्वा पश्चिमद्वारमाक्रम्य स्थितवानित्यर्थः ॥ २६ ॥ सुग्रीवश्चोत्तरं द्वारमावृत्य तस्थौ । "पश्चिमेन तु रामस्य सुग्रीवः सहजाम्बवान् अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः ॥" इत्युक्तप्रकारेण वायव्यकोणे स्थितस्य सुग्रीवस्य उत्तरद्वारनिरोधकत्वाभिधानादेतदनुसारेण कुमुदादीनां तत्तत्कोणावस्थिततत्वेन तत्तद्वारनिरोधकत्वमिति व्याख्यातम् ॥ २७–३० ॥ गजो गवाक्ष इति । रामपार्श्वस्थात् गवाक्षादन्यो ज्ञेयः ॥ ३१ ॥ ततः

उत्तरं द्वारमासाद्य रामः सौमित्रिणा सह । आवृत्य बलवांस्तस्थौ सुग्रीवश्च हरीश्वरः ॥ २७ ॥ गोलाङ्गूलो महाकायो गवाक्षो भीमदर्शनः । वृतः कोट्या महावीर्यस्तस्थौ रामस्य पार्श्वतः ॥ २८ ॥ ऋक्षाणां भीमवेगानां धूम्रः शत्रुनिबर्हणः । वृतः कोट्या महावीर्यस्तस्थौ रामस्य पार्श्वतः ॥ २९ ॥ सन्नद्धस्तु महावीर्यो गदापाणिर्विभीषणः । वृतो यत्तैस्तु सचिवैस्तस्थौ तत्र महाबलः ॥ ३० ॥ गजो गवाक्षो गवयः शरभो गन्धमादनः । समन्तात् परिधावन्तो ररक्षुर्हरिवाहिनीम् ॥ ३१ ॥ ततः कोपपरीतात्मा रावणो राक्षसेश्वरः । निर्याणं सर्वसैन्यानां द्रुतमाज्ञापयत्तदा ॥ ३२ ॥ एतच्छ्रुत्वा ततो वाक्यं रावणस्य मुखोद्गतम् । सहसा भीमनिर्घोषमुद्घुष्टं रजनीचरैः ॥ ३३ ॥ ततः प्रचोदिता भेर्यश्चन्द्रपाण्डरपुष्कराः । हेमकोणाहता भीमा राक्षसानां समन्ततः ॥ ३४ ॥ विनेदुश्च महाघोषाः शङ्खाः शतसहस्रशः । राक्षसानां सुघोराणां मुखमारुतपूरिताः ॥ ३५ ॥

वानरसेनासन्निवेशाद्धेतोः । तदा तस्मिन् सन्निवेशकाले ॥ ३२ ॥ एतदिति । भीमनिर्घोषं यथा भवति तथा उद्घुष्टम् उच्चैः सिंहनादः कृत इत्यर्थः ॥ ३३ ॥ प्रचोदिताः सेनाग्रे प्रेरिताः । चन्द्रपाण्डरपुष्कराः चन्द्रशुभ्रमुखाः । संमार्जनसंस्कारविशेषेण तासां शुभ्रत्वम् । " पुष्करं करिहस्ताग्रे

पश्चिमद्वारमाक्रम्य स्थितवानित्यर्थः ॥ २६ ॥ सुग्रीवश्चोत्तरद्वारमागत्य आवृत्य 'पश्चिमेन तु रामस्य सुग्रीवस्सहजाम्बवान्' इत्याद्युक्तप्रकारेण वायव्यकोणे स्थितः । सुग्रीवस्योत्तरद्वारनिरोधकत्वाभिधानात्तदनुसारेण कुमुदादीनां तत्तत्कोणावस्थिततत्वेन तत्तद्वारनिरोधकत्वमाख्यातम् ॥ २७–२९ ॥ यत्र महाबलो रामस्तत्र तस्थावित्यन्वयः ॥ ३० ॥ गजो गवाक्ष इति । अयं गवाक्षो रामपार्श्वस्थगवाक्षादन्यः ॥ ३१–३३ ॥ चन्द्रपाण्डरपुष्कराः चन्द्रवत्पाण्डरमुखाः । " पुष्करं करिहस्ताग्रे

वाद्यभाण्डमुखे जले" इत्यमरः । कोणो वाद्यताडनदण्डः । विनेदुरित्यनुकर्षः । अथवा प्रचोदिताः सस्वनुरित्यर्थः ॥३४॥३५॥ शुभनीलाङ्गाः आभरण प्रभाभिः शोभमानानि नीलानि चाङ्गानि येषां ते । अत एव विद्युन्मण्डलसन्नद्धा इति नाधिकोपमा । विद्युन्मण्डलसन्नद्धा इत्युपमानविशेषणेन उपमेयेषु राक्षसेषु सभूषणत्वं गम्यत इत्यप्याहुः ॥ ३६ ॥ सैन्याः सेनायां समवेता जनाः । "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः ।

ते बभुः शुभनीलाङ्गाः सशङ्खा रजनीचराः । विद्युन्मण्डलसन्नद्धाः सबलाका इवाम्बुदाः ॥ ३६ ॥ निष्पतन्ति ततः सैन्या हृष्टा रावणचोदिताः । समये पूर्यमाणस्य वेगा इव महोदधेः ॥ ३७ ॥ ततो वानरसैन्येन मुक्तो नादः समन्ततः । मलयः पूरितो येन स सानुप्रस्थकन्दरः ॥३८॥ शङ्खदुन्दुभिसंघुष्टः सिंहनादस्तरस्विनाम् । पृथिवीं चान्तरिक्षं च सागरं चैव नादयन् ॥ ३९ ॥ गजानां बृंहितैः सार्धं हयानां हेषितैरपि । रथानां नेमिघोषैश्च रक्षसां वदनस्वनः ॥४०॥ एतस्मिन्नन्तरे घोरः सङ्ग्रामः समवर्तत । रक्षसां वानराणां च यथा देवासुरे पुरा ॥४१॥ ते गदाभिः प्रदीप्ताभिः शक्तिशूलपरश्वधैः । निजघ्नुर्वानरान् घोराः कथयन्तः स्वविक्रमान् ॥ ४२ ॥ [ वानराश्च महावीर्या राक्षसान् जघ्नुराहवे । जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ] राजा जयति सुग्रीव इति शब्दो महानभूत् ॥४३॥

समये प्रलये, चन्द्रोदये वा । वेगाः पूराः ॥ ३७ ॥ मलयः त्रिकूटः । सः प्रसिद्धः । सानुप्रस्थकन्दरः अनुप्रस्थं प्रस्थे प्रस्थे स्थिताः याः कन्दराः ताभिः सह वर्तत इति विग्रहः । यद्वा सानुः समः प्रस्थः तटः कन्दरा गुहेत्यर्थः । सानुः महाप्रस्थः प्रस्थः क्षुद्रतटः कन्दरः दरी तैः सह वर्तत इति ससानुप्रस्थकन्दर इत्यप्याहुः ॥ ३८ ॥ शङ्खदुन्दुभीत्यादिश्लोकद्वयम् । शङ्खदुन्दुभिसंघुष्टः शङ्खदुन्दुभिसद्घोषयुक्तः । तरस्विनां बलवताम् । सिंहनादः गजबृंहितादिभिः सह पृथिव्यादिकं नादयन् अनादयत् ॥ ३९ ॥ ४० ॥ देवासुरे यथा देवासुरविरोधे देवानामसुराणामिवेत्यर्थः । यद्वा षष्ठीबहुवचनस्य

वाद्यभाण्डमुखे जले" इत्यमरः । हेमकोणाहताः सुवर्णमयवादनदण्डाहताः ॥ ३४–३६ ॥ सैन्याः "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः । समये प्रलयकाले ॥ ३७ ॥ ससानुप्रस्थकन्दरः सानुर्महाप्रस्थः, प्रस्थः क्षुद्रतटः । कन्दरः दरी ॥ ३८ ॥ नादयन्, उदभूदिति शेषः ॥ ३९ ॥ गजानामित्यादि श्लोकद्वयमेकं वाक्यम् । एतस्मिन् समये गजानां बृंहितादिभिस्सह रक्षसां वानराणां च सुर देवासुराणां विरोधे सति यथा तथा घोरस्सङ्ग्रामः समपद्यतेति

"सुपां सुलुक्—" इत्यादिना शेआदेशः॥ राजेत्यर्धम् । स्पष्टम् ॥४१--४३॥ राजन्नित्यादिसार्धश्लोकः । स्वस्वनामकथां तत इति । नामकथां चोक्त्वा ततो निजघ्नुरित्युत्तरत्रान्वयः । नामकथानाम् अन्ततः अन्ते इति वा योजना । वेगिताः सञ्जातवेगाः । वेपिता इति पाठे-कोपेन कम्पमाना इत्यर्थः ॥४४॥ भिन्दिपालैः गदाभेदैः ॥ ४५ ॥ समाप्लुत्य प्राकाराग्रपर्यन्तमुत्पत्य । प्लवनं प्लुतगतिं गच्छन्तीति प्लवङ्गमाः । असंज्ञायामपि खच्छार्षः । अनेन प्लुतगति

राजन् जय जयेत्युक्त्वा स्वस्वनामकथान्ततः । तथा वृक्षैर्महाकायाः पर्वताग्रैश्च वानराः ॥ निजघ्नुस्तानि रक्षांसि नखैर्दन्तैश्च वेगिताः ॥ ४४ ॥ राक्षसास्त्वपरे भीमाः प्राकारस्था महीगतान् । भिन्दिपालैश्च खड्गैश्च शूलैश्चैव व्यदारयन् ॥४५॥ वानराश्चापि संक्रुद्धाः प्राकारस्थान् महीगताः । राक्षसान् पातयामासुः समाप्लुत्य प्लवङ्गमाः ॥ ४६ ॥ स सम्प्रहारस्तुमुलो मांसशोणितकर्दमः । रक्षसां वानराणां च सम्बभूवाद्भुतोपमः ॥ ४७ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

मत्त्वमुक्तम् । अतो न वानरशब्देन पुनरुक्तिः ॥ ४६ ॥ सम्प्रहारः युद्धम् । तुमुलः परस्परसङ्कुलः । मांसशोणितान्येव कर्दमो यस्मिन् स मांसशोणितकर्दमः । अद्भुतोपमः दुर्लभोपम इति यावत् ॥४७॥ इति श्रीगोविन्द० श्रीरामायण० रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥४२॥

सम्बन्धः ॥ ४०--४३ ॥ स्वस्वनामकथान्ततः स्वस्वनामकथान्ते निजघ्नुरिति सम्बन्धः ॥ ४४ ॥ ( राक्षसास्त्वपरे इत्यर्धं प्रक्षिप्तमिति कतकः ॥ ४५ ॥) प्लवङ्गमाः प्लवैर्गमनशीलाः ॥ ४६ ॥ स सम्प्रहार इति । एतद्युद्धोत्तरं प्रत्यवहारस्सेनाया इति भारताल्लभ्यते । " ततः प्रत्यवहारोऽभूत्सैन्यानां राघवाज्ञया " इत्यादि तत्रोक्तम् ॥ ४७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां द्विचत्वारिंशः सर्गः ॥ ४२ ॥

स०—सैनाप्रत्यवहारोऽत्रानुक्तोऽपि " ततः प्रत्यवहारोऽभूत्सैन्यानां राघवाज्ञया ॥ ततो निविशमानांस्तान् सैनिकान्रावणानुगाः । अभिजग्मुर्गणा एके पिशाचक्षुद्ररक्षसाम् ॥ ततोऽभिपततां तेषामदृश्यानां दुरात्मनाम् । अन्तर्धानवधं तज्ज्ञश्चकार स विभीषणः ॥ " इति भारतवचनबलात्सिद्धमुत्थेयम् ॥ ४७ ॥

अथ द्वन्द्वयुद्धं वर्णयति त्रिचत्वारिंशे—युद्ध्यतामित्यादि । वानराणां युद्ध्यतां वानरेषु युद्ध्यमानेषु । बलकोपः सेनायाः कोपः । बलेत्यविभक्तिक निर्देशः ॥ १ ॥ ते हयैरित्यादिश्लोकद्वयमेकान्वयम् । काञ्चनापीडैः स्वर्णमयशेखरैः । हयैरित्याद्युपलक्षणे तृतीया । राक्षसव्याघ्राः राक्षसश्रेष्ठाः । राक्षस



युद्ध्यतां तु ततस्तेषां वानराणां महात्मनाम् । रक्षसां सम्बभूवाथ बलकोपः सुदारुणः ॥१॥ ते हयैः काञ्चनापीडैर्ध्वजैश्चाग्निशिखोपमैः । रथैश्चादित्यसङ्काशैः कवचैश्च मनोरमैः ॥ २ ॥ निर्ययू राक्षसव्याघ्रा नादयन्तो दिशो दश । राक्षसा भीमकर्माणो रावणस्य जयैषिणः ॥ ३ ॥ वानराणामपि चमूर्बृहती जयमिच्छताम् । अभ्यधावत तां सेनां रक्षसां कामरूपिणाम् ॥ ४ ॥ एतस्मिन्नन्तरे तेषामन्योन्यमभिधावताम् । रक्षसां वानराणां च द्वन्द्वयुद्धमवर्तत ॥ ५ ॥ अङ्गदेनेन्द्रजित् सार्धं वालिपुत्रेण राक्षसः । अयुध्यत महातेजास्त्र्यम्बकेण यथाऽन्तकः ॥६॥ प्रजङ्घेन च सम्पातिर्नित्यं दुर्मर्षणो रणे । जम्बुमालिनमारब्धो हनुमानपि वानरः ॥ ७ ॥ सङ्गतः सुमहाक्रोधो राक्षसो रावणानुजः । समरे तीक्ष्णवेगेन मित्रघ्नेन विभीषणः ॥ ८ ॥ तपनेन गजः सार्धं राक्षसेन महाबलः । निकुम्भेन महातेजा नीलोऽपि समयुद्ध्यत ॥९॥ वानरेन्द्रस्तु सुग्रीवः प्रघसेन समागतः । सङ्गतः समरे श्रीमान् विरूपाक्षेण लक्ष्मणः ॥ १० ॥ अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः । सुप्तघ्नो यज्ञकोपश्च रामेण सह सङ्गताः ॥ ११ ॥ वज्रमुष्टिस्तु मैन्देन द्विविदेनाशनिप्रभः । राक्षसाभ्यां सुघोराभ्यां कपिमुख्यौ समागतौ ॥ १२ ॥

श्रेष्ठत्वेऽपि जात्यन्तरत्वं संभवतीति राक्षसा इत्युक्तम् ॥ २–६ ॥ दुर्मर्षणः दुःसहः । प्रजङ्घो राक्षसः । सम्पातिः विभीषणसचिवः । आरब्धः, हन्तुमिति शेषः ॥७–१०॥ सुप्तघ्नयज्ञकोपौ चेति वा पाठः॥११॥ राक्षसाभ्यां वज्रमुष्ट्यशनिप्रभाभ्याम् । कपिमुख्यौ मैन्दद्विविदौ । अनेन परस्परसङ्गतिरुक्ता ॥१२॥



युद्ध्यतामिति । बलकोपः बलस्य कोपः ॥ १ ॥ काञ्चनापीडैः काञ्चनभूषणवद्भिः । अग्निशिखोपमैः तद्वद्दुर्द्धर्षैः ॥ २–४ ॥ अन्योन्यमभिधावतां द्वन्द्वयुद्धार्थमिति भावः ॥ ५ ॥ ६ ॥ दुर्मर्षणः दुस्सहः । आरब्धः, महर्तुमिति शेषः ॥ ७–१६ ॥

रणदुर्धरः रणे दुर्निग्रहः ॥ १३ ॥ १४ ॥ द्वन्द्वं द्वन्द्वत्वम् । बहुधा युद्धाय शस्त्रास्त्रबाहुचरणप्रभृतिभिर्युद्धाय । बहुभिरिति राक्षसविशेषणाद्वानराश्चेत्य त्रापि बहव इति विशेषणं विज्ञेयम् ॥ १५ ॥ तुमुलं व्याकुलम् ॥ १६ ॥ केशशाद्वलाः केशैः शाद्वलवत्यः । सङ्घाटः काष्ठसञ्चयः ॥ १७ ॥ आजघान

वीरः प्रतपनो घोरो राक्षसो रणदुर्धरः । समरे तीक्ष्णवेगेन नलेन समयुध्यत ॥ १३ ॥ धर्मस्य पुत्रो बलवान् सुषेण इति विश्रुतः । स विद्युन्मालिना सार्धमयुध्यत महाकपिः ॥ १४ ॥ वानराश्चापरे भीमा राक्षसैरपरैः सह । द्वन्द्वं समीयुर्बहुधा युद्धाय बहुभिः सह ॥ १५ ॥ तत्रासीत् सुमहद्युद्धं तुमुलं रोमहर्षणम् । रक्षसां वानराणां च वीराणां जयमिच्छताम् ॥१६॥ हरिराक्षसदेहेभ्यः प्रभूताः केशशाद्वलाः । शरीरसङ्घाटवहाः प्रसस्रुः शोणितापगाः ॥१७॥ आजघानेन्द्रजित् क्रुद्धो वज्रेणेव शतक्रतुः । अङ्गदं गदया वीरं शत्रुसैन्यविदारणम् ॥१८॥ तस्य काञ्चनचित्राङ्गं रथं साश्वं ससारथिम् । जघान समरे श्रीमानङ्गदो वेगवान् कपिः ॥ १९ ॥ सम्पातिस्तु त्रिभिर्बाणैः प्रजङ्घेन समाहतः । निजघानाश्वकर्णेन प्रजङ्घं रणमूर्धनि ॥ २० ॥ जम्बुमाली रथस्थस्तु रथशक्त्या महाबलः । बिभेद समरे क्रुद्धो हनूमन्तं स्तनान्तरे ॥ २१ ॥ तस्य तं रथमास्थाय हनूमान् मारुतात्मजः । प्रममाथ तलेनाशु सह तेनैव रक्षसा ॥ २२ ॥ नदन् प्रतपनो घोरो नलं सोऽप्यन्वधावत ॥२३॥ नलः प्रतपनस्याशु पातयामास चक्षुषी । भिन्नगात्रः शरैस्तीक्ष्णैः क्षिप्रहस्तेन रक्षसा ॥ २४ ॥

ताडयामास ॥ १८–२० ॥ रथशक्त्या रथ एव सदा वर्तमानया शक्त्या ॥ २१ ॥ आस्थाय आरुह्य ॥ २२ ॥ नदन्नित्यर्धमेकं वाक्यम् ॥ २३ ॥ रक्षसा प्रतपनेन । भिन्नगात्र इत्यस्य पूर्वेणान्वयः ॥ २४ ॥

हरिराक्षसेति । केशैः शाद्वलाः शाद्वलवत्यः । शरीरसङ्घाटवहाः शरीराण्येव सङ्घाटाः काष्ठसञ्चयाः तान् वहन्तीति तथा ॥ १७–२० ॥ रथशक्त्या रथस्थशक्त्या ॥ २१–२३ ॥ रक्षसा भिन्नगात्रो नलः प्रतपनस्य चक्षुषी पातयामासेति सम्बन्धः ॥ २४–२७ ॥

सप्तपर्णेन सप्तपर्णवृक्षेण ॥ २५ ॥ २६ ॥ अग्निशिखोपमैः अग्निज्वालोपमैः ॥ २७ ॥ पुराट्टः पुरवलभिः ॥ २८ ॥ २९ ॥ क्षिप्रहस्तः क्षिप्रकारिहस्तः । निकुम्भः प्रजहास चेति पाठः सम्यक् ॥ ३० ॥ शिरश्चिच्छेद सारथेरित्यनन्तरं वज्राशनिसमस्पर्श इति श्लोकः । ततो द्विविदं वानरेन्द्रं त्विति





ग्रसन्तमिव सैन्यानि प्रघसं वानराधिपः । सुग्रीवः सप्तपर्णेन निर्बिभेद जघान च ॥२५॥ अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः । सुप्तघ्नो यज्ञकोपश्च रामं निर्बिभिदुः शरैः ॥ २६ ॥ तेषां चतुर्णां रामस्तु शिरांसि निशितैः शरैः । क्रुद्धश्चतुर्भिश्चिच्छेद घोरैरग्निशिखोपमैः ॥२७॥ वज्रमुष्टिस्तु मैन्देन मुष्टिना निहतो रणे । पपात सरथः साश्वः पुराट्ट इव भूतले ॥ २८ ॥ निकुम्भस्तु रणे नीलं नीलाञ्जनचयप्रभम् । निर्बिभेद शरैस्तीक्ष्णैः करैर्मेघमिवांशुमान् ॥ २९ ॥ पुनः शरशतेनाथ क्षिप्रहस्तो निशाचरः । बिभेद समरे नीलं निकुम्भः प्रजहास च ॥ ३० ॥ तस्यैव रथचक्रेण नीलो विष्णुरिवाहवे । शिरश्चिच्छेद समरे निकुम्भस्य च सारथेः ॥ ३१ ॥ वज्राशनिसमस्पर्शो द्विविदोऽप्यशनिप्रभम् । जघान गिरिशृङ्गेण मिषतां सर्वरक्षसाम् ॥३२॥ द्विविदं वानरेन्द्रं तु नगयोधिनमाहवे । शरैरशनिसङ्काशैः स विव्याधाशनिप्रभः ॥ ३३ ॥ स शरैरतिविद्धाङ्गो द्विविदः क्रोधमूर्च्छितः । सालेन सरथं साश्वं निजघानाशनिप्रभम् ॥ ३४ ॥ विद्युन्माली रथस्थस्तु शरैः काञ्चनभूषणैः । सुषेणं ताडयामास ननाद च मुहुर्मुहुः ॥ ३५ ॥ तं रथस्थमथो दृष्ट्वा सुषेणो वानरोत्तमः । गिरिशृङ्गेण महता रथमाशु न्यपातयत् ॥ ३६ ॥ लाघवेन तु संयुक्तो विद्युन्माली निशाचरः । अपक्रम्य रथात्तूर्णं गदापाणिः क्षितौ स्थितः ॥ ३७ ॥ ततः क्रोधसमाविष्टः सुषेणो हरिपुङ्गवः । शिलां सुमहतीं गृह्य निशाचरमभिद्रवत् ॥ ३८ ॥



श्लोकः ॥ ३१–३६ ॥ अपक्रम्य अवप्लुत्य ॥ ३७ ॥ अभिद्रवत् अभ्यद्रवत् ॥ ३८ ॥ ३९ ॥

ततः क्रोधेति । अभिद्रवत् अभ्यद्रवत् ॥ ३८–४१ ॥     स०—आहवे चक्रेण विष्णुरिव समरे निकुम्भस्य सारथेः शिरश्चिच्छेदेत्यन्वयः ॥ ३१ ॥

अचिन्त्य अचिन्तयित्वा ॥ ४० ॥ ४१ ॥ दिवौकसैरित्यकारान्तत्वमार्षम् ॥ ४२ ॥ भग्नैरित्यादि सार्द्धश्लोकद्वयमेकान्वम् । अपविद्धैरिति रथविशेषणम् । भिन्नैरिति हयविशेषणम् । साङ्ग्रामिकैः सङ्ग्रामे साधुभिः । अक्ष चक्ररन्ध्रम् । युगदण्डः अश्वबन्धनदण्डः ॥ ४३ ॥ ४४ ॥ कबन्धानि शिरो

तमापतन्तं गदया विद्युन्माली निशाचरः । वक्षस्यभिजघानाशु सुषेणं हरिसत्तमम् ॥ ३९ ॥ गदाप्रहारं तं घोर मचिन्त्य प्लवगोत्तमः । तां शिलां पातयामास तस्योरसि महामृधे ॥ ४० ॥ शिलाप्रहाराभिहतो विद्युन्माली निशाचरः । निष्पिष्टहृदयो भूमौ गतासुर्निपपात ह ॥ ४१ ॥ एवं तैर्वानरैः शूरैः शूरास्ते रजनीचराः । द्वन्द्वे विमृदितास्तत्र दैत्या इव दिवौकसैः ॥ ४२ ॥ भग्नैः खड्गैर्गदाभिश्च शक्तितोमरपट्टिशैः । अपविद्धैश्च भिन्नैश्च रथैः साङ्ग्रामिकैर्हयैः ॥ ४३ ॥ निहतैः कुञ्जरैर्मत्तैस्तथा वानरराक्षसैः । चक्राक्षयुगदण्डैश्च भग्नैर्धरणिसंश्रितैः । बभूवायोधनं घोरं गोमायुगणसङ्कुलम् ॥ ४४ ॥ कबन्धानि समुत्पेतुर्दिक्षु वानररक्षसाम् । विमर्दे तुमुले तस्मिन् देवासुररणोपमे ॥ ४५ ॥ विदार्यमाणा हरिपुङ्गवैस्तदा निशाचराः शोणितदिग्धगात्राः । पुनः सुयुद्धं तरसा समास्थिता दिवाकरस्यास्तमयाभिकाङ्क्षिणः ॥४६॥ इत्यार्षे श्रीरामायणे० श्रीमद्युद्धकाण्डे त्रिचत्वारिंशः सर्गः॥४३॥

युद्ध्यतामेव तेषां तु तदा वानररक्षसाम् । रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणी ॥ १ ॥

हीनशरीराणि । विमर्दे युद्धे ॥ ४५ ॥ दिवाकरस्येति । रात्रौ राक्षसानां बलाधिक्यादिति भावः ॥ ४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ अथ रात्रियुद्धप्रवृत्तिश्चतुश्चत्वारिंशे—युद्ध्यतामेवेत्यादि । युद्ध्यतां युद्ध्यमानेषु । एवमिति । दिवौकसैरिति अकारान्तत्वमार्षम् ॥४२–४६॥ इति श्रीमद्देश्वर० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां त्रिचत्वारिंशः सर्गः ॥४३॥१–४॥

स०–प्राणहारिणी " पौषपौर्णमास्यां सुवेलारोहः, समग्रपौषातिक्रमणं सेनाविभागकरणम् । प्रतिपदि मध्याह्ने युद्धप्रारम्भः । बहुदिनं युद्धकरणम् । तदुपरि निशायुद्धमिति सान्धकारतया परस्परादर्शनात् " ततो जज्ञे महायुद्धं सङ्कुलं कपिरक्षसाम् । मध्याह्ने प्रथमं युद्धं प्रारब्धं प्रतिपद्यभूत् ॥ " इति पाद्मोक्तेः । अत्र तत्त्वं वक्ष्यामः" इति नागोजिभट्टः । पद्मपुराणे पञ्चषेषु पुस्तकेषु एतत्पद्यादर्शनेन " अत्र युद्धं महद्वृत्तं चैत्रशुक्लचतुर्दशीम् । अष्टचत्वारिंशद्दिनं यत्रासौ रावणो हतः " इत्यन्यथादर्शनेन च तच्चिन्त्यम् । चैत्रशुक्लचतुर्दशीतः प्राक् सप्तचत्वारिंशद्दिनी प्राप्ता । चतुर्दश्या सहाष्टचत्वारिंशद्दिनी भवति । भवति फाल्गुनकृष्णे रात्रियुद्धमित्यन्ये ॥ १ ॥

प्राणहारिणी, वानराणामिति शेषः ॥ १ ॥ २ ॥ हरिश्चासीति राक्षसा इति। दारुणतमस्कत्वेन रक्षसामपि मोहोऽभूदिति भावः ॥ ३ ॥ ४ ॥ कालाः नीलाः। काञ्चनसंनाहाः काञ्चनकवचाः। दीप्तौषधिवनाः दीप्ततृणज्योतिर्वनाः ॥ ५ ॥ परिपेतुः सञ्चेरुः ॥ ६ ॥ ते वानराः काञ्चनापीडान्

अन्योन्यं बद्धवैराणां घोराणां जयमिच्छताम्। सम्प्रवृत्तं निशायुद्धं तदा वानररक्षसाम् ॥२॥ राक्षसोऽसीति हरयो हरिश्चासीति राक्षसाः। अन्योन्यं समरे जघ्नुस्तस्मिंस्तमसि दारुणे ॥ ३ ॥ जहि दारय चेहीति कथं विद्रवसीति च। एवं सुतुमुलः शब्दस्तस्मिंस्तमसि शुश्रुवे ॥ ४ ॥ कालाः काञ्चनसन्नाहास्तस्मिंस्तमसि राक्षसाः। सम्प्रादृश्यन्त शैलेन्द्रा दीप्तौषधिवना इव ॥ ५ ॥ तस्मिंस्तमसि दुष्पारे राक्षसाः क्रोधमूर्च्छिताः। परिपेतुर्महावेगा भक्षयन्तः प्लवङ्गमान् ॥ ६ ॥ ते हयान् काञ्चनापीडान् ध्वजांश्चाग्निशिखोपमान्। आप्लुत्य दशनैस्तीक्ष्णैर्भीमकोपा व्यदारयन् ॥७॥ वानरा बलिनो युद्धेऽक्षोभयन् राक्षसीं चमूम्। कुञ्जरान् कुञ्जरारोहान् पताकाध्वजिनो रथान्। चकर्षुश्च ददंशुश्च दशनैः क्रोधमूर्च्छिताः ॥ ८ ॥ लक्ष्मणश्चापि रामश्च शरैराशीविषोपमैः। दृश्यादृश्यानि रक्षांसि प्रवराणि निजघ्नतुः ॥ ९ ॥ तुरङ्गखुरविध्वस्तं रथनेमिसमुत्थितम्। रुरोध कर्णनेत्राणि युध्यतां धरणीरजः ॥ १० ॥ वर्तमाने महाघोरे सङ्ग्रामे रोमहर्षणे। रुधिरोदा महाघोरा नद्यस्तत्र प्रसुस्रुवुः ॥ ११ ॥ ततो भेरीमृदङ्गानां पणवानां च निस्वनः। शङ्खवेणुस्वनोन्मिश्रः सम्बभूवाद्भुतोपमः ॥ [ विमर्दे तुमुले तस्मिन् देवासुररणोपमे। ] ॥ १२॥ हतानां स्तनमानानां राक्षसानां च निस्वनः। शस्तानां वानराणां च सम्बभूवातिदारुणः ॥ १३ ॥

सुवर्णशेखरान् ॥ ७ ॥ वानरा इत्यादिसार्द्धश्लोकः। युद्धेक्षोभयन्नित्यत्र अक्षोभयन्निति पदच्छेदः ॥ ८ ॥ दृश्यादृश्यानि ईषद्दृश्यानीत्यर्थः ॥ ९ ॥ विध्वस्तं चूर्णितम् ॥१०॥ रुधिरोदाः। असंज्ञायामप्युदकशब्दस्योदादेशः आर्षः ॥११॥१२॥ स्तनमानानां स्तनताम्। शस्तानां हिंसितानाम् ॥१३॥



कालाः नीलाः। काञ्चनसन्नाहाः सुवर्णकवचाः ॥ ५-७ ॥ वानरा इति। युद्धे अक्षोभयन्निति च्छेदः ॥ ८-१४ ॥

हतैरित्यादिश्लोकद्वयमेकान्वयम् । निहतैरिति राक्षसविशेषणम् । पर्वताग्रैः वानरप्रेरितैः । उपलक्षणे तृतीया । शस्त्राण्येव पुष्पोपहाराः पुष्पबलयो यस्यां सा । तत्र तदा । दुर्ज्ञेया कृच्छ्रज्ञेया । प्रतियोधिनः दुर्निवेशा दुष्प्रवेशा ॥ १४ ॥ १५ ॥ कालरात्रिः भीमरथिरात्रिः, " रात्रिर्भीमरथिर्नाम

हतैर्वानरवीरैश्च शक्तिशूलपरश्वधैः । निहतैः पर्वताग्रैश्च राक्षसैः कामरूपिभिः ॥ १४ ॥ शस्त्रपुष्पोपहारा च तत्रा
सीद्युद्धमेदिनी । दुर्ज्ञेया दुर्निवेशा च शोणितास्रावकर्दमा ॥ १५ ॥ सा बभूव निशा घोरा हरिराक्षसहारिणी ।
कालरात्रीव भूतानां सर्वेषां दुरतिक्रमा ॥ १६ ॥ ततस्ते राक्षसास्तत्र तस्मिंस्तमसि दारुणे । राममेवाभ्यवर्तन्त
संसृष्टाः शरवृष्टिभिः ॥ १७ ॥ तेषामापततां शब्दः क्रुद्धानामपि गर्जताम् । उद्वर्त इव सप्तानां समुद्राणां प्रशुश्रुवे
॥ १८ ॥ तेषां रामः शरैष्षड्भिष्षड् जघान निशाचरान् । निमेषान्तरमात्रेण शितैरग्निशिखोपमैः ॥ १९ ॥ यम
शत्रुश्च दुर्धर्षो महापार्श्वमहोदरौ । वज्रदंष्ट्रो महाकायस्तौ चोभौ शुकसारणौ ॥ २० ॥ ते तु रामेण बाणौघैः सर्वे
मर्मसु ताडिताः । युद्धादपसृतास्तत्र सावशेषायुषोऽभवन् ॥ २१ ॥ तत्र काञ्चनचित्राङ्गैः शरैरग्निशिखोपमैः ।
दिशश्चकार विमलाः प्रदिशश्च महाबलः ॥ [ रामनामाङ्कितैर्बाणैर्व्याप्तं तद्रणमण्डलम् ] ॥ २२ ॥

सर्वप्राणिभयावहा" इत्युक्तेः । शक्तिर्वा, " सती च कालरात्रिश्च भैरवी गणनायिका " इत्युक्तेः ॥ १६ ॥ तत इति । संसृष्टाः संमिलिताः ॥ १७ ॥ तेषामिति । उद्वर्तै अभिवृद्धौ प्रलये वा ॥ १८ ॥ रामानु०—उद्वर्ते संवर्ते ॥ १८ ॥ तेषां राक्षसानां मध्ये षट् निशाचरान् अग्निशिखोपमैः शितैः शरैः जघान ॥ १९ ॥ रामानु०—शितैरग्निशिखोपमैरिति पाठः ॥ १९ ॥ के ते षडित्यपेक्षायामाह—यमेति । दुर्धर्षः धर्षितुमशक्यः यमशत्रुः । महोदरमहापार्श्वौ । महाकायः वज्रदंष्ट्रः । तौ उत्तरद्वाररक्षकत्वेन पूर्वोक्तौ उभौ शुकसारणौ चेति षट् । अत्र महाकाय इति वज्रदंष्ट्रविशेषणम् । अपसृताः पलायिताः । सावशेषायुषः आयुश्शेषयुक्ता इति जीवने हेतुः ॥ २० ॥ २१ ॥ तत्रेति । महाबलः रामः ॥ २२ ॥

शस्त्रपुष्पोपहारा शस्त्राण्येव पुष्पोपहाराः यस्यास्सा ॥ १५--१७ ॥ उद्वर्ते प्रलयकाले ॥ १८--२५ ॥

ये त्विति । पावकं समासाद्येत्यन्वयः ॥२३॥२४॥ राक्षसानामिति । पूर्वमेव घोरा सा भूयः विशिष्य घोरतरा बभूव ॥ २५ ॥ प्रव्याहरदिव प्रतिव्याहर दिवेत्यर्थः ॥२६॥ भक्षयन् अभक्षयन् ॥ २७ ॥ पूर्वप्रसक्तस्याङ्गदेन्द्रजितोर्द्वन्द्वयुद्धस्य शेषं वक्तुमुपक्रमते—अङ्गदस्त्वित्यादिना ॥ २८ ॥ तत्रैव तस्मिन्

ये त्वन्ये राक्षसा भीमा रामस्याभिमुखे स्थिताः । तेऽपि नष्टाः समासाद्य पतङ्गा इव पावकम् ॥ २३ ॥ सुवर्णपुङ्खैर्विशिखैः सम्पतद्भिः सहस्रशः । बभूव रजनी चित्रा खद्योतैरिव शारदी ॥ २४ ॥ राक्षसानां च निनदैर्हरीणां चापि निस्वनैः । सा बभूव निशा घोरा भूयो घोरतरा तदा ॥२५॥ तेन शब्देन महता प्रवृद्धेन समन्ततः । त्रिकूटः कन्दराकीर्णः प्रव्याहरदिवाचलः ॥ २६ ॥ गोलाङ्गूला महाकायास्तमसा तुल्यवर्चसः । सम्परिष्वज्य बाहुभ्यां भक्षयन् रजनीचरान् ॥२७॥ अङ्गदस्तु रणे शत्रुं निहन्तुं समुपस्थितः । रावणिं निजघानाशु सारथिं च हयानपि ॥ २८ ॥ वर्तमाने तदा घोरे सङ्ग्रामे भृशदारुणे । इन्द्रजित्तु रथं त्यक्त्वा हताश्वो हतसारथिः । अङ्गदेन महाकायस्तत्रैवान्तरधीयत ॥ २९ ॥ तत्कर्म वालिपुत्रस्य सर्वे देवाः सहर्षिभिः । तुष्टुवुः पूजनार्हस्य तौ चोभौ रामलक्ष्मणौ ॥ ३० ॥ प्रभावं सर्वभूतानि विदुरिन्द्रजितो युधि । [ अदृश्यः सर्वभूतानां योऽभवद्युधि दुर्जयः । ] तेन ते तं महात्मानं तुष्टा दृष्ट्वा प्रधर्षितम् ॥ ३१ ॥ ततः प्रहृष्टाः कपयः ससुग्रीवविभीषणाः । साधु साध्विति नेदुश्च दृष्ट्वा शत्रुं प्रधर्षितम् ॥३२॥ इन्द्रजित्तु तदा तेन निर्जितो भीमकर्मणा । संयुगे वालिपुत्रेण क्रोधं चक्रे सुदारुणम् ॥३३॥ एतस्मिन्नन्तरे रामो वानरान् वाक्यमब्रवीत् ॥ ३४ ॥ सर्वे भवन्तस्तिष्ठन्तु कपिराजेन सङ्गताः ॥ ३५ ॥

देश एव ॥ २९ ॥ पूजनार्हस्य स्तुत्यर्हस्य ॥ ३० ॥ ते तानि । लिङ्गव्यत्यय आर्षः । महात्मानं महाधैर्यम् । तेन अङ्गदेन । प्रधर्षितं पराजितम् । दृष्ट्वा तुष्टाः ॥ ३१–३३ ॥ एतस्मिन्नित्यर्धम् ॥ ३४ ॥ सर्वे इत्यर्धम् ॥ ३५ ॥ ३६ ॥

तेन शब्देनेति । प्रव्याहरत प्रतिव्याहरदिव ॥ २६–३५ ॥

स इति । अन्तर्धानगतः अन्तर्धानविद्यां प्राप्तः ॥ ३७ ॥ सर्वगात्रेषु सर्वावयवेषु ॥ ३८ ॥ मायया संवृतः मायया युक्तः । अत एव अदृश्यः । कूटयोधी कपटयोधी । राघवौ रघुकुलोद्भवौ रामलक्ष्मणौ । शरबन्धेन शररूपबन्धकेन बबन्ध । वेष्टनदंशनादिना नागमयत्वम् । वेदनादिना शरमयत्वम्

स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम् । भवतामर्थसिद्ध्यर्थं कालेन स समागतः । अद्यैव क्षमितव्यं मे भवन्तो विगतज्वराः ॥ ३६ ॥ सोऽन्तर्धानगतः पापो रावणी रणकर्कशः । अदृश्यो निशितान् बाणान् मुमोचाशनिवर्चसः ॥३७॥ स रामं लक्ष्मणं चैव घोरैर्नागमयैः शरैः । बिभेद समरे क्रुद्धः सर्वगात्रेषु राक्षसः ॥३८॥ मायया संवृतस्तत्र मोहयन् राघवौ युधि । अदृश्यः सर्वभूतानां कूटयोधी निशाचरः । बबन्ध शरबन्धेन भ्रातरौ रामलक्ष्मणौ ॥३९॥ तौ तेन पुरुषव्याघ्रौ क्रुद्धेनाशीविषैः शरैः । सहसा निहतौ वीरौ तदा प्रैक्षन्त वानराः ॥ ४० ॥ प्रकाशरूपस्तु यदा न शक्तस्तौ बाधितुं राक्षसराजपुत्रः । मायां प्रयोक्तुं समुपाजगाम बबन्ध तौ राजसुतौ महात्मा ॥ ४१ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

॥ ३९ ॥ ४० ॥ मायाप्रयोगः किमर्थस्तत्राह–प्रकाशेति । समुपाजगाम उपचक्रमे । बबन्ध च । महात्मा महाबुद्धिः ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

सः इन्द्रजित् ब्रह्मणा दत्तवरस्सन् त्रैलोक्यं बाधते । किञ्च कालेन कालबलेन भवतामर्थसिद्ध्यर्थं समागतः कालबलेन भवतो जेतुं समागत इत्यर्थः । अद्यैव मे मया क्षमितव्यं ब्रह्मणो मान्यत्वादिति भावः । भवन्तो विगतज्वरास्तिष्ठन्त्विति पूर्वेण सम्बन्धः ॥ ३६–४० ॥ समुपाजगाम उपचक्रमे । रामकर्तृकेन्द्रजित्प्रयुक्तनागपाशबन्धनसहनस्यायमाशयः–ईषद्भ्रूभङ्गमात्रेण सर्वजगत्संहर्तुस्सर्वेश्वरस्य श्रीरामस्य इन्द्रजित्प्रयुक्तनागपाशबन्धनसहनं स्वकृतमर्यादारूपब्रह्मवरदानपालनार्थं ब्रह्मणो मान्यतार्थं चेति ज्ञातव्यम् । अस्मिन् काण्डेऽन्यत्राप्येतादृशस्थलेष्वेवमेवानुसन्धेयम् ॥ ४१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

अथ नागपाशबन्धः पञ्चचत्वारिंशे—स तस्येत्यादि । गम्यत इति गतिः स्थानम् ॥ १ ॥ तानेव दश यूथपान् दर्शयति—द्वावित्यादिना । दायादौ पुत्रौ । "दायादौ सुतबान्धवौ" इत्यमरः ॥ २ ॥ ३ ॥ मार्गमाणाः मार्गितुमित्यर्थः ॥ ४ ॥ परमास्त्रैरिषुभिः परमास्त्ररूपैरिषुभिः ॥ ५ ॥ ६ ॥ रामेति । भृशं सर्वदेहभिदः शरान् रामलक्ष्मणयोरेवाधिकरणयोरावेशयामास ॥ ७ ॥ निरन्तरशरीरौ, कृताविति शेषः । शरतां गतैः शरकार्यं भेदनादिकं कुर्वद्भिरित्यर्थः ॥ ८ ॥ रामानु०—पन्नगैः शरतां गतैः । शरकार्यं भेदनं पन्नगकार्यं संवेष्टनं च कुर्वद्भिरित्यर्थः ॥ ८ ॥ तयोरिति । क्षतेन जातो मार्गः क्षतजमार्गः । ननु "न भूत



स तस्य गतिमन्विच्छन् राजपुत्रः प्रतापवान् । दिदेशातिबलो रामो दश वानरयूथपान् ॥ १ ॥ द्वौ सुषेणस्य दायादौ नीलं च प्लवगर्षभम् । अङ्गदं वालिपुत्रं च शरभं च तरस्विनम् ॥ २ ॥ विनतं जाम्बवन्तं च सानुप्रस्थं महाबलम् । ऋषभं चर्षभस्कन्धमादिदेश परन्तपः ॥ ३ ॥ ते सम्प्रहृष्टा हरयो भीमानुद्यम्य पादपान् । आकाशं विविशुः सर्वे मार्गमाणा दिशो दश ॥ ४ ॥ तेषां वेगवतां वेगमिषुभिर्वेगवत्तरैः । अस्त्रवित् परमास्त्रैस्तु वारयामास रावणिः ॥ ५ ॥ तं भीमवेगा हरयो नाराचैः क्षतविग्रहाः । अन्धकारे न ददृशुर्मेघैः सूर्यमिवावृतम् ॥ ६ ॥ रामलक्ष्मणयोरेव सर्वदेहभिदः शरान् । भृशमावेशयामास रावणिः समितिञ्जयः ॥ ७ ॥ निरन्तरशरीरौ तौ भ्रातरौ रामलक्ष्मणौ । क्रुद्धेनेन्द्रजिता वीरौ पन्नगैः शरतां गतैः ॥ ८ ॥ तयोः क्षतजमार्गेण सुस्राव रुधिरं बहु । तावुभौ च प्रकाशेते पुष्पिताविव किंशुकौ ॥ ९ ॥

सङ्घसंस्थानो देहोऽस्य परमात्मनः।न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा॥" इत्यादिभिः रामलक्ष्मणयोर्दिव्यविग्रहस्याप्राकृतत्वस्मरणात्कथं रुधिरोद्गम इति चेदत्राहुः । वस्तुतोऽनयो रुधिराभावेऽपि मनुष्यभावनानुरोधेन नट इव रुधिराणि दर्शयतः स्म । नन्वेवं निर्बन्धेन मनुष्यभावं भावयतः किं प्रयोजनम् ? शृणु; सर्वात्मना मनुष्यभावनाननुरोधे जन एवं मन्येत—नायं मर्त्यः किं तु देवः तेन तद्वदस्माकं न शक्यमनुष्ठातुं धर्मानिति । सर्वथा मनुष्य स इति । तस्य इन्द्रजितः गतिम् अवस्थानप्रदेशम् अन्विच्छन् ज्ञातुमिच्छन् दिदेश आदिदेश ॥ १–४ ॥ तेषामिति । परमास्त्रेण ब्रह्मास्त्रमन्त्रेण अभिमन्त्रितैरिषुभिर्वारयामासेति सम्बन्धः ॥ ५–८ ॥ तयोरिति । क्षतजमार्गेण क्षतेन व्रणेन जातो मार्गः तेन ॥ ९ ॥ १० ॥

भावनायां तु महाजनानुष्ठानदर्शनेन स्वयमनुष्ठास्यति लोक इति रहस्यम् । रावणस्य मनुष्यैकवध्यत्वेन तद्भावनेत्यप्याहुः । नागपाशबद्धतयाऽवस्थानं तु धर्मनिरतानामपि कदाचिदापदुपतिष्ठति निवर्तते च झटितीति लोकानां प्रदर्शनायेति । एवं मोहादिष्वपि द्रष्टव्यम् ॥ ९ ॥ पर्यन्तरक्ताक्ष इत्यनेन ईषत्कोपवत्त्वं लक्ष्यते ॥ १० ॥ अनालक्ष्यं यथा भवति तथा युद्ध्यमानं मां शक्रस्त्रिदशेश्वरोऽपि द्रष्टुं मायया बलान्तरेण आसादितुं वापि न शक्तः । किं पुनर्युवां मानुषावित्यर्थः ॥११॥ राघवाविति संबोधनम् । अत्रापि युवामिति द्वितीयान्ततया विपरिणम्यानुषञ्जनीयम् । कङ्कपत्रिणा कङ्कपत्रवता ।

ततः पर्यन्तरक्ताक्षो भिन्नाञ्जनचयोपमः । रावणिर्भ्रातरौ वाक्यमन्तर्धानगतोऽब्रवीत् ॥ १० ॥ युद्ध्यमानमनालक्ष्यं शक्रोऽपि त्रिदशेश्वरः । द्रष्टुमासादितुं वापि न शक्तः किं पुनर्युवाम् ॥११॥ प्रावृताविषुजालेन राघवौ कङ्कपत्रिणा । एष रोषपरीतात्मा नयामि यमसादनम् ॥१२॥ एवमुक्त्वा तु धर्मज्ञौ भ्रातरौ रामलक्ष्मणौ । निर्बिभेद शितैर्बाणैः प्रजहर्ष ननाद च ॥ १३ ॥ भिन्नाञ्जनचयश्यामो विस्फार्य विपुलं धनुः । भूयो भूयः शरान् घोरान् विससर्ज महामृधे ॥ १४ ॥ ततो मर्मसु मर्मज्ञो मज्जयन्निशितान् शरान् । रामलक्ष्मणयोर्वीरो ननाद च मुहुर्मुहुः ॥ १५ ॥ बद्धौ तु शरबन्धेन तावुभौ रणमूर्धनि । निमेषान्तरमात्रेण न शेकतुरुदीक्षितुम् ॥ १६ ॥ ततो विभिन्नसर्वाङ्गौ शरशल्याचितावुभौ । ध्वजाविव महेन्द्रस्य रज्जुमुक्तौ प्रकम्पितौ ॥ १७ ॥ तौ सम्प्रचलितौ वीरौ मर्मभेदेन कर्शितौ । निपेततुर्महेष्वासौ जगत्यां जगतीपती ॥ १८ ॥

एष इत्यव्यवधानद्योतनाय ॥ १२ ॥ एवमिति । धर्मज्ञाविति शब्दवेधप्रयोगासहिष्णू इत्यर्थः ॥१३॥ अञ्जनोपरिप्रदेशस्य धूसरत्वसंभवात् भिन्नेत्युक्तम् ॥ १४ ॥ १५ ॥ निमेषान्तरमात्रेण निमेषावकाशमात्रेण, क्षणमात्रेणेत्यर्थः ॥ १६ ॥ शरशल्याचितौ शराग्रप्रोतौ कृतौ । रज्जुमुक्तौ मुक्तरज्जू । अत एव प्रकम्पितौ महेन्द्रस्य ध्वजाविव कृतौ । जगत्यां भूमौ । जगतीपती भूपती ॥ १७॥ १८ ॥

अनालक्ष्य अन्तर्धाय ॥ ११ ॥ प्रावृताविषुजालेनेत्यस्य प्रातीतिकार्थः स्पष्टः ॥ वस्तुतस्तु—राघवौ इषुजालेन प्रावृतौ केवलम्, यमसादनं नयामि, वानरानिति

तावितिं । वीराः शेरतेऽस्मिन्निति वीरशयनं रणभूमिः, शरतल्पं वा । शरवेष्टितसर्वाङ्गौ शरभूतसर्पवेष्टितसर्वाङ्गौ । आर्तौ मनःपीडावन्तौ । परमपीडितौ शारीरकपीडावन्तौ, अभूतामिति शेषः ॥ १९ ॥ अङ्गुलम् अङ्गुलिप्रमाणम् । अथवा "अङ्गुलिरङ्गुलम्" इति त्रिकाण्डीस्मरणात् अङ्गुलिप्रमाणवाच्यङ्गुलशब्दोऽकारान्तोऽप्यस्ति । तयोर्गात्रमङ्गुलमात्रेऽप्यवकाशे अविद्धं नाभूदिति भावः । यद्वा तयोर्गात्रम् अङ्गुलम् अङ्गुलसम्बन्ध्यपि

तौ वीरशयने वीरौ शयानौ रुधिरोक्षितौ । शरवेष्टितसर्वाङ्गावार्तौ परमपीडितौ ॥ १९ ॥ न ह्यविद्धं तयोर्गात्रे बभूवाङ्गुलमन्तरम् । नानिर्भिन्नं न चास्तब्धमाकराग्रादजिह्मगैः ॥ २० ॥ तौ तु क्रूरेण निहतौ रक्षसा कामरूपिणा । असृक् सुस्रुवतुस्तीव्रं जलं प्रस्रवणाविव ॥ २१ ॥ पपात प्रथमं रामो विद्धो मर्मसु मार्गणैः । क्रोधादिन्द्रजिता येन पुरा शक्रो विनिर्जितः ॥२२॥ रुक्मपुङ्खैः प्रसन्नाग्रैरधोगतिभिराशुगैः । नाराचैरर्धनाराचैर्भल्लैरञ्जलिकैरपि । विव्याध वत्सदन्तैश्च सिंहदंष्ट्रैः क्षुरैस्तथा ॥ २३ ॥

अन्तरमवकाशः । आकराग्रात्कराग्रपर्यन्तम् । अजिह्मगैः सर्परूपशरैः । अविद्धं न बभूव । अस्तब्धम् अनिश्चलं च न बभूव । अनिर्भिन्नं च न बभूव ॥ २० ॥ तीव्रम् अत्यन्तम् । प्रस्रवणौ गिरिविशेषौ ॥ २१ ॥ पपातेति । इन्द्रजित्त्वं निर्वक्ति येनेति ॥ २२ ॥ नागास्त्रप्रयोगानन्तरं केवलशरैरपि विव्याधेत्याह—रुक्मपुङ्खैरित्यादिना । प्रसन्नाग्रैः उन्मृष्टाग्रैरित्यर्थः । महदुराकाशस्थत्वेनाधोगतिभिः । आशुगैः वक्ष्यमाणविशेषभिन्नैः । नाराचैः ऋजुवृत्ताग्रैः । अर्धनाराचैः मध्ये भिन्ननाराचतुल्यैः । भल्लैः परश्वधाग्रैः । अञ्जलिकैः अञ्जलिसदृशाग्रैः । वत्सदन्तैः वत्सदन्तसदृशाग्रैः । सिंहदंष्ट्रैः सिंहदंष्ट्रासदृशाग्रैः । क्षुरैः क्षुराग्रैः । अत्रेन्द्रजिदित्यध्याहार्यम् ॥ २३ ॥ रामानु०—क्षुरैः क्षुराकारमुखैः ॥ २३ ॥

शेषः ॥ १२–१८ ॥ वीरशयने वीरा अस्मिन् शेरत इति वीरशयनम्, युद्धभूमावित्यर्थः । शरवेष्टितसर्वाङ्गौ शरभूतसर्पवेष्टितसर्वगात्रौ ॥ १९ ॥ अङ्गुलम् अङ्गुलप्रमाणम् । अस्तब्धं चेष्टावत् । जिह्मगैः बाणैः ॥ २० ॥ प्रस्रवणौ प्रस्रवणाख्यपर्वतौ ॥ २१ ॥ २२ ॥ रजोगतिभिः वायुना विस्तार्यमाणरजोवन्नीरन्ध्रं सम्पतद्भिरित्यर्थः । प्रसन्नाग्रे रजोगतिभिः इति पाठः । अञ्जलिकैः अञ्जलिसदृशानि कानि शिरांस्यग्राणि येषां तैः । वत्सदन्तैः वत्सदन्ताकारैः ॥ २३ ॥

भिन्नमुष्टिपरीणाहं शिथिलमुष्टिबन्धम् । त्रिनतं त्रिषु स्थानेषु पार्श्वयोर्मध्ये च नतम् । रुक्मभूषितं रुक्मपट्टबन्धम् । विज्यं शरसन्धानप्रसङ्ग भावाद्विगतज्यम् । कार्मुकं धनुः । आदाय अवलम्ब्य । वीरशयने रणभूमौ शिश्ये ॥ २४ ॥ बाणेति । बाणपातान्तरे शरतल्पे ॥ २५ ॥ राममिति । शरबन्धपरिक्षतम् । बन्धः क्षतश्चेति द्वयमत्र शरकार्यमुच्यते ॥ २६ ॥ हरयश्चेत्यर्धम् ॥ २७ ॥ बद्धाविति । आदौ नागपाशबद्धौ । अथ शयानौ

स वीरशयने शिश्ये विज्यमादाय कार्मुकम् । भिन्नमुष्टिपरीणाहं त्रिनतं रत्नभूषितम् ॥ २४ ॥ बाणपातान्तरे रामं पतितं पुरुषर्षभम् । स तत्र लक्ष्मणो दृष्ट्वा निराशो जीवितेऽभवत् ॥ २५ ॥ रामं कमलपत्राक्षं शरबन्धपरिक्षतम् । शुशोच भ्रातरं दृष्ट्वा पतितं धरणीतले ॥ २६ ॥ हरयश्चापि तं दृष्ट्वा सन्तापं परमं गताः ॥ २७ ॥ बद्धौ तु वीरौ पतितौ शयानौ तौ वानराः सम्परिवार्य तस्थुः । समागता वायुसुतप्रमुख्या विषादमार्ताः परमं च जग्मुः ॥ २८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

ततो द्यां पृथिवीं चैव वीक्षमाणा वनौकसः । ददृशुः सन्ततौ बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १ ॥
वृष्ट्वेवोपरते देवे कृतकर्मणि राक्षसे । आजगामाथ तं देशं ससुग्रीवो विभीषणः ॥ २ ॥
नीलद्विविदमैन्दाश्च सुषेणकुमुदाङ्गदाः । तूर्णं हनुमता सार्धमन्वशोचन्त राघवौ ॥ ३ ॥

तु तौ वीरौ सम्परिवार्य वायुसुतादयो वानरास्तस्थुः । विषादं दुःखं जग्मुश्चेत्यन्वयः ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥४५॥ अथ पूर्वसर्गोक्तमनुवदति—तत इत्यादि । द्याम् आकाशम् । सन्ततौ व्याप्तौ ॥१॥ वृष्ट्वा उपरते देव इव स्थिते राक्षसे । कृतकर्मणि कृतशरवर्षरूपकर्मणि सति । तं देशं रामस्थानम् ॥ २ ॥ नीलादयः सुग्रीवात्पूर्वमेवागताः ॥ ३ ॥

भिन्नमुष्टिपरीणाहं भिन्नः मुष्टिपरीणाहो मुष्टिग्रहणप्रदेशो यस्य तम् ॥ २४ ॥ बाणपातान्तरे बाणतल्पमध्ये ॥ २५–२८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥ १–३ ॥

अचेष्टावित्यादिचतुःश्लोक्येकान्वया । अचेष्टौ अत एव स्तब्धौ निश्चलौ । मध्ये मध्ये मन्दनिश्वासौ मध्ये मध्ये निश्चेष्टौ । कदाचित्सर्पाविव निश्वसन्तौ कदाचिन्मन्दचेष्टितौ च । अत्र पुनरुक्तयो दुःखातिरेकात् । यद्वा अचेष्टाविति श्लोकः पूर्वश्लोकेनान्वितः ॥ ४–७ ॥ अन्तरिक्षमिति । स्पष्टः ॥ ८ ॥





अचेष्टौ मन्दनिश्वासौ शोणितौघपरिप्लुतौ । शरजालाचितौ स्तब्धौ शयानौ शरतल्पयोः ॥ ४ ॥ निश्वसन्तौ यथा सर्पौ निश्चेष्टौ मन्दविक्रमौ । रुधिरस्रावदिग्धाङ्गौ तापनीयाविव ध्वजौ ॥ ५ ॥ तौ वीरशयने वीरौ शयानौ मन्दचेष्टितौ । यूथपैस्तैः परिवृतौ बाष्पव्याकुललोचनैः ॥ ६ ॥ राघवौ पतितौ दृष्ट्वा शरजालसमावृतौ । बभूवु र्व्यथिताः सर्वे वानराः सविभीषणाः ॥ ७ ॥ अन्तरिक्षं निरीक्षन्तो दिशः सर्वाश्च वानराः । न चैनं मायया च्छन्नं ददृशू रावणिं रणे ॥ ८ ॥ त तु मायाप्रतिच्छन्नं माययैव विभीषणः । वीक्षमाणो ददर्शाथ भ्रातुः पुत्रमवस्थितम् ॥ ९ ॥ तमप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे । ददर्शान्तर्हितं वीरं वरदानाद् विभीषणः ॥ १० ॥ तेजसा यशसा चैव विक्रमेण च संयुतम् ॥ ११ ॥ इन्द्रजित्त्वात्मनः कर्म तौ शयानौ समीक्ष्य च । उवाच परमप्रीतो हर्षयन् सर्व नैर्ऋतान् ॥ १२ ॥ दूषणस्य च हन्तारौ खरस्य च महाबलौ । सादितौ मामकैर्बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १३ ॥ नेमौ मोक्षयितुं शक्यावेतस्मादिषुबन्धनात् । सर्वैरपि समागम्य सर्षिसङ्घैः सुरासुरैः ॥ १४ ॥

तं त्विति । माययैवेति अन्तर्हितवस्तुदर्शनहेतुभूतया विद्ययेत्यर्थः ॥ ९ ॥ तमिति । अप्रतिद्वन्द्वं निस्समम् । वरदानादन्तर्हितमित्यन्वयः । तेजसेत्यर्धं पूर्वेणान्वेति ॥ १० ॥ ११ ॥ आत्मनः कर्म नागास्त्रबन्धरूपम् । शयानौ तौ च वीक्ष्येत्यन्वयः ॥ १२ ॥ दूषणस्येति । सादितौ, पश्यतेति शेषः ॥ १३ ॥ नेमाविति । समागम्य सङ्घीभूय ॥ १४ ॥



तमप्रतिमकर्माणमिति । अदर्शनहेतुभूतया विद्यया वरदानादन्तर्हितमिति सम्बन्धः ॥ १०–१४ ॥

स०–दूषणस्य च हन्तारावित्याद्युक्तिश्छत्रिन्यायेन । रामस्यैतदन्तृत्वात् ॥ १३ ॥

यत्कृते यन्निमित्तम् । गात्रैः शयनमस्पृष्ट्वा चिन्तयानस्यैव मम पितुः त्रियामा याति । [illegible] पिता शर्वर्यामेकस्मिन्नपि यामे न निद्राती त्यर्थः ॥ १५ ॥ लङ्का लङ्कास्थजनः । आकुला नदीपक्षे आविलेत्यर्थः । लङ्कापक्षे व्यग्रेत्यर्थः । सर्वेषामस्माकं मूलहरः अनर्थः अनर्थकरो रामः ॥ १६ ॥

यत्कृते चिन्तयानस्य शोकार्तस्य पितुर्मम । अस्पृष्ट्वा शयनं गात्रैस्त्रियामा याति शर्वरी ॥ १५ ॥ कृत्स्नेयं यत्कृते लङ्का नदी वर्षास्विवाकुला । सोऽयं मूलहरोऽनर्थः सर्वेषां निहतो मया ॥ १६ ॥ रामस्य लक्ष्मणस्यापि सर्वेषां च वनौकसाम् । विक्रमा निष्फलाः सर्वे यथा शरदि तोयदाः ॥ १७ ॥ एवमुक्त्वा तु तान् सर्वान् राक्षसान् परिपार्श्वतः । यूथपानपि तान् सर्वांस्ताडयामास रावणिः ॥ १८ ॥ नीलं नवभिराहत्य मैन्दं च द्विविदं तथा । त्रिभिस्त्रिभिरमित्रघ्नस्तताप प्रवरेषुभिः ॥ १९ ॥ जाम्बवन्तं महेष्वासो विद्ध्वा बाणेन वक्षसि । हनूमतो वेगवतो विससर्ज शरान् दश ॥ २० ॥ गवाक्षं शरभं चैव द्वावप्यमिततेजसौ । द्वाभ्यां द्वाभ्यां महावेगो विव्याध युधि रावणिः ॥ २१ ॥ गोलाङ्गूलेश्वरं चैव वालिपुत्रमथाङ्गदम् । विव्याध बहुभिर्बाणैस्त्वरमाणोऽथ रावणिः ॥ २२ ॥ तान् वानरवरान् भित्त्वा शरैरग्निशिखोपमैः । ननाद बलवांस्तत्र महासत्त्वः स रावणिः ॥ २३ ॥ तानर्दयित्वा बाणौघैस्त्रासयित्वा च वानरान् । प्रजहास महाबाहुर्वचनं चेदमब्रवीत् ॥ २४ ॥ शरबन्धेन घोरेण मया बद्धौ चमूमुखे । सहितौ भ्रातरावेतौ निशामयत राक्षसाः ॥ २५ ॥

विक्रमाः सेतुबन्धनादयः ॥ १७ ॥ परिपार्श्वतः समीपतः ॥ १८ ॥ १९ ॥ हनूमतः हनूमदर्थमित्यर्थः । सम्बन्धसामान्ये षष्ठी ॥ २० ॥ २१ ॥ गोलाङ्गूलेश्वरं गवाक्षम् ॥ २२–२४ ॥ निशामयत पश्यत ॥ २५ ॥

यत्कृते यस्य कृतं करणं पौरुषमिति यावत् । तस्मिन्निमित्ते सति गात्रैः शयनमस्पृष्ट्वा चिन्तयानस्य मत्पितुः त्रियामा रात्रिः याति यत्पौरुषभयाच्छर्वर्यामेकस्मिन्नपि यामे न निद्रातीत्यर्थः ॥ १५–२१ ॥ गोलाङ्गूलेश्वरं गवाक्षम् ॥ २२–२४ ॥ निशामयत पश्यत ॥ २५–२९ ॥

स०—यत्कृते यस्य रामस्य निमित्तं शोकार्तस्य । स्त्रिया मन्दोदर्या अमा सह शयनं शय्यां गात्रैरस्पृष्ट्वैव चिन्तयानस्य मम पितुः शर्वरी याति । शार्वरीत्यपि क्वचित्पाठः । प्रज्ञायणि शार्वर्यपि " शार्वरी शर्वरी शर्या " इति शब्दार्णवः इत्यमरव्याख्यायां भानुदीक्षितः । " अमा सहायान्तिकयोः " इति विश्वः ॥ १९ ॥

एवमिति । कूटयोधिनः कपटयोधिनः ॥ २६–२९ ॥ शरीरे इति प्रत्येकापेक्षया द्विवचनम् । अङ्गानि करादीनि । उपाङ्गानि अङ्गुल्यादीनि । अत्रापि शरैश्चितानीति योज्यम् । दृष्ट्वा स्थित इति सुग्रीवो विशेषणीयः ॥ ३० ॥ ३१ ॥ अलमिति । एवंप्रायाणि एवंविधानि । "प्रायश्चानशने मृत्यौ तुल्य



एवमुक्तास्तु ते सर्वे राक्षसाः कूटयोधिनः । परं विस्मयमाजग्मुः कर्मणा तेन हर्षिताः ॥ २६ ॥ विनेदुश्च महा नादान् सर्वतो जलदोपमाः । हतो राम इति ज्ञात्वा रावणिं समपूजयन् ॥ २७ ॥ निष्पन्दौ तु तदा दृष्ट्वा तावुभौ रामलक्ष्मणौ । वसुधायां निरुच्छ्वासौ हतावित्यन्वमन्यत ॥ २८ ॥ हर्षेण तु समाविष्ट इन्द्रजित् समितिञ्जयः । प्रविवेश पुरीं लङ्कां हर्षयन् सर्वराक्षसान् ॥ २९ ॥ रामलक्ष्मणयोर्दृष्ट्वा शरीरे सायकैश्चिते । सर्वाणि चाङ्गोपा ङ्गानि सुग्रीवं भयमाविशत् ॥ ३० ॥ तमुवाच परित्रस्तं वानरेन्द्रं विभीषणः । सबाष्पवदनं दीनं शोकव्याकुल लोचनम् ॥ ३१ ॥ अलं त्रासेन सुग्रीव बाष्पवेगो निगृह्यताम् । एवंप्रायाणि युद्धानि विजयो नास्ति नैष्ठिकः ॥ ३२ ॥ सशेषभाग्यताऽस्माकं यदि वीर भविष्यति । मोहमेतौ प्रहास्येते महात्मानौ महाबलौ ॥ ३३ ॥ पर्यवस्थापयात्मान मनाथं मां च वानर । सत्यधर्माभिरक्तानां नास्ति मृत्युकृतं भयम् ॥ ३४ ॥ एवमुक्त्वा ततस्तस्य जलक्लिन्नेन पाणिना । सुग्रीवस्य शुभे नेत्रे प्रममार्ज विभीषणः ॥ ३५ ॥

बाहुल्ययोरपि" इति विश्वः । नैष्ठिकः नियतः ॥ ३२ ॥ सशेषभाग्यतेति । अस्माकं भाग्यशेषं यद्यस्तीत्यर्थः ॥ ३३ ॥ पर्यवस्थापयात्मानं मनो निश्चलं कुरु । स्वात्मपर्यवस्थापनेन मां च पर्यवस्थापय, धैर्यं कारयेत्यर्थः । पर्यवस्थापने हेतुमाह सत्येति । मृत्युकृतम् अपमृत्युकृतम् ॥ ३४ ॥ जल

रामलक्ष्मणयोरिति । सायकैः चिते शरीरे सायकचितान्यङ्गोपाङ्गानि च दृष्ट्वेति वचनव्यत्ययेन योजनीयम् ॥ ३० ॥ ३१ ॥ एवंप्रायाणि एवंविधः प्रायो बाहुल्यं येषां तानि, प्रायेणैवंविधानीत्यर्थः । नैष्ठिकः नियतः विजयो नास्तीति सम्बन्धः ॥ ३२ ॥ ३३ ॥ पर्यवस्थापय स्थैर्यवन्तं कुरु । रघुसिंहयोरेवं स्थितयोः पर्यवस्थापनं कथमित्यत्राह–सत्यधर्मेति ॥ स०–अनाथमित्यनेन पलायितस्य तव राज्यमस्ति न तथा ममेति सूचयति ॥ ३४ ॥ ३५ ॥

क्लिन्नेन जलसिक्तेन ॥ ३९ ॥ एवममाङ्गल्यनिवृत्त्यर्थं भ्रान्तिनिवृत्त्यर्थं वा नेत्रे प्रमृज्य राक्षसमायापरिज्ञानेनाप्यस्य धैर्यसम्पादनाभिप्रायेण विद्याभिमन्त्रितजलेनापि ममार्जेत्याह—तत इति । विद्यया राक्षसमायादर्शनहेतुमन्त्रेण । परिजप्य अभिमन्त्र्य ॥ ३६ ॥ कालसम्प्राप्तं तत्कालोचितम् । असंभ्रमम् अव्याकुलमिति क्रियाविशेषणम् ॥ ३७ ॥ वैक्लव्यम् अधैर्यम् । किं करोमि अतिस्नेह एवं बाधत इत्यत्राह अतिस्नेहोऽप्रीति ॥ ३८ ॥ एवं

ततः सलिलमादाय विद्यया परिजप्य च । सुग्रीवनेत्रे धर्मात्मा स ममार्ज विभीषणः ॥ ३६ ॥ प्रमृज्य वदनं तस्य कपिराजस्य धीमतः। अब्रवीत् कालसम्प्राप्तमसम्भ्रममिदं वचः ॥ ३७ ॥ न कालः कपिराजेन्द्र वैक्लव्यमनुवर्तितुम् । अतिस्नेहोऽप्यकालेऽस्मिन् मरणायोपकल्पते ॥ ३८ ॥ तस्मादुत्सृज्य वैक्लव्यं सर्वकार्यविनाशनम् । हितं रामपुरोगाणां सैन्यानामनुचिन्त्यताम् ॥ ३९ ॥ अथवा रक्ष्यतां रामो यावत् संज्ञाविपर्ययः । लब्धसंज्ञौ हि काकुत्स्थौ भयं नो व्यपनेष्यतः ॥ ४० ॥ नैतत् किंचन रामस्य न च रामो मुमूर्षति । न ह्येनं हास्यते लक्ष्मी दुर्लभा या गतायुषाम् ॥ ४१ ॥

त्यक्तव्यमुक्त्वा कर्तव्यमुपदिशति—तस्मादिति । वैक्लव्यमिति स्नेहस्याप्युपलक्षणम् । रामपुरोगाणां रामप्रभृतीनाम् । रामशरण्यानामित्यर्थः ॥३९ ॥ संज्ञाविपर्ययः मूर्च्छा यावदनुवर्तते तावद्रक्ष्यतामित्यर्थः ॥ ४० ॥ एवंभूतयोः कथं संज्ञाप्राप्तिस्तत्राह—नैतदिति । एतत् शस्त्रबन्धनम् । रामस्य न किंचन । इदमसत्प्रायम्, बाधकं न भवतीत्यर्थः । अतो न मुमूर्षति, मरिष्यतीति शङ्का न कर्तव्येत्यर्थः । "आशङ्कायामुपसङ्ख्यानम्" इति म्रियतेः सन् । एतच्च जीवनलिङ्गशरीरसौभाग्येन निश्चीयत इत्याह—न हीति । गतायुषां मृतानां या लक्ष्मीः मुखकान्तिः दुर्लभा । सा च एनं न हास्यते, न जहातीत्यर्थः । जीवनानुकूला लक्ष्मीर्दृश्यत इत्यर्थः ॥ ४१ ॥

प्रथममाङ्गल्यनिरासार्थम् अद्भिः प्रमृज्य पश्चाद्राक्षसमायापरिज्ञानेनास्य धैर्यसम्पादनाभिप्रायेण विद्याभिमन्त्रितजलेन ममार्जेत्याह—तत इति । विद्यया शोकनिवारकविद्यया ॥ ३६ ॥ ३७ ॥ अकाले विषमकाले ॥ ३८ ॥ ३९ ॥ अथवेति । रामः यावत्कालं संज्ञाविपर्ययः संज्ञया विपरीतः तावत् रक्ष्यताम् । ततो लब्धसंज्ञौ नो भयं व्यपनेष्यत इति सम्बन्धः ॥ ४० ॥ ननु मुमूर्षु रामः कथमस्मान् रक्षिष्यतीत्यत आह—नैतदिति । मुमूर्षाभावे लिङ्गमाह न ह्येनमिति ॥ ४१ ॥

यावत् यावत्पर्यन्तम्। सर्वाणि कार्याणि कर्तव्यानि पुनः संस्थापयामि तावत्पर्यन्तमाश्वासयेत्यन्वयः। केचित्तु यावत्कार्याणि यावन्ति कर्तव्यानि तानि सर्वाणीत्याहुः ॥४२॥ पर्यवस्थापनं किमर्थमित्यत्राह–एते हीति। आगतसाध्वसाः प्राप्तभयविकाराः। ते च विकाराः पुलकादयः। प्रकथिताः पलायनार्थं प्रवृत्तकथा इत्यर्थः ॥४३॥ संप्रहर्षितुमित्यनन्तरम् अर्हसीत्यध्याहार्यम्। प्रधावन्तम् इन्द्रजिद्भ्रमेणेति भावः। इदमनीकविशेषणम्। गच्छामीति

तस्मादाश्वासयात्मानं बलं चाश्वासय स्वकम्। यावत् कार्याणि सर्वाणि पुनः संस्थापयाम्यहम् ॥ ४२ ॥ एते हि फुल्लनयनास्त्रासादागतसाध्वसाः। कर्णे कर्णे प्रकथिता हरयो हरिसत्तम ॥ ४३ ॥ मां तु दृष्ट्वा प्रधावन्तमनीकं सम्प्रहर्षितुम्। त्यजन्तु हरयस्त्रासं भुक्तपूर्वामिव स्रजम् ॥ ४४ ॥ समाश्वास्य तु सुग्रीवं राक्षसेन्द्रो विभीषणः। विद्रुतं वानरानीकं तत्समाश्वासयत् पुनः ॥ ४५ ॥ इन्द्रजित्तु महामायः सर्वसैन्यसमावृतः। विवेश नगरीं लङ्कां पितरं चाभ्युपागमत् ॥ ४६ ॥ तत्र रावणमासीनमभिवाद्य कृताञ्जलिः। आचचक्षे प्रियं पित्रे निहतौ रामलक्ष्मणौ ॥४७॥ उत्पपात ततो हृष्टः पुत्रं च परिषस्वजे। रावणो रक्षसां मध्ये श्रुत्वा शत्रू निपातितौ। उपाघ्राय स मूर्ध्न्येनं पप्रच्छ प्रीतमानसः ॥४८॥ पृच्छते च यथावृत्तं पित्रे सर्वं न्यवेदयत्। यथा तौ शरबन्धेन निश्चेष्टौ निष्प्रभौ कृतौ ॥४९॥ स हर्षवेगानुगतान्तरात्मा श्रुत्वा वचस्तस्य महारथस्य। जहौ ज्वरं दाशरथेः समुत्थितं प्रहृष्य वाचाऽभिननन्द पुत्रम् ॥५०॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

वाऽध्याहार्यम्। संप्रहर्षितुं भयान्निवर्तयितुमिति यावत्। तदेवाह त्यजन्त्विति ॥ ४४ ॥ समाश्वासयत् नाहमिन्द्रजित्, किन्तु विभीषण इति समाश्वासयदित्यर्थः ॥४५ ॥ कथासङ्घट्टनाय पूर्वोक्तमनुवदति–इन्द्रजित्त्विति ॥ ४६ ॥ रामलक्ष्मणावित्यनन्तरमितिकरणं ज्ञेयम् ॥४७॥ उत्पपात, आसनादिति शेषः ॥ ४८ ॥ यथावृत्तं वृत्तमनतिक्रम्य। इदमेव विवृणोति यथा ताविति ॥ ४९ ॥ हर्षवेगः हर्षातिशयः तेनानुगतो व्याप्तः अन्तरात्मा मनो यस्य सः

यावत्कार्याणि यावन्ति कर्तव्यानि तानि सर्वाणि, पुनस्संस्थापयामीत्यर्थः ॥४२॥ अनीकं सम्प्रहर्षितुं धावन्तं मां दृष्ट्वा आगतसाध्वसाः प्राप्तभयविकाराः हरयः कर्णे कर्णे प्रकथिताः पलायनार्थं प्रवृत्तकथा अभवन्नित्यर्थः ॥ ४३–४९ ॥ स हर्षवेगानुगतेत्यस्य प्रातीतिकार्थः स्पष्टः। वस्तुतस्तु–स रावणः यः हर्षवेगानुगतान्तरात्मा

तथोक्तः । दाशरथेः निमित्तात् । ज्वरं चिन्तासन्तापम् । अनया राज्या प्रतिपन्नतेत्यूचुः ॥५०॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥ अथ सीतायै वीरशयनस्थरामलक्ष्मणप्रदर्शनं सप्तचत्वारिंशे—प्रतिप्रविष्ट इत्यादि ॥ १ ॥



प्रतिप्रविष्टे लङ्कां तु कृतार्थे रावणात्मजे । राघवं परिवार्यार्ता ररक्षुर्वानरर्षभाः ॥ १ ॥ हनुमानङ्गदो नीलः सुषेणः कुमुदो नलः । गजो गवाक्षो गवयः शरभो गन्धमादनः । जाम्बवानृषभः स्कन्धो रम्भः शतबलिः पृथुः ॥ २ ॥ व्यूढानीकाश्च यत्ताश्च द्रुमानादाय सर्वतः । वीक्षमाणा दिशः सर्वास्तिर्यगूर्ध्वं च वानराः । तृणेष्वपि च चेष्टत्सु राक्षसा इति मेनिरे ॥ ३ ॥ रावणश्चापि संहृष्टो विसृज्येन्द्रजितं सुतम् । आजुहाव ततः सीतारक्षिणी राक्षसीस्तदा ॥ ४ ॥ राक्षस्यस्त्रिजटा चैव शासनात् समुपस्थिताः ॥ ५ ॥ ता उवाच ततो हृष्टो राक्षसी राक्षसाधिपः ॥६॥ हता विन्द्रजिताऽऽख्यात वैदेह्या रामलक्ष्मणौ । पुष्पकं च समारोप्य दर्शयध्वं हतौ रणे ॥ ७ ॥ यदाश्रयादवष्टब्धा नेयं मामुपतिष्ठति । सोऽस्या भर्त्ता सह भ्रात्रा निरस्तो रणमूर्धनि ॥ ८ ॥ निर्विशङ्का निरुद्विग्ना निरपेक्षा च मैथिली । मामुपस्थास्यते सीता सर्वाभरणभूषिता ॥ ९ ॥

ये ररक्षुस्तानाह—हनुमानित्यादिना ॥ २ ॥ अन्यान् वानरानाह—व्यूढानीकाश्चेति । व्यूढानीकाः कृतव्यूहसेनावन्तः । चेष्टत्सु चेष्टमानेषु ॥ ३ ॥ ४ ॥ राक्षस्य इत्यर्धम् ॥ ५ ॥ ता उवाचेत्यर्धम् ॥ ६ ॥ आख्यात कथयत ॥ ७ ॥ अवष्टब्धा गर्विता ॥ ८ ॥ निर्विशङ्का निर्विचारा । निरुद्विग्ना निःशोका ।

दाशरथेः समुत्थितं ज्वरं जहौ तस्य वचः श्रुत्वा तं पुत्रमिन्द्रजितं प्रहृष्य वाचाऽभिननन्द पुत्रप्रीत्यै केवलं तं वाङ्मात्रेण ननन्द नतु परमार्थतः । “ कालज्ञो राघवः काले संयुगायाभ्यचोदयत ” इत्यारभ्य “ इन्द्रजित्तु महामायस्सर्वसैन्यसमावृतः । विवेश नगरीं लङ्काम् ” इत्यन्तेन वानररक्षसां प्रतिपत्प्रवृत्तं युद्धमुक्तम् ॥५०॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां षट्चत्वारिंशः सर्गः ॥ ४६ ॥ ॥ १ ॥ २ ॥ व्यूढानीकाः व्यूढानि गरुडादि व्यूहाकाराणि अनीकानि येषां ते ॥ ३ ॥ रावणश्चापीत्यस्य वास्तवार्थे संहृष्टः इतरराक्षसदृष्ट्या ॥ ४–७ ॥ अवष्टब्धा गर्विता ॥ ८ ॥ निर्विशङ्का निर्विकारा ।

भावे निष्ठा । निरपेक्षा रामः समेष्यतीत्याशारहिता ॥ ९ ॥ अवेत्यादिसार्धश्लोक एकान्वयः । अन्यां गतिं चापश्यती । आगमशासनस्यानित्यत्वान्नुमभावः । अन्यां मत्तोऽन्याम् । गम्यत इति गतिः प्राप्यम् । विनिवृत्ताशा रामाद्विनिवृत्तभावा ॥ १० ॥ रामानु०–अवेति । अन्यां गतिं चापश्यती । अन्यां मत्तोऽन्याम् । गम्यत इति गतिः प्राप्यम् । रामरूपं प्रियं प्राप्यमपश्यतीति यावत् । राममवेक्ष्य विनिवृत्ताशा सा स्वयं मामुपस्थास्यत' इति संबन्धः ॥ १० ॥ तस्येत्यादिः स्पष्टः

अद्य कालवशं प्राप्तं रणे रामं सलक्ष्मणम् । अवेक्ष्य विनिवृत्ताशा चान्यां गतिमपश्यती । निरपेक्षा विशालाक्षी मामुपस्थास्यते स्वयम् ॥ १० ॥ तस्य तद्वचनं च श्रुत्वा रावणस्य दुरात्मनः । राक्षस्यस्तास्तथेत्युक्त्वा जग्मुर्वै यत्र पुष्पकम् ॥ ११ ॥ ततः पुष्पकमादाय राक्षस्यो रावणाज्ञया । अशोकवनिकास्थां तां मैथिलीं समुपानयन् ॥ १२ ॥ तामादाय तु राक्षस्यो भर्तृशोकपराजिताम् । सीतामारोपयामासुर्विमानं पुष्पकं तदा ॥ १३ ॥ ततः पुष्पकमारोप्य सीतां त्रिजटया सह । जग्मुर्दर्शयितुं तस्यै राक्षस्यो रामलक्ष्मणौ ॥ १४ ॥ रावणोऽकारयल्लङ्कां पताकाध्वजमालिनीम् । प्राघोषयत हृष्टश्च लङ्कायां राक्षसेश्वरः । राघवो लक्ष्मणश्चैव हताविन्द्रजिता रणे ॥ १५ ॥

॥११–१२॥ त्रिजटया सह सीतामारोप्य । उभयोरेव विमानारोहणमनुज्ञायेत्यर्थः । पुत्रीत्वान्निपुणतया च त्रिजटाया विमानारोहणानुज्ञा॥१४॥ इन्द्रजिता

निरुद्विग्ना निश्शोका । निरपेक्षा रामस्समेष्यतीत्याशारहिता ॥ ९ ॥ अन्यां गतिं चापश्यती अन्यां मत्तोऽन्यां गम्यत इति गतिः प्राप्यम्, रामरूपं प्रियं न पश्यतीति यावत् । राममवेक्ष्य विनिवृत्ताशा सा स्वयं मामुपस्थास्यत इति सम्बन्धः ॥ "ता उवाच ततो हृष्टा राक्षसीः–" इत्यारभ्य "अनपेक्षा विशालाक्षी मामुपस्थास्यते स्वयम्" इत्यन्तस्य वास्तवार्थस्तु–वैदेह्या रामलक्ष्मणवृत्तान्तजिज्ञासायां तद्वृत्तान्तं तस्यै कथयतेति रावणो राक्षसीर्नियोजयति–ता उवाचेत्यारभ्य अनपेक्षा विशालाक्षीत्यन्तेन । रणे रामलक्ष्मणौ इन्द्रजिता सह, युद्धायेति शेषः । हतौ आगतावित्यर्थः । "हन हिंसागत्योः" इति धातोरेवमर्थः । वैदेह्या आख्यात तस्यास्तद्दर्शनेच्छायां सत्यां पुष्पकं समारोप्य हतौ आगतौ तौ दर्शयध्वं चेत्यर्थः । तस्यै पतिदर्शनेन किं भविष्यतीति चेत्तत्राह–यदाश्रयादित्यादिश्लोकद्वयेन । हे अवष्टब्धाः गर्विताः राक्षस्यः ! इयं यदाश्रयात् यस्य रामस्याश्रयाद्धेतोः । मां लक्ष्मीं, मदीयामिति शेषः । नोपतिष्ठति नानुभवतीत्यर्थः । अस्या भर्ता रणमूर्द्धनि भ्रात्रा सह मिहतः आगतः खलु, सा दृष्ट्वा इतः परं निर्विशङ्का निरुद्विग्ना एतावत्पर्यन्तं निरपेक्षापि मैथिली

रणे इत्यनन्तरमितिकरणं बोध्यम् ॥ १५–१७ ॥ ततः सीतेत्यादिश्लोकद्वयम् । विप्रविद्धशरासनौ भ्रष्टचापौ । सायकैश्छिन्नसर्वाङ्गौ अत एव शरस्तम्बमयौ शरगुल्ममयौ । स्तम्बः समूह इत्येके । क्षितौ शरतल्पयोः शयानाविति सम्बन्धः ॥ १८ ॥ १९ ॥ तावित्यादिश्लोकद्वयम् । पावकी



विमानेनापि सीता तु गत्वा त्रिजटया सह । ददर्श वानराणां तु सर्वं सैन्यं निपातितम् ॥ १६ ॥ प्रहृष्टमनसश्चापि ददर्श पिशिताशनान् । वानरांश्चापि दुःखार्तान् रामलक्ष्मणपार्श्वतः ॥ १७ ॥ ततः सीता ददर्शोभौ शयानौ शरतल्पयोः । लक्ष्मणं चापि रामं च विसंज्ञौ शरपीडितौ ॥ १८ ॥ विध्वस्तकवचौ वीरौ विप्रविद्धशरासनौ । सायकैश्छिन्नसर्वाङ्गौ शरस्तम्बमयौ क्षितौ ॥ १९ ॥ तौ दृष्ट्वा भ्रातरौ तत्र वीरौ सा पुरुषर्षभौ । शयानौ पुण्डरीकाक्षौ कुमाराविव पावकी ॥ २० ॥ शरतल्पगतौ वीरौ तथाभूतौ नरर्षभौ । दुःखार्ता सुभृशं सीता सुचिरं विललाप ह । ॥ २१ ॥ भर्तारमनवद्याङ्गी लक्ष्मणं चासितेक्षणा । प्रेक्ष्य पांसुषु वेष्टन्तौ रुरोद जनकात्मजा ॥ २२ ॥ सा बाष्पशोकाभिहता समीक्ष्य तौ भ्रातरौ देवसमप्रभावौ । वितर्कयन्ती निधनं तयोः सा दुःखान्विता वाक्यमिदं जगाद ॥ २३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

पावकपुत्रौ स्कन्दविशाखौ । अत्रोत्तरो वीरशब्दः कुमारावित्यस्य विशेषणम् ॥ २० ॥ २१ ॥ भर्तारमिति । स्पष्टः ॥ २२ ॥ सेति । अत्र वीक्षणगदनरूपक्रियाभेदात्तच्छब्दद्वयम् ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

सर्वाभरणभूषिता सती मां मदीयां लक्ष्मीं निवेदितां लक्ष्मीमित्यर्थः । उपस्थास्यते अनुभविष्यतीत्यर्थः । ननु कथं तत्समागमं विना तस्य दर्शनमात्रेण सीता त्वदर्पितैश्वर्यमनुभविष्यतीत्यत्राह–अद्येत्यादिसार्धश्लोकेन । कालवशं कालो वशो यस्य तम् । सलक्ष्मणं रणे प्राप्तं राममवेक्ष्य अन्यां गतिमपश्यती रामव्यतिरिक्तप्राप्यं न पश्यती सती, परमपतिव्रतेत्यर्थः । अत एवानपेक्षा अत एव विनिवृत्ताशा एतादृश्यपि । 'सर्वं वाक्यं सावधारणम्' इति न्यायात् अद्यैव स्वयमेव मां लक्ष्मीम्, मदर्पितां लक्ष्मीमुपस्थास्यतीत्यर्थः ॥ १०–१८ ॥ विप्रविद्धशरासनौ भ्रष्टधनुष्कौ । शरस्तम्बमयौ शरस्तम्बः शरसमूहः तन्मयौ ॥ १९–२३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

अथ सीताप्रलापोऽष्टचत्वारिंशे—भर्तारमिति । करुणं यथा तथा विललाप ॥ १ ॥ लक्षणिन इति । लक्षणशब्देनात्र लक्षणज्ञानं लक्ष्यते तदेषामस्तीति लक्षणिनः । षडुत्तरषष्टिलक्षणसामुद्रिकशास्त्रज्ञा इत्यर्थः । "षष्टिष्षडुत्तरा योषिदङ्गलक्षणमीरितम्" इत्युक्तेः । अत एवाविधवा विधवालक्षणरहिता । "निर्लोम हृदयं यस्याः समं निम्नत्ववर्जितम् । ऐश्वर्यं चाप्यवैधव्यं प्रियप्रेम च सा लभेत् ॥" इत्युक्तलक्षणेत्यर्थः । पुत्रिणी पुत्रलाभलक्षणवती । "दीर्घाङ्गुलिश्च या नारी दीर्घकेशी च या भवेत् । दीर्घमायुरवाप्नोति पुत्रैश्च सह वर्तते ॥" इत्युक्तलक्षणवतीत्यर्थः । ज्ञानिनो लक्षणज्ञानवन्तः । अनृतवादिनः,

भर्तारं निहतं दृष्ट्वा लक्ष्मणं च महाबलम् । विललाप भृशं सीता करुणं शोककर्शिता ॥ १ ॥
ऊचुर्लक्षणिनो ये मां पुत्रिण्यविधवेति च । तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ २ ॥
यज्वनो महिषीं ये मामूचुः पत्नीं च सत्रिणः । तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ३ ॥
ऊचुः संश्रवणे ये मां द्विजाः कार्तान्तिकाः शुभाम् । तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ४ ॥

आसन्निति शेषः ॥ २ ॥ यज्वन इति । यज्वनः कृताश्वमेधादिकस्य । "यज्वा तु विधिनेष्टवान्" इत्यमरः । बहुयजमानकानि गवामयनप्रभृतीनि सत्राणि तत्कर्ता सत्री तस्य महिषीं कृताभिषेकाम् । "कृताभिषेका महिषी" इत्यमरः । पत्नीं यज्ञसंयोगवतीम् । "पत्युर्नो यज्ञसंयोगे" इति पतिशब्दस्य नकारान्तादेशः । ततो "ऋन्नेभ्यो ङीप्" इति ङीप् ॥ ३ ॥ ऊचुरिति । संश्रवणे मम सम्यक् श्रवणे, मयि शृण्वन्त्यामित्यर्थः । यद्वा सम्यक् श्रवणमस्मिन्निति संश्रवणः सन्निधिः, मत्सन्निधावित्यर्थः । मात्रादिसमीप इति शेषः । कृतान्तः कालः तद्विदः कार्तान्तिकाः । "स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि" इत्यमरः । शुभां नित्यमङ्गलाम् । "स्मितं प्रशस्तं सुदृशामनिमीलितलोचनम् । समवृत्तपुटा नासा लघुच्छिद्रा शुभावहा ॥" इत्याद्युक्तलक्षणैः

भर्तारं निहतमित्यादिसीताप्रलापवाक्यानां वास्तवार्थेऽयमाशयः—सर्वेश्वरा सर्वज्ञा देवी रामलक्ष्मणयोः कापि हानिर्नास्तीति ज्ञात्वाऽपि राक्षसान् वञ्चयितुं बहुविधं प्रलपतीति । निहतं निहतमिव स्थितमित्यर्थः ॥ १ ॥ तेऽद्य सर्वे हते राम इत्यादिसर्वस्थलेषु रामे हते, हत इव स्थित इत्यर्थः । लक्षणिनः सामुद्रिकाः ॥ २ ॥ यज्वनः पत्नीं कृताश्वमेधादिकस्य महिषीम् । सत्रिणः बहुवर्षसाध्यो बहुकर्तृको यागः सत्रम्, तत्कर्तुः ॥ ३ ॥ संश्रवणे सम्यक् श्रवणमस्मिन्निति संश्रवणं सन्निधिः तस्मिन्, मत्सन्निधावित्यर्थः । कार्तान्तिकाः कृतान्तः कालः तद्विदः कार्तान्तिकाः, मौहूर्तिका इति यावत् । शुभां मङ्गलात्मिकामाहुः ॥ ४ ॥ ५ ॥

इति शेषः ॥ ४ ॥ वीरेति । त्वं वीरपार्थिवपत्नी धन्या चेति ये विदुः विदित्वा ऊचुरित्यर्थः । तेऽप्यनृतवादिन इति पूर्वेणान्वयः ॥५॥ इमानीति । यैः पद्मैरुपलक्षिताः स्त्रियः आधिराज्येऽभिषिच्यन्ते किलेत्यैतिह्ये । तानीमानि पद्मानि रेखारूपाणि, दृश्यन्त इति शेषः । खल्विति प्रसिद्धौ । स्पष्टं दृश्यन्त इत्यर्थः । कथमेषां निष्फलत्वमिति भावः ॥६॥ वैधव्यमिति । भाग्यदुर्लभाः दुर्लभभाग्याः नार्यः यैर्लक्षणैर्वैधव्यं यान्ति तानि लक्षणानि पश्यन्ती विमृशन्ती

वीरपार्थिवपत्नी त्वं ये धन्येति च मां विदुः । तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ५ ॥
इमानि खलु पद्मानि पादयोर्यैः किल स्त्रियः । आधिराज्येऽभिषिच्यन्ते नरेन्द्रैः पतिभिः सह ॥ ६ ॥
वैधव्यं यान्ति यैर्नार्यो लक्षणैर्भाग्यदुर्लभाः । नात्मनस्तानि पश्यामि पश्यन्ती हतलक्षणा ॥ ७ ॥
सत्यनामानि पद्मानि स्त्रीणामुक्तानि लक्षणैः । तान्यद्य निहते रामे वितथानि भवन्ति मे ॥ ८ ॥
केशाः सूक्ष्माः समा नीला भ्रुवौ चासङ्गते मम । वृत्ते चारोमशे जङ्घे दन्ताश्चाविरला मम ॥ ९ ॥

न पश्यामि, कुत्रापि वैधव्यहेतुदुर्लक्षणं न पश्यामीत्यर्थः । किंतु केवलं हतलक्षणा निष्फललक्षणाऽस्मीत्यर्थः । तादृशलक्षणानि च सामुद्रिकोक्तानि— "परस्परं समारूढाः पादाङ्गुल्यो भवन्ति चेत् । हत्वा बहूनपि पतीन् परप्रेष्या तथा भवेत् ॥ यस्याः कनिष्ठिका भूमिं न गच्छन्त्याः परिस्पृशेत् । पतिद्वयं निहन्त्याद्या द्वितीया च पतित्रयम् ॥ एकरोमा राजपत्नी द्विरोमाऽतिसुखान्विता । त्रिरोमा रोमकूपेषु भवेद्वैधव्यदुःखभाक्" इत्यादिना ॥ ७ ॥ पदि पदे मा श्रीर्येषां तानि पद्मानीत्येवं सत्यनामानि, पदश्रीकराणीत्यर्थः । यद्वा पद्मावत्त्वात् पद्मशब्दवाच्यानि रेखारूपाणि यानि पद्मानि । सत्यनामानि अन्वर्थनामानि । पद्माशब्दादर्शआद्यचि कृते रूपम् । केचित्सत्यनामानि अमोघफलानीत्याहुः । लक्षणैः ध्वजादिलक्षणैः सह यानि सत्यनामानि पद्मान्युक्तानि तानि मे वितथानि निष्फलानि भवन्तीति योजना ॥ ८ ॥ केशा इत्यादिचतुःश्लोक्येकान्वया । अहं सूक्ष्मकेशत्वादिलक्षणलक्षिताऽस्मि,

यैर्लक्षणैः स्त्रियः नरेन्द्रैः पतिभिः सह आधिराज्ये अभिषिच्यन्ते किल तानीमानि पद्मानि खलुः, पादयोवर्तन्त इति शेषः ॥६॥ वैधव्यमिति । लक्षणैरिति छेदः । भाग्यदुर्लभाः दुर्लभभाग्याः नार्यः यैर्लक्षणैर्वैधव्यं यान्ति तानि आत्मनो न पश्यामि सुलक्षणान्येव पश्यन्त्यहं हतलक्षणा निष्फललक्षणा, जाताऽस्मीति शेषः॥७॥ सत्यनामानि अमोघफलानि पद्मानि पद्माकाररेखाः लक्षणैः लक्षणशास्त्रोक्तानि ॥ ८ ॥ ९ ॥

अतो मां शुभलक्षणामूचुरित्यन्वयः । समाः न्यूनाधिक्यरहिताः । असङ्गते परस्परमसंयुक्ते । अरोमशे रोमरहिते । वृत्ते वर्तुले । अत्र स्कान्दम्—"रोमहीने शुभे स्निग्धे यज्जङ्घे क्रमवर्तुले । सा राजपत्नी भवति विशिरे सुमनोहरा ॥" इति ॥ ९ ॥ शङ्खे नेत्रोपान्तभूतललाटपार्श्वे । चितौ उपचितौ । एतच्छङ्खे नेत्रे इत्यत्र लिङ्गव्यत्ययेन योजनीयम् । अनुवृत्तनखाः वृत्तनखाः । अङ्गुलयः पादहस्ताङ्गुलयः । तदुक्तं स्कान्दे—"स्निग्धाः समुन्नतास्तत्र वृत्ताः पाद

शङ्खे नेत्रे करौ पादौ गुल्फावूरू च मे चितौ । अनुवृत्तनखाः स्निग्धाः समाश्चाङ्गुलयो मम ॥ १० ॥ स्तनौ चाविरलौ पीनौ ममेमौ मग्नचूचुकौ । मग्ना चोत्सङ्गिनी नाभिः पार्श्वोरस्काश्च मे चिताः ॥ ११ ॥ मम वर्णो मणिनिभो मृदून्यङ्गरुहाणि च । प्रतिष्ठितां द्वादशभिर्मामूचुः शुभलक्षणाम् ॥ १२ ॥ समग्रयवमच्छिद्रं पाणिपादं च वर्णवत् । मन्दस्मितेत्येव च मां कन्यालक्षणिनो द्विजाः ॥ १३ ॥ आधिराज्येऽभिषेको मे ब्राह्मणैः पतिना सह । कृतान्तकुशलैरुक्तं तत्सर्वं वितथीकृतम् ॥ १४ ॥

नखाः शुभाः" इति । समाः हस्तपरिमाणसदृशाः । नातिदीर्घा नातिह्रस्वा इत्यर्थः । यद्वा एकहस्तवद्धस्तान्तरेऽपि तुल्यपरिमाणा इत्यर्थः । अन्यूनाधिकसङ्ख्याका इति वाऽर्थः ॥ १० ॥ अविरलौ निरन्तरौ । मग्नचूचुकौ ईषन्मग्नाग्रौ । मग्ना गम्भीरा । उत्सङ्गिनी उन्नतपर्यन्तप्रदेशः । पार्श्वोरस्काः पार्श्वे च उरस्कं च । आर्षो लिङ्गव्यत्ययः । चिताः उचिताः ॥११॥ मणिनिभः मणिवत्स्निग्धवर्णः । प्रतिष्ठितां द्वादशभिः, दशभिः पादाङ्गुलिभिः द्वाभ्यां पादतलाभ्यां च भूमौ सुप्रतिष्ठिताम् ॥१२॥ समग्रयवं सम्पूर्णयवाकाररेखम् । अच्छिद्रं श्लिष्टाङ्गुल्यन्तरालम् । वर्णवत् अरुणवर्णम् । मामूचुरित्यनुषञ्जनीयम् । मन्दस्मितेत्येवेत्येवकारः अयोगव्यवच्छेदार्थः । नित्यमन्दस्मितेत्यर्थः ॥ १३ ॥ कृतान्तकुशलैः ज्यौतिषिकसिद्धान्तनिपुणैः । अत्र इतिकरणं द्रष्टव्यम् ।

शङ्खे नयनोपान्तभागे । चितौ, चितावित्येतत् नेत्रादिष्वपि लिङ्गव्यत्ययेन योजनीयम् । अनुवृत्तनखाः अनुवृत्ताः अनुपूर्वाः नखा येषां ते तथोक्ताः । समाः अन्यूनाधिकाः ॥ १० ॥ उत्सङ्गिनी उन्नतपर्यन्तप्रदेशः । पार्श्वे च उरश्च पार्श्वोरस्काः । प्राण्यङ्गत्वेऽप्यार्षो लिङ्गवचनव्यत्ययः । चिताः उचिताः ॥ ११ ॥ प्रतिष्ठितां द्वादशभिः पादतलाभ्यां दशभिः पादाङ्गुलिभिश्च भूमौ प्रतिष्ठितां मामूचुः ॥ १२ ॥ समग्रयवं सम्पूर्णयवाकाररेखम् । अच्छिद्रं नीरन्ध्राङ्गुल्यन्तरालम् । वर्णवत् प्रशस्तवर्णम् ॥ १३ ॥ कृतान्तकुशलैः ज्योतिश्शास्त्रसिद्धान्तनिपुणैः ॥ १४ ॥

स०—पतिना पत्या । पतिरित्याख्यातः पतिरिति लाक्षणिकः, [illegible] 'कृष्णस्य सखिरर्जुनः' इत्यादिवत्सम्भवतीति वा ज्ञेयम् ॥ १४ ॥

अभिषेक इत्युक्तमित्यन्वयः । "चक्रवर्तिस्त्रियः पाणौ नन्द्यावर्तः प्रदक्षिणः" इत्याद्युक्तनन्द्यावर्तादिलक्षणैरिति भावः । सर्वं वितथीकृतमित्यतः परं "यज्वनो महिषीं ये माम्" इत्यधस्तनश्लोकः केषुचित्कोशेषु दृश्यते । स तु लेखकप्रमादकृतः ॥ १४ ॥ शोधयित्वा अन्विष्य । प्रवृत्तिं वृत्तान्तम् । गोष्पदे इन्द्रजिन्मायामात्र इति भावः ॥१५॥ ब्रह्मशिरः अस्त्रविशेषः । प्रत्यपद्यतां नन्वित्यन्वयः । परस्मैपदमार्षम् । नन्विति प्रसिद्धौ आमन्त्रणे वा । "प्रश्ना



शोधयित्वा जनस्थानं प्रवृत्तिमुपलभ्य च । तीर्त्वा सागरमक्षोभ्यं भ्रातरौ गोष्पदे हतौ ॥ १५ ॥ ननु वारुणमाग्नेय मैन्द्रं वायव्यमेव च । अस्त्रं ब्रह्मशिरश्चैव राघवौ प्रत्यपद्यताम् ॥ १६ ॥ अदृश्यमानेन रणे मायया वासवोपमौ । मम नाथावनाथाया निहतौ रामलक्ष्मणौ ॥ १७ ॥ न हि दृष्टिपथं प्राप्य राघवस्य रणे रिपुः । जीवन् प्रतिनिवर्तेत यद्यपि स्यान्मनोजवः ॥ १८ ॥ न कालस्यातिभारोऽस्ति कृतान्तश्च सुदुर्जयः । यत्र रामः सह भ्रात्रा शेते युधि निपातितः ॥ १९ ॥ न शोचामि तथा रामं लक्ष्मणं च महाबलम् । नात्मानं जननीं वापि यथा श्वश्रूं तपस्विनीम् ॥२०॥ साऽनुचिन्तयते नित्यं समाप्तव्रतमागतम् । कदा द्रक्ष्यामि सीतां च लक्ष्मणं च सराघवम् ॥ २१ ॥

वधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः । प्रलापे निर्निमित्तमामन्त्रणं सम्भवति ॥१६ ॥१७॥ दृश्यमानत्वे नैवं हन्तुं शक्नुयादित्याह—न हीति ॥१८॥ नेति । शुभाशुभप्रापकस्य कालस्यातिभारो नास्ति, अशक्यार्थो नास्तीत्यर्थः । कृतान्तः दैवम् । यत्र यतः । रामः अतिबलपराक्रमशाल्यपीति भावः ॥ १९ ॥ जननीं मन्मातरम् ॥ २० ॥ उक्तार्थे हेतुमाह—सेति । समाप्तव्रतम् अथ आगतं सराघवं लक्ष्मणं सीतां च कदा द्रक्ष्यामीति अनु

जनस्थानं शोधयित्वा नाशं नीत्वा ॥१५॥ प्रत्यपद्यतां प्रत्यपद्येताम् ॥१६–१८॥ न कालस्यातिभारोऽस्ति शुभाशुभप्रापककालस्याशक्योऽर्थो नास्तीत्यर्थः । कृतान्तो यमः । यत्र यस्मात् ॥ १९–२३ ॥

स०—राघवौ रामलक्ष्मणौ पत्यपद्यत प्रत्यपद्येताम् । विश्वामित्रादिति शेषः । राघवश्च राघवश्चेति एतद्विग्रहवाक्यैकवचनापेक्षया पृथक्पृथगन्वयो वा । विश्वामित्रो वसिष्ठो वा राघवौ पत्यपद्यत प्रत्यपादयत् ग्राहया मासेति वा । ननुना सर्वम् एतदादि विस्मृतं वा माया प्रबलेति वा कल्पनां [illegible] ॥ १८ ॥

चिन्तयत इत्यन्वयः ॥ २१ ॥ परिदेवयमानां विलपन्तीम् ॥ २२ ॥ मा विषादमित्यर्धम् ॥ २३ ॥ इमौ रामलक्ष्मणौ जीवत इति यथा ज्ञातुं शक्यते तथा । महान्ति स्फुटानि । सदृशानि पूर्वानुभूततुल्यानि । दृष्टसंवादानीति यावत् । कारणानि हेतून् वक्ष्यामीत्यन्वयः ॥ २४ ॥ तान्येव कारणानि

परिदेवयमानां तां राक्षसी त्रिजटाऽब्रवीत् ॥ २२ ॥ मा विषादं कृथा देवि भर्ताऽयं तव जीवति ॥ २३ ॥ कारणानि च वक्ष्यामि महान्ति सदृशानि च । यथेमौ जीवतो देवि भ्रातरौ रामलक्ष्मणौ ॥ २४ ॥ नहि कोपपरीतानि हर्षपर्युत्सुकानि च । भवन्ति युधि योधानां मुखानि निहते पतौ ॥ २५ ॥ इदं विमानं वैदेहि पुष्पकं नाम नामतः । दिव्यं त्वां धारयेन्नैवं यद्येतौ गतजीवितौ ॥ २६ ॥ हतवीरप्रधाना हि हतोत्साहा निरुद्यमा । सेना भ्रमति सङ्ख्येषु हतकर्णेव नौर्जले ॥ २७ ॥ इयं पुनरसम्भ्रान्ता निरुद्विग्ना तरस्विनी । सेना रक्षति काकुत्स्थौ मया प्रीत्या निवेदितौ ॥ २८ ॥ सा त्वं भव सुविस्रब्धा अनुमानैः सुखोदयैः । अहतौ पश्य काकुत्स्थौ स्नेहादेतद्ब्रवीमि ते ॥ २९ ॥ अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन । चारित्रसुखशीलत्वात् प्रविष्टाऽसि मनो मम ॥ ३० ॥ नेमौ शक्यौ रणे जेतुं सेन्द्रैरपि सुरासुरैः । तादृशं दर्शनं दृष्ट्वा मया चावेदितं तव । इदं च सुमहच्चिह्नं शनैः पश्यस्व मैथिलि ॥ ३१ ॥

व्यतिरेकमुखेनाह—न हीति । हर्षेण पर्युत्सुकानि, प्रसन्नानीति यावत् ॥ २५ ॥ २६ ॥ हतकर्णा हतकर्णधारा ॥ २७ ॥ निवेदितौ निवेदितजीवितौ ॥ २८ ॥ सा त्वमित्यादि । अनुमानैः चिह्नैः । सुखोदयैः सुखज्ञैरित्यर्थः ॥ २९ ॥ चारित्रसुखशीलत्वात् । चरित्रमेव चारित्रं पातिव्रत्यम्, तदेव सुखं प्रियं शीलं स्वभावः यस्याः सा तस्या भावश्चारित्रसुखशीलत्वं तस्मात् । यद्वा चारित्रेणाह्लादकस्वभावत्वादित्यर्थः । प्रविष्टासि मनो मम, त्वयि मम स्नेहो वर्तत इत्यर्थः ॥ ३० ॥ तादृशं तादृग्विधम्, जीवनव्यञ्जकमिति यावत् । दृश्यते ज्ञायतेऽनेनेति दर्शनं सैन्यमुखप्रसादादिकम् । पूर्वं दृष्टं

रामलक्ष्मणौ जीवत इति यथा यैः ज्ञातुं शक्यते महान्ति स्फुटानि सदृशानि अनुभूततुल्यानि, दृष्टसंवादानीति यावत् । कारणानि हेतून् पश्यामीत्यर्थः ॥२४॥ तान्येव कारणानि व्यतिरेकमुखेनाह—नहीति ॥ २५ ॥ २६ ॥ हतकर्णा हतकर्णधारा ॥ २७॥ निवेदितौ निवेदितजीवितावित्यर्थः ॥ २८ ॥ अनुमानैर्लक्षणैः । चारित्रसुखशीलत्वात् चरित्रमेव चारित्रं पातिव्रत्यं तदेव सुखं प्रियं शीलं स्वभावो यस्यास्तस्याः भावश्चारित्रसुखशीलत्वं तस्मात् ॥ २९ ॥ ३० ॥ तादृशं

स्वप्नमिति वाऽर्थः। शनैः पश्यस्व सावधानेन पश्येत्यर्थः ॥ ३१ ॥ न वियुज्यते न जहाति । गतायुषाम् अत एव गतसत्त्वानां गतप्राणानाम् । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः। वैकृतं विकृतिः ॥ ३२ ॥ रामलक्ष्मणयोरर्थे शोकं शोककृतं मुखविकारम् । मोहं विपरीतबुद्धिम् । दुःखं मनोव्यथां च त्यज। अजीवितुं न शक्यं जीवितुं शक्यमेवेत्यर्थः ॥ ३३ ॥ कृताञ्जलिरित्यनेन भगवद्विषयोपदेष्टा योपि कोप्यादरणीय इत्युक्तम् ।

निस्संज्ञावप्युभावेतौ नैव लक्ष्मीर्वियुज्यते । प्रायेण गतसत्त्वानां पुरुषाणां गतायुषाम् । दृश्यमानेषु वक्त्रेषु परं भवति वैकृतम् ॥ ३२ ॥ त्यज शोकं च मोहं च दुःखं च जनकात्मजे। रामलक्ष्मणयोरर्थे नाद्य शक्यमजीवितुम् ॥ ३३ ॥ श्रुत्वा तु वचनं तस्याः सीता सुरसुतोपमा । कृताञ्जलिरुवाचेदमेवमस्त्विति मैथिली ॥ ३४ ॥ विमानं पुष्पकं तत्तु सन्निवर्त्य मनोजवम्। दीना त्रिजटया सीता लङ्कामेव प्रवेशिता ॥ ३५ ॥ ततस्त्रिजटया सार्धं पुष्पकादवरुह्य सा। अशोकवनिकामेव राक्षसीभिः प्रवेशिता ॥ ३६ ॥ प्रविश्य सीता बहुवृक्षषण्डां तां राक्षसेन्द्रस्य विहारभूमिम्। सम्प्रेक्ष्य सञ्चिन्त्य च राजपुत्री परं विषादं समुपाजगाम ॥३७॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

इदंशब्दविवरणम् एवमस्त्विति ॥ ३४ ॥ विमानमिति । सन्निवर्तने प्रवेशने च त्रिजटैव कर्त्री ॥ ३५ ॥ राक्षसीभिरित्यनेन त्रिजटादर्शनायानीतेति गम्यते ॥ ३६ ॥ विहारभूमिं प्रमदावनम् । सम्प्रेक्ष्य संचिन्त्य । प्रेक्षितप्रकारेण संचिन्त्येत्यर्थः । यद्वा भावनाप्रकर्षात्पुरःस्थितौ सम्प्रेक्ष्येत्यर्थः॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

तथाविधम्, जीवनव्यञ्जकमिति यावद् । दृश्यतेऽनेनेति दर्शनम्, सौम्यमुखप्रसादादिकम् । शनैः पश्यस्व सावधानेन पश्येत्यर्थः । एतौ लक्ष्मीर्न वियुज्यते न विमुञ्चति ॥ ३१ ॥ ३२ ॥ रामलक्ष्मणयोरर्थे शोकादिकं त्यज, एतावजीवितुम् अजीवयितुं न शक्यमिति सम्बन्धः ॥ ३३–३७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

अथ रामप्रबोधनमेकोनपञ्चाशे—घोरेणेत्यादिश्लोकद्वयमेकान्वयम् । नागौ यथा नागाविव निश्वसन्तावित्यन्वयः । शोकपरिप्लुताः शोकपूर्णाः ॥१॥२॥ स्थिरत्वात् धीरत्वात् । सत्त्वयोगाद्बलयोगात् । सन्दानितोऽपि बद्धोऽपि । "बद्धे सन्दानितं मूतम्" इत्यमरः ॥ ३ ॥ अर्पितं, शरैरिति शेषः ॥ ४ ॥



घोरेण शरबन्धेन बद्धौ दशरथात्मजौ । निश्वसन्तौ यथा नागौ शयानौ रुधिरोक्षितौ ॥ १ ॥ सर्वे ते वानरश्रेष्ठाः ससुग्रीवा महाबलाः । परिवार्य महात्मानौ तस्थुः शोकपरिप्लुताः ॥ २ ॥ एतस्मिन्नन्तरे रामः प्रत्यबुध्यत वीर्यवान् । स्थिरत्वात् सत्त्वयोगाच्च शरैः सन्दानितोऽपि सन् ॥ ३ ॥ ततो दृष्ट्वा सरुधिरं विषण्णं गाढमर्पितम् । भ्रातरं दीनवदनं पर्यदेवयदातुरः ॥४॥ किं नु मे सीतया कार्यं किं कार्यं जीवितेन वा । शयानं योऽद्य पश्यामि भ्रातरं युधि निर्जितम् ॥५॥ शक्या सीतासमा नारी मर्त्यलोके विचिन्वता । न लक्ष्मणसमो भ्राता सचिवः साम्परायिकः ॥ ६ ॥ परित्यक्ष्याम्यहं प्राणं वानराणां तु पश्यताम् । यदि पञ्चत्वमापन्नः सुमित्रानन्दवर्धनः ॥ ७ ॥ किं नु वक्ष्यामि कौसल्यां मातरं किं नु कैकयीम् । कथमम्बां सुमित्रां च पुत्रदर्शनलालसाम् ॥ ८ ॥ विवत्सां वेपमानां च क्रोशन्तीं कुररीमिव । कथमाश्वासयिष्यामि यदा यास्यामि तं विना ॥९॥ कथं वक्ष्यामि शत्रुघ्नं भरतं च यशस्विनम् ॥ १० ॥ मया सह वनं यातो विना तेन गतः पुनः । उपालम्भं न शक्ष्यामि सोढुं बत सुमित्रया ॥ ११ ॥

किं न्वित्यादिश्लोकद्वयम् । विचिन्वता, मयेति शेषः । सचिवः सहायः । साम्परायिकः युद्धे साधुः । "युद्धायत्योः सम्परायः" इत्यमरः ॥५॥६॥ पञ्चत्वं मृतिम् ॥ ७ ॥ किं न्वित्यादिश्लोकद्वयमेकान्वयम् । अहं तं लक्ष्मणं विना अयोध्यां यदा यास्यामि तदा कौसल्यां कैकयीं च किं वक्ष्यामि । सुमित्रां कथमाश्वासयिष्यामि ॥ ८ ॥ ९ ॥ कथमित्यर्धम् । यशस्विनमित्यनेन तद्यशो मया न लब्धमिति खिद्यति ॥ १० ॥ यो मया सह वनं यातः तेन विना

॥ १ ॥ २ ॥ एतस्मिन्निति । सन्दानितो बद्धोऽपि "बद्धे सन्दानितं मूतम्" इत्यमरः । स्थिरत्वात् धीरत्वात् ॥ ३–५ ॥ साम्परायिकः सम्पराये युद्धे साधुः । "युद्धा

स०—प्रत्यबुध्यत । तत्र निमित्तमाह—स्थिरत्वात् प्रलयादावप्येकस्यैव स्थैर्यात् नित्यनित्यत्वादिति यावत् । सत्त्वयोगात् बलोपायात् सन्दानितो बद्धस्सन् । एतेन असुरमोहनाय रामः स्वेच्छयैव सन्दानित इति ज्ञायते ॥ ३ ॥

अयोध्यां गतोऽहं सुमित्रया कृतमुपालम्भम् उक्तप्रकारं सोढुं कथं शक्ष्यामि ॥ ११ ॥ इहैवेत्यर्धम् ॥ १२ ॥ धिगिति । दुष्कृतकर्माणं लक्ष्मणवनानयन मेव दुष्कृतं कर्म ॥ १३ ॥ त्वमितिं । स त्वमित्यन्वयः ॥ १४ ॥ १५ ॥ शयान इति । अयमिति शेषः । अत्र शरतल्पस्थानीयोऽस्तगिरिः । शरस्थाने किरणाः । शोणितस्थाने रक्तवर्णत्वम् ॥ १६ ॥ रुजा व्यथा । दृष्टिरागेण वीक्षणप्रेम्णा ॥ १७ ॥ तथैव तेन प्रकारेण, मात्रादिस्नेहमविचार्येत्यर्थः ।

इहैव देहं त्यक्ष्यामि न हि जीवितुमुत्सहे ॥ १२ ॥ धिङ् मां दुष्कृतकर्माणमनार्यं यत्कृते ह्यसौ । लक्ष्मणः पतितः शेते शरतल्पे गतासुवत् ॥ १३ ॥ त्वं नित्यं स विषण्णं मामाश्वासयसि लक्ष्मण । गतासुर्नाद्य शक्तोषि मामार्त मभिभाषितुम् ॥ १४ ॥ येनाद्य निहता युद्धे राक्षसा विनिपातिताः । तस्यामेव क्षितौ वीरः स शेते निहतः परैः ॥ १५ ॥ शयानः शरतल्पेऽस्मिन् स्वशोणितपरिप्लुतः । शरजालैश्चितो भाति भास्करोऽस्तमिव व्रजन् ॥ १६ ॥ बाणाभिहतमर्मत्वान्न शक्नोत्यभिभाषितुम् । रुजा चाब्रुवतोऽप्यस्य दृष्टिरागेण सूच्यते ॥ १७ ॥ यथैव मां वनं यान्तमनुयातो महाद्युतिः । अहमप्यनुयास्यामि तथैवैनं यमक्षयम् ॥ १८ ॥ इष्टबन्धुजनो नित्यं मां च नित्यमनुव्रतः । इमामद्य गतोऽवस्थां ममानार्यस्य दुर्नयैः ॥ १९ ॥ सुरुष्टेनापि वीरेण लक्ष्मणेन न संस्मरे । परुषं विप्रियं वापि श्रावितं तु कदाचन ॥ २० ॥

यमक्षयमित्यत्रापि यान्तमित्यनुषज्यते ॥ १८ ॥ १९ ॥ सुरुष्टेनेति । विप्रियम् अहितम् । सुरुष्टेनापि लक्ष्मणेन श्रावितं विप्रियं परुषं वाक्यं न स्मरामि

यत्योस्सम्परायः " इत्यमरः ॥ ६–१६ ॥ बाणाभिहतेति । रुजा व्यथा ॥ १७ ॥ वनं यान्तं मां यथैव मात्रादिषु स्नेहमकृत्वैव अनुयातः अहमपि एनमनु तथैव मात्रादिस्नेहमकृत्वैव यास्यामीति सम्बन्धः ॥ १८ ॥ १९ ॥ विप्रियम् अहितम् ॥ २० ॥

स०–सुरुष्टेनापि येनकेनचित् । परुषं निष्ठुरम् अप्रियं कदाचन, उक्तमिति शेषः । न संस्मरे न संस्मरामीत्येव श्रावितम् । अन्यथा परुषाप्रियश्रावणापेक्षयाऽन्तर्निगूढस्य रोषस्याल्पता प्रतीयेत । तच्च वैदिक लौकिकानुकूलमित्येवमेवान्वयः समञ्जसः ॥ २० ॥

इत्यर्थः ॥२०॥ यः कार्तवीर्यः। एकेन वेगेन एकप्रयत्नेन । सहस्रबाहुः कार्तवीर्यः। यावता कालेन पञ्चबाणशतानि विससर्ज प्रायुङ्क्त । द्विभुजोऽप्ययं लक्ष्मणः तावतैव कालेन तावतो बाणान् विसृजन्, इष्वस्त्रेषु विषये तस्मात्कार्तवीर्यादधिक इत्यर्थः ॥२१॥ हन्यात् हन्तुं शक्तः। शकि लिङ् ॥२२॥ यत् यस्मात् । विभीषणो राक्षसानां राजा न कृतः। तस्मात् मिथ्याप्रलप्तम् "राजानं त्वां करिष्यामि" इति मिथ्याप्रलपितं मां प्रधक्ष्यति दहतीत्यर्थः।

विससर्जैकवेगेन पञ्चबाणशतानि यः। इष्वस्त्रेष्वधिकस्तस्मात् कार्तवीर्याच्च लक्ष्मणः ॥ २१ ॥ अस्त्रैरस्त्राणि यो हन्याच्छक्रस्यापि महात्मनः। सोऽयमुर्व्यां हतः शेते महार्हशयनोचितः ॥ २२ ॥ यन्मया न कृतो राजा राक्षसानां विभीषणः। तच्च मिथ्याप्रलप्तं मां प्रधक्ष्यति न संशयः ॥ २३ ॥ अस्मिन्मुहूर्ते सुग्रीव प्रतियातुमितोऽर्हसि। मत्वा हीनं मया राजन् रावणोऽभिद्रवेद्बली ॥ २४ ॥ अङ्गदं तु पुरस्कृत्य ससैन्यः ससुहृज्जनः। सागरं तर सुग्रीव नीलेन च नलेन च ॥२५॥ कृतं हनुमता कार्यं यदन्यैर्दुष्करं रणे। ऋक्षराजेन तुष्यामि गोलाङ्गूलाधिपेन च ॥ २६ ॥ अङ्गदेन कृतं कर्म मैन्देन द्विविदेन च। युद्धं केसरिणा सङ्ख्ये घोरं सम्पातिना कृतम् ॥ २७ ॥ गवयेन गवाक्षेण शरभेण गजेन च। अन्यैश्च हरिभिर्युद्धं मदर्थे त्यक्तजीवितैः । न चातिक्रमितुं शक्यं दैवं सुग्रीव मानुषैः ॥ २८ ॥ यत्तु शक्यं वयस्येन सुहृदा च परन्तप । कृतं सुग्रीव तत्सर्वं भवता धर्मभीरुणा ॥ २९ ॥ मित्रकार्यं कृतमिदं भवद्भिर्वानरर्षभाः। अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ ॥ ३० ॥

आश्रुतकार्यनिर्वाहाभावेन मिथ्येत्युच्यते। आश्रुतं प्रतिज्ञातम्॥२३॥ अस्मिन्निति। प्रतियातुं, किष्किन्धामिति शेषः। हीनं, त्वामिति शेषः॥२४॥२५॥ कृतमित्यादिसार्धश्लोकत्रयम्। सम्पातिना वानरेण ॥ २६–२८ ॥ वयस्येन मित्रेण। सुहृदा च शोभनहृदयेन वा । चशब्दो वाशब्दार्थकः। धर्म



यः कार्तवीर्यः एकेन वेगेन एकप्रयत्नेन इष्वस्त्रेषु विषये सहस्रबाहुर्यावता कालेन पञ्चबाणशतानि प्रायुङ्क्त अयं द्विबाहुस्तावता कालेन तावतो बाणान् विसृजन् तस्मादधिक इत्यर्थः ॥ २१ ॥ २२ ॥ तन्मिथ्या प्रलप्तं विभीषणमभिषेक्ष्यामीत्येवंरूपो मिथ्याप्रलापः कर्ता ॥ २३ ॥ २४ ॥ अङ्गदमिति। नीलेन नलेन च सहेत्यर्थः ॥ २५–२७ ॥ हरिभिर्युद्धं कृतमिति पूर्वेण सम्बन्धः ॥ २८ ॥ धर्मभीरुणेति। अधर्मभीरुणेति छेदः ॥ २९ ॥ ३० ॥

भीरुणा धर्मो नश्यतीति भीरुणेत्यर्थः । अधर्मभीरुणेति वा पदच्छेदः ॥ २९ ॥ ३० ॥ शुश्रुवुरिति । वर्तयांचक्रुः प्रवर्तयांचक्रुः । कृष्णतरेक्षणाः रक्तेक्षणा इत्यर्थः ॥ ३१ ॥ तत इत्यादिश्लोकद्वयम् ॥ ३२ ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥४९॥ अथ रामस्य नागपाशविमोचनं पञ्चाशे—अथोवाचेत्यादि । तादात्विकसेनापलायननिमित्तमजानानः पृच्छति—किमिति ।

शुश्रुवुस्तस्य ते सर्वे वानराः परिदेवनम् । वर्तयाञ्चक्रुरश्रूणि नेत्रैः कृष्णेतरेक्षणाः ॥ ३१ ॥ ततः सर्वाण्यनीकानि स्थापयित्वा विभीषणः । आजगाम गदापाणिस्त्वरितो यत्र राघवः ॥ ३२ ॥ तं दृष्ट्वा त्वरितं यान्तं नीलाञ्जनचयोपमम् । वानरा दुद्रुवुः सर्वे मन्यमानास्तु रावणिम्* ॥ ३३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

अथोवाच महातेजा हरिराजो महाबलः । किमियं व्यथिता सेना मूढवातेव नौर्जले ॥ १ ॥ सुग्रीवस्य वचः श्रुत्वा वालिपुत्रोऽङ्गदोऽब्रवीत् ॥ २ ॥ न त्वं पश्यसि रामं च लक्ष्मणं च महाबलम् । शरजालाचितौ वीरावुभौ दशरथात्मजौ । शरतल्पे महात्मानौ शयानौ रुधिरोक्षितौ ॥ ३ ॥ अथाब्रवीद्वानरेन्द्रः सुग्रीवः पुत्रमङ्गदम् । नानिमित्तमिदं मन्ये भवितव्यं भयेन तु ॥ ४ ॥

किं किमर्थम् । उवाच, वानरानिति शेषः । मूढः मूर्च्छितः । विरुद्धदिग्वाय्वन्तराभिहत इत्यर्थः । वात्याहतेति यावत् ॥ १ ॥ सुग्रीवस्येत्यर्धम् ॥ २ ॥ रामव्यथां विना किमन्यन्निमित्तमित्युत्तरयति—न त्वमिति । अत्र काकुः । त्वं न पश्यसि किमित्यर्थः । रामं लक्ष्मणं चेत्युभावित्यन्वयः ॥ ३ ॥ स्वयमुद्धाटयति—

तस्य रामस्य । कृष्णेतरेक्षणा रक्तेक्षणा इत्यर्थः । नेत्रैरश्रूणि वर्तयाञ्चक्रुः नेत्रैरश्रूणि मुमुचुरित्यर्थः ॥ ३१–३३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायामेकोनपञ्चाशः सर्गः ॥ ४९ ॥ अथेति । मूढवातेन मूढो मूर्च्छितो विरुद्धदिग्वायुः तादृशो यस्यास्सा, वात्याभिहतेति यावद् ॥ १ ॥ २ ॥ त्वं न पश्यसि किं ? पश्यता त्वयैवं वक्तुमयुक्तमिति भावः ॥३॥ तदानीन्तनकपिपलायनहेतुप्रश्नरूपवाक्याभिप्रायमजानताऽङ्गदेन विपरीतोत्तरे

स०—इदं कपिपलायनम् अनिमित्तम् अकारणकं न मन्ये । पलायनप्रयोजकेन भयेन त्वदुक्तेतरेण भवितव्यमित्यङ्गदमब्रवीत् ॥ ४ ॥

* निश्चेष्टौ विगतज्ञानौ रणरेणुसमुक्षितौ । शयानौ शरतल्पस्थौ द्रष्टुमागाद्विभीषणः ॥ तं राक्षसेन्द्रात्मजशङ्कया ते निपातितौ राजसुतौ च दृष्ट्वा । विभीषणं विव्यथिरे च दृष्ट्वा मेघा यथा वायुहताः प्लवङ्गमाः ॥ इ०अ० ।

अथेत्यादिना। इदं रघुसिंहयोः शरतल्पशयनम् अनिमित्तं न भवतीति मन्ये। अन्येन भयनिमित्तेन भवितव्यमित्यर्थः॥४॥ तत्र हेतुमाह—विषण्णेत्यादिना।



विषण्णवदना ह्येते त्यक्तप्रहरणा दिशः। प्रपलायन्ति हरयस्त्रासादुत्फुल्ललोचनाः ॥ ५ ॥ अन्योन्यस्य न लज्जन्ते न निरीक्षन्ति पृष्ठतः। विप्रकर्षन्ति चान्योन्यं पतितं लङ्घयन्ति च ॥ ६ ॥ एतस्मिन्नन्तरे वीरो गदापाणिर्विभीषणः। सुग्रीवं वर्धयामास राघवं च निरैक्षत ॥ ७ ॥ विभीषणं तं सुग्रीवो दृष्ट्वा वानरभीषणम्। ऋक्षराजं समीपस्थं जाम्बवन्तमुवाच ह ॥ ८ ॥ विभीषणोऽयं सम्प्राप्तो यं दृष्ट्वा वानरर्षभाः। विद्रवन्ति परित्रस्ता रावणात्मजशङ्कया ॥ ९ ॥ शीघ्रमेतान् सुसन्त्रस्तान् बहुधा विप्रधावितान्। पर्यवस्थापयाख्याहि विभीषणमुपस्थितम् ॥ १० ॥ सुग्रीवेणैवमुक्तस्तु जाम्बवानृक्षपार्थिवः। वानरान् सान्त्वयामास सन्निरुध्य प्रधावतः ॥ ११ ॥ ते निवृत्ताः पुनः सर्वे वानरास्त्यक्तसम्भ्रमाः। ऋक्षराजवचः श्रुत्वा तं च दृष्ट्वा विभीषणम् ॥ १२ ॥ विभीषणस्तु रामस्य दृष्ट्वा गात्रं शरैश्चितम्। लक्ष्मणस्य च धर्मात्मा बभूव व्यथितेन्द्रियः ॥ १३ ॥ जलक्लिन्नेन हस्तेन तयोर्नेत्रे प्रमृज्य च। शोकसम्पीडितमना रुरोद विललाप च ॥१४॥ इमौ तौ सत्त्वसम्पन्नौ विक्रान्तौ प्रियसंयुगौ। इमामवस्थां गमितौ राक्षसैः कूटयोधिभिः ॥ १५ ॥ भ्रातुः पुत्रेण मे तेन दुष्पुत्रेण दुरात्मना। राक्षस्या जिह्मया बुद्ध्या चालितावृजुविक्रमौ ॥ १६ ॥

त्यक्तप्रहरणाः त्यक्तशिलाद्यायुधाः। अन्योन्यस्य अन्योन्यम्। विप्रकर्षन्ति द्रुतगमनार्थमाकर्षन्ति ॥५–९॥ विप्रधावितान् पलायमानान् ॥ १०–१५ ॥ दुष्पुत्रेण कपटयुद्धेन पितुरवद्यावहेन। चालितौ वञ्चितौ। ऋजुविक्रमौ अकपटविक्रमौ ॥ १६ ॥

दत्ते सुग्रीवः स्वाभिप्रायमुद्घाटयति–अथेत्यादि। इदं रघुसिंहयोश्शरतल्पशयनमनिमित्तं न भवतीति मन्ये किन्तु भयेनान्यभयहेतुनाऽत्र भवितव्यमित्यर्थः। यद्वा इदं पलायनमनिमित्तं न मन्ये निमित्तशून्यं न मन्ये, किन्तु भयेन अपूर्वभयनिमित्तेनात्र भवितव्यमित्यर्थः ॥ ४–२१ ॥

स०–त्रासात् नूतनभीतेः ॥ ५ ॥ वानरभीषणम् इन्द्रजिद्भ्रमजनकतया ॥ ८ ॥ भ्रातुः रावणस्य पुत्रेण। नोभयोः पितापुत्रयोरेवैतादृक्कूटयोधित्वं किन्तु परम्परैवेदृशीत्याह–दुष्पुत्रेणेति। दुर्दुष्टः पुत्रो यस्यासौ तथा ॥ १६ ॥

सुप्तौ सुप्तसदृशौ । शल्यकौ कण्टकिवराहौ ॥ १७ ॥ ययोरित्यादिचतुःश्लोकी । अत्र वक्तव्यं सर्वमभयप्रदाने दर्शितम् ॥ १८–२१ ॥ न रुजापीडितौ



शरैरिमावलं विद्धौ रुधिरेण समुक्षितौ । वसुधायामिमौ सुप्तौ दृश्येते शल्यकाविव ॥ १७ ॥ ययोर्वीर्यमुपाश्रित्य प्रतिष्ठा काङ्क्षिता मया । तावुभौ देहनाशाय प्रसुप्तौ पुरुषर्षभौ ॥ १८ ॥ जीवन्नद्य विपन्नोऽस्मि नष्टराज्यमनोरथः । प्राप्तप्रतिज्ञश्च रिपुः सकामो रावणः कृतः ॥ १९ ॥ एवं विलपमानं तं परिष्वज्य विभीषणम् । सुग्रीवः सत्त्वसम्पन्नो हरिराजोऽब्रवीदिदम् ॥ २० ॥ राज्यं प्राप्स्यसि धर्मज्ञ लङ्कायां नात्र संशयः । रावणः सह पुत्रेण सकामं नेह लप्स्यते ॥ २१ ॥ न रुजापीडितावेतावुभौ राघवलक्ष्मणौ । त्यक्त्वा मोहं वधिष्येते सगणं रावणं रणे ॥ २२ ॥ तमेनं सान्त्वयित्वा तु समाश्वास्य च राक्षसम् । सुषेणं श्वशुरं पार्श्वे सुग्रीवस्तमुवाच ह ॥ २३ ॥ सह शूरैर्हरिगणैर्लब्धसंज्ञावरिन्दमौ । गच्छ त्वं भ्रातरौ गृह्य किष्किन्धां रामलक्ष्मणौ ॥ २४ ॥

इयं रुजा अनयोरात्यन्तिकहानिकरी न भवति । किंतु मोहमात्रकारिणीत्यर्थः ॥ २२–२५ ॥

न रुजा पीडितौ मरणपर्यवसायिरुजा पीडितौ न भवतः, किन्तु मोहमात्रं प्राप्तावित्यर्थः ॥२२॥२३॥ हरिगणैस्सह लब्धसंज्ञौ भ्रातरौ गृह्य गच्छेति सम्बन्धः ॥२४॥२५॥

स०–इमौ अलं विद्धौ इमौ सुप्ताविस्यन्वयः पृथक्पृथगिति नान्यतरवैयर्थ्यम् । यद्वा इः कामः तस्यापि मा शोभा याभ्यां तौ । एवमपि शोभा गता नेति भावः । छत्रिन्यायेनेमाविति वा । कामात्कामपालस्योच्चत्वाच्चत्वाल्लक्ष्मणस्य वा इमाविति सम्भवति । " इः कामदेवे त्वनव्ययम् " इति विश्वः ॥ १७ ॥ **देहनाशाय** स्वदेहनाशाय । यद्वा मद्देहनाशाय । एतयोरियाननर्थौ यदि तर्हि मम राज्याशैकत्र तिष्ठतु रावणोऽपितु प्राक्तनकोपेन मारयेदिति द्योतयत्यनेनेति ज्ञेयम् ॥ १८ ॥ प्रतिज्ञायत इति प्रतिज्ञा प्रतिज्ञातोऽर्थः सीतापरित्यागाभावरूपः प्राप्तो येन स तथा । सकामः मन्नाशेन निष्कण्टकराज्यप्राप्त्या कृतः । अनयोरेवं स्वापेनेति शेषः ॥ १९ ॥ **विलपमानं** विलपन्तम् । पदव्यत्यासेन विलापफलकस्य विभीषणोत्प्रेक्षितस्य व्यत्यासं कविरवगमयामासेति ज्ञेयम् ॥ २० ॥ गरुडाधिष्ठितावेतौ इति पाठः । **गरुडाधिष्ठितौ** गरुडे अधिष्ठितो गरुडवाहनो रामश्च । अधिष्ठानमधिष्ठितं गरुडस्येवाधिष्ठानं यस्येति चान्यश्चेति गरुडाधिष्ठितौ रामलक्ष्मणौ । मोहं नागपाशासादनजम् । अयमेव पाठो न्याय्यः । गरुडागमनेन नागपाशवियोगस्यात्रोत्तरत्रेव बहुपुराणेषु श्रवणात् । तानि च स्वावसरे वक्ष्यामः । 'न रुजा पीडिताविति पठित्वा' इति तीर्थपाठस्य तदुत्प्रेक्षितत्वं सूचयन्नागोजिभट्टः स्वयं पाठ्कं गरुडाधिष्ठितौ इति पठित्वा 'गरुडोपासकतया विदितौ' इति निर्मूलमर्थं वदंस्तादृश एवेति सन्तोष्टव्यम् ॥ २२ ॥ उत्तरश्लोकद्वयमेकान्वयि । राक्षसं विभीषणम् । सान्त्वयित्वा सुषेणं च समाश्वास्य च गच्छेत्यब्रवीदिति च सम्बन्धः । एतेनान्यतरातिरेकशङ्कया 'सान्त्वयित्वेत्यस्यैवार्थकथनं समाश्वास्य त्विति' इति वदतो नागोजिभट्टस्य बहुस्थलेषु द्वित्रादीनां श्लोकानामेकान्वयं ब्रुवतोऽन्वयज्ञानदारिद्र्यं द्योत्यते । 'सान्त्वयित्वा गरुडानुग्रहसम्भावनयेत्यर्थः । अनेन सुग्रीववाक्येन रामविषये स्वस्य भगवदवतारत्वज्ञानं सूचितम्' इति तद्वचनं 'गरुडोपासकतया विदितौ' इति 'गरुडानुग्रहसम्भावनया' इति स्ववचनव्याहतमित्युपेक्ष्यम् । तेन भगवदवतारत्वहेतोरुपासकत्वस्य तदनुग्रहपात्रत्वस्यैव च प्रतीतेः ॥ २३ ॥ २४ ॥

अनुभूतं मया ज्ञातम् । शरसंस्पर्शकोविदाः शरप्रयोगसमर्थाः । स्पर्शो दानमिति पर्यायः ॥ २६ ॥ २७ ॥ तानिति । मन्त्रयुक्ताभिः मन्त्रप्रचुराभिः । विद्याभिर्मृतसञ्जीविनीप्रभृतिभिः । चिकित्सति अचिकित्सत् ॥ २८ ॥ तान्यौषधानीत्यादिसार्धश्लोकः । स्पष्टः ॥ २९ ॥ संजीवकरणीमित्यर्धमेकं वाक्यम् । अत्रानयितुं यान्त्वित्यनुषज्यते । पूर्वोक्तक्षीरोदमध्ये संजीवकरणीं विशल्यां चानयितुं यान्त्वित्यर्थः । तयोरेवात्रोपयोगा



अहं तु रावणं हत्वा सपुत्रं सहबान्धवम् । मैथिलीमानयिष्यामि शक्रो नष्टामिव श्रियम् । श्रुत्वैतद्वानरेन्द्रस्य सुषेणो वाक्यमब्रवीत् ॥ २५ ॥ दैवासुरं महद्युद्धमनुभूतं सुदारुणम् । तदा स्म दानवा देवान् शरसंस्पर्शकोविदाः ॥ २६ ॥ निजघ्नुः शस्त्रविदुषश्छादयन्तो मुहुर्मुहुः ॥ २७ ॥ तानार्तान्नष्टसंज्ञांश्च परासूंश्च बृहस्पतिः । विद्याभिर्मन्त्रयुक्ताभिरोषधीभिश्चिकित्सति ॥ २८ ॥ तान्यौषधान्यानयितुं क्षीरोदं यान्तु सागरम् । जवेन वानराः शीघ्रं सम्पातिपनसादयः । हरयस्तु विजानन्ति पार्वतीस्ता महौषधीः ॥ २९ ॥ सञ्जीवकरणीं दिव्यां विशल्यां देवनिर्मिताम् ॥ ३० ॥ चन्द्रश्च नाम द्रोणश्च क्षीरोदे सागरोत्तमे । अमृतं यत्र मथितं तत्र ते परमौषधी ॥ ३१ ॥ अयं वायुसुतो राजन् हनुमांस्तत्र गच्छतु ॥ ३२ ॥

दिति भावः ॥ ३० ॥ ते कुत्र विद्येते इत्यत्राह–चन्द्रश्चेत्यादिना । सागरोत्तमे क्षीरोदे यत्र प्रदेशे अमृतं मथितं तत्र चन्द्रद्रोणाख्यौ पर्वतौ स्तः तयोस्ते महौषधी स्त इत्यर्थः । तत्रावस्थाने हेतुमाह ते तत्रेति । पर्वते पर्वतयोः जात्येकवचनम् ॥ ३१ ॥ अयमित्यर्धम् । औषध्यन्तरानयने पनसादयो गच्छन्तु । संजीवविशल्यानयने तु हनुमान् गच्छत्विति विज्ञेयम् ॥ ३२ ॥

शरसंस्पर्शकोविदाः शरैः संस्पर्शो लक्ष्यवेधनं तत्र कोविदाः ॥ २६ ॥ २७ ॥ मन्त्रयुक्ताभिः मन्त्रप्रचुराभिरित्यर्थः । विद्याभिः मृतसञ्जीविनीप्रभृतिभिर्विद्याभिः परासून्नष्टप्राणान् चिकित्सति अचिकित्सत् ॥ २८ ॥ २९ ॥ सञ्जीवकरणीमित्यर्धमेकं वाक्यम् । अत्रानयितुं यान्त्वित्यनुषज्यते । तत्र तयोरेवोपयोगादिति भावः ॥ ३० ॥ ते कुत्र विद्येते इत्यत्राह–चन्द्रश्चेत्यादि । सागरोत्तमे क्षीरोदे । यत्र प्रदेशे अमृतं मथितं तत्र चन्द्रद्रोणपर्वतौ स्तः तयोस्ते ओषधी स्त इत्यर्थः । तत्रावस्थाने हेतुमाह ते तत्रेति । पर्वते पर्वतप्रदेशे ॥ ३१ ॥ ३२ ॥

मेघान् सागरतोयं च पर्यस्यन् पर्वतान् कम्पयन्निव, [illegible] दिति शेषः ॥ ३३ ॥ सर्वद्वीपमहाद्रुमाः, सर्वपदं द्रुमविशेषणम् । द्वीपं च लङ्का । लवणाम्भसि लवणसमुद्रे ॥ ३४ ॥ भोगिनः प्रशस्तकायाः । तत्रवासिनः लङ्काद्वीपवासिनः । यादांसि जलजन्तवश्च । लवणार्णवं लवणार्णवमध्यम् ।



एतस्मिन्नन्तरे वायुर्मेघांश्चापि सविद्युतः । पर्यस्यन् सागरे तोयं कम्पयन्निव मेदिनीम् ॥ ३३ ॥ महता पक्षवातेन सर्वद्वीपमहाद्रुमाः । निपेतुर्भिन्नविटपाः समूला लवणाम्भसि ॥३४॥ अभवन् पन्नगास्त्रस्ता भोगिनस्तत्रवासिनः । शीघ्रं सर्वाणि यादांसि जग्मुश्च लवणार्णवम् ॥ ३५ ॥ ततो मुहूर्ताद्गरुडं वैनतेयं महाबलम् । वानरा ददृशुः सर्वे ज्वलन्तमिव पावकम् ॥ ३६ ॥ तमागतमभिप्रेक्ष्य नागास्ते विप्रदुद्रुवुः । यैस्तौ सत्पुरुषौ बद्धौ शरभूतैर्महाबलौ ॥३७॥ ततः सुपर्णः काकुत्स्थौ दृष्ट्वा प्रत्यभिनन्दितः । विममर्श च पाणिभ्यां मुखे चन्द्रसमप्रभे ॥३८॥ वैनतेयेन संस्पृष्टास्तयोः संरुरुहुर्व्रणाः । सुवर्णे च तनू स्निग्धे तयोराशु बभूवतुः ॥ ३९ ॥ तेजो वीर्यं बलं चौज उत्साहश्च महागुणः । प्रदर्शनं च बुद्धिश्च स्मृतिश्च द्विगुणं तयोः ॥ ४० ॥

भयादन्तर्मग्नाः इत्यर्थः ॥ ३५–३८ ॥ व्रणाः क्षतानि । संरुरुहुः संरूढाः, अज्ञातस्वरूपा बभूवुरित्यर्थः ॥ ३९ ॥ तेजः पराभिभवनसामर्थ्यम् पराधिक्षेपासहनं वा । वीर्यं पराक्रमः । बलं शारीरम् । ओजः कान्तिः । उत्साहः लोकोत्तरकार्येषु स्थिरतरप्रयत्नः । प्रदर्शनं सूक्ष्मार्थपरिज्ञानम् । बुद्धिः विवेकः । स्मृतिः अनुभूतार्थाविस्मरणम् । एतत् सर्वं द्विगुणं वैनतेयसंस्पर्शवशात् पूर्वतोऽप्यधिकं जातमित्यर्थः । अत्र धिरिति गायत्र्याः सप्तदशा

एतस्मिन्निति । सविद्युतो मेघान् सागरे तोयं च पर्यस्य परित उत्क्षिप्य पर्वतान् कम्पयन्निव, पक्षवायुरुदभूदिति शेषः ॥३३॥ पक्षवातेन निमित्तेन द्रुमाः निपेतुरिति सम्बन्धः ॥३४॥ भोगिनो महाकायाः । तत्रवासिनः समुद्रवासिनः । लवणार्णवमाजग्मुः, भयादन्तर्मग्ना इत्यर्थः ॥३५–३८॥ व्रणाः क्षतानि । संरुरुहुः संरूढाः तयोस्तनू सुवर्णे स्निग्धे च बभूवतुः । तयोस्तच्छरीरे व्रणात्यन्ताभावाधिकरणे इवाभूतामित्यर्थः ॥ ३९ ॥ तेजः पराभिभवनसामर्थ्यम् । वीर्यं पराक्रमः । बलं शारीरबलम् । ओजः कान्तिः । उत्साहः उत्तरोत्तरकार्येषु स्थिरतरप्रयत्नः । अत्र धिरिति [illegible] प्रदर्शनं चेत्यस्य श्लोकस्य सप्तमाक्षरेण धीत्यनेन

क्षरम् । षोडशसहस्रश्लोका गताः ॥ ४० ॥ ताविति । क्रियाभेदात्तच्छब्दद्वयम् ॥ ४१ ॥ व्यतिक्रान्तौ लङ्घितवन्तौ । गत्यर्थत्वात् कर्तरि क्तः ॥ ४२ ॥ ४३ ॥ विरजे निर्मले ॥ ४४ ॥ ४५ ॥ सखा वाहनत्वेन सहाय इति गूढोक्तिः । युवाभ्यां युवयोः । षष्ठ्यर्थे तृतीया । साह्यकारणात् साहाय्या

तावुत्थाप्य महावीर्यौ गरुडो वासवोपमौ । उभौ तौ सस्वजे हृष्टौ रामश्चैनमुवाच ह ॥ ४१ ॥ भवत्प्रसादाद्व्यसनं रावणिप्रभवं महत् । आवामिह व्यतिक्रान्तौ पूर्ववद्बलिनौ कृतौ ॥ ४२ ॥ यथा तातं दशरथं यथाऽजं च पितामहम् । तथा भवन्तमासाद्य हृदयं मे प्रसीदति ॥ ४३ ॥ को भवान् रूपसम्पन्नो दिव्यस्रगनुलेपनः । वसानो विरजे वस्त्रे दिव्याभरणभूषितः ॥४४॥ तमुवाच महातेजा वैनतेयो महाबलः । पतत्रिराजः प्रीतात्मा हर्षपर्याकुलेक्षणः ॥ ४५ ॥ अहं सखा ते काकुत्स्थ प्रियः प्राणो बहिश्चरः । गरुत्मानिह सम्प्राप्तो युवाभ्यां साह्यकारणात् ॥ ४६ ॥ असुरा वा महावीर्या दानवा वा महाबलाः । सुराश्चापि सगन्धर्वाः पुरस्कृत्य शतक्रतुम् ॥ ४७ ॥ नेमं मोक्षयितुं शक्ताः शरबन्धं सुदारुणम् । मायाबलादिन्द्रजिता निर्मितं क्रूरकर्मणा ॥ ४८ ॥ एते नागाः काद्रवेयास्तीक्ष्णदंष्ट्रा विषोल्बणाः । रक्षोमायाप्रभावेन शरा भूत्वा त्वदाश्रिताः ॥ ४९ ॥

र्थम् ॥ ४६–४८ ॥ काद्रवेयाः कद्रूपुत्राः । मायाबलात् आश्चर्यशक्तिरूपबलात् ॥ ४९ ॥ ५० ॥

सङ्गृह्णाति । प्रदर्शनं सूक्ष्मार्थविषयज्ञानम् । बुद्धिः अध्यवसायः, स्मृतिरनुभूतार्थाविस्मरणम् । एतदादिकं सर्वं द्विगुणं वैनतेयस्पर्शात्पूर्वतोऽप्यधिकं जातमित्यर्थः ॥ ४० ॥ ४१ ॥ व्यतिक्रान्तौ लङ्घितवन्तौ ॥ ४२ ॥ ४३ ॥ विरजे निर्मले वस्त्रे वसानः ॥ ४४॥४५ ॥ युवाभ्यामिति षष्ठ्यर्थे तृतीया ॥ ४६–४८ ॥ काद्रवेयाः

स०–तं ते इति पूर्वमुक्तवतो गरुडस्य सेवकस्य त इत्युक्तौ जिह्वा जिह्रेतीति सूचयति युवयोरित्युक्त्या । एवं सति सति च च्छत्रिन्यायावकाशे न प्रत्यवेयाद्वैनतेय इति भावोऽपि कवेर्ज्ञातव्यः । सखित्वं त्वत्रोत्तरत्रैव–“ विष्णुना च तदाकाशे वैनतेयस्समेयिवान् । तस्य नारायणस्तुष्टस्तेनालौल्येन कर्मणा । तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरम् । स वव्रे तव तिष्ठेयमुपरीत्यन्तरिक्षगः । उवाच चैनं भूयोऽपि नारायणमिदं वचः । अजरश्चामरश्च स्यामममृतेन विनाप्यहम् । एवमस्त्विति तं विष्णुरुवाच विनतासुतम् । प्रतिगृह्य वरौ तौ तु गरुडो विष्णुमब्रवीत् । भवतेऽपि वरं दद्मि वृणोतु भगवानपि । तं वव्रे वाहनं विष्णुर्गरुत्मन्तं महाबलम् । ध्वजं च चक्रे भगवानुपरि स्थास्यसीति तम् । एवमस्त्विति तं देव [illegible] सोऽयमनुसन्धेयम् । इदं सर्वं भक्तभक्तिपारवश्येनेति मन्तव्यम् ॥ ४९ ॥

सहसा जवेन ॥ ५१ ॥ अप्रमादश्च कर्तव्य इति । तत्रतत्रानुगुणप्रत्ययप्रयोगेषु सावधानाभ्यां भवितव्यमित्यर्थः ॥ ५२ ॥ प्रकृत्येत्यादिश्लोकद्वयम्। एतेनैवोपमानेनेति । अनेन दृष्टान्तेन राक्षसा जिह्मा ज्ञेया इत्यर्थः ॥ ५३–५५ ॥ सख इति । रिपूणामपि वत्सलेत्यनेन इन्द्रजिद्वधोपायो



सभाग्यश्चासि धर्मज्ञ राम सत्यपराक्रम । लक्ष्मणेन सह भ्रात्रा समरे रिपुघातिना ॥ ५० ॥ इमं श्रुत्वा तु वृत्तान्तं त्वरमाणोऽहमागतः। सहसा युवयोः स्नेहात् सखित्वमनुपालयन् ॥ ५१ ॥ मोक्षितौ च महाघोरादस्मात् सायकबन्धनात् । अप्रमादश्च कर्तव्यो युवाभ्यां नित्यमेव हि ॥ ५२ ॥ प्रकृत्या राक्षसाः सर्वे सङ्ग्रामे कूटयोधिनः । शूराणां शुद्धभावानां भवतामार्जवं बलम् ॥ ५३ ॥ तन्न विश्वसितव्यं वो राक्षसानां रणाजिरे। एतेनैवोपमानेन नित्यं जिह्मा हि राक्षसाः ॥ ५४ ॥ एवमुक्त्वा ततो रामं सुपर्णः सुमहाबलः । परिष्वज्य सुहृत् स्निग्धमाप्रष्टुमुपचक्रमे ॥ ५५ ॥ सखे राघव धर्मज्ञ रिपूणामपि वत्सल। अभ्यनुज्ञातुमिच्छामि गमिष्यामि यथागतम् ॥ ५६ ॥ न च कौतूहलं कार्यं सखित्वं प्रति राघव। कृतकर्मा रणे वीरः सखित्वमनुवेत्स्यसि ॥ ५७ ॥ बालवृद्धावशेषां तु लङ्कां कृत्वा शरोर्मिभिः। रावणं च रिपुं हत्वा सीतां समुपलप्स्यसे ॥ ५८ ॥

न ज्ञात इति द्योत्यते ॥ ५६ ॥ "अहं सखा ते काकुत्स्थ" इत्यादिनोक्तं सखित्वं कथमिति रामाशयमाशङ्क्य रहस्यत्वादिदानीं तद्विषयप्रश्नो न कर्तव्यः, रावणवधानन्तरं स्वयमेव ज्ञास्यसीत्याह–न चेति । सखित्वं प्रति सखित्वप्रश्नं प्रतीत्यर्थः ॥ ५७ ॥ रामस्योत्साहवर्धनाय भाविनमर्थं

कद्रूपुत्राः ॥ ४९–५१ ॥ अप्रमादश्च कर्तव्यः तत्रतत्रानुगुणप्रत्ययप्रयोगेषु सावधानाभ्यां भवितव्यमित्यर्थः । एतेनैवोपमानेन दृष्टान्तेन राक्षसा जिह्मा इति ज्ञेया इत्यर्थः ॥ ५२–५६ ॥ 'अहं सखा ते काकुत्स्थ' इत्यादिनोक्तं सखित्वं कथमिति रामाभिप्रायमाशङ्क्य रहस्यत्वादिदानीं तद्विषयप्रश्नो न कर्तव्यः । रावणवधानन्तरं स्वयमेव ज्ञास्यसीत्याह–न चेति ॥ ५७–६१ ॥

कथयति—बालेत्यादिना । शरोर्मिभिः शरपरम्पराभिः ॥ ५८ ॥ शीघ्रविक्रमः शीघ्रगतिः । क्रियामिदं सुपर्णपदद्वयान्वयः ॥ ५९॥६० ॥ विरुजाविति । सिंहनादं नेदुः सिंहनादं चक्रुरित्यर्थः । दुधुवुः अकम्पयन् ॥ ६१ ॥ तत इति । यथापुरं यथापूर्वम् । ननु "पिशाचान् दानवान् यक्षान् पृथिव्यां चैव राक्षसान् । अङ्गुल्यग्रेण तान् हन्याम्" इत्युक्तनिरवधिकशक्तिसम्पन्नः सर्वज्ञो रामः कथमज्ञ इवाशक्त इवेन्द्रजिता हतो लोहिताक्तो भूमौ स्थित इवाभाव

इत्येवमुक्त्वा वचनं सुपर्णः शीघ्रविक्रमः । रामं च विरुजं कृत्वा मध्ये तेषां वनौकसाम् ॥५९॥ प्रदक्षिणं ततः कृत्वा परिष्वज्य च वीर्यवान् । जगामाकाशमाविश्य सुपर्णः पवनो यथा ॥६०॥ विरुजौ राघवौ दृष्ट्वा ततो वानरयूथपाः । सिंहनादांस्तदा नेदुर्लाङ्गूलान् दुधुवुस्तदा ॥ ६१ ॥ ततो भेरीः समाजघ्नुर्मृदङ्गांश्चाप्यनादयन् । दध्मुः शङ्खान् सम्प्रहृष्टाः क्ष्वेलन्त्यपि यथापुरम् ॥ ६२ ॥ आस्फोट्यास्फोट्य विक्रान्ता वानरा नगयोधिनः । द्रुमानुत्पाट्य विविधांस्तस्थुः शतसहस्रशः ॥ ६३ ॥ विसृजन्तो महानादांस्त्रासयन्तो निशाचरान् । लङ्काद्वाराण्युपाजग्मुर्योद्धुकामाः प्लवङ्गमाः ॥६४॥ ततस्तु भीमस्तुमुलो निनादो बभूव शाखामृगयूथपानाम् । क्षये निदाघस्य यथा घनानां नादः सुभीमो नदतां निशीथे ॥ ६५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमद्युद्धकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

यत् ? उच्यते; लोके समाचारप्रवर्तनायैवं स्थितः । इन्द्रजित्पराजयेन ह्ययमर्थोऽवगम्यते—शुचीनां शुद्धभावानामृजूनां प्राणसन्देहदायिविपद्यपि न विनाशः । विपरीतानां पापिष्ठानां तु करतलगताऽपि कार्यसिद्धिर्विगलति । अतः शुचित्वार्जवादिगुणयुक्तैः पुम्भिर्भवितव्यमिति सतां धर्मनिश्चयप्रतिपत्तिर्जायते । ननु रावणवधार्थं दैवतैरर्थितो हि विष्णू रामत्वेनावतीर्णः । सत्यम्, दुष्कृद्विनाशवद्धर्मसंस्थापनमपि ह्यवतारप्रयोजनम् । रावणवधमात्रस्य प्रयोजनत्वे ह्येतावान् प्रयासो व्यर्थः स्यात् । अत एवोक्तम्—" चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति " इति । नच धर्मोपदेशमात्रेण तत्सिद्धिः । तादृशोपदेशस्य श्रुतिस्मृतिभिरेव कृतत्वात् । स्वाचारमुखेन धर्मप्रवचनाय हि मानुषभावना च कृता । अतः स्वाचारमुखेन धर्मप्रवर्तनमित्यादि प्रबन्धादावेवोक्तम् ॥ ६२–६५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

यथापुरं यथापूर्वम् ॥ ६२–६४ ॥ निशीथे अर्धरात्रे ॥६५॥ इति श्रीमहेश्वरतीर्थविर० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां पञ्चाशः सर्गः ॥ ५० ॥

अथ धूम्राक्षनिर्गम एकपञ्चाशे—तेषामित्यादि । राक्षसैः सह सुग्रीवेणेत्यर्थः ॥ १ ॥ निर्घोषं ध्वनिः ॥ २ ॥ यथाऽसावित्यादिसार्धश्लोक एकान्वयः । यथा येन प्रकारेण । सुमहानादः समुत्थितः ततः एतेषां सुमहती प्रीतिः, अस्तीति शेषः ॥ ३ ॥ तथा हीत्यर्धम् । तथा प्रसिद्धप्रकारः ॥ ४ ॥ तौ त्विति ।



तेषां सुतुमुलं शब्दं वानराणां तरस्विनाम् । नदतां राक्षसैः सार्धं तदा शुश्राव रावणः ॥ १ ॥ स्निग्धगम्भीरनिर्घोषं श्रुत्वा स निनदं भृशम् । सचिवानां ततस्तेषां मध्ये वचनमब्रवीत् ॥ २ ॥ यथाऽसौ सम्प्रहृष्टानां वानराणां समुत्थितः । बहूनां सुमहानादो मेघानामिव गर्जताम् । व्यक्तं सुमहती प्रीतिरेतेषां नात्र संशयः ॥ ३ ॥ तथा हि विपुलैर्नादैश्चुक्षुभे वरुणालयः ॥ ४ ॥ तौ तु बद्धौ शरैस्तीक्ष्णैर्भ्रातरौ रामलक्ष्मणौ । अयं च सुमहान्नादः शङ्कां जनयतीव मे ॥ ५ ॥ एतत्तु वचनं चोक्त्वा मन्त्रिणो राक्षसेश्वरः । उवाच नैर्ऋतांस्तत्र समीपपरिवर्तिनः ॥ ६ ॥ ज्ञायतां तूर्णमतेषां सर्वेषां वनचारिणाम् । शोककाले समुत्पन्ने हर्षकारणमुत्थितम् ॥ ७ ॥ तथोक्तास्तेन सम्भ्रान्ताः प्राकारमधिरुह्य ते । ददृशुः पालितां सेनां सुग्रीवेण महात्मना ॥ ८ ॥ तौ च मुक्तौ सुघोरेण शरबन्धेन राघवौ । समुत्थितौ महावेगौ विषेदुः प्रेक्ष्य राक्षसाः ॥ ९ ॥ सन्त्रस्तहृदयाः सर्वे प्राकारादवरुह्य ते । विषण्णवदना घोरा राक्षसेन्द्रमुपस्थिताः ॥ १० ॥ तदप्रियं. दीनमुखा रावणस्य निशाचराः । कृत्स्नं निवेदयामासुर्यथावद्वाक्यकोविदाः ॥ ११ ॥

तुशब्दश्चार्थः । तौ च बद्धौ नादश्च श्रूयते । स च प्रकृतविरुद्धो नादः । शङ्कां राजपुत्रयोः शरबन्धापगमशङ्काम् जनयतीव । इवशब्दः सम्भावनायाम् ॥ ५ ॥ ६ ॥ ज्ञायतामिति । उत्थितं हर्षकारणं ज्ञायतामित्यन्वयः ॥ ७–९ ॥ उपस्थिताः प्राप्ताः ॥ १० ॥ ११ ॥

तेषामिति । राक्षसैः विभीषणादिभिः ॥ १ ॥ स्निग्धगम्भीरनिर्घोषम् एतेन सीतापतिपतनकालिकदुःखशब्दो व्यावर्त्यते । निनदं निरस्तो नदोऽर्णवो येन तम् । तदपेक्षया गम्भीरमिति यावत् ॥ २ ॥ यथा यतः कारणादित्यर्थः । संप्रहृष्टानां बहूनां वानराणां महान् असौ नादः समुत्थितः अतः कारणादेतेषां व्यक्तं सुमहती प्रीतिः, जातेति शेषः । नात्र संशयः ॥ ३ ॥ नादश्रवणमात्रेण कथं तेषां प्रीतिरनुमीयत इत्यत आह तथा हीत्यादिसार्धश्लोकेन । यतः रामलक्ष्मणौ शरैर्बद्धौ

यौ तौ, यावित्यर्थः । पाशानिति । पाशान् छित्वा स्थितौ गजाविव भासमानावित्यर्थः ॥ १२–१४॥ घोरैरित्यादि । दत्तवरैः वरदत्तैः । प्रमथ्य बलात्कृत्य । बद्धौ, अभूतामिति शेषः । संशयस्थं प्राणसंशयस्थम् । आदत्तम् आत्तम् ॥ १५–१८॥ बलेनेति । त्वं वधायाभिनिर्याहीत्यमङ्गलसूचकं



यौताविन्द्रजिता युद्धे भ्रातरौ रामलक्ष्मणौ । निबद्धौ शरबन्धेन निष्प्रकम्पभुजौ कृतौ ॥ १२ ॥ विमुक्तौ शरबन्धेन तौ दृश्येते रणाजिरे । पाशानिव गजौ छित्त्वा गजेन्द्रसमविक्रमौ ॥ १३ ॥ तच्छ्रुत्वा वचनं तेषां राक्षसेन्द्रो महाबलः । चिन्ताशोकसमाक्रान्तो विषण्णवदनोऽब्रवीत् ॥१४॥ घोरैर्दत्तवरैर्बद्धौ शरैराशीविषोपमैः । अमोघैः सूर्यसङ्काशैः प्रमथ्येन्द्रजिता युधि ॥ १५ ॥ तदस्त्रबन्धमासाद्य यदि मुक्तौ रिपू मम । संशयस्थमिदं सर्वमनुपश्याम्यहं बलम् ॥ १६ ॥ निष्फलाः खलु संवृत्ताः शरा वासुकितेजसः । आदत्तं यैः सुसङ्ग्रामे रिपूणां मम जीवितम् ॥ १७ ॥ एवमुक्त्वा तु संक्रुद्धो निःश्वसन्नुरगो यथा । अब्रवीद्रक्षसां मध्ये धूम्राक्षं नाम राक्षसम् ॥ १८ ॥ बलेन महता युक्तो रक्षसां भीमविक्रम । त्वं वधायाभिनिर्याहि रामस्य सह वानरैः ॥ १९ ॥ एवमुक्तस्तु धूम्राक्षो राक्षसेन्द्रेण धीमता । कृत्वा प्रणामं संहृष्टो निर्जगाम नृपालयात् ॥ २० ॥ अभिनिष्क्रम्य तद्द्वारं बलाध्यक्षमुवाच ह । त्वरयस्व बलं तूर्णं किं चिरेण युयुत्सतः ॥ २१ ॥ धूम्राक्षवचनं श्रुत्वा बलाध्यक्षो बलानुगः । बलमुद्योजयामास रावणस्याज्ञया द्रुतम् ॥ २२ ॥

वचः ॥ १९॥ २० ॥ द्वारमभिनिष्क्रम्य द्वारान्निष्क्रम्य । युयुत्सतः, ममेति शेषः । किं चिरेण किं विलम्बेन ॥ २१ ॥ रावणस्याज्ञया रावणाज्ञाकृतं धूम्राक्षवचनं श्रुत्वेत्यर्थः ॥ २२ ॥

विपुलैर्नादैः वरुणालयश्च चुक्षुभे अतोऽयं नादः शङ्कां रामलक्ष्मणयोर्बन्धविमोचनशङ्काम् । जनयतीव जनयत्येवेत्यर्थः ॥ ४–१५ ॥ संशयस्थं प्राणसंशयस्थम् ॥ १६ ॥ यैः शरैर्मम रिपूणां जीवितमादत्तं ते निष्फलाः संवृत्ताः इति सम्बन्धः ॥ १७ ॥ १८ ॥ बलेनेत्यस्य प्राकृतार्थः स्पष्टः । वस्तुतस्तु–बलेन युक्तस्सन् रक्षसां च तव चेत्यध्याहार्यम् । एकदैव रामस्य वानरैः राम[illegible]रित्यर्थः । [illegible]ति सम्बन्धः ॥ १९ ॥ २० ॥ अभिनिष्क्रम्य तद्द्वारं गृहद्वार

बद्धघण्टाः शूरत्वज्ञापनाय कटिबद्धघण्टा इत्यर्थः । ते पूर्वोक्तसेनास्था: । विविधेति । आयुधानि शूलादिभिन्नानि । अस्यार्धस्य पूर्वेणान्वयः ॥२३॥ गदा प्रसिद्धा । पट्टिशः दण्डविशेषः । परिघः भिन्दिपालः । भल्लः अयोमयः शरः । प्रासैः परश्वधैः । दिग्भ्यो जलदा इवेत्यन्वयः ॥ २४ ॥ २५ ॥ अन्ये



ते बद्धघण्टा बलिनो घोररूपा निशाचराः । विगर्जमानाः संहृष्टा धूम्राक्षं पर्यवारयन् । विविधायुधहस्ताश्च शूल मुद्गरपाणयः ॥ २३ ॥ गदाभिः पट्टिशैर्दण्डैरायसैर्मुसलैर्भृशम् ॥ २४ ॥ परिघैर्भिन्दिपालैश्च भल्लैः प्रासैः परश्वधैः । निर्ययू राक्षसा दिग्भ्यो नर्दन्तो जलदा यथा ॥२५॥ रथैः कवचिनस्त्वन्ये ध्वजैश्च समलंकृतैः । सुवर्णजालविहितैः खरैश्च विविधाननैः ॥ २६ ॥ हयैः परमशीघ्रैश्च गजेन्द्रैश्च मदोत्कटैः । निर्ययू राक्षसव्याघ्रा व्याघ्रा इव दुरासदाः ॥२७॥ वृकसिंहमुखैर्युक्तं खरैः कनकभूषणैः । आरुरोह रथं दिव्यं धूम्राक्षः खरनिस्वनः ॥ २८ ॥ स निर्यातो महा वीर्यो धूम्राक्षो राक्षसैर्वृतः । प्रहसन् पश्चिमद्वारं हनूमान् यत्र यूथपः । रथप्रवरमास्थाय खरयुक्तं खरस्वनम् ॥२९॥ प्रयान्तं तु महाघोरं राक्षसं भीमविक्रमम् । अन्तरिक्षगता घोराः शकुनाः प्रत्यवारयन् ॥ ३० ॥ रथशीर्षे महान् भीमो गृध्रश्च निपपात ह । ध्वजाग्रे ग्रथिताश्चैव निपेतुः कुणपाशनाः ॥ ३१ ॥ रुधिरार्द्रो महान् श्वेतः कबन्धः पतितो भुवि । विस्वरं चोत्सृजन्नादं धूम्राक्षस्य समीपतः ॥ ३२ ॥ ववर्ष रुधिरं देवः सञ्चचाल च मेदिनी । प्रति लोमं ववौ वायुर्निर्घातसमनिस्वनः ॥ ३३ ॥ तिमिरौघावृतास्तत्र दिशश्च न चकाशिरे ॥ ३४ ॥ स तूत्पातांस्तदा दृष्ट्वा क्षसानां भयावहान् । प्रादुर्भूतान् सुघोरांश्च धूम्राक्षो व्यथितोऽभवत् ॥ ३५ ॥

कवचिनः । ध्वजैः विविधाननैः खरैश्च समलङ्कृतैः रथैर्निर्ययुः । अन्ये हयैः अन्ये गजैश्च निर्ययुरित्यन्वयः ॥२६–२९॥ शकुनाः निमित्तसूचकाः पक्षिणः ॥३०॥ कुणपाशनाः गृध्राः । ग्रथिताः मिलिताः॥३१॥ रुधिरेति । विस्वरमिति क्रियाविशेषणम्॥३२॥ देवः पर्जन्यः । प्रतिलोमं प्रतिकूलम् ॥३३–३५॥ मतिक्रम्येत्यर्थः । किं चिरेण किं विलम्बेन । गदाभिरित्याद्युपलक्षणे तृतीया ॥ २१–२९ ॥ प्रयान्तमिति । शकुनाः दुश्शकुनाः ॥ ३० ॥ ग्रथिताः मिलिताः

मुमुहुरित्यर्थम् । पुरस्सराः अग्रगाः ॥ ३६ ॥ अभिनिष्क्रम्य, पुरादिति शेषः । महौघकल्पां महानोघोऽस्मिन्निति महौघः सागरः तत्कल्पाम् । बहुवानरीम्, ङीबत्रार्षः । द्वितीयायां प्रातर्धूम्राक्षनिर्गमः ॥ ३७॥ इति श्रीगोविन्द० श्रीरामा० रत्नकिरी० युद्धकाण्डव्याख्याने एकपञ्चाशः सर्गः॥५१॥

मुमुहू राक्षसाः सर्वे धूम्राक्षस्य पुरस्सराः ॥ ३६ ॥ ततः सुभीमो बहुभिर्निशाचरैर्वृतोऽभिनिष्क्रम्य रणोत्सुको बली । ददर्श तां राघवबाहुपालितां महौघकल्पां बहुवानरीं चमूम् ॥ ३७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

धूम्राक्षं प्रेक्ष्य निर्यान्तं राक्षसं भीमविक्रमम् । विनेदुर्वानराः सर्वे प्रहृष्टा युद्धकाङ्क्षिणः ॥ १ ॥ तेषां सुतुमुलं युद्धं सञ्जज्ञे हरिरक्षसाम् । अन्योन्यं पादपैर्घोरं निघ्नतां शूलमुद्गरैः ॥ २ ॥ घोरैश्च परिघैश्चित्रैस्त्रिशूलैश्चापि संहतैः । राक्षसैर्वानरा घोरैर्विनिकृत्ताः समन्ततः ॥ ३ ॥ वानरै राक्षसाश्चापि द्रुमैर्भूमौ समीकृताः । राक्षसाश्चापि संक्रुद्धा वानरान्निशितैः शरैः । विव्यधुर्घोरसङ्काशैः कङ्कपत्रैरजिह्मगैः ॥ ४ ॥ ते गदाभिश्च भीमाभिः पट्टिशैः कूटमुद्गरैः ॥ ५ ॥ विदार्यमाणा रक्षोभिर्वानरास्ते महाबलाः । अमर्षाज्जनितोद्धर्षाश्चक्रुः कर्माण्यभीतवत् ॥ ६ ॥ शरनिर्भिन्नगात्रास्ते शूलनिर्भिन्नदेहिनः । जगृहुस्ते द्रुमांस्तत्र शिलाश्च हरियूथपाः ॥ ७ ॥

अथ धूम्राक्षवधो द्विपञ्चाशे–धूम्राक्षमित्यादि ॥ १ ॥ २ ॥ संहतैः सङ्घतैः । राक्षसविशेषणमेतत् ॥ ३ ॥ वानरैरित्यादि । समीकृताः पातिताः । घोरसङ्काशैः घोरकालाग्न्यादितुल्यैः । अजिह्मगैः अवक्रगैः । कङ्कपत्रैः कङ्कपत्राण्येव पत्राणि येषां ते कङ्कपत्राः तैः ॥ ४ ॥ जनितोद्धर्षा जनितोत्साहाः ॥ ५ ॥ ६ ॥ शूलनिर्भिन्नदेहिनः । कर्मधारयादिनिरार्षः ॥ ७ ॥



कुणपाशनाः गृध्राः । प्रतिलोमं प्रतिकूलम्॥३१–३६॥अभिनिष्क्रम्य, पुरादिति शेषः । महौघकल्पां महान् ओघो जलवेगो यस्मिन् सः महौघः सागरः तत्कल्पाम्॥३७॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकपञ्चाशः सर्गः ॥ ५१ ॥ ॥ १ ॥ २ ॥ संहतैरित्येतत् राक्षसविशेषणम् ॥ ३ ॥ समीकृताः पातिता इत्यर्थः ॥ ४ ॥ ५ ॥ जनितोद्धर्षाः जनितोत्साहाः ॥ ६ ॥ शूलनिर्भिन्नदेहिनः शूलनिर्भिन्नदेहाः । इन्नन्तत्वमार्षम् ॥ ७–९ ॥

नामानि स्वनामानि ॥ ८-११ ॥ वनौकसां पर्वताग्रैः वानरप्रेरितपर्वताग्रैः । तैर्मथितैः गजेन्द्रैः । सारोहैः साधिष्ठातृभिः । वसुधातलं कीर्णमभूत् ॥ १२ ॥ १३ ॥ भीमविक्रान्तैः भीमविक्रमैः । वेगितैः सञ्जातवेगैः । वानरैः कर्तृभिः । करजैः नखैः करणैः । आक्रम्याक्रम्य मुखेषु विनिकर्तिताः



ते भीमवेगा हरयो नर्दमानास्ततस्ततः । ममन्थू राक्षसान् भीमान्नामानि च बभाषिरे ॥ ८ ॥ तद्बभूवाद्भुतं घोरं युद्धं वानररक्षसाम् । शिलाभिर्विविधाभिश्च बहुभिश्चैव पादपैः ॥ ९ ॥ राक्षसा मथिताः केचिद्वानरैर्जितकाशिभिः । ववमू रुधिरं केचिन्मुखै रुधिरभोजनाः ॥ १० ॥ पार्श्वेषु दारिताः केचित् केचिद्राशीकृता द्रुमैः । शिलाभिश्चूर्णिताः केचित् केचिद्दन्तैर्विदारिताः ॥ ११ ॥ ध्वजैर्विमथितैर्भग्नैः खरैश्च विनिपातितैः । रथैर्विध्वंसितैश्चापि पतितै रजनीचरैः ॥ १२ ॥ गजेन्द्रैः पर्वताकारैः पर्वताग्रैर्वनौकसाम् । मथितैर्वाजिभिः कीर्णं सारोहैर्वसुधातलम् ॥ १३ ॥ वानरैर्भीमविक्रान्तैराप्लुत्याप्लुत्य वेगितैः । राक्षसाः करजैस्तीक्ष्णैर्मुखेषु विनिकर्तिताः ॥ १४ ॥ विवर्णवदना भूयो विप्रकीर्णशिरोरुहाः । मूढाः शोणितगन्धेन निपेतुर्धरणीतले ॥ १५ ॥ अन्ये परमसंक्रुद्धा राक्षसा भीमनिस्वनाः । तलैरेवाभिधावन्ति वज्रस्पर्शसमैर्हरीन् ॥ १६ ॥ वानरैरापतन्तस्ते वेगिता वेगवत्तरैः । मुष्टिभिश्चरणैर्दन्तैः पादपैश्चावपोथिताः । वानरैर्हन्यमानास्ते राक्षसा विप्रदुद्रुवुः ॥ १७ ॥ सैन्यं तु विद्रुतं दृष्ट्वा धूम्राक्षो राक्षसर्षभः । क्रोधेन कदनं चक्रे वानराणां युयुत्सताम् ॥ १८ ॥

खण्डिताः । मूढाः मूर्च्छिताः ॥ १४ ॥ १५ ॥ अन्य इति । तलैरेवाभिधावन्ति, हस्ततलान्येवायुधस्थाने कृत्वा अभ्यधावन्नित्यर्थः ॥ १६ ॥ वानरैरिति । अवपोथिताः हिंसिताः । “ पुथ हिंसायाम् ” इति धातुः ॥ १७ ॥ सैन्यं त्विति । कदनं हिंसनम् ॥ १८ ॥

जितकाशिभिः जितभयैर्जितश्वासैर्वा ॥ १० ॥ द्रुमैः राशीकृताः द्रुमप्रहारैर्हत्वा राशीकृता इत्यर्थः ॥ ११--१३ ॥ करजैः नखैः ॥१४॥ मूढाः मूर्च्छिताः ॥१५॥१६॥ अवपोथिताः हिंसिताः ॥ १७–१९ ॥

प्रासैरित्यादिचतुःश्लोकी । विह्वलन्तः विवशाः । गतासवः, अभवन्निति शेषः । आन्त्रैर्विनिःसृताः विनिःसृतान्त्रा इत्यर्थः ॥ १९–२३ ॥ धनुरिति ! तन्त्री वीणा । आर्षो ह्रस्वः । तया मधुरं रम्यम् । हिक्का विरम्य विरम्य कण्ठात् पवनोद्गमः । मन्दस्तनितम् अशक्त्या मन्दभाषणं तदेव सङ्गीतं

प्रासैः प्रमथिताः केचिद्वानराः शोणितस्रवाः । मुद्गरैराहताः केचित् पतिता धरणीतले ॥ १९ ॥ परिघैर्मथिताः केचिद्भिन्दिपालैर्विदारिताः । पट्टिशैराहताः केचिद्विह्वलन्तो गतासवः ॥ २० ॥ केचिद्विनिहताः शूलै रुधिरार्द्रा वनौकसः । केचिद्विद्राविता नष्टाः सबलै राक्षसैर्युधि ॥ २१ ॥ विभिन्नहृदयाः केचिदेकपार्श्वेन दारिताः । विदारितास्त्रिशूलैश्च केचिदान्त्रैर्विनिःसृताः ॥ २२ ॥ तत्सुभीमं महायुद्धं हरिराक्षससङ्कुलम् । प्रबभौ शब्दबहुलं शिलापादपसङ्कुलम् ॥ २३ ॥ धनुर्ज्यातन्त्रिमधुरं हिक्कातालसमन्वितम् । मन्दस्तनितसङ्गीतं युद्धगान्धर्वमाबभौ ॥ २४ ॥ धूम्राक्षस्तु धनुष्पाणिर्वानरान् रणमूर्धनि । हसन् विद्रावयामास दिशस्तु शरवृष्टिभिः ॥ २५ ॥ धूम्राक्षेणार्दितं सैन्यं व्यथितं दृश्य मारुतिः । अभ्यवर्तत संक्रुद्धः प्रगृह्य विपुलां शिलाम् ॥ २६ ॥ क्रोधाद्द्विगुणताम्राक्षः पितृतुल्यपराक्रमः । शिलां तां पातयामास धूम्राक्षस्य रथं प्रति ॥२७॥ आपतन्तीं शिलां दृष्ट्वा गदामुद्यम्य सम्भ्रमात् । रथादाप्लुत्य वेगेन वसुधायां व्यतिष्ठत ॥ २८ ॥

सम्यग्गानं यस्मिन् तत् तथोक्तम् । युद्धगान्धर्वं युद्धसङ्गीतम् । सङ्गीतं नृत्तगीतवाद्यम् ॥ २४ ॥ धूम्राक्ष इति । दिशः दिशः प्रति ॥ २५ ॥ धूम्राक्षेणेति । व्यथितं दुःखितम् । दृश्य दृष्ट्वा । मारुतिः हनुमान् ॥ २६ ॥ क्रोधादिति । पिता वायुः ॥ २७ ॥ २८ ॥

विह्वलन्तः विवशाः ॥ २० ॥ २१ ॥ आन्त्रैर्विनिस्सृताः विनिस्सृतान्त्रा इत्यर्थः ॥ २२ ॥ २३ ॥ युद्धगान्धर्वं युद्धसङ्गीतम् ॥ २४–२८ ॥



स०–धनुर्ज्या धनुर्गुणः सैव तन्त्रिः तन्त्री वीणा । संज्ञात्वात् "ङ्यापोः संज्ञा–" इति ह्रस्वः । हिक्का हेषा तद्रूपतालयुक्तमिति नागोजिभट्टः । हिक्का ऊर्ध्ववातप्रवर्तितशब्दविशेषः । "सारिका हिक्का" इति अमरव्याख्यायां "हिक्क अव्यक्ते शब्दे" "गुरोश्च" इत्यकारप्रत्ययः । ऊर्ध्ववातप्रयुक्तशब्दविशेष इत्युक्तेः । [illegible] तत्तन्मितरूपसंगीतम् "मन्दः खरगजजातिप्रभेदयोः" इति विश्वः ॥ २४ ॥

सेति । कूबरः युगन्धरः । "कूबरस्तु युगन्धरः" इत्यमरः ॥ २९–३२ ॥ अभिद्रवत् अभ्यद्रवत् । आगमशासनस्यानित्यत्वादडभावः ॥ ३३ ॥ बहुकण्टकां बहुकीलाम् ॥ ३४ ॥ ताडितः, आसीदिति शेषः ॥ ३५ ॥ ३६ ॥ विह्वलितानि विवशीकृतानि ॥ ३७ ॥ ३८ ॥ वहन्तीति वहाः क्षतजस्य

सा प्रमथ्य रथं तस्य निपपात शिला भुवि । सचक्रकूबरं साश्वं सध्वजं सशरासनम् ॥ २९ ॥ स भङ्क्त्वा तु रथं तस्य हनुमान् मारुतात्मजः । रक्षसां कदनं चक्रे सस्कन्धविटपैर्द्रुमैः ॥ ३० ॥ विभिन्नशिरसो भूत्वा राक्षसाः शोणितोक्षिताः । द्रुमैः प्रव्यथिताश्चान्ये निपेतुर्धरणीतले ॥ ३१ ॥ विद्राव्य राक्षसं सैन्यं हनुमान् मारुतात्मजः । गिरेः शिखरमादाय धूम्राक्षमभिदुद्रुवे ॥ ३२ ॥ तमापतन्तं धूम्राक्षो गदामुद्यम्य वीर्यवान् । विनर्दमानः सहसा हनुमन्तमभिद्रवत् ॥ ३३ ॥ ततः क्रुद्धस्तु वेगेन गदां तां बहुकण्टकाम् । पातयामास धूम्राक्षो मस्तके तु हनूमतः ॥ ३४ ॥ ताडितः स तया तत्र गदया भीमरूपया ॥ ३५ ॥ स कपिर्मारुतबलस्तं प्रहारमचिन्तयन् । धूम्राक्षस्य शिरोमध्ये गिरिशृङ्गमपातयत् ॥ ३६ ॥ स विह्वलितसर्वाङ्गो गिरिशृङ्गेण ताडितः । पपात सहसा भूमौ विकीर्ण इव पर्वतः ॥ ३७ ॥ धूम्राक्षं निहतं दृष्ट्वा हतशेषा निशाचराः । त्रस्ताः प्रविविशुर्लङ्कां वध्यमानाः प्लवङ्गमैः ॥ ३८ ॥ स तु पवनसुतो निहत्य शत्रुं क्षतजवहाः सरितश्च सन्निकीर्य । रिपुवधजनितश्रमो महात्मा मुदमगमत् कपिभिश्च पूज्यमानः ॥ ३९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

वहाः क्षतजवहाः सन्निकीर्य उत्सार्येत्यर्थः । द्वितीयायां धूम्राक्षवधः ॥ ३९ ॥ इति श्रीगो० श्रीरामा० रत्न० युद्धकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

सा शिला तस्य चक्रादिसहितं रथं प्रमथ्य भुवि निपपात । कूबरः युगन्धरः । अवप्लुतिकाले रथे त्यक्तशरासनसहितम् ॥ २९ ॥ रक्षसां कदनं चक्रे स्वसेनारक्षणार्थमिति भावः । स्कन्धः स्थूलशाखा । विटपः सूक्ष्मशाखा ॥ ३०–३२ ॥ तमिति । अभिद्रवत् अभ्यद्रवत् ॥ ३३–३८ ॥ क्षतजस्य वहाः क्षतजवहाः । द्वितीयायां धूम्राक्षवधः । धूम्राक्षवधो भाद्रशुक्लद्वितीयायामित्याहुः ॥ ३९ ॥ इति श्रीमहे० श्रीरामायणतत्त्व० युद्धकाण्डव्याख्यायां द्विपञ्चाशः सर्गः ॥ ५२ ॥

स०–रिपुवधजनितश्रमः वधश्च जनितश्रमश्च तौ, रिपूणां वधजनितश्रमौ येन स तथा । स्थितानां वधः । विद्रुतानां च श्रम इति विवेकः ॥ ३९ ॥

अथ वज्रदंष्ट्रयुद्धं त्रिपञ्चाशे—धूम्राक्षमित्यादि । आविष्टः, अभूदिति शेषः ॥ १ ॥ २ ॥ गच्छ त्वं वीर निर्याहीति इतो गच्छ पुरान्निर्याहीत्यर्थः ॥ ३ ॥ तथेत्युक्त्वेति । बहुभिः, बलाध्यक्षैरिति शेषः ॥ ४ ॥ रथैरित्यस्य संयुक्त इत्यनेनान्वयः । समलंकृतः चन्दनकुसुमादिभिरलङ्कृतः । तनुत्राणि कवच

धूम्राक्षं निहतं श्रुत्वा रावणो राक्षसेश्वरः । क्रोधेन महताऽऽविष्टो निश्वसन्नुरगो यथा ॥ १ ॥ दीर्घमुष्णं विनिश्वस्य क्रोधेन कलुषीकृतः । अब्रवीद्राक्षसं शूरं वज्रदंष्ट्रं महाबलम् ॥ २ ॥ गच्छ त्वं वीर निर्याहि राक्षसैः परिवारितः । जहि दाशरथिं रामं सुग्रीवं वानरैः सह ॥३॥ तथेत्युक्त्वा द्रुततरं मायावी राक्षसेश्वरः । निर्जगाम बलैः सार्धं बहुभिः परिवारितः ॥ ४ ॥ नागैरश्वैः खरैरुष्ट्रैः संयुक्तः सुसमाहितः । पताकाध्वजचित्रैश्च रथैश्च समलंकृतः ॥ ५ ॥ ततो विचित्रकेयूरमुकुटैश्च विभूषितः । तनुत्राणि च संरुद्ध्य सधनुर्निर्ययौ द्रुतम् ॥६॥ पताकालंकृतं दीप्तं तप्तकाञ्चन भूषणम् । रथं प्रदक्षिणं कृत्वा समारोहच्चमूपतिः ॥ ७ ॥ यष्टिभिस्तोमरैश्चित्रैः शूलैश्च मुसलैरपि । भिन्दिपालैश्च पाशैश्च शक्तिभिः पट्टिशैरपि ॥ ८ ॥ खड्गैश्चक्रैर्गदाभिश्च निशितैश्च परश्वधैः । पदातयश्च निर्यान्ति विविधाः शस्त्र पाणयः । विचित्रवाससः सर्वे दीप्ता राक्षसपुङ्गवाः ॥ ९ ॥ गजा मदोत्कटाः शूराश्चलन्त इव पर्वताः । ते युद्ध कुशलै रूढास्तोमराङ्कुशपाणिभिः ॥ १० ॥ अन्ये लक्षणसंयुक्ताः शूरा रूढा महाबलाः ॥ ११ ॥ तद्राक्षसबलं घोरं विप्रस्थितमशोभत । प्रावृट्काले यथा मेघा नर्दमानाः सविद्युतः ॥ १२ ॥

तलत्रकण्ठत्रशिरस्त्राणानि । संरुद्ध्य संबध्य, धृत्वेत्यर्थः ॥ ५–७ ॥ यष्टिभिरित्यादिसार्धश्लोकद्वयम् ॥ ८॥ ९ ॥ गजा इति । अत्र निर्यान्तीत्यनुषज्यते । गजानेव विशिनष्टि—ते युद्धेत्यादिना । तोमराङ्कुशपाणिभिः यन्तृभिः । रूढाः आरूढा इत्यर्थः ॥ १० ॥ अन्ये लक्षणसंयुक्ता इति । अत्रापि गजाः ॥ १ ॥ २ ॥ गच्छ निर्याहि इत्याभ्यां सर्वथा गन्तव्यमिति बोध्यते ॥ ३ ॥ बहुभिः, बलाध्यक्षैरिति शेषः ॥ ४ ॥ ५ ॥ तनुत्राणि संवृत्य आमुच्य ॥ ६–९ ॥ गजा इत्यादिसार्धश्लोक एकं वाक्यम् । तोमराङ्कुशपाणिभिः रूढाः आरूढाः ये युद्धकुशलाः लक्षणसंयुक्ताः अन्ये ये गजाः ते गजाः, निर्यान्तीति शेषः ॥ १० ॥ ११ ॥ विप्रस्थितं विशेषेण कृतप्रस्थानम् । सविद्युतः नीलस्य रक्षोबलस्य स्वर्णभूषणबहुलत्वात्सविद्युन्मेघोपमेयत्वम् ॥ १२ ॥

निर्यान्तीत्यनुषङ्गः ॥ ११–१२ ॥ विघनात् घनशून्यात् ॥ १४ ॥ १५ ॥ औत्पातिकान् अशुभसूचकान् ॥ १६ ॥ पूरयन् अपूरयंश्चेत्यर्थः । केचित्तु



निस्सृता दक्षिणद्वारादङ्गदो यत्र यूथपः । तेषां निष्क्रममाणानामशुभं समजायत ॥ १३ ॥ आकाशाद्विघनात्तीव्रा उल्काश्चाभ्यपतंस्तदा । वमन्त्यः पावकज्वालाः शिवा घोरं ववाशिरे ॥ १४ ॥ व्याहरन्ति मृगा घोरा रक्षसां निधनं तदा । समापतन्तो योधास्तु प्रास्खलन् भयमोहिताः ॥ १५ ॥ एतानौत्पातिकान् दृष्ट्वा वज्रदंष्ट्रो महाबलः । धैर्यमालम्ब्य तेजस्वी निर्जगाम रणोत्सुकः ॥ १६ ॥ तांस्तु निष्क्रमतो दृष्ट्वा वानरा जितकाशिनः । प्रणेदुः सुमहानादान् पूरयंश्च दिशो दश ॥ १७ ॥ ततः प्रवृत्तं तुमुलं हरीणां राक्षसैः सह । घोराणां भीमरूपाणामन्योन्यवधकांक्षिणाम् ॥ १८ ॥ निष्पतन्तो महोत्साहा भिन्नदेहशिरोधराः । रुधिरोक्षितसर्वाङ्गा न्यपतन् जगतीतले ॥ १९ ॥ केचिदन्योन्यमासाद्य शूराः परिघपाणयः । चिक्षिपुर्विविधं शस्त्रं समरेष्वनिवर्तिनः ॥ २० ॥ द्रुमाणां च शिलानां च शस्त्राणां चापि निस्वनः । श्रूयते सुमहांस्तत्र घोरो हृदयभेदनः ॥ २१ ॥ रथनेमिस्वनस्तत्र धनुषश्चापि निस्वनः । शङ्खभेरीमृदङ्गानां बभूव तुमुलः स्वनः ॥ २२ ॥ केचिदस्त्राणि संसृज्य बाहुयुद्धमकुर्वत ॥ २३ ॥ तलैश्च चरणैश्चापि मुष्टिभिश्च द्रुमैरपि । जानुभिश्च हताः केचिद् भिन्नदेहाश्च राक्षसाः । शिलाभिश्चूर्णिताः केचिद्वानरैर्युद्धदुर्मदैः ॥ २४ ॥

पूरयन् पूरयन्त इत्यर्थः, वचनव्यत्यय आर्ष इत्याहुः ॥ १७ ॥ तत इति । तुमुलं रणसङ्कुलम् । "तुमुलं रणसङ्कुले" इत्यमरः ॥ १८–२२ ॥ केचिदिति । अस्त्राणि संसृज्य सर्वाण्यस्त्राणि प्रयुज्य । तदनन्तरमस्त्राभावात् बाहुयुद्धमकुर्वतेत्यर्थः ॥ २३–२५ ॥

निस्सृताः, राक्षसा इति शेषः ॥ १३ ॥ आकाशादिति । विघनात् निर्मेघात् ॥ १४ ॥ १५ ॥ औत्पातिकान् अशुभसूचकान् ॥ १६ ॥ जितकाशिनः जितेन जयेन काशन्ते प्रकाशन्ते इति तथा । नादयन् नादयन्तः । वचनव्यत्यय आर्षः ॥ १७ ॥ तुमुलं रणसङ्कटम् । "तुमुलं रणसङ्कटे" इति विश्वः ॥ १८–२० ॥ हृदयभेदनः भयङ्कर इत्यर्थः ॥ २१ ॥ २२ ॥ अस्त्राणि संसृज्य सर्वाण्यस्त्राणि प्रयुज्य तदनन्तरमस्त्राभावाद्बाहुयुद्धमकुर्वतेत्यर्थः ॥ २३–२५ ॥

बलवन्त इति । अस्त्रविदुषः अस्त्रविद्वांसः । प्रथमार्थे द्वितीया ॥ २६ ॥ निघ्नत इत्यादिश्लोकद्वयमेकान्वयम् । संवर्तके प्रलयकाले । तान् राक्षसगणानित्यत्र निजघानेति विपरिणामः ॥ २७–३० ॥ हारेति । शारदीव यथा निशेत्यत्र इवशब्दयथाशब्दावेकार्थकौ, अपिचेतिवत् । इवशब्दः पादपूरण इत्येके ॥ ३१ ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥



वज्रदंष्ट्रो भृशं बाणै रणे वित्रासयन् हरीन् । चचार लोकसंहारे पाशहस्त इवान्तकः ॥ २५ ॥ बलवन्तोऽस्त्रविदुषो नानाप्रहरणा रणे । जघ्नुर्वानरसैन्यानि राक्षसाः क्रोधमूर्च्छिताः ॥ २६ ॥ निघ्नतो राक्षसान् दृष्ट्वा सर्वान् वालिसुतो रणे । क्रोधेन द्विगुणाविष्टः संवर्तक इवानलः ॥ २७ ॥ तान् राक्षसगणान् सर्वान् वृक्षमुद्यम्य वीर्यवान् । अङ्गदः क्रोधताम्राक्षः सिंहः क्षुद्रमृगानिव । चकार कदनं घोरं शक्रतुल्यपराक्रमः ॥ २८ ॥ अङ्गदाभिहतास्तत्र राक्षसा भीमविक्रमाः । विभिन्नशिरसः पेतुर्विकृत्ता इव पादपाः ॥ २९ ॥ रथैरश्वैर्ध्वजैश्चित्रैः शरीरैर्हरिरक्षसाम् । रुधिरेण च सञ्छन्ना भूमिर्भयकरी तदा ॥ ३० ॥ हारकेयूरवस्त्रैश्च शस्त्रैश्च समलंकृता । भूमिर्भाति रणे तत्र शारदीव यथा निशा ॥ ३१ ॥ अङ्गदस्य च वेगेन तद्राक्षसबलं महत् । प्राकम्पत तदा तत्र पवनेनाम्बुदो यथा ॥ ३२ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

बलस्य च निघातेन अङ्गदस्य जयेन च । राक्षसः क्रोधमाविष्टो वज्रदंष्ट्रो महाबलः ॥ १ ॥
स विस्फार्य धनुर्घोरं शक्राशनिसमस्वनम् । वानराणामनीकानि प्राकिरच्छरवृष्टिभिः ॥ २ ॥

अथ वज्रदंष्ट्रवधश्चतुष्पञ्चाशे–बलस्य चेत्यादिश्लोकद्वयमेकान्वयम् ॥ १–२ ॥

अस्त्रविदुषः अस्त्रविद्वांसः ॥ २६ ॥ संवर्तके प्रलयकाले ॥ २७ ॥ तान् राक्षसगणान्, निजघानेति शेषः ॥ २८ ॥ २९ ॥ भयकरी भयङ्करी, अभूदिति शेषः । मुमभाव आर्षः ॥ ३०–३२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां त्रिपञ्चाशः सर्गः ॥ ५३ ॥ ( पवनेनाम्बुदो यथेत्युत्तरं सर्गच्छेदः क्वचित्, सोऽयुक्तः । वृत्तभेदप्रकरणभेदाद्यभावादिति कतकः । ) ॥ १–२ ॥

वानराणामिति निर्धारणे षष्ठी ॥ ४ ॥ तत्र कपिमुख्येष्वित्यन्वयः । आयोधने युद्धे ॥ ५ ॥ ६ ॥ तद्राक्षसगणानां चेति । ते च राक्षसगणाश्च तद्राक्षसगणाः तेषाम् । तच्छब्देन वानरा उच्यन्ते । युद्ध्यमानानां सुयुद्धं समवर्ततेत्यनेन उत्तरोत्तरयुद्धाधिक्यमुच्यते ॥ ७ ॥ पादैश्च बाहुभिरित्युपलक्षणे तृतीया ।



राक्षसाश्चापि मुख्यास्ते रथेषु समवस्थिताः । नानाप्रहरणाः शूराः प्रायुद्ध्यन्त तदा रणे ॥ ३ ॥ वानराणां तु शूरा ये सर्वे ते प्लवगर्षभाः । आयुद्ध्यन्त शिलाहस्ताः समवेताः समन्ततः ॥ ४ ॥ तत्रायुधसहस्राणि तस्मिन्नायोधने भृशम् । राक्षसाः कपिमुख्येषु पातयाञ्चक्रिरे तदा ॥ ५ ॥ वानराश्चापि रक्षस्सु गिरीन् वृक्षान् महाशिलाः । प्रवीराः पातयामासुर्मत्तवारणसन्निभाः ॥ ६ ॥ शूराणां युद्ध्यमानानां समरेष्वनिवर्तिनाम् । तद्राक्षसगणानां च सुयुद्धं समवर्तत ॥ ७ ॥ प्रभिन्नशिरसः केचिद्भिन्नैः पादैश्च बाहुभिः । शस्त्रैरर्पितदेहास्तु रुधिरेण समुक्षिताः ॥ ८ ॥ हरयो राक्षसाश्चैव शेरते गां समाश्रिताः । कङ्कगृध्रबलैराढ्या गोमायुगणसङ्कुलाः ॥ ९ ॥ कबन्धानि समुत्पेतु र्भीरूणां भीषणानि वै ॥ १० ॥ भुजपाणिशिरश्छिन्नाश्छिन्नकायाश्च भूतले। वानरा राक्षसाश्चापि निपेतुस्तत्र वै रणे ॥ ११ ॥ ततो वानरसैन्येन हन्यमानं निशाचरम् । प्राभज्यत बलं सर्वं वज्रदंष्ट्रस्य पश्यतः ॥ १२ ॥

अर्पितदेहाः आरोपितदेहाः । गां भूमिम् । कङ्कः अवटः स च श्येनविशेषः । गृध्रः दूरदर्शी । बलः श्येनविशेषः काकश्च, तैराढ्याः व्याप्ताः ॥ ८॥९॥ कबन्धानीत्यर्धम् ॥ १० ॥ पुनः केषांचित्पतनमाह—भुजेति । भुजपाणिशिरस्सु छिन्नाः । छिन्नकायाः छिन्नमध्यकायाः ॥ ११ ॥ तत इति । निशाचरं निशाचरसम्बन्धि । अण् वृद्ध्यभाव आर्षः । यद्वा निशायां चरतीति योगमात्रविवक्षा ॥ १२ ॥

वानराणामिति निर्धारणे षष्ठी ॥ ४ ॥ तत्र कपिमुख्येषु । तस्मिन्नायोधने युद्धे ॥ ५–७ ॥ तदिति । पादैश्च बाहुभिरित्येतदुपलक्षणे तृतीया ॥ ८ ॥ हरय इति । बलः काकः श्येनविशेषो वा, कङ्कगृध्रबलैराढ्या व्याप्ता इत्यर्थः ॥ ९ ॥ १० ॥ निशाचरं वृद्ध्यभाव आर्षः । यद्वा निशि चरतीति निशाचरम् । प्राभज्यत

भयवित्रस्तान् भयहेतुभ्यो वित्रस्तान् ॥ १३ ॥ १४ ॥ बिभेदेति । सप्ताष्टौ नव पञ्च चेति, एकैकप्रयोगेणेति शेषः ॥ १५–१७ ॥ रामानु०–तत इति । उदीक्षन्तम् उदीक्षमाणम् ॥ १७ ॥ वज्रदंष्ट्र इति । हरिमत्तगजौ सिंहमत्तगजौ ॥ १८–२३ ॥ सा वज्रदंष्ट्रधृता गदा आक्षिप्ता अपहृता ॥ २४ ॥

राक्षसान् भयवित्रस्तान् हन्यमानान् प्लवङ्गमैः। दृष्ट्वा स रोषताम्राक्षो वज्रदंष्ट्रः प्रतापवान् ॥ १३ ॥ प्रविवेश धनुष्पाणिस्त्रासयन् हरिवाहिनीम् । शरैर्विदारयामास कङ्कपत्रैरजिह्मगैः ॥ १४ ॥ बिभेद वानरांस्तत्र सप्ताष्टौ नव पञ्च च । विव्याध परमक्रुद्धो वज्रदंष्ट्रः प्रतापवान् ॥ १५ ॥ त्रस्ताः सर्वे हरिगणाः शरैः संकृत्तकन्धराः । अङ्गदं सम्प्रधावन्ति प्रजापतिमिव प्रजाः ॥ १६ ॥ ततो हरिगणान् भग्नान् दृष्ट्वा वालिसुतस्तदा । क्रोधेन वज्रदंष्ट्रं तमुदीक्षन्तमुदैक्षत ॥ १७ ॥ वज्रदंष्ट्रोऽङ्गदश्चोभौ सङ्गतौ हरिराक्षसौ । चेरतुः परमक्रुद्धौ हरिमत्तगजाविव ॥ १८ ॥ ततः शरसहस्रेण वालिपुत्रं महाबलः । जघान मर्मदेशेषु मातङ्गमिव तोमरैः ॥ १९ ॥ रुधिरोक्षितसर्वाङ्गो वालिसूनुर्महाबलः । चिक्षेप वज्रदंष्ट्राय वृक्षं भीमपराक्रमः ॥२०॥ दृष्ट्वाऽऽपतन्तं तं वृक्षमसम्भ्रान्तश्च राक्षसः । चिच्छेद बहुधा सोऽपि निकृत्तः पतितो भुवि ॥२१॥ तं दृष्ट्वा वज्रदंष्ट्रस्य विक्रमं प्लवगर्षभः । प्रगृह्य विपुलं शैलं चिक्षेप च ननाद च ॥ २२ ॥ समापतन्तं तं दृष्ट्वा रथादाप्लुत्य वीर्यवान् । गदापाणिरसम्भ्रान्तः पृथिव्यां समतिष्ठत ॥ २३ ॥ साऽङ्गदेन गदाऽऽक्षिप्ता गत्वा तु रणमूर्धनि ॥ २४ ॥ सचक्रकूबरं साश्वं प्रममाथ रथं तदा ॥ २५ ॥ ततोऽन्यं गिरिमाक्षिप्य विपुलं द्रुमभूषितम् । वज्रदंष्ट्रस्य शिरसि पातयामास सोऽङ्गदः ॥२६॥ अभवच्छोणितोद्गारी वज्रदंष्ट्रः स मूर्च्छितः । मुहूर्तमभवन्मूढो गदामालिङ्ग्य निःश्वसन् ॥ २७ ॥

सः अङ्गदक्षिप्तशैलः ॥ २५ ॥ २६ ॥ शोणितोद्गारी रक्तोद्गारी । गदाम् अन्याम् । यद्वा " जघान परमक्रुद्धो वक्षोदेशे निशाचरः " इत्यस्यानन्तरं भग्नमभूत् ॥ ११–१४ ॥ सप्ताष्ट नव पञ्च विभेद, एकैकेन शरेणेति शेषः ॥ १५ ॥ संप्रधावन्ति धावन्ति स्म ॥ १६ ॥ १७ ॥ हरिमत्तगजाविव हरिरिह शार्दूलः सिंहेन गजस्य युद्धासंभवात् । ( स्वप्नेऽपि सिंहदर्शनेन गजानां मरणमिति कतकः ) ॥ १८–३० ॥

"साऽङ्गदेन गदाऽऽक्षिता गत्वा तु रणमूर्धनि" इत्यर्धं योज्यम् ॥२७॥ अवर्तत अवर्त्तयत् ॥२८॥२९॥ ततः परमतेजस्वीत्यादि श्लोकद्वयमेकान्वयम् । वृक्षोत्पाटनार्षभचर्मखड्गग्रहणादिकमङ्गदस्योच्यमानमितरस्याप्युपलक्षणम् । विचित्रांश्चेरतुर्मार्गानिति वक्ष्यमाणयुद्धस्य उभयोरविशेषेण वर्णनात् ।



स लब्धसंज्ञो गदया वालिपुत्रमवस्थितम् । जघान परमक्रुद्धो वक्षोदेशे निशाचरः । गदां त्यक्त्वा ततस्तत्र मुष्टियुद्धमवर्तत ॥ २८ ॥ अन्योन्यं जघ्नतुस्तत्र तावुभौ हरिराक्षसौ । रुधिरोद्गारिणौ तौ तु प्रहारैर्जनितश्रमौ । बभूवतुः सुविक्रान्तावङ्गारकबुधाविव ॥ २९ ॥ ततः परमतेजस्वी अङ्गदः कपिकुञ्जरः । उत्पाट्य वृक्षं स्थितवान् बहुपुष्पफलान्वितम् ॥ ३० ॥ जग्राह चार्षभं चर्म खड्गं च विपुलं शुभम् । किङ्किणीजालसञ्छन्नं चर्मणा च परिष्कृतम् ॥ ३१ ॥ [ वज्रदंष्ट्रोऽथ जग्राह सोऽङ्गदोऽप्यासिचर्मणी । ] विचित्रांश्चेरतुर्मार्गान् रुषितौ कपिराक्षसौ । जघ्नतुश्च तदाऽन्योन्यं निर्दयं जयकाङ्क्षिणौ ॥ ३२ ॥ व्रणैः सास्रैरशोभेतां पुष्पिताविव किंशुकौ । युद्ध्यमानौ परिश्रान्तौ जानुभ्यामवनीं गतौ ॥ ३३ ॥ निमेषान्तरमात्रेण अङ्गदः कपिकुञ्जरः । उदतिष्ठत दीप्ताक्षो दण्डाहत इवोरगः ॥ ३४ ॥ निर्मलेन सुधौतेन खड्गेनास्य महच्छिरः । जघान वज्रदंष्ट्रस्य वालिसूनुर्महाबलः ॥ ३५ ॥ रुधिरोक्षितगात्रस्य बभूव पतितं द्विधा । सरोषपरिवृत्ताक्षं शुभं खड्गहतं शिरः ॥ ३६ ॥

अङ्गदेन वृक्षे गृहीते राक्षसोऽपि वृक्षं जग्राह । अङ्गदेन खड्गादौ गृहीते राक्षसोऽपि खड्गादिकं जग्राहेति भावः । आर्षभं चर्म ऋषभचर्मपिनद्धं फलकम् । चर्मणा खड्गकोशेन ॥ ३० ॥ ३१ ॥ रामानु०—स जग्राहार्षभं चर्मेति पाठः । सः वज्रदंष्ट्रः ॥ ३१ ॥ विचित्रानिति । मार्गान् पूर्वोक्तमण्डलादिमार्गान् । निर्दयं जघ्नतुरित्यन्वयः ॥ ३२ ॥ व्रणैरिति । सास्रैः सरुधिरैः । "अस्रमश्रुणि शोणिते" इत्यमरः । अवनीं गतौ, अभूतामिति शेषः ॥ ३३ ॥ निमेषेति । निमेषान्तरमात्रेण निमेषावकाशमात्रेण ॥ ३४ ॥ निर्मलेनेति । सुधौतेन शाणोल्लिखितेन अत एव निर्मलेन । अस्य वज्रदंष्ट्रस्येत्यन्वयः । केचित्तु—स जग्राहार्षभं चर्म एतदङ्गदस्य कथनमितरस्याप्युपलक्षणम् । विचित्रांश्चेरतुर्मार्गानिति वक्ष्यमाणयुद्धे ह्युभयोरविशेषवर्णनात् ॥ ३१—३७ ॥

स जग्राहार्षभं चर्मेति पठित्वा सः वज्रदंष्ट्रः खड्गं जग्राह अङ्गदो वृक्षं जग्राहेति व्याख्याय, खड्गेनास्य महच्छिर इत्यत्र वृक्षे प्रतिहतेऽङ्गदोऽपि चर्मासी जग्राहेति अनेनावगम्यत इत्यपि वर्णयन्ति ॥ ३५ ॥ ३६ ॥ रामानु०—खड्गेनास्य वज्रदंष्ट्रस्य शिरो जघानेत्यनेन वृक्षे प्रतिहतेऽङ्गदोऽपि चर्मासी जग्राहेत्यवगम्यते ॥ ३५ ॥



वज्रदंष्ट्रं हतं दृष्ट्वा राक्षसा भयमोहिताः । त्रस्ताः प्रत्यपतन् लङ्कां वध्यमानाः प्लवङ्गमैः । विषण्णवदना दीना ह्रिया किंचिदवाङ्मुखाः ॥ ३७ ॥ निहत्य तं वज्रधरप्रभावः स वालिसूनुः कपिसैन्यमध्ये । जगाम हर्षं महितो महाबलः सहस्रनेत्रस्त्रिदशैरिवावृतः ॥३८॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमद्युद्धकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

वज्रदंष्ट्रं हतं श्रुत्वा वालिपुत्रेण रावणः। बलाध्यक्षमुवाचेदं कृताञ्जलिमवस्थितम् ॥१॥ शीघ्रं निर्यान्तु दुर्धर्षा राक्षसा भीमविक्रमाः । अकम्पनं पुरस्कृत्य सर्वशस्त्रप्रकोविदम् ॥ २ ॥ एष शास्ता च गोप्ता च नेता च युधि संमतः । भूतिकामश्च मे नित्यं नित्यं च समरप्रियः ॥ ३ ॥ एष जेष्यति काकुत्स्थौ सुग्रीवं च महाबलम् । वानरांश्चा परान् घोरान् हनिष्यति परन्तपः ॥ ४ ॥ परिगृह्य स तामाज्ञां रावणस्य महाबलः । बलं सन्त्वरयामास तदा लघु पराक्रमः ॥ ५ ॥ ततो नानाप्रहरणा भीमाक्षा भीमदर्शनाः । निष्पेतू रक्षसां मुख्या बलाध्यक्षप्रचोदिताः ॥ ६ ॥

विषण्णवदनाः शुष्कवदनाः । तृतीयायां वज्रदंष्ट्रवधः ॥ ३७ ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्ड व्याख्याने चतुष्पञ्चाशः सर्गः ॥ ५४ ॥ अथाकम्पनयुद्धं पञ्चपञ्चाशे—वज्रदंष्ट्रमित्यादि । बलाध्यक्षं प्रहस्तम् ॥ १ ॥ २ ॥ एष इति । शास्ता परसैन्य निग्राहकः । गोप्ता स्वबलरक्षकः । नेता नायकः, सेनापतिरित्यर्थः । संमतः प्रसिद्धः ॥ ३ ॥ ४ ॥ परिगृह्येति । बलचोदनेन स्वचोदनमर्थसिद्धं मत्वेत्यर्थः ॥ ५ ॥ तत इति । निष्पेतुः पुरात् निर्ययुः ॥ ६ ॥

महितः पूजितः ॥ तृतीयायां वज्रदंष्ट्रवधः ॥३८॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां चतुष्पञ्चाशः सर्गः ॥५४॥ वज्रदंष्ट्रमिति । बलाध्यक्षं प्रहस्तम् ॥ १--६ ॥

मेघाभः मेघवत् स्थूलः । मेघस्वनमहास्वनः । "सप्तम्युपमानपूर्वपदस्य" इत्यादिना उत्तरपदलोपस्य वैकल्पिकत्वे प्रथमस्वनपदश्रवणम् ॥ ७ ॥ प्रसङ्गादाह—न हीति । हि यस्मात् महामृधे महायुद्धेऽपि कम्पयितुं न शक्यते अतो हेतोरकम्पनः अकम्पनशब्दवाच्यः । तेषां रक्षसाम् मध्ये

रथमास्थाय विपुलं तप्तकाञ्चनकुण्डलः । मेघाभो मेघवर्णश्च मेघस्वनमहास्वनः । राक्षसैः संवृतो भीमैस्तदा निर्यात्यकम्पनः ॥ ७ ॥ न हि कम्पयितुं शक्यः सुरैरपि महामृधे । अकम्पनस्ततस्तेषामादित्य इव तेजसा ॥८॥ तस्य निर्धावमानस्य संरब्धस्य युयुत्सया । अकस्माद्दैन्यमागच्छद्धयानां रथवाहिनाम् ॥ ९ ॥ व्यस्फुरन्नयनं चास्य सव्यं युद्धाभिनन्दिनः । विवर्णो मुखवर्णश्च गद्गदश्चाभवत् स्वनः ॥ १० ॥ अभवत् सुदिने चापि दुर्दिनं रूक्ष मारुतम् । ऊचुः खगा मृगाः सर्वे वाचः क्रूरा भयावहाः ॥ ११ ॥ स सिंहोपचितस्कन्धः शार्दूलसमविक्रमः । तानुत्पातानचिन्त्यैव निर्जगाम रणाजिरम् ॥ १२ ॥ तदा निर्गच्छतस्तस्य रक्षसः सह राक्षसैः । बभूव सुमहान्नादः क्षोभयन्निव सागरम् ॥ १३ ॥ तेन शब्देन वित्रस्ता वानराणां महाचमूः । द्रुमशैलप्रहरणा योद्धुं समवतिष्ठत ॥ १४ ॥ तेषां युद्धं महारौद्रं सञ्जज्ञे हरिरक्षसाम् । रामरावणयोरर्थे समभित्यक्तजीविनाम् ॥ १५ ॥ सर्वे ह्यतिबलाः शूराः सर्वे पर्वतसन्निभाः । हरयो राक्षसाश्चैव परस्परजिघांसवः ॥ १६ ॥ तेषां विनर्दतां शब्दः संयुगेऽतितरस्विनाम् । शुश्रुवे सुमहान् क्रोधादन्योन्यमभिगर्जताम् ॥ १७ ॥

तेजसा आदित्य इव स्थित इत्यर्थः ॥ ८ ॥ ९ ॥ रामानु०—हयानां रथवाहिनामिति पाठः ॥ ९ ॥ व्यस्फुरदित्यादि । विवर्णः विपरीतवर्णः । दुर्दिनं मेघच्छन्नदिनम् । "मेघच्छन्नेऽह्नि दुर्दिनम्" इत्यमरः ॥१०॥११॥ सिंहोपचितस्कन्धः सिंहस्येवोन्नतस्कन्धवान् ॥१२–१४॥ तेषामिति । समभित्यक्तजीविनां तृणीकृतशरीराणामित्यर्थः ॥ १५ ॥ सर्वं इति । परस्परजिघांसवः, आसन्निति शेषः ॥ १६ ॥ तेषामिति । विनर्दतां सिंहनादं कुर्वताम् । अभिगर्जताम् रथ मिति । परिमाणतो मेघतुल्यः । मेघवर्णः मेघवन्नीलवर्णः । मेघाभः मेघसमानदेहप्रमाणः । मेघस्य स्वन इव महान् स्वनो यस्य सः तथा । निर्याति यातिस्म ॥ ७ ॥ ८ ॥ रथवहनकर्तॄणां हयानाम् अकस्मान्निर्हेतुकमेवाऽदैन्यमागच्छत्, गत इति शेषः ॥ ९ ॥ १० ॥ अभवदिति । सुदिने चापि मेघावरणायोग्यदिवसेऽपि दुर्दिनं मेघावरणमभवत् ॥११–१४॥ समभित्यक्तदेहिनाम् इति पाठः । समभित्यक्ता देहिनः आत्मानो यैस्ते तेषाम्, आत्मरक्षानिरपेक्षाणाम् इति यावत् ॥१५–१७॥

आभिमुख्येन गर्जनं कुर्वताम् ॥ १७ ॥ रजश्चेति । अरुणवर्णेन रक्तिमा आभातीत्यरुणवर्णाभम् ॥ १८ ॥ अन्योन्यमिति । कौशेयोद्धूतपाण्डुना, उद्धूत कौशेयपाण्डुना । आहिताग्न्यादित्वात् परनिपातः । रजसो रक्तत्वपाण्डुत्वे भूभेदादिति ज्ञेयम् । संवृतानि छन्नानि । भूतानि वस्तूनि न ददृशुः, वानराः



रजश्चारुणवर्णाभं सुभीममभवद्भृशम् । उद्धूतं हरिरक्षोभिः संरुरोध दिशो दश ॥ १८ ॥ अन्योन्यं रजसा तेन कौशेयोद्धूतपाण्डुना । संवृतानि च भूतानि ददृशुर्न रणाजिरे ॥ १९ ॥ न ध्वजा न पताका वा वर्म वा तुरगोऽपि वा । आयुधं स्यन्दनं वाऽपि ददृशे तेन रेणुना ॥ २० ॥ शब्दश्च सुमहांस्तेषां नर्दतामभिधावताम् । श्रूयते तुमुले युद्धे न रूपाणि चकाशिरे ॥ २१ ॥ हरीनेव सुसंक्रुद्धा हरयो जघ्नुराहवे । राक्षसाश्चापि रक्षांसि निजघ्नुस्तिमिरे तदा ॥२२॥ परांश्चैव विनिघ्नन्तः स्वांश्च वानरराक्षसाः । रुधिरार्द्रां तदा चक्रुर्महीं पङ्कानुलेपनाम् ॥२३॥ ततस्तु रुधिरौघेण सिक्तं व्यपगतं रजः । शरीरशवसङ्कीर्णा बभूव च वसुन्धरा ॥ २४ ॥ द्रुमशक्तिशिलाप्रासैर्गदापरिघतोमरैः । हरयो राक्षसाश्चैव जघ्नुरन्योन्यमोजसा ॥२५॥ बाहुभिः परिघाकारैर्युद्धचन्तः पर्वतोपमाः । हरयो भीमकर्माणो राक्षसान् जघ्नुराहवे ॥ २६ ॥ राक्षसास्त्वपि संक्रुद्धाः प्रासतोमरपाणयः । कपीन्निजघ्निरे तत्र शस्त्रैः परमदारुणैः ॥ २७ ॥

राक्षसाश्चेति शेषः ॥ १९ ॥ उक्तं विवृणोति–न ध्वजा इति । वर्मादिष्वपि नञनुवर्तनीयः ॥ २० ॥ परस्परादर्शनादिजन्यं शब्दान्तरमाह–शब्दश्चेति । रूपाणि पदार्थान्तराणि ॥ २१ ॥ अदर्शनफलमाह–हरीनिति ॥ २२ ॥ परानिति । प्रथमं रक्तार्द्राम् अथ चरणक्षोदेन पाङ्किलामित्यर्थः । पङ्कानुलेपनां पङ्कानुलिप्ताम् । कर्मणि ल्युट् ॥ २३ ॥ तत इति । शरीरशवसङ्कीर्णा शवभूतशरीरसङ्कीर्णा ॥ २४ ॥ द्रुमेति । द्रुमशैला वानरीयाः । शक्त्यादयो राक्षसीयाः ॥ २५ ॥ बाहुभिरिति । बाहुभिः परिघाकारैरित्यस्योत्तरार्धः–हरयो भीमकर्माणो राक्षसान् जघ्नुराहवे इति ॥ २६ ॥ राक्षसास्त्वपीति ।



अरुणवर्णाभं धूम्रवर्णस्य वस्तुन आभा यस्मिन् तत् । अरुणशब्दो धूम्रपर्यायोऽपि ॥ १८ ॥ कौशेयोद्धूतपाण्डुना धौतकौशेयपाण्डुनेत्यर्थः । भूतानि कपिरक्षोलक्षणप्राणिनः ॥ १९–२७ ॥

शस्त्रैः उक्तप्रासादिभिः ॥ २७ ॥ अकम्पन इति । संहर्षयति उत्साहयति ॥ २८ ॥ रामानुज—संहर्षयति समहर्षयत, संभावयामासेत्यर्थः । तान् कपीन्निघ्नतः ॥ २८ ॥ अभिक्रम्य अभिमुखीभूय । आच्छिद्य अपहृत्य ॥ २९ ॥ एतस्मिन्निति । स्पष्टः ॥ ३० ॥ ते त्वित्यादिसार्धश्लोकः । लीलया अनायासेन ॥ ३१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

अकम्पनः सुसंक्रुद्धो राक्षसानां चमूपतिः । संहर्षयति तान् सर्वान् राक्षसान् भीमविक्रमान् ॥ २८ ॥ हरयस्त्वपि रक्षांसि महाद्रुममहाश्मभिः । विदारयन्त्यभिक्रम्य शस्त्राण्याच्छिद्य वीर्यतः ॥ २९ ॥ एतस्मिन्नन्तरे वीरा हरयः कुमुदो नलः । मैन्दश्च द्विविदः क्रुद्धाश्चक्रुर्वेगमनुत्तमम् ॥ ३० ॥ ते तु वृक्षैर्महावेगा राक्षसानां चमूमुखे । कदनं सुमहच्चक्रुर्लीलया हरियूथपाः । ममन्थू राक्षसान् सर्वे वानरा गणशो भृशम् ॥ ३१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

तद्दृष्ट्वा सुमहत् कर्म कृतं वानरसत्तमैः । क्रोधमाहारयामास युधि तीव्रमकम्पनः ॥ १ ॥ क्रोधमूर्च्छितरूपस्तु धुन्वन् परमकार्मुकम् । दृष्ट्वा तु कर्म शत्रूणां सारथिं वाक्यमब्रवीत् ॥ २ ॥ तत्रैव तावत्त्वरितं रथं प्रापय सारथे । यत्रैते बहवो घ्नन्ति सुबहून् राक्षसान् रणे ॥ ३ ॥ एतेऽत्र बलवन्तो हि भीमकायाश्च वानराः । द्रुमशैलप्रहरणास्तिष्ठन्ति प्रमुखे मम ॥ ४ ॥ एतान्निहन्तुमिच्छामि समरश्लाघिनो ह्यहम् । एतैः प्रमथितं सर्वं दृश्यते राक्षसं बलम् ॥ ५ ॥ ततः प्रजवनाश्वेन रथेन रथिनां वरः । हरीनभ्यहनत् क्रोधाच्छरजालैरकम्पनः ॥ ६ ॥ न स्थातुं वानराः शेकुः किं पुनर्योद्धुमाहवे । अकम्पनशरैर्भग्नाः सर्व एव विदुद्रुवुः ॥ ७ ॥

अथाकम्पनवधः षट्पञ्चाशे—तद्दृष्ट्वेत्यादि ॥ १–३ ॥ एत इति । प्रमुखे अग्रे ॥ ४ ॥ ५ ॥ तत इति । प्रजवनाश्वेन वेगवदश्वेन ॥ ६ ॥ ७ ॥

अकम्पन इति । संहर्षयति संभावयामासेत्यर्थः ॥ २८ ॥ शस्त्राण्याच्छिद्य वानराः, परहस्तादिति शेषः ॥ २९–३१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां पञ्चपञ्चाशः सर्गः ॥ ५५ ॥ (अत्र सर्गविच्छेदः प्रमादादिति कतकः ॥) ॥ १–१४ ॥

तानिति । उपतस्थे अकम्पनसमीपमाजगाम ॥८-११॥ अकम्पनवधार्थाय अकम्पनवधरूपप्रयोजनाय ॥१२॥१३॥ तस्य हनुमतः ॥१४॥ अप्रहरणम्



तान् मृत्युवशमापन्नानकम्पनवशं गतान् । समीक्ष्य हनुमान् ज्ञातीनुपतस्थे महाबलः ॥ ८ ॥ तं महाप्लवगं दृष्ट्वा सर्वे प्लवगयूथपाः । समेत्य समरे वीराः संहृष्टाः पर्यवारयन् ॥ ९ ॥ अवस्थितं हनूमन्तं ते दृष्ट्वा हरियूथपाः । बभूवुर्बलवन्तो हि बलवन्तं समाश्रिताः ॥ १० ॥ अकम्पनस्तु शैलाभं हनूमन्तमवस्थितम् । महेन्द्र इव धाराभिः शरैरभिववर्ष ह ॥११॥ अचिन्तयित्वा बाणौघान् शरीरे पतितान् शितान् । अकम्पनवधार्थाय मनो दध्रे महाबलः ॥ १२ ॥ स प्रसह्य महातेजा हनूमान् मारुतात्मजः । अभिदुद्राव तद्रक्षः कम्पयन्निव मेदिनीम् ॥ १३ ॥ तस्याभिनर्दमानस्य दीप्यमानस्य तेजसा । बभूव रूपं दुर्धर्षं दीप्तस्येव विभावसोः ॥ १४ ॥ आत्मानमप्रहरणं ज्ञात्वा क्रोधसमन्वितः । शैलमुत्पाटयामास वेगेन हरिपुङ्गवः ॥ १५ ॥ तं गृहीत्वा महाशैलं पाणिनैकेन मारुतिः । स विनद्य महानादं भ्रामयामास वीर्यवान् ॥ १६ ॥ ततस्तमभिदुद्राव राक्षसेन्द्रमकम्पनम् । पुरा हि नमुचिं सङ्ख्ये वज्रेणेव पुरन्दरः ॥ १७ ॥ अकम्पनस्तु तद्दृष्ट्वा गिरिशृङ्गं समुद्यतम् । दूरादेव महाबाणैरर्धचन्द्रैर्व्यदारयत् ॥१८॥ तत्पर्वताग्रमाकाशे रक्षोबाणविदारितम् । विशीर्णं पतितं दृष्ट्वा हनुमान् क्रोधमूर्च्छितः ॥१९॥ सोऽश्वकर्णं समासाद्य रोषदर्पान्वितो हरिः । तूर्णमुत्पाटयामास महागिरिमिवोच्छ्रितम् ॥ २० ॥ तं गृहीत्वा महास्कन्धं सोऽश्वकर्णं महाद्युतिः । प्रहस्य परया प्रीत्या भ्रामयामास संयुगे ॥ २१ ॥

अनायुधम् ॥ १५ ॥ महानादं विनद्य महानादं कृत्वेत्यर्थः ॥ १६ ॥ तत इति । तत्र सः शैलेनेत्यध्याहार्यम् । स हनुमान् अकम्पनं पुरन्दरो नमुचिं यथा तथा शैलेन वज्रेणेवाभिदुद्राव ॥ १७ ॥ १८ ॥ क्रोधमूर्च्छितः, अभूदिति शेषः ॥ १९-२१ ॥



आत्मानमिति । अप्रहरणम् अनायुधम् ॥ १५-१८ ॥ तत्पर्वताग्रमिति । क्रोधमूर्च्छितः, अभूदिति शेषः ॥ १९-२१ ॥

चरणैः चरणन्यासैः । दारयत् अदारयत् ॥ २२ ॥ पदातितया गच्छन्तीति पदातिगाः तान् ॥ २३–२६ ॥ प्ररूढः प्ररूढवृक्षः ॥२७–२९॥ वानरेन्द्रेण



प्रधावन्नूरुवेगेन प्रभञ्जंस्तरसा द्रुमान् । हनुमान् परमक्रुद्धश्चरणैर्दारयत् क्षितिम् ॥ २२ ॥ गजांश्च सगजारोहान् सरथान् रथिनस्तथा । जघान हनुमान् धीमान् राक्षसांश्च पदातिगान् ॥ २३ ॥ तमन्तकमिव क्रुद्धं समरे प्राण हारिणम् । हनुमन्तमभिप्रेक्ष्य राक्षसा विप्रदुद्रुवुः ॥२४॥ तमापतन्तं संक्रुद्धं राक्षसानां भयावहम् । ददर्शाकम्पनो वीरश्चुक्रोध च ननाद च ॥ २५ ॥ स चतुर्दशभिर्बाणैः शितैर्देहविदारणैः । निर्बिभेद हनूमन्तं महावीर्यमकम्पनः ॥ २६ ॥ स तदा प्रतिविद्धस्तु बह्वीभिः शरवृष्टिभिः । हनुमान् ददृशे वीरः प्ररूढ इव सानुमान् ॥ २७ ॥ विरराज महाकायो महावीर्यो महामनाः । पुष्पिताशोकसङ्काशो विधूम इव पावकः ॥ २८ ॥ ततोऽन्यं वृक्षमुत्पाट्य कृत्वा वेगमनुत्तमम् । शिरस्यभिजघानाशु राक्षसेन्द्रमकम्पनम् ॥२९॥ स वृक्षेण हतस्तेन सक्रोधेन महात्मना । राक्षसो वानरेन्द्रेण पपात च ममार च ॥ ३० ॥ तं दृष्ट्वा निहतं भूमौ राक्षसेन्द्रमकम्पनम् । व्यथिता राक्षसाः सर्वे क्षितिकम्प इव द्रुमाः ॥ ३१ ॥ त्यक्तप्रहरणाः सर्वे राक्षसास्ते पराजिताः । लङ्कामभिययुस्त्रस्ता वानरैस्तैरभिद्रुताः ॥ ३२ ॥ ते मुक्तकेशाः सम्भ्रान्ता भग्नमानाः पराजिताः । स्रवच्छ्रमजलैरङ्गैः श्वसन्तो विप्रदुद्रुवुः ॥३३॥ अन्योन्यं प्रममन्थुस्ते विविशुर्नगरं भयात् । पृष्ठतस्ते सुसंमूढाः प्रेक्षमाणा मुहुर्मुहुः ॥ ३४ ॥ तेषु लङ्कां प्रविष्टेषु राक्षसेषु महाबलाः । समेत्य हरयः सर्वे हनुमन्तमपूजयन् ॥ ३५ ॥

कर्त्रा । तेन वृक्षेण हत इत्यन्वयः ॥ ३० ॥ क्षितिकम्पे भूकम्पे ॥ ३१–३५ ॥

चरणैः चरणन्यासैः ॥ २२–२६ ॥ स इति । प्ररूढः प्ररूढवृक्षः ॥ २७–२९ ॥ स वृक्षेणेति । चतुर्थ्यर्थाद्यकम्पनः ॥ ३०–३५ ॥

सोऽपीति । प्रत्यभ्यपूजयत् भवत्साहाय्येनैव मया जितमित्येवमिति भावः ॥ ३६-३९ ॥ चतुर्थीमकम्पनवधः ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥



सोऽपि प्रहृष्टस्तान् सर्वान् हरीन् प्रत्यभ्यपूजयत् । हनुमान् सत्त्वसम्पन्नो यथार्हमनुकूलतः ॥ ३६ ॥ विनेदुश्च यथाप्राणं हरयो जितकाशिनः । चकर्षुश्च पुनस्तत्र सप्राणानपि राक्षसान् ॥ ३७ ॥ स वीरशोभामभजन्महाकपिः समेत्य रक्षांसि निहत्य मारुतिः । महासुरं भीमममित्रनाशनं यथैव विष्णुर्बलिनं चमूमुखे ॥ ३८ ॥ अपूजयन् देवगणास्तदा कपिं स्वयं च रामोऽतिबलश्च लक्ष्मणः । तथैव सुग्रीवमुखाः प्लवङ्गमा विभीषणश्चैव महाबलस्तथा ॥ ३९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

अकम्पनवधं श्रुत्वा क्रुद्धो वै राक्षसेश्वरः । किंचिद्दीनमुखश्चापि सचिवांस्तानुदैक्षत ॥ १ ॥ स तु ध्यात्वा मुहूर्तं तु मन्त्रिभिः संविचार्य च । ततस्तु रावणः पूर्वदिवसे राक्षसाधिपः । पुरीं परिययौ लङ्कां सर्वान् गुल्मानवेक्षितुम् ॥ २ ॥ तां राक्षसगणैर्गुप्तां गुल्मैर्बहुभिरावृताम् । ददर्श नगरीं लङ्कां पताकाध्वजमालिनीम् ॥ ३ ॥ रुद्धां तु नगरीं दृष्ट्वा रावणो राक्षसेश्वरः । उवाचामर्षतः काले प्रहस्तं युद्धकोविदम् ॥ ४ ॥ पुरस्योपनिविष्टस्य सहसा पीडितस्य वा । नान्यं युद्धात् प्रपश्यामि मोक्षं युद्धविशारद ॥ ५ ॥

अथ युद्धाय प्रहस्तनिर्याणं सप्तपञ्चाशे—अकम्पनवधमित्यादि ॥ १ ॥ स त्वित्यादिसार्धश्लोक एकान्वयः । ततः स रावणः पुरीं परिययौ । पूर्वदिवसे दिवसस्य पूर्वभागे, पूर्वाह्ण इत्यर्थः । गुल्मान् सेनाव्यूहान् ॥ २ ॥ ३ ॥ काले निदेशार्हसमये ॥ ४ ॥ उप समीपे निविष्टं परसेनानिवेशो यस्य



॥३६-३९॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां षट्पञ्चाशः सर्गः ॥ ५६ ॥ १ ॥ पूर्वदिवसे पूर्वाह्णे ॥ २-४ ॥ उपनिविष्टस्य

तस्य, उपरुद्धस्येत्यर्थः । अत एव वाशब्दश्चार्थे । पीडितस्य च मोक्षं मोक्षोपायम् ॥ ५ ॥ वहेयुरिति शकि लिङ् ॥ ६ ॥ स इति । शीघ्रमादाय । परिगृह्य स्वाधीनं कृत्वा । यत्र वनौकसो वर्तन्ते तत्र इतो निर्याहीत्यन्वयः ॥ ७ ॥ चपला धैर्यरहिता ॥ ८ ॥ ९ ॥ अवशः प्रभुत्वरहितः । "वश

अहं वा कुम्भकर्णो वा त्वं वा सेनापतिर्मम । इन्द्रजिद्वा निकुम्भो वा वहेयुर्भारमीदृशम् ॥ ६ ॥ स त्वं बलमतः शीघ्रमादाय परिगृह्य च । विजयायाभिनिर्याहि यत्र सर्वे वनौकसः ॥ ७ ॥ निर्याणादेव ते नूनं चपला हरिवाहिनी । नर्दतां राक्षसेन्द्राणां श्रुत्वा नादं द्रविष्यति ॥ ८ ॥ चपला ह्यविनीताश्च चलचित्ताश्च वानराः । न सहिष्यन्ति ते नादं सिंहनादमिव द्विपाः ॥ ९ ॥ विद्रुते च बले तस्मिन् रामः सौमित्रिणा सह । अवशस्ते निरालम्बः प्रहस्त वश मेष्यति ॥ १० ॥ आपत् संशयिता श्रेयो न तु निस्संशयीकृता । प्रतिलोमानुलोमं वा यद्वा नो मन्यसे हितम् ॥ ११ ॥ रावणेनैवमुक्तस्तु प्रहस्तो वाहिनीपतिः । राक्षसेन्द्रमुवाचेदमसुरेन्द्रमिवोशना ॥ १२ ॥

मिच्छाप्रभुत्वयोः" इति विश्वः । हे प्रहस्त । ते तव वशमेष्यतीत्यन्वयः ॥ १० ॥ ननु युद्धे सत्यात्महानेरपि सम्भवात्तदकरणमेव श्रेय इत्याशङ्क्य तथात्वे शत्रुकृताया हानेर्निश्चितत्वात् युद्धकरणे तस्याः सन्देहात् "यत्रायुद्धे ध्रुवो मृत्युर्युद्धे जीवितसंशयः । तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः ॥" इत्युक्तरीत्या इदानीं युद्धमेव श्रेय इत्याह—आपदिति । संशयिता वितर्किता । आपत् मृतिः । श्रेयः युद्धे मृतिः श्रेयस्करीत्यर्थः । जयापजययो र्व्यवस्थितत्वेन पाक्षिकजयस्यापि सम्भवादिति भावः । पक्षान्तरं प्रतिक्षिपति—न त्विति । निस्संशयीकृता निश्चिता मृतिस्तु युद्धं विना शत्रुभिर्मरणं तु न श्रेयः एतन्मम मतम् । त्वन्मतं तु किमित्याह—प्रतिलोमेति । प्रतिलोमं मदुक्तप्रकारविपरीतप्रकारम् । अनुलोमं वा नोऽस्माकं यद्धितं मन्यसे,

उप समीपे निविष्टं परसेनानिवेशो यस्य तत्तथोक्तं तस्य, उपरुद्धस्येति यावत् । अत एव वाशब्दश्चार्थे । पीडितस्य च । मोक्षं मोक्षोपायम् ॥ ५–९ ॥ विद्रुत इति । अवशः वशं प्रभुत्वम् तद्रहितः । "वशमिच्छाप्रभुत्वयोः" इति विश्वः ॥ १० ॥ "अवशस्तु निरालम्बः प्रहस्त वशमेष्यति" इत्युक्त्यनन्तरं प्रत्युत्तराप्रदानेन युद्धाननुमतं मत्वा "यत्रायुद्धे ध्रुवो मृत्युर्युद्धे जीवितसंशयः । तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः ॥" इति नीतिशास्त्रमवलम्ब्याह—आपदिति । निस्संशयीकृता युद्धाकरणेऽपि निश्चिता आपत् येन श्रेयः श्रेयस्करी न भवति किन्तु निस्संशयीकृता आपत् मृतिः श्रेयः श्रेयस्करी युद्धे असन्दिग्धा मृतिः

तद्वदेति शेषः । वेति पक्षान्तरे । अहं तदेव श्रेयो मन्ये त्वमन्यच्च यदि मन्यसे तद्वद । तदेवास्माकं हितमित्यर्थः ॥ ११ ॥ १२ ॥ मन्त्रसमये मया यथा निर्धारितं तत्तथा प्रवृत्तमित्याह—राजन्नित्यादिना । कुशलैर्मन्त्रिभिः विभीषणादिभिः सह नः अस्माभिः इदं वक्ष्यमाणं मन्त्रितपूर्वम् । तर्हि मन्त्रितत्वे तथा किमिति नानुष्ठितम् ? तत्राह विवाद इति । परस्परं समवेक्ष्य बहुमतितया आलोच्य । नः अस्माकं विवादश्चापि वृत्तः । येन विभीषणो निरगच्छ

राजन् मन्त्रितपूर्वं नः कुशलैः सह मन्त्रिभिः । विवादश्चापि नो वृत्तः समवेक्ष्य परस्परम् ॥ १३ ॥ प्रदानेन तु सीतायाः श्रेयो व्यवसितं मया । अप्रदाने पुनर्युद्धं दृष्टमेतत्तथैव नः ॥ १४ ॥ सोऽहं दानैश्च मानैश्च सततं पूजितस्त्वया । सान्त्वैश्च विविधैः काले किं न कुर्यां प्रियं तव ॥ १५ ॥ न हि मे जीवितं रक्ष्यं पुत्रदारधनानि वा । त्वं पश्य मां जुहूषन्तं त्वदर्थे जीवितं युधि ॥१६॥ एवमुक्त्वा तु भर्तारं रावणं वाहिनीपतिः । उवाचेदं बलाध्यक्षान् प्रहस्तः पुरतः स्थितान् ॥१७॥ समानयत मे शीघ्रं राक्षसानां महद्बलम् ॥ १८ ॥

दिति भावः ॥ १३ ॥ मन्त्रितमर्थमाह—प्रदानेन त्विति । सीतायाः प्रदानेन तु श्रेयः, अप्रदाने तु युद्धमिति च मम व्यवसितमित्यर्थः । सर्वमरणं युद्धशब्देनोपचर्यते । यथैव व्यवसितं तथैव नः अस्माभिः दृष्टं च ॥ १४ ॥ एवं स्वमतमुक्त्वा सम्प्रति त्वन्मतानुसारेण युद्धमेव करिष्यामीत्याह—सोऽहमित्यादिना । दानैः भूषणादिप्रदानैः । मानैः त्वदधीनं जीवितमित्यादिप्रियभाषणैः । पूजितः उत्कर्षमापादितः । काले आपत्काले । किं न कुर्याम्, जीवितत्यागमपि कुर्यामित्यर्थः ॥ १५ ॥ उक्तमेव विशदयति—न हीति । जुहूषन्तं होतुमिच्छन्तम् । जुहोतेः सन् प्रत्ययः । अनेन जीवितस्य हविष्ट्वं युद्धस्याग्निरूपत्वं च गम्यते । तेन चात्महविःप्रदानस्य महाफलत्वं युद्धसङ्गतिमात्रेण स्वविनाशश्च द्योत्यते । गतानुगतिकास्तु जुहूषन्तं त्यक्तुमिच्छन्तमित्यर्थः, जुहोतेर्दानार्थत्वादित्याहुः ॥ १६–१८ ॥

श्रेयः, युद्धे सति जयपराजययोरव्यवस्थितत्वेन पाक्षिकजयसद्भावाद्युद्धमेव श्रेय इत्यर्थः । अत्र मदुक्तार्थविषये प्रतिलोमानुलोमं वा प्रतिलोमं वा अनुलोमं वा अनयोर्यद्धितं मन्यसे, तद्वदेति शेषः । यद्वा प्रतिलोमं प्रतिकूलमिति यन्मन्यसे । अनुलोममनुकूलमिति यन्मन्यसे अन्यद्वा एतद्व्यतिरिक्तम् यद्वेतरन्मन्यसे, तद्वदेति शेषः । प्रतिलोमेत्यविभक्तिको निर्देशः ॥ ११–१३ ॥ मन्त्रसमये यथा निर्धारितं तत्तथैव दृश्यत इत्याह—प्रदानेन त्विति ॥ १४ ॥ त्वन्मतानुसारेण युद्धमेव करिष्यामीत्याशयेनाह—सोऽहमिति ॥ १५ ॥ जुहूषन्तं त्यक्तुमिच्छन्तम् ॥ १६–२२ ॥

मद्बाणेति। हतानां काननौकसां तृप्यन्त्वित्यन्वयः। "पूरणगुण—" इत्यादिना समासप्रतिषेधेन सुहितार्थयोगे ज्ञापिता षष्ठी ॥१९–२१॥ हुताशनमिति। 
हुताशनं तर्पयताम् अग्नौ बहुधा शान्तिहोमानाचरताम्। ब्राह्मणांश्च नमस्यतां गन्धपुष्पादिभिरर्चयतां सम्बन्धी आज्यगन्धप्रतिवहः ब्राह्मणार्चनकुसुमा

मद्बाणशतवेगेन हतानां च रणाजिरे। अद्य तृप्यन्तु मांसादाः पक्षिणः काननौकसाम् ॥१९॥ इत्युक्तास्ते प्रहस्तेन बलाध्यक्षाः कृतत्वराः। बलमुद्योजयामासुस्तस्मिन् राक्षसमन्दिरे ॥२०॥ सा बभूव मुहूर्तेन तिग्मनानाविधायुधैः। लङ्का राक्षसवीरैस्तैर्गजैरिव समाकुला ॥ २१ ॥ हुताशनं तर्पयतां ब्राह्मणांश्च नमस्यताम् । आज्यगन्धप्रतिवहः सुरभिर्मारुतो ववौ ॥ २२ ॥ स्रजश्च विविधाकारा जगृहुस्त्वभिमन्त्रिताः । सङ्ग्रामसज्जाः संहृष्टा धारयन् राक्षसास्तदा ॥ २३ ॥ सधनुष्काः कवचिनो वेगादाप्लुत्य राक्षसाः। रावणं प्रेक्ष्य राजानं प्रहस्तं पर्यवारयन् ॥ २४ ॥ अथामन्त्र्य च राजानं भेरीमाहत्य भैरवाम् । आरुरोह रथं दिव्यं प्रहस्तः सज्जकल्पितम् ॥ २५ ॥ हयैर्महाजवैर्युक्तं सम्यक् सूतसुसंयतम् । महाजलदनिर्घोषं साक्षाच्चन्द्रार्कभास्वरम् ॥ २६ ॥ उरगध्वजदुर्द्धर्षं सुवरूथं स्वपस्करम्। सुवर्णजालसंयुक्तं प्रहसन्तमिव श्रिया ॥ २७ ॥

दिना सुरभिर्मारुतो ववौ ॥ २२ ॥ सङ्ग्रामसज्जाः सङ्ग्रामायोद्युक्ता राक्षसाः अभिमन्त्रिताः विजयमन्त्रेणाभिमन्त्रिताः स्रजः जगृहुः । धारयन् अधारयंश्च ॥ २३ ॥ रावणं प्रेक्ष्य स्वामितया प्रधानं रावणमभिवन्द्येत्यर्थः ॥ २४ ॥ अथेत्यादिश्लोकत्रयम् । सज्जकल्पितं सज्जमुद्युक्तम्, सर्वायुधादिसंमवेतत्वेन कल्पितमित्यर्थः। सुसंयतं नियमितम्। साक्षाच्चन्द्रार्कभास्वरं चन्द्रार्कतुल्यं भास्वरं च। "साक्षात् प्रत्यक्षतुल्ययोः" इत्यमरः। आह्लादकत्वेन चन्द्रसाम्यम्। तेजसाऽर्कसाम्यम्। सुवरूथं शोभनरथगुप्तिकम्। "रथगुप्तिर्वरूथो ना" इत्यमरः। स्वपस्करं शोभनरथाङ्गम्। "अपस्करो रथाङ्गम्" इति

स्रजश्चेति। सङ्ग्रामसज्जाः सङ्ग्रामार्थं सन्नद्धा इत्यर्थः ॥ २३ ॥ २४ ॥ सज्जकल्पितं सन्नद्धत्वेन कल्पितम्, सर्वायुधादिसमेतं कल्पितमित्यर्थः ॥ २५ ॥ २६ ॥ सुवरूथं शोभनरथगुप्तिकम्। "रथगुप्तिर्वरूथो ना" इत्यमरः। स्वपस्करं शोभनरथाङ्गम्। "अपस्करो रथाङ्गं स्यात" इति निघण्टुः ॥ २७–३८ ॥

निपातनात् सुडागमः । जालं गवाक्षम् । प्रहसन्तमिव श्रिया स्वकान्त्या सर्वकान्तिमद्वस्तु परिहसन्तमिव स्थितम् ॥२५–२७॥ ततस्तमिति । ततः आरोहणानन्तरम् ॥ २८ ॥ तत इत्यादिसार्धश्लोक एकान्वयः । पर्जन्यः मेघविशेषः ॥२९॥ पुरस्सराः अग्रगाः ॥३०॥३१॥ व्यूढेन सन्नद्धकङ्कटेन । "व्यूढः



ततस्तं रथमास्थाय रावणार्पितशासनः । लङ्कायां निर्ययौ तूर्णं बलेन महता वृतः ॥ २८ ॥ ततो दुन्दुभिनिर्घोषः पर्जन्यनिनदोपमः । वादित्राणां च निनदः पूरयन्निव सागरम् । शुश्रुवे शङ्खशब्दश्च प्रयाते वाहिनीपतौ ॥ २९ ॥ निनदन्तः स्वरान् घोरान् राक्षसा जग्मुरग्रतः । भीमरूपा महाकायाः प्रहस्तस्य पुरस्सराः ॥ ३० ॥ नरान्तकः कुम्भहनुर्महानादः समुन्नतः । प्रहस्तसचिवा ह्येते निर्ययुः परिवार्य तम् ॥ ३१ ॥ व्यूढेनैव सुघोरेण पूर्वद्वारात् स निर्ययौ । गजयूथनिकाशेन बलेन महता वृतः॥३२॥ सागरप्रतिमौघेन वृतस्तेन बलेन सः । प्रहस्तो निर्ययौ तूर्णं कालान्तकयमोपमः ॥३३॥ तस्य निर्याणघोषेण राक्षसानां च नर्दताम् । लङ्कायां सर्वभूतानि विनेदुर्विकृतैः स्वरैः ॥ ३४ ॥ व्यभ्रमाकाशमाविश्य मांसशोणितभोजनाः । मण्डलान्यपसव्यानि खगाश्चक्रू रथं प्रति ॥३५॥ वमन्त्यः पावकज्वालाः शिवा घोरं ववाशिरे । अन्तरिक्षात् पपातोल्का वायुश्च परुषो ववौ ॥ ३६ ॥ अन्योन्यमभिसंरब्धा ग्रहाश्च न चकाशिरे ॥ ३७ ॥ मेघाश्च खरनिर्घोषा रथस्योपरि रक्षसः । ववृषू रुधिरं चास्य सिषिचुश्च पुरस्सरान् ॥ ३८ ॥ केतुमूर्धनि गृध्रोऽस्य निलीनो दक्षिणामुखः । तुदन्नुभयतःपार्श्वं समग्रामहरत् प्रभाम् ॥ ३९ ॥

सन्नद्धकङ्कटः" इत्यमरशेषे ॥३२॥ कालान्तकयमोपमः काले प्रलयकाले अन्तको विनाशको यो यमस्तदुपमः ॥३३॥ तस्य प्रहस्तस्य निर्याणघोषेण निर्गमकालिकसिंहनादेन राक्षसानां निर्याणघोषेण च प्रयोजनेन सर्वभूतानि विकृतैः सर्वैरुपलक्षितानि सन्ति विनेदुरिति सम्बन्धः ॥ ३४ ॥ अपसव्यानि अप्रदक्षिणानि । व्यभ्रमित्यनेन मण्डलकरणस्याकालिकत्वमुक्तम् । साभ्रकाले हि पक्षिणो मण्डलान्याचरन्ति । यद्वाऽत्र खगाः गरुडाः । अपसव्यं प्रदक्षिणम् । "अपसव्यन्तु दक्षिणम्" इत्यमरः । गरुडानां ह्यप्रदक्षिणं शोभनम् ॥ ३५ ॥ वमन्त्य इत्यादि । ग्रहाः चन्द्रसूर्यादयः । तत्काले ग्रहयुद्धमासीदित्यर्थः ॥३६–३८॥ केत्विति । तुदन्नुभयतःपार्श्वम् उभौ पक्षौ मुखेन कण्डूयमानः । समग्रामहरत् प्रभाम्, प्रहस्तस्येति शेषः । ध्वजाग्रारूढगृध्रदर्शनेन प्रहस्त

केत्विति । तुदन् उभयतःपार्श्वम् उभावपि पार्श्वौ चञ्चुना व्यथयन् प्रभामहरत्, प्रहस्तस्येति शेषः ॥ ३९ ॥

मुखं विवर्णमासीदित्यर्थः ॥३९॥ सूतस्य सूतजातस्य । हयसादिनः हयप्रस्थापकस्य । प्रतोदः तोत्रम् । यद्वा सूतस्य सूतकुलोत्पन्नस्य, अभ्यस्तप्रतोद धारणस्यापीत्यर्थः । हयसादिनः अश्वगतिशिक्षकस्य ॥४०॥ वसुदुर्लभा अष्टवसुदुर्लभा । भास्वरा वसुदुर्लभेति पाठः । निर्याणश्रीः निर्गमकालिकश्रीः ।

सारथेर्बहुशश्चास्य सङ्ग्राममवगाहतः । प्रतोदो न्यपतद्धस्तात् सूतस्य हयसादिनः ॥४०॥ निर्याणश्रीश्च याऽस्यासीद्भास्वरा वसुदुर्लभा । सा ननाश मुहूर्तेन समे च स्खलिता हयाः ॥ ४१ ॥ प्रहस्तं त्वभिनिर्यान्तं प्रख्यातबलपौरुषम् । युधि नानाप्रहरणा कपिसेनाऽभ्यवर्तत ॥ ४२ ॥ अथ घोषः सुतुमुलो हरीणां समजायत । वृक्षानारुजतां चैव गुर्वीरागृह्णतां शिलाः ॥ ४३ ॥ नदतां राक्षसानां च वानराणां च गर्जताम् । उभे प्रमुदिते सैन्ये रक्षोगणवनौकसाम् ॥ ४४ ॥ वेगितानां समर्थानामन्योन्यवधकांक्षिणाम् । परस्परं चाह्वयतां निनादः श्रूयते महान् ॥ ४५ ॥ ततः प्रहस्तः कपिराजवाहिनीमभिप्रतस्थे विजयाय दुर्मतिः । विवृद्धवेगां च विवेश तां चमूं यथा मुमूर्षुः शलभो विभावसुम् ॥ ४६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे सप्तपञ्चाशः सर्गः॥५७॥

निरुत्साहः प्रहस्तोऽभूदित्यर्थः । स्खलिताः चस्खलुः । कर्तरि क्तः ॥ ४१ ॥ नानाप्रहरणा शिलावृक्षादिनानाप्रहरणा ॥ ४२ ॥ अथेति । आरुजताम् उन्मूलयताम् । आगृह्णताम् आ समन्तात् गृह्णताम् ॥ ४३ ॥ नदतामिति त्रिपादश्लोकः । रक्षोगणवनौकसामित्युत्तरशेषः ॥ ४४ ॥ ४५ ॥ कपिराजवाहिनीमभिप्रतस्थे तां चमूं विवेश च ॥ ४६ ॥ इति श्रीगोविन्दराज० श्रीरामायण० रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥५७॥

सारथेरिति । प्रतोदः तोत्रम् । सूतस्य सूतवंशोत्पन्नस्य । हयसादिनः अश्वगतिशिक्षाविचक्षणस्य ॥ ४०–४३ ॥ नदतामिति । रक्षोगणवनौकसामित्यस्य निनादः श्रूयते इत्युत्तरेण सम्बन्धः ॥ ४४–४६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां सप्तपञ्चाशः सर्गः ॥ ५७ ॥

स०—सूतस्य तद्वंश्यस्य । हयसादिनः हयानश्वान् सादयति गमयति यथेष्टमिति स तथा । तादृशस्यापि सारथेः हस्तात् प्रतोदः तोत्रम् । न्यपतत् पपात । थम् अन्नमस्यास्तीति मत्वर्थे इकारः । "अन्नं थम्" इति हि श्रुतिः । सारेण अरसहितेन चक्रेण थिः सारथिः तस्येति वा । हयैरेवानुबन्धनिमित्तैः आदिभिः राक्षसैः सहितः स तथा तस्य सूतस्य सारथेः । "आदिनो राक्षसाः प्रोक्ताः" इति भागवततात्पर्यात् । सूतः सुष्ठु ऊतः प्रतोदो यस्येति वा । सुदुर्लभा उत्तरत्रानेवमागमनात् ॥ ४० ॥ विजयाय दुर्मतिः अपशकुनैरिव गतमृतेः स्वीयैर्दृष्टैः श्रुतैरपि विजयभ्रमोऽस्यास्तीति दुर्मतिरिति मन्तव्यम् ॥ ४६ ॥

अथ प्रहस्तवधोऽष्टपञ्चाशे–ततः प्रहस्तमित्यादि । सस्मितमिति । बलवच्छत्रुदर्शनहर्षेणेति भावः । तदेव व्यञ्जयति अरिन्दम इति ॥ १ ॥ क एष इति । ननु प्रहस्तः पूर्वद्वारान्निर्गतः, रामस्तु उत्तरद्वारि तिष्ठति स्म, कथमस्यानेकयोजनस्थसाक्षात्कारः ? उच्यते; आप्तवचनेन प्रत्यक्षतुल्येन महाकायः कश्चन गच्छतीति विदित्वा एष इत्याह । आचक्ष्व, तमिति शेषः ॥२॥३॥ एष इत्यादिसार्धश्लोक एकान्वयः । तस्य रावणस्य असह्यतया नाभा

ततः प्रहस्तं निर्यान्तं दृष्ट्वा भीमपराक्रमम् । उवाच सस्मितं रामो विभीषणमरिन्दमः ॥ १ ॥ क एष सुमहाकायो बलेन महता वृतः । [ आगच्छति महावेगः किंरूपबलपौरुषः । ] आचक्ष्व मे महाबाहो वीर्यवन्तं निशाचरम् ॥ २ ॥ राघवस्य वचः श्रुत्वा प्रत्युवाच विभीषणः ॥ ३ ॥ एष सेनापतिस्तस्य प्रहस्तो नाम राक्षसः । लङ्कायां राक्षसेन्द्रस्य त्रिभागबलसंवृतः । वीर्यवानस्त्रविच्छूरः प्रख्यातश्च पराक्रमे ॥ ४ ॥ ततः प्रहस्तं निर्यान्तं भीमं भीमपराक्रमम् । गर्जन्तं सुमहाकाय राक्षसैरभिसंवृतम् ॥ ५ ॥ ददर्श महती सेना वानराणां बलीयसाम् । अति सञ्जातरोषाणां प्रहस्तमभिगर्जताम् ॥ ६ ॥ खड्गशक्त्यृष्टिबाणाश्च शूलानि मुसलानि च । गदाश्च परिघाः प्रासा विविधाश्च परश्वधाः ॥ ७ ॥ धनूंषि च विचित्राणि राक्षसानां जयैषिणाम् । प्रगृहीतान्यशोभन्त वानरानभिधावताम् ॥ ८ ॥ जगृहुः पादपांश्चापि पुष्पितान् वानरर्षभाः । शिलाश्च विपुला दीर्घा योद्धुकामाः प्लवङ्गमाः ॥ ९ ॥

ग्रहणम् । संवृतशब्दोऽन्तर्भावितण्यर्थः । रावणेन लङ्कायां स्वबलस्य तृतीयभागेन संवारित इत्यर्थः । लङ्कायां राक्षसेन्द्रस्य त्रिभागबलसंवृत इति पाठः । रावणस्य सैन्येषु भागत्रयमस्याधीनमिति भावः । वीर्यवान् बलवान् । "वीर्यं बले प्रभावे च" इत्यमरः । शूरः रणेष्वपरावृत्तः । पराक्रमे परपरिभवने । अत्रेति करणं बोध्यम् ॥ ४ ॥ तत इत्यादिश्लोकद्वयम् । भीमं भयङ्करवेषम् ॥ ५ ॥ ६ ॥ खड्गेत्यादिश्लोकद्वयम् । राक्षसानामिति तृतीयार्थे षष्ठी । राक्षसैरित्यर्थः ॥७॥८॥ जगृहुरिति । वानरश्रेष्ठत्वेऽप्यवानरत्ववारणाय प्लवङ्गमा इत्युक्तम् । यद्वा प्लवङ्गमाः युद्धोत्साहेन प्लवगत्या गच्छन्तः । असंज्ञायां खशार्षः ॥९–११॥



॥ १–३ ॥ लङ्कायां राक्षसेन्द्रस्य त्रिभागबलसंवृतः [illegible] संवृत इत्यर्थः ॥ ४ ॥ ततः प्रहस्तमित्यादि श्लोकद्वयमेकं वाक्यम् । प्रहस्तमभिगर्जतां बलीयसां वानराणां महती सेना निर्यान्तं प्रहस्तं ददर्शेति सम्बन्धः ॥ ५ ॥ ६ ॥ खड्गशक्त्यृष्टीत्यादि श्लोकद्वयमेकं वाक्यम् । वानरानभि

शूलैरित्यादि । परमायुधैः चक्रैः । "चक्रं तु परमायुधम्" इति निघण्टुः ॥१२॥ शूलपातादिकार्यं दर्शयति–निरुच्छ्वासा इत्यादि । निरुच्छ्वासाः कृताः । इषुसन्धानसन्दिताः इषव एव सन्धानानि बन्धनरज्जवः तैः सन्दिताः संस्यूताः । स्फुरन्तः लुठन्तः । अवदारिताः भिन्नाः ॥ १३॥१४ ॥ वानरैरित्यादि ।



तेषामन्योन्यमासाद्य सङ्ग्रामः सुमहानभूत् । बहूनामश्मवृष्टिं च शरवृष्टिं च वर्षताम् ॥ १० ॥ बहवो राक्षसा युद्धे बहून् वानरयूथपान् । वानरा राक्षसांश्चापि निजघ्नुर्बहवो बहून् ॥ ११ ॥ शूलैः प्रमथिताः केचित् केचिच्च परमायुधैः । परिघैराहताः केचित् केचिच्छिन्नाः परश्वधैः ॥ १२ ॥ निरुच्छ्वासाः कृताः केचित् पतिता धरणीतले । विभिन्नहृदयाः केचिदिषुसन्धानसन्दिताः ॥१३॥ केचिद्द्विधा कृताः खड्गैः स्फुरन्तः पतिता भुवि । वानरा राक्षसैः शूलैः पार्श्वतश्चावदारिताः ॥ १४ ॥ वानरैश्चापि संक्रुद्धै राक्षसौघाः समन्ततः । पादपैर्गिरिशृङ्गैश्च सम्पिष्टा वसुधातले ॥१५॥ वज्रस्पर्शतलैर्हस्तैर्मुष्टिभिश्च हता भृशम् । वेमुः शोणितमास्येभ्यो विशीर्णदशनेक्षणाः ॥१६॥ आर्तस्वनं च स्वनतां सिंहनादं च नर्दताम् । बभूव तुमुलः शब्दो हरीणां रक्षसां युधि ॥ १७ ॥ वानरा राक्षसाः क्रुद्धा वीरमार्गमनुव्रताः । विवृत्तनयनाः क्रूराश्चक्रुः कर्माण्यभीतवत् ॥ १८ ॥ नरान्तकः कुम्भहनुर्महानादः समुन्नतः । एते प्रहस्तसचिवाः सर्वे जघ्नुर्वनौकसः ॥ १९ ॥ तेषामापततां शीघ्रं निघ्नतां चापि वानरान् । द्विविदो गिरिशृङ्गेण जघानैकं नरान्तकम् ॥ २० ॥

सम्पिष्टाः चूर्णिताः । वेमुः वमनं चक्रुः ॥१५ ॥१६॥ स्वनतां नर्दतामित्यत्र कुर्वतामित्यर्थः । तुमुलः निबिडितः । रक्षसां वानराणां च ॥ १७ ॥ वानरा इति । वीरमार्गं युद्धकौशलम् । विवृत्तनयनाः भ्रान्तनेत्राः । कर्माणि युद्धकर्माणि । अभीतवत् भयरहितं यथा भवति तथा ॥१८॥१९॥ तेषामिति । इयं

धावतां जयैषिणां राक्षसानां खड्गादीनि अशोभन्तेति सम्बन्धः ॥७–११॥ शूलैरिति । परमायुधैः चक्रैः । "चक्रं तु परमायुधम्" इति निघण्टुः ॥१२॥ इषुसन्धानसन्दिताः इषव एव सन्धानानि बन्धनरज्जवस्तैः सन्दिताः संस्यूताः ॥ १३–१५ ॥ वज्रेति । वेमुः वमनं चक्रुः ॥ १६–१९ ॥ तेषामिति निर्धारणे षष्ठी ॥२०–२२॥

निर्धारणे षष्ठी । एकं मुख्यम् ॥२०॥ दुर्मुख इति । उत्थाय उद्धृत्य । समुन्नताख्यं राक्षसम् अपोथयत् अमारयत् । "पुथ हिंसायाम्" इति धातुः ॥२१॥ ॥२२॥ अथेति । तत्र प्रहस्तसचिवेषु । सन्त्याजयत् सन्तत्याज । स्वार्थिको णिच्प्रत्ययः ॥ २३ ॥ २४॥ आवर्ते संवर्ते । प्रलय इव स्थिते तस्मिन् युद्धे

दुर्मुखः पुनरुत्थाय कपिः स विपुलद्रुमम् । राक्षसं क्षिप्रहस्तस्तु समुन्नतमपोथयत् ॥ २१ ॥ जाम्बवांस्तु सुसंक्रुद्धः प्रगृह्य महतीं शिलाम् । पातयामास तेजस्वी महानादस्य वक्षसि ॥ २२ ॥ अथ कुम्भहनुस्तत्र तारेणासाद्य वीर्यवान् । वृक्षेणाभिहतो मूर्ध्नि प्राणान् सन्त्याजयद्रणे ॥ २३ ॥ अमृष्यमाणस्तत्कर्म प्रहस्तो रथमास्थितः । चकार कदनं घोरं धनुष्पाणिर्वनौकसाम् ॥ २४ ॥ आवर्त इव सञ्जज्ञे उभयोः सेनयोस्तदा । क्षुभितस्याप्रमेयस्य सागरस्येव निस्वनः ॥ २५ ॥ महता हि शरौघेण प्रहस्तो युद्धकोविदः । अर्दयामास संक्रुद्धो वानरान् परमाहवे ॥ २६ ॥ वानराणां शरीरैश्च राक्षसानां च मेदिनी । बभूव निचिता घोरा पतितैरिव पर्वतैः ॥ २७ ॥ सा मही रुधिरौघेण प्रच्छन्ना सम्प्रकाशते । सञ्छन्ना माधवे मासि पलाशैरिव पुष्पितैः ॥ २८ ॥ हतवीरौघवप्रां तु भग्नायुधमहाद्रुमाम् । शोणितौघमहातोयां यमसागरगामिनीम् ॥ २९ ॥ यकृत्प्लीहमहापङ्कां विनिकीर्णान्त्रशैवलाम् । भिन्नकायशिरोमीनामङ्गावयवशाद्वलाम् ॥ ३० ॥

क्षुभितस्य सागरस्य निस्वन इव सेनाया निस्वनः संजज्ञे ॥ २५ ॥ तेषु प्रहस्तप्रकर्षं प्रतिपादयितुं पुनराह–महतेत्यादि ॥२६॥ निचिता व्याप्ता ॥२७॥ ॥२८ ॥ अपरिच्छिन्नवानरवधो वृत्त इति द्योतयितुं युद्धभूमिं नदीत्वेन वर्णयति–हतेत्यादिना । उभयसेनाग्रयोर्हतवीराणामोघः समूह एव वप्रं तटं यस्यास्ताम् । भग्नायुधान्येव महाद्रुमाः भग्नाः तीरमहाद्रुमा यस्यास्ताम् । शोणितौघा एव महातोयानि कलुषजलानि यस्यास्ताम् । यमसागरगामिनीं युद्धभूमौ यमो जीवग्रहणाय सन्निधत्त इति प्रसिद्धिः । तद्रूपसागरगामिनीम् ॥ २९ ॥ यकृत्प्लीहशब्दौ हृदयस्य दक्षिणवामभागस्थमांसविशेषपरौ । अन्त्राणां





कुम्भहनुः तारेणासाद्य तस्य तारस्य वृक्षेण स्वप्राणान् सन्त्याजयदिति सम्बन्धः ॥ २३ ॥ २४ ॥ आवर्त इति । उभयोस्सेनयोरितस्ततो भ्रमणेन आवर्त इव सञ्जज्ञे निस्वनश्च क्षुभितस्य सागरस्य निस्वन इव संजज्ञ इत्यर्थः ॥ २५–२८ ॥ तामेव युद्धभूमिं सावयवरूपकेण वर्णयति–हतवीरौघेत्यादिना । हतवीरौघवप्रां

शैवलत्वनिरूपणं स्तम्बमयत्वात् । भिन्नकायशिरसोर्मीनत्वनिरूपणं स्फुरितत्वात् । अङ्गावयवाः करचरणाद्यङ्गानामवयवाः अङ्गुल्य इत्यर्थः । त एव शाद्वलानि शाद्वलभूजन्यतृणानि यस्यास्ताम् ॥ ३० ॥ कङ्कः धवलवर्णः श्येनः । सारसो हंसविशेषः । मेदः रुधिरमण्डलम् । आर्तानां स्तनितः शब्द इति यावत् । तदेव निम्नोन्नतपतनजनितस्वनो यस्यास्ताम् । यद्यपि रुधिरप्रवाहस्यापि स्वत एव घोषोस्ति तथापि रूपकत्वायैवमुक्तम् । कापुरुषाः



गृध्रहंसगणाकीर्णां कङ्कसारससेविताम् । मेदःफेनसमाकीर्णामार्तस्तनितनिस्वनाम् । तां कापुरुषदुस्तारां युद्धभूमिमयीं नदीम् ॥ ३१ ॥ नदीमिव घनापाये हंससारससेविताम् । राक्षसाः कपिमुख्याश्च तेरुस्तां दुस्तरां नदीम् ॥ ३२ ॥ यथा पद्मरजोध्वस्तां नलिनीं गजयूथपाः ॥ ३३ ॥ ततः सृजन्तं बाणौघान् प्रहस्तं स्यन्दने स्थितम् । ददर्श तरसा नीलो विनिघ्नन्तं प्लवङ्गमान् ॥ ३४ ॥ उद्धूत इव वायुः खे महदभ्रबलं बलात् । समीक्ष्याभिद्रुतं युद्धे प्रहस्तो वाहिनीपतिः । रथेनादित्यवर्णेन नीलमेवाभिदुद्रुवे ॥ ३५ ॥ स धनुर्धन्विनां श्रेष्ठो विकृष्य परमाहवे । नीलाय व्यसृजद्बाणान् प्रहस्तो वाहिनीपतिः ॥ ३६ ॥

भीरवः तैः दुस्ताराम् । वृद्धिरार्षी । युद्धभूमिमयीमिति स्वार्थे मयट् । व्यस्तरूपकम् । प्रावर्तयन्नित्यध्याहार्यम् । यद्वा तेरुरिति वक्ष्यमाणमत्राप्यनुषज्यते । अत्र सावयवरूपकालङ्कारः ॥ ३१ ॥ उपमानमुखेनापि तत्तरणं दर्शयति—नदीमिति । घनापाये वर्षान्ते । तां पूर्वत्र रूपकेण दर्शिताम् । केचित्तु अत्रोत्तरश्लोकस्थनदीपदवैयर्थ्यभयेन युद्धभूमिमयीं नदीं प्रवर्तयित्वेत्यध्याहरन्ति ॥ ३२ ॥ उक्तानां रक्षोवानराणामुपमामाह—यथेति । पद्मरजोभिः ध्वस्तां वर्णान्तरं प्राप्तां नलिनीं सरसीं यथा गजयूथपास्तरन्ति । तीर्त्वा रक्ततनवो भवन्तीति यावत् । तथा अरुणशरीरा उत्तेरुरित्यर्थः ॥ ३३ ॥ तत इति । स्यन्दने रथे स्थितम् । बाणौघान् सृजन्तं मुञ्चन्तम् । तरसा वेगेन । प्लवङ्गमान् विनिघ्नन्तं प्रहस्तं ददर्श ॥ ३४ ॥ उद्धूत इत्यादिसार्धश्लोक

हतवीरसमूहतटाम् । यकृत्प्लीहमहापङ्कां यकृत्प्लीहशब्दाभ्यां हृदयदक्षिणवामभागस्थमांसविशेषावुच्येते ॥ २९ ॥ ३० ॥ तामिति । राक्षसाः कपिमुख्याश्च कापुरुषदुस्तारां कापुरुषाः भीरवः तैः दुस्ताराम् । वृद्धिरार्षः । युद्धभूमिमयीं युद्धभूमिप्रचुराम् । तां नदीं तादृशीं नदीम्, प्रवर्तयित्वेति शेषः ॥ ३१ ॥ घनापाये हंससारससेवितां नदीमेतामुक्तविशेषणविशिष्टां नदीं तेरुरिति योजना ॥ ३२–३४ ॥ उद्धूत इत्यादि सार्धश्लोकमेकं वाक्यम् । उद्धूतो वायुः खे महद

मेकं वाक्यम् । खे स्वदेशभूते । उद्धूतः उल्बणः वायुः अभ्रबलम् अभ्रजालमिव । युद्धे बलादभिद्रुतम् आभिमुख्येनायान्तं नीलं समीक्ष्य रथेन नीलमेवा भिदुद्रुवे इति योजना ॥ ३५ ॥ ३६ ॥ त इति । रुषिताः पन्नगा इव स्थिताः समाहिताः ऋजवः नीलं विनिर्भिद्य महीं जग्मुः विविशुरित्यर्थः ॥ ३७ ॥



ते प्राप्य विशिखा नीलं विनिर्भिद्य समाहिताः । महीं जग्मुर्महावेगा रुषिता इव पन्नगाः ॥ ३७ ॥ नीलः शरैरभिहतो निशितैर्ज्वलनोपमैः । स तं परमदुर्धर्षमापतन्तं महाकपिः ॥ ३८ ॥ प्रहस्तं ताडयामास वृक्षमुत्पाट्य वीर्यवान् ॥ ३९ ॥ स तेनाभिहतः क्रुद्धो नदन् राक्षसपुङ्गवः । ववर्ष शरवर्षाणि प्लवङ्गानां चमूपतौ ॥ ४० ॥ तस्य बाण गणान् घोरान् राक्षसस्य महाबलः । अपारयन् वारयितुं प्रत्यगृह्णान्निमीलितः ॥ ४१ ॥ यथैव गोवृषो वर्षं शारदं शीघ्रमागतम् । एवमेव प्रहस्तस्य शरवर्षं दुरासदम् । निमीलिताक्षः सहसा नीलः सेहे सुदारुणम् ॥ ४२ ॥ रोषितः शरवर्षेण सालेन महता महान् । प्रजघान हयान्नीलः प्रहस्तस्य मनोजवान् ॥ ४३ ॥ ततः स चापमुद्गृह्य प्रहस्तस्य महाबलः । बभञ्ज तरसा नीलो ननाद च पुनः पुनः ॥४४॥ विधनुस्तु कृतस्तेन प्रहस्तो वाहिनीपतिः । प्रगृह्य मुसलं घोरं स्यन्दनादवपुप्लुवे ॥४५॥ तावुभौ वाहिनीमुख्यौ जातवैरौ तरस्विनौ । स्थितौ क्षतजदिग्धाङ्गौ प्रभिन्नाविव कुञ्जरौ ॥ ४६ ॥ उल्लिखन्तौ सुतीक्ष्णाभिर्दंष्ट्राभिरितरेतरम् । सिंहशार्दूलसदृशौ सिंहशार्दूलचेष्टितौ ॥ ४७ ॥ विक्रान्तविजयौ वीरौ समरेष्वनिवर्तिनौ । काङ्क्षमाणौ यशः प्राप्तुं वृत्रवासवयोः समौ ॥ ४८ ॥

नील इत्यादिसार्धश्लोकः ॥३८–४० ॥ तस्येति । अपारयन् अशक्नुवन् ॥ ४१ ॥ यथैवेत्यादिसार्धश्लोकः । यथैवेत्यत्र एवकारोऽत्यन्तायोगव्यवच्छे दार्थकः । शारदमित्यनेन शरपातस्य क्षयित्वं व्यनक्ति ॥ ४२–४५ ॥ तावुभावित्यादिश्लोकत्रयमेकं वाक्यम् । प्रभिन्नौ मत्तौ । सिंहशार्दूलसदृशाविति बले साम्यम् । विक्रान्तविजयौ सर्वत्र प्राप्तविजयौ । काङ्क्षमाणौ, अभूतामिति शेषः ॥ ४६–४८ ॥





अभ्रबलमिव युद्धे बलादभिद्रुतम् आभिमुख्येनायान्तं नीलं समीक्ष्य नीलमेवाभिदुद्रुव इति सम्बन्धः ॥ ३९–४० ॥ तस्येति । अपारयन् अशक्नुवन् ॥४१–४८॥

आजघानेति । परमायत्तः परमोद्युक्तः ॥ ४९ ॥ ५० ॥ तमिति । अचिन्त्य अचिन्तयित्वा ॥ ५१-५५ ॥ प्रभिन्नशिरसः प्रभिन्नाच्छिरसः । शरीरादपीति समुच्चयः । प्रस्रवणं निर्झरः ॥ ५६ ॥ ५७ ॥ विकीर्णं भग्नम् ॥ ५८ ॥ हत इत्यादिसार्द्धश्लोकः । ध्यानमूकत्वं ध्यानेन वाग्व्यापारशून्यत्वम् ।



आजघान तदा नीलं ललाटे मुसलेन सः । प्रहस्तः परमायत्तस्तस्य सुस्राव शोणितम् ॥ ४९ ॥ ततः शोणितदिग्धाङ्गः प्रगृह्य सुमहातरुम् । प्रहस्तस्योरसि क्रुद्धो विससर्ज महाकपिः ॥ ५० ॥ तमचिन्त्य प्रहारं स प्रगृह्य मुसलं महत् । अभिदुद्राव बलिनं बलान्नीलं प्लवङ्गमम् ॥ ५१ ॥ तमुग्रवेगं संरब्धमापतन्तं महाकपिः । ततः सम्प्रेक्ष्य जग्राह महावेगो महाशिलाम् ॥ ५२ ॥ तस्य युद्धाभिकामस्य मृधे मुसलयोधिनः । प्रहस्तस्य शिलां नीलो मूर्ध्नि तूर्णमपातयत् ॥ ५३ ॥ सा तेन कपिमुख्येन विमुक्ता महती शिला । बिभेद बहुधा घोरा प्रहस्तस्य शिरस्तदा ॥ ५४ ॥ स गतासुर्गतश्रीको गतसत्त्वो गतेन्द्रियः । पपात सहसा भूमौ छिन्नमूल इव द्रुमः ॥ ५५ ॥ प्रभिन्नशिरसस्तस्य बहु सुस्राव शोणितम् । शरीरादपि सुस्राव गिरेः प्रस्रवणं यथा ॥ ५६ ॥ हते प्रहस्ते नीलेन तदकम्प्यं महद्बलम् । रक्षसामप्रहृष्टानां लङ्कामभिजगाम ह ॥ ५७ ॥ न शेकुः समरे स्थातुं निहते वाहिनीपतौ । सेतुबन्धं समासाद्य विकीर्णं सलिलं यथा ॥५८॥ हते तस्मिंश्चमूमुख्ये राक्षसास्ते निरुद्यमाः । रक्षःपतिगृहं गत्वा ध्यानमूकत्वमास्थिताः । प्राप्ताः शोकार्णवं तीव्रं निस्संज्ञा इव तेऽभवन् ॥ ५९ ॥ ततस्तु नीलो विजयी महाबलः प्रशस्यमानः स्वकृतेन कर्मणा । समेत्य रामेण सलक्ष्मणेन च प्रहृष्टरूपस्तु बभूव यूथपः ॥ ६० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

तीव्रं घोरम् । शोकार्णवं प्राप्ताः, शोकार्णवे मग्ना इत्यर्थः ॥ ५९ ॥ स्वकृतेन कर्मणा रिपुवधेन प्रहृष्टरूपः अतिशयेन प्रहृष्टः । प्रशंसायां रूपप् ।

आजघानेति । परमायत्तः परमोद्युक्तः ॥ ४९-५५ ॥ विभिन्नशिरस इति । विभिन्नाच्छिरस इत्यर्थः ॥ ५६ ॥ ५७ ॥ विकीर्णं भग्नम् । पञ्चम्यां प्रहस्तवधः ॥५८॥५९॥

पञ्चम्यां प्रहस्तवधः ॥ ६० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टपञ्चाशः सर्गः ॥ ५८ ॥
अथ रावणमुकुटभङ्ग एकोनषष्टितमे—तस्मिन् हत इत्यादि ॥ १ ॥ गत्वेति । पावकसूनुशस्तं पावकसूनुना नीलेन शस्तं हतम् । तच्चापीत्यनेन रावणेन स्वप्नेऽपि न तच्चिन्तितमिति सूच्यते । यद्वा 'शत्रोरुपचये स्वस्यापचये समाश्रयः कार्यः' इति नीतिः, तथापि रावणः कालचोदिततया समाश्रयणं

तस्मिन् हते राक्षससैन्यपाले प्लवङ्गमानामृषभेण युद्धे । भीमायुधं सागरतुल्यवेगं विदुद्रुवे राक्षसराजसैन्यम् ॥ १ ॥ गत्वाऽथ रक्षोधिपतेः शशंसुः सेनापतिं पावकसूनुशस्तम् । तच्चापि तेषां वचनं निशम्य रक्षोधिपः क्रोधवशं जगाम ॥ २ ॥ सङ्ख्ये प्रहस्तं निहतं निशम्य शोकार्दितः क्रोधपरीतचेताः । उवाच तान्नैर्ऋतयोधमुख्यानिन्द्रो यथा चामरयोधमुख्यान् ॥ ३ ॥ नावज्ञा रिपवे कार्या यैरिन्द्रबलसूदनः । सूदितः सैन्यपालो मे सानुयात्रः सकुञ्जरः ॥ ४ ॥ सोऽहं रिपुविनाशाय विजयायाविचारयन् । स्वयमेव गमिष्यामि रणशीर्षं तदद्भुतम् ॥ ५ ॥ अद्य तद्वानरानीकं रामं च सहलक्ष्मणम् । निर्दहिष्यामि बाणौघैर्वनं दीप्तैरिवाग्निभिः ॥ ६ ॥ [ अद्य सन्तर्पयिष्यामि पृथिवीं कपिशोणितैः । रामं च लक्ष्मणं चैव प्रेषयिष्ये यमक्षयम् ॥ ]

विहाय अस्थाने क्रोधवशं गत इत्यपिशब्देन सूच्यते ॥२ ॥ ३॥ नावज्ञेति । रिपवे रामाय । नावज्ञा कार्या उपेक्षा न कर्तव्या । "क्रियाग्रहणं कर्तव्यम्" इति चतुर्थी । यैश्च वानरैर्हेतुभिः मम सैन्यपालः प्रहस्तः सानुयात्रः सानुचरः सकुञ्जरश्च सूदितः, तेभ्योऽपि नावज्ञा कार्येत्यर्थः । केचित्तु रिपवे रिपुभ्यः, अवज्ञा एते कपयः किं करिष्यन्तीत्येवंरूपा न कार्या । कुत इत्यत्राह यैरित्यादीत्याहुः ॥४॥ अद्भुतं दुर्बलैः प्रबलविनाशनादाश्चर्यम् ॥५॥६॥

॥६०॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् अष्टपञ्चाशः सर्गः ॥५८॥ १॥ गत्वेति । पावकसूनुशस्तं नीलेन हतम् ॥२॥३॥ रिपवे रिपुभ्यः अवज्ञा एते कपयः किं करिष्यन्तीत्येवंरूपा न कार्या । कुतः ? यैः वानरैः इन्द्रबलसूदनो मे सैन्यपालः सूदितः तैर्वानरैर्हेतुभिः अवज्ञा न कार्येति योजना ॥ ४ ॥ अविचारयन् रिपुबलं तृणीकुर्वन् । रणशीर्षं रणमूर्द्धानम्, युद्धभूमिमित्यर्थः ॥ ५ ॥ अद्येत्यस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु—सहलक्ष्मणं रामं,

स एवमिति । तुरङ्गोत्तमराजैः तुरङ्गश्रेष्ठतमैः युक्तम् । प्रकाशमानम् अलङ्कारैर्भासमानम् । वपुषा ज्वलन्तं स्वरूपत एव प्रकाशमानम् ॥ ७ ॥
स शङ्खेति । आस्फोटितक्ष्वेलितसिंहनादैः आस्फोटितं भुजास्फालनम् । क्ष्वेलितशब्दः शब्दमात्रपरः । आस्फोटितजनितशब्दैः सिंहनादैश्चेत्यर्थः । पुण्यैः चारुभिः ॥ ८ ॥ स इति । काठिन्यसिद्धये शैलौपम्यम् । सङ्कोचविकासार्हत्वसिद्धयै मेघौपम्यम् । रूपं शरीरम् । रुद्रस्यासुरेश्वरत्वं तामसप्रकृतित्वात् । तदुक्तं

स एवमुक्त्वा ज्वलनप्रकाशं रथं तुरङ्गोत्तमराजयुक्तम् । प्रकाशमानं वपुषा ज्वलन्तं समारुरोहामरराजशत्रुः ॥ ७ ॥
स शङ्खभेरीपणवप्रणादैरास्फोटितक्ष्वेलितसिंहनादैः । पुण्यैः स्तवैश्चाप्यभिपूज्यमानस्तदा ययौ राक्षसराजमुख्यः ॥ ८ ॥ स शैलजीमूतनिकाशरूपैर्मांसादनैः पावकदीप्तनेत्रैः । बभौ वृतो राक्षसराजमुख्यो भूतैर्वृतो रुद्र इवासुरेशः ॥ ९ ॥ ततो नगर्याः सहसा महौजा निष्क्रम्य तद्वानरसैन्यमुग्रम् । महार्णवाभ्रस्तनितं ददर्श समुद्यतं पादपशैलहस्तम् ॥ १० ॥ तद्राक्षसानीकमतिप्रचण्डमालोक्य रामो भुजगेन्द्रबाहुः । विभीषणं शस्त्रभृतां वरिष्ठमुवाच सेनानुगतः पृथुश्रीः ॥ ११ ॥ नानापताकाध्वजशस्त्रजुष्टं प्रासासिशूलायुधशस्त्रजुष्टम् । सैन्यं गजेन्द्रोपमनागजुष्टं कस्येदमक्षोभ्यमभीरुजुष्टम् ॥ १२ ॥

मैत्रायणीयानामुपनिषदि—"यो ह वा अस्य तामसोऽंशः सोऽसौ रुद्रः" इति ॥ ९ ॥ महार्णवाभ्रस्तनितं महार्णवाभ्रयोरिव स्तनितं घोषो यस्येति तथा ॥ १० ॥ अतिप्रचण्डम् अत्यन्तकोपनम् । भुजगेन्द्रबाहुः युद्धौत्सुक्येन प्रवर्धमानबाहुरित्यर्थः । पृथुश्रीः युद्धहर्षेण सञ्जातलक्ष्मीकः । सेनानुगतः स्वामिसंरक्षणाय सर्वतः समवेतसेनापरिवृतः । शस्त्रभृतां वरिष्ठं वीरभटतारतम्यज्ञमिति भावः ॥ ११ ॥ नानेति । पताकाध्वजयोर्मात्रया भेदः । प्रथमं शस्त्रशब्द उपात्तः प्रासादिभिन्नपरः । आयुधं धनुः, इन्द्रायुधमित्यादौ तथा प्रयोगात् । प्रासासिशूलायुधरूपैः शस्त्रैर्जुष्टमित्यर्थः । वज्रजुष्टमिति पाठान्तरम् ॥ १२ ॥ रामानु०—नाना विनेति शेषः । बाणौघैः वानरानीकं निर्दहिष्यामीति सम्बन्धः ॥ ६ ॥ तुरङ्गोत्तमराजयुक्तं तुरङ्गोत्तमराजाः श्रेष्ठतमतुरङ्गाः तैर्युक्तम् अतः प्रकाशमानं वपुषा च ज्वलन्तम्, तुरङ्गोत्तमभासा स्वभासा च प्रकाशमानमित्यर्थः ॥ ७ ॥ आस्फोटितक्ष्वेलितसिंहनादैः आस्फोटितैः भुजास्फालनैः क्ष्वेलितसिंहनादैः मृगेन्द्रध्वनिसदृशैः क्ष्वेलितैः । उपमितसमासोऽयम् । सहार्थे तृतीया ॥ ८-११ ॥ सेनया अनुगतः सेनानुगतः ॥ ११ ॥ प्रासासिशूलायुधशस्त्रजुष्टम् आयुधानि धनूंषि प्रासासिशूला

पताकाध्वजशस्त्रजुष्टमिति पाठः । शस्त्रशब्देन पठितव्यतिरिक्तान्यायुधान्युच्यन्ते ॥ १२ ॥ शक्रसमानवीर्य इत्यनेन वक्ष्यमाणं न भीतिमूलमिति द्योत्यते । बलप्रवेकं बल प्रवरम् । "प्रवेकानुत्तमोत्तमाः" इत्यमरः । महात्मनां महाधैर्याणाम् ॥१३॥ योऽसाविति । महात्मा महाकायः । नवोदितार्कोपमं ताम्रवक्रं यस्य स तथा । बालसूर्यमुखरागतुल्योऽस्य मुखराग इत्यर्थः । योऽसौ गजस्कन्धगतो दृश्यते स गजस्कन्धगतः स्वशरीरभारान्नागशिरः कम्पयन्नुपैति, एनमकम्पनं रावण

ततस्तु रामस्य निशम्य वाक्यं विभीषणः शक्रसमानवीर्यः । शशंस रामस्य बलप्रवेकं महात्मनां राक्षसपुङ्गवानाम् ॥ १२ ॥ योऽसौ गजस्कन्धगतो महात्मा नवोदितार्कोपमताम्रवक्त्रः । प्रकम्पयन्नागशिरोऽभ्युपैति ह्यकम्पनं त्वेनमवेहि राजन् ॥१४॥ योऽसौ रथस्थो मृगराजकेतुर्धून्वन् धनुः शक्रधनुःप्रकाशम् । करीव भात्युग्रविवृत्त दंष्ट्रः स इन्द्रजिन्नाम वरप्रधानः ॥ १५ ॥ यश्चैष विन्ध्यास्तमहेन्द्रकल्पो धन्वी रथस्थोऽतिरथोऽतिवीरः । विस्फारयंश्चापमतुल्यमानं नाम्नाऽतिकायोऽतिविवृद्धकायः ॥१६॥ योऽसौ नवार्कोदितताम्रचक्षुरारुह्य घण्टानिनदप्रणादम् । गजं खरं गर्जति वै महात्मा महोदरो नाम स एष वीरः ॥ १७ ॥

पुत्रमवेहि ॥ १४ ॥ मृगराजकेतुः सिंहध्वजः । धनुः धून्वन्नित्यनेन भुजबलाधिक्यमुच्यते । करीवेत्यनेन कायबलम् । करितुल्यत्वे हेतुरुग्रविवृत्तदंष्ट्र इति । वरप्रधानः ब्रह्मदत्तान्तर्धानवरप्रधानः । अनेन वरबलमुक्तम् ॥ १५ ॥ यश्चेति । विन्ध्यादित्रयौपम्येन उन्नतत्वपरतेजोभिभावकत्वनिश्चलत्वान्यु च्यन्ते । अतिरथः सहस्राश्वयुक्तत्वेनातिशयितरथः । अतिवीरः मायाबलाभावेऽपीन्द्रजितोऽप्यतिशयितवीर्यः । अतुल्यमानम् अतिशयितपरिमाणं चापम् । विस्फारयन् आकर्षन्नित्यर्थः । अत्रासावित्यध्याहार्यम् ॥ १६ ॥ योऽसौ नवेति । नवार्कोदितताम्रचक्षुः नवोदितार्कताम्रचक्षुः । घण्टानिनदप्रणादं घण्टा निनदेन प्रकृष्टो नादः स्वनो यस्य तम् । खरमिति क्रियाविशेषणम् ॥ १७ ॥ रामानु०–योऽसाविति । योऽसौ नवार्कोपमताम्रचक्षुरिति पाठः । घण्टानिनदप्रणादं घण्टा

युधान्येव शस्त्राणि तैर्जुष्टम् । महेन्द्रोपमनागजुष्टमिति पाठे–महेन्द्रपर्वतसदृशगजयुक्तम् । अभीरुभिः रक्षोभिः ॥ १२ ॥ बलप्रवेकं बलश्रेष्ठम् ॥ १३ ॥ प्रकम्पयन्नागशिरः स्वशरीरभारादात्मारूढगजशिरः प्रकम्पयन्नित्यर्थः । अकम्पनम्–अयमकम्पनः पूर्वहतादन्य इति बोध्यम् ॥ १४ ॥ वरप्रधानः वरो ब्रह्मदत्तः प्रधानं यस्य स तथोक्तः ॥१५॥ अतुल्यमानम् असदृशपरिमाणम् ॥१६॥ घण्टानिनदप्रणादं घण्टानिनदेन प्रभूतनादम् । गजमारुह्य खरं यथा तथा गर्जतीति सम्बन्धः॥१७॥

निनदेन प्रभूतो नादो यस्य तम् ॥ १७ ॥ योऽसौ हयमिति । काञ्चनचित्रभाण्डं काञ्चनमयनानाविधाश्वाभरणम् । "स्याद्भाण्डमश्वाभरणे" इत्यमरः । अत एव सन्ध्याभ्रगिरिप्रकाशं सन्ध्याभ्रयुक्तगिरिप्रकाशं हयमारुह्य । मरीचिनद्धं किरणैर्बद्धं प्रासमुद्यम्य गर्जतीति पूर्वश्लोकादनुषज्यते । एष पिशाचः पिशाच नामकः ॥१८॥ यश्चेति । किङ्करो वज्रवेगो यस्य तत् किङ्करवज्रवेगम्, वज्रवेगादप्यधिकवेगमित्यर्थः । वृषेन्द्रं वृषभेन्द्रम् । योऽसौ प्रसिद्धोऽसावित्यर्थः।

योऽसौ हयं काञ्चनचित्रभाण्डमारुह्य सन्ध्याभ्रगिरिप्रकाशम् । प्रासं समुद्यम्य मरीचिनद्धं पिशाच एषोऽशनितुल्य वेगः ॥ १८ ॥ यश्चैष शूलं निशितं प्रगृह्य विद्युत्प्रभं किङ्करवज्रवेगम् । वृषेन्द्रमास्थाय गिरिप्रकाशमायाति योऽसौ त्रिशिरा यशस्वी ॥ १९ ॥ असौ च जीमूतनिकाशरूपः कुम्भः पृथुव्यूढसुजातवक्षाः । समाहितः पन्नग राजकेतुर्विस्फारयन् भाति धनुर्विधून्वन् ॥ २० ॥ यश्चैष जाम्बूनदवज्रजुष्टं दीप्तं सधूमं परिघं प्रगृह्य । आयाति रक्षोबलकेतुभूतस्त्वसौ निकुम्भोऽद्भुतघोरकर्मा ॥ २१ ॥ यश्चैष चापासिशरौघजुष्टं पताकिनं पावकदीप्तरूपम् । रथं समास्थाय विभात्युदग्रो नरान्तकोऽसौ नगशृङ्गयोधी ॥ २२ ॥

आयाति सोऽसौ त्रिशिरा इत्यपि पठन्ति ॥ १९ ॥ रामानु०—आयाति सोऽसौ त्रिशिरा यशस्वीति पाठः ॥ १९ ॥ असाविति । पृथुव्यूढसुजातवक्षाः पृथु पीनं व्यूढं विशालं सुजातं सुन्दरं च वक्षो यस्य स तथोक्तः समाहितः सन्नद्धः। धनुर्विस्फारयन् ज्यामवलम्ब्य कर्षन् । पुनर्लीलया विधून्वन् असौ कुम्भो भाति । अत्र यच्छब्दाप्रयोगः सन्निहितत्वादिति भाव्यम् ॥ २० ॥ जाम्बूनदवज्राभ्यामन्योन्यमिलिताभ्यां जुष्टम् अत एव दीप्तं ज्वाला युक्तम् । सधूमं सधूममिव स्थितम् । अभेदनिर्देशः सर्वथा सादृश्यप्रतिपत्तये । रक्षोबलकेतुभूतः रक्षोबलप्रधानभूत इत्यर्थः ॥ २१ ॥ उदग्रः उन्नतः । नगशृङ्गैः साधनैः युद्ध्यत इति नगशृङ्गयोधी । प्रतियोद्धभावात् भुजकण्डूनिवृत्त्यर्थं नगैः सह युध्यत इति वाऽर्थः ॥ २२ ॥

काञ्चनचित्रभाण्डं काञ्चनरूपाणि चित्रभाण्डानि अश्वाभरणानि यस्य तम् । " स्याद्भाण्डमश्वाभरणे " इत्यमरः । सन्ध्याभ्रगिरिप्रकाशं सन्ध्याभ्रयुक्तगिरिप्रकाशं प्रासमुद्यम्य, आयातीति शेषः ॥१८॥ किङ्करवज्रवेगं किङ्करवद्यथोक्तकारिवज्रम् तत्समानवेगम् । त्रिशिराः अत्रापि कश्चित्रिशिराः ॥ १९ ॥ कुम्भः तन्नामा ॥ २० ॥ सधूमं नीलमणिकान्त्या सधूममिव स्थितम् ॥ २१ ॥ नगश्च शृङ्गैश्च युध्यत इति नगशृङ्गयोधी ॥ २२ ॥ २२ ॥

अथ त्रिभी रावणं दर्शयति—यश्चेति । विवृत्तनेत्रैः घूर्णितनेत्रैः ॥ २३ ॥ २४ ॥ नगेन्द्रः हिमवान् ॥२५ ॥ दीप्तः कान्तिमान् । महातेजाः महाप्रतापः ॥ २६ ॥ आदित्य इव रश्मिभिः दुष्प्रेक्षः प्रेक्षितुमशक्यः । अनयोरर्थयोर्भिन्नवाक्यत्वान्न पुनरुक्तिशङ्का ॥ २७ ॥ देवेत्यर्धद्वयमेकं वाक्यम् ॥२८॥२९॥



यश्चैष नानाविधघोररूपैर्व्याघ्रोष्ट्रनागेन्द्रमृगाश्ववक्त्रैः । भूतैर्वृतो भाति विवृत्तनेत्रैः सोऽसौ सुराणामपि दर्पहन्ता ॥ २३ ॥ यत्रैतदिन्दुप्रतिमं विभाति च्छत्रं सितं सूक्ष्मशलाकमग्र्यम् । अत्रैष रक्षोधिपतिर्महात्मा भूतैर्वृतो रुद्र इवावभाति ॥ २४ ॥ असौ किरीटी चलकुण्डलास्यो नगेन्द्रविन्ध्योपमभीमकायः । महेन्द्रवैवस्वतदर्पहन्ता रक्षोधिपः सूर्य इवावभाति ॥२५॥ प्रत्युवाच ततो रामो विभीषणमरिन्दमम् । अहो दीप्तो महातेजा रावणो राक्षसेश्वरः ॥२६॥ आदित्य इव दुष्प्रेक्षो रश्मिभिर्भाति रावणः। सुव्यक्तं लक्षये ह्यस्य रूपं तेजस्समावृतम् ॥२७॥ देवदानववीराणां वपुर्नैवंविधं भवेत् । यादृशं राक्षसेन्द्रस्य वपुरेतत् प्रकाशते ॥२८॥ सर्वे पर्वतसङ्काशाः सर्वे पर्वतयोधिनः । सर्वे दीप्तायुधधरा योधाश्चास्य महौजसः ॥ २९ ॥ भाति राक्षसराजोऽसौ प्रदीप्तैर्भीमविक्रमैः । भूतैः परिवृतस्तीक्ष्णैर्देहवद्भिरिवान्तकः ॥ ३० ॥ दिष्ट्याऽयमद्य पापात्मा मम दृष्टिपथं गतः। अद्य क्रोधं विमोक्ष्यामि सीताहरणसम्भवम् ॥ ३१ ॥ एवमुक्त्वा ततो रामो धनुरादाय वीर्यवान्। लक्ष्मणानुचरस्तस्थौ समुद्धृत्य शरोत्तमम् ॥ ३२ ॥ ततः स रक्षोधिपतिर्महात्मा रक्षांसि तान्याह महाबलानि । द्वारेषु चर्यागृहगोपुरेषु सुनिर्वृतास्तिष्ठत निर्विशङ्काः ॥३३॥

देहवद्भिः प्रशस्तदेहैः ॥ ३० ॥ क्रोधं विमोक्ष्यामि क्रोधं कार्यकरं करिष्यामीत्यर्थः । मम दृष्टिपथं गत इति पाठः ॥ ३१ ॥ ३२ ॥ द्वारेषु अन्तर्द्वारेषु ।

कासौ ? तत्राह—यत्रेति । यत्र देशे इन्दुप्रतिमत्वादिगुणकं छत्रं भाति तत्रैव रक्षोधिपतिः । भूतैः भूतगणैः ॥ २४ ॥ नगेन्द्रो यो विन्ध्यः तद्वद्भीमः कायो यस्य सः ॥ २५ ॥ २६ ॥ सुव्यक्तं लक्षये इत्यत्र हेतुः तेजस्समावृतमिति । रूपं सूक्ष्मावयवसंस्थानम् ॥ २७ ॥ २८ ॥ पर्वतयोधिनः पर्वतैः सह योद्धुं शीलमेषामस्तीति पर्वतयोधिनः । प्रतियोद्धभावात् भुजकण्डूतिनिवृत्त्यर्थं पर्वतैस्सह युध्यन्तीत्यर्थः ॥ २९ ॥ देहवद्भिः प्रशस्तदेहैः ॥ ३०–३२ ॥ द्वारेषु आन्तरप्राकारद्वारेषु ।

चर्यायुक्ताः पुरद्वारेषु गोपुरपार्श्वयोः भटनिवासार्थं निर्मिता विशङ्कटा गृहाः चर्यागृहाः । सुनिर्वृताः अतिसुखिताः ॥ ३३ ॥ इहागतं मां विदित्वा इदं छिद्रं विदित्वेत्यन्वयः । प्रमथ्य ध्वंसित्वा । प्रधर्षयेयुः अभिभवेयुः ॥ ३४ ॥ सहितान् संमिलितान् । महाझषः महामत्स्यः ॥ ३५ ॥ दीप्ते इषु चापे यस्य स तथोक्तः । युधि संयुगनिमित्तं सहसा आपतन्तं राक्षसेन्द्रं समीक्ष्य महीधराग्रं पर्वतशृङ्गं समुत्पाट्य हरीशः सुग्रीवः रक्षोधिपतिं दुद्राव ॥ ३६ ॥

इहागतं मां सहितं भवद्भिर्वनौकसश्छिद्रमिदं विदित्वा । शून्यां पुरीं दुष्प्रसहां प्रमथ्य प्रधर्षयेयुः सहसा समेताः ॥ ३४ ॥ विसर्जयित्वा सहितांस्ततस्तान् गतेषु रक्षस्सु यथानियोगम् । व्यदारयद्वानरसागरौघं महाझषः पूर्णमिवार्णवौघम् ॥ ३५ ॥ तमापतन्तं सहसा समीक्ष्य दीप्तेषुचापं युधि राक्षसेन्द्रम् । महत् समुत्पाट्य महीधराग्रं दुद्राव रक्षोधिपतिं हरीशः ॥ ३६ ॥ तच्छैलशृङ्गं बहुवृक्षसानुं प्रगृह्य चिक्षेप निशाचराय । तमापतन्तं सहसा समीक्ष्य बिभेद बाणैस्तपनीयपुङ्खैः ॥ ३७ ॥ तस्मिन् प्रवृद्धोत्तमसानुवृक्षे शृङ्गे विकीर्णे पतिते पृथिव्याम् । महाहिकल्पं शरमन्तकाभं समाददे राक्षसलोकनाथः ॥ ३८ ॥ स तं गृहीत्वाऽनिलतुल्यवेगं सविस्फुलिङ्गज्वलनप्रकाशम् । बाणं महेन्द्राशनितुल्यवेगं चिक्षेप सुग्रीववधाय रुष्टः ॥ ३९ ॥

बहुवृक्षसानुं बहुतरुयुततटम् । तपनीयं स्वर्णम् ॥ ३७ ॥ ३८ ॥ महेन्द्राशनिः वज्रम् । औत्पातिकाशनिव्यावृत्तये महेन्द्रपदम् । यद्वा महेन्द्रसम्बन्धोक्तिः

चर्यागृहगोपुरेषु चर्यागृहेषु गोपुरेषु च । चर्यागृहाः चतुष्पथनिर्मितगृहाः । गोपुराणि पुरद्वाराणि ॥ ३३ ॥ इदं छिद्रं रणभूमौ सपरिवारस्य गमनरूपम् ॥ ३४ ॥ अर्णवौघं समुद्रजलसमूहम् ॥ ३५ ॥ दीप्तेषुचापं दीप्ता इषवश्चापाश्च यस्य तम् ॥ ३६–४० ॥

स०—तच्छैलशृङ्गं स चासौ शैलश्च तस्य शृङ्गं यस्मिन् स तथा । बहुवृक्षैरुपेतश्चासौ सानुः स्नुः । "स्नुः प्रस्थः सानुरस्त्रियाम्" इत्यमरः । "शृङ्गार्धर्चनिदाघोद्यमशल्यदृढाः" इति पुंनपुंसकाधिकारलिङ्गानुशासनाच्च प्रवृद्धोत्तमसानुवृक्षे शृङ्गे इति द्वितीयव्याख्याने सुलभम् । प्रथमव्याख्याने सम्बन्धस्य द्विनिष्ठत्वात्सानोः शृङ्गसाहित्यवच्छृङ्गस्य तत्साहित्यमपि सम्भवतीति पदं लग्नम् । "शृङ्गशब्दोऽर्धर्चादिरिति पुंल्लिङ्गतोपपत्तिः" इति नागोजिभट्टोक्तिस्तु एतदनिमालनमूलेति प्रपञ्चार्थतैतस्येति वा ज्ञेयम् ॥ ३७ ॥

अभ्यासवता मुक्तत्वेनातिवेगद्योतनाय ॥ ३९ ॥ शक्राशनिप्रख्यं शक्राशनितुल्यं वपुः यस्य । गुहः स्कन्दः ॥ ४० ॥ स सायकेति । विपरीतचेताः भ्रान्तचित्तः ॥ ४१ ॥ तत इति । ज्योतिमुखः ज्योतिर्मुखः ॥ ४२–४४ ॥ ते वध्यमाना इति । ते प्रसिद्धाः वानरेन्द्राः न तु क्षुद्राः । वध्यमानाः प्रथमं हिंस्यमानाः । ततः पतिताः रावणवेगेन भूमौ पतिताः । तदानीं रक्षकान्तरादर्शनान्नानद्यमानाः अतिशयेन नदन्तः । नदतेर्यङि "सन्यङोः" इत्यभ्यास





स सायको रावणबाहुमुक्तः शक्राशनिप्रख्यवपुः शिताग्रः । सुग्रीवमासाद्य बिभेद वेगाद् गुहेरिता क्रौञ्चमिवोग्रशक्तिः ॥ ४० ॥ स सायकार्तो विपरीतचेताः कूजन् पृथिव्यां निपपात वीरः । तं प्रेक्ष्य भूमौ पतितं विसंज्ञं नेदुः प्रहृष्टा युधि यातुधानाः ॥४१॥ ततो गवाक्षो गवयः सुदंष्ट्रस्तथर्षभो ज्योतिमुखो नभश्च । शैलान् समुद्यम्य विवृद्धकायाः प्रदुद्रुवुस्तं प्रति राक्षसेन्द्रम् ॥ ४२ ॥ तेषां प्रहारान् स चकार मोघान् रक्षोधिपो बाणगणैः शिताग्रैः । तान् वानरेन्द्रानपि बाणजालैर्बिभेद जाम्बूनदचित्रपुङ्खैः ॥ ४३ ॥ ते वानरेन्द्रास्त्रिदशारिबाणैर्भिन्ना निपेतुर्भुवि भीमकायाः । ततस्तु तद्वानरसैन्यमुग्रं प्रच्छादयामास स बाणजालैः ॥ ४४ ॥ ते वध्यमानाः पतिताः प्रवीरा नानद्यमाना भयशल्यविद्धाः । शाखामृगा रावणसायकार्ता जग्मुः शरण्यं शरणं स्म रामम् ॥ ४५ ॥ ततो महात्मा स धनुर्धनुष्मानादाय रामः सहसा जगाम । तं लक्ष्मणः प्राञ्जलिरभ्युपेत्य उवाच वाक्यं परमार्थयुक्तम् ॥ ४६ ॥

दीर्घादिः । भयशल्यविद्धाः तादृशहेतुना भयरूपशल्येन विद्धाः । शाखामृगाः वनचारित्वेनैतादृशभयानभिज्ञाः । उक्तप्रकारेण सायकार्ताः सन्तः शरण्यं सर्वलोकशरणार्हं रामं शरणं जग्मुः । एतेनार्तिरेव शरणागतिप्रयोजिका, नतु देशकालाधिकारिफलनियमा इत्युक्तम् ॥ ४५ ॥ शरणागतकृत्यमुक्त्वा शरण्यकृत्यमाह–तत इति । अत्र प्रपत्तेरार्तप्रपत्तिरूपतया तस्याः सद्यः फलद्योतनाय तत इत्युक्तम् । प्रपत्त्युत्तरक्षण इत्यर्थः । महात्मा शरणागतितारतम्यज्ञः । धनुष्मान् प्रशस्तधनुष्कः, धनुर्युद्धसमर्थ इत्यर्थः । सहसेत्यनेन लक्ष्मणः स्वयं गमिष्यामीति, तत्पूर्वमेवाश्रितत्राणत्वरया सधनुः सन् जगा



विपरीतचेताः अचेता इति यावत् ॥ ४१–४४ ॥ ते वध्यमाना इति । भयशल्यविद्धाः भयमेव शल्यं तेन विद्धाः ॥ ४५ ॥ धनुष्मान् प्रशस्तधनुः । सधनु

मेत्युक्तम् । तथैव पर्णकुट्यां प्रभातमित्याह तमिति । तम् आर्तत्राणत्वरया व्रजन्तम् । लक्ष्मणः रामकैङ्कर्यलक्ष्मीसम्पन्नः । अनतिक्रमणाय नाथं निगलयति प्राञ्जलिरिति । अभ्युपेत्य अभितः उपेत्य । अनेन लक्ष्मणागमनमजानान्निव नानापार्श्वेषु रामोऽनेकधा जगामेत्यवगम्यते । परमार्थयुक्तं न तूपचारयुक्तम् । यद्वा परमार्थयुक्तं परमप्रयोजनयुक्तम् । शेषिविषये कैङ्कर्यस्य शेषभूतं प्रति परमप्रयोजनत्वात् ॥ ४६ ॥ काममिति । हे आर्य !

काममार्यः सुपर्याप्तो वधायास्य दुरात्मनः । विधमिष्याम्यहं नीचमनुजानीहि मां प्रभो ॥४७॥ तमब्रवीन्महातेजा रामः सत्यपराक्रमः ॥ ४८ ॥ गच्छ यत्नपरश्चापि भव लक्ष्मण संयुगे । रावणो हि महावीर्यो रणेऽद्भुतपराक्रमः । त्रैलोक्येनापि संक्रुद्धो दुष्प्रसह्यो न संशयः ॥ ४९ ॥ तस्य च्छिद्राणि मार्गस्व स्वच्छिद्राणि च लक्षय । चक्षुषा धनुषा यत्नाद्रक्षात्मानं समाहितः ॥ ५० ॥

अस्य दुरात्मनः परदारापहरणविषयदुर्बुद्धेः कामं प्रकामं वधाय सुपर्याप्तः सुशक्तोऽसि । तथापि नीचं भवता योद्धुमनर्हम् । अहं वधिष्यामि । महाबलेन भवता नीचोऽयं न योद्धुमर्ह इति भावः । यद्वा अस्य वधायाहं पर्याप्तोऽस्मीत्यर्थः । तर्हि स्वयमेव गम्यतामित्यत्राह अनुजानीहीति । प्रभो शेषिन् ! त्वं मां शेषभूतमनुजानीहि । भवदनुज्ञामन्तरेण मे कार्यकरणं स्वरूपहानिकरमिति भावः ॥ ४७ ॥ तं विनयेनोक्तवन्तम् महातेजाः तादात्विकहर्षप्रकर्षावेदकसुषमाविशेषशाली । सति कस्मिंश्चिद्विधेये सति । अपराक्रमः निवृत्तपराक्रमः, अब्रवीत् ॥ ४८ ॥ नीचपदसूचितमनादरं वारयति-यत्नपर इति । युद्धे यत्नपरश्चापि भव, यथा युद्धपरोऽसि एवं यत्नपरो भव । यत्नस्यावश्यकर्तव्यत्वे हेतुमाह रावण इति । अद्भुतपराक्रमः एकमस्त्रमाददान इवापरं सन्धत्ते, तत्सन्दधान इवापरं मोक्षयतीत्यर्थः । त्रिलोक्येव त्रैलोक्यं तेन, युगपद्युद्धप्रवृत्तेनेत्यर्थः ॥ ४९ ॥ यत्नपरत्वं दर्शयति–तस्येति । चक्षुषा तस्य रावणस्य । छिद्राणि अनवधानादीनि । यत्नान्मार्गस्व अन्वेषयस्व । स्वच्छिद्राणि लक्षय काकान् पश्येतिवत् स्वस्य

रित्यत्र स इति छेदः ॥ ४६–४८ ॥ त्रैलोक्येनापि तद्वर्तिदेवादिसमूहैरित्यर्थः ॥ ४९ ॥ छिद्राणि प्रहारावसरान् । स्वच्छिद्राणि चेत्यस्य गोपयेति शेषः । ततो

स० -छिद्राणि मर्माणि मार्गस्व परीक्षस्व । स्वच्छिद्राणि गोपय रक्ष । चक्षुषा तं लक्षय । स्वसमाहितः स्वेनैव समाहितः । समसमरे वक्ता नान्योऽस्तीति भावः । एतावद्युक्तिः कुत इत्यतो वाऽऽह–स्वसमाहितः सु अत्यन्तम् असमो विषमः अहितो वैरी यस्य स तथा त्वमित्यर्थः ॥ ५० ॥

छिद्राणि यथा न भवन्ति तथा पश्येत्यर्थः । यद्वा लक्ष्य लक्षित्वा प्रच्छादयेत्यर्थः एवं समाहितः सावधानः सन् धनुषा आत्मानं रक्ष ॥५०॥ अभिपूज्य प्रदक्षिणीकृत्येत्यर्थः ॥५१॥५२॥ तमालोक्येति । भृत्ये मयि विद्यमाने कथमसौ समासीदतीति जगामेत्यर्थः ॥५३॥५४॥ भयं, प्राप्तमिति शेषः॥५५॥





राघवस्य वचः श्रुत्वा परिष्वज्याभिपूज्य च । अभिवाद्य ततो रामं ययौ सौमित्रिराहवम् ॥५१॥ स रावणं वारणहस्तबाहुर्ददर्श दीप्तोद्यतभीमचापम् । प्रच्छादयन्तं शरवृष्टिजालैस्तान् वानरान् भिन्नविकीर्णदेहान् ॥ ५२ ॥ तमालोक्य महातेजा हनुमान् मारुतात्मजः । निवार्य शरजालानि प्रदुद्राव स रावणम् ॥५३॥ रथं तस्य समासाद्य भुजमुद्यम्य दक्षिणम् । त्रासयन् रावणं धीमान् हनुमान् वाक्यमब्रवीत् ॥ ५४ ॥ देवदानवगन्धर्वैर्यक्षैश्च सह राक्षसैः । अवध्यत्वं त्वया प्राप्तं वानरेभ्यस्तु ते भयम् ॥ ५५ ॥ एष मे दक्षिणो बाहुः पञ्चशाखः समुद्यतः । विधमिष्यति ते देहाद्भूतात्मानं चिरोषितम् ॥ ५६ ॥ श्रुत्वा हनुमतो वाक्यं रावणो भीमविक्रमः । संरक्तनयनः क्रोधादिदं वचनमब्रवीत् ॥५७॥ क्षिप्रं प्रहर निश्शङ्कं स्थिरां कीर्तिमवाप्नुहि । ततस्त्वां ज्ञातविक्रान्तं नाशयिष्यामि वानर ॥५८॥

एष इति । पञ्चशाखः पञ्चाङ्गुलिकः भूतात्मानं विधमिष्यति निष्क्रामयिष्यति । धातूनामनेकार्थत्वात् ॥ ५६ ॥ ५७ ॥ क्षिप्रमिति । स्थिरां कीर्तिमवाप्नुहीति सोपालम्भोक्तिः । हनुमान् रावणमुपसृत्य प्रहृतवानित्येतादृशीं कीर्तिमवाप्स्यसीत्यर्थः । ज्ञातविक्रान्तं ज्ञातविक्रमम् । भावे क्तः ॥ ५८ ॥

धनुषा धनुर्व्यापारेणात्मानं रक्ष ॥ ५०-५५ ॥ एष म इति । पञ्चशाखः पञ्च शाखाः अङ्गुलयो यस्मिन् सः । भूतात्मानं जीवात्मानम् । विधमिष्यति निष्कासयिष्यति ॥ ५६ ॥ ५७ ॥ स्थिरां कीर्तिमवाप्नुहीति । इयमुपालम्भोक्तिः । हनुमान्रावणमुपसृत्य प्रहृतवानित्येतादृशीं कीर्तिमाप्नुहीत्यर्थः । ज्ञातविक्रान्तं विज्ञातपराक्रमम् ॥ ५८ ॥



स०-वानरेभ्यः कपिभ्यः । तेभ्योऽवृतत्वाद्वरस्येति भावः । नरेभ्य इत्यपि कपिसाम्याद्वक्तव्यम् । तथापि स्वस्यैव पुरःस्थितेः 'स्वजातेर्ग्रहणमित्यवगन्तव्यम् । वानरेभ्य इत्यत्रावृत्त्या तत्रापि पदच्छेदेन वानरेभ्यो वा तेभ्य इव नरेभ्योपि भयमित्यन्वयकरणेन तदुक्तिर्ज्ञेयेति अस्मत्तः कपिभ्य इत्यनुक्त्वा उक्त्वा च वानरेभ्य इति कविर्ध्वनयाञ्चक्रे ॥ ५५ ॥ यतो येन । मुत् सन्तोषः । स ते बाहुः अदक्षिणः ताडनाकुशलः । असमर्थ इति यावत् । एष मे पञ्चशाखो हस्तः ते देहे चिरोषितं भूतात्मानं प्राणं विधमिष्यति बहिर्निस्सारयति । अभूतात्मानं मुख्यप्राणमिति वा । विधमिष्यति ते देहे भूतात्मानमिति पाठः ॥ ५६ ॥

रावणस्येति । रावणवचनं ज्ञात्वा तदुचितमुत्तरमाह प्रहृतं हीति ॥ ५९ ॥ रामानु०—ज्ञातविक्रान्तमिति वचनं सोल्लुण्ठनं ज्ञात्वा तदुचितमुत्तरमाह—प्रहृतमिति ॥ ५९ ॥

एवमुक्त इति । मर्मोद्घाटनेन सञ्जातरोष इत्यर्थः ॥ ६० ॥ स इत्यादि । तलेनेति । रावणेन तलेन प्रहरणात् स्वयमपि तलेनैव प्राहरदिति भावः ॥ ६१ ॥

रावणस्य वचः श्रुत्वा वायुसूनुर्वचोऽब्रवीत् । प्रहृतं हि मया पूर्वमक्षं स्मर सुतं तव ॥ ५९ ॥ एवमुक्तो महातेजा रावणो राक्षसेश्वरः । आजघानानिलसुतं तलेनोरसि वीर्यवान् ॥ ६० ॥ स तलाभिहतस्तेन चचाल च मुहुर्मुहुः । स्थित्वा मुहूर्तं तेजस्वी स्थैर्यं कृत्वा महामतिः । आजघानाभिसंक्रुद्धस्तलेनैवामरद्विषम् ॥ ६१ ॥ ततस्तलेनाभिहतो वानरेण महात्मना । दशग्रीवः समाधूतो यथा भूमिचलेऽचलः ॥ ६२ ॥ सङ्ग्रामे तं तथा दृष्ट्वा रावणं तलताडितम् । ऋषयो वानराः सिद्धा नेदुर्देवाः सहासुरैः ॥ ६३ ॥ अथाश्वास्य महातेजा रावणो वाक्यमब्रवीत् ॥ ६४ ॥ साधु वानर वीर्येण श्लाघनीयोऽसि मे रिपुः । रावणेनैवमुक्तस्तु मारुतिर्वाक्यमब्रवीत् ॥ ६५ ॥ धिगस्तु मम वीर्येण यस्त्वं जीवसि रावण । सकृत्तु प्रहरेदानीं दुर्बुद्धे किं विकत्थसे । ततस्त्वां मामिका मुष्टिर्नयिष्यति यमक्षयम् ॥ ६६ ॥ ततो मारुतिवाक्येन क्रोधस्तस्य तदाऽज्वलत् ॥ ६७ ॥ संरक्तनयनो यत्नान्मुष्टिमुद्यम्य दक्षिणम् । पातयामास वेगेन वानरोरसि वीर्यवान् ॥ ६८ ॥

तत इति । समाधूतः कम्पितः अभूत् । भूमिचले भूकम्पे सति अचलः गिरिर्यथा ॥ ६२—६५ ॥ धिगस्त्विवति । वीर्येणेति द्वितीयाभाव आर्षः । यस्त्वं जीवसि, मया प्रहृतोऽपीति शेषः । सकृत्तु प्रहर । शत्रुणा प्रहृते पुनरात्मनः प्रहारो विक्रमपरिपाटीमाटीकत इति हनुमतो हृदयम् । इदानीमिति, पूर्वं मदनवधानाज्जीवसीति भावः । दुर्बुद्धे प्रहारतारतम्यानभिज्ञ ! किं किमर्थं विकत्थसे श्लाघसे ? "कत्थ श्लाघायाम्" इति धातुः । यमक्षयं यमनिलयम् । "निलयापचयौ क्षयौ" इत्यमरः ॥६६॥ तत इति । ततः तेनेत्यर्थः । अन्यथा तदाशब्दोऽतिरिच्येत । अज्वलत् ववृधे इत्यर्थः ॥६७॥ संरक्तेति । वीर्यवान्

अक्षं तन्नामानं सुतं स्मर, मत्पराक्रमज्ञानायेति शेषः ॥ ५९—६५ ॥ धिगिति । धिक् वीर्येण, वीर्यमित्यर्थः । यस्त्वं जीवसि, मया हतोऽपीत्यर्थः ॥ ६६—७१ ॥

बल्वान् । "वीर्यं बले च" इत्यमरः ॥ ६८ ॥ हनुमानित्यर्धम् । व्यूढे विशाले ॥६९॥ विह्वलमिति । विह्वलं मूर्च्छितम् । महाबलं तदानीमपि परैरनभिभवनीयम् ॥ ७० ॥ राक्षसानामिति । आदीपयामास आ समन्ताज्ज्वालयामास ॥ ७१ ॥ समायस्तः आयासवान् । एकेनेत्यनेन इतरेण शरवारणं गम्यते

हनुमान् वक्षसि व्यूढे सञ्चचाल हतः पुनः ॥ ६९ ॥ विह्वलं तु तदा दृष्ट्वा हनुमन्तं महाबलम् । रथेनातिरथः शीघ्रं नीलं प्रति समभ्यगात् ॥ ७० ॥ राक्षसानामधिपतिर्दशग्रीवः प्रतापवान् । पन्नगप्रतिमैर्भीमैः परमर्मातिभेदिभिः । शरैरादीपयामास नीलं हरिचमूपतिम् ॥ ७१ ॥ स शरौघसमायस्तो नीलः कपिचमूपतिः । करेणैकेन शैलाग्रं रक्षोधिपतयेऽसृजत् ॥७२॥ हनुमानपि तेजस्वी समाश्वस्तो महामनाः । विप्रेक्षमाणो युद्धेप्सुः सरोषमिदमब्रवीत् ॥ ७३ ॥ नीलेन सह संयुक्तं रावणं राक्षसेश्वरम् । अन्येन युद्ध्यमानस्य न युक्तमभिधावनम् ॥ ७४॥ रावणोऽपि महातेजास्तच्छृङ्गं सप्तभिः शरैः । आजघान सुतीक्ष्णाग्रैस्तद्विकीर्णं पपात ह ॥ ७५ ॥ तद्विकीर्णं गिरेः शृङ्गं दृष्ट्वा हरिचमूपतिः । कालाग्निरिव जज्वाल क्रोधेन परवीरहा ॥७६॥ सोऽश्वकर्णान् धवान् सालांश्चूतांश्चापि सुपुष्पितान् । अन्यांश्च विविधान् वृक्षान्नीलश्चिक्षेप संयुगे ॥७७॥ स तान् वृक्षान् समासाद्य प्रतिचिच्छेद रावणः । अभ्यवर्षत् सुघोरेण शरवर्षेण पावकिम् ॥७८॥ अभिवृष्टः शरौघेण मेघेनेव महाचलः । ह्रस्वं कृत्वा तदा रूपं ध्वजाग्रे निपपात ह ॥ ७९ ॥ पावकात्मजमालोक्य ध्वजाग्रे समुपस्थितम् । जज्वाल रावणः क्रोधात्ततो नीलो ननाद च ॥ ८० ॥ ध्वजाग्रे धनुषश्चाग्रे किरीटाग्रे च तं हरिम् । लक्ष्मणोऽथ हनूमांश्च दृष्ट्वा रामश्च विस्मिताः ॥ ८१ ॥

॥ ७२ ॥ हनुमानपीत्यादि । रावणम् अब्रवीदिति सम्बन्धः । अभिधावनम् अन्येन युद्ध्यमानं प्रत्यभिधावनमित्यर्थः । अत्रेतिकरणं द्रष्टव्यम् ॥ ७३--७७ ॥ स तानिति । समासाद्य समीपं प्राप्य । पावकिं पावकपुत्रम् ॥ ७८ ॥ ७९ ॥ जज्वाल चुक्रोधेत्यर्थः ॥ ८० ॥ ८१ ॥ रामानु०-ध्वजाग्र इति । शरौघसमायस्तः शरौघपीडितः ॥ ७२ ॥ हनुमानपीत्यादि श्लोकद्वयमेकं वाक्यम् । युद्धेप्सुः हनुमान् नीलेन संयुक्तं रावणं विप्रेक्षमाणः अन्येन युध्यमानस्य युध्यमाने सति अभिधावनं न युक्तमित्यब्रवीदिति योजना ॥ ७३--८० ॥ ध्वजाग्र इति । रावणकिरीटे स्थितेः केनापि दुष्करत्वाल्लक्ष्मणादयस्त्रयोऽपि

इति । हनुमांश्च विस्मितः । " न मारुतेरस्ति गतिप्रमाणम् " इति प्रसिद्धगतिलाघवो हनुमानपि संजातविस्मयोऽभूदित्यर्थः ॥ ८१ ॥ रावणोऽपीति । आहारयामास आददे ॥ ८२ ॥ लब्धलक्षाः लब्धहर्षविषयाः । नीलमेव पश्यन्त इति वाऽर्थः ॥ ८३ ॥ वानराणां चेति । चशब्देन नीललाघवं समुच्चीयते । सम्भ्रमः व्यग्रता । प्रत्यपद्यत अजानात् । आग्नेयेन आग्नेयमन्त्रेण । संयुक्तम् अभिमन्त्रितम् ॥ ८४ ॥ ८५ ॥ कपे इत्यादि । कपे चञ्चलप्रकृते इत्यर्थः । अतो न वानर



रावणोऽपि महातेजाः कपिलाघवविस्मितः । अस्त्रमाहारयामास दीप्तमाग्नेयमद्भुतम् ॥ ८२ ॥ ततस्ते चुक्रुशुर्हृष्टा लब्धलक्षाः प्लवङ्गमाः । नीललाघवसम्भ्रान्तं दृष्ट्वा रावणमाहवे ॥८३॥ वानराणां च नादेन संरब्धो रावणस्तदा । सम्भ्रमाविष्टहृदयो न किञ्चित् प्रत्यपद्यत ॥ ८४ ॥ आग्नेयेनाथ संयुक्तं गृहीत्वा रावणः शरम् । ध्वजशीर्षस्थितं नीलमुदैक्षत निशाचरः । ततोऽब्रवीन्महातेजा रावणो राक्षसेश्वरः ॥८५॥ कपे लाघवयुक्तोऽसि मायया परयाऽनया । जीवितं खलु रक्षस्व यदि शक्तोऽसि वानर ॥ ८६॥ तानि तान्यात्मरूपाणि सृजसि त्वमनेकशः ॥ ८७ ॥ तथापि त्वां मया युक्तः सायकोऽस्त्रप्रयोजितः । जीवितं परिरक्षन्तं जीविताद् भ्रंशयिष्यति ॥८८॥ एवमुक्त्वा महाबाहू रावणो राक्षसेश्वरः । सन्धाय बाणमस्त्रेण चमूपतिमताडयत् ॥ ८९ ॥ सोऽस्त्रयुक्तेन बाणेन नीलो वक्षसि ताडितः । निर्दह्यमानः सहसा निपपात महीतले ॥ ९० ॥

पदेन पौनरुक्त्यम् । तानि तान्यात्मरूपाणि सृजसि त्वमनेकश इति । लाघवातिशयेन सृजसीव दृश्यस इत्यर्थः । ननु तानि तानीत्यनेन रावणो नीलं नानातनुपरिग्रहयुक्तं मन्यत इत्यवगम्यत इति चेन्न; कपे लाघवयुक्तोऽसीति पूर्वोक्तिविरोधात् । युक्तः प्रयुक्तः । अस्त्रप्रयोजितः अस्त्रमन्त्रेणाभिमन्त्रितः । जीवितं परिरक्षन्तं त्वां जीविताद् भ्रंशयिष्यतीत्यन्वयः ॥ ८६–९० ॥ रामानु०–तानि तान्यात्मरूपाणि सृजसि त्वमनेकश इत्यभिधानात् ध्वजाकिरीटादिषु विस्मिताः ॥ ८१ ॥ न केवलं स्वपक्षा एव, अपितु शत्रू रावणोऽपि विस्मित इत्याह–रावणोऽपीति ॥ ८२ ॥ लब्धलक्षाः लब्धहर्षविषयाः । नीलमेव पश्यन्त इति वाऽर्थः ॥ ८३ ॥ संरब्धः क्रुद्धः ॥ ८४ ॥ ८५ ॥ मायया वञ्चनया ॥ ८६ ॥ आत्मरूपाणि आत्मयोग्यानि स्वपराक्रमोचितानि कर्माणि यद्यपि सृजसि तथापि मया मुक्तोऽस्त्रप्रयोजितोऽयं सायकः त्वां जीविताद् भ्रंशयिष्यति ॥ ८७–९२ ॥

नीलस्य वेगातिशयकृतमवस्थानं युगपदनेकशरीरपरिग्रहकृतमिति [illegible] ॥ ९० ॥ पितृमाहात्म्यम् अग्नेः पुत्रतया दयालुत्वं [illegible]भवम् ॥ ९१ ॥ ९२ ॥ सौमित्रिमासाद्य । वारयित्वा सुग्रीवादीन् वारयित्वा । रणमध्ये ज्वलन् स्थितः धनुर्विस्फारयामासेत्यन्वयः ॥ ९३ ॥ ९४ ॥ रक्षः रक्षोरूपः राजेत्य



पितृमाहात्म्यसंयोगादात्मनश्चापि तेजसा । जानुभ्यामपतद्भूमौ न च प्राणैर्व्ययुज्यत ॥९१॥ विसंज्ञं वानरं दृष्ट्वा दशग्रीवो रणोत्सुकः । रथेनाम्बुदनादेन सौमित्रिमभिदुद्रुवे ॥९२॥ आसाद्य रणमध्ये तु वारयित्वा स्थितो ज्वलन् । धनुर्विस्फारयामास कम्पयन्निव मेदिनीम् ॥९३॥ तमाह सौमित्रिरदीनसत्त्वो विस्फारयन्तं धनुरप्रमेयम् । अभ्येहि मामेव निशाचरेन्द्र न वानरांस्त्वं प्रतियोद्धुमर्हः ॥ ९४ ॥ स तस्य वाक्यं प्रतिपूर्णघोषं ज्याशब्दमुग्रं च निशम्य राजा । आसाद्य सौमित्रिमवस्थितं तं कोपान्वितो वाक्यमुवाच रक्षः ॥ ९५ ॥ दिष्ट्याऽसि मे राघव दृष्टिमार्गं प्राप्तोऽन्तगामी विपरीतबुद्धिः । अस्मिन् क्षणे यास्यसि मृत्युदेशं संसाद्यमानो मम बाणजालैः ॥ ९६ ॥ तमाह सौमित्रिरविस्मयानो गर्जन्तमुद्वृत्तसिताग्रदंष्ट्रम् । राजन्न गर्जन्ति महाप्रभावा विकत्थसे पापकृतां वरिष्ठ ॥९७॥

त्यन्वयः ॥ ९५ ॥ दिष्ट्येति । अन्तगामी विनाशेच्छुः अत एव विपरीतबुद्धिः त्वं दिष्ट्या यदृच्छया दृष्टिमार्गं प्राप्तोऽसि । संसाद्यमानः पीड्यमानः ॥ ९६ ॥ तमिति । अविस्मयानः तृणीकुर्वन्नित्यर्थः । उद्वृत्तसिताग्रदंष्ट्रम् उन्नतधवलाग्रदंष्ट्रम् । न गर्जन्ति नात्मश्लाघां कुर्वन्तीत्यर्थः । पापकृतां

आसाद्यं, सौमित्रिमिति शेषः । सुग्रीवादीन् वारयित्वा रणमध्ये ज्वलन् स्थित इत्यर्थः ॥९३॥९४॥ स तस्य वाक्यमित्यारभ्य किं मोघविकत्थनेनेत्येतदन्तस्य प्राती तिकार्थः स्पष्टः । वस्तुतस्तु–लक्ष्मणस्य रावणेन किमुत्तरं दत्तमत आह स तस्येत्यादिश्लोकद्वयेन । रक्षः राजा स तु लक्ष्मणस्य वाक्यम् उग्रं ज्याशब्दं च निशम्य कोपान्वितोऽपि विपरीतबुद्धिरपि अन्तगाम्यपि अवस्थितं तं सौमित्रिमासाद्य हे राघव! मे पापिष्ठस्यापि मम दिष्ट्या भाग्यवशेन दृष्टिमार्गं प्राप्तोऽसीति वाक्यमुवा चेति सम्बन्धः । स लक्ष्मणः किमुवाचेत्यत आह–अस्मिन् क्षण इत्यादिसार्धश्लोकेन । हे राजन् रावण ! महाप्रभावाः न गर्जन्ति । हे पापकृतां वरिष्ठ ! त्वं विकत्थसे, अत एव मम बाणजालैः सम्पात्यमानस्सन् अस्मिन् क्षणे मृत्युदेशं यास्यसि । अविस्मयानः सौमित्रिः उद्वृत्तसितोग्रदंष्ट्रं गर्जन्तं तमाहेति सम्बन्धः ॥९५–९७॥

वरिष्ठेति हेतुगर्भितविशेषणम् । पापकृद्वरिष्ठत्वादिकत्थस इत्यर्थः ॥ ९७ ॥ जानामीति सोपहासोक्तिः । तव विजने यतिवेषेण सीतामपहृतवतः । प्रतापं शत्रुभीषणत्वम् पराक्रमं शौर्यम् । " शौर्योद्योगौ पराक्रमौ " इत्यमरः । मोघविकत्थनेन निष्फलश्लाघनेन ॥ ९८ ॥ स इति । निशिते अग्रधारे अग्रपार्श्वे येषां तैः ॥ ९९ ॥ तानिति । पृषत्कान् बाणान् ॥ १०० ॥ कार्मुकसंप्रयुक्तं चापसंहितम् । क्षुरेति । क्षुरैः नापितशस्त्राकारैः । अर्धचन्द्रैः अर्धचन्द्रा

जानामि वीर्यं तव राक्षसेन्द्र बलं प्रतापं च पराक्रमं च । अवस्थितोऽहं शरचापपाणिरागच्छ किं मोघविकत्थनेन ॥ ९८ ॥ स एवमुक्तः कुपितः ससर्ज रक्षोधिपः सप्त शरान् सुपुङ्खान् । तान् लक्ष्मणः काञ्चनचित्रपुङ्खैश्चिच्छेद बाणैर्निशिताग्रधारैः ॥ ९९ ॥ तान् प्रेक्षमाणः सहसा निकृत्तान्निकृत्तभोगानिव पन्नगेन्द्रान् । लङ्केश्वरः क्रोधवशं जगाम ससर्ज चान्यान्निशितान् पृषत्कान् ॥ १०० ॥ स बाणवर्षं तु ववर्ष तीव्रं रामानुजः कार्मुकसम्प्रयुक्तम् । क्षुरार्धचन्द्रोत्तमकर्णिभल्लैः शरांश्च चिच्छेद न चुक्षुभे च ॥ १०१ ॥ स बाणजालान्यथ तानि तानि मोघानि पश्यं स्त्रिदशारिराजः । विसिष्मिये लक्ष्मणलाघवेन पुनश्च बाणान्निशितान् मुमोच ॥ १०२ ॥ स लक्ष्मणश्चाशु शरान् शिताग्रान् महेन्द्रवज्राशनितुल्यवेगान् । सन्धाय चापे ज्वलनप्रकाशान् ससर्ज रक्षोधिपतेर्वधाय ॥ १०३ ॥ स तान् प्रचिच्छेद हि राक्षसेन्द्रश्छित्त्वा च ताँल्लक्ष्मणमाजघान । शरेण कालाग्निसमप्रभेण स्वयम्भुदत्तेन ललाट देशे ॥ १०४ ॥ स लक्ष्मणो रावणसायकार्तश्चचाल चापं शिथिलं प्रगृह्य । पुनश्च संज्ञां प्रतिलभ्य कृच्छ्राच्चिच्छेद चापं त्रिदशेन्द्रशत्रोः ॥ १०५ ॥

कारमुखैः । उत्तमैः कर्णिभिः कर्णिशरैः । भल्लैः उभयपार्श्वधारैः । शरान् रावणशरान् चिच्छेद । तथापि न चुक्षुभे न कलुषितहृदयोऽभूत् ॥ १०१ ॥ स इति । त्रिदशारिराजः राक्षसराजः ॥ १०२ ॥ स लक्ष्मण इति । महेन्द्रवज्राशनितुल्यवेगान् महेन्द्रवज्रस्याशनेश्च तुल्यवेगान् ॥ १०३ ॥ १०४ ॥ स लक्ष्मण इति ।

तर्हि रणगम्भीरोऽहं त्वां क्षत्रधर्मेणाराधयिष्यामीत्यत आह–जानामीत्यादिना ॥ ९८ ॥ स इति । कुपितः वस्तुतस्तु कुपित इव ॥ ९९ ॥ तानिति । क्रोधवशं

शिथिलं यथा भवति तथा प्रगृह्य ॥ १०५ ॥ १०६ ॥ मेदेत्यकारान्तत्वमार्षम् । समुदग्रशक्तिः समधिकसामर्थ्यः ॥ १०७ ॥ राक्षसराष्ट्रनाथः राक्षससमूहनाथः ॥ १०८ ॥ बाह्वन्तरं वक्षः ॥ १०९ ॥ विह्वलन्तं मुह्यन्तम् ॥ ११० ॥ लक्ष्मणं भुजाभ्यामुद्धर्तुमुद्युक्तं रावणनृपिः परिहसति—हिमवानिति । शक्यमित्यव्ययम् । हिमवान् "धैर्येण हिमवानिव" इति समस्तधीरोपमानभूतो हिमवानपि रावणस्य भुजाभ्यामुद्धर्तुं शक्यम् । तदेक



निकृत्तचापं त्रिभिराजघान बाणैस्तदा दाशरथिः शिताग्रैः । स सायकार्तो विचचाल राजा कृच्छ्राच्च संज्ञां पुनराससाद ॥ १०६ ॥ स कृत्तचापः शरताडितश्च मेदार्द्रगात्रो रुधिरावसिक्तः । जग्राह शक्तिं समुदग्रशक्तिः स्वयम्भुदत्तां युधि देवशत्रुः ॥ १०७ ॥ स तां विधूमानलसन्निकाशां वित्रासिनीं वानरवाहिनीनाम् । चिक्षेप शक्तिं तरसा ज्वलन्तीं सौमित्रये राक्षसराष्ट्रनाथः ॥ १०८ ॥ तामापतन्तीं भरतानुजोऽस्त्रैर्जघान बाणैश्च हुताग्निकल्पैः । तथापि सा तस्य विवेश शक्तिर्बाह्वन्तरं दाशरथेर्विशालम् ॥ १०९ ॥ स शक्तिमान् शक्तिसमाहतः सन् मुहुः प्रजज्वाल रघुप्रवीरः । तं विह्वलन्तं सहसाऽभ्युपेत्य जग्राह राजा तरसा भुजाभ्याम् ॥ ११० ॥ हिमवान् मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः । शक्यं भुजाभ्यामुद्धर्तुं न सङ्ख्ये भरतानुजः ॥ १११

देशस्य कैलासस्य पुरा चालितत्वात् । मन्दरः सकलसागरप्रधानगभीरतरक्षीरोदक्षोभणक्षमोऽपि मन्दरो वा भुजाभ्यामुद्धर्तुं शक्यम् । स्वनिर्जितैरेव निर्जरैरमृतमथने जर्झरितत्वात् । मेरुः सकलकुलाचलवलयललामभूतोऽपि मेरुस्तथा कर्तुं शक्यम् । वायुनैव तच्छिखरस्य लङ्कायां अकूपारकुक्षौ निक्षिप्तत्वात् । त्रैलोक्यं पञ्चाशत्कोटिविस्तीर्णमुत्तीर्णपरिमाणान्तरं त्रैलोक्यमपि तथा कर्तुं शक्यम् । तदेकदेशधरण्या हिरण्याक्षेण कक्षीकृतत्वात् । सहामरैः त्रैलोक्यनिर्वाहकगीर्वाणैः सहितमपि तथा कर्तुं शक्यम् । तदधिपतेर्निजतनुजेनैव निगृहीतत्वात् । भरतानुजः रामानुजानुजः रामचतुर्थभागजगामेव । रावणविषये एतादृशस्थलेषु सर्वत्रैवमेव इवशब्दादिर्योजनीयः ॥ १००–१०६ ॥ स कृत्तचाप इति । मेदार्द्रगात्र इत्यत्र सन्धिरार्षः ॥ १०७–१०९ ॥ शक्तिमान् बलवानपि शक्तिसमाहतस्सन् । जज्वाल पपातेति पाठान्तरम् । विह्वलन्तं विकलं भवन्तम् । राजा रावणः तरसा बलेन लक्ष्मणं जग्राह इन्द्रजिद्बद्धयोरपि पुनरुत्थानदर्शनादिदानीमपि पुनरुज्जीवनभयेन गृहीत्वा समुद्रे प्रक्षेप्स्यामीत्यस्ततो रामोऽसहायो नङ्क्ष्यतीत्येवाशयेनायमारम्भः ॥ ११० ॥ हिमवानिति । हिमव

इत्यर्थः। रामचतुर्थभागोद्धरणेऽप्यशक्तः कथं रामेण योद्धुं शक्नोतीति भावः। अयोध्याकाण्डे [illegible]—"सीतामादाय गच्छ त्वमग्रतो भरताग्रज" इति वचनं बहुव्रीह्योक्तम्। भुजाभ्यामित्यनेन हिमवदादयो द्वाभ्यामेवोद्धर्तुं शक्यम्। अयं तु विंशतिभुजैरपि न शक्यत इति सूच्यते। रिपूणामप्रकम्प्योऽपीत्यनुवादात् सपरिकरेणापि रावणेन न शक्यमित्यपि सिद्धम्। कथं तर्हि हनुमतोद्धृत इत्यत्राह—सङ्ख्ये इति। दुर्हृदयेनोद्धर्तुं शक्य इत्यर्थः। अत एव वक्ष्यति वायुसूनोः सुहृत्त्वेनेति। अनेन हिमवदादिभ्योऽपि सङ्ख्ये पतितस्य लक्ष्मणशरीरस्य गरीयस्तोक्ता ॥ १११॥ कुतोऽस्यैतादृशी गरीयस्तेत्यत्राह—शक्त्येति। ब्राह्मया ब्रह्मसम्बन्धिन्या शक्त्या। स्तनान्तरे वक्षसि सौमित्रिस्ताडितः सन् विष्णोर्भागम् अंशभूतम् अचिन्त्यम् इयत्तया

**शक्त्या ब्राह्मयाऽपि सौमित्रिस्ताडितस्तु स्तनान्तरे। विष्णोरचिन्त्यं स्वं भागमात्मानं प्रत्यनुस्मरत् ॥ ११२ ॥**

इयत्तया च चिन्तयितुमशक्यम्। स्वमात्मानं स्वस्वरूपम्, "स्वात्माप्येनं विगर्हते" इति तथा प्रयोगात्। स्वात्मांश इति गुरुव्यवहाराच्च। प्रत्यनुस्मरत् स्मृतवान्। स्वस्वरूपस्मरणातिरिक्तव्यापाराकरणोक्त्या स्वाभाविकमेवास्येदं गुरुत्वमित्युक्तम्। यत्तु-स्वकीयांशस्मरणेन हेतुना लक्ष्मणेन स्वशरीरस्य गरीयस्त्वं सम्पादितमित्यनेनोक्तमिति तन्न, अपदार्थत्वादवाक्यार्थत्वाच्च। स्वरूपस्मरणस्य गरीयस्त्वं प्रति कारणताग्राहकप्रमाणाभावाच्च। यदपि-विपत्परिहारार्थं भगवन्तं स्वमूलकारणं विष्णुमस्मरदित्यर्थः इति। तदपि न; स्वस्यैव विष्णुरूपत्वेन विपत्परिहारान्तराभावात्। ननु मनुष्यभावना क्रियमाणा विरुध्येत, यदि स्वतो गौरवं भजेत। अतो विष्णुस्मरणमिति चेन्न। मानसभावनाया अपि लौकिकैरज्ञातत्वेन एवमपि मनुष्यभावनाया अन(नु)पायात्। अतः अपर्यनुयोज्यवस्तुस्वभावेनैव भक्ताभक्तेषु गरीयस्तागरीयस्ते। अत एवाचिन्त्यमित्युक्तम् ॥ ११२ ॥

दाद्रिकं भुजाभ्यामुद्धर्तुं शक्यम्, रावणस्येति शेषः। सङ्ख्ये भरतानुजः उद्धर्तुमशक्य इत्यर्थः ॥ १११ ॥ इतरशरीरसाधारणस्य लक्ष्मणशरीरस्योद्धरणाशक्तित्वे हेतुमाह—शक्त्येति। ब्राह्म्या ब्रह्मदत्तया। ताडनानन्तरं स्वमात्मानं विष्णोस्सर्वव्यापकस्याचिन्त्यम् इयत्तया चिन्तितुमशक्यम्। भागमंशं प्रत्यनुस्मरत् तद्विपत्परिहारार्थं भगवन्तं स्वमूलकारणं विष्णुमस्मरादित्यर्थः। अन्यथा सर्वथैतादृशस्मरणे विद्यमाने सति सर्वथाऽनुवर्तमाना मनुष्यबुद्धिर्बाध्येत। तस्यां च बाधितायां तया साध्यं रावणसंहारादिरूपं कार्यं न शक्येतेत्यभिप्रायः। एतेन स्वकीयांशस्मरणेन हेतुना लक्ष्मणेन स्वशरीरस्य गरीयस्त्वमुपात्तमित्युक्तं

वस्तुस्वरूपस्यैवंविधत्वात्तोलयितुमशक्तोऽभवदित्युक्तं भवति — तत इत्यादिसार्धश्लोक एकान्वयः । यतः स्वाभाविकमेव गरीयस्त्वं ततो हेतोः लङ्घने उद्धरणे अप्रभुः असमर्थः । अथ रणे पतनानन्तरं देवकण्टकः रावणः मानुषं देहमास्थितं दानवदर्पघ्नं वैष्णवं भागं सौमित्रिं भुजाभ्यां पीडयित्वा ततः वैष्णवभागरूपत्वाद्धेतोः लङ्घने अप्रभुरभवदित्यन्वयः । अत्रापि विशेषणसामर्थ्याद्वस्तुस्वरूपकृतमेवाकम्प्यत्वमित्युक्तम् । ननु च कथमंशसम्भवः?



ततो दानवदर्पघ्नं सौमित्रिं देवकण्टकः । तं पीडयित्वा बाहुभ्यामप्रभुर्लङ्घनेऽभवत् । अथैवं वैष्णवं भागं मानुष देहमास्थितम् ॥ ११३ ॥ अथ वायुसुतः क्रुद्धो रावणं समभिद्रवत् । आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना ॥ ११४ ॥ तेन मुष्टिप्रहारेण रावणो राक्षसेश्वरः । जानुभ्यामपतद्भूमौ चचाल च पपात च ॥११५॥ आस्यैः सनेत्र श्रवणैर्ववाम रुधिरं बहु ॥ ११६ ॥ विघूर्णमानो निश्चेष्टो रथोपस्थ उपाविशत् । विसंज्ञो मूर्च्छितश्चासीन्न च स्थानं समालभत् ॥११७॥ विसंज्ञं रावणं दृष्ट्वा समरे भीमविक्रमम् । ऋषयो वानराः सर्वे नेदुर्देवाः सवासवाः ॥ ११८॥

विष्णुस्वरूपस्य निरवयवत्वात् । सत्यम्, स्वरूपेण नांशत्वमुच्यते, किन्तु गुणाविर्भावतारतम्यात् । "गुणैः षड्भिस्त्वेतैः प्रथमतरमूर्तिस्तव बभौ ततस्तिस्रस्तेषां त्रियुगयुगलैर्हि त्रिभिरभूत् । व्यवस्थायां चैषां ननु वरद साविष्कृतिवशात् भवान् सर्वत्रैव त्वगणितमहामङ्गलगुणः ॥" इत्यभियुक्तैरुक्तत्वात् । मानुषरूपत्वं चास्य मानुषसमानाकृतिकत्वम् ॥ ११३ ॥ ११४ ॥ तेनेत्यादि । जानुभ्यां रथभूमावपतत् । अथ चचाल । ततः पपात अशयिष्ट । दशभिरास्यै रुधिरं ववाम । सनेत्रश्रवणैरित्यनेन नेत्रेभ्यः श्रवणेभ्यश्च रुधिरं ववामेत्युच्यते ॥ ११५ ॥ ११६ ॥ विघूर्णमान इति । किञ्चित्कालं विघूर्णमानः भ्रमन् । पुनर्निश्चेष्टः सन् रथोपस्थे रथमध्ये । उपाविशत् स्थितः । ततो मूर्च्छितः अत एव विसंज्ञः संज्ञाशून्यश्चासीत् । पुनः संज्ञां लब्ध्वाऽपि स्थानं स्थितिम् । नालभत् नालभत, चचालेत्यर्थः॥११७॥ रामानु०—रथोपस्थ उपाविशदिति । रथोपर्यवस्थानाभिधानात्पुना रथारोहणमवगम्यते ॥११७॥ नेदुः

भवति ॥ ११२ ॥ ततो दानवेत्यादि सार्धश्लोकमेकं वाक्यम् । मानुषं देहमास्थितं वैष्णवं भागं तं सौमित्रिम् । अथ वैष्णवभागस्मरणानन्तरम् । बाहुभ्यां पीडयित्वा ततः विष्ण्वंशस्मरणहेतुनैव लङ्घने उद्धरणे तोलने वा अप्रभुः असमर्थोऽभवदित्यर्थः ॥ ११३–११५ ॥ आस्यैरिति बहुत्वं दशाननत्वात् । अस्येति शेषः ॥ ११६ ॥ रथोपस्थे रथोपरिभागे ॥ ११७ ॥ नेदुः, सन्तोषादिति भावः । सहासुराः इति पाठः । रावणस्य देवबहुरेष्वपि क्लेशकरत्वेन तेषामपि वैरित्वात् ॥११८॥११९॥

हर्षेणेति शेषः ॥ ११८ ॥ अभ्याशं समीपम् ॥ ११९ ॥ ननु पूर्वं हिमवानित्यादिना लक्ष्मणस्याकम्प्यत्वमुक्तम्, तादृशस्य कपिना रामसमीप प्रापणं कथमित्याशङ्क्य विरोधं परिहरति—वायुसूनोरिति । सुहृत्त्वेन शोभनहृदयत्वेन, अनुकूलहृदयत्वेनेत्यर्थः । हृदयानुकूल्यमेवालम्, भक्तिस्त्व धिकेत्याह भक्त्या परमया चेति । चशब्दोऽन्वाचये । सः लक्ष्मणः । शत्रूणां रावणस्य तत्परिकराणां चेत्यर्थः । अप्रकम्प्योऽपि कम्पितुमशक्योऽपि ।

हनुमानपि तेजस्वी लक्ष्मणं रावणार्दितम् । अनयद्राघवाभ्याशं बाहुभ्यां परिगृह्य तम् ॥ ११९ ॥
वायुसूनोः सुहृत्त्वेन भक्त्या परमया च सः । शत्रूणामप्रकम्प्योऽपि लघुत्वमगमत् कपेः ॥ १२० ॥
तं समुत्सृज्य सा शक्तिः सौमित्रिं युधि दुर्जयम् । रावणस्य रथे तस्मिन् स्थानं पुनरुपागता ॥ १२१ ॥
आश्वस्तश्च विशल्यश्च लक्ष्मणः शत्रुसूदनः । विष्णोर्भागममीमांस्यमात्मानं प्रत्यनुस्मरन् ॥ १२२ ॥

कपेः कपेरपि । हनुमत एकस्य लघुत्वमगमत् लघुत्वमकरोत् । अनेन लघुत्वस्य बुद्धिपूर्वकत्वमुक्तम् । शत्रुमित्रयोर्दुष्प्रापत्वसुप्रापत्वे स्वरूपप्रयुक्ते अस्येति भावः । मूर्च्छितस्यापि लक्ष्मणस्य ज्ञानशक्तिप्रतिपादनेन तत्र तत्र राघवयोरज्ञानाशक्तिप्रत्यायकानि वचनानि मानुषवेषनिर्वहणपराणीति मन्तव्यानि ॥ १२० ॥ तमिति । दुर्जयमिति हेतुगर्भम् । तस्य दुर्जयस्वरूपत्वाच्छक्तिस्तं त्यक्त्वा गतेति भावः । एतच्छ्लोकानन्तरमाश्वस्त इति श्लोकः । ततो रावणोऽपीति श्लोकः पठनीयः ॥ १२१ ॥ आश्वस्त इति । आश्वस्तः लब्धसंज्ञः । विशल्यः प्ररूढव्रणमुखः, अभवदिति शेषः । अकाण्डे शक्ति निर्गमाश्वासनविशल्यत्वेषु को हेतुरत आह-विष्णोरिति । विरोधिप्रत्यनीकस्वभावत्वादिति भावः । अमीमांस्यम् अचिन्त्यम् । अनुस्मरन्नित्यनेन

पूर्वं हिमवानित्यादिना लक्ष्मणस्याप्रकम्प्यत्वमुक्तम्, तादृशस्य कपिना तोलनं राघवसमीपप्रापणं च कथमित्याशङ्क्य विरोधं परिहरति—वायुसूनोरिति । शत्रूणा मिति बहुवचनेन लक्ष्मणोद्धरणसमये रावणस्यानुचरैस्साहाय्यं कृतमिति गम्यते । मूर्च्छितस्यापि सौमित्रेर्ज्ञानशक्तिप्रतिपादनेन तत्र तत्र रामलक्ष्मणयोरज्ञाना शक्तिप्रत्यायकानि वचनानि मानुषवेषनिर्वहणपराणीति मन्तव्यानि । तत्र श्रीशुकः—"मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः । कुतोऽन्यथा स्यू रमतः स्व आत्मन् सीताकृतानि व्यसनानीश्वरस्य ॥" इत्यनेनाप्रकम्प्यस्यापि हनुमद्भक्तिसौहार्दाभ्यां तं प्रति लघुत्वप्राप्तिर्न विरुद्ध्यत इत्युक्तं भवति लघुत्व मिति ॥ १२० ॥ तं समुत्सृज्य ब्रह्मत्वेन ध्यानात्तत्समुत्सर्गः । स्थानं स्थितिम् ॥ १२१ ॥ यत्नं विनैव लक्ष्मणमपहाय कथं शक्तिर्गतवतीत्याशङ्क्य तत्रापि स्वांश

साधनानुष्ठानं किमपि न कृतवानित्युक्तम् ॥ १२२ ॥ १२३ ॥ निपातितेति । द्रवन्तीमिति रावणस्य बाणसन्धानदर्शनादिति भावः ॥ १२४ ॥ अथेति । अर्हसीत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ १२५ ॥ विष्णुर्यथेति सार्धश्लोक एकान्वयः । वायुपुत्रेण भाषितं तद्वाक्यं श्रुत्वा समाहितः सन् विष्णुर्गरुत्मन्तं यथा तथा महाकपिं हनुमन्तमारुरोहेति योजना ॥ १२६ ॥ रथस्थमित्यर्धमेकं वाक्यम् ॥ १२७ ॥ तमालोक्येत्यनुवादः अन्यवहितंपूर्व

रावणोऽपि महातेजाः प्राप्य संज्ञां महाहवे । आददे निशितान् बाणान् जग्राह च महद्धनुः ॥ १२३ ॥ निपातितमहावीरां द्रवन्तीं वानरीं चमूम् । राघवस्तु रणे दृष्ट्वा रावणं समभिद्रवत् ॥ १२४ ॥ अथैनमुपसङ्गम्य हनुमान् वाक्यमब्रवीत् । मम पृष्ठं समारुह्य राक्षसं शास्तुमर्हसि ॥ १२५ ॥ विष्णुर्यथा गरुत्मन्तं बलवन्तं समाहितः । तच्छ्रुत्वा राघवो वाक्यं वायुपुत्रेण भाषितम् । आरुरोह महाशूरो बलवन्तं महाकपिम् ॥ १२६ ॥ रथस्थं रावणं सङ्ख्ये ददर्श मनुजाधिपः ॥१२७॥ तमालोक्य महातेजाः प्रदुद्राव स राघवः । वैरोचनमिव क्रुद्धो विष्णुरभ्युद्यतायुधः ॥ १२८ ॥ ज्याशब्दमकरोत्तीव्रं वज्रनिष्पेषनिस्वनम् ॥ १२९ ॥ गिरा गम्भीरया रामो राक्षसेन्द्रमुवाच ह ॥ १३० ॥ तिष्ठ तिष्ठ मम त्वं हि कृत्वा विप्रियमीदृशम् । क्व नु राक्षसशार्दूल गतो मोक्षमवाप्स्यसि ॥ १३१ ॥ यदीन्द्रवैवस्वतभास्करान् वा स्वयम्भुवैश्वानरशङ्करान् वा । गमिष्यसि त्वं दश वा दिशोऽथवा तथापि मे नाद्य गतो विमोक्ष्यसे ॥ १३२ ॥

कालद्योतनार्थः । अभ्युद्यतायुधः क्रुद्धो राघवः विष्णुर्वैरोचनं बलिमिव प्रदुद्राव । साग्रहगमनमात्रे दृष्टान्तः ॥ १२८ ॥ ज्याशब्दमित्यर्धम् । वज्रनिष्पेषः स्फूर्जथुः । "स्फूर्जथुर्वज्रनिष्पेषः" इत्यमरः ॥ १२९ ॥ गिरेत्यर्धम् ॥१३०॥ तिष्ठ तिष्ठेति । ईदृशं लक्ष्मणप्रहाररूपं सीताहरणरूपं वा । मोक्षं, मत्त इति शेषः ॥१३१॥ यदीति । इन्द्रादीन् वा स्वयम्भ्वादीन् वा यदि गमिष्यसि यद्यपि गमिष्यसि तथापि अद्य मत्समीपं गतस्त्वं मे मत्तः न विमोक्ष्यसे ।

स्मरणमेव कारणमित्याह–आश्वस्त इति । यतो लक्ष्मणोऽमीमांस्यं मीमांसाया अविषयं विष्णोर्भागमात्मानं प्रत्यनुस्मरत् तत आश्वस्तो विशल्यश्चेत्यर्थः॥१२२–१३२॥

दश वा दिशो वेत्यत्र एको वाकारश्चार्थः ॥ १३२ ॥ यश्चैवेति । अद्य य एव त्वया शक्त्याऽभिहतः स एषः तव विषादमिच्छन् सन् सपुत्रदारस्य तव मृत्युः सन् सहसा अभ्युपेतः अभ्युपागतप्रायः, अचिरादागमिष्यतीत्यर्थः । यद्वा अद्येत्यादि । यः शक्त्याऽभिहतः स एवाद्यागतनाशः ।

लक्ष्मणं प्राहरमिति मागा गर्वमिति भावः ॥ १३३ ॥ लक्ष्मणेनाप्रहृतः कथं त्वया प्रहृतः स्यामित्याशङ्क्य स्वपराक्रमविशेषं दर्शयति—एतेनेति ।

यश्चैव शक्त्याऽभिहतस्त्वयाऽद्य इच्छन् विषादं सहसाऽभ्युपेतः । स एव रक्षोगणराज मृत्युः सपुत्रदारस्य तवाद्य युद्धे ॥ १३३ ॥ एतेन चात्यद्भुतदर्शनानि शरैर्जनस्थानकृतालयानि । चतुर्दशान्यात्तवरायुधानि रक्षस्सहस्राणि निषूदितानि ॥ १३४ ॥ राघवस्य वचः श्रुत्वा राक्षसेन्द्रो महाकपिम् । वायुपुत्रं महावीर्यं वहन्तं राघवं रणे । [ रोषेण महताऽऽविष्टः पूर्ववैरमनुस्मरन् । ] आजघान शरैस्तीक्ष्णैः कालानलशिखोपमैः ॥ १३५ ॥ राक्षसेनाहवे तस्य ताडितस्यापि सायकैः । स्वभावतेजोयुक्तस्य भूयस्तेजोऽभ्यवर्धत ॥ १३६ ॥ ततो रामो महातेजा रावणेन कृतव्रणम् । दृष्ट्वा प्लवगशार्दूलं कोपस्य वशमेयिवान् ॥ १३७ ॥ तस्याभिचङ्क्रम्य रथं सचक्रं साश्वध्वजच्छत्रमहापताकम् । ससारथिं साशनिशूलखड्गं रामः प्रचिच्छेद शरैः सुपुङ्खैः ॥ १३८ ॥ अथेन्द्रशत्रुं तरसा जघान बाणेन वज्राशनिसन्निभेन । भुजान्तरे व्यूढसुजातरूपे वज्रेण मेरुं भगवानिवेन्द्रः ॥ १३९ ॥

एतच्छब्दः सन्निहितपरः । एषोऽस्मीत्यादिप्रयोगात् अयं जन इति प्रयोगाच्च । मयेत्यर्थः । मृत्युशब्दापेक्षया वा एतेनेत्युक्तिः । चतुर्दशानि चतुर्दश शब्दादर्शआद्यचि टिलोपे कृते जसि रूपम् । यद्वा एतेनेति स्वाभेदेन लक्ष्मणो निर्दिश्यते ॥ १३४ ॥ राघवस्येत्याद्यर्धत्रयमेकं वाक्यम् । वहन्तमिति । आत्मानं प्रहृत्य पुनरपि रामं वहतीति क्रोधादिति भावः ॥ १३५ ॥ राक्षसेनेति । स्वभावतेजः स्वाभाविकतेजः ॥ १३६ ॥ तत इति । एयिवान् प्राप्तः ॥ १३७ ॥ अभिचङ्क्रम्य पौनःपुन्येन समीपं गत्वा ॥ १३८ ॥ वज्राशनिसन्निभेनेति बाणस्य वज्रसाम्यमुच्यते । वज्रेण मेरुं भगवानिवेन्द्र इति

इच्छन् योद्धुमिच्छन् ॥ १३३ ॥ एतेन लक्ष्मणेन शरैः चतुर्दशानि चतुर्दशसङ्ख्यावन्ति रक्षसां सहस्राणि निषूदितानीति सम्बन्धः । उभयोरैक्यविवक्षया लक्ष्मणेन निषूदितानीत्युक्तम् ॥ १३४–१३७ ॥ अभिसंक्रम्य संयुक्तो भूत्वा ॥ १३८ ॥ व्यूढं विशालम् सुजातरूपं राजार्हमहाभरणचन्दनादिभिः प्रशस्त

महत्त्वं रामस्येन्द्रसाम्यमित्यपुनरुक्तिः। भगवान् वीर्यवान्। "भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः ॥१३९॥ य इति। यः पुरा। वज्रपातयुक्ताशनिसन्निपातादिति मध्यमपदलोपिसमासः। वज्रम् इन्द्रायुधम्। अशनिः औत्पातिकः। न चुक्षुभे नार्तिं प्राप्तः। नापि चचाल नार्तिनिमित्तं चलनं प्राप्तः। राजा अन्यूनराजभावश्च स्थितः। सः रामबाणाभिहतः। भृशार्तः भृशमार्तः क्षुब्धः चचाल। वीरोऽपि चापं मुमोच। स्वस्य स्वरक्ष्य

यो वज्रपाताशनिसन्निपातान्न चुक्षुभे नापि चचाल राजा। स रामबाणाभिहतो भृशार्तश्चचाल चापं च मुमोच वीरः ॥ १४० ॥ तं विह्वलन्तं प्रसमीक्ष्य रामः समाददे दीप्तमथार्धचन्द्रम्। तेनार्कवर्णं सहसा किरीटं चिच्छेद रक्षोधिपतेर्महात्मा ॥ १४१ ॥ तं निर्विषाशीविषसन्निकाशं शान्तार्चिषं सूर्यमिवाप्रकाशम्। गतश्रियं कृत्तकिरीटकूटमुवाच रामो युधि राक्षसेन्द्रम् ॥ १४२ ॥ कृतं त्वया कर्म महत् सुभीमं हतप्रवीरश्च कृतस्त्वयाऽहम्। तस्मात् परिश्रान्त इव व्यवस्य न त्वां शरैर्मृत्युवशं नयामि ॥ १४३ ॥

त्वात्स्वयं त्यक्तवान् रामैकरक्ष्यत्वद्योतनाय ॥ १४० ॥ तमिति। विह्वलन्तं मूर्च्छितम्। प्रसमीक्ष्य तस्यानन्यशरणत्वमवलोक्य। अर्धचन्द्रम् अर्धचन्द्राकाराग्रं बाणम् आददे। तेन मुकुटं चिच्छेद मानभङ्गमकरोदित्यर्थः। महात्मा महामनाः, दयालुरित्यर्थः। आभ्यां श्लोकाभ्यां भगवद्रक्षणे निमित्तं स्वयत्ननिवृत्तिरेवेत्युक्तम् ॥ १४१ ॥ तमिति। तं त्यक्तचापम् अत एव निर्विषाशीविषसन्निकाशं निर्विषसर्पतुल्यम्। अप्रकाशं निस्तेजस्कम् अत एव शान्तार्चिषं शान्तकिरणं सूर्यमिव स्थितम्। कृत्तकिरीटकूटं छिन्नकिरीटसमूहम्। "मायानिश्चलयन्त्रेषु कैतवानृतराशिषु। अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्" इत्यमरः। अत एव गतश्रियं निष्प्रभम् उवाच ॥१४२॥ कृतमिति। महत् अनितरदुष्करम्। सुभीमं कर्म युद्धं कृतम्। रूपं तस्मिन् ॥ १३९ ॥ वज्रपातश्चाशनिसन्निपातश्चेति समाहारैकवत् ॥ १४०–१४२ ॥ हताः प्रवीरा यस्य तथा। तस्मात् युद्धधर्मज्ञानात्। व्यवस्य ज्ञात्वा ॥१४३॥

स०—सुभीमं कर्म समरे त्वया कृतम्। अहं हतप्रवीरः हताः हतप्रायाः प्रवीराः नीलाद्या यस्य स तथा कृतः। यद्वा त्वया निमित्तभूतेन अहं हताः प्रवीरास्तावकाः येन स तथा कृत इति वा। एतेनैकलापराधेन बहूनां घातो जात इति सूच्यते। सुभीमकर्मकर्तृत्वात्प्रहस्तादीनां सहायभूतानामभावाच्च परिश्रान्त इति व्यवस्य निश्चित्य त्वां न मृत्युवशं नयामि। किरीटत्रोटनेन त्वयाऽपि शिरःकर्तनसामर्थ्यं ममास्तीति ज्ञातमेवेति भावः ॥ १४३ ॥

किञ्च अहं हतलक्ष्मणादिप्रवीरश्च कृतोऽस्मि । तस्मात् अनेकवीरपतनावाधिकरणकरणात् । त्वं परिश्रान्तः आयुधधारणेऽपि श्रान्त इति व्यवस्य निश्चित्य त्वां मृत्युवशं मृत्योरधीनतां न नयामि, चिररणपरिश्रान्तकृन्तनकृतापवादापनोदाय सम्प्रति भवतः प्राणापहरणकर्मणो विरमामीत्यर्थः ॥ १४३ ॥ गच्छेति । रिपौ पुरो विलसति कथं गच्छेयमित्यत्राह अनुजानामीति । रणार्दितः युद्धे श्रान्तः । रात्रिंचरराज कूटयोधिन् ! इति सापहा

गच्छानुजानामि रणार्दितस्त्वं प्रविश्य रात्रिंचरराज लङ्काम् । आश्वास्य निर्याहि रथी च धन्वी तदा बलं द्रक्ष्यसि मे रथस्थः ॥ १४४ ॥ स एवमुक्तो हतदर्पहर्षो निकृत्तचापः स हताश्वसूतः । शरार्दितः कृत्तमहाकिरीटो विवेश लङ्कां सहसा स राजा ॥१४५॥ तस्मिन् प्रविष्टे रजनीचरेन्द्रे महाबले दानवदेवशत्रौ । हरीन् विशल्यान् सह लक्ष्मणेन चकार रामः परमाहवाग्रे ॥ १४६ ॥ तस्मिन् प्रभिन्ने त्रिदशेन्द्रशत्रौ सुरासुरा भूतगणा दिशश्च । ससागराः सर्षिमहोरगाश्च तथैव भूम्यम्बुचराश्च हृष्टाः ॥ १४७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

सोक्तिः । आश्वास्य विश्रम्य । रथी धन्वी च सन्निर्याहि । स त्वं तदा तादृशं मे बलं रथस्थ इत्युपलक्षणम् धानुष्कश्च सन् द्रक्ष्यसीत्यन्वयः ॥१४४॥ स इति । अत्र क्रियाभेदात्तच्छब्दत्रयमिति न तद्वैयर्थ्यम् । सहसा मुकुटभङ्गकृतलज्जयेति भावः ॥ १४५ ॥ तस्मिन्निति । प्रविष्टे, लङ्कामिति शेषः । दानवदेवशत्रावित्यनेन रावणनिर्गमो देवदानवदर्पहेतुरिति सूच्यते । सह लक्ष्मणेनेति । लक्ष्मणस्य पूर्वमेव विशल्यत्वेऽप्यादरात् पुनः करणम् । परमाहवाग्र इत्यनेन विशल्यकरणं विना सुग्रीवादीनां हरिणामन्यत्रानयनासंभवः सूच्यते ॥ १४६ ॥ पूर्वसूचितं देवादिहर्षं प्रपञ्चयति–तस्मिन्निति । प्रभिन्ने पराजिते । दिशः दिक्पालाः । सागराः सागरवासिनः । अम्बुचराः सागरभिन्नाम्बुचराः । हृष्टाः, बभूवुरिति शेषः । पञ्चचां रावणमुकुटभङ्गः ॥ १४७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

गच्छानुजानामीत्याश्वास्य विश्रम्य ॥ पञ्चचां रावणस्य प्रथमपराजयः ॥१४४–१४७॥ इति श्रीमहे० श्रीरामायण० युद्धकाण्डव्याख्यायाम् एकोनषष्टितमः सर्गः ॥५९॥

स०—इतो रणात् रणमण्डलात् प्रयाहि । जानामि अनुजानामि । प्रयाहि जानामि इति पाठः । उपसर्गाश्च धातुलीनार्थद्योतका इत्युपपद्यते अनुजानामीति । रथी सहायातानेकरथवान् । सधन्वीत्यप्येवमेव स त्वं धन्वीति वा । प्रेक्ष्यसि प्रेक्षिष्यसि ॥ १४४ ॥ भूम्यम्बुचराः भूमिचराः अम्बुचराः मनुष्याद्यो यादांसि च । प्रहृष्टाः सर्वोपद्रवकर्तृपराभवस्य सर्वापेक्षितत्वादिति भावः ॥ १४७ ॥

अथ कुम्भकर्णप्रबोधनं षष्टौ—स प्रविश्येत्यादि । रामबाणभयार्दितः किमिदानीमपि रामबाणाः पतेयुरिति भयपीडितः । व्यथितेन्द्रियः दुःखित मनस्कः ॥ १ ॥ मनोव्यथासुपपादयितुं तद्धेतुं सदृष्टान्तमनुवदति—मातङ्ग इवेति । महात्मना महास्वभावेन, बलवतेत्यर्थः ॥ २ ॥ ब्रह्मदण्डेति । ब्रह्मदण्डः ब्रह्मशापः, सर्वास्त्रनिगरणक्षमो वसिष्ठदण्डो वा ब्रह्मास्त्रं वा । युगान्तकालसमुत्थितोऽग्निवर्णो धूमकेतुरित्येके । तत्प्रकाशानां बाणानामिति

स प्रविश्य पुरीं लङ्कां रामबाणभयार्दितः । भग्नदर्पस्तदा राजा बभूव व्यथितेन्द्रियः ॥ १ ॥ मातङ्ग इव सिंहेन गरुडेनेव पन्नगः । अभिभूतोऽभवद्राजा राघवेण महात्मना ॥ २ ॥ ब्रह्मदण्डप्रकाशानां विद्युत्सदृशवर्चसाम् । स्मरन् राघवबाणानां विव्यथे राक्षसेश्वरः ॥ ३ ॥ स काञ्चनमयं दिव्यमाश्रित्य परमासनम् । विप्रेक्षमाणो रक्षांसि रावणो वाक्यमब्रवीत् ॥४॥ सर्वं तत् खलु मे मोघं यत्ततं परमं तपः । यत् समानो महेन्द्रेण मानुषेणास्मि निर्जितः ॥ ५ ॥ इदं तद्ब्रह्मणो घोरं वाक्यं मामभ्युपस्थितम् । मानुषेभ्यो विजानीहि भयं त्वमिति तत्तथा ॥ ६ ॥ देवदानवगन्धर्वैर्यक्षराक्षसपन्नगैः । अवध्यत्वं मया प्राप्तं मानुषेभ्यो न याचितम् ॥ ७ ॥ विदितं मानुषं मन्ये रामं दशरथात्मजम् । इक्ष्वाकुकुलनाथेन अनरण्येन यत्पुरा ॥ ८ ॥ उत्पत्स्यते हि मद्वंशे पुरुषो राक्षसाधम । यस्त्वां सपुत्रं सामात्यं सबलं साश्वसारथिम् । निहनिष्यति सङ्ग्रामे त्वां कुलाधम दुर्मते ॥ ९ ॥

" अधीगर्थदयेशां कर्मणि " इति षष्ठी ॥ ३ ॥ ४ ॥ सर्वमिति । मे मया यत्तपस्ततं तत् सर्वं मोघम्, जातमिति शेषः ॥ ५ ॥ ब्रह्मवाक्यं तु फलितमित्याह—इदमिति । त्वं मानुषेभ्यो भयं विजानीहीति यत् ब्रह्मणो घोरं वाक्यं तदिदं मामभि मां प्रति उपस्थितं मयि फलितमित्यर्थः । यतस्तत् ब्रह्मवाक्यं तथा । न तु मोघं भविष्यतीत्यर्थः ॥ ६ ॥ देवेति । प्राप्तं याचित्वा प्राप्तम्, मानुषेभ्योऽवध्यत्वं नैव याचितमित्यर्थः ॥ ७ ॥ विदितमित्यादि सार्धश्लोकद्वयमेकान्वयम् । यस्त्वामित्यत्र तु आमिति छेदः । आमित्यङ्गीकारे । यस्तु पुरुषस्त्वां सङ्ग्रामे निहनिष्यति सः मद्वंशे उत्पत्स्यते । आं निश्चितम् ।

॥ १ ॥ २ ॥ ब्रह्मेति । ब्रह्मदण्डप्रकाशानां ब्रह्मदण्डो नाम युगान्तकालसमुत्थितोऽग्निवर्णो धूमकेतुः । यद्वा ब्रह्मदण्डो ब्रह्मास्त्रम् । राघवबाणानामिति कर्मणि षष्ठी ॥ ३–५ ॥ इदमिति । त्वं मानुषेभ्यो भयं विजानीहीति ब्रह्मणो घोरं यद्वाक्यं तदिदं मामभ्युपस्थितम्, तद्वाक्यं तथा अमोघमित्यर्थः ॥ ६ ॥ ७ ॥ विदितमित्यादि सार्धश्लोकद्वयमेकम् । शप्तोऽहमित्येतदुपरितनं काकाक्षिन्यायेनात्रापि सम्बध्यते । हे राक्षसाधम ! यः सपुत्रं सामात्यं त्वां सङ्ग्रामे निहनिष्यति

इति एवंप्रकारेण इक्ष्वाकुकुलनाथेन अनरण्येन यत् यस्मात् पुरा विदितं प्रतिज्ञातम् । " विदितौ ज्ञातविश्रुतौ " इति नानार्थरत्नमाला । तस्मात् मानुषं रामं दशरथात्मजं दशरथपुत्रत्वेन जातं मन्ये । राक्षसाधम कुलाधमेति जातितः कुलतश्च नीचत्वमुच्यते । दुःखातिरेकादनरण्योक्तपरुषानुवादः । अन्ये तु त्वामिति द्विरुक्तिरनुस्मरणार्थेत्याहुः । अपरे त्वाग्रहातिशयेन द्विरुक्तिरिति । त्वां प्रत्युत्पत्स्यत इति द्वितीयत्वांशब्दान्वय इत्येके ॥८॥९॥

शप्तोऽहं वेदवत्या च यदा सा धर्षिता पुरा । सेयं सीता महाभागा जाता जनकनन्दिनी ॥ १० ॥
उमा नन्दीश्वरश्चापि रम्भा वरुणकन्यका । यथोक्तास्तपसा प्राप्तं न मिथ्या ऋषिभाषितम् ॥ ११ ॥
एतदेवाभ्युपागम्य यत्नं कर्तुमिहार्हथ । राक्षसाश्चापि तिष्ठन्तु चर्यागोपुरमूर्द्धसु ॥ १२ ॥

किंचाहं पुरा वेदवत्या शप्तोऽस्मि । मत्कृते तव विनाशो भविष्यतीति । कदेत्यत्राह यदेति । सा वेदवती यदा धर्षिता बलात्कृता तदा । अथ तया किं क्रियते ? सीता ह्येतदुपद्रवमूलमित्यत्राह सेयमिति । सा वेदवती स्वशापनिर्वाहार्थं सीता जाता ॥ १० ॥ उमादयश्चत्वारः तपसा तपःप्रभावेन यथोक्ताः यथोक्तवन्तः तथा प्राप्तं सिद्धम् । ऋषिभाषितं न मिथ्या भवति हि । नन्दीश्वररम्भाशापावुत्तररामायणे प्रोक्तौ । उमावरुणकन्यकाशापौ चानेनैव सिद्धौ ॥ ११ ॥ एतत् शापस्वरूपम् । अभ्युपागम्य ज्ञात्वा । इह प्रकृते शत्रुविजये कार्ये । यत्नम् अवधानं कर्तुमर्हथ । चर्याः गोपुरपार्श्वस्थभटसञ्चार

स पुरुषो मद्वंशे त्वां प्रत्युत्पत्स्यते हि इति । यद्यस्मात्कारणादिक्ष्वाकुकुलजातेन अनरण्येन पुरा शप्तोऽहं तस्मान्मया पूर्वमेव विदितं दशरथात्मजं रामं मानुषं मन्य इति सम्बन्धः । त्वामिति द्विरुक्तिराग्रहातिशयेन ॥ ८ ॥ ९ ॥ शप्तोऽहमिति । वेदवत्या चाहं शप्तः । कुतः ? पुरा यदा यस्मात्कारणात् सा वेदवती धर्षिता । अस्तु, प्रकृते किमायातमत आह सेयमिति । महाभागा सैव वेदवत्येव जनकनन्दिनी सीता जातेत्यर्थः ॥ १० ॥ उमेति । तपसा तपोबलेन यथोक्तं तत्तथैव मया प्राप्तम् अतस्तदृषिभाषितं न मिथ्येति सम्बन्धः । यथोक्तं तन्मया प्राप्तमिति वा पाठः । एतैर्यथा उक्तं तन्मया प्राप्तमित्यर्थः । उमाशापस्तु कैलासगिरिचालनवेलायां रावण! ते स्त्रीनिमित्तं वध इत्येवंरूप इति ज्ञेयम् । नन्दीश्वरशापस्तु उत्तररामायणे 'यस्माद्वानरमूर्तिं मां दृष्ट्वा राक्षस दुर्मते । मौर्ख्यान्मामवजानीषे परिहासं च मुञ्चसि । तस्मान्मद्रूपसंयुक्ता मद्वीर्यसमतेजसः । उत्पत्स्यन्ते वधार्थं हि कुलस्य तव वानराः ॥ " इति । रम्भाशब्देन रम्भा निर्बन्धकृतनलकूबरशाप उच्यते । तदुक्तमुत्तरकाण्डे—" यदा त्वकामां कामार्तो धर्षयिष्यति योषितम् । मूर्द्धा तु शतधा तस्य शकलीभविता तदा ॥ " इति । वरुणकन्यका पुञ्जिकस्थला । तेन च तन्निबन्धनब्रह्मशापो विवक्षितः । सोऽपि स्त्रीधर्षणनिमित्तवधरूपः ॥ ११ ॥ एतदेव एतच्छापनिमित्तमेव अभ्युपगम्य

प्रदेशाः ॥ १२ ॥ ब्रह्मशापाभिभूतः ब्रह्मशापकृतनिद्रापरवश इत्यर्थः ॥ १३ ॥ किमर्थं कुम्भकर्णो विबोध्यत इत्याशङ्क्य कविराह–स पराजितमिति । आदिदेश, कुम्भकर्णविबोधनार्थमिति शेषः ॥ १४ ॥ द्वारेषु अवान्तरद्वारेषु । यत्नः क्रियताम्, प्राकारश्चाधिरुह्यताम्, वानरानारोहार्थमिति भावः । निद्रावशसमाविष्टः निद्रावशेन शयानः । सद्यः कर्तव्यत्वाय पुनरुक्तिः ॥१५॥ सुखमिति । दुःखिते चिन्ताकुले अनवाप्तकामे मयि जाग्रति सतीति शेषः ।

स चाप्रतिमगम्भीरो देवदानवदर्पहा । ब्रह्मशापाभिभूतस्तु कुम्भकर्णो विबोध्यताम् ॥ १३ ॥
स पराजितमात्मानं प्रहस्तं च निषूदितम् । ज्ञात्वा रक्षोबलं भीममादिदेश महाबलः ॥ १४ ॥
द्वारेषु यत्नः क्रियतां प्राकारश्चाधिरुह्यताम् । निद्रावशसमाविष्टः कुम्भकर्णो विबोध्यताम् ॥ १५ ॥
सुखं स्वपिति निश्चिन्तः कालोपहतचेतनः । नव षट् सप्त चाष्टौ च मासान् स्वपिति राक्षसः ॥ १६ ॥

न केवलमिदानीमेव, सर्वदाप्येवमेवेत्याह नवेति । कदाचिन्नवमासान् कदाचित् षण्मासान् कदाचित्सप्तमासान् कदाचिदष्टमासांश्चानियमेन स्वपितीत्यर्थः । अत एवोत्तरकाण्डे अविशेषेण वरप्रार्थना कुम्भकर्णेन क्रियते–"स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितम्" इति । उत्तरत्र रामं प्रति विभीषणवचने–"शयिता ह्येष षण्मासानेकाहं जागरिष्यति" इति वचनं तु पक्षान्तराणामप्युपलक्षकम्, अन्यूनाभिप्रायं वा । सप्तमासादिस्वापसंभवेऽपि षण्मासस्वापः संभवत्येव । यद्वा नवसप्तदशाष्टौ च मासान् स्वपिति राक्षस इति पाठः । दशाष्टौ दशमासहानौ सत्यां नवसप्तमासान् षण्मासानित्यर्थः । अष्टिरशनम्, नाश इति यावत् । नवसप्तमासाः षोडशमासाः तेषु दशमासलोपे हि षण्मासा एवावशिष्यन्ते । अथवा "षडहैर्मासान्त्संपाद्याहरुत्सृजन्ति षडहैर्हि मासान्त्संपश्यन्त्यर्धमासैर्मासान्त्संपाद्याहरुत्सृजन्त्यर्धमासैर्हि मासान्त्संपश्यन्त्यमावास्यया मासान् संपाद्याहरुत्सृजन्त्यमावास्यया हि मासान् ज्ञात्वा । यत्नं कर्तुमर्हथ, लङ्कारक्षण इति शेषः । तत्प्रकारमेवाह राक्षसाश्चेति ॥ १२ ॥ १३ ॥ अकाले रावणः किमिति कुम्भकर्णं बोधितवानित्यपेक्षायां कविराह–स पराजितमिति । सः महाबलो रावणः प्रहस्तं निषूदितम् आत्मानं च पराजितम्, विचार्येति शेषः । रक्षः कुम्भकर्णं भीमबलं ज्ञात्वा आदिदेश,

स०–ब्रह्मशापाभिभूतः ब्रह्मणा इन्द्रवाक्यश्रवणानन्तरं कुम्भकर्णाय शापो दत्त इति तेनाभिभूतः । "तस्मात्त्वमद्यप्रभृति मृतकल्पः शयिष्यसे ।" इत्यत्रैवाग्रे व्यक्तम् । न च तस्य वरादेव स्वापसिद्धेः शापो व्यर्थ इति वाच्यम्; सरस्वत्या स्वानुकूलं वाचयित्वा ब्रह्मणि गते सति देवैरहं वञ्चित इति ज्ञात्वा स्वच्छन्दत्वात्स्वापस्य नाहं तथा करोमीति निश्चित्य पुनश्च कुम्भकर्णेन प्रजाबाधे सति कथितशापसार्थक्यसम्भवात् । अभिभूतः तिरस्कृतः । यथोक्तमुत्तरकाण्डे " वरव्याजेन मोहोऽस्मै दीयताममितप्रभ " इति ॥ १३ ॥

संपश्यन्ति पौर्णमास्या मासान्त्संपाद्याहरुत्सृजन्ति पौर्णमास्या हि मासान्त्संपश्यन्ति " इत्युक्तवाक्यविकल्पेषु षडहानामपि मासत्वश्रवणात्तत्प्रकारेण नवषडित्युक्तत्रिंशन्मासा अपि अशीत्युत्तरशतदिनतया अमावास्यया पौर्णमास्या वा परिगणनेन षण्मासा एव संपद्यन्त इति न कश्चिद्विरोधः। तथा हि—अस्ति किंचित् उत्सर्गिणामयनं नाम सत्त्रं गवामयनस्य विकृतिः। तत्र प्रकृतौ द्वादशमासेष्वनुष्ठेयानां सोमयागविशेषाणां त्रिंशतोऽनुष्ठेयत्वान्न किंचिदहरुत्स्रष्टुं शक्यते। तद्विकृतावत्र प्रतिमासमेकस्मिन्नहनि सोमयागपरित्यागो विधीयते। तत्र कतममहस्त्यज्यतामित्यपेक्षायामुच्यते—' अमावास्यया मासान्त्संपाद्याहरुत्सृजन्त्यमावास्यया हि मासान्त्संपश्यन्ति पौर्णमास्या मासान्त्संपाद्याहरुत्सृजन्ति पौर्णमास्या हि मासान्त्संपश्यन्ति ' इति।

मन्त्रयित्वा प्रसुप्तोऽयमितस्तु नवमेऽहनि। तं तु बोधयत क्षिप्रं कुम्भकर्णं महाबलम् ॥ १७ ॥

अस्यार्थः—अमावास्यायामनुष्ठेयेन यागेन पूर्वमासं परिसमाप्य उत्तरस्यादिभूतमहस्त्यज्यतामिति। पौर्णमास्यामनुष्ठेयेन यागेन पूर्वमासं परिसमाप्य उत्तरस्यादिभूतमहस्त्यज्यतामिति च। अस्मिन् विधाने अर्थवादे प्रसिद्धिवाचिना हिशब्देन अमावास्याया मासान्तत्वम्। उत्तरवाक्ये पौर्णमास्या मासान्तत्वं च श्रुतम्। एवम् 'अर्धमासैर्मासान्त्संपाद्याहरुत्सृजन्त्यर्धमासैर्हि मासान् संपश्यन्ति षडहैर्मासान् संपाद्याहरुत्सृजन्ति षडहैर्हि मासान्त्संपश्यन्ति ' इत्यत्रापि पक्षात्मकः षडहात्मकोऽपि मासोऽस्तीति हिशब्देन दर्शितम्। ननु च षडहैरिति बहुवचननिर्देशात् पञ्चभिः षडहैरिति व्याख्यानेन त्रिंशद्दिनात्मको मास एवात्र कथ्यत इति चेन्न; अर्धमासैरित्यत्रापि तथात्वापत्तेः। तदानीं बह्वर्धमासानां मासत्वस्वीकारे पक्षत्रयस्यापि मासत्वप्रसङ्गः। तत्र " पक्षा वै मासाः " इत्युक्तरीत्या एकैकस्य पक्षस्य मासत्वस्वीकारे अत्राप्येकैकस्यैव षडहस्य मासत्वस्वीकारो युक्तः। पूर्वकल्पेष्विव अत्रापि प्रसिद्धिवाचकहिशब्दप्रयोगात्। अन्यथा उत्तरानुवाके "षडहैर्मासान्त्संपाद्य यत्सप्तममहस्तस्मिन्नुत्सृजेयुः" इति वाक्यविरोधः स्यात्। सप्तमत्वं ह्यत्र विशिष्यते। षडहैर्मासानित्यत्र मासशब्दस्य मासैकदेशलक्षणाङ्गीकारे स एव दोषः। तस्मात् षडहात्मकोऽपि मासोऽस्तीति सिद्धम्। तमिमं श्रौतं षडहमासत्वपक्षमनुस्मरन्तः षण्मासानेव वदन्ति—नव षट् सप्त चाष्टौ च मासान् स्वपिति राक्षसः इति ॥ १६ ॥ ननु सुप्तः कथं बोधयितुं शक्य इत्याशङ्क्य इदानीमेव स्वापारम्भात् सुप्रबोधोऽयमित्याशयेनाह—मन्त्रयित्वेति। अत्र केचित्—' एकाहं जागरिष्यति ' इति कुम्भबोधनं मतीति शेषः ॥ १४-१६ ॥ मन्त्रं कृत्वा प्रसुप्तोऽयमितस्तु [illegible] इतः [illegible] दिवसात् नवमेऽहनि प्रसुप्त इत्यर्थः। तथाहि—

कर्णस्य स्वापोत्सर्जनानन्तरमेकस्मिन् दिन एव प्रबोधनियमस्योक्तत्वान्मन्त्रकरणदिनसमनन्तरदिन एव कुम्भकर्णस्य स्वापारम्भः। 'आजगाम मुहूर्तेन' इत्यनेन विभीषणागमनमपि मन्त्रदिन एव। " विभीषणेनाशु जगाम सङ्गमम् " इत्यनेन तदागमनानन्तरमेव तस्य स्वीकारः। तद्दिवसप्रभृति दिवसत्रये समुद्रप्रार्थनार्थं रामस्य दर्भशयनम्। तदनन्तरं पञ्चदिनेषु सेतुबन्धः। सेतुबन्धपूर्तिदिवसे एव सायंकाले सुवेलारोहणम्। तस्यामेव रात्रौ सुग्रीवरावणयो द्वन्द्वयुद्धम्। समनन्तरदिने तुमुलयुद्धम्। तत्रैव रात्रौ नागपाशबन्धमोक्षौ। धूम्राक्षवज्रदंष्ट्राकम्पनवधश्च। अनन्तरदिने प्रहस्तवधः रावणमुकुटभङ्गश्च। एवं दिवसगणनोपपत्तिरिति वदन्ति। तच्चिन्त्यम्। सुवेलारोहणरात्रौ पूर्णचन्द्रोदयवर्णनेन सुवेलारोहणदिनं पौर्णमासीति सिद्धम्। रावणमरणदिनं चामा वास्येति स्फुटम्। एवं च त्वदुक्तरीत्या द्वितीयायामेव मुकुटभङ्गे रावणस्य दर्शपर्यन्तं विलम्ब्य युद्धकरणं चिन्त्यम्। वस्तुतस्तु इतः प्रसक्ताद्युद्धारम्भ दिनादित्यर्थः। तद्दिनमपहाय तत्पूर्वदिनापेक्षया नवमेऽहनि तत्पूर्वदिनकृतमन्त्रः प्रसुप्तः। तथा च पौर्णमास्यां सुवेलारोहणं प्रथमायां युद्धारम्भः। तत्पूर्वं नवमादिनं सप्तमी। तस्यां कुम्भकर्णः सुप्तः, रामस्य दर्भशयनारम्भश्च। षष्ठ्यां कुम्भकर्णादिभिर्मन्त्रविचारः। तस्यामेव विभीषणनिर्गम इति। इत्थं चाहुः—सीताहरणात् पूर्वं त्रयोदशसंवत्सरा गताः। चतुर्दशवर्षारम्भे सीता हृता, पम्पातीरे वसन्तवर्णनात्। आषाढे वालिवधः। तदनन्तरं वर्षर्तुवर्णनात्। आश्वयुजे सीतान्वेषणसमुत्साहनमिति स्फुटम्। स्वयंप्रभाबिले बहुकालो गतः। फाल्गुनशुद्धत्रयोदश्यां हनुमतो लङ्काप्रवेशः। "पुष्पिताग्रान् वसन्तादौ ददर्श विविधान् द्रुमान्" इति वसन्तादिभूतफाल्गुनमासतासूचकवृक्षाग्रपुष्पितत्वोक्त्या तथा प्रतीतेः। "स्थितः ककुद्मानिव तीक्ष्णशृङ्गः" इति श्लोके प्रतिपूर्णशृङ्ग इति पदेन प्रतिपूर्णशृङ्गवच्चन्द्रवर्णनस्य तस्यामेव संभवात्। यस्मिन्दिने रात्रौ लङ्कायां सीतान्वेषणं तदनन्तरदिन एव प्रातर्लङ्कादाहः। "अवश्यमेव द्रष्टव्या मया लङ्का निशाक्षये" इत्युक्तत्वात्। अनन्तरं तस्मिन्नेव दिने अविलम्बेन प्रत्यागमनम्। "यदि वा मन्यसे वीर वसैकाहमरिन्दम" इति सीतया पृष्टे "एवमाश्वास्य वैदेहीं हनुमान्मारुतात्मजः। गमनाय मतिं चक्रे" इत्युक्तेः। उषसि लङ्कादाहानन्तरं तस्मिन्नेव दिने मध्याह्नात् पूर्वमेवाङ्गदा दिभिर्मधुवनविधमनपूर्वकं रामप्राप्तिः, अरिष्टपर्वतारोहणे तद्वर्णनव्याजेन "बोध्यमानमिव प्रीत्या दिवाकरकरैः सुखैः" इति सूर्योदयसमयमुक्त्वा अनन्तर मस्तमयानुक्तेः। तस्मिन्नेव दिवसे चतुर्दशीशेषयुक्तपौर्णमासीयुते मध्याह्ने युद्धयात्रा। "अस्मिन्मुहूर्ते सुग्रीव प्रयाणमभिरोचये। युक्तो मुहूर्तो विजयः प्राप्तो

" एकाहं जागरिष्यति " इति ब्रह्मवाक्येन एकस्मिन्नेव दिवसे प्रबोधनियमस्योक्तत्वात् " नव षट् सप्त चाष्टौ च मासान् स्वपिति राक्षसः " इत्यनेन निद्रा नियमस्यानुक्तत्वात् मन्त्रकरणदिनसमनन्तरदिन एव कुम्भकर्णस्य स्वापारम्भः। 'जगाम ह मुहूर्तेन यत्र रामः सलक्ष्मणः' इत्यनेन विभीषणानुगमनमपि मन्त्र

मध्यं दिवाकरः" इत्युक्तेः । यस्मिन्दिनेऽभिजिति प्रस्थानं तत्परेद्युरेव समुद्रतीरे सेनानिवेशः । "सा स्म याति दिवारात्रं महती हरिवाहिनी" इत्यारभ्य "मुहूर्तं क्वापि नासत" इत्युक्तेः । यत्र दिने लङ्कादाहस्तत्रैव दिवसे सभायां मन्त्रिभिः सह किंचिद्विचारमुक्त्वा " विसर्जयित्वा तान् सर्वान् प्रविवेश स्वकं गृहम्" इत्यन्तेन लङ्कादाहदिनवृत्तान्तं परिसमाप्य ' ततः प्रत्युषसि प्राप्ते' इत्यादिना अनन्तरदिने उषःकाले विभीषणोपदेशं द्वितीयमुक्त्वा ततो मन्त्र विचाराय रावणे कुम्भकर्णविभीषणादिभिः सभां प्रविष्टे विभीषणस्य तृतीयमुपदेशमुक्त्वा " इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः । आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः ॥" इत्यविच्छेदेन लङ्कादाहदिनानन्तरदिन एव समुद्रतीरे रामसकाशागमवर्णनेन च द्वितीयदिने रामेण समुद्रतीरं प्राप्तमित्यव गम्यते । समुद्रतीरप्राप्तिदिनं च शिष्टफाल्गुनपौर्णमासी । अत एव 'उत्तराफल्गुनी ह्यद्य ' इति चतुर्थसर्गश्लोके प्रस्थानदिनस्य पौर्णमासीयुक्तत्ववचनमप्य विरुद्धम् । समुद्रतीरप्राप्तिदिनस्य पौर्णमासीयुक्तत्वं च "चण्डनक्रग्रहं घोरं क्षपादौ दिवसक्षये । चन्द्रोदयसमुद्भूतं प्रतिचन्द्रसमाकुलम्" इति सन्ध्यासमय एव चन्द्रोदयप्रतिपादनात् सिद्धम् । सेनानिवेशवृत्तान्तो विभीषणागमनवृत्तान्तश्च एकदिनभाव्यपि वाचः क्रमवर्तित्वात् क्रमेणोक्तः । प्रथमायां रामस्य दर्भशयनारम्भः कुम्भकर्णस्वापारम्भश्च । चतुर्थीपञ्चमीषष्ठीसप्तम्यष्टमीषु सेतुबन्धः । अष्टम्यां रात्रौ सुवेलारोहणम् । यत्तु सुवेले " पूर्णचन्द्रप्रदीपा च निशा समभिवर्तत" इति वचनम्, तत्पूर्णचन्द्र इव प्रदीपा यस्यां निशायामित्येवमर्थकं व्याख्येयम् । सुग्रीवसेनायां भेर्यादीनामिव प्रदीपादीनामपि संभवात् । सुवेलारोहणानन्तरदिने दिवा लङ्कानिरोधः । "तां रात्रिमुषितास्तत्र सुवेले हरिपुङ्गवाः । लङ्कायां ददृशुर्वीरा वनान्युपवनानि च" इत्युप क्रम्य युद्धवर्णनात् । तत्रैव प्रथमदिनयुद्धे रात्रौ नागास्त्रबन्धतद्विमोक्षादि । "युद्ध्यतामेव तेषां तु तथा वानररक्षसाम् । रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणी " इत्यारभ्य " सा बभूव निशा घोरा हरिराक्षसहारिणी । ततस्ते राक्षसास्तत्र तस्मिंस्तमसि दारुणे । राममेवाभ्यवर्तन्त—" " तं भीम वेगा हरयो नाराचैः क्षतविग्रहाः । अन्धकारे न ददृशुः" इत्यादिभिस्तामेव रात्रिं प्रत्यभिज्ञाप्य " निरन्तरशरीरौ तौ भ्रातरौ रामलक्ष्मणौ । क्रुद्धेनेन्द्र जिता वीरौ पन्नगैः शरतां गतैः " इत्यादिप्रतिपादनात् । तत्रैव निशीथे वानरहर्षनादकुपितेन रावणेन प्रेपितयोर्धूम्राक्षवज्रदंष्ट्रयोर्युद्धं तद्वधश्च । तयो र्युद्धे दिवा ज्ञापकाभावात् वानरहर्षानन्तर्यश्रवणाच्च । रात्रिशेषेण तयोर्वधानन्तरं द्वितीयदिने अकम्पनयुद्धम् । तन्निर्गमनवेलायाम्—" अभवत् सुदिने चापि दुर्दिनं रूक्षमारुतम् " इति दिवा ज्ञापकसत्त्वात् । अकम्पनवधानन्तरमेव रावणस्य पूर्वाह्ण एव पुरीपर्यटनम् । अकम्पनवधा दिन एव । ' विभीषणेनाशु जगाम सङ्गमम् ' इति तदागमनानन्तरमेव विभीषणस्य सत्कारः, तद्दिनमारभ्य दिनत्रयं समुद्रप्रार्थनार्थं राघवस्य दर्भशयनम् ।

नन्तरं प्रहस्तयुद्धमविलम्बेन तस्मिन्नेव दिने मध्याह्ने । ननु, 'अन्योन्यमभिसंरब्धा ग्रहाश्च न चकाशिरे' इति ग्रहाणां प्रकाशप्रतिषेधेन प्रहस्तयुद्धं रात्राविति चेन्न; उत्तरत्र दिवायुद्धेषु दिवादर्शनायोग्यानामप्यर्थानां प्रतिपादनात् । यथा रावणयुद्धे—"प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियाम् । समाक्रम्य बुधस्तस्थौ प्रजानामशुभावहः" इत्यादि । न च 'सर्वरात्रमवर्तत' इति पाठानुरोधाद्रात्रावेव तत्प्रतिपादनमिति वक्तुं शक्यम्; तदप पाठत्वस्यान्ते वक्ष्यमाणत्वात् । तस्मिन्नेव द्वितीयदिने रावणपराजयकुम्भकर्णप्रबोधनकुम्भकर्णयुद्धानि । कालविशेषमसङ्कीर्त्यानन्तरमविच्छेदेन तदुक्ति पूर्वकमग्रिमकृत्ये ब्रह्मास्त्रबन्धनतद्विमोक्षरूपे कालविशेषकीर्तनात् । दृश्यते हि—"सप्तषष्टिर्हताः कोट्यो वानराणां तरस्विनाम् । अह्नः पञ्चमशेषेण वल्लभेन स्वयम्भुवः" इति । अत्र अह्नः पञ्चमशेषो नाम सायंकाल एव । "प्रातःसङ्गवमध्याह्नापराह्णाः सायमित्यमी । एकस्याह्नः पञ्च भागा विहिताः कालचिन्तकैः ॥" इति वचनात् । तस्यामेव द्वितीयायां रात्रौ ब्रह्मास्त्रविमोक्षानन्तरं पुनर्लङ्कानिरोधतद्दाहकुम्भनिकुम्भयूपाक्षशोणिताक्षप्रजङ्घकम्पन मकराक्षवधाः । "ततोऽस्तङ्गत आदित्ये रात्रौ तस्मिन्निशामुखे । लङ्कामभिमुखास्सोल्का जग्मुस्ते प्लवगर्षभाः॥" इत्युक्तेः । एवं परिपूर्णदिनद्वयेन मूल बलेन्द्रजिद्रावणव्यतिरिक्तेषु व्यपदिष्टराक्षसेषु हतेषु तृतीयदिनमारभ्य दिनत्रयेणेन्द्रजिद्युद्धम्, "अहोरात्रैस्त्रिभिर्वीरः कथंचिद्विनिपातितः" इत्युक्त त्वात् । अथ षष्ठदिने मूलबलवधः । तस्मिन् दिने सायंकालमारभ्य दिवारात्रं रावणयुद्धम् । सप्तमदिने रावणवधः । अथवा सप्तमदिने रावणयुद्धम् । अष्टमदिने प्रातःकाले रावणवधः । "अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशीम् । कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः॥" इत्यादिसन्दर्भस्योभय थापि योजयितुं शक्यत्वात् । पुच्छामावास्यायां रावणवध इति कृत्वा अमावास्यायां रावणवध इति प्रवादः । एवं सति "रामरावणयोर्युद्धं सप्तरात्रमवर्तत" इत्यादिपाठोऽपि सेनासहितरावणयुद्धापेक्षया सङ्गच्छते । "मन्त्रयित्वा प्रसुप्तोऽयमितस्तु नवमेऽहनि" इति सकलकोशस्थितवचनं च सङ्गच्छते । इतः अस्माद्दिनात् मम मुकुटभङ्गदिनादित्यर्थः । नवमेऽहनि एतद्दिनमपहाय एतत्पूर्वदिनापेक्षया नवमेऽहनि । मन्त्रयित्वा प्रसुप्तः । तत्पूर्वदिने मन्त्रं कृत्वा तस्मिन् दिने प्रसुप्त इत्यर्थः । ननु हनुमतो लङ्काप्रवेशकालो दशममास इत्यवगम्यते । तथाहि सीतां प्रति रावणवचनम्—"द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः" इति । हनुमन्तं प्रति सीतावचनं च—"द्वौ मासौ तेन मे कालो जीवितानुग्रहः कृतः । वर्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गम" इत्यादि । अतः

'निशास्तिस्रोऽतिचक्रमुः' इत्युक्तत्वात् । तदनन्तरं पञ्चसु दिनेषु सेतुबन्धः । सेतुबन्धपरिपूर्तिदिवस एव सायंकाले समुद्रतरणम् 'गरुडव्यूहमास्थाय । तीरे निविविशे राजा' इत्याद्युक्तत्वात् । तदनन्तरदिने सुवेलारोहणम्, रात्रौ लङ्कावलोकनं च "तां रात्रिमुषितास्तत्र सुवेले हरिपुङ्गवाः" इत्युक्तत्वात् । तदनन्तर

कथमुक्तप्रक्रियासङ्गतिरिति चेत्, मैवम्; "ऊर्ध्वं मासान्न जीवेयम्" "मासादूर्ध्वं न जीविष्ये त्वया हीना नृपात्मज" इत्यादिवचनविरोधेन तादृशवचनस्य रावणाभिप्रायविषयत्वात्। रावणो हि सीतासान्त्वनाय तथोक्तवान्। सीता तु वर्तमानमासमात्रेण चतुर्दशवर्षपूर्तिं जानन्ती "मासादूर्ध्वं न जीविष्ये" इति सन्दिदेशेति सर्वं सुस्थम् ॥१७॥ स तु अहमिव न शापग्रस्त इत्यर्थः। ककुदः प्रधानम्। "प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्" इत्यमरः ॥ १८–२० ॥ अकाले तत्प्रबोधनमनुचितमित्यत्राह–किं करिष्यामीति। साह्याय साहाय्याय ॥२१॥ ते त्विति। परमसम्भ्रान्ताः कथमेनमकाले प्रबोध



स तु सङ्ख्ये महाबाहुः ककुदः सर्वरक्षसाम्। वानरान् राजपुत्रौ च क्षिप्रमेव वधिष्यति ॥ १८ ॥ एष केतुः परः सङ्ख्ये मुख्यो वै सर्वरक्षसाम्। कुम्भकर्णः सदा शेते मूढो ग्राम्यसुखे रतः ॥ १९ ॥ रामेण हि निरस्तस्य सङ्ग्रामेऽस्मिन् सुदारुणे। भविष्यति न मे शोकः कुम्भकर्णे विबोधिते ॥ २० ॥ किं करिष्याम्यहं तेन शक्रतुल्यबलेन हि। ईदृशे व्यसने प्राप्ते यो न साह्याय कल्पते ॥ २१ ॥ ते तु तद्वचनं श्रुत्वा राक्षसेन्द्रस्य राक्षसाः। जग्मुः परमसम्भ्रान्ताः कुम्भकर्णनिवेशनम् ॥ २२ ॥ ते रावणसमादिष्टा मांसशोणितभोजनाः। गन्धमाल्यांस्तथा भक्ष्यानादाय सहसा ययुः ॥ २३ ॥ तां प्रविश्य महाद्वारां सर्वतो योजनायताम्। कुम्भकर्णगुहां रम्यां सर्वगन्धप्रवाहिनीम् ॥ २४ ॥ कुम्भकर्णस्य निश्वासादवधूता महाबलाः। प्रतिष्ठमानाः कृच्छ्रेण यत्नात् प्रविविशुर्गुहाम् ॥ २५ ॥

यिष्याम इति व्याकुलाः ॥ २२ ॥ त इति। प्रबोधशक्तिविवृद्ध्यर्थं मांसादिकं भुक्त्वा कुम्भकर्णस्य प्रबोधकालिकक्षुत्तापादिशान्तये गन्धमाल्यादिकं गृहीत्वा ययुरित्यर्थः ॥२३॥ तामित्यादिश्लोकद्वयमेकान्वयम्। सर्वतः चतसृषु दिक्षु। सर्वगन्धप्रवाहिनीं कुम्भकर्णानुलिप्तचन्दनादिगन्धप्रवाहवतीम्।

दिने सुग्रीवेण रावणमुकुटभङ्गः सुवेलादवरुह्य लङ्कावरोधोऽङ्गदप्रेषणं च। तदनेन प्रकारेण दिवसगणनोपपत्तिरिति ॥ १७ ॥ स त्विति। ककुदः प्रधानम्। वानरान् राजपुत्रौ वधिष्यति। वस्तुतस्तु राजपुत्रौ, विनेति शेषः। वानरान् वधिष्यतीत्यर्थः ॥ १८–२० ॥ एवमुक्ते सत्यपि तूष्णीं तिष्ठतो राक्षसान् प्रति विभ्य(द्रा)न्नाह– किं करिष्यामीति। शक्रतुल्यबलेन तेन रामेण व्यसने प्राप्ते यः क इत्यर्थः। कोऽपि न साह्याय कल्पते अतः किं करिष्यामीति सम्बन्धः। यद्वा नायं प्रबोधस्य समय इत्याशङ्क्य इदानीमीदृशसमये नोपकरिष्यति तेनेन किं प्रयोजनमित्याह–किमिति। ईदृशे व्यसने प्राप्ते सति यः कुम्भकर्णः न साह्याय कल्पते तेन किं

कुम्भकर्णगुहां प्रविश्य निश्वासादवधूताः सन्तः कृच्छ्रेण प्रतिष्ठमानाः अभिमुखं गच्छन्तः यत्नात्तां गुहां विविशुरिति योजना ॥ २४ ॥ २५ ॥ काञ्चनकुट्टिमां स्वर्णमयनिबद्धभूमिम् ॥ २६ ॥ विकृतं निद्राकालिकविकारयुक्तम् । विकीर्णं शिथिलम् ॥ २७ ॥ ऊर्ध्वेत्यादिश्लोकत्रयमेकान्वयम् । ऊर्ध्व

तां प्रविश्य गुहां रम्यां शुभां काञ्चनकुट्टिमाम् । ददृशुर्नैर्ऋतव्याघ्रं शयानं भीमदर्शनम् ॥ २६ ॥ ते तु तं विकृतं सुप्तं विकीर्णमिव पर्वतम् । कुम्भकर्णं महानिद्रं सहिताः प्रत्यबोधयन् ॥ २७ ॥ ऊर्ध्वरोमाञ्चिततनुं श्वसन्तमिव पन्नगम् । त्रासयन्तं महाश्वासैः शयानं भीमदर्शनम् ॥२८॥ भीमनासापुटं तं तु पातालविपुलाननम् । शय्यायां न्यस्तसर्वाङ्गं मेदोरुधिरगन्धिनम् ॥२९॥ काञ्चनाङ्गदनद्धाङ्गं किरीटिनमरिन्दमम् । ददृशुर्नैर्ऋतव्याघ्रं कुम्भकर्णं महाबलम् ॥ ३० ॥ ततश्चक्रुर्महात्मानः कुम्भकर्णाग्रतस्तदा । मांसानां मेरुसङ्काशं राशिं परमतर्पणम् ॥ ३१ ॥ मृगाणां महिषाणां च वराहाणां च सञ्चयान् । चक्रुर्नैर्ऋतशार्दूला राशिमन्नस्य चाद्भुतम् ॥ ३२ ॥ ततः शोणितकुम्भांश्च मद्यानि विविधानि च ॥३३॥ पुरस्तात् कुम्भकर्णस्य चक्रुस्त्रिदशशत्रवः । लिलिपुश्च परार्ध्येन चन्दनेन परन्तपम् ॥३४॥ दिव्यैराच्छादयामासुर्माल्यैर्गन्धैः सुगन्धिभिः । धूपं सुगन्धं ससृजुस्तुष्टुवुश्च परन्तपम् ॥३५॥ जलदा इव चोन्नेदुर्यातुधानास्ततस्ततः । शङ्खानापूरयामासुः शशाङ्कसदृशप्रभान् । तुमुलं युगपच्चापि विनेदुश्चाप्यमर्षिताः ॥ ३६ ॥ नेदुरास्फोटयामासुश्चिक्षिपुस्ते निशाचराः । कुम्भकर्णविबोधार्थं चक्रुस्ते विपुलं स्वनम् ॥ ३७ ॥

रोमाञ्चिततनुम् ऊर्ध्वभूतरोमव्याप्ततनुम् । भीमनासापुटं भयङ्करनासारन्ध्रम् । मेदोरुधिरेति, पीतावशिष्टेति शेषः ॥ २८-३० ॥ अग्रतश्चक्रुः पुरतश्चिक्षिपुरित्यर्थः । परमतर्पणम् अत्यन्ततृप्तिकरम् ॥३१॥ राशिं चक्रुः अग्रतो राशिं चक्रुरित्यर्थः ॥ ३२ ॥ मद्यानि मद्यकुम्भानीत्यर्थः ॥३३॥ लिलिपुः लेपनं चक्रुः । परार्ध्येन श्लाघ्यगन्धेन ॥ ३४ ॥ माल्यगन्धैः माल्यचन्दनैः ॥ ३५ ॥ ततस्ततः पुनः पुनरित्यर्थः । तुमुलं निरन्तरं यथा तथा । युगपद्विनेदुः अमर्षिताः महता प्रयत्नेनाप्यनुत्थानाज्जातक्रोधाः सन्तः नेदुः ॥ ३६ ॥ आस्फोटयामासुः ताडयामासुः । चिक्षिपुः शरीरं कम्पयामासुः । कुम्भेति । करिष्यामीति सम्बन्धः ॥ २१-२५ ॥ काञ्चनकुट्टिमां काञ्चननिबद्धभुवम् ॥ २६-३३ ॥ लिलिपुः लेपनं चक्रुः । कुम्भकर्णशरीरं लेपयामासुरित्यर्थः ॥ ३४-३७ ॥

इत्थं कुम्भकर्णविबोधार्थं विपुलं स्वनं चक्रुरिति सम्बन्धः ॥ ३७ ॥ आस्फोटितं बाहुताडनजन्यशब्दः । क्ष्वेलितशब्देन गर्जितमात्रमुच्यते । सिंहनादमित्येक वद्भावः । तत् विहङ्गाः श्रुत्वा भयेन सर्वा दिशो द्रवन्तः गच्छन्तः । तत्रापि भयानिवृत्त्यदर्शनात् त्रिदिवम् आकाशम् किरन्तः विशन्तः । तत्रापि भय शान्तिमलभमानाः सहसा निपेतुः भूमौ निपतन्ति स्म ॥ ३८ ॥ यदेति । भृशार्तैः अत्यन्तार्तिपूर्वकैः, उच्चावचैरित्यर्थः । भृशं तैरिति पाठान्तरम् ।

सशङ्खभेरीपणवप्रणादमास्फोटितक्ष्वेलितसिंहनादम् । दिशो द्रवन्तस्त्रिदिवं किरन्तः श्रुत्वा विहङ्गाः सहसा निपेतुः ॥ ३८ ॥ यदा भृशार्तैर्निनदैर्महात्मा न कुम्भकर्णो बुबुधे प्रसुप्तः । ततो मुसुण्ठीर्मुसलानि सर्वे रक्षोगणास्ते जगृहु गंदाश्च ॥ ३९ ॥ तं शैलशृङ्गैर्मुसलैर्गदाभिर्वृक्षैस्तलैर्मुद्गरमुष्टिभिश्च । सुखप्रसुप्तं भुवि कुम्भकर्णं रक्षांस्युदग्राणि तदा निजघ्नुः ॥ ४० ॥ तस्य निःश्वासवातेन कुम्भकर्णस्य रक्षसः । राक्षसा बलवन्तोऽपि स्थातुं नाशक्नुवन् पुरः ॥४१॥ ततः परिहिता गाढं राक्षसा भीमविक्रमाः ॥ ४२ ॥ मृदङ्गपणवान् भेरीः शङ्खकुम्भगणांस्तदा । दशराक्षससाहस्रा युगपत् पर्यवादयन् ॥४३॥ नीलाञ्जनचयाकारास्ते तु तं प्रत्यबोधयन् । अभिघ्नन्तो नदन्तश्च नैव संविविदे तु सः ॥ ४४ ॥ यदा चैनं न शेकुस्ते प्रतिबोधयितुं तदा । ततो गुरुतरं यत्नं दारुणं समुपाक्रमन् ॥ ४५ ॥

महात्मा महाशरीरः । ततः तदा । मुसुण्ठी मुद्गरविशेषः ॥ ३९ ॥ गृहीत्वा प्रजघ्नुश्चेत्याह—तमिति ॥ ४० ॥ रक्षस इति विशेषणं निश्वासातिशयद्योत नाय ॥ ४१ ॥ तत इत्यर्धमेकं वाक्यम् । परिहिताः दृढीकृतपरिधानाः आसन्, वक्ष्यमाणकार्ये सावधाना आसन्नित्यर्थः ॥ ४२ ॥ शङ्खकुम्भगणान् शङ्खकुम्भवाद्यगणान् । दशराक्षससाहस्राः दश राक्षससहस्राणि परिवारभूता येषां ते तथोक्ताः ॥ ४३ ॥ ते राक्षसाः अभिघ्नन्तो नदन्तश्च सन्तः तं प्रत्य बोधयन्नित्यनुवादः । प्रतिबोधनेऽपि स न संविविदे न बुबुधे । नीलाञ्जनचयाकारा इति परितः सञ्चारित्वद्योतनायोक्तम् ॥ ४४ ॥ गुरुतरं यत्नमुपाक्रमन्

सशङ्खेति । त्रिदिवमाकाशम् । किरन्तः व्याप्नुवन्तः ॥ ३८ ॥ मुसुण्ठीः मुद्गरविशेषान ॥ ३९–४१ ॥ ततः परिहिताः गाढं, बभूवुरिति शेषः । अन्यथा राक्षस शब्दोऽतिरिच्येत ॥ ४२ ॥ दशराक्षससाहस्राः दशराक्षससहस्राणि ॥ ४३–४६ ॥

प्रबलं बोधनोपायमारेभिर इत्यर्थः ॥ ४५ ॥ तमेव यत्नं दर्शयति—अश्वानिति । तस्योपरि धावनायेति भावः । सर्वप्राणैः सर्वबलैः ॥ ४६ ॥ महाकाष्ठकटङ्करैः महाकाष्ठाग्रस्तम्भैः, काष्ठाग्रस्थकशाभिरित्यर्थः । कटङ्करः स्तम्भभेद इति केचित् । सर्वप्राणसमुद्यतैः सर्वबलेन समुद्यतैः ॥ ४७ ॥



अश्वानुष्ट्रान् खरान्नागान् जघ्नुर्दण्डकशाङ्कुशैः । भेरीशङ्खमृदङ्गांश्च सर्वप्राणैरवादयन् ॥ ४६ ॥ निजघ्नुश्चास्य गात्राणि महाकाष्ठकटङ्करैः । मुद्गरैर्मुसलैश्चैव सर्वप्राणसमुद्यतैः ॥ ४७ ॥ तेन शब्देन महता लङ्का समभिपूरिता । सपर्वतवना सर्वा सोऽपि नैव प्रबुध्यते ॥ ४८ ॥ ततः सहस्रं भेरीणां युगपत् समहन्यत । मृष्टकाञ्चनकोणानामासक्तानां समन्ततः ॥ ४९ ॥ एवमप्यतिनिद्रस्तु यदा नैव प्रबुध्यते । शापस्य वशमापन्नस्ततः क्रुद्धा निशाचराः । महाक्रोधसमाविष्टाः सर्वे भीमपराक्रमाः ॥ ५० ॥ तद्रक्षो बोधयिष्यन्तश्चक्रुरन्ये पराक्रमम् ॥ ५१ ॥ अन्ये भेरीः समाजघ्नुरन्ये चक्रुर्महास्वनम् । केशानन्ये प्रलुलुपुः कर्णावन्ये दशन्ति च ॥५२॥ उदकुम्भशतान्यन्ये समसिञ्चन्त कर्णयोः । न कुम्भकर्णः पस्पन्दे महानिद्रावशं गतः ॥ ५३ ॥ अन्ये च बलिनस्तस्य कूटमुद्गरपाणयः । मूर्ध्नि वक्षसि गात्रेषु पातयन् कूटमुद्गरान् ॥ ५४ ॥ रज्जुबन्धनबद्धाभिः शतघ्नीभिश्च सर्वतः । वध्यमानो महाकायो न प्राबुध्यत राक्षसः ॥ ५५ ॥

प्रबुद्ध्यते प्राबुध्यत ॥ ४८ ॥ मृष्टकाञ्चनकोणानां मृष्टकाञ्चनं शोधितकाञ्चनं तन्निर्मिताः कोणाः वादनदण्डाः यासां ताः तथोक्ताः । आसक्तानां संहतानाम् ॥ ४९ ॥ एवमपीत्यादि । शापस्य ब्रह्मशापस्य । क्रुद्धाः पूर्वमेव कुपिताः । पुनरपि महाक्रोधसमाविष्टाः अभवन् ॥ ५० ॥ तद्रक्ष इत्यादि । पराक्रमं मुष्टिप्रहारादिकम् । महास्वनं महागर्जितम् । प्रलुलुपुः लुतवन्तः । दशन्ति अदशन् । उदकुम्भशतानि, आदायेति शेषः ॥ ५१–५३ ॥ अन्य इति । कूटमुद्गरपाणय इत्यनेन तत्प्रहारपरिचयो लक्ष्यते । पातयन् अपातयन् ॥ ५४ ॥ बध्यन्ते एभिरिति बन्धनानि चर्मादीनि रज्जवश्च

सर्वप्राणैः सर्वबलैः ॥ ४६ ॥ महाकाष्ठकटङ्करैश्च । कटङ्करः स्तम्भभेदः ॥ ४७ ॥ ४८ ॥ मृष्टकाञ्चनकोणानां मृष्टकाञ्चननिर्मिताः कोणाः वादनदण्डाः यासां ताः ।

बन्धनानि च तैर्बद्धाभिः, रज्जुबन्धनादिना दृढीकृताभिरित्यर्थः । शतघ्नीभिः गदाविशेषैः । वध्यमानः पीड्यमानः ॥५५॥ वारणानामिति । स्पर्शं परमबुध्यत वारणप्रधावनं केवलस्पर्शमबुध्यत, कीटादिस्पर्शोऽयमिति मन्यते स्म । बुद्धः विरतनिद्रः ॥ ५६ ॥ स पात्यमानैरिति । पात्यमानैः प्रबोधे प्युत्थानाय पुनः क्षिप्यमाणैः । क्षुद्भयपीडितः क्षुद्भयाभ्यां पीडितः । भयमत्राकालबोधनकृतम् । क्षुद्रूपभयपीडित इति वा । विजृम्भमाणः गात्रभङ्गं



वारणानाँ सहस्रं तु शरीरेऽस्य प्रधावितम् । कुम्भकर्णस्ततो बुद्धः स्पर्शं परमबुध्यत ॥ ५६ ॥ स पात्यमानैर्गिरिशृङ्गवृक्षैरचिन्तयंस्तान् विपुलान् प्रहारान् । निद्राक्षयात् क्षुद्भयपीडितश्च विजृम्भमाणः सहसोत्पपात ॥ ५७ ॥ स नागभोगाचलशृङ्गकल्पौ विक्षिप्य बाहू गिरिशृङ्गसारौ । विवृत्य वक्त्रं वडवामुखाभं निशाचरोऽसौ विकृतं जजृम्भे ॥ ५८ ॥ तस्य जाजृम्भमाणस्य वक्त्रं पातालसन्निभम् । ददृशे मेरुशृङ्गाग्रे दिवाकर इवोदितः ॥ ५९ ॥ स जृम्भमाणोऽतिबलः प्रतिबुद्धो निशाचरः । निःश्वासश्चास्य सञ्जज्ञे पर्वतादिव मारुतः ॥ ६० ॥ रूपमुत्तिष्ठतस्तस्य कुम्भकर्णस्य तद्बभौ । तपान्ते सबलाकस्य मेघस्येव विवर्षतः ॥ ६१ ॥ तस्य दीप्ताग्निसदृशे विद्युत्सदृशवर्चसी । ददृशाते महानेत्रे दीप्ताविव महाग्रहौ ॥ ६२ ॥

कुर्वाणः । उत्पपात उदतिष्ठत् ॥ ५७ ॥ विजृम्भमाण इत्युक्तं विवृणोति—स इति । दैर्घ्ये नागभोगदृष्टान्तः, काठिन्ये अचलशृङ्गदृष्टान्तः । यद्वा पीनत्वे दृष्टान्तः । गिरिशृङ्गसारौ गिरिशृङ्गबलौ । "सारो बले स्थिरांशे च" इत्यमरः । विवृत्य व्यादाय । वडवा समुद्रमध्यवर्तिन्यश्वस्त्री । विकृतं भयङ्करं यथा भवति तथा ॥ ५८ ॥ जाजृम्भमाणस्य । यङ्लुक्यात्मनेपदरुगागमाभावावार्षौ । मेरुशृङ्गाग्रे । मेरुरत्र सावर्णिमेरुः तदग्रस्यैव सूर्यसम्बन्धसम्भवात् । अत्र दिवाकरस्योदितत्वं महामेरोरुत्तरभागस्थपुर्यपेक्षया । यद्वा उदितः दृष्ट इत्यर्थः । गत्यर्थानां बुद्ध्यर्थत्वात् ॥ ५९ ॥ प्रतिबुद्धः, अभूदिति शेषः । सम्यक् प्रबोधोऽत्र विवक्षितः ॥ ६० ॥ तस्य साभरणस्येत्यर्थः । अतः सबलाकस्येति नाधिकोपमा । विवर्षत इति नीलरूपातिशयोक्तिः ॥ ६१ ॥ विद्युत्सदृशवर्चसी इति निद्राविरामकालिकचाञ्चल्योक्तिः । महाग्रहौ शन्यङ्गारकाविति परपीडकत्वोक्तिः । दीप्ताग्निसदृशे इति क्रौर्यातिशयोक्तिः ॥ ६२ ॥

आसक्तानां राक्षसगृहीतानाम् ॥ ४२–५८ ॥ तस्येति । जाजृम्भमाणस्य पुनः पुनर्जृम्भमाणस्य ॥ ५९–६५ ॥

ततस्त्वित्यादि । अदर्शयन्, राक्षसा इति शेषः । सर्वान् सर्वविधान् । तदवान्तरभेदतो विविधान् बहून् विपुलान् । वराहान् वराहविकारान् । बभक्ष भक्षयामास । बुभुक्षितो मांसमदन् बुभुक्षाशान्त्यर्थं मांसमदन्नित्यर्थः । तृषितः शोणितं पिबन् तृष्णाशान्त्यर्थं शोणितं पिबन्नित्यर्थः । पुनराप्यायनार्थं मेदःकुम्भान् मद्यं च पपौ । कुम्भपरिमितमेदांसीत्यर्थः ॥ ६३ ॥ ६४ ॥ समुत्पेतुरिति । पूर्वं कुम्भकर्णभयादन्तर्धाय स्थिताः, इदानीं तृप्तत्वेन



ततस्त्वदर्शयन् सर्वान् भक्ष्यांश्च विविधान् बहून् । वराहान् महिषांश्चैव स बभक्ष महाबलः ॥ ६३ ॥ अदन् बुभुक्षितो मांसं शोणितं तृषितः पिबन् । मेदःकुम्भांश्च मद्यं च पपौ शक्ररिपुस्तदा ॥ ६४ ॥ ततस्तृप्त इति ज्ञात्वा समुत्पेतुर्निशाचराः । शिरोभिश्च प्रणम्यैनं सर्वतः पर्यवारयन् ॥ ६५ ॥ निद्राविशदनेत्रस्तु कलुषीकृतलोचनः । चारयन् सर्वतो दृष्टिं तान् ददर्श निशाचरान् ॥ ६६ ॥ स सर्वान् सान्त्वयामास नैर्ऋतान्नैर्ऋतर्षभः । बोधनाद् विस्मितश्चापि राक्षसानिदमब्रवीत् ॥ ६७ ॥ किमर्थमहमादृत्य भवद्भिः प्रतिबोधितः । कच्चित् सुकुशलं राज्ञो भयवानेष वा न किम् ॥ ६८ ॥ अथवा ध्रुवमन्येभ्यो भयं परमुपस्थितम् । यदर्थमेवं त्वरितैर्भवद्भिः प्रतिबोधितः ॥ ६९ ॥ अद्य राक्षसराजस्य भयमुत्पाटयाम्यहम् । पातयिष्ये महेन्द्रं वा शातयिष्ये तथाऽनलम् ॥ ७० ॥ न ह्यल्पकारणे सुप्तं बोधयिष्यति मां गुरुः । तदाख्यातार्थतत्त्वेन मत्प्रबोधनकारणम् ॥ ७१ ॥

शान्तक्रोधत्वात् प्रकाशमाजग्मुरित्यर्थः ॥ ६५ ॥ निद्रया अविशदे अप्रसन्ने ईषदुन्मीलिते नेत्रे यस्य स तथोक्तः ॥ ६६ ॥ स इति । बोधनात् अप्रबोध्यबोधनात् ॥६७॥ राज्ञः रावणस्य सुकुशलं कच्चित्, एष राजा च भयवान्न किम् भययुक्तो न भवति हि? ॥६८॥ एवं संशय्य पुनर्निश्चिनोति—अथवेति । तत्र हेतुमाह यदर्थमिति । यदर्थं यद्भयनिवृत्त्यर्थम् ॥६९॥ शातयिष्ये शातयिष्यामि, छेत्स्यामीत्यर्थः । "शद्लृ शातने" इति धातोर्णिचि "शदेरगतौ तः" इति तादेशः ॥७०॥ अल्पकारणे अल्पकार्यनिमित्तम् । गुरुः अग्रजः । आख्यात कथयत । अर्थतत्त्वेन तत्त्वार्थेन, याथार्थ्येनेति यावत् ॥ ७१ ॥ ७२ ॥



निद्रेति । निद्राविशदनेत्रः निद्रया अविशदे ईषदुन्मीलिते नेत्रे यस्य सः ॥ ६५-६८ ॥ अन्येभ्यः शत्रुभ्यः । यदर्थं यद्व्यसननिवृत्तये ॥ ६९ ॥ ७० ॥ अर्थतत्त्वेन

देवकृतम् इन्द्रादिकृतम् । मानुषादिति । नः अस्माकं मानुषाज्जातं तुमुलं भयं संप्रबाधत इत्यन्वयः ॥ ७३ ॥ न दैत्येति । वाशब्दार्थोऽनुक्तसमुच्चयार्थः । देवेभ्यश्चेत्यर्थः । मानुषं मनुष्यादागतम् ॥ ७४ ॥ ७५ ॥ इन्द्रादिभिरपि दुष्पीडमिदं नगरं कथं वानरैः पीड्यत इत्यत्राह–एकेनेत्यादि । सानुयात्रः सानुगः । एकेनैव महती पीडा कृता किं पुनरनेकैरिहागतैरिति भावः ॥ ७६ ॥ मृतेति । हे मृतेत्युक्त्वा । वस्तुतस्तु मृतेत्यविभक्तिक

एवं ब्रुवाणं संरब्धं कुम्भकर्णं महाबलम् । यूपाक्षः सचिवो राज्ञः कृताञ्जलिरुवाच ह ॥ ७२ ॥ न नो दैवकृतं किंचिद्भयमास्ति कदाचन । मानुषान्नो भयं राजंस्तुमुलं सम्प्रबाधते ॥ ७३ ॥ न दैत्यदानवेभ्यो वा भयमस्ति हि तादृशम् । यादृशं मानुषं राजन् भयमस्मानुपस्थितम् ॥ ७४ ॥ वानरैः पर्वताकारैर्लङ्केयं परिवारिता । सीताहरणसन्तप्ताद्रामान्नस्तुमुलं भयम् ॥ ७५ ॥ एकेन वानरेणेयं पूर्वं दग्धा महापुरी । कुमारो निहतश्चाक्षः सानुयात्रः सकुञ्जरः ॥ ७६ ॥ स्वयं रक्षोधिपश्चापि पौलस्त्यो देवकण्टकः । मृतेति संयुगे मुक्तो रामेणादित्यतेजसा ॥ ७७ ॥ यन्न देवैः कृतो राजा नापि दैत्यैर्न दानवैः । कृतः स इह रामेण विमुक्तः प्राणसंशयात् ॥ ७८ ॥ स यूपाक्षवचः श्रुत्वा भ्रातुर्युधि पराजयम् । कुम्भकर्णो विवृत्ताक्षो यूपाक्षमिदमब्रवीत् ॥ ७९ ॥ सर्वमद्यैव यूपाक्ष हरिसैन्यं सलक्ष्मणम् । राघवं च रणे हत्वा पश्चाद्द्रक्ष्यामि रावणम् ॥ ८० ॥

निर्देशः, मृत इति कृत्वेत्यर्थः । मृतप्राय इति मत्वेत्यर्थ इत्यप्याहुः ॥ ७७ ॥ यत् य इत्यर्थः । प्राणसंशयादिति ल्यब्लोपे पञ्चमी । यो राजा देवादिभिरपि प्राणसंशयं नीत्वा मुक्तो न कृतः स रावणो रामेण प्राणसंशयं नीत्वा अद्य विमुक्तः कृत इत्यर्थः । यद्वा राजा देवादिभिरपि यत् न कृतः न प्रापितः तत् रामेण कृतः प्राणसंशयाद्विमुक्तश्चेत्यर्थः ॥ ७८ ॥ पराजयं पराजयबोधकम् ॥ ७९–८१ ॥

याथार्थ्येनेत्यर्थः ॥ ७१–७५ ॥ इन्द्रादिभिरपि दुष्करपीडनमेतन्नगरं वानरैः कथं वा पीडितमित्यत्राह–एकेनेत्यादि ॥ ७६ ॥ मृतेति मृतप्राय इति मत्वेत्यर्थः ॥ ७७ ॥ यत् य इत्यर्थः । प्राणसंशयादिति ल्यब्लोपे पञ्चमी । यो राजा देवादिभिरपि प्राणसंशयं प्राप्य विमुक्तो न कृतः स रावणो रामेण प्राणसंशयं नीत्वा विमुक्तः कृत इत्यर्थः ॥ ७८ ॥ पराजयं पराजयप्रतिपादकं वचः ॥ ७९ ॥ सलक्ष्मणं राघवं हरिसैन्यं च हत्वा । वस्तुतस्तु–सलक्ष्मणं राघवम्, विनेति

सगर्वितं सगर्वम् । रोषविवृद्धदोषं क्रोधविवृद्धदुर्नयम्, कुम्भकर्णमिति शेषः ॥८२॥८३॥ महोदरेति । सम्प्रतस्थे प्रस्थातुमुपचक्रमे । शयनादुत्पपातह इत्युत्तरत्र वक्ष्यमाणत्वात् ॥ ८४ ॥ ८५ ॥ गत्वा रावणनिवेशनं गत्वा । तत ऊचुरित्यन्वयः ॥ ८६ ॥ तत्रैव निर्यातु वा इहागतमेनं द्रक्ष्यसि वा ? कथं



राक्षसांस्तर्पयिष्यामि हरीणां मांसशोणितैः । रामलक्ष्मणयोश्चापि स्वयं पास्यामि शोणितम् ॥ ८१ ॥ तत्तस्य वाक्यं ब्रुवतो निशम्य सगर्वितं रोषविवृद्धदोषम् । महोदरो नैर्ऋतयोधमुख्यः कृताञ्जलिर्वाक्यमिदं बभाषे ॥ ८२ ॥ रावणस्य वचः श्रुत्वा गुणदोषौ विमृश्य च । पश्चादपि महाबाहो शत्रून् युधि विजेष्यसि ॥ ८३ ॥ महोदरवचः श्रुत्वा राक्षसैः परिवारितः । कुम्भकर्णो महातेजाः सम्प्रतस्थे महाबलः ॥ ८४ ॥ तं समुत्थाप्य भीमाक्षं भीमरूप पराक्रमम् । राक्षसास्त्वरिता जग्मुर्दशग्रीवनिवेशनम् ॥ ८५ ॥ ततो गत्वा दशग्रीवमासीनं परमासने । ऊचुर्बद्ध्वाञ्जलिपुटाः सर्व एव निशाचराः ॥ ८६ ॥ प्रबुद्धः कुम्भकर्णोऽयं भ्राता ते राक्षसर्षभ । कथं तत्रैव निर्यातु द्रक्ष्यस्येनमिहागतम् ॥८७॥ रावणस्त्वब्रवीद्धृष्टो राक्षसांस्तानुपस्थितान् । द्रष्टुमेनमिहेच्छामि यथान्यायं च पूज्यताम् ॥८८॥ तथेत्युक्त्वा तु ते सर्वे पुनरागम्य राक्षसाः । कुम्भकर्णमिदं वाक्यमूचू रावणचोदिताः ॥८९॥ द्रष्टुं त्वां काङ्क्षते राजा सर्वराक्षसपुङ्गवः । गमने क्रियतां बुद्धिर्भ्रातरं सम्प्रहर्षय ॥ ९० ॥ कुम्भकर्णस्तु दुर्धर्षो भ्रातुराज्ञाय शासनम् । तथेत्युक्त्वा महाबाहुः शयनादुत्पपात ह ॥ ९१ ॥

कथं करोत्विति सम्बन्धः ॥ ८७ ॥ पूज्यताम्, एष इति शेषः ॥ ८८–९१ ॥

शेषः । हरिसैन्यं हत्वा रावणं द्रक्ष्यामीति सम्बन्धः ॥ ८० ॥ राक्षसानित्यस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु–रामलक्ष्मणयोरिति सम्बन्धार्थे षष्ठी । रामलक्ष्मणसम्बन्धिहरीणां मांसशोणितैः राक्षसान तर्पयिष्यामि, स्वयमपि हरीणां शोणितं पास्यामीति सम्बन्धः ॥ ८१ ॥ सगर्वितं सगर्वम् । रोषविवृद्धदोषं रोषेण विवृद्धो दोषः अनयः दुर्नयरूपो यस्य तम्, कुम्भकर्णमिति शेषः ॥ ८२ ॥ ८३ ॥ संप्रतस्थे प्रस्थातुमुपक्रान्तः ॥ ८४–८६ ॥ तत्रैव निर्यातु वा इहागतं द्रक्ष्यसि वा ? कथं कथं करोत्वित्यर्थः ॥ ८७ ॥ पूज्यताम्, एष इति शेषः ॥ ८८–९१ ॥

बलसमीरणं बलवर्धनम् ॥ ९२ ॥ रावणाज्ञया त्वरितास्ते क्षिप्रम् उपहारयन् उपाहारयन्निति संबन्धः ॥ ९३ ॥ ईषत्समुत्कटः पानेन ईषन्मदोत्कटः । मत्तः स्वभावेनोन्मत्तश्चेत्यर्थः । कालान्तकयमोपमः काले प्रलयकाले योऽन्तकः संहारको यमस्तत्सदृश इत्यर्थः ॥ ९४ ॥ रक्षोबलं राक्षससेना ॥ ९५ ॥



प्रक्षाल्य वदनं हृष्टः स्नातः परमभूषितः । पिपासुस्त्वरयामास पानं बलसमीरणम् ॥ ९२ ॥ ततस्ते त्वरितास्तस्य राक्षसा रावणाज्ञया । मद्यकुम्भांश्च विविधान् क्षिप्रमेवोपहारयन् ॥ ९३ ॥ पीत्वा घटसहस्रे द्वे गमनायोपचक्रमे । ईषत्समुत्कटो मत्तस्तेजोबलसमन्वितः । कुम्भकर्णो बभौ हृष्टः कालान्तकयमोपमः ॥ ९४ ॥ भ्रातुः स भवनं गच्छन् रक्षोगणसमन्वितः । कुम्भकर्णः पदन्यासैरकम्पयत मेदिनीम् ॥ ९५ ॥ स राजमार्गं वपुषा प्रकाशयन् सहस्ररश्मिर्धरणीमिवांशुभिः । जगाम तत्राञ्जलिमालया वृतः शतक्रतुर्गेहमिव स्वयम्भुवः ॥९६॥ तं राजमार्गस्थममित्रघातिनं वनौकसस्ते सहसा बहिः स्थिताः । दृष्ट्वाऽप्रमेयं गिरिशृङ्गकल्पं वितत्रसुस्ते हरियूथपालाः ॥ ९७ ॥ केचिच्छरण्यं शरणं स्म रामं व्रजन्ति केचिद्व्यथिताः पतन्ति । केचिद्दिशः स्म व्यथिताः प्रयान्ति केचिद्भयार्ता भुवि शेरते स्म ॥९८॥ तमद्रिशृङ्गप्रतिमं किरीटिनं स्पृशन्तमादित्यमिवात्मतेजसा । वनौकसः प्रेक्ष्य विवृद्धमद्भुतं भयार्दिता दुद्रुविरे ततस्ततः ॥ ९९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमद्युद्धकाण्डे षष्टितमः सर्गः ॥६०॥

तत्र राजमार्गे । अञ्जलिमालया, पौरजनकृतयेति शेषः ॥ ९६ ॥ यूथपाला इत्यत्र चकारो द्रष्टव्यः । अन्यथा तच्छन्दोऽतिरिच्येत ॥ ९७ ॥ ९८ ॥ आत्मतेजसा शरीरकान्त्या ॥ ९९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

प्रक्षाल्येति । बलसमीरणं बलप्रवृद्धिकरम् ॥ ९२ ॥ ९३ ॥ ईषत्समुत्कटो मत्तः मधुपानेन ईषदेव समुत्कटो मत्तश्चेत्यर्थः ॥ ९४–९६ ॥ तं राजमार्गस्थमिति । अत्र चशब्दोऽध्याहर्तव्यः, अन्यथा तच्छन्दोऽतिरिच्येत । ते वनौकसः ते हरियूथपाश्च तं दृष्ट्वा वितत्रसुरिति सम्बन्धः ॥ ९७–९९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां षष्टितमः सर्गः ॥ ६० ॥

अथ रामेण कुम्भकर्णस्वरूपप्रश्नः विभीषणेन तदुत्तरं च क्रियत एकषष्टितमे—तत इत्यादिसार्धश्लोकद्वयमेकान्वयम्। तं दृष्ट्वा धनुरादाय पुनर्विशेषेण ददर्शेति योजना। महाकायम् उन्नतकायम्। पर्वताकारदर्शनम् दृश्यत इति दर्शनं शरीरम्, पर्वतवत् स्थूलशरीरमित्यर्थः। काञ्चनाङ्गदभूषणं काञ्चनमयाङ्गदभूषणम्। अत एव सतोयाम्बुदः वर्षुकमेघः तत्सदृशम् ॥ १ ॥ २ ॥ दृष्ट्वेत्यर्धम्। कुम्भकर्णमिति शेषः ॥ ३ ॥ सविस्मयमिति क्रिया

ततो रामो महातेजा धनुरादाय वीर्यवान्। किरीटिनं महाकायं कुम्भकर्णं ददर्श ह ॥ १ ॥ तं दृष्ट्वा राक्षसश्रेष्ठं पर्वताकारदर्शनम्। क्रममाणमिवाकाशं पुरा नारायणं प्रभुम्। सतोयाम्बुदसङ्काशं काञ्चनाङ्गदभूषणम् ॥ २ ॥ दृष्ट्वा पुनः प्रदुद्राव वानराणां महाचमूः ॥ ३ ॥ विद्रुतां वाहिनीं दृष्ट्वा वर्धमानं च राक्षसम्। सविस्मयमिदं रामो विभीषणमुवाच ह ॥ ४ ॥ कोऽसौ पर्वतसङ्काशः किरीटी हरिलोचनः। लङ्कायां दृश्यते वीर सविद्युदिव तोयदः ॥ ५ ॥ पृथिव्याः केतुभूतोऽसौ महानेकोऽत्र दृश्यते। यं दृष्ट्वा वानराः सर्वे विद्रवन्ति ततस्ततः॥६॥ आचक्ष्व मे महान् कोऽसौ रक्षो वा यदि वाऽसुरः। न मयैवंविधं भूतं दृष्टपूर्वं कदाचन ॥ ७ ॥ स पृष्टो राजपुत्रेण रामेणाक्लिष्टकर्मणा। विभीषणो महाप्राज्ञः काकुत्स्थमिदमब्रवीत् ॥ ८ ॥ येन वैवस्वतो युद्धे वासवश्च पराजितः। सैष विश्रवसः पुत्रः कुम्भकर्णः प्रतापवान्। अस्य प्रमाणात् सदृशो राक्षसोऽन्यो न विद्यते ॥९॥ एतेन देवा युधि दानवाश्च यक्षा भुजङ्गाः पिशिताशनाश्च। गन्धर्वविद्याधरकिन्नराश्च सहस्रशो राघव सम्प्रभग्नाः ॥ १० ॥

विशेषणम्। वर्धमानमिति। कामरूपत्वादिति भावः ॥ ४ ॥ हरिलोचनः कपिलेक्षणः। "हरिर्ना कपिले त्रिषु" इत्यमरः ॥ ५–८ ॥ येनेत्यादि। सैष इत्यत्र "सोऽचि लोपे चेत् पादपूरणम्" इति सुलोपः। प्रमाणं स्थौल्यौन्नत्ये ॥ ९ ॥ सम्प्रभग्नाः अभज्यन्त ॥ १० ॥

ततो राम इत्यादि श्लोकद्वयमेकं वाक्यम्। रामः पुरा आकाशं क्रममाणं नारायणमिव पर्वताकारदर्शनं तं राक्षसश्रेष्ठं दृष्ट्वा धनुरादाय किरीटिनं महाकायं कुम्भकर्णं ददर्शेति योजना। यद्वा तं दृष्ट्वेति श्लोको भिन्नं वाक्यम्। आकाशं क्रममाणं प्रभुं नारायणमिव पर्वताकारदर्शनं तं राक्षसश्रेष्ठं दृष्ट्वा रामः, यत्तो बभूवेति शेषः ॥ १–४ ॥ कोऽसाविति। हरिलोचनः कपिलेक्षणः ॥ ५–११ ॥

विरूपाक्षं विकटाक्षम् । मोहिताः भ्रान्ताः ॥ ११ ॥ प्रकृत्या तेजस्वी स्वभावेन बलवान्, न तु वरप्रदानेनेत्यर्थः । अन्येषां रावणादीनाम्, भवतीति शेषः ॥ १२ ॥ प्रकृत्या तेजस्वित्वमुपपादयति—एतेनेत्यादिना ॥ १३–१५ ॥ तस्येति । नानद्यमानस्य अतिशयेन नदतः । वित्रस्ता भूमिः भूयो



शूलपाणिं विरूपाक्षं कुम्भकर्णं महाबलम् । हन्तुं न शेकुस्त्रिदशाः कालोऽयमिति मोहिताः ॥ ११ ॥ प्रकृत्या ह्येष तेजस्वी कुम्भकर्णो महाबलः । अन्येषां राक्षसेन्द्राणां वरदानकृतं बलम् ॥ १२ ॥ एतेन जातमात्रेण क्षुधार्तेन महात्मना । भक्षितानि सहस्राणि सत्त्वानां सुबहून्यपि ॥ १३ ॥ तेषु सम्भक्ष्यमाणेषु प्रजा भयनिपीडिताः । यान्ति स्म शरणं शक्रं तमप्यर्थं न्यवेदयन् ॥ १४ ॥ स कुम्भकर्णं कुपितो महेन्द्रो जघान वज्रेण शितेन वज्री । स शक्रवज्राभिहतो महात्मा चचाल कोपाच्च भृशं ननाद ॥ १५ ॥ तस्य नानद्यमानस्य कुम्भकर्णस्य धीमतः । श्रुत्वाऽतिनादं वित्रस्ता भूयो भूमिर्वितत्रसे ॥१६॥ तत्र कोपान्महेन्द्रस्य कुम्भकर्णो महाबलः । विकृष्यैरावताद्दन्तं जघानोरसि वासवम् ॥ १७ ॥ कुम्भकर्णप्रहारार्तो विजज्वाल स वासवः । ततो विषेदुः सहसा देवब्रह्मर्षिदानवाः ॥१८॥ प्रजाभिः सह शक्रश्च ययौ स्थानं स्वयम्भुवः । कुम्भकर्णस्य दौरात्म्यं शशंसुस्ते प्रजापतेः ॥१९॥ प्रजानां भक्षणं चापि देवानां चापि धर्षणम् । आश्रमध्वंसनं चापि परस्त्रीहरणं भृशम् ॥ २० ॥ एवं प्रजा यदि त्वेष भक्षयिष्यति नित्यशः । अचिरेणैव कालेन शून्यो लोको भविष्यति ॥ २१ ॥

वितत्रसे उत्तरोत्तरं भीताऽभूत् ॥ १६ ॥ तत्र तदानीम् । विकृष्य उत्पाट्य ॥ १७ ॥ विजज्वाल, चुकोपेति यावत् ॥ १८ ॥ ते शक्रादयः । प्रजापतेः प्रजापतये ॥ १९ ॥ दौरात्म्यं प्रपञ्चयति—प्रजानामित्यादि ॥ २० ॥ एवम् इदानीं क्रियमाणप्रकारेण यदि भक्षयिष्यतीत्यन्वयः ॥ २१ ॥

प्रकृत्या ह्येष तेजस्वी स्वभावतः पराभिभवनसामर्थ्यवान ॥ १२--२३ ॥

स०—शूलपाणिं विरूपाक्षं विरूपे विकृते अक्षिणी यस्य स तथा तम् । विरूपाक्षं शूलपाणिं रुद्रमिवेति वा ॥ ११ ॥

वासवस्येति । प्राधान्याद्वासवग्रहणम् । कुम्भकर्णम्, तौष्वाति शेषः ॥ २२ ॥ इदं रक्षः इदं वक्ष्यमाणमिति इदंशब्दद्वयनिर्वाहः । विश्वास्य प्रलोभ्य, सान्त्वपूर्वकं समीपमानीयेत्यर्थः ॥ २३ ॥ पौलस्त्येन विश्रवसा । तस्मात्त्वमद्यप्रभृति मृतकल्पः शयिष्यसे इत्ययं शापः "स्वप्तुं वर्षाण्यनेकानि



वासवस्य वचः श्रुत्वा सर्वलोकपितामहः । रक्षांस्यावाहयामास कुम्भकर्णं ददर्श ह ॥ २२ ॥ कुम्भकर्णं समीक्ष्यैव वितत्रास प्रजापतिः । दृष्ट्वा विश्वास्य चैवेदं स्वयम्भूरिदमब्रवीत् ॥ २३ ॥ ध्रुवं लोकविनाशाय पौलस्त्येनासि निर्मितः । तस्मात्त्वमद्यप्रभृति मृतकल्पः शयिष्यसे ॥ २४ ॥ ब्रह्मशापाभिभूतोऽथ निपपाताग्रतः प्रभोः । ततः परमसम्भ्रान्तो रावणो वाक्यमब्रवीत् ॥२५॥ विवृद्धः काञ्चनो वृक्षः फलकाले निकृत्यते । न नप्तारं स्वकं न्याय्यं शप्तुमेवं प्रजापते ॥ २६ ॥ न मिथ्यावचनश्च त्वं स्वप्स्यत्येष न संशयः । कालस्तु क्रियतामस्य शयने जागरे तथा ॥ २७ ॥ रावणस्य वचः श्रुत्वा स्वयम्भूरिदमब्रवीत् ॥ २८ ॥

देवदेव ममेप्सितम् । एवमस्त्विति तच्चोक्त्वा प्रहृष्टास्ते दिवौकसः ॥" इति तपश्चर्यानन्तरप्रार्थनालब्धबहुवार्षिकनिद्रासमनन्तरकालभावीत्यव गन्तव्यम् । अन्यथा मृतकल्पः शयिष्यस इति शप्तस्य तपश्चर्याद्यसम्भवात् ॥ २४ ॥ प्रभोः रावणस्य ॥ २५ ॥ काञ्चनः काञ्चनवत् स्पृहणीयः । चम्पकवृक्षो वा । विवृद्धः वर्धितः । फलकाले पुष्पकाले । निकृत्यते छिद्यते । नप्तारं पौत्रम् ॥ २६ ॥ कालः कालनियमः ॥ २७ ॥ २८ ॥

ध्रुवमिति । पौलस्त्येन विश्रवसा त्वमद्यप्रभृति मृतकल्पः शयिष्यस इत्युक्तोऽयं शापः "स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितम् । एवमस्त्विति तच्चोक्त्वा प्रहृष्टास्ते दिवौकसः" इति तपश्चर्यानन्तरप्रार्थनालब्धबहुवार्षिकनिद्रासमनन्तरकालभावीत्यवगन्तव्यम् । अन्यथा मृतकल्पः शयिष्यसे इति शप्तस्य तपश्चर्याद्यसम्भवात् ॥ २४ ॥ २५ ॥ विवृद्ध इति । काञ्चनः काञ्चनवत्स्पृहणीयः ॥ २६-२८ ॥

स०–काञ्चनो वृक्षः उदुम्बरादिः फलकाले यद्यपि नीरसं जन्त्वादिदूषितं च फलम् । तथापि वृद्धः वर्धितः न निकृत्यते यथा तन्निकर्तनमन्याय्यं तथा स्वकं नप्तारं पौत्रम् एवं शप्तुमन्याय्यं न्यायादनपेतम् । "काञ्चनः काञ्चनारे स्याच्चम्पके नागकेसरे । उदुम्बरे च पुन्नागे" इति विश्वः । "विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्" इत्यादेस्तादृशोऽपि न च्छेद्यः । अयं तु काञ्चनमयो वृक्षः फलकाले फलद्वारा काञ्चनदानकाल इति वा ॥ २६ ॥

षण्मासानित्येतदर्वाङ्निषेधपरम् । अन्यथा ' नव षट् सप्त चाष्टौ च मासान् ' इति पूर्वोक्तविरोधात् ॥ २९ ॥ सोऽसौ रावणः ॥ ३० ॥ शिबिरात् स्वनिलयात् । भक्षयन् परिधावति भक्षणहेतोः परिधाविष्यति । " लक्षणहेत्वोः क्रियायाः " इति शतृप्रत्ययः । वर्तमानसामीप्यादिना भविष्यदर्थे



शयिता ह्येष षण्मासानेकाहं जागरिष्यति । एकेनाह्ना त्वसौ वीरश्चरन् भूमिं बुभुक्षितः । व्यात्तास्यो भक्षयेल्लोकान् सङ्क्रुद्ध इव पावकः ॥ २९ ॥ सोऽसौ व्यसनमापन्नः कुम्भकर्णमबोधयत् । त्वत्पराक्रमभीतश्च राजा सम्प्रति रावणः ॥ ३० ॥ स एष निर्गतो वीरः शिबिराद्भीमविक्रमः । वानरान् भृशसंक्रुद्धो भक्षयन् परिधावति ॥ ३१ ॥ कुम्भकर्णं समीक्ष्यैव हरयोऽद्य प्रविद्रुताः । कथमेनं रणे क्रुद्धं वारयिष्यन्ति वानराः ॥ ३२ ॥ उच्यन्तां वानराः सर्वे यन्त्रमेतत् समुच्छ्रितम् । इति विज्ञाय हरयो भविष्यन्तीह निर्भयाः ॥ ३३ ॥ विभीषणवचः श्रुत्वा हनुमत् सुमुखेरितम् । उवाच राघवो वाक्यं नीलं सेनापतिं तदा ॥ ३४ ॥ गच्छ सैन्यानि सर्वाणि व्यूह्य तिष्ठस्व पावके । द्वाराण्यादाय लङ्कायाश्चर्याश्चाप्यथ सङ्क्रमान् ॥ ३५ ॥ शैलशृङ्गाणि वृक्षांश्च शिलाश्चाप्युपसंहर । तिष्ठन्तु वानराः सर्वे सायुधाः शैलपाणयः ॥ ३६ ॥ राघवेण समादिष्टो नीलो हरिचमूपतिः । शशास वानरानीकं यथावत् कपिकुञ्जरः ॥ ३७ ॥ ततो गवाक्षः शरभो हनुमानङ्गदस्तथा । शैलशृङ्गाणि शैलाभा गृहीत्वा द्वारमभ्ययुः ॥ ३८ ॥

लट् ॥ ३१ ॥ ३२ ॥ उच्यन्तामिति । यन्त्रं बिभीषिका । समुच्छ्रितमुन्नतम् ॥ ३३ ॥ सुमुखेरितं सुमुखं यथा भवति तथा ईरितम् उक्तम् ॥ ३४ ॥ गच्छेत्यादिश्लोकद्वयम् । आदाय स्वीकृत्य, आवृत्त्येति यावत् ॥ ३५ ॥ उपसंहर राशीकुरु । युद्धसाधनशिलादिकमिदानीमेव सम्पादयेत्यर्थः । तिष्ठन्तु वानराः

शयितेति । षण्मासान् शयिता, एकाहं जागरिष्यति इत्यनेन 'नव षट् सप्त चाष्टौ च मासान् स्वपिति राक्षसः' इत्युक्तप्रकारेण निद्रायाः कालनियमस्याप्युक्तत्वात् निद्रायाः मासषट्कान्न्यूनता नास्तीत्युक्तम् । 'एकाहं जागरिष्यति' " एकेनाह्ना त्वसौ वीरश्चरन् भूमिं बुभुक्षितः । व्यात्तास्यो भक्षयेल्लोकान् " इत्यनेन जागरणकालनियमस्योक्तत्वादेकाहजागरणमित्युक्तं भवति ॥ २९ ॥ ३० ॥ स एष इति । भक्षयन् "लक्षणहेत्वोः क्रियायाः" इति हेतौ शतृप्रत्ययः । शिबिरात् स्वगृहात् परिधावति परिधाविष्यति । " वर्तमानसामीप्ये वर्तमानवद्वा " इति भविष्यदर्थे लट् ॥ ३१ ॥ ३२ ॥ यन्त्रं बिभीषिका ॥ ३३–३५ ॥ उपसंहर सञ्चिनु ॥ ३६–३८ ॥

सर्वे सायुधाः शैलपाणयः इति पाठः । सायुधाः खड्गाद्यायुधवन्तः ॥ ३६–३८ ॥ रामेति । परवाहिनीं नगररक्षार्थं बहिश्चरन्तीम् । यद्वा कुम्भकर्णं दृष्ट्वा पलायमानान् वानरान् प्रत्युद्गतां परवाहिनीमित्यर्थः ॥ ३९ ॥ शैलोद्यतदीप्तहस्तं शैलोद्यताः उद्यतशैलाः । महन्महाम्भोधरजालम्, महत् गुरु महाम्भोधरजालं मेघजालमित्यर्थः ॥४०॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकषष्टितमः सर्गः ॥६१॥

रामवाक्यमुपश्रुत्य हरयो जितकाशिनः । पादपैरर्दयन् वीरा वानराः परवाहिनीम् ॥ ३९ ॥ ततो हरीणां तदनीकमुग्रं रराज शैलोद्यतदीप्तहस्तम् । गिरेः समीपानुगतं यथैव महन्महाम्भोधरजालमुग्रम् ॥ ४० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

स तु राक्षसशार्दूलो निद्रामदसमाकुलः । राजमार्गं श्रिया जुष्टं ययौ विपुलविक्रमः ॥ १ ॥ राक्षसानां सहस्रैश्च वृतः परमदुर्जयः । गृहेभ्यः पुष्पवर्षेण कीर्यमाणस्तदा ययौ ॥ २ ॥ स हेमजालविततं भानुभास्वरदर्शनम् । ददर्श विपुलं रम्यं राक्षसेन्द्रनिवेशनम् ॥ ३ ॥ स तत्तदा सूर्य इवाभ्रजालं प्रविश्य रक्षोधिपतेर्निवेशम् । ददर्श दूरेऽग्रजमासनस्थं स्वयम्भुवं शक्र इवासनस्थम् ॥ ४ ॥

अथ कुम्भकर्णं प्रति रावणस्य सान्त्ववचनं द्विषष्टितमे—स त्वित्यादि । निद्रामदसमाकुलः निद्रया अकालोत्थितत्वेनानुवर्तमानया, मदेन मद्यपानकृतेन च समाकुलः । गृहेभ्यः, निर्गतेनेति शेषः ॥१॥२॥ हेमजालविततं स्वर्णमयगवाक्षविततम् । भानुभास्वरदर्शनम्, दृश्यत इति दर्शनं रूपम् । भानुवत् प्रकाशमानमित्यर्थः ॥ ३ ॥ स इति । दूरे कक्ष्यान्तरप्रदेशे ददर्श । उन्नतपुष्पकवत्त्वादिति भावः ॥ ४–६ ॥

परवाहिनीं पुराद्बहिर्निर्गत्य पुरीपरिसररक्षिणीं राक्षससेनामित्यर्थः ॥ ३९ ॥ शैलोद्यतदीप्तहस्तम् उद्यतशैलदीप्तहस्तम् ॥ ४० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकषष्टितमः सर्गः ॥ ६१ ॥ १ ॥ राक्षसानामिति । गृहेभ्यः, निर्गतेनेति शेषः ॥ २–६ ॥



स०–गृहेभ्यः तत्स्थितस्त्रीकरेभ्यः । यद्वा गृहेभ्यः परभार्याभ्यः "गृहिणी गृहमुच्यते" इति वचनात् । राक्षसानां गृहेभ्यः इत्यप्यन्वयो वा ॥ २ ॥ अभ्रजालं जलसत्तादशायामिन्द्रनीलरचनात् तदभावदशायां वज्रैश्च तन्निदर्शनतोचितेति न भानुभास्वरेति विरोधः । [illegible] ॥ ४ ॥

अथेति । सन्निकर्षं समीपम् ॥ ७ ॥ कृत्यं मया कर्तव्यम् ॥ ८–१० ॥ किमर्थमिति । आदृत्य, स्थितेनेति शेषः । शंसेति । तमिति शेषः । प्रेतो भविष्यति मृतो भविष्यति ॥ ११ ॥ भ्रातरमिति । ईषत् परिवृत्ताभ्यामित्यनेन ईषत् कोपो लक्ष्यते ॥ १२ ॥ ईषत्त्वमेव विवृणोति–अद्येत्यादिना ।



भ्रातुः स भवनं गच्छन् रक्षोगणसमन्वितम् । कुम्भकर्णः पदन्यासैरकम्पयत मेदिनीम् ॥ ५ ॥ सोऽभिगम्य गृहं भ्रातुः कक्ष्यामभिविगाह्य च । ददर्शोद्विग्नमासीनं विमाने पुष्पके गुरुम् ॥ ६ ॥ अथ दृष्ट्वा दशग्रीवः कुम्भकर्णमुपस्थितम् । तूर्णमुत्थाय संहृष्टः सन्निकर्षमुपानयत् ॥ ७ ॥ अथासीनस्य पर्यङ्के कुम्भकर्णो महाबलः । भ्रातुर्ववन्दे चरणौ किं कृत्यमिति चाब्रवीत् ॥ ८ ॥ उत्पत्य चैनं मुदितो रावणः परिषस्वजे । स भ्रात्रा सम्परिष्वक्तो यथावच्चाभिनन्दितः ॥९॥ कुम्भकर्णः शुभं दिव्यं प्रतिपेदे वरासनम् । स तदासनमाश्रित्य कुम्भकर्णो महाबलः । संरक्तनयनः कोपाद्रावणं वाक्यमब्रवीत् ॥ १० ॥ किमर्थमहमादृत्य त्वया राजन् विबोधितः । शंस कस्माद्भयं तेऽस्ति कोऽद्य प्रेतो भविष्यति ॥ ११ ॥ भ्रातरं रावणः क्रुद्धं कुम्भकर्णमवस्थितम् । ईषत्तु परिवृत्ताभ्यां नेत्राभ्यां वाक्यमब्रवीत् ॥ १२ ॥ अद्य ते सुमहान् कालः शयानस्य महाबल । सुखितस्त्वं न जानीषे मम रामकृतं भयम् ॥ १३ ॥ एष दाशरथी रामः सुग्रीवसहितो बली । समुद्रं सबलस्तीर्त्वा मूलं नः परिकृन्तति ॥ १४ ॥

सुमहान् कालः नवदिनपरिमितः, गतः इति शेषः ॥ १३ ॥ मूलं मूलबलम् । परिकृन्तति बाधत इत्यर्थः ॥ १४ ॥

कक्ष्यामभिविगाह्य द्वारं तीर्त्वा ॥ ६ ॥ उपस्थितम् अवस्थितम्, प्राप्तमिति यावत् ॥ ७–१२ ॥ सुमहान् कालः, अतीत इति शेषः ॥ १३ ॥ १४ ॥

स०–पुनस्समुदितोत्पत्य रावणः इति पाठः । समुदितो रावणः । उत्पत्य आसनादुत्थायेत्यर्थः । सन्धिरार्ष इति नागोजिभट्टः । समुदितं यथा भवति तथा उत्पत्य "सुप् सुपा" इति समासे ऐकपद्यं ज्ञेयम् । मुदितः अत् पत्येति छेदः । अत् आश्चर्यं यथा भवति तथा पतित्वाऽऽत्पत्य । व्याख्यातं चाद्भुतपदव्याख्यानावसरे अदित्याश्चर्यार्थकमव्ययमिति वा ॥ ९ ॥ रोषेण परिवृत्ताभ्यां नेत्राभ्यामुपलक्षितं क्रुद्धं भ्रातरं कुम्भकर्णं रावणोऽब्रवीदिति नागोजिभट्टः । रोषेण परिवृत्ताभ्यां नेत्राभ्यां पार्श्वद्वयवर्तिनेत्रत्वेन द्विवचनं पूर्वं भुजाभ्यामितिवत् । तदुपलक्षितो रावणो वाक्यमुवाचेत्यन्वयो वा । अस्मिन् पक्षे क्रुद्धपदं नाधिकम् ॥ १२ ॥

मूलकृन्तनमुपपादयति—हन्तेति । लङ्कायां वनान्युपवनानि च सर्वम् । सेतुना सुखमागम्य स्वनिर्मितसेतुमात्रेण सुखमागम्य । रामेण वानरैकार्णवीकृतं वानररूपैकार्णवीकृतम् । पश्यस्व । आत्मनेपदमार्षम् । यद्वा स्वलङ्कायामिति छेदः । आत्मीयलङ्काद्वीप इत्यर्थः ॥ १५–१७ ॥ तदेतत् एतादृशम् ।

हन्त पश्यस्व लङ्कायां वनान्युपवनानि च । सेतुना सुखमागम्य वानरैकार्णवीकृतम् ॥ १५ ॥ ये रक्षसां मुख्यतमा हतास्ते वानरैर्युधि । वानराणां क्षयं युद्धे न पश्यामि कदाचन ॥ १६ ॥ न चापि वानरा युद्धे जितपूर्वाः कदाचन ॥ १७ ॥ तदेतद्भयमुत्पन्नं त्रायस्वेमां महाबल । नाशय त्वमिमानद्य तदर्थं बोधितो भवान् ॥ १८ ॥ सर्वक्षपितकोशं च स त्वमभ्यवपद्य माम् । त्रायस्वेमां पुरीं लङ्कां बालवृद्धावशेषिताम् ॥१९॥ भ्रातुरर्थे महाबाहो कुरु कर्म सुदुष्करम् । मयैवं नोक्तपूर्वो हि कश्चिद्भ्रातः परन्तप ॥ २० ॥ त्वय्यस्ति तु मम स्नेहः परा सम्भावना च मे । दैवासुरेषु युद्धेषु बहुशो राक्षसर्षभ । त्वया देवाः प्रतिव्यूह्य निर्जिताश्चासुरा युधि ॥ २१ ॥ तदेतत् सर्वमातिष्ठ वीर्यं भीमपराक्रम । न हि ते सर्वभूतेषु दृश्यते सदृशो बली ॥ २२ ॥ कुरुष्व मे प्रियहितमेतदुत्तमं यथाप्रियं प्रियरण बान्धवप्रिय । स्वतेजसा विधम सपत्नवाहिनीं शरद्घनं पवन इवोद्यतो महान् ॥ २३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

भयमुत्पन्नम् । अस्माद्भयादिमां पुरीं त्रायस्व । इमान् वानरान् नाशय । तदर्थं नाशनार्थम् ॥ १८ ॥ सर्वक्षपितेति । सर्वक्षपितकोशं क्षपितसर्वैश्वर्यम् । "कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः" इत्यमरः । अभ्यवपद्य जानीहीत्यर्थः । बालवृद्धावशेषितामित्यतिशयोक्तिः । मूलबलाद्युत्सादनस्य वक्ष्यमाणत्वात् ॥ १९ ॥ कच्चिदिति प्रश्ने । कदाचिदपि नोक्तपूर्वोऽसीत्यर्थः । कश्चिदिति पाठे त्वदन्यः कश्चिदपि नैवमुक्तपूर्व इत्यर्थः ॥ २० ॥ सम्भावना आदरः । दैवासुरेषु देवासुरसम्बन्धिषु । प्रतिव्यूह्य विभज्य । असुराः असुरा अपीत्यर्थः ॥ २१ ॥ आतिष्ठ अवलम्बस्व ॥ २२ ॥ यथाप्रियं



स्वलङ्कायाम् आत्मीयलङ्काद्वीपे । वानरैकार्णवीकृतम्, एतत्सर्वमिति शेषः ॥ १५–१८ ॥ सर्वक्षपितकोशं क्षपितसर्वैश्वर्यम् ॥ १९ ॥ २० ॥ परा सम्भावना अत्यादरः ॥ २१ ॥ वीर्यमातिष्ठ वीर्यमवलम्बस्व ॥ २२ ॥ कुरुष्वेति । हे प्रियरण ! एतदुत्तमं हितं यथाप्रियं यथास्नेहम्, आवयोः स्नेहानुरूपमिति यावत् ।

यथास्नेहम् । आवयोः प्रीत्यनुरूपमित्यर्थः ॥२३॥ इति श्रीगोविन्दराजविरचिते श्रीरामा०रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥६२॥
अथ कुम्भकर्णबुद्धित्रिषष्टितमे—तस्येत्यादि । परिदेवितं पूर्वोक्तवचनानां परिदेवनतुल्यत्वात् परिदेवितत्वम् । कुम्भकर्णो वचनं बभाषे जहास चेत्यत्र व्यत्ययः कार्यः । उक्त्वा जहासेति वाऽर्थः ॥ १ ॥ पुरा मन्त्रनिर्णये क्रियमाणे । अस्माभिः यो दोषो दृष्टः शत्रुनिरस्तवापत् भविष्यतीति निश्चितः । हितेषु हितपरेषु । अनभिरक्तेन असक्तेन, हितपरवचनमशृण्वतेत्यर्थः । त्वया सोऽयं दोष आसादितः, पूर्वमेव चिन्तिता विपत् प्राप्तेत्यर्थः ॥ २ ॥



**तस्य राक्षसराजस्य निशम्य परिदेवितम् । कुम्भकर्णो बभाषेदं वचनं प्रजहास च ॥१॥ दृष्टो दोषो हि योऽस्माभिः पुरा मन्त्रविनिर्णये । हितेष्वनभिरक्तेन सोऽयमासादितस्त्वया ॥२॥ शीघ्रं खल्वभ्युपेतं त्वां फलं पापस्य कर्मणः । निरयेष्वेव पतनं यथा दुष्कृतकर्मणः ॥ ३ ॥ प्रथमं वै महाराज कृत्यमेतदचिन्तितम् । केवलं वीर्यदर्पेण नानुबन्धो विचारितः ॥ ४ ॥ यः पश्चात् पूर्वकार्याणि कुर्यादैश्वर्यमास्थितः । पूर्वं चापरकार्याणि न स वेद नयानयौ ॥ ५ ॥**

पापस्य सीताहरणरूपस्य कर्मणः फलं त्वां शीघ्रम् अभ्युपेतं प्राप्तम् । "अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते" इति न्यायात् । अत्रोदाहरणमाह निरयेष्विति । दुष्कृतकर्मणः महापातकिनः पुरुषात् । निरयेष्वेव पतनं यथा प्राप्नोति तद्वत् । एवकारेणापरिहार्यत्वमुच्यते ॥ ३ ॥ प्रथममिति । हे महाराज । केवलं वीर्यदर्पेण एतत्कृत्यं सीताहरणरूपं कार्यं वै । प्रथमं सीताहरणात् पूर्वम् । न चिन्तितम् साध्वसाधु वेति त्वया न विचारितम् । अनुबध्नातीत्यनुबन्धः दोषोत्पादः । "दोषोत्पादेऽनुबन्धः स्यात्" इत्यमरः ॥ ४ ॥ प्रथमं विचार्य पश्चात् कर्म कर्तव्यमिति प्रेक्षावतां कृत्यम्, त्वया तु तद्विपरीतं कृतमित्याह—य इति । ऐश्वर्यम् आस्थितः प्राप्तः यः पुमान् पूर्वकार्याणि कार्यारम्भात् पूर्वं कर्तव्यानि मन्त्रणादीनि कुर्यात् । कुरुष्वेति योजना ॥ २३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां द्विषष्टितमः सर्गः ॥ ६२ ॥

॥ १ ॥ २ ॥ शीघ्रमिति । दुष्कृतकर्मणः पुरुषस्य निरयेष्वेव पतनं यथा तथा पापस्य कर्मणः सीताहरणरूपस्य फलं शीघ्रं त्वामभ्युपेतं प्राप्तम् ॥ ३ ॥ प्रथमं पापस्य कर्मणो विधानात्प्रागेवैतत्कृत्यफलभूतमेतद्रामागमनलङ्कादाहादिकं न चिन्तितम्, फलत्वेन न विचारितमित्यर्थः । अनुबन्धोऽपि न विचारितः, अनुबध्नातीत्यनुबन्धो दोषोत्पादः । "दोषोत्पादेऽनुबन्धः स्यात्" इत्यमरः । तत्कृतदोषो न विचारित इत्यर्थः ॥४॥ प्रेक्षावता पुरुषेण प्रथमं विचार्य पश्चात्कर्तव्यम्,

स०—दं दातारं रावणं प्रति बभाषे जहास च । विभीषणमाल्यवदायुक्तं न श्रुतमत इयं दशेति दशाननं निरीक्ष्य हास इति भावः । "दं दाने छेदे च दातरि" इति विश्वः । बभाषेऽद्येत्यपि क्वचित्पाठः ॥१॥

अपरकार्याणि उत्तरकाले विचार्याणि च पूर्वं कुर्यात् । सः नयानयौ नीत्यनीती न वेद ॥ ५ ॥ एवं देशकालानुरोधेन कर्म कर्तव्यमित्युक्तम् । तदननुरोधे दोषमाह–देशेति । देशकालविहीनानि क्रियमाणानि । अदेशे अकाले च कृतानि कर्माणि । विपरीतवत् देशकालवैकल्याद्विपरीतकर्माणीव । अप्रयतेषु मन्त्रानध्ययनादिना अपूतेषु अपात्रेषु हवींषीव दुष्यन्ति विफलानि भवन्तीत्यर्थः ॥ ६ ॥ देशकालानुरोधस्य फलमाह–त्रयाणामिति । सचिवैः मन्त्रिभिः सह । समयं निश्चयरूपं सिद्धान्तं कृत्वा । "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः । त्रयाणाम् उत्तममध्यमाधम

देशकालविहीनानि कर्माणि विपरीतवत् । क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ६ ॥
त्रयाणां पञ्चधा योगं कर्मणां यः प्रपश्यति । सचिवैः समयं कृत्वा स सभ्ये वर्तते पथि ॥ ७ ॥

कर्मणाम् । तत्र आत्मोदयपरज्यानिसम्भवसमये क्रियमाणं दण्डोपयोगि यानमुत्तमं कर्म । आत्मपरयोः बलसाम्ये क्रियमाणं सन्धानं मध्यमं कर्म । परोदयात्मज्यानिसमये क्रियमाणं दानपूर्वसमाश्रयणमधमं कर्म । तेषां पञ्चधा योगम्–कर्मणामारम्भोपायः, पुरुषद्रव्यसंपत्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिश्चेत्युक्तैः पञ्चभिर्योगम् । यद्वा त्रयाणाम् उत्तममध्यमाधमभावेन त्रिविधानां कर्मणाम् । पञ्चधा योगं देशकालात्मद्रव्यप्रयोजनसम्बन्धवशात् पञ्चविधं संबन्धम् । यः पश्यति सः सभ्ये साधौ । "सभ्यः सामाजिके साधौ" इति रत्नमाला । पथि नीतिमार्गे वर्तते सम्यङ्नीति

त्वया तु तद्विपरीतमेव कृतमित्यभिप्रेत्याह–यः पश्चादिति । पूर्वकार्याणि पूर्वस्मिन् काले कर्तव्यानि पश्चात्कुर्यात् । उत्तरकार्याणि उत्तरस्मिन् काले कर्तव्यानि पूर्वं कुर्यादिति सम्बन्धः ॥ ५ ॥ देशकालवैपरीत्येन कृतस्य कर्मणो दोषं प्रदर्शयति–देशकालेति । अनुकूलान्यपि कर्माणि स्वोचितदेशकालवियुक्तानि क्रियमाणानि चेत विपरीतवद्दुष्यन्ति प्रतिकूलकर्मभिस्तुल्यं विरुद्धफलानि भवन्तीत्यर्थः । हवींषि च पुरोडाशादीनि । अप्रयतेष्विव असावधानजनेष्विव, अऋत्विजनेष्विति यावत् ॥ ६ ॥ देशकालविरोधे फलवैपरीत्यमुक्त्वा इदानीं तदविरोधे फलमाह–त्रयाणामिति । सचिवैः समयं निश्चयम् । त्रयाणाम् उत्तममध्यमाधमभावेन त्रिविधानां कर्मणाम् । एषूत्तमं कर्म नीतिशास्त्रोक्तम् आत्मोपचयपरज्यानिसम्भवसमये क्रियमाणं दण्डोपयोगि यानमुत्तमं कर्म । आत्मपरयोः बलसाम्ये क्रियमाणं सामसाध्यं सन्धानं मध्यमं कर्म । परोपचयात्मग्लानिसमये क्रियमाणं दानपूर्वकसमाश्रयणमधमं कर्म । एतादृशत्रिविधकर्मणां पञ्चधा योगं देशकालात्मद्रव्यप्रयोजनसम्बन्धवशात् पञ्चविधं सम्बन्धम् यः पश्यति स सभ्ये पथि वर्तते, साधीयान् भवतीत्यर्थः । यद्वा एवं पञ्चधा योगः–कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्,

फलं प्राप्नोतीत्यर्थः ॥ ७ ॥ यथागमं नीतिशास्त्रमनतिक्रम्य । यां राजा समयं कार्यनिर्णयं चिकीर्षति सचिवांश्च बुध्यते सचिवैः सहालोचयतीति यावत् । सुहृदश्चानुपश्यति सुहृद्भिः सह विचारयतीति यावत् । स सभ्ये पथि वर्तत इति पूर्वेणान्वयः ॥ ८ ॥ धर्ममर्थं कामं च प्रत्येकं वा । त्रीणि द्वन्द्वानि वा धर्मार्थौ अर्थधर्मौ कामार्थौ वा, सर्वान् वा । कालेषु विहितेषु प्रातर्मध्याह्नसायाह्नेषु भजेत अकाले न सेवेतेति भावः । एतदुक्तं भवति ।



यथागमं च यो राजा समयं विचिकीर्षति । बुध्यते सचिवान् बुद्ध्या सुहृदश्चानुपश्यति ॥ ८ ॥
धर्ममर्थं च कामं च सर्वान् वा रक्षसां पते । भजेत पुरुषः काले त्रीणि द्वन्द्वानि वा पुनः ॥ ९ ॥
त्रिषु चैतेषु यच्छ्रेष्ठं श्रुत्वा तन्नावबुध्यते । राजा वा राजमात्रो वा व्यर्थं तस्य बहुश्रुतम् ॥ १० ॥

प्रातःकाले धर्मो विहितः, तं तदा सेवेत । मध्याह्ने अर्थो विहितः, तं तदा सेवेत । सायंकाले कामो विहितः, तं तदा सेवेतेति । यद्वा प्रातःकाले स्वकालविहितं धर्मं मध्याह्ने विहितमर्थं च सेवेत । मध्याह्ने स्वकालविहितमर्थं प्रातर्विहितं धर्मं च सेवेत । सायंकाले स्वकालविहितं कामं मध्याह्नविहितमर्थं च सेवेत । अथवा सायंकाले स्वविहितं कामं प्रातर्मध्याह्नयोर्विहितौ धर्मार्थौ च सेवेतेति । केवलकामं सर्वकालेष्वपि सेवमानः पुरुषाधम एवेत्यभिसन्धिः ॥ ९ ॥ एवं कर्तव्यमुक्त्वा तदकर्तारं निन्दति—त्रिष्विति । एतेषु पूर्वोक्तेषु त्रिषु भजनेषु धर्मार्थकामेषु वा । यच्छ्रेष्ठं प्रत्येकभजनम्, धर्मो वा । तच्छ्रुत्वा यो राजा वा राजमात्रो वा राजसदृशो वा न बुध्यते आचरितुं न जानाति । तस्य बहुश्रुतं शास्त्रश्रवणं व्यर्थम्, अनुष्ठानपर्यवसानाभावादिति भावः । एवं सामान्यरूपया अप्रस्तुतप्रशंसया त्रिवर्गेषु श्रेष्ठं धर्मं परित्यज्य जघन्यं काममेवाश्रितस्य ते शास्त्रश्रवणं समुद्रघोषमात्रमासीदिति प्रस्तुतोऽर्थोऽव

देशकालविभागः, विपत्तेश्च प्रतीकारः, कार्यसिद्धिश्चेति ॥ ७ ॥ यो राजा यथागमं यथानीतिशास्त्रम् । समयं कार्यनिर्णयं विचिकीर्षति सचिवांश्च बुद्ध्यते, सचिवैस्सहालोचयतीत्यर्थः । सुहृदश्चानुपश्यति सुहृदश्चावेक्षते । यद्वा सुहृद्भिः सह विचारयति स सभ्ये पथि वर्तत इति पूर्वेण सम्बन्धः ॥ ८ ॥ धर्ममिति । काले विहितपूर्वाह्णमध्याह्नसायाह्नकाले धर्मम् अर्थं च कामं च प्रत्येकं पुरुषो भजेत । त्रीणि द्वन्द्वानि वा प्रातःकालविहितं धर्मं मध्याह्नविहितमर्थं च प्रातःकाले भजेत, मध्याह्नविहितमर्थं प्रातःकालविहितं धर्मं च मध्याह्ने भजेत, सायंकालविहितं कामं मध्याह्नविहितमर्थं च सायङ्काले भजेत, सर्वान्वा सायङ्कालविहितं कामं प्रातर्मध्याह्नविहितौ धर्मार्थौ च सायङ्काले अवैषम्येण भजेत, कालव्यत्ययेन भजेतेत्यर्थः ॥ ९ ॥ त्रिषु चैतेषु धर्मार्थकामेषु यच्छ्रेष्ठं धर्मरूपं वस्तु । यद्वा त्रिषु त्रिविधेष्वेतेषु पूर्वोक्तपक्षेषु यच्छ्रेष्ठं प्रशस्ततरं तच्छ्रुत्वा राजा वा राजमात्रो वा राजसदृशो वा नावबुध्यते आचरितुं न जानाति तस्य बहुश्रुतं व्यर्थमित्यर्थः ॥ १० ॥

गम्यते ॥ १० ॥ अकाले काम इवाकाले विक्रमोऽपि त्याज्य इत्याह—उपप्रदानमित्यादिश्लोकद्वयेन । काले तत्तदुचितकाले । उपप्रदानं प्रतिपक्षिणः समीपं गत्वा द्रविणादिप्रदानम् । सान्त्वं समीचीनभाषणम् । भेदं मित्रादिवर्गस्य द्वैधीकरणम् । विक्रमं दण्डं च । प्रत्येकं तेषां योगं समवायं च । तौ पूर्वोक्तौ नयानयौ । तेषां निर्वाहप्रकारान् धर्मार्थकामांश्च सचिवैः संमन्त्र्य । काले पूर्वोक्तकाले । आत्मवान् वशीकृतमनस्कः । यो निषेवेत स लोके व्यसनं नाप्नु

उपप्रदानं सान्त्वं वा भेदं काले च विक्रमम् । योगं च रक्षसां श्रेष्ठ तावुभौ च नयानयौ ॥ ११ ॥ काले धर्मार्थकामान् यः संमन्त्र्य सचिवैः सह । निषेवेतात्मवान् लोके न स व्यसनमाप्नुयात् ॥ १२ ॥ हितानुबन्धमालोच्य कार्याकार्यमिहात्मनः । राजा सहार्थतत्त्वज्ञैः सचिवैः स हि जीवति ॥ १३ ॥ अनभिज्ञाय शास्त्रार्थान् पुरुषाः पशुबुद्धयः । प्रागल्भ्याद्वक्तुमिच्छन्ति मन्त्रेष्वभ्यन्तरीकृताः ॥ १४ ॥

यात् ॥ ११ ॥ १२ ॥ हितेति । अत्र कार्यमित्यध्याहारः । निषेवेतेत्यनुषङ्गः । यो राजा अर्थतत्त्वज्ञैः सचिवैः सह । हितानुबन्धं हितोदर्कम् । आत्मनः कार्याकार्यं कर्तव्याकर्तव्यम् । आलोच्य निश्चित्य । कार्यमेव निषेवेत सः इह लोके जीवतीत्यर्थः । हीत्यनेनायमर्थो लोकप्रसिद्ध इत्यवगम्यते । हितानुबन्धकार्याकार्यानालोचनात्त्वेदं व्यसनमापन्नमिति भावः ॥ १३ ॥ एवं सामान्येन राजानमधिक्षिप्य मन्त्रिणोऽप्यधिक्षिपति—अनभिज्ञायेति । शास्त्रार्थान् नीतिशास्त्रार्थान् । अनभिज्ञाय गुरुमुखादश्रुत्वा । वेषेण पुरुषाः पशुबुद्धयः आहारनिद्रादिमात्राभिज्ञाः । भ्रान्तेन राज्ञा । मन्त्रेषु राजकार्यविचारेषु । अभ्यन्तरीकृता मन्त्रयितृत्वेन वृताः सन्तः । प्रागल्भ्यात् ऊहापोहौ विना केवलधाष्टर्यात् वक्तुमिच्छन्ति, नतु सम्यक् सङ्गतं निश्चित्य वदन्तीत्यर्थः ॥ १४ ॥

उपप्रदानमित्यादि श्लोकद्वयमेकं वाक्यम् । उपप्रदानं सान्त्वं भेदं च काले तदुचितकाले विक्रमं दण्डं च सामादीनुपायानेकैकं योगं तेषां समुदायं च नयानयौ तेषां निर्वाहानिर्वाहप्रकारौ । धर्मार्थकामांश्च-धर्मः तपश्चर्यादिः, अर्थः लब्धव्यं धनम्, कामः प्राप्तव्यवस्त्रादि एतान् सचिवैः सह सम्मन्त्र्य काले तत्तदुचितकाले आत्मवान् वशीकृतमनस्कः यो निषेवेत सः लोके व्यसनं नाप्नुयादिति योजना ॥ ११ ॥ १२ ॥ हितानुबन्धमिति । अत्र निषेवेतेत्यनुषङ्गः । यो राजा सचिवैस्सह कार्याकार्यमालोच्य कर्तव्याकर्तव्यं विमृश्य हितानुबन्धं शुभोदर्कफलं निषेवेत स जीवतीति सम्बन्धः । हितानुबन्धमालोक्य कुर्यात्कार्यमिहात्मनः इति वा पाठः ॥ १३ ॥ व्युत्क्रमो न कर्तव्य इत्यभिधाय नीतिबाह्यं मन्त्रिवाक्यमपि न परिग्राह्यमित्याह—अनभिज्ञायेत्यादिना ॥ १४ ॥ १९ ॥

अशास्त्रेति । शास्त्रानभिज्ञानां तेषां मन्त्रिणाम् । अहितं वचः अर्थशास्त्रानभिज्ञानाम् अथापि विपुलां श्रियमिच्छतां राज्ञां न कार्यम्, राजभिस्तदुक्तप्रकारो नानुष्ठेय इत्यर्थः ॥ १५ ॥ न केवलं तद्वचनाश्रवणम्, मन्त्रेषु बहिष्कार्याश्च त इत्याह—अहितमिति । वस्तुतः अहितं हिताकारं हितमिवापाततः प्रतीयमानमर्थम् । धाष्टर्यात् शास्त्रज्ञानं विना केवलप्रागल्भ्यात् । ये जल्पन्ति अक्रमेण वदन्ति । कृत्यदूषणाः कार्यदूषकास्ते । अवेक्ष्य पूर्वमेव परीक्ष्य ।

अशास्त्रविदुषां तेषां न कार्यमहितं वचः । अर्थशास्त्रानभिज्ञानां विपुलां श्रियमिच्छताम् ॥ १५ ॥ अहितं च हिताकारं धाष्टर्याज्जल्पन्ति ये नराः । अवेक्ष्य मन्त्रबाह्यास्ते कर्तव्याः कृत्यदूषणाः ॥ १६ ॥ विनाशयन्तो भर्तारं सहिताः शत्रुभिर्बुधैः । विपरीतानि कृत्यानि कारयन्तीह मन्त्रिणः ॥ १७ ॥ तान् भर्ता मित्रसङ्काशानमित्रान् मन्त्रनिर्णये । व्यवहारेण जानीयात् सचिवानुपसंहितान् ॥ १८ ॥ चपलस्येह कृत्यानि सहसानुप्रधावतः । छिद्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः ॥ १९ ॥

मन्त्रबाह्याः मन्त्रबहिर्भूताः कर्तव्याः ॥ १६ ॥ न केवलमहितवचनम्, विपरीतं च कुर्वन्तीत्याह—विनाशयन्त इत्यादि । मन्त्रिणः दुर्मन्त्रिणः । बुधैः उपायज्ञैः । शत्रुभिः सहिताः प्रेरिताः । विनाशयन्तः विनाशार्थम् । इह प्रयोजनविषये । विपरीतानि विपरीतफलकानि कृत्यानि । भर्तारं कारयन्ति ॥ १७ ॥ दुर्मन्त्रित्वनिर्णयोपायमाह—तानिति । उपसंहितानुपजापितान् उत्कोचप्रदानादिना शत्रुभिर्भेदं प्रापितान् । मित्रसङ्काशान् मित्रवद्भावयतः कार्यतोऽमित्रान् सचिवान् । व्यवहारेण व्यामिश्रभाषणेन जानीयात् ॥१८॥ स्वयमसमर्था विपरीतबुद्धयो मन्त्रिणः किं करिष्यन्तीत्यत्राह—चपलस्येति ।

अहितमिति । कृत्यदूषणाः सिद्धार्थदूषकाः ॥ १६ ॥ विनाशयन्त इत्यादि श्लोकद्वयमेकं वाक्यम् । बुधैः उपायज्ञैः । उपसंहितान् उत्कोचादिना शत्रुभिर्वशीकृतान् ॥ १७ ॥ १८ ॥ चपलस्येति । इह प्रस्तुतकार्यविषये कृत्यानि उपसंहितमन्त्रिप्रेरितानि कार्याणि सहसा अनुधावतः कुर्वतः । चपलस्य राज्ञः छिद्रं रन्ध्रम् ।

स०—अधुनापि वर्जनीयानेवाह—विनाशयन्त इति । शता हेतौ । भर्तारं स्वस्वामिनम् । बुधैः अविज्ञमन्त्रिकत्वज्ञानैः शत्रुभिः स्वराजविद्वेषिभिः । विपरीतानि राजमरणराज्यहरणादिकारणानि कृत्यानि कारयन्ति । ते मन्त्रिणो निन्दितमन्त्रिणः, मन्त्रबाह्याः कर्तव्या इत्यर्थः । “ भृशनिन्दाप्रशंसासु ” इत्युक्तेर्निन्दायामयमिनिः । “ केचित्तु मन्त्रिणः ” इत्यादि नागोजिभट्टव्याख्यानं बुधमन्त्रिमुखशब्दयोजनाज्ञानदारिद्र्येणेति ज्ञेयम् । तथा स्वरक्षणं कुर्वन्तीति शेष इति विशेषोऽपि तन्मूलक एव । प्रकरणाननुकूलता च बालानामपि भासत इत्यनादरणीयं तदिति दिक् ॥ १७ ॥

इह प्रस्तुते कार्ये विषये । कृत्यानि उपसंहितमन्त्रिप्रेरितानि कार्याणि । सहसा अविचारेण । अनुप्रधावतः दुर्मन्त्रिषु मन्त्रित्वमनुसरतः । चपलस्य झटिति कार्ये प्रवर्तमानस्य राज्ञः । छिद्रं रन्ध्रम् । अन्ये शत्रवः । क्षिप्रं प्रपद्यन्ते स्वीकुर्वन्ति । कथमिव ? द्विजाः पक्षिणः । "दन्तविप्राण्डजा द्विजाः" इत्यमरः । क्रौञ्चस्य स्कन्दशक्तिविदारितस्य क्रौञ्चाख्यपर्वतस्य । खमिव रन्ध्रमिव । पण्डिताः शत्रवः उत्कोचप्रदानादिना वशीकृतैर्मन्त्रिभिः कुत्रचिच्चापलकार्ये राजानं



यो हि शत्रुमविज्ञाय नात्मानमभिरक्षति । अवाप्नोति हि सोऽनर्थान् स्थानाच्च व्यवरोप्यते ॥ २० ॥
यदुक्तमिह ते पूर्वं क्रियतामनुजेन च । तदेव नो हितं कार्यं यदिच्छसि च तत् कुरु ॥ २१ ॥
तत्तु श्रुत्वा दशग्रीवः कुम्भकर्णस्य भाषितम् । भ्रुकुटिं चैव संचक्रे क्रुद्धश्चैनमभाषत ॥ २२ ॥
मान्यो गुरुरिवाचार्यः किं मां त्वमनुशाससि । किमेवं वाक्छ्रमं कृत्वा काले युक्तं विधीयताम् ॥ २३ ॥
विभ्रमाच्चित्तमोहाद्वा बलवीर्याश्रयेण वा । नाभिपन्नमिदानीं यद्व्यर्थास्तस्य पुनः कथाः ॥ २४ ॥

प्रापय्य तदेव रन्ध्रमासाद्य अन्तः प्रविशन्तीति भावः ॥ १९ ॥ एवं कपटवृत्तेः शत्रोः स्वरूपापरिज्ञाने राजा विपद्यत इत्याह—यो हीति । यो हि राजा । शत्रुं वञ्चनपरम् । अविज्ञाय मन्त्रव्यवहारादिना अविज्ञाय । आत्मानं च नाभिरक्षति दुर्मन्त्रिनिरासादिना नात्मानं प्रकृतौ स्थापयति । सोऽनर्थानवाप्नोति । स्थानात् राजासनात् । व्यवरोप्यते प्रच्याव्यते । इयता ग्रन्थेन तव कामव्यसनात् कुमन्त्रिवचनाच्चेयमापदिति दर्शितम् ॥ २० ॥ २१ ॥ क्रुद्धः सन् भ्रुकुटिम् ऊर्ध्वीकृतभ्रुवं चक्रे । एनमभाषत चेत्यन्वयः ॥ २२ ॥ मान्य इति । हे कुम्भकर्ण ! त्वं मान्यः बहुमानार्हः । आचार्यः आचारप्रवर्तकः गुरुरिव मां मान्यमाचार्यं गुरुम् । अनुशाससि शिक्षसे । आर्षः शप् । वैपरीत्यमेवाचरसीत्यर्थः । एवं वचनं तवायुक्तमिति भावः । अफलं चेदं वचनमित्याह किमेवमिति । एवम् उक्तप्रकारेण । वाक्छ्रमं कृत्वा, प्रयासैकफलां वाचमुक्त्वेत्यर्थः । किं फलम् ? किमपि प्रयोजनं नास्तीत्यर्थः । नीतिकालस्यातीतत्वादिति भावः । काले नयमार्गातीतकाले । यद्युक्तं पराक्रमरूपम्, तत् विधीयतां क्रियताम् ॥ २३ ॥ पूर्वमनालोच्य कृतस्य निमित्तमाह—विभ्रमादिति । विभ्रमात् अनीतौ नीतिबुद्ध्या । चित्तमोहात् ज्ञानानुदयात् । बलवीर्याश्रयेण बलवीर्ययोराश्रयणेन, गर्वेणेति यावत् । यत्कार्यं नाभिपन्नं

अन्ये शत्रवः प्रपद्यन्ते । कथमिव ? द्विजाः क्रौञ्चस्य स्कन्दशक्तिविदारितक्रौञ्चाख्यस्य पर्वतस्य । खमिव रन्ध्रमिव ॥ १९–२३ ॥ कुम्भकर्णोक्तं दोषमङ्गीकृत्योत्तर

न कृतम् । तस्य पुनः कथाः पुनः पुनः कथनानि । इदानीमतीतकाले व्यथाः ॥ २४ ॥ इदानीं सचः । गतं तु गतमेव, न तत्पुनरायास्यतीति भावः ॥ २५ ॥ ममेत्यादिसार्धश्लोक एकान्वयः । दोषं वैषम्यम्, शत्रुभिराक्रमणमिति यावत् । समीकुरु समतया कुरु । वैषम्यसमता नाम वैषम्यनाश एव । खलु

अस्मिन् काले तु यद्युक्तं तदिदानीं विधीयताम् । गतं तु नानुशोचन्ति गतं तु गतमेव हि ॥ २५ ॥ ममापनयजं दोषं विक्रमेण समीकुरु । यदि खल्वस्ति मे स्नेहो विक्रमं वाऽवगच्छसि । यदि वा कार्यमेतत्ते हृदि कार्यतमं मतम् ॥ २६ ॥ स सुहृद् यो विपन्नार्थं दीनमभ्यवपद्यते । स बन्धुर्योऽपनीतेषु साहाय्यायोपकल्पते ॥२७॥ तमथैवं ब्रुवाणं तु वचनं धीरदारुणम् । रुष्टोऽयमिति विज्ञाय शनैः श्लक्ष्णमुवाच ह ॥ २८ ॥ अतीव हि समालक्ष्य भ्रातरं क्षुभितेन्द्रियम् । कुम्भकर्णः शनैर्वाक्यं बभाषे परिसान्त्वयन् ॥ २९ ॥

वाक्यालङ्कारे । मे मयि यदि स्नेहोऽस्ति स्वकीयं विक्रमं यदि वा अवगच्छसि । स्वपराक्रममज्ञात्वैव नीत्युपन्यासस्त्वया कृत इति भावः । एतत् युद्धरूपं कार्यं ते हृदि कार्यतमम् अवश्यकर्तव्यम् । मतम् इष्टम्, अवश्यकर्तव्यत्वेन मन्यसे चेदित्यर्थः । तदा समीकुर्वित्यन्वयः ॥ २६ ॥ इदानीं साहाय्याकरणे तव बन्धुत्वमेव भज्येतेति सदृष्टान्तमाह—स इति । विपन्नार्थं विपन्नः शङ्कितापायः अर्थः प्रयोजनं यस्य तम् । दीनं मलिनमनस्कं पुरुषम् । यः सुहृत् अभ्यवपद्यते अभितः प्राप्नोति, सदा सन्निधत्त इत्यर्थः । स एव सुहृत् । यो बन्धुः अपनीतेषु विषमितनीतिषु पुरुषेषु साहाय्यायोपकल्पते साहाय्याय प्रभवति स एव बन्धुः । सर्वं वाक्यं सावधारणमिति न्यायात् ॥ २७ ॥ तमिति । धीरदारुणम् । यदि वा कार्यमित्युक्त्या धीरम्, सुहृदित्याद्युक्त्या दारुणं निष्ठुरम् । रुष्टोऽयमिति विज्ञाय, भ्रुकुटिबन्धनेनानुमायेत्यर्थः ॥ २८ ॥ उक्तमेवार्थं प्रपञ्चयन्नाह—अतीवेति । अतीव

माह—विभ्रमादिति । विभ्रमात् विपरीतज्ञानात् । चित्तमोहादज्ञानात् । नाभिपन्नं न कृतम् ॥ २४ ॥ २५ ॥ ममापनयजं दोषमित्यादि सार्धश्लोक एकं वाक्यम् । मे मयि । विक्रमं पराक्रमम् । कार्यतमम् अवश्यकर्तव्यं यदि तर्हि मम दोषं विक्रमेण समीकुर्वित्यर्थः ॥ २६ ॥ स सुहृदिति । विपन्नार्थं नष्टसर्वप्रयोजनं दीनम्, सखायमिति शेषः । यः अभ्यवपद्यते स सुहृत् । अपनीतेषु अपनीतिमत्सु ॥ २७ ॥ धीरदारुणं यदि वा कार्यं तर्हि कुर्वित्युक्तेः धैर्ययुक्तत्वम्, स सुहृत् यो विपन्नार्थ

क्षुभितेन्द्रियमित्यनेन रुष्टपदं व्याख्यातम् । परि[illegible] ॥ २९ ॥ अलमिति । ते त्वया सन्तापम् उपपद्य प्राप्य अलम्, सन्तापो न कर्तव्य इत्यर्थः । "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति क्त्वाप्रत्ययः । स्वस्थो भव, स्वर्गस्थो भवेत्यर्थान्तरम् ॥ ३० ॥ नैतदिति । नैतन्मनसि कर्तव्यम्, विभ्रमाचित्तमोहाद्वेत्युक्तं मनसि न कर्तव्यमित्यर्थः । यत्कृते यस्य रामस्य कृते । अर्थान्तरं तु मयि जीवति सति



अलं राक्षसराजेन्द्र सन्तापमुपपद्य ते । रोषं च सम्परित्यज्य स्वस्थो भवितुमर्हसि ॥ ३० ॥ नैतन्मनसि कर्तव्यं मयि जीवति पार्थिव । तमहं नाशयिष्यामि यत्कृते परितप्यसे ॥ ३१ ॥ अवश्यं तु हितं वाच्यं सर्वावस्थं मया तव । बन्धुभावादभिहितं भ्रातृस्नेहाच्च पार्थिव ॥ ३२ ॥ सदृशं यत्तु कालेऽस्मिन् कर्तुं स्निग्धेन बन्धुना । शत्रूणां कदनं पश्य क्रियमाणं मया रणे ॥ ३३ ॥ अद्य पश्य महाबाहो मया समरमूर्धनि । हते रामे सह भ्रात्रा द्रवन्तीं परवाहिनीम् ॥ ३४ ॥ अद्य रामस्य तद् दृष्ट्वा मयाऽऽनीतं रणाच्छिरः । सुखी भव महाबाहो सीता भवतु दुःखिता ॥ ३५ ॥ अद्य रामस्य पश्यन्तु निधनं सुमहत् प्रियम् । लङ्कायां राक्षसाः सर्वे ये ते निहतबान्धवाः ॥ ३६ ॥

एतन्मनसि न कर्तव्यम् । यद्यहं जीविष्यामि तदा एवं न कर्तव्यम् । अहमेव न जीविष्यामीत्यर्थः । यत्कृते यस्य मम कृते । परितप्यसे अयं सुखेन जीवन् मत्कार्यं न करोतीति परितप्तोऽसि । तं मां रामेण नाशयिष्यामीति ॥ ३१ ॥ तर्हि किमर्थमेवमुक्तमित्यत्राह—अवश्यमित्यादि । बन्धुभावात् सामान्यस्नेहात् विशेषतो भ्रातृस्नेहाच्च । सर्वावस्थं रोषहर्षादिसर्वावस्थावस्थितमित्यर्थः । अवश्यं वाच्यं ते हितं मयाऽभिहितम् ॥ ३२ ॥ अस्मिन् काले आपत्काले । स्निग्धेन बन्धुना यत्कर्तुं सदृशं युक्तम् तादृशं कदनं मया क्रियमाणं पश्य । अत्र शत्रुकर्तृकं कदनमित्यर्थान्तरम् ॥ ३३ ॥ अद्येति । अर्थान्तरम्—हे पर ज्येष्ठ ! मया सह समरमूर्धनि हते भ्रात्रे सति रामे रामनिमित्तम्, द्रवन्तीम् आगच्छन्तीम् वाहिनीं पश्येति ॥ ३४ ॥ अद्य रामस्येति । अर्थान्तरम्—मया सह रामस्य रणाद्धेतोः आनीतं दूरे क्षिप्तम् । शिरः मच्छिरः । दृष्ट्वा सुखी भव, तदानीं मयि रोषत्यागादिति भावः । सीता दुःखिता भवतु, सर्वलोकमातृत्वादिति भावः ॥ ३५ ॥ अद्य रामस्य पश्यन्त्विति । अर्थान्तरम्—रामस्येति कर्तरि षष्ठी । रामकर्तृकं मन्निध[illegible]



मित्युक्तेर्दारुणत्वम् ॥ २८ ॥ २९ ॥ अलमिति । ते त्वया सन्तापमुपपद्य प्राप्य अलम्, सन्तापो न कर्तव्य इत्यर्थः ॥ ३० ॥ ३१ ॥ तर्हि किमेवमुक्तमित्यत्राह

ये निहतबान्धवाः ते राक्षसाः पश्यन्तु । " न दुःखं पञ्चभिः सह " इति न्यायादिति भावः । उत्तरश्लोकेऽप्येवमेव योजना ॥ ३६ ॥ ३७ ॥ अद्येति । ससूर्यमिव तोयदमिति । रुधिराक्ततया ससूर्यप्रकाशं मेघमिव स्थितमित्यर्थः ॥ ३८ ॥ कथमिति । ससैन्यं दाशरथिं जिघांसुभिः एभिः राक्षसैः मया च परिरक्षितस्त्वं कथं वध्यस इति योजना । अर्थान्तरम्—जिघांसुभिः हननेच्छामात्रवद्भिः, पराक्रमासमर्थैरित्यर्थः । कथं परिरक्षितः ? प्रत्युत

अद्य शोकपरीतानां स्वबन्धुवधकारणात् । शत्रोर्युधि विनाशेन करोम्यास्रप्रमार्जनम् ॥ ३७ ॥ अद्य पर्वतसङ्काशं ससूर्यमिव तोयदम् । विकीर्णं पश्य समरे सुग्रीवं प्लवगोत्तमम् ॥ ३८ ॥ कथं त्वं राक्षसैरेभिर्मया च परिरक्षितः । जिघांसुभिर्दाशरथिं वध्यसे त्वमिहानघ ॥ ३९ ॥ अथ पूर्वं हते तेन मयि त्वां हन्ति राघवः । नाहमात्मनि सन्तापं गच्छेयं राक्षसाधिप ॥ ४० ॥ कामं त्विदानीमपि मां व्यादिश त्वं परन्तप । न परः प्रेषणीयस्ते युद्धायातुलविक्रम ॥ ४१ ॥ अहमुत्सादयिष्यामि शत्रूंस्तव महाबल ॥ ४२ ॥ यदि शक्रो यदि यमो यदि पावकमारुतौ । तानहं योधयिष्यामि कुबेरवरुणावपि ॥ ४३ ॥

वध्यस इति । अत्र विभीषणः क गत इति कुम्भकर्णस्य प्रश्नः, मया धिक्कृतो गत इति रावणस्योत्तरं च क्वचित् कोशे दृश्यते तत्पूर्वापरविरुद्धम् ॥ ३९ ॥ अथेति । अत्र अथशब्दः प्रक्रमान्तरे । मयि हते सति हि पश्चात्त्वां रामो हन्ति हनिष्यति । अहं च आत्मनि स्वस्मिन् सन्तापं शत्रुपरिभवजं न कदाचिदपि गच्छेयम्, न केनचिद्धन्तुं शक्य इत्यर्थः । अतः कुतस्ते भयमिति भावः । अर्थान्तरम्—अहमात्मनि विषये सन्तापं न गच्छेयं न गच्छामि । " व्यत्ययो बहुलम् " इति लकारव्यत्ययः । मन्निधनं नानुशोचामीत्यर्थः । किन्तु मयि हते सति । अथ राघवस्त्वां हन्ति हनिष्यतीति सन्तापं गच्छामीति ॥ ४० ॥ काममिति । इदानीमपि इदानीमेव युद्धाय व्यादिश । ते त्वया परः अन्यः न प्रेषणीयः ॥ ४१ ॥ अहमित्यर्धमेकं वाक्यम् ॥ ४२ ॥ उक्तं विवृणोति—यदीति ॥ ४३ ॥ ४४ ॥

अवश्यमिति । सर्वावस्थं रोषहर्षादिसर्वावस्थास्वित्यर्थः ॥ ३२–३८ ॥ दाशरथिं जिघांसुभिः राक्षसैः परिरक्षितः कथं वध्यस इति सम्बन्धः ॥ ३९ ॥ अद्य पूर्वमिति । अहमात्मनि विषये सन्तापं न गच्छामि किन्तु तेन मयि पूर्वं हते सति अद्यैव राघवस्त्वां हन्ति हनिष्यतीति सन्तापं गच्छामीत्यर्थः ॥ ४०–४६ ॥

अथवेति । मृद्नतः प्रहरतः । प्रतिमुखे अग्रे ॥४५॥४६॥ यदीति । रामः प्रथमं मे मुष्टिप्रहारमेव न सहिष्यते, कु॰ [illegible] । भावः ॥ ४७ ॥ रामानु॰—यदीति । राघवो मुष्टिवेगं यदि सहिष्यति ततः राघवस्य बाणौघाः मे रुधिरं पास्यन्ति । राघवो मुष्टिवेगं न सहिष्यत इति भावः ॥ ४७ ॥ चिन्तयेति । उद्यतः,



गिरिमात्रशरीरस्य शितशूलधरस्य मे । नर्दतस्तीक्ष्णदंष्ट्रस्य बिभीयाच्च पुरन्दरः ॥ ४४ ॥ अथवा त्यक्तशस्त्रस्य मृद्नतस्तरसा रिपून् । न मे प्रतिमुखे स्थातुं कश्चिच्छक्तो जिजीविषुः ॥ ४५ ॥ नैव शक्त्या न गदया नासिना निशितैः शरैः । हस्ताभ्यामेव संरब्धो हनिष्याम्यपि वज्रिणम् ॥ ४६ ॥ यदि मे मुष्टिवेगं स राघवोऽद्य सहिष्यते । ततः पास्यन्ति बाणौघा रुधिरं राघवस्य तु ॥ ४७ ॥ चिन्तया बाध्यसे राजन् किमर्थं मयि तिष्ठति । सोऽहं शत्रुविनाशाय तव निर्यातुमुद्यतः ॥ ४८ ॥ मुञ्च रामाद्भयं राजन् हनिष्यामीह संयुगे । राघवं लक्ष्मणं चैव सुग्रीवं च महाबलम् । हनुमन्तं च रक्षोघ्नं लङ्का येन प्रदीपिता ॥ ४९ ॥ हरींश्चापि हनिष्यामि संयुगे समवस्थितान् । असाधारणमिच्छामि तव दातुं महद्यशः ॥ ५० ॥ यदि चेन्द्राद्भयं राजन् यदि वापि स्वयम्भुवः ॥ ५१ ॥ अपि देवाः शयिष्यन्ते क्रुद्धे मयि महीतले । यमं च शमयिष्यामि भक्षयिष्यामि पावकम् । आदित्यं पातयिष्यामि सनक्षत्रं महीतले ॥ ५२ ॥ शतक्रतुं वधिष्यामि पास्यामि वरुणालयम् । पर्वतांश्चूर्णयिष्यामि दारयिष्यामि मेदिनीम् ॥ ५३ ॥ दीर्घकालं प्रसुप्तस्य कुम्भकर्णस्य विक्रमम् । अद्य पश्यन्तु भूतानि भक्ष्यमाणानि सर्वशः ॥५४॥

अस्मीति शेषः ॥ ४८ ॥ मुञ्चेत्यादिसार्धश्लोकद्वयमेकान्वयम् । अर्थान्तरम्—रामात् भयम्, अस्तीति शेषः । हनिष्यामीत्येतन्मुञ्चेति । दातुं खण्डितुमित्यर्थान्तरम् ॥ ४९ ॥ ५० ॥ यदि चेत्यर्धम् । इन्द्रात् स्वयम्भुवश्च भयं यद्यस्ति तदपि मोचयिष्यामीत्युपस्कार्यम् ॥ ५१–५४ ॥



यदीति । स राघवो यदि मे मुष्टिवेगं सहिष्यति ततः राघवस्य बाणौघाः मे रुधिरं पास्यन्तीति । राघवो मे मुष्टिवेगं न सहिष्यत इति भावः ॥ ४७–५० ॥ यदि चेन्द्रादिति । इन्द्रात्स्वयम्भुवश्च भयं यद्यस्ति, तदपि मोचयिष्यामीति शेषः ॥ ५१–५५ ॥

नन्विति । त्रिदिवं त्रिलोकी । आहारस्य न पूर्यते आहारार्थं न पूर्यते, न पर्याप्तमित्यर्थः ॥ ५५ ॥ वधेनेति । सुखार्हम् उत्तरोत्तरसुखावहम् । ते वधेन



नन्विदं त्रिदिवं सर्वमाहारस्य न पूर्यते ॥ ५५ ॥ वधेन ते दाशरथेः सुखार्हं सुखं समाहर्तुमहं व्रजामि । निहत्य रामं सह लक्ष्मणेन खादामि सर्वान् हरियूथमुख्यान् ॥ ५६ ॥ रमस्व कामं पिब चाग्र्यवारुणीं कुरुष्व कृत्यानि विनीयतां ज्वरः । मयाऽद्य रामे गमिते यमक्षयं चिराय सीता वशगा भविष्यति ॥ ५७ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

दाशरथेः सुखावहमित्यर्थान्तरम् ॥ ५६ ॥ रमस्वेति । मया निमित्तेन रमस्वेत्यादौ काकुः । इयम् अक्षयमिति च्छेदः । रामे विषये गम्मिता इयं सीता

अद्य पश्य महाबाहो मया समरमूर्द्धनि—इत्यारभ्य श्रीराममुद्दिश्य कुम्भकर्णोक्तपरुषवाक्यानां प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु—यद्यपि कुम्भकर्णो रावणप्रीतयेऽपिवा श्रीरामनिष्ठुरभाषणे प्रीतयेऽपिवा प्रवृत्तः, तथापि कुम्भकर्णवाणी प्रकारान्तरेण निस्सरति—अद्य पश्य महाबाहो मया इत्यादिना । 'शत्रूणां कदनं पश्य क्रियमाणं मया' इत्युक्तं त्वया । तदयुक्तं किन्तु सीतादुःखसंपादकरामहननेनास्मदादीन् विशोकान् कुर्विति रावणशङ्कायां तन्न शक्यमिति व्यङ्ग्योक्त्या परिहरति—अद्य पश्येति सार्धश्लोकचतुष्टयेन । व्यङ्ग्योक्त्यर्थमेषु श्लोकेषु विद्यमानक्रियापदानां वीप्साऽनुसन्धेया । तदित्थं योजना—रामे हते सति द्रवन्तीं हरिवाहिनीम् अद्य पश्य पश्य । रणादानीतं रामस्य शिरो दृष्ट्वा त्वं सुखी भव सुखी भव । सीता दुःखिता भवतु भवतु । शत्रुपक्षे हते सति ते शोको न भविष्यति न भविष्यति । लङ्कायां ये हतबान्धवा राक्षसाः ते रामनिधनं पश्यन्तु पश्यन्तु । शोकपरीतानाम् आस्रप्रमार्जनं करोमि करोमि । अतः हे भ्रातः रावण ! एतत्सर्वं न सङ्गतमिति भावः । किञ्चायं दुष्टराक्षससमागमः त्वद्वधाय भविष्यतीत्याशयेनाह—कथमिति । कथं कथञ्चिदित्यर्थः । मया रक्षितोऽपि त्वं दाशरथिं जिघांसुभिः राक्षसैः वध्यस एवेति सम्बन्धः ॥ मम रामेण सह योद्धुं सामर्थ्यं नास्तीत्याशयेनाह—यदि मे मुष्टिवेगमिति । यदिशब्दो नूनमित्यर्थे । राघवो मे मुष्टिवेगं नूनं सहिष्यति ततो राघवस्य बाणौघाः मम रुधिरं पास्यन्तीत्यन्वयः । चिन्तयेति । उपरितनश्लोकस्था मुञ्चेति क्रिया आकृष्यात्र श्लोके योजनीया । हे राजन् ! किमर्थं चिन्तया बाध्यसे ? तव शत्रुविनाशायाहमुद्यतोऽतो मुञ्च, चिन्तामिति शेषः ॥ तर्हि रामं संहरेत्याशङ्क्य तदशक्यमिति परिहरति—मुञ्च रामादिति । रामाद्भयम्, अस्तीति शेषः । अतो रामं लक्ष्मणं च, विनेति शेषः । सुग्रीवं हनुमन्तं हनिष्यामीति सम्बन्धः ॥ पूर्वोक्तमेतत्सर्वं करिष्यामि किन्तु तव तत्त्वं वदामीत्याह—वधेनेति । अत्र वधे इति सप्तमी । दाशरथेः रामस्य वधे सति तव सुखं न, किन्तु अहं सुखार्हं समाहर्तुं व्रजामि । तत्किमत आह—निहत्येति । लक्ष्मणेन सह वर्तमानं रामं, विनेति शेषः । हरियूथमुख्यान्निहत्य सर्वान् खादामीति सम्बन्धः । रामहननस्याशक्यत्वात् हरियूथमुख्यसंहारजनितसुखं तव सम्पादयिष्यामीति भावः ॥ ५६ ॥ ततः किमत आह—रमस्वेति । रामे गमितेयमक्षय

चिराय वशगा भविष्यतीत्यर्थान्तरम् ॥५७॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे रत्नाकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥६३॥
अथ मन्त्रिकृतानयमसहमानो महोदरः कुम्भकर्णं निर्भर्त्सयति—तदुक्तमित्यादिना। उक्तं सूचनं विना कण्ठरवेण दर्शितम्। अतिकायस्य महाशरीरस्य। प्रतिवचनानर्हत्वद्योतनाय विशेषणानि ॥ १ ॥ मन्त्रिभिः सहाविचार्यैव रावणेनाकार्यं कृतमिति, अहमसहाय एव रामादिभिर्योत्स्यामीति च यदुक्तं



तदुक्तमतिकायस्य बलिनो बाहुशालिनः। कुम्भकर्णस्य वचनं श्रुत्वोवाच महोदरः ॥ १ ॥
कुम्भकर्ण कुले जातो धृष्टः प्राकृतदर्शनः। अवलिप्तो न शक्नोषि कृत्यं सर्वत्र वेदितुम् ॥ २ ॥
न हि राजा न जानीते कुम्भकर्ण नयानयौ। त्वं तु कैशोरकाद्धृष्टः केवलं वक्तुमिच्छसि ॥ ३ ॥
स्थानं वृद्धिं च हानिं च देशकालविभागवित्। आत्मनश्च परेषां च बुध्यते राक्षसर्षभः ॥ ४ ॥

कुम्भकर्णेन तदुभयं दूषयितुमाह—कुम्भकर्णेत्यादिना। कुले जातोऽपि प्राकृतदर्शनः क्षुद्रबुद्धिः। केवलं धृष्टः, न तु शास्त्रज्ञ इत्यर्थः। अवलिप्तः गर्वितः। त्वं सर्वत्र कार्ये। कृत्यं मन्त्ररूपम्। तद्वेदितुं न शक्नोषि ॥ २ ॥ 'केवलं वीर्यदर्पेण नानुबन्धो विचारितः' 'न स वेद नयानयौ' इत्यादिना रावणोद्देशेन कुम्भकर्णोक्तं दूषयति—न हीत्यादिना। राजा नयानयौ न जानीत इति न, जानीत एवेत्यर्थः। किशोरः बालः तस्य भावः कैशोरकं तस्मात् बाल्यात्। केवलं धृष्टः, न तु शास्त्रज्ञानेनेति भावः ॥ ३ ॥ स्थानमिति। देशकालविभागवित् विविक्तादिमन्त्रोचिततद्भिन्नयोः देशयोः तथा मन्त्रोचितानुचितयोश्च कालयोर्विभागं वेत्तीति तथोक्तः। राक्षसर्षभः रावणः। आत्मनः शत्रूणां च वृद्धिं हानिं स्थानं समतां च बुध्यते। रावणो देशकाल

मित्यत्र गमिते अयम् अक्षयम् इति छेदः। मया रामे अक्षयं यथा तथा चिराय सीतावक्त्रं गमिते सति अयं रामः अद्य आगमिष्यति, बन्धुभूतस्सन् अस्मद्गृहं प्रतीति शेषः। अतः ज्वरो विनीयताम्। त्वं कामं रमस्व। वारुणीं पिबेति सम्बन्धः ॥ ५७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां त्रिषष्टितमः सर्गः ॥ ६३ ॥ तदिति। अतिकायस्येति कुम्भकर्णविशेषणम् ॥ १ ॥ मन्त्रिभिस्सहाविचार्यैव रावणेनाकार्यं कृतमिति, असहाय एव रामादिभिर्योत्स्यामीति च कुम्भकर्णेन यदुक्तं तदुभयं दूषयितुमाह—कुम्भकर्णेति। हे कुम्भकर्ण! कुले जातः राजकुले जातोऽपि प्राकृतदर्शनो दृष्टः। कुतः? सर्वत्र सर्वदा अवलिप्तः सन् कृत्यं कर्तव्यं वेदितुं न शक्नोषीति सम्बन्धः ॥ २ ॥ 'न स वेद नयानयौ' इत्यादिना रावणोद्देशेन कुम्भकर्णोक्तं दूषयति—नहीत्यादिश्लोकद्वयेन। हिशब्दः काकर्थः। राजा नयानयौ न जानीते हि न विजानीते किम्? विजानीत एवेत्यर्थः। कैशोरकात् बालभावात् ॥ ३॥४ ॥

विभागाद्यनभिज्ञ इति त्वयोक्तं न युक्तमिति भावः ॥ ४ ॥ लोके कापुरुषेणापि यत् कर्तुमनर्हं तादृशं कर्म विवेकी रावणः कथं कुर्यादित्यभिप्रेत्याह—

यत्त्विति । बलवता केवलशौर्यावलम्बिना प्राकृतबुद्धिना यत् कर्तुं शक्यं तादृशं कर्म बुधः कः कुर्यात् ? न कोऽपि कुर्यात्, किमुत रावण इति भावः
॥ ५ ॥ धर्माधर्मयोर्हिताहितसाधनत्वं निश्चित्य "शीघ्रं खल्वभ्युपेतं त्वां फलं पापस्य कर्मणः" इत्यादिना सीताहरणरूपात् पापात्त्वायमनर्थः

**यत्तु शक्यं बलवता कर्तुं प्राकृतबुद्धिना । अनुपासितवृद्धेन कः कुर्यात्तादृशं बुधः ॥ ५ ॥**
**यांस्तु धर्मार्थकामांस्त्वं ब्रवीषि पृथगाश्रयान् । अनुबोद्धुं स्वभावे तान्नहि लक्षणमस्ति ते ॥ ६ ॥**

प्राप्त इति यदुक्तं कुम्भकर्णेन तदपि धर्माधर्मयोर्हिताहितफलनियमाभावान्न सङ्गच्छत इति प्रतिपादयितुमाह—यांस्त्वित्यादिना । पृथगाश्रयान् पृथक्कार
णान् भिन्नफलान् । धर्मार्थकामान् ब्रवीषि । तान् स्वभावे अनुबोद्धुं स्वरूपतो ज्ञातुम् । लक्षणं लक्ष्यतेऽनेनेति लक्षणं प्रमाणम् । तव नास्तीत्यर्थः ।
सुखफलदयागादिधर्मानुष्ठानदशायां तात्कालिकशरीरायासजनितदुःखदर्शनात् दुःखजनकपरद्रव्यापहरणाद्यधर्माचरणसमये तात्कालिकसुखदर्शनाच्च
अर्थकामयोरप्येवं दर्शनाच्च कर्मणामनियतफलकत्वान्नियतफलकत्वे न किंचित् प्रमाणमुपलभ्यत इत्यर्थः ॥ ६ ॥

लोके कापुरुषेणापि यत्कर्तुमनर्हं तादृशं कर्म विवेकी रावणः कथं कुर्यादित्यभिप्रेत्याह—यत्त्वशक्यमिति । बलवता केवलशौर्यावलम्बिना अनुपासितवृद्धेन
प्राकृतबुद्धिनाऽपि यत्कर्तुमशक्यम्, अनर्हमित्यर्थः । तादृशं कर्म को वा बुधः बुद्धिमान् कुर्यात्, न कोऽपीत्यर्थः । किमुत रावण इति भावः । यत्तु शक्यमिति
पाठे—बलवता बलमात्रमवलम्ब्य स्थितेन पुरुषेण यत्कर्तुं शक्यं योग्यं तादृशं को वा बुधः कुर्यात् ॥ ५ ॥ धर्माधर्मयोर्हिताहितसाधनत्वं निश्चित्य "शीघ्रं
खल्वभ्युपेतं त्वां फलं पापस्य कर्मणः" इत्यादिना सीताहरणरूपात्पापात्त्वायमनर्थः प्राप्त इति यदुक्तं कुम्भकर्णेन तद्धर्माधर्मयोर्हिताहितरूपफलानियमाभावान्न
सङ्गच्छत इति प्रतिपादयितुमाह—यांस्त्वित्यादिना । यान् धर्मार्थकामान् । पृथगाश्रयान् पृथग्भूतफलाश्रयान्, व्यवस्थितफलानिति यावत् । ब्रवीषि तान्
स्वभावेन अनुबोद्धुं स्वरूपतो ज्ञातुम् । लक्षणं लक्ष्यतेऽनेनेति लक्षणं कारणं प्रमाणं वा नास्तीति योजना । स्वभावेन नहि लक्षणमिति पाठः ॥ ६ ॥

स०—बलवता बलवानहमित्यभिमानवता । प्राकृतबुद्धिनाऽपि यत्कर्तुमशक्यम् अयोग्यम् । हे अनुपासितवृद्ध कुम्भकर्ण ! इनकः इन एवेनकः अस्मत्स्वामी । बुधः ज्ञानी तादृशं प्राकृतबुद्धिभिरनुष्ठीयमानं
त्वयोग्यं कुर्यात् । शक्यमिति पाठे—तादृशेनापि कर्तुं शक्यं बुधः वस्तादृशं कुर्यादित्यर्थः । अनुपासितवृद्धश्चासाविनश्च तत्सम्बुद्धिः । स्वाम्यनुजत्वान्मध्ये कोपेन स्वध्वंससाधनवादा तमभिमुखीकर्तुमेवमुक्तिः ।
अनुपासितवृद्धेन अत एव प्राकृतबुद्धिनेति तीर्थो नागोजिभट्टश्च ॥ ५ ॥

तदेव प्रदर्शयति—कर्म चेत्यादिना । सर्वेषां कारणानां स्वर्गनरकरूपाणां फलानां कर्मैव प्रयोजकं साधकम् । जात्येकवचनम् । किन्तु अत्र कर्मजाते पापीयसामपि कर्मणां श्रेयः फलं भवति ॥ ७ ॥ उक्तमेवार्थं विशदयति—निश्श्रेयसेति । धर्मार्थौ धर्मार्थसाधनभूते कर्मणी । इतरौ अधर्मानर्थसाधन भूते कर्मणी च । निश्श्रेयसफलौ एतानि चतुर्विधानि निश्श्रेयसकराण्येव । किन्तु कदाचिदधर्मानर्थयोः प्रत्यवायिकम्, अश्रेय इति यावत् । प्रत्यवायो ऽस्मिन् कारणतयाऽस्तीति प्रत्यवायिकम् । "अत इनिठनौ" इति ठन् । प्राप्यत इति प्राप्तिः फलम् । कर्मणि क्तिन् प्रत्ययः । एतेनाधर्मानर्थयोः



> कर्म चैव हि सर्वेषां कारणानां प्रयोजकम् । श्रेयः पापीयसां चात्र फलं भवति कर्मणाम् ॥ ७ ॥
> निश्श्रेयसफलावेव धर्मार्थावितरावपि । अधर्मानर्थयोः प्राप्तिः फलं च प्रत्यवायिकम् ॥ ८ ॥
> ऐहलौकिकपारत्रं कर्म पुम्भिर्निषेव्यते । कर्माण्यपि तु कल्याणि लभते काममास्थितः ॥ ९ ॥

श्रेयस्तदितरच्चोभयं फलं भवतीत्युक्तम् ॥ ८ ॥ एवं धर्माधर्मयोरव्यवस्थितफलत्वमुक्त्वा कामस्यापि तदाह—ऐहलौकिकेति । ऐहलौकिकम् इहलोको पयोगि । पारत्रं परलोकोपयोगि च कर्म पुम्भिर्निषेव्यते । तत्फलं चानुभूयते । तथैव काममास्थितः यथेच्छाचारोऽपि कल्याणि कर्माणि कल्याणानि

सुखफलकयागानुष्ठानादिधर्मानुष्ठानदशायां तात्कालिकशरीरायासदर्शनात् दुःखजनकपरद्रव्यापहरणाद्यधर्माचरणसमये तात्कालिकसुखदर्शनाच्च अर्थकामयो रप्येवं दर्शनाच्च कर्मणामनियतफलत्वं मन्वानस्तदेव प्रदर्शयति—कर्म चैव हीति । सर्वेषां कारणानामुद्देश्यत्वेन कारणानां सुखानामित्यर्थः । कर्म पुण्यकर्म, प्रयोजकम् साधकमिति यावत् । कर्मेति जातावेकवचनम् । अत्रास्मिन् पुण्यकर्मणि फलं भवति, अश्रेयोऽपीति शेषः । पापीयसां कर्मणां श्रेयश्च सुखं फलं भवतीति योजना ॥ ७ ॥ अमुमेवार्थं विशदयति—निश्श्रेयसफलाविति । धर्मार्थौ धर्मार्थसाधनभूते कर्मणी इतरावपि अधर्मानर्थभूते ते कर्मणी च निश्श्रेयस फलावेव एतानि चतुर्विधान्यपि कर्माणि निश्श्रेयसकराण्येवेत्यर्थः । किन्तु कदाचिदधर्मानर्थयोः प्रत्यवायिकं प्रत्यवायोऽस्य कारणतया विद्यत इति प्रत्यवायिकं दुःखफलं च सुखं च प्राप्तिः प्राप्यत इति प्राप्तिः । कर्मणि क्तिन् । प्राप्यं भवतीत्यर्थः । एतेनाधर्मानर्थयोः श्रेयः तदितरच्च उभयमपि फलं भवतीत्युक्तं भवति ॥ ८ ॥ धर्मार्थयोरव्यवस्थितफलत्वमुक्त्वा कामस्याप्याह—ऐहलौकिकेति । ऐहलौकिकपारत्रं कर्म ऐहलौकिकम् इहलोकोपयोगि कर्म, पारत्रं परलोकोपयोगि कर्म । धर्मार्थकामरूपं पुम्भिर्निषेव्यते तत्फलं चानुभूयते, किन्तु तथैव काममास्थितोऽपि यथेच्छाचारोऽपि कल्याणि कल्याणानि कर्माणि कर्मफलानि लभते अतो विहितमेव शुभप्रदम्, निषिद्धं तु न भवतीति नियमो नास्तीत्यर्थः ॥ ९ ॥

कर्मफलानि लभते। अतो विहितमेव शुभप्रदम्, निषिद्धं तु तथा न भवतीति नियमो नास्तीत्यर्थः ॥ ९ ॥ धर्मादीनां फलनियमो नास्ति, सर्वं सर्वस्य फलमित्यस्मिन् पक्षे स्थित्वा रावणेन सीताहरणं कृतमस्माभिश्चानुमतमित्याह–तत्र क्लृप्तमिति। तत्र राज्ञा कामसेव्यपि सुखानि लभत इति मते स्थितेन राज्ञा। इदं कार्यं सीताहरणरूपं कार्यम्। हृदि क्लृप्तं हृदि चिन्तितम्। नः अस्माकमपि। मतं संमतम्। शत्रौ शत्रुविषये यत् साहसं स्यात्। अत्र अस्मिन् साहसकर्मणि किमिवापनीयते, न किञ्चित् क्रियते इत्यर्थः ॥ १० ॥ एवं रावणस्याविमृश्यकारित्वपक्षं प्रतिक्षिप्य कुम्भकर्णस्यैकस्यैव



तत्र क्लृप्तमिदं राज्ञा हृदि कार्यं मतं च नः। शत्रौ हि साहसं यत् स्यात् किमिवात्रापनीयताम् ॥ १० ॥
एकस्यैवाभियाने तु हेतुर्यः प्रकृतस्त्वया। तत्राप्यनुपपन्नं ते वक्ष्यामि यदसाधु च ॥ ११ ॥
येन पूर्वं जनस्थाने बहवोऽतिबला हताः। राक्षसा राघवं तं त्वं कथमेको जयिष्यसि ॥ १२ ॥
ये पुरा निर्जितास्तेन जनस्थाने महौजसः। राक्षसांस्तान् पुरे सर्वान् भीतानद्यापि पश्यसि ॥ १३ ॥
तं सिंहमिव संक्रुद्धं रामं दशरथात्मजम्। सर्पं सुप्तमिवाबुध्य प्रबोधयितुमिच्छसि ॥ १४ ॥

अभियानपक्षं निरस्यति–एकस्येत्यादिना। एकस्यासहायस्य। अभियाने युद्धाय निर्गमे। यो हेतुः बलपराक्रमरूपः। त्वया प्रकृतः प्रस्तावितः। तत्रापीत्यपिशब्देन पूर्वं निराकृतः पक्षः समुच्चीयते। यदनुपपन्नम् अयुक्तम्। असाधु अहितं च। तद्वक्ष्यामि ॥ ११ ॥ अनुपपत्तिमुपपादयति–येनेति। ॥ १२ ॥ असाधुत्वं दर्शयति–ये पुरेति। तान् तज्जातीयानित्यर्थः ॥ १३ ॥ तमिति। संक्रुद्धं सिंहमिव संक्रुद्धसिंहसदृशम्। तमबुध्य अबुद्ध्वा। सुप्तं

धर्मादीनां फलनियमो नास्तीति सर्वं सर्वस्य फलमित्यस्मिन् पक्षे स्थित्वा रावणेन कृतं सीतापहरणं राज्ञा हृदि क्लृप्तं कर्तव्यतया निश्चितम्। नः अस्माकमपि मतम् अनुमतम्। शत्रौ शत्रुविषये यत्साहसं कृतं स्यात् तत् किमिव किमिति। अत्र साहसे। अपनीयतां पृथक्कृत्य प्रदर्श्यताम्। अस्मिन् पक्षे रावणेन अविचार्यकृतं किमपि दर्शयितुं न शक्यत इत्यर्थः ॥ १० ॥ एवं रावणस्याविमृश्यकारितापक्षं प्रतिक्षिप्य कुम्भकर्णस्यैकस्याभियानपक्षं निरस्यति–एकस्येति। एकस्यैवाभियाने यो हेतुः पराक्रमरूपः कथितः उक्तः तत्र यदनुपपन्नम् अयुक्तं यच्चासाधु अहितं तदुभयमपि ते वक्ष्यामीत्यर्थः ॥ ११–१३ ॥ तमिति। तं रामं सिंहमिव सिंहसदृशम्। अबुध्य अबुद्ध्वा। सुप्तं सर्पमिव प्रबोधयितुमिच्छसीत्यन्वयः ॥ १४ ॥ १५ ॥

सर्पमिव प्रबोधयितुमिच्छसीत्यन्वयः ॥ १४ ॥ ज्वलन्तमिति । असह्यं सोढुमशक्यम् । अपरिहार्यपराक्रममित्यर्थः । आसादयितुमासादितुम् ॥ १५ ॥ संशयस्थमिति । यत्र शत्रोः प्रतिसमासने प्रतिमुखस्थितौ इदं सर्वं बलं संशयस्थं भवति । तत्र एकस्य तव गमनं न रोचते ॥ १६ ॥ हीनार्थ इति । हीनार्थः हीयमानबलः । कः पुमान् जीवितत्यागे विषये । निश्चित्य निश्चयं कृत्वा । सुसमृद्धार्थं वर्धमानबलं रिपुम्, प्राकृतं यथा क्षुद्रपुरुषमिव । वश

ज्वलन्तं तेजसा नित्यं क्रोधेन च दुरासदम् । कस्तं मृत्युमिवासह्यमासादयितुमर्हति ॥ १५ ॥ संशयस्थमिदं सर्वं शत्रोः प्रतिसमासने । एकस्य गमनं तत्र नहि मे रोचते भृशम् ॥ १६ ॥ हीनार्थः सुसमृद्धार्थं को रिपुं प्राकृतं यथा । निश्चित्य जीवितत्यागे वशमानेतुमिच्छति ॥१७॥ यस्य नास्ति मनुष्येषु सदृशो राक्षसोत्तम । कथमाशंससे योद्धुं तुल्येनेन्द्रविवस्वतोः ॥ १८ ॥ एवमुक्त्वा तु संरब्धः कुम्भकर्णं महोदरः । उवाच रक्षसां मध्ये रावणं लोकरावणम् ॥ १९ ॥ लब्ध्वा पुनस्त्वं वैदेहीं किमर्थं सम्प्रजल्पसि । यदीच्छसि तदा सीता वशगा ते भविष्यति ॥ २० ॥ दृष्टः कश्चिदुपायो मे सीतोपस्थानकारकः । रुचिरश्चेत् स्वया बुद्ध्या राक्षसेश्वर तं शृणु ॥ २१ ॥ अहं द्विजिह्वः संह्रादी कुम्भकर्णो वितर्दनः । पञ्च रामवधायैते निर्यान्तीत्यवघोषय ॥ २२ ॥ ततो गत्वा वयं युद्धं दास्यामस्तस्य यत्नतः । जेष्यामो यदि ते शत्रूनोपायैः कृत्यमस्ति नः ॥ २३ ॥

मानेतुमिच्छतीत्यन्वयः । जीवितत्यागे निश्चयोऽस्ति चेत्तं प्रति युद्धाय याहीत्यर्थः ॥ १७ ॥ यस्येति । यस्य मनुष्येषु सदृशो नास्ति । किन्तु देवयोः इन्द्रविवस्वतोः इन्द्रसूर्ययोस्तुल्येन, तेन रामेणेति शेषः । योद्धुं कथमाशंससे? वक्तुमेव न शक्यम्, किमुत कर्तुमिति शेषः ॥ १८ ॥ १९ ॥ लब्ध्वे त्यादिश्लोकद्वयमेकान्वयम् । सम्प्रजल्पसि बहुविधं भाषसे, अद्येति शेषः । यदीच्छसि, वक्ष्यमाणोपायमिति शेषः । तदा तदैव । मे मया । उपस्थानं स्वयमेव समीपागमनम् । रुचिरः प्रियः । स्वया बुद्ध्या शृणु, न तु परबुद्धिमनुसरेत्यर्थः ॥ २०–२२ ॥ तत इति । उपायैः सीताहरणोपायैः । संशयस्थमिति । शत्रोः प्रतिसमासने शत्रोः प्रतिमुखस्थितौ सत्याम् इदं सर्वं बलं संशयस्थम् । तत्र शत्रुसमीपे एकस्य गमनं मे न रोचत इति सम्बन्धः ॥ १६–२२ ॥ तत इति । उपायैः सीतावशीकरणोपायैः । कृत्यं साध्यं नास्ति ॥ २३ ॥

कृत्यं साध्यं नास्ति, सिद्धे साधनायोगादिति भावः ॥ २३ ॥ अथेति । अथ जीवति यदि जीवतीत्यर्थः । ततः तदा समीक्षितमालोचितं यत् तत् अभिपत्स्यामः, करिष्याम इति यावत् ॥ २४ ॥ तत् किमित्यत्राह—वयमित्यादि । वयं बाणैः स्वतनुं विदार्य रामेण विदारितां कारयित्वा । रुधिरेण समुक्षिताः रामनामाङ्कितैः शरैः सह युद्धाद्दिदैष्याम इति योजना । इदं च रामयुद्धं कृतमिति सीतासमाश्वासाय ॥ २५ ॥ भक्षित इति ।

अथ जीवति नः शत्रुर्वयं च कृतसंयुगाः । ततस्तदभिपत्स्यामो मनसा यत् समीक्षितम् ॥ २४ ॥ वयं युद्धाद्दिदैष्यामो रुधिरेण समुक्षिताः । विदार्य स्वतनुं बाणै रामनामाङ्कितैः शितैः ॥ २५ ॥ भक्षितो राघवोऽस्माभिर्लक्ष्मणश्चेति वादिनः । तव पादौ ग्रहीष्यामस्त्वं नः कामं प्रपूरय ॥ २६ ॥ ततोऽवघोषय पुरे गजस्कन्धेन पार्थिव । हतो रामः सह भ्रात्रा ससैन्य इति सर्वतः ॥ २७॥ प्रीतो नाम ततो भूत्वा भृत्यानां त्वमरिन्दम । भोगांश्च परिवारांश्च कामांश्च वसु दापय ॥२८॥ ततो माल्यानि वासांसि वीराणामनुलेपनम् । पेयं च बहु योधेभ्यः स्वयं च मुदितः पिब ॥ २९ ॥ ततोऽस्मिन् बहुलीभूते कौलीने सर्वतो गते । भक्षितः ससुहृद्रामो राक्षसैरिति विश्रुते ॥ ३० ॥ प्रविश्याश्वास्य चापि त्वं सीतां रहसि सान्त्वय । धनधान्यैश्च कामैश्च रत्नैश्चैनां प्रलोभय ॥ ३१ ॥

ततः आगमनानन्तरम् । रामो लक्ष्मणश्च रिपुः निश्शेषं भक्षित इति तव पादौ ग्रहीष्यामः । त्वं सन्तोषातिशयव्यञ्जनार्थं नः कामं प्रपूरय अभीष्टं पारितोषिकं देहीत्यर्थः ॥ २६ ॥ तत इति । गजस्कन्धेन गजस्कन्धगतपुरुषेण ॥ २७ ॥ प्रीत इति । नामेत्यलीके । परिवारान् दासदासीः गजाश्वादीन् परिच्छदान् वा । "स्याज्जङ्गमे परीवारः" इत्यमरः । कामान् काम्यमानानभीष्टान् । वसु सुवर्णम् ॥ २८ ॥ २९ ॥ तत इत्यादिश्लोकद्वयम् । कौलीने लोकवादे । "स्यात्कौलीनं लोकवादे" इत्यमरः । कौलीनमेव विशदयति—भक्षित इति । प्रविश्य समीपं गत्वेत्यर्थः । आश्वास्य रामात्ययजं

मनसा समीक्षितम्, उपायजातमिति शेषः । अभिपत्स्यामः प्राप्स्याम इति सम्बन्धः ॥ २४ ॥ तत्किमित्यपेक्षायामाह—वयमिति । वयं बाणैः स्वतनुं विदार्य रामेण विदारितां कारयित्वा रुधिरेण समुक्षिताः रामनामाङ्कितैः शरैस्सह युद्धाद्दिदैष्याम इति योजना ॥ २५ ॥ २६ ॥ गजस्कन्धेन गजस्कन्धस्थितेन पुरुषेणे त्यर्थः ॥ २७ ॥ प्रीतो नाम नामेत्यपरमार्थे । परिवारान् दासदासीः गजाश्वादीन् परिच्छदान् वा ॥ २८ ॥ २९ ॥ कौलीने लोकवादे । "स्यात्कौलीनं लोकवादे"

शोकं निवार्य । सान्त्वय मयि प्रीतिं कुर्वित्येवं सान्त्ववादं कथयेत्यर्थः । शनैः सुवर्णैः ॥३०॥३१॥ अनयेति । उपधया कपटोपायेन । भयशोकानुबन्धया सम्पादितसीताभयशोकेनेत्यर्थः । अकामा पूर्वं त्वदनभिलाषिणी ॥ ३२ ॥ रञ्जनीयमिति । स्त्रीलघुत्वात् स्त्रीचापलात् ॥ ३३ ॥ सेति । त्वय्यधीनं त्वयि विषये अधीनं परतन्त्रम् । उपगमिष्यति, त्वामिति शेषः ॥३४॥ उक्तमर्थं निगमयति–एतदिति । एतत् मम दर्शनेन बुद्ध्या । सुनीतं निर्णीतम् ।

अनयोपधया राजन् भयशोकानुबन्धया । अकामा त्वद्वशं सीता नष्टनाथा गमिष्यति ॥ ३२ ॥ रञ्जनीयं हि भर्तारं विनष्टमवगम्य सा । नैराश्यात् स्त्रीलघुत्वाच्च त्वद्वशं प्रतिपत्स्यते ॥३३॥ सा पुरा सुखसंवृद्धा सुखार्हा दुःखकर्शिता । त्वय्यधीनं सुखं ज्ञात्वा सर्वथोपगमिष्यति ॥ ३४ ॥ एतत् सुनीतं मम दर्शनेन रामं हि दृष्ट्वैव भवेदनर्थः । इहैव ते सेत्स्यति मोत्सुको भूर्महानयुद्धेन सुखस्य लाभः ॥ ३५॥ अदृष्टसैन्यो ह्यनवाप्तसंशयो रिपूनयुद्धेन जयन् नराधिपः । यशश्च पुण्यं च महन्महीपते श्रियं च कीर्तिं च चिरं समश्नुते ॥३६॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे चतुष्षष्टितमः सर्गः ॥ ६४ ॥

रामं दृष्ट्वा स्थितस्य तव अनर्थो भवेत् । मोत्सुको भूः मा रणोत्सुको भूः । अयुद्धेन युद्धव्यतिरिक्तासनबलेन । प्रसज्य प्रतिषेधेऽपि समासस्येष्टत्वात् साधुः ॥ ३५ ॥ तदेवायुद्धं स्तौति–अदृष्टेति । अदृष्टसैन्यः अदृष्टशत्रुसैन्यः । अत एवानवाप्तसंशयः अप्राप्तप्राणसन्देहः । अयुद्धेन जयन् युद्धव्यति

इत्यमरः। सर्वतोगते सर्वव्याप्ते ॥३०॥३१॥ अनयोपधया अनेन कपटोपायेन । भयशोकानुबन्धया सम्पादितभयशोकयेत्यर्थः । अनयोपधयेत्यादिश्लोकत्रयस्य वास्तवार्थे महोदरवाणी प्रकारान्तरेण निस्सरति–अनयेति । नष्टनाथागमिष्यतीत्यत्र नष्ट न अथ आगमिष्यति इति छेदः । अथेत्यप्यर्थे । हे नष्ट रावण ! अकामा विष्णुकामा सीता । अनयोपधयाऽपि त्वद्वशं नागमिष्यतीत्यर्थः ॥३२॥ रञ्जनीयमिति । हीति किमित्यर्थे । चाप्यर्थे। सा प्रसिद्धा परमपातिव्रता सीता भर्तारं विनष्टमवगम्यापि नैराश्यादपि स्त्रीलघुत्वात् स्त्रीचापल्यादपि त्वद्वशं प्रतिपत्स्यते हि ? न प्रतिपत्स्यत एवेति योजना ॥ ३३ ॥ सेति । पुरा सुखसंवृद्धाऽपि इदानीं दुःखकर्शिताऽपि सा परमपतिव्रता सीता त्वदधीनं सुखं ज्ञात्वा, दुरितावहमिति शेषः । सर्वथोपगमिष्यति, राममेवेति शेषः ॥ ३४ ॥ उक्तमर्थं निगमयति–एत दिति । मम दर्शनेन मम बुद्ध्या सुनीतं सुनिर्णीतम् । मोत्सुकः रणार्थमुत्सुको मा भव, भवानिति शेषः ॥ ३५ ॥ तदेवायुद्धं स्तौति–अदृष्टसैन्य इति । अन

रिक्तोपायेन जयन्नित्यर्थः । महत् पुण्यं पुण्यफलं सुखम् । श्रियं श्रीमत्प्रयाणेन आनितां सम्पदम् । कीर्तिं प्रसादम् विस्तारं वा । " कीर्तिः प्रसादे यशसि कर्दमे विस्तृतावपि " इति रत्नमाला । महीपते इति संबोधनम् । सीतानुरागाभावेन नैराश्याद्रामः स्वयं विनश्यतीति महोदरहृदयम् ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुष्षष्टितमः सर्गः ॥ ६४ ॥

स तथोक्तस्तु निर्भर्त्स्य कुम्भकर्णो महोदरम् । अब्रवीद्राक्षसश्रेष्ठं भ्रातरं रावणं ततः ॥ १ ॥
सोऽहं तव भयं घोरं वधात्तस्य दुरात्मनः । रामस्याद्य प्रमार्जामि निर्वैरो हि सुखी भव ॥ २ ॥
गर्जन्ति न वृथा शूरा निर्जला इव तोयदाः । पश्य सम्पाद्यमानं तु गर्जितं युधि कर्मणा ॥ ३ ॥
न मर्षयति चात्मानं सम्भावयति नात्मना । अदर्शयित्वा शूरास्तु कर्म कुर्वन्ति दुष्करम् ॥ ४ ॥

अथ युद्धाय कुम्भकर्णनिर्याणं पञ्चषष्टितमे—स तथोक्तस्त्वित्यादि । निर्भर्त्स्य, गर्जन्तीत्यादिवक्ष्यमाणप्रकारेणेति शेषः ॥ १ ॥ सोऽहमिति । प्रमार्जामि निवर्तयिष्यामीत्यर्थः । वर्तमानसामीप्ये वर्तमानवत् प्रयोगः ॥ २ ॥ गर्जन्तीति । वृथा कर्मणा विना । मया तु कर्मणा सम्पाद्यमानं गर्जितं पश्य, गर्जितानुसारेण कर्म करोमीत्यर्थः ॥ ३ ॥ न मर्षयतीति । शूराः परकृतामवमानोक्तिं न मर्षयति न मर्षयन्ति, न सहन्ते । आत्मना स्वयम् आत्मानं न सम्भावयति न सम्भावयन्ति, न बहुमन्यन्ते । उभयत्रापि व्यत्ययेनैकवचनम् । किंतु अदर्शयित्वा अप्रकाश्य, आत्मपौरुषमनुक्त्वेत्यर्थः । दुष्करमपि

वासंसंशयः अप्राप्तप्राणसन्देहः । अयुद्धेन रिपून् जयन् युद्धव्यतिरिक्तोपायेन रिपून् जयन्नित्यर्थः ॥ ३६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां चतुष्षष्टितमः सर्गः ॥ ६४ ॥ १ ॥ सोऽहमिति । प्रमार्जामि प्रमार्जयामि । सोऽहमित्यस्य वास्तवार्थस्तु—दुरात्मनः दुःखेष्वप्यात्मा बुद्धिरनुग्रहरूपा यस्य रामस्य अहं रामदासोऽहं यद्यपि तथापि तस्य प्रसिद्धस्य, प्रहस्तमुखराक्षससमूहस्येत्यर्थः । वधात्तव घोरं भयम्, उपस्थितमिति शेषः । तत् प्रमार्जामि अपनयामि स त्वं निर्वैरस्सन् सुखी भवेति सम्बन्धः ॥ न मर्षयतीति । शूरा आत्मानं न मर्षयति, क्रुद्धमात्मानं पौरुषमकृत्वा न शमयन्तीत्यर्थः । आत्मना आत्मानं न सम्भावयति न श्लाघन्ते । उभयत्रैकवचनमार्षम् । किन्तु अदर्शयित्वा अप्रकाश्य प्रथममात्मपौरुषमनुक्त्वेत्यर्थः । कर्म कुर्वन्तीति सम्बन्धः ॥ २–४ ॥

कर्म कुर्वन्ति ॥४॥ विक्लवानामिति । अत्र पञ्चम्यर्थे षष्ठी । सादितमिति भावे निष्ठा । विक्लवेभ्यः कातरेभ्यः । अबुद्धिभ्यः पण्डितमानिभ्यः त्वद्विधेभ्यः शृण्वता राज्ञा । इदमीदृशम् । सादितं प्राप्तं भवति ॥ ५ ॥ इदंशब्दनिर्दिष्टं दर्शयति—युद्ध इति । युद्धे कापुरुषैः युद्धभीरुभिरित्यर्थः । राजानमनुगच्छद्भिः राजेच्छानुसारिभिरित्यर्थः । एतत् प्रकृतयुद्धपर्यवसायि सीताहरणकृत्यं सादितं संपादितम् ॥ ६ ॥ राजशेषेति । अत्राप्यनुगच्छद्भिः भवद्भिरित्यनु

विक्लवानामबुद्धीनां राज्ञा पण्डितमानिनाम् । शृण्वता सादितमिदं त्वद्विधानां महोदर ॥ ५ ॥ युद्धे कापुरुषैर्नित्यं भवद्भिः प्रियवादिभिः । राजानमनुगच्छद्भिः कृत्यमेतद्धि सादितम् ॥६॥ राजशेषा कृता लङ्का क्षीणः कोशो बलं हतम् । राजानमिममासाद्य सुहृच्चिह्नममित्रकम् ॥ ७ ॥ एष निर्याम्यहं युद्धमुद्यतः शत्रुनिर्जये । दुर्नयं भवतामद्य समीकर्तुमिहाहवे ॥ ८ ॥ एवमुक्तवतो वाक्यं कुम्भकर्णस्य धीमतः । प्रत्युवाच ततो वाक्यं प्रहसन् राक्षसाधिपः ॥९॥ महोदरोऽयं रामात्तु परित्रस्तो न संशयः । न हि रोचयते तात युद्धं युद्धविशारद ॥१०॥ कश्चिन्मे त्वत्समो नास्ति सौहृदेन बलेन च । गच्छ शत्रुवधाय त्वं कुम्भकर्ण जयाय च ॥ ११ ॥ तस्मात्तु भयनाशार्थं भवान् संबोधितो मया । अयं हि कालः सुहृदां राक्षसानामरिन्दम ॥ १२ ॥

षञ्जनीयम् । सुहृच्चिह्नं सुहृद्व्यपदेश्यम् । अमित्रकं भवतामभित्रभूतम् । इमं राजानमासाद्य अनुगच्छद्भिः भवद्भिः लङ्का राजशेषा कृता । अकार्यप्रवृत्तो राजा यैर्न निवार्यते स तेषाममित्र इत्यभिप्रायेण अमित्रकमित्युक्तम् ॥७॥ एष इति । दुर्नयं समीकर्तुम् । शत्रुनिर्जये, तद्विनाश इत्यर्थः । उद्यतः उद्युक्तः सन् । युद्धं युद्धभूमिं प्रति । एष निर्यामि अद्यैव निर्यास्यामीत्यर्थः ॥ ८–११ ॥ तस्मात् भवतो निरसमत्वात् । सम्बोधितः प्रबोधितः । अयं हि

विक्लवानामिति । अत्र वच इत्यध्याहर्तव्यम् । विक्लवानामबुद्धीनां पण्डितमानिनां च त्वद्विधानां वचः शृण्वता राज्ञा यत्सादितमवसादनमस्ति तदिदमिति योजना ॥ ५ ॥ इदंशब्दनिर्दिष्टं किमित्याकाङ्क्षायामाह—युद्धे कापुरुषैरित्यादि श्लोकद्वयेन । कापुरुषैः युद्धभीरुभिरित्यर्थः । राजानमनुगच्छद्भिः राजेच्छानुसारिभिः । एतत्कृत्यं राजकार्यम् । सादितं विनाशितम् ॥ ६ ॥ सुहृच्चिह्नं सुहृद्व्यपदेशम् अमित्रकं भवताममित्रभूतम् । इमं राजानमासाद्यानुगच्छद्भिर्भवद्भिः लङ्का राजशेषा कृता, कोशश्च क्षीणः, बलं च हतमिति सम्बन्धः ॥ ७–११ ॥ अयं हीति । सुहृदां राक्षसानाम् । अयं हि कालः, युद्धगमनायेति

पुनर्जातमिव मेने । जेष्यत्ययमिति विश्वासादिति भावः ॥ १५ ॥ १६ ॥ इत्येवमित्यर्धम् । निर्जगाम
काल:, युद्धायेति शेषः ॥ १२--१४ ॥ एवमिति ।  स्वत
निर्गन्तुमुद्युक्तः ॥ १७ ॥ राज्ञस्त्वित्यादि । सर्वकालायसम् बहुकार्ष्णायसमयमित्यर्थः । महाधाम महातेजः । स्वतश्चोद्गतपावकं क्रौर्यात् स्वत

तद्गच्छ शूलमादाय पाशहस्त इवान्तकः । वानरान् राजपुत्रौ च भक्षयादित्यतेजसौ ॥ १३ ॥ समालोक्य तु ते
रूपं विद्रविष्यन्ति वानराः । रामलक्ष्मणयोश्चापि हृदये प्रस्फुटिष्यतः ॥ १४ ॥ एवमुक्त्वा महाराजः कुम्भकर्णं
महाबलम् । पुनर्जातमिवात्मानं मेने राक्षसपुङ्गवः ॥ १५ ॥ कुम्भकर्णबलाभिज्ञो जानंस्तस्य पराक्रमम् । बभूव
मुदितो राजा शशाङ्क इव निर्मलः ॥ १६ ॥ इत्येवमुक्तः संहृष्टो निर्जगाम महाबलः ॥ १७ ॥ राज्ञस्तु वचनं
श्रुत्वा कुम्भकर्णः समुद्यतः । आददे निशितं शूलं वेगाच्छत्रुनिबर्हणम् ॥ १८ ॥ सर्वकालायसं दीप्तं तप्तकाञ्चन
भूषणम् । इन्द्राशनिसमं भीमं वज्रप्रतिमगौरवम् ॥ १९ ॥ देवदानवगन्धर्वयक्षकिन्नरसूदनम् । रक्तमाल्यं महाधाम
स्वतश्चोद्गतपावकम् ॥ २० ॥ आदाय निशितं शूलं शत्रुशोणितरञ्जितम् । कुम्भकर्णो महातेजा रावणं वाक्य
मब्रवीत् ॥ २१ ॥ गमिष्याम्यहमेकाकी तिष्ठत्विह बलं मम । अद्य तान् क्षुभितान् क्रुद्धो भक्षयिष्यामि वानरान् ।
कुम्भकर्णवचः श्रुत्वा रावणो वाक्यमब्रवीत् ॥ २२ ॥ सैन्यैः परिवृतो गच्छ शूलमुद्गरपाणिभिः । वानरा हि
महात्मानः शीघ्राः सुव्यवसायिनः ॥ २३ ॥ एकाकिनं प्रमत्तं वा नयेयुर्दशनैः क्षयम् । तस्मात् परमदुर्धर्षैः सैन्यैः
परिवृतो व्रज । रक्षसामहितं सर्वं शत्रुपक्षं निषूदय ॥ २४ ॥

सैन्यैरित्यादि । महात्मानः महाबुद्धयः । शीघ्राः वेगवन्तः । सुव्यवसायिनः दृढनिश्चयाः ॥ २३ ॥ २४ ॥
एवोत्पन्नाग्निकणम् ॥ १८-२२ ॥ समालोक्येत्यस्य वास्तवार्थस्तु-ते रूपं समालोक्य रामलक्ष्मणयो
शेषः ॥ १२ ॥ वानरान् राजपुत्रौ च भक्षय । वस्तुतस्तु राजपुत्रौ, विनेति शेषः ॥ १३ ॥ पुनर्जातामिव मेने,
स्सम्बन्धिनो वानरा विद्रविष्यन्ति । प्रस्फुटिष्यतः, द्यावापृथिवी इति शेषः । अतो हृदये युद्धगमनाय मतिं कुर्वित्यर्थः ॥ १४ ॥ रक्तमाल्यं च तव महा
जेष्यत्ययमिति विश्वासादिति भावः ॥ १५-१८ ॥ सर्वेति । सर्वकालायसं सर्वकालायसनिर्मितस्वरूपम् ॥ १९ ॥ रक्तमाल्यमहाधाम

स्रजं काञ्चनमालाम् । कुम्भकर्णस्य आबबन्ध कुम्भकर्णे आबबन्धेत्यर्थः ॥२५॥ अङ्गुलीवेष्टान् अङ्गुलीयकानि ॥२६॥ आसञ्जयामास बबन्धेत्यर्थः । अत्र केयूरादीनामप्युपलक्षणम् । काञ्चनाङ्गदकेयूरेत्यनुवादात् ॥२७॥२८॥ श्रोणीसूत्रेणेति । अमृतोत्पादने नद्ध इति निमित्तसप्तमी । भुजङ्गेन वासु





अथासनात् समुत्पत्य स्रजं मणिकृतान्तराम् । आबबन्ध महातेजाः कुम्भकर्णस्य रावणः ॥२५॥ अङ्गदान्यङ्गुलीवेष्टान् वराण्याभरणानि च । हारं च शशिसङ्काशमाबबन्ध महात्मनः ॥ २६ ॥ दिव्यानि च सुगन्धीनि माल्यदामानि रावणः । श्रोत्रे चासञ्जयामास श्रीमती चास्य कुण्डले ॥ २७ ॥ काञ्चनाङ्गदकेयूरनिष्काभरणभूषितः । कुम्भकर्णो बृहत्कर्णः सुहुतोऽग्निरिवाबभौ ॥ २८ ॥ श्रोणीसूत्रेण महता मेचकेन व्यराजत । अमृतोत्पादने नद्धो भुजङ्गेनेव मन्दरः ॥ २९ ॥ स काञ्चनं भारसहं निवातं विद्युत्प्रभं दीप्तमिवात्मभासा । आबध्यमानः कवचं रराज सन्ध्याभ्रसंवीत इवाद्रिराजः ॥ ३० ॥ सर्वाभरणसर्वाङ्गः शूलपाणिः स राक्षसः । त्रिविक्रमकृतोत्साहो नारायण इवाबभौ ॥३१॥ भ्रातरं सम्परिष्वज्य कृत्वा चाभिप्रदक्षिणम् । प्रणम्य शिरसा तस्मै सम्प्रतस्थे महाबलः ॥३२॥ निष्पतन्तं महाकायं महानादं महाबलम् । तमाशीर्भिः प्रशस्ताभिः प्रेषयामास रावणः ॥३३॥ शङ्खदुन्दुभिनिर्घोषैः सैन्यैश्चापि वरायुधैः । तं गजैश्च तुरङ्गैश्च स्यन्दनैश्चाम्बुदस्वनैः ॥३४॥ अनुजग्मुर्महात्मानं रथिनो रथिनां वरम् ॥३५॥

किना ॥ २९ ॥ भारसहम् आयुधादिभिः प्रहारेष्वप्यशिथिलमित्यर्थः । दृढमिति वाऽर्थः । यद्वा उपनीतायां तुलायां स्थाप्यमानान् बहून् भारान् सहत इति भारसहः, अनेकभारपरिमाण इत्यर्थः । निवातं वातप्रवेशनिवारकम्, निरन्तरमिति यावत् । आत्मभासा कवचकान्त्या । यद्वा निवातं शस्त्राभेद्यम् । "निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत्" इत्यमरः । आबध्यमानः आबध्नन् । आर्षविकरणव्यत्ययेन श्यन्प्रत्ययः ॥ ३० ॥ सर्वाभरण

धामेति विग्रहः ॥२०–२५॥ स्रजं काञ्चनस्रजम् । मणिकृतान्तरां मणिखचितमध्यप्रदेशाम् ॥२६॥ माल्यदामानि माल्यरूपाणि दामानि । श्रोत्रे श्रोत्रयोः ॥ २७–२९ ॥ भारसहं पर्वतायुधादिप्रहारभारक्षमम् । यद्वा तुलायां स्थाप्यमानान् बहून् भारान् सहत इति तथा । अनेकपलभारनिर्मितमित्यर्थः । निवातम् अच्छिद्रम् । आबध्यमानः आबध्नन् । आर्षो विकरणव्यत्ययः ॥३०॥ सर्वाभरणसर्वाङ्गः सर्वाभरणयुक्तसर्वाङ्गः । त्रिविक्रमकृतोत्साहः त्रिषु विक्रमेषु पादन्यासेषु कृतोत्साहः ॥३१–३९॥

सर्वाङ्गः सर्वाभरणयुक्तसर्वाङ्गः । त्रिविक्रमकृतोत्साहः त्रिषु विक्रमेषु पदन्यासेषु कृतोत्साहः ॥ ३१–३५ ॥ सर्पैरिति । सर्पादीनां महाशरीराणां वाहनत्वं सम्भवतीति बोध्यम् । द्विपाः गजाः । द्विजाः हंसादयः ॥३६॥ मदोत्कटः स्वाभाविकमदेन मत्तः । "मत्ते शौण्डोत्कटक्षीबाः" इत्यमरः ॥३७॥ पदातय



सर्पैरुष्ट्रैः खरैरश्वैः सिंहद्विपमृगद्विजैः । अनुजग्मुश्च तं घोरं कुम्भकर्णं महाबलम् ॥३६॥ स पुष्पवर्षैरवकीर्यमाणो धृतातपत्रः शितशूलपाणिः । मदोत्कटः शोणितगन्धमत्तो विनिर्ययौ दानवदेवशत्रुः ॥ ३७ ॥ पदातयश्च बहवो महानादा महाबलाः । अन्वयू राक्षसा भीमा भीमाक्षाः शस्त्रपाणयः ॥ ३८ ॥ रक्ताक्षाः सुमहाकाया नीलाञ्जनचयोपमाः । शूलानुद्यम्य खड्गांश्च निशितांश्च परश्वधान् ॥ ३९ ॥ बहुव्यामांश्च परिघान् गदाश्च मुसलानि च । तालस्कन्धांश्च विपुलान् क्षेपणीयान् दुरासदान् ॥ ४० ॥ अथान्यद्वपुरादाय दारुणं रोमहर्षणम् । निष्पपात महातेजाः कुम्भकर्णो महाबलः ॥ ४१ ॥ धनुश्शतपरीणाहः स षट्छतसमुच्छ्रितः । रौद्रः शकटचक्राक्षो महापर्वतसन्निभः ॥ ४२ ॥ सन्निपत्य च रक्षांसि दग्धशैलोपमो महान् । कुम्भकर्णो महावक्त्रः प्रहसन्निदमब्रवीत् ॥ ४३ ॥ अद्य वानरमुख्यानां तानि यूथानि भागशः । निर्दहिष्यामि संक्रुद्धः शलभानिव पावकः ॥ ४४ ॥ नापराध्यन्ति मे कामं वानरा वनचारिणः । जातिरस्मद्विधानां सा पुरोद्यानविभूषणम् ॥ ४५ ॥

श्चेत्यादि । बहुव्यामान् अनेकव्यामप्रमाणान् । "व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्" इत्यमरः । तालस्कन्धान् तालकाण्डान् ॥ ३८–४१ ॥ धनुःशतेत्यादि । धनुःशतपरीणाहः धनुःशतविशालः । षट्छतसमुच्छ्रितः षट्छतधनुरुच्छ्रायः । सन्निपत्य स्वानुगमनायोद्युक्तानां राक्षसानां समीपं गत्वेत्यर्थः ॥ ४२ ॥ ४३ ॥ अद्येत्यादि । सा जातिः वानरजातिः । अस्मद्विधानां क्रीडापराणाम् ॥ ४४–४७ ॥

बहुव्यामान् बहुव्यामप्रमाणान् " व्यामो बाह्वोस्सकरयोस्ततयोस्तिर्यगन्तरम् " इत्यमरः ॥ ४० ॥ ४१ ॥ धनुश्शतपरीणाहः धनुश्शतविशालवान् । षट्छतसमुच्छ्रितः षट्छतधनुरुन्नतः ॥ ४२–४५ ॥

घोररूपाणि अत्यन्तघोराणि ॥ ४८ ॥ गर्दभारुणाः गर्दभवदव्यक्तरागाः । "अव्यक्तरागस्त्वरुणः" इत्यमरः । निष्पपातेति । गच्छतोऽस्य उपरिप्रदेशे गृध्रो मालेव निष्पपातेत्यन्वयः । गृध्र इति जात्येकवचनम् । सव्यशब्दो लिङ्गव्यत्ययेन नयनशब्देनापि संबध्यते । कम्पते अकम्पत । उल्का मेघ



पुररोघस्य मूलं तु राघवः सहलक्ष्मणः । हते तस्मिन् हतं सर्वं तं वधिष्यामि संयुगे ॥ ४६ ॥ एवं तस्य ब्रुवाणस्य कुम्भकर्णस्य राक्षसाः । नादं चक्रुर्महावीरं कम्पयन्त इवार्णवम् ॥ ४७ ॥ तस्य निष्पततस्तूर्णं कुम्भकर्णस्य धीमतः । बभूवुर्घोररूपाणि निमित्तानि समन्ततः ॥ ४८ ॥ उल्काशनियुता मेघा बभूवुर्गर्दभारुणाः । ससागरवना चैव वसुधा समकम्पत ॥ ४९ ॥ घोररूपाः शिवा नेदुः सज्वालकवलैर्मुखैः । मण्डलान्यपसव्यानि बबन्धुश्च विहङ्गमाः ॥ ५० ॥ निष्पपात च मालेव गृध्रोऽस्य पथि गच्छतः । प्रास्फुरन्नयनं चास्य सव्यो बाहुश्च कम्पते ॥ ५१ ॥ निपपात तदा चोल्का ज्वलन्ती भीमनिस्वना । आदित्यो निष्प्रभश्चासीन्न प्रवाति सुखोऽनिलः ॥ ५२ ॥ अचिन्तयन् महोत्पातानुत्थितान् रोमहर्षणान् । निर्ययौ कुम्भकर्णस्तु कृतान्तबलचोदितः ॥ ५३ ॥ स लङ्घयित्वा प्राकारं पद्भ्यां पर्वतसन्निभः । ददर्शाभ्रघनप्रख्यं वानरानीकमद्भुतम् ॥ ५४ ॥ ते दृष्ट्वा राक्षसश्रेष्ठं वानराः पर्वतोपमम् । वायुनुन्ना इव घना ययुः सर्वा दिशस्तदा ॥ ५५ ॥ तद्वानरानीकमतिप्रचण्डं दिशो द्रवच्छिन्नमिवाभ्रजालम् । स कुम्भकर्णः समवेक्ष्य हर्षान्ननाद भूयो घनवद् घनाभः ॥५६॥ ते तस्य घोरं निनदं निशम्य यथा निनादं दिवि वारिदस्य । पेतुर्धरण्यां बहवः प्लवङ्गा निकृत्तमूला इव सालवृक्षाः ॥ ५७ ॥

निर्गतज्वालाविशेषः ॥ ४९–५२ ॥ स इति । अभ्रघनः अभ्रसङ्घातः ॥ ५४–५७ ॥



पुररोघस्येत्यस्य भातीतिकार्यैः स्पष्टः । वस्तुतस्तु–पुररोधस्य मूलं सलक्ष्मणो राघवः खलु स तु तिष्ठतु । येन सर्वस्य, अस्मदीयमिति शेषः । हतं संयुगे वधिष्यामि । कुतः ? तस्मिन् हते तदीयं सर्वं इति [illegible] ॥ ५१–५२ ॥ प्रास्फुरत् नयनं सव्यम् ॥ ५१–५२ ॥ अभ्रघनप्रख्यम् अभ्र

विपुलेति । प्रभुः अन्तकः । किंकरदण्डवान् किं करोमीत्यवस्थायी प्रकृतो यथा तद्वत् ॥ ५८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥६५॥ अथ कुम्भकर्णयुद्धप्रवृत्तिः--स इत्यादि ॥ १ ॥ स विषमन् दहन् ॥२–४॥

विपुलपरिघवान् स कुम्भकर्णो रिपुनिधनाय विनिस्सृतो महात्मा । कपिगणभयमाददत् सुभीमं प्रभुरिव किङ्करदण्डवान् युगान्ते ॥५८॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

स लङ्घयित्वा प्राकारं गिरिकूटोपमो महान् । निर्ययौ नगरात्तूर्णं कुम्भकर्णो महाबलः ॥ १ ॥ स ननाद महानादं समुद्रमभिनादयन् । जनयन्निव निर्घातान् विधमन्निव पर्वतान् ॥ २ ॥ तमवध्यं मघवता यमेन वरुणेन वा । प्रेक्ष्य भीमाक्षमायान्तं वानरा विप्रदुद्रुवुः ॥ ३ ॥ तांस्तु विप्रद्रुतान् दृष्ट्वा वालिपुत्रोऽङ्गदोऽब्रवीत् । नलं नीलं गवाक्षं च कुमुदं च महाबलम् ॥ ४ ॥ आत्मानमत्र विस्मृत्य वीर्याण्यभिजनानि च । क्व गच्छत भयत्रस्ताः प्राकृता हरयो यथा ॥ ५ ॥ साधु सौम्या निवर्तध्वं किं प्राणान् परिरक्षथ । नालं युद्धाय वै रक्षो महतीयं बिभीषिका ॥ ६ ॥

अभिजनानि प्रशस्तकुलानि ॥ ५ ॥ बिभीषिका भयजनकः कृत्रिमपुरुषवेषः ॥ ६–८ ॥

सङ्घातसदृशम् ॥ ५४–५७ ॥ प्रभुः अन्तकः किङ्करदण्डवान् किं करोमीत्यवस्थितो दण्डोऽस्यास्तीति तथोक्तः ॥ ५८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां पञ्चषष्टितमः सर्गः ॥ ६५ ॥ १–१५ ॥

स०–विपुलपरिघवान् विपुलं परिघादपीति विपुलपरिघं शूलम्, तद्वान् । परिघो रोषः । "रोषे च परिघो मतः" इति विश्वः । तद्वानिति वा । इदमप्यस्यायुधमिति नागोजिभट्टव्याकरणं तथा प्रभुविशेषणमिति तीर्थव्याख्यानं चानुक्तानुवादत्वेन दण्डस्य नियतायुधत्व पृथग्ग्रहणाधिक्यात् क्रमादुपेक्ष्ये । दण्डोऽस्यास्तीति दण्डवान् । करो दण्डवान् यस्येति बहुव्रीहिः । प्रभुः संहारसमर्थो यमः । किम् ? इति कपिगणभयम् आददत् सुभीमं प्रभूणामपि यथा भवति तथा निरसृत इति सम्बन्धः । "किङ्कराः संहारपरिकराः कालदण्डा अस्य सन्तीति किङ्करदण्डवान्" । "किङ्करोमीत्युपस्थितदण्डोऽस्यास्तीति" इति क्रमात्त्नागोजिमहेशतीर्थौ बिन्दुसन्दोहविचार्यव्याख्यातव्याख्याविस्तरम् ॥ ५८ ॥ विजयन्निवेति पाठः । विजयमानः । जयतीति जयन् । विशिष्टश्चासौ जयंश्चेति स तथेति वा ॥ २ ॥ हे सौम्याः ! शौर्यप्रदर्शनकालेऽपि तदप्रकाशका इतीर्ष्यया सम्बोधनम् । प्राणान् किं परिरक्षथ स्वामिकामिताकरणेन जीवनं धिगिति भावः । इदं रक्षः । अस्माभिस्सह युद्धं कर्तुं नालं न समर्थम् । महती विभीषिका महद्भीषणम् । भावे ण्वुल् ॥ ६ ॥

त इति । परमक्रुद्धा इति कुञ्जरविशेषणम् ॥ ९ ॥ प्रांशुभिः उन्नतैः । महाबलः कुम्भकर्णः ॥ १० ॥ ११ ॥ ममन्थ दलयदित्यर्थः ॥ १२ ॥ निरस्ताः उत्क्षिप्ताः ॥ १३ ॥ लङ्घ्यन्त इत्यर्धम् । नावलोकयन् नावलोकयन् । पृष्ठदेशमित्यर्थः ॥ १४ ॥ केचित्ते वानरा इति योजना ॥ १५ ॥





महतीमुत्थितामेनां राक्षसानां विभीषिकाम् । विक्रमाद्विधमिष्यामो निवर्तध्वं प्लवङ्गमाः ॥ ७ ॥ कृच्छ्रेण तु समाश्वस्य सङ्गम्य च ततस्ततः । वृक्षाद्रिहस्ता हरयः सम्प्रतस्थू रणाजिरम् ॥ ८ ॥ ते निवृत्य तु संक्रुद्धाः कुम्भकर्णं वनौकसः । निजघ्नुः परमक्रुद्धाः समदा इव कुञ्जराः ॥ ९ ॥ प्रांशुभिर्गिरिशृङ्गैश्च शिलाभिश्च महाबलः । पादपैः पुष्पिताग्रैश्च हन्यमानो न कम्पते ॥ १० ॥ तस्य गात्रेषु पतिता भिद्यन्ते शतशः शिलाः । पादपाः पुष्पिताग्राश्च भग्नाः पेतुर्महीतले ॥ ११ ॥ सोऽपि सैन्यानि संक्रुद्धो वानराणां महौजसाम् । ममन्थ परमायत्तो वनान्यग्निरिवोत्थितः ॥ १२ ॥ लोहितार्द्रास्तु बहवः शेरते वानरर्षभाः । निरस्ताः पतिता भूमौ ताम्रपुष्पा इव द्रुमाः ॥ १३ ॥ लङ्घ्यन्तः प्रधावन्तो वानरा नावलोकयन् ॥ १४ ॥ केचित्समुद्रे पतिताः केचिद्गगनमाश्रिताः । वध्यमानास्तु ते वीरा राक्षसेन बलीयसा ॥ १५ ॥ सागरं येन ते तीर्णाः पथा तेन प्रदुद्रुवुः ॥ १६ ॥ ते स्थलानि तथा निम्नं विषण्णवदना भयात् । ऋक्षा वृक्षान् समारूढाः केचित् पर्वतमाश्रिताः ॥१७॥ ममज्जुरर्णवे केचिद् गुहाः केचित् समाश्रिताः । निषेदुः प्लवगाः केचित् केचिन्नैवावतस्थिरे । [ केचिद्भूमौ निपतिताः केचित् सुप्ता मृता इव । ] तान् समीक्ष्याङ्गदो भग्नान् वानरानिदमब्रवीत् ॥ १८ ॥

सागरमित्यर्धम् । ते वानराः ॥ १६ ॥ स्थलानि अतिधावनयोग्यान् देशान् उन्नतप्रदेशान् वा आश्रिता इत्यन्वयः ॥ १७ ॥ ममज्जुरित्यादि । निषेदुः सागरमिति । स्थलानीत्यत्रापि प्रदुद्रुवुरिति सम्बध्यते ॥ १६ ॥ १७ ॥ ममज्जुः निषेदुः ॥ १८ ॥ १९ ॥



स०—भिद्यन्ते बहवः शिलाः इति पाठः । "वोतो गुणवचनात्" इत्युकारान्तस्त्रीलिङ्गो बहुशब्दः ॥ ११ ॥

भूमौ पतिता इव तस्थुः ॥ १८ ॥ अवतिष्ठतेत्यादि  परिगम्य प्रदक्षिणीकृत्येत्यर्थः । स्थानं न पश्यामीत्यन्वयः ॥ १९ ॥ असङ्गगतिपौरुषाः अप्रतिबद्धपराक्रमा इति वानरसंबोधनम् । निरायुधानां द्रवतां निरायुधेषु द्रवत्सु । यद्वा निरायुधानां द्रवतां दारास्तान् अपहसिष्यन्तीति । सः

अवतिष्ठत युध्यामो निवर्तध्वं प्लवङ्गमाः । भग्नानां वो न पश्यामि परिगम्य महीमिमाम् । स्थानं सर्वे निवर्तध्वं किं प्राणान् परिरक्षथ ॥ १९॥ निरायुधानां द्रवतामसङ्गगतिपौरुषाः । दारा ह्यपहसिष्यन्ति स वै घातस्तु जीविनाम् ॥ २० ॥ कुलेषु जाताः सर्वे स्म विस्तीर्णेषु महत्सु च । क्व गच्छथ भयत्रस्ता हरयः प्राकृता यथा ॥२१॥ अनार्याः खलु यद्भीतास्त्यक्त्वा वीर्यं प्रधावत ॥ २२ ॥ विकत्थनानि वो यानि तदा वै जनसंसदि । तानि वः क्व नु यातानि सोदग्राणि महान्ति च ॥२३॥ भीरुप्रवादाः श्रूयन्ते यस्तु जीवति धिक्कृतः । मार्गः सत्पुरुषैर्जुष्टः सेव्यतां त्यज्यतां भयम् ॥ २४ ॥ शयामहेऽथ निहताः पृथिव्यामल्पजीविताः । दुष्प्रापं ब्रह्मलोकं वा प्राप्नुमो युधि सूदिताः ॥२५॥

अपहासः । घातः मृतिः ॥ २० ॥ सर्वे, वयमिति शेषः । विस्तीर्णेषु ज्ञातिपरम्परया विततेषु । महत्सु प्रशस्तेषु ॥ २१ ॥ अनार्या इत्यर्धम् । यद्यस्मात् भीताः प्रधावत पलायथ । तस्मादनार्याः खलु ॥ २२ ॥ सोदग्राणि उदग्रतायुक्तानि । महान्ति भूयांसीत्यर्थः ॥ २३ ॥ भीरुप्रवादा इति । यस्तु धिक्कृतो जीवति तद्विषये भीरुप्रवादाः भीरुत्वापवादाः श्रूयन्ते । सत्पुरुषैः शूरैः । जुष्टः सेवितः ॥२४॥ सत्पुरुषजुष्टो मार्गः कः ? निरायुधानामिति । स वै घातस्तु जीविनां सः दारकृतापहासः घातः मरणम् । जीविनां जीवताम् ॥ २० ॥ २१ ॥ यद्यस्माद्भीताः पलायत तस्मादनार्याः खलु ॥ २२ ॥ सोदग्राणि औद्धत्यप्रयुक्तानि । महान्ति भूयांसि ॥ २३ ॥ यस्तु धिक्कृतो जीवति तद्विषयभीरुप्रवादाः श्रूयन्ते, तं सर्वे भीरुरिति वदन्तीत्यर्थः । सत्पुरुषैः शूरैः ॥२४॥ कस्तर्हि सत्पुरुषजुष्टो मार्ग इत्यपेक्षायामाह—शयामह इति । युद्धमरणं सत्पुरुषजुष्टो मार्गः, मरणस्यावश्यम्भावित्वप्रदर्शनार्थमल्पजीविताः

स०—इमां महीं परिक्रम्यापि स्थितानां स्थानं निर्भयस्थलं न पश्यामि । राज्ञ आज्ञा तादृशीत्यत्रावस्थाने कुम्भकर्णतो मरणम् । गतवतां सुग्रीवत इति नानिवर्तने निर्वृतिर्भवतामिति भावः ॥ १९ ॥ निरायुधानां रिपुमुक्तायुधानङ्कितानाम् । क्रमतां गृहं प्रति द्रवताम् । सुजीवतां सञ्जीवनवताम् ॥ २० ॥ ब्रह्मलोकं वीरस्वर्गसंज्ञम् । एतेन "हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्" इति गीतावैतदुक्तमेवार्थं वदतीति सूचितम् । शत्रुमिति जातावेकवचनम् । मुख्यदशमुखविवक्षयैकवचनं वा । आहव इत्युभयत्रान्वयि । तैर्निहताः वीरलोकस्य वीरप्राप्यस्वर्गस्य । वसु तत्र भोग्यं धनादि तेनाधिकमानन्दं भोक्ष्यामः । पूर्वमव्यवहितकपिवरान् प्रति वचनम् । इदं तदपेक्षया दूरवर्तिन उपागतान् प्रति वचनमित्यधिकारिभेदान्न पुनर्वचनदोषः । यत्परिहारार्थं दाढर्यार्थमित्युक्तिरप्यपेक्षिता स्यादिति मन्तव्यम् ॥ १९ ॥

इत्यपेक्षायामाह—शयामह इत्यादि । युद्धमरणं हि [illegible] इत्यर्थः । समरान्निवृत्य पलायितानामपि मरणस्यावश्यंभावित्वप्रदर्शनार्थमल्प जीविता इत्युक्तम् । समरानिवर्तिनां वीराणां तु मरणजीवनयोरुभयोरपि श्रेयस्करत्वं प्रतिपादयति दुष्प्रापमिति । निहत्वा निहत्य । जीवितमिति । वीरलोकस्य वीराणां लोको ब्रह्मलोकः तस्य वसु मूल्यभूतं जीवितं मोक्ष्यामः ॥ २५ ॥ २६ ॥ दीप्यमानं ज्वलनमिव राममासाद्य कुम्भकर्णः पतङ्गो

सम्प्राप्नुयामः कीर्तिं वा निहत्वा शत्रुमाहवे । जीवितं वीरलोकस्य मोक्ष्यामो वसु वानराः ॥ २६ ॥ न कुम्भकर्णः काकुत्स्थं दृष्ट्वा जीवन् गमिष्यति । दीप्यमानमिवासाद्य पतङ्गो ज्वलनं यथा ॥ २७ ॥ पलायनेन चोद्दिष्टाः प्राणान् रक्षामहे वयम् । एकेन बहवो भग्ना यशो नाशं गमिष्यति ॥२८॥ एवं ब्रुवाणं तं शूरमङ्गदं कनकाङ्गदम् । द्रवमाणा स्ततो वाक्यमूचुः शूरविगर्हितम् ॥ २९॥ कृतं नः कदनं घोरं कुम्भकर्णेन रक्षसा । न स्थानकालो गच्छामो दयितं जीवितं हि नः ॥ ३० ॥ एतावदुक्त्वा वचनं सर्वे ते भेजिरे दिशः । भीमं भीमाक्षमायान्तं दृष्ट्वा वानरयूथपाः ॥ ३१ ॥ द्रवमाणास्तु ते वीरा अङ्गदेन वलीमुखाः । सान्त्वैश्चैवानुमानैश्च ततः सर्वे निवर्तिताः ॥ ३२ ॥ प्रहर्ष मुपनीताश्च वालिपुत्रेण धीमता । आज्ञाप्रतीक्षास्तस्थुश्च सर्वे वानरयूथपाः ॥ ३३ ॥

यथेति यथेवशब्दयोर्निर्वाहः ॥ २७ ॥ उद्दिष्टाः व्यपदिष्टाः । बहवो वयमनेन कुम्भकर्णेन भग्नाः पलायनेन प्राणान् रक्षामहे यदि ततो यशो नाशं गमिष्यतीति योजना ॥ २८ ॥ शूरं पराक्रमवन्तम् । कनकाङ्गदम् उत्साहातिशयेन प्रकाशितस्वर्णाङ्गदम् ॥२९॥ कदनं मर्दनम् । दयितम् इष्टम् ॥३०॥ ॥ ३१ ॥ अनुमानैः सालगिरिभेदनादिदृष्टान्तपुरस्कृतैर्युक्तिविशेषैः ॥ ३२ ॥ प्रहर्षमिति । आज्ञाप्रतीक्षाः सुग्रीवाद्याज्ञाप्रतीक्षाः ॥ ३३ ॥

इत्युक्तम् । समरानिवर्तिनां वीराणां मरणजीवितयोरुभयोरपि श्रेयस्करत्वं प्रतिपादयति दुष्प्रापमिति ॥ २५ ॥ जीवितमिति । वीरलोकस्य वीराणां लोको ब्रह्मलोकः तस्य वसु मूल्यभूतं जीवितं मोक्ष्यामः ॥ २६ ॥ नेति । पतङ्ग इव कुम्भकर्णः दीप्यमानं पावकमिव काकुत्स्थं दृष्ट्वा जीवन् न गमिष्यतीति सम्बन्धः ॥ २७ ॥ बहवो वयमेकेन कुम्भकर्णेन भग्नाः, पलायनेन अनेन भङ्गेनोद्दिष्टाः एते पलायिता इति जनैर्निर्दिष्टाः ज्ञापिताश्च प्राणान् रक्षामहे यदि तदा अस्माकं यशः नाशं गमिष्यतीति सम्बन्धः ॥ २८–३१ ॥ [illegible] इति । अनुमानैः सालगिरिभेदनादिदृष्टान्तैः ॥ ३२ ॥ ३३ ॥

ऋषभशरभेति । त्वरिततराभिमुखं त्वरिततरम् अभिमुखं यथा ... । अत्र वायुपुत्रस्तु न पलाय्य निवृत्तः । किंतु ऋषभादिभिर्मिलित्वा कुम्भकर्णेन सह युद्धार्थं निवृत्त इति ज्ञेयम्॥३४॥ इति श्रीगोविन्द० श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

ऋषभशरभमैन्दधूम्रनीलाः कुमुदसुषेणगवाक्षरम्भताराः । द्विविदपनसवायुपुत्रमुख्यास्त्वरिततराभिमुखं रणं प्रयाताः ॥ ३४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

ते निवृत्ता महाकायाः श्रुत्वाऽङ्गदवचस्तदा । नैष्ठिकीं बुद्धिमासाद्य सर्वे सङ्ग्रामकाङ्क्षिणः ॥ १ ॥ समुदीरितवीर्याश्च समारोपितविक्रमाः । पर्यवस्थापिता वाक्यैरङ्गदेन वलीमुखाः ॥ २ ॥ प्रयाताश्च गता हर्षं मरणे कृतनिश्चयाः । चक्रुः सुतुमुलं युद्धं वानरास्त्यक्तजीविताः ॥ ३ ॥ अथ वृक्षान् महाकायाः सानूनि सुमहान्ति च । वानरास्तूर्णमुद्यम्य कुम्भकर्णमभिद्रुताः ॥ ४ ॥ स कुम्भकर्णः संक्रुद्धो गदामुद्यम्य वीर्यवान् । अर्दयन् सुमहाकायः समन्ताद्व्याक्षिपद्रिपून् ॥५॥ शतानि सप्त चाष्टौ च सहस्राणि च वानराः । प्रकीर्णाः शेरते भूमौ कुम्भकर्णेन पोथिताः ॥ ६ ॥ षोडशाष्टौ च दश च विंशत्त्रिंशत्तथैव च । परिक्षिप्य च बाहुभ्यां खादन् विपरिधावति । भक्षयन् भृशसंक्रुद्धो गरुडः पन्नगानिव ॥७॥ कृच्छ्रेण च समाश्वस्ताः सङ्गम्य च ततस्ततः । वृक्षाद्रिहस्ता हरयस्तस्थुः सङ्ग्राममूर्धनि॥८॥

ते निवृत्ता इत्यादि चक्रुः सुतुमुलं युद्धं वानरास्त्यक्तजीविता इत्यन्तमेकं वाक्यम् । नैष्ठिकीं निष्ठा नाशः तत्संबन्धिनीम्, मरणव्यवसायिनीमित्यर्थः । समुदीरितवीर्याः कथितात्मपराक्रमाः । समारोपितविक्रमाः समवलम्बितपराक्रमाः । मरणनिश्चयहेतुमाह—त्यक्तजीविता इति । जीवनाशारहिता इत्यर्थः ॥ १–४ ॥व्याक्षिपत् अपातयत् ॥ ५ ॥ प्रकीर्णाः शिथिलावयवाः । पोथिताः हिंसिताः । कुम्भकर्णस्यैकेन व्यापारेण शतादिसङ्ख्यारूपेण पतिता इत्यर्थः॥६॥ परिक्षिप्य परिगृह्य । खादन् भक्षयन् । पन्नगान् भक्षयन्निवेति गरुडविशेषणम् ॥ ७ ॥ हरयः, बलवन्तः इति शेषः । सङ्गम्य सम्भूय ॥ ८ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिका० युद्धकाण्डव्याख्यायां षट्षष्टितमः सर्गः ॥६६॥ ( अत्र सर्गविच्छेदोऽसाम्प्रदायिकः । एकप्रकरणत्वाद् वृत्तभेदाभावाच्च इति कतकः ॥ )

ऋषभशरभेति । वायुपुत्रस्तु न पलाय्य निवृत्तः, किन्तु ऋषभशरभादिभिर्मिलित्वा कुम्भकर्णेन सह युद्धार्थं निवृत्त इति ज्ञेयम् ॥ ३४ ॥

... इति श्लोकत्रयम् । नैष्ठिकीं निष्ठा नाशः तत्सम्बन्धिनीम्, मरणव्यवसायिनीमिति यावत् ॥ १ ॥ समुदीरितवीर्याः कथितात्मीयप्राक्पराक्रमा इत्यर्थः ॥ २–८ ॥

विशेषेण लम्बत इति विलम्बः । पचाद्यच् । गिरिशृङ्गाभं गिरिशृङ्गवदुन्नतम् ॥ ९ ॥ तं कुम्भकर्णं समुत्पत्य समीपमागत्य । कुम्भकर्णस्य कुम्भकर्णाय ॥ १० ॥ ममर्देत्यादि त्रिपादश्लोकः । तानि प्रसिद्धानि । रक्षांसि ममर्देति पूर्वेणान्वयः । पुनश्चेति पादश्लोकः । अन्यत् गिरेः शृङ्गं चिक्षेपेति योज्यम् ॥ ११ ॥





ततः पर्वतमुत्पाट्य द्विविदः प्लवगर्षभः । दुद्राव गिरिशृङ्गाभं विलम्ब इव तोयदः ॥ ९ ॥ तं समुत्पत्य चिक्षेप कुम्भकर्णस्य वानरः । तमप्राप्तो महाकायं तस्य सैन्येऽपतत्तदा ॥ १० ॥ ममर्दाश्वान् गजांश्चापि रथांश्चैव नगोत्तमः । तानि चान्यानि रक्षांसि पुनश्चान्यद्गिरेः शिरः ॥ ११ ॥ तच्छैलशृङ्गाभिहतं हताश्वं हतसारथि । रक्षसां रुधिरक्लिन्नं बभूवायोधनं महत् ॥ १२ ॥ रथिनो वानरेन्द्राणां शरैः कालान्तकोपमैः । शिरांसि नदतां जह्रुः सहसा भीमनिस्वनाः ॥ १३ ॥ वानराश्च महात्मानः समुत्पाट्य महाद्रुमान् । रथानश्वान् गजानुष्ट्रान् राक्षसानभ्यसूदयन् ॥ १४ ॥ हनुमान् शैलशृङ्गाणि वृक्षांश्च विविधान् बहून् । ववर्ष कुम्भकर्णस्य शिरस्यम्बरमास्थितः ॥ १५ ॥ तानि पर्वतशृङ्गाणि शूलेन स बिभेद ह । बभञ्ज वृक्षवर्षं च कुम्भकर्णो महाबलः ॥ १६ ॥ ततो हरीणां तदनीकमुग्रं दुद्राव शूलं निशितं प्रगृह्य । तस्थौ ततोऽस्यापततः पुरस्तान्महीधराग्रं हनुमान् प्रगृह्य ॥ १७ ॥ स कुम्भकर्णं कुपितो जघान वेगेन शैलोत्तमभीमकायम् । स चुक्षुभे तेन तदाऽभिभूतो मेदार्द्रगात्रो रुधिरावसिक्तः ॥ १८ ॥ स शूलमाविध्य तडित्प्रकाशं गिरिं यथा प्रज्वलिताग्रशृङ्गम् । बाह्वन्तरे मारुतिमाजघान गुहोऽचलं क्रौञ्चमिवोग्रशक्त्या ॥ १९ ॥ स शूलनिर्भिन्नमहाभुजान्तरः प्रविह्वलः शोणितमुद्वमन् मुखात् । ननाद भीमं हनुमान् महाहवे युगान्तमेघस्तनितस्वनोपमम् ॥ २० ॥

तच्छैलशृङ्गाभिहतम् अनन्तरप्रयुक्तशैलशृङ्गाभिहतसैन्यम् । आयोधनं युद्धम् ॥ १२ ॥ कालान्तकः प्रलयकालरुद्रः ॥ १३ ॥ अभ्यसूदयन् अघ्नन् ॥ १४–१६ ॥ दुद्राव द्रावयामास ॥ १७ ॥ मेदार्द्रेत्यत्र सन्धिरार्षः ॥ १८ ॥ आविध्य भ्रामयित्वा । गुहः स्कन्दः ॥ १९ ॥ प्रविह्वलः प्रमुह्यन् । विलम्बः विशेषेण लम्बत इति विलम्बः । पचाद्यच् ॥ ९ ॥ १० ॥ तानि प्रसिद्धानि । अन्यद्गिरेः शिरः । अन्यानि चिक्षेपेति योजनीयम् ॥ ११–२३ ॥

युगान्तेति । युगान्तमेघस्य स्तनितरूपो यः स्वनः तत्तुल्यमिति क्रियाविशेषणम् ॥ २० ॥ कुम्भकर्णात् भयार्ता इत्यन्वयः । संयति युद्धे ॥ २१ ॥ पर्यवस्थापयन् बलमिति पलायमानान् सन्निवर्तयन्नित्यर्थः ॥ २२ ॥ व्यशीर्यत शीर्णमभूत् ॥ २३–२५ ॥ पादैः प्रहारोद्यतैः । सर्वत्रोपलक्षणे तृतीया

ततो विनेदुः सहसा प्रहृष्टा रक्षोगणास्तं व्यथितं समीक्ष्य । प्लवङ्गमास्तु व्यथिता भयार्ताः प्रदुद्रुवुः संयति कुम्भकर्णात् ॥२१॥ ततस्तु नीलो बलवान् पर्यवस्थापयन् बलम् । प्रविचिक्षेप शैलाग्रं कुम्भकर्णाय धीमते॥२२॥ तमापतन्तं सम्प्रेक्ष्य मुष्टिनाऽभिजघान ह । मुष्टिप्रहाराभिहतं तच्छैलाग्रं व्यशीर्यत ॥ २३ ॥ सविस्फुलिङ्गं सज्वालं निपपात महीतले । ऋषभः शरभो नीलो गवाक्षो गन्धमादनः ॥ २४ ॥ पञ्च वानरशार्दूलाः कुम्भकर्ण मुपाद्रवन् ॥ २५ ॥ शैलैर्वृक्षैस्तलैः पादैर्मुष्टिभिश्च महाबलाः । कुम्भकर्णं महाकायं सर्वतोऽभिप्रदुद्रुवुः ॥ २६ ॥ स्पर्शानिव प्रहारांस्तान् वेदयानो न विव्यथे । ऋषभं तु महावेगं बाहुभ्यां परिषस्वजे ॥ २७ ॥ कुम्भकर्णभुजाभ्यां तु पीडितो वानरर्षभः । निपपातर्षभो भीमः प्र मुखाद्वान्तशोणितः ॥ २८ ॥ मुष्टिना शरभं हत्वा जानुना नील माहवे । आजघान गवाक्षं तु तलेनेन्द्ररिपुस्तदा ॥ २९ ॥ पादेनाभ्यहनत् क्रुद्धस्तरसा गन्धमादनम् । दत्तप्रहार व्यथिता मुमुहुः शोणितोक्षिताः ॥३०॥ निपेतुस्ते तु मेदिन्यां निकृत्ता इव किंशुकाः । तेषु वानरमुख्येषु पतितेषु महा त्मसु । वानराणां सहस्राणि कुम्भकर्णं प्रदुद्रुवुः ॥३१॥ तं शैलमिव शैलाभाः सर्वे ते प्लवगर्षभाः । समारुह्य समुत्पत्य ददंशुश्च महाबलाः ॥३२॥ तं नखैर्दशनैश्चापि मुष्टिभिर्जानुभिस्तथा । कुम्भकर्णं महाकायं ते जघ्नुः प्लवगर्षभाः ॥३३॥

॥ २६ ॥ स्पर्शानिव सुखस्पर्शानिव, सुखमर्दनमिव जानन्नित्यर्थः ॥ २७ ॥ प्र इति छेदः । मुखात् वान्तशोणितः प्रणिपपातेत्यन्वयः । "व्यवहिताश्च" इत्युपसर्गस्य व्यवहितप्रयोगः । वान्तशोणितः उद्गीर्णरक्तः ॥ २८–३१ ॥ समारुह्य समुत्पत्य, समुत्पत्य समारुह्येति क्रमः ॥ ३२ ॥ ३३ ॥

आचितः व्याप्तः । आत्मरुहैः वृक्षैः ॥ ३४-३६ ॥ भक्षयन् बभञ्ज, भक्षणार्थं बभञ्जेत्यर्थः ॥ ३७ ॥ मांसशोणितसंक्लेदां मांसशोणितसंसिक्तामित्यर्थः





स वानरसहस्रैस्तैराचितः पर्वतोपमः । रराज राक्षसव्याघ्रो गिरिरात्मरुहैरिव ॥ ३४ ॥ बाहुभ्यां वानरान् सर्वान् प्रगृह्य सुमहाबलः । भक्षयामास संक्रुद्धो गरुडः पन्नगानिव ॥ ३५ ॥ प्रक्षिप्ताः कुम्भकर्णेन वक्त्रे पातालसन्निभे । नासापुटाभ्यां निर्जग्मुः कर्णाभ्यां चैव वानराः ॥ ३६ ॥ भक्षयन् भृशसंक्रुद्धो हरीन् पर्वतसन्निभः । बभञ्ज वानरान् सर्वान् संक्रुद्धो राक्षसोत्तमः ॥ ३७ ॥ मांसशोणितसंक्लेदां भूमिं कुर्वन् स राक्षसः । चचार हरिसैन्येषु कालाग्निरिव मूर्च्छितः ॥३८॥ वज्रहस्तो यथा शक्रः पाशहस्त इवान्तकः । शूलहस्तो बभौ सङ्ख्ये कुम्भकर्णो महाबलः ॥३९॥ यथा शुष्काण्यरण्यानि ग्रीष्मे दहति पावकः । तथा वानरसैन्यानि कुम्भकर्णो विनिर्दहत् ॥ ४० ॥ ततस्ते वध्यमानास्तु हतयूथा विनायकाः । वानरा भयसंविग्ना विनेदुर्विस्वरं भृशम् ॥ ४१ ॥ अनेकशो वध्यमानाः कुम्भकर्णेन वानराः । राघवं शरणं जग्मुर्व्यथिताः खिन्नचेतसः ॥४२॥ प्रभग्नान् वानरान् दृष्ट्वा वज्रहस्तसुतात्मजः । अभ्यधावत वेगेन कुम्भकर्णं महाहवे ॥ ४३ ॥ शैलशृङ्गं महद्गृह्य विनदंश्च मुहुर्मुहुः । त्रासयन् राक्षसान् सर्वान् कुम्भकर्णपदानुगान् ॥४४॥ चिक्षेप शैलशिखरं कुम्भकर्णस्य मूर्धनि । स तेनाभिहतोऽत्यर्थं गिरिशृङ्गेण मूर्धनि ॥ ४५ ॥ कुम्भकर्णः प्रजज्वाल कोपेन महता तदा । सोऽभ्यधावत वेगेन वालिपुत्रममर्षणः ॥ ४६ ॥ कुम्भकर्णो महानादं त्रासयन् सर्ववानरान् । शूलं ससर्ज वै रोषादङ्गदे स महाबलः ॥ ४७ ॥



॥ ३८ ॥ ३९ ॥ विनिर्दहत् विनिरदहत् ॥ ४० ॥ विनायकाः विगलनायकाः ॥ ४१-४२ ॥

स इति । आचितः व्याप्तः । आत्मरुहैः वृक्षैः ॥ ३४-४२ ॥ वज्रहस्तसुतात्मजः अङ्गद इत्यर्थः ॥ ४३-४८ ॥

तमिति । सम्मुखः अभिमुखः ॥ ५४–५८ ॥ प्रजापतेरिति । [illegible] पुरा किल ब्रह्मणो जृम्भमाणस्य वदनादृक्षरजा नाम वानरो जातः । स कदाचित् पर्यटन् ब्रह्मलोकेऽप्सरोरूपकारिणि कस्मिंश्चित् सरसि निमज्ज्याप्सरोरूपमभजत् । तां दृष्ट्वा काममोहिताविन्द्रादित्यौ हस्तेन

तमापतन्तं बुद्ध्वा तु युद्धमार्गविशारदः । लाघवान्मोचयामास बलवान् वानरर्षभः ॥ ४८ ॥ उत्पत्य चैनं सहसा तलेनोरस्यताडयत् । स तेनाभिहतः कोपात् प्रमुमोहाचलोपमः ॥४९॥ स लब्धसंज्ञो बलवान् मुष्टिमावर्त्य राक्षसः । अपहासेन चिक्षेप विसंज्ञः स पपात ह ॥५०॥ तस्मिन् प्लवगशार्दूले विसंज्ञे पतिते भुवि । तच्छूलं समुपादाय सुग्रीवमभिदुद्रुवे ॥ ५१ ॥ तमापतन्तं सम्प्रेक्ष्य कुम्भकर्णं महाबलम् । उत्पपात तदा वीरः सुग्रीवो वानराधिपः ॥५२॥ पर्वताग्रं समुत्क्षिप्य समाविध्य महाकपिः । अभिदुद्राव वेगेन कुम्भकर्णं महाबलम् ॥ ५३ ॥ तमापतन्तं सम्प्रेक्ष्य कुम्भकर्णः प्लवङ्गमम् । तस्थौ विकृतसर्वाङ्गो वानरेन्द्रसमुन्मुखः ॥ ५४ ॥ कपिशोणितदिग्धाङ्गं भक्षयन्तं प्लवङ्गमान् । कुम्भकर्णं स्थितं दृष्ट्वा सुग्रीवो वाक्यमब्रवीत् ॥ ५५ ॥ पातिताश्च त्वया वीराः कृतं कर्म सुदुष्करम् । भक्षितानि च सैन्यानि प्राप्तं ते परमं यशः ॥ ५६ ॥ त्यज तद्वानरानीकं प्राकृतैः किं करिष्यसि । सहस्वैकनिपातं मे पर्वतस्यास्य राक्षस ॥ ५७ ॥ तद्वाक्यं हरिराजस्य सत्त्वधैर्यसमन्वितम् । श्रुत्वा राक्षसशार्दूलः कुम्भकर्णोऽब्रवीद्वचः ॥५८॥ प्रजापतेस्तु पौत्रस्त्वं तथैवर्क्षरजस्सुतः । श्रुतपौरुषसम्पन्नः कस्माद्गर्जसि वानर ॥५९॥

युगपदगृहीताम् । तत्रान्तरे तयोः क्षुभितं रेतोऽपतत् । तत्र द्वौ कुमारावभवताम् । वाले पतनाद्वाली । ग्रीवायां पतनात् सुग्रीवः । तं दृष्ट्वा प्रहस्य ब्रह्मा अप्सरोरूपधारिणम् ऋक्षरजसं यथापूर्वरूपप्राप्तये कुमारौ गृहीत्वा अन्यस्मिन् वानररूपकारिणि सरसि निमज्जेत्यभ्यधात् । सोऽपि तथा कृत्वा कुमाराभ्यां सह वानररूपमभजदृक्षरजाः । तत्पुत्रौ वालिसुग्रीवाविति । तदनेन प्रकारेण सुग्रीवः प्रजापतेः पौत्रः ऋक्षरजसः पुत्रश्च । काश्यपात् प्रजापतेस्तु पौत्र इति । चतुर्मुखब्रह्मजृम्भणजनितऋक्षरजःपुत्रत्वात्सुग्रीवस्य ब्रह्मपौत्रत्वम् ॥ ५९–६१ ॥

प्रजापतेर्विवस्वान् विवस्वतः सुग्रीव इत्यन्ये ॥ ६१ ॥ स इति । व्याविध्य तोलयित्वा ॥ ६२-६३ ॥ भारसहस्रस्य भारसहस्रेण कृतं जानुन्यारोप्य बभञ्जेत्यन्वयः ॥ ६४ ॥ सर्वतः सर्वस्मात् प्रदेशात् दुद्रुवे आजगाम ॥ ६५ ॥ ६६ ॥ सुग्रीवमुपेत्य तेन शृङ्गेण जघान । त्रिकूटशिखरस्थलङ्काद्वारे





स कुम्भकर्णस्य वचो निशम्य व्याविध्य शैलं सहसा मुमोच। तेनाजघानोरसि कुम्भकर्णं शैलेन वज्राशनिसन्निभेन ॥६०॥ तच्छैलशृङ्गं सहसा विशीर्णं भुजान्तरे तस्य तदा विशाले। ततो विषेदुः सहसा प्लवङ्गा रक्षोगणाश्चापि मुदा विनेदुः ॥६१॥ स शैलशृङ्गाभिहतश्चुकोप ननाद कोपाच्च विवृत्य वक्त्रम्। व्याविध्य शूलं च तडित्प्रकाशं चिक्षेप हर्यृक्षपतेर्वधाय ॥६२॥ तत् कुम्भकर्णस्य भुजप्रविद्धं शूलं शितं काञ्चनधामजुष्टम्। क्षिप्रं समुत्पत्य निगृह्य दोर्भ्यां बभञ्ज वेगेन सुतोऽनिलस्य ॥६३॥ कृतं भारसहस्रस्य शूलं कालायसं महत्। बभञ्ज जानुन्यारोप्य प्रहृष्टः प्लवगर्षभः ॥ ६४ ॥ शूलं भग्नं हनुमता दृष्ट्वा वानरवाहिनी। हृष्टा ननाद बहुशः सर्वतश्चापि दुद्रुवे ॥ ६५ ॥ सिंहनादं च ते चक्रुः प्रहृष्टा वनगोचराः। मारुतिं पूजयाञ्चक्रुर्दृष्ट्वा शूलं तथागतम् ॥ ६६ ॥ स तत्तदा भग्नमवेक्ष्य शूलं चुकोप रक्षोधिपतिर्महात्मा। उत्पाट्य लङ्कामलयात् स शृङ्गं जघान सुग्रीवमुपेत्य तेन ॥ ६७ ॥ स शैलशृङ्गाभिहतो विसंज्ञः पपात भूमौ युधि वानरेन्द्रः। तं प्रेक्ष्य भूमौ पतितं विसंज्ञं नेदुः प्रहृष्टास्त्वथ यातुधानाः ॥ ६८ ॥

स्थित्वा युध्यतः कुम्भकर्णस्य प्रदेशान्तरस्थलङ्कामलयशृङ्गोत्पाटनं कथमुपपद्यते ? इति चेत्; तदनुगुणप्रमाणशरीरत्वान्न दोषः। लङ्कामलयशब्देन त्रिकूटं स इति । व्याविध्य तोलयित्वा ॥ ६२–६९ ॥

स०—जानु मा आरोप्य तत् आहृष्टः इति छेदः । तत् शूलं जानु आरोप्य जानुनि निधाय । तत् सुग्रीवोपरिपतनं मा इति बभञ्ज । प्लवगर्षभो हनुमान् आहृष्टः अतिहृष्टः ॥ बहुपुराणादिष्वियं कथा सुग्रीवतो ग्रहणानन्तरं कक्ष्यानिक्षिप्तकपिपतिर्यदा लङ्कानिलयात्स्त्रीपुंसजनैस्तुहिनसलिलमाल्यैः सेचितः तस्मान्मोचितः सुग्रीवः करोत्कृत्तगृहीतघोणाकर्ण उत्पपात तदा मक्षिकोपमः पाक्षिकनीतिं लौकिकीमनुसृत्यानुसृत्य च तं गतो हनुमांस्तदा तन्मुक्तं सुग्रीवाशक्यपरिहारं शूलं बभञ्जेति श्रूयते । अत्र व्यत्यस्य कथनं लेखकप्रमादतः । श्लोकार्थेतेऽनन्तरं पठनीया इति वा "कुर्युः क्वचिच्च व्यत्यासम्" इति कविकृत एवायं हनुमत्पराक्रमत्रामदर्शनपरायत्तचित्ततया व्यत्यास इति वा ज्ञेयम् । ननु भारते वनपर्वणि "हृत्वा कर्णोष्ठनासिकम्" इत्युक्तेरत्र कर्णनासिकोक्तिः कथमिति चेन्न; नासिकोत्कर्तनकाल एवौष्ठद्वयस्य तया सहागमनं ज्ञातुं सुशकमित्यत्रानुक्तिः, स्पष्टप्रतिपत्त्यर्थं तत्रोक्तिरिति सम्भवात् ॥ ६४ ॥

वोपचर्यते ॥ ६७--६९ ॥ अभ्युच्छ्रितम् उन्नतम् । स्वाकारसादृश्याय प्रथमं मेरूपादानम् । द्वितीयं तु सुग्रीवधारणकालिकसादृश्याय ॥७०॥ उत्पाट्य उद्धृत्य । त्रिदशालयानां स्वर्गिणाम् ॥ ७१ ॥ बलवान् कुम्भकर्णो युद्धे पतितं सुग्रीवं किमर्थं हृतवानित्यत्राह--ततस्तमादायेति ॥ ७२--७६ ॥



तमभ्युपेत्याद्भुतघोरवीर्यं स कुम्भकर्णो युधि वानरेन्द्रम् । जहार सुग्रीवमभिप्रगृह्य यथाऽनिलो मेघमतिप्रचण्डः॥६९॥ स तं महामेघनिकाशरूपमुत्पाट्य गच्छन् युधि कुम्भकर्णः । रराज मेरुप्रतिमानरूपो मेरुर्यथाऽभ्युच्छ्रितघोरशृङ्गः ॥७०॥ ततस्तमुत्पाट्य जगाम वीरः संस्तूयमानो युधि राक्षसेन्द्रैः । शृण्वन्निनादं त्रिदशालयानां प्लवङ्गराजग्रहविस्मितानाम् ॥ ७१ ॥ ततस्तमादाय तदा स मेने हरीन्द्रमिन्द्रोपममिन्द्रवीर्यः । अस्मिन् हृते सर्वमिदं हृतं स्यात् सराघवं सैन्यमितीन्द्रशत्रुः ॥ ७२ ॥ विद्रुतां वाहिनीं दृष्ट्वा वानराणां ततस्ततः । कुम्भकर्णेन सुग्रीवं गृहीतं चापि वानरम् ॥ ७३ ॥ हनुमांश्चिन्तयामास मतिमान् मारुतात्मजः । एवं गृहीते सुग्रीवे किं कर्तव्यं मया भवेत् ॥७४॥ यद्वै न्याय्यं मया कर्तुं तत् करिष्यामि सर्वथा । भूत्वा पर्वतसङ्काशो नाशयिष्यामि राक्षसम् ॥ ७५ ॥ मया हते संयति कुम्भकर्णे महाबले मुष्टिविकीर्णदेहे । विमोचिते वानरपार्थिवे च भवन्तु हृष्टाः प्लवगाः समस्ताः ॥ ७६ ॥ अथवा स्वयमप्येष मोक्षं प्राप्स्यति पार्थिवः । गृहीतोऽयं यदि भवेत्त्रिदशैः सासुरोरगैः ॥ ७७ ॥ मन्ये न तावदात्मानं बुद्ध्यते वानराधिपः । शैलप्रहाराभिहतः कुम्भकर्णेन संयुगे ॥ ७८ ॥ अयं मुहूर्तात् सुग्रीवो लब्धसंज्ञो महाहवे । आत्मनो वानराणां च यत् पथ्यं तत् करिष्यति ॥ ७९ ॥

अथवेति । सासुरोरगैः सुरैः गृहीतोऽप्ययं मोक्षं प्राप्तुं शक्नोति । किं पुनरनेन राक्षसापसदेनेति भावः ॥ ७७ ॥ तर्हि मोचयित्वाऽऽत्मानं किमिति न

उच्छ्रितघोरशृङ्गः उच्छ्रितानि उन्नतानि घोराणि शृङ्गाणि यस्य सः ॥ ७० ॥ त्रिदशालयानां त्रिदशालयस्थानाम् ॥ ७१--७६ ॥ अथवेति । सासुरोरगैः त्रिदशैर्गृहीतोऽपि अयं मोक्षं प्राप्तुं शक्नोति किं पुनरनेन राक्षसापसदेनेति भावः ॥ ७७ ॥ तर्ह्यात्मानं मोचयित्वा किमिति न निवर्तते ? इत्यत्राह--मन्य इति ॥७८॥ ७९ ॥

निवर्तत इत्यत्राह—मन्य इत्यादिना । तावदित्यवधारणे । आत्मानमेव न बुध्यत इत्यर्थः । पथ्यं हितम् ॥ ७८ ॥ ७९ ॥ कृच्छ्रगतः स्वामी भृत्येनावश्यं मोचनीय एवेत्याशङ्क्याह—मया त्विति ॥ ८० ॥ तावत् सुग्रीवागमनपर्यन्तम् ॥ ८१ ॥ संस्तम्भयामास गमनान्निवर्तयामास ॥ ८२ ॥ पुष्पाग्र्यवर्षैः



मया तु मोक्षितस्यास्य सुग्रीवस्य महात्मनः । अप्रीतिश्च भवेत् कष्टा कीर्तिनाशश्च शाश्वतः ॥ ८० ॥ तस्मान्मुहूर्तं कांक्षिष्ये विक्रमं पार्थिवस्य तु । भिन्नं च वानरानीकं तावदाश्वासयाम्यहम् ॥८१॥ इत्येवं चिन्तयित्वा तु हनुमान् मारुतात्मजः । भूयः संस्तम्भयामास वानराणां महाचमूम् ॥८२॥ स कुम्भकर्णोऽथ विवेश लङ्कां स्फुरन्तमादाय महाकपिं तम् । विमानचर्यागृहगोपुरस्थैः पुष्पाग्र्यवर्षैरवकीर्यमाणः ॥ ८३ ॥ लाजगन्धोदवर्षैस्तु सिच्यमानः शनैः शनैः । राजमार्गस्य शीतत्वात् संज्ञामाप महाबलः ॥८४॥ ततः स संज्ञामुपलभ्य कृच्छ्राद्बलीयसस्तस्य भुजान्तरस्थः । अवेक्षमाणः पुरराजमार्गं विचिन्तयामास मुहुर्महात्मा ॥ ८५ ॥ एवं गृहीतेन कथं नु नाम शक्यं मया सम्प्रतिकर्तुमद्य । तथा करिष्यामि यथा हरीणां भविष्यतीष्टं च हितं च कार्यम् ॥ ८६ ॥ ततः कराग्रैः सहसा समेत्य राजा हरीणाममरेन्द्रशत्रुम् । खरैश्च कर्णौ दशनैश्च नासां ददंश पार्श्वेषु च कुम्भकर्णम् ॥८७॥ स कुम्भकर्णो हृतकर्णनासो विदारितस्तेन विमर्दितश्च । रोषाभिभूतः क्षतजार्द्रगात्रः सुग्रीवमाविध्य पिपेष भूमौ ॥ ८८ ॥ स भूतले भीमबलाभिपिष्टः सुरारिभिस्तैरभिहन्यमानः । जगाम खं वेगवदभ्युपेत्य पुनश्च रामेण समाजगाम ॥८९॥

श्लाघ्यपुष्पवृष्टिभिः ॥ ८३–८५ ॥ एवमिति । सम्प्रतिकर्तुं सम्यक् प्रतिकर्तुम्, अन्यथा अद्येति पुनरुक्तिः स्यात् ॥ ८६ ॥ तत इति । खरैः तीक्ष्णैः कराग्रैः कर्णौ समेत्य संहृत्य । दशनैः नासां च ददंश । पार्श्वेषु कपोलयोरंसयोरुदरान्तरयोश्च, पादाभ्यां विददारेति शेषः ॥ ८७ ॥ स इति ।



तथापि कृच्छ्रगतः स्वामी भृत्येनावश्यं मोचयितव्य इत्याशङ्क्याह—मया त्विति ॥ ८०–८२ ॥ पुष्पाग्र्यवर्षैः उत्तमकुसुमवृष्टिभिः ॥ ८३–८५ ॥ सम्प्रतिकर्तुं सम्यक् प्रतिकर्तुम् ॥ ८६ ॥ खरैः तीक्ष्णैः । कराग्रैः करनखैः कर्णौ समेत्य संहृत्येत्यर्थः । पादैः पादनखैः । ददंश पार्श्वेषु च कुम्भकर्णमिति पाठे–पार्श्वेषु कपोलयोरंसयो

विमर्दितः सम्पीडितः ॥ ८८ ॥ ८९ ॥ प्रस्रवणैः निर्झरैः ॥ ९० ॥ अभिमुखः सन् युद्धाय मनश्चक्र इति सम्बन्धः ॥ ९१–९४ ॥ बुभुक्षित इति । शोणितमांसगृध्नुः शोणितमांसलोलुपः ॥ ९५–९७ ॥ सम्प्रस्रवन्निति । सम्प्रस्रवन् तालुभ्यामुद्वमन् । शोणितं मेदश्च भक्षितवानरसंबन्धि ॥ ९८ ॥



कर्णनासाविहीनस्तु कुम्भकर्णो महाबलः । रराज शोणितैः सिक्तो गिरिः प्रस्रवणैरिव ॥ ९० ॥ शोणितार्द्रो महाकायो राक्षसो भीमविक्रमः । युद्धायाभिमुखो भूयो मनश्चक्रे महाबलः ॥९१॥ अमर्षाच्छोणितोद्गारी शुशुभे रावणानुजः । नीलाञ्जनचयप्रख्यः ससन्ध्य इव तोयदः ॥ ९२ ॥ गते तु तस्मिन् सुरराजशत्रुः क्रोधात् प्रदुद्राव रणाय भूयः । अनायुधोऽस्मीति विचिन्त्य रौद्रो घोरं तदा मुद्गरमाससाद ॥ ९३ ॥ ततः स पुर्याः सहसा महौजा निष्क्रम्य तद्वानरसैन्यमुग्रम् । बभक्ष रक्षो युधि कुम्भकर्णः प्रजा युगान्ताग्निरिव प्रदीप्तः ॥ ९४ ॥ बुभुक्षितः शोणितमांसगृध्नुः प्रविश्य तद्वानरसैन्यमुग्रम् । चखाद रक्षांसि हरीन् पिशाचानृक्षांश्च मोहाद्युधि कुम्भकर्णः ॥ ९५ ॥ यथैव मृत्युर्हरते युगान्ते स भक्षयामास हरींश्च मुख्यान् ॥ ९६ ॥ एकं द्वे त्रीन् बहून् क्रुद्धो वानरान् सह राक्षसैः । समादायैकहस्तेन प्रचिक्षेप त्वरन् मुखे ॥ ९७ ॥ सम्प्रस्रवंस्तदा मेदः शोणितं च महाबलः । वध्यमानो नगेन्द्राग्रैर्भक्षयामास वानरान् ॥ ९८ ॥ ते भक्ष्यमाणा हरयो रामं जग्मुस्तदा गतिम् ॥ ९९॥ कुम्भकर्णो भृशं क्रुद्धः कपीन् खादन् प्रधावति ॥१००॥ शतानि सप्त चाष्टौ च विंशत्रिंशत्तथैव च । सम्परिष्वज्य बाहुभ्यां खादन् विपरिधावति ॥ १०१ ॥ तस्मिन् काले सुमित्रायाः पुत्रः परबलार्दनः । चकार लक्ष्मणः क्रुद्धो युद्धं परपुरञ्जयः ॥ १०२ ॥ स कुम्भकर्णस्य शरान् शरीरे सप्त वीर्यवान् । निचखानाददे बाणान् विससर्ज च लक्ष्मणः ॥ १०३ ॥

त इत्यर्थम् । गतिं शरणम् ॥ ९९ ॥ कुम्भकर्ण इत्यर्थम् । प्रधावति प्राधावत् । उत्तरश्लोकेऽप्येवमेव ॥ १०० ॥ १०१ ॥ तस्मिन् काल इत्यादि । रुदरपार्श्वयोश्च, पादाभ्यां विददारेति शेषः ॥८७–९७॥ शोणितं भक्षितानां वानरादीनां सम्बन्धि । संप्रस्रवन् ओष्ठाभ्यामुद्वमन् ॥९८॥ गतिं शरणम् ॥९९–११७॥

स्पष्टम् ॥ १०२-१०५ ॥ आर्चिषः ज्वालाः ॥ १०६ ॥ १०७ ॥ तस्येति सार्धः । बर्हिणवाससः बर्हिणं बर्हिपत्रं वासो वासःस्थानं येषां ते तथोक्ताः ।





अतिक्रम्य च सौमित्रिं कुम्भकर्णो महाबलः । राममेवाभिदुद्राव दारयन्निव मेदिनीम् ॥ १०४ ॥ अथ दाशरथी रामो रौद्रमस्त्रं प्रयोजयन् । कुम्भकर्णस्य हृदये ससर्ज निशितान् शरान् ॥ १०५ ॥ तस्य रामेण विद्धस्य सहसाऽभिप्रधावतः । अङ्गारमित्राः क्रुद्धस्य मुखान्निश्चेरुरर्चिषः ॥ १०६ ॥ रामास्त्रविद्धो घोरं वै नदन् राक्षसपुङ्गवः । अभ्यधावत संक्रुद्धो हरीन् विद्रावयन् रणे ॥ १०७ ॥ तस्योरसि निमग्नाश्च शरा बर्हिणवाससः । हस्ताच्चापि परिभ्रष्टा पपातोर्व्यां महागदा । आयुधानि च सर्वाणि विप्राकीर्यन्त भूतले ॥ १०८ ॥ स निरायुधमात्मानं यदा मेने महाबलः । मुष्टिभ्यां चरणाभ्यां च चकार कदनं महत् ॥१०९॥ स बाणैरतिविद्धाङ्गः क्षतजेन समुक्षितः । रुधिरं प्रतिसुस्राव गिरिः प्रस्रवणं यथा ॥११०॥ स तीव्रेण च कोपेन रुधिरेण च मूर्च्छितः । वानरान् राक्षसानृक्षान् खादन् विपरिधावति ॥१११॥ अथ शृङ्गं समाविध्य भीमं भीमपराक्रमः । चिक्षेप राममुद्दिश्य बलवानन्तकोपमः ॥११२॥ अप्राप्तमन्तरा रामः सप्तभिस्तैरजिह्मगैः । शरैः काञ्चनचित्राङ्गैश्चिच्छेद पुरुषर्षभः ॥ ११३ ॥ तन्मेरुशिखराकारं द्योतमानमिव श्रिया । द्वे शते वानरेन्द्राणां पतमानमपातयत् ॥ ११४ ॥ तस्मिन् काले स धर्मात्मा लक्ष्मणो वाक्यमब्रवीत् । कुम्भकर्णवधे युक्तो योगान् परिमृशन् बहून् ॥ ११५ ॥ नैवायं वानरान् राजन्नापि जानाति राक्षसान् । मत्तः शोणितगन्धेन स्वान् परांश्चैव खादति ॥ ११६ ॥ साध्वेनमधिरोहन्तु सर्वे ते वानरर्षभाः । यूथपाश्च यथा मुख्यास्तिष्ठन्त्वस्य समन्ततः ॥ ११७ ॥

आयुधानि खड्गादीनि ॥१०८॥ कदनम्, वानराणामिति शेषः ॥ १०९ ॥ ११० ॥स तीव्रेणेति । मूर्च्छितः व्याप्तः ॥ १११-११३ ॥ द्वे शते उद्दिश्य पतमानं गच्छन्तम् अपातयत्, शरैरिति शेषः ॥११४॥ योगान् परिमृशन् उपायान् विचारयन् ॥११५॥११६॥ साध्विति । यथा यथायोग्यम् ॥११७॥

अप्ययमिति । भारः वानरारोहणरूपः ॥ ११८ ॥ ११९ ॥ कुम्भकर्णस्त्विति । स्पष्टः ॥ १२० ॥ तानिति । निर्धुतानिति ह्रस्व आर्षः ॥ १२१ ॥

क्रोधताम्रेत्यादिसार्धश्लोकमेकं वाक्यम् ॥१२२॥ स चापमिति । निबद्धोत्तमतूणबाणः निबद्धोत्तमबाणतूण इत्यर्थः ॥ १२३ ॥ १२४ ॥ स ददर्शेत्यादि

अप्ययं दुर्मतिः काले गुरुभारप्रपीडितः । प्रपतन् राक्षसो भूमौ नान्थान् हन्यात् प्लवङ्गमान् ॥ ११८ ॥ तस्य तद्व चनं श्रुत्वा राजपुत्रस्य धीमतः । ते समारुरुहुर्हृष्टाः कुम्भकर्णं प्लवङ्गमाः ॥ ११९ ॥ कुम्भकर्णस्तु संक्रुद्धः समारूढः प्लवङ्गमैः । व्यधूनयत्तान् वेगेन दुष्टहस्तीव हस्तिपान् ॥ १२० ॥ तान् दृष्ट्वा निर्धुतान् रामो दुष्टोऽयमिति राक्षसः । समुत्पपात वेगेन धनुरुत्तममाददे ॥ १२१ ॥ क्रोधताम्रेक्षणो वीरो निर्दहन्निव चक्षुषा । राघवो राक्षसं रोषादभिदुद्राव वेगितः । यूथपान् हर्षयन् सर्वान् कुम्भकर्णभयार्दितान् ॥ १२२ ॥ स चापमादाय भुजङ्गकल्पं दृढज्यमुग्रं तपनीयचित्रम् । हरीन् समाश्वास्य समुत्पपात रामो निबद्धोत्तमतूणबाणः ॥ १२३ ॥ स वानरगणैस्तैस्तु वृतः परमदुर्जयः । लक्ष्मणानुचरो रामः सम्प्रतस्थे महाबलः ॥ १२४ ॥ स ददर्श महात्मानं किरीटिनमरिन्दमम् । शोणिताप्लुतसर्वाङ्गं कुम्भकर्णं महाबलम् ॥ १२५ ॥ सर्वान् समभिधावन्तं यथा रुष्टं दिशागजम् । मार्गमाणं हरीन् क्रुद्धं राक्षसैः परिवारितम् ॥ १२६ ॥ विन्ध्यमन्दरसङ्काशं काञ्चनाङ्गदभूषणम् । स्रवन्तं रुधिरं वक्त्राद्वर्षमेघमिवोत्थितम् ॥ १२७ ॥ जिह्वया परिलिह्यन्तं शोणितं शोणितेक्षणम् । मृद्नन्तं वानरानीकं कालान्तकयमोपमम् ॥ १२८ ॥ तं दृष्ट्वा राक्षसश्रेष्ठं प्रदीप्तानलवर्चसम् । विस्फारयामास तदा कार्मुकं पुरुषर्षभः ॥ १२९ ॥ स तस्य चापनिर्घोषात् कुपितो राक्षसर्षभः । अमृष्यमाणस्तं घोषमभिदुद्राव राघवम् ॥१३०॥

चतुःश्लोक्येकान्वया । कालान्तकयमोपमम्, रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वेतिवत् एकस्यैवावस्थाभेदात् कालादिनामभेदः । यद्वा काले युगान्तकाले अन्तको नाशको यमः उपमा यस्य स तथोक्तः ॥ १२९--१३१ ॥

भारप्रपीडितः भारः वानरारोहणभारः ॥ ११८--१२७ ॥ कालान्तकयमोपमं 'रुद्रस्त्रिनेत्रस्त्रिपुरान्तकः' इतिवदेकस्यैवावस्थाभेदात्कालादिनामभेदः ॥१२८--१३१॥

आगच्छेति । मा माम् अविषादम् आगच्छेत्यन्वयः । यद्वा विषादं मा गच्छ । मरणेन शरीरभरणक्लेशं त्यजेत्यर्थः । आङ् उपसर्गमात्रम् ॥१३२--१३४॥ प्रहस्येति । विकृतमित्यादिविशेषणत्रयं क्रियाविशेषणम् ॥ १३५ ॥ १३६ ॥ पश्य मे मुद्गरमिति । यद्यपि निरायुधत्वं पूर्वमुक्तं तथाप्यद्य मुद्गरं गृहीत



ततस्तु वातोद्धतमेघकल्पं भुजङ्गराजोत्तमभोगबाहुम् । तमापतन्तं धरणीधराभमुवाच रामो युधि कुम्भकर्णम् ॥१३१॥ आगच्छ रक्षोधिप मा विषादमवस्थितोऽहं प्रगृहीतचापः । अवेहि मां शक्रसपत्न रामं मया मुहूर्ताद्भविता विचेताः ॥ १३२ ॥ रामोऽयमिति विज्ञाय जहास विकृतस्वनम् । अभ्यधावत संक्रुद्धो हरीन् विद्रावयन् रणे ॥ १३३ ॥ पातयन्निव सर्वेषां हृदयानि वनौकसाम् ॥ १३४ ॥ प्रहस्य विकृतं भीमं स मेघस्तनितोपमम् । कुम्भकर्णो महातेजा राघवं वाक्यमब्रवीत् ॥ १३५ ॥ नाहं विराधो विज्ञेयो न कबन्धः खरो न च । न वाली न च मारीचः कुम्भकर्णोऽहमागतः ॥ १३६ ॥ पश्य मे मुद्गरं घोरं सर्वकालायसं महत् । अनेन निर्जिता देवा दानवाश्च पुरा मया ॥ १३७ ॥ विकर्णनास इति मां नावज्ञातुं त्वमर्हसि । स्वल्पाऽपि हि न मे पीडा कर्णनासाविनाशनात् ॥ १३८ ॥ दर्शयेक्ष्वाकुशार्दूल वीर्यं गात्रेषु मे लघु । ततस्त्वां भक्षयिष्यामि दृष्टपौरुषविक्रमम् ॥ १३९ ॥ स कुम्भकर्णस्य वचो निशम्य रामः सुपुङ्खान् विससर्ज बाणान् । तैराहतो वज्रसमग्रवेगैर्न चुक्षुभे न व्यथते सुरारिः ॥ १४० ॥ यैः सायकैः सालवरा निकृत्ता वाली हतो वानरपुङ्गवश्च । ते कुम्भकर्णस्य तदा शरीरे वज्रोपमा न व्यथयांप्रचक्रुः ॥ १४१ ॥

वानिति ज्ञेयम् । सर्वकालायसं बहुलायसमयमित्यर्थः ॥ १३७ ॥ विकर्णनास इति ॥ १३८ ॥ दर्शयेति । लघु क्षिप्रम् । दृष्टपौरुषविक्रमं दृष्टबलपराक्रमम् ॥ १३९ ॥ चुक्षुभ इति । क्षोभोऽत्र मानसः ॥ १४० ॥ यैः सायकैरिति । सालभेदकस्य वालिविनाशकस्य च बाणस्यैकत्वेऽपि बहुवचनं तद्धर्माणा





आगच्छेति । मा माम् । अविषादं विषादरहितम् ॥ १३२--१३८ ॥ दर्शयेक्ष्वाकुशार्दूलेत्यस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु-हे इक्ष्वाकुशार्दूल ! मे गात्रेषु वीर्यं

मनेकत्वादुपपद्यते ॥ १४१ ॥ स इति । शरीरेण पिबन्, शरीरनिमग्नबाण इत्यर्थः । जघान मोघीचकार ॥ १४२ ॥ ततस्त्विति । विव्याध अचालयत् ॥ १४३–१४५ ॥ सन्निपातं द्वन्द्वयुद्धम् ॥ १४६ ॥ १४७ ॥ ऐन्द्रास्त्रयुक्तेन ऐन्द्रास्त्रमन्त्राभिमन्त्रितेन ॥ १४८ ॥ विवेष्टमानः विवर्तमानः ॥ १४९ ॥



स वारिधारा इव सायकांस्तान् पिबन् शरीरेण महेन्द्रशत्रुः । जघान रामस्य शरप्रवेगं व्याविध्य तं मुद्गरमुग्रवेगम् ॥ १४२ ॥ ततस्तु रक्षः क्षतजानुलिप्तं वित्रासनं देवमहाचमूनाम् । विव्याध तं मुद्गरमुग्रवेगं विद्रावयामास चमूं हरीणाम् ॥ १४३ ॥ वायव्यमादाय ततो वरास्त्रं रामः प्रचिक्षेप निशाचराय । समुद्गरं तेन जघान बाहुं स कृत्तबाहुस्तुमुलं ननाद ॥ १४४ ॥ स तस्य बाहुर्गिरिशृङ्गकल्पः समुद्गरो राघवबाणकृत्तः । पपात तस्मिन् हरिराजसैन्ये जघान तां वानरवाहिनीं च ॥ १४५ ॥ ते वानरा भग्नहतावशेषाः पर्यन्तमाश्रित्य तदा विषण्णाः । प्रवेपिताङ्गा ददृशुः सुघोरं नरेन्द्ररक्षोधिपसान्निपातम् ॥ १४६ ॥ स कुम्भकर्णोऽस्त्रनिकृत्तबाहुर्महान्निकृत्ताग्र इवाचलेन्द्रः । उत्पाटयामास करेण वृक्षं ततोऽभिदुद्राव रणे नरेन्द्रम् ॥ १४७॥ स तस्य बाहुं सहसालवृक्षं समुद्यतं पन्नगभोगकल्पम् । ऐन्द्रास्त्रयुक्तेन जघान रामो बाणेन जाम्बूनदचित्रितेन ॥ १४८ ॥ स कुम्भकर्णस्य भुजो निकृत्तः पपात भूमौ गिरिसन्निकाशः । विवेष्टमानोऽभिजघान वृक्षान् शैलान् शिला वानरराक्षसांश्च ॥ १४९ ॥ तं छिन्नबाहुं समवेक्ष्य रामः समापतन्तं सहसा नदन्तम् । द्वावर्धचन्द्रौ निशितौ प्रगृह्य चिच्छेद पादौ युधि राक्षसस्य ॥ १५० ॥ तौ तस्य पादौ प्रदिशो दिशश्च गिरीन् गुहाश्चैव महार्णवं च । लङ्कां च सेनां कपिराक्षसानां विनादयन्तौ विनिपेततुश्च ॥ १५१ ॥ निकृत्तबाहुर्विनिकृत्तपादो विदार्य वक्त्रं वडवामुखाभम् । दुद्राव रामं सहसाऽभिगर्जन् राहुर्यथा चन्द्रमिवान्तरिक्षे ॥ १५२ ॥

प्रगृह्य युगपत् सन्धाय ॥१५०॥ विनाशयन्तौ दिगादीन् प्रतिध्वनयन्तौ ॥ १५१ ॥ दुद्राव राममिति । ऊरुशेषाभ्यामिदम् । अन्यथेदं गमनं वक्ष्यमाणं दर्शय । ततः दृष्टपौरुषविक्रमं त्वाम्, असाध्यं मन्वान इति शेषः । भक्षयिष्यामि' यथापूर्वं वानरानिति शेषः ॥ १३९–१५० ॥ ताविति । विनादयन्तौ दिगादीन्

पतनं च न सम्भवतः। राहुर्यथेति । चन्द्रमिव स्थितं रामं राहुर्यथा तथा कुम्भकर्ण इत्यर्थः ॥ १५२ ॥ १५३ ॥ अरिष्टं रिपूणामशुभप्रदम् ।



अपूरयत्तस्य मुखं शिताग्रै रामः शरैर्हेमपिनद्धपुङ्खैः । स पूर्णवक्त्रो न शशाक वक्तुं चुकूज कृच्छ्रेण मुमोह चापि ॥ १५३ ॥ अथाददे सूर्यमरीचिकल्पं स ब्रह्मदण्डान्तककालकल्पम् । अरिष्टमैन्द्रं निशितं सुपुङ्खं रामः शरं मारुततुल्यवेगम् ॥ १५४ ॥ तं वज्रजाम्बूनदचारुपुङ्खं प्रदीप्तसूर्यज्वलनप्रकाशम् । महेन्द्रवज्राशनितुल्यवेगं रामः प्रचिक्षेप निशाचराय ॥ १५५ ॥ स सायको राघवबाहुचोदितो दिशः स्वभासा दश सम्प्रकाशयन् । सधूमवैश्वानरदीप्तदर्शनो जगाम शक्राशनिवीर्यविक्रमः ॥ १५६ ॥ स तन्महापर्वतकूटसन्निभं विवृत्तदंष्ट्रं चलचारुकुण्डलम् । चकर्त रक्षोधिपतेः शिरस्तथा यथैव वृत्रस्य पुरा पुरन्दरः ॥ १५७ ॥ कुम्भकर्णशिरो भाति कुण्डलालङ्कृतं महत् । आदित्येऽभ्युदिते रात्रौ मध्यस्थ इव चन्द्रमाः ॥ १५८ ॥

"अरिष्टे तु शुभाशुभे" इत्यमरः ॥ १५४ ॥ १५५ ॥ वैश्वानरः अग्निः ॥ १५६ ॥ १५७ ॥ कुम्भकर्णेति । कर्तनवेगादुद्धतं गगने स्थितम् । रात्रौ प्रतिध्वनयन्तावित्यर्थः ॥ १५१--१५३ ॥ अरिष्टं रिपूणामशुभप्रदम् । " अरिष्टे तु शुभाशुभे " इत्यमरः ॥ १५४--१५७ ॥ कुम्भकर्णशिर इति । कर्तनवेगाद्गगने स्थितं सत् कुम्भकर्णशिरः आदित्ये अदितिदेवताके पुनर्वसुनक्षत्रे रात्रावभ्युदिते तन्मध्यगश्चन्द्रमा इवाभातीत्यर्थः । कुण्डलस्थानव्यतिरिक्तकर्णप्रदेशयोः सुग्रीवेण गृहीतत्वात्कुम्भकर्णशिरः कुण्डलालंकृतं भातीति भावः । यद्वा महत्कुम्भकर्णशिरः कुण्डलालंकृतं कुण्डलाभ्याम् अलं निवारणं कृतम् कुण्डलरहितं सत् भाति । अत्र दृष्टान्तः-आदित्य इति । आदित्ये सूर्ये अभ्युदिते सति । अभ्युदितेरात्रावित्यत्र अरात्राविति छेदः । अरात्रावहनि मध्यस्थः गगनमध्यस्थः चन्द्रमा इवेत्यर्थः । अस्मिन् पक्षे पूर्वश्लोके चलचारुकुण्डलमित्यस्य चले चलिते गते चारुकुण्डले यस्य तदित्यर्थः ॥ १५८ ॥ १५९ ॥

स०--भातिकुण्डलालङ्कृतं भया कान्त्या कुण्डलालङ्कृतं यदन्यच्छिरः तदतिक्रम्य वर्तते तत्तथा । सद्यः पातात्कान्तिर्न गतेति भावः । " अति लङ्घनेऽपि च " इति विश्वः । यद्वा कुण्डलालं कुण्ड इति कुण्डे आस्यपिठरे लाला यस्य तत् । पातालसंनिभमिति पूर्वमुक्तेः । " कुण्डं पिठरे " इति विश्वः । कृतं कालविशेषेण, अत एवाप्रकाशो युज्यते । कुण्डलाभ्यां विना कृतमिति द्वावपि । यत् रात्रौ मध्यस्थः योग्यतया गगनमध्यस्थः चन्द्रमा इवाभात् । तदिदानीम् आदित्ये सूर्येऽभ्युदिते मध्यस्थोऽधमः कान्त्या चन्द्रमा इव भाति । मध्यस्थे न्यायमार्गस्थे । आदित्य इवादित्ये रामरूपे वा । तद्वंशसम्भूतत्वात्तस्मिन् रामेऽभ्युदिते सति चन्द्रमा इव, भातीति शेषः । कुण्डलवत् सर्पवदलङ्कृतं भाति । यथाऽहिः कुण्डली कुण्डलं चेति वचनात् कर्णशून्यत्वेनोचितं तदौपम्यम् । आदित्ये अदितिदेवताके पुनर्वसुनक्षत्रे रात्रावभ्युदिते सति तन्मध्यस्थश्चन्द्रमा इव भातीति, तथा अरात्रौ दिवेति तीर्थनागोजिभ्याख्याने प्रक्रमानानुगुण्यात्, एवं द्वितीयमपि आदित्योदयानन्तरम् अरात्रावहनीत्यवक्तव्यत्वादुपेक्षणीये ॥ १९८ ॥

आदित्ये अदितिदेवताके पुनर्वसुनक्षत्रे तारकाद्वयात्मके अभ्युदिते तन्मध्यगतश्चन्द्रमा इव बभावित्यर्थः ॥ १५८ ॥ चर्याः प्राकारोपान्तक्लृप्तभट



तद्रामबाणाभिहतं पपात रक्षश्शिरः पर्वतसन्निकाशम् । बभञ्ज चर्यागृहगोपुराणि प्राकारमुच्चं तमपातयच्च ॥ १५९॥ न्यपतत् कुम्भकर्णोऽथ स्वकायेन निपातयन् । प्लवङ्गमानां कोटयश्च परितः सम्प्रधावताम् ॥ १६० ॥ तच्चाति कायं हिमवत्प्रकाशं रक्षस्ततस्तोयनिधौ पपात । ग्राहान् वरान् मीनवरान् भुजङ्गान् ममर्द भूमिं च तदा विवेश ॥ १६१ ॥ तस्मिन् हते ब्राह्मणदेवशत्रौ महाबले संयति कुम्भकर्णे । चचाल भूर्भूमिधराश्च सर्वे हर्षाच्च देवास्तुमुलं प्रणेदुः ॥ १६२ ॥ ततस्तु देवर्षिमहर्षिपन्नगाः सुराश्च भूतानि सुपर्णगुह्यकाः । सयक्षगन्धर्वगणा नभोगताः प्रहर्षिता रामपराक्रमेण ॥ १६३ ॥ ततस्तु ते तस्य वधेन भूरिणा मनस्विनो नैर्ऋतराजबान्धवाः । विनेदुरुच्चै र्व्यथिता रघूत्तमं हरिं समीक्ष्यैव यथा सुरार्दिताः ॥ १६४ ॥ स देवलोकस्य तमो निहत्य सूर्यो यथा राहुमुखा द्विमुक्तः । तथा व्यभासीद्भुवि वानरौघे निहत्य रामो युधि कुम्भकर्णम् ॥ १६५ ॥

सञ्चारार्हप्रदेशाः ॥ १५९ ॥ कोट्यः कोटीः ॥ १६० ॥ रक्षः कवन्धरूपं भूमिं तदा विवेश भूमिमस्पृशदित्यर्थः ॥ १६१–१६४ ॥ स इति । वानरौघे

प्लवङ्गमानां कोटयः कोटीः कायेन निपातयन् कुम्भकर्णो न्यपतदिति सम्बन्धः ॥ १६०–१६३ ॥ सुरार्दिताः राक्षसाः हरिं समीक्ष्यैव नैर्ऋतबान्धवाः रघूत्तमं समीक्ष्य व्यथिता विनेदुरिति सम्बन्धः ॥ १६४ ॥ १६५ ॥

स०—" भ्रातेणास्त्रेण सौमित्रिर्ददाराद्विरोपमम् " इति भारते वनपर्वणि मार्कण्डेयोपाख्याने लक्ष्मणात्कुम्भकर्णवध उक्तोऽत्र तु रामादतो विरोध इति चेत् सत्यम्; सुमित्राया अपत्यं हि सौमित्रिः । तस्याश्च लक्ष्मणादपि प्रेमपदं राम इति तदपत्यत्वेनोक्तो व्यासेन दाशरथिरिति वा भाषात्रयेणोक्तेर्भारत इवान्यत्रामाव्द्वयभावया रामभावोषयदिति वा पुंव्यत्यासोपि " शतं दुर्योधनादींस्ते धनञ्जयशरैर्हतान् । दर्शयिष्यामि " इति कृष्णेन कृष्णां प्रत्युदीरिते वचसि भीमसेनशरैर्हतानिति वक्तव्ये धनञ्जयेत्युक्तिवद्रा ज्ञेयः । " मयैव वध्यौ भवतं त्रिजन्मसु " इति भगवतोक्तत्वात् हिरण्याक्षहिरण्यकशिप्वोः शिशुपालदन्तवक्त्रयोश्च नृसिंहयदुसिंहाभ्यां हतत्वदर्शनाच्च " रामलक्ष्मणाभ्यां मिलित्वा तद्वधकरणात् " इत्यादिनाऽयोजिमद्विरोधसमाधिकथनं कथमिति चिन्त्यम् ॥ १९९ ॥

वानरौघमध्ये ॥ १६५ ॥ प्रबुद्धपद्मप्रतिमैरिति । प्रतिमाशब्दोऽत्र रूपवचनः, नतु सदृशवचनः इवशब्दप्रयोगात् । इष्टभागिनं जयरूपेष्टभाजम् ॥१६६॥ पराजितश्रमं त्यक्तश्रमम् । अत्र सर्गे अधिकाः केचन श्लोकाः क्वापि क्वापि दृश्यन्ते ते न व्याख्याताः । अस्मिन्सर्गे सार्धषट्षष्ट्युत्तरशतश्लोकाः ॥ १६७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥





प्रहर्षमीयुर्बहवस्तु वानराः प्रबुद्धपद्मप्रतिमैरिवाननैः । अपूजयन् राघवमिष्टभागिनं हते रिपौ भीमबले दुरासदे ॥ १६६ ॥ स कुम्भकर्णं सुरसङ्घमर्दनं महत्सु युद्धेषु पराजितश्रमम् । ननन्द हत्वा भरताग्रजो रणे महासुरं वृत्रमिवामराधिपः ॥ १६७॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे सप्तषष्टितमः सर्गः॥६७॥

कुम्भकर्णं हतं दृष्ट्वा राघवेण महात्मना । राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ १॥ राजन् स कालसङ्काशः संयुक्तः कालकर्मणा । विद्राव्य वानरीं सेनां भक्षयित्वा च वानरान् ॥ २ ॥ प्रतापयित्वा मुहूर्तं च प्रशान्तो राम तेजसा । कायेनार्धप्रविष्टेन समुद्रं भीमदर्शनम् ॥ ३ ॥ निकृत्तकण्ठोरुभुजो विक्षरन् रुधिरं बहु । रुद्ध्वा द्वारं शरीरेण लङ्कायाः पर्वतोपमः ॥ ४ ॥ कुम्भकर्णस्तव भ्राता काकुत्स्थशरपीडितः । लगण्डभूतो विकृतो दावदग्ध इव द्रुमः ॥ ५ ॥ तं श्रुत्वा निहतं सङ्ख्ये कुम्भकर्णं महाबलम् । रावणः शोकसन्तप्तो मुमोह च पपात च ॥ ६ ॥

कुम्भकर्णवधश्रवणेन रावणस्य प्रलापः—कुम्भकर्णमित्यादि । अत्र रावणायेत्यत्र वकारो गायत्र्या अष्टादशाक्षरम् । सप्तदशसहस्रश्लोका गताः ॥ १ ॥ कालकर्मणा कालस्य मृत्योः कर्मणा, मरणरूपक्रिययेति यावत् । यद्वा काले कर्मणा कालकर्मणा, परिपक्वकर्मणेत्यर्थः ॥ २ ॥ प्रतापयित्वा पराक्रम्य, एतदारभ्य श्लोकत्रयमेकान्वयम् । अर्धप्रविष्टेन अर्धेन कबन्धमात्रेण प्रविष्टेन कायेन समुद्रं रुद्ध्वा । शरीरेण उत्तमाङ्गेन द्वारं रुद्ध्वा । लगण्ड

प्रबुद्धपद्मप्रतिमैरित्यत्र प्रतिमाशब्दो रूपवाचकः, अन्यथा इवशब्दोऽनतिरिच्येत ॥ सप्तम्यां कुम्भकर्णवधः ॥ १६६ ॥ १६७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां सप्तषष्टितमः सर्गः ॥ ६७ ॥

कुम्भकर्णमिति । य इति गायत्र्या अष्टादशाक्षरं कुम्भकर्णं हतमिति श्लोकस्याद्य चतुर्विंशतितमाक्षरेण य इत्यनेन संगृह्णाति ॥ १ ॥ २ ॥ प्रतापयित्वेत्यादि श्लोकत्रयमेकं वाक्यम् । पर्वतोपमः कुम्भकर्णः मुहूर्तं प्रतापयित्वा विक्रम्य निकृत्तकण्ठोरुभुजः विक्षरद्रुधिरं यथा भवति तथा काकुत्स्थशरपीडितः दावदग्धो वृक्ष

भूतः पिण्डीभूतः। लगण्डोऽजगर इत्येके। विक्लवः विकृतशरीरः। रामतेजसा प्रशान्त इत्यन्वयः॥ ६—१०॥ मम बान्धवानां च शल्यं शोकमित्यर्थः



पितृव्यं निहतं दृष्ट्वा देवान्तकनरान्तकौ। त्रिशिराश्चातिकायश्च रुरुदुः शोकपीडिताः॥ ७॥ भ्रातरं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा। महोदरमहापार्श्वौ शोकाक्रान्तौ बभूवतुः॥ ८॥ ततः कृच्छ्रात् समासाद्य संज्ञां राक्षसपुङ्गवः। कुम्भकर्णवधाद्दीनो विललाप स रावणः॥ ९॥ हा वीर रिपुदर्पघ्न कुम्भकर्ण महाबल। त्वं मां विहाय वै दैवा द्यातोऽसि यमसादनम्॥ १०॥ मम शल्यमनुद्धृत्य बान्धवानां महाबल। शत्रुसैन्यं प्रताप्यैकस्त्वं मां सन्त्यज्य गच्छसि॥ ११॥ इदानीं खल्वहं नास्मि यस्य मे दक्षिणो भुजः। पतितो यं समाश्रित्य न बिभेमि सुरासुरात्॥ १२॥ कथमेवंविधो वीरो देवदानवदर्पहा। कालाग्निरुद्रप्रतिमो रणे रामेण वै हतः॥ १३॥ यस्य ते वज्रनिष्पेषो न कुर्याद्व्यसनं सदा। स कथं रामबाणार्तः प्रसुप्तोऽसि महीतले॥ १४॥ एते देवगणाः सार्धमृषिभिर्गगने स्थिताः। निहतं त्वां रणे दृष्ट्वा निनदन्ति प्रहर्षिताः॥ १५॥

॥ ११॥ इदानींमिति। सुरासुरात् सुरासुरेभ्यः॥ १२—१५॥

इव लगण्डभूतः पिण्डीभूतः अजगरसदृशो वा। "लगण्डोऽजगरो ज्ञेयः" इति जयदेवः। विक्लवः विकृतशरीरः। अर्धप्रविष्टेन कायेन समुद्रं रुद्ध्वा शरीरेण शरीरोपरिभागेन लङ्काया द्वारं रुद्ध्वा रामतेजसा प्रशान्त इत्यन्वयः॥ ६—११॥ सुरासुरात् सुरासुरेभ्यः॥ १२—१५॥

स०—मम शल्यं रामरूपम्। बान्धवानां मध्ये महाबल! 'बान्धवानां च शल्यमनुद्धृत्येत्यन्वयः' इति नागोजिभट्टव्याख्यायामश्रुतचशब्दाध्याहार एव मम शल्यमित्यनेन मुख्यरावणशल्येन सशल्याना मनुष्याणां पृथग्ग्रहणायोगश्चेति दोषौ प्रादुःष्यातामिति ज्ञेयम्॥११॥ अहं ना पुमान् नास्मि, नपुंसकप्राय इत्यर्थः। सुरासुरात् सुराश्चासुराश्च सुरासुरम् तस्मात्। "येषां च विरोधः शाश्वतिकः" इत्येकवद्भावः। समाहारो वा। नेत्यावर्तते न बिभेमि। नास्मि मृतप्राय इति वा॥ १२॥ दर्पहा दर्पं हन्ति हनिष्यति वा दर्पहा। "नियमे भूत इत्याश्रयणाद्वर्तमाने भविष्यति वा काले चोपपदान्तरेऽपि भवत्येव पुरुषं हन्ति हनिष्यति वा" इति तत्त्वबोधिन्युक्तेः। प्रकृतिनियमपक्षे अदेवदानवदर्प! न विद्यते देवदानवानां दर्पो येन तत्सम्बुद्धिः अदेवदानवदर्प! हा शोकप्रकाशकः शब्दः॥ १३॥

लब्धलक्षाः लब्धावसराः ॥ १६ ॥ १७ ॥ भ्रातृहन्तारं न हन्मि यदि तदा इदं व्यर्थजीवितं श्रेयः न च, नैवेत्यर्थः। किन्तु मरणमेव श्रेयो नन्विति



ध्रुवमद्यैव संहृष्टा लब्धलक्षाः प्लवङ्गमाः। आरोक्ष्यन्ति हि दुर्गाणि लङ्काद्वाराणि सर्वशः ॥ १६ ॥ राज्येन नास्ति मे कार्यं किं करिष्यामि सीतया। कुम्भकर्णविहीनस्य जीविते नास्ति मे रतिः ॥ १७ ॥ यद्यहं भ्रातृहन्तारं न हन्मि युधि राघवम्। ननु मे मरणं श्रेयो न चेदं व्यर्थजीवितम् ॥ १८ ॥ अद्यैव तं गमिष्यामि देशं यत्रानुजो मम। नहि भ्रातॄन् समुत्सृज्य क्षणं जीवितुमुत्सहे ॥ १९ ॥ देवा हि मां हसिष्यन्ति दृष्ट्वा पूर्वापकारिणम्। कथमिन्द्रं जयिष्यामि कुम्भकर्ण हते त्वयि ॥२०॥ तदिदं मामनुप्राप्तं विभीषणवचः शुभम्। यदज्ञानान्मया तस्य न गृहीतं महात्मनः ॥ २१ ॥ विभीषणवचो यावत् कुम्भकर्णप्रहस्तयोः। विनाशोऽयं समुत्पन्नो मां व्रीडयति दारुणः ॥२२॥ तस्यायं कर्मणः प्राप्तो विपाको मम शोकदः। यन्मया धार्मिकः श्रीमान् स निरस्तो विभीषणः॥२३॥

सम्बन्धः ॥ १८ ॥ भ्रातॄनिति बहुवचनं पूजार्थम् ॥ १९–२१ ॥ विभीषणेति। कुम्भकर्णप्रहस्तयोरयं दारुणो विनाशः यावत् यदा समुत्पन्नः तत

ध्रुवमिति। लब्धलक्षाः लब्धावसरा इत्यर्थः ॥ १६ ॥१७॥ यद्यहमिति। भ्रातृहन्तारं न हन्मि यदि तदा इदं व्यर्थजीवितं श्रेयो न च, नैवेत्यर्थः। किन्तु मरणमेव श्रेयो नन्विति सम्बन्धः। यद्यहमित्यस्य वास्तवार्थस्तु–भ्रातृहन्तारं हत्वा सुखेन जीवेयमित्यत आह–यदीति। भ्रातृहन्तारं राघवं हन्मि यदि तदा मे मम मरणं नास्ति, अत एव श्रेयः मरणानन्तरभाविभगवत्पार्षदताप्राप्तिरूपश्रेयश्च नास्ति, अत एवेदं जीवितं व्यर्थमिति सम्बन्धः॥१८॥ अद्यैवेति। भ्रातॄनिति बहुवचनं पूजायाम् ॥१९–२१॥ विभीषणवच इति। प्रहस्तकुम्भकर्णयोर्दारुणोऽयं विनाशो यावत् यदा समुत्पन्नस्तत आरभ्य विभीषणवचो व्रीडयतीति सम्बन्धः ॥ २२ ॥२३॥



स०–भ्रातॄन् इति। एकस्य मुख्यस्य भ्रातुर्गमनेनानेकप्रकारेण स्वदौर्बल्यमायातमिति द्योतयति बहुवचनेन। खरादीन् मृतान् स्मृत्वा वा विभीषणकुबेराभ्यां बहिष्कृताभ्यां सह मृतमेकं संस्मृत्य वा बहुवचनम्। उत्सृज्यपदस्वारस्यादिवोत्तरत्र 'स निरस्तो विभीषणः' इति तदनुतापस्वारस्याच्च ॥ १९ ॥

आरभ्य विभीषणवचो मां व्रीडयति पीडयतीत्यर्थः ॥ २२-२४ ॥ इति श्रीगोविन्द॰श्रीरामा॰रत्न॰युद्धकाण्डव्याख्याने अष्टषष्टितमः सर्गः ॥ ६८॥

अथातिकायनिर्गमः--एवमित्यादि ॥ १ ॥ एवमिति। तातमध्यमः तातेषु मध्यमः, मध्यमपितेत्यर्थः । एवमेव महावीर्यः त्वदुक्तप्रकारेणैव महावीर्यः

इति बहुविधमाकुलान्तरात्मा कृपणमतीव विलप्य कुम्भकर्णम् । न्यपतदथ दशाननो भृशार्तस्तमनुजमिन्द्ररिपुं हतं विदित्वा ॥ २४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

एवं विलपमानस्य रावणस्य दुरात्मनः । श्रुत्वा शोकाभितप्तस्य त्रिशिरा वाक्यमब्रवीत् ॥ १ ॥ एवमेव महावीर्यो हतो नस्तातमध्यमः । न तु सत्पुरुषा राजन् विलपन्ति यथा भवान् ॥ २ ॥ नूनं त्रिभुवनस्यापि पर्याप्तस्त्वमसि प्रभो । स कस्मात् प्राकृत इव शोचस्यात्मानमीदृशम् ॥ ३ ॥ ब्रह्मदत्ताऽस्ति ते शक्तिः कवचः सायको धनुः । सहस्रखरसंयुक्तो रथो मेघस्वनो महान् ॥ ४ ॥ त्वयाऽसकृद्विशस्त्रेण विशस्ता देवदानवाः । स सर्वायुधसम्पन्नो राघवं शास्तुमर्हसि ॥ ५ ॥ कामं तिष्ठ महाराज निर्गमिष्याम्यहं रणम् । उद्धरिष्यामि ते शत्रून् गरुडः पन्नगानिव ॥६॥ शम्बरो देवराजेन नरको विष्णुना यथा । तथाऽद्य शयिता रामो मया युधि निपातितः ॥ ७ ॥ श्रुत्वा त्रिशिरसो वाक्यं रावणो राक्षसाधिपः । पुनर्जातमिवात्मानं मन्यते कालचोदितः ॥ ८ ॥

हतः, दैवादिति शेषः ॥ २ ॥ ईदृशमिति शोकक्रियाविशेषणम् । आत्मानम्, उद्दिश्येति शेषः ॥ ३ ॥ ब्रह्मदत्तेत्यादिश्लोकद्वयमेकान्वयम् । विशस्त्रेण निरायुधेन ॥ ४--६॥ शम्बर इति । नरकोऽत्र सिंहिकायां विप्रचित्तेर्जातेषु वातापिप्रमुखेष्वन्यतमः । "वातापिर्नमुचिश्चैव इल्वलः सृमरस्तथा । अन्धको नरकश्चैव कालनाभस्तथैव च ॥ " इत्युक्तेः । न तु कृष्णहतो भूसुतो नरकासुरः । तस्य वाल्मीकिप्रबन्धनिर्माणकाले असञ्जातत्वात् ॥ ७ ॥ ८ ॥

हतीति । कुम्भकर्णं हतं 'निकृत्तकण्ठोरुभुजः' इत्याद्युक्तप्रकारेण विचित्रवधं प्राप्तं विदित्वा बहु विलप्य न्यपतदिति सम्बन्धः ॥ २४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् अष्टषष्टितमः सर्गः ॥ ६८ ॥ १ ॥ एवमेव महावीर्यः 'देवदानवदर्पहा । कालाग्निरुद्रप्रतिमः' इत्याद्युक्तप्रकारेण महावीर्यः हतः , दैवादिति शेषः । सत्पुरुषाः शूराः ॥ २-६ ॥ शम्बर इति । नरको विष्णुना यथा, अयं नरकः सिंहिकायां विप्रचित्तेर्जातेषु पुत्रेष्वन्यतमः । तदुक्तं विष्णुपुराणे-" वातापिर्नमुचिश्चैव इल्वलः सृमरस्तथा । अन्धको नरकश्चैव कालनाभस्तथैव च ॥ " इति स उच्यते । नतु यदुनायकेन

श्रुत्वेति । त्रिशिरसो वचनं स्वेषामपि तुल्यत्वाद्देवान्तकादयोऽपि युद्धोद्युक्ता बभूवुरित्यर्थः॥९॥१०॥ अन्तरिक्षे गतं गमनं येषां तेऽन्तरिक्षगताः॥११॥ देवादिभिः सह समरमासाद्य पराजिता न श्रूयन्त इत्यन्वयः ॥१२॥ विदुषः विद्यावन्तः । प्रवरविज्ञानाः उत्कृष्टशास्त्रज्ञानाः ॥१३ ॥ तुल्यवर्चसैरित्यत्र

श्रुत्वा त्रिशिरसो वाक्यं देवान्तकनरान्तकौ । अतिकायश्च तेजस्वी बभूवुर्युद्धहर्षिताः ॥ ९ ॥ ततोऽहमहमित्येव गर्जन्तो नैर्ऋतर्षभाः । रावणस्य सुता वीराः शक्रतुल्यपराक्रमाः ॥१०॥ अन्तरिक्षगताः सर्वे सर्वे मायाविशारदाः । सर्वे त्रिदशदर्पघ्नाः सर्वे च रणदुर्जयाः ॥ ११ ॥ सर्वे सुबलसम्पन्नाः स[illegible] [illegible]र्णकीर्तयः । सर्वे समरमासाद्य न श्रूयन्ते पराजिताः । देवैरपि सगन्धर्वैः सकिन्नरमहोरगैः ॥ १२ ॥ सर्वे च वि[illegible]ा वीराः सर्वे युद्धविशारदाः । सर्वे प्रवरविज्ञानाः सर्वे लब्धवरास्तथा ॥ १३ ॥ स तैस्तदा भास्करतुल्यवर्चसैः सुतैर्वृतः शत्रुबलप्रमर्दनैः । रराज राजा मघवान् यथाऽमरैर्वृतो महादानवदर्पनाशनैः ॥ १४ ॥ स [illegible]ान् सम्परिष्वज्य भूषयित्वा च भूषणैः । आशीर्भिश्च प्रशस्ताभिः प्रेषयामास संयुगे ॥ १५ ॥ युद्धोन्मत्तं च म[illegible] च भ्रातरौ चापि रावणः । रक्षणार्थं कुमाराणां प्रेषयामास संयुगे ॥ १६ ॥ तेऽभिवाद्य महात्मानं रावणं रिपुरावणम् । कृत्वा प्रदक्षिणं चैव महाकायाः प्रतस्थिरे ॥१७॥ सर्वौषधीभिर्गन्धैश्च समालभ्य महाबलाः । निर्जग्मुर्नैर्ऋतश्रेष्ठाः षडेते युद्धकाङ्क्षिणः ॥ १८ ॥

समासान्त आर्षः ॥ १४ ॥ स इति । आशीर्भिः, सहेति शेषः ॥ १५ ॥ युद्धोन्मत्तमिति । [illegible]त्र युद्धोन्मत्तमत्तौ महोदरमहापार्श्वपर्यायनामानौ रावणभ्रातरौ । एतौ परत्र प्रकाशयिष्येते ॥ १६ ॥ रिपून् रावयतीति रिपुरावणः ॥ १७ ॥ सर्वौष[illegible]भिः " कोष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दने ।



इतो भौमः । शम्बर इत्यस्य वास्तवार्थस्तु–अरामे इति छेदः । अरामो रामव्यतिरिक्तः कश्चनाथ यथा युद्धे निपातितः शयिता । रामस्यासाध्यत्वादिति भावः ॥ ७–१० ॥ अन्तरिक्षगताः अन्तरिक्षे गतं गमनं येषां ते ॥ ११–१५ ॥ युद्धोन्मत्तमत्तशब्दौ महोदरमहापार्श्वयोः पर्यायनामनी ॥ १६–१७ ॥ सर्वौषधीभिरिति ।

त्वचाचम्पकमुस्ताश्च सर्वौषध्यो दश स्मृताः ॥ ” इत्युक्ताभिः आयुधप्रहारनिवर्तिकाभिः ओषधीभिरित्याहुः । समालभ्य समालिप्य ॥ १८–२० ॥



अस्तमूर्धनीत्येतदुत्तरक्षणे विनाशसूचनाय॥२१–२३॥ त्रिभिः काञ्चनपर्वतैः शिखरभूतैर्हिमवानिवेत्यर्थः॥२४॥ अतिकाय इत्यादिश्लोकद्वयमेकान्वयम् ।

त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ । महोदरमहापार्श्वौ निर्जग्मुः कालचोदिताः ॥ १९ ॥ ततः सुदर्शनं नाम नीलजीमूतसन्निभम् । ऐरावतकुले जातमारुरोह महोदरः ॥ २० ॥ सर्वायुधसमायुक्तं तूणीभिश्च स्वलंकृतम् । रराज गजमास्थाय सवितेवास्तमूर्धनि ॥ २१ ॥ हयोत्तमसमायुक्तं सर्वायुधसमाकुलम् । आरुरोह रथश्रेष्ठं त्रिशिरा रावणात्मजः ॥ २२ ॥ त्रिशिरा रथमास्थाय विरराज धनुर्धरः । सविद्युदुल्कः शैलाग्रे सेन्द्रचाप इवाम्बुदः ॥ २३ ॥ त्रिभिः किरीटैः शुशुभे त्रिशिराः स रथोत्तमे । हिमवानिव शैलेन्द्रस्त्रिभिः काञ्चनपर्वतैः ॥ २४ ॥ अतिकायोऽपि तेजस्वी राक्षसेन्द्रसुतस्तदा । आरुरोह रथश्रेष्ठं श्रेष्ठः सर्वधनुष्मताम् ॥ २५ ॥ सुचक्राक्षं सुसंयुक्तं स्वनुकर्षं सुकूबरम् । तूणीबाणासनैर्दीप्तं प्रासासिपरिघाकुलम् ॥२६॥ स काञ्चनविचित्रेण मुकुटेन विराजता । भूषणैश्च बभौ मेरुः किरणैरिव भासयन् ॥ २७ ॥ स रराज रथे तस्मिन् राजसूनुर्महाबलः । वृतो नैर्ऋतशार्दूलैर्वज्रपाणिरिवामरैः ॥ २८ ॥ हयमुच्चैःश्रवःप्रख्यं श्वेतं कनकभूषणम् । मनोजवं महाकायमारुरोह नरान्तकः ॥ २९ ॥ गृहीत्वा प्रासमुल्काभं विरराज नरान्तकः । शक्तिमादाय तेजस्वी गुहः शिखिगतो यथा ॥ ३० ॥

सुसंयुक्तं सुदृढम् । स्वनुकर्षम् । “अनुकर्षो दार्वधःस्थम्” इत्यमरः । सुकूबरं शोभनयुगंधरम् । “कूबरस्तु युगन्धरः ” इत्यमरः ॥२५॥२६ ॥ किरणैः

ओषधीभिः आयुधप्रहारनिवारकौषधविशेषैः । ओषधयस्तु–“ कोष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दने । त्वचाचम्पकमुस्ताश्च सर्वौषध्यो दश स्मृताः ॥” इति ॥ १८–२३ ॥ त्रिभिरिति । त्रिभिः काञ्चनपर्वतैः शिखरभूतैः हिमवानिवेत्यर्थः ॥ २४ ॥ २५ ॥ सुचक्राक्षमिति । स्वनुकर्षम् “अनुकर्षो दार्वधःस्थम् ” इत्यमरः । सुकूबरं शोभनयुगन्धरम् ॥ २६–३० ॥

भासयन् भासमानः मेरुरिव बभावित्यन्वयः ॥ [illegible] सम्बध्यते । देवान्तकः परिघमादाय समुद्रमथने गिरिं मन्दरगिरिम् परिगृह्य तिष्ठतो विष्णोर्वपुर्विडम्बयन् विरराज ॥ ३१–३६ ॥ मरणं वेत्यर्धे निर्जग्मुरित्युपस्कार्यम् ॥ ३७ ॥ इति कृत्वेत्यर्धम् । इत्थं





देवान्तकः समादाय परिघं वज्रभूषणम् । परिगृह्य गिरिं दोर्भ्यां वपुर्विष्णोर्विडम्बयन् ॥ ३१ ॥ महापार्श्वो महाकायो गदामादाय वीर्यवान् । विरराज गदापाणिः कुबेर इव संयुगे ॥ ३२ ॥ प्रतस्थिरे महात्मानो बलैरप्रतिमैर्वृताः । सुरा इवामरावत्या बलैरप्रतिमैर्वृताः ॥ ३३ ॥ तान् गजैश्च तुरङ्गैश्च रथैश्चाम्बुदनिस्वनैः । अनुजग्मुर्महात्मानो राक्षसाः प्रवरायुधाः ॥ ३४ ॥ ते विरेजुर्महात्मानः कुमाराः सूर्यवर्चसः । किरीटिनः श्रिया जुष्टा ग्रहा दीप्ता इवाम्बरे ॥ ३५ ॥ प्रगृहीता बभौ तेषां शस्त्राणामावलिः सिता । शारदाभ्रप्रतीकाशा हंसावलिरिवाम्बरे ॥ ३६ ॥ मरणं वापि निश्चित्य शत्रूणां वा पराजयम् ॥ ३७ ॥ इति कृत्वा मतिं वीरा निर्जग्मुः संयुगार्थिनः ॥ ३८ ॥ जगर्जुश्च प्रणेदुश्च चिक्षिपुश्चापि सायकान् । जगृहुश्चापि ते वीरा निर्यान्तो युद्धदुर्मदाः ॥३९॥ क्ष्वेलितास्फोटनिनदैश्चचाल च वसुन्धरा । रक्षसां सिंहनादैश्च पुस्फोटेव तदाऽम्बरम् ॥४०॥ तेऽभिनिष्क्रम्य मुदिता राक्षसेन्द्रा महाबलाः । ददृशु र्वानरानीकं समुद्यतशिलानगम् ॥४१॥ हरयोऽपि महात्मानो ददृशुर्नैर्ऋतं बलम् । हस्त्यश्वरथसम्बाधं किङ्किणीशतनादितम् ॥ ४२ ॥ नीलजीमूतसङ्काशं समुद्यतमहायुधम् । दीप्तानलरविप्रख्यैः सर्वतो नैर्ऋतैर्वृतम् ॥ ४३ ॥

कर्तव्यमित्येवंरूपां मतिं कृत्वेत्यर्थः ॥ ३८ ॥ जगर्जुः मेघध्वनिं चक्रुः । प्रणेदुः सिंहनादं चक्रुः । चिक्षिपुः क्षेपवचनान्यूचुः । सायकान् जगृहु



देवान्तक इत्यत्रापि विरराजेति सम्बध्यते । परिघं परिगृह्य समुद्रमथने मन्दरगिरिं परिगृह्य स्थितस्य विष्णोर्वपुर्विडम्बयन् रराजेत्यर्थः ॥ ३१–३६ ॥ मरणं स्वमरणं वा शत्रूणां पराजयं वा भवत्विति मतिं कृत्वा [illegible] ॥ ३७ ॥ ३८ ॥ चिक्षिपुः शत्रुविषये आक्षेपवचनान्यूचुः ॥ ३९–४१ ॥

रित्यन्वयः ॥३९—४३ ॥ लब्धलक्षाः लब्धपराक्रमविषयाः ॥४४—४६॥ सञ्चारप्रकारमेवाह—केचिदित्यादिसार्धश्लोक एकान्वयः । द्रुमशिलायुधाः इति



तद् दृष्ट्वा बलमायान्तं लब्धलक्षाः प्लवङ्गमाः । समुद्यतमहाशैलाः सम्प्रणेदुर्महाबलाः । अमृष्यमाणा रक्षांसि प्रतिनर्दन्ति वानराः ॥ ४४ ॥ ततः समुद्घुष्टरवं निशम्य रक्षोगणा वानरयूथपानाम् । अमृष्यमाणाः परहर्षमुग्रं महाबला भीमतरं विनेदुः ॥ ४५ ॥ ते राक्षसबलं घोरं प्रविश्य हरियूथपाः । विचेरुरुद्यतैः शैलैर्नगाः शिखरिणो यथा ॥ ४६ ॥ केचिदाकाशमाविश्य केचिदुर्व्यां प्लवङ्गमाः । रक्षस्सैन्येषु संक्रुद्धाश्चेरुर्द्रुमशिलायुधाः ॥ ४७ ॥ द्रुमांश्च विपुलस्कन्धान् गृह्य वानरपुङ्गवाः । तद्युद्धमभवद् घोरं रक्षोवानरसङ्कुलम् ॥ ४८ ॥ ते पादपशिलाशैलैश्चक्रुर्वृष्टिमनूपमाम् । बाणौघैर्वार्यमाणाश्च हरयो भीमविक्रमाः ॥४९॥ सिंहनादान् विनेदुश्च रणे वानरराक्षसाः । शिलाभिश्चूर्णयामासुर्यातुधानान् प्लवङ्गमाः ॥ ५० ॥ निजघ्नुः संयुगे क्रुद्धाः कवचाभरणावृतान् । केचिद्रथगतान् वीरान् गजवाजिगतानपि ॥५१॥ निजघ्नुः सहसाऽऽप्लुत्य यातुधानान् प्लवङ्गमाः । शैलशृङ्गाचिताङ्गाश्च मुष्टिभिर्वान्तलोचनाः ॥ ५२ ॥ चेरुः पेतुश्च नेदुश्च तत्र राक्षसपुङ्गवाः । राक्षसाश्च शरैस्तीक्ष्णैर्बिभिदुः कपिकुञ्जरान् ॥५३॥ शूलमुद्गरखड्गैश्च जघ्नुः प्रासैश्च शक्तिभिः । अन्योन्यं पातयामासुः परस्परजयैषिणः ॥५४॥ रिपुशोणितदिग्धाङ्गास्तत्र वानरराक्षसाः । ततः शैलैश्च खड्गैश्च विसृष्टैर्हरिराक्षसैः ॥ ५५ ॥ मुहूर्तेनावृता भूमिरभवच्छोणिताप्लुता । विकीर्णपर्वताकारै रक्षोभिररिमर्दनैः । आसीद्वसुमती पूर्णा तदा युद्धमदान्वितैः ॥ ५६ ॥

स्वभावोक्तिः ॥ ४७ ॥ ४८ ॥ अनूपमाम् अनुपमाम् ॥ ४९—५६ ॥

केचिदित्यादि सार्धश्लोकमेकं वाक्यम् । द्रुमशिलायुधा इति स्वभावोक्तिः । रक्षस्सैन्येषु विषये । संक्रुद्धाः केचित्प्लवङ्गमाः द्रुमशिलायुधास्सन्तः आकाशमाविश्य चेरुः केचिद्वानरपुङ्गवाः विपुलस्कन्धान् द्रुमान् गृह्य गृहीत्वा उर्व्यां चेरुरिति योजना ॥ ४७—५१ ॥ शैलशृङ्गाचिताङ्गाः गिरिशिखरैर्व्याप्तदेहाः । मुष्टिभिः मुष्टिप्रहारैः वान्तलोचनाः बहिर्निर्गतलोचनाः ॥ ५२—५६ ॥

आक्षिप्ताः क्षिप्यमाणाश्चेति नियुद्धप्रकारकथनम् । अङ्गैः हस्तपादादिभिः ॥ ५७–६० ॥ छिन्नेति । छिन्नवर्मतनुत्राणाः छिन्नवर्मरूपतनुत्राणाः । रुधिरं प्रस्नुताः स्नुतवन्तः । मुमुचुरिति यावत् । रससारं निर्यासम् ॥ ६१–६४ ॥ क्षुरप्रैरिति । शिलाः शिलाश्चेत्यर्थः ॥ ६५ ॥ ६६ ॥ गर्वितं हृष्टं च



आक्षिप्ताः क्षिप्यमाणाश्च भग्नशूलाश्च वानरैः । पुनरङ्गैस्तथा चक्रुरासन्ना युद्धमद्भुतम् ॥ ५७ ॥ वानरान् वानरैरेव जघ्नुस्ते रजनीचराः । राक्षसान् राक्षसैरेव जघ्नुस्ते वानरा अपि ॥ ५८ ॥ आक्षिप्य च शिलास्तेषां निजघ्नू राक्षसा हरीन् । तेषां चाच्छिद्य शस्त्राणि जघ्नू रक्षांसि वानराः ॥५९॥ निजघ्नुः शैलशूलास्त्रैर्बिभिदुश्च परस्परम् । सिंहनादान् विनेदुश्च रणे वानरराक्षसाः ॥ ६० ॥ छिन्नवर्मतनुत्राणा राक्षसा वानरैर्हताः । रुधिरं प्रस्नुतास्तत्र रससारमिव द्रुमाः ॥ ६१ ॥ रथेन च रथं चापि वारणेनैव वारणम् ॥ ६२ ॥ हयेन च हयं केचिन्निजघ्नुर्वानरा रणे । प्रहृष्टमनसः सर्वे प्रगृहीतमनःशिलाः ॥६३॥ हरयो राक्षसान् जघ्नुर्द्रुमैश्च बहुशाखिभिः । तद्युद्धमभवद् घोरं रक्षोवानरसङ्कुलम् ॥ ६४ ॥ क्षुरप्रैरर्धचन्द्रैश्च भल्लैश्च निशितैः शरैः । राक्षसा वानरेन्द्राणां चिच्छिदुः पादपान् शिलाः ॥ ६५ ॥ विकीर्णैः पर्वताग्रैश्च द्रुमैश्छिन्नैश्च संयुगे । हतैश्च कपिरक्षोभिर्दुर्गमा वसुधाऽभवत् ॥ ६६ ॥ ते वानरा गर्वितहृष्टचेष्टाः सङ्ग्राममासाद्य भयं विमुच्य । युद्धं तु सर्वे सह राक्षसैस्तैर्नानायुधाश्चक्रुरदीनसत्त्वाः॥६७॥ तस्मिन् प्रवृत्ते तुमुले विमर्दे प्रहृष्यमाणेषु वलीमुखेषु । निपात्यमानेषु च राक्षसेषु महर्षयो देवगणाश्च नेदुः ॥६८॥ ततो हयं मारुततुल्यवेगमारुह्य शक्तिं निशितां प्रगृह्य । नरान्तको वानरराजसैन्यं महार्णवं मीन इवाविवेश॥६९॥



यथा भवति तथा चेष्टन्त इति गर्वितहृष्टचेष्टाः । नानायुधाः गृहीतराक्षसायुधा इत्यर्थः ॥ ६७ ॥ विमर्दे युद्धे ॥ ६८ ॥ ६९ ॥



आक्षिप्ताः क्षिप्यमाणा इति नियुद्धप्रकारकथनम् । अङ्गैः हस्तपादादिभिः ॥ ५७–६० ॥ रससारं निर्यासम् ॥ ६१–७१ ॥

जघानेति । इत्थमिति शेषः ॥ ७०–७३ ॥ ज्वलन्तं ज्वलन्तमिव स्थितम् । विभावसुः वह्निः ॥ ७४ ॥ ७५ ॥ प्रमृद्नन् मर्दयन् ॥ ७६ ॥ न शेकुरिति ।

स वानरान् सप्त शतानि वीरः प्रासेन दीप्तेन विनिर्बिभेद । एकक्षणेनेन्द्ररिपुर्महात्मा जघान सैन्यं हरिपुङ्गवानाम् ॥ ७० ॥ ददृशुश्च महात्मानं हयपृष्ठे प्रतिष्ठितम् । चरन्तं हरिसैन्येषु विद्याधरमहर्षयः ॥ ७१ ॥ स तस्य ददृशे मार्गो मांसशोणितकर्दमः । पतितैः पर्वताकारैर्वानरैरभिसंवृतः ॥७२॥ यावद्विक्रमितुं बुद्धिं चक्रुः प्लवगपुङ्गवाः । तावदेतानतिक्रम्य निर्बिभेद नरान्तकः ॥ ७३ ॥ ज्वलन्तं प्रासमुद्यम्य सङ्ग्रामाग्रे नरान्तकः । ददाह हरिसैन्यानि वनानीव विभावसुः ॥ ७४ ॥ यावदुत्पाटयामासुर्वृक्षान् शैलान् वनौकसः । तावत् प्रासहताः पेतुर्वज्रकृत्ता इवाचलाः ॥ ७५ ॥ दिक्षु सर्वासु बलवान् विचचार नरान्तकः । प्रमृद्नन् सर्वतो युद्धे प्रावृट्काले यथाऽनिलः ॥ ७६ ॥ न शेकुर्धावितुं वीरा न स्थातुं स्पन्दितुं भयात् । उत्पतन्तं स्थितं यान्तं सर्वान् विव्याध वीर्यवान् ॥७७॥ एकेनान्तककल्पेन प्रासेनादित्यतेजसा । भिन्नानि हरिसैन्यानि निपेतुर्धरणीतले ॥ ७८ ॥ वज्रनिष्पेषसदृशं प्रासस्याभिनिपातनम् । न शेकुर्वानराः सोढुं ते विनेदुर्महास्वनम् ॥ ७९ ॥ पततां हरिवीराणां रूपाणि प्रचकाशिरे । वज्रभिन्नाग्रकूटानां शैलानां पतताम् इव ॥८०॥ ये तु पूर्वं महात्मानः कुम्भकर्णेन पातिताः । ते स्वस्था वानरश्रेष्ठाः सुग्रीवमुपतस्थिरे ॥ ८१ ॥ विप्रेक्षमाणः सुग्रीवो ददर्श हरिवाहिनीम् । नरान्तकभयत्रस्तां विद्रवन्तीमितस्ततः ॥ ८२ ॥ विद्रुतां वाहिनीं दृष्ट्वा स ददर्श नरान्तकम् । गृहीतप्रासमायान्तं हयपृष्ठे प्रतिष्ठितम् ॥ ८३ ॥ अथोवाच महातेजाः सुग्रीवो वानराधिपः । कुमारमङ्गदं वीरं शक्रतुल्यपराक्रमम् ॥ ८४ ॥

यतो हेतोरुत्पतन्तं स्थितं यान्तं च विव्याध अतः स्पन्दनादौ न शेकुरित्यर्थः ॥ ७७–८० ॥ कुम्भकर्णेन पातितानां नीलादीनामुत्तरत्र पौरुष स इति । तस्य मार्गः तेन युद्धार्थं गतो मार्ग इत्यर्थः । पतितैर्वानरैरभिसंवृतस्तस्य मांसशोणितकर्दमस्तत्र दृष्ट इति सम्बन्धः ॥ ७२–८६॥

कथनसाङ्गत्यायैषां लब्धसंज्ञत्वमाह—ये त्विति ॥ ८१–८५ ॥ स इति । मेघसङ्काशादिति निबिडत्वलक्षणसमानधर्मप्रयुक्तेयमुपमा । मेघानीकादित्यत्र





गच्छ त्वं राक्षसं वीरो योऽसौ तुरगमास्थितः । क्षोभयन्तं हरिबलं क्षिप्रं प्राणैर्वियोजय ॥ ८५ ॥ स भर्तुर्वचनं श्रुत्वा निष्पपाताङ्गदस्ततः । अनीकान्मेघसङ्काशान्मेघानीकादिवांशुमान् ॥ ८६ ॥ शैलसङ्घातसङ्काशो हरीणामुत्तमोऽङ्गदः । रराजाङ्गदसन्नद्धः सधातुरिव पर्वतः ॥ ८७ ॥ निरायुधो महातेजाः केवलं नखदंष्ट्रवान् । नरान्तकमभिक्रम्य वालिपुत्रोऽब्रवीद्वचः ॥ ८८ ॥ तिष्ठ किं प्राकृतैरेभिर्हरिभिस्त्वं करिष्यसि । अस्मिन् वज्रसमस्पर्शं प्रासं क्षिप ममोरसि ॥ ८९ ॥ अङ्गदस्य वचः श्रुत्वा प्रचुक्रोध नरान्तकः । सन्दश्य दशनैरोष्ठं विनिश्वस्य भुजङ्गवत् ॥ ९० ॥ अभिगम्याङ्गदं क्रुद्धो वालिपुत्रं नरान्तकः ॥ ९१ ॥ प्रासं समाविध्य तदाऽङ्गदाय समुज्ज्वलन्तं सहसोत्ससर्ज । स वालिपुत्रोरसि वज्रकल्पे बभूव भग्नो न्यपतच्च भूमौ ॥ ९२ ॥ तं प्रासमालोक्य तदा विभग्नं सुपर्णकृत्तोरगभोगकल्पम् । तलं समुद्यम्य स वालिपुत्रस्तुरङ्गमं तस्य जघान मूर्ध्नि ॥ ९३ ॥ निमग्नतालुः स्फुटिताक्षितारो निष्क्रान्तजिह्वोऽचलसन्निकाशः । स तस्य वाजी निपपात भूमौ तलप्रहारेण विशीर्णमूर्धा ॥ ९४ ॥ नरान्तकः क्रोधवशं जगाम हतं तुरङ्गं पतितं निरीक्ष्य । स मुष्टिमुद्यम्य महाप्रभावो जघान शीर्षे युधि वालिपुत्रम् ॥ ९५ ॥ अथाङ्गदो मुष्टिविभिन्नमूर्धा सुस्राव तीव्रं रुधिरं भृशोष्णम् । मुहुर्विजज्वाल मुमोह चापि संज्ञां समासाद्य विसिष्मिये च ॥ ९६ ॥ अथाङ्गदो वज्रसमानवेगं संवर्त्य मुष्टिं गिरिशृङ्गकल्पम् । निपातयामास तदा महात्मा नरान्तकस्योरसि वालिपुत्रः ॥ ९७ ॥

तु निष्क्रमणापादानत्वधर्मप्रयुक्तेत्युपमाद्वयस्य निर्वाहः ॥ ८६ ॥ शैलेति । सङ्घातः निबिडसंवेशः । अङ्गदसन्नद्धः सन्नद्धाङ्गदः ॥ ८७–९० ॥ अभिगम्येति । अयमुत्तरशेषः ॥ ९१–९७ ॥



अङ्गदसन्नद्धः सन्नद्धाङ्गदः ॥८७–९०॥ अभिगम्याङ्गदमित्यादिसार्धश्लोकमेकं वाक्यम् । वालिपुत्रमभिगम्य प्रासमुत्ससर्ज, स भूमौ न्यपतदिति सम्बन्धः ॥९१–९७॥

स मुष्टीति । ज्वालारूपेण वमता उद्गच्छता शोणितेन दिग्धगात्रः ॥ ९८ ॥ ९९ ॥ अथेति । तत् कृतवानित्यत्र तदित्यव्ययं पदम् । तस्मादित्यर्थः । अङ्गदः हि यस्मात् सुदुष्करम् अत एव राममनःप्रहर्षणं विक्रमं कृतवान् । तस्मादित्यर्थः । विसिष्मिये सोऽपीत्यत्र तच्छब्देन राममनःप्रहर्षण



स मुष्टिनिष्पिष्टविभिन्नवक्षा ज्वालावमच्छोणितदिग्धगात्रः । नरान्तको भूमितले पपात यथाऽचलो वज्रनिपात भग्नः ॥ ९८ ॥ अथान्तरिक्षे त्रिदशोत्तमानां वनौकसां चैव महाप्रणादः । बभूव तस्मिन्निहतेऽग्र्यवीरे नरान्तके वालिसुतेन सङ्ख्ये ॥ ९९ ॥ अथाङ्गदो राममनःप्रहर्षणं सुदुष्करं तत् कृतवान् हि विक्रमम् । विसिष्मिये सोऽप्यति वीर्यविक्रमः पुनश्च युद्धे स बभूव हर्षितः ॥ १०० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्ध काण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

नरान्तकं हतं दृष्ट्वा चुक्रुशुर्नैर्ऋतर्षभाः । देवान्तकस्त्रिमूर्धा च पौलस्त्यश्च महोदरः ॥ १ ॥
आरूढो मेघसङ्काशं वारणेन्द्रं महोदरः । वालिपुत्रं महावीर्यमभिदुद्राव वीर्यवान् ॥ २ ॥
भ्रातृव्यसनसन्तप्तस्तथा देवान्तको बली । आदाय परिघं दीप्तमङ्गदं समभिद्रवत् ॥ ३ ॥
रथमादित्यसङ्काशं युक्तं परमवाजिभिः । आस्थाय त्रिशिरा वीरो वालिपुत्रमथाभ्ययात् ॥ ४ ॥

मित्यत्र गुणीभूतो रामशब्दः परामृश्यते । हर्षितः विस्मितेन रामेण श्लाघया तोषितः । स च अङ्गदश्च पुनः युद्धे बभूव, युद्धविषये सन्नद्धो बभूवेत्यर्थः ॥ १०० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनसप्ततितमः सर्गः ॥ ६९ ॥

नरान्तकमित्यादि । पौलस्त्य इति त्रिमूर्धविशेषणम्, न तु महोदरस्य । देवान्तकादयस्त्रयश्चुक्रुशुरिति संबन्धः ॥ १ ॥ २ ॥ भ्रातृव्यसनेति । समभि

॥ ९८-१०० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकोनसप्ततितमः सर्गः ॥६९ ॥ ( अत्र सर्गविच्छेदो बहुषु पुस्तकेषु न दृश्यते इत्यस्माभिरपि न कृतः । पूर्वोत्तरवाक्ययोरेककर्तृकयुद्धवर्णनात् । इति कतकः ) ॥ १–१८ ॥

द्रवत समभ्यद्रवत् ॥ ३-१० ॥ देवान्तकश्चेति । व्यपचक्राम पश्चादाजगाम ॥ ११ ॥ १२ ॥ अस्य महोदरस्य ॥ १३ ॥ तस्य अङ्गदस्य । तस्य





स त्रिभिर्देवदर्पघ्नैर्नैर्ऋतेन्द्रैरभिद्रुतः। वृक्षमुत्पाटयामास महाविटपमङ्गदः ॥ ५ ॥ देवान्तकाय तं वीरश्चिक्षेप सहसाऽङ्गदः । महावृक्षं महाशाखं शक्रो दीप्तमिवाशनिम् ॥ ६ ॥ त्रिशिरास्तं प्रचिच्छेद शरैराशीविषोपमैः । स वृक्षं कृत्तमालोक्य उत्पपात तदाऽङ्गदः ॥ ७ ॥ स ववर्ष ततो वृक्षान् शैलांश्च कपिकुञ्जरः । तान् प्रचिच्छेद संक्रुद्धस्त्रिशिरा निशितैः शरैः ॥८॥ परिघाग्रेण तान् वृक्षान् बभञ्ज च सुरान्तकः । त्रिशिराश्चाङ्गदं वीरमभिदुद्राव सायकैः ॥ ९ ॥ गजेन समभिद्रुत्य वालिपुत्रं महोदरः। जघानोरसि संक्रुद्धस्तोमरैर्वज्रसन्निभैः ॥ १० ॥ देवान्तकश्च संक्रुद्धः परिघेण तदाऽङ्गदम् । उपगम्याभिहत्याशु व्यपचक्राम वेगवान् ॥ ११॥ स त्रिभिर्नैर्ऋतश्रेष्ठैर्युगपत् समभिद्रुतः । न विव्यथे महातेजा वालिपुत्रः प्रतापवान् ॥ १२ ॥ स वेगवान् महावेगं कृत्वा परमदुर्जयः । तलेन भृशमुत्पत्य जघानास्य महागजम् ॥ १३ ॥ तस्य तेन प्रहारेण नागराजस्य संयुगे । पेततुर्लोचने तस्य विननाद स वारणः ॥ १४ ॥ विषाणं चास्य निष्कृष्य वालिपुत्रो महाबलः । देवान्तकमभिप्लुत्य ताडयामास संयुगे ॥ १५ ॥ स विह्वलितसर्वाङ्गो वातोद्धूत इव द्रुमः । लाक्षारससवर्णं च सुस्राव रुधिरं मुखात् ॥१६ ॥ अथाश्वास्य महातेजाः कृच्छ्राद्देवान्तको बली । आविध्य परिघं घोरमाजघान तदाऽङ्गदम् ॥ १७ ॥ परिघाभिहतश्चापि वानरेन्द्रात्मजस्तदा । जानुभ्यां पतितो भूमौ पुनरेवोत्पपात ह ॥ १८ ॥ तमुत्पतन्तं त्रिशिरास्त्रिभिर्बाणैरजिह्मगैः । घोरैर्हरिपतेः पुत्रं ललाटेऽभिजघान ह ॥ १९ ॥



नागराजस्येति द्वितीयतच्छब्दान्वयः ॥ १४ ॥ विषाणमिति । महाबलः वालिपुत्रः अस्य महोदरवाहनस्य गजस्य विषाणं निष्कृष्य अभिप्लुत्य वेगेन तमुत्पतन्तमिति । अजिह्मगैः ऋजुगामिभिः ॥ १९-२२ ॥

सन्निपत्य देवान्तकं ताडयामासेति संबन्धः ॥ १९–२२ ॥ जृम्भितं भग्नमिति यावत्, जृम्भितं तदनन्तरमित्यादिवत् ॥ २३–२९ ॥ तत इति । निसृष्ट



ततोऽङ्गदं परिक्षिप्तं त्रिभिर्नैर्ऋतपुङ्गवैः । हनुमानपि विज्ञाय नीलश्चापि प्रतस्थतुः ॥ २० ॥ ततश्चिक्षेप शैलाग्रं नीलस्त्रिशिरसे तदा । तद्रावणसुतो धीमान् बिभेद निशितैः शरैः ॥ २१ ॥ तद्बाणशतनिर्भिन्नं विदारितशिलातलम् । सविस्फुलिङ्गं सज्वालं निपपात गिरेः शिरः ॥ २२ ॥ ततो जृम्भितमालोक्य हर्षाद्देवान्तकस्तदा । परिघेणाभिदुद्राव मारुतात्मजमाहवे ॥ २३ ॥ तमापतन्तमुत्प्लुत्य हनुमान् मारुतात्मजः । आजघान तदा मूर्ध्नि वज्रकल्पेन मुष्टिना ॥ २४ ॥ शिरसि प्रहरन् वीरस्तदा वायुसुतो बली । नादेनाकम्पयच्चैव राक्षसान् स महाकपिः ॥ २५ ॥ स मुष्टिनिष्पिष्टविकीर्णमूर्धा निर्वान्तदन्ताक्षिविलम्बिजिह्वः । देवान्तको राक्षसराजसूनुर्गतासुरुर्व्यां सहसा पपात ॥ २६ ॥ तस्मिन् हते राक्षसयोधमुख्ये महाबले संयति देवशत्रौ । क्रुद्धस्त्रिमूर्धा निशिताग्रमुग्रं ववर्ष नीलोरसि बाणवर्षम् ॥ २७ ॥ महोदरस्तु संक्रुद्धः कुञ्जरं पर्वतोपमम् । भूयः समधिरुह्याशु मन्दरं रश्मिमानिव ॥ २८ ॥ ततो बाणमयं वर्षं नीलस्योरस्यपातयत् । गिरौ वर्षं तडिच्चक्रचापवानिव तोयदः ॥ २९ ॥ ततः शरौघैरभिवर्ष्यमाणो विभिन्नगात्रः कपिसैन्यपालः । नीलो बभूवाथ निसृष्टगात्रो विष्टम्भितस्तेन महाबलेन ॥ ३० ॥ ततस्तु नीलः प्रतिलभ्य संज्ञां शैलं समुत्पाट्य सवृक्षषण्डम् । ततः समुत्पत्य भृशोग्रवेगो महोदरं तेन जघान मूर्ध्नि ॥ ३१ ॥ ततः स शैलेन्द्रनिपातभग्नो महोदरस्तेन महाद्रिपेन । विपोथितो भूमितले गतासुः पपात वज्राभिहतो यथाऽद्रिः ॥ ३२ ॥

गात्रः शिथिलगात्रः । विष्टम्भितः स्तब्धीकृतः, एतन्निसृष्टत्वे हेतुः ॥ ३० ॥ ३१ ॥ विपोथितः हिंसितः ॥ ३२–३९ ॥

तत इति । जृम्भितं भग्नम् ॥ २३–२५ ॥ निर्वान्तदन्ताक्षिविलम्बिजिह्वः दन्ताश्च अक्षिणी च विलम्बिजिह्वा च तथा निर्वान्ताः बहिर्निर्गता दन्तादयो यस्येति तथा ॥ २६–२९ ॥ विभिन्नगात्रः श्लथावयवः परवशगात्रो वा । विष्टम्भितः स्तम्भीकृतः ॥ ३०–३८ ॥

तामिति । घोरसङ्काशां भयङ्करप्रकाशाम् ॥ ४० ॥ व्यूढे विशाले ॥ ४१ ॥ ४२ ॥ स इति । त्यक्तचेतनः मूर्च्छित इत्यर्थः ॥ ४३-४६ ॥





पितृव्यं निहतं दृष्ट्वा त्रिशिराश्चापमाददे । हनुमन्तं च संक्रुद्धो विव्याध निशितैः शरैः ॥ ३३ ॥ स वायुसूनुः कुपितश्चिक्षेप शिखरं गिरेः । त्रिशिरास्तच्छरैस्तीक्ष्णैर्बिभेद बहुधा बली ॥ ३४ ॥ तद्व्यर्थं शिखरं दृष्ट्वा द्रुमवर्षं महाकपिः । विससर्ज रणे तस्मिन् रावणस्य सुतं प्रति ॥ ३५ ॥ तमापतन्तमाकाशे द्रुमवर्षं प्रतापवान् । त्रिशिरा निशितैर्बाणैश्चिच्छेद च ननाद च ॥ ३६ ॥ ततो हनूमानुत्प्लुत्य हयांस्त्रिशिरसस्तदा । विददार नखैः क्रुद्धो गजेन्द्रं मृगराडिव ॥ ३७ ॥ अथ शक्तिं समादाय कालरात्रिमिवान्तकः । चिक्षेपानिलपुत्राय त्रिशिरा रावणात्मजः ॥ ३८ ॥ दिवः क्षिप्तामिवोल्कां तां शक्तिं क्षिप्तामसङ्गताम् । गृहीत्वा हरिशार्दूलो बभञ्ज च ननाद च ॥ ३९ ॥ तां दृष्ट्वा घोरसङ्काशां शक्तिं भग्नां हनूमता । प्रहृष्टा वानरगणा विनेदुर्जलदा इव ॥ ४० ॥ ततः खड्गं समुद्यम्य त्रिशिरा राक्षसोत्तमः । निजघान तदा व्यूढे वायुपुत्रस्य वक्षसि ॥४१॥ खड्गप्रहाराभिहतो हनूमान् मारुतात्मजः । आजघान त्रिशिरसं तलेनोरसि वीर्यवान् ॥४२॥ स तलाभिहतस्तेन स्रस्तहस्तायुधो भुवि । निपपात महातेजास्त्रिशिरास्त्यक्तचेतनः ॥ ४३ ॥ स तस्य पततः खड्गं समाच्छिद्य महाकपिः । ननाद गिरिसङ्काशस्त्रासयन् सर्वनैर्ऋतान् ॥ ४४ ॥ अमृष्यमाणस्तं घोषमुत्पपात निशाचरः । उत्पत्य च हनूमन्तं ताडयामास मुष्टिना ॥ ४५ ॥ तेन मुष्टिप्रहारेण संचुकोप महाकपिः । कुपितश्च निजग्राह किरीटे राक्षसर्षभम् ॥ ४६ ॥ स तस्य शीर्षाण्यसिना शितेन किरीटजुष्टानि सकुण्डलानि । क्रुद्धः प्रचिच्छेद सुतोऽनिलस्य त्वष्टुः सुतस्येव शिरांसि शक्रः ॥ ४७ ॥



स तस्येति । त्वष्टुः सुतः विश्वरूपः । "विश्वरूपो वै त्वाष्ट्रः पुरोहितः" इत्यादिश्रुतिप्रसिद्धः ॥ ४७ ॥



दिव इति । असङ्गताम् अनिवारिताम् ॥ ३९ ॥ घोरसङ्काशां भयङ्करप्रकाशाम् ॥ ४०-४२ ॥ त्यक्तचेतनः विसंज्ञः, मूर्च्छित इत्यर्थः ॥ ४३-४६ ॥ त्वष्टुः सुतस्य

तानीति । मुक्तानि अनुभूतपुण्यफलानि । अर्कमार्गात् आकाशात् ॥ ४८ ॥ ४९ ॥ हतं त्रिशिरसमित्यादिचतुःश्लोक्येकान्वया । मत्तः महापार्श्वः । मत्त इति महापार्श्वस्य नामान्तरम् । मांसशोणितफेनिलामिति युद्धकालिकरूपम् । शत्रुशोणितरञ्जितामिति पूर्वकालिकरूपम् । महापद्मः पुण्डरीका



तान्यायताक्षाण्यगसन्निभानि प्रदीप्तवैश्वानरलोचनानि । पेतुः शिरांसीन्द्ररिपोर्धरण्यां ज्योतींषि मुक्तानि यथा ऽर्कमार्गात् ॥ ४८ ॥ तस्मिन् हते देवरिपौ त्रिशीर्षे हनूमता शक्रपराक्रमेण । नेदुः प्लवङ्गाः प्रचचाल भूमी रक्षांस्यथो दुद्रुविरे समन्तात् ॥ ४९ ॥ हतं त्रिशिरसं दृष्ट्वा तथैव च महोदरम् । हतौ प्रेक्ष्य दुराधर्षौ देवान्तकनरान्तकौ ॥ ५० ॥ चुकोप परमामर्षी मत्तो राक्षसपुङ्गवः । जग्राहार्चिष्मतीं घोरां गदां सर्वायसीं शुभाम् ॥ ५१ ॥ हेमपट्टपरिक्षिप्तां मांसशोणितफेनिलाम् । विराजमानां वपुषा शत्रुशोणितरञ्जिताम् ॥ ५२ ॥ तेजसा सम्प्रदीप्ताग्रां रक्तमाल्यविभूषिताम् । ऐरावतमहापद्मसार्वभौमभयावहाम् ॥ ५३ ॥ गदामादाय संक्रुद्धो मत्तो राक्षसपुङ्गवः । हरीन् समभिदुद्राव युगान्ताग्निरिव ज्वलन् ॥ ५४ ॥ अथर्षभः समुत्पत्य वानरो रावणानुजम् । मत्तानीकमुपागम्य तस्थौ तस्याग्रतो बली ॥ ५५ ॥ तं पुरस्तात् स्थितं दृष्ट्वा वानरं पर्वतोपमम् । आजघानोरसि क्रुद्धो गदया वज्रकल्पया ॥ ५६ ॥ स तयाऽभिहतस्तेन गदया वानरर्षभः । भिन्नवक्षाः समाधूतः सुस्राव रुधिरं बहु ॥ ५७ ॥ स सम्प्राप्य चिरात् संज्ञामृषभो वानरर्षभः । अभिदुद्राव वेगेन गदां तस्य महात्मनः ॥ ५८ ॥ गृहीत्वा तां गदां भीमामाविध्य च पुनः पुनः । मत्तानीकं महात्मानं जघान रणमूर्धनि ॥ ५९ ॥ स स्वया गदया भग्नो विशीर्णदशने क्षणः । निपपात ततो मत्तो वज्राहत इवाचलः ॥ ६० ॥

ख्यदिग्गजः ॥ ५०–५४ ॥ अथेति । मत्तानीकम्, मत्तानीक इति च महापार्श्वस्य नामान्तरम् ॥ ५५ ॥ ५६ ॥ स तयेति । समाधूतः कम्पितः ॥ ५७ ॥ स इति । विश्वरूपस्य ॥ ४७–५२ ॥ महापद्मः पुण्डरीकाख्यो दिग्गजः ॥ ५३–६१ ॥

गदामभिदुद्राव गदां ग्रहीतुं दुद्रावेत्यर्थः ॥ ५८–६१ ॥ तस्मिन्निति। केवलजीवितार्थं यशोरहितजीवनार्थम्। भिन्नार्णवसन्निकाशमिति क्रियाविशेषणम् ॥ ६२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्ततितमः सर्गः ॥ ७० ॥

विशीर्णनयने भूमौ गतसत्त्वे गतायुषि। पतिते राक्षसे तस्मिन् विद्रुतं राक्षसं बलम् ॥६१ ॥* तस्मिन् हते भ्रातरि रावणस्य तन्नैर्ऋतानां बलमर्णवाभम्। त्यक्तायुधं केवलजीवितार्थं दुद्राव भिन्नार्णवसन्निकाशम् ॥ ६२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

स्वबलं व्यथितं दृष्ट्वा तुमुलं रोमहर्षणम्। भ्रातॄंश्च निहतान् दृष्ट्वा शक्रतुल्यपराक्रमान् ॥ १ ॥ पितृव्यौ चापि सन्दृश्य समरे सन्निषूदितौ। युद्धोन्मत्तं च मत्तं च भ्रातरौ राक्षसर्षभौ ॥ २ ॥ चुकोप च महातेजा ब्रह्मदत्तवरो युधि। अतिकायोऽद्रिसङ्काशो देवदानवदर्पहा ॥ ३ ॥ स भास्करसहस्रस्य सङ्घातमिव भास्वरम्। रथमास्थाय शक्रारिरभिदुद्राव वानरान् ॥ ४ ॥ स विस्फार्य महच्चापं किरीटी मृष्टकुण्डलः। नाम विश्रावयामास ननाद च महास्वनम् ॥ ५ ॥ तेन सिंहप्रणादेन नामविश्रावणेन च। ज्याशब्देन च भीमेन त्रासयामास वानरान् ॥ ६ ॥

स्वबलमित्यादि। भ्रातरौ अन्योन्यं भ्रातरौ ॥ १–४ ॥ स इति। मृष्टकुण्डलः शुद्धकुण्डलः ॥ ५ ॥ ६ ॥

भिन्नार्णवसन्निकाशम् इत्येतत् क्रियाविशेषणम् ॥६२॥ इति श्रीमहेश्वरतीर्थविर० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां सप्ततितमः सर्गः ॥७०॥१–७॥

---

* उन्मत्तस्तु तदा दृष्ट्वा गवाक्षं भ्रातरं रणे। चुकोप परमक्रुद्धः प्रलयाग्निसमद्युतिः ॥ ततः समादाय गदां स वीरो वित्रासयन् वानरसैन्यमुग्रम्। दुद्राव वेगेन तु सैन्यमध्ये वृद्धम् यथा वह्निरातिप्रचण्डः ॥ आपतन्तं तदा दृष्ट्वा राक्षसं भीमविक्रमम्। शैलमादाय दुद्राव गवाक्षः पर्वतोपमः ॥ जिघांसू राक्षसं भीमं तं शैलेन महाबलः। आपतन्तं तदा दृष्ट्वा उन्मत्तोऽपि महागिरिम् ॥ चिच्छेद गदया वीरः शतधा तत्र संयुगे। चूर्णीकृतं गिरिं दृष्ट्वा रक्षसा कपिकुञ्जरः ॥ विस्मितोऽभून्महाबाहुर्जगर्ज च मुहुर्मुहुः। उन्मत्तस्तु सुसंक्रुद्धो ज्वलन्तीं राक्षसोत्तमः ॥ गदामादाय वेगेन कपेर्वक्षस्यताडयत्। स तया गदया वीरस्ताडितः कपिकुञ्जरः ॥ पपात भूमौ निःसंज्ञः सुस्राव रुधिरं बहु। पुनः [illegible] कपिः। तेन प्रताडितो वीरो राक्षसः पर्वतोपमः ॥ विस्रस्तदन्तनयनो निपपात महीतले। सुस्राव रुधिरं सोष्णं गतासुश्च ततोऽभवत् ॥ एते श्लोकाः औत्तराहपाठ एवोपलभ्यन्ते ॥

त इति । माहात्म्यं महत्त्वम् । उत्थित इत्यनन्तरमितिकरणं द्रष्टव्यम् ॥७-११॥ कोऽसावित्यादि । हरिलोचनः सिंहदृष्टिः॥१२॥१३॥रथशक्तीभिः रथ



ते दृष्ट्वा देहमाहात्म्यं कुम्भकर्णोऽयमुत्थितः । भयार्ता वानराः सर्वे संश्रयन्ते परस्परम् ॥ ७ ॥ ते तस्य रूप मालोक्य यथा विष्णोस्त्रिविक्रमे । भयाद्वानरयूथास्ते विद्रवन्ति ततस्ततः ॥ ८ ॥ तेऽतिकायं समासाद्य वानरा मूढ चेतसः । शरण्यं शरणं जग्मुर्लक्ष्मणाग्रजमाहवे ॥९॥ ततोऽतिकायं काकुत्स्थो रथस्थं पर्वतोपमम् । ददर्श धन्विनं दूराद्गर्जन्तं कालमेघवत् ॥ १० ॥ स तं दृष्ट्वा महात्मानं राघवस्तु विसिष्मिये । वानरान् सान्त्वयित्वाऽथ विभीषण मुवाच ह ॥११॥ कोऽसौ पर्वतसङ्काशो धनुष्मान् हरिलोचनः । युक्ते हयसहस्रेण विशाले स्यन्दने स्थितः ॥१२॥ य एष निशितैः शूलैः सुतीक्ष्णैः प्रासतोमरैः । अर्चिष्मद्भिर्वृतो भाति भूतैरिव महेश्वरः ॥१३॥ कालजिह्वाप्रकाशाभिर्य एषोऽतिविराजते । आवृतो रथशक्तीभिर्विद्युद्भिरिव तोयदः ॥१४॥ धनूंषि चास्य सज्यानि हेमपृष्ठानि सर्वशः । शोभ यन्ति रथश्रेष्ठं शक्रचाप इवाम्बरम् ॥१५॥ क एष रक्षश्शार्दूलो रणभूमिं विराजयन् । अभ्येति रथिनां श्रेष्ठो रथेना दित्यतेजसा ॥ १६ ॥ ध्वजशृङ्गप्रतिष्ठेन राहुणाऽभिविराजते । सूर्यरश्मिनिभैर्बाणैर्दिशो दश विराजयन् ॥ १७ ॥

स्थिताभिः शक्तिभिः ॥ १४-१६ ॥ ध्वजशृङ्गप्रतिष्ठेनेति । अनेन राहुध्वजोऽयमित्युक्तम् ॥ १७ ॥

ते तस्य रूपमिति । ते तस्य रूपमालोक्य ते विद्रवन्तीति तच्छब्दद्वयस्य निर्वाहः ॥ ८-११ ॥ कोऽसाविति । हरिलोचनः सिंहदृष्टिः ॥ १२ ॥ १३ ॥ रथशक्तीभिः रथस्थिताभिः ॥ १४-१६ ॥ ध्वजशृङ्गप्रतिष्ठेनेत्यनेन राहुध्वज इत्युक्तं भवति ॥ १७ ॥

स०-ते वानराः विद्रवन्ति व्यद्रवन् । वानरयोधास्ते वानरयोधा अस्ता यस्मिंस्तस्मिन्रणमण्डले । अस्तं भावे क्तः । वानरयोधानामसने सति त्रायकाभावाचततस्ततो व्यद्रवन्निति भावः । ये ये तस्य रूपमालोक्य स्थितास्ते ते सर्वे ततस्ततो विद्रवन्तीत्यन्वयेन तेद्वयं सार्थकमिति वा । न च भिन्नार्थगतयोस्तेशब्दयोः कथमैकरूप्यसम्पादनेन वीप्सात्वमिति वाच्यम्, "ये यजत्रा य ईड्याः" इत्यादिवदन्वयमुखेनैकरूप्योपपत्तेः । 'ते रूपमालोक्य त इव वानरा इव विद्रवन्तीति तच्छब्दद्वयनिर्वाहः । इवेति शेषः ।' इति नागोजिभट्टः । 'ते तस्य रूपमालोक्य ते विद्रवन्तीति तच्छब्दद्वयनिर्वाहः' इति तीर्थश्च । द्वयोर्भावो बिन्दुविभावनीयः ॥ ८ ॥ हरिलोचनः सिंहदृष्टिः मर्कटदृष्टिर्वा । हरिरिवेव लोचनं यस्येति वा ॥ १२ ॥ यः क इत्यर्थः । "यतश्चोदेति सूर्यः" इत्यादिवद्यच्छब्दः किमर्थे ॥ १३ ॥

त्रिणतमिति । त्रिणतं त्रिषु आद्यन्तयोर्मध्ये च नतम् । मेघनिर्ह्रादं मेघतुल्यध्वानस्वनम् । हेमपृष्ठं हेमलिप्तपार्श्वमित्यर्थः । धनुः रथस्थेभ्यः अन्यत् करधृतमिदम् ॥ १८ ॥ सध्वज इति । ध्वजः असाधारणकेतनम् । पताका साधारणी । अनुकर्षः रथाधःस्थदारु । चतुस्सादिसमायुक्तः चतुस्साराथि



त्रिणतं मेघनिर्ह्रादं हेमपृष्ठमलङ्कृतम् । शतक्रतुधनुःप्रख्यं धनुश्चास्य विराजते ॥ १८ ॥ सध्वजः सपताकश्च सानुकर्षो महारथः । चतुस्सादिसमायुक्तो मेघस्तनितनिस्वनः ॥ १९ ॥ विंशतिर्दश चाष्टौ च तूण्योऽस्य रथमास्थिताः । कार्मुकानि च भीमानि ज्याश्च काञ्चनपिङ्गलाः ॥२०॥ द्वौ च खड्गौ रथगतौ पार्श्वस्थौ पार्श्वशोभितौ । चतुर्हस्तत्सरुयुतौ व्यक्तहस्तदशायतौ ॥ २१ ॥ रक्तकण्ठगुणो धीरो महापर्वतसन्निभः । कालः कालमहावक्त्रो मेघस्थ इव भास्करः ॥ २२ ॥ काञ्चनाङ्गदनद्धाभ्यां भुजाभ्यामेष शोभते । शृङ्गाभ्यामिव तुङ्गाभ्यां हिमवान् पर्वतोत्तमः ॥ २३ ॥ कुण्डलाभ्यां तु यस्यैतद्भाति वक्त्रं शुभेक्षणम् । पुनर्वस्वन्तरगतं पूर्णं बिम्बमिवैन्दवम् ॥ २४ ॥ आचक्ष्व मे महाबाहो त्वमेनं राक्षसोत्तमम् । यं दृष्ट्वा वानराः सर्वे भयार्ता विद्रुता दिशः ॥ २५ ॥ स पृष्टो राजपुत्रेण रामेणामिततेजसा । आचचक्षे महातेजा राघवाय विभीषणः ॥ २६ ॥ दशग्रीवो महातेजा राजा वैश्रवणानुजः । भीमकर्मा महोत्साहो रावणो राक्षसाधिपः ॥ २७ ॥

युक्तः ॥ १९ ॥ विंशतिरिति । कार्मुकाणि धनुर्भेदा इति न पौनरुक्त्यम् ॥ २० ॥ द्वौ चेति । पार्श्वशोभितौ पार्श्वाभ्यां शोभितौ । चतुर्हस्तत्सरुयुतौ चतुर्हस्तप्रमाणत्सरुयुक्तौ । "त्सरुः खड्गादिमुष्टौ स्यात्" इत्यमरः । व्यक्तहस्तदशायतौ व्यक्तौ च तौ हस्तदशायतौ चेति तथा ॥ २१ ॥ रक्तेति । रक्तकण्ठगुणः रक्तकण्ठमाल्यः । कालमहावक्त्रः कालस्येव महावक्त्रं यस्य स तथोक्तः । काल इव महावक्त्र इति वा ॥ २२-२७ ॥

हेमपृष्ठं हेमसदृशपृष्ठभागम् ॥ १८ ॥ चतुस्सादिसमायुक्तः चतुर्भिः सादिभिः सह युक्तः ॥ १९-२० ॥ द्वाविति । पार्श्वशोभितौ पार्श्वाभ्यां शोभितौ । चतुर्हस्तत्सरुयुतौ चतुर्हस्तप्रमाणाभ्यां त्सरुभ्यां खड्गमुष्टिभ्यां चितौ । व्यक्तहस्तदशायतौ व्यक्तौ च तौ हस्तदशायतौ चेति तथा ॥२१॥ रक्तकण्ठगुणः रक्तकण्ठमाल्यः । कालमहावक्त्रः कालस्येव महावक्त्रं यस्य स तथोक्तः ॥ २२--२८ ॥

स०—उभाभ्यां कुण्डलाभ्याम् एकैकस्मिन् कर्णे उभाभ्याम् । [illegible] कुण्डलाभ्यामुभाभ्यां च भाति[illegible] शुभेक्षणम् । इति पाठः ॥ २४ ॥

तस्येत्यादि श्लोकद्वयम् । नये युक्तौ । मन्त्रे विचारे ॥ २८–३३ ॥ वज्रमित्यादि श्लोकद्वयम् । विष्टम्भितं निश्चलीकृतम् । राक्षसानामथर्षभः



तस्यासीद्वीर्यवान् पुत्रो रावणप्रतिमो रणे । वृद्धसेवी श्रुतिधरः सर्वास्त्रविदुषां वरः ॥ २८ ॥ अश्वपृष्ठे रथे नागे खड्गे धनुषि कर्षणे । भेदे सान्त्वे च दाने च नये मन्त्रे च सम्मतः ॥ २९ ॥ यस्य बाहू समाश्रित्य लङ्का वसति निर्भया । तनयं धान्यमालिन्या अतिकायमिमं विदुः ॥ ३० ॥ एतेनाराधितो ब्रह्मा तपसा भावितात्मना । अस्त्राणि चाप्यवाप्तानि रिपवश्च पराजिताः ॥ ३१ ॥ सुरासुरैरवध्यत्वं दत्तमस्मै स्वयम्भुवा । एतच्च कवचं दिव्यं रथश्चैषोऽर्कभास्वरः ॥ ३२ ॥ एतेन शतशो देवा दानवाश्च पराजिताः । रक्षितानि च रक्षांसि यक्षाश्चापि निषूदिताः ॥ ३३ ॥ वज्रं विष्टम्भितं येन बाणैरिन्द्रस्य धीमतः । पाशः सलिलराजस्य रणे प्रतिहतस्तथा ॥ ३४ ॥ एषोऽतिकायो बलवान् राक्षसानामथर्षभः । रावणस्य सुतो धीमान् देवदानवदर्पहा ॥ ३५ ॥ तदस्मिन् क्रियतां यत्नः क्षिप्रं पुरुषपुङ्गव । पुरा वानरसैन्यानि क्षयं नयति सायकैः ॥ ३६ ॥ ततोऽतिकायो बलवान् प्रविश्य हरिवाहिनीम् । विस्फारयामास धनुर्ननाद च पुनः पुनः ॥ ३७ ॥ तं भीमवपुषं दृष्ट्वा रथस्थं रथिनां वरम् । अभिपेतुर्महात्मानो ये प्रधाना वनौकसः ॥ ३८ ॥ कुमुदो द्विविदो मैन्दो नीलः शरभ एव च । पादपैर्गिरिशृङ्गैश्च युगपत् समभिद्रवन् ॥ ३९ ॥ तेषां वृक्षांश्च शैलांश्च शरैः काञ्चनभूषणैः । अतिकायो महातेजाश्चिच्छेदास्त्रविदां वरः ॥ ४० ॥ तांश्चैव सर्वान् स हरीन् शरैः सर्वायसैर्बली । विव्याधाभिमुखः सङ्ख्ये भीमकायो निशाचरः ॥ ४१ ॥

इत्यत्राथशब्दः कार्त्स्न्ये ॥ ३४ ॥ ३५ ॥ तदस्मिन्निति । पुरा नयति, नेष्यन्तीत्यर्थः ॥ ३६–३८ ॥ कुमुद इति । समभिद्रवन् आगमशासनस्यानित्यत्वादड भावः ॥ ३९ ॥ ४० ॥ तांश्चेति । अभिमुखः, स्थित इति शेषः ॥ ४१ ॥ ४२ ॥

अश्वेति । अश्वरथगजस्थानानां क्रमेण प्रतिनियतायुधान्याह खड्गे धनुषि कर्षण इति । कृष्यतेऽनेनेति कर्षणः पाशादिः, तोमरभेदो वा ॥ २९–३८ ॥ कुमुद इति ।

तदिति । हरिः सिंहः ॥ ४३ ॥ स इति । कलापी तूणीरवान् । "कलापो भूषणे बर्हे तूणीरे संहतावपि" इत्यमरः । सगर्वितं सगर्वम् ॥ ४४ ॥ रथ इति ।





तेऽर्दिता बाणवर्षेण भग्नगात्राः प्लवङ्गमाः । न शेकुरतिकायस्य प्रतिकर्तुं महारणे ॥ ४२ ॥ तत्सैन्यं हरिवीराणां त्रासयामास राक्षसः । मृगयूथमिव क्रुद्धो हरिर्यौवनदर्पितः ॥ ४३ ॥ स राक्षसेन्द्रो हरिसैन्यमध्ये नायुध्यमानं निजघान कश्चित् । उपेत्य रामं सधनुः कलापी सगर्वितं वाक्यमिदं बभाषे ॥४४॥ रथे स्थितोऽहं शरचापपाणिर्न प्राकृतं कञ्चन योधयामि । यश्चास्ति कश्चिद्व्यवसाययुक्तो ददातु मे क्षिप्रमिहाद्य युद्धम् ॥ ४५ ॥ तत्तस्य वाक्यं ब्रुवतो निशम्य चुकोप सौमित्रिरमित्रहन्ता । अमृष्यमाणश्च समुत्पपात जग्राह चापं च ततः स्मयित्वा ॥ ४६ ॥ क्रुद्धः सौमित्रिरुत्पत्य तूणादाक्षिप्य सायकम् । पुरस्तादतिकायस्य विचकर्ष महद्धनुः ॥ ४७ ॥ पूरयन् स महीं शैलानाकाशं सागरं दिशः । ज्याशब्दो लक्ष्मणस्योग्रस्त्रासयन् रजनीचरान् ॥ ४८ ॥ सौमित्रेश्चापनिर्घोषं श्रुत्वा प्रतिभयं तदा । विसिष्मिये महातेजा राक्षसेन्द्रात्मजो बली ॥ ४९ ॥ अथातिकायः कुपितो दृष्ट्वा लक्ष्मणमुत्थितम् । आदाय निशितं बाणमिदं वचनमब्रवीत् ॥ ५० ॥ बालस्त्वमसि सौमित्रे विक्रमेष्वविचक्षणः । गच्छ किं कालसदृशं मां योधयितुमिच्छसि ॥ ५१ ॥ नहि मद्बाहुसृष्टानामस्त्राणां हिमवानपि । सोढुमुत्सहते वेगमन्तरिक्षमथो मही ॥ ५२ ॥

व्यवसायः उत्साहः ॥ ४५ ॥ तत्तस्येति । स्मयित्वा अनादृत्य । "ष्मिङ् अनादरे" इति धातुः ॥ ४६ ॥ ४७ ॥ पूरयन्निति । त्रासयन्, अभूदिति शेषः ॥ ४८ ॥ सौमित्रेरिति । प्रतिभयम् । "भयङ्करं प्रतिभयम्" इत्यमरः ॥ ४९–५२ ॥



अभिद्रवन् अडभाव आर्षः ॥ ३९–४३ ॥ स इति । कलापी तूणीरवान् । "कलापो भूषणे बर्हे तूणीरे संहतावपि" इत्यमरः । सगर्वितं सगर्वम् ॥ ४४ ॥ व्यवसायः उत्साहः ॥ ४५ ॥ स्मयित्वा अनादृत्य स्मितं कृत्वा "ष्मिङ् अनादरे" इति धातुः ॥ ४६ ॥ ४७ ॥ त्रासयन्, अभूदिति शेषः ॥ ४८ ॥ प्रतिभयं

सुखप्रसुप्तमिति । निबोधयितुं ज्वलयितुम् । मा जहि मा हिंसीः । "हन्तेर्जः" इति जादेशः । मद्गतः मां प्राप्तः ॥ ५३ ॥ अथवेति । प्रतिष्टब्धः प्रतिमुखं

सुखप्रसुप्तं कालाग्निं निबोधयितुमिच्छसि । न्यस्य चापं निवर्तस्व मा प्राणान् जहि मद्गतः ॥ ५३ ॥ अथवा त्वं प्रतिष्टब्धो न निवर्तितुमिच्छसि । तिष्ठ प्राणान् परित्यज्य गमिष्यसि यमक्षयम् ॥ ५४ ॥ पश्य मे निशितान् बाणानरिदर्पनिषूदनान् । ईश्वरायुधसङ्काशांस्तप्तकाञ्चनभूषणान् ॥ ५५ ॥ एष ते सर्पसङ्काशो बाणः पास्यति शोणितम् । मृगराज इव क्रुद्धो नागराजस्य शोणितम् । इत्येवमुक्त्वा संक्रुद्धः शरं धनुषि सन्दधे ॥ ५६ ॥ श्रुत्वाऽतिकायस्य वचः सरोषं सगर्वितं संयति राजपुत्रः । स सञ्चुकोपातिबलो बृहच्छ्रीरुवाच वाक्यं च ततो महार्थम् ॥ ५६ ॥ न वाक्यमात्रेण भवान् प्रधानो न कत्थनात् सत्पुरुषा भवन्ति । मयि स्थिते धन्विनि बाणपाणौ निदर्शय स्वात्मबलं दुरात्मन् ॥ ५८ ॥ कर्मणा सूचयात्मानं न विकत्थितुमर्हसि । पौरुषेण तु यो युक्तः स तु शूर इति स्मृतः ॥ ५९ ॥ सर्वायुधसमायुक्तो धन्वी त्वं रथमास्थितः । शरैर्वा यदि वाप्यस्त्रैर्दर्शयस्व पराक्रमम् ॥ ६० ॥ ततः शिरस्ते निशितैः पातयिष्याम्यहं शरैः । मारुतः कालसम्पक्वं वृन्तात्तालफलं यथा ॥ ६१ ॥ अद्य ते मामका बाणास्तप्तकाञ्चनभूषणाः । पास्यन्ति रुधिरं गात्राद्बाणशल्यान्तरोत्थितम् ॥ ६२ ॥

स्थितः ॥ ५४ ॥ पश्येति । ईश्वरायुधं त्रिशूलम् ॥ ५५–५७ ॥ न वाक्यमात्रेणेति । कत्थनात् आत्मश्लाघनात् । सत्पुरुषाः शूरपुरुषाः ॥ ५८-६० ॥ तत इति । वृन्तात् प्रसवबन्धनात् । "वृन्तं प्रसवबन्धनम्" इत्यमरः ॥ ६१ ॥ अद्य त इति । बाणशल्यान्तरोत्थितमिति । बाणशल्यान्तराणि

भयङ्करम् ॥ ४९–५२ ॥ प्रतिष्टब्धः अभिमुखं स्थितः यमक्षयं गमिष्यसि । वस्तुतस्तु–निवर्तितुं नेच्छसि यदि त्वं तिष्ठ । गमिष्यसि, जयं प्राप्योति शेषः । प्राणान् परित्यज्याहं गमिष्यामीति क्रियाविपरिणामः ॥ ५४ ॥ ईश्वरायुधं त्रिशूलम् ॥ ५५ ॥ एष इति । ते तव शोणितं पास्यति । वस्तुतस्तु–ते तव बाणः शोणितं पास्यति, ममेति शेषः ॥ ५६–६१ ॥ अद्य त इति । बाणशल्यान्तरोत्थितं बाणशल्यकृतप्रदेशादुत्थितम् ॥ ६२–६६ ॥

बाणशल्यकृतान्यन्तराणि ॥ ६२ ॥ बाल इति । मृत्युं जानीहि, मामिति शेषः ॥६३-६६॥ तत इति । सायकं चापमारोप्य बाणं धनुषि संधायेत्यर्थः ।



बालोऽयमिति विज्ञाय न माऽवज्ञातुमर्हसि ॥६३॥ बालो वा यदि वा वृद्धो मृत्युं जानीहि संयुगे । बालेन विष्णुना लोकास्त्रयः क्रान्तास्त्रिभिः क्रमैः ॥ ६४ ॥ लक्ष्मणस्य वचः श्रुत्वा हेतुमत् परमार्थवत् । अतिकायः प्रचुक्रोध बाणं चोत्तममाददे ॥६५॥ ततो विद्याधरा भूता देवा दैत्या महर्षयः । गुह्यकाश्च महात्मानस्तद्युद्धं द्रष्टुमागमन् ॥६६॥ ततोऽतिकायः कुपितश्चापमारोप्य सायकम् । लक्ष्मणाय प्रचिक्षेप संक्षिपन्निव चाम्बरम् ॥६७॥ तमापतन्तं निशितं शरमाशीविषोपमम् । अर्धचन्द्रेण चिच्छेद लक्ष्मणः परवीरहा ॥ ६८ ॥ तं निकृत्तं शरं दृष्ट्वा कृत्तभोगमिवोरगम् । अतिकायो भृशं क्रुद्धः पञ्च बाणान् समाददे ॥६९॥ तान् शरान् सम्प्रचिक्षेप लक्ष्मणाय निशाचरः । तानप्राप्तान् शरैस्तीक्ष्णैश्चिच्छेद भरतानुजः ॥[ पञ्चभिः पञ्च चिच्छेद पावकार्कसमप्रभैः॥ ] ॥७०॥ स तांश्छित्त्वा शरैस्तीक्ष्णै लक्ष्मणः परवीरहा । आददे निशितं बाणं ज्वलन्तमिव तेजसा ॥७१ ॥ तमादाय धनुश्श्रेष्ठे योजयामास लक्ष्मणः । विचकर्ष च वेगेन विससर्ज च वीर्यवान् ॥ ७२ ॥ पूर्णायतविसृष्टेन शरेण नतपर्वणा । ललाटे राक्षसश्रेष्ठमाजघान स वीर्यवान् ॥ ७३ ॥ स ललाटे शरो मग्नस्तस्य भीमस्य रक्षसः । ददृशे शोणितेनाक्तः पन्नगेन्द्र इवाचले ॥ ७४ ॥ राक्षसः प्रचकम्पे च लक्ष्मणेषुप्रपीडितः । रुद्रबाणहतं घोरं यथा त्रिपुरगोपुरम् ॥ ७५ ॥

संक्षिपन्निव बाणवेगेनान्तरावस्थितमाकाशं ग्रसन्निवेत्यर्थः ॥ ६७-७२ ॥ पूर्णायतेति । पूर्णायतेन पूर्णाकृष्टेन । विसृष्टेन क्षिप्तेन । नतपर्वणा निलीन पर्वणा, ऋजुनेति यावत् ॥ ७३ ॥ अक्तः लिप्तः ॥ ७४ ॥ राक्षस इति । त्रिपुरगोपुरं त्रिपुरद्वारम् ॥ ७५ ॥



तत इति । सायकं चापमरोप्य बाणं धनुषि सन्धाय संक्षिपन्निव चाम्बरं बाणवेगेन अन्तरालस्थितमाकाशं ग्रसन्निवेत्यर्थः ॥ ६७-७२ ॥ पूर्णायतेति । पूर्णायतेन पूर्णाकृष्टेन नतपर्वणा, विलीनपर्वणा ऋजुनेति यावत् ॥ ७३-७५ ॥

चिन्तयामासेत्यादिश्लोकद्वयमेकान्वयम् । विमृश्य करणीयं निर्धार्य । बाणनिपातेन मे साधु श्लाघनीयो रिपुरसीति । एवं लक्ष्मणं विधाय अभिधाय । आस्यं विनम्य भुजौ नियम्य वशे स्थापयित्वा । रथोपस्थमास्थाय रथेन प्रचचार हेति संबन्धः ॥ ७६ ॥ ७७ ॥ एकमिति । इति उक्तप्रकारेण



चिन्तयामास चाश्वास्य विमृश्य च महाबलः । साधु बाणनिपातेन श्लाघनीयोऽसि मे रिपुः ॥ ७६ ॥ विधायैवं विनम्यास्यं नियम्य च भुजावुभौ । स रथोपस्थमास्थाय रथे च प्रचचार ह ॥७७॥ एकं त्रीन् पञ्च सप्तेति सायकान् राक्षसर्षभः । आददे सन्दधे चापि विचकर्षोत्ससर्ज च ॥ ७८ ॥ ते बाणाः कालसङ्काशा राक्षसेन्द्रधनुश्च्युताः । हेमपुङ्खा रविप्रख्याश्चक्रुर्दीप्तमिवाम्बरम् ॥ ७९ ॥ ततस्तान् राक्षसोत्सृष्टान् शरौघान् राघवानुजः । असम्भ्रान्तः प्रचिच्छेद निशितैर्बहुभिः शरैः ॥८०॥ तान् शरान् युधि सम्प्रेक्ष्य निकृत्तान् रावणात्मजः । चुकोप त्रिदशेन्द्रारिर्जग्राह निशितं शरम् ॥ ८१ ॥ स सन्धाय महातेजास्तं बाणं सहसोत्सृजत् । ततः सौमित्रिमायान्तमाजघान स्तनान्तरे ॥ ८२ ॥ अतिकायेन सौमित्रिस्ताडितो युधि वक्षसि । सुस्राव रुधिरं तीव्रं मदं मत्त इव द्विपः ॥ ८३ ॥ स चकार तदाऽऽत्मानं विशल्यं सहसा विभुः । जग्राह च शरं तीक्ष्णमस्त्रेणापि च सन्दधे ॥ ८४ ॥ आग्नेयेन तदाऽस्त्रेण योजयामास सायकम् । स जज्वाल तदा बाणो धनुष्यस्य महात्मनः ॥ ८५ ॥ अतिकायोऽपि तेजस्वी सौरमस्त्रं समादधे । तेन बाणं भुजङ्गाभं हेमपुङ्खमयोजयत् ॥ ८६ ॥

॥ ७८–८३ ॥ स चकारेति । अस्त्रेण अस्त्रमन्त्रेण । सन्दधे योजयामास ॥८४॥ आग्नेयेनेत्यादि । पूर्वोक्तस्यैव विवरणम् ॥८५॥ अतिकायोऽपीति ।

चिन्तयामास चिन्तित्वा आश्वास्य विमृश्य करणीयं कार्यं निर्द्धार्य बाणनिपातेन मे साधु श्लाघनीयो रिपुरसीत्येवं विधाय अभिधाय आस्यं विनम्य भुजौ नियम्य वशे स्थापयित्वा रथोपस्थमास्थाय रथेन प्रचचार हेत्यन्वयः ॥७६–८३॥ स इति । अस्त्रेण अस्त्रमन्त्रेण ॥८४॥ आग्नेयेनेत्यादि पूर्वोक्तस्यैव विवरणम् ॥ ८५–११० ॥

समादधे अनुसन्दधे ॥ ८६ ॥ तदस्त्रमिति । आहितं संहितम् ॥ ८७–८९ ॥ तावन्योन्यमिति । भस्मकृतौ भस्मतया कृतौ ॥ ९०–९१ ॥





तदस्त्रं ज्वलितं घोरं लक्ष्मणः शरमाहितम् । अतिकायाय चिक्षेप कालदण्डमिवान्तकः ॥ ८७ ॥ आग्नेयेनाभिसंयुक्तं दृष्ट्वा बाणं निशाचरः । उत्ससर्ज तदा बाणं दीप्तं सूर्यास्त्रयोजितम् ॥ ८८ ॥ तावुभावम्बरे बाणावन्योन्यमभिजघ्नतुः । तेजसा सम्प्रदीप्ताग्रौ क्रुद्धाविव भुजङ्गमौ ॥८९॥ तावन्योन्यं विनिर्दह्य पेततुः पृथिवीतले । निरार्चिषौ भस्मकृतौ न भ्राजेते शरोत्तमौ ॥९०॥ ततोऽतिकायः संक्रुद्धस्त्वस्त्रमैषीकमुत्सृजत् । तत् प्रचिच्छेद सौमित्रिरस्त्रेणैन्द्रेण वीर्यवान् ॥ ९१ ॥ ऐषीकं निहतं दृष्ट्वा रुषितो रावणात्मजः । याम्येनास्त्रेण संक्रुद्धो योजयामास सायकम् ॥ ९२ ॥ ततस्तदस्त्रं चिक्षेप लक्ष्मणाय निशाचरः । वायव्येन तदस्त्रेण निजघान स लक्ष्मणः ॥ ९३ ॥ अथैनं शरधाराभिर्धाराभिरिव तोयदः । अभ्यवर्षत् सुसंक्रुद्धो लक्ष्मणो रावणात्मजम् ॥ ९४ ॥ तेऽतिकायं समासाद्य कवचे वज्रभूषिते । भग्नाग्रशल्याः सहसा पेतुर्बाणा महीतले ॥९५॥ तान् मोघानभिसम्प्रेक्ष्य लक्ष्मणः परवीरहा । अभ्यवर्षन्महेषूणां सहस्रेण महायशाः ॥ ९६ ॥ स वृष्यमाणो बाणौघैरतिकायो महाबलः । अवध्यकवचः सङ्ख्ये राक्षसो नैव विव्यथे । * न शशाक रुजं कर्तुं युधि तस्य शरोत्तमः ॥ ९७ ॥ अथैनमभ्युपागम्य वायुर्वाक्यमुवाच ह । ब्रह्मदत्तवरो ह्येष अवध्यकवचावृतः ॥ ९८ ॥

स०—निरर्चिषौ निष्प्रभौ । भस्मकृतौ भस्म कुर्वाते इति तथा । पृथिवीतले पतितौ न भ्राजेते । महीतले विद्यमानौ तौ मोक्तारौ लक्ष्मणातिकायावपि दीप्यमानौ प्राक् हतोऽयमिति परस्परं जयप्रकाशौ न भ्राजेतेस्म मोघीभूतबाणावित्यभ्राजनं युक्तमिति भावः । अतो न पुनरुक्तिः । महाहवे इत्यपि क्वचित्पाठः ॥ ९० ॥



* शरं चाशीविषाकारं लक्ष्मणाय व्यपासृजत् । स तेन विद्धः सौमित्रिर्मर्मदेशे शरेण ह । मुहूर्तमात्रं निःसंज्ञो ह्यभवच्छत्रुतापनः । ततः संज्ञामुपालभ्य चतुर्भिः सायकोत्तमैः । निजघान हयान् सङ्ख्ये सारथिं च महाबलः । ध्वजस्योन्मथनं कृत्वा शरवर्षैररिन्दमः । असंभ्रान्तः स सौमित्रिस्तान् शरानभिलक्षितान् । मुमोच लक्ष्मणो बाणान् वधार्थं तस्य रक्षसः ॥ इत्यधिकः पाठः ।

ततस्त्विति । ब्राह्ममस्त्रं ब्रह्मास्त्रमन्त्रम् । नियोज्य जपित्वेति यावत् ॥ १०० ॥ तस्मिन्निति । दिशश्चेत्यादौ तत्रसुरिति विपरिणम्यानुषज्यते ॥ १०१ ॥

ब्राह्मेणास्त्रेण भिन्द्ध्येनमेष वध्यो हि नान्यथा । अवध्य एष ह्यन्येषामस्त्राणां कवची बली ॥९९॥ ततस्तु वायोर्वचनं निशम्य सौमित्रिरिन्द्रप्रतिमानवीर्यः । समाददे बाणममोघवेग तद् ब्राह्ममस्त्रं सहसा नियोज्य ॥ १०० ॥ तस्मिन् महास्त्रे तु नियुज्यमाने सौमित्रिणा बाणवरे शिताग्रे । दिशश्च चन्द्रार्कमहाग्रहाश्च नभश्च तत्रास चचाल चोर्वी ॥ १०१ ॥ तं ब्रह्मणोऽस्त्रेण नियोज्य चापे शरं सुपुङ्खं यमदूतकल्पम् । सौमित्रिरिन्द्रारिसुतस्य तस्य ससर्ज बाण युधि वज्रकल्पम् ॥ १०२ ॥ तं लक्ष्मणोत्सृष्टममोघवेगं समापतन्तं ज्वलनप्रकाशम् । सुवर्णवज्रोत्तमचित्रपुङ्खं तदाऽतिकायः समरे ददर्श ॥ १०३ ॥ तं प्रेक्षमाणः सहसाऽतिकायो जघान बाणैर्निशितैरनेकैः । स सायकस्तस्य सुपर्णवेगस्तदाऽतिकायस्य जगाम पार्श्वम् ॥१०४॥ तमागतं प्रेक्ष्य तदाऽतिकायो बाणं प्रदीप्तान्तककालकल्पम् । जघान शक्त्यृष्टिगदाकुठारैः शूलैर्हुलैश्चाप्यविपन्नचेताः ॥ १०५ ॥ तान्यायुधान्यद्भुतविग्रहाणि मोघानि कृत्वा स शरोऽग्निदीप्तः । प्रगृह्य तस्यैव किरीटजुष्टं ततोऽतिकायस्य शिरो जहार ॥१०६॥ तच्छिरः सशिरस्त्राणं लक्ष्मणेषुप्रपीडितम् । पपात सहसा भूमौ शृङ्गं हिमवतो यथा ॥ १०७ ॥

तमिति । नियोज्य जपित्वा । तस्य यमदूतकल्पमित्यन्वयः ॥१०२–१०४॥ तमागतमिति । हुलैः द्विफलपत्राग्रायुधविशेषैः । "हुलं द्विफलपत्राग्रम्"

स०—सशिरस्त्राणं समुकुटम् । अयमेव भारतोक्तकुम्भकर्णाभिधो लक्ष्मणहतः । " बृहत्तनुः कुम्भवदेव कर्णावस्येत्यतो नाम च कुम्भकर्णः " इत्यारभ्य—" तेनातिकायः प्रवरोऽस्त्रवित्सु " इत्यन्तेन तात्पर्यमाचार्यवर्याः प्रत्यपीपदन्निति तथैव भारतार्थोऽनुसन्धेयः । प्रपञ्चितश्चायमर्थोऽस्माभिः प्रक्रमतोऽनुसन्धेयः ॥ १०७ ॥ [ त्रिशिरोऽतिकायदेवान्तकनरान्तकमहोदरमहापार्श्वानां षड्भिर्दिनैर्माद्राश्विनकृष्णषष्ठ्यन्तेन वध इति अग्रे स्पष्टम् ॥ ]

इति वैजयन्ती ॥ १०५–१०८ ॥ त इति । विस्वरैः विस्वरस्वरैः ॥ १०९ ॥ तत इति । निरपेक्षाः युद्धानपेक्षाः ॥ ११० ॥ प्रहर्षेति । प्रबुद्धेत्यत्र प्रसन्नत्वे



तं तु भूमौ निपतितं दृष्ट्वा विक्षिप्तभूषणम् । बभूवुर्व्यथिताः सर्वे हतशेषा निशाचराः ॥ १०८ ॥ ते विषण्णमुखा दीनाः प्रहारजनितश्रमाः । विनेदुरुच्चैर्बहवः सहसा विस्वरैः स्वरैः ॥ १०९ ॥ ततस्ते त्वरितं याता निरपेक्षा निशाचराः । पुरीमभिमुखा भीता द्रवन्तो नायके हते ॥ ११० ॥ प्रहर्षयुक्ता बहवस्तु वानराः प्रबुद्धपद्मप्रतिमानना स्तदा । अपूजयन् लक्ष्मणमिष्टभागिनं हते रिपौ भीमबले दुरासदे ॥ [ अतिबलमतिकायमभ्रकल्पं युधि विनिपात्य स लक्ष्मणः प्रहृष्टः । त्वरितमथ तदा स रामपार्श्वं कपिनिवहैश्च सुपूजितो जगाम ] ॥ १११ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

अतिकायं हतं श्रुत्वा लक्ष्मणेन महौजसा । उद्वेगमगमद्राजा वचनं चेदमब्रवीत् ॥ १ ॥ धूम्राक्षः परमामर्षी धन्वी शस्त्रभृतां वरः । अकम्पनः प्रहस्तश्च कुम्भकर्णस्तथैव च ॥ २ ॥ एते महाबला वीरा राक्षसा युद्धकांक्षिणः । जेतारः परसैन्यानां परैर्नित्यापराजिताः ॥ ३ ॥ निहतास्ते महावीर्या रामेणाक्लिष्टकर्मणा । राक्षसाः सुमहाकाया नानाशस्त्रविशारदाः । अन्ये च बहवः शूरा महात्मानो निपातिताः ॥ ४ ॥ प्रख्यातबलवीर्येण पुत्रेणेन्द्रजिता मम । यौ हि तौ भ्रातरौ वीरौ बद्धौ दत्तवरैः शरैः ॥ ५ ॥

तात्पर्यम् । इष्टस्य जयस्य भागः प्राप्तिः सोऽस्यास्तीतीष्टभागी तम् ॥ १११ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकसप्ततितमः सर्गः ॥ ७१ ॥ अथ रावणचिन्ता—अतिकायमित्यादि ॥ १–४ ॥ प्रख्यातेत्यादिश्लोकत्रयमेकं वाक्यम् । वीरौ



प्रहर्षयुक्ता इति । इष्टभागिनम् इष्टस्य भागः प्राप्तिः तद्वन्तम् । इष्टमतिकायवधं प्राप्तवन्तमित्यर्थः ॥ १११ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्व दीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकसप्ततितमः सर्गः ॥ ७१ ॥ १–४ ॥ प्रख्यातबलवीर्येणेत्यादि श्लोकत्रयमेकं वाक्यम् । यौ खरदूषणादिनिरासकौ वीरौ तौ

यौ भ्रातरौ खरदूषणादिवधेन प्रसिद्धौ तावपि बद्धौ । तदेव बन्धनं वर्णयति यदिति । यद्बन्धनं सुरादिभिः मोक्तुं मोचयितुम् अशक्यं तद्बन्धनं घोरम् । भ्रातरौ तौ शरबन्धाद्विमुक्ताविति यत् तत् प्रभावादिषु केन वा जातं न जाने इत्यन्वयः । प्रभावः सामर्थ्यम् । माया व्यामोहकारिणी विद्या । मोहनम्



यन्न शक्यं सुरैः सर्वैरसुरैर्वा महाबलैः । मोक्तुं तद्बन्धनं घोरं यक्षगन्धर्वकिन्नरैः ॥६॥ तन्न जाने प्रभावैर्वा मायया मोहनेन वा । शरबन्धाद्विमुक्तौ तौ भ्रातरौ रामलक्ष्मणौ ॥ ७ ॥ ये योधा निर्गताः शूरा राक्षसा मम शासनात् । ते सर्वे निहता युद्धे वानरैः सुमहाबलैः ॥८॥ तं न पश्याम्यहं युद्धे योऽद्य रामं सलक्ष्मणम् । शासयेत् सबलं वीरं ससुग्रीवविभीषणम् ॥९॥ अहो नु बलवान् रामो महदस्त्रबलं च वै । यस्य विक्रममासाद्य राक्षसा निधनं गताः ॥ १० ॥ तं मन्ये राघवं वीरं नारायणमनामयम् । तद्भयाद्धि पुरी लङ्का पिहितद्वारतोरणा ॥ ११ ॥ अप्रमत्तैश्च सर्वत्र गुप्तै रक्ष्यता पुरी त्वियम् ॥ १२॥ अशोकवनिकायां च यत्र सीताऽभिरक्ष्यते । निष्क्रामो वा प्रवेशो वा ज्ञातव्यः सर्वथैव नः ॥ १३ ॥ यत्र यत्र भवेद् गुल्मस्तत्र तत्र पुनः पुनः । सर्वतश्चापि तिष्ठध्वं स्वैः स्वैः परिवृता बलैः ॥१४॥

औषधादिकम् ॥ ६--९ ॥ अहो न्वित्यादिश्लोकद्वयमेकान्वयम् । पिहितद्वारतोरणा द्वारम् अन्तर्द्वारम्, तोरणं बहिर्द्वारम् ॥१०॥११॥ एवं रामप्रभावं सप्रपञ्चमुक्त्वा सैन्यं प्रति पुरीरक्षणं नियमयति--अप्रमत्तैरित्यादिना । गुप्तैः स्वयं कृतरक्षणैः । गुल्मैरिति वा पाठः ॥ १२ ॥ अशोकेति । यत्र सीता अभिरक्ष्यते तत्र अशोकवनिकायाम् । निष्क्रामः निर्गमः प्रवेशो वा । नः अस्माभिः ज्ञातव्यः । मदनुज्ञां विना न कोऽपि जनो निर्गमयितव्यो नापि प्रवेष्टव्य इत्यर्थः ॥ १३ ॥ यत्र यत्रेति । गुल्मः सेनासन्निवेशः ॥ १४ ॥

भ्रातरौ इन्द्रजिता दत्तवरैः शरैर्बद्धौ, यद्बन्धनं सुरासुरादिभिः प्रत्येकं मोक्तुं मोचयितुं न शक्यं तद्बन्धनं घोरं प्रचण्डं सर्वैस्समेतैरपि मोक्तुं न शक्यं तौ रामलक्ष्मणौ प्रभावैः सहजमाहात्म्यैः । मायया विचित्रशक्त्या । मोहनेन वा बन्धकनागपाशमोहनेन वा । शरबन्धाद्विमुक्तौ तन्न जाने इति योजना ॥ ५–१२ ॥ अशोकवनिकायां यत्र प्रदेशे सीताऽभिरक्ष्यते तत्र निष्क्रामः प्रवेशो वा नः अस्माभिर्ज्ञातव्य इत्यर्थः ॥ १३ ॥ १४ ॥

स०—अनामयं कार्यवाचकपदेन कारणं दोषो गृह्यते । निर्दोषं नारायणम् ॥ ११ ॥

द्रष्टव्यमित्यादिश्लोकद्वयमेकान्वयम् । पदं व्यवसितम् । दर्शनप्रकारमाह–द्विषतामिति । द्विषतां बलं स्थितं किम् ? उद्युक्तम् उद्यतं किम् ? आपतन्तम् । लिङ्गादिव्यत्यय आर्षः । आपतत् किमिति सदा द्रष्टव्यमित्यर्थः । आपतत् किमिति पा[illegible] सुशोभनः १५–१९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विसप्ततितमः सर्गः ॥ ७२ ॥

द्रष्टव्यं च पदं तेषां वानराणां निशाचराः । प्रदोषे वाऽर्धरात्रे वा प्रत्यूषे वापि सर्वतः ॥१५॥ नावज्ञा [illegible]त्र कर्तव्या वानरेषु कदाचन । द्विषतां बलमुद्युक्तमापतत् किं स्थितं सदा ॥ १६ ॥ ततस्ते राक्षसाः सर्वे श्रुत्वा लङ्काधिपस्य तत् । वचनं सर्वमातिष्ठन् यथावत्तु महाबलाः ॥१७॥ स तान् सर्वान् समादिश्य रावणो राक्षसाधिपः । मन्युशल्यं वहन् दीनः प्रविवेश स्वमालयम् ॥१८॥ ततः स सन्दीपितकोपवह्निर्निशाचराणामधिपो महाबलः । तदेव पुत्रव्यसनं विचिन्तयन् मुहुर्मुहुश्चैव तदा व्यनिश्वसत् ॥१९॥ इत्यार्षे श्रीरामा० श्रीमद्युद्धकाण्डे द्विसप्ततितमः सर्गः ॥७२॥

ततो हतान् राक्षसपुङ्गवांस्तान् देवान्तकादित्रिशिरोतिकायान् । रक्षोगणास्तत्र हतावशिष्टास्ते रावणाय त्वरितं शशंसुः ॥ १ ॥ ततो हतांस्तान् सहसा निशम्य राजा मुमोहाश्रुपरिप्लुताक्षः । पुत्रक्षयं भ्रातृवधं च घोरं विचिन्त्य राजा विपुलं प्रदध्यौ ॥ २ ॥ ततस्तु राजानमुदीक्ष्य दीनं शोकार्णवे सम्परिपुप्लुवानम् । रथर्षभो राक्षसराजसूनुस्तमिन्द्रजिद्वाक्यमिदं बभाषे ॥ ३ ॥

अथ ब्रह्मास्त्रबन्धस्त्रिसप्ततितमे–ततो हतानित्यादि ॥ १ ॥ पूर्वं कुम्भकर्णादिवधः सामान्येन श्रुतः सम्प्रत्यतैः सविशेषं श्रुत इत्याह तत इति । पूर्वोक्तसर्वानुवादो वा ॥ २ ॥ रामानु०–अत्र देवान्तकादित्रिशिरोतिकायान् हतान् त्वरितं शशंसुः, घोरं पुत्रक्षयं भ्रातृवधं च विचिन्त्य विपुलं प्रदध्याविति चाभिधानात् पूर्वं रावणेन अतिकायवध एव श्रुत इत्यवगम्यते यद्वा पूर्वोक्तानुवादः ॥ १ ॥ तत इति । संपरिपुप्लुवानम् । लटः शानजादेशः ॥ ३ ॥



द्रष्टव्यमिति । दर्शनप्रकारमेवाह द्विषतामिति । द्विषतां बलं किमुद्युक्तं किमापतत् । किं स्थितं किं तिष्ठतीति सदा द्रष्टव्यमित्यर्थः ॥ १५–१९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां द्विसप्ततितमः सर्गः ॥७२॥ १ ॥ उक्तमेवार्थमनुवदति । ततो हतानिति ॥२॥ संपरिपुप्लुवानं

यत्र यदा । इन्द्रारिः इन्द्रजित् ॥ ४ ॥ ५ ॥ पौरुषदैवयुक्तां पुरुषबलदैवबलयुक्ताम् । सन्तर्पयिष्यामि पूरयिष्यामि ॥ ६ ॥ ७ ॥ स इति । खरश्रेष्ठसमाधियुक्तं खरश्रेष्ठसम्बन्धयुक्तम् । खरश्रेष्ठैः समाधिना समाधानेन च युक्तमिति वा ॥ ८ ॥ तमिति । हरिरथः सूर्यरथः । "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशु



न तात मोहं प्रतिगन्तुमर्हसि यत्रेन्द्रजिज्जीवति राक्षसेन्द्र । नेन्द्रारिबाणाभिहतो हि कश्चित् प्राणान् समर्थः समरेऽभिपातुम् ॥ ४ ॥ पश्याद्य रामं सह लक्ष्मणेन मद्बाणनिर्भिन्नविकीर्णदेहम् । गतायुषं भूमितले शयानं शितैः शरैराचितसर्वगात्रम् ॥ ५ ॥ इमां प्रतिज्ञां शृणु शक्रशत्रोः सुनिश्चितां पौरुषदैवयुक्ताम् । अद्यैव रामं सह लक्ष्मणेन सन्तर्पयिष्यामि शरैरमोघैः ॥ ६ ॥ अद्येन्द्रवैवस्वतविष्णुमित्रसाध्याश्विवैश्वानरचन्द्रसूर्याः । द्रक्ष्यन्तु मे विक्रममप्रमेयं विष्णोरिवोग्रं बलियज्ञवाटे ॥ ७ ॥ स एवमुक्त्वा त्रिदशेन्द्रशत्रुरापृच्छ्य राजानमदीनसत्त्वः । समारुरोहानिलतुल्यवेगं रथं खरश्रेष्ठसमाधियुक्तम् ॥ ८ ॥ तमास्थाय महातेजा रथं हरिरथोपमम् । जगाम सहसा तत्र यत्र युद्धमरिन्दमः ॥ ९ ॥ तं प्रस्थितं महात्मानमनुजग्मुर्महाबलाः । संहर्षमाणा बहवो धनुःप्रवरपाणयः ॥ १० ॥ गजस्कन्धगताः केचित् केचित् प्रवरवाजिभिः । * प्रासमुद्गरनिस्त्रिंशपरश्वधगदाधराः ॥ ११ ॥ स शङ्खनिनदैः पूर्णैर्भेरीणां चापि निस्वनैः । जगाम त्रिदशेन्द्रारिः स्तूयमानो निशाचरैः ॥ १२ ॥

वाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥" इत्यमरः । युद्धमिति, कर्तव्यमिति शेषः ॥ ९ ॥ तं प्रस्थितमित्यादिश्लोकद्वयमेकान्वयम् ॥ १०–१२ ॥

शोकार्णवमग्नमित्यर्थः । रथर्षभः रथस्थानां श्रेष्ठः, महारथ इत्यर्थः । तं रावणम् ॥ ३ ॥ यत्र यतः । इन्द्रारिः इन्द्रजित् ॥ ४ ॥ पश्याद्य राममित्यादिश्लोकद्वयस्य वास्तवार्थस्तु—अतिबलपराक्रमशालिनो रामस्य हनने तु नाहं समर्थः । अथाप्येतावत् करिष्यामि पश्येत्याह—पश्येति । मद्बाणविकीर्णदेहमपि गतायुषं प्राप्तायुषं शरैराचितसर्वगात्रं रामं पश्येति सम्बन्धः । उक्तमेव प्रतिज्ञापूर्वकमाह—इमामिति । पौरुषदैवयुक्तां पुरुषदैवबलोपेताम् । सन्तर्पयिष्यामि पूरयिष्यामि ॥ ५–७ ॥ स एवमिति । खरश्रेष्ठसमाधियुक्तं समाधिः सम्बन्धः, खरश्रेष्ठसम्बन्धवन्तम् ॥ ८–१२ ॥

---

* व्याघ्रवृश्चिकमार्जारैः खरोष्ट्रैश्च भुजङ्गमैः । वराहश्वापदैः सिंहैर्जम्बुकैः पर्वतोपमैः । शशहंसमयूरैश्च राक्षसा भीमविक्रमाः ॥ इत्यधिकः पाठः केषुचित्पुस्तकेषु दृश्यते ।

अवीज्यतेति। हैमैः हेमदण्डैः। हेमविभूषितैः हेमशलाकायुक्तैः॥ १४ ॥ १५ ॥ रथं प्रति रथसिद्धिमुद्दिश्य ॥१६॥ विधिवत् क्रमवत् ॥१७॥ हविर्लाज संस्कारैः संस्कृतहविर्लाजैः ॥ १८ ॥ शस्त्राणि आयुधानि । शरपत्राणि काशपत्रस्थानीयानि। तानि परिस्तरणान्यासन्नित्यर्थः। " शरमयं बर्हिः



स शङ्खशशिवर्णेन छत्रेण रिपुसूदनः। रराज प्रतिपूर्णेन नभश्चन्द्रमसा यथा ॥ १३ ॥ अवीज्यत ततो वीरो हैमैर्हेमविभूषितैः। चारुचामरमुख्यैश्च मुख्यः सर्वधनुष्मताम्* ॥ १४॥ ततस्त्विन्द्रजिता लङ्का सूर्यप्रतिमतेजसा। रराजाप्रतिवीरेण द्यौरिवार्केण भास्वता ॥ १५ ॥ स सम्प्राप्य महातेजा युद्धभूमिमरिन्दमः। स्थापयामास रक्षांसि रथं प्रति समन्ततः ॥ १६ ॥ ततस्तु हुतभोक्तारं हुतभुक्सदृशप्रभः। जुहाव राक्षसश्रेष्ठो मन्त्रवद्विधिवत्तदा ॥ १७॥ स हविर्लाजसंस्कारैर्माल्यगन्धपुरस्कृतैः। जुहुवे पावकं तत्र राक्षसेन्द्रः प्रतापवान् ॥ १८ ॥ शस्त्राणि शरपत्राणि समिधोऽथ विभीतकाः। लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ॥ १९ ॥ स तत्राग्निं समास्तीर्य शरपत्रैः सतोमरैः। छागस्य कृष्णवर्णस्य गलं जग्राह जीवतः ॥ २० ॥ सकृदेव समिद्धस्य विधूमस्य महार्चिषः। बभूवुस्तानि लिङ्गानि विजयं यान्यदर्शयन् ॥ २१ ॥

स्तृणाति" इत्यभिचारे काशश्चोदितः। अत्र त्वभिचारविशेषे तत्स्थाने शस्त्राणि कृतानीति बोध्यम्। विभीतकाः कलिद्रुमविकाराः। "वैभीतक इध्मः" इति श्रुतेः। वासांसि स्वधार्याणि। यद्वा शस्त्राणि तोमरादीनि शरपत्राणि च, बर्हींष्यासन्निति शेषः। शरपत्रैः सतोमरैरित्यनुवादात्। कार्ष्णायसं स्रुवम्। कृतमिति शेषः ॥ १९ ॥ तत्र युद्धभूमौ। आस्तीर्य परिस्तीर्य ॥ २० ॥ सकृत् समिद्धस्य एकदा समिद्भिर्ज्वलितस्य। लिङ्गानि उक्तसकृत्समिद्धत्वविधूमत्वमहार्चिष्ट्वानि। विजयं यान्यदर्शयन्, पूर्वमिति शेषः ॥ २१ ॥

अवीज्यतेति। हैमैः हिरण्मयदण्डैः ॥ १४–१७ ॥ लाजसंस्कारैः संस्कृतहविर्लाजैरित्यर्थः ॥ १८ ॥ शस्त्राण्येव शरपत्राणि समास्तरणानि। शराः काशविशेषाः,



* स तु दृष्ट्वा विनिर्यान्तं बलेन महता वृतम्। राक्षसाधिपतिः श्रीमान्रावणः पुत्रमब्रवीत् ॥ त्वमप्रतिरथः पुत्र त्वया वै वासवो जितः। किं पुनर्मानुषं धृष्यं निहनिष्यसि राघवम्। तथोक्तो राक्षसेन्द्रेण प्रत्यगृह्णान्महाशिषः ॥ इदं श्लोकद्वयम् औत्तराहपाठ एव दृश्यते, नतु दाक्षिणात्यप्राचीनकोशेषु ॥

प्रदक्षिणेति । प्रदक्षिण आवर्ता अभिर्यासां ताः शिखा यस्येति विग्रहः । स्वयमास्थितः स्वयमास्थावान् । स्वयमुत्थितः इति पाठे पुरुषरूपेणोत्थितः इत्यर्थः ॥ २२ ॥ आहारयामास आजुहाव । अभ्यमन्त्रयत् अभिमन्त्रितवान् ॥ २३ ॥ वितत्रास चचाल ॥ २४ ॥ आत्मानम् अन्तर्दधे अन्तर्धापयामास ।



प्रदक्षिणावर्तशिखस्तप्तकाञ्चनभूषणः । हविस्तत् प्रतिजग्राह पावकः स्वयमास्थितः ॥२२॥ सोऽस्त्रमाहारयामास ब्राह्ममिन्द्ररिपुस्तदा । धनुश्चात्मरथं चैव सर्वं तत्राभ्यमन्त्रयत् ॥ २३ ॥ तस्मिन्नाहूयमानेऽस्त्रे हूयमाने च पावके । सार्धं ग्रहेन्दुनक्षत्रैर्वितत्रास नभःस्थलम् ॥ २४ ॥ स पावकं पावकदीप्ततेजा हुत्वा महेन्द्रप्रतिमप्रभावः । सचापबाणासिरथाश्वसूतः खेऽन्तर्दधेत्मानमचिन्त्यरूपः ॥ २५ ॥ ततो हयरथाकीर्णं पताकाध्वजशोभितम् । निर्ययौ राक्षसबलं नर्दमानं युयुत्सया ॥ २६ ॥ ते शरैर्बहुभिश्चित्रैस्तीक्ष्णवेगैरलंकृतैः । तोमरैरङ्कुशैश्चापि वानरान् जघ्नुराहवे ॥ २७ ॥ रावणिस्तु ततः क्रुद्धस्तान्निरीक्ष्य निशाचरान् । हृष्टा भवन्तो युद्ध्यन्तु वानराणां जिघांसया ॥ २८ ॥ ततस्ते राक्षसाः सर्वे नर्दन्तो जयकांक्षिणः । अभ्यवर्षंस्ततो घोरान् वानरान् शरवृष्टिभिः ॥ २९ ॥ स तु नालीकनाराचैर्गदाभिर्मुसलैरपि । रक्षोभिः संवृतः सङ्ख्ये वानरान् विचकर्त ह ॥ ३० ॥

अन्तर्भावितण्यर्थोऽयम् । खेऽन्तर्दधेत्मानमित्यत्र आर्षं पूर्वरूपत्वम् । अचिन्त्यरूपः अचिन्त्यमन्त्रशक्तिः ॥२५–२७॥ रावणिस्त्विति । उवाचेति शेषः ॥ २८ ॥ ततः तस्मात् रावणिवचनात् । द्वितीयस्ततःशब्दः पश्चाच्छब्दार्थः ॥ २९ ॥ नालीकः विशालाग्रशरः । रक्षोभिः संवृतः रक्षोगणमध्यत उपरिस्थित इत्यर्थः । अन्यथा खेऽन्तर्दधे इति पूर्वोक्तं विरुध्येत । विचकर्त हिंसितवान् ॥ ३० ॥ रामानु०–रक्षोभिः सहितः । इति वा पाठः ॥ ३० ॥

रौद्रकर्मणि तेषां विनियुक्तत्वात ॥ १९–२२ ॥ सोऽस्त्रमिति । आहारयामास आजुहाव ॥ २३ ॥ २४ ॥ खेऽन्तर्दधेत्मानमित्यत्राकारलोपश्छान्दसः आत्मानमन्तर्दधे, अन्तर्धापयामासेत्यर्थः ॥ २५–२७ ॥ युद्ध्यन्तु, इत्यादिदेशेति शेषः ॥ २८ ॥ २९ ॥ रक्षोभिः संवृतः राक्षससैन्योपरि प्रत्यासन्नाकाशप्रदेशे स्थित इत्यर्थः । अन्यथा खेऽन्तर्दध इत्येतद्विरुध्येत । रक्षोभिस्सहित इति वा पाठः ॥ ३०–३४ ॥

त इति। रावणिं रावणिमुक्तायुधागमनप्रदेशम् ॥ २१-२४ ॥ रामानु०—रावणिं रावणिमुक्तायुधागमनप्रदेशम्। खेऽन्तर्दधे इत्यभिधानात् ॥ ३१ ॥ मथितसङ्कल्पाः



ते वध्यमानाः समरे वानराः पादपायुधाः। अभ्यद्रवन्त सहिता रावणिं रणकर्कशम् ॥ ३१ ॥ इन्द्रजित्तु ततः क्रुद्धो महातेजा महाबलः। वानराणां शरीराणि व्यधमद्रावणात्मजः ॥ ३२ ॥ शरेणैकेन च हरीन् नव पञ्च च सप्त च । चिच्छेद समरे क्रुद्धो राक्षसान् सम्प्रहर्षयन् ॥ ३३ ॥ स शरैः सूर्यसङ्काशैः शातकुम्भविभूषितैः। वानरान् समरे वीरः प्रममाथ सुदुर्जयः ॥ ३४ ॥ ते भिन्नगात्राः समरे वानराः शरपीडिताः। पेतुर्मथितसङ्कल्पाः सुरैरिव महासुराः ॥ ३५ ॥ तं तपन्तमिवादित्यं घोरैर्बाणगभस्तिभिः। अभ्यधावन्त संक्रुद्धाः संयुगे वानरर्षभाः ॥ ३६ ॥ ततस्तु वानराः सर्वे भिन्नदेहा विचेतसः। व्यथिता विद्रवन्ति स्म रुधिरेण समुक्षिताः ॥ ३७ ॥ रामस्यार्थे पराक्रम्य वानरास्त्यक्तजीविताः। नर्दन्तस्तेऽभिवृत्तास्तु समरे सशिलायुधाः ॥३८॥ ते द्रुमैः पर्वताग्रैश्च शिलाभिश्च प्लवङ्गमाः। अभ्यवर्षन्त समरे रावणिं पर्यवस्थिताः ॥ ३९ ॥ तद्द्रुमाणां शिलानां च वर्षं प्राणहरं महत्। व्यपोहत महातेजा रावणिः समितिञ्जयः ॥ ४० ॥ ततः पावकसङ्काशैः शरैराशीविषोपमैः। वानराणामनीकानि बिभेद समरे प्रभुः ॥ ४१ ॥

नाशितमनोरथाः ॥ ३५-३७ ॥ रामस्येति । त्यक्तजीविताः त्यक्तजीवितेच्छाः। अभिवृत्ताः अभिमुखं प्रवृत्ताः। तुरवधारणे ॥ ३८॥ ३९ ॥ व्यपोहत वारयामास ॥ ४० ॥ ४१ ॥



मथितसङ्कल्पाः नाशितमनोरथाः ॥ ३५-३७ ॥ त्यक्तजीविताः त्यक्तजीवितेच्छाः। अभिवृत्ताः अभिमुखं प्रवृत्ताः ॥ ३८ ॥ रावणिं तत्सञ्चारप्रदेशमित्यर्थः। तस्यादर्शनात् ॥ ३९ ॥ व्यपोहत अपासारयत ॥ ४०-४३ ॥

अष्टादशेत्यादिसार्धश्लोकत्रयमेकान्वयम् । दत्तवरैः वरदत्तैः ॥ ४२–४४ ॥ मूर्च्छितः प्रवृद्धः ॥ ४५ ॥ ४६ ॥ परया प्रीत्या हृष्टः उद्धतः ॥ ४७ ॥ पुनरेवेत्यादिसार्धश्लोकमेकं वाक्यम् । खड्गादीनि शस्त्राणि । अत्र द्वितीयबलिशब्दो वरदानबलवत्तावाचकः । प्रथमो वीर्यवत्तावाचकः ॥ ४८ ॥

अष्टादशशरैस्तीक्ष्णैः स विद्ध्वा गन्धमादनम् । विव्याध नवभिश्चैव नलं दूरादवस्थितम् ॥ ४२ ॥ सप्तभिस्तु महावीर्यो मैन्दं मर्मविदारणैः । पञ्चभिर्विशिखैश्चैव गजं विव्याध संयुगे ॥ ४३ ॥ जाम्बवन्तं तु दशभिर्नीलं त्रिंशद्भिरेव च । सुग्रीवमृषभं चैव सोऽङ्गदं द्विविदं तथा । घोरैर्दत्तवरैस्तीक्ष्णैर्निष्प्राणानकरोत्तदा ॥ ४४ ॥ अन्यानपि तदा मुख्यान् वानरान् बहुभिः शरैः । अर्दयामास संक्रुद्धः कालाग्निरिव मूर्च्छितः॥४५॥ स शरैः सूर्यसङ्काशैः सुमुक्तैः शीघ्रगामिभिः । वानराणामनीकानि निर्ममन्थ महारणे ॥ ४६॥ आकुलां वानरीं सेनां शरजालेन मोहिताम् । हृष्टः स परया प्रीत्या ददर्श क्षतजोक्षिताम् ॥ ४७ ॥ पुनरेव महातेजा राक्षसेन्द्रात्मजो बली । संसृज्य बाणवर्षं च शस्त्रवर्षं च दारुणम् । ममर्द वानरानीकमिन्द्रजित्त्वरितो बली ॥ ४८ ॥ स्वसैन्यमुत्सृज्य समेत्य तूर्णं महारणे वानरवाहिनीषु । अदृश्यमानः शरजालमुग्रं ववर्ष नीलाम्बुधरो यथाऽम्बु ॥४९॥ ते शक्रजिद्बाणविशीर्णदेहा मायाहता विस्वरमुन्नदन्तः । रणे निपेतुर्हरयोऽद्रिकल्पा यथेन्द्रवज्राभिहता नगेन्द्राः ॥५०॥ ते केवलं सन्ददृशुः शिताग्रान् बाणान् रणे वानरवाहिनीषु । मायानिगूढं तु सुरेन्द्रशत्रुं न चावृतं राक्षसमभ्यपश्यन् ॥ ५१ ॥ ततः स रक्षोधिपतिर्महात्मा सर्वा दिशो बाणगणैः शिताग्रैः । प्रच्छादयामास रविप्रकाशैर्विषादयामास च वानरेन्द्रान् ॥ ५२ ॥

स्वसैन्यं स्वसैन्योपरिभागम् ॥ ४९ ॥ ५० ॥ मायानिगूढम् अत एव आवृतम् अप्रकाशम् ॥ ५१–५३ ॥

दत्तवरैः वरलब्धैरित्यर्थः ॥ ४४–४८ ॥ स्वसैन्यमुत्सृज्य स्वसैन्यस्योपरिभागमुत्सृज्य ॥ ४९ ॥ ५० ॥ ते केवलमिति । मायानिगूढम् अत एव आवृतम् अप्रकाशम् ॥ ५१–६६ ॥

ततो ज्वलनेत्यादिश्लोकद्वयमेकान्वयम् । शरैः तीक्ष्णैरित्यर्थः ॥ ५४ ॥ ५५ ॥ विविशुरन्योन्यम् अन्योन्योपर्यालम्बनार्थं पेतुरित्यर्थः ॥ ५६ ॥ हनुमन्तमित्यादिचतुःश्लोक्येकान्वया । केसरिमित्यार्षम् ॥ ५७–६० ॥ स वा इति । गदाभिरित्येतत् पूर्वोक्तप्रासादीनामुपलक्षणम् ॥ ६१ ॥ बाणवर्षैः बाणनिरन्तरपातैः । अभिवर्ष्यमाणः अभितः पात्यमानः स रामः । तान् बाणवर्षान् । धारानिपातानिव लघूनचिन्त्य, बाणवर्षं तृणीकृत्येत्यर्थः । अत्र हेतुमाह



स शूलनिस्त्रिंशपरश्वधानि व्याविध्य दीप्तानलसन्निभानि । सविस्फुलिङ्गोज्ज्वलपावकानि ववर्ष तीव्रं प्लवगेन्द्रसैन्ये ॥ ५३ ॥ ततो ज्वलनसङ्काशैः शरैर्वानरयूथपाः । ताडिताः शक्रजिद्बाणैः प्रफुल्ला इव किंशुकाः ॥ ५४ ॥ तेऽन्योन्यमभिसर्पन्तो निनदन्तश्च विस्वरम् । राक्षसेन्द्रास्त्रनिर्भिन्ना निपेतुर्वानरर्षभाः ॥ ५५ ॥ उदीक्षमाणा गगनं केचिन्नेत्रेषु ताडिताः । शरैर्विविशुरन्योन्यं पेतुश्च जगतीतले ॥ ५६ ॥ हनुमन्तं च सुग्रीवमङ्गदं गन्धमादनम् । जाम्बवन्तं सुषेणं च वेगदर्शिनमेव च ॥ ५७ ॥ मैन्दं च द्विविदं नीलं गवाक्षं गजगोमुखौ । केसरिं हरिलोमानं विद्युद्दंष्ट्रं च वानरम् ॥ ५८ ॥ सूर्याननं ज्योतिमुखं तथा दधिमुखं हरिम् । पावकाक्षं नलं चैव कुमुदं चैव वानरम् ॥ ५९ ॥ प्रासैः शूलैः शितैर्बाणैरिन्द्रजिन्मन्त्रसंहितैः । विव्याध हरिशार्दूलान् सर्वांस्तान् राक्षसोत्तमः ॥६०॥ स वै गदाभिर्हरियूथमुख्यान् निर्भिद्य बाणैस्तपनीयपुङ्खैः । ववर्ष रामं शरवृष्टिजालैः सलक्ष्मणं भास्कररश्मिकल्पैः ॥ ६१ ॥ स बाणवर्षैरभिवर्ष्यमाणो धारानिपातानिव तानचिन्त्य । समीक्षमाणः परमाद्भुतश्री रामस्तदा लक्ष्मणमित्युवाच ॥ ६२ ॥ असौ पुनर्लक्ष्मण राक्षसेन्द्रो ब्रह्मास्त्रमाश्रित्य सुरेन्द्रशत्रुः । निपातयित्वा हरिसैन्यमुग्रमस्मान् शरैरर्दयति प्रसक्तः ॥६३॥ स्वयम्भुवा दत्तवरो महात्मा खमास्थितोऽन्तर्हितभीमकायः । कथं नु शक्यो युधि नष्टदेहो निहन्तुमद्येन्द्रजिदुद्यतास्त्रः ॥ ६४ ॥

परमेति । अत्यन्ताश्चर्यकरधैर्यसमृद्धिः सन् लक्ष्मणं समीक्षमाणः स्वस्वभावावलम्बनेन ब्रह्मास्त्रप्रतिक्रियां कर्तुमुद्युक्तमिङ्गितैरभिवीक्षमाणः सन्नित्युवाच ॥ ६२ ॥ असाविति । असौ ब्रह्मास्त्रं ब्रह्मास्त्रमन्त्रम् आश्रित्य, अर्दयतीति शेषः ॥ ६३ ॥ स्वयम्भुवेति । नष्टदेहः अदृष्टदेहः । तत्र हेतुः अन्तर्हित

भीमकाय इति ॥ ६४ ॥ तर्हि तत्र प्रतिक्रिया कर्तव्येत्यत्राह मन्ये इति । स्वयम्भूः अचिन्त्यः अचिन्त्यप्रभाव इति मन्ये । तत्र हेतुमाह यस्येति । एतदस्त्रं यस्य यद्देवताकं यः अस्यास्त्रस्य प्रभवः उत्पत्तिकारणम्, सोऽचिन्त्यः । तर्ह्यावाभ्यां किं कर्तव्यमित्यत्राह बाणेति । धीमन् आपत्सु न चलितव्यमिति ज्ञानिन् ! ॥ ६५ ॥ ६६ ॥ आवामिति । गतरोषहर्षौ मूर्च्छिताविति यावत् । अमरारिवासं लङ्काम् । रणाग्रलक्ष्मीं

मन्ये स्वयम्भूर्भगवानचिन्त्यो यस्यैतदस्त्रं प्रभवश्च योऽस्य । बाणावपातांस्त्वमिहाद्य धीमन् मया सहाव्यग्रमनाः सहस्व ॥ ६५ ॥ प्रच्छादयत्येष हि राक्षसेन्द्रः सर्वा दिशः सायकवृष्टिजालैः । एतच्च सर्वं पतिताग्र्यशूरं न भ्राजते वानरराजसैन्यम् ॥ ६६ ॥ आवां तु दृष्ट्वा पतितौ विसंज्ञौ निवृत्तयुद्धौ गतरोषहर्षौ । ध्रुवं प्रवेक्ष्यत्यमरारिवासमसौ समादाय रणाग्रलक्ष्मीम् ॥ ६७ ॥ ततस्तु ताविन्द्रजिदस्त्रजालैर्बभूवतुस्तत्र तथा विशस्तौ । स चापि तौ तत्र विदर्शयित्वा ननाद हर्षाद्युधि राक्षसेन्द्रः ॥ ६८ ॥ स तत्तदा वानरसैन्यमेवं रामं च सङ्ख्ये सह लक्ष्मणेन । विषादयित्वा सहसा विवेश पुरीं दशग्रीवभुजाभिगुप्ताम् ॥ [ संस्तूयमानः स तु यातुधानैः पित्रे च सर्वं हृषितोऽभ्युवाच ॥ ] ॥ ६९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

तयोस्तदा सादितयो रणाग्रे मुमोह सैन्यं हरिपुङ्गवानाम् ।
सुग्रीवनीलाङ्गदजाम्बवन्तो न चापि किञ्चित् प्रतिपेदिरे ते ॥ १ ॥

विजयलक्ष्मीम् । अग्रपदेन रणमूललक्ष्मीर्न ग्रहीतुं शक्येत्युच्यते । एतेन मूलघातः कर्तुं न शक्यत इत्युच्यते ॥ ६७ ॥ ततस्त्विति । विशस्तौ पीडितौ तौ पतितौ विदर्शयित्वा दृष्ट्वा ननाद ॥६८॥६९॥ इति श्रीगोविन्दराजवि० श्रीरामा० रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिसप्ततितमः सर्गः ॥७३॥

अथ ब्रह्मास्त्रबन्धविमुक्तिश्चतुस्सप्ततौ–तयोरित्यादि । सादितयोः अवसादितयोः । किंचिन्न प्रतिपेदिरे, मूढा बभूवुरित्यर्थः ॥ १ ॥ २ ॥

आवामिति । अमरारिवासं लङ्काम् । रणाग्रलक्ष्मीम्, नतु समूलाम् । एतेन समूलं हन्तुं न शक्यत इति सूचितम् ॥ ६७–६९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां त्रिसप्ततितमः सर्गः ॥ ७३ ॥ तयोरिति । सादितयोः प्रहतयोः ॥ १ ॥

मा भैष्टेति । आर्यपुत्रौ अवशौ विषण्णाविति यत्, अत्र विषादकालो नास्ति विषादहेतुकालो नास्ति । कुतः ? स्वयम्भुवो वाक्यम् उद्वहन्तौ मानयन्तौ इन्द्राजिदस्त्रजालैः सादितौ सादिताविव वर्तमानाविति यत् । तत् ततः मा भैष्टेत्यर्थः ॥ ३ ॥ उक्तमेवार्थं विशदयति–तस्मा इति ॥ ४ ॥ मानयित्वा



ततो विषण्णं समवेक्ष्य सैन्यं विभीषणो बुद्धिमतां वरिष्ठः । उवाच शाखामृगराजवीरानाश्वासयन्नप्रतिमैर्वचोभिः ॥ २ ॥ मा भैष्ट नास्त्यत्र विषादकालो यदार्यपुत्रौ ह्यवशौ विषण्णौ । स्वयम्भुवो वाक्यमथोद्वहन्तौ यत् सादिताविन्द्रजिदस्त्रजालैः ॥३॥ तस्मै तु दत्तं परमास्त्रमेतत् स्वयम्भुवा ब्राह्ममोघवेगम् । तन्मानयन्तौ युधि राजपुत्रौ निपातितौ कोऽत्र विषादकालः ॥४॥ ब्राह्ममस्त्रं ततो धीमान् मानयित्वा तु मारुतिः । विभीषणवचः श्रुत्वा हनुमांस्तमथाब्रवीत् ॥५॥ एतस्मिन्निहते सैन्ये वानराणां तरस्विनाम् । यो यो धारयते प्राणांस्तं तमाश्वासयावहे ॥ ६ ॥ तावुभौ युगपद्वीरौ हनुमद्राक्षसोत्तमौ । उल्काहस्तौ तदा रात्रौ रणशीर्षे विचेरतुः ॥ ७ ॥ भिन्नलाङ्गूलहस्तोरुपादाङ्गुलिशिरोधरैः । स्रवद्भिः क्षतजं गात्रैः प्रस्रवद्भिस्ततस्ततः ॥ ८ ॥ पतितैः पर्वताकारैर्वानरैरभिसङ्कुलाम् । शस्त्रैश्च पतितैर्दीप्तैर्ददृशाते वसुन्धराम् ॥ ९ ॥ सुग्रीवमङ्गदं नीलं शरभं गन्धमादनम् । गवाक्षं च सुषेणं च वेगदर्शिनमाहुकम् ॥ १० ॥ मैन्दं नलं ज्योतिर्मुखं द्विविदं पनसं तथा । एतांश्चान्यांस्ततो वीरौ ददृशाते हतान् रणे ॥ ११ ॥

मुहूर्तमात्रं ब्रह्मास्त्रपरवशः स्थित्वा ॥ ५–७ ॥ भिन्नलाङ्गूलेत्यादिश्लोकद्वयमेकान्वयम् । स्रवद्भिः मूत्रयद्भिः ॥ ८ ॥ ९ ॥ सुग्रीवमित्यादिश्लोकद्वय

बुद्धिमतां ज्ञानवताम् ॥ २ ॥ मा भैष्टेत्यादि श्लोकद्वयमेकं वाक्यम् । आर्यपुत्रौ विवशौ, विषण्णाविति यत् । अत्र विषये मा भैष्ट, एतयोर्विषण्णयोरस्मान् को वा रक्षिष्यतीति शत्रुभ्यो भयं मा भूदित्यर्थः । नास्त्यत्र विषादकालः विषादजनककालो नास्ति, एतयोर्विषादेन भवतां विषादो माऽस्त्वित्यर्थः । कुत इत्यत्राह स्वयम्भुव इति । वाक्यं मन्त्ररूपवाक्यमुद्वहन्तौ मानयन्तौ इन्द्रजिदस्त्रजालैः सादितौ सादिताविव वर्तमानावित्यर्थः । यत् यस्मात् ब्रह्मसम्माननार्थं स्वयमेव पतितौ, तस्मात् मा भैष्टेत्यर्थः ॥ ३–७ ॥ भिन्नेति । स्रवद्भिः मूत्रयद्भिः । ददृशाते, तावित्यध्याहार्यः ॥ ८–१० ॥ हतान् हतप्रायान् ॥ ११ ॥ स०–शाखामृगराजाश्च



ते वीराश्च तान् । शाखामृगराजेषु वीराश्चेति वा " सप्तमी शौण्डैः " इति योगविभागात्समासः । तेन न " पूर्वापर– " इति वीरशब्दस्य पूर्वनिपातः । आद्यपक्षे तु एकवीर इतिवद्राजुलकात्परनिपातः ॥ २ ॥

मेकान्वयम् । आहुक इति कश्चिद्यूथपः । गवाक्षं च सुषेणं च वेगदर्शिनमाहुकमिति पाठः । हतान् हतप्रायान् । प्रहृतानिति वा ॥ १० ॥ ११ ॥ सप्तषष्टि रिति । वानराणां यूथपवानराणामित्यर्थः । सुग्रीवाङ्गदादिभिः सह पाठात् । अह्नः पञ्चमशेषेण पञ्चमभागेन, प्रातःसङ्गवमध्याह्नापराह्णसायाह्नसंज्ञाः

सप्तषष्टिर्हताः कोट्यो वानराणां तरस्विनाम् । अह्नः पञ्चमशेषेण वल्लभेन स्वयम्भुवः ॥ १२ ॥ सागरौघनिभं भीमं दृष्ट्वा बाणार्दितं बलम् । मार्गते जाम्बवन्तं स हनुमान् सविभीषणः ॥ १३ ॥ स्वभावजरया युक्तं वृद्धं शरशतैः श्चितम् । प्रजापतिसुतं वीरं शाम्यन्तमिव पावकम् ॥ १४ ॥ दृष्ट्वा तमुपसङ्क्रम्य पौलस्त्यो वाक्यमब्रवीत् । कच्चिदार्य शरैस्तीक्ष्णैः प्राणा न ध्वंसितास्तव ॥ १५ ॥ विभीषणवचः श्रुत्वा जाम्बवानृक्षपुङ्गवः । कृच्छ्रादभ्युद्गिरन् वाक्य मिदं वचनमब्रवीत् ॥ १६ ॥ नैर्ऋतेन्द्र महावीर्य स्वरेण त्वाऽभिलक्षये । पीड्यमानः शितैर्बाणैर्न त्वां पश्यामि चक्षुषा ॥ १७ ॥ अञ्जना सुप्रजा येन मातरिश्वा च नैर्ऋत । हनुमान् वानरश्रेष्ठः प्राणान् धारयते क्वचित् ॥ १८ ॥ श्रुत्वा जाम्बवतो वाक्यमुवाचेदं विभीषणः । आर्यपुत्रावतिक्रम्य कस्मात् पृच्छसि मारुतिम् ॥ १९ ॥ नैव राजनि सुग्रीवे नाङ्गदे नापि राघवे । आर्य सन्दर्शितः स्नेहो यथा वायुसुते परः ॥ २० ॥ विभीषणवचः श्रुत्वा जाम्बवान् वाक्यमब्रवीत् । शृणु नैर्ऋतशार्दूल यस्मात् पृच्छामि मारुतिम् ॥ २१ ॥ तस्मिन् जीवति वीरे तु हतमप्यहतं बलम् । हनुमत्युज्झितप्राणे जीवन्तोऽपि वयं हताः ॥ २२ ॥ धरते मारुतिस्तात मारुतप्रतिमो यदि । वैश्वानरसमो वीर्ये जीविताशा ततो भवेत् ॥ २३ ॥

षण्नाडिकात्मकाः अह्नः पञ्च भागाः सन्ति । तेषु पञ्चमेन सायाह्नसंज्ञेन नाडीषट्केनेत्यर्थः । स्वयम्भुवो वल्लभेन इन्द्रजिता, ब्रह्मास्त्रेण वा ॥ १२–१५ ॥ विभीषणेति । वाक्यं वाक्योपयोगि स्वरम् ॥ १६ ॥ १७ ॥ अञ्जनेति । धारयत इत्यत्र काकुः, किं धारयत इत्यर्थः ॥ १८ ॥ श्रुत्वेत्यादिश्लोकद्वयमेकं

वानराणां यूथपवानराणामित्यर्थः । अह्नः पञ्चमशेषेण पञ्चमभागेन, प्रातःसङ्गवमध्याह्नापराह्णसायाह्नसंज्ञितेषु षण्नाडिकात्मसु पञ्चभागेषु सायाह्नसंज्ञितेन

वाक्यम् ॥१९–२३॥ तत इति । मारुतात्मजः हनुमान् । वृद्धं जाम्बवन्तम् उपागम्य । नियमेन श्रोत्रहस्तसंस्पर्शव्यत्यस्तहस्तत्वादिरूपेण सह । जाम्बवतः पादौ गृह्य गृहीत्वा अभ्यवादयत्, स्वनामोच्चारणपूर्वकं युगपत् पादावगृह्णादित्यर्थः॥२४॥ वाक्यं हनुमानहमस्मीत्यभिवादनवाक्यम् । तथा व्यथितेन्द्रियोऽपि हनुमतो वाक्यं श्रुत्वा ऋक्षपुङ्गवः जाम्बवान् आत्मानं पुनर्जातं मन्यते स्मेति संबन्धः ॥ २५ ॥ २६ ॥ आगच्छेति । विक्रमपर्याप्तः

ततो वृद्धमुपागम्य नियमेनाभ्यवादयत् । गृह्य जाम्बवतः पादौ हनुमान् मारुतात्मजः ॥ २४ ॥ श्रुत्वा हनुमतो वाक्यं तथापि व्यथितेन्द्रियः । पुनर्जातमिवात्मानं मन्यते स्मर्क्षपुङ्गवः ॥ २५ ॥ ततोऽब्रवीन्महातेजा हनुमन्तं स जाम्बवान् ॥२६॥ आगच्छ हरिशार्दूल वानरांस्त्रातुमर्हसि । नान्यो विक्रमपर्याप्तस्त्वमेषां परमः सखा ॥ २७॥ त्वत्पराक्रमकालोऽयं नान्यं पश्यामि कञ्चन । ऋक्षवानरवीराणामनीकानि प्रहर्षय । विशल्यौ कुरु चाप्येतौ सादितौ रामलक्ष्मण ॥ २८ ॥ गत्वा परममध्वानमुपर्युपरि सागरम् । हिमवन्तं नगश्रेष्ठं हनुमन् गन्तुमर्हसि ॥ २९ ॥ ततः काञ्चनमत्युच्चमृषभं पर्वतोत्तमम् । कैलासशिखरं चापि द्रक्ष्यस्यरिनिषूदन ॥३०॥ तयोः शिखरयोर्मध्ये प्रदीप्तमतुलप्रभम् । सर्वौषधियुतं वीर द्रक्ष्यस्योषधिपर्वतम् ॥ ३१ ॥ तस्य वानरशार्दूल चतस्रो मूर्ध्नि सम्भवाः । द्रक्ष्यस्योषधयो दीप्ता दीपयन्त्यो दिशो दश ॥ ३२ ॥ मृतसञ्जीवनीं चैव विशल्यकरणीमपि । सावर्ण्यकरणीं चैव सन्धानकरणीं तथा ॥ ३३ ॥

पर्याप्तविक्रमः । विक्रमपूर्ण इति यावत् ॥२७॥ अन्यं पराक्रमितारम्॥२८॥ परमं दीर्घम् । उपर्युपरि सागरं सागरस्य समीपोपरि प्रदेशे । "उपर्यध्यधसः सामीप्ये" इति सामीप्ये द्विर्वचनम् । "धिगुपर्यादिषु त्रिषु द्वितीया" इति द्वितीया॥ २९ ॥ ऋषभम् ऋषभाख्यम् । पर्वतोत्तमं शिखरमित्यर्थः ॥ ३० ॥ ३१ ॥ तस्येत्यादि श्लोकत्रयमेकान्वयम् । ओषधयः ओषधीः । दीपयन्त्यः दीपयन्तीः । व्यत्ययेन द्वितीयार्थे प्रथमा । मृतं सञ्जीवयतीति

भागेनेत्यर्थः । स्वयम्भुवः वल्लभेन ब्रह्मास्त्रेणेत्यर्थः ॥ १२–२६ ॥ आगच्छेति । विक्रमपर्याप्तः पर्याप्तविक्रमः ॥२७–३१॥ तस्येति । ओषधयः ओषधीः । दीपयन्त्यः

मृतसञ्जीवनी । जीवनानन्तरं सञ्चारक्षमतायै विशल्यं करोतीति विशल्यकरणी । विशल्ये कृते त्वचः सन्धानं करोतीति सन्धानकरणी । ततो व्रण कृतवैवर्ण्यं विहाय प्रदेशान्तरसावर्ण्यं करोतीति सावर्ण्यकरणी ॥ ३२–३४ ॥ बलोद्धर्षैः बलोत्कर्षैः । आपूर्यत पूर्णोऽभूत् ॥ ३५ ॥ पर्वततटाग्रस्थः त्रिकूटशिखरस्थः । पर्वतोत्तमं त्रिकूटम् ॥ ३६ ॥ हरीति । हरिः हनुमान् ॥ ३७ ॥ तस्य त्रिकूटस्य । नगाः वृक्षाः । हरिवेगात् हनुमतो हिमवदुत्तरप्रदेश

ताः सर्वा हनुमन् गृह्य क्षिप्रमागन्तुमर्हसि । आश्वासय हरीन् प्राणैर्योज्य गन्धवहात्मज ॥ ३४ ॥ श्रुत्वा जाम्बवतो वाक्यं हनुमान् हरिपुङ्गवः । आपूर्यत बलोद्धर्षैस्तोयवेगैरिवार्णवः ॥ ३५ ॥ स पर्वततटाग्रस्थः पीडयन् पर्वतोत्तमम् । हनुमान् दृश्यते वीरो द्वितीय इव पर्वतः ॥ ३६ ॥ हरिपादविनिर्भग्नो निषसाद स पर्वतः । न शशाक तदाऽऽत्मानं सोढुं भृशनिपीडितः ॥ ३७ ॥ तस्य पेतुर्नगा भूमौ हरिवेगाच्च जज्वलुः । शृङ्गाणि च व्यशीर्यन्त पीडितस्य हनूमता ॥ ३८ ॥ तस्मिन् सम्पीड्यमाने तु भग्नद्रुमाशिलातले । न शेकुर्वानराः स्थातुं घूर्णमाने नगोत्तम ॥ ३९ ॥ सा घूर्णितमहाद्वारा प्रभग्नगृहगोपुरा । लङ्का त्रासाकुला रात्रौ प्रनृत्तेवाभवत्तदा ॥ ४० ॥ पृथिवीधरसङ्काशो निपीड्य धरणीधरम् । पृथिवीं क्षोभयामास सार्णवां मारुतात्मजः ॥ ४१ ॥ आरुरोह तदा तस्माद्धरिर्मलयपर्वतम् । मेरुमन्दरसङ्काशं नानाप्रस्रवणाकुलम् ॥ ४२ ॥ नानाद्रुमलताकीर्णं विकासिकमलोत्पलम् । सेवितं देवगन्धर्वैः षष्टियोजनमुच्छ्रितम् ॥ ४३ ॥ विद्याधरैर्मुनिगणैरप्सरोभिर्निषेवितम् । नानामृगगणाकीर्णं बहुकन्दरशोभितम् ॥ ४४ ॥ सर्वानाकुलयंस्तत्र यक्षगन्धर्वकिन्नरान् । हनुमान् मेघसङ्काशो ववृधे मारुतात्मजः ॥ ४५ ॥

स्थौषधिपर्वतपर्यन्तगमनोचितशक्त्यास्थानवेगात् । जज्वलुश्च, वेगोद्धर्षजवह्निनेत्यर्थः । पीडितस्य, पर्वतस्येति शेषः ॥ ३८ ॥ तस्मिन्निति । न शेकुरिति । त्रिकूटतटस्य युद्धरङ्गत्वात् । घूर्णमाने कम्पमाने ॥ ३९ ॥ प्रनृत्तेवाभवत् त्रिकूटाग्रनिर्मितत्वात्तस्याः ॥ ४० ॥ ४१ ॥ आरुरोहेत्यादि

दीपयन्तीः ॥ ३२–३४ ॥ श्रुत्वेति । बलोद्धर्षैः बलोत्कर्षैः । आपूर्यत पूर्णोऽभूत ॥ ३५ ॥ पर्वततटाग्रस्थः त्रिकूटशिखरस्थः ॥ ३६ ॥ ३७ ॥ तस्य त्रिकूटपर्वतस्य ।

श्लोकत्रयमेकान्वयम् । मलयपर्वतमित्यत्र लङ्कामलय उच्यते ॥ ४२-४५ ॥ त्रासयन् त्रासनार्थं ननाद । " लक्षणहेत्वोः " इति शतृप्रत्ययः । स्वागमनपर्यन्तं राक्षसानिर्गमनं मा भूदिति तेषां त्रासनार्थं ननादेति भावः । इवशब्दो वाक्यालङ्कारे ॥ ४६ ॥ ४७ ॥ नमस्कृत्वाऽथ रामायेति । अयं प्रारिप्सितकर्मसमाप्तये सम्यगिष्टदेवतानमस्कारः ॥ ४८ ॥ स पुच्छमिति । पुच्छोद्यमनेनोत्साहातिरेक उक्तः । पृष्ठविनमनेनाकाशगमनानुकूलप्राण

पद्भ्यां तु शैलमापीड्य वडवामुखवन्मुखम् । विवृत्योग्रं ननादोच्चैस्त्रासयन्निव राक्षसान् ॥४६॥ तस्य नानद्यमानस्य श्रुत्वा निनदमद्भुतम् । लङ्कास्था राक्षसाः सर्वे न शेकुः स्पन्दितुं भयात् ॥ ४७ ॥ नमस्कृत्वाऽथ रामाय मारुतिर्भीम विक्रमः । राघवार्थे परं कर्म समीहत परन्तपः ॥ ४८ ॥ स पुच्छमुद्यम्य भुजङ्गकल्पं विनम्य पृष्ठं श्रवणे निकुञ्च्य । विवृत्य वक्त्रं वडवामुखाभमापुप्लुवे व्योमनि चण्डवेगः ॥ ४९ ॥ स वृक्षषण्डांस्तरसा जहार शैलान् शिलाः प्राकृतवानरांश्च । बाहूरुवेगोद्धतसम्प्रणुन्नास्ते क्षीणवेगाः सलिले निपेतुः ॥ ५० ॥ स तौ प्रसार्योरगभोगकल्पौ भुजौ भुजङ्गारिनिकाशवीर्यः । जगाम मेरुं नगराजमग्र्यं दिशः प्रकर्षन्निव वायुसूनुः ॥ ५१ ॥ स सागरं घूर्णित वीचिमालं तदा भृशं भ्रामितसर्वसत्त्वम् । समीक्षमाणः सहसा जगाम चक्रं यथा विष्णुकराग्रमुक्तम् ॥ ५२ ॥

वायुनिरोध उक्तः । श्रवणनिकुञ्चनेन बलोद्दीपनम् । मुखव्यादानेनाभिनिवेशः ॥ ४९ ॥ स इति । प्राकृतवानरान् त्रिकूटवनानित्यवासिनः । आजहार उज्जहार । अस्यैवानुवादो वाहितिति । बाहूरुवेगोद्धतसंप्रणुन्नाः बाहूर्वोर्वेगेन उद्धताः उन्मूलिताः सम्प्रणुन्नाः दूरं प्रेरिताः । क्षीणवेगाः क्रमेण क्षीणवेगाः सन्तः ॥ ५० ॥ मेरुं कैलासपार्श्ववर्तिनम् । अस्ति ह्यन्यो हिमवदन्तर्वर्ती मेरुः । यद्वा मेरुं मेरूपलक्षितदिशि स्थितं नगराजं हिमवन्तम् । यद्वा मेरु



नगाः वृक्षाः । जज्वलुः परस्परसङ्घर्षादिति भावः ॥ ३८--४५ ॥ पद्भ्यामिति । त्रासयन् ननाद " लक्षणहेत्वोः क्रियायाः " इति हेतौ शतृप्रत्ययः । यावदौषधानयनं तावद्राक्षसनिर्गमनं मा भूदिति तेषां त्रासनार्थं ननादेति भावः । इवशब्दो वाक्यालङ्कारे ॥ ४६-४९ ॥ प्राकृतवानरान् त्रिकूटशिखरवने नित्यवास्तव्यप्राकृत वानरानित्यर्थः ॥ ५० ॥ जगाम मेरुं कैलासपार्श्ववर्तिनम् । अस्ति ह्यन्यो हिमवदनन्तरपर्वतो मेरुः । यद्वा मेरूपलक्षितदिशि स्थितं नगराजं हिमवन्तम् । यद्वा

मुद्दिश्य जगाम, उत्तरां दिशमुद्दिश्य जगामेत्यर्थः। यद्वा मेरुं मेरुसदृशम्। प्रकर्षन् कम्पयन् ॥ ५१ ॥ ५२ ॥ जनान्तान् जनपदान् ॥ ५३ ॥ पूर्व

मुपर्युपरि सागरमित्युक्त्या आदित्यपथमाकाशम् ॥ ५४ ॥ ५५ ॥ स्मरन् जाम्बवत इति। जाम्बवद्वाक्यस्मरणम् औषधिपर्वतमतीत्य वेगातिशयेना न्यत्र गमननिवृत्त्यर्थम्। वातरंहसा, उपलक्षित इति शेषः ॥ ५६–५८ ॥ दृष्टानामाश्रमाणां नामान्यनुक्रामति–स ब्रह्मकोशमित्यादिना। ब्रह्मणश्चतु

स पर्वतान् वृक्षगणान् सरांसि नदीस्तटाकानि पुरोत्तमानि। स्फीतान् जनान्तानपि सम्प्रवीक्ष्य जगाम वेगात् पितृतुल्यवेगः ॥ ५३ ॥ आदित्यपथमाश्रित्य जगाम स गतक्लमः। हनुमांस्त्वरितो वीरः पितृतुल्यपराक्रमः ॥ ५४ ॥ जवेन महता युक्तो मारुतिर्मारुतो यथा। जगाम हरिशार्दूलो दिशः शब्देन पूरयन् ॥५५॥ स्मरन् जाम्बवतो वाक्यं मारुतिर्वातरंहसा। ददर्श सहसा चापि हिमवन्तं महाकपिः ॥ ५६ ॥ नानाप्रस्रवणोपेतं बहुकन्दरनिर्झरम्। श्वेताभ्रचयसङ्काशैः शिखरैश्चारुदर्शनैः। शोभितं विविधैर्वृक्षैरगमत् पर्वतोत्तमम् ॥ ५७ ॥ स तं समासाद्य महानगेन्द्रमतिप्रवृद्धोत्तमघोरशृङ्गम्। ददर्श पुण्यानि महाश्रमाणि सुरर्षिसङ्घोत्तमसेवितानि ॥ ५८ ॥ स ब्रह्मकोशं रजतालयं च शक्रालयं रुद्रशरप्रमोक्षम्। हयाननं ब्रह्मशिरश्च दीप्तं ददर्श वैवस्वतकिङ्करांश्च ॥ ५९ ॥ वज्रालयं वैश्रवणालयं च सूर्यप्रभं सूर्यनिबन्धनं च। ब्रह्मासनं शङ्करकार्मुकं च ददर्श नाभिं च वसुन्धरायाः ॥ ६० ॥

र्मुखस्य कोशो गृहम्। "कोशोऽस्त्री कुड्मलेऽर्थौघे गुह्यदेशेऽण्डशीर्षयोः। गृहे देहे पुस्तकौघे पेट्यामसिपिधानके ॥" इति रत्नमाला। रजतालयं कैलासम्। शक्रस्य इन्द्रस्य। स्थानम् आश्रमस्थानम्। रुद्रशराः प्रमोक्ष्यन्ते लीलार्थं यस्मिन् तद्रुद्रशरप्रमोक्षं स्थानम्। हयाननं हयग्रीवाराधनस्थानम्। ब्रह्मशिरः रुद्रनिकृत्तब्रह्मशिरःप्रक्षेपस्थानम्। वैवस्वतकिङ्करान् विवस्वत्सम्बन्धिकिङ्करान्, ग्रामण्यादीन् मासान्तपरिचारकान् विश्रमार्थमत्र स्थितान् ॥ ५९ ॥ वज्रालयमिति। इन्द्राय ब्रह्मणा वज्रप्रदानस्थानम्। सूर्यप्रभमिति वैश्रवणालयविशेषणम्। सूर्यनिबन्धनं छायादेवीप्रीतये विश्व

मेरुतुल्यं हिमवन्तम्। सिंहो माणवक इतिवद्गौणप्रयोगः ॥ ५१ ॥ ५२ ॥ जनान्तान जनपदान् ॥ ५३–५५ ॥ स्मरन् जाम्बवतो वाक्यं जाम्बवद्वाक्यस्मरणमोषधिपर्वतमतीत्य वेगातिशयेनान्यत्र गमननिवृत्त्यर्थम् ॥ ५६–५८ ॥ दृष्टानामाश्रमाणां नामान्यनुक्रामति–स ब्रह्मकोशमित्यादिना। ब्रह्मकोशादीन्या

कर्मणा शाणारोपणाय सूर्यनिबन्धनस्थानम् ।  ब्रह्मासनं देवगणसंदर्शनाय कृतं ब्रह्मणः सिंहासनम् । ब्रह्मणामृषीणामासनं स्थानं वा । शङ्करकार्मुकं तत्स्थानमित्यर्थः । नाभिं पातालप्रवेशरन्ध्रम् ॥ ६० ॥ ब्रह्मादिस्थानेषु रजतालयमिति परिगणितमपि जाम्ववदुपादिष्टप्रकारेण दर्शनाय पुनराह– कैलासमिति । हिमवच्छिला नाम कैलासपार्श्वे काश्चिच्छिलाविशेषः । ऋषभम् ऋषभाख्यमौषधिपर्वतम् । काञ्चनशैलं पूर्वं मेरुमित्युक्तम् । सन्दीप्तसर्वौ

कैलासमग्र्यं हिमवच्छिलां च तथर्षभं काञ्चनशैलमग्र्यम् । सन्दीप्तसर्वौषधिसम्प्रदीप्तं ददर्श सर्वौषधिपर्वतेन्द्रम् ॥ ६१ ॥ स तं समीक्ष्यानलरश्मिदीप्तं विसिष्मिये वासवदूतसूनुः । आप्लुत्य तं चौषधिपर्वतेन्द्रं तत्रौषधीनां विचयं चकार ॥ ६२ ॥ स योजनसहस्राणि समतीत्य महाकपिः । दिव्यौषधिधरं शैलं व्यचरन्मारुतात्मजः ॥६३॥ महौषध्यस्ततः सर्वास्तस्मिन् पर्वतसत्तमे । विज्ञायार्थिनमायान्तं ततो जग्मुरदर्शनम् ॥ ६४ ॥ स ता महात्मा हनुमानपश्यन् चुकोप कोपाच्च भृशं ननाद । अमृष्यमाणोऽग्निनिकाशचक्षुर्महीधरेन्द्रं तमुवाच वाक्यम् ॥ ६५ ॥ किमेतदेवं सुविनिश्चितं ते यद्राघवे नासि कृतानुकम्पः । पश्याद्य मद्बाहुबलाभिभूतो विकीर्णमात्मानमथो नगेन्द्र ॥६६॥

षधिसम्प्रदीप्तम् सन्दीप्ताभिः रात्रौ ज्वलन्तीभिः सर्वाभिः ओषधीभिः तृणज्योतिर्भिः सम्प्रदीप्तं सम्यक्प्रकाशमानम् । सर्वौषधिपर्वतेन्द्रं मृतसञ्जीवन्यादिसर्वौषधियुक्तपर्वतेन्द्रं ददर्श ॥ ६१ ॥ वासवदूतः वायुः वासवादेशेन मेघप्रेरकत्वात् । अत एवाभिषेकसमये इन्द्रेण प्रेरितो हारं रामायोपाहरत् । विचयम् अन्वेषणम् ॥ ६२ ॥ अतीत्य अतीत्यापीत्यर्थः । अनेन श्रमरहितत्वमुक्तम् ॥ ६३ ॥ महौषध्य इति । ततः तस्य हनुमतः अदर्शनम् ॥ ६४ ॥ ताः ओषधीः ॥ ६५ ॥ राघवे कृतानुकम्पो नासीति यत् एतत् एवं सुविनिश्चितं यदि तर्हि आत्मानमथो विकीर्णं पश्येति सम्बन्धः ॥ ६६ ॥



श्रमाणि ॥ ५९ ॥ ६० ॥ हिमवच्छिलां, कैलासपार्श्वे काश्चिच्छिलाविशेषः । यस्याश्चित्रशिलेति इतिहासप्रसिद्धिः ॥ ६१ ॥ वासवदूतसूनुः वायुसुतः । वायोर्वासवदूतत्वं वासवादेशेन मेघादिप्रेरकत्वात ॥ ६२–६५ ॥ किमिति । यद्यस्मात् राघवे कृतानुकम्पो नासि तस्मादेतदोषध्यदर्शनम्, ने त्वया सुनिश्चितं किम् ?

एतच्छ्लोकानन्तरमित्युक्त्वेत्यध्याहार्यम् । स इति । सनागं सगजम् । उन्ममाथ उत्पाटयामास ॥ ६७॥६८॥ भास्कराध्वानम् अन्तरिक्षम्, भास्कराभ

शिखरग्रहणात् स्वयं भास्करसन्निकाशत्वाच्च । सूर्यसमीपस्थः प्रतिसूर्य इव बभावित्यर्थः॥६९॥ सहस्रधारेण अर्पितेन हस्तेऽर्पितेन । सपावकेन अग्निज्वालावता । चक्रेण विष्णुरिव रराज ॥७०॥ तं वानरा इत्यनेन दूरादेव गन्धाघ्राणेन सर्वे जीविता इति गम्यते ॥७१॥ शैलोत्तमे त्रिकूटशिखरे ॥७२॥७३॥

स तस्य शृङ्गं सनगं सनागं सकाञ्चनं धातुसहस्रजुष्टम् । विकीर्णकूटज्वलिताग्रसानुं प्रगृह्य वेगात् सहसोन्ममाथ ॥ ६७ ॥ स तं समुत्पाट्य खमुत्पपात वित्रास्य लोकान् ससुरासुरेन्द्रान् । संस्तूयमानः खचरैरनेकैर्जगाम वेगाद् गरुडोग्रवेगः ॥ ६८ ॥ स भास्कराध्वानमनुप्रपन्नस्तं भास्कराभं शिखरं प्रगृह्य । बभौ तदा भास्करसन्निकाशो रवेः समीपे प्रतिभास्कराभः ॥ ६९ ॥ स तेन शैलेन भृशं रराज शैलोपमो गन्धवहात्मजस्तु । सहस्रधारेण सपावकेन चक्रेण खे विष्णुरिवार्पितेन ॥ ७० ॥ तं वानराः प्रेक्ष्य विनेदुरुच्चैः स तानपि प्रेक्ष्य मुदा ननाद । तेषां समुद्घुष्टरवं निशम्य लङ्कालया भीमतरं विनेदुः ॥ ७१ ॥ ततो महात्मा निपपात तस्मिन् शैलोत्तमे वानरसैन्यमध्ये । हर्युत्तमेभ्यः शिरसाऽभिवाद्य विभीषणं तत्र स सस्वजे च ॥ ७२ ॥ तावप्युभौ मानुषराजपुत्रौ तं गन्धमाघ्राय महौषधीनाम् । बभूवतुस्तत्र तदा विशल्यावुत्तस्थुरन्ये च हरिप्रवीराः ॥ ७३ ॥ सर्वे विशल्या विरुजः क्षणेन हरिप्रवीरा निहताश्च ये स्युः । गन्धेन तासां प्रवरौषधीनां सुप्ता निशान्तेष्विव सम्प्रबुद्धाः ॥ ७४ ॥ यदाप्रभृति लङ्कायां युद्ध्यन्ते कपिराक्षसाः । तदाप्रभृति मानार्थमाज्ञया रावणस्य च ॥ ७५ ॥

विशल्यकरण्या विशल्याः, सन्धानकरण्या विरुजः, ये पूर्वं निहतास्तेऽपि सुप्ता निशान्तेष्विव सम्प्रबुद्धाः । अनेन सावर्ण्यसिद्धिरप्युक्ता ॥ ७४ ॥ तर्हि निहता राक्षसाः किं न प्रबुद्धाः ? इत्यत्राह—यदाप्रभृतीति । मानार्थं हतानां राक्षसानाम् इयत्तया अपरिज्ञानार्थम्, मृतशरीरसङ्ख्याप्रतिपत्त्यर्थं वा ।
तर्हि विकीर्णमात्मानं पश्येति सम्बन्धः ॥ ६६ ॥ सनागं सगजम् । उन्ममाथ उत्पाटयामास ॥ ६७–६९ ॥ सहस्रधारेण सहस्रारेण अर्पितेन ॥७०–७४॥ यथा हताः

स०–विनेदुः अनेन वातमात्रस्पर्शेन गात्रस्मृतिररोगता च कपीनां जाते इति ध्वन्यते । तेषां स च ते च ते । तेषां हनुमद्वानराणाम् ॥ ७१ ॥

पूर्वयोजनायामर्थशब्दो निवृत्तिपरः। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। परैः परिच्छिद्य ज्ञानं मा भूदित्येवमर्थमिति भावः। हताहताः मुमूर्षावस्थाः। किं पुनर्मृता इति भावः। "क्तेन नञ्विशिष्टेनानञ्" इति कर्मधारयः। यद्वा यदा यदा ये ये हताः तदा तदा ते ते क्षिप्ता इत्यर्थः ॥ ७५-७७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुस्सप्ततितमः सर्गः ॥ ७४ ॥



ये हन्यन्ते रणे तत्र राक्षसाः कपिकुञ्जरैः। हताहतास्तु क्षिप्यन्ते सर्वे एव तु सागरे ॥ ७६ ॥ ततो हरिर्गन्धवहात्मजस्तु तमोषधीशैलमुदग्रवीर्यः। निनाय वेगाद्धिमवन्तमेव पुनश्च रामेण समाजगाम ॥ ७७ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे चतुस्सप्ततितमः सर्गः ॥ ७४ ॥

ततोऽब्रवीन्महातेजाः सुग्रीवो वानराधिपः। अर्थ्यं विज्ञापयंश्चापि हनुमन्तमिदं वचः ॥ १ ॥

एवं हनुमदानीतौषधिपर्वतगन्धमात्रेण समागतप्राणेषु सर्वेषु विशल्येषु समुत्थितेषु सुग्रीवः स्वातिसन्धानजनितकोपातिरेकेण सद्यो निश्शेषं लङ्कानिर्दहनं हनुमते नियमयति-तत इत्यादि। अर्थ्यम् अर्थादनपेतम्। प्रयोजननियतं वाक्यं विज्ञापयन्, रामायेति शेषः। ततो हनुमन्तमब्रवीदिति योजना।

वानराः प्रतिबुद्धाः, एवं राक्षसाः किमिति न प्रतिबुद्धास्तत्राह-यदाप्रभृतीत्यादिश्लोकद्वयेन। मानार्थं मानं हतानां राक्षसानामियत्ता तदर्थं तत्परिज्ञानार्थम्। यद्वा मानः अभिमानः तदर्थं राक्षसा बहवो हता इति सर्वे ज्ञास्यन्ति तदभिमानादप्रकटनायेत्यर्थः। हताहतास्तु मुमूर्षावस्थापन्ना अपीत्यर्थः ॥ ७५-७७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां चतुस्सप्ततितमः सर्गः ॥ ७४ ॥ तत इति। अर्थ्यम् अर्थादनपेतम्, कर्तव्य

स०-सागरोपरि गिरिशिखरं परिगृह्योत्प्लवने तदन्तःस्थानां रक्षसामनुज्जीवनं च न गन्धस्यान्तःप्रवेशासामर्थ्यात्। किं नाम यादोभी रक्षसां भक्षितत्वात्। निलयनमात्रेण हनुमत्कृतपर्वतोत्पाटनतः एतदनिष्टकार्यसाधनेऽयमुत्तरत्र किं कुर्यादिति भीतेर्वा। "भीषास्माद्वातः पवते" इत्यादेः रामविरुद्धकार्यकरणभीतिरिवात्मजप्रीतेर्वा वायुर्न निनाय नीरनायकमध्ये गन्धमिति वेति ज्ञेयम्। ओषधीनामर्थिनं ज्ञात्वाऽदर्शनं गता इत्यनेन ज्ञानित्वोक्तेरनुसन्धानादिकं सम्भवतीति सुघटोऽयमर्थः ॥ ७६ ॥ ओषधीशैलः तद्रूपपर्वतः, तम्। तत्रत्य एव वेगात् हिमवन्तं स्वस्थानं तम् उत्कृत्तशैलभागं निनाय प्रापयामास। 'संस्थित एव तत्र' इत्यन्यत्रोक्तेः। पुनः प्रक्षेपानन्तरं रामेण समाजगाम सङ्गतोऽभूत्। प्रथमेन्द्रजिद्युद्ध एवादृष्टतदृष्टयै 'इदमम्भो गृहीत्वा तु' इत्यारभ्य 'चकार नेत्रयोः शौचम्' इति गर्भीकृत्य 'क्षणेनातीन्द्रियाण्येषां चक्षूंषि' इत्यनेन वनपर्वोक्ता 'अनेन दृष्टोऽहमिति स्म दुष्टः' इत्यन्यत्र रीत्यन्तरेणोक्ता च कथानुकिर्त्न दोषायेति नीतेर्विरुद्धेति च संप्रत्येति ज्ञेयम्। ओषधीति दीर्घोपतालेखनं निर्बीजम्। अत्रैव बहुस्थलेषु ओषध्य इति पूर्वमुक्तेः। लेखनं यदि कर्तव्यं तर्हि तत्रैव कर्तव्यम्। ईकारान्तत्वेन समाधानं तत्रेवात्रापि सममिति न स्वरसम् ॥ ७७ ॥

यद्वा अर्थ्यं विज्ञापयन् विशेषेण ज्ञापयन् ॥ १ ॥ इदानीं लङ्कादाहोपयोगि निमित्तमाह—यत इति । उपनिर्हारम् उपनिष्क्रमणम् । युद्धाय निर्गमनमिति यावत् । हतपुत्रादित्वेनानुत्साहाद्रावणो न निर्गमिष्यतीति भावः । अत्र आग्रहेण प्रेतनिर्यापनरूढनिर्हारपदप्रयोगः । दातुं कर्तुमिति यावत् । धातूनामनेकार्थत्वात् । उपनिर्हारशब्दः उपनिष्क्रम्य युद्धपरो वा ॥ २ ॥ लघवः वेगवन्तः । उत्पतन्तु प्राकारमुत्प्लुत्य गच्छन्तु ॥ ३ ॥ तत इति । ननु

यतो हतः कुम्भकर्णः कुमाराश्च निषूदिताः । नेदानीमुपनिर्हारं रावणो दातुमर्हति ॥ २ ॥ ये ये महाबलाः सन्ति लघवश्च प्लवङ्गमाः । लङ्कामभ्युत्पतन्त्वाशु गृह्योल्काः प्लवगर्षभाः ॥ [ हरयो हरिसङ्काशाः प्रदग्धुं रावणालयम् ।] ॥ ३ ॥ ततोऽस्तं गत आदित्ये रौद्रे तस्मिन्निशामुखे । लङ्कामभिमुखाः सोल्का जग्मुस्ते प्लवगर्षभाः ॥ ४ ॥ उल्काहस्तैर्हरिगणैः सर्वतः समभिद्रुताः । आरक्षस्था विरूपाक्षाः सहसा विप्रदुद्रुवुः ॥ ५ ॥ गोपुराट्टप्रतोलीषु चर्यासु विविधासु च । प्रासादेषु च संहृष्टाः ससृजुस्ते हुताशनम् । तेषां गृहसहस्राणि ददाह हुतभुक् तदा ॥ ६ ॥

पूर्वम् 'उल्काहस्तौ तदा रात्रौ ' इत्युक्तम्, अत्र आदित्यास्तमयसमय इति गम्यते, अतो विरुद्धमिति चेन्न विरोधः । आदित्येऽस्तं गत इति प्रकाशाभावोक्तिः । निशामुख इति रात्रेः प्रथमयाम उच्यते । रौद्र इति विशेषणात् यामान्तत्वेन गाढान्धकारत्वमुच्यते । हनुमांश्च महाद्भुतवेगशालितया मुहूर्तमात्रेण प्रस्थायौषधिपर्वतमानीय तं पुनस्तत्र निक्षिप्यागतवानिति तस्य वेगातिशयश्च प्रतिपादितो भवति ॥ ४ ॥ आरक्षस्थाः गुल्मस्थाः नगररक्षिणो वा । आरक्षो दुर्गरक्षिणां स्थानम्, तत्रस्था वा । "त्रिष्वारक्षस्तु रक्षणे" इति रत्नमाला । विरूपाक्षाः राक्षसाः ॥५॥ गोपुरं पुरद्वारम् । अट्टन्तिमित्यर्थः । विज्ञापयन् कर्तव्यं बोधयन्नित्यर्थः ॥ १ ॥ उपनिर्हारम् उपनिष्क्रम्य युद्धप्रदानम् ॥ २ ॥ ३ ॥ निशामुखे निशायाः पूर्वयामे । "उल्काहस्तौ तदा तौ तु रणशीर्षे विचेरतुः" इति पूर्वसर्गोक्तिः सन्ध्याकालानन्तरं प्रस्थायौषधिपर्वतमानीय पुनस्तत्र निक्षिप्य आगतं हनुमन्तमुद्दिश्य "ये ये महाबलास्सन्ति लघवश्च प्लवङ्गमाः । लङ्कामभ्युत्पतन्तु" इति सुग्रीवादेशानन्तरं प्लवगर्षभाः निशायां लङ्कां जग्मुरित्यभिधानात् हनुमतः अचिन्त्यवेगातिशयस्सूच्यते । ततोऽस्तङ्गत आदित्य इति पूर्वसिद्धस्यैव अस्तमयस्यानुवादः, न त्विदानीमस्तमयः । यद्वा ' ततोऽस्तं गत आदित्ये रौद्रे तस्मिन्निशामुखे ' इति परदिनवृत्तान्तः ॥ ४ ॥ आरक्षस्थाः गुल्मस्थाः । विरूपाक्षा राक्षसाः ॥ ५ ॥ तेषां वानराणां सम्बन्धी हुतभुक् ॥ ६ ॥

कतक०—तस्मादिदानीम् उपनिर्हारं पुररक्षाम् । दातुं सम्पादयितुम् नार्हति ॥ २ ॥ स०—आरक्षं रक्षणीयं द्वारादि । तत्र तिष्ठन्तीत्यारक्षस्थाः । " आरक्षं रक्षणीये स्यात् " इति विश्वः ॥ ५ ॥

हिंसन्ति योधा एषु स्थित्वेत्यट्टाः प्राकाराग्रस्थितगृहाणि । " [illegible] " इत्यमरः । अतोल्यः वीथ्यः । चर्या अवान्तरवीथ्यः । ते वानराः । ससृजुः क्षिप्तवन्तः । तेषां वानराणां सम्बन्धी हुतभुगित्यन्वयः ॥ ६ ॥ दहनकार्यं प्रपञ्चयति—प्रासादा इत्यादि । तत्र प्रासादेषु । दह्यते अदह्यत । व्यत्ययेन भूतार्थे लट् । वरं सुगन्धम् ॥ ७ ॥ मौक्तिका इत्यादिचतुःश्लोक्येकान्वया । सर्वत्र अदह्यतेत्यस्य यथायथं विपरिणामेनान्वयः । मणयः



प्रासादाः पर्वताकाराः पतन्ति धरणीतले । अगरुर्दह्यते तत्र वर च हरिचन्दनम् ॥ ७ ॥ मौक्तिका मणयः स्निग्धा वज्रं चापि प्रवालकम् । क्षौमं च दह्यते तत्र कौशेयं चापि शोभनम् ॥ ८ ॥ आविकं विविधं चौर्णं काञ्चनं भाण्डमायुधम् । नानाविकृतसंस्थान वाजिभाण्डपरिच्छदौ ॥ ९ ॥ गजग्रैवेयकक्ष्याश्च रथभाण्डाश्च संस्कृताः । तनुत्राणि च योधानां हस्त्यश्वानां च वम च ॥ १० ॥

उपात्तमौक्तिकादिव्यतिरिक्ताः । क्षौमकौशेययोरुपादानभेदात् भेदः । " वाल्कं क्षौमादि " " कौशेयं कृमिकोशोत्थम् " इत्युभयत्राप्यमरः । शोभनं शोभमानम् । आविकम् अविरोमनिर्मितं कम्बलम् । और्णं मेषादिरोमनिर्मितं कम्बलम् । "ऊर्णा मेषादिलोम्नि स्यात्" इत्यमरः । भाण्डम् उपकरणम् । आभरणादि वा । " भाण्डं तु भूषायां नादे पात्राश्वभूषयोः । मार्जने कलशादौ च वणिङ्मूलधनेऽपि च ॥ " इति रत्नमाला । नानाविकृतसंस्थानं नानाविधविकारवद्विचित्रसन्निवेशमिति भूषणादिसर्वविशेषणम् । वाजिभाण्डपरिच्छदौ अश्वालङ्कारपल्ययनादिपरिबर्हौ । भाण्डशब्देनैवाश्वाभरणसिद्धावपि कर्णावतंसादिवत् साहित्यबोधनार्थं वाजिपदम् । गजानां ग्रैवेयकानि कण्ठभूषणानि । कक्ष्याः इभबन्धिन्यः । " ग्रैवेयकं कण्ठभूषा " " कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने । " इत्युभयत्राप्यमरः । संस्कृताः उत्तेजिताः । योधानां तनुत्राणि वर्माणि । हस्त्यश्वानां वर्म अयः

पतन्ति अपतन् । दह्यते अदह्यत । भूतार्थे लट् ॥ ७ ॥ ८ ॥ आविकम् अविरोमनिर्मितम् । और्णम् ऊर्णा मेषादिलोम, तज्जन्यकम्बलादि । काञ्चनं भाण्डं सौवर्णमुपकरणम् । नानाविकृतसंस्थानं नाना अनेकं विकृतसंस्थानं विचित्रविन्यासम् । वाजिभाण्डपरिच्छदौ वाजिभाण्डमश्वालङ्कारः, परिच्छदः पल्ययनादिपरिकरः । भाण्डशब्देनैव

स०—"भाण्डशब्दोऽलङ्कारमात्रवाची रथभाण्डेत्युक्तेः । अत एव वाजिभाण्डेत्यत्र वाजिग्रहणं चरितार्थम् । अश्वालङ्कारवाचित्वे तु तद्वैयर्थ्यं स्पष्टमेव । तत्त्वेऽपि कर्णावतंसादिवत्साहित्यबोधनार्थं तत्र सः । रथभाण्डेत्यत्र तु लाक्षणिक इत्यन्ये " इति नागोजिभट्टव्याख्याया भिन्नानुपूर्वीमत्या अपि वस्तुतोऽर्थैनैकतावत्यास्तीर्थव्याख्याया अपि "भाण्डं भूषणमात्रेऽपि—नादे पात्रे तुरङ्गाणां भूषणे " इति विश्वः स्वानवलोकननिमित्ततां स्पष्टमाचष्ट इति न न आयासोऽपेक्षितः ॥ १० ॥

कांस्यादिनिर्मितम् । रोमजम् अविमेषादिरोमभिन्नरोमनिर्मितं कम्बलादि । वालजं चामरादि । चर्मसंस्तरणं खेटकं वा । व्याघ्रजं वैयाघ्रं नखवालादि । अण्डजं कस्तूरिकादि द्रव्यम् ॥ ८–११ ॥ मुक्तेति । प्रासादाः पर्वताकारा इत्यत्र केवलप्रासादाः, अत्र मुक्तादिखचिताः । अस्त्रसंयोगान् संयुज्यन्त इति संयोगाः सङ्घाताः तान् । तत्र लङ्कायाम् ॥ १२ ॥ गृहच्छन्दान् स्वस्तिकादिगृहविन्यासान् । गृहगर्धिनां गृहस्थानाम् ॥ १३ ॥ हठोपनतत्वेन

खड्गा धनूंषि ज्या बाणास्तोमराङ्कुशशक्तयः । रोमजं वालजं चर्म व्याघ्रजं चाण्डजं बहु ॥ ११ ॥ मुक्तामणिविचित्रांश्च प्रासादांश्च समन्ततः । विविधानस्त्रसंयोगानग्निर्दहति तत्र वै ॥ १२ ॥ नानाविधान् गृहच्छन्दान् ददाह हुतभुक् तदा । आवासान् राक्षसानां च सर्वेषां गृहगर्धिनाम् ॥ १३ ॥ हेमचित्रतनुत्राणां स्रग्दामाम्बरधारिणाम् । शीधुपानचलाक्षाणां मदविह्वलगामिनाम् ॥ १४ ॥ कान्तालम्बितवस्त्राणां शत्रुसञ्जातमन्युनाम् । गदाशूलासिहस्तानां खादतां पिबतामपि ॥ १५ ॥ शयनेषु महार्हेषु प्रसुप्तानां प्रियैः सह । त्रस्तानां गच्छतां तूर्णं पुत्रानादाय सर्वतः ॥ १६ ॥

खेदातिशयं व्यञ्जयितुं तेषां व्यासङ्गं दर्शयति–हेमेत्यादिना । हेमचित्रतनुत्राणां हेममयाद्भुतवर्मणाम् । "आलेख्याश्चर्ययोश्चित्रम्" इत्यमरः । वर्म ग्रहणव्यासक्तानामित्यर्थः । स्रग्दामानि पुष्पमालाः । दामशब्दो हारपरः । स्रग्दामशब्देनानेकसरनिर्मितपुष्पमालोच्यत इत्याचार्याः । अत्र सर्वत्रापि व्यासङ्ग एव तात्पर्यम् । शीधुपानचलाक्षाणां मद्यपानलोलदृष्टीनाम् । अत एव मदविह्वलगामिनां मदेन मन्दगामिनाम् ॥ १४ ॥ कान्तालम्बितवस्त्राणाम् आलम्बितवस्त्रकान्तानाम्, रतिपराणामिति यावत् । शत्रुषु सञ्जातमन्युनां सञ्जातक्रोधानाम् । दीर्घाभाव आर्षः । खादतां मांसादिकं भक्षयताम् । पिबतां मद्यपानं कुर्वताम् । शीधुपानेत्यत्र मद्यपानकार्यमुक्तम् । क्षीरादिकं पिबतामिति वा ॥ १५ ॥ महार्हेष्विति विशेषणेन सुप्त्यतिशयहेतु

अश्वाभरणप्रतीतेः पुनर्वाजिग्रहणं कर्णावतंसवत्साहित्यावबोधनार्थम् । रथभाण्डाः रथोपकरणानि । संस्कृताः सम्यग्ग्रथिताः । रोमजं कम्बलादि । वालजं चामरादि । व्याघ्रजं व्याघ्रचर्म । अण्डजं कस्तूरिकादि ॥ ९–११ ॥ अस्त्रसंयोगान् अस्त्रसङ्घातान् ॥ १२ ॥ गृहच्छन्दान् स्वस्तिकादिगृहसन्निवेशविशेषान् । गृहगर्धिनां गृहस्थानाम् ॥ १३ ॥ दामानि हाराः ॥ १४ ॥ शत्रुसञ्जातमन्युनामित्यत्र दीर्घाभाव आर्षः ॥ १५ ॥ प्रियैः प्रियाभिस्सहेत्यर्थः ॥ १६ ॥ १७ ॥

स०–प्रियैः प्रियाश्च प्रियाणि च प्रियाणि कान्तापत्यानि तैः । "नपुंसकमनपुंसकेन" इत्येकशेषः । पुत्रानादाय गच्छतां निरग्निकस्थलं प्रति ॥ १६ ॥

रुक्तः । प्रियैः दारैरिति विशेष्यम् ॥ १६ ॥ तेषाम् एवं व्यासक्तानां शतसहस्राणीति सङ्ख्यासङ्ख्येययोरभेदेन निर्देशः, अनेकशतसहस्रराक्षसानित्यर्थः। पुनः पुनरित्यनेन तद्वाधिरवसास्नेहेनाधिकज्वालोच्यते ॥ १७ ॥ रावणस्य पुनर्धननाशं व्यञ्जयितुमुत्तमगृहदहनं दर्शयति–सारवन्तीत्यादिना। सारवन्ति श्रेष्ठधनवन्ति। "सारो बले स्थिरांशेऽर्थे पुमान् न्याये वरे त्रिषु" इति रत्नमाला। गम्भीराणि महातलपवन्ति। गुणवन्ति सौन्दर्यवन्ति। हेमचन्द्रार्ध

तेषां शतसहस्राणि तदा लङ्कानिवासिनाम् । अदहत् पावकस्तत्र जज्वाल च पुनः पुनः ॥१७॥ सारवन्ति महार्हाणि गम्भीरगुणवन्ति च । हेमचन्द्रार्धचन्द्राणि चन्द्रशालोन्नतानि च ॥१८॥ रत्नचित्रगवाक्षाणि साधिष्ठानानि सर्वशः । मणिविद्रुमचित्राणि स्पृशन्तीव दिवाकरम् ॥ १९ ॥ क्रौञ्चबर्हिणवीणानां भूषणानां च निस्वनैः । नादितान्यचलाभानि वेश्मान्यग्निर्ददाह सः ॥ २० ॥ ज्वलनेन परीतानि तोरणानि चकाशिरे । विद्युद्भिरिव नद्धानि मेघजालानि घर्मगे ॥ २१ ॥ ज्वलनेन परीतानि निपेतुर्भवनान्यथ । वज्रिवज्रहतानीव शिखराणि महागिरेः ॥ २२ ॥ विमानेषु प्रसुप्ताश्च दह्यमाना वराङ्गनाः । त्यक्ताभरणसर्वाङ्गा हा हेत्युच्चैर्विचुक्रुशुः ॥ २३ ॥ तानि निर्दह्यमानानि दूरतः प्रचकाशिरे । हिमवच्छिखराणीव दीप्तौषधिवनानि च ॥ २४ ॥

चन्द्राणि हेमकृतानि चन्द्राकाराण्यर्धचन्द्राकाराणि चेत्यर्थः । चन्द्रशालाभिः शिरोगृहैः उन्नतानि । "चन्द्रशाला शिरोगृहम्" इत्यमरः ॥ १८ ॥ साधिष्ठानानि शय्यासनादिसहितानि । स्पृशन्तीव दिवाकरम् सूर्यपथपर्यन्तोन्नतानीत्यर्थः ॥ १९ ॥ क्रौञ्चादयो लीलार्थं गृहेषु संवर्धिताः ॥ २० ॥ ज्वलनेनेति । घर्मोऽस्माद्गच्छतीति घर्मगः वर्षाकाल इत्यर्थः । घर्मगे निदाघे गच्छतीति शेष इत्यप्याहुः । घर्मशब्देन घर्मान्तो लक्ष्यते । तं गच्छति प्राप्नोतीति घर्मगः वर्षादिरित्यपरे । वस्तुतो घर्मगे ग्रीष्म इत्येवार्थः । लङ्कायां दह्यमानायां सन्तापे च समन्ततः प्रसरति दह्यमानतोरणादीनि निदाघप्ररूढसविद्युन्मेघतुल्यानीत्यर्थः ॥ २१ ॥ ज्वलनेन परीतानि निपेतुरित्यस्य वज्रिवज्रहतानीवेत्युत्तरार्धम् ॥ २२ ॥ विमानेष्विति । त्यक्ताभरणसर्वाङ्गाः सर्वाङ्गाभरणान्यपि त्यक्त्वेत्यर्थः ॥ २३ ॥ तानि पूर्वश्लोके प्रस्वापाधिकरणतयोपात्तानि विमानानि । दीप्तौषधिवनानि प्रकाशिततृणज्योति

हेमचन्द्रार्धचन्द्राणि हेमनिर्मितानि चन्द्राकाराणि अर्धचन्द्राकाराणि च । चन्द्रशालोन्नतानि शिरोगृहैः उन्नतानि वेश्मान्यग्निर्ददाहेति सम्बन्धः ॥ १८–२० ॥ घर्मगे घर्मोऽस्माद्गच्छतीति घर्मगः वर्षाकालः ॥ २१ ॥ २२ ॥ विमानेषु सप्तभूमप्रासादेषु ॥ २३–२४ ॥ स० लङ्कानिवासिनां शतसहस्राणि गृहाण्यदहत् ॥ १७ ॥

र्णवानि ॥ २४ ॥ हर्म्याग्रैरिति । ज्वालाप्रज्वलितैः ज्वालाविशिष्टैरित्यर्थः ॥ २५ ॥ हस्त्यध्यक्षैः हस्तिपकैः । मुक्तैः निगलान्मोचितैः । मुक्तैश्च तुरगैरपीत्यत्राप्यश्वाध्यक्षैरित्यध्याहार्यम् । लोकान्ते प्रलये ॥ २६ ॥ २७ ॥ छायासंसक्तसलिलः प्रतिबिम्बसंक्रान्तजलः । लोहितोदः लोहितोदकः ।

हर्म्याग्रैर्दह्यमानैश्च ज्वालाप्रज्वलितैरपि । रात्रौ सा दृश्यते लङ्का पुष्पितैरिव किंशुकैः ॥२५॥ हस्त्यध्यक्षैर्गजैर्मुक्तैर्मुक्तैश्च तुरगैरपि । बभूव लङ्का लोकान्ते भ्रान्तग्राह इवार्णवः ॥ २६ ॥ अश्वं मुक्तं गजो दृष्ट्वा क्वचिद्भीतोऽपसर्पति । भीतो भीतं गजं दृष्ट्वा क्वचिदश्वो निवर्तते ॥२७॥ लङ्कायां दह्यमानायां शुशुभे स महार्णवः । छायासंसक्तसलिलो लोहितोद इवार्णवः ॥ २८ ॥ सा बभूव मुहूर्तेन हरिभिर्दीपिता पुरी । लोकस्यास्य क्षये घोरे प्रदीप्तेव वसुन्धरा ॥ २९ ॥ नारीजनस्य धूमेन व्याप्तस्योच्चैर्विनेदुषः । स्वनो ज्वलनतप्तस्य शुश्रुवे दशयोजनम् ॥३०॥ प्रदग्धकायानपरान् राक्षसान्निर्गतान् बहिः । सहसाऽभ्युत्पतन्ति स्म हरयोऽथ युयुत्सवः ॥ ३१ ॥ उद्घुष्टं वानराणां च राक्षसानां च निस्वनः । दिशो दश समुद्रं च पृथिवीं चान्वनादयत् ॥३२॥ विशल्यौ तु महात्मानौ तावुभौ रामलक्ष्मणौ । असम्भ्रान्तौ जगृहतुस्तदोभे धनुषी वरे ॥ ३३ ॥ ततो विष्फारयानस्य रामस्य धनुरुत्तमम् । बभूव तुमुलः शब्दो राक्षसानां भयावहः ॥ ३४ ॥

उदादेश आर्षः ॥ २८ ॥ २९ ॥ नारीति । नारीजनस्यातिसाहसिकत्वाद्दशयोजनस्वनश्रवणम् ॥ ३० ॥ ३१ ॥ उद्घुष्टम् उद्घोषः । भावे क्तः ॥ ३२ ॥ विशल्यौ निर्गलितशरीरनिमग्नशरफलकौ । तदोभे धनुषी वरे इति पाठः ॥ ३३ ॥ तत इति । विष्फारयानस्य ध्वनयतः । "विस्फारो धनुषः स्वानः" इत्यमरः । "स्फुरतिस्फुलत्योर्निर्निविभ्यः" इति षत्वम् । मुगभाव अ

लोकान्ते प्रलये । भ्रान्ता घूर्णमानाः ग्राहा यस्य सः ॥ २६ ॥ २७ ॥ छाया वह्निज्वालाप्रतिबिम्बम् ॥ २८–३४ ॥

स०—लोहितोदः लोहितं रक्तवर्णम् उदं यस्य सः । उदकस्य उदादेशः ... ॥ ३४ ॥

अशोभतेति । वेदमयं धनुः वेदोक्तलक्षणं धनुः "कृत्तिवासा पिनाकी" इति श्रुत्या प्रतिपादितमहिमेति वाऽर्थः ॥ ३५ ॥ उद्घुष्टमिति । रामस्य ज्याशब्दः वानराणामुद्घुष्टं राक्षसानां निस्वनं च तावुभावतीत्य शुश्रुवे ॥ ३६ ॥ वानरेति । वानरोद्घुष्टघोषः वानरोत्पादितघोषः

अशोभत तदा रामो धनुर्विष्फारयन् महत् । भगवानिव संक्रुद्धो भवो वेदमयं धनुः ॥ ३५ ॥ उद्घुष्टं वानराणां च राक्षसानां च निस्वनम् । ज्याशब्दस्तावुभौ शब्दावति रामस्य शुश्रुवे ॥ ३६ ॥ वानरोद्घुष्टघोषश्च राक्षसानां च निस्वनः । ज्याशब्दश्चापि रामस्य त्रयं व्याप दिशो दश ॥ ३७ ॥ तस्य कार्मुकमुक्तैश्च शरैस्तत्पुरगोपुरम् । कैलासशृङ्गप्रतिमं विकीर्णमपतद्भुवि ॥ ३८ ॥ ततो रामशरान् दृष्ट्वा विमानेषु गृहेषु च । सन्नाहो राक्षसेन्द्राणां तुमुलः समपद्यत ॥ ३९ ॥ तेषां सन्नह्यमानानां सिंहनादं च कुर्वताम् । शर्वरी राक्षसेन्द्राणां रौद्रीव समपद्यत ॥ ४० ॥ आदिष्टा वानरेन्द्रास्तु सुग्रीवेण महात्मना । आसन्नद्वारमासाद्य युध्यध्वं प्लवगर्षभाः ॥ ४१ ॥ यश्च वो वितथं कुर्यात्तत्र तत्र ह्युपस्थितः । स हन्तव्यो हि सम्प्लुत्य राजशासनदूषकः ॥ ४२ ॥ तेषु वानरमुख्येषु दीप्तोल्कोज्ज्वलपाणिषु । स्थितेषु द्वारमासाद्य रावणं मन्युराविशत् ॥ ४३ ॥

॥ ३७ ॥ ३८ ॥ तुमुलः अधिकः ॥ ३९ ॥ तेषामिति । सन्नह्यमानानां कक्ष्याबन्धनादि युद्धसन्नाहं कुर्वताम् । रौद्री प्रलयरात्रिः ॥ ४० ॥ आदिष्टा इत्यादिश्लोकद्वयमेकान्वयम् । अन्ते इतिकरणं बोध्यम् । व इति निर्धारणे षष्ठी । वितथं कुर्यात्, मच्छासनमिति शेषः । आसन्नद्वारं रावणान्तः

संहारकाले संक्रुद्धो भवः । वेदमयं शब्दब्रह्मात्मकम् ॥ ३५--३८ ॥ सन्नाहः उद्योगः ॥ ३९ ॥ रौद्रीव कालरात्रिरिव ॥ ४० ॥ आदिष्टा इत्यादि श्लोकद्वयमेकं वाक्यम् । वः युष्माकं मध्ये यः तत्र तत्र व्यवस्थितस्सन् वितथं कुर्यात, मच्छासनमिति शेषः । राजशासनदूषकः सः हन्तव्यः, अतो युद्ध्यध्वमिति सुग्रीवेण

स०—वेदमयं वेदात्मकं तदभिमान्यभिमानिकम् । भारते कर्णपर्वान्तर्गतशल्यदुर्योधनसंवादे "संवत्सरो धनुस्तद्वै" "तस्य संवत्सरो धनुः" इत्युक्तिस्त्वेकस्यानेकेऽभिमानिनो भवन्तीति न विरुणद्धि ॥ ३५ ॥ वानरोद्घुष्टशब्दो वानरकृतशब्दजशब्दः । राक्षसानां च निस्वनः रामस्य ज्याशब्दश्चेत्येतत्त्रितयं दश दिशो व्याप व्यापत् । एतच्छब्दद्वयाधरीकरणं च द्वयोस्तस्य च समव्यापनाभावेऽसम्भावितम् । सति तस्मिन्नौत्कट्यानौत्कट्ये विदिते भवत इति अतिक्रमणव्यापने सम्भवत इति न पूर्वापरविरोधः ॥ ३६ ॥ ३७ ॥

पुरासन्नमध्यकक्ष्याद्वारम् । तत्र तत्र युद्धभूमौ उपस्थितः ॥ ४१-४३ ॥ तस्येति । जृम्भितविक्षेपात् गात्रविनामविस्तारात् । व्यामिश्राः व्याकुलाः, अभवन्निति शेषः । दिशः दिक्स्थिताः । रुद्रस्य कालाग्निरुद्रस्य गात्रे यो रूपवान् मन्युः स इव रावणोऽलक्ष्यत ॥ ४४-४६ ॥ शशासेति । अत्रैव



तस्य जृम्भितविक्षेपाद्व्यामिश्रा वै दिशो दश । रूपवानिव रुद्रस्य मन्युर्गात्रेष्वदृश्यत ॥ ४४ ॥ स निकुम्भं च कुम्भं च कुम्भकर्णात्मजावुभौ । प्रेषयामास संक्रुद्धो राक्षसैर्बहुभिः सह ॥४५॥ यूपाक्षः शोणिताक्षश्च प्रजङ्घः कम्पन-स्तथा । निर्ययुः कौम्भकर्णिभ्यां सह रावणशासनात् ॥ ४६ ॥ शशास चैव तान् सर्वान् राक्षसान् सुमहाबलान् । नादयन् गच्छतात्रैव जयध्वं शीघ्रमेव च ॥ ४७ ॥ ततस्तु चोदितास्तेन राक्षसा ज्वलितायुधाः । लङ्काया निर्ययु वीराः प्रणदन्तः पुनः पुनः ॥ ४८ ॥ रक्षसां भूषणस्थाभिर्भाभिः स्वाभिश्च सर्वशः । चक्रुस्ते सप्रभं व्योम हरय श्चाग्निभिः सह ॥ ४९ ॥ तत्र ताराधिपस्याभा ताराणां च तथैव च । तयोराभरणस्था च बलयोर्द्यामभासयन् ॥ ५० ॥ चन्द्राभा भूषणाभा च गृहाणां ज्वलतां च भा । हरिराक्षससैन्यानि भ्राजयामास सर्वतः ॥ ५१ ॥

अस्मिन् गृह एवारभ्य । सिंहनादं नादयन् नादयन्तः कुर्वन्तः गच्छत । नादयन्नित्यत्र "व्यत्ययो बहुलम्" इति बहुवचनविषये एकवचनम् ॥ ४७ ॥ ज्वलितेति । आयुधानां ज्वलितत्वं युद्धयात्रासु शिक्षाविशेषप्रदर्शनात् । लङ्काया इति पञ्चमी ॥ ४८ ॥ स्वाभिः स्वासाधारणीभिः । रक्षसां भूषण स्थाभिः भाभिश्च । व्योम सेनामध्याकाशम् ॥ ४९ ॥ तदानीं चन्द्रोदयात् पुनः प्रकाशातिशयमाह-तत्रेति । तत्र तदानीम् । ताराधिपस्याभा ताराणां चाभा तयोर्बलयोराभरणस्था भा च द्याम् आकाशम् अभासयन् ॥ ५० ॥ दह्यमानलङ्कागृहप्रकाशैः पुनरपि स प्रकाशोऽवर्धतेत्याह-चन्द्रेति ॥५१॥

आदिष्टा इति सम्बन्धः ॥ ४१-४३ ॥ तस्येति । जृम्भितविक्षोभाद्धेतोः दश दिशो व्यामिश्राः व्याकुलाः । रुद्रस्य मन्युः रूपवानिव गात्रेष्वदृश्यतेति च सम्बन्धः ॥ ४४-४६ ॥ हे राक्षसाः ! अत्रास्मिन् स्थल एवागच्छतेति सिंहनादं नादयन् नादयतः राक्षसान् शशासेति सम्बन्धः । नादयन्निति विभक्ति व्यत्ययेन बहुवचने एकवचनप्रयोगः ॥ ४७ ॥ ४८ ॥ सप्रभं सविस्तरम् ॥ ४९ ॥ तयोर्बलयोः द्याम् अत्र प्रभा कर्त्री बलयोर्द्याम् उभयसेनामध्यगताकाशप्रदेशम् अभासयदिति सम्बन्धः ॥ ५० ॥ ( ति०-उक्तश्लोकस्यैव व्याख्यानं-चन्द्राभेति । ग्रहाणां नक्षत्राणाम् ॥ ५१ ॥ )

स०-ग्रहाणां नवानाम् । "उक्तश्लोकस्यैव व्याख्यानं चन्द्राभेत्यादि" इति नागोजिभट्टव्याख्यानं पूर्वश्लोके ताराधिपताराद्वलद्वयभाकर्तृकाकाशकर्मकभासनोक्तेः, अत्र च चन्द्रभूषणग्रहभाकर्तृकहरिराक्षस सैन्यकर्मकभासनोक्तेरसङ्गतम् ॥ ५१ ॥

तत्र चेति । संसक्तपातालः पातालपर्यन्तं संसक्तः ॥ ५२ ॥ पताकेत्यादिसार्धचतुःश्लोक्येकान्वया । चलत्पटा पताका । मत्स्यादिचिह्नितं ध्वजम् । उत्तमासिपरश्वधम् परश्वधोऽसिरूपः कुठाररूपश्चास्ति, तत्रासिरूपपरश्वधोऽसिपरश्वधः । तेन वक्ष्यमाणयोः खड्गपरश्वधयोर्न पौनरुक्त्यम् । ज्वलित प्रासमित्यत्र प्रासशब्दः क्षेप्तव्ये ह्रस्वकुन्ते वर्तते, तेन तस्यापि न पौनरुक्त्यम् । पत्तयः पदातयः । तेषां नानात्वं वेषायुधादिभेदात् । प्रासस्य ज्वलितत्वं

तत्र चोर्ध्वं प्रदीप्तानां गृहाणां सागरः पुनः । भाभिः संसक्तपातालश्चलोर्मिः शुशुभेऽधिकम् ॥ ५२ ॥ पताकाध्वज संसक्तमुत्तमासिपरश्वधम् । भीमाश्वरथमातङ्गं नानापत्तिसमाकुलम् ॥ ५३ ॥ दीप्तशूलगदाखड्गप्रासतोमरकार्मुकम् । तद्राक्षसबलं घोरं भीमविक्रमपौरुषम् ॥ ५४ ॥ ददृशे ज्वलितप्रासं किङ्किणीशतनादितम् । हेमजालाचितभुजं व्यामिश्रितपरश्वधम् ॥ ५५ ॥ व्याघूर्णितमहाशस्त्रं बाणसंसक्तकार्मुकम् । गन्धमाल्यमधूत्सेकसंमोदितमहानिलम् ॥ ५६ ॥ घोरं शूरजनाकीर्णं महाम्बुधरनिस्वनम् ॥ ५७ ॥ तद्दृष्ट्वा बलमायान्तं राक्षसानां सुदारुणम् । सञ्चचाल प्लवङ्गानां बलमुच्चैर्ननाद च ॥ ५८ ॥ जवेनाप्लुत्य च पुनस्तद्बलं रक्षसां महत् । अभ्ययात् प्रत्यरिबलं पतङ्गा इव पावकम् ॥ ५९ ॥

युद्धागमनसमये शिक्षाविशेषप्रदर्शकक्रियासंबन्धात् । किङ्किणीशतनादितं रथगजादिकिङ्किणीशतनादितम् । हेमजालाचितभुजं हेमाभरणजालबद्धभुजम् । व्यावेष्टितपरश्वधं मदेन चालितपरश्वधम् । शस्त्रम् उक्तव्यतिरिक्तायुधम् । बाणसंसक्तकार्मुकमिति । दीप्तशूलगदाखड्गप्रासतोमरकार्मुकमित्यत्र यत् पूर्वोक्तं कार्मुकं तद्भङ्गे पुनरादातुं पृष्ठे बद्धमपरमिदं कार्मुकमिति ज्ञेयम् । गन्धेति । गन्धः चन्दनादिः गन्धमाल्याभ्यां मधूत्सेकेन वीरपाणरूपमधुसेवनेन च संमोदितमहानिलं वासितमहावातम् ॥ ५३–५७ ॥ आयान्तमिति पुँल्लिङ्गमार्षम् । सञ्चचाल अभिमुखं जगाम ॥ ५८ ॥ ५९ ॥



संसक्तः पातालो येन सः सागरः भाभिः अधिकं शुशुभे इति सम्बन्धः ॥ ५२ ॥ पताकेत्यादि सार्धपञ्चकमेकान्वयम् । उत्तमासिपरश्वधम्-परश्वधो द्विविधः असिरूपः कुठाररूपश्च, तत्रासिरूपः परश्वधोऽसिपरश्वधः । अनेनोत्तरत्र खड्गपरश्वधाभ्यां न पौनरुक्त्यम् । व्यामिश्रिताः उत्तेजिताः परश्वधाः यस्य तत् ॥ ५३–६४ ॥

भुजपरामर्शंव्यामृष्टपरिघाशनि सन्ततभुजस्पर्शेन उत्तेजितपरिघवज्रम् ॥ ६०–६३ ॥ कपीनाम् अभिलक्षिताः प्रसिद्धाः । कपिप्रवरा इत्यर्थः ॥ ६४ ॥

तथैवेति । कपीनां मध्ये हरिवीरान् वीरहरीन् निजघ्नुः ॥६५॥६६॥ देहीति । अन्यो वीरः प्रहरणमत्र देहीति बभाषे । अन्यो ददातीति बभाषे । अपरः

तेषां भुजपरामर्शव्यामृष्टपरिघाशनि । राक्षसानां बलं श्रेष्ठं भूयस्तरमशोभत ॥६०॥ तत्रोन्मत्ता इवोत्पेतुर्हरयोऽथ युयुत्सवः । तरुशैलैरभिघ्नन्तो मुष्टिभिश्च निशाचरान् ॥ ६१ ॥ तथैवापततां तेषां कपीनामसिभिः शितैः । शिरांसि सहसा जह्रू राक्षसा भीमदर्शनाः ॥ ६२ ॥ दशनैर्हृतकर्णाश्च मुष्टिनिष्कीर्णमस्तकाः । शिलाप्रहारभग्नाङ्गा विचेरुस्तत्र राक्षसाः ॥६३॥ तथैवाप्यपरे तेषां कपीनामभिलक्षिताः । प्रवीरानभितो जघ्नू राक्षसानां तरस्विनाम् ॥६४॥ तथैवाप्यपरे तेषां कपीनामसिभिः शितैः । हरिवीरान्निजघ्नुश्च घोररूपा निशाचराः ॥६५॥ घ्नन्तमन्यं जघानान्यः पातयन्तमपातयत् । गर्हमाणं जगर्हेऽन्यो दशन्तमपरोऽदशत् ॥६६॥ देहीत्यन्यो ददात्यन्यो ददामीत्यपरः पुनः । किं क्लेशयसि तिष्ठेति तत्रान्योन्यं बभाषिरे ॥६७॥ विप्रलम्बितवस्त्रं च विमुक्तकवचायुधम् । समुद्यतमहाप्रासं यष्टिशूलासिसङ्कुलम् । प्रावर्तत महारौद्रं युद्धं वानररक्षसाम् ॥ ६८ ॥ वानरान् दश सप्तेति राक्षसा जघ्नुराहवे । राक्षसान् दश सप्तेति वानराश्चाभ्यपातयन् ॥६९॥ विस्रस्तकेशवसनं विध्वस्तकवचध्वजम् । बलं राक्षसमालम्ब्य वानराः पर्यवारयन् ॥ ७० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदि॰ श्रीमद्युद्धकाण्डे पञ्चसप्ततितमः सर्गः ॥७५॥

पुनः ददामीति बभाषे । आत्मानम् आयासेन किं क्लेशयसि ? तिष्ठेत्यन्यो बभाषे । तत्रैवमन्योन्यं बभाषिरे ॥ ६७ ॥ विप्रलम्बितवस्त्रमित्यादि सर्वं क्रियाविशेषणम् ॥ ६८ ॥ वानरान् दश सप्तेति । राक्षसाः दश सप्तेत्यनेन प्रकारेण वानरान् जघ्नुः । वानराश्च दश सप्तेत्यनेन प्रकारेण राक्षसानभ्यपातयन्निति सम्बन्धः ॥ ६९ ॥ विस्रस्तेति । आलम्ब्य वेगेन धावमानं प्रतिष्टभ्य ततः परितोऽवारयन् ॥ ७० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

तथैवेति । अपरे निशाचराः तेषां कपीनां मध्ये हरिवीरान् वीरहरीन् निजघ्नुरिति सम्बन्धः ॥ ६५ ॥ ६६ ॥ देहीत्यादौ युद्धमित्यध्याहार्यम् ॥६७॥ ६८ ॥ वानरा नित्यनेन प्रकारेण वानरा राक्षसाश्चान्योन्यं जघ्नुरिति सम्बन्धः ॥६९॥७०॥ इति श्रीमहेश्वर॰ श्रीरामायण॰ युद्धकाण्डव्याख्यायां पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

अथ कुम्भवधः षट्सप्ततितमे—प्रवृत्त इत्यादि । सङ्कुले निरन्तरे ॥ १ ॥ आहूयेति । आहूय स्पर्धयित्वा । "ह्वेञ् स्पर्धायां शब्दे च" इति धातोर्ल्यप् । वेगितः सञ्जातवेगः । तारकादित्वादितच् । सः अङ्गदः ॥ २ ॥ स इति । चिक्षेप, कम्पनोरसीति शेषः ॥ ३ ॥ ततस्त्विति । कम्पनं हत

प्रवृत्ते सङ्कुले तस्मिन् घोरे वीरजनक्षये । अङ्गदः कम्पनं वीरमाससाद रणोत्सुकः ॥१॥ आहूय सोऽङ्गदं कोपात् ताडयामास वेगितः । गदया कम्पनः पूर्वं स चचाल भृशाहतः ॥ २ ॥ स संज्ञां प्राप्य तेजस्वी चिक्षेप शिखरं गिरेः । अर्दितश्च प्रहारेण कम्पनः पतितो भुवि ॥३॥ ततस्तु कम्पनं दृष्ट्वा शोणिताक्षो हतं रणे । रथेनाभ्यपतत् क्षिप्रं तत्राङ्गदमभीतवत् ॥ ४ ॥ सोऽङ्गदं निशितैर्बाणैस्तदा विव्याध वेगितः । शरीरदारणैस्तीक्ष्णैः कालाग्निसमविग्रहैः ॥ ५ ॥ क्षुरक्षुरप्रैर्नाराचैर्वत्सदन्तैः शिलीमुखैः । कर्णिशल्यविपाठैश्च बहुभिर्निशितैः शरैः ॥ ६ ॥ अङ्गदः प्रतिविद्धाङ्गो वालिपुत्रः प्रतापवान् । धनुरुग्रं रथं बाणान् ममर्द तरसा बली ॥७॥ शोणिताक्षस्ततः क्षिप्रमसिचर्म समाददे । उत्पपात दिवं क्रुद्धो वेगवानविचारयन् ॥८॥ तं क्षिप्रतरमाप्लुत्य परामृश्याङ्गदो बली । करेण तस्य तं खड्गं समाच्छिद्य ननाद च ॥९॥ तस्यांसफलके खड्गं निजघान ततोऽङ्गदः । यज्ञोपवीतवच्चैनं चिच्छेद कपिकुञ्जरः॥१०॥

मित्यन्वयः । तत्र कम्पनयुद्धस्थाने । अभीतवत् अभीतमिति क्रियाविशेषणम् ॥४॥ स इत्यादि । कालाग्निसमविग्रहैः कालाग्नितुल्याकारैरित्यर्थः॥५॥ क्षुरः नापितशस्त्राकारमुखः । क्षुरप्रः अर्धचन्द्राकृतिः । नाराचः शल्यकः । वत्सदन्तैः वत्सदन्ताकारमुखैः । शिलीमुखैः कङ्कपत्राकारमुखैः । उभयपार्श्वकृतकर्णः कर्णी । अर्धनाराचः शल्यः । विपाठः करवीरपत्राग्रसदृशः ॥ ६ ॥ ७ ॥ शोणिताक्ष इति । असिश्चर्म चेत्यसिचर्म । एकवद्भावः । उत्पपात, रथादिति शेषः ॥ ८ ॥ तमिति । परामृश्य प्रगृह्य ॥ ९ ॥ तस्येति । चिच्छेद, छिन्नस्तु न मृतः ॥ १० ॥



॥ १–८ ॥ क्षुरक्षुरप्रैरिति । क्षुरः नापितशस्त्राकारमुखः, क्षुरप्रस्तु अर्धचन्द्राकृतिः, नाराचस्तु आयसशरः वत्सदन्ताकारः, शिलीमुखस्तु कङ्कपत्रसदृशः, कर्णिशरस्तु उभयपार्श्वकृतकर्णालङ्कारावयवः, शल्यस्तु अर्धनाराचाकृतिः, शल्यमुखत्वाद्दीर्घफलकोऽयम् शल्य इत्युच्यते । विपाठस्तु करवीरपत्राग्रसदृशमुखः॥६–८॥

अपरान् प्रजङ्घादीन् ॥ ११ ॥ तमेव अङ्गदमेव ॥ १२ ॥ १३ ॥ तयोरिति । यूपाक्षस्य द्वयस्थत्वादुक्तिः ॥ १४ ॥ अङ्गदमिति । परिरक्षन्तौ, मातुलत्वादिति भावः । परस्परदिदृक्षया स्वानुरूपप्रतिभटराक्षसजिज्ञासयेत्यर्थः ॥ १५ ॥ अभिपेतुरिति । प्रतियत्ताः प्रतियत्नवन्तः । गुणाधानं

तं प्रगृह्य महाखड्गं विनद्य च पुनः पुनः। वालिपुत्रोऽभिदुद्राव रणशीर्षे परानरीन् ॥ ११ ॥ आयसीं तु गदां वीरः प्रगृह्य कनकाङ्गदः। शोणिताक्षः समाविध्य तमेवानु पपात ह ॥ १२ ॥ प्रजङ्घसहितो वीरो यूपाक्षस्तु ततो बली । रथेनाभिययौ क्रुद्धो वालिपुत्रं महाबलम् ॥ १३ ॥ तयोर्मध्ये कपिश्रेष्ठः शोणिताक्षप्रजङ्घयोः । विशाखयोर्मध्य गतः पूर्णचन्द्र इवाभवत् ॥ १४ ॥ अङ्गदं परिरक्षन्तौ मैन्दो द्विविद एव च। तस्य तस्थतुरभ्याशे परस्परदिदृक्षया ॥ १५ ॥ अभिपेतुर्महाकायाः प्रतियत्ता महाबलाः। राक्षसा वानरान् रोषादसिचर्मगदाधराः ॥ १६ ॥ त्रयाणां वानरेन्द्राणां त्रिभी राक्षसपुङ्गवैः। संसक्तानां महद्युद्धमभवद्रोमहर्षणम् ॥ १७॥ ते तु वृक्षान् समादाय सम्प्रचिक्षिपु राहवे। खड्गेन प्रतिचिच्छेद तान् प्रजङ्घो महाबलः ॥ १८ ॥ रथानश्वान् द्रुमैः शैलैस्ते प्रचिक्षिपुराहवे । शरौघैः प्रतिचिच्छेद तान् यूपाक्षो निशाचरः ॥ १९ ॥ सृष्टान् द्विविदमैन्दाभ्यां द्रुमानुत्पाट्य वीर्यवान् । बभञ्ज गदया मध्ये शोणिताक्षः प्रतापवान् ॥ २० ॥ उद्यम्य विपुलं खड्गं परमर्मनिकृन्तनम् । प्रजङ्घो वालिपुत्राय अभिदुद्राव वेगितः ॥२१॥ तमभ्याशगतं दृष्ट्वा वानरेन्द्रो महाबलः। आजघानाश्वकर्णेन द्रुमेणातिबलस्तदा ॥ २२ ॥ बाहुं चास्य सनिस्त्रिंशमाजघान स मुष्टिना। वालिपुत्रस्य घातेन स पपात क्षितावसिः ॥ २३ ॥

प्रतियत्नः । आरोपितवीर्या इत्यर्थः ॥ १६–१८ ॥ रथानश्वान्, प्रतीति शेषः ॥ १९ ॥ सृष्टानिति । उत्पाट्य सृष्टानित्यन्वयः ॥ २० ॥ वालिपुत्राय वालिपुत्रं हन्तुम्। "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी ॥ २१ ॥ वानरेन्द्रः अङ्गदः ॥ २२ ॥ सनिस्त्रिंशं सखड्गम् ॥ २३ ॥

अङ्गदमिति । परस्परदिदृक्षया युद्धार्थं स्वानुरूपप्रतिभटराक्षसजिज्ञासयेत्यर्थः ॥ १५–२० ॥ उद्यम्येति । वालिपुत्राय वालिपुत्रं हन्तुम् ॥ २१–२१ ॥

उत्पलसन्निभम्, नीलोत्पलसमानकान्तिमित्यर्थः । महाबलः प्रजङ्घः ॥ २४–३१ ॥ प्लवङ्गाभ्यां मैन्दद्विविदाभ्याम् । आकर्षोत्पाटनम् आकर्षण

तं दृष्ट्वा पतितं भूमौ खड्गमुत्पलसन्निभम् । मुष्टिं संवर्तयामास वज्रकल्पं महाबलः ॥ २४ ॥ ललाटे स महावीर्य मङ्गदं वानरर्षभम् । आजघान महातेजाः स मुहूर्तं चचाल ह ॥ २५॥ स संज्ञां प्राप्य तेजस्वी वालिपुत्रः प्रतापवान् । प्रजङ्घस्य शिरः कायात् खड्गेनापातयत् क्षितौ ॥ २६ ॥ स यूपाक्षोऽश्रुपूर्णाक्षः पितृव्ये निहते रणे । अवरुह्य रथात् क्षिप्रं क्षीणेषुः खड्गमाददे ॥ २७ ॥ तमापतन्तं सम्प्रेक्ष्य यूपाक्षं द्विविदस्त्वरन् । आजघानोरसि क्रुद्धो जग्राह च बलाद्बली ॥ २८ ॥ गृहीतं भ्रातरं दृष्ट्वा शोणिताक्षो महाबलः । आजघान गदाग्रेण वक्षसि द्विविदं ततः ॥ २९ ॥ स गदाभिहतस्तेन चचाल च महाबलः । उद्यतां च पुनस्तस्य जहार द्विविदो गदाम् ॥ ३० ॥ एतस्मिन्नन्तरे वीरो मैन्दो वानरयूथपः । यूपाक्षं ताडयामास तलेनोरसि वीर्यवान् ॥ ३१ ॥ तौ शोणिताक्षयूपाक्षौ प्लवङ्गाभ्यां तरस्विनौ । चक्रतुः समरे तीव्रमाकर्षोत्पाटनं भृशम् ॥ ३२ ॥ द्विविदः शोणिताक्षं तु विददार नखैर्मुखे । निष्पिपेष च वेगेन क्षितावाविध्य वीर्यवान् ॥ ३३ ॥ यूपाक्षमपि संक्रुद्धो मैन्दो वानरयूथपः । पीडयामास बाहुभ्यां स पपात हतः क्षितौ ॥ ३४ ॥ हतप्रवीरा व्यथिता राक्षसेन्द्रचमूस्तदा । जगामाभिमुखी सा तु कुम्भकर्णसुतो यतः ॥ ३५ ॥ आपतन्तीं च वेगेन कुम्भस्तां सान्त्वयच्चमूम् ॥ ३६ ॥ अथोत्कृष्टं महावीर्यैर्लब्धलक्षैः प्लवङ्गमैः । निपातितमहावीरां दृष्ट्वा रक्षश्चमूं ततः । कुम्भः प्रचक्रे तेजस्वी रणे कर्म सुदुष्करम् ॥ ३७ ॥



ताडने, अन्योन्यमिति शेषः ॥ ३२–३५ ॥ आपतन्तीमित्यर्धम् । सान्त्वयत् असान्त्वयत् ॥ ३६ ॥ अथेत्यादिसार्धश्लोक एकान्वयः । लब्धलक्षैः

ताविति । प्लवङ्गाभ्यां मैन्दद्विविदाभ्याम् ॥ ३२–३५ ॥ आपतन्तीमित्यर्धं भिन्नं वाक्यम् । कुम्भः आपतन्तीं चमूं सान्त्वयत् । अडभाव आर्षः ॥ ३६ ॥ अथेत्यादिसार्धश्लोकमेकं वाक्यम् । उत्कृष्टं रक्षः कुम्भः । महावीर्यैः तेजस्विभिः । लब्धलक्षैः अप्रतिद्वन्द्वैः प्लवङ्गमैः । निपातितमहावीरां चमूं दृष्ट्वा रणे

अप्रतिद्वन्द्विभिः ॥ ३७ ॥ ३८ ॥ तस्येति । विद्युदैरावताभ्याम् अर्चिष्मत् । ज्यास्थानीया विद्युत् । बाणस्थानीयमैरावतम् । ऐरावतं नाम दीर्घेन्द्र धनुः । " इन्द्रायुधं शक्रधनुस्तदीर्घमृजुरोहितम् । ऐरावतं च " इति वैजयन्ती । एवंभूतं द्वितीयमिन्द्रधनुरिव स्थितम् । ऐरावतादिसंयोग उत्पात



स धनुर्धन्विनां श्रेष्ठः प्रगृह्य सुसमाहितः । मुमोचाशीविषप्रख्यान् शरान् देहविदारणान् ॥ ३८ ॥ तस्य तच्छुशुभे भूयः सशरं धनुरुत्तमम् । विद्युदैरावतार्चिष्मद्द्वितीयेन्द्रधनुर्यथा ॥ ३९ ॥ आकर्णाकृष्टमुक्तेन जघान द्विविदं तदा । तेन हाटकपुङ्खेन पत्रिणा पत्रवाससा ॥ ४० ॥ सहसाऽभिहतस्तेन विप्रमुक्तपदः स्फुरन् । निपपाताद्रिकूटाभो विह्वलः प्लवगोत्तमः ॥ ४१ ॥ मैन्दस्तु भ्रातरं दृष्ट्वा भग्नं तत्र महाहवे । अभिदुद्राव वेगेन प्रगृह्य महतीं शिलाम् ॥ ४२ ॥ तां शिलां तु प्रचिक्षेप राक्षसाय महाबलः । बिभेद तां शिलां कुम्भः प्रसन्नैः पञ्चभिः शरैः ॥ ४३ ॥ सन्धाय चान्यं सुमुखं शरमाशीविषोपमम् । आजघान महातेजा वक्षसि द्विविदाग्रजम् ॥ ४४ ॥ स तु तेन प्रहारेण मैन्दो वानरयूथपः । मर्मण्यभिहतस्तेन पपात भुवि मूर्च्छितः ॥ ४५ ॥ अङ्गदो मातुलौ दृष्ट्वा पतितौ तु महाबलौ । अभिदुद्राव वेगेन कुम्भमुद्यतकार्मुकम् ॥ ४६ ॥ तमापतन्तं विव्याध कुम्भः पञ्चभिरायसैः । त्रिभिश्चान्यैः शितैर्बाणैर्मातङ्गमिव तोमरैः ॥ ४७ ॥

काले भवति । अभूतोपमा वा ॥ ३९ ॥ आकर्णेति । हाटकं स्वर्णम् । पत्रिणा बाणेन । पत्रवाससा वासःस्थानीयकङ्कपत्रेण ॥ ४० ॥ विप्रमुक्तपदः शिथिलपदविन्यासः । स्फुरन् चलन् । विह्वलः विवशः सन् ॥ ४१—४६ ॥ तमिति । तोमरैः अङ्कुशैः ॥ ४७ ॥

सुदुष्करं कर्म प्रचक्र इति सम्बन्धः ॥ ३७ ॥ ३८ ॥ तस्येति । तस्य कुम्भस्य सशरं धनुः विद्युदैरावतार्चिष्मत्सत् अत एव तद्युक्तेन्द्रधनुरिव शुशुभ इति सम्बन्धः । ऐरावतं नाम ऋजुदीर्घमिन्द्रधनुः । " इन्द्रायुधं शक्रधनुस्तदीर्घमृजुरोहितम् । ऐरावतं च विद्युत्तु चञ्चला चपला चला ॥" इति वैजयन्ती । ज्यास्थानीया विद्युत्, बाणस्थानीयमैरावतम् । अयं भावः—विद्युत्सहितैरावतसदृशद्युतिमत्कुम्भधनुः विद्युत्सहितैरावतसहितद्वितीयेन्द्रधनुरिव चकाश इति । विद्युत्सहितै

अकुण्ठधारैः अभग्नाग्रैः। निशितैः उत्कृष्टैः। तीक्ष्णैः अयोमयैः। "तीक्ष्णं गरे मृधे लोहे" इति रत्नमाला ॥ ४८ ॥ न कम्पते नाकम्पत ॥ ४९ ॥ तान् वृक्षान् प्रचिच्छेद शिलाः बिभेदेत्यन्वयः ॥ ५०–५२ ॥ सम्पीड्येति । एकहस्तस्य नेत्रपिधानव्यापृतत्वादेकहस्तेनोत्पाटनासम्भवादुरसि



सोऽङ्गदं विविधैर्बाणैः कुम्भो विव्याध वीर्यवान्। अकुण्ठधारैर्निशितैस्तीक्ष्णैः कनकभूषणैः ॥ ४८ ॥ अङ्गदः प्रतिविद्धाङ्गो वालिपुत्रो न कम्पते। शिलापादपवर्षाणि तस्य मूर्ध्नि ववर्ष ह ॥ ४९ ॥ स प्रचिच्छेद तान् सर्वान् बिभेद च पुनः शिलाः। कुम्भकर्णात्मजः श्रीमान् वालिपुत्रसमीरितान् ॥ ५० ॥ आपतन्तं च सम्प्रेक्ष्य कुम्भो वानरयूथपम्। भ्रुवोर्विव्याध बाणाभ्यामुल्काभ्यामिव कुञ्जरम्। तस्य सुस्राव रुधिरं पिहिते चास्य लोचने ॥५१॥ अङ्गदः पाणिना नेत्रे पिधाय रुधिरोक्षिते। सालमासन्नमेकेन परिजग्राह पाणिना ॥ ५२ ॥ सम्पीड्य चोरसि स्कन्धं करेणाभिनिवेश्य च। किञ्चिदभ्यवनम्यैनमुन्ममाथ यथा गजः ॥ ५३ ॥ तमिन्द्रकेतुप्रतिमं वृक्षं मन्दरसन्निभम्। समुत्सृजन्तं वेगेन पश्यतां सर्वरक्षसाम् ॥ ५४ ॥ स बिभेद शितैर्बाणैः सप्तभिः कायभेदनैः ॥ ५५ ॥ अङ्गदो विव्यथेऽभीक्ष्णं ससाद च मुमोह च ॥५६॥ अङ्गदं व्यथितं दृष्ट्वा सीदन्तमिव सागरे। दुरासदं हरिश्रेष्ठं रामायान्ये न्यवेदयन् ॥५७॥ रामस्तु व्यथितं श्रुत्वा वालिपुत्रं रणाजिरे। व्यादिदेश हरिश्रेष्ठान् जाम्बवत्प्रमुखांस्ततः ॥ ५८ ॥ ते तु वानरशार्दूलाः श्रुत्वा रामस्य शासनम्। अभिपेतुः सुसंक्रुद्धाः कुम्भमुद्यतकार्मुकम् ॥५९॥ ततो द्रुमशिलाहस्ताः कोपसंरक्तलोचनाः। रिरक्षिषन्तोऽभ्यपतन्नङ्गदं वानरर्षभाः ॥ ६० ॥ जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः। कुम्भकर्णात्मजं वीरं क्रुद्धाः समभिदुद्रुवुः ॥ ६१ ॥



सम्पीड्येत्युक्तम्। अभिनिवेश्य अभिगृह्येत्यर्थः ॥ ५३–५८ ॥ तत इति । रिरक्षिषन्तः रक्षितुमिच्छन्तः ॥ ५९–६१ ॥



रावतेन्द्रचापयोस्संयोगः उत्पातकाले सम्भवति, अभूतोपमा वा ॥ ३९–६१ ॥

जलाशयं जलप्रवाहम् । नगेनेव वृक्षेणेव । वृक्षौघप्रयोऽयं शब्दः ॥६२॥ अतिवर्तितुम् अतिक्रम्याभिमुख्येन गन्तुम् ॥६३॥ तांस्त्वित्यादिश्लोकद्वयमेकान्वयम् । अङ्गदं पृष्ठतः कृत्वा, अन्यथा हन्यादिति भावः । शैलसानुचरं शैलसानुचरत्वेनातिबलम् । " गिरिचर इव नागः प्राणसारं बिभर्ति " इति कालि



समीक्ष्यापततस्तांस्तु वानरेन्द्रान् महाबलान् । आववार शरौघेण नगेनेव जलाशयम् ॥ ६२ ॥ तस्य बाणपथं प्राप्य न शेकुरतिवर्तितुम् । वानरेन्द्रा महात्मानो वेलामिव महोदधिः ॥ ६३ ॥ तांस्तु दृष्ट्वा हरिगणान् शरवृष्टिभिरर्दितान् । अङ्गदं पृष्ठतः कृत्वा भ्रातृजं प्लवगेश्वरः ॥ ६४ ॥ अभिदुद्राव वेगेन सुग्रीवः कुम्भमाहवे । शैलसानुचरं नागं वेगवानिव केसरी ॥ ६५ ॥ उत्पाट्य च महाशैलानश्वकर्णान् धवान् बहून् । अन्यांश्च विविधान् वृक्षांश्चिक्षेप च महाबलः ॥ ६६ ॥ तां छादयन्तीमाकाशं वृक्षवृष्टिं दुरासदाम् । कुम्भकर्णात्मजः शीघ्रं चिच्छेद निशितैः शरैः ॥ ६७ ॥ अभिलक्षेण तीव्रेण कुम्भेन निशितैः शरैः । आचितास्ते द्रुमा रेजुर्यथा घोराः शतघ्नयः ॥ ६८ ॥ द्रुमवर्षं तु तच्छिन्नं दृष्ट्वा कुम्भेन वीर्यवान् । वानराधिपतिः श्रीमान् महासत्त्वो न विव्यथे ॥ ६९ ॥ निर्भिद्यमानः सहसा सहमानश्च तान् शरान् । कुम्भस्य धनुराक्षिप्य बभञ्जेन्द्रधनुष्प्रभम् ॥ ७० ॥ अवप्लुत्य ततः शीघ्रं कृत्वा कर्म सुदुष्करम् । अब्रवीत् कुपितः कुम्भं भग्नशृङ्गमिव द्विपम् ॥ ७१ ॥ निकुम्भाग्रज वीर्यं ते बाणवेगवदद्भुतम् । सन्नतिश्च प्रभावश्च तव वा रावणस्य वा ॥ ७२ ॥

दासोक्तेः ॥ ६४–६७ ॥ अभिलक्षेणेति । अभिलक्षेण अभिगतलक्ष्येण । आचिताः सर्वतो नीरन्ध्रतया व्याप्ताः । शतघ्नयः शतघ्न्यः । शङ्कुचिता आयुधविशेषाः ॥ ६८–७१ ॥ वीर्यस्य बाणवेगवत्त्वं तद्धेतुत्वात् । सन्नतिः राक्षसेषु विनयः राक्षसप्रावण्यं वा । कम्पनप्रजङ्घयूपाक्षशोणिताक्षमारकाणामङ्गद

समीक्ष्येति । जलाशयं प्रवाहम् ॥ ६२–७१ ॥ निकुम्भाग्रजेति । सन्नतिः राक्षसेषु विनयः ॥ ७२ ॥

मैन्दद्विविदानां निराकरणाद्राक्षसप्रावण्योक्तिः । [illegible] ॥ ७२ ॥ पितरमनुजातोऽसि पित्रा सदृशोऽसीत्यर्थः । बलवृत्ततः बलव्यापारेण ॥ ७३ ॥ नातिवर्तन्ते न धर्षयन्तीत्यर्थः ॥ ७४ ॥ विक्रमस्वेत्यर्धम् । कर्माणि युद्धकर्माणि प्रति । विक्रमस्व पराक्रमं



प्रह्लादबलिवृत्रघ्नकुबेरवरुणोपम । एकस्त्वमनुजातोऽसि पितरं बलवृत्ततः ॥ ७३ ॥ त्वामेवैकं महाबाहुं चापहस्तमरिन्दमम् । त्रिदशा नातिवर्तन्ते जितेन्द्रियमिवाधयः ॥७४॥ विक्रमस्व महाबुद्धे कर्माणि मम पश्यतः ॥ ७५ ॥ वरदानात् पितृव्यस्ते सहते देवदानवान् । कुम्भकर्णस्तु वीर्येण सहते च सुरासुरान् ॥७६॥ धनुषीन्द्रजितस्तुल्यः प्रतापे रावणस्य च । त्वमद्य रक्षसां लोके श्रेष्ठोऽसि बलवीर्यतः ॥ ७७ ॥ महाविमर्दं समरे मया सह तवाद्भुतम् । अद्य भूतानि पश्यन्तु शक्रशम्बरयोरिव ॥ ७८ ॥ कृतमप्रतिमं कर्म दर्शितं चास्त्रकौशलम् । पातिता हरिवीराश्च त्वया वै भीमविक्रमाः ॥७९॥ उपालम्भभयाच्चापि नासि वीर मया हतः । कृतकर्मा परिश्रान्तो विश्रान्तः पश्य मे बलम् ॥ ८० ॥ तेन सुग्रीववाक्येन सावमानेन मानितः । अग्नेराज्याहुतस्येव तेजस्तस्याभ्यवर्धत । ततः कुम्भस्तु सुग्रीवं बाहुभ्यां जगृहे तदा ॥ ८१ ॥

कुरु, युद्धकर्मसिद्ध्यर्थं पराक्रमं कुर्वित्यर्थः ॥ ७५ ॥ पितृव्यः रावणः वरदानात् देवदानवान् सहते । कुम्भकर्णस्तु वीर्येण शारीरबलेन सुरासुरान् सहते, रोद्धुं शक्नोतीत्यर्थः । त्वं तु ताभ्यामुभाभ्यां तान् सहस इति भावः ॥ ७६ ॥ ७७ ॥ महाविमर्दं महाप्रहारम् ॥ ७८ ॥ ७९ ॥ उपालम्भभयात् बहुभिः सह युद्धेन श्रान्तो हत इत्यपवादभयात् ॥ ८० ॥ तेनेत्यादि । सावमानेन मानितः बहुमानेन व्याजेनावमानित इत्यर्थः । तस्य तथाऽवमानितस्य

पितरम् अनुजातोऽसि पित्रा सदृशोऽसीत्यर्थः॥७३–७५॥वरदानादिति । पितृव्यो रावणः वरदानाद् देवदानवान् सहते, कुम्भकर्णस्तु वीर्येण शरीरबलेन सुरासुरान् सहते, त्वं तु उभाभ्यां तान् सहस इत्यर्थः । महाविमर्दं महायुद्धम् ॥ ७६–७९ ॥ उपालम्भभयाद् बहुभिस्सह युद्धश्रान्तो हत इति परीवादभयाद् ॥८०॥८१॥



स०–पित्रपेक्षया कीर्तिरधिकेति वक्तुं पितामहपौत्रयोः प्रह्लाद[illegible] ज्ञेयम् ॥ ७३ ॥

कुम्भस्य ॥ ८१ ॥ गजावित्यादिसार्धश्लोक एकान्वयः । आहितमदौ आहितमदचेष्टौ । अन्योन्यगात्रग्रथितौ अन्योन्यसंश्लिष्टगात्रौ । परिश्रमात्

युद्धजनितश्रमात् मुखतः सधूमां ज्वालां विसृजन्तौ, बभूवतुरिति शेषः ॥ ८२ ॥ ८३ ॥ दर्शयन्नुदधेस्तलम्, निकुम्भो यथा उदधितलं पश्येत्तथा

गजाविवाहितमदौ निश्वसन्तौ मुहुर्मुहुः । अन्योन्यगात्रग्रथितौ कर्षन्तावितरेतरम् । सधूमां मुखतो ज्वालां विसृजन्तौ परिश्रमात् ॥ ८२ ॥ तयोः पादाभिघाताच्च निमग्ना चाभवन्मही । व्याघूर्णिततरङ्गश्च चुक्षुभे वरुणालयः ॥ ८३ ॥ ततः कुम्भं समुत्क्षिप्य सुग्रीवो लवणाम्भसि । पातयामास वेगेन दर्शयन्नुदधेस्तलम् ॥ ८४ ॥ ततः कुम्भनिपातेन जलराशिः समुत्थितः । विन्ध्यमन्दरसङ्काशो विससर्प समन्ततः ॥ ८५ ॥ ततः कुम्भः समुत्पत्य सुग्रीवमभिपत्य च । आजघानोरसि क्रुद्धो वज्रवेगेन मुष्टिना ॥ ८६ ॥ तस्य चर्म च पुस्फोट बहु सुस्राव शोणितम् । स च मुष्टिर्महावेगः प्रतिजघ्नेऽस्थिमण्डले ॥८७॥ तदा वेगेन तत्रासीत्तेजः प्रज्वलितं मुहुः । वज्रनिष्पेषसञ्जाता ज्वाला मेरौ यथा गिरौ ॥ ८८ ॥ स तत्राभिहतस्तेन सुग्रीवो वानरर्षभः । मुष्टिं संवर्तयामास वज्रकल्पं महाबलः ॥ ८९ ॥ अर्चिस्सहस्रविकचं रविमण्डलसप्रभम् । स मुष्टिं पातयामास कुम्भस्योरसि वीर्यवान् ॥ ९० ॥

वेगेन पातयामासेत्यर्थः ॥ ८४ ॥ रामानु०–तत इति । शतयोजनविस्तीर्णत्रिकूटशिखरमध्ये युद्ध्यन् सुग्रीवः कुम्भं लङ्काद्वीपतले लवणाम्भसि पातयामासेत्यभिधानात् सुग्रीवस्य अपरिमेयबलवत्ता द्योत्यते ॥ ८४ ॥ तत इति । विससर्प अभ्यवर्धत ॥ ८५ ॥ ८६ ॥ पुस्फोट विभिन्नम् । स चेति । सः मुष्टिः सुग्रीवस्यास्थिमण्डले । प्रतिजघ्ने प्रतिहतः, मोघो बभूवेत्यर्थः । स च मुष्टिर्महावेग इति पाठः ॥ ८७ ॥ वेगेन कुम्भवेगेन । तत्र सुग्रीववक्षसि । तेजः सङ्घट्टजं प्रज्वलितमासीत् । वज्रनिष्पेषसञ्जाता इन्द्रेण पक्षच्छेदकाले वज्रसङ्घट्टजन्येत्यर्थः ॥ ८८ ॥ संवर्तयामास चकारेत्यर्थः ॥ ८९ ॥ अर्चिःसहस्रविकचम् अर्चिः

अन्योन्यगात्रग्रथितौ, बभूवतुरिति शेषः ॥ ८२–८६ ॥ तस्येति । पुस्फोट भिन्नम् स त्विति । सः सुग्रीवो मुष्टिमुद्यम्य अस्थिमण्डले प्रतिजघ्ने पुनर्हत इत्यर्थः ।

स०–समुत्थितः ऊर्ध्वमुत्थितः । विन्ध्यमन्दरसङ्काशः तत्सदृशतरङ्गवान् । समन्ततो विससर्प । विन्ध्यमन्दरसङ्काशः कुम्भः ततो जलात्समुत्पत्येत्यन्वय इति नागोजिभट्टव्याख्या त्वर्थाप्रतिपत्त्या ॥ ८९ ॥

सहस्रावृतमित्यर्थः । अत एव रविमण्डलसप्रभम् ॥ ९०-९२ ॥ गवां पतेः सूर्यस्य ॥ ९३ ॥ तस्मिन्निति । स्पष्टः ॥ ९४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्सप्ततितमः सर्गः ॥ ७६ ॥



स तु तेन प्रहारेण विह्वलो भृशताडितः । निपपात तदा कुम्भो गतार्चिरिव पावकः ॥ ९१ ॥ मुष्टिनाऽभिहतस्तेन निपपाताशु राक्षसः । लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया ॥९२॥ कुम्भस्य पततो रूपं भग्नस्योरसि मुष्टिना । बभौ रुद्राभिपन्नस्य यथा रूपं गवां पतेः ॥ ९३ ॥ तस्मिन् हते भीमपराक्रमेण प्लवङ्गमानामृषभेण युद्धे । मही सशैला सवना चचाल भयं च रक्षांस्यधिकं विवेश ॥९४॥ इत्यार्षे० श्रीमद्युद्धकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

निकुम्भो भ्रातरं दृष्ट्वा सुग्रीवेण निपातितम् । प्रदहन्निव कोपेन वानरेन्द्रमवैक्षत ॥१॥ ततः स्रग्दामसन्नद्धं दत्तपञ्चाङ्गुलं शुभम् । आददे परिघं वीरो नगेन्द्रशिखरोपमम् ॥ २ ॥ हेमपट्टपरिक्षिप्तं वज्रविद्रुमभूषितम् । यमदण्डोपमं भीमं रक्षसां भयनाशनम् ॥ ३ ॥ तमाविध्य महातेजाः शक्रध्वजसमं तदा । विननाद विवृत्तास्यो निकुम्भो भीमविक्रमः ॥ ४ ॥ उरोगतेन निष्केण भुजस्थैरङ्गदैरपि । कुण्डलाभ्यां च चित्राभ्यां मालया च विचित्रया ॥ ५ ॥

अथ निकुम्भवधः सप्तसप्ततितमे-निकुम्भ इत्यादि ॥ १ ॥ तत इत्यादिश्लोकद्वयमेकान्वयम् । स्रग्दामसन्नद्धं स्रक्समूहनिबद्धम् । दत्तपञ्चाङ्गुलं चन्दनकुङ्कुमादिनार्पितपञ्चाङ्गुलमुद्रामुद्रितम् । अथवा क्रियाविशेषणमेतत् । दत्तपञ्चाङ्गुलं यथा तथा आददे । परिक्षिप्तं परिणद्धम् ॥ २-४ ॥ उरोगतेनेत्यादि

स तु मुष्टिम् इति पाठः ॥ ८७-९२ ॥ मुष्टिनोरसि भग्नस्य पततः कुम्भस्य रूपं रुद्राभिपन्नस्य रुद्रेणाभिभूतस्य गवां पतेः सूर्यस्य ॥ ९३ ॥ ९४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां षट्सप्ततितमः सर्गः ॥ ७६ ॥
॥ १ ॥ तत इति । स्रग्दामसन्नद्धं स्रक्समूहनिबद्धम् । दत्तपञ्चाङ्गुलं चन्दनकुङ्कुमादिना अर्पितपञ्चाङ्गुलमुद्रामुद्रितम् ॥ २ ॥ हेमपट्टपरिक्षिप्तमिति । परिक्षिप्तं



स०-रुद्राभिपन्नस्य स्ववरतः सूर्यमनु विमानेन गच्छतोऽसुरस्य याने तेनासहमानेन पातिते सति सतीपतिस्तं पतयामासेति पौराणिक्या कथया रुद्राभिपन्नता ज्ञेया ॥ ९३ ॥

श्लोकद्वयमेकान्वयम् । निष्कः पदकम् । भूषणैः हारादिभिः भाति स्म । "लट् स्मे" इति सूत्रे लट् । स्तनयित्नुमान् गर्जितवान् । "स्तनयित्नुस्तु गर्जिते मेघे" इति रत्नमाला । इन्द्रधनुःस्थाने परिघः । विद्युत्स्थाने भूषणानि । विननादेति पूर्वश्लोकोक्तो विनादः स्तनयित्नुस्थान इति नोपमेयन्यूनता ॥ ५ ॥ ६ ॥ परिघाग्रेणेति । वातग्रन्थिः आवहादिसप्तवातस्कन्धः । सघोषः ससिंहनाद इति निकुम्भविशेषणम् । परिघविशेषणं वा ॥७॥

निकुम्भो भूषणैर्भाति तेन स्म परिघेण च । यथेन्द्रधनुषा मेघः सविद्युत् स्तनयित्नुमान् ॥ ६ ॥ परिघाग्रेण पुस्फोट वातग्रन्थिर्महात्मनः । प्रजज्वाल सघोषश्च विधूम इव पावकः ॥ ७ ॥ नगर्या विटपावत्या गन्धर्वभवनोत्तमैः । सह चैवामरावत्या सर्वैश्च भवनैः सह ॥ ८ ॥ सतारग्रहनक्षत्रं सचन्द्रं समहाग्रहम् । निकुम्भपरिघाघूर्णं भ्रमतीव नभस्स्थलम् ॥९॥ दुरासदश्च संजज्ञे परिघाभरणप्रभः । कपीनां स निकुम्भाग्निर्युगान्ताग्निरिवोत्थितः ॥१०॥ राक्षसा वानराश्चापि न शेकुः स्पन्दितुं भयात् । हनुमांस्तु विवृत्योरस्तस्थौ प्रमुखतो बली ॥ ११ ॥ परिघोपमबाहुस्तु परिघं भास्करप्रभम् । बली बलवतस्तस्य पातयामास वक्षसि ॥१२॥ स्थिरे तस्योरसि व्यूढे परिघः शतधा कृतः । विशीर्यमाणः सहसा उल्काशतमिवाम्बरे ॥१३॥ स तु तेन प्रहारेण विचचाल महाकपिः । परिघेण समाधूतो यथा भूमिचलेऽचलः ॥१४॥ स तदाऽभिहतस्तेन हनुमान् प्लवगोत्तमः । मुष्टिं संवर्तयामास बलेनातिमहाबलः ॥ १५ ॥

नगर्येत्यादिश्लोकद्वयमेकान्वयम् । विटपावत्या अलकया । अत्रापि सहेति शेषः । भवनैः अमरभवनैः । ताराः अश्विन्यादयः । ग्रहाः बुधादयः । नक्षत्राणि अश्विन्यादिभिन्नानि । महाग्रहाः शुक्रादयः । अत्र रात्रित्वात् सूर्यो नोक्तः । निकुम्भपरिघाघूर्णम्, अत्र परिघशब्देन तद्वात उपलक्ष्यते । इवशब्दो वाक्यालङ्कारे ॥ ८ ॥ ९ ॥ दुरासदश्चेति । परिघेणाभरणैश्च प्रभातीति परिघाभरणप्रभः । यद्वा परिघाभरणान्येव प्रभा यस्य स तथा । कपीनां दुरासदो जज्ञ इति सम्बन्धः ॥ १० ॥ राक्षसा इति । प्रबलेषु प्रजङ्घादिषु हतेषु दुर्बलैर्भवद्भिः किमर्थं युद्धाय प्रयत्नः कृत इति निकुम्भः कुप्येदिति राक्षसानां भयं वेदितव्यम् । विवृत्य विस्तार्य । प्रमुखतः अग्रे ॥ ११ ॥ परिघोपमबाहुः निकुम्भः ॥ १२ ॥ व्यूढे विशाले । उल्काशतमिव बभाविति ॥ १३ ॥ स त्विति । भूमिचले भूकम्पे ॥ १४ ॥ संवर्तयामास चकारेत्यर्थः ॥ १५–१८ ॥

परिवेष्टितम् ॥ ३–६ ॥ वातग्रन्थिः आवहप्रवहादिसप्तवायुसन्धिः ॥ ७ ॥ विटपावत्या अलकया ॥ ८ ॥ ९ ॥ परिघान्तरणप्रभः परिघान्तकृतरणरक्तप्रभ इत्यर्थः ।

भीमं विचुकुशुः । हनुमद्ग्रहणहर्षादिति भावः । उद्यतं गृहीतम् ॥ १९ ॥ २० ॥ आत्मानमिति । क्षितावभ्यवपद्यत स्थितः ॥ २१ ॥ निक्षिप्य भूमौ पातयित्वा । परमायत्तः अतिप्रयाससंयुक्तः । उत्पत्य ऊर्ध्वमुद्गत्य । उरसि वेगेन पपात ॥ २२ ॥ बाहुभ्यां शिरोधरां परिगृह्य परिवर्त्य शिर उत्पाटया



तमुद्यम्य महातेजा निकुम्भोरसि वीर्यवान् । अभिचिक्षेप वेगेन वेगवान् वायुविक्रमः ॥ १६ ॥ ततः पुस्फोट चर्मास्य प्रसुस्राव च शोणितम् । मुष्टिना तेन संजज्ञे ज्वाला विद्युदिवोत्थिता ॥ १७ ॥ स तु तेन प्रहारेण निकुम्भो विचचाल ह । स्वस्थश्चापि निजग्राह हनुमन्तं महाबलम् ॥ १८ ॥ विचुक्रुशुस्तदा सङ्ख्ये भीमं लङ्कानिवासिनः । निकुम्भेनोद्यतं दृष्ट्वा हनुमन्तं महाबलम् ॥ १९ ॥ स तदा ह्रियमाणोऽपि कुम्भकर्णात्मजेन ह । आजघानानिलसुतो वज्रकल्पेन मुष्टिना ॥ २० ॥ आत्मानं मोचयित्वाऽथ क्षितावभ्यवपद्यत । हनुमानुन्ममाथाशु निकुम्भं मारुतात्मजः ॥ २१ ॥ निक्षिप्य परमायत्तो निकुम्भं निष्पिपेष ह । उत्पत्य चास्य वेगेन पपातोरसि वीर्यवान् ॥ २२ ॥ परिगृह्य च बाहुभ्यां परिवृत्य शिरोधराम् । उत्पाटयामास शिरो भैरवं नदतो महत् ॥ २३ ॥ अथ विनदति सादिते निकुम्भे पवनसुतेन रणे बभूव युद्धम् । दशरथसुतराक्षसेन्द्रसून्वोर्भृशतरमागतरोषयोः सुभीमम् ॥ २४ ॥

मास ॥ २३ ॥ उत्तरसर्गद्वयार्थं संग्रहेण दर्शयति—अथेति । विनदति निकुम्भे पवनसुतेन सादिते सति । दशरथसुतराक्षसेन्द्रसून्वोः राममकराक्षयोः युद्धं परिघान्तरणप्रभ इति पाठः ॥ १०–२३ ॥ अथेति । विनदति निकुम्भे सादित इति सम्बन्धः । राक्षसेन्द्रसूनुर्मकराक्षः । अनेन वक्ष्यमाणस्य रघुनाथमकराक्षयोर्युद्धस्य

स०–विनदति नानाप्रकारेण कथयति निकुम्भे दशरथसुतराक्षसेन्द्रसून्वोः दशसु दिक्षु रथो गमनम् अप्रतिहतं यस्य तस्य वायोः । " रथः स्यात्स्यन्दने काये चरणे च " इति विश्वः । सुतो हनुमान् । राक्षसेन्द्रसूनुः निकुम्भः तयोः भृशतरमागतरोषयोः यद्युद्धं बभूव तस्मिन्रणे पवनसुतेन सादिते सति राक्षसानां बलं भयमाविवेशेत्याकर्षः । ' अनेन वक्ष्यमाणकथोपक्षेपः ' इत्युभौ । तत्र ' व्यपेते तु जीवे ' इत्यादिकमसङ्गतमिव दृश्यते । अस्मत्पक्षे दशरथशब्द एक एव गौणार्थ इति मन्तव्यम् । दशरथसुतोऽस्यास्तीति दशरथसुत इति वा । पवनसुतेन रणे निकुम्भे सादिते सति युद्धं नञ्मात्राध्याहारः । न बभूव । परपक्षे रणकर्तुरभावादिति वा ॥ २४ ॥

बभूव । पुष्पिताग्रावृत्तम् । उत्तरत्र भुजङ्गप्रयातम् ॥ २४ ॥ व्यपेते त्विति । दिशः सस्वनुः प्रतिध्वनिं चक्रुः । पफालेव पुस्फोटेव । बलं कर्म भयं कर्तृ ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तसप्ततितमः सर्गः ॥ ७७ ॥



व्यपेते तु जीवे निकुम्भस्य हृष्टा विनेदुः प्लवङ्गा दिशः सस्वनुश्च । चचालेव चोर्वी पफालेव च द्यौर्भयं राक्षसानां बलं चाविवेश ॥२५॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे सप्तसप्ततितमः सर्गः ॥७७॥ निकुम्भं च हतं श्रुत्वा कुम्भं च विनिपातितम् । रावणः परमामर्षी प्रजज्वालानलो यथा ॥ १ ॥ नैर्ऋतः क्रोधशोकाभ्यां द्वाभ्यां तु परिमूर्च्छितः । खरपुत्रं विशालाक्षं मकराक्षमचोदयत् ॥२॥ गच्छ पुत्र मयाऽऽज्ञप्तो बलेनाभिसमन्वितः । राघवं लक्ष्मणं चैव जहि तांश्च वनौकसः ॥ ३ ॥ रावणस्य वचः श्रुत्वा शूरमानी खरात्मजः । बाढमित्यब्रवीद्धृष्टो मकराक्षो निशाचरः ॥ ४ ॥ सोऽभिवाद्य दशग्रीवं कृत्वा चापि प्रदक्षिणम् । निर्जगाम गृहाच्छुभ्राद्रावणस्याज्ञया बली ॥५॥ समीपस्थं बलाध्यक्षं खरपुत्रोऽब्रवीदिदम् । रथश्चानीयतां शीघ्रं सैन्यं चाहूयतां त्वरात् ॥ ६ ॥ तस्य तद्वचनं श्रुत्वा बलाध्यक्षो निशाचरः । स्यन्दनं च बलं चैव समीपं प्रत्यपादयत् ॥ ७ ॥

अथ मकराक्षनिर्गमोऽष्टसप्ततितमे । प्रथमपक्षे अयं दशम्यां प्रातः, द्वितीयपक्षे तु दशम्यां प्रातरारभ्य कम्पनवधप्रहस्तवधरावणमुकुटभङ्गकुम्भकर्णप्रबोधतद्वधाः, अथापराह्ने ब्रह्मास्त्रबन्धः, रात्रौ तन्मोक्षलङ्कादहनकुम्भनिकुम्भयूपाक्षशोणिताक्षप्रजङ्घकम्पनमकराक्षवधाः । निकुम्भं चेत्यादि ॥ १ ॥ परिमूर्च्छितः व्याप्तः ॥ २–५ ॥ त्वरात् त्वरया ॥ ६ ॥ प्रत्यपादयत् प्रापयत् ॥ ७ ॥

संक्षेपः कृतः । नवम्यां रात्रियुद्धे कुम्भादीनां वधः॥२४॥२५॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां सप्तसप्ततितमः सर्गः ॥७७॥ ॥१॥ परिमूर्च्छितः व्याप्तः ॥ २ ॥ गच्छेति । राघवं लक्ष्मणं च जहि । वस्तुतस्तु–राघवं लक्ष्मणं च, विनेति शेषः । वनौकसः जहीति सम्बन्धः ॥३–५॥ त्वरात्

स०–सामान्यतो भयमित्युक्तम् । तत्र विशेषमाह–व्यपेत इति । जीवे व्यपेते शरीरादपगते ॥ २९ ॥ यद्यपि कुम्भवधः प्रागिति कुम्भं निकुम्भं चेति वक्तव्यम् । तथापि निकुम्भोऽतिबलवानिति वाऽव्यवहितो निकुम्भवध इति वा निकुम्भग्रहणं प्रागिति मन्तव्यम् ॥ १ ॥ त्वरात् त्वरया, त्वरा भवतीति त्वरात्, तया सम्भवितिरिति वा ॥ ६ ॥

आवह चोदय । अत्रेतिकरणं द्रष्टव्यम् ॥ ८ ॥ अथ तानित्यादिश्लोकद्वयमेकान्वयम् ॥ ९–१२ ॥ मकराक्षस्येति । समागताः समाजग्मुः ॥ १२ ॥ ते कामरूपिण इत्यादिश्लोकद्वयमेकान्वयम् । स्पष्टम् ॥ १४–१६ ॥ प्रभ्रष्ट इति । करात्तस्य आर्त्तकरस्य वशीकृतकरस्य, लघुहस्तस्येति यावत्



प्रदक्षिणं रथं कृत्वा आरुरोह निशाचरः । सूतं संचोदयामास शीघ्रं मे रथमावह ॥८॥ अथ तान् राक्षसान् सर्वान् मकराक्षोऽब्रवीदिदम् । यूयं सर्वे प्रयुद्ध्यध्वं पुरस्तान्मम राक्षसाः ॥ ९ ॥ अहं राक्षसराजेन रावणेन महात्मना । आज्ञप्तः समरे हन्तुं तावुभौ रामलक्ष्मणौ ॥ १० ॥ अद्य रामं वधिष्यामि लक्ष्मणं च निशाचराः । शाखामृगं च सुग्रीवं वानरांश्च शरोत्तमैः ॥ ११ ॥ अद्य शूलनिपातैश्च वानराणां महाचमूम् । प्रदहिष्यामि संप्राप्तः शुष्केन्धनमिवानलः ॥ १२ ॥ मकराक्षस्य तच्छ्रुत्वा वचनं ते निशाचराः। सर्वे नानायुधोपेता बलवन्तः समागताः ॥ १३ ॥ ते कामरूपिणः सर्वे दंष्ट्रिणः पिङ्गलेक्षणाः । मातङ्गा इव नर्दन्तो ध्वस्तकेशा भयानकाः ॥ १४ ॥ परिवार्य महाकाया महाकायं खरात्मजम् । अभिजग्मुस्ततो हृष्टाश्चालयन्तो वसुन्धराम् ॥ १५ ॥ शङ्खभेरीसहस्राणामाहतानां समन्ततः । क्ष्वेलितास्फोटितानां च ततः शब्दो महानभूत् ॥१६॥ प्रभ्रष्टोऽथ करात्तस्य प्रतोदः सारथेस्तदा । पपात सहसा चैव ध्वजस्तस्य च रक्षसः ॥ १७ ॥ तस्य ते रथयुक्ताश्च हया विक्रमवर्जिताः । चरणैराकुलैर्गत्वा दीनाः सास्रमुखा ययुः ॥ १८ ॥ प्रवाति पवनस्तस्मिन् सपांसुः खरदारुणः । निर्याणे तस्य रौद्रस्य मकराक्षस्य दुर्मतेः॥ १९॥

॥ १७ ॥ विक्रमवर्जिताः विविधपदन्यासविरहिताः । प्रथममाकुलैश्चरणैर्गत्वा पश्चाद्ययुरित्यर्थः ॥ १८ ॥ सपांसुः अत एव खरदारुणः खरः परुषः



त्वरया ॥ ६–९ ॥ अहं राक्षसराजेनेत्यादिश्लोकद्वयस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु–अहं रावणेन रामलक्ष्मणौ हन्तुमद्याज्ञप्तो यद्यपि तथापि लक्ष्मणं रामं, विनेति शेषः । वानरान् वधिष्यामीति सम्बन्धः ॥ १०–१३ ॥ ध्वस्तकेशाः विप्रकीर्णकेशाः अत एव भयावहाः ॥ १४–१७ ॥ तस्येति । विक्रमवर्जिताः विविधपादविन्यासरहिताः । प्रथममाकुलैश्चरणैर्गत्वा पश्चाद्ययुरित्यर्थः ॥ १८ ॥ सपांसुः अत एव खरः परुषः ॥ १९ ॥ २० ॥

दारुणो भयङ्करश्च ॥१९॥ तानीत्यादिश्लोकद्वयमेकान्वयम् । असकृद्गदासिभिन्ना इत्यनेन शौर्यातिशयः सूचितः । युद्धकौशलाः युद्धकुशलाः । स्वार्थेऽण् ।
अहमहमिति वदन्तः अचिन्त्य निर्गता इति पूर्वेण सम्बन्धः ॥२०॥२१॥ इति श्रीगोविन्द० श्रीरामा० रत्न० युद्धकाण्ड० अष्टसप्ततितमः सर्गः ॥७८॥

तानि दृष्ट्वा निमित्तानि राक्षसा वीर्यवत्तमाः । अचिन्त्य निर्गताः सर्वे यत्र तौ रामलक्ष्मणौ ॥ २० ॥ घनगज महिषाङ्गतुल्यवर्णाः समरमुखेष्वसकृद्गदासिभिन्नाः । अहमहमिति युद्धकौशलास्ते रजनिचराः परितः समुन्नदन्तः ॥ २१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे अष्टसप्ततितमः सर्गः ॥ ७८ ॥

निर्गतं मकराक्षं ते दृष्ट्वा वानरयूथपाः । आप्लुत्य सहसा सर्वे योद्धुकामा व्यवस्थिताः ॥ १ ॥ ततः प्रवृत्तं सुमहत्तद्युद्धं रोमहर्षणम् । निशाचरैः प्लवङ्गानां देवानां दानवैरिव ॥ २ ॥ वृक्षशूलनिपातैश्च शिलापरिघपातनैः । अन्योन्यं मर्दयन्ति स्म तदा कपिनिशाचराः ॥ ३ ॥ शक्तिखड्गगदाकुन्तैस्तोमरैश्च निशाचराः । पट्टिशैर्भिन्दिपालैश्च निर्घातैश्च समन्ततः ॥ ४ ॥ पाशमुद्गरदण्डैश्च निखातैश्चापरे तदा । कदनं कपिवीराणां चक्रुस्ते रजनीचराः ॥ ५ ॥ बाणौघैरर्दिताश्चापि खरपुत्रेण वानराः । सम्भ्रान्तमनसः सर्वे दुद्रुवुर्भयपीडिताः ॥ ६ ॥ तान् दृष्ट्वा राक्षसाः सर्वे द्रवमाणान् वलीमुखान् । नेदुस्ते सिंहवद्धृष्टा राक्षसा जितकाशिनः ॥ ७ ॥ विद्रवत्सु तदा तेषु वानरेषु समन्ततः । रामस्तान् वारयामास शरवर्षेण राक्षसान् ॥ ८ ॥

अथ मकराक्षवध एकोनाशीतौ—निर्गतमिति ॥ १—३॥ शक्तीत्यादिश्लोकद्वयमेकान्वयम् । निखातैः आयुधविशेषैः । निर्घातैरिति पाठे अशनिभिरित्यर्थः । केचिन्निशाचराः शक्तिखड्गादिभिः अपरे रजनीचराः पाशमुद्गरादिभिश्च कदनं चक्रुरिति योजना ॥ ४—६ ॥ तान् दृष्ट्वेति । राक्षसाः जित

घनेति । अहमहमिति वदन्त इति सम्बन्धः ॥ २१ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् अष्टसप्ततितमः सर्गः ॥ ७८ ॥
॥ १—३ ॥ निर्घातैः निर्घातसंज्ञकायुधविशेषैः ॥४—६॥ तानिति । जितेन जयेन काशन्त इति जितकाशिनः । राक्षसाः जितकाशिनः, अभवन्निति शेषः ॥७—१०॥

काशिन इति भिन्नं वाक्यम् । जितं जयः तेन काशन्त इति तथोक्ता जितकाशिनः, बभूवुरिति शेषः । अन्यथा द्वितियराक्षसपदवैयर्थ्यं स्यात् ॥७-१०॥
रामानु०—तिष्ठेति । द्वन्द्वयुद्धं ददामि त इति पाठः ॥ १० ॥ यत्तदेति । स्वकर्मस्थं वधकर्मस्थम् । यथा पिता हतस्तथा वध्यमित्यर्थः । यद्वा क्षात्रधर्मकर्मानुतिष्ठन्त

वारितान् राक्षसान् दृष्ट्वा मकराक्षो निशाचरः । क्रोधानलसमाविष्टो वचनं चेदमब्रवीत् ॥ ९ ॥
तिष्ठ राम मया सार्धं द्वन्द्वयुद्धं ददामि ते । त्याजयिष्यामि ते प्राणान् धनुर्मुक्तैः शितैः शरैः ॥ १० ॥
यत्तदा दण्डकारण्ये पितरं हतवान् मम । मदग्रतः स्वकर्मस्थं दृष्ट्वा रोषोऽभिवर्धते ॥ ११ ॥
दह्यन्ते भृशमङ्गानि दुरात्मन् मम राघव । यन्मयाऽसि न दृष्टस्त्वं तस्मिन् काले महावने ॥ १२ ॥
दिष्ट्याऽसि दर्शनं राम मम त्वं प्राप्तवानिह । कांक्षितोऽसि क्षुधार्तस्य सिंहस्येवेतरो मृगः ॥ १३ ॥

मित्यर्थः । स्वकर्मस्थमिति सुतरामकृत्यनिरतमिति वाऽर्थः ॥ ११ ॥ दह्यन्त इति । तस्मिन् काले महावने यद्यस्मान्न दृष्टोऽसि तस्मान्ममाङ्गानि दह्यन्ते । तदानीमेव दृष्टश्चेत्प्रतिकारेण तापः शाम्येदित्यर्थः ॥ १२—१५ ॥

यत्तदेति । यस्मान्मम पितरं हतवान् तस्मान्मदग्रतः तिष्ठन्तम् । स्वकर्मस्थमित्यत्र सु अकर्मस्थमिति छेदः । सुतरामकृत्यनिरतं दृष्ट्वा, त्वामिति शेषः ॥ ११ ॥ दह्यन्त इति । तस्मिन् काले पितृवधसमये यस्मान्न दृष्टोऽसि अतो ममाङ्गानि दह्यन्ते, तदानीमेव दृष्टश्चेत्प्रतीकारेण तापश्शाम्येदित्यर्थः ॥ "वारितान् राक्षसान् दृष्ट्वा" इत्यारभ्य-"ये त्वया निहता वीराः" इत्यन्तस्य वास्तवार्थस्तु—मकराक्षो रामनिष्ठुरभाषणप्रवृत्तोऽपि मकराक्षवाणी रामं प्रकारान्तरेणाह—वारितानित्यारभ्य श्लोकषट्केन । क्रोधानलसमाविष्ट इत्येतत्तस्य स्वरूपकथनम् ॥ तिष्ठेति । हे राम ! ते तव धनुर्मुक्तैः शरैः मे मम प्राणान् त्याजयिष्यामि । मया सार्धं तिष्ठ द्वन्द्वयुद्धे जहीति सम्बन्धः ॥ यत्तदेत्यादि श्लोकद्वयमेकं वाक्यम् । हे दुरात्मन् ! दुष्टेष्वप्यात्मा अन्तःकरणं दयासारं यस्य हे राघव ! यत् यस्मात् मदग्रतः मत् मत्तः अग्रतः पूर्वमेव, मद्वधात्पूर्वमेवेत्यर्थः । दण्डकारण्ये मम पितरं स्वकर्मस्थं सुतरामकृत्यनिरतं दृष्ट्वा हतवान् तस्मात्तस्मिन् काले महावने मया त्वं न दृष्टः, तस्मात्त्वद्धस्तवधाभावादिति शेषः । अङ्गानि दह्यन्ते रोषश्चाभिवर्द्धत इति सम्बन्धः ॥ १२ ॥ दिष्ट्येत्यस्य इवशब्दो वाक्यालङ्कारे । सिंहस्य सिंहसदृशस्य क्षुधार्तस्य त्वद्दर्शनं कदा भविष्यतीति क्षुधया आर्तस्य मृग इव मृग्यते ब्रह्मादिभिरिति मृगः सर्वेश्वरः अत एव इतरः प्रपञ्चातीतः अत एव कांक्षितः, ब्रह्मादिभि

अस्त्रैरिति। महाहवे निमित्ते। येन वा अन्येनायुधेनाभ्यस्तं तेनैव युधि वर्तताम्, भवानिति शेषः ॥ १६ ॥ उत्तरोत्तरवादिनम्, बहुप्रलापिनमित्यर्थः ॥ १७ ॥ युद्धेन विना प्रहारेण विना ॥ १८ ॥ १९ ॥ स्वाशिताः सुष्ठु आशितवन्तः ॥ २०–२३ ॥ ज्यातलयोः शब्दः ज्यातलयोः संघर्षजः शब्दः।

अद्य मद्बाणवेगेन प्रेतराड्विषयं गतः। ये त्वया निहता वीराः सह तैश्च समेष्यसि ॥ १४ ॥ बहुनाऽत्र किमुक्तेन शृणु राम वचो मम। पश्यन्तु सकला लोकास्त्वां मां चैव रणाजिरे ॥ १५ ॥ अस्त्रैर्वा गदया वापि बाहुभ्यां वा महाहवे। अभ्यस्तं येन वा राम तेनैव युधि वर्तताम् ॥ १६ ॥ मकराक्षवचः श्रुत्वा रामो दशरथात्मजः। अब्रवीत् प्रहसन् वाक्यमुत्तरोत्तरवादिनम् ॥ १७ ॥ कत्थसे किं वृथा रक्षो बहून्यसदृशानि तु। न रणे शक्यते जेतुं विना युद्धेन वाग्बलात् ॥ १८ ॥ चतुर्दशसहस्राणि रक्षसां त्वत्पिता च यः। त्रिशिरा दूषणश्चैव दण्डके निहता मया ॥ १९ ॥ स्वाशितास्तव मांसेन गृध्रगोमायुवायसाः। भविष्यन्त्यद्य वै पाप तीक्ष्णतुण्डनखाङ्कुराः ॥ २० ॥ राघवेणैवमुक्तस्तु खरपुत्रो निशाचरः। बाणौघानमुचत्तस्मै राघवाय रणाजिरे ॥ २१ ॥ तान् शरान् शरवर्षेण रामश्चिच्छेद नैकधा। निपेतुर्भुवि ते च्छिन्ना रुक्मपुङ्खाः सहस्रशः ॥ २२ ॥ तद्युद्धमभवत्तत्र समेत्यान्योन्यमोजसा। रक्षसः खरपुत्रस्य सूनोर्दशरथस्य च ॥ २३ ॥ जीमूतयोरिवाकाशे शब्दो ज्यातलयोस्तदा। धनुर्मुक्तः स्वनोत्कृष्टः श्रूयते च रणाजिरे ॥ २४ ॥ देवदानवगन्धर्वाः किन्नराश्च महोरगाः। अन्तरिक्षगताः सर्वे द्रष्टुकामास्तदद्भुतम् ॥ २५ ॥ विद्धमन्योन्यगात्रेषु द्विगुणं वर्धते परम्। कृतप्रतिकृतान्योन्यं कुरुतां तौ रणाजिरे ॥ २६ ॥

स्वनोत्कृष्टः स्वनेषूत्कृष्टः ॥ २४ ॥ २५ ॥ विद्धं वेधनम्। वर्धते अवर्धत। कृतप्रतिकृतान्योन्यं कृतस्य प्रतिकृतं ययोस्तौ तादृशावन्योन्यं यस्मिन्

रिति शेषः। एतादृशस्त्वं दिष्ट्या मद्भाग्येन दर्शनं प्राप्तोऽसि, अतो मद्भाग्यं किं वर्ण्यत इति भावः ॥ १३ ॥ अद्येति। त्वया बाणवेगेन अद्य प्रेतराड्विषयं गतो भवेय मिति शेषः। अतो मत् मत्सकाशात् ये शूराः सुग्रीवादयः अनिहताः तैस्सह समेष्यसीति सम्बन्धः ॥ १४ ॥ १५ ॥ अस्त्रैरिति। महाहवे निमित्ते येन वा येन केन वा अभ्यस्तं तेनैव युधि वर्तताम्, भवानिति शेषः ॥ १६ ॥ उत्तरोत्तरवादिनं बहुप्रलापिनमित्यर्थः ॥ १७–१९ ॥ स्वाशिता इति। सुष्ठ्वाशितवन्तः ॥ २०–२२ ॥ राक्षस इत्यादिसार्धमेकं वाक्यम्। धनुर्मुक्तस्वनः धनुर्गुणस्वनः ॥ २३–२५ ॥ विद्धं वेधनं वर्धते अवर्धत। कृतप्रतिकृतान्योन्यं कृतस्य प्रतिकृतं

युद्धकर्मणि तत्तथोक्तम् । कुरुताम् अकुरुताम्, युद्धमिति शेषः ॥ २६–२९ ॥ वसुधां तिष्ठन् वसुधायामतिष्ठत् ॥ ३० ॥ वसुधां वसुधायाम् ॥ ३१–३४ ॥



राममुक्तांस्तु बाणौघान् राक्षसस्त्वच्छिनद्रणे। रक्षोमुक्तांस्तु रामो वै नैकधा प्राच्छिनच्छरैः ॥२७॥ बाणौघैर्विततताः सर्वा दिशश्च प्रदिशस्तथा । सञ्छन्ना वसुधा चैव समन्तान्न प्रकाशते ॥ २८ ॥ ततः क्रुद्धो महाबाहुर्धनुश्चिच्छेद रक्षसः । अष्टाभिरथ नाराचैः सूतं विव्याध राघवः ॥ २९ ॥ भित्त्वा शरै रथं रामो रथाश्वान् समपातयत् । विरथो वसुधां तिष्ठन् मकराक्षो निशाचरः ॥३०॥ तत्तिष्ठद्वसुधां रक्षः शूलं जग्राह पाणिना । त्रासनं सर्वभूतानां युगान्ताग्निसमप्रभम् ॥ ३१ ॥ विभ्राम्य तु महच्छूलं प्रज्वलत्तन्निशाचरः । स क्रोधात् प्राहिणोत्तस्मै राघवाय महाहवे ॥३२॥ तमापतन्तं ज्वलितं खरपुत्रकराच्च्युतम् । बाणैस्तु त्रिभिराकाशे शूलं चिच्छेद राघवः ॥ ३३ ॥ स च्छिन्नो नैकधा शूलो दिव्यहाटकमण्डितः । व्यशीर्यत महोल्केव रामबाणार्दितो भुवि ॥ ३४ ॥ तच्छूलं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा । साधु साध्विति भूतानि व्याहरन्ति नभोगता ॥ ३५ ॥ तं दृष्ट्वा निहतं शूलं मकराक्षो निशाचरः । मुष्टिमुद्यम्य काकुत्स्थं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ३६ ॥ स तं दृष्ट्वा पतन्तं वै प्रहस्य रघुनन्दनः । पावकास्त्रं ततो रामः सन्दधे तु शरासने ॥ ३७ ॥ तेनास्त्रेण हतं रक्षः काकुत्स्थेन तदा रणे । सञ्छिन्नहृदयं तत्र पपात च ममार च ॥ ३८ ॥ दृष्ट्वा ते राक्षसाः सर्वे मकराक्षस्य पातनम् । लङ्कामेवाभ्यधावन्त रामबाणार्दितास्तदा ॥ ३९ ॥ दशरथनृपपुत्रबाणवेगै रजनिचरं निहतं खरात्मजं तम् । ददृशुरथ सुरा भृशं प्रहृष्टा गिरिमिव वज्रहतं यथा विकीर्णम् ॥ ४० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकोनाशीतितमः सर्गः ॥ ७९ ॥

तच्छूलमिति । नभोगता नभोगतानि । "सुपां सुलुक्–" इत्यादिना आकारादेशः ॥ ३५–३९ ॥ दशरथेति । गिरिमिव वज्रहतं यथेति । द्वे अप्यन्यय यथयोस्तादृशमन्योन्यं यस्मिन् युद्धकर्मणि तत्तथोक्तम् । कुरुताम् अकुरुताम् ॥ २६–२९ ॥ विरथ इति । वसुधास्थः, अभूदिति शेषः ॥ ३० ॥ तत रक्षः वसुधां

पदे संभूयैकार्थमेवाचक्षाते । पक्षद्वयेऽपि मकराक्षवधेन दशममहः समाप्तम् ॥४०॥ इति श्रीगो० श्रीरामा० रत्न० युद्ध० एकोनाशीतितमः सर्गः ॥७९॥
अथेन्द्रजिन्निर्गमोऽशीतितमे—मकराक्षमित्यादि । आविष्टः, अभूदिति शेषः ॥ १–३ ॥ त्वमिति । जयसि अजैषीः । पुनःशब्दस्त्वर्थे । मानुषौ पुनः

मकराक्षं हतं श्रुत्वा रावणः समितिञ्जयः। क्रोधेन महताऽऽविष्टो दन्तान् कटकटापयन् ॥ १ ॥ कुपितश्च तदा तत्र किं कार्यमिति चिन्तयन्। आदिदेशाथ संक्रुद्धो रणायेन्द्रजितं सुतम् ॥ २ ॥ जहि वीर महावीर्यौ भ्रातरौ रामलक्ष्मणौ। अदृश्यो दृश्यमानो वा सर्वथा त्वं बलाधिकः ॥ ३ ॥ त्वमप्रतिमकर्माणमिन्द्रं जयसि संयुगे। किं पुनर्मानुषौ दृष्ट्वा न वधिष्यसि संयुगे ॥ ४ ॥ तथोक्तो राक्षसेन्द्रेण प्रतिगृह्य पितुर्वचः। यज्ञभूमौ स विधिवत् पावकं जुहवेन्द्रजित् ॥ ५ ॥ जुह्वतश्चापि तत्राग्निं रक्तोष्णीषधराः स्त्रियः। आजग्मुस्तत्र सम्भ्रान्ता राक्षस्यो यत्र रावणिः ॥ ६॥ शस्त्राणि शरपत्राणि समिधोऽथ विभीतकाः । लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ॥ ७ ॥ सर्वतोऽग्निं समास्तीर्य शरपत्रैः सतोमरैः । छागस्य कृष्णवर्णस्य गलं जग्राह जीवतः ॥ ८ ॥

मानुषौ तु । संयुगे दृष्ट्वाऽपि न वधिष्यसि किम् ? दर्शनमात्रेण वधिष्यस्येवेत्यर्थः ॥४॥ तथोक्त इति । जुहव जुहाव । वृद्ध्यभाव आर्षः ॥५॥ जुह्वत इति भावलक्षणे षष्ठी । रक्तोष्णीषधराः ऋत्विग्धारणार्थं रक्तोष्णीषाण्यानयन्त्य इत्यर्थः । "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इति श्रुतेः । सम्भ्रान्ताः त्वरावत्यः । समयातिक्रमो मा भूदिति त्वरया उष्णीषाण्यानिन्युरित्यर्थः ॥ ६ ॥ शस्त्राणि, अभवन्निति शेषः । शरपत्राणि गुन्द्रपत्राणि । गुन्द्रश्च काश

वसुधायाम् तिष्ठत्सव् शूलं जग्राहेति सम्बन्धः ॥ दशम्यां मकराक्षवधः ॥ ३१–४० ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकोनाशीतितमः सर्गः ॥ ७९ ॥ १ ॥ २ ॥ जहि वीरेत्यादिश्लोकद्वयस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु—इन्द्रं जितवतो मम मानुषजयः को वा गरीयानिति गर्विष्ठमिन्द्रजितं प्रत्याह—जहि वीरेत्यादिश्लोकद्वयेन । बलाधिकस्त्वं संयुगे अदृश्यो दृश्यमानो वा सर्वथा इन्द्रं दृष्ट्वा जयसि तथापि मानुषावपि रामलक्ष्मणौ संयुगे वधिष्यसि किम् ? न वधिष्यसि अतः तौ जहि त्यज । "ओहाक् त्यागे" इति धातोः । तयोरसाद्ध्यत्वात्तज्जयविषयाशां त्यजेति भावः ॥३॥४॥ तथोक्त इति । जुहव जुहाव, वृद्ध्यभाव आर्षः ॥ ५ ॥ ६ ॥ शस्त्राणीति । शस्त्रादीन्यभवन्निति शेषः ॥ ७ ॥ ८ ॥

जातीयः । "पुन्द्रस्तेजनकः शरः" इत्यमरः । शस्त्राणि तोमराणि । सतोमरैरित्यनुवादात् । शस्त्राणि शरपत्राणि च परिस्तरणान्यभवन् विभीतकाः समिधः इध्मानि अभवन् । वासांसि ऋत्विगुष्णीषवासांसि । लोहितान्यभवन् । कार्ष्णायसं स्रुवमासीत् ॥ ७ ॥ ८ ॥ सकृदेवेति । विजयं दर्शयन्ति विजय



सकृदेव समिद्धस्य विधूमस्य महार्चिषः । बभूवुस्तानि लिङ्गानि विजयं दर्शयन्ति च ॥ ९ ॥ प्रदक्षिणावर्तशिखस्तप्तहाटकसन्निभः । हविस्तत् प्रतिजग्राह पावकः स्वयमुत्थितः ॥ १० ॥ हुत्वाऽग्निं तर्पयित्वा च देवदानवराक्षसान् । आरुरोह रथश्रेष्ठमन्तर्धानगतं शुभम् ॥ ११ ॥ स वाजिभिश्चतुर्भिश्च बाणैश्च निशितैर्युतः । आरोपितमहाचापः शुशुभे स्यन्दनोत्तमः ॥ १२ ॥ जाज्वल्यमानो वपुषा तपनीयपरिच्छदः । मृगैश्चन्द्रार्धचन्द्रैश्च स रथः समलंकृतः ॥ १३ ॥ जाम्बूनदमहाकम्बुर्दीप्तपावकसन्निभः । बभूवेन्द्रजितः केतुर्वैडूर्यसमलंकृतः ॥ १४ ॥ तेन चादित्यकल्पेन ब्रह्मास्त्रेण च पालितः । स बभूव दुराधर्षो रावणिः सुमहाबलः ॥ १५ ॥ सोऽभिनिर्याय नगरादिन्द्रजित् समितिञ्जयः । हुत्वाऽग्निं राक्षसैर्मन्त्रैरन्तर्धानगतोऽब्रवीत् ॥ १६ ॥ अद्य हत्वा रणे यौ तौ मिथ्या प्रव्रजितौ वने । जयं पित्रे प्रदास्यामि रावणाय रणार्जितम् ॥ १७ ॥

सूचकानि ॥ ९ ॥ १० ॥ हुत्वेति । अन्तर्धानगतम् अन्तर्धानशक्तियुक्तम् ॥ ११ ॥ १२ ॥ जाज्वल्यमान इति । मृगैः मृगाकारप्रतिमाभिः । चन्द्रैः चन्द्राकारैः । अर्धचन्द्रैः रचनाविशेषैः ॥ १३ ॥ जाम्बूनदमहाकम्बुः सौवर्णमहावलययुक्तः । "कम्बुर्ना वलये शङ्खे" इत्यमरः ॥ १४ ॥ १५ ॥ राक्षसैः निर्ऋतिदेवताकैः । अन्तर्धानगतः अन्तर्धानशक्तिं प्राप्तः अतः इत्युक्त्वाऽन्तरधीयतेत्यनेन न विरोधः ॥ १६ ॥ अद्य हत्वेत्यादिश्लोकद्वयमेकान्वयम् ।

शरहोमे विजयं दर्शयन्ति, अन्यत्र युद्धे विजयो नास्ति तथापि जीवतः पुनर्लङ्काप्रवेश एव जय इत्यवगन्तव्यम् ॥९॥१०॥ अन्तर्धानगतम् अन्तर्धानशक्तियुक्तम् ॥११॥१२॥ मृगैः प्रतिमारूपैः चन्द्रार्धचन्द्रैश्च चन्द्रार्धचन्द्राकाररचनाविशेषैः॥ १३॥जाम्बूनदमहाकम्बुः सौवर्णवलयसंयुक्तः। "कम्बुर्ना वलये शङ्खे" इत्यमरः॥१४॥१५॥ सोऽभिनिर्याय राक्षसैः मन्त्रैः निर्ऋतिदेवताकैः मन्त्रैः । अन्तर्धानगतः अन्तर्धानशक्तिं प्राप्तः अतः इत्युक्त्वाऽन्तरधीयतेत्युपरितनेन न विरोधः ॥१६॥ अद्य हत्वेत्यादि

अद्य निर्वानरामिति । पितुरित्यध्याहारः । पितुः परमप्रीतिं परमप्रीतिकरम्, पितुः प्रीतिमुद्दिश्येत्यर्थः । अद्य सलक्ष्मणं रामं हत्वा उर्वीं निर्वानरां करिष्य इति संबन्धः ॥१७–१९॥ स ददर्शेति । नागौ त्रिशिरसाविवेति दृष्टान्तेन रामलक्ष्मणयोर्महापुरुषलक्षणपृथुलोन्नतभुजशिरस्कत्वं द्योत्यते ।

अद्य निर्वानरामुर्वीं हत्वा रामं सलक्ष्मणम् । करिष्ये परमप्रीतिमित्युक्त्वाऽन्तरधीयत ॥ १८ ॥ आपपाताथ संक्रुद्धो दशग्रीवेण चोदितः । तीक्ष्णकार्मुकनाराचैस्तीक्ष्णस्त्विन्द्ररिपू रणे ॥ १९ ॥ स ददर्श महावीर्यौ नागौ त्रिशिरसा विव । सृजन्ताविषुजालानि वीरौ वानरमध्यगौ ॥ २० ॥ इमौ ताविति सञ्चिन्त्य सज्यं कृत्वा च कार्मुकम् । सन्त तानेषुधाराभिः पर्जन्य इव वृष्टिमान् ॥ २१ ॥ स तु वैहायसं प्राप्य सरथो रामलक्ष्मणौ । अचक्षुर्विषये तिष्ठन् विव्याध निशितैः शरैः ॥२२॥ तौ तस्य शरवेगेन परीतौ रामलक्ष्मणौ । धनुषी सशरे कृत्वा दिव्यमस्त्रं प्रचक्रतुः ॥२३॥ प्रच्छादयन्तौ गगनं शरजालैर्महाबलौ । तमस्त्रैः सूर्यसङ्काशैर्नैव पस्पृशतुः शरैः॥२४॥ स हि धूमान्धकारं च चक्रे प्रच्छादयन्नभः । दिशश्चान्तर्दधे श्रीमान्नीहारतमसावृताः ॥ २५ ॥ नैव ज्यातलनिर्घोषो न च नेमिखुरस्वनः । शुश्रुवे चरतस्तस्य न च रूपं प्रकाशते ॥ २६ ॥

सृजन्तौ स्रक्ष्यन्तौ । सकलराक्षसक्षयकारिणावित्यर्थः ॥२०॥ इमौ ताविति । सन्ततान ववर्ष ॥२१॥ वैहायसं विहायसा गमनम् ॥२२–२४॥ स हीति । नभः प्रच्छादयन् । हेतौ शतृप्रत्ययः । अन्तर्धापयामासेत्यर्थः । धूमान्धकारमिति नीहारतमसावृता इति च पूर्वमेवोत्पातकलुषत्वमुच्यते ॥२५॥२६॥

श्लोकद्वयमेकं वाक्यम् । तस्य प्रातीतिकार्थः स्पष्टः । रणे सलक्ष्मणं रामं हत्वा गत्वा वने यौ मिथ्या प्रव्राजितौ रामलक्ष्मणौ, विनेति शेषः । आहवे हत्वा, वानरानिति शेषः । उर्वीं निर्वानरां कृत्वा रावणाय जयं प्रदास्यामीति एवं पित्रे प्रीतिं करिष्यामि चेत्युक्त्वा अन्तरधीयतेति सम्बन्धः ॥ १७–१९ ॥ सृजन्तौ स्रक्ष्यन्तौ ॥ २० ॥ सन्ततानेषुधाराभिः निरन्तरबाणधाराभिः ॥ २१ ॥ वैहायसं विहायस्सम्बन्धिमार्गम् ॥ २२–२४ ॥ स हीति । नभः प्रच्छादयन्निति हेतौ शतृप्रत्ययः । दिशम् अन्तर्दधे अन्तर्धापयामास ॥२५॥ २६॥

घनान्धकार इति । घनान्धकारे घनकालिमवति ॥ २७–२९ ॥ रामानु० – घनान्धकारे घनयुक्तान्धकारवति निबिडे ॥ २७ ॥ पतगाः पक्षिणो भूत्वा । तथा





घनान्धकारे तिमिरे शरवर्षमिवाद्भुतम् । स ववर्ष महाबाहुर्नाराचशरवृष्टिभिः ॥ २७ ॥ स रामं सूर्यसङ्काशैः शरैर्दत्तवरो भृशम् । विव्याध समरे क्रुद्धः सर्वगात्रेषु रावणिः ॥ २८ ॥ तौ हन्यमानौ नाराचैर्धाराभिरिव पर्वतौ । हेमपुङ्खान्नरव्याघ्रौ तिग्मान् मुमुचतुः शरान् ॥ २९ ॥ अन्तरिक्षे समासाद्य रावणिं कङ्कपत्रिणः । निकृत्य पतगा भूमौ पेतुस्ते शोणितोक्षिताः ॥ ३० ॥ अतिमात्रं शरौघेण पीड्यमानौ नरोत्तमौ । तानिषून् पततो भल्लैरनेकैर्निचकृन्ततुः ॥ ३१ ॥ यतो हि ददृशाते तौ शरान्निपततः शितान् । ततस्तु तौ दाशरथी ससृजातेऽस्त्रमुत्तमम् ॥ ३२ ॥ रावणिस्तु दिशः सर्वा रथेनातिरथः पतन् । विव्याध तौ दाशरथी लघ्वस्त्रो निशितैः शरैः ॥ ३३ ॥ तेनातिविद्धौ तौ वीरौ रुक्मपुङ्खैः सुसंहितैः । बभूवतुर्दाशरथी पुष्पिताविव किंशुकौ ॥ ३४ ॥ नास्य वेद गतिं कश्चिन्न च रूपं धनुः शरान् । न चान्यद्विदितं किंचित् सूर्यस्येवाभ्रसम्प्लवे ॥ ३५ ॥ तेन विद्धाश्च हरयो निहताश्च गतासवः । बभूवुः शतशस्तत्र पतिता धरणीतले ॥ ३६ ॥ लक्ष्मणस्तु सुसंक्रुद्धो भ्रातरं वाक्यमब्रवीत् । ब्राह्ममस्त्रं प्रयोक्ष्यामि वधार्थं सर्वरक्षसाम् ॥ ३७ ॥ तमुवाच ततो रामो लक्ष्मणं शुभलक्षणम् ॥ ३८ ॥ नैकस्य हेतो रक्षांसि पृथिव्यां हन्तुमर्हसि । अयुध्यमानं प्रच्छन्नं प्राञ्जलिं शरणागतम् । पलायन्तं प्रमत्तं वा न त्वं हन्तुमिहार्हसि ॥ ३९ ॥ अस्यैव तु वधे यत्नं करिष्यावो महाबल । आदेक्ष्यावो महावेगानस्त्रानाशीविषोपमान् ॥ ४० ॥

वेगवन्तः इत्यर्थः ॥ ३०–३३ ॥ तेनेति । सुसंहितैः सुष्ठु निर्मितैः ॥ ३४ ॥ नास्येति । अभ्रसम्प्लवे मेघावरणे ॥ ३५–३८ ॥ नैकस्येत्यादि । प्रच्छन्नं युद्धभीत्या प्रच्छन्नम् । पलायन्तं पलायमानम् ॥३९॥ अस्यैव त्विति । आदेक्ष्यावः प्रयोक्ष्यावः । अस्त्रान् अस्त्राणि । लिङ्गव्यत्यय आर्षः ॥४०॥४१॥



घनान्धकारे सान्द्रतिमिरे । शरवर्षमिव उदकवर्षमिव ॥२७–२९॥ अन्तरिक्ष इति । पतगाः बाणाः ॥३०–३९॥ अस्त्रान् अस्त्राणि । आदेक्ष्यावः प्रयोक्ष्यावः ॥४०॥४१॥

यद्येष इति । भूमिं भूविवरम् विशते । आत्मनेपदमार्षम् । दिवं स्वर्गम् ॥ ४२ ॥ रामानु०—यदीति । भूमिं भूविवरम् विशते । आत्मनेपदमार्षम् । दिवं स्वर्गम् । एत

दुपरितनलोकानामुपलक्षणम् । रसातलम् एतदधस्तनलोकानामुपलक्षणम् ॥ ४२ ॥ इत्येवमिति । प्लवगर्षभैः वृतः निरीक्षते । उपायं चिन्तयति स्मेत्यर्थः ॥ ४३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अशीतितमः सर्गः ॥ ८० ॥

तमेनं मायिनं क्षुद्रमन्तर्हितरथं बलात् । राक्षसं निहनिष्यन्ति दृष्ट्वा वानरयूथपाः ॥ ४१ ॥ यद्येष भूमिं विशते दिवं वा रसातलं वापि नभस्स्थलं वा । एवं निगूढोऽपि ममास्त्रदग्धः पतिष्यते भूमितले गतासुः ॥ ४२ ॥ इत्येवमुक्त्वा वचनं महात्मा रघुप्रवीरः प्लवगर्षभैर्वृतः । वधाय रौद्रस्य नृशंसकर्मणस्तदा महात्मा त्वरितं निरीक्षते ॥ ४३ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे अशीतितमः सर्गः ॥ ८० ॥

विज्ञाय तु मनस्तस्य राघवस्य महात्मनः । सन्निवृत्याहवात्तस्मात् संविवेश पुरं ततः ॥ १ ॥
सोऽनुस्मृत्य वधं तेषां राक्षसानां तरस्विनाम् । क्रोधताम्रेक्षणः शूरो निर्जगाम महाद्युतिः ॥ २ ॥
स पश्चिमेन द्वारेण निर्ययौ राक्षसैर्वृतः । इन्द्रजित्तु महावीर्यः पौलस्त्यो देवकण्टकः ॥ ३ ॥

अथ मायासीतावधः एकाशीतितमे—विज्ञाय त्वित्यादि । अत्र तृतीयाक्षरभूतो यकारो गायत्र्या एकोनविंशतितमाक्षरम् । अष्टादशसहस्रश्लोका गताः ॥ १ ॥ तेषां कुम्भकर्णादीनाम् ॥ २ ॥ निकुम्भिलायां दुर्जयास्त्रबललाभाय होतुकामस्तावत्पर्यन्तं रामलक्ष्मणयोर्युद्धोद्योगं मन्दीकर्तुं मायामारिप्समाणो(नो) रामलक्ष्मणयोः कुपितत्वेन दुरासदत्वात् सीतास्वरूपाभिज्ञस्यान्यस्याभावाद्धनुमतं मायां दर्शयितुं पश्चिमद्वारेण निर्गत इत्याह—स

भूमिं भूविवरम् । दिवं स्वर्गम् । एतदुपरितनलोकानामुपलक्षणम् । रसातलम् एतदधस्तनलोकानामुपलक्षणम् ॥ ४२ ॥ ४३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् अशीतितमः सर्गः ॥ ८० ॥ गायत्र्या य इत्येकोनविंशतितमाक्षरं विज्ञाय तु मनस्तस्य इति श्लोकस्य तृतीयाक्षरेण य इत्यनेन संगृह्णाति ॥ १ ॥ सोऽनुस्मृत्येति । तेषां कुम्भकर्णादीनाम् ॥ २ ॥ ३ ॥

पश्चिमेनेत्यादिना ॥ ३ ॥ दृष्ट्वा विचिन्त्य । पश्चिमद्वारनिष्क्रान्तस्य रामलक्ष्मणदर्शनासम्भवात् । मायां परव्यामोहकरीं शक्तिम् । प्रादुष्करोत् प्रादुर्भावयामास ॥ ४ ॥ आवृत्य स्थितेन बलेन, युक्त इति शेषः । युक्ते रथे सीतां स्थाप्य ततस्तस्या वधमरोचयदिति सम्बन्धः ॥ ५-८ ॥ स ददर्शेत्यादि

इन्द्रजित्तु ततो दृष्ट्वा भ्रातरौ रामलक्ष्मणौ । रणायाभ्युद्यतौ वीरौ मायां प्रादुष्करोत्तदा ॥४॥ इन्द्रजित्तु रथे स्थाप्य सीतां मायामयीं ततः । बलेन महताऽऽवृत्य तस्या वधमरोचयत् ॥५॥ मोहनार्थं तु सर्वेषां बुद्धिं कृत्वा सुदुर्मतिः । हन्तुं सीतां व्यवसितो वानराभिमुखो ययौ ॥ ६ ॥ तं दृष्ट्वा त्वभिनिर्यान्तं नगर्याः काननौकसः । उत्पेतुरभिसंक्रुद्धाः शिलाहस्ता युयुत्सवः ॥ ७ ॥ हनुमान् पुरतस्तेषां जगाम कपिकुञ्जरः । प्रगृह्य सुमहच्छृङ्गं पर्वतस्य दुरासदम् ॥ ८ ॥ स ददर्श हतानन्दां सीतामिन्द्रजितो रथे । एकवेणीधरां दीनामुपवासकृशाननाम् ॥ ९ ॥ परिक्लिष्टैकवसनाममृजां राघवप्रियाम् । रजोमलाभ्यामालिप्तैः सर्वगात्रैर्वरस्त्रियम् ॥१०॥ तां निरीक्ष्य मुहूर्तं तु मैथिलीत्यध्यवस्य तु । बभूवाचिरदृष्टा हि तेन सा जनकात्मजा ॥ ११ ॥ तां दीनां मलदिग्धाङ्गीं रथस्थां दृश्य मैथिलीम् । बाष्पपर्याकुलमुखो हनुमान् व्यथितोऽभवत् ॥ १२ ॥ अब्रवीत्तां तु शोकार्तां निरानन्दां तपस्विनीम् । सीतां रथस्थितां दृष्ट्वा राक्षसेन्द्रसुताश्रिताम् । किं समर्थितमस्येति चिन्तयन् स महाकपिः ॥ १३ ॥

श्लोकद्वयमेकान्वयम् । अमृजाम् अनुद्वर्तनाम् । अनलङ्कारामिति वा । "मृजू शौचालङ्कारयोः" इति धातोर्भिदादित्वादङ् । सर्वगात्रैः उपलक्षिताम् ॥ ९ ॥ १० ॥ अध्यवस्य निश्चित्य, विषण्ण इति शेषः । निश्चये हेतुमाह बभूवेति ॥ ११ ॥ दृश्य दृष्ट्वा ॥ १२ ॥ अब्रवीदित्याद्यर्धत्रयमेकान्वयम् ।

मायां परव्यामोहकरीं शक्तिम् । प्रादुष्करोत् प्रादुर्भावयामासेत्यर्थः ॥ ४ ॥ निकुम्भिलायां होतुकामः पश्चिमद्वारे निर्गच्छन् इन्द्रजित् स्वगमनविघातुकं रामलक्ष्मणयोर्युद्धोद्योगं दृष्ट्वा तन्निवारणार्थं मायासीतां प्रकटितवानिति मन्तव्यम् ॥ ५-९ ॥ परिक्लिष्टां मलिनाम् । अमृजाम् उद्वर्तनरहिताम् । सर्वगात्रैरुपलक्षिताम् ॥ १० ॥ तां मुहूर्तमात्रं निरीक्ष्य । अचिरदृष्टत्वात् मैथिलीति अध्यवस्य निश्चित्य बभूव, विषण्ण इति शेषः ॥ ११ ॥ १२ ॥ अब्रवीदित्यादि सार्धश्लोकः ॥

स०—या पूर्वम् आचिरदृष्टा बहुतिथमवलोकिता । सा जनकात्मजा वा नेति मुहूर्तं निरीक्ष्य आलोच्य तामध्यवस्य सेवति निश्चित्य अहित दुःखं बभूव, दुःखितोऽभूदिति यावत् । अचिरदृष्टा अल्पकालव्यवधानेन दृष्टेति वा ॥ ११ ॥

सीतां रथे स्थापितवतोऽस्य किं समर्थितं को वाऽभिप्राय इति चिन्तयन्नब्रवीत्। इतिर्वचनचिन्तनयोः साधारणः ॥ १३ ॥ सह तैरित्यर्धम्। हनुमानिति शेषः ॥ १४ ॥ मूर्च्छितः व्याप्तः ॥१५॥ पश्यतां तेषाम्। अनादरे षष्ठी। मायया परमोहनशक्त्या ॥ १६–१८ ॥ केशपक्षे केशसमूहे। "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे" इत्यमरः। परामृशः अस्पृशः ॥ १९ ॥ धिगित्यादिसार्धश्लोक एकान्वयः । ईदृशी जुगुप्सितेत्यर्थः। नृशंस निर्दय !

सह तैर्वानरश्रेष्ठैरभ्यधावत रावणिम् ॥१४॥ तद्वानरबलं दृष्ट्वा रावणिः क्रोधमूर्च्छितः। कृत्वा विकोशं निस्त्रिंशं मूर्ध्नि सीतां परामृशत् ॥१५॥ तां स्त्रियं पश्यतां तेषां ताडयामास रावणिः। क्रोशन्तीं राम रामेति मायया योजितां रथे ॥ १६ ॥ गृहीतमूर्धजां दृष्ट्वा हनुमान् दैन्यमागतः। शोकजं वारि नेत्राभ्यामसृजन्मारुतात्मजः ॥ १७ ॥ तां दृष्ट्वा चारुसर्वाङ्गीं रामस्य महिषीं प्रियाम्। अब्रवीत् परुषं वाक्यं क्रोधाद्रक्षोधिपात्मजम् ॥ १८ ॥ दुरात्मन्नात्मनाशाय केशपक्षे परामृशः। ब्रह्मर्षीणां कुले जातो राक्षसीं योनिमाश्रितः ॥ १९ ॥ धिक् त्वां पापसमाचारं यस्य ते मतिरीदृशी ॥ २० ॥ नृशंसानार्य दुर्वृत्त क्षुद्र पापपराक्रम। अनार्यस्येदृशं कर्म घृणा ते नास्ति निर्घृण ॥ २१ ॥ च्युता गृहाच्च राज्याच्च रामहस्ताच्च मैथिली। किं तवैषाऽपराद्धा हि यदेनां हन्तुमिच्छसि ॥ २२ ॥ सीतां च हत्वा न चिरं जीविष्यसि कथंचन। वधार्ह कर्मणाऽनेन मम हस्तगतो ह्यसि ॥ २३ ॥

अनार्य असज्जन। दुर्वृत्त दुराचार। क्षुद्र अल्पबुद्धे। पापः अधर्म्यः पराक्रमो यस्य स पापपराक्रमः। उक्तमनार्यत्वं कार्यतो दर्शयति—अनार्यस्येति। ईदृशं जुगुप्सितं कर्म अनार्यस्यैव भवति। हे निर्घृण निर्दय ! ते घृणा जुगुप्सा नास्ति। "जुगुप्सा करुणा घृणा" इत्यमरः ॥ २० ॥ २१ ॥ अपराधिषु घृणा न कर्तव्या अत एव एनां हन्मीत्याशङ्क्यापराधलेशोऽप्यस्यां नास्तीत्याह—च्युतेति। गृहात् स्वसदनात्। चकारात् परिचारकेभ्यश्च। अनेन बन्धुमुखादपराधकरणं नास्तीत्युक्तम्। राज्यात् राज्योपकरणाच्च। अनेन सेनामुखेन नापराध इत्युक्तम्। रामहस्तात् रक्षकहस्ताच्च। तन्मुखादप्यपराध एकान्वयः। सीतां रथे स्थापितवतोऽस्य किं समर्थितम् को वा अभिप्राय इति चिन्तयन्नब्रवीदिति योजना ॥ १३–१८ ॥ दुरात्मन्निति। केशपक्षे केशसमूहे ॥१९॥ ॥ २० ॥ ईदृशं जुगुप्सितम् ॥ २१ ॥ २२ ॥ हे वधार्ह ! अनेन कर्मणा न चिरं जीविष्यसि। हि यतो मम हस्तगतोऽसि ॥ २३ ॥

प्रसक्तिर्नास्तीत्युक्तम् । मैथिली आचारप्रधानकुले जाता । अनेनापराधस्वरूपमेव न जानातीत्युक्तम् । यत् येनापराधकार्येण एनां हन्तुमिच्छसि तादृशं किं प्रयोजनमुद्दिश्य । अपराद्धा अपराधं कृतवती । कर्तरि क्तः ॥ २२ ॥ २३ ॥ ये चेति । हे लोकवध्य! एषु चतुर्दशलोकेषु स्त्रीघातिनां ये कुत्सिताः लोकाः तान् इह जीवितमुत्सृज्य प्रेत्य यातनाशरीरं प्राप्य प्रतिपत्स्यसे प्राप्स्यसीत्यर्थः ॥ २४ ॥ सायुधैः सहननसाधनैः ॥ २५ ॥ आपतन्तमिति ।



ये च स्त्रीघातिनां लोका लोकवध्येषु कुत्सिताः । इह जीवितमुत्सृज्य प्रेत्य तान् प्रतिपत्स्यसे ॥ २४ ॥ इति ब्रुवाणो हनुमान् सायुधैर्हरिभिर्वृतः । अभ्यधावत संक्रुद्धो राक्षसेन्द्रसुतं प्रति ॥ २५ ॥ आपतन्तं महावीर्यं तदनीकं वनौकसाम् । रक्षसां भीमवेगानामनीकं तु न्यवारयत् ॥ २६ ॥ स तां बाणसहस्रेण विक्षोभ्य हरिवाहिनीम् । हरिश्रेष्ठं हनूमन्तमिन्द्रजित् प्रत्युवाच ह ॥२७॥ सुग्रीवस्त्वं च रामश्च यन्निमित्तमिहागताः । तां हनिष्यामि वैदेहीमद्यैव तव पश्यतः ॥ २८ ॥ इमां हत्वा ततो रामं लक्ष्मणं त्वां च वानर । सुग्रीवं च वधिष्यामि तं चानार्यं विभीषणम् ॥२९॥ न हन्तव्याः स्त्रियश्चेति यद्ब्रवीषि प्लवङ्गम । पीडाकरममित्राणां यत् स्यात् कर्तव्यमेव तत् ॥३०॥ तमेवमुक्त्वा रुदतीं सीतां मायामयीं तदा । शितधारेण खड्गेन निजघानेन्द्रजित् स्वयम् ॥ ३१ ॥ यज्ञोपवीतमार्गेण भिन्ना तेन तपस्विनी । सा पृथिव्यां पृथुश्रोणी पपात प्रियदर्शना । तामिन्द्रजित्स्वयं हत्वा हनुमन्तमुवाच ह ॥३२॥

अनीकम् अनीकं च ॥ २६–२९ ॥ न हन्तव्या इति यत् ब्रवीषि तत्रोत्तरं शृण्विति वाक्यशेषः ॥ ३० ॥ ३१ ॥ यज्ञोपवीतमार्गेण भिन्ना । मार्गशब्दः प्रकारवचनः, यज्ञोपवीतधारणप्रकारेण भिन्नेत्यर्थः । यज्ञोपवीतमादाय भिन्नेति पाठान्तरम् । पूर्वं मूर्धजेषु गृहीतामादाय । यज्ञोपवीतं भिन्ना



ये चेति । हे लोकवध्य! एषु लोकेषु चतुर्दशभुवनेषु। स्त्रीघातिनां ये कुत्सिता लोकाः तान् इह जीवितमुत्सृज्य प्रेत्य यातनाशरीरमेत्य प्रतिपत्स्यसे प्रतिपद्यसे इति योजना ॥२४॥२५॥ आपतन्तमित्यत्रार्षो लिङ्गव्यत्ययः । रक्षसामनीकं कर्तृ ॥२६–२८॥ इमामित्यस्य मायासीतेत्यर्थः स्पष्टः । वस्तुतस्तु–लक्ष्मणं रामं च आश्रितामिति शेषः । इमां हत्वा त्वां चानार्यं विभीषणं च हनिष्यामीति सम्बन्धः ॥२९॥ अमित्राणां शत्रूणां यत्पीडाकरं तत्पापमपि कर्तव्यमेव ॥३०॥३१॥ यज्ञोपवीतमार्गेण

यज्ञोपवीतं यथा भवति तथा भिन्ना, यज्ञोपवीतप्रकारेण भिन्नेत्यर्थः ॥ ३२–३४ ॥ रामानु० यज्ञोपवीतेति । तेन इन्द्रजिता । आधूय मूर्धजेषु गृहीत्वा आधूय ।

यज्ञोपवीतं यथा भवति तथा भिन्ना यज्ञोपवीतमार्गेण भिन्नेत्यर्थः ॥ ३२ ॥ मयेति । रामस्येमां रामसम्बन्धिनीम् । राममहिषीमिति यावत् ॥ ३३ ॥ वानरा इति । व्यादितास्यस्य

मया रामस्य पश्येमां कोपेन च निषूदिताम् । एषा विशस्ता वैदेही विफलो वः परिश्रमः ॥ ३३ ॥ ततः खड्गेन महता हत्वा तामिन्द्रजित् स्वयम् । हृष्टः स रथमास्थाय विननाद महास्वनम् ॥ ३४ ॥ वानराः शुश्रुवुः शब्दमदूरे प्रत्यवस्थिताः । व्यादितास्यस्य नदतस्तद्दुर्गं संश्रितस्य च ॥ ३५ ॥ तथा तु सीतां विनिहत्य दुर्मतिः प्रहृष्टचेताः स बभूव रावणिः । तं हृष्टरूपं समुदीक्ष्य वानरा विषण्णरूपाः सहसा प्रदुद्रुवुः ॥ ३६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

श्रुत्वा तु भीमनिर्ह्रादं शक्राशनिसमस्वनम् । वीक्षमाणा दिशः सर्वा दुद्रुवुर्वानरर्षभाः ॥ १ ॥
तानुवाच ततः सर्वान् हनुमान् मारुतात्मजः । विषण्णवदनान् दीनांस्त्रस्तान् विद्रवतः पृथक् ॥ २ ॥
कस्माद्विषण्णवदना विद्रवध्वे प्लवङ्गमाः । त्यक्तयुद्धसमुत्साहाः शूरत्वं क्व नु वो गतम् ॥ ३ ॥

व्यात्तास्यस्य । तद्दुर्गं व्यूहीकृतराक्षसपरिवेष्टनरूपम् ॥ ३५ ॥ हृष्टरूपम् अत्यन्तहृष्टम् । विषण्णरूपाः अत्यन्तं विषण्णाः ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकाशीतितमः सर्गः ॥ ८१ ॥

अथेन्द्रजितो निकुम्भिलायां होमारम्भः—श्रुत्वेत्यादि । शक्राशनिसमस्वनम् शक्राशनिस्वनसममित्यर्थः ॥ १ ॥ २ ॥ कस्मादिति । विद्रवध्वे विद्रवथ ।

भिन्ना । मार्गशब्दः प्रकारवचनः । यज्ञोपवीतधारणप्रकारेण भिन्नेत्यर्थः ॥ ३२ ॥ एषा वैदेही विशस्ता अतो वः परिश्रमो निष्फलः ॥३३॥३४॥ वानरा इति । तद्दुर्गं व्यूहीकृतराक्षसपरिवेष्टनरूपं दुर्गं सीतामुद्दिश्योक्तेन्द्रजित्परुषवाक्यानां वानरव्यामोहनाय सम्पादितमायासीताविषयत्वात्तेषामर्थान्तरं नोक्तमित्यवगन्तव्यम् ॥३५॥ हृष्टरूपम् अतिशयेन हृष्टम् । प्रशंसायां रूपप् ॥ ३६ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकाशीतितमः सर्गः ॥ ८१ ॥

श्रुत्वेति । भीमो यो निर्ह्रादः शब्दः तं श्रुत्वा, इन्द्रजित इति शेषः । शक्राशनिसमस्वनं तमिन्द्रजितं वीक्षमाणा दिशो दुद्रुवुः ॥ १–९ ॥

आत्मनेपदमार्षम् ॥ ३ ॥ पृष्ठत इति । अनुव्रजध्वम् अनुव्रजत । पदव्यत्यय आर्षः ॥ ४–१० ॥ तमिति । व्यर्थमुद्यता व्यर्थं प्रयुक्ता ॥ ११–१२ ॥

पृष्ठतोऽनुव्रजध्वं मामग्रतो यान्तमाहवे । शूरैरभिजनोपेतैरयुक्तं हि निवर्तितुम् ॥४॥ एवमुक्ताः सुसंहृष्टा वायुपुत्रेण वानराः । शैलशृङ्गाण्यग्रांश्चैव जगृहुर्हृष्टमानसाः ॥ ५ ॥ अभिपेतुश्च गर्जन्तो राक्षसान् वानरर्षभाः । परिवार्य हनूमन्तमन्वयुश्च महाहवे ॥६॥ स तैर्वानरमुख्यैश्च हनुमान् सर्वतो वृतः । हुताशन इवार्चिष्मानदहच्छत्रुवाहिनीम् ॥ ७ ॥ स राक्षसानां कदनं चकार सुमहाकपिः । वृतो वानरसैन्येन कालान्तकयमोपमः ॥ ८ ॥ स तु कोपेन चाविष्टः शोकेन च महाकपिः । हनुमान् रावणिरथेऽपातयन्महतीं शिलाम् ॥ ९ ॥ तामापतन्तीं दृष्ट्वैव रथः सारथिना तदा । विधेयाश्वसमायुक्तः सुदूरमपवाहितः ॥१०॥ तमिन्द्रजितमप्राप्य रथस्थं सहसारथिम् । विवेश धरणीं भित्त्वा सा शिला व्यर्थमुद्यता ॥ ११ ॥ पातितायां शिलायां तु रक्षसां व्यथिता चमूः । निपतन्त्या च शिलया राक्षसा मथिता भृशम् ॥ १२ ॥ तमभ्यधावञ्छतशो नदन्तः काननौकसः ॥ १३ ॥ ते द्रुमांश्च महावीर्या गिरिशृङ्गाणि चोद्यताः । क्षिपन्तीन्द्रजितः सङ्ख्ये वानरा भीमविक्रमाः ॥ १४ ॥ वृक्षशैलमहावर्षं विसृजन्तः प्लवङ्गमाः । शत्रूणां कदनं चक्रुर्नेदुश्च विविधैः स्वरैः ॥ १५ ॥

ते द्रुमानिति । इन्द्रजितः इन्द्रजितं प्रति ॥ १४–१८ ॥

विधेयाश्वैः सारथ्यधीनाश्वैः समायुक्तः ॥ १० ॥ तमप्राप्य धरणिं विवेश अत एव सा शिला व्यर्थमुद्यता उद्युक्ता, अभवदिति शेषः ॥ ११–१३ ॥ गिरिशृङ्गाणि

स०—धरणीं भित्त्वा व्यर्थम् इन्द्रजिद्धननरूपार्थरहितं यथा भवति तथा । तामेव या विवेश सा शिला पुनरुद्यता उपर्यागता । एवं शिलायां पातितायां सत्यां रक्षसां चमूः सेना व्यथिता अन्तर्गता. चोत्थिता पुनः किं करोतीति व्यथां प्राप्ता भृशं निपतन्त्या तया शिलया च राक्षसा भृशं मथिता इत्यन्वयः । एके तु व्यर्थमुद्यता सा शिलाऽभूत् धरणीं चाविवेश । हनुमता शिलायां पातितायां रक्षसां चमूर्व्यथिता । तया च निपतन्त्या शिलया राक्षसा मथिता इत्यन्वयं मन्वते ॥ ११ ॥

शूलैरशनिभिरिति । अशनेरायुधत्वं शक्तिविशेषात् ॥१९॥२०॥ स निवार्येत्यादि । न साध्यं साधयितुमयोग्यम्, प्रयोजनाभावादिति भावः ॥२१॥ तदेवाह—

वानरैस्तैर्महावीर्यैर्घोररूपा निशाचराः । वीर्यादभिहता वृक्षैर्व्यवेष्टन्त रणाजिरे ॥ १६॥ स्वसैन्यमभिवीक्ष्याथ वानरार्दितमिन्द्रजित् । प्रगृहीतायुधः क्रुद्धः परानभिमुखो ययौ ॥ १७ ॥ स शरौघानवसृजन् स्वसैन्येनाभिसंवृतः । जघान कपिशार्दूलान् स बहून् दृष्टविक्रमः ॥१८॥ शूलैरशनिभिः खड्गैः पट्टिशैः कूटमुद्गरैः । ते चाप्यनुचरास्तस्य वानरान् जघ्नुरोजसा ॥ १९ ॥ सस्कन्धविटपैः सालैः शिलाभिश्च महाबलः । हनुमान् कदनं चक्रे रक्षसां भीमकर्मणाम् ॥ २० ॥ स निवार्य परानीकमब्रवीत्तान् वनौकसः । हनुमान् सन्निवर्तध्वं न नः साध्यमिदं बलम् ॥२१॥ त्यक्त्वा प्राणान् विवेष्टन्तो रामप्रियचिकीर्षवः । यन्निमित्तं हि युद्ध्यामो हता सा जनकात्मजा ॥ २२ ॥ इममर्थं हि विज्ञाप्य रामं सुग्रीवमेव च । तौ यत् प्रतिविधास्येते तत् करिष्यामहे वयम् ॥ २३ ॥ इत्युक्त्वा वानरश्रेष्ठो वारयन् सर्ववानरान् । शनैः शनैरसंत्रस्तः सबलः सन्न्यवर्तत ॥२४॥ ततः प्रेक्ष्य हनूमन्तं व्रजन्तं यत्र राघवः । स होतुकामो दुष्टात्मा गतश्चैत्यनिकुम्भिलाम् ॥२५॥ निकुम्भिलामधिष्ठाय पावकं जुहवेन्द्रजित् ॥ २६ ॥ यज्ञभूम्यां तु विधिवत् पावकस्तेन रक्षसा । हूयमानः प्रजज्वाल मांसशोणितभुक् तदा ॥ २७ ॥

त्यक्त्वेति ॥२२–२४॥ चैत्यनिकुम्भिलां चैत्ये विद्यमानं निकुम्भिलाख्यदेवतायतनमित्यर्थः ॥२५॥ निकुम्भिलामित्यर्धम् । जुहव जुहाव ॥२६॥२७॥

चोद्यताः, गृहीत्वेति शेषः । गृहीत्वा युद्धार्थमुद्यता बभूवुरित्यर्थः । इन्द्रजितं क्षिपन्ति आक्षिपन्ति स्म । तिरस्कृतं चक्रुरिति यावत् ॥ १४–२० ॥ परानीकं राक्षससेनाम् प्राणांस्त्यक्त्वा प्राणस्नेहमपि त्यक्त्वा विचेष्टन्तस्सन्तो यन्निमित्तं युद्ध्यामः सा हतेति व्यर्थोऽयं श्रम इति भावः । तौ रामसुग्रीवौ । प्रतिविधास्येते प्रतिक्रियानुष्ठाने नियोक्ष्येते तत्करिष्यामहे ॥ २१–२५ ॥ निकुम्भिलामिति । जुहव जुहाव ॥ दशम्यां पूर्वाह्णे निकुम्भिलागमनम् ॥ २६ ॥ होमशोणितभुक् होमार्थमाहुतित्वेन प्रक्षिप्तशोणितभुक् ॥ २७ ॥

स इति । होमशोणितं शोणितहोमः ॥ २८ ॥ नयानयज्ञाः शास्त्रीयाशास्त्रीयविदः ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्व्यशीतितमः सर्गः ॥ ८२ ॥



सोऽर्चिष्पिनद्धो ददृशे होमशोणिततर्पितः । सन्ध्यागत इवादित्यः सुतीव्रोऽग्निः समुत्थितः ॥ २८ ॥ अथेन्द्रजिद्राक्षसभूतये तु जुहाव हव्यं विधिना विधानवित् । दृष्ट्वा व्यतिष्ठन्त च राक्षसास्ते महासमूहेषु नयानयज्ञाः ॥ २९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे द्व्यशीतितमः सर्गः ॥ ८२ ॥

राघवश्चापि विपुलं तं राक्षसवनौकसाम् । श्रुत्वा सङ्ग्रामनिर्घोषं जाम्बवन्तमुवाच ह ॥ १ ॥ सौम्य नूनं हनुमता क्रियते कर्म दुष्करम् । श्रूयते हि यथा भीमः सुमहानायुधस्वनः ॥ २ ॥ तद्गच्छ कुरु साहाय्यं स्वबलेनाभिसंवृतः । क्षिप्रमृक्षपते तस्य कपिश्रेष्ठस्य युध्यतः ॥ ३ ॥ ऋक्षराजस्तथोक्तस्तु स्वेनानीकेन संवृतः । आगच्छत् पश्चिमं द्वारं हनुमान् यत्र वानरः ॥ ४ ॥ अथायान्तं हनूमन्तं ददर्शर्क्षपतिः पथि । वानरैः कृतसङ्ग्रामैः श्वसद्भिरभिसंवृतम् ॥ ५ ॥ दृष्ट्वा पथि हनूमांश्च तदृक्षबलमुद्यतम् । नीलमेघनिभं भीमं सन्निवार्य न्यवर्तत ॥ ६ ॥ स तेन हरिसैन्येन सन्निकर्षं महायशाः । शीघ्रमागम्य रामाय दुःखितो वाक्यमब्रवीत् ॥ ७ ॥ समरे युद्ध्यमानानामस्माकं प्रेक्षतां पुरः । जघान रुदतीं सीतामिन्द्रजिद्रावणात्मजः ॥ ८ ॥ उद्भ्रान्तचित्तस्तां दृष्ट्वा विषण्णोऽहमरिन्दम । तदहं भवतो वृत्तं विज्ञापयितुमागतः ॥ ९ ॥

अथ मायासीतावधमूर्च्छितरामसान्त्वनं त्र्यशीतितमे–राघवश्चापीत्यादि । जाम्बवन्तं यदृच्छया सन्निहितम् ॥ १ ॥ सौम्येति । यथा यतः ॥ २–६ ॥

रामानु०–अथेति । वानरैः कृतसङ्ग्रामैरिति पाठः ॥ ५ ॥ स तेनेति । हरिसैन्येन सह । सन्निकर्षम्, रामस्येति शेषः ॥ ७–११ ॥





होमशोणिततर्पितः शोणितहोमेन तर्पित इत्यर्थः ॥ २८ ॥ २९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां द्व्यशीतितमः सर्गः ॥ ८२ ॥ १–४ ॥ अथेति । श्वसद्भिः सीताविपत्तिस्मृतिजदुःखान्निश्वसद्भिरित्यर्थः ॥ ५ ॥ उद्यतं युद्धायोद्युक्तम् ॥ ६ ॥ स इति । हरिसैन्येन सह

असिञ्चन्निति । उच्छिखम् उद्गतज्वालम् । "अर्चिर्हेतिः शिखा स्त्रियाम्" इत्यमरः ॥१२॥ हेत्वर्थसंयुक्तं हेतुरुपपत्तिः अर्थः प्रयोजनम् । हेतुरूपोऽर्थोऽभिधेयो हेत्वर्थ इति वा ॥१३॥ एवं सीताहननश्रवणजनितमनवधिकमधैर्यमाश्रयन्तं राममाश्वासयितुं लक्ष्मणोऽन्वारुह्यवादेन धर्माधर्मयोः स्वरूपं खण्डयन् नीतिशास्त्रानुसारेण बलमेव प्रधानतयाऽऽलम्ब्यतामित्याह—शुभ इत्यादिना सर्गशेषेण । पितृवाक्यपरिपालनादिरूपे शुभे वर्त्मनि तिष्ठन्तम्, स्थिरतया

तस्य तद्वचनं श्रुत्वा राघवः शोकमूर्च्छितः । निपपात तदा भूमौ छिन्नमूल इव द्रुमः ॥ १० ॥
तं भूमौ देवसङ्काशं पतितं प्रेक्ष्य राघवम् । अभिपेतुः समुत्पत्य सर्वतः कपिसत्तमाः ॥ ११ ॥
असिञ्चन् सलिलैश्चैनं पद्मोत्पलसुगन्धिभिः । प्रदहन्तमनासाद्यं सहसाऽग्निमिवोच्छिखम् ॥ १२ ॥
तं लक्ष्मणोऽथ बाहुभ्यां परिष्वज्य सुदुःखितः । उवाच राममस्वस्थं वाक्यं हेत्वर्थसंयुतम् ॥ १३ ॥
शुभे वर्त्मनि तिष्ठन्तं त्वामार्य विजितेन्द्रियम् । अनर्थेभ्यो न शक्नोति त्रातुं धर्मो निरर्थकः ॥ १४ ॥

तदनुतिष्ठन्तमित्यर्थः । विजितेन्द्रियं हस्तप्राप्तराज्यपरित्याजकयोः कैकेयीदशरथयोरुपर्यपि मनःकालुष्याभावेन विजितेन्द्रियं त्वाम् । निरर्थकः अवस्तुभूतः, अप्रामाणिक इति यावत् । शशविषाणवत् केवलव्यवहारमात्रावलम्बनो धर्मः अनर्थेभ्यः व्यसनेभ्यः त्रातुं व्यसनानि निवारयितुम् न शक्नोति । 'सति धर्मिणि धर्माश्चिन्त्यन्ते' इति न्यायादिति भावः । निरर्थकमेव त्वया पितृवचनपरिपालनमारब्धम् । आदावेव मयोक्तमिति भावः । धर्म इत्युपलक्षणम् ।

सन्निकर्षम्, रामस्येति शेषः ॥ ७–१२ ॥ तमिति । हेत्वर्थसंयुतं हेतुरूपार्थयुक्तम्, युक्तियुक्तमिति यावत् ॥१३॥ अथ लक्ष्मणो रावणस्याधर्मिष्ठस्य विनाशादर्शनात् प्राप्तराज्यपरित्यागपूर्वकपितृवचनपरिपालनरूपधर्मविशिष्टस्य श्रीरामस्य तत्फलभूतसौख्यादर्शनात् सीतावधरूपदुःखप्रदर्शनाच्च स्वयं व्यसनातिशयेन कलुषितान्तःकरणस्सन् धर्म एव नास्तीत्याह—शुभे वर्त्मनीत्यादिना । यद्वा लक्ष्मणो धर्माधर्मयोर्हिताहितसाधनत्वं जानन्नपि सीताहननश्रवणजशोकाक्रान्तचित्तस्सन्

स०—शुभे वेदविहिते वर्त्मनि मार्गे तिष्ठन्तं त्वाम् अनर्थेभ्यः दुःखेभ्यः । त्रातुं धर्मो यस्मान्न शक्नोति तस्मान्निरर्थक इति योजना । आर्यविजितेन्द्रियमिति पदमेकं वा । आर्यार्थं पित्रर्थं विजितेन्द्रियं राज्यादिविषयस्पृहारहितत्वाद्विजितमनस्कं "नाहमर्थपरो देवि लोकमावस्तुमुत्सहे । विद्धि मामृषिभिस्तुल्यं केवलं धर्ममास्थितम्" इत्युक्तेः केवलं धर्मावलम्बिनं त्वां स धर्मः । उर्वरितं पूर्ववत् । इदानीं धर्म एवंविधोऽपि स्वसमये रक्षतीति स कर्तव्य एवेत्यान्तरङ्गिकभावपक्षेऽप्यन्वेतुं शक्यते श्लोकः । तथाहि—अनर्थेभ्यः एवंविधेभ्यः धर्मस्त्वां त्रातुं शक्नोति यतः स न निरर्थक इति ॥ १४ ॥

अधर्मोऽपि निरर्थकः सन् रावणमर्थेभ्यो न निवारयितुं शक्नोतीत्यर्थः ॥१४॥ ननु कथमनयोरप्रामाणिकत्वमित्यपेक्षायां तत्र किं प्रत्यक्षं प्रमाणम्, उतानुमानम्, अथ शब्दो वा ? नाद्य इत्याह–भूतानामिति । स्थावराणां जङ्गमानां च भूतानां पदार्थानाम् यथा दर्शनं प्रत्यक्षत उपलम्भनम् अस्ति । तथा धर्मा



भूतानां स्थावराणां च जङ्गमानां च दर्शनम् । यथाऽस्ति न तथा धर्मस्तेन नास्तीति मे मतिः ॥ १५ ॥
यथैव स्थावरं व्यक्तं जङ्गमं च तथाविधम् । नायमर्थस्तथा युक्तस्त्वद्विधो न विपद्यते ॥ १६ ॥

धर्मयोः दर्शनं न अस्तीत्यनुषङ्गः । तेन अदर्शनेन धर्मोऽधर्मश्च नास्तीति मे मतिः निर्णयः॥१५॥ उक्तमेवार्थं प्रत्यक्षानुग्राहकेण तर्केण द्रढयति–यथेति । यथैव स्थावरं व्यक्तं प्रत्यक्षत उपलब्धम् । जङ्गमं च तथाविधं व्यक्तं भवति । अयं धर्माधर्मरूपोऽर्थः तथा युक्तो न भवति, तथा प्रत्यक्षो न भवतीत्यर्थः ।

अनवरतधर्मसेविना रघुनाथेन ' अयुद्ध्यमानं समरे न हन्तुं त्वमिहार्हसि ' इत्यादिना ब्रह्मास्त्रप्रयोगनिवारणेन क्रोधाविष्टस्सन् धर्माधर्मयोरर्थानर्थहेतुत्वनियमं निराकरोति–शुभे वर्त्मनीत्यादिना । पितृवाक्यपरिपालनरूपे शुभे वर्त्मनि धर्ममार्गे तिष्ठन्तं तत्रापि विजितेन्द्रियं हस्तप्राप्तराज्यपरित्याजकयोः कैकेयीदशरथयोरुपरि मनःकालुष्याभावेन जितेन्द्रियम् । ' नाहमर्थपरो देवि लोकमावस्तुमुत्सहे । विद्धि मामृषिभिस्तुल्यं केवलं धर्ममास्थितम् ॥'' इत्युक्तप्रकारेण केवलधर्मैकप्रवणं त्वां धर्मः अनर्थेभ्यस्त्रातुं न शक्नोतीति यत् ततोऽभ्युदयफलत्वेनानुमातुमशक्यत्वान्निरर्थकोऽनुपादेय इत्यर्थः । निष्प्रमाणको वा ॥ १४ ॥ ननु प्रामाणिकस्य धर्मस्य कथमनुपादेयत्वमित्याशङ्क्य तत्सद्भावे किमनुमानं प्रमाणम्, उत प्रत्यक्षम् ? इति द्वेधा विकल्प्य धर्मोऽस्ति फलदर्शनादित्यनुमानपक्षं फलादर्शनान्नास्तीति पूर्वश्लोके निराकृत्येदानीं प्रत्यक्षं निराकर्तुमाह–भूतानामिति । भूतत्वं सत्यत्वम् । भूतानां सत्यानामित्यर्थः । स्थावराणां जङ्गमानां च दर्शनं प्रत्यक्षत उपलम्भनं यथाऽस्ति तथा धर्मस्य दर्शनं नास्ति यतः तेन कारणेन धर्मो नास्तीति मे मतिरिति सम्बन्धः ॥ १५ ॥ उक्तमेवार्थं सतर्कं विशदयति–यथैवेति । स्थावरं यथैव व्यक्तं प्रत्यक्षत उपलब्धं जङ्गमं च तथाविधं व्यक्तं भवति, अयं धर्मरूपोऽर्थः तथा युक्तो न भवति प्रत्यक्षो न भवतीत्यर्थः । तेन नास्तीति मे मतिरित्यनुषङ्गः ।

स०–धर्मो वर्तत इति प्रवादमात्रतस्ते सिद्धवत्कृत्य वैफल्यमात्रं तस्योक्त्वा वस्तुतस्तु यतस्स फलानुमेयस्तदेव नास्तीति स एव नास्तीत्याह–भूतानामिति । स्थावराणां महीरुहादीनाम् । जङ्गमानां प्राणिनाम् एतदादीनां भूतानाम् । यथा प्रत्यक्षतो दर्शनं यथाऽस्तीति सन्तः । एतेन तथा धर्मः प्रात्यक्षिक इति स नास्त्येवेति चार्वाकमतं प्रसञ्जयतो मे मतिः । यत्तु स्वयं सुखापरोक्षदर्शनं यथाऽस्तीति व्याख्याय "यत्तु यथा स्थावरादीनां दर्शनात्तथा धर्मस्य दर्शनाभावाद्धर्मो नास्तीति " व्याचक्षते तन्न; योग्यानुपलम्भस्यैवाभावसाधकत्वाद्धर्मस्य पिशाचादिवदयोग्यत्वादिति नागोजिभट्टेन व्याख्यातं तत्तु चार्वाकमतावलम्बनेन पूर्वपक्षप्रसञ्जनमेव तीर्थाभिप्रेतमिति न समञ्जसमिवाश्रुतसुखशब्दाध्याहारेणाध्याहृतस्यापि स्थावरपदार्थान्वयायोग्यत्वेन मौलदर्शनपदास्वारस्याच्चाप्ययुक्तम् । न तथा दर्शनमित्येतावता धर्मस्ते त्वद्विषये न नास्तीति मे मतिः । तेन पिशितलोचनानवगमेन धर्मो नास्तीति मे मतिः । पूर्वपक्षमात्रं प्रसञ्जितम् । वस्तुतस्तु [illegible] ॥ १६ ॥

यदि कश्चिद्धर्मोऽधर्मो वाऽर्थः प्रत्यक्षसिद्धः स्यात् तर्हि स जङ्गमतया वा स्थावरतया दृश्येत । न च दृश्यते । तस्मान्नासौ प्रत्यक्ष इति भावः । किं च
त्वद्विधो न विपद्यते । धर्मस्य प्रत्यक्षसिद्धतया सद्भावे त्वद्विधः धार्मिकः विपत्तिं नाप्नुयात् । रावणश्चार्थं न प्राप्नुयादित्यपि द्रष्टव्यम् ॥ १६ ॥ नाप्यनु
मानं धर्माधर्मयोः प्रमाणमित्याह—यदीति । यद्यधर्मो भूतो भवेत् तदा अधर्मयुक्तो रावणः नरकं व्रजेत् व्यसनं गच्छेत् । यदि धर्मो भूतो भवेत् तदा
धर्मयुक्तो भवांश्च एवं व्यसनं नाप्नुयात् । व्यसनाव्यसनरूपकार्याभ्यां हि धर्माधर्मावनुमेयौ । न तथा संभवति । धार्मिकतयाऽभिमते त्वयि व्यसनदर्श

यद्यधर्मो भवेद्भूतो रावणो नरकं व्रजेत् । भवांश्च धर्मयुक्तो वै नैवं व्यसनमाप्नुयात् ॥ १७ ॥
तस्य च व्यसनाभावाद् व्यसनं च गते त्वयि । धर्मो भवत्यधर्मश्च परस्परविरोधिनौ ॥ १८ ॥
धर्मेणोपलभेद्धर्ममधर्मं चाप्यधर्मतः । यद्यधर्मेण युज्येयुर्येष्वधर्मः प्रतिष्ठितः ॥ १९ ॥

नात् । अधार्मिकतयाऽभिमते रावणे व्यसनादर्शनाच्च । साध्यवति पक्षे हेत्वभावात् स्वरूपासिद्धो हेतुरित्यर्थः ॥१७॥ विरुद्धत्वाच्च सुखदुःखयोः कार्ययो
र्न धर्माधर्मानुमापकत्वमित्याह—तस्य चेति । तस्य चाधर्मिष्ठस्य रावणस्य व्यसनाभावात् । व्यसनाभावशब्देन सुखं लक्ष्यते, सुखसद्भावादित्यर्थः ।
त्वयि च परमधार्मिके व्यसनं दुःखं गते सति धर्मः अधर्मो भवति अधर्मफलप्रदो भवति । चकारादधर्मोऽपि धर्मफलाभ्युदयप्रदो भवतीति लभ्यते । अत
एव परस्परविरोधिनौ स्वाभावव्याप्तहेतुकावित्यर्थः ॥ १८ ॥ व्यभिचाराद्व्याप्यत्वासिद्धत्वाद्वा न ताभ्यां तदनुमानमित्याह—धर्मेणेत्यादिना निरर्थका
नन्व प्रत्यक्षमात्रेण धर्मनिरासो नोपपद्यते, अतीन्द्रियस्यापि वस्तुनः सद्भावादित्याशङ्क्य बाधकतर्केण निराकरोति त्वद्विध इति । अतीन्द्रियोऽपि धर्मो यदि स्यात् तर्हि
त्वद्विधो न विपद्यते । न चैवम्, तस्मान्नास्ति धर्म इत्यर्थः ॥ १६ ॥ एवं धर्ममात्रसद्भावे बाधकमभिधायेदानीं धर्माधर्मयोरुभयोरपि सद्भावे बाधकमाह—यद्यधर्म
इति । यद्यधर्मो भूतो भवेत् सत्यो भवेत् तदा अधर्मयुक्तो रावणो नरकं व्रजेत् व्यसनं प्राप्नुयात् । न चैवं दृश्यते । धर्मयुक्तो धर्मेणैव युक्तो भवांश्च एवं व्यसनं
नाप्नुयात् । न चैवं दृश्यते । तस्मात्फलान्वयव्यतिरेकाभावाद्धर्माधर्मौ न स्त इत्यर्थः ॥ १७ ॥ प्रतिनियतफलप्रदत्वाभावाद्धर्माधर्मौ न स्त इत्युक्त्वा फलविपर्या
सेनापि तौ न स्त इत्याह—तस्य चेति । तस्याधर्मिष्ठस्य रावणस्य व्यसनाभावाद् व्यसनाभावशब्देन सुखं लक्ष्यते, सुखसद्भावादित्यर्थः । त्वयि च परमधार्मिके व्यसनं
गते सति धर्मः अधर्मो भवति, अधर्मफलप्रदो भवति । चकारादधर्मोऽपि धर्मफलप्रदो भवतीति लभ्यते, अत एव परस्परविरोधिनौ प्रत्येकं शास्त्रप्रतिपन्नस्वभावा
द्विरुद्धस्वभावावित्यर्थः । भवतीति वचनव्यत्ययः । धर्माऽधर्मश्च परस्परविरोधिनौ भवत इत्यर्थः ॥ १८ ॥ अस्तु वा अनियमः, एतावता कथं नानुमातुं शक्यते ?

वित्यन्तेन। उपलभेदित्यत्र काकुः। धर्मेण धर्मानुष्ठानेन धर्मं धर्मफलं सुखम् उपलभेत्। अधर्मेण अधर्मानुष्ठानेन अधर्मफलं दुःखम् उपलभेत्, उपलभेतेति मन्यसे किमित्यर्थः। एवमनूद्य तत्र दूषणमाह—यदीति। येष्वधर्मः प्रतिष्ठितः, ये अधार्मिका इति यावत्। ते अधर्मेण अधर्मफलेन यदि युज्येयुः युज्येरन्। नाधर्मरुचयो जनाः, धर्मरुचय इति यावत्। "द्वौ नञौ प्रकृतमर्थं गमयतः" इति न्यायात्। ते धर्मेण धर्मफलेन यदि युज्येरन्, तदा धर्मेण चरतामेषां जनानां धर्मः धर्मफलं सुखं भवेत्। चकारात् अधर्मेण चरतां दुःखं भवेदिति सिद्धम्। न चैवमित्याह—यस्मादिति। अनेन

यदि धर्मेण युज्येरन्नाधर्मरुचयो जनाः। धर्मेण चरतां धर्मस्तथा चैषां फलं भवेत् ॥ २० ॥
यस्मादर्था विवर्धन्ते येष्वधर्मः प्रतिष्ठितः। क्लिश्यन्ते धर्मशीलाश्च तस्मादेतौ निरर्थकौ ॥ २१ ॥
वध्यन्ते पापकर्माणो यद्यधर्मेण राघव। वधकर्म हतोऽधर्मः स हतः कं वधिष्यति ॥ २२ ॥

च हिताहितप्राप्तिलक्षणकार्ययोरनियतत्वेन व्याप्त्यभावान्न ताभ्यां धर्माधर्मावनुमातुं शक्याविति व्याप्यत्वासिद्धिर्व्यभिचारो वा दर्शितः ॥ १९–२१ ॥ शब्दोऽपि न धर्माधर्मयोः प्रमाणमित्याह—वध्यन्त इति। हे राघव! पापकर्माणः पापिनः। अधर्मेण कर्मरूपेण। वध्यन्ते यदि बाध्यन्ते चेत्! वधकर्म वधकर्मरूपोऽधर्मः। धर्मस्याप्युपलक्षणम्। हतः त्रिक्षणावस्थायित्वेन ध्वस्तो भवति। शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वात्। हतः सः कं वधिष्यति

इत्याशङ्क्य व्याप्तिभङ्गादित्याह—धर्मेणोपलभेदित्यादिना। उपलभेदित्यत्र काकुरनुसन्धेया। धर्मेण धर्मानुष्ठानेन। धर्मं धर्मफलं सुखमुपलभेत् अधर्मतः अधर्मानुष्ठानतः अधर्ममधर्मफलं दुःखमुपलभेदिति मन्यसे किमित्यर्थः। एवमस्तु किमित्याशङ्क्य एतन्न सम्भवतीति दूषयितुं सार्धश्लोकेनोक्तमेवानूद्यैकेन श्लोकेन दूषयति—यद्यधर्मेणेत्यादिना। येष्वधर्मः प्रतिष्ठितः ते अधर्मेण अधर्मफलेन युज्येयुर्यदि नाधर्मरुचयो जनाः अधर्मरुचयो न भवन्तीति नाधर्मरुचयः, धार्मिष्ठ जना इति यावत्। ते धर्मेण धर्मफलेन युज्येरन् यदि तथा धर्मेण चरतामेषां जनानां धर्मः धर्मफलं भवेत् सुखं भवेत्। चकाराद्धर्मेण चरतां दुःखफलं भवेत् ॥ १९ ॥ २० ॥ न चैवं दृश्यत इत्याह—यस्मादिति। येष्वधर्मः प्रतिष्ठितः, तेषामित्यध्याहार्यम्। अर्था विवर्द्धन्ते धर्मशीलाश्च क्लिश्यन्ते यस्मात्तस्मादेतौ निरर्थकौ, अव्यवस्थितफलावित्यर्थः। अनेन हिताहितप्राप्तिलक्षणकार्ययोरनियतत्वेन व्याप्त्यभावान्न ताभ्यां धर्माधर्मावनुमातुं शक्याविति भावः ॥२१॥ किञ्च कर्मस्वरूपावेव धर्माधर्मौ कर्मजन्यातिशयौ वेति विकल्प्याद्यं दूषयति—वध्यन्त इत्यादिश्लोकद्वयेन। हे राघव! पापकर्माणः पापिष्ठाः अधर्मेण कर्मस्वरूपेण वध्यन्ते यदि बाध्यन्ते चेत् वधकर्मस्वरूपाधर्मः हतः त्रिक्षणावस्थायित्वाद्धतस्सन्। सः कर्मस्वरूपाधर्मः कं वधिष्यति स्वयं हतः सन् कमपि न वधिष्यतीत्यर्थः ॥ २२ ॥

कं श्रेयसि नियोक्ष्यतीत्यपि द्रष्टव्यम् । धर्माधर्मयोः क्रियारूपयोः क्षणिकत्वेन कालान्तरभाविफलजनकत्वासम्भवात् बाधितविषयो वेदो ग्रावप्लवनादि वाक्यवदुपचरितार्थक इति भावः ॥ २२ ॥ कर्मणः क्षणध्वंसित्वेऽपि तदाराधिता देवतैव फलप्रदेत्यत्राह–अथवेति । विहितेन विधिना, देवतयेत्यर्थः । अयं जनः । हन्यते बाध्यते । परम् अन्यम् । हन्ति वा बाधते वा । एवं यदि तेन पापेन कर्मणा पापफलभूतदुःखेन विधिरेव आलिप्यते सम्बध्यते । सः प्रयोज्यकर्ता नालिप्यते । अस्य न्यायस्य पुण्यकर्मण्यपि तुल्यत्वात् सुखेनापि प्रयोज्यो न सम्बध्यते । यदि हि सत्कर्माराधितः असत्कर्माप्रीतो वा ईश्वरः धर्माधर्मशब्दवाच्यः स्यात्, तर्हि स एव सुखदुःखभागी कारयिता स्यात् । न तु प्रयोज्य इति भावः ॥ २३ ॥ ननु यथा स्वतन्त्रो राजा लीलार्थं कामपि

अथवा विहितेनायं हन्यते हन्ति वा परम् । विधिरालिप्यते तेन न स पापेन कर्मणा ॥ २३ ॥
अदृष्टप्रतिकारेण त्वव्यक्तेनासता सता । कथं शक्यं परं प्राप्तुं धर्मेणारिविकर्शन ॥ २४ ॥

मर्यादां प्रवर्त्य तदनुवर्तिनमनुगृह्णाति तदतिलङ्घिनं निगृह्णाति च, तथेश्वरोऽपि स्वाज्ञारूपकर्मानुष्ठायिनमनुगृह्णाति । तदननुष्ठायिनं विपरीतानुष्ठायिनं च निगृह्णातीति चेन्न । स हि किं स्वार्थमनुगृह्णाति उत परार्थम् ? नाद्यः–अवाप्तसमस्तकामस्यावाप्तव्याभावात् । न द्वितीयः–कञ्चन विरिञ्चनं कञ्चनाकिञ्चनं च वितन्वतस्तस्य पक्षपातनैर्घृण्यापत्तेः । तत्तत्कर्मानुगुणतया सृष्टेर्न पक्षपातादिप्रसक्तिरिति चेन्न । समीचीने कर्मण्यप्रवर्तयतस्तस्य सर्वज्ञस्य निर्दयत्वापत्तेः । अनादिकर्मप्रवाहकृतपूर्वपूर्वकर्मानुगुण्येन पुनः पुनः सदसतोः कर्मणोः पुरुषं प्रवर्तयतीति चेत्, तर्हि कस्यचिन्नियमेन दुःखं कस्यचिन्नियमेन सुखं च स्यात् । नच तथा दृश्यते, अनियमदर्शनात् । तर्हि कर्मजन्योऽपूर्वरूपोऽतिशयः फलप्रदो धर्म इत्याशङ्क्याह–अदृष्टेति । हे अरिविकर्शन । प्रतिक्रियते परप्रतिपत्तिर्जन्यत इति प्रतिकारो लिङ्गम् । अदृष्टप्रतिकारेण अदृष्टलिङ्गेन, अनुमानागम्येनेत्यर्थः । अव्यक्तेन अप्रत्यक्षेण । असता सता

कर्मणः पाक्षिकतया फलप्रदत्वं मा भूत् सदसत्कर्मकारयितृसाक्षिभूतं दैवं दास्यतीत्याशङ्कामनूद्य परिहरति–अथवेति । विहितेन विधिना कारयित्रा दैवेनेत्यर्थः । अयं जनः हन्यते बाध्यते । अपरं हन्ति वा बाधते वा तेन पापेन कर्मणा पापफलदुःखेन विधिरेवालिप्यते सम्बध्यते न स प्रयोज्यकर्ता आलिप्यते अस्य न्यायस्य पुण्यकर्मण्यपि तुल्यत्वात्सुखेनापि प्रयोज्यकर्ता न सम्बध्यते, अतः कर्मस्वरूपस्याधर्मत्वं च न सम्भवतीत्यर्थः ॥ २३ ॥ कर्मजन्यातिशयरूपो धर्मः श्रेयस्साधन इति द्वितीयपक्षे स्वतन्त्र एव श्रेयो जनयति, उत परमेश्वरेणेति द्वेधा विकल्प्य आद्यं दूषयति–अदृष्टेति । प्रतिक्रियते प्रतिपाद्यते इति प्रतिकारं फलम् अदृष्टप्रतिकारेण

असद्भूतेन अग्नीन्द्रादिवदर्थवादवाक्येनागम्येन। धर्मेण अपूर्वाख्येन परं श्रेयः कथं प्राप्तुं शक्यम्? न शक्यमित्यर्थः ॥ २४ ॥ उक्तमेवार्थं पुनस्तर्केण दृढीकरोति–यदीति। हे सतां मुख्य! यदि सत् स्यात्, धर्माख्यं वस्त्विति शेषः। धार्मिकस्य तव असत् अनिष्टम् किंचन न स्यात्। तर्कस्य विपर्यये पर्यवसानमाह त्वयेति। यत् यस्मात्कारणात्, त्वया ईदृशं दुःसहं व्यसनं प्राप्तम्, तस्मात्सन्नोपपद्यते। असदेव भवतीत्यर्थः। कार्यानुपलम्भादपूर्वाख्य धर्मो न कल्प्य इत्यर्थः ॥ २५ ॥ ननु न कार्यानुपलम्भमात्रादर्थस्याभावो निश्चेतुं शक्यः, अतीन्द्रियोच्छेदापत्तेः। किन्तु सहकारिसम्पत्तौ सत्यां

यदि सत् स्यात् सतां मुख्य नासत् स्यात्तव किंचन। त्वया यदीदृशं प्राप्तं तस्मात् सन्नोपपद्यते ॥ २५ ॥
अथवा दुर्बलः क्लीबो बलं धर्मोऽनुवर्तते। दुर्बलो हृतमर्यादो न सेव्य इति मे मतिः ॥ २६ ॥
बलस्य यदि चेद्धर्मो गुणभूतः पराक्रमे। धर्ममुत्सृज्य वर्तस्व यथा धर्मे तथा बले ॥ २७ ॥

कार्यानुपलम्भः कारणत्वाभावं साधयति। सहकारि च पौरुषम्। अतस्तदभावात्फलानुदय इत्यत आह–अथवेति। दुर्बलः बलरहितः निरपेक्षतया कार्याक्षमः। अत एव क्लीबः कातरः स्वतः कार्यकरणासमर्थः। धर्मः बलमनुवर्तते, कार्योत्पादने पौरुषमपेक्षत इत्यर्थः। एवं चेद्दुर्बलो हृतमर्यादः स्वातन्त्र्येण फलप्रदत्वमर्यादाहीनो धर्मः प्राधान्येन न सेव्य इति मे मतिः ॥ २६ ॥ प्रधानभूतं बलमेवाश्रयणीयमित्याह–बलस्येति। पराक्रमे कार्यसाधने विषये, बलस्य धर्मः गुणभूतो यदि चेत् उपसर्जनभूतो यदि स्यात्, तदा यथेदानीं धर्मे वर्तसे, तथा धर्ममुत्सृज्य धर्मप्राधान्यमुत्सृज्य, धर्म इव बलेऽपि

अप्रत्यक्षफलेन अव्यक्तेन स्वयमप्रत्यक्षेण असता सता असद्भूतेन धर्मेण परं श्रेयः कथं प्राप्तुं शक्यम्, न शक्यमित्यर्थः ॥ २४ ॥ तदेवासत्त्वं विपक्षे बाधकतर्कप्रदर्शनमुखेनापि दृढीकरोति–यदीत्यादिना। भो सतां मुख्य! यदि सत्स्यात् धर्माख्यवस्त्विति शेषः। तर्हि धर्मिष्ठस्य तव असत् अनिष्टम् किञ्चन न स्यात्। तर्कस्य विपर्यये पर्यवसानमाह त्वयेति। यत् यस्मात्त्वया ईदृशं दुस्सहं व्यसनं प्राप्तम् तस्मान्नोपपद्यते, असदेव सदित्यर्थः ॥ २५ ॥ धर्मः पौरुषमाश्रित्यैव फलं प्रयच्छतीत्याशङ्कामनूद्य परिहरति–अथवेति। दुर्बलः बलरहितः अत एव क्लीबः कातरः स्वतः कार्यकरणासमर्थ इति यावत्। धर्मः बलमनुवर्तते, कार्योत्पादने पौरुषं प्रतीक्षत इत्यर्थः। एवं चेद् दुर्बलो हृतमर्यादः धर्मः हितमेव साधयतीत्येतादृशमर्यादारहितः न सेव्य इति मे मतिरिति योजना ॥ २६ ॥ उपसर्जनभूतं धर्ममुत्सृज्य प्रधानभूतं बलमेवाश्रयणीयमित्याह–बलस्येति। बलस्य धर्मो गुणभूतः उपसर्जनभूतो यदि स्यात्तदा यथेदानीं धर्मे वर्तसे तथा धर्ममुत्सृज्य बले बलसाध्ये पराक्रमे वर्तस्वेत्यन्वयः ॥ २७ ॥

वर्तस्व ॥ २७ ॥ एवं सामान्येन धर्मे दूषितेऽपि सत्यवचनरूपधर्मविशेषस्य रामेण प्राधान्येनानुरोधात्तत्पृथक् दूषयति—अथेति । हे परंतप । सत्यवचनं धर्मः किल । अथ चेदेवं चेत्, अनृतः त्वामभिषेक्ष्यामीत्युक्त्वा तदकरणेन सत्यत्वरहितः । अनृतमिति पाठे वदन्निति शेषः । त्वयि सकलकल्याण गुणाश्रये ज्येष्ठपुत्रे अकरुणः राज्याद्वनं प्रति निष्कासनान्निर्दयः अतो वन्धयोग्यः पिता त्वया पितृवचनं कारिष्यामीति कृतप्रतिज्ञेन त्वया किन्न बद्धः किं न नियमितः ? सर्वप्रजासन्निधौ राममभिषेक्ष्यामीत्युक्तं प्राथमिकं पितृवचनं परित्यज्य पाश्चात्त्यं वनगमनविषयं पितृवचनं कारिष्यामीति कृतप्रतिज्ञेन

अथ चेत् सत्यवचनं धर्मः किल परन्तप । अनृतस्त्वय्यकरुणः किं न बद्धस्त्वया पिता ॥ २८ ॥
यदि धर्मो भवेद्भूतो अधर्मो वा परन्तप । न स्म हत्वा मुनिं वज्री कुर्यादिज्यां शतक्रतुः ॥ २९ ॥

त्वया पालयता सत्यवचनमपि सम्यक् न पालितमिति भावः ॥२८॥ धर्माधर्मयोः सद्भावेऽपि राज्ञा धर्मोऽधर्मो वा नियमेन नानुष्ठातव्यः, किन्तु तत्तत्काल प्रयोजनानुगुण्येनोभावपि कर्तव्यावित्यत्र शिष्टाचारं प्रमाणयति—यदीति । भूतो अधर्मो वेत्यत्र वृत्तानुरोधाय सन्ध्यभावः । यदि धर्मो भवेद्भूतः । यदि केवलं धर्म एवानुष्ठेयत्वेन प्राप्तो भवेत्, तदा वज्री शतक्रतुः मुनिं विश्वरूपं हत्वा इज्यां न कुर्यात्, किन्त्विज्यामेव कुर्यात् । अधर्मो वा केवलमधर्मो वा यद्यनुष्ठेयः स्यात्, तदा शतक्रतुः वज्री मुनिं हत्वा इज्यां न कुर्यात्, किंतु हननमेव कुर्यात् । क्षत्रधर्मनिष्ठेनेन्द्रेण धर्माधर्मयोरनुष्ठितत्वाद्राज्ञा

ननु सर्वोऽपि न धर्मो भवति, किन्तु तन्नैकदेशस्सत्यं धर्मः तस्मान्मया वने वत्स्यामीति पितरि प्रतिज्ञातं सत्यवचनमनुष्ठेयं तदर्थमेवमनुभूतमिति सत्याभिनिवेशिनं रामं प्रति धर्ममात्रसाधर्म्ये दूषितेऽपि सत्यवचनस्यापि धर्मतां सार्थक्येन निराकरोति—अथ चेदिति । हे परंतप ! सत्यवचनं धर्मः किल । अथचेदेवं चेत अनृतः त्वामभिषेक्ष्यामीत्युक्त्वा तदकरणेन सत्यरहितः त्वयि सद्गुणाश्रये ज्येष्ठपुत्रे त्वयि अकरुणः राज्याद्वनं प्रति निष्कासनमकारुण्यम् अतो बन्धयोग्यः पिता त्वया पितृवचनं करिष्यामीनि कृतप्रतिज्ञेन किं न बद्धः किमर्थं न नियमितः, सर्वप्रजासन्निधौ राममभिषेक्ष्यामीत्युक्तं प्राथमिकं पितृवचनं परित्यज्य पश्चाद्वनगमन विषयं पितृवचनं करिष्यामीति पालयता त्वया न सत्यवचनमपि सम्यक्परिपालितमिति भावः । अनृतमिति पाठे—अनृतं त्वयि वदन्निति शेषः॥२८॥ धर्माधर्मयोस्सद्भावे ऽपि राज्ञा धर्मो वा अधर्मो वा न नियमेनानुष्ठातव्यः, किन्तु तत्तत्कालप्रयोजनानुगुण्येनोभावपि कर्तव्यावित्यत्र शिष्टाचरणं प्रमाणयति—यदीति । यदि धर्मो भवेद् भूतः केवलं धर्म एव अनुष्ठेयत्वेन प्राप्तो भवेत्तर्हि वज्री शतक्रतुः मुनिं विश्वरूपं हत्वा इज्यां न कुर्यात् किन्तु हननमकृत्वा इज्यामेव कुर्यात् । अधर्मो वा केवलमधर्मो वा यद्यनुष्ठेयः स्यात् तर्हि शतक्रतुर्वज्री मुनिं हत्वा इज्यां न कुर्यात् किन्तु हननमेव कुर्यात्, क्षत्रधर्मनिष्ठेनेन्द्रेण धर्माधर्मयोरुभयोरप्यनुष्ठितत्वाद्राज्ञा

यथाकालमुभयमपि कर्तव्यमिति भावः । "यान्येतानि देवक्षत्राणीन्द्रो वरुणः पर्जन्यो यम ईशानः" इतीन्द्रस्य क्षत्रियत्वं श्रूयते ॥ २९ ॥ इदानीमभ्युपगमवादेनैकान्ततो धर्माधर्मयोरेकस्याश्रयणमनर्थपर्यवसायीत्याह–अधर्मेति । अधर्मसंश्रितो धर्मः अधर्मसहितो धर्मः, धर्मश्चाधर्मश्चेत्यर्थः । विनाशयति, कर्तारमिति शेषः । नियमेन पृथक् पृथगनुष्ठीयमानौ धर्माधर्मौ कर्तारं विनाशयतः । अत एवैतत्सर्वं धर्माधर्मात्मकं सर्वं कर्मजातम् यथाकामं तत्तत्कालोचितम् अनियमेन नरः कुरुते, कुर्यादित्यर्थः ॥ ३० ॥ अस्मिन्नर्थे न मे सन्देह इत्याह–ममेति । हे तात अनुकम्प्य ! "तातोऽनुकम्प्ये

अधर्मसंश्रितो धर्मो विनाशयति राघव । सर्वमेतद्यथाकामं काकुत्स्थ कुरुते नरः ॥ ३० ॥
मम चेदं मतं तात धर्मोऽयमिति राघव । धर्ममूलं त्वया छिन्नं राज्यमुत्सृजता तदा ॥ ३१ ॥
अर्थेभ्यो हि विवृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः । क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥ ३२ ॥
अर्थेन हि वियुक्तस्य पुरुषस्याल्पतेजसः । व्युच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ ३३ ॥

पितरि" इति रत्नमाला । इदं याथाकाम्येनाचरणं यदस्ति अयं धर्म इति मम मतं सिद्धान्त इत्यर्थः । एवं प्रथमं धर्म एवाप्रामाणिक इत्युक्तम् । पश्चात् कथञ्चित् प्रामाणिकत्वसम्भवेऽपि न तस्य प्राधान्यमित्युक्तम् । इदानीमप्राधान्येनापि धर्मस्तव न सम्भवति, मूलाभावादित्याह धर्ममूलमित्यादिना । धर्मस्य मूलं कारणम् अर्थरूपम्, तदा प्राप्तकाले, राज्यमुत्सृजता त्वया छिन्नम् । मूलच्छेदात्तव कथं धर्म इत्यर्थः ॥ ३१ ॥ तदेव धर्ममूलत्वमर्थस्य प्रतिपादयति–अर्थेभ्य इति । ततस्ततः प्रजापालनाय प्रदेयषड्भागकरप्रदानादिकारणात् संवृत्तेभ्यः प्राप्तेभ्यः क्रमाद्विवृद्धेभ्यः अर्थेभ्यः सर्वाः क्रियाः यज्ञदानादिक्रियाः प्रवर्तन्ते । पर्वतेभ्य इत्युपमानेन मूलधनव्ययमकृत्वैवार्थमूलतया दानादिक्रियाः कार्या इत्युक्तम् ॥ ३२ ॥ व्यतिरेकमुखेनापि

यथाकालमुभयमपि कर्तव्यमिति भावः ॥ २९ ॥ इदानीं धर्माधर्मयोरेकतरस्याश्रयणमनर्थपर्यवसायीत्याह–अधर्मसंश्रित इति । अधर्मसंश्रितो धर्मः अधर्मसहितो धर्मः, धर्मश्चाधर्मश्चेत्यर्थः । विनाशयति, कर्तारमिति शेषः । नियमेन पृथक्पृथगनुष्ठीयमानौ धर्माधर्मौ विनाशयतः, कर्तारमित्यर्थः । अत एवैतत्सर्वं धर्माधर्मात्मकं कर्मजातं यथाकामं तत्तत्कालोचितम् अनियमेन नरः कुरुते, कुर्यादित्यर्थः ॥ ३० ॥ एतदेव मम धर्मत्वेन मतमित्याह–ममेति । इदं याथाकाम्येनोभयाचरणं यत् अयमेव धर्म इति मम मतमित्यर्थः । इदानीमर्थस्य श्रेयोहेतुत्वं केवलं प्रतिपादयन् केवलं धर्म एवाचरणीय इति मन्वानेन त्वया तन्मूलमेव छिन्नमित्याह धर्ममूलमिति । तदा तस्मिन्नेव वनवासारम्भकाल एव धर्मस्य मूलं कारणम्, अर्थात्मकमिति शेषः ॥ ३१ ॥ तदेव धर्ममूलत्वमर्थस्य प्रतिपादयति–अर्थेभ्य इति ।

तदेव प्रतिपादयति–अर्थेनेत्यादिना। कुसरितः अल्पसरितः ॥ ३३ ॥ न केवलमर्थपरित्यागेन धर्मासम्भवः, किंतु दोषप्राप्तिरपीत्याह-सोऽयमिति। सुखैधितः पूर्वं सुखेन संवर्धितः, सोऽयम् अर्थपरित्यागी अर्थं प्राप्तं परित्यज्य सुखकामः सन्, पापम् अन्यायेनार्थार्जनम् सुखसाधनभूतधन सम्पादनार्थं स्तेयादिपापम् आरभते। ततः तेन कर्मणा दोषः प्रवर्तत इत्यर्थः ॥ ३४ ॥ यस्यार्थास्तस्य मित्राणीत्यादिश्लोकद्वयं क्वचित्पठ्यते।

सोऽयमर्थं परित्यज्य सुखकामः सुखैधितः। पापमारभते कर्तुं ततो दोषः प्रवर्तते ॥ ३४ ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः। यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पण्डितः ॥ ३५ ॥ यस्यार्थाः स च विक्रान्तो यस्यार्थाः स च बुद्धिमान्। यस्यार्थाः स महाभागो यस्यार्थाः स महागुणः ॥ ३६ ॥ अर्थस्यैते परित्यागे दोषाः प्रव्याहृता मया। राज्यमुत्सृजता वीर येन बुद्धिस्त्वया कृता ॥ ३७ ॥ यस्यार्था धर्मकामार्था स्तस्य सर्वं प्रदक्षिणम्। अधनेनार्थकामेन नार्थः शक्यो विचिन्वता ॥ ३८ ॥

पुमान् पुंस्त्ववान्। अन्यः स्त्रीप्राय इत्यर्थः। महाभागः महाभाग्यः। महागुणः शीलादिगुणवान् ॥ ३५ ॥ ३६ ॥ अर्थस्येति। अर्थस्य परित्यागे एते पूर्वोक्तगुणप्रतियोगिनो निर्मित्रत्वादयो दोषाः, प्रव्याहृताः स्पष्टमुक्ताः। राज्यमुत्सृजता त्वया येन गुणेन बुद्धिः अर्थपरित्यागविषया कृता तं गुणं न जान इत्यर्थः। यद्वा राज्यमुत्सृजता त्वया येन कारणेनार्थपरित्यागे बुद्धिः कृता तेन कारणेन एते दोषाः मया प्रव्याहृता इत्यर्थः ॥ ३७ ॥ यस्येति। धर्मकामार्थाः धर्मकामप्रयोजनानि। प्रदक्षिणम् अनुकूलम्। प्रतिष्ठितमिति वा पाठः। व्यतिरेकमुखेनाप्याह–अधनेनेति। अधनेन धनं विना अर्थकामेनापि। विचिन्वता अर्थार्जनव्यापारं कुर्वता पुरुषेण। अर्थः श्रेयः। न शक्यं न साधयितुं शक्यम्। अव्ययमेतत्। "शक्यमरविन्दसुरभि"

संवृत्तेभ्यः संप्राप्तेभ्यः। क्रियाः धर्ममूलभूतक्रियाः ॥ ३२ ॥ ३३ ॥ न केवलमर्थपरित्यागे धर्माभावः, किन्तु दोषप्राप्तिरपीत्याह–सोऽयमिति। सोऽयमर्थपरित्यागी अर्थं परित्यज्य प्राप्तमैश्वर्यं त्यक्त्वा सुखैधितः। पापमनार्जवम्। ततः तेन पापेन दोषः प्रवर्तते ॥ ३४–३६ ॥ अर्थस्य परित्यागे एते दोषाः प्रव्याहृताः स्पष्टमुक्ताः, राज्यमुत्सृजता त्वया येन गुणेन बुद्धिः अर्थपरित्यागविषया कृता, तं न जाने इति शेषः ॥ ३७ ॥ प्रदक्षिणम् अनुकूलम्। अर्थकामेन श्रेयोर्थिना, अर्थः श्रेयः ॥ ३८ ॥

इति प्रयोगात् ॥ ३८ ॥ न केवलमथकामावेव धनमूलौ, अन्येऽपि तथेत्याह–हर्ष इति । प्रवर्तन्ते प्रकृष्टानि वर्तन्ते, शोभन्त इत्यर्थः । असतो निर्धनस्य शमदमौ हि धनलाभे निवर्तेते ॥ ३९ ॥ न केवलमामुष्मिकश्रेयःसाधनभूतोऽर्थः, किन्तु ऐहिकश्रेयःसाधनं चेति व्यतिरेकमुखेन प्रतिपादयन् तादृशो ऽर्थस्त्वयि नास्तीत्याह–येषामिति । येषां चरतामित्यनादरे षष्ठी । येषां चरतां यान् चरतो विद्यमानानर्थाननादृत्य धर्मचारिणां केवलं धर्ममाचरताम्

हर्षः कामश्च दर्पश्च धर्मः क्रोधः शमो दमः । अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥ ३९ ॥
येषां नश्यत्ययं लोकश्चरतां धर्मचारिणाम् । तेऽर्थास्त्वयि न दृश्यन्ते दुर्दिनेषु यथा ग्रहाः ॥ ४० ॥
त्वयि प्रव्राजिते वीर गुरोश्च वचने स्थिते । रक्षसाऽपहृता भार्या प्राणैः प्रियतरा तव ॥ ४१ ॥
तदद्य विपुलं वीर दुःखमिन्द्रजिता कृतम् । कर्मणा व्यपनेष्यामि तस्मादुत्तिष्ठ राघव ॥ ४२ ॥

अयं लोको नश्यति, ऐहिकसुखं नास्तीत्यर्थः । ते तादृशाः सुखसाधनभूताः अर्थाः दुर्दिनेषु मेघच्छन्नदिनेषु । "मेघच्छन्नेऽह्नि दुर्दिनम्" इत्यमरः । सूर्यादयो ग्रहाः यथा न दृश्यन्ते, तथा त्वयि न दृश्यन्ते । सकलश्रेयःसाधनभूता अर्थास्त्वया नादृता इत्यर्थः ॥ ४० ॥ अर्थहेतुभूतराज्यपरित्यागेन पितृवचनपरिपालनरूपकेवलधर्मावलम्बनेन च प्राप्तं दोषमाह–त्वयीति । प्राणैः प्राणेभ्यः । प्राणैस्तुल्यं प्रियतरेति वाऽर्थः ॥४१॥ एवं गते किं करणीय मित्यत्राह–तदद्येति । भवत्कर्मणा प्राप्तं दुःखं मत्कर्मणा व्यपनेष्यामीत्यर्थः । कृतप्रतिक्रियया तद्दुःखं निवारयिष्यामीति भावः ॥ ४२ ॥

प्रवर्तन्ते शोभन्ते इत्यर्थः ॥ ३९ ॥ न केवलमामुष्मिकश्रेयस्साधनभूतोऽर्थः, किन्तु ऐहिकश्रेयस्साधनभूतोऽपीति व्यतिरेकं प्रतिपादयन् तादृशोऽर्थस्त्वयि नास्तीत्याह–येषामिति । चरतामित्यनादरे षष्ठी । येषां चरताम् यान् चरतः पुरतो विद्यमानानर्थान् अनादृत्य धर्मचारिणां धर्ममाचरतां पुरुषाणाम् अयं लोको नश्यति ऐहिकसुखं नास्तीत्यर्थः । एतादृशैहिकसुखसाधनभूतार्थाः दुर्दिनेषु ग्रहा यथा तथा त्वयि न दृश्यन्ते सकलश्रेयस्साधनभूतार्थास्त्वया नादृता इत्यर्थः ॥ ४० ॥ अर्थपरित्यागेन धर्मं चरतामनर्थो भवतीत्यस्मिन् पक्षे रघुनाथमेव दृष्टान्तयति–त्वयीति । प्राणैः प्राणेभ्यः ॥ ४१ ॥ तद्विपुलं दुःखं कर्मणा व्यप



स०–चरतां "चर गतिभक्षणयोः" गत्यर्थानां ज्ञानार्थत्वाज्ज्ञानिनाम् धर्मचारिणामपि तेषां [illegible] अयं लोकः ऐहिकसुखं नश्यति, तेऽर्थास्त्वय्यपि न दृश्यन्ते । चरतां भक्षयतां राक्षसानाम् अयं लोको जनः धर्मचारिणां तेषां येभ्यो नश्यति तेऽर्थास्त्वयि न दृश्यन्त इति वा । दुर्दिनं मेघच्छन्नदिनम् ॥ ४० ॥ राज्यत्यागाचातुर्यमूलमेतदित्याह–त्वयीति ॥ ४१ ॥

एवं भक्तिवादानुक्त्वा क्षमापणं विदधाति—उत्तिष्ठेति । आत्मानं स्वम् । महात्मानम् महाबुद्धिम् । आत्मानं परमात्मानम् । किं नावबुध्यसे ? तस्मात् भवतः शोककारणं नास्तीति हृदयम् ॥४३॥ अयमिति । अयम् अहं तव विधेयत्वेन सन्निहितः, तव प्रियार्थम् उदितः उद्युक्तः उत्पन्नो वा । अतोऽत्र दुःखं व्यपनेष्यामीत्येतद्विवृतम् ॥ ४४ ॥ इति श्रीगोविन्दराज० श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्र्यशीतितमः सर्गः ॥ ८३ ॥

उत्तिष्ठ नरशार्दूल दीर्घबाहो दृढव्रत । किमात्मानं महात्मानमात्मानं नावबुध्यसे ॥ ४३ ॥ अयमनघ तवोदितः प्रियार्थं जनकसुतानिधनं निरीक्ष्य रुष्टः । सहयगजरथां सराक्षसेन्द्रां भृशमिषुभिर्विनिपातयामि लङ्काम् ॥४४॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

राममाश्वासयाने तु लक्ष्मणे भ्रातृवत्सले । निक्षिप्य गुल्मान् स्वस्थाने तत्रागच्छद्विभीषणः ॥ १ ॥
नानाप्रहरणैर्वीरैश्चतुर्भिः सचिवैर्वृतः । नीलाञ्जनचयाकारैर्मातङ्गैरिव यूथपः ॥ २ ॥
सोऽभिगम्य महात्मानं राघवं शोकलालसम् । वानरांश्चैव ददृशे बाष्पपर्याकुलेक्षणान् ॥ ३ ॥

अथेन्द्रजिद्वधोपायदर्शनम्—राममाश्वासयान इत्यादि । आश्वासयाने आश्वासयमाने । आगमशासनस्यानित्यत्वान्मुगभावः । अनेन पूर्वोक्तवादा भ्रातृवात्सल्यात्तदाश्वासनार्थाः, न तु परमार्था इत्युक्तम् । पूर्वोक्तयुक्तिपरिहारस्तु "हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्" इतिमनूक्तरीत्या प्रेक्षणीयः । गुल्मान् सेनासन्निवेशान् । स्वस्थाने स्वकार्यकरणार्थम् ॥ १ ॥ २ ॥ सोऽभिगम्येति । अत्र राघवपदं लक्ष्मणपरम् । उत्तरश्लोके रामदर्शनस्य वक्ष्यमाण

नेष्यामि भवत्कर्मणा प्राप्तं दुःखं मच्छौर्यकर्मणा व्यपनेष्यामीत्यर्थः ॥ ४२ ॥ आत्मानं परमात्मानम् ॥ ४३ ॥ सीतानिधनश्रवणजनितदुःखार्दितोऽहम् इतःपरं किमपि कर्तुं न शक्नोमीत्याशङ्क्य तर्ह्यहमेव करिष्यामि मां नियोजयेत्याशयेनाह—अयमिति । अयमहं तव प्रियार्थमुदितः उत्पन्नः, त्वन्नियोजितकार्यं कर्तुमेवाहमुत्पन्न इत्यर्थः । अतः जनकसुतानिधनं निरीक्ष्य रुष्टस्सन् लङ्कां विनिपातयामीत्यर्थः । यद्वा सकलशास्त्रतत्त्वज्ञस्त्वं किमर्थमेवं धर्माधर्मखण्डनं करोषि, शक्तश्चेच्छौर्यं प्रदर्शयेत्यत आह—अयमिति । जनकसुतानिधनं निरीक्ष्य रुष्टस्सन् अयमहं धर्माधर्मखण्डनरूपमर्थम् उदितः उक्तवानस्मि, इतःपरं तव प्रियार्थं तव प्रिया या सीता तदर्थं सीतानिधनप्रतिकारार्थं लङ्कां विनिपातयामीत्यर्थः ॥ ४४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां त्र्यशीतितमः सर्गः ॥ ८३ ॥ राममिति । आश्वासयाने आश्वासयमाने ॥ १–११ ॥

त्वात्। ददृशे ददर्श ॥३॥४॥ सः विभीषणः रामं दृष्ट्वा दीनात्मा दीनमनस्कः सन्, अन्तर्दुःखेन अबहिःप्रकटितदुःखविकारेण उपलक्षितः सन् अब्रवीत्॥५॥ लक्ष्मणोवाचेत्यत्र छान्दसः सुलोपः। मन्दार्थम् अल्पार्थम्, संगृहीतार्थमित्यर्थः ॥ ६॥ ७ ॥ कथयन्तमित्यर्धम्। मध्ये निवारणोक्तिः सर्वस्य वृत्तान्तस्य

राघवं च महात्मानमिक्ष्वाकुकुलनन्दनम्। ददर्श मोहमापन्नं लक्ष्मणस्याङ्कमाश्रितम् ॥ ४ ॥ व्रीडितं शोकसन्तप्तं दृष्ट्वा रामं विभीषणः। अन्तर्दुःखेन दीनात्मा किमेतदिति सोऽब्रवीत् ॥ ५ ॥ विभीषणमुखं दृष्ट्वा सुग्रीवं तांश्च वानरान्। लक्ष्मणोवाच मन्दार्थमिदं बाष्पपरिप्लुतः ॥६॥ हतामिन्द्रजिता सीतामिह श्रुत्वैव राघवः। हनुमद्वचनात् सौम्य ततो मोहमुपागतः ॥ ७ ॥ कथयन्तं तु सौमित्रिं सन्निवार्य विभीषणः+ ॥८॥ मनुजेन्द्रार्तरूपेण यदुक्तं च हनूमता। तदयुक्तमहं मन्ये सागरस्येव शोषणम् ॥ ९ ॥ अभिप्रायं तु जानामि रावणस्य दुरात्मनः। सीतां प्रति महाबाहो न च घातं करिष्यति ॥ १० ॥ याच्यमानस्तु बहुशो मया हितचिकीर्षुणा। वैदेहीमुत्सृजस्वेति न च तत् कृतवान् वचः ॥ ११ ॥ नैव साम्ना न दानेन न भेदेन कुतो युधा। सा द्रष्टुमपि शक्येत नैव चान्येन केनचित्* ॥ १२ ॥

स्वेनावगतत्वात्। विभीषणः, उवाचेति शेषः ॥ ८ ॥ ९ ॥ अभिप्रायं त्विति। करिष्यति, रावण इति शेषः ॥ १० ॥ तत्र हेतुमाह—याच्यमान इत्यादिना ॥ ११ ॥ सा साम्ना द्रष्टुमपि नैव शक्येत। दानेनापि द्रष्टुं न शक्येत। भेदेनापि द्रष्टुं न शक्येत। युधा दण्डेन कुतो द्रष्टुमपि शक्येत। अन्येन नैवेति। अन्येन मायोपायेन, केनचिदपि पुरुषेणेत्यर्थः ॥ १२ ॥

स०—आर्तरूपेण दीनसदृशेन। सागरस्य शोषणम् अगस्त्यादिसमावेशाभावदशायां यथाऽयुक्तं तथेदमयुक्तं मन्ये ॥ ९ ॥ हता सीतेत्यभिहितं श्रुतवतो दुःखं कथय कथमयुक्तमित्यतो वक्ति—अभिप्रायमिति। सीतां प्रति तामुद्दिश्य दुरात्मनोऽपि रावणस्याभिप्रायं जानामि। कोऽसावभिप्राय इत्यत आह—न चेति। सीताया इति शेषः। सीतां प्रति सीताया घातं न च करिष्यतीति दुरात्मनो रावणस्याभिप्रायं जानामि, अथवा श्वो वाऽहमपि हतः स्यां न लजेयं जानकीं पाक्षिक्या दुराशयाऽपि दुराशयो न नाशयतीति तदभिप्रायं जानामीति भावः ॥ १० ॥ हे स्व स्वकीय ! भ्रातरिति यावत्। सीतामुत्सृजेति याच्यमानः नच तत् मद्याचितप्रमेयकं वचः कृतवान् ॥ ११ ॥ सा तु स्वनिमित्तमशेषनक्तञ्चरनाशो भावीत्येव रावणकरग्रहं प्राप्ता कुपिता चेत्सद्यो नाशयेदिति वक्तुं तद्गुणानाह—नैवेति। युधा युद्धेन। क्विबन्तः। अन्येन केनापि वञ्चनाद्युपायेन। किञ्च सीता अन्येन केनापि केनाप्युपायेन द्रष्टुमेवाशक्या कुतस्तस्या हरणपूर्वकं वधं इत्याहिते पद्यमवतारयता नागोजिभट्टेन समग्रं रामायणं द्वादशवारं श्रुतवतः सीताया रामस्य च कोऽनुबन्ध इति प्रश्ननीतिरपार्जितेति सन्तोष्टव्यम् ॥ १२ ॥

+ पुष्कलार्थमिदं वाक्यं विसंज्ञं राममब्रवीत् ॥ * मायामयीं महाबाहो तां विद्धि जनकात्मजाम् ॥ इतिचाधिकः पाठः। —

मायोपायेन केनचिद्द्रष्टुमपि नैव शक्येत ॥ १२ ॥ कथं तर्हीन्द्रजिता हतेत्याशङ्क्य मायेयमित्याह–वानरानित्यादिना । मोहयित्वा, लङ्कायां स्वव्यति रिक्तस्य योद्धुरभावात् स्वस्मिन् कर्मव्याकुले वानराः प्रहरेयुः यज्ञश्च विच्छिद्येत विच्छिन्ने च तस्मिन् ब्रह्मवरानुसारेण स्वस्य विनाशो भविष्यतीति

वानरान् मोहयित्वा तु प्रतियातः स राक्षसः । चैत्यं निकुम्भिलां नाम यत्र होमं करिष्यति ॥ १३ ॥ हुतवानुप यातो हि देवैरपि सवासवैः । दुराधर्षो भवत्येव सङ्ग्रामे रावणात्मजः ॥ १४ ॥ तेन मोहयता नूनमेषा माया प्रयोजिता । विघ्नमन्विच्छता तत्र वानराणां पराक्रमे ॥ १५ ॥ ससैन्यास्तत्र गच्छामो यावत्तन्न समाप्यते । त्यजेमं नरशार्दूल मिथ्या सन्तापमागतम् । सीदते हि बलं सर्वं दृष्ट्वा त्वां शोककर्शितम् ॥ १६ ॥ इह त्वं स्वस्थहृदयस्तिष्ठ सत्त्वसमुच्छ्रितः । लक्ष्मणं प्रेषयास्माभिः सह सैन्यानुकर्षिभिः ॥ १७ ॥ एष तं नरशार्दूलो रावणिं निशितैः शरैः । त्याजयिष्यति तत् कर्म ततो वध्यो भविष्यति ॥ १८ ॥ तस्यैते निशितास्तीक्ष्णाः पत्रिपत्राङ्गवाजिनः । पतत्रिण इवासौम्याः शराः पास्यन्ति शोणितम् ॥ १९ ॥ तं सन्दिश महाबाहो लक्ष्मणं शुभलक्षणम् । राक्षसस्य विनाशाय वज्रं वज्रधरो यथा ॥ २० ॥ मनुजवर न कालविप्रकर्षो रिपुनिधनं प्रति यत् क्षमोऽद्य कर्तुम् । त्वमति सृज रिपोर्वधाय वाणीममररिपोर्मथने यथा महेन्द्रः ॥ २१ ॥

मत्वा वञ्चनमिति भावः ॥ १३ ॥ १४ ॥ अन्विच्छता चिन्तयता ॥ १५ ॥ ससैन्या इत्यादि । तत् होमरूपं कर्म ॥ १६ ॥ इहेति । सैन्यानुकर्षिभिः सैन्यपालैः ॥ १७ ॥ तत् कर्म होमकर्म । णिजन्तत्वाद्द्विकर्मकत्वम् ॥ १८ ॥ एते लक्ष्मणीयाः । पत्रिपत्राणि पक्षिपक्षाः तेषामङ्गानि बर्हाणि तैः वाजिनः वेगवन्तः ॥ १९ ॥ २० ॥ यद्यस्मात्कारणात् रिपुनिधनं प्रति कालविप्रकर्षः कालविलम्बः अद्य कर्तुं न क्षमः । तत्तस्मात् त्वं रिपुवधाय

तर्हि कथं हननमित्याशङ्क्य तदिन्द्रजितो मायेत्याह–वानरानिति ॥ १३–१५ ॥ ससैन्या इति । तत होमकर्म ॥ १६ ॥ सैन्यानुकर्षिभिः सैन्यपालैः ॥ १७ ॥ तत्कर्म होमकर्म ॥ १८ ॥ पत्रिपत्राङ्गवाजिनः पत्रिपत्राणि पक्षिपक्षाः तेषामङ्गानि बर्हाणि तैर्वाजिनः पक्षवन्तः । पत्रिपत्राङ्गवाजिता इति पाठे–पत्रिणां पत्ररूपाङ्गैः सञ्जातवेगाः ॥१९॥२०॥ मनुजवरेति । यद्यस्मात्कारणात् रिपुनिधनं प्रति कालविप्रकर्षोऽद्य कर्तुं न क्षमः तस्मात्त्वं रिपोर्वधाय वाणीमतिसृजेत्यन्वयः ॥ २१ ॥

वाणीमतिसृज, आज्ञापयेत्यर्थः । यथा महेन्द्र इत्याप्तसाने हृष्टत्वः ॥ २१ ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुरशीतितमः सर्गः ॥ ८४ ॥





समाप्तकर्मा हि स राक्षसाधिपो भवत्यदृश्यः समरे सुरासुरैः। युयुत्सता तेन समाप्तकर्मणा भवेत् सुराणामपि संशयो महान् ॥ २२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥
तस्य तद्वचनं श्रुत्वा राघवः शोककर्शितः । नोपधारयते व्यक्तं यदुक्तं तेन रक्षसा ॥ १ ॥ ततो धैर्यमवष्टभ्य रामः परपुरञ्जयः । विभीषणमुपासीनमुवाच कपिसन्निधौ ॥ २ ॥ नैर्ऋताधिपते वाक्यं यदुक्तं ते विभीषण । भूयस्तच्छ्रोतुमिच्छामि ब्रूहि यत्ते विवक्षितम् ॥ ३ ॥ राघवस्य वचः श्रुत्वा वाक्यं वाक्यविशारदः । यत्तत्पुनरिदं वाक्यं बभाषे स विभीषणः ॥ ४ ॥ यथाज्ञप्तं महाबाहो त्वया गुल्मनिवेशनम् । तत्तथाऽनुष्ठितं वीर त्वद्वाक्यसमनन्तरम् ॥ ५ ॥ तान्यनीकानि सर्वाणि विभक्तानि समन्ततः । विन्यस्ता यूथपाश्चैव यथान्यायं विभागशः ॥ ६ ॥ भूयस्तु मम विज्ञाप्यं तच्छृणुष्व महायशः ॥ ७ ॥

अथेन्द्रजिद्वधाय लक्ष्मणनिर्गमनम्–तस्य तद्वचनमित्यादि । व्यक्तं नोपधारयते हृदि सम्यङ्निधातुं नाशकदित्यर्थः ॥ १ ॥ २ ॥ ते त्वया ॥ ३ ॥ यत्तत् पुनरिति । यद्वाक्यं पूर्वमुक्तवान् तदिदं पुनर्बभाष इत्यन्वयः ॥ ४ ॥ यथाज्ञप्तमित्याद्युक्तिः रामस्य व्याकुलत्वनिवारणाय ॥ ५–७ ॥

॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां चतुरशीतितमः सर्गः ॥ ८४ ॥ १ ॥ तत इति । उपासीनं उपसमीपे ॥ २ ॥ ३ ॥ राघवस्येति । यद्वाक्यं पूर्वमुक्तवान् तदिदं पुनर्बभाष इति सम्बन्धः ॥ ४–१२ ॥



स०–प्रेष्यप्रेषणावश्यम्भावितासूचनाय पुनरुक्तीकरोति–समाप्तकर्मेति । सुराणामपि संशयः प्राणसंशयः । पूर्वं सुरासुरैरिति प्रकृतत्वात्सुरासुराणां संशय इति वाच्यम्, तथापि केचिदेव देवपक्षिणोऽसुरा एतद्द्वेष्याः । इतरे त्वेतत्कूटघटिता एवेति सुराणामित्येवोक्तमिति मन्तव्यम् ॥ २२ ॥

सन्तापं सन्तापं च। मिथ्येति शोकसन्तापयोर्विशेषणम्। सन्तापः शोककार्यमिति तयोर्भेदः ॥८॥ उद्यमः उत्साहः ॥९-१२॥ ब्रह्मशिरः ब्रह्मशिरःसंज्ञकमस्त्रम्। तुरङ्गमशब्दो रथस्याप्युपलक्षणम्। प्राप्तम्, होमद्वारेति शेषः ॥ १३ ॥ यदीति। यदि च निकुम्भिलाया उत्तिष्ठेत्, यदि कर्म कृतं स्यात्,

त्वय्यकारणसन्तप्ते सन्तप्तहृदया वयम्। त्यज राजन्निमं शोकं मिथ्या सन्तापमागतम् ॥ ८ ॥ तदियं त्यज्यतां चिन्ता शत्रुहर्षविवर्धनी। उद्यमः क्रियतां वीर हर्षः समुपसेव्यताम् ॥ ९ ॥ प्राप्तव्या यदि ते सीता हन्तव्याश्च निशाचराः। रघुनन्दन वक्ष्यामि श्रूयतां मे हितं वचः ॥ १० ॥ साध्वयं यातु सौमित्रिर्बलेन महता वृतः। निकुम्भिलायां सम्प्राप्य हन्तुं रावणिमाहवे॥ ११॥ धनुर्मण्डलनिर्मुक्तैराशीविषविषोपमैः। शरैर्हन्तुं महेष्वासो रावणिं समितिंजयः ॥ १२ ॥ तेन वीर्येण तपसा वरदानात् स्वयम्भुवः। अस्त्रं ब्रह्मशिरः प्राप्तं कामगाश्च तुरङ्गमाः ॥ १३ ॥ स एष सह सैन्येन प्राप्तः किल निकुम्भिलाम्। यद्युत्तिष्ठेत् कृतं कर्म हतान् सर्वांश्च विद्धि नः ॥ १४ ॥ निकुम्भिलामसम्प्राप्तमहुताग्निं च यो रिपुः। त्वामाततायिनं हन्यादिन्द्रशत्रोः स ते वधः। वरो दत्तो महाबाहो सर्वलोकेश्वरेण वै ॥ १५ ॥

तदा हतान् विद्धीत्यन्वयः ॥ १४ ॥ तर्हि कथं स वध्य इत्यत्राह—निकुम्भिलामित्यादिसार्धश्लोक एकान्वयः। यो रिपुः। अहुताग्निम् असमाप्तहोमम्, तेनेत्यादि। तपसा ब्रह्मशिरः ब्रह्मशिरस्संज्ञकमस्त्रम्। तेन वीरेण प्राप्तं निकुम्भिलायां होमकर्मणि परिसमाप्ते कामगतुरगयुक्तो रथः अग्नेस्सकाशादुत्पत्स्यते तद्रथस्थस्य तवावध्यत्वं भविष्यतीति वरदानात्कामगास्तुरङ्गमाः प्राप्ताः। तुरङ्गमशब्दो रथस्याप्युपलक्षणम् ॥१३॥ सः एषः पूर्वप्रकारेण किल लङ्कवरः स इन्द्रजित्सैन्येन सह निकुम्भिलां प्राप्तः होमकर्मणा रथादिकं प्राप्नुवन् निकुम्भिलां गत इत्यर्थः। कृतार्थः कृतकर्मा समाप्तहोमो यद्युत्तिष्ठेत्सर्वान्नः हतान्विद्धीत्यर्थः ॥ १४ ॥ निकुम्भिला

स०—अकारणसन्तप्ते मिथ्या वार्तोत्थितेति अकारणं सन्तप्ते सति। वयं सन्तप्तहृदयाः “अस्मदो द्वयोश्च” इति वयमिति बहुवचनम्। अस्मदादय इत्याद्यर्थो वा। मिथ्येति भिन्नं पदम्। सन्तापं सम् अत्यन्तं तापयति पार्श्वस्थानस्मानिति स तथा तम्। मिथ्या मिथ्याभूतसीतावधश्रवणजत्वान्मिथ्याभूतम् आगतं शोकं त्यज ॥ ८ ॥ यदि सीता प्राप्तव्या निशाचराश्च यदि हन्तव्यास्तर्हि हे वीर। उद्यमः क्रियताम्। त्वया हर्षस्समुपसेव्यताम् ॥ १० ॥ यदि कृतं कर्म निमित्तीकृत्योत्तिष्ठेत् तदा नः सर्वान् हतान् विद्धि ॥ १४ ॥

निकुम्भिलामसम्प्राप्तं निकुम्भिलाख्यन्यग्रोधमूलस्थानमसम्प्राप्तं च। "तमप्राप्तन्यग्रोधम्" इत्युत्तरसर्गे वक्ष्यति। आततायिनं शस्त्रपाणिम्, रिपुवधोद्यतं च त्वां यो हन्यात् हिंस्यात्, सः इन्द्रशत्रोस्ते वधो मारक इति सर्वलोकेश्वरेण ब्रह्मणा वरो दत्त इति योजना। "वध हतौ" इति धातोः पचाद्यचि वध इति रूपम्। यद्यप्येतच्छापवचनमिव प्रतिभाति, तथापि निकुम्भिलाप्राप्तिहोमयोर्विघ्नाभावे अवध्य इति पर्यवसानाद्वररूपत्वं द्रष्टव्यम् ॥ १५ ॥ इत्येव

इत्येवं विहितो राजन् वधस्तस्यैष धीमतः। वधायेन्द्रजितो राम सन्दिशस्व महाबल। हते तस्मिन् हतं विद्धि रावणं ससुहृज्जनम् ॥ १६ ॥ विभीषणवचः श्रुत्वा राघवो वाक्यमब्रवीत् ॥ १७ ॥ जानामि तस्य रौद्रस्य मायां सत्यपराक्रम। स हि ब्रह्मास्त्रवित् प्राज्ञो महामायो महाबलः। करोत्यसंज्ञान् सङ्ग्रामे देवान् सवरुणानपि ॥ १८ ॥ तस्यान्तरिक्षे चरतो रथस्थस्य महायशः। न गतिर्ज्ञायते तस्य सूर्यस्येवाभ्रसम्प्लवे ॥१९॥ राघवस्तु रिपोर्ज्ञात्वा मायावीर्यं दुरात्मनः। लक्ष्मणं कीर्तिसम्पन्नमिदं वचनमब्रवीत् ॥ २० ॥ यद्वानरेन्द्रस्य बलं तेन सर्वेण संवृतः। हनुमत्प्रमुखैश्चैव यूथपैः सह लक्ष्मण ॥ २१ ॥ जाम्बवेनर्क्षपतिना सहसैन्येन संवृतः। जहि तं राक्षससुतं मायाबल विशारदम् ॥ २२ ॥ अयं त्वां सचिवैः सार्द्धं महात्मा रजनीचरः। अभिज्ञस्तस्य देशस्य पृष्ठतोऽनुगमिष्यति ॥ २३ ॥ राघवस्य वचः श्रुत्वा लक्ष्मणः सविभीषणः। जग्राह कार्मुकश्रेष्ठमत्यद्भुतपराक्रमः ॥ २४ ॥

मित्यादिसार्धश्लोक एकान्वयः। इत्येवंप्रकारेण। एषः होमविघ्नकारी तस्य इन्द्रजितः वधः मारकः विहितः ब्रह्मणा क्लृप्तः। तस्मात् तस्य इन्द्रजितो वधाय सन्दिशस्व, अस्मासु कञ्चिदिति शेषः ॥१६-१८॥ तस्य प्रसिद्धस्येति सूर्यविशेषणं द्वितीयं तस्येति पदम्। अभ्रसंप्लवे मेघावरणे ॥१९॥ २०॥ यद्वानरेन्द्रस्येत्यादि श्लोकत्रयमेकान्वयम्। जाम्बवेन जाम्बवता। सहसैन्येन सैन्यसहितेन। "वोपसर्जनस्य" इति विकल्पेन सभावाभावः। संवृतः, त्वमिति

मित्यादि श्लोकद्वयमेकं वाक्यम्। अहुताग्निमसमाप्तहोमम्। निकुम्भिलां निकुम्भिलाख्यं न्यग्रोधमूलस्थानमसंप्राप्तम् आततायिनं शस्त्रपाणिं च हन्यात् हिंस्यात् इन्द्रशत्रोस्ते स एव वधः मारक इति वरः सर्वलोकेश्वरेण ब्रह्मणा दत्तः। राजन्! धीमतस्तस्यैवं वधो विहित इति योजना। एवमुत्तरश्रीरामायणे इन्द्र जिद्वधप्रकारस्योक्तत्वात्तदानुगुण्येन व्याख्यातम् ॥ १९-१८ ॥ तस्यान्तरिक्ष इति। अभ्रसंप्लवे मेघसमूहे ॥ १९-२७ ॥

शेषः ॥२१–२७॥ स एवमिति। असत्यपि कर्तृभेदे [illegible] स इति द्विरुक्तिः । स एवमुक्त्वा स ययाविति निर्वाहः ।वस्तुतस्तु स लक्ष्मणः। सः तादृशवीरवेषविशिष्ट एवेत्यर्थः । यद्वा सरावणिवधाकाङ्क्षीत्येकं पदम् । रावणिना सह वर्तन्त इति सरावणयः निकुम्भिलास्था राक्षसाः तेषां

सन्नद्धः कवची खड्गी सशरो हेमचापधृत् । रामपादावुपस्पृश्य हृष्टः सौमित्रिरब्रवीत् ॥ २५ ॥ अद्य मत्कार्मुकोन्मुक्ताः शरा निर्भिद्य रावणिम् । लङ्कामभिपतिष्यन्ति हंसाः पुष्करिणीमिव ॥ २६ ॥ अद्यैव तस्य रौद्रस्य शरीरं मामकाः शराः । विधमिष्यन्ति भित्त्वा तं महाचापगुणच्युताः ॥ २७ ॥ स एवमुक्त्वा द्युतिमान् वचनं भ्रातुरग्रतः । स रावणिवधाकांक्षी लक्ष्मणस्त्वरितो ययौ ॥२८॥ सोऽभिवाद्य गुरोः पादौ कृत्वा चापि प्रदक्षिणम् । निकुम्भिलामभिययौ चैत्यं रावणिपालितम् ॥ २९ ॥ विभीषणेन सहितो राजपुत्रः प्रतापवान् । कृतस्वस्त्ययनो भ्रात्रा लक्ष्मणस्त्वरितो ययौ ॥ ३० ॥ वानराणां सहस्रैस्तु हनुमान् बहुभिर्वृतः । विभीषणश्च सामात्यस्तदा लक्ष्मणमन्वगात् ॥ ३१ ॥ महता हरिसैन्येन सवेगमभिसंवृतः । ऋक्षराजबलं चैव ददर्श पथि विष्ठितम् ॥ ३२ ॥ स गत्वा दूरमध्वानं सौमित्रिर्मित्रनन्दनः । राक्षसेन्द्रबलं दूरादपश्यद् व्यूहमास्थितम् ॥ ३३ ॥ स तं प्राप्य धनुष्पाणिर्मायायोगमरिन्दमः । तस्थौ ब्रह्मविधानेन विजेतुं रघुनन्दनः ॥ ३४ ॥ विभीषणेन सहितो राजपुत्रः प्रतापवान् । अङ्गदेन च वीरेण तथाऽनिलसुतेन च॥ ३५ ॥

वधाकांक्षीत्यर्थः ॥ २८–३३ ॥ स तं प्राप्येत्यादिश्लोकद्वयमेकान्वयम् । ब्रह्मविधानेन 'निकुम्भिलामसंप्राप्तम्' इत्यादिनोक्तब्रह्मवरदानप्रकारेण, माया

स एवमुक्त्वेति। स लक्ष्मणः एवमुक्त्वा स एव लक्ष्मणः ययाविति तच्छब्दद्वयस्य निर्वाहः। एवमुक्त्वा तु वचनमिति पाठः सम्यक्॥२८–३३॥स तमिति । सः रघुनन्दनः मायायोगं मायैव योग उपायो यस्य तमिन्द्रजितं प्राप्य ब्रह्मविधानेन 'निकुम्भिलामसंप्राप्तम्' इत्यादिनोक्तब्रह्मवरदानप्रकारेण विजेतुं तस्थाविति सम्बन्धः ॥३४॥३५॥

कतक०—तस्थौ ब्रह्मविमानेनेति पाठान्तरम् । ब्रह्मविमानेन ब्रह्मणो भगवतस्तेजोंऽशोऽहमस्मीति विशिष्य जायमानेन ध्यानेन शत्रुं जेतुं तस्थौ । सङ्कटकाले तादृशध्यानस्य निसर्गसिद्धत्वात् ॥ ३४ ॥

योगं मायारूपोपायम्, तम् इन्द्रजितम्, विजेतुं प्राप्य तस्थौ । मायायागमिति पाठे मायायागं जेतुं नाशयितुं तं देशं प्राप्य तस्थावित्यन्वयः ॥२४॥२५॥ विविधमिति । प्रतिभयतमम् अतिशयेन भयङ्करम् ॥२६॥ इति श्रीगो० श्रीरामा० रत्नकिरी० युद्धकाण्ड० पञ्चाशीतितमः सर्गः ॥८५॥



विविधममलशस्त्रभास्वरं तद् ध्वजगहनं विपुलं महारथैश्च । प्रतिभयतममप्रमेयवेगं तिमिरमिव द्विषतां बलं विवेश ॥ २६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥
अथ तस्यामवस्थायां लक्ष्मणं रावणानुजः । परेषामहितं वाक्यमर्थसाधकमब्रवीत् ॥ १ ॥ यदेतद्राक्षसानीकं मेघश्यामं विलोक्यते । एतदायोध्यतां शीघ्रं कपिभिः पादपायुधैः ॥ २ ॥ अस्यानीकस्य महतो भेदने यत लक्ष्मण । राक्षसेन्द्रसुतोऽप्यत्र भिन्ने दृश्यो भविष्यति ॥ ३ ॥ स त्वमिन्द्राशनिप्रख्यैः शरैरवकिरन् परान् । अभिद्रवाशु यावद्वै नैतत् कर्म समाप्यते ॥ ४ ॥ जहि वीर दुरात्मानं मायापरमधार्मिकम् । रावणिं क्रूरकर्माणं सर्वलोकभयावहम् ॥ ५ ॥ विभीषणवचः श्रुत्वा लक्ष्मणः शुभलक्षणः । ववर्ष शरवर्षाणि राक्षसेन्द्रसुतं प्रति ॥ ६ ॥ ऋक्षाः शाखामृगाश्चापि द्रुमाद्रिनखयोधिनः । अभ्यधावन्त सहितास्तदनीकमवस्थितम् ॥ ७ ॥

अथेन्द्रजिद्युद्धारम्भः—अथ तस्यामित्यादि । तस्यामवस्थायां निकुम्भिलासमीपगमनावसरे । अर्थसाधकम्, स्वानामिति शेषः ॥ १ ॥ यदेतदिति । आयोध्यतां हन्यताम् । शीघ्रमिति । विलम्बे यागः समाप्येतेति भावः ॥ २ ॥ अस्येति । यत यतस्व । अत्र राक्षसानीके ॥ ३–५ ॥ विभीषणेति । शुभलक्षणः सुहृद्वचनसारग्राहित्वलक्षणयुक्तः ॥ ६ ॥ ७ ॥

प्रतिभयतमम् अतिशयेन भयङ्करम् ॥ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां पञ्चाशीतितमः सर्गः ॥ ८५ ॥



॥ १ ॥ यदेतदिति । आयोध्यतां प्रहार्यताम् ॥ २ ॥ यत यतस्व ॥ ३ ॥ ४ ॥ मायापरमधार्मिकं परमधार्मिकवत्प्रतीयमानम् ॥ ५ ॥ राक्षसेन्द्रसुतं प्रति ववर्ष तमुद्दिश्य तत्सेनायां ववर्षेत्यर्थः ॥ ६–९ ॥



स०—मायापरमधार्मिकं मायया परमधनुर्धारिणं वा । मायापरम् अधार्मिकमिति वा ॥ ५ ॥

राक्षसा इति । कपिसैन्यजिघांसवः कपिसैन्यं हन्तुमिच्छवः ॥ ८ ॥ स इति । सम्प्रहारः युद्धम् ॥ ९ ॥ १० ॥ ते राक्षसा इति । शस्त्रनिवेशन विकृताननबाहुत्वरूपक्रियाभेदात् तच्छब्दद्वयानिर्वाहः ॥ ११–१२ ॥ स्वमनीकमिति । तत्कर्मणि तस्मिन् होमकर्मणि ॥ १४ ॥ वृक्षान्धकारात्

राक्षसाश्च शितैर्बाणैरसिभिः शक्तितोमरैः । उद्यतैः समवर्तन्त कपिसैन्यजिघांसवः ॥ ८ ॥ स सम्प्रहारस्तुमुलः सञ्जज्ञे कपिरक्षसाम् । शब्देन महता लङ्कां नादयन् वै समन्ततः ॥ ९ ॥ शस्त्रैश्च बहुधाकारैः शितैर्बाणैश्च पादपैः । उद्यतैर्गिरिशृङ्गैश्च घोरैराकाशमावृतम् ॥ १० ॥ ते राक्षसा वानरेषु विकृताननबाहवः । निवेशयन्तः शस्त्राणि चक्रुस्ते सुमहद्भयम् ॥ ११ ॥ तथैव सकलैर्वृक्षैर्गिरिशृङ्गैश्च वानराः । अभिजघ्नुर्निजघ्नुश्च समरे राक्षसर्षभान् ॥ १२ ॥ ऋक्षवानरमुख्यैश्च महाकायैर्महाबलैः । रक्षसां वध्यमानानां महद्भयमजायत ॥ १३ ॥ स्वमनीकं विषण्णं तु श्रुत्वा शत्रुभिरर्दितम् । उदतिष्ठत दुर्धर्षस्तत्कर्मण्यननुष्ठिते ॥ १४ ॥ वृक्षान्धकारान्निर्गत्य जातक्रोधः स रावणिः । आरुरोह रथं सज्जं पूर्वयुक्तं सराक्षसः ॥ १५ ॥ स भीमकार्मुकधरः कालमेघसमप्रभः । रक्तास्यनयनः क्रुद्धो बभौ मृत्युरिवान्तकः ॥ १६ ॥ दृष्ट्वैव तु रथस्थं तं पर्यवर्तत तद्बलम् । रक्षसां भीमवेगानां लक्ष्मणेन युयुत्सताम् ॥ १७ ॥ तस्मिन् काले तु हनुमानुद्यम्य सुदुरासदम् । धरणीधरसङ्काशो महावृक्षमरिन्दमः ॥ १८ ॥ स राक्षसानां तत्सैन्यं कालाग्निरिव निर्दहन् । चकार बहुभिर्वृक्षैर्निस्संज्ञं युधि वानरः ॥ १९ ॥

नीरन्ध्रवृक्षषण्डादित्यर्थः । सज्जम् आयुधादिभिः, पूर्वयुक्तं पूर्वमेव युक्ताश्वम् । सराक्षसः राक्षससहितः ॥ १५ ॥ अन्तकः अन्तकरः ॥ १६ ॥ पर्यवर्तत परितोऽतिष्ठत् ॥ १७ ॥ तस्मिन्नित्यादि । आदावेकं वृक्षमुद्यम्य निर्दहन् सन् पश्चात् बहुभिर्वृक्षैस्तद्रक्षोबलं निःसंज्ञं चकारेत्यन्वयः ॥ १८–२० ॥

शस्त्रैरिति । बहुधाकारैः बहुप्रकारैः ॥ १० ॥ राक्षसाः वानरेषु शस्त्राणि निवेशयन्तः विकृताननबाहवस्सन्तः ते सुमहद्भयं चक्रुरिति सम्बन्धः । अतस्तच्छब्द द्वयस्य न पौनरुक्त्यम् ॥ ११–१३ ॥ स्वमनीकमिति । अननुष्ठिते असमाप्ते सति ॥ १४ ॥ वृक्षान्धकारान्नीरन्ध्रवृक्षसम्बाधात् ॥ १५–२७ ॥

अवाकिरन्नित्युक्तं प्रपञ्चयति–शितेत्यादि । शितशूलधरा इत्यादिविशेषणेन येषां येष्वस्त्रेष्वत्यन्तपाटवमस्ति तैस्ते अवाकिरन्निति गम्यते ॥ २१ ॥ परिघैरित्यादौ परिघपाणय इत्याद्यूह्यम् । शुभदर्शनैरित्यनेन तैक्ष्ण्यमुपलक्ष्यते ॥ २२ ॥ पर्वतोपमम्, हनुमन्तमिति शेषः ॥ २३ ॥ तेषामित्यर्धम् ।



विध्वंसयन्तं तरसा दृष्ट्वैव पवनात्मजम् । राक्षसानां सहस्राणि हनुमन्तमवाकिरन् ॥ २० ॥ शितशूलधराः शूलै रसिभिश्चासिपाणयः । शक्तिभिः शक्तिहस्ताश्च पट्टिशैः पट्टिशायुधाः ॥ २१ ॥ परिघैश्च गदाभिश्च चक्रैश्च शुभदर्शनैः । शतशश्च शतघ्नीभिरायसैरपि मुद्गरैः ॥ २२ ॥ घोरैः परश्वधैश्चैव भिन्दिपालैश्च राक्षसाः । मुष्टिभिर्वज्रकल्पैश्च तलैरशनिसन्निभैः । अभिजघ्नुः समासाद्य समन्तात् पर्वतोपमम् ॥ २३ ॥ तेषामपि च संक्रुद्धश्चकार कदनं महत् ॥ २४ ॥ स ददर्श कपिश्रेष्ठमचलोपममिन्द्रजित् । सूदयन्तममित्रघ्नममित्रान् पवनात्मजम् ॥ २५ ॥ स सारथिमुवाचेदं याहि यत्रैष वानरः । क्षयमेष हि नः कुर्याद्राक्षसानामुपेक्षितः ॥ २६ ॥ इत्युक्तः सारथिस्तेन ययौ यत्र स मारुतिः । वहन् परमदुर्धर्षं स्थितमिन्द्रजितं रथे ॥ २७ ॥ सोऽभ्युपेत्य शरान् खड्गान् पट्टिशांश्च परश्वधान् । अभ्यवर्षत दुर्द्धर्षः कपिमूर्ध्नि स राक्षसः ॥ २८ ॥ तानि शस्त्राणि घोराणि प्रतिगृह्य स मारुतिः । रोषेण महताऽऽविष्टो वाक्यं चेदमुवाच ह ॥ २९ ॥ युद्धयस्व यदि शूरोऽसि रावणात्मज दुर्मते । वायुपुत्रं समासाद्य जीवन्न प्रतियास्यसि ॥ ३० ॥ बाहुभ्यां प्रतियुध्यस्व यदि मे द्वन्द्वमाहवे । वेगं सहस्व दुर्बुद्धे ततस्त्वं रक्षसां वरः ॥ ३१ ॥

संक्रुद्धः, हनुमानिति शेषः ॥ २४ ॥ २५ ॥ हि यस्मात् कारणात् उपेक्षितः एषः नः अस्माकं सम्बन्धिनां राक्षसानां क्षयं कुर्यात् । अतः एष वानरो यत्र, वर्तत इति शेषः । तत्र याहीतीदं वचः सारथिमुवाचेत्यन्वयः ॥ २६ ॥ इत्युक्त इति । वहन् प्रापयन् ॥ २७ ॥ सोऽभ्युपेत्येति । अत्रापि क्रियाभेदात् तच्छब्दस्य द्विः प्रयोगः ॥ २८–३० ॥ द्वन्द्वं द्वन्द्वयुद्धम्, ददासीति शेषः । यदि ददासि तर्हि शस्त्राणि त्यक्त्वा बाहुभ्यां





सोऽभ्युपेत्येत्यत्रापि क्रियाभेदात्तच्छब्दद्वयस्य प्रयोगः ॥ २८–३० ॥ बाहुभ्यामिति । द्वन्द्वं, ददासीति शेषः । तर्हि बाहुभ्यां युध्यस्व ॥ ३१–३३ ॥

प्रतियुध्यस्वेत्यन्वयः । ततः तदानीं द्वन्द्वयुद्धकाले ॥ ३१ ॥ ३२ ॥ यः सः प्रसिद्धो य इत्यर्थः ॥ ३३ ॥ तमिति । अप्रतिमसंस्थानैः अनुपमसन्निवेशैः, करवीरपत्राद्याकारैरित्यर्थः ॥ ३४ ॥ इत्येवमिति । अरिविभीषणेन शत्रुभयङ्करेण ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षडशीतितमः सर्गः ॥ ८६ ॥

हनुमन्तं जिघांसन्तं समुद्यतशरासनम् । रावणात्मजमाचष्टे लक्ष्मणाय विभीषणः ॥ ३२ ॥ यः स वासवनिर्जेता रावणस्यात्मसम्भवः । स एष रथमास्थाय हनुमन्तं जिघांसति ॥ ३३ ॥ तमप्रतिमसंस्थानैः शरैः शत्रुविदारणैः । जीवितान्तकरैर्घोरैः सौमित्रे रावणिं जहि ॥३४॥ इत्येवमुक्तस्तु तदा महात्मा विभीषणेनारिविभीषणेन । ददर्श तं पर्वतसन्निकाशं रणे स्थितं भीमबलं नदन्तम् ॥ ३५ ॥ इत्यार्षे० श्रीमद्युद्धकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

एवमुक्त्वा तु सौमित्रिं जातहर्षो विभीषणः । धनुष्पाणिनमादाय त्वरमाणो जगाम ह ॥ १ ॥ अविदूरं ततो गत्वा प्रविश्य च महद्वनम् । दर्शयामास तत्कर्म लक्ष्मणाय विभीषणः ॥२॥ नीलजीमूतसङ्काशं न्यग्रोधं भीमदर्शनम् । तेजस्वी रावणभ्राता लक्ष्मणाय न्यवेदयत् ॥ ३ ॥ इहोपहारं भूतानां बलवान् रावणात्मजः । उपहृत्य ततः पश्चात् सङ्ग्राममभिवर्तते ॥ ४ ॥ अदृश्यः सर्वभूतानां ततो भवति राक्षसः । निहन्ति समरे शत्रून् बध्नाति च शरोत्तमैः ॥ ५ ॥ तमप्रविष्टन्यग्रोधं बलिनं रावणात्मजम् । विध्वंसय शरैस्तीक्ष्णैः सरथं साश्वसारथिम् ॥ ६ ॥

अथेन्द्रजिद्विभीषणसंवादः—एवमुक्त्वेत्यादि । धनुष्पाणिनमिति नकारान्तत्वमार्षम् ॥ १ ॥ तत्कर्म होमकर्मस्थानम् ॥२॥३॥ इहेति । उपहारं बलिम् । उपहृत्य कृत्वा । ओदनपाकं पचतीतिवत् । ततः तस्माद्देशात् ॥ ४ ॥ ५ ॥ अप्रविष्टन्यग्रोधं रावणात्मजं विध्वंसय । पुनः प्रवेशात्पूर्वमेव विध्वंसये

अप्रतिमसंस्थानैः अनुपमैरित्यर्थः ॥ ३४ ॥ ३५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां षडशीतितमः सर्गः ॥ ८६ ॥

॥ १ ॥ अविदूरमिति । तत्कर्म होमस्थानम् ॥ २–५ ॥ तमिति । अप्रविष्टन्यग्रोधं रावणात्मजं विध्वंसय, न्यग्रोधमूलप्रवेशे दुस्साध्यो भवतीति भावः ॥ ६ ॥

त्यर्थः ॥ ६-८ ॥ तमिति । महातेजा इति लक्ष्मणो विशेष्यः । सम्यग्युद्धम् अमायायुद्धम् ॥ ९ ॥ एवमिति । मनस्वी दृढमनस्कः ॥ १० ॥ इहेति । इह लङ्कायां जातसंवृद्धः । "पूर्वकाल-" इत्यादिना पूर्वकालार्थवाचिनो जातशब्दस्य उत्तरकालार्थवाचिना संवृद्धशब्देन सह समासः । पुत्रस्य





तथेत्युक्त्वा महातेजाः सौमित्रिर्मित्रनन्दनः। बभूवावस्थितस्तत्र चित्रं विस्फारयन् धनुः ॥ ७ ॥ स रथेनाग्निवर्णेन बलवान् रावणात्मजः । इन्द्रजित् कवची धन्वी सध्वजः प्रत्यदृश्यत ॥ ८ ॥ तमुवाच महातेजाः पौलस्त्यमपराजितम् । समाह्वये त्वां समरे सम्यग्युद्धं प्रयच्छ मे ॥ ९ ॥ एवमुक्तो महातेजा मनस्वी रावणात्मजः । अब्रवीत् परुषं वाक्यं तत्र दृष्ट्वा विभीषणम् ॥ १० ॥ इह त्वं जातसंवृद्धः साक्षाद्भ्राता पितुर्मम। कथं द्रुह्यसि पुत्रस्य पितृव्यो मम राक्षस ॥ ११ ॥ न ज्ञातित्वं न सौहार्दं न जातिस्तव दुर्मते । प्रमाणं न च सोदर्यं न धर्मो धर्मदूषण ॥ १२ ॥ शोच्यस्त्वमसि दुर्बुद्धे निन्दनीयश्च साधुभिः । यस्त्वं स्वजनमुत्सृज्य परभृत्यत्वमागतः ॥ १३ ॥ नैतच्छिथिलया बुद्ध्या त्वं वेत्सि महदन्तरम् । क्व च स्वजनसंवासः क्व च नीचपराश्रयः ॥ १४ ॥ गुणवान् वा परजनः स्वजनो निर्गुणोऽपि वा । निर्गुणः स्वजनः श्रेयान् यः परः पर एव सः ॥ १५ ॥

पुत्राय । "क्रुधद्रुह-" इत्यादिना चतुर्थीनियमात् । राक्षसेत्यनेन साजात्यमपि न दृष्टवानसीति व्यज्यते ॥ ११ ॥ न ज्ञातित्वमिति । प्रमाणं मर्यादानियामकम् ॥ १२ ॥ शोच्यत्वादौ हेतुमाह-यस्त्वमिति ॥ १३ ॥ नैतदिति । शिथिलया कोमलया, तुच्छया वा । अन्तरं तारतम्यम् ॥ १४ ॥ ननु परस्य

तत्र न्यग्रोधमूले ॥ ७ ॥ ८ ॥ महातेजाः लक्ष्मणः ॥ ९-१० ॥ इह अस्मिन् राक्षसकुले जातः संवृद्धः तत्रैवोत्पन्नस्तत्रैव वृद्धिं प्राप्त इत्यर्थः । पुत्रस्य पुत्राय ॥ ११ ॥ प्रमाणं मर्यादा ॥ १२ ॥ १३ ॥ शिथिलया तुच्छया । महदन्तरं महद्वैषम्यम् । स्वजनपरित्यागपरभृत्यत्वयोः महद्वैषम्यमस्तीत्यर्थः ॥ १४ ॥ परस्य नीचत्वे भवदुक्तं

स०-एकैक एव प्रयोजकः प्रीतावेतन्मध्येऽन्यत्र । ते सर्वेऽपि त्वय्यन्यथा जाता इत्याह-न ज्ञातित्वमित्यादिना । जातिः राक्षसजातिः । प्रमाणं ज्येष्ठविरोधेन विरोध्याश्रयो न सम्पाद्य इति प्रवेदयत्प्रमाणम् । सौदर्यं सोदरत्वम् । त्रयाणामपि कैकसीपुत्रत्वात् । न च पद्मपुराणे "निकषापुत्रमाहूय । निकषा चाब्रवीद्रामम्" इत्युक्तेः भागवतोत्तरकाण्डादौ कैकसीपुत्रत्वं कथितम्, तदसङ्गतमिति वाच्यम्; तस्या एव नामान्तरं तदविरोधः ॥ १२ ॥ टीका-निर्गुणोपि स्वजनः श्रेयान् भवति । परो यः सगुणोपि स पर एव । स्वकुलेन सह विरोधं भिन्न एव भवतीत्यर्थः ॥ १५ ॥

नीचत्वाभावान्न भवदुक्तदोष इत्यत्राह—गुणवानिति ॥ १५ ॥ तदेव वैषम्यं स्वरूपतो दर्शयति—य इति ॥ १६ ॥ निरनुक्रोशतेति । इयं होमविघात पूर्वकं लक्ष्मणस्य न्यग्रोधप्रवेशकरणरूपा निरनुक्रोशता निर्दयता, यादृशी यथा घोरा, तादृशं परुषं निर्दयत्वं स्वजनेन बन्धुभूतेन त्वयैव कर्तुं शक्यम्, नान्येनेत्यर्थः । यद्वा स्वजने विषये त्वया न शक्यं न कर्तव्यम्, अनुचितं कृतमिति भावः ॥ १७ ॥ १८ ॥ गौरवात् गुरोर्भावो गौरवम्, पितृव्यत्वा

यः स्वपक्षं परित्यज्य परपक्षं निषेवते। स स्वपक्षे क्षयं प्राप्ते पश्चात्तैरेव हन्यते ॥१६॥ निरनुक्रोशता चेयं यादृशी ते निशाचर । स्वजनेन त्वया शक्यं परुषं रावणानुज ॥ १७ ॥ इत्युक्तो भ्रातृपुत्रेण प्रत्युवाच विभीषणः ॥१८॥ अजानन्निव मच्छीलं किं राक्षस विकत्थसे। राक्षसेन्द्रसुतासाधो पारुष्यं त्यज गौरवात् ॥ १९ ॥ कुले यद्यप्यहं जातो रक्षसां क्रूरकर्मणाम्। गुणोऽयं प्रथमो नृणां तन्मे शीलमराक्षसम् ॥ २० ॥ न रमे दारुणेनाहं न चाधर्मेण वै रमे । भ्रात्रा विषमशीलेन कथं भ्राता निरस्यते ॥ २१ ॥ धर्मात् प्रच्युतशीलं हि पुरुषं पापनिश्चयम् । त्यक्त्वा सुखमवाप्नोति हस्तादाशीविषं यथा ॥ २२ ॥

दित्यर्थः ॥ १९ ॥ रक्षसां कुले यद्यप्यहं जातः, तत् तथापि मे शीलम् अराक्षसम् अक्रूरम् । अयं मे शीलाख्यो गुणः नृणां सत्पुरुषाणां प्रथमः मुख्यः ॥ २० ॥ तन्मे शीलमराक्षसमित्युक्तमेव दर्शयति—न रम इति । दारुणेन कर्मणा न रमे । अधर्मेण परपीडाकरेण च कर्मणा न रमे । न केवलं मय्येव दोषः रावणेऽपीत्याह—भ्रात्रेति । निरस्यते 'त्वां तु धिक्कुलपांसनम्' इति वचनेनेत्यर्थः ॥ २१ ॥ इन्द्रजिदुक्तस्वदोषपरिहाराय परित्यागहेतून्

वैषम्यम्, गुणवत्त्वे तु तन्नास्तीत्यत्राह—गुणवान्वेति ॥१५॥ तदेव वैषम्यं स्वरूपतो दर्शयति—यस्स्वपक्षमिति। अतः स्वपक्षाश्रयणमेव श्रेयस्करमिति भावः ॥१६ ॥ निरनुक्रोशतेति । सेयं होमविघातपूर्वकं लक्ष्मणस्य न्यग्रोधप्रवेशकरणरूपा निरनुक्रोशता निर्दयता यादृशी यथा घोरा ईदृशं परुषम्, निदर्शयेति शेषः । स्वजनेन बन्धुभूतेन त्वयैव कर्तुं शक्यम्, नान्येनेत्यर्थः । यद्वा स्वजने विषये त्वया न शक्यं न कर्तव्यम्, अनुचितं कृतमिति भावः ॥ १७ ॥ १८ ॥ गौरवात् पितृव्यत्वात् । यद्वा शूरोऽहमिति गौरवाद्धेतोर्यत्पारुष्यं तत्त्यजेत्यर्थः ॥ १९ ॥ नृणां सज्जनानां यः प्रथमः मुख्यो गुणः सात्त्विकं तत् मे अराक्षसम् अक्रूरम् । शीलं गुण इत्यर्थः ॥ २० ॥ न रम इति । दारुणेन कर्मणा न रमे अधर्मेण च न रमे अन्यथा विषमशीलेन रावणशीलाद्विलक्षणशीलेन भ्रात्रा कथमयं भ्राता रावणो

रावणदोषानाह—धर्मादित्यादिना ॥ २२ ॥ हिंसा च परस्वहरणं च ते हिंसापरस्वहरणे । हिंसादिरूपं दुराचाररूपं कर्म त्याज्यमाहुः तद्युक्तस्त्याज्य इत्यर्थः ॥ २३ ॥ परस्वानामिति । सुहृदामतिशङ्का सुहृत्स्वविश्वासः ॥ २४ ॥ दोषवत्तया यदि त्याज्यत्वम्, तर्ह्यभिजनविद्यादिगुणवत्तया किमिति न ग्राह्यत्वमित्यत आह—महर्षीणामिति सार्धश्लोकद्वयमेकान्वयम् । अभिमानः गर्वः । वैरित्वं बद्धवैरत्वम् । प्रतिकूलता परश्रेयोद्वेषित्वम् । तथा च

हिंसापरस्वहरणे परदाराभिमर्शनम् । त्याज्यमाहुर्दुराचारं वेश्म प्रज्वलितं यथा ॥ २३ ॥ परस्वानां च हरणं परदाराभिमर्शनम् । सुहृदामतिशङ्का च त्रयो दोषाः क्षयावहाः ॥ २४ ॥ महर्षीणां वधो घोरः सर्वदेवैश्च विग्रहः । अभिमानश्च कोपश्च वैरित्वं प्रतिकूलता ॥२५॥ एते दोषा मम भ्रातुर्जीवितैश्वर्यनाशनाः । गुणान् प्रच्छादयामासुः पर्वतानिव तोयदाः । दोषैरेतैः परित्यक्तो मया भ्राता पिता तव ॥ २६ ॥ नेयमस्ति पुरी लङ्का न च त्वं न च ते पिता ॥ २७ ॥ अतिमानी च बालश्च दुर्विनीतश्च राक्षस । बद्धस्त्वं कालपाशेन ब्रूहि मां यद्यदिच्छसि ॥ २८ ॥ अद्य ते व्यसनं प्राप्तं किं मां त्वमिह वक्ष्यसि । प्रवेष्टुं न त्वया शक्यो न्यग्रोधो राक्षसाधम ॥ २९ ॥

अभिजनविद्यादिगुणवत्त्वेऽपि परस्त्रीहरणादिदोषदूषिततया विषसंपृक्तमधुवन्न ग्राह्योऽयमिति भावः ॥ २५ ॥ २६ ॥ नेयमित्यादि । छत्तरक्षणे अवश्यं नशिष्यतीत्यर्थः ॥ २७–२९ ॥

निरस्यते हिंस्यते ॥ २१॥२२॥ हिंसा च परस्वहरणं च हिंसापरस्वहरणे । दुराचारं हिंसादिरूपदुराचारम् ॥ २३ ॥ इन्द्रजिदुक्तदोषपरिजिहीर्षया परित्यागहेतून् रावण दोषानाह—परस्वानामित्यादिना । सुहृदामतिशङ्का सुहृत्स्वविश्वास इत्यर्थः ॥ २४ ॥ दोषवत्तया यद्यपि त्याज्यत्वं तर्ह्यभिजनविद्यादिगुणवत्तया किमिति न ग्राह्यत्वमित्यत आह—महर्षीणामिति । अभिमानो गर्वः । वैरित्वं बद्धवैरित्वम् । प्रतिकूलता परश्रेयोद्वेषित्वम् । अभिजनविद्यादिगुणवत्त्वेऽपि परस्त्रीहरणादिदोषदूषित तया विषसम्पृक्तान्नवत्तस्य न ग्राह्यत्वमिति भावः ॥ २५–२९ ॥

देवताकार्यं यमदूतरूपदेवताकार्यम् । नरकयातनानुभवं वा ॥३०॥३१॥ इति श्रीगो० श्रीरामा० रत्न० युद्धकाण्डव्याख्याने सप्ताशीतितमः सर्गः ॥८७॥ अथेन्द्रजिल्लक्ष्मणयुद्धम्—विभीषणवच इत्यादि । अभ्युत्पपात अभिमुखमुज्जगाम ॥ १ ॥ कीदृग्भूतोऽभ्युज्जगामेत्यत्राह—उद्यतेत्यादि श्लोकद्वयेन । सुसमलंकृते सुष्ठु समन्तात् अलंकृते । महाप्रमाणं महादीर्घम्, धनुरुद्यम्य शरान् परामृश्य गृहीत्वा अभ्युज्जगाम अब्रवीच्चेत्यन्वयः । अमित्रान् शत्रून्

धर्षयित्वा च काकुत्स्थौ न शक्यं जीवितुं त्वया । युध्यस्व नरदेवेन लक्ष्मणेन रणे सह । इतस्त्वं देवताकार्यं करिष्यसि यमक्षये ॥ ३० ॥ निदर्शयस्वात्मबलं समुद्यतं कुरुष्व सर्वायुधसायकव्ययम् । न लक्ष्मणस्यैत्य हि बाणगोचरं त्वमद्य जीवन् सबलो गमिष्यसि ॥३१॥ इत्यार्षे श्रीरामा० श्रीमद्युद्धकाण्डे सप्ताशीतितमः सर्गः॥८७॥

विभीषणवचः श्रुत्वा रावणिः क्रोधमूर्च्छितः । अब्रवीत् परुषं वाक्यं वेगेनाभ्युत्पपात ह ॥ १ ॥ उद्यतायुधनिस्त्रिंशो रथे सुसमलङ्कृते । कालाश्वयुक्ते महति स्थितः कालान्तकोपमः ॥२ ॥ महाप्रमाणमुद्यम्य विपुलं वेगवद्दृढम् । धनुर्भीमं परामृश्य शरांश्चामित्रशातनान् ॥३॥ तं ददर्श महेष्वासो रथे सुसमलंकृतः । अलंकृतममित्रघ्नं राघवस्यानुजं बली । हनुमत्पृष्ठमासीनमुदयस्थरविप्रभम् ॥४॥ उवाचैनं समारब्धः सौमित्रिं सविभीषणम् । तांश्च वानरशार्दूलान् पश्यध्वं मे पराक्रमम् ॥५॥ अद्य मत्कार्मुकोत्सृष्टं शरवर्षं दुरासदम् । मुक्तं वर्षमिवाकाशे वारयिष्यथ संयुगे ॥६॥

शातयन्ति खण्डयन्तीत्यमित्रशातनान् ॥ २ ॥ ३ ॥ रथे, स्थित इति शेषः । अलंकृतं स्वतेजसा भूषितम् । हनुमत्पृष्ठमासीनमित्यनुवादेन हनुमान् पूर्वं राक्षसैर्युद्धा इन्द्रजित्यागते लक्ष्मणं स्वपृष्ठभागमारोप्य स्थितवानिति गम्यते । उदयस्थरविप्रभमित्यनेन हनुमतः काञ्चनाकृतित्वं लक्ष्मणस्य रविवर्णत्वं चोक्तम् ॥ ४ ॥ उवाचैनमिति त्रिपाच्छ्लोक एकान्वयः । एतदब्रवीत् परुषमिति पूर्वोक्तस्य विवरणं न भवति । तद्विभीषणमात्रं प्रति । इदं तु सर्वान्

युध्यस्वेति । देवताकार्यं करिष्यसि यमदूतरूपदेवतादिष्टकार्यं करिष्यसीत्यर्थः । यमक्षये यमनिलये । यमदूतकिङ्करो भविष्यसीति यावत् ॥ ३० ॥ ३१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां सप्ताशीतितमः सर्गः ॥ ८७ ॥ विभीषणवच इत्यादि श्लोकत्रयमेकं वाक्यम् । परुषं वाक्यमित्येतद्वक्ष्यमाणमिति ज्ञेयम् । कालाश्वाः नीलाश्वाः । रथे स्थितस्सन् महाप्रमाणं धनुरुद्यम्य शरान् परामृश्य अभ्युत्पपात अभ्युज्जगाम, अब्रवीच्चेति सम्बन्धः ॥ १–३ ॥ अलंकृतं स्वतेजोभूषितम् ॥ ४ ॥ उवाचैनमित्यादिना पूर्वोक्तमब्रवीत् परुषं वाक्यमित्येतदेव विवृणोति ॥ ५ ॥ मुक्तं वर्षं मेघोत्सृष्टं

प्रति । तच्च परुषम् । इदं तु पराक्रमविषयम् । [illegible] । मुक्तं भयमुक्तम् । वारयिष्यथेत्येतत् सापहासोक्तिः ॥ ५ ॥ ६ ॥
अद्येति । वः युष्माकम् । विधमिष्यन्ति धक्ष्यन्ति ॥ ७ ॥ तीक्ष्णेति । तीक्ष्णसायकेति लुप्तविभक्तिकं पदम् । तीक्ष्णसायकैरित्यर्थः । शूलशक्त्यष्टि



अद्य वो मामका बाणा महाकार्मुकनिस्सृताः । विधमिष्यन्ति गात्राणि तूलराशिमिवानलः ॥ ७ ॥ तीक्ष्णसायक निर्भिन्नान् शूलशक्त्यष्टितोमरैः । अद्य वो गमयिष्यामि सर्वानेव यमक्षयम् ॥ ८ ॥ क्षिपतः शरवर्षाणि क्षिप्र हस्तस्य मे युधि । जीमूतस्येव नदतः कः स्थास्यति ममाग्रतः ॥ ९ ॥ रात्रियुद्धे मया पूर्वं वज्राशनिसमैः शरैः । शायितौ स्थो मया भूमौ विसंज्ञौ सपुरस्सरौ ॥ १० ॥ स्मृतिर्न तेऽस्ति वा मन्ये व्यक्तं वा यमसादनम् । आशीविषमिव क्रुद्धं यन्मां योद्धुं व्यवस्थितः ॥ ११ ॥ तच्छ्रुत्वा राक्षसेन्द्रस्य गर्जितं लक्ष्मणस्तदा । अभीत वदनः क्रुद्धो रावणिं वाक्यमब्रवीत् ॥ १२ ॥ उक्तश्च दुर्गमः पारः कार्याणां राक्षस त्वया । कार्याणां कर्मणा पारं यो गच्छति स बुद्धिमान् ॥ १३ ॥

तोमरैः इत्यत्र शक्तियष्टितोमरैरित्यर्थः । सन्धिरार्षः । तीक्ष्णसायकैः शूलशक्त्यष्टितोमरैश्च निर्भिन्नान् वः युष्मान्, यमक्षयं यमनिलयम्, गमयिष्यामीत्यन्वयः ॥ ८ ॥ क्षिपत इति । जीमूतस्येति नादमात्रे दृष्टान्तः ॥ ९ ॥ रात्रीति । आग्रहातिशयेन मयेति द्विरुक्तिः ॥ १० ॥ रामानु०—रात्रीति । शायितौ, युवामिति शेषः ॥ १० ॥ स्मृतिरिति । यन्मां योद्धुं व्यवस्थितः, अतः स्मृतिर्नास्तीति वा मन्ये । अथवा यमसादनं यमप्रापणम् । व्यक्तं प्रत्यक्षम् प्रत्यासन्नमिति यावत् । यद्वा सादनं सदनम् । स्वार्थेऽण् प्रत्ययः ॥ ११ ॥ तच्छ्रुत्वेति । अभीतवदनः भयविकृतिशून्यवदनः ॥ १२ ॥ दुर्गमः दुर्लभः । कार्याणां यमप्रापणादीनाम् । पारः

वर्षम् ॥ ६–८ ॥ क्षिपत इति । मे युधि ममाग्रत इति सम्बन्धः ॥ ९ ॥ शायितौ, युवामिति शेषः ॥ १० ॥ यन्मां योद्धुं व्यवस्थितः अतस्ते स्मृतिर्नास्ति वा यमसादनं यमलोकप्रापणं व्यक्तं प्रकाशं सन्निहितं त इति सम्बन्धः ॥ रात्रियुद्ध इत्यादिश्लोकद्वयस्य वास्तवार्थस्तु–रात्रियुद्धे मया शरैर्विसंज्ञौ भूमौ शायितौ अथापि ते तव यमसादनं वा यमलोकप्रापणं च अत एव स्मृतिर्वा, भयरूपेति शेषः । भयरूपा स्मृतिश्च नास्तीति व्यक्तं मन्ये । कुतः ? आशीविषमिव क्रुद्धं मां योद्धुं व्यवस्थित इति सम्बन्धः ॥ ११–१२ ॥ उक्तश्चेति । कार्याणां [illegible] [illegible] अपारः दुष्प्रापान्तः त्वया उक्तश्च उक्तः । एतदुक्तिमात्रेण

निर्वाहः। उक्तश्च उक्त एव, न कृतः। अतो दुर्बुद्धिरसीत्यर्थः। कस्तर्हि बुद्धिमानित्यत आह—कार्याणामिति। कार्याणां कर्मणा, आचरणेनेत्यर्थः ॥ १३ ॥ स त्वमिति। अर्थस्येति तादर्थ्यसंबन्धे षष्ठी। अर्थस्य वचः प्रयोजनार्थं वचः ॥ १४ ॥ दृष्टेऽप्यस्मत्पराक्रमे कथमित्थं कथ्यत इत्याशङ्क्य मायामयत्वान्न स वीरसंमत इत्याह—अन्तर्धानेति। आजौ युद्धे ॥ १५ ॥ प्रत्यक्षेणापि योद्धुं शक्तोऽस्मीत्यत आह—यथेति। यथा स्थितोऽस्मि तथैव,

स त्वमर्थस्य हीनार्थो दुरवापस्य केनचित्। वचो व्याहृत्य जानीषे कृतार्थोऽस्मीति दुर्मते ॥ १४॥ अन्तर्धानगतेनाजौ यस्त्वयाऽऽचरितस्तदा। तस्कराचरितो मार्गो नैष वीरनिषेवितः ॥ १५ ॥ यथा बाणपथं प्राप्य स्थितोऽहं तव राक्षस। दर्शयस्वाद्य तत्तेजो वाचा त्वं किं विकत्थसे ॥ १६ ॥ एवमुक्तो धनुर्भीमं परामृश्य महाबलः। ससर्ज निशितान् बाणानिन्द्रजित् समितिञ्जयः ॥ १७ ॥ ते निसृष्टा महावेगाः शराः सर्पविषोपमाः। संप्राप्य लक्ष्मणं पेतुः श्वसन्त इव पन्नगाः ॥ १८ ॥ शरैरति महावेगैर्वेगवान् रावणात्मजः। सौमित्रिमिन्द्रजिद्युद्धे विव्याध शुभलक्षणम् ॥ १९ ॥ स शरैरतिविद्धाङ्गो रुधिरेण समुक्षितः। शुशुभे लक्ष्मणः श्रीमान् विधूम इव पावकः ॥ २० ॥ इन्द्रजित्त्वात्मनः कर्म प्रसमीक्ष्याधिगम्य च। विनद्य सुमहानादमिदं वचनमब्रवीत् ॥२१॥ पत्रिणः शितधारास्ते शरा मत्कार्मुकच्युताः। आदास्यन्तेऽद्य सौमित्रे जीवितं जीवितान्तगाः ॥ २२ ॥

तत्तेजः पूर्वकृतं तेजः दर्शयस्वेत्यन्वयः ॥ १६ ॥ १७ ॥ सर्पविषोपमाः सर्पविषवत् घोराः। पेतुः, भूमाविति शेषः ॥ १८ ॥ शरैरिति। अतिविव्याधेत्यन्वयः। “व्यवहिताश्च” इति व्यवहितप्रयोगः ॥ १९ ॥ २० ॥ अधिगम्य फलवत्त्वेन दृष्ट्वा ॥ २१–२४ ॥

किमायातमिति भावः। यस्तु कार्याणां पारं कर्मणा आचरणेन गच्छति प्राप्नोति स बुद्धिमान् स एव समर्थ इत्यर्थः ॥ १३ ॥ स त्वमिति। दुर्मते! हीनार्थः शत्रुविजयरूपप्रयोजनहीनः स त्वं केनचित् केनापि दुरवाप्यस्यार्थस्य विजयप्रयोजनस्य सम्बन्धि वचो व्याहृत्य कृतार्थोऽस्मि कृतकृत्योऽस्मीति जानीष इति योजना ॥ १४ ॥ मत्कृतं पराक्रमं सम्यगनुभूयापि किमर्थमेवमुच्यत इत्यत्राह—अन्तर्धानगतेनेति ॥ १५ ॥ विनाप्यन्तर्धानेन पराक्रमितुं शक्यमित्यत्राह—यथेति। यथा यत्तेजः पूर्वं कृतं तत्तेजः ॥ १६–२१ ॥ पत्रिणः शितधारा इत्यादिश्लोकचतुष्टयस्य मत्कृतार्थः स्पष्टः। वास्तवार्थस्तु—हे सौमित्रे! मत्कार्मुकच्युताः

विशस्तेति । विशस्तं भिन्नं कवचं यस्य तं त्वां रामः [illegible] ॥ २५ ॥ २६ ॥ अथ इदानीम् ॥२७-३०॥ सुपत्रवाजिताः सुपत्रैः





अद्य गोमायुसङ्घाश्च श्येनसङ्घाश्च लक्ष्मण । गृध्राश्च निपतन्तु त्वां गतासुं निहतं मया ॥ २३ ॥ क्षत्रबन्धुं सदानार्यं रामः परमदुर्मतिः । भक्तं भ्रातरमद्यैव त्वां द्रक्ष्यति मया हतम् ॥ २४ ॥ विशस्तकवचं भूमौ व्यपविद्धशरासनम् । हतोत्तमाङ्गं सौमित्रे त्वामद्य निहतं मया ॥ २५ ॥ इति ब्रुवाणं संरब्धं परुषं रावणात्मजम् । हेतुमद्वाक्यमत्यर्थं लक्ष्मणः प्रत्युवाच ह ॥२६॥ वाग्बलं त्यज दुर्बुद्धे क्रूरकर्माऽसि राक्षस । अथ कस्माद्वदस्येतत् सम्पादय सुकर्मणा ॥२७॥ अकृत्वा कत्थसे कर्म किमर्थमिह राक्षस । कुरु तत्कर्म येनाहं श्रद्दध्यां तव कत्थनम् ॥२८॥ अनुक्त्वा परुषं वाक्यं किंचिदप्यनवक्षिपन् । अविकत्थन् वधिष्यामि त्वां पश्य पुरुषाधम ॥२९॥ इत्युक्त्वा पञ्च नाराचानाकर्णापूरितान् शितान् । निजघान महावेगान् लक्ष्मणो राक्षसोरसि ॥ ३० ॥ सुपत्रवाजिता बाणा ज्वलिता इव पन्नगाः । नैर्ऋतोरस्यभासन्त सवितू रश्मयो यथा ॥ ३१ ॥ स शरैराहतस्तेन सरोषो रावणात्मजः । सुप्रयुक्तैस्त्रिभिर्बाणैः प्रतिविव्याध लक्ष्मणम् ॥ ३२ ॥ स बभूव तदा भीमो नरराक्षससिंहयोः । विमर्दस्तुमुलो युद्धे परस्परजयैषिणोः ॥३३॥

सञ्जातवेगाः ॥ ३१ ॥ ३२ ॥ स बभूवेति । विमर्दः सङ्घर्षः ॥ ३३ ॥

अशराः, अप्रयोजकशरा इत्यर्थः । ते तव शितधाराः जीवितान्तगाः पत्रिणः मत्तः जीवितमादास्यन्त इति सम्बन्धः ॥ २२ ॥ हे लक्ष्मण ! त्वां त्वामुद्दिश्य । मया लक्ष्म्या लङ्कैश्वर्येण सह गतासुम्, मामिति शेषः । गोमाय्वादयः निपतन्त्विति सम्बन्धः ॥ २३ ॥ सदानार्यमित्यत्र सदान आर्यमिति छेदः । हे सदान दानसहित ! दानशीलेत्यर्थः । क्षत्रबन्धुं क्षत्रस्य राघवस्य बन्धुम् । कुतः भ्रातरम् अत एव आर्यं मया अहतं त्वां परमदुर्मतिः परमदुष्टेष्वपि मतिः अनुग्रहरूपा यस्य सः रामः, अद्य द्रक्ष्यतीति सम्बन्धः ॥ २४ ॥ विशस्तेति । हे सौमित्रे ! त्वां विनेति शेषः । विशस्तकवचं हतोत्तमाङ्गं मया निहतं, सैन्यं स्थिति शेषः । रामो द्रक्ष्यतीति पूर्वेण सम्बन्धः ॥ २५–३० ॥ सुपत्रेति । सुपत्रवाजिताः सुपत्रैस्सञ्जातवेगाः ॥ ३१ ॥ ३२ ॥ विमर्दः सङ्घर्षः ॥ ३३ ॥ ३४ ॥

उभौ हीत्यादिसार्धश्लोक एकान्वयः । सुविक्रान्तौ सुष्ठुपराक्रमौ ॥ ३४ ॥ ३५ ॥ युयुधाते इत्यादावर्धम् ॥३६॥ बलेति । बलशब्दो बलशत्रिन्द्रपरः । नामैकदेशे नामग्रहणात् ॥ ३७॥ ३८ ॥ सुसंप्रहृष्टाविति । शरौघः, मेघपक्षे जलौघः । शरशब्दो हि जलवाची, शरधिरिति समुद्रपर्यायात् ॥ ३९ ॥ ४० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टाशीतितमः सर्गः ॥ ८८ ॥

उभौ हि बलसम्पन्नावुभौ विक्रमशालिनौ ॥ ३४ ॥ उभावपि सुविक्रान्तौ सर्वशस्त्रास्त्रकोविदौ । उभौ परमदुर्जेयावतुल्यबलतेजसौ ॥ ३५ ॥ युयुधाते तदा वीरौ ग्रहाविव नभोगतौ ॥३६॥ बलवृत्राविवाभीतौ युधि तौ दुष्प्रधर्षणौ । युयुधाते महात्मानौ तदा केसरिणाविव ॥ ३७॥ बहूनवसृजन्तौ हि मार्गणौघानवस्थितौ । नरराक्षससिंहौ तौ प्रहृष्टावभ्ययुध्यताम् ॥ ३८ ॥ सुसंप्रहृष्टौ नरराक्षसोत्तमौ जयैषिणौ मार्गणचापधारिणौ । परस्परं तौ प्रववर्षतुर्भृशं शरौघवर्षेण बलाहकाविव ॥ ३९ ॥ अभिप्रवृद्धौ युधि युद्धकोविदौ शरासिचण्डौ शितशस्त्रधारिणौ । अभीक्ष्णमाविव्यधतुर्महाबलौ महाहवे शम्बरवासवाविव ॥ ४० ॥ इत्यार्षे० श्रीमद्युद्धकाण्डे अष्टाशीतितमः सर्गः ॥८८॥

ततः शरं दाशरथिः सन्धायामित्रकर्शनः । ससर्ज राक्षसेन्द्राय क्रुद्धः सर्प इव श्वसन् ॥ १ ॥ तस्य ज्यातलनिर्घोषं स श्रुत्वा रावणात्मजः । विवर्णवदनो भूत्वा लक्ष्मणं समुदैक्षत ॥ २ ॥ तं विवर्णमुखं दृष्ट्वा राक्षसं रावणात्मजम् । सौमित्रिं युद्धसंयुक्तं प्रत्युवाच विभीषणः ॥ ३ ॥ निमित्तान्यनुपश्यामि यान्यस्मिन् रावणात्मजे । त्वर तेन महाबाहो भग्न एष न संशयः ॥ ४ ॥

अथ लक्ष्मणेन्द्रजितोः सुमहान् संप्रहारः—ततः शरमित्यादि ॥ १ ॥ २ ॥ तमिति । सौमित्रिं प्रति उद्दिश्य ॥ ३ ॥ निमित्तानीति । अस्मिन् यानि मुख

अतिविक्रान्तौ कृतपराक्रमौ ॥ ३५ ॥३६ ॥ बलवृत्राविवेत्यत्र बलशब्दः पुरन्दरवाची ॥३७–४०॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० युद्धकाण्डव्याख्यायाम् अष्टाशीतितमः सर्गः ॥ ८८ ॥ [ सुसंप्रहृष्टावित्यादिश्लोकद्वयं सर्गान्त्यत्वच्छेदकत्वेन प्रक्षिप्तमिति सम्प्रदायः ] ॥१॥२॥ युद्धसंयुक्तं युद्धजन कहर्षसंयुक्तम् ॥ ३ ॥ निमित्तानीति । अस्मिन्

वैवर्ण्यस्तब्धत्वादीनि निमित्तानि अनुपश्यामि, तैरयं भग्न इति जाने । तेन कारणेन त्वर त्वरस्व ॥ ४ ॥ ५ ॥ शक्राशनीति । सर्वसंक्षुभितेन्द्रियः संक्षुभितसर्वेन्द्रियः ॥६–८॥ किमिति । त्वं भ्रात्रा सह निबद्ध इति यत्, प्रथमे तद्युद्धे तस्मिन् युद्धे मत्पराक्रमं त्वन्निबन्धनरूपं न स्मरसि किम् ? यदा यत्र

ततः सन्धाय सौमित्रिर्बाणानग्निशिखोपमान् । मुमोच निशितांस्तस्मिन् सर्पानिव महाविषान् ॥५॥ शक्राशनिसमस्पर्शैर्लक्ष्मणेनाहतः शरैः । मुहूर्तमभवन्मूढः सर्वसंक्षुभितेन्द्रियः ॥ ६ ॥ उपलभ्य मुहूर्तेन संज्ञां प्रत्यागतेन्द्रियः । ददर्शावस्थितं वीरं वीरो दशरथात्मजम् ॥ ७ ॥ सोऽभिचक्राम सौमित्रिं रोषात् संरक्तलोचनः । अब्रवीच्चैनमासाद्य पुनः स परुषं वचः ॥ ८ ॥ किं न स्मरसि तद्युद्धे प्रथमे मत्पराक्रमम् । निबद्धस्त्वं सह भ्रात्रा यदा भुवि विवेष्टसे ॥ ९ ॥ युवां खलु महायुद्धे शक्राशनिसमैः शरैः । शायितौ प्रथमं भूमौ विसंज्ञौ सपुरस्सरौ ॥१०॥ स्मृतिर्वा नास्ति ते मन्ये व्यक्तं वा यमसादनम् । गन्तुमिच्छसि यस्मात्त्वं मां धर्षयितुमिच्छसि ॥ ११ ॥ यदि ते प्रथमे युद्धे न दृष्टो मत्पराक्रमः । अद्य ते दर्शयिष्यामि तिष्ठेदानीं व्यवस्थितः ॥ १२ ॥ इत्युक्त्वा सप्तभिर्बाणैरभिविव्याध लक्ष्मणम् । दशभिस्तु हनूमन्तं तीक्ष्णधारैः शरोत्तमैः ॥ १३ ॥ ततः शरशतेनैव सुप्रयुक्तेन वीर्यवान् । क्रोधाद्द्विगुणसंरब्धो निर्बिभेद विभीषणम् ॥ १४ ॥

युद्धकाले, विवेष्टसे विवेष्टितवानसि ॥ ९॥ तमेव पराक्रमं विशिनष्टि–युवामिति ॥१०॥ स्मृतिरिति । व्यक्तं नूनमित्यर्थः ॥११–१३॥ तत इति । क्रोधा

यानि मुखवैवर्ण्यादीनि निमित्तान्यनुपश्यामि तैरयं भग्न इति जाने, तेन कारणेन त्वर त्वरस्वेत्यर्थः ॥ ४ ॥ ५ ॥ सर्वसंक्षुभितेन्द्रियः संक्षुभितसर्वेन्द्रियः ॥ ६–८ ॥ किमिति । प्रथमे तद्युद्धे भ्रात्रा सह बद्ध इति यत् तत्पराक्रमं न स्मरसि किम् ? ॥ ९ ॥ तमेव पराक्रमं विशिनष्टि–युवामिति । युवामिति श्लोकद्वयस्य भातीतिकार्थः स्पष्टः । वस्तुतस्तु–शरैर्युवां विसंज्ञौ भूमौ शायितौ तथापि ते तव यमसादनं वा यमलोकगमनं च स्मृतिर्वा भयरूपा स्मृतिश्च नास्तीति व्यक्तं मन्ये । कुतः ? यस्मान्मां धर्षयितुमिच्छसीति सम्बन्धः ॥ १०–१४ ॥

द्विगुणसंरब्ध इति । लक्ष्मणादिविषयरोषापेक्षया विभीषणविषये द्विगुणं कुपित इत्यर्थः ॥ १४ ॥ तद्दृष्ट्वेत्यादिसार्धश्लोक एकान्वयः । नैतत्किञ्चिदिति ब्रुवन् एतदकिञ्चित्करमिति ब्रुवन्नित्यर्थः ॥ १५ ॥ अभीतवदन इत्यादिसार्धश्लोकद्वयमेकान्वयम् । अकिञ्चित्करत्वमेवाह—नैवमिति ॥ १६–१९ ॥



तद्दृष्ट्वेन्द्रजिता कर्म कृतं रामानुजस्तदा। अचिन्तयित्वा प्रहसन् नैतत् किञ्चिदिति ब्रुवन् । मुमोच स शरान् घोरान् संगृह्य नरपुङ्गवः ॥१५॥ अभीतवदनः क्रुद्धो रावणिं लक्ष्मणो युधि। नैवं रणगताः शूराः प्रहरन्ते निशाचर ॥१६॥ लघवश्चाल्पवीर्याश्च सुखा हीमे शरास्तव । नैवं शूरास्तु युध्यन्ते समरे जयकांक्षिणः ॥ १७ ॥ इत्येवं तं ब्रुवाणस्तु शरवर्षैरवाकिरत् ॥ १८ ॥ तस्य बाणैः सुविध्वस्तं कवचं हेमभूषितम् । व्यशीर्यत रथोपस्थे ताराजालमिवाम्बरात् ॥ १९ ॥ विधूतवर्मा नाराचैर्बभूव स कृतव्रणः । इन्द्रजित् समरे वीरः प्ररूढ इव सानुमान् ॥ २० ॥ ततः शरसहस्रेण संक्रुद्धो रावणात्मजः । विभेद समरे वीरं लक्ष्मणं भीमविक्रमः ॥ २१ ॥ व्यशीर्यत महादिव्यं कवचं लक्ष्मणस्य च । कृतप्रतिकृतान्योन्यं बभूवतुरभिद्रुतौ ॥ २२ ॥ अभीक्ष्णं निश्वसन्तौ तौ युद्ध्येतां तुमुलं युधि । शरसंकृत्तसर्वाङ्गौ सर्वतो रुधिरोक्षितौ ॥२३॥ सुदीर्घकालं तौ वीरावन्योन्यं निशितैः शरैः । ततक्षतुर्महात्मानौ रणकर्मविशारदौ ॥ २४ ॥ बभूवतुश्चात्मजये यत्तौ भीमपराक्रमौ । तौ शरौघैस्तदा कीर्णौ निकृत्तकवचध्वजौ । स्रवन्तौ रुधिरं चोष्णं जलं प्रस्रवणाविव ॥ २५ ॥ शरवर्षं ततो घोरं मुञ्चतोर्भीमनिस्वनम् । सासारयोरिवाकाशे नीलयोः कालमेघयोः ॥ २६ ॥

विधूतेति । प्ररूढः प्ररूढवृक्षः ॥ २० ॥ २१ ॥ व्यशीर्यतेति । कृते प्रतिकृतम् अन्योन्यं यस्मिन् कर्मणि तत्तथोक्तम् ॥ २२ ॥ युद्ध्येताम् अयुद्ध्येताम् ॥ २३ ॥ सुदीर्घकालमिति । ततक्षतुः अन्योन्यं बभञ्जतुः ॥ २४ ॥ बभूवतुरित्यादि । यत्तौ यत्नवन्तौ ॥ २५ ॥ शरवर्षमित्यादिश्लोकद्वयमेका

नैतत्किञ्चित्तदाऽब्रवीत् एतन्न किञ्चिदकिञ्चित्करमित्यब्रवीदित्यर्थः ॥ १५ ॥ अकिञ्चित्करत्वमेवाह—नैवमिति ॥ १६ ॥ एवंशब्दार्थो लघव इति । पुष्पमालावल्लघव इमे तव शरा मे सुखाः, न तु क्लेशदा इत्यर्थः ॥ १७–१९ ॥ प्ररूढ इव सानुमान् सानुमानिव प्ररूढः निश्चलः बभूव ॥ २० ॥ २१ ॥ कृतप्रतिकृतान्योन्यं कृते

न्वयम् । सासारयोः सधारापातयोः । "धारासंपात आसारः" इत्यमरः ॥ २६–२८ ॥ व्यपेतदोषं व्यपगतमोहत्वदोषम् । अस्यन्तौ बाणान् क्षिपन्तौ ॥ २९–३१ ॥ धृतौ अवहितौ ॥ ३२ ॥ ३३ ॥ अन्य इति । तयोः अन्ये केचन बाणाः आकाशे सुनिशितैः शस्त्रैः सञ्जघट्टिरे सङ्घट्टिताः । अन्ये बाणाः



तयोरथ महान् कालो व्यत्ययाद्युध्यमानयोः । न च तौ युद्धवैमुख्यं श्रमं वाप्युपजग्मतुः ॥२७॥ अस्त्राण्यस्त्रविदां श्रेष्ठौ दर्शयन्तौ पुनः पुनः । शरानुच्चावचाकारानन्तरिक्षे बबन्धतुः॥२८॥ व्यपेतदोषमस्यन्तौ लघु चित्रं च सुष्ठु च । उभौ तौ तुमुलं घोरं चक्रतुर्नरराक्षसौ ॥ २९ ॥ तयोः पृथक्पृथग् भीमः शुश्रुवे तलनिस्वनः । प्रकम्पयन् जनं घोरो निर्घात इव दारुणः ॥ ३० ॥ स तयोर्भ्राजते शब्दस्तदा समरसक्तयोः । सुघोरयोर्निष्टनतोर्गगने मेघयोर्यथा ॥ ३१ ॥ सुवर्णपुङ्खैर्नाराचैर्बलवन्तौ कृतव्रणौ । प्रसुस्रुवाते रुधिरं कीर्तिमन्तौ जये धृतौ ॥ ३२ ॥ ते गात्रयोर्निपतिता रुक्मपुङ्खाः शरा युधि । असृग्दिग्धा विनिष्पत्य विविशुर्धरणीतलम् ॥ ३३ ॥ अन्ये सुनिशितैः शस्त्रैराकाशे सञ्जघट्टिरे । बभञ्जुश्चिच्छिदुश्चान्ये तयोर्बाणाः सहस्रशः ॥३४॥ स बभूव रणो घोरस्तयोर्बाणमयश्चयः । अग्निभ्यामिव दीप्ताभ्यां सत्रे कुशमयश्चयः ॥ ३५ ॥ तयोः कृतव्रणौ देहौ शुशुभाते महात्मनोः । सपुष्पाविव निष्पत्रौ वने शाल्मलिकिंशुकौ ॥ ३६ ॥ चक्रतुस्तुमुलं घोरं सन्निपातं मुहुर्मुहुः । इन्द्रजिल्लक्ष्मणश्चैव परस्परवधैषिणौ ॥ ३७ ॥ लक्ष्मणो रावणिं युद्धे रावणिश्चापि लक्ष्मणम् । अन्योन्यं तावभिघ्नन्तौ न श्रमं प्रत्यपद्यताम् ॥ ३८ ॥

बाणान् सहस्रशः बभञ्जुः चिच्छिदुश्चेति सम्बन्धः ॥ ३४ ॥ सः रणः घोरो बभूव । यस्मिन् तयोर्बाणमयश्चयः सत्रे दीप्ताभ्यामग्निभ्यां सहितः कुशमयश्चय इवासीत् । अग्नी गार्हपत्याहवनीयौ ॥ ३५ ॥ ३६ ॥ सन्निपातं युद्धम् ॥ ३७ ॥ प्रत्यपद्यतां प्रत्यपद्येताम् ॥ ३८ ॥ ३९ ॥



प्रतिकृतम् अन्योन्यं यस्मिन् कर्मणि तत्तथा ॥ २२–२६ ॥ महान् कालः अनेकदिनरूपः ॥ २७–३१ ॥ जये धृतौ दृढोत्साहौ ॥ ३२–३४ ॥ स रावणिः घोरो बभूव । तस्मिन् रणे तयोर्बाणमयः चयः सत्रे दीप्ताभ्यामग्निभ्यां सहितः कुशमयश्चय इव आस्ते ॥ ३५ ॥ ३६ ॥ सन्निपातं युद्धम् ॥ ३७ ॥ ३८ ॥

तयोरिति । बभ्राजुः । आर्षं परस्मैपदम् ॥४०–४२॥ इति श्रीगोविन्द॰ श्रीरामायणभू॰ रत्नाकरा॰ युद्धकाण्डव्याख्याने एकोननवतितमः सर्गः ॥८९॥
अथेन्द्रजितो रथभङ्गः—युध्यमानौ त्वित्यादिश्लोकद्वयमेकान्वयम् । प्रभिन्नौ मत्तमातङ्गाविव परस्परगतौ परस्परं युद्धार्थं सङ्गतौ तौ लक्ष्मणेन्द्रजितौ

बाणजालैः शरीरस्थैरवगाढैस्तरस्विनौ । शुशुभाते महावीर्यौ प्ररूढाविव पर्वतौ ॥ ३९ ॥ तयो रुधिरसिक्तानि संवृतानि शरैर्भृशम् । बभ्राजुः सर्वगात्राणि ज्वलन्त इव पावकाः ॥ ४० ॥ तयोरथ महान् कालो व्यत्ययाद्युध्यमानयोः । न च तौ युद्धवैमुख्यं श्रमं वाप्युपजग्मतुः ॥ ४१ ॥ अथ समरपरिश्रमं निहन्तुं समरमुखेष्वजितस्य लक्ष्मणस्य । प्रियहितमुपपादयन् महौजाः समरमुपेत्य विभीषणोऽवतस्थे ॥ ४२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

युध्यमानौ तु तौ दृष्ट्वा प्रसक्तौ नरराक्षसौ । प्रभिन्नाविव मातङ्गौ परस्परवधैषिणौ ॥ १ ॥
तौ द्रष्टुकामः सङ्ग्रामे परस्परगतौ बली । शूरः स रावणभ्राता तस्थौ सङ्ग्राममूर्धनि ॥ २ ॥
ततो विस्फारयामास महद्धनुरवस्थितः । उत्ससर्ज च तीक्ष्णाग्रान् राक्षसेषु महाशरान् ॥ ३ ॥

प्रथमं द्रष्टुकामः स विभीषणस्तौ दृष्ट्वा संग्राममूर्धनि योद्धुं तस्थावित्यन्वयः । स्वयं प्रथमं युद्धं कर्तुमुद्युक्तोऽपि तयोर्बलाधिक्यं द्रष्टुं तूष्णीं स्थितः । तयोर्बलतौल्ये दृष्टे स्वस्य रामविषयकिञ्चित्कारार्थमिदानीं युद्धाय तस्थावित्यर्थः ॥ १॥२॥ तत इति । धनुः तादात्विकं किंचित् । विभीषणस्य केवलगदा

प्ररूढौ रूढवृक्षौ ॥ ३९–४१ ॥ समरपरिश्रमम्, इन्द्रजितमिति शेषः ॥ ४२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकोननवतितमः सर्गः ॥ ८९ ॥ युद्ध्यमानावित्यादि श्लोकद्वयमेकं वाक्यम् । प्रभिन्नौ मत्तौ । परस्परगतौ परस्परं युद्धार्थं सङ्गतौ । लक्ष्मणेन्द्रजितौ प्रथमं द्रष्टुकामः स विभीषणः तौ दृष्ट्वा सङ्ग्राममूर्धनि योद्धुं तस्थावित्यर्थः ॥ १–३ ॥

पाणित्वात् ॥ ३ ॥ ते शरा इति । वज्राणि अशनयः ॥ ४–७ ॥ परायणं गतिः ॥ ८ ॥ ९ ॥ [illegible]तांश्च राक्षसान् युद्धे हतान् कांश्चित्परिगणयत्यु
त्साहनाय–प्रहस्त इत्यादिना श्लोकपञ्चकेन । अकम्पनः कम्पनश्च राक्षसौ सर्वत्र निहत इत्यनेनान्वयः । देवान्तकनरान्तकावित्यत्र निहताविति विपरि





ते शराः शिखिसङ्काशा निपतन्तः समाहिताः । राक्षसान् दारयामासुर्वज्राणीव महागिरीन् ॥४॥ विभीषणस्यानु चरास्तेऽपि शूलासिपट्टिशैः । चिच्छिदुः समरे वीरान् राक्षसान् राक्षसोत्तमाः ॥ ५ ॥ राक्षसैस्तैः परिवृतः स तदा तु विभीषणः । बभौ मध्ये प्रहृष्टानां कलभानामिव द्विपः ॥ ६ ॥ ततः सञ्चोदयानो वै हरीन् रक्षो रणप्रियान् । उवाच वचनं काले कालज्ञो रक्षसां वरः ॥ ७ ॥ एकोऽयं राक्षसेन्द्रस्य परायणमिव स्थितः । एतच्छेषं बलं तस्य किं तिष्ठत हरीश्वराः॥८॥ अस्मिन् विनिहते पापे राक्षसे रणमूर्धनि । रावणं वर्जयित्वा तु शेषमस्य हतं बलम् ॥९॥ प्रहस्तो निहतो वीरो निकुम्भश्च महाबलः। कुम्भकर्णश्च कुम्भश्च धूम्राक्षश्च निशाचरः॥१०॥ जम्बुमाली महामाली तीक्ष्णवेगोऽशनिप्रभः । सुप्तघ्नो यज्ञकोपश्च वज्रदंष्ट्रश्च राक्षसः ॥ ११ ॥ संह्रादी विकटो निघ्नस्तपनो दम एव च । प्रघासः प्रघसश्चैव प्रजङ्घो जङ्घ एव च ॥ १२ ॥ अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च वीर्यवान् । विद्युज्जिह्वो द्विजिह्वश्च सूर्यशत्रुश्च राक्षसः ॥१३॥ अकम्पनः सुपार्श्वश्च चक्रमाली च राक्षसः । कम्पनः सत्त्ववन्तौ तौ देवान्तकनरान्तकौ ॥ १४ ॥ एतान्निहत्यातिबलान् बहून् राक्षससत्तमान् । बाहुभ्यां सागरं तीर्त्वा लङ्घ्यतां गोष्पदं लघु ॥ १५ ॥

णामः कार्यः ॥ १०–१४ ॥ एतान् राक्षससत्तमान् निहत्य स्थितानां भवताम् इन्द्रजितो हननम्, बाहुभ्यां सागरं तीर्त्वा स्थितस्य पुंसो गोष्पदतरण मिव सुकरमिति निदर्शना । बाहुभ्यां सागरं तीर्त्वैव एतानतिबलान् बहून् राक्षससत्तमान् निहत्य स्थितैः भवद्भिः गोष्पदमिव लघु इन्द्रजिद्धननरूपं वज्राणि अशनयः ॥ ४–१५ ॥

स्वल्पं कार्यं लङ्घ्यतामित्यन्वयः ॥ १५ ॥ एतावदेव इन्द्रजिन्मात्रमेव ॥ १६ ॥ जनितुः जनयितुः, पितृव्यस्येत्यर्थः ॥ १७ ॥ हन्तुकामस्येति । बाष्पं


एतावदेव शेषं वो जेतव्यमिह वानराः । हताः सर्वे समागम्य राक्षसा बलदर्पिताः ॥ १६ ॥ अयुक्तं निधनं कर्तुं पुत्रस्य जनितुर्मम । घृणामपास्य रामार्थे निहन्यां भ्रातुरात्मजम् ॥ १७ ॥ हन्तुकामस्य मे बाष्पं चक्षुश्चैव निरुद्धयति । तमेवैष महाबाहुर्लक्ष्मणः शमयिष्यति । वानरा घ्नत सम्भूय भृत्यानस्य समीपगान् ॥ १८ ॥ इति तेनातियशसा राक्षसेनाभिचोदिताः । वानरेन्द्रा जहर्षिरे लाङ्गूलानि च विव्यधुः ॥ १९ ॥ ततस्ते कपिशार्दूलाः क्ष्वेलन्तश्च मुहुर्मुहुः । मुमुचुर्विविधान्नादान् मेघान् दृष्ट्वेव बर्हिणः ॥२०॥ जाम्बवानपि तैः सर्वैः स्वयूथैरपि संवृतः । अश्मभिस्ताडयामास नखैर्दन्तैश्च राक्षसान् ॥ २१ ॥ निघ्नन्तमृक्षाधिपतिं राक्षसास्ते महाबलाः । परिवव्रुर्भयं त्यक्त्वा तमनेकविधायुधाः ॥ २२ ॥ शरैः परशुभिस्तीक्ष्णैः पट्टिशैर्यष्टितोमरैः । जाम्बवन्तं मृधे जघ्नुर्निघ्नन्तं राक्षसीं चमूम् ॥ २३ ॥ स सम्प्रहारस्तुमुलः सञ्जज्ञे कपिरक्षसाम् । देवासुराणां क्रुद्धानां यथा भीमो महास्वनः ॥ २४ ॥ हनुमानपि संक्रुद्धः सालमुत्पाट्य वीर्यवान् । [ स लक्ष्मणं स्वयं पृष्ठादवरोप्य महामनाः ॥ ] रक्षसां कदनं चक्रे समासाद्य सहस्रशः ॥ २५ ॥ स दत्त्वा तुमुलं युद्धं पितृव्यस्येन्द्रजिद्युधि । लक्ष्मणं परवीरघ्नं पुनरेवाभ्यधावत ॥ २६ ॥ तौ प्रयुद्धौ तदा वीरौ मृधे लक्ष्मणराक्षसौ । शरौघानभिवर्षन्तौ जघ्नतुस्तौ परस्परम् ॥ २७ ॥ अभीक्ष्णमन्तर्दधतुः शरजालैर्महाबलौ । चन्द्रादित्याविवोष्णान्ते यथा मेघैस्तरस्विनौ ॥ २८ ॥

कर्तृ, चक्षुः निरुद्धयति निरुणद्धि ॥ १८–२३ ॥ यथा भीम इति । महास्वनो देवानां संप्रहारो यथा तथेत्यर्थः ॥ २४ ॥ हनुमानिति । अत्र हनुमतो

एतावदेवेति । एतावदेव इन्द्रजिन्मात्रमेव शेषम् ॥ १६ ॥ जनितुः पितृव्यस्य ॥ १७ ॥ हन्तुकामस्येति । बाष्पं कर्तृ । निरुध्यति निरुणद्धि ॥ १८–२४ ॥ हनुमानपीति । अत्र हनुमतो युद्धकथनात् विश्रमार्थं स्वस्मिन् स्थितो लक्ष्मणोऽवरोपित इत्यवगम्यते ॥ २५ ॥ २६ ॥ प्रयुद्धौ योद्धुमुपक्रान्तौ ॥२७॥ उष्णान्ते वर्षादौ ।

युद्धकथनात् किंचिद्विश्रमार्थं तस्य पृष्ठादवरूढो लक्ष्मण इत्यवगम्यते।  सदस्त्रैः कदनमित्यन्वयः ॥ २६–२८ ॥ न ह्यादानमित्यादिश्लोकद्वयमेकान्वयम्। आदानं बाणस्य तूणादुद्धरणम्। सन्धानम् उद्धृतस्य बाणस्य धनुष्यवस्थापनम्। धनुषो वा परिग्रहः सव्यापसव्यत्वेन कार्मुकग्रहणम्। बाणानां

न ह्यादानं न सन्धानं धनुषो वा परिग्रहः। न विप्रमोक्षो बाणानां न विकर्षो न विग्रहः ॥२९॥ न मुष्टिप्रतिसन्धानं न लक्ष्यप्रतिपादनम्। अदृश्यत तयोस्तत्र युध्यतोः पाणिलाघवात् ॥ ३० ॥ चापवेगविनिर्मुक्तबाणजालैः समन्ततः। अन्तरिक्षे हि सञ्छन्ने न रूपाणि चकाशिरे ॥ ३१ ॥ लक्ष्मणो रावणिं प्राप्य रावणिश्चापि लक्ष्मणम्। अव्यवस्था भवत्युग्रा ताभ्यामन्योन्यविग्रहे ॥ ३२ ॥ ताभ्यामुभाभ्यां तरसा विसृष्टैर्विशिखैः शितैः। निरन्तरमिवाकाशं बभूव तमसावृतम् ॥ ३३ ॥

विप्रमोक्षः विसर्जनम्। विकर्षः आकर्णग्रहणम्। विग्रहः आलीढाद्यवस्थानविशेषः, सावष्टम्भावस्थानं वा, धनुर्ज्यादीनां प्रविभागो वा। "विग्रहः समरे काये विरोधप्रविभागयोः" इति विश्वः। मुष्टिप्रतिसन्धानं ज्याकार्मुकयोर्मुष्टिबन्धनम्। लक्ष्यप्रतिपादनं लक्ष्यप्रापणम्, लक्ष्यवेध इति यावत् ॥२९॥३०॥ चापवेगेति। रूप्यन्त इति रूपाणि वस्तूनि। बाणव्यतिरेकेण न किंचित्तदानीं दृश्यत इति भावः ॥ ३१ ॥ लक्ष्मण इति। लोकव्यवहारानुसारेणात्र क्रियाकारकसम्बन्धः। लक्ष्मणो रावणिं रावणिश्चापि लक्ष्मणं प्राप्य ताभ्यामन्योन्यविग्रहे अन्योन्याभिभवे उग्रा अव्यवस्था भवति। अन्योन्यप्रासावय

चन्द्रादित्याविव स्थितौ महाबलौ मेघैर्यथा मेघैरिव शरजालैः अभीक्ष्णम् अन्तर्दधतुः अदृश्यौ बभूवतुः ॥२८॥ न ह्यादानमिति। धनुषो वा परिग्रहः सव्यापसव्येन कार्मुकग्रहणम्। विग्रहः आलीढाद्यवस्थानविशेषः। मुष्टेः प्रतिसन्धानं ज्याकार्मुकयोर्मुष्टिबन्धनम्। लक्ष्यप्रतिपादनं लक्ष्यवेधः ॥ २९ ॥ ३० ॥ चापवेगेति। रूप्यन्त इति रूपाणि। बाणव्यतिरेकेण न किञ्चित्तदानीमदृश्यतेति भावः ॥ ३१ ॥ लक्ष्मण इति। लक्ष्मणश्च रावणिं रावणिश्चापि लक्ष्मणं प्राप्य, अयुद्ध्येतामिति शेषः।

स०–लक्ष्मणो रावणिं प्राप्य रावणिरपि लक्ष्मणं प्राप्येत्येवं स्थिताभ्यां ताभ्याम् अन्योन्यविग्रहे युद्धे उग्रा दुःखकारणत्वात्क्रूरा अव्यवस्था इममिदानीं जेष्यामीति सङ्कल्पासिद्धिरूपा भवति अभूत्। एवं चोक्तरीत्याऽव्यवस्थाया उग्रत्वे सम्भवति सति 'उग्रत्वस्य निरूपयितुमशक्यत्वात्' इति यन्नागोजिभट्टेनोक्तं तदसङ्गतम्। उग्रत्वस्य निरूपयितुमशक्यत्वादित्यनेनैव वैयर्थ्यलाभे उग्रेति विशेषणवैयर्थ्याचेति दूषणान्तरतया कथनं त्वसङ्गततरमिति ज्ञेयम् ॥ ३२ ॥

मेनं निगृह्णाति अयं वा एनमिति निश्चयो नाभवदित्यर्थः । यद्वा रावणिं लक्ष्मणो रावणिश्चापि लक्ष्मणं प्राप्य, अयुध्येतामिति शेषः । ताभ्यां तथा युद्धं कुर्वद्भ्याम्, अन्योन्यविग्रहे परस्परप्रहारे क्रियमाणे उग्रा अव्यवस्था भवति, क्षणे क्षणे जयपराजयनियमो नाभूदित्यर्थः ॥ ३२ ॥ ३३ ॥ तैः पतद्भि

तैः पतद्भिश्च बहुभिस्तयोः शरशतैः शितैः । दिशश्च प्रदिशश्चैव बभूवुः शरसङ्कुलाः ॥ ३४ ॥ तमसा संवृतं सर्वमासीद्भीमतरं महत् । अस्तं गते सहस्रांशौ संवृतं तमसेव हि ॥ ३५ ॥ रुधिरौघमहानद्यः प्रावर्तन्त सहस्रशः । क्रव्यादा दारुणा वाग्भिश्चिक्षिपुर्भीमनिस्वनम् ॥ ३६ ॥ न तदानीं ववौ वायुर्न च जज्वाल पावकः । स्वस्त्यस्तु लोकेभ्य इति जजल्पुश्च महर्षयः ॥ ३७ ॥ सम्पेतुश्चात्र सम्प्राप्ता गन्धर्वाः सह चारणैः ॥ ३८ ॥ अथ राक्षससिंहस्य कृष्णान् कनकभूषणान् । शरैश्चतुर्भिः सौमित्रिर्विव्याध चतुरो हयान् ॥ ३९ ॥ ततोऽपरेण भल्लेन शितेन निशितेन च । सम्पूर्णायतमुक्तेन सुपत्रेण सुवर्चसा ॥ ४० ॥ महेन्द्राशनिकल्पेन सुतस्य विचरिष्यतः । स तेन बाणाशनिना तलशब्दानुनादिना ॥ ४१ ॥ लाघवाद्राघवः श्रीमान् शिरः कायादपाहरत् ॥ ४२ ॥ स यन्तरि महातेजा हते मन्दोदरीसुतः ॥ ४३ ॥ स्वयं सारथ्यमकरोत् पुनश्च धनुरस्पृशत् । तदद्भुतमभूत्तत्र सामर्थ्यं पश्यतां युधि ॥ ४४ ॥ हयेषु व्यग्रहस्तं तं विव्याध निशितैः शरैः । धनुष्यथ पुनर्व्यग्रे हयेषु मुमुचे शरान् ॥ ४५ ॥

रित्यादिश्लोकद्वयमेकान्वयम् । शरशतैः निमित्तभूतैः । महत् अत्यन्तम् ॥ ३४ ॥ ३५ ॥ रुधिरौघेति । चिक्षिपुः चक्रुः ॥ ३६ ॥ न तदानीमित्यादि । अत्र युद्धस्थले पूर्वं संप्राप्ताः गन्धर्वाः चारणैः सह संपेतुः, अन्यत्र गता इत्यर्थः । अतिघोरयुद्धदर्शनभयादिति भावः ॥ ३७–३९ ॥ ततोऽपरेणेत्यादि

तथा युद्धं कुर्वद्भ्याम् अन्योन्यविग्रहे अन्योन्याभिभवे उग्रा अव्यवस्था भवति अभूत्, अन्योन्यप्राप्तौ अयमेनं निगृह्णाति अयं वा एनं निगृह्णातीति निश्चयो नाभव दित्यर्थः ॥ ३२–३९ ॥ तत इति । सम्पूर्णायतमुक्तेन संपूर्णाकृष्टमुक्तेन ॥ ४० ॥ विचरिष्यतः रथसञ्चारं करिष्यतः । तलशब्दानुनादिना तलं ज्याघातवारणं तस्य ज्याघट्टनजो यः शब्दः तस्यानुनादो यस्यास्ति तेन ॥ ४१–४४ ॥ हयेषु हयेषु[illegible] । व्यग्रहस्तं, तदा तत्समय इति शेषः ॥ ४५ ॥ ४६ ॥

सार्धश्लोकद्वयमेकान्वयम् । संपूर्णायतमुक्तेन संपूर्णाकृष्टमुक्तेन ॥ ४०-४५ ॥ छिद्रेषु रन्ध्रेषु बाणेषु बाणप्रयोगेषु शीघ्रविक्रम इत्यन्वयः ॥ ४६ ॥ समरोद्धर्षं युद्धगर्वम् ॥ ४७-४९ ॥ समहावीर्याः महावीर्यसहिताः ॥ ५० ॥ रक्तं शोणितम् ॥ ५१-५३ ॥ तत इति । पदातिनं पदाभ्यामापतन्तं



छिद्रेषु तेषु बाणेषु सौमित्रिः शीघ्रविक्रमः । अर्दयामास बाणौघैर्विचरन्तमभीतवत् ॥ ४६ ॥ निहतं सारथिं दृष्ट्वा समरे रावणात्मजः । प्रजहौ समरोद्धर्षं विषण्णः स बभूव ह ॥ ४७ ॥ विषण्णवदनं दृष्ट्वा राक्षसं हरियूथपाः । ततः परमसंहृष्टा लक्ष्मणं चाभ्यपूजयन् ॥४८॥ ततः प्रमाथी शरभो रभसो गन्धमादनः । अमृष्यमाणाश्चत्वारश्चक्रुर्वेगं हरीश्वराः ॥ ४९ ॥ ते चास्य हयमुख्येषु तूर्णमुत्प्लुत्य वानराः । चतुर्षु समहावीर्या निपेतुर्भीमविक्रमाः ॥ ५० ॥ तेषामधिष्ठितानां तैर्वानरैः पर्वतोपमैः । मुखेभ्यो रुधिरं रक्तं हयानां समवर्तत ॥ ५१ ॥ ते हया मथिता भग्ना व्यसवो धरणीं गताः । ते निहत्य हयांस्तस्य प्रमथ्य च महारथम् ॥५२॥ पुनरुत्पत्य वेगेन तस्थुर्लक्ष्मणपार्श्वतः । स हताश्वादवप्लुत्य रथान्मथितसारथेः । शरवर्षेण सौमित्रिमभ्यधावत रावणिः ॥ ५३ ॥ ततो महेन्द्रप्रतिमः स लक्ष्मणः पदातिनं तं निशितैः शरोत्तमैः । सृजन्तमाजौ निशितान् शरोत्तमान् भृशं तदा बाणगणैर्न्यवारयत् ॥ ५४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे नवतितमः सर्गः ॥ ९० ॥

स हताश्वो महातेजा भूमौ तिष्ठन्निशाचरः । इन्द्रजित् परमक्रुद्धः सम्प्रजज्वाल तेजसा ॥ १ ॥
तौ धन्विनौ जिघांसन्तावन्योन्यमिषुभिर्भृशम् । विजयेनाभिनिष्क्रान्तौ वने गजवृषाविव ॥ २ ॥

गच्छन्तम् । "अत सातत्यगमने" इत्यस्माण्णिनिः॥५४॥ इति श्रीगोविन्द० श्रीरामा० रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने नवतितमः सर्गः॥९०॥
अथेन्द्रजिद्वधः—स हताश्व इत्यादि ॥ १ ॥ विजयेनेति प्रयोजने तृतीया । विजयायेत्यर्थः । अभिनिष्क्रान्तौ, बभूवतुरिति शेषः । गजवृषाविव गज ॥ १ ॥ ताविति । विजयेन विजयहेतुना । अभिनिष्क्रान्तौ अभिमुखमधावताम् ॥ २ ॥

समरोद्धर्षं समरोत्साहम् । प्रजहौ त्यक्तवान्॥४७-५४॥इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां नवतितमः सर्गः॥९०॥

श्रेष्ठाविव । यद्वा किंचिद्धीनबलत्वादिन्द्रजितो वृषभतुल्यत्वम् ॥२॥ सम्पतन्तः परितः सञ्चरन्त इत्यर्थः ॥३॥ स्तुवानः स्तुवन् । हर्षमाणः, आर्षः शानच्

निबर्हयन्तश्चान्योन्यं ते राक्षसवनौकसः । भर्तारं न जहुर्युद्धे सम्पतन्तस्ततस्ततः ॥ ३ ॥ ततस्तान् राक्षसान् सर्वान् हर्षयन् रावणात्मजः । स्तुवानो हर्षमाणश्च इदं वचनमब्रवीत् ॥ ४ ॥ तमसा बहुलेनेमाः संसक्ताः सर्वतो दिशः । नेह विज्ञायते स्वो वा परो वा राक्षसोत्तमाः ॥ ५ ॥ धृष्टं भवन्तो युध्यन्तु हरीणां मोहनाय वै । अहं तु रथमास्थाय आगमिष्यामि संयुगम् ॥६॥ तथा भवन्तः कुर्वन्तु यथेमे काननौकसः । न युद्धयेयुर्दुरात्मानः प्रविष्टे नगरं मयि ॥ ७ ॥ इत्युक्त्वा रावणसुतो वञ्चयित्वा वनौकसः । प्रविवेश पुरीं लङ्कां रथहेतोरमित्रहा ॥ ८ ॥ स रथं भूषयित्वा तु रुचिरं हेमभूषितम् । प्रासासिशतसम्पूर्णं युक्तं परमवाजिभिः ॥ ९ ॥ अधिष्ठितं हयज्ञेन सूतेनाप्तोपदेशिना । आरुरोह महातेजा रावणिः समितिञ्जयः ॥ १० ॥ स राक्षसगणैर्मुख्यैर्वृतो मन्दोदरीसुतः । निर्ययौ नगरात्तूर्णं कृतान्तबलचोदितः ॥ ११ ॥ सोऽभिनिष्क्रम्य नगरादिन्द्रजित् परवीरहा । अभ्ययाज्जवनैरश्वैर्लक्ष्मणं सविभीषणम् ॥ १२ ॥ ततो रथस्थमालोक्य सौमित्री रावणात्मजम् । वानराश्च महावीर्या राक्षसश्च विभीषणः । विस्मयं परमं जग्मुर्लाघवात्तस्य धीमतः ॥ १३ ॥

॥ ४ ॥ ५ ॥ धृष्टमिति । मोहनाय मन्निर्गमनापरिज्ञानाय ॥ ६–८ ॥ स रथमित्यादिश्लोकद्वयमेकान्वयम् । भूषयित्वा स्वतेजसा भूषयित्वा । आप्तोपदेशिना हितोपदेशिना ॥ ९–१२ ॥ तत इत्यादिसार्धश्लोक एकान्वयः । ततः तस्माद्युद्धप्रदेशात् ॥ १३–१७ ॥

निबर्हयन्तः मारयन्तः ॥ ३ ॥ स्तुवानः स्तुवन् ॥ ४ ॥ बहुलेन तमसा दिशः संसक्ताः संवृताः । एवं चास्माकं बलकरी रात्रिरागतेति भावः ॥ ५ ॥ धृष्टमिति । मोहनाय गमनापरिज्ञानाय ॥ ६ ॥ प्रविष्टे प्रवेष्टुमुपक्रान्ते, न युध्येयुः मम नगरप्रवेशविघातार्थं मया सह वानरा यथा युद्धं न कुर्युः तथा भवन्तः कुर्वन्त्वित्यर्थः ॥ ७–९ ॥ हयज्ञेन अश्वहृदयज्ञेन । आप्तं हितमुपदेष्टुं शीलमस्यस्य, तेन ॥ १०–१६ ॥

त्वरन्निवेति । इवशब्दो वाक्यालङ्कारे । निरकृन्तत आच्छिनत् ॥ १८–२३ ॥ रामानु०—स भिन्नवर्मेति । अनेन पुनश्च कवचान्तरमपि स्वीकृतवानित्यवगम्यते ॥ २१ ॥



रावणिश्चापि संक्रुद्धो रणे वानरयूथपान् । पातयामास बाणौघैः शतशोऽथ सहस्रशः ॥ १४ ॥ स मण्डलीकृतधनू रावणिः समितिञ्जयः । हरीनभ्यहनत् क्रुद्धः परं लाघवमास्थितः ॥१५॥ ते वध्यमाना हरयो नाराचैर्भीमविक्रमाः । सौमित्रिं शरणं प्राप्ताः प्रजापतिमिव प्रजाः ॥ १६ ॥ ततः समरकोपेन ज्वलितो रघुनन्दनः । चिच्छेद कार्मुकं तस्य दर्शयन् पाणिलाघवम् ॥ १७ ॥ सोऽन्यत् कार्मुकमादाय सज्यं चक्रे त्वरन्निव । तदप्यस्य त्रिभिर्बाणैर्लक्ष्मणो निरकृन्तत ॥ १८ ॥ अथैनं छिन्नधन्वानमाशीविषविषोपमैः । विव्याधोरसि सौमित्री रावणिं पञ्चभिः शरैः ॥१९॥ ते तस्य कायं निर्भिद्य महाकार्मुकनिस्सृताः । निपेतुर्धरणीं बाणा रक्ता इव महोरगाः ॥ २० ॥ स भिन्नवर्मा रुधिरं वमन् वक्त्रेण रावणिः । जग्राह कार्मुकश्रेष्ठं दृढज्यं बलवत्तरम् ॥२१॥ स लक्ष्मणं समुद्दिश्य परं लाघवमास्थितः । ववर्ष शरवर्षाणि वर्षाणीव पुरन्दरः ॥ २२ ॥ मुक्तमिन्द्रजिता तत्तु शरवर्षमरिन्दमः । अवारयदसम्भ्रान्तो लक्ष्मणः सुदुरासदम् ॥ २३ ॥ दर्शयामास च तदा रावणिं रघुनन्दनः । असम्भ्रान्तो महातेजास्तदद्भुतमिवाभवत् ॥२४॥ ततस्तान् राक्षसान् सर्वांस्त्रिभिरेकैकमाहवे ॥२५॥ अविध्यत् परमक्रुद्धः शीघ्रास्त्रं सम्प्रदर्शयन् । राक्षसेन्द्रसुतं चापि बाणौघैः समताडयत् ॥२६॥ सोऽतिविद्धो बलवता शत्रुणा शत्रुघातिना । असक्तं प्रेषयामास लक्ष्मणाय बहून् शरान् २७

दर्शयामास, पराक्रममिति शेषः ॥ २४ ॥ रामानु०—स दर्शयामासेति । हस्तलाघवमिति शेषः । रावणिं हस्तलाघवं दर्शयामासेति सम्बन्धः ॥ २४ ॥ ततस्तानित्यादिसार्धश्लोक एकान्वयः । शीघ्रास्त्रं शीघ्रमन्त्रम् ॥ २५ ॥ २६ ॥ असक्तम् अन्यासङ्गम्, अविलम्बितं वा ॥ २७ ॥



समरकोपेन रावणिसमरजन्यकोपेन ॥ १७ ॥ त्वरन्निव शीघ्रमेव ॥ १८ ॥ १९ ॥ रक्ताः, बाणानामपि रुधिरसम्बन्धाद्रक्तत्वम् ॥ २०–२३ ॥ दर्शयामास, आत्मपौरुषमिति शेषः ॥ २४–२६ ॥ असक्तं सन्ततम् ॥ २७ ॥ २८ ॥

तानप्रासानित्यादिसार्धश्लोक एकान्वयः। रथिनोऽस्य रावणेः सारथेरित्यन्वयः ॥ २८ ॥ अविक्लवाः अनाकुलाः। शिक्षापाटवातिशयादिति मन्तव्यम् ॥ २९-३१ ॥ विलयं नाशम् ॥ ३२ ॥ अभेद्येत्यादिसार्धश्लोकः। अभेद्यकवचमित्यनेन पूर्वकवचस्य भग्नत्वात् कवचान्तरं धृतमिति गम्यते।

तानप्रासान् शितैर्बाणैश्चिच्छेद रघुनन्दनः। सारथेरस्य च रणे रथिनो रथसत्तमः। शिरो जहार धर्मात्मा भल्लेनानतपर्वणा ॥ २८ ॥ असूतास्ते हयास्तत्र रथमूहुरविक्लवाः। मण्डलान्यभिधावन्तस्तदद्भुतमिवाभवत् ॥ २९ ॥ अमर्षवशमापन्नः सौमित्रिर्दृढविक्रमः। प्रत्यविध्यद्धयांस्तस्य शरैर्वित्रासयन् रणे ॥ ३० ॥ अमृष्यमाणस्तत्कर्म रावणस्य सुतो बली। विव्याध दशभिर्बाणैः सौमित्रिं तममर्षणम् ॥ ३१ ॥ ते तस्य वज्रप्रतिमाः शराः सर्पविषोपमाः। विलयं जग्मुराहत्य कवचं काञ्चनप्रभम् ॥ ३२ ॥ अभेद्यकवचं मत्वा लक्ष्मणं रावणात्मजः। ललाटे लक्ष्मणं बाणैः सुपुङ्खैस्त्रिभिरिन्द्रजित्। अविध्यत् परमक्रुद्धः शीघ्रास्त्रं च प्रदर्शयन् ॥ ३३ ॥ तैः पृषत्कैर्ललाटस्थैः शुशुभे रघुनन्दनः। रणाग्रे समरश्लाघी त्रिशृङ्ग इव पर्वतः ॥ ३४ ॥ स तथा ह्यर्दितो बाणै राक्षसेन महामृधे। तमाशु प्रतिविव्याध लक्ष्मणः पञ्चभिः शरैः। विकृष्येन्द्रजितो युद्धे वदने शुभकुण्डले ॥ ३५ ॥ लक्ष्मणेन्द्रजितौ वीरौ महाबलशरासनौ। अन्योन्यं जघ्नतुर्बाणैर्विशिखैर्भीमविक्रमौ ॥ ३६ ॥ ततः शोणितदिग्धाङ्गौ लक्ष्मणेन्द्रजितावुभौ। रणे तौ रेजतुर्वीरौ पुष्पिताविव किंशुकौ ॥ ३७ ॥

शीघ्रास्त्रं च प्रदर्शयन् आत्मनः शीघ्रास्त्रत्वं प्रदर्शयन्नित्यर्थः ॥३३॥ समरं श्लाघत इति समरश्लाघी, समरप्रिय इत्यर्थः। पृषत्कैः बाणैः ॥ ३४ ॥ स तथेत्यादिसार्धश्लोक एकान्वयः। विकृष्य धनुराकृष्य ॥३५॥ लक्ष्मणेन्द्रजिताविति। विशिखैः विविधशिखैः, करवीरपत्राद्याकाराग्रैरित्यर्थः॥३६॥३७॥

असूताः असारथयः। अविक्लवाः अनाकुलाः ॥ २९-३२ ॥ अभेद्यकवचमित्यनेन पूर्वं धृतकवचस्य विशीर्णत्वात्कवचान्तरं धृतवानित्यवगम्यते ॥ ३३ ॥ समरश्लाघी समरं श्लाघत इति, समरप्रिय इत्यर्थः ॥ ३४ ॥ स इति। युद्धे धनुर्विकृष्य शरैरिन्द्रजितो वदने विव्याधेति सम्बन्धः ॥ ३५ ॥ विशिखैः विशिष्टशिखैः, निशितैरिति यावत् ॥ ३६ ॥ ३७ ॥

ताविति । जये कृतभावावित्यन्वयः ॥ ३८–४१ ॥ रथशक्तिं रथेऽवस्थितां शक्तिम् ॥ ४२ ॥ ४३ ॥ दृढधनुः दृढधन्वा । समासान्तविधेरनित्यत्वात् साधुः ॥ ४४ ॥ निमित्तगाः लक्ष्यगाः । "वेध्यं लक्ष्यं शरव्यं च निमित्तं च समं विदुः" इति निघण्टुः ॥ ४५ ॥ रक्षसां मध्य आददे इत्यन्वयः ॥४६॥



तौ परस्परमभ्येत्य सर्वगात्रेषु धन्विनौ । घोरैर्विव्यधतुर्बाणैः कृतभावावुभौ जये ॥ ३८ ॥ ततः समरकोपेन संयुक्तो रावणात्मजः । विभीषणं त्रिभिर्बाणैर्विव्याध वदने शुभे ॥ ३९ ॥ अयोमुखैस्त्रिभिर्विद्ध्वा राक्षसेन्द्रं विभीषणम् । एकैकेनाभिविव्याध तान् सर्वान् हरियूथपान् ॥ ४० ॥ तस्मै दृढतरं क्रुद्धो जघान गदया हयान् । विभीषणो महातेजा रावणेः स दुरात्मनः ॥ ४१ ॥ स हताश्वादवप्लुत्य रथान्निहतसारथेः । रथशक्तिं महातेजाः पितृव्याय मुमोच ह ॥ ४२ ॥ तामापतन्तीं सम्प्रेक्ष्य सुमित्रानन्दवर्धनः । चिच्छेद निशितैर्बाणैर्दशधा साऽपतद्भुवि ॥ ४३ ॥ तस्मै दृढधनुः क्रुद्धो हताश्वाय विभीषणः । वज्रस्पर्शसमान् पञ्च ससर्जोरसि मार्गणान् ॥ ४४ ॥ ते तस्य कायं निर्भिद्य रुक्मपुङ्खा निमित्तगाः । बभूवुर्लोहितादिग्धा रक्ता इव महोरगाः ॥ ४५ ॥ स पितृव्याय संक्रुद्ध इन्द्रजिच्छरमाददे । उत्तमं रक्षसां मध्ये यमदत्तं महाबलः ॥ ४६ ॥ तं समीक्ष्य महातेजा महेषुं तेन संहितम् । लक्ष्मणोऽप्याददे बाणमन्यं भीमपराक्रमः ॥ ४७ ॥ कुबेरेण स्वयं स्वप्ने स्वस्मै दत्तं महात्मना । दुर्जयं दुर्विषह्यं च सेन्द्रैरपि सुरासुरैः ॥ ४८ ॥ तयोस्ते धनुषी श्रेष्ठे बाहुभिः परिघोपमैः । विकृष्यमाणे बलवत् क्रौञ्चाविव चुकूजतुः ॥ ४९ ॥ ताभ्यां तौ धनुषि श्रेष्ठे संहितौ सायकोत्तमौ । विकृष्यमाणौ वीराभ्यां भृशं जज्वलतुः श्रिया ॥ ५० ॥



तं समीक्ष्येत्यादिश्लोकद्वयमेकान्वयम् । महात्मना अप्रमेयबुद्धिना । भाविवृत्तान्तज्ञेनेति यावत् ॥ ४७–५० ॥

जये कृतभावौ कृताभिप्रायौ ॥ ३८–४४ ॥ ते तस्येति । निमित्तगाः निमित्तं लक्ष्यं गच्छन्तीति निमित्तगाः । "वेध्यं लक्ष्यं शरव्यं च निमित्तं च समं विदुः" इति शासनात् ॥ ४५ ॥ स पितृव्यायेति । रक्षसां मध्ये आददे इति सम्बन्धः ॥ ४६–४९ ॥ संहितौ योजितौ ॥ ५० ॥

ताविति । सन्निपेततुः सङ्घर्षं प्राप्तौ ॥ ५१ ॥ तज्जः सन्निपातजः ॥ ५२-५६ ॥ संक्षिपन् संहरन् ॥ ५७ ॥ सौरेण सूर्यदेवताकेन । " सूर्यतिष्या गस्त्य-" इत्यादिना यलोपः ॥५८॥५९॥ तस्मादिति । असुरास्त्रप्रयोगाद्धेतोः चापात् इन्द्रजिद्धनुषोऽपादानात् कूटमुद्गरादयो विनिष्पेतुरित्यन्वयः ।

तौ भासयन्तावाकाशं धनुर्भ्यां विशिखौ च्युतौ । मुखेन मुखमाहत्य संनिपेततुरोजसा ॥ ५१ ॥ सन्निपातस्तयो रासीच्छरयोर्घोररूपयोः । सधूमविस्फुलिङ्गश्च तज्जोऽग्निर्दारुणोऽभवत् ॥ ५२ ॥ तौ महाग्रहसङ्काशावन्योन्यं सन्निपत्य च । सङ्ग्रामे शतधा यान्तौ मेदिन्यां विनिपेततुः ॥५३॥ शरौ प्रतिहतौ दृष्ट्वा तावुभौ रणमूर्धनि । व्रीडितौ जातरोषौ च लक्ष्मणेन्द्रजितौ तदा ॥ ५४ ॥ सुसंरब्धस्तु सौमित्रिरस्त्रं वारुणमाददे ॥ ५५ ॥ रौद्रं महेन्द्रजिद्युद्धे व्यसृजद्युधि निष्ठितः । तेन तद्विहतं त्वस्त्रं वारुणं परमाद्भुतम् ॥५६॥ ततः क्रुद्धो महातेजा इन्द्रजित् समितिञ्जयः । आग्नेयं सन्दधे दीप्तं स लोकं संक्षिपन्निव ॥५७॥ सौरेणास्त्रेण तद्वीरो लक्ष्मणः प्रत्यवारयत् ॥५८॥ अस्त्रं निवारितं दृष्ट्वा रावणिः क्रोधमूर्च्छितः । आसुरं शत्रुनाशाय घोरमस्त्रं समाददे ॥ ५९ ॥ तस्माच्चापाद्विनिष्पेतुर्भास्वराः कूट मुद्गराः । शूलानि च भुशुण्ड्यश्च गदाः खड्गाः परश्वधाः ॥ ६० ॥ तद्दृष्ट्वा लक्ष्मणः सङ्ख्ये घोरमस्त्रमथासुरम् । अवार्यं सर्वभूतानां सर्वशत्रुविनाशनम् । माहेश्वरेण द्युतिमांस्तदस्त्रं प्रत्यवारयत् ॥ ६१ ॥ तयोः सुतुमुलं युद्धं संबभूवाद्भुतोपमम् । गगनस्थानि भूतानि लक्ष्मणं पर्यवारयन् ॥ ६२ ॥

भुशुण्ड्यः मुसलविशेषाः ॥६०॥ तद्दृष्ट्वेत्यादिसार्धश्लोक एकान्वयः । क्रियाद्वयार्थं तदस्त्रमिति द्विरुक्तिः ॥ ६१ ॥ तयोरिति । स्पष्टः ॥ ६२ ॥

संनिपेततुः सङ्घर्षं प्राप्तौ ॥ ५१ ॥ ५२ ॥ महाग्रहः अङ्गारकशन्यादिः ॥ ५३ ॥ व्रीडितौ स्वस्वप्रयुक्तशरस्य मोघत्वदर्शनेन सञ्जातलज्जौ । यद्यपि रावणे रपि व्रीडा युक्ता, लक्ष्मणस्य तु तद्बाणनिवारणाय प्रयोक्तुस्सार्थक्यसत्त्वेन व्रीडाभावस्तथापि तन्निराकरणपूर्वकं रिपुवधपर्यन्तव्यापारेणोपादानात् तदभावेन तस्यापि लज्जेति बोध्यम् । [ छत्रिन्यायेन द्विवचनप्रयोग इति कतकः । ] जातरोषौ रामाभिरामे विशेषणे बाणः प्रमुक्त इति लक्ष्मणस्य रोषः, लक्ष्मणस्तं परिहृतवानिति

भैरवाभिरुते भयंकरशब्दे ॥ ६३ ॥ ऋषय इति । ररक्षुः जय जयेत्याद्युक्तिभिरित्यर्थः ॥ ६४ ॥ ६५ ॥ सुपत्रमित्यादिचतुःश्लोक्येकान्वया । अनुवृत्ताङ्गं वर्तुलस्वरूपम् । सुसंस्थितं सुसंस्थानम् । सुवर्णविकृतं सुवर्णविचित्रितम् । हरिवाहनः हरितवर्णाश्वः ऐन्द्रमस्त्रम् ऐन्द्रास्त्रमन्त्रयोजितम् ॥ ६६–६९ ॥



भैरवाभिरुते भीमे युद्धे वानररक्षसाम् । भूतैर्बहुभिराकाशं विस्मितैरावृतं बभौ ॥ ६३ ॥ ऋषयः पितरो देवा गन्धर्वा गरुडोरगाः । शतक्रतुं पुरस्कृत्य ररक्षुर्लक्ष्मणं रणे ॥ ६४ ॥ अथान्यं मार्गणश्रेष्ठं सन्दधे राघवानुजः । हुताशन समस्पर्शं रावणात्मजदारणम् ॥ ६५ ॥ सुपत्रमनुवृत्ताङ्गं सुपर्वाणं सुसंस्थितम् । सुवर्णविकृतं वीरः शरीरान्तकरं शरम् ॥ ६६ ॥ दुरावारं दुर्विषहं राक्षसानां भयावहम् । आशीविषविषप्रख्यं देवसङ्घैः समर्चितम् ॥ ६७ ॥ येन शक्रो महातेजा दानवानजयत् प्रभुः । पुरा दैवासुरे युद्धे वीर्यवान् हरिवाहनः ॥ ६८ ॥ तदैन्द्रमस्त्रं सौमित्रिः संयुगेष्वपराजितम् । शरश्रेष्ठं धनुःश्रेष्ठे नरश्रेष्ठोऽभिसन्दधे ॥ ६९ ॥ सन्धायामित्रदलनं विचकर्ष शरासनम् । सज्य मायम्य दुर्धर्षं कालो लोकक्षये यथा ॥ ७० ॥ सन्धाय धनुषि श्रेष्ठे विकर्षन्निदमब्रवीत् । लक्ष्मीवाँल्लक्ष्मणो वाक्य मर्थसाधकमात्मनः ॥ ७१ ॥ धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि । पौरुषे चाप्रतिद्वन्द्वः शरैनं जहि राव णिम् ॥ ७२ ॥ इत्युक्त्वा बाणमाकर्णं विकृष्य तमजिह्मगम् । लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति । ऐन्द्रास्त्रेण समायोज्य लक्ष्मणः परवीरहा ॥ ७३ ॥

अमित्रदलनं शत्रुनाशनम् । कालः यमः ॥ ७०–७२ ॥ इत्युक्त्वेत्यादिसार्धश्लोक एकान्वयः । बाणमैन्द्रास्त्रमन्त्रेण समायोज्य ससर्जेत्यन्वयः । एको लक्ष्मणशब्दो लक्ष्मीयुक्तवचनः । "लक्ष्मीवान् लक्ष्मणः श्रीलः श्रीमान्" इत्यमरः ॥ ७३ ॥

रावणेः रोषः ॥ ५४–६२ ॥ भैरवाभिरुते भैरवमभिरुतं यस्मिंस्तादृशे । भूतैः प्राणिभिः ॥ ६३ ॥ ६४ ॥ सन्निहितैतदस्त्रेणैवायं वध्य इति निश्चित्यैन्द्रास्त्रं सन्दध इत्याह–अथेति । अत्र प्रत्यस्त्रं रावणेर्ब्रह्मशापवशान्न बुद्ध्यारूढम् ॥ ६५ ॥ सुसंस्थितं संस्थिताङ्गम् । सुवर्णविकृतं सुवर्णालंकृतम् ॥ ६६–७२ ॥ इत्युक्त्वेत्यादि



स०–पौरुषे पराक्रमे । अप्रतिद्वन्द्वः असदृशो यदि तर्हि तेन सत्येन तमेनं जहि । अनेन रामगुणशपथपुरःसरमस्त्रमोचनादस्यास्त्रस्याप्रतिहतता ज्ञेया ॥ ७२ ॥

स शिरः सशिरस्त्राणमिति । स बाणः ॥७४॥ ७५॥ कवचीति । कवचादिभिः सह विध्वस्तः हतः धरण्यां निपपातेत्यन्वयः ॥ ७६–८४ ॥

स शिरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् । प्रमथ्येन्द्रजितः कायात् पातयामास भूतले ॥ ७४ ॥ तद्राक्षसतनूजस्य छिन्नस्कन्धं शिरो महत् । तपनीयनिभं भूमौ ददृशे रुधिरोक्षितम् ॥ ७५ ॥ हतस्तु निपपाताशु धरण्यां रावणात्मजः । कवची सशिरस्त्राणो विध्वस्तः सशरासनः ॥ ७६ ॥ चुक्रुशुस्ते ततः सर्वे वानराः सविभीषणाः । हृष्यन्तो निहते तस्मिन् देवा वृत्रवधे यथा ॥ ७७ ॥ अथान्तरिक्षे देवानामृषीणां च महात्मनाम् । अभिजज्ञे च सन्नादो गन्धर्वाप्सरसामपि ॥ ७८ ॥ पतितं तमभिज्ञाय राक्षसी सा महाचमूः । वध्यमाना दिशो भेजे हरिभिर्जितकाशिभिः ॥ ७९ ॥ वानरैर्वध्यमानास्ते शस्त्राण्युत्सृज्य राक्षसाः । लङ्कामभिमुखाः सस्रुर्नष्टसंज्ञाः प्रधाविताः ॥८०॥ दुद्रुवुर्बहुधा भीता राक्षसाः शतशो दिशः । त्यक्त्वा प्रहरणान् सर्वे पट्टिशासिपरश्वधान् ॥८१॥ केचिल्लङ्कां परित्रस्ताः प्रविष्टा वानरार्दिताः । समुद्रे पतिताः केचित् केचित् पर्वतमाश्रिताः ॥८२॥ हतमिन्द्रजितं दृष्ट्वा शयानं समरक्षितौ । राक्षसानां सहस्रेषु न कश्चित् प्रत्यदृश्यत ॥ ८३ ॥ यथाऽस्तं गत आदित्ये नावतिष्ठन्ति रश्मयः । तथा तस्मिन्निपतिते राक्षसास्ते गता दिशः ॥८४॥ शान्तरश्मिरिवादित्यो निर्वाण इव पावकः । स बभूव महातेजा व्यपास्तगतजीवितः ॥८५॥ प्रशान्तपीडाबहुलो नष्टारिष्टः प्रतापवान् । बभूव लोकः पतिते राक्षसेन्द्रसुते तदा ॥८६॥

व्यपास्तगतजीवितः व्यपास्तो विक्षिप्ताङ्गो गतजीवितश्च, सः शान्तरश्मिरादित्य इव, निर्वाणः शान्तः पावक इव च बभूव, निस्तेजस्कोऽभूदित्यर्थः ॥८५॥

रामानु०—शान्तरश्मिरिति । गतजीवितः सः शान्तरश्मिरादित्य इव बभूव । निर्वाणः पावक इव व्यपास्तः अतिष्ठदिति संबन्धः ॥ ८५ ॥ प्रशान्तेति । इदमारभ्य लोकविशेषणम् ।

सम्पादनीयं वाक्यम् । लक्ष्मणः परवीरहेत्येतदुत्तरशेषः । एकवाक्यत्वे एको लक्ष्मणशब्दः लक्ष्मीवद्वचनः । "लक्ष्मीवान् लक्ष्मणः श्रीलः श्रीमान्" इत्यमरः । बाणमैन्द्रास्त्रेण संयोज्य ससर्जेति सम्बन्धः ॥ ७३–८४ ॥ शान्तरश्मिरिति । व्यपास्तगतजीवितः व्यपास्तो विक्षिप्ताङ्गो गतजीवितश्च स रावणिः शान्तरश्मिरादित्य इव निर्वाणः पावक इव च बभूवेत्यर्थः ॥ ८५ ॥ प्रशान्तपीडाबहुलः प्रशान्तबहुलपीडः । एकादश्यां द्वादश्यां त्रयोदश्यां चेन्द्रजिद्युद्धम् । "अहोरात्रै

प्रशान्तपीडाबहुलः प्रशान्तबहुलपीडः । प्रतापवान् सूर्यप्रकाशवान्, पूर्वं भयेन मन्दसूर्यत्वात् ॥८६॥८७॥ आकाश इत्यर्थम् ॥ ८८॥ नृत्यद्भिरिति । अप्सरोभिर्गन्धर्वैश्च कृतनर्तनगानजन्यस्वनः शुश्रुव इत्यर्थः । नृत्यद्भिरित्यत्र ङीबभाव आर्षः ॥८९॥ ववृषुरिति । अत्रापि देवाः कर्तारः । ववृषुः प्रशशं



हर्षं च शक्रो भगवान् सह सर्वैः सुरर्षभैः । जगाम निहते तस्मिन् राक्षसे पापकर्मणि ॥ ८७ ॥ आकाशे चापि देवानां शुश्रुवे दुन्दुभिस्वनः ॥ ८८ ॥ नृत्यद्भिरप्सरोभिश्च गन्धर्वैश्च महात्मभिः ॥ ८९ ॥ ववृषुः पुष्पवर्षाणि तदद्भुतमभूत्तदा । प्रशशंसुर्हते तस्मिन् राक्षसे क्रूरकर्मणि ॥ ९० ॥ शुद्धा आपो दिशश्चैव जहृषुर्दैत्यदानवाः ॥ ९१ ॥ आजग्मुः पतिते तस्मिन् सर्वलोकभयावहे । ऊचुश्च सहिताः सर्वे देवगन्धर्वदानवाः । विज्वराः शान्तकलुषा ब्राह्मणा विचरन्त्विति ॥ ९२ ॥ ततोऽभ्यनन्दन् संहृष्टाः समरे हरियूथपाः । तमप्रतिबलं दृष्ट्वा हतं नैर्ऋतपुङ्गवम् ॥ ९३ ॥ विभीषणो हनूमांश्च जाम्बवांश्चर्क्षयूथपः । विजयेनाभिनन्दन्तस्तुष्टुवुश्चापि लक्ष्मणम् ॥ ९४ ॥ क्ष्वेलन्तश्च नदन्तश्च गर्जन्तश्च प्लवङ्गमाः । लब्धलक्षा रघुसुतं परिवार्योपतस्थिरे ॥ ९५ ॥ लाङ्गूलानि प्रविध्यन्तः स्फोटयन्तश्च वानराः । लक्ष्मणो जयतीत्येवं वाक्यं विश्रावयंस्तदा ॥ ९६ ॥ अन्योन्यं च समाश्लिष्य कपयो हृष्टमानसाः । चक्रुरुच्चावचगुणा राघवाश्रयजाः कथाः ॥ ९७ ॥ तदसुकरमथाभिवीक्ष्य हृष्टाः प्रियसुहृदो युधि लक्ष्मणस्य कर्म । परममुपलभन् मनःप्रहर्षं विनिहतमिन्द्ररिपुं निशम्य देवाः ॥ ९८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

सुश्च ॥९०॥ ९१ ॥ आजग्मुरित्यादिसार्धश्लोक एकान्वयः । देवगन्धर्वदानवाः आजग्मुः विचरन्त्वित्यूचुश्चेति संबन्धः ॥ ९२–९५ ॥ विश्रावयन् व्यश्रावयन् ॥ ९६ ॥ ९७ ॥ असुकरं दुष्करम्, सर्वेषां प्राणप्रतिष्ठापकमिति वा । प्रियसुहृदः सर्वप्रियसुहृदः । उपलभन्नित्यत्र अडात्मनेपदाभावावार्षौ । वीभिर्वीरः कथञ्चिद्विनिपातितः" इत्युत्तरत्राभिधानात् ॥८६–९८॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० युद्धकाण्डव्याख्यायाम् एकनवतितमः सर्गः ॥ ९१ ॥

देवाः इन्द्ररिपुं विनिहतं निशम्य परमं मनःप्रहर्षम् उपलब्धम् उपालभन्त । अथ असुकरं तत इन्द्रजिद्धननं प्रियसुहृदः लक्ष्मणस्य, कर्म कृतिविषय भूतम् अभिवीक्ष्य हृष्टाः विस्मिताः, आसन्निति शेषः । "विस्मितप्रतिघातयोश्चेति वक्तव्यम्" इति हृषेः पाक्षिक इडभावः । देवाश्चारणादिमुखेन प्रथममिन्द्रजिद्धननं श्रुत्वा सन्तुष्टाः सन्तः पश्चात्तस्यात्यन्ताशक्यत्वादतथ्यं मन्वाना युद्धभूमिमागत्य तत्प्रत्यक्षीकृत्य विस्मिता आसन्निति भावः॥९८॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकनवतितमः सर्गः ॥ ९१ ॥

रुधिरक्लिन्नगात्रस्तु लक्ष्मणः शुभलक्षणः । बभूव हृष्टस्तं हत्वा शक्रजेतारमाहवे ॥ १ ॥ ततः स जाम्बवन्तं च हनुमन्तं च वीर्यवान् । सन्निहत्य महातेजास्तांश्च सर्वान् वनौकसः ॥ २ ॥ आजगाम ततस्तीव्रं यत्र सुग्रीवराघवौ । विभीषणमवष्टभ्य हनूमन्तं च लक्ष्मणः ॥ ३ ॥ ततो राममभिक्रम्य सौमित्रिरभिवाद्य च । तस्थौ भ्रातृसमीपस्थ इन्द्रस्येव बृहस्पतिः ॥ ४ ॥ निष्टनन्निव चागम्य राघवाय महात्मने । आचचक्षे तदा वीरो घोरमिन्द्रजितो वधम् ॥ ५ ॥ रावणेस्तु शिरश्छिन्नं लक्ष्मणेन महात्मना । न्यवेदयत रामाय तदा हृष्टो विभीषणः ॥ ६ ॥ श्रुत्वैतत्तु महावीर्यो लक्ष्मणेनेन्द्रजिद्वधम् । प्रहर्षमतुलं लेभे रामो वाक्यमुवाच ह ॥ ७ ॥ साधु लक्ष्मण तुष्टोऽस्मि कर्मणा सुकृतं कृतम् । रावणेर्हि विनाशेन जितमित्युपधारय ॥ ८ ॥

अथ लक्ष्मणश्लाघनं—रुधिरक्लिन्नगात्रेत्यादि ॥ १ ॥ तत इत्यादिश्लोकद्वयमेकान्वयम् । सन्निहत्य सङ्घीभूय । अवष्टभ्य युद्धपारवश्यादवलम्ब्य ॥ २ ॥ ३ ॥ तत इति । इन्द्रस्येव बृहस्पतिरिति पारतन्त्र्यमात्रे साम्यम् ॥ ४ ॥ निष्टनन् अव्यक्ताक्षरं वदन्नित्यर्थः । इवशब्दो वाक्यालङ्कारे । आयासस्याभिनयनमात्रेणालीकत्वद्योतनाय वा ॥ ५ ॥ रामसन्निधौ सङ्कोचवता लक्ष्मणेनाविशेषेणेन्द्रजिद्वधकथनाद्विभीषणः स्पष्टतयाऽऽह—रावणेरिति । यद्वा लक्ष्मणेन सूचनयोक्तावपि हर्षप्रकर्षेण विभीषणः पुनराह—रावणेरिति ॥ ६ ॥ महावीर्यो राम इत्यन्वयः ॥ ७ ॥ सुकृतं कृतं सुकर्तव्यं कृतम् । कर्मणा ॥ १ ॥ २ ॥ आजगामेति । अवष्टभ्य अवलम्ब्य, युद्धपारवश्यादिति भावः ॥ ३ ॥ इन्द्रस्येव बृहस्पतिः प्रधानोपसर्जनभावेनावस्थानमात्रे दृष्टान्तः ॥ ४ ॥ निश्वसन्निवेत्यत्र इवशब्दो वाक्यालङ्कारे ॥ ५ ॥ स्वपौरुषकथनव्रीडितेन लक्ष्मणेन सर्वकर्तृकत्वाभिधानेन कथितमिन्द्रजिद्वधं लक्ष्मणकर्तृकनिर्देशपूर्वकं विभीषणो

युद्धकर्मणा ॥ ८ ॥ स तमित्यादिश्लोकद्वयमेकान्वयम् । आरोप्य आरोपणायाकृष्य । अवपीडितं शल्यपीडितम्, गाढं यथा भवति तथेति वा । क्रियाभेदात्तमिति द्विरुक्तिः ॥ ९ ॥ १० ॥ शल्यसंपीडितमित्यादिश्लोकद्वयमेकान्वयम् । शस्तं प्रहृतम्, निश्वसितः स्वयंकृतनिश्वासः, त्वरन्



स तं शिरस्युपाघ्राय लक्ष्मणं लक्ष्मिवर्धनम् । लज्जमानं बलात् स्नेहादङ्कमारोप्य वीर्यवान् ॥ ९ ॥ उपवेश्य तमुत्सङ्गे परिष्वज्यावपीडितम् । भ्रातरं लक्ष्मणं स्निग्धं पुनः पुनरुदैक्षत ॥ १० ॥ शल्यसंपीडितं शस्तं निश्वसन्तं तु लक्ष्मणम् । रामस्तु दुःखसन्तप्तस्तदा निश्वसितो भृशम् ॥ ११ ॥ मूर्ध्नि चैनमुपाघ्राय भूयः संस्पृश्य च त्वरन् । उवाच लक्ष्मणं वाक्यमाश्वास्य पुरुषर्षभः ॥ १२ ॥ कृतं परमकल्याणं कर्म दुष्करकर्मणा । अद्य मन्ये हते पुत्रे रावणं निहतं युधि । अद्याहं विजयी शत्रौ हते तस्मिन् दुरात्मनि ॥ १३ ॥ रावणस्य नृशंसस्य दिष्ट्या वीर त्वया रणे । छिन्नो हि दक्षिणो बाहुः स हि तस्य व्यपाश्रयः ॥ १४ ॥ विभीषणहनूमद्भ्यां कृतं कर्म महद्रणे । अहोरात्रैस्त्रिभिर्वीरः कथञ्चिद्विनिपातितः ॥ १५ ॥ निरमित्रः कृतोऽस्म्यद्य निर्यास्यति हि रावणः । बलव्यूहेन महता श्रुत्वा पुत्रं निपातितम् ॥ १६ ॥ तं पुत्रवधसन्तप्तं निर्यान्तं राक्षसाधिपम् । बलेनावृत्य महता निहनिष्यामि दुर्जयम् ॥ १७ ॥ त्वया लक्ष्मण नाथेन सीता च पृथिवी च मे । न दुष्प्रापा हते त्वद्य शक्रजेतरि चाहवे ॥ १८ ॥

संस्पृश्य, त्वरा च प्रहारव्यथापनयनायेति भावः ॥ ११ ॥ १२ ॥ कृतमित्यादिसार्धश्लोकः । दुष्करकर्मणा, त्वयेति शेषः ॥ १३ ॥ रावणस्येति । व्यपाश्रयः आलम्बनम् ॥ १४ ॥ विभीषणेति । अहोरात्रैस्त्रिभिरिति एकादशीद्वादशीत्रयोदशीभिरित्यर्थः ॥ १५ ॥ निरमित्र इत्यादिश्लोकद्वयमेकान्वयम् ॥ १६ ॥ १७ ॥ त्वयेति । नाथेन याचमानेन । "नाथृ याच्ञायाम्" इत्यस्मात्पचाद्यच् ॥ १८ ॥



ऽनुवदति–रावणेस्त्विवति ॥ ६–८ ॥ स तमित्यादिश्लोकद्वयमेकं वाक्यम् । क्रियाबाहुल्यात्तमिति द्विरुक्तिः । अङ्कमारोप्य अङ्कं प्रत्यारोपणायाकृष्य उत्सङ्गे उपवेश्य अवपीडितं गाढं यथा तथा परिष्वज्य तं पुनः पुनरुदैक्षतेत्यन्वयः ॥ ९–१२ ॥ दुष्करकर्मणा दुष्करपौरुषेण, त्वयेति शेषः ॥ १३ ॥ व्यपाश्रयः अवलम्बं

स तमिति । समाभाष्य आमन्त्र्य ॥ १९ ॥ सशल्योऽयमिति । समुपाचर चिकित्सां कुरु ॥ २० ॥ विशल्य इति श्लोकद्वयमेकान्वयम् । ऋक्षवानर सैन्यानामिति निर्धारणे षष्ठी ॥ २१ ॥ २२ ॥ एवमिति । नस्तः नासिकायाम् ॥ २३ ॥ निर्वेदनः वेदनारहितः ॥ २४–२६ ॥ तथैवेति । मुदा, युक्तमिति



स तं भ्रातरमाश्वास्य परिष्वज्य च राघवः । रामः सुषेणं मुदितः समाभाष्येदमब्रवीत् ॥ १९ ॥ सशल्योऽयं महाप्राज्ञ सौमित्रिर्मित्रवत्सलः । यथा भवति सुस्वस्थस्तथा त्वं समुपाचर ॥ २० ॥ विशल्यः क्रियतां क्षिप्रं सौमित्रिः सविभीषणः । ऋक्षवानरसैन्यानां शूराणां द्रुमयोधिनाम् ॥ २१ ॥ ये चाप्यन्येऽत्र युध्यन्ति सशल्या व्रणिनस्तथा । तेऽपि सर्वे प्रयत्नेन क्रियन्तां सुखिनस्त्वया ॥ २२ ॥ एवमुक्तस्तु रामेण महात्मा हरियूथपः । लक्ष्मणाय ददौ नस्तः सुषेणः परमौषधिम् ॥ २३ ॥ स तस्या गन्धमाघ्राय विशल्यः समपद्यत । तथा निर्वेदनश्चैव संरूढव्रण एव च ॥ २४ ॥ विभीषणमुखानां च सुहृदां राघवाज्ञया । सर्ववानरमुख्यानां चिकित्सां स तदाऽकरोत् ॥ २५ ॥ ततः प्रकृतिमापन्नो हतशल्यो गतव्यथः । सौमित्रिर्मुदितस्तत्र क्षणेन विगतज्वरः ॥ २६ ॥ तथैव रामः प्लवगाधिप स्तदा विभीषणश्चर्क्षपतिश्च जाम्बवान् । अवेक्ष्य सौमित्रिमरोगमुत्थितं मुदा ससैन्याः सुचिरं जहर्षिरे ॥ २७ ॥ अपूजयत् कर्म स लक्ष्मणस्य सुदुष्करं दाशरथिर्महात्मा । हृष्टा बभूवुर्युधि यूथपेन्द्रा निपातितं शक्रजितं निशम्य ॥ २८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

शेषः । मुदा युक्तं सौमित्रिमवेक्ष्य जहर्षिर इति सम्बन्धः । जहर्षिर इत्यत्र गुण आर्षः ॥ २७ ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विनवतितमः सर्गः ॥ ९२ ॥

भूतः ॥ १४–१८ ॥ समाभाष्य सम्बोध्य ॥ १९ ॥ २० ॥ ऋक्षवानरसैन्यानामिति निर्धारणे षष्ठी ॥ २१ ॥ २२ ॥ नस्तः नासिकायाम् ॥ २३–२८ ॥ इति श्रीमहेश्वरतीर्थ विरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां द्विनवतितमः सर्गः ॥ ९२ ॥

अथ सीतावधोद्योगपर्यन्तो रावणस्य पुत्रशोकातिशय उच्यते—ततः पौलस्त्यसचिवा इत्यादि । पौलस्त्यसचिवाः रावणागारवर्तिनः सहायभूताः, इन्द्रजितं हतं श्रुत्वा स्वयमभिज्ञाय साभिज्ञानं दृष्ट्वा, सव्यथाः सन्तो रावणाय आचचक्षुः आचचक्षिरे । अथवा अभिज्ञायेति चतुर्थी । पूर्वमेव यज्ञविघ्नेन निश्चिततद्वधायेत्यर्थः । अवज्ञायेति पाठेऽपि चतुर्थीपक्षे अयमेवार्थः । पक्षान्तरं साक्षात्कारपर्यन्तदर्शनं प्राप्येत्यर्थः ॥ १ ॥ मिषतां नः अस्मासु पश्यत्सु

ततः पौलस्त्यसचिवाः श्रुत्वा चेन्द्रजितं हतम् । आचचक्षुरभिज्ञाय दशग्रीवाय सव्यथाः ॥ १ ॥ युद्धे हतो महाराज लक्ष्मणेन तवात्मजः । विभीषणसहायेन मिषतां नो महाद्युतिः ॥ २ ॥ शूरः शूरेण सङ्गम्य संयुगेष्वपराजितः । लक्ष्मणेन हतः शूरः पुत्रस्तु विबुधेन्द्रजित् । गतः स परमान् लोकान् शरैः सन्ताप्य लक्ष्मणम् ॥ ३ ॥ स तं प्रतिभयं श्रुत्वा वधं पुत्रस्य दारुणम् । घोरमिन्द्रजितः सङ्ख्ये कश्मलं चाविशन्महत् ॥ ४ ॥ उपलभ्य चिरात् संज्ञां राजा राक्षसपुङ्गवः । पुत्रशोकार्दितो दीनो विललापाकुलेन्द्रियः ॥ ५ ॥ हा राक्षसचमूमुख्य मम वत्स महारथ । जित्वेन्द्रं कथमद्य त्वं लक्ष्मणस्य वशं गतः ॥ ६ ॥ ननु त्वमिषुभिः क्रुद्धो भिन्द्याः कालान्तकावपि । मन्दरस्यापि शृङ्गाणि किं पुनर्लक्ष्मणं युधि ॥ ७ ॥ अद्य वैवस्वतो राजा भूयो बहुमतो मम । येनाद्य त्वं महाबाहो संयुक्तः कालधर्मणा ॥ ८ ॥

सत्स्वित्यर्थः । अनन्तरयोजनायामस्मासु जीवत्स्वित्यर्थः । अनादरे षष्ठी ॥ २ ॥ शूर इत्यादिसार्धश्लोक एकान्वयः । क्रियाभेदाच्छूरपदद्वयम् । विबुधेन्द्रजित् देवेन्द्राजित् ॥ ३ ॥ दारुणं करुणम् । घोरं तीक्ष्णम् । कश्मलं मूर्च्छाम् । "मूर्च्छा तु कश्मलं मोहः" इत्यमरः ॥ ४–६ ॥ ननु त्वामिति । नन्वित्यामन्त्रणे । कालान्तकौ यमस्य मूर्तिभेदौ ॥ ७ ॥ भूयः अतिशयेन । कालधर्मणा मरणेन । आर्षोऽनिच् समासान्तः । संयुक्तः संयोजितः ॥ ८ ॥

तत इति । स्वेनस्वेन सैन्येन परिवृताः ततस्ततो वानरैस्सह युद्ध्यन्तः पौलस्त्यसचिवास्तत्रेन्द्रजितं हतं श्रुत्वा अभिज्ञाय दृष्ट्वा सव्यथा रावणायाचचक्षुः आचचक्षिरे इत्यवगन्तव्यम् । मिषतां नो महाद्युतिरित्यत्रुपदमेवाभिधानात् ॥ १–३ ॥ दारुणं करुणम् । घोरं तीक्ष्णम् । प्रतिभयं भयङ्करम् । कश्मलं मूर्च्छाम् ॥ ४–६ ॥ कालान्तकावपि कालः सर्वसंहारकः, अन्तकः कालाभिमानी पुरुषः ॥ ७ ॥ अद्येति । भूयो बहुमतः, अतिशयेन सम्मत इति दुःखातिशयोक्तिः । येन वैवस्वतेन

युद्धमरणस्य सर्वाकाङ्क्षितत्वाद्युद्धहतं त्वां न शोचामीत्याह—एष इति । एषः युद्धमरणरूपः पन्थाः ॥ ९ ॥ एवं यशस्यत्वादशोच्यत्वमुक्त्वा स्वर्ग्यत्वादशोच्यत्वमाह—य इति ॥ १० ॥ ११ ॥ लोकास्त्रय इत्युक्तावपि पृथिव्याः पृथगुपादानं प्राधान्यात् । यथा ब्राह्मणा आगता वसिष्ठोऽप्यागत



एष पन्थाः सुयोधानां सर्वामरगणेष्वपि ॥ ९ ॥ यः कृते हन्यते भर्तुः स पुमान् स्वर्गमृच्छति । अद्य देवगणाः सर्वे लोकपालास्तथर्षयः । हतमिन्द्राजितं श्रुत्वा सुखं स्वप्स्यन्ति निर्भयाः ॥ १० ॥ अद्य लोकास्त्रयः कृत्स्ना पृथिवी च सकानना । एकेनेन्द्राजिता हीना शून्येव प्रतिभाति मे ॥ ११ ॥ अद्य नैर्ऋतकन्यानां श्रोष्याम्यन्तःपुरे रवम् । करेणुसङ्घस्य यथा निनादं गिरिगह्वरे ॥ १२ ॥ यौवराज्यं च लङ्कां च रक्षांसि च परन्तप । मातरं मां च भार्यां च क्व गतोऽसि विहाय नः ॥ १३ ॥ मम नाम त्वया वीर गतस्य यमसादनम् । प्रेतकार्याणि कार्याणि विपरीते हि वर्तसे ॥ १४ ॥ स त्वं जीवति सुग्रीवे लक्ष्मणे च सराघवे । मम शल्यमनुद्धृत्य क्व गतोऽसि विहाय नः ॥ १५ ॥ एवमादिविलापार्तं रावणं राक्षसाधिपम् । आविवेश महान् कोपः पुत्रव्यसनसम्भवः ॥ १६ ॥ प्रकृत्या कोपनं ह्येनं पुत्रस्य पुनराधयः । दीप्तं सन्दीपयामासुर्घर्मेऽर्कमिव रश्मयः ॥ १७ ॥

इत्यादौ ॥१२॥ नः सर्वानिति योजनीयम् ॥१३–१६॥ प्रकृत्या कोपनमित्यस्य विवरणं दीप्तमिति । पुत्रस्य पुत्रसंबन्धिन्यः, पुत्रविषया इत्यर्थः । आधयः

कालधर्मणा संयोजितः ॥ ८ ॥ युद्धमरणस्य सकलशूरजनकाङ्क्षिततया युद्धहतं त्वां न शोचामीत्याह—एष इति । सुयोधानां मरणाय एष पन्थाः । सर्वामरगणेष्वपीति । न केवलं मनुष्येषु सर्वामरगणेष्वपि स श्लाघ्य इति भावः ॥ ९ ॥ एतेन यशस्करत्वादशोच्यत्वमुक्तम् । इदानीं स्वर्गहेतुत्वादप्यशोच्यत्वमाह—यः कृत इति । भर्तुः कृते यः हन्यते सः स्वर्गमृच्छतीति सम्बन्धः ॥ १० ॥ त्रयो लोकाः पातालान्तरिक्षस्वर्गाः, पृथिव्याः पृथगभिधानात् ॥ ११–१३ ॥ मम त्वया प्रेतकार्याणि कर्तव्यानि, विपरीते व्युत्क्रमे वर्तसे इति सम्बन्धः ॥१४॥ स त्वमित्यस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु—सलक्ष्मणे रामे जीवति सति यस्त्वं जीवितं कस्माद्व्रजसि, तयोरसाध्यत्वादिति भावः ॥ १५ ॥ १६ ॥ प्रकृत्येति । पुत्रस्याधयः पुत्रसम्बन्ध्याधयः, पुत्रमरणजनितमनःपीडेति यावत् ॥ १७–१९ ॥

शोकाः। पुनः भूयः। सन्दीपयामासुः कोपयामासुः। अकर्मपक्षे क्रूरयामासुरित्यर्थः॥ १७॥ ललाट इति। भ्रुकुटीभिरिति बहुवचनं दशशिरस्कत्वात्॥ १८–२३॥ आवेष्टयमानस्य भ्राम्यमाणस्य, यन्त्रस्य तिलपीडनयन्त्रस्य। दानवैर्बलवद्भिरित्यर्थः॥ २४॥ संविलिलियिरे स्तम्भादिव्यव

ललाटे भ्रुकुटीभिश्च सङ्गताभिर्व्यरोचत। युगान्ते सह नक्रैस्तु महोर्मिभिरिवोदधिः॥ १८॥ कोपाद्विजृम्भमाणस्य वक्त्राद व्यक्तमभिज्वलन्। उत्पपात स भूयोऽग्निर्वृत्रस्य वदनादिव॥१९॥ स पुत्रवधसन्तप्तः शूरः क्रोधवशं गतः। समीक्ष्य रावणो बुद्ध्या वैदेह्या रोचयद्वधम्॥२०॥ तस्य प्रकृत्या रक्ते च रक्ते क्रोधाग्निनाऽपि च। रावणस्य महाघोरे दीप्ते नेत्रे बभूवतुः॥ २१॥ घोरं प्रकृत्या रूपं तत्तस्य क्रोधाग्निमूर्च्छितम्। बभूव रूपं क्रुद्धस्य रुद्रस्येव दुरासदम्॥ २२॥ तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नस्रबिन्दवः। दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिन्दवः॥ २३॥ दन्तान् विदशतस्तस्य श्रूयते दशनस्वनः। यन्त्रस्यावेष्टयमानस्य महतो दानवैरिव॥२४॥ कालाग्निरिव संक्रुद्धो यां यां दिशमवैक्षत। तस्यां तस्यां भयत्रस्ता राक्षसाः संविलिलियिरे॥ २५॥ तमन्तकमिव क्रुद्धं चराचरचिखादिषुम्। वीक्षमाणं दिशः सर्वा राक्षसा नोपचक्रमुः॥ २६॥ ततः परमसंक्रुद्धो रावणो राक्षसाधिपः। अब्रवीद्रक्षसां मध्ये संस्तम्भयिषुराहवे॥ २७॥ मया वर्षसहस्राणि चरित्वा दुश्चरं तपः। तेषु तेष्ववकाशेषु स्वयम्भूः परितोषितः॥२८॥ तस्यैव तपसो व्युष्टया प्रसादाच्च स्वयम्भुवः। नासुरेभ्यो न देवेभ्यो भयं मम कदाचन॥२९॥

हिता बभूवुरित्यर्थः॥ २५॥ तमिति। चिखादिषुं संहर्तुमिच्छुमित्यर्थः। नोपचक्रमुः नोपसेदुः॥ २६॥ संस्तम्भयिषुराहवे युद्धभीतान् राक्षसान् युद्धे स्थापयितुकामः। सनि द्विर्वचनाभाव आर्षः॥२७॥ अवकाशेषु तपःसमाप्तिषु॥२८॥ तस्यैवेत्यादि। व्युष्टया समृद्धया। "व्युष्टिः फले समृद्धौ च"

स पुत्रवधेत्यस्य प्रातीतिकार्थः स्पष्टः। वस्तुतस्तु–रावणो वैदेह्या हेतुभूतया वधं स्ववधं बुद्ध्या समीक्ष्य इतः परं रामो मामवश्यं वधिष्यतीति निश्चित्येत्यर्थः। अरोचयत स्ववधमित्यनुषङ्गः। रावणक्रोधावेशस्य सीताहननोद्योगस्य चायमाशयः–स्वस्य रामहस्तवधेच्छया सकलराक्षसकुलनाशं मतमितीतरराक्षसानामप्रकटनाय क्रोधावेशादिकमित्यर्थः॥ २०–२३॥ दन्तानिति। यन्त्रस्य घटयन्त्रस्य दानवैरावेष्टयमानस्य भ्राम्यमाणस्य॥२४॥२५॥ नोपचक्रमुः नोपसेदुः॥२६॥ तत इति। संस्तम्भयितुमाहवे इति पाठः। युद्धभीतान् राक्षसान् युद्धे पातयितुमित्यर्थः॥ २७॥ अवकाशेषु तपस्समाप्तिसमयेषु॥२८॥ व्युष्टया वृद्ध्या॥ २९॥

इत्यमरः। भयाभावे हेतुमाह—कवचमिति। यत् यस्मात् कवचमस्ति तस्मादिति पूर्वेणान्वयः ॥ २९ ॥ ३० ॥ तेन कवचेन संयुक्तं रथस्थं माम् इह संयुगे कः प्रतीयात् आभिमुख्येनागच्छेत् ? अद्य मामाजौ साक्षात्पुरन्दरोऽपि न प्रतीयादिति च योज्यम्। अर्थसिद्धौ नञ्। क्रियापदमस्त्येव।

कवचं ब्रह्मदत्तं मे यदादित्यसमप्रभम्। देवासुरविमर्देषु न भिन्नं वज्रशक्तिभिः ॥ ३० ॥ तेन मामद्य संयुक्तं रथस्थमिह संयुगे। प्रतीयात् कोऽद्य मामाजौ साक्षादपि पुरन्दरः ॥ ३१ ॥ यत्तदाऽभिप्रसन्नेन सशरं कार्मुकं महत्। देवासुरविमर्देषु मम दत्तं स्वयम्भुवा ॥ ३२ ॥ अद्य तूर्यशतैर्भीमं धनुरुत्थाप्यतां मम। रामलक्ष्मणयोरेव वधाय परमाहवे ॥३३॥ स पुत्रवधसन्तप्तः शूरः क्रोधवशं गतः। समीक्ष्य रावणो बुद्ध्या सीतां हन्तुं व्यवस्यत ॥३४॥ प्रत्यवेक्ष्य तु ताम्राक्षः सुघोरो घोरदर्शनः। दीनो दीनस्वरान् सर्वांस्तानुवाच निशाचरान् ॥ ३५ ॥ मायया मम वत्सेन वञ्चनार्थं वनौकसाम्। किञ्चिदेव हतं तत्र सीतेयमिति दर्शितम् ॥ ३६ ॥ तदिदं तथ्यमेवाहं करिष्ये प्रियमात्मनः। वैदेहीं नाशयिष्यामि क्षत्रबन्धुमनुव्रताम् ॥ ३७ ॥ इत्येवमुक्त्वा सचिवान् खड्गमाशु परामृशत् ॥३८॥

अनेवंव्याख्याने अद्य मामाजाविति पुनरुक्तं स्यात् ॥ ३१ ॥ यत्तदेत्यादिश्लोकद्वयमेकान्वयम्। देवासुरविमर्देषु विमर्दकाल इत्यर्थः। अद्य तूर्यशतैरित्यनेन इतःपूर्वमिदं धनुर्न नीतमिति गम्यते ॥ ३२–३४ ॥ प्रत्यवेक्ष्येति। सुघोरः सुघोरप्रकृतिः ॥ ३५ ॥ माययेत्यादिश्लोकद्वयमेकान्वयम्। सीतेयमिति दर्शितं किञ्चित् अलीकमेवेत्यर्थः ॥ ३६ ॥ ३७ ॥ इत्येवमित्यर्धम्। परामृशत् आददे ॥ ३८ ॥

भयाभावे हेतुमाह—कवचमित्यर्धेन। आदित्यसदृशप्रभं यत्कवचं ब्रह्मदत्तं तस्मिन् सति मम सुरेभ्यो भयं नास्तीति पूर्वेण सम्बन्धः ॥ ३०॥ तेन कवचेन संयुक्तं मां कः प्रतीयात् को वा आभिमुख्येनागच्छेत् ? साक्षात्पुरन्दरोऽप्याजौ मां, न प्रतीयादिति शेषः ॥ ३१ ॥ देवासुरविमर्देषु विषये स्वयम्भुवा मम दत्तम् ॥ ३२ ॥ अद्य तूर्येत्यस्य प्रातीतिकार्थः स्पष्टः। वस्तुतस्तु—रामलक्ष्मणयोस्सम्बन्धयाहवे वधाय, वानराणामिति शेषः। मम भीमं धनुः तूर्यशतैस्सहोत्थाप्यतामिति सम्बन्धः ॥ ३३ ॥ सीतां हन्तुं व्यवस्यत निश्चितवान्। वस्तुतस्तु—सीतां हन्तुं गन्तुम्, सीतादर्शनार्थं गन्तुं व्यवस्यतेत्यर्थः। "हन हिंसागत्योः" इति धातुः ॥३४–३५ ॥ वनौकसां वञ्चनाय इयं सीतेति किञ्चिदेव व्यलीकमेव वस्तु हतमिति दर्शितम् ॥ ३६ ॥ तद हननं तथ्यमेव करिष्ये। तदेवाह वैदेहीमिति। माययेत्यादिश्लोक

उद्धृत्येत्यादिश्लोकद्वयमेकं वाक्यम् । गुणसम्पन्नं माल्यालङ्कृतम्, विमलाम्बरवर्चसं विमलाकाशसदृशम् खड्गमादाय कोशादुद्धृत्य यत्र मैथिली तं देशं प्रति निष्पपातेत्यन्वयः ॥३९॥४०॥ व्रजन्तमित्यादिसार्धश्लोकत्रयमेकान्वयम् । रत्नानि श्रेष्ठवस्तूनि । "रत्नं स्वजातिश्रेष्ठेऽपि" इत्यमरः॥४१—४५॥

उद्धृत्य गुणसम्पन्नं विमलाम्बरवर्चसम् । निष्पपात स वेगेन सभार्यः सचिवैर्वृतः ॥ ३९ ॥ रावणः पुत्रशोकेन भृशमाकुलचेतनः । संक्रुद्धः खड्गमादाय सहसा यत्र मैथिली ॥ ४० ॥ व्रजन्तं राक्षसं प्रेक्ष्य सिंहनादं प्रचुक्रुशुः । ऊचुश्चान्योन्यमाश्लिष्य संक्रुद्धं प्रेक्ष्य राक्षसाः ॥ ४१ ॥ अद्यैनं तावुभौ दृष्ट्वा भ्रातरौ प्रव्यथिष्यतः । लोकपाला हि चत्वारः क्रुद्धेनानेन निर्जिताः॥४२॥ बहवः शत्रवश्चापि संयुगेषु निपातिताः । त्रिषु लोकेषु रत्नानि भुङ्क्ते चाहृत्य रावणः ॥ ४३ ॥ विक्रमे च बले चैव नास्त्यस्य सदृशो भुवि ॥ ४४ ॥ तेषां सञ्जल्पमानानामशोकवनिकां गताम् । अभिदुद्राव वैदेहीं रावणः क्रोधमूर्च्छितः ॥४५॥ वार्यमाणः सुसंक्रुद्धः सुहृद्भिर्हितबुद्धिभिः । अभ्यधावत संक्रुद्धः खेग्रहो रोहिणीमिव ॥ ४६ ॥ मैथिली रक्ष्यमाणा तु राक्षसीभिरनिन्दिता । ददर्श राक्षसं क्रुद्धं निस्त्रिंशवरधारिणम् ॥ ४७ ॥ तं निशाम्य सनिस्त्रिंशं व्यथिता जनकात्मजा । निवार्यमाणं बहुशः सुहृद्भिरनुवर्तिनम् । सीता दुःखसमाविष्टा विलपन्तीदमब्रवीत् ॥४८॥ यथाऽयं मामभिक्रुद्धः समभिद्रवति स्वयम् । वधिष्यति सनाथां मामनाथामिव दुर्मतिः ॥ ४९ ॥ बहुशश्चोदयामास भर्तारं मामनुव्रताम् । भार्या भव रमस्वेति प्रत्याख्यातो ध्रुवं मया ॥ ५० ॥

ग्रहः अङ्गारकः ॥ ४६—४८ ॥ रामानु०--तमिति । निशाम्य दृष्ट्वा ॥ ४८ ॥ यथेति । यथा यस्मादित्यर्थः ॥ ४९ ॥ ५० ॥

द्वयस्य वास्तवार्थस्तु—मम वत्सेन बालेनापि सतेन्द्रजिता वनौकसां वञ्चनार्थम् इयं सीतेति किञ्चिदेव अलीकमेव हतं दर्शितम् । अहं क्षत्रबन्धुं क्षत्राणां बन्धुं परमार्तं राममनुव्रतां वैदेहीं तथ्यं यथा तथा नाशयिष्यामि यदि तदिदम् आत्मनः अप्रियम् एव स्यात् अतः करिष्ये, इतरराक्षससन्तोषार्थं तस्याः किञ्चिद्दुःखमिति शेषः ॥३७॥३८॥ उद्धृत्येत्यादि श्लोकद्वयमेकं वाक्यम् । विमलाम्बरवर्चसं निर्मलाकाशसदृशं खड्गमाकाय उद्धृत्य कोशादुद्धृत्य यत्र मैथिली तं देशं प्रति सचिवैर्वृतस्सन् निष्पपातेति सम्बन्धः ॥ ३९—४२ ॥ त्रिषु लोकेषु रत्नानि आहृत्य रावणः भुङ्क्ते । विक्रमे च बले चैव नास्त्यस्य सदृशो भुवि इति पाठः । आवृत्येति पाठे—आवृत्य आक्रम्य ॥ ४३—४७ ॥ अनुवर्तिनम् अभिमुखमागच्छन्तम् ॥ ४८ ॥ यथा यस्मात्कारणात् ॥ ४९ ॥ वधिष्यतीत्यत्र कारणमाह—बहुश इति ॥ ५० ॥

सोऽयमिति । अनुपस्थाने अनुपस्थानात् ॥ ५१ ॥ रामानु०—सोऽयं ममानुपस्थाने व्यक्तं नैराश्यमागत इति पाठः । अनुपस्थाने अनुपस्थाने सति ॥ ५१ ॥ तौ निहत्य तेन निस्त्रिंशेन सह प्रवेशनमपि संभवतीत्यभिप्रायेणाह--अथवेत्यादि ॥ ५२ ॥ अत्र निमित्तान्तरमाशङ्कते--अथवा पुत्रशोकेनेति । अहत्वा हन्तुमशक्तो

सोऽयं ममानुपस्थाने व्यक्तं नैराश्यमागतः । क्रोधमोहसमाविष्टो निहन्तुं मां समुद्यतः ॥ ५१ ॥ अथवा तौ नरव्याघ्रौ भ्रातरौ रामलक्ष्मणौ । मन्निमित्तमनार्येण समरेऽद्य निपातितौ । अहो धिङ्मन्निमित्तोऽयं विनाशो राजपुत्रयोः ॥ ५२ ॥ अथवा पुत्रशोकेन अहत्वा रामलक्ष्मणौ । विधमिष्यति मां रौद्रो राक्षसः पापनिश्चयः ॥ ५३ ॥ हनूमतोऽपि यद्वाक्यं न कृतं क्षुद्रया मया ॥ ५४ ॥ यद्यहं तस्य पृष्ठेन तदा यायामनिन्दिता । नाद्यैवमनुशोचेयं भर्तुरङ्कगता सती ॥ ५५ ॥ मन्ये तु हृदयं तस्याः कौसल्यायाः फलिष्यति । एकपुत्रा यदा पुत्रं विनष्टं श्रोष्यते युधि ॥ ५६ ॥ सा हि जन्म च बाल्यं च यौवनं च महात्मनः । धर्मकार्यानुरूपं च रुदन्ती संस्मरिष्यति ॥ ५७ ॥ निराशा निहते पुत्रे दत्त्वा श्राद्धमचेतना । अग्निमारोक्ष्यते नूनमपो वाऽपि प्रवेक्ष्यति ॥ ५८ ॥ धिगस्तु कुब्जामसतीं मन्थरां पापनिश्चयाम् । यन्निमित्तमिदं दुःखं कौसल्या प्रतिपत्स्यते ॥ ५९ ॥ इत्येवं मैथिलीं दृष्ट्वा विलपन्तीं तपस्विनीम् । रोहिणीमिव चन्द्रेण विना ग्रहवशं गताम् ॥ ६० ॥ एतस्मिन्नन्तरे तस्य अमात्यो बुद्धिमान् शुचिः । सुपार्श्वो नाम मेधावी राक्षसो राक्षसेश्वरम् । निवार्यमाणं सचिवैरिदं वचनमब्रवीत् ॥ ६१ ॥

भूत्वा ॥ ५३ ॥ हनूमत इत्यर्थम् । क्षुद्रया विचारमूढया ॥ ५४ ॥ यदीति । यायामनुशोचेयमिति "हेतुहेतुमतोर्लिङ्" इति लिङ् ॥ ५५ ॥ प्रथमपक्षानुसारेण शोचति--मन्य इति ॥ ५६ ॥ सा हीति । धर्मकार्यानुरूपं धर्मकार्यानुरूपत्वम् ॥ ५७ ॥ अचेतना मूर्च्छिता ॥ ५८ ॥ ५९ ॥ इत्येवमित्यादि । मैथिलीं दृष्ट्वा रावणमब्रवीदित्यन्वयः ॥ ६०—६४ ॥

अनुपस्थाने सति अनङ्गीकारे सति ॥ ५१ ॥ पुत्रशोकेन रामलक्ष्मणयोर्मृतत्वमसत्यं ... अहत्वा हन्तुमशक्तो भूत्वा ॥ ५२—५५ ॥ मन्ये त्विति । यदा श्रोष्यते तदैव

अभ्युत्थानं युद्धनिर्याणप्रारम्भम् । चतुर्दशीं चतुर्दश्याम् । अमावास्याम् अमावास्यायाम् । अनेन त्रयोदशयुद्धदिनान्यतीतानीत्यवगम्यते । तथा हि–" ततोऽस्तमगमत्सूर्यः सन्ध्यया प्रतिरञ्जितः । पूर्णचन्द्रप्रदीपा च क्षपा समभिवर्तत ॥ " इति वचनात् पौर्णमास्यां सुवेलाप्रवेशः, ततः कृष्णपक्षप्रथमायां युद्धस्यारम्भः, तस्यामेव रात्रौ नागपाशवन्धतद्विमोक्षौ, द्वितीयायां धूम्राक्षस्य वधः, तृतीयायां वज्रदंष्ट्रस्य, चतुर्थ्यां



कथं नाम दशग्रीव साक्षाद्वैश्रवणानुज । हन्तुमिच्छसि वैदेहीं क्रोधाद्धर्ममपास्य हि ॥ ६२ ॥ वेदविद्याव्रतस्नातः स्वकर्मनिरतः सदा । स्त्रियाः कस्माद्वधं वीर मन्यसे राक्षसेश्वर ॥६३॥ मैथिलीं रूपसम्पन्नां प्रत्यवेक्षस्व पार्थिव । त्वमेव तु सहास्माभी राघवे क्रोधमुत्सृज ॥ ६४ ॥ अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशीम् । कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः ॥ ६५ ॥ शूरो धीमान् रथी खड्गी रथप्रवरमास्थितः । हत्वा दाशरथिं रामं भवान् प्राप्स्यति मैथिलीम् ॥ ६६ ॥ स तद्दुरात्मा सुहृदा निवेदितं वचः सुधर्म्यं प्रतिगृह्य रावणः । गृहं जगामाथ ततश्च वीर्यवान् पुनः सभां च प्रययौ सुहृद्वृतः ॥६७॥ इत्यार्षे श्रीरामायणे० श्रीमद्युद्धकाण्डे त्रिनवतितमः सर्गः॥९३॥

मकम्पनस्य, प्रहस्तस्य पञ्चम्याम्, षष्ठ्यां रावणमुकुटभङ्गः, सप्तम्यां कुम्भकर्णस्य वधः, अष्टम्यामतिकायादीनाम्, नवम्यां पुनरिन्द्रजिद्युद्धम्, तस्यामेव रात्रौ कुम्भनिकुम्भादीनां वधः, दशम्यां मकराक्षस्य, एकादश्यां द्वादश्यां त्रयोदश्यां चेन्द्रजिद्वधः । वस्तुतस्तु नवम्यां युद्धारम्भात्तदारभ्य दिनद्वयेन रावणेन्द्रजिन्मूलबलव्यतिरिक्तराक्षसनिबर्हणात् एकादशीद्वादशीत्रयोदशीभिरिन्द्रजिद्वध इति चतुर्दश्यामभ्युत्थानवचनं युज्यत एव ॥६५–६७॥ रामानु०–शूर इति । रथी महारथ इत्यर्थः ॥ ६६ ॥ इति श्रीगोविन्दराज० श्रीरामायण० रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिनवतितमः सर्गः ॥ ९३ ॥



फलिष्यति स्फुटिष्यति ॥ ६६–६३ ॥ मैथिलीमिति । प्रत्यवेक्षस्व कालान्तरे मैथिली व शगा भविष्यतीति प्रत्यवेक्षस्वेत्यर्थः ॥ ६४ ॥ अद्य चतुर्दशीं चतुर्दश्याम् अभ्युत्थानं समरोद्योगं युद्धाय प्रस्थानं कृत्वा अमावास्यायां विजयाय निर्याहि ॥ ६९ ॥ शूर इत्यस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु–दाशरथिं प्रति गत्वा, दाशरथिं मैथिलीं भवान् प्राप्स्यति, रणे हतस्सन् तयोः पार्षदतां प्राप्स्यतीत्यर्थः॥६६॥६७॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायण०युद्धकाण्ड० त्रिनवतितमः सर्गः॥९३॥

अथ मूलबलयुद्धम्—स प्रविश्येत्यादि ॥१॥ अब्रवीदिति । रावणः प्राञ्जलिरिति । अनुनयार्थमञ्जलिकरणम् ॥२॥३॥ रामानु०—अब्रवीदिति । रावणः प्राञ्जलिं वाक्यमिति पाठः ॥ २ ॥ एकमिति । परिक्षिप्य आवार्य, शरवर्षेण वृष्ट्वा हन्तुमर्हथेत्यन्वयः ॥ ४ ॥ स रामो यदि हन्तुं न शक्येत तथापि भवतां शरैः

स प्रविश्य सभां राजा दीनः परमदुःखितः । निषसादासने मुख्ये सिंहः क्रुद्ध इव श्वसन् ॥ १ ॥ अब्रवीच्च स तान् सर्वान् बलमुख्यान् महाबलः । रावणः प्राञ्जलिर्वाक्यं पुत्रव्यसनकर्शितः ॥ २ ॥ सर्वे भवन्तः सर्वेण हस्त्यश्वेन समावृताः । निर्यान्तु रथसङ्घैश्च पादातैश्चोपशोभिताः ॥ ३ ॥ एकं रामं परिक्षिप्य समरे हन्तुमर्हथ । वर्षन्तः शरवर्षेण प्रावृट्काल इवाम्बुदाः ॥ ४ ॥ अथवाऽहं शरैस्तीक्ष्णैर्भिन्नगात्रं महारणे । भवद्भिः श्वो निहन्तास्मि रामं लोकस्य पश्यतः ॥५॥ इत्येतद्राक्षसेन्द्रस्य वाक्यमादाय राक्षसाः । निर्ययुस्ते रथैः शीघ्रैर्नानानीकैः सुसंवृताः ॥ ६ ॥ परिघान् पट्टिशांश्चैव शरखड्गपरश्वधान् । शरीरान्तकरान् सर्वे चिक्षिपुर्वानरान् प्रति ॥ ७ ॥ वानराश्च द्रुमान् शैलान् राक्षसान् प्रति चिक्षिपुः ॥ ८ ॥ स सङ्ग्रामो महान् भीमः सूर्यस्योदयनं प्रति । रक्षसां वानराणां च तुमुलः समपद्यत ॥ ९ ॥ ते गदाभिर्विचित्राभिः प्रासैः खड्गैः परश्वधैः । अन्योन्यं समरे जघ्नुस्तदा वानरराक्षसाः ॥ १० ॥ एवं प्रवृत्ते सङ्ग्रामे ह्युद्भूतं सुमहद्रजः । रक्षसां वानराणां च शान्तं शोणितविस्रवैः ॥ ११ ॥

भिन्नगात्रः स्यात्, तेन तस्य वधः सुकरो मे भवेदित्यभिप्रायेणाह—अथवेति । इदानीं यूयं तं हन्तुं न शक्ताश्चेदिदानीं तीक्ष्णैः शरैर्भवद्भिर्भिन्नगात्रं श्वो निहन्तास्मि ॥ ५–८ ॥ सूर्यस्योदयनं प्रति सूर्योदयमारभ्य ॥ ९ ॥ ते गदाभिरिति । अन्योन्यं जघ्नुरित्यत्र शिलावृक्षाणामप्युपलक्षणम् । राक्षसेभ्यो ॥ १–३ ॥ एकमिति । परिक्षिप्य परितो निरुध्य ॥ ४ ॥ अथवा अद्य रामहननासम्भवपक्षे भवद्भिर्भिन्नगात्रं श्वो निहन्तास्मीति सम्बन्धः । एकं राममित्यादि श्लोकद्वयस्य वास्तवार्थस्तु—शरान् वर्षन्तो यूयं परिक्षिप्य मिलित्वा एकं मुख्यं रामं समरे हन्तुं गन्तुमर्हथेति सम्बन्धः । अथ भवद्भिर्वा शरैर्महारणे भिन्नगात्रं रामं लोकस्य पश्यतः अहं श्वो निहन्ता गन्ता गमिष्यामीत्यर्थः ॥ ५–८ ॥ स सङ्ग्राम इति । सूर्यस्योदयनं प्रति सूर्योदयमारभ्य ॥ ९ ॥ अन्योन्यं जघ्नुरित्यत्र



स०—आहवे सर्वान् हतान् श्रुत्वा अनुत्साहान् युद्धाय प्रोत्साहयितुं प्राञ्जलिर्भूत्वाऽब्रवीदित्यर्थः ॥२॥ शरवर्षाणि जलवर्षाणि बाणवर्षाणीति नीरदसेनोभयपक्षेऽपि क्रमादर्थो बोध्यः । प्रहृष्टाः शस्त्रवर्षणीति पाठः ॥४॥

ऽपहृतानि गदाखड्गादीनि राक्षसानामिव वानराणामपि संभवन्तीति वा  यथोक्तमिति ज्ञेयम् ॥ १० ॥ ११ ॥ मातङ्गेति । शरीराण्येव सङ्घाटाः प्लवाः तान् वहन्तीति शरीरसङ्घाटवहाः ॥ १२ ॥ ततस्ते वानराः सर्वे शोणितौघपरिप्लुता इत्यारभ्य-राक्षसानां बभञ्जिर इत्यन्तं सार्धश्लोक एकान्वयः ॥ १३ ॥

मातङ्गरथकूलाश्च वाजिमत्स्या ध्वजद्रुमाः । शरीरसङ्घाटवहाः प्रसस्रुः शोणितापगाः ॥ १२ ॥ ततस्ते वानराः सर्वे शोणितौघपरिप्लुताः । ध्वजवर्मरथानश्वान्नानाप्रहरणानि च । आप्लुत्याप्लुत्य समरे राक्षसानां बभञ्जिरे ॥ १३ ॥ केशान् कर्णललाटांश्च नासिकाश्च प्लवङ्गमाः । रक्षसां दशनैस्तीक्ष्णैर्नखैश्चापि न्यकर्तयन् ॥ १४ ॥ एकैकं राक्षसं सङ्ख्ये शतं वानरपुङ्गवाः । अभ्यधावन्त फलिनं वृक्षं शकुनयो यथा ॥ १५ ॥ तथा गदाभिर्गुर्वीभिः प्रासैः खड्गैः परश्वधैः । निजघ्नुर्वानरान् घोरान् राक्षसाः पर्वतोपमाः ॥ १६ ॥ राक्षसैर्युध्यमानानां वानराणां महाचमूः । शरण्यं शरणं याता रामं दशरथात्मजम् ॥१७॥ ततो रामो महातेजा धनुरादाय वीर्यवान् । प्रविश्य राक्षसं सैन्यं शरवर्षं ववर्ष ह ॥१८॥ प्रविष्टं तु तदा रामं मेघाः सूर्यमिवाम्बरे । नाभिजग्मुर्महाघोरं निर्दहन्तं शराग्निना ॥१९॥ कृतान्येव सुघोराणि रामेण रजनीचराः । रणे रामस्य ददृशुः कर्माण्यसुकराणि च ॥ २० ॥ चालयन्तं महानीकं विधमन्तं महारथान् । ददृशुस्ते न वै रामं वातं वनगतं यथा ॥ २१ ॥

केशानिति । रक्षसां केशानिति क्रमेणान्वयः । न्यकर्तयन् चिच्छिदुः ॥ १४–१६ ॥ राक्षसैरिति । वानरसेनाशरणागतिरियम् । राक्षसैर्वध्यमानानामित्याकिञ्चन्यानन्यगतिकत्वोक्तिः । शरण्यमिति दयाद्युक्तिः । राममिति परत्वोक्तिः । दशरथात्मजमिति सौलभ्योक्तिः ॥ १७–१९ ॥ कृतान्येवेति । कृतान्येव ददृशुः, नतु क्रियमाणानीत्यर्थः ॥२०॥ न केवलं हस्तलाघवातिशयेन कर्मणामदर्शनं रणसञ्चारलाघवातिशयेन कर्तारमपि न ददृशुरित्याह–चालयन्त

वानराणां गदाद्यायुधाभावाद्राक्षसहस्तादाच्छिद्य गृहीतैस्तैरेव राक्षसहननं भविष्यतीति वेदितव्यम् ॥ १०–१९ ॥ कृतान्येवेति । रजनीचरा रामस्य रणे असुकराणि कर्माणि रामेण कृतान्येव ददृशुः, न क्रियमाणानीत्यर्थः ॥ २० ॥ न केवलं हस्तलाघवातिशयेन तस्य कर्माणि न ददृशुः किन्तु तत्कर्तारमपि न ददृशुरित्याह–चालयन्तमिति । चालनादिकार्यलिङ्गाद्यथा वायुरनुमितो भवति तद्वद्रामोऽपि विधमनादिकार्यलिङ्गादनुमितः, न तु प्रत्यक्षेण दृष्टः ॥ २१ ॥ २२ ॥

मिति। यथा चालनविधमनादिकार्यलिङ्गात् वायुरनुमितो भवति तद्वद्रामोऽप्यनुमितः, न तु प्रत्यक्षित इत्यर्थः ॥ २१ ॥ उक्तमर्थं विशदयति—छिन्नमिति। छिन्नं खण्डितम्। भिन्नं विदारितम्। प्रभग्नं शकलीकृतम्। शस्त्रपीडितं हृदयार्पितशल्यम् ॥ २२ ॥ इन्द्रियार्थेषु तिष्ठन्तम् इन्द्रियार्थाननुतिष्ठन्तम् अनुभवन्तम्, तेनानुभवेनानुमीयमानमपि भूतात्मानं भूतस्य पञ्चभूतात्मकशरीरस्य आत्मानं जीवात्मानं प्रजाः यथा न पश्यन्ति, तथैव

छिन्नं भिन्नं शरैर्दग्धं प्रभग्नं शस्त्रपीडितम्। बलं रामेण ददृशुर्न रामं शीघ्रकारिणम् ॥ २२ ॥
प्रहरन्तं शरीरेषु न ते पश्यन्ति राघवम्। इन्द्रियार्थेषु तिष्ठन्तं भूतात्मानमिव प्रजाः ॥ २३ ॥
एष हन्ति गजानीकमेष हन्ति महारथान्। एष हन्ति शरैस्तीक्ष्णैः पदातीन् वाजिभिः सह ॥ २४ ॥
इति ते राक्षसाः सर्वे रामस्य सदृशान् रणे। अन्योन्यं कुपिता जघ्नुः सादृश्याद्राघवस्य ते ॥ २५ ॥
न ते ददृशिरे रामं दहन्तमरिवाहिनीम्। मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ २६ ॥

शरीरेषु प्रहरन्तं तेन प्रहारेणानुमीयमानमपि राघवं पुरतश्चक्षुषा नाद्राक्षुरित्यर्थः। यद्वा इन्द्रियार्थेषु प्रत्यक्षतोऽनुभूयमानेषु गन्धादिगुणेषु, निराश्रयगुणावस्थानासम्भवात् सौक्ष्म्येणानुवृत्तं भूतात्मानमिव पुष्पाद्यवयवभूतपृथिव्यादिस्वरूपमिवेत्यर्थः ॥ २३ ॥ एष हन्तीत्यादिश्लोकद्वयमेकान्वयम्। सदृशान् सादृश्येन प्रतीयमानान्। अन्योन्यं सादृश्यादेव हेतोर्जघ्नुश्चेत्यन्वयः ॥ २४ ॥ २५ ॥ राक्षसानां रामादर्शनकारणमाह—न त इति। इदमुपप्रहरन्तमिति। इन्द्रियार्थेषु तिष्ठन्तम् इन्द्रियविषयेषु प्रेरकत्वेन शरीरेष्ववतिष्ठन्तम्। भूतात्मानं परमात्मानम्, प्रजा इव ते शरीरेषु प्रहरन्तं वेगातिशयेन स्वशरीरेषु यौगपद्येन शरैः प्रहरन्तं राघवं न पश्यन्ति नाद्राक्षुरिति सम्बन्धः। यद्वा इन्द्रियार्थेषु तिष्ठन्तम् इन्द्रियार्थाननुभवन्तम्। तेनानुभवेनानुमीयमानमपि भूतात्मानं जीवात्मानं प्रजा यथा न पश्यन्ति तद्वदिति। यद्वा इन्द्रियार्थेषु शब्दादिविषयेषु तिष्ठन्तं भूतात्मानं परमात्मानं प्रजा इव परमात्मनस्सर्वव्यापितया शब्दादिविषयेषु उपादानचैतन्यरूपतया सूक्ष्मरूपेण तिष्ठन्तं तेभ्योऽन्यत्वेन ते यथा नोपलभन्ते ॥ २३ ॥ एष हन्तीति श्लोकद्वयमेकं वाक्यम्। ते राक्षसाः रामस्य सदृशान् सदृशत्वेन प्रतीयमानान्। ‘एष हन्ति गजानीकम्’ इति कुपितास्सर्वे ते राक्षसा रामस्य सादृश्यादेव अन्योन्यं जघ्नुरिति सम्बन्धः ॥ २४ ॥ २५ ॥ राक्षसानां राघव

स०—इति इत्याकारकज्ञानेन। ते सर्वे राक्षसाः एकसैन्यस्था रणे राघवास्त्रेण मोहिताः सन्तः रामस्य सदृशा बभूवुः। ततश्च राघवस्य सादृश्यात्कुपितास्सन्तः अन्योन्यम् अयं राम इति स राम इति परस्परं जघ्नुः ॥ २५ ॥ एतदेव विशदयति—न ते इति। सैन्यैकदेशस्थाः रामम् अरिवाहिनीं गान्धर्वास्त्रेण दहन्तं स्वस्थाने स्थितं तेनास्त्रेण महात्मना कर्त्रा मोहिताः सन्तः न ददृशिरे इति योजना ॥ २६ ॥

लक्षणम् । सादृश्यदर्शनमपि मोहनास्त्रेणेति द्रष्टव्यम् । महात्मना महास्वभावेन ॥ २६ ॥ अदर्शनवत्सदृशदर्शनवचानेकत्वदर्शनं नास्त्रकृतम्, किंतु भीतिकृतमित्याह—ते त्विति । तुशब्दः पूर्वस्माद्विशेषपरः । मारीचेनाप्युक्तम्—"अपि रामसहस्राणि भीतः पश्यामि रावण" इति ॥२७॥ भ्रमन्तीं रामस्य मण्डलाकारगतिविशेषेष्विति केचित् । निरन्तरज्याकर्षणादिति वयम् । अलातचक्रप्रतिमां निर्ज्वालं काष्ठं निरन्तरभ्रमणेनान्तरालाग्रहणाच्चक्रत्वेन प्रतीयमानामिवेत्यर्थः ॥ २८ ॥ अथ तत्र समरसमये मण्डलीकृतकार्मुकं रामं सकलरिपुनिघातिसुदर्शनत्वेन रूपयति—शरीरेत्यादिना । "ज्वालानेम्यर

ते तु रामसहस्राणि रणे पश्यन्ति राक्षसाः । पुनः पश्यन्ति काकुत्स्थमेकमेव महाहवे ॥ २७ ॥
भ्रमन्तीं काञ्चनीं कोटिं कार्मुकस्य महात्मनः । अलातचक्रप्रतिमां ददृशुस्ते न राघवम् ॥ २८ ॥
शरीरनाभि सत्त्वार्चिः शरारं नेमिकार्मुकम् । ज्याघोषतलनिर्घोषं तेजोबुद्धि गुणप्रभम् ॥ २९ ॥

नाभ्यक्षपुरुषाङ्गं सुदर्शनम्" इत्युक्तरीत्या चक्रं षडङ्गं भवति । तत्र कोदण्डचक्रमध्यस्थत्वाद्दृढत्वाच शरीरं नाभित्वेन दर्शयति—शरीरेति । नाभिः चक्रमध्योन्नतप्रदेशः, शरीरमेव नाभिर्यस्य तत्तथोक्तम् । सत्त्वं बलमेवार्चिः ज्वाला यस्य तत् सत्त्वार्चिः । "वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्" इत्यमरः । सत्त्वस्य परसन्तापहेतुत्वादर्चिष्ट्वेन निरूपणम् । शरा एवाराणि चक्रमध्यशलाकाः यस्य तच्छरारम् । सुदर्शनस्य सहस्रारत्वाच्छराणामरत्वरूपणेन युगपत्सहस्रशरसन्धानं व्यज्यते । नेमिः आधारश्चक्रप्रान्तः, नेमिभूतं मण्डलीकृतकार्मुकं यस्य तत्कार्मुकनेमीत्यर्थः । एतेन मण्डलीकृत

सादृश्यप्रतीतौ कारणमाह—न ते ददृशिर इत्यादिना ॥ २६ ॥ २७ ॥ भ्रमन्तीं रामस्य मण्डलाकारगतिविशेषेषु भ्रमन्तीम् अत एव अलातचक्रप्रतिमां कार्मुककोटिं ददृशुः, न राघवमिति सम्बन्धः ॥ २८ ॥ धनुर्विशिक्षाकृतलाघवातिशयान्मण्डलीकृतकार्मुकत्वेन राक्षसान्निघ्नन्तं रामं चक्रत्वेन निरूपयति—शरीरेत्यादिना । शरीरनाभि शरीरमेव नाभिः मध्यप्रदेशो यस्य तत् । सत्त्वार्चिः सत्त्वं बलं तदेवार्चिर्यस्य तत् । शरारं शरा एव अराणि यस्य तत् । अराणि नाभेः परितोवर्तिशलाका

स०—तत्रैव सैन्यान्तरे वृत्तं रामचरितमाह—त इति । ते रावणप्रेरिता राक्षसाः । रामसहस्राणि विश्वरूपत्वाद्रामस्य तद्गृहीतान्यनन्तरामरूपाणीत्यर्थः । रणे पश्यन्ति । उक्तं च भगवत्पादैः—"स एव सर्वत्र च दृश्यमानो विदिक्षु दिक्षु प्रजधान सर्वशः" इति । पुनः क्षणान्तरे एकमेव पश्यन्ति । उक्तं च संग्रहरामायणे "अपाङ्गमात्रेण जगन्नियन्ता नन्वेकरूपोऽपि रिपून्निहन्यात् । स्वैश्वर्यमेवं च निदर्शयन् हि स विश्वरूपोऽभवद्विश्वरूपम् ॥" इत्याधारभ्य—"एकीचकाराथ स रामदेवो दीपाभिमानी हि यथाऽमितेत्वः" इत्यन्तेन । यत्तु भारते—"मायावी चासृजन्मायां रावणो राक्षसाधिपः ।" "अथ भूयोऽपि मायां स व्यदधाद्राक्षसाधिपः" इत्यादिना रावणमाययाऽनेकराक्षसरामलक्ष्मणरूपनिर्माणकथनं तदविरुद्धमित्यत्रापि ग्राह्यम् ॥ २७ ॥

दशायामपि नाभिभूतरामशरीरपरिवेषेण धनुषो महोन्नतत्वमुच्यते । सुदर्शनस्य ज्वालामालया निरन्तरघोषवत्त्वाज्ज्यातलघोषं तद्घोषत्वेन रूप यति ज्याघोषतलनिर्घोषमिति । तलं ज्याघातवारणम्, तेन तद्घोषो लक्ष्यते । ज्याघोषतलघोषावेव निर्घोषो यस्य तत्तथोक्तम् । तेजः पराक्रम एव बुद्धिः अक्षं यस्य तत्तेजोबुद्धि । यथा "प्लवगसैन्यमुलूकजिता जितम्" इत्यत्र उलूकशब्दो लक्षणया कौशिकशब्दं लक्षयित्वा इन्द्रजितमाह तथा बुद्धिशब्दो बुद्धिजनकाक्षलक्षणया अक्षप्रदेशमाह । गुणः शरीरकान्तिः, स एव प्रभा यस्य तत्तथोक्तम् । दिव्यास्त्राणां गुणः शक्तिः माहात्म्यं वा तदेव पर्यन्तो धारा

दिव्यास्त्रगुणपर्यन्तं निघ्नन्तं युधि राक्षसान् । ददृशू रामचक्रं तत् कालचक्रमिव प्रजाः ॥ ३० ॥
अनीकं दशसाहस्रं रथानां वातरंहसाम् । अष्टादश सहस्राणि कुञ्जराणां तरस्विनाम् ॥ ३१ ॥

यस्य तद्दिव्यास्त्रगुणपर्यन्तम् । निघ्नन्तं निघ्नत् । लिङ्गव्यत्यय आर्षः । किञ्च कालचक्रं ज्योतिश्चक्रमिव स्थितम् । विष्णुपुराणे 'यत्र कालचक्रं प्रतिष्ठितम्' इति प्रयोगात् । रामचक्रम् उक्तरीत्या चक्रमिव स्थितं रामं ददृशुः । ननु यदि रामो मोहनास्त्रेण राक्षसान् संहरेत्तदेन्द्रजितोऽस्य को विशेषः? उच्यते । नात्र गान्धर्वास्त्रेण मोहनं कृतम् । अपितु गान्धर्वप्रयोगे सति वेगातिशयेनाज्ञातस्वपरविभेदतया मोहिताः परस्परं जघ्नुः । यत्र रामो दृष्टः तत्क्षणे तत्र तस्यादर्शनाद्राममुद्दिश्य क्षिप्ताः शराः स्वकीयानेव घ्नन्ति । वेगातिशयादेव नानादिक्षु चक्षुःप्रसरे नानात्वेन दर्शनम् । अत एव 'न रामं शीघ्रकारिणम्' इत्युक्तिः । कार्मुककोटेरलातचक्रप्रतिमत्वं रामस्य चक्रत्वरूपणं च प्रयोगशैघ्र्यादेव सङ्गच्छते । अत एव सुग्रीवादयो मायाबलत्वं शङ्केरन्निति परि हरिष्यति 'एतदस्त्रबल'मिति । न ते ददृशिर इत्यस्य श्लोकस्यैवं योजना—गान्धर्वास्त्रेण दहन्तं रामं मोहिताः सन्तो न ददृशिरे । मोहोऽत्र वेगादग्रहणम् । गान्धर्वास्त्रं दाहमात्रे हेतुरिति बोध्यम् ॥ २९ ॥ ३० ॥ अनीकमित्यादि । "एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका । पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या

कृत्यवयवविशेषाः । नेमिकार्मुकं नेमयः पृथिवीं भ्रमन्त्यो वलयाकारेण स्थिताः, नेमिभूतं कार्मुकं यस्य तत् । ज्याघोषतलनिर्घोषं तलं ज्याघातस्थलम्, तल शब्देन तलघोषो लक्ष्यते, ज्याघोषतलघोषौ निर्घोषो यस्य तत् । तेजोबुद्धिगुणप्रभं तेजः शरीरकान्तिः, बुद्धिः ज्ञानम्, तेजोबुद्धिगुणावेव प्रभा यस्य तत् । दिव्यास्त्रगुणपर्यन्तं दिव्यास्त्राणां गुणः माहात्म्यं शक्तिर्वा, तदेव पर्यन्तः धारा यस्य तत्तथोक्तम् । निघ्नन्तं निघ्नत् । पूर्वं रूपकेण निरूप्य पुनरुपमया निरूपयति काल चक्रमिव प्रजा इति ॥ २९॥३० ॥ अनीकमित्यादि श्लोकत्रयमेकं वाक्यम् । "एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका । पत्त्यङ्गैस्त्रिगुणैस्सर्वैः क्रमादाख्या यथोत्तरम् ।

यथोत्तरम्। सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः॥'' इत्युक्तरीत्या दशसङ्ख्यासङ्ख्याता पत्तिः। पत्तितस्त्रिगुणं सेनामुखम्। सेनामुखतस्त्रिगुणो गुल्मः। गुल्मतस्त्रिगुणो गणः। गणतस्त्रिगुणा वाहिनी। तत्त्रिगुणा पृतना। पृतनातस्त्रिगुणा चमूः। एवञ्च दशोनत्रिशताधिकसप्तसहस्रसङ्ख्यालक्षणा चमूरनीकशब्देनोच्यते। सहस्राण्येव साहस्राणि दश साहस्राण्यस्मिन्सन्तीति दशसाहस्रम्, रथानां दशसहस्राण्यनीकानीत्यर्थः। एकोनत्रिंशल्लक्षाधिकसप्तकोटिसंख्यासंख्याता रथा इत्युक्तं भवति। रथाः–७,२९००००००। अष्टादश सहस्राणीत्यनेन अनीकमित्येतद्विभक्तिविपरिणामेनानुषज्यते। अष्टादश

> चतुर्दश सहस्राणि सारोहाणां च वाजिनाम्। पूर्णे शतसहस्रे द्वे राक्षसानां पदातिनाम्॥ ३२॥
> दिवसस्याष्टमे भागे शरैरग्निशिखोपमैः। हतान्येकेन रामेण रक्षसां कामरूपिणाम्॥ ३३॥
> ते हताश्वा हतरथाः शान्ता विमथितध्वजाः। अभिपेतुः पुरीं लङ्कां हतशेषा निशाचराः॥ ३४॥

सहस्राण्यनीकानीत्यर्थः। विंशतिसहस्राधिकद्वादशलक्षोत्तरत्रयोदशकोटिसंख्यासंख्यातास्तरस्विनः कुञ्जरा इत्यर्थः। गजाः–१३,१२,२००००। चतुर्दशसहस्राणीत्यत्रापि अनीकमित्येतद्विपरिणाम्यानुषञ्जनीयम्। चतुर्दश सहस्राण्यनीकानीत्यर्थः। षष्टिसहस्राधिकविंशतिलक्षोत्तरदशकोटिसंख्यासंख्याताः सारोहा वाजिन इत्यर्थः। तुरगाः–१०,२०,६००००। पूर्णे शतसहस्रे द्वे अनीकानीत्यर्थः। अशीतिलक्षोत्तरपञ्चचत्वारिंशत्कोट्यधिकशतकोटिसङ्ख्यासङ्ख्याताः पदातयो राक्षसा इत्यर्थः। पदातयः–१४९,८००००००। वातरंहसामित्यादिविशेषणमहिम्ना तद्भिन्ना रथगजतुरगपदातयोऽसङ्ख्येया इति भावः। अत एवैवमनुसन्दधते–“ नागानामयुतं तुरङ्गनियुतं सार्धं रथानां शतं पादातं शतकोटिकर्तनविधावेकः कबन्धो रणे। एवं कोटिकबन्धनर्तनविधौ किञ्चिद्ध्वनिः किङ्किणी यामार्धं परमात्मनो रघुपतेः कोदण्डघण्टारवः॥” इति। कामरूपिणां रक्षसां सम्बन्धीनि। रथादि सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः। अनीकिनी दशानीकिन्योऽक्षौहिणी '' इत्यमरोक्तप्रकारेण सङ्ख्याता पत्तिः, तत्त्रिगुणं सेनामुखम्, सेनामुखत्रिगुणो गुल्मः, गुल्मत्रिगुणो गणः, गणत्रिगुणा वाहिनी, वाहिनीत्रिगुणा पृतना, पृतनात्रिगुणा चमूः, चमूत्रिगुणा अनीकिनी, दशोनत्रिशताधिकसप्तसहस्रसङ्ख्यालक्षणा चमूः अनीकशब्देनोच्यते। सहस्राण्येव साहस्राणि। स्वार्थेऽण्। दश साहस्राण्यस्मिन् सन्तीति दशसाहस्रम्। वातरंहसां रथानां दशसहस्राण्यनीकानीत्यर्थः(?) षष्टिसहस्राधिकविंशतिलक्षोत्तरदशकोटिसङ्ख्यासङ्ख्यातास्सारोहा वाजिन इत्युक्तं भवति। पूर्णे शतसहस्रे द्वे अनीकानीत्यर्थः। अशीतिलक्षोत्तरपञ्चचत्वारिंशत्कोट्यधिकशतसंख्यासंख्याता राक्षसा इत्युक्तं भवति। [illegible] एकेन रामेण दिवसस्याष्टमे भागे पादघटिकोन

चतुरङ्गबलानि एकेन रामेण दिवसस्याष्टमे भागे पादोनघटिकाचतुष्टये निहतानीत्यर्थः ॥ ३३-३४ ॥ हतैरिति । हतगजाद्युपलक्षितं सुमहात्मनोरामस्य तद्रणाजिरं रुद्रस्य आक्रीडं क्रीडास्थानं श्मशानमिव बभूव । आर्षं नपुंसकत्वम् । " अचिरेण पुरी लङ्का श्मशानसदृशी भवेत् " इति पूर्वोक्तेः ॥३५॥ ॥ ३६ ॥ अब्रवीच्चेत्यादिश्लोकद्वयमेकान्वयम् । प्रत्यनन्तरं समीपस्थम् । क्षणेनानेन रक्षःप्रतिक्षेपजनितां मायावित्त्वशङ्कां वारयति–एतदस्त्रबलमिति ।

हतैर्गजपदात्यश्वैस्तद्बभूव रणाजिरम् । आक्रीडमिव रुद्रस्य क्रुद्धस्य सुमहात्मनः ॥ ३५ ॥ ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । साधु साध्विति रामस्य तत् कर्म समपूजयन् ॥ ३६ ॥ अब्रवीच्च तदा रामः सुग्रीवं प्रत्यनन्तरम् । विभीषणं च धर्मात्मा हनूमन्तं च वानरम् ॥३७॥ जाम्बवन्तं हरिश्रेष्ठं मैन्दं द्विविदमेव च । एतदस्त्रबलं दिव्यं मम वा त्र्यम्बकस्य वा ॥ ३८ ॥ निहत्य तां राक्षसवाहिनीं तु रामस्तदा शक्रसमो महात्मा । अस्त्रेषु शस्त्रेषु जितक्लमश्च संस्तूयते देवगणैः प्रहृष्टैः ॥३९॥ इत्यार्षे श्रीरामायणे० श्रीमद्युद्धकाण्डे चतुर्नवतितमः सर्गः ॥९४॥

तानि तानि सहस्राणि सारोहाणां च वाजिनाम् । रथानां त्वग्निवर्णानां सध्वजानां सहस्रशः ॥ १ ॥
राक्षसानां सहस्राणि गदापरिघयोधिनाम् । काञ्चनध्वजचित्राणां शूराणां कामरूपिणाम् ॥ २ ॥
निहतानि शरैस्तीक्ष्णैस्तप्तकाञ्चनभूषणैः । रावणेन प्रयुक्तानि रामेणाक्लिष्टकर्मणा ॥ ३ ॥
दृष्ट्वा श्रुत्वा च सम्भ्रान्ता हतशेषा निशाचराः । राक्षसीश्च समागम्य दीनाश्चिन्तापरिप्लुताः ॥ ४ ॥

अत्रान्ते इतिकरणं द्रष्टव्यम् । अस्त्रबलम् अस्त्रप्रयोगशक्तिः । न त्वस्त्रमपि, गान्धर्वेण च गान्धर्वमिति रावणादेरपि तत्संभवकथनात् । त्र्यम्बकस्य वा संहारकाले, अस्तीति शेषः ॥ ३७ ॥ ३८ ॥ निहत्येति । संस्तूयत इति वर्तमाननिर्देशेन स्तुतेरद्याप्यविच्छिन्नत्वमुच्यते ॥ ३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्नवतितमः सर्गः ॥ ९४ ॥

अथ राक्षसीनां प्रलापः–तानि तानीत्यादिचतुःश्लोकी । वाजिनामित्येतद्गजानामप्युपलक्षणम् । सहस्रशः सहस्राणि । राक्षसीः राक्षसस्त्रियः, समागम्य मुहूर्तद्वयेन हतानीत्यर्थः । चतुर्दश्यां मूलबलवधः ॥ ३१–३९ ॥ इति श्रीमहेश्वरतीर्थ० युद्धकाण्डव्याख्यायां चतुर्नवतितमः सर्गः ॥९४॥१–३॥ दृष्ट्वेति । हतशेषाः

चिन्तापरिप्लुताः, आसन्निति शेषः ॥ १–४ ॥ विधवा इति । सङ्गम्य सङ्घीभूय, परस्परमालिङ्गिता इत्यर्थः ॥ ५ ॥ कथमित्यादिसार्धश्लोकमेकं वाक्यम् । कराला विकटा ॥ ६ ॥ तं दृष्ट्वेत्यादि सार्धश्लोकमेकं वाक्यम् । प्रकामिता सा कथं कामयामास ॥ ७ ॥ ८ ॥ जनस्येत्यादिसार्धश्लोकद्वयमेकं वाक्यम् ।

विधवा हतपुत्राश्च क्रोशन्त्यो हतबान्धवाः । राक्षस्यः सह सङ्गम्य दुःखार्ताः पर्यदेवयन् ॥ ५ ॥ कथं शूर्पणखा वृद्धा कराला निर्णतोदरी । आससाद वने रामं कन्दर्पमिव रूपिणम् । सुकुमारं महासत्त्वं सर्वभूतहिते रतम् ॥ ६ ॥ तं दृष्ट्वा लोकनिन्द्या सा हीनरूपा प्रकामिता ॥ ७ ॥ कथं सर्वगुणैर्हीना गुणवन्तं महौजसम् । सुमुखं दुर्मुखी रामं कामयामास राक्षसी ॥ ८ ॥ जनस्यास्याल्पभाग्यत्वाद्वलिनी श्वेतमूर्धजा । अकार्यमपहास्यं च सर्वलोकविगर्हितम् ॥ ९ ॥ राक्षसानां विनाशाय दूषणस्य खरस्य च । चकाराप्रतिरूपा सा राघवस्य प्रधर्षणम् ॥ १० ॥ तन्निमित्तमिदं वैरं रावणेन कृतं महत् । वधाय सीता साऽऽनीता दशग्रीवेण रक्षसा ॥ ११ ॥ न च सीतां दशग्रीवः प्राप्नोति जनकात्मजाम् । बद्धं बलवता वैरमक्षयं राघवेण च ॥ १२ ॥ वैदेहीं प्रार्थयानं तं विराधं प्रेक्ष्य राक्षसम् । हतमेकेन रामेण पर्याप्तं तन्निदर्शनम् ॥ १३ ॥

वलयोऽस्याः सन्तीति वलिनी । पामादित्वान्नः । आर्षो ङीप् । अप्रतिरूपा अननुरूपा । तन्निमित्तं प्रधर्षणनिमित्तात् । शूर्पणखयाऽन्यथोक्तावपि तत्कामनादिकमकम्पनादिमुखात् सर्वैर्ज्ञातमिति ज्ञेयम ॥ ९–१२ ॥ वैदेहीमिति । विराधं प्रेक्ष्य ज्ञात्वा, स्थितानामस्माकं तत् विराधहननं विरोधि

निशाचराः रणात्प्रतिनिवृत्ता लङ्कास्थाश्च दृष्ट्वा श्रुत्वा च सम्भ्रान्ताः, अभवन्निति शेषः । राक्षस्यश्च समागम्य सङ्घीभूय दीनाश्चिन्तापरिप्लुताः, अभूवन्निति शेषः । राक्षस्यश्चेति पाठः ॥ ४ ॥ ५ ॥ निर्णतोदरी करभोदरी ॥ ६ ॥ तं दृष्ट्वेत्यर्धमेकं वाक्यम् । प्रकामिता प्रकृष्टः कामः प्रकामः सोऽस्यास्सञ्जातः प्रकामिता ॥ ७ ॥ कामयामास छन्दयामास ॥ ८ ॥ वलिनी वलयः अस्याः सन्तीति वलिनी, ब्रीह्यादित्वादिनिः ॥ ९ ॥ अप्रतिरूपा विकृतरूपा ॥ १० ॥ तन्निमित्तं प्रधर्षणनिमित्तम् । वधाय राक्षसनाशाय ॥ ११ ॥ १२ ॥ वैदेहीं प्रार्थयानम् एकेन रामेण हतं विराधं प्रेक्ष्य स्थितानामस्माकं तत् विराधहननं पर्याप्तं निदर्शनम् रामस्य

निरसनाय पर्याप्तं पूर्णं निदर्शनम् ॥ १३ ॥ चतुर्दशेति श्लोके पर्याप्तं तन्निदर्शनमित्यनुषज्यते । उत्तरश्लोकेनैकवाक्यत्वे शरपदद्वयवैयर्थ्यम् ॥ १४ ॥

॥ १५ ॥ हत इति । अथ खरवधानन्तरम् । नादं शब्दम् । नदन् कुर्वन् । सः प्रसिद्धः कबन्धः ॥ १६–२० ॥ कुम्भकर्णमित्यादि । नावबुध्यते, राम

चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥ १४ ॥ खरश्च निहतः सङ्ख्ये दूषणस्त्रिशिरास्तथा । शरैरादित्यसङ्काशैः पर्याप्तं तन्निदर्शनम् ॥ १५ ॥ हतो योजनबाहुश्च कबन्धो रुधिराशनः । क्रोधान्नादं नदन् सोऽथ पर्याप्तं तन्निदर्शनम् ॥ १६ ॥ जघान बलिनं रामः सहस्रनयनात्मजम् । वालिनं मेरुसङ्काशं पर्याप्तं तन्निदर्शनम् ॥ १७ ॥ ऋष्यमूके वसन् शैले दीनो भग्नमनोरथः । सुग्रीवः स्थापितो राज्ये पर्याप्तं तन्निदर्शनम् ॥ १८ ॥ धर्मार्थसहितं वाक्यं सर्वेषां रक्षसां हितम् । युक्तं विभीषणेनोक्तं मोहात्तस्य न रोचते ॥ १९ ॥ विभीषणवचः कुर्याद्यदि स्म धनदानुजः । श्मशानभूता दुःखार्ता नेयं लङ्का पुरी भवेत् ॥ २० ॥ कुम्भकर्णं हतं श्रुत्वा राघवेण महाबलम् । अतिकायं च दुर्धर्षं लक्ष्मणेन हतं पुनः । प्रियं चेन्द्रजितं पुत्रं रावणो नावबुध्यते ॥२१॥ मम पुत्रो मम भ्राता मम भर्ता रणे हतः । इत्येवं श्रूयते शब्दो राक्षसानां कुलेकुले ॥ २२॥ रथाश्चाश्वाश्च नागाश्च हताः शतसहस्रशः । रणे रामेण शूरेण राक्षसाश्च पदातयः ॥ २३ ॥ रुद्रो वा यदि वा विष्णुर्महेन्द्रो वा शतक्रतुः । हन्ति नो रामरूपेण यदि वा स्वयमन्तकः ॥ २४ ॥ हतप्रवीरा रामेण निराशा जीविते वयम् । अपश्यन्तो भयस्यान्तमनाथा विलपामहे ॥ २५ ॥

प्रभावमिति शेषः ॥ २१ ॥ ममेति । कुलेकुले गृहेगृहे । इदमपि राक्षसीवाक्यमेव ॥ २२–२४ ॥ हतप्रवीरा इति । वयमित्येतदपेक्षया अपश्यन्त इति

सर्वातिशायित्वपरिज्ञानाय निरपेक्षं निदर्शनमित्यर्थः ॥ १३–२० ॥ कुम्भकर्णमित्यादि सार्धम् । रावणो नावबुध्यते, रामपराक्रममिति शेषः ॥ २१ ॥ कुलेकुले गृहेगृहे ॥ २२–२४ ॥ अपश्यन्तः अपश्यन्त्यः ॥ २५ ॥ २६ ॥

पुंल्लिङ्गम् । विलपामहे इत्यात्मनेपदमार्षम् ॥ २५ ॥ २६ ॥ न देवा इति । उपसृष्टम् उपद्रुतम् ॥ २७ ॥ उत्पाताश्चापीति । कथयिष्यन्तिं, इतः परमपि कानिचिन्निमित्तानि प्रादुर्भूय कथयिष्यन्तीत्यर्थः । वर्तमाने तात्पर्यमित्यप्याहुः ॥ २८ ॥ रामानु॰—कथयिष्यन्ति कथयन्तीत्यर्थः ॥ २८ ॥ पिता

रामहस्ताद्दशग्रीवः शूरो दत्तमहावरः । इदं भयं महाघोरमुत्पन्नं नावबुध्यते ॥ २६ ॥ न देवा न च गन्धर्वा न पिशाचा न राक्षसाः । उपसृष्टं परित्रातुं शक्ता रामेण संयुगे ॥ २७ ॥ उत्पाताश्चापि दृश्यन्ते रावणस्य रणे रणे । कथयिष्यन्ति रामेण रावणस्य निबर्हणम् ॥२८॥ पितामहेन प्रीतेन देवदानवराक्षसैः । रावणस्याभयं दत्तं मानुषेभ्यो न याचितम् ॥२९॥ तदिदं मानुषं मन्ये प्राप्तं निस्संशयं भयम् । जीवितान्तकरं घोरं रक्षसां रावणस्य च ॥३०॥ पीड्यमानास्तु बलिना वरदानेन रक्षसा । दीप्तैस्तपोभिर्विबुधाः पितामहमपूजयन् ॥ ३१ ॥ देवतानां हितार्थाय महात्मा वै पितामहः । उवाच देवताः सर्वा इदं तुष्टो महद्वचः ॥३२॥ अद्यप्रभृति लोकांस्त्रीन् सर्वे दानवराक्षसाः । भयेन प्रावृता नित्यं विचरिष्यन्ति शाश्वतम् ॥ ३३ ॥ दैवतैस्तु समागम्य सर्वैश्चेन्द्रपुरोगमैः । वृषध्वजस्त्रिपुरहा महादेवः प्रसादितः ॥ ३४ ॥ प्रसन्नस्तु महादेवो देवानेतद्वचोऽब्रवीत् । उत्पत्स्यति हितार्थं वो नारी रक्षःक्षयावहा ॥ ३५ ॥ एषा देवैः प्रयुक्ता तु क्षुद्यथा दानवान् पुरा । भक्षयिष्यति नः सीता राक्षसघ्नी सरावणान् ॥ ३६ ॥

महेनेति । देवदानवराक्षसैः देवदानवराक्षसेभ्यः ॥ २९ ॥ मानुषं मानुषादागतम् । मन्ये मन्यामहे ॥ ३० ॥ रक्षसा रावणेन । वरदानेन करणेन ॥ ३१ ॥ ३२ ॥ दानवराक्षसा इत्युक्तेर्मन्दोदरीसम्बन्धेन दानवाश्च केचिद्राक्षसैः सह तिष्ठन्तीति ज्ञेयम् ॥३३–३५॥ क्षुद्यथा दानवान् पुरेति । देवेभ्यो उपसृष्टं हन्तुमारब्धम् ॥ २७ ॥ कथयिष्यन्ति सूचयिष्यन्ति ॥ २८ ॥ देवदानवराक्षसैः देवदानवराक्षसेभ्यः ॥ २९ ॥ ३० ॥ इदानीं ब्रह्मवाक्यादपि राक्षसानां क्षयो नियत इत्याहुः—पीड्यमाना इति ॥ ३१–३४ ॥ साम्प्रतं महादेववाक्यादवस्थितसामर्थ्यादपि रक्षसां क्षयं निश्चिन्वन्ति—उत्पत्स्यतीति ॥ ३५ ॥ ३६ ॥

ऽमृतप्रदानानन्तरमिति बोध्यम् । अस्मच्छन्दापेक्षया ... ॥ ३६ ॥ निष्ठानकः नाश इत्याहुः ॥ ३७ ॥ रामानु०–रावणस्येति । अपनीतेन अपनयेन । निष्ठानको विनाशः ॥ ३७ ॥ तमिति । पश्यामह इत्यात्मनेपदमार्षम् ॥ ३८ ॥ ३९ ॥ प्राप्तकालम् उचितम् । पौलस्त्येन विभीषणेन । इतः

रावणस्यापनीतेन दुर्विनीतस्य दुर्मतेः । अयं निष्ठानको घोरः शोकेन समभिप्लुतः ॥३७॥ तं न पश्यामहे लोके यो नः शरणदो भवेत् । राघवेणोपसृष्टानां कालेनेव युगक्षये ॥३८॥ नास्ति नः शरणं कश्चिद्भये महति तिष्ठताम् । दवाग्निवेष्टितानां हि करेणूनां यथा वने ॥ ३९ ॥ प्राप्तकालं कृतं तेन पौलस्त्येन महात्मना । यत एव भयं दृष्टं तमेव शरणं गतः ॥ ४० ॥ इतीव सर्वा रजनीचरस्त्रियः परस्परं संपरिरभ्य बाहुभिः । विषेदुरार्ता भयभारपीडिता विनेदुरुच्चैश्च तदा सुदारुणम् ॥४१॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदि० श्रीमद्युद्धकाण्डे पञ्चनवतितमः सर्गः ॥९५॥

आर्तानां राक्षसीनां तु लङ्कायां वै कुले कुले । रावणः करुणं शब्दं शुश्राव परिदेवितम् ॥ १ ॥ स तु दीर्घं विनिश्वस्य मुहूर्तं ध्यानमास्थितः । बभूव परमक्रुद्धो रावणो भीमदर्शनः ॥ २ ॥ सन्दश्य दशनैरोष्ठं क्रोधसंरक्तलोचनः । राक्षसैरपि दुर्दर्शः कालाग्निरिव मूर्च्छितः ॥ ३ ॥

परं तस्यैव पौलस्त्यकुलप्रतिष्ठापकत्वात्तच्छब्दप्रयोगः । अत्र पितामहादिवरप्रदानवृत्तान्तो राक्षसीभिर्मन्दोदरीसकाशाच्छ्रुत इति ज्ञेयम् । सा च ज्ञानवृद्धेति वक्ष्यते ॥ ४० ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चनवतितमः सर्गः ॥ ९५ ॥

अथ रावणनिर्याणम्–आर्तानामित्यादि । परिदेवितं परिदेवितरूपं शब्दम् ॥ १ ॥ २ ॥ सन्दश्येत्यादिश्लोकत्रयमेकान्वयम् । मूर्च्छितः अभिवृद्धः कालाग्नि

रावणस्येति । अपनीतेन अपनयेन । निष्ठानकः नाशः ॥ ३७–३९ ॥ प्राप्तकालम् उचितम् । पौलस्त्येन विभीषणेन कृतमिति सम्बन्धः ॥ ४० ॥ ४१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां पञ्चनवतितमः सर्गः ॥ ९५ ॥ १ ॥ २ ॥ सन्दश्येति । मूर्च्छितः प्रज्वलितः ।

स०–करुणम् करुणयतीति करुणस्तम् । परिदेवितं प्रलापात्मकम् ॥ १ ॥

रिव स्थितः। भयाव्यक्तकथः भयादव्यक्तवचनः। ममाज्ञया वदतेत्युवाचेत्यन्वयः। इमौ महोदरमहापार्श्वौ सचिवौ। पूर्वहतौ तु मत्तप्रमत्तापरपर्यायौ रावणभ्रातरौ ॥ ३–८ ॥ रामानु०—भयाव्यक्तकथः स्वानिष्टभयेनास्पष्टराक्षसकथ इत्यर्थः। भयाव्यक्तकथानिति च पाठः ॥ ४ ॥ अथेति। प्रहस्येति, शत्रुषु तृणीकारात्

उवाच च समीपस्थान् राक्षसान् राक्षसेश्वरः। भयाव्यक्तकथस्तत्र निर्दहन्निव चक्षुषा ॥ ४ ॥ महोदरमहापार्श्वौ विरूपाक्षं च राक्षसम्। शीघ्रं वदत सैन्यानि निर्यातेति ममाज्ञया ॥ ५ ॥ तस्य तद्वचनं श्रुत्वा राक्षसास्ते भयार्दिताः। चोदयामासुरव्यग्रान् राक्षसांस्तान् नृपाज्ञया ॥ ६ ॥ ते तु सर्वे तथेत्युक्त्वा राक्षसा घोरदर्शनाः। कृतस्वस्त्ययनाः सर्वे रणायाभिमुखा ययुः ॥ ७ ॥ प्रतिपूज्य यथान्यायं रावणं ते निशाचराः। तस्थुः प्राञ्जलयः सर्वे भर्तुर्विजयकांक्षिणः ॥ ८ ॥ अथोवाच प्रहस्यैतान् रावणः क्रोधमूर्च्छितः। महोदरमहापार्श्वौ विरूपाक्षं च राक्षसम् ॥ ९ ॥ अद्य बाणैर्धनुर्मुक्तैर्युगान्तादित्यसन्निभैः। राघवं लक्ष्मणं चैव नेष्यामि यमसादनम् ॥ १० ॥ खरस्य कुम्भकर्णस्य प्रहस्तेन्द्रजितोस्तथा। करिष्यामि प्रतीकारमद्य शत्रुवधादहम् ॥ ११ ॥ नैवान्तरिक्षं न दिशो न नद्यो नापि सागराः। प्रकाशत्वं गमिष्यन्ति मद्बाणजलदावृताः ॥ १२ ॥ अद्य वानरमुख्यानां तानि यूथानि भागशः। धनुषा शरजालेन विधमिष्यामि पत्रिणा ॥ १३ ॥

॥ ९ ॥ १० ॥ खरस्येत्यादिषु वधस्येति शेषः ॥ ११–१४ ॥

भयाव्यक्तकथान् स्वानिष्टकथनभयादस्पष्टवचनानित्यर्थः। भयाव्यक्तकथ इति वा पाठः ॥ ३–५ ॥ अव्यग्रान् रणोत्साहरहितान् ॥ ६–९ ॥ अद्य बाणैरिति। राघवं लक्ष्मणं यमसादनं नेष्यामि। वस्तुतस्तु–राघवं लक्ष्मणं विना अन्यानिति शेषः ॥ १० ॥ खरस्येत्यादिषु हननस्येति शेषः ॥ ११ ॥ १२ ॥ पत्रिणा

स०—भयाव्यक्तकथः भयेन रामभीत्या अव्यक्ता मन्दा कथा कथनं यस्य सः। भयाद्व्यक्तकथ इति पाठे व्यक्ता बहिःप्रकाश्यार्थस्यापि प्रकाशिका कथा यस्य। आच्छायानाच्छादनहेतुर्भीतिरिति भावः ॥ ४ ॥ भयार्दिताः गमने रामतो भीतिः भीतिश्चागमने रावणादिति भयार्दिताः। [illegible] ॥ ६ ॥ सर्वे हिंसके रामे तद्विषये रणाभिमुखास्सर्वे कृतस्वस्त्ययना ययुः ॥ ७ ॥ यं रामम् असादनम् असंहार्यम् मन्यध्वे तं राघवं लक्ष्मणं च। यमसादनं यमलोकम् ॥ १० ॥

आक्रोशेति । आक्रोशपद्मवक्त्राणि ईषद्विकसितपद्मभूतवक्त्राणि । पद्मकेसरवर्चसाम्, वानराणामिति शेषः । प्रमथामि प्रमथ्नामि । आभाव आर्षः ॥ १५–१८ ॥ अद्येति । गतचेतनैः गतप्राणैः । यत्नावेक्ष्यतलामिति । नैरन्तर्येण भूमौ वानरान् पातयिष्यामीत्यर्थः ॥ १९ ॥ २० ॥ कल्प्यतामिति ।



अद्य वानरसैन्यानि रथेन पवनौजसा । धनुःसमुद्रादुद्भूतैर्मथिष्यामि शरोर्मिभिः ॥ १४ ॥ आक्रोशपद्मवक्त्राणि पद्मकेसरवर्चसाम् । अद्य यूथतटाकानि गजवत् प्रमथाम्यहम् ॥ १५ ॥ सशरैरद्य वदनैः सङ्ख्ये वानरयूथपाः । मण्डयिष्यन्ति वसुधां सनालैरिव पङ्कजैः ॥ १६ ॥ अद्य युद्धप्रचण्डानां हरीणां द्रुमयोधिनाम् । मुक्तेनैकेषुणा युद्धे भेत्स्यामि च शतं शतम् ॥ १७ ॥ हतो भर्ता हतो भ्राता यासां च तनया हताः । वधेनाद्य रिपोस्तासां करोम्यस्रप्रमार्जनम् ॥ १८ ॥ अद्य मद्बाणनिर्भिन्नैः प्रकीर्णैर्गतचेतनैः । करोमि वानरैर्युद्धे यत्नावेक्ष्यतलां महीम् ॥ १९॥ अद्य गोमायवो गृध्रा ये च मांसाशिनोऽपरे । सर्वांस्तांस्तर्पयिष्यामि शत्रुमांसैः शरार्पितैः ॥२०॥ कल्प्यतां मे रथः शीघ्रं क्षिप्रमानीयतां धनुः । अनुप्रयान्तु मां सर्वे येऽवशिष्टा निशाचराः ॥ २१ ॥ तस्य तद्वचनं श्रुत्वा महापार्श्वोऽब्रवीद्वचः । बलाध्यक्षान् स्थितांस्तत्र बलं सन्त्वर्यतामिति ॥२२॥ बलाध्यक्षास्तु संरब्धा राक्षसांस्तान् गृहाद्गृहात् । चोदयन्तः परिययुर्लङ्कायां तु महाबलाः ॥ २३ ॥ ततो मुहूर्तान्निष्पेतू राक्षसा भीमदर्शनाः । नर्दन्तो भीमवदना नानाप्रहरणैर्भुजैः ॥ २४ ॥

कल्प्यताम् आकल्प्यताम्, अलंक्रियतामित्यर्थः ॥ २१ ॥ २२ ॥ बलाध्यक्षास्त्विति । संरब्धा इति । पुनः पुनराह्वानेऽप्यनागमनात् कुपिता इत्यर्थः । परिययुः प्रतिरथ्यं ययुरित्यर्थः ॥ २३ ॥ तत इत्यादिश्लोकत्रयमेकान्वयम् । हुलैः द्विफलपत्राग्रायुधविशेषैः । "हुलं द्विफलपत्राग्रम्" इति वैजयन्ती । शोभनपक्ष्मवता ॥ १३ ॥ १४ ॥ पद्मकेसरवर्चसाम्, वानराणामिति शेषः । यूथतटाकानि प्रमथामीति सम्बन्धः ॥ १५–२३ ॥ ततो मुहूर्तादिति । भुजैरित्याद्युपलक्षणे तृतीया ॥ २४–२८ ॥

भुजैरित्याद्युपलक्षणे तृतीया ॥ २४–२६ ॥ अथेति । अथानयद्बलाध्यक्षः सत्वरो रावणाज्ञया । द्रुतं सूतसमायुक्तं युक्ताष्टतुरगं रथमिति पाठः ॥ २७॥ आरुरोहेत्यर्धमेकं वाक्यम् । भीमः रावणः ॥ २८ ॥ ततः प्रयात इति । सत्त्वगाम्भीर्यात् बलातिशयात् ॥ २९–३२ ॥ द्वारेणेति । उत्तरद्वारेणेत्यर्थः



असिभिः पट्टिशैः शूलैर्गदाभिर्मुसलैर्हलैः । शक्तिभिस्तीक्ष्णधाराभिर्महद्भिः कूटमुद्गरैः ॥ २५ ॥ यष्टिभिर्विमलैश्चक्रैर्निशितैश्च परश्वधैः । भिण्डिपालैः शतघ्नीभिरन्यैश्चापि वरायुधैः ॥ २६ ॥ अथानयद्बलाध्यक्षः सत्वरो रावणाज्ञया । द्रुतं सूतसमायुक्तं युक्ताष्टतुरगं रथम् ॥ २७ ॥ आरुरोह रथं भीमो दीप्यमानं स्वतेजसा ॥ २८ ॥ ततः प्रयातः सहसा राक्षसैर्बहुभिर्वृतः । रावणः सत्त्वगाम्भीर्याद्दारयन्निव मेदिनीम् ॥ २९ ॥ रावणेनाभ्यनुज्ञातौ महापार्श्वमहोदरौ । विरूपाक्षश्च दुर्धर्षो रथानारुरुहुस्तदा ॥ ३० ॥ ते तु हृष्टा विनर्दन्तो भिन्दन्त इव मेदिनीम् । नादं घोरं विमुञ्चन्तो निर्ययुर्जयकांक्षिणः ॥ ३१ ॥ ततो युद्धाय तेजस्वी रक्षोगणबलैर्वृतः । निर्ययावुद्यतधनुः कालान्तकयमोपमः ॥ ३२ ॥ ततः प्रजवनाश्वेन रथेन स महारथः । द्वारेण निर्ययौ तेन यत्र तौ रामलक्ष्मणौ ॥ ३३ ॥ ततो नष्टप्रभः सूर्यो दिशश्च तिमिरावृताः ॥३४॥ द्विजाश्च नेदुर्घोराश्च सञ्चचालेव मेदिनी । ववर्ष रुधिरं देवश्चस्खलुस्तुरगाः पथि ॥ ३५ ॥ ध्वजाग्रे न्यपतद्गृध्रो विनेदुश्चाशिवं शिवाः । नयनं चास्फुरद्वामं सव्यो बाहुरकम्पत ॥३६॥ विवर्णं वदनं चासीत् किंचिदभ्रश्यत स्वरः ॥३७॥ ततो निष्पततो युद्धे दशग्रीवस्य रक्षसः । रणे निधनशंसीनि रूपाण्येतानि जज्ञिरे ॥३८॥ अन्तरिक्षात् पपातोल्का निर्घातसमनिस्वना । विनेदुरशिवा गृध्रा वायसैरनुनादिताः ॥३९॥ एतानचिन्तयन् घोरानुत्पातान् समुपस्थितान् । निर्ययौ रावणो मोहाद्वधार्थी कालचोदितः ॥४०॥

॥ ३३ ॥ ततो नष्टप्रभ इत्यादिश्लोकचतुष्टयमेकान्वयम् । रूपाणि दुर्निमित्तरूपाणि । ततः अनन्तरं, ततः उत्तरद्वारात् । निष्पततः निष्क्रमतः ।





ततः प्रयात इति । सत्त्वगाम्भीर्यात् बलातिशयात् ॥ २९–३७ ॥ रूपाणि दुर्निमित्तस्वरूपाणि ॥ ३८–४० ॥

सूर्यनष्टप्रभत्वादीनि रूपाणि जज्ञिर इति सम्बन्धः ॥ ३४–४१ ॥ तेषां त्विति । आह्वयानानाम् आह्वयमानानाम्, स्पर्धया आह्वयताम् । आगमशास
नस्यानित्यत्वान्मुगागमाभावः ॥ ४२ ॥ ४३ ॥ निकृत्तशिरस इत्यादिश्लोकद्वयम् । स्पष्टम् ॥ ४४–४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायण
भूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षण्णवतितमः सर्गः ॥ ९६ ॥

तेषां तु रथघोषेण राक्षसानां महात्मनाम् । वानराणामपि चमूर्युद्धायैवाभ्यवर्तत ॥ ४१ ॥ तेषां तु तुमुलं युद्धं बभूव
कपिरक्षसाम् । अन्योन्यमाह्वयानानां क्रुद्धानां जयमिच्छताम् ॥ ४२ ॥ ततः क्रुद्धो दशग्रीवः शरैः काञ्चन
भूषणैः । वानराणामनीकेषु चकार कदनं महत् ॥४३॥ निकृत्तशिरसः केचिद्रावणेन वलीमुखाः । केचिद्विच्छिन्न
हृदयाः केचिच्छ्रोत्रविवर्जिताः । निरुच्छ्वासा हताः केचित् केचित् पार्श्वेषु दारिताः ॥ ४४ ॥ केचिद्विभिन्नशिरसः
केचिच्चक्षुर्विवर्जिताः ॥ ४५ ॥ दशाननः क्रोधविवृत्तनेत्रो यतो यतोऽभ्येति रथेन सङ्ख्ये । ततस्ततस्तस्य शरप्रवेगं
सोढुं न शेकुर्हरिपुङ्गवास्ते ॥४६॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमद्युद्धकाण्डे षण्णवतितमः सर्गः ॥९६॥
तथा तैः कृत्तगात्रैस्तु दशग्रीवेण मार्गणैः । बभूव वसुधा तत्र प्रकीर्णा हरिभिस्तदा ॥ १ ॥ रावणस्याप्रसह्यं तं
शरसम्पातमेकतः । न शेकुः सहितुं दीप्तं पतङ्गा ज्वलनं यथा ॥ २॥ तेऽर्दिता निशितैर्बाणैः क्रोशन्तो विप्रदुद्रुवुः ।
पावकार्चिस्समाविष्टा दह्यमाना यथा गजाः ॥ ३ ॥ प्लवङ्गानामनीकानि महाभ्राणीव मारुतः । स ययौ समरे
तस्मिन् विधमन् रावणः शरैः ॥ ४ ॥ कदनं तरसा कृत्वा राक्षसेन्द्रो वनौकसाम् । आससाद ततो युद्धे राघवं
त्वरितस्तदा ॥५॥ सुग्रीवस्तान् कपीन् दृष्ट्वा भग्नान् विद्रवतो रणे । गुल्मे सुषेणं निक्षिप्य चक्रे युद्धेऽद्भुतं मनः ॥६॥ ॥ ७ ॥

अद्भुतमिति क्रियाविशेषणम् ॥ ६ ॥ ७ ॥
अथ विरूपाक्षवधः—तथा तैरित्यादि ॥ १ ॥ एकतः एकस्य अद्वितीयस्य ॥ २–५ ॥
॥ ४१–४६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां षण्णवतितमः सर्गः ॥ ९६ ॥ १ ॥ रावणस्येति । एकतः

महाद्रुमान्, उत्पाट्येति शेषः। उत्पाट्य अस्य पार्श्वतः पृष्ठतश्चानुजह्रुरिति सम्बन्धः। यथा महाराजे युद्धाय गच्छति तदायुधानि भृत्या आहरन्ति तथा वानरराजे युद्धाय निष्क्रामति तदायुधभूतान् शैलवृक्षादीन् समये दातुं वानरा आजह्रुरिति भावः ॥ ८ ॥ ९ ॥ ममन्थ चेति। अगमान् वृक्षान्।



आत्मनः सदृशं वीरः स तं निक्षिप्य वानरम्। सुग्रीवोऽभिमुखः शत्रुं प्रतस्थे पादपायुधः ॥ ७ ॥ पार्श्वतः पृष्ठतश्चास्य सर्वे यूथाधिपाः स्वयम्। अनुजह्रुर्महाशैलान् विविधांश्च महाद्रुमान् ॥ ८ ॥ स नर्दन् युधि सुग्रीवः स्वरेण महता महान्। पातयन् विविधांश्चान्यान् जगामोत्तमराक्षसान् ॥ ९ ॥ ममन्थ च महाकायो राक्षसान् वानरेश्वरः। युगान्तसमये वायुः प्रवृद्धानगमानिव ॥ १० ॥ राक्षसानामनीकेषु शैलवर्षं ववर्ष ह। अश्मवर्षं यथा मेघः पक्षिसङ्घेषु कानने ॥ ११ ॥ कपिराजविमुक्तैस्तैः शैलवर्षैस्तु राक्षसाः। विकीर्णशिरसः पेतुर्निकृत्ता इव पर्वताः ॥ १२ ॥ अथ संक्षीयमाणेषु राक्षसेषु समन्ततः। सुग्रीवेण प्रभग्नेषु पतत्सु निनदत्सु च ॥ १३ ॥ विरूपाक्षः स्वकं नाम धन्वी विश्राव्य राक्षसः। रथादाप्लुत्य दुर्धर्षो गजस्कन्धमुपारुहत् ॥ १४ ॥ स तं द्विरदमारुह्य विरूपाक्षो महारथः। विनदन् भीमनिर्ह्रादं वानरानभ्यधावत ॥ १५ ॥ सुग्रीवे स शरान् घोरान् विससर्ज चमूमुखे। स्थापयामास चोद्विग्नान् राक्षसान् सम्प्रहर्षयन् ॥ १६ ॥ स तु विद्धः शितैर्बाणैः कपीन्द्रस्तेन रक्षसा। चुक्रोध स महाक्रोधो वधे चास्य मनो दधे ॥ १७ ॥ ततः पादपमुद्धृत्य शूरः सम्प्रधनो हरिः। अभिपत्य जघानास्य प्रमुखे तु महागजम् ॥ १८ ॥ स तु प्रहाराभिहतः सुग्रीवेण महागजः। अपासर्पद्धनुर्मात्रं निषसाद ननाद च ॥ १९ ॥

"पलाशी द्रुद्रुमागमाः" इत्यमरः ॥ १०–१२ ॥ संक्षीयमाणेषु हिंस्यमानेषु। "क्षि हिंसायाम्" इति धातुः ॥ १३–१७ ॥ तत इति। सम्प्रधनः। बहुलग्रहणात् कर्तरि ल्युट्। प्रहर्तेत्यर्थः। प्रमुखे मुखे ॥ १८ ॥ रामानु०–सम्प्रधने युद्धे ॥ १८ ॥ धनुर्मात्रं धनुःप्रमाणम्। "प्रमाणे द्वयसज्दघ्नञ्मात्रचः"



पकस्य रावणस्य शरसम्पातमिति सम्बन्धः ॥ २–९ ॥ ममन्थेति। अगमान् वृक्षान् ॥ १०–१२ ॥ संक्षीयमाणेषु हिंस्यमानेषु। "क्षि हिंसायाम्" इति

इति मात्रच्प्रत्ययः॥१९॥ गजात्त्विति श्लोकद्वयमेकं वाक्यम् । व्यवस्थितं निश्चलतया स्थितम् ॥ २०-२२ ॥ स तामिति । अपक्रम्य शिलापातपरिहारार्थमन्यतोऽपसृत्य । प्राहरत्, सुग्रीवमिति शेषः ॥ २३-२९ ॥ मुष्टिप्रहारेत्यादिसार्धश्लोक एकान्वयः । कवचमिति । अनेन सुग्रीवस्यापि कवच

गजात्तु मथितात्तूर्णमपक्रम्य स वीर्यवान् । राक्षसोऽभिमुखः शत्रुं प्रत्युद्गम्य ततः कपिम् ॥ २० ॥ आर्षभं चर्म खड्गं च प्रगृह्य लघुविक्रमः । भर्त्सयन्निव सुग्रीवमाससाद व्यवस्थितम् ॥ २१ ॥ स हि तस्याभिसंक्रुद्धः प्रगृह्य विपुलां शिलाम् । विरूपाक्षाय चिक्षेप सुग्रीवो जलदोपमाम् ॥२२॥ स तां शिलामापतन्तीं दृष्ट्वा राक्षसपुङ्गवः । अपक्रम्य सुविक्रान्तः खड्गेन प्राहरत्तदा ॥ २३ ॥ तेन खड्गप्रहारेण रक्षसा बलिना हतः । मुहूर्तमभवद्वीरो विसंज्ञ इव वानरः ॥ २४ ॥ स तदा सहसोत्पत्य राक्षसस्य महाहवे । मुष्टिं संवर्त्य वेगेन पातयामास वक्षसि ॥ २५ ॥ मुष्टिप्रहाराभिहतो विरूपाक्षो निशाचरः । तेन खड्गेन संक्रुद्धः सुग्रीवस्य चमूमुखे । कवचं पातयामास पद्भ्यामभिहतोऽपतत् ॥ २६ ॥ स समुत्थाय पतितः कपिस्तस्य व्यसर्जयत् । तलप्रहारमशनेः समानं भीमनिस्वनम् ॥ २७ ॥ तलप्रहारं तद्रक्षः सुग्रीवेण समुद्यतम् । नैपुण्यान्मोचयित्वैनं मुष्टिनोरस्यताडयत् ॥ २८ ॥ ततस्तु संक्रुद्धतरः सुग्रीवो वानरेश्वरः । मोक्षितं चात्मनो दृष्ट्वा प्रहारं तेन रक्षसा । स ददर्शान्तरं तस्य विरूपाक्षस्य वानरः ॥२९॥ ततो न्यपातयत् क्रोधाच्छङ्खदेशे महत्तलम् ॥३०॥ महेन्द्राशनिकल्पेन तलेनाभिहतः क्षितौ ॥ ३१ ॥

हारार्थमन्यतोऽपसृत्य । प्राहरत्, सुग्रीवमिति शेषः ॥ २३-२५ ॥ राभानु०—तेनेति । सखड्गाभिहतोऽपतत् सखड्गश्चासावभिहतश्च सखड्गाधारणमस्तीति गम्यते । पद्भ्यामिति । अभिहतः सन् पद्भ्यामपतदित्यन्वयः ॥२६ ॥ २७ ॥ नैपुण्यात् शिक्षापाटवात् ॥ २८ ॥ ततास्त्विति सार्धश्लोकमेकं वाक्यम् । अन्तरम् अवकाशम् ॥ २९ ॥ तत इत्यर्धम् । शङ्खदेशे ललाटास्थिप्रदेशे । "शङ्खो निधौ ललाटास्थि" इत्यमरः ॥३०॥ महेन्द्राशनीत्यादि

धातुः ॥ १३-२२ ॥ स तामिति । अपक्रम्य शिलाप्रहारमोघकरणार्थं पार्श्वतोऽपसृत्य सुग्रीवं प्राहरदिति भावः ॥ २३-२७ ॥ तलेति । नैपुण्यात् युद्धगतिविशेषलाघवात् मोचयित्वा मोघीकृत्य स ददर्शान्तरमिति सम्बन्धः ॥ २८ ॥ २९ ॥ शङ्खदेशे ललाटास्थिदेशे । " शङ्खो निधौ ललाटास्थ्नि " इत्यमरः ॥ ३० ॥ ३१ ॥

मिहतः । विरूपाक्षप्रेरितखड्गसहितोऽपतदित्यर्थः । उत्तरत्र विरूपाक्षस्य मुष्टिनैव युद्धाभिधानात् ॥ २६ ॥

सार्धश्लोकमेकं वाक्यम् । स्रोतोभ्यः नासादिनवद्वारेभ्यः ॥ ३१ ॥ ३२ ॥ विरूपाक्षतरं नेत्रोद्गमनेनात्यन्तविकटाक्षम् ॥३३ ॥ स्फुरन्तमूर्ध्वमुत्पतन्तम् । परिवर्तन्तं परिवर्तमानम् ॥ ३४ ॥ तथा त्विति । भिन्नवेलौ विदीर्णवेलौ ॥ ३५ ॥ विनाशितमिति । उन्मत्तगङ्गा उद्वेलगङ्गा ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तनवतितमः सर्गः ॥ ९७ ॥

पपात रुधिरक्लिन्नः शोणितं च समुद्वमन् । स्रोतोभ्यस्तु विरूपाक्षो जलं प्रस्रवणादिव ॥३२॥ विवृत्तनयनं क्रोधात् सफेनं रुधिराप्लुतम् । ददृशुस्ते विरूपाक्षं विरूपाक्षतरं कृतम् ॥ ३३ ॥ स्फुरन्तं परिवर्तन्तं पार्श्वेन रुधिरोक्षितम् । करुणं च विनर्दन्तं ददृशुः कपयो रिपुम् ॥ ३४ ॥ तथा तु तौ संयति सम्प्रयुक्तौ तरस्विनौ वानरराक्षसानाम् । बलार्णवौ सस्वनतुः सुभीमं महार्णवौ द्वाविव भिन्नवेलौ ॥३५॥ विनाशितं प्रेक्ष्य विरूपनेत्रं महाबलं तं हरिपार्थिवेन । बलं समस्तं कपिराक्षसानामुन्मत्तगङ्गाप्रतिमं बभूव ॥३६॥ इत्यार्षे० श्रीमद्युद्धकाण्डे सप्तनवतितमः सर्गः ॥९७॥

हन्यमाने बले तूर्णमन्योन्यं ते महामृधे । सरसीव महाघर्मे सोपक्षीणे बभूवतुः ॥ १ ॥ स्वबलस्य विघातेन विरूपाक्षवधेन च । बभूव द्विगुणं क्रुद्धो रावणो राक्षसाधिपः ॥२॥ प्रक्षीणं तु बलं दृष्ट्वा वध्यमानं वलीमुखैः । बभूवास्य व्यथा युद्धे प्रेक्ष्य दैवविपर्ययम् । उवाच च समीपस्थं महोदरमरिन्दमम् ॥३॥ अस्मिन् काले महाबाहो जयाशा त्वयि मे स्थिता । जहि शत्रुचमूं वीर दर्शयाद्य पराक्रमम् ॥४॥ भर्तृपिण्डस्य कालोऽयं निर्देष्टुं साधु युध्यताम् ॥५॥

अथ महोदरवधः—हन्यमान इत्यादि । सरसी इवेति वक्तव्ये सरसीवेति सन्धिरार्षः ॥ १–३ ॥ अस्मिन् काल इत्यादिसार्धश्लोक एकान्वयः । भर्तृपिण्ड



स्रोतोभ्यः नासादिनवरन्ध्रेभ्यः ॥ ३२ ॥ विरूपाक्षतरम् अतिविरूपाक्षम् ॥ ३३ ॥ पार्श्वेन परिवर्तन्तं रिपुं विरूपाक्षं ददृशुरिति सम्बन्धः ॥ ३४ ॥ भिन्नवेलौ विदीर्णवेलौ ॥ ३५ ॥ उन्मत्तगङ्गाप्रतिमम् उद्वेलगङ्गासदृशम् ॥३६॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां सप्तनवतितमस्सर्गः ॥९७॥

हन्यमान इति । सरसीव सरसी इव । सन्धिरार्षः । सोपक्षीणे उपक्षीणप्रायबलवत् इति तत्सादृश्ये ॥ १–४ ॥ भर्तृपिण्डस्येति । निर्देष्टुं स्वामिदत्तवेतनसमप्युपकर्तुमित्यर्थः ॥५–१०॥

स्येति संबन्धमात्रे षष्ठी । भर्तृपिण्डस्य निर्देष्टुं स्वामिसत्कारेणोपार्जितमित्यर्थः ॥ ४–६ ॥ भर्तृवाक्येन चोदितः सन् स्वेन वीर्येण कदनं चक्रे इत्यन्वयः ॥ ७ ॥ ८ ॥ पाणिपादोरूनिति । एकवद्भावाभाव आर्षः ॥ ९ ॥ १० ॥ अनन्तरं समीपस्थम् ॥ ११–१३ ॥ गृध्रचक्रं गृध्रसमूहः ॥ १४ ॥ १५ ॥

एवमुक्तस्तथेत्युक्त्वा राक्षसेन्द्रो महोदरः। प्रविवेशारिसेनां तां पतङ्ग इव पावकम् ॥ ६ ॥ ततः स कदनं चक्रे वानराणां महाबलः । भर्तृवाक्येन तेजस्वी स्वेन वीर्येण चोदितः ॥ ७ ॥ वानराश्च महासत्त्वाः प्रगृह्य विपुलाः शिलाः । प्रविश्यारिबलं भीमं जघ्नुस्ते रजनीचरान् ॥ ८ ॥ महोदरस्तु संक्रुद्धः शरैः काञ्चनभूषणैः । चिच्छेद पाणिपादोरून् वानराणां महाहवे ॥ ९ ॥ ततस्ते वानराः सर्वे राक्षसैरर्दिता भृशम् । दिशो दश द्रुताः केचित् केचित् सुग्रीवमाश्रिताः ॥१०॥ प्रभग्नां समरे दृष्ट्वा वानराणां महाचमूम् । अभिदुद्राव सुग्रीवो महोदरमनन्तरम् ॥ ११ ॥ प्रगृह्य विपुलां घोरां महीधरसमां शिलाम्। चिक्षेप च महातेजास्तद्वधाय हरीश्वरः॥ १२ ॥ तामापतन्तीं सहसा शिलां दृष्ट्वा महोदरः। असम्भ्रान्तस्ततो बाणैर्निर्बिभेद दुरासदाम् ॥ १३ ॥ रक्षसा तेन बाणौघैर्निकृत्ता सा सहस्रधा । निपपात शिला भूमौ गृध्रचक्रमिवाकुलम् ॥ १४ ॥ तां तु भिन्नां शिलां दृष्ट्वा सुग्रीवः क्रोधमूर्च्छितः । सालमुत्पाट्य चिक्षेप राक्षसे रणमूर्धनि ॥१५॥ शरैश्च विददारैनं शूरः परपुरञ्जयः ॥ १६ ॥ स ददर्श ततः क्रुद्धः परिघं पतितं भुवि ॥१७॥ आविध्य तु स तं दीप्तं परिघं तस्य दर्शयन् । परिघाग्रेण वेगेन जघानास्य हयोत्तमान् ॥ १८ ॥ तस्माद्धतहयाद्वीरः सोऽवप्लुत्य महारथात् । गदां जग्राह संक्रुद्धो राक्षसोऽथ महोदरः ॥ १९ ॥ गदा परिघहस्तौ तौ युधि वीरौ समीयतुः । नर्दन्तौ गोवृषप्रख्यौ घनाविव सविद्युतौ ॥ २० ॥

शरैरित्यर्धम् । शूरः महोदरः एनं च सालं च शरैः विददारेत्यन्वयः ॥ १६ ॥ सः सुग्रीवः ॥ १७ ॥ आविध्येति, आदायेति शेषः । तस्य महोदरस्य । प्रभग्नमिति । अनन्तरं सन्निहितम् ॥ ११–२० ॥

दर्शयन्, पाणिलाघवमिति शेषः ॥ १८–२० ॥ तत इति । भास्कराभासां भास्करवद्भासमानाम् ॥ २१ ॥ गदां तामित्यादि । गदां, दृष्ट्वेति शेषः ।





ततः क्रुद्धो गदां तस्मै चिक्षेप रजनीचरः । ज्वलन्तीं भास्कराभासां सुग्रीवाय महोदरः ॥ २१ ॥ गदां तां सुमहाघोरामापतन्तीं महाबलः । सुग्रीवो रोषताम्राक्षः समुद्यम्य महाहवे । आजघान गदां तस्य परिघेण हरीश्वरः ॥ २२ ॥ पपात स गदोद्भिन्नः परिघस्तस्य भूतले ॥ २३ ॥ ततो जग्राह तेजस्वी सुग्रीवो वसुधातलात् । आयसं मुसलं घोरं सर्वतो हेमभूषितम् ॥ २४ ॥ स तमुद्यम्य चिक्षेप सोऽप्यन्यां व्याक्षिपद्गदाम् । भिन्नावन्योन्यमासाद्य पेततुर्धरणीतले ॥२५॥ ततो भग्नप्रहरणौ मुष्टिभ्यां तौ समीयतुः । तेजोबलसमाविष्टौ दीप्ताविव हुताशनौ ॥२६॥ जघ्नतुस्तौ तदाऽन्योन्यं नेदतुश्च पुनः पुनः । तलैश्चान्योन्यमाहत्य पेततुर्धरणीतले ॥ २७ ॥ उत्पेततुस्ततस्तूर्णं जघ्नतुश्च परस्परम् । भुजैश्चिक्षिपतुर्वीरावन्योन्यमपराजितौ । जग्मतुस्तौ श्रमं वीरौ बाहुयुद्धे परन्तपौ ॥ २८ ॥ आजहार ततः खड्गमदूरपरिवर्तिनम् । राक्षसश्चर्मणा सार्धं महावेगो महोदरः ॥ २९ ॥ तथैव च महाखड्गं चर्मणा पतितं सह । जग्राह वानरश्रेष्ठः सुग्रीवो वगवत्तरः ॥ ३० ॥ तौ तु रोषपरीताङ्गौ नर्दन्तावभ्यधावताम् । उद्यतासी रणे हृष्टौ युधि शस्त्रविशारदौ ॥ ३१ ॥ दक्षिणं मण्डलं चोभौ सुतूर्णं सम्परीयतुः । अन्योन्यमभिसंक्रुद्धौ जये प्रणिहितावुभौ ॥ ३२ ॥

समुद्यम्य परिघमिति सिद्धम् ॥२२॥ पपात स गदोद्भिन्न इत्यर्धम् । उभावपि परस्पराभिहतौ विशीर्णौ पेततुरिति भावः॥२३–३१॥दक्षिणं प्रदक्षिणम्,

ततः क्रुद्ध इति । भास्कराभासां भास्करवद्भासमानाम् ॥ २१ ॥ सुमहाघोरां तां गदाम्, दृष्ट्वेति शेषः । समुद्यम्य, परिघमिति शेषः । सुग्रीवः परिघेण जघानेति सम्बन्धः ॥ २२ ॥ गदा पपात स परिघश्च उद्भिन्न इत्यर्थः ॥ २३ ॥ तत इत्यादिश्लोकद्वयमेकं वाक्यम् । स सुग्रीवः तं मुसलम् । सोऽपि महोदरोऽपि । अन्यां गदां व्याक्षिपत् चिक्षेप ॥ २४–३१ ॥ दक्षिणं प्रदक्षिणं चकारात्सव्यं च सुतूर्णं सम्परीयतुः अकुर्वाताम् ॥ ३२ ॥

चकारात् सव्यं च। सुतूर्णं सम्परीयतुः अकुर्वाताम् ॥ ३२॥ वीर्येण श्लाघत इति वीर्यश्लाघी ॥ ३३॥ लग्नं चर्मलग्नम्। उत्कर्षतः, महोदरस्येति शेषः ॥ ३४॥ तत् शिरः। न तिष्ठते नातिष्ठत ॥ ३५॥ ३६॥ विषण्णवदनाः, अभवन्निति शेषः। अतः सर्वशब्दापौनरुक्त्यम् ॥ ३७॥ लक्ष्म्या

स तु शूरो महावेगो वीर्यश्लाघी महोदरः। महाचर्मणि तं खड्गं पातयामास दुर्मतिः ॥ ३३ ॥ लग्नमुत्कर्षतः खड्गं खड्गेन कपिकुञ्जरः। जहार सशिरस्त्राणं कुण्डलोपहितं शिरः ॥ ३४ ॥ निकृत्तशिरसस्तस्य पतितस्य महीतले। तद्बलं राक्षसेन्द्रस्य दृष्ट्वा तत्र न तिष्ठते ॥ ३५ ॥ हत्वा तं वानरैः सार्धं ननाद मुदितो हरिः। चुक्रोध च दशग्रीवो बभौ हृष्टश्च राघवः ॥ ३६ ॥ विषण्णवदनाः सर्वे राक्षसा दीनचेतसः। विद्रवन्ति ततः सर्वे भयवित्रस्तचेतसः ॥३७॥ महोदरं तं विनिपात्य भूमौ महागिरेः कीर्णमिवैकदेशम्। सूर्यात्मजस्तत्र रराज लक्ष्म्या सूर्यः स्वतेजोभिरिवाप्रधृष्यः ॥ ३८ ॥ अथ विजयमवाप्य वानरेन्द्रः समरमुखे सुरयक्षसिद्धसङ्घैः। अवनितलगतैश्च भूतसङ्घैर्हरुषसमाकुलितैः स्तुतो महात्मा॥३९॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमद्युद्धकाण्डे अष्टनवतितमः सर्गः॥९८॥

महोदरे तु निहते महापार्श्वो महाबलः। सुग्रीवेण समीक्ष्याथ क्रोधात् संरक्तलोचनः। अङ्गदस्य चमूं भीमां क्षोभयामास सायकैः ॥ १ ॥ स वानराणां मुख्यानामुत्तमाङ्गानि सर्वशः। पातयामास कायेभ्यः फलं वृन्तादिवानिलः ॥ २ ॥ केषांचिदिषुभिर्बाहून् स्कन्धांश्चिच्छेद राक्षसः। वानराणां सुसंक्रुद्धः पार्श्वं केषां व्यदारयत् ॥ ३ ॥

जयलक्ष्म्या ॥ ३८ ॥ ३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टनवतितमः सर्गः ॥ ९८ ॥

अथ महापार्श्ववधः—महोदरे त्वित्यादि। महोदरे सुग्रीवेण निहत इत्यन्वयः ॥ १–७ ॥

वीर्येण श्लाघत इति वीर्यश्लाघी ॥ ३३–३६ ॥ विषण्णवदना इति। सर्वे दीनचेतसः, बभूवुरिति शेषः। भयवित्रस्तचेतसः भयङ्करवित्रस्तचित्ताः सर्वे विद्रवन्ति व्यद्रवन् अतः सर्वशब्दापुनरुक्तिः ॥३७–३९॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् अष्टनवतितमस्सर्गः ॥ ९८ ॥

महोदर इति। महोदर इत्येतन्महापार्श्वविशेषणम्। महोदरस्तु इति पाठः ॥ १–७ ॥

सर्क्षराजस्त्वित्यादिश्लोकद्वयमेकान्वयम् । ऋक्षराजः जाम्बवान् तेन सहितः सर्क्षराजः गवाक्षः । 'जाम्बवन्तं गवाक्षं च' इत्युत्तरत्र वक्ष्यमाणत्वात् ॥ ८–१० ॥ ऋक्षराजं जाम्बवन्तं त्रिभिर्बाणैराजघान । गवाक्षं च बहुभिः शरैर्जघानेत्यन्वयः ॥ ११ ॥ १२॥ तस्याङ्गद इत्यादिश्लोकद्वयमेकान्वयम् ।





तेऽर्दिता बाणवर्षेण महापार्श्वेन वानराः । विषादविमुखाः सर्वे बभूवुर्गतचेतसः ॥ ४ ॥ निरीक्ष्य बलमुद्विग्नमङ्गदो राक्षसार्दितम् । वेगं चक्रे महाबाहुः समुद्र इव पर्वणि ॥ ५ ॥ आयसं परिघं गृह्य सूर्यरश्मिसमप्रभम् । समरे वानरश्रेष्ठो महापार्श्वे न्यपातयत् ॥६॥ स तु तेन प्रहारेण महापार्श्वो विचेतनः । ससूतः स्यन्दनात्तस्माद्विसंज्ञः प्रापतद्भुवि ॥ ७ ॥ सर्क्षराजस्तु तेजस्वी नीलाञ्जनचयोपमः । निष्पत्य सुमहावीर्यः स्वाद्व्यूहान्मेघसंनिभात् ॥ ८ ॥ प्रगृह्य गिरिशृङ्गाभां क्रुद्धः सुविपुलां शिलाम् । अश्वान् जघान तरसा स्यन्दनं च बभञ्ज तम् ॥ ९ ॥ मुहूर्ताल्लब्धसंज्ञस्तु महापार्श्वो महाबलः । अङ्गदं बहुभिर्बाणैर्भूयस्तं प्रत्यविध्यत ॥ १० ॥ जाम्बवन्तं त्रिभिर्बाणैराजघान स्तनान्तरे । ऋक्षराजं गवाक्षं च जघान बहुभिः शरैः ॥ ११ ॥ जाम्बवन्तं गवाक्षं च स दृष्ट्वा शरपीडितौ । जग्राह परिघं घोरमङ्गदः क्रोधमूर्च्छितः ॥१२॥ तस्याङ्गदः प्रकुपितो राक्षसस्य तमायसम् । दूरस्थितस्य परिघं रविरश्मिसमप्रभम् ॥१३॥ द्वाभ्यां भुजाभ्यां संगृह्य भ्रामयित्वा च वेगवान् । महापार्श्वस्य चिक्षेप वधार्थं वालिनः सुतः ॥ १४ ॥ स तु क्षिप्तो बलवता परिघस्तस्य रक्षसः । धनुश्च सशरं हस्ताच्छिरस्त्रं चाप्यपातयत् ॥ १५ ॥ तं समासाद्य वेगेन वालिपुत्रः प्रतापवान् । तलेनाभ्यहनत् क्रुद्धः कर्णमूले सकुण्डले ॥ १६ ॥ स तु क्रुद्धो महावेगो महापार्श्वो महाद्युतिः । करेणैकेन जग्राह सुमहान्तं परश्वधम् ॥ १७ ॥



दूरस्थितस्य तस्य वधार्थमित्यन्वयः ॥ १३–१७ ॥

सर्क्षराज इति । ऋक्षराजेन जाम्बवता सहितः, जाम्बवन्तं गवाक्षं चेत्युत्तरत्र वक्ष्यमाणत्वात् ॥ ८–१२ ॥ तस्याङ्गद इत्यादि श्लोकद्वयमेकं वाक्यम् । दूर

तमिति। तैलधौतं प्रतिदिनं तैलसेचनान्निष्कल्मषम्, शैलसारमयं तद्वत्कठिनमित्यर्थः। दृढम् अशिथिलम् ॥ १८ ॥ १९ ॥ स वीर इति। आत्मन इत्यस्य पितुस्तुल्यपराक्रम इत्यनेन संबन्धः। संवर्तयत् समवर्तयत्, भ्रामयामासेत्यर्थः ॥ २०–२३ ॥ वानराणामित्यादि। स्फोटयन् दलयन्।

तं तैलधौतं विमलं शैलसारमयं दृढम्। राक्षसः परमक्रुद्धो वालिपुत्रे न्यपातयत् ॥ १८ ॥ तेन वामांसफलके भृशं प्रत्यवपादितम्। अङ्गदो मोक्षयामास सरोषः स परश्वधम् ॥ १९ ॥ स वीरो वज्रसङ्काशमङ्गदो मुष्टिमात्मनः। संवर्तयत् सुसंक्रुद्धः पितुस्तुल्यपराक्रमः ॥ २० ॥ राक्षसस्य स्तनाभ्याशे मर्मज्ञो हृदयं प्रति। इन्द्राशनिसमस्पर्शं स मुष्टिं विन्यपातयत् ॥ २१ ॥ तेन तस्य निपातेन राक्षसस्य महामृधे। पफाल हृदयं चाशु स पपात हतो भुवि ॥ २२ ॥ तस्मिन्निपतिते भूमौ तत् सैन्यं संप्रचुक्षुभे। अभवच्च महान् क्रोधः समरे रावणस्य तु ॥ २३ ॥ वानराणां च हृष्टानां सिंहनादश्च पुष्कलः। स्फोटयन्निव शब्देन लङ्कां साट्टालगोपुराम् ॥ २४ ॥ महेन्द्रेणेव देवानां नादः समभवन्महान् ॥ २५ ॥ अथेन्द्रशत्रुस्त्रिदिवालयानां वनौकसां चैव महाप्रणादम्। श्रुत्वा सरोषं युधि राक्षसेन्द्रः पुनश्च युद्धाभिमुखोऽवतस्थे ॥ २६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकोनशततमः सर्गः ॥ ९९ ॥

वानराणां च सिंहनादः समभवत्, महेन्द्रेण सह देवानां नाद इव वानराणां च देवानां च नादः समभवदित्यर्थः। एतच्चानन्तरश्लोके स्फुटी भविष्यति ॥ २४–२६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनशततमः सर्गः ॥ ९९ ॥

स्थितस्य वधार्थं परिघं चिक्षेपेति सम्बन्धः ॥ १३–१९ ॥ स वीर इति। संवर्तयत् समवर्तयत् ॥ २०–२३ ॥ वानराणामित्यादि सार्धश्लोकमेकं वाक्यम्। इन्द्रेण सह देवानां नाद इव अङ्गदेन सहितानां वानराणां सिंहनादस्समभवत् ॥ २४–२६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकोनशततमस्सर्गः ॥ ९९ ॥

अथ रामरावणयुद्धारम्भः शततमे—महोदरेत्यादि । तस्मिन् विरूपाक्षे निहते सति पश्चान्महोदरमहापार्श्वौ हतौ दृष्ट्वा, स्थितमिति शेषः ॥ १–८ ॥
रामानु०–रामवृक्षमिति । सीतापुष्पफलप्रदं सीता पुष्पं यस्य सः सीतापुष्पः सीतापुष्पश्चासौ फलप्रदश्च तम् ॥ ४ ॥ उत्पपातेति । सहितुं सोढुम् । आर्ष इडागमः ॥ ९॥१० ॥

महोदरमहापार्श्वौ हतौ दृष्ट्वा तु राक्षसौ । तस्मिंश्च निहते वीरे विरूपाक्षे महाबले । आविवेश महान् क्रोधो रावणं तं महामृधे ॥ १ ॥ सूतं सञ्चोदयामास वाक्यं चेदमुवाच ह ॥ २ ॥ निहतानाममात्यानां रुद्धस्य नगरस्य च । दुःखमेषोऽपनेष्यामि हत्वा तौ रामलक्ष्मणौ ॥ ३ ॥ रामवृक्षं रणे हन्मि सीतापुष्पफलप्रदम् । प्रशाखा यस्य सुग्रीवो जाम्बवान् कुमुदो नलः ॥ ४ ॥ मैन्दश्च द्विविदश्चैव ह्यङ्गदो गन्धमादनः । हनूमांश्च सुषेणश्च सर्वे च हरियूथपाः ॥ ५ ॥ स दिशो दश घोषेण रथस्यातिरथो महान् । नादयन् प्रययौ तूर्णं राघवं चाभ्यवर्तत ॥ ६ ॥ पूरिता तेन शब्देन सनदीगिरिकानना । संचचाल मही सर्वा सवराहमृगद्विपा ॥७॥ तामसं स महाघोरं चकारास्त्रं सुदारुणम् । निर्ददाह कपीन् सर्वांस्ते प्रपेतुः समन्ततः ॥ ८ ॥ उत्पपात रजो घोरं तैर्भग्नैः सम्प्रधावितैः । न हि तत्सहितुं शेकुर्ब्रह्मणा निर्मितं स्वयम् ॥ ९ ॥ तान्यनीकान्यनेकानि रावणस्य शरोत्तमैः । दृष्ट्वा भग्नानि शतशो राघवः पर्यवस्थितः ॥ १० ॥ ततो राक्षसशार्दूलो विद्राव्य हरिवाहिनीम् । स ददर्श ततो रामं तिष्ठन्तमपराजितम् ॥ ११ ॥ लक्ष्मणेन सह भ्रात्रा विष्णुना वासवं यथा । आलिखन्तमिवाकाशमवष्टभ्य महद्धनुः । पद्मपत्रविशालाक्षं दीर्घबाहुमरिन्दमम् ॥ १२ ॥

तत इत्यादिसार्धश्लोकद्वयेन रामस्यापराजितत्वं निरवधिकसौन्दर्यनिधित्वेन वैरं विहाय निरन्तरानुभाव्यत्वं रावणस्य दुर्बुद्धित्वम् अस्तप्रवाहभाव ॥ १ ॥ २ ॥ निहतानामित्यादिश्लोकत्रयस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु–रामलक्ष्मणौ हत्वा गत्वा निहतानाममात्यानां दुःखमपनेष्यामि । ननु तौ गत्वा केन प्रकारेण दुःखमपनेष्यसीत्यत आह–रामवृक्षमिति । वृक्षतीति वृक्षः तम्, सर्वसंवरकं राममित्यर्थः । सीतापुष्पफलप्रदं सीता पुष्पं यस्य सः स चासौ फलप्रदश्चेति

तेनैव महता धनुर्वरेणावर्तितं श्रीरामदेहलावण्यामृतपूरमनवगाहमानस्य तस्य दौर्भाग्यं चोच्यते ॥ ११ ॥ १२ ॥ ततो राम इत्यादिसार्धश्लोक एकान्वयः । हृष्टः चिराद्वैरी समागत इति सन्तुष्टः कार्मुकं जग्राह । विस्फारयितुमारेभ इत्यादि विलम्बोक्त्या किमिदानीमपि वा नतो भविष्यति रावण इति

ततो रामो महातेजाः सौमित्रिसहितो बली । वानरांश्च रणे भग्नानापतन्तं च रावणम् ॥ १३ ॥ समीक्ष्य राघवो हृष्टो मध्ये जग्राह कार्मुकम् ॥ १४ ॥ विस्फारयितुमारेभे ततः स धनुरुत्तमम् । महावेगं महानादं निर्भिन्दन्निव मेदिनीम् ॥ १५ ॥ रावणस्य च बाणौघै रामविस्फारितेन च । शब्देन राक्षसास्ते च पेतुश्च शतशस्तदा ॥ १६ ॥ तयोः शरपथं प्राप्तो रावणो राजपुत्रयोः । स बभौ च यथा राहुः समीपे शशिसूर्ययोः ॥ १७ ॥ तमिच्छन् प्रथमं योद्धुं लक्ष्मणो निशितैः शरैः । मुमोच धनुरायम्य शरानग्निशिखोपमान् ॥ १८ ॥ तान्मुक्तमात्रानाकाशे लक्ष्मणेन धनुष्मता । बाणान् बाणैर्महातेजा रावणः प्रत्यवारयत् ॥ १९ ॥ एकमेकेन बाणेन त्रिभिस्त्रीन् दशभिर्दश । लक्ष्मणस्य प्रचिच्छेद दर्शयन् पाणिलाघवम् ॥ २० ॥ अभ्यतिक्रम्य सौमित्रिं रावणः समितिञ्जयः । आससाद ततो रामं स्थितं शैलमिवाचलम् ॥ २१ ॥

रामस्य दयालुतोच्यते ॥ १३–१५ ॥ रावणस्येति । रावणस्य बाणौघैः रामविस्फारितेन च जातेन शब्देनेत्यर्थः ॥ १६ ॥ रामानु०–रावणस्येति । शब्देन राक्षसास्ते चेति पाठः । ते च वानराश्च ॥ १६ ॥ तयोरिति । शशिसूर्ययोरिति, अमायामिति शेषः ॥ १७–२० ॥ रामानु०–तयोः शरपथं प्राप्तो रावणो राजपुत्रयोः । स बभौ च यथा राहुः समीपे शशिसूर्ययोरिति । अतिक्रूरस्वभावस्य रावणस्य रामलक्ष्मणयोः समीपागमनममावास्यायां राहोश्चन्द्रसूर्यसमीपागमनमिवेतिकृत्वा दृष्टान्तदार्ष्टान्तिकयोरैकरूप्यम् ॥ १७ ॥ अभ्यतिक्रम्य एकस्यापि बाणस्य स्वस्मिन्नपतनादनादरेणातिक्रम्य ॥ २१–२६ ॥

सीतापुष्पफलप्रदः तम्, गत्वेत्यनुषज्यते । यस्य वृक्षस्य ये सुग्रीवादयः शाखाः ताम् हन्तीति सम्बन्धः । शाखारूपसुग्रीवादीन् हत्वा दुःखमपनेष्यामीत्यर्थः ॥ ३–१५ ॥ रावणस्येति । रावणस्य बाणौघैः रामविस्फारितेन च यश्शब्दो जनितः तेन पेतुरिति सम्बन्धः ॥ १६ ॥ तयोश्शरपथमिति । सः रावणः । राजपुत्रयोस्समीपे शशिसूर्ययोस्समीपे राहुर्यथा तथा बभाविति सम्बन्धः ॥ १७–२० ॥ अभ्यतिक्रम्येति । शैलमिवाचलम् अचलं स्थितं राममाससादेति

तयोरिति । यमान्तकनिकाशयोः यमतदन्तकौ यमरुद्रौ तत्तुल्ययोः ॥ २७ ॥ गगनं सन्ततं निबिडं बभूवेत्यन्वयः ॥ २८ ॥ गवाक्षितमित्यर्धस्य । गवाक्षितं सञ्जातगवाक्षम् ॥ २९ ॥ महावेगैरित्यादिसार्धश्लोक एकान्वयः । गृध्रपत्रैः हेतुभिः, सुवाजितैः सञ्जतशोभनपक्षैः, बाणैरिति शेषः ॥ ३० ॥

स सङ्ख्ये राममासाद्य क्रोधसंरक्तलोचनः । व्यसृजच्छरवर्षाणि रावणो राघवोपरि ॥ २२ ॥ शरधारास्ततो रामो रावणस्य धनुश्च्युताः । दृष्ट्वैवापततः शीघ्रं भल्लान् जग्राह सत्वरम् ॥ २३ ॥ तान् शरौघांस्ततो भल्लैस्तीक्ष्णै श्चिच्छेद राघवः । दीप्यमानान् महाघोरान् क्रुद्धानाशीविषानिव ॥ २४ ॥ राघवो रावणं तूर्णं रावणो राघवं तदा । अन्योन्यं विविधैस्तीक्ष्णैः शरैरभिववर्षतुः ॥ २५ ॥ चेरतुश्च चिरं चित्रं मण्डलं सव्यदक्षिणम् । बाणवेगान् समुत्क्षिप्तावन्योन्यमपराजितौ ॥२६॥ तयोर्भूतानि वित्रेसुर्युगपत् संप्रयुध्यतोः । रौद्रयोः सायकमुचोर्यमान्तकनिका शयोः ॥ २७॥ सन्ततं विविधैर्बाणैर्बभूव गगनं तदा । घनैरिवातपापाये विद्युन्मालासमाकुलैः ॥ २८ ॥ गवाक्षित मिवाकाशं बभूव शरवृष्टिभिः ॥ २९ ॥ महावेगैः सुतीक्ष्णाग्रैर्गृध्रपत्रैः सुवाजितैः । शरान्धकारं तौ भीमं चक्रतुः समरं तदा । गतेऽस्तं तपने चापि महामेघाविवोत्थितौ ॥ ३० ॥ बभूव तुमुलं युद्धमन्योन्यवधकाङ्क्षिणोः । अनासाद्यमचिन्त्यं च वृत्रवासवयोरिव ॥ ३१ ॥ उभौ हि परमेष्वासावुभौ शस्त्रविशारदौ । उभावस्त्रविदां मुख्या वुभौ युद्धे विचेरतुः ॥३२॥ उभौ हि येन व्रजतस्तेन तेन शरोर्मयः । ऊर्मयो वायुना विद्धा जग्मुः सागरयोरिव ॥३३॥

बभूवेति । अनासाद्यम् इतः पूर्वं केनापि दुर्लभम् । अचिन्त्यं रावणस्यैवं भविष्यतीति चिन्तानर्हम् ॥३१॥३२॥ उभाविति । येन येन मण्डलचारेण ॥३३॥



सम्बन्धः ॥ २१-२५ ॥ अन्योन्यं बाणवेगान् समुत्क्षिप्तौ समुत्क्षिप्तवन्तौ, निवारयन्ताविति यावत् । अपराजितौ अप्रतिहतौ ॥ २६ ॥ २७ ॥ सन्ततमाक्रान्तम् ॥ २८ ॥ २९ ॥ गृध्रपत्रैः सुवाजितैः गृध्रपत्रैर्हेतुभिः सुवाजितैः सञ्जातशोभनपक्षैः ॥ ३०-३२ ॥ रयेण मण्डलचारेण । उभौ रयेण व्रजतः इति पाठः ॥ ३३ ॥

स०-तपने सूर्ये च अस्तं तन्नामकं पर्वतं गते सति, प्रदोषसमय इति यावत् । उत्थितौ महामेघाविव । [illegible] इति 'न कश्चिच्चमत्कारः' इति नागोजिभट्टोक्तिरेव निश्चमत्कारा ।-

तत इति। संसक्तहस्तः बाणप्रयोगासक्तहस्तः ॥ ३४ ॥ ३५ ॥ अथेत्यादि। शरान् रौद्रास्त्रप्रपञ्चरूपान् बाणान् मुमोचेत्यन्वयः। मुमोच च महातेजा श्चापमायम्य वीर्यवानिति पाठः। तदनन्तरं—ते महामेघसङ्काशे इति श्लोकः। तदनन्तरं—पुनरेवेति श्लोकः। तदनन्तरं—ते भित्त्वेति श्लोकात्पूर्वं ग्रन्थ

ततः संसक्तहस्तस्तु रावणो लोकरावणः। नाराचमालां रामस्य ललाटे प्रत्यमुञ्चत ॥ ३४ ॥ रौद्रचापप्रयुक्तां तां नीलोत्पलदलप्रभाम्। शिरसा धारयन् रामो न व्यथां प्रत्यपद्यत ॥३५॥ अथ मन्त्रानभिजपन् रौद्रमस्त्रमुदीरयन्। शरान् भूयः समादाय रामः क्रोधसमन्वितः। मुमोच च महातेजाश्चापमायम्य वीर्यवान् ॥३६॥ ते महामेघसङ्काशे कवचे पतिताः शराः। अवध्ये राक्षसेन्द्रस्य न व्यथां जनयंस्तदा ॥३७॥ पुनरेवाथ तं रामो रथस्थं राक्षसाधिपम्। ललाटे परमास्त्रेण सर्वास्त्रकुशलो रणे ॥ ३८॥ ते भित्त्वा बाणरूपाणि पञ्चशीर्षा इवोरगाः। श्वसन्तो विविशुर्भूमिं रावणप्रतिकूलिताः ॥३९॥ निहत्य राघवस्यास्त्रं रावणः क्रोधमूर्च्छितः। आसुरं सुमहाघोरमस्त्रं प्रादुश्चकार ह ॥४०॥

पतनमस्ति, तदन्वेष्टव्यम् ॥ ३६ ॥ अवध्ये अभेद्ये। व्यथां न जनयन् नाजनयन् ॥ ३७ ॥ ललाटे विषये ललाटमुद्दिश्येत्यर्थः। यद्वा परमास्त्राणि, विव्याधेति शेषः ॥ ३८ ॥ त इति। ते अस्त्रविकृतिरूपाः शराः, बाणरूपाणि रावणास्त्राणि भित्त्वा, रावणप्रतिकूलिताः रावणेन निवारिताः सन्तः, भूमिं विविशुः ॥ ३९ ॥ ४० ॥ रामानु०—अवध्ये अभेद्ये। पुनरिति। ललाटे ललाटविषये, ललाटमुद्दिश्येति यावत्। परमास्त्रेण श्रेष्ठास्त्रमन्त्रेण, योजितान् बाणान् मुमोचेत्यध्याहर्तव्यम्। समनन्तरश्लोके बाणबहुत्वाभिधानात्। ते भित्त्वेति। श्वसन्तः पञ्चशीर्षा उरगा इव स्थिताः ते बाणाः रावणप्रतिकूलिताः रावणेन प्रत्यस्त्रेण खण्डिताः, अत एव बाण संसक्तहस्तः बाणप्रयोगासक्तहस्तः ॥३४-३६॥ अवध्ये अभेद्ये वध्यतां जनयन् भेद्यत्वमजनयन्। अडभाव आर्षः। वध्यतां जनयन्निति पाठः॥३७॥ पुनरेवेति। ललाटे ललाटमुद्दिश्येत्यर्थः। परमास्त्रेण श्रेष्ठमन्त्रेण योजितान् बाणान्, मुमोचेति शेषः ॥३८॥ बाणरूपाणि प्रशंसायां रूपप् प्रत्ययः। प्रशस्तबाणा इत्यर्थः। आर्षो लिङ्ग व्यत्ययः। ते प्रशस्तबाणाः रावणप्रतिकूलिताः रावणेन निवारिता अपि रावणस्य कवचं भित्त्वा श्वसन्तः पञ्चशीर्षा उरगा इव भूमिं विविशुरिति सम्बन्धः ॥३९-४६॥

सूर्येऽस्तं गते चाप्युदिते इत्येतन्मध्येऽस्तं गत—यद्वा तपने सूर्ये सति अस्तंगत इव यथा तथा महामेघाविव चक्रतुः। चापिशब्दादित्यादिचमत्कृत्यपेक्षया चमत्कृतिरतिचमत्कृतिर्वा नवेति कृतिनो विदांकुर्वन्तु ॥ इत्यस्याधिक्येनावक्तव्यत्वाच्च ॥३०॥ ते शराः बाणरूपाणि बाणं कायं [illegible] कुण्डलीकुर्वन्तीति तानि करबाणानि भित्त्वा पञ्चशीर्षा उरगा इव श्वसन्तः रावणप्रतिकूलिताः ध्वंसिताः भूमिं विविशुः ॥ ३९ ॥

रूपाणि भित्त्वा भूमिं विविशुरिति योजना ॥ ३७–४० ॥ आसुरास्त्रं प्रपञ्चयति— सिंहव्याघ्रेत्यादिश्लोकचतुष्टयेन । लेलिहानान् सर्पान्, तदाकारानिति यावत् । श्वान शब्दोऽप्यस्ति । मकराशीविषाननानित्यत्र आशीविषशब्दः पञ्चास्यसर्पेतरसर्पपरः ॥ ४१–४४ ॥ आसुरेणेति । पावकं पावकसम्बन्धि ॥ ४५ ॥ पावकास्त्रं





सिंहव्याघ्रमुखांश्चान्यान् कङ्ककाकमुखानपि । गृध्रश्येनमुखांश्चापि शृगालवदनांस्तथा ॥ ४१ ॥ ईहामृगमुखां श्चान्यान् व्यादितास्यान् भयानकान् । पञ्चास्यान् लेलिहानांश्च ससर्ज निशितान् शरान् ॥ ४२ ॥ शरान् खर मुखांश्चान्यान् वराहमुखसंस्थितान् । श्वानकुक्कुटवक्त्रांश्च मकराशीविषाननान् ॥ ४३ ॥ एतानन्यांश्च मायावी ससर्ज निशितान् शरान् । रामं प्रति महातेजाः क्रुद्धः सर्प इव श्वसन् ॥४४॥ आसुरेण समाविष्टः सोऽस्त्रेण रघु नन्दनः । ससर्जास्त्रं महोत्साहः पावकं पावकोपमः ॥४५॥ अग्निदीप्तमुखान् बाणान् तथा सूर्यमुखानपि । चन्द्रार्ध चन्द्रवक्त्रांश्च धूमकेतुमुखानपि ॥४६॥ ग्रहनक्षत्रवक्त्रांश्च महोल्कामुखसंस्थितान् । विद्युज्जिह्वोपमांश्चान्यान् ससर्ज निशितान् शरान् ॥ ४७ ॥ ते रावणशरा घोरा राघवास्त्रसमाहताः ॥४८॥ विलयं जग्मुराकाशे जग्मुश्चैव सहस्रशः ॥ ४९ ॥ तदस्त्रं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा । हृष्टा नेदुस्ततः सर्वे कपयः कामरूपिणः । सुग्रीवप्रमुखा वीराः परिवार्य तु राघवम् ॥ ५० ॥ ततस्तदस्त्रं विनिहत्य राघवः प्रसह्य तद्रावणबाहुनिस्सृतम् । मुदाऽन्वितो दाशरथि महाहवे विनेदुरुच्चैर्मुदिताः कपीश्वराः ॥ ५१ ॥ इत्यार्षे श्रीरामायणे० श्रीमद्युद्धकाण्डे शततमः सर्गः ॥ १०० ॥

प्रपञ्चयति—अग्नीत्यादिश्लोकद्वयेन । महोल्कामुखसंस्थितान् महोल्कामुखेन वर्तमानान् । विद्युज्जिह्वोपमान् विद्युदर्चिःसदृशान् । " कणा जिह्वास्तथा ऽर्चिषः " इति हलायुधः ॥४६–५०॥ तत इति । तत् प्रसिद्धम् । मुदाऽन्वितः, बभूवेति शेषः ॥ ५१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने शततमः सर्गः ॥ १०० ॥



विद्युज्जिह्वोपमान् विद्युदर्चिस्सदृशान् । " कणा जिह्वास्तथाऽर्चिषः " इति हलायुधः ॥ ४७–५१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां शततमः सर्गः ॥ १०० ॥

अथ लक्ष्मणस्य शक्त्या पतनम्—तस्मिन्नित्यादि । क्रोधाच्चास्त्रमनन्तरमित्यत्रापि चक्र इत्यनुषज्यते ॥ १ ॥ किं तदस्त्रमित्यपेक्षायामाह—मयेनेति । रौद्रं रुद्रदेवताकम् ॥ २ ॥ ततः शूलानीत्यादिश्लोकद्वयमेकान्वयम् । कूटपाशाः कपटपाशाः ॥ ३–७ ॥ तैरिति । चन्द्रसूर्यग्रहैरिवेति । तत्समानाकारै

तस्मिन् प्रतिहतेऽस्त्रे तु रावणो राक्षसाधिपः । क्रोधं च द्विगुणं चक्रे क्रोधाच्चास्त्रमनन्तरम् ॥ १ ॥ मयेन विहितं रौद्रमन्यदस्त्रं महाद्युतिः । उत्स्रष्टुं रावणो घोरं राघवाय प्रचक्रमे ॥ २ ॥ ततः शूलानि निश्चेरुर्गदाश्च मुसलानि च । कार्मुकाद्दीप्यमानानि वज्रसाराणि सर्वशः ॥ ३ ॥ मुद्गराः कूटपाशाश्च दीप्ताश्चाशनयस्तथा । निष्पेतुर्विविधास्तीक्ष्णा वाता इव युगक्षये ॥ ४ ॥ तदस्त्रं राघवः श्रीमानुत्तमास्त्रविदां वरः । जघान परमास्त्रेण गान्धर्वेण महाद्युतिः ॥ ५ ॥ तस्मिन् प्रतिहतेऽस्त्रे तु राघवेण महात्मना । रावणः क्रोधताम्राक्षः सौरमस्त्रमुदैरयत् ॥ ६ ॥ ततश्चक्राणि निष्पेतुर्भास्वराणि महान्ति च । कार्मुकाद्भीमवेगस्य दशग्रीवस्य धीमतः ॥७॥ तैरासीद्गगनं दीप्तं सम्पतद्भिरितस्ततः । पतद्भिश्च दिशो दीप्ताश्चन्द्रसूर्यग्रहैरिव ॥ ८ ॥ तानि चिच्छेद बाणौघैश्चक्राणि स तु राघवः । आयुधानि च चित्राणि रावणस्य चमूमुखे ॥ ९ ॥ तदस्त्रं तु हतं दृष्ट्वा रावणो राक्षसाधिपः । विव्याध दशभिर्बाणै रामं सर्वेषु मर्मसु ॥ १० ॥ स विद्धो दशभिर्बाणैर्महाकार्मुकनिस्सृतैः । रावणेन महातेजा न प्राकम्पत राघवः ॥ ११ ॥ ततो विव्याध गात्रेषु सर्वेषु समितिञ्जयः । राघवस्तु सुसंक्रुद्धो रावणं बहुभिः शरैः ॥ १२ ॥ एतस्मिन्नन्तरे क्रुद्धो राघवस्यानुजो बली । लक्ष्मणः सायकान् सप्त जग्राह परवीरहा ॥ १३ ॥

रित्यर्थः ॥ ८–१२ ॥ एतस्मिन्नन्तर इति । एवं रावणं प्रहृत्य क्षणं रामे विश्राम्यति सतीत्यर्थः । लक्ष्मणः पूर्वं युद्धे प्रवृत्तो मध्ये रामेण युद्धकरणा

तस्मिन्निति । क्रोधाच्चास्त्रमनन्तरमित्यत्रापि चक्र इति [illegible] ॥ १ ॥ [illegible] मयेनेति ॥ २–२२ ॥

दवसरप्रतीक्ष इत्यर्थः । एवमव्याख्याने कथमन्येन युध्यमानमन्यो युध्यतेति महान् दोषः स्यात् ॥ १३ ॥ गृहीतानां सप्तबाणानां विनियोगप्रकारमाह—तैः सायकैरित्यादिश्लोकत्रयेण । तैः सायकैरिति षष्ठ्यर्थे तृतीया । तेषां सायकानां मध्ये एकेन बाणेन ध्वजम्, एकेन बाणेन सारथिशिरः, पञ्चभि

तैः सायकैर्महावेगै रावणस्य महाद्युतिः । ध्वजं मनुष्यशीर्षं तु तस्य चिच्छेद नैकधा ॥ १४ ॥ सारथेश्चापि बाणेन शिरो ज्वलितकुण्डलम् । जहार लक्ष्मणः श्रीमान् नैर्ऋतस्य महाबलः ॥ १५ ॥ तस्य बाणैश्च चिच्छेद धनुर्गजकरोपमम् । लक्ष्मणो राक्षसेन्द्रस्य पञ्चभिर्निशितैः शरैः ॥ १६ ॥ नीलमेघनिभांश्चास्य सदश्वान् पर्वतोपमान् । जघानाप्लुत्य गदया रावणस्य विभीषणः ॥ १७ ॥ हताश्वाद्वेगवान् वेगादवप्लुत्य महारथात् । क्रोधमाहारयत्तीव्रं भ्रातरं प्रति रावणः ॥१८॥ ततः शक्तिं महाशक्तिर्दीप्तां दीप्ताशनीमिव । विभीषणाय चिक्षेप राक्षसेन्द्रः प्रतापवान् ॥१९॥ अप्राप्तामेव तां बाणैस्त्रिभिश्चिच्छेद लक्ष्मणः । अथोदतिष्ठत् सन्नादो वानराणां तदा रणे ॥ २० ॥ सा पपात त्रिधा च्छिन्ना शक्तिः काञ्चनमालिनी । सविस्फुलिङ्गा ज्वलिता महोल्केव दिवश्च्युता ॥२१॥ ततः सम्भाविततरां कालेनापि दुरासदाम् । जग्राह विपुलां शक्तिं दीप्यमानां स्वतेजसा ॥ २२ ॥ सा वेगिता बलवता रावणेन दुरासदा । जज्वाल सुमहाघोरा शक्राशनिसमप्रभा ॥ २३ ॥ एतस्मिन्नन्तरे वीरो लक्ष्मणस्तं विभीषणम् । प्राणसंशयमापन्नं तूर्णमभ्यवपद्यत ॥२४॥ तं विमोक्षयितुं वीरश्चापमायम्य लक्ष्मणः । रावणं शक्तिहस्तं वै शरवर्षैरवाकिरत् ॥२५॥

र्धनुश्च चिच्छेदेत्यर्थः । निशितैः शरैरित्यत्र शरशब्दः काशदण्डविशेषमयत्वपरो बाणविशेषणम् ॥ १४–१६ ॥ एवं धनुषि छिन्ने क्षणं तूष्णीं तिष्ठति रावणे विभीषणेन किंचित्कारमाह—नीलेति ॥ १७–२१ ॥ तत इति । सम्भाविततरां चन्दनादिभिरर्चिताम् ॥ २२ ॥ २३ ॥ एतस्मिन्निति । अभ्यवपद्यत तमाच्छाद्य स्वयमतिष्ठदित्यर्थः ॥ २४ ॥ २५ ॥



सा वेगितेति । दुरासदा दुस्सहा । वेगिता वेगं प्रापिता ॥ २३ ॥ अभ्यवपद्यत विभीषणसमीपमागत इत्यर्थः ॥ २४ ॥ २५ ॥

कीर्यमाण इति । विमुखीकृतविक्रमः विमुखीकृतविभीषणविषयपराक्रमः ॥ २६ ॥ २७ ॥ ते त्वया ॥ २८ ॥ लोहितलक्षणा रुधिरचिह्ना । अनेन पूर्वमपि बहुधा रिपवोऽनया हता इति व्यज्यते । लोहितलक्षणा सती यास्यतीति वा ॥ २९-३२ ॥ तामिति । राघवः लक्ष्मणाय स्वस्त्यस्तु त्वं हतोद्यमा नष्ट

कीर्यमाणः शरौघेण विसृष्टेन महात्मना । स प्रहर्तुं मनश्चक्रे विमुखीकृतविक्रमः ॥ २६ ॥ मोक्षितं भ्रातरं दृष्ट्वा लक्ष्मणेन स रावणः । लक्ष्मणाभिमुखस्तिष्ठन्निदं वचनमब्रवीत् ॥ २७ ॥ मोक्षितस्ते बलश्लाघिन् यस्मादेवं विभीषणः । विमुच्य राक्षसं शक्तिस्त्वयीयं विनिपात्यते ॥ २८ ॥ एषा ते हृदयं भित्त्वा शक्तिर्लोहितलक्षणा । मद्बाहुपरिघोत्सृष्टा प्राणानादाय यास्यति ॥ २९ ॥ इत्येवमुक्त्वा तां शक्तिमष्टघण्टां महास्वनाम् । मयेन मायाविहिताममोघां शत्रुघातिनीम् ॥ ३० ॥ लक्ष्मणाय समुद्दिश्य ज्वलन्तीमिव तेजसा । रावणः परमक्रुद्धश्चिक्षेप च ननाद च ॥ ३१ ॥ सा क्षिप्ता भीमवेगेन शक्राशनिसमस्वना । शक्तिरभ्यपतद्वेगाल्लक्ष्मणं रणमूर्धनि ॥ ३२ ॥ तामनुव्याहरच्छक्तिमापतन्तीं स राघवः । स्वस्त्यस्तु लक्ष्मणायेति मोघा भव हतोद्यमा ॥ ३३ ॥ रावणेन रणे शक्तिः क्रुद्धेनाशीविषोपमा । मुक्ताऽऽशूरस्यभीतस्य लक्ष्मणस्य ममज्ज सा ॥ ३४ ॥ न्यपतत् सा महावेगा लक्ष्मणस्य महोरसि । जिह्वेवोरगराजस्य दीप्यमाना महाद्युतिः ॥ ३५ ॥ ततो रावणवेगेन सुदूरमवगाढया । शक्त्या निर्भिन्नहृदयः पपात भुवि लक्ष्मणः ॥ ३६ ॥ तदवस्थं समीपस्थो लक्ष्मणं प्रेक्ष्य राघवः । भ्रातृस्नेहान्महातेजा विषण्णहृदयोऽभवत् ॥ ३७ ॥ स मुहूर्तमनुध्याय बाष्पव्याकुललोचनः । बभूव संरब्धतरो युगान्त इव पावकः ॥ ३८ ॥

हननोद्योगा मोघा भवेति तामनुव्याहरदित्यन्वयः ॥ ३३ ॥ क्षणात् भस्मीकरणक्षमा शक्तिः रामेण मोघीकृता सती केवलमपतदित्याह—रावणेनेति । मुक्तेति । आशु उरसि अभीतस्येति पदानि । लक्ष्मणस्योरसि ममज्जेति सम्बन्धः ॥ ३४-३७ ॥ स मुहूर्तमिति । अनुध्याय तत्कालकर्तव्यं महात्मना लक्ष्मणेन विमुखीकृतविक्रमः विमुखीकृतविभीषणविषयपराक्रम इत्यर्थः ॥ २६-२८ ॥ एषेति । लोहितलक्षणा शत्रुरुधिरचिह्निता ॥ २९-३२ ॥ तामिति ।

चिन्तयित्वा ॥ ३८ ॥ न विषादस्येति सार्धश्लोकमेकं वाक्यम् । लक्ष्मणं सन्निरीक्ष्य महता सर्वयत्नेन रावणस्य वधे धृतः अवहितः सुतुमुलं युद्धं चक्र इत्यन्वयः । न केवलं सीताहरणात् किन्तु लक्ष्मणदर्शनादपीति चशब्दार्थः ॥ ३९ ॥ कथं लक्ष्मणदर्शनं रावणवधकारणं भवतीत्यत्राह—



न विषादस्य कालोऽयमिति सञ्चिन्त्य राघवः । चक्रे सुतुमुलं युद्धं रावणस्य वधे धृतः । सर्वयत्नेन महता लक्ष्मणं सन्निरीक्ष्य च ॥ ३९ ॥ स ददर्श ततो रामः शक्त्या भिन्नं महाहवे । लक्ष्मणं रुधिरादिग्धं सपन्नगमिवाचलम् ॥४०॥ तामपि प्रहितां शक्तिं रावणेन बलीयसा । यत्नतस्ते हरिश्रेष्ठा न शेकुरवमर्दितुम् ॥४१॥ अर्दिताश्चैव बाणौघैः क्षिप्रहस्तेन रक्षसा ॥ ४२ ॥ सौमित्रिं सा विनिर्भिद्य प्रविष्टा धरणीतलम् ॥ ४३ ॥ तां कराभ्यां परामृश्य रामः शक्तिं भयावहाम् । बभञ्ज समरे क्रुद्धो बलवान् विचकर्ष च ॥ ४४ ॥ तस्य निष्कर्षतः शक्तिं रावणेन बलीयसा । शराः सर्वेषु गात्रेषु पातिता मर्मभेदिनः ॥ ४५ ॥ अचिन्तयित्वा तान् बाणान् समाश्लिष्य च लक्ष्मणम् । अब्रवीच्च हनूमन्तं सुग्रीवं चैव राघवः ॥ ४६ ॥ लक्ष्मणं परिवार्येह तिष्ठध्वं वानरोत्तमाः ॥ ४७ ॥ पराक्रमस्य कालोऽयं सम्प्राप्तो मे चिरेप्सितः । पापात्माऽयं दशग्रीवो वध्यतां पापनिश्चयः । कांक्षतः स्तोककस्येव घर्मान्ते मेघदर्शनम् ॥ ४८ ॥

स ददर्शेति । तदानीं लक्ष्मणस्य तादृशं शोच्यत्वदर्शनं रावणवधनिश्चयकारणं भवतीत्याशयः ॥ ४० ॥ तामपीति । अपिशब्दस्य यत्नतोऽपीत्युत्तरत्रान्वयः । बाणार्दितत्वेन सुतरां न शेकुरित्याह—अर्दिताश्चेति ॥ ४१ ॥ ४२ ॥ कारणान्तरमाह—सौमित्रिमिति ॥ ४३—४७ ॥ पराक्रमस्येत्यादि

राघवः, लक्ष्मणाय स्वस्त्यस्तु, त्वं इतोद्यमा नष्टहननोद्योगा मोघा भवेति आपतन्तीं शक्तिमनु व्याहरत् शक्तिमुद्दिश्य व्याहृतवानिति योजना ॥३३—४३॥ तामिति । यामवमर्दितुं वानरा न शेकुः तां कराभ्यां विचकर्ष बभञ्ज चेति सम्बन्धः ॥ ४४—४७ ॥ पराक्रमस्येत्यादि सार्धश्लोकमेकं वाक्यम् । कांक्षतश्चातकस्य घर्मान्ते मेघदर्शनमिव चिरेप्सितः पराक्रमस्य कालः मे मया सम्प्राप्तः, अतः पापात्मा दशग्रीवो वध्यतामिति योजना। कांक्षतस्स्तोककस्य इति पाठे—स्तोककः चातकः ।

सार्धश्लोक एकान्वयः। वध्यतामिति प्राप्तकाले लोट्। स्तोककस्य चातकस्य। "स्तोककश्चातकः समाः" इत्यमरः॥ ४८॥ अस्मिन्मुहूर्ते तत्रापि

नचिराद्द्रक्ष्यथेत्यन्वयः॥ ४९॥ राज्यनाशमित्यादिश्लोकद्वयमेकान्वयम्। प्राप्त पम्पापवनादौ। क्लेशं लक्ष्मणप्रहरणजन्यम्॥५०॥५१॥ यदर्थमित्यादि

अस्मिन् मुहूर्ते नचिरात् सत्यं प्रतिशृणोमि वः। अरावणमरामं वा जगद्द्रक्ष्यथ वानराः॥ ४९॥ राज्यनाशं वने वासं दण्डके परिधावनम्। वैदेह्याश्च परामर्शं रक्षोभिश्च समागमम्॥ ५०॥ प्राप्तं दुःखं महद्घोरं क्लेशं च निरयोपमम्। अद्य सर्वमहं त्यक्ष्ये निहत्वा रावणं रणे॥ ५१॥ यदर्थं वानरं सैन्यं समानीतमिदं मया। सुग्रीवश्च कृतो राज्ये निहत्वा वालिनं रणे॥५२॥ यदर्थं सागरः क्रान्तः सेतुर्बद्धश्च सागरे। सोऽयमद्य रणे पापश्चक्षुर्विषयमागतः॥ ५३॥ चक्षुर्विषयमागम्य नायं जीवितुमर्हति। दृष्टिं दृष्टिविषस्येव सर्पस्य मम रावणः॥ ५४॥ स्वस्थाः पश्यत दुर्धर्षा युद्धं वानरपुङ्गवाः। आसीनाः पर्वताग्रेषु ममेदं रावणस्य च॥ ५५॥ अद्य रामस्य रामत्वं पश्यन्तु मम संयुगे। त्रयो लोकाः सगन्धर्वाः सदेवाः सर्षिचारणाः॥ ५६॥ अद्य कर्म करिष्यामि यल्लोकाः सचराचराः। सदेवाः कथयिष्यन्ति यावद्भूमिर्धरिष्यति। समागम्य सदा लोके यथा युद्धं प्रवर्तितम्॥ ५७॥ एवमुक्त्वा शितैर्बाणैस्तप्तकाञ्चनभूषणैः। आजघान दशग्रीवं रणे रामः समाहितः॥ ५८॥

श्लोकत्रयमेकान्वयम्। दृष्टिं दृष्टिविषयम्। दृष्टौ विषं यस्यासौ दृष्टिविषः तस्य। केचिद्धि सर्पाः दर्शनमात्रेण मनुष्यान् मारयन्तीति प्रसिद्धिः॥ ५२–५५॥ अद्येति। रामत्वं जगदेकवीरत्वम्। आचार्यास्तु—रामावतारप्रयोजनमित्याहुः॥ ५६॥ अद्येत्यादिसार्धश्लोक एकान्वयः। सदेवाः

"स्तोककश्चातकस्समाः" इत्यमरः॥ ४८॥ प्रतिशृणोमि प्रतिजानामि॥४९॥ राज्यनाशमित्यादि सार्धश्लोकमेकं वाक्यम्। राज्यनाशं राज्यनाशजनितं दुःखम्। वने वासं वनवासजनितं दुःखम्। एवमुत्तरत्रापि दुःखविशेषणानि। क्लेशं च निरयोपममतिजुगुप्सितं लक्ष्मणप्रहारजनितमित्यर्थः॥ ५०–५३॥ दृष्टिविषस्य सर्पस्य दृष्टिं दृष्टिविषयं प्राप्तो जन इव अयं जीवितुं नार्हतीति सम्बन्धः॥५४॥५५॥ अद्येति। रामस्य रामत्वं रमयतीति राम इति व्युत्पत्त्या पराक्रमेणापि रमयितृत्वमुच्यते॥ ५६॥ सदेवास्सचराचराः लोका जनास्समागम्य सम्भूय मया प्रवर्तितं युद्धं गुरुरूपं यत्कर्म यावद्युद्धभूमिर्धरिष्यति अवस्थास्यते तावन्तं कालं सदा नित्यशः

सचराचराः लोकाः जनाः, समागम्य सङ्गीभूय, यथेदानीं युद्धं प्रवर्तितं तथा यावत् भूमिर्धरिष्यति, तावत्कालं सदा नित्यशः लोके यत्कर्म कथयिष्यन्ति, तत् कर्माद्य करिष्यामीत्यन्वयः ॥५७–६३॥ इति श्रीगोविन्द० श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोत्तरशततमः सर्गः॥१०१

अथ प्रदीप्तैर्नाराचैर्मुसलैश्चापि रावणः। अभ्यवर्षत्तदा रामं धाराभिरिव तोयदः ॥५९॥ रामरावणमुक्तानामन्योन्यमभिनिघ्नताम्। शराणां च शराणां च बभूव तुमुलः स्वनः ॥ ६० ॥ ते भिन्नाश्च विकीर्णाश्च रामरावणयोः शराः। अन्तरिक्षात् प्रदीप्ताग्रा निपेतुर्धरणीतले ॥ ६१ ॥ तयोर्ज्यातलनिर्घोषो रामरावणयोर्महान्। त्रासनः सर्वभूतानां संबभूवाद्भुतोपमः ॥६२॥ स कीर्यमाणः शरजालवृष्टिभिर्महात्मना दीप्तधनुष्मताऽर्दितः। भयात् प्रदुद्राव समेत्य रावणो यथाऽनिलेनाभिहतो बलाहकः ॥ ६३ ॥ इत्यार्षे० श्रीमद्युद्धकाण्डे एकोत्तरशततमः सर्गः ॥ १०१ ॥

शक्त्या विनिहतं दृष्ट्वा रावणेन बलीयसा। लक्ष्मणं समरे शूरं रुधिरौघपरिप्लुतम् ॥ १ ॥ स दत्त्वा तुमुलं युद्धं रावणस्य दुरात्मनः। विसृजन्नेव बाणौघान् सुषेणं वाक्यमब्रवीत् ॥ २॥ एष रावणवीर्येण लक्ष्मणः पतितः क्षितौ। सर्पवद्वेष्टते वीरो मम शोकमुदीरयन् ॥ ३ ॥ शोणितार्द्रमिमं वीरं प्राणैरिष्टतमं मम। पश्यतो मम का शक्तिर्योद्धुं पर्याकुलात्मनः ॥ ४ ॥ अयं स समरश्लाघी भ्राता मे शुभलक्षणः। यदि पञ्चत्वमापन्नः प्राणैर्मे किं सुखेन च ॥ ५ ॥ लज्जतीव हि मे वीर्यं भ्रश्यतीव कराद्धनुः। सायका व्यवसीदन्ति दृष्टिर्बाष्पवशं गता। अवसीदन्ति गात्राणि स्वप्नयाने नृणामिव ॥ ६ ॥ चिन्ता मे वर्धते तीव्रा मुमूर्षा चोपजायते ॥ ७ ॥

अथ लक्ष्मणसञ्जीवनं द्विशततमे–शक्त्या विनिहतमित्यादिश्लोकद्वयमेकं वाक्यम्। विसृजन्नेवेत्यादिवर्तमाननिर्देशेन रावणपलायनानन्तरं लक्ष्मणयोगक्षेमानुसन्धाने अविलम्बः सूचितः ॥ १ ॥ २ ॥ एष इति। उदीरयन् जनयन् ॥ ३ ॥ शोणितार्द्रमिति। प्राणैः प्राणेभ्यः ॥ ४ ॥ ५ ॥ लज्जतीवेत्यादि



यथा लोके कथयिष्यन्ति तथा तत्कर्म करिष्यामीति सम्बन्धः ॥ ५७-६३ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकोत्तरशततमः सर्गः ॥ १०१ ॥ १ ॥ २ ॥ एष इति। शोकमुदीरयन् जनयन् ॥ ३ ॥ ४ ॥ प्राणैः प्राणेभ्यः ॥ ५ ॥ लज्जतीति परस्मैपदमार्षम् ॥ ६ ॥ ७ ॥

सार्धश्लोकद्वयमेकान्वयम् । लज्जतीव । आर्षं परस्मैपदम् । स्वस्थाने [illegible] हि [illegible]लाङ्गूलानां पादाः पश्चादाकृष्टा भवन्ति । भ्रातरं निहतं दृष्ट्वेति पूर्वशेषः ॥ ६–८॥ विनिष्टनन्तमित्यादिसार्धश्लोकमेकं वाक्यम् । विनिष्टनन्तं निश्वसन्तम् । ध्यानशोकपरायणः, अभूदिति शेषः ॥९॥ परं विषाद

भ्रातरं निहतं दृष्ट्वा रावणेन दुरात्मना ॥ ८ ॥ विनिष्टनन्तं दुःखार्तं मर्मण्यभिहतं भृशम् । राघवो भ्रातरं दृष्ट्वा प्रियं प्राणं बहिश्चरम् । दुःखेन महताऽऽविष्टो ध्यानशोकपरायणः ॥९॥ परं विषादमापन्नो विललापाकुलेन्द्रियः ॥१०॥ न हि युद्धेन मे कार्यं नैव प्राणैर्न सीतया । भ्रातरं निहतं दृष्ट्वा लक्ष्मणं रणपांसुषु ॥११॥ किं मे राज्येन किं प्राणै र्युद्धे कार्यं न विद्यते । यत्रायं निहतः शेते रणमूर्धनि लक्ष्मणः ॥१२॥ देशे देशे कलत्राणि देशे देशे च बान्धवाः । तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥ १३ ॥ इत्येवं विलपन्तं तं शोकविह्वलितेन्द्रियम् । विवेष्टमानं करुण मुच्छ्वसन्तं पुनः पुनः । राममाश्वासयन् वीरः सुषेणो वाक्यमब्रवीत् ॥ १४ ॥ न मृतोऽयं महाबाहो लक्ष्मणो लक्ष्मिवर्धनः । न चास्य विकृतं वक्त्रं नापि श्यावं न निष्प्रभम् ॥१५॥ सुप्रभं च प्रसन्नं च मुखमस्याभिलक्ष्यते । पद्मरक्ततलौ हस्तौ सुप्रसन्ने च लोचने ॥१६॥ एवं न विद्यते रूपं गतासूनां विशांपते । दीर्घायुषस्तु ये मर्त्यास्तेषां तु मुखमीदृशम् ॥ १७ ॥ नायं प्रेतत्वमापन्नो लक्ष्मणो लक्ष्मिवर्धनः । मा विषादं कृथा वीर सप्राणोऽयमरिन्दमः ॥१८॥

मित्यर्थम् । राघव इत्यनुषञ्जनीयम् ॥१०॥ न हि युद्धेनेति । दृष्ट्वा, स्थितस्येति शेषः ॥११॥ किं मे राज्येनेति । यत्र यतः ॥१२–१४॥ न मृतोऽयमिति ।

भ्रातरं निहतं दृष्ट्वेत्येतत् पूर्वशेषम् ॥ ८–११ ॥ किमिति । यत्र यतः कारणात्, तेन ॥ १२–१४ ॥ नेति । श्यावं कपिशम्, विवर्णमिति यावत् । “ श्यावः

स०–सहोदरः तत्तुल्यः । पायसस्य कौसल्याविभागादुद्धृतस्य सुमित्रार्थं प्रदानान्निमित्ताद्वा लक्ष्मणस्य साहोदर्यम् । सहोदरस्य मेलनं भवेत् । असहोदरस्समेतादृशो भ्राता यत्र मिलेत्तं देशं न पश्यामीत्यर्थो वा । भिन्नोदरे एतादृशं सौहार्दं दुर्लभमिति भावः ॥ १३ ॥

श्यावं कपिशम्, विवर्णमिति यावत् । "श्यावः स्यात्कपिशः" इत्यमरः ॥ १५–१८ ॥ आख्यास्यत इति । मुहुर्मुहुः कम्पमानं हृदयमेनं सोच्छ्वासं सप्राणम् आख्यास्यते आचष्टे । लडर्थे लट् ॥ १९ ॥ २० ॥ सौम्य शीघ्रमित्यादि सार्धश्लोकत्रयमेकान्वयम् । ओषधिपर्वतम् ओषधिपर्वताख्यम् ।

आख्यास्यते प्रसुतस्य स्रस्तगात्रस्य भूतले । सोच्छ्वासं हृदयं वीर कम्पमानं मुहुर्मुहुः ॥ १९ ॥ एव मुक्त्वा तु वाक्यज्ञः सुषेणो राघवं वचः । हनुमन्तमुवाचेदं हनुमन्तमभित्वरन् ॥ २० ॥ सौम्य शीघ्रमितो गत्वा शैलमोषधिपर्वतम् । पूर्वं तु कथितो योऽसौ वीर जाम्बवता शुभः ॥२१॥ दक्षिणे शिखरे तस्य जातामोषधिमानय । विशल्यकरणीं नाम विशल्यकरणीं शुभाम् ॥ २२ ॥ सवर्णकरणीं चापि तथा सञ्जीवनीमपि । सन्धानकरणीं चापि गत्वा शीघ्रमिहानय ॥२३॥ सञ्जीवनार्थं वीरस्य लक्ष्मणस्य महात्मनः । इत्येवमुक्तो हनुमान् गत्वा चौषधि पर्वतम् । चिन्तामभ्यगमच्छ्रीमानजानंस्तां महौषधिम् ॥ २४ ॥ तस्य बुद्धिः समुत्पन्ना मारुतेरमितौजसः । इद मेव गमिष्यामि गृहीत्वा शिखरं गिरेः ॥ २५ ॥ अस्मिन् हि शिखरे जातामोषधीं तां सुखावहाम् । प्रतर्केणाव गच्छामि सुषेणोऽप्येवमब्रवीत् ॥ २६ ॥

द्वितीयो विशल्यकरणीशब्दो गुणवचनः । विशल्याः क्रियन्तेऽनयेति विशल्यकरणी ताम् ॥ २१–२४ ॥ तस्य बुद्धिरित्यादिश्लोकत्रयमेका न्वयम् । प्रतर्केण अन्तःकरणप्रसादादिना लिङ्गेन । सुषेणोऽप्येवमब्रवीदिति । "दक्षिणे शिखरे तस्य जातामोषधिमानय" इति सुषेणवचनम् ।

स्यात्कपिशो नीले" इति विश्वः ॥१५–१८॥ आख्यास्यत इति । मुहुर्मुहुः कम्पमानं हृदयमेनं सोच्छ्वासं सप्राणमाख्यास्यते आख्यास्यति अतो विषादं मा कृथा इति पूर्वेण सम्बन्धः ॥ १९ ॥ एवमिति । अत्र द्वितीयो हनुमच्छब्दः प्रशस्तहनुमद्वचनः । यद्वा हनुशब्दो ज्ञानवाची । "ज्ञानवान् हनुमान् स्वतः" इति शब्दार्णवे ॥ २० ॥ शैलं समुच्छ्रितम् ॥ २१ ॥ विशल्यकरणीमिति । द्वितीयो विशल्यकरणीशब्दो गुणवचनः । विशल्यः क्रियतेऽनयेति विशल्यकरणी ताम् ॥ २२–२५ ॥ अस्मिन्निति । प्रतर्कात् अन्तःकरणप्रसादादिलिङ्गात् इत्यर्थः । सुषेणो मां यथा यथावत् अब्रवीत् । अतः अस्मिन् शैलशिखरे सञ्जातामोषधि

अगृह्य यदि गच्छामि, पुनः सुषेणं प्रष्टुमिति भावः। दोषः लक्ष्मणस्य [illegible] । वैक्लव्यं निष्पौरुषत्वम् । अन्ते इतिकरणेन पूर्वमन्वयः कार्यः॥२६–२७॥इति सञ्चिन्त्येत्यादिश्लोकद्वयमेकान्वयम् । समतोलयत् उदक्षिपत् ॥२८–३०॥ रामानु०–'लक्ष्मणाय ददौ नस्यं सुषेणः परमौषधम्' इत्येतत्प्रकारेण इन्द्रजिद्युद्धे शल्यपीडितानां



अगृह्य यदि गच्छामि विशल्यकरणीमहम् । कालात्ययेन दोषः स्याद्वैक्लव्यं च महद्भवेत् ॥२७॥ इति सञ्चिन्त्य हनुमान् गत्वा क्षिप्रं महाबलः । आसाद्य पर्वतश्रेष्ठं त्रिः प्रकम्प्य गिरेः शिरः ॥२८॥ फुल्लनानातरुगणं समुत्पाट्य महाबलः । गृहीत्वा हरिशार्दूलो हस्ताभ्यां समतोलयत् ॥ २९ ॥ स नीलमिव जीमूतं तोयपूर्णं नभस्स्थलात् । आपपात गृहीत्वा तु हनुमान् शिखरं गिरेः ॥३०॥ समागम्य महावेगः संन्यस्य शिखरं गिरेः । विश्रम्य किञ्चिद्धनुमान् सुषेणमिदमब्रवीत् ॥३१॥ ओषधिं नावगच्छामि तामहं हरिपुङ्गव । तदिदं शिखरं कृत्स्नं गिरेस्तस्याहृतं मया ॥ ३२ ॥ एवं कथयमानं तं प्रशस्य पवनात्मजम् । सुषेणो वानरश्रेष्ठो जग्राहोत्पाट्य चौषधीम् ॥ ३३ ॥ विस्मितास्तु बभूवुस्ते रणे वानरराक्षसाः । दृष्ट्वा हनुमतः कर्म सुरैरपि सुदुष्करम् ॥ ३४ ॥ ततः संक्षोदयित्वा तामोषधीं वानरोत्तमः । लक्ष्मणस्य ददौ नस्तः सुषेणः सुमहाद्युतेः ॥ ३५ ॥ सशल्यस्तां समाघ्राय लक्ष्मणः परवीरहा । विशल्यो विरुजः शीघ्रमुदतिष्ठन्महीतलात् ॥ ३६ ॥ तमुत्थितं ते हरयो भूतलात् प्रेक्ष्य लक्ष्मणम् । साधु साध्विति सुप्रीताः सुषेणं प्रत्यपूजयन् ॥ ३७ ॥

लक्ष्मणादीनां चिकित्सां कृतवता संगृहीतौषधेन सुषेणेन, सौम्य शीघ्रमितो गत्वा शैलमोषधिपर्वतमिति हनुमत्प्रेषणमनुपपन्नमिव प्रतीयते । अत्र लक्ष्मणविभीषणादिचिकित्सायामोषधिजातं सर्वं विनियुक्तमिति परिहारस्य वक्तुं शक्यत्वेऽपि अविस्मरणशीलस्य हनुमतः स्वेनैवाचिरस्थापितपर्वतविषयकं प्रतर्केणावगच्छामीत्यभिधानम्, त्रिः प्रकम्प्योत्पाटनं च विरुद्धमिव प्रतीयते । अत्र परिहारो विद्वद्भिश्चिन्तनीयः ॥ २८ ॥ समागम्येति । संन्यस्य सेनामध्ये निक्षिप्य ॥ ३१–३८ ॥

मवगच्छामि, मनःप्रहर्षलिङ्गेन सुषेणयथार्थवाक्येन चात्र महौषधिं जानामीत्यर्थः ॥ २६–४१ ॥

अब्रवीदित्यादिश्लोकद्वयमेकान्वयम् ॥ ३९-४१ ॥ तामिति । तां प्रतिज्ञां रावणं हत्वा विभीषणमभिषेक्ष्यामीत्येवरूपाम् ॥४२॥४३॥ नैराश्यमिति । नैराश्यं सीतायां विजये चोपेक्षाम् ॥ ४४ ॥ न जीवन्निति । यास्यते यास्यति ॥ ४५ ॥ अहं त्विति । कृतकर्मा कृतसञ्चारः ॥ ४६ ॥ यदीति । कृतां



एह्येहीत्यब्रवीद्रामो लक्ष्मणं परवीरहा । सस्वजे स्नेहगाढं च बाष्पपर्याकुलेक्षणः ॥ ३८ ॥ अब्रवीच्च परिष्वज्य सौमित्रिं राघवस्तदा । दिष्ट्या त्वां वीर पश्यामि मरणात् पुनरागतम् ॥ ३९ ॥ न हि मे जीवितेनार्थः सीतया चापि लक्ष्मण । को हि मे विजयेनार्थस्त्वयि पञ्चत्वमागते ॥ ४० ॥ इत्येवं वदतस्तस्य राघवस्य महात्मनः । खिन्नः शिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ॥ ४१ ॥ तां प्रतिज्ञां प्रतिज्ञाय पुरा सत्य पराक्रम । लघुः कश्चिदिवासत्त्वो नैवं वक्तुमिहार्हसि ॥ ४२ ॥ न हि प्रतिज्ञां कुर्वन्ति वितथां साधवोऽनघ । लक्षणं हि महत्त्वस्य प्रतिज्ञापरिपालनम् ॥४३॥ नैराश्यमुपगन्तुं ते तदलं मत्कृतेऽनघ । वधेन रावणस्याद्य प्रतिज्ञामनु पालय ॥ ४४ ॥ न जीवन् यास्यते शत्रुस्तव बाणपथं गतः । नर्दतस्तीक्ष्णदंष्ट्रस्य सिंहस्येव महागजः ॥ ४५ ॥ अहं तु वधमिच्छामि शीघ्रमस्य दुरात्मनः । यावदस्तं न यात्येष कृतकर्मा दिवाकरः ॥४६॥ यदि वधमिच्छसि रावणस्य सङ्ख्ये यदि च कृतां त्वमिहेच्छसि प्रतिज्ञाम् । यदि तव राजवरात्मजाभिलाषः कुरु च वचो मम शीघ्रमद्य वीर ॥४७॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

निर्व्यूढाम् ॥ ४७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्व्युत्तरशततमः सर्गः ॥ १०२ ॥



तां प्रतिज्ञामिति । ' अहं हत्वा दशग्रीवं सप्रहस्तं सबान्धवम् । राजानं त्वां करिष्यामि लङ्काया राक्षसेश्वर " इत्येवंरूपां प्रतिज्ञाम् ॥ ४२-४७ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

अथेन्द्ररथमारुह्य सङ्ग्रामत्रिशततमे–लक्ष्मणेनेत्यादि ॥ १–८ ॥ तत इत्यादिसार्धश्लोकत्रयमेकान्वयम् । कूबरः युगाधारदारु । “कूबरस्तु युगन्धरः”

इत्यमरः । काञ्चनापीडैः काञ्चनालङ्कारैः । श्वेतप्रकीर्णकैः श्वेतचामरैः । “चामरं तु प्रकीर्णकम्” इत्यमरः । हरिभिः हरितवर्णैः । रुक्मवेणुध्वजः कनकदण्ड

लक्ष्मणेन तु तद्वाक्यमुक्तं श्रुत्वा स राघवः । सन्दधे परवीरघ्नो धनुरादाय वीर्यवान् । रावणाय शरान् घोरान् विससर्ज चमूमुखे ॥ १ ॥ अथान्यं रथमारुह्य रावणो राक्षसाधिपः । अभ्यद्रवत काकुत्स्थं स्वर्भानुरिव भास्करम् ॥ २ ॥ दशग्रीवो रथस्थस्तु रामं वज्रोपमैः शरैः । आजघान महाघोरैर्धाराभिरिव तोयदः ॥ ३ ॥ दीप्तपावकसङ्काशैः शरैः काञ्चनभूषणैः । निर्बिभेद रणे रामो दशग्रीवं समाहितम् ॥ ४ ॥ भूमौ स्थितस्य रामस्य रथस्थस्य च रक्षसः । न समं युद्धमित्याहुर्देवगन्धर्वदानवाः ॥५॥ ततः काञ्चनचित्राङ्गः किङ्किणीशतभूषितः । तरुणादित्यसङ्काशो वैडूर्यमयकूबरः ॥ ६ ॥ सदश्वैः काञ्चनापीडैर्युक्तः श्वेतप्रकीर्णकैः । हरिभिः सूर्यसङ्काशैर्हेमजालविभूषितैः ॥ ७ ॥ रुक्मवेणुध्वजः श्रीमान् देवराजरथो वरः । देवराजेन सन्दिष्टो रथमारुह्य मातलिः ॥८॥ अभ्यवर्तत काकुत्स्थमवतीर्य त्रिविष्टपात् ॥९॥ अब्रवीच्च तदा रामं सप्रतोदो रथे स्थितः । प्राञ्जलिर्मातलिर्वाक्यं सहस्राक्षस्य सारथिः ॥ १० ॥ सहस्राक्षेण काकुत्स्थ रथोऽयं विजयाय ते । दत्तस्तव महासत्त्व श्रीमन् शत्रुनिबर्हण ॥ ११ ॥ इदमैन्द्रं महच्चापं कवचं चाग्निसन्निभम् । शराश्चादित्यसङ्काशाः शक्तिश्च विमला शिता ॥१२॥ आरुह्येमं रथं वीर राक्षसं जहि रावणम् । मया सारथिना राजन् महेन्द्र इव दानवान् ॥ १३ ॥

त्रिविष्टपात् स्वर्गात् ॥९॥ अब्रवीच्चेति । प्रतोदः अश्वप्रेरण
ध्वजः । देवराजरथ इति । य इति शेषः । योऽस्ति तमारुह्येत्युत्तरत्रान्वयः । सन्दिष्टः चोदितः ॥६–८॥ त्रिविष्टपात् स्वर्गात् ॥९॥ अब्रवीच्चेति । प्रतोदः अश्वप्रेरण
काष्ठम् ॥ १० ॥ सहस्राक्षेणेत्यादिश्लोकद्वयमेकान्वयम् । इदमिति । अत्र चापादिषु यथायोग्यं दत्त इत्येतल्लिङ्गवचनविपरिणामेन योजनीयम् ॥ ११–१३ ॥

॥१–५॥ तत इत्यादि सार्धश्लोकत्रयमेकं वाक्यम् । कूबरो युगाधारदारु । “कूबरस्तु युगन्धरः” इत्यमरः ॥ ६ ॥ काञ्चनापीडैः स्वर्णालङ्कारैः । श्वेतप्रकीर्णकैः शुभ्रचामरैः । “चामरं तु प्रकीर्णकम्” इत्यमरः । हरिभिः हयैः पतैः देवराजरथो वरः, योऽस्तीति शेषः । तमारुह्येत्युत्तरेण सम्बन्धः ॥ ७–११ ॥ इदमिति । अत्र

इत्युक्त इति । सम्परिक्रम्य प्रदक्षिणीकृत्य । लोकान् लक्ष्म्या विराजयन् चन्द्रप्रभयेव स्वकान्त्या सर्वलोकान् प्रकाशयन्नित्यर्थः ॥ १४--१८ ॥ ते दीप्तवदना इति । व्यादितास्याः व्यात्ताननाः । भयानकाः भयङ्कराः ॥१९॥ तैरिति । दीप्तभोगैः दीप्तफणैः । "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः"



इत्युक्तः सम्परिक्रम्य रथं समभिवाद्य च । आरुरोह तदा रामो लोकान् लक्ष्म्या विराजयन् ॥ १४ ॥ तद्बभूवाद्भुतं युद्धं तुमुलं रोमहर्षणम् । रामस्य च महाबाहो रावणस्य च रक्षसः ॥१५॥ स गान्धर्वेण गान्धर्वं दैवं दैवेन राघवः । अस्त्रं राक्षसराजस्य जघान परमास्त्रवित् ॥ १६ ॥ अस्त्रं तु परमं घोरं राक्षसं राक्षसाधिपः । ससर्ज परमक्रुद्धः पुनरेव निशाचरः ॥ १७ ॥ ते रावणधनुर्मुक्ताः शराः काञ्चनभूषणाः । अभ्यवर्तन्त काकुत्स्थं सर्पा भूत्वा महाविषाः ॥१८॥ ते दीप्तवदना दीप्तं वमन्तो ज्वलनं मुखैः । राममेवाभ्यवर्तन्त व्यादितास्या भयानकाः ॥ १९ ॥ तैर्वासुकिसमस्पर्शैर्दीप्तभोगैर्महाविषैः । दिशश्च सन्तताः सर्वाः प्रदिशश्च समावृताः ॥ २० ॥ तान् दृष्ट्वा पन्नगान् रामः समापतत आहवे । अस्त्रं गारुत्मतं घोरं प्रादुश्चक्रे भयावहम् ॥ २१ ॥ ते राघवशरा मुक्ता रुक्मपुङ्खाः शिखिप्रभाः । सुपर्णाः काञ्चना भूत्वा विचेरुः सर्पशत्रवः ॥२२ ॥ ते तान् सर्वान् शरान् जघ्नुः सर्परूपान् महाजवान् । सुपर्णरूपा रामस्य विशिखाः कामरूपिणः ॥ २३ ॥ अस्त्रे प्रतिहते क्रुद्धो रावणो राक्षसाधिपः । अभ्यवर्षत्तदा रामं घोराभिः शरवृष्टिभिः ॥ २४ ॥ ततः शरसहस्रेण राममक्लिष्टकारिणम् । अर्दयित्वा शरौघेण मातलिं प्रत्यविध्यत ॥ २५ ॥

इत्यमरः । प्रदिशः दिक्कोणाः ॥ २० ॥ तान् दृष्ट्वेति । प्रादुश्चक्रे प्रयुयुजे ॥ २१ ॥ त इति । शिखिप्रभाः अग्निप्रभाः । सुपर्णाः गरुडाः ॥ २२--२५ ॥



पूर्वश्लोकस्यदत्तशब्दः एतच्चापादिषु यथायोग्यं लिङ्गवचनविपरिणामेन योजनीयः ॥ १२ ॥ १३ ॥ सम्परिक्रम्य प्रदक्षिणीकृत्य ॥ १४--१८ ॥ व्यादितास्याः व्यादितवदनाः ॥ १९ ॥ २० ॥ प्रादुश्चक्रे प्रयुयुजे ॥ २१ ॥ शिखिप्रभाः अग्निप्रभाः ॥ २२--२५ ॥

चिच्छेदेत्यादिसार्धश्लोकमेकं वाक्यम् । केतुं ध्वजपटम् । उद्दिश्य लक्षीकृत्य । रथात् रथावयवदण्डात् ॥ २६–२८ ॥ रामस्य तादृशदशादर्शनेन सञ्जा
तानि दिव्यानि भौमानि च वैकृतान्याह—रामचन्द्रमसमित्यादिना । प्राजापत्यं नक्षत्रं प्रजापतिदेवताकनक्षत्रभूतां रोहिणीम् । बुधे रोहिणीं प्राप्ते जग

चिच्छेद केतुमुद्दिश्य शरेणैकेन रावणः । पातयित्वा रथोपस्थे रथात् केतुं च काञ्चनम् । ऐन्द्रानपि जघानाश्वान् शर
जालेन रावणः ॥ २६ ॥ तं दृष्ट्वा सुमहत्कर्म रावणस्य दुरात्मनः । विषेदुर्देवगन्धर्वा दानवाश्चारणैः सह ॥ २७ ॥
राममार्तं तदा दृष्ट्वा सिद्धाश्च परमर्षयः । व्यथिता वानरेन्द्राश्च बभूवुः सविभीषणाः ॥ २८ ॥ रामचन्द्रमसं दृष्ट्वा
ग्रस्तं रावणराहुणा । प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियाम् ॥ २९ ॥ समाक्रम्य बुधस्तस्थौ प्रजानामशुभा
वहः ॥ ३० ॥ सधूमपरिवृत्तोर्मिः प्रज्वलन्निव सागरः । उत्पपात तदा क्रुद्धः स्पृशन्निव दिवाकरम् ॥ ३१ ॥ शस्त्र
वर्णः सुपरुषो मन्दरश्मिर्दिवाकरः । अदृश्यत कबन्धाङ्कः संसक्तो धूमकेतुना ॥ ३२ ॥ कोसलानां च नक्षत्रं
व्यक्तमिन्द्राग्निदैवतम् । आक्रम्याङ्गारकस्तस्थौ विशाखामपि चाम्बरे ॥ ३३ ॥ दशास्यो विंशतिभुजः प्रगृहीत
शरासनः । अदृश्यत दशग्रीवो मैनाक इव पर्वतः ॥३४॥ निरस्यमानो रामस्तु दशग्रीवेण रक्षसा । नाशक्नोदभि
सन्धातुं सायकान् रणमूर्धनि ॥ ३५ ॥ स कृत्वा भ्रुकुटिं क्रुद्धः किंचित् संरक्तलोचनः । जगाम सुमहाक्रोधं
निर्दहन्निव चक्षुषा ॥३६॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे त्र्युत्तरशततमः सर्गः १०३

त्पीडा भवतीति भावः ॥ २९–३१ ॥ शस्त्रवर्ण इति । शस्त्रवर्णः असितश्यामः ॥ ३२ ॥ कोसलानामिति । कोसलानाम् इक्ष्वाकूणाम् । विशाखाया
स्तन्नक्षत्रत्वमेतत्काण्डचतुर्थसर्गे दर्शितम् ॥ ३३ ॥ ३४ ॥ निरस्यमान इति । अभिसन्धातुं धनुष्यारोपयितुम् ॥ ३५ ॥ अथैतद्दर्शनेन रामकोपं
केतुमुद्दिश्य लक्षीकृत्य, केतुं चिच्छेदेत्यर्थः । रथात् रथावयवकेतुदण्डात् केतुं पातयित्वा । यद्वा केतुरूपं दण्डं रथात् रथोपस्थे पातयित्वा ॥ २६–२८ ॥ रामस्य
तादृग्दशादर्शनेन सञ्जातानि दिव्यानि भौमानि च वैकृतान्याह—रामचन्द्रमसं दृष्ट्वेत्यादिना । प्राजापत्यं च नक्षत्रं प्रजापतिदैवत्यनक्षत्रभूतां रोहिणीम् ॥२९–३१॥
शस्त्रवर्णः असितश्यामः ॥ ३२ ॥ इन्द्राग्निदैवतं विशाखानक्षत्रमिति सम्बन्धः ॥ ३३–३५ ॥ क्रुद्धः स रामः । सुमहाक्रोधं जगाम सुमहाक्रोधप्राप्तौ स्वजनार्तिर्भूत

दर्शयति—स कृत्वेति ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्र्युत्तरशततमः सर्गः ॥ १०३ ॥
अथ रावणस्य शूलोद्धरणं चतुःशततमे—तस्येत्यादि ॥ १ ॥ २ ॥ खगाश्चेति । औत्पातिकानि उत्पातसूचकानि । नर्दन्तः गर्जन्तः ॥ ३ ॥ ४ ॥

तस्य क्रुद्धस्य वदनं दृष्ट्वा रामस्य धीमतः। सर्वभूतानि वित्रेसुः प्राकम्पत च मेदिनी ॥ १ ॥ सिंहशार्दूलवान् शैलः सञ्चचाल चलद्रुमः । बभूव चातिक्षुभितः समुद्रः सरितां पतिः ॥ २ ॥ खगाश्च खरनिर्घोषा गगने परुषा घनाः । औत्पातिकानि नर्दन्तः समन्तात् परिचक्रमुः ॥ ३ ॥ रामं दृष्ट्वा सुसंक्रुद्धमुत्पातांश्च सुदारुणान् । वित्रेसुः सर्वभूतानि रावणस्याभवद्भयम् ॥ ४ ॥ विमानस्थास्तदा देवा गन्धर्वाश्च महोरगाः । ऋषिदानवदैत्याश्च गरुत्मन्तश्च खेचराः ॥ ५ ॥ ददृशुस्ते महायुद्धं लोकसंवर्तसंस्थितम् । नानाप्रहरणैर्भीमैः शूरयोः सम्प्रयुद्ध्यतोः ॥ ६ ॥ ऊचुः सुरासुराः सर्वे तदा विग्रहमागताः । प्रेक्षमाणा महद्युद्धं वाक्यं भक्त्या प्रहृष्टवत् ॥ ७ ॥ दशग्रीवं जयेत्याहुरसुराः समवस्थिताः । देवा राममथोचुस्ते त्वं जयेति पुनः पुनः ॥ ८ ॥

विमानस्था इत्यादिश्लोकद्वयमेकान्वयम् । लोकसंवर्तस्य प्रलयस्येव संस्थितं संस्थानं यस्य तत्तथोक्तम् ॥ ५ ॥ ६ ॥ विग्रहमागताः विग्रहं युद्धम् उद्दिश्य आगताः, युद्धं द्रष्टुमागता इत्यर्थः । यद्वा विग्रहमागताः रामरावणपक्षपातात् परस्परं कलहायमाना इत्यर्थः । भक्त्या प्रेक्षमाणाः सन्तः प्रहृष्टवद्वाक्यमूचुरिति सम्बन्धः ॥ ७ ॥ तद्वाक्यं विविच्य दर्शयति—दशग्रीवमिति । यद्यप्यसुराणामपि रावणो बाधकः तथापि देवानामतिशयो मा

वैपरीत्यं रावणस्य पराक्रमश्च निमित्तम् ॥ ३६ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० युद्धकाण्डव्याख्यायां त्र्युत्तरशततमः सर्गः ॥१०३॥१॥ २ ॥ खगाश्चेति । औत्पातिकानिं उत्पातसूचकानि ॥ ३ ॥ ४ ॥ विमानस्था इति सार्धमेकं वाक्यम् । लोकसंवर्तस्य संस्थितं संस्थानं यस्य तत्तथोक्तम् ॥ ५ ॥ ६ ॥ विग्रहमागताः

स०—उत्तरग्रन्थेन सहैकः खण्डः एकोनसप्ततिश्लोकात्मा सर्ग इति केचिदाहुः । सर्गान्तिमश्लोकवृत्तादिभेदस्य प्रायिकत्वात् ‘ तस्य क्रुद्धस्य ’ इति सर्गप्रारम्भपद्यमिति केचित् ॥ १ ॥ यद्यपि पूर्वं सुरासुरा इति समीरणाद्देवा राममथोचुरिति पूर्वं देवाः पूर्वदेवास्तु तदनन्तरमुदाहर्तव्याः । तथापि तेषां [illegible] निर्देशमात्रेण [illegible]नीयताभिप्रेणनाद्वा प्रथमतो निर्देशः । तत्रापि साधवोऽसुराः रामपक्षपातिनः सन्तीति विशेषद्योतनाय व्युत्क्रमनिर्देशश्चेति वा रामपराजयरूपो व्युत्क्रमो न, अपितु निर्देशमात्र इति ज्ञापनाय वाऽयं निर्देश इति ज्ञेयम् ॥ ८ ॥

भूदित्यसूयया रावणं वर्धयन्तीति बोध्यम् ॥ ८ ॥ एतस्मिन्नन्तर इत्यादिश्लोकचतुष्टयमेकान्वयम् । राघवस्य क्रोधात् राघवविषयक्रोधात् । प्रहरणम् आयुधम्, स्पृशन् परामृशन् । किं वेदानीं ग्रहीतुमुचितामिति क्षणं चिन्तयन्नित्यर्थः । कूटैः शिखराकारैरयःशङ्कुभिः, चितं युक्तमित्यर्थः । अतिरौद्रं

एतस्मिन्नन्तरे क्रोधाद्राघवस्य स रावणः । प्रहर्तुकामो दुष्टात्मा स्पृशन् प्रहरणं महत् ॥९॥ वज्रसारं महानादं सर्वशत्रुनिबर्हणम् । शैलशृङ्गनिभैः कूटैश्चितं दृष्टिभयावहम् ॥ १० ॥ सधूममिव तीक्ष्णाग्रं युगान्ताग्निचयोपमम् । अतिरौद्रमनासाद्यं कालेनापि दुरासदम् ॥ ११ ॥ त्रासनं सर्वभूतानां दारणं भेदनं तदा । प्रदीप्तमिव रोषेण शूलं जग्राह रावणः ॥ १२ ॥ तच्छूलं परमक्रुद्धो मध्ये जग्राह वीर्यवान् । अनेकैः समरे शूरै राक्षसैः परिवारितः ॥ १३ ॥ समुद्यम्य महाकायो ननाद युधि भैरवम् । संरक्तनयनो रोषात् स्वसैन्यमभिहर्षयन् ॥ १४ ॥ पृथिवीं चान्तरिक्षं च दिशश्च प्रदिशस्तथा । प्राकम्पयत्तदा शब्दो राक्षसेन्द्रस्य दारुणः ॥ १५ ॥ अतिनादस्य नादेन तेन तस्य दुरात्मनः । सर्वभूतानि वित्रेसुः सागरश्च प्रचुक्षुभे ॥ १६ ॥ स गृहीत्वा महावीर्यः शूलं तद्रावणो महत् । विनद्य सुमहानादं रामं परुषमब्रवीत् ॥ १७ ॥ शूलोऽयं वज्रसारस्ते राम रोषान्मयोद्यतः । तव भ्रातृसहायस्य सद्यः प्राणान् हरिष्यति ॥ १८ ॥ रक्षसामद्य शूराणां निहतानां चमूमुखे । त्वां निहत्य रणश्लाघिन् करोमि तरसा समम् । तिष्ठेदानीं निहन्मि त्वामेष शूलेन राघव ॥ १९ ॥

रौद्रं शूलमतिवर्तमानम् । अनासाद्यं शत्रुभिरप्रधृष्यम् । कालेन यमेन । दारणं क्रकचवत् कृन्तनम् । भेदनम् द्विधाकरणम् । दुष्टात्मा रावणः राघवस्य क्रोधात् प्रहर्तुकामः महत्प्रहरणं स्पृशन् सन् वज्रसारत्वादिविशिष्टं शूलं रोषेण प्रदीप्त इव स्थितो रावणो जग्राहेति सम्बन्धः ॥ ९–१६ ॥ विनद्येति । पूर्वं शूलोद्यमनजनितोत्साहकृतो नाद उक्तः । इह प्रक्षेपजनितोत्साहकृतो नाद इति विवेकः ॥ १७ ॥ १८ ॥ रक्षसामित्यादिसार्धश्लोकमेकान्वयम् ।

रामरावणपक्षपातात्सुरासुराश्च परस्परं कलहायमाना इत्यर्थः॥७–१८॥ रक्षसामिति । त्वां निहत्य निहतानां रक्षसां समं करिष्यामि, रक्षोभिस्समं करिष्यामीत्यर्थः।

त्वां विनिहत्य रक्षोभिः समं करिष्यामीत्यर्थः । "तुल्यार्थैः—" इत्यादिना षष्ठी ॥ १९ ॥ २० ॥ तदिति । विद्युज्ज्वाला विद्युत्सदृशज्वाला ॥२१–२८॥





एवमुक्त्वा स चिक्षेप तच्छूलं राक्षसाधिपः ॥ २० ॥ तद्रावणकरान्मुक्तं विद्युज्ज्वालासमाकुलम् । अष्टघण्टं महानादं वियद्गतमशोभत ॥२१॥ तच्छूलं राघवो दृष्ट्वा ज्वलन्तं घोरदर्शनम् । ससर्ज विशिखान् रामश्चापमायम्य वीर्यवान् ॥२२॥ आपतन्तं शरौघेण वारयामास राघवः । उत्पतन्तं युगान्ताग्निं जलौघैरिव वासवः ॥२३॥ निर्ददाह स तान् बाणान् रामकार्मुकनिस्सृतान् । रावणस्य महाशूलः पतङ्गानिव पावकः ॥ २४ ॥ तान् दृष्ट्वा भस्मसाद्भूतान् शूलसंस्पर्शचूर्णितान् । सायकानन्तरिक्षस्थान् राघवः क्रोधमाहरत् ॥२५॥ स तां मातलिनाऽऽनीतां शक्तिं वासवनिर्मिताम् । जग्राह परमक्रुद्धो राघवो रघुनन्दनः ॥२६॥ सा तोलिता बलवता शक्तिर्घण्टाकृतस्वना । नभः प्रज्वालयामास युगान्तोल्केव सप्रभा ॥२७॥ सा क्षिप्ता राक्षसेन्द्रस्य तस्मिन् शूले पपात ह । भिन्नः शक्त्या महान् शूलो निपपात हतद्युतिः ॥ २८ ॥ निर्बिभेद ततो बाणैर्हयानस्य महाजवान् । रामस्तीक्ष्णैर्महावेगैर्वज्रकल्पैः शितैः शरैः ॥ २९ ॥ निर्बिभेदोरसि ततो रावणं निशितैः शरैः । राघवः परमायत्तो ललाटे पत्रिभिस्त्रिभिः ॥ ३० ॥

निर्बिभेदेति । बाणैः शब्दायमानैः । "अण बाण शब्दे" इत्यस्मात् पचाद्यच् । बाणशब्दः शरभेदसंज्ञेत्यप्याहुः ॥ २९ ॥ निर्बिभेदोरसि तत इति ।

शूलोऽयं वज्रसार इत्यादिसार्धश्लोकद्वयस्य वास्तवार्थस्तु—मया उद्यतः मे शूलः तव भ्रातृसहायस्य भ्रात्रे लक्ष्मणाय सहायस्य वानरसमूहस्येत्यर्थः । सद्यः प्राणान् हरिष्यतीति सम्बन्धः । रक्षसामित्यादिसार्धश्लोकमेकं वाक्यम् । शूरे सत्यपि एषोऽहं त्वां न निहन्मि अतः त्वं तिष्ठ, किन्तु त्वां निहत्य आगत्येत्यर्थः । "हन हिंसागत्योः" इति धातोरयमर्थः । निहतानां शूराणां रक्षसाम् । तृतीयार्थे षष्ठी । समं करोमि, वानरानिति शेषः । निहतराक्षसप्रतीकारार्थं वानरान् हनिष्यामीति भावः ॥ १९ ॥ २० ॥ तदिति । विद्युज्ज्वालासमाकुलं विद्युत्सदृशज्वाला विद्युज्ज्वालाः ताभिर्व्याप्तम् ॥ २१–२८ ॥ निर्बिभेदेति । बाणैः बाणवद्भिः, शब्दायमानैरित्यर्थः ॥ २९ ॥ पत्रिभिः पत्रवद्भिः ॥ ३० ॥



स०—रामः क्षितैर्महावेगैर्बाणवद्भिरजिह्मगैः । इति पाठः । बाणवद्भिः "वण शब्दे बाणेत्येके" इत्युक्तेः शब्दायमानैः । बाणवद्भिः केषुचित्प्रधानेषु साक्षाज्ज्वालाविसृष्टिष्विषुषु सम्भवोऽपि राममाहात्म्येन निस्सरन्ति बाण । इति बाणानां बाणवत्त्वं सम्भवतीति वा तथोक्तिः ॥ २९ ॥

पत्रिभिस्त्रिभिरिति प्रयोगभेदान्न पुनरुक्तिः। पत्रिभिः पत्रवद्भिरित्येके ॥३०॥ स इति। सम्मूहस्थः युद्धस्थः ॥३१॥ स रामबाणैरिति। समाजे युद्धे ॥३२॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

स शरैर्भिन्नसर्वाङ्गो गात्रप्रस्रुतशोणितः। राक्षसेन्द्रः समूहस्थः फुल्लाशोक इवाबभौ ॥३१॥ स रामबाणैरभिविद्धगात्रो निशाचरेन्द्रः क्षतजार्द्रगात्रः। जगाम खेदं च समाजमध्ये क्रोधं च चक्रे सुभृशं तदानीम् ॥ ३२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

स तेन तु तथा क्रोधात् काकुत्स्थेनार्दितो रणे। रावणः समरश्लाघी महाक्रोधमुपागमत् ॥ १ ॥ स दीप्तनयनो रोषाच्चापमायम्य वीर्यवान्। अभ्यर्दयत् सुसंक्रुद्धो राघवं परमाहवे ॥ २ ॥ बाणधारासहस्रैस्तैः स तोयद इवाम्बरात्। राघवं रावणो बाणैस्तटाकमिव पूरयत् ॥ ३ ॥ पूरितः शरजालेन धनुर्मुक्तेन संयुगे। महागिरिरिवाकम्प्यः काकुत्स्थो न प्रकम्पते ॥ ४ ॥ स शरैः शरजालानि वारयन् समरे स्थितः। गभस्तीनिव सूर्यस्य प्रतिजग्राह वीर्यवान् ॥ ५ ॥ ततः शरसहस्राणि क्षिप्रहस्तो निशाचरः। निजघानोरसि क्रुद्धो राघवस्य महात्मनः ॥ ६ ॥ स शोणितसमादिग्धः समरे लक्ष्मणाग्रजः। दृष्टः फुल्ल इवारण्ये सुमहान् किंशुकद्रुमः ॥७॥ शराभिघातसंरब्धः सोऽपि जग्राह सायकान्। काकुत्स्थः सुमहातेजा युगान्तादित्यतेजसः ॥ ८ ॥

अथ श्रान्तस्य रावणस्य सूतेन रथापवाहनं पञ्चशततमे—स तु तेनेत्यादि ॥ १ ॥ २ ॥ बाणधारेति । बाणधारासहस्रैः हेतुभिः, तोयद इव रावणः,

॥ ३१ ॥ ३२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां चतुरुत्तरशततमः सर्गः ॥ १०४ ॥ १ ॥ २ ॥ बाणधारेति । अम्बरात्तोयद इव स रावणः तटाकमिव तोयैः, बाणैः बाणानि [illegible] इति बाणाः तैः बाणधारासहस्रैः राघवं पूरयत अपूरयदिति सम्बन्धः ॥ ३–८ ॥

तैः धाराभूतैः बाणैः, तटाकमिव रामं पूरयत् अपूरयत ॥ ३–८ ॥ तत इति । अन्योन्यं नोपालक्षयतामित्यन्वयः ॥ ९ ॥ १० ॥ मम अज्ञानात् ममादर्शनात्, त्वदविवेकादिति वा । ते त्वया ॥ ११ ॥ १२ ॥ स्त्रीष्विति । कापुरुषं कापुरुषसम्बन्धि ॥ १३ ॥ १४ ॥ शूरेणेत्यादि सोपहासोक्तिः ॥ १५ ॥





ततोऽन्योन्यं सुसंरब्धावुभौ तौ रामरावणौ । शरान्धकारे समरे नोपालक्षयतां तदा ॥ ९ ॥ ततः क्रोधसमाविष्टो रामो दशरथात्मजः । उवाच रावणं वीरः प्रहस्य परुषं वचः ॥ १० ॥ मम भार्या जनस्थानादज्ञानाद्राक्षसाधम । हृता ते विवशा यस्मात्तस्मात्त्वं नासि वीर्यवान् ॥ ११ ॥ मया विरहितां दीनां वर्तमानां महावने । वैदेहीं प्रसभं हृत्वा शूरोऽहमिति मन्यसे ॥ १२ ॥ स्त्रीषु शूर विनाथासु परदाराभिमर्शक । कृत्वा कापुरुषं कर्म शूरोऽहमिति मन्यसे ॥ १३ ॥ भिन्नमर्याद निर्लज्ज चारित्रेष्वनवस्थित । दर्पान्मृत्युमुपादाय शूरोऽहमिति मन्यसे ॥ १४ ॥ शूरेण धनदभ्रात्रा बलैः समुदितेन च । श्लाघनीयं यशस्यं च कृतं कर्म महत्त्वया ॥ १५ ॥ उत्सेकेनाभिपन्नस्य गर्हितस्याहितस्य च । कर्मणः प्राप्नुहीदानीं तस्याद्य सुमहत् फलम् ॥ १६ ॥ शूरोऽहमिति चात्मानमवगच्छसि दुर्मते । नैव लज्जाऽस्ति ते सीतां चोरवद् व्यपकर्षतः ॥ १७ ॥ यदि मत्सन्निधौ सीता धर्षिता स्यात्त्वया बलात् । भ्रातरं तु खरं पश्येस्तदा मत्सायकैर्हतः ॥ १८ ॥ दिष्ट्याऽसि मम दुष्टात्मंश्चक्षुर्विषयमागतः । अद्य त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनम् ॥ १९ ॥ अद्य ते मच्छरैश्छिन्नं शिरो ज्वलितकुण्डलम् । क्रव्यादा व्यपकर्षन्तु विकीर्णं रणपांसुषु ॥ २० ॥

उत्सेकेन गर्वेण ॥ १६–१९ ॥ अद्य त इति । शिरो ज्वलितकुण्डलमित्यनेन तदानीमन्तकाले रावण एकशिरस्कः स्थित इति गम्यते ॥ २० ॥



तत इति । अन्योन्यं नोपालक्षयतामिति सम्बन्धः ॥ ९ ॥ १० ॥ अज्ञानात् अविवेकात् । विवशा ममादर्शनादिति भावः ॥ ११–१४ ॥ शूरेणेत्याक्षेपोक्तिः । कर्म कापुरुषसम्बन्धि । श्लाघनीयमित्यादि व्यतिरेकोक्तिः ॥ १५ ॥ अभिपन्नस्य अनुष्ठितस्य ॥ १६–२० ॥

तर्षः पिपासा । शरशल्यान्तरोत्थितं शरशल्यक्षतविवरादुत्थितमित्यर्थः ॥२१-२६॥ राघवात् राघवस्य । विभक्तिव्यत्यय आर्षः । विघूर्णहृदयः भ्रान्त हृदयः ॥ २७ ॥ यदा चेत्यादिश्लोकत्रयमेकान्वयम् । यदा शस्त्रं नारेभे शस्त्रं न प्रयुक्तवान् । शरासनं च न व्यकर्षत् । यदा च विक्लवेन विवशेन, अन्त

निपत्योरसि गृध्रास्ते क्षितौ क्षिप्तस्य रावण । पिबन्तु रुधिरं तर्षाच्छरशल्यान्तरोत्थितम् ॥ २१ ॥ अद्य मद्बाण भिन्नस्य गतासोः पतितस्य ते । कर्षन्त्वन्त्राणि पतगा गरुत्मन्त इवोरगान् ॥ २२ ॥ इत्येवं संवदन् वीरो रामः शत्रुनिवर्हणः ।राक्षसेन्द्रं समीपस्थं शरवर्षैरवाकिरत् ॥२३॥ बभूव द्विगुणं वीर्यं बलं हर्षश्च संयुगे । रामस्यास्त्रबलं चैव शत्रोर्निधनकाङ्क्षिणः ॥२४॥ प्रादुर्बभूवुरस्त्राणि सर्वाणि विदितात्मनः । प्रहर्षाच्च महातेजाः शीघ्रहस्ततरोऽभवत् ॥ २५ ॥ शुभान्येतानि चिह्नानि विज्ञायात्मगतानि सः । भूय एवार्दयद्रामो रावणं राक्षसान्तकृत् ॥ २६ ॥ हरीणां चाश्मनिकरैः शरवर्षैश्च राघवात् । हन्यमानो दशग्रीवो विघूर्णहृदयोऽभवत् ॥ २७ ॥ यदा च शस्त्रं नारेभे न व्यकर्ष च्छरासनम् । नास्य प्रत्यकरोद्वीर्यं विक्लवेनान्तरात्मना ॥२८॥ क्षिप्ताश्चापि शरास्तेन शस्त्राणि विविधानि च । न रणार्थाय वर्तन्ते मृत्युकालेऽभिवर्ततः ॥२९॥ सूतस्तु रथनेताऽस्य तदवस्थं समीक्ष्य तम् । शनैर्युद्धादसम्भ्रान्तो रथं तस्यापवाहयत् ॥ ३० ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमद्युद्धकाण्डे पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

रात्मना मनसा हेतुना, अस्य रामस्य वीर्यं स्ववीर्यं च न प्रत्यकरोत् न प्रतिजघान। तेन रावणेन क्षिप्ताः शरा अपि विविधानि शस्त्राणि च न रणार्थाय वर्तन्ते छेदनभेदनादिरणप्रयोजनं कर्तुं यदा नाशक्नुवन् । तदा मृत्युकाले। अभिवर्ततः अभिवर्तमानस्य अस्य रावणस्य, रथनेता सूतः असम्भ्रान्तः सन् तदवस्थं पूर्वोक्तावस्थं रावणं समीक्ष्य तस्य रथं युद्धात् युद्धस्थलात्, शनैः अपवाहयत् अपावाहयत्, अन्यत्रानयदिति योजना ॥ २८-३० ॥

निपत्येति । तर्षात् पिपासया । बाणशल्यान्तरोत्थितं बाणशल्यक्षतविवरोत्थितम् ॥ २१-२३ ॥ अस्त्रबलम् अस्त्रबलविषयस्मरणं द्विगुणं बभूवेत्यर्थः ॥ २४-२६ ॥ राघवात् राघवस्य । विघूर्णहृदयो विह्वलहृदयः ॥ २७ ॥ यदा चेत्यादिश्लोकत्रयमेकं वाक्यम् । विक्लवेन विवशेन । शस्त्रं शस्त्रप्रयोगं नारेभे

स०-सूतः " सारथी रथिकं रक्षेत्सम्प्राप्ते प्राणसङ्कटे " इत्याद्युक्तिमर्यादावेदितस्वान्तरात्मप्रेरितः । रथनेता सारथिः । " सूतः प्रसूते प्रेरितेऽपि च " इति विश्वः ॥ ३० ॥

रामानुजीयम्—यदेत्यादि । शस्त्रं न मायुङ्क्त, न रणार्थाय वर्तन्ते, छेदनभेदनादिरणप्रयोजनं कर्तुं यदा नाशक्नुवन् तदा सूतस्तस्य रथमपवाहयदिति सम्बन्धः ॥ २८–३० ॥



इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥



स तु मोहात् सुसंक्रुद्धः कृतान्तबलचोदितः । क्रोधसंरक्तनयनो रावणः सूतमब्रवीत् ॥ १ ॥ हीनवीर्यमिवाशक्तं पौरुषेण विवर्जितम् । भीरुं लघुमिवासत्त्वं विहीनमिव तेजसा ॥ २ ॥ विमुक्तमिव मायाभिरस्त्रैरिव बहिष्कृतम् । मामवज्ञाय दुर्बुद्धे स्वया बुद्ध्या विचेष्टसे॥३॥ किमर्थं मामवज्ञाय मच्छन्दमनवेक्ष्य च । त्वया शत्रोः समक्षं मे रथोऽयमपवाहितः ॥ ४ ॥ त्वयाऽद्य हि ममानार्य चिरकालसमार्जितम् । यशो वीर्यं च तेजश्च प्रत्ययश्च विनाशितः॥५॥ शत्रोः प्रख्यातवीर्यस्य रञ्जनीयस्य विक्रमैः । पश्यतो युद्धलुब्धोऽहं कृतः कापुरुषस्त्वया ॥ ६ ॥ यस्त्वं रथमिमं मोहात् न चोद्वहसि दुर्मते । सत्योऽयं प्रतितर्को मे परेण त्वमुपस्कृतः ॥ ७ ॥

अथ रावणरथप्रत्यानयनं षट्शततमे—स तु मोहादित्यादि । मोहात् अविवेकात् ॥ १ ॥ हीनवीर्यमिवेत्यादिश्लोकद्वयमेकान्वयम् । यत्र यत्र इव शब्दो नास्ति तत्र तत्रानुषञ्जनीयः । हीनवीर्यमिव हीनबलमिव । अशक्तमिव निरुत्साहमिव । असत्त्वमिव अधीरमिव । तेजसा परिभवासहनेन ॥२॥३॥ मच्छन्दं मदभिप्रायम् । "वशाभिप्राययोश्छन्दः" इत्यमरः ॥ ४ ॥ प्रत्ययः रावणस्य युधि पलायनं नास्तीति सर्वेषां विश्वासः । विनाशित इत्यस्य यशआदिषु लिङ्गविपरिणामः ॥५॥ शत्रोः पश्यतः शत्रौ पश्यति ॥६॥ यः नोद्वहसि अभिमुखं न प्रापयसि, किं त्वपवाहयसि । स त्वम् उपस्कृतः परेणोत्कोचादिना

शरासनं च न व्यकर्षत । अस्य रामस्य वीर्यं स्ववीर्यं च न प्रत्यकरोत न प्रतिजघान । तेन रामेण । रावणार्थाय रावणस्यार्थाय निवृत्तये पराजयाय क्षिप्ताः शराश्च यदा वर्तन्ते तदा मृत्युकालेऽभिवर्ततः अस्य रावणस्य सूतः रथमपवाहयदिति सम्बन्धः ॥२८–३०॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां पञ्चोत्तरशततमः सर्गः ॥१०५॥ स त्विति । मोहात् अविवेकात् ॥१॥ हीनवीर्यमिव हीनविक्रममिव । अशक्तमिव निरुत्साहमिव । असत्त्वमिव अल्पबलमिव । तेजसा पराभिभवसामर्थ्येन । विहीनमिवेति इवशब्दस्य सर्वत्र सम्बन्धः ॥२॥ ३ ॥ मच्छन्दं मदभिप्रायम् ॥ ४ ॥ प्रत्ययः रावणस्य युधि पलायनं नास्तीति सर्वेषां विश्वासः ॥ ५ ॥ शत्रोः पश्यतः सूतः त्वया अहं कापुरुषः कुत्सितपुरुषः कृतः ॥ ६ ॥ उपस्कृतः उत्कोचादिना वशीकृतः । तर्कः ऊहः ॥ ७ ॥

वशीकृत इत्ययं प्रतितर्कः सत्यः प्रतिभाति ॥ ७ ॥ न हीति । न त्वयैतत् स्वनुष्ठितमिति । त्वयाऽनुष्ठितमेतत् न तु स्वनुष्ठितं तत् ॥ ८ ॥ अध्युषितः सहवासी, सुहृदिति यावत् । उपधयोपसर्पितो वा । गुणाः सत्काराः ॥ ९ ॥ १० ॥ रामानु०—निवर्तयेति । यदि वाऽध्युषितो वासि, चिरकालं मत्समीप इति

न हि तद्विद्यते कर्म सुहृदो हितकांक्षिणः। रिपूणां सदृशं चैतन्न त्वयैतत् स्वनुष्ठितम् ॥ ८ ॥ निवर्तय रथं शीघ्रं यावन्नोपैति मे रिपुः । यदि वाऽध्युषितो वाऽसि स्मर्यन्ते यदि वा गुणाः ॥९॥ एवं परुषमुक्तस्तु हितबुद्धिरबुद्धिना । अब्रवीद्रावणं सूतो हितं सानुनयं वचः ॥ १० ॥ न भीतोऽस्मि न मूढोऽस्मि नोपजप्तोऽस्मि शत्रुभिः । न प्रमत्तो न निस्नेहो विस्मृता न च सत्क्रिया ॥ ११ ॥ मया तु हितकामेन यशश्च परिरक्षता । स्नेहप्रस्कन्नमनसा प्रियमित्य प्रियं कृतम् ॥ १२ ॥ नास्मिन्नर्थे महाराज त्वं मां प्रियहिते रतम् । कश्चिल्लघुरिवानार्यो दोषतो गन्तुमर्हसि ॥ १३ ॥ श्रूयतां त्वभिधास्यामि यन्निमित्तं मया रथः । नदीवेग इवाभोगे संयुगे विनिवर्तितः ॥ १४ ॥ श्रमं तवाव गच्छामि महता रणकर्मणा । न हि ते वीर सौमुख्यं प्रहर्षं वोपधारये ॥ १५ ॥

शेषः। स्मर्यन्ते यदि वा गुणाः, मन्निष्ठा उपकर्तृत्वादिगुणाः स्मर्यन्ते यदि ॥ ९ ॥ ॥ न भीतोऽस्मीति । नोपजप्तः उपजापं भेदं न गमितः। "भेदोपजापौ" इत्यमरः ॥११॥१२॥ अस्मिन्नर्थे रथापवाहनरूपेऽर्थे । कश्चित् कुत्रापि कुले जातः । लघुः अल्पबुद्धिः । अनार्यः दुष्टहृदय इव, मां दोषतः गन्तुं ज्ञातुं नार्हसि । गत्यर्था ज्ञानार्थाः ॥१३॥ यन्निमित्तं यत्कारणात् । "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति प्रथमा । नदीति । आभोगे उन्नतप्रदेशे । आभोगान्नदीवेग इव रथः संयुगाद्विनिवर्तित इत्यर्थः । आभोगे संयुग इत्यत्र विभक्तिव्यत्ययः ॥ १४ ॥ श्रममिति । सौमुख्यं सुमुखत्वम् तन्मूलं प्रहर्षम् ॥ १५ ॥

तत् हितकाङ्क्षिणः सुहृदः कर्म न, किन्तु रिपूणां सदृशं चैतत्, अतः न त्वयैतत्स्वनुष्ठितम्, त्वयाऽनुष्ठितमेतत्सुष्ठ्वनुष्ठितं न भवतीत्यर्थः ॥८॥ यदिवाऽध्युषितश्चासि चिरकालं मत्समीप इत्यर्थः । स्मर्यन्ते यदि वा गुणाः उपकर्तृत्वादिमन्निष्ठा गुणाः स्मर्यन्ते॥९॥१०॥ नोपजप्तः उपजापं भेदं न गमितः। "भेदोपजापावुपधा" इत्यमरः ॥ ११ ॥ स्नेहप्रस्कन्नमनसा स्नेहार्द्रहृदयेन ॥ १२ ॥ प्रियहिते रतं मां कश्चिदनार्य इव दोषतः गन्तुं नार्हसि, मयि दोषदृष्टिं कर्तुं नार्हसीत्यर्थः ॥ १३ ॥ यन्निमित्तं यस्मात्कारणात् नदीवेगइवाम्भोभिः चन्द्रोदयादिना प्रवृद्धसमुद्रोदकैर्नदीवेग इव युद्धाद्रथः विनिवर्तितः प्रतिनिवर्तितः तत् श्रूयतामिति सम्बन्धः । नदीवेग इवाभोग इति पाठे—आभोगे पर्वताद्युन्नतप्रदेशे नदीवेग इवेत्यर्थः ॥ १४ ॥ रणकर्मणा युद्धेन ॥ १५ ॥ १६ ॥

रथेति । अत्र आसन्निति शेषः ॥ १६ ॥ अभिपन्नेषु आविर्भूतेषु सत्सु । अप्रदक्षिणं प्रतिकूलम् ॥ १७ ॥ निमित्तानि किमर्थं त्वया विचारणीयानी त्यत आह–देशेत्यादिना । श्लोकत्रयमेकान्वयम् । लक्षणानि शुभाशुभनिमित्तानि । इङ्गितानि मुखप्रसादवैगुण्यादीनि । दैन्यम् अनुत्साहः । स्थलानि उन्नतप्रदेशाः । निम्नानि अवनतप्रदेशाः । समानि सर्वत्र समप्रदेशाः । विषमाणि निम्नोन्नतप्रदेशाः । युद्धकाल इति पूर्वोक्तानुवादः । अन्तरदर्शनं





रथोद्वहनखिन्नाश्च त इमे रथवाजिनः । दीना घर्मपरिश्रान्ता गावो वर्षहता इव ॥ १६ ॥ निमित्तानि च भूयिष्ठं यानि प्रादुर्भवन्ति नः । तेषु तेष्वभिपन्नेषु लक्षयाम्यप्रदक्षिणम् ॥ १७ ॥ देशकालौ च विज्ञेयौ लक्षणानीङ्गितानि च । दैन्यं खेदश्च हर्षश्च रथिनश्च बलाबलम् ॥ १८ ॥ स्थलनिम्नानि भूमेश्च समानि विषमाणि च । युद्धकालश्च विज्ञेयः परस्यान्तरदर्शनम् ॥ १९ ॥ उपयानापयाने च स्थानं प्रत्यपसर्पणम् । सर्वमेतद्रथस्थेन ज्ञेयं रथकुटुम्बिना ॥ २० ॥ तव विश्रमहेतोश्च तथैषां रथवाजिनाम् । रौद्रं वर्जयता खेदं क्षमं कृतमिदं मया ॥ २१ ॥ न मया स्वेच्छया वीर रथोऽयमपवाहितः ॥ २२ ॥

दृश्यत इति दर्शनं, द्रष्टव्यम् । द्रष्टव्यं रन्ध्रमित्यर्थः । अन्तरदर्शनं रन्ध्रदर्शनं कर्तव्यमित्यध्याहारो वा । उपयानं समीपगमनम् । अपयानं पार्श्वतो गमनम् । स्थानं स्थैर्येणावस्थानम् । प्रत्यपसर्पणम् अभिमुखस्थित्या पृष्ठतोऽपसरणम् । रथकुटुम्बिना सारथिना ॥ १८–२० ॥ तवेत्यादिसार्धश्लोक

प्रादुर्भवन्तीति । तेषु तेष्वभिपन्नेषु अभिभूतेषु सत्सु सः अप्रदक्षिणं प्रतिकूलं लक्षयामीति सम्बन्धः ॥ १७ ॥ न तु तावदेतानि श्रमादिनिमित्तानि, तदेतत्पूरयेत्या शङ्कायामाह–देशकालाविति । लक्षणानि अस्त्रशस्त्रप्रयोगमान्द्यादीनि । यद्वा शुभाशुभनिमित्तानि । इङ्गितानि मुखहस्तादिवैवर्ण्यादीनि लक्षणेनेङ्गितेन । दैन्यमनु त्साहः । स्थलनिम्नानि विषमाणि रथचक्रनिम्नोन्नतावस्थानहेतुभूतप्रदेशाः । अन्तरदर्शनं तीव्रप्रहाराय छिद्रदर्शनम् । उपयानापयाने च उपयानं समीपगमनम् अपयानं पश्चाद्गमनम्, स्थानं स्थैर्येणावस्थानम् । अपसर्पणम् अभिमुखस्थित्या दृष्टितोऽपसरणम् । रथकुटुम्बिना रथनिर्वाहकेन सारथिना ॥ १८–२० ॥ तवेत्यादिसार्धम् ।

एकान्वयः । तथा वाजिनां विश्रमहेतोश्चेत्यन्वयः । रौद्रं दुस्सहम् । वर्जयता अपनयता । हेलौ शतृप्रत्ययः । क्षमं युक्तम् । स्वेच्छया अपनयननिमित्तं विना ॥ २१ ॥ २२ ॥ भर्तृस्नेहेत्यर्धम् । मया यत्कृतं तदिदं भर्तृस्नेहपरीतेनैव कृतमित्यर्थः ॥ २३ ॥ आज्ञापयेति । यथातत्त्वं यत् कार्यस्वरूपं

भर्तृस्नेहपरीतेन मयेदं यत्कृतं विभो ॥ २३ ॥ आज्ञापय यथातत्त्वं वक्ष्यस्यरिनिषूदन । तत्करिष्याम्यहं वीर गतानृण्येन चेतसा ॥ २४ ॥ सन्तुष्टस्तेन वाक्येन रावणस्तस्य सारथेः । प्रशस्यैनं बहुविधं युद्धलुब्धोऽब्रवीदिदम् ॥ २५ ॥ रथं शीघ्रमिमं सूत राघवाभिमुखं कुरु । नाहत्वा समरे शत्रून् निवर्तिष्यति रावणः ॥ २६ ॥ एवमुक्त्वा ततस्तुष्टो रावणो राक्षसेश्वरः । ददौ तस्मै शुभं ह्येकं हस्ताभरणमुत्तमम् ॥ २७ ॥ श्रुत्वा रावणवाक्यं तु सारथिः संन्यवर्तत ॥ २८ ॥ ततो द्रुतं रावणवाक्यचोदितः प्रचोदयामास हयान् स सारथिः । स राक्षसेन्द्रस्य ततो महारथः क्षणेन रामस्य रणाग्रतोऽभवत् ॥ २९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे षडुत्तरशततमः सर्गः ॥ १०६ ॥

वक्ष्यसि तत्तथा गतानृण्येन आनृण्यं गतेन, आनृण्यं कर्तव्यमिति कृतसङ्कल्पेन । चेतसा मनसा करिष्यामि ॥ २४ ॥ २५ ॥ रथमिति । निवर्तिष्यति निवर्तिष्यते ॥ २६–२८ ॥ तत इति । महांश्चासौ रथश्च महारथ इति विग्रहः ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षडुत्तरशततमः सर्गः ॥ १०६ ॥

रौद्रं दुस्सहघटकम्, वर्जयता अपनयता । हेलौ शतृप्रत्ययः । क्षमं युक्तम् । स्वेच्छया निमित्तं विना रथोऽयं नापवाहितः ॥ २१ ॥ २२ ॥ भर्तृस्नेहेति । मया यत्कृतं तदिदं भर्तृस्नेहपरीतेन कृतमित्यर्थः ॥ २३ ॥ यथातत्त्वं यत्कार्यस्वरूपम् । गतानृण्येन प्रेक्षितानृण्येन चेतसा करिष्यामीत्यर्थः ॥ २४–२९ ॥ इति श्रीमहेश्वरतीर्थ विरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां षडुत्तरशततमः सर्गः ॥ १०६ ॥

अथादित्यहृदयोपदेशः । ततो युद्धपरिश्रान्तमित्यादिश्लोकद्वयमेकान्वयम् । रणं द्रष्टुं दैवतैः समागम्य आगतः दैवतैः सहागतः अगस्त्यः, युद्धपरिश्रान्तम् उपस्थितं रावणं दृष्ट्वा कथमेनं परत्वप्रकटनं विना जेष्यामीति चिन्तया स्थितं चिन्तयन्तं च रामं दृष्ट्वा उपागम्याब्रवीत् ॥ १ ॥ २ ॥ राम रामेत्यादिश्लोकत्रयमेकान्वयम् । रामस्य चिन्ताविष्टत्वात् स्वादरातिशयात्कार्यत्वरया च द्विरुक्तिः । महाबाहो इत्यनेन पूर्वकृतपराक्रमप्रकटनम् । सनातनं वेदवन्नित्यम् । गुह्यं रहस्यं शृणु ॥ ३ ॥ तदेव रहस्यमाह—आदित्यहृदयमित्यादि । आदित्यस्य हृदयम् आदित्यमनःप्रसादकमित्यर्थः । पुण्यं

॥ *आदित्यहृदयप्रारम्भः ॥

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् । रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥१॥ दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् । उपागम्याब्रवीद्राममगस्त्यो भगवानृषिः ॥२॥ राम राम महाबाहो शृणु गुह्यं सनातनम् । येन सर्वानरीन् वत्स समरे विजयिष्यसि ॥३॥ आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् । जयावहं जपेन्नित्यमक्षय्यं परमं शिवम् ॥ ४ ॥ सर्वमङ्गलमङ्गल्यं सर्वपापप्रणाशनम् । चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥ ५ ॥

पठतां पुण्यवर्धकम् । सर्वशत्रुविनाशेऽपि तुल्यायव्ययन्यायेन कस्यचिन्न जयः स्यात्, न तथा भवतीदमित्याह—जयावहमिति । अक्षय्यम् अक्षय्यफलकम् । परमं शिवम्, परमपावनम् ॥ ४ ॥ तनि०—आदित्यशब्देन तन्मण्डलमुच्यते । " य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते " इत्यत्रादित्यशब्दवत् । तस्य हृदयमन्तः तन्मण्डलमध्यवर्ती पुरुषः । यद्वा आदित्यः सूर्यः तस्य हृदयं हृद्गतम् । "अय पय गतौ " इति धातुः । " य आदित्ये तिष्ठन् । य आदित्यमन्तरो यमयति " इत्यादिश्रुतेः । तत्प्रतिपादकं स्तोत्रमित्यर्थः ॥ ४ ॥ सर्वमङ्गलमङ्गल्यम् सर्वमङ्गलानामपि मङ्गलम् । "मङ्गलानां च मङ्गलम्" इतिवत् । स्वार्थे यत्प्रत्ययः । ततो युद्धपरिश्रान्तमित्यादि श्लोकद्वयमेकं वाक्यम् । रणं युद्धं द्रष्टुं दैवतैस्सह समागम्यागतोऽगस्त्यः ततस्सर्वास्त्रयुद्धपरिश्रान्तस्य रावणस्य रथे सूतेन रणाद्युद्धादपनीते सति तदनन्तरं मोद्यति च भास्करे युद्धपरिश्रान्तं समरे चिन्तया स्थितं रावणवधोपायचिन्तयोपलक्षितं रामम् । अग्रतस्समनन्तरकाले युद्धाय युद्धं कर्तुं समुपस्थितं रावणं च दृष्ट्वा तदा तस्मिन् काले रावणमद्यैव जेष्यसि मा चिन्तापरो भूः किन्तु स्ववीर्योपबृंहणाय आदित्यहृदयाख्येन स्तोत्रेणैनं सूर्यमुपतिष्ठस्वेति स्तोत्रमुपदेक्ष्यन् अन्तरिक्षादवनिमुपागम्य राममब्रवीदित्यर्थः ॥ १ ॥ २ ॥ प्रथमं रुच्युत्पादनाय प्रयोजनदर्शनपूर्वकं तन्माहात्म्यं वर्णयति—राम रामेत्यादिश्लोकत्रयेण । येन स्तोत्रेण सर्वानरीन् विजयिष्यसि विजेष्यसे । गुह्यं रहस्यम् सर्वशत्रुविनाशनत्वादिविशेषणयुक्तम् आदित्यहृदयाख्यं जपं जप्यत इति

* अस्य स्तोत्रस्य अगस्त्य ऋषिः, अनुष्टुप् छन्दः, आदित्यहृदयभूतो भगवान् ब्रह्मा देवता, निरस्ताशेषविघ्नतया ब्रह्मविद्यासिद्धौ सर्वत्र जयसिद्धौ च विनियोगः, अस्य षडङ्गं प्रणवेन, रश्मिमते नम इत्यनेन वा । गायत्र्या षडङ्गमित्यन्ये ॥

सर्वश्रेयस्साधनमित्यर्थः । सर्वपापप्रणाशनं सर्वपूर्वाघविनाशनम् । चिन्ताशोकप्रशमनम् आधिव्याधिनिवर्तकम् । आयुर्वर्धनम् विहितायुषोऽप्यधिकायुः प्रदम् । उत्तमं जप्येषु श्रेष्ठम् । आदित्यहृदयाख्यं स्तोत्रं जपेत्, आदित्यहृदयस्तोत्रजपे पुण्यादिवृद्धिर्भवति अतोऽवश्यं तत्कामस्तज्जपेदिति भावः ॥ ५ ॥ स्तोतव्यदेवतास्वरूपमाह—रश्मिमन्तमिति । रश्मिमन्तं स्वर्णवर्णतया प्रशस्तकिरणम् । समुद्यन्तम् अर्घोदयादिकं विना सम्यगुदयं प्राप्नुवन्तम् । इदं च ध्येयाभिप्रायेणोक्तम्, न तु तदानीं सूर्योदयकालः, अगस्त्यागमनकालस्यापराह्णत्वात् । अत एव लक्ष्मणवचनम्—“ अहं तु वधमिच्छामि शीघ्र

रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् । पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ ६ ॥

सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः । एष देवासुरगणान् लोकान् पाति गभस्तिभिः ॥ ७ ॥

मस्य दुरात्मनः। यावदस्तं न यात्येष कृतकर्मा दिवाकरः॥” इति । विवस्ते आच्छादयति तेजोन्तरमिति विवस्वान् तम्, स्वभासा सर्वतेजसामाच्छादक मित्यर्थः । भास्करम् भाः करोतीति भास्करः । “ दिवाविभानिशाप्रभाभास्कारा—” इत्यादिना टः सकारश्च । भुवनेश्वरं वर्षातपाभ्यां समस्तभुवन नियन्तारम् । पूजयस्व आदित्यहृदयेन तोषयस्वेत्यर्थः ॥ ६ ॥ तनि ०—रश्मिमन्तं रश्मिशब्दो नित्यसूरिपरः तद्वन्तं तन्मध्ये भासमानम् । “ रश्मिश्च रश्मीनां मध्ये तपन्तम् ” इति सुवर्णसूक्तोक्तेः । समुद्यन्तं नित्योदितदशावन्तम् । यद्वा “ यः पूर्व्याय वेधसे नवीयसे ” इत्याद्युक्तरीत्या नवंनवमुदितमिव स्थितम् ॥ ६ ॥ ननु सत्सु देवतान्तरेषु कथमस्यैव पूज्यत्वम् ? तत्राह—सर्वदेवात्मक इति । सर्वदेवात्मकः सर्वदेवानामात्मा । स्वार्थे कः । “सूर्य आत्मा जगतस्तस्थुषश्च” इति श्रुतेः ।

जपं स्तोत्रं शृणिवति सम्बन्धः । अस्य च स्तोत्रस्यादित्यहृदयसंज्ञा सूर्यमण्डलमध्यवर्तिनः परमपुरुषस्य प्रतिपादनात् । यद्वा आदित्यहृदयम् आदित्यः सूर्यः तस्य हृत् अयत इनि हृदयम् । “ अय पय गतौ ” इति धातुः । आदित्यहृद्गतोऽन्तर्यांम्यादित्यहृदयशब्देनोच्यते “ य आदित्ये तिष्ठन् । य आदित्यमन्तरो यमयति । अन्तरादित्ये मनसा चरन्तम् ” इत्यादिश्रुतिभ्यः तत्प्रतिपादकं स्तोत्रमित्यर्थः ॥ ३—५ ॥ रश्मिमन्तमिति । रश्मिशब्दः परमान्तरङ्गभक्तवाचकः, तद्वन्तं तन्मध्ये भासमानम् । “ रश्मिश्चरश्मीनां मध्ये तपन्तम् ” इति सुवर्णघर्मानुवाकोक्तेः । समुद्यन्तं “ यः पूर्व्याय वेधसे नवीयसे ” इति श्रुत्युक्तरीत्या नवंनव मुदितमिव स्थितम् । देवासुरनमस्कृतम् “ देवानां दानवानां च सामान्यमधिदैवतम् ” इत्युक्तरीत्या सर्वोपास्यम् । विवस्वन्तं निरतिशयदीप्तिमन्तम् “ अथ यदतः परो दिवो ज्योतिर्दीप्यते । विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु ” इति श्रुतेः । भास्करं सूर्यचन्द्राग्निप्रभृतीनामपि प्रभासम्पादकम् “ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ” इति श्रुतेः । भुवनेश्वरं भुवनशब्दः सकलाण्डवाची, तेषामीश्वरम् । एतादृशं भगवन्तं पूजयस्व अनेन स्तोत्रेणोपतिष्ठस्वेत्यर्थः ॥६॥ अस्य स्तोत्रस्य कथमेतादृशमाहात्म्यमित्याशङ्क्य तत्प्रतिपाद्यस्य

रश्मिभिर्लोकाननुभावयतीति रश्मिभावनः, रश्मिभिः रक्षतीत्यर्थः । एतदेवाह—एष इति । देवासुरगणान् लोकान् देवासुरगणरूपान् जनानित्यर्थः । पाति रक्षति । "याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति" इति श्रुतेः॥७॥ तनि०—अत्र देवासुरशब्दौ तत्तत्प्रकृतिपरौ । " दैवी सम्पद्विमोक्षाय निब

एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः । महेन्द्रो धनदः कालो यमः सोमो ह्यपां पतिः ॥ ८ ॥
पितरो वसवः साध्या ह्यश्विनौ मरुतो मनुः । वायुर्वह्निः प्रजाप्राण ऋतुकर्ता प्रभाकरः ॥ ९ ॥

न्धायासुरी मता" इति गीतोक्तेः । गभस्तिभिः तेजोलेशैः 'तेजोंऽशसंभवम्' इत्युक्ततेजोलेशैः॥७॥ सर्वदेवात्मकत्वमाह—एष ब्रह्मेत्यादिना । अयमेव ब्रह्मादिसमस्त देवताशरीरे वर्तत इत्यर्थः । प्रजापतिरिति जात्येकवचनम् । नव प्रजापतय उच्यन्ते । कालशब्देन मृत्युरुच्यते । यमस्तु ततोऽन्यः । मरुतः आवहादि सर्वदेवतामयत्वात्सम्भवतीति तस्य सर्वदेवतामयत्वं प्रतिपादयति—सर्वदेवात्मक इत्यादिना । सर्वदेवात्मकः सर्वदेवशरीरः " यः सर्वेषु देवेषु तिष्ठन् " इत्यादि श्रुतेः । तेजस्वी पराभिभवनसामर्थ्यवान् । रश्मिभावनः रश्मीन् नित्यमुक्तान् भावयति तत्सत्तां निर्वहतीति तथोक्तः, तेषां भगवन्नित्येच्छाधीनसत्ताकत्वात " नित्यं प्रियास्तव तु केचन ते हि नित्याः " इत्युक्तत्वात्। एष देवासुरगणान् लोकान् पाति गभस्तिभिः इति । " अग्नौ प्रास्ताऽऽहुतिस्सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥" इत्याद्युक्तरीत्या वृष्ट्यन्नदानेन " देवान् भावयतानेन ते देवा भावयन्तु वः " इति पुरोडाशादिदानेन च सर्वान् पातीत्यर्थः । " याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति " इत्यादिश्रुत्युक्तरीत्या गभस्तिभिः पातीत्युक्तम् ॥ ७ ॥ एष ब्रह्मेत्यादि । " य एषोऽन्तरा दित्ये हिरण्मयः पुरुषो दृश्यते " इत्युक्तयोगिजनसाक्षात्कारेण एष इति पुनः पुनर्निर्देशः । ब्रह्मा चतुर्मुखशरीरः । "तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः" इति शिवं प्रति चतुर्मुखवचनात् । विष्णुः उपेन्द्रावतारः । शिवः शिवशरीरकः " स ब्रह्मा स शिवः स हरिस्सेन्द्रः " इत्युभयत्रापि श्रुतेः । स्कन्दः " स्कन्दिर् गतिशोषणयोः " इति धातोः, शत्रून् शोषयतीति स्कन्दः, षण्मुखशरीरको वा । प्रजापतिः " प्रजापतिश्चरति गर्भे अन्तः " इत्युक्तप्रजापतिशब्दवाच्यः । महेन्द्रः स्वरूपत ऐश्वर्यतश्च निरवधिकः, " इन्द्रं निचिक्युः परमे व्योमन् । इन्द्रो मायाभिः पुरुरूप ईयते " इति श्रुतेः । धनदः " अन्नादो वसुदानः " इति श्रुतिप्रसिद्धस्सकलफलप्रदः । कालः जगत्संहारकः "कालाय महाग्रासाय वै नमः" "अत्ता चराचरग्रहणात्" इति श्रुतिसूत्राभ्याम् "अनादिर्भगवान् कालः" इति पराशरस्मरणाच्च । यमः यमयति शिक्षयतीति यमः " यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः " इति मनुस्मरणात् । सोमः सूतेऽमृतमिति सोमः " षु प्रस वैश्वर्ययोः " इति धातुः । " सोमः पवते जनिता मतीनां जनिता दिवः " इत्याद्युक्तसकलकारणसोमशब्दवाच्यः । अपांपतिः " आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥" इत्युक्तेः । "अप एव ससर्जादौ" इत्युक्तेश्चाप्छब्दवाच्यानां स्वामी ॥ ८ ॥ पितरः अग्निष्वात्तादयः । वसवः सदा वसन्तीति वसवः । ते चाष्टौ—" ध्रुवो धरश्च सोमश्च आपो नैवानलोऽनिलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ " यद्वा " अग्निश्च पृथिवी

वायवः । वायुर्भूर्लोकसञ्चारी । प्राणः शरीरान्तस्स्थो वायुः । ऋतुकर्तेति प्रभाकरविशेषणम् । ऋतूनां वसन्तादीनां कर्ता, एष प्रभाकरः ब्रह्मा चेत्यादिरीत्या
ऽन्वयः ॥ ८ ॥ ९ ॥ तनि०—स्कन्दः संसारदुःखं स्कन्नं करोतीति स्कन्दः । महेन्द्रो वरुण इति पाठे—वरुणो वरुणपदाभिधेयः । "वरुणो वारुणो वृक्षः" इति सहस्रनामोक्तेः ।
मनुः सर्वज्ञः । " मनु अवबोधने " इति धातुः ॥ ८ ॥ ९ ॥ एवमादित्यस्वरूपमुपदिश्य तद्विषयमादित्यहृदयस्तोत्रमुपदिशति—आदित्यः सवितेत्यादिना

**आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् । सुवर्णसदृशो भानुर्हिरण्यरेता दिवाकरः ॥ १० ॥**

लोकसाक्षिण इत्यन्तेन । तत्र आदित्यादिप्रथमान्तपदेषु त्वंपदमध्याहार्यम् । अदितेरपत्यत्वेनावतीर्ण आदित्यः । "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः"
इति ण्यप्रत्ययः । अदितेः अखण्डिताया भूमेरयं पतिरित्यादित्यः । सूते जगदिति सविता । सुवति प्रेरयति जनान् कर्मणीति सूर्यः । " षू प्रेरणे "

च वायुश्चान्तरिक्षं च आदित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि वैते वै वसवः " इति श्रुतेः । साध्याः सिद्धिरेषामस्तीति साध्याः । अर्शआद्यच् । ते च द्वादश ।
तदुक्तं वायुपुराणे—" ब्रह्मणो वै मुखात्सृष्टा ये तु देवाः प्रजेप्सया । साध्या मन्त्रशरीरास्ते स्थिता मन्वन्तरेष्वपि । धर्मपुत्रा महाभागा विज्ञेया द्वादशामराः । मनु
र्मन्त्रः प्राणदश्च चेतयानश्च वीर्यवान् । वित्तिर्जयो नयश्चैव हंसो नारायणस्तथा । प्रभवोऽथ विदुश्चैव साध्या द्वादश जज्ञिरे ॥ " इति । अश्विनौ बडवारूपिण्या
आदित्यमहिष्या संज्ञया अश्वरूपयुक्तस्यादित्यस्य तस्यां जातावश्विनौ । मरुतः 'म्रियन्ते न कदाचित्' इति मरुतः । ते च वायुपुराणोक्ताः शक्रज्योतिःप्रभृतय
एकोनपञ्चाशत् । मनुः मननान्मनुः " नान्योऽतोऽस्ति मन्ता " इति श्रुतेः । वाति सुरभीकरोतीति वायुः " वा गतिगन्धनयोः " इति धातुः । " सर्वकर्मा सर्व
कामस्सर्वगन्धस्सर्वरसः " इति श्रुतेः । वह्निः वहति हव्यमिति वह्निः " वह प्रापणे " " इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः । तदे
वाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः " इति श्रुतेः । प्रजाप्राणः प्रजानां प्राणनहेतुः " को ह्येवाऽन्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् " इति श्रुतेः ।
ऋतुः अर्यत इति ऋतुः । " ऋ गतौ " " ऋतुः सुदर्शनः कालः " इति सहस्रनामपाठात् । कर्ता ' तेन विना तृणाग्रमपि न चलति ' इति कृत्वा सर्वभूतान्तः
प्रवेशेन सकलकर्मकर्ता । ' अन्तः प्रविष्टं कर्तारमेतम् ' । "अथ रथान् रथयोगान् पथस्सृजते स हि कर्ता सर्वकर्मा " इत्यादिश्रुतिभ्यः । प्रभाकरः प्रभां करोति
सृजतीति प्रभाकरः, प्रकृष्टज्ञानसाधनम् । " तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥" इत्यादिवचनात् ॥ ९ ॥
अधुना स्तोत्रस्वरूपं दर्शयति—आदित्यस्सवितेत्यादिना । अत्र प्रथमान्तेषु शब्देषु त्वंशब्दमध्याहृत्य त्वमादित्यस्त्वं सवितेत्येवं योजनीयम् । आदित्यः
" यस्मात्सर्वमादत्ते तस्मादादित्यः " इत्याद्यौपनिषदव्युत्पत्त्या अशेषविषयभोक्ता आदित्य इत्यर्थः । सविता सर्वस्य जगतः प्रसविता । सूते जग
दिति वा सविता । सुवति प्रेरयति जगदिति वा सविता । सूर्यः सुवति प्रेरयति कर्मणीति सूर्यः । सुष्ठु ईरयति प्रेरयतीति वा सूर्यः परमात्मा । प्रेरणसौष्ठवं च
निरुपाधिकत्वम्, तच्च भगवत एव "अन्तः प्रविष्टः शास्ता जनानाᳶ सर्वात्मा" "यस्सर्वाणि भूतान्यन्तरो यमयति" इत्यादिश्रुतेः । खगः खं परमाकाशं गच्छति

इति धातोः " राजसूयसूर्य–" इति निपातनात् क्यप्प्रत्ययो रुडागमश्च । खे गच्छतीति खगः, लोकोपकारार्थमाकाशे सञ्चरन्नित्यर्थः । वर्षेण पुष्णाति जगदिति पूषा । "श्वन्नुक्षन्–" इत्यादौ निपातितः । गभस्तयः किरणाः अस्य सन्तीति गभस्तिमान् । सुवर्णसदृशः सुवर्णवर्णः । "हिरण्यश्मश्रु हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः" इति श्रुतेः । भातीति भानुः । "दाभाभ्यां नुः" इति नुप्रत्ययः । हिरण्यं रेतो यस्य स हिरण्यरेताः, हिरण्मय

**हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान् । तिमिरोन्मथनः शम्भुस्त्वष्टा मार्तण्ड अंशुमान् ॥ ११ ॥**

ब्रह्माण्डकर्तेत्यर्थः । अक्षराधिक्यमार्षत्वात् । दिवा करोतीति दिवाकरः, दिवा अह्नि प्राणिनः चेष्टां करोतीति वा दिवाकरः ॥ १० ॥ तनि०–सूर्यः स्थावरजङ्गमात्मकजगदन्तर्यामी सूर्यशब्दवाच्यः । "सूर्य आत्मा जगतस्तस्थुषश्च" इति श्रुतेः ॥ १० ॥ हरितः श्यामा अश्वा अस्य सन्तीति हरिदश्वः । सहस्रार्चिः सहस्रकिरणः । सप्तनामा सप्तिरश्वो यस्यासौ सप्तसप्तिः । " एको अश्वो वहति सप्तनामा " इति श्रुतेः । मरीचयोऽस्य सन्तीति मरीचिमान्, प्रकाशवानित्यर्थः । तिमिराण्युन्मथ्नातीति तिमिरोन्मथनः । शं सुखं भवत्यस्मादिति शम्भुः । डुप्रकरणे " मितद्र्वादिभ्य उपसङ्ख्यानम् " इति डुः ।

अध्यास्त इति खगः । " यो अस्याध्यक्षः परमे व्योमन् " इति श्रुतेः । पूषा पुष्णातीति पूषा, स्थितिकर्तेत्यर्थः । "पुष पुष्टौ" इति धातुः । गभस्तिमान् गां दिशं व्याप्य भास्ति प्रकाशयतीति गभस्तिः " भास दीप्तौ " इति धातुः । पृषोदरादित्वात्साधुः । तथा च गभस्तिः सर्वव्यापिनी लक्ष्मीः तद्वान्, लक्ष्मीनित्ययुक्त इत्यर्थः । नित्ययोगे मतुप् । " भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ " इत्यनुशासनात् । लक्ष्म्याः सर्वव्यापित्वम्–" यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम " इति पराशरस्मरणात्सिद्धम् । सुपर्णः शोभनौ पर्णौ पक्षौ यस्य सः सुपर्णः परमात्मा । " द्वा सुपर्णा सयुजा सखाया समानम् " इति श्रुतेः । तपनः तपतीति तपनः " तप सन्तापे " " सुखप्लुतः परंतपः " इति स्मरणात् । सुवर्णसदृश इति पाठे–सुवर्णवर्ण इत्यर्थः । " हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः" इति श्रुतेः । भानुः भातीति भानुः । "तमेव भान्तमनुभाति सर्वम् " इति श्रुतेः । हिरण्यरेताः हिरण्यं हिरण्मयं रेतः अण्डोत्पादकद्रव्यं यस्य सः । "अप एव ससर्जादौ तासु वीर्यमपासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥" इति मनुस्मरणात् । दिवाकरः अज्ञाननिवर्तनद्वारा दिवा द्युतिं ज्ञानं करोति व्युत्पादयतीति दिवाकरः ॥ १० ॥ हरिदश्वः हरति मन इति हरित् मनोहरः अश्वो वाहनं गरुडो यस्य सः । पृषदश्व इतिवत् । सहस्रार्चिः, अर्च्यत इति अर्चिः अर्चिश्शब्देन पूज्या मङ्गलगुणा उच्यन्ते, अनन्तकल्याणगुण इत्यर्थः । सप्तसप्तिः सप्ताख्यः सप्तिः अश्वो यस्य सः । " एको अश्वो वहति सप्तनामा " इति श्रुतेः । अनेन कल्क्यवतारस्सूचितः । मरीचिमान् म्रियन्ते शत्रवोऽनेनेति मरीचिः चक्रं तद्वान् । उपलक्षणमेतदितरायुधानाम् । शङ्खचक्रगदाधर इत्यर्थः । तिमिरोन्मथनः ज्ञानोत्पत्तिप्रतिबन्धकदोषनिवर्तकः । " हृद्यन्तस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् " इति स्मरणात् । शम्भुः शं सुखं

सर्वाणि रूपाणि त्वक्षति तनूकरोतीति त्वष्टा, सर्वसंहारक इत्यर्थः। मृतेऽण्डे जातो मार्तण्डः, सर्वसंहारे तत्सृष्टये पुनः प्रादुर्भूत इत्यर्थः। अंशवोऽस्य सन्तीत्यंशुमान्, प्रकाशमान इत्यर्थः ॥ ११ ॥ हिरण्यं हिरण्मयाण्डम्। "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्" इति स्मृतेः। तस्य गर्भो हिरण्यगर्भः। ब्रह्माण्डोदरवर्तीत्यर्थः। यद्वा हिरण्यं हितरमणीयं गर्भमन्तःकरणं यस्यासौ हिरण्यगर्भः। तापत्रयतप्तानां विश्रमस्थानत्वाच्छिशिरः। तपतीति



हिरण्यगर्भः शिशिरस्तपनो भास्करो रविः। अग्निगर्भोऽदितेःपुत्रः शङ्खः शिशिरनाशनः ॥ १२ ॥
व्योमनाथस्तमोभेदी ऋग्यजुस्सामपारगः। घनवृष्टिरपां मित्रो विन्ध्यवीथीप्लवङ्गमः ॥ १३ ॥

तपनः। भासः करोतीति भास्करः। रूयते स्तूयते सर्वैरिति रविः। "अच इः" इतीप्रत्ययः। दिवा अग्निर्गर्भे यस्यासावग्निगर्भः। "उद्यन्तं वावादित्यमग्निरनुसमारोहति" इति श्रुतेः। अदितेःपुत्रः अदितेः पुत्रत्वेनावतीर्णः। शाम्यति स्वयमेव सायंकाल इति शङ्खः। "शमेः खः"। शिशिरं हिमं नाशयतीति शिशिरनाशनः ॥ १२ ॥ व्योम्नो नाथो व्योमनाथः। तमः राहुं भेत्तुं शीलमस्यास्तीति तमोभेदी। ऋग्यजुस्साम्नां पारं गच्छतीति

भवत्यस्मादिति शम्भुः "विश्वाक्षं विश्वशंभुवम्" इति श्रुतेः। त्वष्टा त्वक्ष्णोति त्रिस्सप्तकृत्वः सक्षत्रियां भुवमिति त्वष्टा "तक्षू त्वक्षू तनूकरणे" इति धातुः अनेन परशुरामावतार उक्तः। मार्तण्डः मृतम् अचेतनं ब्रह्माण्डं जीवयतीति मार्तण्डः "जीवाजीवमजीवयत्" इति श्रीभागवतोक्तेः। अंशुमान् अन्तर्बहिर्व्याप्तिमान् "अशू व्याप्तौ" इति धातुः। "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुतेः ॥ ११ ॥ हिरण्यगर्भः हिरण्यं सकलजगदुत्पादकसमष्टिजीवजातं तत् गर्भे यस्य सः। "हिरण्यगर्भस्समवर्तताग्रे" 'हिरण्यगर्भो भूगर्भः' इति श्रवणात्। शिशिरः तापत्रयतप्तानां विश्रमस्थानत्वात् शिशिरः। तपनः स्वाश्रितविरोधिनां तापकारीत्यर्थः। "तप सन्तापे" इति धातुः। भास्करः सर्ववस्तुसाक्षात्कारहेतुभूतः लोककर्ता। रविः रूयते स्तूयते सर्वैरिति रविः। रौत्युपादिशति वेदानिति वा रविः। "यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः। अग्निगर्भः अग्निः कालाग्निरुद्रो गर्भे यस्य सः अग्निगर्भः। "नारायणाद्रुद्रोऽजायत" इति श्रुतेः। अदितेःपुत्रः अदितेः पुमपत्यं पुरन्दरं त्रायत इति अदितेःपुत्रः। शङ्खः शं सुखं खे आकाशे हृदयाकाशे यस्य सः शङ्खः निरवधिकानन्दवानित्यर्थः। शिशिरनाशनः सूर्यरूपेण शिशिरं हिमं नाशयतीति तथा ॥ १२ ॥ व्योमनाथः व्योम्नो नाथः कर्ता। तामसाहङ्काररूपेण आकाशस्रष्टेत्यर्थः। "आत्मन आकाशः सम्भूतः" इति श्रुतेः। तमोभेदी तमः भक्तानां तमोगुणं भिनत्तीति तमोभेदी। ऋग्यजुस्सामपारगः सकलवेदपर्यवसानभूमिः "वेदैश्च सर्वैरहमेव वेद्यः" "ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥" इत्यादिवचनात्। घनवृष्टिः घना अधिका वृष्टिः सकलकर्मफलरूपा यस्मात्सः घनवृष्टिः। "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च।" "फलमत उपपत्तेः" इत्यादिप्रमाणात्। अपां मित्रः महार्णवशायी "यमन्तस्समुद्रे

ऋग्यजुस्सामपारगः । " ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः ॥ " इति श्रुतेः । घना वृष्टिर्यस्मादसौ घनवृष्टिः । "अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥ " इति स्मृतेः । अत एवापां मित्रः । पुँल्लिङ्गत्वमार्षम् । दक्षिणायने विन्ध्यो वीथी सञ्चारभूमिर्यस्यासौ विन्ध्यवीथिः । प्लुवं यथा तथा गच्छतीति प्लवङ्गमः । विन्ध्यवीथीप्लवङ्गम इत्येकपदत्वेन पाठे विन्ध्यवीथी गगनमार्गः ॥१३॥ आतपोऽस्यास्तीत्यातपी । मण्डलं वृत्ताकारो बिम्बोऽस्यास्तीति मण्डली । मृत्युः विरोधि

आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः । कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः ॥ १४ ॥
नक्षत्रग्रहताराणामधिपो विश्वभावनः । तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते ॥ १५ ॥

निवर्तकः । उदयसमये पिङ्गलवर्णत्वात् पिङ्गलः । सर्वानपि मध्याह्ने तापयतीति सर्वतापनः । कविः पण्डितः, व्याकरणादिसर्वशास्त्रप्रवर्तक इत्यर्थः । विश्वः विश्वनिर्वाहकः । महान्ति तेजांसि यस्य स महातेजाः । रक्तः सर्वेष्वनुरक्तः । सर्वेषां भवः संसारः उद्भवत्यस्मादिति सर्वभवोद्भवः ॥१४॥ नक्षत्राणां ग्रहाणां ताराणां चाधिपः । विश्वं भावयति स्थापयतीति विश्वभावनः । तेजसामग्न्यादीनां तेजसामपि तेजस्वी, प्रशस्ततेजाः । द्वादश आत्मानो मूर्तयो यस्य स द्वादशात्मा । ते च दर्शिताः स्मृतौ—" इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणोऽर्यमा । आर्चिर्विवस्वान् त्वष्टा च सविता विष्णुरेव च ॥ " इति ।

कवयो वयन्ति " इत्यादिश्रुतेः । विन्ध्यवीथीप्लवङ्गमः विन्ध्यवद्दुर्गमायां वीथ्यां सुषुम्णामार्गेण प्लवं शीघ्रं गमयतीति विन्ध्यवीथीप्लवङ्गमः, मुक्तप्रापक इत्यर्थः । " स एतान् ब्रह्म गमयति । हार्दानुगृहीतश्शताधिकया " इत्यादिश्रवणात् ॥ १३ ॥ आतपी आ समन्तात्तपो जगन्निर्माणसङ्कल्पोऽस्यास्तीति आतपी " तप आलोचने " इति धातुः । " यस्य ज्ञानमयं तपः " इत्यादिश्रुतेः । मण्डली मण्ड्यतेऽनेनेति मण्डलं कौस्तुभादि तदस्यास्तीति मण्डली । " मडि भूषायाम् " इति धातुः । मृत्युः अत्र मृत्युशब्दः प्रकृतिवाची, मृत्युशरीरक इत्यर्थः । " यस्य मृत्युः शरीरम् " इति श्रुतेः । पिङ्गलः पिङ्गति मिलतीति पिङ्गलः । " पिङ्ग मेलने " इति धातुः । मेलनं सुशीलस्यैव सम्भवति, अतः पिङ्गलः । सौशील्यं नाम महात्मनो मूढैः सह नीरन्ध्रेण संश्लेषः । सर्वतापनः युगपत्सकलाण्डसंहारकः । कविः विदिताखिलवेद्यः " यः सर्वज्ञः सर्ववित् " इति श्रुतेः । विश्वः विश्वशरीरकः " विश्वमेवेदं पुरुषः " इति श्रुतेः । महातेजाः महत् निरवधिकं तेजः पराभिभवनसामर्थ्यं यस्य सः । रक्तः सर्वरञ्जकः । सर्वभवोद्भवः भवतीति भवः कार्यवर्गः, सर्वोत्पत्तिहेतुरित्यर्थः । यद्वा सर्वेषां भवः संसारो यस्माद्दुद्भवति स तथा ॥ १४ ॥ नक्षत्रग्रहताराणामधिपः नक्षत्रग्रहताराणामन्तर्यामीत्यर्थः । " यश्चन्द्रतारकमन्तरो यमयति " इत्यादिश्रुतेः । विश्वभावनः विश्वस्थितिहेतुः " द्यौः सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः । वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ " इति श्रवणात् । तेजसामपि तेजस्वी प्रशस्ततेजस्क इत्यर्थः । " येन सूर्य

एवंभूतस्त्वमसि अतस्तुभ्यं नम इति योजना ॥ १६ ॥ नमः पूर्वायेत्यादिश्लोकषट्कमेकान्वयम् । पूर्वाय गिरये पूर्वभागस्थगिर्युपलक्षिताय । पश्चिमे गिरये पश्चिमभागस्थपर्वतोपलक्षिताय । जयाय उपासकानां जयकराय । जयतीति जयः जयो तस्मा इति वा । जयभद्राय जयभद्रयोः प्रदात्रे । हर्यश्वाय श्यामाश्वाय । अत्र स्तुतित्वान्न पुनरुक्तिश्चिन्त्या । आदरातिशयेन नमःशब्दस्य द्विरुक्तिः ॥ १६ ॥ १७ ॥ उग्राय अनुपासकानामुग्राय । विविध

नमः पूर्वाय गिरये पश्चिमे गिरये नमः । ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥ १६ ॥
जयाय जयभद्राय हर्यश्वाय नमो नमः । नमो नमः सहस्रांशो आदित्याय नमो नमः ॥ १७ ॥
नम उग्राय वीराय सारङ्गाय नमो नमः । नमः पद्मप्रबोधाय मार्ताण्डाय नमो नमः ॥ १८ ॥
ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे । भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥ १९ ॥

मीरयति प्रेरयति प्राणिनश्चेष्टयतीति वीरः तस्मै । सारं शीघ्रं गच्छतीति सारङ्गः तस्मै । एकेन निमिषार्धेन द्विसहस्रयोजनं गच्छतीति पुराणप्रसिद्धिः ॥ १८ ॥ ब्रह्मेशानाच्युतेशाय ब्रह्मेशानाच्युतानां सृष्टिसंहारस्थितिकर्तॄणामीशाय । परब्रह्मरूपत्वेन स्तूयते " असावादित्यो ब्रह्म " इति श्रुतिः । अथवा ब्रह्मेशानयोः ब्रह्मरुद्रयोः अच्युतेशः अच्युतनियन्ता, सर्वापत्स्वपि पालक इत्यर्थः । वेदापहारगुरुपातकदैत्यपीडाद्यापद्विमोचनमहिष्टफल प्रदातेत्यर्थः । ब्रह्मेशायाच्युतेशायेत्यपि पाठः, तस्मै । आदित्यरूपं वर्चो दीप्तिर्यस्य तस्मै आदित्यवर्चसे । भा अस्यास्तीति भास्वान् तस्मै । सर्व भक्षाय सर्वसंहर्त्रे । अत एव तस्मिन्समये रौद्राय वपुषे ॥ १९ ॥

॥१५॥ पूर्वाय गिरये श्रीविष्णु स्नपति तेजसेद्धः " इति श्रुतेः । " सुर्यस्यापि भवेत्सूर्यः" इत्युक्तत्वाच्च । द्वादशात्मन् द्वादशमण्डलान्तर्वर्तिन् ! ते तुभ्यं नमोऽस्तु पुराणोक्ततत्तद्गिर्यन्तर्यामिण इत्यर्थः । ज्योतिर्गणानां पतये ज्योतिर्गणानां मुक्तानां पतये स्वामिने । सूर्यपर्यायनामानि सर्वाण्यपि तदन्तर्यामिपर्यवसितानीति हृदि निधायाह दिनाधिपतय इति ॥ १६ ॥ जयाय जयतीति जयः अप्रतिहतपराक्रमः तस्मै । जयन्त्यनेन सद्भक्तास्संसारमिति वा जयः । जयभद्राय उपासकानां रोगपापादिजयं भद्रं कल्याणं च प्रयच्छतीति जयभद्रः । हर्यश्वाय हरिः हनुमान् अश्वः वाहनं यस्य सः । अनेन रामावतारस्सूचितः । आदरातिशयेन नमःपदस्य द्विरुक्तिः । सहस्रांशो सहस्राण्यंशवो जीवा यस्य सः सहस्रांशुः " ममैवांशो जीवलोके जीवभूतः " इति स्मरणात् ॥ १७ ॥ उग्राय अनुपासकाना मुग्ररूपाय । वीराय विविधम् ईरयति प्रेरयति प्राणिनश्चेष्टयतीति वीरः तस्मै । सारङ्गाय सारं शीघ्रं गच्छतीति सारङ्गः । यद्वा सारग्राहिणे । यद्वा हंसावताराय । यद्वा सारं प्रणवः तेन प्रतिपाद्यत इति सारङ्गः ॥ १८ ॥ ब्रह्मेशानाच्युतेशाय ब्रह्मेशानाच्युतानां सृष्टिसंहारस्थितिकर्तॄणामीशः स्वामी परब्रह्मणस्तादृशत्वात् ". सृष्टि

तमः अन्धकारं हन्तीति तमोघ्नः । आश्रितशत्रून् हन्तीति शत्रुघ्नः । अमितः अपरिच्छिन्नः आत्मा स्वरूपं यस्यासौ अमितात्मा । कृतघ्नं हन्तीति कृतघ्नघ्नः । देवाय दीप्यमानाय॥२०॥ तप्तचामीकराभाय हिरण्यवपुषे । वह्नये अग्निरूपेण हव्यवाहनाय । विश्वं जगत् कर्म कर्तव्यं यस्य तस्मै विश्वकर्मणे । सर्वजगत्कर्त्रे इत्यर्थः । लोकसाक्षिणे लोकानां जनानाम् अन्तर्यामितया सुकृतदुष्कृतकर्मसाक्षिणे ॥ २१ ॥ एवमादित्यहृदयमुपदिश्य पुनरपि तत्प्रतिपाद्यदेवतां

**तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने । कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥ २० ॥**
**तप्तचामीकराभाय वह्नये विश्वकर्मणे । नमस्तमोभिनिघ्नाय रुचये लोकसाक्षिणे ॥ २१ ॥**
**नाशयत्येष वै भूतं तदेव सृजति प्रभुः । पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥ २२ ॥**
**एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः । एष एवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥ २३ ॥**

स्तौति–नाशयतीत्यादिना श्लोकत्रयेण । भवतीति भूतं जगत् नाशयति, महाप्रलये पुनस्तदेव सृजति । अत्ययकालनिवृत्तौ प्रभुः पालकः । पालकत्वमेव प्रपञ्चयति–पायतीति । पायति शोषयति । " पै शोषणे " इति धातुः ॥ २२ ॥ एष इति । सुप्तेषु भूतेषु प्राणिषु परिनिष्ठितः अन्तर्यामित्वेन

स्थित्यन्तकरिणीं ब्रह्मविष्णुशिवात्मिकाम् । संज्ञां स याति भगवानेक एव जनार्दनः ॥ " इति स्मरणात् । सर्वभक्षाय सर्वयज्ञभोक्त्रे सर्वसंहर्त्रे वा । "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः " इति श्रुतेः । शत्रुसंहारार्थं रौद्राय वपुषे । अनेन नृसिंहावतारस्सूचितः ॥ १९ ॥ शत्रुघ्नाय शत्रुसंहर्त्रे, निगृहीतहृषीकायेत्यर्थः । अमितात्मने अपरिमितमहिम्ने । कृतघ्नान् हन्तीति कृतघ्नघ्नः तस्मै । देवाय स्वयंप्रकाशाय ॥ २० ॥ तप्तचामीकराभाय हिरण्मयपुरुषाय । वह्नये "वसूनां पावकः" इति स्मरणात् । हरये इति पाठे हरत्यशेषमज्ञानं तत्कार्यमिति हरिः । विश्वकर्मणे विश्वं कर्म कार्यं यस्य सः " सर्वकर्मा सर्वकामः " इति श्रुतेः । तमोभिनिघ्नाय अज्ञाननाशकाय । रुचये रोचत इति रुचिः तस्मै । घृणये लोकसाक्षिणे इति पाठे " घृ क्षरणदीप्त्योः " इति धातोः स्वयंप्रकाशैकतानत्वात् घृणिः । लोकसाक्षिणे सर्वसाक्षिणे । 'सर्वदेवात्मको ह्येषः' इत्यारभ्य घृणये लोकसाक्षिणे इत्येतदन्ता अष्टोत्तरशतसङ्ख्या आदित्यहृदयस्तोत्रनाममन्त्रा वेदितव्याः [ पञ्चविंशत्युत्तरशतसंख्या भगवत्पूजारहस्यनाममन्त्रा इति कतकः ] ॥ २१ ॥ पुनरपि श्लोकत्रयेण तमेव स्तौति । जगज्जन्मादिकर्तृत्वमाह–नाशयत्येष इति ॥ २२ ॥ स्वप्नद्रष्टृत्वमाह–एष सुप्तेष्विति । भूतेषु परिनिष्ठितः अतो अन्तर्यामितया स्थितः सुप्तेषु जागर्ति भूतानां सुषुप्तिदशायां स्वयंप्रकाश इत्यर्थः । इदानीं सकलयज्ञभोक्तृत्वफलप्रदत्वान्याह–एष चैवाग्निहोत्रं च फलं चैवाग्निहोत्रिणामिति ॥ २३ ॥

स्थितः जागर्ति । सकलयज्ञकर्तृत्वफलप्रदत्वान्याह— एष इति ॥ २३ ॥ वेदवेद्यत्वमाह—वेदा इति । सर्वकर्मसमाराध्यत्वमाह क्रतव इति । क्रतुफलप्रदत्व माह क्रतूनामिति । लौकिककर्मफलप्रदत्वमाह यानीति । तेषामिति शेषः । सर्वः सर्वात्मको रविरेव प्रभुः नियन्ता ॥ २४ ॥ इदानीं स्तोत्रस्य फल माह—एनमिति । कृच्छ्रेषु कष्टेषु । कान्तारेषु दुर्गममार्गेषु । भयेषु भयहेतुषु सत्सु । कश्चिदित्यधिकारिनियमाभावो दर्शितः ॥ २५–२७ ॥ एतच्छ्रुत्वे

वेदाश्च क्रतवश्चैव क्रतूनां फलमेव च । यानि कृत्यानि लोकेषु सर्व एष रविः प्रभुः ॥ २४ ॥ एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च । कीर्तयन् पुरुषः कश्चिन्नावसीदति राघव ॥ २५ ॥ पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् । एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ॥ २६ ॥ अस्मिन् क्षणे महाबाहो रावणं त्वं वधिष्यसि । एवमुक्त्वा तदाऽगस्त्यो जगाम च यथागतम् ॥ २७ ॥ एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा । धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥२८॥ आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान् । त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥ २९ ॥ रावणं प्रेक्ष्य हृष्टात्मा युद्धाय समुपागमत् । सर्वयत्नेन महता वधे तस्य धृतोऽभवत् ॥ ३० ॥ अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः । निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वच स्त्वरेति ॥३१॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

त्यादिश्लोकद्वयमेकान्वयम् । त्रिराचम्येत्यन्त्याचमनमाद्याचमनस्याप्युपलक्षणम् । धारयामास, जप्त्वेत्यत्र आदित्यहृदयमिति शेषः ॥ २८ ॥ २९ ॥ रावणमिति । युद्धाय युद्धं कर्तुम् । "तुमर्थाच्च भाववचनात्" इति चतुर्थी । सर्वयत्नेन सर्वप्रकारेण यत्नेन ॥ ३० ॥ अथेति । प्रहृष्यमाणः प्रहृष्यन्, पुलकित इति यावत् । निशिचरपतिरिति । "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक् । रविः आत्मानं स्तुवन्तं रामं निरीक्ष्य मुदितमनाः स्तोत्रेण सन्तुष्टमनाः प्रहृष्यमाणस्सन् निशिचरपतेः संक्षयं विदित्वा अनुगृह्य सुरगणमध्यगतस्सन्, त्वर रावणवधं प्रति त्वरस्वेति वचोऽवदत् ।

सर्वापन्निवारकत्वमाह—एनमापत्स्विति वेदवेद्यत्वमाह—वेदा इति । कर्माराध्यत्वमाह क्रतव इति । सर्वकर्माधिष्ठातृत्वमाह यानि कृत्यानीति ॥ २४ ॥ ॥ २५ ॥ पूजयस्वेति । एनम्, आदित्यहृदयमिति शेषः ॥ २६–२९ ॥ सर्वयत्नेनेति । धृतोऽभवत्, दृढनिश्चयं कृतवान् ॥३०॥ अथ रविरिति । ए॰ निरीक्ष्य मुदित

अत्र सुरगणमध्यगत इत्यनेन युद्धदर्शनार्थं स्वमण्डलादवतीर्य रामसमीपे गगने स्थित्वा स्तोत्रफलमनुगृहीतवानित्युच्यते। ननूत्तरत्र ब्रह्मरुद्रादयः सर्वे एकवाक्यतया "भवान्नारायणो देवः" इत्यादिना विष्णोरेव सर्वस्मात् परत्वं महता ग्रन्थेन प्रतिपादितवन्तः, अत्र सूर्यस्यैव सर्वोत्तरत्वमुच्यते, कथमिदं सङ्गच्छते ? उच्यते—यथा मधुविद्यायामादित्यस्य परतया प्रतिपादनेऽपि तदन्तर्यामिण्येव परमात्मनि मधुविद्यायास्तात्पर्यमिति बादरायणो ब्रह्ममीमांसायामुक्तवान्, तथाऽस्य मन्त्रस्यादित्यान्तर्यामिविषयतया सर्वमिदं सङ्गच्छते। नारायणपरत्वं ह्युपक्रमप्रभृत्योपसंहारमविवादमिति पूर्वमेव बहुलं

स रथं सारथिर्हृष्टः परसैन्यप्रधर्षणम्। गन्धर्वनगराकारं समुच्छ्रितपताकिनम् ॥ १ ॥
युक्तं परमसम्पन्नैर्वाजिभिर्हेममालिभिः। युद्धोपकरणैः पूर्णं पताकाध्वजमालिनम् ॥ २ ॥

प्रतिपादितम्। ब्रह्मेशानाच्युतेशायेत्येतदपि मूर्तित्रयस्य परमात्मजन्यत्वादुपपद्यते। अयं च सर्गः केषुचित् कोशेषु न दृश्यते। उडारिणा न व्याख्यातश्च। आरम्भात्प्रभृति प्रबन्धप्रतिपादितनारायणपरत्वविरुद्धं चात्र प्रतिभाति सूर्यपरत्वम्। अस्मिंश्च काण्डे त्रिंशदुत्तरशतसर्गा उडारिणा गणिताः, एतदन्तर्भावे एकत्रिंशदुत्तरशतसर्गास्तेन गणिता भवेयुः॥३१॥ इति श्रीगोविन्द० श्रीरामायणभू० रत्न० युद्धकाण्ड० सप्तोत्तरशततमः सर्गः ॥१०७॥ अथ रावणदुर्निमित्तानि—स रथमित्यादिसार्धश्लोकत्रयमेकान्वयम्। अत्र द्वितीयसारथिशब्दः अनेकविशेषणव्यवधानात्, पूर्वोक्ताविस्मरणाय। गन्धर्वनगराकारं गन्धर्वनगरसदृशम्। तल्लक्षणमुक्तं मिहिरेण—"चित्रवर्णं चित्ररूपप्राकारगृहगोपुरम्। अलंकृतमनेकाभैर्वितानध्वजतोरणैः। गन्धर्वनगरं दन्तिनृवाजिक्षययुद्धकृत्। दृश्यते चेन्महद्युद्धमन्योन्यं धरणीभुजाम् ॥" इति ॥१॥ युद्धोपकरणैः धनुःकवचादिभिः। पताकायुक्ताः ध्वजाः तैर्मालन्त इति

मनाः परमं प्रहृष्यमाणः प्रहृष्यन्, पुलकित इत्यर्थः। निशिचरपतिसंक्षयं रावणविनाशं विदित्वा निश्चित्य सुरगणमध्यगतस्सन् त्वरेति वचः अवददिति सम्बन्धः। अत्र सुरगणमध्यगत इत्यनेन युद्धदर्शनार्थं स्वमण्डलादवतीर्य रामसमीपे गगने स्थित्वा त्वरेत्यवादीदित्यवगम्यते ॥३१॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां सप्तोत्तरशततमः सर्गः॥१०७॥ स रथमित्यादि सार्धश्लोकत्रयमेकं वाक्यम्। गन्धर्वनगराकारम्, अत्याश्चर्यकरमित्यर्थः। परमसम्पन्नैः परमजवसम्पन्नैः। समुच्छ्रितपताकिनमित्यनेन पताकानामौन्नत्यं कथितम्। पताकाध्वजमालिनमित्यनेन बाहुल्यं कथितम्, अतो न पुनरुक्तिः।



स०—परमेति भावप्रधानं परमत्वेन सम्पन्नैः उत्तमैः ॥ ति०—परमसम्पन्नैः परमैः रथवहनोचिताश्वगुणजवादिभिः सम्पन्नैः ॥ २ ॥

पताकाध्वजमाली तम् । " मल मल्ल धारणे " इत्यस्माण्णिनिः ॥ २ ॥ ग्रसन्तमिव । स्वविस्तारेणेति भावः । प्रणाशयतीति प्रणाशम् ॥ ३ ॥

रामानु०—पताकाध्वजमालिनं पताकायुक्तश्चासौ ध्वजश्च पताकाध्वजः, पताकाध्वजश्च मालाश्च पताकाध्वजमालं तदस्यास्तीति पताकाध्वजमाली तम् । रावणस्य रथं क्षिप्रं चोदयामास सारथिः इत्यत्र द्वितीयौ रथसारथिशब्दावनेकविशेषणव्यवधानात्पूर्वोक्ताविस्मरणार्थौ ॥ २ ॥ ३ ॥ तमिति । स्वनवन्तं शब्दवन्तम् । महास्वनं प्रतिध्वनियुक्तमित्यर्थः ॥ ४ ॥

ग्रसन्तमिव चाकाशं नादयन्तं वसुन्धराम् । प्रणाशं परसैन्यानां स्वसैन्यानां प्रहर्षणम् । रावणस्य रथं क्षिप्रं चोदयामास सारथिः ॥ ३ ॥ तमापतन्तं सहसा स्वनवन्तं महास्वनम् । रथं राक्षसराजस्य नरराजो ददर्श ह ॥ ४ ॥ कृष्णवाजिसमायुक्तं युक्तं रौद्रेण वर्चसा । तडित्पताकागहनं दर्शितेन्द्रायुधायुधम् ॥ ५ ॥ शरधारा विमुञ्चन्तं धारासारमिवाम्बुदम् । तं दृष्ट्वा मेघसङ्काशमापतन्तं रथं रिपोः ॥ ६ ॥ गिरेर्वज्राभिमृष्टस्य दीर्यतः सदृशस्वनम् । विस्फारयन् वै वेगेन बालचन्द्रनतं धनुः ॥ ७ ॥ उवाच मातलिं रामः सहस्राक्षस्य सारथिम् ॥ ८ ॥ मातले पश्य संरब्धमापतन्तं रथं रिपोः ॥ ९ ॥ यथाऽऽपसव्यं पतता वेगेन महता पुनः । समरे हन्तुमात्मानं तथा तेन कृता मतिः ॥ १० ॥

कृष्णवाजिसमायुक्तमित्यादिसार्धश्लोकत्रयमेकान्वयम् । रौद्रेण उग्रेण । तडित्पताकागहनं तडित्तुल्यपताकावनम् । दर्शितेन्द्रायुधायुधं दर्शितानीन्द्रायुधसदृशानि आयुधानि येन तम् । यद्वा दर्शितेन्द्रायुधानि स्वप्रभाविशेषविरचितेन्द्रचापान्यायुधानि यस्मिन् दृश्यन्ते तादृशम् । यद्वा आयुधं धनुः दर्शितेन्द्रधनुस्तुल्यधनुष्कम् ॥ ५ ॥ धारासारं धारासमूहमित्यर्थः ॥ ६ ॥ वज्राभिमृष्टस्य वज्राहतस्य । अत एव दीर्यतः भिद्यमानस्य । बालचन्द्रनतम् आरोपितमौर्वीकत्वेन बालचन्द्रवन्नतम् ॥ ७ ॥ ८ ॥ मातले इत्यर्धमेकं वाक्यम् । संरब्धं वेगवन्तम् ॥ ९ ॥ यथापसव्यमिति । यथा आ अपसव्य

तादृशं रावणस्य रथं क्षिप्रं चोदयामास सारथिरिति सम्बन्धः । द्वितीयस्सारथिशब्दः अनेकविशेषणव्यवधानात् पूर्वोक्तस्मरणार्थः ॥ १–४ ॥ कृष्णेति । तडित्पताकागहनं तडित्तुल्याभिः पताकाभिः गहनं सङ्कीर्णम् । दर्शितेन्द्रायुधायुधं दर्शितानि इन्द्रायुधानि इन्द्रायुधसदृशान्यायुधानि येन तम् ॥ ५ ॥ ६ ॥ वज्राभिमृष्टस्य वज्राभिहतस्य ॥ ७–९ ॥ अपसव्यं यथा तथा आपतना तेनेति सम्बन्धः ॥ १० ॥

स०—सारथिर्मातलिः यं रथं चोदयामास तं प्रति रावणस्य सारथिः [illegible] उभयोरफलः ॥ ३ ॥

मिति छेदः। अपसव्यम् अप्रदक्षिणं यथा स्यात्तथा महता वेगेन पुनः आपतता आगच्छता तेन रावणेन समरे आत्मानं हन्तुं मतिः कृता। अपसव्य तया गमनं विनाशद्योतकमित्यर्थः ॥ १० ॥ तत् अपसव्यगमनस्य विनाशहेतुत्वात्, अप्रमादमातिष्ठन् सावधानतामवलम्बमानः, अपसव्यतां परिहर न्नित्यर्थः। रिपोः रथं प्रत्युद्गच्छ ॥ ११ ॥ अविक्लवम् अदीनम्। असम्भ्रान्तम् अप्रमादम्। अव्यग्रहृदयेक्षणम् अव्याकुलमनोनयनम्। रश्मिसञ्चार





तदप्रमादमातिष्ठन् प्रत्युद्गच्छ रथं रिपोः। विध्वंसयितुमिच्छामि वायुर्मेघमिवोत्थितम् ॥११॥ अविक्लवमसम्भ्रान्त मव्यग्रहृदयेक्षणम्। रश्मिसञ्चारनियतं प्रचोदय रथं द्रुतम् ॥ १२ ॥ कामं न त्वं समाधेयः पुरन्दररथोचितः। युयुत्सुरहमेकाग्रः स्मारये त्वां न शिक्षये ॥ १३ ॥ परितुष्टः स रामस्य तेन वाक्येन मातलिः। प्रचोदयामास रथं सुरसारथिसत्तमः ॥ १४ ॥ अपसव्यं ततः कुर्वन् रावणस्य महारथम्। चक्रोत्क्षिप्तेन रजसा रावणं व्यवधानयत् ॥ १५ ॥ ततः क्रुद्धो दशग्रीवस्ताम्रविस्फारितेक्षणः। रथप्रतिमुखं रामं सायकैरवधूनयत् ॥ १६ ॥ धर्षणामर्षितो रामो धैर्यं रोषेण लम्भयन्। जग्राह सुमहावेगमैन्द्रं युधि शरासनम्। शरांश्च सुमहातेजाः सूर्यरश्मिसमप्रभान् ॥ १७ ॥ तदोपोढं महद्युद्धमन्योन्यवधकांक्षिणोः। परस्पराभिमुखयोर्दृप्तयोरिव सिंहयोः ॥ १८ ॥

नियतं नियतरश्मिसञ्चारम्। एतानि क्रियाविशेषणानि ॥ १२ ॥ काममिति। न समाधेयः नोपदेष्टव्यः। अत्र हेतुः पुरन्दररथोचित इति। अभ्यस्त पुरन्दररथ इत्यर्थः ॥ १३ ॥ १४ ॥ अपसव्यमिति। रावणस्य महारथमपसव्यं कुर्वन् स्वरथस्यापसव्यतां परिहरन्नित्यर्थः। चक्रोत्क्षिप्तेन रथचक्रो त्थापितेन रजसा, रावणं व्यवधानयत् व्यवहितमकरोत् ॥ १५ ॥ रथप्रतिमुखं सर्वथाऽभिमुखम्, अवधूनयत् प्राहरत् ॥ १६ ॥ धर्षणेत्यादिसार्धश्लोक मेकं वाक्यम्। धैर्यं रोषेण लम्भयन् रोषेण निवृत्तधैर्यं इत्यर्थः। ऐन्द्रं मातलिनाऽऽनीतं शरासनं शरांश्च जग्राहेति योजना ॥१७॥ उपोढं प्रवृत्तम्॥१८॥

तदप्रमादमातिष्ठन् प्रत्युद्गच्छ ॥ ११ ॥ अविक्लवमिति क्रियाविशेषणम्। अविक्लवम् अकातरम्। असम्भ्रान्तम् भ्रान्तिरहितम्। अव्यग्रहृदयेक्षणम् अव्यग्रे हृदय दर्शने यथा तथा। रश्मिसञ्चारनियतं रश्मीनां सञ्चारे आकुञ्चनप्रसारे नियतं यथा तथा रथं प्रचोदयेति सम्बन्धः ॥१२॥ काममिति। न समाधेयः नोपदेष्टव्यः॥१३॥१४॥ चक्रोत्क्षिप्तेन रथचक्रोत्थितेन। व्यवधूनयत् चालयामास ॥ १५ ॥ १६ ॥ ऐन्द्रं शरासनम् "इदि परमैश्वर्ये" इति धातोरिन्द्रः परमात्मा, तदीयम् निजायुधं

द्वैरथं द्वाभ्यां रथाभ्यां प्रवर्तितं युद्धम् ॥ १९ ॥ समुत्पेतुरिति । अत्रोत्पातानां राघवजयसूचकत्वं रावणवधद्वारा ॥ २० ॥ देवः पर्जन्यः । मण्डलिनो वाताः वात्याः । अपसव्यम् अप्रदक्षिणम्, प्रचक्रमुः चेरुः ॥ २१ ॥ अस्य रावणस्य रथो येन मार्गेण याति स्म तेन मार्गेण महत् गृध्रकुलं नभःस्थले भ्रममाणं सत् प्रधावति स्म । अनेन रावणस्यासन्नमरणत्वं सूचितम् । तदुक्तं शकुनार्णवे–" आसन्नमृत्योर्निकटे चरन्ति गृध्रादयो मूर्ध्नि गृहोर्ध्व

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । समेयुर्द्वैरथं द्रष्टुं रावणक्षयकाङ्क्षिणः ॥ १९ ॥ समुत्पेतुरथोत्पाता दारुणा रोमहर्षणाः । रावणस्य विनाशाय राघवस्य जयाय च ॥ २० ॥ ववर्ष रुधिरं देवो रावणस्य रथोपरि । वाता मण्डलिनस्तीक्ष्णा ह्यपसव्यं प्रचक्रमुः ॥ २१ ॥ महद् गृध्रकुलं चास्य भ्रममाणं नभस्स्थले । येन येन रथो याति तेन तेन प्रधावति ॥ २२ ॥ सन्ध्यया चावृता लङ्का जपापुष्पनिकाशया । दृश्यते सम्प्रदीप्तेव दिवसेऽपि वसुन्धरा ॥ २३ ॥ सनिर्घाता महोल्काश्च सम्प्रचेरुर्महास्वनाः । विषादयंस्ते रक्षांसि रावणस्य तदाऽहिताः ॥ २४ ॥ रावणश्च यतस्तत्र सञ्चचाल वसुन्धरा । रक्षसां च प्रहरतां गृहीता इव बाहवः ॥ २५ ॥ ताम्राः पीताः सिताः श्वेताः पतिताः सूर्यरश्मयः । दृश्यन्ते रावणस्याङ्गे पर्वतस्येव धातवः ॥ २६ ॥

भागे" इति ॥ २२ ॥ जपापुष्पनिकाशया सन्ध्यया लङ्का आवृता । अत एव वसुन्धरा लङ्कापर्यन्तभूमिः रात्रावग्निना संप्रदीप्तेव दिवसेऽपि सम्प्रदीप्ता दृश्यत इत्यर्थः ॥ २३ ॥ सनिर्घाता महोल्काः सम्प्रचेरुः । ते उल्काः । लिङ्गव्यत्ययः । रावणस्याहिताः प्रतिकूलाः सन्तः रक्षांसि विषादयन् व्यथादयन् ॥ २४ ॥ रामानु०–विषादयन् विषादयन्त्यः ॥ २४ ॥ यतः यत्र रावणो गतः तत्र वसुन्धरा सञ्चचाल, रावणसमीप एव भूकम्पो जात इत्यर्थः । गृहीता इव बाहवः, कैश्चिद्गृहीता बाहवो यथा प्रहर्तुं न क्षमन्ते तथाऽभूवन्नित्यर्थः ॥ २५ ॥ ताम्रा इति । सिताः अश्वेताश्च सिताश्वेताः । पर्वतस्येवेति ।

जग्राहेत्यर्थः ॥ १७ ॥ १८ ॥ ततो देवा इति । द्वैरथं द्वाभ्यां रथाभ्यां प्रवर्तितं युद्धं द्वैरथम् ॥ १९ ॥ २० ॥ मण्डलिनः वाताः, वात्या इत्यर्थः ॥ २१ ॥ महदिति । गृध्रकुलस्य रावणरथानुगमनेन रावणस्यासन्नमरणत्वं सूचितम् । उक्तं च शकुनार्णवे–" आसन्नमृत्योर्निकटे चरन्ति गृध्रादयो मूर्ध्नि गृहोर्ध्वभागे " इति ॥ २२ ॥ जपापुष्पनिकाशया सन्ध्यया, अकालिकयेति शेषः । लङ्का वृता अत एव वसुन्धरा, लङ्कापर्यन्तभूमिः । रात्रावग्निना सम्प्रदीप्तेव दिवसेऽपि संप्रदीप्ता दृश्यत इत्यर्थः ॥ २३ ॥ विषादयन् विषादयन्त्यः ते रक्षांसि तानि रक्षांसि ॥ २४ ॥ [illegible] । प्रहरतां रक्षसां बाहव इव पर्वतस्य धातव इव च ताम्रादि

पर्वतस्याङ्के धातव इवेति योजना ॥ २६ ॥ गृध्रैरनुगताः गृध्रसहिता इत्यर्थः । शिवाः गोमायवः, मुखैर्ज्वलनं वमन्त्यः सत्यः अस्य रावणस्य मुखमीक्षन्त्यः, रावणाभिमुखा इत्यर्थः । संरब्धं कुपितम्, अशिवम् अमङ्गलं च यथा भवति तथा प्रणेदुः । गृध्राणां साहित्यमात्रम्, नतु ज्वलनवमनादिकम् ॥ २७ ॥ प्रतिकूलमिति । वायुः रणे पांसून् समाकिरन्, तेन तस्य रावणस्य दृष्टिविलोपनं दृष्टिप्रतिघातं कुर्वन्, प्रतिकूलम् अभिमुखं ववौ ॥ २८ ॥

गृध्रैरनुगताश्चास्य वमन्त्यो ज्वलनं मुखैः । प्रणेदुर्मुखमीक्षन्त्यः संरब्धमशिवं शिवाः ॥ २७ ॥ प्रतिकूलं ववौ वायू रणे पांसून् समाकिरन् । तस्य राक्षसराजस्य कुर्वन् दृष्टिविलोपनम् ॥ २८ ॥ निपेतुरिन्द्राशनयः सैन्ये चास्य समन्ततः । दुर्विषह्यस्वना घोरा विना जलधरस्वनम् ॥ २९ ॥ दिशश्च प्रदिशः सर्वा बभूवुस्तिमिरावृताः । पांसुवर्षेण महता दुर्दर्शं च नभोऽभवत् ॥ ३० ॥ कुर्वन्त्यः कलहं घोरं शारिकास्तद्रथं प्रति । निपेतुः शतशस्तत्र दारुणं दारुणारुताः ॥ ३१ ॥ जघनेभ्यः स्फुलिङ्गांश्च नेत्रेभ्योऽश्रूणि सन्ततम् । मुमुचुस्तस्य तुरगास्तुल्यमग्निं च वारि च ॥ ३२ ॥ एवंप्रकारा बहवः समुत्पाता भयावहाः । रावणस्य विनाशाय दारुणाः सम्प्रजज्ञिरे ॥ ३३ ॥ रामस्यापि निमित्तानि सौम्यानि च शुभानि च । बभूवुर्जयशंसीनि प्रादुर्भूतानि सर्वशः ॥ ३४ ॥ निमित्तानि च सौम्यानि राघवः स्वजयाय च । दृष्ट्वा परमसंहृष्टो हतं मेने च रावणम् ॥ ३५ ॥

इन्द्राशनयः उल्काशनयः । उल्काशन्योः स्वरूपमुक्तं मिहिरेण— "उल्का शिरसि विशाला निपतन्ती वर्धते च तनुपुच्छा । अशनिः स्वनेन महता युक्ता नृगजाश्वतरुपशुमुखेषु । निपतति विदारयन्ती धरातलं चक्रसंस्थाना ॥" इति ॥ २९ ॥ ३० ॥ रामानु०—दुर्दर्शं च नभोऽभवदिति पाठः ॥ ३० ॥ कुर्वन्त्य इति । तद्रथं प्रति तद्रथोपरि ॥ ३१ ॥ तुरगाः जघनेभ्यः स्फुलिङ्गान् नेत्रेभ्यः अश्रूणि च मुमुचुः । एवमग्निं च वारि च तुल्यं यथा भवति तथा मुमुचुः ॥ ३२ ॥ ३३ ॥ एवं रावणपराजयसूचकदुर्निमित्तान्युक्तानि, इदानीं रामजयसूचकनिमित्तान्याह—रामस्यापीति । सौम्यानि मनोज्ञानि । शुभानि शुभोदर्काणि । अत एव जयशंसीनि निमित्तानि प्रादुर्बभूवुः सत्तां लेभिरे । रामविषये किञ्चित्कारो हि सत्तालाभहेतुः ॥ ३४ ॥ जयाय निमित्तानि जयरूपाः सूर्यरश्मयः रावणस्याङ्के पतितास्सन्तो दृश्यन्त इति सम्बन्धः ॥ २५–३५ ॥

सूचकनिमित्तानीत्यर्थः ॥ ३५ ॥ तत इति । रणे आत्मगतानि आत्मार्थं प्रादुर्भूतानि । हर्षं पुलकं निर्वृतिं सुखं च जगाम ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

ततो निरीक्ष्यात्मगतानि राघवो रणे निमित्तानि निमित्तकोविदः। जगाम हर्षं च परां च निर्वृतिं चकार युद्धे ह्यधिकं च विक्रमम् ॥३६॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे अष्टोत्तरशततमः सर्गः ॥१०८॥

ततः प्रवृत्तं सुक्रूरं रामरावणयोस्तदा। सुमहद्द्वैरथं युद्धं सर्वलोकभयावहम् ॥ १ ॥ ततो राक्षससैन्यं च हरीणां च महद्बलम्। प्रगृहीतप्रहरणं निश्चेष्टं समतिष्ठत ॥ २ ॥ सम्प्रयुद्धौ ततो दृष्ट्वा बलवन्नरराक्षसौ। व्याक्षिप्तहृदयाः सर्वे परं विस्मयमागताः ॥३॥ नानाप्रहरणैर्व्यग्रैर्भुजैर्विस्मितबुद्धयः। सर्पन्तं प्रेक्ष्य सङ्ग्रामं नाभिजग्मुः परस्परम् ॥४॥ रक्षसां रावणं चापि वानराणां च राघवम्। पश्यतां विस्मिताक्षाणां सैन्यं चित्रमिवाबभौ ॥ ५ ॥ तौ तु तत्र निमित्तानि दृष्ट्वा रावणराघवौ। कृतबुद्धी स्थिरामर्षौ युयुधाते ह्यभीतवत् ॥ ६ ॥ जेतव्यमिति काकुत्स्थो मर्तव्यमिति रावणः। धृतौ स्ववीर्यसर्वस्वं युद्धेऽदर्शयतां तदा ॥ ७ ॥

ततः प्रवृत्तमित्यादि। द्वैरथं द्वाभ्यां रथाभ्यां प्रवृत्तं युद्धं प्रवृत्तमिति योजना ॥ १ ॥ निश्चेष्टं समतिष्ठत, युद्धाद्भुतदर्शनकुतूहलादिति भावः ॥ २ ॥ एतदेव विवृणोति द्वाभ्याम्—सम्प्रयुद्धावित्यादि। सम्प्रयुद्धौ सम्यग्योद्धुमुपक्रान्तौ। कर्मणि क्तः। बलवत् अत्यन्तम्, व्याक्षिप्तहृदयाः युद्धदर्शनसक्तचित्ताः ॥ ३ ॥ नानेति। भुजैरित्युपलक्षणे तृतीया ॥४॥ रावणं पश्यतां विस्मिताक्षाणां विकसितनेत्राणां रक्षसां सैन्यम्, राघवं पश्यतां विस्मिताक्षाणां वानराणां सैन्यं च चित्रमिवाबभौ ॥ ५ ॥ निमित्तानि दुर्निमित्तानि शुभनिमित्तानि चेत्यर्थः। कृतबुद्धी निश्चितबुद्धी ॥ ६ ॥ निश्चयमेवाह—जेतव्यमिति।

॥३६॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् अष्टोत्तरशततमः सर्गः ॥१०८॥ १ ॥ तत इति। निश्चेष्टं समतिष्ठत अत्यद्भुतयुद्धं दृष्ट्वेति भावः ॥ २ ॥ संप्रयुद्धौ सम्यग्योद्धुमुपक्रान्तौ ॥ ३ ॥ नानेति। भुजैरुपलक्षिताः सर्पन्तं समीपमागच्छन्तं प्रेक्ष्य प्रेक्ष्यापि विस्मयात्परस्परं नाभिजग्मुः, प्रहर्तुमिति शेषः ॥ ४ ॥ चित्रमिव चित्रालिखितमिव ॥५॥ कृतबुद्धी निश्चितबुद्धी। अभीतवत् अभीतावित्यर्थः ॥ ६ ॥ निश्चयप्रकारमेवाह—जेतव्यमिति।

जयोऽवश्यंभावीति। मर्तव्यमिति मरणमवश्यंभावीति। आवश्यकत्वार्थे तव्यः। धृतौ धैर्यवन्तौ ॥ ७ ॥ ८ ॥ रथशक्तिं रथबलम्, परामृश्य प्राप्य। रथशक्तिप्रघातेन ध्वजमनासाद्य निपेतुरित्यर्थः ॥ ९ ॥ [illegible]  [illegible]मित्यर्थः ॥ १० ॥ असह्यं दुर्दर्शमित्यर्थः ॥ ११ ॥ सः शरः ध्वजं छित्त्वा जगाम न तु केवलं जगाम ॥ १२ ॥ क्रोधादमर्षाच्च प्रदहन्निव प्रदहन्नग्निरिव, सम्प्रदीप्तः ज्वलितः अभवत् ॥ १३ ॥ शरवर्षं वमन्



ततः क्रोधाद्दशग्रीवः शरान् सन्धाय वीर्यवान्। मुमोच ध्वजमुद्दिश्य राघवस्य रथे स्थितम् ॥ ८ ॥ ते शरास्त मनासाद्य पुरन्दररथध्वजम्। रथशक्तिं परामृश्य निपेतुर्धरणीतले ॥ ९ ॥ ततो रामोऽभिसंक्रुद्धश्चापमायम्य वीर्यवान्। कृतप्रतिकृतं कर्तुं मनसा सम्प्रचक्रमे ॥ १० ॥ रावणध्वजमुद्दिश्य मुमोच निशितं शरम्। महासर्पमिवासह्यं ज्वलन्तं स्वेन तेजसा ॥ ११ ॥ जगाम स महीं छित्त्वा दशग्रीवध्वजं शरः। स निकृत्तोऽपतद्भूमौ रावणस्य रथध्वजः ॥१२॥ ध्वजस्योन्मथनं दृष्ट्वा रावणः सुमहाबलः। सम्प्रदीप्तोऽभवत् क्रोधादमर्षात् प्रदहन्निव ॥१३॥ स रोषवशमापन्नः शरवर्षं महद्वमन्। रामस्य तुरगान् दीप्तैः शरैर्विव्याध रावणः॥१४॥ ते विद्धा हरयस्तत्र नास्खलन्नापि बभ्रमुः। बभूवुः स्वस्थहृदयाः पद्मनालैरिवाहताः ॥१५॥ तेषामसम्भ्रमं दृष्ट्वा वाजिनां रावणस्तदा। भूय एव सुसंक्रुद्धः शरवर्षं मुमोच ह ॥ १६ ॥ गदाश्च परिघाश्चैव चक्राणि मुसलानि च। गिरिशृङ्गाणि वृक्षांश्च तथा शूलपरश्वधान् ॥ १७ ॥ मायाविहितमेतत्तु शस्त्रवर्षमपातयत्। तुमुलं त्रासजननं भीमं भीमप्रतिस्वनम् ॥ १८ ॥ तद्वर्षमभवद्युद्धे नैकशस्त्रमयं महत्। विमुच्य राघवरथं समन्ताद्वानरे बले ॥ १९ ॥

वमन्निवेत्यर्थः ॥ १४ ॥ हरयः हरितवर्णाः, इन्द्राश्वत्वादिति भावः ॥ १५ ॥ १६ ॥ गदाश्चेति। मुमोचेत्यनुषज्यते ॥ १७ ॥ धनुषा कथं गदादिमोचनमित्यत्राह–मायेति। शस्त्रवर्षं गदादिवर्षम्। मायाविहितम् आश्चर्यकरशक्तिकृतम्। तुमुलं नानाविधमित्यर्थः ॥ १८ ॥ नैकशस्त्रमयम्



जयोऽवश्यम्भावीत्यर्थः ॥ ७ ॥ ८ ॥ ते शरा इति। रथशक्तं शक्तरथम्, दृढरथमिति यावत्। परामृश्य स्पृष्ट्वा। रथशक्तिमिति पाठे–दिव्यरथवैभवं रथावयवविशेषं वा ॥ ९–१२ ॥ ध्वजस्येति। अमर्षात् असहनात् ॥ १३–१८ ॥ तद्वर्षमिति। राघवरथं विमुच्य क्रोधातिशयेन प्रयुक्तत्वाल्लक्ष्यभूतं रामरथमतिक्रम्य

अनेकशस्त्रप्रचुरम्, तद्वर्षं क्रोधातिशयेन प्रयुक्तं रामशरैर्निवारणाल्लक्ष्यभूतं राघवरथं विमुच्य वानरबले अभवत्, तत्रापतदित्यर्थः ॥ १९ ॥
सायकैरित्यादिसार्धश्लोक एकान्वयः। ततः दशग्रीवः अश्रान्तहृदयोद्यमः अविच्छिन्नोत्साहस्सन्, निस्सङ्गेन अव्यासक्तेन, अन्तरात्मना मनसा उप
लक्षितः, सहस्रशो बाणान् मुमोच। सायकैरन्तारिक्षं च निरन्तरं चकार ॥ २० ॥ रामानु०—सायकैरन्तरिक्षं च चकाराशु निरन्तरम्। सहस्रशस्ततो बाणानश्रान्तहृदयो

सायकैरन्तरिक्षं च चकाराशु निरन्तरम्। सहस्रशस्ततो बाणानश्रान्तहृदयोद्यमः। मुमोच च दशग्रीवो निस्सङ्गेना
ऽन्तरात्मना ॥ २० ॥ व्यायच्छमानं तं दृष्ट्वा तत्परं रावणं रणे। प्रहसन्निव काकुत्स्थः सन्दधे सायकान् शितान्
॥ २१ ॥ स मुमोच ततो बाणान् रणे शतसहस्रशः। तान् दृष्ट्वा रावणश्चक्रे स्वशरैः खं निरन्तरम् ॥ २२ ॥
ततस्ताभ्यां प्रमुक्तेन शरवर्षेण भास्वता। शरबद्धमिवाभाति द्वितीयं भास्वदम्बरम् ॥२३॥ नानिमित्तोऽभवद्बाणो
नातिभेत्ता न निष्फलः ॥ २४ ॥ अन्योन्यमभिसंहत्य निपेतुर्धरणीतले। तथा विसृजतोर्बाणान् रामरावणयोर्मृधे
॥ २५ ॥ प्रायुद्ध्यतामविच्छिन्नमस्यन्तौ सव्यदक्षिणम्। चक्रतुश्च शरौघैस्तौ निरुच्छ्वासमिवाम्बरम् ॥ २६ ॥

द्यमः। मुमोच च दशग्रीवो निःसङ्गेनान्तरात्मनेति पाठक्रमः ॥ २० ॥ व्यायच्छमानं व्यायच्छन्तम्, यत्नं कुर्वन्तम्। रणे तत्परं सक्तम्। प्रहसन्निव सन्दधे अनाया
सेन सन्दधे ॥ २१ ॥ २२ ॥ शरवर्षेण भास्वत् अम्बरं शरबद्धं द्वितीयमम्बरमिवाभाति स्म ॥ २३ ॥ नानिमित्त इत्यर्धम्। अनिमित्तः लक्ष्यविशेषो
देशरहितः। अतिभेत्ता अपेक्षितप्रमाणादधिकभेत्ता। निष्फलः लक्ष्ये पतितोऽपि प्रयोजनाकारी ॥ २४ ॥ अन्योन्यमिति। तथा विसृजतोः उक्तप्रका
रेण विसृजतोः। अत्र बाणा इत्यध्याहार्यम् ॥ २५ ॥ अस्यन्तौ शरान् क्षिपन्तौ। इवशब्दो वाक्यालङ्कारे। निरुच्छ्वासम् उच्छ्वासावकाशरहितम् ॥२६॥

शरबद्धं
वानरे बले अभवदिति सम्बन्धः ॥ १९ ॥ निस्सङ्गेन प्राणाशासङ्गरहितेन ॥ २० ॥ व्यायच्छमानं व्यायच्छन्तम्, प्रवर्तयन्तमित्यर्थः ॥ २१ ॥ २२ ॥
शररचिताम्बरम् ॥ २३ ॥ अनिमित्तः अलक्षणः। अतिभेत्ता प्रहरणादधिकं भेत्ता। न निष्फलः लक्ष्ये पतितोऽपि निष्प्रयोजनश्च नाभवदित्यर्थः ॥ २४ ॥ २५ ॥
निरुच्छ्वासं नीरन्ध्रम् ॥ २६–२८ ॥

रावणस्येति । अत्र जघानेति वचनविपरिणामेनानुषज्यते । तौ अन्योन्यं कृतानुकृतकारिणौ कृतप्रतिक्रियाकारिणौ सन्तौ तथा जघ्नतुः । हय इवान्यत्रापि सारथ्यादौ जघ्नतुरित्यर्थः ॥ २७ ॥ २८ ॥ प्रयुध्यमानाविति । यदा बभूवतुरित्युपस्कार्यम् ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने नवोत्तरशततमः सर्गः ॥ १०९ ॥

रावणस्य हयान् रामो हयान् रामस्य रावणः । जघ्नतुस्तौ तथाऽन्योन्यं कृतानुकृतकारिणौ ॥ २७ ॥ एवं तौ तु सुसंक्रुद्धौ चक्रतुर्युद्धमद्भुतम् । मुहूर्तमभवद्युद्धं तुमुलं रोमहर्षणम् ॥ २८ ॥ प्रयुध्यमानौ समरे महाबलौ शितैः शरैः रावणलक्ष्मणाग्रजौ । ध्वजावपातेन स राक्षसाधिपो भृशं प्रचुक्रोध तदा रघूत्तमे ॥ २९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे नवोत्तरशततमः सर्गः ॥ १०९ ॥

तौ तदा युद्ध्यमानौ तु समरे रामरावणौ । ददृशुः सर्वभूतानि विस्मितेनान्तरात्मना ॥ १ ॥ अर्दयन्तौ तु समरे तयोस्तौ स्यन्दनोत्तमौ । परस्परमभिक्रुद्धौ परस्परमभिद्रुतौ ॥२॥ परस्परवधे युक्तौ घोररूपौ बभूवतुः । मण्डलानि च वीथीश्च गतप्रत्यागतानि च । दर्शयन्तौ बहुविधां सूतसारथ्यजां गतिम् ॥ ३ ॥

अथ रावणशिरश्छेदः—तौ तदेत्यादि । समरे युद्धभूमौ । तदा उत्पातकाले । अन्तरात्मना अन्तःकरणेन उपलक्षितानि ॥ १ ॥ अर्दयन्तावित्यादिसार्धश्लोकद्वयमेकान्वयम् । अर्दयन्तौ परस्परं पीडयन्तौ । रथयोः क्रोधादिकं रथिकद्वारा । मण्डलानि मण्डलगतीः । गतप्रत्यागतानि, शत्रुरथं प्रति गमनं गतम्, पुनः स्थानं प्रत्यागमनं प्रत्यागतम् तयोरावृत्त्या बहुवचनम् । एवंप्रकारेण बहुविधां सूतसारथ्यजां सूतस्य यत् सारथ्यं सारथिकर्म तज्जाम्, गतिं प्रयुद्ध्यमानावित्यत्र यदा बभूवतुरिति शेषः । तदा ध्वजावपातेन राक्षसाधिपो भृशं चुक्रोधेति सम्बन्धः ॥ २९ ॥ ( तुमुलं रोमहर्षणमित्येतदनन्तरं प्रयुध्यमानावित्येकं श्लोकं प्रक्षिप्यात्र सर्गावच्छेदं कुर्वन्ति, तदयुक्तम् । पश्चादपि तुमुलयुद्धस्यैव सत्त्वादेकप्रकरणत्वाच्च अनवच्छेदस्यैव बहुषु पुस्तकेषु दर्शनाच्चेति कतकः ॥ ) इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां नवोत्तरशततमः सर्गः ॥ १०९ ॥ १ ॥ २ ॥ दर्शयन्ताविति । सूतसारथ्यजां सूतकर्मनैपुण्यरूपाम् ॥ ३ ॥



स०—यौ परस्परमभिक्रुद्धौ परस्परवधे युक्तौ समरे अर्दयन्तौ रामरावणौ तयोस्स्यन्दनोत्तमावित्यन्वयः । मण्डलानि क्रोशन्तीतिवद्भोगो वा प्रयोगः । सारथ्यं तत्कर्म । सूतं सम्यक् सम्बद्धं चिराभ्यस्तमिति यावत् ॥ २ ॥ ३ ॥

सञ्चारं दर्शयन्तौ तयोः रथौ घोररूपौ बभूवतुः ॥२॥ ३॥ रावणमर्दयन् रामो राघवमर्दयन् रावणश्चोभौ प्रवर्तननिवर्तने तद्रूपं गतिवेगं समापन्नौ, बभूवतुरिति शेषः ॥ ४ ॥ सासारौ सजलधारौ ॥ ५ ॥ तथा गतिं पूर्वोक्तगतिभेदम् ॥६॥ धुरं युगम् । धुरेण । अकारान्तत्वमार्षम् । स्थितयोः युद्धे गतिं



अर्दयन् रावणं रामो राघवं चापि रावणः । गतिवेगं समापन्नौ प्रवर्तननिवर्तने ॥ ४ ॥ क्षिपतोः शरजालानि तयोस्तौ स्यन्दनोत्तमौ । चेरतुः संयुगमहीं सासारौ जलदौ यथा ॥ ५ ॥ दर्शयित्वा तथा तौ तु गतिं बहुविधां रणे । परस्परस्याभिमुखौ पुनरेवावतस्थतुः ॥६॥ धुरं धुरेण रथयोर्वक्त्रं वक्त्रेण वाजिनाम् । पताकाश्च पताकाभिः समेयुः स्थितयोस्तदा ॥७॥ रावणस्य ततो रामो धनुर्मुक्तैः शितैः शरैः । चतुर्भिश्चतुरो दीप्तैर्हयान् प्रत्यपसर्पयत् ॥८॥ स क्रोधवशमापन्नो हयानामपसर्पणे । मुमोच निशितान् बाणान् राघवाय निशाचरः ॥९॥ सोऽतिविद्धो बलवता दशग्रीवेण राघवः । जगाम न विकारं च न चापि व्यथितोऽभवत् ॥ १० ॥ चिक्षेप च पुनर्बाणान् वज्रपातसमस्वनान् । सारथिं वज्रहस्तस्य समुद्दिश्य निशाचरः ॥ ११ ॥ मातलेस्तु महावेगाः शरीरे पतिताः शराः । न सूक्ष्ममपि संमोहं व्यथां वा प्रददुर्युधि ॥ १२ ॥ तया धर्षणया क्रुद्धो मातलेर्न तथाऽऽत्मनः । चकार शरजालेन राघवो विमुखं रिपुम् ॥१३॥ विंशतं त्रिंशतं षष्टिं शतशोऽथ सहस्रशः । मुमोच राघवो वीरः सायकान् स्यन्दने रिपोः॥१४॥

विना स्थितयोः, तयोरिति शेषः ॥ ७ ॥ प्रत्यपसर्पयत् न्यवर्तयत् ॥ ८ ॥ स इति । अपसर्पणे विषये ॥ ९ ॥ विकारं वेदनासूचकमुखविकारम् ॥ १० ॥ वज्रपातः अशनिपातः ॥ ११ ॥ सूक्ष्मम् अल्पम् ॥ १२ ॥ यथा मातलेः तया धर्षणया क्रुद्धः तथा आत्मनो धर्षणया न क्रुद्धः । एवं क्रुद्धो रिपुं विमुखं चकार ॥१३॥ विंशतमिति । इकारलोपश्छान्दसः ॥ १४ ॥ रामानु०—मुमोच राघवो वीरः सायकान् स्यन्दने रिपोरित्यनन्तरम्—रावणोऽपि । गदामुसलवर्षेण । तत्प्रवृत्तं अर्दयन् पीडयन्, बभूवेति शेषः ॥ ४ ॥ सासारौ धारासम्पात आसारस्तत्सहितौ ॥५–७॥ रावणस्येति । प्रत्यपसर्पयत न्यवर्तयत ॥ ८–१२ ॥ ( ति०—मातलेर्व्यथां न प्रददुः देवत्वेन दिव्यशक्तिमत्त्वात, अपसर्पणकाले रावणेन प्रक्षिप्तानामतिवेधसामर्थ्याभावाच्च ॥ १२ ॥ ) तया मातलेर्धर्षणया यथा तथा आत्मनो धर्षणया स०—व्यथां न प्रददुः श्रीरामसान्निध्यात् ॥ यत्तु नागोजिभट्टेन देवत्वेन दिव्यशक्तिमत्त्वादपसर्पणकाले रावणेन प्रक्षिप्तानामतिवेधासामर्थ्याच्चेति व्याख्यातं तत् यदा इन्द्रादीनां दशाननदत्ता विपत्, तदा किया नयं यन्तेति वृत्ते सति समग्ररामायणं श्रुत्वापि मीता रामस्य किम्भाविनीत्याभाणकमनुकरोति ॥ १२ ॥

महद्युद्धम् इत्यर्धत्रयं द्रष्टव्यम् ॥ १४ ॥ रथस्थः रथे निश्चलतया स्थित इत्यर्थः ॥१५॥ ततः प्रवृत्तमित्यर्धमेकं वाक्यम् ॥१६॥ निस्वनैः, वेगजैरिति शेषः॥१७॥ क्षुब्धानामिति। क्षुब्धेषु सागरेष्वित्यर्थः ॥ १८–२२ ॥ गन्धर्वाप्सरसामित्यर्धानन्तरं गगनं गगनाकारमिति श्लोकः । तदनन्तरम् एवं ब्रुवन्त इत्यर्धम् ।



रावणोऽपि ततः क्रुद्धो रथस्थो राक्षसेश्वरः । गदामुसलवर्षेण रामं प्रत्यर्दयद्रणे ॥ १५ ॥ तत्प्रवृत्तं महद्युद्धं तुमुलं रोमहर्षणम् ॥ १६ ॥ गदानां मुसलानां च परिघाणां च निस्वनैः । शराणां पुङ्खपातैश्च क्षुभिताः सप्त सागराः ॥ १७ ॥ क्षुब्धानां सागराणां च पातालतलवासिनः । व्यथिताः पन्नगाः सर्वे दानवाश्च सहस्रशः ॥ १८ ॥ चकम्पे मेदिनी कृत्स्ना सशैलवनकानना । भास्करो निष्प्रभश्चासीन्न ववौ चापि मारुतः ॥ १९ ॥ ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । चिन्तामापेदिरे सर्वे सकिन्नरमहोरगाः ॥२०॥ स्वस्ति गोब्राह्मणेभ्यस्तु लोकास्तिष्ठन्तु शाश्वताः। जयतां राघवः सङ्ख्ये रावणं राक्षसेश्वरम् ॥ २१ ॥ एवं जपन्तोऽपश्यंस्ते देवाः सर्षिगणास्तदा । रामरावणयोर्युद्धं सुघोरं रोमहर्षणम् ॥ २२ ॥ गन्धर्वाप्सरसां सङ्घा दृष्ट्वा युद्धमनूपमम् ॥ २३ ॥ गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव । एवं ब्रुवन्तो ददृशुस्तद्युद्धं रामरावणम् ॥ २४ ॥

गन्धर्वाप्सरसां सङ्घाः अनूपमम् अनुपमम्, युद्धं दृष्ट्वा गगनं गगनाकारमित्येवं ब्रुवन्तस्सन्तः पुनर्ददृशुरित्यन्वयः । अनुपमत्वमेवाह—गगनमिति । यथा गगनसागरयोः सदृशवस्त्वन्तराभावः तथा रामरावणयुद्धस्य सदृशं युद्धं किंचिन्नास्तीत्यर्थः । सदृशान्तरनिवृत्तिफलकोऽनन्वयालङ्कारः । राम

न क्रुद्धः अत एव रिपुं विमुखं चकारेति सम्बन्धः ॥ १३–१७ ॥ क्षुब्धानामिति । सागराणां क्षुब्धानां सतां पातालतलवासिनो व्यथिताः, जाता इति शेषः ॥ १८–२१ ॥ एवमिति । जपन्तः वदन्तः ॥ २२ ॥ रामरावणानुपमयुद्धदर्शनविस्मितदेवादिजल्पनप्रकारमाह—गन्धर्वाप्सरसामित्यादि । श्लोकद्वयमेकं वाक्यम् । यथा गगनसागरयोस्सदृशवस्त्वन्तराभावाद्गगनं गगनेनैवोपमीयते सागरस्सागरेणैवोपमीयते तथैव रामरावणयुद्धं रामरावणयोर्युद्धमिवाभवदित्येवं ब्रुवन्तो गन्धर्वादयः रामरावणं रामरावणयोः सम्बन्धि तद्युद्धं ददृशुरित्यन्वयः । अनन्वयश्चात्रालङ्कारः । तदुक्तं काव्यप्रकाशिकायाम्—" एकस्यैवोपमानोपमेयत्वेऽनन्वयो मतः " इति । राहोश्शिर इतिवदभेदेऽपि भेदव्यवहारः ॥ २३ ॥ २४ ॥

रावणं रामरावणसम्बन्धि ॥ २३ ॥ २४ ॥ ततः क्रुद्ध इत्यादिसार्धश्लोकपञ्चकमेकं वाक्यम् । क्षुरं क्षुराग्रबाणम् ॥ २५ ॥ शिरः अच्छिन्दत् अच्छिनत् । एकवचनात्तदानीं रावण एकशिरा एव युद्धमकरोदिति गम्यते । अत एव वक्ष्यति–" विक्षिप्य दीर्घौ निश्चेष्टौ भुजावङ्गदभूषितौ" इत्यादिना ॥ २६ ॥ २७ ॥

ततः क्रुद्धो महाबाहू रघूणां कीर्तिवर्धनः । सन्धाय धनुषा रामः क्षुरमाशीविषोपमम् ॥ २५ ॥ रावणस्य शिरो ऽच्छिन्दच्छ्रीमज्ज्वलितकुण्डलम् । तच्छिरः पतितं भूमौ दृष्टं लोकैस्त्रिभिस्तदा ॥ २६ ॥ तस्यैव सदृशं चान्य द्रावणस्योत्थितं शिरः । तत् क्षिप्रं क्षिप्रहस्तेन रामेण क्षिप्रकारिणा ॥ २७ ॥ द्वितीयं रावणशिरश्छिन्नं संयति सायकैः । छिन्नमात्रं तु तच्छीर्षं पुनरन्यत् स्म दृश्यते ॥ २८ ॥ तदप्यशनिसङ्काशैश्छिन्नं रामेण सायकैः । एवमेकशतं छिन्नं शिरसां तुल्यवर्चसाम् ॥ २९ ॥ न चैव रावणस्यान्तो दृश्यते जीवितक्षये ॥ ३० ॥ ततः सर्वास्त्रविद्वीरः कौसल्यानन्दवर्धनः । मार्गणैर्बहुभिर्युक्तश्चिन्तयामास राघवः ॥ ३१ ॥

छिन्नमात्रं तु तच्छीर्षमिति । तच्छीर्षे छिन्ने तदानीमेवेत्यर्थः ॥ २८ ॥ एकशतं छिन्नम् एकोत्तरशतवारं छिन्नमित्यर्थः । पुनः पुनः शिरश्छेदनं चिरतृषितशरतृष्णानिवृत्त्यर्थम् ॥ २९ ॥ न चेति । जीवितक्षये विषये । अन्तः अवधिः निश्चयो वा । न दृश्यते नादृश्यत ॥ ३० ॥ ३१ ॥

तत इति । ततस्साम्यप्रत्यायकवचनश्रवणानन्तरं रावणस्य शिरः शिरांसि, जातावेकवचनम् । अछिन्दत् अच्छिनत् । " दशास्यो विंशतिभुजः प्रगृहीतशरासनः । अदृश्यत दशग्रीवो मैनाक इव पर्वतः ॥ " इति दशशिरस्सहितस्य योद्धृत्वाभिधानात् शिर इत्यत्र शिरांसीत्युक्तम् । प्रधानशिरो वा ॥ २५–२७ ॥ छिन्नमात्र इति । छिन्नमात्रे तच्छीर्षे तदानीमेव अन्यच्छिरोऽदृश्यतेति सम्बन्धः ॥ २८ ॥ एकशतम् एकोत्तरशतम्, एकोत्तरशतवारं छिन्नमित्यर्थः ॥ २९ ॥ न चेति । रावणस्य जीवितक्षये विषये अन्तो निश्चयो नैव दृश्यते इति ॥ ३०–३२ ॥

स०–शिरः एकवचनं जातावेकवचनमत्रोत्तरत्र च " दशास्यो विंशतिभुजः प्रगृहीतशरासनः । अदृश्यत दशग्रीवो मैनाक इव पर्वतः ॥ " इतीव ' तस्योत्तमाङ्गदशकं युगपन्न्यकृन्तत् कृत्तानि तानि पुनरेव समुत्थितानि " इत्याचार्यैरप्युक्तेः । पद्मपुराणे च–" दशग्रीवस्य चिच्छेद शिरांसि रघुनन्दनः । संमुत्थितानि बहुशो वरदानान्ममाम्बिके " इति ॥ २६ ॥

मारीच इत्यादिसार्धश्लोकद्वयमेकान्वयम् । क्रौञ्चावने कबन्धः, दण्डकावने विराध इत्यन्वयः ॥ ३२ ॥ प्रात्ययिकाः विश्वस्ताः । त इमे रावणे विषये मन्दतेजसः अल्पशक्तिकाः अभवन् । तत्कारणं किं नु, न जानामीति शेषः ॥ ३३–३५ ॥ तदिति ॥ त्रिकूटशिखरे युध्यतोस्तयोराग्रहकृतगतिवशेन



मारीचो निहतो यैस्तु खरो यैस्तु सदूषणः । क्रौञ्चावने विराधस्तु कबन्धो दण्डकावने ॥ ३२ ॥ यैः साला गिरयो भग्ना वाली च क्षुभितोऽम्बुधिः । त इमे सायकाः सर्वे युद्धे प्रात्ययिका मम । किं नु तत्कारणं येन रावणे मन्दतेजसः ॥ ३३ ॥ इति चिन्तापरश्चासीदप्रमत्तश्च संयुगे । ववर्ष शरवर्षाणि राघवो रावणोरसि ॥ ३४ ॥ रावणोऽपि ततः क्रुद्धो रथस्थो राक्षसेश्वरः । गदामुसलवर्षेण रामं प्रत्यर्दयद्रणे ॥ ३५ ॥ तत् प्रवृत्तं महद्युद्धं तुमुलं रोमहर्षणम् । अन्तरिक्षे च भूमौ च पुनश्च गिरिमूर्धनि ॥ ३६ ॥ देवदानवयक्षाणां पिशाचोरगरक्षसाम् । पश्यतां तन्महद्युद्धं सर्वरात्रमवर्तत ॥३७॥ नैव रात्रं न दिवसं न मुहूर्तं न च क्षणम् । रामरावणयोर्युद्धं विराममुपगच्छति ॥ ३८

अन्तरिक्षे भूमौ च पुनश्च गिरिमूर्धनि त्रिकूटशिखरे च तन्महद्युद्धं प्रवृत्तमित्यर्थः ॥३६॥ देवदानवेति । "यस्य च भावेन–" इति भावलक्षणे षष्ठी । सर्वरात्रम् अहोरात्रमित्यर्थः । सप्तरात्रमित्यपपाठः । वक्ष्यमाणदिनसङ्ख्याविरोधात् । यद्वा सर्वरात्रमित्यपपाठः । सप्तरात्रमित्येव सम्यक् पाठः । फाल्गुनचतुर्दश्यां हनुमता लङ्कादाहः । पौर्णमास्यां रामस्य समुद्रतीरप्राप्तिः । प्रथमाद्वितीयातृतीयासु दर्भशयनम् । अष्टम्यां सुवेलारोहणम् । नवम्यां युद्धारम्भ इति सप्तरात्रं रामरावणयुद्धमिति । इदं च "इतस्तु नवमेऽहनि" इत्यत्र विस्तृतम् ॥ ३७ ॥ नैव रात्रमिति । "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया ॥ ३८ ॥ रामानु०–देवदानवयक्षाणां पिशाचोरगरक्षसाम् । पश्यतां तन्महद्युद्धं सर्वरात्रमवर्तत ॥ नैव रात्रं न दिवसं न मुहूर्तं न च क्षणम् । रामरावणयोर्युद्धं विराममुपगच्छति ॥ इति श्लोकद्वयं केषुचित्कोशेषु पतितम् ॥ ३७ ॥ ३८ ॥

न इम इति । प्रात्ययिकाः विश्वस्ताः, अमोघा इत्यर्थः ॥ ३३–३५ ॥ त्रिकूटशिखरे युद्ध्यतोस्तयोराग्रहादन्तरिक्षे भूमौ च त्रिकूटशिखरस्याधस्तनभूमौ पुनश्च गिरिमूर्धनि त्रिकूटशिखरे च तन्महद्युद्धं प्रवृत्तमित्यर्थः ॥ ३६ ॥ देवादीनां पश्यतां सतां सप्तरात्रं महद्युद्धमवर्ततेति सम्बन्धः । अगस्त्यागमनात्प्रागेव सिद्धस्य



स०–यैरिति । जातौ बहुवचनम् । येन, एकेषुणेति प्रतिज्ञाकाल उक्तेः । वाली च भग्न इत्यन्वयः ॥ ३२ ॥

दशरथेति । निर्धारणे षष्ठी । दशरथसुतराक्षसेन्द्रयोः रामरावणयोर्मध्ये राघवस्य जयमनवेक्ष्य महान् महाबुद्धिरित्यर्थः । सुरवररथसारथिः एनं रामम् उवाच ॥ ३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने दशोत्तरशततमः सर्गः ॥ ११० ॥

दशरथसुतराक्षसेन्द्रयोर्जयमनवेक्ष्य रणे स राघवस्य । सुरवररथसारथिर्महान् रणगतमेनमुवाच वाक्यमाशु ॥३९॥
इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे दशोत्तरशततमः सर्गः ॥ ११० ॥
अथ संस्मारयामास राघवं मातलिस्तदा । अजानन्निव किं वीर त्वमेनमनुवर्तसे ॥ १ ॥ विसृजास्मै वधाय त्वमस्त्रं पैतामहं प्रभो । विनाशकालः कथितो यः सुरैः सोऽद्य वर्तत ॥२॥ ततः संस्मारितो रामस्तेन वाक्येन मातलेः । जग्राह सशरं दीप्तं निश्वसन्तमिवोरगम् ॥ ३ ॥ यमस्मै प्रथमं प्रादादगस्त्यो भगवानृषिः । ब्रह्मदत्तं महाबाणममोघं युधि वीर्यवान् ॥ ४ ॥ ब्रह्मणा निर्मितं पूर्वमिन्द्रार्थममितौजसा । दत्तं सुरपतेः पूर्वं त्रिलोकजयकांक्षिणः ॥५॥ यस्य वाजेषु पवनः फले पावकभास्करौ । शरीरमाकाशमयं गौरवे मेरुमन्दरौ ॥ ६ ॥

अथ रावणवधः—अथ संस्मारयामासेत्यादिश्लोकद्वयमेकान्वयम् । अजानन्निव ब्रह्मास्त्रमजानन्निव । एनं रावणम्, अनुवर्तसे अस्त्रस्य प्रत्यस्त्रप्रयोगमात्रं करोषि । विनाशकालः मानुषेण वधः इत्युक्तः कालः ॥ १ ॥ २ ॥ ततः संस्मारित इत्याद्येकादश श्लोका एकान्वयाः । प्रथमं पूर्वं दण्डकारण्ये ॥ ३ ॥ ४ ॥ ब्रह्मदत्तमित्येतद्विवृणोति—ब्रह्मणेत्यादिना ॥ ५ ॥ यस्य वाजेष्विति । पवनादीनामधिदेवतात्वेनावस्थानम् । फले शल्ये ॥ ६ ॥

युद्धस्यायमनुवादः । अस्मिन् पाठे सप्तरात्रकृतरामरावणयुद्धस्यास्मिन् रामायणे अश्रूयमाणत्वेन अनुपपन्नत्वाच्च सर्वरात्रमवर्ततेति पाठः समीचीनः । सर्वरात्रम् अहोरात्रमित्यर्थः ॥ ३७ ॥ ३८ ॥ दशरथसुतराक्षसेन्द्रयोरित्यत्र निर्द्धारणे षष्ठी ॥ ३९ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां दशोत्तरशततमः सर्गः ॥ ११० ॥ अथेत्यादि । अनुवर्तसे अनुकरोषि, उपेक्षस इति यावत् ॥ १ ॥ अस्मै एनं प्रति ॥ २–५ ॥ यस्येत्यादि ।

स०—संस्मारयामास रावणस्य ब्रह्मास्त्रवध्यतामिति शेषः । अजानन्निवे[illegible]

तेजसा सारांशेन कृतम् ॥ ७ ॥ ८ ॥ द्वाराणां रिपुगोपुराणाम् । नानारुधिरेति वध्यासुरभेदात् । मेदः मांसविशेषः ॥९॥ रामानु०—द्वाराणां पुरद्वाराणाम्, गोपुराणामिति यावत् । परिघाणामित्येतत्सर्वायुधानामप्युपलक्षणम् ॥ ९ ॥ वज्रसारं वज्रतुल्यदार्ढ्यम् । नानासमितिदारणं कपटयुद्धस्यापि निवर्तकम् । सर्ववित्रा





जाज्वल्यमानं वपुषा सुपुङ्खं हेमभूषितम् । तेजसा सर्वभूतानां कृतं भास्करवर्चसम् ॥ ७ ॥ सधूममिव कालाग्निं दीप्तमाशीविषं यथा । परनागाश्ववृन्दानां भेदनं क्षिप्रकारिणम् ॥८॥ द्वाराणां परिघाणां च गिरीणामपि भेदनम् । नानारुधिरसिक्ताङ्गं मेदोदिग्धं सुदारुणम् ॥ ९ ॥ वज्रसारं महानादं नानासमितिदारणम् । सर्ववित्रासनं भीमं श्वसन्तामिव पन्नगम् ॥ १० ॥ कङ्कगृध्रवलानां च गोमायुगणरक्षसाम् । नित्यं भक्ष्यप्रदं युद्धे यमरूपं भयावहम् ॥ ११ ॥ नन्दनं वानरेन्द्राणां रक्षसामवसादनम् । वाजितं विविधैर्वाजैश्चारुचित्रैर्गरुत्मतः ॥१२॥ तमुत्तमेषुं लोकाना मिक्ष्वाकुभयनाशनम् । द्विषतां कीर्तिहरणं प्रहर्षकरमात्मनः ॥ १३ ॥ अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः । वेदप्रोक्तेन विधिना सन्दधे कार्मुके बली ॥ १४ ॥ तस्मिन् सन्धीयमाने तु राघवेण शरोत्तमे । सर्वभूतानि वित्रेसु श्चचाल च वसुन्धरा ॥१५॥ स रावणाय संक्रुद्धो भृशमायम्य कार्मुकम् । चिक्षेप परमायत्तस्तं शरं मर्मघातिनम् ॥ १६ ॥

सनत्वे हेतुः भीमामिति । दीप्तं श्वसन्तमिति भेदादुपमानभेदः ॥ १० ॥ वलाः गृध्रविशेषाः । रक्षसां पिशाचसहचारिणाम् । यमरूपं यमतुल्यं यथा भवति तथा भयावहमिति वित्रासनात् भेदः ॥ ११ ॥ वाजितमिति । गरुत्मतः वाजैः पत्रैः वाजितं सञ्जातपत्रम्, गरुडपत्रकृतपत्रमित्यर्थः ॥ १२ ॥ लोकानां मध्ये उत्तमेषुं प्रहर्षकरमात्मन इत्यन्तस्य जग्राहेत्यनेन संबन्धः ॥ १३ ॥ ततः ग्रहणानन्तरम्, तम् इषुं सन्दधे ॥ १४ ॥ १५ ॥ स इति ।



यस्य वाजेषु पक्षेषु । यस्य वाजेषु पवनः इत्यादिषु पवनादीनामधिदेवतात्वेनावस्थानं विवक्षितम् ॥ ६ ॥ तेजसा सारांशेन कृतं निर्मितम् । द्वाराणां गोपुराणाम् ॥ ७–११ ॥ गरुत्मतः चारुचित्रैः वाजैः । यमित्याद्युक्तविशेषणविशिष्टं तमुत्तमेषुमित्येतदन्तम् अभिमन्त्र्येत्यनेन सम्बध्यते ॥ १२ ॥ १३ ॥ तं महेषुमिति

रावणाय चिक्षेपेत्यन्वयः ॥ १६ ॥ स वज्र इति । वज्रिबाहुविसर्जितो वज्र इवेत्यन्वयः ॥ १७–१९ ॥ स शर इति । निभृतवत् विनीतवत् ॥ २० ॥ तस्येति । प्राणैः सह जीवितात् प्राणधारणयत्नात्, भ्रश्यमानस्य तस्य हस्तात् ससायकं कार्मुकं पपात ॥ २१–२३ ॥ नर्दन्तश्चेत्यर्धमेकं वाक्यम्

स वज्र इव दुर्धर्षो वज्रिबाहुविसर्जितः । कृतान्त इव चावार्यो न्यपतद्रावणोरसि ॥ १७ ॥ स विसृष्टो महावेगः शरीरान्तकरः शरः । बिभेद हृदयं तस्य रावणस्य दुरात्मनः ॥ १८ ॥ रुधिराक्तः स वेगेन जीवितान्तकरः शरः । रावणस्य हरन् प्राणान् विवेश धरणीतलम् ॥ १९ ॥ स शरो रावणं हत्वा रुधिरार्द्रीकृतच्छविः । कृतकर्मा निभृतवत् स्वतूणीं पुनरागमत् ॥ २० ॥ तस्य हस्ताद्धतस्याशु कार्मुकं तत् ससायकम् । निपपात सह प्राणैर्भ्रश्यमानस्य जीवितात् ॥ २१ ॥ गतासुर्भीमवेगस्तु नैर्ऋतेन्द्रो महाद्युतिः । पपात स्यन्दनाद्भूमौ वृत्रो वज्रहतो यथा ॥ २२ ॥ तं दृष्ट्वा पतितं भूमौ हतशेषा निशाचराः । हतनाथा भयत्रस्ताः सर्वतः सम्प्रदुद्रुवुः ॥ २३ ॥ नर्दन्तश्चाभिपेतुस्तान् वानरा द्रुमयोधिनः ॥ २४ ॥ दशग्रीववधं दृष्ट्वा विजयं राघवस्य च । अर्दिता वानरैर्हृष्टैर्लङ्कामभ्यपतन् भयात् । गताश्रयत्वात् करुणैर्बाष्पप्रस्रवणैर्मुखैः ॥ २५ ॥ ततो विनेदुः संहृष्टा वानरा जितकाशिनः । वदन्तो राघवजयं रावणस्य च तद्वधम् ॥ २६ ॥ अथान्तरिक्षे व्यनदत् सौम्यस्त्रिदशदुन्दुभिः । दिव्यगन्धवहस्तत्र मारुतः ससुखो ववौ ॥ २७ ॥ निपपातान्तरिक्षाच्च पुष्पवृष्टिस्तदा भुवि । किरन्ती राघवरथं दुरवापा मनोरमा ॥ २८ ॥ राघवस्तवसंयुक्ता गगनेऽपि च शुश्रुवे । साधु साध्विति वागग्र्या दैवतानां महात्मनाम् ॥ २९ ॥

॥ २४ ॥ दशग्रीवेत्यादिसार्धश्लोक एकान्वयः । मुखैः उपलक्षिताः, राक्षसा इति शेषः ॥ २५ ॥ तत इति । तद्वधं तं वधम् ॥ २६–२८ ॥ राघवेति ।



सन्दध इत्यनेन सम्बन्धः ॥ १४–१९ ॥ स शर इति । निभृतवत् विनीतवत् ॥ २० ॥

राघवस्तवसंयुक्ता वागित्यन्वयः ॥ २९ ॥ चारणैः सह चारणैः सहितान् देवानित्यर्थः ॥ ३० ॥ तत इति । सुग्रीववद्युवराजत्वेन प्रत्युपकारायाङ्गदेनापि रावणवधस्य काङ्क्षितत्वात् सकामत्वम् ॥ ३१ ॥ प्रशमं प्रसादम् । मरुद्गणाः देवगणाः । मही न चकम्पे महीकम्पाभावस्य शुभसूचकत्वात् इत्याहुः । रावणवधपर्यन्तं सकम्पा स्थिता मही तद्वधानन्तरं निष्कम्पाऽभवदिति चाहुः । ववौ, सुखमिति शेषः ॥ ३२ ॥ सुहृद्विशेषाः जाम्बवदादयः ।

आविवेश महाहर्षो देवानां चारणैः सह। रावणे निहते रौद्रे सर्वलोकभयङ्करे ॥ ३० ॥ ततः सकामं सुग्रीवमङ्गदं च महाबलम् । चकार राघवः प्रीतो हत्वा राक्षसपुङ्गवम् ॥ ३१ ॥ ततः प्रजग्मुः प्रशमं मरुद्गणा दिशः प्रसेदुर्विमलं नभोऽभवत् । मही चकम्पे न हि मारुतो ववौ स्थिरप्रभश्चाप्यभवद्दिवाकरः ॥ ३२ ॥ ततस्तु सुग्रीवविभीषणादयः सुहृद्विशेषाः सहलक्ष्मणास्तदा । समेत्य हृष्टा विजयेन राघवं रणेऽभिरामं विधिना ह्यपूजयन् ॥ ३३ ॥ स तु निहतरिपुः स्थिरप्रतिज्ञः स्वजनबलाभिवृतो रणे रराज । रघुकुलनृपनन्दनो महौजास्त्रिदशगणैरभिसंवृतो यथेन्द्रः ॥ ३४ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकादशोत्तरशततमः सर्गः ॥ १११ ॥

भ्रातरं निहतं दृष्ट्वा शयानं रामनिर्जितम् । शोकवेगपरीतात्मा विललाप विभीषणः ॥ १ ॥
वीर विक्रान्त विख्यात विनीत नयकोविद । महार्हशयनोपेत किं शेषेऽद्य हतो भुवि ॥ २ ॥
विक्षिप्य दीर्घौ निश्चेष्टौ भुजावङ्गदभूषितौ । मुकुटेनापवृत्तेन भास्कराकारवर्चसा ॥ ३ ॥

हिशब्दः पादपूरणे । विजयेन हृष्टा इत्यन्वयः । विधिना क्रमेण ॥ ३३ ॥ फाल्गुनामावास्यायां रावणवधः । यद्वा चैत्रशुद्धप्रतिपदि शिष्टामावास्यायां प्रातःकाले रावणवधः । पूर्वं सर्वरात्रमवर्ततेत्युक्तेः ॥ ३४ ॥ इति श्रीगोवि० श्रीरामा० रत्नकिरी० युद्धकाण्डव्याख्याने एकादशोत्तरशततमः सर्गः ॥ १११ ॥
अथ भ्रातृवधदर्शनेन हठात् प्रवृत्तं प्रकृतिसंबन्धकृतं शोकं सोढुमशक्नुवन् विभीषणो विलपति–भ्रातरमित्यादि । शयानं शयानमिव स्थितम् । शोकवेगपरीतात्मा शोकवेगेन परीतमनस्कः । वेगशब्देन हठकृतः शोक इति द्योत्यते ॥ १ ॥ वीरेत्यादि । विनीत विद्यासु शिक्षित । विक्षिप्येत्यस्य

ततः प्रजग्मुः प्रशमं प्रसादं मरुद्गणाः मही न चकम्पे मारुतो ववौ, सुखमिति शेषः । अमावास्यायां रावणवधः ॥ इति० युद्ध० एकादशोत्तरशततमस्सर्गः ॥ १११ ॥ १-४ ॥

श्लोकस्य पूर्वश्लोकेनान्वयः । भुजावित्यनेनान्त्ययुद्धे द्विभुजस्थितिर्गम्यते । मुकुटेन, उपलक्षित इति शेषः । अपवृत्तेन पतनवेगादीषच्चालितेन ॥ २॥३॥ तदिदमिति । मया पूर्वं समीरितं यद्वचः काममोहपरीतस्य ते न रुचितं नेष्टमासीत् । तदिदं वचः सम्प्राप्तम्, त्वयाऽनुभूतमित्यर्थः ॥ ४ ॥ यदित्यादि सार्धश्लोक एकान्वयः । यत्पापकर्म प्रहस्तो दर्पात् नामन्यतेति विपरिणामेनानुषज्यते । एवं सर्वत्र योजनीयम् । अतिरथ इत्यतिकायविशेषणम् ।

तदिदं वीर सम्प्राप्तं मया पूर्वं समीरितम् । काममोहपरीतस्य यत्ते न रुचितं वचः ॥ ४ ॥ यन्न दर्पात् प्रहस्तो वा नेन्द्रजिन्नापरे जनाः । न कुम्भकर्णोऽतिरथो नातिकायो नरान्तकः । न स्वयं त्वममन्येथास्तस्योदर्कोऽयमागतः ॥ ५ ॥ गतः सेतुः सुनीतानां गतो धर्मस्य विग्रहः । गतः सत्त्वस्य संक्षेपः प्रस्तावानां गतिर्गता ॥ ६ ॥ आदित्यः पतितो भूमौ मग्नस्तमसि चन्द्रमाः ॥ ७ ॥ चित्रभानुः प्रशान्तार्चिर्व्यवसायो निरुद्यमः । अस्मिन्निपतिते भूमौ वीरे शस्त्रभृतां वरे ॥८॥ किं शेषमिव लोकस्य हतवीरस्य साम्प्रतम् । रणे राक्षसशार्दूले प्रसुप्त इव पांसुषु ॥ ९ ॥

अमन्येथाः अमन्यथाः । एत्वमार्षम् । तृणीकृतवानसीत्यर्थः । तस्य सीताहरणरूपस्य उदर्कः फलमागतम् ॥५ ॥ गत इति । सुनीतानां नयानां सेतुः मर्यादा । धर्मस्य विग्रहः विरोधः । यद्वा अधर्मस्येति छेदः । विग्रहः देहः । यद्वा धर्मस्य विग्रहः देहः । “ एषोहिताग्निश्च महातपाश्च ” इत्यादिना रावणस्य धार्मिकत्वकथनात् । सत्त्वस्य बलस्य, संक्षेपः सङ्ग्रहः । प्रस्तावानां प्रकृष्टस्तुतीनां गतिः विषयः ॥ ६ ॥ आदित्य इत्यादिसार्धश्लोक एकान्वयः । अस्मिन्निति । अस्मिन्निपतिते आदित्यः पतित इत्याद्यभेदातिशयोक्तिः । चित्रभानुः वह्निः । “ सूर्यवह्नी चित्रभानू ” इत्यमरः । व्यवसायो निरुद्यमः, रावणसदृशाश्रयाभावाद्व्यवसायः उत्साहशक्तिः निर्व्यापारोऽभूदित्यर्थः ॥ ७ ॥ ८॥ राक्षसशार्दूले रावणे पांसुषु प्रसुप्त इव स्थिते, मृत इति

यदित्यादि । न स्वयमिति । अमन्येथाः । एत्वमार्षम् ॥ ५ ॥ गत इति । सेतुः मर्यादा । सुनीतानां नयानां संक्षेपः संक्षिप्यत इति संक्षेपः संग्रहः । प्रस्तावानामुचितोक्तीनां स्तुतीनां वा ॥ ६ ॥ आदित्य इत्यादि । व्यवसायः उत्साहशक्तिः । रावणसदृशाश्रयणीयस्याभावाद्व्यवसायो निर्व्यापारोऽभूदित्यर्थः । अस्मिन्निपतिते भूमावित्यर्धं पूर्वशेषम् ॥ ७ ॥ ८ ॥ किं शेषमिवेत्यर्धं [illegible] । पांसुषु प्रसुप्त इव स्थिते सति साम्प्रतं हतवीरस्य लोकस्य किं शेषम्, न किञ्चिदव

यावत् । साम्प्रतं हतवीरस्य लोकस्य किमिव शेषम्, सर्वं शून्यमभूदित्यर्थः ॥ ९ ॥ धृतिरेव प्रवालो यस्य स तथा । धैर्यं हि वृक्षस्य पल्लववत् प्रथम फलम् । प्रसहत इति प्रसहः । पचाद्यच् । भावप्रधानो निर्देशः । स एव अग्र्यपुष्पं श्रेष्ठपुष्पं यस्य स तथा । प्रसहनं हि पुष्पवत्कार्यफलस्य अव्यव हितहेतुः । तप एव बलं स्थैर्यांशो यस्य स तथा । शौर्यमेव निबद्धमूलं निश्चलमूलं यस्य स तथा, शौर्यमूलत्वात् तपःप्रभृतीनां सर्वेषाम् ॥ १० ॥

धृतिप्रवालः प्रसहाग्र्यपुष्पस्तपोबलः शौर्यनिबद्धमूलः । रणे महान् राक्षसराजवृक्षः सम्मर्दितो राघवमारुतेन ॥ १० ॥ तेजोविषाणः कुलवंशवंशः कोपप्रसादापरगात्रहस्तः । इक्ष्वाकुसिंहावगृहीतदेहः सुप्तः क्षितौ रावणगन्धहस्ती ॥ ११ ॥ पराक्रमोत्साहविजृम्भितार्चिर्निश्वासधूमः स्वबलप्रतापः । प्रतापवान् संयति राक्षसाग्निर्निर्वापितो रामपयोधरेण ॥ १२ ॥

तेजः पराक्रम एव विषाणो यस्य स तथा । तेजो हि विषाणवत् परमर्मभेदि । कुलवंशवंशः कुलं पितृपितामहादयः तेषां वंशः सर्गः स एव वंशः पृष्ठा वयवविशेषो यस्य स तथा । "वंशो वेणौ कुले वर्गे पृष्ठस्यावयवेऽपि च" इत्युभयत्रापि विश्वः । कुलेन हि वंशेनेव स्वाश्रितधारणम् । कोप एवापरगात्रं शिरोव्यतिरिक्तशरीरं यस्य स तथा । प्रसाद एव हस्तो यस्य स तथा । कोपस्य बहुत्वादपरगात्रत्वेन रूपणम् । इक्ष्वाकुः रामः स एव सिंहः तेन अवगृहीत देहः रावणगन्धहस्ती रावण एव मत्तगजः क्षितौ सुप्तः, मृत इत्यर्थः ॥ ११ ॥ पराक्रमोत्साहावेव विजृम्भितार्चिः विस्तृतज्वालः । निश्वास एव धूमो यस्य स तथा । स्वबलप्रतापः स्वबलोष्णः । प्रतापवान् तेजस्वी । राक्षसाग्निः रामपयोधरेण निर्वापितः ॥ १२ ॥

शिष्टमित्यर्थः ॥ ९ ॥ प्रसहाग्र्यपुष्पः प्रसहत इति प्रसहः । पचाद्यच् । भावप्रधानोऽयं निर्देशः । प्रसहः प्रसहत्वं तदेवाग्र्यपुष्पं यस्य सः । प्रसवाग्र्यपुष्पः इति पाठे प्रसवः सन्तानः ॥ १० ॥ कुलवंशवंशः कुलं पितृपितामहादयः तेषां वंशो वर्गः स एव वंशः पृष्ठावयवविशेषो यस्य सः । "वंशो वेणौ कुले वर्गे पृष्ठस्याव यवेऽपि च" इति विश्वः । कोपप्रसादापरगात्रहस्तः कोपापरगात्रः प्रसादहस्तश्चेत्यर्थः । इक्ष्वाकुः रघुनाथः ॥ ११ ॥ पराक्रमोत्साहावेव विजृम्भितार्चिः । स्वबलमेव प्रतापः । प्रतापवान् तेजस्वी ॥ १२ ॥

सिंहर्क्षाः राक्षसाः त एव लाङ्गूलककुद्विषाणानि यस्य स तथा । " सिंहर्क्षा राक्षसाः प्रोक्ता यक्षा उष्णीषिणो मताः । " इति निघण्टुः । यद्वा सिंहर्क्षं मूलानक्षत्रं तच्च राक्षसनक्षत्रम् । यथाऽऽह ज्योतिषे काश्यपः–" अग्निर्मघा विशाखा च आश्लेषा शततारका । धनिष्ठा चित्रया युक्ता ज्येष्ठा मूला च राक्षसाः ॥ " इति । तत्सम्बन्धाद्राक्षसा अपि तच्छब्देनोच्यन्ते । राक्षससमृद्धेर्गर्वहेतुत्वेन लाङ्गूलादित्वेन रूपणम् । परानभिजयतीति पराभिजित् । गन्धने परोत्सादने गन्धहस्ती मुख्यः । " गन्धनं सूचनोत्साहहिंसनेषु प्रकाशने " इति विश्वः । चापलं विषयलौल्यम्, तदेव कर्णचक्षुषी यस्य

सिंहर्क्षलाङ्गूलककुद्विषाणः पराभिजिद्गन्धनगन्धहस्ती । रक्षोवृषश्चापलकर्णचक्षुः क्षितीश्वरव्याघ्रहतोऽवसन्नः ॥१३॥ वदन्तं हेतुमद्वाक्यं परिमृष्टार्थनिश्चयम् । रामः शोकसमाविष्टमित्युवाच विभीषणम् ॥ १४ ॥ नायं विनष्टो निश्चेष्टः समरे चण्डविक्रमः । अत्युन्नतमहोत्साहः पतितोऽयमशङ्कितः ॥१५॥ नैवं विनष्टाः शोच्यन्ते क्षत्रधर्ममवस्थिताः । वृद्धिमाशंसमाना ये निपतन्ति रणाजिरे ॥ १६ ॥

स तथा । रक्षोवृषः रावणवृषभः, क्षितीश्वरव्याघ्रेण रामशार्दूलेन, हतः अवसन्नः मृतः ॥ १३ ॥ वदन्तमिति । परिमृष्टार्थनिश्चयं कृतार्थनिश्चयम् ॥१४॥ अयं निश्चेष्टः निर्विक्रमः न विनष्टः, अपि त्वयं समरे चण्डविक्रमः अत्युन्नतमहोत्साहः अशङ्कितः पतितः विनष्टः ॥ १५ ॥ यदि समरे विक्रम्य नष्टः ततः किमित्यत्राह–नैवमित्यादि । ये वृद्धिं परलोकवृद्धिम्, आशंसमानाः आकाङ्क्षमाणाः सन्तः रणाजिरे निपतन्ति । क्षत्रधर्ममवस्थिताः शूरधर्म

सिंहर्क्षलाङ्गूलककुद्विषाणः सिंहर्क्षाः राक्षसाः त एव लाङ्गूलककुद्विषाणानि यस्य सः । " सिंहर्क्षा राक्षसाः प्रोक्ता यक्षा उष्णीषिणो मताः । " इति शाश्वतः । परानभिजयतीति पराभिजित् । गन्धनगन्धहस्ती गन्धने उत्सादने गन्धहस्ती मदगजतुल्यः । " गन्धनं सूचनोत्साहहिंसनेषु प्रकाशने " इति विश्वः । चापलकर्णचक्षुः चापलं धर्मस्खलनं तदेव कर्णचक्षुषी यस्य सः ॥ १३ ॥ १४ ॥ नायमिति । अयं निश्चेष्टः निर्विक्रमो न विनष्टः, अपितु समरे चण्डविक्रमः उन्नतमहोत्साहः अशङ्कितः पतितः नष्टः ॥ १५ ॥ ततः किमित्यत आह–नैवं विनष्टा इति । ये वृद्धिमाशंसमाना रणाजिरे निपतन्ति क्षत्रधर्मव्यवस्थिताः केवलं

स०–पराभिजिद्गन्धनगन्धहस्ती परानभिजयन्तीति पराभिजितः, तद्गन्धने हिंसायां गन्धहस्ती मतंगजतुल्यः । चापलकर्णचक्षुः चापलं चपलं कर्णचक्षुः यस्य सः । कर्णयोश्चापलम् अश्राव्यशूर्पणखादिप्रलपितश्रवणेन तत्र चित्तप्रणिधानम् । चक्षुषोः अनवलोकनीयपरदारसौन्दर्यदर्शनम् ॥ १३ ॥ यमशङ्कितः यमः शङ्कितो यस्मादिति वा ॥ १५ ॥

व्यवस्थिताः । एवं विनष्टाः ते न शोच्यन्ते ॥ १६ ॥ न केवलं समरमरणादेव नशोच्यत्वम्, किंतु यशःप्रत्यासक्त्यापीत्याह—येनेति । येन वित्रासिताः तस्मिन् रावणे कालसमायुक्ते शोचितुं न कालः नावसरः, तद्विषये शोको न युक्तः, वीरस्वर्गगमनादिति भावः ॥ १७ ॥ तथाऽपि मरणे सति कथं न शोचितव्यमित्याशङ्क्य जयवत्पराजयोऽपि न शोकस्थानमित्याह—नैकान्तेति ।एकान्तविजयः न भूतपूर्वः इतः पूर्वं न भूतः । अनैकान्त्यमुपपाद

येन सेन्द्रास्त्रयो लोकास्त्रासिता युधि धीमता । तस्मिन् कालसमायुक्ते न कालः परिशोचितुम् ॥ १७ ॥ नैकान्त विजयो युद्धे भूतपूर्वः कदाचन । परैर्वा हन्यते वीरः परान् वा हन्ति संयुगे॥१८॥इयं हि पूर्वैः सन्दिष्टा गतिः क्षत्रिय संमता। क्षत्रियो निहतः सङ्ख्ये न शोच्य इति निश्चयः ॥ १९ ॥ तदेवं निश्चयं दृष्ट्वा तत्त्वमास्थाय विज्वरः। यदिहा नन्तरं कार्यं कल्प्यं तदनुचिन्तय ॥ २० ॥ तमुक्तवाक्यं विक्रान्तं राजपुत्रं विभीषणः । उवाच शोकसन्तप्तो भ्रातुर्हितमनन्तरम् ॥ २१ ॥ योऽयं विमर्देषु न भग्नपूर्वः सुरैः समेतैः सह वासवेन । भवन्तमासाद्य रणे विभग्नो वेलामिवासाद्य यथा समुद्रः ॥२२॥ अनेन दत्तानि सुपूजितानि भुक्ताश्च भोगा निभृताश्च भृत्याः । धनानि मित्रेषु समर्पितानि वैराण्यमित्रेषु च यापितानि ॥ २३ ॥

यति परैर्वेति ॥ १८ ॥ क्षत्रधर्मपर्यालोचनेनापि न शोच्य इत्याह—इयं हीति । क्षत्रियः शूरः ॥ १९॥ तदेवमिति । दृष्ट्वा ज्ञात्वा । तत्त्वमास्थाय परमार्थ बुद्धिमवलम्ब्य, जनिमतामवश्यं मृत्युं ज्ञात्वेत्यर्थः । विज्वरः निःशोकः । यत् कार्यं कर्म । कल्प्यम् अनुष्ठेयम् । तदनुचिन्तय । कल्यमिति पाठे यत् कार्यं कल्यम्, योग्यमित्यर्थः। "कल्यो योग्यश्च ते समाः" इति निघण्टुः॥२०॥२१॥ योऽयमिति । विमर्देषु समरेषु । अनेन महावीरतया सम्यक् संस्कार मर्हतीत्युक्तम् ॥ २२ ॥ धर्मशीलत्वाच्च तदर्हतीत्याह—अनेनेति। दत्तानि दानानि कृतानि। सुपूजितानि, गुरुदैवतानीति शेषः। निभृताः नितरां भृताः।

विनष्टास्ते न शोच्यन्ते ॥ १६ ॥ न केवलं समरमरणादेवाशोच्यत्वम्, किन्तु यशःप्रतापसम्पत्त्याऽपीत्याह—येन सेन्द्रा इति ॥ १७ ॥ तथापि मरणे सति न शोचितव्यम् ? इत्याशङ्क्य जयवत्पराजयोऽपि न शोकस्थानमित्याह—नैकान्तविजय इति ॥ १८ ॥ क्षत्रधर्मपर्यालोचनयाऽपि न शोच्य इत्याह—इयं हीति ॥ १९ ॥ दृष्ट्वा ज्ञात्वा । तत्त्वमास्थाय निश्चिततत्वमवलम्ब्य । कल्प्यम् अनुष्ठेयम् ॥ २०–२२ ॥ अनेन दत्तानि दानानि कृतानि । सुपूजितानि स्वनुष्ठितानि । निभृताः नितरां

यापितानि सफलीकृतानीत्यर्थः ॥२३॥ आहिताग्न्यादित्वाच्च तदर्हतीत्याह—एषोहिताग्निरिति । हिताग्निः आहिताग्निः । सन्धिरार्षः । वेदान्तं गच्छति जानातीति वेदान्तगः । कर्मसु चाग्र्यवीर्यः कर्मशूर इत्यर्थः । प्रेतगतस्य प्रेतत्वं गतस्य । इच्छामि, पुत्राणां विनष्टत्वेन भ्रातुरेवाधिकारित्वादिति भावः ॥२४॥ स तस्येति । करुणैरित्यनेन दुःखातिशयादिदानीमेवमुक्तमिति द्योत्यते । वक्ष्यति हि नाहमस्य संस्कारं करिष्यामीति । स्वर्गीयं स्वर्गाय हितम् ।

एषोहिताग्निश्च महातपाश्च वेदान्तगः कर्मसु चाग्र्यवीर्यः । एतस्य यत् प्रेतगतस्य कृत्यं तत् कर्तुमिच्छामि तव प्रसादात् ॥ २४ ॥ स तस्य वाक्यैः करुणैर्महात्मा सम्बोधितः साधु विभीषणेन । आज्ञापयामास नरेन्द्रसूनुः स्वर्गीयमाधानमदीनसत्त्वः ॥ २५ ॥ मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् । क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥ २६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदि० श्रीमद्युद्धकाण्डे द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥

आधानम् अन्त्येष्टिसंज्ञिकं कर्म ॥ २५ ॥ वैरातिरेकात् संस्कारे मम द्वेष इति न शङ्कनीयमित्याह—मरणेति । मरणानन्तरमपि वैरकरणं निष्प्रयोजनमित्याह—निर्वृत्तमिति । प्रयोजनं सीतालाभरूपम् । अस्य संस्कारः यायजूकोचितसंस्कारः, क्रियताम् । ममाप्येष यथा तव । तव यथा भ्राता तथा ममापि भ्राता, मद्भ्रातृभूतस्य तव भ्रातृत्वात् । त्वमस्य दोषं दृष्ट्वा न करोषि चेदहमेव करिष्यामि, भ्रातृषु येन केनापि कर्तव्यमिति भावः । अत्र श्लोके न इति गायत्र्यक्षरम् । अत्राचार्या व्याचख्युः—मरणान्तानि वैराणि, ऋषिजनस्थानभ्रंशमैथिलीहरणमत्प्राणभूतजटायुविध्वंसनप्रभृतिमद्द्वेषाचरणमितः परं कर्तुं न शक्नोति हीति भावः । निर्वृत्तं नः प्रयोजनम् 'यदि वा रावणः स्वयम्' इति वदता मयाऽस्य विषये किञ्चिच्छुभं कर्तव्यमिति मनसि कृतम् । तदनेन ' द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित्' इति वदता प्रतिहतम् । तत्करणस्येदानीमवसरः सञ्जात इति भावः । क्रियतामस्य संस्कारः, मत्कृतहितप्रतिषेधानर्हावस्था इदानीमस्य सञ्जाता, अतोऽयं न त्याज्यः । अतः परं यत्कर्तव्यं तत्कार्यमेव । ममाप्येष यथा तव, अयं मच्चित्तानुकूलो जातः, अतो मन्मित्रभूतो भवानपि तमनुवर्तितुमर्हति । अथवा एषः तव यथा तथा ममापि, अस्य संस्कारस्तव यथा प्राप्तः तथा ममापीत्यर्थः ।

पोषिताः ॥ २३ ॥ एष इति । आहिताग्निः कर्मसु अग्र्यः शूरः कर्मठः । प्रेतगतस्य प्रेतत्वं गतस्य ॥२४॥ संबोधितः आज्ञप्तः । स्वर्गीयं स्वर्गाय हितम् । आधानं संस्कारम् ॥ २५ ॥ गायत्र्याः विंशतितमाक्षरं "मरणान्तानि वैराणि" इत्यस्य श्लोकस्य द्वादशाक्षरेण न इत्यनेन संगृह्णाति—मरणान्तानीति । एष रावणः तव

भवानस्य संस्कारं न करोति चेदहमेव करोमि । बन्धुषु येन केनापि कर्तव्यं खल्विदम्, तद्दूरे तिष्ठ अहमेव करिष्यामीत्यर्थ इति ॥२६॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥

रावणं निहतं श्रुत्वा राघवेण महात्मना । अन्तःपुराद्विनिष्पेतू राक्षस्यः शोककर्शिताः ॥१॥ वार्यमाणाः सुबहुशो वेष्टन्त्यः क्षितिपांसुषु । विमुक्तकेश्यो दुःखार्ता गावो वत्सहता इव ॥ २ ॥ उत्तरेण विनिष्क्रम्य द्वारेण सह राक्षसैः । प्रविश्यायोधनं घोरं विचिन्वन्त्यो हतं पतिम् ॥ ३ ॥ राजपुत्रेतिवादिन्यो हा नाथेति च सर्वशः । परिपेतुः कबन्धाङ्कां महीं शोणितकर्दमाम् ॥ ४ ॥ ता बाष्पपरिपूर्णाक्ष्यो भर्तृशोकपराजिताः । करेण्व इव नर्दन्त्यो विनेदुर्हतयूथपाः ॥५॥ ददृशुस्तं महावीर्यं महाकायं महाद्युतिम् । रावणं निहतं भूमौ नीलाञ्जनचयोपमम् ॥६॥ ताः पतिं सहसा दृष्ट्वा शयानं रणपांसुषु । निपेतुस्तस्य गात्रेषु च्छिन्ना वनलता इव ॥ ७ ॥ बहुमानात् परिष्वज्य काचिदेनं रुरोद ह । चरणौ काचिदालिङ्ग्य काचित् कण्ठेऽवलम्ब्य च ॥८॥ उद्धृत्य च भुजौ काचिद्भूमौ स्म परिवर्तते । हतस्य वदनं दृष्ट्वा काचिन्मोहमुपागमत् ॥ ९ ॥ काचिदङ्के शिरः कृत्वा रुरोद मुखमीक्षती । स्नापयन्ती मुखं बाष्पैस्तुषारैरिव पङ्कजम् ॥ १० ॥ एवमार्ताः पतिं दृष्ट्वा रावणं निहतं भुवि । चुक्रुशुर्बहुधा शोकाद्भूयस्ताः पर्यदेवयन् ॥ ११ ॥ येन वित्रासितः शक्रो येन वित्रासितो यमः । येन वैश्रवणो राजा पुष्पकेण वियोजितः ॥ १२ ॥

अथ रावणान्तःपुरस्त्रीविलापः—रावणमित्यादिश्लोकद्वयमेकान्वयम् । वत्सहताः हतवत्साः ॥ १ ॥ २ ॥ उत्तरेणेत्यादिश्लोकद्वयमेकान्वयम् । शोणितैः कर्दमो यस्यास्तां शोणितकर्दमाम् ॥ ३ ॥ ४ ॥ ता इति । हतयूथपा इति करेणुविशेषणम् । अत एव नर्दन्त्यः करेण्व इव विनेदुरित्यन्वयः ॥५–७॥ बहुमानादित्यादिश्लोकत्रयमेकान्वयम् । परिवर्तते वेष्टते । ईक्षती ईक्षमाणा ॥ ८–१० ॥ एवमिति । चुक्रुशुरिति । क्रोशः निरक्षरध्वनिः । परिदेवनं

यथा ममापि तथा, ममापि स्नेहविषय इत्यर्थः । अतः संस्क्रियतां शङ्कां मा कुर्विति भावः ॥२६॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥ रावणमित्यादि श्लोकद्वयमेकं वाक्यम् । वार्यमाणा इति । वत्सहताः हतवत्साः ॥ १–१५ ॥

साक्षरशब्दः ॥ ११–१२ ॥ असुरेभ्य इति । मानुषाद्भयम्, जातमिति शेषः ॥ १४ ॥ १५ ॥ य इति । कश्चिदित्र यः कश्चित् पुरुष इव । लम्भितः प्रापितः ॥ १६ ॥ १७ ॥ अशृण्वतेति । सुहृदां सुहृद्भ्यः । पञ्चम्यर्थे षष्ठी । वचनमिति वा शेषः । अशृण्वता त्वया ॥ १८ ॥ एताः वयं ते राक्षसाः आत्मा च समं युगपत् इदानीं पातिताः, मारिता इत्यर्थः । ब्रुवाण इति । इष्टः प्रीतिमान् ॥ १९ ॥ यदीत्यादिश्लोकद्वयमेकान्वयम् । ते त्वया ।

गन्धर्वाणामृषीणां च सुराणां च महात्मनाम् । भयं येन महद्दत्तं सोऽयं शेते रणे हतः ॥१३॥ असुरेभ्यः सुरेभ्यो वा पन्नगेभ्योऽपि वा तथा । न भयं यो विजानाति तस्येदं मानुषाद्भयम् ॥१४॥ अवध्यो देवतानां यस्तथा दानव रक्षसाम् । हतः सोऽयं रणे शेते मानुषेण पदातिना ॥ १५॥ यो न शक्यः सुरैर्हन्तुं न यक्षैर्नासुरैस्तथा । सोऽयं कश्चि दिवासत्त्वो मृत्युं मर्त्येन लम्भितः ॥ १६ ॥ एवं वदन्त्यो बहुधा रुरुदुस्तस्य ताः स्त्रियः । भूय एव च दुःखार्ता विलेपुश्च पुनःपुनः ॥ १७ ॥ अशृण्वता च सुहृदां सततं हितवादिनाम् । मरणायाहृता सीता घातिताश्च निशा चराः ॥ १८ ॥ एताः सममिदानीं ते वयमात्मा च पातिताः । ब्रुवाणोऽपि हितं वाक्यमिष्टो भ्राता विभीषणः । धृष्टं परुषितो मोहात्त्वयाऽऽत्मवधकांक्षिणा ॥१९॥ यदि निर्यातिता ते स्यात् सीता रामाय मैथिली । न नः स्याद् व्यसनं घोरमिदं मूलहरं महत् ॥२०॥ वृत्तकामो भवेद्भ्राता रामो मित्रकुलं भवेत् । वयं चाविधवाः सर्वाः सकामा न च शत्रवः ॥२१॥ त्वया पुनर्नृशंसेन सीतां संरुन्धता बलात् । राक्षसा वयमात्मा च त्रयं तुल्यं निपातितम् ॥२२॥

निर्यातिता प्रत्यर्पिता । मूलहरं मूलभूतत्वत्पर्यन्तहरम् । वृत्तेति । यदि सीता निर्यातिता स्यात्तदा भ्राता विभीषणो वृत्तकामः निष्पन्नमनोरथः भवेत्, स्ववाक्यकरणादिति भावः । तथा रामः मित्रकुलं कुलमित्रम् । शत्रवः देवादयः ॥ २० ॥ २१ ॥ त्वयेति । तुल्यमिति । युगपय इति । लम्भितः प्रापितः ॥ १६ ॥ १७ ॥ अशृण्वतेति । सुहृदां, वाक्यमिति शेषः ॥ १८ ॥ एताः वयं ते राक्षसाः आत्मा त्वं च सममेककालमेव पातिताः धृष्टं प्रत्यक्षम् ॥ १९ ॥ यदीत्यादि श्लोकद्वयमेकं वाक्यम् । ते त्वया निर्यातिता प्रत्यर्पिता चेत् ॥ २० ॥ वृत्तकामः निष्पन्नमनोरथः । स्ववाक्य

स०–असत्त्वः अल्पबल इत्यर्थः, अनुदरा कन्येत्यत्रेव । मर्त्येन स्वकर्तृकमरणयोग्येन रामेण । लम्भितः प्रापितः मृत्युं यमं प्रतीति वा ॥ १६ ॥

दित्यर्थः ॥ २२ ॥ एवं रावणस्वेच्छाचरणस्य राक्षसनाशहेतुतामभिधाय सम्प्रति तन्निरासपूर्वकं दैवकारितत्वं दर्शयति–न कामकार इति । कामकारः स्वच्छन्दकरणम्, कामं प्रकामं नास्ति । कुतः ? दैवं चेष्टयते सर्वं, हतं दैवेन हन्यते । दैवेन हतमन्येन हन्यते ॥ २३ ॥ २४ ॥ नैवेति । उद्यता कार्योन्मुखी दैवगतिः अर्थादिना न निवर्तयितुं शक्या । कामेन स्वेच्छया ॥ २५ ॥ विलेपुरिति । कुरर्यः क्रौञ्च्यः ॥२६॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयोदशोत्तरशततमः सर्गः ॥ ११३ ॥

न कामकारः कामं वा तव राक्षसपुङ्गव । दैवं चेष्टयते सर्वं हतं दैवेन हन्यते ॥ २३ ॥ वानराणां विनाशोऽयं रक्षसां च महाहवे । तव चैव महाबाहो दैवयोगादुपागतः ॥ २४ ॥ नैवार्थेन न कामेन विक्रमेण न चाज्ञया । शक्या दैव गतिर्लोके निवर्तयितुमुद्यता ॥ २५ ॥ विलेपुरेवं दीनास्ता राक्षसाधिपयोषितः । कुरर्य इव दुःखार्ता बाष्पपर्याकुलेक्षणाः ॥२६॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे त्रयोदशोत्तरशततमः सर्गः॥११३॥

तासां विलपमानानां तथा राक्षसयोषिताम् । ज्येष्ठा पत्नी प्रिया दीना भर्तारं समुदैक्षत ॥ १ ॥
दशग्रीवं हतं दृष्ट्वा रामेणाचिन्त्यकर्मणा । पतिं मण्डोदरी तत्र कृपणा पर्यदेवयत् ॥ २ ॥

अथ मण्डोदरीप्रलापादि–तासामित्यादि । विलपमानानां विलपन्तीनाम् । तथा विलपमानानामित्यन्वयः । दीना सती समुदैक्षत ॥ १ ॥ दशग्रीवमिति । मण्डोदरी मण्डनभूतोदरी, कृशोदरीति यावत् । "मडि भूषायाम्" इति धातोर्भावे कप् प्रत्ययः । मण्डं सारं सुन्दरमिति यावत् । तादृशोदरीत्येके ।

करणादिति भावः । मित्रकुलं मित्रपक्षः ॥ २१ ॥ २२ ॥ एवं रावणस्य स्वेच्छाचरणस्य राक्षसनाशहेतुतामभिधायेदानीं तन्निरासपूर्वकं दैवस्य तत्कारणत्वं दर्शयति–न कामकार इति । तव कामकारः स्वेच्छाचरणं कामं वा नास्ति, तव स्वेच्छाधीनव्यवहारो नास्तीत्यर्थः । कुतः ? दैवं चेष्टयते सर्वं हतं दैवेन हन्यते दैवेन हतमन्येन हन्यते ॥ २३ ॥ २४ ॥ उद्यता सर्वयत्नेनापि ॥ २५ ॥ २६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां त्रयोदशोत्तरशततमः सर्गः ॥ ११३ ॥ १ ॥ दशग्रीवमिति । मण्डोदरी मण्डनभूतोदरी । कृशोदरीति यावत् । "मडि भूषायाम्" इति धातुः ॥ २-५ ॥



स०–दैवम् अदृष्टप्रेरको हरिरेव । सर्वं चराचरं चेष्टयते चेष्टयति । अतोऽन्येषां तत्प्रयत्नाभाव इत्यर्थः । दैवेन हतमेव केनचिन्निमित्तेन हन्यते न त्वन्यथा ॥ २३ ॥

मण्डा पृथुपिपीलिका तस्या इव उदरं यस्याः सा मण्डोदरीत्यप्याहुः ॥ २ ॥ यद्यपि समरमरणं शूराणां श्लाघ्यमिति न वीरपत्नी तच्छोचितुमर्हा, तथाप्यसमानान्मानुषात् प्राप्तमिदं लज्जावहमिति शोचति—नन्तु नाम तवेत्यादिना सार्धश्लोकेन। नाम प्रसिद्धौ। महीदेवाः ब्राह्मणाश्च, त्रस्यन्तीत्यनुषङ्गः। स कथं मानुषेण जित इति शेषः ॥ ३ ॥ ४ ॥ ननु नामेत्यादिसार्धश्लोक एकान्वयः। चारणाश्च आकाशचारिणश्च। न व्यपत्रपसे, मानुषविजयेनेति

नन्तु नाम महाभाग तव वैश्रवणानुज। क्रुद्धस्य प्रमुखे स्थातुं त्रस्यत्यपि पुरन्दरः ॥ ३ ॥ ऋषयश्च महीदेवा गन्धर्वाश्च यशस्विनः ॥४॥ ननु नाम तवोद्वेगाच्चारणाश्च दिशो गताः। स त्वं मानुषमात्रेण रामेण युधि निर्जितः। न व्यपत्रपसे राजन् किमिदं राक्षसर्षभ ॥ ५ ॥ कथं त्रैलोक्यमाक्रम्य श्रिया वीर्येण चान्वितम्। अविषह्यं जघान त्वां मानुषो वनगोचरः ॥ ६ ॥ मानुषाणामविषये चरतः कामरूपिणः। विनाशस्तव रामेण संयुगे नोपपद्यते ॥ ७ ॥ न चैतत् कर्म रामस्य श्रद्दधामि चमूमुखे। सर्वतः समुपेतस्य तव तेनाभिमर्शनम् ॥ ८ ॥

शेषः। किमिदं किमेवमवस्थानकारणमित्यर्थः ॥ ५ ॥ कथमिति। वीर्येण त्रैलोक्यमाक्रम्य श्रियाऽन्वितं त्वां मानुषस्तत्रापि वनगोचरः कथं जघान, अद्भुतमित्यर्थः ॥ ६ ॥ तदेवासम्भावितत्वं निरूपयति—मानुषाणामिति। अविषये अगम्यदेशे ॥ ७ ॥ न चैतदिति। सर्वतः समुपेतस्य सर्वयुद्धोपकरणैः पूर्णस्य तव, तेन रामेण अभिमर्शनम् आक्रमणमिति यत्, एतद्रामस्य न श्रद्दधामि रामसम्बन्धिकर्मेति न श्रद्दधामि ॥८॥ रामानु०—नचैतत्कर्मेत्येतच्छ्लोकानन्तरं, यदैव च जनस्थाने राक्षसैर्बहुभिर्वृतः। खरस्तव हतो भ्राता तदेवासौ न मानुषः॥ यदैव नगरीं लङ्कां दुष्प्रवेशां सुरैरपि। प्रविष्टो हनुमान् वीर्यात् तदैव व्यथिता वयम् ॥ यदैव वानरैर्घोरैर्बद्धः सेतुर्महार्णवे। तदैव हृदयेनाहं शङ्के रामममानुषम् ॥ अथवा रामरूपेण कृतान्तः स्वयमागतः। मायां तव विनाशाय विधायाप्रतितर्किताम् ॥ अथवा वासवेन त्वं धर्षितोऽसि महाबल। वासवस्य कुतः शक्तिस्त्वां द्रष्टुमपि संयुगे॥ इति पाठक्रमः। अन्यथापाठस्तु लेखकप्रमादकृतः। रामस्य सामान्यतो मानुषत्वप्रतिपादनानन्तरमुत्तरोत्तरोत्कृष्टयमेन्द्रादिदेवताविशेषत्वप्रतिपादनौचित्यात्। यदैवेति। न मानुषः, निश्चित इति शेषः ॥ ८ ॥ ९ ॥

कथमिति। वीर्येण त्रैलोक्यमाक्रम्य श्रियाऽन्वितं त्वामिति सम्बन्धः॥६॥ मानुषाणामविषये अप्राप्यदेशे॥७॥सर्वतस्समुपेतस्य सर्वैस्साधनैस्समुपेतस्य तव तेन रामेण

रावणवधस्य मानुषेणाकृतत्वे केन कृतः स्यादित्याशङ्क्य पक्षान्तरमुपक्षिपति–यदैवेत्यादिना ॥ ९–११ ॥ एवं सामान्यतो रामस्यामानुषत्वं प्रतिपाद्य उत्तरोत्तरोत्कृष्टयमेन्द्रादिदेवताविशेषत्वं प्रतिपादयति–अथवेत्यादिना । मायां सीतारूपाम् । अप्रतितर्किताम् अपरिमेयरूपलावण्याम् ॥ १२ ॥१३॥ यदैवेत्यादिना सामान्यत उपन्यस्तममानुषत्वमेकत्र व्यवस्थापयितुमाह–व्यक्तमित्यादिना । महायोगित्वादिगुणविशिष्टो यो विष्णुः स एवैष राम इति

यदैव च जनस्थाने राक्षसैर्बहुभिर्वृतः । खरस्तव हतो भ्राता तदैवासौ न मानुषः ॥९॥ यदैव नगरीं लङ्कां दुष्प्रवेशां सुरैरपि । प्रविष्टो हनुमान् वीर्यात्तदैव व्यथिता वयम् ॥ १० ॥ यदैव वानरैर्घोरैर्बद्धः सेतुर्महार्णवे । तदैव हृदयेनाहं शङ्के रामममानुषम् ॥११॥ अथवा रामरूपेण कृतान्तः स्वयमागतः । मायां तव विनाशाय विधायाप्रतितर्किताम् ॥ १२ ॥ अथवा वासवेन त्वं धर्षितोऽसि महाबल । वासवस्य कुतः शक्तिस्त्वां द्रष्टुमपि संयुगे ॥ १३ ॥ व्यक्तमेष महायोगी परमात्मा सनातनः । अनादिमध्यनिधनो महतः परमो महान् ॥ १४ ॥

स्त्रीवचनमुखेनैव विष्णोः सर्वदेवतापारम्यं भगवान् वाल्मीकिर्व्यवस्थापयति । महान् योगः लोकरक्षणोपायचिन्ता सोऽस्यास्तीति महायोगी । परमश्चासा वात्मा च परमात्मा, सर्वजीवात्मभ्य उत्कृष्ट इत्यर्थः । परमत्वमस्य कथमित्याशङ्क्य षड्भावविकाररहितत्वादित्याह सनातन इति । सदाऽस्तित्वयुक्त इत्यर्थः । अनादिमध्यनिधनः जन्मवृद्धिविनाशशून्यः । शाश्वतः अपक्षयरहितः । ध्रुवः परिणामरहितः । एतैर्विशेषणैर्जीवगतषड्भावविकारशून्यत्वमुक्तम् । तथोक्तं श्रीविष्णुपुराणे–"अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः।वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम्॥" इति । परमात्मशब्दार्थं विवृणोति महतः परमो महानिति । महान् इन्द्रादिः, तस्मान्महान् ब्रह्मादिः, तस्मादपि महानित्यर्थः ॥ १४ ॥ तनि०– व्यक्तमेषः परिशेषतः प्रमाणेन निश्चितो

अभिमर्शनम् आक्रमणं यत् एतत् रामस्य न श्रद्दधामि रामसम्बन्धीति न श्रद्दधामीत्यर्थः ॥ ८ ॥ तस्मिन्नमानुषत्वे लिङ्गान्याह–यदैव च जनस्थान इत्यादित्रिभिः । व्यथिताः रामस्यामानुषत्वादिनिश्चयेनेति भावः ॥ ९–११ ॥ तर्हि केन वधः कृत इत्यत्राह–अथवेति । रामरूपेण मानुषरूपेण मायाम् अपेक्षितशरीरग्रहणहेतुभूतां काञ्चिच्छक्तिं विधाय । इदानीं पक्षान्तरमवलम्बते–अथवेति । अथवा अन्यः पक्षोऽस्तीत्यर्थः । पूर्वस्मिन् पक्षे को दोष इत्याशङ्क्याह–वासवस्येति । वासवेन धर्षितोऽसीति यत् तन्नैवोपपद्यते । वासवस्य त्वां द्रष्टुमपि शक्तिः कुतः ? नास्तीत्यर्थः ॥ १२ ॥१३ ॥ पक्षान्तरं विशिनष्टि–व्यक्तमेष इत्यादिद्वाभ्याम् । महायोगी

दशग्रीवहन्ता रामः । महायोगी महासन्नहनः आश्रितत्राणसन्नाहवान् । महायोगी विविधविचित्रजगन्निर्माणोपायचतुरः । महायोगी "बहु स्यां प्रजायेयेति" इत्याद्युक्त बहुभवनसङ्कल्पवान् । "सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः" इति मनुस्मरणात् । महायोगी जगन्निर्माणोपयुक्तप्रकृतिपुरुषकारकर्मसंसर्गवान् । महायोगी शरणागतरक्षणादिष्वसञ्चाल्ययुक्तिमान् । "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः । परमात्मा चेतनाचेतनशरीरः । सकलशरीरत्वप्रसक्तदोषासंस्पर्शमाह सनातन इति । अनादिमध्यनिधनः आदिमध्यान्तशून्यः । महतः परमो महान् । "अणोरणीयान् महतो महीयान्" इत्याद्युक्तपरमसहत्त्ववान् ॥ १४ ॥ स्थानविशेषेणापि परमत्वमाह—तमस इति । तमसः प्राकृतमण्डलस्य, परमः परस्तादप्राकृते वैकुण्ठे विद्यमानः । "आदित्यवर्णं तमसः परस्तात्" "आदित्यवर्णं तमसस्तु पारे" इति श्रुतेः । सर्वत्र व्याप्तस्य कथं तत्रावस्थानमित्याशङ्क्य विग्रहद्वारेत्याह शङ्खेत्यादिना । सदा शङ्खचक्रधारणप्रयोजनमाह

**तमसः परमो धाता शङ्खचक्रगदाधरः । श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ॥ १५ ॥**

धातेति । धाता पोषकः । "डुधाञ् धारणपोषणयोः" इत्यस्मात्तृच् । सर्वदा रक्षणार्थमायुधधारणमित्यर्थः । तथोक्तमभियुक्तैः—"पातु प्रणतरक्षायां विलम्बमसहन्निव । सदा पञ्चायुधीं बिभ्रत्स नः श्रीरङ्गनायकः ॥" इति । तस्य सर्वेश्वरत्वद्योतकं लक्षणमाह श्रीवत्सवक्षा इति । श्रीकरो वत्सः श्रीवत्सः, स च रक्तवर्णो मत्स्यविशेषः, सः वक्षसि दक्षिणे यस्य स श्रीवत्सवक्षाः । जगद्रक्षणोपयोगिपुरुषकारसंबन्धमाह नित्यश्रीरिति । नित्या अनपायिनी श्रीर्यस्यासौ नित्यश्रीः । "विष्णोः श्रीरनपायिनी" इत्यन्यत्रोक्तेः । अत एव अजय्यः जेतुमशक्यः । "क्षय्यजय्यौ शक्यार्थे" इति निपातनात् । एष रामः एवंभूतः परमात्मा, व्यक्तं निश्चितमिति संबन्धः ॥ १५ ॥ तनि०—तमसः परमः "अक्षरात्परतः परः" "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः" इति श्रुतिस्मृतिभ्यां तमसः परमः । "आदित्यवर्णं तमसः परस्तात्" इत्युक्तपरमपदवासी । धाता भूतभविष्यद्वर्तमानकालावच्छिन्नसकलजगन्निर्माता । "सूर्याचन्द्रमसौ धाता" स्वाभाविकज्ञानशक्तियुक्तः । "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः । परमात्मा आत्मनामात्मा, सर्वान्तर्यामीति यावत् । "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" इति श्रुतेः । सनातनः सदाऽस्तित्वयुक्तः । अनादिमध्यनिधनः जन्मवृद्धिनाशशून्यः । शाश्वतः अपक्षयरहितः । ध्रुवः परिणामशून्यः । एतेन षड्भावविकारशून्यत्वमुक्तम् । तथा च श्रीविष्णुपुराणे—"अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः । वर्जितः शक्यते वक्तुं यस्सदाऽस्तीति केवलम् ॥" इति । महतः परमः महतोऽपि महीयान् । तमसः परमः । धाता स्रष्टा । "यतो वा इमानि भूतानि जायन्ते" इति श्रुतेः । प्रथमं स्वरूपमुक्त्वा इदानीं विग्रहगुणानाह—शङ्खचक्रगदाधर इत्यादिना । नित्यश्रीः नित्यानपायिश्रीः । अजय्यः जेतु

यथापूर्वमकल्पयत् " इति श्रुतेः । धाता स्थितिकर्ता । सा च स्थितिरनेकरूपा जगद्विविधकरणेन । " डुधाञ् धारणपोषणयोः " इति धातोः धारणं प्रशासनाधीनलोकत्वम् । " एतस्य वा अक्षरस्य प्रशासने " इत्यादिश्रुतेः । एवं कारणस्वरूपमुपास्यं तदुपयुक्ता गुणाश्चोक्ताः । अथ दिव्यमङ्गलविग्रहयोगमाह—शङ्खचक्रगदाधर इति । अनेन उपास्यत्वानुगुणशरणागतविरोधिनिरसनजागरूकत्वमुक्तम् । श्रीवत्सवक्षाः श्रीवत्सकौस्तुभादीनां नित्यत्वाद्रुद्रादिवैलक्षण्यमुक्तम् । नित्यश्रीरिति । नित्या अनपायिनी श्रीर्यस्य सः । अत्र विग्रहनित्यत्वमेवोक्तम्, स्वरूपनित्यत्वस्य साधारणप्राप्तत्वात् । नित्यैवैषा जगन्मातेति यावत् । श्रीसंबन्धादुत्तेजितपराभिभवनसामर्थ्यमाह—अजय्य इति । "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इति ह्युक्तम् । अजय्यः उपासकव्यतिरिक्तैर्जेतुमशक्यः । अजय्यः " अप्रधृष्यश्च सङ्ग्रामे सेन्द्रैरपि सुरासुरैः " इत्याद्युक्तरीत्या

मानुषं वपुरास्थाय विष्णुः सत्यपराक्रमः । सर्वैः परिवृतो देवैर्वानरत्वमुपागतैः ॥ १६ ॥
सर्वलोकेश्वरः साक्षाल्लोकानां हितकाम्यया । सराक्षसपरीवारं हतवांस्त्वां महाद्युतिः ॥ १७ ॥
इन्द्रियाणि पुरा जित्वा जितं त्रिभुवनं त्वया । स्मरद्भिरिव तद्वैरमिन्द्रियैरेव निर्जितः ॥ १८ ॥
क्रियतामविरोधश्च राघवेणेति यन्मया । उच्यमानो न गृह्णासि तस्येयं व्युष्टिरागता ॥ १९ ॥

जेतुमशक्यः । शाश्वतः त्रिविधपरिच्छेदरहितः विकारशून्यश्च । ध्रुवः अप्रकम्प्यः । अत्र धातेति रूढ्या विशेषणनिर्देशः । "अनादिनिधनो धाता" इति सहस्रनामपाठात् । नित्यश्रीरिति च ॥ १५ ॥ एवंभूतस्य परमात्मनः किमर्थमेवं व्यापार इत्यत्राह द्वाभ्याम्—मानुषमित्यादि । सर्वलोकेश्वरः सर्वलोकानां नियन्ता अनिष्टनिवृत्तीष्टप्रापणयोः कर्ता । विष्णुः विष्णुसकाशादविनाशित्ववरं परिहर्तुं मानुषं वपुः आस्थाय परिगृह्य, साक्षात् अव्यवधानेन, लोकानां हितकाम्यया लोकहितेच्छया सर्वलोकविरोधिनं त्वां हतवान् । व्यक्तमित्यत्रानुषज्यते ॥ १६ ॥ १७ ॥ त्वद्दोषकृत एवायं वध इत्याह—इन्द्रियाणीति ॥ १८ ॥ एवं सर्वज्ञा त्वं पूर्वं किमिति नोक्तवतीत्यत्राह—क्रियतामिति । न गृह्णासि नागृह्णाः । व्युष्टिः फलम् । " व्युष्टिः फले समृद्धौ च " इत्यमरः ॥ १९ ॥

मशक्यः । महायोगित्वादिविशेषणविशिष्टो यो विष्णुस्स एव रघुनाथ इत्यर्थः ॥ १४ ॥ १५ ॥ तस्य सर्वेश्वरस्य कथं मानुषतया प्रतिभानम्, कथं च वानरैस्सह संवासः, अवाप्तसमस्तकामस्य रावणहनने वा किं प्रयोजनम् ? इत्याशङ्क्य क्रमेणोत्तराण्याह—मानुषं वपुरास्थायेत्यादिश्लोकद्वयेन ॥ १६ ॥ १७ ॥ लोकान्तर्भूतस्य रावणस्य हनने सर्वलोकेश्वरस्य रामस्य वैषम्यनैर्घृण्ये स्यातामित्याशङ्कायां स्वकृतकर्मवशादेव स्वस्य नाशाद्रामस्य वैषम्यनैर्घृण्ये न स्त इत्याशयेनाह—इन्द्रियाणीति ॥ १८ ॥ क्रियतामिति । व्युष्टिः समृद्धिः " व्युष्टिः फले समृद्धौ च " इत्यमरः ॥ १९ ॥

अकस्मान्निर्हेतुकं सीतामुद्दिश्य अभिकामोऽसि अभिलाष्यसि, तां प्रति त्वदभिलाषः अयुक्त इत्यर्थः ॥ २० ॥ अयुक्ततामेवाह–अरुन्धत्या इति। सा विशिष्टाम् उत्कृष्टाम् । मान्यामित्यनेन न केवलमरुन्धत्यादिवत् पातिव्रत्यमात्रम्, किंतु मातृत्वं चेत्युच्यते । असदृशम् अनुचितम् ॥ २१ ॥ पतिव्रता चेत्, किमर्थं न दग्धवतीत्यत्राह–वसुधाया इत्यादिसार्धश्लोकद्वयेन । वसुधायाश्च वसुधाम् अत्यन्तक्षमावतीमित्यर्थः । श्रीमित्यत्र

अकस्माच्चाभिकामोऽसि सीतां राक्षसपुङ्गव। ऐश्वर्यस्य विनाशाय देहस्य स्वजनस्य च ॥ २० ॥ अरुन्धत्या विशिष्टां तां रोहिण्याश्चापि दुर्मते। सीतां धर्षयता मान्यां त्वया ह्यसदृशं कृतम् ॥ २१ ॥ वसुधायाश्च वसुधां श्रियः श्रीं भर्तृवत्सलाम्। सीतां सर्वानवद्याङ्गीमरण्ये विजने शुभाम् ॥ २२ ॥ आनयित्वा तु तां दीनां छद्मनाऽऽत्मस्वदूषण। अप्राप्य चैव तं कामं मैथिलीसङ्गमे कृतम्। पतिव्रतायास्तपसा नूनं दग्धोऽसि मे प्रभो ॥ २३ ॥ तदैव यन्न दग्धस्त्वं धर्षयंस्तनुमध्यमाम्। देवा बिभ्यति ते सर्वे सेन्द्राः साग्निपुरोगमाः ॥ २४ ॥

इयङभाव आर्षः। सर्वसम्पदधिष्ठात्रीमित्यर्थः । भर्तृवत्सलां पतिव्रताम् । सर्वानवद्याङ्गीम् अनवद्यसर्वाङ्गीम् । अरण्ये विजने, स्थितामिति शेषः। दीनां त्वदनभिलाषिणीमित्यर्थः । छद्मना मारीचमुखेन आनयित्वा । तं पूर्वमुक्तम् । पतिव्रतायास्तस्यास्तपसा दग्धोऽसि। मे प्रभो इत्यनेन अस्य सर्वस्य मद्दौर्भाग्यमेव निमित्तमिति द्योत्यते । आत्मस्वदूषणेत्यनेन निजस्वभूताया मम त्यागे त्वद्दूषणमेव हेतुः, न त्वस्मत्सौन्दर्यहानिरित्युच्यते ॥ २२ ॥ २३ ॥ रामानु०–अरण्ये विजने शुभामित्यस्यानन्तरम्, आनयित्वा तु तां दीनां छद्मनाऽऽत्मस्वदूषण । अप्राप्य चैव तं कामं मैथिलीसङ्गमे कृतम् । पतिव्रतायाः सहसा नूनं दग्धोऽसि मे प्रभो ॥ इत्येवं पाठक्रमः । अन्यथापाठस्तु लेखकप्रमादकृतः ॥ २२॥२३॥ तदैवेति । तनुमध्यमां धर्षयन् सन् त्वं तदैव न दग्ध इति यत् तेन माहात्म्येन

अकस्मादिति । अभिकामः अभिलषितवान् ॥ २० ॥ २१ ॥ वसुधाया अपि वसुधां क्षमावतां निदर्शनभूतायाः भूमेरपि दृष्टान्तभूमिमित्यर्थः । श्रियः श्रीं सर्वसौभाग्ययुक्तानां दृष्टान्तभूतायाः श्रियोऽपि दृष्टान्तभूमिमित्यर्थः ॥ २२ ॥ आत्मस्वदूषण आत्मीयदूषण ! ॥ २३ ॥ तनुमध्यमां धर्षयन् तदैव धर्षणसमये न दग्ध इति यत् तेन माहात्म्येन देवा अपि बिभ्यतीति [illegible] ॥ २४ ॥

त्वत्तो देवा बिभ्यतीति संबन्धः । भीता देवाः कथं ते धर्षणफलं दाहं ददृशुरिति भावः ॥ २४ ॥ अवश्यमिति । कर्ता घोरं पापस्य फलं काले पर्यागते प्राप्ते अवश्यं लभते, नात्र संशयः ॥ २५ ॥ पापं दुःखम् ॥ २६ ॥ तुभ्यं तव । ततः तस्याः सीतायाः । न बुध्यसे, अभ्यधिकत्वमिति शेषः ॥ २७ ॥ मैथिली मया कुलेन तुल्या अधिका वा न इत्येवं योज्यम् । दाक्षिण्येन विद्यासामर्थ्येन ॥ २८ ॥ अलक्षणः निर्निमित्तः । मैथिल्याः

अवश्यमेव लभते फलं पापस्य कर्मणः । घोरं पर्यागते काले कर्ता नास्त्यत्र संशयः ॥२५॥ शुभकृच्छुभमाप्नोति पापकृत् पापमश्नुते । विभीषणः सुखं प्राप्तस्त्वं प्राप्तः पापमीदृशम् ॥ २६ ॥ सन्त्यन्याः प्रमदास्तुभ्यं रूपेणाभ्यधिकास्ततः । अनङ्गवशमापन्नस्त्वं तु मोहान्न बुध्यसे ॥ २७ ॥ न कुलेन न रूपेण न दाक्षिण्येन मैथिली । मयाऽधिका वा तुल्या वा त्वं तु मोहान्न बुध्यसे ॥ २८ ॥ सर्वथा सर्वभूतानां नास्ति मृत्युरलक्षणः । तव तावदयं मृत्युर्मैथिलीकृतलक्षणः ॥ २९ ॥ सीतानिमित्तजो मृत्युस्त्वया दूरादुपाहृतः ॥ ३० ॥ मैथिली सह रामेण विशोका विहरिष्यति । अल्पपुण्या त्वहं घोरे पतिता शोकसागरे ॥ ३१ ॥ कैलासे मन्दरे मेरौ तथा चैत्ररथे वने । देवोद्यानेषु सर्वेषु विहृत्य सहिता त्वया ॥ ३२ ॥ विमानेनानुरूपेण या याम्यतुलया श्रिया । पश्यन्ती विविधान् देशांस्तांस्तांश्चित्रस्रगम्बरा । भ्रंशिता कामभोगेभ्यः साऽस्मि वीर वधात्तव ॥३३॥ सैवान्येवास्मि संवृत्ता धिग् राज्ञां चञ्चलाः श्रियः ॥३४॥ हा राजन् सुकुमारं ते सुभ्रु सुत्वक् समुन्नसम् । कान्तिश्रीद्युतिभिस्तुल्यमिन्दुपद्मदिवाकरैः ॥ ३५ ॥ किरीटकूटोज्ज्वलितं ताम्रास्यं दीप्तकुण्डलम् । मदव्याकुललोलाक्षं भूत्वा यत् पानभूमिषु ॥ ३६ ॥

कृतं मैथिलीकृतम्, मैथिल्यानयनमित्यर्थः । तदेव लक्षणं निमित्तं यस्य स तथा ॥ २९–३१ ॥ कैलास इत्यादिसार्धश्लोकद्वयमेकान्वयम् । याऽहं कैलासादिषु विहृत्य विमानेन विविधान् देशान् पश्यन्ती यामि अथ सा भ्रंशिताऽस्मीत्येवं सम्बन्धः ॥ ३२ ॥ ३३ ॥ सैवेत्यर्धम् । सैव एवं भुक्तभोगैव । अन्येव अस्पृष्टभोगेव ॥ ३४ ॥ एवं रावणस्य मतिं राज्यश्रियं च निन्दित्वा भर्तृसौन्दर्यवैपरीत्यं शोचति—हा राजन्नित्यादि श्लोकचतुष्टयमेका



अवश्यमेवेति । काले परिपाकसमये पर्यागते सति ॥ २५ ॥ शुभं सुखम् । पापं दुःखम् ॥ २६ ॥ तुभ्यं तव । ततः सीताया अपि ॥ २७ ॥ २८ ॥ सर्वभूतानामलक्षणः अहेतुको मृत्युः नास्ति, अत एव तवापि मैथिलीकृतलक्षणः मैथिल्या कृतचिह्नः, मैथिलीहेतुक इत्यर्थः ॥ २९–३४ ॥ हा राजन्नित्यादि सार्धश्लोकद्वयमेकं

न्वयम् । सुत्वक् स्निग्धत्वक् । समुन्नसं समुन्नतनासिकम् । कान्तिः प्रभा । श्रीः सौन्दर्यम् । द्युतिः तेजः । किरीटकूटोज्ज्वलितं शिखरतुल्यकिरीटविराजितम् । ताम्रास्यं रक्ताधरमित्यर्थः । चारु सुन्दरं तव यद्वक्त्रं मदव्याकुलल्लोलाक्षं भूत्वा अभ्राजत, तदेवेदं वक्त्रमद्य न भ्राजते ॥ ३५–३७ ॥ अप्रकाश

विविधस्रग्धरं चारु वल्गुस्मितकथं शुभम् । तदेवाद्य तवेदं हि वक्त्रं न भ्राजते प्रभो ॥ ३७ ॥ रामसायकनिर्भिन्नं सिक्तं रुधिरविस्रवैः । विशीर्णमेदोमस्तिष्कं रूक्षं स्यन्दनरेणुभिः ॥ ३८ ॥ हा पश्चिमा मे सम्प्राप्ता दशा वैधव्यकारिणी । या मयाऽऽसीन्न सम्बुद्धा कदाचिदपि मन्दया ॥३९॥ पिता दानवराजो मे भर्ता मे राक्षसेश्वरः । पुत्रो मे शक्रनिर्जेता इत्येवं गर्विता भृशम् ॥ ४० ॥ दृप्तारिमर्दनाः शूराः प्रख्यातबलपौरुषाः । अकुतश्चिद्भया नाथा ममेत्यासीन्मतिर्दृढा ॥४१॥ तेषामेवंप्रभावानां युष्माकं राक्षसर्षभ । कथं भयमसम्बुद्धं मानुषादिदमागतम् ॥४२॥

निमित्तमाह–रामेति । विस्रवैः प्रवाहैः । मेदः वसा । मस्तिष्कं मांसविशेषः ॥ ३८ ॥ हेति । मे वैधव्यकारिणी ते पश्चिमावस्था मृतिः सम्प्राप्ता ॥३९॥ अस्थिरस्य देहस्य विनाशः कुतो न सम्बुद्ध इत्यत्राह–पितेति । दानवराजः मयः ॥ ४० ॥ ४१ ॥ तेषामिति । तेषु युष्मास्वेवम्प्रभावेष्वित्यर्थः । मयस्य

वाक्यम् । समुन्नसम् उन्नतनासम् । कीर्तिश्रीद्युतिभिस्तुल्यं कीर्त्या प्रसादेन । "प्रसादयशसोः कीर्तिः" इति विश्वः । श्रिया शोभया, द्युत्या दीप्त्या च क्रमेणेन्दुपद्मदिवाकरैस्तुल्यम् । किरीटकूटोज्ज्वलितं किरीटकूटः किरीटाग्रं तेन उज्ज्वलितम् । ताम्रास्यं ताम्रोष्ठं ते यद्वक्त्रं पानभूमिषु मदव्याकुललोलाक्षं भूत्वा अभ्राजत तदेवाद्य वक्त्रं रामसायकनिर्भिन्नम् अत एव विकीर्णमेदोमस्तिष्कं मेदो वसा, मस्तिष्कं शिरः, मेदोयुक्तशिरः इत्यर्थः । एतादृशं सत् न भ्राजत इति सम्बन्धः ॥ ३५–३८ ॥ हेति । न संबुद्धा न विचारिता । मन्दया मन्दभाग्यया ॥ ३९–४१ ॥ तेषामिति । असम्बुद्धम् असम्भावितम् ॥ ४२–४४ ॥

स० -ननु श्रीमन्महाभारते वनपर्वणि " शरीरधातवो ह्यस्य मांसं रुधिरमेव च । नेशुर्ब्रह्मास्त्रनिर्दग्धं न च भस्माप्यदृश्यत ॥" इति रावणशरीरभस्मनोऽप्यदर्शनोक्तेः कथमेवं तच्छिरोवर्णनमिति चेन्न; ब्रह्मास्त्रनिर्दग्धं मांसं रुधिरं चेत्येते अस्य शरीरधातवो नेशुः अदर्शनं गताः । ब्रह्मास्त्रदाहे देहस्य भस्म दृश्येत कथं शरीरस्य दर्शनमित्यत आह न चेति । भस्मापि भस्म तु न दृश्यते विचित्रोऽयं दाह इति भारतस्यैतदर्थकताङ्गीकारेणाविरोधोपपत्तेः । तथा चोक्तमाचार्यैः– "बाणेन वज्रसदृशेन स भिन्नहृत्को रक्तं वमन् न्यपतदाशु महाविमानात्" इति । तथैव च पाद्मोत्तरखण्डे–"स गतासुर्महादैत्यः पपात च ममार च" इत्यादि॥ ३८॥

मरणाभावेऽपि इदानीमकार्यकरत्वादेवमुक्तम् । असम्बुद्धं पूर्वमचिन्तितम् ॥ ४२ ॥ स्निग्धेत्यादि सार्धश्लोकचतुष्टयमेकान्वयम् । प्रांशुशैलः उन्नतशैलः । अङ्गदवैडूर्यं वैडूर्यमयाङ्गदमिति केयूराद्भेदः । यच्छरीरं भाति आलिङ्गनयोग्यमभूत् । तदेव शरीरं दुर्लभसंस्पर्शं सत् पुनः परिष्वक्तुं न शक्यते ॥४३–४५॥

स्निग्धेन्द्रनीलनीलं तु प्रांशुशैलोपमं महत् । केयूराङ्गदवैडूर्यमुक्तादामस्रगुज्ज्वलम् ॥ ४३ ॥ कान्तं विहारेष्वधिकं दीप्तं सङ्ग्रामभूमिषु । भात्याभरणभाभिर्यद्विद्युद्भिरिव तोयदः ॥ ४४ ॥ तदेवाद्य शरीरं ते तीक्ष्णैर्नैकैः शरैश्चितम् । पुनर्दुर्लभसंस्पर्शं परिष्वक्तुं न शक्यते ॥ ४५ ॥ श्वाविधः शललैर्यद्वद्बाणैर्लग्नैर्निरन्तरम् । स्वर्पितैर्मर्मसु भृशं सञ्छिन्नस्नायुबन्धनम् । क्षितौ निपतितं राजन् श्यावं रुधिरसच्छवि ॥४६॥ वज्रप्रहाराभिहतो विकीर्ण इव पर्वतः ॥ ४७ ॥ हा स्वप्नः सत्यमेवेदं त्वं रामेण कथं हतः । त्वं मृत्योरपि मृत्युः स्याः कथं मृत्युवशं गतः ॥ ४८ ॥

दुर्लभसंस्पर्शत्वमुपपादयति–श्वाविध इत्यादिना । श्वाविधः शल्यमृगस्य, शललैः तल्लोमभिः, यद्वत् यथा । कण्टकाकारश्वाविल्लोमतुल्यैरिति शर विशेषणम् । मर्मसु स्वर्पितैः क्षिप्तैः । तत्रैव मर्मसु निरन्तरं लग्नैरिति योजना । श्यावं कपिशवर्णम् । "श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् ।" "श्यावः स्यात्कपिशः" इत्युभयत्राप्यमरः । स्नायवः धमन्यः । रुधिरसच्छवि रुधिरतुल्यकान्ति । स्वकान्तिं विहाय रुधिरकृतकान्त्यन्तरमित्यर्थः ॥४६॥ वज्रेत्यर्धम् । असीति शेषः ॥४७॥ हेति । इदं ते मरणं स्वप्नः स्वप्नानुभवविषयः सत्यमेव, नात्र संशयः । तत्र हेतुमाह त्वमिति । तत्रापि हेतुमाह त्वं मृत्यो

तदेवेत्यादिसार्धश्लोकद्वयमेकं वाक्यम् । बाणैर्लग्नैः निरन्तरमित्युत्तरशेषः । तदेव पूर्वोक्तविशेषणविशिष्टम् । श्वाविधः शल्यकस्य शललैः रोमभिरिव नैकैः शरैश्चितं व्याप्तं ते शरीरं परिष्वक्तुं न शक्यते इति सम्बन्धः । "श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम्" इत्युभयत्राप्यमरः । बाणैर्लग्नैरित्यादि । मर्मसु सर्वतो लग्नैर्बाणैर्निरन्तरं नीरन्ध्रम्, संछिन्नस्नायुबन्धनं स्नायवः अस्थिबन्धका धमनीविशेषाः, रुधिरसच्छवि रक्तकान्ति ॥ ४५ ॥ ४६ ॥ वज्रप्रहाराभिहतः विकीर्णः पर्वत इव क्षितौ निपतितं ते शरीरमित्यनुकर्षः । पश्यामीति शेषः ॥ ४७ ॥ ४८ ॥



स०–मुक्ताहारस्रगुज्ज्वलं मुक्तानां हाराः, स्रजः इतरा मणिमय्यः ताभिरुज्ज्वलम् । यद्वा मुक्तानां हारः परस्परं सङ्घर्षजं युद्धमिव स यासां ताः स्रजो मुक्तामालाः तदुज्ज्वलम् "हारो मुक्तावली युद्धे" इति विश्वः ॥ ४३ ॥

रिति ॥ ४८ ॥ त्रैलोक्येत्यादि हतप्रियेत्यन्तं श्लोकाष्टकमेकं वाक्यम् । एवम्भूतं भर्तारं दृष्ट्वा या इमं देहं धारयामि साऽहं स्थिराऽस्मि वज्रसारमय्यास्मि कथमन्यथा न शीर्येदिति भावः । महदिति त्रैलोक्यवसुविशेषणम् । यद्वा त्रैलोक्योद्वेगदं महद्वसु महत् यथा भवति तथा त्रैलोक्योद्वेगदमिति वा । उद्वेगो भयसम्भ्रमः । शङ्करस्य क्षेप्तारं कैलासचलनद्वारा ॥ ४९ ॥ ५० ॥ स्वयूथाः स्वबन्धवः निवातकवचा नाम केचनासुराः । तेषां संग्रहीतारं तैः

त्रैलोक्यवसुभोक्तारं त्रैलोक्योद्वेगदं महत् । जेतारं लोकपालानां क्षेप्तारं शङ्करस्य च ॥ ४९ ॥ दृप्तानां निग्रहीतारमाविष्कृतपराक्रमम् । लोकक्षोभयितारं च नादैर्भूतविराविणम् ॥ ५० ॥ ओजसा दृप्तवाक्यानां वक्तारं रिपुसन्निधौ । स्वयूथभृत्यवर्गाणां गोप्तारं भीमकर्मणाम् ॥ ५१ ॥ हन्तारं दानवेन्द्राणां यक्षाणां च सहस्रशः । निवातकवचानां च सङ्ग्रहीतारमीश्वरम् ॥ ५२ ॥ नैकयज्ञविलोप्तारं त्रातारं स्वजनस्य च । धर्मव्यवस्थाभेत्तारं मायास्रष्टारमाहवे ॥५३॥ देवासुरनृकन्यानामाहर्तारं ततस्ततः । शत्रुस्त्रीशोकदातारं नेतारं स्वजनस्य च ॥ ५४ ॥ लङ्काद्वीपस्य गोप्तारं कर्तारं भीमकर्मणाम् । अस्माकं कामभोगानां दातारं रथिनां वरम् ॥५५॥ एवंप्रभावं भर्तारं दृष्ट्वा रामेण पातितम् । स्थिराऽस्मि या देहमिमं धारयामि हतप्रिया ॥ ५६ ॥ शयनेषु महार्हेषु शयित्वा राक्षसेश्वर । इह कस्मात् प्रसुप्तोऽसि धरण्यां रेणुपाटलः ॥ ५७ ॥

सख्यकृतमित्यर्थः ॥ ५१ ॥ ५२ ॥ स्वजनस्य स्वाश्रितजनस्य । धर्मव्यवस्था आचारव्यवस्था । यज्ञकर्मभेत्तृत्वकथनेनातीव स्वतन्त्रत्वमुक्तम् ॥५३॥ कन्यानामिति स्त्रीमात्रमुच्यते । स्वजनस्य नेतारमिति । पूर्वत्रानिष्टनिवर्तकत्वमुक्तम्, अत्रेष्टप्रापकत्वम् ॥ ५४ ॥ भीमकर्मणां स्वशिरोहवनादी

वसूनि रत्नानि " रत्ने धने वसु " इत्यमरः । महत् अत्यर्थम् । ओजसा दर्पेण । भीमकर्मणां नृशंसानाम् ॥ ४९–५५ ॥ एवंप्रभावं त्वां दृष्ट्वा हतप्रिया इमं देहं धारयामि अतः स्थिरा कठिनहृदयाऽस्मीति सम्बन्धः ॥ ५६–६३ ॥

नाम् ॥५५–५७॥ यदेति । शस्तः हतः । तदा अभिहता प्रहृता । अद्य अस्मिन् त्वद्धनने सति तीव्रं निपातिता, मारितेत्यर्थः ॥५८॥ बन्धुजनैः हीनाऽहं न शोचिष्ये, यदि त्वं स्थितः स्याः । किंतु त्वया हीना अत एव कामभोगैर्विहीना शोचिष्य इति योजना ॥ ५९ ॥ दीर्घमध्वानं वीरस्वर्गम् ॥ ६० ॥



यदा मे तनयः शस्तो लक्ष्मणेनेन्द्रजिद्युधि । तदाऽस्म्यभिहता तीव्रमद्य त्वस्मिन्निपातिता ॥ ५८॥ नाहं बन्धुजनै र्हीना हीना नाथेन तु त्वया । विहीना कामभोगैश्च शोचिष्ये शाश्वतीः समाः ॥ ५९ ॥ प्रपन्नो दीर्घमध्वानं राजन्नद्यासि दुर्गमम् । नय मामपि दुःखार्तां न जीविष्ये त्वया विना ॥ ६०॥ कस्मात् त्वं मां विहायेह कृपणां गन्तुमिच्छसि । दीनां विलपितैर्मन्दां किंवा मां नाभिभाषसे ॥ ६१ ॥ दृष्ट्वा न खल्वसि क्रुद्धो मामिहानवकुण्ठिताम् । निर्गतां नगरद्वारात् पद्भ्यामेवागतां प्रभो ॥ ६२॥ पश्येष्टदार दारांस्ते भ्रष्टलज्जावकुण्ठितान् । बहिर्निष्पतितान् सर्वान् कथं दृष्ट्वा न कुप्यसि ॥ ६३ ॥ अयं क्रीडासहायस्ते नाथ लालप्यते जनः । न चैनमाश्वासयसे किंवा न बहुमन्यसे ॥ ६४ ॥ यास्त्वया विधवा राजन् कृता नैकाः कुलस्त्रियः । पतिव्रता धर्मपरा गुरुशुश्रूषणे रताः । ताभिः शोकाभितप्ताभिः शप्तः परवशं गतः ॥ ६५ ॥ त्वया विप्रकृताभिर्यत्तदा शप्तं तदागतम् ॥ ६६ ॥

विलपितैः प्रलापैः दीनां मन्दाम् अभाग्याम् ॥ ६१ ॥ अनवकुण्ठिताम् अनावरणाम् इहागतामित्यन्वयः ॥ ६२ ॥ पश्येति । इष्टदारेति संबुद्धिः । भ्रष्टलज्जावकुण्ठितान् हीनलज्जावकुण्ठितान् ॥६३॥ अयमिति । क्रीडासहायस्तेनाथो लालप्यत इति पाठे–अनाथ इति छेदः ॥६४॥ यास्त्वयेत्यादि सार्धश्लोक एकान्वयः । परवशं परवशत्वम्, शत्रुवशत्वमिति यावत् ॥६५॥ त्वयेत्यर्धम् । त्वया विप्रकृताभिः परिभूताभिः । तदा भर्तृवधकाले, यच्छप्तं

अयमिति । तेनाथ इत्यत्र अनाथ इति पदच्छेदः ॥ ६४ ॥ परवशं शत्रुवशम् । ताभिः तप्ताभिः तदा यच्छप्तं तत्फलमागतमित्यर्थः ॥ ६५ ॥ ६६ ॥



स०–शस्तः विशस्तः । अभिहता अभिघातमात्रं प्राप्ता । अद्य तु निपतिताऽस्मि । सति त्वयि मयि जायेत तनय इत्याशासम्भवादभिहतमात्रता मारणे इन्द्रजितः । इदानीं तव नाशान्नाऽऽशावकाशमासादयतीति निपातितेति सम्भवतीति भावः ॥ ५८ ॥ शाश्वतीः समाः यावदायुः ॥ ५९ ॥ [illegible] सहेति शेषः । इति तान्त्रिकोऽर्थः ॥ ६० ॥

तत् आगतम्, फलदमासीदित्यर्थः ॥ ६६ ॥ प्रवाद इति । पतिव्रतानामश्रूणि अकस्मान्निर्हेतुकतया भूतले न पतन्ति । पतन्ति चेत् किंचित् कुर्वन्त्येव । इत्येवं प्रायशः प्रवादः जनवार्ता त्वां प्रत्येव सत्यः यथार्थो जातः । पतिव्रतानामास्रपातकरणमनर्थावहमित्येवं जनवादः तथा कुर्वंति त्वयि दृष्टफल आसीदित्यर्थः ॥ ६७ ॥ शौण्डीर्यमानिना शूरमानिना ॥ ६८ ॥ त्वया कर्त्रा, मृगच्छद्मना मृगरूपकपटोपायेन । कातर्यलक्षणं कातर्यसूचनम् ॥ ६९ ॥

प्रवादः सत्य एवायं त्वां प्रति प्रायशो नृप । पतिव्रतानां नाकस्मात् पतन्त्यश्रूणि भूतले ॥ ६७ ॥ कथं च नाम ते राजन् लोकानाक्रम्य तेजसा । नारीचौर्यमिदं क्षुद्रं कृतं शौण्डीर्यमानिना ॥ ६८ ॥ अपनीयाश्रमाद्रामं यन्मृगच्छद्मना त्वया । आनीता रामपत्नी सा तत्ते कातर्यलक्षणम् ॥ ६९ ॥ कातर्यं च न ते युद्धे कदाचित् संस्मराम्यहम् । तत्तु भाग्यविपर्यासान्नूनं ते पक्वलक्षणम् ॥ ७० ॥ अतीतानागतार्थज्ञो वर्तमानविचक्षणः । मैथिलीमाहृतां दृष्ट्वा ध्यात्वा निश्वस्य चायतम् ॥ ७१ ॥ सत्यवाक् स महाभागो देवरो मे यदब्रवीत् । सोऽयं राक्षसमुख्यानां विनाशः पर्युपस्थितः । कामक्रोधसमुत्थेन व्यसनेन प्रसङ्गिना ॥ ७२ ॥ निर्वृत्तस्त्वत्कृतेऽनर्थः सोऽयं मूलहरो महान् । त्वया कृतमिदं सर्वमनाथं रक्षसां कुलम् ॥ ७३ ॥ न हि त्वं शोचितव्यो मे प्रख्यातबलपौरुषः । स्त्रीस्वभावात्तु मे बुद्धिः कारुण्ये परिवर्तते ॥ ७४ ॥ सुकृतं दुष्कृतं च त्वं गृहीत्वा स्वां गतिं गतः । आत्मानमनुशोचामि त्वद्वियोगेन दुःखिता ॥ ७५ ॥

ते युद्धे कातर्यं कदाचिदपि न स्मरामि, न जानामीत्यर्थः । एवमकातरप्रकृतेस्तव भाग्यविपर्यासात् यत्कातर्यं चौर्यरूपमस्ति तत् पक्वलक्षणं पक्वत्वलक्षणम्, विनाशज्ञापकमिति यावत् । महतो हीनकृत्यं हानिकरमिति लोकप्रवादादिति भावः ॥ ७० ॥ अतीतेत्यादिसार्धश्लोकद्वयमेकान्वयम् । देवरो यदब्रवीत् अयं तद्वाक्यार्थभूतो विनाशः प्रसङ्गिना प्रसक्तेन व्यसनेन हेतुना पर्युपस्थितः ॥ ७१ ॥ ७२ ॥ निर्वृत्त इति । त्वत्कृते त्वन्निमित्तम् । निर्वृत्तः प्रवृत्तः ॥ ७३ ॥ कारुण्ये दैन्ये ॥ ७४ ॥ ७५ ॥

प्रवाद इति । पतिव्रतानामश्रूणि प्रायशो भूतले अकस्मान्न पतन्तीत्ययं प्रवादस्त्वां प्रति सत्य एव जात इति सम्बन्धः ॥ ६७–६९ ॥ तें त्वया यत्कृतं तत् पक्वलक्षणं पक्वः विपाको विनाश इति यावत्, तस्य लक्षणं ज्ञापकम् ॥ ७० ॥ अतीतेत्यादिसार्धश्लोकद्वयमेकं वाक्यम् । मे देवरः यत् विनाशप्रतिपादकं

सुहृदामिति । कात्स्न्येंनोक्तं हितं त्वया न श्रुतमित्यनुषज्यते ॥ ७६ ॥ हेत्वर्थयुक्तं युक्तिप्रयोजनाभ्यां युक्तम् । विधिवत् शास्त्रोक्तप्रकारवत् । श्रेयस्करं हितभूतम् । अदारुणं सान्त्वपूर्वकम् । विभीषणेनाभिहितं वचनं त्वया हेतुमद्युक्तिमद्यथा भवति तथा न गृहीतम् । ज्ञातित्वेन मद्व्यसनं काङ्क्षसे इत्यादिना हेतूपपादनपूर्वकं न गृहीतमित्यर्थः ॥ ७७ ॥ मारीचकुम्भकर्णाभ्यां सह मम पितुर्मयस्य वाक्यं न श्रुतम् । तस्य अश्रवणस्य ईदृशं फलम्,

सुहृदां हितकामानां न श्रुतं वचनं त्वया । भ्रातॄणां चापि कात्स्न्येंन हितमुक्तं त्वयाऽनघ ॥ ७६ ॥ हेत्वर्थयुक्तं विधिवत् श्रेयस्करमदारुणम् । विभीषणेनाभिहितं न कृतं हेतुमत्त्वया ॥ ७७ ॥ मारीचकुम्भकर्णाभ्यां वाक्यं मम पितुस्तदा । न श्रुतं वीर्यमत्तेन तस्येदं फलमीदृशम् ॥ ७८ ॥ नीलजीमूतसङ्काश पीताम्बर शुभाङ्गद ॥ ७९ ॥ स्वगात्राणि विनिक्षिप्य किं शेषे रुधिराप्लुतः । प्रसुप्त इव शोकार्तां किं मां न प्रतिभाषसे ॥ ८० ॥ महावीर्यस्य दक्षस्य संयुगेष्वपलायिनः । यातुधानस्य दौहित्र किं च मां नाभ्युदीक्षसे ॥ ८१ ॥ उत्तिष्ठोत्तिष्ठ किं शेषे प्राप्ते परिभवे नवे । अद्य वै निर्भया लङ्कां प्रविष्टाः सूर्यरश्मयः ॥ ८२ ॥ येन सूदयसे शत्रून् समरे सूर्यवर्चसा । वज्रो वज्रधरस्येव सोऽयं ते सततार्चितः ॥ ८३ ॥ रणे शत्रुप्रहरणो हेमजालपरिष्कृतः । परिघो व्यवकीर्णस्ते बाणैश्छिन्नः सहस्रधा ॥ ८४ ॥

आगतमिति शेषः । अत्रानुवादान्मयोप्यस्तीत्यवगन्तव्यम् ॥ ७८ ॥ नीलेत्यादिसार्धश्लोक एकान्वयः । विनिक्षिप्य भूमौ प्रसार्य प्रसुप्त इव शेषे, शोकार्तां मां च किमिति न प्रतिभाषस इत्यन्वयः ॥ ७९ ॥ ८० ॥ यातुधानस्य माल्यवतः । सुमालिनो वा । तत्संबन्धकीर्तनमप्रतिहतकुलप्रभावप्रकटनार्थम् ॥ ८१ ॥ ८२ ॥ येनेत्यादिश्लोकद्वयमेकान्वयम् । ते त्वया सततार्चितः, बाणैः रामबाणैश्छिन्नः वज्रधरस्य वज्र इव स्थितः ते परिघः अद्य

वाक्यमब्रवीत् सोऽयं विनाशः पर्युपस्थित इति सम्बन्धः ॥ ७१–७६ ॥ हेत्वर्थयुक्तं हेतुप्रयोजनाभ्यां सहितं हेतुमत् न कृतं फलवन्नानुष्ठितमित्यर्थः ॥ ७७ ॥ मारीचकुम्भकर्णाभ्याम्, उक्तमिति शेषः । मम पितुः माल्यवतः ॥ ७८–८२ ॥ येनेत्यादि श्लोकद्वयमेकं वाक्यम् । सूर्यवर्चसा येन परिघेण शत्रून् सूदयन् एतेन सूदनेन हेतुना वज्रधरस्य वज्र इव अर्चितो बहुमतः प्रक्षिप्तोऽनेनेति प्रहरणः परिघः बाणैः सहस्रधा छिन्नो व्यवकीर्णो इति सम्बन्धः ॥ ८३–८५ ॥

विशीर्णः ॥ ८३–८५ ॥ धिगिति । यस्या मम हृदयं न फलते न स्फुटति तादृशीं मां धिगित्यन्वयः ॥८६॥ अवस्कन्नहृदया विलीनहृदया ॥८७॥ कश्मलेन अभिहता मूर्च्छिता । सन्ना कृशा ॥८८॥८९॥ नेत्यादिश्लोकद्वयमेकान्वयम् । दशाविभागपर्याये दशानां बाल्यकौमारयौवनवार्धकाद्यवस्थानां

प्रियामिवोपगुह्य त्वं शेषे समरमेदिनीम् । अप्रियामिव कस्माच्च मां नेच्छस्यभिभाषितुम् ॥ ८५ ॥ धिगस्तु हृदयं यस्या ममेदं न सहस्रधा । त्वयि पञ्चत्वमापन्ने फलते शोकपीडितम् ॥ ८६ ॥ इत्येवं विलपन्त्येव बाष्पव्याकुललोचना । स्नेहावस्कन्नहृदया देवी मोहमुपागमत् ॥ ८७ ॥ कश्मलाभिहता सन्ना बभौ सा रावणोरसि । सन्ध्यानुरक्ते जलदे दीप्ता विद्युदिवासिते ॥ ८८ ॥ तथागतां समुत्पत्य सपत्न्यस्ता भृशातुराः । पर्यवस्थापयामासू रुदन्त्यो रुदतीं भृशम् ॥ ८९ ॥ न ते सुविदिता देवि लोकानां स्थितिरध्रुवा । दशाविभागपर्याये राज्ञां चञ्चलया श्रिया ॥ ९० ॥ इत्येवमुच्यमाना सा सशब्दं प्ररुरोद ह । स्नापयन्ती त्वभिमुखौ स्तनावस्राम्बुविस्रवैः ॥ ९१ ॥ एतस्मिन्नन्तरे रामो विभीषणमुवाच ह । संस्कारः क्रियतां भ्रातुः स्त्रियश्चैता निवर्तय ॥ ९२ ॥ तं प्रश्रितस्ततो रामं श्रुतवाक्यो विभीषणः । विमृश्य बुद्ध्या धर्मज्ञो धर्मार्थसहितं वचः । रामस्यैवानुवृत्त्यर्थमुत्तरं प्रत्यभाषत ॥९३॥

विभागस्य भेदस्य पर्याये प्राप्तौ विषये, लोकानामध्रुवा स्थितिः राज्ञां चञ्चलया श्रिया सह ते त्वया सुविदिता नेति काकुः, सुविदितैवेत्यर्थः । लोकानां स्थितिरध्रुवेति राज्ञां श्रीश्चञ्चलेति च त्वया सुविदितैवेत्यर्थः । उच्यमाना, बन्धुवृद्धादिभिरिति शेषः । अभिमुखौ उन्नतौ ॥ ९०–९२ ॥ तामित्यादि । प्रश्रितः विनयान्वितः । विमृश्य "एतस्य यत् प्रेतगतस्य कृत्यं तत्कर्तुमिच्छामि तव प्रसादात्" इत्युक्तमङ्गीकृतं विचिन्त्येत्यर्थः । रामस्यैवानुवृत्त्यर्थं

यस्या मम हृदयं शोकपीडितं सत् न फलते न स्फुटति तां मां धिगित्यर्थः ॥ ८६ ॥ ८७ ॥ कश्मलं मूर्च्छा ॥ ८८ ॥ ८९ ॥ नेत्यादिश्लोकद्वयमेकं वाक्यम् । दशाविभागपर्याये दशानामवस्थानां विभागो भेदः तस्य पर्याये प्राप्तौ सति लोकानां स्थितिः राज्ञां चञ्चलया श्रिया सह अध्रुवेति त्वया न सुविदिता किम् ? विदितैव । राजश्रीः लोकस्थितिश्च अस्थिरेति जानास्येवेत्यर्थः ॥ ९० ॥ इत्येवमिति । अभिमुखौ उन्नतौ ॥ ९१ ॥ ९२ ॥ तं श्रुतवाक्यम् । श्रियेति सहार्थे तृतीया ।

रामेणानुज्ञातोऽस्मि चेत्तदा करिष्यामि नान्यथेत्येवमनुवृत्त्यर्थम् ॥ ९३ ॥ त्यक्तेति । त्यक्तो धर्मो व्रतं च येन तम् । अनृतम् अनृतवादिनम् ॥९४॥ गुरुगौरवात् गुरुरिति गौरवात्, पूज्योऽपि उक्तदोषान्मत्तः पूजां नार्हति ॥९५॥ भ्रातुः संस्काराकरणे त्वां नृशंसं लोका वक्ष्यन्तीत्याशङ्क्य वदन्तु नाम त एव पुनस्तद्गुणं विचारयन्तो मां युक्तकारिणं वक्ष्यन्तीत्याह–नृशंस इति । संस्काराकरणे नृशंस इति मां कामं मनुष्या वक्ष्यन्ति । तस्य रावणस्य ।

त्यक्तधर्मव्रतं क्रूरं नृशंसमनृतं तथा । नाहमर्होऽस्मि संस्कर्तुं परदाराभिमार्शिनम् ॥९४॥ भ्रातृरूपो हि मे शत्रुरेष सर्वाहिते रतः । रावणो नार्हते पूजां पूज्योऽपि गुरुगौरवात् ॥९५॥ नृशंस इति मां कामं वक्ष्यन्ति मनुजा भुवि । श्रुत्वा तस्यागुणान् सर्वे वक्ष्यन्ति सुकृतं पुनः ॥९६॥ तच्छ्रुत्वा परमप्रीतो रामो धर्मभृतां वरः । विभीषणमुवाचेदं वाक्यज्ञो वाक्यकोविदम् ॥ ९७ ॥ तवापि मे प्रियं कार्यं त्वत्प्रभावाच्च मे जितम् । अवश्यं तु क्षमं वाच्यो मया त्वं राक्षसेश्वर ॥ ९८ ॥ अधर्मानृतसंयुक्तः कामं त्वेष निशाचरः । तेजस्वी बलवान् शूरो संयुगेषु च नित्यशः ॥९९॥

अगुणान् दोषान् श्रुत्वा असंस्कुर्वता विभीषणेन सुकृतं शोभनं कृतमिति वक्ष्यन्तीत्यर्थः ॥ ९६ ॥ तच्छ्रुत्वेति । परमप्रीतः सत्यवचनकथनादिति भावः । अप्रीत इति वा छेदः ॥ ९७ ॥ दोषसद्भावेऽपि गुणबाहुल्यादयं संस्कारयोग्य इत्याह–तवापीत्यादिना । तव त्वया, मे प्रियमपि प्रियमेव कार्यम् । चो हेतौ । यस्मात्कारणात्, त्वत्प्रभावात् मे मया जितं तस्मान्मया त्वं क्षमं हितमेव वाच्यः । मत्प्रियत्वात् त्वद्धितत्वाच्च रावणसंस्कारः क्रियतामित्यर्थः । यद्वा तवापि मे प्रियं कार्यं मद्वैरिणो रावणस्यासंस्करणं नाम मम प्रियं तवापि कर्तव्यमेव । त्वत्प्रभावाच्च मे जितं पूर्वं च तस्य जयसाहाय्यरूपं प्रियं त्वया कृतम् । तथाप्यवश्यं तु क्षमं वाच्यः यदहं तत्र नियोजनीयोऽसीत्यर्थः ॥ ९८ ॥ दोषिणः कथमर्हत्वमित्याशङ्क्य गुणाधिक्यादित्याह–

श्रुतरामवाक्यो विभीषणः रावणस्य संस्कारः क्रियतामित्युक्तकरणं रामानुवृत्तिरिति बुद्ध्या विमृश्य रामानुवृत्त्यर्थमेव विमृष्टरूपं वचः प्रश्रितं यथा तथा प्रत्यभाषत प्रत्यपद्यतेत्यर्थः ॥९३–९५॥ भ्रातुः संस्काराकरणे लोकापवादो भवेदित्याशङ्कायामाह–नृशंस इति । भ्रातुः संस्काराकरणेन ये मनुजा मां प्रथमं नृशंस इति यथेच्छं वक्ष्यन्ति ते सर्वे मनुजाः पश्चात्तस्य रावणस्य अगुणान् क्रौर्यादीन् श्रुत्वा मां सुकृतं साधुकारिणमेव वक्ष्यन्तीत्यर्थः ॥ ९६ ॥ ९७ ॥ तव त्वया मे प्रियमपि कार्यं मया त्वं तु क्षममर्हमेव वाच्यः । कुतः ? त्वत्प्रभावाच्च मे जितमिति । अयमर्थः–त्वयाऽपि मत्प्रियमेव कर्तव्यम्, मयाऽपि त्वद्धितमेवोपदेष्टव्यम्, अतो मम प्रियः तव हितश्च रावणसंस्कार उपदिश्यत इति ॥ ९८ ॥ यद्यपि दोषवान्, तथापि गुणबाहुल्यात्संस्कार्य एवेत्यभिप्रायेणाह–अधर्मानृतेत्यादि

अधमैत्यादिना ॥ ९९ ॥ संयुगेष्वपराजितत्वमुदाहरति—शतक्रत्विति ॥ १०० ॥ गुणबाहुल्येऽपि त्वद्वैरी कथं संस्कार्यं इत्यत्राह—मरणेति । यथाऽयं तव बन्धुस्तथा ममापि त्वद्वत् बन्धुरेवायमित्यर्थः ॥ १०१ ॥ यशोभागिति । पापकारिणमपि संस्कृतवानिति यशस्तव भविष्यतीत्यर्थः ॥ १०२ ॥ राघवस्येति । अनुरूपेण यायजूकानुगुणेन । अत्र संस्कारारम्भात् स्त्रीनिवर्तनमर्थसिद्धम् ॥ १०३ ॥ चितामिति । चन्दनकाष्ठानां सम्बन्धिनीम् । पद्मक

शतक्रतुमुखैर्देवैः श्रूयते न पराजितः । महात्मा बलसम्पन्नो रावणो लोकरावणः ॥ १०० ॥ मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् । क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥ १०१ ॥ त्वत्सकाशाद्दशग्रीवः संस्कारं विधिपूर्वकम् । प्राप्तुमर्हति धर्मज्ञ त्वं यशोभाग् भविष्यसि ॥ १०२ ॥ राघवस्य वचः श्रुत्वा त्वरमाणो विभीषणः । संस्कारेणानुरूपेण योजयामास रावणम् ॥ १०३ ॥ चितां चन्दनकाष्ठानां पद्मकोशीरसंवृताम् । ब्राह्म्या संवेशयाश्चक्रू राङ्कवास्तरणावृताम् ॥ १०४ ॥ वर्तते वेदविहितो राज्ञो वै पश्चिमः क्रतुः । प्रचक्रू राक्षसेन्द्रस्य पितृमेधमनुक्रमम् ॥ १०५ ॥ वेदिं च दक्षिणप्राच्यां यथास्थानं च पावकम् । पृषदाज्येन सम्पूर्णं स्रुवं सर्वे प्रचिक्षिपुः ॥ १०६ ॥

मुशीरं च गन्धद्रव्यं प्रसिद्धम् । ब्राह्म्या वेदोक्तप्रक्रियया । रङ्कुः मृगविशेषः तत्सम्बन्धि चर्म राङ्कवं तदेवास्तरणं तेनावृतां चितां संवेशयाञ्चक्रुः योजयाञ्चक्रुः । रावणम्, ऋत्विज इति च शेषः ॥ १०४ ॥ पश्चिमः क्रतुः अन्त्येष्टिः । वर्तते अवर्तत चितानिर्माणानन्तरमान्तिमेष्टिं चक्रुरित्यर्थः । राक्षसेन्द्रस्य पितृमेधं पितृमेधसंस्कारं च, अनुक्रमं यथाक्रमं प्रचक्रुः ॥ १०५ ॥ सङ्ग्रहेणोक्तं संस्कारं प्रपञ्चयति—वेदिमित्यादिना । दक्षिणप्राच्यां चिताया आग्नेयभागे, वेदिं तत्र यथास्थानं पावकं च त्रेताग्निं च प्रचक्रुरित्यनुपज्यते । वेद्यां पश्चिमे गार्हपत्यं प्राच्यामाहवनीयं दक्षिणतो दक्षिणाग्निं च स्थापयामासुरित्यर्थः । पृषदाज्येन दधिमिश्रघृतेन । "पृषदाज्यं सदध्याज्यम्" इत्यमरः । संपूर्णं स्रुवं होमपात्रं प्रचिक्षिपुः प्रतिपत्त्यर्थं चितायामिति

श्लोकद्वयेन ॥ ९९ ॥ १०० ॥ तथापि तव वैरित्वादसंस्कार्यं इत्यत्राह—मरणान्तानीति । एव रावणः तव यथा तथा ममापि प्रीतिविषय इत्यर्थः ॥ १०१ ॥ १०२ ॥ अनुरूपेण संस्कारेण राज्ञां यज्वनां महर्षीणाम् ॥ १०३ ॥ पद्मकं सुगन्धद्रव्यविशेषः । ब्राह्म्या वेदोक्तक्रियया । संवेशयाञ्चक्रुः, रावणमिति ऋत्विज इति च शेषः । अत्र ऋत्विजः कर्तारः । राङ्कवास्तरणावृतां रङ्कुर्मृगविशेषः । तत्सम्बन्धिचर्म राङ्कवम् ॥ १०४ ॥ पश्चिमः क्रतुः अन्त्येष्टिः ॥ १०५ ॥ दक्षिणप्राच्यां चितायाः

शेषः ॥ १०६ ॥ यज्ञपात्रान्तराणामपि प्रतिपत्तिं दर्शयति—पादयोरित्यादिना श्लोकत्रयेण । शकटं सोमराजानयनशकटम् । उलूखलं यज्ञीयव्रीह्यवहनन साधनम् । अन्यत् स्थाल्यादिकं दारुपात्रादिकं यथास्थानं दत्त्वा, शास्त्रदृष्टेन वेदविहितेन, महर्षिविहितेन स्मृत्युक्तेन विधिना क्रमेण तत्र चितासमीपे मेध्यं पवित्रं पशुं छागं हत्वा, हननं होमपर्यन्तस्याप्युपलक्षणम् । परिस्तरणिकां परिस्तरणानि । जात्येकवचनम् । समवेशयन् चिक्षिपुरित्यर्थः ॥१०७-१०९॥

पादयोः शकटं प्रादुरन्तरूर्वोरुलूखलम् । दारुपात्राणि सर्वाणि अरणिं चोत्तरारणिम् । दत्त्वा तु मुसलं चान्यद्यथा स्थानं विचक्षणाः ॥ १०७ ॥ शास्त्रदृष्टेन विधिना महर्षिविहितेन च । तत्र मेध्यं पशुं हत्वा राक्षसेन्द्रस्य राक्षसाः ॥१०८॥ परिस्तरणिकां राज्ञो घृताक्तां समवेशयन् ॥१०९॥ गन्धैर्माल्यैरलंकृत्य रावणं दीनमानसाः । विभीषण सहायास्ते वस्त्रैश्च विविधैरपि ॥११०॥ लाजैश्चावकिरन्ति स्म बाष्पपूर्णमुखास्तदा ॥ १११ ॥ ददौ च पावकं तस्य विधियुक्तं विभीषणः ॥११२॥ स्नात्वा चैवार्द्रवस्त्रेण तिलान् दूर्वाभिमिश्रितान् । उदकेन च संमिश्रान् प्रदाय विधि पूर्वकम् ॥११३॥ प्रदाय चोदकं तस्मै मूर्ध्ना चैनं नमस्य च । ताः स्त्रियोऽनुनयामास सान्त्वमुक्त्वा पुनः पुनः ॥११४॥

अथ शवालङ्कारमाह—गन्धैरित्यादिसार्धश्लोकमेकं वाक्यम् । अवकिरन्ति, चितामिति शेषः ॥ ११० ॥ १११ ॥ अथ संस्कारमाह—ददाविति । तस्य तस्मै रावणाय । विधियुक्तं मन्त्रयुक्तम् ॥ ११२ ॥ स्नात्वेत्यादि गम्यतामितीतिपर्यन्तं किञ्चिदधिकं श्लोकद्वयमेकान्वयम् । दूर्वोदकमिश्रितान् तिलान् प्रेतावाहनार्थं भूमौ प्रदाय तत्र तस्मै रावणाय उदकं दत्त्वा ताः स्त्रियः गम्यतामिति पुनः पुनः सान्त्वमुक्त्वा, अनुनयामास पुरीं प्रापया

आग्नेयभागे वेदिं यथास्थानं पावकं च चक्रुरित्यनुषज्यते । पृषदाज्येन दधिसहितघृतेन । "पृषदाज्यं सदध्याज्यम्" इत्यमरः । पृषदाज्यपूर्णां स्रुवं प्रचिक्षिपुः, अग्नाविति शेषः ॥ १०६ ॥ पादयोः शकटमित्यादिश्लोकत्रयमेकं वाक्यम् । अरणिं मथनारणिम् । शास्त्रदृष्टेन वेदविहितेन । महर्षिविहितेन स्मृत्युक्तेन यथास्थानं सर्वं दत्त्वा अनुस्तरणिकां घृताक्तां समवेशयन् अनुस्तरणिकां राजगवीम्, राजगवीमालभ्य तच्चर्मणा यजमानमास्तृतवन्त इत्यर्थः । "यथा मृतायानुस्तरणीं घ्नन्ति" इति श्रुतेः ॥ १०७–११२ ॥ स्नात्वेत्यादि । प्रदाय विधिपूर्वकं, स्थित इति शेषः ॥ ११३ ॥ ११४ ॥

मास ॥ ११३ ॥ ११४ ॥ ताः सर्वा इत्युत्तरवाक्यादि । रामपार्श्वमुपागम्येति । रणशिरसि हतत्वेन रावणस्याशौचाभावादागतः, अत एवोत्तरदिने राज्याभिषेकोऽयोध्यागमनं चानुष्ठितम् । प्रथमायां रावणसंस्कारः ॥ ११५ ॥ ११६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥

गम्यतामिति ताः सर्वा विविशुर्नगरं तदा । प्रविष्टासु च सर्वासु राक्षसीषु विभीषणः । रामपार्श्वमुपागम्य तदाऽतिष्ठद्विनीतवत् ॥ ११५ ॥ रामोऽपि सह सैन्येन ससुग्रीवः सलक्ष्मणः । हर्षं लेभे रिपुं हत्वा यथा वृत्रं शतक्रतुः ॥ ११६ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥

ते रावणवधं दृष्ट्वा देवगन्धर्वदानवाः । जग्मुः स्वैस्वैर्विमानैस्ते कथयन्तः शुभाः कथाः ॥ १ ॥ रावणस्य वधं घोरं राघवस्य पराक्रमम् । सुयुद्धं वानराणां च सुग्रीवस्य च मन्त्रितम् ॥ २ ॥ अनुरागं च वीर्यं च सौमित्रेर्लक्ष्मणस्य च । [ पतिव्रतात्वं सीताया हनूमति पराक्रमम् । ] कथयन्तो महाभागा जग्मुर्हृष्टा यथागतम् ॥३॥ राघवस्तु रथं दिव्यमिन्द्रदत्तं शिखिप्रभम् । अनुज्ञाय महाभागो मातलिं प्रत्यपूजयत् ॥ ४ ॥

अथ विभीषणाभिषेकः–ते रावणवधमित्यादि । अत्र क्रियाभेदात्तच्छब्दद्वयम् ॥ १ ॥ शुभाः कथाः कथयन्त इत्यस्यैव विवरणम्–रावणस्य वधमित्यादि । मन्त्रितं मन्त्रम् । सौमित्रेरिति तन्मातुः श्लाघनव्यञ्जनाय, अस्य जननी हि भाग्यवतीति ॥ २ ॥ ३॥ इन्द्रदत्तम् इन्द्रप्रेरितम् । शिखिप्रभम्

गम्यतामिति । उक्ता इति शेषः ॥११५॥११६॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥

त इति । स्वैः स्वकीयैः ॥ १ ॥ कथाप्रकारमेवाह–रावणस्येत्यादिश्लोकद्वयेन ॥ २ ॥ ३ ॥ अनुज्ञाय रथं, नयेति शेषः ॥ ४–६ ॥

स०–शिखिप्रभम् अग्नितेजसम् । ननु वनपर्वणि " दृष्ट्वा रामं तु जानक्या सङ्गतं शक्रसारथिः । उवाच परमप्रीतः सुहृन्मध्य इदं वचः ॥ देवगन्धर्वयक्षाणां मानुषासुरभोगिनाम् । अपनीतं त्वया दुःखमिदं सत्यपराक्रम ॥ सदेवासुरगन्धर्वा यक्षराक्षसपन्नगाः । कथयिष्यन्ति लोकास्त्वां यावद्भूमिर्धरिष्यति ॥ इत्येवमुक्त्वाऽनुज्ञाप्य रामं शस्त्रभृतां वरम् । संपूज्यापाक्रमत्तेन रथेनादित्यवर्चसा ॥" इति सीतासङ्गमनानन्तरं रथस्य समातलेः प्रेषणोक्तेरत्र पूर्वमेव तदुक्तेर्विरोध इति चेत् ? सत्यम्; भारतस्योत्तरत्वा त्तदनुसारेण कथोह्यप उत्तरत्रात्र कार्यः । मातलिना दृष्टसीतारामसङ्गमेन गमने सर्ववार्ताया इन्द्रं प्रति प्रतिवक्तुं सुशकत्वगुणलाभाच्च । अथवा सङ्कोचेन कथां कथयितुर्बादरायणस्य न निर्भरः पौर्वापर्य[illegible] मातलिना स्वनाथं प्रति प्रतिबोधयितुं शक्यत्वाच्चेति वा समाधिरवधेयः ॥४॥

अग्निप्रभम् । प्रत्यपूजयत् उपचचार॥ ४–६ ॥ परिष्वज्येति । प्रचोदितः विज्ञप्तः । बलालयं शिबिरम् ॥७॥ सत्यसम्पन्नत्वादिविशेषणं यथोक्तकारित्व द्योतनाय ॥ ८ ॥ विभीषणमित्यादिश्लोकद्वयमेकान्वयम् । लङ्कायामभिषेचय लङ्कायां गत्वाऽभिषेचय । समुद्रतीर एव लङ्काराज्याभिषेके कृतेऽपि पुन

राघवेणाभ्यनुज्ञातो मातलिः शक्रसारथिः । दिव्यं तं रथमास्थाय दिवमेवारुरोह सः ॥ ५ ॥ तस्मिंस्तु दिवमारूढे सुरसारथिसत्तमे । राघवः परमप्रीतः सुग्रीवं परिषस्वजे ॥ ६ ॥ परिष्वज्य च सुग्रीवं लक्ष्मणेन प्रचोदितः । पूज्यमानो हरिश्रेष्ठैराजगाम बलालयम् ॥ ७ ॥ अब्रवीच्च तदा रामः समीपपरिवर्तिनम् । सौमित्रिं सत्यसम्पन्नं लक्ष्मणं दीप्ततेजसम् ॥ ८ ॥ विभीषणमिमं सौम्य लङ्कायामभिषेचय । अनुरक्तं च भक्तं च मम चैवोपकारिणम् ॥ ९ ॥ एष मे परमः कामो यदीमं रावणानुजम् । लङ्कायां सौम्य पश्येयमभिषिक्तं विभीषणम् ॥ १० ॥ एव मुक्तस्तु सौमित्री राघवेण महात्मना । तथेत्युक्त्वा तु संहृष्टः सौवर्णं घटमाददे ॥ ११ ॥ तं घटं वानरेन्द्राणां हस्ते दत्त्वा मनोजवान् । आदिदेश महासत्त्वान् समुद्रसलिलानये ॥ १२ ॥ इति शीघ्रं ततो गत्वा वानरास्ते महाबलाः । आगतास्तज्जलं गृह्य समुद्राद्वानरोत्तमाः ॥ १३ ॥ ततस्त्वेकं घटं गृह्य संस्थाप्य परमासने । घटेन तेन सौमित्रिरभ्यषिञ्चद्विभीषणम् ॥ १४॥

र्विधानं रावणसिंहासनेऽभिषेकार्थम् । अनुरक्तमित्यनेन मित्रकृत्यमुक्तम् । भक्तमित्यनेन दास्यकृत्यम् । उपकारिणमित्यनेनानुरागभक्त्योः कार्यपर्यवसान मुक्तम् । परमः काम इत्यनेन शरणागतविभीषणाभिमतपरिपूरणमेव विजयस्य प्रधानप्रयोजनमित्यवगम्यते ॥ ९ ॥ १० ॥ एवमिति । घटमिति जात्येक वचनम् ॥११॥ तमिति । आनये आनयने । हस्त इत्यत्रापि जात्येकवचनम्, वानरेन्द्राणामिति बहुवचनप्रयोगात् ॥१२॥ इतीति । आदेशाद्धेतोरित्यर्थः। "इति हेतुप्रकरणप्रकारादिसमाप्तिषु" इत्यमरः । वानरा वानरोत्तमा इति वचनं वानरोत्तमत्वेऽपि मानुषत्वव्यावर्तनाय । समुद्रात् समुद्रेभ्यः ॥ १३॥१४ ॥



बलालयं शिबिरमाजगाम । चैत्रशुक्लप्रतिपादि रावणसंस्कारबलालयप्रवेशौ ॥ ७–११ ॥ घटं हस्त इति जातावेकवचनम् ॥ १२–१८ ॥

लङ्कायामित्यादिसार्धश्लोक एकान्वयः । अनेन राम[illegible] लक्ष्मणो विभीषणादिभिः सह लङ्कां प्रविष्टवानित्यवगम्यते । मन्त्रदृष्टेन मन्त्रेषु वेदेषु दृष्टेन स्पष्टमवगम्यमानेन, विधिना प्रकारेण । शुद्धात्मानमित्यनेन रामाज्ञया अभिषेकमङ्गीकृतवान् । परमार्थस्तु रामकैङ्कर्य एवासक्तोऽभूदित्यव



लङ्कायां रक्षसां मध्ये राजानं रामशासनात् । विधिना मन्त्रदृष्टेन सुहृद्गणसमावृतम् । अभ्यषिञ्चत् स धर्मात्मा शुद्धात्मानं विभीषणम् ॥ १५ ॥ तस्यामात्या जहृषिरे भक्ता ये चास्य राक्षसाः । दृष्ट्वाऽभिषिक्तं लङ्कायां राक्षसेन्द्रं विभीषणम् ॥ १६ ॥ स तद्राज्यं महत् प्राप्य रामदत्तं विभीषणः । प्रकृतीः सान्त्वयित्वा च ततो राममुपागमत् । ॥ १७ ॥ अक्षतान् मोदकान् लाजान् दिव्याः सुमनसस्तदा । आजह्रुरथ संहृष्टाः पौरास्तस्मै निशाचराः ॥ १८ ॥ स तान् गृहीत्वा दुर्धर्षो राघवाय न्यवेदयत् । मङ्गल्यं मङ्गलं सर्वं लक्ष्मणाय च वीर्यवान् ॥ १९ ॥ कृतकार्यं समृद्धार्थं दृष्ट्वा रामो विभीषणम् । प्रतिजग्राह तत् सर्वं तस्यैव प्रियकाम्यया ॥ २० ॥ ततः शैलोपमं वीरं प्राञ्जलिं पार्श्वतः स्थितम् । अब्रवीद्राघवो वाक्यं हनुमन्तं प्लवङ्गमम् ॥ २१ ॥ अनुमान्य महाराजमिमं सौम्य विभीषणम् ॥ २२ ॥ गच्छ सौम्य पुरीं लङ्कामनुज्ञाप्य यथाविधि । प्रविश्य रावणगृहं विजयेनाभिनन्द्य च ॥ २३ ॥ वैदेह्यै मां कुशलिनं ससुग्रीवं सलक्ष्मणम् । आचक्ष्व जयतां श्रेष्ठ रावणं च मया हतम् ॥ २४ ॥

गम्यते । आज्ञाकैङ्कर्यं हि कर्तव्यम् ॥ १५ ॥ १६ ॥ स इति । प्रकृतीः अमात्यप्रभृतीन्, सान्त्वयित्वा पुत्रमित्रादिविनाशजशोकापनोदनं कृत्वा । राममुपागमत्, लक्ष्मणेन सहेति शेषः ॥ १७ ॥ १८ ॥ स तानिति । मङ्गलमर्हतीति मङ्गल्यम्, मङ्गलप्रयोजनमित्यर्थः । मङ्गलं हरिद्रादिमङ्गलद्रव्यम् । सर्वम् उक्ताक्षतादिभिन्नम् । रामाय लक्ष्मणाय च न्यवेदयत् ॥ १९ ॥ कृतकार्यमिति । तस्यैव प्रियकाम्यया न तु स्वभोगेच्छया ॥ २० ॥ २१ ॥ अनुमान्येत्यादिसार्धश्लोकत्रयमेकान्वयम् । विभीषणमनुमान्य लङ्कां गच्छ, विभीषणमनुज्ञाप्य रावणगृहं प्रविश्य विजयेन विजयकथनेन, अभिनन्द्य

स तानिति । मङ्गल्यं मङ्गलप्रयोजनम् । मङ्गलं मङ्गलवस्तुजातम् ॥ १९–२२ ॥ विजयेनाभिनन्द्य जयकथनेन नन्दयित्वा ॥ २३ ॥ २४ ॥

सीतां तोषयित्वा, वैदेह्यै मां कुशलिनमाचक्ष्वेति संबन्धः । सन्देशं सीतावाचिकम् ॥ २२–२५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चदशोत्तरशततमः सर्गः ॥ ११५ ॥

प्रियमेतदुदाहृत्य मैथिल्यास्त्वं हरीश्वर । प्रतिगृह्य च सन्देशमुपावर्तितुमर्हसि ॥ २५ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे पञ्चदशोत्तरशततमः सर्गः ॥ ११५ ॥

इति प्रतिसमादिष्टो हनुमान् मारुतात्मजः । प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ॥ १ ॥ प्रविश्य च महातेजा रावणस्य निवेशनम् । ददर्श मृजया हीनां सातङ्कामिव रोहिणीम् । वृक्षमूले निरानन्दां राक्षसीभिः समावृताम् ॥ २ ॥ निभृतः प्रणतः प्रह्वः सोऽभिगम्याभिवाद्य च ॥ ३ ॥ दृष्ट्वा तमागतं देवी हनुमन्तं महाबलम् । तूष्णीमास्त तदा दृष्ट्वा स्मृत्वा प्रमुदिताऽभवत् ॥ ४ ॥

अथ हनुमत्सीतासंवादः—इति प्रतिसमादिष्ट इत्यादि । मारुतात्मज इत्यनेन वेगातिशय उच्यते । पूज्यमान इति । मार्गप्रदर्शनादिभिः पूज्यमानत्वम् ॥ १ ॥ प्रविश्येत्यादिसार्धश्लोक एकान्वयः । मृजया शरीरसंस्कारेण । सातङ्कां सग्रहपीडाम् ॥ २ ॥ निभृत इत्यर्धम् । अभिगम्य समीपं प्राप्य । अभिवाद्य स्वनाम सङ्कीर्त्य । प्रणतः कृतप्रणामः सन् । निभृतः निश्चलः । प्रह्वः प्रकर्षेण सङ्कुचितगात्रः, स्थित इति शेषः । आचार्यास्तु—करणत्रयेणापि निश्चलो बभूवेत्यर्थ इति प्राहुः ॥ ३ ॥ तं दृष्ट्वा विस्मृत्य प्रथमं तूष्णीमास्त । पुनर्दृष्ट्वा स्मृत्वा प्रमुदिताऽभवत् । यद्वा सामान्यतो दृष्ट्वा तूष्णीमास्त । ततो विशेषतो दृष्ट्वा स्मृत्वा हनुमानिति ज्ञात्वा प्रमुदिताऽभवत् । अथवा तं दृष्ट्वा स्मृत्वा प्रत्यभिज्ञाय प्रमुदिताऽभवत् । प्रमोदातिरेकेण

॥ २५ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां पञ्चदशोत्तरशततमः सर्गः ॥११५॥ १ ॥ प्रविश्येति । मृजया शरीरसंस्कारेण ॥ २ ॥ निभृतः निश्चलः । प्रह्वः नम्रः, स्थित इति शेषः ॥ ३ ॥ दृष्ट्वेति । सामान्यतो दृष्ट्वा तूष्णीमास्त, ततो दृष्ट्वा स्मृत्वा हनुमानिति ज्ञात्वा ॥४–८॥



स०—दृष्ट्वा रामविजयादिकं दृष्ट्वैव समागतं न तु श्रुत्वा एतादृशं हनुमन्तं दृष्ट्वा तदा तूष्णीमास्त किं वदिष्यति वेति । स्मृत्वा रामानयनादिकं यथाप्रतिज्ञं तेन कृतं स्मृत्वा हृष्टा चाभवत् । एवमर्थाङ्गीकारादेव दृष्ट्वेत्यनेन—

स्तब्धा सती तूष्णीमास्तेत्यर्थः ॥ ४ ॥ सौम्यं निजदर्शनेन विकसितम् ॥ ५-९ ॥ रामसन्देशवाक्यमाह—प्रियमाख्यामीत्यादि श्लोकद्वयमेकान्वयम् । हे देवि ! ते प्रियमाख्यामि । त्वां तु भूयः भूयिष्ठम्, सभाजये प्रीणये । धर्मज्ञे पातिव्रत्यधर्मज्ञे ! त्वं दिष्ट्या जीवसि । अन्यथा मम जयो व्यर्थ एव स्यादिति भावः । मम जयेन मत्पराक्रमेण, नः संयुगे जयो लब्धः । गतव्यथा सती स्वस्था भवेति योजना ॥ १० ॥ ११ ॥ हे सीते ! तव निर्जये

सौम्यं दृष्ट्वा मुखं तस्या हनुमान् प्लवगोत्तमः । रामस्य वचनं सर्वमाख्यातुमुपचक्रमे ॥ ५ ॥ वैदेहि कुशली रामः सहसुग्रीवलक्ष्मणः । विभीषणसहायश्च हरीणां सहितो बलैः ॥६॥ कुशलं चाह सिद्धार्थो हतशत्रुररिन्दमः ॥ ७ ॥ विभीषणसहायेन रामेण हरिभिः सह । निहतो रावणो देवि लक्ष्मणस्य नयेन च ॥ ८ ॥ पृष्ट्वा तु कुशलं रामो वीरस्त्वां रघुनन्दनः । अब्रवीत् परमप्रीतः कृतार्थेनान्तरात्मना ॥९॥ प्रियमाख्यामि ते देवि त्वां तु भूयः सभाजये। दिष्ट्या जीवसि धर्मज्ञे जयेन मम संयुगे ॥ १० ॥ [ तव प्रभावाद्धर्मज्ञे महान् रामेण संयुगे । ] लब्धो नो विजयः सीते स्वस्था भव गतव्यथा । रावणश्च हतः शत्रुर्लङ्का चेयं वशे स्थिता ॥ ११ ॥ मया ह्यलब्धनिद्रेण दृढेन तव निर्जये । प्रतिज्ञैषा विनिस्तीर्णा बद्ध्वा सेतुं महोदधौ ॥ १२ ॥

शत्रुहस्तात्तव विमोचने । दृढेन एकाग्रचित्तेन । अत एव अलब्धनिद्रेण मया महोदधौ सेतुं बद्ध्वा, एषा प्रतिज्ञा रावणं हनिष्यामीति प्रतिज्ञा, विनि

कुशलं पृष्ट्वा रामस्त्वामब्रवीदिति सम्बन्धः ॥ ९ ॥ वचनप्रकारमेवाह—प्रियमाख्यामीत्यादि । प्रियमाख्यामीत्यारभ्य—अयं चाभ्येति संहृष्टस्त्वद्दर्शनसमुत्सुकः इत्ये तदन्तं रामसन्देशवाक्यम् । देवि ! ते प्रियमाख्यामि । त्वां तु भूयः भूयिष्ठम् । सभाजये प्रीणयामि । मम जयेन हेतुना मम जयं निश्चित्यैव जीवसीत्यर्थः । अत एव नः अस्माभिः संयुगे विजयो लब्धः स्वस्था भवेति योजना । यद्वा मम जयेन मत्पराक्रमेण जयो लब्धः, स्वस्था भवेति सम्बन्धः ॥१०॥११॥ तव निर्जये शत्रुहस्तात्तव विमोचने दृढेन एकाग्रचित्तेन अत एवालब्धनिद्रेण मया महोदधौ सेतुं बद्ध्वा एषा प्रतिज्ञा रावणं हनिष्यामीत्येवंरूपा विनिस्तीर्णेति सम्बन्धः ॥ १२ ॥

—न पौनरुक्त्यम् ॥ ४ ॥ [तव प्रभावात् त्वत्पातिव्रत्यमाहात्म्यात् । तत्स्तुतिकालत्वादेवमुक्तिः । तव त्वत्सम्बन्धिना रामेण । प्रभावात् स्वसामर्थ्यात् ।] अयं विजयो लब्ध इति वा । लब्धोऽयं विजय इति पाठः ॥ ११

स्तीर्णा प्रतिपालितेत्यर्थः ॥ १२ ॥ सम्भ्रमः व्यग्रता । वर्तन्त्या वर्तमानया ॥ १३ ॥ यस्मात् स्वगृहे परिवर्तसे तस्माद्विश्वस्ता सती आश्वसिहि विश्रान्ता भव, निवृत्तखेदा भवेत्यर्थः । अयं विभीषणः ॥ १४ ॥ समुत्पत्य हर्षेण समुत्थाय । अवरुद्धा अवरुद्धव्यापारा ॥ १५–१७ ॥ क्षणान्तरं

सम्भ्रमश्च न गन्तव्यो वर्तन्त्या रावणालये । विभीषणविधेयं हि लङ्कैश्वर्यमिदं कृतम् ॥ १३ ॥ तदाश्वसिहि विश्वस्ता स्वगृहे परिवर्तसे । अयं चाभ्येति संहृष्टस्त्वद्दर्शनसमुत्सुकः ॥ १४ ॥ एवमुक्ता समुत्पत्य सीता शशिनिभानना । प्रहर्षेणावरुद्धा सा व्याजहार न किंचन ॥ १५ ॥ अब्रवीच्च हरिश्रेष्ठः सीतामप्रतिजल्पतीम् । किं नु चिन्तयसे देवि किं नु मां नाभिभाषसे ॥ १६ ॥ एवमुक्ता हनुमता सीता धर्मे व्यवस्थिता । अब्रवीत् परमप्रीता हर्षगद्गदया गिरा ॥ १७ ॥ प्रियमेतदुपश्रुत्य भर्तुर्विजयसंश्रितम् । प्रहर्षवशमापन्ना निर्वाक्यास्मि क्षणान्तरम् ॥ १८ ॥ न हि पश्यामि सदृशं चिन्तयन्ती प्लवङ्गम । मत्प्रियाख्यानकस्येह तव प्रत्यभिनन्दनम् ॥ १९ ॥ न हि पश्यामि तत् सौम्य पृथिव्यामपि वानर । सदृशं मत्प्रियाख्याने तव दातुं भवेत् समम् ॥ २० ॥ हिरण्यं वा सुवर्णं वा रत्नानि विविधानि च । राज्यं वा त्रिषु लोकेषु नैतदर्हति भाषितुम् ॥ २१ ॥

क्षणमात्रं निर्वाक्याऽस्मि, हर्षावरुद्धव्यापारत्वादिति भावः ॥ १८ ॥ निर्वाक्याऽस्मीत्यत्र हेत्वन्तरमाह—न हीत्यादि । सदृशं प्रत्यभिनन्दनं प्रतिप्रियवचनम् ॥ १९ ॥ सदृशं प्रदेयवस्त्वपि न पश्यामीत्याह—न हीत्यादिना । अत्र अपिशब्देन अन्तरिक्षस्वर्गौ समुच्चीयेते । त्रिष्वपि लोकेषु न पश्यामि । यत् मत्प्रियाख्याने विषये तव दातुं समम् अत्यन्तसदृशं भवेत् ॥२०॥ उक्तं विवृणोति—हिरण्यमिति । हिरण्यं रजतम् । "रजतश्चहिरण्यम्"

सम्भ्रमः भयम् ॥ १३ ॥ अयं विभीषणः त्वद्दर्शनसमुत्सुकस्सन्नभ्येतीति सम्बन्धः ॥ १४–१७ ॥ क्षणान्तरं क्षणमात्रम् ॥ १८ ॥ न केवलं हर्षवशादेव निर्वाक्याऽस्मि किन्तु प्रियाख्यातुस्तव तत्सदृशप्रियवचनस्याभावादपीत्याह—नहीति । मत्प्रियाख्यानकस्य मत्प्रियाख्यातुस्तव प्रत्यभिनन्दनं प्रतिप्रियवाक्यं न पश्यामीति सम्बन्धः ॥ १९ ॥ सदृशं प्रियवचनं न पश्यामीत्युक्त्वा सदृशं प्रदेयं वस्त्वपि नास्तीत्याह—नहि पश्यामीत्यादिश्लोकद्वयेन । दातुं सदृशं यदस्ति तत्पृथिव्यामपि न पश्यामि, पातालस्वर्गयोरपीत्यपिशब्दार्थः ॥ २० ॥ हिरण्यं रजतम् । हिरण्यादि तत्सर्वमपि प्रियाख्यानसमत्वेन भाषितुं नार्हतीति सम्बन्धः ॥२१॥२२॥

ति०—वर्तन्त्या वर्तमानया ॥ १३ ॥ स०—अत्रेदानीमभावेपि कालान्तरे देशान्तरे दीयतामित्यत आह—न हीति । पृथिव्यां नास्तीत्यनेन मम मातुर्गृहेऽभावेऽपि भर्तृगृहे सहभोगरूपमस्तीति सूचयति ॥२०॥

इति श्रुतेः । त्रिषु लोकेषु राज्यं त्रिलोकविषयराजत्वम् । नैतदर्हति भाषितुम् । हिरण्यादेतत्सर्वमपि प्रियाख्यानसमत्वेन भाषितुं नार्हतीत्यर्थः ॥ २१ ॥ प्रमुखे अग्रे ॥ २२ ॥ प्रतिप्रियवचनं न पश्यामीत्यस्योत्तरमाह—भर्तुरिति । एवंविधं स्निग्धं वाक्यं भाषितुं त्वमेवार्हसि नान्या । अनेन सर्वोत्तरं प्रीतिप्रियवचनं मह्यं दत्तमित्युक्तं भवति ॥२३॥ प्रियाख्यानसदृशं प्रदेयं वस्तु नास्तीत्यस्योत्तरमाह—तवेति । एतत् प्रत्यभिनन्दनं न पश्यामीत्येतत् । सारवत् प्रत्यभिनन्दनवचनराहित्यकथनेन मद्वचनस्य निरवधिकप्रीतिजनकत्वकथनान्महातात्पर्यवत् । स्निग्धं मयि प्रीतिपुरस्सरम् ।

एवमुक्तस्तु वैदेह्या प्रत्युवाच प्लवङ्गमः । गृहीतप्राञ्जलिर्वाक्यं सीतायाः प्रमुखे स्थितः ॥ २२ ॥ भर्तुः प्रियहिते युक्ते भर्तुर्विजयकाङ्क्षिणि । स्निग्धमेवंविधं वाक्यं त्वमेवार्हसि भाषितुम् ॥२३॥ तवैतद्वचनं सौम्ये सारवत् स्निग्धमेव च । रत्नौघाद्विविधाच्चापि देवराज्याद्विशिष्यते ॥ २४ ॥ अर्थतश्च मया प्राप्ता देवराज्यादयो गुणाः । हतशत्रुं विजयिनं रामं पश्यामि सुस्थितम् ॥२५॥ तस्य तद्वचनं श्रुत्वा मैथिली जनकात्मजा । ततः शुभतरं वाक्यमुवाच पवनात्मजम् ॥ २६ ॥ अतिलक्षणसम्पन्नं माधुर्यगुणभूषितम् । बुद्ध्या ह्यष्टाङ्गया युक्तं त्वमेवार्हसि भाषितुम् ॥ २७॥

एतद्वचनश्रवणेनैव मया सर्वोत्तरं वस्तु समुपलब्धमिति भावः ॥२४॥ पूर्वमेव लब्धदेवराज्यादिकस्य तत्प्रदानं निरर्थकमित्याशयेनाह—अर्थत इति । रामं विजयिनं पश्यामीति यत् अस्मात् अर्थतः प्रयोजनात् देवराज्यादयो गुणाः उत्कर्षाः प्राप्ताः । रामविजयदर्शनमेव राज्यादिकमित्यर्थः ॥२५॥२६॥ नानृग्वेदेत्यादिना राम इव स्वयमपि तद्वाक्यसौष्ठवं प्रशंसति—अतीति । अतिलक्षणसम्पन्नम् आकांक्षायोग्यतासन्निधिमत्पदवत्त्वरूपवाक्यलक्षणसम्पन्नम् । "बहुव्याहरताऽनेन न किंचिदपशब्दितम्" इत्युक्तशब्दसाधुत्वसम्पन्नम् । माधुर्यगुणभूषितम् "संश्रवे मधुरं वाक्यम्" इत्युक्तरीत्या श्रवणमात्रेण

स्निग्धं स्नेहोपेतम्, अशक्यप्रतिपादनमित्येवंरूपं त्वमेव भाषितुमर्हसि नान्या, अतस्त्वया सर्वोत्तरं यदिदं वचनमुक्तं तदेव परमं प्रत्यभिनन्दनमिति शेषः ॥२३॥ प्रियाख्यानसदृशं प्रदेयं नास्तीत्यस्योत्तरमाह—तवेति । एतद्वचनं निस्समाधिकम् एतद्वचनश्रवणेनैव मया सर्वोत्तरं वस्तु लब्धमिति भावः ॥ २४ ॥ विजयिनं रामं पश्यामीति यत् अनेनैवार्थतः परमार्थतो देवराज्यादयो गुणाः श्रेयांसि प्राप्ता एवेत्यर्थः ॥२५॥२६॥ अतिलक्षणसम्पन्नम् आकांक्षायोग्यतासन्निधिमत्पदवत्त्वरूपवाक्यलक्षणसम्पन्नम्, माधुर्यगुणभूषितं श्रवणमात्रेणानन्दजनकत्वं माधुर्यम् । अष्टाङ्गया "ग्रहणं धारणं चैव स्मरणं प्रतिपादनम् । ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥"

आनन्दजनकत्वरूपमाधुर्यगुणभूषितम् । अष्टाङ्गया "ग्रहणं धारणं चैव स्मरणं प्रतिपादनम् । ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः॥" इत्युक्ताष्टाङ्गयुक्तया बुद्ध्या युक्तम्, तादृशबुद्धिपूर्वकमित्यर्थः ॥२७॥ न केवलं वाक्यतः, गुणतोऽपि श्लाघ्योऽसीत्याह—श्लाघनीय इत्यादिना श्लोकद्वयेन । अनिलस्य श्लाघनीयः पुत्रः, अनिलादपि सञ्जीवनकर इत्यर्थः । सञ्जीवनं चानृशंस्यधर्मादित्याह परमधार्मिक इति । बलं प्रयाससहिष्णुत्वम् । शौर्यं युद्धोत्साहः ।

श्लाघनीयोऽनिलस्य त्वं पुत्रः परमधार्मिकः । बलं शौर्यं श्रुतं सत्त्वं विक्रमो दाक्ष्यमुत्तमम् ॥ २८ ॥ तेजः क्षमा धृतिर्धैर्यं विनीतत्वं न संशयः । एते चान्ये च बहवो गुणास्त्वय्येव शोभनाः॥२९॥अथोवाच पुनः सीतामसम्भ्रान्तो विनीतवत् । प्रगृहीताञ्जलिर्हर्षात् सीतायाः प्रमुखे स्थितः ॥ ३० ॥ इमास्तु खलु राक्षस्यो यदि त्वमनुमन्यसे । हन्तुमिच्छाम्यहं सर्वा याभिस्त्वं तर्जिता पुरा ॥ ३१ ॥ क्लिश्यन्तीं पतिदेवां त्वामशोकवनिकां गताम् ॥ ३२ ॥ घोररूपसमाचाराः क्रूराः क्रूरतरेक्षणाः । राक्षस्यो दारुणकथा वरमेतत् प्रयच्छ मे ॥ ३३ ॥ मुष्टिभिः पाणिभिः सर्वाश्चरणैश्चैव शोभने । इच्छामि विविधैर्घातैर्हन्तुमेताः सुदारुणाः ॥ ३४ ॥

श्रुतं शास्त्रज्ञानम् । "श्रुतं शास्त्रावधृतयोः" इत्यमरः । सत्त्वं शारीरः सारः । विक्रमः पराक्रमः । दाक्ष्यं सामर्थ्यम् । उत्तममिति सर्वविशेषणम् । तेजः पराभिभवनसामर्थ्यम् । क्षमा अपराधसहिष्णुत्वम् । धृतिः प्रभावः । धैर्यं क्षोभके सत्यक्षोभ्यत्वम् । विनीतत्वं विनयवत्त्वम् विशिष्टनीतिमत्त्वं वा । एते चान्ये च दयादयो बहवो गुणाः, त्वय्येव शोभनाः त्वामाश्रयमधिगम्य शोभमाना भवन्ति । न संशयः नाहमसतो गुणानारोप्य स्तौमीत्यर्थः॥२८–३०॥ इदं तु मे प्रियाख्यानपारितोषिकत्वेन देयमित्यर्थयते—इमा इत्यादिना । सार्धश्लोकद्वयमेकान्वयम् । क्लिश्यन्तीं पतिदेवतां त्वां प्रति या राक्षस्यो दारुणकथा अब्रुवन् । पुरा याभिस्त्वं तर्जिता इमा राक्षस्यः राक्षसीः, यद्यनुमन्यसे हन्तुमिच्छामि । एतद्वरं मे प्रयच्छेति सम्बन्धः ॥३१–३३॥ हननप्रकारं स्वक्रोधानु

इत्युक्ताष्टाङ्गयुक्तया बुद्ध्या युक्तम् ॥ २७ ॥ श्लाघनीय इत्यादि श्लोकद्वयमेकं वाक्यम् । बलम् आयाससहिष्णुत्वम् । शौर्यं युद्धोत्साहः । सत्त्वं शारीरस्सारः । तेजः पराभिभवनसामर्थ्यम् । विनीतत्वं चेत्येवमादयो बहवो गुणाः त्वय्येव सन्ति अत्र न संशय इत्यन्वयः ॥ २८ ॥२९॥ असम्भ्रान्तः स्तुत्या अविकृतचित्तः । विनीतवत् विनीतार्हम् ॥ ३० ॥ राक्षस्यः राक्षसीः ॥ ३१ ॥ क्लिश्यन्तीमित्यादि सार्धश्लोकमेकं वाक्यम् ॥ ३२–३५ ॥

रूपं दर्शयति--मुष्टिभिरित्यादिना। श्लोकत्रयमेकान्वयम् । घातैः प्रहारैः । भक्षणैः खादनैः। लुञ्चनैः उन्मूलनैः । शुष्कमुखीभिः नखैः। दारणैः पीडनैः कपोलताडनैर्वा । लङ्घनैः उत्प्लुत्योपरिपातनैः। हतैः हस्तैस्ताडनैः । निपात्य भूमौ पातयित्वा मुष्टयादिभिर्हन्तुमिच्छामीत्यन्वयः ॥ ३४–३६ ॥ उक्तमर्थमावश्यकत्वज्ञापनाय पुनरपि सङ्ग्रहेण याचते–एवमिति ॥ ३७ ॥ एवमुक्तेति । धर्मसहितमिति क्रियाविशेषणम् ॥ ३८ ॥ राजेति । राजसंश्रयवश्यानां राजसेवापरवशानाम् । अत एव पराज्ञया कुर्वन्तीनां राजचोदितकार्यं कुर्वन्तीनाम्, विधेयानां चोदिताकरणे दण्डार्हाणाम्, रावणस्य

घातैर्जानुप्रहारैश्च दशनानां च पातनैः । भक्षणैः कर्णनासानां केशानां लुञ्चनैस्तथा ॥३५॥ नखैः शुष्कमुखीभिश्च दारणैर्लङ्घनैर्हतैः । निपात्य हन्तुमिच्छामि तव विप्रियकारिणीः ॥ ३६ ॥ एवंप्रकारैर्बहुभिर्विप्रकारैर्यशस्विनि । हन्तुमिच्छाम्यहं देवि तवेमाः कृतकिल्बिषाः ॥ ३७ ॥ एवमुक्ता हनुमता वैदेही जनकात्मजा । उवाच धर्मसहितं हनुमन्तं यशस्विनी ॥३८॥ राजसंश्रयवश्यानां कुर्वन्तीनां पराज्ञया । विधेयानां च दासीनां कः कुप्येद्वानरोत्तम ॥ ३९ ॥ भाग्यवैषम्ययोगेन पुरादुश्चरितेन च । मयैतत् प्राप्यते सर्वं स्वकृतं ह्युपभुज्यते ॥ ४० ॥ प्राप्तव्यं तु दशायोगान्मयैतदिति निश्चितम् । दासीनां रावणस्याहं मर्षयामीह दुर्बला ॥ ४१ ॥

दासीनां दासीभ्यः, कः कुप्येत् ॥ ३९ ॥ भाग्यवैषम्ययोगेन भाग्यविपर्यययोगेन, भाग्यस्यापरिपक्वतयेत्यर्थः। पुरादुश्चरितेन च पूर्वकृतदुष्कृतेन च, एतत्तर्जनभर्त्सनादिकं प्राप्यते। तत्र हेतुमाह स्वकृतमिति। हि यस्मात्। स्वकृतमुपभुज्यते स्वकृतकर्मफलं प्राप्यते लोकैः। अतो मयाऽपि भुज्यत इत्यर्थः ॥ ४० ॥ रावणस्य दासीनाम् एतत्तर्जनादिकं दशायोगात् अवस्थायोगात्, अनुभवयोग्यकालसम्बन्धादिति यावत् । प्राप्तव्यमिति मया निश्चितम्। दुर्बला पूर्वमेतादृशापन्निवारककर्मकरणाशक्ता । अतोऽहमिह राक्षसीविषये मर्षयामीति सम्बन्धः । दुर्बला कृपापरवशा वा। हते रावणे

शुष्कमुखीभिः नखैः। लङ्घनैः उत्प्लुत्यापतनैः ॥ ३६ ॥ एवमिति श्लोको भिन्नं वाक्यम्। राजसंश्रयवश्यानां राजसंश्रयात्परवशानाम् राजसंश्रयो राजसेवा, राजसेवापराणामित्यर्थः॥ ३७–४० ॥ प्राप्तव्यमिति। दशायोगं, नपुंसकत्वमार्षम्। अयं दशायोगः एतादृशदुरवस्थाविशेषः मया प्राप्तव्य इति निश्चितः निश्चयः कृतः। कुतः ? दुर्बला पूर्वमेतादृशानां निराकरणकर्मकरणाशक्ता अतः रावणस्य राक्षसीनामेतत्तर्जनादिकं मर्षयामि, असहमित्यर्थः। दशायोगादिति पाठे

दौर्बल्यान्तराभावात्, परदुःखसहिष्णुत्वमेव हि तदानीं दौर्बल्यम् ॥ ४१ ॥ राक्षसीनामपराधस्य राजाज्ञामूलकत्वमन्वयव्यतिरेकाभ्यां दर्शयति—आज्ञप्ता इति ॥ ४२ ॥ अथासां स्वातन्त्र्येणापकारकरणमभ्युपेत्य तथापि क्षन्तव्यमित्यत्र इतिहासं दर्शयति—अयमिति । पुरा किल कश्चिद्व्याधो व्याघ्रेणानुसृतो वृक्षमारूढः, वृक्षमूलगतो व्याघ्रो वृक्षोपरि स्थितमृक्षं 'वन्यमृगाणामस्माकं जात्या शत्रुरेषः, तस्मादेनं वृक्षात् पातय' इत्यब्रवीत् ।

आज्ञप्ता रावणेनैता राक्षस्यो मामतर्जयन् । हते तस्मिन्न कुर्युर्हि तर्जनं वानरोत्तम ॥ ४२ ॥
अयं व्याघ्रसमीपे तु पुराणो धर्मसंस्थितः । ऋक्षेण गीतः श्लोको मे तन्निबोध प्लवङ्गम ॥ ४३ ॥
न परः पापमादत्ते परेषां पापकर्मणाम् । समयो रक्षितव्यस्तु सन्तश्चारित्रभूषणाः ॥ ४४ ॥

एवमुक्तो भल्लूकः स्ववासस्थानगतमेनं न पातयिष्यामि, तथात्वे धर्महानिः स्यादित्युक्त्वा सुष्वाप । तदनन्तरं 'त्वां रक्षिष्यामि, सुप्तमृक्षं पातय' इति व्याघ्रेण चोदितः सन् व्याधस्तमृक्षमपातयत् । स त्वभ्यासवशेन शाखान्तरमवलम्ब्य नापतत् । तदनु कृतापराधमेनं पातयेति पुनः पुनर्व्याघ्रेणोच्यमानोऽपि भल्लूको बहुशः कृतापराधमप्येनं तुभ्यं न दास्यामीत्यभिधाय ररक्षेति पौराणिकी गाथा ॥ ४३ ॥ तत्रत्यं श्लोकं पठति—न पर इति । सुग्रीवं प्रति रामः कपोतोपाख्यानमिव हनुमन्तमुद्दिश्य देव्यपि स्वाभिप्रेतेऽर्थे ऋक्षगीतं प्रमाणयति स्म । परेषां पापकर्मणां परानुद्दिश्य पापं कुर्वताम् । परः प्राज्ञः पुरुषः । पापं प्रत्यपकाररूपम् । नादत्ते नाङ्गीकरोति, न करोतीत्यर्थः । समयः आचारः अपकर्तृष्वपि प्रत्यपकार

रावणस्य दासीनामेतत्तर्जनादिकं दशायोगादवस्थायोगादनुभवयोग्यकालसम्भवादिति यावत् । प्राप्तव्यमिति मया निश्चितम् । कुतः ? दुर्बला, अत एतत् मर्षयामि, असहमित्यर्थः ॥ ४१ ॥ राक्षसीनामपकारस्य राज्ञो मूलत्वम् अन्वयव्यतिरेकाभ्यां दर्शयति--आज्ञप्ता इति ॥४२॥ अयमिति । कस्मिंश्चिदरण्ये व्याघ्रानुद्रुतः कश्चिद् व्याधो वृक्षमारूढः। वृक्षमूलं गतो व्याघ्रो वृक्षाग्रे स्थितमृक्षं मृगाणामस्माकमयं व्याधः जात्या शत्रुः वृक्षादेनं पातयेत्युवाच । भल्लूकः स्वस्थानगतमेनं न पातयिष्यामि, तथात्वे धर्महानिः स्यादित्युक्त्वा सुष्वाप । त्वां रक्षिष्यामि सुप्तमृक्षं पातयेति व्याघ्रेण चोदितस्सन् व्याधस्तम् ऋक्षमपातयत् । स त्वभ्यासवशेन शाखान्तरमवलम्ब्य नापतत् । तदनन्तरं कृतापराधमेनं पातयेति पुनः पुनर्व्याघ्रेणोच्यमानोऽपि भल्लूको बहुशः कृतापराधमप्येनं तुभ्यं न दास्यामीत्यभिधाय ररक्षेति पौराणिकी कथा ॥ ४३ ॥ तत्रत्योऽयं न पर इति श्लोकः । परेषां पापकर्मणां परानुद्दिश्य पापं कुर्वताम् । परः प्राज्ञः पुरुषः पापं प्रत्यपकाररूपं नादत्ते नाङ्गीकरोति, न करोतीत्यर्थः । समयः आचारः, अपकर्तृष्वपि प्रत्यपकारवर्जनरूपः रक्षितव्यस्तु रक्षितव्य एव, तथाहि सन्तः चारित्रभूषणाः । चारित्रभूषणैरिति

वर्जनरूपः, रक्षितव्यस्तु रक्षितव्य एव । तथा हि, सन्तश्चारित्रभूषणाः । सद्भिश्चारित्रभूषणैरिति वा पाठः ॥ ४४ ॥ अथ देव्या अभयप्रदानश्लोकः— पापानामिति । पापानां वा शुभानां वा त्वदभिप्रायेण पापानां वा अस्मदभिप्रायेण शुभानां वा । तदेव ममोद्देश्यं 'दोषो यद्यपि तस्य स्यात्' इतिवत् । मलिनस्य हि स्नानमपेक्षितम् । तासां पापत्वादेवास्मदपेक्षा । किं शुभानामस्माभिः ? तत्पुण्यानामेव तद्रक्षकत्वात् । तस्मात्तत्पापमेवास्माकमुद्दे

पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति ॥ ४५ ॥
लोकहिंसाविहाराणां रक्षसां कामरूपिणाम् । कुर्वतामपि पापानि नैव कार्यमशोभनम् ॥ ४६ ॥
एवमुक्तस्तु हनुमान् सीतया वाक्यकोविदः । प्रत्युवाच ततः सीतां रामपत्नीं यशस्विनीम् ॥ ४७ ॥
युक्ता रामस्य भवती धर्मपत्नी यशस्विनी । प्रतिसन्दिश मां देवि गमिष्ये यत्र राघवः ॥ ४८ ॥

श्यम् । ननु तर्हि 'दण्ड्या दण्डनीयाः नादण्ड्याः' इति धर्मशास्त्रं भवतीमासाद्य भज्येतेत्याशङ्क्य दुष्टोऽपि शरणागतो रक्षणीय इति विशेषशास्त्रं भवन्त मासाद्य किं भञ्जनीयमित्याह—वधार्हाणामिति । वधार्हाणामपीत्यर्थः । सप्तम्यर्थे षष्ठी । प्लवङ्गम अनभिलषितमेवाभिलषितवान् खलु भवान् । तेषु । आर्येण महता पुरुषेण । करुणं दया कार्यम् । तिष्ठतु पुण्यं पापं च इदानीमेतद्दयनीयदशां पश्य । यद्वा शुभानामिति दृष्टान्तार्थम् । शुभेषु वधार्हेषु यथा करुणं कार्यं तथा पापेषु वधार्हेष्वपि कार्यमित्यर्थः । सापराधादण्डनेऽतिप्रसङ्गः स्यादित्याशङ्क्याह न कश्चिन्नापराध्यतीति । सर्वोऽप्यपराध्यती त्यर्थः ॥ ४५ ॥ रक्षसां स्वजातिप्रयुक्तहिंसादेरदोषावहत्वाच्छास्त्रोक्तदण्डविषयत्वं नास्तीत्याह—लोकेति । अशोभनं दण्डनम् ॥ ४६ ॥ ४७ ॥ रामस्य युक्ता, 'किं पुनर्मद्विधो जनः' इति स्वस्योत्तमशरणत्वं प्रतिपादितवतो रामस्य शरण्यत्वादिगुणवत्तया सदृशीत्यर्थः । अनेन सर्गेण सीताया दयालुत्वम्

पाठे—सद्भिस्समयो रक्षितव्य इति सम्बन्धः ॥ ४४ ॥ पापानामिति । पापानां वधार्हाणां वा पापजनेषु वधार्हेषु शुभजनेषु वधार्हेषु सत्स्वपि तेषु आर्येण सज्जनेन करुणं कारुण्यं कार्यम्, कर्तव्यमित्यर्थः । ननु सापराधिषु यथापराधं दण्डः कर्तव्य इत्याशङ्क्यातिप्रसङ्गेन परिहरति—नेति । न कश्चिदपि नापराध्यति सर्वोऽप्य पराध्यत्येव, अतः सर्वस्यापि वध्यत्वाद्दयाशालिनस्तूष्णींकरणमेव वरमिति भावः ॥ ४५ ॥ रक्षसां परहिंसनं स्वाभाविको धर्मः, अतोऽपि न वध्या इत्याह—

अपराधसहिष्णुत्वं घटकत्वं चोक्तमिति ध्येयम् ॥ ४८ ॥ एवमिति । इच्छामीत्यत्र इतिकरणं द्रष्टव्यम् ॥ ४९–५२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षोडशोत्तरशततमः सर्गः ॥ ११६ ॥



एवमुक्ता हनुमता वैदेही जनकात्मजा । अब्रवीद्द्रष्टुमिच्छामि भर्तारं वानरोत्तम ॥ ४९ ॥ तस्यास्तद्वचनं श्रुत्वा हनुमान् मारुतात्मजः । हर्षयन् मैथिलीं वाक्यमुवाचेदं महाद्युतिः ॥५०॥ पूर्णचन्द्राननं रामं द्रक्ष्यस्यार्ये सलक्ष्मणम् । स्थिरमित्रं हतामित्रं शचीव त्रिदशेश्वरम् ॥५१॥ तामेवमुक्त्वा राजन्तीं सीतां साक्षादिव श्रियम् । आजगाम महावेगो हनुमान् यत्र राघवः ॥५२॥ इत्यार्षे श्रीरामायणे॰ श्रीमद्युद्धकाण्डे षोडशोत्तरशततमः सर्गः ॥११६॥

स उवाच महाप्राज्ञमभिगम्य प्लवङ्गमः । रामं वचनमर्थज्ञो वरं सर्वधनुष्मताम् ॥ १ ॥ यन्निमित्तोऽयमारम्भः कर्मणां च फलोदयः । तां देवीं शोकसन्तप्तां मैथिलीं द्रष्टुमर्हसि ॥ २ ॥ सा हि शोकसमाविष्टा बाष्पपर्याकुलेक्षणा । मैथिली विजयं श्रुत्वा तव हर्षमुपागमत् ॥३॥ पूर्वकात् प्रत्ययाच्चाहमुक्तो विश्वस्तया तया । भर्तारं द्रष्टुमिच्छामि कृतार्थं सहलक्ष्मणम् ॥ ४॥ एवमुक्तो हनुमता रामो धर्मभृतां वरः । अगच्छत् सहसा ध्यानमीषद्बाष्पपरिप्लुतः ॥ ५ ॥ दीर्घमुष्णं विनिश्वस्य मेदिनीमवलोकयन् । उवाच मेघसङ्काशं विभीषणमुपस्थितम् ॥ ६ ॥

अथ सीतानयनम्–स उवाचेत्यादि ॥ १ ॥ यन्निमित्त इति । आरम्भः उद्योगः, कर्मणां सेतुबन्धादिव्यापाराणाम्, फलोदयः रावणविजयश्च यन्निमित्तः यस्याः सीताया लाभार्थः, तां द्रष्टुमर्हसि ॥ २॥३॥ पूर्वकात्पूर्वोत्पन्नात् । प्रत्ययाद्विश्वासात् ॥ ४ ॥ रामः ईषद्बाष्पपरिप्लुतः सन् सहसा ध्यानमगच्छत् । रावणभवनोषितसीतापरिग्रहे महान् लोकापवादो भवेत्, निर्दोषायास्तस्याः परित्यागे महान् दोषः स्यादित्येवं कार्यदौस्थ्यात् किं कर्तव्यमिति चिन्तयामासेत्यर्थः ॥ ५ ॥ निश्वासदैर्घ्येण चिन्तादैर्घ्यं गृह्यते । औष्ण्येन कथं क्लिष्टां तां पुनः क्लेशयिष्यामीत्यन्तस्तापो व्यज्यते । भूमिं समवलोकयन् इति लोकहिंसेति ॥ ४६–५२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां षोडशोत्तरशततमः सर्गः ॥ ११६ ॥

॥ १ ॥ यन्निमित्त इति । आरम्भः उद्योगः । कर्मणां सेतुबन्धनादिव्यापाराणां फलोदयः रावणजयश्च यन्निमित्तः यस्यास्सीतायाः लाभार्थः ॥ २ ॥ ३ ॥ पूर्वकात् प्रत्ययात् सन्देशकारणात् प्रत्ययात्, अतीव विश्वासादित्यर्थः ॥ ४ ॥ रामः ईषद्बाष्पपरिप्लुतस्सन् सहसा ध्यानमगच्छत्, रावणभवनोषितसीतापरिग्रहे महान्

चिन्तापारवश्याभिनयः । मेघसङ्काशमित्यनेन सीतानयने कृतत्वरत्वमुच्यते ॥६॥ दिव्याङ्गरागामिति । अलंकृत्यानयनादेशः उत्तरकालिकपरुषभाषणा र्हताप्रतिपादनाय । नहि तादृशदशापन्नां दीनां परुषं भाषितुं युज्यते । तच्च तस्या न परित्यागार्थम्, किंतु चतुर्मुखादिदेवतामुखेन तस्याः पातिव्रत्यं ख्यापयितुम् । मा चिरम्, विलम्बो न कार्य इत्यर्थः ॥ ७ ॥ एवमित्यादिश्लोकद्वयमेकान्वयम् । स्वाभिः स्त्रीभिरचोदयत् निजस्त्रीमुखेनाचोदयत्॥८–१०॥

दिव्याङ्गरागां वैदेहीं दिव्याभरणभूषिताम् । इह सीतां शिरस्स्नातामुपस्थापय मा चिरम् ॥ ७ ॥
एवमुक्तस्तु रामेण त्वरमाणो विभीषणः । प्रविश्यान्तःपुरं सीतां स्वाभिः स्त्रीभिरचोदयत् ॥ ८ ॥
दिव्याङ्गरागा वैदेहि दिव्याभरणभूषिता । यानमारोह भद्रं ते भर्ता त्वां द्रष्टुमिच्छति ॥ ९ ॥
एवमुक्ता तु वैदेही प्रत्युवाच विभीषणम् । अस्नाता द्रष्टुमिच्छामि भर्तारं राक्षसाधिप ॥ १० ॥
तस्यास्तद्वचनं श्रुत्वा प्रत्युवाच विभीषणः । यदाह राजा भर्ता ते तत्तथा कर्तुमर्हसि ॥ ११ ॥

रामानु०–एवमुक्तस्तु रामेण त्वरमाणो विभीषणः । प्रविश्यान्तःपुरं सीतां स्वाभिः स्त्रीभिरचोदयत् ॥ दिव्याङ्गरागा वैदेहि दिव्याभरणभूषिता । यानमारोह भद्रं ते भर्ता त्वां द्रष्टुमिच्छति ॥ एवमुक्ता तु वैदेही प्रत्युवाच विभीषणम् ॥ इति पाठक्रमः । भर्ता त्वां द्रष्टुमिच्छतीति स्वाभिः स्त्रीभिरचोदयदिति सम्बन्धः ॥८–१०॥ तस्या इति । प्रत्युवाच, स्त्रीमुखेनेति शेषः । यथा

लोकापवादो भवेत् । निर्दोषायास्तस्याः परित्यागे महान् दोषः स्यादित्येवं कार्यदौस्थ्यात् किं कर्तव्यमिति चिन्तयामासेत्यर्थः ॥५॥६ ॥ दिव्याङ्गरागां शिरस्स्नातां सीतामुपस्थापयेत्यस्यायमाशयः–यदि सीतामविशोध्यैव ग्रहीष्यामि तदा जना एतादृशदिव्यसुन्दरीं दृष्ट्वा रावणः कथं तूष्णीं तिष्ठेदिति बहुविधापवादपङ्क कलङ्काङ्कितचित्तास्सन्तो निष्कलङ्कायां जगज्जनन्यामपि देव्यां किमप्याशङ्केयुरिति मन्वानो जगन्मर्यादास्थापनायावतीर्णः श्रीरामः "यद्यदाचरति श्रेष्ठस्तत्त देवेतरो जनः" इति न्यायमनुसृत्य निष्कल्मषां देवीं स्वयं जानन्नपि लोकापवादनिवृत्तये तस्यां रुषित इव परुषोक्तिं वदन् तामग्निं प्रवेश्य पद्मभवनभवेन्द्र मुखामरगणैस्संस्तुतः प्रार्थितो नित्यशुद्धां देवीमङ्गीकरवाणीति ॥ ७ ॥ ८ ॥ दिव्याङ्गरागेति । भर्ता त्वां द्रष्टुमिच्छतीति स्वाभिः स्त्रीभिरचोदयदिति पूर्वेण

स०–स्वाभिः स्त्रीभिरवादयत् इति पाठः । स्वाभिः स्त्रीभिः सरमात्रिजटादिभिः । सीतामवादयत्, राजस्त्रीत्वात्साक्षादसम्भाषणमिति ज्ञेयम् ॥ ८ ॥

नियोगं कर्तव्यत्वे हेतुद्वयम् राजा भर्तेति ॥ ११ ॥ अङ्गीकारे हेतुद्वयं भर्तृदेवता भर्तृभक्तिव्रतेति ॥ १२–१४ ॥ ज्ञात्वाऽपि विभीषणागमनं विदित्वाऽपि । अनेन चिन्तानुवृत्तिरुक्ता ॥ १५ ॥ रावणवधपूर्वकसीतागमेन हर्षः, रावणभवनोषितत्वेन दैन्यं रोषश्च । अत्र रोषो भाविशपथोपयोगित्वादारो



तस्य तद्वचनं श्रुत्वा मैथिली भर्तृदेवता । भर्तृभक्तिव्रता साध्वी तथेति प्रत्यभाषत ॥ १२ ॥ ततः सीतां शिरस्स्नातां युवतीभिरलंकृताम् । महार्हाभरणोपेतां महार्हाम्बरधारिणीम् ॥ १३ ॥ आरोप्य शिबिकां दीप्तां परार्ध्याम्बरसंवृताम् । रक्षोभिर्बहुभिर्गुप्तामाजहार विभीषणः ॥ १४ ॥ सोऽभिगम्य महात्मानं ज्ञात्वाऽपि ध्यानमास्थितम् । प्रणतश्च प्रहृष्टश्च प्राप्तां सीतां न्यवेदयत् ॥ १५ ॥ तामागतामुपश्रुत्य रक्षोगृहचिरोषिताम् । हर्षो दैन्यं च रोषश्च त्रयं राघवमाविशत् ॥ १६ ॥ ततः पार्श्वगतं दृष्ट्वा सविमर्शं विचारयन् । विभीषणमिदं वाक्यमहृष्टं राघवोऽब्रवीत् ॥१७॥ राक्षसाधिपते सौम्य नित्यं मद्विजये रत । वैदेही सन्निकर्षं मे शीघ्रं समुपगच्छतु ॥ १८ ॥ स तद्वचनमाज्ञाय राघवस्य विभीषणः । तूर्णमुत्सारणे यत्नं कारयामास सर्वतः ॥ १९ ॥

पित इति द्रष्टव्यम् ॥ १६ ॥ सविमर्शं विचारयन् सवितर्कं चिन्तयन् । अहृष्टमिति क्रियाविशेषणं विभीषणविशेषणं वा ॥ १७ ॥ १८ ॥ उत्सारणे जनसम्बन्धः ॥ ९–१४ ॥ ज्ञात्वाऽपि विभीषणानुगमनं ज्ञात्वाऽपि ॥१५॥ तामिति । हर्षः रावणवधपूर्वकसीतासमागमेन हर्षः, रावणभवनोषितत्वमेव दैन्यरोषयोर्हेतुः। तत्र रोषश्च भाविशपथोपयुक्तत्वादारोपित इति द्रष्टव्यम् ॥ १६ ॥ सविमर्शं सवितर्कं विचारयन्निति सम्बन्धः ॥ १७–२० ॥

स०–ननु महाभारते–" तां दृष्ट्वा चारुसर्वाङ्गीं यानस्थां शोककर्शिताम् । मलोपचितसर्वाङ्गीं जटिलां कृष्णवाससम् ॥ " इत्युक्तेः कथमत्रैवं कथनमिति चेत्, उच्यते–स्वच्छन्देनाङ्गशोधनाद्यभावेन भारते मलोपचितेत्याद्युक्तिः । अत्र तु रामाज्ञया तस्य जातत्वेन प्रतिकर्मणा संयुक्तामित्याद्युक्तिः । अथवा भारतवचनोत्तरार्धे हनुमद्वचनेन मलोपचितसर्वाङ्गीं संस्मरतो रामस्य तथैव दर्शनमिति पूर्वमेतादृशीमिति वाऽर्थाङ्गीकारेण वाऽविरोधोपपत्तेः ॥ १३ ॥ आरोप्य शिबिकां सीतां राक्षसैर्वहनोचितैः इति पाठः '। वहनोचितैः राजावरोधयानवहनोचितैः । राक्षसैः वृद्धैरविन्ध्यादिभिः । उक्तं च भारते–" ततस्सीतां पुरस्कृत्य " इत्यारभ्य " अविन्ध्यो नाम सुप्राज्ञो वृद्धामात्यो विनिर्ययौ " इति ॥ १४ ॥

निवारणे ॥ १९ ॥ कञ्चुकं वारवाणम् । उष्णीषं शिरोवेष्टनम् । वेत्रेण जर्जराः सदाऽवलम्बनजनितपारुष्याः पाणयो येषां ते ॥ २० ॥ उत्ससृजुः अपचक्रमुः ॥ २१ ॥ उद्वर्तमानस्य उज्जृम्भमाणस्य ॥ २२ ॥ दाक्षिण्यात् वानरेषु दाक्षिण्यात् । अमर्षात् उत्सारणासहनात् ॥ २३ ॥ चक्षुषा प्रदहन्निवेति

कञ्चुकोष्णीषिणस्तत्र वेत्रजर्जरपाणयः । उत्सारयन्तः पुरुषाः समन्तात् परिचक्रमुः ॥ २० ॥ ऋक्षाणां वानराणां च राक्षसानां च सर्वशः । वृन्दान्युत्सार्यमाणानि दूरमुत्तस्सृजुस्तदा ॥ २१ ॥ तेषामुत्सार्यमाणानां सर्वेषां ध्वनिरुत्थितः । वायुनोद्वर्तमानस्य सागरस्येव निस्वनः ॥ २२ ॥ उत्सार्यमाणांस्तान् दृष्ट्वा समन्ताज्जातसम्भ्रमान् । दाक्षिण्यात्तदमर्षाच्च वारयामास राघवः ॥ २३ ॥ संरब्धश्चाब्रवीद्रामश्चक्षुषा प्रदहन्निव । विभीषणं महाप्राज्ञं सोपालम्भमिदं वचः ॥ २४ ॥ किमर्थं मामनादृत्य क्लिश्यतेऽयं त्वया जनः । निवर्तयैनमुद्योगं जनोऽयं स्वजनो मम ॥ २५ ॥ न गृहाणि न वस्त्राणि न प्राकारास्तिरस्क्रियाः । नेदृशा राजसत्कारा वृत्तमावरणं स्त्रियाः ॥ २६ ॥ व्यसनेषु न कृच्छ्रेषु न युद्धेषु स्वयंवरे । न क्रतौ न विवाहे च दर्शनं दुष्यति स्त्रियाः ॥२७॥ सैषा युद्धगता चैव कृच्छ्रे च महति स्थिता । दर्शनेऽस्या न दोषः स्यान्मत्समीपे विशेषतः ॥ २८ ॥ [ विसृज्य शिबिकां तस्मात् पद्भ्यामेवोपसर्पतु । समीपे मम वैदेहीं पश्यन्त्वेते वनौकसः ॥ ] तदानय समीपं मे शीघ्रमेनां विभीषण । सीता पश्यतु मामेषा सुहृद्गणवृतं स्थितम् ॥ २९ ॥ एवमुक्तस्तु रामेण सविमर्शो विभीषणः । रामस्योपानयत् सीतां सन्निकर्षं विनीतवत् ॥ ३० ॥

लोचनाभ्यां पिबन्निवेत्युक्तादरपात्रभूतस्य विभीषणस्यैवंविधदर्शनविषयताकरणं स्वजननिग्रहासहिष्णुत्वात् । सीताविषयसमारोपितरोषविशेषाद्वा ॥ २४ ॥ २५ ॥ तिरस्क्रियाः तिरस्करिण्यः । राजसत्काराः उत्सारणादिकम् । वृत्तम् आचारः ॥ २६ ॥ व्यसनेषु इष्टजनवियोगेषु । कृच्छ्रेषु राज्यक्षोभादिषु । युद्धे युद्धभूमौ ॥ २७ ॥ सैषेति । कृच्छ्रे वक्ष्यमाणाग्निप्रवेशे ॥ २८ ॥ २९ ॥ सविमर्शः कृच्छ्रशब्दप्रयोगात्साशङ्कः ॥ ३० ॥ ३१ ॥

ऋक्षाणामिति । उत्ससृजुः अपचक्रमुः ॥२१॥ वायुना हेतुना उद्वर्तमानस्य उज्जृम्भमाणस्य ॥२२॥ दाक्षिण्यात्, वानरेष्विति शेषः । तदमर्षात् तद्धर्षणासहनात्॥२३॥ ॥ २४ ॥ स्वजनो बन्धुजनः ॥ २५ ॥ निरस्क्रियाः तिरस्करिण्यः ॥२६॥ व्यसनेष्विति । इष्टजनमरणजनितदुःखं व्यसनम् । कृच्छ्रेषु आपत्सु ॥२७–२९॥ सविमर्शः

व्यथायां हेतुमाह–कलत्रेति ॥ ३२ ॥ अवलीयन्ती सङ्कुचन्ती ॥३३॥३४॥ विस्मयात् अघटितसमागमपुनर्दर्शनाद्विस्मयः । प्रियस्य दर्शनेन प्रहर्षः । स्नेहः स्वाभाविकः । उदीक्षणकालिकमुखप्रसादमाह सौम्येति ॥ ३५ ॥ अथेति । उदितपूर्णचन्द्रेत्यनेन कोपरक्तत्वमुक्तम् । विमलशशाङ्केत्यनेन उत्तरकालिक क्षयः सूच्यते ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

ततो लक्ष्मणसुग्रीवौ हनुमांश्च प्लवङ्गमः । निशम्य वाक्यं रामस्य बभूवुर्व्यथिता भृशम् ॥ ३१ ॥ कलत्रनिरपेक्षैश्च इङ्गितैरस्य दारुणैः । अप्रीतमिव सीतायां तर्कयन्ति स्म राघवम् ॥३२॥ लज्जया त्ववलीयन्ती स्वेषु गात्रेषु मैथिली । विभीषणेनानुगता भर्तारं साऽभ्यवर्तत ॥ ३३ ॥ सा वस्त्रसंरुद्धमुखी लज्जया जनसंसदि । रुरोदासाद्य भर्तारमार्यपुत्रेति भाषिणी ॥३४॥ विस्मयाच्च प्रहर्षाच्च स्नेहाच्च पतिदेवता । उदैक्षत मुखं भर्तुः सौम्यं सौम्यतरानना ॥ ३५ ॥ अथ समपनुदन्मनःक्लमं सा सुचिरमदृष्टमुदीक्ष्य वै प्रियस्य । वदनमुदितपूर्णचन्द्रकान्तं विमलशशाङ्कनिभानना तदानीम् ॥ ३६ ॥ इत्यार्षे श्रीरामायणे० श्रीमद्युद्धकाण्डे सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

तां तु पार्श्वस्थितां प्रह्वां रामः सम्प्रेक्ष्य मैथिलीम् । हृदयान्तर्गतक्रोधो व्याहर्तुमुपचक्रमे ॥ १ ॥
एषाऽसि निर्जिता भद्रे शत्रुं जित्वा मया रणे । पौरुषाद्यदनुष्ठेयं तदेतदुपपादितम् ॥ २ ॥
गतोऽस्म्यन्तममर्षस्य धर्षणा सम्प्रमार्जिता । अवमानश्च शत्रुश्च मया युगपदुद्धृतौ ॥ ३ ॥

अथ रामपरुषोक्तिः–तां तु पार्श्वस्थितामित्यादि । प्रह्वां लज्जया नम्राम् ॥ १ ॥ एषेति प्रत्यक्षेण दर्शयति । भद्रे इत्यसम्बन्धनिवेदकसम्बोधनम् । पौरुषाद्यदनुष्ठेयं तदेव कृतम्, नतु त्वल्लाभाय यत्नः कृत इति भावः ॥ २ ॥ अन्तं फलम् । उद्धृतौ निर्मूलितौ ॥ ३ ॥



सीताविषये स्वामिनश्चित्तं कीदृशमितिविचारः ॥ ३०–३४ ॥ विस्मयादिति । असम्भावितदर्शनं जातमिति विस्मयः । प्रियस्य दर्शनेन प्रहर्षः ॥ ३५ ॥ अथेति । समपनुदत् समपानुदत् ॥ ३६ ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० युद्धकाण्डव्याख्यायां सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥ १ ॥ २ ॥ अन्तं फलम् ॥ ३॥४ ॥

अद्येति । आत्मनः प्रभवामि स्वतन्त्रो भवामि ॥ ४ ॥ मया विरहिता या त्वं चलचित्तेन रक्षसा नीता । तया त्वया हेतुभूतया दैवसंपादितः दोषः अवमानः मानुषेण प्रमार्जितः, दैवकृतं पुरुषयत्नेन निवारितमिति भावः ॥ ५ ॥ घर्षणाया अमार्जने दोषमाह—सम्प्राप्तमिति । प्रमार्जति प्रमार्ष्टि ॥ ६ ॥ इदानीं हनुमदादिपौरुषस्यापि घर्षणावमार्जनहेतुत्वमाह—लङ्घनं चेत्यादिना । समुद्रस्य लङ्घनं लङ्कायाः अवमर्दनम् इत्येवंरूपं हनुमतः श्लाघ्यं

अद्य मे पौरुषं दृष्टमद्य मे सफलः श्रमः । अद्य तीर्णप्रतिज्ञत्वात् प्रभवामीह चात्मनः ॥४॥ या त्वं विरहिता नीता चलचित्तेन रक्षसा । दैवसम्पादितो दोषो मानुषेण मया जितः ॥ ५ ॥ सम्प्राप्तमवमानं यस्तेजसा न प्रमार्जति । कस्तस्य पुरुषार्थोऽस्ति पुरुषस्याल्पतेजसः ॥ ६ ॥ लङ्घनं च समुद्रस्य लङ्कायाश्चावमर्दनम् । सफलं तस्य तच्छ्लाघ्यं महत् कर्म हनूमतः ॥७॥ युद्धे विक्रमतश्चैव हितं मन्त्रयतश्च मे । सुग्रीवस्य ससैन्यस्य सफलोऽद्य परिश्रमः ॥ ८ ॥ निर्गुणं भ्रातरं त्यक्त्वा यो मां स्वयमुपस्थितः । विभीषणस्य भक्तस्य सफलोऽद्य परिश्रमः ॥ ९ ॥ इत्येवं ब्रुवतस्तस्य सीता रामस्य तद्वचः । मृगीवोत्फुल्लनयना बभूवाश्रुपरिप्लुता ॥ १० ॥ पश्यतस्तां तु रामस्य भूयः क्रोधो व्यवर्धत । प्रभूताज्यावसिक्तस्य पावकस्येव दीप्यतः ॥ ११ ॥ स बद्ध्वा भ्रुकुटीं वक्त्रे तिर्यक्प्रेक्षितलोचनः । अब्रवीत् परुषं सीतां मध्ये वानररक्षसाम् ॥ १२ ॥

कर्म चाद्य सफलम् । घर्षणापरिमार्जनेन सफलमित्यर्थः ॥ ७ ॥ मन्त्रयतः चिन्तयतः ॥ ८ ॥ निर्गुणमिति । तस्येत्यध्याहार्यम् ॥ ९ ॥ तद्वचः नैराश्येनोक्तं वचः । तस्य ब्रुवतः तस्मिन् ब्रुवति सति ॥ १० ॥ पावकस्येति । पावकस्य क्रोधोऽतीव ज्वलनम् ॥ ११ ॥ तिर्यक्प्रेक्षितलोचनः तिर्यक्

मया विरहिता या त्वं चलचित्तेन रक्षसा नीता त्वया हेतुभूतया दैवसम्पादितो दोषो मानुषेण मया जितः । मानुषेण पौरुषेणेति वा जितः प्रमृष्टः, दैवकृतं पुरुषयत्नेन निराकृतमिति भावः ॥ ५–९ ॥ इत्येवमिति । तद्वचः नैराश्यद्योतकं वचः, निशम्येति शेषः ॥ १०. ॥ ११ ॥ तिर्यक्प्रेक्षितलोचनः तिर्यग्भूतं प्रेक्षितं

स०—पश्यतस्तां त्वित्यादिश्लोकद्वयस्य स्थाने—पश्यतस्तां तु रामस्य समीपे हृदयप्रियाम् । जनवादभयाद्राज्ञो बभूव हृदयं द्विधा ॥ ११ ॥ सीतामुत्पलपत्राक्षीं नीलकुञ्चितमूर्धजाम् । अवदद्वै वरारोहां मध्ये वानररक्षसाम् ॥ १२ ॥ इति श्लोकद्वयं पाठान्तरत्वेन दृश्यते ॥ हृदयप्रियां मनोहराम् । श्रीवत्साश्रितस्वारूपत्वाद्वा । एतादृशदैन्यदर्शनं स्वीकारहेतुः । जनवादः जनापवादः । द्विधा ग्राह्या वा त्याज्या वेति ॥ ११ ॥

प्रेक्षणं पुरतः सीतादर्शनासहिष्णुत्वकृतम् ॥ १२ ॥ यत्कर्तव्यमित्यादित्रिपादश्लोक एकान्वयः । हे सीते । धर्षणां परिमार्जता । "मृजेरजादौ विभाषा वृद्धिः" इति वृद्धिः । मनुष्येण यत्कर्तव्यं तत् सकलं कृतम् । शत्रुहस्तादमर्षणादित्युत्तरशेषः ॥ १३ ॥ भावितात्मना ध्यातात्मस्वरूपेण, अगस्त्येन । इल्वलाक्रान्तत्वाज्जीवलोकस्य दुराधर्षा दुःसञ्चारा, दक्षिणा दिगिव अमर्षणात् अमर्षाद्धेतोः, शत्रुहस्तान्मया त्वं निर्जितेति संबन्धः ॥ १४ ॥

यत् कर्तव्यं मनुष्येण धर्षणां परिमार्जता । तत् कृतं सकलं सीते शत्रुहस्तादमर्षणात् ॥ १३ ॥ निर्जिता जीवलोकस्य तपसा भावितात्मना । अगस्त्येन दुराधर्षा मुनिना दक्षिणेव दिक् ॥ १४ ॥ विदितश्चास्तु ते भद्रे योऽयं रणपरिश्रमः । स तीर्णः सुहृदां वीर्यान्न त्वदर्थं मया कृतः ॥ १५॥ रक्षता तु मया वृत्तमपवादं च सर्वशः । प्रख्यातस्यात्मवंशस्य न्यङ्गं च परिरक्षता ॥ १६ ॥ प्राप्तचारित्रसन्देहा मम प्रतिमुखे स्थिता । दीपो नेत्रातुरस्येव प्रतिकूलाऽसि मे दृढम् ॥ १७॥ तद्गच्छ ह्यभ्यनुज्ञाता यथेष्टं जनकात्मजे । एता दश दिशो भद्रे कार्यमस्ति न मे त्वया ॥ १८ ॥ कः पुमान् हि कुले जातः स्त्रियं परगृहोषिताम् । तेजस्वी पुनरादद्यात् सुहृल्लेख्येन चेतसा ॥ १९ ॥

योऽयं रणपरिश्रमः सुहृदां वीर्यात्तीर्णः निर्व्यूढः, सः त्वदर्थं मया न कृत इति विदितोऽस्तु ॥१५॥ तर्हि किमर्थमेष परिश्रम इत्यत आह—रक्षतेति । अत्र मया रणपरिश्रमः कृत इत्यनुषज्यते । वृत्तं रक्षता, अपवादं न्यङ्गम् अयशस्यं च परिरक्षता परिहरता निवारयता मया रणपरिश्रमः कृतः ॥१६॥ प्राप्तेति । परगृहवासेन प्राप्तचारित्रसंदेहा त्वं नेत्रातुरस्य दीप इव प्रतिकूलाऽसि । अनेनोपमानेन वस्तुतः सीताया दोषो नास्ति । स्वसन्देहेनाहं प्रतिकूलीकरोमीति व्यज्यते ॥ १७ ॥ १८ ॥ कः पुमानिति । सुहृल्लेख्येन सुहृल्लेखा रणरणकम्, सुहृल्लेखामर्हतीति सुहृल्लेख्यं तेन रणरणकातिशययुक्तेनेत्यर्थः ॥ १९ ॥

प्रेक्षणं ययोस्तादृशे लोचने यस्य स तथोक्तः ॥ १२ ॥ शत्रुहस्तादमर्षणादित्युत्तरशेषः । सीते ! धर्षणां परिमार्जता मनुष्येण यत्कर्तव्यं तत्कृतमिति सम्बन्धः ॥१३॥ शत्रुहस्तादिति । जीवलोकस्येति निर्धारणे षष्ठी । प्राणिजातस्य मध्ये तपसा भावितात्मना तपसा शुद्धचित्तेन अगस्त्येन दुराधर्षा दक्षिणा दिगिव अमर्षणात् क्रोधाद्धेतोः शत्रुहस्तान्मया त्वं निर्जितेति सम्बन्धः ॥ १४ ॥ सुहृदां वीर्यात्तीर्णो योऽयं रणपरिश्रमः स त्वदर्थं मया न कृत इति विदितश्चास्त्वित्यन्वयः ॥ १५ ॥ तर्हि किमर्थं कृत इत्यत्राह—रक्षतेति । अत्र मया रणपरिश्रमः कृत इत्यनुषज्यते । वृत्तं चारित्रम् । रक्षता पालयता । अपवादम् अयशस्यम्, न्यङ्गं न्यूनतां च परिरक्षता अपनयता च ॥ १६–१८ ॥ क इति । सुहृल्लेख्येन शोभना हृल्लेखा रणरणिका यस्य तत् सुहृल्लेख्यं तेन, रणरणिकायुक्तेनेत्यर्थः ॥ १९ ॥

व्यपदिशन् कीर्तयन् ॥ २० ॥ तदर्थमिति । तदर्थं कुलार्थम्, अभिष्वङ्गः आसक्तिः, अनुरागो वा ॥ २१ ॥ इति प्रव्याहृतमित्यादिश्लोकद्वयमेकान्वयम् । अत्र लक्ष्मणादौ मनःकरणं नाम अनाथाया रक्षकत्वेन तत्तद्गृहे वर्तनम् । भर्त्रा परित्यक्तायाः स्त्रियो बन्धुगृहे वासविधानात् । "न स्त्री

रावणाङ्कपरिभ्रष्टां दृष्टां दुष्टेन चक्षुषा । कथं त्वां पुनरादद्यां कुलं व्यपदिशन् महत् ॥ २० ॥ तदर्थं निर्जिता मे त्वं यशः प्रत्याहृतं मया । नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामितः ॥ २१ ॥ इति प्रव्याहृतं भद्रे मयैतत् कृतबुद्धिना । लक्ष्मणे भरते वा त्वं कुरु बुद्धिं यथासुखम् ॥ २२ ॥ सुग्रीवे वानरेन्द्रे वा राक्षसेन्द्रे विभीषणे । निवेशय मनः सीते यथा वा सुखमात्मनः ॥ २३ ॥ न हि त्वां रावणो दृष्ट्वा दिव्यरूपां मनोरमाम् । मर्षयेत चिरं सीते स्वगृहे परिवर्तिनीम् ॥२४॥ ततः प्रियार्हश्रवणा तदप्रियं प्रियादुपश्रुत्य चिरस्य मैथिली । मुमोच बाष्पं सुभृशं प्रवेपिता गजेन्द्रहस्ताभिहतेव सल्लकी ॥२५॥ इत्यार्षे श्रीरामायणे० श्रीमद्युद्धकाण्डे अष्टादशोत्तरशततमः सर्गः ॥११८॥

एवमुक्ता तु वैदेही परुषं रोमहर्षणम् । राघवेण सरोषेण भृशं प्रव्यथिताऽभवत् ॥१॥ सा तदश्रुतपूर्वं हि जने महति मैथिली । श्रुत्वा भर्तृवचो रूक्षं लज्जया व्रीडिताऽभवत् ॥२॥ प्रविशन्तीव गात्राणि स्वान्येव जनकात्मजा । वाक्छल्यैस्तैः सशल्येव भृशमश्रूण्यवर्तयत् ॥ ३ ॥

स्वातन्त्र्यमर्हति" इति स्मृतेः । न त्वत्रान्यथाग्रहीतुं युक्तम् । महापुरुषेण तादृशोक्त्ययोगात् ॥ २२–२४ ॥ सल्लकी गजभक्ष्यलताविशेषः ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टादशोत्तरशततमः सर्गः ॥ ११८ ॥

अथ सीताग्निप्रवेशः–एवमुक्ता त्विति । स्पष्टम् ॥ १ ॥ जने महति महाजनमध्ये लज्जया व्रीडिता, अतिनम्रमुखी बभूवेत्यर्थः ॥ २ ॥ प्रविशन्तीवेति ।

व्यपदिशन् प्रख्यापयन् ॥ २० ॥ तदर्थं शत्रुहस्तगता सीता प्रत्याहृतेति यशस्सम्पादनार्थम् । अभिष्वङ्गः आसक्तिः ॥ २१ ॥ लक्ष्मण इति । पुत्रसदृशेषु लक्ष्मणादिषु मध्ये यत्र कुत्रापि मनो निवेशय, आत्मभरणार्थमिति शेषः ॥ २२–२४ ॥ प्रियार्हश्रवणा प्रियश्रवणार्हा । गजेन्द्रहस्ताभिहता सल्लकी लता यथा क्षीरं मुञ्चति तथा बाष्पं मुमोचेत्यर्थः ॥२५॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् अष्टादशोत्तरशततमः सर्गः॥११८॥

॥ १ ॥ सेति । महति जने लज्जया व्रीडिताऽभवत्, लज्जयाऽतिनम्रमुखी बभूवेत्यर्थः ॥ २-४ ॥

गात्राणि प्रविशन्ती सङ्कुचन्तीत्यर्थः ॥३॥४॥ किमिति । असदृशं त्वया वक्तुं मया श्रोतुं चायोग्यम् । रूक्षं परुषम् अत एव श्रोत्रदारुणं श्रवणकटु ॥५॥ न तथेति । चारित्रेण, ममेति शेषः । ते तुभ्यम् । "श्लाघह्नुङ्स्थाशपाम्–" इति संप्रदानत्वम् । सुकृतेन शपमाना त्वां शापं ज्ञापयामीत्यर्थः ॥ ६ ॥ स्त्रीमात्रसाधारण्येन नाहं द्रष्टव्येत्याह–पृथक्स्त्रीणामिति । पृथक्स्त्रीणां प्राकृतस्त्रीणाम् । प्रचारेण आचारेण हेतुना । सर्वामपि स्त्रीजातिं तथात्वेन

ततो बाष्पपरिक्लिष्टं प्रमार्जन्ती स्वमाननम् । शनैर्गद्गदया वाचा भर्तारमिदमब्रवीत् ॥ ४ ॥ किं मामसदृशं वाक्य मीदृशं श्रोत्रदारुणम् । रूक्षं श्रावयसे वीर प्राकृतः प्राकृतामिव ॥५॥ न तथाऽस्मि महाबाहो यथा त्वमवगच्छसि । प्रत्ययं गच्छ मे येन चारित्रेणैव ते शपे ॥६॥ पृथक्स्त्रीणां प्रचारेण जातिं तां परिशङ्कसे । परित्यजेमां शङ्कां तु यदि तेऽहं परीक्षिता ॥७॥ यद्यहं गात्रसंस्पर्शं गताऽस्मि विवशा प्रभो । कामकारो न मे तत्र दैवं तत्रापराध्यति ॥ ८ ॥ मदधीनं तु यत्तन्मे हृदयं त्वयि वर्तते । पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरा ॥ ९ ॥

शङ्कसे । अहं ते त्वया यदि परीक्षिता ज्ञातस्वभावा, तर्हीमां शङ्कां त्यज ॥ ७ ॥ त्वयि ज्ञातस्वभावायामपि रावणाङ्गस्पर्शलक्षणो दोषस्त्यागहेतु रित्याशङ्क्याह–यद्यहमित्यादि । यद्यपि अहं विवशा सती गात्रसंस्पर्शं गताऽस्मि, तथापि तत्र मे कामकारः स्वेच्छाचरणं नास्ति । तर्हि कस्यात्राप राध इत्यत्राह–दैवं तत्रेति ॥८॥ मदधीनं परैर्ग्रहीतुमशक्यम्, यद्धृदयं तत्तु तस्मिन्काले त्वयि वर्तते अवर्तत । पराधीनेषु परैर्ग्रहीतुं शक्येषु गात्रेषु विषये किमिति । असदृशं त्वया वक्तुं मया श्रोतुं चायोग्यम्, रूक्षं परुषं च अत एव श्रोत्रदारुणं श्रोत्रकटु ॥ ५ ॥ यथा त्वमवगच्छसि दुष्टेयमिति तथा नास्मि । स्वेन चारित्रेण पातिव्रत्यलक्षणेन ते शपे शपथेन तव प्रत्ययं सम्पादयिष्ये, ततो मे प्रत्ययं गच्छ ॥ ६ ॥ स्त्रीमात्रसाधारण्येन नाहं द्रष्टव्येत्याह–पृथगिति । पृथक्स्त्रीणां दुष्टस्त्रीणां प्रचारेण व्यापारेण हेतुना सर्वामपि जातिं तां स्त्रीजातिं तथैवेति परिशङ्कसे, अहं ते त्वया यदि परीक्षिता तदा इमां स्त्रीजातिस्वभावशङ्कां परित्यज, तज्जातिस्वभावशङ्का मयि न कार्येत्यर्थः ॥७॥ सत्स्वभावत्वात्त्वयि शङ्काभावेऽपि ग्रहणसमये रावणाङ्गस्पर्शलक्षणो दोषस्त्यागहेतुरित्याशङ्क्याह–यद्यहमित्यादिश्लोक त्रयेण । विवशा सत्यहं गात्रसंस्पर्शं गताऽस्मि यद्यपि तथापि तत्र मे कामकारः स्वेच्छाग्रहणं नास्ति, ग्रहणेऽहमनुकूला नास्मीति यावत् । कुतः ? दैवमिति ॥ ८ ॥ मदधीनं परैर्ग्रहीतुमशक्यम् पराधीनेषु परैर्ग्रहीतुं शक्येषु ॥ ९ ॥

स०–पृथक्स्त्रीणां मूर्खस्त्रीणाम् । पृथग्जनशब्दस्य मूर्खे प्रयोगदर्शनात् प्रयोगः । यद्वा स्त्रीणां पृथक्त्वं नाम पतिबुद्धिविरुद्धबुद्धिमत्त्वम् । विभिन्नयोरपि मत्यैक्येनैकव्यवहारदर्शनात् । तथा च स्वैरिणीनामिति फलितोऽर्थः । प्रचारेण आचारेण । जातिं सर्वस्त्रीसमूहम् । यदि ते त्वयाऽहं परीक्षिता स्यां तदेमां शङ्काम् एकस्या यत्र क्वापि दुष्टत्वे सर्वा अपि तादृश्य इति विपरीतसम्भावनां त्यज त्यक्ष्यसि ॥ ७ ॥

अनीश्वरा अस्वतन्त्रा अहं किं करिष्यामि किं कुर्याम् ॥ ९ ॥ स्वभावपरिज्ञानहेतुभूतसहसंवर्धनसंसर्गावपि प्रत्ययं यदि नोत्पादयतः तर्हि न किमपि ते प्रत्ययमुत्पादयितुं शक्नुयादित्याशयेनाह–सहसंवृद्धेति । सहसंवृद्धभावात् स्वभावपरिज्ञानहेतुना सहसंवर्धनेन संसर्गेण संश्लेषेण च यद्यहं ते न विज्ञाता । ततः मत्स्वभावाज्ञानेन शाश्वतम् अत्यर्थम्, हताऽस्मि ॥१०॥ प्रेषित इति । अवलोककः अवलोकितुम्, अन्वेष्टुमिति यावत् । "तुमुन्ण्वुलौ

सहसंवृद्धभावाच्च संसर्गेण च मानद । यद्यहं ते न विज्ञाता हता तेनास्मि शाश्वतम् ॥ १० ॥ प्रेषितस्ते यदा वीरो हनुमानवलोककः । लङ्कास्थाऽहं त्वया वीर किं तदा न विसर्जिता ॥ ११ ॥ प्रत्यक्षं वानरेन्द्रस्य तद्वाक्यसमनन्तरम् । त्वया सन्त्यक्तया वीर त्यक्तं स्याज्जीवितं मया ॥ १२ ॥ न वृथा ते श्रमोऽयं स्यात् संशये न्यस्य जीवितम् । सुहृज्जन परिक्लेशो न चायं निष्फलस्तव ॥ १३ ॥ त्वया तु नरशार्दूल क्रोधमेवानुवर्तता । लघुनेव मनुष्येण स्त्रीत्वमेव पुरस्कृतम् ॥ १४ ॥ अपदेशेन जनकान्नोत्पत्तिर्वसुधातलात् । मम वृत्तं च वृत्तज्ञ बहु ते न पुरस्कृतम् ॥ १५ ॥ न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः । मम भक्तिश्च शीलं च सर्वं ते पृष्ठतः कृतम् ॥ १६ ॥ एवं ब्रुवाणा रुदती बाष्पगद्गदभाषिणी । अब्रवील्लक्ष्मणं सीता दीनं ध्यानपरं स्थितम् ॥ १७ ॥

क्रियायां क्रियार्थायाम्" इति ण्वुल्प्रत्ययः ॥ ११ ॥ तदात्वे को विशेष इत्यत आह–प्रत्यक्षमिति ॥ १२ ॥ एवं कृते न केवलं ममैव व्यथाभावः तव त्वत्सुहृदां च जयार्थप्रयासोऽपि न स्यादित्याह–न वृथेति । जीवितं संशये न्यस्य कृतोऽयं श्रम इत्यर्थः ॥१३॥१४॥ अपदेशेन जनकात् जनकमपदिश्ये

सहसंवृद्धभावात् स्वभावपरिज्ञानहेतुभूतात्सहसंवृद्धत्वात् संसर्गेण संश्लेषेण च ते त्वया अहं सम्यङ्न ज्ञातेति यत् तेन मत्स्वभावापरिज्ञानेन । शाश्वतमित्युत्तर शेषः । हताऽस्मीति सम्बन्धः ॥ १० ॥ अवलोककः अवलोकितुम्, अन्वेष्टुमिति यावत् ॥ ११ ॥ तदात्वे को विशेष इत्यत आह–प्रत्यक्षमिति । तदैव जीवितत्यागे सति एतावन्तं कालं महती त्वद्वियोगव्यथा न स्यादिति भावः ॥ १२ ॥ एवं कृते न केवलं ममैव व्यथाभावः, किन्तु तव त्वत्सुहृदां सुग्रीवादीनां च प्राणसन्देह करः इयान् प्रयासश्च न स्यादित्याह–न वृथेति । जीवितं संशये न्यस्य कृतोऽयं वृथापरिश्रमस्ते न स्यात्, निष्फलोऽयं त्वत्सुहृज्जनपरिक्लेशश्च न स्यादित्यन्वयः ॥ १३ ॥ त्वया स्त्रीत्वमेव पुरस्कृतं दृष्टम्, न तु मम शीलमिति भावः ॥ १४ ॥ ममोत्पत्तिस्थानसच्चारित्रयोरपि विचार्यमाणयोरियं शङ्का न सम्भाव्यत इत्याह– अपदेशेनेति । जनकादपदेशेन वसुधातलादुत्पत्तिः जनकव्याजेन वसुधातलादुत्पत्तिः ते त्वया न पुरस्कृता न विचारिता । वृत्तं बाल्यात्प्रभृत्यनुवृत्तं सुचरितं च

त्यर्थः॥१५–१७॥मिथ्योपघातः मिथ्यापवादः॥१८॥ अप्रीतस्येति । गुणैरप्रीतस्य विद्यमानैः पातिव्रत्यादिगुणैरपि अप्रीतस्य भर्तुः त्यक्ताया मे या गन्तुं क्षमा गतिः प्रत्ययजननार्थं या योग्या गतिः तं हव्यवाहनं प्रवेक्ष्य इति योजना॥१९॥ अमर्षवशं दैन्यवशम्॥२०॥ आकारः भ्रूसंज्ञादिः । मते सिद्धान्ते,



चितां मे कुरु सौमित्रे व्यसनस्यास्य भेषजम् । मिथ्योपघातोपहता नाहं जीवितुमुत्सहे ॥१८॥ अप्रीतस्य गुणैर्भर्तुस्त्यक्ताया जनसंसदि । या क्षमा मे गतिर्गन्तुं प्रवेक्ष्ये हव्यवाहनम् ॥ १९ ॥ एवमुक्तस्तु वैदेह्या लक्ष्मणः परवीरहा । अमर्षवशमापन्नो राघवाननमैक्षत ॥ २० ॥ स विज्ञाय ततश्छन्दं रामस्याकारसूचितम् । चितां चकार सौमित्रिर्मते रामस्य वीर्यवान् ॥२१॥ अधोमुखं तदा रामं शनैः कृत्वा प्रदक्षिणम् । उपासर्पत वैदेही दीप्यमानं हुताशनम् ॥२२॥ प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली । बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपतः ॥२३॥ यथा मे हृदयं नित्यं नापसर्पति राघवात् । तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥ २४ ॥ यथा मां शुद्धचारित्रां दुष्टां जानाति राघवः । तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥ २५ ॥ कर्मणा मनसा वाचा यथा नातिचराम्यहम् । राघवं सर्वधर्मज्ञं तथा मां पातु पावकः ॥ २६ ॥ आदित्यो भगवान् वायुर्दिशश्चन्द्रस्तथैव च । अहश्चापि तथा सन्ध्ये रात्रिश्च पृथिवी तथा । यथान्येऽपि विजानन्ति तथा चारित्रसंयुताम् ॥ २७ ॥

स्थित इति शेषः॥२१॥ अधोमुखमिति । पतिव्रतायाः कथं निर्व्याजं प्रत्ययं पश्यामीति लज्जया मुखदर्शने दाक्षिण्यं भविष्यतीति बुद्ध्या चावनतमुखम् । शनैः रामानुभवेन मन्दं यथा तथा ॥२२–२४॥ यथा मामिति । यथा शुद्धचारित्रामेव मामन्यायेन दुष्टां जानाति, तथा चेत् अदुष्टां दुष्टेति जानाति चेत् पावकः पातु, रामस्य मयि दोषज्ञानं यथार्थं चेत्पात्वित्यर्थः ॥ २५ ॥ २६ ॥ आदित्य इत्यादिसार्धश्लोक एकान्वयः । आदित्यादयोऽन्ये च यथा मां

न पुरस्कृतमित्यर्थः । अपरित्यागहेतुत्वेन सर्वलोकसम्मतं पाणिग्रहणमपि पृष्ठतः कृतं न प्रमाणीकृतमित्यर्थः ॥ १५–१७ ॥ चितामिति । मिथ्योपघातः मिथ्याभियोगः ॥ १८ ॥ अप्रीतस्य भर्तुः भर्त्रा त्यक्ताया मे गन्तुं क्षमा गतिः प्रत्ययजननार्थं योग्यस्थानमित्यर्थः । ततो हव्यवाहनं प्रवेक्ष्य इति योजना ॥ १९ ॥ २० ॥ स इति । आकारसूचितं भ्रूभङ्गादिना सूचितम् ॥ २१–२४ ॥ दुष्टां दुष्टत्वेन शङ्किताम्, मां शुद्धचारित्रां जानाति मां सर्वतः पातु । यद्वा राघवः यथा शुद्ध

चारित्रसंयुतां विजानन्ति, तथा मां पातु पावक इति संबन्धः ॥ २७ ॥ रामानु०—आदित्य इत्यादि । एते यथा मां चारित्रसंयुतां विजानन्ति, तथा मां पातु पावक इत्यनुपक्तेन संबन्धः ॥ २७ ॥ परिक्रम्य प्रदक्षिणीकृत्य । निस्सङ्गेन शरीरे निरभिलाषेण, अन्तरात्मना मनसा । उपलक्षणे तृतीया ॥ २८–३० ॥ ददृशुरिति । आज्याहुतीमिवेत्यादिदृष्टान्तेन देव्याः परमपावनत्वं द्योत्यते ॥ ३१ ॥ वसोर्धारां सन्ततां घृतधाराम् । अनेनाग्न्युज्जृम्भणं गम्यते ॥ ३२ ॥

एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम् । विवेश ज्वलनं दीप्तं निस्सङ्गेनान्तरात्मना ॥२८॥ जनः स सुमहांस्त्रस्तो बालवृद्धसमाकुलः । ददर्श मैथिलीं तत्र प्रविशन्तीं हुताशनम् ॥२९॥ सा तप्तनवहेमाभा तप्तकाञ्चनभूषणा । पपात ज्वलनं दीप्तं सर्वलोकस्य सन्निधौ ॥ ३० ॥ ददृशुस्तां महाभागां प्रविशन्तीं हुताशनम् । सीतां कृत्स्नास्त्रयो लोकाः पुण्यामाज्याहुतीमिव ॥ ३१ ॥ प्रचुक्रुशुः स्त्रियः सर्वास्तां दृष्ट्वा हव्यवाहने । पतन्तीं संस्कृतां मन्त्रैर्वसोर्धारामिवाध्वरे ॥ ३२ ॥ ददृशुस्तां त्रयो लोका देवगन्धर्वदानवाः । शप्तां पतन्तीं निरये त्रिदिवाद्देवतामिव ॥ ३३ ॥ तस्यामग्निं विशन्त्यां तु हाहेति विपुलस्वनः । रक्षसां वानराणां च सम्बभूवाद्भुतोपमः ॥३४॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे एकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥

देवाः स्वर्गवासिनः । गन्धर्वा भूलोकवासिनः । दानवाः पातालवासिनः । सकलभोगार्हरूपवत्याः सीतायाः अनलप्रवेशस्यानर्हत्वान्निरयपतनानर्हस्वर्गीयदेवतादृष्टान्तः ॥३३॥ तस्यामिति । अद्भुतोपमः अद्भुततुल्यः । रावणागमनमारभ्य एतावत्पर्यन्तं सीतायाः परमभागवतभूतलक्ष्मणापचारफलमुपपादितम् । वस्तुतः सीताया रावणागमनकाले अग्नौ प्रविष्टत्वात्तस्याः पुनरुद्गमनार्थं मायासीताया रावणगृहीताया अग्नौ प्रवेश इत्यप्याहुः ॥३४॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥

चारित्रामेव मामन्यायेन दुष्टां जानाति । तथा चेत् पावको मां सर्वतः पातु, केशाम्बरादीन्यपि मा धाक्षीदित्यर्थः ॥२५–३१॥ प्रचुक्रुशुरिति । वसोर्धारां सन्ततां घृतधारामिव ॥३२॥ निरये दुःखभूयिष्ठे स्थाने ॥३३॥३४॥ इति श्रीमहेश्वरतीर्थ श्रीरामायण युद्धकाण्ड व्याख्यायाम् एकोनविंशत्युत्तरशततमस्सर्गः ॥ ११९ ॥

अथ रामस्तवः—ततो हीत्यादि । दुर्मनाः दुःखितमनाः । दध्यौ मनसा ध्यानं कृतवान् ॥ १ ॥ तत इत्यादिश्लोकत्रयमेकं वाक्यम् ॥ २–४ ॥ तत इति । प्रगृह्य उद्धृत्य ॥ ५ ॥ कर्तेत्यादि । पूर्वं ब्रह्मणः अद्वारकं कर्तृत्वम्, अत्र सद्वारकं कर्तृत्वमिति न विरोधः । सर्वज्ञस्त्वं कथमज्ञ इवोपेक्षस इति भावः ।





ततो हि दुर्मना रामः श्रुत्वैवं वदतां गिरः । दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः ॥१॥ ततो वैश्रवणो राजा यमश्चामित्रकर्शनः । सहस्राक्षो महेन्द्रश्च वरुणश्च परन्तपः ॥ २ ॥ षडर्धनयनः श्रीमान् महादेवो वृषध्वजः । कर्ता सर्वस्य लोकस्य ब्रह्मा ब्रह्मविदां वरः ॥ ३ ॥ एते सर्वे समागम्य विमानैः सूर्यसन्निभैः । आगम्य नगरीं लङ्कामभिजग्मुश्च राघवम् ॥ ४ ॥ ततः सहस्ताभरणान् प्रगृह्य विपुलान् भुजान् । अब्रुवंस्त्रिदशश्रेष्ठाः प्राञ्जलिं राघवं स्थितम् ॥ ५ ॥ कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानवतां वरः । उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने ॥६॥ कथं देवगणश्रेष्ठमात्मानं नावबुध्यसे ॥ ७ ॥ ऋतधामा वसुः पूर्वं वसूनां त्वं प्रजापतिः । त्रयाणां त्वं हि लोकानामादिकर्ता स्वयम्प्रभुः । रुद्राणामष्टमो रुद्रः साध्यानामसि पञ्चमः ॥ ८ ॥

देवगणश्रेष्ठं ब्रह्मादिदेवगणश्रेष्ठम् ॥ ६ ॥ ७ ॥ आत्मस्वरूपमेवाह—ऋतधामेत्यादि श्लोकत्रयमेकं वाक्यम् । ऋतधामाख्यो वसुरित्यर्थः । प्रजापतिः प्रजा

तत इति । दध्यौ दारुणं कर्म कारितमिति चिन्तापरोऽभूदित्यर्थः ॥ १–४ ॥ प्रगृह्य उद्धृत्य ॥ ५–७ ॥ पूर्वं पूर्वस्मिन् कल्पे सृष्टेः पूर्वं वा । वसूनां मध्ये ऋतधामा नाम वसुः । त्रयाणाम् आदिकर्ता अण्डाधिपतिपर्यन्ताद्वारकसृष्टिकर्तेत्यर्थः । स्वयंप्रभुः स्वयं प्रभवतीति व्युत्पत्त्या अनियामकत्वमुच्यते । रुद्राणामष्टमो रुद्रः रुद्राणामष्टमूर्त्तीनां मध्येऽष्टमो रुद्रः महादेवः । तदुक्तम्—" भवः शर्वस्तथेशानो रुद्रः पशुपतिस्तथा । उग्रो भीमो महादेव इत्यष्टौ मूर्त्तयः स्मृताः ॥ " इति । साध्यानां पञ्चमः वीर्यवान्नाम । तदुक्तं वायुपुराणे—" मनोऽनुमन्ता प्राणश्च श्वेतयानश्च वीर्यवान् । चित्तिर्जयो नयश्चैव हंसो नारायणस्तथा । प्रभवोऽथ

स०—मूलरूपावताररूपेषु भेदस्य " एकमेव नेह नानास्ति किञ्चन । पूर्णमदः " इत्यादिश्रुतिनिषिद्धत्वेन सर्वथा निर्विशेषत्वमेव मन्तव्यमित्याह—कर्तेति । अन्यथा दाशरथौ " कर्ता सर्वस्य लोकस्य " इत्याद्युक्तं स्यात् ॥ ६ ॥ इदानीं रामस्य विभूतिरूपाणि वक्तुं तद्विभूतीनां " नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप " इत्याद्युक्तरीत्याऽनन्तत्वेन सामस्त्येन वक्तुमशक्यत्वात्प्राधान्येनाह—ऋतधामेति । वसूनां मध्ये पूर्वं त्वम् ऋतधामा नाम वसुः । विभूतिरूपेण तत्र सन्निहित इत्यर्थः । एवमुत्तरत्र प्रजापतीनां मध्य इति पूरणीयम् । अष्टमः महादेवाख्यः कैलासवासी शङ्करोऽत्र विवक्षितः । पञ्चमो वीर्यवान्नाम ॥ ८ ॥

स्वामीति वसुविशेषणम् । आदिकर्ता अण्डाधिपतिपर्यन्ताद्वारकसृष्टिकर्तेत्यर्थः । स्वयं प्रभवतीति स्वयम्प्रभुः, अनियाम्य इत्यर्थः । रुद्राणां मध्ये अष्टमो रुद्रः, तथा साध्यानामित्यत्रापि । अन्ते चेति । अन्ते प्रलये, आदौ सृष्टेः प्राक् च दृश्यसे । अनेनोत्पत्तिविनाशराहित्यमुक्तम् । एवं सर्वज्ञः सर्वशक्तिः सर्वेश्वरोऽपि सन् अज्ञ इव विदेहकुले प्रादुर्भूतां सीतां किमर्थमुपेक्षस इत्यर्थः ॥ ८–१० ॥ इत्युक्त इति । लोकपालैः लोकरक्षकैः ॥११॥ न ह्मादिभिः सामान्यतः स्तूयमानोऽपि सर्वदेवपूजनीयाच्चतुर्मुखात् स्वप्रभावं लोके प्रख्यापयितुं स्वसौशील्यं दर्शयति–आत्मानमिति । आत्मानं मानुषं

उपेक्षसे च अश्विनौ चापि ते कर्णौ चन्द्रसूर्यौ च चक्षुषी । अन्ते चादौ च लोकानां दृश्यसे त्वं परन्तप ॥ ९ ॥ वैदेहीं मानुषः प्राकृतो यथा ॥ १० ॥ इत्युक्तो लोकपालैस्तैः स्वामी लोकस्य राघवः । अब्रवीत्त्रिदशश्रेष्ठान् रामो धर्मभृतां वरः ॥ ११ ॥ आत्मानं मानुषं मन्ये रामं दशरथात्मजम् । योऽहं यस्य यतश्चाहं भगवांस्तद् ब्रवीतु मे ॥१२॥ इति ब्रुवन्तं काकुत्स्थं ब्रह्मा ब्रह्मविदां वरः । अब्रवीच्छृणु मे राम सत्यं सत्यपराक्रम ॥ १३ ॥

मन्ये परत्वापेक्षया मानुषत्वाभिनय एव ममाभिमत इत्यर्थः । अत्रापि विशेषमाह राममिति । रामं रामनामकम् । ततोऽप्यतिशयमाह दशरथात्मजमिति । अवतारापेक्षया चक्रवर्तिपुत्रत्वमेव प्रियतममिति भावः । स्वस्य विष्ण्ववतारत्वं सुग्रीवादिभिरनवगतमिति तत्प्रतिपत्त्यर्थं स्वस्वरूपं पृच्छति योऽहमिति । योऽहमिति स्वरूपप्रश्नः । यस्येति सम्बन्धिप्रश्नः । यत इति प्रयोजनप्रश्नः । भगवान् तद्ब्रवीत्विति । चक्रवर्तिपुत्रत्वमेव ममात्यन्तप्रियतमम्, स्वयं सर्वज्ञतया ममानभिमतमपि परत्वं प्रकटयत्वित्यर्थः । आकारगोपनविवरणस्यानभिमतत्वेऽपि स्वयमनुमतिदानं रावणनिरसनेन निष्पन्नकार्यतया ॥ १२ ॥१३॥ तनि०–अत्र सम्प्रदायोदाहरणम्–'शङ्खचक्रगदापाणे' इत्युक्त्या परत्वव्यञ्जकतया तत्रानादरेणाधःकृतमुखत्वम्, 'द्वारकानिलय' इत्यवतारोल्लेखेन किञ्चिदुत्तानमुखत्वम्, 'गोविन्द पुण्डरीकाक्ष' इति गोपालपुत्रत्वश्रवणेन परत्वापेक्षया वसुदेवपुत्रत्वमेवाभिमतमिति विकसिताक्षत्वं च व्यज्यत

विधिश्चैव साध्या द्वादश जज्ञिरे ॥" इति ॥ ८ ॥ विराड्रूपत्वं वर्णयति–अश्विनौ चेत्यादिना ॥ ९ ॥ १० ॥ लोकपालैः इन्द्रादिब्रह्मान्तैः पूर्वोक्तैः लोकस्य भूलोकस्येदानीं साक्षात्स्वामी राघवः रघुकुलजः ॥ ११ ॥ दिक्पालैः स्तूयमानोऽपि तैः पूजनीयात् चतुर्मुखादात्मस्वरूपगुणविभूतिं स्वजनेषु प्रख्यापयितुं

इति ॥ १२ ॥ स्वरूपप्रश्नोत्तरमाह–भवान्नारायण इति। नाराः अयनं यस्यासौ नारायणः । "आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः॥" इति मनुस्मरणात्। तेन जगत्कारणत्वमुक्तम्। "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी" इति श्रुतेः। अवाप्तसमस्तकामस्य जगद्व्यापारानुपपत्तिं परिहरति देव इति । दीव्यतीति देवः क्रीडाप्रवृत्तः। लीलायाः प्रयोजनत्वात् । परिपूर्णस्यापि व्यापारः सम्भवतीति भावः। एवं परत्वासाधारणं नामधेयमुक्त्वा पत्नीवैशिष्ट्यमाह श्रीमानिति । नित्यं श्रीरस्यास्तीति श्रीमान्। नित्य

भवान्नारायणो देवः श्रीमांश्चक्रायुधो विभुः । एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ॥ १४ ॥
अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघव । लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः ॥ १५ ॥

योगे मतुप्। असाधारणमायुधमाह चक्रायुध इति। स्वरूपवैलक्षण्यमाह विभुरिति। व्यापक इत्यर्थः । फलितं रक्षकत्वमाह एकशृङ्गो वराह इति। प्रलयोदधिसम्प्लुवे वराहरूपं कृत्वा भूमेरुद्धारक इत्यर्थः। "उद्धृताऽसि वराहेण" इति श्रुतेः। अनिष्टनिवर्तकत्वमाह भूतभव्यसपत्नजिदिति। भूताः सपत्नाः मधुकैटभादयः, भव्याः सपत्नाः शिशुपालादयः तान् जयतीति तथोक्तः ॥ १४ ॥ तनि०–श्रीमानिति नित्ययोगे मतुप्। भवान् श्रीमानिति "सीता लक्ष्मीर्भवान् विष्णुः" इत्युक्तश्रियःपतित्वं नित्यानपायित्वं च दर्शितम्। एकशृङ्गो वराहः "स वराहो रूपं कृत्वा" इति श्रुत्युक्तो वराहस्त्वम् ॥ १४ ॥ अथ सर्वविद्योपसंहारार्थमाह–अक्षरमित्यादि । न क्षरतीत्यक्षरम्, अश्नोति व्याप्नोतीति वा अक्षरम्। "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" इति श्रुतेः। भवानित्यनुषज्यते। अक्षरं भवान्। एवमुत्तरत्राप्यनुषञ्जनीयम्। बृहति बृंहयतीति च ब्रह्म। "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" इति श्रुतिनिर्वचनात्। सत्यम् अविपर्यस्तम्, षड्भावविकारशून्यमित्यर्थः। अस्ति जायते परिणमते विवर्धते अपक्षीयते विनश्यतीति षड्भावविकाराः। मध्ये

सौशील्यं वर्णयति–आत्मानं मानुषमिति। योऽहं यत्स्वरूपः, यस्य यदीयः, यतः प्रयोजनाद्धेतोः उत्पन्नः ॥१२॥१३॥ स्वरूपप्रश्नस्योत्तरमाह–भवान्नारायण इति। नारायणः नराणां समूहो नारं तस्यायनं प्राप्यभूतः, देवः स्वयंप्रकाश इत्यर्थः। एकशृङ्गो वराहः आदिवराहः। तस्यैकशृङ्गता स्कान्दे दर्शिता–"दंष्ट्रया पर्वतेन्द्राणां चालनं कृतवान्महव। ततस्तं तुष्टवुर्देवा एकशृङ्गत्वसिद्धये। एकशृङ्गो वराहोऽभूत्तदाप्रभृति माधवः॥" इति। भूतभव्यः भूतभव्यकालात्मकः। भूतभव्यः सपत्नजिदिति पाठः ॥१४॥ अक्षरं परं ब्रह्म "तदक्षरं यस्य योनिं परिपश्यन्ति धीराः" इति श्रुतेः। सत्यं तत्त्वभूतम्। लोकानां मध्ये अन्ते चकारादादावपि परो धर्मः

चान्ते चेति । चकारादादौ चेत्यर्थः । वर्तमानमिति [illegible] । लोकानां परो धर्मः सिद्धरूपो धर्मः, सर्वलोकश्रेयस्साधनीभूत इत्यर्थः । विष्वद्रीची सर्वगता सेना यस्य सः विष्वक्सेनः । सर्वस्वामीत्यर्थः । चतुर्भुजः युगपच्चतुर्विधपुरुषार्थप्रद इत्यर्थः ॥ १५ ॥ शार्ङ्गधन्वेति । शृङ्गविकारः शार्ङ्गं धनुर्यस्य स शार्ङ्गधन्वा । "धनुपश्च" इत्यनङादेशः । अनेन रक्षणोपकरणवत्त्वमुक्तम् । हृषीकाणाम् इन्द्रियाणाम् ईशः नियन्ता, सर्वेन्द्रिया कर्षकादिव्यविग्रह इत्यर्थः । पुरु सनोतीति पुरुषः । "षणु दाने" इत्यस्माद्धातोर्डप्रत्ययः । बहुप्रदः इत्यर्थः । यद्वा पुरि हृदयगुहायां शेत इति

शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः । अजितः खड्गधृद्विष्णुः कृष्णश्चैव बृहद्बलः ॥ १६ ॥
सेनानीर्ग्रामणीश्च त्वं बुद्धिः सत्त्वं क्षमा दमः । प्रभवश्चाप्ययश्च त्वमुपेन्द्रो मधुसूदनः ॥ १७ ॥

पुरुषः । "पुरि शयं पुरुषमीक्षते इति" निर्वचनश्रुतेः । यद्वा येन जगत्पूर्णं स पुरुषः । "तेनेदं पूर्णं पुरुषेण सर्वम्" इति श्रुतेः । यद्वा पुरातनत्वात् पुरुषः । "पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति श्रुतेः । पुरुषेभ्यः क्षराक्षरेभ्यः उत्तमः पुरुषोत्तमः । "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥" इति हि गीयते । यद्वा पुरुषेषु उत्तमः पुरुषोत्तमः । "सप्तमी" इति योगविभागान्नागोत्तमादिवत् समासः । कैश्चिदपि न जित इत्यजितः, आश्रितसंरक्षणे कदाचिदपि भङ्गं न प्राप्नोतीत्यर्थः । खड्गं नन्दकाख्यं धरतीति खड्गधृत् । विष्णुः व्यापन शीलः । यो (यदाऽऽपदं) दयापदं प्राप्नोति तं तदा तत्रैव स्थितो रक्षतीत्यर्थः । कृष्णः भूनिर्वृतिहेतुः । "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः" इति निर्वचनात् । बृहत् बलं धारणसामर्थ्यं यस्य सः बृहद्बलः ॥१६॥ सेनानीरिति । सेनां नयतीति सेनानीः, देवसेनानिर्वाहक इत्यर्थः । ग्रामं नयतीति

शमदमादिः शमदमादिप्राप्यत्वात्तथोच्यते । विष्वक्सेनः विष्वद्रीची सर्वगता सेना यस्य सः । चतुर्भुजः शत्रुनिरसनदक्षाश्चत्वारो भुजा यस्य सः ॥ १५ ॥ शार्ङ्गधन्वा कालरूपं शार्ङ्गं धनुर्यस्य सः । हृषीकेशः हृषीकाणां विषयेन्द्रियाणाम् ईशः । पुरुषः पुरूणि फलानि सनोति ददातीति तथा "षणु दाने" । यद्वा पुरि हृदय पुण्डरीके शेत इति वा पुरुषः । पूर्णत्वाद्वा पुरुषः । "तेनेदं पूर्णं पुरुषेण सर्वम्" इति श्रुतेः । पुरुषोत्तमः पुरुषशब्दवाच्यक्षराक्षराद्यपेक्षया उत्तम इत्यर्थः । "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥" इति स्मृतेः । अजितः गुणैरैश्वर्येण च केनाप्यजितः । खड्गधृत् विद्यामयं नन्दकाख्यं खड्गं धारयतीति खड्गधृत् । विष्णुः व्यापकः । कृष्णः "कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः । तथा च तत्परं ब्रह्म कृष्णं इत्यभिधीयते ॥" इति वचनात् । बृहद्बलः बृहन्ति वानरबलानि यस्येति तथा ॥ १६ ॥ सेनानीः महतीं वानरसेनां नयतीति सेनानीः योध इत्यर्थः । ग्रामणीः ग्रामः प्राणिवर्गः तं नयति

ग्रामणीः, दिव्यजनपदादिपालक इत्यर्थः । बुद्धिः सत्त्वं क्षमा दम इति बुद्ध्यादिप्रवर्तक इत्यर्थः । "न देवा यष्टिमादाय रक्षन्ति पशुपालवत् । यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥" इति वचनात् । "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इति श्रुतेश्च । प्रभवत्यस्माज्जगदिति प्रभवः उत्पत्तिस्थानम्, सर्वोपादानमित्यर्थः । अप्ययः सर्वजगल्लयस्थानम् । "कृष्ण एव हि भूतानामुत्पत्तिरपि चाप्ययः" इति श्रुतेः । उपेन्द्रः इन्द्रानुजत्वेन प्रथममवतीर्णः । मधुसूदनः वेदापहारकदैत्यसंहारी ॥ १७ ॥ तनि०—क्षमा क्षमानिर्वाहकः । "कीर्त्याः कीर्तिः क्षमाक्षमा" इत्युक्तत्वात् । दमः इन्द्रियजेता । प्रभवः उत्पत्तिमत्कार्यवर्गशरीरकः स्थूलचिदचिद्विशिष्टस्य कार्यत्वात् । "बहु स्याम्" इत्यादिश्रुतेः ॥ १७ ॥ इन्द्रकर्मेति । इन्द्रस्य कर्मैव कर्म यस्य सः

इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणान्तकृत् । शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः ॥ १८ ॥
सहस्रशृङ्गो वेदात्मा शतजिह्वो महर्षभः ॥ १९ ॥

इन्द्रकर्मा । "तं विष्णुरन्वतिष्ठत" इति श्रुतेः । महेन्द्रः निरतिशयैश्वर्यसम्पन्नः । पद्मं नाभौ यस्य स पद्मनाभः, ममापि जनक इत्यर्थः । वक्ष्यति हि—"पद्मे दिव्येऽर्कसङ्काशे नाभ्यामुत्पाद्य मामपि । प्राजापत्यं त्वया कर्म सर्वं मयि निवेशितम् ॥" इति । रणे अन्तं शत्रुनाशं करोतीति रणान्तकृत् । शरण्यं शरणार्हम्, तदुचितज्ञानशक्तिदयादिसंपन्नमित्यर्थः । शरणं रक्षणोपायम् । "उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम्" इति वचनात् । "सर्वस्य शरणं सुहृत्" इति श्रुतेः । महर्षयः अलौकिकतत्त्वसाक्षात्कारसमर्थाः । दिव्या महर्षयः सनकादयः । "यत्रर्षयः प्रथमजा ये पुराणाः" इत्युक्ता नित्यसूरयो वा । नित्यनिर्दोषा वेदा वा ॥ १८ ॥ तनि०—इन्द्रस्येव कर्म यस्य स इन्द्रकर्मा । वृत्रादिवधस्येन्द्रान्तर्यामिकर्तृकत्वात् । महर्षयः अलौकिकतत्त्वसाक्षात्कारसमर्थाः । तत्रापि दिव्या अवतारहस्यादिविशेषज्ञानवन्तो वाल्मीकिप्रभृतयः । यद्वा नित्यसूरयः । "तद्विप्रासो विपन्यवो जागृवांसः" इति श्रुतेः ॥१८॥ सहस्रशृङ्ग इत्यादिसार्धश्लोक एकान्वयः । सहस्रशृङ्गः सहस्रशाखारूपकशृङ्गः । शतजिह्वः अनेकविधचोदनारूपजिह्वः । ऋषभः कर्मणामालोचयिता । स्वकर्मफलं प्रापयतीति तथा । बुद्धिः अध्यवसायात्मिका । क्षमा आश्रितानामपराधसहिष्णुत्वम् । दमः इन्द्रियनिग्रहः । एतद्धर्मकत्वात्तदात्मना व्यपदेशः । प्रभवत्यस्माज्जगदिति प्रभवः । अप्येति लीयते जगदस्मिन्नित्यप्ययः । उपेन्द्रः वासवानुजः । मधुनामानमसुरं सूदयतीति मधुसूदनः ॥ १७ ॥ इन्द्रकर्मा इन्द्रस्य ईश्वरस्य कर्म ऐश्वर्यम्, तद्वानित्यर्थः । महेन्द्रः महतामीश्वराणामिन्द्रः । ईशिता सकलजगत्कारणमित्यर्थः । पद्मं नाभौ यस्य सः पद्मनाभः । रणान्तकृत् रणे शत्रूणां नाशकृत । शरण्यमाश्रयणीयम् । शरणम् उपायभूतम् ॥ १८ ॥ सहस्रशृङ्गो वेदात्मा सहस्रशाखसामवेदस्वरूपः । "सहस्रं सामवर्त्म" इति प्रसिद्धेः । "वेदानां

"ऋष आलोचने" इति धातुः। महांश्चासावृषभश्च महर्षभः। एवंभूतो वेदात्मा त्वमित्यर्थः। आदिकर्ता समष्टिकर्ता। अनेन व्यष्टिकर्तुः स्वस्य व्यावृत्तिः। स्वयंप्रभुः अनन्यप्रेर्यः। 'न तस्येशे कश्चन' इति श्रुतेः। सिद्धानां मुक्तानां साध्यानाम् "यत्र पूर्वे साध्याः सन्ति देवाः" इत्युक्तानां नित्यानामाश्रयः साम्य भोगप्रदः। पूर्वजः आश्रितापेक्षायाः पूर्वं तद्रक्षणाय जनितः ॥ १९ ॥ २० ॥ तनि०—वेदात्मा वेदपुरुषान्तर्यामी। पूर्वजः "पूर्वमेवाहमिहासम्" इति श्रुतेः। हिर्हेतौ। आदिकर्तृत्वे पूर्वजत्वं हेतुरित्यर्थः। सिद्धाद्याश्रयत्वे चायमेव हेतुः ॥१९॥२०॥ सर्वकर्मसमाराध्यत्वमाह—त्वं यज्ञ इति। त्वं यज्ञः "यज्ञो वै विष्णुः"

त्वं त्रयाणां हि लोकानामादिकर्ता स्वयम्प्रभुः। सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः ॥ २० ॥
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः परन्तपः। प्रभवं निधनं वा ते न विदुः को भवानिति ॥ २१ ॥
दृश्यसे सर्वभूतेषु ब्राह्मणेषु च गोषु च। दिक्षु सर्वासु गगने पर्वतेषु वनेषु च ॥ २२ ॥

इति श्रुतेः। यज्ञनिर्वाहकपशुहविराज्यस्रुक्स्रुवादिशरीरको यज्ञाराध्येन्द्रादिशरीरकश्चेत्यर्थः। "ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्" इति हि गीयते। वषट्कार इत्युपलक्षणम् "आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरम्" इत्युक्तानां सप्त दशाक्षराणाम्। तैराराध्य इत्यर्थः। तथोक्तम्—"चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदतु ॥" इति। ओङ्कारः प्रणववाच्यः। "ओमित्येकाक्षरं ब्रह्म" इति श्रुतेः। परन्तपः उत्कृष्टतप इत्यर्थः, उत्कृष्टतपस्समाराध्य इति यावत्। ते प्रभवं निधनं वा न विदुः, वेदा वैदिकाश्च को भवानिति च न विदुः। अपरिच्छिन्नमहिमत्वात्। "क इत्था वेद यत्र सः" इति श्रुतेः ॥ २१ ॥ सर्वान्तर्यामित्वमाह—दृश्यस इति। योगिभिरिति शेषः। अनेन सम्बन्धप्रश्नस्योत्तरमुक्तम् ॥ २२ ॥ तनि०—सर्वान्तर्यामित्वमाह—दृश्यस इति। पण्डितैरिति शेषः। "भूतानि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च। नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥" इति हि स्मर्यते ॥ २२ ॥

सामवेदोऽस्मि" इति स्मृतेश्च। शतजिह्वः नित्यनैमित्तिककाम्यरूपसामान्यविशेषचोदनारूपशताजिह्वः। शतशीर्ष इति वा पाठः। महर्षभः श्रेष्ठतमः ॥१९॥ आदि कर्ता ब्रह्मादीनामपि कर्ता। स्वयंप्रभुः अनन्यप्रेर्यः। साध्यन्ते आराध्यन्ते इति साध्याः तेषां सिद्धानां मुक्तानामप्याश्रयः प्राप्यः। पूर्वजः सृष्टेः पूर्वमपि स्थितः ॥२०॥ त्वं यज्ञ इत्यादि। न विदुः को भवानिति इदन्तया न विदुरित्यर्थः ॥ २१ ॥ सर्वात्मतया स्तौति—दृश्यस इति। सर्वभूतेषु ब्राह्मणेषु गोषु च अन्तर्यामितया दृश्यसे, गोब्राह्मणयोर्विश्वान्तर्वर्तित्वेऽपि पृथगभिधानं विशिष्टाविर्भावस्थानतया। एवं सर्वजङ्गमान्तर्यामितामभिधाय स्थावरान्तर्यामितामाह दिक्ष्विति ॥ २२ ॥

पुरुषसूक्तार्थमाह—सहस्रेति । अत्र शतशब्दः सहस्रवाचकः । "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" इति श्रुतेः । श्रीमानिति भूपतित्वस्याप्युप लक्षणम् । "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इत्युत्तरनारायणोक्तेः । अथ सर्वाधारत्वमाह—त्वमिति । भूतानीति भूव्यतिरिक्तमहाभूतपरम् । अनेनाधाराधेयभावसम्बन्धः उक्तः ॥ २३ ॥ दैनन्दिनप्रलयवृत्तान्तमाह—अन्त इति । पृथिव्या अन्ते विनाशे । महानुरगः शेषो यस्य सः शेषशायी सन् धारयन् कुक्षौ धारयन् दृश्यसे, मार्कण्डेयादिभिरिति शेषः ॥ २४ ॥ अथ "अङ्गान्यन्या देवताः" इत्युक्तसर्वदेवाद्यात्मकत्वं

सहस्रचरणः श्रीमान् शतशीर्षः सहस्रदृक् । त्वं धारयसि भूतानि वसुधां च सपर्वताम् ॥ २३ ॥
अन्ते पृथिव्याः सलिले दृश्यसे त्वं महोरगः । त्रींल्लोकान् धारयन् राम देवगन्धर्वदानवान् ॥ २४ ॥
अहं ते हृदयं राम जिह्वा देवी सरस्वती । देवा गात्रेषु रोमाणि निर्मिता ब्रह्मणः प्रभो ॥ २५ ॥
निमेषस्ते भवेद्रात्रिरुन्मेषस्ते भवेद्दिवा । संस्कारास्तेऽभवन् वेदा न तदस्ति त्वया विना ॥ २६ ॥
जगत् सर्वं शरीरं ते स्थैर्यं ते वसुधातलम् । अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षणः ॥ २७ ॥

दर्शयति—अहं त इत्यादिना । हृदयं वक्षः । ब्रह्मणः परब्रह्मणः । ते देवा गात्रेषु स्थिताः रोमाणीव स्थिताः तद्वदविनाभूताः ॥ २५ ॥ निमेष इति । दिवा अहः । वेदाः संस्काराः निश्वसितभूता इत्यर्थः । "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतदृग्वेदः" इत्यादिश्रुतेः । किं बहुना सङ्क्षेपेणोच्यत इत्याह—न तदस्ति विना त्वयेति । यत्त्वया विनाभूतं त्वदनन्तर्यामिकम्, तन्नास्तीत्यर्थः ॥२६॥ एवं निषेधश्रुत्यर्थमुक्त्वा "सर्वं खल्विदं ब्रह्म । तत्त्वमसि" इत्यादिसामानाधिकरण्यश्रुत्यर्थमाह—जगदिति । सर्वं जगत् ते शरीरं तव नियमेन आधेयं विधेयं शेषभूतं चेत्यर्थः । इदमेव हि शरीरलक्षणम् । एवं जगतस्त्वच्छरीरत्वाच्छरीरगतविशेषणानि त्वद्विशेषणानीत्याह—स्थैर्यमिति । वसुधातलं वसुधातलस्थैर्यम् । "काठिन्यवान् यो बिभर्ति तस्मै भूम्या



पुरुषसूक्तादयोऽपि त्वामेव प्रतिपादयन्तीत्याह—सहस्रचरण इत्यादिना । सम्बन्ध्यादिकूर्मात्मना स्तौति—त्वं धारयसीति ॥२३॥ इदानीं सङ्कर्षणात्मना स्तौति—अन्त इति । महोरगः सङ्कर्षण इत्यर्थः । अथ विराड्रूपतामाह—त्रींल्लोकानित्यादिसार्धश्लोकद्वयेन । संस्कारास्तेऽभवन्वेदाः संस्क्रियन्ते बोध्यन्ते यैर्लोका इति संस्काराः बोधकाः, प्रवृत्तिनिवृत्तिव्यवस्थापका इति यावत् । न तदस्ति त्वया विना [illegible] सर्वं [illegible] त्वदात्मकमेवेत्यर्थः ॥ २४–२६ ॥ तदेवाह—जगत्सर्वं

त्मने नमः" इति श्रीविष्णुपुराणोक्तेः। अग्निः अग्नितापः, [illegible] सामगतप्रसादः, तत्प्रसादः त्वत्प्रसाद इत्यर्थः ॥२७॥ त्वयेति। त्वया त्रिविक्रमेण। पुराणे पूर्वकाले। लोकाक्रमणफलमाह—महेन्द्र इति। राजा कृतः त्रैलोक्यस्येति शेषः ॥ २८ ॥ तनि०—त्वया लोकास्त्रयः क्रान्ता इति। बलेः प्रतिग्रही तेत्यर्थः। एतेन वामनावतारो व्यञ्जितः। विक्रमैः पादविन्यासैस्त्रिभिः क्रान्ता इति त्रिविक्रमावतारः कथितः। "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्" इति श्रुतेः। पुराणे पूर्वकाले। महेन्द्रो राजा कृतः बलिना पदान्निर्यापित इन्द्रः [illegible] राजा कृत इत्यर्थः ॥२८॥ प्रयोजनप्रश्नस्योत्तरमाह—वधार्थमिति ॥ २९–३१ ॥

त्वया लोकास्त्रयः क्रान्ताः पुराणे विक्रमैस्त्रिभिः। महेन्द्रश्च कृतो राजा बलिं बद्ध्वा महासुरम् ॥२८॥ सीता लक्ष्मी भवान् विष्णुर्देवः कृष्णः प्रजापतिः। वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम् ॥२९॥ तदिदं नः कृतं कार्यं त्वया धर्मभृतां वर। निहतो रावणो राम प्रहृष्टो दिवमाक्रम ॥ ३० ॥ अमोघं बलवीर्यं ते अमोघस्ते पराक्रमः। अमोघं दर्शनं राम न च मोघः स्तवस्तव ॥ ३१ ॥ अमोघास्ते भविष्यन्ति भक्तिमन्तश्च ये नराः ॥ ३२ ॥ ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम्। प्राप्नुवन्ति सदा कामानिह लोके परत्र च ॥ ३३ ॥

तनि०—भगवदवतारेषु लक्ष्म्या अनुवृत्तिमाह—सीतेति। कृष्णः भविष्यत्कृष्णावतारश्च त्वमेवेत्यर्थः। प्रजापतिः प्रजापतिशब्दवाच्यस्त्वमेव। अवतारप्रयोजनमाह—वधार्थमिति। मानुषीं मनुष्यसंस्थानरूपाम्, तनुमप्राकृतशरीरम् ॥ २९ ॥ [illegible]—अमोघमिति। न च मोघः स्तवस्तवेति पाठः॥ ३१ ॥ अमोघा इत्यर्धम्। अमोघाः अप्रतिबद्धफलाः ये त्वयि भक्तिमन्तः ते अविलम्बेन फलभागिनः [illegible] इदं [illegible]वतारस्यैकं प्रयोजनम् ॥ ३२ ॥ इदमेव विवृणोति—य इति। त्वाम्, उद्दिश्येति शेषः। अनेन सर्वस्मादपि तपःप्रभृतेः [illegible] प्राप्नुवन्ति इति कामाः भोगोपकरणानि, इह लोके परत्र च प्राप्नुवन्ति। सदेत्यनेन यावच्छरीरपातं [illegible] भोगान् भुक्त्वा शरीरावसाने परलोके सर्वान् कामान् प्राप्नुवन्तीत्यर्थः ॥ ३३ ॥

शरीरमिति ॥ २७ ॥ [illegible] पूर्वस्मिन् काले त्वया वामनात्मनाऽवतीर्णेन त्रिभिर्विक्रमैः त्रयो लोकाः भूर्भुवस्स्वस्स्वरूपाः क्रान्ताः ॥ २८ ॥ लक्ष्मीस्सीतारूपेणावतीर्णेत्याह—सीता [illegible] अवतारफलमाह भवान् विष्णुरित्यादिना ॥ २९ ॥ तच्च परमार्थमित्याह—तदिदं नः इति ॥ ३०–३३ ॥

ये रामभक्तिं कर्तुमदक्षास्तेषामिदं स्तोत्रमेव तादृशफलप्रदमित्याह–इदमिति । ऋषिः वेदः तत्संबन्ध्यार्षम् । अत एव पुरातनम् । पराभवः पुनरावृत्तिः ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने विंशत्युत्तरशततमः सर्गः ॥ १२० ॥

इममार्षं स्तवं नित्यमितिहासं पुरातनम् । ये नराः कीर्तयिष्यन्ति नास्ति तेषां पराभवः ॥ ३४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे विंशत्युत्तरशततमः सर्गः ॥ १२० ॥

एतच्छ्रुत्वा शुभं वाक्यं पितामहसमीरितम् । अङ्केनादाय वैदेहीमुत्पपात विभावसुः ॥ १ ॥ स विधूय चितां तां तु वैदेहीं हव्यवाहनः । उत्तस्थौ मूर्तिमानाशु गृहीत्वा जनकात्मजाम् ॥ २ ॥ तरुणादित्यसङ्काशां तप्तकाञ्चनभूषणाम् । रक्ताम्बरधरां बालां नीलकुञ्चितमूर्धजाम् ॥३॥ अक्लिष्टमाल्याभरणां तथारूपां मनस्विनीम् । ददौ रामाय वैदेहीमङ्के कृत्वा विभावसुः ॥ ४ ॥ अब्रवीच्च तदा रामं साक्षी लोकस्य पावकः ॥ ५ ॥ एषा ते राम वैदेही पापमस्यां न विद्यते ॥ ६ ॥

एतच्छ्रुत्वेत्यादि । विभावसुः अग्निः ॥ १ ॥ विधूय चितां शिथिलीकृत्य । मूर्तिमान् मनुष्यविग्रहवान् ॥ २ ॥ तरुणादित्येत्यादिश्लोकद्वयमेकान्वयम् । तथारूपां प्रवेशकालिकरूपवतीम् । मनस्विनीं प्रसन्नमनस्कामित्यर्थः । अङ्के कृत्वा अङ्केनादायेत्यर्थः ॥ ३–५ ॥ एषेति । एषा या पूर्वं मयि प्रविष्टा

स्तोत्रपाठस्य फलमाह–इममिति । आर्षं वेदसिद्धम्॥३४॥ इति श्रीमहेश्वर० श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां विंशत्युत्तरशततमः सर्गः ॥१२०॥ ॥ १ ॥ २ ॥ तरुणेति । तथारूपाम् अग्निप्रवेशकाले यादृशवस्त्राङ्गरागस्रक्शोभायुक्ता तादृशसौभाग्ययुक्तामित्यर्थः ॥ ३–८ ॥

स०–ऋषिः वेदद्रष्टा, तद्दृष्टत्वादार्षो वेदः । तत्तुल्यं स्तवं स्तोत्रम् । इतिहासम् अनादिसिद्धकथाविषयत्वात् । पराभवः बाह्याभ्यन्तरशत्रुतिरस्करणं नास्ति ॥ ३४ ॥

स०–शुभं स्वाभिलषितसीतारघुवरसंयोगसाधनत्वात् । अङ्केन आरोपितकलङ्केन पतितां सीताम् आदाय स्वयं स्वीकृत्य । अङ्केन स्वदक्षिणोत्सङ्गेनादाय, तस्य पुत्रीभागत्वात् । यथोक्तम्–“ भागो हि दक्षो दुहितुः स्नुषायाः ” इति । अग्निपातानन्तरं जीवनेऽग्निजातत्वप्राप्त्या तत्पुत्रीत्वस्योचितत्वात् । अन्यथा अङ्केनेति व्यर्थम् । विभावसुः अग्निः ॥ १ ॥ मूर्तिमान् “चत्वारि शृङ्गा त्रयो अस्य पादाः” इत्याद्युक्तलक्षणशरीरवान् ॥ २ ॥ रक्ताम्बरधरां पूर्वं विद्यमानपीतवस्त्रं परित्यज्य विर्भावगेन दत्तरक्तवस्त्रधराम् ॥ ३ ॥ हे राम ! या पूर्वं रावणहरणकाले मयि प्रविश्य कैलासं गता सैषा ते त्वदीया निजपत्नी । अस्यां पापं त्वच्छङ्कितं न विद्यते । अत्र यद्वक्तव्यं तत्सर्वमरण्यकाण्डव्याख्यायां कूर्मपुराणाद्युदाहरणेनोक्तं पुरस्तात् ॥ ६ ॥

सैषेत्यर्थः । एतेन मायासीताऽग्निं प्रविष्टा साक्षात्सीताऽग्निना दत्तेति प्रत्युक्तम् । ते त्वदीयेत्यर्थः । एनां परिगृहाणेति शेषः ॥ ६ ॥ पापाभावमेवोपपादयति--नैवेत्यादिना । अनुध्यानात्सङ्कल्पात् । अत्यन्ताभिमतां देवीं निर्दोषां जानन्नपि स्ववृत्तावद्यत्वपरिहारार्थं वह्निं प्रवेशयदिति सन्तोषातिशयाद्वृत्तशौण्डीरेति संबोधनम् ॥ ७ ॥ एतत्संमतिं विना कथं रावणः समानीतवानित्यत्राह--रावणेनेत्यादि ॥ ८ ॥ विवशा नीतेत्यत्र लिङ्गं दर्शयति--रुद्धेति ।

नैव वाचा न मनसा नानुध्यानान्न चक्षुषा । सुवृत्ता वृत्तशौण्डीर न त्वामतिचचार ह ॥ ७ ॥ रावणेनापनीतैषा वीर्योत्सिक्तेन रक्षसा । त्वया विरहिता दीना विवशा निर्जनाद्वनात् ॥ ८ ॥ रुद्धा चान्तःपुरे गुप्ता त्वच्चित्ता त्वत्परायणा । रक्षिता राक्षसीसङ्घैर्विकृतैर्घोरदर्शनैः ॥ ९ ॥ प्रलोभ्यमाना विविधं भर्त्स्यमाना च मैथिली । नाचिन्तयत तद्रक्षस्त्वद्गतेनान्तरात्मना ॥ १० ॥ विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघव । न किंचिदभिधातव्यमहमाज्ञापयामि ते ॥ ११ ॥ ततः प्रीतमना रामः श्रुत्वैतद्वदतां वरः । दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः ॥ १२ ॥ एवमुक्तो महातेजा द्युतिमान् दृढविक्रमः । अब्रवीत् त्रिदशश्रेष्ठं रामो धर्मभृतां वरः ॥ १३ ॥ अवश्यं त्रिषु लोकेषु न सीता पापमर्हति । दीर्घकालोषिता हीयं रावणान्तःपुरे शुभा ॥ १४ ॥

त्वयि चित्तं यस्याः सा त्वच्चित्ता । त्वमेव परायणमुत्तमगतिर्यस्याः सा त्वत्परायणा ॥ ९ ॥ १० ॥ विशुद्धभावामिति । विशुद्धभावां विशुद्धहृदयाम् । अभिधातव्यम्, मद्वचनस्योत्तरमिति शेषः ॥ ११ ॥ तत इति । दध्यौ न वृथैव सीता त्यक्तेत्यचिन्तयत् ॥ १२ ॥ १३ ॥ वस्तुतो निर्दोषत्वेऽपि

रुद्धा निरुद्धस्वच्छन्दगमनादिव्यवहारा । गुप्ता परिहृतस्वजनदर्शना । त्वयि चित्तं यस्यास्सा अत एव त्वत्परायणा त्वद्गतिः ॥९॥ तद्रक्षो नाचिन्तयत नागणयत् । तत्र हेतुरन्तरात्मनस्त्वद्गतत्वम् । एवञ्च यत्प्रतिबिम्बस्याप्येवं व्यवस्था तद्बिम्बस्य शुद्धत्वं किं वक्तव्यमिति भावः ॥१०॥ न किञ्चिदिति । मन्नियोगानन्तरं प्रतिग्राह्या न वेति सन्देहो न गृह्णामीति निषेधश्च न कर्तव्य इत्यर्थः । कुत एवम्? तत्राह आज्ञापयामि त इति । एवमुक्तिस्तु रामेण स्वस्वरूपाज्ञाननटनात्तदनुसारेण रुद्रमूर्तेर्भगवतोऽग्नेरपीति मन्तव्यम् ॥ ११–१२ ॥ अवश्यमिति । रावणान्तःपुरे दीर्घकालोषिता सीता त्रिषु लोकेषु विषये पापं शोधनं नार्हतीति योजना । यद्वा अवश्य

अपवादोऽस्तीत्याह--अवश्यमिति ॥ १४ ॥ अपवादपरिहारार्थमयं मम प्रयत्न इत्याह-बालिश इति । आंवशाध्येति । परिग्रह इति शेषः ॥ १५ ॥ अनन्येति । अनन्यहृदयां मय्येव सक्तहृदयाम् । मच्चित्तपरिवर्तिनीम् मच्चित्तानुवर्तिनीम्, त्यक्तस्वव्यापारामित्यर्थः । जनकात्मजामिति हेतुगर्भं विशेषणम् । जनकपुत्र्याः किमाचारसंपत्तिर्वक्तव्येति भावः ॥ १६ ॥ तर्हि किमर्थमुपेक्षितवानसीत्यत्राह--प्रत्ययार्थमिति । प्रत्ययार्थं विश्वासजननार्थं

बालिशः खलु कामात्मा रामो दशरथात्मजः । इति वक्ष्यन्ति मां सन्तो जानकीमविशोध्य हि ॥ १५ ॥ अनन्यहृदयां भक्तां मच्चित्तपरिवर्तिनीम् । अहमप्यवगच्छामि मैथिलीं जनकात्मजाम् ॥ १६ ॥ प्रत्ययार्थं तु लोकानां त्रयाणां सत्यसंश्रयः । उपेक्षे चापि वैदेहीं प्रविशन्तीं हुताशनम् ॥ १७ ॥ इमामपि विशालाक्षीं रक्षितां स्वेन तेजसा । रावणो नातिवर्तेत वेलामिव महोदधिः ॥ १८ ॥ न हि शक्तः स दुष्टात्मा मनसाऽपि हि मैथिलीम् । प्रधर्षयितुमप्राप्तां दीप्तामग्निशिखामिव ॥ १९ ॥ नेयमर्हति चैश्वर्यं रावणान्तःपुरे शुभा । अनन्या हि मया सीता भास्करेण प्रभा यथा ॥ २० ॥ विशुद्धा त्रिषु लोकेषु मैथिली जनकात्मजा । न हि हातुमियं शक्या कीर्तिरात्मवता यथा ॥२१॥ अवश्यं तु मया कार्यं सर्वेषां वो वचः शुभम् । स्निग्धानां लोकमान्यानामेवं च ब्रुवतां हितम् ॥ २२ ॥ इतीदमुक्त्वा विदितं महाबलैः प्रशस्यमानः स्वकृतेन कर्मणा । समेत्य रामः प्रियया महाबलः सुखं सुखार्होऽनुबभूव राघवः ॥ २३ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमद्युद्धकाण्डे एकविंशत्युत्तरशततमः सर्गः ॥ १२१ ॥

मित्यर्थः । सत्यसंश्रयः सत्यैकाश्रयः, यथार्थप्रवर्तनाकाङ्क्षीत्यर्थः ॥ १७ ॥ एतादृशसुन्दरीं रावणः कथं नेक्षेतेत्यत्राह-इमामपीति ॥ १८ ॥ दृष्टान्तान्तरमाह-न हीति । अप्राप्तां प्रधर्षणानर्हाम् ॥ १९ ॥ तथाप्येषा तादृशमैश्वर्यं कथं जह्यादित्यत्राह--नेयमिति । रावणैश्वर्यं नेयमर्हति किंतु ममैश्वर्यमर्हतीत्यर्थः । तत्र हेतुमाह अनन्येति । मया अनन्या अभिन्ना, अविनाभूतेति यावत् ॥ २० ॥ अहमपि तया अनन्य इत्याह--विशुद्धेति ॥२१॥ सीतापरिग्रहे भवद्वचनं तु प्रधानहेतुरित्याह--अवश्यमिति । वचनकरणे स्नेहः सर्वपूज्यत्वं हितोपदेष्टृत्वं च हेतुरित्यर्थः ॥ २२ ॥ इतीति । विदितं स्वेनेत्यादि श्लोकद्वयमेकं वाक्यम् । रावणान्तःपुरे दीर्घकालोषिताऽपि परिशुद्धा इयं सीता पापं नार्हतीति यद्यपि तथापि रामस्तां जानकीमविशोध्य स्वीकृतवान् ततो

विदितम्, इदम् उक्तं वचनम् उक्त्वा स्वकृतेन कर्मणा करणेन महाबलैः कर्तृभिः प्रशस्यमानः प्रियया समेत्य सीतां स्वसमीपमानीयेत्यर्थः ॥ २३ ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकविंशत्युत्तरशततमः सर्गः ॥ १२१ ॥

एतच्छ्रुत्वा शुभं वाक्यं राघवेण सुभाषितम् । इदं शुभतरं वाक्यं व्याजहार महेश्वरः ॥ १ ॥ पुष्कराक्ष महाबाहो महावक्षः परन्तप । दिष्ट्या कृतमिदं कर्म त्वया शस्त्रभृतां वर ॥ २ ॥ दिष्ट्या सर्वस्य लोकस्य प्रवृद्धं दारुणं तमः । अपावृत्तं त्वया सङ्ख्ये राम रावणजं भयम् ॥ ३ ॥ आश्वास्य भरतं दीनं कौसल्यां च यशस्विनीम् । कैकेयीं च सुमित्रां च दृष्ट्वा लक्ष्मणमातरम् ॥ ४ ॥ प्राप्य राज्यमयोध्यायां नन्दयित्वा सुहृज्जनम् । इक्ष्वाकूणां कुले वंशं स्थापयित्वा महाबल ॥५॥ इष्ट्वा तुरगमेधेन प्राप्य चानुत्तमं यशः । ब्राह्मणेभ्यो धनं दत्त्वा त्रिदिवं गन्तुमर्हसि ॥६॥

देवकार्यस्य कृतत्वात्त्रिदिवमाक्रमेति ब्रह्मणोक्तत्वाल्लोके धर्मसंस्थापनपरं रामहृदयं जानन् रुद्रस्तदनुमन्यते—एतच्छ्रुत्वेत्यादि ॥ १ ॥ पुष्कराक्ष पुण्डरीकाक्ष ! अनेन "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" "पुरुषः पुण्डरीकाक्षः" इति श्रुतिस्मृतिभ्यामुदीरितस्य परब्रह्मासाधारणचिह्नस्य रामे रुद्रेण प्रतिपादनाद्रामत्वेनावतीर्णो विष्णुरेव वेदान्तवेद्यं परब्रह्मेत्युक्तम् । श्रीनिवासत्वेन महावक्षस्त्वम् । दिष्ट्या भाग्येन, अस्माकमिति शेषः ॥ २ ॥ उक्तमेव विवृणोति—दिष्ट्येति । सर्वस्य लोकस्य रावणजं भयमेव प्रवृद्धं तमः अपावृत्तं निरस्तम् ॥ ३ ॥ आश्वास्येत्यादिश्लोकत्रयमेकान्वयम् ।

रामो बालिशः कामात्मेति च त्रिषु लोकेषु सन्तो मां वक्ष्यन्तीति सम्बन्धः ॥१४–२३॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकविंशत्युत्तरशततमः सर्गः ॥१२१॥१॥२॥ दिष्ट्येति । सर्वस्य लोकस्य दिष्ट्या सर्वलोकभाग्येन रावणजं भयमपावृत्तमिति सम्बन्धः ॥ ३ ॥ ४ ॥ "दशवर्षसहस्राणि दशवर्षशतानि च । वत्स्यामि मानुषे लोके" इत्यवतारात्पूर्वं तत्कृतां प्रतिज्ञामनुस्मृत्याह—प्राप्य राज्यमित्यादिश्लोकद्वयेन । कुले वंशं सन्तानं

स०—राघवेणानुभाषितम् । ततः शुभतरम् इति पाठः। अनुभाषितं स्ववचनमनुसृत्य भाषितम् । ततः तदनन्तरम्, शुभतरं रामवाक्यस्य शुभत्वोक्तेः तद्ब्युत्पादकवाक्येन प्रकृतोपयोगिनाऽतिशुभेन भवितव्यमिति शुभतरमित्युक्तमिति भावः ॥ १ ॥ दीनं पितृनाशेन त्वददर्शनेन च । कैकेयीं चाश्वास्य अनेन रामप्राचण्यस्येव तदमात्सर्यस्य च निस्सीमतया स्वानुभूतत्वेनैतदाश्वासनाशंसनं न मुधा माधवस्तनुयादिति द्योतयति ॥४॥ तुरगमेधेन अश्वमेधेन इष्ट्वा सम्पूज्य, स्वात्मानमिति शेषः । अनुत्तमं महत् यशः कीर्तिविशेषम् "दिक्षु यानायशः प्रोक्तम्" इति छान्दोग्यभाष्योक्तेः । प्राप्य त्रिदिवं श्वेतद्वीपानन्तासनवैकुण्ठाख्यप्रकाशमानलोकत्रयम् अनुत्तमं यशः तन्नामकं प्रजापतिं स्वमेवेष्ट्वा । हे प्राप्य सर्वैः सर्वकर्मभिः प्राप्य राम ! शिष्टमविशिष्टम् "तस्य नाम महद्यशः" "प्रजापतिं वा एष ईप्सति । योऽश्वमेधेन यजते" इति श्रुतिभ्याम् ॥ ६ ॥

यशस्विनीमिति कैकेयीविशेषणम् । तन्मूलत्वाद्रावणवधस्य तस्या यशस्वित्वम् । लक्ष्मणमातरमित्यनेन सा लक्ष्मणस्नेहाद्विशेषतो वन्द्येत्युक्तम् । अयं ध्यायां सुहृज्जनं नन्दयित्वेत्यन्वयः । वंशं पुत्रपौत्रादिपरम्पराम् । इक्ष्वाकूणां कुले इक्ष्वाकुकुलनिमित्तम्, स्थापयित्वा । प्राप्य चानुत्तमं यश इति तुरग मेधफलोक्तिः । आश्वास्येत्यादिना "दशवर्षसहस्राणि दशवर्षशतानि च । वत्स्यामि मानुषे लोके" इत्यवतारात्पूर्वं तत्कृतां प्रतिज्ञामनुसृत्य रुद्रेणोक्तम् ।

एष राजा विमानस्थः पिता दशरथस्तव । काकुत्स्थ मानुषे लोके गुरुस्तव महायशाः ॥ ७ ॥ इन्द्र लोकं गतः श्रीमांस्त्वया पुत्रेण तारितः । लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय ॥ ८ ॥ महादेववचः श्रुत्वा काकुत्स्थः सहलक्ष्मणः । विमानशिखरस्थस्य प्रणाममकरोत् पितुः ॥ ९ ॥ दीप्यमानं स्वया लक्ष्म्या विरजोम्बर धारिणम् । लक्ष्मणेन सह भ्रात्रा ददर्श पितरं विभुः ॥१०॥ हर्षेण महताऽऽविष्टो विमानस्थो महीपतिः । प्राणैः प्रिय तरं दृष्ट्वा पुत्रं दशरथस्तदा ॥ ११ ॥ आरोप्याङ्कं महाबाहुर्वरासनगतः प्रभुः । बाहुभ्यां सम्परिष्वज्य ततो वाक्यं समाददे ॥ १२ ॥ न मे स्वर्गो बहुमतः संमानश्च सुरर्षिभिः । त्वया राम विहीनस्य सत्यं प्रतिशृणोमि ते ॥१३॥ अद्य त्वां निहतामित्रं दृष्ट्वा सम्पूर्णमानसम् । निस्तीर्णवनवासं च प्रीतिरासीत् परा मम ॥ १४ ॥

॥ ४–६ ॥ एष इत्यादिश्लोकद्वयमेकान्वयम् । देवदेहपरिग्रहेणापरिज्ञायमानत्वात् पुरःस्थितोऽप्येष इत्यङ्गुल्या निर्दिश्यते । मानुषे लोके गुरुरित्यनेन "पिता पुत्रेण पितृमान् योनियोनौ" इति श्रुतिरुपबृंहिता ॥ ७–१० ॥ हर्षेणेत्यादिश्लोकद्वयमेकान्वयम् । पुत्रं रामम् ॥ ११ ॥ १२ ॥ न मे स्वर्ग इति ।

स्थापयित्वा ॥ ५ ॥ ६ ॥ एष इति । देवदेहपरिग्रहं कृत्वा विमाने पुरःस्थितत्वादेष इत्यङ्गुल्या निर्देशः ॥ ७–१६ ॥

स०—मानुषे लोके लीलागृहीतमानुषदेहविषये तव पिता, मानुषे लोके मनुष्यलोक इति वा । किञ्चिद्व्यत्यस्ताकारतया एष इत्यङ्गुल्या निर्देश इति ज्ञेयम् । गुरुस्तवेति रामसम्बोधनम् । गुरुस्तव ब्रह्मादिमहाजन स्तुत्य ! एतेन न गुर्वित्ति तवेति चाधिकमिति मन्तव्यम् । गुरुस्तवमहायशा इति दशरथविशेषणं वा । गुरुस्तवेषु बहुभिः स्तुतेषु महायशाः तदपेक्षयाऽतियशस्वीति वा । " जनिता चोपनेता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ " इति गुरुत्वस्य पितृपदार्थतानतिरेकात् ॥ ७ ॥

सुरर्षिभिः संमानः देवर्षिभिः संमानोऽपि ॥ १३ ॥ १४ ॥ हृदयं स्थितानि न विस्मरामीत्यर्थः । तेन दुःखितोऽभूवमिति सूचितम् ॥ १५ ॥ सलक्ष्मण मित्यनेन द्वितीयपरिष्वङ्गे लक्ष्मणोऽपि विषयीकृत इत्युच्यते ॥ १६ ॥ तारितोऽहं त्वेति । कहोलो नाम ऋषिरष्टावक्रेण तारित इतीयं कथा भारतोक्ता ॥ १७ ॥ रावणस्य वधार्थं सुरेश्वरैरिदमभिषेकविघ्नादिकं कर्म यथा विहितं तथा इदानीमेव जानामि । पुरुषोत्तमेत्यनेन भवान् विष्णुरेव रावणवधार्थं

कैकेय्या यानि चोक्तानि वाक्यानि वदतां वर । तव प्रव्राजनार्थानि स्थितानि हृदये मम ॥१५॥ त्वां तु दृष्ट्वा कुशलिनं परिष्वज्य सलक्ष्मणम् । अद्य दुःखाद्विमुक्तोऽस्मि नीहारादिव भास्करः ॥१६॥ तारितोऽहं त्वया पुत्र सुपुत्रेण महात्मना । अष्टावक्रेण धर्मात्मा तारितो ब्राह्मणो यथा ॥१७॥ इदानीं तु विजानामि यथा सौम्य सुरेश्वरैः । वधार्थं रावणस्येदं विहितं पुरुषोत्तम ॥ १८ ॥ सिद्धार्था खलु कौसल्या या त्वां राम गृहं गतम् । वनान्निवृत्तं संहृष्टा द्रक्ष्यत्यरिनिषूदन ॥ १९ ॥ सिद्धार्थाः खलु ते राम नरा ये त्वां पुरीं गतम् । जलार्द्रमभिषिक्तं च द्रक्ष्यन्ति वसुधाधिपम् ॥ २० ॥ अनुरक्तेन बलिना शुचिना धर्मचारिणा । इच्छामि त्वामहं द्रष्टुं भरतेन समागतम् ॥ २१ ॥ चतुर्दश समाः सौम्य वने निर्यापितास्त्वया । वसता सीतया सार्धं लक्ष्मणेन च धीमता ॥२२॥ निवृत्तवनवासोऽसि प्रतिज्ञा सफला कृता । रावणं च रणे हत्वा देवास्ते परितोषिताः ॥ २३ ॥

मनुष्यत्वं गत इत्युच्यते ॥ १८ ॥ सिद्धार्था कृतार्था । मम स्वर्गसुखादपि तस्याः सुखमधिकमिति भावः ॥ १९ ॥ २० ॥ अनुरक्तेनेति । अवश्यं

तारितोऽहमिति । कहोलो नाम ऋषिः अष्टावक्रेण तारित इति या भारतकथा प्रसिद्धा साऽत्रानुसन्धेया ॥ १७ ॥ रावणस्य वधार्थं सुरेश्वरैरिदमभिषेकरूपं कर्म विहितमिति इदानीं विजानामीति सम्बन्धः ॥ १८–२२ ॥ निवृत्तेति । ते त्वया ॥ २३–२५ ॥

स०–अष्टावक्रेण तन्नामकपुत्रेण । जनकसभायां स्वपितृपराजयकारिणं बन्दिनं जित्वा कहोलो ब्राह्मणः तन्नामकोऽष्टावक्रपिता यथा तारितस्तथा । तदुक्तं भारते वनपर्वणि—"कहोल उवाच । इत्यर्थमिच्छन्ति सुताञ्जना जनक कर्मणा । यदहं नाऽशकं कर्तुं तत् पुत्रः कृतवान्मम ॥ " इति ॥ १७ ॥

राम । भरतं प्राप्नुहीति भावः ॥ २१–२४ ॥ कैकेय्या भरतस्य च कैकेय्यां भरते चेत्यर्थः । संबन्धसामान्ये षष्ठी । यस्मादुक्ता तस्मात् प्रसादं कुर्विति संबन्धः ॥ २५ ॥ स शाप इत्यर्धमेकं वाक्यम् । शापः संबन्धविच्छेदरूपः ॥ २६ ॥ २७ ॥ सीतया सह रामं शुश्रूषतेत्यन्वयः ॥ २८ ॥ स्वर्गं सुखम् ।



कृतं कर्म यशः श्लाघ्यं प्राप्तं ते शत्रुसूदन । भ्रातृभिः सह राज्यस्थो दीर्घमायुरवाप्नुहि । इति ब्रुवाणं राजानं रामः प्राञ्जलिरब्रवीत् ॥२४॥ कुरु प्रसादं धर्मज्ञ कैकेय्या भरतस्य च । सपुत्रां त्वां त्यजामीति यदुक्ता कैकयी त्वया ॥ २५ ॥ स शापः केकयीं घोरः सपुत्रां न स्पृशेत् प्रभो ॥ २६ ॥ स तथेति महाराजो राममुक्त्वा कृताञ्जलिम् । लक्ष्मणं च परिष्वज्य पुनर्वाक्यमुवाच ह ॥२७॥ रामं शुश्रूषता भक्त्या वैदेह्या सह सीतया । कृता मम महाप्रीतिः प्राप्तं धर्मफलं च ते ॥ २८ ॥ धर्मं प्राप्स्यसि धर्मज्ञ यशश्च विपुलं भुवि । रामे प्रसन्ने स्वर्गं च महिमानं तथैव च ॥ २९ ॥ रामं शुश्रूष भद्रं ते सुमित्रानन्दवर्धन । रामः सर्वस्य लोकस्य शुभेष्वभिरतः सदा ॥ ३० ॥ एते सेन्द्रास्त्रयो लोकाः सिद्धाश्च परमर्षयः । अभिगम्य महात्मानमर्चन्ति पुरुषोत्तमम् ॥३१॥ एतत्तदुक्तमव्यक्तमक्षरं ब्रह्म निर्मितम् । देवानां हृदयं सौम्य गुह्यं रामः परन्तपः ॥ ३२ ॥ अवाप्तं धर्मचरणं यशश्च विपुलं त्वया । रामं शुश्रूषता भक्त्या वैदेह्या सह सीतया ॥ ३३ ॥

लक्ष्मणस्यापि विष्णववतारत्वं न जानाति दशरथः । महिमानं महत्त्वम् ॥ २९ ॥ ३० ॥ रामस्य सर्वोत्तमत्वं शिष्टाचारेण दर्शयति--एत इति । अर्चन्तीति णिजभाव आर्षः । एत इति हस्तनिर्देशेन रुद्रोऽप्यन्तर्गतः ॥ ३१ ॥ देवानां हृदयं सर्वदेवान्तर्यामी । वेदानामिति पाठे–वेदतात्पर्यभूतम् उभयथाऽप्यग्नीन्द्रादिरूपेण सर्वकर्मसमाराध्यमित्यर्थः । गुह्यं साक्षादुपनिषद्वेद्यम् । अव्यक्तं भक्तिशून्यैर्दुर्ज्ञेयम् । अक्षरं षड्भावविकाररहितम् । तदेतत् ब्रह्म रामः



स इति । शापः सन्ततिच्छेदरूपः ॥ २६–३१ ॥ एतदिति । ब्रह्मनिर्मितं वेदप्रतिपादितम् । वेदानां हृदयं वेदतात्पर्यविषयभूतम् । गुह्यं रहस्यम् उक्तं, ब्रह्मादिभि

स०–रामे प्रसन्ने " किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने " इत्यादेः ॥ २९ ॥

रामरूपेण निर्मितं रामरूपेणावतीर्णमिति उक्तम्, ब्रह्मादिभिरिति शेषः ॥ ३२–३५ ॥ न त्वमिति । न समाधेया नोपदेष्टव्या ॥ ३६ ॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वाविंशत्युत्तरशततमः सर्गः ॥ १२२ ॥

स तथोक्त्वा महाबाहुर्लक्ष्मणं प्राञ्जलिं स्थितम् । उवाच राजा धर्मात्मा वैदेहीं वचनं शुभम् ॥ ३४ ॥ कर्तव्यो न तु वैदेहि मन्युस्त्यागमिमं प्रति । रामेण त्वद्विशुद्ध्यर्थं कृतमेतद्धितैषिणा ॥ ३५ ॥ न त्वं सुभ्रु समाधेया पति शुश्रूषणं प्रति । अवश्यं तु मया वाच्यमेष ते दैवतं परम् ॥३६॥ इति प्रतिसमादिश्य पुत्रौ सीतां तथा स्नुषाम् । इन्द्रलोकं विमानेन ययौ दशरथो ज्वलन् ॥३७॥ इत्यार्षे० श्रीमद्युद्धकाण्डे द्वाविंशत्युत्तरशततमः सर्गः ॥१२२॥

प्रतिप्रयाते काकुत्स्थे महेन्द्रः पाकशासनः । अब्रवीत् परमप्रीतो राघवं प्राञ्जलिं स्थितम् ॥ १ ॥
अमोघं दर्शनं राम तवास्माकं परन्तप । प्रीतियुक्ताः स्म तेन त्वं ब्रूहि यन्मनसेच्छसि ॥ २ ॥

अथेन्द्रानुशासनम्–प्रतिप्रयात इत्यादि । काकुत्स्थे दशरथे । महेन्द्रः लब्धमहेन्द्रभावः ॥ १ ॥ अमोघमिति । तवास्माकं दर्शनम् अस्मत्कर्तृकं दर्शनं रिति शेषः ॥ ३२–३४ ॥ कर्तव्य इति । इमं त्यागं प्रति "नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यताम्" इत्युक्तम् एतत्त्यागरूपकार्यं प्रति ॥ ३५ ॥ यद्यपि भर्तृशुश्रूषां प्रति त्वं न समाधेया प्रार्थनापूर्वं न नियोज्या । तत्र ते स्वतः प्रवृत्तिसत्त्वात् । अथापि मया गुरुत्वादवश्यं वाच्यम्, तदेवाह–ते दैवतं परमिति ॥ ३६ ॥ ॥३७॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां द्वाविंशत्युत्तरशततमः सर्गः ॥१२२॥ महेन्द्रः तत्सहितो ब्रह्मेत्यर्थः ।

स०–महेन्द्रः पाकशासन इत्यत्र महेन्द्रशब्देन सर्वस्वामित्वेन ब्रह्मा ग्राह्यः । अत्रोत्तरश्लोकेषु च विद्यमानाः पाकशासनादयः शब्दाः अर्शआद्यजन्ताः । तथा च पाकशासनसहितो ब्रह्मोवाचेति लभ्यते । अतो न भारतादिविसंवादः । यथोक्तं भारते–" तमुवाच ततो ब्रह्मा देवैः शक्रपुरोगमैः । कौसल्यामातरिष्टांस्ते वरानद्य ददामि कान् ॥ वव्रे रामः स्थितिं धर्मे शत्रुभिश्चापराजयम् । राक्षसैर्निहतानां च वानराणां समुत्थितिम् ॥ ततस्ते ब्रह्मणा प्रोक्ते तथेति वचने तदा । समुत्तस्थुर्महाराज वानरा लब्धचेतसः ॥ " इति । पाद्मे च–" पितामहवरात्तूर्णं जीवयामास तान्नृप " इति । ननु भ्रूविभ्रममात्रेण चराचरजगत्सृष्ट्यादि कर्तुः रामस्य कथं ब्रह्मवराद्वानरोज्जीवनादिकमिति चेत् ? उच्यते–प्रादुर्भावेषु ब्रह्ममाननार्थं ब्रह्मणे दत्तस्य वरस्य रक्षणार्थं च तथा नटनस्यावश्यकत्वान्नेदमनुपपन्नम् । यथोक्तं शान्तौ मोक्षधर्मेषु–" मया सृष्टः पुरा ब्रह्मा " इत्यारभ्य " अनुशास्यस्त्वया ब्रह्मन्नियोज्यश्च सुतो यथा । एतांश्चान्यांश्च रुचिरान् ब्रह्मणेऽमिततेजसे । अहं दत्त्वा वरान् प्रीतो निवृत्तिपरमोऽभवम् ॥ " इति भगवद्वचनम् । एतेन 'प्राञ्जलिं स्थितम्' इत्यादि समाहितम् ॥ १ ॥

दशरथपुत्रकामेष्टिकालिकम्, अमोघं रावणवधपर्यन्तं जातमित्यर्थः । तेन प्रीतियुक्तत्वेन, यत् अस्युपकाररूपं कार्यमिच्छसि तद् ब्रूहि । केचित्तु त्वत्कर्तृकमस्मद्विषयं दर्शनमित्याहुः ॥ २–५ ॥ मत्कृत इत्यादिसार्धश्लोकमेकं वाक्यम् । मत्प्रियेषु अभियुक्ताः निरताः । समेयुरित्यत्र पुत्रैर्दारैश्चेत्या



एवमुक्तस्तु काकुत्स्थः प्रत्युवाच कृताञ्जलिः । लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया ॥३॥ यदि प्रीतिः समुत्पन्ना मयि सर्वसुरेश्वर । वक्ष्यामि कुरु ते सत्यं वचनं वदतां वर ॥ ४ ॥ मम हेतोः पराक्रान्ता ये गता यमसादनम् । ते सर्वे जीवितं प्राप्य समुत्तिष्ठन्तु वानराः ॥ ५ ॥ मत्कृते विप्रयुक्ता ये पुत्रैर्दारैश्च वानराः । मत्प्रियेष्वभियुक्ताश्च न मृत्युं गणयन्ति च ॥ ६ ॥ त्वत्प्रसादात् समेयुस्ते वरमेतदहं वृणे ॥७॥ नीरुजो निर्व्रणांश्चैव सम्पन्नबलपौरुषान् । गोलाङ्गूलांस्तथैवर्क्षान् द्रष्टुमिच्छामि मानद ॥ ८ ॥ अकाले चापि मुख्यानि मूलानि च फलानि च । नद्यश्च विमलास्तत्र तिष्ठेयुर्यत्र वानराः ॥ ९ ॥ श्रुत्वा तु वचनं तस्य राघवस्य महात्मनः । महेन्द्रः प्रत्युवाचेदं वचनं प्रीतिलक्षणम् ॥१०॥ महानयं वरस्तात त्वयोक्तो रघुनन्दन । द्विर्मया नोक्तपूर्वं हि तस्मादेतद्भविष्यति ॥ ११ ॥ समुत्थास्यन्ति हरयो ये हता युधि राक्षसैः । ऋक्षाश्च सहगोपुच्छा निकृत्ताननबाहवः । नीरुजो निर्व्रणाश्चैव सम्पन्नबलपौरुषाः ॥१२॥ समुत्थास्यन्ति हरयः सुप्ता निद्राक्षये यथा । सुहृद्भिर्बान्धवैश्चैव ज्ञातिभिः स्वजनैरपि । सर्व एव समेष्यन्ति संयुक्ताः परया मुदा ॥ १३ ॥

वर्तनीयम् ॥ ६ ॥ ७ ॥ नीरुजः निष्पीडान् ॥ ८ ॥ विमलाः विमलोदकाः ॥ ९ ॥ प्रीतिर्लक्ष्यतेऽनेनेति प्रीतिलक्षणं प्रीतिव्यञ्जकम् ॥ १० ॥ महानयं वर इति । वरस्य महत्त्वम् इतस्ततो विप्रकीर्णकरचरणपुच्छादिस्वस्वसंस्थानसन्धानलोकान्तरगतानयनादिरूपाघटितार्थघटितत्वम् । द्विर्मया



सत्यसङ्कल्पत्वस्य तस्मिन्नेव प्रसिद्धेः, वानराणां सङ्कल्पमात्रेणोत्थानस्य वक्ष्यमाणत्वात् । भारतेऽपि “ ततस्ते ब्रह्मणा प्रोक्ते तथेति वचने तदा । समुत्तस्थुर्महाराज वानरा लब्धचेतसः ॥ ” इत्युक्तम् ॥ १–५ ॥ मत्कृत इति । समेयुः पुत्रैर्दारैरिति सम्बन्धः ॥ ६–१० ॥ महानयं वर इति । इतस्ततो विप्रकीर्णकरचरणपुच्छादि

नोक्तपूर्वमिति । उक्तवचनस्य विपरीतं वचनान्तरं नोक्तपूर्वमित्यर्थः ॥ ११–१३ ॥ अकाल इति । पुष्पशबलाः पुष्पैर्नानावर्णाः । सलिलायुताः सलिलै व्याप्ताः ॥ १४ ॥ ये निहताः सव्रणास्तेषां निर्व्रणत्वमनुगृह्णाति–सव्रणैरिति । प्रथमं वरदानात्पूर्वं सव्रणैः, अथ निर्व्रणैः संवृत्तैः निर्व्रणीभूतैः गात्रैरुप

अकाले पुष्पशबलाः फलवन्तश्च पादपाः । भविष्यन्ति महेष्वास नद्यश्च सलिलायुताः ॥ १४ ॥ सव्रणैः प्रथमं गात्रैः संवृत्तैर्निर्व्रणैः पुनः ॥ १५ ॥ ततः समुत्थिताः सर्वे सुप्त्वेव हरिपुङ्गवाः । बभूवुर्वानराः सर्वे किमेतदिति विस्मिताः ॥ १६ ॥ ते सर्वे वानरास्तस्मै राघवायाभ्यवादयन् ॥१७॥ काकुत्स्थं परिपूर्णार्थं दृष्ट्वा सर्वे सुरोत्तमाः । ऊचुस्ते प्रथमं स्तुत्वा स्तवार्हं सहलक्ष्मणम् ॥१८॥ गच्छायोध्यामितो वीर विसर्जय च वानरान् ॥१९॥ मैथिलीं सान्त्वयस्वैनामनुरक्तां तपस्विनीम् । शत्रुघ्नं च महात्मानं मातॄः सर्वाः परन्तप ॥२०॥ भ्रातरं पश्य भरतं त्वच्छोकाद्व्रतधारिणम् । अभिषेचय चात्मानं पौरान् गत्वा प्रहर्षय ॥२१॥ एवमुक्त्वा तमामन्त्र्य रामं सौमित्रिणा सह । विमानैः सूर्यसङ्काशैर्हृष्टा जग्मुः सुरा दिवम् ॥२२॥ अभिवाद्य च काकुत्स्थः सर्वांस्तांस्त्रिदशोत्तमान् । लक्ष्मणेन सह भ्रात्रा वासमाज्ञापयत्तदा ॥२३॥ ततस्तु सा लक्ष्मणरामपालिता महाचमूर्हृष्टजना यशस्विनी । श्रिया ज्वलन्ती विरराज सर्वतो निशा प्रणीतेव हि शीतरश्मिना ॥२४॥ इत्यार्षे॰ श्रीमद्युद्ध॰ त्रयोविंशत्युत्तरशततमः सर्गः॥१२३॥

लक्षिताः, वानरा भविष्यन्तीत्यनुकृष्य योजना ॥ १५ ॥ तत इति । अत्र क्रियाभेदात्सर्वशब्दद्वयम् । किमेतदिति । युद्धे मृतस्य कथमेवं जीवन मित्यर्थः ॥ १६--१८ ॥ रामानु॰–त इति । राघवायाभ्यवादयन् राघवमभ्यवादयन्नित्यर्थः । व्यत्ययेन द्वितीयार्थे चतुर्थी । द्वितीयायां विभीषणाभिषेकसीताप्राप्तिदेवता प्रस्थापनानि ॥ १७ ॥ गच्छायोध्यामित्यादिसार्धश्लोकद्वयमेकान्वयम् । त्वच्छोकात् त्वद्वियोगशोकात् ॥ १९--२२ ॥ अभिवाद्येति । वासमाज्ञापयत्, वानराणामिति शेषः ॥ २३ ॥ ततस्त्विति । प्रणीता प्रकाशिता ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयोविंशत्युत्तरशततमः सर्गः ॥ १२३ ॥

स्वस्थानसन्धानलोकान्तरगतानयनरूपाघटितार्थघटकत्वाद्वरस्य महत्त्वम् । द्वितीयायां विभीषणाभिषेकः, तृतीयायां सीताप्राप्तिः देवताप्रस्थापनं च ॥११–२४॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां त्रयोविंशत्युत्तरशततमः सर्गः ॥ १२३ ॥

अथ रामस्य विभीषणसत्कारः—तां रात्रिमित्यादि । तां रात्रिम्, यस्मिन् दिने ब्रह्मादयो निर्जग्मुः तां रात्रिमित्यर्थः ॥ १ ॥ स्नानानीत्यादिसार्धश्लोकद्वयमेकान्वयम् । स्नानानि स्नानीयजलानि । अत्र सर्वत्रेमानीत्यनुषज्यते । अङ्गरागाणि कुङ्कुमादीनि । माल्यानि स्रजः । विधिवत् सोपचारमित्यर्थः ॥ २–४ ॥ हरीनिति । सुग्रीवमुख्यान् सुग्रीवप्रमुखानेव हरीन्, स्नानेन, स्नानेन हेतुना अभिनिमन्त्रय ॥ ५ ॥ त्वां विना तेषामामन्त्रणे किं कारण

तां रात्रिमुषितं रामं सुखोत्थितमरिन्दमम् । अब्रवीत् प्राञ्जलिर्वाक्यं जयं पृष्ट्वा विभीषणः ॥ १ ॥ स्नानानि चाङ्गरागाणि वस्त्राण्याभरणानि च । चन्दनानि च दिव्यानि माल्यानि विविधानि च ॥ २ ॥ अलङ्कारविदश्चेमा नार्यः पद्मनिभेक्षणाः । उपस्थितास्त्वां विधिवत् स्नापयिष्यन्ति राघव । प्रतिगृह्णीष्व तत् सर्वं मदनुग्रहकाम्यया ॥ ३ ॥ एवमुक्तस्तु काकुत्स्थः प्रत्युवाच विभीषणम् ॥ ४ ॥ हरीन् सुग्रीवमुख्यांस्त्वं स्नानेनाभिनिमन्त्रय ॥ ५ ॥ स तु ताम्यति धर्मात्मा मम हेतोः सुखोचितः । सुकुमारो महाबाहुः कुमारः सत्यसंश्रवः ॥ ६ ॥ तं विना कैकयीपुत्रं भरतं धर्मचारिणम् । न मे स्नानं बहुमतं वस्त्राण्याभरणानि च ॥ ७ ॥ इत एव पथा क्षिप्रं प्रतिगच्छामि तां पुरीम् । अयोध्यामागतो ह्येष पन्थाः परमदुर्गमः ॥ ८ ॥

मित्यत आह—स त्विति । सः सर्वदा मनसि परिवर्तमानः धर्मात्मा ताम्यति । धर्माचरणेनैव ताम्यतीति भावः । मम हेतोः मदाभार्थमित्यर्थः । सत्यसंश्रवः "चतुर्दशे हि संपूर्णे वर्षेऽहनि रघूत्तम । न द्रक्ष्यामि यदि त्वां हि प्रवेक्ष्यामि हुताशनम् ॥" इति कृतप्रतिज्ञः ॥ ६ ॥ तं विनेति । तं विना स्नानोपकरणं विना, स्नानं कथं कार्यम् । कैकयीपुत्रं मध्यमाम्बा तस्मिन् बहुःखमकरोत् तत्किं मयाऽपि कर्तव्यम् ? भरतं राज्ञा मया च विरहितं राज्यं सम्यक् कृतवन्तम् । धर्मचारिणं मद्वियोगेन बहुव्रतपरे तस्मिन् कथं मया व्रतत्यागः कर्तुं युक्त इति भावः । न मे स्नानं बहुमतम् प्रथमं मे स्नानमेव नेष्टम् कथं तदनन्तरभावीनि वस्त्रादीनि ॥ ७ ॥ इत एवेति । अनेन पथा येनाऽऽगमनतस्तेनेत्यर्थः । एष इति हस्तनिर्देशपूर्वकमुच्यते ।

तामिति । यस्मिन् दिने ब्रह्मादयो जग्मुः तत्सम्बन्धिन्यां रात्र्यामित्यर्थः । सुखोत्थितं सुखमवबुद्धम् । जयं पृष्ट्वा जयशब्दं प्रयुज्य ॥ १ ॥ स्नानानि स्नानोपकर

अयोध्याम् आगतः प्राप्तः अयमयोध्यामार्गः, तेन क्षिप्रं तां प्रतिगच्छामीत्यर्थः । परमदुर्गमः अतिदूरत्वादिति भावः ॥ ८ ॥ मार्गस्य परमदुर्गमत्व मात्रं परिहर्तुमाह–एवमुक्तस्त्विति ॥ ९ ॥ अह्ना त्वामित्यादिसार्धश्लोकत्रयमेकान्वयम् । किं रावणेन चौर्येणापहृतमित्यत्राह–आहृतं निर्जित्येति ॥१०॥ ॥ ११ ॥ तर्हि कुबेराय समागताय तत्किमर्थं न दत्तमित्यत्राह त्वदर्थं इति । त्वदर्थं त्वद्गमनार्थं । पालितमिति । न दत्तमित्यर्थः । यद्वा त्वदर्थं त्वत्पूजार्थं

एवमुक्तस्तु काकुत्स्थं प्रत्युवाच विभीषणः ॥ ९ ॥ अह्ना त्वां प्रापयिष्यामि तां पुरीं पार्थिवात्मज । पुष्पकं नाम भद्रं ते विमानं सूर्यसन्निभम् ॥ १० ॥ मम भ्रातुः कुबेरस्य रावणेनाहृतं बलात् । हृतं निर्जित्य सङ्ग्रामे कामगं दिव्यमुत्तमम् ॥ ११ ॥ त्वदर्थं पालितं चैतत्तिष्ठत्यतुलविक्रम । तदिदं मेघसङ्काशं विमानमिह तिष्ठति ॥१२॥ तेन यास्यसि यानेन त्वमयोध्यां गतज्वरः ॥ १३ ॥ अहं ते यद्यनुग्राह्यो यदि स्मरसि मे गुणान् ॥१४॥ वस तावदिह प्राज्ञ यद्यस्ति मयि सौहृदम् । लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ॥१५॥ अर्चितः सर्वकामैस्त्वं ततो राम गमिष्यसि । प्रीतियुक्तस्य मे राम ससैन्यः ससुहृद्गणः ॥ १६ ॥ सत्क्रियां विहितां तावद्गृहाण त्वं मयोद्यताम् । प्रणयाद्बहुमानाच्च सौहृदेन च राघव । प्रसादयामि प्रेष्योऽहं न खल्वाज्ञापयामि ते ॥ १७ ॥

मेव । मेघसङ्काशमिति वेगे दृष्टान्तः ॥१२॥१३॥ स्नानाकरणे द्वित्रदिनमात्रस्थितिं याचते–अहं त इत्यादिना । चतुःश्लोक्येकान्वया । गुणान् भक्त्यादि गुणान् ॥ १४ ॥ १५ ॥ सर्वकामैः भूषणादिभिः । विहितां मया कृताम् । उद्यताम्, इतः परं नोद्योगः कार्यः, येन विलम्बः स्यात्, किं तु पूर्वमेव समुद्युक्तामित्यर्थः । निर्बन्धदोषं परिहरति प्रणयादिति । प्रणयात् मद्वाक्यमवश्यं श्रोष्यतीति विस्रम्भात् । बहुमानात् त्वत्कृतलालनात् । सौहृदेन

णानि ॥ २–११ ॥ तदिदमिति । लङ्कायां वर्तमानस्यापि पुष्पकस्यात्युन्नतत्वेन बहिःस्थितैरपि दृश्यमानत्वादिदमिति प्रत्यक्षनिर्देशः ॥ १२–१६ ॥ विहितां शास्त्र

स०–प्रीतियुक्तस्य विहितो ससैन्यः ससुहृद्गणः । सत्क्रियां राम मे तावत् । इति पाठः । हे राम ! प्रीतियुक्तस्य पुरुषस्य शास्त्रविहितां मया उद्यतां कार्यतया उद्युक्तां सत्क्रियाम् । मे अव्ययम् । मत्तः गृहाण । मे ममेति वा । न च रामेत्यस्यामन्त्रितत्वेनाविद्यमानवत्त्वेनापदत्वेन पदात्परत्वाभावात्कथं म इत्यादेश इति वाच्यम्, सत्क्रियामितिपदात्परत्वेनादेशसम्भवात् ॥ १६ ॥ १७ ॥

भक्त्या । प्रसादयामि प्रार्थयामि ॥ १६ ॥ १७ ॥ उपशृण्वताम् उपशृण्वत्सु । भावलक्षणे षष्ठी ॥ १८ ॥ साचिव्येन साहाय्येन । चेष्टाभिः पौरुषैः । सर्वात्मना पूजित इत्यन्वयः ॥ १९ ॥ न खल्वेतदित्यादिश्लोकद्वयमेकान्वयम् । विभीषणवचनाकरणे हेतुमाह–तं त्विति । त्वरायां हेतुमाह–शिरसेति ॥२०॥२१॥ कौसल्यामिति । अत्रापि द्रष्टुं त्वरते मे मन इति संबध्यते । पौरांश्च तनयैः सहेत्यत्र पौरैरेव तनयशब्दोऽन्वेति॥२२॥उपस्थापयेति । द्वित्रदिन।

एवमुक्तस्ततो रामः प्रत्युवाच विभीषणम् । रक्षसां वानराणां च सर्वेषां चोपशृण्वताम् ॥ १८ ॥ पूजितोऽहं त्वया सौम्य साचिव्येन परन्तप । सर्वात्मना च चेष्टाभिः सौहृदेनोत्तमेन च ॥ १९ ॥ न खल्वेतन्न कुर्यां ते वचनं राक्षसेश्वर । तं तु मे भ्रातरं द्रष्टुं भरतं त्वरते मनः । मां निवर्तयितुं योऽसौ चित्रकूटमुपागतः ॥ २० ॥ शिरसा याचतो यस्य वचनं न कृतं मया ॥ २१ ॥ कौसल्यां च सुमित्रां च कैकेयीं च यशस्विनीम् । गुरूंश्च सुहृदश्चैव पौरांश्च तनयैः सह ॥ २२ ॥ उपस्थापय मे क्षिप्रं विमानं राक्षसेश्वर । कृतकार्यस्य मे वासः कथं स्विदिह सम्मतः॥२३॥ अनुजानीहि मां सौम्य पूजितोऽस्मि विभीषण । मन्युर्न खलु कर्तव्यस्त्वरितं त्वाऽनुमानये ॥२४॥ राघवस्य वचः श्रुत्वा राक्षसेन्द्रो विभीषणः । तं विमानं समादाय तूर्णं प्रतिनिवर्तत ॥ २५ ॥ ततः काञ्चनचित्राङ्गं वैडूर्यमयवेदिकम् । कूटागारैः परिक्षिप्तं सर्वतो रजतप्रभम् ॥ २६ ॥

न्यत्र स्थातव्यमित्यस्योत्तरमाह–कृतेति । निर्वर्तितचतुर्दशवर्षप्रव्राजनस्य कृतकार्यस्य मे इह लङ्कायां वासः सम्मतः कथं स्वित् ? न सम्मत इत्यर्थः । अन्यथा भरतस्याग्निप्रवेशादिति भावः ॥२३॥ अनुजानाहीति । पूजितोऽस्मि, विमानप्रदानेनेति शेषः । प्रदत्तत्वेन स्वत्वादुत्तरत्र कुबेराय प्रेषयिष्यति । मन्युः दैन्यम्, कोपो वा । "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः । त्वरितम् उक्तप्रकारेण त्वरावन्तं मामिति सम्बन्धः । यद्वा त्वरितं यथा भवति तथा अनुमानये अनुमतिं कारये ॥ २४ ॥ राघवस्य वचः श्रुत्वेत्यादिश्लोकचतुष्टयमेकं वाक्यम् । प्रतिनिवर्तत प्रतिन्यवर्तत । काञ्चनचित्राङ्गम् काञ्चनमय

विधिना विहिताम् । उद्यताम् उद्धृतां सत्क्रियां मे मम सकाशात् गृहाणेति सम्बन्धः ॥ १७–२१ ॥ कौसल्यां चेति । अत्रापि द्रष्टुं त्वरते मन इत्यनुषज्यते ॥ २२–२६ ॥

चित्रावयवम् । कूटागारैः मण्डपैः, परिक्षिप्तं व्याप्तम् । रजतप्रभम्, रजतशब्देन अत्र विशदत्वमुच्यते ॥ २५ ॥ २६ ॥ पताकाभिः केवलध्वजैः । ध्वजैः सचिह्नैः । हर्म्यैः अवान्तरराजगृहैः । हेमपद्मानि लम्बमानानि तैर्विभूषितम् । प्रकीर्णं व्याप्तम् । मुक्तामणिगवाक्षितं मुक्तामणिनिर्मितगवाक्षयुक्तम् । घण्टाजालैः परिक्षिप्तं चतुर्षु पार्श्वेषु किङ्किणीजालयुक्तम्, कोणेषु घण्टाजालयुक्तम्, अत एव मधुरस्वनम् ॥ २७ ॥ २८ ॥ यन्मेर्वित्यादिश्लोकत्रयमेका

पाण्डुराभिः पताकाभिर्ध्वजैश्च समलंकृतम् । शोभितं काञ्चनैर्हर्म्यैर्हेमपद्मविभूषितम् ॥ २७ ॥ प्रकीर्णं किङ्किणी जालैर्मुक्तामणिगवाक्षितम् । घण्टाजालैः परिक्षिप्तं सर्वतो मधुरस्वनम् ॥ २८ ॥ यन्मेरुशिखराकारं निर्मितं विश्वकर्मणा । बहुभिर्भूषितं हर्म्यैर्मुक्तारजतसंनिभैः ॥ २९ ॥ तलैः स्फाटिकचित्राङ्गैर्वैडूर्यैश्च वरासनैः । महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥ ३० ॥ उपस्थितमनाधृष्यं तद्विमानं मनोजवम् । निवेदयित्वा रामाय तस्थौ तत्र विभीषणः ॥ ३१ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे चतुर्विंशत्युत्तरशततमः सर्गः ॥ १२४ ॥

उपस्थितं तु तं दृष्ट्वा पुष्पकं पुष्पभूषितम् । अविदूरस्थितो रामं प्रत्युवाच विभीषणः ॥ १ ॥ स तु बद्धाञ्जलिः प्रह्वो विनीतो राक्षसेश्वरः । अब्रवीत्त्वरयोपेतः किं करोमीति राघवम् ॥ २ ॥ तमब्रवीन्महातेजा लक्ष्मणस्योपशृण्वतः । विमृश्य राघवो वाक्यमिदं स्नेहपुरस्कृतम् ॥ ३ ॥

न्वयम् । मुक्तारजतसन्निभैः तद्वन्निर्मलैरित्यर्थः । स्फाटिकचित्राङ्गैः स्फटिकमयचित्रावयवैः । महाधनैः महामूल्यैः ॥ २९–३१ ॥ रामानु०-यन्मेरुशिखराकारमिति पाठः ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्विंशत्युत्तरशततमः सर्गः ॥ १२४ ॥

अथ वानरसेनासम्माननम्—उपस्थितमित्यादि । तं दृष्ट्वा दर्शयित्वा । तत्कृत्वेति वा पाठः । प्रत्युवाच, विमानमागतमितीति शेषः । स त्विति द्वितीयश्लोकसङ्ग्रहो वाऽयं श्लोकः ॥ १ ॥ त्वरयोपेतः आदरोपेत इत्यर्थः । किं करोमीति । इतः परं किं करवाणीत्यर्थः ॥ २ ॥ लक्ष्मणस्योपशृण्वतः

॥ २७–३१ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां चतुर्विंशत्युत्तरशततमः सर्गः ॥ १२४ ॥ उपस्थितामिति । तं दृष्ट्वा तद्दर्शयित्वा । तत्कृत्वेति वा पाठः । अविदूरस्थितत्वादिविशेषणो विभीषणः पुष्पकमुपस्थितमासन्नं कृत्वा राममित्युवाच ॥ १ ॥ कथमुवाचेत्यत आह—

लक्ष्मणसंमतिपूर्वकामित्यर्थः ॥ ३ ॥ प्रयत्नकर्म प्रयत्नसाध्यं कर्मेत्यर्थः । अर्थैः प्रयोजनैः, वस्त्रादिभिरित्यर्थः ॥ ४ ॥ अजिता पूर्वं सुरादिभिरप्यजिता । तव लङ्काराज्यप्राप्तिरपि तदधीनेत्यर्थः । हृष्टैः मयि प्रीतिमद्भिरित्यर्थः ॥ ५ ॥ ६ ॥ त इम इत्यर्थोक्तं भङ्ग्यन्तरेणाह—धनरत्नेति ॥ ७ ॥ निर्वृताः सुखिताः । निर्वृत्ता इति पाठे—निष्पन्नाः, परिपूर्णा इति यावत् ॥ ८ ॥ अर्थव्ययेन खेदो मा भूदित्याह—त्यागिनमिति । संग्रहीतारं धनप्रदानेन मित्र

कृतप्रयत्नकर्माणो विभीषण वनौकसः । रत्नैरर्थैश्च विविधैर्भूषणैश्चापि पूजय ॥ ४ ॥ सहैभिरजिता लङ्का निर्जिता राक्षसेश्वर । हृष्टैः प्राणभयं त्यक्त्वा सङ्ग्रामेष्वनिवर्तिभिः ॥ ५ ॥ त इमे कृतकर्माणः पूज्यन्तां सर्ववानराः ॥ ६ ॥ धनरत्नप्रदानेन कर्मैषां सफलं कुरु ॥ ७ ॥ एवं संमानिताश्चैते मानार्हा मानद त्वया । भविष्यन्ति कृतज्ञेन निर्वृता हरियूथपाः ॥ ८ ॥ त्यागिनं सङ्ग्रहीतारं सानुक्रोशं यशस्विनम् । सर्वे त्वामवगच्छन्ति ततः सम्बोधयाम्यहम् ॥ ९ ॥ हीनं रतिगुणैः सर्वैरभिहन्तारमाहवे । त्यजन्ति नृपतिं सैन्याः संविग्नास्तं नरेश्वरम् ॥ १० ॥ एवमुक्तस्तु रामेण वानरांस्तान् विभीषणः । रत्नार्थैः संविभागेन सर्वानेवाभ्यपूजयत् ॥ ११ ॥

संग्रहकारिणमित्यर्थः । संग्रहार्थं त्यागित्वमुक्त्वा दयया त्यागित्वमाह—सानुक्रोशमिति । यशस्विनं त्यागकृतयशोवन्तम् । संबोधयामि न तु चोदयामीत्यर्थः ॥ ९ ॥ सैनिकसम्मानाकरणे दोषमाह—हीनमिति । नृपतिं स्वामिनमपि । रतिगुणैः प्रीतिकरैरौदार्यादिगुणैः, हीनम् । अभिहन्तारं हिंसनशीलम्, प्रसादं विना क्रोधैकनिरतमिति यावत् । तं नरेश्वरं सैन्याः संविग्नाः आहवे त्यजन्तीति योजना ॥ १० ॥ संविभागेन यथार्हमंशकल्पनया ।

स तु बद्धाञ्जलिरिति ॥ २ ॥ ३ ॥ कृतं प्रयत्नेन कर्म युद्धकर्म यैस्ते । अर्थैः विविधान्नपानवस्त्रादिभिः ॥ ४ ॥ एभिस्सह लङ्का निर्जितेत्यनेन तव लङ्काराज्यप्राप्तिरपि वानरपराक्रमादेवेत्युक्तं भवति ॥ ५-८ ॥ त्वां तत्सत्कारसमर्थं तेषां च सत्कारप्रियत्वं ज्ञात्वैव त्वां तत्सत्कारे नियोजयामीत्याह—त्यागिनमिति । उचितविषये इति शेषः । संग्रहीतारं, यथान्यायं रत्नादेरिति शेषः ॥ ९ ॥ नृपतिं स्वामिनम् । सर्वैरपि गुणैः औदार्यादिगुणैर्हीनम्, अभिहन्तारं हिंसनशीलम्, प्रसादं विना क्रोधैकनिरतमिति यावत् । तं नरेश्वरं सैन्यास्संविग्नाः आहवे त्यजन्तीति योजना ॥ १० ॥ एवमिति । रत्नार्थैः रत्नैरर्थैश्च । संविभागेन यथार्ह

समतया प्रदाने अधिकानां कोपप्रसङ्गादिति भावः ॥११॥ तत इत्यादिश्लोकद्वयमेकान्वयम् । ततः पूजानन्तरम् । ततः पूजादर्शनादेव हेतोरिति ततः शब्दद्वययोजना । लज्जमानां सदस्यङ्कारोहणाय लज्जन्तीम् । रामेणाङ्कारोपणं च स्त्रीसहायशहितत्वात् । धनुष्मता रामधनुर्धारिणा ॥ १२–१४ ॥

ततस्तान् पूजितान् दृष्ट्वा रत्नैरर्थैश्च यूथपान् । आरुरोह ततो रामस्तद्विमानमनुत्तमम् ॥ १२ ॥ अङ्केनादाय वैदेहीं लज्जमानां यशस्विनीम् । लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता ॥ १३ ॥ अब्रवीच्च विमानस्थः पूजयन् सर्वं वानरान् । सुग्रीवं च महावीर्यं काकुत्स्थः सविभीषणम् ॥१४॥ मित्रकार्यं कृतमिदं भवद्भिर्वानरोत्तमाः । अनुज्ञाता मया सर्वे यथेष्टं प्रतिगच्छत ॥१५॥ यत्तु कार्यं वयस्येन सुहृदा वा परन्तप । कृतं सुग्रीव तत् सर्वं भवताऽधर्मभीरुणा ॥१६॥ किष्किन्धां प्रतियाह्याशु स्वसैन्येनाभिसंवृतः ॥१७॥ स्वराज्ये वस लङ्कायां मया दत्ते विभीषण । न त्वां धर्षयितुं शक्ताः सेन्द्रा अपि दिवौकसः ॥१८॥ अयोध्यां प्रतियास्यामि राजधानीं पितुर्मम । अभ्यनुज्ञातुमिच्छामि सर्वांश्चामन्त्रयामि वः ॥१९॥ एवमुक्तास्तु रामेण वानरास्ते महाबलाः । ऊचुः प्राञ्जलयो रामं राक्षसश्च विभीषणः ॥ २० ॥ अयोध्यां गन्तुमिच्छामः सर्वान्नयतु नो भवान् । उद्युक्ता विचरिष्यामो वनानि नगराणि च ॥ २१ ॥ दृष्ट्वा त्वामभिषेकार्द्रं कौसल्यामभिवाद्य च । अचिरेणागमिष्यामः स्वान् गृहान् नृपतेः सुत ॥ २२ ॥

अब्रवीच्चेत्यत्र संग्रहेणोक्तं विवृणोति–मित्रेत्यादिना । वानरान् प्रत्याह–मित्रेति ॥ १५ ॥ सुग्रीवं प्रत्याह–यत्त्वित्यादिना । सुहृदा शोभनहृदयेन । वाशब्द एवकारार्थः । अधर्मभीरुणेति च्छेदः ॥ १६ ॥ १७ ॥ विभीषणं प्रत्याह–स्वेति । स्वराज्ये वस । न तु परकीयं रावणवदाक्रमितव्यम् । अतो जनस्थानरक्षिणः समानेतव्या इति भावः ॥ १८–२० ॥ अयोध्यामिति । उद्युक्ताः सावधानाः, जनपदपीडामकुर्वन्त इत्यर्थः ॥ २१–२३ ॥

मंशं परिकल्प्येत्यर्थः ॥ ११–१५ ॥ यत्तु कार्यमिति । अधर्मभीरुणेति छेदः ॥ १६॥१७ ॥ न त्वां धर्षयितुं शक्ताः, त्वयि मत्प्रसादादिति भावः ॥ १८ ॥ अभ्यनुज्ञातुमिच्छामि, भवद्भिरिति शेषः ॥ १९–२१ ॥ अभिषेकार्द्रं त्वां दृष्ट्वा तवेव सर्वेषामस्माकं मातरं कौसल्यामभिवाद्य च ॥ २२ ॥ २३ ॥

प्रियात्प्रियतरमिति । सीतालाभः प्रियम्, भरतदर्शनं प्रियात्प्रियम्, भवद्भिः सह पुरप्रवेशः प्रियात्प्रियतरमित्यर्थः॥२४॥२५॥ तत इति । शीघ्रं शीघ्रग मिति विमानविशेषणम् । त्वरन्निति सुग्रीवविशेषणात्॥२६॥आसनं वाहनम्॥२७॥ ययाविति । हंसयुक्तेन प्रतिमारूपहंसयुक्तेन । प्रतीतः श्लाघितः॥२८॥

एवमुक्तस्तु धर्मात्मा वानरैः सविभीषणैः । अब्रवीद्राघवः श्रीमान् ससुग्रीवविभीषणान् ॥ २३ ॥ प्रियात् प्रियतरं लब्धं यदहं ससुहृज्जनः । सर्वैर्भवद्भिः सहितः प्रीतिं लप्स्ये पुरीं गतः ॥ २४ ॥ क्षिप्रमारोह सुग्रीव विमानं वानरैः सह । त्वमप्यारोह सामात्यो राक्षसेन्द्र विभीषण ॥ २५ ॥ ततस्तत् पुष्पकं दिव्यं सुग्रीवः सह सेनया । अध्यारोहत्त्वरन् शीघ्रं सामात्यश्च विभीषणः ॥ २६ ॥ तेष्वारूढेषु सर्वेषु कौबेरं परमासनम् । राघवेणाभ्यनुज्ञात मुत्पपात विहायसम् ॥ २७ ॥ ययौ तेन विमानेन हंसयुक्तेन भास्वता । प्रहृष्टश्च प्रतीतश्च बभौ रामः कुबेरवत् ॥ २८ ॥ ते सर्वे वानरा हृष्टा राक्षसाश्च महाबलाः । यथासुखमसम्बाधं दिव्ये तस्मिन्नुपाविशन् ॥ २९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे पञ्चविंशत्युत्तरशततमः सर्गः ॥ १२५ ॥

ते सर्व इति । यथासुखमसम्बाधमिति पदद्वयेन दिव्यस्य पुष्पकस्य अपेक्षितावकाशप्रदत्वं गम्यते॥२९॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूपणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चविंशत्युत्तरशततमः सर्गः ॥ १२५ ॥

प्रियादिति । प्रियात्प्रियतरं कृतकृत्यस्य ममायोध्याप्रवेशः प्रियम्, तत्र स्वजनैः भरतादिभिः सहितो भवद्भिस्सह अभिषेकप्रीतिमनुभविष्यामीत्येतत्ततोऽपि प्रियतरमित्यर्थः ॥ २४–२७॥ हंसयुक्तेन अत्र हंसशब्देन हंसवद्ब्रह्मवाहकत्वाकारेण निर्मिता हंसा उच्यन्ते । प्रहृष्टः हृष्टरोमा । प्रतीतः प्रहृष्टचेताः ॥ २८ ॥ असंबाधमित्यनेन विमानस्य वैपुल्यमुक्तम् ॥२९॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्व० युद्धकाण्डव्याख्यायां पञ्चविंशत्युत्तरशततमः सर्गः ॥ १२५॥

स०–खगतेन विमानेन इति पाठः । खगतेन आकाशगतेन । हंसयुक्तेन वाहकत्वेन निर्मितहंसप्रतिमायुक्तेन । सुन्दरकाण्डे राक्षसपिशाचादीनां तद्वाहकोक्तिस्तु लीलया रावणनियुक्तराक्षसादीनपेक्ष्य । वस्तुतस्तु तद्विमानदेवस्यैव तादृशशक्तिमत्त्वेन स्वेच्छयैवान्यनिरपेक्षेण गतिरिति ज्ञेयम् । प्रतीतः प्रसिद्धः ॥ २८ ॥

अथ विलासेन सीतायै तत्तद्देशप्रदर्शनम्—अनुज्ञातं त्वित्यादि ॥ १॥ पातयित्वेति । मैथिलीं, राजपुत्रीत्वेन लालनीयत्वोक्तिः ॥ २ ॥ ३ ॥ एतदिति । आयोधनं युद्धभूमिम् । विशस्यन्तेऽस्मिन्निति विशसनम् । अधिकरणे ल्युट् ॥ ४ ॥ अत्रेति । दत्तवरः ब्रह्मणा दत्तवरः । प्रमाथी हिंसकः । शेते भस्मस्वरूपेणेत्यर्थः ॥ ५ ॥ रामानु०—अत्र दत्तवरः शेते इति पाठः । शेते अशयिष्ट ॥ ५ ॥ कुम्भकर्ण इति । प्रहस्तश्चेत्यत्र नीलेनेत्यध्याहार्यम् ॥ ६ ॥ विद्युन्मालीति ।

अनुज्ञातं तु रामेण तद्विमानमनुत्तमम् । उत्पपात महामेघः श्वसनेनोद्धतो यथा ॥ १ ॥ पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः । अब्रवीन्मैथिलीं सीतां रामः शशिनिभाननाम् ॥ २ ॥ कैलासशिखराकारे त्रिकूटशिखरे स्थिताम् । लङ्कामीक्षस्व वैदेहि निर्मितां विश्वकर्मणा ॥ ३ ॥ एतदायोधनं पश्य मांसशोणितकर्दमम् । हरीणां राक्षसानां च सीते विशसनं महत् ॥ ४ ॥ अत्र दत्तवरः शेते प्रमाथी राक्षसेश्वरः । तव हेतोर्विशालाक्षि रावणो निहतो मया ॥ ५ ॥ कुम्भकर्णोऽत्र निहतः प्रहस्तश्च निशाचरः । धूम्राक्षश्चात्र निहतो वानरेण हनूमता ॥ ६ ॥ विद्युन्माली हतश्चात्र सुषेणेन महात्मना ॥ ७ ॥ लक्ष्मणेनेन्द्रजिच्चात्र रावणिर्निहतो रणे । अङ्गदेनात्र निहतो विकटो नाम राक्षसः ॥ ८ ॥ विरूपाक्षश्च दुर्धर्षो महापार्श्वमहोदरौ । अकम्पनश्च निहतो बलिनोऽन्ये च राक्षसाः ॥ ९ ॥ अत्र मण्डोदरी नाम भार्या तं पर्यदेवयत् । सपत्नीनां सहस्रेण सास्रेण परिवारिता ॥ १० ॥ एतत्तु दृश्यते तीर्थं समुद्रस्य वरानने । यत्र सागरमुत्तीर्य तां रात्रिमुषिता वयम् ॥ ११ ॥

पूर्वमनुक्तमपि अत्रानुवादात् ग्राह्यम् । एवं विकट इत्यत्रापि ॥ ७–१० ॥ रामानु०—अङ्गदेनात्र निहतो विकटो नाम राक्षसः इत्यनुक्तस्य विकटस्यात्र निहतत्वानुवादादन्येऽप्येतादृशा बहवो निहता इत्यवगम्यते ॥ ८ ॥ एतत्त्विति । तीर्थम् उत्तरणस्थानम् । यत्र तीर्थे । तां रात्रिं सागरतरणरात्रिम् ॥ ११ ॥

॥ १ ॥ पातयित्वा सञ्चार्य ॥ २ ॥ ३ ॥ आयोधनं युद्धस्थानम् । विशसनं विशसनवत् ॥ ४ ॥ दत्तवरः प्राप्तवरः रावणो मया निहतः शेते भस्मास्थिरूपेण वर्तते ॥ ५–७ ॥ अङ्गदेन विकटो हत इत्यनुवादात्तदपि जातमिति बोध्यम् ॥ ८–१० ॥ एतत्त्विति । यत्र तीर्थप्रदेशे तां रात्रिं यस्यांमुत्तीर्णः सागरः तत्सम्बन्धिनीं

एष इति । सागरे सगरखानिते । सलिलेति क्षीरोदादिव्यावृत्तिः । एष सेतुः नलसेतुः नलबद्धः । "षिञ् बन्धने" इति धातुः । एतेन नलसेतुः सेतुरित्युक्त्या पूर्वकल्पकृतसेत्वन्तरं व्यावर्त्यते इति प्रत्युक्तम् । पूर्वमेव सेतुसत्त्वे पुनः सेतुकरणवैयर्थ्यात् ॥ १२ ॥ पश्येति । अपारं मध्ये द्वीपभूतपाररहितम् ॥ १३ ॥

रामानु०--शङ्खशुक्तिनिषेवितमित्यतः परं हिरण्यनाभमिति श्लोकः । अतः परम् एतत्कुक्षाविति श्लोकः । अतः परं सेतुबन्ध इति श्लोकः । अतः परम् अत्र पूर्वं महादेवः प्रसादमकरोद्विभुः

एष सेतुर्मया बद्धः सागरे सलिलार्णवे । तव हेतोर्विशालाक्षि नलसेतुः सुदुष्करः ॥ १२ ॥ पश्य सागरमक्षोभ्यं वैदेहि वरुणालयम् । अपारमभिगर्जन्तं शङ्खशुक्तिनिषेवितम् ॥ १३ ॥ हिरण्यनाभं शैलेन्द्रं काञ्चनं पश्य मैथिलि । विश्रमार्थं हनुमतो भित्त्वा सागरमुत्थितम् ॥ १४ ॥ एतत् कुक्षौ समुद्रस्य स्कन्धावारनिवेशनम् ॥ १५ ॥ एतत्तु दृश्यते तीर्थं सागरस्य महात्मनः । सेतुबन्ध इति ख्यातं त्रैलोक्येनाभिपूजितम् । एतत् पवित्रं परमं महापातक नाशनम् ॥ १६ ॥ अत्र पूर्वं महादेवः प्रसादमकरोत् प्रभुः ॥ १७ ॥

इत्येवं पाठक्रमः ॥ १३ ॥ हिरण्येति । हिरण्यनाभं मैनाकम् ॥ १४ ॥ एतदित्यर्धम् । कुक्षौ मध्ये । सेतूपरीति शेषः । स्कन्धावारनिवेशनं स्कन्धावारनिवेशनरूपस्थानम् । स्कन्धावारः शिबिरम् ॥ १५ ॥ एतत्त्वित्यादिसार्धश्लोकमेकं वाक्यम् । पूजितं पूजितुमर्हम् । पूर्वं सेतोर्दक्षिणकोटिरुक्ता, अत्रोत्तरकोटिरिति ज्ञेयम् । अनुगृह्णाति--एतदिति । पवित्रं पावनम्, महापातकनाशनं च, भविष्यतीति शेषः ॥ १६ ॥ एवं लङ्कामारभ्य सेतुबन्धपर्यन्तमुक्त्वा ततः उत्तरे दर्भशयनस्थानं निर्दिशति--अत्र पूर्वमिति । महादेव इति समुद्रराज उच्यते, औचित्यात् । प्रभुः समुद्रजलाधिष्ठाता । प्रसाद

रात्रिम् ॥ ११ ॥ एषः नलसेतुः सेतुनिर्माणे नलः कारणमिति कथनार्थं नलसेतुरित्युक्तम् ॥ १२ ॥ १३ ॥ हिरण्यनाभं हिरण्यनाभनामानं मैनाकम् ॥ १४ ॥ कुक्षौ मध्यप्रदेशे । स्कन्धावारनिवेशनं सेनानिवासस्थानम् ॥ १५ ॥ एतदिति । तीर्थं पुण्यक्षेत्रम् । सेतुबन्ध इति ख्यातं सेतुनिर्माणमूलप्रदेशत्वात्सेतुबन्ध इति प्रसिद्धम् ॥ १६ ॥ अत्र पूर्वमिति । महादेवः महदिति जलं तद्रूपो देवः महादेवः समुद्रः । तथा च वैजयन्ती--" स्नेहं स्निग्धं महच्छुद्धं वारुणं सर्वतोमुखम् " इति । यद्वा

स०--अत्र तीरे । पूर्वं सेतुबन्धप्रारम्भसमये महादेवः पूजितस्सन् प्रसादं निर्विघ्नं सेतुसमाप्तिशत्रुवधाद्युपयोग्यनुग्रहम् अकरोत् । तत्स्थलं सीतायै प्रदर्श्य विमानादवतीर्य तत्र लिङ्गस्थापनं रामश्चकार । क्षेत्रस्य त्रैनेत्रत्वात्प्राक्तनप्रार्थना युक्ता । अतः पूर्वमित्युक्तिरनुग्रहमात्रविषयिणी । ननु प्रतिष्ठापनपरेति मन्तव्यम् । यथोक्तमाग्नेयपुराणे एकोत्तराशीत्यध्याये--" धन्योऽस्मि कृतकृत्योऽस्मि पूज्योऽस्मि पुरुषोत्तम । यद द्राक्षं सुदुर्दर्शं त्वद्रूपं योगिपुङ्गवैः ॥ त्वदाज्ञया मया पूर्वं त्वद्भक्तिविमुखं कृते । शैवं पाशुपतं लैङ्गसच्छास्त्रं प्रवर्तितम् ॥ तदिदानीं महापापं दिव्यरूपस्य दर्शनात् । सर्वं विनष्टमेवेश तव राम प्रसादतः ॥ तदेयमेव

मकरोत् 'सागरं शोषयिष्यामि' इति कुपितस्य मे प्रसादं प्रसन्नत्वम् अकरोत् । "प्रसादस्तु प्रसन्नता" इत्यमरः । न त्वत्र रुद्रो महादेवः । तेन पूर्वं प्रसादकरणानुक्तेः । पूर्वोक्तानामेव ह्यत्रानुवादः कृतः । न चाङ्गदेन विकटनिरसनस्य पूर्वमनुक्तत्वेऽपि यथाऽनुवादात्तत्सिद्धिः तथाऽत्रापि भविष्यतीति वाच्यम्, तद्वदत्राविरोधाभावात् । उपलभ्यते हि विरोधः । तथाहि–तत्र प्रसादः किं सेतुनिर्माणकाले वा, पुनरागमनकाले वा ? नाद्यः–प्रसादकरणहेतुरावणवधादेरभावात्, पूर्वसिद्धसमुद्रप्रसादेनैवोपपत्तेश्च, महादेवसमाख्यायाः समुद्रप्रसादश्रुत्या बाधितुं युक्तत्वाच्च । न द्वितीयः पूर्वशब्दविरोधात् । न च पूर्वमित्यस्य पूर्वकल्प इत्यर्थ इति वाच्यम्, "आत्मानं मानुषं मन्ये" इति वदता सुग्रीवादिसन्निधौ स्वस्य विष्णववतारत्व द्योतकपूर्ववृत्तोद्घाटनानौचित्यात् । पूर्वकल्पकृतसेतुसद्भावे पुनस्तन्निर्माणवैयर्थ्यात् । किं च अत्रेतिपदस्य पूर्वश्लोकोक्तनलकारितसेतुपरामर्शित्वमेवोचितम्, न तु पूर्वकल्पकृतसेतुपरामर्शित्वम् । तस्य सद्भावेऽप्यन्तारितत्वसम्भवात् । ननु पुराणान्तरानुसारात्तदर्थपरत्वं युक्तम् । तथा हि कूर्मपुराणे– "सेतुमध्ये महादेवमीशानं कृत्तिवाससम् । स्थापयामास वै लिङ्गं पूजयामास राघवः ॥ तस्य देवो महादेवः पार्वत्या सह शङ्करः । प्रत्यक्षमेव भगवान् दत्तवान् वरमुत्तमम् ॥ ये त्वया स्थापितं लिङ्गं द्रक्ष्यन्तीह द्विजातयः । महापातकसंयुक्तास्तेषां पापं विनश्यति ॥ अन्यानि चैव पापानि तीरे तत्र महादेवाष्टमूर्तिष्वन्यतमत्वान्महादेवशब्देन समुद्र एवोच्यते । पूर्वं सेतुबन्धात्पूर्वम् । प्रसादमकरोत जलोपरि सेतुधारणरूपं प्रसादमकरोत । यद्वा प्रसादं सन्निधानरूपम् । "दर्शयामास चात्मानं समुद्रः सरितां पतिः" इत्युक्तत्वान्महादेवः समुद्र एव । अपारमभिगर्जन्तं शङ्खशुक्तिनिषेवितम् इत्यतः परं हिरण्यनाभमिति

त्वन्माथां त्वन्नामस्मरणादहम् । तथा अनुगृहाण त्वं यथा स्यात्सन्ततं स्मृतिः॥ रामः–रावणोऽयं महापापी गोब्राह्मणवधे रतः । नित्यं वै परदारार्थी वैदिकाचारदूषकः ॥ एतद्ग्रामात्सकृत्पार्श्वे यदघं प्रतिपद्यते । तदघं सर्वतीर्थेषु स्नानेनापि न नश्यति ॥ अब्रह्मण्यस्य लुब्धस्य मूर्खस्याशास्त्रवेदिनः । भूमिराक्रम्यते येन सोऽपि स्यात्तादृशः क्षणात् ॥ त्यजेद्देशं कृतयुगे त्रेतायां गृहमेव च । द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे ॥ एतद्देशविशुद्ध्यर्थमत्र सन्निहितस्सदा । मयाऽत्र स्थापिते लिङ्गे भुक्तिमुक्तिप्रदो भव ॥ श्रीकृष्णः–इति रामस्य तद्वाक्यं श्रुत्वा तत्त्वार्थसंयुतम् । कृताञ्जलिर्दाशरथिं प्रहसन्परमेश्वरः ॥ श्रीमहादेवः–सर्वभृत्सर्वभूतस्थः सर्वात्मा सर्ववत्सलः । त्वमेव राम विश्वात्मन् विडम्बयसि लीलया ॥ त्वद्वाक्यमेव धार्यं मे तथाप्यार्य महाविभो । यदुक्तं तत्तथैवास्तु त्वन्नाम्ना स्थापयेह माम् ॥ इत्युक्त्वा तं परिक्रम्य प्रणम्याथ ययौ हरः । सखे पश्यन्ति ये लिङ्गं रामनाथ इति श्रुतम् । ततः संसारिणो न स्युः सत्यं सत्यं वदाम्यहम् ॥ सेतुबन्धस्थितं लिङ्गं ये सेवन्ते सकृत्कलौ । महापातकलक्षाद्वा मुच्यते नात्र संशयः ॥ कुरुक्षेत्रे यजेद्यज्ञानश्वमेधादिकाञ्छतम् । यत्फलं लभते सद्यः सेतुलिङ्गस्य दर्शनात् ॥ अभक्ष्याश्यसमिद्वर्णी योऽनग्निरमखो गृही । यो वनी च रिरंसुः स्याद्यतिर्योऽभैक्षभुग्भवेत् ॥ एते सर्वे च पापिष्ठा दम्भात्स्वाश्रमदूषकाः । दृष्ट्वा रामेश्वरं लिङ्गं सद्यः पूता भवन्ति हि ॥ कार्त्तिक्यां तु तुलास्नानं यः कुर्याद्रङ्गसन्निधौ । भवेत्तस्य कृतार्थस्य रामेश्वरनिरीक्षणम् ॥" इत्यादि । कूर्मपुराणे चैकोनविंशेऽध्याये–"सेतुमध्ये महादेवमीशानं कृत्तिवाससम् । स्थापयामास लिङ्गस्थं पूजयामास राघवः ॥ तस्य देवो महादेवः पार्वत्या सह शङ्करः । प्रत्यक्षमेव भगवान् दत्तवान् वरमुत्तमम् ॥ ये त्वया स्थापितं लिङ्गं द्रक्ष्यन्तीह द्विजातयः । महापातकसंयुक्तास्तेषां पापं विनश्यतु ॥ अन्यानि चैव पापानि स्नातस्यात्र महोदधौ ॥ दर्शनादेव लिङ्गस्य नाशं यान्ति न संशयः । यावत्स्थास्यन्ति गिरयो यावदेव च मेदिनी । यावत्सेतुश्च तावच्च स्थास्याम्यप्यतिरोहितः ॥ स्नानं दानं तपः श्राद्धं भविष्यत्यक्षयं महत्

महोदधेः । दर्शनादेव लिङ्गस्य नाशं यान्ति न संशयः ॥ यावत्स्थास्यन्ति तरवो यावदेव च मेदिनी । यावत्सेतुश्च तावच्च स्थास्याम्यत्र तिरोहितः ॥ स्नानं दानं जपः श्राद्धं भविष्यत्यक्षयं ततः । स्मरणादेव लिङ्गस्य दिनपापं प्रणश्यति ॥ इत्युक्त्वा भगवान् वाचं परिष्वज्य च राघवम् । सनन्दी सगणो रुद्रस्तत्रैवान्तरधीयत ॥" इति । पाद्मे पुराणेऽपि रामः पुष्पकादवरुह्य महादेवं प्रतिष्ठापितवान्, सोऽस्मै प्रसन्नोऽभूदित्युच्यते । एतादृशपुराणवचनानुसारेणायं श्लोको लिङ्गप्रतिष्ठां बोधयतीति । मैवम्—उक्तदोषविस्तारात्, इतिहासो हि परिग्रहातिशयात्, ग्रन्थसौष्ठवाच्च "इतिहासपुराणं पञ्चमम्" इत्यादौ

श्लोकः । अतः परम् एतत्कुक्षौ इति श्लोकः । अतः परम् सेतुबन्ध इति श्लोकः । अतः परम् अत्र पूर्वं महादेवः इति श्लोकः । एवं पाठक्रमः ॥ १७ ॥ १८ ॥

स्मरणादेव लिङ्गस्य दिनपापं प्रणश्यति ॥ इत्युक्त्वा भगवान् साक्षात्परिष्वज्य च राघवम् । सनन्दी सगणो रुद्रस्तत्रैवान्तरधीयत ॥ " इति । स्कान्दे सेतुमाहात्म्ये त्रिचत्वारिंशेऽध्याये—"रावणस्य सदा विप्रा यत्पापं मयि विद्यते । तस्य मे निष्कृतिं ब्रूत रावणस्य वधस्य च । यत्कृत्वा तेन पापेन मुच्येयं मुनिपुङ्गवाः ॥ मुनय ऊचुः—सत्यव्रत जगन्नाथ जगद्रक्षाधुरन्धर । सर्वलोकोपकारार्थं कुरु राम शिवार्चनम् ॥ गन्धमादनशृङ्गेऽस्मिन्महापुण्ये विमुक्तिदे । शिवलिङ्गं प्रतिष्ठाप्य लोकसंग्रहकाम्यया । कुरु राम दशग्रीववधदोषापनुत्तये ॥ लिङ्गस्थापनजं पुण्यं चतुर्वक्त्रोऽपि भाषितुम् । न शक्नोति स तैर्वक्तुं किंपुनर्मनुजेश्वराः ॥" इत्यारभ्य मध्ये हनुमत्प्रेषणादिप्रकारमुक्त्वा सुमुहूर्ते किञ्चिदवकाशमासादयति हनूमति चिरायति च " राम राम महाबाहो कालो याति हि साम्प्रतम् । जानक्या यत्कृतं लिङ्गं सैकतं लीलया विभो । तल्लिङ्गं स्थापयस्वाद्य महालिङ्गमनुत्तमम् ॥ इत्येवं सहितो रामः सीतया सह सत्वरम् । मुनिभिः सहितः प्रीत्या कृतकौतुकमङ्गलः ॥ ज्येष्ठमासे सिते पक्षे सप्तम्यां बुधहस्तयोः । होरान्ते च व्यतीपाते कन्याचन्द्रे वृषे रवौ ॥ दशयोगे महापुण्ये गन्धमादनपर्वते । सेतुमध्ये महादेवं लिङ्गरूपधरं हरम् ॥ ईशानं कृत्तिवसनं गङ्गाचन्द्रकलाधरम् । रामो वै स्थापयामास शिवलिङ्गमनुत्तमम् ॥ लिङ्गस्थं पूजयामास राघवस्तं स ईश्वरम् । लिङ्गस्थः स महादेवः पार्वत्या सह शंकरः । प्रत्यक्षमेव भगवान् दत्तवान् वरमुत्तमम् ॥ सर्वलोकशरण्याय राघवाय महात्मने । त्वयाऽत्र स्थापितं लिङ्गं ये पश्यन्ति रघूद्वह ॥ महापातकयुक्ताश्च तेषां पापं प्रणश्यति । सर्वाण्यपि हि पापानि धनुष्कोटौ निमज्जनात् ॥ दर्शनाद्रामलिङ्गस्य पातकानि महान्त्यपि । विलयं यान्ति राजेन्द्र रामचन्द्र न संशयः । प्रादादेवं हि रामाय वरं पूर्णाय शङ्करः ॥ " इत्यादि । नागोजिभट्टस्तु–पूर्वमागमनसमय एवाह भूतपतिप्रतिष्ठापनम् । 'अत्र सेतुमूले पूर्वं सेतुबन्धात्पूर्वं विभुर्महादेवः मम रामस्य प्रसादमकरोत् मत्स्थापितत्वेनात्र स्थितोऽभूत् । सेतोर्निर्विघ्नतासिद्ध्यै समुद्रप्रसादानन्तरं शिवस्थापनं रामेण कृतमिति गम्यते । अत्र स्थले महात्मनः सागरस्य तीर्थं सेतुनिर्माणमूलप्रदेशत्वात्सेतुबन्ध इति ख्यातं भविष्यतीति शेषः । ' इति । इदं तु पुराणानवलोकनमूलमित्युपेक्ष्यम् । तीर्थस्तु–' महदिति जलम्, तद्रूपी देवो महादेवः समुद्रः । तदाह वैजयन्ती–" गम्भीरं गहनं रत्नं गह्वरं शरणं वपुः । स्नेहः स्निग्धं महच्छुद्धं वारुणं सर्वतोमुखम् । पातालं स्वादु दिव्यं च तानि पञ्चदशाप्सु च । " इति । यद्वा महादेवमूर्तिष्वन्यतमत्वात्समुद्रस्य महादेवशब्देनात्र समुद्र एवोच्यते । पूर्वं सेतुबन्धात्पूर्वम् । प्रसादमकरोत् जलोपरि सेतुधारणरूपमकरोत् । यद्वा प्रसादं स्वसन्निधानरूपम् " दर्शयामास चात्मानं समुद्रः सरितां पतिः" इत्युक्तत्वात् महादेवः समुद्र एव' इति व्याचख्यौ । सोऽपि तद्वन्माननीयः । केचित्तु–अत्रपूः अत्रपु त्रपुभिन्नं त्रपुसदृक् सुवर्णं तद्वर्णौ ऊरू यस्याः सा तथा तत्सम्बुद्धिः, हे सीते ! अम्महादेवो वरुण इति व्याचक्षाणा नोदाहृतवैजयन्त्यवलोकावाम्महादेव इत्येकपदोपरि परिदर्शितसाहसा उदाहृतबहुपुराणश्रवणविकला दुराग्रहग्रहगृहीतास्ततोऽपवभवरुणकरुणपात्रतां सोढ्वापि रामस्य सदाशिवप्रसादं स्वरसतः पदपदार्थतमवधूय विधुशेखरमवमन्यन्त इत्युपेक्ष्याः । " यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोऽभूत् । सेशं पुनाति जगदिदं यदङ्गाम्भः सद्यः पुनाति सहचन्द्रललामलोकान् ॥ " इत्यादिभागवताद्युदाहृतपुराणेषु च " लोकसंग्रहकाम्यया " इत्याद्युक्तेश्च लीलेयं राघवस्येति सर्वं चतुरस्रम् ॥ १७ ॥

अधिकाक्षरत्वेऽपि पूर्वप्रयोगेणाभ्यर्हितत्वाच्च पुराणेभ्यो गरीयानिति "वेदः प्राचेतसादासीत्" इति वेदसमत्वोक्त्या चतुर्मुखवरप्रदानमूलतया च प्रबलतरः। तद्विरोधे तामसपुराणवचनानि न प्रमाणानि। किंच पुराणं सर्गप्रतिसर्गादिष्वन्यपरमिति नेतिहासवत् पुरावृत्तकथने तात्पर्यवत्। अथवा अस्मिन् सर्गे श्लोकाः प्रायशो व्यत्यस्ता दृश्यन्ते इत्युडारिप्रभृतिभिरुक्तम्। तथा चेदमर्धम् "अत्र मण्डोदरी" इति श्लोकानन्तरं पठितव्यम्। तत्र च महादेवप्रसादः

अत्र राक्षसराजोऽयमाजगाम विभीषणः ॥ १८ ॥ एषा सा दृश्यते सीते किष्किन्धा चित्रकानना। सुग्रीवस्य पुरी रम्या यत्र वाली मया हतः ॥ १९ ॥ अथ दृष्ट्वा पुरीं सीता किष्किन्धां वालिपालिताम्। अब्रवीत् प्रश्रितं वाक्यं रामं प्रणयसाध्वसा ॥२०॥ सुग्रीवप्रियभार्याभिस्ताराप्रमुखतो नृप। अन्येषां वानरेन्द्राणां स्त्रीभिः परिवृता ह्यहम्। गन्तुमिच्छे सहायोध्यां राजधानीं त्वयाऽनघ ॥ २१ ॥ एवमुक्तोऽथ वैदेह्या राघवः प्रत्युवाच ताम्। एवमस्त्विति किष्किन्धां प्राप्य संस्थाप्य राघवः। विमानं प्रेक्ष्य सुग्रीवं वाक्यमेतदुवाच ह ॥ २२ ॥ ब्रूहि वानर शार्दूल सर्वान् वानरपुङ्गवान्। स्वदारसहिताः सर्वे ह्ययोध्यां यान्तु सीतया ॥ २३ ॥

स्वपितृदर्शनमेव। अत एव भरतं प्रति हनुमत्प्रेषणावसरे वक्ष्यति–" महादेवप्रसादाच्च पित्रा मम समागमम् " इति। पुराणान्तरं तु माहात्म्यप्रतिपादनपरं बोध्यमिति संक्षेपः ॥ १७ ॥ अत्र राक्षसराज इति। अत्र समुद्रराजप्रसादप्रदेशादुत्तरतः ॥ १८ ॥ एषेति। पम्पावनमधुवनाद्यपेक्षया चित्रकाननेत्युक्तिः ॥ १९ ॥ अथेति। प्रणयसाध्वसा प्रणययुक्तसाध्वसवती। प्रणतसाध्वसेति पाठे–उपनतसाध्वसा। सुग्रीवादिसन्निधानात् प्रणयसाध्वसेति प्रथमभाषणरूपत्वाद्वा ॥ २० ॥ सुग्रीवेत्यादिसार्धश्लोक एकान्वयः। अहं ताराप्रमुखतः ताराप्रमुखाभिः सुग्रीवप्रियभार्याभिः सह अन्येषां वानरेन्द्राणां स्त्रीभिश्च परिवृता सती त्वया सह अयोध्यां गन्तुम् इच्छे इच्छामीति संबन्धः। आत्मनेपदमार्षम् ॥ २१ ॥ एवमित्यादिसार्धश्लोक एकान्वयः। एवमस्त्विति सीतां प्रत्युवाच। अथ किष्किन्धां प्राप्य विमानं संस्थाप्य सुग्रीवं प्रेक्ष्योवाचेति संबन्धः ॥२२॥ ब्रूहीति। यान्त्वित्यत्र इतिकरणं द्रष्टव्यम्।

चित्रकानना मधुवनादिदिव्यकाननोपेता ॥१९॥ प्रणयसाध्वसा प्रणययुक्तसाध्वसा। प्रणतसाध्वसा इति पाठे–प्रणेतुमुपनेतुं प्राप्तं साध्वसं यया सा ॥ २० ॥ सुग्रीवेत्यादि। ताराप्रमुखतः ताराप्रमुखीभिः सुग्रीवप्रियभार्याभिस्सह अन्येषां वानरेन्द्राणां स्त्रीभिः परिवृता परिवारिता त्वया सह अयोध्यां गन्तुमिच्छामीति सम्बन्धः ॥ २१ ॥ २२ ॥ ब्रूहीत्यादिश्लोकद्वयमेकं वाक्यम्। यान्त्वित्यत्रेतिकरणं द्रष्टव्यम्। सर्वे सीतया हेतुभूतया सीताप्रियार्थमित्यर्थः। स्वदारसहितास्सन्तः ॥ २३–२६ ॥

 

सीतया निमित्तभूतया, सीताप्रियार्थमित्यर्थः ॥२३॥ तथा त्वमपीति । अत्र याहीति विपरिणामेन संबन्धः । अभित्वरस्व । किष्किन्धायां विलम्बो न कार्य इत्यर्थः ॥२४॥ एवमुक्त इति । सर्वैः समावृतो वानराधिपतिरुक्तः इत्यन्वयः ॥ २५ ॥ प्रविश्येति । अर्धमेकं वाक्यम् । प्रवेशः सुग्रीवस्यैव, न तु वानराणाम् । भाषत अभाषत ॥२६॥ नारीभिः स्त्रीभिः सह अनुज्ञाता, अयोध्यागमनं प्रतीति शेषः । त्वं च वानरस्त्रियश्चानुज्ञाता इत्यर्थः । नारीणामिति

तथा त्वमपि सर्वाभिः स्त्रीभिः सह महाबल । अभित्वरस्व सुग्रीव गच्छामः प्लवगेश्वर ॥ २४ ॥ एवमुक्तस्तु सुग्रीवो रामेणामिततेजसा । वानराधिपतिः श्रीमांस्तैश्च सर्वैः समावृतः ॥२५॥ प्रविश्यान्तःपुरं शीघ्रं तारामुद्वीक्ष्य भाषत ॥ २६ ॥ प्रिये त्वं सह नारीभिर्वानराणां महात्मनाम् । राघवेणाभ्यनुज्ञाता मैथिलीप्रियकाम्यया ॥ २७ ॥ त्वर त्वमभिगच्छामो गृह्य वानरयोषितः । अयोध्यां दर्शयिष्यामः सर्वा दशरथस्त्रियः ॥२८॥ सुग्रीवस्य वचः श्रुत्वा तारा सर्वाङ्गशोभना । आहूय चाब्रवीत् सर्वा वानराणां तु योषितः ॥ २९ ॥ सुग्रीवेणाभ्यनुज्ञाता गन्तुं सर्वैश्च वानरैः । मम चापि प्रियं कार्यमयोध्यादर्शनेन च ॥ ३० ॥ प्रवेशं चापि रामस्य पौरजानपदैः सह । विभूतिं चैव सर्वासां स्त्रीणां दशरथस्य च ॥ ३१ ॥

पाठे तृतीयार्थे षष्ठी ॥२७॥ गृह्य गृहीत्वा, आनीयेति यावत् । दर्शयिष्यामः द्रक्ष्यामः । दशरथस्त्रियः दशरथस्त्रियश्च ॥ २८ ॥ सुग्रीवस्येति । सर्वाङ्गशोभनेत्यनेन पूर्वं स्वयमलंकृतवतीति गम्यते॥२९॥सुग्रीवेणेत्यादिश्लोकद्वयमेकान्वयम् । सुग्रीवेण सर्वैर्वानरैः स्वस्वभर्तृभिर्वानरैः सह, अयोध्यां गन्तुमभ्यनुज्ञाताः, यूयमिति शेषः । न केवलं सुग्रीवानुज्ञामात्रं मत्प्रियार्थं च भवतीभिरागन्तव्यमित्याह–मम चापीति । अयोध्यादर्शनेन मम यत्प्रियं तद्भवतीभिः सहागत्य कार्यमित्यर्थः । रामस्य प्रवेशं च दशरथस्य स्त्रीणां विभूतिम् ऐश्वर्यं च, द्रक्ष्याम इति शेषः ॥ ३० ॥ ३१ ॥ रामानु०–सुग्रीवेणाभ्यनुज्ञाताः,



प्रिये इत्यादि । वानराणां नारीभिस्सह त्वम् अभ्यनुज्ञाता अतः वानरयोषितः गृह्य गच्छामः अयोध्यां दशरथस्त्रियश्च दर्शयिष्यामः द्रक्ष्यामः, त्वमभि

वयमिति शेषः । वानरैश्चाभ्यनुज्ञाताः, यूयामिति शेषः । मम चापि प्रियं कार्यमस्येव दर्शनेन नेतव्या भवतीभिरिति शेषः ॥ ३० ॥ तारयेत्याद्यर्धत्रयमेकान्वयम् । नेपथ्यम् अलङ्कारम् । विधिपूर्वेण मङ्गलालम्भनादिविधिपूर्वकमित्यर्थः । अत्रालङ्करणाह्वानादिना दिनमेकं गतमित्याहुः । प्रदक्षिणं कृत्वा, विमानस्येति शेषः । प्रादक्षिण्येन गमनमात्रमत्र विवक्षितम् । अतिविपुलस्य तस्य सद्यः प्रदक्षिणासम्भवात् ॥ ३२ ॥ ताभिरिति । उत्थितमित्यनेन तारागमनपर्यन्तं भूमौ

तारया चाभ्यनुज्ञाताः सर्वा वानरयोषितः । नेपथ्यं विधिपूर्वेण कृत्वा चापि प्रदक्षिणम् । अध्यारोहन् विमानं तत् सीतादर्शनकांक्षया ॥ ३२ ॥ ताभिः सहोत्थितं शीघ्रं विमानं प्रेक्ष्य राघवः । ऋश्यमूकसमीपे तु वैदेहीं पुनरब्रवीत् ॥ ३३ ॥ दृश्यतेऽसौ महान् सीते सविद्युदिव तोयदः । ऋश्यमूको गिरिश्रेष्ठः काञ्चनैर्धातुभिर्वृतः ॥३४॥ अत्राहं वानरेन्द्रेण सुग्रीवेण समागतः । समयश्च कृतः सीते वधार्थं वालिनो मया ॥३५॥ एषा सा दृश्यते पम्पा नलिनी चित्रकानना । त्वया विहीनो यत्राहं विललाप सुदुःखितः । अस्यास्तीरे मया दृष्टा शबरी धर्मचारिणी ॥ ३६ ॥ अत्र योजनबाहुश्च कबन्धो निहतो मया ॥ ३७ ॥ दृश्यते च जनस्थाने सीते श्रीमान् वनस्पतिः । यत्र युद्धं महद्वृत्तं तव हेतोर्विलासिनि । रावणस्य नृशंसस्य जटायोश्च महात्मनः ॥ ३८ ॥

विमानं स्थितमिति ज्ञायते ॥ ३३ ॥ ३४ ॥ समयः सङ्केतः ॥ ३५ ॥ विललाप । लिङ्गुत्तमैकवचनम् ॥ ३६ ॥ ३७ ॥ दृश्यते चेत्यादिसार्धश्लोक

त्वरेति सम्बन्धः ॥ २७–३२ ॥ ताभिरिति । ताभिस्सहोत्थितमित्यनेन चतुर्थ्यां किष्किन्धायामुषित्वा पञ्चम्यां ततः प्रस्थानमित्यवगम्यते । उपरि पञ्चम्यां भरद्वाजाश्रमप्रवेशस्य वक्ष्यमाणत्वात् ॥ ३३–३५ ॥ एषेति । नलिनी पद्मिनी । विललाप व्यलपम् ॥ ३६ ॥ ३७ ॥ वनस्पतिः जटायुनिवासभूतो न्यग्रोधः ।

स०–अध्यारोहन् । ननु पूर्वं रामस्य नागपाशबन्धनसमये रामदर्शनार्थं विमानेनानीतां सीतां प्रति तत्र पतिश्चेन्न जीवति तर्हि नेदं विमानं त्वां वहेदिति सरमावाक्येन पुष्पकस्याविधवावाहकत्वनियमोक्त्या कथमत्र ताराया विमानारोहणमिति चेत् ? उच्यते–सरमावाक्यं न सीताया विधवात्वपुरस्कारेण विपक्षे यानारोहनिषेधपरम्, किन्तु दृश्यमानरामस्य मरणे तवाशुचित्वेन नेदं त्वामावहेदित्येवंपरम् । यद्वा उक्तनियमाङ्गीकारेऽपि न क्षतिः । ताराया रामवाक्यात्सुग्रीवपतिकत्वेन वा विमानारोहसम्भवात् । " पुत्रिण्यविधवा " इति स्मृतेः पुत्रेण वा तस्याः अविधवात्वं बोध्यम् ॥ ३२ ॥

मेकं वाक्यम् । श्रीमान् वनस्पतिः जटायुनिवासभूतो वटः । तस्य श्रीमत्त्वं महात्मना जटायुपाऽधिष्ठितत्वात् ॥ ३८ ॥ खरश्चेत्यादिसार्धश्लोक एकान्वयः । तत्र पञ्चवटीति प्रसिद्धम् ॥ ३९ ॥ ४० ॥ एषा गोदावरीति । अयमेव पाठः सम्यक् । एषा मन्दाकिनीति पाठे-अगस्त्याश्रमसमीपे मन्दाकिनीतिं काचिन्नद्यस्तीति ज्ञेयम् । एतच्छ्लोकात्पूर्वं पर्णशालेति श्लोकः पठनीयः ॥ ४१ ॥ रामानु०-एषा गोदावरी रम्येति पाठः सम्यक् । एषा मन्दाकिनीति पाठे अग

खरश्च निहतो यत्र दूषणश्च निपातितः। त्रिशिराश्च महावीर्यो मया बाणैरजिह्मगैः । एतत्तदाश्रमपदमस्माकं वरवर्णिनि ॥ ३९ ॥ पर्णशाला तथा चित्रा दृश्यते शुभदर्शना । यत्र त्वं राक्षसेन्द्रेण रावणेन हृता बलात् ॥ ४० ॥ एषा गोदावरी रम्या प्रसन्नसलिला शिवा । अगस्त्यस्याश्रमो ह्येष दृश्यते पश्य मैथिलि ॥ ४१ ॥ दीप्तश्चैवाश्रमो ह्येष सुतीक्ष्णस्य महात्मनः ॥ ४२ ॥ वैदेहि दृश्यते चात्र शरभङ्गाश्रमो महान् । उपयातः सहस्राक्षो यत्र शक्रः पुरन्दरः ॥ ४३ ॥ अस्मिन् देशे महाकायो विराधो निहतो मया ॥ ४४ ॥ एते हि तापसावासा दृश्यन्ते तनुमध्यमे । अत्रिः कुलपतिर्यत्र सूर्यवैश्वानरप्रभः । अत्र सीते त्वया दृष्टा तापसी धर्मचारिणी ॥ ४५ ॥ असौ सुतनु शैलेन्द्रश्चित्रकूटः प्रकाशते । यत्र मां कैकयीपुत्रः प्रसादयितुमागतः ॥ ४६ ॥ एषा सा यमुना दूराद्दृश्यते चित्रकानना ॥ ४७ ॥ भरद्वाजाश्रमो यत्र श्रीमानेष प्रकाशते ॥ ४८ ॥ एषा त्रिपथगा गङ्गा दृश्यते वरवर्णिनि । नानाद्विजगणाकीर्णा सम्प्रपुष्पितकानना ॥ ४९ ॥ शृङ्गिवेरपुरं चैतद् गुहो यत्र समागतः ॥ ५० ॥

स्त्याश्रमसमीपे मन्दाकिनीसंज्ञा काचिन्नद्यस्तीत्यवगन्तव्यम् ॥ ४१ ॥ दीप्तश्चेत्यर्धम् ॥ ४२ ॥ वैदेहीति । पुराणि शत्रुशरीराणि शत्रुपुराणि वा दारयतीति पुरन्दरः ॥ ४३ ॥ अस्मिन्देश इत्यर्धम् ॥ ४४ ॥ एते हीत्यादिसार्धश्लोक एकान्वयः । तापसावासाः, अस्माभिर्दश वर्षाणि यत्रोषितमिति भावः । तापसी अनसूया ॥ ४५ ॥ ४६ ॥ एषा सेत्यर्धम्॥ ४७ ॥ भरद्वाजेत्यर्धम् । यत्र भरद्वाजाश्रमः, पूर्वं दृष्ट इति शेषः । श्रीमान् एष प्रदेशः प्रकाशते । अदूरवर्तितया सम्यक् दृश्यते ॥ ४८ ॥ एषा त्रिपथगेति । वरवर्णिनीति सीतासम्बोधनम् ॥ ४९ ॥ शृङ्गिवेरपुरमित्यर्धम् । यत्र गुहः समागतः तच्छृङ्गिवेर

यत्र वनस्पतिसमीपे ॥३८-४१॥ दीप्तश्चेति । वैदेहि दृश्यते इत्युत्तरेण सम्बन्धः । पुरन्दरः पुराणि शत्रुशरीराणि शत्रुपुराणि वा दारयतीति तथा ॥४२-४४॥ तापसी

पुरम् एतदित्यन्वयः ॥ ५० ॥ एषा सेति । यूपमालिनी इक्ष्वाकुभिस्तीरे यागानन्तरं कीर्त्यर्थं शिलाभिः कृतयूपवतीत्यर्थः ॥ ५१ ॥ एषा सेति । अयोध्यामिति, उद्दिश्येति शेषः । विमानस्याकाशगतत्वेन दूरस्था अपि गङ्गाशृङ्गिबेरपुरसरय्वयोध्या दृष्टा इति बोध्यम् । भरद्वाजाश्रमे हि तदा

एषा सा दृश्यते सीते सरयूर्यूपमालिनी । नानातरुशताकीर्णा सम्प्रपुष्पितकानना ॥ ५१ ॥ एषा सा दृश्यते ऽयोध्या राजधानी पितुर्मम । अयोध्यां कुरु वैदेहि प्रणामं पुनरागता ॥ ५२ ॥ ततस्ते वानराः सर्वे राक्षसश्च विभीषणः । उत्पत्योत्पत्य ददृशुस्तां पुरीं शुभदर्शनाम् ॥ ५३ ॥ ततस्तु तां पाण्डुरहर्म्यमालिनीं विशाल कक्ष्यां गजवाजिसङ्कुलाम् । पुरीमयोध्यां ददृशुः प्लवङ्गमाः पुरीं महेन्द्रस्य यथाऽमरावतीम् ॥ ५४ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे षड्विंशत्युत्तरशततमः सर्गः ॥ १२६ ॥

पूर्णे चतुर्दशे वर्षे पञ्चम्यां लक्ष्मणाग्रजः । भरद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिम् ॥ १ ॥

स्थितिः ॥ ५२ ॥ ५३ ॥ ततस्त्विति । पाण्डुरेत्यादिस्वभावोक्तिः ॥ ५४ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्ध काण्डव्याख्याने षड्विंशत्युत्तरशततमः सर्गः ॥ १२६ ॥ अथ भरद्वाजाश्रमवासः—पूर्ण इति । पूर्णे, चैत्रशुद्धपञ्चम्यामयोध्यातो निर्गमनम् । तदारभ्य चतुर्दशवर्षे पूर्णे सति पञ्चम्यां चैत्रशुद्धपञ्चम्याम । तथा हि—चैत्रशुद्धपञ्चम्यां निर्गमः । तद्रात्र्यां तमसातीरे निवासः । षष्ठ्यां शृङ्गिबेरपुरे । सप्तम्यां वन स्पतिमूले । अष्टम्यां भरद्वाजाश्रमे । नवम्यां यमुनातीरे । दशम्यां रामश्चित्रकूटं गमिष्यतीति गुहचारमुखेन विदितवृत्तान्तस्य सुमन्त्रस्य सायाह्ने अयोध्या

अनसूया ॥ ४५–५१ ॥ एषेति । प्रणामम्, अयोध्यां प्रतीति शेषः ॥ ५२–५४ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्ड व्याख्यायां षड्विंशत्युत्तरशततमः सर्गः ॥ १२६ ॥ " पूर्णे चतुर्दशे वर्षे पञ्चम्यां लक्ष्मणाग्रजः । भरद्वाजाश्रमं प्राप्य " इत्यनेनेदं प्रतिपाद्यते—फाल्गुनपूर्णिमायां सुवेलारोहणम् । अत्र प्रमाणम् " ततोऽस्तमगमत्सूर्यस्सन्ध्यया प्रतिरञ्जितः । पूर्णचन्द्रप्रदीपा च क्षपा समभिवर्तत " इति वचनम् । ततोऽपरेद्युः कृष्णपक्षप्रथमायां युद्धस्य प्रारम्भः, तस्यामेव रात्रौ नागपाशबन्धमोक्षौ । द्वितीयायां धूम्राक्षवधः । तृतीयायां वज्रदंष्ट्रस्य वधः । चतुर्थ्यां मकराक्षस्य वधः । वस्तुतस्तु दशम्यामेव

प्रवेशः। तद्रात्रावेव दशरथस्य निर्याणम्। एकादश्यां राज्ञस्तैलद्रोण्यां निक्षेपः। द्वादश्यां भरतं प्रति दूतप्रेषणम्। ते च दूता मार्गे त्रयोदशीं चतुर्दशीं चापनीय पौर्णमास्यां रात्रौ केकयनगरं प्रविविशुः। प्रतिपदि भरतस्यायोध्यां प्रत्यागमनम्। तत्र च मार्गे सप्त रात्रीरुषित्वा अष्टमे दिने त्वरातिशयेनाहोरात्रमागत्य नवम्यां सूर्योदये भरतस्यायोध्याप्रवेशः। तस्यामेव दशरथसंस्कारः। तदहरारभ्य त्रयोदशादिने वैशाखशुद्धपञ्चम्यां तत्पूर्वदिने च भरतेन राज्ञः श्राद्धकर्मकरणम्। षष्ठ्यां तद्देशीयाचारसिद्धं दहनदेशशोधनम्। सप्तम्यां मार्गशोधनाय कर्मान्तिकप्रेषणम्। कर्मान्तिकैश्च दशमीपर्यन्तं चतुर्दिनं मार्गशोधनम्। एकादश्यां भरतस्य रामसकाशं प्रति गमनम्। तद्रात्रौ गङ्गातीरे निवासः। द्वादश्यां भरद्वाजाश्रमे। त्रयोदश्यां रामसमागमः। चतुर्दशीपौर्णमासीप्रतिपत्सु चित्रकूटे भरतस्य निवासः। वैशाखबहुलद्वितीयायां भरतस्यायोध्यां प्रति प्रयाणम्। चतुर्थ्यामयोध्याप्रवेशः। इत्येवं सार्धमासे गते वैशाखबहुलपञ्चम्यां रामस्य चित्रकूटान्निर्गमः अत्र्याश्रमप्रवेशश्च। एवमाश्रममण्डलवासेन सह सार्धमासेषु दशसंवत्सरेषु गतेषु अवशिष्टकाले पञ्चवटीवासे तत्र त्रयोदशवर्षेषु गतेषु ततश्चतुर्दशे वर्षे चैत्रमासे सीताहरणम्। वैशाखे सुग्रीवदर्शनम्। आषाढे वालिवधः। आश्वयुजे सैन्योद्योगः। फाल्गुने प्रायोपवेशः। फाल्गुनशुद्धचतुर्दश्यां लङ्कादाहः। फाल्गुनामावास्यायां रावणवधः। चैत्रशुद्धप्रतिपदि रावणसंस्कारादि। द्वितीयायां विभीषणाभिषेकः, सीताप्राप्तिर्देवताप्रस्थानानि च। तृतीयायां लङ्कातो निर्गमः। चतुर्थ्यां किष्किन्धायां वासः। पञ्चम्यां भरद्वाजाश्रमे वासः। अत्र वक्तव्योपपत्तयस्तत्र तत्र प्रदर्शिताः। अस्मिन् प्रकारे हनुमत्सन्निधाने, 'द्वौ मासौ रक्षितव्यौ मे' इति रावणवचनं सीतासान्त्वनपरम्। 'मासादूर्ध्वं न जीविष्ये' इति सीतावचनं तु सम्यक् संगच्छते। मासशब्दस्य वर्तमानमासपरत्वं चासकृदुक्तम्। रावणेन 'दश मासा गताः अवशिष्टौ द्वौ मासौ' इत्युक्तिर्मधुपानमत्ततया अविवेककृता। सीतायाः 'मासादूर्ध्वम्' इति वचनं तु वर्तमानमासपरमिति विवेकः। भरद्वाजाश्रमं प्राप्येत्यनेन महतां स्थानमपि प्राप्यमित्युक्तम्। नियतः

कुम्भनिकुम्भमकराक्षाणां वधः। एकादशीमारभ्य पुनरिन्द्रजितस्त्रिरात्रं युद्धम्, लक्ष्मणेन त्रयोदश्यामिन्द्रजिद्वधः। अत्र च प्रमाणम्—"अहोरात्रैस्त्रिभिर्वीरः कथञ्चिद्विनिपातितः" इत्येतद्वचनम्। चैत्रशुक्लप्रथमायां रावणस्य संस्कारः। द्वितीयायां विभीषणस्याभिषेकः। तृतीयायां देवीसमागमः। "तां रात्रिमुषितं रामम्" इत्युक्तत्वात् चतुर्थ्यां प्रतिप्रयाणं किष्किन्धाप्राप्तिश्च। पञ्चम्यां भरद्वाजाश्रमप्राप्तिरिति। अस्यां पञ्चम्यां चतुर्दशवर्षसंपूर्णः। "चतुर्दशे हि सम्पूर्णे वर्षेऽहनि रघूत्तम। न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम्। तथेति च प्रतिज्ञाय संपरिष्वज्य सादरम्" इत्येतदत्र प्रमाणम्। षष्ठ्यां नन्दिग्रामं प्राप्य जटाविशोधनं कृत्वा अयोध्याप्राप्तिः। सप्तम्यां पुष्यनक्षत्रे श्रीरामचन्द्रपट्टाभिषेक इत्येवं क्रमो वेदितव्यः॥ १॥

नियतकरणत्रयः ॥१॥ स इत्यादिसार्धश्लोक एकान्वयः । सुभिक्षानामयम्, भिक्ष्यन्त इति भिक्षाः अन्नानि, भिक्षाणां समृद्धिः सुभिक्षम् । समृद्धावव्ययी भावः । आमयस्याभावोऽनामयम् । प्रसज्यप्रतिषेधेऽपि समासस्येष्टत्वात्साधुः । सुभिक्षं चानामयं चेति विग्रहः । अनामयम् आरोग्यम् । "अनामयं स्यादारोग्यम्" इत्यमरः । युक्तः प्रजापालने समाहितः ॥ २ ॥ प्रहृष्टवत् प्रहृष्टम् । क्रियाविशेषणम् । स्मितपूर्वम्, सर्वज्ञोऽप्यजानान इव पृच्छतीति

सोऽपृच्छदभिवाद्यैनं भरद्वाजं तपोधनम् । शृणोषि कच्चिद्भगवन् सुभिक्षानामयं पुरे । कच्चिच्च युक्तो भरतो जीवन्त्यपि च मातरः ॥ २ ॥ एवमुक्तस्तु रामेण भरद्वाजो महामुनिः । प्रत्युवाच रघुश्रेष्ठं स्मितपूर्वं प्रहृष्टवत् ॥ ३ ॥ पङ्कदिग्धस्तु भरतो जटिलस्त्वां प्रतीक्षते । पादुके ते पुरस्कृत्य सर्वं च कुशलं गृहे ॥ ४ ॥ त्वां पुराचीरवसनं प्रविशन्तं महावनम् । स्त्रीतृतीयं च्युतं राज्याद्धर्मकामं च केवलम् । पदातिं त्यक्तसर्वस्वं पितुर्वचनकारिणम् ॥ ५ ॥ सर्वभोगैः परित्यक्तं स्वर्गच्युतमिवामरम् । दृष्ट्वा तु करुणा पूर्वं ममासीत् समितिञ्जय ॥ ६ ॥

स्मितम् । यद्वा किं भरतः प्रजापालनसन्तुष्टो वर्तत इति प्रश्नसारं मत्वा परतन्त्रे तस्मिन् कथमित्थं संभवतीति स्मितकरणम् ॥ ३ ॥ अत एव तदनुरूपमुत्तरयति—पङ्केति । स्नानाभावात्पङ्कदिग्धत्वम् । स्नानाभावेऽपि नित्यानुष्ठानं दीक्षितवत् गौणस्नानेन । स्नानाभावे निमित्तमाह—जटिल इति । जटिलः जटावान् । पिच्छादित्वादिलच् । जटिलानां वारुणस्नानं निषिद्धमिति भावः । "कथं न्वपररात्रेषु सरयूमवगाहते" इत्याद्युक्तिस्तु कादाचित्कस्नानपरत्वेऽप्युपपद्यते । यद्वा सदा अनास्तृतभूमिशयनादिना वा तादृशत्वम् । एवं व्रतनिष्ठो भरतस्ते पादुके राज्याय पुरस्कृत्य त्वां प्रतीक्षते, त्वदागमनाकाङ्क्षया वर्तत इत्यर्थः । कच्चिच्च युक्तो भरत इत्यस्योत्तरमुक्त्वा, जीवन्त्यपि च मातर इत्यस्योत्तरमाह—सर्वं चेति । तव गृहे यद्यदस्ति तत्सर्वम्, कुशलं क्षेमयुक्तम् । जीवन्त्यपि चेति समुच्चाय्य पृष्टाः सर्वे मातृपरिचारकादयो जीवन्तीत्यर्थः ॥ ४ ॥ त्वां पुरेत्यादिश्लोकत्रयमेकं वाक्यम् । पुराचीर

स इत्यादि । सुभिक्षानामयं सुभिक्षम् अन्नानां समृद्धिः । समृद्धावव्ययीभावः । सुभिक्षं चानामयं चेति विग्रहः । युक्तः समाहितः । प्रजापालन इत्यर्थः ॥ २ ॥ एवमिति । स्मितपूर्वं प्रत्युवाच सर्वज्ञोऽपि भगवान् अजानन्निव मां पृच्छतीति स्मितकारणम् । प्रहृष्टवत् प्रहृष्टवान् ॥ ३–७ ॥

वसनं पुरातनचीरवसनम् । अतो न पूर्वपदेन पौनरुक्त्यम् । करुणा दुःखम् । परदुःखदुःखित्वं हि करुणा ॥ ५-७ ॥ साम्प्रतमिति । साम्प्रतम् इदानींतु त्वां समीक्ष्य, स्थितस्येति शेषः । प्रीतिः, जातेति शेषः । अनुत्तमेत्यनेन देवकार्यकरणहेतुत्वात् पूर्वमपि काचित् प्रीतिरासीदिति द्योत्यते ॥ ८ ॥ सर्वमित्यर्धम् । सुखं पञ्चवटीवासादिकृतम् । दुःखं सीताहरणजम् ॥ ९ ॥ यत्त्वयेत्यादिसार्धश्लोकपट्कमेकान्वयम् । ब्राह्मणार्थे ऋषिजनरक्षणार्थे,

कैकेयीवचने युक्तं वन्यमूलफलाशिनम् ॥ ७ ॥ साम्प्रतं सुसमृद्धार्थं समित्रगणबान्धवम् । समीक्ष्य विजितारिं त्वां मम प्रीतिरनुत्तमा ॥ ८ ॥ सर्वं च सुखदुःखं ते विदितं मम राघव ॥ ९ ॥ यत्त्वया विपुलं प्राप्तं जनस्थानवधादिकम् । ब्राह्मणार्थे नियुक्तस्य रक्षितुः सर्वतापसान् ॥ १० ॥ रावणेन हृता भार्या बभूवेयमनिन्दिता । मारीचदर्शनं चैव सीतोन्मथनमेव च ॥ ११ ॥ कबन्धदर्शनं चैव पम्पाभिगमनं तथा । सुग्रीवेण च ते सख्यं यच्च वाली हतस्त्वया ॥ १२ ॥ मार्गणं चैव वैदेह्याः कर्म वातात्मजस्य च । विदितायां च वैदेह्यां नलसेतुर्यथा कृतः ॥ १३ ॥ यथा वा दीपिता लङ्का प्रहृष्टैर्हरियूथपैः । सपुत्रबान्धवामात्यः सबलः सहवाहनः ॥ १४ ॥ यथा विनिहतः सङ्ख्ये रावणो देवकण्टकः । समागमश्च त्रिदशैर्यथा दत्तश्च ते वरः । सर्वं ममैतद्विदितं तपसा धर्मवत्सल ॥ १५ ॥ अहमप्यत्र ते दद्मि वरं शस्त्रभृतां वर । अर्घ्यमद्य गृहाणेदमयोध्यां श्वो गमिष्यसि ॥ १६ ॥

नियुक्तस्य तैर्याचितस्य । अत एव रक्षितुः खरादिवधमुखेन पालयितुः, तव भार्या हृता बभूवेति यत् तच्चेति योजना । हृता हर्तुमीप्सिता । आशंसायां क्तः । अतो न सीतोन्मथनमित्यनेन पौनरुक्त्यम् । वरः मृतवानरजीवनादिः ॥ १०-१५ ॥ रामानु०—यथा च निहतः सङ्ख्ये रावणो देवकण्टकः इत्यतः परम्, समागमश्च त्रिदशैरिति श्लोको द्रष्टव्यः ॥ १५ ॥ अहमिति । वरं दद्मि ददामि । अत्र आश्रमे अद्य अर्घ्यं पूजां गृहाणेति संबन्धः ॥ १६ ॥

साम्प्रतमिति । मम प्रीतिः, जातेति शेषः ॥ ८ ॥९॥ सर्वं ते सुखं दुःखं च विदितमित्येतत्प्रकाशयति—यत्त्वयेति । जनस्थानवासिना त्वया यद्विपुलं खरवधादिना दुःखं प्राप्तं तन्मया विदितम् ॥ १० ॥ मारीचदर्शनं, रावणस्य सीतापहारार्थमिति शेषः । सीतोन्मथनं सीताया राक्षसीभिर्लङ्कायां क्लेशनम् ॥ ११ ॥ १२ ॥ वातात्मजस्य कर्म समुद्रलङ्घनलङ्कादाहनादि ॥ १३ ॥ प्रहृष्टैर्हरियूथपैर्लङ्का दीपितेति यत इन्द्रजिद्वधानन्तरं कृतं तच्च विदितम् ॥ १४-२० ॥

तस्येत्यादिसार्धश्लोकद्वयमेकान्वयम् । बाढमिति प्रतिगृह्य, तस्मिन् दिने तत्र पूजामङ्गीकृत्येत्यर्थः । धीमान् अद्यात्र स्थित्वा भरतं प्रति दूतप्रेषणमुचित मिति ज्ञानवानित्यर्थः । मधूनि स्रवन्तीति मधुस्रवाः । गच्छतः, ममेति शेषः । मयि गच्छति सतीत्यर्थः । भवन्तु, अत्रेतिकरणं बोध्यम् । इति वरमया चतेति, सम्बन्धः ॥ १७ ॥ १८ ॥ तथेति चेत्यादिसार्धश्लोकद्वयमेकान्वयम् । योजना योजनानि । "सुपां सुलुक्-" इत्यादिना पूर्वसवर्णादेशः । अत्यन्तसंयोगे

तस्य तच्छिरसा वाक्यं प्रतिगृह्य नृपात्मजः । बाढमित्येव संहृष्टो धीमान् वरमयाचत । अकाले फलिनो वृक्षाः सर्वे चापि मधुस्रवाः ॥ १७ ॥ फलान्यमृतकल्पानि बहूनि विविधानि च । भवन्तु मार्गे भगवन्नयोध्यां प्रति गच्छतः ॥ १८ ॥ तथेति च प्रतिज्ञाते वचनात् समनन्तरम् । अभवन् पादपास्तत्र स्वर्गपादपसन्निभाः ॥ १९ ॥ निष्फलाः फलिनश्चा सन् विपुष्पाः पुष्पशालिनः । शुष्काः समग्रपत्रास्ते नगाश्चैव मधुस्रवाः ॥ २० ॥ सर्वतो योजना त्रीणि गच्छता मभवंस्तदा ॥ २१ ॥ ततः प्रहृष्टाः प्लवगर्षभास्ते बहूनि दिव्यानि फलानि चैव । कामादुपाश्नन्ति सहस्रशस्ते मुदाऽन्विताः स्वर्गजितो यथैव ॥ २२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे सप्तविंश त्युत्तरशततमः सर्गः ॥ १२७ ॥

द्वितीया । गच्छतां वानराणां फलिनश्चासन्निति क्रमेणान्वयः । इदं चोत्तरदिनकार्यं सौकर्याय ऋषिणा दर्शितम् ॥ १९-२१ ॥ तत इति । ते प्रस्थिताः । स्वर्गजितो यथा स्वर्गिण इव ॥ २२ ॥ रामानु०—ते प्रसिद्धाः, स्वर्गजित इव प्रहृष्टास्ते प्लवगर्षभा इति तच्छब्दयोः संबन्धः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तविंशत्युत्तरशततमः सर्गः ॥ १२७ ॥

योजना त्रीणि "सुपां सुलुक्-" इत्यादिना पूर्वसवर्णादेशः ॥ २१ ॥ तत इति । ते उपाश्नन्तीति, ते स्वर्गजितो यथा ते स्वर्गजित इव प्रहृष्टाः प्लवगर्षभाः इति तच्छब्दद्वयस्य निर्वाहः ॥ २२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां सप्तविंशत्युत्तरशततमः सर्गः ॥ १२७ ॥

अथ भरतं प्रति हनुमत्प्रेषणमष्टाविंशत्युत्तरशततमे–अयोध्यां त्विति । अधमेकं वाक्यम् । समालोक्य समालोच्येत्यर्थः । आश्रमस्थस्य तदवलोकना सम्भवात् । चिन्तयामास, कर्तव्यमिति शेषः ॥ १ ॥ जानीहीत्यर्धम् । नृपतिमन्दिरे जनः मात्रादिः ॥ २ ॥ गहनगोचरं वनचारिणम् ॥ ३ ॥ गुहाय निवेदनस्य प्रयोजनमाह–श्रुत्वा त्विति । विगतज्वरं मद्विश्लेषचिन्ताज्वररहितं यथा तथा भविष्यतीति क्रियाविशेषणम् । आत्मसमः हीनजातिमन

अयोध्यां तु समालोक्य चिन्तयामास राघवः । चिन्तयित्वा हनूमन्तमुवाच प्लवगोत्तमम् ॥१॥ जानीहि कच्चित् कुशली जनो नृपतिमन्दिरे ॥ २ ॥ शृङ्गिबेरपुर प्राप्य गुहं गहनगोचरम् । निषादाधिपतिं ब्रूहि कुशलं वचनान्मम ॥३॥ श्रुत्वा तु मां कुशलिनमरोगं विगतज्वरम् । भविष्यति गुहः प्रीतः स ममात्मसमः सखा ॥४॥ अयोध्यायाश्च ते मार्गं प्रवृत्तिं भरतस्य च । निवेदयिष्यति प्रीतो निषादाधिपतिर्गुहः ॥ ५ ॥ भरतस्तु त्वया वाच्यः कुशलं वचनान्मम । सिद्धार्थं शंस मां तस्मै सभार्यं सहलक्ष्मणम् ॥ ६ ॥ हरणं चापि वैदेह्या रावणेन बलीयसा ॥ ७ ॥ सुग्रीवेण च संसर्गं वालिनश्च वधं रणे । मैथिल्यन्वेषणं चैव यथा चाधिगता त्वया ॥ ८ ॥ लङ्घयित्वा महातोयमापगापतिमव्ययम् । उपयानं समुद्रस्य सागरस्य च दर्शनम् ॥ ९ ॥ यथा च कारितः सेतू रावणश्च यथा हतः । वरदान महेन्द्रेण ब्रह्मणा वरुणेन च ॥ १० ॥

वेक्ष्य प्रेमातिशयेन गुहमिक्ष्वाकुकुलीनममन्यत ॥ ४ ॥ अयोध्यायाश्चेति । प्रवृत्तिं वृत्तान्तम् ॥५॥ भरतस्त्विति । सिद्धार्थं निर्व्यूढपितृवचनपरिपालन रूपप्रयोजनम् ॥ ६ ॥ हरणमित्यादिश्लोकपञ्चकमेकान्वयम् । रणे सुग्रीववालिनोर्युद्धे । वालिनो वधः इत्यर्थः । यथा चेति । महातोयम् अव्ययम्

अयोध्यां त्विति । समालोक्य भरद्वाजाश्रमे विमानादवतरणसमय इति भावः । सुग्रीवादीनां सम्यक् शिष्टाचारप्रदर्शनाय सुहृष्टरूपतदाकारज्ञानाय च पूर्वं हनुमत्प्रेषणम् । अत एव पाद्मे पञ्चम्यामेव विसृष्टहनुमत्प्रवेशसमये भरतवर्णनमेवं कृतम्–‘अग्निप्रवेशस्योद्योगकाले भ्रातुरनागमात् । न्यवेदयत्तदा तस्मै श्रीरामागमनोत्सवम् ॥ ” इति ॥१॥२॥ गहनगोचरं वनगोचरम् । कुशलं मदीयं मम वचनाद्ब्रूहीति सम्बन्धः ॥ ३–५ ॥ सिद्धार्थं निर्व्यूढपितृवचनपरिपालनरूपप्रयोजनम् ॥ ६ ॥ ७ ॥ यथा चाधिगता अस्खलितव्रता यथा दृष्टेत्यर्थः ॥ ८ ॥ उपयानं वानरसेनया समागमनम्, सागरस्य दिव्यरूपधारिणो दर्शनम् ॥९॥ वरदानमिति ।

आपगापतिं लङ्घयित्वा त्वया सीता यथा अधिगता तथा शंसेत्यन्वयः । समुद्रस्योपयानं समुद्रं प्रति गमनमित्यर्थः । सम्बन्धसामान्ये षष्ठी । समीपयानं वा । सागरस्य समुद्रराजस्य । ब्रह्मणा वरुणेन चेति सहार्थे तृतीया । अनेन महेन्द्रेण वानरसमुत्थापनरूपवरप्रदाने ब्रह्माद्यनुमतिरस्तीति द्योतितम् । पित्रा मम समागममित्येतदन्तस्य शंसेति पूर्वेण संबन्धः । उपयातमिति । अन्यथा चतुर्थ्यामेव चतुर्दशवर्षातिक्रमात् सोऽग्निं प्रविशेदिति भावः ।

महादेवप्रसादाच्च पित्रा मम समागमम् । उपयातं च मां सौम्य भरतस्य निवेदय ॥ ११ ॥ सह राक्षसराजेन हरीणां प्रवरेण च ॥ १२ ॥ एतच्छ्रुत्वा यमाकारं भजते भरतस्तदा । स च ते वेदितव्यः स्यात् सर्वं यच्चापि मां प्रति ॥ १३ ॥ जित्वा शत्रुगणान् रामः प्राप्य चानुत्तमं यशः । उपयाति समृद्धार्थः सह मित्रैर्महाबलैः ॥ १४ ॥ ज्ञेयाश्च सर्वे वृत्तान्ता भरतस्येङ्गितानि च । तत्त्वेन मुखवर्णेन दृष्ट्या व्याभाषणेन च ॥ १५ ॥ सर्वकामसमृद्धं हि हस्त्यश्वरथसङ्कुलम् । पितृपैतामहं राज्यं कस्य नावर्तयेन्मनः ॥ १६ ॥

सौम्येत्यनेन मन्दं मन्दं कथय । अन्यथा झटान्मदागमनश्रवणे हर्षोऽस्य उन्मस्तको भवेदिति भावः ॥ ७–१२ ॥ त्वमेव राज्यं पालयेति मयोक्ते भरतस्तदङ्गीकरोति न वेति तदाकारस्त्वया ज्ञातव्य इत्याह--एतच्छ्रुत्वेति । एतत् उपयानम् । आकारं मुखप्रसादादिकम् । मां प्रति यत् इङ्गितचेष्टादिकम् ॥ १२ ॥ जित्वा शत्रुगणानित्यादिश्लोकद्वयमेकान्वयम् । एतच्छ्लोकान्ते इत्युक्त्वेत्यध्याहर्तव्यम् । ज्ञेया इति श्लोकेन पूर्वोक्तमेव विशेष्यते । तत्त्वेनेत्यस्य ज्ञेया इत्यनेन सम्बन्धः । अत्रापि पूर्ववद्राज्यं पालयेति मदुक्तिं भरतः किमङ्गीकरोतीति परीक्षस्वेति भावः । अन्यथा भरतप्रकृतेः रामप्रकृतेश्च विरुद्धं स्यात् । यावेवमूचतुः "न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः" इति, "यावन्न चरणौ भ्रातुः पार्थिवव्यञ्जनान्वितौ । शिरसा धारयिष्यामि न मे शान्तिर्भविष्यति ॥" इति च ॥ १४॥१५ ॥ ननु किं परीक्षणीयं सर्वस्यापि राज्याधिपत्यकाङ्क्षित्वादित्याशङ्क्याह--सर्वेति । पितृपितामह

ब्रह्मणा वरुणेन चेति सहार्थे तृतीया । वरः वानरसमुत्थानरूपः । अतः ब्रह्मवरुणयोरपि वरदानकर्तृत्वाभिधानात् वरदानकाले ब्रह्माद्यनुमत्या महेन्द्रो वरं प्रादादित्यवगम्यते ॥ १०–१२ ॥ एतादिति । यम् आकारं खेदानन्दसूचकम् । ते त्वया ॥१३॥१४॥ ज्ञेया इति । तत्त्वेन याथातथ्येन वृत्तान्ता ज्ञेया इति सम्बन्धः ॥ १५ ॥ त्वयि तादृशसौहृदवतो भरतस्य भावपरीक्षणं न कर्तव्यमित्याशङ्क्य तादृशानामपि हृदयस्य प्रायशो राज्यश्रिया आकर्षणं सम्भाव्यत इत्याह--सर्व

शब्दौ कुलपरम्परोपलक्षकौ । पितृपितामहेभ्य आगतम् । उत्तरपदवृद्धिरार्षी । नावर्तयेत् नाकर्षेत् । कस्य भरतादन्यस्यैवेत्यर्थः ॥ १६ ॥ एवं भरते ङ्गिते ज्ञाते तव किं कर्तव्यमित्यत्राह—सङ्गत्येति । सङ्गत्या अस्मत्सङ्गत्या । यद्यपि पूर्वं सर्वात्मना न राज्यपालनमङ्गीकरोमीत्युक्तम् । तथापि चतु र्दशवर्षपर्यन्तं मद्विरहातुरतया मद्दर्शनजहर्षप्रकर्षातिरेकेण त्वमभिषिक्तो भवेति मदुक्तिमङ्गीकरिष्यति किमिति भावः । भरतः मत्प्रीत्यर्थं पूर्वं राज्य भारमङ्गीकृतवान् खलु । स्वयं श्रीमान् स्वाभाविकपारतन्त्र्यश्रीमान् । भवेदित्याशंसायां लिङ् । प्रशास्तु वसुधां कृत्स्नाम्, तातो मदभिषेकसंभ्रमं

सङ्गत्या भरतः श्रीमान् राज्यार्थी चेत् स्वयं भवेत् । प्रशास्तु वसुधां कृत्स्नामखिलां रघुनन्दनः ॥ १७ ॥
तस्य बुद्धिं च विज्ञाय व्यवसायं च वानर । यावन्न दूरं याताः स्म क्षिप्रमागन्तुमर्हसि ॥ १८ ॥
इति प्रतिसमादिष्टो हनुमान् मारुतात्मजः । मानुषं धारयन् रूपमयोध्यां त्वरितो ययौ ॥ १९ ॥

न लब्धवान् । अहं तु भरताभिषेकमहोत्सवमनुभवेयम् । अत एव ह्ययोध्याकाण्डेऽपि 'शनैर्जगाम सापेक्षः' इत्युक्तम् । भरताभिषेकदर्शनसापेक्ष इत्यर्थः । अखिलाम् खिलरहिताम्, समृद्धजनामित्यर्थः । कथमसौ भरणक्षम इत्यत्राह—रघुनन्दन इति । त्रैलोक्यभरणक्षमकुलोद्भूत इत्यर्थः ॥१७॥ रामानु०–सङ्गत्या आनत्या ॥ १७ ॥ तस्येति । बुद्धिं मत्सन्निधाने कथंचिद्राज्यमङ्गीकरिष्यतीति बुद्धिम्, व्यवसायं सर्वात्मना नाङ्गीकरिष्यतीति व्यव सायं च, ज्ञात्वा अङ्गीकरिष्यति चेदस्माद्देशाद्यावद्दूरं न याताः स्म तावदागन्तुमर्हसि । अन्यथा नागच्छेति भावः । अत एव हनुमानपि तस्य व्यव सायं ज्ञात्वा नागतवानिति ज्ञेयम् । केचित्तु भरतभावज्ञोऽपि रामः सर्वात्मना सुरक्तोऽपि राज्ञा परीक्षणीय इति लोके राजनीतिप्रवर्तनायैवमतिशङ्कावचन मुक्तवान् । वस्तुतः स्वस्य झटिति गमने भरतस्य हर्ष उन्मस्तको भवेदिति । तस्मात्सत्त्वाय हनुमन्तं प्रेषितवान् । तदाशयज्ञो हनुमानपि रामागमन मुक्त्वा भरतेन सहैवागतवानित्याहुः ॥ १८ ॥ इतीति । प्रतिसमादिष्टः प्रतिकूलं समादिष्टः । अह्रदयं समादिष्ट इत्यर्थः । ययौ यातुमुद्युक्तः ॥ १९ ॥

कामेति । पितृपैतामहं पितृपितामहेभ्य आगतम् । नावर्तयेत नाकर्षेत ॥ १६ ॥ तस्य राज्याकांक्षा चेत् किं करिष्यसीत्याशङ्क्य तमेव स्थापयामीत्याह—सङ्गत्येति । सङ्गत्या चिरकालपरिचयेन राज्येनार्थी भवेत्तर्हि वसुधां प्रशास्त्विति सम्बन्धः ॥ १७–२० ॥



स०–सङ्गत्या चिरकालपरिचयेन कैकेयीसङ्गत्या वा । यदि कैकेयीवत्स्वयमपि राज्येनार्थी भवेत्तर्हि स एव वसुधां शास्तु, वयं यत्र क्वापि तपसा कालं नेष्याम इति शेषः ॥ १७ ॥

अथेति । अथ उद्योगानन्तरम् । वेगेन जिघृक्षन् इवेत्यन्वयः ॥ २० ॥ लङ्घयित्वेत्यादिश्लोकद्वयमेकान्वयम् । पितृपथं स्वपितृपथम्, वायुमार्गमित्यर्थः । भुजगेन्द्रालयमिति गङ्गायमुनासङ्गमविशेषणम् ॥ २१–२३ ॥ पञ्चमीं पञ्चमीसम्बन्धिनीम्, अद्य रजनीम् एतां रजनीम् उषित्वा । निर्गतमिति शेषः ।

अथोत्पपात वेगेन हनुमान् मारुतात्मजः । गरुत्मानिव वेगेन जिघृक्षन् भुजगोत्तमम् ॥ २० ॥ लङ्घयित्वा पितृपथं भुजगेन्द्रालयं शुभम् । गङ्गायमुनयोर्मध्यं सन्निपातमतीत्य च । शृङ्गिबेरपुरं प्राप्य गुहमासाद्य वीर्यवान् ॥ २१ ॥ स वाचा शुभया हृष्टो हनुमानिदमब्रवीत् ॥२२॥ सखा तु तव काकुत्स्थो रामः सत्यपराक्रमः । सहसीतः ससौमित्रिः स त्वां कुशलमब्रवीत् ॥२३॥ पञ्चमीमद्य रजनीमुषित्वा वचनान्मुनेः । भरद्वाजाभ्यनुज्ञातं द्रक्ष्यस्यद्यैव राघवम् ॥ २४ ॥ एवमुक्त्वा महातेजाः सम्प्रहृष्टतनूरुहः । उत्पपात महावेगो वेगवानविचारयन् ॥ २५ ॥ सोऽपश्यद्रामतीर्थं च नदीं वालुकिनीं तथा । गोमतीं तां च सोऽपश्यद्भीमं सालवनं तथा । प्रजाश्च बहुसाहस्राः स्फीतान् जनपदानपि ॥२६॥ स गत्वा दूरमध्वानं त्वरितः कपिकुञ्जरः । आससाद द्रुमान् फुल्लान् नन्दिग्रामसमीपगान् ॥ २७ ॥ स्त्रीभिः सपुत्रैर्वृद्धैश्च रममाणैरलंकृतान् । सुराधिपस्योपवने यथा चैत्ररथे द्रुमान् ॥ २८ ॥

भरद्वाजाभ्यनुज्ञातम् । प्रातरिति शेषः । अद्यैव अचिरेणैव ॥२४॥ सम्प्रहृष्टतनूरुहः । सकललोकानन्दकारिरामप्रत्यागमनं मया श्रावयितव्यं लब्धमित्यस्माद्धेतोरितिभावः । महावेगः महावेगस्वभावः । वेगवान् तात्कालिकवेगवान् । अविचारयन् मार्गस्थवनगिरिनदीसौन्दर्यादिकमगणयन्निति भावः ॥२५॥ सोऽपश्यदित्यादिसार्धश्लोकमेकं वाक्यम् । रामतीर्थं परशुरामतीर्थम् । तां प्रसिद्धाम् । प्रजाः कोसलजनपदस्थाः ॥२६॥ स गत्वेत्यादिश्लोकद्वयमेकान्वयम् ।

लङ्घयित्वेत्यादि । पितृपथं वायुपथम् । विहगेन्द्रालयं पक्षीन्द्राणां सञ्चारस्थानम् । विहगेन्द्रालयं शुभम् इति पाठः । मध्यं मार्गमध्यस्थितम्, गङ्गायमुनयोस्सन्निपातं प्रयागम् ॥२१–२३॥ पञ्चमीमिति । पञ्चमीं पञ्चमीसम्बन्धिनीम् । अद्यरजनीम् एतां रजनीम् उषित्वा प्रातः भरद्वाजाभ्यनुज्ञातं समायान्तं रामम् अद्यैव अचिरेणैव द्रक्ष्यसीत्यर्थः ॥ २४ ॥ संप्रहृष्टतनूरुहः सकलजगदानन्दकारिरघुनाथप्रत्यागमनं मया श्रावयितव्यमित्यस्माद्धेतोरिति भावः । अविचारयन्, अध्वश्रममिति शेषः ॥ २५ ॥ २६ ॥ स गत्वेत्यादि श्लोकद्वयमेकं वाक्यम् । सुराधिपस्योपवने नन्दनवने । चैत्ररथे कुबेरोद्याने ॥ २७–३३ ॥

फुल्लान् फुल्लपुष्पान्। स्त्रीभिः सपुत्रैर्वृद्धैश्च, स्त्रीबालवृद्धाविशेषेण सर्वेषामानन्दकरत्वादिति भावः। सुराधिपस्य उपवने नन्दनवने, चैत्ररथे च स्थितान् द्रुमान् यथा तत्सदृशानित्यर्थः ॥२७॥२८॥ क्रोशमात्रे त्वित्यादिश्लोकपञ्चकमेकान्वयम् । क्रोशमात्रे घटिकाद्वयमात्रे, घटिकाद्वयगन्तव्यभूमौ । क्रोशलक्षणमुक्तं ज्यौतिषदर्पणे—"यवोदरैरङ्गुलमष्टसङ्ख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः। हस्तैश्चतुर्भिर्भवतीह दण्डः क्रोशः सहस्रद्वितयेन तेषाम् ॥" इति। दीनं

क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम्। ददर्श भरतं दीनं कृशमाश्रमवासिनम् ॥२९॥ जटिलं मलदिग्धाङ्गं भ्रातृव्यसनकर्शितम्। फलमूलाशिनं दान्तं तापसं धर्मचारिणम् ॥ ३० ॥ समुन्नतजटाभारं वल्कलाजिनवाससम्। नियतं भावितात्मानं ब्रह्मर्षिसमतेजसम् ॥३१॥ पादुके ते पुरस्कृत्य शासन्तं वै वसुन्धराम्। चातुर्वर्ण्यस्य लोकस्य त्रातारं सर्वतो भयात् ॥ ३२ ॥ उपस्थितममात्यैश्च शुचिभिश्च पुरोहितैः। बलमुख्यैश्च युक्तैश्च काषायाम्बरधारिभिः ॥३३॥ न हि ते राजपुत्रं तं चीरकृष्णाजिनाम्बरम्। परि भोक्तुं व्यवस्यन्ति पौरा वै धर्मवत्सलम् ॥३४॥

रामादर्शनेन। दान्तं बहिरिन्द्रियनिग्रहशालिनम् ॥२९॥३०॥ समुन्नतजटाभारमिति। पूर्वं जटावत्त्वोक्तिः, अत्र तद्भारस्य समुन्नतत्वोक्तिरिति वैषम्यम् । वल्कलाजिनवाससमित्युत्तरीयोक्तिः। अतश्चीरकृष्णाजिनाम्बरमित्यनेन न पुनरुक्तिः। नियतं नियतवाचम् । भावितात्मानं ध्यातात्मानमिति मनोनियमोक्तिः ॥ ३१ ॥ ते पूर्वं रामेण दत्ते। चातुर्वर्ण्यस्य चतुर्वर्णरूपस्य । स्वार्थे ष्यञ्। लोकस्य जनस्य। युक्तैः सन्नद्धैः। "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः ॥ ३२ ॥ बलमुख्यैः बलाध्यक्षैः। काषायाम्बरधारिभिः "यथा राजा तथा प्रजाः" इति न्यायादिति भावः ॥ ३३ ॥ भ्रातृवियोगाद्भरतस्य वल्कलादिधारणमस्तु, अमात्यादीनां तत् किंनिमित्तमित्याशङ्क्य तत्र कारणमाह—न हीति । राजपुत्रं भरतं परि वर्जयित्वा भोक्तुं समीचीनवस्त्राभरणादीन्यनुभवितुम्, न व्यवस्यन्ति व्यवसायं न कुर्वन्ति । "अपपरी वर्जने" इति परेः कर्मप्रवचनीयसंज्ञा। आचार्यास्तु प्राहुः—परि परितो वर्तमाना अपि पौराः भरतं भोक्तुम् अनुभवितुम्, द्रष्टुमिति यावत्। न व्यवस्यन्ति व्यवसायं न कुर्वन्ति । तद्दर्शने निराशा भवन्तीत्यर्थः। तत्र हेतुमाह राजपुत्रमिति। रामविरहानन्तरक्षणे मृतस्य पुत्रः खल्वयम् । अद्य रामानागमने किमयमस्माभिर्लभ्यत इति भावः । भ्रातृवियोगाद्भरतस्य वल्कलादिधारणमस्तु, अमात्यादीनां तु [illegible] तत्र कारणमाह न हीति । अमात्यादयः धर्मवत्सलाः पौराः, तेन राजपुत्रं

हेत्वन्तरमाह धर्मवत्सलम्, धर्मार्थतया स्वात्मत्यागे पितृसदृशमित्यर्थः । चतुर्दशे वर्षे पूर्णेऽपि रामागमनादर्शनात् प्राणत्यागे व्यवसितं भरतमालोकयतां पौराणां खेदातिशयोऽनेन श्लोकेन सूच्यते ॥३४॥ तमिति । देहवन्तमपरं धर्ममिव स्थितम् । द्वितीय इवशब्दो वाक्यालङ्कारे ॥३५ ॥ ३६॥ प्रियमिति । सङ्गतः, भविष्यसीति शेषः । अत्रापरिचितत्वात् भरतं हनुमान् नावन्दत । यद्वा प्राञ्जलिरिति पदं वन्दनपूर्वकाञ्जलिपरम् । अथवा भरतदशादर्शनेन

तं धर्ममिव धर्मज्ञं देहवन्तमिवापरम् । उवाच प्राञ्जलिर्वाक्यं हनुमान् मरुतात्मजः ॥ ३५ ॥ वसन्तं दण्डकारण्ये यं त्वं चीरजटाधरम् । अनुशोचसि काकुत्स्थं स त्वां कुशलमब्रवीत् ॥ ३६ ॥ प्रियमाख्यामि ते देव शोकं त्यज सुदारुणम् । अस्मिन् मुहूर्ते भ्रात्रा त्वं रामेण सह सङ्गतः ॥ ३७ ॥ निहत्य रावणं रामः प्रतिलभ्य च मैथिलीम् । उपयाति समृद्धार्थः सह मित्रैर्महाबलैः ॥ ३८ ॥ लक्ष्मणश्च महातेजा वैदेही च यशस्विनी । सीता समग्रा रामेण महेन्द्रेण यथा शची ॥३९॥ एवमुक्तो हनुमता भरतो भ्रातृवत्सलः । पपात सहसा हृष्टो हर्षान्मोहं जगाम ह ॥ ४० ॥ ततो मुहूर्तादुत्थाय प्रत्याश्वस्य च राघवः । हनुमन्तमुवाचेदं भरतः प्रियवादिनम् ॥ ४१ ॥ अशोकजैः प्रीतिमयैः कपिमालिङ्ग्य सम्भ्रमात् । सिषेच भरतः श्रीमान् विपुलैरास्रबिन्दुभिः ॥ ४२ ॥ देवो वा मानुषो वा त्वमनुक्रोशादिहागतः । प्रियाख्यानस्य ते सौम्य ददामि ब्रुवतः प्रियम् ॥ ४३ ॥

प्रियाख्यानं क्षणविलम्बेऽपि प्राणहानिशङ्कया 'सति कुड्ये' इति न्यायेन वन्दनोद्देश्यवस्तुनि शीर्यमाणे किं वन्दनेनेति तदुज्जीवकं प्रियाख्यानमेवाकरोत् । यद्वा तद्दशादर्शनेन स्वरूपं विसस्मार ॥३७॥ निहत्येति । समृद्धार्थः संपूर्णमनोरथः ॥३८॥ लक्ष्मणश्चेति । समग्रा संपूर्णमनोरथा, उपयात इति शेषः॥३९॥ एवमिति । हृष्टः पपात हर्षान्मोहं जगाम । हेत्यनेन वार्ताश्रवणमात्रेणैतादृशावस्थे भरते झटिति रामागमने काऽवस्था भवेदिति ऋषिर्विस्मयते ॥४०॥ ॥ ४१ ॥ अशोकजैरिति । भरतः कपिमालिङ्ग्य । अशोकजैः शोकजभिन्नैः । प्रीतिमयैः आनन्दजैरित्यर्थः । विपुलैः गुरुभिः ॥ ४२ ॥ देवो वेत्यादि

भरतं परि भोक्तुं पारवर्जनार्थे । भरतं वर्जयित्वा भोक्तुं न व्यवस्यन्तीत्यर्थः ॥ ३४ ॥ तमिति । द्वितीय इवशब्दो वाक्यालङ्कारे ॥ ३५ ॥ ३६ ॥ रामेण सह सङ्गतः सङ्गतप्रायः ॥ ३७-४२ ॥ देव इत्यादि । प्रियं ब्रुवतः ते त्वत्सम्बन्धिनः । प्रियाख्यानस्य प्रियकथनस्य शतसहस्रसङ्ख्यादि गवादिकं ददामीति सम्बन्धः ॥४३॥

श्लोकत्रयमेकान्वयम् । परिगृहीतमनुष्यदेहेऽपि हनुमति तेजोविशेषात् संशयः । अनुक्रोशात् दयया, प्रियं ब्रुवतस्ते, प्रियाख्यानस्य प्रियवचनस्य, पारितोषिकत्वेन गवादिकं ददामि । भार्याः भरणार्हाः । कन्याः अनूढाः स्त्रियः ॥ ४३–४५ ॥ निशम्येति । रामदिदृक्षया उपलक्षितो भरतः । अद्भुता उपमा यस्य तत् अद्भुतोपमम्, निरुपममित्यर्थः । तद्रामागमनम्, कपिप्रवीरस्य कपिप्रवरात्, निशम्य । नटस्य शृणोतीतिवत्षष्ठी ।

गवां शतसहस्रं च ग्रामाणां च शतं परम् । सुकुण्डलाः शुभाचारा भार्याः कन्याश्च षोडश ॥ ४४ ॥ हेमवर्णाः सुनासोरूः शशिसौम्याननाः स्त्रियः । सर्वाभरणसम्पन्नाः सम्पन्नाः कुलजातिभिः ॥ ४५ ॥ निशम्य रामागमनं नृपात्मजः कपिप्रवीरस्य तदद्भुतोपमम् । प्रहर्षितो रामदिदृक्षयाऽभवत् पुनश्च हर्षादिदमब्रवीद्वचः ॥ ४६ ॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे अष्टाविंशत्युत्तरशततमः सर्गः ॥ १२८ ॥

बहूनि नाम वर्षाणि गतस्य सुमहद्वनम् । शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम् ॥ १ ॥
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे । एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ २ ॥
राघवस्य हरीणां च कथमासीत् समागमः । कस्मिन् देशे किमाश्रित्य तत्त्वमाख्याहि पृच्छतः ॥ ३ ॥

प्रहर्षितोऽभवत् ॥ ४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टाविंशत्युत्तरशततमः सर्गः ॥१२८॥ बहूनीत्यादिश्लोकद्वयमेकान्वयम् । बहूनि वर्षाणि वनं गतस्येति संबन्धः । वर्षशतादपीत्यत्रेतिकरणं द्रष्टव्यम् । वर्षशतात्परमिति शेषः ॥ १ ॥ २ ॥ राघवस्येति । अत्र वानरसमागमप्रश्नेन पूर्वं भरतः सामान्यतो वानरसेनासन्नाहं श्रुतवानिति गम्यते । किमाश्रित्य किं प्रयोजनमवलम्ब्य ॥ ३ ॥



॥ ४४–४६ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् अष्टाविंशत्युत्तरशततमः सर्गः ॥ १२८ ॥
बहूनीत्यादि श्लोकद्वयमेकं वाक्यम् । बहूनि वर्षाणि वनं गतस्य मम नाथस्य प्रीतिकरं कीर्तनं यतः शृणोमि अतः जीवन्तं नरं वर्षशतादपि आनन्दः एतीत्येवं रूपा लौकिकी गाथा जनवार्ता मे मम कल्याणी सत्यार्था प्रतिभाति ॥ १ ॥ २ ॥ राघवस्य हरीणां च कथमासीत्समागम इत्यनेन देवो वा मानुषो वेति

स इति । बृस्यां तपस्विसमुचितासने । "व्रतिनामासनं बृसी" इत्यमरः ॥४॥ वक्ष्यमाणवृत्तान्ते प्रामाण्यसिद्धये तत्पूर्ववृत्तं सङ्क्षेपेणानुवदति–यथेत्यादिना । अत्र यथेत्यस्य येन प्रकारेणेत्यर्थः । मातुः मात्रे । राज्येन निमन्त्रितः इत्यन्वयः । अमित्रकर्शनेत्यनेन राज्यकरणसामर्थ्ये स्वस्य सत्यपि ज्येष्ठानुवृत्त्यर्थं निमन्त्रित इति गम्यते ॥५–९॥ अपयात इति । समुद्भ्रान्तेति । अपूर्वपुरुषदर्शनेनेति भावः । परिद्यूनं परितप्तम् ॥१०॥ तदिति । तत् प्रसिद्धम् । हस्तिभिः

स पृष्टो राजपुत्रेण बृस्यां समुपवेशितः । आचचक्षे ततः सर्वं रामस्य चरितं वने ॥ ४ ॥ यथा प्रव्राजितो रामो मातुर्दत्तो वरस्तव । यथा च पुत्रशोकेन राजा दशरथो मृतः ॥ ५ ॥ यथा दूतैस्त्वमानीतस्तूर्णं राजगृहात् प्रभो । त्वयाऽयोध्यां प्रविष्टेन यथा राज्यं न चेप्सितम् ॥६॥ चित्रकूटं गिरिं गत्वा राज्येनामित्रकर्शन । निमन्त्रितस्त्वया भ्राता धर्ममाचरता सताम् ॥ ७ ॥ स्थितेन राज्ञो वचने यथा राज्यं विसर्जितम् । आर्यस्य पादुके गृह्य यथाऽसि पुनरागतः ॥ ८ ॥ सर्वमेतन्महाबाहो यथावद्विदितं तव । त्वयि प्रतिप्रयाते तु यद्वृत्तं तन्निबोध मे ॥ ९ ॥ अपयाते त्वयि तदा समुद्भ्रान्तमृगद्विजम् । परिद्यूनमिवात्यर्थं तद्वनं समपद्यत ॥ १० ॥ तद्धस्तिमृदितं घोरं सिंहव्याघ्रमृगायुतम् । प्रविवेशाथ विजनं सुमहद्दण्डकावनम् ॥ ११ ॥ तेषां पुरस्ताद्बलवान् गच्छतां गहने वने । विनदन् सुमहानादं विराधः प्रत्यदृश्यत ॥ १२ ॥ तमुत्क्षिप्य महानादमूर्ध्वबाहुमधोमुखम् । निखाते प्रक्षिपन्ति स्म नदन्तमिव कुञ्जरम् ॥ १३॥ तत् कृत्वा दुष्करं कर्म भ्रातरौ रामलक्ष्मणौ । सायाह्ने शरभङ्गस्य रम्यमाश्रममीयतुः ॥ १४ ॥ शरभङ्गे दिवं प्राप्ते रामः सत्यपराक्रमः । अभिवाद्य मुनीन् सर्वान् जनस्थानमुपागमत् ॥ १५ ॥

वनगजैःमृदितम् ॥ ११ ॥ १२ ॥ तमिति । निखाते अवटे । प्रक्षिपन्ति स्मेति बहुवचनेन सीतयाऽपि तत्र किंचित्साहाय्यं कृतमिति गम्यते ॥१३–१५॥

प्रश्नस्यानन्तरं वानरेन्द्रस्य सुग्रीवस्य सचिवोऽहमिति प्रतिवचनं हनुमता दत्तमित्यवगन्तव्यम् ॥ ३ ॥ बृस्यां तपस्व्युचितासने ॥ ४–९ ॥ अपयाते त्वयीति । परिद्यूनं परितप्तमिव ॥ १०–१२ ॥ निखाते गर्ते ॥ १३–१४ ॥

ततः पश्चादित्यर्धम् ॥ १६ ॥ तत इति । कर्णनासमित्यत्र प्राण्यङ्गत्वादेकवद्भावः ॥ १७ ॥ रामस्तु ... अभिवाद्य मुनीन् सर्वान् जनस्थानमुपागमदित्यनन्तरम्, ततः पश्चाच्छूर्पणखा रामपार्श्वमुपागता । ततो रामेण संदिष्टो लक्ष्मणः सहसोत्थितः । प्रगृह्य खड्गं चिच्छेद कर्णनासं महाबलः ॥ इत्यनन्तरम्, चतुर्दश सहस्राणीत्येवं पाठक्रमोऽवगन्तव्यः । अन्यथा पाठे तु अविवक्षितः क्रम इति द्रष्टव्यः ॥ १५–१८ ॥ चतुर्दशेति । स्पष्टम् ॥ १८ ॥ एकेनेति । सङ्गताः पार्थक्येन विना सर्वे राक्षसाः परस्परं मिलिताः सन्तः



ततः पश्चाच्छूर्पणखा रामपार्श्वमुपागता ॥ १६ ॥ ततो रामेण सन्दिष्टो लक्ष्मणः सहसोत्थितः । प्रगृह्य खड्गं चिच्छेद कर्णनासं महाबलः ॥ १७ ॥ चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । हतानि वसता तत्र राघवेण महात्मना ॥ १८ ॥ एकेन सह सङ्गम्य रणे रामेण सङ्गताः । अह्नश्चतुर्थभागेन निश्शेषा राक्षसाः कृताः ॥ १९ ॥ महाबला महावीर्यास्तपसो विघ्नकारिणः । निहता राघवेणाजौ दण्डकारण्यवासिनः ॥ २० ॥ राक्षसाश्च विनिष्पिष्टाः खरश्च निहतो रणे ॥ २१ ॥ ततस्तेनार्दिता बाला रावणं समुपागता ॥ २२ ॥ रावणानुचरो घोरो मारीचो नाम राक्षसः । लोभयामास वैदेहीं भूत्वा रत्नमयो मृगः ॥ २३ ॥ अथैनमब्रवीद्रामं वैदेही गृह्यतामिति । अहो मनोहरः कान्त आश्रमो नो भविष्यति ॥ २४ ॥ ततो रामो धनुष्पाणिर्धावन्तमनुधावति । स तं जघान धावन्तं शरेणानतपर्वणा ॥ २५ ॥ अथ सौम्य दशग्रीवो मृगं याते तु राघवे । लक्ष्मणे चापि निष्क्रान्ते प्रविवेशाश्रमं तदा ॥ २६ ॥

एकेन रामेण सह सङ्गम्य निःशेषाः कृता इत्यन्वयः । अह्नश्चतुर्थभागेनेत्यत्र अह्नश्चतुर्थो यामः । तस्य भागः त्रिपादघटिकान्यूनार्धांशः तेन । अन्यथा अर्धाधिकमुहूर्तेनेति पूर्वोक्तविरोधः प्रसज्येत ॥ १९ ॥ महाबला इति श्लोके तपसो विघ्नकारिण इत्युक्त्या राक्षसहननं तपोविघ्नशान्त्यर्थमिति दर्शितम् ॥ २० ॥ राक्षसा इत्यर्धम् ॥ २१ ॥ तत इत्यर्धम् । बाला मूर्खा । "मूर्खेऽर्भकेऽपि बालः स्यात्" इत्यमरः ॥ २२ ॥ २३ ॥ अथैनमिति । एनं रामम् । गृह्यतां, मृग इति शेषः ॥ २४ ॥ २५ ॥ अथेति । निष्क्रान्त इति । क्रूरत्वान्निष्क्रान्तिकारणानुक्तिः । अत एवाह कामन्दकः–" प्रियं पथ्यं च तथ्यं



एकेनेति । अह्नश्चतुर्थभागेन, इदञ्च युद्धसन्नाहादिव्यापारापेक्षयेति ज्ञेयम् । "अर्धाधिकमुहूर्तेन" इत्यारण्यकाण्डेऽभिहितत्वात् ॥ १९–२१ ॥ बाला मूर्खा ॥ २२ ॥ २३ ॥ अथैनमिति । राममब्रवीत, मृगं दृष्ट्वेति शेषः । तदेवाह–कान्तः अयं मृगो गृह्यताम्, ग्रहणेन आश्रमो मनोहरो भविष्यतीति सम्बन्धः ॥ २४–२७ ॥

च वदेद्धर्मार्थमेव च । अश्राव्यमयशस्यं च परोक्षे कटु चोत्सृजेत् ॥" इति ॥ २६ ॥ जग्राहेति । तरसा बलात्कारेण । ग्रहः अङ्गारक इति यावत् ॥ २७ ॥ २८ ॥ ततस्त्वित्यादिसार्धश्लोक एकान्वयः । अद्भुतसङ्काशाः अद्भुताकाराः ॥ २९ ॥ ३० ॥ तामिति । सुवर्णपरिक्रान्ते सुवर्णानुलिप्ते ॥ ३१ ॥

जग्राह तरसा सीतां ग्रहः खे रोहिणीमिव । त्रातुकामं ततो युद्धे हत्वा गृध्रं जटायुषम् ॥ २७ ॥ प्रगृह्य सीतां सहसा जगामाशु स रावणः ॥ २८ ॥ ततस्त्वद्भुतसङ्काशाः स्थिताः पर्वतमूर्धनि । सीतां गृहीत्वा गच्छन्तं वानराः पर्वतोपमाः । ददृशुर्विस्मितास्तत्र रावणं राक्षसाधिपम् ॥ २९ ॥ प्रविवेश ततो लङ्कां रावणो लोकरावणः ॥ ३० ॥ तां सुवर्णपरिक्रान्ते शुभे महति वेश्मनि । प्रवेश्य मैथिलीं वाक्यैः सान्त्वयामास रावणः ॥ ३१ ॥ तृणवद्भाषितं तस्य तं च नैर्ऋतपुङ्गवम् । अचिन्तयन्ती वैदेही अशोकवनिकां गता ॥ ३२ ॥ न्यवर्तत ततो रामो मृगं हत्वा महावने ॥ ३३ ॥ निवर्तमानः काकुत्स्थोऽदृष्ट्वा गृध्रं प्रविव्यथे ॥ ३४ ॥ गृध्रं हतं ततो दग्ध्वा रामः प्रियसखं पितुः । मार्गमाणस्तु वैदेहीं राघवः सहलक्ष्मणः । गोदावरीमन्वचरद्वनोद्देशांश्च पुष्पितान् ॥ ३५ ॥ आसेदतुर्महारण्ये कबन्धं नाम राक्षसम् ॥ ३६ ॥ ततः कबन्धवचनाद्रामः सत्यपराक्रमः । ऋश्यमूकं गिरिं गत्वा सुग्रीवेण समागतः ॥ ३७ ॥ तयोः समागमः पूर्वं प्रीत्या हार्दो व्यजायत ॥ ३८ ॥

तृणवदिति । तस्य रावणस्य भाषितं तृणवत्, मत्वेति शेषः । तं च नैर्ऋतपुङ्गवम् अचिन्तयन्ती वैदेही अशोकवनिकां गता । तत्रैव स्थितेत्यर्थः ॥ ३२ ॥ ३३ ॥ निवर्तमान इति । अदृष्ट्वेति च्छेदः । सीतामिति शेषः । सीतां गृध्रं चादृष्ट्वा प्रविव्यथ इत्यन्वयः ॥ ३४ ॥ रामानु०—निवर्तमानः काकुत्स्थो ऽदृष्ट्वा गृध्रं प्रविव्यथे । गृध्रं हतं ततो दग्ध्वा रामः प्रियसखं पितुरिति पाठः ॥ ३४ ॥ गृध्रमित्यादिसार्धश्लोक एकान्वयः । ततो वैदेहीं मार्गमाणो राघवः पितुः प्रियसखं हतं गृध्रं दग्ध्वा गोदावरीं तद्वनोद्देशांश्चान्वचरत् । पुष्पितानित्यनेन पुष्पलोभेन किं सीताऽत्र गतेति मतिर्व्यज्यते ॥ ३५ ॥ आसेदतुरित्यर्धमेकं वाक्यम् । राघवाविति शेषः ॥ ३६ ॥ ३७ ॥ तयोरिति । तयोः रामसुग्रीवयोः, पूर्वं दर्शनात् प्रागेव, हार्दः समागमः मानसः संबन्धः व्यजायत, प्रगृह्येति । सहसा बलात्कारेण ॥ २८–३१ ॥ अचिन्तयन्ती अगणयन्ती ॥ ३२–३७ ॥ तयोरित्यर्धम् । तयोः रामसुग्रीवयोः । समागमात्पूर्वं दर्शनात्प्रागेव । हार्दः

मनसा परस्परं सख्यमाचकाङ्क्षाते इत्यर्थः ॥ ३८ ॥ सुग्रीवस्य कुतः सख्यापेक्षेत्यत्राह–भ्रात्रेति ॥ ३९ ॥ इतरेतरेति । इतरेतरसंवादात् अन्योन्य प्रयोजनकथनात् । प्रणयः प्रगाढः अतिशयितः अभूत् ॥ ४० ॥ रामस्येति । अत्र सुग्रीव इति शेषः । सुग्रीवः रामस्य बाहुवीर्येण वालिनं हत्वा स्वराज्यं प्रत्यपादयत् समपादयदिति सम्बन्धः ॥ ४१ ॥ सुग्रीव इति । राज्ये स्थापितः सुग्रीवः सर्ववानरैः सहितोऽभूत् ॥ ४२ ॥ रामायेति ।

भ्रात्रा निरस्तः क्रुद्धेन सुग्रीवो वालिना पुरा ॥ ३९ ॥ इतरेतरसंवादात् प्रगाढः प्रणयस्तयोः ॥ ४० ॥ रामस्य बाहुवीर्येण स्वराज्यं प्रत्यपादयत् । वालिनं समरे हत्वा महाकायं महाबलम् ॥ ४१ ॥ सुग्रीवः स्थापितो राज्ये सहितः सर्ववानरैः ॥ ४२ ॥ रामाय प्रतिजानीते राजपुत्र्याश्च मार्गणम् ॥ ४३ ॥ आदिष्टा वानरेन्द्रेण सुग्रीवेण महात्मना । दश कोट्यः प्लवङ्गानां सर्वाः प्रस्थापिता दिशः ॥ ४४ ॥ तेषां नो विप्रकृष्टानां विन्ध्ये पर्वतसत्तमे । भृशं शोकाभितप्तानां महान् कालोऽत्यवर्तत ॥ ४५ ॥ भ्राता तु गृध्रराजस्य सम्पातिर्नाम वीर्यवान् । समाख्याति स्म वसतिं सीताया रावणालये ॥ ४६ ॥ सोऽहं शोकपरीतानां दुःखं तज्ज्ञातिनां नुदन् । आत्मवीर्यं समास्थाय योजनानां शतं प्लुतः ॥४७॥ तत्राहमेकामद्राक्षमशोकवनिकां गताम् । कौशेयवस्त्रां मलिनां निरानन्दां दृढव्रताम् ॥ ४८ ॥ तया समेत्य विधिवत् पृष्ट्वा सर्वमनिन्दिताम् । अभिज्ञानं च मे दत्तमर्चिष्मान् स महामणिः ॥ ४९ ॥

सुग्रीव इति शेषः । प्रतिजानीते प्रतिज्ञातवान् ॥ ४३ ॥ आदिष्टाः मार्गणायादिष्टाः, दिशः प्रस्थापिताश्च ॥ ४४ ॥ तेषां प्रस्थापितानाम्, विप्रकृष्टानां बहुकालविलम्बितानाम् । यद्वा स्वयंप्रभाबिले प्रविष्टतया दूरं गतानाम् ॥ ४५ ॥ ४६ ॥ सोऽहमिति । ज्ञातिनामिति नकारान्तत्वमार्षम् । प्लुतः, समुद्रे इति शेषः ॥ ४७ ॥ तत्र रावणालये ॥ ४८ ॥ तयेति । अनिन्दितां सीतां सर्वं वृत्तान्तं पृष्ट्वा । प्रच्छिर्द्विकर्मकः । पृष्ट्वा स्थिताय मे मह्यम्,

मानससम्बन्धो व्यजायत मनसा परस्परं सख्यमाचकाङ्क्षाते इत्यर्थः ॥ ३८ ॥ सुग्रीवस्य रामसख्यापेक्षणे कारणमाह–भ्रात्रेति । यतो वालिना निरस्तः अतस्तयोः प्रणयः, आसीदिति शेषः ॥ ३९–४२ ॥ रामायेति । अत्र क्रमो न विवक्षितः, पूर्वमेव प्रतिज्ञातत्वात ॥ ४३ ॥ आदिष्टाः नियुक्ताः, प्रस्थापिता इति सम्बन्धः ॥ ४४ ॥ विप्रकृष्टानां बिलप्रवेशानन्तरं निर्गममार्गमजानतामित्यर्थः ॥ ४५ ॥ ४६ ॥ सोऽहमिति । ज्ञातिनामित्यत्र दीर्घाभाव आर्षः ॥ ४७ ॥ ४८ ॥ विधिवत्

स०–रामः स्वबाहुवीर्येण इति पाठः । रामः स्वराज्यं स्वेन द्रव्येण सहितं च तद्राज्यं चेति तत् । राज्ञि मृते समरे स्वस्वामिकमिति स्वराज्यं वा । प्रत्यपादयत् दत्तवान् ॥ ४१ ॥

स प्रसिद्धः महामणिः अभिज्ञानं दत्तम् ॥ ४९ ॥ रामानु०–तयेति। मे मया। स महामणिः। रामदत्ताभिज्ञानस्याङ्गुलीयकरूपत्वेऽपि तद्युक्तमणिप्राधान्यान्मणिशब्दप्रयोगः ॥४९॥ अभिज्ञानमित्यर्थम् ॥ ५० ॥ मया चेति। क्रियाभेदान्मयाशब्दद्वयं प्रयुक्तम् ॥ ५१ ॥ श्रुत्वेति। जीवितमाशशंसे ततः पूर्वं जीविते निराशः स्थित इति व्यक्तम्। जीवितान्तं प्राप्तः, आतुरः अमृतं पीत्वा यथा जीवितमाशास्ते तथेत्यर्थः ॥ ५२ ॥ उद्योजयिष्यन्निति। उद्योगमुद्योजयिष्यन् उद्योगं

अभिज्ञानं मणिं लब्ध्वा चरितार्थोऽहमागतः ॥ ५० ॥ मया च पुनरागम्य रामस्याक्लिष्टकर्मणः। अभिज्ञानं मया दत्तमर्चिष्मान् स महामणिः ॥ ५१ ॥ श्रुत्वा तु मैथिलीं हृष्टस्त्वाशशंसे च जीवितम्। जीवितान्तमनुप्राप्तः पीत्वा ऽमृतमिवातुरः ॥ ५२ ॥ उद्योजयिष्यन्नुद्योगं दध्रे कामं वधे मनः। जिघांसुरिव लोकान्ते सर्वाँल्लोकान् विभावसुः ॥ ५३ ॥ ततः समुद्रमासाद्य नलं सेतुमकारयत्। अतरत् कपिवीराणां वाहिनी तेन सेतुना ॥ ५४ ॥ प्रहस्तमवधीन्नीलः कुम्भकर्णं तु राघवः। लक्ष्मणो रावणसुतं स्वयं रामस्तु रावणम् ॥५५॥ स शक्रेण समागम्य यमेन वरुणेन च। महेश्वरस्वयम्भूभ्यां तथा दशरथेन च ॥५६॥ तैश्च दत्तवरः श्रीमानृषिभिश्च समागतः। सुरर्षिभिश्च काकुत्स्थो वराँल्लेभे परन्तपः ॥ ५७ ॥ स तु दत्तवरः प्रीत्या वानरैश्च समागतः। पुष्पकेण विमानेन किष्किन्धामभ्युपागमत् ॥ ५८ ॥ तं गङ्गां पुनरासाद्य वसन्तं मुनिसन्निधौ। अविघ्नं पुष्ययोगेन श्वो रामं द्रष्टुमर्हसि ॥ ५९ ॥

कुर्वन्। ओदनपाकं पचतीतिवत्। विभावसुः अग्निः ॥ ५३ ॥ तत इति। नलं सेतुमकारयत् नलेन सेतुमकारयत् ॥ ५४–५८ ॥ तमिति। पुनर्गङ्गामासाद्य मुनिसन्निधौ भरद्वाजसमीपे, अद्य वसन्तं तम् अविघ्नं यथा भवति तथा श्वः पुष्ययोगेन द्रष्टुमर्हसि, पुष्ययोगलाभार्थम् नीतिशास्त्रोक्तमार्गेण। महामणिः, रामदत्ताभिज्ञानस्याङ्गुलीयकत्वेऽपि तत्र खचितमणिप्राधान्यान्मणिशब्दप्रयोगः ॥ ४९–५२॥ उद्योजयिष्यन्निति। उद्युज्यते जयो ऽनेनेत्युद्योगो बलं तदुद्योजयिष्यन् प्रोत्साहयिष्यन् ॥ ५३–५९ ॥

अथ गङ्गातीरे रामः स्थित इति भावः ॥ ५९ ॥ तत इति । सत्यम् अविरुद्धभङ्ग्या सत्यत्वेन ज्ञातम् । मनोरथ इत्यनन्तरमितिकरणं द्रष्टव्यम् ॥६०॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनत्रिंशदुत्तरशततमः सर्गः ॥ १२९ ॥

श्रुत्वेत्यादि । परमानन्दं परमानन्दकरम्, वच इति शेषः ॥ १ ॥ दैवतानीति । चैत्यानि चतुष्पथमण्डपान् । अर्चन्तु अर्चयन्तु ॥ २ ॥ सूता इत्यादि

ततस्तु सत्यं हनुमद्वचो महन्निशम्य हृष्टो भरतः कृताञ्जलिः । उवाच वाणीं मनसः प्रहर्षिणीं चिरस्य पूर्णः खलु मे मनोरथः॥६०॥ इत्यार्षे श्रीरामायणे वाल्मीकीये० श्रीमद्युद्धकाण्डे एकोनत्रिंशदुत्तरशततमः सर्गः ॥ १२९ ॥

श्रुत्वा तु परमानन्दं भरतः सत्यविक्रमः । हृष्टमाज्ञापयामास शत्रुघ्नं परवीरहा ॥१॥ दैवतानि च सर्वाणि चैत्यानि नगरस्य च। सुगन्धमाल्यैर्वादित्रैरर्चन्तु शुचयो नराः ॥ २ ॥ सूताः स्तुतिपुराणज्ञाः सर्वे वैतालिकास्तथा । सर्वे वादित्रकुशला गणिकाश्चापि सङ्घशः। अभिनिर्यान्तु रामस्य द्रष्टुं शशिनिभं मुखम् ॥ ३ ॥ भरतस्य वचः श्रुत्वा शत्रुघ्नः परवीरहा। विष्टीरनेकसाहस्राश्चोदयामास वीर्यवान् ॥ ४ ॥ समीकुरुत निम्नानि विषमाणि समानि च । स्थलानि च निरस्यन्तां नन्दिग्रामादितः परम् ॥ ५ ॥ सिञ्चन्तु पृथिवीं कृत्स्नां हिमशीतेन वारिणा । ततोऽभ्यव किरन्त्वन्ये लाजैः पुष्पैश्च सर्वशः॥ ६ ॥

सार्धश्लोक एकान्वयः। सूताः स्तुतिशीलाः । वैतालिकाः वन्दिनः ॥ ३ ॥ रामानु०—गणिकाश्चापि सङ्घश इत्यतः परम्-राजदारास्तथाऽमात्याः सैन्याः सेनागणाङ्गनाः । ब्राह्मणाश्च सराजन्याः श्रेणीमुख्यास्तथा गणाः । अभिनिर्यान्तु रामस्य द्रष्टुं शशिनिभं मुखम्॥ भरतस्य वचः श्रुत्वा शत्रुघ्नः परवीरहा। विष्टीरनेकसाहस्राश्चोदयामास वीर्यवान ॥ इति पाठक्रमः। व्यत्ययस्तु लेखकप्रमादकृतः ॥ ३ ॥ भरतस्येत्यादिश्लोकपञ्चकमेकान्वयम् । विष्टीः भृतिं विना कर्मकरान् । नन्दिग्रामादितः परम्, अयोध्यापर्यन्तमित्यर्थः।



तत इति । मे मनोरथः पूर्ण इत्युवाचेति सम्बन्धः ॥ ६० ॥ इति श्रीमहेश्वरतीर्थ० श्रीरामायणतत्त्व० युद्धकाण्डव्याख्यायाम् एकोनत्रिंशदुत्तरशततमः सर्गः॥१२९॥ श्रुत्वेति । परमानन्दं परमानन्दकरम्, वचनमिति शेषः ॥ १ ॥ दैवतानि कुलदैवतानि । नगरस्य चैत्यानि साधारणदेवतायतनानि ॥ २ ॥ स्तुतिपुराणज्ञाः इति सूतलक्षणरूपं सूतविशेषणम् । वैतालिकाः वंशावलीकीर्तकाः ॥ ३ ॥ विष्टीः भृतिकरान् ॥ ४ ॥ स्थूलानि इति पाठे—अत्युन्नतप्रदेशान् ॥ ५-८ ॥

अन्ये पुरुषाः हिमवच्छीतेन वारिणा सिञ्चन्तु । ततः सेचनानन्तरम्, लाजादिभिः किरन्तु । रथ्याः समुच्छ्रितपताकाः, कुर्वन्त्विति शेषः । सूर्यस्योदयनं
प्रति सूर्यस्योदयमारभ्य । यावत्सूर्योदयमिति वा । स्रजः मालिकाः तासां दामभिः पङ्क्तिभिः, मुक्तपुष्पैः असूत्रबद्धपद्मकुवलयादिभिश्च वेश्मानि
शोभयन्तु । सुगन्धैः पञ्चवर्णकैः पञ्चविधवर्णद्रव्यचूर्णैः, राजमार्गं किरन्तु राजमार्गे वर्णद्रव्यचूर्णैः नानाविधलतापद्मादिचित्ररेखाः कुर्वन्त्वित्यर्थः ॥ ४-८ ॥

समुच्छ्रितपताकास्तु रथ्याः पुरवरोत्तमे । शोभयन्तु च वेश्मानि सूर्यस्योदयनं प्रति ॥ ७ ॥ स्रग्दामभिर्मुक्तपुष्पैः
सुगन्धैः पञ्चवर्णकैः । राजमार्गमसम्बाधं किरन्तु शतशो नराः ॥ ८ ॥ राजदारास्तथाऽमात्याः सैन्याः सेनागणाङ्गनाः ।
ब्राह्मणाश्च सराजन्याः श्रेणीमुख्यास्तथा गणाः ॥ ९ ॥ धृष्टिर्जयन्तो विजयः सिद्धार्थो ह्यर्थसाधकः । अशोको
मन्त्रपालश्च सुमन्त्रश्चापि निर्ययुः ॥ १० ॥ मत्तैर्नागसहस्रैश्च शातकुम्भविभूषितैः ॥ ११ ॥ अपरे हेमकक्ष्याभिः
सगजाभिः करेणुभिः । निर्ययुस्तुरगाक्रान्तै रथैश्च सुमहारथाः ॥ १२ ॥ शक्त्यृष्टिप्रासहस्तानां सध्वजानां पताकि
नाम् । तुरगाणां सहस्रैश्च मुख्यैर्मुख्यनरान्वितैः । पदातीनां सहस्रैश्च वीराः परिवृता ययुः ॥ १३ ॥

सुगन्धैः पञ्चवर्णकैः मुक्तैः पुष्पैश्च राजमार्गं किरन्त्विति संबन्धः ॥ ४-८ ॥
रामानु०-विष्टीः भृतिं विना कर्मकरान् । स्रग्दामभिः पुष्पमालापङ्क्तिभिः, वेश्मानि शोभयन्तु । श्रेणीमुख्याः श्रेणीमुखाः । तथा गणाः, श्रेणी श्रेणय इति यावत् ।
अथ परेद्युः प्रातः रामभक्त्यतिशयेन सर्वेषां निर्गमनं दर्शयति-राजदारा इत्यादिना । सार्धश्लोकः एकान्वयः । अत्र धृष्ट्यादयो गजारूढा
अत्र श्लोके निर्ययुरिति वक्ष्यमाणमनुषज्यते ॥ ९ ॥ अमात्यान्विशिष्य दर्शयति-धृष्टिरित्यादिना । शक्तीत्यादिसार्धश्लोक एकान्वयः । उक्तविशेषणानां
ययुरित्यर्थः ॥ १० ॥ ११ ॥ अपर इति । अपरे राजान्तरङ्गाः पुरुषाः करेणुभिर्निर्ययुः ॥ १२ ॥ रामानु०-निर्ययुस्तुरगाक्रान्तै रथैश्च सुमहारथाः । इत्यस्यानन्तरम्-शक्त्यृष्टिप्रासहस्तानां सध्वजानां पताकि
तुरगाणां सहस्रैः पदातीनां सहस्रैश्च परिवृता वीरा ययुः ॥ १३ ॥ ततो यानान्युपारूढाः सर्वा दशरथस्त्रियः । कौसल्यां प्रमुखे कृत्वा सुमित्रां चापि निर्ययुः । कैकेय्या
नाम् । तुरगाणां सहस्रैश्च मुख्यैर्मुख्यनरान्वितैः । पदातीनां सहस्रैश्च वीराः परिवृता ययुः । इति पाठक्रमः । व्यत्ययस्तु लेखकप्रमादकृतः ॥ १३ ॥
सहिताः सर्वा नन्दिग्राममुपागमन् । कृत्स्नं तु नगरं तत्तु नन्दिग्राममुपागमत् ॥ श्रेणी नानाजातीयसङ्घः ॥ ९-१७ ॥
राजदाराः मातरः । सैन्याः राजभवनाद्भृतिमन्तोऽभ्यन्तरराः । सेनागणा आटविकान्तसेनाभेदास्तथाऽङ्गनागणाः ।

तत इति। प्रमुखे अग्रे ॥ १४ ॥ कैकेय्येति। अत्र भरतेनोपेक्षयाऽनाहूतत्वात् पश्चान्निर्गत्य कैकेय्या नन्दिग्रामप्राप्तिकाले साहित्यमुच्यते ॥ १५ ॥ कृत्स्नमित्यर्धम् । अत्र नगरशब्देन तत्रत्यजना लक्ष्यन्ते ॥ १६ ॥ सञ्चचाल कम्पितेव ॥ १७ ॥ अथोक्तपरिवारैः सह भरतस्य नन्दिग्रामान्निर्गमं दर्शयति—द्विजातिमुख्यैरित्यादिभिः सार्धैश्चतुर्भिः श्लोकैः। ततो महात्मा भरतः सर्वैर्वृतः प्रत्युद्ययाविति वाक्यार्थः। सनैगमैः सवणिग्भिः।

ततो यानान्युपारूढाः सर्वा दशरथस्त्रियः। कौसल्यां प्रमुखे कृत्वा सुमित्रां चापि निर्ययुः ॥ १४ ॥ कैकेय्या सहिताः सर्वा नन्दिग्राममुपागमन् ॥१५॥ कृत्स्नं च नगरं तत्तु नन्दिग्राममुपागमत् ॥१६॥ अश्वानां खुरशब्देन रथनेमिस्वनेन च। शङ्खदुन्दुभिनादेन सञ्चचालेव मेदिनी ॥ १७ ॥ द्विजातिमुख्यैर्धर्मात्मा श्रेणीमुख्यैः सनैगमैः। माल्यमोदकहस्तैश्च मन्त्रिभिर्भरतो वृतः ॥१८॥ शङ्खभेरीनिनादैश्च वन्दिभिश्चाभिवन्दितः। आर्यपादौ गृहीत्वा तु शिरसा धर्मकोविदः ॥ १९ ॥ पाण्डुरं छत्रमादाय शुक्लमाल्योपशोभितम्। शुक्ले च वालव्यजने राजार्हे हेमभूषिते ॥२०॥ उपवासकृशो दीनश्चीरकृष्णाजिनाम्बरः। भ्रातुरागमनं श्रुत्वा तत्पूर्वं हर्षमागतः। प्रत्युद्ययौ ततो रामं महात्मा सचिवैः सह ॥२१॥ समीक्ष्य भरतो वाक्यमुवाच पवनात्मजम् ॥२२॥ कच्चिन्न खलु कापेयी सेव्यते चलचित्तता। नहि पश्यामि काकुत्स्थं राममार्यं परन्तपम्। कच्चिन्न खलु दृश्यन्ते वानराः कामरूपिणः ॥ २३ ॥

"वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक्" इत्यमरः। मन्त्रिभिः वसिष्ठादिभिः। सचिवैः सुमन्त्रादिभिः। आर्यपादौ रामपादुके हेमभूषिते हेमदण्डभूषिते। तत्पूर्वं श्रवणादि हर्षमागतः, श्रवणात्पूर्वं तु नास्य हर्षोऽभूदित्यर्थः॥ १८—२१ ॥ समीक्ष्येत्यर्धम्। समीक्ष्य समन्ताद्रामागमनं निरीक्ष्य ॥ २२ ॥ कच्चिदित्यादिसार्धश्लोक एकान्वयः। कच्चिदिति प्रश्ने। सेव्यते, त्वयेति शेषः। तत्र हेतुमाह—न हीति। रामस्य दूरागमनेऽपि नासीरचारिणः



द्विजातिमुख्यैरिति। सनैगमैः सवणिग्भिः। "वैदेहकस्सार्थवाहो नैगमो वाणिजो वणिक्" इत्यमरः ॥ १८ ॥ आर्यपादौ श्रीरामस्य पादुके॥१९॥२०॥ भ्रातुरिति। तत्पूर्वं हर्षमागतः इत्यनेन श्रीरामागमनश्रवणात्पूर्वं हर्षो नासीदित्युच्यते ॥ २१-२२ ॥ कापेयी कपिसम्बन्धिनी चलचित्तता न सेव्यते कच्चित् नाप्यते कच्चित्,

कपयो दृश्येरन्, तेषां कामरूपित्वेन स्वरूपेणादर्शनेऽपि रूपान्तरेण वा दृश्येरन्, तदपि नास्तीत्यर्थः ॥ २३ ॥ अथेति। अर्थं विलम्बहेतुम्। "अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने। व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु" इति वैजयन्ती ॥ २४ ॥ सदेति। भरद्वाजप्रसादेन सदाफलानिति संबन्धः। प्राप्य, वानराः हृष्यन्तीति च शेषः ॥ २५ ॥ तस्य चेति। ससैन्यस्य रामस्य वासवेन एष वरो दत्तः अकालफलित्ववरो दत्तः, तथा सर्वगुणान्वितम्

अथैवमुक्ते वचने हनुमानिदमब्रवीत्। अर्थं विज्ञापयन्नेव भरतं सत्यविक्रमम् ॥ २४ ॥ सदाफलान् कुसुमितान् वृक्षान् प्राप्य मधुस्रवान्। भरद्वाजप्रसादेन मत्तभ्रमरनादितान् ॥२५॥ तस्य चैष वरो दत्तो वासवेन परन्तप। ससैन्यस्य तथाऽऽतिथ्यं कृतं सर्वगुणान्वितम् ॥२६॥ निस्वनः श्रूयते भीमः प्रहृष्टानां वनौकसाम्। मन्ये वानरसेना सा नदीं तरति गोमतीम् ॥ २७ ॥ रजोवर्षं समुद्भूतं पश्य वालुकिनीं प्रति ॥२८॥ मन्ये सालवनं रम्यं लोलयन्ति प्लवङ्गमाः ॥ २९ ॥ तदेतद्दृश्यते दूराद्विमलं चन्द्रसन्निभम्। विमानं पुष्पकं दिव्यं मनसा ब्रह्मनिर्मितम् ॥ ३० ॥ रावणं बान्धवैः सार्धं हत्वा लब्धं महात्मना ॥ ३१ ॥ तरुणादित्यसङ्काशं विमानं रामवाहनम्। धनदस्य प्रसादेन दिव्यमेतन्मनोजवम् ॥ ३२ ॥

आतिथ्यं मधुस्रवत्वरूपं भरद्वाजेन कृतम्, अतोऽकालफलित्वं मधुस्रवत्वं च वनस्य युक्तमित्यर्थः ॥ २६ ॥ एवं विलम्बहेतुमुक्त्वा समीपागमनचिह्नं दर्शयति—निस्वन इति। इदानीं वानरसेना गोमतीं नदीं तरतीति मन्ये, यस्मात् भीमो निस्वन इति भावः ॥ २७ ॥ ततोऽपि सन्निकर्षमाह—रज इति। समुद्भूतं रजोवर्षं पश्य। तस्माद्वालुकिनीं नदीं प्रति यातीति मन्ये ॥ २८ ॥ क्षिप्रं वानरसेनाया अनागमने हेतुमाह—मन्य इति। तस्मात्तस्याः विलम्बः ॥२९॥ विमानं तु दृश्यत इत्याह—तदेतदिति। पुष्पकं विमानं पुष्पकाख्यं विमानम् ॥ ३० ॥ ३१ ॥ तरुणेति। दिव्यं मनोजवं तरुणादित्यसङ्काशं राम

तद्येति शेषः ॥ २३ ॥ अर्थं विलम्बहेतुं विज्ञापयन्। "अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने। व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु ॥" इति वैजयन्ती ॥ २४ ॥ हेतुमेवाह—सदाफलानित्यादि ॥ २५–२७ ॥ रज इति। वालुकिनीं नदीम् ॥ २८ ॥ २९ ॥ तदेतदिति। मनसा ब्रह्मनिर्मितं विश्वकर्मणा मनसा ब्रह्मार्थं निर्मितम् ॥ ३० ॥ ३१ ॥ तरुणेति। एतद्धनदस्य प्रसादेन ब्रह्मवरप्रसादेन, धनदस्य धनदसम्बन्धीत्यर्थः। "परेण तपसा लेभे यत्कुबेरः पितामहात्" इति

वाहनमेतद्विमानम्, प्रसादेन धनदस्य ब्रह्मप्रसादेन धनदस्य लब्धमित्यर्थः । "परेण तपसा लेभे यत्कुबेरः पितामहात्" इति सुन्दरकाण्डोक्तेः ॥ ३२ ॥ एतस्मिन्निति । आसत इति शेषः ॥ ३३-३५ ॥ प्राञ्जलिरिति । यथार्थेन स्वागतेन, चतुर्दशे वर्षे पूर्णे अवश्यमागमिष्यामीति प्रतिज्ञानुसारिणा स्वागमनेनेत्यर्थः । अपूजयत् अश्लाघयत् ॥ ३६-३९ ॥ रामानु०-मेरुस्थमिव भास्करमित्यस्यानन्तरं, ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् । हंसयुक्तं महावेगं निष्पपात

एतस्मिन् भ्रातरौ वीरौ वैदेह्या सह राघवौ । सुग्रीवश्च महातेजा राक्षसश्च विभीषणः ॥ ३३ ॥ ततो हर्षसमुद्भूतो निस्वनो दिवमस्पृशत् । स्त्रीबालयुववृद्धानां रामोऽयमिति कीर्तिते ॥ ३४ ॥ रथकुञ्जरवाजिभ्यस्तेऽवतीर्य महीं गताः । ददृशुस्तं विमानस्थं नराः सोममिवाम्बरे ॥ ३५ ॥ प्राञ्जलिर्भरतो भूत्वा प्रहृष्टो राघवोन्मुखः । स्वागतेन यथार्थेन ततो राममपूजयत् ॥३६॥ मनसा ब्रह्मणा सृष्टे विमाने भरताग्रजः । रराज पृथुदीर्घाक्षो वज्रपाणिरिवापरः ॥ ३७ ॥ ततो विमानाग्रगतं भरतो भ्रातरं तदा । ववन्दे प्रयतो रामं मेरुस्थमिव भास्करम् ॥ ३८ ॥ ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् । हंसयुक्तं महावेगं निष्पपात महीतले ॥ ३९ ॥ आरोपितो विमानं तद्भरतः सत्यविक्रमः । राममासाद्य मुदितः पुनरेवाभ्यवादयत् ॥ ४० ॥ तं समुत्थाप्य काकुत्स्थश्चिरस्याक्षिपथं गतम् । अङ्के भरतमारोप्य मुदितः परिषस्वजे ॥ ४१ ॥ ततो लक्ष्मणमासाद्य वैदेहीं चाभ्यवादयत् । अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत् ॥४२॥ सुग्रीवं कैकयीपुत्रो जाम्बवन्तं तथाऽङ्गदम् । मैन्दं च द्विविदं नीलमृषभं परिषस्वजे ॥४३॥ सुषेणं च नलं चैव गवाक्षं गन्धमादनम् । शरभं पनसं चैव भरतः परिषस्वजे ॥ ४४ ॥

महीतले ॥ इति पाठः । अयं श्लोकः केषुचित्कोशेषु लेखकप्रमादात्पतितः ॥ ३९ ॥ आरोपित इति । अत्र भरतस्य विमानारोपणं सर्वेषां प्रदर्शनार्थमिति बोध्यम् ॥ ४० ॥ ४१ ॥ तत इति । लक्ष्मणमासाद्य कृतनमस्कारं लक्ष्मणमालिङ्गनेन सम्भाव्य । इदं च लक्ष्मणस्य कनिष्ठत्वात् । लक्ष्मणेन चिकीर्षितो सुन्दरकाण्डेऽभिहितत्वात् ॥ ३२ ॥ राक्षसश्च विभीषणः इत्यनन्तरम् आसन इति शेषः ॥ ३३-४१ ॥ ततो लक्ष्मणमिति । लक्ष्मणमासाद्य कृतनमस्कारं लक्ष्मण

नमस्कारो रामसन्निधौ भरतेन प्रतिषेधित इति चाहुः। वैदेहीं चाभ्यवादयत्। चकारो रामनमस्कारं समुच्चिनोति। 'न सञ्चये भरतानुजः' इत्युक्तेः। " सीतामादाय गच्छ त्वमग्रतो भरताग्रज " इत्यत्र बहुव्रीहिरित्युक्तम्। न च वैपरीत्यं शङ्क्यम्। पुष्ये जातस्तु भरतः, सार्पे जातौ तु सौमित्री इति जन्मक्रमोक्तेः। पायसप्रदाने विवाहे च प्राथम्यं तत्र परिहृतम्। लक्ष्मणासादनानन्तरं सीतानमस्काराभिधानात् सीता तारादिभिः सह रामसमीप

ते कृत्वा मानुषं रूपं वानराः कामरूपिणः। कुशलं पर्यपृच्छंस्ते प्रहृष्टा भरतं तदा ॥ ४५ ॥ अथाब्रवीद्राजपुत्रः सुग्रीवं वानरर्षभम्। परिष्वज्य महातेजा भरतो धर्मिणां वरः ॥ ४६ ॥ त्वमस्माकं चतुर्णां तु भ्राता सुग्रीव पञ्चमः। सौहृदाज्जायते मित्रमपकारोऽरिलक्षणम् ॥ ४७ ॥ विभीषणं च भरतः सान्त्ववाक्यमथाब्रवीत्। दिष्ट्या त्वया सहायेन कृतं कर्म सुदुष्करम् ॥ ४८ ॥ शत्रुघ्नश्च तदा राममभिवाद्य सलक्ष्मणम्। सीतायाश्चरणौ पश्चाद्विनयादभ्यवादयत् ॥ ४९ ॥ रामो मातरमासाद्य विषण्णां शोककर्शिताम्। जग्राह प्रणतः पादौ मनो मातुः प्रसादयन् ॥ ५० ॥

एव किञ्चिदन्यत्र स्थितेत्यवगम्यते ॥ ४२–४४ ॥ रामानु०–लक्ष्मणासादनानन्तरं देवीनमस्काराभिधानात्, "अन्येषां वानरेन्द्राणां स्त्रीभिः परिवृता ह्यहम्। गन्तुमिच्छे सहायोध्यां राजधानीं त्वया सह ॥" इति प्रार्थितप्रकारेण तारादिभिः परिवृता सती रामसमीप एव किञ्चिदन्यत्र स्थितेत्यवगम्यते ॥ ४२ ॥ त इति। मानुषं रूपं कृत्वा, स्थिता इति शेषः ॥ ४५–४९ ॥ राम इति। मनो मातुः प्रसादयन्निति पूर्वं त्वद्वाक्यं नाश्रौषमिति त्वया मनस्तापो न कार्य इत्येवं प्रसन्नामकरोदित्यर्थः ॥ ५० ॥

मालिङ्गनेन सम्भाव्य वैदेहीं चाभ्यवादयत्, " अन्येद्युः पाञ्चजन्यात्मा कैकेय्यां भरतोऽभवत्। तदन्येद्युस्सुमित्रायामनन्तात्मा च लक्ष्मणः। सुदर्शनात्मा शत्रुघ्नो द्वौ जातौ युगपत् प्रिये ॥" इति पार्वतीं प्रति शिवेनोक्तपाद्मपुराणवचनप्रकारेण रामायणोक्तप्रकारेण च भरतस्य ज्येष्ठत्वादेवं व्याख्यानं कृतम्। वैदेहीं चेति चकारेण रामनमस्कारं समवधत्तेति। परे तु यद्यपि लक्ष्मणो भरतात्कनिष्ठो वयसा, स्पष्टं चेदं जन्मप्रकरणे। तथापि ज्येष्ठानुवर्तनेन स्वापेक्षयाऽधिकगुणत्वेन स्वव्यवहारेण ज्येष्ठानुवृत्तिरेवं कर्तव्येति भरतं प्रत्युपदेशदानेन च गुरुत्वबुद्ध्या तस्य नतिरुचितैव। किञ्च कौसल्यायै प्रथमं दत्तपायसांशजत्वाल्लक्ष्मणस्य ज्येष्ठत्वम्। ततो हि कैकेय्यै पायसार्धदानम्। तदंशजश्च शत्रुघ्न इति स एव भरतात्कनिष्ठः, अत एव वैदेहीं चेति चकारस्स्वरसतस्सङ्गच्छते, अत एव च शत्रुघ्नकृतो लक्ष्मणनमस्कार उपपद्यते। तयोर्युगपदुत्पन्नत्वादित्याहुः ॥ ४२–५० ॥

अभिवाद्येति । यशस्विनीं, रावणजयस्य तन्मूलत्वात् सर्वैः प्रशस्यमानामित्यर्थः । पुरोहितं वसिष्ठम्, अभिवाद्येत्यनुषज्यते । अभिवाद्योपागम दित्यन्वयः ॥५१–५३॥ रामानु०–कैकेय्याः यशस्विनीमिति विशेषणं देवकार्यहेतुभूतत्वादपि प्रायुङ्क्त ॥५१॥ एतत्त इत्यादिसार्धश्लोकद्वयमेकान्वयम् । हे राजन् ! मया

अभिवाद्य सुमित्रां च कैकेयीं च यशस्विनीम् । स मातॄश्च ततः सर्वाः पुरोहितमुपागतम् ॥५१॥ स्वागतं ते महाबाहो कौसल्यानन्दवर्धन । इति प्राञ्जलयः सर्वे नागरा राममब्रुवन् ॥ ५२ ॥ तान्यञ्जलिसहस्राणि प्रगृहीतानि नागरैः । व्याकोशानीव पद्मानि ददर्श भरताग्रजः ॥ ५३ ॥ पादुके ते तु रामस्य गृहीत्वा भरतः स्वयम् । चरणाभ्यां नरेन्द्रस्य योजयामास धर्मवित् । अब्रवीच्च तदा रामं भरतः स कृताञ्जलिः ॥ ५४ ॥ एतत्ते रक्षितं राजन् राज्यं निर्यातितं मया । अद्य जन्म कृतार्थं मे संवृत्तश्च मनोरथः ॥५५॥ यस्त्वां पश्यामि राजानमयोध्यां पुनरागतम् । अवेक्षतां भवान् कोशं कोष्ठागारं पुरं बलम् । भवतस्तेजसा सर्वं कृतं दशगुणं मया ॥५६॥ तथा ब्रुवाणं भरतं दृष्ट्वा तं भ्रातृवत्सलम् । मुमुचुर्वानरा बाष्पं राक्षसश्च विभीषणः ॥ ५७ ॥ ततः प्रहर्षाद्भरतमङ्कमारोप्य राघवः । ययौ तेन विमानेन ससैन्यो भरताश्रमम् ॥ ५८ ॥ भरताश्रममासाद्य ससैन्यो राघवस्तदा । अवतीर्य विमानाग्रादवतस्थे महीतले ॥५९॥ अब्रवीच्च तदा रामस्तद्विमानमनुत्तमम् । वह वैश्रवणं देवमनुजानामि गम्यताम् ॥ ६० ॥

रक्षितं न्यासत्वेन पालितम् एतद्राज्यं ते निर्यातितं तुभ्यं निवेदितम् । कोष्ठागारं धान्यशालाम् । दशगुणत्वं रामनिर्गमनकालिककोशापेक्षया ॥ ५५ ॥ ५६ ॥ तथेति । मुमुचुरिति । स्वकुलीनेष्वेतादृशभ्रातृवृत्त्यदर्शनादिति भावः ॥ ५७ ॥ तत इति भरताश्रमं नन्दिग्रामम् ॥ ५८ ॥ ५९ ॥ अब्रवीच्चेति । गम्यतामित्यनन्तरमितिकरणं बोध्यम् ॥ ६० ॥



कैकेयीं च यशस्विनीम्, अस्या मनोदाढर्येन राजा नरकात्तारितः, देवा ब्रह्मर्षयश्च परमं सुखं प्राप्ताः, रामस्य च यशोऽजायत, अतः एषा यशस्विन्येव॥५१॥५२॥ व्याकोशानि विकसितानि ॥ ५३ ॥ ५४ ॥ ते निर्यातितं तुभ्यं निवेदितम् ॥ ५५ ॥ ५६ ॥ विभीषणश्च बाष्पं मुमोच ईदृशा अपि भ्रातरस्सन्तीत्यानन्देन स्वस्य

तत इति । दिशमागम्य दिशमुद्दिश्य ॥ ६१ ॥ पुरोहितस्येति । आत्मसमस्य स्वानुरूपस्य, पृथगासने तेन सहैवोपविवेश, पृथगासने युगपदेवोप विविशतुरित्यर्थः ॥ ६२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिंशदुत्तरशततमः सर्गः ॥ १३० ॥

ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् । उत्तरां दिशमागम्य जगाम धनदालयम् ॥ ६१ ॥ पुरोहितस्यात्मसमस्य राघवो बृहस्पतेः शक्र इवामराधिपः । निपीड्य पादौ पृथगासने शुभे सहैव तेनोपविवेश राघवः ॥ ६२ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये श्रीमद्युद्धकाण्डे त्रिंशदुत्तरशततमः सर्गः ॥ १३० ॥

शिरस्यञ्जलिमाधाय कैकेय्यानन्दवर्धनः। बभाषे भरतो ज्येष्ठं रामं सत्यपराक्रमम् ॥ १ ॥
पूजिता मामिका माता दत्तं राज्यमिदं मम । तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ॥ २ ॥

एवं पुष्पकं धनदाय प्रेषयित्वा वसिष्ठेन च समागम्य भरतानुज्ञां विना नायोध्या प्रवेष्टव्येति तात्पर्येण नन्दिग्राम एवासनोपविष्टे रामे निविष्टेषु च पौर वर्गेषु सन्निहितासु च मातृषु तादात्विकसूक्ष्मेङ्गितदर्शननिपुणो भरतः स्वहृदयमग्रजाय निवेदयति–शिरस्यञ्जलिमित्यादिना । शिरस्यञ्जलिमाधाये त्यनेन पूर्वकृता प्रपत्तिः स्मार्यते । अनन्यगतिकत्वसूचिका मुद्रा ह्यञ्जलिः । कैकेय्यानन्दवर्धन इत्यनेन भरतवचने कैकेयीसन्तोषो मुखप्रसादादिनाऽव गम्यत इति द्योत्यते ॥ १ ॥ रामानु०–पूर्वसर्गे 'कुशलं पर्यपृच्छंस्ते महृष्टा भरतं तदा' इत्यस्यानन्तरवर्ति 'अथाब्रवीत्त्वमस्माकम्' इति च श्लोकद्वयमत्र सर्गादौ केषुचित्कोशेषु प्रमादा ल्लिखितम् । सर्गादिस्तु शिरस्यञ्जलिमाधायेति ॥ १ ॥ रामस्य राज्यपरिग्रहे अपरिहार्यं हेतुं दर्शयति–पूजितेति । मामिका मत्संबन्धिनी माता पूजिता, राज्यपरि त्यागपूर्वकवनवासाङ्गीकारेण त्वया तोषिता । अनन्तरमिदं राज्यम्, मम मयि, चित्रकूटे दत्तम् । तद्राज्यं त्वं यथा येन प्रकारेण ममाददाः तेन तद्वैपरीत्यजशोकेन च ॥ ५७–६१ ॥ पुरोहितस्येति । आत्मसमस्य स्वानुरूपस्य पृथगासने तेन वसिष्ठेन सहैवोपविवेश, पृथगासने युगपदेवोपविविशतु रित्यर्थः ॥ ६२ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायां त्रिंशदुत्तरशततमः सर्गः ॥ १३० ॥
॥ १ ॥ पूजिता मामिका माता पूजिता राज्यपरित्यागपूर्वकवनवासाङ्गीकारेण त्वया तोषिता । अनन्तरं मम इदं राज्यं चित्रकूटे दत्तम्, तद्राज्यं त्वं यथा येन

प्रकारेण तुभ्यं ददामि । न्यासरूपेण मयि स्थापितं राज्यं न्यासरूपत्वाप्रदानेनैव पुनर्ददामीत्यर्थः ॥ २ ॥ अयोध्यायां राज्यभोगान् यथाकामं भोक्ष्ये राज्यं त्वमेव परिपालयेत्याकाङ्क्षायामाह–धुरमिति । यद्वा पुनरर्थनपर्यन्तं न्यासधारणे न दोष इत्याशङ्क्याह–धुरमिति । एकाकिना असहायेन, बलीयसा ऋषभेण न्यस्तां धुरं किशोरवत् बालवत्स इव गुरुं भारं वोढुं नोत्सहे ॥ ३ ॥ तर्हि कथमेतावत्पर्यन्तं सोढमित्यत आह–वारीति ।

धुरमेकाकिना न्यस्तामृषभेण बलीयसा । किशोरवद् गुरुं भारं न वोढुमहमुत्सहे ॥ ३ ॥ वारिवेगेन महता भिन्नः सेतुरिव क्षरन् । दुर्बन्धनमिदं मन्ये राज्यच्छिद्रमसंवृतम् ॥ ४ ॥ गतिं खर इवाश्वस्य हंसस्येव च वायसः । नान्वेतुमुत्सहे राम तव मार्गमरिन्दम ॥ ५ ॥ यथा चारोपितो वृक्षो जातश्चान्तर्निवेशने । महांश्च सुदुरारोहो महास्कन्धप्रशाखवान् ॥ ६ ॥ शीर्येत पुष्पितो भूत्वा न फलानि प्रदर्शयन् । तस्य नानुभवेदर्थं यस्य हेतोः स रोप्यते ॥ ७॥ एषोपमा महाबाहो त्वदर्थं वेत्तुमर्हसि । यद्यस्मान् मनुजेन्द्र त्वं भक्तान् भृत्यान्न शाधि हि ॥ ८ ॥

महता वारिवेगेन भिन्नः अत एव क्षरन् बहिर्निस्सरन् जलसेतुरिव इदं राज्यच्छिद्रं छिद्रवद्राज्यम्, असंवृतं संवरणरहितं सत् दुर्बन्धनं मन्ये, यथा महता वारिवेगेन भिन्नः क्षरन् सेतुर्वारिवेगाहतिनिरोधकतृणपूलशाखापुञ्जादिसंवरणं विना न बद्धुं शक्यते एवं बहुविधच्छिद्रं राज्यमपि मन्त्रगोपनादिराजगुणावरणं विना पालितुं न शक्यमिति भावः ॥ ४ ॥ अहमिव भवानपि लोकान् गुणैर्वशीकरोत्वित्यत्राह–गतिमिति ॥ ५ ॥ तर्हि ममैवोपोद्बलेन भवानेव राज्यं परिपालयत्वित्याशङ्क्य तर्हि तातेन भवत्पोषणं विफलं स्यादित्याह–यथा चेत्यादिश्लोकत्रयेण । अन्तर्निवेशने आरोपितः उप्तः,

प्रकारेण मम अददाः तेन प्रकारेण पुनस्तुभ्यं ददामि न्यासरूपेण मयि स्थापितं राज्यं पुनर्ददामीत्यर्थः ॥ २ ॥ त्वमेव राज्यं परिपालयेत्याशङ्क्याह–धुरमिति । एकाकिना असहायेन बलीयसा ऋषभेण न्यस्तां धुरं किशोरीव वत्सतरीव गुरुं भारं वोढुम् अहं नोत्सह इति योजना ॥३–५॥ वंशपरम्पराप्राप्तराज्यपरिपालनार्थं दशरथेनोत्पाद्य संवर्धितस्य रामस्य सकलगुणसम्पन्नस्याप्यभिषेकपूर्वकप्रजापरिपालनरूपफलाप्रदर्शनात् फलाप्रदर्शकवृक्षौपम्यमाह–यथा चेत्यादिश्लोकत्रयेण ।

स०–यथा चारोपितः बीजावापादिद्वारा । अन्तर्निवेशने मूलस्य भूम्यन्तर्निवेशने जाते मूलप्रवेशने जाते वृक्षो महान् जातः, माविसंज्ञां गृहीत्वेयमुक्तिः । महास्कन्धः प्रशाखवान् । “ शाखा वेदविभागे च पादपाङ्गेऽन्तिकेऽपि च ” इति विश्वात्प्रशाखावानिति यद्यपि वक्तव्यं तथापि ‘ अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेत् ’ इत्युक्तेर्ह्रस्वः । यद्वा महास्कन्धः प्रकृष्टाः शाखा यस्य स प्रशाखः । महास्कन्धः तद्वान् जातः । पुष्पितः, तारकादित्वात् इतच् । यस्य हेतोः येन कारणेन आरोपितः ॥ ६ ॥

वृक्षः महान् जातः, सुदुरारोहो महास्कन्धप्रशाखवान् पुष्पितोऽपि भूत्वा फलानि न प्रदर्शयन् यथा शीर्येत अफलो भवति । यथा च यस्य फलस्य हेतोर्येन रोप्यते सः रोपयिता तस्य वृक्षस्य अर्थं तत्फलं नानुभवेत् । मनुजेन्द्र ! भक्तान् भृत्यान् अस्मान्न शाधि यदि महाबाहो ! एषोपमा त्वदर्थं मुक्तेति वेत्तुमर्हसीति योजना । अत्र वृक्षरामयोरारोपयितृदशरथयोश्च उपमानोपमेयभावः । बीजावापस्य पुत्रेष्ट्यादेश्च महास्कन्धस्य सभ्रातृकत्वस्य च

जगदद्याभिषिक्तं त्वामनुपश्यतु सर्वतः । प्रतपन्तमिवादित्यं मध्याह्ने दीप्ततेजसम् ॥ ९ ॥
तूर्यसङ्घातनिर्घोषैः काञ्चीनूपुरनिस्वनैः । मधुरैर्गीतशब्दैश्च प्रतिबुध्यस्व राघव ॥ १० ॥
यावदावर्तते चक्रं यावती च वसुन्धरा । तावत्त्वमिह सर्वस्य स्वामित्वमनुवर्तय ॥ ११ ॥
भरतस्य वचः श्रुत्वा रामः परपुरञ्जयः । तथेति प्रतिजग्राह निषसादासने शुभे ॥ १२ ॥

प्रशाखवत्त्वस्य सुग्रीवादिमित्रगणस्य च पुष्पाणां कल्याणगुणानां च राज्याकरणस्य फलाभावस्य च साम्यं द्योत्यते ॥ ६–८ ॥ भवतस्तु राज्यपरिपालने महती शक्तिरित्याह–जगदिति ॥ ९ ॥ सर्वभोगार्हस्त्वमेव भोगान् भुङ्क्ष्वेत्याह–तूर्येति । काञ्चीनूपुरनिस्वनैरित्यनेन प्रबोधकललित नृत्यं गम्यते ॥ १० ॥ मध्ये स्वस्य राज्याशानुद्गमं द्योतयन्नाह–यावदिति । चक्रं ज्योतिश्चक्रमिति यावत् । यावती यावत्कालस्थितिः, तावत् तावत्कालम्, सर्वस्य राज्यस्य स्वामित्वमनुवर्तय । स्वामित्वानुवर्तनं हि पालनमेव ॥ ११ ॥ भरतस्येति । निषसादेति, भरत इतिं शेषः ॥ १२ ॥

अन्तर्निवेशने आरोपितः उप्तः वृक्षो महास्कन्धप्रवालवान् सुदुरारोहो जातः सन् पुष्पितो भूत्वा फलानि न प्रदर्शयन् शीर्येत शीर्येच्चेत् यस्य हेतोः यस्य फलस्य हेतोः येन रोप्यते स रोपयिता तस्य वृक्षस्यार्थं फलं यथा यथावन्नानुभवेत् एवं हि यस्मात्कारणात् हे मनुजेन्द्र ! भक्तान् भृत्यान् अस्मान्न शाधि यदि तदा दशरथो वृक्षारोपकतुल्यः, दशरथस्य प्रजापरिपालनरूपफलाप्रदर्शनाद्फलवृक्षतुल्यस्त्वमित्यर्थः । एतदुक्तं भवति–केनचित्कुटुम्बिना कुटुम्बार्थं समारोपितो वृक्षः पुष्पितो भूत्वा यदि न फलेत् तदा तस्य कुटुम्बस्य तद्वृक्षान्न प्रयोजनं भवेत् । एवं पित्रा जनितस्सर्वगुणसम्पन्नो यदि त्वं लोकं न रक्षेः तदा लोकस्य त्वया न प्रयोजनमिति ॥ ६–८ ॥ यदेवमत आह–जगदद्येत्यादि ॥ ९ ॥ १० ॥ यावदिति । चक्रं ज्योतिश्चक्रं यावदावर्तते परिभ्रमति । अनेन कालावधिरुच्यते । यावती यावत्कालस्थितिः, यावत्तिष्ठतीत्यर्थः ॥ ११–१५ ॥

तत इति । श्मश्रुवर्धकाः श्मश्रुकर्तकाः । "वर्धनं छेदनेऽथ द्वे आनन्दनसभाजने" इत्यमरः । सुशीघ्राः अभिषेकमुहूर्तातिलङ्घनं विना शीघ्रं कर्तुं समर्थाः । उपासत श्मश्रूण्यवर्धन्त । भरतलक्ष्मणापेक्षया श्मश्रुवर्धकानां बहुवचनम् । राघवमिति भरतलक्ष्मणयोः प्रदर्शनार्थम् ॥ १३ ॥ पूर्वमित्यादिश्लोकद्वय मेकान्वयम् । 'न मे स्नानं बहुमतं तं विना केकयीसुतम्' इत्युक्त्या प्रथमं स्नानं भरतस्य, सुग्रीवस्यापि किष्किन्धानिर्गमनप्रभृति स्नानाभावादद्य स्नानम् ।

ततः शत्रुघ्नवचनान्निपुणाः श्मश्रुवर्धकाः । सुखहस्ताः सुशीघ्राश्च राघवं पर्युपासत ॥ १३ ॥ पूर्वं तु भरते स्नाते लक्ष्मणे च महाबले । सुग्रीवे वानरेन्द्रे च राक्षसेन्द्रे विभीषणे ॥१४॥ विशोधितजटः स्नातश्चित्रमाल्यानुलेपनः । महार्हवसनो रामस्तस्थौ तत्र श्रिया ज्वलन् ॥ १५ ॥ प्रतिकर्म च रामस्य कारयामास वीर्यवान् । लक्ष्मणस्य च लक्ष्मीवानिक्ष्वाकुकुलवर्धनः ॥ १६ ॥ प्रतिकर्म च सीतायाः सर्वा दशरथस्त्रियः । आत्मनैव तदा चक्रुर्मनस्विन्यो मनोहरम् ॥१७॥ ततो वानरपत्नीनां सर्वासामेव शोभनम् । चकार यत्नात् कौसल्या प्रहृष्टा पुत्रलालसा ॥१८॥ ततः शत्रुघ्नवचनात् सुमन्त्रो नाम सारथिः । योजयित्वाऽभिचक्राम रथं सर्वाङ्गशोभनम् ॥ १९ ॥ अर्कमण्डल सङ्काशं दिव्यं दृष्ट्वा रथोत्तमम् । आरुरोह महाबाहू रामः सत्यपराक्रमः ॥ २० ॥

तथा विभीषणस्यापि लङ्कानिर्गमनप्रभृति स्नानाभावात् । शत्रुघ्नस्य स्नानाश्रवणमधिकर्तृत्वेन तदानीमवसराभावात् । पूर्वं व्रतग्रहणानुक्तेश्च । "नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः" इति संक्षेपोक्तेरत्रापि शत्रुघ्नस्नानमर्थसिद्धमित्याहुः । जटाशोधनं शुद्धकेशीकरणम् । स्नात इति कर्तरि क्तः । नानावर्णपुष्पयुक्तत्वेन चित्रमाल्यत्वम् । कुङ्कुमकर्पूरकस्तूर्यादिवस्तुभेदेन चित्रानुलेपनत्वम् । महार्हवसनं पीताम्बरम् । श्रिया अलङ्कारश्रिया । तत्र सिंहासने, ज्वलन् प्रकाशमानः तस्थौ ॥ १४ ॥ १५ ॥ प्रतिकर्मेति । प्रतिकर्म हाराद्यलङ्करणम् । इक्ष्वाकुकुलवर्धनः शत्रुघ्नः ॥ १६ ॥ प्रतिकर्मेति । आत्मनैव स्वयमेव ॥ १७ ॥ तत इति । शोभनं प्रतिकर्मेत्यर्थः ॥ १८–२० ॥

प्रतिकर्म अलङ्करणम् । इक्ष्वाकुकुलवर्धनः शत्रुघ्नः ॥ १६ ॥ आत्मनैव न सैरन्ध्रीहस्तेनेत्यर्थः ॥ १७ ॥ शोभनम् अलङ्करणम् ॥ १८ ॥ अभिचक्राम समीपमाज

सुग्रीव इति । दिव्यनिभैः दिव्यवस्त्रसदृशैः वस्त्रैः, उपलक्षिताविति शेषः ॥ २१ ॥ २२ ॥ अयोध्यायामिति । गत्वेति शेषः । मन्त्रयामासुः अभिषेकोपयोगिमङ्गलद्रव्यसंपादनार्थम् एवं कर्तव्यमिति मन्त्रयामासुः ॥ २३ ॥ उक्तमर्थं विवृणोति—अशोक इति । मन्त्रयन् अमन्त्रयन् ॥ २४ ॥ सर्वमित्यादिश्लोकद्वयमेकान्वयम् । अर्हथेति पूजायां बहुवचनम् ॥ २५ ॥ २६ ॥ हरीति । हरियुक्तं हरितवर्णयुक्ताश्वयुक्तम् ॥ २७ ॥ जग्राहेत्यादिश्लोकद्वय

सुग्रीवो हनुमांश्चैव महेन्द्रसदृशद्युती । स्नातौ दिव्यनिभैर्वस्त्रैर्जग्मतुः शुभकुण्डलौ ॥ २१ ॥ वराभरणसम्पन्ना ययुस्ताः शुभकुण्डलाः । सुग्रीवपत्न्यः सीता च द्रष्टुं नगरमुत्सुकाः ॥२२॥ अयोध्यायां तु सचिवा राज्ञो दशरथस्य य । पुरोहितं पुरस्कृत्य मन्त्रयामासुरर्थवत् ॥२३॥ अशोको विजयश्चैव सुमन्त्रश्चैव सङ्गताः । मन्त्रयन् रामवृद्ध्यर्थ मृद्ध्यर्थं नगरस्य च ॥ २४ ॥ सर्वमेवाभिषेकार्थं जयार्हस्य महात्मनः । कर्तुमर्हथ रामस्य यद्यन्मङ्गलपूर्वकम् ॥ २५ ॥ इति ते मन्त्रिणः सर्वे सन्दिश्य तु पुरोहितम् । नगरान्निर्ययुस्तूर्णं रामदर्शनबुद्धयः ॥ २६ ॥ हरियुक्तं सहस्राक्षो रथमिन्द्र इवानघः । प्रययौ रथमास्थाय रामो नगरमुत्तमम् ॥२७॥ जग्राह भरतो रश्मीन् शत्रुघ्नश्छत्रमाददे । लक्ष्मणो व्यजनं तस्य मूर्ध्नि सम्पर्यवीजयत् ॥ २८ ॥ श्वेतं च वालव्यजनं जग्राह पुरतः स्थितः । अपरं चन्द्रसङ्काशं राक्षसेन्द्रो विभीषणः ॥ २९ ॥

मेकान्वयम् । रश्मीन् जग्राह सारथ्यमकरोत् । लक्ष्मण इति । पुरतः स्थितो लक्ष्मणः व्यजनं तालवृन्तकं मूर्ध्नि सम्पर्यवीजयत् ॥२८॥ श्वेतं वालव्यजनं च जग्राह । "अहं सर्वं करिष्यामि" इति त्वरया उभयग्रहणम् । अपरं चन्द्रसङ्काशमित्यत्र जग्राहेत्यनुषज्यते ॥ २९ ॥

गाम ॥ १९ ॥ २० ॥ दिव्यनिभैः दिव्यकान्तिभिः वस्त्रैः युक्तौ जग्मतुः रथस्थं राममनुजग्मतुरित्यर्थः ॥ २१ ॥ २२ ॥ मन्त्रयामासुः अभिषेकोपयोगिमङ्गलद्रव्यसंपादनार्थमेव मन्त्रयामासुरित्यर्थः ॥ २३ ॥ अशोक इत्यादि श्लोकत्रयमेकं वाक्यम् । अशोकादयो रामवृद्ध्यर्थं सङ्गताः मन्त्रयन् मन्त्रयन्तः । महात्मनो रामस्याभिषेकार्थं यद्यद् तत्सर्वं मङ्गलपूर्वकं कर्तुमर्हथ । पूजार्थां बहुवचनम् । इति ते सर्वे मन्त्रिणः पुरोहितं सन्दिश्य रामदर्शनबुद्धयस्सन्तो नगरान्निर्ययुरिति सम्बन्धः ॥२४–२७॥ जग्राहेति । पुरतः स्थितो लक्ष्मणः व्यजनं तालवृन्तं तस्य मूर्ध्नि सम्पर्यवीजयत् । श्वेतं वालव्यजनं च जग्राहेति सम्बन्धः ॥ २८ ॥ २९ ॥

ऋषीति । समरुद्गणैः सवायुगणैः । रामस्य मधुरध्वनिः रावणनिरसनाद्यपदानकथनध्वनिः ॥ ३०–३२ ॥ शङ्खेति । शङ्खशब्दप्रणादैः शङ्खशब्दैः जनहर्षप्रणादैश्चेत्यर्थः ॥ ३३ ॥ ददृशुरिति । ये नगरं प्रविश्य वसिष्ठं पुरस्कृत्य रामाभिषेकममन्त्रयन् ते सुमन्त्रादयः ॥ ३४–३५ ॥



ऋषिसङ्घैस्तदाऽऽकाशे देवैश्च समरुद्गणैः । स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः ॥ ३० ॥ ततः शत्रुञ्जयं नाम कुञ्जरं पर्वतोपमम् । आरुरोह महातेजाः सुग्रीवः प्लवगर्षभः ॥ ३१ ॥ नवनागसहस्राणि ययुरास्थाय वानराः । मानुषं विग्रहं कृत्वा सर्वाभरणभूषिताः ॥ ३२ ॥ शङ्खशब्दप्रणादैश्च दुन्दुभीनां च निस्वनैः । प्रययौ पुरुषव्याघ्रस्तां पुरीं हर्म्यमालिनीम् ॥ ३३ ॥ ददृशुस्ते समायान्तं राघवं सपुरस्सरम् । विराजमानं वपुषा रथेनातिरथं तदा ॥ ३४॥ ते वर्धयित्वा काकुत्स्थं रामेण प्रतिनन्दिताः । अनुजग्मुर्महात्मानं भ्रातृभिः परिवारितम् ॥ ३५ ॥ अमात्यै र्ब्राह्मणैश्चैव तथा प्रकृतिभिर्वृतः । श्रिया विरुरुचे रामो नक्षत्रैरिव चन्द्रमाः ॥ ३६ ॥ स पुरोगामिभिस्तूर्यै स्तालस्वस्तिकपाणिभिः । प्रव्याहरद्भिर्मुदितैर्मङ्गलानि ययौ वृतः ॥ ३७ ॥ अक्षतं जातरूपं च गावः कन्यास्तथा द्विजाः । नरा मोदकहस्ताश्च रामस्य पुरतो ययुः ॥३८॥ सख्यं च रामः सुग्रीवे प्रभावं चानिलात्मजे । वानराणां च तत् कर्म राक्षसानां च तद्बलम् । विभीषणस्य संयोगमाचचक्षे च मन्त्रिणाम् ॥ ३९ ॥

अमात्यैरिति । प्रकृतिभिः पौरजनैः ॥३६॥ सेति । तूर्यैः तूर्यवादकैः । स्वस्तिको वाद्यविशेषः । मङ्गलानि प्रव्याहरद्भिः मङ्गलपाठकैः ॥ ३७ ॥ अक्षतमिति । हरिद्रया जातरूपमक्षतम्, वहद्भिरिति शेषः ॥३८॥ सख्यं चेत्यादिसार्धश्लोकमेकं वाक्यम् । सख्यं, जातमिति शेषः । मन्त्रिणां मन्त्रिभ्यः॥३९॥

स्तूयमानस्य रामस्य मधुरध्वनिः रावणनिरसनादिरामापदानरूपध्वनिरित्यर्थः ॥ ३०-३४ ॥ ते नागराः । वर्धयित्वा, आशीर्भिरिति शेषः ॥ ३५-४३ ॥



तिलकम्–शङ्खशब्देति । शङ्खशब्दप्रणादैः शङ्खशब्दैर्जनानां हर्षप्रणादैश्चेत्यर्थः । तदुक्तं पाद्मे–" आगतो रावणद्वेषी कुम्भकर्णखरान्तकः । अतिकायेन्द्रजिच्छेत्ता महर्षिजनरक्षकः ॥ समाप्तदेवताकार्यस्सीतेशो लक्ष्मणानुजः । सत्यैकनिरतश्शास्तापरदारसहोदरः ॥ सुग्रीवराज्यदो धन्वी रावणानुजराज्यदः । शरणागतसन्त्राता धर्मस्थापनतत्परः ॥ रामो दाशरथिः श्रीमान् भगवान् भरताग्रजः । शरण्यो राम इत्येवं शुश्रुवे काहलध्वनिः ॥ " इति ॥ ३३ ॥

श्रुत्वेत्यर्धम् । श्रुत्वा, सुग्रीवसख्यादिकमिति शेषः ॥ ४० ॥ ४१ ॥ तत इति । अभ्युच्छ्रयन् अभ्युदश्राययन्, उन्नम्य स्थापितवन्तः ॥ ४२ ॥ ऐक्ष्वाकेत्यर्धम् । राम इति शेषः ॥ ४३ ॥ अथाब्रवीदित्यादिश्लोकद्वयमेकान्वयम् । अथ रघुनन्दनः महात्मनः पितुर्भवनमासाद्य प्रविश्य च कौसल्या

श्रुत्वा तु विस्मयं जग्मुरयोध्यापुरवासिनः ॥ ४० ॥ द्युतिमानेतदाख्याय रामो वानरसंवृतः । हृष्टपुष्टजनाकीर्णा मयोध्यां प्रविवेश ह ॥ ४१ ॥ ततो ह्यभ्युच्छ्रयन् पौराः पताकास्ते गृहे गृहे ॥४२॥ ऐक्ष्वाकाध्युषितं रम्यमाससाद पितुर्गृहम् ॥ ४३ ॥ अथाब्रवीद्राजसुतो भरतं धर्मिणां वरम् । अर्थोपहितया वाचा मधुरं रघुनन्दनः ॥ ४४ ॥ पितुर्भवनमासाद्य प्रविश्य च महात्मनः । कौसल्यां च सुमित्रां च कैकेयीमभिवाद्य च ॥ ४५ ॥ यच्च मद्भवनं श्रेष्ठं साशोकवनिकं महत् । मुक्तावैडूर्यसङ्कीर्णं सुग्रीवाय निवेदय ॥ ४६ ॥ तस्य तद्वचनं श्रुत्वा भरतः सत्यविक्रमः । पाणौ गृहीत्वा सुग्रीवं प्रविवेश तमालयम् ॥ ४७ ॥ ततस्तैलप्रदीपांश्च पर्यङ्कास्तरणानि च । गृहीत्वा विविशुः क्षिप्रं शत्रुघ्नेन प्रचोदिताः ॥ ४८ ॥ उवाच च महातेजाः सुग्रीवं राघवानुजः । अभिषेकाय रामस्य दूतानाज्ञापय प्रभो ॥ ४९ ॥ सौवर्णान् वानरेन्द्राणां चतुर्णां चतुरो घटान् । ददौ क्षिप्रं स सुग्रीवः सर्वरत्नविभूषितान् ॥ ५० ॥ यथा प्रत्यूषसमये चतुर्णां सागराम्भसाम् । पूर्णैर्घटैः प्रतीक्षध्वं तथा कुरुत वानराः ॥ ५१ ॥ एवमुक्ता महात्मानो वानरा वारणोपमाः । उत्पेतुर्गगनं शीघ्रं गरुडा इव शीघ्रगाः ॥ ५२ ॥ जाम्बवांश्च हनूमांश्च वेगदर्शी च वानराः । ऋषभश्चैव कलशान् जलपूर्णानथानयन् ॥ ५३ ॥

प्रभृतीरभिवाद्य च भरतमब्रवीदिति योजना ॥ ४४ ॥ ४५ ॥ यच्चेति । साशोकवनिकम् अन्तःपुरोद्यानसहितम् ॥ ४६ ॥ ४७ ॥ तत इति । विविशुः, परिचारिका इति शेषः ॥ ४८–५० ॥ रामानु०–उवाचेति । दूतानाज्ञापय प्रभो इति पाठः ॥ ४९ ॥ यथेति । हे वानराः ! चतुर्णां सागराम्भसां चतुर्भिः

अथाब्रवीदित्यादि श्लोकद्वयमेकं वाक्यम् । पितुर्भवनमासाद्य कौसल्याद्या अभिवाद्य च भरतमब्रवीदिति पूर्वेण सम्बन्धः ॥ ४४–५० ॥ यथेति । हे वानराः ! चतुर्णां

सागराम्भोभिः पूर्णैर्घटैः उपलक्षिताः प्रत्यूषसमये यथा प्रतीक्षध्वं यथा अस्मान् प्रतीक्षिष्यध्वं तथा कुरुतेति योजना । सागरजलानयननियोगो नदीजला नयननियोगस्याप्युपलक्षकः ॥५१–५३॥ जलपूर्णानयानयन्नित्युक्तमेवार्थं विवृणोति–नदीशतानामिति ॥५४॥ एवं जाम्बवद्धनुमद्वेगदर्शर्षभैर्नदीजला

नदीशतानां पञ्चानां जलं कुम्भेषु चाहरन् ॥ ५४ ॥ पूर्वात् समुद्रात् कलशं जलपूर्णमथानयत् । सुषेणः सत्त्व सम्पन्नः सर्वरत्नविभूषितम् ॥५५॥ ऋषभो दक्षिणात्तूर्णं समुद्राज्जलमाहरत् । रक्तचन्दनशाखाभिः संवृतं काञ्चनं घटम् ॥५६॥ गवयः पश्चिमात्तोयमाजहार महार्णवात् । रत्नकुम्भेन महता शीतं मारुतविक्रमः ॥ ५७ ॥ उत्तराच्च जलं शीघ्रं गरुडानिलविक्रमः । आजहार स धर्मात्मा नलः सर्वगुणान्वितः ॥ ५८ ॥ ततस्तैर्वानरश्रेष्ठैरानीतं प्रेक्ष्य तज्जलम् । अभिषेकाय रामस्य शत्रुघ्नः सचिवैः सह । पुरोहिताय श्रेष्ठाय सुहृद्भ्यश्च न्यवेदयत् ॥ ५९ ॥

॥ श्रीरामचन्द्रपरब्रह्मणे नमः ॥



श्रीरामस्य पट्टाभिषेकघट्टः ॥

ततः स प्रयतो वृद्धो वसिष्ठो ब्राह्मणैः सह । रामं रत्नमये पीठे सहसीतं न्यवेशयत् ॥ ६० ॥ वसिष्ठो वामदेवश्च जावालिरथ काश्यपः । कात्यायनः सुयज्ञश्च गौतमो विजयस्तथा ॥६१॥ अभ्यषिञ्चन् नरव्याघ्रं प्रसन्नेन सुगन्धिना । सलिलेन सहस्राक्षं वसवो वासवं यथा ॥ ६२ ॥

नयनमुक्त्वा सुषेणर्षभगवयनलैः सागरजलानयनं दर्शयति–पूर्वादिति ॥५५॥ ऋषभो दक्षिणादिति । अयं चर्षभः पूर्वस्मादन्यः॥५६–५८॥ तत इत्यादिसार्धश्लोक एकान्वयः । तत् प्रसिद्धम् । तज्जलं तेषां नदीसागराणां जलम्॥५९–६२॥

सागराम्भसां चतुर्भिस्सागराम्भोभिः पूर्णैर्घटैरुपलक्षिताः, प्रत्यूषसमये यथा प्रतीक्षिष्यध्वे तथा कुरुतेति योजना ॥ ५१–५८ ॥ तत इति । तत् प्रसिद्धम् वानरश्रेष्ठैरानीतं तज्जलं नदीसागराणां जलम् । श्रेष्ठाय पुरोहिताय वसिष्ठाय ॥ ५९ ॥ तत इति । प्रयतः यत्नवान् । रत्नमये पीठे रत्नसिंहासने सहसीतं रामं न्यवेशयत ॥ ६० ॥ वसिष्ठ इत्यादिश्लोकद्वयमेकं वाक्यम् । वसिष्ठादयः प्रसन्नेन निर्मलेन सकलवेदोक्तमन्त्राभिमन्त्रणादतिपवित्रेण सुगन्धिना सलिलेन नरव्याघ्रं श्रीराममभ्यषिञ्चन्निति सम्बन्धः ॥ ६१–६२ ॥

ऋत्विग्भिरिति । ते वसिष्ठादयः ऋत्विगादिभिः सहाभ्यषिञ्चन्निति योजना ॥ ६३ ॥ सर्वौषधिरसैरित्यत्रापि अभ्यषिञ्चंस्ते इत्यनुषज्यते ॥ ६४॥ ६५॥ मालामिति । शतपुष्करां शतपद्माम् ॥ ६६ ॥ सर्वेति । सर्वरत्नैः नवरत्नैः समायुक्तम्, मणिरत्नेन मणिश्रेष्ठेन नायकेन मध्ये विराजन्तम् मुक्ताहारं मुक्ताप्रचुरहारं ददौ । वायुरित्यनुषज्यते ॥ ६७ ॥ ६८ ॥ पूर्वं रामविश्लेषे "अपि वृक्षाः परिम्लानाः" इत्युक्तावस्थं वस्तुजातं रामसंश्लेषे तादृगवस्थां

ऋत्विग्भिर्ब्राह्मणैः पूर्वं कन्याभिर्मन्त्रिभिस्तथा । योधैश्चैवाभ्यषिञ्चंस्ते सम्प्रहृष्टाः सनैगमैः ॥ ६३ ॥ सर्वौषधिरसै र्दिव्यैर्दैवतैर्नभसि स्थितैः । चतुर्भिर्लोकपालैश्च सर्वैर्देवैश्च सङ्गतैः ॥६४॥ [ब्रह्मणा निर्मितं पूर्वं किरीटं रत्नशोभितम् । अभिषिक्तः पुरा येन मनुस्तं दीप्ततेजसम् ॥ तस्यान्ववाये राजानः क्रमाद्येनाभिषेचिताः । सभायां हेमक्लृप्तायां शोभितायां महाजनैः ॥ रत्नैर्नानाविधैश्चैव चित्रितायां सुशोभनैः । नानारत्नमये पीठे कल्पयित्वा यथाविधि ॥ किरीटेन ततः पश्चाद्वसिष्ठेन महात्मना । ऋत्विग्भिर्भूषणैश्चैव समयोक्ष्यत राघवः ॥ ] छत्रं तु तस्य जग्राह शत्रुघ्नः पाण्डुरं शुभम् । श्वेतं च वालव्यजनं सुग्रीवो वानरेश्वरः ॥* अपरं चन्द्रसङ्काशं राक्षसेन्द्रो विभीषणः ॥ ६५ ॥ मालां ज्वलन्तीं वपुषा काञ्चनीं शतपुष्कराम् । राघवाय ददौ वायुर्वासवेन प्रचोदितः ॥ ६६ ॥ सर्वरत्नसमायुक्तं मणिरत्नविभूषितम् । मुक्ताहारं नरेन्द्राय ददौ शक्रप्रचोदितः ॥ ६७ ॥ प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः । अभिषेके तदर्हस्य तदा रामस्य धीमतः ॥ ६८ ॥ भूमिः सस्यवती चैव फलवन्तश्च पादपाः । गन्धवन्ति च पुष्पाणि बभूवू राघवोत्सवे ॥ ६९ ॥

विहाय प्रहृष्टतममभूदित्याह–भूमिरिति ॥ ६९ ॥ रामानु०–पूर्वं रामविश्लेषे "विषये ते महाराज रामव्यसनकर्शिताः । अपि वृक्षाः परिम्लानाः सपुष्पांकुरकोरकाः । जलजानि च पुष्पाणि माल्यानि स्थलजानि च ॥" इत्युक्तावस्थापन्नं वस्तुजातं रामसंश्लेषे तादृशीमवस्थां विहाय प्रहृष्टतममभूदितीममर्थं दर्शयति–भूमिः सस्यवतीति ॥ ६९ ॥

---

* अपरं चन्द्रसङ्काशं वालव्यजनमुत्तमम् । हृष्टो रामस्य जग्राह राक्षसेन्द्रो विभीषणः ॥ इति पाठान्तरम् ।

सहस्रशतमिति । धेनूनां नवप्रसूतिकानाम् । "धेनुः स्यान्नवसूतिका" इत्यमरः । पूर्वं हिरण्यदानादेः पूर्वम् । सुग्रीवादिभ्यः पूर्वं वा ॥ ७०॥७१ ॥ अर्क रश्मीति । मणिविग्रहां मणिप्रचुराम् ॥७२॥ वैडूर्येति । धृतिमान् प्रीतिमान् ॥७३॥ मणिप्रवरेति । सीतायै प्रददौ हनुमते दातव्यमित्याशयेन ददौ ॥७४॥

सहस्रशतमश्वानां धेनूनां च गवां तथा । ददौ शतं वृषान् पूर्वं द्विजेभ्यो मनुजर्षभः ॥७०॥ त्रिंशत्कोटीर्हिरण्यस्य ब्राह्मणेभ्यो ददौ पुनः । नानाभरणवस्त्राणि महार्हाणि च राघवः ॥७१॥ अर्करश्मिप्रतीकाशां काञ्चनीं मणिविग्रहाम् । सुग्रीवाय स्रजं दिव्यां प्रायच्छन्मनुजर्षभः ॥७२॥ वैडूर्यमणिचित्रे च वज्ररत्नविभूषिते । वालिपुत्राय धृतिमानङ्गदायाङ्गदे ददौ ॥७३॥ मणिप्रवरजुष्टं च मुक्ताहारमनुत्तमम् । सीतायै प्रददौ रामश्चन्द्ररश्मिसमप्रभम् ॥७४॥ अरजे वाससी दिव्ये शुभान्याभरणानि च । अवेक्षमाणा वैदेही प्रददौ वायुसूनवे ॥ ७५ ॥ अवमुच्यात्मनः कण्ठाद्धारं जनकनन्दिनी । अवैक्षत हरीन् सर्वान् भर्तारं च मुहुर्मुहुः ॥ ७६ ॥ तामिङ्गितज्ञः सम्प्रेक्ष्य बभाषे जनकात्मजाम् । प्रदेहि सुभगे हारं यस्य तुष्टाऽसि भामिनि । पौरुषं विक्रमो बुद्धिर्यस्मिन्नेतानि सर्वशः ॥ ७७ ॥ ददौ सा वायुपुत्राय तं हारमसितेक्षणा । हनुमांस्तेन हारेण शुशुभे वानरर्षभः । चन्द्रांशुचयगौरेण श्वेताभ्रेण यथाऽचलः ॥ ७८ ॥ ततो द्विविदमैन्दाभ्यां नीलाय च परन्तपः । सर्वान् कामगुणान् वीक्ष्य प्रददौ वसुधाधिपः ॥ ७९ ॥

अरजे इति । अरजे निर्मले । अकारान्तत्वमार्षम् । अवेक्षमाणा, भर्तारमिति शेषः । स्त्रियाः स्वातन्त्र्याभावात् भर्त्रनुज्ञां काङ्क्षितवतीति भावः ॥ ७५ ॥ रामानु०—अरजे इति । अवेक्षमाणो वैदेहीं प्रददौ वायुसूनवे इति पाठः ॥ ७५ ॥ अवमुच्येति । हारं रामदत्तम् । सदसि मह्यं हारप्रदानं कस्मैचित् पारितोषिकतया दापयितुमिति निश्चित्य अयं हारः एषु कस्मै देय इत्याशयेनावैक्षतेत्यर्थः ॥ ७६ ॥ तामिङ्गितज्ञ इत्यादिसार्धश्लोक एकान्वयः । प्रदेहीति । यस्य यस्मिन् । पौरुषं बलं समुद्रलङ्घनेन । विक्रमो लङ्कादहनेन । बुद्धिः अशोकवनिकाप्रवेशेन । सर्वशः सर्वाणि, यस्मिन् सन्तीति यस्य सन्तुष्टाऽसि तस्मै देहीति योजना । अन्यथा अन्येषां निन्दोक्तिरेव स्यात् ॥ ७७ ॥ ७८ ॥ तत इति । कामगुणान् काम्यन्त इति कामाः प्रार्थनीयाः गुणाः येषां ते तान्

सहस्रशतमिति । धेनूनां नवप्रसूतानाम् " धेनुस्स्यान्नवसूतिका " इत्यमरः ॥ ७०-७८ ॥ ततो द्विविदेति । कामगुणाः काम्यन्त इति कामाः, गुणा अर्थनीयाः

आभरणादिवस्तुविशेषान् ॥ ७९ ॥ ८० ॥ विभीषणोऽथेति । अत्र सम्भावितपरिगणने प्रथमं कीर्तनाल्लब्ध्वा कुलधनमित्यनुवादाच्च आदावेव विभीषणः सम्भावित इति बोध्यम् ॥ ८१–८३ ॥ रामानु०–विभीषणोऽथ सुग्रीव इति । संभावितानुवादसमये विभीषणस्य प्रथमोपादानात् सुग्रीवात्पूर्वमेव विभीषणः संभावित इत्यव

सर्ववानरवृद्धाश्च ये चान्ये वानरेश्वराः । वासोभिर्भूषणैश्चैव यथार्हं प्रतिपूजिताः ॥ ८० ॥ विभीषणोऽथ सुग्रीवो हनुमान् जाम्बवांस्तथा । सर्ववानरमुख्याश्च रामेणाक्लिष्टकर्मणा ॥ ८१ ॥ यथार्हं पूजिताः सर्वैः कामै रत्नैश्च पुष्कलैः । प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम् ॥ ८२ ॥ नत्वा सर्वे महात्मानं ततस्ते प्लवगर्षभाः । विसृष्टाः पार्थिवेन्द्रेण किष्किन्धामभ्युपागमन् ॥ ८३ ॥ सुग्रीवो वानरश्रेष्ठो दृष्ट्वा रामाभिषेचनम्* ॥ ८४ ॥ लब्ध्वा कुलधनं राजा लङ्कां प्रायाद्विभीषणः ॥ ८५ ॥ स राज्यमखिलं शासन्निहतारिर्महायशाः । राघवः परमोदारः शशास परया मुदा ॥ ८६ ॥ उवाच लक्ष्मणं रामो धर्मज्ञं धर्मवत्सलः ॥ ८७ ॥

गम्यते ॥ ८१ ॥ सुग्रीव इत्यर्धम् । अत्रापि वचनव्यत्ययेन किष्किन्धामभ्युपागमदित्यनुषज्यते ॥८४॥ लब्ध्वेत्यर्धम् । कुलधनम् इक्ष्वाकुकुलधनम्, श्रीरङ्गविमानमिति सम्प्रदायः ॥८५॥ रामानु०–कुलधनम् इक्ष्वाकुकुलधनम्, श्रीरङ्गसंज्ञकं विमानमिति सन्तो वदन्ति । विभीषणकुलक्रमागतं लङ्काराज्यमिति केचित् ॥ ८५ ॥ स इति । गुणाः एतान् ॥ ७९–८४ ॥ लब्ध्वा कुलधनं राजा लङ्कां प्रायाद्विभीषणः इत्यत्र कुलधनशब्देन पूर्वमेव रामाभ्यनुज्ञातं राक्षसकुलधनं लङ्काराज्यं लब्ध्वेति ऋषिणाऽनुवादः क्रियते। केचित्तु–लब्ध्वा कुलधनमित्यत्र कुलधनशब्दस्यार्थम् इक्ष्वाकुकुलदैवतं श्रीरङ्गविमानमिति वर्णयन्ति । तन्नोपपद्यते। कुतः ? कुलधनमित्यत्र इक्ष्वाकुकुलधनस्याश्रूयमाणत्वात् । अवतारसमाप्तिसमये विभीषणाय इक्ष्वाकुकुलदैवतरङ्गविमानस्योत्तरश्रीरामायणे वक्ष्यमाणत्वाच्च । तथाहि विभीषणं प्रति श्रीरामवचनम् “ किञ्चान्यद्वक्तुमिच्छामि राक्षसेन्द्र महाबल । आराधय जगन्नाथमिक्ष्वाकुकुलदैवतम् ॥ ” इति । पाद्मपुराणे चावतारसमाप्तिसमये समागतं विभीषणं प्रति श्रीरामवचनम्–“ यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी । तावद्रामस्य राज्यस्थः काले मम पदं व्रज ॥ इत्युक्त्वा प्रददौ तस्मै स्वविश्लेषासहिष्णवे । श्रीरङ्गशायिनं स्वार्च्यमिक्ष्वाकुकुलदैवतम् । रङ्गं विमानमादाय लङ्कां प्रायाद्विभीषणः ॥” इत्यवतारसमाप्तिकाले श्रीरङ्गविमानदानश्रवणात् । कुलधनशब्देन राक्षसकुलधनं लङ्काराज्यमेवोक्तमिति वेदितव्यमिति ॥ ८५ ॥ स इति । शासन दुष्टनिग्रहं कुर्वन् शशास पालयामास, धातूनामनेकार्थत्वात् ॥ ८६ ॥ ८७ ॥

* इतः परम्–पूजितश्चैव रामेण किष्किन्धां प्राविशत्पुरीम् । रामेण सर्वकामैश्च यथार्हं प्रतिपूजितः ॥ इति पाठभेदः केषुचित् पुस्तकेषु दृश्यते ।

शासन् दुष्टनिग्रहं कुर्वन् । शशास बुभुज इत्यर्थः । धातूनामनेकार्थत्वात् ॥ ८६ ॥ ८७ ॥ "लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुन्धराम्" इति पूर्वाभिषेकारम्भे भरतासन्निधाने प्रतिज्ञानात् 'रामो द्विर्नाभिभाषते' इति नियमाल्लक्ष्मणमेव यौवराज्ये नियुङ्क्ते–आतिष्ठेति । पूर्वराजैः मन्वादिभिः अध्युषिताम् आतिष्ठ पालय । पितृभिः पितृपितामहप्रपितामहैः, या धृता तां धुरं मया तुल्यं यथा भवति तथा यौवराज्ये स्थित्वा उद्वहस्व ॥ ८८ ॥ सर्वेति ।

आतिष्ठ धर्मज्ञ मया सहेमां गां पूर्वराजाध्युषितां बलेन । तुल्यं मया त्वं पितृभिर्धृता या तां यौवराज्ये धुरमुद्वहस्व ॥८८॥ सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम् । नियुज्यमानोऽपि च यौवराज्ये ततोऽभ्यषिञ्चद्भरतं महात्मा ॥ ८९ ॥ पौण्डरीकाश्वमेधाभ्यां वाजपेयेन चासकृत् । अन्यैश्च विविधैर्यज्ञैरयजत् पार्थिवर्षभः ॥९०॥ राज्यं दश सहस्राणि प्राप्य वर्षाणि राघवः । शताश्वमेधानाजह्रे सदश्वान् भूरिदक्षिणान् ॥९१॥ आजानुलम्बबाहुः स महास्कन्धः प्रतापवान् । लक्ष्मणानुचरो रामः पृथिवीमन्वपालयत् ॥ ९२ ॥ राघवश्चापि धर्मात्मा प्राप्य राज्यमनुत्तमम् । ईजे बहुविधैर्यज्ञैः ससुहृज्ज्ञातिबान्धवः ॥९३॥ न पर्यदेवन् विधवा न च व्यालकृतं भयम् । न व्याधिजं भयं वापि रामे राज्यं प्रशासति ॥ ९४ ॥ निर्दस्युरभवल्लोको नानर्थः कञ्चिदस्पृशत् । न च स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥९५॥ सर्वं मुदितमेवासीत् सर्वो धर्मपरोऽभवत् । राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम् ॥ ९६ ॥

यौवराज्ये नियुज्यमानः यौवराज्यमङ्गीकुरुष्वेति नियम्यमानः । पर्यनुनीयमानः पुनः पुनरनुनयेन पृच्छ्यमानः सन्नपि च । सर्वात्मना सर्वप्रकारेणापि । यदा योगं सम्मतिम् नोपैति, स्वशेषत्वविरुद्धत्वज्ञानाज्ज्येष्ठे भरते विद्यमाने स्वस्य तदनुचितत्वज्ञानाच्चेति भावः । तदा भरतम् अत्यन्तपरतन्त्रम्, यौवराज्यं अभ्यषिञ्चत् ॥ ८९ ॥ पौण्डरीकेति । अत्रोत्तरक्रत्वारम्भोक्तिर्वनवासात्परमश्वमेधाधानपूर्वकं पूर्वक्रतवोऽपि रामेण कृता इत्यस्योपलक्षणम् ॥ ९०–९२ ॥ राघव इति । चापीति निपातसमुदायोऽवधारणार्थोऽभिन्नक्रमः । ससुहृज्ज्ञातिबान्धव एवेत्यर्थः ॥ ९३ ॥ न पर्यदेवन्निति । न पर्यदेवयन्नित्यर्थः ॥ ९४ ॥ ९५ ॥ सर्वमिति । राममेवेति । अन्योन्यनिर्मूलनवैरे सत्यपि राममुखं म्लानं भविष्यतीति मत्वा परस्परं नाभ्यहिंसन् । परमधार्मिकं राम

बलेन पूर्वराजाध्युषितां पूर्वे राजानो मन्वादयः तैरध्युषिता इमाम् गां पृथिवीं पितृभिः पितृपितामहप्रपितामहैः । धृता या मया सह तुल्यं यथा भवति तथा यौवराज्ये धुरमुद्वहस्वेति सम्बन्धः । आत्मना सह वनवासदुःखानुभवात् रामो सह [illegible] लक्ष्मणं प्रति यौवराज्यप्रार्थनेति भावः ॥ ८८ ॥ सर्वात्मना पर्यनुनीयमानः

मेवानुचिन्तयन्तोऽन्योन्यवैरं प्रजहुरित्यर्थः ॥ ९६–१०२ ॥ अथ रामायणपठने फलं दर्शयति–धन्यमित्यादिसार्धश्लोकमेकं वाक्यम् । आर्षम् ऋषिः वेदः तत्संबन्धि, वेदोपबृंहणमिति यावत् । पुरा अवतारात्पूर्वम् । रामोत्तरतापनीयमूलत्वेन पुरातनमिति वाऽर्थः । यद्वा पुरा सर्वकविभ्यः पूर्वम्, न त्ववतारात् पूर्वमित्यर्थः । "प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः । चकार चरितं कृत्स्नं विचित्रपदमात्मवान् ॥ " इति रामे प्राप्तराज्ये सति चकारेत्युपक्रमात्,

आसन् वर्षसहस्राणि तथा पुत्रसहस्रिणः । निरामया विशोकाश्च रामे राज्यं प्रशासति ॥ ९७ ॥ रामो रामो राम इति प्रजानामभवन् कथाः । रामभूतं जगदभूद्रामे राज्यं प्रशासति ॥ ९८ ॥ नित्यपुष्पा नित्यफलास्तरवः स्कन्धविस्तृताः । काले वर्षी च पर्जन्यः सुखस्पर्शश्च मारुतः ॥९९॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा लोभविवर्जिताः । स्वकर्मसु प्रवर्तन्ते तुष्टाः स्वैरेव कर्मभिः ॥ १०० ॥ आसन् प्रजा धर्मरता रामे शासति नानृताः । सर्वे लक्षणसम्पन्नाः सर्वे धर्मपरायणाः ॥ १०१ ॥ दश वर्षसहस्राणि दश वर्षशतानि च । भ्रातृभिः सहितः श्रीमान् रामो राज्यमकारयत् ॥१०२॥ धन्यं यशस्यमायुष्यं राज्ञां च विजयावहम् । आदिकाव्यमिदं त्वार्षं पुरा वाल्मीकिना कृतम् । यः पठेच्छृणुयाल्लोके नरः पापाद्विमुच्यते ॥ १०३ ॥ पुत्रकामस्तु पुत्रान् वै धनकामो धनानि च । लभते मनुजो लोके श्रुत्वा रामाभिषेचनम् ॥ १०४ ॥ महीं विजयते राजा रिपूंश्चाप्यधितिष्ठति । राघवेण यथा माता सुमित्रा लक्ष्मणेन च ॥ १०५ ॥

'रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान्' इति राज्यप्राप्तिपर्यन्तं भूततया निर्दिश्य ततः परं 'ब्रह्मलोकं प्रयास्यति' इत्येतदन्तं भविष्यत्तया निर्देशाच्च, 'कोन्वस्मिन् साम्प्रतं लोके' इत्यादौ साम्प्रतशब्दप्रयोगात्, 'रामभूतं जगदभूद्रामे राज्यं प्रशासति' इति सकललोकविदितरामविषयप्रश्नानुपपत्तेः सर्वथा परिहृतत्वात् । इतिहासं पुरातनमित्यस्य आदिकाव्यत्वात्सङ्गतेरन्येषामपि विरोधाभासानां सुपरिहार्यत्वाच्चायमेवार्थः ॥१०३॥ पुत्रकामस्त्वित्यादिसार्ध

इत्यनेन ज्येष्ठे भरते वर्तमाने अहं यौवराज्यानर्ह इति लक्ष्मणेन निषेधे कृते रामेण पुनःपुनरनुनयनं कृतमित्यवगम्यते ॥ ८९–१०२ ॥ धन्यमिति । आर्षम् ऋषिर्वेदः तत्सम्बन्धि, वेदोपबृंहितमिति यावत् ॥ १०३ ॥ पुत्रकाम इति । रामाभिषेचनं रामाभिषेकावधिकमित्यर्थः ॥ १०४–१०९ ॥

श्लोकद्वयमेकं वाक्यम् । रामाभिषेचनं रामाभिषेकावधिकम् । अधितिष्ठति आक्रम्य तिष्ठतीत्यर्थः । माता कौसल्या । जीवपुत्राः, भवन्तीति शेषः ॥ १०४–१०७ ॥ शृणोति य इत्यादिश्लोकद्वयमेकान्वयम् । दुर्गाणि दारिद्र्यादीनि ॥ १०८ ॥ १०९ ॥ श्रवणेनेति । विनायकाः विघ्नकराः ग्रहाः

भरतेनेव कैकेयी जीवपुत्रास्तथा स्त्रियः । [ भविष्यन्ति सदानन्दाः पुत्रपौत्रसमन्विताः] ॥ १०६॥ श्रुत्वा रामायणमिदं दीर्घमायुश्च विन्दति । रामस्य विजयं चैव सर्वमक्लिष्टकर्मणः ॥ १०७॥ शृणोति य इदं काव्यमार्षं वाल्मीकिना कृतम् । श्रद्दधानो जितक्रोधो दुर्गाण्यतितरत्यसौ ॥ १०८॥ समागमं प्रवासान्ते लभते चापि बान्धवैः । प्रार्थितांश्च वरान् सर्वान् प्राप्नुयादिह राघवात् ॥ १०९ ॥ श्रवणेन सुराः सर्वे प्रीयन्ते सम्प्रशृण्वताम् । विनायकाश्च शाम्यन्ति गृहे तिष्ठन्ति यस्य व ॥ ११० ॥ विजयेत महीं राजा प्रवासी स्वस्तिमान् व्रजेत् । स्त्रियो रजस्वलाः श्रुत्वा पुत्रान् सूयुरनुत्तमान् ॥ १११ ॥ पूजयंश्च पठंश्चेममितिहासं पुरातनम् । सर्वपापात् प्रमुच्येत दीर्घमायुरवाप्नुयात् ॥ ११२॥ प्रणम्य शिरसा नित्यं श्रोतव्यं क्षत्रियैर्द्विजात् । ऐश्वर्यं पुत्रलाभश्च भविष्यति न संशयः ॥ ११३ ॥ रामायणमिदं कृत्स्नं शृण्वतः पठतः सदा । प्रीयते सततं रामः स हि विष्णुः सनातनः ॥ ११४॥ आदिदेवो महाबाहुर्हरिर्नारायणः प्रभुः । [ साक्षाद्रामो रघुश्रेष्ठः शेषो लक्ष्मण उच्यते ] ॥ ११५ ॥ कुटुम्बवृद्धिं धनधान्यवृद्धिं स्त्रियश्च मुख्याः सुखमुत्तमं च । श्रुत्वा शुभं काव्यमिदं महार्थं प्राप्नोति सर्वां भुवि चार्थसिद्धिम् ॥ ११६ ॥ आयुष्यमारोग्यकरं यशस्यं सौभ्रातृकं बुद्धिकरं सुखं च । श्रोतव्यमेतन्नियमेन सद्भिराख्यानमोजस्करमृद्धिकामैः ॥ ११७ ॥

॥ ११०–११२ ॥ रामानु०–श्रवणेनेति । संप्रशृण्वतामिति पाठः । विनायकाः विघ्नकारिणो भूतविशेषाः ॥ ११० ॥ ब्राह्मणवत् क्षत्रियस्यापि पाठप्राप्तौ नियममाह–प्रणम्येति । वैश्यादीनां कैमुतिकसिद्धं ब्राह्मणात् प्रणमनपूर्वकं श्रवणम् ॥ ११३–११६ ॥ आयुष्यमिति । सौभ्रातृकं सौभ्रातृकरम् । सुखं



श्रवणेनेति । संप्रशृण्वतां संक्षिप्य शृण्वताम् । विनायकाः विघ्नकारिणो भूतविशेषाः ॥ ११०–११९ ॥

सुखकरम् ॥ ११७-११९ ॥ भक्त्येति । संहितातुल्यत्वात् संहितेति व्यपदेशः ॥ १२० ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकात्रिंशदुत्तरशततमः सर्गः ॥ १३१ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

एवमेतत् पुरावृत्तमाख्यानं भद्रमस्तु वः । प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ ११८ ॥
देवाश्च सर्वे तुष्यन्ति ग्रहणाच्छ्रवणात्तथा । रामायणस्य श्रवणात्तुष्यन्ति पितरस्तथा ॥ ११९ ॥
भक्त्या रामस्य ये चेमां संहितामृषिणा कृताम् । लेखयन्तीह च नरास्तेषां वासस्त्रिविष्टपे ॥१२०॥

इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशत्सहस्रिकायां संहितायां
श्रीमद्युद्धकाण्डे श्रीरामपट्टाभिषेको नाम एकत्रिंशदुत्तरशततमः सर्गः ॥ १३१ ॥

( यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत् । तत् सर्वं क्षम्यतां देव नारायण नमोऽस्तु ते ॥ )

इत्थं श्रीमच्छठारेश्वरणसरसिजद्वन्द्वसेवातिरेकादुद्भूतोद्दामबोधः कुशिकसुतकुलाम्पतेरोषधीशः ।
श्रीमान् गोविन्दराजो वरदगुरुसुतो भावनाचार्यवर्यप्रेम्णैव प्रेर्यमाणो व्यतनुत विपुलां युद्धकाण्डस्य टीकाम् ॥

श्रीमते रामानुजाय नमः ॥

---

भक्त्येति । ये ऋषिणा मुनिना कृतां रामस्य संहितां रामायणमित्यर्थः । संहितालक्षणसप्तकाण्डवत्सादृश्यादस्य संहितेति व्यपदेशः । लेखयन्ति, अन्यैरिति शेषः । चकाराल्लिखितं च ! ते महात्मानः इह लोके परमैश्वर्यसम्पन्नाः दीर्घायुषस्सर्वैः पूजिता महात्मानो भवन्तीत्यर्थः ॥ १२० ॥ ( अत्र फलश्रुतिश्लोकाः कतकव्याख्याने नोपलभ्यन्ते ॥ ) इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमन्नारायणतीर्थशिष्यश्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां युद्धकाण्डव्याख्यायाम् एकत्रिंशदुत्तरशततमस्सर्गः ॥ १३१ ॥ महेशतीर्थरचिता रामपादसमर्पिता । युद्धकाण्डस्य टीकेयं समाप्ता तत्त्वदीपिका ॥

## युद्धकाण्डं समाप्तम् ।

# ॥ इति श्रीमद्वाल्मीकिरामायणे युद्धकाण्डम् ॥

श्रीभूषणादिव्याख्याचतुष्टयालंकृतं मुनिभावप्रकाशिका—सत्यतीर्थीयादिव्याख्योद्धृतटिप्पणीसंवलितं च ।

# THE VĀLMĪKĪYA RĀMĀYAṆA

# श्रीमद्वाल्मीकीयरामायणम्

श्री-गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्य-व्याख्याचतुष्टयालङ्कृतम्

## उत्तरकाण्डम्

# श्रीमद्वाल्मीकीयरामायणम्

# THE VALMIKIYARAMAYANA

श्री गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्याव्याख्याचतुष्टयालङ्कृतं
मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृत टिप्पणी संवलितं च

# महापुराणम्

१. ब्रह्म महापुराणम्
२. पद्म महापुराणम्
३. विष्णु महापुराणम्
४. शिव महापुराणम्
५. नारदीय महापुराणम्
६. मार्कण्डेय महापुराणम्
७. अग्नि महापुराणम्
८. भागवत महापुराणम्
९. भविष्य महापुराणम्
१०. ब्रह्मवैवर्त महापुराणम्
११. लिंग महापुराणम्
१२. वाराह महापुराणम्
१३. स्कन्द महापुराणम्
१४. वामन महापुराणम्
१५. कूर्म महापुराणम्
१६. मत्स्य महापुराणम्
१७ गरुड महापुराणम्
१८. ब्रह्माण्ड महापुराणम्
१९. वायु महापुराणम्
२०. विष्णुधर्मोत्तरपुराणम्

हरिवंश पुराणम् : देवीभागवतम्
वासुकि पुराणम् : कालिका पुराणम्
कल्किपुराणम् : एकाम्रपुराणम्
सौर पुराणम् : नरसिंह पुराणम्

---

[महाभारत-नीलकंठी टीका सहित]

क्षेमराज श्रीकृष्णदासेन सम्पादितस्य मुम्बई श्री वेङ्कटेश्वरस्टीम मुद्रणालयेन प्रकाशितस्य पुनर्मुद्रणम्

# श्रीमद्वाल्मीकीयरामायणम्

# THE VALMIKIYȦRAMAYANA

[श्री-गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्यव्याख्या चतुष्टयालङ्कृतं
मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृत टिप्पणी संवलितम् च]

षष्ठम् खण्ड :: उत्तरकाण्डम्

NAG PUBLISHERS

NAG PUBLISHERS

11A/U. A. Jawahar Nagar, Delhi-7 (India)

**NAG PUBLISHERS**

(i) 11A/U. A. (Post Office Building), Jawahar Nagar, Delhi-110007

(ii) 8A/U.A. 3, Jawahar Nagar, Delhi-110007

(iii) Jalalpur Mafi (Chunar-Mirzapur) U. P.

I S B N 81-7081-232-1

1990

Price : Rs. 1800.00 (For [illegible] vols. set)



**PRINTED IN INDIA**

Published by Nag Sharan Singh for Nag Publishers 11A/U.A., Jawahar Nagar, Delhi-110007 and printed at New Gian offset Printers Delhi

# अथ श्रीमद्वाल्मीकिरामायणे उत्तरकाण्डम् ॥

श्रीभूषणादिव्याख्याचतुष्टयालंकृतं तिलक-सत्यतीर्थीयादिव्याख्योद्धृतटिप्पणीसंवलितं च ॥

॥ श्रीमते रामानुजाय नमः ॥ श्रीमद्वत्सकुलप्रदीपशठजिन्मादारविन्दद्वयीतोनाल्पधसमस्तशास्त्रविततिगोविन्दराजाह्वयः । श्रीरामायणभूषणेऽत्र मुकुटीभूतां परामुत्तरे ग्रन्थे व्याकृतिमातनोति विदुषां प्रीतिः पुनर्वर्धताम् ॥ प्राप्तेत्यादि । राक्षसानां वधे कृते सति प्राप्तराज्यस्य रामस्य । अनादरे षष्ठी । प्राप्तराज्यं राममनादृत्य राघवं लक्ष्मणं प्रतिनन्दितुं सर्वे ऋषय आजग्मुः । प्राधान्येनेन्द्रजिद्वधं प्रशंसिष्यन्ति रामस्य समीप इति शेष

श्रीमद्रामचन्द्रपरब्रह्मणे नमः ॥ प्राप्तराज्यस्य रामस्य राक्षसानां वधे कृते । आजग्मुर्ऋषयः सर्वे राघवं प्रतिनन्दितुम् ॥ १ ॥ कौशिकोऽथ यवक्रीतो गार्ग्यो गालव एव च । कण्वो मेधातिथेः पुत्रः पूर्वस्यां दिशि ये श्रिताः ॥२॥ स्वस्त्यात्रेयोऽथ भगवान्नमुचिः प्रमुचिस्तथा । [ अगस्त्योऽत्रिश्च भगवान् सुमुखो विमुखस्तथा ॥ ] आजग्मुस्ते सहागस्त्या ये स्थिता दक्षिणां दिशम् ॥३॥ नृषद्गुः कवषो धौम्यो रौद्रेयश्च महानृषिः । तेऽप्याजग्मुः सशिष्या वै ये श्रिताः पश्चिमां दिशम् ॥४॥ वसिष्ठः कश्यपोऽथात्रिर्विश्वामित्रः सगौतमः । जमदग्निर्भरद्वाजस्तेऽपि सप्तर्षयस्तथा ॥ ५ ॥ उदीच्यां दिशि सप्तैते नित्यमेव निवासिनः ॥ ६ ॥

इत्येके । अत्र प्रेति गायत्र्या एकविंशाक्षरम् ॥ १॥ २ ॥ स्वस्तीति । स्वस्तिकरः आत्रेयः ॥ ३ ॥४॥ वसिष्ठ इति । उक्ता वसिष्ठादयः सप्तेत्यर्थः । ननु वसिष्ठः अयोध्यायां पुरोहिततया नित्यं वर्तमानः कथमिदानीमुदीच्या दिशः समागत इत्युच्यते ? सत्यम् । यथाऽगस्त्यो ज्योतिर्मण्डलस्थोऽपि भुवि तपःसमार्जनाय शरीरान्तरे स्थित आगतस्तथा वसिष्ठोऽपि ज्योतिर्मण्डलस्थः सप्तर्षिभिः समागत इति बोध्यम् । तदागमनदशायां नगरस्थो वसिष्ठो

महेश्वरतीर्थकृततत्त्वदीपिका ॥

अथ रावणस्य ब्रह्मानुग्रहजबलवैभवप्रतिपादनद्वारा तज्जेतृत्वेन भगवति पराक्रमातिशयं प्रतिपादयितुं त्वद्दत्तवैभवं त्वयैवोपसंहृतमिति भगवन्महिमानं च स्तोतुमृषय आगता इत्याह—प्राप्तेति । राक्षसानां वधे कृते अनन्तरं प्राप्तराज्यस्य प्राप्तराज्याभिषेकस्य रामस्य समीपं मुनय आजग्मुः । किमर्थम् ? राघवं प्रतिनन्दितुं तद्वैभवमभिष्टोतुमित्यर्थः ॥ १ ॥ ( इतः परं सम्पूर्णव्याख्या नोपलभ्यते ॥ )

नायातः अत एव न परिगणितः । कौशिकः कुशिकवंश्यो विश्वामित्रादन्यः ॥ ५ ॥ ६ ॥ संप्राप्येति । प्रतिहारो द्वाःस्थः । "द्वारि द्वाःस्थे प्रतीहारः" इत्यमरः ॥७–१२॥ तानिति । अभिवाद्येति । समुदायं प्रतीति शेषः ॥१३–१६॥ कुशलमिति । सर्वत्र पुरकोशादिषु । दिष्ट्या दैवात् । हतशात्रवं

सम्प्राप्य ते महात्मानो राघवस्य निवेशनम् । विष्ठिताः प्रतिहारार्थं हुताशनसमप्रभाः । वेदवेदाङ्गविदुषो नाना शास्त्रविशारदाः ॥७॥ द्वास्स्थं प्रोवाच धर्मात्मा ह्यगस्त्यो मुनिसत्तमः । निवेद्यतां दाशरथेर्ऋषीनस्मान् समागतान् ॥ ८ ॥ प्रतीहारस्ततस्तूर्णमगस्त्यवचनाद्द्रुतम् । समीपं राघवस्याशु प्रविवेश महात्मनः ॥ ९ ॥ नयेङ्गितज्ञः सद्वृत्तो दक्षो धैर्यसमन्वितः । स रामं दृश्य सहसा पूर्णचन्द्रसमप्रभम् ॥ १० ॥ अगस्त्यं कथयामास सम्प्राप्त मृषिभिः सह ॥११॥ श्रुत्वा प्राप्तान् मुनींस्तांस्तु बालसूर्यसमप्रभान् । प्रत्युवाच ततो द्वास्स्थं प्रवेशय यथासुखम् ॥१२॥ तान् सम्प्राप्तान् मुनीन् दृष्ट्वा प्रत्युत्थाय कृताञ्जलिः । पाद्यार्घ्यादिभिरानर्च्य गां निवेद्य च सादरम् । रामोऽभिवाद्य प्रयत आसनान्यादिदेश ह ॥ १३ ॥ तेषु काञ्चनचित्रेषु महत्सु च वरेषु च ॥ १४ ॥ कुशान्तर्धान दत्तेषु मृगचर्मयुतेषु च । यथार्हमुपविष्टास्ते आसनेष्वृषिपुङ्गवाः ॥ १५ ॥ रामेण कुशलं पृष्टाः सशिष्याः सपुरो गमाः । महर्षयो वेदविदो रामं वचनमब्रुवन् ॥१६॥ कुशलं नो महाबाहो सर्वत्र रघुनन्दन । त्वां तु दिष्ट्या कुश लिनं पश्यामो हतशात्रवम् ॥१७॥ दिष्ट्या त्वया हतो राजन् रावणो लोकरावणः । न हि भारः स ते राम रावणः पुत्रपौत्रवान् ॥१८॥ सधनुस्त्वं हि लोकांस्त्रीन् विजयेथा न संशयः । दिष्ट्या त्वया हतो राम रावणो राक्षसेश्वरः ॥ १९ ॥ दिष्ट्या विजयिनं त्वाऽद्य पश्यामः सह सीतया । लक्ष्मणेन च धर्मात्मन् भ्रात्रा त्वद्धितकारिणा ॥२०॥

हतशत्रुम् ॥१७॥ दिष्ट्येति । रावणस्ते न हि भारः तद्वधस्ते ईषत्कर्मेत्यर्थः ॥१८॥ तदेव दर्शयति–सधनुरित्यादि । विजयेथा इति "विपराभ्यां जेः"

इत्यात्मनेपदम् ॥ १९–२१ ॥ यस्येति । प्रमाणात् शरीरपरिमाणात् ॥ २२–२६ ॥ दिष्ट्या त्वमिति । द्वन्द्वयुद्धमुपागतः सन् विजयं प्राप्तवा

भ्रातृभिर्भ्रातृसहितं पश्यामोऽद्य वयं नृप। दिष्ट्या प्रहस्तो विकटो विरूपाक्षो महोदरः । अकम्पनश्च दुर्धर्षो निहतास्ते निशाचराः ॥ २१ ॥ यस्य प्रमाणाद्विपुलं प्रमाणं नेह विद्यते । दिष्ट्या ते समरे राम कुम्भकर्णो निपातितः ॥२२॥ त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ। दिष्ट्या ते निहता राम महावीर्या निशाचराः॥२३॥ कुम्भश्चैव निकुम्भश्च राक्षसौ भीमदर्शनौ । दिष्ट्या तौ निहतौ राम कुम्भकर्णसुतौ मृधे ॥ २४ ॥ युद्धोन्मत्तश्च मत्तश्च कालान्तकयमोपमौ। यज्ञकोपश्च बलवान् धूम्राक्षो नाम राक्षसः ॥ २५ ॥ कुर्वन्तः कदनं घोरमेते शस्त्रास्त्र पारगाः । अन्तकप्रतिमैर्बाणैर्दिष्ट्या विनिहतास्त्वया ॥ २६ ॥ दिष्ट्या त्वं राक्षसेन्द्रेण द्वन्द्वयुद्धमुपागतः । देवतानामवध्येन विजयं प्राप्तवानसि ॥ २७॥ सङ्ख्ये तस्य न किंचित्तु रावणस्य पराभवः । द्वन्द्वयुद्धमनुप्राप्तो दिष्ट्या ते रावणिर्हतः ॥ २८ ॥ दिष्ट्या तस्य महाबाहो कालस्येवाभिधावतः । मुक्तः सुररिपोर्वीर प्राप्तश्च विजयस्त्वया ॥ २९ ॥ अभिनन्दाम ते सर्वे संश्रुत्येन्द्रजितो वधम् । सोऽवध्यः सर्वभूतानां महामायाधरो युधि ॥ ३० ॥

नसीत्यन्वयः ॥ २७ ॥ २८ ॥ दिष्ट्या तस्येति। मुक्तः, तस्य रावणेः, शरबन्धादिति शेषः ॥ २९–३२ ॥

स०–संख्ये युद्धे । तस्य रावणस्य । पराभवः परमत्यन्तम् अभवः असत्ता, मरणमिति यावत् । तत् तन्मारणम् । तव न किंचित् महत्त्वसम्पादकम् । महीयसस्तव पुरतः कियानयं यातुधान इति न चित्रमिति भावः । तर्हि किं चित्रमित्यतस्तदुक्तिंकुर्वन्ति–द्वन्द्वयुद्धमिति । ते दिष्ट्या आदिष्टया आज्ञया द्वन्द्वयुद्धमनुप्राप्तः रावणिः इन्द्रजित् । हतः, लक्ष्मणेनेति शेषः । ते त्वया हतः घातित इति वा ॥ २८ ॥ अभिधावतः कालस्य मृत्योरिव तस्य सुररिपोः सामान्यतः सुमानसद्विषो रावणेः । असाधारणन्यायेन सुरः इन्द्रः तद्रिपोः इन्द्रजितस्सकाशान्मुक्तः लक्ष्मण इति त्वया विजयः प्राप्त इति दिष्ट्या मङ्गलमित्यर्थः । अभिधावतः कालस्य मृत्योरिव तस्य लक्ष्मणस्य सकाशात् सुररिपोः मुक्तः त्याजितः, प्राण इति शेषः । इति त्वया विजयः प्राप्त इति वा । सुररिपोः रावणस्य प्राप्तः अशन्तात् इन्द्रजिन्मुक्तः, प्राणैरिति शेषः । मुक्तः सर्वैरप्यकुमावबध इति त्यक्तः । वीरप्राप्तः विगत ईरः प्राणो येभ्यस्ते वीराः निष्प्राणाः तान् प्राप्तः । मृतस्वजनसङ्घनिविष्ट इति त्वया विजयः, अस्मदादीनामिति शेष इति वा । त्वन्मुखेन परपरिभावनेन न एवायं विजय इति भावः । इदं पद्यद्वयमभिधावतस्तस्य रावणमित्येतल्लक्ष्मणमित्यपि विचक्षणाः केचिद्व्याचक्षते ॥ २९ ॥

दत्त्वेति । अभयदक्षिणाम् अभयदानम् । देवर्षिभ्य इत्यर्थः । वर्धसि वर्धसे ॥ ३३ ॥ श्रुत्वेति । विस्मयं गत्वा, रावणिवधविषयवाक्येनेति शेषः ॥ ३४–३८ ॥ शक्यमित्यादि । यदि गुह्यं न भवति । यदि युष्माभिः वक्तुं शक्यम् । यदि मया च श्रोतुम् । तदा कथ्यताम् । अहं तु श्रोतुमिच्छामि

विस्मयस्त्वेष चास्माकं तच्छ्रुत्वेन्द्रजितं हतम् ॥ ३१ ॥ एते चान्ये च बहवो राक्षसाः कामरूपिणः । दिष्ट्या त्वया हता वीरा रघूणां कुलवर्धन ॥ ३२ ॥ दत्त्वा पुण्यामिमां वीर सौम्यामभयदक्षिणाम् । दिष्ट्या वर्धसि काकुत्स्थ जयेनामित्रकर्शन ॥ ३३ ॥ श्रुत्वा तु तेषां वचनमृषीणां भावितात्मनाम् । विस्मयं परमं गत्वा रामः प्राञ्जलिरब्रवीत् ॥ ३४ ॥ भगवन्तः कुम्भकर्णं रावणं च निशाचरम् । अतिक्रम्य महावीर्यौ किं प्रशंसथ रावणिम् ॥ ३५ ॥ महोदरं प्रहस्तं च विरूपाक्षं च राक्षसम् । मत्तोन्मत्तौ च दुर्धर्षौ देवान्तकनरान्तकौ । अतिक्रम्य महावीर्यान् किं प्रशंसथ रावणिम् ॥ ३६ ॥ अतिकायं त्रिशिरसं धूम्राक्षं च निशाचरम् । अतिक्रम्य महावीर्यान् किं प्रशंसथ रावणिम् ॥ ३७ ॥ कीदृशो वै प्रभावोऽस्य किं बलं कः पराक्रमः । केन वा कारणेनैष रावणादतिरिच्यते ॥ ३८ ॥ शक्यं यदि मया श्रोतुं न खल्वाज्ञापयामि वः । यदि गुह्यं न चेद्वक्तुं श्रोतुमिच्छामि कथ्यताम् ॥ ३९ ॥ शक्रोऽपि विजितस्तेन कथं लब्धवरश्च सः । कथं च बलवान् पुत्रो न पिता तस्य रावणः ॥ ४० ॥ कथं पितुश्चाभ्यधिको महाहवे शक्रस्य जेता हि कथं स राक्षसः । वराश्च लब्धाः कथयस्व मेऽद्य तत् पृच्छतश्चास्य मुनीन्द्र सर्वम् ॥ ४१ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे प्रथमः सर्गः ॥ १ ॥



केवलम्, न तु वक्तव्यमित्याज्ञापयामि ॥३९॥ शक्र इति । पिता रावणो न बलवान् पुत्रापेक्षयेति कथम् ? ॥ ४० ॥४१॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने प्रथमः सर्गः ॥ १ ॥

॥ १ ॥ शृण्विति । असौ रावणिः न च शत्रुभिर्वध्यः । तत्कारणं शृण्विति संबन्धः ॥ २ ॥ तावदिति । तावत् प्रथमम् । रावणस्यैव कुलादिकं यमहं ते ब्रवीमि । पश्चाद्रावणेश्चेति शेषः ॥ ३ ॥ तत्र प्रथमं कुलमाह—पुरेत्यादि । पुलस्त्यः दशप्रजापतिष्वेकः । पितामह इव पितृतुल्य इत्यर्थः ॥४॥ तदेवाह—

तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः । कुम्भयोनिर्महातेजा राममेतदुवाच ह ॥ १ ॥ शृणु राम कथावृत्तं तस्य तेजोबलं महत् । जघान शत्रून् येनासौ न च वध्यः स शत्रुभिः ॥ २ ॥ तावत्ते रावणस्येदं कुलं जन्म च राघव । वरप्रदानं च तथा तस्मै दत्तं ब्रवीमि ते ॥३॥ पुरा कृतयुगे राम प्रजापतिसुतः प्रभुः । पुलस्त्यो नाम ब्रह्मर्षिः साक्षादिव पितामहः ॥ ४ ॥ नानुकीर्त्या गुणास्तस्य धर्मतः शीलतस्तथा । प्रजापतेः पुत्र इति वक्तुं शक्यं हि नामतः ॥ ५ ॥ प्रजापतिसुतत्वेन देवानां वल्लभो हि सः । इष्टः सर्वस्य लोकस्य गुणैः शुभ्रैर्महामतिः ॥ ६ ॥ स तु धर्मप्रसङ्गेन मेरोः पार्श्वे महागिरेः । तृणबिन्द्वाश्रमं गत्वा न्यवसन्मुनिपुङ्गवः ॥ ७ ॥ तपस्तेपे स धर्मात्मा स्वाध्यायनियतेन्द्रियः । गत्वाऽऽश्रमपदं तस्य विघ्नं कुर्वन्ति कन्यकाः ॥ ८ ॥ देवपन्नगकन्याश्च राजर्षितनयाश्च याः । क्रीडन्त्योऽप्सरसश्चैव तं देशमुपपेदिरे ॥ ९ ॥ सर्वर्तुषूपभोग्यत्वाद्रम्यत्वात् काननस्य च । नित्यशस्तास्तु तं देशं गत्वा क्रीडन्ति कन्यकाः ॥ १० ॥

नानुकीर्त्या इति । धर्मतः शीलतश्च, उत्पन्न इति शेषः । ते गुणा नानुकीर्त्याः विविच्याशक्यवर्णनाः । किन्तु प्रजापतिपुत्रनामत एव तत्सङ्कीर्तनमात्रं तत एतस्यैव वैभवं वक्तुं शक्यम् । प्रजापतिपुत्रत्वोक्त्यैव तस्य वैभवं वर्णितं भवतीत्यर्थः ॥ ५ ॥ ६ ॥ स त्वित्यादि । धर्मप्रसङ्गेन तपःसम्पादनेच्छये त्यर्थः । तृणबिन्दुर्नाम ऋषिः ॥ ७–९ ॥ सर्वर्त्विति । तं देशमाश्रमपदम् ॥ १० ॥

स०—येनासौ शत्रून् जघान स स्वयं शत्रुभिर्न वध्यः तत्तेजो बलं तेजसा अवष्टम्भशक्त्या सहितं बलं शारीरसत्त्वादिसम्भूतं च । यथा वृत्तं तदीयं कर्म तथा वक्ष्यामीति शेषः । शृणु । "कर्मणि वृत्तम्" इति विश्वः ॥ २ ॥ वरप्रदानम् प्रदीयत इति प्रदानं, वररूपं यद्देयं यथा तस्मै दत्तं तथा ते ब्रवीमि ॥ ३ ॥

देशस्येति । लासयन्त्यः नृत्यन्त्यः ॥ ११–१५ ॥ तस्मिन्निति । स्वाध्यायमकरोत् वेदमपठदित्यर्थः ॥ १६ ॥ सा त्विति । वेदश्रुतिं वेदध्वनिं श्रुत्वा



देशस्य रमणीयत्वात् पुलस्त्यो यत्र स द्विजः । गायन्त्यो वादयन्त्यश्च लासयन्त्यस्तथैव च । मुनेस्तपस्विनस्तस्य विघ्नं चक्रुरनिन्दिताः ॥ ११ ॥ अथ क्रुद्धो महातेजा व्याजहार महामुनिः । या मे दर्शनमागच्छेत् सा गर्भं धारयिष्यति ॥ १२ ॥ तास्तु सर्वाः प्रतिश्रुत्य तस्य वाक्यं महात्मनः । ब्रह्मशापभयाद्भीतास्तं देशं नोपचक्रमुः ॥ १३ ॥ तृणबिन्दोस्तु राजर्षेस्तनया न शृणोति तत् ॥ १४ ॥ गत्वाऽऽश्रमपदं तत्र विचचार सुनिर्भया । न साऽपश्यत् स्थिता तत्र काञ्चिदभ्यागतां सखीम् ॥ १५॥ तस्मिन् काले महातेजाः प्राजापत्यो महानृषिः । स्वाध्यायमकरोत्तत्र तपसा भावितः स्वयम् ॥ १६ ॥ सा तु वेदश्रुतिं श्रुत्वा दृष्ट्वा वै तपसो निधिम् । अभवत् पाण्डुदेहा सा सुव्यञ्जितशरीरजा ॥ १७ ॥ बभूव च समुद्विग्ना दृष्ट्वा तद्दोषमात्मनः । इदं मे किन्त्विति ज्ञात्वा पितुर्गत्वाऽऽश्रमे स्थिता ॥ १८ ॥ तां तु दृष्ट्वा तथाभूतां तृणबिन्दुरथाब्रवीत् । किं त्वमेतत्त्वसदृशं धारयस्यात्मनो वपुः ॥ १९ ॥ सा तु कृत्वाऽञ्जलिं दीना कन्योवाच तपोधनम् । न जाने कारणं तात येन मे रूपमीदृशम् ॥ २० ॥ किंतु पूर्वं गताऽस्म्येका महर्षेर्भावितात्मनः । पुलस्त्यस्याश्रमं दिव्यमन्वेष्टुं स्वसखीजनम् ॥ २१ ॥ नच पश्याम्यहं तत्र काञ्चिदभ्यागतां सखीम् । रूपस्य तु विपर्यासं दृष्ट्वा त्रासादिहागता ॥ २२ ॥ तृणबिन्दुस्तु राजर्षिस्तपसा द्योतितप्रभः । ध्यानं विवेश तच्चापि ह्यपश्यदृषिकर्मजम् ॥ २३ ॥

कोऽधीत इति गत्वा दृष्ट्वा चेत्यर्थः । पाण्डुदेहा गर्भिणीत्वात् । सुव्यञ्जितः शरीरजो यस्याः सा तथा ॥ १७ ॥ बभूवेति । इदं मे किम् एतत्किमिति ज्ञात्वा गर्भकारणमिदं किन्त्विति ज्ञात्वेत्यर्थः ॥ १८–२३ ॥

स त्विति । तनयां गृहीत्वा पुलस्त्यं गत्वेत्यन्वयः ॥२४॥ भगवन्निति । इमां भिक्षां गृहाणेति भिक्षात्वेन स्वीकुरुष्वेति अब्रवीदिति पूर्वेणान्वयः । ननु ऊर्ध्वरेतसा मया कथं ग्राह्या, किं वा मेऽनया प्रयोजनमित्यत्राह–उद्यतामिति । "उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् । भोज्यां मेने प्रजानाथो ह्यपि दुष्कृतकर्मणः ॥" इत्युक्तेः स्वयमुद्यतेयं ग्राह्यैवेत्यर्थः ॥ २५–२७ ॥ दत्त्वेति । यथान्यायं पाणिग्रहणपूर्वकमित्यर्थः ॥ २८–३० ॥ उभयोरिति ।

स तु विज्ञाय तं शापं महर्षेर्भावितात्मनः । गृहीत्वा तनयां गत्वा पुलस्त्यमिदमब्रवीत् ॥ २४ ॥ भगवंस्तनयां मे त्वं गुणैः स्वैरेव भूषिताम् । भिक्षां प्रतिगृहाणेमां महर्षे स्वयमुद्यताम् ॥२५॥ तपश्चरणयुक्तस्य श्रम्यमाणेन्द्रियस्य ते । शुश्रूषणपरा नित्यं भविष्यति न संशयः ॥२६॥ तं ब्रुवाणं तु तद्वाक्यं राजर्षिं धार्मिकं तदा । जिघृक्षुरब्रवीत् कन्यां बाढमित्येव स द्विजः॥२७॥ दत्त्वा स तु यथान्यायं स्वमाश्रमपदं गतः। साऽपि तत्रावसत् कन्या तोषयन्ती पतिं गुणैः ॥ २८ ॥ तस्यास्तु शीलवृत्ताभ्यां तुतोष मुनिपुङ्गवः। प्रीतः स तु महातेजा वाक्यमेतदुवाच ह ॥२९॥ परितुष्टोऽस्मि सुश्रोणि गुणानां सम्पदा भृशम् । तस्माद्देवि ददाम्यद्य पुत्रमात्मसमं तव ॥३०॥ उभयोर्वंशकर्तारं पौलस्त्य इति विश्रुतम् । यस्मात्तु विश्रुतो वेदस्त्वयैषोऽध्ययतो मम ॥ ३१ ॥ तस्मात् स विश्रवा नाम भविष्यति न संशयः । एवमुक्ता तु सा देवी प्रहृष्टेनान्तरात्मना ॥३२॥ अचिरेणैव कालेनासूत विश्रवसं सुतम् । त्रिषु लोकेषु विख्यातं यशोधर्मसमन्वितम् ॥३३॥ श्रुतिमान् समदर्शी च व्रताचाररतस्तथा । पितेव तपसा युक्तो ह्यभवद्विश्रवा मुनिः ॥ ३४ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे द्वितीयः सर्गः ॥ २ ॥

उभयोरपि मातुः पितुश्चेत्यर्थः । अध्ययतः अधीयानस्येत्यर्थः । वेदो विश्रुतः, गर्भहेतुरिति शेषः ॥ ३१–३४ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्वितीयः सर्गः ॥ २ ॥

॥ १ ॥ २ ॥ ज्ञात्वेति । तस्य तद्वृत्तं विश्रवसस्तादृशं चरितमित्यर्थः । देववर्णिनीं देवसमानरूपाम् ॥ ३ ॥ प्रतिगृह्येत्यादिश्लोकपञ्चकमेकं वाक्यम् । सर्वैर्ब्रह्मगुणैः, शमदमादिभिरित्यर्थः । पितामहः वैश्रवणपितामहः पुलस्त्यः इत्यर्थः । प्रजामन्विच्छतीति प्रजान्वेषिका "प्रत्ययस्थात्–" इतीत्त्वम् ।



अथ पुत्रः पुलस्त्यस्य विश्रवा मुनिपुङ्गवः । अचिरेणैव कालेन पितेव तपसि स्थितः ॥ १ ॥ सत्यवाञ्छीलवाञ्छान्तः स्वाध्यायनिरतः शुचिः । सर्वभोगेष्वसंसक्तो नित्यं धर्मपरायणः ॥ २ ॥ ज्ञात्वा तस्य तु तद्वृत्तं भरद्वाजो महामुनिः । ददौ विश्रवसे भार्यां स्वसुतां देववर्णिनीम् ॥ ३ ॥ प्रतिगृह्य तु धर्मेण भरद्वाजसुतां तदा । प्रजान्वेषिकया बुद्ध्या श्रेयो ह्यस्य विचिन्तयन् ॥ ४ ॥ मुदा परमया युक्तो विश्रवा मुनिपुङ्गवः । स तस्यां वीर्यसम्पन्नमपत्यं परमाद्भुतम् ॥ ५ ॥ जनयामास धर्मज्ञः सर्वैर्ब्रह्मगुणैर्युतम् । तस्मिन् जाते तु संहृष्टः सम्बभूव पितामहः ॥ ६ ॥ दृष्ट्वा श्रेयस्करीं बुद्धिं धनाध्यक्षो भविष्यति । नाम तस्याकरोत् प्रीतः सार्धं देवर्षिभिस्तदा ॥ ७ ॥ यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव । तस्माद्वैश्रवणो नाम भविष्यत्येष विश्रुतः ॥ ८ ॥ स तु वैश्रवणस्तत्र तपोवनगतस्तदा । अवर्धताहुतिहुतो महातेजा यथाऽनलः ॥ ९ ॥ तस्याश्रमपदस्थस्य बुद्धिर्जज्ञे महात्मनः । चरिष्ये परमं धर्मं धर्मो हि परमा गतिः ॥ १० ॥ स तु वर्षसहस्राणि तपस्तप्त्वा महावने । यन्त्रितो नियमैरुग्रैश्चकार सुमहत्तपः ॥ ११

अस्य विश्रवसस्तस्मिन्पुत्रे जाते तुष्टो बभूव । श्रेयस्करीं धनेशत्वरूपश्रेयःप्राप्तिहेतुभूतां जन्मलग्नपर्यालोचनया कालान्तरे धनाध्यक्षनामको भविष्यतीति निश्चित्य तत्काले विश्रवसोऽपत्यत्वाद्वैश्रवण इति विश्रुतो भविष्यतीति नाम च चकार । "विश्रवसो विश्रवणं वा" इति विश्रवणादेशः ॥ ४–१० ॥ स त्विति । नियमैः यन्त्रितः सञ्जातबन्धनः ॥ ११ ॥

स०–सर्वभोगेषु सत्स्वपि असंसक्तः निस्पृहः । अनेन भाववैराग्यं सूच्यते । सर्वभोगेष्वसंसक्त इत्येकं वा पदम् । सर्वभोगेषु तत्साधनेषु, एः मन्मथस्य इषवो बाणास्तैरसंसक्तः असम्बद्ध इति वा । अस्यापत्यम् इः । भगवत्पुत्रत्वेन इः कामः । इयत्यां सत्यां सम्पदि अकृतविवाहो महामुनिरिति भावः ॥ २ ॥

पूर्ण इति । तं तं विधिम् । विधिमेवाह—जलाशीत्यादि ॥ १२–१४ ॥ अथेति । वित्तरक्षणम् अशेषनिधिपतित्वम् ॥ १५–१७ ॥ यमेति । यदीप्सितं

पूर्णे वर्षसहस्रान्ते तं तं विधिमकल्पयत् । जलाशी मारुताहारो निराहारस्तथैव च ॥ १२ ॥ एवं वर्ष सहस्राणि जग्मुस्तान्येकवर्षवत् । अथ प्रीतो महातेजाः सेन्द्रैः सुरगणैः सह ॥ १३ ॥ गत्वा तस्याश्रमपदं ब्रह्मेदं वाक्यमब्रवीत् । परितुष्टोऽस्मि ते वत्स कर्मणाऽनेन सुव्रत । वरं वृणीष्व भद्रं ते वरार्हस्त्वं महामते ॥ १४ ॥ अथाब्रवीद्वैश्रवणः पितामहमुपस्थितम् । भगवन् लोकपालत्वमिच्छेयं वित्तरक्षणम् ॥ १५ ॥ अथाब्रवीद्वैश्रवणं परितुष्टेन चेतसा । ब्रह्मा सुरगणैः सार्धं बाढमित्येव हृष्टवत् ॥ १६ ॥ अहं वै लोकपालानां चतुर्थं स्रष्टुमुद्यतः ॥ १७ ॥ यमेन्द्रवरुणानां च पदं यत्तव चेप्सितम् । तद्गच्छ त्वं हि धर्मज्ञ निधीशत्वमवाप्नुहि । शक्राम्बुपयमानां च चतुर्थस्त्वं भविष्यसि ॥ १८ ॥ एतच्च पुष्पकं नाम विमानं सूर्यसन्निभम् । प्रतिगृह्णीष्व यानार्थं त्रिदशैः समतां व्रज ॥ १९ ॥ स्वस्ति तेऽस्तु गमिष्यामः सर्व एव यथागतम् । कृतकृत्या वयं तात दत्त्वा तव वरद्वयम् ॥ २० ॥ इत्युक्त्वा स गतो ब्रह्मा स्वस्थानं त्रिदशैः सह ॥ २१ ॥ गतेषु ब्रह्मपूर्वेषु देवेष्वथ नभस्स्थलम् । वने स पितरं प्राह प्राञ्जलिः प्रयतात्मवान् । निवासनं न मे देवो विदधे स प्रजापतिः ॥ २२ ॥ भगवन् लब्धवानस्मि वरमिष्टं पितामहात् । तं पश्य भगवन् कञ्चिन्निवासं साधु मे प्रभो ॥ २३ ॥ न च पीडा भवेद्यत्र प्राणिनो यस्य कस्यचित् । एवमुक्तस्तु पुत्रेण विश्रवा मुनिपुङ्गवः ॥ २४ ॥ वचनं प्राह धर्मज्ञः श्रूयतामिति सत्तमः । दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः ॥२५॥ तस्याग्रे तु विशाला सा महेन्द्रस्य पुरी यथा । लङ्का नाम पुरी रम्या निर्मिता विश्वकर्मणा ॥२६॥

तद्गच्छ निधीशत्वमवाप्नुहि ॥ १८ ॥ एतच्चेति । त्रिदशैः समतामिति । न तु ऋषिपुत्रवद्वर्तस्वेत्यर्थः ॥ १९–२७ ॥

हेमेति । यन्त्ररूपैः शस्त्रैः समावृता ॥ २८-३१ ॥ एतदिति । प्रमुदितैः सह निवासयामासेति योजना ॥ ३२ ॥ अचिरेणेति । सम्पूर्णा धनधान्यादि सर्वैश्वर्यपूर्णेत्यर्थः ॥ ३३-३६ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने तृतीयः सर्गः ॥ ३ ॥

राक्षसानां निवासार्थं यथेन्द्रस्यामरावती । तत्र त्वं वस भद्रं ते लङ्कायां नात्र संशयः ॥२७॥ हेमप्राकारपरिघा यन्त्रशस्त्रसमावृता । रमणीया पुरी सा हि रुक्मवैडूर्यतोरणा ॥२८॥ राक्षसैः सा परित्यक्ता पुरा विष्णुभयार्दितैः । शून्या रक्षोगणैः सर्वै रसातलतलं गतैः ॥ २९ ॥ शून्या सम्प्रति लङ्का सा प्रभुस्तस्या न विद्यते । स त्वं तत्र निवासाय गच्छ पुत्र यथासुखम् ॥ ३० ॥ निर्दोषस्तत्र ते वासो न बाधा तत्र कस्यचित् ॥ ३१ ॥ एतच्छ्रुत्वा स धर्मात्मा धर्मिष्ठं वचनं पितुः । निवासयामास तदा लङ्कां पर्वतमूर्धनि । नैर्ऋतानां सहस्रैस्तु हृष्टैः प्रमुदितैः सह ॥ ३२ ॥ अचिरेणैव कालेन सम्पूर्णा तस्य शासनात् ॥ ३३ ॥ स तु तत्रावसत् प्रीतो धर्मात्मा नैर्ऋतर्षभः । समुद्रपरिघायां तु लङ्कायां विश्रवात्मजः ॥३४॥ काले काले तु धर्मात्मा पुष्पकेण धनेश्वरः । अभ्यागच्छद्विनीतात्मा पितरं मातरं च हि ॥३५॥ स देवगन्धर्वगणैरभिष्टुतस्तथाऽप्सरोनृत्यविभूषितालयः । गभस्तिभिः सूर्य इवावभासयन् पितुः समीपं प्रययौ स वित्तपः ॥ ३६ ॥ इत्यार्षे वाल्मीकीये० उत्तरश्रीरामायणे तृतीयः सर्गः ॥ ३ ॥

श्रुत्वाऽगस्त्येरितं वाक्यं रामो विस्मयमागतः । कथमासीत्तु लङ्कायां सम्भवो रक्षसां पुरा ॥ १ ॥
ततः शिरः कम्पयित्वा त्रेताग्निसमविग्रहम् । तमगस्त्यं मुहुर्दृष्ट्वा स्मयमानोऽभ्यभाषत ॥ २ ॥
भगवन् पूर्वमप्येषा लङ्काऽऽसीत् पिशिताशिनाम् । श्रुत्वेदं भगवद्वाक्यं जातो मे विस्मयः परः ॥ ३ ॥

श्रुत्वेत्यादि । लङ्कायां धनदाधिष्ठानात् पूर्वमपि रक्षसां सम्भवः अपःस्थानादिसम्भवः इति यदुक्तं तत् श्रुत्वा विस्मयमागत इत्यन्वयः ॥ १ ॥ ततइत्यादि । ततो मुहुः शिरः कम्पयित्वा विस्मयमागतः सन् अगस्त्यं दृष्ट्वाऽभ्यभाषत ॥२॥ भगवन्निति । पूर्वं रावणकुबेरयोः पूर्वमपि लङ्का पिशिताशिना

मासीदावास आसीदितीदानीमुक्तं श्रुत्वा मम विस्मयो जनितः ॥ ३ ॥ कुतो विस्मय इत्याशङ्क्य विरुद्धश्रवणादित्याह—पुलस्त्येति । नः अस्माभिः । पूजायां बहुवचनम् । श्रुतम्, कर्णाकर्णिकयेति शेषः ॥ ४–७ ॥ राघवस्येति । संस्कारेति पदवाक्यार्थजसंस्कारेति यावत् । ईषद्विस्मयमान इति ।

पुलस्त्यवंशादुद्भूता राक्षसा इति नः श्रुतम् । इदानीमन्यतश्चापि सम्भवः कीर्तितस्त्वया ॥ ४ ॥ रावणात् कुम्भकर्णाच्च प्रहस्ताद्विकटादपि । रावणस्य च पुत्रेभ्यः किन्नु ते बलवत्तराः ॥ ५ ॥ क एषां पूर्वको ब्रह्मन् किन्नामा च बलोत्कटः । अपराधं च कं प्राप्य विष्णुना द्राविताः कथम् ॥ ६ ॥ एतद्विस्तरतः सर्वं कथयस्व ममानव । कौतूहलमिदं मह्यं नुद भानुर्यथा तमः ॥७॥ राघवस्य वचः श्रुत्वा संस्कारालंकृतं शुभम् । ईषद्विस्मयमानस्तमगस्त्यः प्राह राघवम् ॥८॥ प्रजापतिः पुरा सृष्ट्वा ह्यपः सलिलसम्भवः । तासां गोपायने सत्त्वानसृजत् पद्मसम्भवः ॥ ९ ॥ ते सत्त्वाः सत्त्वकर्तारं विनीतवदुपस्थिताः । किं कुर्म इति भाषन्तः क्षुत्पिपासाभयार्दिताः ॥ १० ॥ प्रजापतिस्तु तान्याह सत्त्वानि प्रहसन्निव । आभाष्य वाचा यत्नेन रक्षध्वमिति मानदः ॥ ११ ॥ रक्षामेति च तत्रान्ये जक्षाम इति चापरे ॥ भुक्षिताभुक्षितैरुक्तस्ततस्तानाह भूतकृत् ॥ १२ ॥

सर्वज्ञोऽप्यजानन्निव पृच्छतीति विस्मितम् ॥ ८ ॥ प्रजापतिरिति । सलिलसम्भवः पद्मसम्भवः, सलिले पद्मसम्भव इत्यर्थः । प्रजापतिः ब्रह्मा । अहरन्ते अपः सृष्ट्वा भूमेरधः स्थिताः समुद्ररूपिणीः सृष्ट्वा रात्र्यवसाने तत्रैव सलिले विष्णुनाभिकमले वर्तमानः प्रजापतिः तासामपां गोपायने रक्षणनिमित्तम् । सत्त्वान् जन्तूनसृजत् । पुंल्लिङ्गत्वमार्षम् ॥९॥ त इति । तानि सत्त्वानि किं कुर्मः किं करवामेति भाषन्तः क्षुत्पिपासाभयार्दिताः सन्तः सत्त्वकर्तारं स्वस्रष्टारं विनीतवदुपस्थिताः ॥१०॥ प्रजापतिस्त्विति । प्रहसन्निव भयार्दितस्वप्रजाविषयदयावशात् प्रहसन्नित्यर्थः । मानदः बहुमानदः । भयनिवृत्तिमनुगृह्णन्नित्यर्थः । हे सत्त्वानीति वाचा आभाष्य संबोध्य । रक्षध्वं यत्नेन रक्षध्वमिमा अप इति ॥ ११ ॥ तानि सत्त्वान्याह—रक्षामेति । तत्र तेषु सत्त्वेषु मध्ये । अन्यैः कैश्चित्सत्त्वैः । रक्षामेत्युक्तः । तथाऽपरैर्जक्षामेत्युक्तः प्रजापतिः । उभयमपि लोडुत्तमबहुवचनम् । “जक्ष भक्ष हसनयोः” । कैश्चिन्न

वयं रक्षाम किन्तु जक्षामेत्युक्तः । कैः रक्षामेत्युक्तं कैर्वा जक्षामेत्युक्तं तत्राह—क्षुधिताक्षुधितैरिति । अभ्यासलोपश्छान्दसः । अबुभुक्षितैः रक्षामेत्युक्तम्, बुभुक्षितैस्तु जक्षामेत्युक्तमिति क्रमः ॥१२॥ रक्षामेति । वः युष्माकं मध्ये । यैः रक्षामेत्युक्तं ते राक्षसा भवन्तु । यैर्जक्षाम इत्युक्तं ते यक्षा भवन्तु । वर्ण व्यत्यय आर्षः ॥ १३ ॥ १४ ॥ प्रहेतिरिति । तत्र राक्षसेषु । तपोवनगत इति । विरक्तो भूत्वेति शेषः ॥ १५ ॥ स इति । कालो यमः । स्वयमेवेति ।

रक्षामेति च यैरुक्तं राक्षसास्ते भवन्तु वः । जक्षाम इति यैरुक्तं यक्षा एव भवन्तु वः ॥ १३ ॥ तत्र हेतिः प्रहेतिश्च भ्रातरौ राक्षसाधिपौ। मधुकैटभसङ्काशौ बभूवतुररिन्दमौ ॥ १४ ॥ प्रहेतिर्धार्मिकस्तत्र तपोवनगतस्तदा । हेतिर्दार क्रियार्थं तु परं यत्नमथाकरोत् ॥१५॥ स कालभगिनीं कन्यां भयां नाम भयावहाम् । उदावहदमेयात्मा स्वयमेव महामतिः ॥१६॥ स तस्यां जनयामास हेती राक्षसपुङ्गवः । पुत्रं पुत्रवतां श्रेष्ठो विद्युत्केश इति श्रुतम् ॥ १७ ॥ विद्युत्केशो हेतिपुत्रः स दीप्तार्कसमप्रभः । व्यवर्धत महातेजास्तोयमध्य इवाम्बुदः ॥ १८ ॥ स यदा यौवनं भद्रमनुप्राप्तो निशाचरः । ततो दारक्रियां तस्य कर्तुं व्यवसितः पिता ॥१९॥ सन्ध्यायास्तनयां सोऽथ सन्ध्यातुल्यां प्रभावतः । वरयामास पुत्रार्थं हेती राक्षसपुङ्गवः ॥२०॥ अवश्यमेव दातव्या परस्मै सेति सन्ध्यया । चिन्तयित्वा सुता दत्ता विद्युत्केशाय राघव ॥ २१ ॥ सन्ध्यायास्तनयां लब्ध्वा विद्युत्केशो निशाचरः । रमते स्म तया सार्धं पौलोम्या मघवानिव ॥ २२ ॥ केनचित्त्वथ कालेन राम सालकटङ्कटा । विद्युत्केशाद्गर्भमाप घनराजिरिवार्णवात् ॥ २३ ॥ ततः सा राक्षसी गर्भं घनगर्भसमप्रभम् । प्रसूता मन्दरं गत्वा गङ्गा गर्भमिवाग्निजम् ॥ २४ ॥ तमुत्सृज्य तु सा गर्भं विद्युत्केशरतार्थिनी । रेमे तु सार्धं पतिना विस्मृत्य सुतमात्मजम् ॥ २५ ॥

प्रार्थनां गत्वेत्यर्थः । अस्यैव विवरणं दारक्रियार्थं इत्यादि ॥ १६ ॥ १७ ॥ विद्युत्केश इति । तोयं मध्ये यस्य स तोयमध्यः ॥ १८ ॥ स इति । पिता हेतिः ॥ १९–२३ ॥ तत इति । प्रसूता प्रसूतवती । अग्निजं गर्भमिति । अग्निना विसृष्टं माहेश्वरं गर्भमित्यर्थः । घनगर्भोऽशनिः ॥ २४–२७ ॥

अपश्यदिति । कारुण्येन सहितः भावश्चित्तं कारुण्यभावः तस्मात् ॥ २८ ॥ तमिति । अक्षरोऽव्यय इति षड्भावराहित्योपलक्षणम् । पार्वत्या, प्रेरित इति शेषः । इदमेव दर्शयति—वक्ष्यमाणप्रियकाम्ययेति ॥ २९ ॥ ३० ॥ सद्योपलब्धिरित्यार्षः संधिः । मातुरेव वयःसमं वयःप्राप्तिरिति योजना

उत्सृष्टस्तु तदा गर्भो घनशब्दसमस्वनः । तयोत्सृष्टः स तु शिशुः शरदर्कसमद्युतिः । निधायास्ये स्वयं मुष्टिं रुरोद शनकैस्तदा ॥२६॥ ततो वृषभमास्थाय पार्वत्या सहितः शिवः । वायुमार्गेण गच्छन् वै शुश्राव रुदितस्वनम् ॥२७॥ अपश्यदुमया सार्धं रुदन्तं राक्षसात्मजम् । कारुण्यभावात् पार्वत्या भवस्त्रिपुरसूदनः ॥२८॥ तं राक्षसात्मजं चक्रे मातुरेव वयःसमम् । अमरं चैव तं कृत्वा महादेवोऽक्षरोऽव्ययः ॥२९॥ पुरमाकाशगं प्रादात् पार्वत्याः प्रियकाम्यया । उमयाऽपि वरो दत्तो राक्षसानां नृपात्मज ॥३०॥ सद्योपलब्धिर्गर्भस्य प्रसूतिः सद्य एव च । सद्य एव वयःप्राप्तिर्मातुरेव वयस्समम् ॥ ३१ ॥ ततः सुकेशो वरदानगर्वितः श्रियं प्रभोः प्राप्य हरस्य पार्श्वतः । चचार सर्वत्र महान् महामतिः खगं पुरं प्राप्य पुरन्दरो यथा ॥ ३२ ॥ इत्यार्षे० श्रीमदुत्तरश्रीरामायणे चतुर्थः सर्गः ॥४॥

सुकेशं धार्मिकं दृष्ट्वा वरलब्धं च राक्षसम् । ग्रामणीर्नाम गन्धर्वो विश्वावसुसमप्रभः ॥ १ ॥ तस्य देववती नाम द्वितीया श्रीरिवात्मजा । त्रिषु लोकेषु विख्याता रूपयौवनशालिनी । तां सुकेशाय धर्मेण ददौ रक्षःश्रियं यथा ॥ २ ॥ वरदानकृतैश्वर्यं सा तं प्राप्य पतिं प्रियम् । आसीद्देववती तुष्टा धनं प्राप्येव निर्धनः ॥ ३ ॥

॥ ३१ ॥ तत इति । सुकेश इत्यनुवादादेव तन्नामकरणं सिद्धम् । खगम् आकाशगम् ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुर्थः सर्गः ॥ ४ ॥ सुकेशमित्यादि सार्धद्वयम् । वरलब्धं लब्धवरम् । गन्धर्व आसीत् स तं सुकेशं दृष्ट्वा तस्मै सुकेशाय ददा

स०–सद्योपलब्धिरिति । अत्र आर्षस्सन्धिः । अथवा 'एधोदकमुपस्कुरुते' इत्यत्र एधश्शब्दसमानार्थकः एधश्शब्दोऽप्यस्तीति समाधिवदत्रापि सद्यश्शब्दसमानार्थकः सद्यशब्दोऽप्यस्ति । तेन सन्ध्युपपत्तिः । अनेन रत्यर्थं राक्षसीभिर्गर्भस्सद्यज्यते । तस्य च न पोषणमित्येतज्ज्ञात्वा तासां सद्य एव गर्भप्राप्तिः प्रसवश्च सद्य एव तस्य च विशिष्टयौवनमित्येवं दयया देव्या वरा दत्ता इत्युक्तं भवति । मातुर्वयस्समं यद्वयः तत्प्राप्तिं तत्तुल्यरूपप्राप्तिं प्रति वरो दत्त इत्यन्वयः ॥ ३१ ॥ वरदानकृतैश्वर्यं वरदानकृतं कर्म । तेनैश्वर्यं यस्य स तथा तम् ॥ ३ ॥

वित्यन्वयः । रक्षःश्रियं राक्षसश्रियम् ॥ १–३ ॥ स इति । अञ्जनादञ्जनाख्यगजात् अभिनिष्क्रान्त उत्पन्नः महागजः करेण्वेव रराज ॥ ४–६ ॥ त्रयो लोका इत्यादि श्लोकद्वयम् । त्रयो मन्त्राः उत्साहप्रभुमन्त्रशक्तयः । त्रयो वेदा वा । त्रय आमयाः वातपित्तश्लेष्मरूपाः । त्रेताग्निसमवर्चस इति तेजोति

स तया सह संयुक्तो रराज रजनीचरः । अञ्जनादभिनिष्क्रान्तः करेण्वेव महागजः ॥ ४ ॥ देववत्यां सुकेशस्तु जनयामास राघव ॥ ५॥ त्रीन् पुत्रान् जनयामास त्रेताग्निसमविग्रहान् । माल्यवन्तं सुमालिं च मालिं च बलिनां वरम् । त्रींस्त्रिनेत्रसमान् पुत्रान् राक्षसान् राक्षसाधिपः ॥ ६ ॥ त्रयो लोका इवाव्यग्राः स्थितास्त्रय इवाग्नयः । त्रयो मन्त्रा इवात्युग्रास्त्रयो घोरा इवामयाः ॥ ७ ॥ त्रयः सुकेशस्य सुतास्त्रेताग्निसमतेजसः । विवृद्धिमगमंस्तत्र व्याधयोपेक्षिता इव ॥ ८ ॥ वरप्राप्तिं पितुस्ते तु ज्ञात्वेश्वरतपोबलात् । तपस्तप्तुं गता मेरुं भ्रातरः कृतनिश्चयाः ॥ ९ ॥ प्रगृह्य नियमान् घोरान् राक्षसा नृपसत्तम । विचेरुस्ते तपो घोरं सर्वभूतभयावहम् ॥ १० ॥ सत्यार्जवशमोपेतैस्तपोभिरतिदुष्करैः । सन्तापयन्तस्त्रीन् लोकान् सदेवासुरमानुषान् ॥ ११ ॥ ततो विभुश्चतुर्वक्त्रो विमानवरमास्थितः । सुकेशपुत्रानामन्त्र्य वरदोऽस्मीत्यभाषत ॥ १२ ॥ ब्रह्माणं वरदं ज्ञात्वा सेन्द्रैर्देवगणैर्वृतम् । ऊचुः प्राञ्जलयः सर्वे वेपमाना इव द्रुमाः ॥ १३ ॥ तपसाऽऽराधितो देव यदि नो दिशसे वरम् । अजेयाः शत्रुहन्तारस्तथैव चिरजीविनः ॥ १४ ॥ प्रभविष्णवो भवामेति परस्परमनुव्रताः ॥ १५ ॥ एवं भविष्यतीत्युक्त्वा सुकेशतनयान् विभुः । स ययौ ब्रह्मलोकाय ब्रह्मा ब्राह्मणवत्सलः ॥ १६ ॥

शय उक्तः । पूर्वसाहित्यप्रधानात् । व्याधयोपेक्षिता इति सन्धिरार्षः ॥ ७–१३ ॥ तपसेति । प्रभविष्णवः, यणार्षः । अनुव्रताः अनुरक्ताश्च भवामेत्यनुकर्षः ॥ १४ ॥ १५ ॥ एवमिति । ब्रह्मलोकाय ब्रह्मलोकं गन्तुम् । "तुमर्थ–" इत्यादिना चतुर्थी ॥ १६–२२ ॥



स०–व्याधयोपेक्षिता इत्यत्र गुण आर्षः । व्याधयः अपेक्षिता इति वा छेदः । तत्रेक्षितमिति भावे क्तः । अपगतमीक्षितमीक्षणम्, तत्परिहारप्रयत्न इति यावत् । येभ्यस्तेऽपेक्षिताः । उपेक्षिता इति तात्पर्यम् ॥ ८ ॥

दक्षिणस्येत्यादि सार्धत्रयम् । अम्बुदसन्निभे मेघसमानरूपे मध्यमे शिखरे । शकुनैरपि दुष्प्राप इत्यत्र हेतुः टङ्कच्छिन्नचतुर्दिशीति ॥ २३–२६ ॥

वरं लब्ध्वा तु ते सर्वे राम रात्रिञ्चरास्तदा । सुरासुरान् प्रबाधन्ते वरदानसुनिर्भयाः ॥१७॥ तैर्वध्यमानास्त्रिदशाः सर्षिसङ्घाः सचारणाः । त्रातारं नाधिगच्छन्ति निरयस्था यथा नराः ॥ १८ ॥ अथ ते विश्वकर्माणं शिल्पिनां वरमव्ययम् । ऊचुः समेत्य संहृष्टा राक्षसा रघुसत्तम ॥ १९ ॥ ओजस्तेजोबलवतां महतामात्मतेजसा । गृहकर्ता भवानेव देवानां हृदयेप्सितम् ॥२०॥ अस्माकमपि तावत्त्वं गृहं कुरु महामते । हिमवन्तमपाश्रित्य मेरुं मन्दरमेव वा । महेश्वरगृहप्रख्यं गृहं नः क्रियतां महत् ॥ २१ ॥ विश्वकर्मा ततस्तेषां राक्षसानां महाभुजः । निवासं कथयामास शक्रस्येवामरावतीम् ॥ २२ ॥ दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः । सुवेल इति चाप्यन्यो द्वितीयस्तत्र सत्तमाः ॥२३॥ शिखरे तस्य शैलस्य मध्यमेऽम्बुदसन्निभे । शकुनैरपि दुष्प्रापे टङ्कच्छिन्नचतुर्दिशि ॥ २४ ॥ त्रिंशद्योजनविस्तीर्णा शतयोजनमायता । स्वर्णप्राकारसंवीता हेमतोरणसंवृता ॥ २५ ॥ मया लङ्केति नगरी शक्राज्ञप्तेन निर्मिता । तस्यां वसत दुर्धर्षा यूयं राक्षसपुङ्गवाः ॥ २६ ॥ अमरावतीं समासाद्य सेन्द्रा इव दिवौकसः । लङ्कादुर्गं समासाद्य राक्षसैर्बहुभिर्वृताः ॥२७॥ भविष्यथ दुराधर्षाः शत्रूणां शत्रुसूदनाः ॥ २८ ॥ विश्वकर्मवचः श्रुत्वा ततस्ते राक्षसोत्तमाः । सहस्रानुचरा भूत्वा गत्वा तामवसन् पुरीम् ॥ २९ ॥ दृढप्राकारपरिखां हैमैर्गृहशतैर्वृताम् । लङ्कामवाप्य ते हृष्टा न्यवसन् रजनीचराः ॥३०॥ एतस्मिन्नेव काले तु यथाकामं च राघव । नर्मदा नाम गन्धर्वी बभूव रघुनन्दन ॥ ३१ ॥

अमरावतीमिति । अमरावतीं समासाद्येति पदवशादक्षराधिक्यम् ॥२७॥२८॥ विश्वकर्मेति । सहस्रमनेके अनुचरा येषां ते सहस्रानुचराः ॥२९–३१॥

तस्या इति । अराक्षसी राक्षसजातिव्यतिरिक्ता ॥ ३२ ॥ कन्या इति । भगदैवतनक्षत्रमुत्तरफल्गुनी ॥ ३३–४३ ॥ अनिल इति । मालेया इति

तस्याः कन्यात्रयं ह्यासीत् धीश्रीकीर्तिसमद्युति । ज्येष्ठक्रमेण सा तेषां राक्षसानामराक्षसी॥३२॥ कन्यास्ताः प्रददौ हृष्टा पूर्णचन्द्रनिभाननाः । त्रयाणां राक्षसेन्द्राणां तिस्रो गन्धर्वकन्यकाः ॥३३॥ दत्ता मात्रा महाभागा नक्षत्रे भगदैवते । कृतदारास्तु ते राम सुकेशतनयास्तदा ॥३४॥ चिक्रीडुः सह भार्याभिरप्सरोभिरिवामराः । ततो माल्यवतो भार्या सुन्दरी नाम सुन्दरी ॥ ३५ ॥ स तस्यां जनयामास यदपत्यं निबोध तत् । वज्रमुष्टिर्विरूपाक्षो दुर्मुखश्चैव राक्षसः ॥३६॥ सुप्तघ्नो यज्ञकोपश्च मत्तोन्मत्तौ तथैव च । अनला चाभवत् कन्या सुन्दर्यां राम सुन्दरी ॥ ३७ ॥ सुमालिनोऽपि भार्याऽऽसीत् पूर्णचन्द्रनिभानना । नाम्ना केतुमती नाम प्राणेभ्योऽपि गरीयसी ॥३८॥ सुमाली जनयामास यदपत्यं निशाचरः । केतुमत्यां महाराज तन्निबोधानुपूर्वशः ॥ ३९ ॥ प्रहस्तोऽकम्पनश्चैव विकटः कालकार्मुकः । धूम्राक्षश्चैव दण्डश्च सुपार्श्वश्च महाबलः ॥ ४० ॥ संह्रादिः प्रघसश्चैव भासकर्णश्च राक्षसः । राका पुष्पोत्कटा चैव कैकसी च शुचिस्मिता । कुम्भीनसी च इत्येते सुमालेः प्रसवाः स्मृताः ॥ ४१ ॥ मालेस्तु वसुधा नाम गन्धर्वी रूपशालिनी । भार्याऽऽसीत् पद्मपत्राक्षी स्वक्षी यक्षीवरोपमा ॥ ४२ ॥ सुमालेरनुजस्तस्यां जनयामास यत् प्रभो । अपत्यं कथ्यमानं तु मया त्वं शृणु राघव ॥ ४३ ॥ अनिलश्चानलश्चैव हरः सम्पातिरेव च । एते विभीषणामात्या मालेयास्तु निशाचराः ॥ ४४ ॥ ततस्तु ते राक्षसपुङ्गवास्त्रयो निशाचरैः पुत्रशतैश्च संवृताः । सुरान् सहेन्द्रानृषिनागयक्षान् बबाधिरे तान् बहुवीर्यदर्पिताः ॥४५॥ जगद्भ्रमन्तोऽनिलवद्दुरासदा रणेषु मृत्युप्रतिमानतेजसः । वरप्रदानादतिगर्विता भृशं क्रतुक्रियाणां प्रशमङ्कराः सदा ॥ ४६ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे पञ्चमः सर्गः ॥ ५ ॥

" इतश्च " इति ढक् ॥४४॥४५॥ जगदिति । प्रशमङ्करा इत्यार्षः खच् ॥ ४६ ॥ इति श्रीगोविन्द० उत्तरश्रीरामायणव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

तैरित्यादि । शरण्यानि शरणार्हाणि देवपित्रतिथिपशुपक्ष्यादिरक्षणार्हाणि ॥ १–६ ॥ इतीति । समरे उद्धर्षो येषां ते समरोद्धर्षाः ॥ ७ ॥ अशिवमिति ।

तैर्वध्यमाना देवाश्च ऋषयश्च तपोधनाः । भयार्ताः शरणं जग्मुर्देवदेवं महेश्वरम् ॥ १ ॥ जगत्सृष्टयन्तकर्तारमज मव्यक्तरूपिणम् । आधारं सर्वलोकानामाराध्यं परमं गुरुम् ॥ २ ॥ ते समेत्य तु कामारिं त्रिपुरारिं त्रिलोचनम् । ऊचुः प्राञ्जलयो देवा भयगद्गदभाषिणः ॥ ३ ॥ सुकेशपुत्रैर्भगवन् पितामहवरोद्धतैः । प्रजाध्यक्ष प्रजाः सर्वा बाध्यन्ते रिपुबाधनैः ॥ ४ ॥ शरण्यान्यशरण्यानि ह्याश्रमाणि कृतानि नः । स्वर्गाच्च देवान् प्रच्याव्य स्वर्गे क्रीडन्ति देववत् ॥ ५ ॥ अहं विष्णुरहं रुद्रो ब्रह्माऽहं देवराडहम् । अहं यमश्च वरुणश्चन्द्रोऽहं रविरप्यहम् ॥ ६ ॥ इति माली सुमाली च माल्यवांश्चैव राक्षसाः । बाधन्ते समरोद्धर्षा ये च तेषां पुरस्सराः । तन्नो देव भयार्तानामभयं दातुमर्हसि ॥ ७ ॥ अशिवं वपुरास्थाय जहि वै देवकण्टकान् ॥ ८ ॥ इत्युक्तस्तु सुरैः सर्वैः कपर्दी नीललोहितः । सुकेशं प्रति सापेक्षः प्राह देवगणान् प्रभुः ॥ ९ ॥ अहं तान्न हनिष्यामि मयाऽवध्या हि तेऽसुराः । किंतु मन्त्रं प्रदास्यामि यो वै तान्निहनिष्यति ॥ १० ॥ एतमेव समुद्योगं पुरस्कृत्य महर्षयः । गच्छध्वं शरणं विष्णुं हनिष्यति स तान् प्रभुः ॥ ११ ॥ ततस्तु जयशब्देन प्रतिनन्द्य महेश्वरम् । विष्णोः समीपमाजग्मुर्निशाचरभयार्दिताः ॥ १२ ॥

अशिवमसौम्यम्, क्रूरमित्यर्थः ॥ ८ ॥ इत्युक्त इति । सुकेशं प्रति सापेक्ष इति । सुकेशस्य स्वाश्रितत्वात्तत्पुत्रवधानौचित्यमित्याशङ्क्येत्यर्थः ॥ ९ ॥ अहमिति, मन्त्रमुपायम् ॥ १० ॥ एतमिति । एतमेव समुद्योगमिति, नतु कालान्तरीय प्रथमं रुद्रसमीपगमनम् । मया कृतोऽयमनर्थ इति द्योतयितुमाह–अहमिति । मन्त्रमुपायम् ॥ १० ॥

स०–तस्यापि प्रजापतित्वात्सृष्टिकर्तृत्वम् । कालाग्निरुद्रतया संहारकर्तृत्वं च । अजः क्वात् भगवतः जायत इति "यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः ।" इत्यादेः । अव्यक्तरूपिणं स्वानुग्रहमन्तरेण कस्याप्यप्रत्यक्षम् । सर्वलोकानाम् इन्द्रादीनाम् आधारम् । आराध्यं पूज्यम् । परमं गुरुं च हितोपदेष्टारं च ॥ २ ॥

मित्यर्थः । प्रभुर्ममापि प्रभुः ॥ ११॥१२ ॥ शङ्खेति । सम्भ्रान्तवत् सम्भ्रान्ताः सन्तः ॥१३—१७॥ राक्षसानामिति । सानुबन्धाः सानुचराः ॥१८—२४॥



शङ्खचक्रधरं देवं प्रणम्य बहुमान्य च । ऊचुः सम्भ्रान्तवद्वाक्यं सुकेशतनयान् प्रति ॥ १३॥ सुकेशतनयैर्देव त्रिभिस्त्रेताग्निसन्निभैः । आक्रम्य वरदानेन स्थानान्यपहृतानि नः ॥ १४॥ लङ्का नाम पुरी दुर्गा त्रिकूटशिखरे स्थिता । तत्र स्थिताः प्रबाधन्ते सर्वान्नः क्षणदाचराः ॥ १५॥ स त्वमस्मद्धितार्थाय जहि तान् मधुसूदन । शरणं त्वां वयं प्राता गतिर्भव सुरेश्वर ॥ १६॥ चक्रकृत्तास्यकमलान् निवेदय यमाय वै । भयेष्वभयदोऽस्माकं नान्योऽस्ति भवता विना ॥ १७॥ राक्षसान् समरे दुष्टान् सानुबन्धान् मदोद्धतान् । नुद त्वं नो भयं देव नीहारमिव भास्करः ॥ १८ ॥ इत्येवं दैवतैरुक्तो देवदेवो जनार्दनः । अभयं भयदोऽरीणां दत्त्वा देवानुवाच ह ॥ १९॥ सुकेशं राक्षसं जाने ईशानवरदर्पितम् । तांश्चास्य तनयान् जाने येषां ज्येष्ठः स माल्यवान् ॥ २० ॥ तानहं समतिक्रान्तमर्यादान् राक्षसाधमान् । निहनिष्यामि संक्रुद्धः सुरा भवत विज्वराः ॥ २१ ॥ इत्युक्तास्ते सुराः सर्वे विष्णुना प्रभविष्णुना । यथावासं ययुर्हृष्टाः प्रशंसन्तो जनार्दनम् ॥ २२ ॥ विबुधानां समुद्योगं माल्यवांस्तु निशाचरः । श्रुत्वा तौ भ्रातरौ वीराविदं वचनमब्रवीत् ॥ २३ ॥ अमरा ऋषयश्चैव सङ्गम्य किल शङ्करम् । अस्मद्वधं परीप्सन्त इदं वचनमब्रुवन् ॥२४॥ सुकेशतनया देव वरदानबलोद्धताः । बाधन्तेऽस्मान् समुद्दृप्ता घोररूपाः पदे पदे ॥ २५ ॥ राक्षसैरभिभूताः स्म न शक्ताः स्म प्रजापते । स्वेषु सद्मसु संस्थातुं भयात्तेषां दुरात्मनाम् ॥ २६ ॥ तदस्माकं हितार्थाय जहि तांश्च त्रिलोचन । राक्षसान् हुंकृतेनैव दह प्रदहतां वर ॥ २७ ॥ इत्येवं त्रिदशैरुक्तो निशम्यान्धकसूदनः । शिरः करं च धुन्वान इदं वचनमब्रवीत् ॥२८॥ अवध्या मम ते देवाः सुकेशतनया रणे । मन्त्रं तु वः प्रदास्यामि यस्तान् वै निहनिष्यति॥२९॥



सुकेशेति । पदे पदे प्रतिक्षणमित्यर्थः ॥ २५—२७ ॥ इतीति । शिरः करं च धुन्वान इति सुरोक्तस्यासङ्गताद्योतनम् ॥२८॥ अवध्या इति । अवध्यत्वे

हेतुः सुकेशतनया इति ॥ २९–३८ ॥ तत इति । भगांशाविव । भगः पूर्वफल्गुनीनक्षत्रदेवता । तदंशः अर्यमा उत्तरफल्गुनीनक्षत्रदेवता ॥२९–४२॥

योऽसौ चक्रगदापाणिः पीतवासा जनार्दनः । हरिर्नारायणः श्रीमान् शरणं तं प्रपद्यथ ॥ ३० ॥ हरादवाप्य
ते मन्त्रं कामारिमभिवाद्य च । नारायणालयं प्राप्य तस्मै सर्वं न्यवेदयन् ॥ ३१ ॥ ततो नारायणेनोक्ता देवा इन्द्र
पुरोगमाः । सुरारींस्तान् हनिष्यामि सुरा भवत विज्वराः ॥ ३२ ॥ देवानां भयभीतानां हरिणा राक्षसर्षभौ । प्रति
ज्ञातो वधोऽस्माकं चिन्त्यतां यदिह क्षमम् ॥ ३३ ॥ हिरण्यकशिपोर्मृत्युरन्येषां च सुरद्विषाम् । नमुचिः काल
नेमिश्च संह्रादो वीरसत्तमः ॥ ३४ ॥ राधेयो बहुमायी च लोकपालोऽथ धार्मिकः । यमलार्जुनौ च हार्दिक्यः शुम्भ
श्चैव निशुम्भकः ॥ ३५ ॥ असुरा दानवाश्चैव सत्त्ववन्तो महाबलाः । सर्वे समरमासाद्य न श्रूयन्तेऽपराजिताः
॥ ३६ ॥ सर्वैः क्रतुशतैरिष्टं सर्वे मायाविदस्तथा । सर्वे सर्वास्त्रकुशलाः सर्वे शत्रुभयङ्कराः ॥ ३७ ॥ नारायणेन
निहताः शतशोऽथ सहस्रशः । एतज्ज्ञात्वा तु सर्वेषां क्षमं कर्तुमिहार्हथ ॥ ३८ ॥ ततः सुमाली माली च श्रुत्वा
माल्यवतो वचः । ऊचतुर्भ्रातरं ज्येष्ठं भगांशाविव वासवम् ॥ ३९ ॥ स्वधीतं दत्तमिष्टं चाप्यैश्वर्यं परिपालितम् ।
आयुर्निरामयं प्राप्तं सुधर्मः प्रापितः पथि ॥४०॥ देवसागरमक्षोभ्यं शस्त्रैः समवगाह्य च । जिता द्विषो ह्यप्रतिमास्तन्नो
मृत्युकृतं भयम् ॥ ४१ ॥ नारायणश्च रुद्रश्च शक्रश्चापि यमस्तथा । अस्माकं प्रमुखे स्थातुं सर्वे बिभ्यति सर्वदा
॥ ४२ ॥ विष्णोर्द्वेषस्य नास्त्येव कारणं राक्षसेश्वर । देवानामेव दोषेण विष्णोः प्रचलितं मनः ॥ ४३ ॥ तस्मादद्य
समुद्युक्ताः सर्वसैन्यसमावृताः । देवानेव जिघांसाम एभ्यो दोषः समुत्थितः ॥ ४४ ॥

विष्णोरिति । विष्णोर्द्वेषस्य कारणं नास्तीति । अस्माभिस्तदपकाराकरणादिति भावः ॥ ४३ ॥ तस्मादिति । जिघांसाम इति स्वार्थे सन्नार्थः ॥४४–४६॥

वाहनान्याह–स्यन्दनैरित्यादिना । सृमरैः गवयैः ॥ ४७–४९ ॥ लङ्केति । लङ्काविपर्ययं लङ्काविनाशं दृष्ट्वा यानि लङ्कानिलयानि भूतानि तत्रत्यानि

एवं संमन्त्र्य बलिनः सर्वे सैन्यसमावृताः । उद्योगं घोषयित्वा तु सर्वे नैर्ऋतपुङ्गवाः । युद्धाय निर्ययुः क्रुद्धा जम्भवृत्रबला इव ॥ ४५ ॥ इति ते राम संमन्त्र्य सर्वोद्योगेन राक्षसाः । युद्धाय निर्ययुः सर्वे महाकाया महाबलाः ॥ ४६ ॥ स्यन्दनैर्वारणैश्चैव हयैश्च गिरिसन्निभैः । खरैर्गोभी रथोष्ट्रैश्च शिंशुमारैर्भुजङ्गमैः ॥ ४७ ॥ मकरैः कच्छपै र्मीनैर्विहङ्गैर्गरुडोपमैः । सिंहैर्व्याघ्रैर्वराहैश्च सृमरैश्चमरैरपि ॥ ४८ ॥ त्यक्त्वा लङ्कां गताः सर्वे राक्षसा बलगर्विताः । प्रयाता देवलोकाय योद्धुं दैवतशत्रवः ॥ ४९ ॥ लङ्काविपर्ययं दृष्ट्वा यानि लङ्कालयान्यथ । भूतानि भयदर्शीनि विमनस्कानि सर्वशः ॥ ५० ॥ रथोत्तमैरुह्यमानाः शतशोऽथ सहस्रशः ॥ ५१ ॥ प्रयाता राक्षसास्तूर्णं देवलोकं प्रयत्नतः । रक्षसामेव मार्गेण दैवतान्यपचक्रमुः ॥ ५२ ॥ [ भूतानि भयदर्शीनि विषमस्थानि सर्वशः । ] भौमा श्चैवान्तरिक्षाश्च कालाज्ञप्ता भयावहाः । उत्पाता राक्षसेन्द्राणामभावाय समुत्थिताः ॥ ५३ ॥ अस्थीनि मेघा ववृषुरुष्णं शोणितमेव च । वेलां समुद्राश्चोत्क्रान्ताश्चेलुश्चाप्यथ भूधराः ॥ ५४ ॥ अट्टहासान् विमुञ्चन्तो घननाद समस्वनाः । वाश्यन्त्यश्च शिवास्तत्र दारुणं घोरदर्शनाः ॥ ५५ ॥ सम्पतन्त्यथ भूतानि दृश्यन्ते च यथाक्रमम् । [ भूम्यां परिपतन्ति स्म नृत्यमानाः सहस्रशः । ] गृध्रचक्रं महच्चात्र ज्वलनोद्गारिभिर्मुखैः ॥५६॥ राक्षसानामुपरि खे भ्रमतेऽलातचक्रवत् । कपोता रक्तपादाश्च शारिका विद्रुता ययुः । काका वाश्यन्ति तत्रैव बिडाला वै द्विपा दयः ॥ ५७ ॥ उत्पातांस्ताननादृत्य राक्षसा बलगर्विताः । यान्त्येव न निवर्त्तन्ते मृत्युपाशावपाशिताः ॥ ५८ ॥

दैवतानि विमनस्कानि, आसन्निति शेषः ॥ ५० ॥ ५१ ॥ प्रयाता इति । रक्षसां मार्गेण तद्यात्रया सहैवापचक्रमुः ॥ ५२ ॥ भौमाश्चेति । कालाज्ञप्ताः कालप्रेरिताः ॥ ५३–५७ ॥ उत्पातानिति । मृत्युपाशावपाशिताः सञ्जातबन्धनाः ॥ ५८ ॥

॥ ६८ ॥ तत इति । विग्रहैः

मालयवानिति । मालयवन्तं पर्वतम् ॥ ५९–६७ ॥ सुपर्णेति । नुन्नपक्षं क्षोभितबलम् । चलोपलमिति बहुव्रीहिः ॥ ६८ ॥ तत इति । विग्रहैः

माल्यवांश्च सुमाली च माली च सुमहाबलाः । आसन् पुरस्सरास्तेषां क्रतूनामिव पावकाः ॥५९॥ माल्यवन्तं च ते सर्वे माल्यवन्तमिवाचलम् । निशाचरा ह्याश्रयन्ति धातारमिव देवताः ॥ ६० ॥ तद्बलं राक्षसेन्द्राणां महाभ्रघननादितम् । जयेप्सया देवलोकं ययौ मालिवशे स्थितम् ॥ ६१ ॥ राक्षसानां समुद्योगं तं तु नारायणः प्रभुः । देवदूतादुपश्रुत्य चक्रे युद्धे तदा मनः ॥ ६२ ॥ स सज्जायुधतूणीरो वैनतेयोपरि स्थितः । आसज्य कवचं दिव्यं सहस्रार्कसमद्युति ॥ ६३ ॥ आबध्य शरसम्पूर्णे इषुधी विमले तदा । श्रोणिसूत्रं च खड्गं च विमलं कमलेक्षणः । शङ्खचक्रगदाशार्ङ्गखड्गाख्यप्रवरायुधान् ॥ ६४ ॥ सुपर्णं गिरिसङ्काशं वैनतेयमथास्थितः । राक्षसानामभावाय ययौ तूर्णतरं प्रभुः ॥ ६५ ॥ सुपर्णपृष्ठे स बभौ श्यामः पीताम्बरो हरिः । काञ्चनस्य गिरेः शृङ्गे सतडित्तोयदो यथा ॥ ६६ ॥ स सिद्धदेवर्षिमहोरगैश्च गन्धर्वयक्षैरुपगीयमानः । समाससादासुरसैन्यशत्रूंश्चक्रासिशार्ङ्गायुधशङ्खपाणिः ॥६७॥ सुपर्णपक्षानिलनुन्नपक्षं भ्रमत्पताकं प्रविकीर्णशस्त्रम् । चचाल तद्राक्षसराजसैन्यं चलोपलं नील इवाचलेन्द्रः ॥ ६८ ॥ ततः शरैः शोणितमांसरूषितैर्युगान्तवैश्वानरतुल्यविग्रहैः । निशाचराः सम्परिवार्य माधवं वरायुधैर्निर्बिभिदुः सहस्रशः ॥ ६९ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे षष्ठः सर्गः ॥ ६ ॥

नारायणगिरिं ते तु गर्जन्तो राक्षसाम्बुदाः । ववर्षुः शरवर्षेण वर्षेणेवाद्रिमम्बुदाः ॥ १ ॥
श्यामावदातस्तैर्विष्णुर्नीलैर्नक्तञ्चरोत्तमैः । वृतोऽञ्जनगिरीवासीद्वर्षमाणैः पयोधरैः ॥ २ ॥

आकारः ॥ ६९ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षष्ठः सर्गः ॥६॥ १ ॥ श्यामेति । श्यामः सन्नवदातः

शुभ्रः श्यामावदातः, निर्मल इत्यर्थः । अञ्जनगिरीवेति विभक्तिलोपः छान्दसः ॥२॥ शलभा इति । अमृतघटं मधुघटम् । दंशाः वनमक्षिकाः ॥३॥ तथेति । वज्राः वज्रधारा इव स्थिताः अनिलमनोजवाश्च । विपर्यये संहारकाले हरिं लोकाः प्रजा इव ॥ ३ ॥ ४ ॥ स्यन्दनैरिति स्पष्टम् ॥ ५ ॥ राक्षसेन्द्रा इति ।

शलभा इव केदारं मशका इव पर्वतम् । यथाऽमृतघटं दंशा मकरा इव चार्णवम् ॥ ३ ॥ तथा रक्षोधनुर्मुक्ता वज्रा निलमनोजवाः । हरिं विशन्ति स्म शरा लोका इव विपर्यये ॥ ४ ॥ स्यन्दनैः स्यन्दनगता गजैश्च गजपृष्ठगाः । अश्वारोहास्तथाऽश्वैश्च पादाताश्चाम्बरे स्थिताः ॥ ५ ॥ राक्षसेन्द्रा गिरिनिभाः शरैः शक्त्यृष्टितोमरैः । निरुच्छ्वासं हरिं चक्रुः प्राणायामा इव द्विजम् ॥ ६ ॥ निशाचरैस्ताड्यमाने मीनैरिव महोदधिः । शार्ङ्गमायम्य दुर्धर्षो राक्षसेभ्यो ऽसृजच्छरान् ॥ ७ ॥ शरैः पूर्णायतोत्सृष्टैर्वज्रवक्त्रैर्मनोजवैः । चिच्छेद विष्णुर्निशितैः शतशोऽथ सहस्रशः ॥ ८ ॥ विद्राव्य शरवर्षेण वर्षवायुरिवोत्थितम् । पाञ्चजन्यं महाशङ्खं प्रदध्मौ पुरुषोत्तमः ॥ ९ ॥ सोऽम्बुजो हरिणा ध्मातः सर्वप्राणेन शङ्खराट् । ररास भीमनिर्ह्रादस्त्रैलोक्यं व्यथयन्निव ॥१०॥ शङ्खराजरवः सोऽथ त्रासयामास राक्षसान् । मृगराज इवारण्ये समदानिव कुञ्जरान् ॥ ११ ॥ न शेकुरश्वाः संस्थातुं विमदाः कुञ्जरा भवन् । स्यन्दनेभ्यश्च्युता वीराः शङ्खरावितदुर्बलाः ॥ १२ ॥ शार्ङ्गचापविनिर्मुक्ता वज्रतुल्याननाः शराः । विदार्य तानि रक्षांसि सुपुङ्खा विविशुः क्षितिम् ॥ १३ ॥ भिद्यमानाः शरैः सङ्ख्ये नारायणकरच्युतैः । निपेतू राक्षसा भूमौ शैला वज्रहता इव ॥ १४ ॥ व्रणानि परगात्रेभ्यो विष्णुचक्रकृतानि वै । असृक् क्षरन्ति धाराभिः स्वर्णधारा इवाचलाः ॥ १५ ॥ शङ्खराजरवश्चापि शार्ङ्गचापरवस्तथा । राक्षसानां रवांश्चापि ग्रसते वैष्णवो रवः ॥ १६ ॥

हरिं निरुच्छ्वासं चक्रुः उच्छ्वासानवसरवन्तं कृतवन्तः ॥ ६ ॥ ७ ॥ शरैरिति । पूर्णायततया उत्सृष्टैः वज्रवक्त्रैः वज्रालिनाकुण्ठं वक्त्रं येषां तैः ॥८॥९॥ स इति । अम्बुजः शङ्खः । सर्वप्राणेन सर्वबलेन । ध्मातः आध्मानितः ॥१०॥ ११ ॥ न शेकुरिति । कुञ्जराभवन्नित्यार्षः सन्धिः । भवन्निति वा च्छेदः ।

शङ्खरावितेन शङ्खध्वनिना। स्वार्थे णिः॥१२-१८॥तथेति। शार्ङ्गविनिर्मुक्ताः इत्यतद्विवृणोति-निर्धावन्तीति। द्वीपिनः क्षुद्रव्याघ्राः॥१९॥२०॥ द्वीपिनेति।

तेषां शिरोधरान् धूताञ्छरध्वजधनूंषि च। रथान् पताकास्तूणीरान् चिच्छेद स हरिः शरैः ॥१७॥ सूर्यादिव करा घोरा ऊर्मयः सागरादिव। पर्वतादिव नागेन्द्रा धारौघा इव चाम्बुदात् ॥ १८ ॥ तथा शार्ङ्गविनिर्मुक्ताः शरा नारायणेरिताः। निर्धावन्तीषवस्तूर्णं शतशोऽथ सहस्रशः ॥ १९ ॥ शरभेण यथा सिंहाः सिंहेन द्विरदा यथा। द्विरदेन यथा व्याघ्रा व्याघ्रेण द्वीपिनो यथा ॥ २० ॥ द्वीपिनेव यथा श्वानः शुना मार्जारका यथा। मार्जारेण यथा सर्पाः सर्पेण च यथाऽऽखवः ॥ २१ ॥ तथा ते राक्षसाः सर्वे विष्णुना प्रभविष्णुना। द्रवन्ति द्राविताश्चान्ये शायिताश्च महीतले ॥ २२ ॥ राक्षसानां सहस्राणि निहत्य मधुसूदनः। वारिजं पूरयामास तोयदं सुरराडिव ॥ २३ ॥ नारायणशरत्रस्तं शङ्खनादसुविह्वलम्। ययौ लङ्कामभिमुखं प्रभग्नं राक्षसं बलम् ॥२४॥ प्रभग्ने राक्षसबले नारायणशराहते। सुमाली शरवर्षेण निववार रणे हरिम् ॥ २५ ॥ स तु तं छादयामास नीहार इव भास्करम्। राक्षसाः सत्त्वसम्पन्नाः पुनर्धैर्यं समादधुः ॥ २६ ॥ अथ सोऽभ्यपतद्रोषाद्राक्षसो बलदर्पितः। महानादं प्रकुर्वाणो राक्षसान् जीवयन्निव ॥२७॥ उत्क्षिप्य लम्बाभरणं धुन्वन् करमिव द्विपः। ररास राक्षसो हर्षात् सतडित्तोयदो यथा ॥२८॥ सुमालेर्नर्दतस्तस्य शिरो ज्वलितकुण्डलम्। चिच्छेद यन्तुरश्वाश्च भ्रान्तास्तस्य तु रक्षसः ॥ २९ ॥ तैरश्वैर्भ्राम्यते भ्रान्तैः सुमाली राक्षसेश्वरः। इन्द्रियाश्वैः परिभ्रान्तैर्धृतिहीनो यथा नरः ॥ ३० ॥ ततो विष्णुं महाबाहुं प्रापतन्तं रणाजिरे। हते सुमालेरश्वैश्च रथे विष्णुरथं प्रति ॥ ३१ ॥

आखवो मूषिकाः ॥२१-२२॥ सुरराडिवेति इन्द्रस्य मेघनियन्तृत्वात्तथोक्तम् ॥२३॥ नारायणेति। राक्षसं रक्षःसंबन्धि ॥२४-२८॥ सुमालेरिति। यन्तुः सारथेः। भ्रान्ताः नष्टसारथिकत्वादनवस्थितगतिका इत्यर्थः ॥२९॥ तैरिति। इन्द्रियार्थैरश्वैः धृतिहीनो नरः यथा तथा सुमाली बभ्रामेत्यर्थः॥३०-३३

अयेति। मौर्वीस्वनं श्रुत्वेत्यनेन मालिशरस्याच्छिन्नगतिर्गम्यते ॥ ३४ ॥ त इति। नागाः सर्पाः। सुधारसम् अमृतम् गरुडानीतम् ॥ ३५ ॥

माली चाभ्यद्रवद्युक्तः प्रगृह्य सशरं धनुः। मालेर्धनुश्च्युता बाणाः कार्तस्वरविभूषिताः। विविशुर्हरिमासाद्य क्रौञ्चं पत्ररथा इव ॥ ३२ ॥ अर्द्यमानः शरैः सोऽथ मालिमुक्तैः सहस्रशः। चुक्षुभे न रणे विष्णुर्जितेन्द्रिय इवाधिभिः ॥ ३३ ॥ अथ मौर्वीस्वनं श्रुत्वा भगवान् भूतभावनः। मालिनं प्रति बाणौघान् ससर्जारिनिषूदनः ॥ ३४ ॥ ते मालिदेहमासाद्य वज्रविद्युत्प्रभाः शराः। पिबन्ति रुधिरं तस्य नागा इव सुधारसम् ॥ ३५ ॥ मालिनं विमुखं कृत्वा शङ्खचक्रगदाधरः। मालिमौलिं ध्वजं चापं वाजिनश्चाप्यपातयत् ॥३६॥ विरथस्तु गदां गृह्य माली नक्तञ्चरोत्तमः। आपुप्लुवे गदापाणिर्गिर्यग्रादिव केसरी ॥ ३७ ॥ गदया गरुडेशानमीशानमिव चान्तकः। ललाटदेशेऽभ्यहनद्वज्रेणेन्द्रो यथाऽचलम् ॥३८॥ गदयाऽभिहतस्तेन मालिना गरुडो भृशम्। रणात् पराङ्मुखं देवं कृतवान् वेदनातुरः ॥ ३९ ॥ पराङ्मुखे कृते देवे मालिना गरुडेन वै। उदतिष्ठन्महाञ्छब्दो रक्षसामभिनर्दताम् ॥ ४० ॥ रक्षसां रवतां रावं श्रुत्वा हरिहयानुजः ॥ ४१॥ तिर्यगास्थाय संक्रुद्धः पक्षीशे भगवान् हरिः। पराङ्मुखोऽप्युत्ससर्ज मालेश्चक्रं जिघांसया ॥४२॥ तत् सूर्यमण्डलाभासं स्वभासा भासयन्नभः। कालचक्रनिभं चक्रं मालेः शीर्षमपातयत् ॥४३॥

मालिनमिति। मालिमौलिं मालिमुकुटम् ॥ ३६ ॥ ३७ ॥ गदयेति। गरुडाः पक्षिणः। तदीशानं वैनतेयम् ॥ ३८–४० ॥ रक्षसामिति। हरिहयानुजः

स०—ईशानं रुद्रमिव। श्वेतारण्ये मार्कण्डेयमुनेः कस्यचिद्राजश्चावनार्थमीशानस्यान्तकस्य चान्योन्यं समभवत्समरः। तदाऽन्तकः शिवशिरसि प्रहृतवान् तथेति कथा पौराणिक्यनुसन्धेया। तात्कालिकपरावृत्त्यनुकूलम् 'वज्रेणेन्द्रो यथाऽचलम्' इति निदर्शनम्। प्राचीनन्त्वन्ततोगत्वा गरुडानुरूपमिति मन्तव्यन्। प्राचीनमन्वयंनिदर्शनं द्वितीयं व्यतिरेकनिदर्शनमिति वा विवेकः ॥ ३८॥ सूर्यमण्डलाभासं सूर्यमण्डलवदाभासत इति तत्तथा। यद्वा सूर्यमण्डलस्याभासा यस्य तत्। हलन्तत्वाट्टाप्। ततो बहुव्रीहिः। अथवा सूर्यमण्डलाभासंस्वभासा इत्येकं पदम्। सूर्यमण्डलस्याभा प्रकाशः, ततोऽपि सम् समीचीना या स्वभाः तया नभो भासयदिति ॥ ४३ ॥

इन्द्रानुजः ॥ ४१–४४ ॥ तत इति । सर्वप्राणसमीरितः सर्वबलेन प्रवर्तितः ॥ ४५–४९ ॥ नारायण इति । अशनीभिरित्यार्षो दीर्घः ॥ ५० ॥

तच्छिरो राक्षसेन्द्रस्य चक्रकृत्तं विभीषणम् । पपात रुधिरोद्गारि पुरा राहुशिरो यथा ॥ ४४ ॥ ततः सुरैः सुसंहृष्टैः सर्वप्राणसमीरितः । सिंहनादरवोन्मुक्तः साधु देवेति वादिभिः ॥४५॥ मालिनं निहतं दृष्ट्वा सुमाली माल्यवानपि । सबलौ शोकसन्तप्तौ लङ्कामेव प्रधावितौ ॥ ४६ ॥ गरुडस्तु समाश्वस्तः सन्निवृत्य यथा पुरा । राक्षसान् द्रावयामास पक्षवातेन कोपितः ॥ ४७ ॥ चक्रकृत्तास्यकमला गदासञ्चूर्णितोरसः । लाङ्गलग्लपितग्रीवा मुसलैर्भिन्नमस्तकाः ॥ ४८ ॥ केचिच्चैवासिना च्छिन्नास्तथाऽन्ये शरपीडिताः । निपेतुरम्बरात्तूर्णं राक्षसाः सागराम्भसि ॥४९॥ नारायणो बाणवराशनीभिर्विदारयामास धनुर्विमुक्तैः । नक्तञ्चरान् मुक्तविधूतकेशान् यथाऽशनीभिः सतडिन्महाभ्राः ॥५०॥ भिन्नातपत्रं पतमानमस्त्रं शरैरपध्वस्तविनीतवेषम् । विनिस्सृतान्त्रं भयलोलनेत्रं बलं तदुन्मत्ततरं बभूव ॥५१॥ सिंहार्दितानामिव कुञ्जराणां निशाचराणां सहकुञ्जराणाम् । रवाश्च वेगाश्च समं बभूवुः पुराणसिंहेन विमर्दितानाम् ॥ ५२ ॥ ते वार्यमाणा हरिबाणजालैः सबाणजालानि समुत्सृजन्तः । धावन्ति नक्तञ्चरकालमेघा वायुप्रभिन्ना इव कालमेघाः ॥५३॥ चक्रप्रहारैर्विनिकृत्तशीर्षाः सञ्चूर्णिताङ्गाश्च गदाप्रहारैः । असिप्रहारैर्द्विविधा विभिन्नाः पतन्ति शैला इव राक्षसेन्द्राः ॥ ५४ ॥ विलम्बमानैर्मणिहारकुण्डलैर्निशाचरैर्नीलबलाहकोपमैः । निपात्यमानैर्ददृशे निरन्तरं निपात्यमानैरिव नीलपर्वतैः ॥५५॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे सप्तमः सर्गः ॥७॥

भिन्नातपत्रमिति । उन्मत्ततरम् अतिशयेन विस्मृतस्वपरविवेकम् ॥५१॥ सिंहार्दितानामिति । पुराणसिंहेन नरसिंहेन ॥ ५२ ॥ त इति । समुत्सृजन्तः त्यक्तवन्तः ॥५३॥ चक्रप्रहारैरिति । द्विविधा द्विप्रकारेण विभिन्नाः, खण्डिता इत्यर्थः ॥ ५४ ॥ ५५ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तमः सर्गः ॥ ७ ॥

हन्यमान इत्यादि । पृष्ठतः, अनुद्रुत्येति शेषः ॥ १ ॥ २ ॥ नारायणेति । यथेतरः क्षुद्रजन इव ॥३–५॥ पराङ्मुखवधोक्तदोषः स्वप्रतिज्ञापालनपरस्य

हन्यमाने बले तस्मिन् पद्मनाभेन पृष्ठतः । माल्यवान् सन्निवृत्तोऽथ वेलामेत्य इवार्णवः ॥ १ ॥ संरक्तनयनः कोपाच्चलन्मौलिर्निशाचरः । पद्मनाभमिदं प्राह वचनं पुरुषोत्तमम् ॥ २ ॥ नारायण न जानीषे क्षात्रधर्मं पुरातनम् । अयुद्धमनसो भीतानस्मान् हंसि यथेतरः ॥ ३ ॥ पराङ्मुखवधं पापं यः करोत्यसुरेतरः । स हन्ता न गतः स्वर्गं लभते पुण्यकर्मणाम् ॥ ४ ॥ युद्धश्रद्धाऽथवा तेऽस्ति शङ्खचक्रगदाधर । अहं स्थितोऽस्मि पश्यामि बलं दर्शय यत्तव ॥ ५ ॥ माल्यवन्तं स्थितं दृष्ट्वा माल्यवन्तमिवाचलम् । उवाच राक्षसेन्द्रं तं देवराजानुजो बली ॥ ६ ॥ युष्मत्तो भयभीतानां देवानां वै मयाऽभयम् । राक्षसोत्सादनं दत्तं तदेतदनुपाल्यते ॥ ७ ॥ प्राणैरपि प्रियं कार्यं देवानां हि सदा मया । सोऽहं वो निहनिष्यामि रसातलगतानपि ॥ ८ ॥ देवदेवं ब्रुवाणं तं रक्ताम्बुरुहलोचनम् । शक्त्या बिभेद संक्रुद्धो राक्षसेन्द्रो भुजान्तरे ॥ ९ ॥ माल्यवद्भुजनिर्मुक्ता शक्तिर्घण्टाकृतस्वना । हरेरुरसि बभ्राज मेघस्थेव शतह्रदा ॥ १० ॥ ततस्तामेव चोत्कृष्य शक्तिं शक्तिधरप्रियः । माल्यवन्तं समुद्दिश्य चिक्षेपाम्बुरुहेक्षणः ॥ ११ ॥ स्कन्दोत्सृष्टेव सा शक्तिर्गोविन्दकरनिस्सृता । कांक्षन्ती राक्षसं प्रायान्माहेन्द्रीवाञ्जनाचलम् ॥ १२ ॥ सा तस्योरसि विस्तीर्णे हारभासाऽवभासिते । अपतद्राक्षसेन्द्रस्य गिरिकूट इवाशनिः ॥ १३ ॥ तया भिन्नतनुत्राणः प्राविशद्विपुलं तमः । माल्यवान् पुनराश्वस्तस्तस्थौ गिरिरिवाचलः ॥ १४ ॥ ततः कार्ष्णायसं शूलं कण्टकैर्बहुभिर्वृतम् । प्रगृह्याभ्यहनद्देवं स्तनयोरन्तरे दृढम् ॥ १५ ॥

नास्तीत्याह—माल्यवन्तमिति ॥६–१०॥ तत इति । तामेव स्ववक्षोलग्नामेव । शक्तिधरप्रियः सुब्रह्मण्यप्रियः । माहेश्वरार्चनं चिन्त्यम् ॥ ११ ॥ १२ ॥ मेति । हारभासा मुक्ताहारकान्त्या । कूटं शृङ्गम् ॥ १३ ॥ तयेति । तमः मोहः ॥ १४ ॥ १५ ॥

तथेति। रणे रक्तः रणप्रियः। मुष्टिना च ताडयित्वा अपक्रान्तः, पृष्ठत इति शेषः ॥ १६ ॥ १७ ॥ वैनतेय इति। वायुः शुष्कपर्णं यथा व्यपोहति तथा

तथैव रणरक्तस्तु मुष्टिना वासवानुजम्। ताडयित्वा धनुर्मात्रमपक्रान्तो निशाचरः ॥ १६ ॥ ततोऽम्बरे महाञ्छब्दः साधु साध्विति चोदितः। आहत्य राक्षसो विष्णुं गरुडं चाप्यताडयत् ॥ १७ ॥ वैनतेयस्ततः क्रुद्धः पक्षवातेन राक्षसम्। व्यपोहद्बलवान् वायुः शुष्कपर्णचयं यथा ॥ १८ ॥ द्विजेन्द्रपक्षवातेन द्रावितं दृश्य पूर्वजम्। सुमाली स्वबलैः सार्धं लङ्कामभिमुखो ययौ ॥ १९ ॥ पक्षवातबलोद्धूतो माल्यवानपि राक्षसः। स्वबलेन समागम्य ययौ लङ्कां ह्रिया वृतः ॥ २० ॥ एवं ते राक्षसास्तेन हरिणा कमलेक्षण। बहुशः संयुगे भग्ना हतप्रवरनायकाः ॥ २१ ॥ अशक्नुवन्तस्ते विष्णुं प्रतियोद्धुं भयार्दिताः। त्यक्त्वा लङ्कां गता वस्तुं पातालं सहपत्नयः ॥ २२ ॥ सुमालिनं समासाद्य राक्षसं रघुसत्तम। स्थिताः प्रख्यातवीर्यास्ते वंशे सालकटङ्कटे ॥२३॥ ये त्वया निहतास्ते तु पौलस्त्या नाम राक्षसाः। सुमाली माल्यवान् माली ये च तेषां पुरस्सराः। सर्वे तेभ्यो महाभाग रावणाद्बलवत्तराः ॥ २४ ॥ न चान्यो राक्षसान् हन्ता सुरारीन् देवकण्टकान्। ऋते नारायणं देवं शङ्खचक्रगदाधरम् ॥२५॥ भवान्नारायणो देवश्चतुर्बाहुः सनातनः। राक्षसान् हन्तुमुत्पन्नो ह्यजेयः प्रभुरव्ययः ॥ २६ ॥ नष्टधर्मव्यवस्थाता काले काले प्रजाकरः। उत्पद्यते दस्युवधे शरणागतवत्सलः ॥ २७ ॥ एषा मया तव नराधिप राक्षसानामुत्पत्तिरद्य कथिता सकला यथावत्। भूयो निबोध रघुसत्तम रावणस्य जन्मप्रभावमतुलं ससुतस्य सर्वम् ॥ २८ ॥

पक्षवातेन राक्षसं व्यपोहत् ॥ १८ ॥ द्विजेन्द्रेति। दृश्य दृष्ट्वा ॥ १९--२१ ॥ अशक्नुवन्त इति। सहपत्नयः सस्त्रीका इत्यर्थः ॥ २२ ॥ सुमालिनमिति। सालकटङ्कटे सालकटङ्कटा माल्यवदादीनां पितामही विद्युत्केशपत्नी तस्याः सम्बन्धी सालकटङ्कटः तस्मिन्वंशे प्रख्यातवीर्याः। वृद्धाच्छाभाव आर्षः ॥ २३ ॥ य इति। ये पौलस्त्या रावणादयो निहतास्तेभ्यः रावणाच्च माल्यवदादयो बलवत्तराः ॥२४॥ तर्हि किं मे प्राशस्त्यं भवद्भिरुच्यत इति शङ्कायां

तत्प्राशस्त्यमपि तवैवेत्याह—न चान्य इति । राक्षसान्हन्तेति । स त्वम् ॥२८-२९॥ इति श्रीगोविन्दराज० उत्तरश्रीरामायणव्याख्याने अष्टमः सर्गः ॥८॥ कस्यचिदिति । विना पद्मं पद्मं त्यक्त्वा स्थिताम् ॥ १-६ ॥ किंकृतमिति । राक्षसानां श्रेयः किंकृतं स्यात् केनोपायेन कृतं स्यात्, कथं वयं वर्धेमही

चिरात् सुमाली व्यचरद्रसातलं सराक्षसो विष्णुभयार्दितस्तदा । पुत्रैश्च पौत्रैश्च समन्वितो बली ततस्तु लङ्कामवसद्धनेश्वरः ॥ २९ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे अष्टमः सर्गः ॥ ८ ॥

कस्यचित्त्वथ कालस्य सुमाली नाम राक्षसः । रसातलान्मर्त्यलोकं सर्वं वै विचचार ह ॥१॥ नीलजीमूतसङ्काशस्तप्तकाञ्चनकुण्डलः । कन्यां दुहितरं गृह्य विना पद्ममिव श्रियम् ॥ २ ॥ राक्षसेन्द्रः स तु तदा विचरन् वै महीतलम् । तदाऽपश्यत् स गच्छन्तं पुष्पकेण धनेश्वरम् ॥३॥ गच्छन्तं पितरं द्रष्टुं पुलस्त्यतनयं विभुम् । तं दृष्ट्वाऽमरसङ्काशं स्वच्छन्दं तपनोपमम् ॥ ४ ॥ रसातलं प्रविष्टः सन् मर्त्यलोकात् सविस्मयः । इत्येवं चिन्तयामास राक्षसानां महामतिः ॥ ५ ॥ किंकृतं श्रेय इत्येवं वर्धेमहि कथं वयम् । अथाब्रवीत् सुतां रक्षः कैकसीं नाम नामतः ॥ ६ ॥ पुत्रि प्रदानकालोऽयं यौवनं तेऽतिवर्तते । प्रत्याख्यानाच्च भीतैस्त्वं न वरैः प्रतिगृह्यसे ॥७॥ त्वत्कृते च वयं सर्वे यन्त्रिता धर्मबुद्धयः । त्वं हि सर्वगुणोपेता श्रीः साक्षादिव पुत्रिके । कन्यापितृत्वं दुःखं हि सर्वेषां मानकांक्षिणाम् ॥ ८ ॥ न ज्ञायते च कः कन्यां वरयेदिति कन्यके ॥ ९ ॥ मातुः कुलं पितृकुलं यत्र चैव प्रदीयते । कुलत्रयं सदा कन्या संशये स्थाप्य तिष्ठति ॥ १० ॥

त्येवं चिन्तयामासेति योजना ॥ ६ ॥ पुत्रीति । प्रत्याख्यानात् भीतैरस्माभिस्त्वं वरैर्न प्रतिगृह्यसे, प्रतिग्रहं न प्राप्नोषीत्यर्थः ॥ ७ ॥ त्वत्कृत इति । यन्त्रिताः कृतप्रयासाः । धर्मबुद्धयः विवाहधर्मनिमित्तचिन्तावन्तः ॥ ८ ॥ कन्यापितृत्वस्य दुःखत्वमेव प्रदर्शयति—न ज्ञायत इति ॥ ९ ॥ अथ वरणानन्तरमपि विशिष्य दुःखहेतुत्वं कन्याया इत्याह—मातुरिति । संशये स्थाप्य तिष्ठतीति । कथमस्याश्चारित्रभ्रंशो न भविष्यतीति कुलत्रयं चिन्ताकुल

मेव सदा भवतांत्यर्थः ॥ १०—१३ ॥ एतस्मिन्निति । उपातिष्ठत् प्रदोषे अग्निहोत्रं कृतवानित्यर्थः ॥ १४ ॥ अविचिन्त्येति । पितृगौरवात् पितरि बहुमानात् । चरणाधोमुखी चरणसमीपाधोमुखी । विलिखन्तीति चिन्तानुभावः ॥ १५ ॥ स त्विति । कुतः कस्माद्देशात् । किं कार्यं मया कर्तव्यम् । कस्य

सा त्वं मुनिवरं श्रेष्ठं प्रजापतिकुलोद्भवम् । भज विश्रवसं पुत्रि पौलस्त्यं वरय स्वयम् ॥ ११ ॥ ईदृशास्ते भविष्यन्ति पुत्राः पुत्रि न संशयः । तेजसा भास्करसमो यादृशोऽयं धनेश्वरः ॥ १२ ॥ सा तु तद्वचनं श्रुत्वा कन्यका पितृगौरवात् । तत्रोपागम्य सा तस्थौ विश्रवा यत्र तप्यते ॥ १३ ॥ एतस्मिन्नन्तरे राम पुलस्त्यतनयो द्विजः । अग्निहोत्रमुपातिष्ठच्चतुर्थ इव पावकः ॥ १४ ॥ अविचिन्त्य तु तां वेलां दारुणां पितृगौरवात् । उपसृत्याग्रतस्तस्य चरणाधोमुखी स्थिता । विलिखन्ती मुहुर्भूमिमङ्गुष्ठाग्रेण भामिनी ॥ १५ ॥ स तु तां प्रेक्ष्य सुश्रोणीं पूर्णचन्द्रनिभाननाम् । अब्रवीत् परमोदारो दीप्यमानां स्वतेजसा ॥ १६ ॥ भद्रे कस्यासि दुहिता कुतो वा त्वमिहागता । किं कार्यं कस्य वा हेतोस्तत्त्वतो ब्रूहि शोभने ॥ १७ ॥ एवमुक्ता तु सा कन्या कृताञ्जलिरथाब्रवीत् । आत्मप्रभावेन मुने ज्ञातुमर्हसि मे मतम् ॥ १८ ॥ किन्तु मां विद्धि ब्रह्मर्षे शासनात् पितुरागताम् । कैकसी नाम नाम्नाऽहं शेषं त्वं ज्ञातुमर्हसि ॥ १९ ॥ स तु गत्वा मुनिर्ध्यानं वाक्यमेतदुवाच ह । विज्ञातं ते मया भद्रे कारणं यन्मनोगतम् ॥ २० ॥ सुताभिलाषो मत्तस्ते मत्तमातङ्गगामिनि । दारुणायां तु वेलायां यस्मात्त्वं मामुपस्थिता ॥ २१ ॥ शृणु तस्मात् सुतान् भद्रे यादृशान् जनयिष्यसि । दारुणान् दारुणाकारान् दारुणाभिजनप्रियान् ॥ २२ ॥

हेतोः कस्मै प्रयोजनाय ॥ १६ ॥ १७ ॥ एवमिति । मे मतं त्वद्भर्तृकत्वाभिलापित्वम् ॥ १८ ॥ तच्च वक्तुं लज्जावशादनुचितमिति सूचयित्वा वक्तुमुचितमाह—किन्त्विति ॥ १९ ॥ स त्विति । कारणमागमनकारणम् ॥ २० ॥ तदेवाह—सुतेति ॥ २१ ॥ शृण्विति । दारुणान् क्रूरस्वभावान् । दारुणा

कारान् क्रूरवेषान् दारुणाभिजनप्रियान् दारुणाभिजने क्रूरबन्धौ राक्षसरूपे प्रियं येषां तान् ॥२२--२८॥ तस्मिन्निति । सज्वालकवलाः ज्वालारूपास्यान्त

प्रसविष्यसि सुश्रोणि राक्षसान् क्रूरकर्मणः । सा तु तद्वचनं श्रुत्वा प्रणिपत्याब्रवीद्वचः ॥ २३ ॥ भगवन्नीदृशान् पुत्रांस्त्वत्तोऽहं ब्रह्मवादिनः । नेच्छामि सुदुराचारान् प्रसादं कर्तुमर्हसि ॥२४ ॥ कन्यया त्वेवमुक्तस्तु विश्रवा मुनिपुङ्गवः । उवाच कैकसीं भूयः पूर्णेन्दुरिव रोहिणीम् ॥ २५ ॥ पश्चिमो यस्तव सुतो भविष्यति शुभानने । मम वंशानुरूपः स धर्मात्मा च भविष्यति ॥ २६ ॥ एवमुक्ता तु सा कन्या राम कालेन केनचित् । जनयामास बीभत्सं रक्षोरूपं सुदारुणम् ॥ २७ ॥ दशग्रीवं महादंष्ट्रं नीलाञ्जनचयोपमम् । ताम्रोष्ठं विंशतिभुजं महास्यं दीप्तमूर्धजम् ॥ २८ ॥ तस्मिञ्जाते तु तत्काले सज्वालकवलाः शिवाः । क्रव्यादाश्चापसव्यानि मण्डलानि प्रचक्रमुः ॥ २९ ॥ ववर्ष रुधिरं देवो मेघाश्च खरनिस्वनाः । प्रबभौ न च सूर्यो वै महोल्काश्चापतन् भुवि ॥ ३० ॥ चकम्पे जगती चैव ववुर्वाताः सुदारुणाः । अक्षोभ्यः क्षुभितश्चैव समुद्रः सरितां पतिः ॥ ३१ ॥ अथ नामाकरोत्तस्य पितामहसमः पिता । दशग्रीवः प्रसूतोऽयं दशग्रीवो भविष्यति ॥३२॥ तस्य त्वनन्तरं जातः कुम्भकर्णो महाबलः । प्रमाणाद्यस्य विपुलं प्रमाणं नेह विद्यते ॥ ३३ ॥ ततः शूर्पणखा नाम सञ्जज्ञे विकृतानना । विभीषणश्च धर्मात्मा कैकस्याः पश्चिमः सुतः ॥ ३४ ॥ तस्मिञ्जाते महासत्त्वे पुष्पवर्षं पपात ह ॥ ३५ ॥ नभस्स्थाने दुन्दुभयो देवानां प्राणदंस्तदा । वाक्यं चैवान्तरिक्षे च साधु साध्विति तत्तथा ॥ ३६ ॥ तौ तु तत्र महारण्ये ववृधाते महौजसौ । कुम्भकर्णदशग्रीवौ लोकोद्वेगकरौ तदा ॥ ३७ ॥

गतकवलाः । शिवाः वृद्धजम्बुकाः ॥ २९॥ ववर्षेति । देवः पर्जन्यदेवः ॥ ३०--३२ ॥ तस्य त्विति । यस्य प्रमाणाद्विपुलं प्रमाणं नेह विद्यते नैवास्ति, प्रमाणभूतेष्विति शेषः ॥ ३३--३६ ॥ ताविति । तत्र महारण्ये पितुराश्रमारण्ये ॥ ३७ ॥ ३८ ॥

विभीषण इति । स्वाध्यायं नियतम् आहारः अहरहरीति स्वाध्यायनियताहारः ॥ ३९-४१ ॥ पुत्रेति । आत्मानमीदृशं कुबेरवद्दिव्यवैभवरहितम् ।

कुम्भकर्णः प्रमत्तस्तु महर्षीन् धर्मवत्सलान् । त्रैलोक्यं भक्षयन्नित्यासन्तुष्टो विचचार ह ॥ ३८ ॥ विभीषणस्तु धर्मात्मा नित्यं धर्मे व्यवस्थितः । स्वाध्यायनियताहार उवास विजितेन्द्रियः ॥ ३९ ॥ अथ वैश्रवणो देवस्तत्र कालेन केनचित् । आगतः पितरं द्रष्टुं पुष्पकेण धनेश्वरः ॥ ४० ॥ तं दृष्ट्वा कैकसी तत्र ज्वलन्तमिव तेजसा । आगम्य राक्षसी तत्र दशग्रीवमुवाच ह ॥ ४१ ॥ पुत्र वैश्रवणं पश्य भ्रातरं तेजसा वृतम् । भ्रातृभावे समे चापि पश्यात्मानं त्वमीदृशम् ॥४२॥ दशग्रीव तथा यत्नं कुरुष्वामितविक्रम । यथा त्वमसि मे पुत्र भव वैश्रवणोपमः ॥ ४३ ॥ मातुस्तद्वचनं श्रुत्वा दशग्रीवः प्रतापवान् । अमर्षमतुलं लेभे प्रतिज्ञां चाकरोत्तदा ॥ ४४ ॥ सत्यं ते प्रतिजानामि भ्रातृतुल्योऽधिकोऽपि वा । भविष्याम्योजसा चैव सन्तापं त्यज हृद्गतम् ॥ ४५ ॥ ततस्तेनैव कोपेन दशग्रीवः सहानुजः । चिकीर्षुर्दुष्करं कर्म तपसे धृतमानसः ॥ ४६ ॥ प्राप्स्यामि तपसा काममिति कृत्वाऽध्यवस्य च । आगच्छदात्मसिद्ध्यर्थं गोकर्णस्याश्रमं शुभम् ॥ ४७ ॥ स राक्षसस्तत्र सहानुजस्तदा तपश्चकारातुलमुग्रविक्रमः । अतोषयच्चापि पितामहं विभुं ददौ स तुष्टश्च वराञ्जयावहान् ॥ ४८ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे नवमः सर्गः ॥ ९ ॥

अथाब्रवीन्मुनिं रामः कथं ते भ्रातरो वने । कीदृशं तु तदा ब्रह्मंस्तपस्तेपुर्महाबलाः ॥ १ ॥
अगस्त्यस्त्वब्रवीत्तत्र रामं सुप्रीतमानसम् । तांस्तान् धर्मविधींस्तत्र भ्रातरस्ते समाविशन् ॥ २ ॥

दरिद्रमित्यर्थः ॥ ४२-४८ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने नवमः सर्गः ॥ ९ ॥ १-२ ॥

मेघेति । वीरासनं नाम वामोरूपरि दक्षिणजङ्घां प्रतिष्ठाप्य स्थितिः॥४–७॥ पञ्चेति । सूर्यं चैवेति चकारेण पूर्ववदेकपादस्थितिः समुच्चीयते॥८॥ एवमिति ।



कुम्भकर्णस्ततो यत्तो नित्यं धर्मपथे स्थितः । ततापं ग्रीष्मकाले तु पञ्चाग्नीन् परितः स्थितः ॥ ३ ॥ मेघाम्बुसिक्तो वर्षासु वीरासनमसेवत । नित्यं च शिशिरे काले जलमध्यप्रतिश्रयः ॥ ४ ॥ एवं वर्षसहस्राणि दश तस्यातिचक्रमुः । धर्मे प्रयतमानस्य सत्पथे निष्ठितस्य च ॥ ५ ॥ विभीषणस्तु धर्मात्मा नित्यं धर्मपरः शुचिः । पञ्चवर्षसहस्राणि पादेनैकेन तस्थिवान् ॥६॥ समाप्ते नियमे तस्य ननृतुश्चाप्सरोगणाः । पपात पुष्पवर्षं च क्षुभिताश्चापि देवताः ॥ ७ ॥ पञ्च वर्षसहस्राणि सूर्यं चैवान्ववर्तत । तस्थौ चोर्ध्वशिरोबाहुः स्वाध्यायधृतमानसः ॥ ८ ॥ एवं विभीषणस्यापि स्वर्गस्थस्येव नन्दने । दशवर्षसहस्राणि गतानि नियतात्मनः ॥ ९ ॥ दश वर्षसहस्राणि निराहारो दशाननः । पूर्णे वर्षसहस्रे तु शिरश्चाग्नौ जुहाव सः ॥ १० ॥ एवं वर्षसहस्राणि नव तस्यातिचक्रमुः । शिरांसि नव चाप्यस्य प्रविष्टानि हुताशनम् ॥ ११ ॥ अथ वर्षसहस्रे तु दशमे दशमं शिरः । छेत्तुकामे दशग्रीवे प्राप्तस्तत्र पितामहः ॥ १२ ॥ पितामहस्तु सुप्रीतः सार्धं देवैरुपस्थितः । तव तावद्दशग्रीव प्रीतोऽस्मीत्यभ्यभाषत ॥ १३ ॥ शीघ्रं वरय धर्मज्ञ वरो यस्तेऽभिकाङ्क्षितः । तं ते कामं करोम्यद्य न वृथा ते परिश्रमः ॥ १४ ॥ अथाब्रवीद्दशग्रीवः प्रहृष्टेनान्तरात्मना । प्रणम्य शिरसा देवं हर्षगद्गदया गिरा ॥ १५ ॥ भगवन् प्राणिनां नित्यं नान्यत्र मरणाद्भयम् । नास्ति मृत्युसमः शत्रुरमरत्वमहं वृणे ॥ १६ ॥ एवमुक्तस्तदा ब्रह्मा दशग्रीवमुवाच ह । नास्ति सर्वामरत्वं ते वरमन्यं वृणीष्व मे ॥ १७ ॥ एवमुक्ते तदा राम ब्रह्मणा लोककर्तृणा । दशग्रीव उवाचेदं कृताञ्जलिरथाग्रतः ॥ १८ ॥



स०—ब्रह्मणा नपुंसकलिङ्गोऽयं ब्रह्मशब्दश्चतुर्मुखवाची । “ ब्रह्मणि जीवास्सर्वेऽपि ” इत्युक्तेः । “ ध्यायं ध्यायं परं ब्रह्म ” इति मनोरमापद्यव्याख्यात्रा कार्यब्रह्म व्यावर्तयितुं परमित्युक्तमिति परपदकलकथनाच्च “ तस्मादेतद्ब्रह्मनामरूपं च जायते ” इत्याथर्वणभाष्ये एतद्ब्रह्म चतुर्मुख इति व्याख्यानाच्च । “ इकोऽचि विभक्तौ ” इति नुमि लोककर्तृणेत्युपपन्नम् ॥ १८ ॥

स्वर्गस्थस्य देवस्य नन्दन इवेत्यनेन तपःप्रवृत्तिसंतोष उक्तः ।९-२०। परमेति श्लोकद्वयमेकं वाक्यम् । ब्रह्मास्त्रं ब्रह्मास्त्रमन्त्रम् । पालये पालयेयम् ।३१-३८।

सुपर्णनागयक्षाणां दैत्यदानवरक्षसाम् । अवध्योऽहं प्रजाध्यक्ष देवतानां च शाश्वत ॥१९॥ नहि चिन्ता ममान्येषु प्राणिष्वमरपूजित । तृणभूता हि ते मन्ये प्राणिनो मानुषादयः ॥ २० ॥ एवमुक्तस्तु धर्मात्मा दशग्रीवेण रक्षसा । उवाच वचनं देवः सह देवैः पितामहः ॥ २१ ॥ भविष्यत्येवमेतत्ते वचो राक्षसपुङ्गव । एवमुक्त्वा तु तं राम दशग्रीवं पितामहः ॥ २२॥ शृणु चापि वरो भूयः प्रीतस्येह शुभो मम । हुतानि यानि शीर्षाणि पूर्वमग्नौ त्वयाऽनघ ॥ २३ ॥ पुनस्तानि भविष्यन्ति तथैव तव राक्षस । वितरामीह ते सौम्य वरं चान्यं दुरासदम् ॥ २४ ॥ छन्दतस्तव रूपं च मनसा यद्यथेप्सितम् । भविष्यति न सन्देहो मद्वरात्तव राक्षस ॥ २५ ॥ एवं पितामहोक्तस्य दशग्रीवस्य रक्षसः । अग्नौ हुतानि शीर्षाणि पुनस्तान्युदितानि वै ॥ २६ ॥ एवमुक्त्वा तु तं राम दशग्रीवं पितामहः । विभीषणमथोवाच वाक्यं लोकपितामहः ॥ २७ ॥ विभीषण त्वया वत्स धर्मसंहितबुद्धिना । परितुष्टोऽस्मि धर्मात्मन् वरं वरय सुव्रत ॥२८॥ विभीषणस्तु धर्मात्मा वचनं प्राह साञ्जलिः । वृतः सर्वगुणैर्नित्यं चन्द्रमा रश्मिभिर्यथा ॥२९॥ भगवन् कृतकृत्योऽहं यन्मे लोकगुरुः स्वयम् । प्रीतेन यदि दातव्यो वरो मे शृणु सुव्रत ॥३०॥ परमापद्गतस्यापि धर्मे मम मतिर्भवेत् । अशिक्षितं च ब्रह्मास्त्रं भगवन् प्रतिभातु मे ॥३१॥ या या मे जायते बुद्धिर्येषु येष्वाश्रमेषु च । सा सा भवतु धर्मिष्ठा तं तु धर्मं च पालये ॥३२॥ एष मे परमोदार वरः परमको मतः । न हि धर्माभिरक्तानां लोके किंचन दुर्लभम् ॥३३॥ पुनः प्रजापतिः प्रीतो विभीषणमुवाच ह । धर्मिष्ठस्त्वं यथा वत्स तथा चैतद्भविष्यति ॥ ३४ ॥ यस्माद्राक्षसयोनौ ते जातस्यामित्रनाशन । नाधर्मे जायते बुद्धिरमरत्वं ददामि ते ॥ ३५ ॥

स०—सापवादो वरो देय इति चतुराननभावं विदित्वा तथैव कैश्चिदवध्यत्वं याचते—सुपर्णेति ॥ १९ ॥

अलब्धवरपूर्वेण पूर्वमलब्धवरेण कुम्भकर्णेन यत् भक्षणात्मकं कर्म कृतं तत् तस्मात् कारणात् वरलब्धः लब्धवरः स्यात् स्याद्यदि भुवनत्रयमपि

इत्युक्त्वा कुम्भकर्णाय वरं दातुमुपस्थितम् । प्रजापतिं सुराः सर्वे वाक्यं प्राञ्जलयोऽब्रुवन् ॥ ३६ ॥ न तावत् कुम्भकर्णाय प्रदातव्यो वरस्त्वया । जानीषे हि यथा लोकांस्त्रासयत्येष दुर्मतिः ॥ ३७ ॥ नन्दनेऽप्सरसः सप्त महेन्द्रानुचरा दश । अनेन भक्षिता ब्रह्मन् ऋषयो मानुषास्तथा ॥ ३८ ॥ अलब्धवरपूर्वेण यत् कृतं राक्षसेन तु । तदेष वरलब्धः स्याद्भक्षयेद्भुवनत्रयम् ॥ ३९ ॥ वरव्याजेन मोहोऽस्मै दीयताममितप्रभ । लोकानां स्वस्ति चैव स्याद्भवेदस्य च सन्नतिः ॥ ४० ॥ एवमुक्तः सुरैर्ब्रह्माऽचिन्तयत् पद्मसम्भवः । चिन्तिता चोपतस्थेऽस्य पार्श्वं देवी सरस्वती ॥ ४१ ॥ प्राञ्जलिः सा तु पार्श्वस्था प्राह वाक्यं सरस्वती । इयमस्म्यागता देव किं कार्यं करवाण्यहम् ॥ ४२ ॥ प्रजापतिस्तु तां प्राप्तां प्राह वाक्यं सरस्वतीम् । वाणि त्वं राक्षसेन्द्रास्ये भव या देवतेप्सिता ॥ ४३ ॥ तथेत्युक्त्वा प्रविष्टा सा प्रजापतिरथाब्रवीत् । कुम्भकर्ण महाबाहो वरं वरय यो मतः ॥ ४४ ॥ कुम्भकर्णस्तु तद्वाक्यं श्रुत्वा वचनमब्रवीत् । स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितम् ॥ ४५ ॥ एवमस्त्विति तं चोक्त्वा प्रायाद्ब्रह्मा सुरैः समम् । देवी सरस्वती चैव राक्षसं तं जहौ पुनः ॥ ४६ ॥ ब्रह्मणा सह देवेषु गतेषु च नभस्स्थलम् । विमुक्तोऽसौ सरस्वत्या स्वां संज्ञां च ततो गतः ॥ ४७ ॥ कुम्भकर्णस्तु दुष्टात्मा चिन्तयामास दुःखितः । ईदृशं किमिदं वाक्यं ममाद्य वदनाच्च्युतम् ॥४८॥ अहं व्यामोहितो देवैरिति मन्ये तदाऽऽगतैः । एवं लब्धवराः सर्वे भ्रातरो दीप्ततेजसः । श्लेष्मातकवनं गत्वा तत्र ते न्यवसन् सुखम् ॥४९॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तरश्रीरामायणे दशमः सर्गः॥१०॥

भक्षयेदित्यर्थः ॥ ३९ ॥ वरव्याजेनेति । मोहः अज्ञानम् । एवं मोहस्यैव प्रदाने अस्य च सन्नतिः शिक्षा भवेत् ॥ ४० ॥ एवमिति । अचिन्तयत्, देवीमिति शेषः॥४१॥४२॥ प्रजापतिरिति । भव या देवतेप्सिता यादृग्रूपा देवतैः कांक्षिता तादृशी भवेत्यर्थः॥४३॥ तथेति । प्रविष्टा सा देवतोक्तरूपा प्रविष्टेत्यर्थः॥४४-४८॥ अहमिति । श्लेष्मातकवनं तत्प्रचुरं पितुस्तपोवनमित्यर्थः॥४९॥ इति श्रीगोविन्दराज० उत्तरश्रीरामायण० दशमः सर्गः॥१०॥

॥ १-४ ॥ यत्कृत इति । महद्विष्णुकृतं यद्भयं तन्निरस्तमित्यर्थः ॥ ५-७ ॥ यदीत्यादि । सामादिना लङ्का प्रचालयितुं यदि नाम शक्यं स्यात्तदा नः

सुमाली वरलब्धांस्तु ज्ञात्वा चैतान्निशाचरान् । उदतिष्ठद्भयं त्यक्त्वा सानुगः स रसातलात् ॥१॥ मारीचश्च प्रहस्तश्च विरूपाक्षो महोदरः । उदतिष्ठन् सुसंरब्धाः सचिवास्तस्य रक्षसः ॥ २ ॥ सुमाली सचिवैः सार्धं वृतो राक्षसपुङ्गवैः । अभिगम्य दशग्रीवं परिष्वज्येदमब्रवीत् ॥ ३ ॥ दिष्ट्या ते वत्स सम्प्राप्तश्चिन्तितोऽयं मनोरथः । यस्त्वं त्रिभुवनश्रेष्ठाल्लब्धवान् वरमुत्तमम् ॥ ४ ॥ यत्कृते च वयं लङ्कां त्यक्त्वा याता रसातलम् । तद्गतं नो महाबाहो महद्विष्णुकृतं भयम् ॥ ५ ॥ असकृत्तद्भयाद्भीताः परित्यज्य स्वमालयम् । विद्रुताः सहिताः सर्वे प्रविष्टाः स्म रसातलम् ॥ ६ ॥ अस्मदीया च लङ्केयं नगरी राक्षसोचिता । निवेशिता तव भ्रात्रा धनाध्यक्षेण धीमता ॥ ७ ॥ यदि नामात्र शक्यं स्यात् साम्ना दानेन वाऽनघ । तरसा वा महाबाहो प्रत्यानेतुं कृतं भवेत् ॥८॥ त्वं तु लङ्केश्वरस्तात भविष्यसि न संशयः । त्वया राक्षसवंशोऽयं निमग्नोऽपि समुद्धृतः । सर्वेषां नः प्रभुश्चैव भविष्यसि महाबल ॥ ९ ॥ अथाब्रवीद्दशग्रीवो मातामहमुपस्थितम् । वित्तेशो गुरुरस्माकं नार्हसे वक्तुमीदृशम् ॥ १० ॥ साम्नाऽपि राक्षसेन्द्रेण प्रत्याख्यातो गरीयसा । किंचिन्नाह तदा रक्षो ज्ञात्वा तस्य चिकीर्षितम् ॥ ११ ॥ कस्यचित्त्वथ कालस्य वसन्तं रावणं ततः । उक्तवन्तं तथा वाक्यं दशग्रीवं निशाचरः ॥ १२ ॥ प्रहस्तः प्रश्रितं वाक्यमिदमाह सकारणम् ॥ १३ ॥ दशग्रीव महाबाहो नार्हस्त्वं वक्तुमीदृशम् । सौभ्रात्रं नास्ति शूराणां शृणु चेदं वचो मम ॥ १४ ॥ अदितिश्च दितिश्चैव भगिन्यौ सहिते हिते । भार्ये परमरूपिण्यौ कश्यपस्य प्रजापतेः ॥ १५ ॥

कार्यं भवेदित्यर्थः ॥ ८-१४ ॥ अदितिश्चेति । सहिते हिते अन्योन्यानुरक्ते ॥ १५-१८ ॥

नैतदिति। विपर्ययं भ्रातृद्रोहरूपम्, सुरासुरैराचरितं मार्गम् ॥ १९ ॥ २० ॥ स त्विति। तस्मिन्नहनि। प्रहस्तोपदेशाहनि वनं श्लेष्मातकवनम् ॥२१॥

अदितिर्जनयामास देवांस्त्रिभुवनेश्वरान्। दितिस्त्वजनयत् पुत्रान् कश्यपस्यात्मसम्भवान् ॥ १६ ॥ दैत्यानां किल धर्मज्ञ पुरीयं सवनार्णवा। सपर्वता मही वीर तेऽभवन् प्रभविष्णवः ॥ १७ ॥ निहत्य तांस्तु समरे विष्णुना प्रभविष्णुना। देवानां वशमानीतं त्रैलोक्यमिदमव्ययम् ॥ १८ ॥ नैतदेको भवानेव करिष्यति विपर्ययम्। सुरासुरैराचरितं तत्कुरुष्व वचो मम ॥ १९ ॥ एवमुक्तो दशग्रीवः प्रहृष्टेनान्तरात्मना। चिन्तयित्वा मुहूर्तं वै बाढमित्येव सोऽब्रवीत् ॥ २० ॥ स तु तेनैव हर्षेण तस्मिन्नहनि वीर्यवान्। वनं गतो दशग्रीवः सह तैः क्षणदाचरैः ॥ २१ ॥ त्रिकूटस्थः स तु तदा दशग्रीवो निशाचरः। प्रेषयामास दूत्येन प्रहस्तं वाक्यकोविदम् ॥ २२ ॥ प्रहस्त शीघ्रं गच्छ त्वं ब्रूहि नैर्ऋतपुङ्गवम्। वचसा मम वित्तेशं सामपूर्वमिदं वचः ॥ २३ ॥ इयं लङ्कापुरी राजन् राक्षसानां महात्मनाम्। त्वया निवेशिता सौम्य नैतद्युक्तं तवानघ ॥ २४ ॥ तद्भवान् यदि नो ह्यद्य दद्यादतुलविक्रम। कृता भवेन्मम प्रीतिर्धर्मश्चैवानुपालितः ॥ २५ ॥ स तु गत्वा पुरीं लङ्कां धनदेन सुरक्षिताम्। अब्रवीत् परमोदारं वित्तपालमिदं वचः ॥२६॥ प्रेषितोऽहं तव भ्रात्रा दशग्रीवेण सुव्रत। त्वत्समीपं महाबाहो सर्वशस्त्रभृतां वर ॥२७॥ तच्छ्रूयतां महाप्राज्ञ सर्वशास्त्रविशारद। वचनं मम वित्तेश यद्ब्रवीति दशाननः ॥२८॥ इयं किल पुरी रम्या सुमालिप्रमुखैः पुरा। भुक्तपूर्वा विशालाक्ष राक्षसैर्भीमविक्रमैः ॥२९॥ तेन विज्ञाप्यते सोऽयं साम्प्रतं विश्रवात्मज। तदेषा दीयतां तात याचतस्तस्य सामतः ॥३०॥ प्रहस्तादभिसंश्रुत्य देवो वैश्रवणो वचः। प्रत्युवाच प्रहस्तं तं वाक्यं वाक्यविशारदः॥३१॥ दत्ता ममेयं पित्रा तु लङ्का शून्या निशाचरैः। निवासिते च मे यक्षैर्दानमानादिभिर्गुणैः॥३२॥

त्रिकूटस्थ इति। त्रिकूटस्थो भूत्वा प्रहस्तं दूत्येन प्रेषयामास ॥२२॥ प्रहस्तेति। नैर्ऋतपुङ्गवं कुबेरम्। लङ्कायां पूर्वस्थितनैर्ऋताधिपत्यात् ॥२३–३७॥

दशग्रीव इति । बहुशोक्त इति सन्धिः छान्दसः ॥ ३८ ॥ स इति । ध्वंसते ध्वस्तधर्मन्यायमर्यादो जायते ॥ ३९ ॥ वरप्रदानादिति । मम शापात्,

ब्रूहि गच्छ दशग्रीवं पुरं राज्यं च यन्मम । तवाप्येतन्महाबाहो भुङ्क्ष्व राज्यमकण्टकम् । [ अविभक्तं त्वया सार्धं राज्यं यच्चापि मे वसु ] ॥ ३३ ॥ एवमुक्त्वा धनाध्यक्षो जगाम पितुरन्तिकम् ॥ ३४ ॥ अभिवाद्य गुरुं प्राह रावणस्य यदीप्सितम् । एष तात दशग्रीवो दूतं प्रेषितवान् मम ॥३५॥ दीयतां नगरी लङ्का पूर्वं रक्षोगणोषिता । मयाऽत्र यदनुष्ठेयं तन्ममाचक्ष्व सुव्रत ॥३६॥ ब्रह्मर्षिस्त्वेवमुक्तोऽसौ विश्रवा मुनिपुङ्गवः । प्राञ्जलिं धनदं प्राह शृणु पुत्र वचो मम ॥ ३७ ॥ दशग्रीवो महाबाहुरुक्तवान् मम सन्निधौ । मया निर्भर्त्सितश्चासीद्बहुशोक्तः सुदुर्मतिः ॥३८॥ स क्रोधेन मया चोक्तो ध्वंसते च पुनः पुनः । श्रेयोभियुक्तं धर्म्यं च शृणु पुत्र वचो मम ॥३९॥ वरप्रदानात् संमूढो मान्यामान्यान् स दुर्मतिः । न वेत्ति मम शापाच्च प्रकृतिं दारुणां गतः ॥ ४० ॥ तस्माद्गच्छ महाबाहो कैलासं धरणीधरम् । निवेशय निवासार्थं त्यक्त्वा लङ्कां सहानुगः ॥४१॥ तत्र मन्दाकिनी रम्या नदीनामुत्तमा नदी । काञ्चनैः सूर्यसङ्काशैः पङ्कजैः संवृतोदका ॥ ४२ ॥ कुमुदैरुत्पलैश्चैव तथाऽन्यैश्च सुगन्धिभिः ॥ ४३ ॥ तत्र देवाः सगन्धर्वाः साप्सरोरगकिन्नराः । विहारशीलाः सततं रमन्ते सर्वदाऽऽश्रिताः ॥४४॥ न हि क्षमं तवानेन वैरं धनद रक्षसा । जानीषे हि यथाऽनेन लब्धः परमको वरः ॥ ४५ ॥ एवमुक्तो गृहीत्वाऽऽशु तद्वचः पितृगौरवात् । सदारपुत्रः सामात्यः सवाहनधनो गतः ॥ ४६ ॥ प्रहस्तोऽथ दशग्रीवं गत्वा वचनमब्रवीत् । प्रहृष्टात्मा महात्मानं सहामात्यं सहानुजम् ॥४७॥ शून्या सा नगरी लङ्का त्यक्त्वैनां धनदो गतः । प्रविश्य तां सहास्माभिः स्वधर्मं प्रतिपालय ॥४८॥ एवमुक्तो दशग्रीवः प्रहस्तेन महाबलः । विवेश नगरीं लङ्कां भ्रातृभिः सबलानुगैः॥४९॥

तन्मातृदर्शनकालकृतादिति शेषः ॥ ४० ॥ तस्मादिति । निवासार्थं निवेशय निवेशनं पुरं कुरु ॥४१–५१ ॥

घनेश्वर इति। शशिविमले गिरौ कैलासे । पुरीमलकाम् । अत्र छन्दोभङ्ग आर्षो ज्ञेयः ॥ ५२॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकादशः सर्गः ॥ ११ ॥

धनदेन परित्यक्तां सुविभक्तमहापथाम् । आरुरोह स देवारिः स्वर्गं देवाधिपो यथा ॥ ५० ॥ स चाभिषिक्तः क्षणदाचरैस्तदा निवेशयामास पुरीं दशाननः । निकामपूर्णा च बभूव सा पुरी निशाचरैर्नीलबलाहकोपमैः ॥ ५१ ॥ धनेश्वरस्त्वथ पितृवाक्यगौरवान्न्यवेशयच्छशिविमले गिरौ पुरीम् । स्वलंकृतैर्भवनवरैर्विभूषितां पुरन्दरस्येव तदाऽमरावतीम् ॥ ५२ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे एकादशः सर्गः ॥ ११ ॥

राक्षसेन्द्रोऽभिषिक्तस्तु भ्रातृभ्यां सहितस्तदा । ततः प्रदानं राक्षस्या भगिन्याः समचिन्तयत् ॥ १ ॥ स्वसारं कालकेयाय दानवेन्द्राय राक्षसीम् । ददौ शूर्पणखां नाम विद्युज्जिह्वाय नामतः ॥ २ ॥ अथ दत्त्वा स्वयं रक्षो मृगयामटते स्म तत् । तत्रापश्यत्ततो राम मयं नाम दितेः सुतम् ॥ ३ ॥ कन्यासहायं तं दृष्ट्वा दशग्रीवो निशाचरः । अपृच्छत् को भवानेको निर्मनुष्यमृगे वने । अनया मृगशावाक्ष्या किमर्थं सह तिष्ठसि ॥ ४ ॥ मयस्त्वथाब्रवीद्राम पृच्छन्तं तं निशाचरम् । श्रूयतां सर्वमाख्यास्ये यथावृत्तमिदं मम ॥ ५ ॥ हेमा नामाप्सरा तात श्रुतपूर्वा यदि त्वया । दैवतैर्मम सा दत्ता पौलोमीव शतक्रतोः ॥ ६ ॥ तस्यां सक्तमनास्तात पञ्च वर्षशतान्यहम् । सा च दैवतकार्येण त्रयोदश समा गताः ॥ ७ ॥ वर्षं चतुर्दशं चैव ततो हेममयं पुरम् । वज्रवैडूर्यचित्रं च मायया निर्मितं मया ॥ ८ ॥ तत्राहमवसं दीनस्तया हीनः सुदुःखितः ॥ ९ ॥

॥ १ ॥ स्वसारमिति । कालकेयाय कालकपुत्राय ॥ २-७ ॥ वर्षं चतुर्दशमिति । चतुर्दशसङ्ख्याविशिष्टं वर्षं च गतमित्यर्थः । हेममयं

पुरं हेमपुरम् । मायया विचित्रनिर्माणशक्त्या ॥ ८ ॥ ९ ॥ तस्मादिति । तस्याः कुक्षौ हेमाया गर्भ इत्यर्थः ॥ १० ॥ भर्तारमिति । अस्या भर्त्तारं

तस्मात् पुराद्दुहितरं गृहीत्वा वनमागतः । इयं ममात्मजा राजंस्तस्याः कुक्षौ विवर्धिता ॥ १० ॥ भर्त्तारमनया सार्धमस्याः प्राप्तोऽस्मि मार्गितुम् । कन्यापितृत्वं दुःखं हि सर्वेषां मानकांक्षिणाम् ॥ ११ ॥ कन्या हि द्वे कुले नित्यं संशये स्थाप्य तिष्ठति । पुत्रद्वयं ममाप्यस्यां भार्यायां सम्बभूव ह ॥ १२ ॥ मायावी प्रथमस्तात दुन्दुभिस्तदनन्तरः । एवं ते सर्वमाख्यातं यथातत्त्वेन पृच्छतः ॥ १३ ॥ त्वामिदानीं कथं तात जानीयां को भवानिति । एवमुक्तस्तु तद्रक्षो विनीतमिदमब्रवीत् ॥ १४ ॥ अहं पौलस्त्यतनयो दशग्रीवश्च नामतः । मुनेर्विश्रवसो यस्तु तृतीयो ब्रह्मणोऽभवत् ॥ १५ ॥ एवमुक्तस्तदा राम राक्षसेन्द्रेण दानवः । महर्षेस्तनयं ज्ञात्वा मयो हर्षमुपागतः । दातुं दुहितरं तस्मै रोचयामास यत्र वै ॥ १६ ॥ करेण तु करं तस्या ग्राहयित्वा मयस्तदा । प्रहसन् प्राह दैत्येन्द्रो राक्षसेन्द्रमिदं वचः ॥ १७ ॥ इयं ममात्मजा राजन् हेमयाऽप्सरसा धृता । कन्या मन्दोदरी नाम पत्न्यर्थं प्रतिगृह्यताम् ॥ १८ ॥ बाढमित्येव तं राम दशग्रीवोऽभ्यभाषत । प्रज्वाल्य तत्र चैवाग्निमकरोत् पाणिसङ्ग्रहम् ॥ १९ ॥ स हि तस्य मयो राम शापाभिज्ञस्तपोधनात् । विदित्वा तेन सा दत्ता तस्य पैतामहं कुलम् ॥ २० ॥

मार्गितुम् अनया प्राप्तोऽस्मि ॥ ११ ॥ १२ ॥ मायावीति । मायावी च वालिना पलायितोऽत्रैव प्रविष्टो नाशित इति ज्ञेयम् ॥ १३–१७ ॥ इयमिति । धृता गर्भप्रसूतेत्यर्थः ॥ १८–१९ ॥ स इति । शापाभिज्ञ इति । दारुणप्रकृतिर्भविष्यतीति श्रुतशापवृत्तान्त इति भावः । पुलस्त्यशापश्चेत्केवलं

स०—ननु मन्दोदरी महापतिव्रतेति तत्र श्रूयते, तादृशीं कन्यामयोग्याय रावणाय मयः कथं दत्तवानित्यतो वक्ति—स हीति । सः मयः । तस्य रावणस्य तं प्रति तपोधनात् विश्रवसः । दारुणप्रकृतिर्भविष्यतीति यः शापः तदभिज्ञस्सन् तस्य पैतामहं कुलं पुलस्त्यवंशं विदित्वा सा दत्ता । अयं भावः—विजने रावणं पश्यन्मयः अयं पित्रा दत्तशापः क्रूरप्रकृतिरिमां परमसुन्दरीं कन्यामेकान्ते दृष्टवान् न परित्यजति । बलादपहरत्येव । बलवांश्चासौ पुलस्त्यगोत्रोत्पन्नश्च, देया च कन्येति सर्वमालोच्य तां ददाविति ॥ २० ॥

कुलमेव बहुमन्यतेत्यर्थः ॥ २०-२४ ॥ सरमाशब्दं निर्वक्ति–तीरे इत्यादि । सरो मा वर्धयस्वेत्युक्त्या सरमेति नामासीत् । पृषोदरादित्वात्साधुः ॥ २५–३२ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्वादशः सर्गः ॥ १२ ॥

अमोघां तस्य शक्तिं च प्रददौ परमाद्भुताम् । परेण तपसा लब्धां जघ्निवान् लक्ष्मणं यया ॥२१॥ एवं स्वीकृतदारो वै लङ्काया ईश्वरः प्रभुः । गत्वा तु नगरीं भार्ये भ्रातृभ्यां समुपाहरत् ॥ २२ ॥ वैरोचनस्य दौहित्रीं वज्रज्वालेति नामतः । तां भार्यां कुम्भकर्णस्य रावणः समकल्पयत् ॥२३॥ गन्धर्वराजस्य सुतां शैलूषस्य महात्मनः । सरमां नाम धर्मज्ञां लेभे भार्यां विभीषणः ॥ २४ ॥ तीरे तु सरसो वै तु सञ्जज्ञे मानसस्य हि । सरस्तदा मानसं तु ववृधे जलदागमे ॥ २५ ॥ मात्रा तु तस्याः कन्यायाः स्नेहेनाक्रन्दितं वचः । सरो मा वर्धयस्वेति ततः सा सरमाऽभवत् ॥ २६ ॥ एवं ते कृतदारा वै रेमिरे तत्र राक्षसाः । स्वां स्वां भार्यामुपागम्य गन्धर्वा इव नन्दने ॥ २७ ॥ ततो मन्दोदरी पुत्रं मेघनादमजीजनत् । स एष इन्द्रजिन्नाम युष्माभिरभिधीयते ॥२८॥ जातमात्रेण हि पुरा तेन रावण सूनुना । रुदता सुमहान् मुक्तो नादो जलधरोपमः ॥२९॥ जडीकृता च सा लङ्का तस्य नादेन राघव । पिता तस्याकरोन्नाम मेघनाद इति स्वयम् ॥३०॥ सोऽवर्धत तदा राम रावणान्तःपुरे शुभे । रक्ष्यमाणो वरस्त्रीभिश्छन्नः काष्ठैरिवानलः॥३१॥ मातापित्रोर्महाहर्षं जनयन् रावणात्मजः॥३२॥इत्यार्षे० श्रीमदुत्तरश्रीरामा० द्वादशः सर्गः॥ १२॥

अथ लोकेश्वरोत्सृष्टा तत्र कालेन केनचित् । निद्रा समभवत्तीव्रा कुम्भकर्णस्य रूपिणी ॥ १ ॥ ततो भ्रातरमासीनं कुम्भकर्णोऽब्रवीद्वचः । निद्रा मां बाधते राजन् कारयस्व ममालयम् ॥ २ ॥ विनियुक्तास्ततो राज्ञा शिल्पिनो विश्वकर्मवत् । विस्तीर्णं योजनं शुभ्रं ततो द्विगुणमायतम् ॥ ३ ॥

अथेत्यादि । लोकेश्वरेण ब्रह्मणोत्सृष्टा प्रेषिता । रूपिणी मूर्ता ॥ १ ॥ २ ॥ विनियुक्ता इति । विस्तीर्णं योजनमिति, तिर्यङ्मानेनेति शेषः । ततो द्विगुण

मायतम् युद्धकाण्डे योजनायतमित्युक्तं द्विगुणयोजनायतपरम् ॥ ३ ॥ ४ ॥ वैडूर्येति । किङ्किणीजालकं प्रान्तेषु किङ्किणीजालयुक्तम् । दान्तो दन्तविकारः ॥ ५–१० ॥ तथेति । कुलानुरूपं वृत्तमिति, असक्तमिति शेषः ॥ ११ ॥ सौभ्रात्रेति । हितं हितपरम् ॥ १२ ॥ स इति । आगमनं प्रतीति,

दर्शनीयं निराबाधं कुम्भकर्णस्य चक्रिरे । स्फाटिकैः काञ्चनैश्चित्रैः स्तम्भैः सर्वत्र शोभितम् ॥४॥ वैडूर्यकृतसोपानं किङ्किणीजालकं तथा । दान्ततोरणविन्यस्तं वज्रस्फटिकवेदिकम् ॥ ५ ॥ मनोहरं सर्वसुखं कारयामास राक्षसः । सर्वत्र सुखदं नित्यं मेरोः पुण्यां गुहामिव ॥ ६ ॥ तत्र निद्रासमाविष्टः कुम्भकर्णो महाबलः । बहून्यब्दसहस्राणि शयानो न प्रबुध्यते ॥ ७ ॥ निद्राभिभूते तु तदा कुम्भकर्णे दशाननः । देवर्षियक्षगन्धर्वान् सञ्जघ्ने हि निरङ्कुशः ॥ ८ ॥ उद्यानानि च चित्राणि नन्दनादीनि यानि च । तानि गत्वा सुसंक्रुद्धो भिनत्ति स्म दशाननः ॥ ९ ॥ नदीं गज इव क्रीडन् वृक्षान् वायुरिव क्षिपन् । नगान् वज्र इवोत्सृष्टो विध्वंसयति राक्षसः ॥ १० ॥ तथावृत्तं तु विज्ञाय दशग्रीवं धनेश्वरः । कुलानुरूपं धर्मज्ञो वृत्तं संस्मृत्य चात्मनः ॥ ११ ॥ सौभ्रात्रदर्शनार्थं तु दूतं वैश्रवणस्तदा । लङ्कां सम्प्रेषयामास दशग्रीवस्य वै हितम् ॥ १२ ॥ स गत्वा नगरीं लङ्कामाससाद विभीषणम् । मानितस्तेन धर्मेण पृष्टश्चागमनं प्रति ॥ १३ ॥ पृष्ट्वा च कुशलं राज्ञो ज्ञातीनां च विभीषणः । सभायां दर्शयामास तमासीनं दशाननम् ॥ १४ ॥ स दृष्ट्वा तत्र राजानं दीप्यमानं स्वतेजसा । जयेति वाचा सम्पूज्य तूष्णीं समभिवर्तत ॥ १५ ॥ तं तत्रोत्तमपर्यङ्के वरास्तरणशोभिते । उपविष्टं दशग्रीवं दूतो वाक्यमथाब्रवीत् ॥ १६ ॥ राजन् वदामि ते सर्वं भ्राता तव यदब्रवीत् । उभयोः सदृशं वीर वृत्तस्य च कुलस्य च ॥ १७ ॥

कार्यमिति शेषः ॥ १३ ॥ पृष्ट्वेति । राज्ञः कुबेरस्य । तं दूतम् ॥ १४–१६ ॥ राजन्निति । उभयोरिति । उभयोर्मातापित्रोः । कुलस्याभिजनस्य तयो

वृत्तस्य च सदृशं यथा तथा ॥१७॥ साध्विति । साधु सम्यक् । चारित्रसंग्रहः कृतश्चेदेतावदेव पर्याप्तम् । उक्तमर्थं विवृणोति—साध्वित्यादि । व्यवस्थानं व्यवस्थितिः । यदि शक्यत इत्युक्त्या ज्येष्ठतया नियोगबुद्धिर्व्यावर्तते, तस्य क्रूरत्वात् ॥ १८ ॥ मया चारित्रव्यवस्थानेन विना किं कृतमित्यत्राह—दृष्ट

साधु पर्याप्तमेतावत् कृतश्चारित्रसङ्ग्रहः । साधुधर्मे व्यवस्थानं क्रियतां यदि शक्यते ॥ १८ ॥ दृष्टं मे नन्दनं भग्नमृषयो निहताः श्रुताः । देवतानां समुद्योगस्त्वत्तो राजन् मम श्रुतः ॥ १९ ॥ निराकृतश्च बहुशस्त्वयाऽहं राक्षसाधिप । अपराद्धा हि बाल्याच्च रमणीयाः स्वबान्धवाः ॥ २० ॥ अहं तु हिमवत्पृष्ठं गतो धर्ममुपासितुम् । रौद्रं व्रतं समास्थाय नियतो नियतेन्द्रियः ॥ २१ ॥ तत्र देवो मया दृष्टः सह देव्या मया प्रभुः । सव्यं चक्षु मया दैवात्तत्र देव्यां निपातितम् ॥ २२ ॥ का न्वियं स्यादिति शुभा न खल्वन्येन हेतुना । रूपं ह्यनुपमं कृत्वा रुद्राणी तत्र तिष्ठति ॥२३॥ देव्या दिव्यप्रभावेन दग्धं सव्यं ममेक्षणम् । रेणुध्वस्तमिव ज्योतिः पिङ्गलत्वमुपागतम् ॥२४॥ ततोऽहमन्यद्विस्तीर्णं गत्वा तस्य गिरेस्तटम् । तूष्णीं वर्षशतान्यष्टौ समाधारं महाव्रतम् ॥ २५ ॥ समाप्ते नियमे तस्मिंस्तत्र देवो महेश्वरः । प्रीतः प्रीतेन मनसा प्राह वाक्यमिदं प्रभुः ॥ २६ ॥ पैङ्गल्यं यदवाप्तं हि देव्या रूपनिरीक्षणात् । प्रीतोऽस्मि तव धर्मज्ञ तपसा तेन सुव्रत॥२७॥ मया चैतद्व्रतं चीर्णं त्वया चैव धनाधिप । तृतीयः पुरुषो नास्ति यश्चरेद्व्रतमीदृशम् ॥ २८ ॥ व्रतं सुनिश्चयं ह्येतन्मया ह्युत्पादितं पुरा । तत् सखित्वं मया सौम्य रोचयस्व धनेश्वर ॥२९॥ तपसा निर्जितश्चैव सखा मम भवानघ । देव्या दग्धं प्रभावेन यच्च सव्यं तवेक्षणम् ॥ ३० ॥



मित्यादिना । त्वत्तः त्वया । मम मया । समुद्योग इति । प्रतिक्रियाकरणायेति शेषः ॥१९॥ निराकृत इति । रमणीयाः तोषणीयाः स्वबान्धवाः बाल्याद्ज्ञानादपराद्धाः त्वया कृतापराधा आसन्नित्यर्थः ॥ २० ॥ अहमिति । रौद्रं रुद्रप्रसादकं व्रतम् । इदन्तु केदारव्रतमित्याहुः ॥२१–२८॥ व्रतमिति ।

रोचयस्व स्वरुचितं कुरु ॥ २९-३१ ॥ आगत्येति । आगत्य स्वगृहमागत्य । मे स्थितेन मया । अधर्मः तव पापविनिश्चयः श्रुतः ॥ ३२ ॥ तदिति । तदधर्मत्वाद्धेतोः । कुलदूषणादधर्मिष्ठसंसर्गान्निवर्त निवर्तस्व ॥ ३३ ॥३४॥ विज्ञातमिति । वाक्यं विज्ञातमिति वाक्यतात्पर्यार्थो विज्ञात इत्यर्थः ॥ ३५ ॥ हितमिति । धनरक्षको मे हितमिति ब्रवीति । एतद्धि मे न हितं नु सममनुचितं चेत्यर्थः । हे मूढ । महेश्वरसखित्वं तद्रूपबलसंपत्तिं श्रावयसे

एकाक्षिपिङ्गलेत्येवं नाम स्थास्यति शाश्वतम् । एवं तेन सखित्वं च प्राप्यानुज्ञां च शङ्करात् ॥ ३१॥ आगत्य च श्रुतोऽयं मे तव पापविनिश्चयः ॥ ३२ ॥ तदधर्मिष्ठसंयोगान्निवर्त कुलदूषणात् । चिन्त्यते हि वधोपायः सर्षिसङ्घैः सुरैस्तव ॥ ३३ ॥ एवमुक्तो दशग्रीवः क्रुद्धः संरक्तलोचनः । हस्तौ दन्तांश्च सम्पीड्य वाक्यमेतदुवाच ह ॥ ३४ ॥ विज्ञातं ते मया दूत वाक्यं यस्य प्रभाषसे । नैतत्त्वमसि नैवासौ भ्राता येनासि चोदितः ॥ ३५ ॥ हितं नैष ममैतद्धि ब्रवीति धनरक्षकः । महेश्वरसखित्वं तु मूढ श्रावयसे किल ॥ ३६ ॥ नचेदं क्षमणीयं मे यदेतद्भाषितं त्वया । यदेतावन्मया कालं दूत तस्य तु मर्षितम् ॥ ३७ ॥ न हन्तव्यो गुरुर्ज्येष्ठो मयाऽयमिति मन्यते । तस्य त्विदानीं श्रुत्वा मे वाक्यमेषा कृता मतिः ॥ ३८ ॥ त्रीँल्लोकानपि जेष्यामि बाहुवीर्यमुपाश्रितः ॥ ३९ ॥ एतन्मुहूर्तमेवाहं तस्यैकस्य तु वै कृते । चतुरो लोकपालांस्तान् नयिष्यामि यमक्षयम् ॥ ४० ॥ एवमुक्त्वा तु लङ्केशो दूतं खड्गेन जघ्निवान् । ददौ भक्षयितुं ह्येनं राक्षसानां दुरात्मनाम् ॥ ४१ ॥ एवं कृतस्वस्त्ययनो रथमारुह्य रावणः । त्रैलोक्यविजयाकांक्षी ययौ यत्र धनेश्वरः॥४२॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तरश्रीरामायणे त्रयोदशः सर्गः ॥ १३॥

किल ॥ ३६ ॥ न चेदमिति । इदं न मर्षणीयं यत्त्वयाऽभिहितं भाषितं तदपि न मर्षणीयमित्यर्थः ॥ ३७ ॥ न हन्तव्य इति । मम हृदयं गुरुः न हन्तव्य इति पूर्वमेव मन्यते स्म । तथापि एषा मतिर्जायते । कृतशब्दार्थमाह-त्रीनिति ॥ ३८॥३९ ॥ एतदिति । तस्यैकस्य कृते, वधप्रसङ्ग इति शेषः ॥४०॥ एवमिति । एनं खड्गच्छिन्नमित्यर्थः ॥ ४१ ॥ ४२ ॥ इति श्रीगोविन्द० मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

॥ १–४ ॥ यक्षा इति । न शेकुरित्यत्र हेतुमाह—राज्ञो भ्रातेति ॥ ५–८ ॥ स दृष्ट्वेति । हर्षनादं सिंहनादम् ॥ ९ ॥ ये त्विति । सहस्राणां यक्षाणामेकैकं





ततस्तु सचिवैः सार्धं षड्भिर्नित्यं बलोद्धतैः । महोदरप्रहस्ताभ्यां मारीचशुकसारणैः ॥ १ ॥ धूम्राक्षेण च वीरेण नित्यं समरगृध्नुना । संवृतः प्रययौ श्रीमान् क्रोधाल्लोकान् दहन्निव ॥ २ ॥ पुराणि स नदीः शैलान् वनान्युप वनानि च । अतिक्रम्य मुहूर्तेन कैलासं गिरिमागमत् ॥ ३ ॥ सन्निविष्टं गिरौ तस्मिन् राक्षसेन्द्रं निशम्य तु । युद्धे ऽत्यर्थकृतोत्साहं दुरात्मानं समन्त्रिणम् ॥ ४ ॥ यक्षा न शेकुः संस्थातुं प्रमुखे तस्य रक्षसः । राज्ञो भ्रातेति विज्ञाय गता यत्र धनेश्वरः ॥ ५ ॥ ते गत्वा सर्वमाचख्युर्भ्रातुस्तस्य चिकीर्षितम् । अनुज्ञाता ययुर्हृष्टा युद्धाय धनदेन ते ॥ ६ ॥ ततो बलानां संक्षोभो व्यवर्धत महोदधेः । तस्य नैर्ऋतराजस्य शैलं सञ्चालयन्निव ॥ ७ ॥ ततो युद्धं सम भवद्यक्षराक्षससङ्कुलम् । व्यथिताश्चाभवंस्तत्र सचिवा राक्षसस्य ते ॥८॥ स दृष्ट्वा तादृशं सैन्यं दशग्रीवो निशाचरः । हर्षनादान् बहून् कृत्वा स क्रोधादभ्यधावत ॥ ९ ॥ ये तु ते राक्षसेन्द्रस्य सचिवा घोरविक्रमाः । तेषां सहस्रमेकैकं यक्षाणां समयोधयन् ॥ १० ॥ ततो गदाभिर्मुसलैरसिभिः शक्तितोमरैः । हन्यमानो दशग्रीवस्तत् सैन्यं समगाहत ॥ ११ ॥ स निरुच्छ्वासवत्तत्र वध्यमानो दशाननः । वर्षद्भिरिव जीमूतैर्धाराभिरवरुध्यत ॥ १२ ॥ न चकार व्यथां चैव यक्षशस्त्रैः समाहतः । महीधर इवाम्भोदैर्धाराशतसमुक्षितः ॥ १३ ॥ स दुरात्मा समुद्यम्य कालदण्डोपमां गदाम् । प्रविवेश ततः सैन्यं नयन् यक्षान् यमक्षयम् ॥ १४ ॥ स कक्षमिव विस्तीर्णं शुष्केन्धनमिवाकुलम् । वातेनाग्निरिवायत्तो यक्षसैन्यं ददाह तत् ॥ १५ ॥ तैस्तु तत्र महामात्यैर्महोदरशुकादिभिः । अल्पावशेषास्ते यक्षाः कृता वातैरिवाम्बुदाः ॥१६॥ केचित् समाहता भग्नाः पतिताः समरक्षितौ । ओष्ठांश्च दशनैस्तीक्ष्णैरदशन् कुपिता रणे ॥ १७ ॥ श्रान्ताश्चान्योन्यमालिङ्ग्य भ्रष्टशस्त्रा रणाजिरे । सीदन्ति च तदा यक्षाः कूला इव जलेन ह ॥ १८ ॥

सहस्रं प्रत्येकमयोधयन् ॥ १०-१८ ॥ हतानामिति । पृथिवीतले युध्यतां हतानामत एव स्वर्गस्थानां तथा व्योम्नि स्थित्वा युद्धं प्रेक्षतां प्रेक्षमाणाना

हतानां गच्छतां स्वर्गं युद्धयतां पृथिवीतले । प्रेक्षतामृषिसङ्घानां न बभूवान्तरं दिवि ॥ १९ ॥ भग्नांस्तु तान् समालक्ष्य यक्षेन्द्रांस्तु महाबलान् । धनाध्यक्षो महाबाहुः प्रेषयामास यक्षकान् । ॥ २० ॥ एतस्मिन्नन्तरे राम विस्तीर्णबलवाहनः । प्रेषितो न्यपतद्यक्षो नाम्ना संयोधकण्टकः ॥ २१ ॥ तेन चक्रेण मारीचो विष्णुनेव रणे हतः । पतितो भूतले शैलात् क्षीणपुण्य इव ग्रहः ॥ २२ ॥ ससंज्ञस्तु मुहूर्तेन स विश्रम्य निशाचरः । तं यक्षं योधयामास स च भग्नः प्रदुद्रुवे ॥ २३ ॥ ततः काञ्चनचित्राङ्गं वैडूर्यरजतोक्षितम् । मर्यादां प्रतिहाराणां तोरणान्तरमाविशत् ॥ २४ ॥ तं तु राजन् दशग्रीवं प्रविशन्तं निशाचरम् । सूर्यभानुरिति ख्यातो द्वारपालो न्यवारयत् ॥ २५ ॥ स वार्यमाणो यक्षेण प्रविवेश निशाचरः । यदा तु वारितो राम न व्यतिष्ठत् स राक्षसः ॥ २६ ॥ ततस्तोरणमुत्पाट्य तेन यक्षेण ताडितः । रुधिरं प्रस्रवन् भाति शैलो धातुस्रवैरिव ॥ २७ ॥ स शैलशिखराभेण तोरणेन समाहतः । जगाम न क्षतिं वीरो वरदानात् स्वयम्भुवः ॥ २८ ॥ तेनैव तोरणेनाथ यक्षस्तेनाभिताडितः । नादृश्यत तदा यक्षो भस्मीकृततनुस्तदा ॥ २९ ॥ ततः प्रदुद्रुवुः सर्वे दृष्ट्वा रक्षःपराक्रमम् । ततो नदीर्गुहाश्चैव विविशुर्भयपीडिताः । त्यक्त प्रहरणाः शान्ता विवर्णवदनास्तदा ॥ ३० ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे चतुर्दशः सर्गः ॥ १४ ॥

मृषिसङ्घानां च । दिवि आकाशे । अन्तरमवस्थातुमवकाशः न बभूव, व्योम्नि निबिडमभूदित्यर्थः ॥ १९-२८ ॥ तेनैवेति । भस्मीकृततनुरिति । रावण कृततोरणदण्डसमाहननेन चूर्णित इत्यर्थः ॥ २९ ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥

१ तेन यक्षेण मारीचो विष्णुनेव समाहतः । पातितः पृथिवीं भेजे क्षीणपुण्य इवाम्बरात् ॥ इति पाठान्तरम् ।

ततस्तान् लक्ष्य वित्रस्तान् यक्षेन्द्रांश्च सहस्रशः । धनाध्यक्षो महायक्षं माणिचारमथाब्रवीत् ॥ १ ॥ रावणं जहि यक्षेन्द्र दुर्वृत्तं पापचेतसम् । शरणं भव वीराणां यक्षाणां युद्धशालिनाम् ॥ २ ॥ एवमुक्तो महाबाहुर्माणिभद्रः सुदुर्जयः । वृतो यक्षसहस्रैस्तु चतुर्भिः समयोधयत् ॥ ३ ॥ ते गदामुसलप्रासैः शक्तितोमरमुद्गरैः । अभिघ्नन्तस्तदा यक्षा राक्षसान् समुपाद्रवन् ॥ ४ ॥ कुर्वन्तस्तुमुलं युद्धं चरन्तः श्येनवल्लघु । बाढं प्रयच्छ नेच्छामि दीयतामिति भाषिणः ॥ ५ ॥ ततो देवाः सगन्धर्वा ऋषयो ब्रह्मवादिनः । दृष्ट्वा तत्तुमुलं युद्धं परं विस्मयमागमन् ॥६॥ यक्षाणां तु प्रहस्तेन सहस्रं निहतं रणे । महोदरेण चानिन्द्यं सहस्रमपरं हतम् ॥ ७ ॥ क्रुद्धेन च तदा राजन् मारीचेन युयुत्सुना । निमेषान्तरमात्रेण द्वे सहस्रे निपातिते ॥ ८ ॥ क्व च यक्षार्जवं युद्धं क्व च मायाबलाश्रयम् । रक्षसां पुरुषव्याघ्र तेन तेऽभ्यधिका युधि ॥ ९ ॥ धूम्राक्षेण समागम्य माणिभद्रो महारणे । मुसलेनोरसि क्रोधात्ताडितो न च कम्पितः ॥ १० ॥ ततो गदां समाविध्य माणिभद्रेण राक्षसः । धूम्राक्षस्ताडितो मूर्ध्नि विह्वलः स पपात ह ॥११॥ धूम्राक्षं ताडितं दृष्ट्वा पतितं शोणितोक्षितम् । अभ्यधावत सङ्ग्रामे माणिभद्रं दशाननः ॥१२॥ तं क्रुद्धमभिधावन्तं माणिभद्रो दशाननम् । शक्तिभिस्ताडयामास तिसृभिर्यक्षपुङ्गवः ॥१३॥ ताडितो माणिभद्रस्य मुकुटे प्राहरद्रणे । तस्य तेन प्रहारेण मुकुटं पार्श्वमागतम् ॥१४॥ ततः संयुद्ध्यमानेन विष्टब्धो न व्यकम्पत । तदाप्रभृति यक्षोऽसौ पार्श्वमौलिरिति स्मृतः । [तस्मिंस्तु विमुखे यक्षे माणिभद्रे महात्मनि । ] सन्नादः सुमहान् राजंस्तस्मिन् शैलेऽभ्यवर्तत ॥ १५ ॥ ततो दूरात् प्रददृशे धनाध्यक्षो गदाधरः । शुक्रप्रोष्ठपदाभ्यां च पद्मशङ्खसमावृतः ॥ १६ ॥



प्रहारात्पार्श्वमागतम् ॥ १४ ॥ तत इति । संयुद्ध्यमानेन माणिभद्रेण विष्टब्धो निरुद्धः न व्यकम्पत ॥ १५ ॥ शङ्खपद्मसमावृतः शङ्खपद्मनिध्याभिमानि

देवैः संवृतः । शुक्रप्रोष्ठपदाभ्यां च सह प्रदद्दशे । शुक्रप्रोष्ठपदौ मन्त्रिणौ ॥ १६ ॥ स इति । शापात् पितृकृततदारुणतत्शापात् । विभ्रष्टगौरवः वन्दनादि प्रयोजकज्येष्ठगौरवरहितः । युक्तमिति । पैतामहे कुले, उत्पत्तेरिति शेषः ॥ १७ ॥ यदिति । अस्य फलं कुलाचारस्य फलं परिपाकं प्राप्य ॥१८॥१९॥

स दृष्ट्वा भ्रातरं सङ्ख्ये शापाद्विभ्रष्टगौरवम् । उवाच वचनं धीमान् युक्तं पैतामहे कुले ॥१७॥ यन्मया वार्यमाणस्त्वं नावगच्छसि दुर्मते । पश्चादस्य फलं प्राप्य ज्ञास्यसे निरयं गतः ॥१८॥ यो हि मोहाद्विषं पीत्वा नावगच्छति दुर्मतिः । स तस्य परिणामान्ते जानीते कर्मणः फलम् ॥१९॥ देवता नाभिनन्दन्ति धर्मयुक्तेन केनचित् । येन त्वमीदृशं भावं नीतः सन्नावबुध्यसे ॥२०॥ मातरं पितरं यो हि आचार्यं चावमन्यते । स पश्यति फलं तस्य प्रेतराजवशं गतः ॥२१॥ अध्रुवे हि शरीरे यो न करोति तपोऽर्जनम् । स पश्चात्तप्यते मूढो मृतो दृष्ट्वाऽऽत्मनो गतिम् ॥ २२ ॥ धर्माद्राज्यं धनं सौख्यमधर्माद्दुःखमेव च । तस्माद्धर्मं सुखार्थाय कुर्यात् पापं विसर्जयेत् ॥ २३॥ पापस्य हि फलं दुःखं तद्भोक्तव्य मिहात्मना । तस्मादात्मापघातार्थं मूढः पापं करिष्यति ॥ २४ ॥ कस्यचिन्न हि दुर्बुद्धेश्छन्दतो जायते मतिः ।* यादृशं कुरुते कर्म तादृशं फलमश्नुते ॥ २५ ॥ बुद्धिरूपं फलं पुत्रान्शौर्यं धीरत्वमेव च । प्राप्नुवन्ति नरा लोके निर्जितं पुण्यकर्मभिः ॥ २६ ॥ एवं निरयगामी त्वं यस्य ते मतिरीदृशी । न त्वां समभिभाषिष्ये सद्वृत्तेष्वेष निर्णयः ॥ २७ ॥ एवमुक्तास्ततस्तेन तस्यामात्याः समाहताः । मारीचप्रमुखाः सर्वे विमुखा विप्रदुद्रुवुः ॥ २८ ॥

देवता इति । धर्मयुक्तेन तव केनचिद्व्यापारेण त्वामिदानीं नाभिनन्दन्ति, धर्माभावात्त्वयि विमुखा भवन्तीत्यर्थः । येन देवतावैमुख्येन । त्वमीदृशं क्रूरं भावं नीतस्सन्नावबुध्यसे ॥ २० ॥ २१ ॥ अध्रुव इति । तपसः अर्जनं संपादनम् ॥ २२–२४ ॥ कस्यचिदिति । दुर्बुद्धेर्बुद्धिरहितस्य कस्यापि पुरुषस्य । छन्दतः पितृमात्रादिसेवां विना स्वेच्छामात्रेण धीर्मतिः शुभमतिर्न हि जायते ॥२५॥२६॥ एवमिति । एवं क्रूरकर्मा त्वं निरयगामी भविष्यसि । यस्य ते ईदृशी मतिः तादृशं त्वां न समभिभाषिष्ये दुर्वृत्तस्य विषये एष एव हि निर्णय इत्यर्थः ॥ २७ ॥ एवमुक्ता इति । रावणवत् यूयमप्यसंभाष्याः

१ यो हि मातृपितृभ्रातॄनाचार्योनवमन्यते । इति पाठः । * दैवं चेष्टयते सर्वं हतो दैवेन हन्यते । इत्यधिकं कुत्रचित् । २ बुद्धिं रूपं बलं वित्तं पुत्रान्माहात्म्यमेव च । प्राप्नुवन्ति नराः सर्वं स्वकृतैः पूर्वकर्मभिः ॥ इति पाठः । ३ समाहिताः । संक्रुद्धा राक्षसान् घोरान्निजघ्नुः संयुगे तदा ॥ इति पाठः ।

इत्युक्ता इत्यर्थः । समाहताः घनदेन ताडिताः ॥ २८–३१ ॥ तत इति । मायां प्रविष्टः अदृश्यत्वं प्राप्त इत्यर्थः । निधिभिर्देवताभिः । धनदोच्छ्वासित

ततस्तेन दशग्रीवो यक्षेन्द्रेण महात्मना । गदयाऽभिहतो मूर्ध्नि न च स्थानात् प्रकम्पितः ॥ २९ ॥ ततस्तौ राम निघ्नन्तौ तदाऽन्योन्यं महामृधे । न विह्वलौ न च श्रान्तौ बभूवतुरमर्षणौ ॥ ३० ॥ आग्नेयमस्त्रं तस्मै स मुमोच धनदस्तदा । राक्षसेन्द्रो वारुणेन तदस्त्रं प्रत्यवारयत् ॥ ३१ ॥ ततो मायां प्रविष्टोऽसौ राक्षसीं राक्षसेश्वरः । रूपाणां शतसाहस्रं विनाशाय चकार च ॥ ३२ ॥ व्याघ्रो वराहो जीमूतः पर्वतः सागरो द्रुमः । यक्षो दैत्यस्वरूपी च सोऽदृश्यत दशाननः ॥ ३३ ॥ बहूनि च करोति स्म दृश्यन्ते न त्वसौ ततः । प्रतिगृह्य ततो राम महदस्त्रं दशाननः ॥ ३४ ॥ जघान मूर्ध्नि धनदं व्याविध्य महतीं गदाम् । एवं स तेनाभिहतो विह्वलः शोणितोक्षितः ॥ ३५ ॥ कृत्तमूल इवाशोको निपपात धनाधिपः ॥ ३६ ॥ ततः पद्मादिभिस्तत्र निधिभिः स तदा वृतः । धनदोच्छ्वासितस्तैस्तु वनमानीय नन्दनम् ॥ ३७ ॥ निर्जित्य राक्षसेन्द्रस्तं धनदं हृष्टमानसः । पुष्पकं तस्य जग्राह विमानं जयलक्षणम् ॥ ३८ ॥ काञ्चनस्तम्भसंवीतं वैडूर्यमणितोरणम् । मुक्ताजालप्रतिच्छन्नं सर्वकामफलद्रुमम् ॥ ३९ ॥ मनोजवं कामगमं कामरूपं विहङ्गमम् । मणिकाञ्चनसोपानं तप्तकाञ्चनवेदिकम् ॥ ४० ॥ देवोपवाह्यमक्षय्यं सदा दृष्टिमनस्सुखम् । बह्वाश्चर्यं भक्तिचित्रं ब्रह्मणा परिनिर्मितम् ॥ ४१ ॥ निर्मितं सर्वकामैस्तु मनोहरमनुत्तमम् । न तु शीतं न चोष्णं च सर्वर्तुसुखदं शुभम् ॥ ४२ ॥

इति सन्धिरार्षः ॥ ३२–३७ ॥ निर्जित्येति । जयलक्षणं जयचिह्नम्, ख्यापयन्तीति शेषः ॥ ३८–४२ ॥

तिल०–बहूनि शस्त्रवर्षाणि करोति स्म । तान्येव दृश्यन्ते न त्वसौ । तथा मायाप्रयुक्तव्याघ्राद्य एव दृश्यन्ते न त्वसौ ॥ ३३ ॥ ३४ ॥ स०–कामगमं स्वामीच्छानुसारेण गतिमत् । विहङ्गमम् आकाशगतिमत् । विहायसो विहायदेशः । गम्भीरं खजन्तः ॥ ४० ॥ भक्तिचित्रं भक्तिमार्गैः ताभिश्चित्रम् । ब्रह्मणा प्रयोजककर्त्रा विश्वकर्मणा निर्मितम् ॥ ४१ ॥

॥ ४२-४५ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥

स तं राजा समारुह्य कामगं वीर्यनिर्जितम् । जितं त्रिभुवनं मेने दर्पोत्सेकात् सुदुर्मतिः ॥ ४३ ॥ जित्वा वैश्रवणं देवं कैलासात् समवातरत् ॥ ४४ ॥ स्वतेजसा विपुलमवाप्य तं जयं प्रतापवान् विमलकिरीटहारवान् । रराज वै परमविमानमास्थितो निशाचरः सदसि गतो यथाऽनलः ॥४५॥ इत्यार्षे० श्रीमदुत्तरश्रीरामा० पञ्चदशः सर्गः॥ १५॥

स जित्वा धनदं राम भ्रातरं राक्षसाधिपः । महासेनप्रसूतिं तद्ययौ शरवणं महत् ॥ १ ॥ अथापश्यद्दशग्रीवो रौक्मं शरवणं महत् । गभस्तिजालसंवीतं द्वितीयमिव भास्करम् ॥ २ ॥ स पर्वतं समारुह्य कंचिद्रम्यवनान्तरम् । अपश्यत् पुष्पकं तत्र राम विष्टम्भितं तदा ॥ ३ ॥ विष्टब्धं पुष्पकं दृष्ट्वा ह्यगमं कामगं कृतम् । अचिन्तयद्राक्षसेन्द्रः सचिवैस्तैः समावृतः ॥ ४ ॥ किंनिमित्तं चेच्छया मे नेदं गच्छति पुष्पकम् । पर्वतस्योपरिष्ठस्य कर्मेदं कस्यचिद्भवेत् ॥ ५ ॥ ततोऽब्रवीत्तदा राम मारीचो बुद्धिकोविदः । नेदं निष्कारणं राजन् पुष्पकं यन्न गच्छति ॥ ६ ॥ अथवा पुष्पकमिदं धनदान्नान्यवाहनम् । अतो निष्पन्दमभवद्धनाध्यक्षविनाकृतम् ॥ ७ ॥ इति वाक्यान्तरे तस्य करालः कृष्णपिङ्गलः । वामनो विकटो मुण्डी नन्दी प्रह्वभुजो बली ॥ ८ ॥ ततः पार्श्वमुपागम्य भवस्यानुचरोऽब्रवीत् । नन्दीश्वरो वचश्चेदं राक्षसेन्द्रमशङ्कितः ॥ ९ ॥

स जित्वेत्यादि । महासेनप्रसूतिं स्कन्दप्रसूतिस्थानम् । अपश्यदित्यादि पूर्वसर्गान्तोक्तसंक्षेपप्रपञ्चनम् ॥ १ ॥ २ ॥ सं इति । विष्टम्भितं रुद्राज्ञया रुद्धसञ्चारम् । कामगं पुष्पकम् अगममिति राक्षसाधिपस्तदासेत्यन्वयः ॥ ३ ॥ ४ ॥ किंनिमित्तमिति । कस्य कस्य पुरुषस्य इदं कर्म भवेत् ॥ ५-२२ ॥

स०-धनदान्नान्यवाहनम् इत्यत्र सामर्थ्याद्धनदादन्यो यस्तद्वाहनं न भवतीति लभ्यते । अथवा अन्यवाहनं न भवतीति नान्यवाहनम् । धनदेनाततति गच्छतीति धनदात् । धनदाच्च तन्नान्यवाहनं चेति । धनदेनेत्यस्याकर्तृकरणत्वेऽपि बाहुलकादततेः क्विप् । यद्वा धनदमातयतीत्यन्तर्णीतण्यर्थाददततेर्धनदपदेन गम्यादिसमासः ॥ ७ ॥ नन्द आनन्दोऽस्यास्तीति नन्दी, स ईश्वरो यस्येति । तेन नन्दीति नाधिकम् ॥९॥

पुष्पकस्येति । गोपते हे वृषभपते रुद्र ! ॥ २३–२७ ॥



निवर्तस्व दशग्रीव शैले क्रीडति शङ्करः । सुपर्णनागयक्षाणां देवगन्धर्वरक्षसाम् ॥ १० ॥ सर्वेषामेव भूतानामगम्यः पर्वतः कृतः । [ तन्निवर्तस्व दुर्बुद्धे मा विनाशमवाप्स्यसि । ] इति नन्दिवचः श्रुत्वा क्रोधात् कम्पितकुण्डलः ॥ ११ ॥ रोषात्तु ताम्रनयनः पुष्पकादवरुह्य सः । कोऽयं शङ्कर इत्युक्त्वा शैलमूलमुपागतः ॥ १२ ॥ सोऽपश्यन्नन्दिनं तत्र देवस्यादूरतः स्थितम् । दीप्तं शूलमवष्टभ्य द्वितीयमिव शङ्करम् ॥ १३ ॥ तं दृष्ट्वा वानरमुखमवज्ञाय स राक्षसः । प्रहासं मुमुचे तत्र सतोय इव तोयदः ॥ १४ ॥ तं क्रुद्धो भगवान्नन्दी शङ्करस्यापरा तनुः । अब्रवीत्तत्र तद्रक्षो दशाननमुपस्थितम् ॥ १५ ॥ यस्माद्वानररूपं मामवज्ञाय दशानन । अशनीपातसङ्काशमुपहासं प्रमुक्तवान् ॥ १६ ॥ तस्मान्मद्रूपसम्पन्ना मद्वीर्यसमतेजसः । उत्पत्स्यन्ति वधार्थं हि कुलस्य तव वानराः ॥ १७ ॥ नखदंष्ट्रायुधाः क्रूरा मनस्सम्पातरंहसः । युद्धोन्मत्ता बलोद्रिक्ताः शैला इव विसर्पिणः ॥ १८ ॥ ते तव प्रबलं दर्पमुत्सेधं च पृथग्विधम् । व्यपनेष्यन्ति सम्भूय सहामात्यसुतस्य च ॥ १९ ॥ किन्त्विदानीं मया शक्यं हन्तुं त्वां हे निशाचर । न हन्तव्यो हतस्त्वं हि पूर्वमेव स्वकर्मभिः ॥ २० ॥ इत्युदीरितवाक्ये तु देवे तस्मिन् महात्मनि । देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता ॥ २१ ॥ अचिन्तयित्वा स तदा नन्दिवाक्यं महाबलः । पर्वतं तु समासाद्य वाक्यमाह दशाननः ॥ २२ ॥ पुष्पकस्य गतिश्छिन्ना यत्कृते मम गच्छतः । तमिमं शैलमुन्मूलं करोमि तव गोपते ॥ २३ ॥ केन प्रभावेन भवो नित्यं क्रीडति राजवत् । विज्ञातव्यं न जानीते भयस्थानमुपस्थितम् ॥ २४ ॥



स०–शङ्करस्यापरा तनुः तद्वद्विद्यमानः । उपस्थितं दशाननं तद्रक्षः पुष्पकादवरुह्यागतम् । तं चोरसदृशं रावणं प्रत्यब्रवीत् । "तकारः कीर्तितश्चोरे" इति विश्वः ॥ १९ ॥ तव न सामर्थ्यं किल, व्यर्थं किं कत्थस इत्यतः कथयति–किन्त्विति । किञ्च यद्यपि मया न हन्तव्यः । सत्यसङ्कल्पभगवत्सङ्कल्पात् "मयैव वध्यो भवतं त्रिजन्मसु" इत्येवंरूपात् हतः तत्प्रायः ॥ २० ॥

पीडिता इति। अधोगताः पर्वतस्याधोभागगताः भुजाः पीडिता आसन् ॥२८-२९॥ मया त्वमभ्यनुज्ञातः, पुष्पकेण गमनायेति शेषः ॥४०-४२॥

एवमुक्त्वा ततो राम भुजान् विक्षिप्य पर्वते। तोलयामास तं शैलं स शैलः समकम्पत ॥ २५ ॥ चालनात् पर्वतस्यैव गणा देवस्य कम्पिताः। चचाल पार्वती चापि तदाऽऽश्लिष्टा महेश्वरम् ॥ २६ ॥ ततो राम महादेवो देवानां प्रवरो हरः। पादाङ्गुष्ठेन तं शैलं पीडयामास लीलया ॥ २७ ॥ पीडितास्तु ततस्तस्य शैलस्याधोगता भुजाः। विस्मिताश्चाभवंस्तत्र सचिवास्तस्य रक्षसः ॥ २८ ॥ रक्षसा तेन रोषाच्च भुजानां पीडनात्तदा। मुक्तो विरावः सहसा त्रैलोक्यं येन कम्पितम् ॥ २९ ॥ मेनिरे वज्रनिष्पेषं तस्यामात्या युगक्षये। तदा वर्त्मस्थचलिता देवा इन्द्रपुरोगमाः ॥ ३० ॥ समुद्राश्चापि संक्षुब्धाश्चलिताश्चापि पर्वताः। यक्षा विद्याधराः सिद्धाः किमेतदिति चाब्रुवन् ॥३१॥ अथ ते मन्त्रिणस्तस्य विक्रोशन्तमथाब्रुवन्। तोषयस्व महादेवं नीलकण्ठमुमापतिम् ॥ ३२ ॥ तमृते शरणं नान्यं पश्यामोऽत्र दशानन। स्तुतिभिः प्रणतो भूत्वा तमेव शरणं व्रज ॥३३॥ कृपालुः शङ्करस्तुष्टः प्रसादं ते विधास्यति। एवमुक्तस्तदाऽऽमात्यैस्तुष्टाव वृषभध्वजम् ॥ ३४ ॥ सामभिर्विविधैः स्तोत्रैः प्रणम्य स दशाननः। संवत्सरसहस्रं तु रुदतो रक्षसो गतम् ॥३५॥ ततः प्रीतो महादेवः शैलाग्रे विष्ठितः प्रभुः। मुक्त्वा चास्य भुजान् राम प्राह वाक्यं दशाननम् ॥ ३६ ॥ प्रीतोऽस्मि तव वीर्यस्य शौण्डीर्याच्च दशानन। शैलाक्रान्तेन यो मुक्तस्त्वया रावः सुदारुणः ॥ ३७ ॥ यस्माल्लोकत्रयं चैतद्रावितं भयमागतम्। तस्मात्त्वं रावणो नाम नाम्ना राजन् भविष्यसि ॥ ३८ ॥ देवता मानुषा यक्षा ये चान्ये जगतीतले। एवं त्वामभिधास्यन्ति रावणं लोकरावणम् ॥३९॥ गच्छ पौलस्त्य विस्रब्धं पथा येन त्वमिच्छसि। मया चैवाभ्यनुज्ञातो राक्षसाधिप गम्यताम् ॥ ४० ॥ एवमुक्तस्तु लङ्केशः शम्भुना स्वयमब्रवीत्। प्रीतो यदि महादेव वरं मे देहि याचतः ॥ ४१ ॥

मानुषानिति । न गणे न गणयामि ॥ ४३ ॥ वाञ्छितमिति । ब्रह्मदत्तदीर्घायुष्याद्यो भागो गतः ततस्तस्माच्छेषमवशिष्टं वाञ्छितमिदानीमिव दुष्कर्मणा केनाप्यविनष्टं संप्रयच्छ ॥ ४४ ॥ ददाविति । आयुषश्चेति । ब्रह्मा दीर्घायुष्यं तावद्दत्तवांस्तत्रास्यापमृत्यवो देवतादिभ्यः प्राप्ताः परिहृता भवन्तु, रामेण





अवध्यत्वं मया प्राप्तं देवगन्धर्वदानवैः । राक्षसैर्गुह्यकैर्नागैर्ये चान्ये बलवत्तराः ॥ ४२ ॥ मानुषान्न गणे देव स्वल्पास्ते मम संमताः । दीर्घमायुश्च मे प्राप्तं ब्रह्मणस्त्रिपुरान्तक ॥ ४३ ॥ वाञ्छितं चायुषः शेषं शस्त्रं त्वं च प्रयच्छ मे । एवमुक्तस्ततस्तेन रावणेन स शङ्करः ॥ ४४ ॥ ददौ खड्गं महादीप्तं चन्द्रहासमिति श्रुतम् । आयुषश्चावशेषं च स्थित्वा भूतपतिस्तदा ॥ ४५ ॥ दत्त्वोवाच ततः शम्भुर्नावज्ञेयमिदं त्वया । अवज्ञातं यदि हि ते मामेवैष्यत्यसंशयः ॥ ४६ ॥ एवं महेश्वरेणैव कृतनामा स रावणः । अभिवाद्य महादेवमारुरोहाथ पुष्पकम् ॥ ४७ ॥ ततो महीतले राम परिचक्राम रावणः । क्षत्रियान् सुमहावीर्यान् बाधमान इतस्ततः ॥ ४८ ॥ केचित्तेजस्विनः शूराः क्षत्रिया युद्धदुर्मदाः । तच्छासनमकुर्वन्तो विनेशुः सपरिच्छदाः ॥ ४९ ॥ अपरे दुर्जयं रक्षो जानन्तः प्राज्ञसंमताः । जिताः स्म इत्यभाषन्त राक्षसं बलदर्पितम् ॥ ५० ॥ इत्यार्षे वाल्मीकीये श्रीमदुत्तरश्रीरामायणे षोडशः सर्गः ॥ १६ ॥

अथ राजन् महाबाहुर्विचरन् स महीतले । हिमवत्सानुमासाद्य परिचक्राम रावणः ॥ १ ॥
तत्रापश्यत् स वै कन्यां कृष्णाजिनजटाधराम् । आर्षेण विधिना चैनां दीप्यन्तीं देवतामिव ॥ २ ॥
स दृष्ट्वा रूपसम्पन्नां कन्यां तां सुमहाव्रताम् । काममोहपरीतात्मा पप्रच्छ प्रहसन्निव ॥ ३ ॥

वध इति स्थित्वा मत्वेत्यर्थः ॥ ४५ ॥ दत्त्वेति । इदं खड्गरूपास्त्रं नावज्ञेयम्, एकस्मिन्नपि दिने पूजौदासीन्यं न कर्तव्यमित्यर्थः । अवज्ञातं यदि ॥ ४६–५० ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षोडशः सर्गः ॥ १६ ॥



अथ राजन्नित्यादि । आर्षेण विधिना तपोनुष्ठानेन ॥ १ ॥ २ ॥ स इति । प्रहसन्निति दुर्लभकन्यालाभात्प्रहासः ॥ ३ ॥

किमति । इदं प्रति क्रिया इदं यौवनप्रतिकूलक्रिया । रूपस्य तपसः क्रिया इति पाठः ॥ ४–२० ॥

किमिदं वर्तसे भद्रे विरुद्धं यौवनस्य ते । न हि युक्ता तवैतस्य रूपस्यैव प्रति क्रिया ॥ ४ ॥ रूपं तेऽनुपमं भीरु कामोन्मादकरं नृणाम् । न युक्तं तपसि स्थातुं निर्गतो ह्येष निर्णयः ॥ ५ ॥ कस्यासि किमिदं भद्रे कश्च भर्ता वरानने । येन सम्भुज्यसे भीरु स नरः पुण्यभाग्भुवि ॥ ६ ॥ पृच्छतः शंस मे सर्वं कस्य हेतोः परिश्रमः । एवमुक्ता तु सा कन्या रावणेन यशस्विनी ॥ ७ ॥ अब्रवीद्विधिवत् कृत्वा तस्यातिथ्यं तपोधना । कुशध्वजो मम पिता ब्रह्मर्षिरमितप्रभः । बृहस्पतिसुतः श्रीमान् बुद्ध्या तुल्यो बृहस्पतेः ॥ ८ ॥ तस्याहं कुर्वतो नित्यं वेदाभ्यासं महात्मनः । संभूय वाङ्मयी कन्या नाम्ना वेदवती स्मृता ॥ ९ ॥ ततो देवाः सगन्धर्वा यक्षराक्षसपन्नगाः । तेऽपि गत्वा हि पितरं वरणं रोचयन्ति मे ॥१०॥ न च मां स पिता तेभ्यो दत्तवान् राक्षसर्षभ । कारणं तद्वदिष्यामि निशाचर निशामय ॥११॥ पितुस्तु मम जामाता विष्णुः किल सुरेश्वरः । अभिप्रेतस्त्रिलोकेशस्तस्मान्नान्यस्य मे पिता ॥१२॥ दातुमिच्छति तस्मै तु तच्छ्रुत्वा बलदर्पितः । दम्भुर्नाम ततो राजा दैत्यानां कुपितोऽभवत् ॥ १३ ॥ तेन रात्रौ शयानो मे पिता पापेन हिंसितः ॥ १४ ॥ ततो मे जननी दीना तच्छरीरं पितुर्मम । परिष्वज्य महाभागा प्रविष्टा हव्यवाहनम् ॥ १५ ॥ ततो मनोरथं सत्यं पितुर्नारायणं प्रति । करोमीति तमेवाहं हृदयेन समुद्वहे ॥ १६ ॥ इति प्रतिज्ञामारुह्य चरामि विपुलं तपः । एतत्ते सर्वमाख्यातं मया राक्षसपुङ्गव ॥ १७ ॥ नारायणो मम पतिर्न त्वन्यः पुरुषोत्तमात् । आश्रये नियमं घोरं नारायणपरीप्सया । विज्ञातस्त्वं हि मे राजन् गच्छ पौलस्त्यनन्दन ॥ १८ ॥ जानामि तपसा सर्वं त्रैलोक्ये यद्धि वर्तते ॥ १९ ॥

अवलिप्तेति । वृद्धानामिति । पुण्यसञ्चयः पुण्यसङ्ग्रहः वृद्धानामेव भ्राजते न तु बालानाम् ॥ २१-२४ ॥



सोऽब्रवीद्रावणो भूयस्तां कन्यां सुमहाव्रताम् । अवरुह्य विमानाग्रात् कन्दर्पशरपीडितः ॥ २० ॥ अवलिप्ताऽसि सुश्रोणि यस्यास्ते मतिरीदृशी । वृद्धानां मृगशावाक्षि भ्राजते पुण्यसञ्चयः ॥ २१ ॥ त्वं सर्वगुणसम्पन्ना नार्हसे वक्तुमीदृशम् । त्रैलोक्यसुन्दरी भीरु यौवनं ते निवर्तते ॥ २२ ॥ अहं लङ्कापतिर्भद्रे दशग्रीव इति श्रुतः । तस्य मे भव भार्या त्वं भुङ्क्ष्व भोगान् यथासुखम् ॥ २३ ॥ कश्च तावदसौ यं त्वं विष्णुरित्यभिभाषसे । वीर्येण तपसा चैव भोगेन च बलेन च । न मया स समो भद्रे यं त्वं कामयसेऽङ्गने ॥ २४ ॥ इत्युक्तवति तस्मिंस्तु वेदवत्यथ साऽब्रवीत् ॥ २५ ॥ मा मैवमिति सा कन्या तमुवाच निशाचरम् । त्रैलोक्याधिपतिं विष्णुं सर्वलोकनमस्कृतम् । त्वदृते राक्षसेन्द्रान्यः कोऽवमन्येत बुद्धिमान् ॥ २६ ॥ एवमुक्तस्तया तत्र वेदवत्या निशाचरः । मूर्धजेषु तदा कन्यां कराग्रेण परामृशत् ॥ २७ ॥ ततो वेदवती क्रुद्धा केशान् हस्तेन साऽच्छिनत् । असिर्भूत्वा करस्तस्याः केशांश्छिन्नांस्तदाऽकरोत् ॥ २८ ॥ सा ज्वलन्तीव रोषेण दहन्तीव निशाचरम् । उवाचाग्निं समाधाय मरणाय कृतत्वरा ॥ २९ ॥ धर्षितायास्त्वयाऽनार्य न मे जीवितमिष्यते । रक्षस्तस्मात् प्रवेक्ष्यामि पश्यतस्ते हुताशनम् ॥ ३० ॥ यस्मात्तु धर्षिता चाहं त्वया पापात्मना वने । तस्मात्तव वधार्थं हि समुत्पत्स्ये ह्यहं पुनः ॥ ३१ ॥ न हि शक्यं स्त्रिया हन्तुं पुरुषः पापनिश्चयः । शापे त्वयि मयोत्सृष्टे तपसश्च व्ययो भवेत् ॥ ३२ ॥ यदि त्वस्ति मया किंचित्कृतं दत्तं हुतं तथा । तस्मात्त्वयोनिजा साध्वी भवेयं धर्मिणः सुता ॥ ३३ ॥ एवमुक्त्वा प्रविष्टा सा ज्वलितं जातवेदसम् । पपात च दिवो दिव्या पुष्पवृष्टिः समन्ततः ॥ ३४ ॥

॥२६–२९॥ पूर्वमित्यादि । वेदवत्या यः शत्रुः क्रोधाहितः सोऽसौ शैलाभः शत्रू रावणः पुनस्तथैव यथाप्रतिज्ञं पातं च प्राप्तया पतिभूतस्य तव मानुषं वीर्यमुपाश्रयित्वा अद्य निहतः ॥४०॥ एवमित्यादि । उत्पन्नेयम् । व्यत्यय आर्षः॥४१–४३॥ इति श्रीगोविन्द० उत्तरश्रीरामायण० सप्तदशः सर्गः ॥१७॥

पुनरेव समुद्भूता पद्मे पद्मसमप्रभा । तस्मादपि पुनः प्राप्ता पूर्ववत्तेन रक्षसा ॥ ३५ ॥ कन्यां कमलगर्भाभां प्रगृह्य स्वगृहं ययौ । प्रगृह्य रावणस्त्वेतां दर्शयामास मन्त्रिणे ॥ ३६ ॥ लक्षणज्ञो निरीक्ष्यैव रावणं चैव मब्रवीत् । गृहस्थैषा हि सुश्रोणी त्वद्वधायैव दृश्यते ॥ ३७ ॥ एतच्छ्रुत्वाऽर्णवे राम तां प्रचिक्षेप रावणः । सा चैव क्षितिमासाद्य यज्ञायतनमध्यगा ॥ ३८ ॥ राज्ञो हलमुखोत्कृष्टा पुनरप्युत्थिता सती । सैषा जनकराजस्य प्रसूता तनया प्रभो । तव भार्या महाबाहो विष्णुस्त्वं हि सनातनः ॥ ३९ ॥ पूर्वं क्रोधाहितः शत्रुर्ययाऽसौ निहतस्तथा । उपाश्रयित्वा शैलाभस्तव वीर्यममानुषम् ॥ ४० ॥ एवमेषा महाभागा मर्त्येषूत्पत्स्यते पुनः । क्षेत्रे हलमुखोत्कृष्टे वेद्यामग्निशिखोपमा ॥४१॥ एषा वेदवती नाम पूर्वमासीत् कृते युगे । त्रेतायुगमनुप्राप्य वधार्थं तस्य रक्षसः ॥ ४२ ॥ उत्पन्ना मैथिलकुले जनकस्य महात्मनः । सीतोत्पन्ना तु सीतेति मानुषैः पुनरुच्यते ॥ ४३ ॥

इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे सप्तदशः सर्गः ॥ १७ ॥

प्रविष्टायां हुताशं तु वेदवत्यां स रावणः । पुष्पकं तु समारुह्य परिचक्राम मेदिनीम् ॥ १ ॥
ततो मरुत्तं नृपतिं यजन्तं सह दवतैः । उशीरबीजमासाद्य ददर्श स तु रावणः ॥ २ ॥
संवर्तो नाम ब्रह्मर्षिः साक्षाद्भ्राता बृहस्पतेः । याजयामास धर्मज्ञः सर्वैर्देवगणैर्वृतः ॥ ३ ॥
दृष्ट्वा देवास्तु तद्रक्षो वरदानेन दुर्जयम् । तिर्यग्योनिं समाविष्टास्तस्य दर्शनभीरवः ॥ ४ ॥

प्रविष्टायामित्यादि । उशीरबीजमिति देशनाम ॥ १–८ ॥

अकुतूहलेति । अकुतूहलभावेन मां दृष्ट्वाऽप्यविस्मयानिर्भयानादरभावेनेत्यर्थः । यो नावगच्छासि तस्य तवेत्यन्वयः ॥ ९–१२ ॥ कं त्वमिति । प्राक्



इन्द्रो मयूरः संवृत्तो धर्मराजस्तु वायसः । कृकलासो धनाध्यक्षो हंसश्च वरुणोऽभवत् ॥ ५ ॥ अन्येष्वपि गतेष्वेवं देवेष्वरिनिषूदन । रावणः प्राविशद्यज्ञं सारमेय इवाशुचिः ॥ ६ ॥ तं च राजानमासाद्य रावणो राक्षसाधिपः । प्राह युद्धं प्रयच्छेति निर्जितोऽस्मीति वा वद ॥ ७ ॥ ततो मरुत्तो नृपतिः को भवानित्युवाच तम् । अपहासं ततो मुक्त्वा रावणो वाक्यमब्रवीत् ॥ ८ ॥ अकुतूहलभावेन प्रीतोऽस्मि तव पार्थिव । धनदस्यानुजं यो मां नावगच्छसि रावणम् ॥ ९ ॥ त्रिषु लोकेषु कोऽन्योऽस्ति यो न जानाति मे बलम् । भ्रातरं येन निर्जित्य विमानमिदमाहृतम् । ततो मरुत्तः स नृपस्तं रावणमथाब्रवीत् ॥ १० ॥ धन्यः खलु भवान् येन ज्येष्ठो भ्राता रणे जितः । न त्वया सदृशः श्लाघ्यस्त्रिषु लोकेषु विद्यते ॥ ११ ॥ नाधर्मसहितं श्लाघ्यं तल्लोकं प्रतिसंहितम् । कर्म दौरात्म्यकं कृत्वा श्लाघ्यसे भ्रातृनिर्जयात् ॥ १२ ॥ कं त्वं प्राक्केवलं धर्मं चरित्वा लब्धवान् वरम् । श्रुतपूर्वं हि न मया भाषसे यादृशं स्वयम् ॥ १३ ॥ तिष्ठेदानीं न मे जीवन् प्रतियास्यसि दुर्मते । अद्य त्वां निशितैर्बाणैः प्रेषयामि यमक्षयम् ॥ १४ ॥ ततः शरासनं गृह्य सायकांश्च नराधिपः । रणाय निर्ययौ क्रुद्धः संवर्तो मार्गमावृणोत् ॥ १५ ॥ सोऽब्रवीत् स्नेहसंयुक्तं मरुत्तं तं महानृषिः । श्रोतव्यं यदि मद्वाक्यं सम्प्रहारो न ते क्षमः ॥ १६ ॥ माहेश्वरमिदं सत्रमसमाप्तं कुलं दहेत् ॥ १७ ॥ दीक्षितस्य कुतो युद्धं क्रोधित्वं दीक्षिते कुतः । संशयश्च जये नित्यं राक्षसश्च सुदुर्जयः ॥ १८ ॥ स निवृत्तो गुरोर्वाक्यान्मरुत्तः पृथिवीपतिः । विसृज्य सशरं चापं स्वस्थो मखमुखोऽभवत् ॥ १९ ॥

पूर्वम् । त्वं केवलं धर्मं दोषहीनं धर्मं चरित्वा किमपि वरं लब्धवानिति श्रुतपूर्वम्, इदानीं यादृशं भ्रातृविजयरूपमधर्मं आपसे तन्न श्रुतपूर्वमित्यर्थः ॥ १३ ॥ १४ ॥ तत इति । मार्गमावृणोत्, निर्यातस्येति शेषः ॥ १५ ॥ स इति । महानृषिः तत्पुरोहित इत्यर्थः ॥ १६–२१ ॥

रावण इति । स्वां योनिं स्वस्वप्रकृतिमासाद्य । तानि सत्त्वानि, प्राक्कार्यवशगृहीतमूर्तिसजातीयप्राणिन इत्यर्थः ॥ २२॥२३ ॥ इदमिति । प्रीतिलक्षणां

ततस्तं निर्जितं मत्वा घोषयामास वै शुकः । रावणो जयतीत्युच्चैर्हर्षान्नादं विमुक्तवान् ॥ २० ॥ तान् भक्षयित्वा तत्रस्थान् महर्षीन् यज्ञमागतान् । वितृप्तो रुधिरैस्तेषां पुनः सम्प्रययौ महीम् ॥२१॥ रावणे तु गते देवाः सेन्द्राश्चैव दिवौकसः । ततः स्वां योनिमासाद्य तानि सत्त्वानि चाब्रुवन् ॥ २२ ॥ हर्षात्तदाऽब्रवीदिन्द्रो मयूरं नीलबर्हिणम् । प्रीतोऽस्मि तव धर्मज्ञ भुजङ्गाद्धि न ते भयम् ॥ २३ ॥ इदं नेत्रसहस्रं तु यत्तद्बर्हे भविष्यति । वर्षमाणे मयि मुदं प्राप्स्यसे प्रीतिलक्षणाम् । एवमिन्द्रो वरं प्रादान्मयूरस्य सुरेश्वरः ॥२४॥ नीलाः किल पुरा बर्हा मयूराणां नराधिप । सुराधिपाद्वरं प्राप्य गताः सर्वेऽपि बर्हिणः ॥ २५ ॥ धर्मराजोऽब्रवीद्राम प्राग्वंशे वायसं स्थितम् । पक्षिंस्तवास्मि सुप्रीतः प्रीतस्य वचनं शृणु ॥ २६ ॥ यथाऽन्यैर्विविधै रोगैः पीड्यन्ते प्राणिनो मया । ते न ते प्रभविष्यन्ति मयि प्रीते न संशयः ॥ २७ ॥ मृत्युतस्ते भयं नास्ति वरान्मम विहङ्गम । यावत्त्वां न वधिष्यन्ति नरास्तावद्भविष्यसि ॥२८॥ एते मद्विषयस्था वै मानवाः क्षुद्भयार्दिताः । त्वयि भुक्ते तु तृप्तास्ते भविष्यन्ति सबान्धवाः ॥ २९ ॥ वरुणस्त्व ब्रवीद्धंसं गङ्गातोयविहारिणम् । श्रूयतां प्रीतिसंयुक्तं वचः पत्ररथेश्वर ॥ ३० ॥ वर्णो मनोहरः सौम्य चन्द्रमण्डल सन्निभः । भविष्यति तवोदग्रः शुद्धफेनसमप्रभः ॥ ३१ ॥

मत्प्रीतिचिह्नभूताम् ॥ २४ ॥ नीला इति । नीलाः किलेति । नेत्ररहिता इत्यर्थः ॥ २५ ॥ धर्मराज इति । प्राग्वंशे यज्ञशालादारुणि ॥ २६ ॥ यथेति । ते तव । ते रोगाः । न प्रभविष्यन्ति । प्रीते इति च्छेदः ॥ २७ ॥ मृत्युत इति । "जातस्य हि ध्रुवो मृत्युः" इत्यशक्यपरिहारत्वादाह— यावत्त्वामित्यादि ॥ २८ ॥ एत इति । मद्विषयस्थाः यमलोकस्थाः ॥ २९–३१ ॥

मच्छरीरमिति । मच्छरीरं जलमूर्तिम् ॥ ३२ ॥ हंसानामिति । क्रोडः भुजान्तरम् । शष्पाग्रनिर्मलाः बालतृणाग्रवन्निर्मलाः, कोमलश्यामवर्णा इत्यर्थः





मच्छरीरं समासाद्य कान्तो नित्यं भविष्यसि। प्राप्स्यसे चातुलां प्रीतिमेतन्मे प्रीतिलक्षणम् ॥ ३२ ॥ हंसानां हि पुरा राम नीलवर्णः सपाण्डुरः । पक्षा नीलाग्रसंवीताः क्रोडाः शष्पाग्रनिर्मलाः ॥ ३३ ॥ अथाब्रवीद्वैश्रवणः कृकलासं गिरौ स्थितम् । हैरण्यं सम्प्रयच्छामि वर्णं प्रीतस्तवाप्यहम् ॥ ३४ ॥ सद्रव्यं च शिरो नित्यं भविष्यति तवाक्षयम् । एष काञ्चनको वर्णो मत्प्रीत्या ते भविष्यति ॥ ३५ ॥ एवं दत्त्वा वरांस्तेभ्यस्तस्मिन् यज्ञोत्सवे सुराः । निवृत्ताः सह राज्ञा ते पुनः स्वभवनं गताः ॥३६॥ इत्यार्षे० श्रीमदुत्तरश्रीरामायणे अष्टादशः सर्गः ॥१८॥

अथ जित्वा मरुत्तं स प्रययौ राक्षसाधिपः । नगराणि नरेन्द्राणां युद्धकांक्षी दशाननः ॥ १ ॥ समासाद्य तु राजेन्द्रान् महेन्द्रवरुणोपमान् । अब्रवीद्राक्षसेन्द्रस्तु युद्धं मे दीयतामिति ॥ २ ॥ निर्जिताः स्मेति वा ब्रूत एष मे हि सुनिश्चयः । अन्यथा कुर्वतामेवं मोक्षो नैवोपपद्यते ॥ ३ ॥ ततस्त्वभीरवः प्राज्ञाः पार्थिवा धर्मनिश्चयाः । मन्त्रयित्वा ततोऽन्योन्यं राजानः सुमहाबलाः । निर्जिताः स्मेत्यभाषन्त ज्ञात्वा वरबलं रिपोः ॥ ४ ॥ दुष्यन्तः सुरथो गाधिर्गयो राजा पुरूरवाः । एते सर्वेऽब्रुवंस्तात निर्जिताः स्मेति पार्थिवाः ॥ ५ ॥ अथायोध्यां समासाद्य रावणो राक्षसाधिपः ॥ ६ ॥ सुगुप्तामनरण्येन शक्रेणेवामरावतीम् । स तं पुरुषशार्दूलं पुरन्दरसमं बले ॥ ७ ॥ प्राह राजानमासाद्य युद्धं देहीति रावणः । निर्जितोऽस्मीति वा ब्रूहि त्वमेवं मम शासनम् ॥ ८ ॥

॥ ३३ ॥ ३४ ॥ सद्रव्यमिति । एतदेवाह—एष काञ्चनक इति ॥ ३५ ॥ स्वभवनमिति । मरुत्तेन सह स्वर्गमित्यर्थः ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टादशः सर्गः ॥ १८ ॥ १–९ ॥

दीयत इति । संतिष्ठ एवमहं भवामीति आयत्तो भवामीत्यर्थः ॥ १० ॥ अथेति । पूर्वं रावणगमनात्पूर्वम् । श्रुतार्थेन श्रुतरावणवृत्तान्तेन । तन्नरेन्द्रस्य

अयोध्याधिपतिस्तस्य श्रुत्वा पापात्मनो वचः । अनरण्यस्तु संक्रुद्धो राक्षसेन्द्रमथाब्रवीत् ॥ ९ ॥ दीयते द्वन्द्वयुद्धं ते राक्षसाधिपते मया । सन्तिष्ठ क्षिप्रमायत्तो भव चैवं भवाम्यहम् ॥१०॥ अथ पूर्वं श्रुतार्थेन निर्जितं सुमहद्बलम् । निष्कामत्तन्नरेन्द्रस्य बलं रक्षोवधोद्यतम् ॥ ११ ॥ नागानां दशसाहस्रं वाजिनां नियुतं तथा । रथानां बहुसाहस्रं पत्तीनां च नरोत्तम ॥ १२ ॥ महीं सञ्छाद्य निष्क्रान्तं सपदातिरथं रणे । ततः प्रवृत्तं सुमहद्युद्धं युद्धविशारद ॥ १३ ॥ अनरण्यस्य नृपते राक्षसेन्द्रस्य चाद्भुतम् । तद्रावणबलं प्राप्य बलं तस्य महीपतेः ॥ १४ ॥ प्राणश्यत तदा सर्वं हव्यं हुतमिवानले । युद्ध्वा च सुचिरं कालं कृत्वा विक्रममुत्तमम् ॥ १५ ॥ प्रज्वलन्तं समासाद्य क्षिप्रमेवावशेषितम् । प्राविशत् सङ्कुलं तत्र शलभा इव पावकम् । नश्यति स्म बलं तत्र हव्यं हुतमिवानले ॥ १६ ॥ सोऽपश्यत्तन्नरेन्द्रस्तु नश्यमानं महाबलम् । महार्णवं समासाद्य वनापगशतं यथा ॥ १७ ॥ ततः शक्रधनुःप्रख्यं धनुर्विस्फारयन् स्वयम् । आससाद नरेन्द्रस्तं रावणं क्रोधमूर्च्छितः ॥ १८ ॥ अनरण्येन तेऽमात्या मारीचशुकसारणाः । प्रहस्तसहिता भग्ना व्यद्रवन्त मृगा इव ॥ १९ ॥ ततो बाणशतान्यष्टौ पातयामास मूर्धनि । तस्य राक्षसराजस्य इक्ष्वाकुकुलनन्दनः ॥ २० ॥ तस्य बाणाः पतन्तस्ते चक्रिरे न क्षतिं क्वचित् । वारिधारा इवाभ्रेभ्यः पतन्त्यो गिरिमूर्धनि ॥ २१ ॥ ततो राक्षसराजेन क्रुद्धेन नृपतिस्तदा । तलेनाभिहतो मूर्ध्नि स रथान्निपपात ह ॥ २२ ॥ स राजा पतितो भूमौ विह्वलाङ्गः प्रवेपितः । वज्रदग्ध इवारण्ये सालो निपतितो यथा ॥ २३ ॥

बलम् । निष्कामत् निरक्रामत् ॥ ११–१५ ॥ प्रज्वलन्तमिति । समासाद्येति । [illegible] क्षिप्रमेवावशेषितम् अल्पावशिष्टमभवदित्यर्थः । तत्र रणे शलभाः पावकमिव संकुलं समूहनाशनम्, प्राविशत् प्रापत् ॥ १६–२३ ॥

तमिति । इक्ष्वाकुमिक्ष्वाकुवंश्यम् । किं फलं प्राप्तम्, निर्जितोऽस्मीति वचनमनुक्त्वेति शेषः ॥ २४–२६ ॥ न ह्यहमिति । त्वया न निर्जित इति । अपि तु प्राप्तेनैव कालेन विपन्न इत्यर्थः ॥ २७ ॥ २८ ॥ इक्ष्वाकिति । इक्ष्वाकुपरिभावित्वात् तत्कुलपरिभावित्वादित्यर्थः ॥ २९–३१ ॥ तत इति ।

तं प्रहस्याब्रवीद्रक्ष इक्ष्वाकुं पृथिवीपतिम् । किमिदानीं फलं प्राप्तं त्वया मां प्रतियुद्ध्यता ॥२४॥ त्रैलोक्ये नास्ति यो द्वन्द्वं मम दद्यान्नराधिप । शङ्के प्रसक्तो भोगेषु न शृणोषि बलं मम ॥ २५ ॥ तस्यैवं ब्रुवतो राजा मन्दासु वाक्यमब्रवीत् । किं शक्यमिह कर्तुं वै कालो हि दुरतिक्रमः ॥२६॥ न ह्यहं निर्जितो रक्षस्त्वया चात्मप्रशंसिना । कालेनैव विपन्नोऽहं हेतुभूतस्तु मे भवान् ॥ २७ ॥ किं त्विदानीं मया शक्यं कर्तुं प्राणपरिक्षये । न ह्यहं विमुखो रक्षो युध्यमानस्त्वया हतः ॥ २८ ॥ इक्ष्वाकुपरिभावित्वाद्वचो वक्ष्यामि राक्षस । यदि दत्तं यदि हुतं यदि मे सुकृतं तपः । यदि गुप्ताः प्रजाः सम्यक् तदा सत्यं वचोऽस्तु मे ॥ २९ ॥ उत्पत्स्यते कुले ह्यस्मिन्निक्ष्वाकूणां महात्मनाम् । रामो दाशरथिर्नाम यस्ते प्राणान् हरिष्यति ॥ ३० ॥ ततो जलधरोदग्रस्ताडितो देवदुन्दुभिः । तस्मिन्नुदाहृते शापे पुष्पवृष्टिश्च खाच्युता ॥ ३१ ॥ ततः स राजा राजेन्द्र गतः स्थानं त्रिविष्टपम् । स्वर्गते च नृपे तस्मिन् राक्षसः सोऽपसर्पत ॥ ३२ ॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तरश्रीरामायणे एकोनविंशः सर्गः ॥ १९ ॥

ततो वित्रासयन् मर्त्यान् पृथिव्यां राक्षसाधिपः । आससाद घने तस्मिन्नारदं मुनिपुङ्गवम् ॥ १ ॥
तस्याभिवादनं कृत्वा दशग्रीवो निशाचरः । अब्रवीत् कुशलं पृष्ट्वा हेतुमागमनस्य च ॥ २ ॥
नारदस्तु महातेजा देवर्षिरमितप्रभः । अब्रवीन्मेघपृष्ठस्थो रावणं पुष्पके स्थितम् ॥ ३ ॥

अपसर्पत अपासर्पत, अपगतवानित्यर्थः ॥३२॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोनविंशः सर्गः ॥१९॥

ततो वित्रासयन्नित्यादि । आससाद घने तस्मिन्निति । तस्मिन्काले घने घनपृष्ठे स्थितं नारदमित्यर्थः ॥ १ ॥ तस्येति । हेतुमागमनस्य चेत्यत्रापि

पृष्टेत्यन्वयः ॥ २ ॥ ३ ॥ राक्षसाधिपत इति । तिष्ठति, मद्वचनं श्रोतुमिति शेषः । विष्णुदैत्यघातादिदृष्टान्तार्थः ॥ ४ ॥ ५ ॥ किंचिदिति । समाधिमेकाग्र्यम् ॥ ६ ॥ अयं लोकः । त्वया अवध्येनेति च्छेदः ॥ ७–९ ॥ तैस्तैरिति । युद्धेनेति । मतिमान् कदा तस्मिन्मर्त्यलोके युद्धेन वधप्रणयी भवेत्

राक्षसाधिपते सौम्य तिष्ठ विश्रवसः सुत । प्रीतोऽस्म्यभिजनोपेतविक्रमैरूर्जितैस्तव ॥ ४ ॥ विष्णुना दैत्यघातैश्च गन्धर्वोरगधर्षणैः । त्वया समं विमर्दैश्च भृशं हि परितोषितः ॥५॥ किंचिद्वक्ष्यामि तावत्ते श्रोतव्यं श्रोष्यसे यदि । श्रुत्वा चानन्तरं कार्यं त्वया राक्षससत्तम । तन्मे निगदतस्तात समाधिं श्रवणे कुरु ॥ ६ ॥ किमयं वध्यते तात त्वयाऽवध्येन दैवतैः । हत एव ह्ययं लोको यदा मृत्युवशं गतः ॥ ७ ॥ देवदानवदैत्यानां यक्षगन्धर्वरक्षसाम् । अवध्येन त्वया लोकः क्लेष्टुं युक्तो न मानुषः ॥ ८ ॥ नित्यं श्रेयसि संमूढं महद्भिर्व्यसनैर्वृतम् । हन्यात् कस्तादृशं लोकं जराव्याधिशतैर्युतम् ॥ ९ ॥ तैस्तैरनिष्टोपगमैरजस्रं यत्र कुत्र कः । मतिमान् मानुषे लोके युद्धेन प्रणयी भवेत् ॥ १० ॥ क्षीयमाणं दैवहतं क्षुत्पिपासाजरादिभिः । विषादशोकसंमूढं लोकं त्वं क्षपयस्व मा ॥ ११ ॥ पश्य तावन्महाबाहो राक्षसेश्वर मानुषम् । मूढमेवं विचित्रार्थं यस्य न ज्ञायते गतिः ॥१२॥ क्वचिद्वादित्रनृत्यादि सेव्यते मुदितैर्जनैः । रुद्यते चापरैरार्तैर्धाराश्रुनयनाननैः ॥१३॥ मातापितृसुतस्नेहैर्भार्याबन्धुमनोरमैः । मोहितोऽयं जनो ध्वस्तः क्लेशं स्वं नावबुध्यते ॥ १४ ॥ अलमेनं परिक्लिश्य लोकं मोहनिराकृतम् । जित एव त्वया सौम्य मर्त्यलोको न संशयः ॥१५॥ अवश्यमेभिः सर्वैश्च गन्तव्यं यमसादनम् । तन्निगृह्णीष्व पौलस्त्य यमं परपुरञ्जय॥१६

न कोऽपीत्यर्थः ॥१०॥ किंच मृतमारणवद्युद्धेन तेषां वधो व्यर्थ इत्याह–क्षीयमाणमिति ॥ ११ ॥ १२ ॥ क्वचिदिति । धाराश्रुनयनाननैः धाराभूताश्रुनयनयुक्तमुखैः ॥ १३ ॥ मातेति । भार्याबन्धुमनोरमैः भार्याबन्धुषु मनोरमो मनोरमणं प्रीतिर्येषां तैः । क्लेशं पारलौकिकदुःखम् ॥ १४ ॥ अलमेनं

परिक्लिश्येति । मोहनिराकृतः अज्ञानेन प्रच्यावितार्थः ॥ १५–१७ ॥ महर्ष इति । देवगन्धर्वविहार देवगन्धर्वगानपरैर्विहारपर ! समरप्रिय समरदर्शन प्रिय ! ॥ १८ ॥ तत इति । रसालयम् अमृतरसालयम् ॥ १९ ॥ अथेति । क्व खल्विति इदानीं रसातलजिगमिषुणा त्वया अन्येन मार्गेण रसातलमार्ग

तस्मिन् जिते जितं सर्वं भवत्येव न संशयः । एवमुक्तस्तु लङ्केशो दीप्यमानं स्वतेजसा । अब्रवीन्नारदं तत्र सम्प्रहस्याभिवाद्य च ॥ १७ ॥ महर्षे देवगन्धर्वविहार समरप्रिय । अहं समुद्यतो गन्तुं विजयार्थं रसातलम् ॥ १८ ॥ ततो लोकत्रयं जित्वा स्थाप्य नागान् सुरान् वशे । समुद्रममृतार्थं च मथिष्यामि रसालयम् ॥१९॥ अथाब्रवीद्दशग्रीवं नारदो भगवानृषिः । क्व खल्विदानीं मार्गेण त्वयाऽस्यन्येन गम्यते ॥ २० ॥ अयं खलु सुदुर्गम्यः प्रेतराजपुरं प्रति । मार्गो गच्छति दुर्धर्षो यमस्यामित्रकर्शन ॥ २१ ॥ स तु शारदमेघाभं हासं मुक्त्वा दशाननः । उवाच कृतमित्येव वचनं चेदमब्रवीत् ॥ २२ ॥ तस्मादेवमहं ब्रह्मन् वैवस्वतवधोद्यतः । गच्छामि दक्षिणामाशां यत्र सूर्यात्मजो नृपः ॥ २३ ॥ मया हि भगवन् क्रोधात् प्रतिज्ञातं रणार्थिना । अवजेष्यामि चतुरो लोकपालानिति प्रभो ॥ २४ ॥ तदिह प्रस्थितोऽहं वै प्रेतराजपुरं प्रति । प्राणिसंक्लेशकर्तारं योजयिष्यामि मृत्युना ॥ २५ ॥ एवमुक्त्वा दशग्रीवो मुनिं तमभिवाद्य च । प्रययौ दक्षिणामाशां प्रहृष्टः सह मन्त्रिभिः ॥ २६ ॥ नारदस्तु महातेजा मुहूर्तं ध्यानमास्थितः । चिन्तयामास विप्रेन्द्रो विधूम इव पावकः ॥२७॥ येन लोकास्त्रयः सेन्द्राः क्लिश्यन्ते सचराचराः । क्षीणे चायुषि धर्मेण स कालो जेष्यते कथम् ॥ २८ ॥



व्यतिरिक्तमार्गेण क्व गम्यते ॥ २० ॥ कस्य तर्ह्ययं मार्ग इत्यपेक्षायामाह–अयं खल्वित्यादि । सुदुर्गम्यः सुदुर्गमः । यदार्षः ॥ २१ ॥ स त्विति । हासं मुक्त्वेति । कृत्वेति यावत् । शारदमेघाभं नारदं प्रति कृतमित्येवावोचत्, तन्मार्गेणैव गमनं तज्जयश्च मम सिद्ध एवेत्युवाचेत्यर्थः ॥२२॥ तस्मादिति ।

यस्मान्मार्ग उपदिष्टः यतश्च मया चतुर्दिक्पालजयः प्रतिज्ञातस्तस्मादित्यर्थः ॥ २३–२८ ॥ स्वदत्तं स्वकृतं च । स्वदत्तस्वकृतशब्देन कायक्लेशरूपं तपः । महात्मनः, अनुग्रहादिति शेषः ॥ २९ ॥ ३० ॥ धाता विधाता सामान्यतो विशेषतश्च कर्ता ॥ ३१ ॥ अपरमिति । काल एव सर्वसाधनम् । अयं

स्वदत्तकृतसाक्षी यो द्वितीय इव पावकः । लब्धसंज्ञा विजेष्यन्ते लोका यस्य महात्मनः ॥ २९ ॥ यस्य नित्यं त्रयो लोका विद्रवन्ति भयार्दिताः । तं कथं राक्षसेन्द्रोऽसौ स्वयमेव गमिष्यति ॥ ३० ॥ यो विधाता च धाता च सुकृतं दुष्कृतं तथा । त्रैलोक्यं विजितं येन तं कथं विजयिष्यते ॥ ३१ ॥ अपरं किन्तु कृत्वाऽयं विधानं संविधास्यति । कौतूहलसमुत्पन्नो यास्यामि यमसादनम् ॥ ३२ ॥ विमर्दं द्रष्टुमनयोर्यमराक्षसयोः स्वयम् ॥ ३३ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे विंशः सर्गः ॥ २० ॥

एवं सञ्चिन्त्य विप्रेन्द्रो जगाम लघुविक्रमः । आख्यातुं तद्यथावृत्तं यमस्य सदनं प्रति ॥ १ ॥ अपश्यत् स यमं तत्र देवमग्निपुरस्कृतम् । विधानमुपतिष्ठन्तं प्राणिनो यस्य यादृशम् ॥ २ ॥ स तु दृष्ट्वा यमः प्राप्तं महर्षिं तत्र नारदम् । अब्रवीत् सुखमासीनमर्घ्यमावेद्य धर्मतः ॥ ३ ॥ कच्चित् क्षेमं तु देवर्षे कच्चिद् धर्मो न नश्यति । किमागमनकृत्यं ते देवगन्धर्वसेवित ॥ ४ ॥ अब्रवीत्तु तदा वाक्यं नारदो भगवानृषिः । श्रूयतामभिधास्यामि विधानं च विधीयताम् ॥ ५ ॥ एष नाम्ना दशग्रीवः पितृराज निशाचरः । उपयाति वशं नेतुं विक्रमैस्त्वां सुदुर्जयम् ॥ ६ ॥

तु कालातिरिक्तमपरं किं विधानं साधनसंपादनं कृत्वा कालजयं संविधास्यतीत्येवं कौतूहलसमुत्पन्नोऽहं यमस्य सदनं द्रष्टुं यास्यामि ॥ ३२ ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने विंशः सर्गः ॥ २० ॥ १ ॥ अपश्यदिति । अग्निः पुरस्कृतः साक्षितया येनासौ अग्निपुरस्कृतः तम् । प्राणिनो विधानं निग्रहानुग्रहकृत्यमुपतिष्ठन्तमनुतिष्ठन्तम् ॥ २–४ ॥ अब्रवीदिति । विधानं मत्तः श्रुतापदः प्रतिक्रिये

त्यर्थः ॥ ५ ॥ ६ ॥ एतेनेति । दण्डः कालदण्डः प्रहरणमायुधं यस्य तस्य तव किन्नु भविष्यतीति, जयोऽपजयो वेत्यर्थः ॥ ७–११ ॥ ददर्शेति ।





एतेन कारणेनाहं त्वरितो ह्यागतः प्रभो । दण्डप्रहरणस्याद्य तव किन्नु भविष्यति ॥७॥ एतस्मिन्नन्तरे दूरादंशुमन्तमिवोदितम् । ददर्श दीप्तमायान्तं विमानं तस्य रक्षसः ॥ ८ ॥ तं देशं प्रभया तस्य पुष्पकस्य महाबलः । कृत्वा वितिमिरं सर्वं समीपं सोऽभ्यवर्तत ॥९॥ सोऽपश्यत् सुमहाबाहुर्दशग्रीवस्ततस्ततः । प्राणिनः सुकृतं कर्म भुञ्जानांश्चैव दुष्कृतम् ॥ १० ॥ अपश्यत् सैनिकांश्चास्य यमस्यानुचरैः सह । यमस्य पुरुषैरुग्रैर्घोररूपैर्भयानकैः ॥११॥ ददर्श वध्यमानांश्च क्लिश्यमानांश्च देहिनः । क्रोशतश्च महानादं तीव्रनिष्टनतत्परान् ॥१२॥ कृमिभिर्भक्ष्यमाणांश्च सारमेयैश्च दारुणैः ॥१३॥ श्रोत्रायासकरा वाचो वदतश्च भयावहाः । सन्तार्यमाणान् वैतरणीं बहुशः शोणितोदकाम् ॥१४॥ वालुकासु च तप्तासु तप्यमानान् मुहुर्मुहुः । असिपत्रवने चैव भिद्यमानानधार्मिकान् ॥१५॥ रौरवे क्षारनद्यां च क्षुरधारासु चैव हि । पानीयं याचमानांश्च तृषितान् क्षुधितानपि ॥ १६ ॥ शवभूतान् कृशान् दीनान् विवर्णान् मुक्तमूर्धजान् । मलपङ्कधरान् दीनान् रूक्षांश्च परिधावतः ॥ १७ ॥ ददर्श रावणो मार्गे शतशोऽथ सहस्रशः । कांश्चिच्च गृहमुख्येषु गीतवादित्रनिस्वनैः । प्रमोदमानानद्राक्षीद्रावणः सुकृतैः स्वकैः ॥ १८ ॥ गोरसं गोप्रदातारो ह्यन्नं चैवान्नदायिनः । गृहांश्च गृहदातारः स्वकर्मफलमश्नतः ॥ १९ ॥ सुवर्णमणिमुक्ताभिः प्रमदाभिरलंकृतान् ॥२०॥ धार्मिकानपरांस्तत्र दीप्यमानान् स्वतेजसा । ददर्श सुमहाबाहू रावणो राक्षसाधिपः ॥२१॥ ततस्तान् भिद्यमानांश्च कर्मभिर्दुष्कृतैः स्वकैः । रावणो मोचयामास विक्रमेण बलाद्बली ॥ २२ ॥



तीव्रो निष्टनः क्रूरशब्दः ॥ १२ ॥ १३ ॥ श्रोत्रेति । संतार्यमाणान् वैतरणीमिति संज्ञापदवशात् पादाक्षराधिक्यम् ॥ १४–२६ ॥

तानिति । तदस्त्रं रावणप्रयुक्तं प्रागुक्तशस्त्रवर्षं [illegible] निरस्य ॥ [illegible] ॥



प्राणिनो मोचितास्तेन दशग्रीवेण रक्षसा । सुखमापुर्मुहूर्तं ते ह्यतर्कितमचिन्तितम् ॥ २३ ॥ प्रेतेषु मुच्यमानेषु राक्षसेन महीयसा । प्रेतगोपाः सुसंक्रुद्धा राक्षसेन्द्रमभिद्रवन् ॥२४॥ ततो हलहलाशब्दः सर्वदिग्भ्यः समुत्थितः । धर्मराजस्य योधानां शूराणां सम्प्रधावताम् ॥ २५ ॥ ते प्रासैः परिघैः शूलैर्मुसलैः शक्तितोमरैः । पुष्पकं समवर्षन्त शूराः शतसहस्रशः ॥ २६ ॥ तस्यासनानि प्रासादान् वेदिकास्तोरणानि च । पुष्पकस्य बभञ्जुस्ते शीघ्रं मधुकरा इव ॥ २७ ॥ देवनिष्ठानभूतं तद्विमानं पुष्पकं मृधे । भज्यमानं तथैवासीदक्षयं ब्रह्मतेजसा ॥ २८ ॥ असङ्ख्या सुमहत्यासीत्तस्य सेना महात्मनः । शूराणामुग्रयातॄणां सहस्राणि शतानि च ॥२९॥ ततो वृक्षैश्च शैलैश्च प्रासादानां शतैस्तथा । ततस्ते सचिवास्तस्य यथाकामं यथाबलम् । अयुद्धयन्त महावीराः स च राजा दशाननः ॥ ३० ॥ ते तु शोणितदिग्धाङ्गाः सर्वशस्त्रसमाहताः । अमात्या राक्षसेन्द्रस्य चक्रुरायोधनं महत् ॥ ३१ ॥ अन्योन्यं ते महाभागा जघ्नुः प्रहरणैर्भृशम् । यमस्य च महाबाहो रावणस्य च मन्त्रिणः ॥ ३२ ॥ अमात्यांस्तांस्तु सन्त्यज्य यमयोधा महाबलाः । तमेव चाभ्यधावन्त शूलवर्षैर्दशाननम् ॥ ३३ ॥ ततः शोणितदिग्धाङ्गः प्रहारैर्जर्जरीकृतः । फुल्लाशोक इवाभाति पुष्पके राक्षसाधिपः ॥ ३४ ॥ स तु शूलगदाप्रासाञ्छक्तितोमरसायकान् । मुसलानि शिला वृक्षान् मुमोचास्त्रबलाद्बली ॥ ३५ ॥ तरूणां च शिलानां च शस्त्राणां चातिदारुणम् । यमसैन्येषु तद्वर्षं पपात धरणीतले ॥ ३६ ॥ तांस्तु सर्वान् विनिर्भिद्य तदस्त्रमपहत्य च । जघ्नुस्ते राक्षसं घोरमेकं शतसहस्रशः ॥ ३७ ॥ परिवार्य च तं सर्वे शैलं मेघोत्करा इव । भिन्दिपालैश्च शूलैश्च निरुच्छ्वासमपोथयन् ॥ ३८ ॥

ज्वालामालीति । क्रव्यादैः स्वसृष्टैरनुगतस्तथा ॥४४–४६॥ इति श्रीगोविन्दराज० मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकविंशः सर्गः॥२१॥

विमुक्तकवचः क्रुद्धः सिक्तः शोणितविस्रवैः । ततः स पुष्पकं त्यक्त्वा पृथिव्यामवतिष्ठत ॥ ३९ ॥ ततः स कार्मुकी बाणी समरे चाभिवर्तत । लब्धसंज्ञो मुहूर्तेन क्रुद्धस्तस्थौ यथाऽन्तकः ॥ ४० ॥ ततः पाशुपतं दिव्यमस्त्रं सन्धाय कार्मुके । तिष्ठ तिष्ठेति तानुक्त्वा तच्चापं विचकर्ष सः ॥४१॥ आकर्णात् स विकृष्याथ चापमिन्द्रारिराहवे । मुमोच तं शरं क्रुद्धस्त्रिपुरे शङ्करो यथा ॥४२॥ तस्य रूपं शरस्यासीद्विधूमज्वालमण्डलम् । वनं दहिष्यतो घर्मे दावाग्नेरिव मूर्च्छतः ॥ ४३ ॥ ज्वालामाली स तु शरः क्रव्यादानुगतो रणे । मुक्तो गुल्मान् द्रुमांश्चापि भस्म कृत्वा प्रधावति ॥४४॥ ते तस्य तेजसा दग्धाः सैन्या वैवस्वतस्य तु । रणे तस्मिन्निपतिता दावदग्धा नगा इव ॥४५॥ ततस्तु सचिवैः सार्धं राक्षसो भीमविक्रमः । ननाद सुमहानादं कम्पयन्निव मेदिनीम् ॥४६॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे एकविंशः सर्गः ॥ २१ ॥

स तस्य तु महानादं श्रुत्वा वैवस्वतः प्रभुः । शत्रुं विजयिनं मेने स्वबलस्य च संक्षयम् ॥ १ ॥ स हि योधान् हतान् मत्वा क्रोधसंरक्तलोचनः । अब्रवीत्त्वरितं सूतं रथोऽयमुपनीयताम् ॥ २ ॥ तस्य सूतस्तदा दिव्यमुपस्थाप्य महारथम् । स्थितः स च महातेजा ह्यध्यारोहत तं रथम् । पाशमुद्गरहस्तश्च मृत्युस्तस्याग्रतः स्थितः ॥ ३ ॥ येन संक्षिप्यते सर्वं त्रैलोक्यमिदमव्ययम् । कालदण्डस्तु पार्श्वस्थो मूर्तिमानस्य चाभवत् । यमप्रहरणं दिव्यं तेजसा ज्वलदग्निमत् ॥ ४ ॥ तस्य पार्श्वेषु निश्छिद्राः कालपाशाः प्रतिष्ठिताः ॥ ५ ॥

स तस्य त्वित्यादि ॥ १ ॥ स हीति । उपनीयतामित्यब्रवीदित्यन्वयः ॥ २ ॥ ३ ॥ येनेति । येन मृत्युना । युगान्ते सर्वं सकृदेव संह्रियत इत्यर्थः । अव्ययं प्रवाहनित्यम् ॥ ४ ॥ तस्येति । निश्छिद्राः निरन्तराः ॥ ५–७ ॥

तत इति । ततः प्रचोदयन् सूतस्तान् हयान् रुधिरप्रभानित्यत्र चो इति गायत्र्याः द्वाविंशाक्षरम् ॥ ८॥ मुहूर्तेनेति। मनसस्तुल्याः मनस्तुल्यवेगा

पावकस्पर्शसङ्काशः स्थितो मूर्तश्च मुद्गरः ॥ ६ ॥ ततो लोकत्रयं क्षुब्धमकम्पन्त दिवौकसः । कालं दृष्ट्वा तथा क्रुद्धं सर्वलोकभयावहम् ॥७॥ ततः प्रचोदयन् सूतस्तानश्वान् रुधिरप्रभान् । प्रययौ भीमसन्नादो यत्र रक्षःपतिः स्थितः ॥ ८ ॥ मुहूर्तेन यमं ते तु हया हरिहयोपमाः । प्रापयन् मनसस्तुल्या यत्र तत् प्रस्तुतं रणम् ॥ ९ ॥ दृष्ट्वा तथैव विकृतं रथं मृत्युसमन्वितम् । सचिवा राक्षसेन्द्रस्य सहसा विप्रदुद्रुवुः ॥ १० ॥ लघुसत्त्वतया ते हि नष्टसंज्ञा भयार्दिताः । नेह योद्धुं समर्थाः स्म इत्युक्त्वा प्रययुर्दिशः ॥ ११ ॥ स तु तं तादृशं दृष्ट्वा रथं लोकभयावहम् । नाक्षुभ्यत दशग्रीवो न चापि भयमाविशत् ॥ १२ ॥ स तु रावणमासाद्य व्यसृजच्छक्तितोमरान् । यमो मर्माणि संक्रुद्धो रावणस्योपकृन्तत ॥ १३ ॥ रावणस्तु ततः स्वस्थः शरवर्षं मुमोच ह । तस्मिन् वैवस्वतरथे तोयवर्षमिवाम्बुदः ॥ १४ ॥ ततो महाशक्तिशतैः पात्यमानो महोरसि । नाशक्नोत् प्रतिकर्तुं स राक्षसः शल्यपीडितः ॥ १५ ॥ एवं नानाप्रहरणैर्यमेनामित्रकर्शिना । सप्तरात्रं कृतः सङ्ख्ये विसंज्ञो विमुखो रिपुः ॥ १६ ॥ तदासीत्तुमुलं युद्धं यमराक्षसयोर्द्वयोः । जयमाकांक्षतोर्वीर समरेष्वनिवर्तिनोः ॥ १७ ॥ ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । प्रजापतिं पुरस्कृत्य समेतास्तद्रणाजिरम् ॥ १८ ॥ संवर्त इव लोकानां क्रुद्ध्यतोरभवत्तदा । राक्षसानां च मुख्यस्य प्रेतानामीश्वरस्य च ॥ १९ ॥ राक्षसेन्द्रोऽपि विस्फार्य चापमिन्द्राशनिप्रभम् । निरन्तरमिवाकाशं कुर्वन् बाणांस्ततोऽसृजत् ॥२०॥ मृत्युं चतुर्भिर्विशिखैः सूतं सप्तभिरर्दयत् । यमं शतसहस्रेण शीघ्रं मर्मस्वताडयत् ॥ २१ ॥

इत्यर्थः ॥ ९ ॥ दृष्ट्वेति। विकृतं घोरसन्नाहरूपविकारवन्तम् ॥ १० ॥ लघ्विति। लघुसत्त्वतया अल्पवीर्यतया ॥ ११—२४ ॥

हिरण्यकशिपुरित्यादि । दम्भुर्नाम कश्चिदसुरः । विनिपन्नाः विनाशं प्राप्ताः । दृष्टाः दृष्टमात्राः ॥ २५–२९ ॥ मुञ्चेति । यावन्निहन्मि निहनिष्यामीत्यर्थः । यावद्योगे भविष्यदर्थे लट् ॥ ३० ॥ बलमिति । मया दृष्टो मुहूर्तमपि न जीवतीत्येतत् मद्वचनं बलं न खलु बलप्रकाशनं न भवति । किन्तु निसर्गतः





ततः क्रुद्धस्य वदनाद्यमस्य समजायत । ज्वालामाली सनिश्वासः सधूमः कोपपावकः ॥ २२ ॥ तदाश्चर्यमथो दृष्ट्वा देवदानवसन्निधौ । प्रहर्षितौ सुसंरब्धौ मृत्युकालौ बभूवतुः ॥२३॥ ततो मृत्युः क्रुद्धतरो वैवस्वतमभाषत । मुञ्च मां समरे यावद्धन्मीमं पापराक्षसम् । नैषा रक्षो भवेदद्य मर्यादा हि निसर्गतः ॥२४॥ हिरण्यकशिपुः श्रीमान् नमुचिः शम्बरस्तथा । विसन्धिर्धूमकेतुश्च बलिर्वैरोचनोऽपि च ॥२५ ॥ दम्भुर्दैत्यमहाराजो वृत्रो बाणस्तथैव च । राजर्षयः शास्त्रविदो गन्धर्वाः समहोरगाः ॥ २६ ॥ ऋषयः पन्नगा दैत्या यक्षाश्चाप्यप्सरोगणाः । युगान्तपरिवर्ते च पृथिवी समहार्णवा ॥ २७ ॥ क्षयं नीता महाराज सपर्वतसरिद्द्रुमा । एते चान्ये च बहवो बलवन्तो दुरासदाः ॥२८॥ विनिपन्ना मया दृष्टाः किमुतायं निशाचरः ॥ २९॥ मुञ्च मां साधु धर्मज्ञ यावदेनं निहन्म्यहम् । न हि कश्चिन्मया दृष्टो बलवानपि जीवति ॥ ३०॥ बलं मम न खल्वेतन्मर्यादैषा निसर्गतः । स दृष्टो न मया कालं मुहूर्तमपि जीवति ॥ ३१ ॥ तस्यैवं वचनं श्रुत्वा धर्मराजः प्रतापवान् । अब्रवीत्तत्र तं मृत्युं त्वं तिष्ठैनं निहन्म्यहम् ॥ ३२ ॥ ततः संरक्तनयनः क्रुद्धो वैवस्वतः प्रभुः । कालदण्डममोघं तु तोलयामास पाणिना ॥३३॥ यस्य पार्श्वेषु निखिलाः कालपाशाः प्रतिष्ठिताः । पावकाशनिसङ्काशो मुद्गरो मूर्तिमान् स्थितः ॥ ३४ ॥ दर्शनादेव यः प्राणान् प्राणिनामपकर्षति । किं पुनः स्पृश्यमानस्य पात्यमानस्य वा पुनः ॥ ३५ ॥



स्वभावतः सिद्धा मर्यादा एषा, अनादिसृष्टिरेवंविधेत्यर्थः । उक्तमर्थमुपसंहरति स दृष्ट इति ॥ ३१ ॥ तस्येति । अयमेनं निहन्म्यहम् अहमेनमयं

निहन्मि, अविलम्बेन हन्मीत्यर्थः ॥ ३२–४० ॥ यो हीति। अनृतमसत्यवादिनं कुर्यात् । मृत्युपुरस्कृतः मृत्युना पुरस्कृतः । बहुव्रीहिश्च ॥ ४१–४४ ॥ यदीति । उभयतोऽनृतं मया कालदण्डस्य मोघत्वसंपादने दण्डस्यानृतत्वम्, रक्षोमरणोपेक्षणे वरवचनस्यानृतत्वमिति ॥ ४५ ॥ ४६ ॥

स ज्वालापरिवारस्तु निर्दहन्निव राक्षसम् । तेन स्पृष्टो बलवता महाप्रहरणोऽस्फुरत् ॥ ३६ ॥ ततो विदुद्रुवुः सर्वे तस्मात् त्रस्ता रणाजिरे । सुराश्च क्षुभिताः सर्वे दृष्ट्वा दण्डोद्यतं यमम् ॥ ३७॥ तस्मिन् प्रहर्तुकामे तु यमे दण्डेन रावणम् । यम पितामहः साक्षाद्दर्शयित्वेदमब्रवीत् ॥ ३८ ॥ वैवस्वत महाबाहो न खल्वमितविक्रम । न हन्तव्य स्त्वया तेन दण्डेनैव निशाचरः ॥ ३९ ॥ वरः खलु मयैतस्मै दत्तस्त्रिदशपुङ्गव । स त्वया नानृतः कार्यो यन्मया व्याहृतं वचः ॥ ४० ॥ यो हि मामनृतं कुर्यात् देवो वा मानुषोऽपि वा । त्रैलोक्यमनृतं तेन कृतं स्यान्नात्र संशयः ॥ ४१ ॥ क्रुद्धेन विप्रमुक्तोऽयं निर्विशेषं प्रियाप्रिये । प्रजाः संहरते रौद्रो लोकत्रयभयावहः ॥ ४२ ॥ अमोघो ह्येष सर्वेषां प्राणिनाममितप्रभः । कालदण्डो मया सृष्टः पूर्वं मृत्युपुरस्कृतः ॥ ४३ ॥ तन्न खल्वेष ते सौम्य पात्यो रावणमूर्धनि । न ह्यस्मिन् पतिते कश्चिन्मुहूर्तमपि जीवति ॥४४॥ यदि ह्यस्मिन्निपतिते न म्रियेतैष राक्षसः। म्रियते वा दशग्रीवस्तदा ह्युभयतोऽनृतम् ॥४५॥ तन्निवर्तय लङ्केशं दण्डमेतं समुद्यतम् । सत्यं च मां कुरुष्वाद्य लोकांस्त्वं यद्यवेक्षसे ॥४६॥ एवमुक्तस्तु धर्मात्मा प्रत्युवाच यमस्तदा । एष व्यावर्तितो दण्डः प्रभविष्णुर्हि नो भवान् ॥४७॥ किं न्विदानीं मया शक्यं कर्तुं रणगतेन हि । न मया यद्ययं शक्यो हन्तुं वरपुरस्कृतः ॥ ४८ ॥ एष तस्मात् प्रण श्यामि दर्शनादस्य रक्षसः । इत्युक्त्वा सरथः साश्वस्तत्रैवान्तरधीयत ॥ ४९ ॥

एवमिति । प्रभविष्णुः स्वामी ॥४७॥ किंन्विति । यद्यस्मान्मया न हन्तव्यस्तस्मादिदानीं मया किन्नु शक्यं कर्तुमिति, सञ्चिन्त्येति शेषः॥४८॥एष इति, अस्य रक्षसो दर्शनाद्दर्शनपथात् । प्रणश्यामि “णश अदर्शने” अन्तर्हितो भविष्यामीत्यर्थः । इत्युक्त्वेति । ब्रह्माणमिति शेषः ॥ ४९ ॥ ५० ॥

स त्विति । वैवस्वतः ब्रह्मपुरोगमैर्देवैः हृष्टः, अभूदिति शेषः ॥५१॥ इति श्रीगोविन्द० मणिमुकुटा० उत्तरश्रीरामायणव्याख्याने द्वाविंशः सर्गः ॥२२॥

॥ १ ॥ तत इति । हृष्टवत् यमादपि कथंचिन्मुक्ता इति हृष्टास्सन्तः ॥ २ ॥ ३ ॥ तत इति । रसातलं गच्छन् पयसां निधिं प्रविष्टः, मार्गवशादिति

दशग्रीवस्तु तं जित्वा नाम विश्राव्य चात्मनः । आरुह्य पुष्पकं भूयो निष्क्रान्तो यमसादनात् ॥ ५० ॥ स तु वैवस्वतो देवैः सह ब्रह्मपुरोगमैः । जगाम त्रिदिवं हृष्टो नारदश्च महामुनिः ॥ ५१ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे द्वाविंशः सर्गः ॥ २२ ॥

ततो जित्वा दशग्रीवो यमं त्रिदशपुङ्गवम् । रावणस्तु रणश्लाघी स्वसहायान् ददर्श ह ॥ १ ॥ ततो रुधिरसिक्ताङ्गं प्रहारैर्जर्जरीकृतम् । रावणं राक्षसा दृष्ट्वा हृष्टवत् समुपागमन् ॥ २ ॥ जयेन वर्धयित्वा च मारीचप्रमुखास्ततः । पुष्पकं भेजिरे सर्वे सान्त्विता रावणेन तु ॥ ३ ॥ ततो रसातलं गच्छन् प्रविष्टः पयसां निधिम् । दैत्योरगगणाध्युष्टं वरुणेन सुरक्षितम् ॥ ४ ॥ स तु भोगवतीं गत्वा पुरीं वासुकिपालिताम् । कृत्वा नागान् वशे हृष्टो ययौ मणिमयीं पुरीम् ॥ ५ ॥ निवातकवचास्तत्र दैत्या लब्धवरा वसन् । राक्षसाँस्तान् समागम्य युद्धाय समुपाह्वयत् ॥ ६ ॥ ते तु सर्वे सुविक्रान्ता दैतेया बलशालिनः । नानाप्रहरणास्तत्र प्रहृष्टा युद्धदुर्मदाः ॥ ७ ॥ शूलैस्त्रिशूलैः कुलिशैः पट्टिशासिपरश्वधैः । अन्योन्यं बिभिदुः क्रुद्धा राक्षसा दानवास्तथा ॥ ८ ॥ तेषां तु युद्ध्यमानानां साग्रः संवत्सरो गतः । न चान्यतरयोस्तत्र विजयो वा क्षयोऽपि वा ॥ ९ ॥ ततः पितामहस्तत्र त्रैलोक्यगतिरव्ययः । आजगाम द्रुतं देवो विमानवरमास्थितः ॥ १० ॥

शेषः ॥ ४ ॥ स त्विति । भोगवती नाम समुद्राधः पातालवर्तिनी नागपुरी तत्र नागान् स्ववशे कृत्वा स्वीयत्वेन स्थापयित्वा ॥५॥ निवातेति ।

वसन् अवसन् । लब्धवराः, ब्रह्मण इति शेषः ॥ ९–१० ॥ निवातेति । वृद्धः सर्वदेवासुरकूटस्थः । विदितार्थवत् वाक्यमित्यन्वयः ॥ ११ ॥ १२ ॥ राक्षसस्येति । रोचते, कर्तव्यत्वेन ममेति शेषः । सख्यप्रयोजनं दर्शयति अविभक्ता इति ॥ १३–१५ ॥ तत इति । उपधार्य अनुसृत्य मायानामसुर

निवातकवचानां तु निवार्य रणकर्म तत् । वृद्धः पितामहो वाक्यमुवाच विदितार्थवत् ॥ ११ ॥ न ह्ययं रावणो युद्धे शक्यो जेतुं सुरासुरैः । न भवन्तः क्षयं नेतुमपि सामरदानवैः ॥ १२ ॥ राक्षसस्य सखित्वं च भवद्भिः सह रोचते । अविभक्ताश्च सर्वार्थाः सुहृदां नात्र संशयः ॥ १३ ॥ ततोऽग्निसाक्षिकं सख्यं कृतवांस्तत्र रावणः । निवातकवचैः सार्धं प्रीतिमानभवत्तदा ॥ १४ ॥ अर्थतस्तैर्यथान्याय्यं संवत्सरमथोषितः । स्वपुरान्निर्विशेषं च प्रियं प्राप्तो दशाननः ॥ १५ ॥ ततोपधार्य मायानां शतमेकं समाप्तवान् । सलिलेन्द्रपुरान्वेषी भ्रमति स्म रसातलम् ॥ १६ ॥ ततोऽश्मनगरं नाम कालकेयैरधिष्ठितम् । गत्वा तु कालकेयांश्च हत्वा तत्र बलोत्कटान् ॥ १७ ॥ शूर्पणख्याश्च भर्तारमसिना प्राच्छिनत्तदा । श्यालं च वलवन्तं च विद्युज्जिह्वं बलोत्कटम् । जिह्वया संलिहन्तं च राक्षसं समरे तथा ॥ १८ ॥ तं विजित्य मुहूर्तेन जघ्ने दैत्यांश्चतुरशतम् ॥ १९ ॥ ततः पाण्डुरमेघाभं कैलासमिव भास्वरम् । वरुणस्यालयं दिव्यमपश्यद्राक्षसाधिपः ॥ २० ॥ क्षरन्तीं च पयस्तत्र सुरभिं गामवस्थिताम् । यस्याः पयोभिनिष्यन्दात् क्षीरोदो नाम सागरः ॥ २१ ॥ ददर्श रावणस्तत्र गोवृषेन्द्रवरारणिम् । यस्माच्चन्द्रः प्रभवति शीतरश्मिर्निशाकरः ॥ २२ ॥ यं समाश्रित्य जीवन्ति फेनपाः परमर्षयः । अमृतं यत्र चोत्पन्नं स्वधा च स्वधभोजिनाम् ॥ २३ ॥

मायायोगविद्यानाम् ॥ १६ ॥ तत इत्यादि श्लोकचतुष्कमेकं वाक्यम् । श्यालस्य च्छेदे निमित्तमाह, राक्षसान् स्वकीयान् जिह्वया संलिहन्तमास्वादयन्तम्, भक्षयन्तमिति यावत् ॥ १७–२० ॥ क्षरन्तीमिति । सुरभिमित्यत्रापि अपश्यदित्यनुकर्षः । सागर इति, समभवदिति शेषः ॥ २१ ॥ ददर्शेति । गोवृषेन्द्रस्य रुद्रवृषभस्य वरारणिं साक्षान्मातरम् । यस्माच्चन्द्र इति । इन्दूत्पादकः क्षीरसमुद्र इत्यर्थः । एवमुत्तरत्रापि यच्छब्दा व्याख्येयाः ॥ २२ ॥ यमित्यादि ।

स्वधभोजिनामिति ह्रस्व आर्षः। स्वधाभोजिनां पितॄणाम्। स्वधा पितृभक्ष्यं कव्यम्। धाराशताकीर्णं जलधाराशतैराकीर्णम्। निर्जितोऽस्मीति वद। एवं चेत्ते भयं नास्तीत्यब्रवीदिति निवेद्यतामित्यन्वयः ॥ २३–२७ ॥ एतस्मिन्निति। गौश्च पुष्करश्चेति पुत्राणां पौत्राणां च बलाध्यक्षौ ॥ २८–३३ ॥



यां ब्रुवन्ति नरा लोके सुरभिं नाम नामतः। प्रदक्षिणं तु तां कृत्वा रावणः परमाद्भुताम् ॥२४॥ प्रविवेश महाघोरं गुप्तं बहुविधैर्बलैः। ततो धाराशताकीर्णं शारदाभ्रनिभं तदा। नित्यप्रहृष्टं ददृशे वरुणस्य गृहोत्तमम् ॥२५॥ ततो हत्वा बलाध्यक्षान् समरे तैश्च ताडितः। अब्रवीच्च ततो योधान् राजा शीघ्रं निवेद्यताम् ॥ २६ ॥ युद्धार्थी रावणः प्राप्तस्तस्य युद्धं प्रदीयताम्। वद वा न भयं तेऽस्ति निर्जितोऽस्मीति साञ्जलिः ॥ २७॥ एतस्मिन्नन्तरे क्रुद्धा वरुणस्य महात्मनः। पुत्राः पौत्राश्च निष्क्रामन् गौश्च पुष्कर एव च ॥ २८ ॥ ते तु वीर्यगुणोपेता बलैः परिवृताः स्वकैः। युक्त्वा रथान् कामगमानुद्यद्भास्करवर्चसः ॥ २९ ॥ ततो युद्धं समभवद्दारुणं रोमहर्षणम्। सलिलेन्द्रस्य पुत्राणां रावणस्य च धीमतः ॥३०॥ अमात्यैश्च महावीर्यैर्दशग्रीवस्य रक्षसः। वारुणं तद्बलं कृत्स्नं क्षणेन विनिपातितम् ॥३१॥ समीक्ष्य स्वबलं सङ्ख्ये वरुणस्य सुतास्तदा। अर्दिताः शरजालेन निवृत्ता रणकर्मणः ॥३२॥ महीतलगतास्ते तु रावणं दृश्य पुष्पके। आकाशमाशु विविशुः स्यन्दनैः शीघ्रगामिभिः ॥३३॥ महदासीत्ततस्तेषां तुल्यस्थानमवाप्य तत्। आकाशयुद्धं तुमुलं देवदानवयोरिव ॥ ३४ ॥ ततस्ते रावणं युद्धे शरैः पावकसन्निभैः। विमुखीकृत्य सन्तुष्टा विनेदुर्विविधान् रवान् ॥ ३५ ॥ ततो महोदरः क्रुद्धो राजानं दृश्य धर्षितम्। त्यक्त्वा मृत्युभयं वीरो युद्धकांक्षी व्यलोकयत् ॥ ३६ ॥ तेन ते दारुणा युद्धे कामगाः पवनोपमाः। महोदरेण गदया हता वै प्रययुः क्षितिम् ॥ ३७ ॥ तेषां वरुणपुत्राणां हत्वा योधान् हयांश्छतान्। मुमोचाशु महानादं विरथान् प्रेक्ष्य तान् स्थितान् ॥ ३८ ॥



महदिति। स्थानमाकाशरूपम्। आकाशे युद्धम् आकाशयुद्धम् ॥ ३४–३९ ॥

ते त्विति । स्वप्रभावात् देवतात्वप्रभावात् ॥ ४०-४५ ॥ अपविद्धा इति । षष्टिहायनं परिमाणं येषां ते षष्टिहायनाः ॥४६-४९॥ तानित्यर्द्धम् ॥५०॥

ते तु तेषां रथाः साश्वाः सह सारथिभिर्हतैः । महोदरेण निहताः पतिताः पृथिवीतले ॥ ३९ ॥ ते तु त्यक्त्वा रथान् पुत्रा वरुणस्य महात्मनः । आकाशे विष्ठिताः शूराः स्वप्रभावान्न विव्यथुः ॥ ४० ॥ धनूंषि कृत्वा सज्जानि विनिर्भिद्य महोदरम् । रावणं समरे क्रुद्धाः सहिताः समभिद्रवन् ॥ ४१ ॥ सायकैश्चापविभ्रष्टैर्वज्रकल्पैः सुदारुणैः । दारयन्ति स्म संक्रुद्धा मेघा इव महागिरिम् ॥ ४२ ॥ ततः क्रुद्धो दशग्रीवः कालाग्निरिव निर्गतः । शरवर्षैर्महाघोरै स्तेषां मर्मस्वताडयत् ॥ ४३ ॥ ततस्तेनैव सहसा सीदन्ति स्म पदातयः । मुसलानि विचित्राणि ततो भल्लशतानि च ॥ ४४ ॥ पट्टिशांश्चैव शक्तीश्च शतघ्नीस्तोमरांस्तथा । पातयामास दुर्धर्षस्तेषामुपरि विष्ठितः ॥ ४५ ॥ अप विद्धास्तु ते वीरा विनिष्पेतुः पदातयः । महापङ्कमिवासाद्य कुञ्जराष्षष्टिहायनाः ॥ ४६ ॥ सीदमानान् सुतान् दृष्ट्वा विह्वलान् सुमहौजसः । ननाद रावणो हर्षान्महानम्बुधरो यथा ॥ ४७ ॥ ततो रक्षो महानादान् मुक्त्वा हन्ति स्म वारु णान् । नानाप्रहरणोपेतैर्धारापातैरिवाम्बुदः ॥४८॥ ततस्ते विमुखाः सर्वे पतिता धरणीतले । रणात् स्वपुरुषैः शीघ्रं गृहाण्येव प्रवेशिताः ॥ ४९ ॥ तानब्रवीत्ततो रक्षो वरुणाय निवेद्यताम् ॥ ५० ॥ रावणं त्वब्रवीन्मन्त्री प्रहसो नाम वारुणः । गतः खलु महाराजो ब्रह्मलोकं जलेश्वरः ॥ ५१ ॥ गान्धर्वं वरुणः श्रोतुं यं त्वमाह्वयसे युधि । तत् किं तव वृथा वीर परिश्रम्य गते नृपे । ये तु सन्निहिता वीराः कुमारास्ते पराजिताः ॥ ५२ ॥ राक्षसेन्द्रस्तु तच्छ्रुत्वा नाम विश्राव्य चात्मनः । हर्षान्नादं विमुञ्चन् वै निष्क्रान्तो वरुणालयात् ॥ ५३ ॥ आगतस्तु पथा येन तेनैव विनिवृत्य सः । लङ्कामभिमुखो रक्षो नभस्स्थलगतो ययौ ॥५४॥ इत्यार्षे० श्रीमदुत्तरश्रीरामायणे त्रयोविंशः सर्गः ॥२३॥

वरुणस्यायं वारुणः ॥ ५१-५४ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

॥ अथात्राधिकपाठश्लोकप्रारम्भः ॥

हर्षान्नादांस्तु विसृजन् निष्क्रान्तो वरुणालयात् । महोदरेण संयुक्तो हर्षगद्गदभाषिणा । ततोऽश्मनगरं भूयो विचेरु
र्युद्धदुर्मदाः ॥ १ ॥ यत्रापश्यद्दशग्रीवो गृहं परमभास्वरम् । वैडूर्यतोरणाकीर्णं मुक्ताजालविभूषितम् ॥ २ ॥
सुवर्णस्तम्भगहनं वेदिकाभिः समन्ततः । वज्रस्फटिकसोपानं किङ्किणीजालसंयुतम् ॥ ३ ॥ वह्वासनयुतं रम्यं महेन्द्र
भवनोपमम् । दृष्ट्वा गृहवरं रम्यं दशग्रीवः प्रतापवान् ॥ ४ ॥ कस्येदं भवनं सौम्यं मेरुमन्दरसन्निभम् । गच्छ प्रहस्त
शीघ्रं त्वं जानीष्व भवनोत्तमम् ॥ ५ ॥ एवमुक्तः प्रहस्तस्तु प्रविवेश गृहोत्तमम् । स शून्यं प्रेक्ष्य तद्द्वारं पुनः कक्ष्या
न्तरं ययौ ॥ ६ ॥ सप्तकक्ष्यान्तरं गत्वा ततो ज्वालामपश्यत । ततो दृष्टः पुमांस्तत्र हृष्टो हासं मुमोच सः ॥ ७ ॥
स तु श्रुत्वा महाहासमूर्ध्वरोमाऽभवत्तदा ॥ ८ ॥ ज्वालामध्ये स्थितस्तत्र हेममाली विमोहितः । आदित्य इव
दुष्प्रेक्ष्यः साक्षाद्यम इव स्थितः ॥ ९ ॥ तथा दृष्ट्वा तु वृत्तान्तं त्वरमाणो विनिर्गतः । विनिर्गम्याब्रवीत् सर्वं रावणाय
निशाचरः ॥१०॥ अथ राम दशग्रीवः पुष्पकादवरुह्य सः । प्रवेष्टुमिच्छन् वेश्माथ भिन्नाञ्जनचयोपमः ॥ ११ ॥
चन्द्रमौलिर्वपुष्मांश्च पुरुषोऽस्याग्रतः स्थितः । द्वारमावृत्य सहसा ज्वालासक्तो भयानकः ॥ १२ ॥ रक्ताक्षः श्वेत
वदनो बिम्बोष्ठश्चोर्ध्वरोमवान् । महाभीषणनासश्च कम्बुग्रीवो महाहनुः ॥ १३ ॥ गूढश्मश्रुर्निगूढास्थिर्दंष्ट्राभा
रोमहर्षणः । एतादृशं वै पुरुषं ददर्श स तु रावणः । गृहीत्वा लोहमुसलं द्वारं विष्टभ्य सुस्थितम् ॥ १४ ॥ अथ
सन्दर्शनात्तस्य ऊर्ध्वरोमा बभूव सः ॥ १५ ॥ अस्पन्दतास्य हृदयं वेपथुश्चाप्यजायत । निमित्तान्यमनोज्ञानि
दृष्ट्वा राम व्यचिन्तयत् ॥ १६ ॥ अथ चिन्तयतस्तस्य स एव पुरुषोऽब्रवीत् । किं त्वं चिन्तयसे रक्षो ब्रूहि विस्रब्ध
मानसः ॥१७॥ युद्धातिथ्यमहं वीर करिष्ये रजनीचर । एवमुक्त्वा स तद्रक्षः पुनर्वचनमब्रवीत् । योत्स्यसे बलिना

सार्धं मया वा तद्विधीयताम् ॥ १८ ॥ रावणोऽभिहितो भूय ऊर्ध्वरोमा व्यजायत । अथ धैर्यं समालम्ब्य रावणो वाक्यमब्रवीत् ॥ १९ ॥ गृहेऽत्र तिष्ठते को वा तं ब्रूहि वदतां वर । तेनैव सार्धं योत्स्यामि यथा वा मन्यते भवान् ॥ २० ॥ स एनं पुनरप्याह दानवेन्द्रोऽत्र तिष्ठति ॥ २१ ॥ एष वै परमोदारः शूरः सत्यपराक्रमः । वीरो बहुगुणोपेतः पाशहस्त इवान्तकः ॥ २२॥ बालार्क इव तेजस्वी समरेष्वनिवर्तकः । अमर्षी दुर्जयो जेता बलिर्हि गुणसागरः ॥ २३ ॥ प्रियंवदः संविभागी गुरुविप्रप्रियः सदा । कालकांक्षी महासत्त्वः सत्यवाक् सौम्यदर्शनः ॥ २४ ॥ स च सर्वगुणोपेतः शूरः स्वाध्यायतत्परः । एष गर्जति वात्येष ज्वलते तपते सदा ॥ २५ ॥ देवैश्च भूतसङ्घैश्च पन्नगैश्च महर्षिभिः । भयं यो नाभिजानाति तेन किं योद्धुमिच्छसि ॥ २६ ॥ बलिना यदि ते योद्धुं रोचते राक्षसेश्वर । प्रविश त्वं महासत्त्वं सङ्ग्रामं कुरु मा चिरम् ॥ २७ ॥ एवमुक्तो दशग्रीवः प्रविवेश यतो बलिः । स विलोक्याथ लङ्केशमट्टहासं जहास च ॥ २८ ॥ आदित्य इव दुष्प्रेक्ष्यः स्थितो दानवसत्तमः । अथ सन्दर्शनादेव बलिर्वै विश्वरूपवान् ॥ २९ ॥ स गृहीत्वा च तद्रक्षो ह्युत्सङ्गे स्थाप्य चाब्रवीत् । दशग्रीव महाबाहो कं ते कामं करोम्यहम् ॥ ३० ॥ किमागमनकृत्यं ते ब्रूहि त्वं राक्षसेश्वर । एवमुक्तस्तु बलिना रावणो वाक्यमब्रवीत् ॥ ३१ ॥ श्रुतं मया महाभाग बद्धस्त्वं विष्णुना पुरा । सोऽहं मोचयितुं शक्तो बन्धनात्त्वां न संशयः ॥ ३२ ॥ एवमुक्ते ततो हासं बलिः कृत्वेदमब्रवीत् । श्रूयतामभिधास्यामि यं त्वं पृच्छसि रावण ॥ ३३ ॥ य एष पुरुषः श्यामो द्वारि तिष्ठति नित्यदा । एतेन दानवेन्द्राश्च तथाऽन्ये बलवत्तराः ॥ ३४ ॥ वशं नीता बलवता पूर्वे पूर्वतराश्च ये । बद्धश्चाहमनेनैवं कृतान्तो दुरतिक्रमः ॥ ३५ ॥ क एनं पुरुषो लोके वञ्चयिष्यति रावण । सर्वभूतापहर्ता वै

य एष द्वारि तिष्ठति । कर्ता कारयिता चैव धाता च भुवनेश्वरः ॥ ३६ ॥ न त्वं वेद न चाहं वै भूतभव्यभव त्प्रभुम् । कलिश्चैव हि कालश्च सर्वभूतापहारकः ॥ ३७ ॥ लोकत्रयस्य सर्वस्य हर्ता स्रष्टा तथैव च । संहरत्येष भूतानि स्थावराणि चराणि च ॥ ३८ ॥ पुनश्च सृजते सर्वमनाद्यन्तो महेश्वरः । करणं कारणं कर्ता सोऽयं पुरुष सत्तमः ॥ ३९ ॥ इष्टं चैव हि दत्तं च हुतं चैव निशाचर । सर्वमेव हि लोकेशो धाता गोप्ता न संशयः ॥ ४० ॥ नैवं विधं महद्भूतं विद्यते भुवनत्रये ॥ ४१ ॥ अहं त्वं चैव पौलस्त्य ये चान्ये पूर्ववत्तराः । नेता तेषां महात्मैष पशुं रशनया यथा ॥ ४२ ॥ वृत्रो दनुः शुकः शुम्भो निशुम्भो दम्भुरेव च । कालनेमिश्च प्रह्लादस्तथा वैरोचनो बलिः ॥ ४३ ॥ कालकेयास्तारकाख्यो मुचुकुन्दो विवर्धनः । हिरण्याक्षो मधुश्चैव कैटभो धूमशम्बरौ ॥ ४४ ॥ यमलार्जुनौ च कंसश्च कैटभो मधुना सह । एते तपन्ति द्योतन्ति वान्ति वर्षन्ति चैव हि ॥ ४५ ॥ सर्वैः क्रतुशतैरिष्टं सर्वैस्तप्तं महत्तपः । सर्वे ते सुमहात्मानः सर्वे वै योगधर्मिणः ॥ ४६ ॥ सर्वैरैश्वर्यमासाद्य भुक्तभोगैर्महत्तरैः । दत्तमिष्टमधीतं च प्रजाश्च परिपालिताः ॥ ४७ ॥ स्वपक्षेष्वनुगोप्तारः प्रहर्तारः परेष्वपि । समरेष्वपि लोकेषु नैतेषां विद्यते समः ॥ ४८ ॥ शूरास्त्वभिजनोपेताः सर्वशस्त्रास्त्रपारगाः । सर्वविद्याप्रवेत्तारः सङ्ग्रामेष्वनिवर्तकाः ॥ ४९ ॥ सर्वैस्त्रिदशराज्यानि कांक्षितानि महात्मभिः । युद्धे सुरगणाः सर्वे निर्जिताश्च सहस्रशः ॥ ५० ॥ देवानामपि ये शक्ताः स्वपक्षपरिपालकाः । प्रमत्ता भोगरक्ताश्च बालार्कसमतेजसः ॥ ५१ ॥ यत् स देवान् प्रधर्षेत तदैषो विष्णुरीश्वरः । उपायपूर्वकं नाशं संवेत्ता भगवान् हरिः ॥ ५२ ॥ प्रादुर्भावं विकुरुते येनैतन्निधनं नयेत् । पुनरेवात्मनाऽऽत्मानमधिष्ठाय स तिष्ठति ॥ ५३ ॥ एवमेतेन देवेन दानवेन्द्रा महात्मना । ते हि सर्वे क्षयं नीता बलिना कामरूपिणा ॥ ५४ ॥ समरे च दुराधर्षा नृपास्ते च पराजिताः । तेन नीताः क्षयं सर्वे कृतान्तबलचोदिताः ॥ ५५ ॥

एवमुक्त्वाऽथ प्रोवाच राक्षसं दानवेश्वरः। यदेतद्दृश्यते वीर चक्रं दीप्तानलोपमम् ॥५६॥ एतद्गृहीत्वाऽऽगच्छ त्वं मम पार्श्वं महाबल। ततोऽहं तव चाख्यास्ये मुक्तिकारणमव्ययम् ॥५७॥ तत् कुरुष्व महाबाहो मा विलम्बस्व रावण। एतच्छ्रुत्वा गतो रक्षः प्रहसंश्च महाबलः ॥ ५८ ॥ यत्र स्थितं महद्दिव्यं कुण्डलं रघुनन्दन। लीलयोत्पाटनं चक्रे रावणो बलदर्पितः ॥ ५९ ॥ न च चालयितुं शक्तो रावणोऽभूत् कथंचन। लज्जया स पुनर्भूयो यत्नं चक्रे महाबलः ॥ ६० ॥ उत्क्षिप्तमात्रे दिव्ये च पपात भुवि राक्षसः। छिन्नमूलो यथा शाखी रुधिरौघपरिप्लुतः ॥ ६१ ॥ एतस्मिन्नन्तरे जज्ञे शब्दः पुष्करसम्भवः। राक्षसेन्द्रस्य सचिवैर्मुक्तो हाहाकृतो महान् ॥ ६२ ॥ ततो रक्षो मुहूर्तेन चेतनां लभ्य चोत्थितम्। लज्जयाऽवनतीभूतं बलिर्वाक्यमुवाच ह ॥ ६३ ॥ आगच्छ राक्षसश्रेष्ठ वाक्यं शृणु मयोदितम्। यत्त्वया चोद्धृतं वीर कुण्डलं मणिभूषितम् ॥ ६४ ॥ एतद्धि पूर्वजस्यासीत् कर्णाभरणमीक्ष्यताम्। एतत् पतितमत्रैवमन्यद्भूयो महाबल ॥६५॥ अन्यत् पर्वतसानौ हि पतितं कुण्डलादनु। मुकुटं वेदिसामीप्ये पतितं युध्यतो भुवि ॥ ६६ ॥ हिरण्यकशिपोः पूर्वं मम पूर्वपितामहात्। न तस्य कालो मृत्युर्वा न व्याधिर्न विहिंसकाः ॥६७॥ न दिवा मरणं तस्य न रात्रौ सन्ध्ययोरपि। न शुष्केण न चार्द्रेण न च शस्त्रेण केनचित् ॥ ६८ ॥ विद्यते राक्षसश्रेष्ठ तस्य नास्त्रेण केनचित्। प्रह्लादेन समं चक्रे वादं परमदारुणम् ॥ ६९ ॥ तस्य वादे समुत्पन्ने धीरो लोकभयङ्करः। सर्वदृश्यस्य वीरस्य प्रह्लादस्य महात्मनः ॥ ७० ॥ उत्पन्नो राक्षसश्रेष्ठ नृसिंहाकृतिरूपधृत्। दृष्टं च तेन रौद्रेण क्षुब्धं सर्वमशेषतः ॥७१॥ तत उद्धृत्य बाहुभ्यां नखैर्निन्ये यमक्षयम्। एष तिष्ठति द्वास्स्थो वै वासुदेवो निरञ्जनः ॥७२॥ तस्य देवादिदेवस्य तत्त्वतो मे शृणुष्व ह। वाक्यं परमभावेन यदि ते वर्तते हृदि ॥ ७३ ॥

इन्द्राणां च सहस्राणि सुराणामयुतानि च। ऋषीणां सतसङ्ख्यानां शतान्यब्दसहस्रशः ॥ ७४ ॥ वशं नीतानि सर्वाणि य एष द्वारि तिष्ठति। तस्य तद्वचनं श्रुत्वा रावणो वाक्यमब्रवीत् ॥ ७५ ॥ मया प्रेतेश्वरो दृष्टः कृतान्तः सह मृत्युना। पाशहस्तो महाज्वाल ऊर्ध्वरोमा भयानकः। विद्युज्जिह्वश्च दंष्ट्रालः सर्पवृश्चिकरोमवान् ॥ ७६ ॥ रक्ताक्षो भीमवेगश्च सर्वसत्त्वभयङ्करः । आदित्य इव दुष्प्रेक्ष्यः समरेष्वनिवर्तकः ॥ ७७ ॥ पापानां शमिता चैव स मया युधि निर्जितः। न च मे तत्र भीः काचिद्व्यथा वा दानवेश्वर ॥ ७८ ॥ एनं तु नाभिजानामि तद्भवान् वक्तुमर्हति। रावणस्य वचः श्रुत्वा बलिर्वैरोचनोऽब्रवीत् ॥ ७९ ॥ एष त्रैलोक्यधाता च हरिर्नारायणः प्रभुः। अनन्तः कपिलो विष्णुर्नारसिंहो महाद्युतिः ॥ ८० ॥ ऋतधामा सुधामा च पाशहस्तो भयानकः। द्वादशादित्य सदृशः पुराणपुरुषोत्तमः ॥ ८१ ॥ नीलजीमूतसङ्काशः सुरनाथः सुरोत्तमः। ज्वालामाली महाबाहुर्योगी भक्तजन प्रियः ॥ ८२ ॥ एष धारयते लोकानेष वै सृजते प्रभुः। एष संहरते चैव कालो भूत्वा महाबलः ॥ ८३ ॥ एष यज्ञश्च याज्यश्च चक्रायुधधरो हरिः। सर्वदेवमयश्चैव सर्वभूतमयस्तथा ॥ ८४ ॥ सर्वलोकमयश्चैव सर्वज्ञानमय स्तथा। सर्वरूपी महारूपी बलदेवो महाभुजः ॥ ८५ ॥ वीरहा वीरचक्षुष्मांस्त्रैलोक्यगुरुरव्ययः। एवं मुनिगणाः सर्वे कथयन्तीह मोक्षिणः ॥ ८६ ॥ य एनं वेत्ति पुरुषं न च पापैर्विलिप्यते। स्मृत्वा स्तुत्वा तथेष्ट्वा च सर्व मस्मादवाप्यते ॥८७॥ एतच्छ्रुत्वा च वचनं रावणो निर्ययौ तदा। क्रोधसंरक्तनयन उद्यतास्त्रो महाबलः ॥ ८८ ॥ तथाभूतं च तं दृष्ट्वा हरिर्मुसलधृत् प्रभुः। नैनं हन्म्यधुना पापं चिन्तयित्वेति विश्वधृत् ॥८९॥ अन्तर्धानं गतो राम ब्रह्मणः प्रियकाम्यया। न च तं पुरुषं तत्र ददर्श रजनीचरः॥९०॥ हर्षान्नादं विमुञ्चन् वै निष्क्रामत् वरुणालयात्। येनैव सम्प्रविष्टः स पथा तेनैव निर्ययौ ॥ ९१ ॥ इत्यार्षे० श्रीमदुत्तरश्रीरामायणे प्रक्षिप्तः प्रथमः सर्गः ॥ १ ॥

अथ सञ्चिन्त्य पौलस्त्यः सूर्यलोकं जगाम ह । मेरुशृङ्गे वरे रम्ये उषित्वा तत्र शर्वरीम् ॥ १ ॥ पुष्पकं तत् समारुह्य रवेस्तुरगसन्निभम् । मनोवातगतिं दिव्यं विहारवियति स्थितम् ॥ २ ॥ तत्रापश्यद्रविं देवं सर्वतेजोमयं शुभम् । वरकाञ्चनकेयूररक्ताम्बरविभूषितम् ॥ ३ ॥ कुण्डलाभ्यां शुभाभ्यां तु भ्राजन्मुखविकासितम् । केयूरनिष्काभरणं रक्तमालावलम्बिनम् ॥ ४ ॥ रक्तचन्दनदिग्धाङ्गं सहस्रकिरणोज्ज्वलम् । तमादिदेवमादित्यं विभुं सप्ताश्ववाहनम् ॥ ५ ॥ अनाद्यन्तममध्यं च लोकसाक्षिणमीश्वरम् । तं दृष्ट्वा प्रवरं देवं रावणो राक्षसाधिपः ॥ ६ ॥ स प्रहस्तमुवाचाथ रवितेजोबलार्दितम् । गच्छामात्य वद ह्येनं सन्देशान्मम शासनम् ॥ ७ ॥ मार्तण्डं भास्करं श्रेष्ठं तत्त्वतो ब्रूहि मा चिरम् । युद्धार्थी रावणः प्राप्तो युद्धं तस्य प्रदीयताम् ॥ ८ ॥ निर्जितोऽस्मीति वा ब्रूहि पक्षमेकतरं कुरु । तस्य तद्वचनाद्रक्षः सूर्यस्यान्तिकमागमत् ॥९॥ पिङ्गलं दण्डिनं चैव सोऽपश्यद्द्वारपालकौ । आभ्यामाख्याय तत् सर्वं रावणस्य विनिश्चयम् ।तूष्णीमास्ते प्रहस्तः स सूर्यतेजःप्रतापितः ॥१०॥ दण्डी गत्वा रवेः पार्श्वं प्रणम्याख्यातवान् विभुम् ॥ ११ ॥ श्रुत्वा तु सूर्यस्तद्वृत्तं दण्डिनो रावणस्य ह । उवाच वचनं श्रीमान् बुद्धिपूर्वं दिवाकरः ॥ १२ ॥ गच्छ दण्डिन् जयस्वैनं निर्जितोऽस्मीति वा वद । कुरु यत्ते कांक्षितं तन्नाहं कालक्षिपां सहे ॥ १३ ॥ स गत्वा वचनात्तस्य राक्षसाय महात्मनः । कथयामास तत् सर्वं सूर्योक्तं वचनं यथा ॥१४॥ स श्रुत्वा वचनं तस्य दण्डिनो वै महात्मनः । घोषयित्वा जगामाथ विजयं राक्षसेश्वरः॥१५॥ इत्यार्षे० श्रीमदुत्तर० प्रक्षिप्तो द्वितीयः सर्गः ॥२॥

अथ सञ्चिन्त्य पौलस्त्यः सोमलोकं जगाम ह । मेरुशृङ्गे वरे रम्ये रजनीमुष्य वीर्यवान् ॥१॥ तदा कश्चिद्रथारूढो दिव्यस्रगनुलेपनः । अप्सरोगणमुख्येन सेव्यमानस्तु गच्छति ॥२॥ रतिश्रान्तोऽप्सरोऽङ्गेषु चुम्बितः सन् विबुध्यते । रावणस्त्वथ तं दृष्ट्वा कौतूहलसमन्वितः ॥ ३ ॥ अथापश्यदृषिं तत्र पर्वतं मुनिसत्तमम् । दशग्रीवो महात्मानं दृष्ट्वा

चेदमुवाच ह ॥ ४ ॥ स्वागतं तव देवर्षे दिष्ट्या चैवागतो ह्यसि । कोऽयं स्यन्दनमारूढो ह्यप्सरोगणसेवितः ॥ ५ ॥
निर्लज्ज इव संयाति भयस्थानं न विन्दति । रावणेनैवमुक्तस्तु पर्वतो वाक्यमब्रवीत् ॥ ६ ॥ शृणु वत्स यथातत्त्वं
वक्ष्ये तव महामते । एतेन निर्जिता लोका ब्रह्मा चैवाभितोषितः ॥ ७ ॥ एष गच्छति मोक्षाय सुसुखं स्थानमुत्त
मम् । तपसा निर्जिता लोका विक्रमेण यथा त्वया ॥ ८ ॥ प्रयाति पुण्यवान् वत्स सोमं पीत्वा न संशयः । त्वं च
राक्षसशार्दूल शूरः सत्यव्रतस्तथा ॥ ९ ॥ नेदृशेषु च क्रुध्यन्ति बलिनो ब्रह्मचारिषु । अथापश्यद्रथवरं महाकायं
महौजसम् ॥ १० ॥ जाज्वल्यमानं वपुषा गीतवादित्रसङ्कुलम् । क्वैष गच्छति देवर्षे शोभमानो महाद्युतिः ॥ ११ ॥
किन्नरैश्च प्रगायद्भिर्नृत्यद्भिश्च मनोहरम् । श्रुत्वा चैनमुवाचाथ पर्वतो मुनिसत्तमः ॥ १२ ॥ एष शूरो रणे योद्धा
सङ्ग्रामेष्वनिवर्तकः । युद्ध्यमानस्तथैवैष प्रहारैर्जर्जरीकृतः ॥ १३ ॥ कृती शूरो रणे जेता स्वाम्यर्थे त्यक्तजीवितः ।
सङ्ग्रामे निहतो वीरान् हत्वा च सबलान् बहून् ॥ १४ ॥ इन्द्रस्यातिथिरेवैष ह्यथवा यत्र चेच्छति । नृत्तगीतविलासैस्तु
सेव्यते नरसत्तमः ॥ १५ ॥ पप्रच्छ रावणो भूयः कोऽयं यात्यर्कसन्निभः । रावणस्य वचः श्रुत्वा पर्वतो वाक्य
मब्रवीत् ॥ १६ ॥ य एष दृश्यते राजन् विमाने सर्वकाञ्चने । अप्सरोगणसंयुक्ते पूर्णेन्दुसदृशाननः ॥ १७ ॥ सुवर्णदो
महाराज विचित्राभरणाम्बरः । एष गच्छति शीघ्रेण यानेन सुमहाद्युतिः ॥ १८ ॥ पर्वतस्य वचः श्रुत्वा रावणो
वाक्यमब्रवीत् । य एते यान्ति राजानो ब्रूहि तानृषिसत्तम ॥ १९ ॥ कोऽत्र मे याचतो दद्याद्युद्धातिथ्यं महाद्युतिः ।
क्षिप्रमाख्याहि धर्मज्ञ पिता मे त्वं हि पर्वत ॥ २० ॥ एवमुक्तः प्रत्युवाच रावणं पर्वतस्तदा । स्वर्गार्थिनो महाराज
नैते युद्धार्थिनो नृपाः ॥ २१ ॥ वक्ष्यामि च महाराज विचित्राभरणाम्बरः । यस्तु राजा महातेजाः सप्तद्वीपेश्वरो महान्
॥ २२ ॥ मान्धातेत्यभिविख्यातः स ते युद्धं प्रदास्यति । पर्वतस्य वचः श्रुत्वा रावणो वाक्यमब्रवीत् ॥ २३ ॥ कुत्रासौ

वर्तते राजा तं ममाचक्ष्व तत्त्वतः। अहं यास्यामि तत्राद्य यत्रासौ नरपुङ्गवः॥ २४॥ रावणस्य वचः श्रुत्वा मुनिर्वचनमब्रवीत्। युवनाश्वसुतो ह्येष मान्धाता राजसत्तमः॥२५॥ सप्तद्वीपान् समुद्रान्तान् जित्वाऽद्य स्वर्गमेष्यति। अथापश्यन्महाबाहुर्विरिञ्चिवरदर्पितः॥ २६॥ अयोध्याधिपतिं वीरं मान्धातारं नृपोत्तमम्। सप्तद्वीपाधिपं यान्तं स्यन्दनेन विराजितम् ॥२७॥ काञ्चनेन विचित्रेण महाहारेण भास्वता। जाज्वल्यमानं रूपेण दिव्यस्रगनुलेपनम् ॥ २८॥ तमुवाच दशग्रीवो युद्धं मे दीयतामिति। एवमुक्तो दशग्रीवं प्रहस्येदमुवाच ह॥ २९॥ यदि ते जीवितं नेष्टं ततो युध्यस्व मामिति। मान्धातुर्वचनं श्रुत्वा रावणो वाक्यमब्रवीत् ॥ ३०॥ वरुणस्य कुबेरस्य यमस्यापि न विव्यथे। किमरे मानुषात्त्वत्तो रावणो भयमाविशेत् ॥ ३१॥ एवमुक्त्वा दशग्रीवः क्रोधात्तं प्रदहन्निव। आज्ञापयामास तदा राक्षसान् युद्धदुर्मदान्॥ ३२॥ अथ क्रुद्धास्तु सचिवा रावणस्य दुरात्मनः। ववृषुः शरवर्षाणि शूरा युद्धविशारदाः॥ ३३॥ अथ राज्ञा बलवता कङ्कपत्रैरजिह्मगैः। इषुभिस्ताडिताः सर्वे प्रहस्तशुकसारणाः॥ ३४॥ महोदरविरूपाक्षमारीचाकम्पनादयः। अथ प्रहस्तो नृपतिं शरवर्षैरवाकिरत् ॥ ३५॥ अप्राप्तानेव तान् सर्वान् प्रचिच्छेद नृपोत्तमः। भुशुण्डीभिश्च भल्लैश्च भिण्डिपालैश्च तोमरैः॥ ३६॥ नरराजेन दह्यन्ते शलभा इव तेऽग्निना पुनर्नृपवरः क्रुद्धः पञ्चभिः प्रबिभेद तम्॥ ३७॥ तोमरैः स महाघोरैः पुरा क्रौञ्चमिवाग्निजः। ततो मुहुर्भ्रामयित्वा मुद्गरं वज्रसन्निभम्॥ ३८॥ मुमोच सोऽतिवेगेन राक्षसस्य रथं प्रति। स पपात महावेगो मुद्गरो वज्रसन्निभः॥ ३९॥ घूर्णितो रावणस्तेन पतितः शक्रकेतुवत्। तदा स नृपतिः प्रीतो हर्षोद्भूतबलो बभौ ॥ ४०॥ सकलेन्दुकरैः स्पृष्टं यथाऽम्बु लवणाम्भसः। ततो रक्षोबलं सर्वं महाभूतमचेतनम्॥४१॥ परिवार्याथ तं तस्थौ राक्षसेन्द्रं समन्ततः। ततश्चिरात् समाश्वस्तो रावणो लोकरावणः॥ ४२॥ मान्धातुः पीडयामास देहं लङ्केश्वरो

भृशम् । रथं चाश्वयुजं क्षिप्रं बभञ्ज च महाबलः ॥ ४३ ॥ विरथः स रथं प्राप्य शक्तिं घण्टाट्टहासिनीम् । मान्धाता विप्रचिक्षेप तां बलाद्रावणं प्रति ॥ ४४ ॥ मरीचिमिव चार्कस्य चित्रभानोः शिखामिव । दीप्यन्तीं रुचिराभासं मान्धातृकरनिस्सृताम् ॥ ४५ ॥ तामापतन्तीं शूलेन पौलस्त्यो रजनीचरः । ददाह शक्तिं लङ्केशः पतङ्गमिव पावकः ॥ ४६ ॥ यमदत्तं तु नाराचं निकृष्याथ दशाननः । पातयामास वेगेन स तेनाभिहतो भृशम् ॥ ४७ ॥ मूर्च्छितं नृपतिं दृष्ट्वा प्रहृष्टास्ते निशाचराः । चुक्रुशुः सिंहनादांश्च क्ष्वेलन्तश्च निशाचराः ॥ ४८ ॥ लब्धसंज्ञो मुहूर्तेन ह्ययोध्याधिपतिस्तदा । तं दृष्ट्वा शत्रुभिः शत्रुं पूज्यमानं मुदाऽन्वितैः ॥ ४९॥ जातकोपो दुराधर्षश्चन्द्रार्कसदृशद्युतिः । महता शरवर्षेण पीडयन् राक्षसं बलम् ॥ ५० ॥ चापस्य च निनादेन तस्य बाणरवेण च । सञ्चचाल ततः सैन्यमुद्धूत इव सागरः ॥ ५१ ॥ तद्युद्धमभवद्घोरं नरराक्षससङ्कुलम् । क्रुधाविष्टौ महात्मानौ नरराक्षससत्तमौ ॥५२॥ कार्मुकासिधरौ वीरौ शरासनगतौ तथा । मान्धाता रावणं चैव राक्षसश्चैव तं नृपम् ॥ ५३ ॥ क्रोधेन महताऽऽविष्टौ शरवर्षं ववर्षतुः । तौ परस्परसंक्षोभात् प्रहारैर्जर्जरीकृतौ ॥ ५४ ॥ रावणो रौद्रमस्त्रं तु प्रायुङ्क्त स महाबलः । आग्नेयेन स मान्धाता तदस्त्रं प्रत्यवारयत् ॥ ५५ ॥ गान्धर्वेण दशग्रीवो वारुणेन स राजराट् । गृहीत्वा स तु ब्रह्मास्त्रं सर्वभूतभयावहम् ॥५६॥ तोलयामास मान्धाता दिव्यं पाशुपतं महत् । तदस्त्रं घोररूपं तु त्रैलोक्यभयवर्धनम् ॥५७॥ दृष्ट्वा त्रस्तानि भूतानि स्थावराणि चराणि च । वरदानात्तु रुद्रस्य तपसाऽधिगतं महत् ॥५८॥ ततः प्रकम्पितं सर्वं त्रैलोक्यं सचराचरम् । देवाः प्रकम्पिताः सर्वे लयं नागाश्च मेनिरे ॥५९॥ अथ तौ मुनिशार्दूलौ ध्यानयोगादपश्यताम् । पुलस्त्यो गालवश्चैव वारयामासतुर्नृपम् ॥६०॥ उपलब्धैश्च विविधैर्वाक्यै राक्षससत्तमम् । तौ तु कृत्वा परां प्रीतिं नरराक्षसयोस्तदा । सम्प्रस्थितौ तु तौ हृष्टौ पथा येनैव चागतौ ॥ ६१ ॥ इत्यार्षे० श्रीमदुत्तर० प्रक्षिप्तस्तृतीयः सर्गः ॥ ३ ॥

गताभ्यामथ विप्राभ्यां रावणो राक्षसाधिपः । दशयोजनसाहस्रं प्रथमं स मरुत्पथम् ॥१॥ अत्यक्रामन्महातेजाः पुष्पकेण महाबलः । यत्र तिष्ठन्ति सन्न्यस्ता हंसाः सर्वगुणान्विताः ॥ २ ॥ अत ऊर्ध्वं द्वितीयं तु गत्वा चैष मरुत्पथम् । दशयोजनसाहस्रं तद्धि वै परिगण्यते ॥३॥ तत्र मेघाः स्थिताः सर्वे त्रिविधा नित्यसंश्रिताः । आग्नेयाः पक्षजा ब्राह्मास्त्रिविधा इति संस्थिताः ॥ ४ ॥ अथ गत्वा तृतीयं तु वायोः पन्थानमुत्तमम् । नित्यं यत्र स्थिताः सिद्धाश्चारणाश्च मनस्विनः ॥ ५ ॥ दशैव तु सहस्राणि योजनानां तथैव च । चतुर्थं वायुमार्गं तु गतवान् रावण स्तथा ॥ ६ ॥ वसन्ति यत्र नित्यं वै भूताश्च सविनायकाः । अथ गत्वा तु वै शीघ्रं पञ्चमं वायुगोचरम् ॥ ७ ॥ दशैव तु सहस्राणि योजनानां तथैव च । गङ्गा यत्र सरिच्छ्रेष्ठा नागाश्च कुमुदादयः ॥ ८ ॥ कुञ्जरा यत्र तिष्ठन्ति ये च मुञ्चन्ति शीकरान् । गङ्गातोयेषु तिष्ठन्तः पुण्यं कुर्वन्ति सर्वशः ॥ ९ ॥ ततः करिकराद्भ्रष्टं वायुना लोलितं भृशम् । जलं कुञ्जेषु पतितं हिमं भवति राघव ॥ १० ॥ ततो जगाम षष्ठं स वायुमार्गं महाद्युते । योजनानां सहस्राणि तथैव तु स राक्षसः ॥११॥ यत्रास्ते गरुडो नित्यं ज्ञातिबान्धवसत्कृतः । तथैव तु सहस्राणि योजनानां तथोपरि ॥१२॥ सप्तमं वायुमार्गं तु यत्र वै ऋषयः स्थिताः । अत ऊर्ध्वं स गत्वाऽथ सहस्राणि दशैव तु ॥१३॥ अष्टमं वायुमार्गं तु यत्र गङ्गा प्रतिष्ठिता । आकाशगङ्गा विख्याता ह्यादित्यपथमास्थिता ॥ १४ ॥ वायुना धार्यमाणा सा महावेगा महास्वना । अत ऊर्ध्वं प्रवक्ष्यामि चन्द्रमा यत्र तिष्ठति ॥ १५ ॥ अशीतिस्तु सहस्राणि योजनानां तथोपरि । चन्द्रमास्तिष्ठते यत्र ग्रहनक्षत्रसंयुतः ॥ १६ ॥ शतं शतसहस्राणि रश्मयश्चन्द्रमण्डलात् । प्रकाशयन्ति लोकांस्तु सर्वसत्त्वसुखावहाः ॥ १७ ॥

ततो दृष्ट्वा दशग्रीवं चन्द्रमा निर्दहन्निव । स तु शीताग्निना शीघ्रं प्रादहद्रावणं तदा ॥ १८ ॥ नासहंस्तस्य सचिवाः शीताग्निं भयपीडिताः । रावणं जयशब्देन प्रहस्तो वाक्यमब्रवीत् ॥ १९ ॥ राजन् शीतेन बाध्यामो निवर्ताम इतो वयम् । चन्द्ररश्मिप्रतापेन रक्षसां भयमाविशत् ॥ २० ॥ स्वभासा ह्येष राजेन्द्र शीतांशुर्दहनात्मकः । एतच्छ्रुत्वा प्रहस्तस्य रावणः क्रोधमूर्च्छितः ॥ २१ ॥ विस्फार्य धनुरुद्यम्य नाराचैस्तं ह्यपीडयत् । अथ ब्रह्मा समागम्य चन्द्रलोकं त्वरान्वितः ॥ २२ ॥ दशग्रीव महाबाहो साक्षाद्विश्रवसः सुत । गच्छ शीघ्रमितः सौम्य मा चन्द्रं पीडयाशुगैः ॥ २३ ॥ लोकस्य हितकामोऽयं द्विजराजो महाद्युतिः । मन्त्रं च ते प्रदास्यामि प्राणात्ययभयेऽभयम् ॥ २४ ॥ यस्त्विमं संस्मरेन्मन्त्रं न स मृत्युमवाप्नुयात् । एवमुक्तो दशग्रीवः प्राञ्जलिर्वाक्यमब्रवीत् ॥ २५ ॥ यदि तुष्टोऽसि मे देव अनुग्राह्यो यदि ह्यहम् । यदि मन्त्रेश्वरो देयो दीयतां मम धार्मिक ॥ २६ ॥ यं जप्त्वाऽहं महाभाग सर्वदेवेषु निर्भयः । अमरेषु च सर्वेषु दानवेषु पतत्रिषु ॥ २७ ॥ त्वत्प्रसादात्तु देवेश न भयं विद्यते मम । एवमुक्तो दशग्रीवं ब्रह्मा वचनमब्रवीत् ॥ २८ ॥ प्राणात्यये तु वै दद्मि न नित्यं राक्षसाधिप । अक्षसूत्रं गृहीत्वा तु जपेन्मन्त्रामिमं शुभम् ॥ २९ ॥ अजप्त्वा राक्षसश्रेष्ठ न ते सिद्धिर्भविष्यति । शृणु मन्त्रं प्रवक्ष्यामि येन राक्षसपुङ्गव ॥ ३० ॥ मन्त्रस्य कीर्तनादेव प्राप्स्यसे समरे जयम् । नमस्ते देवदेवेश सुरासुरनमस्कृत ॥ ३१ ॥ भूतभव्यमहादेव हर पिङ्गललोचन । बालस्त्वं वृद्धरूपी च वैयाघ्रवसनच्छद ॥ ३२ ॥ आरुणेयोऽसि देव त्वं त्रैलोक्यप्रभुरीश्वरः । हरो हरितनेमिस्त्वं युगान्तदहनोऽनलः ॥ ३३ ॥ गणेशो लोकशम्भुश्च लोकपालो महाभुजः । महादेवो महाशूली महादंष्ट्रो महाभुजः ॥ ३४ ॥ कालश्च कालरूपी च नीलग्रीवो महोदरः । वेदान्तगो वेदमयः पशूनां पतिरव्ययः ॥ ३५ ॥ शूलधृच्छूलकेतुश्च नेता गोप्ता हरिः शिवः । जटी मुण्डी शिखण्डी च लगुडी च

महायशाः ॥ ३६ ॥ भूतेश्वरो गणाध्यक्षः सर्वात्मा सर्वभावनः । सर्वदः सर्वहारी च स्रष्टा च गुरुरव्ययः ॥ ३७ ॥ कमण्डलुधरो देवः पिनाकी धूर्जटिस्तथा । माननीयोऽर्हणीयश्च ओङ्कारः सामवेदगः ॥ ३८ ॥ मृत्युश्च मृत्यु दूतश्च पारियात्रश्च सुव्रतः । ब्रह्मचारी गृही योगी वीणापणवतूणवान् ॥ ३९ ॥ अमरो दर्शनीयश्च बालसूर्यनिभ स्तथा । श्मशानचारी भगवानुमापतिररिन्दमः ॥ ४० ॥ भगनेत्रप्रहर्ता च पूषदन्तनिपातनः । ज्वरहर्ता पाश हस्तः प्रलयः काल एव च ॥ ४१ ॥ उल्कामुखोऽग्निकेतुश्च मुनिर्दीप्तो विशांपतिः । उन्मादमोहनकरः समर्थस्त्रिद शोत्तमः ॥ ४२ ॥ वामनो वामदेवश्च प्राग्दक्षिण्यश्च नामतः । भिक्षुश्च भिक्षुरूपी च त्रिजटी जटिलः स्वयम्भू ॥ ४३ ॥ चक्रहस्तः प्रतिष्टम्भी चमूनां स्तम्भनस्तथा । ऋतुर्ऋतुकरः कालो मधुर्मधुरलोचनः ॥ ४४ ॥ वान स्पत्यः शीकरश्च नित्यमाश्रितपूजितः । जगद्धाता च कर्ता च पुरुषः शाश्वतो ह्यजः ॥ ४५ ॥ धर्माध्यक्षो विरू पाक्षस्त्रिवर्त्मा भूतभावनः । त्रिनेत्रो बहुनेत्रश्च सूर्यायुतसमप्रभः ॥ ४६ ॥ देवदेवोऽभिदेवश्च चन्द्राङ्कितजटस्तथा । नर्तको लासकश्चैव पूर्णेन्दुसदृशाननः ॥ ४७ ॥ सुब्रह्मण्यः शरण्यश्च सर्वदेवमयस्तथा । सर्वभूतनिवासश्च सर्व बन्धविमोचकः ॥ ४८ ॥ मोहनो वञ्चकश्चैव सर्पधारी वरोत्तमः । पुष्पदन्तो विभागश्च मुख्यः सर्वहरस्तथा ॥ ४९ ॥ हरिश्मश्रुर्धनुर्धारी भीमो भीमपराक्रमः । भक्ताभीष्टप्रदः स्थाणुः परमात्मा सनातनः ॥ ५० ॥ मया प्रोक्तमिदं पुण्यं नाम्नामष्टोत्तरं शतम् । सर्वपापहरं पुण्यं शरण्यं शरणार्थिनाम् । जप्यमेतद्दशग्रीव कुर्याच्छत्रुविनाशनम् ॥ ५१ ॥ दत्त्वा तु रावणस्येदं वरं स कमलोद्भवः । पुनरेव जगामाशु ब्रह्मलोकं सनातनम् ॥ ५२ ॥ रावणोऽपि वरं लब्ध्वा पुनरेवागमत्तदा । निवर्तमानः संहृष्टो रावणः स दुरात्मवान् ॥ ५३ ॥ जह्रे पथि नरेन्द्रर्षिदेवगन्धर्व कन्यकाः ॥ ५४ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे प्रक्षिप्तश्चतुर्थः सर्गः ॥ ४ ॥

केनचित्त्वथ कालेन रावणः प्रययौ गृहात् । पश्चिमार्णवमागच्छत् सचिवैः सह राक्षसैः ॥ १ ॥ द्वीपस्थो ददृशे तेन पुरुषः पावकप्रभः । महाजाम्बूनदप्रख्य एक एव व्यवस्थितः ॥ २ ॥ यथा दृश्येत भयदो युगान्तानल उत्थितः । देवानामिव देवेशो ग्रहाणामिव भास्करः ॥ ३ ॥ शरभाणां यथा सिंहो हस्तिष्वैरावतो यथा । पर्व तानां यथा मेरुः पारिजातश्च शाखिनाम् ॥ ४ ॥ तथा तं पुरुषं दृष्ट्वा कुण्डमध्येऽनलं तथा । गर्जन्तं विविधैर्नादै र्लम्बहस्तं भयानकम् ॥ ५ ॥ दंष्ट्रालं विकटं चैव कम्बुग्रीवं महौजसम् । मण्डूककुक्षिं पिङ्गाक्षं कैलासशिखरोपमम् ॥ ६ ॥ पद्मपादतलं भीमं रक्ताम्बुजनिभाननम् । महाकायं महानादं मनोनिलसमं जवे ॥ ७ ॥ भीममाबद्धतूणीरं सङ्घट्टं बद्धचामरम् । ज्वालामालापरिक्षिप्तं किङ्किणीकृतनिस्वनम् ॥ ८ ॥ मालया स्वर्णपद्मानां वक्षोदेशविलम्बया । ऋग्वेदमिव शोभन्तं पद्ममालाविभूषितम् ॥ ९ ॥ सोऽञ्जनाचलसङ्काशः काञ्चनाचलसन्निभम् । अब्रवीत्तं दशग्रीवो युद्धं मे दीयतामिति ॥ १० ॥ जगर्ज चोच्चैर्बलवान् सहामात्यो दशाननः । धृत्वा स राक्षसपतिः शूलशक्त्यृष्टिपट्टि शान् ॥ ११ ॥ स द्वीपिना सिंह इव ऋषभेणेव कुञ्जरः । सुमेरुरिव छागेन नदीवेगैरिवार्णवः ॥ १२ ॥ अकम्प्य मानः पुरुषो रावणं वाक्यमब्रवीत् । युद्धश्रद्धां हि ते रक्षो नाशयिष्यामि दुर्मते ॥ १३ ॥ रावणस्य च यो वेगः सर्व लोकभयावहः । तथा वेगसहस्राणि संश्रितानि तमेव हि ॥ १४ ॥ अभवत्तस्य सा दृष्टिर्ग्रहमालेव चाद्भुता । दन्तानां दशतः शब्दो यन्त्रस्येवातिभीकरः ॥ १५ ॥ धर्मस्तस्य तपश्चैव जगतः सिद्धिहेतुके । ऊरू संश्रित्य तस्थाते मन्मथः शिश्नमास्थितः ॥ १६ ॥ विश्वेदेवाः कटीभागे मरुतो यस्य शीर्षगाः । मध्येऽष्टौ वसवस्तस्य समुद्राः कुक्षिसंस्थिताः ॥ १७ ॥ पार्श्वस्थाश्च दिशः सर्वाः सर्वसन्धिषु मारुताः । पितरश्चाश्रिताः पृष्ठं हृदयं च पितामहः ॥ १८ ॥ गोदा नानि पवित्राणि भूमिदानानि यानि च । सुवर्णस्य च दानानि शश्वल्लोमाश्रितानि वै ॥ १९ ॥ हिमवान् हेमकूटश्च

मन्दरो मेरुरेव च । नरं तु तं समाश्रित्य ह्यास्थिभूता व्यवस्थिताः ॥२०॥ मही वक्षोऽभवत्तस्य शरीरे द्यौरवस्थिता । उभे सन्ध्ये कायसन्धौ जलवाहाश्च मेहने ॥ २१ ॥ बाहू धाता विधाता च भगः पूषा उभौ करौ । ऐरावतो विशालाक्षः शेषो वासुकिरेव च ॥ २२ ॥ कम्बलाश्वतरौ नागौ कर्कोटकधनञ्जयौ । स च घोरविषो नागस्तक्षकश्चोप तक्षकः ॥२३॥ करजानाश्रितास्तस्य विषवीर्यं मुमुक्षवः । अग्निरास्यमभूत्तस्य स्कन्धौ रुद्रैराधिष्ठितौ ॥ २४ ॥ दन्तान् मासा दंष्ट्रयोश्च उभयोर्ऋतवः स्थिताः । नासे कुहूरमावास्या तच्छिद्रेषु च वायवः ॥ २५ ॥ ग्रीवा तस्याभवद्देवी वाणी चापि सरस्वती । नासत्यौ श्रवणे चोभौ नेत्रे च शशिभास्करौ ॥ २६ ॥ वेदाङ्गानि च यज्ञाश्च नानारूपाणि यानि च । सुवृत्तानि च वाक्यानि तेजस्सिद्धिस्तपांसि च ॥ २७ ॥ एतानि नररूपस्य तस्य देहं श्रितानि वै । तेन मुष्टि प्रहारेण स्वल्पमात्रेण लीलया ॥ २८ ॥ पाणिना ताडितं रक्षो निपपात महीतले । पतितं राक्षसं ज्ञात्वा विद्राव्य च निशाचरान् ॥ २९ ॥ ऋग्वेदप्रतिमः सोऽथ पद्ममालाविभूषितः । प्रविवेश च पातालं गच्छत्पर्वतसन्निभः ॥३०॥ उत्थाय च दशग्रीव आहूय सचिवान् स्वयम् । क्व गतः सहसा ब्रूत प्रहस्तशुकसारणाः ॥ ३१ ॥ एवमुक्ता रावणेन राक्षसास्तमथाब्रुवन् । प्रविष्टः स नरोऽत्रैव देवदानवदर्पहा ॥ ३२ ॥ अथासिं गृह्य वेगेन गरुत्मानिव पन्नगम् । शीघ्रं स तु बिलद्वारं प्रविवेश च दुर्मतिः ॥३३ ॥ प्रविश्य च स तद्द्वारं रावणो वरनिर्भयः । अपश्यच्च नरांस्तत्र नीलाञ्जन चयोपमान् ॥ ३४ ॥ केयूरधारिणः शूरान् रक्तमाल्यानुलेपनान् । अङ्गुलीयकहाराद्यैर्भूषणैश्च विभूषितान्॥ ३५ ॥ दृश्यन्ते तत्र नृत्यन्त्यस्तिस्रः कोट्यो महात्मनाम् । नित्योत्सवाः शान्तभया विमलाः पावकप्रभाः ॥ ३६ ॥ क्रीडतः प्रेक्षते तान् वै राक्षसो भीमविक्रमः । द्वारस्थो रावणस्तेषां तासु कोटीषु निर्भयः ॥ ३७ ॥ यथा दृष्टः स तु नरस्तुल्यांस्तांस्तस्य सर्वशः । एकवर्णांस्त्वेकबलानेकरूपान् महौजसः ॥ ३८ ॥

चतुर्भुजान् महोत्साहाँस्तत्रापश्यत् स रावणः । तान् दृष्ट्वाथ दशग्रीव ऊर्ध्वरोमा बभूव ह ॥ ३९ ॥ स्वयम्भुवा दत्तवरस्ततः शीघ्रं विनिर्ययौ । अथापश्यत् परं तत्र भुजङ्गशयने स्थितम् ॥ ४० ॥ पाण्डरेण महार्हेण कौस्तुभेन विराजितम् । शेते स पुरुषस्तत्र पावकेनावकुण्ठितः ॥ ४१ ॥ दिव्यस्रगनुलेपी च दिव्याभरणभूषितः । दिव्याम्बरधरा साध्वी त्रैलोक्यस्य विभूषणम् ॥ ४२ ॥ वालव्यजनहस्ता च देवी तत्र व्यवस्थिता । लक्ष्मीर्वहिः सपद्मा वै भ्राजन्ती लोकसुन्दरी ॥ ४३ ॥ प्रहृष्टः स तु लङ्केशो दृष्ट्वा तां चारुहासिनीम् । जिघृक्षुः स तदा साध्वीं सिंहासनमुपाश्रिताम् ॥ ४४ ॥ विना तु सचिवैस्तत्र रावणो दुर्मतिस्तदा । हस्तैर्ग्रहीतुं तामैच्छन्मन्मथेन वशीकृतः ॥ ४५ ॥ सुप्तमाशीविषं यद्वद्रावणः कालचोदितः । अथ सुप्तो महाबाहुः पावकेनावकुण्ठितः ॥ ४६ ॥ ग्रहीतुकामं तं ज्ञात्वा व्यपविध्य पटं तदा । जहासोच्चैर्भृशं देवस्तं दृष्ट्वा राक्षसाधिपम् ॥ ४७ ॥ तेजसा तस्य सन्दीप्तो रावणो लोकरावणः । घ्राणवातेन दीर्घेण तस्मिन् राम रसातले ॥ ४८॥ कृत्तमूलो यथा शाखी निपपात महीतले । पतितं राक्षसं ज्ञात्वा वचनं चेदमब्रवीत् ॥ ४९ ॥ उत्तिष्ठ राक्षसश्रेष्ठ मृत्युस्ते नाद्य विद्यते । प्रजापतिवरो रक्ष्यो येन जीवसि रावण ॥ ५० ॥ गच्छ रावण विस्रब्धं नात्र वै मरणं तव । लब्धसंज्ञो मुहूर्तेन राक्षसो भीमविक्रमः ॥५१॥ तं तु दृष्ट्वा महात्मानं रावणो भयमाप सः । एवमुक्तस्तदोत्थाय रावणो देवकण्टकः ॥ ५२ ॥ रोमहर्षणमापन्नो ह्यब्रवीत्तं महामुनिम् । को भवाञ्छौर्यसम्पन्नो युगान्तानलसन्निभः ॥५३॥ ब्रूहि त्वं देवदेवो वा सर्वदेवेषु सुस्थितः । एवमुक्तः स तेनाथ रावणेन दुरात्मना ॥ ५४ ॥ प्रत्युवाच हसन् देवो मेघगम्भीरया गिरा । किं त्वं मया दशग्रीव वध्योऽसि नचिरादिह ॥ ५५॥ एवमुक्तो दशग्रीवः प्राञ्जलिर्वाक्यमब्रवीत् । प्रजापतेस्तु वचनान्नाहं मृत्युवशं गतः ॥ ५६ ॥ स न जातो जनिष्यो वा मत्तुल्यो वा सुरेष्वपि । प्रजापतिवरं यो हि लङ्घयेद्वीर्यमाश्रितः ॥ ५७ ॥ न तत्र परिहारोऽस्ति प्रयत्नश्चापि दुर्लभः । त्रैलोक्ये तं न पश्यामि यस्तत् कुर्याद्वरं वृथा ॥५८॥ अमरो वा सुरश्रेष्ठ

तेन मां नाविशद्भयम् । अथापि च भवेन्मृत्युस्त्वत्तो मे नान्यतः प्रभो ॥ ५९ ॥ यशस्यं श्लाघनीयं च त्वत्तो मे मरणं त्विदम् । अथापश्यत्तस्य गात्रे रावणो भीमविक्रमः ॥ ६० ॥ देवदेवस्य सकलं त्रैलोक्यं सचराचरम् । आदित्या वसवो रुद्रा मरुतोऽथाश्विनावपि ॥ ६१ ॥ सिद्धाश्च पितरश्चैव यमो वैश्रवणस्तथा । समुद्रा गिरयो नद्यो विद्या वेदास्त्रयोऽग्नयः ॥ ६२ ॥ ग्रहास्तारागणा व्योम साध्या गन्धर्वचारणाः । महर्षयो वेदविदो गरुडोऽथ भुजङ्गमाः ॥ ६३ ॥ ये चान्ये संस्थिता देवा दैत्यदानवराक्षसाः । गात्रेषु शयनस्थस्य दृश्यन्ते सूक्ष्ममूर्तयः ॥ ६४ ॥ आह रामोऽथ धर्मात्मा ह्यगस्त्यं मुनिसत्तमम् । द्वीपस्थः पुरुषः कोऽसौ तिस्रः कोट्यश्च ताश्च काः ॥६५॥ शयानः पुरुषः कश्चिद्दैत्यदानवदर्पहा । रामस्य वचनं श्रुत्वा ह्यगस्त्यो वाक्यमब्रवीत् ॥ ६६ ॥ श्रूयतामभिधास्यामि देवदेवः सनातनः । भगवान् कपिलो राम द्वीपस्थो नर उच्यते ॥ ६७ ॥ स वै नारायणो देवः शङ्खचक्रगदाधरः । विधाता चैव भूतानां संहर्ता च तथैव च ॥ ६८ ॥ अनादिरच्युतो विष्णुः प्रभवः शाश्वतोऽव्ययः । ये तु नृत्यन्ति वै तत्र सुरास्ते तस्य धीमतः ॥ ६९ ॥ तुल्यतेजःप्रतापास्ते कपिलस्य नरस्य वै । नातिक्रुद्धेन दृष्टस्तु राक्षसः पापनिश्चयः ॥ ७० ॥ न बभूव ततो राम भस्मसाद्रावणः प्रभो । भिन्नगात्रो नगप्रख्यो रावणः पतितो भुवि ॥ ७१ ॥ वाक्छरैस्तं बिभेदाशु रहस्यपिशुनो यथा । अथ दीर्घेण कालेन लब्धसंज्ञः स राक्षसः ॥ ७२ ॥ आजगाम हतौजास्तु यत्र ते सचिवाः स्थिताः । तैरेव सहितो लङ्कां जगामाशु दशाननः ॥ ७३ ॥ श्रुत्वैतद्वचनं सर्वमाश्चर्यमिति राघवः । पूज्यमानाः स्थितास्तत्र ये रामस्य समीपतः ॥७४॥ आश्चर्यमिति तत् प्राहुर्वानरा राक्षसैः सह । विभीषणस्तु रामस्य पार्श्वस्थो वाक्यमब्रवीत् ॥ ७५ ॥ आश्चर्यं स्मारितोऽस्म्यद्य यत्तद्वृत्तं पुरातनम् । अथागस्त्योऽब्रवीत् सर्वमेतद्राम श्रुतं त्वया ॥ ७६ ॥ दृष्टाः सभाजिताश्चापि राम यास्यामहे वयम् । तस्य तद्वचनं श्रुत्वा रामो रमयतां वरः ॥ ७७ ॥

इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे प्रक्षिप्तः पञ्चमः सर्गः ॥ ५ ॥

॥ १ ॥ दर्शनीयामिति । रक्षः स इति संबन्धः । कन्या अनूढा । स्त्री सभर्तृका ॥ २-४ ॥ ताभिरिति । भयशोकाभ्याम् अशिवमश्रु यासां ताभिः ॥ ५-९ ॥

निवर्तमानः संहृष्टो रावणः सुदुरात्मवान् । जह्रे पथि नरेन्द्रर्षिदेवगन्धर्वकन्यकाः ॥ १ ॥ दर्शनीयां हि रक्षः स कन्यां स्त्रीं वाऽथ पश्यति । हत्वा बन्धुजनं तस्या विमाने तां रुरोध ह ॥ २ ॥ एवं पन्नगकन्याश्च राक्षसासुरमानुषीः । यक्षदानवकन्याश्च विमाने सोऽध्यरोपयत् ॥ ३ ॥ ताश्च सर्वाः समं दुःखान्मुमुचुर्बाष्पजं जलम् । तुल्यमग्न्यर्चिषां तत्र शोकाग्निभयसम्भवम् ॥ ४ ॥ ताभिः सर्वानवद्याभिर्नदीभिरिव सागरः । आपूरितं विमानं तद्भयशोकाशिवाश्रुभिः ॥ ५ ॥ नागगन्धर्वकन्याश्च महर्षितनयाश्च याः । दैत्यदानवकन्याश्च विमाने शतशोऽरुदन् ॥ ६ ॥ दीर्घकेश्यः सुचार्वङ्ग्यः पूर्णचन्द्रनिभाननाः । पीनस्तन्यस्तथा वज्रवेदिमध्यसमप्रभाः ॥ ७ ॥ रथकूबरसङ्काशैः श्रोणिदेशैर्मनोहराः । स्त्रियः सुराङ्गनाप्रख्या निष्टप्तकनकप्रभाः ॥ ८ ॥ शोकदुःखभयत्रस्ता विह्वलाश्च सुमध्यमाः । तासां निश्वासवातेन सर्वतः सम्प्रदीपितम् ॥ ९ ॥ अग्निहोत्रमिवाभाति सन्निरुद्धाग्नि पुष्पकम् । दशग्रीववशं प्राप्तास्तास्तु शोकाकुलाः स्त्रियः ॥ १० ॥ दीनवक्त्रेक्षणाः श्यामा मृग्यः सिंहवशा इव । काचिच्चिन्तयती तत्र किं नु मां भक्षयिष्यति ॥ ११ ॥ काचिद्दध्यौ सुदुःखार्ता अपि मां मारयेदयम् । इति मातृपितॄन् स्मृत्वा भर्तॄन् भ्रातॄंस्तथैव च । दुःखशोकसमाविष्टा विलेपुः सहिताः स्त्रियः ॥ १२ ॥

अग्निहोत्रमिति । सन्निरुद्धा अग्नयो यस्मिंस्तादृशम् अग्निहोत्रमग्निकुण्डमिव पुष्पकं भाति ॥ १०-१९ ॥



स०—समं मिलिताः शोकाग्निभयसम्भवं काकनयनन्यायेनाग्निपदमुभयान्वयि । शोकाग्निः स्वजनहननप्रयुक्तशोकाग्निः । भयाग्निः कदा किं करिष्यति दुरात्मेति भयाग्निश्च । तत्सम्भवं समानाधिकरणं बाष्पजं जलम् । अग्न्यर्चिषाम् अग्न्यर्चिर्भिः ॥ ४ ॥ वज्रवेदिः वज्रयुता वेदिः अग्निवेदिका तत्समप्रभाः । वज्रात्मिका वेदिरङ्गुलिमुद्रा, मध्ये तत्समप्रभाः, अतिसूक्ष्मकटितटयः । " वेदिरङ्गुलिमुद्रायाम् " इति विश्वः ॥ ७ ॥

इदमिति । परक्यासु परकीयासु ॥ २०--२८॥ सोऽपीति । यतो मे भर्ता हतः अत एव साऽहं स्वयं स्वबन्धुनैव त्वया निहताऽस्मि ॥ २९॥

कथं नु खलु मे पुत्रो भविष्यति मया विना । कथं माता कथं भ्राता निमग्नाः शोकसागरे ॥ १३ ॥ हा कथं नु करिष्यामि भर्तुस्तस्मादहं विना । मृत्यो प्रसादयामि त्वां नय मां दुःखभागिनीम् ॥ १४ ॥ किन्नु तद्दुष्कृतं कर्म पुरा देहान्तरे कृतम् ॥ १५॥ एवं स्म दुःखिताः सर्वाः पतिताः शोकसागरे । न खल्विदानीं पश्यामो दुःखस्यास्यान्त मात्मनः ॥ १६ ॥ अहो धिङ् मानुषं लोकं नास्ति खल्वधमः परः । यद्दुर्बला बलवता भर्तारो रावणेन नः ॥१७॥ सूर्येणोदयता काले नक्षत्राणीव नाशिताः । अहो सुबलवद्रक्षो वधोपायेषु युज्यते ॥ १८ ॥ अहो दुर्वृत्तमास्थाय नात्मानं वै जुगुप्सते । सर्वथा सदृशस्तावद्विक्रमोऽस्य दुरात्मनः ॥ १९ ॥ इदं त्वसदृशं कर्म परदाराभिमर्शनम् । यस्मादेष परक्यासु रमते राक्षसाधमः ॥ २० ॥ तस्माद्वै स्त्रीकृतेनैव प्राप्स्यते दुर्मतिर्वधम् । सतीभिर्वरनारीभिरेवं वाक्येऽभ्युदीरिते ॥२१॥ नेदुर्दुन्दुभयः खस्थाः पुष्पवृष्टिः पपात च । शप्तः स्त्रीभिः स तु समं हतौजा इव निष्प्रभः ॥ २२ ॥ पतिव्रताभिः साध्वीभिर्बभूव विमना इव । एवं विलपितं तासां शृण्वन् राक्षसपुङ्गवः । प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ॥ २३ ॥ एतस्मिन्नन्तरे घोरा राक्षसी कामरूपिणी । सहसा पतिता भूमौ भगिनी रावणस्वसा ॥ २४ ॥ तां स्वसारं समुत्थाप्य रावणः परिसान्त्वयन् । अब्रवीत् किमिदं भद्रे वक्तुकामाऽसि मे द्रुतम् ॥ २५ ॥ सा बाष्पपरिरुद्धाक्षी रक्ताक्षी वाक्यमब्रवीत् । कृताऽस्मि विधवा राजंस्त्वया बलवता बलात् ॥ २६ ॥ एते राजंस्त्वया वीरा दैत्या विनिहता रणे । कालकेया इति ख्याताः सहस्राणि चतुर्दश ॥ २७ ॥ प्राणेभ्योऽपि गरीयान् मे तत्र भर्ता महाबलः ॥ २८ ॥ सोऽपि त्वया हतस्तात रिपुणा भ्रातृगृध्नुना । त्वयाऽस्मि निहता राजन् स्वयमेव हि बन्धुना ॥ २९ ॥

राजन्नित्यादि सार्धम् । नन्विति पृथक् पदम् । जामाता नाम समरेष्वपि रक्ष्यो ननु नेति काकुः । रक्ष्य एव किलेत्यर्थः ॥ ३०-३४ ॥ अस्मिन्निति । अस्मिन् काले तु यत्प्राप्तम्, मत्कर्तव्यत्वेनेति शेषः । मातृष्वसेयस्य खरस्य भ्रातृत्वात् भ्रातुरित्युच्यते । पार्श्वतो वनसमीपे वसेत्यर्थः । मम तु राज्य



राजन् वैधव्यशब्दं च भोक्ष्यामि त्वत्कृते ह्यहम् । ननु नाम त्वया रक्ष्यो जामाता समरेष्वपि । स त्वया निहतो युद्धे स्वयमेव न लज्जसे ॥३०॥ एवमुक्तो दशग्रीवो भगिन्या क्रोशमानया । अब्रवीत् सान्त्वयित्वा तां सामपूर्वमिदं वचः ॥३१॥ अलं वत्से रुदित्वा ते न भेतव्यं च सर्वशः । दानमानप्रसादैस्त्वां तोषयिष्यामि यत्नतः ॥३२॥ युद्धप्रमत्तो व्याक्षिप्तो जयकांक्षी क्षिपञ्छरान् । नावगच्छामि युद्धेषु स्वान् परान् वाप्यहं शुभे ॥ ३३ ॥ जामातरं न जाने स्म प्रहरन् युद्धदुर्मदः । तेनासौ निहतः सङ्ख्ये मया भर्ता तव स्वसः ॥ ३४ ॥ अस्मिन् काले तु यत् प्राप्तं तत् करिष्यामि ते हितम् । भ्रातुरैश्वर्ययुक्तस्य खरस्य वस पार्श्वतः ॥ ३५ ॥ चतुर्दशानां भ्राता ते सहस्राणां भविष्यति । प्रभुः प्रयाणे दाने च राक्षसानां महाबलः ॥३६॥ तत्र मातृष्वसेयस्ते भ्राताऽयं वै खरः प्रभुः । भविष्यति तवादेशं सदा कुर्वन्निशाचरः ॥ ३७ ॥ शीघ्रं गच्छत्वयं वीरो दण्डकान् परिरक्षितुम् । दूषणोऽस्य बलाध्यक्षो भविष्यति महाबलः ॥ ३८ ॥ तत्र ते वचनं शूरः करिष्यति सदा खरः । रक्षसां कामरूपाणां प्रभुरेष भविष्यति ॥ ३९ ॥ एवमुक्त्वा दशग्रीवः सैन्यमस्यादिदेश ह । चतुर्दश सहस्राणि रक्षसां वीर्यशालिनाम् ॥ ४० ॥ स तैः परिवृतः सर्वै राक्षसैर्घोरदर्शनैः । अगच्छत खरः शीघ्रं दण्डकानकुतोभयः ॥४१॥ स तत्र कारयामास राज्यं निहतकण्टकम् । सा च शूर्पणखा तत्र न्यवसद्दण्डकावने ॥४२॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तरश्रीरामायणे चतुर्विंशः सर्गः ॥२४॥

परवशस्य न त्वत्संमानने अवकाश इति भावः ॥३५॥ चतुर्दशानामिति । चतुर्दशानां सहस्राणां प्रयाणे प्रेषणे दाने अन्नपानवस्त्रादिदाने प्रभुस्ते भ्रातेत्यन्वयः । भविष्यतीति । तवादेशं त्वद्वचः सदा कुर्वन्भविष्यति ॥३६-४२॥ इति श्रीगोविन्द० उत्तरश्रीरामायणव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥

स तु दत्त्वेत्यादि । स्पष्टम् ॥१॥ तत इति । निकुम्भिला नाम लङ्कायाः पश्चिमद्वारवर्ति काननम् ॥२॥ तत इति । चैत्यं देवायतनम् । विष्ठितं प्रवृत्तम् । कमण्डलुः शिखा दण्डो ध्वजश्च यस्य स तथा । अनेन ब्रह्मचर्यं सूचितम् । न तु ब्रह्मचर्याश्रमः । अग्निष्टोमादियाजित्वं ध्यात्वोपदेशात् ॥ ३–५ ॥

स तु दत्त्वा दशग्रीवो वनं घोरं खरस्य तत् । भगिनीं च समाश्वास्य हृष्टः स्वस्थतरोऽभवत् ॥ १ ॥ ततो निकुम्भिला नाम लङ्कोपवनमुत्तमम् । तद्राक्षसेन्द्रो बलवान् प्रविवेश सहानुगः ॥ २ ॥ ततो यूपशताकीर्णं सौम्यचैत्योपशोभितम् । ददर्श विष्ठितं यज्ञं श्रिया सम्प्रज्वलन्निव ॥ ३ ॥ ततः कृष्णाजिनधरं कमण्डलुशिखाध्वजम् । ददर्श स्वसुतं तत्र मेघनादं भयावहम् ॥ ४ ॥ तं समासाद्य लङ्केशः परिष्वज्याथ बाहुभिः । अब्रवीत् किमिदं वत्स वर्तसे ब्रूहि तत्त्वतः ॥ ५ ॥ उशना त्वब्रवीत्तत्र यज्ञसम्पत्समृद्धये । रावणं राक्षसश्रेष्ठं द्विजश्रेष्ठो महातपाः ॥ ६ ॥ अहमाख्यामि ते राजञ्छ्रूयतां सर्वमेव तत् । यज्ञास्ते सप्त पुत्रेण प्राप्ताः सुबहुविस्तराः ॥ ७ ॥ अग्निष्टोमोऽश्वमेधश्च यज्ञो बहुसुवर्णकः । राजसूयस्तथा यज्ञो गोमेधो वैष्णवस्तथा ॥ ८ ॥ माहेश्वरे प्रवृत्ते तु यज्ञे पुम्भिः सुदुर्लभे । वरांस्ते लब्धवान् पुत्रः साक्षात् पशुपतेरिह ॥ ९ ॥ कामगं स्यन्दनं दिव्यमन्तरिक्षचरं ध्रुवम् । मायां च तामसीं नाम यया सम्पद्यते तमः ॥ १० ॥ एतया किल सङ्ग्रामे मायया राक्षसेश्वर । प्रयुक्तया गतिः शक्या नहि ज्ञातुं सुरासुरैः ॥ ११ ॥ अक्षयाविषुधी बाणैश्चापं चापि सुदुर्जयम् । अस्त्रं च बलवद्राजन् शत्रुविध्वंसनं रणे ॥ १२ ॥ एतान् सर्वान् वरान् लब्ध्वा पुत्रस्तेऽयं दशानन। अद्य यज्ञसमाप्तौ च त्वां दिदृक्षुः स्थितो ह्यहम् ॥१३॥ ततोऽब्रवी दशग्रीवो न शोभनमिदं कृतम् । पूजिताः शत्रवो यस्माद्द्रव्यैरिन्द्रपुरोगमाः ॥ १४ ॥

उशनेति । उशना गुरुः शुक्राचार्यः । प्रवर्तकत्वात् स्वयमब्रवीदिति भावः ॥ ६ ॥ अहमिति । यज्ञाः प्रसिद्धाः ॥ ७–१७ ॥

ईदृशैरिति । स्वमतेन स्वेच्छया । उल्लङ्घितशास्त्रमर्यादयेत्यर्थः ॥ १८ ॥ ज्ञातीनिति । ज्ञातीन् आनीतस्त्रीबन्धून् । अस्य कर्मणः परदारापहरणरूप पापस्य फलमागतं स्वीयस्वसुर्बलान्मधुना हरणम् ॥ १९–२२ ॥ पितेति । अस्माकं जनन्याः सुमालिसुतायाः कैकस्याः ज्येष्ठा भगिनी काचिदस्ति ।

एहीदानीं कृतं विद्धि सुकृतं तन्न संशयः । आगच्छ सौम्य गच्छाम स्वमेव भवनं प्रति ॥ १५ ॥ ततो गत्वा दशग्रीवः सपुत्रः सविभीषणः । स्त्रियोऽवतारयामास सर्वास्ता बाष्पगद्गदाः ॥ १६ ॥ लक्षिण्यो रत्नभूताश्च देव दानवरक्षसाम् । तस्य तासु मतिं ज्ञात्वा धर्मात्मा वाक्यमब्रवीत् ॥१७॥ ईदृशैस्त्वं समाचारैर्यशोर्थकुलनाशनैः । धर्षणं ज्ञातिनां ज्ञात्वा स्वमतेन विचेष्टसे ॥१८॥ ज्ञातींस्तान् धर्षयित्वेमास्त्वया नीता वराङ्गनाः । त्वामतिक्रम्य मधुना राजन् कुम्भीनसी हृता ॥ १९ ॥ रावणस्त्वब्रवीद्वाक्यं नावगच्छामि किन्न्विदम् । कोऽयं यस्तु त्वया ऽऽख्यातो मधुरित्येव नामतः ॥ २० ॥ विभीषणस्तु संक्रुद्धो भ्रातरं वाक्यमब्रवीत् । श्रूयतामस्य पापस्य कर्मणः फलमागतम् ॥ २१ ॥ मातामहस्य यो भ्राता ज्येष्ठो भ्राता सुमालिनः । माल्यवानिति विख्यातो वृद्धः प्राज्ञो निशाचरः ॥ २२ ॥ पिता ज्येष्ठो जनन्या नो ह्यस्माकं चार्यकोऽभवत् । तस्य कुम्भीनसी नाम दुहितुर्दुहिता ऽभवत् ॥२३॥ मातृष्वसुरथास्माकं सा च कन्याऽनलोद्भवा । भवत्यस्माकमेवैषा भ्रातॄणां धर्मतः स्वसा ॥ २४ ॥

सा तु नाम्ना पुष्पोत्कचा । अपरा कुम्भीनसीति पूर्वमुक्ता । अस्माकं त्वार्यको माल्यवान् अस्माकं ज्येष्ठमातामहः । अस्माकं जनन्याश्च ज्येष्ठः पिता । तस्य माल्यवतः कुम्भीनसी नाम दुहिताऽस्ति । अनलोद्भवा अनला माल्यवतः सुता तस्याः कन्या कुम्भीनसीत्यर्थः । अस्मन्मातामहस्य सुमालिनः द्वे पुत्र्यौ प्रसिद्धे । पुष्पोत्कचा कैकसी चेति । तयोर्ज्येष्ठः पिता माल्यवान् । तस्य पुत्री अनला । तस्याः कन्या कुम्भीनसी । सा अस्माकं स्वसा ।



स०–यत्कृतं तद्धि सुकृतम् । अतीतकार्यं नेति वक्तुमशक्यत्वात् । निकुम्भिलावस्थानासंमतिः सुसम्मतिश्च भवनगमने इति चोभयत्र दार्ढ्यसूचनार्थम् एह्यागच्छेत्युक्तिः । हे इन्द्र ! एहीत्यादिकं यत्कृतं तत्सुकृत मिति वा । आ इहि त्यज । "वी गतिप्रजन०" इत्यत्र प्रश्लिष्टस्य ईधातोरसनमर्थो निरसनं च त्याग इति वा ॥ १९ ॥

ज्येष्ठमातामहपुत्र्याः पुत्रीत्वादत एव धर्मतः स्वसेत्युक्ता ॥ २३ ॥ २४ ॥ सेति । यज्ञप्रमत्तः यज्ञेन प्रमत्तः । विस्मृतस्वगृहकृत्य इत्यर्थः । अन्तर्जलोषित इति, तपोर्थमिति शेषः ॥ २५ ॥ कुम्भकर्ण इति । इह गृहे, वर्तमानानिति शेषः । सम्मतान् सिद्धान् ॥२६॥ धर्षयित्वेति । श्रुत्वा चैवं मधुना

सा हृता मधुना राजन् राक्षसेन बलीयसा। यज्ञप्रवृत्ते पुत्रे तु मयि चान्तर्जलोषिते ॥ २५ ॥ कुम्भकर्णे महाराज निद्रामनुभवत्यथ। निहत्य राक्षसश्रेष्ठानमात्यानिह संमतान् ॥ २६ ॥ धर्षयित्वा हृता सा तु गुप्ताऽप्यन्तःपुरे तव । श्रुत्वाऽपि तन्महाराज क्षान्तमेव हतो न सः ॥ २७ ॥ यस्मादवश्यं दातव्या कन्या भर्त्रे हि भ्रातृभिः । तदेतत् कर्मणो ह्यस्य फलं पापस्य दुर्मते ॥२८॥ अस्मिन्नेवाभिसम्प्राप्तं लोके विदितमस्तु ते । विभीषणवचः श्रुत्वा राक्षसेन्द्रः स रावणः । दौरात्म्येनात्मनोद्धूतस्तप्ताम्भ इव सागरः ॥२९॥ ततोऽब्रवीद्दशग्रीवः क्रुद्धः संरक्तलोचनः। कल्प्यतां मे रथः शीघ्रं शूराः सज्जीभवन्तु नः ॥३०॥ भ्राता मे कुम्भकर्णश्च ये च मुख्या निशाचराः। वाहनान्यधिरोहन्तु नानाप्रहरणायुधाः ॥ ३१ ॥ अद्य तं समरे हत्वा मधुं रावणनिर्भयम् । सुरलोकं गमिष्यामि युद्धाकांक्षी सुहृद्वृतः ॥ ३२ ॥ * अक्षौहिणीसहस्राणि चत्वार्यग्र्याणि रक्षसाम् । नानाप्रहरणान्याशु निर्ययुर्युद्धकांक्षिणाम् ॥ ३३ ॥ इन्द्रजित्त्वग्रजित् सैन्यात् सैनिकान् परिगृह्य च। जगाम रावणो मध्ये कुम्भकर्णश्च पृष्ठतः ॥ ३४ ॥

स्वसृहरणं मत्वा अस्माकं क्षान्तमेव न तु मधुर्हतः ॥ २७ ॥ यस्मादिति । भ्रातृभिरस्माभिरित्यर्थः । तदिति । आहूय कल्याणपूर्वकं कन्यादानं विना बलात् कन्याग्रहणम् अस्य पापस्य कर्मणः फलम् ॥ २८ ॥ अस्मिन्निति । अस्मिन्नेव दृष्टान्ते अभिसंप्राप्तम् अतः परमन्यत्रापि लोके विदितमस्तु ॥ २९–३१ ॥ अद्येति । रावणान्निर्भयो रावणनिर्भयः तम् ॥ ३२–४० ॥

स०—कन्या स्वकुलप्रसूता । भर्त्रे मनसा मर्तृत्वेन सम्मताय । यद्यपि देया कन्येति । तथापि बलाद्बलाहरणं तु, दुर्मते ज्येष्ठभ्रातः ! अस्य त्वदनुष्ठितस्य परतरुणीपरिकरहरणादिरूपस्य पापस्य फलम् । नोचेचेतसाऽपि स्मर्तुमशक्यप्राकारादिप्रकारलङ्घ्यान्तर्गुप्तकन्यानयनमनयेन कथं स्यादिति भावः॥२८॥ * ततो विजित्य त्रिदिवं वशे स्थाप्य पुरन्दरम् । निर्भयो विचरिष्यामि त्रैलोक्यैश्वर्यशोभितः ॥ इत्यधिकः पाठः ।

रावण इति । अन्यदपि तव प्रियमित्यर्थः ॥ ४१ ॥ न हीति । ईदृशं भयं भर्तृवधसमं भयमित्यर्थः ॥ ४२ ॥ सत्यवाग् भवेति । न भेतव्यमिति वचनं



विभीषणश्च धर्मात्मा लङ्कायां धर्ममाचरत् । शेषाः सर्वे महाभागा ययुर्मधुपुरं प्रति ॥ ३५ ॥ खरैरुष्ट्रैर्हयैर्दीप्तैः शिंशुमारैर्महोरगैः । राक्षसाः प्रययुः सर्वे कृत्वाऽऽकाशं निरन्तरम् ॥३६॥ दैत्याश्च शतशस्तत्र कृतवैराश्च दैवतैः । रावणं प्रेक्ष्य गच्छन्तमन्वगच्छन् हि पृष्ठतः ॥ ३७ ॥ स तु गत्वा मधुपुरं प्रविश्य च दशाननः । न ददर्श मधुं तत्र भगिनीं तत्र दृष्टवान् ॥ ३८ ॥ सा च प्रह्वाञ्जलिर्भूत्वा शिरसा चरणौ गता ॥ ३९ ॥ तस्य राक्षसराजस्य त्रस्ता कुम्भीनसी तदा । तां समुत्थापयामास न भेतव्यमिति ब्रुवन् ॥ ४० ॥ रावणो राक्षसश्रेष्ठः किं चापि करवाणि ते । साऽब्रवीद्यदि मे राजन् प्रसन्नस्त्वं महाभुज । भर्त्तारं न ममेहाद्य हन्तुमर्हसि मानद ॥ ४१ ॥ न हीदृशं भयं किंचित् कुलस्त्रीणामिहोच्यते । भयानामपि सर्वेषां वैधव्यं व्यसनं महत् ॥४२॥ सत्यवाग्भव राजेन्द्र मामवेक्षस्व याचतीम् । त्वयाऽप्युक्तं महाराज न भेतव्यमिति स्वयम् ॥ ४३ ॥ रावणस्त्वब्रवीद्धृष्टः स्वसारं तत्र संस्थिताम् । क्व चासौ तव भर्ता वै मम शीघ्रं निवेद्यताम् ॥ ४४ ॥ सह तेन गमिष्यामि सुरलोकं जयावहे । तव कारुण्यसौहार्दान्निवृत्तोऽस्मि मधोर्वधात् ॥ ४५ ॥ इत्युक्ता सा समुत्थाप्य प्रसुप्तं तं निशाचरम् । अब्रवीत् सम्प्रहृष्टेव राक्षसी सा पतिं वचः ॥४६॥ एष प्राप्तो दशग्रीवो मम भ्राता महाबलः । सुरलोकजयाकाङ्क्षी साहाय्ये त्वां वृणोति च ॥ ४७ ॥ तदस्य त्वं सहायार्थं सबन्धुर्गच्छ राक्षस । स्निग्धस्य भजमानस्य युक्तमर्थाय कल्पितुम् ॥ ४८ ॥ तस्यास्तद्वचनं श्रुत्वा तथेत्याह मधुर्वचः ॥४९॥ ददर्श राक्षसश्रेष्ठं यथान्याय्यमुपेत्य सः । पूजयामास धर्मेण रावणं राक्षसाधिपम् ॥ ५० ॥ प्राप्य पूजां दशग्रीवो मधुवेश्मनि वीर्यवान् । तत्र चैकां निशामुष्य गमनायोपचक्रमे ॥५१॥

सत्यं कुर्वित्यर्थः ॥ ४३–४९ ॥ ददर्शेति । यथान्याय्यम् अर्घ्याद्युपचारमित्यर्थः ॥ ५० ॥ ५१ ॥

॥ ५२ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

॥१॥ उदित इति । तुल्यपर्वतवर्चसि स्वनिविष्टकैलासवत्तुल्याभे ॥२॥ रावण इति । गुणान् भोगाद्यर्थान् ॥३॥ कर्णिकारेति । कदम्बगहनैः कदम्बवनैः

ततः कैलासमासाद्य शैलं वैश्रवणालयम् । राक्षसेन्द्रो महेन्द्राभः सेनामुपनिवेशयत् ॥ ५२ ॥

इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे पञ्चविंशः सर्गः ॥ २५ ॥

स तु तत्र दशग्रीवः सह सैन्येन वीर्यवान् । अस्तं प्राप्ते दिनकरे निवासं समरोचयत् ॥ १ ॥ उदिते विमले चन्द्रे तुल्यपर्वतवर्चसि । प्रसुप्तं सुमहत् सैन्यं नानाप्रहरणायुधम् ॥ २ ॥ रावणस्तु महावीर्यो निषण्णः शैलमूर्धनि । स ददर्श गुणांस्तत्र चन्द्रपादसुशोभितान् ॥ ३ ॥ कर्णिकारवनैर्दीप्तैः कदम्बगहनैस्तथा । पद्मिनीभिश्च फुल्लाभि र्मन्दाकिन्या जलैरपि ॥४॥ चम्पकाशोकपुन्नागमन्दारतरुभिस्तथा । चूतपाटललोध्रैश्च प्रियङ्ग्वर्जुनकेतकैः । तगरै र्नारिकेलैश्च प्रियालपनसैस्तथा ॥ ५ ॥ आरग्वधैस्तमालैश्च प्रियालबकुलैरपि । एतैरन्यैश्च तरुभिरुद्भासितवना न्तरे । किन्नरा मदनेनार्ता रक्ता मधुरकण्ठिनः ॥ ६ ॥ समं सम्प्रजगुर्यत्र मनस्तुष्टिविवर्धनम् ॥ ७ ॥ विद्याधरा मद क्षीबा मदरक्तान्तलोचनाः । योषिद्भिः सह संक्रान्ताश्चिक्रीडुर्जहृषुश्च वै ॥ ८ ॥ घण्टानामिव सन्नादः शुश्रुवे मधुर स्वरः । अप्सरोगणसङ्घानां गायतां धनदालये ॥९॥ पुष्पवर्षाणि मुञ्चन्तो नगाः पवनताडिताः । शैलं तं वासयन्तीव मधुमाधवगन्धिनः ॥१०॥ मधुपुष्परजःपृक्तं गन्धमादाय पुष्कलम् । प्रववौ वर्धयन् कामं रावणस्य सुखोऽनिलः ॥११॥

॥४॥५॥ एतैरिति । रक्ताः रागयुक्ताः । मधुरकण्ठिनः मधुरकण्ठध्वनयः । समम्, स्वस्त्रीभिरिति शेषः ॥ ६–९ ॥ पुष्पवर्षाणीति । वासयन्ति अधिवासयुक्तं कुर्वन्ति । मधुमाधवगन्धिनः नित्यमेव मधुमाधवाभ्यां चैत्रवैशाखाभ्यां वसन्तमासाभ्यां गन्धिनः तत्कृतपुष्पगन्धा इत्यर्थः ॥ १० ॥ मध्विति । मधुपुष्परजः

स०—चन्द्रपादपशोभितानिति पाठे—चन्द्रश्च पादपाश्च तैः । कर्पूरपादपैः कदलीविशेषैः । चन्द्रैरुदकैः पादपैश्चेति वा, तैरुपशोभितान् । "चन्द्रः सुधांशुकर्पूरकम्पिल्लस्वर्णवारिषु" इति विश्वः ॥ ३ ॥

पृक्तं मधुना मकरन्देन पुष्परजसा च संपृक्तम् ॥ ११–१४ ॥ दिव्येति । मन्दारकृतमूर्धजा मन्दारपुष्पकृतालङ्कारकेशीत्यर्थः । रतिप्राभृतं रत्युपदाभूतम्, रतिवर्धकमित्यर्थः ॥ १५ ॥ १६ ॥ कृतैरिति । षडर्तुकुसुमोद्भवैः षडृतुकुसुमोद्भवैरित्यर्थः । ऋकारस्य गुणश्छान्दसः । विशेषकैरलङ्कारैरित्यर्थः ॥ १७ ॥

गेयात् पुष्पसमृद्ध्या च शैत्याद्वायोर्गिरेर्गुणात् । प्रवृत्तायां रजन्यां च चन्द्रस्योदयनेन च ॥ १२ ॥ रावणः सुमहावीर्यः कामस्य वशमागतः । विनिश्वस्य विनिश्वस्य शशिनं समवैक्षत ॥ १३ ॥ एतस्मिन्नन्तरे तत्र दिव्याभरणभूषिता । सर्वाप्सरोवरा रम्भा दिव्यपुष्पविभूषिता ॥ १४ ॥ दिव्यचन्दनलिप्ताङ्गी मन्दारकृतमूर्धजा । दिव्योत्सवकृतारम्भा पूर्णचन्द्रनिभानना ॥ १५ ॥ चक्षुर्मनोहरं पीनं मेखलादामभूषितम् । समुद्वहन्ती जघनं रतिप्राभृतमुत्तमम् ॥ १६ ॥ कृतैर्विशेषकैरार्द्रैः षडर्तुकुसुमोद्भवैः ॥ १७ ॥ बभावन्यतमेव श्रीकान्तिद्युतिमतिह्रियाम् । नीलं सतोयमेघाभं वस्त्रं समवकुण्ठिता ॥ १८ ॥ यस्या वक्त्रं शशिनिभं भ्रुवौ चापनिभे शुभे । ऊरू करिकराकारौ करौ पल्लवकोमलौ । सैन्यमध्येन गच्छन्ती रावणेनोपवीक्षिता ॥ १९ ॥ तां समुत्थाय गच्छन्तीं कामबाणवशं गतः । करे गृहीत्वा लज्जन्तीं स्मयमानोऽभ्यभाषत ॥ २० ॥ क्व गच्छसि वरारोहे कां सिद्धिं भजसे स्वयम् । कस्याभ्युदयकालोऽयं यस्त्वां समुपभोक्ष्यते ॥ २१ ॥ त्वदाननरसस्याद्य पद्मोत्पलसुगन्धिनः । सुधामृतरसस्येव कोऽद्य तृप्तिं गमिष्यति ॥ २२ ॥ स्वर्णकुम्भनिभौ पीनौ शुभौ भीरु निरन्तरौ । कस्योरस्स्थलसंस्पर्शं दास्यतस्ते कुचाविमौ ॥ २३ ॥ सुवर्णचक्रप्रतिमं स्वर्णदामचितं पृथु । अध्यारोहति कस्तेऽद्य जघनं स्वर्गरूपिणम् ॥ २४ ॥

बभाविति । श्रीकान्तिद्युतिमतिह्रियां देवस्त्रीविशेषाणामन्यतमेव स्थिता । अभिसारिकात्वेन नीलवस्त्रमादाय समवकुण्ठिता प्रावृतवती ॥ १८–२० ॥ क्वेति । कां सिद्धिं कस्य भोगसिद्धिमित्यर्थः । सुधामृतरसस्येव अमृतादमृतरसस्येवेत्यर्थः । तृप्तियोगे षष्ठी ॥ २१–२३ ॥

स०–गेयात् गानात् । चन्द्रस्योदयनं प्रति इति पाठः । चन्द्रस्योदयनं प्रति तत्कालगेयात् गिरेर्गुणादिति वा । गातुं योग्यादित्यर्थः ॥ १२ ॥ "यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥" इत्युक्तेर्निरतिशयसुखं स्वर्गः । तस्य रूपमस्यास्तीति स्वर्गरूपी, तम् । पुँल्लिङ्गत्वमार्षम् । स्वर्गरूपिणीमिति पाठे–द्वितीया षष्ठ्यर्थे ॥ २४ ॥

धर्मत इति । धर्मतः धर्मानुष्ठानविषये ॥ २४ ॥ तस्येति । कृतसङ्केता कृतरतिसङ्केता, यथा तस्य भावो मां प्रति नान्यस्य तथा ममापि भावस्तं प्रति

मद्विशिष्टः पुमान् कोऽद्य शक्रो विष्णुरथाश्विनौ । मामतीत्य हि यं च त्वं यासि भीरु न शोभनम् ॥२५॥ विश्रम त्वं पृथुश्रोणि शिलातलमिदं शुभम् ॥ २६ ॥ त्रैलोक्ये यः प्रभुश्चैव मदन्यो नैव विद्यते ॥ २७ ॥ तदेवं प्राञ्जलिः प्रह्वो याचते त्वां दशाननः । भर्तुर्भर्ता विधाता च त्रैलोक्यस्य भजस्व माम् ॥२८॥ एवमुक्ताऽब्रवीद्रम्भा वेपमाना कृताञ्जलिः । प्रसीद नार्हसे वक्तुमीदृशं त्वं हि मे गुरुः ॥ २९ ॥ अन्येभ्यो हि त्वया रक्ष्या प्राप्नुयां धर्षणं यदि । तद्धर्मतः स्नुषा तेऽहं तत्त्वमेव ब्रवीमि ते ॥ ३० ॥ अथाब्रवीद्दशग्रीवश्चरणाधोमुखीं स्थिताम् । रोमहर्षमनुप्राप्तां दृष्टमात्रेण तां तदा ॥३१॥ सुतस्य यदि मे भार्या ततस्त्वं हि स्नुषा भवेः । बाढमित्येव सा रम्भा प्राह रावण मुत्तरम् ॥ ३२ ॥ धर्मतस्ते सुतस्याहं भार्या राक्षसपुङ्गव । पुत्रः प्रियतरः प्राणैर्भ्रातुर्वैश्रवणस्य ते । विख्यातस्त्रिषु लोकेषु नलकूबर इत्ययम् ॥३३॥ धर्मतो यो भवेद्विप्रः क्षत्रियो वीर्यतो भवेत् । क्रोधाद्यश्च भवेदग्निः क्षान्त्या च वसुधासमः ॥३४॥ तस्यास्मि कृतसङ्केता लोकपालसुतस्य वै । तमुद्दिश्य तु मे सर्वं विभूषणमिदं कृतम् ॥३५॥ तथा तस्य हि नान्यस्य भावो मां प्रति तिष्ठति ॥ ३६ ॥ तेन सत्येन मां राजन् मोक्तुमर्हस्यरिन्दम ॥३७॥ स हि तिष्ठति धर्मात्मा मां प्रतीक्षन् समुत्सुकः । तत्र विघ्नं सुतस्येह कर्तुं नार्हसि मुञ्च माम् ॥३८॥ सद्भिराचरितं मार्गं गच्छ राक्षसपुङ्गव । माननीयो मम त्वं हि पालनीया तथाऽस्मि ते ॥ ३९ ॥ एवमुक्तो दशग्रीवः प्रत्युवाच विनीतवत् । स्नुषाऽस्मि यदवोचस्त्वमेकपत्नीष्वयं क्रमः । देवलोकस्थितिरियं सुराणां शाश्वती मता ॥ ४० ॥

तिष्ठतीत्यर्थः । स्नुषाऽस्मि यदवोचः स्नुषाऽस्मीति यदवोच इत्यर्थः ॥ २५–४२ ॥

सा विमुक्तेति । सम्भोगानन्तरमिति शेषः । गजेन्द्राक्रीडमथिता गजेन्द्राक्रीडेन मथिता । करवेपितपल्लवा वेपितकरपल्लवा ॥ ४३–४७ ॥ एष इति ।

पतिरप्सरसां नास्ति न चैकस्त्रीपरिग्रहः ॥ ४१ ॥ एवमुक्त्वा स तां रक्षो निवेश्य च शिलातले । कामभोगाभिसंसक्तो मैथुनायोपचक्रमे ॥४२॥ सा विमुक्ता ततो रम्भा भ्रष्टमाल्यविभूषणा । गजेन्द्राक्रीडमथिता नदीवाकुलतां गता॥४३॥ लुलिताकुलकेशान्ता करवेपितपल्लवा । पवनेनावधूतेव लता कुसुमशालिनी ॥ ४४ ॥ सा वेपमाना लज्जन्ती भीता करकृताञ्जलिः । नलकूबरमासाद्य पादयोर्निपपात ह ॥ ४५ ॥ तदवस्थां च तां दृष्ट्वा महात्मा नलकूबरः । अब्रवीत् किमिदं भद्रे पादयोः पतिताऽसि मे ॥ ४६ ॥ सा वै निश्वसमाना तु वेपमाना कृताञ्जलिः । तस्मै सर्वं यथा तत्त्वमाख्यातुमुपचक्रमे ॥ ४७ ॥ एष देव दशग्रीवः प्राप्तो गन्तुं त्रिविष्टपम् । तेन सैन्यसहायेन निशेयं परिणामिता ॥ ४८ ॥ आयान्ती तेन दृष्टाऽस्मि त्वत्सकाशमरिन्दम। गृहीता तेन पृष्टाऽस्मि कस्य त्वमिति रक्षसा ॥४९॥ मया तु सर्वं यत् सत्यं तस्मै सर्वं निवेदितम् । काममोहाभिभूतात्मा नाश्रौषीत्तद्वचो मम ॥ ५० ॥ याच्यमानो मया देव स्नुषा तेऽहमिति प्रभो । तत् सर्वं पृष्ठतः कृत्वा बलात्तेनास्मि धर्षिता ॥ ५१ ॥ एवं त्वमपराधं मे क्षन्तुमर्हसि सुव्रत । न हि तुल्यबलं सौम्य स्त्रियाश्च पुरुषस्य च ॥ ५२ ॥ एतच्छ्रुत्वा तु संक्रुद्धस्तदा वैश्रवणात्मजः । धर्षणां तां परां श्रुत्वा ध्यानं सम्प्रविवेश ह ॥ ५३ ॥

परिणामिता यापितेत्यर्थः, इहेति शेषः ॥४८–५२॥ एतदिति । ध्यानं संप्रविवेशेति । एतदुक्तः सत्यो वा असत्यो वेति ज्ञातुमिति शेषः ॥ ५३ ॥ ५४॥

स०–पतिरप्सरसां नास्ति पाणिग्रहणपूर्वकं पतिर्नास्ति । ममास्तु तथा, तव तु मन्दोदर्युपर्येव वर्तनरूपो धर्मोऽस्ति । तं मा गमयेत्यत आह–नचेति । अहमेकस्त्रीपरिग्रहो नच, कामुकोऽहं कामिनी कुलटा त्वम्, अतो निर्निबन्धो युक्तोऽयं निर्बन्ध इति भावः । "अप्सरसां नियतपतिर्नास्ति । सुराणामप्येकाप्सरःपरिग्रहो भार्यात्वेन नास्तीत्यर्थः" इति तीर्थो नागोजिभट्टश्च प्रकृतानुपयुक्तान्वयवादिनौ । न चैकस्त्रीपरिग्रह इत्येतदर्थस्य पतिरित्यादिनैव लब्धेरधिक्यमपि न निभालयामासतुरिति ज्ञेयम्॥४१॥कामविजये पुंस्त्वं नास्तीति रक्ष इत्युक्तिः । इदं पुंस्त्वं शापौपयिकतया पापहेतुरिति विद्यमानमप्यविद्यमानप्रायमित्यभिप्रायेणैवमुक्तिरिति वा॥४२॥

गृहीत्वेति । उपस्पृश्य, चक्षुरादीन्द्रियमिति शेषः ॥ ५५ ॥ ५६ ॥ यदेति । सप्तधा सप्तप्रकारेण शकलीभविता ॥ ५७ ॥ ५८ ॥ ज्ञात्वेति । लोकगतिं

तस्य तत् कर्म विज्ञाय तदा वैश्रवणात्मजः । मुहूर्तात् क्रोधताम्राक्षस्तोयं जग्राह पाणिना ॥५४॥ गृहीत्वा सलिलं सर्वमुपस्पृश्य यथाविधि । उत्ससर्ज यथा शापं राक्षसेन्द्राय दारुणम् ॥ ५५ ॥ अकामा तेन यस्मात्त्वं बलाद्भद्रे प्रधर्षिता । तस्मात् स युवतीमन्यां नाकामामुपयास्यति ॥ ५६ ॥ यदा ह्यकामां कामार्तो धर्षयिष्यति योषितम् । मूर्धा तु सप्तधा तस्य शकलीभविता तदा ॥ ५७ ॥ तस्मिन्नुदाहृते शापे ज्वलिताग्निसमप्रभे । देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता । पितामहमुखाश्चैव सर्वे देवाः प्रहर्षिताः ॥ ५८ ॥ ज्ञात्वा लोकगतिं सर्वां तस्य मृत्युं च रक्षसः । ऋषयः पितरश्चैव प्रीतिमापुरनुत्तमाम् ॥५९॥ श्रुत्वा तु स दशग्रीवस्तं शापं रोमहर्षणम् । नारीषु मैथुने भावं नाकामास्वभ्यरोचयत् ॥६०॥ तेन नीताः स्त्रियः प्रीतिमापुः सर्वाः पतिव्रताः । नलकूबरनिर्मुक्तं शापं श्रुत्वा मनःप्रियम् ॥ ६१ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे षड्विंशः सर्गः ॥ २६ ॥

कैलासं लङ्घयित्वाऽथ दशग्रीवः स रावणः । आससाद महातेजा इन्द्रलोकं निशाचरः ॥ १ ॥ तस्य राक्षससैन्यस्य समन्तादुपयास्यतः । देवलोकं ययौ शब्दो मथ्यमानार्णवोपमः ॥ २ ॥ श्रुत्वा तु रावणं प्राप्तमिन्द्रश्चलित आसनात् । अब्रवीत्तत्र तान् देवान् सर्वानेव समागतान् ॥३॥ आदित्यान् वसून् रुद्रान् विश्वान् साध्यान् मरुद्गणान् । सज्जीभवत युद्धार्थं रावणस्य दुरात्मनः ॥ ४ ॥ एवमुक्तास्तु शक्रेण देवाः शक्रसमा युधि । सन्नह्य सुमहासत्त्वा युद्धश्रद्धासमन्विताः ॥५॥ स तु दीनः परित्रस्तो महेन्द्रो रावणं प्रति । विष्णोः समीपमागम्य वाक्यमेतदुवाच ह ॥६॥

लोकस्य तत्पीडामूलदुर्दशाम् । इदं च वचनं सीतादेव्या अक्षतत्वस्य सम्यग्गमबोधनार्थम् ॥ ५९–६१ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षड्विंशः सर्गः ॥ २६ ॥ कैलासमित्यादि ॥ १–८ ॥

तद्यथेति । त्वद्बलमाहृत्य यथा नमुच्यादयो हतास्तथा अस्यापि हननोपायं कुर्वित्यर्थः ॥ ९ ॥ नेति । देवेतिं संबुद्धिः ॥ १०–१२ ॥ तदिति । तत्तस्मात्कारणात् । यथा मे जयः स्यात् तथा तत्त्वमुपायतत्त्वम् आचक्ष्व । स्वयमेव युद्धचस्वेति वा ब्रूहीति शेषः ॥ १३–१५ ॥ सर्वथेति ।

विष्णो कथं करिष्यामि महावीर्यपराक्रमः । असौ हि बलवान् रक्षो युद्धार्थमभिवर्तते ॥ ७ ॥ वरप्रदानाद्बलवान्न खल्वन्येन हेतुना । तत्तु सत्यवचः कार्यं यदुक्तं पद्मयोनिना ॥ ८ ॥ तद्यथा नमुचिर्वृत्रो बलिर्नरकशम्बरौ । त्वद्बलं समवष्टभ्य मया दग्धास्तथा कुरु॥९॥ न ह्यन्यो देव देवेश त्वामृते मधुसूदन । गतिः परायणं नास्ति त्रैलोक्ये सचराचरे ॥१०॥ त्वं हि नारायणः श्रीमान् पद्मनाभः सनातनः । त्वयेमे स्थापिता लोकाः शक्रश्चाहं सुरेश्वरः ॥ ११ ॥ त्वया सृष्टमिदं सर्वं त्रैलोक्यं सचराचरम् । त्वामेव भगवन् सर्वे प्रविशन्ति युगक्षये ॥१२॥ तदाचक्ष्व यथा तत्त्वं देवदेव मम स्वयम् । अपि चक्रसहायस्त्वं योत्स्यसे रावणं प्रभो ॥ १३ ॥ एवमुक्तः स शक्रेण देवो नारायणः प्रभुः । अब्रवीन्न परित्रासः कार्यस्ते श्रूयतां च मे ॥१४॥ न तावदेष दुष्टात्मा शक्यो जेतुं सुरासुरैः । हन्तुं चापि समासाद्य वरदानेन दुर्जयः ॥१५॥ सर्वथा तु महत् कर्म करिष्यति बलोत्कटः । राक्षसः पुत्रसहितो दृष्टमेतन्निसर्गतः ॥१६॥ यत्तु मां त्वमभाषिष्ठ युद्धचस्वेति सुरेश्वर । नाहं तं प्रतियोत्स्यामि रावणं राक्षसं युधि ॥ १७ ॥ नाहत्वा समरे शत्रुं विष्णुः प्रतिनिवर्तते । दुर्लभश्चैव कामोऽद्य वरगुप्ताद्धि रावणात् ॥ १८ ॥ प्रतिजाने च देवेन्द्र त्वत्समीपे शतक्रतो । भविताऽस्मि यथाऽस्याहं रक्षसो मृत्युकारणम् ॥ १९ ॥ अहमेव निहन्ताऽस्मि रावणं सपुरस्सरम् । देवता नन्दयिष्यामि ज्ञात्वा कालमुपागतम् । एतत्ते कथितं तत्त्वं देवराज शचीपते ॥ २० ॥

महत्कर्म युद्धकर्म करिष्यन्तीत्येतत्सहजज्ञानशक्त्या दृष्टमवगतम् ॥ १६ ॥ यत्त्विति । नाहं प्रतियोत्स्यामि, इदानीमिति शेषः ॥ १७–२२ ॥

एतस्मिन्निति । प्रकृष्टं युद्धं यस्य तत् प्रयुद्धम् तस्य ॥ २३ ॥ त इति । हृष्टवत् हृष्टाः सन्तः ॥२४–२९॥ सुप्तघ्न इति । करवीरपुष्पवत् अक्षिणी यस्य

युद्धयस्व विगतत्रासः सर्वैः सार्धं महाबल ॥२१॥ ततो रुद्राः सहादित्या वसवो मरुतोऽश्विनौ । सन्नद्धा निर्ययुस्तूर्णं राक्षसानभितः पुरात् ॥ २२ ॥ एतस्मिन्नन्तरे नादः शुश्रुवे रजनीक्षये । तस्य रावणसैन्यस्य प्रयुद्धस्य समन्ततः ॥२३॥ ते प्रयुद्धा महावीर्या ह्यन्योन्यमभिवीक्ष्य वै । सङ्ग्राममेवाभिमुखा ह्यभ्यवर्तन्त हृष्टवत् ॥२४॥ ततो दैवत सैन्यानां संक्षोभः समजायत । तदक्षयं महासैन्यं दृष्ट्वा समरमूर्धनि ॥ २५ ॥ ततो युद्धं समभवद्देवदानवरक्षसाम् । घोरं तुमुलनिर्ह्रादं नानाप्रहरणोद्यतम् ॥२६॥ एतस्मिन्नन्तरे शूरा राक्षसा घोरदर्शनाः । युद्धार्थं समवर्तन्त सचिवा रावणस्य ते ॥ २७ ॥ मारीचश्च प्रहस्तश्च महापार्श्वमहोदरौ । अकम्पनो निकुम्भश्च शुकः सारण एव च ॥ २८ ॥ संह्रादो धूमकेतुश्च महादंष्ट्रो घटोदरः । जम्बुमाली महाह्रादो विरूपाक्षश्च राक्षसः ॥२९॥ सुप्तघ्नो यज्ञकोपश्च दुर्मुखो दूषणः खरः । त्रिशिराः करवीराक्षः सूर्यशत्रुश्च राक्षसः ॥ ३० ॥ महाकायोऽतिकायश्च देवान्तकनरान्तकौ । एतैः सर्वैः परिवृतो महावीर्यो महाबलः ॥ ३१ ॥ रावणस्यार्यकः सैन्यं सुमाली प्रविवेश ह । स दैवतगणान् सर्वान्नाना प्रहरणैः शितैः । व्यध्वंसयत् सुसंक्रुद्धो वायुर्जलधरानिव ॥ ३२ ॥ तद्दैवतबलं राम हन्यमानं निशाचरैः । प्रणुन्नं सर्वतो दिग्भ्यः सिंहनुन्ना मृगा इव ॥ ३३ ॥ एतस्मिन्नन्तरे शूरो वसूनामष्टमो वसुः । सावित्र इति विख्यातः प्रविवेश रणाजिरम् ॥ ३४ ॥ [ सैन्यैः परिवृतो हृष्टो नानाप्रहरणोद्यतैः । त्रासयन् शत्रुसैन्यानि सिंहः क्षुद्रमृगानिव ॥ ] तथाऽऽदित्यौ महावीर्यौ त्वष्टा पूषा च दंशितौ । निर्भयौ सह सैन्येन तदा प्राविशतां रणे ॥३५॥ ततो युद्धं समभवत् सुराणां सह राक्षसैः । क्रुद्धानां रक्षसां कीर्तिं समरेष्वनिवर्तिनाम् ॥ ३६ ॥

सः करवीराक्षः ॥ ३०–३५ ॥ तत इति । समरेष्वनिवर्तिनां रक्षसां कीर्तिं क्रुद्धानां सुराणां राक्षसैः सह युद्धमभवदिति योजना ॥ ३६–४४ ॥

सुमालिन इति । तस्य सुमालिनः ॥ ४५–५० ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥



ततस्ते राक्षसाः सर्वे विबुधान् समरे स्थितान् । नानाप्रहरणैर्घोरैर्जघ्नुः शतसहस्रशः ॥ ३७ ॥ देवाश्च राक्षसान् घोरान् महाबलपराक्रमान् । समरे विमलैः शस्त्रैरुपनिन्युर्यमक्षयम् ॥ ३८ ॥ एतस्मिन्नन्तरे राम सुमाली नाम राक्षसः । नानाप्रहरणैः क्रुद्धस्तत् सैन्यं सोऽभ्यवर्तत ॥ ३९ ॥ स दैवतबलं सर्वं नानाप्रहरणैः शितैः । व्यध्वंसयत संक्रुद्धो वायुर्जलधरं यथा ॥ ४० ॥ ते महाबाणवर्षैश्च शूलप्रासैः सुदारुणैः । हन्यमानाः सुराः सर्वे न व्यतिष्ठन्त संहताः ॥ ४१ ॥ ततो विद्राव्यमाणेषु दैवतेषु सुमालिना । वसूनामष्टमः क्रुद्धः सावित्रो वै व्यवस्थितः ॥ ४२ ॥ संवृतः स्वैरथानीकैः प्रहरन्तं निशाचरम् । विक्रमेण महातेजा वारयामास संयुगे ॥ ४३ ॥ ततस्तयोर्महायुद्धमभवद्रोमहर्षणम् ॥ ४४ ॥ सुमालिनो वसोश्चैव समरेष्वनिवर्तिनोः । ततस्तस्य महाबाणैर्वसुना सुमहात्मना । निहतः पन्नगरथः क्षणेन विनिपातितः ॥ ४५ ॥ हत्वा तु संयुगे तस्य रथं बाणशतैश्चितम् । गदां तस्य वधार्थाय वसुर्जग्राह पाणिना ॥ ४६ ॥ ततः प्रगृह्य दीप्ताग्रां कालदण्डोपमां गदाम् । तां मूर्ध्नि पातयामास सावित्रो वै सुमालिनः ॥ ४७ ॥ सा तस्योपरि चोल्काभा पतन्तीव बभौ गदा । इन्द्रप्रमुक्ता गर्जन्ती गिराविव महाशनिः ॥ ४८ ॥ तस्य नैवास्थि न शिरो न मांसं ददृशे तदा । गदया भस्मतां नीतं निहतस्य रणाजिरे ॥ ४९ ॥ तं दृष्ट्वा निहतं सङ्ख्ये राक्षसास्ते समन्ततः । व्यद्रवन् सहिताः सर्वे क्रोशमानाः परस्परम् । विद्राव्यमाणा वसुना राक्षसा नावतस्थिरे ॥ ५० ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे सप्तविंशः सर्गः ॥ २७ ॥

सुमालिनमित्यादि ॥ १ ॥ २ ॥ सुरथनेति । तां सेनां देवसेनाम् ॥ ३ ॥ ४ ॥ न बभूवेति । आविध्य आवेध्य प्राप्य वित्रस्तान् ॥ ५–८ ॥ तेषामिति ।

सुमालिनं हतं दृष्ट्वा वसुना भस्मसात् कृतम् । स्वसैन्यं विद्रुतं चापि लक्षयित्वाऽर्दितं सुरैः ॥१॥ ततः स बलवान् क्रुद्धो रावणस्य सुतस्तदा । निवर्त्य राक्षसान् सर्वान् मेघनादो व्यवस्थितः ॥ २ ॥ सुरथेनाग्निवर्णेन कामगेन महारथः । अभिदुद्राव सेनां तां वनान्यग्निरिव ज्वलन् ॥ ३ ॥ ततः प्रविशतस्तस्य विविधायुधधारिणः । विदुद्रुवुर्दिशः सर्वा दर्शनादेव देवताः ॥ ४ ॥ न बभूव तदा कश्चिद्युयुत्सोरस्य संमुखे । सर्वानाविध्य वित्रस्तांस्ततः शक्रोऽब्रवीत् सुरान् ॥ ५ ॥ न भेतव्यं न गन्तव्यं निवर्तध्वं रणे सुराः । एष गच्छति पुत्रो मे युद्धार्थमपराजितः ॥ ६ ॥ ततः शक्रसुतो देवो जयन्त इति विश्रुतः । रथेनाद्भुतकल्पेन सङ्ग्रामे सोऽभ्यवर्तत ॥ ७ ॥ ततस्ते त्रिदशाः सर्वे परिवार्य शचीसुतम् । रावणस्य सुतं युद्धे समासाद्य प्रजघ्निरे ॥ ८ ॥ तेषां युद्धं समभवत् सदृशं देवरक्षसाम् । महेन्द्रस्य च पुत्रस्य राक्षसेन्द्रसुतस्य च ॥ ९ ॥ ततो मातलिपुत्रे तु गोमुखे राक्षसात्मजः । सारथौ पातयामास शरान् कनकभूषणान् ॥ १० ॥ शचीसुतश्चापि तथा जयन्तस्तस्य सारथिम् । तं चापि रावणिः क्रुद्धः समन्तात् प्रत्यविध्यत ॥ ११ ॥ स हि क्रोधसमाविष्टो बली विस्फारितेक्षणः । रावणिः शक्रतनयं शरवर्षैरवाकिरत् ॥ १२ ॥ ततो नानाप्रहरणाञ्छितधारान् सहस्रशः । पातयामास संक्रुद्धः सुरसैन्येषु रावणिः ॥ १३ ॥ शतघ्नीमुसलप्रासगदाखड्गपरश्वधान् । महान्ति गिरिशृङ्गाणि पातयामास रावणिः ॥ १४ ॥ ततः प्रव्यथिता लोकाः सञ्जज्ञे च तमोऽभवत् । तस्य रावणपुत्रस्य शत्रुसैन्यानि निघ्नतः ॥ १५ ॥ ततस्तद्दैवतबलं समन्तात्तं शचीसुतम् । बहुप्रकारमस्वस्थमभवच्छरपीडितम् ॥ १६ ॥ नाभ्यजानन्त चान्योन्यं रक्षो वा देवताऽथवा । तत्र तत्र विपर्यस्तं समन्तात् परिधावति ॥ १७ ॥

तेषां सदृशम् बलवीर्यानुरूपमित्यर्थः ॥ ९ ॥ तत इति । गोमुख इति मातलिसुतनाम ॥ १०–१४ ॥ तत इति । तमः सञ्जज्ञे, रावणपुत्रस्य माययेति शेषः ॥ १५ ॥ १६ ॥ नाभ्यजानन्तेति । विपर्यस्तं विशीर्णम् ॥ १७ ॥ १८ ॥

एतस्मिन्निति। पुलोमा नाम, अस्तीति शेषः। तेन पुलोम्ना। येन सा शची, उत्पादितेति शेषः। तस्मात् शची पौलोमीति नामवती जातेत्यर्थः ॥१९॥२०॥



देवा देवान्निजघ्नुस्ते राक्षसा राक्षसांस्तथा। संमूढास्तमसाच्छन्ना व्यद्रवन्नपरे तदा ॥ १८॥ एतस्मिन्नन्तरे वीरः पुलोमा नाम वीर्यवान्। दैत्येन्द्रस्तेन संगृह्य शचीपुत्रोऽपवाहितः ॥ १९ ॥ संगृह्य तं तु दौहित्रं प्रविष्टः सागरं तदा। आर्यकः स हि तस्यासीत् पुलोमा येन सा शची ॥ २० ॥ ज्ञात्वा प्रणाशं तु तदा जयन्तस्याथ देवताः। अप्रहृष्टास्ततः सर्वा व्यथिताः सम्प्रदुद्रुवुः ॥ २१ ॥ रावणिस्त्वथ संक्रुद्धो बलैः परिवृतः स्वकैः। अभ्यधावत देवांस्तान् मुमोच च महास्वनम् ॥२२॥ दृष्ट्वा प्रणाशं पुत्रस्य दैवतेषु च विद्रुतम्। मातलिं चाह देवेशो रथः समुपनीयताम् ॥ २३ ॥ स तु दिव्यो महाभीमः सज्ज एव महारथः। उपस्थितो मातलिना वाह्यमानो महाजवः ॥ २४ ॥ ततो मेघा रथे तस्मिंस्तडित्वन्तो महाबलाः। अग्रतो वायुचपला नेदुः परमनिस्वनाः ॥ २५ ॥ नानावाद्यानि वाद्यन्त गन्धर्वाश्च समाहिताः। ननृतुश्चाप्सरस्सङ्घा निर्याते त्रिदशेश्वरे ॥ २६ ॥ रुद्रैर्वसुभिरादित्यैः साध्यैश्च समरुद्गणैः। वृतो नानाप्रहरणैर्निर्ययौ त्रिदशाधिपः ॥ २७ ॥ निर्गच्छतस्तु शक्रस्य परुषं पवनो ववौ। भास्करो निष्प्रभश्चासीन्महोल्काश्च प्रपेदिरे ॥ २८ ॥ एतस्मिन्नन्तरे वीरो दशग्रीवः प्रतापवान्। आरुरोह रथं दिव्यं निर्मितं विश्वकर्मणा ॥ २९ ॥ पन्नगैस्तु महाभोगैर्वेष्टितं रोमहर्षणैः। तेषां निश्वासवातेन प्रदीप्तमिव संयुगे ॥ ३० ॥ दैत्यैर्निशाचरैश्चैव सरथः परिवारितः। समराभिमुखो दैत्यो महेन्द्रं सोऽभ्यवर्तत ॥ ३१ ॥ पुत्रं तं वारयित्वा तु स्वयमेव व्यवस्थितः। सोऽपि युद्धाद्विनिष्क्रम्य रावणिः समुपाविशत् ॥ ३२ ॥



ज्ञात्वेति। प्रणाशमदर्शनम्। व्यथिताः अत एवाप्रहृष्टाः ॥ २१–२४ ॥ तत इति। वायुचपलाः वायुचलिताः ॥ २५–३२ ॥

कुम्भकर्णस्त्विति। नानाप्रहरणोद्यतः उद्यतनानाप्रहरणः। नाज्ञायत अयं मया योद्धव्य इत्येको लक्ष्यत्वेन न ज्ञायते। अपि तु केनापि अयुध्यत, येन केनापि प्राप्तेन सर्वेणाप्ययुद्ध्यतेत्यर्थः ॥ ३४॥३५ ॥ तत इति। प्रयुद्धः प्रकृष्टयुद्धः॥ ३६-३९ ॥ रथानित्यादिश्लोकद्वयमेकं वाक्यम्।

ततो युद्धं प्रवृत्तं तु सुराणां राक्षसैः सह। शस्त्राणि वर्षतां घोरं मेघानामिव संयुगे ॥ ३३ ॥ कुम्भकर्णस्तु दुष्टात्मा नानाप्रहरणोद्यतः। नाज्ञायत तदा युद्धे सह केनाप्ययुध्यत ॥३४॥ दन्तैर्भुजाभ्यां पद्भ्यां च शक्तितोमरसायकैः। येन केनैव संरब्धस्ताडयामास वै सुरान् ॥ ३५ ॥ ततो रुद्रैर्महाघोरैः सङ्गम्याथ निशाचरः। प्रयुद्धस्तैश्च सङ्ग्रामे क्षतः शस्त्रैर्निरन्तरम् ॥३६॥ बभौ शस्त्राचिततनुः कुम्भकर्णः क्षरन्नसृक्। विद्युत्स्तनितनिर्घोषो धारावानिव तोयदः ॥ ३७ ॥ ततस्तद्राक्षसं सैन्यं प्रयुद्धं समरुद्गणैः। रणे विद्रावितं सर्वं नानाप्रहरणैः शितैः ॥ ३८ ॥ केचिद्विनिहताः कृत्ताश्चेष्टन्ति स्म महीतले। वाहनेष्ववसक्ताश्च स्थिता एवापरे रणे ॥३९॥ रथान्नागान् खरानुष्ट्रान् पन्नगांस्तुरगान् रणे। शिंशुमारान् वराहांश्च पिशाचवदनांस्तथा ॥४०॥ तान् समालिङ्ग्य बाहुभ्यां विष्टब्धाः केचिदुच्छ्रिताः। देवैस्तु शस्त्रसंभिन्ना मम्रिरे च निशाचराः ॥ ४१ ॥ चित्रकर्म इवाभाति स तेषां रणसम्प्लवः। निहतानां प्रमत्तानां राक्षसानां महीतले ॥ ४२ ॥ शोणितोदकनिष्पन्दकङ्कगृध्रसमाकुला। प्रवृत्ता संयुगमुखे शस्त्रग्राहवती नदी ॥ ४३ ॥ एतस्मिन्नन्तरे क्रुद्धो दशग्रीवः प्रतापवान्। निरीक्ष्य तद्बलं कृत्स्नं दैवतैर्विनिपातितम् ॥ ४४ ॥ स तं प्रति विगाह्याशु प्रवृद्धं सैन्यसागरम्। त्रिदशान् समरे निघ्नन् शक्रमेवाभ्यवर्तत ॥ ४५ ॥ आगाच्छक्रो महच्चापं विस्फार्य सुमहास्वनम्। यस्य विस्फारघोषेण स्वनन्ति स्म दिशो दश ॥ ४६ ॥

विष्टब्धाः अवलम्ब्य स्थिताः। केचिदुच्छ्रिताश्च केवलं स्थिताश्च ॥ ४० ॥ ४१ ॥ चित्रेति। चित्रकर्म इवेति वाक्ये सन्धिरनित्यः। रणसंप्लवः

रणसङ्घर्षः । चित्रकर्मेवाश्चर्यंकर आभातीत्यर्थः ॥ ३३-४८ ॥ प्रयुध्यतोरिति । तमसा वृतम्, उभयशरवर्षैः सर्वदिक्छादनकृतेनेति शेषः ॥ ४९ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टाविंशः सर्गः ॥ २८ ॥

तद्विकृष्य महच्चापमिन्द्रो रावणमूर्धनि । निपातयामास शरान् पावकादित्यवर्चसः ॥ ४७ ॥ तथैव च महाबाहु
र्दशग्रीवो व्यवस्थितः । शक्रं कार्मुकविभ्रष्टैः शरवर्षैरवाकिरत् ॥ ४८ ॥ प्रयुध्यतोरथ तयोर्बाणवर्षैः समन्ततः ।
न ज्ञायते तदा किञ्चित् सर्वं हि तमसा वृतम् ॥४९॥ इत्यार्षे० श्रीमदुत्तरश्रीरामायणे अष्टाविंशः सर्गः ॥ २८ ॥
ततस्तमसि सञ्जाते सर्वे ते देवराक्षसाः । अयुध्यन्त बलोन्मत्ताः सूदयन्तः परस्परम् ॥ १ ॥ ततस्तु देवसैन्येन
राक्षसानां बृहद्बलम् । दशांशं स्थापितं युद्धे शेषं नीतं यमक्षयम् ॥ २ ॥ तस्मिंस्तु तामसे युद्धे सर्वे ते देवराक्षसाः ।
अन्योन्यं नाभ्यजानन्त युध्यमानाः परस्परम् ॥ ३ ॥ इन्द्रश्च रावणश्चैव रावणिश्च महाबलः । तस्मिंस्तमोजाल
वृते मोहमीयुर्न ते त्रयः ॥ ४ ॥ स तु दृष्ट्वा बलं सर्वं निहतं रावणः क्षणात् । क्रोधमभ्यागमत्तीव्रं महानादं च मुक्त
वान् ॥५॥ क्रोधात् सूतं च दुर्धर्षः स्यन्दनस्थमुवाच ह । परसैन्यस्य मध्येन यावदन्तो नयस्व माम् ॥६॥ अद्यैतां
स्त्रिदशान् सर्वान् विक्रमैः समरे स्वयम् । नानाशस्त्रैर्महाघोरैर्नयामि यमसादनम् ॥ ७ ॥ अहमिन्द्रं वधिष्यामि
धनदं वरुणं यमम् । त्रिदशान् विनिहत्याथ स्वयं स्थास्याम्यथोपरि । विषादो न च कर्तव्यः शीघ्रं वाहय मे रथम्
॥ ८ ॥ द्विः खलु त्वां ब्रवीम्यद्य यावदन्तो नयस्व माम् ॥ ९ ॥



॥ १-५ ॥ क्रोधादिति । यावदन्त इति । परसैन्यस्यान्तो यावत् तावन्मध्येन मां नयस्व ॥ ६ ॥ ७ ॥ अहमिति । अथोपरि सर्वेषामुपरिष्टादित्यर्थः ॥८॥
देवसेनामध्ये प्रवेशे किं भविष्यतीति विषण्णं सारथिं पुनश्चाह–द्विः खल्वित्यादि । यावदन्तो नयस्व मामिति द्विः द्विवारं त्वां ब्रवीमि खलु । तत्कथं न

नयसीत्यर्थः ॥ ९ ॥ अपरिमितदेवसेनायाः क आदिः कोऽन्त इत्यत्राह—अयमिति । वयं यत्र वर्तामहे स नन्दनोद्देशः । एष आदिः । एनमारभ्य उदय पर्वतो यत्र तत्र मामद्य नय । सोऽन्तो देवसेनायाः ॥१०—१५॥ यथेति । बलौ महाबलौ । निरुद्धे अहत्वैव कृतनिरोधे सति । एवमेतस्य निरोधोऽपीत्य

अयं स नन्दनोद्देशो यत्र वर्तामहे वयम् । नय मामद्य तत्र त्वमुदयो यत्र पर्वतः ॥ १० ॥ तस्य तद्वचनं श्रुत्वा तुरङ्गान् स मनोजवान् । आदिदेशाथ शत्रूणां मध्येनैव च सारथिः ॥ ११ ॥ तस्य तं निश्चयं ज्ञात्वा शक्रो देवेश्वर स्तदा । रथस्थः समरस्थांस्तान् देवान् वाक्यमथाब्रवीत् ॥ १२ ॥ सुराः शृणुत मद्वाक्यं यत्तावन्मम रोचते । जीवन्नेव दशग्रीवः साधु रक्षो निगृह्यताम् ॥ १३ ॥ एष ह्यतिबलः सैन्ये रथेन पवनौजसा । गमिष्यति प्रवृद्धोर्मिः समुद्र इव पर्वणि ॥ १४ ॥ न ह्येष हन्तुं शक्योऽद्य वरदानात् सुनिर्भयः । तद्ग्रहीष्यामहे रक्षो यत्ता भवत संयुगे ॥ १५ ॥ यथा बलौ निरुद्धे च त्रैलोक्यं भुज्यते मया । एवमेतस्य पापस्य निरोधो मम रोचते ॥ १६ ॥ ततोऽन्यं देशमास्थाय शक्रः सन्त्यज्य रावणम् । अयुध्यत महाराज राक्षसांस्त्रासयन् रणे ॥ १७ ॥ उत्तरेण दशग्रीवः प्रविवेशानिवर्तकः । दक्षिणेन तु पार्श्वेन प्रविवेश शतक्रतुः ॥ १८ ॥ ततः स योजनशतं प्रविष्टो राक्षसाधिपः । देवतानां बलं सर्वं शरवर्षैरवाकिरत् ॥१९॥ ततः शक्रो निरीक्ष्याथ प्रनष्टं तु स्वकं बलम् । न्यवर्तयदसम्भ्रान्तः समावृत्य दशाननम् ॥ २० ॥ एतस्मिन्नन्तरे नादो मुक्तो दानवराक्षसैः । हा हताः स्म इति ग्रस्तं दृष्ट्वा शक्रेण रावणम् ॥ २१ ॥ ततो रथं समास्थाय रावणिः क्रोधमूर्च्छितः । तत्सैन्यमतिसंक्रुद्धः प्रविवेश सुदारुणम् ॥२२॥

ब्रवीदिति पूर्वेणान्वयः ॥१६॥ ततोऽन्यमिति । रावणावस्थितदेशादित्यर्थः । रावणं संत्यज्येति, वज्रादिना प्रहर्तुमशक्यत्वात् पुरःस्थितिर्निष्प्रयोजनेति मत्वेति शेषः ॥ १७ ॥ उत्तरेणेति । देवसेनामिति शेषः ॥ १८ ॥ १९ ॥ तत इति । न्यवर्तयत् स्वसेनया दशाननं समावृत्य न्यवर्तयत् ॥ २० ॥ २१ ॥ तत इति । तत्सैन्यं देवसैन्यम् ॥ २२ ॥

तामिति । गोपतिना रुद्रेण ॥ २३–२८ ॥ स इति । स्वसैन्यमभितः स्वसेनायाः पार्श्वम् ॥ २९ ॥ ३० ॥ दृश्यत इति । विद्यावानपि असुरमाया संहार्यपि येनानेन रावणिना मायया नीयते । एतत्किञ्चिति चुक्रुशुः ॥ ३१–३३ ॥ स तमिति । युद्धे अदर्शनस्थोऽब्रवीदिति । सति दर्शने महेन्द्र



तां प्रविश्य महामायां प्राप्तां गोपतिना पुरा । प्रविवेश सुसंरब्धस्तत् सैन्यं समभिद्रवत् ॥ २३ ॥ स सर्वा देवतास्त्यक्त्वा शक्रमेवाभ्यधावत । महेन्द्रश्च महातेजा नापश्यच्च सुतं रिपोः ॥ २४ ॥ विमुक्तकवचस्तत्र वध्यमानोऽपि रावणिः । त्रिदशैः सुमहावीरैर्न चकार च किञ्चन ॥२५॥ स मातलिं समायान्तं ताडयित्वा शरोत्तमैः । महेन्द्रं बाणवर्षेण भूय एवाभ्यवाकिरत् ॥ २६ ॥ ततस्त्यक्त्वा रथं शक्रो विससर्ज च सारथिम् । ऐरावतं समारुह्य मृगयामास रावणिम् ॥ २७॥ स तत्र मायाबलवानदृश्योऽथान्तरिक्षगः । इन्द्रं मायापरिक्षिप्तं कृत्वा स प्राद्रवच्छरैः ॥२८॥स तं यदा परिश्रान्तमिन्द्रं जज्ञेऽथ रावणिः । तदैनं मायया बद्ध्वा स्वसैन्यमभितोऽनयत् ॥२९॥ तं तु दृष्ट्वा बलात्तेन नीयमानं महारणात् । महेन्द्रममराः सर्वे किन्नु स्यादित्यचिन्तयन् ॥ ३० ॥ दृश्यते न स मायावी शक्रजित् समितिञ्जयः । विद्यावानपि येनेन्द्रो मायया नीयते बलात् ॥३१॥ एतस्मिन्नन्तरे क्रुद्धाः सर्वे सुरगणास्तदा । रावणं विमुखीकृत्य शरवर्षैरवाकिरन् ॥ ३२ ॥ रावणस्तु समासाद्य आदित्यांश्च वसूंस्तथा । न शशाक स सङ्ग्रामे योद्धुं शत्रुभिरर्दितः ॥ ३३ ॥ स तं दृष्ट्वा परिम्लानं प्रहारैर्जर्जरीकृतम् । रावणिः पितरं युद्धेऽदर्शनस्थोऽब्रवीदिदम् ॥ ३४ ॥ आगच्छ तात गच्छामो रणकर्म निवर्तताम् । जितं नो विदितं तेऽस्तु स्वस्थो भव गतज्वरः ॥३५॥ अयं हि सुरसैन्यस्य त्रैलोक्यस्य च यः प्रभुः । स गृहीतो देवबलाद्भग्नदर्पाः सुराः कृताः ॥ ३६ ॥



एव नाशयेदिति भावः ॥ ३४ ॥ आगच्छेति । निवर्ततां निवृत्तमस्तु समाप्तमस्तु । कथं निवृत्तिरित्यत्राह—जितमिति । भावे निष्ठा ॥३५॥ अयं हीति ।

दैवबलात् देवसेनायाः ॥ ३६-३८ ॥ अथेति । रणविगतज्वरः विगतरणज्वर इत्यर्थः ॥ ३९ ॥ ४० ॥ नयेति । त्वरितमुपनयस्वेति पाठे निर्जिता इति पूर्वेणान्वयः ॥४१॥ अथेति । राक्षसान्विससर्जेति, स्वं स्वं निवेशं प्रतीति शेषः ॥४२॥ इति श्रीगोविन्द० उत्तरश्रीरामा० एकोनत्रिंशः सर्गः॥२९॥

यथेष्टं भुङ्क्ष्व लोकांस्त्रीन्निगृह्यारातिमोजसा । वृथा किं ते श्रमेणेह युद्धमद्य तु निष्फलम् ॥ ३७ ॥ ततस्ते दैवत गणा निवृत्ता रणकर्मणः । तच्छ्रुत्वा रावणेर्वाक्यं स्वस्थचेता बभूव ह ॥३८॥ अथ रणविगतज्वरः प्रभुर्विजयमवाप्य निशाचराधिपः । स्वभवनमभितो जगाम हृष्टः स्वसुतमवाप्य च वाक्यमब्रवीत् ॥ ३९ ॥ अतिबलसदृशैः पराक्रमै स्तैर्मम कुलमानविवर्धनं कृतम् । यदयमतुल्यबलस्त्वयाद्य वै त्रिदशपतिस्त्रिदशाश्च निर्जिताः ॥ ४० ॥ नय रथ मधिरोप्य वासवं नगरमितो व्रज सेनया वृतस्त्वम् । अहमपि तव गच्छतो द्रुतं सह सचिवैरनुयामि पृष्ठतः ॥४१॥ अथ स बलवृतः सवाहनस्त्रिदशपतिं परिगृह्य रावणिः । स्वभवनमभिगम्य वीर्यवान् कृतसमरान् विससर्ज राक्षसान् ॥ ४२ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे एकोनत्रिंशः सर्गः ॥ २९ ॥

जिते महेन्द्रेऽतिबले रावणस्य सुतेन वै । प्रजापतिं पुरस्कृत्य ययुर्लङ्कां सुरास्तदा ॥ १ ॥ तत्र रावणमासाद्य पुत्र भ्रातृभिरावृतम् । अब्रवीद्गगने तिष्ठन् सामपूर्वं प्रजापतिः ॥ २ ॥ वत्स रावण तुष्टोऽस्मि पुत्रस्य तव संयुगे । अहो ऽस्य विक्रमौदार्यं तव तुल्योऽधिकोऽपि वा ॥ ३ ॥ जितं हि भवता सर्वं त्रैलोक्यं स्वेन तेजसा । कृता प्रतिज्ञा सफला प्रीतोऽस्मि स्वसुतेन वै ॥ ४ ॥ अयं च पुत्रोऽतिबलस्तव रावण वीर्यवान् । जगतीन्द्रजिदित्येव परिख्यातो भविष्यति ॥ ५ ॥ बलवान् दुर्जयश्चैव भविष्यत्येव राक्षसः । यं समाश्रित्य ते राजन् स्थापितास्त्रिदशा वशे ॥ ६ ॥

जित इत्यादि ॥ १ ॥ २ ॥ वत्सेति । अहोऽस्येति सन्धिरार्षः ॥ ३ ॥ जितमिति । स्वसुतेन स्वसुतबलेन । त्वया कृता प्रतिज्ञा चतुरो दिक्पालान् जेष्यामीति कृता प्रतिज्ञा ॥ ४-१० ॥

तत इत्यादिसार्धमेकं वाक्यम् । सर्वामरत्वं सर्वस्मादपि निमित्तात्सर्वस्मिन्नपि काले मरणराहित्यं भुवि मनुष्यप्राणिनां नास्ति पक्ष्यादिभ्यो यन्मरणम् ॥ ११ ॥ १२ ॥ अथेति । पूर्वोक्तविवरणमेतत्, श्रूयतामिति । वा अथवेत्यर्थः । सर्वामरत्वाभावेऽपि शतक्रतुविमोक्षणे तन्निमित्तं मया सिद्धिः काङ्क्षिता सा श्रूयताम् ॥ १३ ॥ ममेति । नित्यशो नियमेन । हव्यैः पावकं संपूज्य शत्रुनिर्जयकाङ्क्षिणः सङ्ग्राममवतर्तुं प्रवेष्टुं वाञ्छतो ममाश्वयुक्तो रथो विभावसो

तन्मुच्यतां महाबाहो महेन्द्रः पाकशासनः । किं चास्य मोक्षणार्थाय प्रयच्छन्तु दिवौकसः ॥ ७ ॥ अथाब्रवीन्महा
तेजा इन्द्रजित् समितिञ्जयः । अमरत्वमहं देव वृणे यद्येष मुच्यते ॥ ८ ॥ चतुष्पदां खेचराणामन्येषां च महौ
जसाम् । वृक्षगुल्मक्षुपलतातृणोपलमहीभृताम् ॥ ९ ॥ सर्वेऽपि जन्तवोऽन्योन्यं भेतव्ये सति बिभ्यति । अतोऽत्र
लोके सर्वेषां सर्वस्माच्च भवेद्भयम् ॥ १० ॥ ततोऽब्रवीन्महातेजा मेघनादं प्रजापतिः । नास्ति सर्वामरत्वं हि कस्यचित्
प्राणिनो भुवि । चतुष्पदः पक्षिणश्च भूतानां वा महौजसाम् ॥ ११ ॥ श्रुत्वा पितामहेनोक्तमिन्द्रजित् प्रभुणाऽव्ययम्
॥ १२ ॥ अथाब्रवीत् स तत्रस्थं मेघनादो महाबलः । श्रूयतां वा भवेत् सिद्धिः शतक्रतुविमोक्षणे ॥ १३ ॥ ममेष्टं नित्यशो
हव्यैर्मन्त्रैः सम्पूज्य पावकम् । सङ्ग्राममवतर्तुं च शत्रुनिर्जयकांक्षिणः ॥ १४ ॥ अश्वयुक्तो रथो मह्यमुत्तिष्ठेत्तु विभा
वसोः । तत्स्थस्यामरता स्यान्मे एष मे निश्चयो वरः ॥ १५ ॥ तस्मिन् यद्यसमाप्ते च जप्यहोमे विभावसौ । युध्येयं
देव संग्रामे तदा मे स्याद्विनाशनम् ॥ १६ ॥ सर्वो हि तपसा देव वृणोत्यमरतां पुमान् । विक्रमेण मया त्वेतदमरत्वं
प्रवर्तितम् ॥ १७ ॥ एवमस्त्विति तं चाह वाक्यं देवः पितामहः । मुक्तश्चेन्द्रजिता शक्रो गताश्च त्रिदिवं सुराः ॥ १८ ॥

रग्नेः तत्कालमुत्तिष्ठेत तत्स्थस्य मे संग्रामे अमरता स्यादेव एष मे निश्चयो वरः ॥ १४ ॥ १५ ॥ तस्मिन्निति । तस्मिन् साङ्ग्रामिकयागे अपेक्षिते विभावसौ जप्यहोमे चासमाप्ते तु विघ्नवशादसमाप्ते तु यदि युध्येयं तदैव सङ्ग्राम एव विनाशनं भवत्विति ममेष्टमिति संबन्धः । प्रकारान्तरेण विनाशो मा भू दित्यर्थः ॥ १६ ॥ मयाऽत्रैतद्वरं लोकविलक्षणं प्राप्यत इति विस्मयते—सर्व इत्यादि । प्रवर्तितं प्रकीर्तितम्, दातव्यत्वेनेति शेषः ॥ १७ ॥ १८ ॥

एतस्मिन्निति । अष्टाम्बरद्युतिः अष्टाम्बराणां देवानां द्युतिर्यस्य स तथा ॥१९॥ तमिति । हे शतक्रतो । एवमिदानीं शोचन् भवान् पुरा सुदुष्करं किमु करोति स्म, कस्मात्कृतवानसीत्यर्थः ॥ २० ॥ एतादृशदुःखबीजं मया कृतमित्यत्राह—अमरेन्द्रेत्यादि । एकवर्णाः समाभाषाः एकरूपकान्तिस्वराः । एकरूपाः समानवयोवस्थाकालाः ॥२१॥ तासामिति । दर्शने सौन्दर्ये लक्षणे नयनाद्यवयवसौष्ठवे च तासां विशेषो नासीत् । ततोऽहमिति । एकाग्रमनाः

एतस्मिन्नन्तरे राम दीनो अष्टाम्बरद्युतिः । इन्द्रश्चिन्तापरीतात्मा ध्यानतत्परतां गतः ॥१९॥ तं तु दृष्ट्वा तथाभूतं प्राह देवः प्रजापतिः । शतक्रतो किमु पुरा करोति स्म सुदुष्करम् ॥ २० ॥ अमरेन्द्र मया बह्व्यः प्रजाः सृष्टास्तदा प्रभो । एकवर्णाः समाभाषा एकरूपाश्च सर्वशः ॥ २१ ॥ तासां नास्ति विशेषो हि दर्शने लक्षणेऽपि वा । ततो ऽहमेकाग्रमनास्ताः प्रजाः पर्यचिन्तयम् ॥ २२ ॥ सोऽहं तासां विशेषार्थं स्त्रियमेकां विनिर्ममे । यद्यत् प्रजानां प्रत्यङ्गं विशिष्टं तत्तदुद्धृतम् ॥२३॥ ततो मया रूपगुणैरहल्या स्त्री विनिर्मिता । हलं नामेह वैरूप्यं हल्यं तत्प्रभवं भवेत् ॥ २४ ॥ यस्मान्न विद्यते हल्यं तेनाहल्येति विश्रुता । अहल्येति मया शक्र तस्या नाम प्रवर्तितम् ॥२५॥ निर्मितायां च देवेन्द्र तस्यां नार्यां सुरर्षभ । भविष्यतीति कस्यैषा मम चिन्ता ततोऽभवत् ॥ २६ ॥ त्वं तु शक्र तदा नारीं जानीषे मनसा प्रभो । स्थानाधिकतया पत्नी ममैषेति पुरन्दर ॥ २७ ॥

सावधानस्सन् ताः प्रजा उद्दिश्य पर्यचिन्तयम्, तासां विशेषकरणप्रकारमचिन्तयं वा ॥ २२ ॥ सोऽहमिति । तासां विशेषार्थं किंचित्किंचिदङ्गवैकल्यप्रयुक्तपरस्परवैलक्षण्यसिद्ध्यर्थमेकां स्त्रियं विनिर्ममे निर्मितवानस्मि । यद्यदिति । प्रत्यङ्गम् अङ्गमङ्गम् यद्यद्विशिष्टं सारभूतं सौन्दर्यं तत्तदुद्धृतम् ॥२३॥ तत इति । रूपगुणैः प्रत्यङ्गमुद्धृतैः सौन्दर्यगुणैः । अहल्या नामाङ्गना काचिद्विनिर्मिता ॥ २४ ॥ २५ ॥ निर्मितायामिति । भविष्यतीति । कस्यैषा पत्नी भविष्यतीति चिन्ताऽभवत् । तत्तुल्यवराभावादिति भावः ॥ २६ ॥ त्वमिति । स्थानाधिकतया त्रैलोक्याधिपतित्वेन हेतुनेत्यर्थः । ममैषा पत्नीति

मनसा जानीषे । अस्मदनुमतिं विना तां प्रार्थितवानसीत्यर्थः ॥ २७ ॥ सेति । निर्यातिता पुनः प्रत्यर्पिता ॥ २८ ॥ तत इति । स्थैर्यं जितेन्द्रियत्वम् । तपसि तपोविषये । स्पर्शिता दत्ता ॥ २९–३१ ॥ तत इति । दशाभागविपर्ययं दशाभागोऽवस्थाविशेषः तस्य, विपर्ययं सहजसात्त्विकावस्थाविपर्ययमित्यर्थः ॥३२॥३३॥ अयं त्विति । अयं भावः मानुषेष्वपि शास्त्राधिकारिष्वपि भविष्यति । राज्ञस्तव दोषादिति भावः ॥३४॥ तत्रेति । तत्र जारभावे

सा मया न्यासभूता तु गौतमस्य महात्मनः । न्यस्ता बहूनि वर्षाणि तेन निर्यातिता च ह ॥ २८ ॥ ततस्तस्य परिज्ञाय मया स्थैर्यं महामुनेः । ज्ञात्वा तपसि सिद्धिं च पत्न्यर्थं स्पर्शिता तदा ॥ २९ ॥ [ स तया सह धर्मात्मा रमते स्म महामुनिः । आसन्निराशा देवास्तु गौतमे दत्तया तया ॥ ] संक्रुद्धस्त्वं हि धर्मात्मन् गत्वा तस्याश्रमं मुनेः । दृष्टवांश्च तदा तां स्त्रीं दीप्तामग्निशिखामिव ॥ ३० ॥ सा त्वया धर्षिता शक्र कामार्तेन समन्युना । दृष्टस्त्वं च तदा तेन ह्याश्रमे परमर्षिणा ॥ ३१ ॥ ततः क्रुद्धेन तेनासि शप्तः परमतेजसा । गतोऽसि येन देवेन्द्र दशाभागविपर्ययम् ॥ ३२ ॥ यस्मान्मे धर्षिता पत्नी त्वया वासव निर्भयम् । तस्मात्त्वं समरे राजञ्छत्रुहस्तं गमिष्यसि ॥ ३३ ॥ अयं तु भावो दुर्बुद्धे यस्त्वयेह प्रवर्तितः । मानुषेष्वपि लोकेषु भविष्यति न संशयः ॥ ३४ ॥ तत्रार्धं तस्य यः कर्ता त्वय्यर्धं निपतिष्यति । न च ते स्थावरं स्थानं भविष्यति न संशयः ॥ ३५ ॥ यश्च यश्च सुरेन्द्रः स्याद्ध्रुवः स न भविष्यति । एष शापो मया मुक्त इत्यसौ त्वां तदाऽब्रवीत् ॥ ३६ ॥ तां तु भार्यां स निर्भर्त्स्य सोऽब्रवीत् सुमहातपाः । दुर्विनीते विनिध्वंस ममाश्रमसमीपतः ॥ ३७ ॥

योऽधर्मः समुत्थास्यति तस्य यः कर्ता तत्र पुरुषे तस्याधर्मस्यार्धं निपतिष्यति त्वय्यर्धं निपतिष्यतीत्यर्थः । " राजा राष्ट्रकृतं पापम् " इति न्यायात् । स्थावरम् स्थिरम् । स्थानं पदम् ॥३५॥ न केवलं तवैवास्थिरत्वम्, अपि तु अन्यस्यापि जारस्येत्याह—यश्चेति । हे सुरेन्द्र ! य एवं जारः स्यात्सोऽपि ध्रुवो

स०—असान् विहायेयं वनिता मुनये दत्तेति मन्युसहितेन । समन्युनाऽपि शतबारविरचितयज्ञेनापि । धर्षिता, अनेन सत्कर्मकरणमपीश्वरकरुणां विना न कुशलोपलम्भकमिति सूचितं भवति ॥ ३१ ॥

मा भविष्यतीत्यर्थः ॥ ३६ ॥ ३७ ॥ रूपेति । समाश्रमसमीपतो यस्मात्त्वमनवस्थिता तस्मादेवैतत्पर्यन्तं त्वमेकैव रूपवतीति यत् स्थितं तन्न



रूपयौवनसम्पन्ना यस्मात्त्वमनवस्थिता। तस्माद्रूपवती लोके न त्वमेका भविष्यति ॥ ३८ ॥ रूपं च ते प्रजाः सर्वा गमिष्यन्ति न संशयः। यत्तदेकं समाश्रित्य विभ्रमोऽयमुपस्थितः ॥ ३९ ॥ तदाप्रभृति भूयिष्ठं प्रजा रूपसमन्विताः। सा तं प्रसादयामास महर्षिं गौतमं तदा ॥४०॥ अज्ञानाद्धर्षिता नाथ त्वद्रूपेण दिवौकसा। न कामकाराद्विप्रर्षे प्रसादं कर्तुमर्हसि ॥ ४१ ॥ अहल्यया त्वेवमुक्तः प्रत्युवाच स गौतमः। उत्पत्स्यति महातेजा इक्ष्वाकूणां महारथः ॥४२॥ रामो नाम श्रुतो लोके वनं चाप्युपयास्यति। ब्राह्मणार्थे महाबाहुर्विष्णुर्मानुषविग्रहः। तं द्रक्ष्यसि यदा भद्रे ततः पूता भविष्यसि॥ ४३ ॥ स हि पावयितुं शक्तस्त्वया यद्दुष्कृतं कृतम्। तस्यातिथ्यं च कृत्वा वै मत्समीपं गमिष्यसि॥ ४४ ॥ वत्स्यसि त्वं मया सार्धं तदा हि वरवर्णिनि। एवमुक्त्वा स विप्रर्षिराजगाम स्वमाश्रमम् ॥ ४५ ॥ तपश्चचार सुमहत् सा पत्नी ब्रह्मवादिनः। शापोत्सर्गाद्धि तस्येदं मुनेः सर्वमुपस्थितम्॥ ४६ ॥ तत् स्मर त्वं महाबाहो दुष्कृतं यत्त्वया कृतम्। तेन त्वं ग्रहणं शत्रोर्यातो नान्येन वासव ॥ ४७ ॥

भविष्यति ॥ ३८ ॥ रूपं चेति। तद्रूपं प्रसिद्धं तव सौन्दर्यं सर्वाः प्रजाः स्त्रियः गमिष्यन्तीति। विभ्रमः काममोहः ॥ ३९–४६ ॥ तदिति। नान्येनेति। ननु

स०—त्वमेका रूपवती न भविष्यसि। बह्व्यो रूपवत्यो भवन्ति भामिन्य इति भावः ॥ ३८ ॥ एवं लोकविलक्षणं रूपं समाश्रित्य विभ्रमः परसङ्गप्रापको मोहः उपस्थितः। 'विभ्रमः कामविकारः। उपस्थितः प्रवृत्तः, इन्द्रस्येति शेषः' इति नागोजिभट्टः। पत्नीशापप्रसक्तिसमयोयमिति परम्परोपयोगो न साक्षादिति किञ्चिदस्वारस्यं तत्र बोध्यम् ॥ ३९ ॥ त्वद्रूपेण 'मुनिवेषं समास्थाय' इति प्रागुदीरणात्। न कामकारात् तद्रमणेच्छायाः। यद्यपि 'देवराजकुतूहलात्। प्रहृष्टेनान्तरात्मना' इति वचनान्मनसानुमेने कामिनी महेन्द्रसङ्गमिति ज्ञायते, तथापि बहिस्तथाऽप्रदर्शनान्न कामकारादित्युक्तिरिति वा कदापि प्रमदा न भवेत्येतादृश शापोपयोगिकामकाराभावान्न कामकारादित्युक्तिरिति वेति ज्ञेयोऽविरोधः। ननु "अहल्याजारत्वाद्यपि दोषकृतोपि तेन बहुतरो लोप आसीदित्युत्कर्षमेव वक्ति-" बहुनरकफलो ह्यसौ तस्य न लोम च क्षीयते " इति श्रुत्यन्तराच्च " इति गीताभाष्योक्तेः कथं विधिनेन्द्रस्य पदभ्रंश इत्यारिकरपरिग्रहादिर्गौतमशापनिमित्त इति कथितमिति चेन्न। पारत्रिकानन्दह्रासादिर्यथा सोदरदारपरिग्रहे सुग्रीवादेः तथा नास्ति भाव्यानन्दह्रासादिरिति बहुनरकफलो ह्यसाविति वदतो भाष्यकृतोऽनुमत ऐहिकोऽनर्थ इत्यविरोध इति कात्र कथन्ता ॥ ४१ ॥

हेत्वन्तरेणेत्यर्थः॥४७॥४८॥पुत्रश्चेति । नीत इति । आर्यकेण मातामहेन । नीतः महोदधौ सन्निहितः सम्यङ् निहितः निक्षिप्तः॥४९–५१ ॥ आश्चर्यमिति । रामः अगस्त्यवचः श्रुत्वा आश्चर्यमित्यब्रवीत् । तथा लक्ष्मणः तथा वानरा राक्षसाश्चात्रुवन्नित्यनुपङ्गः ॥ ५२ ॥ विभीषणस्त्वित्यादि । हे राम ! अगस्त्यस्तु

शीघ्रं वै यज यज्ञं त्वं वैष्णवं सुसमाहितः । पावितस्तेन यज्ञेन यास्यसे त्रिदिवं ततः ॥ ४८ ॥ पुत्रश्च तव देवेन्द्र न विनष्टो महारणे । नीतः सन्निहितश्चैव आर्यकेण महोदधौ ॥ ४९ ॥ एतच्छ्रुत्वा महेन्द्रस्तु यज्ञमिष्ट्वा च वैष्णवम् । पुनस्त्रिदिवमाक्रामदन्वशासच्च देवराट् ॥ ५० ॥ एतदिन्द्रजितो नाम बलं यत्कीर्तितं मया । निर्जितस्तेन देवेन्द्रः प्राणिनोऽन्ये तु किं पुनः ॥ ५१ ॥ आश्चर्यमिति रामश्च लक्ष्मणश्चाब्रवीत्तदा । अगस्त्यवचनं श्रुत्वा वानरा राक्षसास्तदा ॥ ५२ ॥ विभीषणस्तु रामस्य पार्श्वस्थो वाक्यमब्रवीत् । आश्चर्यं स्मारितोऽस्म्यद्य यत्तद्दृष्टं पुरातनम् ॥५३॥ अगस्त्यं त्वब्रवीद्रामः सत्यमेतच्छ्रुतं च मे ॥५४॥ एवं राम समुद्भूतो रावणो लोककण्टकः । सपुत्रो येन संग्रामे जितः शक्रः सुरेश्वरः ॥५५॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे त्रिंशः सर्गः ॥ ३० ॥

ततो रामो महातेजा विस्मयात् पुनरेव हि । उवाच प्रणतो वाक्यमगस्त्यमृषिसत्तमम् ॥ १ ॥ भगवन् राक्षसः क्रूरो यदाप्रभृति मेदिनीम् । पर्यटत् किं तदा लोकाः शून्या आसन् द्विजोत्तम ॥ २ ॥ राजा वा राजमात्रो वा किं तदा नात्र कश्चन । धर्षणं येन न प्राप्तो रावणो राक्षसेश्वरः ॥ ३ ॥ उताहो हतवीर्यास्ते बभूवुः पृथिवीक्षितः । बहिष्कृता वरास्त्रैश्च बहवो निर्जिता नृपाः ॥ ४ ॥

आश्चर्यं यद्दृष्टं पुरातनमब्रवीत्तत्सर्वं मया दृष्टम्, इदानीम् अहं स्मारितोऽस्मि । विभीषणसंवादेन सर्वस्यागस्त्योक्तस्य सत्यत्वं दर्शितम् ॥ ५३–५५ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

ततो राम इत्यादि॥१॥२॥राजेति । येन कारणेन रावणो धर्षणं न प्राप्तः । तस्मात्तदा तत्काले राजा क्षत्रियो वा राजमात्रो वा अक्षत्रियोऽपि प्रभुर्वा कश्चन नासीत् ॥ ३ ॥ उताहो इति । पक्षान्तरं वर्तते । अथवा विद्यमाना एव पृथिवीक्षितः हतवीर्याः वीर्यरहिता आसन् । अथवा वीर्यवत्त्वेऽपि वरास्त्रैर्दिव्यास्त्रैः

वहिष्कृतास्सन्तः निर्जिता इत्युवाचेति पूर्वेणान्वयः ॥ ४ ॥ रावणपराजयस्मरणप्रीत्या प्रहसन्नित्युक्तम् । रामस्यामर्षो वर्तत इति मुनेर्मन्दहासो वा । ईश्वरम् अग्निप्रधानशौर्यादिक्षत्रगुणं रुद्रम् ॥ ५ ॥ ६ ॥ तत इति । वसुरेतसः अग्नेः सान्निध्यं प्राकाररूपेण नित्यसान्निध्यमित्यर्थः ॥ ७ ॥ तुल्य



राघवस्य वचः श्रुत्वा ह्यगस्त्यो भगवानृषिः । उवाच रामं प्रहसन् पितामह इवेश्वरम् ॥ ५ ॥ इत्येवं बाधमानस्तु पार्थिवान् पार्थिवर्षभ । चचार रावणो राम पृथिवीं पृथिवीपते ॥ ६ ॥ ततो माहिष्मतीं नाम पुरीं स्वर्गपुरीप्रभाम् । सम्प्राप्तो यत्र सान्निध्यं सदासीद्वसुरेतसः ॥ ७ ॥ तुल्य आसीन्नृपस्तस्य प्रभावाद्वसुरेतसः । अर्जुनो नाम यत्राग्निः शरकुण्डेशयः सदा ॥ ८ ॥ तमेव दिवसं सोऽथ हैहयाधिपतिर्बली । अर्जुनो नर्मदां रन्तुं गतः स्त्रीभिः सहेश्वरः ॥ ९ ॥ तमेव दिवसं सोऽथ रावणस्तत्र आगतः । रावणो राक्षसेन्द्रस्तु तस्यामात्यानपृच्छत ॥ १० ॥ क्वार्जुनो नृपतिः शीघ्रं सम्यगाख्यातुमर्हथ । रावणोऽहमनुप्राप्तो युद्धेप्सुर्नृवरेण ह । ममागमनमप्यग्रे युष्माभिः सन्निवेद्यताम् ॥ ११ ॥ इत्येवं रावणोक्तास्ते अमात्याः सुविपश्चितः । अब्रुवन् राक्षसपतिमसान्निध्यं महीपतेः ॥ १२ ॥ श्रुत्वा विश्रवसः पुत्रः पौराणामर्जुनं गतम् । अपसृत्यागतो विन्ध्यं हिमवत्सन्निभं गिरिम् ॥१३॥ स तमभ्रमिवाविष्टमुद्भ्रान्तमिव मेदिनीम् । अपश्यद्रावणो विन्ध्यमालिखन्तमिवाम्बरम् ॥ १४ ॥ सहस्रशिखरोपेतं सिंहाध्युषितकन्दरम् । प्रपातपतितैस्तोयैः साट्टहासमिवाम्बुधिम् ॥ १५ ॥ देवदानवगन्धर्वैः साप्सरोगणकिन्नरैः । स्वस्त्रीभिः क्रीडमानैश्च स्वर्गभूतं महोच्छ्रयम् ॥१६॥ नदीभिः स्यन्दमानाभिः स्फाटिकप्रतिमं जलम् । फणाभिश्चलजिह्वाभिरनन्तमिव विष्ठितम् ॥१७॥

इति । शरकुण्डेशयः शरास्तरणवत् कुण्डमग्निकुण्डं तत्र शेत इति तथा । पचाद्यच् । " शयवासवासिषु– " इत्यलुक् ॥ ८ ॥ तमेव दिवसमिति । यस्मिन्दिवसे रावणो गतस्तस्मिन्नेव दिवस इत्यर्थः । स्त्रीभी रन्तुं नर्मदां गत इत्यन्वयः । ईश्वरः राजा ॥ ९–११ ॥ इतीति । अब्रुवन् ब्रुवते स्म ॥ १२ ॥ श्रुत्वेति । विश्रवसः पुत्रो रावणः पौराणां, मुखादिति शेषः । अपसृत्य पुरान्निवृत्त्य ॥ १३ ॥ स इत्यादिसार्धपञ्चकम् । अभ्रमिव महामेघ

मिवाविष्टम् । मेदिनीमुद्भ्रान्तमिव उद्भिद्योद्गतमिव । सहस्रशिखरोपेतम् । प्रपातपतितैः तटात्पतितैः। "प्रपातस्तु तटः" इत्यमरः । स्फटिकप्रतिमं जलं स्यन्दमानाभिर्नदीभिर्हेतुभिर्जिह्वाभिरुपलक्षितमनन्तमिव विष्ठितम् । उत्क्रामन्तम् ऊर्ध्वं व्याप्नुवानम् । उल्कावन्तमिति पाठान्तरम् । चलोपलजलाम्

उत्क्रामन्तं दरीवन्तं हिमवत्सन्निभं गिरिम् । पश्यमानस्ततो विन्ध्यं रावणो नर्मदां ययौ ॥ १८ ॥ चलोपलजलां पुण्यां पश्चिमोदधिगामिनीम् ॥ १९ ॥ महिषैः सृमरैः सिंहैः शार्दूलर्क्षगजोत्तमैः । उष्णाभितप्तैस्तृषितैः संक्षोभित जलाशयाम् ॥२०॥ चक्रवाकैः सकारण्डैः सहंसजलकुक्कुटैः । सारसैश्च सदा मत्तैः सुकूजद्भिः समावृताम् ॥ २१ ॥ फुल्लद्रुमकृतोत्तंसां चक्रवाकयुगस्तनीम् । विस्तीर्णपुलिनश्रोणीं हंसावलिसुमेखलाम् ॥ २२ ॥ पुष्परेण्वनुलिप्ताङ्गीं जलफेनामलांशुकाम् । जलावगाहसंस्पर्शां फुल्लोत्पलशुभेक्षणाम् । पुष्पकादवरुह्याशु नर्मदां सरितां वराम् ॥ २३ ॥ इष्टामिव वरां नारीमवगाह्य दशाननः । स तस्याः पुलिने रम्ये नानामुनिनिषेविते ॥२४॥ उपोपविष्टैः सचिवैः सार्धं राक्षसपुङ्गवः । प्रख्याय नर्मदां चाथ गङ्गेयमिति रावणः ॥ २५ ॥ नर्मदादर्शजं हर्षमाप्तवान् राक्षसाधिपः । उवाच सचिवांस्तत्र सलीलं शुकसारणौ ॥२६॥ एष रश्मिसहस्रेण जगत् कृत्वेव काञ्चनम् । तीक्ष्णतापकरः सूर्यो नभसोऽर्धं समाश्रितः ॥ २७ ॥ मामासीनं विदित्वेह चन्द्रायति दिवाकरः ॥ २८ ॥ नर्मदाजलशीतश्च सुगन्धिः श्रमनाशनः । मद्भयादनिलोऽप्यत्र वात्येष सुसमाहितः ॥ २९ ॥ इयं चापि सरिच्छ्रेष्ठा नर्मदा नर्मवर्धिनी । नक्रमीनविहङ्गोर्मिः सभयेवाङ्गना स्थिता ॥३०॥ तद्भवन्तः क्षताः शस्त्रैर्नृपैरिन्द्रसमैर्युधि । चन्दनस्य रसेनेव रुधिरेण समुक्षिताः ॥३१॥



उपलेषु चलानि जलानि यस्यास्ताम् । चलोपलामलामिति पाठे—जलवेगेन चलोपलतया निर्मलाम् ॥१४–२१॥ अथ नर्मदायाः स्त्रीसाम्यमाह—फुल्लद्रुमेत्या दिना । नर्मदां गङ्गेयमिति प्रख्याय प्रशस्य । सलीलं सविलासम् ॥२२–२६॥ एष इत्यादिसार्धम् । काञ्चनं कृत्वा सुवर्णं कृत्वेत्यर्थः । चन्द्रायति चन्द्रव

दाचरति । नर्मवर्धिनी प्रीतिवर्धिनीत्यर्थः ॥ ३०-३१ ॥ त इति । अवगाहध्वं स्नानं कुरुत । शर्मदाम् सुखदाम् । महापद्मः पुण्डरीकाख्यः दिग्गजस्तन्मुखाः महागजा इव ॥ ३२ ॥ अहमिति । पुष्पोपहारं पुष्पबलिम् ॥३३-३९॥ तत्रेति । तत्र नर्मदापुलिने । प्राञ्जलिं रुद्रं प्रति कृताञ्जलिम् ॥४०॥ तदिति सार्धम् । तद्गतीवशमिति च्छान्दसो दीर्घः । मूर्तिमन्तः प्राण्याकाराः अचला इव स्थिताः राक्षसाः । तत्र तत्र नीयत इति प्रतिदिवसं देवपूजार्थं तैः



ते यूयमवगाहध्वं नर्मदां शर्मदां शुभाम् । महापद्ममुखा मत्ता गङ्गामिव महागजाः ॥ अस्यां स्नात्वा महानद्यां पाप्मानं विप्रमोक्ष्यथ ॥ ३२ ॥ अहमप्यद्य पुलिने शरदिन्दुसमप्रभे । पुष्पोपहारं शनकैः करिष्यामि कपर्दिनः ॥३३॥ रावणेनैवमुक्तास्तु प्रहस्तशुकसारणाः । समहोदरधूम्राक्षा नर्मदां विजगाहिरे ॥ ३४ ॥ राक्षसेन्द्रगजैस्तैस्तु क्षोभिता नर्मदा नदी । वामनाञ्जनपद्माद्यैर्गङ्गा इव महागजैः ॥ ३५ ॥ ततस्ते राक्षसाः स्नात्वा नर्मदायां महाबलाः । उत्तीर्य पुष्पाण्याजह्रुर्बल्यर्थं रावणस्य तु ॥३६॥ नर्मदापुलिने हृद्ये शुभ्राभ्रसदृशप्रभे । राक्षसैस्तु मुहूर्तेन कृतः पुष्पमयो गिरिः ॥ ३७ ॥ पुष्पेषूपहृतेष्वेवं रावणो राक्षसेश्वरः । अवतीर्णो नदीं स्नातुं गङ्गामिव महागजः ॥ ३८ ॥ तत्र स्नात्वा च विधिवज्जप्त्वा जप्यमनुत्तमम् । नर्मदासलिलात्तस्मादुत्ततार स रावणः ॥ ३९ ॥ तत्र क्लिन्नाम्बरं त्यक्त्वा शुक्लवस्त्रसमावृतम् । रावणं प्राञ्जलिं यान्तमन्वयुः सर्वराक्षसाः ॥ ४० ॥ तद्गतीवशमापन्ना मूर्तिमन्त इवाचलाः । यत्र यत्र च याति स्म रावणो राक्षसेश्वरः । जाम्बूनदमयं लिङ्गं तत्र तत्र स्म नीयते ॥ ४१ ॥ वालुकावेदिमध्ये तु तल्लिङ्गं स्थाप्य रावणः । अर्चयामास गन्धैश्च पुष्पैश्चामृतगन्धिभिः ॥ ४२ ॥ ततः सतामार्तिहरं परं वरं वरप्रदं चन्द्रमयूखभूषणम् । समर्चयित्वा स निशाचरो जगौ प्रसार्य हस्तान् प्रणनर्त चाग्रतः ॥ ४३ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे एकत्रिंशः सर्गः ॥ ३१ ॥

राक्षसैरिति शेषः । यदा कैलासे रावणः पीडितो विमुक्तः तदाप्रभृति तत्प्रीत्यर्थं रावणो लिङ्गपूजां करोति स्मेति ज्ञेयम् ॥४१ ॥ ४२॥ तत इति । जगाविति सामगानं कृतवानित्यर्थः । साम्नां सहस्रशाखापारगो रावण इति प्रसिद्धिः ॥ ४३ ॥ इति श्रीगोविन्द० उत्तरश्रीरामा० एकत्रिंशः सर्गः ॥ ३१ ॥

॥ १–४ ॥ कार्तवीर्येति । प्रतिस्रोतः प्रतिप्रवाहम् ॥ ५ ॥ समीनेति । कुशसंस्तरः कुशास्तरणम् ॥ ६ ॥ ७ ॥ रावण इत्यादिश्लोकद्वयम् । सागरोद्गार सन्निभं समुद्रपरीवाहसन्निभम् ! पूर्वामाशां प्रविश्य त्विति । पूर्वामाशां प्रविश्य पश्यत इत्यन्वयः । रावण इति शेषः ॥ ८ ॥ ९ ॥ तत इति । स्वभा

नर्मदापुलिने यत्र राक्षसेन्द्रः सुदारुणः । पुष्पोपहारं कुरुते तस्माद्देशाददूरतः ॥ १ ॥ अर्जुनो जयतां श्रेष्ठो माहिष्मत्याः पतिः प्रभुः । क्रीडते सह नारीभिर्नर्मदातोयमाश्रितः ॥ २ ॥ तासां मध्यगतो राजा रराज च तदाऽर्जुनः । करेणूनां सहस्रस्य मध्यस्थ इव कुञ्जरः ॥ ३ ॥ जिज्ञासुः स तु बाहूनां सहस्रस्योत्तमं बलम् । रुरोध नर्मदावेगं बाहुभिर्बहुभिर्वृतः ॥ ४ ॥ कार्तवीर्यभुजासक्तं तज्जलं प्राप्य निर्मलम् । कूलोपहारं कुर्वाणं प्रतिस्रोतः प्रधावति ॥५॥ समीननक्रमकरः सपुष्पकुशसंस्तरः । स नर्मदाम्भसो वेगः प्रावृट्काल इवाबभौ ॥ ६ ॥ स वेगः कार्तवीर्येण सम्प्रेषित इवाम्भसः । पुष्पोपहारं सकलं रावणस्य जहार ह ॥ ७ ॥ रावणोऽर्धसमाप्तं तमुत्सृज्य नियमं तदा । नर्मदां पश्यते कान्तां प्रतिकूलां यथा प्रियाम् ॥ ८ ॥ पश्चिमेन तु तं दृष्ट्वा सागरोद्गारसन्निभम् । वर्धन्तमम्भसो वेगं पूर्वामाशां प्रविश्य तु ॥ ९ ॥ ततोऽनुभ्रान्तशकुनां स्वभावोपरमे स्थिताम् । निर्विकाराङ्गनाभासामपश्यद्रावणो नदीम् ॥ १० ॥ सव्येतरकराङ्गुल्या सशब्दं च दशाननः । वेगप्रभवमन्वेष्टुं सोऽदिशच्छुकसारणौ ॥ ११ ॥ तौ तु रावण सन्दिष्टौ भ्रातरौ शुकसारणौ । व्योमान्तरगतौ वीरौ प्रस्थितौ पश्चिमामुखौ ॥ १२ ॥ अर्धयोजनमात्रं तु गत्वा तौ रजनीचरौ । पश्येतां पुरुषं तोये क्रीडन्तं सहयोषितम् ॥ १३ ॥ बृहत्सालप्रतीकाशं तोयव्याकुलमूर्धजम् । मदरक्तान्तनयनं मदव्याकुलतेजसम् ॥ १४ ॥

वस्य नदीस्वभावस्योपरमे अलंभावे स्थितां नदीमपश्यत्, नद्या एव स्वभावो निमित्तान्तरेण वेति जिज्ञासयेति शेषः ॥ १० ॥ सव्येतरेति । सव्येतर कराङ्गुल्या सशब्दं शीघ्रान्वेषणद्योतिहुंकारसहितं यथा तथा ॥ ११ ॥ १२ ॥ अर्धयोजनेति । पश्येताम् अपश्यतामित्यर्थः ॥ १३–१७ ॥

स०—सव्येतरकराङ्गुल्या सशब्दासो दशाननः इति पाठे—सव्येतरकरांगुल्या वामदक्षिणहस्तांगुलिभिः । अशब्दास्यः निःशब्दमुखः । नियमस्थत्वात् ॥ ११ ॥ ति०—व्योमान्तरगतौ आकाशमार्गगौ ॥ १२ ॥

बृहत्सालेति । रोधवत्तटवत् । अकारान्तत्वमार्षम् । क्रीडापयतीति पुगार्षः । क्रीडयतीत्यर्थः ॥१८॥१९॥ इत्येवमिति । निशाम्य दृष्ट्वा । अर्जुन इत्युक्त्वेति । अन्यस्यैवं सामर्थ्यं न संभवतीति युक्त्येति शेषः ॥२०॥२१॥ रावणस्योत्पातमाह—सकृदिति । सरक्तः रक्तवर्षसहितः । रावः शब्दः । सकृदेकवारमेव ।

नदीं बाहुसहस्रेण रुन्धन्तमरिमर्दनम् । गिरिं पादसहस्रेण रुन्धन्तमिव मेदिनीम् ॥ १५ ॥ बालानां वरनारीणां सहस्रेण समावृतम् । समदानां करेणूनां सहस्रेणेव कुञ्जरम् ॥ १६ ॥ तमद्भुततमं दृष्ट्वा राक्षसौ शुकसारणौ । सन्निवृत्तावुपागम्य रावणं तमथोचतुः ॥ १७॥ बृहत्सालप्रतीकाशः कोऽप्यसौ राक्षसेश्वर । नर्मदां रोधवद्रुद्ध्वा क्रीडापयति योषितः ॥ १८ ॥ तेन बाहुसहस्रेण सन्निरुद्धजला नदी । सागरोद्गारसङ्काशानुद्गारान्सृजते मुहुः ॥ १९ ॥ इत्येवं भाषमाणौ तौ निशाम्य शुकसारणौ । रावणोऽर्जुन इत्युक्त्वा प्रययौ युद्धलालसः ॥ २० ॥ अर्जुनाभिमुखे तस्मिन् रावणे राक्षसाधिपे। चण्डः प्रवाति पवनः सनादः सरजास्तदा ॥ २१ ॥ सकृदेव कृतो रावः सरक्तः प्रेषितो घनैः । महोदरमहापार्श्वधूम्राक्षशुकसारणैः ॥ २२ ॥ संवृतो राक्षसेन्द्रस्तु तत्रागाद्यत्र चार्जुनः । अदीर्घेणैव कालेन स तदा राक्षसो बली । तं नर्मदाह्रदं भीममाजगामाञ्जनप्रभः ॥ २३ ॥ स तत्र स्त्रीपरिवृतं वाशिताभिरिव द्विपम् । नरेन्द्रं पश्यते राजा राक्षसानां तदाऽर्जुनम् ॥ २४ ॥ स रोषाद्रक्तनयनो राक्षसेन्द्रो बलोद्धतः ॥ २५ ॥ इत्येवमर्जुनामात्यानाह गम्भीरया गिरा । अमात्याः क्षिप्रमाख्यात हैहयस्य नृपस्य वै ॥ २६ ॥ युद्धार्थी समनुप्राप्तो रावणो नाम राक्षसः । रावणस्य वचः श्रुत्वा मन्त्रिणोऽथार्जुनस्य ते । उत्तस्थुः सायुधास्ताश्च रावणं वाक्यमब्रुवन् ॥ २७ ॥ युद्धस्य कालो विज्ञेयः साधु भोः साधु रावण ॥ २८ ॥ यः क्षीबं स्त्रीवृतं चैव योद्धुमुत्सहसे नृपम् । स्त्रीसमक्षं कथं यत्तद्योद्धुमुत्सहसेऽर्जुनम् । वाशितामध्यगं मत्तं शार्दूल इव कुञ्जरम् ॥ २९ ॥

घनैः प्रेषितः कृतः । वर्षुकमेघानां सकृद्राव उत्पात इति भावः ॥ २२॥२३ ॥ स तत्रेति । वाशिताभिः करेणुभिः । "वाशिता स्त्रीकरेण्वोश्च" इत्यमरः । पश्यते पश्यति ॥ २४ ॥ २५ ॥ इतीति । इत्येवं वक्ष्यमाणप्रकारेण ॥ २६ ॥ २७ ॥ युद्धस्येत्यादि व्यङ्ग्योक्तिः ॥ २८ ॥ य इत्यादिसार्धद्वयम् ।

क्षीबं मत्तम् । उष्यताम्, इहेति शेषः ॥ २९–३३ ॥ इषुभिरिति । कर्पणमायुधविशेषः ॥ ३४ ॥ हैहयेति । वेगो युद्धवेगः ॥ ३५–३८ ॥ क्रोधेति । युगान्ते युगान्तकाले उत्थितो घोरः पावक इव ॥ ३९ ॥ ४० ॥ बाहुभिर्विक्षेपकरणं भ्रमणं यस्यास्ताम् । वेगः शैघ्र्यम् । आपपातैव न तु विलम्बित

क्षमस्वाद्य दशग्रीव चोष्यतां शर्वरी त्वया । युद्धे श्रद्धा च यद्यस्ति श्वस्तात समरेऽर्जुनम् ॥ ३० ॥ यद्यद्यास्ति मति योद्धुं युद्धतृष्णासमावृता । निहत्यास्मांस्ततो युद्धमर्जुनेनोपयास्यसि ॥ ३१ ॥ ततस्ते रावणामात्यैरमात्याः पार्थिवस्य तु । सूदिताश्चापि ते युद्धे भक्षिताश्च बुभुक्षितैः ॥ ३२ ॥ ततो हलहलाशब्दो नर्मदातीर आबभौ । अर्जुनस्यानुयातॄणां रावणस्य च मन्त्रिणाम् ॥ ३३ ॥ इषुभिस्तोमरैः शूलैस्त्रिशूलैर्वज्रकर्षणैः । सरावणानर्दयन्तः समन्तात् समभिद्रुताः ॥ ३४ ॥ हैहयाधिपयोधानां वेग आसीत् सुदारुणः । सनक्रमीनमकरसमुद्रस्येव निस्वनः ॥ ३५ ॥ रावणस्य तु तेऽमात्याः प्रहस्तशुकसारणाः । कार्तवीर्यबलं क्रुद्धा निर्दहन्ति स्म तेजसा ॥ ३६ ॥ अर्जुनाय तु तत् कर्म रावणस्य समन्त्रिणः । क्रीडमानाय कथितं पुरुषेर्द्वाररक्षिभिः ॥ ३७ ॥ श्रुत्वा न भेतव्यमिति स्त्रीजनं तं ततोऽर्जुनः । उत्ततार जलात्तस्माद्गङ्गातोयादिवाञ्जनः ॥ ३८ ॥ क्रोधदूषितनेत्रस्तु स ततोऽर्जुनपावकः । प्रजज्वाल महाघोरो युगान्त इव पावकः ॥ ३९ ॥ स तूर्णतरमादाय वरहेमाङ्गदो गदाम् । अभिदुद्राव रक्षांसि तमांसीव दिवाकरः ॥ ४० ॥ बाहुविक्षेपकरणां समुद्यम्य महागदाम् । गारुडं वेगमास्थाय चापपातैव सोऽर्जुनः ॥ ४१ ॥ तस्य मार्गं समारुध्य विन्ध्योऽर्कस्येव पर्वतः । स्थितो विन्ध्य इवाकम्प्यः प्रहस्तो मुसलायुधः ॥ ४२ ॥ ततोऽस्य मुसलं घोरं लोहबद्धं महोद्धतः । प्रहस्तः प्रेषयन् क्रुद्धो ररास च यथाऽम्बुदः ॥ ४३ ॥ तस्याग्रे मुसलस्याग्निरशोकापीडसन्निभः । प्रहस्तकरमुक्तस्य बभूव प्रदहन्निव ॥ ४४ ॥

वान् ॥ ४१ ॥ ४२ ॥ तत इति । अस्य प्रेषयन् अर्जुनस्य संहारार्थं क्षिपन् ॥ ४३ ॥ तस्येति । अशोकपुष्पकृतः आपीडः अशोकापीडः ॥ ४४ ॥

अथेति । वञ्चयामास प्रतिहतवानित्यर्थः । सगदः गदासहितः । अगदः अरोगः अप्रतिवन्ध इति यावत्, विक्रमो यस्येति विग्रहः ॥ ४५ ॥ तत इति । पञ्चवाहुशतैः उच्छ्रय उत्क्षेपो यस्याः सा ॥ ४६ ॥ यथेति । तथा शैल इव स्थितः निपपात ॥ ४७–५० ॥ सागरावित्यादिश्लोकत्रयम् । वाशितार्थं करे

अथायान्तं तु मुसलं कार्तवीर्यस्तदाऽर्जुनः । निपुणं वञ्चयामास सगदोऽगदविक्रमः ॥ ४५ ॥ ततस्तमभिदुद्राव प्रहस्तं हैहयाधिपः । भ्रामयानो गदां गुर्वीं पञ्चबाहुशतोच्छ्रयाम् ॥ ४६ ॥ तथाहतोऽतिवेगेन प्रहस्तो गदया तदा । निपपात हतः शैलो वज्रिवज्रहतो यथा ॥४७॥ प्रहस्तं पतितं दृष्ट्वा मारीचशुकसारणाः । समहोदरधूम्राक्षा ह्यपसृष्टा रणाजिरात् ॥ ४८ ॥ अपक्रान्तेष्वमात्येषु प्रहस्ते विनिपातिते । रावणोऽभ्यद्रवत्तूर्णमर्जुनं नृपसत्तमम् ॥ ४९ ॥ सहस्रबाहोस्तद्युद्धं विंशद्बाहोश्च दारुणम् । नृपराक्षसयोस्तत्र चारब्धं रोमहर्षणम् ॥ ५० ॥ सागराविव संरब्धौ चलन्मूलाविवाचलौ । तेजोयुक्ताविवादित्यौ प्रदहन्ताविवानलौ ॥ ५१ ॥ बलोद्धतौ यथा नागौ वाशितार्थे यथा वृषौ । मेघाविव विनर्दन्तौ सिंहाविव बलोत्कटौ ॥ ५२ ॥ रुद्रकालाविव क्रुद्धौ तदा तौ राक्षसार्जुनौ । परस्परं गदाभ्यां तौ ताडयामासतुर्भृशम् ॥ ५३ ॥ वज्रप्रहारानचला यथा घोरान् विषेहिरे । गदाप्रहारांस्तौ तत्र सेहाते नरराक्षसौ ॥ ५४ ॥ यथाऽशनिरवेभ्यस्तु जायतेऽथ प्रतिश्रुतिः । तथा तयोर्गदापोथैर्दिशः सर्वाः प्रतिश्रुताः ॥ ५५ ॥ अर्जुनस्य गदा सा तु पात्यमानाऽहितोरसि । काञ्चनाभं नभश्चक्रे विद्युत्सौदामिनी यथा ॥५६॥ तथैव रावणेनापि पात्यमाना मुहुर्मुहुः । अर्जुनोरसि निर्भाति गदोल्केव महागिरौ ॥५७॥ नार्जुनः खेदमायाति न राक्षसगणेश्वरः । इदमासीत्तयोर्युद्धं यथा पूर्वं बलीन्द्रयोः ॥ ५८ ॥

ण्वर्थे, युध्यन्ताविति शेषः ॥ ५१–५४ ॥ तथेति । प्रतिश्रुताः प्रतिश्रुतवन्त इत्यर्थः । मत्वर्थीयाजन्तः । गदापोथैः गदापातैः ॥ ५५ ॥ अर्जुनस्येति ।

विद्युद्विशेषेण द्योतमाना सौदामिनी नभ इव राक्षसोरः काञ्चनाभं स्वर्णवर्णं चकार ॥ ५६–६० ॥ वरदानेति । दुर्बलेव बलरहितेव । यथावेगं स्ववेगोचितम् । प्रहर्त्तुं स्वयं द्विधा भूत्वा क्षितावपतत् । तत्र हेतुः वरदानकृतत्राण इति ॥ ६१ ॥ स त्विति । निष्टनन् रटन् ॥ ६२–६४ ॥ बध्यमान

शृङ्गैरिव वृषा युध्यन् दन्ताग्रैरिव कुञ्जरौ । परस्परं तौ निघ्नन्तौ नरराक्षससत्तमौ ॥ ५९ ॥ ततोऽर्जुनेन क्रुद्धेन सर्वं प्राणेन सा गदा । स्तनयोरन्तरे मुक्ता रावणस्य महोरसि ॥ ६० ॥ वरदानकृतत्राणे सा गदा रावणोरसि । दुर्बलेव यथावेगं द्विधा भूत्वाऽपतत् क्षितौ ॥६१॥ स त्वर्जुनप्रमुक्तेन गदापातेन रावणः । अपासर्पद्धनुर्मात्रं निषसाद च निष्टनन् ॥ ६२ ॥ स विह्वलं तदाऽऽलक्ष्य दशग्रीवं ततोऽर्जुनः । सहसोत्पत्य जग्राह गरुत्मानिव पन्नगम् ॥६३॥ स तं बाहुसहस्रेण बलाद्गृह्य दशाननम् । बबन्ध बलवान् राजा बलिं नारायणो यथा ॥६४॥ बध्यमाने दशग्रीवे सिद्धचारणदेवताः । साध्वीति वादिनः पुष्पैः किरन्त्यर्जुनमूर्धनि ॥ ६५ ॥ व्याघ्रो मृगमिवादाय मृगराडिव दन्तिनम् । ननाद हैहयो राजा हर्षादम्बुदवन्मुहुः ॥६६॥ प्रहस्तस्तु समाश्वस्तो दृष्ट्वा बद्धं दशाननम् । सह तै राक्षसैः क्रुद्धश्चाभिदुद्राव पार्थिवम् ॥ ६७ ॥ नक्तञ्चराणां वेगस्तु तेषामापततां बभौ । उद्धृत आतपापाये पयोदानामिवाम्बुधौ ॥ ६८ ॥ मुञ्च मुञ्चेति भाषन्तस्तिष्ठ तिष्ठेति चासकृत् । मुसलानि सशूलानि सोत्ससर्ज तदाऽर्जुने ॥६९॥ अप्राप्तान्येव तान्याशु असम्भ्रान्तस्तदाऽर्जुनः । आयुधान्यमरारीणां जग्राहारिनिषूदनः ॥७०॥ ततस्तैरेव रक्षांसि दुर्धरैः प्रवरायुधैः । भित्त्वा विद्रावयामास वायुरम्बुधरानिव ॥ ७१ ॥ राक्षसांस्त्रासयित्वा तु कार्तवीर्योऽर्जुनस्तदा । रावणं गृह्य नगरं प्रविवेश सुहृद्वृतः ॥ ७२ ॥ स कीर्यमाणः कुसुमाक्षतोत्करैर्द्विजैः सपौरैः पुरुहूतसन्निभः । तदाऽर्जुनः सम्प्रविवेश तां पुरीं बलिं निगृह्येव सहस्रलोचनः ॥ ७३ ॥ इत्यार्षे० श्रीमदुत्तर० द्वात्रिंशः सर्गः ॥ ३२ ॥

इति । साध्वीति वादिनः इयं क्रिया साध्वीति वदन्तः ॥६५–७३॥ इति श्रीगोविन्दराज० मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्वात्रिंशः सर्गः॥३२॥

॥ १ ॥ तत इति । कम्प्यमानः अनुकम्पायुक्ततया संपद्यमानः । यद्वा पौत्रस्नेहात्कम्पित इत्यर्थः । अथवा महाधृतेरपि कम्पितं हृदयमित्यर्थः ॥ २ ॥ स इति । मनःसंपातविक्रमः मनोगतिः । वायुतुल्यगतिः वायुसमानवेगः ॥ ३ ॥ स इति । अमरावतिसङ्काशामित्यत्र " ङ्यापोः संज्ञाछन्दसोर्बहुलम् "

रावणग्रहणं तत्तु वायुग्रहणसन्निभम् । ततः पुलस्त्यः शुश्राव कथितं दिवि दैवतैः ॥१॥ ततः पुत्रकृतस्नेहात् कम्प्यमानो महाधृतिः । माहिष्मतीपतिं द्रष्टुमाजगाम महामुनिः ॥ २ ॥ स वायुमार्गमास्थाय वायुतुल्यगतिर्द्विजः । पुरीं माहिष्मतीं प्राप्तो मनस्सम्पातविक्रमः ॥३॥ सोऽमरावतिसङ्काशां हृष्टपुष्टजनाकुलाम् । प्रविवेश पुरीं ब्रह्मा इन्द्रस्येवामरावतीम् ॥ ४ ॥ पादचारमिवादित्यं निष्पतन्तं सुदुर्दशम् । ततस्ते प्रत्यभिज्ञाय चार्जुनाय निवेदयन् ॥ ५ ॥ पुलस्त्य इति विज्ञाय वचनाद्धैहयाधिपः । शिरस्यञ्जलिमाधाय प्रत्युद्गच्छत्तपस्विनम् ॥ ६ ॥ पुरोहितोऽस्य गृह्यार्घ्यं मधुपर्कं तथैव च । पुरस्तात् प्रययौ राज्ञः शक्रस्येव बृहस्पतिः ॥ ७ ॥ ततस्तमृषिमायान्तमुद्यन्तमिव भास्करम् । अर्जुनो दृश्य सम्भ्रान्तो ववन्देन्द्र इवेश्वरम् ॥ ८ ॥ स तस्य मधुपर्कं गां पाद्यमर्घ्यं निवेद्य च । पुलस्त्यमाह राजेन्द्रो हर्षगद्गदया गिरा ॥ ९ ॥ अद्यैवममरावत्या तुल्या माहिष्मती कृता । अद्याहं तु द्विजेन्द्र त्वां यस्मात् पश्यामि दुर्दशम् ॥ १० ॥ अद्य मे कुशलं देव अद्य मे कुशलं व्रतम् । अद्य मे सफलं जन्म अद्य मे सफलं तपः । यस्माद्देवगणैर्वन्द्यौ वन्देऽहं चरणौ तव ॥ ११ ॥ इदं राज्यमिमे पुत्रा इमे दारा इमे वयम् । ब्रह्मन् किं कुर्मि किं कार्यमाज्ञापयतु नो भवान् ॥ १२ ॥

इति ह्रस्वः ॥ ४ ॥ पादचारमिति । सुदुर्दशम्, दुर्दर्शमिति यावत् । प्रत्युद्गच्छत् प्रत्युदगच्छत । ईश्वरं ब्रह्माणम् ॥ ५–११ ॥ इदमिति । किं कुर्मि किं

करवाणि किं वा कार्यं मया ॥ १२ ॥ तामिति । शिवं कुशलम् । पुलस्त्योवाचेति सन्धिरार्षः ॥ १३–१५ ॥ पुत्रकस्येति । पुत्रकस्य मदीयबालकस्य । नाम विश्रावितं रावणजिदिति नाम त्वया त्रैलोक्ये विश्रावितम् । वत्सं बालम् ॥ १६ ॥ पुलस्त्येति । किंचिद्वचोपि नोवाच किंचन अविद्यमानं किंचिद्वचनं न किंचिदप्यवददित्यर्थः, अपि तु क्रियाकेवलमुत्तरमिति मुमोचेत्यर्थः । प्रहृष्टवत् ब्रह्मणा प्रार्थनीयोऽस्मीति सन्तोषयुक्तः सन् ॥ १७ ॥ स इति ।

तं धर्मेऽग्निषु पुत्रेषु शिवं पृष्ट्वा च पार्थिवम् । पुलस्त्योवाच राजानं हैहयानां तथाऽर्जुनम् ॥१३॥ नरेन्द्राम्बुजपत्राक्ष पूर्णचन्द्रनिभानन । अतुलं ते बलं येन दशग्रीवस्त्वया जितः ॥१४॥ भयाद्यस्योपतिष्ठेतां निष्पन्दौ सागरानिलौ । सोऽयं मृधे त्वया बद्धः पौत्रो मे रणदुर्जयः ॥ १५ ॥ पुत्रकस्य यशः पीतं नाम विश्रावितं त्वया । मद्वाक्याद्याच्यमानोऽद्य मुञ्च वत्सं दशाननम् ॥ १६ ॥ पुलस्त्याज्ञां प्रगृह्योचे न किंचन वचोऽर्जुनः । मुमोच वै पार्थिवेन्द्रो राक्षसेन्द्रं प्रहृष्टवत् ॥१७॥ स तं प्रमुच्य त्रिदशारिमर्जुनः प्रपूज्य दिव्याभरणस्रगम्बरैः । अहिंसकं सख्यमुपेत्य साग्निकं प्रणम्य तं ब्रह्मसुतं गृहं ययौ ॥ १८ ॥ पुलस्त्येनापि सन्त्यक्तो राक्षसेन्द्रः प्रतापवान् । परिष्वक्तः कृतातिथ्यो लज्जमानो विनिर्जितः ॥ १९ ॥ पितामहसुतश्चापि पुलस्त्यो मुनिपुङ्गवः । मोचयित्वा दशग्रीवं ब्रह्मलोकं जगाम ह ॥ २० ॥ एवं स रावणः प्राप्तः कार्तवीर्यात् प्रधर्षणम् । पुलस्त्यवचनाच्चापि पुनर्मुक्तो महाबलः ॥ २१ ॥ एवं बलिभ्यो बलिनः सन्ति राघवनन्दन । नावज्ञा हि परे कार्या य इच्छेत् प्रियमात्मनः ॥ २२ ॥ ततः स राजा पिशिताशनानां सहस्रबाहोरुपलभ्य मैत्रीम् । पुनर्नृपाणां कदनं चकार चचार सर्वां पृथिवीं च दर्पात् ॥ २३ ॥

इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

परस्परहिंसाप्रवृत्तिनिवारणसाधनभूतं साग्निकमग्निसाक्षिपूर्वकम् ॥ १८ ॥ पुलस्त्येनेति । अपिना अर्जुनेनापीति समुच्चीयते । कृतातिथ्य इति । 

स०—पुलस्त्योवाच सन्धिरार्षः । पुलस्त्योऽस्या अस्तीति पुलस्त्या जिह्वा । " मिथ्याशब्दोऽनिर्वचनीयं वदति " " जिह्वकतोऽच्युत विकर्षति " इत्यादिवत्करणे कर्तृत्वोपचारः ॥ १३ ॥ रावणदिग्विजयकाले जगच्छून्यं किमित्यस्योत्तरमाह—एवमिति ॥ तिल०—बलिभ्योऽपि बलिनः सन्ति । ईश्वरसृष्टेर्विचित्रत्वादित्याशयः । यः श्रेय इच्छेत्तेन परे परस्मिन् अवज्ञा न कार्या ॥ २२ ॥

अर्जुनेनेति शेषः ॥ १९-२३ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

॥ १ ॥ राक्षसमिति । युद्धे युद्धनिमित्तम् । ह्वयति आह्वयति स्म ॥ २ ॥ ३ ॥ तत इति । वानरामात्यः वालिनोऽमात्यः मन्त्री तार उवाच । तथा

अर्जुनेन विमुक्तस्तु रावणो राक्षसाधिपः । चचार पृथिवीं सर्वामनिर्विण्णस्तथा कृतः ॥ १ ॥ राक्षसं वा मनुष्यं वा शृणुते यं बलाधिकम् । रावणस्तं समासाद्य युद्धे ह्वयति दर्पितः ॥ २ ॥ ततः कदाचित् किष्किन्धां नगरीं वालिपालिताम् । गत्वा ह्वयति युद्धाय वालिनं हेममालिनम् ॥ ३ ॥ ततस्तु वानरामात्यस्तारस्तारापिता प्रभुः । उवाच वानरो वाक्यं युद्धप्रेप्सुमुपागतम् ॥ ४ ॥ राक्षसेन्द्र गतो वाली यस्ते प्रतिबलो भवेत् । कोऽन्यः प्रमुखतः स्थातुं तव शक्तः प्लवङ्गमः ॥ ५ ॥ चतुर्भ्योऽपि समुद्रेभ्यः सन्ध्यामन्वास्य रावण । इमं मुहूर्तमायाति वाली तिष्ठ मुहूर्तकम् ॥ ६ ॥ एतानस्थिचयान् पश्य य एते शङ्खपाण्डुराः । युद्धार्थिनामिमे राजन् वानराधिपतेजसा ॥ ७ ॥ यद्वाऽमृतरसः पीतस्त्वया रावण राक्षस । तदा वालिनमासाद्य तदन्तं तव जीवितम् ॥ ८ ॥ पश्येदानीं जगच्चित्रमिमं विश्रवसः सुत । इदं मुहूर्तं तिष्ठस्व दुर्लभं ते भविष्यति ॥ ९ ॥ अथवा त्वरसे मर्तुं गच्छ दक्षिणसागरम् । वालिनं द्रक्ष्यसे तत्र भूमिस्थमिव पावकम् ॥ १० ॥ स तु तारं विनिर्भर्त्स्य रावणो लोकरावणः । पुष्पकं तत् समारुह्य प्रययौ दक्षिणार्णवम् ॥ ११ ॥ तत्र हेमगिरिप्रख्यं तरुणार्कनिभाननम् । रावणो वालिनं दृष्ट्वा सन्ध्योपासनतत्परम् ॥ १२ ॥ पुष्पकादवरुह्याथ रावणोऽञ्जनसन्निभः । ग्रहीतुं वालिनं तूर्णं निःशब्दपदमाव्रजत् ॥ १३ ॥

तारापिता सुषेणश्चोवाच । प्रभुः युवराजः सुग्रीवश्चोवाच ॥ ४ ॥ राक्षसेन्द्रेति । ते तुभ्यम् । प्रतिबल इति, युद्धं दातुमिति शेषः ॥ ५ ॥ ६ ॥ एतानिति । युद्धार्थिनामिति । वानराधिपतेजसा मृतानां युद्धार्थिनामिमे । एवं त्वमपि भविष्यसीति भावः ॥ ७ ॥ यद्वेति । तदा तथापि वालिनमासाद्य तव जीवितं तदन्तं तत्समीपप्राप्तिपर्यन्तमित्यर्थः ॥ ८ ॥ पश्येति । जगच्चित्रं जगतः सर्वस्याप्याश्चर्यभूतं व्यापारमिदानीं पश्य । दुर्लभं, जीवितमिति शेषः ॥ ९ ॥ १० ॥ स त्विति । तारं तारादीन् । यद्वा पूर्वं तार एवोक्तवान् तस्य तारापितृत्वं सम्बन्धविशेषात् ॥ ११ ॥ १२ ॥ पुष्पकादिति । निःशब्दपदं निःशब्दचरण

विन्यासम् ॥ १३ ॥ यदृच्छयेति । पापाभिप्रायवान् बन्धनाभिप्रायवान् ॥ १४ ॥ शशमिति । सिंहो वा सिंह इव ॥ १५ ॥ जिघृक्षमाणमित्यारभ्य इत्येवमित्यन्तं वालिविचारः ॥ १६ ॥ द्रक्ष्यन्तीति । द्रक्ष्यन्ति, देवादय इति शेषः । ममाङ्कस्थं कक्षस्थमिति यावत् । गरुडस्येवेति । अङ्कस्थमित्यनु

यदृच्छया तदा दृष्टो वालिनापि स रावणः । पापाभिप्रायवान् दृष्ट्वा चकार न तु सम्भ्रमम् ॥ १४ ॥ शशमालक्ष्य सिंहो वा पन्नगं गरुडो यथा । न चिन्तयति तं वाली रावणं पापनिश्चयम् ॥ १५ ॥ जिघृक्षमाणमायान्तं रावणं पापचेतसम् । कक्षावलम्बिनं कृत्वा गमिष्ये त्रीन् महार्णवान् ॥ १६ ॥ द्रक्ष्यन्त्यरिं ममाङ्कस्थं स्रंसदूरुकराम्बरम् । लम्बमानं दशग्रीवं गरुडस्येव पन्नगम् ॥ १७ ॥ इत्येवं मतिमास्थाय वाली कर्णमुपाश्रितः । जपन् वै नैगमान् मन्त्रांस्तस्थौ पर्वतराडिव ॥ १८ ॥ तावन्योन्यं जिघृक्षन्तौ हरिराक्षसपार्थिवौ । प्रयत्नवन्तौ तत् कर्म ईहतुर्बलदर्पितौ ॥ १९ ॥ हस्तग्राहं तु तं मत्वा पादशब्देन रावणम् । पराङ्मुखोऽपि जग्राह वाली सर्पमिवाण्डजः ॥ २० ॥ ग्रहीतुकामं तं गृह्य रक्षसामीश्वरं हरिः । खमुत्पपात वेगेन कृत्वा कक्षावलम्बिनम् ॥ २१ ॥ तं चापीडयमानं तु वितुदन्तं नखैर्मुहुः । जहार रावणं वाली पवनस्तोयदं यथा ॥ २२ ॥ अथ ते राक्षसामात्या ह्रियमाणं दशाननम् । मुमोक्षयिषवो वालिं रवमाणा अभिद्रुताः ॥ २३ ॥ अन्वीयमानस्तैर्वाली भ्राजतेऽम्बरमध्यगः । अन्वीयमानो मेघौघैरम्बरस्थ इवांशुमान् ॥ २४ ॥ तेऽशक्नुवन्तः सम्प्राप्तुं वालिनं राक्षसोत्तमाः । तस्य बाहूरुवेगेन परिश्रान्ता व्यवस्थिताः ॥ २५ ॥ वालिमार्गादपाक्रामन् पर्वतेन्द्रा हि गच्छतः । किं पुनर्जीवितप्रेप्सुर्बिभ्रद्वै मांसशोणितम् ॥ २६ ॥

कर्षः ॥ १७ ॥ इतीति । कर्णमुपाश्रितः पादशब्दश्रवणार्थं कर्णमुपाश्रितमनाः । नैगमान् वैदिकान् । देवकुमारत्वान्मन्त्रवत्त्वम् ॥ १८ ॥ १९ ॥ हस्तेति । हस्तग्राहं हस्तैर्ग्रहणाभिप्रायवन्तम् । पादशब्देन सूक्ष्मपादशब्देन ॥ २० ॥ २१ ॥ तं चेति । आपीडयमानम् "णिचश्च" इत्यात्मनेपदम् ॥ २२–२४ ॥ तेऽशक्नुवन्त इति । अशक्नुवन्त इति पदम् ॥ २५ ॥ वालीति । हि यस्मात्पर्वतेन्द्रा अपि वालिमार्गादपाक्रामन् । मांसादिमान् जीवितप्रेप्सुः प्राणी

गच्छतस्तस्य मार्गादपाक्रामतीति किं पुनः । पर्वतेन्द्रा हीति च पाठः ॥ २६ ॥ अपक्षिगणेति । अपक्षिगणसंपातान् पक्षिगणैरप्यशक्यसंपातान् सागरान् क्रमशः, गच्छन्निति शेषः । संध्याकालं प्रातस्सन्ध्याकालदेवतारूपमवन्दत ॥२७॥ सभाज्यमान इति। सभाज्यमानः पूज्यमानः । पश्चिममित्यादि । दक्षिणे सन्ध्याङ्गशौचम् । पश्चिमे मन्त्रपूर्वकसंध्याङ्गस्नानम् । उत्तरे प्रोक्षणादिकम् । पूर्वेऽर्घ्यप्रदानादिकमिति । अन्यथा संध्याचतुष्टयाभावात् तदङ्ग

अपक्षिगणसम्पातान् वानरेन्द्रो महाजवः । क्रमशः सागरान् सर्वान् सन्ध्याकालमवन्दत ॥ २७॥ सभाज्यमानो भूतैस्तु खेचरैः खेचरोत्तमः । पश्चिमं सागरं वाली ह्याजगाम सरावणः ॥ २८ ॥ तस्मिन् सन्ध्यामुपासित्वा स्नात्वा जप्त्वा च वानरः । उत्तरं सागरं प्रायाद्वहमानो दशाननम् ॥ २९ ॥ बहुयोजनसाहस्रं वहमानो महाहरिः । वायुवच्च मनोवच्च जगाम सह शत्रुणा ॥ ३० ॥ उत्तरे सागरे सन्ध्यामुपासित्वा दशाननम् । वहमानोऽगमद्वाली पूर्वं वै स महोदधिम् ॥ ३१ ॥ तत्रापि सन्ध्यामन्वास्य वासविः स हरीश्वरः । किष्किन्धामभितो गृह्य रावणं पुनरागमत् ॥३२॥ चतुर्ष्वपि समुद्रेषु सन्ध्यामन्वास्य वानरः । रावणोद्वहनश्रान्तः किष्किन्धोपवनेऽपतत् ॥३३॥ रावणं तु मुमोचाथ स्वकक्षात् कपिसत्तमः । कुतस्त्वमिति चोवाच प्रहसन् रावणं मुहुः ॥३४॥ विस्मयं तु महद्गत्वा श्रमलोलनिरीक्षणः । राक्षसेन्द्रो हरीन्द्रं तमिदं वचनमब्रवीत् ॥ ३५ ॥ वानरेन्द्र महेन्द्राभ राक्षसेन्द्रोऽस्मि रावणः । युद्धेप्सुरिह सम्प्राप्तः स चाद्यासादितस्त्वया ॥ ३६ ॥ अहो बलमहो वीर्यमहो गाम्भीर्यमेव च । येनाहं पशुवद् गृह्य भ्रामितश्चतुरोऽर्णवान् ॥ ३७ ॥ एवमश्रान्तवद्वीर शीघ्रमेव महार्णवान् । मां चैवोद्वहमानस्तु कोऽन्यो वीरः क्रमिष्यति ॥ ३८ ॥ त्रयाणामेव भूतानां गतिरेषा प्लवङ्गम । मनोनिलसुपर्णानां तव चात्र न संशयः ॥ ३९ ॥

स्यापि तत्त्वेन व्यपदेशात् ॥ २८-३१ ॥ तत्रेति । वासवस्यापत्यं वासविः ॥ ३२ ॥ ३३ ॥ रावणमिति । प्रहसन्निति । मां जिघृक्षुः स्वयमेव दुरात्मा निगृहीत इति प्रहसन् ॥ ३४ ॥ ३५ ॥ वानरेन्द्रेति । त्वयाऽऽसादित इति । कक्षनिक्षेपं प्रापित इत्यर्थः ॥३६॥३७॥ एवमिति । अश्रान्तवत् अश्रान्तः

सन् । मां चैव महाद्रिसमानभारमित्यर्थः ॥ ३८ ॥ ३९ ॥ सोऽहमिति । तुभ्यं तवेत्यर्थः ॥४०–४३॥ स इति । सुग्रीव इवेति । भ्रातृभावेनेत्यर्थः । आगते रिति । सहेति शेषः ॥४४॥ एवमिति । भ्राता कृतः सोदरभावतया स्नेहीकृतः ॥४५॥४६॥ इति श्रीगोविन्द० उत्तरश्रीरामा० चतुस्त्रिंशः सर्गः ॥३४॥

सोऽहं दृष्टबलस्तुभ्यमिच्छामि हरिपुङ्गव । त्वया सह चिरं सख्यं सुस्निग्धं पावकाग्रतः ॥ ४० ॥ दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादनभोजनम् । सर्वमेवाविभक्तं नौ भविष्यति हरीश्वर ॥ ४१ ॥ ततः प्रज्वालयित्वाऽग्निं तावुभौ हरिराक्षसौ । भ्रातृत्वमुपसम्पन्नौ परिष्वज्य परस्परम् ॥ ४२ ॥ अन्योन्यं लम्बितकरौ ततस्तौ हरिराक्षसौ । किष्किन्धां विशतुर्हृष्टौ सिंहौ गिरिगुहामिव ॥ ४३ ॥ स तत्र मासमुषितः सुग्रीव इव रावणः । अमात्यैरागतैर्नीत स्त्रैलोक्योत्सादनार्थिभिः ॥४४॥ एवमेतत् पुरावृत्तं वालिना रावणः प्रभो । धर्षितश्च कृतश्चापि भ्राता पावकसन्निधौ ॥ ४५ ॥ बलमप्रतिमं राम वालिनोऽभवदुत्तमम् । सोऽपि त्वया विनिर्दग्धः शलभो वह्निना यथा ॥ ४६ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

अपृच्छत तदा रामो दक्षिणाशाश्रयं मुनिम् । प्राञ्जलिर्विनयोपेत इदमाह वचोऽर्थवत् ॥ १ ॥
अतुलं बलमेतद्वै वालिनो रावणस्य च । न त्वेताभ्यां हनुमता समं त्विति मतिर्मम ॥ २ ॥
शौर्यं दाक्ष्यं बलं धैर्यं प्राज्ञता नयसाधनम् । विक्रमश्च प्रभावश्च हनूमति कृतालयाः ॥ ३ ॥

अपृच्छतेत्यादि । अपृच्छतंत्यस्य विवरणम् इदं वचनमिति ॥ १ ॥ अतुलमिति । एताभ्यामिति । एतयोरित्यर्थः । " षष्ठ्यर्थे बहुलं छन्दसीति वक्तव्यम् " इति षष्ठ्यर्थे चतुर्थी ॥ २ ॥ शौर्यमिति । नयसाधनं नीतिकृत्यसंपादनम् ॥ ३–७ ॥

स०–दक्षिणाशाश्रयं विन्ध्यमुल्लङ्घ्य दक्षिणदिगाश्रयं मुनिमगस्त्यम् इदं वक्ष्यमाणम् अपृच्छत अपृच्छत् । आहवं चाप्यते पूज्यत इति अहवचो मनः । आहवशब्दोपपदात्पूजार्थाचायतेः " अन्येभ्योऽपि दृश्यते " इति कर्मणि डप्रत्यये रूपम् । हे इदम अस्यापत्यमिः कामः ! दमयतीति दमः, एः दमः इदमः तस्य सम्बुद्धिः । अर्थवदिति क्रियाविशेषणम् ॥ १ ॥

नेति । कालस्य यमस्य ॥ ८ ॥ एतस्येति । लङ्का प्राप्ता विभीषणाय देयत्वेन प्राप्तेत्यर्थः । लक्ष्मणः प्राप्त इति, ओषध्यानयनेनेति शेषः ॥ ९ ॥ हनूमानिति । हनूमान् यदि नो न स्यात्, सहायत्वेनेति शेषः ॥ १० ॥ किमर्थमिति । वीरुध इत्यकारान्तो वृक्षवाची ॥११॥ वाल्यवधहेतुं स्वयं रामः

दृष्ट्वैव सागरं वीक्ष्य सीदन्तीं कपिवाहिनीम् । समाश्वास्य महाबाहुर्योजनानां शतं प्लुतः ॥ ४ ॥ धर्षयित्वा पुरीं लङ्कां रावणान्तःपुरं तदा । दृष्ट्वा सम्भाषिता चापि सीता ह्याश्वासिता तथा ॥ ५ ॥ सेनाग्रगा मन्त्रिसुताः किङ्करा रावणात्मजः । एते हनुमता तत्र ह्येकेन विनिपातिताः ॥ ६ ॥ भूयो बन्धाद्विमुक्तेन भाषयित्वा दशाननम् । लङ्का भस्मीकृता येन पावकेनेव मेदिनी ॥ ७ ॥ न कालस्य न शक्रस्य न विष्णोर्वित्तपस्य च । कर्माणि तानि श्रूयन्ते यानि युद्धे हनूमतः ॥ ८ ॥ एतस्य बाहुवीर्येण लङ्का सीता च लक्ष्मणः । प्राप्ता मया जयश्चैव राज्यं मित्राणि बान्धवाः ॥९॥ हनूमान् यदि नो न स्याद्वानराधिपतेः सखा । प्रवृत्तिमपि को वेत्तुं जानक्याः शक्तिमान् भवेत् ॥१०॥ किमर्थं वाल्यनेनैव सुग्रीवप्रियकाम्यया । तदा वैरे समुत्पन्ने न दग्धो वीरुधो यथा ॥११॥ न हि वेदितवान् मन्ये हनूमानात्मनो बलम् । यद् दृष्टवान् जीवितेष्टं क्लिश्यन्तं वानराधिपम् ॥ १२ ॥ एतन्मे भगवन् सर्वं हनूमति महामतौ । विस्तरेण यथातत्त्वं कथयामरपूजित ॥१३॥ राघवस्य वचः श्रुत्वा हेतुयुक्तमृषिस्तदा । हनूमतः समक्षं तमिदं वचनमब्रवीत् ॥१४॥ सत्यमेतद्रघुश्रेष्ठ यद् ब्रवीषि हनूमतः । न बले विद्यते तुल्यो न गतौ न मतौ परः॥१५॥

ऽहति—न हीत्यादि ॥ १२ ॥ एतदिति । हनूमत्येतदिति हनूमद्विषये पृष्टमित्यर्थः ॥ १३ ॥ १४ ॥ सत्यमिति । यद्ब्रवीषि हे रघुश्रेष्ठ ! तदेतत् सत्यम् । स आत्मनो बलं न हि वेदेत्यर्थः ॥ १५ ॥

स०—पावकेन सङ्कर्षणमुखोद्भूतेन ॥ ७ ॥ हनूमतो यानि कर्माणि श्रूयन्ते तानि न कालस्य न शक्रस्य न वित्तपस्यापि श्रूयन्ते । कथम् ? विष्णोः, अनुग्रहादिति शेषः । नञो यथाश्रुतविष्णुपदेनैवान्वये वित्तपस्ये त्यत्र नञोऽनुवृत्तिप्रसङ्गः । तदङ्गीकारे चैकेनैव चारिताथ्यान्नञ्द्वयस्याधिक्यं स्यात् । " न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप " इत्यादिप्रमाणबाधश्च ॥ ८ ॥

तदेव दर्शयति—अमोघेत्यादि ॥ १६ ॥ बाल्य इति । बालतया आस्यत इति । बालतया बालभावेन, अजानतेवेत्यर्थः ॥ १७ ॥ यदीति । निशामय शृणु ॥ १८ ॥ सूर्येति । सूर्यदत्तवरस्वर्णः सूर्यदत्तवरेण स्वर्णरूपः । सुमेरुः सुवर्णमेरुः ॥ १९ ॥ तस्येति । परिश्रुता प्रसिद्धा- ॥ २० ॥



अमोघशापैः शप्तस्तु दत्तोऽस्य ऋषिभिः पुरा । न वेत्ता हि बलं येन बली सन्नरिमर्दनः ॥१६॥ बाल्येऽप्येतेन यत् कर्म कृतं राम महाबल । तन्न वर्णयितुं शक्यमिति बालतयाऽऽस्यते ॥ १७ ॥ यदि वाऽस्ति त्वभिप्रायस्तच्छ्रोतुं तव राघव । समाधाय मतिं राम निशामय वदाम्यहम् ॥ १८ ॥ सूर्यदत्तवरस्वर्णः सुमेरुर्नाम पर्वतः । यत्र राज्यं प्रशास्त्यस्य केसरी नाम वै पिता ॥ १९ ॥ तस्य भार्या बभूवैषा ह्यञ्जनेति परिश्रुता । जनयामास तस्यां वै वायुरात्मजमुत्तमम् ॥ २० ॥ शालिशूकनिभाभासं प्रासूतामुं तदाऽञ्जना । फलान्याहर्तुकामा वै निष्क्रान्ता गहनेचरा ॥ २१ ॥ एष मातुर्वियोगाच्च क्षुधया च भृशार्दितः । रुरोद शिशुरत्यर्थं शिशुः शरवणे यथा ॥ २२ ॥ तदोद्यन्तं विवस्वन्तं जपापुष्पोत्करोपमम् । ददर्श फललोभाच्च ह्युत्पपात रविं प्रति ॥ २३ ॥ बालार्काभिमुखो बालो बालार्क इव मूर्तिमान् । ग्रहीतुकामो बालार्कं प्लवतेऽम्बरमध्यगः ॥ २४ ॥ एतस्मिन् प्लवमाने तु शिशुभावे हनूमति । देवदानवयक्षाणां विस्मयः सुमहानभूत् ॥ २५ ॥ नाप्येवं वेगवान् वायुर्गरुडो वा मनस्तथा । यथाऽयं वायुपुत्रस्तु क्रमतेऽम्बरमुत्तमम् ॥ २६ ॥ यदि तावच्छिशोरस्य त्वीदृशो गतिविक्रमः । यौवनं बलमासाद्य कथं वेगो भविष्यति ॥ २७ ॥ तमनुप्लवते वायुः प्लवन्तं पुत्रमात्मनः । सूर्यदाहभयाद्रक्षंस्तुषारचयशीतलः ॥ २८ ॥ बहुयोजनसाहस्रं क्रमत्येष गतोऽम्बरम् । पितुर्बलाच्च बाल्याच्च भास्कराभ्याशमागतः ॥ २९ ॥

शालिशूकेति । शालिशूकनिभाभासं शाल्यग्रवत्पिङ्गलाभासम् । "काञ्चनाद्रिकमनीयविग्रहम्" इत्युक्तेः । प्रासूत प्रसूतवती ॥२१॥ एष इति । शरवणे

शिशुः स्कन्दः ॥२२–२९॥ शिशुरिति । दोषज्ञः विद्वान् स न भवतीत्यदोषज्ञः । "दोषज्ञौ वैद्यविद्वांसौ" इत्यमरः ॥ ३०॥३१ ॥ अनेनेति । स राहुः

शिशुरेष त्वदोषज्ञ इति मत्वा दिनेश्वरः । कार्यं चात्र समायत्तमित्येवं न ददाह सः ॥ ३० ॥ यमेव दिवसं ह्येष ग्रहीतुं भास्करं प्लुतः । तमेव दिवसं राहुर्जिघृक्षति दिवाकरम् ॥ ३१ ॥ अनेन स परामृष्टो राम सूर्यरथोपरि । अपक्रान्तस्ततस्त्रस्तो राहुश्चन्द्रार्कमर्दनः ॥३२॥ स इन्द्रभवनं गत्वा सरोषः सिंहिकासुतः । अब्रवीद्भ्रुकुटिं कृत्वा देवं देवगणैर्वृतम् ॥ ३३ ॥ बुभुक्षापनयं दत्त्वा चन्द्रार्कौ मम वासव । किमिदं तत्त्वया दत्तमन्यस्य बलवृत्रहन् ॥ ३४ ॥ अद्याहं पर्वकाले तु जिघृक्षुः सूर्यमागतः । अथान्यो राहुरासाद्य जग्राह सहसा रविम् ॥ ३५ ॥ स राहो र्वचनं श्रुत्वा वासवः सम्भ्रमान्वितः । उत्पपातासनं हित्वा चोद्वहन् काञ्चनीं स्रजम् ॥ ३६ ॥ ततः कैलासकूटाभं चतुर्दन्तं मदस्रवम् । शृङ्गारधारिणं प्रांशुं स्वर्णघण्टाट्टहासिनम् ॥ ३७ ॥ इन्द्रः करीन्द्रमारुह्य राहुं कृत्वा पुरस्सरम् । प्रायाद्यत्राभवत् सूर्यः सहानेन हनूमता ॥ ३८ ॥ अथातिरभसेनागाद्राहुरुत्सृज्य वासवम् । अनेन च स वै दृष्टः प्रधावन् शैलकूटवत् ॥ ३९ ॥ ततः सूर्यं समुत्सृज्य राहुं फलमवेक्ष्य च । उत्पपात पुनर्व्योम ग्रहीतुं सिंहिकासुतम् ॥ ४० ॥ उत्सृज्यार्कमिमं राम प्रधावन्तं प्लवङ्गमम् । अवेक्ष्यैवं परावृत्य मुखशेषः पराङ्मुखः ॥ ४१ ॥ इन्द्रमाशंसमानस्तु त्रातारं सिंहिकासुतः । इन्द्र इन्द्रेति सन्त्रासान्मुहुर्मुहुरभाषत ॥ ४२ ॥ राहोर्विक्रोशमानस्य प्रागेवालक्षितं स्वरम् । श्रुत्वेन्द्रोवाच मा भैषीरहमेनं निषूदये ॥ ४३ ॥

परामृष्टः स्पृष्टः ॥२२–२९॥ तत इति । महाशैलकूटवत् बृहत्तरफलमवेक्ष्येत्यर्थः ॥४०॥ उत्सृज्येति । मुखशेष इति राहुस्वरूपकथनम् ॥ ४१–४९॥

स०—अदोषज्ञः सूर्यसमीपगमने मां दहेदिति दोषानभिज्ञः ॥ ३० ॥ अनेन हनुमता । पुरा सूर्यदर्शनात्पूर्वमेव । दृष्टोऽभूत्, पुनश्च राहुः त्रस्तस्सन् अपक्रान्तोऽभूत् ॥ ३२ ॥ तिल०—हे वासव ! चन्द्रार्कौ मम यथाकालं बुभुक्षापनयं बुभुक्षा अपनीयतेऽनेनेति व्युत्पत्त्या अन्नं दत्त्वा तदन्नम् ॥ ३४ ॥

एवमिति । हस्तान्तात् हस्ताग्रात् । हस्तान्त इति समीप इत्यर्थः ॥४६–४८॥ प्रचारमिति । प्रचारं श्वासं देहियात्राहेतुभूतम् । गृह्य संक्षिप्य । अन्तर्गतः सर्वदेहान्तर्गतः ॥ ४९ ॥ विण्मूत्रेति । रुरोधेति । निरुद्धस्वगतिप्रचारमकरोत् । एवंविधार्थस्य देवानां शक्यत्वे दृष्टान्तः यथा वर्षाणीति ॥५०–५३॥

ऐरावतं ततो दृष्ट्वा महत्तदिदमित्यपि । फलं मत्वा हस्तिराजमभिदुद्राव मारुतिः ॥ ४४ ॥ तथाऽस्य धावतो रूप मैरावतजिघृक्षया । मुहूर्तमभवद्घोरमिन्द्राग्न्योरिव भास्वरम् ॥ ४५ ॥ एवमाधावमानं तु नातिक्रुद्धः शचीपतिः । हस्तान्तादतिमुक्तेन कुलिशेनाभ्यताडयत् ॥ ४६ ॥ ततो गिरौ पपातैष इन्द्रवज्राभिताडितः । पतमानस्य चैतस्य वामो हनुरभज्यत ॥ ४७ ॥ तस्मिंस्तु पतिते बाले वज्रताडनविह्वले । चुक्रोधेन्द्राय पवनः प्रजानामहिताय सः ॥ ४८ ॥ प्रचारं स तु संगृह्य प्रजास्वन्तर्गतः प्रभुः । गुहां प्रविष्टः स्वसुतं शिशुमादाय मारुतः ॥ ४९ ॥ विण्मूत्राशयमावृत्य प्रजानां परमार्तिकृत् । रुरोध सर्वभूतानि यथा वर्षाणि वासवः ॥ ५० ॥ वायुप्रकोपाद्भूतानि निरुच्छ्वासानि सर्वतः । सन्धिभिर्भिद्यमानैश्च काष्ठभूतानि जज्ञिरे ॥ ५१ ॥ निःस्वाध्यायवषट्कारं निष्क्रियं धर्मवर्जितम् । वायुप्रकोपात् त्रैलोक्यं निरयस्थमिवाभवत् ॥ ५२ ॥ ततः प्रजाः सगन्धर्वाः सदेवासुरमानुषाः । प्रजापतिं समाधावन् दुःखिताश्च सुखेच्छया ॥ ५३ ॥ ऊचुः प्राञ्जलयो देवा महोदरनिभोदराः । त्वया तु भगवन् सृष्टाः प्रजानाथ चतुर्विधाः ॥५४॥ त्वया दत्तोऽयमस्माकमायुषः पवनः पतिः । सोऽस्मान् प्राणेश्वरो भूत्वा कस्मादेषोऽद्य सत्तम ॥ ५५ ॥ रुरोध दुःखं जनयन्नन्तःपुर इव स्त्रियः । तस्मात्त्वां शरणं प्राप्ता वायुनोपहता वयम् ॥ ५६ ॥ एतत् प्रजानां श्रुत्वा तु प्रजानाथः प्रजापतिः । कारणादिति चोक्त्वाऽसौ प्रजाः पुनरभाषत ॥ ५७ ॥



ऊचुरिति । महोदरनिभोदराः वायु स्तम्भान्महोदरव्याधिग्रस्तोदरवदुदरं येषां ते तथा ॥ ५४–५६ ॥ एतदिति । कारणादिति चोक्त्वा किंचित्कारण

मत्रास्तीत्युक्त्वा ॥ ५७–६२ ॥ तादिति । रुक्प्रदः शूलरोगप्रदः । गमिष्याम अप्रसाद्येति सन्धिरार्षः ॥ ६३ ॥ तत इति । तत्रास्यतीति । यत्र अस्यति तिष्ठतीति यावत् ॥६४॥ तत इति । सदागतेर्वायोः । गन्धर्वर्षियक्षेति गुरुलघुभेद आर्षः॥६५॥ इति श्रीगोविन्द० उत्तरश्रीरामा० पञ्चत्रिंशः सर्गः॥३५॥

यस्मिंश्च कारणे वायुश्चुक्रोध च रुरोध च। प्रजाः शृणुध्वं तत् सर्वं श्रोतव्यं चात्मनः क्षमम् ॥५८॥ पुत्रस्तस्यामरेशेन इन्द्रेणाद्य निपातितः । राहोर्वचनमास्थाय ततः स कुपितोऽनिलः ॥ ५९ ॥ अशरीरः शरीरेषु वायुश्चरति पालयन् । शरीरं हि विना वायुं समतां याति दारुभिः ॥६०॥ वायुः प्राणः सुखं वायुर्वायुः सर्वमिदं जगत् । वायुना संपरित्यक्तं न सुखं विन्दते जगत् ॥६१॥ अद्यैव च परित्यक्तं वायुना जगदायुषा । अद्यैव ते निरुच्छ्वासाः काष्ठकुड्योपमाः स्थिताः ॥ ६२॥ तद्यामस्तत्र यत्रास्ते मारुतो रुक्प्रदो हि नः । मा विनाशं गमिष्याम अप्रसाद्यादितेः सुताः॥६३॥ ततः प्रजाभिः सहितः प्रजापतिः सदेवगन्धर्वभुजङ्गगुह्यकैः । जगाम तत्रास्यति यत्र मारुतः सुतं सुरेन्द्राभिहतं प्रगृह्य सः ॥ ६४ ॥ ततोऽर्कवैश्वानरकाञ्चनप्रभं सुतं तदोत्सङ्गगतं सदागतेः । चतुर्मुखो वीक्ष्य कृपामथाकरोत् सदेवगन्धर्वर्षियक्षराक्षसैः ॥ ६५ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

ततः पितामहं दृष्ट्वा वायुः पुत्रवधार्दितः । शिशुकं तं समादाय उत्तस्थौ धातुरग्रतः ॥ १ ॥ चलत्कुण्डलमौलिस्रक् तपनीयविभूषणः । पादयोर्न्यपतद्वायुस्तिस्रोपस्थाय वेधसे ॥ २॥ तं तु वेदविदा तेन लम्बाभरणशोभिना । वायुमुत्थाप्य हस्तेन शिशुं तं परिमृष्टवान् ॥ ३ ॥

ततः पितामहमित्यादि ॥ १ ॥ चलदित्यादि । तिस्रोपस्थाय त्रिरुपस्थाय । अलुगप्यार्षः । त्रिरुपस्थाय चेति पाठः । न्यपतादिति । उपस्थानपूर्वकं त्रिः साष्टाङ्गमनमदित्यर्थः ॥ २ ॥ तमिति । हनुमज्जीवनार्थम् अङ्गुल्यग्रविन्यस्तवेदपदेन वेदविदा विदितनिखिलवेदवेदान्तेन ब्रह्मणा लम्बाभरणशोभिना

स०–वधार्दितः ताडनार्दितः । शिशुकं शिशुप्रतिमासदृशम् । वस्तुतस्तु न शिशुः । तथा लोकानां प्रदर्शयितारम् ॥ १ ॥

हस्तेन तं शिशुं च परिमृष्टवान् ॥ ३ ॥ ४ ॥ प्राणवन्तमिति । सर्वभूतेषु सन्निरुद्धम् अन्तःप्रतिष्ठितं यथा भवति तथा प्राणः प्राणभूतश्चचार ॥ ५ ॥
मरुदिति । शीतदाहो हिमेन दाहः । शीतवातविनिर्मुक्ता इति च पाठः ॥ ६ ॥ तत इति । त्रीणि युग्मानि यस्यासौ त्रियुग्मः । तानि तु ऐश्वर्यं वीर्यं

स्पृष्टमात्रस्ततः सोऽथ सलीलं पद्मयोनिना । जलसिक्तं यथा सस्यं पुनर्जीवितमाप्तवान् ॥ ४ ॥ प्राणवन्तमिमं दृष्ट्वा
प्राणो गन्धवहो मुदा । चचार सर्वभूतेषु सन्निरुद्धं यथा पुरा ॥ ५ ॥ मरुद्रोधाद्विनिर्मुक्तास्ताः प्रजा मुदिता भवन् ।
शीतदाहविनिर्मुक्ताः पद्मिन्य इव साम्बुजाः ॥ ६ ॥ ततस्त्रियुग्मस्त्रिककुत् त्रिधामा त्रिदशार्चितः । उवाच देवता
ब्रह्मा मारुतप्रियकाम्यया ॥ ७ ॥ भो महेन्द्रेशवरुणप्रजेश्वरधनेश्वराः । जानतामपि वः सर्वं वक्ष्यामि श्रूयतां
हितम् ॥ ८ ॥ अनेन शिशुना कार्यं कर्तव्यं वो भविष्यति । तद्दद्ध्वं वरान् सर्वे मारुतस्यास्य तुष्टये ॥ ९ ॥
ततः सहस्रनयनः प्रीतियुक्तः शुभाननः । कुशेशयमयीं मालामुत्क्षिप्येदं वचोऽब्रवीत् ॥ १० ॥ मत्करोत्सृष्टवज्रेण
हनुरस्य यथा हतः । नाम्ना वै कपिशार्दूलो भविता हनुमानिति ॥ ११ ॥ अहमस्य प्रदास्यामि परमं वरमद्भुतम् ।
इतः प्रभृति वज्रस्य ममावध्यो भविष्यति ॥ १२ ॥ मार्तण्डस्त्वब्रवीत्तत्र भगवांस्तिमिरापहः । तेजसोऽस्य मदीयस्य
ददामि शतिकां कलाम् ॥ १३ ॥ यदा तु शास्त्राण्यध्येतुं शक्तिरस्य भविष्यति । तदाऽस्य शास्त्रं दास्यामि येन
वाग्मी भविष्यति ॥ १४ ॥ न चास्य भविता कश्चित् सदृशः शास्त्रदर्शने । वरुणश्च वरं प्रादान्नास्य मृत्युर्भवि-
ष्यति । वर्षायुतशतेनापि मत्पाशादुदकादपि ॥ १५ ॥

यशः श्रीः ज्ञानं वैराग्यम् । त्रिककुत् त्रिमूर्तिप्रधानः । त्रिधामा त्रिलोकगृहः । त्रिदशार्चितः देवार्चितः ॥ ७ ॥ भो इति । ईश इत्यनेन रुद्रः इत्युच्यते ।
प्रजेश्वरः यमः । वक्ष्यामि श्रूयतामिति । गुरुवैषम्यमापन्नम् ॥ ८ ॥ ९ ॥ तत इति । कुशेशयमयीं काञ्चनपद्ममयीमित्यर्थः ॥ १०–१२ ॥ मार्तण्ड इति ।
शतिकां शतैकांशभूताम् ॥ १३ ॥ यदा त्विति । शास्त्रं शास्त्रार्थज्ञानम् । ऐन्द्रव्याकरणमित्यर्थः ॥ १४ ॥ न चेति । शास्त्रदर्शने शास्त्रज्ञाने । वरुणोक्त

वरस्तु स्वयुद्धनिमित्तमरणाभावमात्रम् ॥ १५–१७ ॥ मत्त इति । परमो वरः शूलपाशुपतास्त्राद्यवध्यत्वमित्यर्थः ॥ १८ ॥ सर्वेषामिति । सर्वेषां ब्रह्मास्त्रान्तानामित्यर्थः । ब्रह्मदण्डानां ब्रह्मशापानां ब्रह्मायुधानां वा । दीर्घायुश्चेति ॥ १९ ॥ विश्वकर्मेति । यज्ञाद्यायुधानामपि विश्वकर्मनिर्मितत्वेऽपि तदाति

यमो दण्डादवध्यत्वमरोगित्वं च नित्यशः । वरं ददामि सन्तुष्ट अविषादं च संयुगे ॥ १६ ॥ गदेयं मामिका चैनं संयुगे न वधिष्यति । इत्येवं वरदः प्राह तदा ह्येकाक्षिपिङ्गलः ॥ १७ ॥ मत्तो मदायुधानां च न वध्योऽयं भविष्यति । इत्येवं शङ्करेणापि दत्तोऽस्य परमो वरः ॥ १८ ॥ सर्वेषां ब्रह्मदण्डानामवध्योऽयं भविष्यति । दीर्घायुश्च महात्मा च इति ब्रह्माब्रवीद्वचः ॥ १९ ॥ विश्वकर्मा च दृष्ट्वैनं बालसूर्योपमं शिशुम् । शिल्पिनां प्रवरः प्रादाद्वरमस्य महामतिः ॥ २० ॥ मत्कृतानि च शस्त्राणि यानि दिव्यानि संयुगे । तैरवध्यत्वमापन्नश्चिरजीवी भविष्यति ॥२१॥ ततः सुराणां तु वरैर्दृष्ट्वा ह्येनमलंकृतम् । चतुर्मुखस्तुष्टमना वायुमाह जगद्गुरुः ॥२२॥ अमित्राणां भयकरो मित्राणामभयङ्करः। अजेयो भविता पुत्रस्तव मारुत मारुतिः ॥२३॥ कामरूपः कामचारी कामगः प्लवतां वरः । भवत्यव्याहतगतिः कीर्तिमांश्च भविष्यति ॥ २४ ॥ रावणोत्सादनार्थानि रामप्रियकराणि च । रोमहर्षकराण्येष कर्ता कर्माणि संयुगे ॥ २५ ॥ एवमुक्त्वा तमामन्त्र्य मारुतं त्वमरैः सह । यथागतं ययुः सर्वे पितामहपुरोगमाः ॥ २६ ॥ सोऽपि गन्धवहः पुत्रं प्रगृह्य गृहमानयत् । अञ्जनायास्तमाचख्यौ वरदत्तं विनिर्गतः ॥ २७ ॥ प्राप्य राम वरानेष वरदानसमन्वितः । बलेनात्मनि संस्थेन सोऽपूर्यत यथाऽर्णवः ॥ २८ ॥

रिक्तायुधपरमिदम् ॥ २०–२६ ॥ स इति । वरदत्तं दत्तवरम् ॥ २७–२९ ॥

स०—यानि दिव्यानि तानि तैः इति पाठः । दिव्यानि दिवि भवानि । तानि प्रसिद्धानि । तैः अस्त्रैः । इति वरं ददावित्यर्थः । दिव्यानितानीति पदमेकं वा । इतानि हनुमन्तं प्राप्तानि तानि न भवन्तीत्यनितानि । दिव्यानि च तान्यनितानि च दिव्यानितानि यानि तैः । प्रतिघातमनितानीति वा । नातोपि तानि तैरित्यनन्वयशङ्केति मन्तव्यम् । मत्कृतानि यानि तानि दिव्यानि तैरिति वा । तच्छब्देन दिव्यत्वविशिष्टशस्त्राणां परामर्शो ज्ञेयः ॥ २१ ॥

स्रुग्भाण्डानीति । स्रुग्भाण्डानि यज्ञोपकरणानि । संशान्तानां शान्तिप्रधानानाम् ॥ ३० ॥ एवमिति । शम्भुना ब्रह्मणा । "शम्भू ब्रह्मत्रिलोचनौ" इत्यमरः ॥ ३१ ॥ जानन्त इति । तस्य शक्तितः ब्रह्मणो वरशक्तितः ॥ ३२ ॥ ३३ ॥ तत इति । नातिक्रुद्धातिमन्यवः क्रोधो जिघांसा मन्युरमर्षः ।

तरसा पूर्यमाणोऽपि तदा वानरपुङ्गवः । आश्रमेषु महर्षीणामपराध्यति निर्भयः ॥ २९ ॥ स्रुग्भाण्डान्यग्निहोत्रं च वल्कलाजिनसञ्चयान् । भग्नविच्छिन्नविध्वस्तान् संशान्तानां करोत्ययम् ॥ ३० ॥ एवंविधानि कर्माणि प्रावर्तत महाबलः । सर्वेषां ब्रह्मदण्डानामवध्यः शम्भुना कृतः ॥ ३१ ॥ जानन्त ऋषयस्तं वै क्षमन्ते तस्य शक्तितः ॥३२॥ यथा केसरिणा त्वेष वायुना सोऽञ्जनासुतः । प्रतिषिद्धोऽपि मर्यादां लङ्घयत्येव वानरः ॥३३॥ ततो महर्षयः क्रुद्धा भृग्वङ्गिरसवंशजाः । शेपुरेनं रघुश्रेष्ठ नातिक्रुद्धातिमन्यवः ॥ ३४ ॥ बाधसे यत् समाश्रित्य बलमस्मान् प्लवङ्गम । तद्दीर्घकालं वेत्तासि नास्माकं शापमोहितः । यदा ते स्मार्यते कीर्तिस्तदा ते वर्धते बलम् ॥३५॥ ततः स हततेजौजा महर्षिवचनौजसा । एषोश्रमाणि तान्येव मृदुभावं गतोऽचरत् ॥ ३६ ॥ अथर्क्षरजसो नाम वालिसुग्रीवयोः पिता । सर्ववानरराजाऽऽसीत्तेजसा भास्करप्रभः ॥३७॥ स च राज्यं चिरं कृत्वा वानराणां हरीश्वरः । स च ऋक्षरजा नाम कालधर्मेण सङ्गतः ॥ ३८ ॥ तस्मिन्नस्तमिते चाथ मन्त्रिभिर्मन्त्रकोविदैः । पित्र्ये पदे कृतो वाली सुग्रीवो वालिनः पदे ॥३९॥ सुग्रीवेण समं त्वस्य अद्वैधं छिद्रवर्जितम् । आबाल्यं सख्यमभवदनिलस्याग्निना यथा ॥ ४० ॥ एष शापवशादेव न वेद बलमात्मनः । वालिसुग्रीवयोर्वैरं यदा राम समुत्थितम् ॥ ४१ ॥

आतिक्रुद्धा अतिमन्यवश्च न भवन्तीति तथा ॥३४॥ बाधस इति । तद्दीर्घेति । तद्बलम् ॥३५॥ तत इति । हततेजौजाः अपहृतस्ववीर्यबलज्ञान इत्यर्थः । एषोश्रमाणीति आर्षः संधिः ॥३६॥ अथेति । ऋक्षरजस इत्यकारान्तोऽप्यस्ति ॥३७॥३८॥ तस्मिन्निति । वालिनः पदे यौवराज्ये ॥३९॥ सुग्रीवेणेति ।

स॰—महर्षिवचनौजसा वचनसामर्थ्येन । हततेजौजाः तेजश्शब्दपर्यायोऽयं तेजशब्दः । पृषोदरादित्यादिवत् । ओजः अवष्टम्भशक्तिः तेजः पराक्रमः । "ओजोऽवष्टम्भप्रकाशयोः । तेजो धाम्नि पराक्रमे" इति च विश्वः । तानि सर्वाणि, आश्रमाणि स्वप्रयुक्तश्रमरहितानि यथा भवेयुस्तथा मृदुभावं मार्दवं गतः । अचरत् सञ्चचार । एष तानाश्रमानेवेति कासुचित्पुस्तकसंपुटीषु पाठोऽस्ति । तत्र तु नायासः ॥ ३६ ॥

अस्य हनूमतः सुग्रीवेण सह आबाल्यं बाल्यमारभ्य ॥ ४०–४३ ॥ सिंह इति । रणे युद्धादौ स्ववलमास्थितोऽभूत् ॥ ४४ ॥ पराक्रमेति । सौशील्यं सुस्वभावत्वम् । माधुर्यं वाचः । नयानयौ प्रवृत्तिनिवृत्ती । गाम्भीर्यं चित्तस्य । धैर्यम् आपद्यक्षोभः ॥४५॥ असाविति । उदयाद्रिरेः उदयगिरेरित्यर्थः ।

न ह्येष राम सुग्रीवो भ्राम्यमाणोऽपि वालिना ॥ ४२ ॥ देव जानाति न ह्येष बलमात्मनि मारुतिः । ऋषिशापाहृत बलस्तदैष कपिसत्तमः ॥४३॥ सिंहः कुञ्जररुद्धो वा आस्थितः सहितो रणे ॥४४॥ पराक्रमोत्साहमतिप्रतापसौशील्य माधुर्यनयानयैश्च । गाम्भीर्यचातुर्यसुवीर्यधैर्यैर्हनूमतः कोऽभ्यधिकोऽस्ति लोके ॥४५॥ असौ पुनर्व्याकरणं ग्रहीष्यन् सूर्योन्मुखः प्रष्टुमनाः कपीन्द्रः । उद्यद्गिरेरस्तगिरिं जगाम ग्रन्थं महद्धारयनप्रमेयः ॥४६॥ ससूत्रवृत्त्यर्थपदं महार्थं ससङ्ग्रहं साध्यति वै कपीन्द्रः । न ह्यस्य कश्चित् सदृशोऽस्ति शास्त्रे वैशारदे च्छन्दगतौ तथैव ॥ ४७ ॥ सर्वासु विद्यासु तपोविधाने प्रस्पर्धते यो हि गुरुं सुराणाम् । सोऽयं नवव्याकरणार्थवेत्ता ब्रह्मा भविष्यत्यपि ते प्रसादात् ॥४८

महद्ग्रन्थं व्याकरणग्रन्थम् । धारयन् अर्थतः पाठतश्च गृह्णन्नित्यर्थः । धारयदिति पाठे नुडभाव आर्षः । धारयते इति पाठान्तरम् ॥ ४६ ॥ ससूत्रेति । सूत्रमष्टाध्यायी । लक्षणम् वृत्तिः सूत्रार्थमात्रप्रतिपादकग्रन्थः । अर्थपदं वार्तिकम् उक्तानुक्तदुरुक्तिचिन्तानुरूपम् । महार्थं भाष्यं विस्तरविवरणरूपम् ।

स०–ननु हनुमतो ज्ञानाभावे स्वप्रयोजनार्थं स्मार्यते वर्द्धेत इति प्रागुक्तेः स्मारयितव्यो मारयितव्ये वालिनि सुग्रीवेणेत्यत आह–नहीति । वालिना भ्राम्यमाण एव सुग्रीवः एष मारुतिरात्मबलं न जानातीति न वेद, अतो न बोधयामासेति भावः ॥४२॥४३॥ प्रष्टुमनाः सूर्यं प्रति महद्व्याकरणं ग्रहीष्यन् ग्रन्थं धारयेति सम्पादयेति, तेनोक्त इति शेषः । तर्हि सर्वापेक्षया विक्रान्तमायातमस्येत्यत आह–नप्रमेय इति । नसमासः, अप्रमेय इत्यर्थः । तत्राध्ययनं तु तदन्तर्गतनारायणविवक्षयेति बोध्यम् । रवौ हनुमतोऽपि ज्ञानाधिकः किमित्यतो नेत्याह–नप्रमेय इति । अपदार्थस्सूर्य इति यावत् । एतेनापि नटनं स्फुटीकृतं वेदितव्यम् ॥४६॥ कोऽसौ ग्रन्थस्तत्राह–ससूत्रेति । ससूत्रवृत्त्यर्थपदं सूत्रं शिवडमरुनिस्सृतं चतुर्दशलक्षणम् । वृत्तिः सूत्रवृत्तिः । अर्थपदं तदर्थबोधकं तत्कालवर्तिपदम् । महार्थं बह्वर्थोपेतम् । ससङ्ग्रहं सत्प्रमहाग्रन्थसहितम् । प्रति कपीन्द्रः सिध्यति । " सूत्रमष्टाध्यायीलक्षणम् । वृत्तिस्तात्कालिकसूत्रवृत्तिः । अर्थबोधकपदवद्वार्तिकम् । महार्थं महाभाष्यं पतञ्जलिकृतम् । ससङ्ग्रहं व्याडिकृतसद्महाग्रन्थसहितम् । सिध्यति सिद्धो भवति " इति व्याकर्तृनागोजिभट्टः हनुमतः पाणिनिपतञ्जल्यादीनां प्राचीनतां स्वप्राचीनाचीर्णकर्मवशाज्जानातीति न वयमधुनातनतनुतनवो व्याकर्तुं प्रभवामः । नवव्याकरणकरणसमर्थस्यैतदनुसरणस्यायुक्तत्वाच्च । अष्टणा दीनां सूत्राणां नित्यत्वादमूनी प्रवर्तयितुं पाणिनिस्तपः कृत्वा लब्धवांस्तानीत्युपपत्तेः । वैशारदे विशारदत्वे । छन्दगतौ छन्दोज्ञाने । छन्दश्शब्दपर्यायोऽयं छन्दशब्दः ॥ ४७ ॥

सन्नद्धं प्रकरणादि। साध्यति साधयति, धारयतीत्यर्थः। शास्त्रान्तरेष्वपि वैशारदे वैदुष्ये। छन्दगतौ छन्दःशास्त्रे ॥ ४७ ॥ ४८ ॥ प्रेति। प्रवीविवक्षोः युगान्ते भूमिमाप्लावयितुं प्रकर्षेण विशेषेण वेगमिच्छोः। युगक्षये काले युगान्तकाल इत्यर्थः ॥ ४९ ॥ एषेवेति। सन्धिरार्षः। तारेयोऽङ्गदः





प्रवीविवक्षोरिव सागरस्य लोकान् दिधक्षोरिव पावकस्य। युगक्षये ह्येव यथाऽन्तकस्य हनूमतः स्थास्यति कः पुरस्तात् ॥४९॥ एषेव चान्ये च महाकपीन्द्राः सुग्रीवमैन्दद्विविदाः सनीलाः। सतारतारेयनलाः सरम्भास्त्वत्कारणाद्राम सुरैर्हि सृष्टाः ॥ ५० ॥ तदेतत् कथितं सर्वं यन्मां त्वं परिपृच्छसि। हनूमतो बालभावे कर्मैतत् कथितं मया ॥ ५१ ॥ श्रुत्वाऽगस्त्यस्य कथितं रामः सौमित्रिरेव च। विस्मयं परमं जग्मुर्वानरा राक्षसैः सह ॥ ५२ ॥ अगस्त्यस्त्वब्रवीद्रामं सर्वमेतच्छ्रुतं त्वया। दृष्टः सम्भाषितश्चासि राम गच्छामहे वयम् ॥ ५३ ॥ श्रुत्वैतद्राघवो वाक्यमगस्त्यस्योग्रतेजसः। प्राञ्जलिः प्रणतश्चापि महर्षिमिदमब्रवीत् ॥५४॥ अद्य मे देवता हृष्टाः पितरः प्रपितामहाः। युष्माकं दर्शनादेव नित्यं तुष्टाः सबान्धवाः ॥५५॥ विज्ञाप्यं तु ममैतद्धि तद्वदाम्यागतस्पृहः। तद्भवद्भिर्मम कृते कर्तव्यमनुकम्पया ॥५६॥ पौरजानपदान् स्थाप्य स्वकार्येष्वहमागतः। क्रतूनेव करिष्यामि प्रभावाद्भवतां सताम् ॥५७॥ सदस्या मम यज्ञेषु भवन्तो नित्यमेव तत्। भविष्यथ महावीर्या ममानुग्रहकांक्षिणः ॥५८॥ अहं युष्मान् समाश्रित्य तपोनिर्धूतकल्मषान्। अनुग्रहीतः पितृभिर्भविष्यामि सुनिर्वृतः ॥५९॥ तदागन्तव्यमनिशं भवद्भिरिह सङ्गतैः। अगस्त्याद्यास्तु तच्छ्रुत्वा ऋषयः संशितव्रताः ॥६०॥ एवमस्त्विति तं चोक्त्वा प्रयातुमुपचक्रमुः ॥६१॥

॥ ५०–५५ ॥ विज्ञाप्यमिति। मम एतद्वक्ष्यमाणं विज्ञाप्यमस्ति। आगतस्पृहोऽहं यद्वदामि तद्भवद्भिः मत्कृते मन्निमित्तम् अनुकम्पया कर्तव्यम् ॥ ५६ ॥ पौरेति। आगतः वनादागतः अहम् ॥ ५७ ॥ सदस्याः विधिदर्शिनः। महावीर्याः महातपोवीर्याः ॥ ५८ ॥ अहमिति। अनुग्रहीत इति।

अनुगृहीत इत्यर्थः । अनिशं सुनिर्वृत इत्यन्वयः ॥ ५९–६१ ॥ एवमिति । तमेवार्थं यागरूपप्रयोजनम् ॥ ६२ ॥ ६३ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥

एवमुक्त्वा गताः सर्वे ऋषयस्ते यथागतम् । [ अभिवाद्य महात्मानो राघवेण विसर्जिताः । ] राघवश्च तमेवार्थं चिन्तयामास विस्मितः ॥६२॥ ततोऽस्तं भास्करे याते विसृज्य नृपवानरान् । सन्ध्यामुपास्य विधिवत्तदा नरवरोत्तमः । प्रवृत्तायां रजन्यां तु सोऽन्तःपुरचरोऽभवत् ॥६३॥ इत्यार्षे० श्रीमदुत्तरश्रीरामायणे षट्त्रिंशः सर्गः ॥३६॥ अभिषिक्ते तु काकुत्स्थे धर्मेण विदितात्मनि । व्यतीता या निशा पूर्वा पौराणां हर्षवर्धिनी ॥ १ ॥ तस्यां रजन्यां व्युष्टायां प्रातर्नृपतिबोधकाः । वन्दिनः समुपातिष्ठन् सौम्या नृपतिवेश्मनि ॥ २ ॥ ते रक्तकण्ठिनः सर्वे किन्नरा इव शिक्षिताः । तुष्टुवुर्नृपतिं वीरं यथावत् सम्प्रहर्षिणः ॥ ३ ॥ वीर सौम्य प्रबुध्यस्व कौसल्याप्रीतिवर्धन । जगद्धि सर्वं स्वपिति त्वयि सुप्ते नराधिप ॥ ४ ॥ विक्रमस्ते यथा विष्णो रूपं चैवाश्विनोरिव । बुद्ध्या बृहस्पतेस्तुल्यः प्रजापतिसमो ह्यसि ॥ ५ ॥ क्षमा ते पृथिवीतुल्या तेजसा भास्करोपमः । वेगस्ते वायुना तुल्यो गाम्भीर्यमुदधेरिव ॥ ६ ॥ अप्रकम्प्यो यथा स्थाणुश्चन्द्रे सौम्यत्वमीदृशम् । नेदृशाः पार्थिवाः पूर्वं भवितारो नराधिप ॥ ७ ॥ यथा त्वमतिदुर्द्धर्षो धर्मनित्यः प्रजाहितः । न त्वां जहाति कीर्तिश्च लक्ष्मीश्च पुरुषर्षभ ॥ ८ ॥

अभिषिक्त इत्यादि । ऋषिगणास्त्वभिषेककाले संप्राप्ताः कथितकथाः विसृष्टाश्च । अभिषेकदिनस्य या निशा पौराणां हर्षवर्धिनी पूर्वा प्रथमा निशा आसीत् सा च व्यतीता ॥ १–३ ॥ वीरेति । त्वयि सुप्ते सर्वं स्वपितीति त्वयि ब्राह्मे मुहूर्ते उत्थाय धर्मानुष्ठानरहिते सति सर्वं जगत्सुप्तधर्मकं भवति । "यथा राजा तथा प्रजाः" इति न्यायादिति भावः ॥४॥ विक्रम इति । बृहस्पतेस्तुल्यो बुद्ध्येति । प्रजापतिसमोऽसि, प्रजापरिपालन इति शेषः ॥५॥६॥ अप्रकम्प्य इति । ईदृशाः पार्थिवाः पूर्वं न, अभूवन्निति शेषः । न भवितार इति, अग्र इति शेषः ॥ ७ ॥ यथेति । न जहाति न त्यजति ॥ ८–११ ॥

समुत्थितमिति । सलिलम्, गृहीत्वेति शेषः ॥ १२ ॥ कृतोदकेति । कृतोदकशुचिः उदकेन कृतशौच इत्यर्थः । देवागारं देवपूजागृहम् ॥ १३--२४ ॥



श्रीश्च धर्मश्च काकुत्स्थ त्वयि नित्यं प्रतिष्ठितौ । एताश्चान्याश्च मधुरा वन्दिभिः परिकीर्तिताः ॥९॥ सूताश्च संस्तवैर्दिव्यैर्बोधयन्ति स्म राघवम् । स्तुतिभिः स्तूयमानाभिः प्रत्यबुध्यत राघवः ॥१०॥ स तद्विहाय शयनं पाण्डराच्छादनास्तृतम् । उत्तस्थौ नागशयनाद्धरिर्नारायणो यथा ॥११॥ समुत्थितं महात्मानं प्रह्वाः प्राञ्जलयो नराः । सलिलं भाजनैः शुभ्रैरुपतस्थुः सहस्रशः ॥१२॥ कृतोदकशुचिर्भूत्वा काले हुतहुताशनः । देवागारं जगामाशु पुण्यमिक्ष्वाकुसेवितम् ॥१३॥ तत्र देवान् पितॄन् विप्रानर्चयित्वा यथाविधि । बाह्यकक्ष्यान्तरं रामो निर्जगाम जनैर्वृतः ॥ १४ ॥ उपतस्थुर्महात्मानो मन्त्रिणः सपुरोहिताः । वसिष्ठप्रमुखाः सर्वे दीप्यमाना इवाग्नयः ॥१५॥ क्षत्रियाश्च महात्मानो नानाजनपदेश्वराः । रामस्योपाविशन् पार्श्वे शक्रस्येव यथाऽमराः ॥१६॥ भरतो लक्ष्मणश्चात्र शत्रुघ्नश्च महायशाः । उपासाञ्चक्रिरे हृष्टा वेदास्त्रय इवाध्वरम् ॥१७॥ याताः प्राञ्जलयो भूत्वा किङ्करा मुदिताननाः । मुदिता नाम पार्श्वस्था बहवः समुपाविशन् ॥ १८ ॥ वानराश्च महावीर्या विंशतिः कामरूपिणः । सुग्रीवप्रमुखा राममुपासन्ते महौजसः ॥ १९ ॥ विभीषणश्च रक्षोभिश्चतुर्भिः परिवारितः । उपासते महात्मानं धनेशमिव गुह्यकाः ॥ २० ॥ तथा निगमवृद्धाश्च कुलीना ये च मानवाः । शिरसाऽऽवन्द्य राजानमुपासन्ते विचक्षणाः ॥२१॥ तथा परिवृतो राजा श्रीमद्भिर्ऋषिभिर्वृतः । राजभिश्च महावीर्यैर्वानरैश्च सराक्षसैः ॥ २२ ॥ यथा देवेश्वरो नित्यमृषिभिः समुपास्यते । अधिकस्तेन रूपेण सहस्राक्षाद्विरोचते ॥ २३ ॥ तेषां समुपविष्टानां तास्ताः सुमधुराः कथाः । कथ्यन्ते धर्मसंयुक्ताः पुराणज्ञैर्महात्मभिः ॥ २४ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे सप्तत्रिंशः सर्गः ॥ ३७ ॥



इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥

॥ अथ प्रक्षिप्तेषु प्रथमः सर्गः ॥

एतच्छ्रुत्वा तु निखिलं राघवोऽगस्त्यमब्रवीत् । य एषर्क्षरजा नाम वालिसुग्रीवयोः पिता ॥१॥ जननी का च भगवन् न त्वया परिकीर्तिता । वालिसुग्रीवयोर्ब्रह्मन् माता मे नामतः कुतः । एतद्ब्रह्मन् समाचक्ष्व कौतूहलमिदं हि नः ॥२॥ स प्रोक्तो राघवेणैवमगस्त्यो वाक्यमब्रवीत् ॥ ३ ॥ शृणु राम कथामेतां यथापूर्वं समासतः । नारदः कथयामास ममाश्रममुपागतः ॥ ४ ॥ कदाचिदटमानोऽसावतिथित्वमुपागतः । अर्चितस्तु यथान्यायं विधिदृष्टेन कर्मणा ॥५॥ सुखासीनः कथां त्वेनां मया पृष्टः स कौतुकात् । कथयामास धर्मात्मा महर्षे श्रूयतामिति ॥ ६ ॥ मेरुर्नगवरः श्रीमान् जाम्बूनदमयः शुभः । तस्य यन्मध्यमं शृङ्गं सर्वदैवतपूजितम् ॥ ७ ॥ तस्मिन् दिव्या सभा रम्या ब्राह्मी या शतयोजना । तस्यामास्ते सदा देवः पद्मयोनिश्चतुर्मुखः ॥ ८ ॥ योगमभ्यसतस्तस्य नेत्राभ्यां यद्रसोऽस्रवत् । तद्गृहीतं भगवता पाणिना चार्चितं तु तत् ॥ ९ ॥ निक्षिप्तमात्रं तद्भूमौ ब्रह्मणा लोककर्तृणा । तस्मिन्नश्रुकणे राम वानरः सम्बभूव ह ॥ १० ॥ उत्पन्नमात्रस्तु तदा वानरश्च नरोत्तम । समाश्वास्य प्रियैर्वाक्यैरुक्तः किल महात्मना ॥ ११ ॥ पश्य शैलं सुविस्तीर्णं सुरैरध्युषितं तदा । तस्मिन् रम्ये गिरिवरे बहुमूलफलाशनः ॥ १२ ॥ ममान्तिकचरो नित्यं भव वानरपुङ्गव । कश्चित् कालमिहास्स्व त्वं तव श्रेयो भविष्यति ॥ १३ ॥ एवमुक्तः स चैतेन ब्रह्मणा वानरोत्तमः । प्रणम्य शिरसा पादौ देवदेवस्य राघव ॥ १४ ॥ उक्तवाँल्लोककर्तारमादिदेवं जगद्गुरुम् । यथाऽऽज्ञापयसे देव स्थितोऽहं तव शासने ॥ १५ ॥ एवमुक्त्वा हरिर्देवं ययौ हृष्टमनास्तदा । स तदा द्रुमषण्डेषु फलपुष्पघनेषु च ॥ १६ ॥ ब्रह्मप्रतिबलः शैघ्र्ये वने फलकृताशनः । क्वचिन्मधूनि मुख्यानि चिन्वन् पुष्पाण्यनेकशः ॥ १७ ॥ दिने दिने च सायाह्ने ब्रह्मणोऽन्तिकमागमत् । गृहीत्वा राम मुख्यानि पुष्पाणि च फलानि च ॥ १८ ॥ ब्रह्मणो देवदेवस्य

पादमूले न्यवेदयत्। एवं तस्य गतः कालो बहुः पर्यटतो गिरिम् ॥१९॥ कस्यचित्त्वथ कालस्य समतीतस्य राघव। ऋक्षराड्वानरश्रेष्ठस्तृष्णया परिपीडितः ॥२०॥ उत्तरं मेरुशिखरं गतस्तत्र च दृष्टवान्। नानाविहङ्गसंघुष्टं प्रसन्न सलिलं सरः। चलत्केसरमात्मानं कृत्वा तस्य तटे स्थितः ॥२१॥ ददर्श तस्मिन् सरसि वक्रच्छायामथात्मनः। क्रोधाविष्टमना कोऽयमस्मिन् मम रिपुर्वसत्यन्तर्जले महान् ॥ २२ ॥ रूपं चान्तर्गतं तत्र वीक्ष्य तत्पाथसो हरिः। ह्येष नियतं माऽवमन्यते ॥२३॥ तदस्य दुष्टभावस्य कर्तव्यो निग्रहो मया। एवं सञ्चिन्त्य मनसा स वै वानर चापलात् ॥२४॥ आप्लुत्य चापतत्तस्मिन् ह्रदे वानरसत्तमः। उत्प्लुत्य तस्मात् सरस उत्थितः प्लवगः पुनः ॥२५॥ तस्मिन्नेव क्षणे राम स्त्रीत्वं प्राप स वानरः। मनोज्ञरूपा सा नारी लावण्यललिता शुभा ॥ २६ ॥ विस्तीर्णजघना सुभ्रूर्नीलकुञ्चितमूर्धजा। मुग्धा सस्मितवक्त्रा च पीनस्तनतटा शुभा ॥ २७ ॥ ह्रदतीरस्थिता भाति ऋजुयष्टिर्लता तथा। त्रैलोक्यसुन्दरी कान्ता सर्वचित्तप्रमाथिनी ॥ २८ ॥ लक्ष्मीव पद्मरहिता चन्द्रज्योत्स्नेव निर्मला। रूपेणा प्यभवत् सा तु श्रीर्गौर्देवी उमा यथा ॥२९॥ द्योतयन्ती दिशः सर्वास्तत्राभूत् सा वराङ्गना। एतस्मिन्नन्तरे देवो निवृत्तः सुरनायकः ॥ ३० ॥ पादावुपास्य देवस्य ब्रह्मणस्तेन वै पथा। तस्यामेव च वेलायामादित्योऽपि परि भ्रमन् ॥३१॥ तस्मिन्नेव वने सोऽभूद्यास्मिन् सा तनुमध्यमा। युगपत् सा तदा दृष्टा देवाभ्यां सुरसुन्दरी ॥३२॥ कन्दर्पवशगौ तौ तु दृष्ट्वा तां संबभूवतुः। ततः क्षुभितसर्वाङ्गौ सुरेन्द्रतपनावुभौ ॥ ३३ ॥ तद्रूपमद्भुतं दृष्ट्वा त्याजितौ धैर्यमात्मनः। ततस्तस्यां सुरेन्द्रेण स्कन्नं शिरसि पातितम् ॥ ३४ ॥ अनासाद्यैव तां नारीं सन्निवृत्त मथोऽभवत्। ततः सा वानरपतिं प्रासूत बलशालिनम् ॥३५॥ अमोघरेतस्त्वात्तस्य वासवस्य महात्मनः। वालेषु पतितं बीजं वाली नाम बभूव ह ॥ ३६ ॥ भास्करेणापि तस्यां वै कन्दर्पवशवर्तिना। बीजं तु सिक्तं ग्रीवायां

विधानमनुवर्तिना ॥३७॥ तेनापि सा वरतनुर्मोक्ता किंचिद्द्रवः शुभम् । निवृत्तमदनश्चाथ सूर्योऽपि समपद्यत ॥३८॥
ग्रीवायां पतिते बीजे सुग्रीवः समजायत । एवमुत्पादितौ वीरौ वानरेन्द्रौ महाबलौ ॥ ३९ ॥ दत्त्वा तु काञ्चनीं
मालां वानरेन्द्रस्य वालिनः । अक्षय्यां गुणसम्पूर्णां शक्रस्तु त्रिदिवं ययौ ॥ ४० ॥ सूर्योऽपि स्वसुतस्यैनं निरूप्य
पवनात्मजम् । कृत्येषु व्यवसायेषु जगाम सविताऽम्बरम् ॥४१॥ तस्यां निशायां व्युष्टायामुदिते च दिवाकरे । स तु
वानररूपं तु प्रतिपेदे पुनर्नृप ॥४२॥ स एव वानरो भूत्वा पुत्रौ स्वस्य प्लवङ्गमौ । पिङ्गेक्षणौ हरिवरावपश्यत् काम
रूपिणौ ॥ ४३ ॥ मधून्यमृतकल्पानि पायितौ तेन तौ तदा । गृह्य ऋक्षरजास्तौ तु ब्रह्मणोऽन्तिकमागतः ॥ ४४ ॥
दृष्ट्वर्क्षरजसं पुत्रं ब्रह्मा लोकपितामहः । बहुशः सान्त्वयामास पुत्राभ्यां सहितं हरिम् ॥ ४५ ॥ सान्त्वयित्वा
ततः पश्चाद्देवदूतमथादिशत् । गच्छ मद्वचनाद्दूत किष्किन्धां नाम वै शुभाम् ॥ ४६॥ सा ह्यस्य गुणसम्पन्ना महती
च पुरी शुभा । तत्र वानरयूथानि बहूनि निवसन्ति च ॥ ४७ ॥ बहुरत्नसमाकीर्णा वानरैः कामरूपिभिः । पण्या
पणवती दुर्गा चातुर्वर्ण्ययुता सदा ॥४८॥ विश्वकर्मकृता दिव्या मन्नियोगाच्च शोभना । तत्रर्क्षरजसं पुत्रं सपुत्रं वानर
र्षभम् ॥ ४९ ॥ यूथपालान् समाहूय यांश्चान्यान् प्राकृतान् हरीन् । तेषां संभाव्य सर्वेषां मदीयं जनसंसदि ॥५० ॥
अभिषेचय राजानमारोप्य महदासने । दृष्टमात्राश्च ते सर्वे वानरेण च धीमता ॥ ५१ ॥ अस्यर्क्षरजसो नित्यं
भविष्यन्ति वशानुगाः । इत्येवमुक्ते वचने ब्रह्मणा तु हरीश्वरम् ॥५२॥ पुरतःकृत्य दूतोऽसौ प्रययौ तां पुरीं शुभाम् ।
स प्रविश्यानिलगतिस्तां गुहां वानरोत्तमम् ॥ ५३ ॥ स्थापयामास राजानं पितामहनियोगतः । राज्याभिषेक
विधिना स्नातोऽथाभ्यर्चितस्तदा ॥५४॥ स बद्धमुकुटः श्रीमानभिषिक्तः स्वलंकृतः । आज्ञापयामास हरीन् सर्वान्
मुदितमानसः ॥५५॥ सप्तद्वीपसमुद्रायां पृथिव्यां ये प्लवङ्गमाः । वालिसुग्रीवयोरेव ह्येष त्वृक्षरजाः पिता ॥५६॥

जननी चैव तु हरिरित्येतद्भद्रमस्तु ते । यश्चैतच्छ्रावयेद्विद्वान् यश्चैतच्छृणुयान्नरः ॥ ५७ ॥ सिद्ध्यन्ति तस्य कार्यार्था मनसो हर्षवर्धनाः ॥५८॥ एतच्च सर्वं कथितं मया विभो प्रविस्तरेणेह यथार्थतस्तव । उत्पत्तिरेषा रजनीचराणामुक्ता तथैवेह हरीश्वराणाम् ॥५९॥ इत्यार्षे वाल्मी० श्रीमदुत्तरश्रीरामायणे अधिकपाठे प्रथमः सर्गः ॥१॥

एतां श्रुत्वा कथां दिव्यां पौराणीं राघवस्ततः । भ्रातृभिः सहितो वीरो विस्मयं परमं ययौ ॥ १ ॥ राघवोऽथ ऋषेर्वाक्यं श्रुत्वा वचनमब्रवीत् । कथेयं महती पुण्या त्वत्प्रसादाच्छ्रुता मया ॥ २ ॥ बृहत्कौतूहलेनास्मि संवृतो मुनिपुङ्गव । उत्पत्तिर्यादृशी दिव्या वालिसुग्रीवयोर्द्विज ॥ ३ ॥ ब्रह्मर्षे मम किं चित्रं सुरेन्द्रतपनावुभौ । जातौ वानरशार्दूलौ बलेन बलिनां वरौ ॥४॥ एवमुक्ते तु रामेण कुम्भयोनिरभाषत । एवमेतन्महाबाहो वृत्तमासीत् पुरा किल । ॥ ५ ॥ अथापरां कथां दिव्यां शृणु राजन् सनातनीम् । यदर्थं राम वैदेही रावणेन पुरा हृता ॥६॥ तत्तेऽहं कीर्तयिष्यामि समाधिं श्रवणे कुरु। पुरा कृतयुगे राम प्रजापतिसुतं प्रभुम् ॥७॥ सनत्कुमारमासीनं रावणो राक्षसाधिपः । ददर्श सूर्यसङ्काशं ज्वलन्तमिव तेजसा ॥८ ॥ विनयावनतो भूत्वा ह्यभिवाद्य कृताञ्जलिः । उक्तवान् रावणो राम तमृषिं सत्यवादिनम् ॥९॥ को ह्यस्मिन् प्रवरो लोके देवानां बलवत्तरः । यं समाश्रित्य विबुधा जयन्ति समरे रिपून् ॥ १० ॥ कं यजन्ति जना नित्यं कं ध्यायन्ति च योगिनः । एतन्मे शंस भगवन् विस्तरेण तपोधन ॥११॥ विदित्वा हृद्गतं तस्य ध्यानदृष्टिर्महायशाः । उवाच रावणं प्रेम्णा श्रूयतामिति पुत्रक ॥१२॥ यो बिभर्ति जगत् कृत्स्नं यस्योत्पत्तिं न विद्महे । सुरासुरैर्नतो नित्यं हरिर्नारायणः प्रभुः ॥१३॥ यस्य नाभ्युद्भवो ब्रह्मा विश्वस्य जगतः पतिः । येन सर्वमिदं सृष्टं विश्वं स्थावरजङ्गमम् ॥१४॥ तं समाश्रित्य विबुधा विधिना हरिमध्वरे । पिबन्ति ह्यमृतं चैव मानवाश्च यजन्ति तम् ॥ १५ ॥ पुराणैश्चैव वेदैश्च पाञ्चरात्रैस्तथैव च । ध्यायन्ति योगिनो नित्यं क्रतुभिश्च यजन्ति

तम ॥ १६ ॥ दैत्यदानवरक्षांसि ये चान्ये चामरद्विषः । सर्वान् जयति सङ्ग्रामे सदा सर्वैः स पूज्यते ॥ १७ ॥ श्रुत्वा महर्षेस्तद्वाक्यं रावणो राक्षसाधिपः । उवाच प्रणतो भूत्वा पुनरेव महामुनिम् ॥ १८ ॥ दैत्यदानवरक्षांसि ये हताः समरेऽरयः । कां गतिं प्रतिपद्यन्ते के च ते हरिणा हताः ॥ १९ ॥ रावणस्य वचः श्रुत्वा प्रत्युवाच महा मुनिः । दैवतैर्निहता नित्यं प्राप्नुवन्ति दिवः स्थलम् ॥२०॥ पुनस्तस्मात् परिभ्रष्टा जायन्ते वसुधातले । पूर्वार्जितैः सुखैर्दुःखैर्जायन्ते च म्रियन्ति च ॥२१॥ ये ये हताश्चक्रधरेण राजन् त्रिलोकनाथेन जनार्दनेन । ते ते गतास्तत्र लयं नरेन्द्राः क्रोधोऽपि देवस्य वरेण तुल्यः ॥२२॥ श्रुत्वा ततस्तद्वचनं निशाचरः सनत्कुमारस्य मुखाद्विनिर्गतम् । तथा प्रहृष्टः स बभूव विस्मितः कथन्नु यास्यामि हरिं महाहवे ॥२३॥ इत्यार्षे० अधिकपाठे द्वितीयः सर्गः ॥ २ ॥ एवं चिन्तयतस्तस्य रावणस्य दुरात्मनः । पुनरेवापरं वाक्यं व्याजहार महामुनिः ॥१॥ मनसश्चेप्सितं यत्ते भवि ष्यति महाहवे । सुखी भव महाबाहो कञ्चित्कालमुदीक्षय ॥ २ ॥ एवं श्रुत्वा महाबाहुस्तमृषिं प्रत्युवाच सः । कीदृशं लक्षणं तस्य ब्रूहि सर्वमशेषतः ॥३॥ राक्षसस्य वचः श्रुत्वा स मुनिः प्रत्यभाषत । श्रूयतां सर्वमाख्यास्ये तव राक्षसपुङ्गव ॥ ४ ॥ स हि सर्वगतो देवः सूक्ष्मोऽव्यक्तः सनातनः । तेन सर्वमिदं प्रोतं त्रैलोक्यं सचराचरम् ॥ ५ ॥ स भूमौ दिवि पाताले पर्वतेषु वनेषु च । स्थावरेषु च सर्वेषु वनेषु नगरीषु च ॥ ६ ॥ ओङ्कारश्चैव सत्यं च सावित्री पृथिवी च सः । धराधरधरो देवो ह्यनन्त इति विश्रुतः ॥७॥ अहश्च रात्रिश्च उभे च सन्ध्ये दिवाकरश्चैव यमश्च सोमः । स एव कालो ह्यनलश्च वायुः स ब्रह्मरुद्रौ च स एव बालः ॥८॥ विद्योतति ज्वलति भाति च पाति लोकान् सृजत्ययं संहरति प्रशास्ति । क्रीडां करोत्यव्ययलोकनाथो विष्णुः पुराणो भवनाशहेतुः ॥९॥ अथवा बहुना

तेन किमुक्तेन दशानन। तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥ १० ॥ नीलोत्पलदलश्यामः किञ्जल्कारुण वस्त्रकः। प्रावृट्काले यथा व्योम्नि सतडित्तोयदस्तथा ॥ ११ ॥ श्रीमान् मेघवपुःश्यामः पङ्कजारुणलोचनः। श्रीवत्सेनोरसा युक्तः शशाङ्ककृतलक्षणः ॥ १२ ॥ तस्य नित्यं शरीरस्था मेघस्येव शतह्रदा । सङ्ग्रामरूपिणी लक्ष्मी र्देहमावृत्य तिष्ठति ॥१३॥ न स शक्यः सुरैर्द्रष्टुं नासुरैर्न च पन्नगैः। यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ॥१४॥ न हि यज्ञफलैस्तात न तपोभिस्तु सञ्चितैः। शक्यते भगवान् द्रष्टुं न दानेन न चेज्यया ॥१५॥ तद्भक्तैस्तद्गतप्राणै स्तच्चित्तैस्तत्परायणैः। शक्यते भगवान् द्रष्टुं ज्ञाननिर्दग्धकिल्बिषैः ॥१६॥ अथवा राक्षसेन्द्र त्वं यदि तं द्रष्टुमिच्छसि कथयिष्यामि ते सर्वं श्रूयतां यदि रोचते ॥ १७ ॥ कृते युगे व्यतीते वै मुखे त्रेतायुगस्य तु। हितार्थं देवमर्त्यानां भविता नृपविग्रहः ॥१८॥ इक्ष्वाकूणां च यो राजा भाव्यो दशरथो भुवि। तस्य सूनुर्महातेजा रामो नाम भविष्यति ॥ १९ ॥ महातेजा महाबुद्धिर्महाबलपराक्रमः। महाबाहुर्महासत्त्वः क्षमया पृथिवीसमः ॥ २० ॥ आदित्य इव दुष्प्रेक्ष्यः समरे शत्रुभिः सदा। भविता हि तदा रामो नरो नारायणः प्रभुः ॥२१॥ पितुर्नियोगात् स विभुर्दण्डके विविधे वने। विचरिष्यति धर्मात्मा सह भ्रात्रा महात्मना ॥ २२ ॥ तस्य पत्नी महाभागा लक्ष्मीः सीतेति विश्रुता। दुहिता जनकस्यैषा उत्थिता वसुधातलात् ॥ २३ ॥ रूपेणाप्रतिमा लोके सर्वलक्षणलक्षिता। छायेवानुगता रामं निशाकरमिव प्रभा ॥ २४ ॥ शीलाचारगुणोपेता साध्वी धैर्यसमन्विता। सहस्रांशो रश्मिरिव ह्येकमूर्तिरिव स्थिता ॥२५॥ एवं ते सर्वमाख्यातं मया रावण विस्तरात्। महतो देवदेवस्य शाश्वतस्याव्ययस्य च ॥ २६ ॥ एवं श्रुत्वा महाबाहू राक्षसेन्द्रः प्रतापवान्। त्वया सह विरोधेच्छुश्चिन्तयामास राघव ॥ २७ ॥ वाक्यं सनत्कुमारस्य चिन्तयानो मुहुर्मुहुः। रावणो मुमुदे श्रीमान् युद्धार्थी विचचार ह ॥२८॥ श्रुत्वा च तां कथां रामो विस्मयोत्फुल्ललोचनः।

शिरसश्चालनं कृत्वा तमर्थं परिचिन्तयन् ॥२९॥ श्रुत्वा तु वाक्यं च नरेश्वरस्तदा मुदा युतो विस्मयमानचक्षुः । पुनश्च तं ज्ञानवतां प्रधानमुवाच वाक्यं वद मे पुरातनम् ॥ ३० ॥ इत्यार्षे० अधिकपाठे तृतीयः सर्गः ॥ ३ ॥
ततः पुनर्महातेजाः कुम्भयोनिर्महायशाः । उवाच रामं प्रणतं पितामह इवेश्वरम् ॥ १ ॥ श्रूयतामिति चामन्त्र्य रामं सत्यपराक्रमम् । कथाशेषं महातेजाः कथयामास स प्रभुः ॥२ ॥ यथाख्यानं श्रुतं चैव यथावृत्तं च तत्तथा । प्रीतात्मा कथयामास राघवाय महामतिः ॥ ३ ॥ एतदर्थं महाबाहो रावणेन दुरात्मना । सुता जनकराजस्य हृता राम महामते ॥ ४ ॥ एतां कथां महाबाहो नारदः सुमहायशाः । कथयामास मह्यं वै मेरौ गिरिवरोत्तमे ॥ ५ ॥ देवगन्धर्वसिद्धानामृषीणां च महात्मनाम् । कथाशेषं पुनः सोऽथ कथयामास राघव ॥ ६ ॥ नारदः सुमहातेजाः प्रहसन्निव मानद । तां कथां शृणु राजेन्द्र महापापप्रणाशिनीम् ॥ ७ ॥ यां तु श्रुत्वा महाबाहो ऋषयो दैवतैः सह । ऊचुस्तं नारदं सर्वे हर्षपर्याकुलेक्षणाः ॥ ८ ॥ यश्चेमां श्रावयेन्नित्यं शृणुयाद्वापि भक्तितः । स पुत्रपौत्रवान् राम स्वर्गलोके महीयते ॥ ९ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे अधिकपाठे चतुर्थः सर्गः ॥ ४ ॥
ततः स रावणो राम पर्यटन् पृथिवीतलम् । विजयार्थी महाशूरै राक्षसैः परिवारितः ॥१॥ दैत्यदानवरक्षस्सु यं शृणोति बलाधिकम् । तमाह्वयति युद्धार्थी रावणो बलदर्पितः ॥ २ ॥ एवं स पर्यटन् सर्वां पृथिवीं पृथिवीपते । ब्रह्मलोकान्निवृत्तं तमाससादाथ नारदम् ॥३॥ व्रजन्तं मेघपृष्ठस्थमंशुमन्तमिवापरम् । तं चाभिसृत्य प्रीतात्मा ह्यभिवाद्य कृताञ्जलिः ॥ ४ ॥ उवाच हृष्टमनसा रावणो नारदं तथा । आब्रह्मभवनाल्लोकास्त्वया दृष्टा ह्यनेकशः ॥ ५ ॥ कस्मिन् लोके महाभाग मानवा बलवत्तराः । योद्धुमिच्छामि तैः सार्धं यथाकामं यथासुखम् ॥ ६ ॥ तच्छ्रुत्वा नारदो वाक्यं रावणस्य दुरात्मनः । चिन्तयित्वा मुहूर्तं तु महात्मा प्रत्युवाच तम् ॥ ७ ॥ अस्ति राजन् महाद्वीपः क्षीरोदस्य

समीपतः । यत्र ते चन्द्रसङ्काशा मानवाः सुमहाबलाः ॥८॥ महाकाया महावीर्या मेघस्तनितनिस्वनाः । महामात्रा धैर्यवन्तो महापरिघबाहवः ॥ ९ ॥ श्वेतद्वीपे मया दृष्टा मानवा राक्षसाधिप । बलवीर्यसमायुक्तान् यादृशांस्त्वमिहेच्छसि ॥ १० ॥ नारदस्य वचः श्रुत्वा रावणः प्रत्युवाच ह । कथं नारद जायन्ते तस्मिन् द्वीपे महाबलाः ॥ ११ ॥ श्वेतद्वीपे कथं वासः प्राप्तस्तैः सुमहात्मभिः । एतन्मे सर्वमाख्याहि प्रभो नारद तत्त्वतः ॥ १२ ॥ त्वया दृष्टं जगत् सर्वं हस्तामलकवत् सदा। रावणस्य वचः श्रुत्वा नारदः प्रत्युवाच तम् ॥ १३॥ अनन्यमानसा नित्यं नारायणपरायणाः । तदाराधनसक्ताश्च तच्चित्तास्तत्परायणाः ॥१४॥ एकान्तभावानुगतास्ते नरा राक्षसाधिप । तच्चित्तास्तद्गतप्राणा नरा नारायणं श्रिताः ॥ १५ ॥ श्वेतद्वीपे तु तैर्वास आर्जितः पुण्यकर्तृभिः । ये हता लोकनाथेन शार्ङ्गमानम्य संयुगे ॥ १६ ॥ चक्रायुधेन देवेन तेषां वासस्त्रिविष्टपे । न हि यज्ञफलैस्तात न तपोभिर्न संयमैः ॥१७॥ न च दानफलैर्मुख्यैः स लोकः प्राप्यते सुखम् । नारदस्य वचः श्रुत्वा दशग्रीवः सुविस्मितः ॥ १८ ॥ ध्यात्वा तु सुचिरं कालं तेन योत्स्यामि संयुगे । आपृच्छ्य नारदं प्रायाच्छ्वेतद्वीपाय रावणः ॥ १९ ॥ नारदोऽपि चिरं ध्यात्वा कौतूहलसमन्वितः। दिदृक्षुः परमाश्चर्यं तत्रैव त्वरितं ययौ ॥२०॥ स हि केलिकरो विप्रो नित्यं च समरप्रियः । रावणोऽपि ययौ तत्र राक्षसैः सह राघव ॥२१॥ महता सिंहनादेन नादयन् स दिशो दश । गते तु नारदे तत्र रावणोऽपि महायशाः ॥ २२ ॥ प्राप श्वेतं महाद्वीपं दुर्लभं यत् सुरैरपि । तेजसा तस्य द्वीपस्य रावणस्य बलीयसः ॥ २३ ॥ तत्तस्य पुष्पकं यानं वातवेगसमाहतम् । अवस्थातुं न शक्नोति वाताहत इवाम्बुदः ॥ २४ ॥ सचिवा राक्षसेन्द्रस्य द्वीपमासाद्य दुर्दशम् । अब्रुवन् रावणं भीता राक्षसा जातसाध्वसाः ॥ २५ ॥ राक्षसेन्द्र वयं मूढा भ्रष्टसंज्ञा विचेतसः । अवस्थातुं न शक्ष्यामो युद्धं कर्तुं कथञ्चन ॥ २६ ॥ एवमुक्त्वा दुद्रुवुस्ते सर्व एव निशाचराः । रावणोऽपि

हि तद्यानं पुष्पकं हेमभूषितम् ॥ २७ ॥ विसर्जयामास तदा सह तैः क्षणदाचरैः । गते तु पुष्पके राम रावणो राक्षसाधिपः ॥ २८ ॥ कृत्वा रूपं महाभीमं सर्वराक्षसवर्जितः । प्रविवेश तदा तस्मिञ्श्वेतद्वीपे स रावणः ॥ २९ ॥ प्रविशन्नेव तत्राशु नारीभिरुपलक्षितः । एकया सुस्मितं कृत्वा हस्ते गृह्य स रावणः ॥ ३० ॥ पृष्टश्चागमनं ब्रूहि किमर्थमिह चागतः । को हि त्वं कस्य वा पुत्रः केन वा प्रहितो वद ॥ ३१ ॥ इत्युक्तो रावणो राजन् क्रुद्धो वचन मब्रवीत् । अहं विश्रवसः पुत्रो रावणो नाम राक्षसः ॥ ३२ ॥ युद्धार्थमिह संप्राप्तो न च पश्यामि कंचन । एवं कथ यतस्तस्य रावणस्य दुरात्मनः ॥ ३३ ॥ प्राहसंस्ते ततः सर्वे सस्वनं युवतीजनाः । एकया क्रुद्धया तासां बालवद्गृह्य लीलया ॥ ३४ ॥ भ्रामितस्तु सखीमध्ये विक्षिप्तः स दशाननः । सखीमन्यां समाहूय पश्य त्वं कीटकं धृतम् ॥ ३५ ॥ दशास्यं विंशतिभुजं कृष्णाञ्जनसमप्रभम् । हस्ताद्धस्तं स च क्षिप्तो भ्राम्यते श्रमलालसः ॥ ३६ ॥ भ्राम्यमाणेन बलिना राक्षसेन विपश्चिता । पाणावेकाऽथ सन्दष्टा रोषेण वनिता शुभा ॥ ३७ ॥ मुक्तस्तया शुभः कीटो धुन्वन्त्या हस्तवेदनात् । गृहीत्वाऽन्या राक्षसेन्द्रमुत्पपात विहायसा ॥ ३८ ॥ ततस्तामपि संक्रुद्धो विददार नखैर्भृशम् । तया स हि विनिर्धूतः सहसैव निशाचरः ॥ ३९ ॥ पपात चाम्भसो मध्ये सागरस्य भयातुरः । पर्वतस्येव शिखरं यथा वज्रविदारितम् ॥ ४० ॥ प्रापतत् सागरस्यैव जले तस्थौ निपातितः । एवं स रावणो राम श्वेतद्वीपनिवासिभिः ॥ ४१ ॥ स्त्रीजनैर्विनिगृह्याशु भ्रामितश्च ततस्ततः । नारदोऽपि महातेजा रावणं वीक्ष्य धर्षितम् ॥ ४२ ॥ विस्मयं सुचिरं गत्वा प्रजहास ननर्त च । ततः स सागरजलाज्जलक्लिन्नशिरोरुहः ॥ ४३ ॥ दक्षिणं तीरमासाद्य चिन्तयामास विस्मितः । ये मया निर्जिता लोका न तेषु भयमीदृशम् ॥ ४४ ॥ स्वभावतोऽल्पवीर्याणां विरुद्धं योषितामिदम् । नूनमेतस्य लोकस्य मानवाः प्रभविष्णवः ॥ ४५ ॥ स्त्रीरूपविग्रहधरा यान्ममाचष्ट नारदः । बलवद्भिस्तु सन्धेयमिति

संचिन्त्य निश्चितम् ॥ ४६ ॥ भूयस्तासां प्रवृत्त्यर्थं तद्वनं समलोडयत् । अथापश्यन्महात्मानं पितामहसुतं प्रभुम् ॥ ४७ ॥ सनत्कुमारमासीनं सर्वयोगभृतां वरम् । जाज्वल्यमानं तपसा समिद्भिरिव पावकम् ॥ ४८ ॥ अपश्य द्दक्षिणे पार्श्वे विचरन्तं गुहाश्रयम् । स तं दृष्ट्वा तपोवृद्धमभिवाद्य कृताञ्जलिः ॥ ४९ ॥ व्रीडितः परिपप्रच्छ ब्रह्मर्षिं सत्यवादिनम् । भगवन् केन लोकोऽयं कल्पितः सुमहात्मना ॥५०॥ के वा लोके वसन्त्यस्मिन् सर्वज्ञानवतां वर । किं च त्वं ध्यायसे ब्रह्मन् शंस मे सुसमाधिना ॥ ५१ ॥ एतन्मे ब्रूहि तत्सर्वं सर्वज्ञो ह्यसि विश्रुतः । एवमुक्तो महातेजा विदित्वा तस्य हृद्गतम् ॥ ५२ ॥ उवाच वाक्यं प्रहसन् श्रूयतामिति पुत्रक । यो हि वै सर्वमेवेदं बिभर्ति सचराचरम् ॥ ५३ ॥ त्रैलोक्यं सर्वभूतात्मा यस्योत्पत्तिं न विद्महे । यमाहुर्वेदविदुषः पुरुषं तमसः परम् ॥ ५४ ॥ आदित्यरूपमजरं परमात्मानमीश्वरम् । यस्य नाभिभवो ब्रह्मा पिता मम पितामहः ॥ ५५ ॥ कैलासनिलयः श्रीमान् भवश्च क्रोधसम्भवः । यं समाश्रित्य विबुधा विधिना हरिमध्वरे ॥ ५६ ॥ पिबन्ति चामृतं हृष्टाः परिभूय दितेः सुतान् । यस्य श्वासानिलोद्भूताः स्त्रियस्त्वामपराजितम् ॥ ५७ ॥ गृहीत्वा सुमहावेगाश्चिक्षिपुः सागराम्भसि । येन दैत्या महावीर्या दानवाश्च सनैर्ऋताः ॥ ५८ ॥ निहता बहुरूपेण बहवो बाहुशालिना । तेनायं लोकनाथेन कल्पितः सुमहात्मना । गोविन्देन निवासार्थं लोको वै सुमहात्मना ॥ ५९ ॥ अर्चयन्ति जगन्नाथं नारायणपरायणाः ॥ ६० ॥ अद्वेषाः सर्वभूतेषु महायोगबलाश्रयाः । यजन्ति पञ्चभिर्यज्ञैः सततं मधुसूदनम् ॥ ६१ ॥ एकान्तिनो महासत्त्वा वसन्ति सुसमाहिताः । यः पुराणे च वेदे च पाञ्चरात्रे च पठ्यते ॥ ६२ ॥ साङ्ख्ययोगे च मुनिभि र्ध्यायते चेज्यते च यः । मुनिभिर्देवसङ्घैश्च स्थाप्यते भगवान् हरिः ॥ ६३ ॥ मधुकैटभयोर्हन्ता यस्तमन्वेष्टुमर्हति । पितामहोऽपि तं देवं न च जानाति रावण ॥६४॥ यस्तु नित्यं विजानाति हरिं नारायणं विभुम् । जगदाभरणं पुण्यं

तस्य मोक्षो न संशयः ॥ ६५ ॥ एतच्छ्रुत्वा मुनेर्वाक्यं प्रसन्नेनान्तरात्मना । पुनरेव ततो रक्षः पप्रच्छ मुनि पुङ्गवम् ॥ ६६ ॥ कथं च दृश्यते देव कथं च श्रूयते भुवि । कथं च क्रीडते लोके द्रष्टुं वा शक्यते कथम् ॥ ६७ ॥ कियत्कालेन वा ब्रह्मँल्लोकोऽयं तपसा मया । शक्यः प्रवेष्टुं तद्ब्रूहि सर्वं हि विदितं तव ॥ ६८ ॥ आकर्ण्य सस्पृहं तस्य वाक्यं वाक्यविशारदः । प्रत्युवाच मुनिर्धीमान् तत्सर्वमनुपूर्वशः ॥ ६९ ॥ स हि सर्वगतो देवः सूक्ष्मोऽव्यक्तः सनातनः । येन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥ ७० ॥ स भूमौ दिवि पाताले पर्वतेषु वनेषु च । सागरेषु च सर्वेषु वसतीह सरित्सु च ॥ ७१ ॥ अहश्च रात्रिश्च उभे च सन्ध्ये दिवाकरश्चैव यमश्च सोमः । स एव कालो वरुणः स एव स ब्रह्मरुद्रेन्द्रमुखः स चाग्निः ॥ ७२ ॥ ओङ्कारो भूर्भुवः स्वश्च गायत्री सन्ध्य एव च । धराधर धरो देवः सोऽनन्त इति विश्रुतः ॥ ७३ ॥ विद्योतति ज्वलति वर्षति वाति पाति गर्जत्युपैति तपते दहते स चैव । लोकान् सृजत्यवति संहरते सदैव दैत्यान् स एव दहते जगति प्रसह्य ॥ ७४ ॥ स न शक्यः सुरैर्द्रष्टुं नासुरैर्न च पन्नगैः । प्रसादं कुरुते यस्य स वै तं द्रष्टुमर्हति ॥ ७५ ॥ तद्गतैस्तद्गतप्राणैः शुचिभिस्तत्परायणैः । शक्यः प्रवेष्टुं लोकोऽयं ज्ञाननिर्धूतकिल्बिषैः ॥ ७६ ॥ एवंविधैरयं लोकः प्राप्यते पुरुषोत्तमैः । अकामकारिभिर्देवैरक्रोधैर्दग्ध तामसैः ॥ ७७ ॥ यश्चैव सुमहाकायः प्रविष्टो लोकमव्ययम् । आस्ते तथैव हरिणा कृता तेन महापुरी ॥ ७८ ॥ अष्टाविंशे युगे प्राप्ते मनोरस्य विवस्वतः । वैष्णवीं मूर्तिमाविश्य लोकमेनं प्रवेक्ष्यसि ॥ ७९ ॥ नातः परतरं श्रोतुं मत्तो वै राक्षसेश्वर । उत्तिष्ठ गच्छ भद्रं ते प्राप्स्यसे गतिमीप्सिताम् ॥ ८० ॥ एवमुक्तस्तथेत्युक्त्वा तं प्रणम्याभि पूज्य च । समासाद्य महत् सैन्यं ययौ लङ्कामशङ्कितः ॥ ८१ ॥ नारदोऽपि प्रहृष्टात्मा दृष्ट्वा सर्वमशेषतः । द्रुतं मेरुमुपागम्य विशते तां शुभां सभाम् ॥ ८२ ॥ तस्यां ब्रह्माणमासीनमभिवाद्य कृताञ्जलिः । देवान् संश्रावयामास

समीपे पद्मजन्मनः ॥ ८३ ॥ निशम्य सुमहत् पुण्यमाख्यानं पद्मसंभवः । नारदं सम्परिष्वज्य प्राह भूतभविष्य वित् ॥ ८४ ॥ हिरण्यकशिपुः पूर्वं बभूवैष निशाचरः । अवध्यो बहुभिर्योगैर्वरदानान्महाबलः ॥ ८५ ॥ स कदाचि न्महात्मानं पद्मनाभमधोक्षजम् । सभायां गर्हयन् दर्पान्नृसिंहवपुषं हरिम् ॥८६॥ समुद्गृह्य नखैस्तेन दीर्यमाणस्य संयुगे । रक्तसंस्पर्शजं दिव्यं चक्षुर्दैत्यपतेरभूत् ॥ ८७ ॥ स तु तद्राक्षसं जन्म तस्मान्मानुषजन्मनः । भाविनीं निधनप्राप्तिं पश्यन् दिव्येन चक्षुषा ॥ ८८ ॥ श्रीवत्साङ्कं तदङ्कस्थः प्राह दैत्यः शनैरिदम् । नखैर्विभिन्नहृदयः क्षणं दीनः कृताञ्जलिः ॥८९ ॥ तप्तहाटककेशान्त ज्वलत्पावकलोचन । वज्रायुधनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥९०॥ कैटभारे हरे देव विष्णो विपुलविक्रम । त्राहि मां भूतभव्येश शरणागतवत्सल ॥ ९१ ॥ त्वद्धते राक्षसे भावे मानुषे च पदे विभो । प्राप्नुयां त्वन्मयो लोकं लोकनाथ प्रसीद मे ॥ ९२ ॥ एवमुक्तस्तथेत्युक्त्वा ययौ दैत्यपतिं हरिः । हंसयुक्तविमानेन किङ्किणीजालमालिना ॥९३॥ स एव च पुनस्तत्र राक्षसोऽभून्महासुरः । राक्षसेन विधानेन सदा तद्भावभावितः ॥ ९४ ॥ मानुषत्वमुपागम्य लोकान् हन्तुं कृतोद्यमम् । तृतीयं च हतं तेन श्वेतद्वीपं प्रवेक्ष्यति ॥ ९५ ॥ वैष्णवं तेज आविश्य यथोक्तं ब्रह्मवादिना । मयाऽपि चेहसंस्थेन दृष्टमेवाक्षदर्शनात् ॥ ९६ ॥ मयाऽव लम्बितं सर्वं देवस्य परमात्मनः । यस्त्विदं पठते नित्यं पुण्यमाख्यानमादितः ॥ ९७ ॥ नारदोक्तं मनुष्यो वै स याति परमां गतिम् । वैष्णवं परमाख्यानं सर्वपापप्रणाशनम् ॥९८॥ नित्यं च शृणुयाद्यश्च सोऽपि पापात् प्रमुच्यते । जातिस्मरत्वं विप्रत्वं कुले महति संभवम् ॥ ९९ ॥ सर्वज्ञतां च लभते नात्र कार्या विचारणा । स च संस्तूय च हरिं प्रविष्टः कमलोद्भवः ॥ १०० ॥ अनुभाव्य सुरान् सर्वान् ययौ स्वं लोकमीश्वरः । नारदस्तु ततस्तस्मा न्मेरुपृष्ठं परिभ्रमन् ॥ १०१ ॥ स तु मामाजगामाशु दिदृक्षुर्द्वादशात्मकम् । स मया शास्त्रतः सम्यगभिवाद्याभि

पूजितः ॥ १०२ ॥ आख्यानमिदमाचष्ट ममानुग्रहकाम्यया । मयाप्येतत्सदस्येत्य पावनार्थं मनोहरम् ॥ १०३ ॥ भक्त्या तव महाबाहो कथामृतमुदाहृतम् । एतदर्थं महाबाहो रावणेन दुरात्मना ॥ १०४ ॥ विज्ञाय च हृता सीता त्वत्तो मरणकांक्षया । भवान्नारायणो देवः शङ्खचक्रगदाधरः ॥ १०५ ॥ शार्ङ्गपद्मायुधधरः सर्वदेवनमस्कृतः । श्रीवत्साङ्को हृषीकेशः सर्वदेवाभिपूजितः ॥ १०६ ॥ पद्मनाभो महायोगी भक्तानामभयप्रदः । वधार्थं रावणस्य त्वं प्रविष्टो मानुषीं तनुम् ॥ १०७ ॥ किन्न वेत्सि त्वमात्मानं राम नारायणो ह्यहम् । मा मुह्यस्व महाभाग स्मर चात्मानमात्मना ॥ १०८ ॥ गुह्याद्गुह्यतरस्त्वं हि एवमाह पितामहः । त्रिगुणश्च त्रिवेदी च त्रिधामा त्रिपदात्मकः ॥ १०९ ॥ त्रिकालकर्मा त्रैविद्यस्त्रिदशारिप्रमर्दनः । त्वया क्रान्तास्त्रयो लोकाः पुराणैर्विक्रमैस्त्रिभिः ॥ ११० ॥ त्वं महेन्द्रानुजः श्रीमान् बलिबन्धनकारणात् । अदित्या गर्भसम्भूतो विष्णुस्त्वं हि सनातनः ॥ १११ ॥ लोकाननुग्रहीतुं वै प्रविष्टो मानुषीं तनुम् । तदिदं साधितं कार्यं सुराणां सुरसत्तम ॥ ११२ ॥ निहतो रावणः पापः सपुत्रगणबान्धवः । प्रहृष्टाश्च सुराः सर्वे ऋषयश्च तपोधनाः ॥ ११३ ॥ प्रशान्तं च जगत् सर्वं त्वत्प्रसादात् सुरेश्वर । सीता लक्ष्मीर्महाभागा सम्भूता वसुधातले ॥ ११४ ॥ त्वदर्थमियमुत्पन्ना जनकस्य गृहे शुभा । लङ्कामानीय यत्नेन मातेव परिरक्षिता ॥ ११५ ॥ एवमेतत् समाख्यातं तव राम महायशः । ममापि नारदेनोक्तमृषिणा दीर्घजीविना ॥ ११६ ॥ यथा सनत्कुमारेण व्याख्यातं तस्य रक्षसः । तेनापि च तदेवाशु कृतं सर्वमशेषतः ॥ ११७ ॥ यश्चैतच्छ्रावयेच्छ्राद्धे विद्वान् ब्राह्मणसन्निधौ । अनन्तमक्षयं दत्तं पितॄणामुपतिष्ठति ॥ ११८ ॥ एतां श्रुत्वा कथां दिव्यां रामो राजीवलोचनः । परं विस्मयमापन्नो भ्रातृभिः सह राघवः ॥ ११९ ॥ वानराः सह सुग्रीवा राक्षसाः सविभीषणाः । राजानश्च महामात्या ये चान्येऽपि समागताः ॥ १२० ॥ ब्राह्मणाः क्षत्रिया वैश्याः

अथ सामन्तराजविसर्जनम्—एवमित्यादि । एवं पूर्वोक्तप्रकारेण सर्वांस्स्यमान इत्यर्थः । प्रशासदिति शत्रन्तं पदम् ॥ १ ॥ २ ॥ भवानिति । भवान् हि गतिः । अव्यग्रेति अचला प्रतिष्ठेत्यर्थः । भवता पालिता इति । कन्याप्रदानादिना परिपालितवंशा इत्यर्थः । तेजसा तपोवीर्येण । पाविता इति च

शूद्रा धर्मसमन्विताः । सर्वे चोत्फुल्लनयनाः सर्वे हर्षसमन्विताः ॥ १२१ ॥ राममेवानुपश्यन्ति भृशमत्यन्तहर्षिताः । अगस्त्यस्त्वब्रवीद्रामं सर्वमेतच्छ्रुतं त्वया ॥१२२॥ दृष्टः सम्भाषितश्चापि राम गच्छामहे वयम्[ एवमुक्त्वा गताः सर्वे पूजितास्ते यथागतम् ।] ॥१२३॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तरश्रीरामायणे अधिकपाठे पञ्चमः सर्गः॥५॥

एवमास्ते महाबाहुरहन्यहनि राघवः । प्रशासत् सर्वकार्याणि पौरजानपदेषु च ॥ १॥ ततः कतिपयाहस्सु वैदेहं मिथिलाधिपम् । राघवः प्राञ्जलिर्भूत्वा वाक्यमेतदुवाच ह ॥२॥ भवान् हि गतिरव्यग्रा भवता पालिता वयम् ॥ भवतस्तेजसोग्रेण रावणो निहतो मया ॥३॥ इक्ष्वाकूणां च सर्वेषां मैथिलानां च सर्वशः । अतुलाः प्रीतयो राजन् सम्बन्धकपुरोगमाः ॥ ४॥ तद्भवान् स्वपुरीं यातु रत्नान्यादाय पार्थिव । भरतश्च सहायार्थं पृष्ठतस्तेऽनुयास्यति । ॥ ५ ॥ स तथेति नृपः कृत्वा राघवं वाक्यमब्रवीत् । प्रीतोऽस्मि भवतो राजन् दर्शनेन नयेन च ॥६॥ यान्येतानि तु रत्नानि मदर्थं सञ्चितानि वै । दुहित्रे तानि वै राजन् सर्वाण्येव ददामि च ॥ ७॥ एवमुक्त्वा तु काकुत्स्थं जनको हृष्टमानसः । प्रययौ मिथिलां श्रीमांस्तमनुज्ञाय राघवम् ॥ ८ ॥ ततः प्रयाते जनके केकयं मातुलं प्रभुः । राघवः प्राञ्जलिर्भूत्वा वाक्यमेतदुवाच ह ॥ ९ ॥ इदं राज्यमहं चैव भरतश्च सलक्ष्मणः । आयत्तास्त्वं हि नो राजन् गतिश्च पुरुषर्षभ ॥ १० ॥



पाठः ॥ ३ ॥ ४ ॥ तदिति । रत्नानि अस्माभिर्दीयमानानि उत्तमवस्तूनि ॥५॥ स इति । तथेति कृत्वा तथाऽस्त्वित्यङ्गीकृत्येत्यर्थः ॥ ६ ॥ यानीति । मदर्थं मत्प्रीतिदानार्थम् ॥ ७ ॥ ८ ॥ तत इति । केकयं मातुलमिति, युधाजितमित्यर्थः ॥ ९ ॥ इदमिति । आयत्ताः, त्वयीति शेषः । गतिः आप

द्वन्धुरित्यर्थः ॥ १० ॥ राजेति । राजा केकयः ॥ ११ ॥ लक्ष्मणेनेति । अनुयात्रेण अनुयात्रोपचाररूपेण अनुयात्रानुरूपोपचारार्थम् अनुगमिष्यते, भवानिति शेषः । लक्ष्मणस्त्वनुयात्रार्थं पृष्ठतोऽनुगमिष्यतीति च पाठः ॥ १२ ॥ १३ ॥ प्रदक्षिणमिति । रामेण पूर्वमभिवाद्य प्रदक्षिणं कृतः केकयवर्धनः राजानं रामं प्रदक्षिणीकृत्य प्रयातः । रामस्य मूर्धाभिषिक्तत्वाज्ज्येष्ठेन मातुलेनापि रामं प्रति प्रदक्षिणादिकरणम् ॥ १४ ॥ लक्ष्मणेनेति । वृत्रे हते

राजाऽपि वृद्धः सन्तापं त्वदर्थमुपयास्यति । तस्माद्गमनमद्यैव रोचते तव पार्थिव ॥ ११ ॥ लक्ष्मणेनानुयात्रेण पृष्ठतोऽनुगमिष्यते । धनमादाय विपुलं रत्नानि विविधानि च ॥१२॥ युधाजित्तु तथेत्याह गमनं प्रति राघवम् । रत्नानि च धनं चैव त्वय्येवाक्षय्यमस्त्विति ॥ १३ ॥ प्रदक्षिणं स राजानं कृत्वा केकयवर्धनः । रामेण हि कृतः पूर्वमभिवाद्य प्रदक्षिणम् ॥ १४ ॥ लक्ष्मणेन सहायेन प्रयातः केकयेश्वरः । हतेऽसुरे यथा वृत्रे विष्णुना सह वासवः ॥ १५ ॥ तं विसृज्य ततो रामो वयस्यमकुतोभयम् । प्रतर्दनं काशिपतिं परिष्वज्येदमब्रवीत् ॥ १६ ॥ दर्शिता भवता प्रीतिर्दर्शितं सौहृदं परम् । उद्योगश्च कृतो राजन् भरतेन त्वया सह ॥ १७ ॥ तद्भवानद्य काशेय पुरीं वाराणसीं व्रज । रमणीयां त्वया गुप्तां सुप्रकाशां सुतोरणाम् ॥१८॥ एतावदुक्त्वा चोत्थाय काकुत्स्थः परमासनात् । पर्यष्वजत धर्मात्मा निरन्तरमुरोगतम् ॥१९॥ विसर्जयामास तदा कौसल्यानन्दवर्धनः । राघवेणाभ्यनुज्ञातः काशीशोऽप्यकुतोभयः । वाराणसीं ययौ तूर्णं राघवेण विसर्जितः ॥ २० ॥ विसृज्य तं काशिपतिं त्रिशतं पृथिवीपतीन् । प्रहसन् राघवो वाक्यमुवाच मधुराक्षरम् ॥ २१ ॥

सति विष्णुना उपेन्द्रेण सह स्थितो वासवः यथा विसृजति तथा लक्ष्मणमनुयात्रार्थं विसृज्येत्यर्थः ॥ १५ ॥ १६ ॥ दर्शितेति । यस्मात्त्वया भरतेन सह मम रणसहायार्थमुद्योगः कृतः । यस्माद्भवता परमा प्रीतिर्दर्शिता परं सौहार्दं च दर्शितम् । अनेनानुवादेन रावणसंहारार्थं काशीराजेन सङ्गतमिति सिद्धम् ॥ १७ ॥ तदिति । काशेय काशीदेशे भव । ढग्भाव आर्षः ॥ १८ ॥ एतावदिति । उरोगतं यथा भवति तथा निरन्तरं गाढं पर्यष्वजत ॥१९॥ ॥ २० ॥ विसृज्येति । प्रहसन्निति । त्रिशतसङ्ख्याकपृथिवीपतिदर्शनजसन्तोषात्प्रहासः ॥ २१ ॥

भवतामिति । भवतां तेजसा अव्यग्रा प्रतिष्ठिता प्रीतिः वनाय निर्गतस्य मे पुनश्चागत्यानुभवयोग्यतया परिरक्षिता । भवतां तेजसा धर्मश्च नियतः । सत्यं च नियतम् ॥ २२–२४ ॥ भवन्त इति । भवन्तश्च समानीताः संमिलिताः ॥ २५–२७ ॥ दिष्ट्येति । हतशात्रवं हतशत्रुम् ॥ २८–३१ ॥ बाढ

भवतां प्रीतिरव्यग्रा तेजसा परिरक्षिता। धर्मश्च नियतो नित्यं सत्यं च भवतां सदा॥२२॥ युष्माकं चानुभावेन तेजसा च महात्मनाम् । हतो दुरात्मा दुर्बुद्धी रावणो राक्षसाधमः ॥ २३ ॥ हेतुमात्रमहं तत्र भवतां तेजसा हतः । रावणः सगणो युद्धे सपुत्रामात्यबान्धवः ॥ २४ ॥ भवन्तश्च समानीता भरतेन महात्मना । श्रुत्वा जनकराजस्य कानना त्तनयां हृताम् ॥ २५ ॥ उद्युक्तानां च सर्वेषां पार्थिवानां महात्मनाम् । कालो व्यतीतः सुमहान् गमनं रोचया म्यतः ॥२६॥ प्रत्यूचुस्तं च राजानो हर्षेण महता वृताः । दिष्ट्या त्वं विजयी राम स्वराज्येऽपि प्रतिष्ठितः ॥२७॥ दिष्ट्या प्रत्याहृता सीता दिष्ट्या शत्रुः पराजितः । एष नः परमः काम एषा नः प्रीतिरुत्तमा ॥२८॥ यत्त्वां विज यिनं राम पश्यामो हतशात्रवम् ॥२९॥ एतत्त्वय्युपपन्नं च यदस्मांस्त्वं प्रशंससे। प्रशंसार्ह न जानीमः प्रशंसां वक्तु मीदृशीम् ॥३०॥ आपृच्छामो गमिष्यामो हृदिस्थो नः सदा भवान् । वर्तामहे महाबाहो प्रीत्याऽत्र महता वृताः । भवेच्च ते महाराज प्रीतिरस्मासु नित्यदा ॥ ३१ ॥ बाढमित्येव राजानो हर्षेण परमन्विताः । ऊचुः प्राञ्जलयः सर्वे राघवं गमनोत्सुकाः ॥ ३२ ॥ पूजिताश्चैव रामेण जग्मुर्देशान् स्वकान् स्वकान् ॥३३॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे अष्टात्रिंशः सर्गः ॥ ३८ ॥

मित्येवेति । रामेणोक्ता इति शेषः । गमिष्याम इत्यूचुरिति पूर्वेणान्वयः ॥३२॥३३॥ इति श्रीगोविन्द० उत्तरश्रीरामायण० अष्टात्रिंशः सर्गः ॥ ३८ ॥

तिल०–प्रशंसार्ह सकललोकप्रशंसार्हस्वभावयुक्त ! ईदृशीं भवदुक्तप्रशंसाजातीयां प्रशंसां वक्तुं न जानीमः । अतस्तामकृत्वैव यथा सदा भवान्नो हृदिस्थः । एवं वयमपि त्वद्विषयया महत्या प्रीत्या वृतास्तव हृदि यथा वर्तामहे तथा अस्मासु ते प्रीतिश्च भवेत् भूयात् ॥ ३० ॥ ३१ ॥

त इत्यादि। प्रहृष्टवत् प्रहृष्टाः सन्तः ॥ १ ॥ अक्षौहिण्य इति । राघवार्थ इति । रामसहायार्थमित्यर्थः ॥ २ ॥ ऊचुरिति । रामरावणं रामस्य रावणम् । वध्यघातुकसंबन्धः षष्ठ्यर्थः । रामं रावणमिति पाठे–युद्धे रामं रावणं च युद्ध्यमानौ रामरावणावित्यर्थः ॥ ३ ॥ भरतेनेति । पश्चाद्रावणवधानन्तरम्



ते प्रयाता महात्मानः पार्थिवास्ते प्रहृष्टवत् । गजवाजिसहस्रौघैः कम्पयन्तो वसुन्धराम् ॥ १ ॥ अक्षौहिण्यो हि तत्रासन् राघवार्थे समुद्यताः । भरतस्याज्ञयाऽनेकाः प्रहृष्टा बलवाहनाः ॥ २ ॥ ऊचुस्ते च महीपाला बलदर्पसमन्विताः । न रामरावणं युद्धे पश्यामः पुरतः स्थितम् ॥ ३ ॥ भरतेन वयं पश्चात् समानीता निरर्थकम् । हता हि राक्षसाः क्षिप्रं पार्थिवैः स्युर्न संशयः ॥ ४ ॥ रामस्य बाहुवीर्येण रक्षिता लक्ष्मणस्य च । सुखं पारेसमुद्रस्य युद्ध्येम विगतज्वराः ॥ ५ ॥ एताश्चान्याश्च राजानः कथास्तत्र सहस्रशः । कथयन्तः स्वराज्यानि जग्मुर्हर्षसमन्विताः ॥ ६ ॥ स्वानि राज्यानि मुख्यानि ऋद्धानि मुदितानि च । समृद्धधनधान्यानि पूर्णानि वसुमन्ति च ॥ ७ ॥ यथापुराणि ते गत्वा रत्नानि विविधान्यथ । रामस्य प्रियकामार्थमुपहारान्नृपा ददुः ॥ ८ ॥ अश्वान् यानानि रत्नानि हस्तिनश्च मदोत्कटान् । चन्दनानि च मुख्यानि दिव्यान्याभरणानि च ॥९॥ मणिमुक्ताप्रवालांस्तु दास्यो रूपसमन्विताः । अजाविकांश्च विविधान् रथांस्तु विविधान् ददुः ॥ १० ॥ भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाबलाः । आदाय तानि रत्नानि स्वां पुरीं पुनरागताः ॥ ११ ॥

॥ ४–६ ॥ स्वानीति । मुख्यानीति, प्रसिद्धानीत्यर्थः । धनं जीविकाजीवरूपम् । वसुमन्ति महानिधिमन्ति ॥ ७ ॥ यथेति । यथापुराणि यथाप्राप्तस्वस्वपुराणि । उपहारान् प्रत्युपहारान् ॥ ८ ॥ ९ ॥ मणीति । अजाविकान् चर्ममयान् तल्पविशेषानित्यर्थः । अजाविकं च विविधमिति वा

स०–रामरावणं राममपि किञ्चित्कालं लोकदृष्ट्या रावयतीति मो सीते काशीति तथा तम् । न पश्यामः । पुरतः रामपुरतः स्थितम् । नालोकितवन्तः समरदर्शनदैवहीना इति भावः ॥ ३ ॥ भरतेनेति । तदैव दैववशाद्गमने रामरावणसम्मर्ददर्शनमिव राक्षससंक्षयः सुघटः कर्तुमस्मामिरिति वदन्तः । हता इति । यदि पूर्वं समानीता वयं तर्हि पार्थिवैरस्माभिरेव राक्षसा निहताः स्युरित्यन्वयः ॥ ४ ॥ उक्तानि स्वराज्यान्यनूद्य विशिनष्टि–स्वानीत्यादि । मुदितानि जनद्वारा । धनं स्वर्णादिधातुः । वसु रत्नादि । " वसु रत्ने स्मृतम् " इति विश्वः ॥ ७ ॥

पाठः ॥१०–१४॥ त इति । शिरोभिरिति । मुकुटकुण्डलादीनीति भावः । बाहुभिरिति । अङ्गदादीनीत्यर्थः । भुजेषु चेति पाठः ॥१५–२६॥ एवं तेषां



आगम्य च पुरीं रम्यामयोध्यां पुरुषर्षभाः । तानि रत्नानि चित्राणि रामाय समुपाहरन् ॥१२॥ प्रतिगृह्य च तत् सर्वं रामः प्रीतिसमन्वितः । सुग्रीवाय ददौ राज्ञे महात्मा कृतकर्मणे ॥१३॥ विभीषणाय च ददौ तथाऽन्येभ्योऽपि राघवः । राक्षसेभ्यः कपिभ्यश्च यैर्वृतो जयमाप्तवान् ॥ १४ ॥ ते सर्वे रामदत्तानि रत्नानि कपिराक्षसाः । शिरोभिर्धारयामासु र्बाहुभिश्च महाबलाः ॥ १५ ॥ हनूमन्तं च नृपतिरिक्ष्वाकूणां महारथः । अङ्गदं च महाबाहुमङ्कमारोप्य वीर्यवान् । रामः कमलपत्राक्षः सुग्रीवमिदमब्रवीत् ॥ १६ ॥ अङ्गदस्ते सुपुत्रोऽयं मन्त्री चाप्यनिलात्मजः ॥ १७ ॥ सुग्रीव मन्त्रिते युक्तौ ममापि च हिते रतौ । अर्हतो विविधां पूजां त्वत्कृते वै हरीश्वर ॥१८॥ इत्युक्त्वा व्यवमुच्याङ्गाद्भूषणानि महायशाः । स बबन्ध महार्हाणि तदाऽङ्गदहनूमतोः ॥१९॥ आभाष्य च महावीर्यान् राघवो यूथपर्षभान् । नीलं नलं केसरिणं कुमुदं गन्धमादनम् ॥२०॥ सुषेणं पनसं वीरं मैन्दं द्विविदमेव च । जाम्बवन्तं गवाक्षं च विनतं धूम्रमेव च ॥ २१ ॥ वलीमुखं प्रजङ्घं च सन्नादं च महाबलम् । दरीमुखं दधिमुखमिन्द्रजानुं च यूथपम् ॥ २२ ॥ मधुरं श्लक्ष्णया वाचा नेत्राभ्यामापिबन्निव । सुहृदो मे भवन्तश्च शरीरं भ्रातरस्तथा ॥ २३ ॥ युष्माभिरुद्धृतश्चाहं व्यसनात् काननौकसः । धन्यो राजा च सुग्रीवो भवद्भिः सुहृदां वरैः ॥ २४ ॥ एवमुक्त्वा ददौ तेभ्यो भूषणानि यथार्हतः । वज्राणि च महार्हाणि सस्वजे च नरर्षभः ॥ २५ ॥ ते पिबन्तः सुगन्धीनि मधूनि मधुपिङ्गलाः । मांसानि च सुमृष्टानि मूलानि च फलानि च ॥२६॥ एवं तेषां निवसतां मासः साग्रो ययौ तदा । मुहूर्तमिव ते सर्वे राजभक्त्या च मेनिरे ॥२७॥ रामोऽपि रेमे तैः सार्धं वानरैः कामरूपिभिः । राक्षसैश्च महावीर्यैरृक्षैश्चैव महाबलैः ॥२८॥



निवसतामिति । आभरणादिभिः सत्कृतानां निवसतां तेषां साग्रः पञ्चषड्दिनाधिकः मासो गतः ॥ २७ ॥ २८ ॥

एवं तेषामिति । वसन्तेऽभिषिक्तेन रामेण मासानन्तरमपि अविशेषसत्कारं प्राप्तानां तेषां द्वितीयः शैशिरो मासः फाल्गुनमासः सुखं गतः । अभिषेकानन्तरं संवत्सरं सुखमुषितास्त इत्यर्थः ॥ २९ ॥ इक्ष्वाकुनगर इति । प्रीतिकरणैः संमानैः ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

एवं तेषां ययौ मासो द्वितीयः शैशिरः सुखम् । वानराणां प्रहृष्टानां राक्षसानां च सर्वशः ॥ २९ ॥
इक्ष्वाकुनगरे रम्ये परां प्रीतिमुपासताम् । रामस्य प्रीतिकरणैः कालस्तेषां सुखं ययौ ॥ ३० ॥
इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

तथा स्म तेषां वसतामृक्षवानररक्षसाम् । राघवस्तु महातेजाः सुग्रीवमिदमब्रवीत् ॥ १ ॥ गम्यतां सौम्य किष्किन्धां दुराधर्षां सुरासुरैः । पालयस्व सहामात्यो राज्यं निहतकण्टकम् ॥ २ ॥ अङ्गदं च महाबाहो प्रीत्या परमया युतः । पश्य त्वं हनुमन्तं च नलं च सुमहाबलम् ॥ ३ ॥ सुषेणं श्वशुरं वीरं तारं च बलिनां वरम् । कुमुदं चैव दुर्धर्षं नीलं चैव महाबलम् ॥ ४ ॥ वीरं शतबलिं चैव मैन्दं द्विविदमेव च । गजं गवाक्षं गवयं शरभं च महाबलम् । पश्य प्रीतिसमायुक्तो गन्धमादनमेव च ॥ ५ ॥ ऋषभं च सुविक्रान्तं जाम्बवन्तं महाबलम् । [ केशरिं शरभं शुम्भं शङ्खचूडं महाबलम् । ] ये चेमे सुमहात्मानो मदर्थे त्यक्तजीविताः ॥ ६ ॥ पश्य त्वं प्रीतिसंयुक्तो मा चैषां विप्रियं कृथाः ॥ ७ ॥

तथा स्मेत्यादि । तेषामिति भावलक्षणे षष्ठी । तेषु वसत्स्विति यावत् ॥ १ ॥ गम्यतामिति । किष्किन्धां, प्रतीति शेषः ॥ २–८ ॥

ति०—वसन्तेऽभिषिक्तेन रामेण मासानन्तरं विशेषसत्कारप्राप्तौ शैशिरः शिशिरर्तुसम्बन्धी द्वितीयो मासः । सुखं गत इत्युक्त्या संवत्सरपर्यन्तं तेषां रामसमीपे वास उक्त इति तीर्थादयः । वस्तुतोऽधिकमासगणनयाऽमान्तमानेनाश्विनकृष्णपक्षे अयोध्याप्रवेशेन तत्रैव तदुत्तरशुक्लपक्षे वाऽभिषेकः । साग्रो मास इत्यनेन कार्त्तिकान्ता स्थितिरुक्ता । ततः शैशिरो द्वितीयो मासः फाल्गुनो गत इति हेमन्तशिशिरावर्धशरच्च तत्र वास इति पञ्चमासपर्यन्तं तत्र वास इति लभ्यते । पूर्वकाण्डान्तसंक्षेपेणोक्तस्यैवार्थस्यात्र काण्डे विस्तरेणोक्तिरिति बोध्यम् । एवं तेषामिति भरतायानीतरत्नविशेषैर्विशेषसत्कारप्राप्तिपर्यन्तं निवसतां तेषां साग्राः पञ्चषड्दिनाधिकाः मासा गताः ॥ स०—मासश्चात्र नाभिषेकमारभ्य, किन्तु सर्वराजनिर्गमनानन्तरमिति ध्येयम् । स्कान्दे रामोपाख्याने रामाभिषेकानन्तरं संवत्सरपर्यन्तं वासस्योक्तत्वात् । अत्र यद्वक्तव्यं तदुक्तं पुरस्तात् ॥ २९ ॥

लङ्कामिति । पुरस्य पुरवर्तिप्राणिनां राक्षसादीनाम्, स्वभ्रातुर्वैश्रवणस्य च संमतो ह्यसि परमातोऽसि । भ्रातुर्वैश्रवणस्य चेति पाठे—संमतोऽसीति शेषः ॥ ९ ॥ मा चेति । ध्रुवं शाश्वतम् ॥ १०–१२ ॥ तवेति । अद्भुतं वीर्यं जगदद्भुतकरं शौर्यम् ॥ १३ ॥ १४ ॥ स्नेह इति । स्नेहः सुहृदि प्रीतिः ।



एवमुक्त्वा तु सुग्रीवमाश्लिष्य च पुनः पुनः । विभीषणमुवाचाथ रामो मधुरया गिरा ॥ ८ ॥ लङ्कां प्रशाधि धर्मेण धर्मज्ञस्त्वं मतो मम । पुरस्य राक्षसानां च स्वभ्रातुः संमतो ह्यसि ॥ ९ ॥ मा च बुद्धिमधर्मे त्वं कुर्या राजन् कथञ्चन । बुद्धिमन्तो हि राजानो ध्रुवमश्नन्ति मेदिनीम् ॥ १० ॥ अहं च नित्यशो राजन् सुग्रीवसहितस्त्वया । स्मर्तव्यः परया प्रीत्या गच्छ त्वं विगतज्वरः ॥ ११ ॥ रामस्य भाषितं श्रुत्वा ऋक्षवानरराक्षसाः । साधु साध्विति काकुत्स्थं प्रशशंसुः पुनः पुनः ॥ १२ ॥ तव बुद्धिर्महाबाहो वीर्यमद्भुतमेव च । माधुर्यं परमं राम स्वयम्भोरिव नित्यदा ॥ १३ ॥ तेषामेवं ब्रुवाणानां वानराणां च रक्षसाम् । हनूमान् प्रवणो भूत्वा राघवं वाक्यमब्रवीत् ॥ १४ ॥ स्नेहो मे परमो राजंस्त्वयि तिष्ठतु नित्यदा । भक्तिश्च नियता वीर भावो नान्यत्र गच्छतु ॥ १५ ॥ यावद्रामकथा वीर चरिष्यति महीतले । तावच्छरीरे वत्स्यन्ति प्राणा मम न संशयः ॥ १६ ॥ यच्चैतच्चरितं दिव्यं कथां ते रघुनन्दन । तन्ममाप्सरसो नाम श्रावयेयुर्नरर्षभ ॥ १७ ॥ तच्छ्रुत्वाऽहं ततो वीर तव चर्यामृतं प्रभो । उत्कण्ठां तां हरिष्यामि मेघलेखामिवानिलः ॥ १८ ॥ एवं ब्रुवाणं रामस्तु हनूमन्तं वरासनात् । उत्थाय सस्वजे स्नेहाद्वाक्यमेतदुवाच ह ॥ १९ ॥ एवमेतत् कपिश्रेष्ठ भविता नात्र संशयः । चरिष्यति कथा यावदेषा लोके च मामिका । तावत्ते भविता कीर्तिः शरीरेऽप्यसवस्तथा ॥ २० ॥



भक्तिः उत्कृष्टे प्रीतिः ॥ १५ ॥ यावदिति । तावच्छरीरे वत्स्यन्ति त्वत्कथामृतरसास्वादबलादिति भावः ॥ १६–२० ॥

एवंशब्दार्थं विवृणोति—लोका हीति ॥ २१ ॥ २२ ॥ तत इति । तरलो हारमध्यगो मणिः ॥२३॥ तेनेति । हेमशैलेन्द्रः मेरुः । चन्द्रेण चन्द्रकिरणैः । आक्रान्तमस्तकः आक्रान्तकर्णप्रदेश इत्यर्थः ॥ २४ ॥ २५ ॥ सुग्रीव इति । निरन्तरम् उरोगत इति, गाढपरिष्वक्त इत्यर्थः ॥ २६ ॥ सर्वं इति ।

लोका हि यावत् स्थास्यन्ति तावत् स्थास्यति मे कथा ॥ २१ ॥ एकैकस्योपकारस्य प्राणान् दास्यामि ते कपे । [ शेषस्येहोपकाराणां भवाम ऋणिनो वयम् । मदङ्गे जीर्णतां यातु यत्त्वयोपकृतं कपे ॥ ] नरः प्रत्युपकाराणामापत्स्वायाति पात्रताम् ॥ २२ ॥ ततोऽस्य हारं चन्द्राभं मुच्य कण्ठात् स राघवः । वैडूर्यतरलं कण्ठे बबन्ध च हनूमतः ॥ २३ ॥ तेनोरसि निबद्धेन हारेण महता कपिः । रराज हेमशैलेन्द्रश्चन्द्रेणाक्रान्तमस्तकः ॥ २४ ॥ श्रुत्वा तु राघवस्यैतदुत्थायोत्थाय वानराः । प्रणम्य शिरसा पादौ निर्जग्मुस्ते महाबलाः ॥ २५ ॥ सुग्रीवः स च रामेण निरन्तरमुरोगतः । विभीषणश्च धर्मात्मा सर्वे ते बाष्पविक्लवाः ॥ २६ ॥ सर्वे च ते बाष्पकलाः साश्रुनेत्रा विचेतसः । संमूढा इव दुःखेन त्यजन्तो राघवं तदा ॥ २७ ॥ कृतप्रसादास्तेनैवं राघवेण महात्मना । जग्मुः स्वं स्वं गृहं सर्वे देही देहमिव त्यजन् ॥ २८ ॥ ततस्तु ते राक्षसऋक्षवानराः प्रणम्य रामं रघुवंशवर्धनम् । वियोगजाश्रुप्रतिपूर्णलोचनाः प्रतिप्रयातास्तु यथा निवासिनः ॥ २९ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे चत्वारिंशः सर्गः ॥ ४० ॥

विचेतसः वियोगखिन्नचेतसः ॥ २७ ॥ कृतेति । देहं त्यजन् देहीव रामवियोगखिन्ना इत्यर्थः । युद्धकाण्डान्ते वानरादीनां विसर्जनोक्तिः काण्डसमापनाय अत्रैव विसर्जनं तत्रोक्तमिति मन्तव्यम् ॥ २८ ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्या० चत्वारिंशः सर्गः ॥४० ॥

स०—कृतसत्या प्रार्थनमित्यत आह—नर इति । नरः उपकारी । आपत्सु आपत्काल एव पात्रताम् आयाति प्राप्नोति यतोऽत इत्यर्थः ॥ २२ ॥

विसृज्येत्यादि । प्रमुमोद सुखं सुखी, स्वतः सुखी रामः आश्रितदुःखनिवृत्त्या सुखं प्रमुमोद, अविच्छिन्नप्रमोदमगमदित्यर्थः । अत्र प्रमुमोदेति दकारो गायत्र्याः त्रयोविंशमक्षरम् । द्वाविंशतिसहस्रश्लोका गताः ॥ १ ॥ अथेति । अन्तरिक्षात्प्रभाषिताम् अन्तरिक्षगतेनोक्ताम्, पुष्पकाभिमानिदेवतयोक्ता



विसृज्य च महाबाहुर्ऋक्षवानरराक्षसान् । भ्रातृभिः सहितो रामः प्रमुमोद सुखं सुखी ॥ १ ॥ अथापराह्णसमये भ्रातृभिः सह राघवः । शुश्राव मधुरां वाणीमन्तरिक्षात् प्रभाषिताम् ॥२॥ सौम्य राम निरीक्षस्व सौम्येन वदनेन माम् । कुबेरभवनात् प्राप्तं विद्धि मां पुष्पकं प्रभो ॥३॥ तव शासनमाज्ञाय गतोऽस्मि भवनं प्रति । उपस्थातु नरश्रेष्ठ स च मां प्रत्यभाषत ॥ ४ ॥ निर्जितस्त्वं नरेन्द्रेण राघवेण महात्मना । निहत्य युधि दुर्धर्षं रावणं राक्षसेश्वरम् ॥ ५ ॥ ममापि परमा प्रीतिर्हते तस्मिन् दुरात्मनि । रावणे सगणे चैव सपुत्रे सहबान्धवे ॥६॥ स त्वं रामेण लङ्कायां निर्जितः परमात्मना । वह सौम्य तमेव त्वमहमाज्ञापयामि ते ॥७॥ परमो ह्येष मे कामो यत्त्वं राघवनन्दनम् । वहेर्लोकस्य संयानं गच्छस्व विगतज्वरः ॥ ८ ॥ सोऽहं शासनमाज्ञाय धनदस्य महात्मनः । त्वत्सकाशमनुप्राप्तो निर्विशङ्कः प्रतीक्ष माम् ॥ ९ ॥ अदृश्यः सर्वभूतानां सर्वेषां धनदाज्ञया । चराम्यहं प्रभावेण तवाज्ञां परिपालयन् ॥ १० ॥ एवमुक्तस्तदा रामः पुष्पकेण महाबलः । उवाच पुष्पकं दृष्ट्वा विमानं पुनरागतम् ॥११॥ यद्येवं स्वागतं तेऽस्तु विमानवर पुष्पक । आनुकूल्याद्धनेशस्य वृत्तदोषो न नो भवेत् ॥१२॥ लाजैश्चैव तथा पुष्पैर्धूपैश्चैव सुगन्धिभिः । पूजयित्वा महाबाहू राघवः पुष्पकं तदा ॥ १३ ॥

मित्यर्थः । अन्तरिक्षाद्विनिस्सृतामिति च पाठः ॥ २–७ ॥ परम इति । लोकस्य संयानमिति लोकसञ्चरणमित्यर्थः ॥ ८–१२ ॥

स०–सौम्येन वदनेन उपलक्षितस्त्वं मां निरीक्षस्व ॥ २ ॥ निर्जितः रावणं हत्वा स्ववशीकृतः ॥ ५ ॥ सहबान्धवे भ्रात्रादिबान्धवसहिते । सगणे सभृत्यादौ ॥ ६ ॥ मम वहनादपि परमात्मवहनात्परमा प्रीतिर्ममेत्याह–परम इति । लोकस्य संयानम् अश्रमेण नानास्थानगमनसाधनं त्वं राघवनन्दनं वहेरिति यदेष मे परमो महान् कामः । विगतज्वरः मन्मनोवैपरीत्यशङ्कारहितस्सन् गच्छस्व गच्छ । हे स्व भृत्य ! गच्छेति वा ॥८॥ वृत्तदोषः सदाचारभङ्गरूपः ॥ १२ ॥

गम्यतामिति । स्मरे स्मरामि । सिद्धानां च गतौ आकाशमार्गे । आत्मानं विषादेन अस्मद्वियोगदुःखेन मा योजय । विमुक्तगत्या गतदुःखः सुप्रतिष्ठितः सुखमास्स्वेत्यर्थः । सिद्धानां गतौ मा माम् अविषादेन अश्रमेण योजय प्रापयेति वाऽर्थः ॥ १४–१६ ॥ विविधेति । विविधात्मनि



गम्यतामिति चोवाच आगच्छ त्वं स्मरे यदा। सिद्धानां च गतौ सौम्य मा विषादेन योजय। प्रतिघातश्च ते मा भूद्यथेष्टं गच्छतो दिशः ॥१४॥ एवमस्त्विति रामेण पूजयित्वा विसर्जितम्। अभिप्रेतां दिशं तस्मात् प्रायात्तत् पुष्पकं तदा ॥१५॥ एवमन्तर्हिते तस्मिन् पुष्पके सुकृतात्मनि। भरतः प्राञ्जलिर्वाक्यमुवाच रघुनन्दनम् ॥१६॥ विविधात्मनि दृश्यन्ते त्वयि वीर प्रशासति। अमानुषाणां सत्त्वानां व्याहृतानि मुहुर्मुहुः ॥ १७ ॥ अनामयश्च सत्त्वानां साग्रो मासो गतो ह्ययम्। जीर्णानामपि सत्त्वानां मृत्युर्नायाति राघव ॥ १८ ॥ अरोगप्रसवा नार्यो वपुष्मन्तो हि मानवाः। हर्षश्चाभ्यधिको राजन् जनस्य पुरवासिनः ॥ १९ ॥ काले वर्षति पर्जन्यः पातयन्नमृतं पयः। वाताश्चापि प्रवान्त्येते स्पर्शयुक्ताः सुखाः शिवाः ॥२०॥ ईदृशोऽनश्वरो राजा भवेदिति नरेश्वरः। कथयन्ति पुरे राजन् पौरजानपदास्तथा ॥ २१ ॥ एता वाचः सुमधुरा भरतेन समीरिताः। श्रुत्वा रामो मुदा युक्तो बभूव नृपसत्तमः ॥ २२ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे एकचत्वारिंशः सर्गः ॥ ४१ ॥

नानारूपे, चित्र इत्यर्थः, अमानुषाणां सत्त्वानां पुष्पकादीनामित्यर्थः ॥ १७ ॥ अनामय इति । साग्रो मासो गत इति । अभिषेकानन्तरं साग्रो मासो गतः । तावन्मात्रेणानामयादिगुणप्रादुर्भाव इत्याश्चर्यमित्यर्थः । अनेन पुष्पकागमनं मासाभ्यन्तर एव तत्कालवृत्तान्तः भरतेन निर्दिशित इत्यवगम्यते । पुनः फाल्गुनमासप्राप्तेः पूर्वमुक्तत्वात् ॥१८॥ अरोगेति । वपुष्मन्तः हृष्टपुष्टवपुर्युक्ताः । सुखी सुखमिति वक्ष्यमाणसर्गकथानुवादसङ्ग्रहः ॥ १९–२२ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

स०—विसर्जितं आज्ञप्तम् । तत्पुष्पकं पुष्पमिव लघु । संज्ञायां कन् ॥ १५ ॥ विबुधात्मनि दृश्यन्ते । अमानुषाणि सत्त्वानि इति च पाठः । विबुधात्मनि देवस्वरूपे । अमानुषाणि सत्त्वानि पुष्पकाद्यभिमानिदेवाः । अमानुषाणि व्याहृतानि अशरीरगिरः दृश्यन्ते श्रूयन्ते च ॥ १७ ॥

स विसृज्येति । अशोकवनिकामन्तःपुरगतं लीलोद्यानम् ॥ १ ॥ चन्दनेति । तुङ्गः पुन्नागविशेषः । कालेयो रक्तचन्दनवृक्षः ॥२–६॥ तथैवेति । दिव्यैः



स विसृज्य ततो रामः पुष्पकं हेमभूषितम् । प्रविवेश महाबाहुरशोकवनिकां तदा ॥ १ ॥ चन्दनागरुचूतैश्च तुङ्गकालेयकैरपि । देवदारुवनैश्चापि समन्तादुपशोभिताम् ॥ २ ॥ चम्पकाशोकपुन्नागमधूकपनसासनैः । शोभितां पारिजातैश्च विधूमज्वलनप्रभैः ॥ ३ ॥ लोध्रनीपार्जुनैर्नागैः सप्तपर्णातिमुक्तकैः । मन्दारकदलीगुल्मलताजालसमावृताम् ॥ ४ ॥ प्रियङ्गुभिः कदम्बैश्च तथा च बकुलैरपि । जम्बूभिर्दाडिमैश्चैव कोविदारैश्च शोभिताम् ॥ ५ ॥ सर्वदाकुसुमै रम्यैः फलवद्भिर्मनोरमैः । दिव्यगन्धरसोपेतैस्तरुणाङ्कुरपल्लवैः ॥ ६ ॥ तथैव तरुभिर्दिव्यैः शिल्पिभिः परिकल्पितैः । चारुपल्लवपुष्पाढ्यैर्मत्तभ्रमरसङ्कुलैः ॥ ७ ॥ कोकिलैर्भृङ्गराजैश्च नानावर्णैश्च पक्षिभिः । शोभितां शतशश्चित्रां चूतवृक्षावतंसकैः ॥ ८ ॥ शातकुम्भनिभाः केचित् केचिदग्निशिखोपमाः । नीलाञ्जननिभाश्चान्ये भान्ति तत्रत्यपादपाः ॥ ९ ॥ सुरभीणि च पुष्पाणि माल्यानि विविधानि च । दीर्घिका विविधाकाराः पूर्णाः परमवारिणा ॥ १० ॥ माणिक्यकृतसोपानाः स्फाटिकान्तरकुट्टिमाः । फुल्लपद्मोत्पलवनाश्चक्रवाकोपशोभिताः ॥ ११ ॥ दात्यूहशुकसंघुष्टा हंससारसनादिताः । तरुभिः पुष्पवद्भिश्च तीरजैरुपशोभिताः ॥ १२ ॥ प्राकारैर्विविधाकारैः शोभिताश्च शिलातलैः । तत्रैव च वनोद्देशे वैडूर्यमणिसन्निभैः ॥ १३ ॥ शाद्वलैः परमोपेतां पुष्पितद्रुमकाननाम् । तत्र सङ्घर्षजातानां वृक्षाणां पुष्पशालिनाम् ॥ १४ ॥

शिल्पिभिरिति । ऋतुभिरित्यर्थः । दोहलकादिभिर्वा ॥ ७ ॥ कोकिलैरिति । चूतवृक्षावतंसकैः चूतवृक्षाग्रस्थैरित्यर्थः ॥ ८–१० ॥ माणिक्येति । स्फाटिकान्तरकुट्टिमाः स्फटिकमयसोपानप्रान्तस्नानार्हाः निबद्धभूमयः । अन्यथा सर्वत्रान्तरे स्फटिककुट्टिमत्वे पद्माद्युत्पत्तिविरोधात् ॥ ११–१३ ॥ शाद्वलै

रिति । परमोपेताम् अत्यन्तसंयुक्ताम् । सङ्घर्षजातायां स्पर्धयैव जातायाम्, [illegible]मित्यर्थः ॥ १४ ॥ प्रस्तरा इति । प्रस्तराः वृक्षमूलेषु शयनार्थं स्थापिताः श्लक्ष्णशिलाः । ब्राह्मं ब्रह्मनिर्मितम् । सन्निवेशनं समीचीनसंस्थानोपेतम् ॥ १५ ॥ बह्विति । बह्वासनगृहोपेताम् अनेकावस्थानयोग्यगृहो



प्रस्तराः पुष्पशबला नभस्तारागणैरिव । नन्दनं हि यथेन्द्रस्य ब्राह्मं चैत्ररथं यथा । तथाभूतं हि रामस्य काननं सन्निवेशनम् ॥ १५ ॥ बह्वासनगृहोपेतां लतागृहसमावृताम् । अशोकवनिकां स्फीतां प्रविश्य रघुनन्दनः ॥ १६ ॥ आसने च शुभाकारे पुष्पप्रकरभूषिते । कुथास्तरणसंवीते रामः सन्निषसाद ह ॥ १७ ॥ सीतामादाय हस्तेन मधु मैरेयकं शुचि । पाययामास काकुत्स्थः शचीमिव पुरन्दरः ॥ १८ ॥ मांसानि च समृष्टानि फलानि विविधानि च । रामस्याभ्यवहारार्थं किङ्करास्तूर्णमाहरन् ॥१९॥ उपानृत्यंश्च राजानं नृत्तगीतविशारदाः । बालाश्च रूपवत्यश्च स्त्रियः पानवशानुगाः ॥ २० ॥ मनोभिरामा रामास्ता रामो रमयतां वरः । रमयामास धर्मात्मा नित्यं परम भूषितः ॥ २१ ॥ स तया सीतया सार्धमासीनो विरराज ह । अरुन्धत्या सहासीनो वसिष्ठ इव तेजसा ॥ २२ ॥ एवं रामो मुदा युक्तः सीतां सुरसुतोपमाम् । रमयामास वैदेहीमहन्यहनि देववत् ॥ २३ ॥ तथा तयोर्विहरतोः सीताराघवयोश्चिरम् । अत्यक्रामच्छुभः कालः शिशिरो भोगदः सदा ॥ २४ ॥ दश वर्षसहस्राणि गतानि सुमहात्मनोः । प्राप्तयोर्विविधान् भोगानतीतः शिशिरागमः ॥ २५ ॥

पेतामित्यर्थः । लतागृहसमावृतां लतामयगृहसमावृताम् ॥ १६ ॥ आसन इति । कुथास्तरणसंवीते उपर्यास्तरणावृते ॥ १७ ॥ सीतामिति । मैरेयकं धातकीगुडमिश्रवारिभिः कृतं मद्यम् । "मैरेयमासवे धात्रीधातकीगुडवारिभिः" इति वैजयन्ती ॥१८॥१९॥ उपानृत्यन्निति । उपनृत्यन्तीति वा पाठः । राजानमिति । राजानमुप राज्ञः समीपे । पानवशं पानजमदवशम् ॥२०-२३॥ तथेति । शिशिरः शुभोऽत्यक्रामदिति । पुनश्च संवत्सरोऽतीत इत्यर्थः । वानरादिसुहृत्सँल्लापादिना क्रीडावसराभावात्तैः सह एकसंवत्सरो गतः । तद्विसर्जनानन्तरं क्रीडया पुनरेकः संवत्सरो गतः । तथा चाभिषेकानन्तरं वर्ष

द्वयं जातम् ॥ २४ ॥ २५ ॥ पूर्वाह्ण इति । शेषं दिवसभागार्धम्, अपराह्ण इत्यर्थः ॥ २६–२९ ॥ अब्रवीदिति । अपत्येति । ममायमपत्यलाभस्त्वयि समुपस्थितः, तव गर्भलक्षणं दृश्यत इत्यर्थः ॥ ३०–३४ ॥ तथेति । विस्रब्धा भव, महाराजो महिषीं मां कथमाश्रमं प्रति नेष्यतीति शङ्कां मा

पूर्वाह्णे धर्मकार्याणि कृत्वा धर्मेण धर्मवित् । शेषं दिवसभागार्धमन्तःपुरगतोऽभवत् ॥२६॥ सीताऽपि देवकार्याणि कृत्वा पौर्वाह्णिकानि वै । श्वश्रूणामकरोत् पूजां सर्वासामविशेषतः ॥ २७ ॥ अभ्यगच्छत्ततो रामं विचित्राभरणाम्बरा । त्रिविष्टपे सहस्राक्षमुपविष्टं यथा शची ॥ २८ ॥ दृष्ट्वा तु राघवः पत्नीं कल्याणेन समन्विताम् । प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् ॥ २९ ॥ अब्रवीच्च वरारोहां सीतां सुरसुतोपमाम् । अपत्यलाभो वैदेहि त्वयि मे समुपस्थितः ॥ ३० ॥ किमिच्छसि वरारोहे कामः किं क्रियतां तव ॥ ३१ ॥ स्मितं कृत्वा तु वैदेही रामं वाक्यमथाब्रवीत् । तपोवनानि पुण्यानि द्रष्टुमिच्छामि राघव ॥ ३२ ॥ गङ्गातीरोपविष्टानामृषीणामुग्रतेजसाम् । फलमूलाशिनां देव पादमूलेषु वर्तितुम् ॥ ३३ ॥ एष मे परमः कामो यन्मूलफलभोजिनाम् । अप्येकरात्रं काकुत्स्थ निवसेयं तपोवने ॥ ३४ ॥ तथेति च प्रतिज्ञातं रामेणाक्लिष्टकर्मणा । विस्रब्धा भव वैदेहि श्वो गमिष्यस्यसंशयम् ॥ ३५ ॥ एवमुक्त्वा तु काकुत्स्थो मैथिलीं जनकात्मजाम् । मध्यकक्ष्यान्तरं रामो निर्जगाम सुहृद्वृतः ॥ ३६ ॥
इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

तत्रोपविष्टं राजानमुपासन्ते विचक्षणाः । कथानां बहुरूपाणां हास्यकाराः समन्ततः ॥ १ ॥
विजयो मधुमत्तश्च काश्यपः पिङ्गलः कुटः । सुराजः कालियो भद्रा दन्तवक्रः सुमागधः ॥ २ ॥



कुर्वित्यर्थः ॥३५॥३६॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥ तत्रेत्यादि । ( उपासन्ते

उपासते । धात्वन्तरस्येदं रूपं वा ॥ १ ॥ २ ॥ कथाः अतीतवार्ताः ॥ ३ ॥ ) तत इति । विषयेषु देशेषु ॥ ४ ॥ ५ ॥ किं न्विति । वक्तव्यतां च राजानो

एते कथा बहुविधाः परिहाससमन्विताः। कथयन्ति स्म संहृष्टा राघवस्य महात्मनः ॥३॥ ततः कथायां कस्यांचि द्राघवः समभाषत । काः कथा नगरे भद्र वर्तन्ते विषयेषु च ॥ ४ ॥ मामाश्रितानि कान्याहुः पौरजानपदा जनाः। किंच सीतां समाश्रित्य भरतं किंच लक्ष्मणम् ॥ ५ ॥ किन्नु शत्रुघ्नमुद्दिश्य कैकयीं किन्नु मातरम् । वक्त व्यतां च राजानो वने राज्ये व्रजन्ति च ॥ ६ ॥ एवमुक्ते तु रामेण भद्रः प्राञ्जलिरब्रवीत् । स्थिताः कथाः शुभा राजन् वर्तन्ते पुरवासिनाम् ॥ ७ ॥ अमुं तु विजयं सौम्य दशग्रीववधार्जितम् । भूयिष्ठं स्वपुरे पौरैः कथ्यन्ते पुरुषर्षभ ॥ ८ ॥ एवमुक्तस्तु भद्रेण राघवो वाक्यमब्रवीत् । कथयस्व यथातत्त्वं सर्वं निरवशेषतः ॥ ९ ॥ शुभाशुभानि वाक्यानि यान्याहुः पुरवासिनः । श्रुत्वेदानीं शुभं कुर्यां न कुर्यामशुभानि च ॥ १० ॥ कथयस्व च विस्रब्धो निर्भयं विगतज्वरः । कथयन्ति यथा पौराः पापा जनपदेषु च ॥ ११ ॥ राघवेणैवमुक्तस्तु भद्रः सुरुचिरं वचः। प्रत्युवाच महाबाहुं प्राञ्जलिः सुसमाहितः॥ १२ ॥ शृणु राजन् यथा पौराः कथयन्ति शुभाशुभम् । चत्वरा पणरथ्यासु वनेषूपवनेषु च ॥ १३ ॥ दुष्करं कृतवान् रामः समुद्रे सेतुबन्धनम् । अश्रुतं पूर्वकैः कैश्चिद्देवैरपि सदानवैः ॥ १४ ॥ रावणश्च दुराधर्षो हतः सबलवाहनः । वानराश्च वशं नीता ऋक्षाश्च सह राक्षसैः ॥ १५ ॥ हत्वा च रावणं सङ्ख्ये सीतामाहृत्य राघवः । अमर्षं पृष्ठतः कृत्वा स्ववेश्म पुनरानयत् ॥ १६ ॥ कीदृशं हृदयं तस्य सीतासम्भोगजं सुखम् । अङ्कमारोप्य तु पुरा रावणेन बलाद्धृताम् ॥ १७ ॥

नवे राज्ये व्रजन्ति हीति च पाठः । नवे राज्ये सति राजानो वक्तव्यतां सम्यगसम्यग्वा कीर्तनीयतां व्रजन्ति हि ॥६–१५॥ हत्वेत्यादि । सीतामाहृत्य तदनन्तरजातममर्षं रावणस्पर्शजं पृष्ठतः कृत्वा विसृज्येत्यर्थः ॥ १६ ॥ कीदृशमिति । कीदृशम् कुत्सितमेवेत्यर्थः । तत्र हेतुः अङ्कमित्यादि ॥१७॥१८॥

अस्माकमिति । सहनीयमिति । एवं कश्मलमित्यर्थः ॥ १९ ॥ २० ॥ तस्येति । परमार्तवत् परमदुःखी भूत्वा । सर्वान् सुहृद इति भद्रव्यतिरिक्ता नित्यर्थः । कथमेतदिति । भद्रोक्तमेतत् अपयशोवचनं कथं तत्त्वमतत्त्वं वेति भवद्भिश्च निवेद्यतामित्यर्थः ॥ २१ ॥ सर्वं इति । एवमेतत् यथा



लङ्कामपि पुरा नीतामशोकवनिकां गताम् । रक्षसां वशमापन्नां कथं रामो न कुत्सते ॥ १८ ॥ अस्माकमपि दारेषु सहनीयं भविष्यति । यथा हि कुरुते राजा प्रजा तमनुवर्तते ॥ १९ ॥ एवं बहुविधा वाचो वदन्ति पुरवासिनः । नगरेषु च सर्वेषु राजन् जनपदेषु च ॥ २० ॥ तस्यैवं भाषितं श्रुत्वा राघवः परमार्तवत् । उवाच सुहृदः सर्वान् कथमेतद्ब्रवीथ माम् ॥ २१ ॥ सर्वे तु शिरसा भूमावभिवाद्य प्रणम्य च । प्रत्यूचू राघवं दीनमेवमेतन्न संशयः ॥ २२ ॥ श्रुत्वा तु वाक्यं काकुत्स्थः सर्वेषां समुदीरितम् । विसर्जयामास तदा वयस्याञ्छत्रुसूदनः ॥ २३ ॥

इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

विसृज्य तु सुहृद्वर्गं बुद्ध्या निश्चित्य राघवः । समीपे द्वास्स्थमासीनमिदं वचनमब्रवीत् ॥ १ ॥ शीघ्रमानय सौमित्रिं लक्ष्मणं शुभलक्षणम् । भरतं च महाभागं शत्रुघ्नमपराजितम् ॥ २ ॥ रामस्य वचनं श्रुत्वा द्वास्थो मूर्ध्नि कृताञ्जलिः । लक्ष्मणस्य गृहं गत्वा प्रविवेशानिवारितः ॥ ३ ॥ उवाच सुमहात्मानं वर्धयित्वा कृताञ्जलिः । द्रष्टुमिच्छति राजा त्वां गम्यतां तत्र मा चिरम् ॥ ४ ॥ बाढमित्येव सौमित्रिः श्रुत्वा राघवशासनम् । प्राद्रवद्रथमारुह्य राघवस्य निवेशनम् ॥ ५ ॥ प्रयान्तं लक्ष्मणं दृष्ट्वा द्वास्थो भरतमन्तिकात् । उवाच भरतं तत्र वर्धयित्वा कृताञ्जलिः ॥ ६ ॥ विनयावनतो भूत्वा राजा त्वां द्रष्टुमिच्छति । भरतस्तु वचः श्रुत्वा द्वास्थाद्रामसमीरितम् ॥ ७ ॥



भद्रेणोक्तम् एतत्तत्त्वमेव ॥ २२ ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

विसृज्येत्यादि । निश्चित्येति, कर्तव्यमिति शेषः ॥ १–३ ॥ उवाचेति । वर्धयित्वेति, जयाशिषेति शेषः । मा चिरं विलम्बो मा भूत् ॥ ४ ॥ ५ ॥ प्रयान्तमिति ।

भरतमन्तिकात् भरतस्यान्तिकमित्यर्थः । गत्वेति शेषः । कृताञ्जलिः, भरतायेति शेषः ॥ ६ ॥ ७ ॥ उत्पपातेति । उत्पपात उत्थाय जगाम ॥ ८–१० ॥ शिरसेति । शिरसा धरणीं प्राप्य रामाय वन्दित्वेत्यर्थः ॥ ११ ॥ १२ ॥ प्रवेशयेति । मह्यं ममेत्यर्थः ॥ १३ ॥ १४ ॥ ते त्विति । सग्रहं

उत्पपातासनात्तूर्णं पद्भ्यामेव ययौ बली । दृष्ट्वा प्रयान्तं भरतं त्वरमाणः कृताञ्जलिः ॥८॥ शत्रुघ्नभवनं गत्वा ततो वाक्यमुवाच ह । एह्यागच्छ रघुश्रेष्ठ राजा त्वां द्रष्टुमिच्छति ॥ ९ ॥ गतो हि लक्ष्मणः पूर्वं भरतश्च महायशाः । श्रुत्वा तु वचनं तस्य शत्रुघ्नः परमासनात् ॥ १० ॥ शिरसा धरणीं प्राप्य प्रययौ यत्र राघवः । द्वास्थस्त्वागम्य रामाय सर्वानेव कृताञ्जलिः । निवेदयामास तदा भ्रातॄन् स्वान् समुपस्थितान् ॥ ११ ॥ कुमारानागतान् श्रुत्वा चिन्ताव्याकुलितेन्द्रियः । अवाङ्मुखो दीनमना द्वास्थं वचनमब्रवीत् ॥ १२ ॥ प्रवेशय कुमारांस्त्वं मत्समीपं त्वरान्वितः । एतेषु जीवितं मह्यमेते प्राणाः प्रिया मम ॥ १३ ॥ आज्ञप्तास्तु नरेन्द्रेण कुमाराः शक्रतेजसः । प्रह्वाः प्राञ्जलयो भूत्वा विविशुस्ते समाहिताः ॥ १४ ॥ ते तु दृष्ट्वा मुखं तस्य सग्रहं शशिनं यथा । सन्ध्यागतमिवादित्यं प्रभया परिवर्जितम् ॥ १५ ॥ बाष्पपूर्णे च नयने दृष्ट्वा रामस्य धीमतः । हतशोभं यथा पद्मं मुखं वीक्ष्य च तस्य ते ॥ १६ ॥ ततोऽभिवाद्य त्वरिताः पादौ रामस्य मूर्धभिः । तस्थुः समाहिताः सर्वे रामस्त्वश्रूण्यवर्तयत् ॥ १७ ॥ तान् परिष्वज्य बाहुभ्यामुत्थाप्य च महाबलः । आसनेष्वासतेत्युक्त्वा ततो वाक्यं जगाद ह ॥ १८ ॥ भवन्तो मम सर्वस्वं भवन्तो जीवितं मम । भवद्भिश्च कृतं राज्यं पालयामि नरेश्वराः ॥ १९ ॥ भवन्तः कृतशास्त्रार्था बुद्ध्या च परिनिष्ठिताः । सम्भूय च मदर्थोऽयमन्वेष्टव्यो नरेश्वराः ॥ २० ॥ तथा वदति काकुत्स्थे ह्यवधानपरायणाः । उद्विग्नमनसः सर्वे किन्नु राजाऽभिधास्यति ॥ २१ ॥ इत्यार्षे वाल्मीकीये॰ श्रीमदुत्तरश्रीरामायणे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

सोपरागम् ॥१५–१९॥ भवन्त इति । कृतशास्त्रार्थाः अनुष्ठितशास्त्रार्थाः ॥२०॥२१॥ इति श्रीगोविन्दराज॰ उत्तरश्रीरामा॰ चतुश्चत्वारिंशः सर्गः ॥४४॥

तेषामित्यादि ॥ १ ॥ सर्वं इति । मा कुरुध्वं मनोऽन्यथा, मदभिप्रायानुकूलं मा कुरुध्वमित्यर्थः । तमेवाभिप्रायमाविष्करोति—पौराणामित्यादि । सीतायां विषये यादृशी कथा वर्तते तां कथां मत्सकाशात् शृणुतेत्यन्वयः ॥ २ ॥ का कथा वर्तत इत्यत्राह—पौरापवाद इत्यादि । मयि मद्विषये

तेषां समुपविष्टानां सर्वेषां दीनचेतसाम् । उवाच वाक्यं काकुत्स्थो मुखेन परिशुष्यता ॥ १ ॥ सर्वे शृणुत भद्रं वो मा कुरुध्वं मनोऽन्यथा । पौराणां मम सीतायां यादृशी वर्तते कथा ॥ २ ॥ पौरापवादः सुमहांस्तथा जनपदस्य च । वर्तते मयि बीभत्सा सा मे मर्माणि कृन्तति ॥ ३ ॥ अहं किल कुले जात इक्ष्वाकूणां महात्मनाम् । सीताऽपि सत्कुले जाता जनकानां महात्मनाम् ॥ ४ ॥ जानासि त्वं यथा सौम्य दण्डके विजने वने। रावणेन हृता सीता स च विध्वंसितो मया ॥ ५ ॥ तत्र मे बुद्धिरुत्पन्ना जनकस्य सुतां प्रति । अत्रोषितामिमां सीतामानयेयं कथं पुरीम् ॥ ६ ॥ प्रत्ययार्थं ततः सीता विवेश ज्वलनं तदा । प्रत्यक्षं तव सौमित्रे देवानां हव्यवाहनः । अपापां मैथिलीमाह वायुश्चाकाशगोचरः ॥ ७ ॥ चन्द्रादित्यौ च शंसेते सुराणां सन्निधौ पुरा । ऋषीणां चैव सर्वेषामपापां जनकात्मजाम् ॥ ८ ॥ एवं शुद्धसमाचारा देवगन्धर्वसन्निधौ । लङ्काद्वीपे महेन्द्रेण मम हस्ते निवेशिता ॥ ९ ॥ अन्तरात्मा च मे वेत्ति सीतां शुद्धां यशस्विनीम् । ततो गृहीत्वा वैदेहीमयोध्यामहमागतः ॥ १० ॥ अयं तु मे महान् वादः शोकश्च हृदि वर्तते । पौरापवादः सुमहांस्तथा जनपदस्य च ॥ ११ ॥ अकीर्तिर्यस्य गीयेत लोके भूतस्य कस्यचित् । पतत्येवाधमाँल्लोकान् यावच्छब्दः प्रकीर्त्यते ॥ १२ ॥

बीभत्सा कुत्सा वर्तते सा मम सर्वमर्माणि कृन्तति ॥ ३–१० ॥ अयन्त्विति । महान्वाद इति, वर्तत इति शेषः । शोकश्चेति, तच्छ्रवणादिति शेषः । कोऽयं वाद इत्यत्राह—पौरेत्यादि ॥ ११ ॥ अकीर्तिरिति । भूतस्य प्राणिनः । शब्दः अकीर्तिबोधकः ॥ १२–१४ ॥

स०—त्रयाणामप्येकान्ते सत्त्वेऽपि प्रात्यक्षिकानुभवो लक्ष्मणस्यैवेति तमेव लक्षीकृत्याहेत्याह—जानासीति ॥५॥ प्रत्ययार्थम् आत्मशुद्धौ विश्वासार्थं देवानां तत्र च प्रत्यक्षम् अपापां परपुरुषसंसर्गपापशून्याम् ॥७॥

तस्मादिति । भूतमुत्पन्नम् ॥ १९ ॥ श्व इति । विषयान्ते स्वदेशान्ते ॥ १६ ॥ तां निक्षेप्यति गङ्गाया इत्यादि ॥ १७–१९ ॥ अप्रीतिरिति । मह्यं मम । भुजाभ्यामिति वीरवचनम् ॥ २० ॥ य इति । वाक्यान्तरे अस्मद्वाक्यमध्ये । अनुनेतुं ये ब्रूयुस्ते शापिता इति पूर्वेणान्वयः ॥२१॥ फलितमाह–

अकीर्तिर्निन्द्यते देवैः कीर्तिर्लोकेषु पूज्यते । कीर्त्यर्थं तु समारम्भः सर्वेषां सुमहात्मनाम् ॥१३॥ अप्यहं जीवितं जह्यां युष्मान् वा पुरुषर्षभाः । अपवादभयाद्भीतः किं पुनर्जनकात्मजाम् ॥ १४ ॥ तस्माद्भवन्तः पश्यन्तु पतितं शोकसागरे । न हि पश्याम्यहं भूतं किंचिद्दुःखमतोऽधिकम् ॥ १५ ॥ श्वस्त्वं प्रभाते सौमित्रे सुमन्त्राधिष्ठितं रथम् । आरुह्य सीतामारोप्य विषयान्ते समुत्सृज ॥ १६ ॥ गङ्गायास्तु परे पारे वाल्मीकेस्तु महात्मनः । आश्रमो दिव्यसङ्काशस्तमसातीरमाश्रितः ॥१७॥ तत्रैनां विजने देशे विसृज्य रघुनन्दन । शीघ्रमागच्छ भद्रं ते कुरुष्व वचनं मम ॥१८॥ न चास्मिन् प्रतिवक्तव्यः सीतां प्रति कथञ्चन । तस्मात्त्वं गच्छ सौमित्रे नात्र कार्या विचारणा ॥१९॥ अप्रीतिर्हि परा मह्यं त्वय्येतत्प्रतिवारिते । शापिता हि मया यूयं भुजाभ्यां जीवितेन च ॥२०॥ ये मां वाक्यान्तरे ब्रूयुरनुनेतुं कथञ्चन । अहिता नाम ते नित्यं मदभीष्टविघातनात् ॥ २१ ॥ मानयन्तु भवन्तो मां यदि मच्छासने स्थिताः । इतोऽद्य नीयतां सीता कुरुष्व वचनं मम ॥ २२ ॥ पूर्वमुक्तोऽहमनया गङ्गातीरेऽहमाश्रमान् । पश्येय मिति तस्याश्च कामः संवर्त्यतामयम् ॥ २३ ॥

मानयन्त्विति ॥ २२ ॥ कथमिदं नृशंसत्वं सोढुं शक्यमित्यत्राह–पूर्वमित्यादि । संवर्त्यताम् अनुष्ठीयताम् ॥ २३ ॥

स॰–पुरुषर्षभाः ! अनेन कियच्चिदमागताश्चाः कुलान्तरप्रभवाया हाननिति सूचयति । अपवादभयाद्भीत इति पदमेकम् । अपवादभयमातयन्ति ते अपवादभयातः, तेभ्यो भीतः । बहुलग्रहणात् किप् । आतयन्ती त्यादः । अपवादभयस्यात इति वा ॥ १४ ॥ यूयं मया पादाभ्यां जीवितेन च शापिताः पादौ साक्षिणौ प्राणाः साक्षिणः इति स्थापितशपथाः । भुजाभ्यामिति च पाठः । तत्र क्षत्रियाणां शपथविषये आयुधो पादानादेर्विधानाद्रामस्य धनुर्बाणप्रेमोपेतत्वात्तद्धारणस्य शपथसाधनत्वाद्भुजाभ्यामित्युक्तिर्युक्तेति मन्तव्यम् । "भुजः पाणौ च बाहौ च" इति विश्वः ॥ २० ॥

एवमिति । भ्रातृभिः परिवारितः प्रविवेशेति । भ्रातृन् विसृज्य स्ववेश्म प्रविवेशेत्यर्थः ॥ २४ ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥





एवमुक्त्वा तु काकुत्स्थो बाष्पेण पिहिताननः । प्रविवेश स धर्मात्मा भ्रातृभिः परिवारितः ॥ २४ ॥ शोकसंलग्नहृदयो निशश्वास यथा द्विपः ॥ २५ ॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तरश्रीरामायणे पञ्चचत्वारिंशः सर्गः ॥४५॥
ततो रजन्यां व्युष्टायां लक्ष्मणो दीनचेतनः । सुमन्त्रमब्रवीद्वाक्यं मुखेन परिशुष्यता ॥ १ ॥ सारथे तुरगान् शीघ्रं योजयस्व रथोत्तमे । स्वास्तीर्णं राजभवनात् सीतायाश्चासनं कुरु ॥ २ ॥ सीता हि राजवचनादाश्रमं पुण्यकर्मणाम् । मया नेया महर्षीणां शीघ्रमानीयतां रथः ॥ ३ ॥ सुमन्त्रस्तु तथेत्युक्त्वा युक्तं परमवाजिभिः । रथं सुरुचिरप्रख्यं स्वास्तीर्णं सुखशय्यया ॥ ४ ॥ आनीयोवाच सौमित्रिं मित्राणां मानवर्धनम् । रथोऽयं समनुप्राप्तो यत् कार्यं क्रियतां प्रभो ॥ ५ ॥ एवमुक्तः सुमन्त्रेण राजवेश्मनि लक्ष्मणः । प्रविश्य सीतामासाद्य व्याजहार नरर्षभः ॥ ६ ॥ त्वया किलैष नृपतिर्वरं वै याचितः प्रभुः । नृपेण च प्रतिज्ञातमाज्ञप्तश्चाश्रमं प्रति ॥७॥ गङ्गातीरे मया देवि ऋषीणामाश्रमान् शुभान् । शीघ्रं गत्वा तु वैदेहि शासनात् पार्थिवस्य नः । अरण्ये मुनिभिर्जुष्टे अपनेया भविष्यसि ॥ ८ ॥ एवमुक्ता तु वैदेही लक्ष्मणेन महात्मना । प्रहर्षमतुलं लेभे गमनं चाप्यरोचयत् ॥९॥ वासांसि च महार्हाणि रत्नानि विविधानि च । गृहीत्वा तानि वैदेही गमनायोपचक्रमे ॥ १० ॥ इमानि मुनिपत्नीनां दास्याम्याभरणान्यहम् । वस्त्राणि च महार्हाणि धनानि विविधानि च ॥ ११ ॥



तत इत्यादि ॥ १ ॥ सारथ इति । स्वास्तीर्णमिति । सीतायाश्च शुभमासनं राजभवनादानीय स्वास्तीर्णं रथं कुरु ॥२॥ कुत इत्यत्राह–सीता हीत्यादि ॥ ३ ॥ सुमन्त्र इति । सुरुचिरप्रख्यं सुन्दरशोभम् ॥ ४–१२ ॥

नयनमिति । हृदयं मनः ॥ १४ ॥ औत्सुक्यमिति । औत्सुक्यं [illegible] । शून्यां सुखशून्याम् ॥१५॥१६॥ पुर इति । अञ्जलिकृता कृताञ्जलिः ॥ १७ ॥ लक्ष्मण इति । तमर्थमिति । दुर्निमित्तरूपं वस्त्वित्यर्थः । हृष्टः हृष्ट इव ॥ १८ ॥ १९ ॥ योजयस्वेति । शिरसा धारयिष्यामि



सौमित्रिस्तु तथेत्युक्त्वा रथमारोप्य मैथिलीम् । प्रययौ शीघ्रतुरगै रामस्याज्ञामनुस्मरन् ॥ १२ ॥ अब्रवीच्च तदा सीता लक्ष्मणं लक्ष्मिवर्धनम् । अशुभानि बहून्येव पश्यामि रघुनन्दन ॥ १३ ॥ नयनं मे स्फुरत्यद्य गात्रोत्कम्पश्च जायते । हृदयं चैव सौमित्रे अस्वस्थमिव लक्षये ॥ १४ ॥ औत्सुक्यं परमं चापि अधृतिश्च परा मम । शून्यामेव च पश्यामि पृथिवीं पृथुलोचन ॥ १५ ॥ अपि स्वस्ति भवेत्तस्य भ्रातुस्ते भ्रातृवत्सल । श्वश्रूणां चैव मे वीर सर्वासां सविशेषतः ॥ १६ ॥ पुरे जनपदे चैव कुशलं प्राणिनामपि । इत्यञ्जलिकृता सीता देवता अभ्ययाचत ॥ १७ ॥ लक्ष्मणोऽर्थं तु तं श्रुत्वा शिरसाऽऽवन्द्य मैथिलीम् । शिवमित्यब्रवीद्धृष्टो हृदयेन विशुष्यता ॥ १८ ॥ ततो वासमुपागम्य गोमतीतीर आश्रमे । प्रभाते पुनरुत्थाय सौमित्रिः सूतमब्रवीत् ॥ १९ ॥ योजयस्व रथं शीघ्रमद्य भागीरथीजलम् । शिरसा धारयिष्यामि त्र्यम्बकः पर्वते यथा ॥२०॥ सोऽश्वान् रज्ज्वाऽथ चतुरो रथे युक्त्वा मनोजवान् । आरोहस्वेति वैदेहीं सूतः प्राञ्जलिरब्रवीत् ॥ २१ ॥ सा तु सूतस्य वचनादारुरोह रथोत्तमम् । सीता सौमित्रिणा सार्धं सुमन्त्रेण च धीमता ॥ २२ ॥ आससाद विशालाक्षी गङ्गां पापविनाशिनीम् । अथार्धदिवसं गत्वा भागीरथ्या जलाशयम् ॥ २३ ॥ निरीक्ष्य लक्ष्मणो दीनः प्ररुरोद महास्वनः ॥ २४ ॥ सीता तु परमायत्ता दृष्ट्वा लक्ष्मणमातुरम् । उवाच वाक्यं धर्मज्ञा किमिदं रुद्यते त्वया ॥ २५ ॥ जाह्नवीतीरमासाद्य चिराभिलषितं मम । हर्षकाले किमर्थं मां विषादयसि लक्ष्मण ॥ २६ ॥

त्र्यम्बकः पर्वते यथेति दृष्टान्ते रुद्रोऽपि स्नानार्थमेव गङ्गां दधारेति गम्यते ॥ २०–२२ ॥ आससादेति । जलाशयं जलप्रवाहम् ॥ २३–२६ ॥

नित्यमिति । पार्श्वेष्विति पूजायां बहुवचनम् । शोकमागतः कच्चिदित्यन्वयः ॥ २७–२४ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥



नित्यं त्वं रामपार्श्वेषु वर्तसे पुरुषर्षभ । कच्चिद्विनाकृतस्तेन द्विरात्रं शोकमागतः ॥ २७ ॥ ममापि दयितो रामो जीवितादपि लक्ष्मण । न चाहमेवं शोचामि मैवं त्वं बालिशो भव ॥ २८ ॥ तारयस्व च मां गङ्गां दर्शयस्व च तापसान् । ततो मुनिभ्यो दास्यामि वासांस्याभरणानि च ॥ २९ ॥ ततः कृत्वा महर्षीणां यथावदभिवादनम् । तत्र चैकां निशामुष्य यास्यामस्तां पुरीं पुनः ॥३०॥ ममापि पद्मपत्राक्षं सिंहोरस्कं कृशोदरम् । त्वरते हि मनो द्रष्टुं रामं रमयतां वरम् ॥ ३१ ॥ तस्यास्तद्वचनं श्रुत्वा प्रमृज्य नयने शुभे । नाविकानाह्वयामास लक्ष्मणः परवीरहा ॥३२॥ इयं च सज्जा नौश्चेति दाशाः प्राञ्जलयोऽब्रुवन् ॥३३॥ तितीर्षुर्लक्ष्मणो गङ्गां शुभां नावमुपारुहत् । गङ्गां सन्तारयामास लक्ष्मणस्तां समाहितः॥ ३४ ॥ इत्यार्षे० श्रीमदुत्तरश्रीरामायणे षट्चत्वारिंशः सर्गः ॥४६॥

अथ नावं सुविस्तीर्णां नैषादीं राघवानुजः । आरुरोह समायुक्तां पूर्वमारोप्य मैथिलीम् ॥ १ ॥ सुमन्त्रं चैव सरथं स्थीयतामिति लक्ष्मणः । उवाच शोकसन्तप्तः प्रयाहीति च नाविकम् ॥ २ ॥ ततस्तीरमुपागम्य भागीरथ्याः स लक्ष्मणः । उवाच मैथिलीं वाक्यं प्राञ्जलिर्बाष्पसम्प्लुतः ॥ ३ ॥ हृद्गतं मे महच्छल्यं यस्मादार्येण धीमता । अस्मिन्निमित्ते वैदेहि लोकस्य वचनीकृतः ॥ ४ ॥

अथेत्यादि । निषादस्य गुहस्येयं नैषादी ताम् । समायुक्तां सज्जीकृताम् ॥ १ ॥ सुमन्त्रमिति । स्थीयतामिति, गङ्गातीर एवेति शेषः ॥ २ ॥ ततइति । तीरं दक्षिणतीरमित्यर्थः ॥ ३ ॥ हृद्गतमित्यादि । हे वैदेहि ! यस्मिन्निमित्ते यत्कृत्यानुष्ठानतः । अहं लोकस्य वचनीकृतः वचनीयः कृतः । यलोप आर्षः । निन्द्यः संपादितो भवेयम् । अस्मिन्निमित्ते धीमता सर्वज्ञेन आर्येण यद्यस्मादहं नियुक्तः तेन हेतुना मे महच्छल्यं हृद्गतम् ॥ ४ ॥

श्रेय इति । एवं हृच्छल्यं प्राप्तवतो मे मृत्युः मरणं हि वा यत् यदि स्यात्, अद्य तदेव मे परं श्रेयो भवेत् । न चेत्यादि । ईदृशे लक्ष्मणो निर्घृण इति लोकनिन्द्ये अस्मिन् वक्ष्यमाणरूपे कार्ये न चाहं नियोज्योऽस्मि नियोक्तुमर्होऽस्मि, तथा विनियुक्तस्य कार्यस्य सर्वथैव कर्तव्यत्वादिति शेषः । अतः प्रसीदेत्यादि योज्यम् ॥ ५ ॥ ६ ॥ रुदन्तमिति । मृत्युं काङ्क्षन्तम्, परमहृच्छल्यवशादिति शेषः ॥७॥ किमिदमिति । नावगच्छामि,

श्रेयो हि मरणं मेऽद्य मृत्युर्वा यत्परं भवेत् । न चास्मिन्नीदृशे कार्ये नियोज्यो लोकनिन्दिते ॥ ५ ॥ प्रसीद च न मे पापं कर्तुमर्हसि शोभने । इत्यञ्जलिकृतो भूमौ निपपात स लक्ष्मणः ॥ ६ ॥ रुदन्तं प्राञ्जलिं दृष्ट्वा कांक्षन्तं मृत्युमात्मनः । मैथिली भृशसंविग्ना लक्ष्मणं वाक्यमब्रवीत् ॥ ७ ॥ किमिदं नावगच्छामि ब्रूहि तत्त्वेन लक्ष्मण । पश्यामि त्वां न च स्वस्थमपि क्षेमं महीपतेः ॥८॥ शापितोऽसि नरेन्द्रेण यत्त्वं सन्तापमागतः । तद्ब्रूयाः सन्निधौ मह्यमहमाज्ञापयामि ते ॥ ९ ॥ वैदेह्या चोद्यमानस्तु लक्ष्मणो दीनचेतनः । अवाङ्मुखो बाष्पकलं वाक्यमेतदुवाच ह ॥ १० ॥ श्रुत्वा परिषदो मध्ये ह्यपवादं सुदारुणम् । पुरे जनपदे चैव त्वत्कृते जनकात्मजे । रामः सन्तप्तहृदयो मां निवेद्य गृहं गतः ॥११॥ न तानि वचनीयानि मया देवि तवाग्रतः । यानि राज्ञा हृदि न्यस्तान्यमर्षात् पृष्ठतः कृतः ॥ १२ ॥ सा त्वं त्यक्ता नृपतिना निर्दोषा मम सन्निधौ । पौरापवादभीतेन ग्राह्यं देवि न तेऽन्यथा ॥ १३ ॥

एवं रोदनादेर्हेतुमिति शेषः । महीपतेः रामस्य क्षेममपि सुखमपि न पश्यामि ॥ ८ ॥ शापित इति । यस्मात्त्वमेवं सन्तापमागतः तस्मात्त्वं नरेन्द्रेणैव शापितोऽसि । मह्यं मम । आज्ञापयामि त इति त्वामित्यर्थः ॥ ९ ॥ १० ॥ श्रुत्वेत्यादिश्लोकद्वयमेकान्वयम् । त्वत्कृते अपवादं श्रुत्वा सा त्वं त्यक्तेत्यन्वयः ॥ ११ ॥ कोऽयमपवाद इत्यत्राह—न तानीति । यानि वचनानि राज्ञा अमर्षात् हृदि न्यस्तानि तानि तवाग्रतो मया न वचनीयानि वक्तुमशक्यानि । अत एवामर्षः मया पृष्ठतः कृतः, नोपन्यस्त इत्यर्थः ॥ १२ ॥ सा त्वमिति । तथापि ते तव विषये । पौरापवादभीतेन राज्ञा यदादिष्टं तन्मया च ग्राह्यम् । नान्यथा, न तु त्वयि दोषबुद्ध्येत्यर्थः ॥ १३ ॥

ततः किमित्यत्राह—आश्रमान्तेष्विति। तवेदं किल दौर्हृदं गर्भः। गर्भिण्या अभिलषितमवश्यं कार्यम्। तस्मादप्याश्रमान्तेषु त्यक्तव्येत्यर्थः ॥१४।१५॥ राज्ञ इति। परमकः परमानुकम्पावान् ॥१६–१८॥ इति श्रीगोविन्दराज० मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तचत्वारिंशः सर्गः ॥४७॥

आश्रमान्तेषु च मया त्यक्तव्या त्वं भविष्यसि । राज्ञः शासनमाज्ञाय तवेदं किल दौर्हृदम् ॥ १४ ॥ तदेतज्जाह्नवीतीरे ब्रह्मर्षीणां तपोवनम्। पुण्यं च रमणीयं च मा विषादं कृथाः शुभे ॥१५॥ राज्ञो दशरथस्येष्टः पितुर्मे मुनिपुङ्गवः। सखा परमको विप्रो वाल्मीकिः सुमहायशाः ॥ १६ ॥ पादच्छायामुपागम्य सुखमस्य महात्मनः। उपवासपरैकाग्रा वस त्वं जनकात्मजे ॥ १७ ॥ पतिव्रतात्वमास्थाय रामं कृत्वा सदा हृदि। श्रेयस्ते परमं देवि तथा कृत्वा भविष्यति ॥१८॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे सप्तचत्वारिंशः सर्गः॥४७॥ लक्ष्मणस्य वचः श्रुत्वा दारुणं जनकात्मजा। परं विषादमागम्य वैदेही निपपात ह ॥ १ ॥ सा मुहूर्तमिवासंज्ञा बाष्पपर्याकुलेक्षणा। लक्ष्मणं दीनया वाचा उवाच जनकात्मजा ॥ २ ॥ मामिकेयं तनुर्नूनं सृष्टा दुःखाय लक्ष्मण। धात्रा यस्यास्तथा मेऽद्य दुःखमूर्तिः प्रदृश्यते ॥३॥ किन्नु पापं कृतं पूर्वं को वा दारैर्वियोजितः। याऽहं शुद्धसमाचारा त्यक्ता नृपतिना सती ॥ ४ ॥ पुराऽहमाश्रमे वासं रामपादानुवर्तिनी। अनुरुध्यापि सौमित्रे दुःखे च परिवर्तिनी ॥ ५ ॥ सा कथं ह्याश्रमे सौम्य वत्स्यामि विजनीकृता। आख्यास्यामि च कस्याहं दुःखं दुःखपरायणा ॥ ६ ॥

लक्ष्मणस्येति ॥ १ ॥ सेति। बाष्पव्याकुलितेक्षणेत्यनेन पुनः संज्ञाप्राप्तिः सूचिता ॥२॥ मामिकेति। मामिकेयं तनुः धात्रा दुःखायैव सृष्टा। यस्मात् कारणात् यस्या मे दुःखमूर्तिः प्रदृश्यते ॥ ३ ॥ ४ ॥ पुरेति। अनुरुध्यापि सोढ्वापि ॥ ५ ॥ सेति। विजनीकृता इष्टजनविरहिता कृता ॥ ६ ॥ ७ ॥



स०—आश्रमान्तेषु अनेन तत्रापि नैकपोषकता तस्य सम्मतेति ध्वनयति। दौर्हृदं गर्भलक्षणम् ॥ १४ ॥ परमकः दशरथानुकम्पापात्रम्। कन्नयमनुकम्पायाम्। दशरथस्य राजत्वादुपपत्रमिदं मन्तव्यम्॥११॥ विजनीकृता त्रायकनायकादिहीना कृता ॥ ६ ॥

न खल्विति । त्यजेयं राजवंशस्तु भर्तुर्मे परिहास्यते इत्युत्तरार्धपाठः । अत्यागकारणमुच्यते । राजवंशः राजसन्तानः । परिहास्यते विच्छिद्यते, मयि गर्भस्य विद्यमानत्वादिति शेषः । मया देहो धर्तव्य इति भावः । यद्वा त्यजेयं राघवं वंशे भर्तुर्मा परिहास्यतीति पाठः । रामकृतक्रौर्यादद्यैव जाह्नवीजले जीवस्त्यक्तव्यः, तथापि तं न त्यजेयम् । कुतो भर्तुर्वंशे निष्कलङ्के राघवमेकं मा परिहास्यति मा परिहसतु । व्यत्ययस्त्वार्षः । जीविते

किन्नु वक्ष्यामि मुनिषु कर्म वा सत्कृतं च किम् । कस्मिंश्चित् कारणे त्यक्ता राघवेण महात्मना ॥ ७ ॥ न खल्वद्यैव सौमित्रे जीवितं जाह्नवीजले । त्यजेयं राजवंशस्तु भर्तुर्मे परिहास्यते ॥ ८ ॥ यथाज्ञं कुरु सौमित्रे त्यज मां दुःखभागिनीम् । निदेशे स्थीयतां राज्ञः शृणु चेदं वचो मम ॥ ९ ॥ श्वश्रूणामविशेषेण प्राञ्जलिप्रग्रहेण च । शिरसावन्द्य चरणौ कुशलं ब्रूहि पार्थिवम् ॥ १० ॥ शिरसाऽभिनतो ब्रूयाः सर्वासामेव लक्ष्मण । वक्तव्यश्चापि नृपतिर्धर्मेषु सुसमाहितः ॥ ११ ॥ जानासि च यथा शुद्धा सीता तत्त्वेन राघव । भक्त्या च परया युक्ता हिता च तव नित्यशः ॥१२॥ अहं त्यक्ता त्वया वीर अयशोभीरुणा जने । यच्च ते वचनीयं स्यादपवादसमुत्थितम् । मया हि परिहर्तव्यं त्वं हि मे परमा गतिः ॥ १३ ॥ वक्तव्यश्चेति नृपतिर्धर्मेण सुसमाहितः । यथा भ्रातृषु वर्तेथास्तथा पौरेषु नित्यदा ॥ १४ ॥ परमो ह्येष धर्मस्ते तस्मात् कीर्तिरनुत्तमा ॥१५॥ यत्तु पौरजनो राजन् धर्मेण समवाप्नुयात् । अहं तु नानुशोचामि स्वशरीरं नरर्षभ ॥ १६ ॥

त्यागे स्त्रीहत्यामूलोऽपवादः रामस्य स्यादिति भावः । अद्यैवेत्यनेन प्रसवानन्तरं तु त्याज्यमेवेत्यर्थः ॥ ८ ॥ त्वं तु राजशासनं कुर्वित्याह—यथाज्ञमिति ॥ ९ ॥ श्वश्रूणामिति । चरणौ आवन्द्येति, मदर्थमिति शेषः ॥ १०–१२ ॥ अहमिति । अयशोभीरुणैव त्वया त्यक्ता, अनाथेवेत्यर्थः । वचनीयं

स०—कस्मिन् कारणे त्यागहेतौ सति राघवेण त्यक्तेति मुनिभिः पृष्टा तेषु कृतम् अनुष्ठितम् असत् पापकर्म किं नु वक्ष्यामि । अकरणस्य साक्षिसिद्धत्वादिति भावः । अविज्ञातात्त्वत्यागः किम् ? नेत्याह—महात्मनेति । प्रभो इति खेदेन लक्ष्मणस्य वा । स्वामिन् राम सुज्ञशिरोमणे [illegible] इति पाठः ॥ ७ ॥

जुगुप्सनम् । तन्मया परिहर्तव्यम्, त्वदाज्ञया वनस्थल इति शेषः ॥ १३–१७ ॥ प्राणैरिति । ऋतुकालातिवर्तिनीं गर्भलक्षणवतीम् ॥ १८–२६ ॥
इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टचत्वारिंशः सर्गः ॥ ४८ ॥ सीतां त्वित्यादि ॥ १ ॥ २ ॥



यथाऽपवादं पौराणां तथैव रघुनन्दन । पतिर्हि देवता नार्याः पतिर्बन्धुः पतिर्गुरुः ॥ १७ ॥ प्राणैरपि प्रियं तस्माद्भर्तुः कार्यं विशेषतः । इति मद्वचनाद्रामो वक्तव्यो मम सङ्ग्रहः । निरीक्ष्य माऽद्य गच्छ त्वमृतुकालातिवर्तिनीम् ॥ १८ ॥ एवं ब्रुवन्त्यां सीतायां लक्ष्मणो दीनचेतनः । शिरसाऽऽवन्द्य धरणीं व्याहर्तुं न शशाक ह ॥ १९ ॥ प्रदक्षिणं च तां कृत्वा रुदन्नेव महास्वनः । ध्यात्वा मुहूर्तं तामाह किं मां वक्ष्यसि शोभने ॥ २० ॥ दृष्टपूर्वं न ते रूपं पादौ दृष्टौ तवानघे । कथमत्र हि पश्यामि रामेण रहितां वने ॥ २१ ॥ इत्युक्त्वा तां नमस्कृत्य पुनर्नावमुपारुहत् । आरुह्य च पुनर्नावं नाविकं चाभ्यचोदयत् ॥ २२ ॥ स गत्वा चोत्तरं तीरं शोकभारसमन्वितः । सम्मूढ इव दुःखेन रथमध्यारुहद्द्रुतम् ॥ २३ ॥ मुहुर्मुहुः परावृत्य दृष्ट्वा सीतामनाथवत् । चेष्टन्तीं परतीरस्थां लक्ष्मणः प्रययावथ ॥ २४ ॥ दूरस्थं रथमालोक्य लक्ष्मणं च मुहुर्मुहुः । निरीक्षमाणां तूद्विग्नां सीतां शोकः समाविशत् ॥ २५ ॥ सा दुःखभारावनता यशस्विनी यशोधना नाथमपश्यती सती । रुरोद सा बर्हिणनादिते वने महास्वनं दुःखपरायणा सती ॥ २६ ॥ इत्यार्षे० श्रीमदुत्तरश्रीरामायणे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

सीतां रुदन्तीं दृष्ट्वा तां तत्र वै मुनिदारकाः । प्राद्रवन् यत्र भगवानास्ते वाल्मीकिरुग्रधीः ॥ १ ॥
अभिवाद्य मुनेः पादौ मुनिपुत्रा महर्षये । सर्वं निवेदयामासुस्तस्यास्तु रुदितस्वनम् ॥ २ ॥



स०–मुनिदारकाः मुनिपुत्राः । उग्रधीः उग्रतपोविषयबुद्धिः ॥ १ ॥ सर्वे निवेदयामासुरिति पाठः । सर्वे अनृतत्वभ्रमभ्रंशार्थम् ॥ २ ॥

सर्वं निवेदयामासुरित्येतद्विवृणोति—अदृष्टेत्यादि ॥ ३ ॥ ४ ॥ दृष्टेति । अनर्हेति, दुःखस्येति शेषः ॥ ५–११ ॥ आयान्तीति । कारणमिति । आगमनकारणमित्यर्थः ॥ १२ ॥ तव चैवेति । शुद्धभावत्वामिति शेषः । मम मया । मह्यं मम ॥ १३ ॥ अपापामिति । मयि वर्तस इति, मत्समीपे

अदृष्टपूर्वा भगवन् कस्याप्येषा महात्मनः । पत्नी श्रीरिव संमोहाद्विरौति विकृतानना ॥ ३ ॥ भगवन् साधु पश्य त्वं देवतामिव खाच्च्युताम् । नद्यास्तु तीरे भगवन् वरस्त्री काऽपि दुःखिता ॥ ४ ॥ दृष्टाऽस्माभिः प्ररुदिता दृढं शोकपरायणा । अनर्हा दुःखशोकाभ्यामेका दीना ह्यनाथवत् ॥५॥ न ह्येनां मानुषीं विद्मः सत्क्रियाऽस्याः प्रयुज्य ताम् । आश्रमस्याविदूरे च त्वामियं शरणं गता । त्रातारमिच्छते साध्वी भगवंस्त्रातुमर्हसि ॥ ६ ॥ तेषां तु वचनं श्रुत्वा बुद्ध्या निश्चित्य धर्मवित् । तपसा लब्धचक्षुष्मान् प्राद्रवद्यत्र मैथिली ॥७॥ तं प्रयान्तमभिप्रेत्य शिष्या ह्येनं महामतिम् । तं तु देशमभिप्रेत्य किञ्चित् पद्भ्यां महामतिः ॥ ८ ॥ अर्घ्यमादाय रुचिरं जाह्नवीतीरमागमत् । ददर्श राघवस्येष्टां सीतां पतीमनाथवत् ॥ ९ ॥ तां सीतां शोकभारार्त्तां वाल्मीकिर्मुनिपुङ्गवः । उवाच मधुरां वाणीं ह्लादयन्निव तेजसा ॥ १० ॥ स्नुषा दशरथस्य त्वं रामस्य महिषी प्रिया । जनकस्य सुता राज्ञः स्वागतं ते पतिव्रते ॥११॥ आयान्ती चासि विज्ञाता मया धर्मसमाधिना । कारणं चैव सर्वं मे हृदयेनोपलक्षितम् ॥ १२ ॥ तव चैव महाभागे विदितं मम तत्त्वतः । सर्वं च विदितं मह्यं त्रैलोक्ये यद्धि वर्तते ॥१३॥ अपापां वेद्मि सीते त्वां तपोलब्धेन चक्षुषा । विस्रब्धा भव वैदेहि साम्प्रतं मयि वर्तसे ॥१४॥ आश्रमस्याविदूरे मे तापस्यस्तपसि स्थिताः । तास्त्वां वत्से यथा वत्सं पालयिष्यन्ति नित्यशः ॥ १५ ॥

स०—तापस्यः तपसि स्थिता योषितः । अनेन पुरुषस्य तव समीपोपगतेः पुनरपि पूर्वत एव श्रान्तायाः का गतिरिति शङ्का निराकृता ॥ १९ ॥

निवसिष्यसीत्यर्थः ॥ १४ ॥ १५ ॥ इदमिति । यथा स्वगृहमभ्येत्येति तथैवावतिष्ठस्वेति शेषः ॥ १६–१८ ॥ तमिति । मुदा युक्ता इति मुनिपत्नयः तापस्यः । अब्रुवन्निति । वाल्मीकिमिति शेषः ॥ १९ ॥ स्वागतमिति । चिरस्यागमनमिति । प्रतीक्ष्य स्थिता वयम् अभिवादयामहे

इदमर्घ्यं प्रतीच्छ त्वं विस्रब्धा विगतज्वरा । यथा स्वगृहमभ्येत्य विषादं चैव मा कृथाः ॥ १६ ॥ श्रुत्वा तु भाषितं सीता मुनेः परममद्भुतम् । शिरसाऽऽवन्द्य चरणौ तथेत्याह कृताञ्जलिः ॥ १७ ॥ तं प्रयान्तं मुनिं सीता प्राञ्जलिः पृष्ठतोऽन्वगात् ॥१८॥ तं दृष्ट्वा मुनिमायान्तं वैदेह्या मुनिपत्नयः । उपाजग्मुर्मुदा युक्ता वचनं चेदमब्रुवन् ॥ १९ ॥ स्वागतं ते मुनिश्रेष्ठ चिरस्यागमनं च ते । अभिवादयामस्त्वां सर्वा उच्यतां किं च कुर्महे ॥ २० ॥ तासां तद्वचनं श्रुत्वा वाल्मीकिरिदमब्रवीत् । सीतेयं समनुप्राप्ता पत्नी रामस्य धीमतः ॥२१॥ स्नुषा दशरथस्यैषा जनकस्य सुता सती । अपापा पतिना त्यक्ता परिपाल्या मया सदा ॥२२॥ इमां भवन्त्यः पश्यन्तु स्नेहेन परमेण हि । गौरवान्मम वाक्याच्च पूज्या वोऽस्तु विशेषतः ॥ २३ ॥ मुहुर्मुहुश्च वैदेहीं प्रणिधाय महायशाः । स्वमाश्रमं शिष्यवृतः पुनरायान्महातपाः ॥ २४ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे एकोनपञ्चाशः सर्गः ॥४९॥

दृष्ट्वा तु मैथिलीं सीतामाश्रमे सम्प्रवेशिताम् । सन्तापमगमद्घोरं लक्ष्मणो दीनचेतनः ॥ १ ॥ अब्रवीच्च महातेजाः सुमन्त्रं मन्त्रसारथिम् । सीतासन्तापजं दुःखं पश्य रामस्य सारथे ॥२॥ ततो दुःखतरं किन्नु राघवस्य भविष्यति । पत्नीं शुद्धसमाचारां विसृज्य जनकात्मजाम् ॥ ३ ॥ व्यक्तं दैवादहं मन्ये राघवस्य विनाभवम् । वैदेह्या सारथे नित्यं दैवं हि दुरतिक्रमम् ॥४॥ यो हि देवान् सगन्धर्वानसुरान् सह राक्षसैः । निहन्याद्राघवः क्रुद्धः स दैवमनुवर्तते॥५॥

एतेन सीतायाः समाश्वासादिना विलम्बो जात इत्यवगम्यते ॥ २०–२३ ॥ मुहुरिति । प्रणिधाय तापसीनां हस्ते दत्त्वा ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥

दृष्ट्वा त्वित्यादि ॥ १ ॥ अब्रवीदिति । मन्त्रसहायभूतः सारथिर्मन्त्रसारथिः । सीतासन्तापजं सीताविरहसन्तापजमित्यर्थः ॥ २ ॥३ ॥ व्यक्तमिति । विनाभवं सीतावियोगेनावस्थानम्, वैदेह्या सार्धं विनाभवमित्यर्थः । दैवात्प्राग्भवादृष्टादित्यर्थः ॥ ४ ॥ य इति । दैवमनुवर्तते न तु तन्निरसितुं शक्नोति

त्यर्थः ॥५॥६॥ तत इति । ततः सीतायाः विप्रवासनं नृशंसं क्रूरकृत्यमिति प्रतिभाति ॥ ७॥ को न्विति । हीनार्थवादिभिः पौरैर्हेतुभिः । मैथिलीं प्रति यशोहरे साध्वीं वने विसृष्टवानिति अपयशस्करे अस्मिन् कर्मणि सीतापरित्यागरूपकर्मण्यनुष्ठिते सति कोनु धर्माश्रयः धर्मपरिग्रहः रामेण संप्राप्तः ।

पुरा रामः पितुर्वाक्याद्दण्डके विजने वने । उषित्वा नव वर्षाणि पञ्च चैव महावने ॥ ६ ॥ ततो दुःखतरं भूयः सीताया विप्रवासनम् । पौराणां वचनं श्रुत्वा नृशंसं प्रतिभाति मे ॥७॥ को नु धर्माश्रयः सूत कर्मण्यस्मिन् यशोहरे । मैथिलीं प्रति सम्प्राप्तः पौरैर्हीनार्थवादिभिः ॥८॥ एता वाचो बहुविधाः श्रुत्वा लक्ष्मणभाषिताः । सुमन्त्रः श्रद्धया प्राज्ञो वाक्य मेतदुवाच ह ॥९॥ न सन्तापस्त्वया कार्यः सौमित्रे मैथिलीं प्रति । दृष्टमेतत् पुरा विप्रैः पितुस्ते लक्ष्मणाग्रतः ॥१०॥ भविष्यति दृढं रामो दुःखप्रायोऽपि सौख्यभाक् । प्राप्स्यते च महाबाहुर्विप्रयोगं प्रियैर्ध्रुवम् ॥११॥ त्वां चैव मैथिलीं चैव शत्रुघ्नभरतावुभौ । संत्यजिष्यति धर्मात्मा कालेन महता महान् ॥१२॥ इदं त्वयि न वक्तव्यं सौमित्रे भरतेऽपि वा । राज्ञा वो व्याहृतं वाक्यं दुर्वासा यदुवाच ह ॥१३॥ महाजनसमीपे च मम चैव नरर्षभ । ऋषिणा व्याहृतं वाक्यं वसिष्ठस्य च सन्निधौ ॥१४॥ ऋषेस्तु वचनं श्रुत्वा मामाह पुरुषर्षभः । सूत न क्वचिदेवं ते वक्तव्यं जनसन्निधौ ॥१५॥

प्रत्युत साध्वीत्यागादधर्म एव स्यादिति भावः ॥ ८ ॥ ९ ॥ नेति । दृष्टमिति । हे लक्ष्मण ! पुरा तव पितुरग्रतः अल्पभाग्यवान् रामः दुःखप्रायो भविष्यतीत्येतद्दृष्टं दृष्ट्वा मह्यमुक्तमित्यर्थः । फलितमाह–प्राप्स्यत इति ॥१०–१२॥ इदमिति । इदं रहस्यं त्वयि भरते वा न वक्तव्यम् । इदंशब्दार्थमाह–राज्ञेति । राज्ञा दशरथेन । वः तदिदं त्वयि भरतेऽपि न वक्तव्यमित्यर्थः ॥१३॥ दुर्वाससो वचनं कथं त्वयाऽवगतमित्यत्राह–महाजनेति । महाजनसमीपे दशरथसमीप इत्यर्थः । मम वसिष्ठस्य च सन्निधौ । ऋषिणा दुर्वाससा वाक्यं व्याहृतम् । त्रिभिरेवेदं वृत्तं ज्ञातमिति भावः ॥ १४ ॥ ऋषेरिति । एवं ते

स०–महता कालेन निर्याणसङ्केतसमयेन । महानित्यनेन कालसम्बन्धि महत्त्वं रामायत्तमिति सूचयति । भरतशत्रुघ्नयोस्त्यागो वनवाससमये । त्वां मैथिलीं च मैथिल्याः प्रस्तुतस्त्यागः । लक्ष्मणस्य स्वसात्तुव दुर्वाससोऽन्तसयागात्यागः । यत्तु नागोजिभट्टेन ' शत्रुघ्नभरतयोस्तु मधुराराज्यगान्धर्वराज्ययोः करणाय प्रतिष्ठापनं त्यागः' इत्युक्तम् तदयुक्तम्, दुःखकरत्यागप्रस्तावाननुगुणत्वात् ॥ १२ ॥

त्वया श्रुतं रहस्यमित्यर्थः ॥ १५ ॥ तस्येति । समाहित सम्यग्गुप्तम्, तस्य वाक्यं मया जातु अनृतं न कार्यमिति मम दर्शनं मतम् । तस्मात् त्वयि भरते च न वक्तव्यमिति भावः ॥ १६ ॥ सर्वथैवेति । न वक्तव्यमिति, राजरहस्यमिति शेषः । तवातिश्रद्धारहितस्य ॥१७॥ यद्यपीति । तथाप्यप्रकाश्य स्यापि प्रकाशने हेतुमाह–दैवं हि दुरतिक्रममिति । हि यस्माद्दैवं प्राचीनं कर्म दुरतिक्रमं तस्मादित्यर्थः ॥ १८ ॥ दुरतिक्रमे हेतुः–येनेदमिति । एवं

तस्याहं लोकपालस्य वाक्यं तत् सुसमाहितः । नैव जात्वनृतं कार्यमिति मे सौम्य दर्शनम् ॥ १६ ॥ सर्वथैव न वक्तव्यं मया सौम्य तवाग्रतः । यदि ते श्रवणे श्रद्धा श्रूयतां रघुनन्दन ॥१७॥ यद्यप्यहं नरेन्द्रेण रहस्यं श्रावितः पुरा । तथाप्युदाहरिष्यामि दैवं हि दुरतिक्रमम् ॥ १८ ॥ येनेदमीदृशं प्राप्तं दुःखं शोकसमन्वितम् । न त्वया भरते वाच्यं शत्रुघ्नस्यापि सन्निधौ ॥ १९ ॥ तच्छ्रुत्वा भाषितं तस्य गम्भीरार्थपदं महत् । तथ्यं ब्रूहीति सौमित्रिः सूतं वाक्यमथाब्रवीत् ॥ २० ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे पञ्चाशः सर्गः ॥ ५० ॥

तथा संचोदितः सूतो लक्ष्मणेन महात्मना । तद्वाक्यमृषिणा प्रोक्तं व्याहर्तुमुपचक्रमे ॥ १ ॥ पुरा नाम्ना हि दुर्वासा अत्रेः पुत्रो महामुनिः । वसिष्ठस्याश्रमे पुण्ये वार्षिक्यं समुवास ह ॥ २ ॥ तमाश्रमं महातेजाः पिता ते सुमहायशाः । पुरोहितं महात्मानं दिदृक्षुरगमत् स्वयम् ॥ ३ ॥ स दृष्ट्वा सूर्यसङ्काशं ज्वलन्तमिव तेजसा । उपविष्टं वसिष्ठस्य सव्यपार्श्वे महामुनिम् ॥ ४ ॥ तौ मुनी तापसश्रेष्ठौ विनीतो ह्यभिवादयत् । स ताभ्यां पूजितो राजा स्वागतेनासनेन च । पाद्येन फलमूलैश्च उवास मुनिभिः सह ॥ ५ ॥ तेषां तत्रोपविष्टानां तास्ताः सुमधुराः कथाः । बभूवुः परमर्षीणां मध्यादित्यगतेऽहनि ॥ ६ ॥

भवद्दुःखातिशयदर्शनात् श्रद्धालवे तुभ्यं मया वक्तव्यमिति भावः ॥ १९ ॥ तदिति । गम्भीरार्थपदमिति । पूर्वोक्तं भाषितम् ॥ २० ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

तथेत्यादि ॥ १ ॥ पुरेति । पुरा वार्षिक्यं वर्षासु भवं चातुर्मास्यनियममुद्दिश्योवास दुर्वासा इति नाम्ना ॥ २–५ ॥ तेषामिति । मध्यादित्यगते

मध्यगतादित्ययुक्त इत्यर्थः । मध्याह्न इति फलितार्थः ॥ ६ ॥ ततः इति । प्रग्रहः सविनय इत्यर्थः ॥ ७ ॥ भगवन्निति । किं प्रमाणेन उत ततोऽप्यधिक प्रमाणेनेत्यर्थः । किमायुश्च मे राम इति ॥ ८–१० ॥ एवं पृष्टाश्चिरायुष्ट्वं दुःखोपेतं शापवशादिति वक्तुं पीठिकामाह–शृणु राजन्नित्यादि ॥ ११–१४ ॥



ततः कथायां कस्यांचित् प्राञ्जलिः प्रग्रहो नृपः । उवाच तं महात्मानमत्रेः पुत्रं तपोधनम् ॥ ७ ॥ भगवन् किं प्रमाणेन मम वंशो भविष्यति । किमायुश्च हि मे रामः पुत्राश्चान्ये किमायुषः ॥८॥ रामस्य च सुता ये स्युस्तेषामायुः कियद्भवेत् । काम्यया भगवन् ब्रूहि वंशस्यास्य गतिं मम ॥९॥ तच्छ्रुत्वा व्याहृतं वाक्यं राज्ञो दशरथस्य च । दुर्वासाः सुमहातेजा व्याहर्तुमुपचक्रमे ॥१०॥ शृणु राजन् पुरावृत्तं तदा दैवासुरे युधि । दैत्याः सुरैर्भर्त्स्यमाना भृगुपत्नीं समाश्रिताः ॥११॥ तया दत्ताभयास्तत्र न्यवसन्नभयास्तदा ॥ १२ ॥ तया परिगृहीतांस्तान् दृष्ट्वा क्रुद्धः सुरेश्वरः । चक्रेण शितधारेण भृगुपत्न्याः शिरोऽहरत् ॥१३॥ ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः । शशाप सहसा क्रुद्धो विष्णुं रिपुकुलार्दनम् ॥ १४ ॥ यस्मादवध्यां मे पत्नीमवधीः क्रोधमूर्च्छितः । तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन ॥ १५ ॥ तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम् ॥ १६ ॥ [ एवं शापं भृगुर्दत्त्वा विष्णोः स्मृत्वा च वैभवम् । ] शापाभिहतचेताः स स्वात्मना भावितोऽभवत् ॥ १७ ॥ अर्चयामास तं देवं भृगुः शापेन पीडितः ॥ १८ ॥ तपसाऽऽराधितो देवो ह्यब्रवीद्भक्तवत्सलः । लोकानां संहितार्थं तु तं शापं ग्राह्यमुक्तवान् ॥ १९ ॥

यस्मादिति । अवध्यां स्त्रीत्वादपि पत्नीत्वाच्चेति भावः ॥ १५ ॥ तत्रेति । बहुवार्षिकं कालमित्यर्थः ॥ १६ ॥ शापेति । शापाभिहतचेताः पश्चात्तापपरीतचित्त इत्यर्थः । स्वात्मना भावितो भगवच्छापनिवृत्त्यर्थं स्वस्वरूपमचिन्तयादित्यर्थः । पुनः शापेन शापमोघभयेन पीडितः सन् भृगुस्तं देवमर्चयामास ॥१७॥१८॥ तपसेति । तं शापं मनुष्यजन्मादिप्रापकं लोकानां संहितार्थं सम्यग्रावणवधरूपहितसंपादनार्थम् । ग्राह्यं परिग्राह्यमेवेत्युक्तवान् ॥१९॥

इतीति । पूर्वजन्मनि काश्यपात् विष्णुसंज्ञकोपेन्द्रावतारे ॥ २० ॥ राम इति । तत्फलं पत्नीवियोगेन चिरकालवासरूपम् ॥ २१–२५ ॥ सीताया इति ।

इति शप्तो महातेजा भृगुणा पूर्वजन्मनि । इहागतो हि पुत्रत्वं तव पार्थिवसत्तम ॥ २० ॥ राम इत्यभिविख्यातस्त्रिषु
लोकेषु मानद । तत्फलं प्राप्स्यते चापि भृगुशापकृतं महत् ॥ २१ ॥ अयोध्यायाः पती रामो दीर्घकालं भवि
ष्यति । [ तत्र पत्नीवियोगं च दीर्घकालं गमिष्यति । ] सुखिनश्च समृद्धाश्च भविष्यन्त्यस्य येऽनुगाः ॥ २२ ॥
दश वर्षसहस्राणि दश वर्षशतानि च । रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति ॥ २३ ॥ समृद्धैश्चाश्वमेधैश्च
इष्ट्वा परमदुर्जयः । राजवंशांश्च बहुशो बहून् संस्थापयिष्यति ॥ २४ ॥ द्वौ पुत्रौ तु भविष्येते सीतायां राघवस्य तु ।
अन्यत्र न त्वयोध्यायां सत्यमेतन्न संशयः ॥२५॥ सीतायाश्च ततः पुत्रावभिषेक्ष्यति राघवः ॥२६॥ स सर्वमखिलं
राज्ञो वंशस्याह गतागतम् । आख्याय सुमहातेजास्तूष्णीमासीन्महामुनिः ॥२७॥ तूष्णींभूते तदा तस्मिन् राजा
दशरथो मुनौ । अभिवाद्य महात्मानौ पुनरायात् पुरोत्तमम् ॥ २८ ॥ एतद्वचो मया तत्र मुनिना व्याहृतं पुरा ।
श्रुतं हृदि च निक्षिप्तं नान्यथा तद्भविष्यति ॥ २९ ॥ एवंगते न सन्तापं कर्तुमर्हसि राघव । सीतार्थे राघवार्थे
वा दृढो भव नरोत्तम ॥ ३० ॥ श्रुत्वा तु व्याहृतं वाक्यं सूतस्य परमाद्भुतम् । प्रहर्षमतुलं लेभे साधु साध्विति
चाब्रवीत् ॥ ३१ ॥ ततः संवदतोरेवं सूतलक्ष्मणयोः पथि । अस्तमर्के गते वासं केशिन्यां तावथोषतुः ॥ ३२ ॥

इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे एकपञ्चाशः सर्गः ॥ ५१ ॥

स सर्वमिति । स दुर्वासा इत्यर्थः ॥ २६–३२ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

स०–ब्रह्म लोकमिति पदद्वयम् । ब्रह्म तदभिन्नो रामः । लोकं स्वलोकं वैकुण्ठम् । ब्रह्मणश्चतुर्मुखस्य लोकमिति वा । "द्वितीयया ब्रह्मतदस्यधीश्वरस्तेनार्चितः" इत्याचार्योक्तेः । ब्रह्मणः स्वस्य लोकमिति वा "अथापरया निजालये । तृतीयरूपेण निजं पदं प्रभुं व्रजन्तम्." इत्यादितद्चरितद्वृक्तेः ॥ २३ ॥

तत्रेत्यादि । तत्र पथीत्यर्थः ॥ १–५ ॥ स इति । नेत्राभ्यामश्रुपूर्णाभ्यामुपलक्षितमग्रजम् ॥ ६–८ ॥ तत्रेति । पादमूलम्, तवेति शेषः ॥ ९–११ ॥ तस्मादिति । अतिप्रसङ्गः अत्यासक्तिः ॥ १२ ॥ शक्तस्त्वमात्मनाऽऽत्मानं विनेतुं मनसैव हीति । आत्मना स्वयमेव मनसैव करणेनात्मानं स्वात्मानं लोकांश्च



तत्र तां रजनीमुष्य केशिन्यां रघुनन्दनः । प्रभाते पुनरुत्थाय लक्ष्मणः प्रययौ तदा ॥ १ ॥ ततोऽर्धदिवसे प्राप्ते प्रविवेश महारथः । अयोध्यां रत्नसम्पूर्णां हृष्टपुष्टजनावृताम् ॥ २ ॥ सौमित्रिस्तु परं दैन्यं जगाम सुमहामतिः । रामपादौ समासाद्य वक्ष्यामि किमहं गतः ॥ ३ ॥ तस्यैवं चिन्तयानस्य भवनं शशिसन्निभम् । रामस्य परमोदारं पुरस्तात् समदृश्यत ॥ ४ ॥ राज्ञस्तु भवनद्वारि सोऽवतीर्य रथोत्तमात् । अवाङ्मुखो दीनमनाः प्रविवेशानिवारितः ॥ ५ ॥ स दृष्ट्वा राघवं दीनमासीनं परमासने । नेत्राभ्यामश्रुपूर्णाभ्यां ददर्शाग्रजमग्रतः ॥ ६ ॥ जग्राह चरणौ तस्य लक्ष्मणो दीनचेतनः । उवाच दीनया वाचा प्राञ्जलिः सुसमाहितः ॥ ७ ॥ आर्यस्याज्ञां पुरस्कृत्य विसृज्य जनकात्मजाम् । गङ्गातीरे यथोद्दिष्टे वाल्मीकेराश्रमे शुचौ ॥ ८ ॥ तत्र तां च शुभाचारामाश्रमान्ते यशस्विनीम् । पुनरप्यागतो वीर पादमूलमुपासितुम् ॥ ९ ॥ मा शुचः पुरुषव्याघ्र कालस्य गतिरीदृशी । त्वद्विधा नहि शोचन्ति बुद्धिमन्तो मनस्विनः ॥ १० ॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ११ ॥ तस्मात् पुत्रेषु दारेषु मित्रेषु च धनेषु च । नातिप्रसङ्गः कर्तव्यो विप्रयोगो हि तैर्ध्रुवम् ॥ १२ ॥ शक्तस्त्वमात्मनाऽऽत्मानं विनेतुं मनसैव हि । लोकान् सर्वांश्च काकुत्स्थ किं पुनः शोकमात्मनः ॥ १३ ॥ नेदृशेषु विमुह्यन्ति त्वद्विधाः पुरुषर्षभाः । अपवादः स किल ते पुनरेष्यति राघव ॥ १४ ॥ यदर्थं मैथिली त्यक्ता अपवादभयान्नृप । सोऽपवादः पुरे राजन् भविष्यति न संशयः ॥ १५ ॥

विनेतुं शिक्षितुं शक्तः । सांसारिकदुःखाद्वारयितुमित्यर्थः ॥ १३ ॥ नेदृशेष्विति । अपवादः पुनरेष्यति, प्रकारान्तरेणेति शेषः ॥ १४ ॥ तदेवोपपादयति–

यदर्थमिति । हे नृप ! परीवादभयाद्भीतेन त्वया यदर्थं यदपवादपरिहारार्थं मैथिली त्यक्ता सोऽपवादः पुनः प्रकारान्तरेण भविष्यति । सीतामप वादात्त्यक्त्वा पुनः शोचति । तस्मात्तस्यामतिमात्रोऽयं कामुकस्य रामस्यानुराग इति पुनरप्यपवादो भविष्यतीत्यर्थः ॥१५-१७॥ एवमिति । कार्या

स त्वं पुरुषशार्दूल धैर्येण सुसमाहितः । त्यजैनां दुर्बलां बुद्धिं सन्तापं मा कुरुष्व ह ॥ १६ ॥ एवमुक्तः स काकुत्स्थो लक्ष्मणेन महात्मना । उवाच परया प्रीत्या सौमित्रिं मित्रवत्सलः ॥ १७ ॥ एवमेतन्नरश्रेष्ठ यथा वदसि लक्ष्मण । परितोषश्च मे वीर मम कार्यानुशासने ॥१८॥ निर्वृतिश्चागता सौम्य सन्तापश्च निराकृतः । भवद्वाक्यैः सुरुचिरैरनु नीतोऽस्मि लक्ष्मण ॥ १९ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे द्विपञ्चाशः सर्गः ॥ ५२ ॥ लक्ष्मणस्य तु तद्वाक्यं निशम्य परमाद्भुतम् । सुप्रीतश्चाभवद्रामो वाक्यमेतदुवाच ह ॥ १ ॥ दुर्लभस्त्वीदृशो बन्धु रस्मिन् काले विशेषतः । यादृशस्त्वं महाबुद्धे मम सौम्य मनोनुगः ॥ २ ॥ यच्च मे हृदयं किंचिद्वर्तते शुभलक्षण । तन्निशामय च श्रुत्वा कुरुष्व वचनं मम ॥ ३ ॥ चत्वारो दिवसाः सौम्य कार्यं पौरजनस्य वै । अकुर्वाणस्य सौमित्रे तन्मे मर्माणि कृन्तति ॥ ४ ॥ आहूयन्तां प्रकृतयः पुरोधा मन्त्रिणस्तथा । कार्यार्थिनश्च पुरुषाः स्त्रियश्च पुरुष र्षभ ॥ ५ ॥ पौरकार्याणि यो राजा न करोति दिने दिने । संवृते नरके घोरे पतितो नात्र संशयः ॥ ६ ॥ श्रूयते हि पुरा राजा नृगो नाम महायशाः । बभूव पृथिवीपालो ब्रह्मण्यः सत्यवाक् शुचिः ॥ ७ ॥ स कदाचिद्गवां कोटीः सवत्साः स्वर्णभूषिताः । नृदेवो भूमिदेवेभ्यः पुष्करेषु ददौ नृपः ॥ ८ ॥

नुशासने गङ्गातीरत्यागरूपे त्वत्कृते ॥१८॥ निर्वृतिरिति । निर्वृतिः सुखम् ॥१९॥ इति श्रीगोविन्द० मणि० उत्तरश्रीरामा० द्विपञ्चाशः सर्गः ॥ ५२ ॥ लक्ष्मणस्येत्यादि ॥ १-४ ॥ आहूयन्तामिति । स्त्रियश्चेति । कार्यार्थिन्य इत्यनुपज्यते ॥ ५ ॥ पौरेति । पतितः, स्वकर्मणेति शेषः । स मृतो नरके

घोरे पात्यते नात्र संशयः इति च पाठः॥८-९॥तत इति । सङ्गात् राज्ञा दत्तबहुगोसङ्गात्॥९॥१०॥तत इति । कनखलं कनखलाख्यग्रामम्॥११-१४॥

ततः सङ्गाद्गता धेनुः सवत्सा स्पर्शिताऽनघ । ब्राह्मणस्याहिताग्नेश्च दरिद्रस्योञ्छवर्तिनः ॥९॥ स नष्टां गां क्षुधार्तो वै अन्विष्यंस्तत्र तत्र च । नापश्यत् सर्वराज्येषु संवत्सरगणान् बहून् ॥ १० ॥ ततः कनखलं गत्वा जीर्णवत्सां निरामयाम् । ददर्श गां स्वकां धेनुं ब्राह्मणस्य निवेशने ॥ ११ ॥ अथ तां नामधेयेन स्वकेनोवाच स द्विजः । आगच्छ शबलेत्येवं सा तु शुश्राव गौः स्वरम् ॥ १२ ॥ तस्य तु स्वरमाज्ञाय क्षुधार्तस्य द्विजस्य वै । अन्वगात् पृष्ठतः सा गौर्गच्छन्तं पावकोपमम् ॥१३॥ योऽपि पालयते विप्रः सोऽपि गामन्वगाद्द्रुतम् । गत्वा तमृषिमाचष्ट मम गौरिति सत्वरम् ॥ १४ ॥ स्पर्शिता राजसिंहेन मम दत्ता नृगेण ह । तयोर्ब्राह्मणयोर्वादो महानासीद्द्विपश्चितोः ॥ १५ ॥ विवदन्तौ ततोऽन्योन्यं दातारमभिजग्मतुः । तौ राजभवनद्वारि न प्राप्तौ नृगशासनम् ॥ १६ ॥ अहो रात्राण्यनेकानि वसन्तौ क्रोधमीयतुः । ऊचतुश्च महात्मानौ तावुभौ द्विजसत्तमौ । क्रुद्धौ परमसन्तप्तौ वाक्यं घोराभिसंहितम् ॥ १७ ॥ अर्थिनां कार्यसिद्ध्यर्थं यस्मात्त्वं नैषि दर्शनम् । अदृश्यः सर्वभूतानां कृकलासो भविष्यसि ॥ १८ ॥ बहुवर्षसहस्राणि बहुवर्षशतानि च । श्वभ्रेऽस्मिन् कृकलासो वै दीर्घकालं वसिष्यसि ॥ १९ ॥ उत्पत्स्यते हि लोकेऽस्मिन् यदूनां कीर्तिवर्धनः । वासुदेव इति ख्यातो लोके पुरुषविग्रहः ॥२०॥ स ते मोक्षयिता राजंस्तस्माच्छापाद्भविष्यति । कृता च तेन कालेन निष्कृतिस्ते भविष्यति ॥ २१ ॥ भारावतरणार्थं हि नरनारायणावुभौ । उत्पत्स्येते महावीर्यौ कलौ युग उपस्थिते ॥ २२ ॥

स्पर्शितेति । स्पार्शिता दत्ता ॥ १५-१७ ॥ अर्थिनामिति । कृकलासः सरटः ॥ १८-२० ॥ स इति । निष्कृतिः शापमोक्षः ॥ २१ ॥ २२ ॥

एवमिति । ब्राह्मणाय कस्मैचित् अन्यस्मा इत्यर्थः ॥ २३ ॥ २४ ॥ कार्यार्थिनामिति । विमर्दः कलहः । अभिवर्तन्तु आगच्छन्तु । कार्यिणः कार्यार्थिनः । अभिवर्तन्तु काङ्क्षिण इति च पाठः ॥२५॥२६॥ इति श्रीगोविन्दराज० मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५२ ॥

एवं तौ शापमुत्सृज्य ब्राह्मणौ विगतज्वरौ । तां गां हि दुर्बलां वृद्धां ददतुर्ब्राह्मणाय वै ॥ २३ ॥ एवं स राजा तं शापमुपभुङ्क्ते सुदारुणम् ॥ २४ ॥ कार्यार्थिनां विमर्दो हि राज्ञां दोषाय कल्पते । तच्छीघ्रं दर्शनं मह्यमभिवर्तन्तु कार्यिणः ॥ २५ ॥ सुकृतस्य हि कार्यस्य फलं नापैति पार्थिवः । तस्माद्गच्छ प्रतीक्षस्व सौमित्रे कार्यवान् जनः ॥ २६ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

रामस्य भाषितं श्रुत्वा लक्ष्मणः परमार्थवित् । उवाच प्राञ्जलिर्वाक्यं राघवं दीप्ततेजसम् ॥ १ ॥ अल्पापराधे काकुत्स्थ द्विजाभ्यां शाप ईदृशः । महान्नृगस्य राजर्षेर्यमदण्ड इवापरः ॥२॥ श्रुत्वा तु पापसंयुक्तमात्मानं पुरुषर्षभ । किमुवाच नृगो राजा द्विजौ क्रोधसमन्वितौ ॥ ३ ॥ लक्ष्मणेनैवमुक्तस्तु राघवः पुनरब्रवीत् । शृणु सौम्य यथा पूर्वं स राजा शापविक्षतः ॥ ४ ॥ अथाध्वनि गतौ विप्रौ विज्ञाय स नृगस्तदा । आहूय मन्त्रिणः सर्वान्नैगमान् सपुरोधसः ॥५॥ तानुवाच नृगो राजा सर्वांश्च प्रकृतीस्तथा । दुःखेन सुसमाविष्टः श्रूयतां मे समाहितैः ॥६॥ नारदः पर्वतश्चैव मम दत्त्वा महद्भयम् । गतौ त्रिभुवनं भद्रौ वायुभूतावनिन्दितौ ॥७॥ कुमारोऽयं वसुर्नाम स देवोऽद्याभिषिच्यताम् । श्वभ्रं च यत् सुखस्पर्शं क्रियतां शिल्पिभिर्मम । यत्राहं संक्षयिष्यामि शापं ब्राह्मणनिस्सृतम् ॥ ८ ॥

रामस्येत्यादि ॥ १ ॥ अल्पेति । अल्पेऽप्यपराधे परीक्षार्थमागतत्वात् गोदानद्वारा द्विजाभ्यां नारदपर्वताभ्यां यमदण्ड इव महान् शापो दत्तः ॥ २॥३॥ लक्ष्मणेनेति । हे सौम्य ! शापविक्षतः सन् स राजा यथा पूर्वमुवाच तच्छृण्विति योजना ॥ ४ ॥ अथेति । अध्वनि व्योमाध्वनि गतौ ध्यानेन अमुकाविति विज्ञायेत्यर्थः । नैगमान् पौरान् ॥ ५ ॥ तानिति । श्रूयतामिति, वचनमिति शेषः ॥ ६ ॥ नारद इति । त्रिभुवनं ब्रह्मलोकमित्यर्थः ॥ ७ ॥ कुमार इति ।

श्वभ्रं गर्तः ॥ ८ ॥ ९ ॥ फलवन्त इति । गुल्मिनः कक्षवृक्षाः ॥ १० ॥ ११ ॥ पुष्पाणीति । पुष्पाणि यथा अध्यर्धं योजनं परिवार्य स्युः तथा क्रियन्ता मित्यर्थः ॥ १२ ॥ १३ ॥ प्रत्यक्षमिति । तादृशे अल्पेऽपीत्यर्थः ॥ १४ ॥ मा कृथा इति । कृतान्तः ईश्वरः ॥ १५ ॥ प्राप्तव्यानीति । पूर्वं जात्यन्तरे ।



वर्षघ्नमेकं श्वभ्रं तु हिमघ्नमपरं तथा । ग्रीष्मघ्नं तु सुखस्पर्शमेकं कुर्वन्तु शिल्पिनः ॥ ९ ॥ फलवन्तश्च ये वृक्षाः पुष्पवत्यश्च या लताः । विरोप्यन्तां बहुविधाश्छायावन्तश्च गुल्मिनः ॥ १० ॥ क्रियतां रमणीयं च श्वभ्राणां सर्वतोदिशम् । सुखमत्र वसिष्यामि यावत् कालस्य पर्ययः ॥ ११ ॥ पुष्पाणि च सुगन्धीनि क्रियन्तां तेषु नित्यशः । परिवार्य यथा मे स्युरध्यर्धं योजनं तथा ॥ १२ ॥ एवं कृत्वा विधानं स सन्दिदेश वसुं तदा । धर्मनित्यः प्रजाः पुत्र क्षत्रधर्मेण पालय ॥ १३ ॥ प्रत्यक्षं ते यथा शापो द्विजाभ्यां मयि पातितः । नरश्रेष्ठ सरोषाभ्यामपराधेऽपि तादृशे ॥ १४ ॥ मा कृथास्तनुसन्तापं मत्कृतेऽपि नरर्षभ । कृतान्तः कुशलः पुत्र येनास्मि व्यसनीकृतः ॥ १५ ॥ प्राप्तव्यान्येव प्राप्नोति गन्तव्यान्येव गच्छति । लब्धव्यान्येव लभते दुःखानि च सुखानि च ॥ १६ ॥ पूर्वे जात्यन्तरे वत्स मा विषादं कुरुष्व ह ॥ १७ ॥ एवमुक्त्वा नृगस्तत्र सुतं राजा महायशाः । श्वभ्रं जगाम सुकृतं वासाय पुरुषर्षभ ॥ १८ ॥ एवं प्रविश्यैव नृपस्तदानीं श्वभ्रं महारत्नविभूषितं तत् । सम्पादयामास तदा महात्मा शापं द्विजाभ्यां हि रुषा विमुक्तम् ॥ १९ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

एष ते नृगशापस्य विस्तरोऽभिहितो मया । यद्यस्ति श्रवणे श्रद्धा शृणुष्वेहापरां कथाम् ॥ १ ॥

प्राप्तव्यान्येव प्राप्नोति । गन्तव्यान्येव गच्छति । लब्धव्यान्येव लभते दुःखानि च सुखानि च ॥ १६–१९ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुष्पञ्चाशः सर्गः ॥ ५४ ॥ एष त इत्यादि । इह राजापराधविषये ॥ १ ॥

एवमिति । तृप्तिः कथानां संबन्धिनीत्यर्थः ॥ २-४ ॥ स इति । गौतमस्येति । गौतमाश्रमस्येत्यर्थः ॥ ५ ॥ पुरस्येति । वैजयन्तमिन्द्रप्रासादम् । साहश्यात्तद्व्यपदेशः ॥ ६-९ ॥ तमिति । प्रतिपालय प्रतीक्षस्व । प्रतीक्ष त्वं तदन्तरमिति च पाठः । तदनन्तरं त्वां याजयिष्य इति शेषः ॥ १० ॥



एवमुक्तस्तु रामेण सौमित्रिः पुनरब्रवीत् । तृप्तिराश्चर्यभूतानां कथानां नास्ति मे नृप ॥ २ ॥ लक्ष्मणेनैवमुक्तस्तु राम इक्ष्वाकुनन्दनः । कथां परमधर्मिष्ठां व्याहर्तुमुपचक्रमे ॥ ३ ॥ आसीद्राजा निमिर्नाम इक्ष्वाकूणां महात्मनाम् । पुत्रो द्वादशमो वीर्ये धर्मे च परिनिष्ठितः ॥ ४ ॥ स राजा वीर्यसम्पन्नः पुरं देवपुरोपमम् । निवेशयामास तदा अभ्याशे गौतमस्य तु ॥ ५ ॥ पुरस्य सुकृतं नाम वैजयन्तमिति श्रुतम् । निवेशं यत्र राजर्षिर्निमिश्चक्रे महायशाः ॥ ६ ॥ तस्य बुद्धिः समुत्पन्ना निवेश्य सुमहापुरम् । यजेयं दीर्घसत्रेण पितुः प्रह्लादयन् मनः ॥ ७ ॥ ततः पितरमामन्त्र्य इक्ष्वाकुं हि मनोः सुतम् । वसिष्ठं वरयामास पूर्वं ब्रह्मर्षिसत्तमम् ॥ ८ ॥ अनन्तरं स राजर्षिर्निमिरिक्ष्वाकुनन्दनः । अत्रिमङ्गिरसं चैव भृगुं चैव तपोधनम् ॥९॥ तमुवाच वसिष्ठस्तु निमिं राजर्षिसत्तमम् । वृतोऽहं पूर्वमिन्द्रेण अन्तरं प्रतिपालय ॥ १० ॥ अनन्तरं महाविप्रो गौतमः प्रत्यपूरयत् । वसिष्ठोऽपि महातेजा इन्द्रयज्ञमथाकरोत् ॥११॥ निमिस्तु राजा विप्रांस्तान् समानीय नराधिपः । अयजद्धिमवत्पार्श्वे स्वपुरस्य समीपतः । पञ्च वर्षसहस्राणि राजा दीक्षामुपागमत् ॥ १२ ॥ इन्द्रयज्ञावसाने तु वसिष्ठो भगवानृषिः । सकाशमागतो राज्ञो हौत्रं कर्तुमनिन्दितः ॥१३॥ तदन्तरमथापश्यद्गौतमेनाभिपूरितम् । कोपेन महताऽऽविष्टो वसिष्ठो ब्रह्मणः सुतः ॥१४॥ स राज्ञो दर्शनाकांक्षी मुहूर्तं समुपाविशत् । तस्मिन्नहनि राजर्षिर्निद्रयाऽपहृतो भृशम् ॥ १५ ॥



अनन्तरमिति । गौतमः प्रत्यपूरयत्, वसिष्ठकर्तव्यं हौत्रमिति शेषः ॥११॥ निमिरिति । नाम अयाक्षीत् ॥१२-१४॥ राजर्षिरिति । असमाप्तसत्र इति

शेषः ॥ १५-१९ ॥ तस्मादिति । चेतनेन विना कृत इति । मृत इत्यर्थः । सुरुचिरप्रख्यः सुरुचिरकान्तिः ॥ २० ॥ २१ ॥ इति श्रीगोविन्दराज विरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥



ततो मन्युर्वसिष्ठस्य प्रादुरासीन्महात्मनः । अदर्शनेन राजर्षेर्व्याहर्तुमुपचक्रमे ॥ १६ ॥ यस्मात्त्वमन्यं वृतवान् मामवज्ञाय पार्थिव । चेतनेन विना भूतो देहस्तव भविष्यति ॥१७॥ ततः प्रबुद्धो राजर्षिः श्रुत्वा शापमुदाहृतम् । ब्रह्मयोनिमथोवाच संरम्भात् क्रोधमूर्च्छितः ॥ १८ ॥ अजानतः शयानस्य क्रोधेन कलुषीकृतः । मुक्तवान् मयि शापाग्निं यमदण्डमिवापरम् ॥ १९ ॥ तस्मात्तवापि ब्रह्मर्षे चेतनेन विना कृतः । देहः सुरुचिरप्रख्यो भविष्यति न संशयः ॥ २० ॥ इति रोषवशादुभौ तदानीमन्योन्यं शपितौ नृपद्विजेन्द्रौ । सहसैव बभूवतुर्विदेहौ तत्तुल्याधिगतप्रभाववन्तौ ॥ २१ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

रामस्य भाषितं श्रुत्वा लक्ष्मणः परवीरहा । उवाच प्राञ्जलिर्वाक्यं राघवं दीप्ततेजसम् ॥ १ ॥ निक्षिप्तदेहौ काकुत्स्थ कथं तौ द्विजपार्थिवौ । पुनर्देहेन संयोगं जग्मतुर्देवसम्मतौ ॥ २ ॥ लक्ष्मणेनैवमुक्तस्तु रामश्चेक्ष्वाकुनन्दनः । प्रत्युवाच महातेजा लक्ष्मणं पुरुषर्षभः ॥ ३ ॥ तौ परस्परशापेन देहावुत्सृज्य धार्मिकौ । अभूतां नृपविप्रर्षी वायुभूतौ तपोधनौ ॥ ४ ॥ अशरीरः शरीरस्य कृतेऽन्यस्य महामुनिः । वसिष्ठः सुमहातेजा जगाम पितुरन्तिकम् ॥ ५ ॥ सोऽभिवाद्य ततः पादौ देवदेवस्य धर्मवित् । पितामहमथोवाच वायुभूत इदं वचः ॥ ६ ॥ भगवन्निमिशापेन विदेहत्वमुपागमम् । लोकनाथ महादेव अण्डजोऽपि त्वमब्जजः ॥ ७ ॥

रामस्येत्यादि ॥ १ ॥ निक्षिप्तेति । देवसम्मतौ देवतुल्यौ ॥ २-४ ॥ अशरीर इति । अन्यस्य शरीरस्य कृते अन्यशरीरप्राप्त्यर्थमित्यर्थः ॥ ५-७ ॥

सर्वेषामिति । सर्वकार्याणि ऐहिकामुष्मिकसकलप्रयोजनानि ॥ ८ ॥ तमिति । तेजो रेतः ॥ ९ ॥ अयोनिज इति । तत्रापि मित्रावरुणतेजःप्रवेशेऽपि अयोनिजत्वं रेतोजन्यत्वेऽपि योनावप्रवेशादिति भावः । मे वशं मदधीनताम् ॥ १० ॥ ११ ॥ तमेवेति । तमेव कालं तस्मिन्नेव काले । मित्रः सूर्यमूर्ति

सर्वेषां देहहीनानां महद्दुःखं भविष्यति । लुप्यन्ते सर्वकार्याणि हीनदेहस्य वै प्रभो । देहस्यान्यस्य सद्भावे प्रसादं कर्तुमर्हसि ॥ ८ ॥ तमुवाच ततो ब्रह्मा स्वयम्भूरमितप्रभः । मित्रावरुणजं तेजः प्रविश त्वं महायशः ॥ ९ ॥ अयोनिजस्त्वं भविता तत्रापि द्विजसत्तम । धर्मेण महता युक्तः पुनरेष्यसि मे वशम् ॥ १० ॥ एवमुक्तस्तु देवेन चाभिवाद्य प्रदक्षिणम् । कृत्वा पितामहं तूर्णं प्रययौ वरुणालयम् ॥ ११ ॥ तमेव कालं मित्रोऽपि वरुणत्वमकारयत् । क्षीरोदेन सहोपेतः पूज्यमानः सुरोत्तमैः ॥ १२ ॥ एतस्मिन्नेव काले तु उर्वशी परमाप्सराः । यदृच्छया समुद्देशमाययौ सखिभिर्वृता ॥ १३ ॥ तां दृष्ट्वा रूपसम्पन्नां क्रीडन्तीं वरुणालये । आविशत् परमो हर्षो वरुणं चोर्वशीकृते ॥ १४ ॥ स तां पद्मपलाशाक्षीं पूर्णचन्द्रनिभाननाम् । वरुणो वरयामास मैथुनायाप्सरोवराम् ॥ १५ ॥ प्रत्युवाच ततः सा तु वरुणं प्राञ्जलिः स्थिता । मित्रेणाहं वृता साक्षात् पूर्वमेव सुरेश्वर ॥ १६ ॥ वरुणस्त्वब्रवीद्वाक्यं कन्दर्पशरपीडितः । इदं तेजः समुत्स्रक्ष्ये कुम्भेऽस्मिन् देवनिर्मिते ॥ १७ ॥

भेदः वरुणत्वमकारयत्, मित्रत्वात्पूर्वस्थितवरुणाविरोधेन राज्यमकरोत् । केनापि हेतुना उभावपि युगपद्वरुणराज्यमकुर्वतामित्यर्थः । तथैवोत्तरत्र

स०-मम हीनदेहस्य हीनो गतो देहो यस्येति, हीनो देहेनेति वा स तस्य ॥८॥ अयोनिजः अः नारायणः योनिः कारणं यस्य सोऽयोनिः, तस्माज्जायत इति स तथा । स्वत्पुत्रत्वं गतमिति चिन्ता न कार्येति सूच्यतेऽनेन । मे वशं मदधीनं प्राजापत्यमप्येष्यसि ॥ १० ॥ वरुणत्वं तेन सहैकस्थानस्थितत्वम् अकारयत् । तत्स्थलमाह-क्षीरोदेनेति । सहोपेतः युक्तः । तत्तादात्म्यमित्यादि नागोजिभट्टादिव्याख्यानं द्वन्द्वसमासप्रयुक्तानड्द्विवचनाद्यनुपपत्तेरनुपपन्नम ॥ १२ ॥ अप्सरेति पाठे आकारान्तोऽयं शब्दः । अप्सरा इति पाठे तु महाभाष्ये एकवचनान्तप्रयोगादमरस्य "स्त्रियां बहुष्वप्सरसः" इत्यस्यापभ्रंशता सूचितेति साध्वप्सरा इति मन्तव्यम् । तमुद्देशं वसिष्ठविशिष्टं देशम् । यदृच्छया तमुद्देशमाययौ इति पाठः ॥ १३ ॥

वक्ष्यति–मित्रः वरुणत्वं प्रापेति ॥ १२–१९ ॥ काममिति । एवमेव मे भवतु । मे हृदयं चित्तं त्वयि स्थितमेव भवतु । अभ्यधिको भावश्च तुभ्यं तव च, मयीति शेषः ॥ २० ॥ २१ ॥ उर्वशी त्विति । सुसंक्रम्य सम्यक् परिष्वज्य । तस्याः स्वस्मिन्ननुरागाभावमालोक्येत्यर्थः । तां तु मित्रः सुसंक्रुध्येति



एवमुत्सृज्य सुश्रोणि त्वय्यहं वरवर्णिनि । कृतकामो भविष्यामि यदि नेच्छसि सङ्गमम् ॥ १८ ॥ तस्य तल्लोकपालस्य वरुणस्य सुभाषितम् । उर्वशी परमप्रीता श्रुत्वा वाक्यमुवाच ह ॥ १९ ॥ काममेतद्भवत्वेवं हृदयं मे त्वयि स्थितम् । भावश्चाभ्यधिकस्तुभ्यं देहो मित्रस्य तु प्रभो ॥ २० ॥ उर्वश्या एवमुक्तस्तु रेतस्तन्महदद्भुतम् । ज्वलदग्निशिखाप्रख्यं तस्मिन् कुम्भे ह्यपासृजत् ॥ २१ ॥ उर्वशी त्वगमत्तत्र मित्रो वै यत्र देवता । तां तु मित्रः सुसंक्रम्य उर्वशीमिदमब्रवीत् ॥ २२ ॥ मया निमन्त्रिता पूर्वं कस्मात्त्वमवसर्जिता । पतिमन्यं वृतवती तस्मात्त्वं दुष्टचारिणी ॥ २३ ॥ अनेन दुष्कृतेन त्वं मत्क्रोधकलुषीकृता । मनुष्यलोकमास्थाय कंचित्कालं निवत्स्यसि ॥ २४ ॥ बुधस्य पुत्रो राजर्षिः काशीराजः पुरूरवाः । तमद्य गच्छ दुर्बुद्धे स ते भर्ता भविष्यति ॥ २५ ॥ ततः सा शापदोषेण पुरूरवसमभ्यगात् । प्रतियाता पुरूरवं बुधस्यात्मजमौरसम् ॥ २६ ॥ तस्य जज्ञे ततः श्रीमानायुः पुत्रो महाबलः । नहुषो यस्य पुत्रस्तु बभूवेन्द्रसमद्युतिः ॥ २७ ॥ वज्रमुत्सृज्य वृत्राय श्रान्तेऽथ त्रिदशेश्वरे । शतं वर्षसहस्राणि येनेन्द्रत्वं प्रशासितम् ॥ २८ ॥ सा तेन शापेन जगाम भूमिं तदोर्वशी चारुदती सुनेत्रा । बहूनि वर्षाण्यवसच्च सुभ्रूः शापक्षयादिन्द्रसदो ययौ च ॥ २९ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे षट्पञ्चाशः सर्गः ॥ ५६ ॥

च पाठः ॥ २२ ॥ कस्मात्त्वमवसर्जिता विसृष्टवती, मामिति शेषः । कस्मात्त्वमसि वर्जितेति च पाठः ॥ २३ ॥ अनेनेति । मानुषं लोकमास्थाये त्यनेन देवरूपेणैवेति शेषः ॥ २४–२९ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

 

तामित्यादि । दिव्यसङ्काशां दिव्यरूपाम् ॥ १ ॥ निक्षिप्तेति । निक्षिप्तदेहौ । पुनर्देहेनेति । कुम्भे वरुणतेजोविसर्जनमुक्तं तावता प्रकृष्टदेहसिद्धिप्रश्नो न दत्तोत्तर इति पुनः प्रश्नः कृत इति मन्तव्यम् ॥ २ ॥ तस्येति । तां कथां वसिष्ठस्य देहोत्पत्तिविषयिणीं कथाम् ॥ ३ ॥ यस्त्विति । तेजोमयौ निरवधिकतेजस्कौ ॥४॥ पूर्वमिति । तत्र कुम्भे । पूर्वं वरुणतेजोनिधानात्पूर्वम् । मित्रं प्रति नाहं तव सुत इत्युक्त्वा तस्मात्कुम्भादपाक्रमत् उदतिष्ठत

तां श्रुत्वा दिव्यसङ्काशां कथामद्भुतदर्शनाम् । लक्ष्मणः परमप्रीतो राघवं वाक्यमब्रवीत् ॥१॥ निक्षिप्तदेहौ काकुत्स्थ कथं तौ द्विजपार्थिवौ । पुनर्देहेन संयोगं जग्मतुर्देवसम्मतौ ॥ २ ॥ तस्य तद्भाषितं श्रुत्वा रामः सत्यपराक्रमः । तां कथां कथयामास वसिष्ठस्य महात्मनः ॥३॥ यस्तु कुम्भो रघुश्रेष्ठ तेजःपूर्णो महात्मनोः । तस्मिंस्तेजोमयौ विप्रौ संभूतावृषिसत्तमौ ॥ ४ ॥ पूर्वं समभवत्तत्र ह्यगस्त्यो भगवानृषिः । नाहं सुतस्तवेत्युक्त्वा मित्रं तस्मादपाक्रमत् ॥ ५ ॥ तद्धि तेजस्तु मित्रस्य उर्वश्याः पूर्वमाहितम् । तस्मिन् समभवत् कुम्भे तत्तेजो यत्र वारुणम् ॥ ६ ॥

॥ ५ ॥ निषेधस्य का वा प्रसक्तिरित्यत्राह–तद्धि तेज इति । उर्वश्याः निमित्तभूतायाः । मित्रतेजस्तस्मिन् कुम्भे पूर्वम् उपरि आहितम् अर्पितम्, तस्मात्प्रतिषेधः कृत इति भावः । यद्वा पूर्ववरणकाले उर्वश्या आहितं तेजः सर्वासन्निधानात् असंभोगात्कुम्भे तत्र निक्षिप्तमिति भावः । अस्मिंस्तु पक्षे मित्रपदं मित्रावरुणपरम् । सर्वथा न मित्रावरुणतेजोजोऽगस्त्यः, किन्तु कुम्भमात्रसंभवः । अत एव कुम्भसंभवः कलशीभव इत्यादिव्यवहारः । अयोनिजश्चायम्, कुम्भस्य मैत्रावरुणत्वात् मैत्रावरुणिरित्यपि व्यवहारः । क्वचित् वसिष्ठस्तु मैत्रावरुणतेजोज एवेत्याह–यस्मात्तेजस्तु मित्रस्योर्वश्यां पूर्वमाहितम् तत्तेजो यत्र वारुणमिति । अन्ये त्वाहुः । नाहं सुतस्तवेत्यादि । पुत्रो न भवामीत्यर्थः । उत्तरस्य प्रसक्तिं दर्शयति–तद्धीति । अगस्त्यस्य उत्पत्तिबीजभूतं मित्रस्य तत्तेजः उर्वश्याः पूर्वमुर्वश्या निमित्ततः मित्रेण तस्मिन् कुम्भे वरुणवीर्यविसर्जनात्पूर्वमेवाहितम् । तस्मिन्नेव कुम्भे वारुणमपि तेज उर्वशीनिमित्तकं समभवत् । तस्मान्नैकस्य तव सुत इत्युक्तम् अगस्त्येन । अत एव मैत्रावरुणिरित्यगस्त्यनाम, कुम्भाज्जन्यत्वात्कुम्भसंभव इत्याहुः ॥६॥

कस्यचिदिति । अगस्त्योत्पत्तेः बहुकालानन्तरमित्यर्थः । मित्रावरुणयोस्तेज आविशति पूर्व ब्रह्मनियोगः ॥ ७ ॥ ८ ॥ एवमिति । अपूर्वदेहस्य नूतन देहस्य । निर्गमः उत्पत्तिः ॥ ९ ॥ १० ॥ तमिति । रक्षन्ति स्मेति, तैलकटाहादाविति शेषः ॥ ११ ॥ तत इति । भृगुः तत्र तस्मिन् । यज्ञसमाप्तिकाल इत्यर्थः । इदं वक्ष्यमाणम् । हे पार्थिव देहाभिमानिप्रत्यगात्मन् ! तव तुष्टोऽस्मि अतस्ते चेतः जीवमानयिष्यामि देह इत्यब्रवीत् ॥१२॥ सुप्रीता इति ।

कस्यचित्त्वथ कालस्य मित्रावरुणसंभवः । वसिष्ठस्तेजसा युक्तो जज्ञे चेक्ष्वाकुदैवतम् ॥७॥ तमिक्ष्वाकुर्महातेजा जातमात्रमनिन्दितम् । वव्रे पुरोहितं सौम्य वंशस्यास्य भवाय नः ॥८॥ एवं त्वपूर्वदेहस्य वसिष्ठस्य महात्मनः । कथितो निर्गमः सौम्य निमेः शृणु यथाऽभवत् ॥ ९ ॥ दृष्ट्वा विदेहं राजानमृषयः सर्व एव ते । तं ततो योजयामासुर्यागदीक्षां मनीषिणः ॥ १० ॥ तं च देहं नरेन्द्रस्य रक्षन्ति स्म द्विजोत्तमाः । गन्धैर्माल्यैश्च वस्त्रैश्च पौरभृत्यसमन्विताः ॥११॥ ततो यज्ञे समाप्ते तु भृगुस्तत्रेदमब्रवीत् । आनयिष्यामि ते चेतस्तुष्टोऽस्मि तव पार्थिव ॥१२॥ सुप्रीताश्च सुराः सर्वे निमेश्चेतस्तथाऽब्रुवन् । वरं वरय राजर्षे क्व ते चेतो निरूप्यताम् ॥ १३ ॥ एवमुक्तः सुरैः सर्वैर्निमेश्चेतस्तदाऽब्रवीत् नेत्रेषु सर्वभूतानां वसेयं सुरसत्तमाः ॥ १४ ॥ बाढमित्येव विबुधा निमेश्चेतस्तदाऽब्रुवन् । नेत्रेषु सर्वभूतानां वायुभूतश्चरिष्यसि ॥ १५ ॥ त्वत्कृते च निमिष्यन्ति चक्षूंषि पृथिवीपते । वायुभूतेन चरता विश्रमार्थं मुहुर्मुहुः ॥ १६ ॥ एवमुक्त्वा तु विबुधाः सर्वे जग्मुर्यथागतम् । ऋषयोऽपि महात्मानो निमेर्देहं समाहरन् ॥ १७ ॥

तदा सुप्रीताः सर्वे सुराश्च निमेश्चेत आनयिष्याम इत्यब्रुवन् । अथ हे राजर्षे ! वरं वरय ते चेतस्त्वाकृष्टं क्व निरूप्यतां क्व स्थाप्यतामिति चाब्रुवन्निति संबन्धः । क्व ते चेतो निरूप्यतामिति च पाठः ॥ १३ ॥ एवमिति । निमेश्चेतः चेतोऽभिमानी प्रत्यगात्मा तदाऽब्रवीत् । किमिति ? सर्वभूतानां नेत्रेषु सर्वभूतवर्तिनेत्रेषु वैभवात् वसेयं न त्वेकस्मिन्नित्यर्थः ॥१४॥ बाढमिति । वायुभूतः नागाद्युपवायुभूत इत्यर्थः ॥१५॥ त्वत्कृत इति । त्वत्कृते त्वदवस्थाननिमित्तं निमिष्यन्ति निमेषधर्मं प्राप्स्यन्ति । विश्रमार्थमिति । उन्मीलनखेदापनोदनार्थमित्यर्थः ॥१६॥ एवमिति । देहं केवलमित्यर्थः ॥१७॥

अरणिमिति । मन्त्रहोमैः पुत्रीयमन्त्रहोमैः, तादृशमन्त्रपूर्वकहोमैरित्यर्थः ॥ १८ ॥ अरण्यामिति । विदेहाद्विगतो देहो विदेहः तस्मात्संभूतो वैदेहः जनकः ॥ १९ ॥ २० ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥



अरणिं तत्र निक्षिप्य मथनं चक्रुरोजसा । मन्त्रहोमैर्महात्मानः पुत्रहेतोर्निमेस्तदा ॥ १८ ॥ अरण्यां मथ्यमानायां प्रादुर्भूतो महातपाः । मथनान्मिथिरित्याहुर्जननाज्जनकोऽभवत् । यस्माद्विदेहात् सम्भूतो वैदेहस्तु ततः स्मृतः ॥ १९ ॥ एवं विदेहराजश्च जनकः पूर्वकोऽभवत् । मिथिर्नाम महातेजास्तेनायं मैथिलोऽभवत् ॥ [ इति सर्वमशेषतो मया कथितं सम्भवकारणं तु सौम्य । नृपपुङ्गवशापजं द्विजस्य द्विजशापाच्च यदद्भुतं नृपस्य ॥ ]॥ २० ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

एवं ब्रुवति रामे तु लक्ष्मणः परवीरहा । प्रत्युवाच महात्मानं ज्वलन्तमिव तेजसा ॥ १ ॥ महदद्भुतमाश्चर्यं विदेहस्य पुरातनम् । निर्वृत्तं राजशार्दूल वसिष्ठस्य निमेः सह ॥ २ ॥ निमिस्तु क्षत्रियः शूरो विशेषेण च दीक्षितः । न क्षमां कृतवान् राजा वसिष्ठस्य महात्मनः ॥ ३ ॥ एवमुक्तस्तु तेनायं श्रीमान् क्षत्रियपुङ्गवः । उवाच लक्ष्मणं वाक्यं सर्वशास्त्रविशारदम् ॥ ४ ॥ रामो रमयतां श्रेष्ठो भ्रातरं दीप्ततेजसम् । न सर्वत्र क्षमा वीर पुरुषेषु प्रदृश्यते ॥ ५ ॥ सौमित्रे दुस्सहो रोषो यथा क्षान्तो ययातिना । सत्त्वानुगं पुरस्कृत्य तं निबोध समाहितः ॥ ६ ॥ नहुषस्य सुतो राजा ययातिः पौरवर्धनः । तस्य भार्याद्वयं सौम्य रूपेणाप्रतिमं भुवि ॥ ७ ॥

॥ १ ॥ महदिति । पुण्यश्रवणत्वेन महदद्भुतम् । आश्चर्यादप्याश्चर्यमित्यर्थः । निमेः सहेति, प्रसङ्ग इति शेषः ॥ २ ॥ निमिरिति । महात्मनि वसिष्ठे विषये कथं धार्मिकः निमिः अमर्षं चकारेति पृष्टवन्तं लक्ष्मणं प्रति ययातिक्षमाकथनम् " आम्रान् पृष्टः कोविदारानाचष्टे " इति न्यायं कथं नानुसरेत् ? मैवम् । महान् दोषः, चिन्तायाः अकर्तव्याभिप्रायात् गुणवतो गुणकीर्तनस्य ॥ ३–५ ॥ सौमित्र इति । यथा येन प्रकारेण । सत्त्वानुगं सत्त्वगुणानुमतम्,

मार्गमिति शेषः । तं प्रकारं निबोध ॥ ६ ॥ ७ ॥ एकेति । पुरस्कृता पूजिता । दैतेयी दितेः पौत्री ॥ ८ ॥ अन्येति । उशनसः शुक्रस्य ॥ ९–१५ ॥ इङ्गितमिति । इङ्गितं सखेदरोषभावम् ॥१६॥ दृष्ट्वेति । अप्रकृतिस्थामस्वस्थाम् । अप्रहृष्टां हर्षरहिताम् । अचेतनां क्षुभितचित्ताम् ॥ १७॥१८॥ अह-

एका तु तस्य राजर्षेर्नाहुषस्य पुरस्कृता । शर्मिष्ठा नाम दैतेयी दुहिता वृषपर्वणः ॥ ८ ॥ अन्या तूशनसः पुत्री ययातेः पुरुषर्षभ । न तु सा दयिता राज्ञो देवयानी सुमध्यमा ॥ ९॥ तयोः पुत्रौ तु सम्भूतौ रूपवन्तौ समाहितौ । शर्मिष्ठाऽजनयत् पूरुं देवयानी यदुं तदा ॥ १० ॥ पूरुस्तु दयितो राज्ञो गुणैर्मातृकृतेन च । ततो दुःखसमाविष्टो यदुर्मातरमब्रवीत् ॥ ११ ॥ भार्गवस्य कुले जाता देवस्याक्लिष्टकर्मणः । सहसे हृद्गतं दुःखमवमानं च दुस्सहम् ॥ १२ ॥ आवां च सहितौ देवि प्रविशाव हुताशनम् । राजा तु रमतां सार्धं दैत्यपुत्र्या बहुक्षपाः ॥ १३ ॥ यदि वा सहनीयं ते मामनुज्ञातुमर्हसि । क्षम त्वं न क्षमिष्येऽहं मरिष्यामि न संशयः ॥ १४ ॥ पुत्रस्य भाषितं श्रुत्वा परमार्तस्य रोदतः । देवयानी तु संक्रुद्धा सस्मार पितरं तदा ॥ १५ ॥ इङ्गितं तदभिज्ञाय दुहितुर्भार्गवस्तदा । आगतस्त्वरितं तत्र देवयानी तु यत्र सा ॥ १६ ॥ दृष्ट्वा चाप्रकृतिस्थां तामप्रहृष्टामचेतनाम् । पिता दुहितरं वाक्यं किमेतदिति चाब्रवीत् ॥ १७ ॥ पृच्छन्तमसकृत्तं वै भार्गवं दीप्ततेजसम् । देवयानी तु संक्रुद्धा पितरं वाक्यमब्रवीत् ॥ १८ ॥ अहमग्निं विषं तीक्ष्णमपो वा मुनिसत्तम । भक्षयिष्ये प्रवेक्ष्यामि नतु शक्ष्यामि जीवितुम् ॥ १९ ॥ न मां त्वमवजानीषे दुःखितामवमानिताम् । वृक्षस्यावज्ञया ब्रह्मन् छिद्यन्ते वृक्षजीविनः ॥ २० ॥

मिति । अग्निं प्रवेक्ष्यामि विषं भक्षयिष्य इति संबन्धः ॥ १९ ॥ नेति । दुःखितामवमानितां नावजानीषे न जानीषे न जानासि । अवोपसर्गो धात्वर्थमात्रे

स०—तयोः शर्मिष्ठादेवयान्योः । पुत्रौ पूरुयद्वाख्यौ । तुर्वस्वादीनां त्रयाणां मुख्यवंशकर्तृत्वाभावादनुक्तिः ॥ १० ॥ ततः राज्ञः पूरौ प्रीत्यतिशयदर्शनानन्तरम् । मातरं देवयानीम् ॥ ११ ॥ देवस्य द्योतनादि गुणस्य सहसे, किमर्थमिति शेषः ॥ १२ ॥

वर्तते । अन्यापदेशेनाह–वृक्षस्येति । वृक्षस्यावज्ञया छेदनादिना वृक्षजीविनः पत्रपुष्पादयश्छिद्यन्ते ॥ २० ॥ तदेवोपपादयति–अवज्ञयेत्यादि । हे भार्गव ! राजर्षिस्त्वय्यवज्ञया हेतुभूतया मां परिभूय मय्यवज्ञां प्रयुङ्क्ते । अवज्ञाय स राजर्षिः परिभूय च भार्गवमिति पाठे–भार्गवविषयावमानबहु





अवज्ञया च राजर्षिः परिभूय च भार्गव । मय्यवज्ञां प्रयुङ्क्ते हि न च मां बहुमन्यते ॥२१॥ तस्यास्तद्वचनं श्रुत्वा कोपेनाभिपरिप्लुतः । व्याहर्तुमुपचक्राम भार्गवो नहुषात्मजम् ॥२२॥ यस्मान्मामवजानीषे नाहुष त्वं दुरात्मवान् । जरया परया जीर्णः शैथिल्यमुपयास्यसि ॥ २३ ॥ एवमुक्त्वा दुहितरं समाश्वास्य च भार्गवः । पुनर्जगाम ब्रह्मर्षि र्भवनं स्वं महायशाः ॥२४॥ स एवमुक्त्वा द्विजपुङ्गवाग्र्यः सुतां समाश्वास्य च देवयानीम् । पुनर्ययौ सूर्यसमान तेजा दत्त्वा च शापं नहुषात्मजाय ॥२५॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तरश्रीरामायणे अष्टपञ्चाशः सर्गः ॥५८॥ श्रुत्वा तूशनसं क्रुद्धं तदाऽऽर्तो नहुषात्मजः । जरां परमिकां प्राप्य यदुं वचनमब्रवीत् ॥ १ ॥ यदो त्वमसि धर्मज्ञो मदर्थं प्रतिगृह्यताम् । जरां परमिकां पुत्र भोगै रंस्ये महायशः ॥ २ ॥ न तावत् कृतकृत्योऽस्मि विषयेषु नरर्षभ । अनुभूय तथा कामं ततः प्राप्स्याम्यहं जराम् ॥ ३ ॥ यदुस्तद्वचनं श्रुत्वा प्रत्युवाच नरर्षभम् । पुत्रस्ते दयितः पूरुः प्रतिगृह्णातु वै जराम् ॥ ४ ॥ बहिष्कृतोऽहमर्थेषु सन्निकर्षाच्च पार्थिव । प्रतिगृह्णातु वै राजन् कः सहाश्नाति भोजनम् ॥ ५ ॥ तस्य तद्वचनं श्रुत्वा राजा पूरुमथाब्रवीत् । इयं जरा महाबाहो मदर्थं प्रतिगृह्यताम् ॥ ६ ॥

मानाभ्यां मय्यवज्ञानबहुमानभावं करोतीत्यर्थः ॥२१–२५॥ इति श्रीगोविन्द० मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टपञ्चाशः सर्गः ॥५८॥ श्रुत्वेत्यादि ॥ १–४ ॥ बहिष्कृत इति । सन्निकर्षात् समीपावस्थापनादिकृत्याच्च बहिष्कृतः ॥ ५–७ ॥



स०–महतीं सहसैवोत्पन्नत्वान्महत्त्वं जरायाः । जरां तु महतीं प्राप्य इति पाठः ॥ १ ॥ धर्मज्ञः पित्राज्ञापरिपालनरूपधर्मज्ञः ॥ २ ॥ अर्थेषु तद्विषये बहिष्कृतः सन्निकर्षाल्लालनादेर्बहिष्कृतः । यैः पूर्वादिभिस्सह भोजनम्, तदन्नादि अश्नासि । भूरमात्रं लक्ष्यीकृत्य गृह्णात्विति वदता यैरित्युक्तिस्तल्लालनप्रकारबाहुविध्यादिति मन्तव्यम् । तदादिकश्नीकारे गृह्णन्त्विति पाठो वा ॥ ९ ॥

पूरोरिति । जरां संक्रामयदिति, . योगबलादिति शेषः ॥ ८–१०॥ न्यासभूतेति । हे पुत्र ! त्वयि मया संक्रामिता जरा, तस्मान्मया जातः ॥११–१३॥

नाहुषेणैवमुक्तस्तु पूरुः प्राञ्जलिरब्रवीत् । धन्योऽस्म्यनुगृहीतोऽस्मि शासनेऽस्मि तव स्थितः ॥७॥ पूरोर्वचनमाज्ञाय नाहुषः परया मुदा । प्रहर्षमतुलं लभ जरां संक्रामयञ्च ताम् ॥८॥ ततः स राजा तरुणः प्राप्य यज्ञान् सहस्रशः । बहु वर्षसहस्राणि पालयामास मेदिनीम् ॥ ९ ॥ अथ दीर्घस्य कालस्य राजा पूरुमथाब्रवीत् । आनयस्व जरां पुत्र न्यासं निर्यातयस्व मे ॥ १० ॥ न्यासभूता मया पुत्र त्वयि सङ्क्रामिता जरा । तस्मात् प्रतिग्रहीष्यामि तां जरां मा व्यथां कृथाः ॥११॥ प्रीतश्चास्मि महाबाहो शासनस्य प्रतिग्रहात् । त्वां चाहमभिषेक्ष्यामि प्रीतियुक्तो नराधिपम् ॥१२॥ एवमुक्त्वा सुतं पूरुं ययातिर्नहुषात्मजः । देवयानीसुतं क्रुद्धो राजा वाक्यमुवाच ह ॥१३॥ राक्षसस्त्वं मया जातः पुत्ररूपो दुरासदः । प्रतिहंसि ममाज्ञां यत् प्रजार्थे विफलो भव ॥ १४ ॥ पितरं गुरुभूतं मां यस्मात्त्वमवमन्यसे । राक्षसान् यातुधानांस्त्वं जनयिष्यसि दारुणान् ॥ १५ ॥ न तु सोमकुलोत्पन्ने वंशे स्थास्यति दुर्मतेः । वंशोऽपि भवतस्तुल्यो दुर्विनीतो भविष्यति ॥ १६ ॥

राक्षस इति । प्रजार्थे विफलो भवेति । प्रजया पुत्रेण पितुः सकाशात्प्राप्यार्थः राज्यादिलक्षणरूपः तस्मिन्विफलः उक्तप्रयोजनरहित इत्यर्थः ॥ १४ ॥ १५ ॥ न त्विति । त्वयेति शेषः ॥ १६–२० ॥

स०—सोमकुलोत्पन्ने वंशे तत्परम्परायां तव दुर्मतेर्वंशो न स्थास्यति, सूर्यवंशं प्रविशति । न सूर्यवंशप्रवेशनमेवानिष्टमित्यत आह–दुर्विनीत इति । यथोक्तं हरिवंशे–" यायातमपि वंशस्ते समेष्यति च यादवम् । अत्र वंशोऽनुवंशस्ते सोमस्य भविता किल । एवमिक्ष्वाकुवंशाद्धि यदुवंशो विनिस्सृतः । चतुर्धा यदुपुत्रैश्च चतुर्भिर्भिद्यते पुनः । स यदुर्माधवे राज्यं विसृज्य यदुपुङ्गवे । त्रिविष्टपं गतो राजा देहं त्यक्त्वा महीतले । बभूव माधवसुतः सत्वतो नाम वीर्यवान् ॥ " इत्यादिविकद्रुकसंवादे । दुर्मतेस्तु, सन्तान इति शेषः । योऽप्यराक्षसस्तव सन्तानः सोऽपि क्षत्रियमात्रमेव, नतु सोमवंशराजपदाभिषिक्तः । भवत्तुल्यदुर्विनीतत्वादिति भाव इति नागोजिभट्टो नेदमवलोकत इत्युपेक्षणीयवागित्यवगन्तव्यम् ॥ १६ ॥

---

१ तस्मात्पूरो मया जातः प्रतिदेहि जरां मम । इति पाठ॰ टीकाकर्त्रा॰ ॰

ययातिवृत्तान्तप्रतिपादनस्य प्रकृतोपयोगमाह—एष तूशनसेति । यन्नृपिशापं निमिर्न चक्षमे तादृशः शापो ययातिना धारित इत्यर्थः ॥ २१ ॥ एतदिति । कारः कृत्यमेषामस्तीति कारिणः, कार्यापेक्षिण इत्यर्थः ॥२२॥ इति श्रीगोविन्द० मणिमुकु० उत्तरश्रीरामायणव्याख्याने एकोनषष्टितमः सर्गः॥५९॥



तमेवमुक्त्वा राजर्षिः पूरुं राज्यविवर्धनम् । अभिषेकेण सम्पूज्य आश्रमं प्रविवेश ह ॥ १७ ॥ ततः कालेन महता दिष्टान्तमुपजग्मिवान् । त्रिदिवं सङ्गतो राजा ययातिर्नहुषात्मजः ॥ १८ ॥ पूरुश्चकार तद्राज्यं धर्मेण महता वृतः । प्रतिष्ठाने पुरवरे काशीराज्ये महायशाः ॥ १९ ॥ यदुस्तु जनयामास यातुधानान् सहस्रशः । पुरे क्रौञ्चवने दुर्गे राजवंशबहिष्कृतः ॥२०॥ एष तूशनसा मुक्तः शापोत्सर्गो ययातिना । धारितः क्षत्रधर्मेण यन्निमिश्च न चक्षमे ॥ २१ ॥ एतत्ते सर्वमाख्यातं दर्शनं सर्वकारिणाम् । अनुवर्तामहे सौम्य दोषो न स्याद्यथा नृगे ॥ २२ ॥ इति कथयति रामे चन्द्रतुल्यानने च प्रविरलतरतारं व्योम जज्ञे तदानीम् । अरुणकिरणरक्ता दिग्बभौ चैव पूर्वा कुसुमरसविमुक्तं वस्त्रमाकुण्ठितेव ॥२३॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तरश्रीरामा० एकोनषष्टितमः सर्गः ॥५९॥

॥ अथाधिकपाठश्लोकप्रारम्भः ॥

ततः प्रभाते विमले कृत्वा पौर्वाह्णिकीं क्रियाम् । धर्मासनगतो राजा रामो राजीवलोचनः ॥ १ ॥ राजधर्मानवेक्षन् वै ब्राह्मणैर्नैगमैः सह । पुरोधसा वसिष्ठेन ऋषिणा कश्यपेन च ॥२॥ मन्त्रिभिर्व्यवहारज्ञैस्तथाऽन्यैर्धर्मपारगैः । नीतिज्ञैरथ सभ्यैश्च राजभिः सा समावृता ॥३॥ सभा यथा महेन्द्रस्य यमस्य वरुणस्य च । शुशुभे राजसिंहस्य रामस्याऽक्लिष्टकर्मणः ॥ ४ ॥ अथ रामोऽब्रवीत्तत्र लक्ष्मणं शुभलक्षणम् । निर्गच्छ त्वं महाबाहो सुमित्रानन्दवर्धन । कार्यार्थिनश्च सौमित्रे व्याहर्तुं त्वमुपक्रम ॥ ५ ॥ रामस्य भाषितं श्रुत्वा लक्ष्मणः शुभलक्षणः । द्वारदेशमुपागम्य

कार्यिणश्चाह्वयत् स्वयम् ॥ ६ ॥ न कश्चिदब्रवीत्तत्र मम कार्यमिहाद्य वै । नाधयो व्याधयश्चैव रामे राज्यं प्रशासति ॥ ७ ॥ पक्वसस्या वसुमती सर्वौषधिसमन्विता । न बालो म्रियते तत्र न युवा न च मध्यमः ॥ ८ ॥ धर्मेण शासितं सर्वं न च बाधा विधीयते । दृश्यते न च कार्यार्थी रामे राज्यं प्रशासति ॥ ९ ॥ लक्ष्मणः प्राञ्जलिर्भूत्वा रामायैवं न्यवेदयत् ॥ १० ॥ अथ रामः प्रसन्नात्मा सौमित्रिमिदमब्रवीत् । भूय एव तु गच्छ त्वं कारिणः प्रविचारय ॥११॥ सम्यक् प्रणीतया नीत्या नाधर्मो विद्यते क्वचित् । तस्माद्राजभयात् सर्वे रक्षन्तीव परस्परम् ॥ १२॥ बाणा इव मया मुक्ता इह रक्षन्ति मे प्रजाः । तथापि त्वं महाबाहो प्रजा रक्षस्व तत्परः ॥ १३ ॥ एवमुक्तस्तु सौमित्रिर्निर्जगाम नृपालयात् । अपश्यद्द्वारदेशे वै श्वानं तावदवस्थितम् ॥ १४ ॥ तमेव वीक्षमाणं वै विक्रोशन्तं मुहुर्मुहुः । दृष्ट्वाऽथ लक्ष्मणस्तं वै पप्रच्छाथ स वीर्यवान् ॥ १५ ॥ किं ते कार्यं महाभाग ब्रूहि विस्रब्धमानसः । लक्ष्मणस्य वचः श्रुत्वा सारमेयोऽभ्यभाषत ॥ १६ ॥ सर्वभूतशरण्याय रामायाक्लिष्टकर्मणे । भयेष्वभयदात्रे च तस्मै वक्तुं समुत्सहे ॥ १७ ॥ एतच्छ्रुत्वा तु वचनं सारमेयस्य लक्ष्मणः । राघवाय तदाख्यातुं प्रविवेशालयं शुभम् ॥ १८ ॥ निवेद्य रामस्य पुनर्निर्जगाम नृपालयात् । वक्तव्यं यदि ते किंचित् तत्त्वं ब्रूहि नृपाय वै । लक्ष्मणस्य वचः श्रुत्वा सारमेयोऽभ्यभाषत ॥ १९ ॥ देवागारे नृपागारे द्विजवेश्मसु वै तथा । वह्निः शतक्रतुश्चैव सूर्यो वायुश्च तिष्ठति ॥ २० ॥ नात्र योग्यास्तु सौमित्रे योनीनामधमा वयम् । प्रवेष्टुं नात्र शक्ष्यामो धर्मो विग्रहवान्नृपः ॥ २१ ॥ सत्यवादी रणपटुः सर्वभूतहिते रतः । षाड्गुण्यस्य पदं वेत्ति नीतिकर्ता स राघवः ॥२२॥ सर्वज्ञः सर्वदर्शी च रामो रमयतां वरः ॥२३॥ स सोमः स च मृत्युश्च स यमो धनदस्तथा । वह्निः शतक्रतुश्चैव सूर्यो वै वरुणस्तथा॥ २४ ॥ तस्य त्वं ब्रूहि सौमित्रे प्रजापालः स राघवः । अनाज्ञप्तस्तु सौमित्रे प्रवेष्टुं नेच्छयाम्यहम् ॥२५॥

आनृशंस्यान्महाभागः प्रविवेश महाद्युतिः। नृपालयं प्रविश्याथ लक्ष्मणो वाक्यमब्रवीत् ॥ २६ ॥ श्रूयतां मम विज्ञाप्यं कौसल्यानन्दवर्धन। यन्मयोक्तं महाबाहो तव शासनजं विभो। श्वा वै ते तिष्ठते द्वारि कार्यार्थी समुपागतः ॥ २७ ॥ लक्ष्मणस्य वचः श्रुत्वा रामो वचनमब्रवीत्। सम्प्रवेशय वै क्षिप्रं कार्यार्थी योऽत्र तिष्ठति ॥ २८ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे अधिकपाठे प्रथमः सर्गः ॥ १ ॥

श्रुत्वा रामस्य वचनं लक्ष्मणस्त्वरितस्तदा। श्वानमाहूय मतिमान् राघवाय न्यवेदयत् ॥ १ ॥ दृष्ट्वा समागतं श्वानं रामो वचनमब्रवीत्। विवक्षितार्थं मे ब्रूहि सारमेय न ते भयम् ॥ २ ॥ अथापश्यत तत्रस्थं रामं श्वा भिन्नमस्तकः। राजा सुप्तेषु जागर्ति राजा पालयति प्रजाः ॥ ३ ॥ राजा कर्ता च गोप्ता च सर्वस्य जगतः पिता। राजा कालो युगं चैव राजा सर्वमिदं जगत् ॥४॥ नीत्या सुनीतया राजा धर्मं रक्षति रक्षिता। यदा न पालयेद्राजा क्षिप्रं नश्यन्ति वै प्रजाः ॥५॥ धारणाद्धर्म इत्याहुर्धर्मेण विधृताः प्रजाः। यस्माद्धारयते सर्वं त्रैलोक्यं सचराचरम् ॥६॥ धारणाद्विद्विषां चैव धर्मेणारञ्जयन् प्रजाः। तस्माद्धारणमित्युक्तं स धर्म इति निश्चयः ॥७॥ एष राजन् परो धर्मः फलवान् प्रेत्य राघव। नहि धर्माद्भवेत् किञ्चिद्दुष्प्रापमिति मे मतिः ॥८॥ दानं दया सतां पूजा व्यवहारेषु चार्जवम्। एष राम परो धर्मो रक्षणात् प्रेत्य चेह च ॥९॥ त्वं प्रमाणं प्रमाणानामसि राघव सुव्रत। विदितश्चैव ते धर्मः सद्भिराचरितस्तु वै ॥ १० ॥ धर्माणां त्वं परं धाम गुणानां सागरोपमः। अज्ञानाच्च मया राजन्नुक्तस्त्वं राजसत्तम ॥ ११ ॥ प्रसादयामि शिरसा न त्वं क्रोद्धुमिहार्हसि। शुनकस्य वचः श्रुत्वा राघवो वाक्यमब्रवीत् ॥ १२ ॥ किं ते कार्यं करोम्यद्य ब्रूहि विस्रब्ध मा चिरम्। रामस्य वचनं श्रुत्वा सारमेयोऽब्रवीदिदम् ॥ १३ ॥ धर्मेण राष्ट्रं विन्देत धर्मेणैवानुपालयेत्। धर्माच्छरण्यतां याति राजा सर्वभयापहः ॥ १४ ॥ इदं विज्ञाय यत् कृत्यं श्रूयतां मम राघव।

भिक्षुः सर्वार्थसिद्धश्च ब्राह्मणावसथे वसन् ॥ १५ ॥ तेन दत्तः प्रहारो मे निष्कारणमनागसः । एतच्छ्रुत्वा तु रामेण द्वास्स्थः सम्प्रेषितस्तदा ॥ १६ ॥ आनीतश्च द्विजस्तेन सर्वसिद्धार्थकोविदः । अथ द्विजवरस्तत्र रामं दृष्ट्वा महाद्युतिः ॥ १७ ॥ किं ते कार्यं मया राम तद् ब्रूहि त्वं ममानघ । एवमुक्तस्तु विप्रेण रामो वचनमब्रवीत् ॥ १८ ॥ त्वया दत्तः प्रहारोऽयं सारमेयस्य वै द्विज । किं तवापकृतं विप्र दण्डेनाभिहतो यतः ॥ १९ ॥ क्रोधः प्राणहरः शत्रुः क्रोधो मित्रमुखो रिपुः । क्रोधो ह्यसिर्महातीक्ष्णः सर्वं क्रोधोऽपकर्षति ॥ २० ॥ तपते यजते चैव यच्च दानं प्रयच्छति । क्रोधेन वै संहरति तस्मात् क्रोधं विसर्जयेत् ॥ २१ ॥ इन्द्रियाणां प्रदुष्टानां हयानामिव धावताम् । कुर्वीत धृत्या सारथ्यं संहृत्येन्द्रियगोचरम् ॥ २२ ॥ मनसा कर्मणा वाचा चक्षुषा च समाचरेत् । श्रेयो लोकस्य चरतो न द्वेष्टि न च लिप्यते ॥ २३ ॥ न तत् कुर्यादसिस्तीक्ष्णः सर्वो वा व्याहतस्तथा । अरिर्वा नित्यसंक्रुद्धो यथाऽऽत्मा दुरनुष्ठितः ॥ २४ ॥ विनीतविनयस्यापि प्रकृतिर्न विधीयते । प्रकृतिं गूहमानस्य निश्चये प्रकृतिर्ध्रुवम् ॥ २५ ॥ एवमुक्तः स विप्रो वै रामेणाक्लिष्टकर्मणा । द्विजः सर्वार्थसिद्धस्तु अब्रवीद्रामसन्निधौ ॥ २६ ॥ मया दत्तः प्रहारोऽयं क्रोधेनाविष्टचेतसा । भिक्षार्थमटमानेन काले विगतभैक्षके ॥ २७ ॥ रथ्यास्थितः स्वयं श्वा वै गच्छ गच्छेति भाषितः । अथ स्वैरेण गच्छंस्तु रथ्यान्ते विषमं स्थितः ॥ २८ ॥ क्रोधेन क्षुधयाऽऽविष्टस्तदा दत्तोऽस्य राघव । प्रहारो राजराजेन्द्र शाधि मामपराधिनम् । त्वया शस्तस्य राजेन्द्र नास्ति मे नरकाद्भयम् ॥ २९ ॥ अथ रामेण सम्पृष्टाः सर्व एव सभासदः । किं कार्यमस्य वै ब्रूत दण्डो वै को नु पात्यताम् ॥ ३० ॥ सम्यक् प्रणिहिते दण्डे प्रजा भवति रक्षिता । भृग्वङ्गिरसकुत्साद्या वसिष्ठश्च सकाश्यपः ॥ ३१ ॥ धर्मपालकमुख्याश्च सचिवा नैगमास्तथा । एते चान्ये च बहवः पण्डितास्तत्र सङ्गताः ॥ ३२ ॥ अवध्यो ब्राह्मणो दण्डैरिति शास्त्रविदो विदुः । ब्रुवते राघवं सर्वे

राजधर्मेषु निष्ठिताः ॥ ३३ ॥ अथ ते मुनयः सर्वे राममेवाब्रुवंस्तदा । राजा शास्ता हि सर्वस्य त्वं विशेषेण राघव ॥ ३४ ॥ त्रैलोक्यस्य भवाञ्छास्ता देवो विष्णुः सनातनः । एवमुक्ते तु तैः सर्वैः श्वा वै वचनमब्रवीत् ॥ ३५ ॥ यदि तुष्टोऽसि मे राम यदि देयो वरो मम । प्रतिज्ञातं त्वया वीर किं करोमीति विश्रुतम् ॥ ३६ ॥ प्रयच्छ ब्राह्मणस्यास्य कौलपत्यं धराधर । कौलञ्जरे महाराज कौलपत्यं प्रदीयताम् ॥ ३७ ॥ एतच्छ्रुत्वा तु रामेण कौलपत्येऽभिषेचितः । प्रययौ ब्राह्मणो हृष्टो गजस्कन्धेन सोऽर्चितः ॥ ३८ ॥ अथ ते रामसचिवाः स्मयमाना वचोऽब्रुवन् । वरोऽयं दत्त एतस्य नायं शापो महाद्युते ॥ ३९ ॥ एवमुक्तस्तु सचिवै रामो वचनमब्रवीत् । न यूयं नीतितत्त्वज्ञाः श्वा वै जानाति कारणम् ॥ ४० ॥ अथ पृष्टस्तु रामेण सारमेयोऽब्रवीदिदम् । अहं कुलपतिस्तत्र आसं शिष्टान्नभोजनः ॥ ४१ ॥ देवद्विजातिपूजायां दासीदासेषु राघव । संविभागी शुभरतिर्देवद्रव्यस्य रक्षिता ॥ ४२ ॥ विनीतः शीलसम्पन्नः सर्वसत्त्वहिते रतः । सोऽहं प्राप्त इमां घोरामवस्थामधमां गतिम् ॥ ४३ ॥ एवं क्रोधान्वितो विप्रस्त्यक्तधर्मोऽहिते रतः । क्रुद्धो नृशंसः परुष अविद्वांश्चाप्यधार्मिकः ॥ ४४ ॥ कुलानि पातयत्येव सप्त सप्त च राघव । तस्मात् सर्वास्ववस्थासु कौलपत्यं न कारयेत् ॥ ४५ ॥ यमिच्छेन्नरकं नेतुं सपुत्रपशुबान्धवम् । देवेष्वधिष्ठितं कुर्याद्गोषु च ब्राह्मणेषु च ॥ ४६ ॥ ब्रह्मस्वं देवताद्रव्यं स्त्रीणां बालधनं च यत् । दत्तं हरति यो भूय इष्टैः सह विनश्यति ॥ ४७ ॥ ब्राह्मणद्रव्यमादत्ते देवानां चैव राघव । सद्यः पतति घोरे वै नरके वीचिसंज्ञिते ॥ ४८ ॥ मनसाऽपि हि देवस्वं ब्रह्मस्वं च हरेत्तु यः । निरयान्निरयं चैव पतत्येव नराधमः ॥ ४९ ॥ तच्छ्रुत्वा वचनं रामो विस्मयोत्फुल्ललोचनः । श्वाप्यगच्छन्महातेजा यत एवागतस्ततः ॥ ५० ॥ मनस्वी पूर्वजात्या स जातिमात्रोपदूषितः । वाराणस्यां महाभागः प्रायं चोपविवेश ह ॥ ५१ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे अधिकपाठे द्वितीयः सर्गः ॥ २ ॥

अथ तस्मिन् वनोद्देशे रम्ये पादपशोभिते । नदीकीर्णे गिरिवरे कोकिलानेककूजिते ॥ १ ॥ सिंहव्याघ्रसमाकीर्णे नानाद्विजगणावृते । गृध्रोलूकौ प्रवसतो बहुवर्षगणानपि ॥ २ ॥ अथोलूकस्य भवनं गृध्रः पापविनिश्चयः । ममेद मिति कृत्वाऽसौ कलहं तेन चाकरोत् ॥३॥ राजा सर्वस्य लोकस्य रामो राजीवलोचनः । तं प्रपद्यावहे शीघ्रं यस्यैत द्भवनं भवेत् ॥ ४ ॥ इति कृत्वा मतिं तौ तु निश्चयार्थं सुनिश्चिताम् । गृध्रोलूकौ प्रपद्येतां कोपाविष्टौ ह्यमर्षितौ ॥ ५ ॥ रामं प्रपद्य तौ शीघ्रं कलिव्याकुलचेतसौ । तौ परस्परविद्वेषात् स्पृशतश्चरणौ तदा ॥६॥ अथ दृष्ट्वा नरेन्द्रं तं गृध्रो वचनमब्रवीत् । सुराणामसुराणां च प्रधानस्त्वं मतो मम ॥ ७ ॥ बृहस्पतेश्च शुक्राच्च विशिष्टोऽसि महाद्युते परावरज्ञो भूतानां कान्त्या चन्द्र इवापरः ॥८ ॥ दुर्निरीक्ष्यो यथा सूर्यो हिमवांश्चैव गौरवे । सागरश्चासि गाम्भीर्ये लोकपालो यमो ह्यसि ॥९॥ क्षान्त्या धरण्या तुल्योऽसि शीघ्रत्वे ह्यनिलोपमः । गुरुस्त्वं सर्वसम्पन्नः कीर्तियुक्तश्च राघव ॥ १० ॥ अमर्षी दुर्जयो जेता सर्वास्त्रविधिपारगः । शृणुष्व मम वै राम विज्ञाप्यं नरपुङ्गव ॥ ११ ॥ ममा लयं पूर्वकृतं बाहुवीर्येण राघव । उलूको हरते राजंस्तत्र त्वं त्रातुमर्हसि ॥ १२ ॥ एवमुक्ते तु गृध्रेण उलूको वाक्य मब्रवीत् । सोमाच्छतक्रतोः सूर्याद्धनदाद्वा यमात्तथा ॥ १३ ॥ जायते वै नृपो राम किंचिद्भवति मानुषः । त्वं तु सर्वमयो देवो नारायण इवापरः ॥ १४ ॥ या च ते सौम्यता राजन् सम्यक् प्रणिहिता विभो । समं चरसि चान्विष्य तेन सोमांशको भवान् ॥ १५ ॥ क्रोधे दण्डे प्रजानाथ दाने पापभयापहः । दाता हर्ताऽसि गोप्ताऽसि तेनेन्द्र इव नो भवान् ॥ १६ ॥ अधृष्यः सर्वभूतेषु तेजसा चानलोपमः । अभीक्ष्णं तपसे लोकांस्तेन भास्करसन्निभः ॥ १७ ॥ साक्षाद्वित्तेशतुल्योऽसि अथवा धनदाधिकः । वित्तेशस्यैव पद्मा श्रीर्नित्यं ते राजसत्तम ॥ १८ ॥ धनदस्य तु कोपेन धनदस्तेन नो भवान् । समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥ १९ ॥ शत्रौ मित्रे च ते दृष्टिः

समतां याति राघव । धर्मेण शासनं नित्यं व्यवहारे विधिक्रमात् ॥ २० ॥ यस्य रुष्यसि वै राम तस्य मृत्युर्विधावति । गीयसे तेन वै राम यम इत्यतिविक्रमः ॥ २१ ॥ यश्चैष मानुषो भावो भवतो नृपसत्तम । आनृशंस्यपरो राम जातिषु क्षमयाऽन्वितः ॥ २२ ॥ दुर्बलस्य त्वनाथस्य राजा भवति वै बलम् । अचक्षुषोत्तमं चक्षुरगतेः स गतिर्भवान् ॥ २३ ॥ अस्माकमपि नाथस्त्वं श्रूयतां मम धार्मिक । ममालयप्रविष्टस्तु गृध्रो मां बाधते नृप ॥ २४ ॥ त्वं हि देव मनुष्येषु शास्ता वै नरपुङ्गवः । एतच्छ्रुत्वा तु वै रामः सचिवानाह्वयत् स्वयम् ॥२५॥ धृष्टिर्जयन्तो विजयः सिद्धार्थो राष्ट्रवर्धनः । अशोको धर्मपालश्च सचिवः सुमहाबलः ॥ २६ ॥ एते रामस्य सचिवा राज्ञो दशरथस्य च । नीतियुक्ता महात्मानः सर्वशास्त्रविशारदाः ॥ २१ ॥ प्रीतिमन्तः कुलीनाश्च नये मन्त्रे च कोविदाः । तानाहूय स धर्मात्मा पुष्पकादवतीर्य च ॥ २८ ॥ गृध्रोलूकविवादं तं पृच्छति स्म रघूत्तमः । कति वर्षाणि वै गृध्र तवेदं निलयं कृतम् ॥ २९ ॥ एतन्मे कारणं ब्रूहि यदि जानासि तत्त्वतः । एतच्छ्रुत्वा तु वै गृध्रो भाषते राघवं स तम् ॥ ३० ॥ इयं वसुमती राम मनुष्यैः परितो यदा । उत्थितैरावृता सर्वा तदाप्रभृति मे गृहम् ॥ ३१ ॥ उलूकश्चाब्रवीद्रामं पादपैरुपशोभिता । यदेयं पृथिवी राजंस्तदाप्रभृति मे गृहम् ॥ ३२ ॥ एतच्छ्रुत्वा तु रामो वै सभासद उवाच ह ॥ ३३ ॥ न सा सभा यत्र न सन्ति वृद्धा न ते वृद्धा ये न वदन्ति धर्मम् । नासौ धर्मो यत्र न सत्यमस्ति न तत् सत्यं यच्छलेनानुविद्धम् ॥ ३४ ॥ ये तु सभ्याः सदा ज्ञात्वा तूष्णीं ध्यायन्त आसते । यथाप्राप्तं न ब्रुवते ते सर्वेऽनृतवादिनः ॥ ३५ ॥ जानन्न वाऽब्रवीत् प्रश्नान् कामात् क्रोधाद्भयात्तथा । सहस्रं वारुणान् पाशानात्मनि प्रतिमुञ्चति । तेषां संवत्सरे पूर्णे पाश एकः प्रमुच्यते ॥ ३६ ॥ तस्मात् सत्येन वक्तव्यं जानता सत्यमञ्जसा । एतच्छ्रुत्वा तु सचिवा राममेवाब्रुवंस्तदा ॥३७॥ उलूकः शोभते राजन् न तु गृध्रो महामते । त्वं प्रमाणं महाराज

राजा हि परमा गतिः ॥३८॥ राजमूलाः प्रजाः सर्वा राजा धर्मः सनातनः । शास्ता नृणां नृपो येषां ते न गच्छन्ति दुर्गतिम् ॥ ३९ ॥ वैवस्वतेन मुक्तास्तु भवन्ति पुरुषोत्तमाः । सचिवानां वचः श्रुत्वा रामो वचनमब्रवीत् ॥ ४० ॥ श्रूयतामभिधास्यामि पुराणे यदुदाहृतम् । द्यौः सचन्द्रार्कनक्षत्रा सपर्वतमहावना ॥४१॥ सलिलार्णवसम्पूर्णं त्रैलोक्यं सचराचरम् । एक एव तदा ह्यासीद्युक्तो मेरुरिवापरः ॥ ४२ ॥ पुरा भूः सह लक्ष्म्या च विष्णोर्जठरमाविशत् । तां निगृह्य महातेजाः प्रविश्य सलिलार्णवम् ॥४३॥ सुष्वाप देवो भूतात्मा बहून् वर्षगणानपि । विष्णौ सुप्ते तदा ब्रह्मा विवेश जठरं ततः ॥ ४४ ॥ रुद्धस्रोतं तु तं ज्ञात्वा महायोगी समाविशत् । नाभ्यां विष्णोः समुत्पन्ने पद्मे हेमविभूषिते ॥ ४५ ॥ स तु निर्गम्य वै ब्रह्मा योगी भूत्वा महाप्रभुः । सिसृक्षुः पृथिवीं वायुं पर्वतान् समहीरुहान् ॥ ४६ ॥ तदन्तरे प्रजाः सर्वाः समनुष्यसरीसृपाः । जरायुजोऽण्डजाः सर्वाः ससर्ज स महातपाः ॥४७॥ ततः श्रोत्रमलोत्पन्नः कैटभो मधुना सह । दानवौ तौ महावीर्यौ घोररूपौ दुरासदौ ॥ ४८ ॥ दृष्ट्वा प्रजापतिं तत्र क्रोधाविष्टौ बभूवतुः । वेगेन महता तत्र स्वयम्भुवमधावताम् ॥ ४९ ॥ दृष्ट्वा स्वयम्भुवा मुक्तो रावो वै विकृतस्तदा । तेन शब्देन सम्प्राप्तौ दानवौ हरिणा सह ॥ ५० ॥ अथ चक्रप्रहारेण सूदितौ मधुकैटभौ । मेदसा प्लाविता सर्वा पृथिवी च समन्ततः ॥ ५१ ॥ भूयो विशोधिता तेन हरिणा लोकधारिणा । शुद्धा वै मेदिनीं तां तु वृक्षैः सर्वामपूरयत् ॥५२॥ ओषध्यः सर्वसस्यानि निष्पद्यन्त पृथग्विधाः । मेदोगन्धा तु धरणी मेदिनीत्यभिसंज्ञिता ॥५३॥ तस्मान्न गृध्रस्य गृहमुलूकस्येति मे मतिः । तस्माद्गृध्रस्तु दण्ड्यो वै पापो हर्ता परालयम् ॥ ५४ ॥ पीडां करोति पापात्मा दुर्विनीतो महानयम् । अथाशरीरिणी वाणी अन्तरिक्षात् प्रबोधिनी ॥५५॥ मा वधी राम गृध्रं तं पूर्वदग्धं तपोबलात् । काले गौतमदग्धोऽयं प्रजानाथो धनेश्वरः ॥५६॥ ब्रह्मदत्तस्तु नाम्नैष शूरः सत्यव्रतः शुचिः । गृहमस्यागतो विप्रो भोजनं

 

तयोरित्यादि । वासन्तिकी वसन्ते भवा । एवं प्रतिदिवसं संवदतोर्धर्मसंवादं कुर्वतोः । तत्पूर्वं प्रजारक्षणं कुर्वतोरिति शेषः । वासन्तिकी निशा प्राप्तेति । कालान्तर इति शेषः । एतेन वसन्ते समानीता देवी पुनर्वसन्ते त्यक्तेति सूचयति । इदं च कालवचनम् ऋपिकायोंचितत्वप्रदर्शनार्थम् ॥ १ ॥ २ ॥

प्रति गौतमः ॥ ५७ ॥ साग्रं वर्षशतं चैव भोक्तव्यं नृपसत्तम । ब्रह्मदत्तः स वै तस्य पाद्यमर्घ्यं स्वयं नृपः ॥५८॥ हार्दं चैवाकरोत्तस्य भोजनार्थं महाद्युतेः । मांसमस्याभवत्तत्र आहारे तु महात्मनः । अथ क्रुद्धेन मुनिना शापो दत्तोऽस्य दारुणः ॥५९॥ गृध्रस्त्वं भव वै राजन्निति शप्त्वाऽथ सोऽब्रवीत् ॥६०॥ उत्पत्स्यति कुले राज्ञां रामो नाम महायशाः । इक्ष्वाकूणां महाभागो राजा राजीवलोचनः ॥ ६१ ॥ तेन स्पृष्टो विपापस्त्वं भविता नरपुङ्गवः । स्पृष्टो रामेण तच्छ्रुत्वा नरेन्द्रः पृथिवीपतिः ॥ ६२ ॥ गृध्रत्वं त्यक्तवान् राजा दिव्यगन्धानुलेपनः । पुरुषो दिव्यरूपोऽभूदुवाचेदं च राघवम् ॥ ६३ ॥ साधु राघव धर्मज्ञ त्वत्प्रसादादहं विभो । विमुक्तो नरकाद् घोराच्छापस्यान्तः कृतस्त्वया ॥ ६४ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे अधिकपाठे तृतीयः सर्गः * ॥ ३ ॥

तयोः संवदतोरेवं रामलक्ष्मणयोस्तदा । वासन्तिकी निशा प्राप्ता न शीता न च घर्मदा ॥ १ ॥ ततः प्रभाते विमले कृतपौर्वाह्णिकक्रियः । अभिचक्राम काकुत्स्थो दर्शनं पौरकार्यवित् ॥ २ ॥ ततः सुमन्त्रस्त्वागम्य राघवं वाक्यमब्रवीत् । एते प्रतिहता राजन् द्वारि तिष्ठन्ति तापसाः ॥३॥ भार्गवच्यवनं चैव पुरस्कृत्य महर्षयः । दर्शनं ते महाराज्ञश्चोदयन्ति कृतत्वराः । प्रीयमाणा नरव्याघ्र यमुनातीरवासिनः ॥ ४ ॥ तस्य तद्वचनं श्रुत्वा रामः प्रोवाच धर्मवित् । प्रवेश्यन्तां महाभागा भार्गवप्रमुखा द्विजाः ॥ ५ ॥

तत इति । द्वारि प्रतिहताः निरुद्धा इत्यर्थः ॥ ३ ॥ भार्गवेति । भृगोर्गोत्रापत्यं भार्गवः, स चासौ च्यवनश्च तम् । महाराज्ञः महाराजस्य । दर्शनं प्रति अस्मदादीन् चोदयन्ति प्रेरयन्ति । महाराज्ञश्चोदयन्तीति च पाठः ॥ ४ ॥ तस्येति । भार्गवप्रमुखाः च्यवनप्रमुखाः ॥ ५ ॥ ६ ॥



* एवमाहत्यास्मिन् काण्डे त्रयोदश सर्गाः प्रक्षिप्ताः वेदितव्याः ।

शतमिति । समधिकम् अधिकसहितम् ॥ ७-१२ ॥ किमिति । किं करोमि किं कुर्याम् । सर्वकामकरः सर्वाभीष्टसाधकः ॥ १३ ॥१४॥ तस्येति । साधुकारः साधु साध्विति संभाषणम् ॥१५॥ ऊचुरिति । नान्यतः नान्यस्य ॥ १६॥ बहव इति । कार्यस्य गौरवं मत्वा ततः पूर्वं करिष्यामीति प्रतिज्ञां

राज्ञस्त्वाज्ञां पुरस्कृत्य द्वास्स्थो मूर्ध्नि कृताञ्जलिः । प्रवेशयामास तदा तापसान् सुदुरासदान् ॥६॥ शतं समधिकं तत्र दीप्यमानं स्वतेजसा । प्रविष्टं राजभवनं तापसानां महात्मनाम् ॥ ७ ॥ ते द्विजाः पूर्णकलशैः सर्वतीर्थाम्बुसत्कृतैः । गृहीत्वा फलमूलं च रामस्याभ्याहरन् बहु ॥ ८ ॥ प्रतिगृह्य तु तत् सर्वं रामः प्रीतिपुरस्कृतः । तीर्थोदकानि सर्वाणि फलानि विविधानि च ॥ ९ ॥ उवाच च महाबाहुः सर्वानेव महामुनीन् । इमान्यासनमुख्यानि यथार्हमुपविश्यताम् ॥ १० ॥ रामस्य भाषितं श्रुत्वा सर्व एव महर्षयः । बृसीषु रुचिराख्यासु निषेदुः काञ्चनासु ते ॥११॥ उपविष्टानृषींस्तत्र दृष्ट्वा परपुरञ्जयः । प्रयतः प्राञ्जलिर्भूत्वा राघवो वाक्यमब्रवीत् ॥ १२ ॥ किमागमनकार्यं वः किं करोमि समाहितः । आज्ञाप्योऽहं महर्षीणां सर्वकामकरः सुखम् ॥१३॥ इदं राज्यं च सकलं जीवितं च हृदि स्थितम् । सर्वमेतद्द्विजार्थं मे सत्यमेतद्ब्रवीमि वः ॥ १४ ॥ तस्य तद्वचनं श्रुत्वा साधुकारो महानभूत् । ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ॥ १५ ॥ ऊचुश्च ते महात्मानो हर्षेण महता वृताः । उपपन्नं नरश्रेष्ठ तवैव भुवि नान्यतः ॥ १६ ॥ बहवः पार्थिवा राजन्नतिक्रान्ता महाबलाः । कार्यस्य गौरवं मत्वा प्रतिज्ञां नाभ्यरोचयन् ॥१७॥ त्वया पुनर्ब्राह्मणगौरवादियं कृता प्रतिज्ञा ह्यनवेक्ष्य कारणम् । ततश्च कर्ता ह्यसि नात्र संशयो महाभयात् त्रातुमृषींस्त्वमर्हसि ॥ १८ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे षष्टितमः सर्गः ॥ ६० ॥

नाभ्यरोचयन् न कुर्वन्ति, अशक्यनियोगापत्तिभयादिति शेषः ॥१७॥१८॥ इति श्रीगोविन्दराजविरचिते मणि० उत्तरश्रीरामा० षष्टितमः सर्गः ॥ ६० ॥

एवमित्यादि ॥ १ ॥ २ ॥ पूर्वमिति । लोलायाः पुत्रो लोलापुत्रः ॥ ३-६ ॥ शूलमिति । शूलाच्छूलं विनिष्कृष्येति । स्वशूलाच्छक्तिमाकृष्य सृष्ट्वे



एवं ब्रुवद्भिर्ऋषिभिः काकुत्स्थो वाक्यमब्रवीत् । किं कार्यं ब्रूत मुनयो भयं तावदपैतु वः ॥ १ ॥ तथा ब्रुवति काकुत्स्थे भार्गवो वाक्यमब्रवीत् । भयानां शृणु यन्मूलं देशस्य च नरेश्वर ॥२॥ पूर्वं कृतयुगे राजन् दैतेयः सुमहाबलः । लोलापुत्रोऽभवज्ज्येष्ठो मधुर्नाम महासुरः ॥ ३ ॥ ब्रह्मण्यश्च शरण्यश्च बुद्ध्या च परिनिष्ठितः । सुरैश्च परमोदारैः प्रीतिस्तस्यातुलाऽभवत् ॥४॥ स मधुर्वीर्यसम्पन्नो धर्मे च सुसमाहितः । बहुवर्षसहस्राणि रुद्रप्रीत्याऽकरोत्तपः ॥ ५ ॥ रुद्रः प्रीतोऽभवत्तस्मै वरं दातुं ययौ च सः । बहुमानाच्च रुद्रेण दत्तस्तस्याद्भुतो वरः ॥ ६ ॥ शूलं शूलाद्विनिष्कृष्य महावीर्यं महाप्रभम् । ददौ महात्मा सुप्रीतो वाक्यं चैतदुवाच ह ॥७॥ त्वयाऽयमतुलो धर्मो मत्प्रसादकरः कृतः । प्रीत्या परमया युक्तो ददाम्यायुधमुत्तमम् ॥ ८ ॥ यावत् सुरैश्च विप्रैश्च न विरुध्येर्महासुर । तावच्छूलं तवेदं स्यादन्यथा नाशमेष्यति ॥ ९ ॥ यश्च त्वामभियुञ्जीत युद्धाय विगतज्वरः । तं शूलो भस्मसात् कृत्वा पुनरेष्यति ते करम् ॥१०॥ एवं रुद्राद्वरं लब्ध्वा भूय एव महासुरः । प्रणिपत्य महादेवं वाक्यमेतदुवाच ह ॥ ११ ॥ भगवन् मम वंशस्य शूलमेतदनुत्तमम् । भवेत्तु सततं देव सुराणामीश्वरो ह्यसि ॥ १२ ॥ तं ब्रुवाणं मधुं देवः सर्वभूतपतिः शिवः । प्रत्युवाच महातेजा नैतदेवं भविष्यति ॥ १३ ॥ मा भूत्ते विफला वाणी मत्प्रसादकृता शुभा । भवतः पुत्रमेकं तु शूलमेतद्गमिष्यते ॥१४॥ यावत् करस्थः शूलोऽयं भविष्यति सुतस्य ते । अवध्यः सर्वभूतानां शूलहस्तो भविष्यति ॥१५॥ एवं मधुर्वरं लब्ध्वा देवात् सुमहदद्भुतम् । भवनं सोऽसुरश्रेष्ठः कारयामास सुप्रभम् ॥ १६ ॥ तस्य पत्नी महाभागा प्रिया कुम्भीनसीति या । विश्वावसोरपत्यं सा ह्यनलायां महाप्रभा ॥ १७ ॥



त्यर्थः ॥ ७ ॥ ८ ॥ यावदिति । नाशम् अदर्शनम् ॥ ९-१३ ॥ मेति । मत्प्रसादकृता मत्प्रसादजसन्तोषजनितेत्यर्थः ॥१४-१६॥ तस्येति । कुम्भीनसी

माल्यवत्पुत्र्याः अनलायाः सुता रावणस्वसा पूर्वं मधुना हृतेति विभीषणेन रावणं प्रत्युक्ता । हिः प्रसिद्धौ ॥ १७–१९ ॥ स इति । वरं न्यवेदयत् यावच्छूलं तव हस्ते तावदवध्यत्वं तवेत्येवंरूपं वरवृत्तान्तम् ॥२०–२५॥ इति श्रीगोविन्दराज० मणिमुकुटा० उत्तरश्रीरामा० एकषष्टितमः सर्गः ॥६१॥



तस्याः पुत्रो महावीर्यो लवणो नाम दारुणः । बाल्यात् प्रभृति दुष्टात्मा पापान्येव समाचरत् ॥ १८ ॥ तं पुत्रं दुर्विनीतं तु दृष्ट्वा क्रोधसमन्वितः । मधुः स शोकमापेदे न चैनं किञ्चिदब्रवीत् ॥ १९ ॥ स विहाय त्विमं लोकं प्रविष्टो वरुणालयम् । शूलं निवेश्य लवणे वरं तस्मै न्यवेदयत् ॥२०॥ स प्रभावेन शूलस्य दौरात्म्येनात्मनस्तथा । सन्तापयति लोकांस्त्रीन् विशेषेण च तापसान् ॥२१॥ एवंप्रभावो लवणः शूलं चैव तथाविधम् । श्रुत्वा प्रमाणं काकुत्स्थ त्वं हि नः परमा गतिः ॥ २२ ॥ बहवः पार्थिवा राम भयार्तैर्ऋषिभिः पुरा । अभयं याचिता वीर त्रातारं न च विद्महे ॥ २३ ॥ ते वयं रावणं श्रुत्वा हतं सबलवाहनम् । त्रातारं विद्महे तात नान्यं भुवि नराधिपम् । तत् परित्रातुमिच्छामो लवणाद्भयपीडितान् ॥२४॥ इति राम निवेदितं तु ते भयजं कारणमुत्थितं च यत् । विनिवारयितुं भवान् क्षमः कुरु तं काममहीनविक्रम ॥२५॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तर० एकषष्टितमः सर्गः ॥ ६१ ॥

तथोक्ते तानृषीन् रामः प्रत्युवाच कृताञ्जलिः । किमाहारः किमाचारो लवणः क्व च वर्तते ॥१॥ राघवस्य वचः श्रुत्वा ऋषयः सर्व एव ते । ततो निवेदयामासुर्लवणो ववृधे यथा ॥ २ ॥ आहारः सर्वसत्त्वानि विशेषेण च तापसाः । आचारो रौद्रता नित्यं वासो मधुवने तथा ॥३॥ हत्वा बहुसहस्राणि सिंहव्याघ्रमृगद्विपान् । मानुषांश्चैव कुरुते नित्यमाहारमाह्निकम् ॥४॥ ततोऽन्तराणि सत्त्वानि खादते स महाबलः । संहारे समनुप्राप्ते व्यादितास्य इवान्तकः ॥५॥

अथ शत्रुघ्नस्य लवणासुरवधार्थं प्रेषणम्—तथेत्यादि ॥ १ ॥ राघवस्येति । यथा ववृधे यादृगाहारादिना वर्धते स्म तथा निवेदयामासुः ॥ २–७ ॥

क इति । कस्यांश इति पृष्ट्वा स्वयमेव निश्चिनोति—भरतस्येति ॥ ८ ॥ ९ ॥ भरतस्येति । आसनं हित्वा आसनादुत्थायेत्यर्थः ॥ १०–१९ ॥



तच्छ्रुत्वा राघवो वाक्यमुवाच स महामुनीन् । घातयिष्यामि तद्रक्षो ह्यपगच्छतु वो भयम् ॥ ६ ॥ प्रतिज्ञाय तथा तेषां मुनीनामुग्रतेजसाम् । स भ्रातॄन् सहितान् सर्वानुवाच रघुनन्दनः ॥ ७ ॥ को हन्ता लवणं वीरः कस्यांशः स विधीयताम् । भरतस्य महाबाहोः शत्रुघ्नस्य च धीमतः ॥ ८ ॥ राघवेणैवमुक्तस्तु भरतो वाक्यमब्रवीत् । अहमेनं वधिष्यामि ममांशः स विधीयताम् ॥ ९ ॥ भरतस्य वचः श्रुत्वा धैर्यशौर्यसमन्वितम् । लक्ष्मणावरजस्तस्थौ हित्वा सौवर्णमासनम् ॥ १० ॥ शत्रुघ्नस्त्वब्रवीद्वाक्यं प्रणिपत्य नराधिपम् । कृतकर्मा महाबाहुर्मध्यमो रघुनन्दनः ॥ ११ ॥ आर्येण हि पुरा शून्या त्वयोध्या परिपालिता । सन्तापं हृदये कृत्वा आर्यस्यागमनं प्रति ॥ १२ ॥ दुःखानि च बहूनीह ह्यनुभूतानि पार्थिव । शयानो दुःखशय्यासु नन्दिग्रामेऽवसत् पुरा ॥ १३ ॥ फलमूलाशनो भूत्वा जटी चीरधरस्तथा । अनुभूयेदृशं दुःखमेष राघवनन्दनः । प्रेष्ये मयि स्थिते राजन् न भूयः क्लेशमाप्नुयात् ॥ १४ ॥ तथा ब्रुवति शत्रुघ्ने राघवः पुनरब्रवीत् । एवं भवतु काकुत्स्थ क्रियतां मम शासनम् ॥ १५ ॥ राज्ये त्वामभिषेक्ष्यामि मधोस्तु नगरे शुभे । निवेशय महाबाहो भरतं यद्यवेक्षसे ॥ १६ ॥ शूरस्त्वं कृतविद्यश्च समर्थश्च निवेशने ॥ १७ ॥ यो हि शत्रुं समुत्पाट्य पार्थिवस्य पुनः क्षये । न विधत्ते नृपं तत्र नरकं स हि गच्छति ॥ १८ ॥ स त्वं हत्वा मधुसुतं लवणं पापनिश्चयम् । राज्यं प्रशाधि धर्मेण वाक्यं मे यद्यवेक्षसे ॥ १९ ॥



राज्य इति । निवेशय, अत्रैव नगर इति शेषः । अथवा तत्रैव तिष्ठेति भावः । अवेक्षसे, अक्लेशनीयत्वेनेति शेषः ॥ १६ ॥ शूर इति । निवेशने नूतनगृहनिर्माणे इत्यर्थः ॥ १७ ॥ मधोस्तु नगरे त्वामभिषेक्ष्यामीत्यत्र हेतुमाह—यो हीति । नृपं तत्रेति । उत्पाटितवंशनृपराज्य इत्यर्थः ॥१८॥१९॥

उत्तरं च न वक्तव्यमिति । त्वत्समीप एव मया वस्तव्यमित्यादिकमित्यर्थः ॥ २० ॥ अभिषेकमिति । विधिना मन्त्रेण च पुरस्कृतम् ॥ २१ ॥
इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

उत्तरं च न वक्तव्यं शूर वाक्यान्तरे मम । बालेन पूर्वजस्याज्ञा कर्तव्या नात्र संशयः ॥ २० ॥
अभिषेकं च काकुत्स्थ प्रतीच्छस्व मयोद्यतम् । वसिष्ठप्रमुखैर्विप्रैर्विधिमन्त्रपुरस्कृतम् ॥ २१ ॥

इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे द्विषष्टितमः सर्गः ॥ ६२ ॥

एवमुक्तस्तु रामेण परां व्रीडामुपागमत् । शत्रुघ्नो वीर्यसम्पन्नो मन्दं मन्दमुवाच ह ॥ १ ॥ अधर्मं विद्म काकुत्स्थ ह्यस्मिन्नर्थे नरेश्वर । कथं तिष्ठत्सु ज्येष्ठेषु कनीयानभिषिच्यते ॥ २ ॥ अवश्यं करणीयं च शासनं पुरुषर्षभ । तव चैव महाभाग शासनं दुरतिक्रमम् ॥ ३ ॥ त्वत्तो मया श्रुत वीर श्रुतिभ्यश्च मया श्रुतम् । नोत्तरं हि मया वाच्यं मध्यमे प्रतिजानति ॥४॥ व्याहृतं दुर्वचो घोरं हन्तास्मि लवणं मृधे । तस्येयं मे दुरुक्तस्य दुर्गतिः पुरुषर्षभ ॥ ५ ॥

अथ रामेण स्वसन्निधावेव मधुराज्ये शत्रुघ्नमभिषिच्य लवणवधोपायोपदेशपूर्वकं तद्वधार्थं दिव्यास्त्रप्रदानम्—एवमित्यादि ॥ १ ॥ अधर्ममिति । विद्म वेद्मीत्यर्थः । अस्मिन्नित्युक्तं विवृणोति—कथमित्यादि । तिष्ठत्सु ज्येष्ठेष्विति गुरुवैपम्यमार्षम् । कथमभिषिच्यते न कथमपि, अधर्म एवेत्यर्थः ॥ २ ॥ अवश्यमिति । तव शासनं चावश्यं करणीयमित्यर्थः ॥ ३ ॥ त्वत्त इति । मध्यमे भ्रातरि भरत इत्यर्थः । घोरं लवणं हन्तास्मीति प्रतिजानति सति । हि यस्मात् । मया उत्तरं ज्येष्ठवच उल्लङ्घ्य न वाच्यं वक्तुं न योग्यम् ॥ ४ ॥ व्याहृतमिति । तथाप्यहं मृधे युद्धे लवणं हन्तास्मीति दुर्वचो

स०—अखण्डभूमण्डलाधिपतिपुरतस्त्वां विना ज्येष्ठयोस्ततोऽश्च पुरान्तरेऽभिषेचनं मम कथमिति व्रीडामुपागमत् । अत एव रामं संलप्य बहुवचनप्रयोगः ॥१ ॥ शासनं श्रुतिकृतं ज्येष्ठेषु सत्सु कनीयसां नाभिषेको विवेकिभिः कार्य इतिलक्षणम् । अवश्यं करणीयम्, तव च शासनं राज्याभिषेकसम्पादनरूपं दुरतिक्रमम्, ज्येष्ठाज्ञावज्ञानस्यानौचित्यादित्युभयतः स्पाशा रज्जुर्जातेति भावः ।·एवमर्थ एव चशब्दस्समुच्चेयान्तरसमुच्चायक इति ज्ञेयम् । उत्तरश्लोकश्चानुकूलितो भवति ॥ ३ ॥ इदं कथमवगतं भवतेत्यत आह—त्वत्त इति । त्वत्तः वक्तुः । श्रुतिभिः करणैः मया श्रुतम् । मध्यमे भरते प्रतिजानति हन्ताहं लवणमिति प्रतिज्ञां कुर्वति सति मध्ये उत्तरं मया न वाच्यम् । अमया अज्ञानेन दुर्वचो व्याहृतमित्युत्तरेणान्वयः ॥ ४ ॥ ५ ॥

व्याहतं तस्यास्य मे दुरुक्तस्येयं दुर्गतिः दुष्टकार्यस्य प्राप्तिः । तच्च ज्येष्ठातिक्रमेण आत्माभिषेचनम् ॥ ५ ॥ उक्तमर्थं व्यावर्तयति-उत्तरं हीत्यादि । ज्येष्ठेन भरतेनाभिहिते सति ततः परमुत्तरं न वक्तुमुचितमेव । किंचाधर्मसहितमपि । अत एव परलोकविवर्जितमपि । तव शासनं च दुरतिक्रममिति शेषः ॥ ६ ॥ फलितमाह-सोऽहमित्यादि । भरतोक्तेः प्रथमं कृतोत्तरवचनः सोऽहं हे काकुत्स्थ! तव ज्येष्ठस्योत्तरं द्वितीयं न वक्ष्यामि । तत्र हेतुमाह-

उत्तरं हि न वक्तव्यं ज्येष्ठेनाभिहिते पुनः । अधर्मसहितं चैव परलोकविवर्जितम् ॥ ६ ॥ सोऽहं द्वितीयं काकुत्स्थ न वक्ष्यामि तवोत्तरम् । मा द्वितीयेन दण्डो वै निपतेन्मयि मानद ॥ ७ ॥ कामकारो ह्यहं राजंस्तवास्मि पुरुषर्षभ । अधर्मं जहि काकुत्स्थ मत्कृते रघुनन्दन ॥ ८ ॥ एवमुक्ते तु शूरेण शत्रुघ्नेन महात्मना । उवाच रामः संहृष्टो भरतं लक्ष्मणं तथा ॥ ९ ॥ सम्भारानभिषेकस्य आनयध्वं समाहिताः । अद्यैव पुरुषव्याघ्रमभिषेक्ष्यामि राघवम् ॥१०॥ पुरोहितं च काकुत्स्थं नैगमानृत्विजस्तथा । मन्त्रिणश्चैव तान् सर्वानानयध्वं ममाज्ञया ॥११॥ राज्ञः शासनमाज्ञाय तथाऽकुर्वन् महारथाः । अभिषेकसमारम्भं पुरस्कृत्य पुरोधसम् । प्रविष्टा राजभवनं राजानो ब्राह्मणास्तथा ॥ १२ ॥ तथाऽभिषेको ववृधे शत्रुघ्नस्य महात्मनः । सम्प्रहर्षकरः श्रीमान् राघवस्य पुरस्य च ॥ १३ ॥ अभिषिक्तस्तु शत्रुघ्नो बभौ चादित्यसंनिभः । अभिषिक्तः पुरा स्कन्दः सेन्द्रैरिव मरुद्गणैः ॥ १४ ॥

मेति । द्वितीयेन ज्येष्ठप्रत्युत्तरेण दण्डो मयि मा निपतेत् । भरतं जिगमिषत्यहं गमिष्यामीत्युत्तरेण प्रथमेन राज्याभिषेकापत्तिरूपो दण्डः पतितः । त्वया अभिषेकं प्रतीच्छेत्युक्ते तदनङ्गीकारोत्तरेण द्वितीयेन मयि दण्डो मा निपतेदिति भावः ॥ ७ ॥ फलितमाह-कामकार इति । अहं तव कामकारोऽस्मि अभीष्टनियोगकर्त्ताऽस्मि । मत्कृते मदनुष्ठितराज्याभिषेकस्वीकारे । अधर्मं ज्येष्ठातिक्रमेण राज्यप्राप्तिनिमित्तम् । काकुत्स्थेत्यत्रापि प्राधान्याल्लोकस्य अधर्मम् अधर्मबुद्धिं जहि परिहर ॥ ८ ॥ एवमिति । संहृष्ट इति । कृताभिषेकनियोगत्वादिति भावः । अभिषेकस्य संभारान् अभिषेकोपकरणानि । लक्ष्मणं भरतं तथेति । प्राधान्यात् सुमन्त्रादीनपीत्यर्थः । अन्यथाऽऽनयध्वमिति बहुवचनं विरुध्येत ॥ ९-१७ ॥

तत इति । तेजः शत्रुसंहारोचितबलवीर्यम् ॥ १८ ॥ अयमिति । अयं मया दीयमानः ॥ १९ ॥ अमोघत्वे हेतुमाह–सृष्ट इत्यादि ॥ २० ॥ २१ ॥ सृष्ट इति । विघाते सृष्टिविघ्ने वर्तमानयोः, तत्परयोरित्यर्थः । सृष्टः क्रोधाभिभूतेन विनाशे सर्वरक्षसाम् । मधुकैटभयोर्वीर विघाते सर्वरक्षसामिति च पाठः ।

अभिषिक्ते तु शत्रुघ्ने रामेणाक्लिष्टकर्मणा । पौराः प्रमुदिताश्चासन् ब्राह्मणाश्च बहुश्रुताः ॥ १५ ॥ कौसल्या च सुमित्रा च मङ्गलं केकयी तथा । चक्रुस्ता राजभवने याश्चान्या राजयोषितः ॥ १६ ॥ ऋषयश्च महात्मानो यमुनातीरवासिनः । हतं लवणमाशंसुः शत्रुघ्नस्याभिषेचनात् ॥ १७ ॥ ततोऽभिषिक्तं शत्रुघ्नमङ्कमारोप्य राघवः । उवाच मधुरां वाणीं तेजस्तस्याभिपूरयन् ॥१८॥ अयं शरस्त्वमोघस्ते दिव्यः परपुरञ्जयः । अनेन लवणं सौम्य हन्तासि रघुनन्दन ॥१९॥ सृष्टः शरोऽयं काकुत्स्थ यदा शेते महार्णवे ॥२०॥ स्वयम्भूरजितो देवो यन्नापश्यन् सुरासुराः । अदृश्यः सर्वभूतानां तेनायं तु शरोत्तमः ॥२१॥ सृष्टः क्रोधाभिभूतेन विनाशार्थं दुरात्मनोः । मधुकैटभयोर्वीर विघाते वर्तमानयोः । स्रष्टुकामेन लोकांस्त्रीन् तौ चानेन हतौ युधि ॥ २२ ॥ तौ हत्वा जनभोगार्थं कैटभं तु मधुं तथा । अनेन शरमुख्येन ततो लोकांश्चकार सः ॥ २३ ॥ नायं मया शरः पूर्वं रावणस्य वधार्थिना । मुक्तः शत्रुघ्न भूतानां महांस्त्रासो भवेदिति ॥२४॥ यच्च तस्य महच्छूलं त्र्यम्बकेण महात्मना । दत्तं शत्रुविनाशाय मधोरायुधमुत्तमम् ॥२५॥ स तं निक्षिप्य भवने पूज्यमानं पुनः पुनः । दिशः सर्वाः समासाद्य प्राप्नोत्याहारमुत्तमम् ॥२६॥ यदा तु युद्धमाकांक्षन् कश्चिदेनं समाह्वयेत् । तदा शूलं गृहीत्वा तं भस्म रक्षः करोति हि ॥ २७ ॥ स त्वं पुरुषशार्दूल तमायुधविनाकृतम् । अप्रविष्टं पुरं पूर्वं द्वारि तिष्ठ धृतायुधः ॥ २८ ॥

॥ २२ ॥ २३ ॥ नायमिति । अनेन शरेण महान् त्रासो भवेदित्यलक्ष्यविषये महास्त्रप्रयोगे तदीयांश्च सर्वान् लक्षीकृत्य नाशयेदिति भावः । अनेन रावणादपि बलीयान् लवण इति सूचितम् । महान् ह्रासो भवेदिति च पाठः ॥ २४ ॥ गृहीतशूलस्य तस्य दुर्जयत्वात्तदग्रहणाय पुरप्रवेशनिरोधमुपदिशति–यच्च तस्येत्यादि । मधोर्दत्तमित्यन्वयः ॥ २५ ॥ २६ ॥ यदेति । युद्धमाकाङ्क्षन्निति, अनेन सहेति शेषः ॥२७॥ स इति । तमायुधविनाकृतम्

आयुधविवर्जितम्, उपलक्ष्येति शेषः ॥ २८ ॥२९॥ अन्यथेति । यदि त्वेवं कृत इति। यदा त्वेवमुक्तरीत्या कृतमनुष्ठितं भवति तदा त्वेवं कृते सति सः अवश्यं विनाशमुपयास्यति ॥ ३० ॥ एतदिति । विपर्ययः परिहार इत्यर्थः । श्रीमत इति । कृत्यमाज्ञापनम् । अत्र कश्चिज्जल्पति–अत्र रामेण दुरतिक्रमत्वं शूलिन उक्तमिति विष्णोरप्यधिको रुद्र इति । तन्न, अवतारमर्यादया तादृशोक्तिसंभवाद्यथा ब्रह्मास्त्रबन्धने दुरतिक्रमो ब्रह्मणो महिमेत्यादि। यद्वा दुरतिक्रमं कृत्यं भगवतैव तस्य बहुमन्तव्यत्वादिति भावः ॥ ३१ ॥इति श्रीगोविन्दराजविरचिते मणि० उत्तरश्रीरामायण० त्रिषष्टितमः सर्गः ॥ ६३ ॥

अप्रविष्टं च भवनं युद्धाय पुरुषर्षभ । आह्वयेथा महाबाहो ततो हन्तासि राक्षसम् ॥ २९ ॥ अन्यथा क्रियमाणे तु अवध्यः स भविष्यति । यदि त्वेवं कृते वीर विनाशमुपयास्यति ॥३०॥ एतत्ते सर्वमाख्यातं शूलस्य च विपर्ययः । श्रीमतः शितिकण्ठस्य कृत्यं हि दुरतिक्रमम् ॥३१॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तर० त्रिषष्टितमः सर्गः ॥६३॥ एवमुक्त्वा च काकुत्स्थं प्रशस्य च पुनः पुनः । पुनरेवापरं वाक्यमुवाच रघुनन्दनः ॥ १ ॥ इमान्यश्वसहस्राणि चत्वारि पुरुषर्षभ। रथानां द्वे सहस्रे च गजानां शतमुत्तमम् ॥ २ ॥ अन्तरा पण्यवीथ्यश्च नानापण्योपशोभिताः । अनुगच्छन्तु काकुत्स्थं तथैव नटनर्तकाः ॥ ३ ॥ हिरण्यस्य सुवर्णस्य नियुतं पुरुषर्षभ । आदाय गच्छ शत्रुघ्न पर्याप्तधनवाहनः ॥ ४ ॥ बलं च सुभृतं वीर हृष्टपुष्टमनुद्धतम् । सम्भाषासम्प्रदानेन रञ्जयस्व नरोत्तम ॥ ५ ॥ न ह्यर्थास्तत्र तिष्ठन्ति न दारा न च बान्धवाः । सुप्रीतो भृत्यवर्गश्च यत्र तिष्ठसि राघव ॥ ६ ॥

अथ शत्रुघ्नप्रस्थापनम्–एवमित्यादि ॥ १ ॥ २ ॥ अन्तरेति । अन्तरा मध्ये निवासस्थले नानापण्यैरुपशोभिताः । नानावर्णोपशोभिता इति पाठे वर्णाः ब्राह्मणादयः । आपणवीथ्यस्तत्प्रवर्तकाः ॥ ३ ॥ हिरण्यस्येति । पर्याप्तधनवाहन इत्यत्र धनं पश्वादयः ॥ ४ ॥ बलं चेति । सुभृतं सुसंपूर्णम् । संभाषायाः सम्यग्वचनस्य संप्रदानेन उक्त्या ॥ ५ ॥ न ह्रीति । यत्र प्रदेशे तिष्ठसि स्थास्यसि तत्र वनप्रदेशे अर्था न सन्ति अतः सर्वं गृहीत्वा गन्तव्य

मित्यर्थः ॥ ६ ॥ तत इति । प्रस्थाप्य संस्थाप्य । मासमात्रोषितः अयोध्यायां पथि एक एव गच्छ ॥ ७ ॥ यथेति । एवं हि पूर्वजेन संमन्त्रितो लवण वधार्थं सेनया सह शत्रुघ्नो यातीति वार्तापरिहारार्थं केवलं बलमेवाग्रे मुनिभिः सह गच्छतु । तच्च ग्रीष्मावशेषेण शनैः शनैर्गङ्गायाः परतीरे विशतु । ब्राह्मणैः संप्रयोजितं बलं श्रुत्वा स विश्वस्य वर्तते । तत्रान्तरे त्वमस्मान्नगरात् केवलं ब्राह्मणान् गृहीत्वा अज्ञातं गत्वा तं जहीति । अशङ्कितं त्वदागति

ततो हृष्टजनाकीर्णां प्रस्थाप्य महतीं चमूम् । एक एव धनुष्पाणिर्गच्छ त्वं मधुनो वनम् ॥७॥ यथा त्वां न प्रजानाति गच्छन्तं युद्धकांक्षिणम् । लवणस्तु मधोः पुत्रस्तथा गच्छेरशङ्कितम् ॥८॥ न तस्य मृत्युरन्योऽस्ति कश्चिद्धि पुरुषर्षभ । दर्शनं योऽभिगच्छेत स वध्यो लवणेन हि ॥९॥ स हि ग्रीष्मेऽपयाते तु वर्षारात्र उपागते । हन्यास्त्वं लवणं सौम्य स हि कालोऽस्य दुर्मतेः ॥ १० ॥ महर्षींस्तु पुरस्कृत्य प्रयान्तु तव सैनिकाः । यथा ग्रीष्मावशेषेण तरेयुर्जाह्नवीजलम् ॥११॥ तत्र स्थाप्य बलं सर्वं नदीतीरे समाहितः । अग्रतो धनुषा सार्धं गच्छ त्वं लघुविक्रमः ॥ १२ ॥ एवमुक्तस्तु रामेण शत्रुघ्नस्तान् महाबलान् । सेनामुख्यान् समानीय ततो वाक्यमुवाच ह ॥ १३ ॥ एते वो गणिता वासा यत्र तत्र निवत्स्यथ । स्थातव्यं चाविरोधेन यथा बाधा न कस्यचित् ॥ १४ ॥ तथा तांस्तु समाज्ञाप्य प्रस्थाप्य च महद्बलम् । कौसल्यां च सुमित्रां च कैकयीं चाभ्यवादयत् ॥ १५ ॥ रामं प्रदक्षिणीकृत्य शिरसाऽभिप्रणम्य च । रामेण चाभ्यनुज्ञातः शत्रुघ्नः शत्रुतापनः ॥ १६ ॥

शङ्कारहितं यथा भवति तथा ॥ ८ ॥ नेति । मृत्युर्मारकः । अन्यः अशङ्किततया तदुपरोधकव्यतिरिक्तः नास्ति । एतदेवोपपादयति—दर्शनमित्यादि ॥ ९ ॥ वसन्ते प्रस्थितस्यापि न स युद्धकाल इत्याह—स हीत्यादि । वर्षारात्रे वर्षाकाले । समासान्त आर्षः । स हि काल इति । वर्षासु राजानः केऽपि युद्धाय न निर्गच्छन्तीति निर्भयो निःशूल एव चरति; अतः स एवास्य वधावसर इति भावः ॥ १० ॥ तर्हीदानीं निर्गमने किं प्रयोजनमित्यत्राह—महर्षीनिति ॥ ११ ॥ तत्रेति । तत्र जाह्नवीपरतीरे । अग्रतः परमार्गे इत्यर्थः । धनुषा सार्धं नान्येन बलेनेत्यर्थः ॥ १२ ॥ १३ ॥ एत इति । एते

प्रसिद्धा इत्यर्थः । वः युष्माकम् । वासा गणिताः । यत्र यत्र गणिते वासे निवत्स्यथ तत्र तत्राविरोधेनैव स्थातव्यम् ॥ १४–१८ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुष्षष्टितमः सर्गः ॥ ६४ ॥

लक्ष्मणं भरतं चैव प्रणिपत्य कृताञ्जलिः । पुरोहितं वसिष्ठं च शत्रुघ्नः प्रयतात्मवान् । प्रदक्षिणमथो कृत्वा निर्जगाम महाबलः ॥ १७ ॥ प्रस्थाप्य सेनामथ सोऽग्रतस्तदा गजेन्द्रवाजिप्रवरौघसङ्कुलाम् । उवास मासं तु नरेन्द्रपार्श्वतस्त्वथ प्रयातो रघुवंशवर्धनः ॥ १८ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे चतुष्षष्टितमः सर्गः ॥ ६४ ॥

प्रस्थाप्य तु बलं सर्वं मासमात्रोषितः पथि । एक एवाशु शत्रुघ्नो जगाम त्वरितं तदा ॥ १ ॥ द्विरात्रमन्तरे शूर उष्य राघवनन्दनः । वाल्मीकेराश्रमं पुण्यमगच्छद्वासमुत्तमम् ॥ २ ॥ सोऽभिवाद्य महात्मानं वाल्मीकिं मुनिसत्तमम् । कृताञ्जलिरथो भूत्वा वाक्यमेतदुवाच ह ॥ ३ ॥ भगवन् वस्तुमिच्छामि गुरोः कृत्यादिहागतः । श्वः प्रभाते गमिष्यामि प्रतीचीं वारुणीं दिशम् ॥ ४ ॥ शत्रुघ्नस्य वचः श्रुत्वा प्रहस्य मुनिपुङ्गवः । प्रत्युवाच महात्मानं स्वागतं ते महायशः ॥ ५ ॥ स्वमाश्रममिदं सौम्य राघवाणां कुलस्य हि । आसनं पाद्यमर्घ्यं च निर्विशङ्कः प्रतीच्छ मे ॥ ६ ॥ प्रतिगृह्य तदा पूजां फलमूलं च भोजनम् । भक्षयामास काकुत्स्थस्तृप्तिं च परमां गतः ॥ ७ ॥ स भुक्त्वा फलमूलं च महर्षिं तमुवाच ह । इयं यज्ञविभूतिस्ते कस्याश्रमसमीपतः ॥ ८ ॥

प्रस्थाप्येत्यादि स्पष्टम् ॥ १–२ ॥ रामेण यथाज्ञातगमनं संग्रहेणोक्त्वा अयोध्यातो द्विरात्रगमनानन्तरवृत्तमाह–भगवन्निति । वारुणीं वरुणपालिताम् । दारुणां दिशमिति पाठे–दारुणां लवणाधिष्ठितत्वादिति भावः ॥ ४ ॥ शत्रुघ्नस्येति । प्रहस्येति । अनिवेदितमपि शत्रुघ्नागमननिमित्तं ज्ञातव्यमित्यभिप्रायः ॥ ५ ॥ स्वमिति । राघवाणां कुलस्य स्वं स्वभूतम् ॥ ६ ॥ ७ ॥ स इति । इयं यज्ञविभूतिस्ते कस्याश्रमसमीपत इति । तवाश्रमसमीपतः इयं

स०–मासमात्रोषितः, अयोध्यायामिति शेषः ॥ १ ॥ अन्तरे अयोध्यावाल्मीक्याश्रमयोर्मध्ये । द्विरात्रमुष्य वासं सायंकाले निवासयोग्यम् ॥ २ ॥

वर्तमाना यज्ञविभूतिः यज्ञस्य समृद्धिः कस्य यजमानस्य ?॥८॥ तदिति । आयतनं यज्ञायतनम् ॥९॥१०॥ स इति । चङ्कूर्यमाणं मुहुर्मुहुः चरन्तम् । चरतेर्यङन्ताच्छानच् । "उतपरस्यातः" इत्युत्त्वम् ॥ ११ ॥ १२ ॥ स इति । निर्मृगं कृतं वनं च दृष्ट्वेत्यनुकर्षः ॥१३॥१४॥ निरीक्षमाणमिति । निरीक्ष

तत्तस्य भाषितं श्रुत्वा वाल्मीकिर्वाक्यमब्रवीत् । शत्रुघ्न शृणु यस्येदं बभूवायतनं पुरा ॥ ९ ॥ युष्माकं पूर्वको राजा सुदासस्तस्य भूपतेः । पुत्रो वीरसहो नाम वीर्यवानतिधार्मिकः ॥ १० ॥ स बाल एव सौदासो मृगयामुप चक्रमे । चङ्कूर्यमाणं ददृशे स शूरो राक्षसद्वयम् ॥ ११ ॥ शार्दूलरूपिणौ घोरौ मृगान् बहुसहस्रशः । भक्षमाणा वसन्तुष्टौ पर्याप्तिं नैव जग्मतुः ॥ १२ ॥ स तु तौ राक्षसौ दृष्ट्वा निर्मृगं च वनं कृतम् । क्रोधेन महताऽऽविष्टो जघा नैकं महेषुणा ॥ १३ ॥ विनिपात्य तमेकं तु सौदासः पुरुषर्षभः । विज्वरो विगतामर्षो हतं रक्षो ह्युदैक्षत ॥ १४ ॥ निरीक्षमाणं तं दृष्ट्वा सहायं तस्य रक्षसः । सन्तापमकरोद्घोरं सौदासं चेदमब्रवीत् ॥ १५ ॥ यस्मादनपराधं त्वं सहायं मम जघ्निवान् । तस्मात्तवापि पापिष्ठ प्रदास्यामि प्रतिक्रियाम् ॥ १६ ॥ एवमुक्त्वा तु तद्रक्षस्तत्रैवान्तरधीयत । कालपर्याययोगेन राजा मित्रसहोऽभवत् ॥ १७ ॥ राजा तु यजते यज्ञमस्याश्रमसमीपतः । अश्वमेधं महायज्ञं तं वसिष्ठोऽभ्यपालयत् ॥ १८ ॥ तत्र यज्ञो महानासीत् बहुवर्षगणायुतः । समृद्धः परया लक्ष्म्या देवयज्ञसमोऽभवत् ॥ १९ ॥ अथावसाने यज्ञस्य पूर्ववैरमनुस्मरन् । वसिष्ठरूपी राजानमिति होवाच राक्षसः ॥ २० ॥ अस्य यज्ञस्य जातोऽन्तः सामिषं भोजनं मम । दीयतामिह शीघ्रं वै नात्र कार्या विचारणा ॥ २१ ॥

माणं स्वसहायभूतं द्वितीयरक्षो निरीक्षमाणं प्रथमरक्षो दृष्ट्वा ॥ १५ ॥ १६ ॥ एवमिति । कालपर्याययोगेन बहुकालातिवाहजकर्मयोगेन युक्तोऽभवत् ॥ १७ ॥ राजेति । अस्याश्रमसमीपत इति । अस्याश्रमस्येत्यविभक्तिकनिर्देशः ॥ १८–२१ ॥

स०—पूर्ववैरं द्वयोर्द्वीपिनोरेकमारणजम् । वसिष्ठरूपी तदाकारः ॥ २० ॥ अथ यज्ञावसानान्ते इति पाठे—हे यज्ञावसान यज्ञस्य अवसानं यस्य येन वा तत्सम्बुद्धिः, समापितसवन राजन् ! अन्ते तव समीप एव, न तु पारोक्ष्येण । " अन्तः प्रान्तेऽन्तिके " इति विश्वः । सामिषं भोजनं शुद्धमांससहितम् ॥ २१ ॥

तदिति । भक्ष्यसंस्कारकुशलमुवाचेति, भोजनार्थमिति शेषः ॥ २२-२५ ॥ स इति । मदयन्त्या पत्न्या ॥ २६-३२ ॥ स इति । ब्रह्मरूपिणा





तच्छ्रुत्वा व्याहृतं वाक्यं रक्षसा ब्रह्मरूपिणा । भक्ष्यसंस्कारकुशलमुवाच पृथिवीपतिः ॥ २२ ॥ हविष्यं सामिषं स्वादु यथा भवति भोजनम् । तथा कुरुष्व शीघ्रं वै परितुष्येद्यथा गुरुः ॥ २३ ॥ शासनात् पार्थिवेन्द्रस्य सूदः सम्भ्रान्तमानसः । स राक्षसः पुनस्तत्र सूदवेषमथाकरोत् ॥ २४ ॥ स मानुषमथो मांसं पार्थिवाय न्यवेदयत् । इद स्वादु हविष्यं च सामिषं चान्नमाहृतम् ॥२५॥ स भोजनं वसिष्ठाय पत्न्या सार्धमुपाहरत् । मदयन्त्या नरव्याघ्र सामिषं रक्षसाहृतम् ॥ २६ ॥ ज्ञात्वा तदामिषं विप्रो मानुषं भाजनं गतम् । क्रोधेन महताऽऽविष्टो व्याहर्तुमुपचक्रमे ॥ २७ ॥ यस्मात्त्वं भोजनं राजन् ममैतद्दातुमिच्छसि । तस्माद्भोजनमेतत्ते भविष्यति न संशयः ॥ २८ ॥ ततः क्रुद्धस्तु सौदासस्तोयं जग्राह पाणिना । वसिष्ठं शप्तुमारेभे भार्या चैनमवारयत् ॥ २९ ॥ राजन् प्रभुर्यतोऽस्माकं वसिष्ठो भगवानृषिः । प्रतिशप्तुं न शक्तस्त्वं देवतुल्यं पुरोधसम् ॥३०॥ ततः क्रोधमयं तोयं तेजोबलसमन्वितम् । व्यसर्जयत धर्मात्मा ततः पादौ सिषेच च ॥ ३१ ॥ तेनास्य राज्ञस्तौ पादौ तदा कल्माषतां गतौ । तदाप्रभृति राजाऽसौ सौदासः सुमहायशाः । कल्माषपादः संवृत्तः ख्यातश्चैव तथा नृपः ॥ ३२ ॥ स राजा सह पत्न्या वै प्रणिपत्य मुहुर्मुहुः । पुनर्वसिष्ठं प्रोवाच यदुक्तं ब्रह्मरूपिणा ॥ ३३ ॥ तच्छ्रुत्वा पार्थिवेन्द्रस्य रक्षसा विकृतं च तत् । पुनः प्रोवाच राजानं वसिष्ठः पुरुषर्षभम् ॥ ३४ ॥ मया रोषपरीतेन यदिदं व्याहृतं वचः । नैतच्छक्यं वृथा कर्तुं प्रदास्यामि च ते वरम् ॥ ३५ ॥



वसिष्ठरूपधरेण यदुक्तं तद्वचो वसिष्ठं प्रति प्रोवाच ॥ ३३ ॥ तदिति । तत्पार्थिवेन्द्रस्य प्रणिपातवाक्यं रक्षोविकृतं च श्रुत्वा । रक्षसाधिकृतमिति पाठे

स०—ब्रह्मरूपिणा ब्राह्मणवेषवता । संस्कारकुशलान् सूदान् सत्कारिणः । सूदान् संस्कारकुशलानुवाच इति पाठः ॥ २२ ॥

अधिकृतं राजद्वेषमाश्रित्य कृतम् ॥ ३४ ॥ ३५ ॥ काल इति । व्यतीतं न स्मरिष्यसि यथा इच्छतं न मनसि कुर्वित्यर्थः ॥ ३६ ॥ ३७ ॥ तस्येति । कल्माषपाद इति तस्य नामान्तरम् । शापानन्तरं मित्रसहः कुपितः सन् वसिष्ठं शप्तुं जलमाददे । स्वयमेव मां नियुज्य कथं पुनः स्वयमेव कुप्यतीति । तदा तद्भार्या समागत्य सर्वथा गुरुर्न प्रतिशापार्ह इति प्रतिषिद्धवती । ततो राजा तद्वचः साध्विति मत्वा शापाय गृहीतं जलं स्वपादे

कालो द्वादशवर्षाणि शापस्यान्तो भविष्यति । मत्प्रसादाच्च राजेन्द्र व्यतीतं न स्मरिष्यसि ॥ ३६ ॥ एवं स राजा तं शापमुपभुज्यारिसूदनः । प्रतिलेभे पुना राज्यं प्रजाश्चैवान्वपालयत् ॥३७॥ तस्य कल्माषपादस्य यज्ञस्यायतनं शुभम् । आश्रमस्य समीपेऽस्य यन्मां पृच्छसि राघव ॥३८॥ तस्य तां पार्थिवेन्द्रस्य कथां श्रुत्वा सुदारुणाम् । विवेश पर्णशालायां महर्षिमभिवाद्य च ॥ ३९ ॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तरश्री० पञ्चषष्टितमः सर्गः ॥ ६५ ॥

यामेव रात्रिं शत्रुघ्नः पर्णशालामुपाविशत् । तामेव रात्रिं सीतापि प्रसूता दारकद्वयम् ॥ १ ॥

ततोऽर्धरात्रसमये बालका मुनिदारकाः । वाल्मीकेः प्रियमाचख्युः सीतायाः प्रसवं शुभम् ॥ २ ॥

भगवन् रामपत्नी सा प्रसूता दारकद्वयम् । ततो रक्षां महातेजः कुरु भूतविनाशिनीम् ॥ ३ ॥

प्रक्षिप्तवान् । तदाप्रभृति कल्माषपादनामाऽभवत् । कल्माषं कोपगृहीतशापजलकृतनीलरूपता ॥ ३८ ॥ ३९ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥ यामेवेत्यादि । यस्यां रात्र्यामित्यर्थः । दारकद्वयं पुत्रद्वयम् । प्रसूता प्रसूतवती ॥ १ ॥ २ ॥ भगवन्निति । भूतविनाशिनीं बालग्रहविनाशिनीम् ॥ ३–६ ॥

स०–द्वादशवर्षाणि कालः तदात्मा गतश्चेच्छापस्यान्तः पूर्ववदवस्थानं भविष्यति । अतीतं न स्मरिष्यसि राक्षसत्वावस्थायामतीतं राजत्वं पुना राजत्वप्राप्त्यनन्तरं रक्षस्त्वं च न स्मरिष्यसि । अत्रैवादिपर्वोक्ता शक्तिशापब्राह्मणशापादिकथानुसन्धेया । अत्र राजाज्ञां विना सूदरूपिणा रक्षसा मानुषामिषं वसिष्ठाय दत्तमिति । भारते तु–तस्थौ च द्विजसत्तम इति । स द्विजो ब्रह्मजान्यः । तथैव "ततोऽर्धरात्र उत्थाय सूद मानाय्य सत्वरम् । उवाच राजा संस्मृत्य ब्राह्मणस्य प्रतिश्रुतम् । गच्छायुष्मन्वनोद्देशे ब्राह्मणो मां प्रतीक्षते । अन्नार्थी त्वं तमन्नेन समांसेनोपपादय । एवमुक्तस्ततस्सूदस्सोनासाद्यामिषं क्वचित् । निवेदयामास तदा नेति तस्मै व्यथान्वितः । राजा तु रक्षसाविष्टस्सूदमाह गतव्यथः । अप्येनं नरमांसेन भोजयेति पुनः पुनः ॥" इति राज्ञ आज्ञयैव मानुषमांसदानोक्तेरतदान एतादृशशापदानानौचित्याच्च कल्पभेदेनार्थव्यवस्था कल्पनीया । एकरक्षस्त्वविषय एव बहुशापः ॥ ३६ ॥

कुशमुष्टिमिति । लवं चैवेति । अधःप्रदेशलूनकुशमुष्ट्येकदेशमित्यर्थः । कुशमुष्ट्यग्राधोभागाभ्यां क्रमाज्ज्येष्ठकनिष्ठयोः प्रमार्जनमिति द्रष्टव्यम् ॥६॥ य इति । निर्मार्जनीयः निर्मार्जनार्हो यतो जातः ततः कुश इति नाम, अकरोदिति शेषः ॥ ७ ॥ यश्चावर इति । ताभ्यां तयोः कुमारयोर्मध्य इत्यर्थः । लवेन लूनकुशमुष्ट्यधोभागेन । वृद्धाभिर्मार्जनीय इति । सूतिकागृहमध्ये ऋपिप्रवेशाभावात् ॥ ८ ॥ एवमिति । ख्यातियुक्तौ भविष्यत इति । यम

तेषां तद्वचनं श्रुत्वा महर्षिः समुपागमत् । बालचन्द्रप्रतीकाशौ देवपुत्रौ महौजसौ ॥ ४ ॥ जगाम तत्र हृष्टात्मा ददर्श च कुमारकौ । भूतघ्नीं चाकरोत्ताभ्यां रक्षां रक्षोविनाशिनीम् ॥ ५ ॥ कुशमुष्टिमुपादाय लवं चैव तु स द्विजः । वाल्मीकिः प्रददौ ताभ्यां रक्षां भूतविनाशिनीम् ॥६॥ यस्तयोः पूर्वजो जातः स कुशैर्मन्त्रसत्कृतैः । निर्मार्जनीय स्तु तदा कुश इत्यस्य नाम तत् ॥ ७ ॥ यश्चावरो भवेत्ताभ्यां लवेन स समाहितः । निर्मार्जनीयो वृद्धाभिर्लव इत्येव नामतः ॥ ८ ॥ एवं कुशलवौ नाम्ना तावुभौ यमजातकौ । मत्कृताभ्यां च नामभ्यां ख्यातियुक्तौ भविष्यतः ॥ ९ ॥ तां रक्षां जगृहुस्ताश्च मुनिहस्तात् समाहिताः । अकुर्वंश्च ततो रक्षां तयोर्विगतकल्मषाः ॥ १० ॥ तथा तां क्रियमाणां च वृद्धाभिर्जन्म नाम च । सङ्कीर्तनं च रामस्य सीतायाः प्रसवौ शुभौ ॥ ११ ॥ अर्धरात्रे तु शत्रुघ्नः शुश्राव सुमहत् प्रियम् । पर्णशालां ततो गत्वा मातर्दिष्ट्येति चाब्रवीत् ॥ १२ ॥

जातकौ यमलौ ॥ ९ ॥ तामिति । ततः अनन्तरम् । समाहितास्ता वृद्धाः मुनिहस्तात्तां मुनिना दीयमानां रक्षां च जगृहुः, पुत्रयोः प्रदानार्थमिति शेषः । रक्षामकुर्वन्निति, वृद्धा इति शेषः ॥ १० ॥ तथेति । जन्म च नाम चेति । यद्यपि जातकर्म पुत्रजन्मदिवसे कर्तव्यं न तु नामकरणम्, तथाप्येवं नामकौ भविष्यत इति ऋपिवचनात्तच्छ्रवणमात्रमिति मन्तव्यम् । सङ्कीर्तनं च रामस्येति । रामपत्नी प्रसूतेति मुनिदारकवचःश्रवणात् । वाल्मीकेः पर्ण शालां गत्वा सामान्यतो दिष्ट्या दृष्टेति सूचयन् मुनिं प्रति हर्षेणाह–अर्धरात्र इत्यादिना । अनेन सीता विसृष्टेति रामादित्रयव्यतिरिक्तैर्न ज्ञातमिति

सूचितम् ॥ ११ ॥ १२ ॥ तथेति । वर्षासु भवा वार्षिकी, तस्यां श्रावणी श्रावणमासवर्तिनी काचिद्रात्रिरिति । लघुविक्रम इत्यग्रेण संबन्धः । लघुविक्र
मेति पाठे–शीघ्रगमनेति रात्रिविशेषणम् ॥ १३ ॥ प्रभात इति । मुनिं वाल्मीकिम् ॥ १४ ॥ १५ ॥ स इति । मुनिभिः सार्धमित्यनेन सेना गङ्गातीर एव स्थापितेति सूचितम् ॥ १६ ॥ १७ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

तथा तस्य प्रहृष्टस्य शत्रुघ्नस्य महात्मनः । व्यतीता वार्षिकी रात्रिः श्रावणी लघुविक्रमः ॥१३॥ प्रभाते सुमहावीर्यः कृत्वा पौर्वाह्णिकीं क्रियाम् । मुनिं प्राञ्जलिरामन्त्र्य ययौ पश्चान्मुखः पुनः ॥१४॥ स गत्वा यमुनातीरं सप्तरात्रोषितः पथि । ऋषीणां पुण्यकीर्तीनामाश्रमे वासमभ्ययात् ॥१५॥ स तत्र मुनिभिः सार्धं भार्गवप्रमुखैर्नृपः । कथाभिरभिरूपाभिर्वासं चक्रे महायशाः ॥ १६ ॥ स काञ्चनाद्यैर्मुनिभिः समेतो रघुप्रवीरो रजनीं तदानीम् । कथाप्रकारैर्बहुभिर्महात्मा विरामयामास नरेन्द्रसूनुः ॥ १७ ॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तरश्री० षट्षष्टितमः सर्गः ॥ ६६ ॥

अथ रात्र्यां प्रवृत्तायां शत्रुघ्नो भृगुनन्दनम् । पप्रच्छ च्यवनं विप्रं लवणस्य यथा बलम् ॥ १ ॥ शूलस्य च बलं ब्रह्मन् के च पूर्वं विनाशिताः । अनेन शूलमुख्येन द्वन्द्वयुद्धमुपागताः ॥ २ ॥ तस्य तद्वचनं श्रुत्वा शत्रुघ्नस्य महात्मनः । प्रत्युवाच महातेजाश्च्यवनो रघुनन्दनम् ॥ ३ ॥ असङ्ख्येयानि कर्माणि यान्यस्य रघुनन्दन । इक्ष्वाकुवंशप्रभवे यद्वृत्तं तच्छृणुष्व मे ॥ ४ ॥ अयोध्यायां पुरा राजा युवनाश्वसुतो बली । मान्धातेति स विख्यातस्त्रिषु लोकेषु वीर्यवान् ॥ ५ ॥ स कृत्वा पृथिवीं कृत्स्नां शासने पृथिवीपतिः । सुरलोकमितो जेतुमुद्योगमकरोन्नृपः ॥ ६ ॥

अथेत्यादि । प्रवृत्तायामागतायामित्यर्थः । पप्रच्छ, शूलवृत्तान्तमिति शेषः ॥१॥ शूलस्येति । अनेन द्वन्द्वयुद्धमुपागताः के पूर्वं शूलेन निपातिता इति पप्रच्छेति योजना । ब्रह्मन्नित्यारभ्य प्रश्नवचनम् । अनेनेति लवणः परामृश्यते । अनेन लवणबलं शूलबलं च पृष्टं भवति ॥ २ ॥ ३ ॥ असङ्ख्येयानीति । अस्य शूलस्य यानि शत्रुसंहारकर्माणि तान्यसङ्ख्येयानि । तत्र प्रसिद्धमेकं दर्शयति–इक्ष्वाकुवंशप्रभव इति । यद्वृत्तं यद्व्यापारम् तच्छृणुष्व ॥ ४–७ ॥

अर्धेति । शक्रस्यार्धासनेन अर्धराज्येन च युक्तः पार्थिवो राजा भूत्वा सुरगणैर्वन्द्यमानः स्थास्य इति प्रतिज्ञां कृत्वा दिवमध्यारोहत ॥ ८ ॥ ९ ॥ राजा



इन्द्रस्य च भयं तीव्रं सुराणां च महात्मनाम् । मान्धातरि कृतोद्योगे देवलोकजिगीषया ॥ ७ ॥ अर्धासनेन शक्रस्य राज्यार्धेन च पार्थिवः । वन्द्यमानः सुरगणैः प्रतिज्ञामध्यरोहत ॥ ८ ॥ तस्य पापमभिप्रायं विदित्वा पाकशासनः । सान्त्वपूर्वमिदं वाक्यमुवाच युवनाश्वजम् ॥ ९ ॥ राजा त्वं मानुषे लोके न तावत् पुरुषर्षभ । अकृत्वा पृथिवीं वश्यां देवराज्यमिहेच्छसि ॥ १० ॥ यदि वीर समग्रा ते मेदिनी निखिला वशे । देवराज्यं कुरुष्वेह सभृत्यबलवाहनः ॥ ११ ॥ इन्द्रमेवं ब्रुवाणं तं मान्धाता वाक्यमब्रवीत् । क्व मे शक्र प्रतिहतं शासनं पृथिवीतले ॥ १२ ॥ तमुवाच सहस्राक्षो लवणो नाम राक्षसः । मधुपुत्रो मधुवने न तेऽज्ञां कुरुतेऽनघ ॥ १३॥ तच्छ्रुत्वा विप्रियं घोरं सहस्राक्षेण भाषितम् । व्रीडितोऽवाङ्मुखो राजा व्याहर्तुं न शशाक ह ॥ १४॥ आमन्त्र्य तु सहस्राक्षं ह्रिया किंचिदवाङ्मुखः । पुनरेवागमच्छ्रीमानिमं लोकं नरेश्वरः ॥ १५ ॥ स कृत्वा हृदयेऽमर्षं सभृत्यबलवाहनः । आजगाम मधोः पुत्रं वशे कर्तुमरिन्दमः ॥ १६ ॥ स कांक्षमाणो लवणं युद्धाय पुरुषर्षभः । दूतं संप्रेषयामास सकाशं लवणस्य हि ॥ १७ ॥ स गत्वा विप्रियाण्याह बहूनि मधुनः सुतम् । वदन्तमेवं तं दूतं भक्षयामास राक्षसः ॥ १८ ॥ चिरायमाणे दूते तु राजा क्रोधसमन्वितः । अर्दयामास तद्रक्षः शरवृष्ट्या समन्ततः ॥१९॥ ततः प्रहस्य तद्रक्षः शूलं जग्राह पाणिना। वधाय सानुबन्धस्य मुमोचायुधमुत्तमम् ॥२०॥ तच्छूलं दीप्यमानं तु सभृत्यबलवाहनम् । भस्मीकृत्वा नृपं भूयो लवणस्यागमत् करम् ॥२१॥ एवं स राजा सुमहान् हतः सबलवाहनः । शूलस्य तु बलं सौम्य अप्रमेयमनुत्तमम् ॥२२



त्वमिति । तावत् प्रथमतः मानुष एव लोके सर्वात्मना न राजाऽसि स त्वं पृथिवीमेव वश्यामकृत्वा कथमिह देवराज्यमिच्छसि ॥ १०–१२ ॥ तमिति । तेऽज्ञामिति सन्धिरार्षः । तं आज्ञाम् ॥ १३–१८ ॥ चिरायमाण इति । चिरायमाणे विलम्बं कुर्वाणे ॥ १९–२२ ॥

अथ श्रुतशूलवलं प्रति स्वविजयसन्देहनिवृत्तये आह—श्वः प्रभात इत्यादि ॥ २३–२६ ॥ इति श्रीगोविन्दराज० उत्तरश्री० सप्तषष्टितमः सर्गः ॥ ६७ ॥

श्वः प्रभाते तु लवणं वधिष्यसि न संशयः । अगृहीतायुधं क्षिप्रं ध्रुवो हि विजयस्तव ॥ २३ ॥ लोकानां स्वस्ति चैव स्यात् कृते कर्मणि च त्वया ॥ २४ ॥ एतत्ते सर्वमाख्यातं लवणस्य दुरात्मनः । शूलस्य च बलं घोरमप्रमेयं नरर्षभ । विनाशश्चैव मान्धातुर्यत्तेनाभूच्च पार्थिव ॥२५॥ त्वं श्वः प्रभाते लवणं महात्मन् वधिष्यसे नात्र तु संशयो मे। शूलं विना निर्गतमामिषार्थे ध्रुवो जयस्ते भविता नरेन्द्र ॥२६॥ इत्यार्षे० श्रीमदुत्तरश्री० सप्तषष्टितमः सर्गः ॥६७॥

कथां कथयतां तेषां जयं चाकांक्षतां शुभम्। व्यतीता रजनी शीघ्रं शत्रुघ्नस्य महात्मनः ॥ १ ॥ ततः प्रभाते विमले तस्मिन् काले स राक्षसः। निर्गतस्तु पुराद्वीरो भक्ष्याहारप्रचोदितः ॥२॥ एतस्मिन्नन्तरे वीरः शत्रुघ्नो यमुनां नदीम्। तीर्त्वा मधुपुरद्वारि धनुष्पाणिरतिष्ठत ॥ ३ ॥ ततोऽर्धदिवसे प्राप्ते क्रूरकर्मा स राक्षसः । आगच्छद्बहुसाहस्रं प्राणिनां भारमुद्वहन् ॥ ४ ॥ ततो ददर्श शत्रुघ्नं स्थितं द्वारि धृतायुधम् । तमुवाच ततो रक्षः किमनेन करिष्यसि ॥ ५ ॥ ईदृशानां सहस्राणि सायुधानां नराधम । भक्षितानि मया रोषात् कालमाकांक्षसे नु किम् ॥६॥ आहारश्चास्य सम्पूर्णो ममायं पुरुषाधम। स्वयं प्रविष्टोऽद्य मुखं कथमासाद्य दुर्मते ॥ ७ ॥ तस्यैवं भाषमाणस्य हसतश्च मुहुर्मुहुः । शत्रुघ्नो वीर्यसम्पन्नो रोषादश्रूण्यवासृजत् ॥ ८ ॥ तस्य रोषाभिभूतस्य शत्रुघ्नस्य महात्मनः। तेजोमया मरीच्यस्तु सर्वगात्रैर्विनिष्पतन् ॥ ९ ॥ उवाच च सुसंक्रुद्धः शत्रुघ्नस्तं निशाचरम् । योद्धुमिच्छामि दुर्बुद्धे द्वन्द्वयुद्धं त्वया सह॥१०॥

कथामित्यादि ॥ १ ॥ तत इति । भक्ष्याहारप्रचोदितः भक्ष्यस्याहारः आहरणं तेन प्रचोदितः ॥ २ ॥ ( अतिष्ठत अतिष्ठत् ) ॥ ३ ॥ ४ ॥ तत इति । अनेन आयुधेन ॥ ५–७ ॥ तस्येति । रोषादिति । दुःखानन्दाभ्यामिव रोषादप्यश्रु जायते ॥८॥ तस्येति । गात्रैः विनिष्पतन्निति । गात्रेभ्यो विनिष्पत

स०—तेजोमयाः तेजोमय्यः । मरीच्यो मरीचयः कराः “ भानुः करो मरीचिः स्त्रीपुंसयोः” इत्यमरः । स्त्रीपुंसाधिकारे “त्रुटिमसिमरीचयः” इति लिङ्गानुशासनम् । सर्वगात्रैः सर्वाङ्गैः । विनिष्पतन् विन्यपतन् ॥ ९ ॥ द्वन्द्वयुद्धं योद्धुंकर्तुम् । अद्वन्द्वयुद्धं निशाचरमित्यन्वयः । त्वया सह योद्धुमिच्छामीत्युवाच ॥ १० ॥

नित्यर्थः ॥ ९-११ ॥ तस्येति । मे मत्तो जीवन्न गमिष्यसि ॥ १२ ॥ १३ ॥ मम मातृष्वसुरिति । अयमर्थः पूर्वमुक्तः ॥ १४ ॥ तच्चेति । मया अवज्ञां पुरतः कृत्वा यूयं विशेषतः क्षान्ता इति संबन्धः । मया पूर्वं विशेषत इति पाठान्तरम् ॥ १५ ॥ निहताश्चेति । भूताश्च भविष्याश्च वर्तमानाश्च पुरुषाः

पुत्रो दशरथस्याहं भ्राता रामस्य धीमतः । शत्रुघ्नो नित्यशत्रुघ्नो वधाकांक्षी तवागतः ॥११॥ तस्य मे युद्धकामस्य द्वन्द्वयुद्धं प्रदीयताम् । शत्रुस्त्वं सर्वजीवानां न मे जीवन् गमिष्यसि ॥ १२ ॥ तस्मिंस्तथा ब्रुवाणे तु राक्षसः प्रहसन्निव । प्रत्युवाच नरश्रेष्ठं दिष्ट्या प्राप्तोऽसि दुर्मते ॥१३॥ मम मातृष्वसुर्भ्राता रावणो राक्षसाधिपः । हतो रामेण दुर्बुद्धे स्त्रीहेतोः पुरुषाधम ॥ १४ ॥ तच्च सर्वं मया क्षान्तं रावणस्य कुलक्षयम् । अवज्ञां पुरतः कृत्वा मया यूयं विशेषतः ॥ १५ ॥ निहताश्च हि मे सर्वे परिभूतास्तृणं यथा । भूताश्चैव भविष्याश्च यूयं च पुरुषाधमाः ॥१६ ॥ तस्य ते युद्धकामस्य युद्धं दास्यामि दुर्मते । तिष्ठ त्वं च मुहूर्तं तु यावदायुधमानये । ईप्सितं यादृशं तुभ्यं सज्जये यावदायुधम् ॥१७॥ तमुवाचाथ शत्रुघ्नः क्व मे जीवन् गमिष्यसि । शत्रुर्यदृच्छया दृष्टो न मोक्तव्यः कृतात्मना ॥१८॥ यो हि विक्लवया बुद्ध्या प्रसरं शत्रवे ददौ । स हतो मन्दबुद्धित्वाद्यथा कापुरुषस्तथा ॥१९॥ तस्मात् सुदृष्टं कुरु जीवलोकं शरैः शितैस्त्वां विविधैर्नयामि । यमस्य गेहाभिमुखं हि पापं रिपुं त्रिलोकस्य च राघवस्य ॥ २० ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे अष्टषष्टितमः सर्गः ॥ ६८ ॥

सर्वेऽपि मे मया निहताः । केचित्परे तृणं यथा भवति तथा परिभूताश्च अलक्षीकृताश्च ॥ १६ ॥ तस्येति । यादृशं तुभ्यमीप्सितं तादृशं युद्धं दास्यामि । सज्जये यावदायुधमिति । आयुधं गृहीत्वा सज्जयिष्ये तावत्तिष्ठेत्यर्थः ॥१७॥ तमिति । तम् आयुधं जिघृक्षुमित्यर्थः ॥१८॥ यो हीति । प्रसरम् अवकाशम्, शूलग्रहणार्थमित्यर्थः ॥ १९ ॥ २० ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टषष्टितमः सर्गः ॥ ६८ ॥

स०–कुलक्षयम् कुलस्य क्षयो येन तत् । सर्वं कर्म क्षान्तम् । साऽपि क्षमा नाक्षमत्वेनेत्याह अवज्ञां पुरत इति । कियानयं राम इति पुरतोऽवज्ञां कृत्वा अलक्षीकृत्य । विशेषत इत्यनेन युष्मन्मूलपुरुषमान्धातृघातकस्य युष्मद्वधस्सुकर एव । ततोऽलक्षीकरणीयमिति सूचयति । क्षान्ता इत्यनुकर्षः ॥ १९ ॥ आनये आनयिष्यामि ॥ १७ ॥

अथ लवणवधः—तच्छ्रुत्वेत्यादि ॥ १–९ ॥ शत्रुघ्नेति । एकैकमिति, वृक्षमिति शेषः ॥ १–१३ ॥ तमिति । लब्धान्तरमपि शूलग्रहणं प्रति



तच्छ्रुत्वा भाषितं तस्य शत्रुघ्नस्य महात्मनः । क्रोधमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥१॥ पाणौ पाणिं विनिष्पिष्य दन्तान् कटकटाप्य च । लवणो रघुशार्दूलमाह्वयामास चासकृत् ॥ २ ॥ तमाह्वयन्तं सौमित्रिर्लवणं घोरदर्शनम् । शत्रुघ्नो देवशत्रुघ्न इदं वचनमब्रवीत् ॥३॥ न शत्रुघ्नस्तथा जातो यथाऽन्ये निर्जितास्त्वया । तदद्य बाणाभिहतो व्रज त्वं यमसादनम् ॥४॥ ऋषयोऽप्यद्य पापात्मन् मया त्वां निहतं रणे । पश्यन्तु विप्रा विद्वांसस्त्रिदशा इव रावणम् ॥ ५ ॥ त्वयि मद्बाणनिर्दग्धे पतितेऽद्य निशाचर । पुरे जनपदे चापि क्षेममेव भविष्यति ॥ ६ ॥ अद्य मद्बाहुनिष्क्रान्तः शरो वज्रनिभाननः । प्रवेक्ष्यते ते हृदयं पद्ममंशुरिवार्कजः ॥७॥ एवमुक्तो महावृक्षं लवणः क्रोधमूर्च्छितः । शत्रुघ्नोरसि चिक्षेप स च तं शतधाऽच्छिनत् ॥८॥ तद्दृष्ट्वा विफलं कर्म राक्षसः पुनरेव तु । पादपान् सुबहून् गृह्य शत्रुघ्नायासृजद्बली ॥९॥ शत्रुघ्नश्चापि तेजस्वी वृक्षानापततो बहून् । त्रिभिश्चतुर्भिरेकैकं चिच्छेद नतपर्वभिः ॥ १० ॥ ततो बाणमयं वर्षं व्यसृजद्राक्षसोरसि । शत्रुघ्नो वीर्यसम्पन्नो विव्यथे न स राक्षसः ॥ ११ ॥ ततः प्रहस्य लवणो वृक्षमुद्यम्य वीर्यवान् । शिरस्यभ्यहनच्छूरं स्रस्ताङ्गः स मुमोह वै ॥ १२ ॥ तस्मिन्निपतिते वीरे हाहाकारो महानभूत् । ऋषीणां देवसङ्घानां गन्धर्वाप्सरसां तथा ॥ १३ ॥ तमवज्ञाय तु हतं शत्रुघ्नं भुवि पातितम् । रक्षो लब्धान्तरमपि न विवेश स्वमालयम् ॥ १४ ॥ नापि शूलं प्रजग्राह तं दृष्ट्वा भुवि पातितम् । ततो हत इति ज्ञात्वा तान् भक्षान् समुदावहत् ॥ १५ ॥

स०—भूता भविष्याश्च मया निहता इति तेनोक्तस्योत्तरं वक्ति—न शत्रुघ्न इति । यदा त्वया ते निहताः तदा न जातः शत्रुघ्नः । अनेन तद्विलक्षणलक्षणवत्तां स्वस्य सूचयति ॥ ४ ॥ तिल०—वज्रनिभाननः वज्रायुधसमाग्रभागः । अंशुः किरणः ॥ ७ ॥

लब्धावकाशमपीत्यर्थः ॥ १४–१८ ॥ असृगिति । असृक्चन्दनदिग्धाङ्गम् असृग्रूपैश्चन्दनैः लिप्तदेहम् । पतत्रिणं बाणम् । दानवेन्द्ररूपाः अचलेन्द्राः

मुहूर्ताल्लब्धसंज्ञस्तु पुनस्तस्थौ धृतायुधः । शत्रुघ्नो वै पुरद्वारि ऋषिभिः सम्प्रपूजितः ॥ १६ ॥ ततो दिव्यममोघं तं जग्राह शरमुत्तमम् । ज्वलन्तं तेजसा घोरं पूरयन्तं दिशो दश ॥ १७ ॥ वज्राननं वज्रवेगं मेरुमन्दरसन्निभम् । नतं पर्वसु सर्वेषु संयुगेष्वपराजितम् ॥ १८ ॥ असृक्चन्दनदिग्धाङ्गं चारुपत्रं पतत्रिणम् । दानवेन्द्राचलेन्द्राणामसुराणां च दारुणम् ॥१९॥ तं दीप्तमिव कालाग्निं युगान्ते समुपस्थिते । दृष्ट्वा सर्वाणि भूतानि परित्रासमुपागमन् ॥२०॥ सदेवासुरगन्धर्वं मुनिभिः साप्सरोगणम् । जगद्धि सर्वमस्वस्थं पितामहमुपस्थितम् ॥२१॥ उवाच देवदेवेशं वरदं प्रपितामहम् । कच्चिल्लोकक्षयो देव सम्प्राप्तो वा युगक्षयः ॥२२॥ नेदृशं दृष्टपूर्वं च न श्रुतं प्रपितामह । देवानां भयसम्मोहो लोकानां संक्षयं प्रति ॥ २३ ॥ तेषां तद्वचनं श्रुत्वा ब्रह्मा लोकपितामहः । भयकारणमाचष्ट लोकानामभयङ्करः । उवाच मधुरां वाणीं शृणुध्वं सर्वदेवताः ॥२४॥ वधाय लवणस्याजौ शरः शत्रुघ्नधारितः । तेजसा तस्य संमूढाः सर्वे स्म सुरसत्तमाः ॥ २५ ॥ एष पूर्वस्य देवस्य लोककर्तुः सनातनः । शरस्तेजोमयो वत्सा येन वै भयमागतम् ॥ २६ ॥ एष वै कैटभस्यार्थे मधुनश्च महाशरः । सृष्टो महात्मना तेन वधार्थे दैत्ययोस्तयोः ॥ २७॥

तेषां दारुणम् ॥ १९–२६ ॥ एष इति । तेन भगवतेत्यर्थः ॥ २७ ॥



स०—तस्य शरस्य तेजसा सर्वे सुरसत्तमा मूढाः ॥२५॥ इयन्महत्त्वं त्वं वद कुतः शरस्येत्यत आह–एष इति । अपूर्वस्य न विद्यते पूर्वो यस्य सोऽपूर्वः । एषोऽपूर्वस्य इति पाठः । अनादिः । तस्य देवस्य पूर्वस्येति यावत् । सनातनः । एषोऽपूर्वस्येति पूर्वस्य लोककर्तुः देवस्य एष शरः । आर्षस्सन्धिरिति नागोजिभट्टव्याख्यानन्त्वास्माकीनगमनिकायामनिर्वाहाश्रयणीयार्षत्वं विना क्लिश्यां सम्भवन्त्यामुपेक्षणीयम् ॥ २६ ॥

एक एवेति । महात्मनस्तस्य विष्णोरेषा शरमयी तनुरेव पूर्वा प्राचीनमूर्तिः । एषा एवेत्यसन्धिरार्षः ॥ २८ ॥ इत इति । वध्यमानं लवणमिति संवन्धः ॥



एक एव प्रजानाति विष्णुस्तेजोमयं शरम्। एषा एव तनुः पूर्वा विष्णोस्तस्य महात्मनः ॥२८॥ इतो गच्छत पश्यध्वं वध्यमानं महात्मना । रामानुजेन वीरेण लवणं राक्षसोत्तमम् ॥ २९ ॥ तस्य ते देवदेवस्य निशम्य वचनं सुराः । आजग्मुर्यत्र युध्येते शत्रुघ्नलवणावुभौ ॥ ३० ॥ तं शरं दिव्यसङ्काशं शत्रुघ्नकरधारितम् । ददृशुः सर्वभूतानि युगान्ताग्निमिवोत्थितम् ॥३१॥ आकाशमावृतं दृष्ट्वा देवैर्हि रघुनन्दनः । सिंहनादं भृशं कृत्वा ददर्श लवणं पुनः॥३२॥ आहूतश्च पुनस्तेन शत्रुघ्नेन महात्मना । लवणः क्रोधसंयुक्तो युद्धाय समुपस्थितः ॥३३॥ आकर्णात् स विकृष्याथ तद्धनुर्धन्विनां वरः । तं मुमोच महाबाणं लवणस्य महोरसि ॥ ३४ ॥ उरस्तस्य विदार्याशु प्रविवेश रसातलम् ॥ ३५ ॥ गत्वा रसातलं दिव्यः शरो विबुधपूजितः । पुनरेवागमत्तूर्णमिक्ष्वाकुकुलनन्दनम् ॥ ३६ ॥ शत्रुघ्नशरनिर्भिन्नो लवणः स निशाचरः । पपात सहसा भूमौ वज्राहत इवाचलः ॥ ३७ ॥ तच्च शूलं महत्तेन हते लवणराक्षसे । पश्यतां सर्वदेवानां रुद्रस्य वशमन्वगात् ॥ ३८ ॥ एकेषुपातेन भृशं निपात्य लोकत्रयस्यापि रघुप्रवीरः । विनिर्बभावुत्तमचापबाणस्तमः प्रणुद्येव सहस्ररश्मिः॥३९॥ ततो हि देवा ऋषिपन्नगाश्च प्रपूजिरे ह्यप्सरसश्च सर्वाः । दिष्ट्या जयो दाशरथेरवाप्तस्त्यक्त्वा भयं सर्प इव प्रशान्तः ॥४०॥ इत्यार्षे० श्रीमदुत्तर० एकोनसप्ततितमः सर्गः ॥६९

॥ २९-४० ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोनसप्ततितमः सर्गः ॥ ६९ ॥

स०—यदि रामोऽजानानस्तर्हि अहितं शत्रुहत्यै शत्रुघ्नायेतरासुसाधारणं बाणं कथं दत्तवानित्यत आह—एषा एवेति । असन्धिरार्षः । तस्य महात्मनो विष्णोः पूर्वा या तनुः सैषा रामतनुः, अतो ज्ञानं दानं रामीयं सम्भवतीति भावः । एतादृशासदृशशरधारणसामर्थ्यं दुर्बलस्य शत्रुघ्नस्य कथमायातमित्यतो वाऽऽह—एषेति । पूर्वा विष्णोस्तनुरेषा एतच्छत्रुघ्नान्तर्गता । आज्ञया तदावेशेन चैतद्धारणमिति मन्तव्यम् । "सङ्कर्षणाद्यैस्त्रिभिरेव रूपैराविष्ट आसीत्त्रिषु तेषु विष्णुः" इत्याचार्योक्तिः । पूर्वा तनुर्यथा तथा एषा बाणमयी तनुः तत्सन्निधानात्तनुत्ववचनमिति वा ॥ २८ ॥

हते त्वित्यादि ॥ १–४ ॥ इयमिति । मधुरा मनोहरा । निवेशं राजधानीत्वम् ॥ ५ ॥ तमिति । शूरा सेना यस्यां सा शूरसेना ॥ ६ ॥ ७ ॥ सेति । श्रावणेन श्रावणमासालम्बनेन । निवेशनं स्थापनम् । समारभत् समारभते स्म ॥ ८ ॥ सेति । द्वादशमे द्वादश इत्यर्थः । पुरा पूर्वम् । प्रथमे द्वादशे

हते तु लवणे देवाः सेन्द्राः साग्निपुरोगमाः । ऊचुः सुमधुरां वाणीं शत्रुघ्नं शत्रुतापनम् ॥ १ ॥ दिष्ट्या ते विजयो वत्स दिष्ट्या लवणराक्षसः । हतः पुरुषशार्दूल वरं वरय सुव्रत ॥ २ ॥ वरदास्तु महाबाहो सर्व एव समागताः । विजयाकांक्षिणस्तुभ्यममोघं दर्शनं हि नः ॥ ३ ॥ देवानां भाषितं श्रुत्वा शूरो मूर्ध्नि कृताञ्जलिः । प्रत्युवाच महाबाहुः शत्रुघ्नः प्रयतात्मवान् ॥ ४ ॥ इयं मधुपुरी रम्या मधुरा देवनिर्मिता । निवेशं प्राप्नुयाच्छीघ्रमेष मेऽस्तु वरः परः ॥ ५ ॥ तं देवाः प्रीतमनसो बाढमित्येव राघवम् । भविष्यति पुरी रम्या शूरसेना न संशयः ॥ ६ ॥ ते तथोक्त्वा महात्मानो दिवमारुरुहुस्तदा । शत्रुघ्नोऽपि महातेजास्तां सेनां समुपानयत् ॥ ७ ॥ सा सेना शीघ्रमागच्छच्छ्रुत्वा शत्रुघ्नशासनम् । निवेशनं च शत्रुघ्नः श्रावणेन समारभत् ॥ ८ ॥ सा पुरा दिव्यसङ्काशा वर्षे द्वादशमे शुभे । निविष्टा शूरसेनानां विषयश्चाकुतोभयः ॥ ९ ॥ क्षेत्राणि सस्ययुक्तानि काले वर्षति वासवः । अरोगवीरपुरुषा शत्रुघ्नभुजपालिता ॥ १० ॥ अर्धचन्द्रप्रतीकाशा यमुनातीरशोभिता । शोभिता गृहमुख्यैश्च चत्वरापणवीथिकैः । चातुर्वर्ण्यसमायुक्ता नानावाणिज्यशोभिता ॥ ११ ॥ यच्च तेन पुरा शुभ्रं लवणेन कृतं महत् । तच्छोभयति शत्रुघ्नो नानावर्णोपशोभितम् ॥ १२ ॥ आरामैश्च विहारैश्च शोभमानां समन्ततः । शोभितां शोभनीयैश्च तथाऽन्यैर्देवमानुषैः ॥ १३ ॥

वर्षे सा पुरी निविष्टा । शूरसेनानां राज्ञां विषयो देशश्चाकुतोभयो जातः ॥ ९ ॥ १० ॥ अर्धचन्द्रेति । अर्धचन्द्रप्रतीकाशा अर्धचन्द्राकारसंस्थाना ॥ ११ ॥ यच्च तेनेति । यत्पुरा तेन लवणेन कृतं तदेव शुभ्रं सुधाधवलं कृत्वा शोभयति स्म ॥ १२–१५ ॥

स०—सेन्द्राः इन्द्रसहिताः । साग्निपुरोगमाः अग्निश्चासौ पुरोगमश्च तेन सहिताः । पुनरग्निपुरस्करणं बाणस्य लवणमारकस्य तेजोमयत्वायुक्तमिति मन्तव्यम् । तेजोमयं शरमिति पूर्वमुक्तेः ॥ १ ॥

तस्येति । रामपादाविति । द्वादशवर्षातिक्रमे भ्रातृदर्शनस्य दुष्टत्वादिति भावः ॥१६॥१७॥ इति श्रीगोविन्द० उत्तरश्रीरामा० सप्ततितमः सर्गः ॥७०॥



तां पुरीं दिव्यसङ्काशां नानापण्योपशोभिताम् । नानादेशागतैश्चापि वणिग्भिरुपशोभिताम् ॥१४॥ तां समृद्धां समृद्धार्थः शत्रुघ्नो भरतानुजः । निरीक्ष्य परमप्रीतः परं हर्षमुपागमत् ॥१५॥ तस्य बुद्धिः समुत्पन्ना निवेश्य मधुरां पुरीम् । रामपादौ निरीक्षेऽहं वर्षे द्वादश आगते ॥ १६ ॥ ततः सताममरपुरोपमां पुरीं निवेश्य वै विविधजनाभिसंवृताम् । नराधिपो रघुपतिपाददर्शने दधे मतिं रघुकुलवंशवर्धनः ॥१७॥ इति उत्तरश्री० सप्ततितमः सर्गः ॥७०॥ ततो द्वादशमे वर्षे शत्रुघ्नो रामपालिताम् । अयोध्यां चकमे गन्तुमल्पभृत्यबलानुगः ॥ १ ॥ ततो मन्त्रिपुरोगांश्च बलमुख्यान्निवर्त्य च । जगाम हयमुख्यैश्च रथानां च शतेन सः ॥ २ ॥ स गत्वा गणितान् वासान् सप्ताष्टौ रघुनन्दनः । वाल्मीक्याश्रममागत्य वासं चक्रे महायशाः ॥ ३॥ सोऽभिवाद्य ततः पादौ वाल्मीकेः पुरुषर्षभः । पाद्यमर्घ्यं तथाऽऽतिथ्यं जग्राह मुनिहस्ततः ॥४॥ बहुरूपाः सुमधुराः कथास्तत्र सहस्रशः । कथयामास स मुनिः शत्रुघ्नाय महात्मने ॥ ५ ॥ उवाच च मुनिर्वाक्यं लवणस्य वधाश्रितम् । सुदुष्करं कृतं कर्म लवणं निघ्नता त्वया ॥ ६ ॥ बहवः पार्थिवाः सौम्य हताः सबलवाहनाः । लवणेन महाबाहो युध्यमाना महाबलाः ॥७॥ स त्वया निहतः पापो लीलया पुरुषर्षभ । जगतश्च भयं तत्र प्रशान्तं तव तेजसा ॥ ८ ॥ रावणस्य वधो घोरो यत्नेन महता कृतः । इदं तु सुमहत् कर्म त्वया कृतमयत्नतः ॥९॥ प्रीतिश्चास्मिन् परा जाता देवानां लवणे हते । भूतानां चैव सर्वेषां जगतश्च प्रियं कृतम् ॥ १० ॥ तच्च युद्धं मया दृष्टं यथावत् पुरुषर्षभ । सभायां वासवस्याथ उपविष्टेन राघव ॥ ११ ॥

तत इत्यादि ॥१–५॥ उवाचेति । लवणस्य वधाश्रितम्, वृत्तान्तमिति शेषः ॥६–१०॥ तच्चेति । सभायामिति, युद्धं द्रष्टुमागतायामिति शेषः ॥ ११ ॥

ममेति । परा गतिः परमप्रयोजनम् ॥ १२ ॥ १३ ॥ स इति । गीतमाधुर्यमिति । आश्रमान्तरे गायतोः कुशलवयोरिति शेषः ॥ १४ ॥ तन्त्रीति । तन्त्रीलयसमायुक्तं तन्त्री वीणा, लयस्तालमानम् । त्रिस्थानकरणान्वितं हृदयकण्ठमुखलक्षणवर्णोत्पत्तिस्थानेन करणेन अन्वितं संयुक्तम् । संस्कृतं

ममापि परमा प्रीतिर्हृदि शत्रुघ्न वर्तते । उपाघ्रास्यामि ते मूर्ध्नि स्नेहस्यैषा परा गतिः ॥ १२ ॥ इत्युक्त्वा मूर्ध्नि शत्रुघ्न मुपाघ्राय महामुनिः । आतिथ्यमकरोत्तस्य ये च तस्य पदानुगाः ॥ १३ ॥ स भुक्तवान्नरश्रेष्ठो गीतमाधुर्यमुत्तमम् । शुश्राव रामचरितं तस्मिन् काले यथाक्रमम् ॥१४॥ तन्त्रीलयसमायुक्तं त्रिस्थानकरणान्वितम् । संस्कृतं लक्षणोपेतं समतालसमन्वितम् । शुश्राव रामचरितं तस्मिन् काले पुरा कृतम् ॥ १५ ॥ तान्यक्षराणि सत्यानि यथावृत्तानि पूर्वशः । श्रुत्वा पुरुषशार्दूलो विसंज्ञो बाष्पलोचनः ॥ १६ ॥ स मुहूर्तमिवासंज्ञो विनिश्वस्य मुहुर्मुहुः । तस्मिन् गीते यथावृत्तं वर्तमानमिवाशृणोत् ॥ १७ ॥ पदानुगाश्च ये राज्ञस्तां श्रुत्वा गीतिसम्पदम् । अवाङ्मुखाश्च दीनाश्च आश्चर्यमिति चाब्रुवन् ॥ १८ ॥ परस्परं च ये तत्र सैनिकाः सम्बभाषिरे । किमिदं क्व च वर्तामः किमेतत् स्वप्नदर्शनम् ॥ १९ ॥ अर्थो यो नः पुरा दृष्टस्तमाश्रमपदे पुनः । शृणुमः किमिदं स्वप्नो गीतबन्धं श्रितो भवेत् ॥ २० ॥ विस्मयं ते परं गत्वा शत्रुघ्नमिदमब्रुवन् । साधु पृच्छ नरश्रेष्ठ वाल्मीकिं मुनिपुङ्गवम् ॥ २१ ॥ शत्रुघ्नस्त्वब्रवीत् सर्वान् कौतूहलसमन्वितान् । सैनिका न क्षमोऽस्माकं परिप्रष्टुमिहेदृशः ॥ २२ ॥

संस्कृतशब्दरूपम् । लक्षणं व्याकरणलक्षणम् । समतालेन गानोचिततालशब्देन च समन्वितम् रामचरितं रामचरितविषयम् ॥ १५ ॥ तानीति । पूर्वशः पूर्वस्मिन् काले । यथावृत्तानि यथाप्रवृत्तान्यनुभवसिद्धानि । अक्षराणि गीताक्षराणि ॥१६॥ स इति । तस्मिन् गीते वर्तमानमिव स्थितम् ॥१७॥ पदानुगाश्चेति । अवाङ्मुखाश्च दीनाश्चेति । एवं रामचरित्रगायकोऽस्माभिर्न दृष्ट इत्यवाङ्मुखत्वादि ॥१८॥१९॥ अर्थ इति । पुरा दृष्टः अपरोक्षदृष्टः ।

तमर्थमाश्रमपदे आश्रमस्थाने शृणुमः । किंचिदमाश्रमासंभावितमित्यर्थः ॥ २०-२२ ॥ आश्चर्याणीति । अन्वेष्टुमवगन्तुं प्रष्टुं चेत्यर्थः ॥२३॥२४ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकसप्ततितमः सर्गः ॥ ७१ ॥

आश्चर्याणि बहूनीह भवन्त्यस्याश्रमे मुनेः । न तु कौतूहलाद्युक्तमन्वेष्टुं तं महामुनिम् ॥ २३ ॥ एवं तद्वाक्यमुक्त्वा च सैनिकान् रघुनन्दनः । अभिवाद्य महर्षिं तं स्वं निवेशं ययौ तदा ॥ २४ ॥ इत्यार्षे वाल्मीकीये आदिकाव्य श्रीमदुत्तरश्रीरामायणे एकसप्ततितमः सर्गः ॥ ७१ ॥

तं शयानं नरव्याघ्रं निद्रा नाभ्यागमत्तदा । चिन्तयन्तमनेकार्थं रामगीतमनुत्तमम् ॥ १ ॥ तस्य शब्दं सुमधुरं तन्त्री लयसमन्वितम् । श्रुत्वा रात्रिर्जगामाशु शत्रुघ्नस्य महात्मनः ॥ २ ॥ तस्यां निशायां व्युष्टायां कृत्वा पौर्वाह्णिकं क्रमम् । उवाच प्राञ्जलिर्वाक्यं शत्रुघ्नो मुनिपुङ्गवम् ॥ ३ ॥ भगवन् द्रष्टुमिच्छामि राघवं रघुनन्दनम् । त्वयाऽनुज्ञातु मिच्छामि सहैभिः संशितव्रतैः ॥ ४ ॥ इत्येवंवादिनं तं तु शत्रुघ्नं शत्रुतापनम् । वाल्मीकिः सम्परिष्वज्य विससर्ज च राघवम् ॥ ५ ॥ सोऽभिवाद्य मुनिश्रेष्ठं रथमारुह्य सुप्रभम् । अयोध्यामगमत्तूर्णं राघवोत्सुकदर्शनः ॥६॥ स प्रविष्टः पुरीं रम्यां श्रीमानिक्ष्वाकुनन्दनः । प्रविवेश महाबाहुर्यत्र रामो महाद्युतिः ॥ ७ ॥ स रामं मन्त्रिमध्यस्थं पूर्णचन्द्र निभाननम् । पश्यन्नमरमध्यस्थं सहस्रनयनं यथा ॥ ८ ॥ अभिवाद्य महात्मानं ज्वलन्तमिव तेजसा। उवाच प्राञ्जलि वाक्यं रामं सत्यपराक्रमम् ॥ ९ ॥ यथाज्ञप्तं महाराज सर्वं तत् कृतवानहम् । हतः स लवणः पापः पुरी चास्य निवेशिता ॥ १० ॥ द्वादशैते गता वर्षास्त्वां विना रघुनन्दन । नोत्सहेयमहं वस्तुं त्वया विरहितो नृप ॥ ११ ॥

तं शयानमित्यादि ॥ १-३ ॥ भगवन्निति । राघवं रघुगोत्रापत्यम् । रघुनन्दनं रघुकुलनन्दनम् । त्वयाऽनुज्ञातुमिति तवानुज्ञामित्यर्थः । एभिरिति

मुनिभिरिति शेषः ॥४–१२॥ एवमिति । क्षत्रियचेष्टितं क्षत्रियविचारः ॥१३–२१॥ इति श्रीगोविन्दराज० उत्तरश्रीरामा० द्विसप्ततितमः सर्गः॥७२॥

एवं ब्रुवाणं शत्रुघ्नं
स मे प्रसादं काकुत्स्थ कुरुष्वामितविक्रम । मातृहीनो यथा वत्सो न चिरं प्रवसाम्यहम् ॥१२॥ नावसीदन्ति राजानो विप्रवासेषु राघव ।
परिष्वज्येदमब्रवीत् । मा विषादं कृथाः शूर नैतत् क्षत्रियचेष्टितम् ॥१३॥ प्रजा नः परिपाल्या हि क्षत्रधर्मेण राघव ॥ १४ ॥ काले काले च मां वीर ह्ययोध्यामवलोकितुम् । आगच्छ त्वं नरश्रेष्ठ गन्तासि च पुरं तव ॥ १५ ॥ ममापि त्वं सुदयितः प्राणैरपि न संशयः । अवश्यं करणीयं च राज्यस्य परिपालनम् ॥१६॥ तस्मात्त्वं वत्स काकुत्स्थ सप्तरात्रमिहावस । ऊर्ध्वं गन्तासि मधुरां सभृत्यबलवाहनः ॥१७॥ रामस्यैतद्वचः श्रुत्वा धर्मयुक्तं मनोगतम् । शत्रुघ्नो दीनया वाचा बाढमित्येव चाब्रवीत् ॥ १८ ॥ सप्तरात्रं च काकुत्स्थो राघवस्य यथाज्ञया । उष्य तत्र महेष्वासो गमनायोपचक्रमे ॥ १९ ॥ आमन्त्र्य तु महात्मानं रामं सत्यपराक्रमम् । भरतं लक्ष्मणं चैव महारथमुपारुहत् ॥ २० ॥ दूरमाभ्यामनुगतो लक्ष्मणेन महात्मना । भरतेन च शत्रुघ्नो जगामाशु पुरं ततः ॥ २१ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे द्विसप्ततितमः सर्गः ॥७२॥

प्रस्थाप्य तु स शत्रुघ्नं भ्रातृभ्यां सह राघवः । प्रमुमोद सुखी राज्यं धर्मेण परिपालयन् ॥ १ ॥ ततः कतिपयाहस्सु वृद्धो जानपदो द्विजः । मृतं बालमुपादाय राजद्वारमुपागमत् ॥ २ ॥ रुदन् बहुविधा वाचः स्नेहदुःखसमन्विताः । असकृत् पुत्र पुत्रेति वाक्यमेतदुवाच ह ॥ ३ ॥

अथ मृतबालकब्राह्मणस्य राजद्वारि विलापः–प्रस्थाप्येत्यादि ॥ १ ॥ २ ॥ रुदन्निति । असकृत् पुत्र पुत्रेति स्नेहसमन्विता बहुविधा वाचः रुदन् विलपन् । ॥११८॥

स०–विप्रवासेषु बहुतिथप्रवासेषु । हि यतः प्रजाः परिपाल्या इति हि प्रसिद्धिः ततो न क्षत्रिया अवसीदन्ति । राघव नावसीदन्ति राघव प्रजाः परिपाल्या इत्यनुशास्यव्यापारद्वयानुरूप्येण राघवेति द्विरभिधानम् ॥ १४ ॥ वृश्चिकभयात्पलायमानस्याशीविषमुखे निपातनीत्या द्वादशसंवत्सरीविरहं सोढुमनीशानस्य पुनः प्रवासं कुरु, कुरु प्रजारक्षणमित्युपदेशो न शोभत इत्यतस्तं स्वाभिमततदभिमतानुच्छित्त्या समाधत्ते काले काले त्विति । तव पुरं मधुराम् ॥ १५ ॥

रुदन् बहुविधं विप्र इति च पाठः ॥ ३ ॥ ४ ॥ अप्राप्तेति । कालमापन्नं कालवशं गतम् ॥ ५ ॥ ६ ॥ नेति । न स्मरामि अकृतत्वादेवेति भावः ॥ ७ ॥ ८ ॥ नेति । विषये देशे । यथा सर्वानुभवादितः पूर्वं नेदृशं दृष्टपूर्वम् ॥ ९ ॥ अद्य तु—रामस्य दुष्कृतमित्यादि ॥ १० ॥ न हीति । त्वं राज



किन्तु मे दुष्कृतं कर्म पुरा देहान्तरे कृतम् । यदहं पुत्रमेकं त्वां पश्यामि निधनं गतम् ॥ ४ ॥ अप्राप्तयौवनं बालं पञ्चवर्षसहस्रकम् । अकाले कालमापन्नं मम दुःखाय पुत्रक ॥ ५ ॥ अल्पैरहोभिर्निधनं गमिष्यामि न संशयः । अहं च जननी चैव तव शोकेन पुत्रक ॥ ६ ॥ न स्मराम्यनृतं ह्युक्तं न च हिंसां स्मराम्यहम् । सर्वेषां प्राणिनां पापं कृतं नैव स्मराम्यहम् ॥ ७ ॥ केनाद्य दुष्कृतेनायं बाल एव ममात्मजः । अकृत्वा पितृकार्याणि गतो वैवस्वतक्षयम् ॥ ८ ॥ नेदृशं दृष्टपूर्वं मे श्रुतं वा घोरदर्शनम् । मृत्युरप्राप्तकालानां रामस्य विषये यथा ॥ ९ ॥ रामस्य दुष्कृतं किंचिन्महदस्ति न संशयः । यथा हि विषयस्थानां बालानां मृत्युरागतः ॥ १० ॥ न ह्यन्यविषयस्थानां बालानां मृत्युतो भयम् । त्वं राजन् जीवयस्वैनं बालं मृत्युवशं गतम् ॥ ११ ॥ राजद्वारि मरिष्यामि पत्न्या सार्धमनाथवत् । ब्रह्महत्यां ततो राम समुपेत्य सुखी भव ॥ १२ ॥ भ्रातृभिः सहितो राजन् दीर्घमायुरवाप्स्यसि । उषिताः स्म सुखं राज्ये तवास्मिन् सुमहाबल ॥ १३ ॥

न्नित्यादिना आभिमुख्येन वादः ॥११॥ राजद्वारीति । सुखी भवेत्यादि व्यङ्ग्योक्तिः॥१२॥ भ्रातृभिरिति । उषिताः स्म, एतावत्कालमिति शेषः॥१३॥

स०—अहं गमिष्यामि । जननी माता गमिष्यति । गमिष्यामीति दुःखसमयत्वात्पुत्रव्यत्यासात्पुरुषव्यत्यासो वा ॥ ६ ॥ तत्र पातकित्वात्पोतघातो जात इत्यत आह—नेति । सर्वेषां प्राणिनां विषये अनृतं हिंसां च पापम् एतदितरज्जन्मान्तरे पापमुपार्जितवतामेतर्हि गर्हितकृतौ संस्कारवशान्मतिरुदेयादेव नोदिता । अतो देहान्तरेऽपि नावदिष्ट दुरिष्टमिति ज्ञायते । अत इदमनुचितमिति भावः ॥ ७ ॥ रामस्य बहुज्ञस्य कथं दुष्कृतमित्यत आह—चित् किमिति । चित् ज्ञानम्, किं किंफला । सत्यप्यप्रयोजिकेति भावः । दशानामपत्यानां स्थाने स्थित एको मृत इति दुःखं विपुलमिति द्योतयितुं बालानामिति बहुवचनम् ॥ १० ॥

इदमिति। तव वशे राज्ये नोऽस्माकं स्वल्पमपि सुखं न ॥१४॥ संप्रतीति। अन्तं करोतीत्यन्तकरणम्। कर्तरि ल्युट्। बालान्तकरणं राममासाद्य महात्मनामिक्ष्वाकूणां विषयः संप्रत्यनाथो जातः, रक्षकसुराजरहितो जात इत्यर्थः ॥ १५॥ कथमित्थं कथ्यत इत्यत्राह–राजदोषैरित्यादि ॥१६॥

इदं तु पतितं ह्यस्मात्तव राम वशे स्थिताः। कालस्य वशमापन्नाः स्वल्पं हि न हि नः सुखम् ॥१४॥ सम्प्रत्यनाथो विषय इक्ष्वाकूणां महात्मनाम्। रामं नाथमिहासाद्य बालान्तकरणं ध्रुवम् ॥ १५ ॥ राजदोषैर्विपद्यन्ते प्रजा ह्यविधिपालिताः। असद्वृत्ते तु नृपतावकाले म्रियते जनः ॥ १६ ॥ यद्वा पुरेष्वयुक्तानि जना जनपदेषु च। कुर्वते न च रक्षाऽस्ति तदा कालकृतं भयम् ॥ १७ ॥ सुव्यक्तं राजदोषो हि भविष्यति न संशयः। पुरे जनपदे चापि ततो बालवधो ह्ययम् ॥ १८ ॥ एवं बहुविधैर्वाक्यैरुपरुध्य मुहुर्मुहुः। राजानं दुःखसन्तप्तः सुतं तमुपगूहते ॥ १९ ॥

इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

तथा तु करुणं तस्य द्विजस्य परिदेवनम्। शुश्राव राघवः सर्वं दुःखशोकसमन्वितम् ॥१॥ स दुःखेन च सन्तप्तो मन्त्रिणस्तानुपाह्वयत्। वसिष्ठं वामदेवं च भ्रातरौ सहनैगमान् ॥ २ ॥ ततो द्विजा वसिष्ठेन सार्धमष्टौ प्रवेशिताः। राजानं देवसङ्काशं वर्धस्वेति ततोऽब्रुवन् ॥३॥ मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च काश्यपः। कात्यायनोऽथ जाबालिर्गौतमो नारदस्तथा। एते द्विजर्षभाः सर्वे आसनेषूपवेशिताः ॥ ४ ॥ महर्षीन् समनुप्राप्तानभिवाद्य कृताञ्जलिः। मन्त्रिणो नैगमांश्चैव यथार्हमनुकूलतः ॥ ५ ॥

यद्वेति। अयुक्तानि अनुचितकृत्यानि। न च रक्षाऽस्ति अनुचितकृत्यनिवारणं यदा नास्ति तदैव कालकृतं भयम्, नान्यथेत्यर्थः ॥ १७॥ सुव्यक्तमिति। तस्मादेव ह्ययमकालवधः ॥ १८ ॥ एवमिति। राजानमुपरुध्य ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रिसप्ततितमः सर्गः ॥ ७३ ॥ तथा त्वित्यादि ॥ १–५ ॥



स०–करुणं करुणयतीति तथा। दुःखशोकसमन्वितं श्रोतुर्वक्तुश्चेत्युभयविवक्षया दुःखशोकेत्युक्तिः। 'स दुःखेन च सन्तप्तः' इत्यनुवादस्वारस्यात् ॥ १ ॥

तेषामिति । राघवः द्विजोऽयम् उपरोधत इति सर्वमाचष्टे ॥ ६ ॥ ७ ॥ शृण्विति । हे राजन् । अकाले अयं बालस्य सङ्क्षयः यथा येन प्रकारेण प्राप्तः तच्छृणु । ततस्तस्य प्रतिक्रियायाः कर्तव्यतां श्रुत्वा तत्कुरुष्व ॥ ८ ॥ प्रतिज्ञातमर्थमुपपादयितुं पीठिकामाह—पुरेत्यादि । त्रेतायुगे अनर्हस्य शूद्रस्य तपश्चरणमधर्मः । तेनायं बालवध इति वक्तुं चतुर्युगधर्माः क्रमेण चोच्यन्ते । कृतयुगे ब्राह्मणा एव तपस्विनो भवन्ति अनशनप्रभृतिकाय

तेषां समुपविष्टानां सर्वेषां दीप्ततेजसाम् । राघवः सर्वमाचष्टे द्विजोऽयमुपरोधते ॥ ६ ॥ तस्य तद्वचनं श्रुत्वा राज्ञो दीनस्य नारदः । प्रत्युवाच शुभं वाक्यमृषीणां सन्निधौ नृपम् ॥७॥ शृणु राजन् यथाऽकाले प्राप्तो बालस्य संक्षयः । श्रुत्वा कर्तव्यतां राजन् कुरुष्व रघुनन्दन ॥ ८ ॥ पुरा कृतयुगे राजन् ब्राह्मणा वै तपस्विनः । अब्राह्मणस्तदा राजन्न तपस्वी कथंचन ॥ ९ ॥ तस्मिन् युगे प्रज्वलिते ब्रह्मभूते त्वनावृते । अमृत्यवस्तदा सर्वे जज्ञिरे दीर्घदर्शिनः ॥ १० ॥ ततस्त्रेतायुगं नाम मानवानां वपुष्मताम् । क्षत्रियास्तत्र जायन्ते पूर्वेण तपसाऽन्विताः ॥ ११ ॥ वीर्येण तपसा चैव तेऽधिकाः पूर्वजन्मनि । मानवा ये महात्मानस्तत्र त्रेतायुगे युगे ॥ १२ ॥ ब्रह्मक्षत्रं च तत् सर्वं यत् पूर्वमपरं च यत् । युगयोरुभयोरासीत् समवीर्यसमन्वितम् ॥ १३ ॥

क्लेशकारिणो भवन्ति । ततस्तस्मादब्राह्मणः ब्राह्मणव्यतिरिक्तवर्णः कथंचन तपस्वी न भवति । नित्यनैमित्तिककर्ममात्रपर एव भवति ॥ ९ ॥ तस्मिन्निति । प्रज्वलिते तपसा दीप्ते । ब्रह्मभूते ब्राह्मणवर्णप्रधाने । अनावृते अज्ञानावरणरहिते । तस्मिन् युगे कृतयुगे । सर्व एव तदा अमृत्यवः मरणहेत्व धर्मलेशस्याप्यभावात् मरणरहिताः । अज्ञानानावृतत्वाद्दीर्घदर्शिनः अतीतानागतज्ञाश्च भवन्ति ॥ १० ॥ तत इति । ततः कृतयुगावसाने । वपुष्मतां दृढशरीराणाम् । मानवानां मनुवंशक्षत्रियाणां संबन्धि त्रेतायुगं नाम भवति । तत्प्रधानत्वात्तत्संबन्धित्वम् । तत्र त्रेतायाम् । क्षत्रियाः पूर्वेण तपसा अन्विता जायन्ते ॥ ११ ॥ त्रेतायुगे तपस्विनो जाताः क्षत्रियाः कृतयुगे तपस्विभिर्ब्राह्मणैः किं तुल्याः ? नेत्याह—वीर्येणेति । अत्र त्रेतायुगे । युगे त्रेतायुगाख्ये युगे महात्मानो ये मानवाः सन्ति तदपेक्षया पूर्वजन्मनि पूर्वस्मिन् कृतयुगे ये मानवास्ते तपसा वीर्येण चाधिकाः ॥ १२ ॥ त्रेतायुगब्राह्मणास्तुल्या एवेत्याह—ब्रह्मेति । उभयोर्युगयोः कृतत्रेतयोः कृते यद्ब्रह्म पूर्वमुत्कृष्टम्, यच्च त्रेतायामपकृष्टं क्षत्रम् तदुभयं त्रेतायां समप्रधानमासीत् ॥ १३ ॥

एतदेवाह—अपश्यन्निति । सर्वे जनाः । ततः क्षत्रियात् । ब्राह्मणस्याधिकं विशेषं तु नापश्यन् । अपश्यन्तस्तु ते सर्वे इति च पाठः । तत्स्थापनमाचारभेदं वेदोदितं चक्रिरे । चातुर्वर्ण्यस्येत्यत्र स्वार्थे ष्यञ् । कृतयुगे तपस्तदभावाभ्यामुभयोर्वैलक्षण्यं स्पष्टम् । त्रेतायुगे उभयोरपि तपस्साम्यात् वैलक्षण्यकरमाचारभेदमकल्पयन्नित्यर्थः । एवं वैश्यशूद्रयोरपि वेदपुराणोक्ताचारव्यवस्थां महान्तोऽकल्पयन्नित्यर्थः ॥ १४ ॥ तस्मिन्निति । धर्मभूते यज्ञादिधर्मप्रधाने । अनावृते अधर्मावरणरहिते । तस्मिन् त्रेतायुगे प्रवृत्ते अधर्मः पादं चतुर्थांशं पातयदपातयत् वर्तयामास । त्रेतायुगपुरुषाः कृतयुगपुरुषवद्विमल

अपश्यंस्तु न ते सर्वे विशेषमधिकं ततः । स्थापनं चक्रिरे तत्र चातुर्वर्ण्यस्य सम्मतम् ॥ १४ ॥ तस्मिन् युगे प्रज्वलिते धर्मभूते ह्यनावृते । अधर्मः पादमेकं तु पातयत् पृथिवीतले ॥ १५ ॥ अधर्मेण हि संयुक्तस्तेजो मन्दं भविष्यति ॥ १६ ॥ आमिषं यच्च पूर्वेषां राजसं च मलं भृशम् । अनृतं नाम तद्भूतं पादेन पृथिवीतले ॥ १७ ॥ अनृतं पातयित्वा तु पादमेकमधर्मतः । ततः प्रादुष्कृतं पूर्वमायुषः परिनिष्ठितम् ॥१८॥ पतिते त्वनृते तस्मिन्नधर्मे च महीतले । शुभान्येवाचरल्लोकः सत्यधर्मपरायणः ॥ १९ ॥

ज्ञानरहिततया ब्रह्मज्ञानाधिकारशून्याः वर्णाश्रमधर्मानेवाचरन्, अतो विमलज्ञानाभावादधर्मः पादमवतीर्ण इत्यर्थः ॥ १५ ॥ एवमीषत्पापसंबन्धात्तदातनानां जनानां प्रभावः पूर्वयुगपुरुषेभ्यः क्षीणोऽभूदित्याह—अधर्मेण हीति । भविष्यतीति भूते लट् । एवं त्रेतायुगजनानां प्रभावस्यालपत्वेन सत्यसङ्कल्पत्वाकृष्टपच्यत्वादिसिद्ध्यभावात् कृष्यादिकमेव जीवनोपायोऽभूदित्याह—आमिषमिति । सर्वेषां कृतयुगब्राह्मणानां राज्ञां च भृशं मलं मलवन्निन्द्यमानमामिषं जीवनोपायः अनृतं कृषिर्नाम प्रसिद्धं यदस्ति तत्पृथिवीतले पादेन भूतं स्थितम् । कृतयुगपुरुषतुल्यवैभवाभावेनाकृष्टपच्यत्वाद्यभावात् त्रेतायुगपुरुषाणाम् अनृतमेव जीवनोपायोऽभूदित्यर्थः । "सेवा श्ववृत्तिरनृतं कृषिरुञ्छशिलं त्वृतम्" इत्यमरः ॥ १६ ॥ १७ ॥ एवमायुषः क्षयोऽप्यभूदित्याह—अनृतमिति । अधर्मतः अधर्मस्तदेकं पादमनृतलक्षणं जीवनोपायं पातयित्वा निक्षिप्य । ततस्तेनैव पातेन पूर्वं प्रथममायुषः परिनिष्ठितं विनाशः प्रादुष्कृतं प्रादुर्भूतम् । कृतयुगपुरुषापेक्षया त्रेतायुगपुरुषा न्यूनायुषोऽभवन्नित्यर्थः ॥ १८ ॥ एवमनुभावस्यायुषः क्षये प्रवृत्ते सति भीताः सन्तः त्रेतायुग

पुरुषाः शुभाचरणे निरता आसन्नित्याह–पतितं त्विति । अधर्मे अधर्मजायुःक्षये । पतितं त्वनृते तस्मिन्नधर्मेणेति च पाठः ॥ १९ ॥ शुभाचारे भेदमेव दर्शयति–त्रेतेति । शुश्रूषां पूर्ववर्णपरिचर्याम् । अपरे वैश्यशूद्राः, अकुर्वन्निति शेषः ॥ २० ॥ शुश्रूषावत् पूर्वोक्तकृष्यादिकमपि वैश्यशूद्रयोः

त्रेतायुगे च वर्तन्ते ब्राह्मणाः क्षत्रियाश्च ये । तपोऽतप्यन्त ते सर्वे शुश्रूषामपरे जनाः ॥ २० ॥ स धर्मः परमस्तेषां वैश्यशूद्रं समागमत् । पूजां च सर्ववर्णानां शूद्राश्चक्रुर्विशेषतः ॥ २१ ॥ एतस्मिन्नन्तरे तेषामधर्मे चानृते च ह । ततः पूर्वे भृशं ह्रासमगमन्नृपसत्तम ॥२२॥ ततः पादमधर्मः स द्वितीयमवतारयत् । ततो द्वापरसंज्ञाऽस्य युगस्य समजायत ॥ २३ ॥ तस्मिन् द्वापरसंज्ञे तु वर्तमाने युगक्षये । अधर्मश्चानृतं चैव ववृधे पुरुषर्षभ ॥ २४ ॥ तस्मिन् द्वापरसङ्ख्याते तपो वैश्यान् समाविशत् । त्रिभ्यो युगेभ्यस्त्रीन् वर्णान् क्रमाद्वै तप आविशत् ॥ २५ ॥ त्रिभ्यो युगेभ्यस्त्रीन् वर्णान् धर्मश्च परिनिष्ठितः । न शूद्रो लभते धर्मं युगतस्तु नरर्षभ । हीनवर्णो नृपश्रेष्ठ तप्यते सुमहत्तपः ॥ २६ ॥ भविष्यच्छूद्रयोन्यां वै तपश्चर्या कलौ युगे । अधर्मः परमो राजन् द्वापरे शूद्रजन्मनः ॥ २७ ॥

परमधर्मोऽभूदित्याह–स धर्म इति । स्वधर्मः परम इति च पाठः । पूजां चेति । वैश्यानां हि शुश्रूषा । अतोऽपि कृष्यादिकमेव परमो धर्मोऽभूत् । शूद्राणां कृष्यादिभ्योऽपि शुश्रूषैव विशिष्टो धर्मोऽभूदित्यर्थः ॥२१॥ एवं त्रेतायुगे लोकस्थितिमुक्त्वा तदवस्थानकालस्थितिमाह–एतस्मिन्निति । एतस्मिन्नन्तरे त्रेतायुगावसानकाले । अधर्मे अधर्मकार्ये आयुषः क्षये । अनृते कृष्याद्युपाये च प्रवृत्ते सति क्षीणायुषो वृत्तिकर्शिताश्च । पूर्वे त्रेतायुगस्थाः । ह्रासं विनाशमगमन् ॥ २२ ॥ तत इति । अधर्मः सः त्रेतायुगप्रसारितैकपादः ॥२३॥ तस्मिन्निति । अधर्मस्याभिवृद्धिर्नाम त्रेतायुगपुरुषेभ्योऽल्पायुष्यम् । अनृतस्याभिवृद्धिस्तु प्रयासबाहुल्येन कृषेः सफलत्वम् ॥ २४ ॥ तस्मिन्निति । तपः वैश्यान् समाविशत्, वैश्यास्तपोधिकारिणोऽभवन्नित्यर्थः । एवं युगत्रयधर्माननभिधाय प्रकृतं वक्तुं तत्रोपयुक्तमर्थं संक्षिप्याह–त्रिभ्य इति । हेतौ पञ्चमी ॥ २५ ॥ त्रिभ्य इति । प्रकृतं बालवधहेतुमाह–हीनेति ॥ २६ ॥ भविष्यदिति । इकारलोपश्छान्दसः । तपश्चर्या तपश्चरणाधिकारः। शूद्राणां तपश्चर्या कलियुग एव धर्मो भविष्यति । अस्मिन् युगे त्वधर्म इत्याह–अधर्म

A 243

इति । रामराज्यस्य त्रेतायुगत्वेऽपि 'अधर्मः परमो राजन् द्वापरे शूद्रजन्मनः' इत्युक्तेः, किमुत त्रेतायामित्यर्थः ॥२७-३०॥ कथमन्येषु पापं कुर्वाणेषु राज्ञो नरकप्राप्तिस्तत्राह-षड्भागस्येति ॥ ३१ ॥ स इति । तत्र यत्नं निराकरणयत्नम् ॥ ३२ ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुःसप्ततितमः सर्गः ॥ ७४ ॥



स वै विषयपर्यन्ते तव राजन् महातपाः । अद्य तप्यति दुर्बुद्धिस्तेन बालवधो ह्ययम् ॥ २८ ॥ यो ह्यधर्ममकार्यं वा विषये पार्थिवस्य तु । करोति चाश्रीमूलं तत्पुरे वा दुर्मतिर्नरः । क्षिप्रं च नरकं याति स च राजा न संशयः ॥ २९ ॥ अधीतस्य च तप्तस्य कर्मणः सुकृतस्य च । षष्ठं भजति भागं तु प्रजा धर्मेण पालयन् ॥ ३० ॥ षड्भागस्य च भोक्ताऽसौ रक्षते न प्रजाः कथम् ॥ ३१ ॥ स त्वं पुरुषशार्दूल मार्गस्व विषयं स्वकम् । दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर ॥ ३२ ॥ एवं चेद्धर्मवृद्धिश्च नृणां चायुर्विवर्धनम् । भविष्यति नरश्रेष्ठ बालस्यास्य च जीवितम् ॥ ३३ ॥

इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे चतुस्सप्ततितमः सर्गः ॥ ७४ ॥

नारदस्य तु तद्वाक्यं श्रुत्वाऽमृतमयं तदा । प्रहर्षमतुलं लेभे लक्ष्मणं चेदमब्रवीत् ॥ १ ॥
गच्छ सौम्य द्विजश्रेष्ठं समाश्वासय सुव्रतम् । बालस्य तु शरीरं तत्तैलद्रोण्यां निधापय ॥ २ ॥
गन्धैश्च परमोदारैस्तैलैश्चापि सुगन्धिभिः । यथा न क्षीयते बालस्तथा सौम्य विधीयताम् ॥ ३ ॥
यथा शरीरो बालस्य गुप्तः सन् शिष्टकर्मणः । विपत्तिः परिभेदो वा न भवेच्च तथा कुरु ॥ ४ ॥
एवमादिश्य काकुत्स्थो लक्ष्मणं शुभलक्षणम् । मनसा पुष्पकं दध्यावागच्छेति महायशाः ॥ ५ ॥



नारदस्येत्यादि ॥ १-३ ॥ उक्तार्थस्य विवरणम्-यथेत्यादि । बालस्य शरीर इति लिङ्गव्यत्ययः । विपत्तिः स्वरूपनाशः । भेदः सन्धिबन्धादिविनि

मुंक्तिः ॥ ४ ॥ ५ ॥ इङ्गितमिति । स त्विति । पुष्पकाधिष्ठातृचेतन इत्यर्थः ॥ ६–९ ॥ प्रायादिति । हरितं दिशम् । विचिन्वन्निति, शूद्रतपस्विनमिति शेषः ॥ १० ॥ अपश्यमान इति । अपश्यमानः अपश्यन् ॥ ११ ॥ १२ ॥ दक्षिणामिति । शैवलाख्यस्य विन्ध्यसमीपवर्तिगिरेः ॥ १३–१६ ॥

इङ्गितं स तु विज्ञाय पुष्पको हेमभूषितः । आजगाम मुहूर्तेन समीपं राघवस्य वै ॥६॥ सोऽब्रवीत् प्रणतो भूत्वा अयमस्मि नराधिप । वश्यस्तव महाबाहो किङ्करः समुपस्थितः ॥ ७ ॥ भाषितं रुचिरं श्रुत्वा पुष्पकस्य नराधिपः । अभिवाद्य महर्षींस्तान् विमानं सोऽध्यरोहत ॥ ८ ॥ धनुर्गृहीत्वा तूणी च खड्गं च रुचिरप्रभम् । निक्षिप्य नगरे वीरौ सौमित्रिभरतावुभौ ॥ ९ ॥ प्रायात् प्रतीचीं हरितं विचिन्वंश्च ततस्ततः । उत्तरामगमच्छ्रीमान् दिशं हिमवता वृताम् ॥ १० ॥ अपश्यमानस्तत्रापि स्वल्पमप्यथ दुष्कृतम् । पूर्वामपि दिशं सर्वामथापश्यन्नराधिपः ॥ ११ ॥ प्रविशुद्धसमाचारामादर्शतलनिर्मलाम् । पुष्पकस्थो महाबाहुस्तदा पश्यन्नराधिपः ॥ १२ ॥ दक्षिणां दिशमाक्रामत्ततो राजर्षिनन्दनः । शैवलस्योत्तरे पार्श्वे ददर्श सुमहत् सरः ॥१३॥ तस्मिन् सरसि तप्यन्तं तापसं सुमहत्तपः । ददर्श राघवः श्रीमान् लम्बमानमधोमुखम् ॥ १४ ॥ राघवस्तमुपागम्य तप्यन्तं तप उत्तमम् । उवाच स तदा वाक्यं धन्यस्त्वमसि सुव्रत ॥ १५ ॥ कस्यां योन्यां तपोवृद्ध वर्तसे दृढविक्रम । कौतूहलात्त्वां पृच्छामि रामो दाशरथिर्ह्यहम् ॥ १६ ॥ कोऽर्थो मनीषितस्तुभ्यं स्वर्गलाभः परोऽथवा । वराश्रयो यदर्थं त्वं तपस्यसि सुदुष्करम् । यमाश्रित्य तपस्तप्तं श्रोतुमिच्छामि तापस ॥१७॥ ब्राह्मणो वाऽसि भद्रं ते क्षत्रियो वाऽसि दुर्जयः । वैश्यस्तृतीयवर्णो वा शूद्रो वा सत्यवाग्भव ॥ १८ ॥ इत्येवमुक्तः स नराधिपेन ह्यवाक्छिरा दाशरथाय तस्मै । उवाच जातिं नृपपुङ्गवाय यत्कारणे चैव तपःप्रयत्नः ॥१९॥ इत्यार्षे० श्रीमदुत्तरश्रीरामायणे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

कोऽर्थ इत्यादि । तुभ्यं तव वराश्रयः तपःप्रीतदेवतावरलभ्यो मनीषितोऽभीष्टोऽर्थः स्वर्भोगो वा अन्यो वा । यमाश्रित्य ॥१७॥ ब्राह्मण इति । सत्यवाग्भव

सत्यं कथयेत्यर्थः ॥ १८ ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चसप्ततितमः सर्गः ॥ ७५ ॥
तस्येत्यादि ॥ १-३॥ भाषत इति । तस्य शिर इत्यन्वयः ॥ ४-५ ॥ पुष्पवृष्टिरिति । पुष्पवृष्टिः, पपातेति शेषः । पुष्पवृष्टिश्च महतीति पाठे-तस्यैव

तस्य तद्वचनं श्रुत्वा रामस्याक्लिष्टकर्मणः । अवाक्छिरास्तथा भूत्वा वाक्यमेतदुवाच ह ॥ १ ॥ शूद्रयोन्यां प्रसूतोऽस्मि शम्बुको नाम नामतः । देवत्वं प्रार्थये राम सशरीरो महायशः ॥२॥ न मिथ्याऽहं वदे राम देवलोकजिगीषया । शूद्रं मां विद्धि काकुत्स्थ तप उग्रं समास्थितम् ॥ ३ ॥ भाषतस्तस्य शूद्रस्य खड्गं सुरुचिरप्रभम् । निष्कृष्य कोशाद्विमलं शिरश्चिच्छेद राघवः ॥४॥ तस्मिन् शूद्रे हते देवाः सेन्द्राः साग्निपुरोगमाः । साधु साध्विति काकुत्स्थं प्रशशंसुर्मुहुर्मुहुः ॥ ५ ॥ पुष्पवृष्टिर्महत्यासीद्दिव्यानां सुसुगन्धिनाम् । पुष्पाणां वायुमुक्तानां सर्वतः प्रपपात ह ॥ ६ ॥ सुप्रीताश्चाब्रुवन् रामं देवाः सत्यपराक्रमम् । सुरकार्यमिदं सौम्य सुकृतं ते महामते ॥ ७ ॥ गृहाण च वरं सौम्य यत्त्वमिच्छस्यरिन्दम । स्वर्गभाङ्न हि शूद्रोऽयं त्वत्कृते रघुनन्दन ॥ ८ ॥ देवानां भाषितं श्रुत्वा राघवः सुसमाहितः । उवाच प्राञ्जलिर्वाक्यं सहस्राक्षं पुरन्दरम् ॥ ९ ॥ यदि देवाः प्रसन्ना मे द्विजपुत्रः स जीवतु । दिशन्तु वरमेतं मे ईप्सितं परमं मम ॥१०॥ ममापचाराद्बालोऽसौ ब्राह्मणस्यैकपुत्रकः । अप्राप्तकालः कालेन नीतो वैवस्वतक्षयम् ॥ ११ ॥ तं जीवयत भद्रं वो नानृतं कर्तुमर्हथ । द्विजस्य संश्रुतोऽर्थो मे जीवयिष्यामि ते सुतम् ॥ १२ ॥ राघवस्य तु तद्वाक्यं श्रुत्वा विबुधसत्तमाः । प्रत्यूचू राघवं प्रीता देवाः प्रीतिसमन्वितम् ॥ १३ ॥



प्रपञ्चनं दिव्यानामित्यादि । प्रपपातेति, वृष्टिरिति शेषः ॥६॥७॥ गृहाणेति । सुरकार्यमेवाह-स्वर्गभागिति । हि यस्माच्छूद्रः तपसा स्वर्गं नार्हः सोऽसौ त्वत्कृततपोनिवर्तनेन स्वर्गभाङ्न कृतः, तस्मादेव देवकार्यं कृतमित्यर्थः ॥ ८-१० ॥ ममेति । वैवस्वतक्षयं यमगृहम् ॥ ११ ॥ तमिति । द्विजस्येति ।

ते तव सुतं जीवयिष्यामीत्ययमर्थो मे मया द्विजस्य संश्रुतः प्रतिज्ञातः ॥१२॥१३॥ निर्वृत इति। अस्मिन्नहनि त्वया शूद्रशिरश्छेददिवसे। वरं विनापि स्वयमेव जीवितं प्राप्तवानित्यर्थः ॥१४॥१५॥ स्वस्तीति। यामेति लोड्उत्तमबहुवचनम् ॥१६–२०॥ दृष्ट्वेति। अविशेषतः अपक्षपातत इत्यर्थः॥२१-२५॥

निर्वृतो भव काकुत्स्थ सोऽस्मिन्नहनि बालकः। जीवितं प्राप्तवान् भूयः समेतश्चापि बन्धुभिः ॥ १४ ॥ यस्मिन् मुहूर्ते काकुत्स्थ शूद्रोऽयं विनिपातितः। तस्मिन् मुहूर्ते बालोऽसौ जीवेन समयुज्यत ॥१५॥ स्वस्ति प्राप्नुहि भद्रं ते साधु याम नरर्षभ। अगस्त्यस्याश्रमपदं द्रष्टुमिच्छाम राघव ॥१६॥ तस्य दीक्षा समाप्ता हि ब्रह्मर्षेः सुमहाद्युतेः। द्वादशं हि गतं वर्षं जलशय्यां समासतः ॥ १७ ॥ काकुत्स्थ तद्गमिष्यामो मुनिं समभिनन्दितुम्। त्वं चाप्यागच्छ भद्रं ते द्रष्टुं तमृषिसत्तमम् ॥ १८ ॥ स तथेति प्रतिज्ञाय देवानां रघुनन्दनः। आरुरोह विमानं तं पुष्पकं हेमभूषितम् ॥१९॥ ततो देवाः प्रयातास्ते विमानैर्बहुविस्तरैः। रामोऽप्यनुजगामाशु कुम्भयोनेस्तपोवनम् ॥२०॥ दृष्ट्वा तु देवान् संप्राप्तानगस्त्यस्तपसां निधिः। अर्चयामास धर्मात्मा सर्वांस्तानविशेषतः ॥ २१ ॥ प्रतिगृह्य ततः पूजां सम्पूज्य च महामुनिम्। जग्मुस्ते त्रिदशा हृष्टा नाकपृष्ठं सहानुगैः ॥२२॥ गतेषु तेषु काकुत्स्थः पुष्पकादवरुह्य च। ततोऽभिवादयामास ह्यगस्त्यमृषिसत्तमम् ॥ २३ ॥ सोऽभिवाद्य महात्मानं ज्वलन्तमिव तेजसा। आतिथ्यं परमं प्राप्य निषसाद नराधिपः ॥ २४ ॥ तमुवाच महातेजाः कुम्भयोनिर्महातपाः। स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव ॥ २५ ॥ त्वं मे बहुमतो राम गुणैर्बहुभिरुत्तमैः। अतिथिः पूजनीयश्च मम नित्यं हृदि स्थितः ॥ २६ ॥ सुरा हि कथयन्ति त्वामागतं शूद्रघातिनम्। ब्राह्मणस्य तु धर्मेण त्वया जीवापितः सुतः ॥ २७ ॥

त्वमिति। हृदि स्थित इति। परब्रह्मभूतत्वान्मम हृदये सदा स्थित इत्यर्थः ॥ २६ ॥ सुरा हीति। जीवापितः जीवनं प्रापितः। णुगार्षः। अत्र त्वये

त्यत्र येति गायत्र्यक्षरं चतुर्विंशमित्याहुः ॥ २७-३० ॥ दत्तस्येति । पारितोपिकतया येन केनापि दत्तस्योत्तमवस्तुनः स्वयमनुपभुज्यान्यस्मै दानं

उष्यतां चेह रजनी सकाशे मम राघव । प्रभाते पुष्पकेण त्वं गन्तासि पुरमेव हि ॥ २८ ॥ त्वं हि नारायणः श्रीमांस्त्वयि सर्वं प्रतिष्ठितम् । त्वं प्रभुः सर्वभूतानां पुरुषस्त्वं सनातनः ॥ २९ ॥ इदं चाभरणं सौम्य निर्मितं विश्वकर्मणा । दिव्यं दिव्येन वपुषा दीप्यमानं स्वतेजसा । प्रतिगृह्णीष्व काकुत्स्थ मत्प्रियं कुरु राघव ॥ ३० ॥ दत्तस्य हि पुनर्दाने सुमहत् फलमुच्यते । भरणे हि भवान् शक्तः सेन्द्राणां मरुतामपि ॥ ३१ ॥ त्वं हि शक्तस्तारयितुं सेन्द्रानपि दिवौकसः । तस्मात् प्रदास्ये विधिवत्तत् प्रतीच्छ नराधिप ॥ ३२ ॥ दिव्यमाभरणं चित्रं प्रदीप्तमिव भास्करम् ॥ ३३ ॥ अथोवाच महात्मानमिक्ष्वाकूणां महारथः । रामो मतिमतां श्रेष्ठः क्षत्रधर्ममनुस्मरन् ॥ ३४ ॥ प्रतिग्रहोऽयं भगवन् ब्राह्मणस्याविगर्हितः । गृह्णीयां क्षत्रियोऽहं वै कथं ब्राह्मणपुङ्गव ॥ ३५ ॥ ब्राह्मणेन विशेषेण दत्तं तद्वक्तुमर्हसि । एवमुक्तस्तु रामेण प्रत्युवाच महानृषिः ॥ ३६ ॥ आसन् कृतयुगे राम ब्रह्मभूते पुरायुगे । अपार्थिवाः प्रजाः सर्वाः सुराणां तु शतक्रतुः ॥ ३७ ॥ ताः प्रजा देवदेवेशं राजार्थं समुपाद्रवन् । सुराणां स्थापितो राजा त्वया देव शतक्रतुः ॥ ३८ ॥ प्रयच्छ नो हि लोकेश पार्थिवं नरपुङ्गवम् । तस्मै पूजां प्रयुञ्जाना धूतपापाश्चरेमहि । न वसामो विना राज्ञा एष नो निश्चयः परः ॥ ३९ ॥ प्रजानां वचनं श्रुत्वा निश्चयित्वाऽर्थमुत्तमम् ॥ ४० ॥ ततो ब्रह्मा सुरश्रेष्ठो लोकपालान् सवासवान् । समाहूयाऽब्रवीत् सर्वांस्तेजोभागान् प्रयच्छत ॥ ४१ ॥ ततो ददुर्लोकपालाः सर्वे भागान् स्वतेजसः । अक्षुपच्च ततो ब्रह्मा यतो जातः क्षुपो नृपः ॥ ४२ ॥

सुमहाफलमुच्यते । भरण इति । मरुतां देवानामपि भरणे रक्षणे । अपिशब्दात् किमुतैतद्भरण इत्यर्थः । भरणेऽपि भवान् शक्तः फलानां महतामपीति च

पाठः ॥ ४१-४७ ॥ प्रतिगृह्येति । आगमं प्राप्तिमार्गम् ॥ ४८ ॥ अत्यद्भुतमिति । कुतो वा केन वा निमित्तेन केन पुरुषेण वा हृतमुपहृतम्, दत्त मिति यावत् ॥ ४९ ॥ ५० ॥ एवमिति । त्रेतायुगे त्रेतायुगाख्ये ॥५१॥५२॥ इति श्रीगोविन्दराज० मणिमुकुटाख्याने उत्तर० षट्सप्ततितमः सर्गः ॥७६॥

तं ब्रह्मा लोकपालानां सहांशैः समयोजयत् । ततो ददौ नृपं तासां प्रजानामीश्वरं प्रभुम् ॥ ४३ ॥ तत्रैन्द्रेण च भागेन महीमाज्ञापयन्नृपः । वारुणेन तु भागेन वपुः पुष्यति राघव ॥ ४४ ॥ कौबेरेण तु भागेन वित्तमासां ददौ तदा । यस्तु याम्योऽभवद्भागस्तेन शास्ति स्म स प्रजाः ॥४५॥ तत्रैन्द्रेण नरश्रेष्ठ भागेन रघुनन्दन । प्रतिगृह्णीष्व भद्रं ते तारणार्थं मम प्रभो ॥४६॥ तस्य तद्वचनं श्रुत्वा ऋषेः परमधार्मिकम् । तद्रामः प्रतिजग्राह मुनेराभरणं वरम् ॥ ४७ ॥ प्रतिगृह्य ततो रामस्तदाभरणमुत्तमम् । आगमं तस्य दीप्तस्य प्रष्टुमेवोपचक्रमे ॥४८॥ अत्यद्भुत मिदं दिव्यं वपुषा युक्तमुत्तमम् । कथं भगवता प्राप्तं कुतो वा केन वा हृतम् ॥४९॥ कुतूहलितया ब्रह्मन् पृच्छामि त्वां महायशः । आश्चर्याणां बहूनां हि निधिः परमको भवान् ॥ ५० ॥ एवं ब्रुवति काकुत्स्थे मुनिर्वाक्यमथा ब्रवीत् । शृणु राम यथा वृत्तं पुरा त्रेतायुगे युगे ॥ ५१ ॥ रमणीयप्रदेशेऽस्मिन् वने यद् दृष्टवानहम् । आश्चर्यं से महाबाहो दानमाश्रित्य केवलम् ॥५२॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तरश्रीरामायणे षट्सप्ततितमः सर्गः ॥७६॥

पुरा त्रेतायुगे राम ह्यरण्यं बहुविस्तरम् । समन्ताद्योजनशतं निर्मृगं पक्षिवर्जितम् ॥ १॥ तस्मिन्निर्मानुषेऽरण्ये कुर्वाण स्तप उत्तमम् । अहमाक्रमितुं सौम्य तदरण्यमुपागमम् ॥ २ ॥ तस्य रूपमरण्यस्य निर्देष्टुं न शशाक ह । फल मूलैः सुखास्वादैर्बहुरूपैश्च पादपैः ॥ ३ ॥

पुरेत्यादि । पुरा त्रेतायुगे पूर्वचतुर्युगवर्तित्रेतायुगे । बहुविस्तरं बहुविस्तारम् । पक्षिवर्जितमिति । अरण्यम्, अभूदिति शेषः ॥१॥ तस्मिन्निति । तस्मिन् अरण्ये तदेकदेशे । तपः कुर्वाणोऽहं तदरण्यमाक्रमितुम् आ समन्तात्पर्यटनं कृत्वा कात्स्न्येनावगन्तुमुपागमम् उपगतवान् ॥ २॥ तस्येति । निर्देष्टुं परि

स०—बहुरूपैश्च काननैः इति पाठः । बहुरूपैः अनेकाकारैः सुवर्णमयैर्वा । "बहुरूपं च पुरटम्" इति काठकभाष्यागिहिताभिधानात् । काननैः अवान्तरैः ॥ ३ ॥

ज्ञातुम् । न शशाक नाशक्नुवम् । तस्य रूपमिति । सुखावहं रूपमित्यर्थः ॥ ३ ॥ ४ ॥ पद्मेति । सुखास्वादम्, सुखावहप्राशनपानीयवदित्यर्थः ॥ ५ ॥ अरजस्कमिति । अरजस्कं निर्मलम् ॥ ६ ॥ पुराणमिति । नैदाघीं निदाघसंबन्धिनीम् ॥ ७ ॥ प्रभात इति । काले साधु काल्यम्, प्रातःकालकर्तव्यं





तस्यारण्यस्य मध्ये तु सरो योजनमायतम् । हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ॥ ४ ॥ पद्मोत्पलसमाकीर्णं समतिक्रान्तशैवलम् । तदाश्चर्यमिवात्यर्थं सुखास्वादमनुत्तमम् ॥५॥ अरजस्कं तथाऽक्षोभ्यं श्रीमत् पक्षिगणायुतम् । समीपे तस्य सरसो महदद्भुतमाश्रमम् ॥६॥ पुराणं पुण्यमत्यर्थं तपस्विजनवर्जितम् । तत्राहमवसं रात्रिं नैदाघीं पुरुषर्षभ ॥७॥ प्रभाते काल्यमुत्थाय सरस्तदुपचक्रमे । अथापश्यं शवं तत्र सुपुष्टमजरं क्वचित् ॥८॥ पङ्क्तिभेदेन पुष्टाङ्गं समाश्रितसरोवरम् । तिष्ठन्तं परया लक्ष्म्या तस्मिंस्तोयाशये नृप ॥ ९ ॥ तमर्थं चिन्तयानोऽहं मुहूर्तं तत्र राघव । उषितोऽस्मि सरस्तीरे किं न्विदं स्यादिति प्रभो ॥ १० ॥ अथापश्यं मुहूर्तेन दिव्यमद्भुतदर्शनम् । विमानं परमोदारं हंसयुक्तं मनोजवम् ॥ ११ ॥ अत्यर्थं स्वर्गिणं तत्र विमाने रघुनन्दन । उपास्तेऽप्सरसां वीर सहस्रं दिव्यभूषणम् ॥ १२ ॥ गायन्ति दिव्यगेयानि वादयन्ति तथाऽपराः । क्ष्वेलयन्ति तथा चान्या नृत्यन्ति च तथाऽपराः ॥ १३ ॥ अपराश्चन्द्ररश्म्याभैर्हेमदण्डैश्च चामरैः । दोधूयुर्वदनं तस्य पुण्डरीकनिभेक्षणम् ॥ १४ ॥ ततः सिंहासनं त्यक्त्वा मेरुकूटमिवांशुमान् । पश्यतो मे तदा राम विमानादवरुह्य च । तं शवं भक्षयामास स स्वर्गी रघुनन्दन ॥ १५ ॥ तथा भुक्त्वा यथाकामं मांसं बहुसुपीवरम् । अवतीर्य सरः स्वर्गी संस्प्रष्टुमुपचक्रमे ॥ १६ ॥

स्नानकर्म उद्दिश्य उत्थाय उपचक्रमे । अपरोक्षेऽपि लिडार्षः ॥ ८ ॥ पङ्क्तिभेदेनेति । लक्ष्म्या, उपेतमिति शेषः ॥ ९–१५ ॥ तथेति । संस्प्रष्टुं शुद्धाचमनं



स०–चन्द्ररश्म्याभैः तदामकेशयुतैः । दोधूयुः, यद्भ्रान्तोऽयम् ॥ १४ ॥ तं मया दृष्टम्" ,१ ॥

कर्तुमित्यर्थः ॥ १६॥१७॥ अहमित्यस्य क्रियाभेदाद्भेदः ॥ १८ ॥ १९ ॥ कस्येति । आहारः ईदृशो भावश्च देवसंमतः । अतः आश्चर्यमेव वर्तते । अतस्तत्सर्वं तत्त्वतः श्रोतुमिच्छामि ॥ २०–२२ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तसप्ततितमः सर्गः ॥ ७७॥

उपस्पृश्य यथान्यायं स स्वर्गी रघुपुङ्गव । आरोढुमुपचक्राम विमानवरमुत्तमम् ॥ १७ ॥ तमहं देवसङ्काशमारोहन्तमुदीक्ष्य वै । अथाहमब्रवं वाक्यं स्वर्गिणं पुरुषर्षभ ॥ १८ ॥ को भवान् देवसङ्काश आहारश्च विगर्हितः । त्वयेदं भुज्यते सौम्य किमर्थं वक्तुमर्हसि ॥ १९ ॥ कस्य स्यादीदृशो भाव आहारो देवसम्मतः । आश्चर्यं वर्तते सौम्य श्रोतुमिच्छामि तत्त्वतः ॥ २० ॥ नाहमौपयिकं मन्ये तव भक्ष्यमिदं शवम् ॥ २१ ॥ इत्येवमुक्तः स नरेन्द्र नाकी कौतूहलात् सूनृतया गिरा च । श्रुत्वा च वाक्यं मम सर्वमेतत् सर्वं तथा चाकथयन्ममेति ॥ २२ ॥

इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

श्रुत्वा तु भाषितं वाक्यं मम राम शुभाक्षरम् । प्राञ्जलिः प्रत्युवाचेदं स स्वर्गी रघुनन्दन ॥ १ ॥
शृणु ब्रह्मन् पुरा वृत्तं ममैतत् सुखदुःखयोः । अनतिक्रमणीयं हि यथा पृच्छसि मां द्विज ॥ २ ॥
पुरा वैदर्भको राजा पिता मम महायशाः । सुदेव इति विख्यातस्त्रिषु लोकेषु वीर्यवान् ॥ ३ ॥
तस्य पुत्रद्वयं ब्रह्मन् द्वाभ्यां स्त्रीभ्यामजायत । अहं श्वेत इति ख्यातो यवीयान् सुरथोऽभवत् ॥ ४ ॥

॥ १ ॥ शृण्विति । सुखदुःखयोरिति । देवत्वशवभुक्त्वरूपयोः, कारणमिति शेषः ॥ २–४ ॥

स०—अहंदेवसङ्काशमिति पदमेकम् । अहंदेवो रुद्रः, तत्सङ्काशम्, तेन नाहमिति पुनरुक्तम् । तमारोहन्तमुदीक्ष्य तमेवाहमब्रवमित्यन्वयः । अतस्तमिति च नाधिकम् । तमेव पुरुषर्षभ इति पाठः ॥ १८ ॥ आहारः शवरूपः । इदं शवकले वरम् ॥ १९ ॥ सुखदुःखयोः दिव्यदेहशवाशननिमित्तकयोः, कारणमिति शेषः । अनतिक्रमणीयं अत्येतुमशक्यम् एतत्कारणं यथा पृच्छसि तथा आनुपूर्व्येण । पुरावृत्तं वक्ष्यामि शृण्वित्यन्वयः ॥ २ ॥ द्वाभ्यां स्त्रीभ्याम् एकस्यामेक एकस्यामेक इति पुत्रद्वयमजायत । तन्नामनी आह—अहमिति । अहं ज्येष्ठः । सुरथ इत्यपरः यवीयान् ॥ ४ ॥

तत इति । धर्म्यं धर्मादनपेतं यथा भवति तथा ॥ ५ ॥ ६ ॥ सोऽहमिति । निमित्ते कस्मिंश्चिदिति । केनचिन्निमित्तेन लक्षणेन सामुद्रिकादिना । विज्ञातायुः निश्चितायुरवधिः । कालधर्मं हृदि न्यस्य । स्वस्य मरणकालं ज्ञात्वेत्यर्थः ॥ ७–१० ॥ तस्येति । स्वर्गभूतस्य स्वर्गं प्राप्तस्य । स्वर्गोऽत्र

ततः पितरि स्वर्याते पौरा मामभ्यषेचयन् । तत्राहं कृतवान् राज्यं धर्म्यं च सुसमाहितः ॥ ५ ॥ एवं वर्षसहस्राणि ममातीतानि सुव्रत । राज्यं कारयतो ब्रह्मन् प्रजा धर्मेण रक्षतः ॥ ६ ॥ सोऽहं निमित्ते कस्मिंश्चिद्विज्ञातायुर्द्विजोत्तम । कालधर्मं हृदि न्यस्य ततो वनमुपागमम् ॥७॥ सोऽहं वनमिदं दुर्गं मृगपक्षिविवर्जितम् । तपश्चर्तुं प्रविष्टोऽस्मि समीपे सरसः शुभे ॥ ८ ॥ भ्रातरं सुरथं राज्ये ह्यभिषिच्य महीपतिम् । इदं सरः समासाद्य तपस्तप्तं मया चिरम् ॥ ९ ॥ सोऽहं वर्षसहस्राणि तपस्त्रीणि महावने । तप्त्वा सुदुष्करं प्राप्तो ब्रह्मलोकमनुत्तमम् ॥ १० ॥ तस्य मे स्वर्गभूतस्य क्षुत्पिपासे द्विजोत्तम । बाधेते परमोदार ततोऽहं व्यथितेन्द्रियः । गत्वा त्रिभुवनश्रेष्ठं पितामहमुवाच ह ॥ ११ ॥ भगवन् ब्रह्मलोकोऽयं क्षुत्पिपासाविवर्जितः । कस्यायं कर्मणः पाकः क्षुत्पिपासानुगो ह्यहम् ॥ १२ ॥ आहारः कश्च मे देव तन्मे ब्रूहि पितामह ॥ १३ ॥ पितामहस्तु मामाह तवाहारः सुदेवज । स्वादूनि स्वानि मांसानि तानि भक्षय नित्यशः ॥ १४ ॥ स्वशरीरं त्वया पुष्टं कुर्वता तप उत्तमम् । अनुप्तं रोहते श्वेत न कदाचिन्महामते ॥ १५ ॥ तृप्तिर्न तेऽस्ति सूक्ष्माऽपि वने सत्त्वनिषेविते । पुरा तु भिक्षमाणाय भिक्षा वै यतये नृप । न हि दत्ता त्वयेन्द्राभ यस्मादतिथयेऽपि वै ॥ १६ ॥ दत्तं न तेऽस्ति सूक्ष्मोऽपि तप एव निषेवसे । तेन स्वर्गगतो वत्स बाध्यसे क्षुत्पिपासया ॥ १७ ॥ स त्वं सुपुष्टमाहारैः स्वशरीरमनुत्तमम् । भक्षयित्वाऽमृतरसं तेन तृप्तिर्भविष्यति ॥ १८ ॥

ब्रह्मलोकः ॥ ११–१४ ॥ स्वशरीरं त्वया पुष्टमिति । मुख्यं तपो न कृतम्, स्वशरीरमेव केवलं त्वया पुष्टम् । अनुप्तमकृतावापं बीजं न रोहते हि ॥ १५ ॥ १६ ॥ दत्तमिति । सूक्ष्मोऽपि । लिङ्गव्यत्यय आर्षः । सूक्ष्ममपि अत्यल्पमपि । ते दत्तं दानं नास्ति देवपित्रतिथिषु । किन्तु तप एव केवलं

निषेवसे निषेवितवानित्यर्थः । "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः" इत्युक्तं हृढसमाधिरूपं तप एव कृतमित्यर्थः ॥ १७–२० ॥ सोऽहमिति । कुर्मि करोमि ॥ २१ ॥ २२ ॥ तस्येति । कृच्छ्रभूतस्य कृच्छ्रं प्राप्तस्य । विमोचय, मामिति शेषः ॥ २३–२७ ॥ मयेति । तस्मिन्

यदा तु तद्वनं श्वेत अगस्त्यः सुमहानृषिः । आगमिष्यति दुर्धर्षस्तदा कृच्छ्राद्विमोक्ष्यसे ॥ १९ ॥ स हि तारयितुं सौम्य शक्तः सुरगणानपि । किं पुनस्त्वां महाबाहो क्षुत्पिपासावशं गतम् ॥२०॥ सोऽहं भगवतः श्रुत्वा देवदेवस्य निश्चयम् । आहारं गर्हितं कुर्मि स्वशरीरं द्विजोत्तम ॥ २१ ॥ बहून् वर्षगणान् ब्रह्मन् भुज्यमानमिदं मया । क्षयं नाभ्येति ब्रह्मर्षे तृप्तिश्चापि ममोत्तमा ॥ २२ ॥ तस्य मे कृच्छ्रभूतस्य कृच्छ्रादस्माद्विमोचय । अन्येषां न गतिर्ह्यत्र कुम्भयोनिमृते द्विजम् ॥ २३ ॥ इदमाभरणं सौम्य तारणार्थं द्विजोत्तम । प्रतिगृह्णीष्व भद्रं ते प्रसादं कर्तुमर्हसि ॥ २४ ॥ इदं तावत् सुवर्णं च धनं वस्त्राणि च द्विज । भक्ष्यं भोज्यं च ब्रह्मर्षे ददात्याभरणानि च ॥ २५ ॥ सर्वान् कामान् प्रयच्छामि भोगांश्च मुनिपुङ्गव । तारणे भगवन् मह्यं प्रसादं कर्तुमर्हसि ॥ २६ ॥ तस्याहं स्वर्गिणो वाक्यं श्रुत्वा दुःखसमन्वितम् । तारणायोपजग्राह तदाभरणमुत्तमम् ॥ २७ ॥ मया प्रतिगृहीते तु तस्मिन्नाभरणे शुभे । मानुषः पूर्वको देहो राजर्षेर्विननाश ह ॥ २८ ॥ प्रनष्टे तु शरीरेऽसौ राजर्षिः परया मुदा । तृप्तः प्रमुदितो राजा जगाम त्रिदिवं सुखम् ॥ २९ ॥ तेनेदं शक्रतुल्येन दिव्यमाभरणं मम । तस्मिन्निमित्ते काकुत्स्थ दत्तमद्भुतदर्शनम् ॥ ३० ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे अष्टसप्ततितमः सर्गः ॥ ७८ ॥

तारणनिमित्ते । विननाश ह पुनर्भक्षणाय नोपस्थितमित्यर्थः ॥ २८–३० ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टसप्ततितमः सर्गः ॥ ७८ ॥

तदित्यादि । गौरवात् सर्वज्ञः सर्ववक्तेति संभावनया ॥ १ ॥ भगवन्निति । स यत्र तप्यति तद्वनं कथममृगद्विजम् ? ॥ २ ॥ तदिति । कथं तादृशं तद्वनं तपश्चर्तुं चरितुं प्रविष्टः ॥ ३ ॥ ४ ॥ पुरेति । दण्डधरो राजा प्रभुः वर्णाश्रमविभागतद्धर्मप्रवर्तनाधिकृतः ॥५–७॥ प्रीत इति । दण्डेन चेति । क्षत्रिय



तदद्भुततमं वाक्यं श्रुत्वाऽगस्त्यस्य राघवः । गौरवाद्विस्मयाच्चैव पुनः प्रष्टुं प्रचक्रमे ॥ १ ॥ भगवंस्तद्वनं घोरं तपस्तप्यति यत्र सः । श्वेतो वैदर्भको राजा कथं स्यादमृगद्विजम् ॥ २ ॥ तद्वनं स कथं राजा शून्यं मनुजवर्जितम् । तपश्चर्तुं प्रविष्टः स श्रोतुमिच्छामि तत्त्वतः ॥३॥ रामस्य वचनं श्रुत्वा कौतूहलसमन्वितम् । वाक्यं परमतेजस्वी वक्तुमेवोपचक्रमे ॥ ४ ॥ पुरा कृतयुगे राम मनुर्दण्डधरः प्रभुः । तस्य पुत्रो महानासीदिक्ष्वाकुः कुलनन्दनः ॥५॥ तं पुत्रं पूर्वकं राज्ये निक्षिप्य भुवि दुर्जयम् । पृथिव्यां राजवंशानां भव कर्तेत्युवाच ह ॥ ६ ॥ तथेति च प्रतिज्ञातं पितुः पुत्रेण राघव । ततः परमसन्तुष्टो मनुः पुत्रमुवाच ह ॥ ७ ॥ प्रीतोऽस्मि परमोदार त्वं कर्तासि न संशयः । दण्डेन च प्रजा रक्ष मा च दण्डमकारणे ॥ ८ ॥ अपराधिषु यो दण्डः पात्यते मानवेषु वै । स दण्डो विधिवन्मुक्तः स्वर्गं नयति पार्थिवम् ॥९॥ तस्माद्दण्डे महाबाहो यत्नवान् भव पुत्रक । धर्मो हि परमो लोके कुर्वतस्ते भविष्यति ॥ १० ॥ इति तं बहु सन्दिश्य मनुः पुत्रं समाधिना । जगाम त्रिदिवं हृष्टो ब्रह्मलोकं सनातनम् ॥ ११ ॥ प्रयाते त्रिदिवं तस्मिन्निक्ष्वाकुरमितप्रभः । जनयिष्ये कथं पुत्रानिति चिन्तापरोऽभवत् ॥ १२ ॥ कर्मभिर्बहुरूपैश्च तैस्तैर्मनुसुतः सुतान् । जनयामास धर्मात्मा शतं देवसुतोपमान् ॥ १३ ॥



सहजधर्मभूतेन । अकारणे दण्डं मा, पातयेति शेषः ॥ ८ ॥ ननु कथं परपीडावहो दण्डो युक्तः कर्तुमिति तत्राह–अपराधिष्वित्यादि । विधिवत् यथाशास्त्रम् यथापराधम् । मुक्तः प्रवर्तित इत्यर्थः ॥ ९ ॥ १० ॥ इतीति । समाधिना योगेन ॥११॥१२॥ कर्मभिरिति । बहुरूपैरिति । यज्ञदानतपो

लक्षणैरित्यर्थः ॥ १३ ॥ तेषामिति । पूर्वजाः ज्येष्ठाः ॥ १४ ॥ नामेति । दण्ड इत्याख्याकरणं पितुः सर्वज्ञत्वात् अन्वर्थतावसायपूर्वकमित्याह-अवश्यमित्यादि ॥१५॥१६॥ स इति । पर्वतरोधसि पर्वततटप्रान्ते ॥१७-२०॥ इति श्रीगोविन्दराज० उत्तरश्रीरामा० एकोनाशीतितमः सर्गः ॥७९॥

तेषामवरजस्तात सर्वेषां रघुनन्दन । मूढश्चाकृतविद्यश्च न शुश्रूषति पूर्वजान् ॥१४॥ नाम तस्य च दण्डेति पिता चक्रेऽल्पमेधसः । अवश्यं दण्डपतनं शरीरेऽस्य भविष्यति ॥१५॥ अपश्यमानस्तं देशं घोरं पुत्रस्य राघव । विन्ध्यशैवलयोर्मध्ये राज्यं प्रादादरिन्दम ॥ १६ ॥ स दण्डस्तत्र राजाऽभूद्रम्ये पर्वतरोधसि । पुरं चाप्रतिमं राम न्यवेशयदनुत्तमम् ॥ १७ ॥ पुरस्य चाकरोन्नाम मधुमन्तमिति प्रभो । पुरोहितं तूशनसं वरयामास सुव्रतम् ॥ १८ ॥ एवं स राजा तद्राज्यमकरोत् सपुरोहितः । प्रहृष्टमनुजाकीर्णं देवराज्यं यथा वृषा ॥ १९ ॥ ततः स राजा मनुजेन्द्रपुत्रः सार्धं च तेनोशनसा तदानीम् । चकार राज्यं सुमहन्महात्मा शक्रो दिवीवोशनसा समेतः ॥ २० ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे एकोनाशीतितमः सर्गः ॥ ७९ ॥

एतदाख्याय रामाय महर्षिः कुम्भसम्भवः । अस्यामेवापरं वाक्यं कथायामुपचक्रमे ॥ १ ॥
ततः स दण्डः काकुत्स्थ बहुवर्षगणायुतम् । अकरोत्तत्र दान्तात्मा राज्यं निहतकण्टकम् ॥ २ ॥
अथ काले तु कस्मिंश्चिद्राजा भार्गवमाश्रमम् । रमणीयमुपाक्रामच्चैत्रे मासि मनोहरे ॥ ३ ॥
तत्र भार्गवकन्यां स रूपेणाप्रतिमां भुवि । विचरन्तीं वनोद्देशे दण्डोऽपश्यदनुत्तमाम् ॥ ४ ॥
स दृष्ट्वा तां सुदुर्मेधा अनङ्गशरपीडितः । अभिगम्य सुसंविग्नां कन्यां वचनमब्रवीत् ॥ ५ ॥

एतदित्यादि । अस्यामेवापरं वाक्यमिति । प्रोक्तदानकथायामेव संबद्धम् अपरं तत्पृष्ठोत्तरभूतं कथान्तरमित्यर्थः ॥ १ ॥२॥ अथेति । भार्गवः शुक्रः

तस्यायमपि भार्गवः तम् ॥ ३–६ ॥ तस्येति । मोहेन काममोहेन उन्मत्तः उचितानुचितवचनकर्मविवेकरहितः ॥७–९॥ यदि वाऽन्यदित्यादि । यदि वाऽन्यत्कामभोगानुकूलम् ॥ १० ॥ अन्यथेति । घोराभिसंहितं महानर्थसंबद्धम् ॥ ११–१२ ॥ प्रसादमिति । कालं क्षेप्तुं विलम्बं कर्तुमित्यर्थः ॥१४॥

कुतस्त्वमसि सुश्रोणि कस्य वाऽसि सुता शुभे । पीडितोऽहमनङ्गेन गच्छामि त्वां शुभानने ॥ ६ ॥ तस्य चैवं ब्रुवाणस्य मोहोन्मत्तस्य कामिनः । भार्गवी प्रत्युवाचेदं वचः सानुनयं नृपम् ॥७॥ भार्गवस्य सुतां विद्धि देवस्याक्लिष्टकर्मणः । अरजां नाम राजेन्द्र ज्येष्ठामाश्रमवासिनीम् ॥ ८ ॥ मा मां स्पृश बलाद्राजन् कन्या पितृवशा ह्यहम् । गुरुः पिता मे राजेन्द्र त्वं च शिष्यो महात्मनः । व्यसनं सुमहत् क्रुद्धः स ते दद्यान्महातपाः ॥ ९ ॥ यदि वाऽन्यन्मया कार्यं धर्मदृष्टेन सत्पथा । वरयस्व नृपश्रेष्ठ पितरं मे महाद्युतिम् ॥१०॥ अन्यथा तु फलं तुभ्यं भवेद्घोराभिसंहितम् । क्रोधेन हि पिता मेऽसौ त्रैलोक्यमपि निर्दहेत् ॥ ११ ॥ दास्यते चानवद्याङ्ग तव मां याचितः पिता ॥ १२ ॥ एवं ब्रुवाणामरजां दण्डः कामवशं गतः । प्रत्युवाच मदोन्मत्तः शिरस्याधाय चाञ्जलिम् ॥१३॥ प्रसादं कुरु सुश्रोणि न कालं क्षेप्तुमर्हसि । त्वत्कृते हि मम प्राणा विदीर्यन्ते वरानने ॥१४॥ त्वां प्राप्य मे वधो वा स्याच्छापो वा यदि दारुणः । भक्तं भजस्व मां भीरु भजमानं सुविह्वलम् ॥ १५ ॥ एवमुक्त्वा तु तां कन्यां दोर्भ्यां गृह्य बलाद्बली । विस्फुरन्तीं यथाकामं मैथुनायोपचक्रमे ॥१६॥ एतमर्थं महाघोरं दण्डः कृत्वा सुदारुणम् । नगरं प्रययावाशु मधुमन्तमनुत्तमम् ॥ १७ ॥ अरजाऽपि रुदन्ती सा आश्रमस्याविदूरतः । प्रतीक्षन्ती सुसन्त्रस्ता पितरं देवसन्निभम् ॥ १८ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे अशीतितमः सर्गः ॥ ८० ॥



त्वामिति । त्वां प्राप्य मे यदि वधादिर्भवेत्, भवतु नामेति शेषः ॥ १५ ॥ एवमिति । विस्फुरन्तीं विलुठन्तीम् ॥ १६ ॥ १७ ॥ अरजाऽपीति । प्रतीक्षन्ती पितरम्, आस्त इति शेषः । प्रतीक्षते स्म संत्रस्तेति च पाठः ॥१८॥ इति श्रीगोविन्दराज० मणिमुक्त० उत्तरश्री० अशीतितमः सर्गः ॥८०॥

स मुहूर्तादित्यादि । उपश्रुत्येति, शिष्यमुखात् वृत्तान्तमिति शेषः ॥ १ ॥ स इति । प्रत्यूषे प्रातःकाले ॥ २ ॥३॥ पश्यध्वमिति । विपरीतस्य विपरीतानुष्ठानस्य । विपत्तिं विनाशम्, मत्क्रोधतो जायमानामिति शेषः । अग्निशिखामिव स्थितां क्रुद्धामरजाम् । क्रुद्धादग्निशिखामिवेति पाठे क्रुद्धान्मत्तो जायमानामग्निशिखासदृशीं विपत्तिं विनाशं पश्यध्वम् ॥ ४ ॥ क्षय इति । अस्य प्रातः क्षय इति योजना ॥ ५ ॥ शिखां वै स्प्रष्टुमिच्छतीत्युक्ता

स मुहूर्तादुपश्रुत्य देवर्षिरमितप्रभः । स्वमाश्रमं शिष्यवृतः क्षुधार्तः सन्न्यवर्तत ॥ १ ॥ सोऽपश्यदरजां दीनां रजसा समभिप्लुताम् । ज्योत्स्नामिवारुणग्रस्तां प्रत्यूषे न विराजतीम् ॥ २ ॥ तस्य रोषः समभवत् क्षुधार्तस्य विशेषतः । निर्दहन्निव लोकांस्त्रीन् शिष्यांश्चैतदुवाच ह ॥ ३ ॥ पश्यध्वं विपरीतस्य दण्डस्याविजितात्मनः । विपत्तिं घोरसङ्काशां क्रुद्धामग्निशिखामिव ॥ ४ ॥ क्षयोऽस्य दुर्मतेः प्रातः सानुगस्य दुरात्मनः । यः प्रदीप्तां हुताशस्य शिखां वै स्प्रष्टुमिच्छति ॥ ५॥ यस्मात् स कृतवान् पापमीदृशं घोरसंहितम् । तस्मात् प्राप्स्यति दुर्मेधाः फलं पापस्य कर्मणः ॥ ६ ॥ सप्तरात्रेण राजाऽसौ सभृत्यबलवाहनः । पापकर्मसमाचारो वधं प्राप्स्यति दुर्मतिः ॥ ७ ॥ समन्ताद्योजनशतं विषयं चास्य दुर्मतेः । धक्ष्यते पांसुवर्षेण महता पाकशासनः ॥ ८ ॥ सर्वसत्त्वानि यानीह स्थावराणि चराणि च । महता पांसुवर्षेण विलयं सर्वतोऽगमन् ॥९॥ दण्डस्य विषयो यावत्तावत् सर्वसमुच्छ्रयम् । पांसुवर्षमिवालक्ष्यं सप्तरात्रं भविष्यति ॥१०॥ इत्युक्त्वा क्रोधताम्राक्षस्तदाश्रमनिवासिनम् । जनं जनपदान्तेषु स्थीयतामिति चाब्रवीत् ॥ ११ ॥ श्रुत्वा तूशनसो वाक्यं सोऽश्रमावसथो जनः । निष्क्रान्तो विषयात्तस्मात् स्थानं चक्रेऽथ वाह्यतः ॥ १२ ॥

न्यापदेशार्थं विशदयति—यस्मादित्यादि । ईदृशमिति मत्पुत्रीधर्षणरूपमित्यर्थः ॥ ६ ॥ ७ ॥ समन्तादिति । धक्ष्यत इति, नाशयिष्यतीत्यर्थः ॥८॥ सर्वेति । विलयमगमन् गमिष्यन्तीति यावत् ॥९ ॥ दण्डस्येति । सर्वसमुच्छ्रयं चराचरप्राणिमात्रमित्यर्थः । उच्छ्रयत्यस्मादित्युच्छ्रयम् । पांसुवर्षमिवालक्ष्यमिति । पांसुवर्षं प्रसिद्धप्रलयपांसुमहावर्षमिव प्राप्य सप्तरात्रं सप्तरात्रपर्यन्तम् अलक्ष्यं भविष्यतीति । विनष्टपुरपौरजानपदकं भविष्यतीत्यर्थः ॥ १० ॥ इतीति । तदाश्रमवासिनमिति । स्वाश्रमनिवासिनमित्यर्थः । जनपदान्तेषु दण्डजनपदसीमान्तदेशेष्वित्यर्थः ॥ ११ ॥ श्रुत्वेति । सोश्रमावसथ इति

छान्दसः सन्धिः। एतावता कथं तदमृगद्विजमित्यस्योत्तरं निवृत्तम् ॥ १२ ॥ निर्जनं वनं कथं तपसे प्रविष्ट इत्यस्योत्तरमाह–स तथेत्यादि। तव समलत्वात् इहैव वसेति। वासप्रयोजनमाह–सुसमाहितेति। शोभनसमाधिमतीत्यर्थः। समाध्यनुष्ठानस्यापि निमित्तमाह–दुर्मेध इति। यस्माद्दर्पणसहिष्णुर्दुर्बुद्धिरसि, ततः तादृशमलमोचनार्थं समाधिमती सती वसेत्यर्थः ॥ १३ ॥ कथं वस्तुं शक्यं पांसुवर्षे इत्यत्राह–इदं योजनपर्यन्तमित्यादि॥१४॥

स तथोक्त्वा मुनिजनमरजामिदमब्रवीत्। इहैव वस दुर्मेधे आश्रमे सुसमाहिता ॥ १३ ॥ इदं योजनपर्यन्तं सरः सुरुचिरप्रभम्। अरजे विज्वरा भुङ्क्ष्व कालश्चात्र प्रतीक्ष्यताम् ॥ १४ ॥ त्वत्समीपे च ये सत्त्वा वासमेष्यन्ति तां निशाम्। अवध्याः पांसुवर्षेण ते भविष्यन्ति नित्यदा ॥ १५ ॥ श्रुत्वा नियोगं ब्रह्मर्षेः साऽरजा भार्गवी तदा। तथेति पितरं प्राह भार्गवं भृशदुःखिता। इत्युक्त्वा भार्गवो वासमन्यत्र समकारयत् ॥ १६ ॥ तच्च राज्यं नरेन्द्रस्य सभृत्यबलवाहनम्। सप्ताहाद्भस्मसाद्भूतं यथोक्तं ब्रह्मवादिना ॥ १७ ॥ तस्यासौ दण्डविषयो विन्ध्यशैवलयोर्नृप। शप्तो ब्रह्मर्षिणा तेन वैधर्म्ये सहिते कृते ॥ १८ ॥ ततः प्रभृति काकुत्स्थ दण्डकारण्यमुच्यते। तपस्विनः स्थिता ह्यत्र जनस्थानमतोऽभवत् ॥ १९ ॥ एतत्ते सर्वमाख्यातं यन्मां पृच्छसि राघव। सन्ध्यामुपासितुं वीर समयो ह्यतिवर्तते ॥ २० ॥ एते महर्षयः सर्वे पूर्णकुम्भाः समन्ततः। कृतोदका नरव्याघ्र आदित्यं पर्युपासते ॥ २१ ॥

त्वत्समीप इति। सत्त्वाः पक्ष्यादयः। एवं चोशनसोऽनुग्रहेण सरःप्रदेशस्य सुखावहत्वात्सुखवासत्वाच्चात्र तपसे प्रविष्ट इति भावः ॥१५–१७॥ तस्येति। तस्यासौ। व्यत्ययात् षष्ठी। सोऽसावित्यर्थः। सहिते पूर्णधर्मपूर्णसौख्यसहित इत्यर्थः। कृते कृतयुगे ॥१८–२०॥ एत इति। कृतोदकाः कृतस्नानादि



स०–हे दुर्मेधे दुर्मेधः! दुर्मेधे ति (द्व) येङ्गादिमत्याश्रमे इति वा। असिद्‌ बुद्धिपर्यायमेधाशब्दस्येति ज्ञायते। स्त्रीलिङ्गप्रजाशब्दसाहचर्यात्। यद्वाप्ययं पुंल्लिङ्गः। "मेधः, क्रतौ स्त्रियां मेधा मतौ" इति विश्वः। एतत्पापपरिहारार्थं सुसमाहिता ह्याश्रमे वस ॥ १३ ॥

कर्माण इत्यर्थः ॥ २१ ॥ स तैरिति । स रविः ब्रह्मवित्तमैः तीर्थसमीपे सहितैः संगतैस्तैर्ऋषिभिरभ्यस्तं ब्राह्मणं ब्रह्ममन्त्रतन्त्रयोगाभ्यासलक्षणपूजाम्, प्राप्येति शेषः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकाशीतितमः सर्गः ॥ ८१ ॥

स तैर्ब्राह्मणमभ्यस्तं सहितैर्ब्रह्मवित्तमैः । रविरस्तं गतो राम गच्छोदकमुपस्पृश ॥ २२ ॥
इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे एकाशीतितमः सर्गः ॥ ८१ ॥

ऋषेर्वचनमाज्ञाय रामः सन्ध्यामुपासितुम् । उपाक्रमत् सरः पुण्यमप्सरोगणसेवितम् ॥ १ ॥ तत्रोदकमुपस्पृश्य सन्ध्यामन्वास्य पश्चिमाम् । आश्रमं प्राविशद्रामः कुम्भयोनेर्महात्मनः ॥ २ ॥ तस्यागस्त्यो बहुगुणं कन्दमूलं तथौषधिम् । शाल्यादीनि पवित्राणि भोजनार्थमकल्पयत् ॥ ३ ॥ स भुक्तवान्नरश्रेष्ठस्तदन्नममृतोपमम् । प्रीतश्च परितुष्टश्च तां रात्रिं समुपाविशत् ॥४॥ प्रभाते काल्यमुत्थाय कृत्वाऽऽह्निकमरिन्दमः । ऋषिं समुपचक्राम गमनाय रघूत्तमः ॥ ५ ॥ अभिवाद्याब्रवीद्रामो महर्षिं कुम्भसम्भवम् । आपृच्छे त्वां पुरीं गन्तुं मामनुज्ञातुमर्हसि ॥ ६ ॥ धन्योऽस्म्यनुगृहीतोऽस्मि दर्शनेन महात्मनः । द्रष्टुं चैवागमिष्यामि पावनार्थमिहात्मनः ॥ ७ ॥

ऋषेरित्यादि ॥ १ ॥ २ ॥ तस्येति । कन्दमूलं कन्दरूपं मूलं कन्दमूलम् । तथा ओषधिं दिव्यौषधिरूपम्, जरापलितघ्नमित्यर्थः । एवं बहुगुणप्रयोजनार्थं ददौ । भोजनार्थं तु शालिपवित्राणि पवित्रशाल्यन्नानीत्यर्थः ॥ ३ ॥ ४ ॥ प्रभात इति । काल्यं प्रातःकालिकमाह्निकं कृत्वा । गमनायेति । गमनानुज्ञार्थमित्यर्थः ॥५॥६॥ धन्य इति । आगमिष्यामीति । अतः परमपि यदाऽऽकाङ्क्षा तदा आत्मनः पावनार्थमागमिष्यामीत्युक्तवानित्यर्थः ॥७॥

स० -कन्दमूलं कन्दरूपं मूलमिति नागोजिभट्टः । कन्दः सूरणादिः । "कन्दस्तु सूरणे सस्यमूले जलधरेऽपि च" इति विश्वः । मूलं शिफा "मूलमाद्ये शिफायां च" इति च विश्वः । औषधम् आरोग्यदममृतवल्ल्यादि । शाल्यादीनि दिव्यतण्डुलादीनि ॥ ३ ॥ आपृच्छे "आङि नुप्रच्छ्योः" इत्यात्मनेपदता । स्वाश्रमं स्वनगरीम् । सीतां लोकरीत्या त्यक्तवतो रामस्य विरक्तिवशात्स्वाश्रममित्युक्तिरिति मन्तव्यम् । आपृच्छे स्वाश्रमं गन्तुम् इति पाठः ॥ ६ ॥ पावनार्थं लोकदृष्ट्या मम, आन्तरिक्तया तव पावनार्थमित्यर्थः ॥ ७ ॥

तथेति । परमप्रीत इति, एवं विनयवचनादिति शेषः । धर्मनेत्र इति । धर्मो नेत्रं ज्ञानसाधनं यस्य स तथा ॥ ८ ॥ ९ ॥ मुहूर्तमिति । स्वर्गभूताः स्वर्गं प्राप्ताः ॥ १० ॥ ११ ॥ ईदृश इति । सिद्धिं परमं तत्त्वं ब्रह्मभावम् ॥ १२ ॥ गच्छेति । अरिष्टं सुखम् ॥ १३ ॥ एवमिति । प्रग्रहः उद्यतबाहुः॥१४–१७॥



तथा वदति काकुत्स्थे वाक्यमद्भुतदर्शनम् । उवाच परमप्रीतो धर्मनेत्रस्तपोधनः ॥ ८ ॥ अत्यद्भुतमिदं वाक्यं तव राम शुभाक्षरम् । पावनः सर्वभूतानां त्वमेव रघुनन्दन ॥ ९ ॥ मुहूर्तमपि राम त्वां ये च पश्यन्ति केचन । पाविताः स्वर्गभूताश्च पूज्यास्ते सर्वदैवतैः ॥१०॥ ये च त्वां घोरचक्षुर्भिः पश्यन्ति प्राणिनो भुवि । हतास्ते यमदण्डेन सद्यो निरयगामिनः ॥११॥ ईदृशस्त्वं रघुश्रेष्ठ पावनः सर्वदेहिनाम् । भुवि त्वां कथयन्तोऽपि सिद्धिमेष्यन्ति राघव ॥ १२ ॥ गच्छ चारिष्टमव्यग्रः पन्थानमकुतोभयम् । प्रशाधि राज्यं धर्मेण गतिर्हि जगतो भवान् ॥१३॥ एवमुक्तस्तु मुनिना प्राञ्जलिः प्रग्रहो नृपः । अभ्यवादयत प्राज्ञस्तमृषिं पुण्यशालिनम् ॥ १४ ॥ अभिवाद्य मुनिश्रेष्ठं तांश्च सर्वांस्तपोधनान् । अध्यारोहत्तदव्यग्रः पुष्पकं हेमभूषितम् ॥ १५ ॥ तं प्रयान्तं मुनिगणा ह्याशीर्वादैः समन्ततः । अपूजयन् महेन्द्राभं सहस्राक्षमिवामराः ॥१६॥ स्वस्थः स ददृशे रामः पुष्पके हेमभूषिते । शशी मेघसमीपस्थो यथा जलधरागमे ॥ १७ ॥ ततोऽर्धदिवसे प्राप्ते पूज्यमानस्ततस्ततः । अयोध्यां प्राप्य काकुत्स्थो मध्यकक्ष्यामवारुहत् ॥१८॥ ततो विसृज्य रुचिरं पुष्पकं कामगामि तत् । विसर्जयित्वा गच्छेति स्वस्ति तेऽस्त्विति च प्रभुः ॥ १९ ॥ कक्ष्यान्तरविनिक्षिप्तं द्वाःस्थं रामोऽब्रवीद्वचः । लक्ष्मणं भरतं चैव गत्वा तौ लघुविक्रमौ । ममागमनमाख्याय शब्दापयत मा चिरम्॥२०॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे द्व्यशीतितमः सर्गः॥८२॥



तत इति । मध्यकक्ष्याम्, प्राप्येति शेषः ॥ १८ ॥ १९॥ कक्ष्यान्तरेति । विनिक्षिप्तं योजितमिति यावत् । शब्दापयतेति पुगार्षः । आत्मानं शब्दवन्तं कुर्वित्यर्थः । बहुवचनमार्षम् ॥ २० ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्व्यशीतितमः सर्गः ॥ ८२ ॥

तच्छ्रुत्वेत्यादि ॥१॥२॥ कृतमिति । द्विजकार्यं यथा प्रतिज्ञातं तत्तथा तथ्यं कृतम्, बालो जीवित इत्यर्थः । धर्मसेतुं राजधर्ममर्यादाभूतं राजसूयमित्यर्थः ॥ ३ ॥ अक्षय्य इति । धर्मप्रसाधकं धर्मवर्धकमित्यर्थः । धर्मप्रवचनमिति च पाठः ॥ ४ ॥ युवाभ्यामिति । तत्र धर्मो हि शाश्वत इति । तत्र राजसूये । क्षत्रियस्यासाधारणः अक्षयकीर्तिहेतुर्धर्म इत्यर्थः ॥ ५–७ ॥ अस्मिन्निति । हितम् इह लोके सुखम् । आयतियुक्तम्, उत्तरः काल आयतिः, उत्तरकाले

तच्छ्रुत्वा भाषितं तस्य रामस्याक्लिष्टकर्मणः । द्वास्स्थः कुमारावाहूय राघवाय न्यवेदयत् ॥ १ ॥ दृष्ट्वा तु राघवः प्राप्तौ प्रियौ भरतलक्ष्मणौ । परिष्वज्य तदा रामो वाक्यमेतदुवाच ह ॥ २ ॥ कृतं मया यथा तथ्यं द्विजकार्यमनुत्तमम् । धर्मसेतुमतो भूयः कर्तुमिच्छामि राघवौ ॥ ३ ॥ अक्षय्यश्चाव्ययश्चैव धर्मसेतुर्मतो मम । धर्मप्रसाधकं ह्येतत् सर्वपापप्रणाशनम् ॥ ४ ॥ युवाभ्यामात्मभूताभ्यां राजसूयमनुत्तमम् । सहितो यष्टुमिच्छामि तत्र धर्मो हि शाश्वतः ॥ ५ ॥ इष्ट्वा तु राजसूयेन मित्रः शत्रुनिबर्हणः । सुहुतेन सुयज्ञेन वरुणत्वमुपागमत् ॥ ६ ॥ सोमश्च राजसूयेन इष्ट्वा धर्मेण धर्मवित् । प्राप्तश्च सर्वलोकेषु कीर्तिस्थानं च शाश्वतम् ॥ ७ ॥ अस्मिन्नहनि यच्छ्रेयश्चिन्त्यतां तन्मया सह । हितं चायतियुक्तं च प्रयतौ कर्तुमर्हथः ॥ ८ ॥ श्रुत्वा तु राघवस्यैतद्वाक्यं वाक्यविशारदः । भरतः प्राञ्जलिर्भूत्वा वाक्यमेतदुवाच ह ॥ ९ ॥ त्वयि धर्मः परः साधो त्वयि सर्वा वसुन्धरा । प्रतिष्ठिता महाबाहो यशश्चामितविक्रम ॥ १० ॥ महीपालाश्च सर्वे त्वां प्रजापतिमिवामराः । निरीक्षन्ते महात्मानं लोकनाथं यथा वयम् ॥ ११ ॥ प्रजाश्च पितृवद्राजन् पश्यन्ति त्वां महाबल । पृथिव्या गतिभूतोऽसि प्राणिनामपि राघव ॥ १२ ॥

च हितमित्यर्थः ॥ ८ ॥ ९ ॥ त्वयीति । सर्वा वसुंधरा प्रतिष्ठितेति । सार्वभौमत्वादिति भावः ॥१०॥११॥ प्रजा इति । पितृवत् पितरमिव ॥१२–१४॥

स०—कुमारौ लक्ष्मणभरतौ । द्वास्थः । तन्मध्ये मुख्य इत्येकवचनमिति वाऽवसेयम् ॥ १ ॥ धर्मसेतुं 'राजा राजसूयेन यजेत' इत्यादिबोधितराजमर्यादारूपं कर्म । "यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥" इत्युक्तेरीश्वरस्यापीतरप्रवृत्तये कर्मानुष्ठानं विहितमिति कर्तुमिच्छामीत्युक्तिः । नत्वप्राप्तफललाभार्थमिति भावः । हे राघवौ ! ॥ ३ ॥

स त्वमिति । तव वशे वर्तते तव स्वाधीने वर्तत इत्यर्थः ॥ १६-१८ ॥ एष्यदिति । एष्यदस्मदभिप्रायात् अस्मदभिप्रायमेष्यतः मामकचिकीर्षामागमिष्यत इत्यर्थः ॥ १९ ॥ २० ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्र्यशीतितमः सर्गः ॥ ८३ ॥





स त्वमेवंविधं यज्ञमाहर्तासि कथं नृप । पृथिव्यां राजवंशानां विनाशो यत्र दृश्यते ॥ १३ ॥ पृथिव्यां ये च पुरुषा राजन् पौरुषमागताः । सर्वेषां भविता तत्र संक्षयः सर्वकोपजः ॥ १४ ॥ स त्वं पुरुषशार्दूल गुणैरतुलविक्रम । पृथिवीं नार्हसे हन्तुं वशे हि तव वर्तते ॥ १५ ॥ भरतस्य तु तद्वाक्यं श्रुत्वाऽमृतमयं तदा । प्रहर्षमतुलं लेभे रामः सत्यपराक्रमः ॥ १६ ॥ उवाच च शुभं वाक्यं कैकेय्यानन्दवर्धनम् । प्रीतोऽस्मि परितुष्टोऽस्मि तवाद्य वचनेऽनघ ॥१७॥ इदं वचनमक्लीबं त्वया धर्मसमाहितम् । व्याहृतं पुरुषव्याघ्र पृथिव्याः परिपालनम् ॥१८॥ एष्यदस्मदभिप्रायाद्राजसूयात् क्रतूत्तमात् । निवर्तयामि धर्मज्ञ तव सुव्याहृतेन च ॥ १९ ॥ लोकपीडाकरं कर्म न कर्तव्यं विचक्षणैः । बालानां तु शुभं वाक्यं ग्राह्यं लक्ष्मणपूर्वज । तस्माच्छृणोमि ते वाक्यं साधुयुक्तं महामते ॥ २० ॥

इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे त्र्यशीतितमः सर्गः ॥ ८३ ॥

तथोक्तवति रामे तु भरते च महात्मनि । लक्ष्मणोऽथ शुभं वाक्यमुवाच रघुनन्दनम् ॥१॥ अश्वमेधो महायज्ञः पावनः सर्वपाप्मनाम् । पावनस्तव दुर्धर्षो रोचतां रघुनन्दन ॥ २ ॥ श्रूयते हि पुरावृत्तं वासवे सुमहात्मनि । ब्रह्महत्यावृतः शक्रो हयमेधेन पावितः ॥ ३ ॥ पुरा किल महाबाहो देवासुरसमागमे । वृत्रो नाम महानासीद्दैतेयो लोकसंमतः ॥ ४ ॥ विस्तीर्णो योजनशतमुच्छ्रितस्त्रिगुणं ततः । अनुरागेण लोकांस्त्रीन् स्नेहात् पश्यति सर्वतः ॥ ५ ॥



तथोक्तवतीत्यादि ॥ १ ॥ अश्वमेध इति । रोचतामित्यादि, अनुष्ठातुमिति शेषः । " सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते " इति श्रुतेः ॥ २ ॥ एवमश्वमेधस्य ब्रह्महत्यान्तसर्वपापशोधकत्वे पुरावृत्तकथनम्—श्रूयते हीत्यादि ॥ ३ ॥ ४ ॥ विस्तीर्ण इति । ततस्त्रिगुणमिति । योजन

शतत्रयमित्यर्थः । अनुरागेण स्वीयत्वाभिमानेन हेतुना, स्नेहात् ॥५–८॥ तस्येति । इतरत्सुखमिति । वैषयिकसुखमित्यर्थः ॥ ९ ॥ स इति । मधुरः सौम्यश्चासावीश्वरश्च मधुरेश्वरः तम् । मधुराया नगर्या ईश्वरं वा ॥ १० ॥ तप इति । परमार्तवत् परमार्तः सन् ॥ ११ ॥ १२ ॥ यदीति । भूय एव

धर्मज्ञश्च कृतज्ञश्च बुद्ध्या च परिनिष्ठितः । शशास पृथिवीं स्फीतां धर्मेण सुसमाहितः ॥ ६ ॥ तस्मिन् प्रशासति तदा सर्वकामदुघा मही । रसवन्ति प्रसूनानि मूलानि च फलानि च ॥७॥ अकृष्टपच्या पृथिवी सुसम्पन्ना महात्मनः। स राज्य तादृशं भुङ्क्ते स्फीतमद्भुतदर्शनम् ॥८॥ तस्य बुद्धिः समुत्पन्ना तपः कुर्यामनुत्तमम् । तपो हि परमं श्रेयः संमोहमितरत् सुखम् ॥९॥ स निक्षिप्य सुतं ज्येष्ठं पौरेषु मधुरेश्वरम् । तप उग्रं समातिष्ठत्तापयन् सर्वदेवताः॥१०॥ तपस्तप्यति वृत्रे तु वासवः परमार्तवत् । विष्णुं समुपसंक्रम्य वाक्यमेतदुवाच ह ॥११॥ तपस्यता महाबाहो लोका वृत्रेण निर्जिताः । बलवान् स हि धर्मात्मा नैनं शक्ष्यामि शासितुम् ॥१२॥ यद्यसौ तप आतिष्ठेद्भूय एवासुरेश्वरः । यावल्लोका धरिष्यन्ति तावदस्य वशानुगाः ॥१३॥ तं चैनं परमोदारमुपेक्षसि महाबलम् । क्षणं हि न भवेद् वृत्रः क्रुद्धे त्वयि सुरेश्वर ॥ १४ ॥ यदा हि प्रीतिसंयोगं त्वया विष्णो समागतः । तदाप्रभृति लोकानां नाथत्वमुपलब्धवान् ॥ १५ ॥ स त्वं प्रसादं देवानां कुरुष्व सुसमाहितः । त्वत्कृतेन हि सर्वं स्यात् प्रशान्तमरुजं जगत् ॥१६॥ इमे हि सर्वे विष्णो त्वां निरीक्षन्ते दिवौकसः । वृत्रघातेन महता त्वेषां साह्यं कुरुष्व ह ॥ १७ ॥ त्वया हि नित्यशः साह्य कृतमेषां महात्मनाम् । असह्यमिदमन्येषामगतीनां गतिर्भवान् ॥ १८ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे चतुरशीतितमः सर्गः ॥ ८४ ॥

अतः परमपीत्यर्थः । भूतजातमपीति शेषः ॥ १३ ॥ तं चेति । क्षणमपि न भवेत् न जीवेदित्यर्थः ॥१४॥ यदा हीति । उपलब्धवान्, वृत्र इति शेषः ॥ १५ ॥ स त्वमिति । रक्षणेनेति शेषः ॥ १६ ॥ इमे हीति । वृत्रघातेन हेतुना साह्यम् उपकारं कुरु । हशब्दः पादपूरकः ॥ १७ ॥ त्वया हीति ।

अन्येषामिदमसह्यम् । अन्येषामसुराणां यद्यपि [illegible] गतिः, तस्मात् ॥ १८ ॥ इति श्रीगोविन्दराज विरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुरशीतितमः सर्गः ॥ ८४ ॥



लक्ष्मणस्य तु तद्वाक्यं श्रुत्वा शत्रुनिबर्हणः । वृत्रघातमशेषेण कथयेत्याह सुव्रत ॥१॥ राघवेणैवमुक्तस्तु सुमित्रानन्दवर्धनः । भूय एव कथां दिव्यां कथयामास सुव्रतः ॥ २ ॥ सहस्राक्षवचः श्रुत्वा सर्वेषां च दिवौकसाम् । विष्णुर्देवानुवाचेदं सर्वानिन्द्रपुरोगमान् ॥ ३ ॥ पूर्वं सौहृदबद्धोऽस्मि वृत्रस्य तु महात्मनः । तेन युष्मत्प्रियार्थं हि नाहं हन्मि महासुरम् ॥ ४ ॥ अवश्यं करणीयं च भवतां सुखमुत्तमम् । तस्मादुपायमाख्यास्ये येन वृत्रो निहन्यते ॥ ५ ॥ त्रिधाभूतं करिष्यामि ह्यात्मानं सुरसत्तमाः । तेन वृत्रं सहस्राक्षो वधिष्यति न संशयः ॥६॥ एकांशो वासवं यातु द्वितीयो वज्रमेव तु । तृतीयो भूतलं शक्रस्तदा वृत्रं वधिष्यति ॥ ७ ॥ तथा ब्रुवति देवेशे देवा वाक्यमथाब्रुवन् । एवमेतन्न सन्देहो यथा वदसि दैत्यहन् ॥ ८ ॥ भद्रं तेऽस्तु गमिष्यामो वृत्रासुरवधैषिणः । भजस्व परमोदार वासवं स्वेन तेजसा ॥ ९ ॥ ततः सर्वे महात्मानः सहस्राक्षपुरोगमाः । तदरण्यमुपाक्रामन् यत्र वृत्रो महासुरः ॥ १० ॥ तेऽपश्यंस्तेजसा भूतं तप्यन्तमसुरोत्तमम् । पिबन्तमिव लोकांस्त्रीन्निर्दहन्तमिवाम्बरम् ॥ ११ ॥

लक्ष्मणस्येत्यादि ॥ १–३ ॥ पूर्वमिति । सौहृदबद्धः भक्तिबद्धः । पूर्वमिति । युष्माभिस्तद्वधप्रार्थनात्पूर्वमित्यर्थः ॥ ४ ॥ ५ ॥ त्रिधेति । त्रिधाभूतं त्रेधा विभक्तमित्यर्थः ॥ ६ ॥ एकांश इति । तृतीयो भूतलं यात्विति । वृत्रदेहधारणशक्तिसिद्ध्यर्थम् इन्द्रस्य वृत्रहननजब्रह्महत्यावाधानिवृत्तिर्यावद्धरां रक्षणार्थं चेत्यर्थः ॥ ७–१० ॥ त इति । भूतं व्याप्तम् । पिबन्तमित्यादिकं तेजोदुर्धर्षत्वपरम् ॥ ११–१३ ॥

स०–सर्वज्ञाय मया शैशवेन किञ्चिदुदन्वितं नोदयनीयमिति लज्जयोपरतं लक्ष्मणं विदितत्रेधोऽपि प्रेमविशेषेण श्रोतुकामो राम आह–वृत्रघातमिति ॥१॥ प्रकृतोपयोगितया दिव्याम् ॥२॥ सुहृदां भावः सौहार्दम् । "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः । क्वचित्सौहृदबद्ध इति दृश्यते । तत्राप्यच्छन्दःपीडाया एवमेव सुपठम् ॥ ४ ॥

कालाग्निनेति। तप्तेन दीप्यमानेन। "तप सन्तापदीप्त्योः" इति धातुः। दीप्तेनेति च पाठः। वज्रेण छेदनहेतुना पतता वृत्रशिरसा जगत्त्रासमुपागमत् ॥ १४ ॥ असंभाव्यमिति। असंभाव्यमनपराधिनस्तप्यतो वृत्रस्य वधमसंभाव्यमनुचितं कृतमिति चिन्तयानो विबुधाधिपः लोकस्यान्तमन्त

दृष्ट्वैव चासुरश्रेष्ठं देवास्त्रासमुपागमन्। कथमेनं वधिष्यामः कथं न स्यात् पराजयः॥१२॥ तेषां चिन्तयतां तत्र सहस्राक्षः पुरन्दरः। वज्रं प्रगृह्य पाणिभ्यां प्राहिणोद्वृत्रमूर्धनि ॥ १३ ॥ कालाग्निनेव घोरेण तप्तेनैव महार्चिषा। पतता वृत्रशिरसा जगत् त्रासमुपागमत् ॥१४॥ असम्भाव्यं वधं तस्य वृत्रस्य विबुधाधिपः। चिन्तयानो जगामाशु लोकस्यान्तं महायशाः ॥ १५ ॥ तमिन्द्रं ब्रह्महत्याऽऽशु गच्छन्तमनुगच्छति। अपतच्चास्य गात्रेषु तमिन्द्रं दुःखमाविशत् ॥१६॥ हतारयः प्रनष्टेन्द्रा देवाः साग्निपुरोगमाः। विष्णुं त्रिभुवनेशानं मुहुर्मुहुरपूजयन् ॥ १७॥ त्वं गतिः परमेशान पूर्वजो जगतः पिता। रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ॥ १८॥ हतश्चायं त्वया वृत्रो ब्रह्महत्या च वासवम्। बाधते सुरशार्दूल मोक्षं तस्या विनिर्दिश ॥ १९ ॥ तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत्। मामेव यजतां शक्रः पावयिष्यामि वज्रिणम् ॥ २०॥ पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः। पुनरेष्यति देवानामिन्द्रत्वमकुतोभयम् ॥२१॥ एवं संदिश्य तां वाणीं देवानाममृतोपमाम्। जगाम विष्णुर्देवेशः स्तूयमानस्त्रिविष्टपम् ॥२२॥

इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

प्रदेशं लोकालोकात्परं तमःप्रदेशं जगाम। ब्रह्महत्याभिया पलायितोऽभूत् ॥ १५ ॥ तमिति। तं पलायमानमिन्द्रम्। ब्रह्महत्या, त्वष्ट्रा मुनिना वृत्रस्योत्पादितत्वात्। अस्य गात्रेष्वपतच्च, ब्रह्महत्येति शेषः। तमिन्द्रं ब्रह्महत्याग्रस्तमिन्द्रमित्यर्थः॥ १६–२२॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चाशीतितमः सर्गः ॥ ८५ ॥

स०—पराजयः परामवः कथं न स्यात्, एनं कथं वधिष्याम इति चिन्तयतामित्युत्तरेणान्वयः। पाणिभ्याम् अन्तर्निविष्टविध्वंशपाणिरेकः एकः स्वपाणिरिति दक्षिणाभ्यां पाणिभ्यामित्यर्थः। "महतो वज्रस्य समगवदंशस्य वामास्पृश्यत्वात्। मयेद्भगवदंशाभावे बाहुर्यद्दुरप्यकिंचित्करः। तदनुग्रहे चैक एवालमिति व्याख्यानमिदं समञ्जसमिति भावः। "अयं मे हस्तो भगवान्" इति श्रुतेः ॥ १२ ॥ १३ ॥

तदा वृत्रेत्यादि । कथाशेषम्, वक्तुमिति शेषः ॥ १ ॥ तत इति । न संज्ञां लेभ इति । अहग्रस्तवदप्रकाशोऽभूदित्यर्थः ॥२॥ स इति । कंचित्कालमित्यन्वयः ॥ ३ ॥ अथेति । नष्टे अदृष्टे । उद्विग्नमिति, अराजकत्वादिति शेषः । निस्स्नेहा अनार्द्रा ॥ ४ ॥ निस्स्रोतस इति । अनावृष्टिकृत इति । इन्द्रा

तदा वृत्रवधं सर्वमखिलेन स लक्ष्मणः । कथयित्वा नरश्रेष्ठः कथाशेषं प्रचक्रमे ॥ १ ॥ ततो हते महावीर्ये वृत्रे देवभयङ्करे । ब्रह्महत्यावृतः शक्रः संज्ञां लेभे न वृत्रहा ॥ २ ॥ सोऽन्तमाश्रित्य लोकानां नष्टसंज्ञो विचेतनः । कालं तत्रावसत् कश्चिद्वेष्टमान इवोरगः ॥३॥ अथ नष्टे सहस्राक्षे उद्विग्नमभवज्जगत् । भूमिश्च ध्वस्तसङ्काशा निस्स्नेहा शुष्ककानना ॥ ४ ॥ निस्स्रोतसश्च ते सर्वे ह्रदाश्च सरितस्तथा । संक्षोभश्चैव सत्त्वानामनावृष्टिकृतोऽभवत् ॥ ५ ॥ क्षीयमाणे तु लोकेऽस्मिन् सम्भ्रान्तमनसः सुराः । यदुक्तं विष्णुना पूर्वं तं यज्ञं समुपानयन् ॥ ६ ॥ ततः सर्वे सुरगणाः सोपाध्यायाः सहर्षिभिः । तं देशं समुपाजग्मुर्यत्रेन्द्रो भयमोहितः ॥ ७ ॥ ते तु दृष्ट्वा सहस्राक्षमावृतं ब्रह्महत्यया । तं पुरस्कृत्य देवेशमश्वमेधमुपाक्रमन् ॥८॥ ततोऽश्वमेधः सुमहान् महेन्द्रस्य महात्मनः । ववृधे ब्रह्महत्यायाः पावनार्थं नरेश्वर ॥ ९ ॥ ततो यज्ञे समाप्ते तु ब्रह्महत्या महात्मनः । अभिगम्याब्रवीद्वाक्यं क मे स्थानं विधास्यथ ॥ १० ॥ ते तामूचुस्तदा देवास्तुष्टाः प्रीतिसमन्विताः । चतुर्धा विभजात्मानमात्मनैव दुरासदे ॥११॥ देवानां भाषितं श्रुत्वा ब्रह्महत्या महात्मनाम् । सन्निधौ स्थानमन्यत्र वरयामास दुर्वसा ॥१२॥ एकेनांशेन वत्स्यामि पूर्णोदासु नदीषु वै । चतुरो वार्षिकान् मासान् दर्पघ्नी कामचारिणी ॥ १३ ॥

भावमूलानावृष्टिकृत इत्यर्थः ॥ ५ ॥ क्षीयमाण इति । समुपानयन् संपादयन्ति स्म ॥ ६ ॥ ७ ॥ त इति । तं देवेशमिति, विष्णुमित्यर्थः ॥८–१०॥ त इति । हे दुरासदे, ब्रह्महत्ये ! इति शेषः ॥११॥ देवानामिति । सन्निधौ देवानां सन्निधौ । सन्दधाविति पाठे चतुर्धा विभागं संपादितवतीत्यर्थः । अन्यत्र महेन्द्रादन्यत्र । दुर्वसा महेन्द्रे दुर्वसा ॥ १२ ॥ एकेनेति । चतुर इति । "सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः" इति स्मरणात् । "पक्षा वै मासाः"

इति पक्षानुसारेण चतुष्ट्वात् । दर्पघ्नी, अपुण्यकृतामिति शेषः । कामवारिणी, स्नातुमिच्छतामिति शेषः । कामचारिणीति च पाठः ॥ १३ ॥ १४ ॥ योग्यमिति । दर्पघातिनी पुरुषसंभोगसुखहारिणीति भावः ॥ १५–२१ ॥ इति श्रीगोविन्दराज० मणिमुकुटा० उत्तरश्री० षडशीतितमः सर्गः ॥८६॥

भूम्यामहं सर्वकालमेकेनांशेन दुर्वसा । वसिष्यामि न सन्देहः सत्येनैतद्ब्रवीमि वः ॥१४॥ योऽयमंशस्तृतीयो मे स्त्रीषु यौवनशालिषु । त्रिरात्रं दर्पपूर्णासु वसिष्ये दर्पघातिनी ॥ १५ ॥ हन्तारो ब्राह्मणान् ये तु मृषापूर्वमदूषकान् । तांश्चतुर्थेन भागेन संश्रयिष्ये सुरर्षभाः ॥१६॥ प्रत्यूचुस्तां ततो देवा यथा वदसि दुर्वसे । तथा भवतु तत्सर्वं साधयस्व यदीप्सितम् ॥ १७ ॥ ततः प्रीत्याऽन्विता देवाः सहस्राक्षं ववन्दिरे । विज्वरः स च पूतात्मा वासवः समपद्यत ॥१८॥ प्रशान्तं च जगत् सर्वं सहस्राक्षे प्रतिष्ठिते । यज्ञं चाद्भुतसङ्काशं तदा शक्रोऽभ्यपूजयत् ॥ १९ ॥ ईदृशो ह्यश्वमेधस्य प्रभावो रघुनन्दन । यजस्व सुमहाभाग हयमेधेन पार्थिव ॥ २० ॥ इति लक्ष्मणवाक्यमुत्तमं नृपतिरतीव मनोहरं महात्मा । परितोषमवाप हृष्टचेता निशमय्येन्द्रसमानविक्रमौजाः ॥२१॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे षडशीतितमः सर्गः ॥ ८६ ॥

तच्छ्रुत्वा लक्ष्मणेनोक्तं वाक्यं वाक्यविशारदः । प्रत्युवाच महातेजाः प्रहसन् राघवो वचः ॥ १ ॥ एवमेव नरश्रेष्ठ यथा वदसि लक्ष्मण । वृत्रघातमशेषेण वाजिमेधफलं च यत् ॥ २ ॥ श्रूयते हि पुरा सौम्य कर्दमस्य प्रजापतेः । पुत्रो बाह्लीश्वरः श्रीमानिलो नाम महायशाः ॥३ ॥ स राजा पृथिवीं सर्वां वशे कृत्वा सुधार्मिकः । राज्यं चैव नरव्याघ्र पुत्रवत् पर्यपालयत् ॥४॥ सुरैश्च परमोदारैर्दैतेयैश्च महाधनैः । नागराक्षसगन्धर्वैर्यक्षैश्च सुमहात्मभिः ॥ ५ ॥

तच्छ्रुत्वेत्यादि । अश्वमेधवैभवं स्वयमपि जानामीति प्रहासः ॥ १ ॥ २ ॥ अथ वृषध्वजप्रियं विष्णवाराधनरूपं हयमेधं श्रावयितुं राम उपक्रमते–श्रूयत

इत्यादि । बाह्लिर्देशविशेषः ॥ ३–५ ॥ पूज्यत इति । भयातेरिति विशेषणं दैत्यादीनाम् । भयहेतुश्च तदोप इत्याह–अविभ्यन्निति । बिभियु रित्यर्थः ॥ ६–९॥ नानेति । अयुतम् अयुतसङ्ख्याकम् । वध्यमानम्, अभूदिति शेषः । यत्र जात इत्यादि । महासेनः स्कन्दः ॥१०–१२॥ ये त्विति ।

पूज्यते नित्यशः सौम्य भयार्तै रघुनन्दन । अबिभ्यंश्च त्रयो लोकाः सरोषस्य महात्मनः ॥६॥ स राजा तादृशो ह्यासीद्धर्मे वीर्ये च निष्ठितः । बुद्ध्या च परमोदारो बाह्लिकेशो महायशाः ॥७॥ स प्रचक्रे महाबाहुर्मृगयां रुचिरे वने । चैत्रे मनोरमे मासि सभृत्यबलवाहनः ॥ ८ ॥ प्रजघ्ने च नृपोऽरण्ये मृगान् शतसहस्रशः । हत्वैव तृप्तिर्ना भूच्च राज्ञस्तस्य महात्मनः ॥ ९ ॥ नानामृगाणामयुतं वध्यमानं महात्मना । यत्र जातो महासेनस्तं देशमुपचक्रमे ॥१०॥ तस्मिन् प्रदेशे देवेशः शैलराजसुतां हरः । रमयामास दुर्धर्षः सर्वैरनुचरैः सह ॥११॥ कृत्वा स्त्रीरूपमात्मान मुमेशो गोपतिध्वजः । देव्याः प्रियचिकीर्षुः सन् तस्मिन् पर्वतनिर्झरे ॥ १२ ॥ ये तु तत्र वनोद्देशे सत्त्वाः पुरुष वादिनः । वृक्षाः पुरुषनामानस्तेऽभवन् स्त्रीजनास्तदा ॥ १३ ॥ यच्च किञ्चन तत् सर्वं नारीसंज्ञं बभूव ह । एतस्मि न्नन्तरे राजा स इलः कर्दमात्मजः । निघ्नन् मृगसहस्राणि तं देशमुपचक्रमे ॥१४॥ स दृष्ट्वा स्त्रीकृतं सर्वं सव्यालमृग पक्षिकम् । आत्मानं स्त्रीकृतं चैव सानुगं रघुनन्दन ॥१५॥ तस्य दुःखं महच्चासीदृष्ट्वाऽऽत्मानं तथागतम् । उमापतेश्च तत् कर्म ज्ञात्वा त्रासमुपागमत् ॥ १६॥ ततो देवं महात्मानं शितिकण्ठं कपर्दिनम् । जगाम शरणं राजा सभृत्य बलवाहनः ॥ १७ ॥ ततः प्रहस्य वरदः सह देव्या महेश्वरः । प्रजापतिसुतं वाक्यमुवाच वरदः स्वयम् ॥ १८ ॥

पुरुष इति वादो व्यपदेशो येपामिति पुरुषवादिनः । पुँल्लिङ्गशब्दवाच्या ये पदार्थाः सन्ति ॥ १३ ॥ यच्चेति । अन्यच्च यच्च किञ्चन नपुंसकलिङ्गवाच्य मस्ति तत्सर्वं नारीसंज्ञं स्त्रीलिङ्गशब्दवाच्यतार्हं स्त्रीवेपं वभूव ॥ १४ ॥ स दृष्ट्वेत्यादि । अथात्मानं स्त्रीकृतम् ॥ १५ ॥ तस्येति । तथागतं तथावस्थां

आतमात्मानं दृष्ट्वा तच्चात्मनस्तथाप्रातिरूपं कर्म तदिच्छावशात्प्राप्तं ज्ञात्वा त्रासमुपागमत् ॥ १६-१८ ॥ उत्तिष्ठेति । कार्दमेयेति शुभ्रादित्वाड्ढक् । पुरुषत्वमृते पुरुषत्वं विना ॥ १९ ॥ तत इति । न च जग्राह स्त्रीभूत इति । गुरुवैपम्यमार्षम् । अन्यद्वरं पुंस्त्ववरणव्यतिरिक्तं वरं न जग्राह ॥ २० ॥ २१ ॥

उत्तिष्ठोत्तिष्ठ राजर्षे कार्दमेय महाबल । पुरुषत्वमृते सौम्य वरं वरय सुव्रत ॥ १९ ॥ ततः स राजा दुःखार्तः प्रत्याख्यातो महात्मना । न च जग्राह स्त्रीभूतो वरमन्यं सुरोत्तमात् ॥ २० ॥ ततः शोकेन महता शैलराजसुतां नृपः । प्रणिपत्य ह्युमां देवीं सर्वेणैवान्तरात्मना ॥ २१ ॥ ईशे वराणां वरदे लोकानामसि भामिनी । अमोघदर्शने देवि भज सौम्येन चक्षुषा ॥२२॥ हृद्गतं तस्य राजर्षेर्विज्ञाय हरसन्निधौ । प्रत्युवाच शुभं वाक्यं देवी रुद्रस्य सम्मता ॥ २३॥ अर्धस्य देवो वरदो वरार्धस्य तव ह्यहम् । तस्मादर्धं गृहाण त्वं स्त्रीपुंसोर्यावदिच्छसि ॥ २४ ॥ तदद्भुततरं श्रुत्वा देव्या वरमनुत्तमम् । सम्प्रहृष्टमना भूत्वा राजा वाक्यमथाब्रवीत् ॥२५॥ यदि देवि प्रसन्ना मे रूपेणाप्रतिमा भुवि । मासं स्त्रीत्वमुपासित्वा मासं स्यां पुरुषः पुनः ॥ २६ ॥ ईप्सितं तस्य विज्ञाय देवी सुरुचिरानना । प्रत्युवाच शुभं वाक्यमेवमेव भविष्यति ॥ २७ ॥ राजन् पुरुषभूतस्त्वं स्त्रीभावं न स्मरिष्यसि । स्त्रीभूतश्च परं मासं न स्मरिष्यसि पौरुषम् ॥ २८ ॥

ईश इति । सौम्येन चक्षुपा अनुग्रहचक्षुषा मां भज अनुगृहाण ॥ २२ ॥ २३ ॥ अर्धस्येत्यादि । स्त्रीपुंसोरर्धस्य । समासाजन्तनिपाताभाव आर्षः । पुरुषत्वप्रातिरूपे वरे अर्धस्य देवो वरदो दाता । अर्धस्यैवाहं दात्री । अस्मात्त्वं मत्तोऽर्धं गृहाण । यावदिच्छसि यदिच्छसि ॥ २४ ॥ २५ ॥ यदीति । उपासित्वा प्राप्य ॥ २६ ॥ २७ ॥ अनुग्रहान्तरमाह—राजन्नित्यादि ॥ २८ ॥

स०—प्रसन्ना सन्ततायाधिकमपि किञ्चित्प्रयच्छति देवीति वदति—स्त्रीभावमित्यादिना ॥ २८ ॥

एवमिति । कार्दमिः । " अत इञ् " ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्ताशीतितमः सर्गः ॥८७॥
तां कथामित्यादि ॥ १ ॥ ताविति । प्राञ्जली इति द्विवचनम् । तस्य भावस्येति । स्त्रीपुंसभावस्येत्यर्थः ॥ २ ॥ कथमिति । स्त्रीभूतः अत एव दुर्गतिः

एवं स राजा पुरुषो मासं भूत्वाऽथ कार्दमिः । त्रैलोक्यसुन्दरी नारी मासमेकमिलाऽभवत् ॥ २९ ॥
इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे सप्ताशीतितमः सर्गः ॥ ८७ ॥

तां कथामिलसम्बन्धां रामेण समुदीरिताम् । लक्ष्मणो भरतश्चैव श्रुत्वा परमविस्मितौ ॥ १ ॥ तौ रामं प्राञ्जली भूत्वा तस्य राज्ञो महात्मनः । विस्तरं तस्य भावस्य तदा पप्रच्छतुः पुनः ॥२॥ कथं स राजा स्त्रीभूतो वर्तयामास दुर्गतिः । पुरुषः स यदा भूतः कां वृत्तिं वर्तयत्यसौ ॥३॥ तयोस्तद्भाषितं श्रुत्वा कौतूहलसमन्वितम् । कथयामास काकुत्स्थस्तस्य राज्ञो यथागतम् ॥ ४ ॥ तमेव प्रथमं मासं स्त्रीभूता लोकसुन्दरी । ताभिः परिवृता स्त्रीभिर्ये च पूर्वं पदानुगाः ॥ ५ ॥ तत् काननं विगाह्याशु विजह्रे लोकसुन्दरी । द्रुमगुल्मलताकीर्णं पद्भ्यां पद्मदलेक्षणा ॥ ६ ॥ वाहनानि च सर्वाणि सा त्यक्त्वा वै समन्ततः । पर्वताभोगविवरे तस्मिन् रेमे इला तदा ॥७॥ अथ तस्मिन् वनोद्देशे पर्वतस्याविदूरतः । सरः सुरुचिरप्रख्यं नानापक्षिगणैर्युतम् ॥ ८ ॥

कथं वर्तयामास, तत्कालमिति शेषः ॥ ३–६ ॥ वाहनानीति । पर्वतानाम् आभोगो विस्तारः ॥ ७ ॥ अथेति । अविदूरतः यत्र स्त्रीत्वप्राप्तिस्तस्या

स०—अत्र पितुः कर्दमेत्युक्तिः स्वयं हरस्येच्छया भामिनीभावोक्तिरिलस्य प्रयत्नेनैव पार्वत्या वरोक्तिर्व्यवस्थयेत्येवमाद्युक्तिश्च " ततो मनुः श्राद्धदेवः " इत्यारभ्य नवमे भागवते मातृचोदितहोतृव्यतिक्रमेण स्त्रिया जननम् । अनन्तरं वसिष्ठतपस्सन्तुष्टविष्णुप्रसादतो योषितः पुरुषत्वप्राप्तिः । तदनन्तरं सतीसहितस्य हरस्य समीपमुपयातवतां मुनीनां प्रेषणानन्तरमुमासन्तुष्ट्यै तनं प्रविष्टपुम्मात्रस्य स्त्रीत्वप्राप्तिशापः । तदुपरि सुद्युम्नगमनं स्त्रीत्वाप्तिः । पुनर्गुरुतपसा हरेणैव व्यवस्थया पुंस्त्वावाप्तिश्चेत्याद्युक्तिर्भारते हरिवंशे " मनोर्वैवस्वतस्यासन् " इत्यारभ्य मित्रावरुणांशेन स्वपत्योत्पत्तिः पुनर्मित्रावरुणसन्निधिगमनं तत्प्रेषिताया इलायाः पुनर्वैवस्वतं प्रत्यागमनं मित्रावरुणयोः " आवयोस्त्वं महाभागे ख्यातिं कन्येति यास्यसि । मनोर्वंशकरः पुत्रस्त्वमेव च भविष्यसि । सुद्युम्न इति विख्यातः " इत्यादिवाक्यादेव पुंस्त्वावाप्त्युक्तिः अन्यत्रागस्त्यकृतबाल भारते " बुधस्ततोऽभूत्वसु ग्रहेषु रत्नेषु मुक्ताफलवन्मनोज्ञः । यः कर्दमापत्यमिलाभिधानं पर्यग्रहीत्पञ्चशरायुधार्तः ॥ " इत्यत्रोक्तिश्च कल्पभेदेनेत्यल्पमतिभिरभिधातुं योग्यं नापरथा गतिरिति सन्तोष्टव्यम् ॥ २९ ॥

विदूरत इत्यर्थः । अन्यदेशत्वात् बुधस्य स्त्रीत्वाप्राप्तिरिति भावः ॥ ८–१० ॥ सेति । क्षोभयामासेति, क्रीडयेति शेषः ॥ ११ ॥ बुधस्त्विति । आत्मानं नोपलेभे, आत्मध्यानं न प्राप्तवानित्यर्थः । कामपरवशचित्तोऽभूदिति भावः ॥ १२ ॥ इलामिति । चिन्तां समभ्यतिक्रामत्, इलायामिति शेषः । इला

ददर्श सा त्विला तस्मिन् बुधं सोमसुतं ततः । ज्वलन्तं स्वेन वपुषा पूर्णसोममिवोदितम् ॥९॥ तपन्तं च तपस्तीव्रमम्भोमध्ये दुरासदम् । यशस्करं कामकरं तारुण्ये पर्यवस्थितम् ॥ १० ॥ सा तं जलाशयं सर्वं क्षोभयामास विस्मिता । सहगैः पूर्वपुरुषैः स्त्रीभूतै रघुनन्दन ॥ ११ ॥ बुधस्तु तां समीक्ष्यैव कामबाणवशं गतः । नोपलेभे तदाऽऽत्मानं सञ्चचाल तदाऽऽम्भसि ॥१२॥ इलां निरीक्षमाणस्तु त्रैलोक्याभ्यधिकां शुभाम् । चिन्तां समभ्यतिक्रामत् का न्वियं देवताधिका ॥ १३ ॥ न देवीषु न नागीषु नासुरीष्वप्सरस्सु च । दृष्टपूर्वा मया काचिद्रूपेणानेन शोभिता ॥ १४ ॥ सदृशीयं मम भवेद्यदि नान्यपरिग्रहः । इति बुद्धिं समास्थाय जलात् कूलमुपागमत् ॥ १५ ॥ आश्रमं समुपागम्य ततस्ताः प्रमदोत्तमाः । शब्दापयत धर्मात्मा ताश्चैनं च ववन्दिरे ॥ १६ ॥ स ताः पप्रच्छ धर्मात्मा कस्यैषा लोकसुन्दरी । किमर्थमागता चैव सर्वमाख्यात मा चिरम् ॥ १७ ॥ शुभं तु तस्य तद्वाक्यं मधुरं मधुराक्षरम् । श्रुत्वा स्त्रियश्च ताः सर्वा ऊचुर्मधुरया गिरा ॥ १८ ॥ अस्माकमेषा सुश्रोणी प्रभुत्वे वर्तते सदा । अपतिः काननान्तेषु सहास्माभिश्चरत्यसौ ॥१९॥ तद्वाक्यमव्यक्तपदं तासां स्त्रीणां निशम्य च । विद्यामावर्तिनीं पुण्यामावर्तयत स द्विजः ॥२०॥ सोऽर्थं विदित्वा सकलं तस्य राज्ञो यथागतम् । सर्वा एव स्त्रियस्ताश्च बभाषे मुनिपुङ्गवः ॥ २१ ॥

विषयकचिन्तां प्राप्त इत्यर्थः । तदेवाह का न्वित्यादि ॥ १३ ॥ १४ ॥ सदृशीति । नान्यपरिग्रहः अन्यपरिग्रहत्वरहिता ॥ १५ ॥ आश्रममिति । शब्दापयत । पुगार्पः ॥ १६–१८ ॥ अस्माकमिति । अपतिः पतिरहिता ॥ १९ ॥ तद्वाक्यमिति । अव्यक्तपदम् अस्पष्टाक्षरमित्यर्थः । आवर्तिनीम् आवर्तिन्याख्यां विद्यामावर्तयत आवर्तयति स्म । प्रकृतप्रयोजनार्थम् । द्विजः क्षत्रियो बुधः ॥ २० ॥ स इति । स बुधः तस्य राज्ञः कार्दमेः सकलमर्थं वृत्तान्तं

विदित्वा, योगमाहात्म्यादिति शेषः । ताः स्त्रियः [illegible] ॥ २१ ॥ अत्रेति । यूयं सर्वाः किंपुरुषीभूत्वा किंपुरुषाख्यदेवयोनिस्त्रियो भूत्वा अत्रास्मिन् शैलस्य रोधसि वत्स्यथ । अतोऽस्मिन् गिरौ शीघ्रमेव आवासः उटजादिः विधीयताम् ॥ २२ ॥ मूलपत्रफलैरिति । स्त्रियः किंपुरुषस्त्रियो यूयं किंपुरुषान्नाम प्रसिद्धान् भर्तॄन् समुपलप्स्यथ, अन्विष्य प्राप्स्यथेत्यर्थः ॥ २३ ॥ तामिति । किंपुरुषीकृताः बुधस्य योगबलात्किंपुरुषस्त्रीकृताः



अत्र किंपुरुषीभूत्वा शैलरोधसि वत्स्यथ । आवासस्तु गिरावस्मिन् शीघ्रमेव विधीयताम् ॥२२॥ मूलपत्रफलैः सर्वा वर्तयिष्यथ नित्यदा । स्त्रियः किंपुरुषान्नाम भर्तॄन् समुपलप्स्यथ ॥२३॥ तां श्रुत्वा सोमपुत्रस्य वाचं किंपुरुषीकृताः । उपासाञ्चक्रिरे शैलं वध्वस्ता बहुलास्तदा ॥ २४ ॥ इत्यार्षे० श्रीमदुत्तरश्रीरामायणे अष्टाशीतितमः सर्गः ॥ ८८ ॥
श्रुत्वा किंपुरुषोत्पत्तिं लक्ष्मणो भरतस्तदा । आश्चर्यमिति चाब्रूतामुभौ रामं जनेश्वरम् ॥ १ ॥ अथ रामः कथामेतां भूय एव महायशाः । कथयामास धर्मात्मा प्रजापतिसुतस्य वै ॥ २ ॥ सर्वास्ता विद्रुता दृष्ट्वा किन्नरीर्ऋषिसत्तमः । उवाच रूपसम्पन्नां तां स्त्रियं प्रहसन्निव ॥ ३ ॥ सोमस्याहं सुदयितः सुतः सुरुचिरानने । भजस्व मां वरारोहे भक्त्या स्निग्धेन चक्षुषा ॥४॥ तस्य तद्वचनं श्रुत्वा शून्ये स्वजनवर्जिता । इला सुरुचिरप्रख्यं प्रत्युवाच महाग्रहम् ॥ ५ ॥ अहं कामचरी सौम्य तवास्मि वशवर्तिनी । प्रशाधि मां सोमसुत यथेच्छसि तथा कुरु ॥ ६ ॥

इत्यर्थः । शैलमुप शैलस्य समीप इत्यर्थः ॥२४॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टाशीतितमः सर्गः ॥८८॥
श्रुत्वेत्यादि । किंपुरुषोत्पत्तिं किंपुरुषत्वेन तासां स्त्रीणामुत्पत्तिमित्यर्थः । अब्रूताम् ॥ १ ॥ २ ॥ सर्वा इति । सर्वासाम् इलाव्यतिरिक्तानां विद्रुतत्वात् हासः कामविकारमूल एव ॥ ३ ॥ सोमस्येति । भक्त्या अनुरागेण । स्निग्धं स्नेहयुक्तम् ॥ ४ ॥ तस्येति । महाग्रहो ग्रहदेवः ॥ ५ ॥ अहमिति । कामचरी

स्वतन्त्रा ॥ ६ ॥ ७ ॥ बुधस्येति । मासो गत इत्यन्वयः ॥ ८ ॥ अथेति । प्रजापतिसुतः इलः ॥ ९ ॥ १० ॥ इलो विस्मृतस्वस्त्रीत्वादिवृत्तान्तः पृच्छति–भगवन्नित्यादि ॥ ११ ॥ तच्छ्रुत्वेति । नष्टसंज्ञस्येति, गौरीशापवशादिति शेषः ॥ १२ ॥ अश्मवर्षेणेति । अश्मवर्षेणेत्यादि छद्मवचनं गिरीशशापातु

तस्यास्तदद्भुतप्रख्यं श्रुत्वा हर्षमुपागतः । स वै कामी सह तया रेमे चन्द्रमसः सुतः ॥७॥ बुधस्य माधवो मासस्तामिलां रुचिराननाम् । गतो रमयतोऽत्यर्थं क्षणवत्तस्य कामिनः ॥ ८ ॥ अथ मासे तु सम्पूर्णे पूर्णेन्दुसदृशाननः । प्रजापतिसुतः श्रीमान् शयने प्रत्यबुध्यत ॥ ९ ॥ सोऽपश्यत् सोमजं तत्र तपन्तं सलिलाशये । ऊर्ध्वबाहुं निरालम्बं तं राजा प्रत्यभाषत ॥ १० ॥ भगवन् पर्वतं दुर्गं प्रविष्टोऽस्मि सहानुगः । न तु पश्यामि तत् सैन्यं क्व नु ते मामका गताः ॥ ११ ॥ तच्छ्रुत्वा तस्य राजर्षेर्नष्टसंज्ञस्य भाषितम् । प्रत्युवाच शुभं वाक्यं सान्त्वयन् परया गिरा ॥ १२॥ अश्मवर्षेण महता भृत्यास्ते विनिपातिताः । त्वं चाश्रमपदे सुप्तो वातवर्षभयार्दितः ॥ १३ ॥ समाश्वसिहि भद्रं ते निर्भयो विगतज्वरः । फलमूलाशनो वीर निवसेह यथासुखम् ॥१४॥ स राजा तेन वाक्येन प्रत्याश्वस्तो महामतिः । प्रत्युवाच ततो वाक्यं दीनो भृत्यक्षयाद् भृशम् ॥ १५॥ त्यक्ष्याम्यहं स्वकं राज्यं नाहं भृत्यैर्विनाकृतः । वर्तयेयं क्षण ब्रह्मन् समनुज्ञातुमर्हसि ॥ १६ ॥ सुतो धर्मपरो ब्रह्मन् ज्येष्ठो मम महायशाः । शशबिन्दुरिति ख्यातः स मे राज्यं प्रपत्स्यते ॥१७॥ न हि शक्ष्याम्यहं हित्वा भृत्यदारान् सुखान्वितान् । प्रतिवक्तुं महातेजः किञ्चिदप्यशुभं वचः ॥ १८॥

रोधार्थम् ॥ १३॥१४ ॥ स इति । तेन वाक्येनेति । इह यथासुखं निवसेति वाक्येनेत्यर्थः ॥ १५ ॥ त्यक्ष्यामीति । भृत्यैर्विनाकृतोऽप्यहं स्वकं राज्यं न त्यक्ष्यामि त्यक्तुं न शक्नोमि, इह वसान इति शेषः । एतदेवाह–हे ब्रह्मन् ! क्षणमपि न वर्तयेयम् । नञ इहानुकर्षः । तस्मान्मां गमनाय समनुज्ञातुमर्हसि ॥१६॥ उक्तवृत्तान्तमेव पुनरौत्कण्ठ्यप्रदर्शनायाह–सुत इति । प्रपत्स्यत इति । मया गत्वा कृतादभिषेकादिति भावः ॥ १७॥ न हीति । सुखान्वितानिति,

देशस्थानिति शेषः । हित्वा न शक्ष्यामीति, इह स्थातुमिति शेषः । अशुभं वचः इह निवासलक्षणानिष्टवचनं वक्तुम्, नार्हसीति शेषः ॥ १८–२२ ॥ तत इति । इला सोमसुतात्सुतं जनयामासेति । योजनगन्ध्यादिः पराशरादेर्व्यासादिमिव निषेकानन्तरमेवेति ज्ञेयम् ॥ २३ ॥ जातमात्रमिति । जातमात्रं तत्क्षण एव । पितृसमाकारं पितृहस्ते उपनयनादिकृत्यार्थं न्यवेशयत् ॥२४॥२५॥ इति श्रीगोविन्दराज० उत्तरश्रीरामा० एकोननवतितमः सर्गः ॥८९॥





तथा ब्रुवति राजेन्द्रे बुधः परममद्भुतम् । सान्त्वपूर्वमथोवाच वासस्त इह रोचताम् ॥ १९ ॥ न सन्तापस्त्वया कार्यः कार्दमेय महाबल । संवत्सरोषितस्येह कारयिष्यामि ते हितम् ॥ २० ॥ तस्य तद्वचनं श्रुत्वा बुधस्याक्लिष्टकर्मणः । वासाय विदधे बुद्धिं यदुक्तं ब्रह्मवादिना ॥ २१ ॥ मासं स स्त्री तथा भूत्वा रमयत्यनिशं शुभा । मासं पुरुषभावेन धर्मबुद्धिं चकार सः ॥ २२॥ ततः सा नवमे मासि इला सोमसुतात् सुतम् । जनयामास सुश्रोणी पुरूरवसमूर्जितम् ॥ २३ ॥ जातमात्रं तु सुश्रोणी पितृहस्ते न्यवेशयत् । बुधस्य समवर्णाभमिला पुत्रं महाबलम् ॥२४॥ बुधस्तु पुरुषीभूतं स वै संवत्सरान्तरम् । कथाभी रमयामास धर्मयुक्ताभिरात्मवान् ॥ २५ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे एकोननवतितमः सर्गः ॥ ८९ ॥

तथोक्तवति रामे तु तस्य जन्म तदद्भुतम् । उवाच लक्ष्मणो भूयो भरतश्च महायशाः ॥ १ ॥ इला सा सोमपुत्रस्य संवत्सरमथोषिता । अकरोत् किं नरश्रेष्ठ तत्त्वं शंसितुमर्हसि ॥२॥ तयोस्तद्वाक्यमाधुर्यं निशम्य परिपृच्छतोः । रामः पुनरुवाचेमां प्रजापतिसुते कथाम् ॥ ३ ॥ पुरुषत्वं गते शूरे बुधः परमबुद्धिमान् । संवर्तं परमोदारमाजुहाव महायशाः ॥ ४ ॥ च्यवनं भृगुपुत्रं च मुनिं चारिष्टनेमिनम् । प्रमोदनं मोदकरं तथा दुर्वाससं मुनिम् ॥ ५ ॥



तथेत्यादि । तस्येति । पुरूरवस इत्यर्थः ॥ १ ॥ इलेति । किमिति । संवत्सरात्परमिति शेषः । इलस्य पुरूरवसोऽपि पुत्रस्य सत्त्वाच्छशबिन्दोः

पूर्वपुत्रस्य च सत्त्वातपुरूरवसो राज्यप्राप्तिरभून्न वेति प्रश्नाशयः ॥ २–५ ॥ एतानिति । सुहृदः स्वसखीभूतान् ॥ ६ ॥ अयमिति । यथाभूतमिलस्य वृत्तान्तम् ॥ ७–११ ॥ नान्यमिति । वृषध्वज एव स्वकृतशापनिवर्तकः । तत्प्रीतिश्चाश्वमेधेन सर्वदेवताप्रीतिकरणेनैवेति भावः । नाश्वमेधात्पर इति, राज्ञां ब्रह्महत्यान्तसर्वपापनिवारक इति शेषः । प्रियश्चैव महात्मन इति । यद्यपि प्रजापतिदेवताकः प्रजापतिप्रीतिकरोऽश्वमेधः तथापि सर्वदेवताप्रीतिकरत्वात् अस्य रुद्रप्रीतिकरत्वमपि सिद्धम् । वस्तुतस्तु "यज्ञो वै विष्णुः" इति श्रुतिवचनाद्यज्ञपुरुषाराधनमश्वमेधः । विष्ण्वाराधनमित्युपक्रमे

एतान् सर्वान् समानीय वाक्यज्ञस्तत्त्वदर्शिनः । उवाच सर्वान् सुहृदो धैर्येण सुसमाहितान् ॥ ६ ॥ अयं राजा महाबाहुः कर्दमस्य इलः सुतः । जानीतैनं यथाभूतं श्रेयो ह्यस्य विधीयताम् ॥७॥ तेषां संवदतामेव तमाश्रममुपागमत् । कर्दमस्तु महातेजा द्विजैः सह महात्मभिः ॥ ८ ॥ पुलस्त्यश्च क्रतुश्चैव वषट्कारस्तथैव च । ओङ्कारश्च महातेजास्तमाश्रममुपागमत् ॥९॥ ते सर्वे हृष्टमनसः परस्परसमागमे । हितैषिणो बाह्लिपतेः पृथग्वाक्यान्यथाब्रुवन् ॥१०॥ कर्दमस्त्वब्रवीद्वाक्यं सुतार्थं परमं हितम् । द्विजाः शृणुत मद्वाक्यं यच्छ्रेयः पार्थिवस्य हि ॥ ११ ॥ नान्यं पश्यामि भैषज्यमन्तरा वृषभध्वजम् । नाश्वमेधात् परो यज्ञः प्रियश्चैव महात्मनः । तस्माद्यजामहे सर्वे पार्थिवार्थे दुरासदम् ॥ १२ ॥ कर्दमेनैवमुक्तास्तु सर्व एव द्विजर्षभाः । रोचयन्ति स्म तं यज्ञं रुद्रस्याराधनं प्रति ॥ १३ ॥ संवर्तस्य तु राजर्षेः शिष्यः परपुरञ्जयः । मरुत्त इति विख्यातस्तं यज्ञं समुपाहरत् ॥ १४ ॥

लक्ष्मणोक्त्या विष्ण्वाराधनमेवाश्वमेधः । तदाराधनत्वेनैव हरस्यापि प्रियत्वम् । प्रकृतब्रह्महत्यावारकत्वेन तस्य प्रशंसार्थं पुनरपि रामेण तद्विषयार्थवाद उक्तः । एतेन यत् केनचिदुक्तं लक्ष्मणेन विष्ण्वाराधनयज्ञे प्रस्तुते पुनः रामेण रुद्राराधनत्वप्रदर्शनं विष्ण्वपेक्षया रुद्राधिक्यस्य प्रतिपादनार्थमिति, तद्दूरोत्सारितम् । ब्रह्महत्यावारकप्रदर्शनार्थत्वाद्रामोक्तस्य ॥ १२ ॥ १३ ॥ संवर्तस्येति । समुपाहरत् सम्भारजातमुपहृतवान् ॥ १४–२० ॥

राजेति । बाह्लिमुत्सृज्येति, ज्येष्ठपुत्रशशविन्दुधिष्ठितामिति शेषः ॥ २१ ॥ शशविन्दुरित्यादि । बाह्लिमिति, अध्युवासेति शेषः ॥ २२ ॥ स इति ।





ततो यज्ञो महानासीद्बुधाश्रमसमीपतः। रुद्रश्च परमं तोषं जगाम सुमहायशाः ॥१५॥ अथ यज्ञे समाप्ते तु प्रीतः परमया मुदा। उमापतिर्द्विजान् सर्वानुवाच इलसन्निधौ ॥ १६ ॥ प्रीतोऽस्मि हयमेधेन भक्त्या च द्विजसत्तमाः । अस्य बाह्लीपतेश्चैव किं करोमि प्रियं शुभम् ॥ १७ ॥ तथा वदति देवेशे द्विजास्ते सुसमाहिताः । प्रसादयन्ति देवेशं यथा स्यात् पुरुषस्त्विला ॥ १८ ॥ ततः प्रीतो महादेवः पुरुषत्वं ददौ पुनः । इलायै स महातेजा दत्त्वा चान्तरधीयत ॥ १९ ॥ निवृत्ते हयमेधे तु गतश्चादर्शनं हरः। यथागतं द्विजाः सर्वे ह्यगच्छन् दीर्घदर्शिनः ॥२०॥ राजा तु बाह्लिमुत्सृज्य मध्यदेशे ह्यनुत्तमम् । निवेशयामास पुरं प्रतिष्ठानं यशस्करम् ॥ २१ ॥ शशविन्दुस्तु राजर्षिर्बाह्लिं परपुरञ्जयः। प्रतिष्ठाने इलो राजा प्रजापतिसुतो बली ॥ २२ ॥ स काले प्राप्तवान् लोकमिलो ब्राह्म मनुत्तमम्। ऐलः पुरूरवा राजा प्रतिष्ठानमवाप्तवान् ॥ २३ ॥ ईदृशो ह्यश्वमेधस्य प्रभावः पुरुषर्षभौ । स्त्रीभूतः पौरुषं लेभे यच्चान्यदपि दुर्लभम् ॥ २४ ॥ इत्यार्षे वाल्मीकीये० श्रीमदुत्तरश्रीरामायणे नवतितमः सर्गः ॥ ९० ॥

काले शरीरावसानकाले । ब्राह्मं ब्रह्मसम्बन्धिनम् ॥ २३ ॥ ईदृश इति । यच्चान्यदिति । उक्तब्रह्मलोकादित्यर्थः ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने नवतितमः सर्गः ॥ ९० ॥



स०–रुद्रश्चेति शब्दात्परममुख्यमुख्ये शब्दवाच्यहरिहिरण्यगर्भहराणां प्रीतिं तरतमतोऽभिप्रैति ॥ १९ ॥ ति०–देवेशं प्रसादयन्ति स्म । पुरुषत्वं विनाऽन्यं वरं वृणीष्वेति पूर्ववद्यथा न वदेत्तथा विशिष्य प्रसन्नमकुर्वन्नित्यर्थः । तदेवोक्तम्–यथा स्यादिति ॥ १८ ॥

एतदाख्यायेत्यादि । भ्रातृभ्यामिति चतुर्थी ॥ १ ॥ वसिष्ठमिति । द्विजांश्च सर्वप्रवरानिति गुरुवैपम्यमार्पम् । अश्वमेधपुरस्कृतानिति । अश्वमेधप्रयोग कुशलानित्यर्थः ॥ २ ॥ एतानिति । मन्त्रयित्वा विचार्य ॥ ३–५ ॥ प्राञ्जलिरिति । अश्वमेधस्येति । अनुष्ठानविषयकमिति शेषः । उवाच धर्मसंयुक्त मश्वमेधाश्रितं वच इति च पाठः ॥ ६ ॥ ते त्विति । वृषध्वजं नमस्कृत्वेति । सोल्लुण्ठनं वचः । इलवद्रुद्राराधनं विहायेत्यर्थः । कर्दमकृतयागस्येवास्य

एतदाख्याय काकुत्स्थो भ्रातृभ्याममितप्रभः । लक्ष्मणं पुनरेवाह धर्मयुक्तमिदं वचः ॥ १ ॥ वसिष्ठं वामदेवं च जाबालिमथ काश्यपम् । द्विजांश्च सर्वप्रवरानश्वमेधपुरस्कृतान् ॥२॥ एतान् सर्वान् समानीय मन्त्रयित्वा च लक्ष्मण । हयं लक्षणसम्पन्नं विमोक्ष्यामि समाधिना ॥ ३ ॥ तद्वाक्यं राघवेणोक्तं श्रुत्वा त्वरितविक्रमः । द्विजान् सर्वान् समाहूय दर्शयामास राघवम् ॥ ४ ॥ ते दृष्ट्वा देवसङ्काशं कृतपादाभिवन्दनम् । राघवं सुदुराधर्षमाशीर्भिः समपूजयन् ॥ ५ ॥ प्राञ्जलिः स तदा भूत्वा राघवो द्विजसत्तमान् । आचचक्षेऽश्वमेधस्य ह्यभिप्रायं महायशाः ॥ ६ ॥ ते तु रामस्य तच्छ्रुत्वा नमस्कृत्वा वृषध्वजम् । अश्वमेधं द्विजाः सर्वे पूजयन्ति स्म सर्वशः ॥ ७ ॥ स तेषां द्विजमुख्यानां वाक्यमद्भुतदर्शनम् । अश्वमेधाश्रितं श्रुत्वा भृशं प्रीतोभवत्तदा ॥ ८॥ विज्ञाय कर्म तत्तेषां रामो लक्ष्मणमब्रवीत् । प्रेषयस्व द्रुतं दूतान् सुग्रीवाय महात्मने ॥ ९ ॥ यथा महद्भिर्हरिभिर्बहुभिश्च वनौकसाम् । सार्धमागच्छ भद्रं ते ह्यनुभोक्तुं महोत्सवम् ॥ १० ॥ विभीषणश्च रक्षोभिः कामगैर्बहुभिर्वृतः । अश्वमेधं महायज्ञमायात्वतुलविक्रमः ॥ ११॥

रुद्रात्प्रयोजनगन्धाभावात् परदेवतामुद्दिश्याश्वमेधं कर्तुमुद्युक्ता इति भावः । रुद्रस्तु सर्वयज्ञानर्हः शूद्राराध्यः । यज्ञमध्ये च तत्प्रसङ्गे अप उपस्पर्शनादि प्रायश्चित्तस्य प्रसिद्धत्वात् । "इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने" इत्यादिश्रुतिस्तु अग्नेरेव यज्ञान्वयप्रतिपादिका । कर्दमकृतयज्ञस्य नाराध्यो रुद्रः । किन्तु स्वाभिमतदेवतारूपविष्ण्वाराधनत्वेन प्रीतो रुद्र इत्युच्यते । उपक्रमे तत्पूर्वसर्गेषु "यज्ञो वै विष्णुः" इत्युक्तरीत्या विष्णोराराध्यत्वसमर्थनात् । यद्वा विष्णुदत्तवरत्वाद्रुद्रस्य । विष्णुमपूजयन् । रामस्त्वश्वमेधं यथापूर्वमकरोत् ॥७–९॥ यथेति । महद्भिर्हरिभिः हनुमदङ्गदादिभिः । बहुभिश्चेति ।

आत्रभिप्रायेण । अनुभोक्तुं द्रष्टुमित्यर्थः ॥१०–१३॥ तथैवेति । तालं गृहीत्वाऽवचरन्तीति तालावचराः सूत्रधाराः ॥१४॥ यज्ञवाटश्चेति । गोमत्या नद्याः, तीर इति शेषः ॥ १५ ॥ १६ ॥ शतश इति । धर्मज्ञाः शतशः अनेके नैमिशे महायज्ञमश्वमेधमनुभूयानुष्ठाय, कृतार्था इति शेषः । यद्वा धर्मज्ञ इति पाठे अनुभूय दृष्ट्वा, प्रीतिं यास्यतीत्युत्तरेणान्वयः ॥ १७ ॥ तुष्ट इति । प्रतियास्यतीति च पाठः ॥ १८ ॥ शतमिति । वपुष्मतामिति । अखण्डानामित्यर्थः ।

राजानश्च महाभागा ये मे प्रियचिकीर्षवः । सानुगाः क्षिप्रमायान्तु यज्ञं द्रष्टुमनुत्तमम् ॥ १२ ॥ देशान्तरगता ये च द्विजा धर्मसमाहिताः । आमन्त्रयस्व तान् सर्वानश्वमेधाय लक्ष्मण ॥ १३ ॥ ऋषयश्च महाबाहो आहूयन्तां तपोधनाः । देशान्तरगताः सर्वे सदाराश्च द्विजातयः । तथैव तालावचरास्तथैव नटनर्तकाः ॥ १४ ॥ यज्ञवाटश्च सुमहान् गोमत्या नैमिशे वने । आज्ञाप्यतां महाबाहो तद्धि पुण्यमनुत्तमम् ॥ १५ ॥ शान्तयश्च महाबाहो प्रवर्त्यन्तां समन्ततः ॥ १६ ॥ शतशश्चापि धर्मज्ञाः क्रतुमुख्यमनुत्तमम् । अनुभूय महायज्ञं नैमिशे रघुनन्दन ॥ १७ ॥ तुष्टः पुष्टश्च सर्वोऽसौ मानितश्च यथाविधि । प्रीतिं यास्यति धर्मज्ञ शीघ्रमामन्त्र्यतां जनः ॥ १८ ॥ शतं वाहसहस्राणां तण्डुलानां वपुष्मताम् । अयुतं तिलमुद्गानां प्रयात्वग्रे महाबल ॥ १९ ॥ चणकानां कुलत्थानां माषाणां लवणस्य च । अतोऽनुरूपं स्नेहं च गन्धं संक्षिप्तमेव च ॥ २० ॥ सुवर्णकोट्यो बहुला हिरण्यस्य शतोत्तराः । अग्रतो भरतः कृत्वा गच्छत्वग्रे समाधिना ॥ २१ ॥ अन्तरा पण्यवीथ्यश्च सर्वे च नटनर्तकाः । सूदा नार्यश्च बहवो नित्यं यौवनशालिनः ॥ २२ ॥ भरतेन तु सार्धं ते यान्तु सैन्यानि चाग्रतः । नैगमा बलवृद्धाश्च द्विजाश्च सुसमाहिताः ॥ २३ ॥

शतं वाहसहस्राणीति । लक्षं बलीवर्दाः इत्यर्थः ॥ १९ ॥ चणकानामिति । अतोऽनुरूपम् उक्तब्राह्मणभोजनसंविधानानुरूपम् । स्नेहं घृततैलपयोदध्यादिकमित्यर्थः । संक्षिप्तमेव गन्धमिति । अघृष्टमेवेत्यर्थः ॥ २० ॥ सुवर्णकोट्य इति । हिरण्यस्य रजतस्येत्यर्थः । शतोत्तरा इति । कोट्य इत्यर्थः । समाधिना सावधानतया ॥ २१ ॥ अन्तरेति । अन्तरा मार्गमध्ये । तत्र चापेक्षिताः आपणवीथ्यः । तत्प्रवर्तका वणिजश्चेत्यर्थः ॥ २२ ॥ २३ ॥

कर्मान्तिकानिति । कर्मान्तिकाः किङ्कराः । कुमारान्तःपुराणीति । भरतलक्ष्मणशत्रुघ्नपत्न्य इत्यर्थः ॥ २४ ॥ काञ्चनीं मम पत्नीमिति । स्वर्णमयीं सीताप्रतिमामित्यर्थः । पत्न्याश्च प्रतिनिधिसद्भावादिकं सर्वं युद्धकाण्डे सप्रकारं निरूपितम्, तत्रैव द्रष्टव्यम् ॥२५॥२६॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकनवतितमः सर्गः ॥ ९१ ॥

कर्मान्तिकान् वर्धकिनः कोशाध्यक्षांश्च नैगमान् । मम मातृस्तथा सर्वाः कुमारान्तःपुराणि च ॥ २४ ॥ काञ्चनीं मम पत्नीं च दीक्षार्यां ज्ञांश्च कर्मणि । अग्रतो भरतः कृत्वा गच्छत्वग्रे महायशाः ॥ २५ ॥ उपकार्या महार्हांश्च पार्थिवानां महौजसाम् । सानुगानां नरश्रेष्ठो व्यादिदेश महाबलः ॥ २६ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे एकनवतितमः सर्गः ॥ ९१ ॥

तत् सर्वमखिलेनाशु संस्थाप्य भरताग्रजः । हयं लक्षणसम्पन्नं कृष्णसारं मुमोच ह ॥१॥ ऋत्विग्भिर्लक्ष्मणं सार्धमश्वतन्त्रे नियोज्य च । ततोऽभ्यगच्छत् काकुत्स्थः सह सैन्येन नैमिशम् ॥२॥ यज्ञवाटं महाबाहुर्दृष्ट्वा परममद्भुतम् । प्रहर्षमतुलं लेभे श्रीमानिति वचोऽब्रवीत् ॥ ३ ॥ नैमिशे वसतस्तस्य सर्व एव नराधिपाः । आनिन्युरुपहारांश्च तान् रामः प्रत्यपूजयत् ॥ ४ ॥ उपकार्या महार्हांश्च पार्थिवानां महात्मनाम् । सानुगानां नरश्रेष्ठो व्यादिदेश महामतिः ॥ ५ ॥ अन्नपानानि वस्त्राणि सानुगानां महात्मनाम् । भरतः सन्ददावाशु शत्रुघ्नसहितस्तदा ॥ ६ ॥

तत्सर्वमित्यादि । कृष्णसारं कृष्णप्रधानम्, प्रायशः कृष्णवर्णमित्यर्थः । कृष्णशारमिति च पाठः ॥ १ ॥ ऋत्विग्भिरिति । अश्वतन्त्र इति । " चतुश्शता रक्षन्ति यज्ञस्याघाताय तथा शतेन राजपुत्रैः सहाध्वर्युः पुरस्तात्प्रत्यङ् तिष्ठन् प्रोक्षति " इति श्रुतेः । अश्वरक्षादिसम्बन्धयज्ञप्रयोगनिर्वर्तनार्थमित्यर्थः ॥ २ ॥ ३ ॥ नैमिश इति । उपहाराः उपदाः ॥ ४ ॥ ५ ॥ राजपूजामाह—अन्नेत्यादि । राजसत्कारे भरतशत्रुघ्ननियोगः,

स०—काञ्चनीमिति । सीता तु ' रामस्य दृश्या सर्वेषामदृश्या जनकात्मजा ' इत्युक्तेः अमरविवक्षया रामेण सा सन्निकृष्यते । पामरविवक्षया विप्रकृष्यत इति तद्विवक्षया समीपे प्रतिनिधिनिधापनमिति मन्तव्यम् ॥२९॥ अखिलेन खिलम्भिन्नेन दृढेन वाहनादिना । कृष्णसारं तथा तीव्रव्रजनेन तथोक्तिर्वा । कृष्णवर्णवत्सं सारं श्रेष्ठं वा । कृष्णं वर्णं सरति गच्छति कर्णे एकस्मिन्निति स तथा वा ॥ १ ॥

सुग्रीवादीनां विप्रपरिवेषणे, विभीषणस्य ब्रह्मर्षिसत्कारे नियोग इत्याह–भरत इत्यादि ॥ ६–८ ॥ एवमिति । हयचर्या अश्वमेधयागानुष्ठानम् ॥ ९ ॥ नेति । याचकाः यावत्तुष्यन्ति तावद्देहि देहीति शब्दादन्यः शब्दो नाभवत् ॥ १० ॥ तावदिति । सर्वाणि दत्तानीत्यस्यैव प्रपञ्चनम्–विविधानीत्यादि ।

वानराश्च महात्मानः सुग्रीवसहितास्तदा । विप्राणां प्रणताः सर्वे चक्रिरे परिवेषणम् ॥७॥ विभीषणश्च रक्षोभिर्बहुभिः स्रग्विभिर्वृतः । ऋषीणामुग्रतपसां पूजां चक्रे महात्मनाम् ॥८॥ एवं सुविहितो यज्ञो हयमेधोऽभ्यवर्तत । लक्ष्मणेनाभिगुप्ता च हयचर्या प्रवर्तत । ईदृशं राजसिंहस्य यज्ञप्रवरमुत्तमम् ॥ ९ ॥ नान्यः शब्दोऽभवत्तत्र हयमेधे महात्मनः । छन्दतो देहि देहीति यावत्तुष्यन्ति याचकाः ॥ १० ॥ तावत् सर्वाणि दत्तानि क्रतुमध्ये महात्मनः । विविधानि च गौडानि खाण्डवानि तथैव च ॥ ११ ॥ न निस्सृतं भवत्योष्ठाद्वचनं यावदर्थिनाम् । तावद्वानररक्षोभिर्दत्तमेवाभ्यदृश्यत ॥ १२ ॥ न कश्चिन्मलिनस्तत्र दीनो वाऽप्यथ कर्शितः । तस्मिन् यज्ञवरे राज्ञो हृष्टपुष्टजनावृते ॥ १३ ॥ ये च तत्र महात्मानो मुनयश्चिरजीविनः । नास्मरंस्तादृशं यज्ञं नाप्यासीत् स कदाचन ॥ १४ ॥ यः कृत्यवान् सुवर्णेन सुवर्णं लभते स्म सः । वित्तार्थी लभते वित्तं रत्नार्थी रत्नमेव च ॥ १५ ॥ रजतानां सुवर्णानामश्मनामथ वाससाम् । अनिशं दीयमानानां राशिः समुपदृश्यते ॥ १६ ॥

गौडानि गुडविकाररूपाणि ॥ ११ ॥ नेति । अर्थिनां मुखाद्देहीति वचनं यावन्न निस्सृतम्, तावद्दत्तमेवाभ्यदृश्यत ॥१२॥१३॥ ये चेति । चिरजीविनो

स०–राजसिंहस्य राजश्रेष्ठस्य ईदृशम् उत्तमं यज्ञप्रवरमुद्दिश्यैव शब्दः महानयं यज्ञ इति स्तुतिरूपोऽभवत् । हयमेधे प्रवृत्ते सति अन्यः तदस्तुतिरूपः न नाभवत् । यज्ञप्रवरमुत्तममभवदिति व्याख्यानागोज्जिमट्टः किमभिप्रायेणैवमूचिवानिति विभावनीयम् ॥ यावत् यावता याचकास्तुष्यन्ति तावद्द्रव्यं विस्रब्धः अतिदाने स्वामी रामः कुत एवं त्वयाऽकारीति भर्त्सयेदिति शङ्काविकलः । छन्दतो देहि विस्रब्धः इति पाठः । देहीति बोधितेन तावत् तावन्ति सर्वाणि दत्तानि ॥ ९–११ ॥ नास्मरंस्तादृशं यज्ञं दानौघसमलङ्कृतम् । इति पाठः ॥ दानौघसमलङ्कृतं तादृशं यज्ञं नास्मरन् एतत्समसत्रनानुभवाभावादेव स्मरणाभाव इति भावः ॥ प्राकृतम् अन्यानुष्ठितं सवनं दानौघसमलं दानानामोघेन सङ्घेन समलं सदोषम् । अपात्रेभ्यो वाऽसमये वा अदेयदित्सा वेति सामर्थ्यं दानेष्विति मन्तव्यम् । अस्मरन् तथाऽनुभवादिति भावः ॥ १४ ॥ सुवर्णानां शोभनवर्णोपेतानाम् । हिरण्यानां रजतानाम् । हिरण्यानां सुवर्णानाम् इति पाठः ॥ १६ ॥

मुनयः तादृशं यज्ञम् इतः पूर्वं तादृशो नासीत्, इत्याहुरिति शेषः ॥ १४-१६ ॥ उक्त एवार्थ आदरादभ्यस्यते—न शक्रस्येत्यादि ॥ १७ ॥ १८ ॥ ईदृश इति । संवत्सरं वर्तते न च हीयते, संवत्सरात्परमपीति शेषः । पुनः पुनरश्वमेधः प्रावर्ततेत्यर्थः ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्विनवतितमः सर्गः ॥ ९२ ॥

न शक्रस्य धनेशस्य यमस्य वरुणस्य वा । ईदृशो दृष्टपूर्वो न एवमूचुस्तपोधनाः ॥ १७ ॥ सर्वत्र वानरास्तस्थुः सर्वत्रैव च राक्षसाः । वासोधनान्नमर्थिभ्यः पूर्णहस्ता ददुर्भृशम् ॥१८॥ ईदृशो राजसिंहस्य यज्ञः सर्वगुणान्वितः । संवत्सरमथो साग्रं वर्तते न च हीयते ॥ १९ ॥ इत्यार्षे० श्रीमदुत्तरश्रीरामायणे द्विनवतितमः सर्गः ॥ ९२ ॥

वर्तमाने तथाभूते यज्ञे च परमाद्भुते । सशिष्य आजगामाशु वाल्मीकिर्मुनिपुङ्गवः ॥ १ ॥ स दृष्ट्वा दिव्यसङ्काशं यज्ञ मद्भुतदर्शनम् । एकान्ते ऋषिवाटानां चकार उटजाञ्छुभान् ॥ २ ॥ शकटांश्च बहून् पूर्णान् फलमूलैश्च शोभनान् । वाल्मीकिवाटे रुचिरे स्थापयन्नविदूरतः ॥ ३ ॥ आसीत् सुपूजितो राज्ञा मुनिभिश्च महात्मभिः । वाल्मीकिः सुमहा तेजा न्यवसत् परमात्मवान् ॥ ४ ॥ स शिष्यावब्रवीद्धृष्टौ युवां गत्वा समाहितौ । कृत्स्नं रामायणं काव्यं गायेथां परया मुदा ॥५॥ ऋषिवाटेषु पुण्येषु ब्राह्मणावसथेषु च । रथ्यासु राजमार्गेषु पार्थिवानां गृहेषु च ॥६॥ रामस्य भवन द्वारि यत्र कर्म प्रवर्तते । ऋत्विजामग्रतश्चैव तत्र गेयं विशेषतः ॥ ७ ॥ इमानि च फलान्यत्र स्वादूनि विविधानि च । जातानि पर्वताग्रेषु चास्वाद्यास्वाद्य गायताम् ॥ ८ ॥

वर्तमान इत्यादि । तथाभूते प्रागुक्तप्रकारं प्रवृत्ते ॥ १ ॥ स इति । ऋषिवाटानामिति, समीप इति शेषः । उटजानिति बहुवचनं बहुशिष्यत्वात् ॥ २ ॥ शकटानिति । रुचिरे इति, अभूदिति शेषः ॥ ३-६ ॥ रामस्येति । यत्र कर्म चेति । अश्वमेधयाग इत्यर्थः ॥ ७ ॥ इमानीति । अत्रास्माकं वाटे ।

विद्यमानान्यास्वाद्य । गायतामिति लोट्प्रथमपुरुषद्विवचनम् । यदा यदा श्रमः तदा तदैवं कुरुतम्, भवन्ताविति शेषः ॥ ८ ॥ नेति । नगराद्बहिरास्यथ, क्षत्रियकुलेष्विति शेषः । नगराद्बहिः उटज इत्यर्थः । आस्यथः अधितिष्ठतमिति यावत् । आसेश्छान्दसः श्यन् परस्मैपदं च ॥९॥ यदीति । शब्दापयेत् आह्वयेत् ॥ १० ॥ दिवस इति । तत्र रामायणे बहुभिः सर्गप्रमाणैर्यथा मया पुरा सर्गा उद्दिष्टाः तेषु सर्गेषु दिवसे दिवसे विंशतिसर्गाः

न यास्यथः श्रमं वत्सौ भक्षयित्वा फलानि वै । मूलानि च सुमृष्टानि नगराद्बहिरास्यथः ॥९॥ यदि शब्दापयेद्रामः श्रवणाय महीपतिः । ऋषीणामुपविष्टानां ततो गेयं प्रवर्तताम् ॥१०॥ दिवसे विंशतिः सर्गा गेया मधुरया गिरा । प्रमाणैर्बहुभिस्तत्र यथोद्दिष्टा मया पुरा ॥ ११ ॥ लोभश्चापि न कर्तव्यः स्वल्पोऽपि धनकांक्षया । किं धनेनाश्रमस्थानां फलमूलोपजीविनाम् ॥ १२ ॥ यदि पृच्छेत् स काकुत्स्थो युवां कस्येति दारकौ । आवां वाल्मीकिशिष्यौ स्वो ब्रूतमेवं नराधिपम् ॥ १३ ॥ इमास्तन्त्रीः सुमधुराः स्थानं वाऽपूर्वदर्शनम् । मूर्च्छयित्वा सुमधुरं गायेथां विगतज्वरौ ॥ १४ ॥ आदिप्रभृति गेयं स्यान्न चावज्ञाय पार्थिवम् । पिता हि सर्वभूतानां राजा भवति धर्मतः ॥ १५ ॥ तद्युवां हृष्टमनसौ श्वः प्रभाते समास्थितौ । गायेथां मधुरं गेयं तन्त्रीलयसमन्वितम् ॥१६॥ इति सन्दिश्य बहुशो मुनिः प्राचेतसस्तदा । वाल्मीकिः परमोदारस्तूष्णीमासीन्महायशाः ॥१७॥ सन्दिष्टौ मुनिना तेन तावुभौ मैथिलीसुतौ । तथैव करवावेति निर्जग्मतुररिन्दमौ ॥ १८ ॥

गेयाः ॥ ११ ॥ १२ ॥ यदीति । आवां वाल्मीकिशिष्यौ स्व इत्येवं ब्रूतम्, नामुकदारकाविति ॥ १३ ॥ इमा इति । इमास्तन्त्रीरिति । वीणाशिरा इत्यर्थः । अपूर्वदर्शनम् अपूर्वस्वराणां दर्शनं यत्र तत्तथा तादृशं स्थानम्, षड्जादिस्वरभेदसिद्धये वीणादण्डोपरि कल्पितं शिराणां स्पर्शविशेषप्रसिद्धिप्रयोजनस्थानपङ्क्तिः स्थानमित्युच्यते । तद्वा मूर्च्छयित्वा तत्र वा नादव्याप्तिं कृत्वा ॥ १४ ॥ आदीति । आदिप्रभृतीति, संक्षेपमारभ्येत्यर्थः । पार्थिवं न चावज्ञायेति । तत्समीपे स्थलान्तर इव लीलापरिहासादिकं न कर्तव्यमित्यर्थः । तत्र हेतुः—पिता हि सर्वभूतानामिति ॥ १५–१८ ॥

तामिति । भार्गवनीतिसंहिताम् अश्विनाविव तौ तां वाणीं हृदये निवेश्य । श्वो गातव्यां स्मृत्वेत्यर्थः । निशां निशायाम् । सममिति । ऋषिभि रित्यर्थः । सम मूषतुरिति च पाठः । भार्गवनीतिसंस्कृतौ इति पाठान्तरे तु वाल्मीकिशिक्षितावित्यर्थः ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रिनवतितमः सर्गः ॥ ९३ ॥

तामद्भुतां तौ हृदये कुमारौ निवेश्य वाणीमृषिभाषितां तदा । समुत्सुकौ तौ सममूषतुर्निशां यथाऽश्विनौ भार्गव नीतिसंहिताम् ॥ १९ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे त्रिनवतितमः सर्गः ॥ ९३ ॥

तौ रजन्यां प्रभातायां स्नातौ हुतहुताशनौ । यथोक्तमृषिणा पूर्वं सर्वं तत्रोपगायताम् ॥ १ ॥ तां स शुश्राव काकुत्स्थः पूर्वाचार्यविनिर्मिताम् । अपूर्वां पाठ्यजातिं च गेयेन समलंकृताम् ॥ २ ॥ प्रमाणैर्बहुभिर्युक्तां तन्त्रीलयसम न्विताम् । बालाभ्यां राघवः श्रुत्वा कौतूहलपरोऽभवत् ॥ ३ ॥ अथ कर्मान्तरे राजा समाहूय महामुनीन् । पार्थिवां श्च नरव्याघ्रः पण्डितान्नैगमांस्तथा ॥ ४ ॥ पौराणिकान् शब्दविदो ये च वृद्धा द्विजातयः । स्वराणां लक्षणज्ञांश्च उत्सुकान् द्विजसत्तमान् ॥ ५ ॥ लक्षणज्ञांश्च गान्धर्वान्नैगमांश्च विशेषतः । पादाक्षरसमासज्ञांश्छन्दस्सु परिनिष्ठि तान् ॥ ६ ॥ कलामात्रविभागज्ञान् ज्योतिषे च परं गतान् । क्रियाकल्पविदश्चैव तथा काव्यविदो जनान् ॥ ७ ॥

तौ रजन्यामित्यादि । हुतहुताशनौ कृतसमिदाधानौ ॥ १ ॥ तामिति । पूर्वेति । गायकाभ्यां पूर्वमाचार्येण निर्मिताम् अपूर्वां प्रागश्रुताम् । पाठ्यस्य गेयस्य जातिः षड्जादिः गेयेन गानधर्मेण ॥ २ ॥ प्रमाणैरिति । प्रमाणैः ध्वनिपरिच्छेदसाधनैः । कौतूहलपरः विस्मयवान् ॥ ३ ॥ अथेति । कर्मान्तरे अश्वमेधस्य प्रयोगावसाने ॥ ४ ॥ पौराणिकानिति । स्वराणां षड्जादिस्वराणाम् । उत्सुकान् रामायणश्रवणोत्सुकानित्यर्थः ॥ ५ ॥ लक्षणज्ञानिति । गान्धर्वान् गान्धर्व शास्त्रज्ञान् । पादाक्षरसमासज्ञान् पादाक्षराणां गुरुलघुसामान्यज्ञान् । छन्दस्सु वेदेषु ॥ ६ ॥ कलामात्रेति । कलामात्रविभागज्ञान् कलाः स्वराः तेषां मात्रा एकद्वित्रिलक्षणाः तेषां विभागज्ञान् । परं पारंगतान् । क्रियाकल्पविदः क्रियाकल्पः क्रियाप्रयोगप्रतिपादकं कल्पसूत्रम्, तद्विदस्तज्ज्ञान् । काव्यविदः

काव्यलक्षणलक्ष्यविद इत्यर्थः । काव्यविदो जनानिति न पाठः ॥ ७ ॥ भाषाज्ञानिति । भाषाज्ञान् अष्टादशभाषास्वरूपज्ञान् । इङ्गितज्ञान् अभिप्राय विदः । नैगमान् वणिजः । पूर्वत्र पौरानित्यर्थः । वचने चापि केवलव्यवहारेऽपि, हेतूपचारकुशलान् युक्तिप्रयोगसमर्थान् । हैतुकान् तार्किकान् ॥८॥ छन्द



भाषाज्ञानिङ्गितज्ञांश्च नैगमांश्चाप्यशेषतः । हेतूपचारकुशलान् वचने चापि हैतुकान् ॥ ८ ॥ छन्दोविदः पुराणज्ञान् वैदिकान् द्विजसत्तमान् । चित्रज्ञान् वृत्तसूत्रज्ञान् गीतनृत्यविशारदान् ॥९॥ शास्त्रज्ञान्नीतिनिपुणान् वेदान्तार्थप्रबोधकान् । एतान् सर्वान् समानीय गातारौ समवेशयत् ॥१०॥ हृष्टा मुनिगणाः सर्वे पार्थिवाश्च महौजसः । पिबन्त इव चक्षुर्भ्यां राजानं गायकौ च तौ ॥ ११ ॥ ऊचुः परस्परं चेदं सर्व एव समन्ततः । उभौ रामस्य सदृशौ बिम्बाद्बिम्बमिवोत्थितौ ॥ १२ ॥ जटिलौ यदि न स्यातां न वल्कलधरौ यदि । विशेषं नाधिगच्छामो गायतो राघवस्य च ॥ १३ ॥ तेषां संवदतामेवं श्रोतॄणां हर्षवर्धनम् । गेयं प्रचक्रतुस्तत्र तावुभौ मुनिदारकौ ॥ १४ ॥ ततः प्रवृत्तं मधुरं गान्धर्वमतिमानुषम् । न च तृप्तिं ययुः सर्वे श्रोतारो गानसम्पदा ॥१५॥ प्रवृत्तमादितः पूर्वसर्गं नारददर्शितम् । ततः प्रभृति सर्गांश्च यावद्विंशत्यगायताम् ॥ १६ ॥ ततोऽपराह्णसमये राघवः समभाषत । श्रुत्वा विंशतिसर्गांस्तान् भ्रातरं भ्रातृवत्सलः ॥ १७ ॥ अष्टादशसहस्राणि सुवर्णस्य महात्मनोः । प्रयच्छ शीघ्रं काकुत्स्थ यदन्यदभिकांक्षितम् । ददौ शीघ्रं स काकुत्स्थो बालयोर्वै पृथक् पृथक् ॥ १८ ॥ दीयमानं सुवर्णं तु नागृह्णीतां कुशीलवौ । ऊचतुश्च महात्मानौ किमनेनेति विस्मितौ ॥ १९ ॥



इति । वृत्तज्ञान् वृत्तशास्त्रज्ञान् । चित्रज्ञान् चक्रबन्धादिसहितचित्रकाव्यरचनानिपुणान् ॥९॥ शास्त्रेति । शास्त्रज्ञान् व्याकरणादिशास्त्रज्ञान् । समवेशयत्, सभामध्ये इति शेषः ॥ १०–१५ ॥ प्रवृत्तमिति । यत्र गेयेन नारददर्शितं पूर्वसर्गमादितः प्रवृत्तम् ॥ १६–१८ ॥ दीयमानमिति । कुशीलवौ,

विस्मितौ सकृदेव बहुप्रदानतः विस्मयवन्तौ, किमनेनेत्येवोचतुश्च ॥ १९ ॥ तदेव स्पष्टीकरोति--वन्येनेत्यादि । निरतौ निरताहारौ ॥ २० ॥ २१ ॥ तस्येति । आगमं प्राप्तिम् ॥ २२ ॥ किंप्रमाणमिदमित्यादि । का प्रतिष्ठा कियत्पर्यन्तामित्याशयः । काव्यस्य कः कर्तेत्यनुकर्षः । मुनिपुङ्गव इति, आस्त इति शेषः ॥ २३ ॥२४॥ वाल्मीकिरित्यादि । येन कृतमिदमशेषं चरितं काव्यं तुभ्यं सम्प्रदर्शितं सोऽस्य काव्यस्य कर्ता भगवान् वाल्मीकिः ।

वन्येन फलमूलेन निरतौ वनवासिनौ । सुवर्णेन हिरण्येन किं करिष्यावहे वने ॥ २० ॥ तथा तयोः प्रब्रुवतोः कुतूहलसमन्विताः । श्रोतारश्चैव रामश्च सर्वे एव सुविस्मिताः ॥ २१ ॥ तस्य चैवागमं रामः काव्यस्य श्रोतुमुत्सुकः । पप्रच्छ तौ महातेजास्तावुभौ मुनिदारकौ ॥ २२ ॥ किंप्रमाणमिदं काव्यं का प्रतिष्ठा महात्मनः । कर्ता काव्यस्य महतः क चासौ मुनिपुङ्गवः ॥२३॥ पृच्छन्तं राघवं वाक्यमूचतुर्मुनिदारकौ ॥२४॥ वाल्मीकिर्भगवान् कर्ता संप्राप्तो यज्ञसंविधम् । येनेदं चरितं तुभ्यमशेषं संप्रदर्शितम् ॥ २५ ॥ सन्निबद्धं हि श्लोकानां चतुर्विंशत्सहस्रकम् । उपाख्यान शतं चैव भार्गवेण तपस्विना ॥ २६ ॥ आदिप्रभृति वै राजन् पञ्च सर्गशतानि च । काण्डानि षट् कृतानीह सोत्तराणि महात्मना । कृतानि गुरुणाऽस्माकमृषिणा चरितं तव ॥ २७ ॥ प्रतिष्ठाऽऽजीवितं यावत् तावत् सर्वस्य वर्तते ॥२८॥ यदि बुद्धिः कृता राजन् श्रवणाय महारथ । कर्मान्तरे क्षणीभूतस्तच्छृणुष्व सहानुजः ॥२९॥ बाढ मित्यब्रवीद्रामस्तौ चानुज्ञाप्य राघवम् । प्रहृष्टौ जग्मतुः स्थानं यत्रास्ते मुनिपुङ्गवः ॥ ३० ॥

यज्ञसंविधम् । बिन्दुश्छान्दसः । यज्ञवाटसविधदेशं प्राप्तः ॥ २५ ॥ सन्निबद्धमिति । चतुर्विंशतिसाहस्रमित्यादिकमग्रे स्पष्टीकरिष्यामः । चतुर्विंशति साहस्रं श्लोकानां सन्निबन्धनमिति च पाठः । उपाख्यानशतम् इलोपाख्यानान्तम् । भार्गवेण भृगुवंश्येन । वाल्मीकेरेव भार्गवत्वं प्राचेतसत्वं चाविरुद्ध मिति दर्शितम् " तपस्स्वाध्यायनिरतम् " इति श्लोकव्याख्याने ॥ २६ ॥ आदिप्रभृतीति । पञ्च सर्गशतानीति षट्काण्डाभिप्रायेण । चकारादुत्तर काण्डसर्गसङ्ख्यासमुच्चयः ॥ २७ ॥ प्रतिष्ठेत्यादि । आजीवितमिति पदम् । यावत् काव्यनायकस्य जीवितं तावत्तस्य यत् शुभाशुभं तस्य सर्वस्यात्र प्रतिष्ठा निबन्धनमस्ति ॥ २८ ॥ यदीति । हे राजन्! यदि तस्य सर्वस्य श्रवणाय बुद्धिः कृता, तदा कर्मान्तरे क्षणीभूतः सुखीभूतः शृणु ॥२९॥३०॥

॥ ३१ ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते मणिमकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुर्नवतितमः सर्गः ॥ ९४ ॥
॥ १ ॥ यदीति । महामुनिमनुमान्य महामुनेरनु राम इत्यादि ॥ १ ॥ तस्मिन्निति । गीते तु गीत एव । नतु ततः पूर्वं कस्यचिन्मुखादित्यर्थः ॥ २ ॥ ३ ॥

रामोऽपि मुनिभिः सार्धं पार्थिवैश्च महात्मभिः । श्रुत्वा तद्गीतिमाधुर्यं कर्मशालामुपागमत् ॥ ३१ ॥ शुश्राव तत्तालयोपपन्नं सर्गान्वितं स स्वरशब्दयुक्तम् । तन्त्रीलयव्यञ्जनयोगयुक्तं कुशीलवाभ्यां परिगीयमानम् ॥ ३२ ॥

इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे चतुर्नवतितमः सर्गः ॥ ९४ ॥

रामो बहून्यहान्येवं तद्गीतं परमं शुभम् । शुश्राव मुनिभिः सार्धं पार्थिवैः सह वानरैः ॥ १ ॥ तस्मिन् गीते तु विज्ञाय सीतापुत्रौ कुशीलवौ । तस्याः परिषदो मध्ये रामो वचनमब्रवीत् । दूतान् शुद्धसमाचारानाहूयात्ममनीषया ॥ २ ॥ मद्वचो ब्रूत गच्छध्वमितो भगवतोऽन्तिकम् ॥ ३ ॥ यदि शुद्धसमाचारा यदि वा वीतकल्मषा । करोत्विहात्मनः शुद्धिमनुमान्य महामुनिम् ॥ ४ ॥ छन्दं मुनेश्च विज्ञाय सीतायाश्च मनोगतम् । प्रत्ययं दातुकामायास्ततः शंसत मे लघु ॥ ५ ॥ श्वः प्रभाते तु शपथं मैथिली जनकात्मजा । करोतु परिषन्मध्ये शोधनार्थं ममैव च ॥ ६ ॥

मतिं कृत्वेत्यर्थः ॥ ४ ॥ छन्दमिति । छन्दम् अभिप्रायम् ॥ ५–१० ॥

स०–तद्गीतं समस्तं व्यस्तं च ॥ १ ॥ तस्मिन् गीते तन्मुखगीतं रामायणरूपं । सीताऽसूतैतौ सुताविति विज्ञाय लोकलोचनमपेक्ष्य ज्ञात्वा । इयमेवोपज्ञा रामस्येति भावः । शुद्धसमाचारान् दूतान् । एतेन महातपस्विसमीपसमापतनयोग्यतां सूचयति । आत्ममनीषया स्वधिया । अपरप्रेरणयेति भावः । भगवतो वाल्मीकेः । अन्तिकं गत्वा मद्वचो ब्रूत । अन्तिक इति पाठे–गच्छध्वं भगवतोऽन्तिके मद्वचो ब्रूतेत्यन्वयः ॥ २ ॥ ३ ॥ यदि शुद्धसमाचारा सीता प्रागेव । अथवा वीतकल्मषा तपसा । परसदननिवासागतागतपातका वा । महामुनिं वाल्मीकिम् । अनुमान्य सम्मतं कृत्वा । आत्मनः शुद्धिं निष्कल्मषत्वप्रथां करोतु । आत्मनो मम मनसः शुद्धिम् अडोलायमानतां करोत्विति वा ॥ ४ ॥ यद्यप्यवयागन्धविधुरेति चतुराननादिपुरतोऽशरीरगिरोदीरितत्वान्न संशयः, तथाप्यन्यथाकथकदुर्जनाननबन्धार्थं स्वस्य तत्सौन्दर्थलुब्धताकलङ्कापकर्षणार्थं च पुनः शपथः कर्तव्य इत्याह–श्वः प्रभात इति । मम मनःशोधनार्थं परिषन्मध्ये शपथं करोतु ॥ ६ ॥

तथोक्ता इति। सीता तथैव करिष्यतीत्युक्ता इत्यर्थः ॥ ११ ॥ १२ ॥ भगवन्त इति। यश्चैवान्योऽपीति। यश्च पापी पापजल्पः प्राकृतः सोऽपीत्यर्थः

श्रुत्वा तु राघवस्यैतद्वचः परममद्भुतम्। दूताः संप्रययुर्वाटं यत्रास्ते मुनिपुङ्गवः ॥७॥ ते प्रणम्य महात्मानं ज्वलन्तममितप्रभम्। ऊचुस्ते रामवाक्यानि मृदूनि मधुराणि च ॥ ८ ॥ तेषां तद्व्याहृतं श्रुत्वा रामस्य च मनोगतम्। विज्ञाय सुमहातेजा मुनिर्वाक्यमथाब्रवीत् ॥ ९ ॥ एवं भवतु भद्रं वो यथा वदति राघवः। तथा करिष्यते सीता दैवतं हि पतिः स्त्रियाः ॥ १० ॥ तथोक्ता मुनिना सर्वे रामदूता महौजसम्। प्रत्येत्य राघवं क्षिप्रं मुनिवाक्यं बभाषिरे ॥ ११ ॥ ततः प्रहृष्टः काकुत्स्थः श्रुत्वा वाक्यं महात्मनः। ऋषींस्तत्र समेतांश्च राज्ञश्चैवाभ्यभाषत ॥ १२ ॥ भगवन्तः सशिष्या वै सानुगाश्च नराधिपाः। पश्यन्तु सीताशपथं यश्चैवान्योऽपि काङ्क्षते ॥ १३ ॥ तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः। सर्वेषामृषिमुख्यानां साधुवादो महानभूत् ॥ १४ ॥ राजानश्च महात्मानं प्रशंसन्ति स्म राघवम्। उपपन्नं नरश्रेष्ठ त्वय्येव भुवि नान्यतः ॥ १५ ॥ एवं विनिश्चयं कृत्वा श्वोभूत इति राघवः। विसर्जयामास तदा सर्वांस्तान् शत्रुसूदनः ॥ १६ ॥ इति सम्प्रविचार्य राजसिंहः श्वोभूते शपथस्य निश्चयं वै। विससर्ज मुनीन्नृपांश्च सर्वान् स महात्मा महतो महानुभावः ॥१७॥ इत्यार्षे वाल्मी० श्रीमदुत्तरश्रीरामायणे पञ्चनवतितमः सर्गः ॥९५॥

तस्यां रजन्यां व्युष्टायां यज्ञवाटगतो नृपः। ऋषीन् सर्वान् महातेजाः शब्दापयति राघवः ॥ १ ॥ वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः। विश्वामित्रो दीर्घतपा दुर्वासाश्च महातपाः ॥२॥ पुलस्त्योऽपि तथा शक्तिर्भार्गवश्चैव वामनः। मार्कण्डेयश्च दीर्घायुर्मौद्गल्यश्च महायशाः ॥ ३ ॥ गर्गश्च च्यवनश्चैव शतानन्दश्च धर्मवित्। भरद्वाजश्च तेजस्वी ह्यग्निपुत्रश्च सुप्रभः ॥ ४ ॥ नारदः पर्वतश्चैव गौतमश्च महायशाः। कात्यायनः सुयज्ञश्च ह्यगस्त्यस्तपसां निधिः ॥५॥

॥ १३-१७ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चनवतितमः सर्गः ॥ ९५ ॥ तस्यामित्यादि। शब्दापयति

आह्वयति स्म । यङ्भाव आर्षः ॥ १–१२ ॥ तत इति । दुःखजन्मविशालेन दुःखोत्पत्त्या विस्तीर्णेन ॥ १२–१७ ॥ इमौ त्विति । यमजातकौ

एते चान्ये च बहवो मुनयः संशितव्रताः । कौतूहलसमाविष्टाः सर्व एव समागताः ॥ ६ ॥ राक्षसाश्च महावीर्या वानराश्च महाबलाः । सर्व एव समाजग्मुर्महात्मानः कुतूहलात् ॥ ७ ॥ क्षत्रिया ये च शूद्राश्च वैश्याश्चैव सहस्रशः । नानादेशगताश्चैव ब्राह्मणाः संशितव्रताः ॥ ८ ॥ ज्ञाननिष्ठाः कर्मनिष्ठा योगनिष्ठास्तथा परे । सीताशपथवीक्षार्थं सर्व एव समागताः ॥ ९ ॥ तदा समागतं सर्वमश्मभूतमिवाचलम् । श्रुत्वा मुनिवरस्तूर्णं ससीतः समुपागमत् ॥ १० ॥ तमृषिं पृष्ठतः सीता त्वन्वगच्छदवाङ्मुखी । कृताञ्जलिर्बाष्पगला कृत्वा रामं मनोगतम् ॥ ११ ॥ दृष्ट्वा श्रुतिमिवायान्तीं ब्रह्माणमनुगामिनीम् । वाल्मीकेः पृष्ठतः सीतां साधुवादो महानभूत् ॥ १२ ॥ ततो हलहलाशब्दः सर्वेषामेव साबभौ । दुःखजन्मविशालेन शोकेनाकुलितात्मनाम् ॥ १३ ॥ साधु रामेति केचित्तु साधु सीतेति चापरे । उभावेव च तत्रान्ये प्रेक्षकाः संप्रचुक्रुशुः ॥ १४ ॥ ततो मध्ये जनौघस्य प्रविश्य मुनिपुङ्गवः । सीतासहायो वाल्मीकिरिति होवाच राघवम् ॥ १५ ॥ इयं दाशरथे सीता सुव्रता धर्मचारिणी । अपवादैः परित्यक्ता ममाश्रमसमीपतः ॥ १६ ॥ लोकापवादभीतस्य तव राम महाव्रत । प्रत्ययं दास्यते सीता तदनुज्ञातुमर्हसि ॥ १७ ॥ इमौ तु जानकीपुत्रावुभौ च यमजातकौ । सुतौ तवैव दुर्धर्षौ सत्यमेतद् ब्रवीमि ते ॥ १८ ॥ प्रचेतसोऽहं दशमः पुत्रो राघवनन्दन । न स्मराम्यनृतं वाक्यमिमौ तु तव पुत्रकौ ॥ १९ ॥

यमलतयोत्पन्नौ ॥ १८ ॥ प्रचेतस इति । यथाऽहं प्रचेतसो दशमः औरसः पुत्रः तथैव तवेमौ पुत्रौ । अनृतं वाक्यम् अहं मनसा न स्मरामि । कथनं

स०—आकुलितात्मनां चलचित्तानाम् । आकुलात्मनां क्षुब्धचित्तानामिति नागोजिभट्टः । तन्न, मन्थनदण्ड एव वाच्ये इडभावोऽन्यत्र क्षुभित इत्युक्तेः । न च क्षुब्धो राजेत्यादिवदिदम् आगमशास्त्रस्यानित्यत्वाद्। क्षुब्ध इव क्षुब्धः पत्नीव पत्नी वृषलस्येत्यादिवदुपचारादुपपद्यत इति वाच्यम् । तं च प्राञ्चो माननीया इति तेषामस्य च महान् व्यत्यास इति नैवं प्रयोज्यम् ॥ १३ ॥

तु दूरत एवेति भावः ॥ १९ ॥ २० ॥ तस्याः फलमिति । यथेयमपापा एवं तपश्चर्यायाः फलम् उपाश्नीयाम् । यथा तपसः फलभोगः निश्चित स्तथेयमपापेत्यर्थः । तस्याहं फलमश्नामि अपापा मैथिली यदि । इति च पाठः । तस्य किल्बिषानाचरणस्येत्यर्थः ॥ २१ ॥ अहमिति । पञ्चसु



बहुवर्षसहस्राणि तपश्चर्या मया कृता । नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली ॥ २० ॥ मनसा कर्मणा वाचा भूतपूर्वं न किल्बिषम् । तस्याः फलमुपाश्नीयामपापा यदि मैथिली ॥ २१ ॥ अहं पञ्चसु भूतेषु मनष्षष्ठेषु राघव । विचिन्त्य सीतां शुद्धेति जग्राह वननिर्झरे ॥ २२ ॥ इयं शुद्धसमाचारा अपापा पतिदेवता । लोकापवादभीतस्य प्रत्ययं तव दास्यति ॥ २३ ॥ तस्मादियं नरवरात्मज शुद्धभावा दिव्येन दृष्टिविषयेण तदा प्रविष्टा । लोकापवाद कलुषीकृतचेतसा या त्यक्ता त्वया प्रियतमा विदिताऽपि शुद्धा ॥ २४ ॥ इत्यार्षे० षण्णवतितमः सर्गः ॥ ९६ ॥ वाल्मीकिनैवमुक्तस्तु राघवः प्रत्यभाषत । प्राञ्जलिर्जगतो मध्ये दृष्ट्वा तां वरवर्णिनीम् ॥ १ ॥ एवमेतन्महाभाग यथा वदसि धर्मवित् । प्रत्ययस्तु मम ब्रह्मंस्तव वाक्यैरकल्मषैः ॥ २ ॥ प्रत्ययस्तु पुरा वृत्तो वैदेह्याः सुरसन्निधौ । शपथस्तु कृतस्तत्र तेन वेश्म प्रवेशिता । लोकापवादो बलवान् येन त्यक्ता हि मैथिली ॥ ३ ॥ सेयं लोकभयाद्ब्रह्म न्नपापेत्यभिजानता । परित्यक्ता मया सीता तद्भवान् क्षन्तुमर्हति ॥ ४ ॥ जानामि चेमौ पुत्रौ मे यमजातौ कुशी लवौ । शुद्धायां जगतो मध्ये मैथिल्यां प्रीतिरस्तु मे ॥ ५ ॥ अभिप्रायं तु विज्ञाय रामस्य सुरसत्तमाः । सीतायाः शपथे तस्मिन् महेन्द्राद्या महौजसः ॥ ६ ॥ पितामहं पुरस्कृत्य सर्व एव समागताः ॥ ७ ॥

भूतेष्विति । श्रोत्रादिपञ्चेन्द्रियेष्वित्यर्थः ॥ २२ ॥ २३ ॥ इति श्रीगोविन्दराज० मणिमुकुटा० उत्तरश्रीरामायणव्याख्याने षण्णवतितमः सर्गः ॥ ९६ ॥ वाल्मीकिनेत्यादि ॥ १ ॥ एवमिति । यथा वदसीति । प्रत्ययं दास्यतीत्येवमात्मनेत्यर्थः । एतदेवमेव कर्तव्यमित्यर्थः । एवंकरणं च न मम विश्वासार्थ मित्याह प्रत्ययो हीति । जात एवेति शेषः । तव वाक्यैरिति । बहुवर्षेत्यादिना प्रागुक्तशपथवाक्यैरित्यर्थः ॥ २–५ ॥ अभिप्रायमिति । सीतायाः शपथ

इति । शपथप्रसङ्ग इत्यर्थः ॥ ६–१२ ॥ तदिति । अचिन्त्यमचिन्त्यहेतुकं वायुस्वरूपम्, यथा पूर्वं कृतयुगे पश्यन्ति स्म तथा तदानीं सर्वे मानवाः निरीक्षन्ते स्म ॥१३–१६॥ यथेति । रामात्परमन्यं पुरुषं न वेद्मीति यथोक्तमेतत्सत्यं चेत् । माधवी माधवपत्नी भूमिः ॥१७॥ तथेति । तथा शपन्त्यां

आदित्या वसवो रुद्रा ह्यश्विनौ समरुद्गणाः । गन्धर्वाप्सरसश्चैव सर्वं एव समागताः ॥ ८ ॥ साध्याश्च विश्वेदेवाश्च सर्वे च परमर्षयः । नागाः सुपर्णाः सिद्धाश्च ते सर्वे हृष्टमानसाः । सीताशपथसम्भ्रान्ताः सर्व एव समागताः ॥९॥ दृष्ट्वा देवानृषींश्चैव राघवः पुनरब्रवीत् । प्रत्ययो मे सुरश्रेष्ठा ऋषिवाक्यैरकल्मषैः ॥१०॥ शुद्धायां जगतो मध्ये वैदेह्यां प्रीतिरस्तु मे ॥११॥ ततो वायुः शुभः पुण्यो दिव्यगन्धो मनोरमः । तज्जनौघं सुरश्रेष्ठो ह्लादयामास सर्वतः ॥१२॥ तदद्भुतमिवाचिन्त्यं निरैक्षन्त समागताः । मानवाः सर्वराष्ट्रेभ्यः पूर्वं कृतयुगे यथा ॥ १३ ॥ सर्वान् समागतान् दृष्ट्वा सीता काषायवासिनी । अब्रवीत् प्राञ्जलिर्वाक्यमधोदृष्टिरवाङ्मुखी ॥ १४ ॥ यथाऽहं राघवादन्यं मनसाऽपि न चिन्तये । तथा मे माधवी देवी विवरं दातुमर्हति ॥ १५ ॥ मनसा कर्मणा वाचा यथा रामं समर्चये । तथा मे माधवी देवी विवरं दातुमर्हति ॥ १६ ॥ यथैतत् सत्यमुक्तं मे वेद्मि रामात् परं न च । तथा मे माधवी देवी विवरं दातुमर्हति ॥ १७ ॥ तथा शपन्त्यां वैदेह्यां प्रादुरासीत्तदद्भुतम् । भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम् ॥ १८ ॥ ध्रियमाणं शिरोभिस्तु नागैरमितविक्रमैः । दिव्यं दिव्येन वपुषा दिव्यरत्नविभूषितैः ॥ १९ ॥ तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम् । स्वागतेनाभिनन्द्यैनामासने चोपवेशयत् ॥ २० ॥ तामासनगतां दृष्ट्वा प्रविशन्तीं रसातलम् । पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत् ॥ २१ ॥ साधुकारश्च सुमहान् देवानां सहसोत्थितः । साधु साध्विति वै सीते यस्यास्ते शीलमीदृशम् ॥ २२ ॥ एवं बहुविधा वाचो ह्यन्तरिक्षगताः सुराः । व्याजहुर्हृष्टमनसो दृष्ट्वा सीताप्रवेशनम् ॥ २३ ॥ यज्ञवाटगताश्चापि मुनयः सर्व एव ते । राजानश्च नरव्याघ्रा विस्मयान्नोपरेमिरे ॥ २४ ॥

त्रिः शपन्त्याम् । तत् सिंहासनम् ॥ १८ ॥ ध्रियमाणमिति । नागैः शिरोभिः ध्रियमाणम्, अदृश्यतेति शेषः ॥ १९–२३ ॥ यज्ञवाटेति । विस्मयात्

आश्चर्याभिज्ञावेदनव्यवहारान्नोपरेमिरे नोपरता बभूवुः ॥ २४ ॥ आमारिति इति । संहृष्टा इति । सीतायाः अयशो गतमिति संहृष्टाः । अचेतनाः विसंज्ञाः ॥ २५ ॥ २६ ॥ सीताप्रवेशनमिति । तेषां मुन्यादीनाम् । समागमः हर्षसंबन्धः । यदेवमतः संमोहितमिव संमोहितमेवाभूत् ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते भणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तनवतितमः सर्गः ॥ ९७ ॥

अन्तरिक्षे च भूमौ च सर्वे स्थावरजङ्गमाः । दानवाश्च महाकायाः पाताले पन्नगाधिपाः ॥ २५ ॥ केचिद्विनेदुः संहृष्टाः केचिद्ध्यानपरायणाः । केचिद्रामं निरीक्षन्ते केचित् सीतामचेतनाः ॥ २६ ॥ सीताप्रवेशनं दृष्ट्वा तेषा मासीत् समागमः । तन्मुहूर्तमिवात्यर्थं समं संमोहितं जगत् ॥२७॥ इत्यार्षे उत्तरश्री० सप्तनवतितमः सर्गः ॥९७॥

रसातलं प्रविष्टायां वैदेह्यां सर्ववानराः । चुक्रुशुः साधु साध्वीति मुनयो रामसन्निधौ ॥ १ ॥ दण्डकाष्ठमवष्टभ्य बाष्पव्याकुलितेक्षणः । अवाक्छिरा दीनमना रामो ह्यासीत् सुदुःखितः ॥२॥ स रुदित्वा चिरं कालं बहुशो बाष्प मुत्सृजन् । क्रोधशोकसमाविष्टो रामो वचनमब्रवीत् ॥३॥ अभूतपूर्वं शोकं मे मनः स्प्रष्टुमिवेच्छति । पश्यतो मे यथा नष्टा सीता श्रीरिव रूपिणी ॥४॥ साऽदर्शनं पुरा सीता लङ्कापारे महोदधेः । ततश्चापि मयाऽऽनीता किं पुनर्वसुधातलात् ॥५॥ वसुधे देवि भवति सीता निर्यात्यतां मम । दर्शयिष्यामि वा रोषं यथा मामवगच्छसि ॥ ६ ॥

रसातलमित्यादि ॥ १ ॥ दण्डकाष्ठमिति । दण्डरूपं काष्ठं दण्डकाष्ठम् ॥ २ ॥ ३ ॥ अभूतपूर्वमिति । मनः शोकमिव, मनः शोकमेव स्प्रष्टुमिति । पश्यतो मेऽद्य सा नष्टेति । मामप्यनादृत्य ॥ ४ ॥ सेति । आनीता प्रापितवतीत्यर्थः । सा अदर्शनमिति पदच्छेदः ॥ ५–८ ॥

स०—सीताप्रवेशनं दृष्ट्वा स्थितानां तेषां मुनिप्रमुखानां समागमः, हर्षादेरिति शेषः । आसीत् । यस्मिन्मुहूर्ते तं प्राप्य समं जगत्सर्वं विश्वं सम्मोहितमत्यर्थमभवत् । मैथिलीनिलनाशावे पुनरस्थानायासः कुतस्सम्पादनीयोऽयोध्याध्यक्षेणेति चेन्न; जानकीविषयजनापवादापनुत्त्यै इत्यवेहि । पुनरेव हि च पूर्वं स्वतोऽपि लोकागमनं कामिन्या विहितमिति तां प्राक्प्रेषयितुमियं लीलेति ॥ २७ ॥ यथा मामवगच्छसि मद्बलं वराहावतारादौ त्वमेव जानासीत्यर्थः ॥ ६ ॥

आनयेति । मत्तः प्राप्तमोह इत्यर्थः । महीतल इति, प्रविष्टामिति शेषः ॥ ९–११ ॥ राम रामेति । स्मर त्वं पूर्वकं भावम्, पूर्वकं स्वभावं विष्णुत्वमित्यर्थः । मन्त्रं देवैः सहावताराय कृतं विचारम् ॥ १२ ॥ न खल्विति । त्वामहं न स्मारयेयम्, सर्वज्ञत्वादिति भावः । पूर्वकं भावमित्युक्तं

कामं श्वश्रूर्ममैव त्वं त्वत्सकाशाद्धि मैथिली । कर्षता हलहस्तेन जनकेनोद्धृता पुरा ॥ ७ ॥ तस्मान्निर्यात्यतां सीता विवरं वा प्रयच्छ मे । पाताले नाकपृष्ठे वा वसेयं सहितस्तया ॥ ८ ॥ आनय त्वं हि तां सीतां मत्तोऽहं मैथिलीकृते । न मे दास्यसि चेत् सीतां यथारूपां महीतले ॥ ९ ॥ सपर्वतवनां कृत्स्नां विधमिष्यामि ते स्थितिम् । नाशयिष्याम्यहं भूमिं सर्वमापो भवन्त्विह ॥ १० ॥ एवं ब्रुवाणे काकुत्स्थे क्रोधशोकसमन्विते । ब्रह्मा सुरगणैः सार्धमुवाच रघुनन्दनम् ॥ ११ ॥ राम राम न सन्तापं कर्तुमर्हसि सुव्रत । स्मर त्वं पूर्वकं भावं मन्त्रं चामित्रकर्शन ॥ १२ ॥ न खलु त्वां महाबाहो स्मारयेयमनुत्तमम् । इमं मुहूर्तं दुर्धर्ष स्मर त्वं जन्म वैष्णवम् ॥ १३ ॥ सीता हि विमला साध्वी तव पूर्वपरायणा । नागलोकं सुखं प्रायात्त्वदाश्रयतपोबलात् ॥ १४ ॥ स्वर्गे ते सङ्गमो भूयो भविष्यति न संशयः । अस्यास्तु परिषन्मध्ये यद्ब्रवीमि निबोध तत् ॥ १५ ॥ एतदेव हि काव्यं ते काव्यानामुत्तमं श्रुतम् । सर्वं विस्तरतो राम व्याख्यास्यति न संशयः ॥ १६ ॥

विशिनष्टि-इममिति ॥ १३ ॥ सीतेति । तव पूर्वपरायणा तव पूर्वभावप्रवणा । तव प्रकृतिप्राप्तिसमुत्सुकेत्यर्थः ॥ १४ ॥ १५ ॥ एतदित्यादि । एतत्काव्यमेवोत्तमं श्रुतं तत्सर्वं ज्ञापनीयम्, विस्तरतो व्याख्यास्यति ज्ञापयिष्यति ॥ १६ ॥

स०—प्राक् लोकप्रवादः मम पत्नीमाता त्वमिति । स इदानीं दानाज्ञानक्या मम साक्षिगोचरश्चरितव्य इत्याह—काममिति । फालहस्तेन भूशोधकफालहस्तेन ॥ ७ ॥ यन्निमित्तमहं मत्तो विभ्रान्तस्तां सीतामानय । महीतले प्रविष्टां यथारूपां मे मह्यं न दास्यसि चेत् मद्दासी नासीत्यावृत्त्याऽन्वयः ॥ ९ ॥ तव दासी न चेत् किं करोषीति तत्राह—सपर्वतवनामिति । आपो भवन्तु जललीनां करिष्यामीति भावः ॥ १० ॥ अस्याः सीतायाः स्वर्गे नित्यसुखरूपे वैकुण्ठे सङ्गमो भविष्यति । परिषन्मध्ये सदोमध्ये । अनेन नैकदेशान्वयमप्रतो लुप्तषष्ठ्यन्ततोररीकारकारणक आयासो नागोजिभट्टपक्ष इवेति ज्ञेयम् ॥ १९ ॥

तदेवाह—जन्मप्रभृतीत्यादि । भविष्यत्युत्तरं चेति । सीतापसहारादुत्तरं च यत् चरितं भविष्यति, तत्सर्वमपि मदनुग्रहात् त्रिकालज्ञेन वाल्मीकिना कृतं कृतनिबन्धनम् । इह काव्ये । भविष्यत्युत्तरं चेति च पाठः ॥ १७ ॥ आदिकाव्यमिति । त्वयि त्वच्चरितविषये । राघवादृतेऽन्यः काव्यप्रकाशितयशोभाक् कश्चिदपि काव्यनायकतां नार्हति । अत एवाद्यापि सर्वे कवयो रामचरितमेव प्रायेणाश्रयन्ते ॥ १८ ॥ श्रुतमिति । अनावृतम् अज्ञाना

जन्मप्रभृति ते वीर सुखदुःखोपसेवनम् । भविष्यत्युत्तरं चेह सर्वं वाल्मीकिना कृतम् ॥ १७ ॥ आदिकाव्यमिदं राम त्वयि सर्वं प्रतिष्ठितम् । न ह्यन्योऽर्हति काव्यानां यशोभाग्राघवादृते ॥ १८ ॥ श्रुतं ते पूर्वमेतद्धि मया सर्वं सुरैः सह । दिव्यमद्भुतरूपं च सत्यवाक्यमनावृतम् ॥१९॥ स त्वं पुरुषशार्दूल धर्मेण सुसमाहितः । शेषं भविष्यं काकुत्स्थ काव्यं रामायणं शृणु ॥२०॥ उत्तरं नाम काव्यस्य शेषमत्र महायशः । तच्छृणुष्व महातेज ऋषिभिः सार्धमुत्तमम् ॥२१॥ न खल्वन्येन काकुत्स्थ श्रोतव्यमिदमुत्तमम् । परमं ऋषिणा वीर त्वयैव रघुनन्दन ॥२२॥ एतावदुक्त्वा वचनं ब्रह्मा त्रिभुवनेश्वरः । जगाम त्रिदिवं देवो देवैः सह सबान्धवैः ॥ २३ ॥ ये च तत्र महात्मान ऋषयो ब्राह्मलौकिकाः । ब्रह्मणा समनुज्ञाता न्यवर्तन्त महौजसः । उत्तरं श्रोतुमनसो भविष्यं यच्च राघवे ॥ २४ ॥ ततो रामः शुभां वाणीं देवदेवेन भाषिताम् । श्रुत्वा परमतेजस्वी वाल्मीकिमिदमब्रवीत् ॥२५॥ भगवन् श्रोतुमनस ऋषयो ब्राह्मलौकिकाः । भविष्यदुत्तरं यन्मे श्वोभूते सम्प्रवर्तताम् ॥२६॥ एवं विनिश्चयं कृत्वा संप्रगृह्य कुशीलवौ । तं जनौघं विसृज्याथ पर्णशालामुपागमत् । तामेव शोचतः सीतां सा व्यतीयाय शर्वरी ॥ २७ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे अष्टनवतितमः सर्गः ॥ ९८ ॥

वरणरहितम् ॥ १९ ॥ स त्वमिति । भविष्यं भविष्यद्विषयम् ॥ २० ॥ उत्तरं नामेति । उत्तरकाण्डाख्यकाव्यं शेषभूतम् ॥ २१ ॥ नेति । परमर्षिणा परमराजर्षिणा ॥ २२ ॥ २३ ॥ ये चेति । ये च तत्रेति । यज्ञसदसीत्यर्थः । ब्राह्मलौकिकाः ब्रह्मलोकार्हाः ॥ २४–२६ ॥ एवमिति । पर्णशालामुपागम

दिति । यज्ञावसान एव सीतान्तर्धानात्, ततः परं दीक्षापरिलोप... सह वाल्मीकिपर्णशालामेव रामः प्राप्तवा नित्यर्थः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टनवतितमः सर्गः ॥ ९८ ॥





रजन्यां त्वित्यादि । गीयतामित्युवाच । अविशङ्काभ्यां मत्पुत्रत्वविषयशङ्कारहिताभ्याम् । मातृवियोगदुःखरहिताभ्यां वा ॥ १ ॥ २ ॥ प्रविष्टाया

रजन्यां तु प्रभातायां समानीय महामुनीन् । गीयतामविशङ्काभ्यां रामः पुत्रावुवाच ह ॥ १ ॥ ततः समुपविष्टेषु ब्रह्मर्षिषु महात्मसु । भविष्यदुत्तरं काव्यं जगतुस्तौ कुशीलवौ ॥ २ ॥ प्रविष्टायां तु सीतायां भूतलं सत्यसम्पदा । तस्यावसाने यज्ञस्य रामः परमदुर्मनाः ॥ ३ ॥ अपश्यमानो वैदेहीं मेने शून्यमिदं जगत् । शोकेन परमायस्तो न शान्तिं मनसाऽगमत् ॥ ४ ॥ विसृज्य पार्थिवान् सर्वानृक्षवानरराक्षसान् । जनौघं विप्रमुख्यानां वित्तपूर्वं विसृज्य च ॥५॥ एवं समाप्य यज्ञं तु विधिवत् स तु राघवः । ततो विसृज्य तान् सर्वान् रामो राजीवलोचनः ॥६ ॥ हृदि कृत्वा तदा सीतामयोध्यां प्रविवेश ह । इष्टयज्ञो नरपतिः पुत्रद्वयसमन्वितः ॥ ७ ॥ न सीतायाः परां भार्यां वव्रे स रघुनन्दनः । यज्ञे यज्ञे च पत्न्यर्थं जानकी काञ्चनी भवत् ॥ ८ ॥ दश वर्षसहस्राणि वाजिमेधानथाकरोत् । वाजपेयान् दशगुणांस्तथा बहुसुवर्णकान् ॥ ९ ॥ अग्निष्टोमातिरात्राभ्यां गोसवैश्च महाधनैः । ईजे क्रतुभिरन्यैश्च स श्रीमानाप्तदक्षिणैः ॥ १० ॥ एवं स कालः सुमहान् राज्यस्थस्य महात्मनः । धर्मे प्रयतमानस्य व्यतीयाद्राघवस्य तु ॥ ११ ॥ अनुरञ्जन्ति राजानमहन्यहनि राघवम् । ऋक्षवानररक्षांसि स्थिता रामस्य शासने ॥ १२ ॥

मिति । सत्यसम्पदा सत्यवैभवेन । तस्यावसाने यज्ञस्येति । सीतानिर्याणासन्नपूर्वकाल इत्यर्थः ॥ ३ ॥ ४ ॥ विसृज्येति । वित्तपूर्वं वित्तदानपूर्वमित्यर्थः ॥ ५–७ ॥ नेति । न सीताया इत्यनेन रामस्य एकदारव्रतं सीताप्रतिनिधिनैव यज्ञनिर्वर्तनं च दर्शितम् ॥ ८ ॥ दश वर्षेति । दश वर्षसहस्राणीत्यनेन प्रथमयज्ञ एव सीताया भूप्रवेश इत्युक्तम् । बहुसुवर्णकान् बहुसुवर्णकयागान् ॥ ९ ॥ अग्निष्टोमेति । गोसवैः गोसवाख्ययागैः । अश्वमेधसंक्षेपे

रितिं संक्षेपवचनमेतत्परं वेदितव्यम् (?)। शतशब्दस्य बहुसङ्ख्यावचनत्वात् । गोशतैश्चेति पाठः ॥ १०–१२ ॥ काल इति । सुभिक्षमिति, अभवदिति शेषः ॥ १३–१६ ॥ सर्वा इति । सर्वधर्मं चेति । सर्वधर्मसाध्यभोगमित्यर्थः ॥ १७ ॥ १८ ॥ पित्र्याणीति । पित्र्याणि पितृकर्मापेक्षितानि । ब्रह्म

काले वर्षति पर्जन्यः सुभिक्षं विमला दिशः । हृष्टपुष्टजनाकीर्णं पुरं जनपदास्तथा ॥ १३ ॥ नाकाले म्रियते कश्चिन्न व्याधिः प्राणिनां तथा । नानर्थो विद्यते कश्चित् रामे राज्यं प्रशासति ॥ १४ ॥ अथ दीर्घस्य कालस्य राममाता यशस्विनी । पुत्रपौत्रैः परिवृता कालधर्ममुपागमत् ॥ १५ ॥ अन्वियाय सुमित्रा च कैकेयी च यशस्विनी । धर्मं कृत्वा बहुविधं त्रिदिवे पर्यवस्थिता ॥ १६ ॥ सर्वाः प्रमुदिताः स्वर्गे राज्ञा दशरथेन च । समागता महाभागाः सर्वधर्मं च लेभिरे ॥ १७ ॥ तासां रामो महादानं काले काले प्रयच्छति । मातृणामविशेषेण ब्राह्मणेषु तपस्विषु ॥ १८ ॥ पित्र्याणि ब्रह्मरत्नानि यज्ञान् परमदुस्तरान् । चकार रामो धर्मात्मा पितॄन् देवान् विवर्धयन् ॥ १९ ॥ एवं वर्षसहस्राणि बहून्यथ ययुः सुखम् । यज्ञै बहुविधं धर्मं वर्धयानस्य सर्वदा ॥ २० ॥ इत्यार्षे० एकोनशततमः सर्गः ॥ ९९ ॥

कस्यचित्त्वथ कालस्य युधाजित् केकयो नृपः । स्वगुरुं प्रेषयामास राघवाय महात्मने । गार्ग्यमङ्गिरसः पुत्रं ब्रह्मर्षिममितप्रभम् ॥ १ ॥ दश चाश्वसहस्राणि प्रीतिदानमनुत्तमम् ॥ २ ॥ कम्बलानि च रत्नानि चित्रवस्त्रमथोत्तमम् । रामाय प्रददौ राजा शुभान्याभरणानि च ॥ ३ ॥ श्रुत्वा तु राघवो धीमान् ब्रह्मर्षिं गार्ग्यमागतम् । मातुलस्याश्वपतिनः प्रहितं तन्महद्धनम् ॥ ४ ॥

रत्नानि ब्राह्मणदेयवस्तूनि । प्रयच्छति स्मेत्यनुकर्पः । पितॄन् देवान् विवर्धयन् यज्ञांश्चकारेति । पिण्डपितृयज्ञानित्यर्थः ॥ १९ ॥ एवमिति । वर्धयानस्य वर्धमानस्येत्यर्थः ॥ २० ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोनशततमः सर्गः ॥ ९९ ॥

कस्यचित्त्वित्यादि ॥ १–३ ॥ श्रुत्वेति । अश्वपतिनः अश्वपतेः ॥ ४ ॥ ५ ॥

स०—वर्षसहस्राणि "एवं त्रयोदशसहस्रसमाः" इत्याद्युक्तप्रकारेण ज्ञेयानि । ननु पाद्मे—"एवं प्रशासतस्तस्य राघवस्य महेश्वरि । अत्ययादशसाहस्रं रममाणस्य सीतया ॥" इत्युक्तेः कथं त्रयोदशेत्युक्ति—

तथेति । प्रतिपदमिति । प्रत्येकं कुशलं पृष्ट्वेत्यर्थः ॥ ६–९ ॥ अयमिति । सिन्धोः सिन्धुनद्याः । अयं देशः अस्मद्देशसमीप इत्यर्थः ॥ १० ॥ तं चेति । शैलूषः गन्धर्वराजः ॥ ११ ॥ तानिति । स्वपुरे चेति । तद्देश इति शेषः ॥ १२ ॥ अन्यस्येति । अन्यस्य त्वद्व्यतिरिक्तस्य तत्र देशे गतिः प्राप्ति



प्रत्युद्गम्य च काकुत्स्थः क्रोशमात्रं सहानुजः । गार्ग्यं संपूजयामास यथा शक्रो बृहस्पतिम् ॥ ५ ॥ तथा संपूज्य तमृषिं तद्धनं प्रतिगृह्य च । पृष्ट्वा प्रतिपदं सर्वं कुशलं मातुलस्य च । उपविष्टं महाभागं रामः प्रष्टुं प्रचक्रमे ॥६॥ किमाह मातुलो वाक्यं यदर्थं भगवन्निह । प्राप्तो वाक्यविदां श्रेष्ठः साक्षादिव बृहस्पतिः ॥ ७ ॥ रामस्य भाषितं श्रुत्वा महर्षिः कार्यविस्तरम् । वक्तुमद्भुतसङ्काशं राघवायोपचक्रमे ॥ ८ ॥ मातुलस्ते महाबाहो वाक्यमाह नरर्षभ । युधाजित् प्रीतिसंयुक्तं श्रूयतां यदि रोचते ॥९॥ अयं गन्धर्वविषयः फलमूलोपशोभितः । सिन्धोरुभयतः पार्श्वे देशः परमशोभनः ॥ १० ॥ तं च रक्षन्ति गन्धर्वाः सायुधा युद्धकोविदाः । शैलूषस्य सुता वीर त्रिकोट्यो वै महाबलाः ॥११॥ तान् विनिर्जित्य काकुत्स्थ गन्धर्वनगरं शुभम् । निवेशय महाबाहो स्वपुरे सुसमाहिते ॥१२॥ अन्यस्य न गतिस्तत्र देशः परमशोभनः । रोचतां ते महाबाहो नाहं त्वामहितं वदे ॥ १३ ॥ तच्छ्रुत्वा राघवः प्रीतो महर्षेर्मातुलस्य च । उवाच बाढमित्येव भरतं चान्ववैक्षत ॥ १४ ॥ सोऽब्रवीद्राघवः प्रीतः साञ्जलिप्रग्रहो द्विजम् । इमौ कुमारौ तं देशं ब्रह्मर्षे विचरिष्यतः ॥ १५ ॥ भरतस्यात्मजौ वीरौ तक्षः पुष्कल एव च । मातुलेन सुगुप्तौ तु धर्मेण सुसमाहितौ ॥ १६ ॥ भरतं चाग्रतः कृत्वा कुमारौ सबलानुगौ । निहत्य गन्धर्वसुतान् द्वे पुरे विभजिष्यतः ॥ १७ ॥ निवेश्य ते पुरवरे आत्मजौ सन्निवेश्य च । आगमिष्यति मे भूयः सकाशमतिधार्मिकः ॥१८॥

प्रसङ्ग एव नास्तीत्यर्थः । तत्साधने फलमुक्तम्–देशः परमशोभन इति ॥१३॥ तच्छ्रुत्वेति । भरतं चान्ववैक्षतेति । पर्यालोचनार्थमित्यर्थः ॥ १४–२० ॥



–रिति चेत् मुख्या सङ्ख्या दश पर्यन्तमिति तथोक्तिः । मानान्तरोक्तसङ्ख्याग्रहेणाविरोधोपपत्तेः । अत्ययाद्दर्पसाहस्रमिति पाठं धृत्वा सहस्राणां समूह इत्यर्थकतया दशसहस्रेत्यर्थकमेवेति नागोजिभट्टः । तत्र अचिचेत्यत्र सत्रे अचितः स इति तच्चिन्त्यम् ॥ २० ॥

सेति । शक्रयुक्तेव इन्द्रयुक्ता देवसेनेव नगरान्निर्ययौ । दूरमिति । एकाद्विवासरपर्यन्तमित्यर्थः ॥ २१-२३ ॥ सिंहेति । सेनाया अग्रतो ययुरिति । पिशिताशनादीनामग्रतो यानं सुशकुनम् । अभिमुखतः आगमनमेवापशकुनम् ॥ २४ ॥ अध्यर्धमासमिति । केकयं युधाजितमित्यर्थः ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने शततमः सर्गः ॥ १०० ॥

ब्रह्मर्षिमेवमुक्त्वा तु भरतं सबलानुगम् । आज्ञापयामास तदा कुमारौ चाभ्यषेचयत् ॥ १९ ॥ नक्षत्रेण च सौम्येन पुरस्कृत्याङ्गिरस्सुतम् । भरतः सह सैन्येन कुमाराभ्यां विनिर्ययौ ॥ २० ॥ सा सेना शक्रयुक्तेव नरगान्निर्ययावथ । राघवानुगता दूरं दुराधर्षा सुरैरपि ॥ २१ ॥ मांसादानि च सत्त्वानि रक्षांसि सुमहान्ति च । अनुजग्मुर्हि भरतं रुधिरस्य पिपासया ॥ २२ ॥ भूतग्रामाश्च बहवो मांसभक्षाः सुदारुणाः । गन्धर्वपुत्रमांसानि भोक्तुकामाः सहस्रशः ॥ २३ ॥ सिंहव्याघ्रवराहाणां खेचराणां च पक्षिणाम् । बहूनि वै सहस्राणि सेनाया ययुरग्रतः ॥ २४ ॥ अध्यर्धमासमुषिता पथि सेना निरामया । हृष्टपुष्टजनाकीर्णा केकयं समुपागमत् ॥ २५ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे शततमः सर्गः ॥ १०० ॥

श्रुत्वा सेनापतिं प्राप्तं भरतं केकयाधिपः । युधाजिद्गार्ग्यसहितं परां प्रीतिमुपागमत् ॥ १ ॥ स निर्ययौ जनौघेन महता केकयाधिपः । त्वरमाणोऽभिचक्राम गन्धर्वान् कामरूपिणः ॥ २ ॥ भरतश्च युधाजिच्च समेतौ लघुविक्रमैः । गन्धर्वनगरं प्राप्तौ सबलौ सपदानुगौ ॥ ३ ॥ श्रुत्वा तु भरतं प्राप्तं गन्धर्वास्ते समागताः । योद्धुकामा महावीर्या व्यनदन् वै समन्ततः ॥ ४ ॥ ततः समभवद्युद्धं तुमुलं रोमहर्षणम् । सप्तरात्रं महाभीमं न चान्यतरयोर्जयः ॥ ५ ॥

श्रुत्वेत्यादि । सेनापतिं प्राप्तं युद्धसन्नाहं श्रुत्वा ॥ १ ॥ २ ॥ भरतश्चेति । सबलौ चतुरङ्गबलसहितौ । सपदानुगौ शूद्रवैश्याद्यनुचरसहितौ ॥ ३ ॥ श्रुत्वेति ।

व्यनदन् गर्जन्ति स्म ॥ ४ ॥ ५ ॥ खड्गेति । खड्गादिरूपा ग्राहा यासु ताः । संस्रवः प्रवाहः । नृकलेवराणि नद्याः काष्ठानि वहन्तीति तथा ॥ ६ ॥ तत इति । संवर्तं नामेति । प्रलयकालाग्न्याख्यमित्यर्थः ॥ ७ ॥ ८ ॥ तमिति । तं घातं दिवौकसः न स्मरन्तीति । त्रिकोटिगन्धर्वघातोऽसम्भाव्य

खड्गशक्तिधनुर्ग्राहा नद्यः शोणितसंस्रवाः । नृकलेवरवाहिन्यः प्रवृत्ताः सर्वतोदिशम् ॥ ६ ॥ ततो रामानुजः क्रुद्धः कालस्यास्त्रं सुदारुणम् । संवर्तं नाम भरतो गन्धर्वेष्वभ्यचोदयत् ॥ ७ ॥ ते बद्धाः कालपाशेन संवर्तेन विदारिताः । क्षणेनाभिहतास्तेन तिस्रः कोट्यो महात्मनाम् ॥ ८ ॥ तं घातं घोरसङ्काशं न स्मरन्ति दिवौकसः । निमेषान्तरमात्रेण तादृशानां महात्मनाम् ॥ ९ ॥ हतेषु तेषु सर्वेषु भरतः केकयीसुतः । निवेशयामास तदा समृद्धे द्वे पुरोत्तमे ॥ १० ॥ तक्षं तक्षशिलायां तु पुष्कलं पुष्कलावते । गन्धर्वदेशे रुचिरे गान्धारविषये च सः ॥ ११ ॥ धनरत्नौघसम्पूर्णे काननैरुपशोभिते । अन्योन्यसङ्घर्षकृते स्पर्धया गुणविस्तरैः ॥ १२ ॥ उभे सुरुचिरप्रख्ये व्यवहारैरकिल्बिषैः । उद्यानयानसम्पूर्णे सुविभक्तान्तरापणे ॥ १३ ॥ उभे पुरवरे रम्ये विस्तरैरुपशोभिते । गृहमुख्यैः सुरुचिरैर्विमानसमवर्णिभिः ॥ १४ ॥ शोभिते शोभनीयैश्च देवायतनविस्तरैः । तालैस्तमालैस्तिलकैर्बकुलैरुपशोभिते ॥ १५ ॥ निवेश्य पञ्चभिर्वर्षैर्भरतो राघवानुजः । पुनरायान्महाबाहुरयोध्यां केकयीसुतः ॥ १६ ॥ सोऽभिवाद्य महात्मानं साक्षाद्धर्ममिवापरम् । राघवं भरतः श्रीमान् ब्रह्माणमिव वासवः ॥ १७ ॥ शशंस च यथावृत्तं गन्धर्ववधमुत्तमम् । निवेशनं च देशस्य श्रुत्वा प्रीतोऽस्य राघवः ॥ १८ ॥ इत्यार्षे० श्रीमदुत्तरश्रीरामा० एकोत्तरशततमः सर्गः ॥ १०१ ॥

इत्येव स्मृत्वा स्थितवन्त इत्यर्थः ॥ ९ ॥ हतेष्विति । द्वे पुरेति । तक्षशिलापुष्कलावताख्ये ॥ १०–१२ ॥ उभे इति । अकिल्बिषैः धर्मन्यायोपेतैर्व्यवहारैः क्रयविक्रयादिव्यापारैः ॥ १३ ॥ उभे इति । विमानसमवर्णिभिः देवायतनवद्विस्तारैः । गृहमुख्यैरभित उपशोभिते । विमानैर्बहुभिर्वृते इति च पाठः ॥ १४–१८ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोत्तरशततमः सर्गः ॥ १०१ ॥

तच्छ्रुत्वेत्यादि ॥ १ ॥ इमाविति । राज्यार्थे राज्यरक्षाविषये ॥ २ ॥ ३ ॥ नेति । नापराध्यामहे, कस्यापि भूतस्येति शेषः ॥ ४ ॥ तथेति । कारुपथः कारुपथाख्यः पाश्चात्त्यदेशविशेषः ॥ ५ ॥ निवेश्यतामिति । तत्र देशे अङ्गदस्य पुरम् अङ्गदीयाख्यम् निवेश्यताम् । चन्द्रकेतोः चन्द्रकान्ताख्यम्

तच्छ्रुत्वा हर्षमापेदे राघवो भ्रातृभिः सह । वाक्यं चाद्भुतसङ्काशं तदा प्रोवाच लक्ष्मणम् ॥ १ ॥ इमौ कुमारौ सौमित्रे तव धर्मविशारदौ । अङ्गदश्चन्द्रकेतुश्च राज्यार्थे दृढविक्रमौ ॥ २ ॥ इमौ राज्येऽभिषेक्ष्यामि देशः साधु विधीयताम् । रमणीयो ह्यसम्बाधो रमेतां यत्र धन्विनौ ॥ ३ ॥ न राज्ञो यत्र पीडा स्यान्नाश्रमाणां विनाशनम् । स देशो दृश्यतां सौम्य नापराध्यामहे यथा ॥ ४ ॥ तथोक्तवति रामे तु भरतः प्रत्युवाच ह । अयं कारुपथो देशो रमणीयो निरामयः ॥ ५ ॥ निवेश्यतां तत्र पुरमङ्गदस्य महात्मनः । चन्द्रकेतोः सुरुचिरं चन्द्रकान्तं निरामयम् ॥ ६ ॥ तद्वाक्यं भरतेनोक्तं प्रतिजग्राह राघवः । तं च कृत्वा वशे देशमङ्गदस्य न्यवेशयत् ॥ ७ ॥ अङ्गदीया पुरी रम्या ह्यङ्गदस्य निवेशिता । रमणीया सुगुप्ता च रामणाक्लिष्टकर्मणा ॥ ८ ॥ चन्द्रकेतोस्तु मल्लस्य मल्लभूम्यां निवेशिता । चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा ॥ ९ ॥ ततो रामः परां प्रीतिं लक्ष्मणो भरतस्तथा । ययुर्युद्धे दुराधर्षा अभिषेकं च चक्रिरे ॥ १० ॥ अभिषिच्य कुमारौ स प्रस्थापयति राघवः । अङ्गदं पश्चिमां भूमिं चन्द्रकेतुमुदङ्मुखम् ॥ ११ ॥ अङ्गदं चापि सौमित्रिर्लक्ष्मणोऽनुजगाम ह । चन्द्रकेतोस्तु भरतः पार्ष्णिग्राहो बभूव ह ॥ १२ ॥ लक्ष्मणस्त्वङ्गदीयायां संवत्सरमथोषितः । पुत्रे स्थिते दुराधर्षे ह्ययोध्यां पुनरागमत् ॥ १३ ॥ भरतोऽपि तथैवोष्य संवत्सरमतोऽधिकम् । अयोध्यां पुनरागम्य रामपादावुपास्त सः ॥ १४ ॥

॥ ६–८ ॥ चन्द्रकेतोस्त्विति । मल्लस्य श्रेष्ठस्य । मल्लभूम्यां मल्लदेशे उत्तरे ॥ ९–१३ ॥ भरत इति । भरतोऽपि तथैवोष्येति, चन्द्रकेतुसमीप इति

शेषः ॥ १४ ॥ उभाविति । न जज्ञाते जानातेर्लिड्द्विवचनम् । नावगतवन्तौ । सन्धिः छान्दसः ॥ १५ ॥ १६ ॥ विहृत्येति । धर्मसाधनं पुरं धर्मपुरं तस्मिन् ॥ १७ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

उभौ सौमित्रिभरतौ रामपादावनुव्रतौ । कालं गतमपि स्नेहान्न जज्ञातेऽतिधार्मिकौ ॥१५॥ एवं वर्षसहस्राणि दश तेषां ययुस्तदा । धर्मे प्रयतमानानां पौरकार्येषु नित्यदा ॥ १६ ॥ विहृत्य कालं परिपूर्णमानसाः श्रिया वृता धर्मपुरे सुसंस्थिताः । त्रयः समिद्धा इव दीप्ततेजसो महाध्वरे साधु हुतास्त्रयोऽग्नयः ॥ १७ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

कस्यचित्त्वथ कालस्य रामे धर्मपथे स्थिते । कालस्तापसरूपेण राजद्वारमुपागमत् ॥ १ ॥ सोऽब्रवील्लक्ष्मणं वाक्यं धृतिमन्तं यशस्विनम् । मां निवेदय रामाय सम्प्राप्तं कार्यगौरवात् ॥ २ ॥ दूतोऽस्म्यतिबलस्याहं महर्षेरमितौजसः । रामं दिदृक्षुरायातः कार्येण हि महाबल ॥ ३ ॥ तस्य तद्वचनं श्रुत्वा सौमित्रिस्त्वरयाऽन्वितः । न्यवेदयत रामाय तापसं तं समागतम् ॥ ४ ॥ जयस्व राम धर्मेण उभौ लोकौ महाद्युते । दूतस्त्वां द्रष्टुमायातस्तपसा भास्कर प्रभः ॥ ५ ॥ तद्वाक्यं लक्ष्मणेनोक्तं श्रुत्वा राम उवाच ह । प्रवेश्यतां मुनिस्तात महौजास्तस्य वाक्यधृत् ॥ ६ ॥ सौमित्रिस्तु तथेत्युक्त्वा प्रावेशयत तं मुनिम् । ज्वलन्तमिव तेजोभिः प्रदहन्तमिवांशुभिः ॥ ७ ॥ सोऽभिगम्य रघुश्रेष्ठं दीप्यमानं स्वतेजसा । ऋषिर्मधुरया वाचा वर्धस्वेत्याह राघवम् ॥ ८ ॥ तस्मै रामो महातेजाः पूजामर्घ्यपुरोगमाम् । ददौ कुशलमव्यग्रं प्रष्टुमेवोपचक्रमे ॥ ९ ॥



कस्यचित्त्वित्यादि । कालस्य कस्यचित्, गमनानन्तरमिति शेषः ॥ १ ॥ २ ॥ दूत इति । महर्षेरिति । ब्रह्मण इत्यर्थः ॥ ३–५ ॥ तदिति । तस्य

वाक्यधृदिति, रामवाक्यधारीति सौमित्रिविशेषणम् ॥ ६–१० ॥ तमिति । वाक्यानि सन्देशवाक्यानि, प्रापयस्व निवेदय । तत्र हेतुः यतो दूत इत्यादि ॥ ११ ॥ चोदित इति । मुनिवाक्यं प्रागुक्तमहर्षिसंदिष्टवाक्यम् । द्वन्द्वमेतदिति । " द्वन्द्वं रहस्यमर्यादा–" इत्यादिना द्वन्द्वशब्दस्य रहस्यार्थे द्विवचननिपातः । रहस्यमेतत्प्रवक्तव्यमित्यर्थः । द्वन्द्वे हि तत्प्रवक्तव्यमिति च पाठः । ( तदेव विशिनष्टि–न चैषामित्यादि ❀। एषां त्वत्समीपवर्तिलोकानामित्यर्थः ) ॥ १२ ॥ य इति । अस्मद्वचनं शृणुयात् । निरीक्षेत् मन्त्रयितारौ स तव वध्यः । कथमेवमतिक्रूरसङ्केत इत्यत्राह–भवेदिति ।

पृष्टश्च कुशलं तेन रामेण वदतां वरः। आसने काञ्चने दिव्ये निषसाद महायशाः ॥ १० ॥ तमुवाच ततो रामः स्वागतं ते महामुने । प्रापयस्व च वाक्यानि यतो दूतस्त्वमागतः॥ ११ ॥ चोदितो राजसिंहेन मुनिर्वाक्यमभाषत। द्वन्द्वमेतत् प्रवक्तव्यं हितं वै यद्यपेक्षसे ॥१२॥ यः शृणोति निरीक्षेद्वा स वध्यो भविता तव। भवेद्वै मुनिमुख्यस्य वचनं यद्यपेक्षसे ॥ १३ ॥ स तथेति प्रतिज्ञाय रामो लक्ष्मणमब्रवीत् । द्वारि तिष्ठ महाबाहो प्रतिहारं विसर्जय ॥ १४ ॥ स मे वध्यः खलु भवेत् कथाद्वन्द्वं समीरितम् । ऋषेर्मम च सौमित्रे पश्येद्वा शृणुयाच्च यः ॥ १५ ॥ ततो निक्षिप्य काकुत्स्थो लक्ष्मणं द्वारि सङ्ग्रहम् । तमुवाच मुने वाक्यं कथयस्वेति राघवः ॥ १६ ॥ यत्ते मनीषितं वाक्यं येन वाऽसि समाहितः । कथयस्वाविशङ्कस्त्वं ममापि हृदि वर्तते ॥१७॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

तस्य मुनिमुख्यस्य वचनमित्थं सङ्केतपूर्वकं वदेति चोदितवानित्यर्थः । यद्यपेक्षस इति, तथा सङ्केतपरिपालनमिति शेषः ॥ १३ ॥ स इति । प्रतिहारं विसर्जय अन्यतोऽपसारय ॥ १४ ॥ किमर्थमित्यत आह–स म इत्यादि । हे सौमित्रे ! ऋषेर्मम च कथाद्वन्द्वं कथारहस्यम् । वाचं द्वन्द्वमिति च पाठः । यः शृणुयात् ॥ १५ ॥ तत इति । संग्रहं रक्षितारम् ॥ १६ ॥ यदिति । समाहितः । ममापि हृदि वर्तत इति । एवंविधं रहस्यं तन्मयाऽपि श्रोतव्यमित्यर्थः । अहमपि जानामीत्यर्थः॥१७॥ इति श्रीगोविन्दराज० मणिमुकुटाख्याने उत्तरश्रीरामायण० त्र्युत्तरशततमः सर्गः॥१०३॥

❀ न चैषामित्यादिप्रतीकस्य मूलपाठो न लभ्यते ।

शृणु राजन्नित्यादि । येन सन्देशः कृतः स पितामह एवेत्याह—पितामहेनेति ॥ १ ॥ अहं च न तापसः, किन्तु काल इत्याह—तवाहमित्यादि । पूर्वं सद्भावे पूर्वजन्मनि, अहं तव पुत्रः । सर्वसम ः कालरुद्र इति यावत् । परपुरंजयः त्रिपुरसंहारकः । तवाहं पूर्वके भावे पुत्रः परपुरंजय ! इति च पाठः । केवलं यमस्य पूर्वभावादुत्थितत्वाभावात्, मायासंभावितः मायया उत्पादितः (?) ॥ २ ॥ पितामहवाक्यमाह—पितामहश्चेत्यादि । स्वान् ब्रह्मलोका

शृणु राजन् महासत्त्व यदर्थमहमागतः । पितामहेन देवेन प्रेषितोऽस्मि महाबल ॥ १ ॥ तवाहं पूर्वसद्भावे पुत्रः परपुरञ्जयः । मायासंभावितो वीर कालः सर्वसमाहरः ॥ २ ॥ पितामहश्च भगवानाह लोकपतिः प्रभुः । समयस्ते कृतः सौम्य स्वान् लोकान् परिरक्षितुम् ॥ ३ ॥ संक्षिप्य हि पुरा लोकान् मायया स्वयमेव हि । महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः ॥ ४ ॥ भोगवन्तं ततो नागमनन्तमुदकेशयम् । मायया जनयित्वा त्वं द्वौ च सत्त्वौ महाबलौ ॥ ५ ॥ मधुं च कैटभं चैव ययोरस्थिचयैर्वृता । इय पर्वतसम्बाधा मेदिनी चाभवन्मही ॥ ६ ॥

दीन् परिरक्षितुं ते समयः स्वलोकं प्राप्तुं समय इत्यर्थः । लोकान् संपरिरक्षितुमिति च पाठः ॥ ३ ॥ न केवलं त्वं रक्षकः, किन्तु संहर्ता स्रष्टा चेत्याह—संक्षिप्येत्यादि । लोकान् चराचरात्मकाः प्रजाः । मायया विचित्रशक्त्या जनयित्वा । त्वं महाकालाग्निरूपः । सत्त्वौ प्राणिनौ । अजीजन इत्यनुषङ्गः ॥ ४ ॥ ५ ॥ कौ तावित्यत आह—मधुं च कैटभं चैवेति । तत्र मधुः जलोत्पन्नमकरादिवत् मेदःप्रधानः । कैटभस्तु कमठशुक्त्यादिवत्

स०—महासत्त्व बहुलबल ! ॥ १ ॥ दूत इत्येव न, किन्तु त्वत्पुत्रः सः, अहं तु पौत्र इत्याह—तवेति । पूर्वके भावे अतीतजातौ । मायासम्भावितः रमायामुत्पादितो विरञ्चिपदवाच्यस्तव पुत्रः । परपुरं तदपरो देहोऽहं तत्पुत्रोऽस्म्, अतः पौत्रस्तवेति भावः । स्वव्यापारमप्यावेदयति—सर्वसमाहरः सर्वसंहर्ता । नामाह काल इति । तव मायासम्भावितः इच्छया पद्मोत्पन्नो यस्तस्याहंपूर्वके भावे अहङ्कारतत्त्वे कार्योन्मुखे पुत्रो जातोऽहं पूर्ववद्वर्वरितम् । "महत्तत्त्वादहङ्कारं ससर्ज शिवविग्रहम्" इत्यादेः । "पुत्रस्तवेश कमलप्रभवस्तथाऽहं पौत्रस्तु पौत्रकवचो यदपि ह्ययोग्यम् । सम्भावयन्ति गुणिनः" इत्याद्युक्तेश्च । "मां त्वं पूर्वमजीजनः" इत्युक्तिस्वारस्यादर्थविशेषलाभेन किञ्चिच्छ्लेषादिकं सोढव्यम् ॥ २ ॥ पुरा सृष्टिकालात्पूर्वम् मायया स्वसामर्थ्येन लोकान् स्वयमेव संक्षिप्य संहृत्य । स्वयमेवेत्यनेन स्वाभाविकत्वं शक्तेर्द्योतयति । महार्णवे जलमये । जाते तत्राप्सु उदके शयानः । पूर्वं प्रथमतः । माम् अजीजनः । अर्णवे शयान इति वचनादेवोदकशायित्वे सिद्धे पुनरप्स्विति वचनं वटे गाव इतिवत्सामीपिकाधिकरणसप्तमीभ्रमभ्रंशार्थम् । महार्णव इति चेतरनीरत्वसन्देहनिर्हरणार्थमिति च मन्तव्यम् । "यो ब्रह्माणं विदधाति पूर्वम्" इत्यादिश्रुतेः । अनेन "अन्तस्समुद्रे मनसा चरन्तं ब्रह्मान्वविन्दद्दशहोतारमर्णे" इति श्रुत्यनुकूलता ज्ञेयैतस्य ॥ ४ ॥ उक्तं सामान्यतो विशेषतो भाषते—भोगवन्तमिति । मतुबर्थो महत्त्वम् । महादेहम् । अनन्तं नामतः । नागं जातितः । मायया इच्छया सत्त्वौ गतम् । सः त्वौ अन्यौ । असुरावित्यर्थः इति वा । "ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः" इत्यादिश्रुतेः । 'त्वत्वावन्यपर्यायौ' इति कौमुद्याः । जनयित्वा । कौ ताविति तत्राह मधुमिति । हत्वा तयोरिति शेषः । अरशां पर्वतसङ्काशत्वेन तदाख्यपर्वतसङ्घसहिता ॥ ५ ॥ ६ ॥

अस्थिप्रधानः । तत्सृष्टिप्रयोजनमाह—ययोरित्यादि । ययोरस्थिचयवृता इयं मही पर्वतसंबाधा सती मेदिनी तन्मेदोयुक्ता । पृषोदरादित्वात्सकार लोपः । अस्थिचयैः शिलापर्वतस्थितिहेतुभूता मेदोमयत्वाद्वृक्षलताद्युत्पत्तिहेतुर्मृदुप्रदेशाच्चाभूदित्यर्थः ॥ ६ ॥ मां त्वं पूर्वमजीजन इत्येतद्विवृणोति—पद्म इत्यादि । नाभ्यां वर्तमाने पद्मे नाभिकमले मामुत्पाद्य, मयि प्राजापत्यं प्रजापतित्वं निवेशितम्, मम प्रजापतित्वं दत्तवानसीत्यर्थः ॥ ७ ॥ सोऽहमिति । त्वयि संन्यस्तभारः अहं त्वामुपासे निरन्तरं चिन्तयामि, भूतेषु मत्सृष्टेषु रक्षां विधत्स्व ॥ ८ ॥ तत इति । ततः मत्कृतभारसमर्पणेन

पद्मे दिव्येऽर्कसङ्काशे नाभ्यामुत्पाद्य मामपि । प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम् ॥ ७ ॥ सोऽहं सन्न्यस्त भारो हि त्वामुपासे जगत्पतिम् । रक्षां विधत्स्व भूतेषु मम तेजस्करो भवान् ॥ ८ ॥ ततस्त्वमपि दुर्धर्षात्तस्माद् भावात् सनातनात् । रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ॥९॥ अदित्यां वीर्यवान् पुत्रो भ्रातॄणां वीर्यवर्धनः । समुत्पन्नेषु कृत्येषु तेषां साह्याय कल्पसे ॥१०॥ स त्वं वित्रास्यमानासु प्रजासु जगतां वर । रावणस्य वधाकांक्षी मानुषेषु मनोऽदधाः ॥११॥ दश वर्षसहस्राणि दश वर्षशतानि च । कृत्वा वासस्य नियतिं स्वयमेवात्मना पुरा॥१२॥

दुर्धर्षात् दुर्ज्ञेयात्, सनातनान्नित्यात्, भावात् परवासुदेवस्वभावात्सर्वभूतानां रक्षार्थं विष्णुत्वमुपजग्मिवान् प्राप्तवान् । रक्षां विधास्यन् भूतानामिति च पाठः । यद्वा सनातनात्तस्मात् वासुदेवविग्रहात्, अदित्यां विष्णुत्वमुपजग्मिवानित्यर्थः । परवासुदेवस्त्वं प्रथमं ब्रह्मरुद्रमध्ये आदिविष्णुतयाऽवतीर्णो सीत्यर्थः ॥ ९ ॥ अथ तस्मादुपेन्द्रावतारमाह—अदित्यामिति । भ्रातॄणामिन्द्रादीनां वीर्यवर्धनः सन् लोकस्य कृत्येषु रक्षणकार्येषूत्पन्नेषु साह्याय तत्संपादनयोग्यत्वाय कल्पसे । ततो लोकसंरक्षणार्थमुपेन्द्रोऽभूरित्यर्थः ॥ १० ॥ एवं महाविष्णुरूपादुपेन्द्रावतारमुक्त्वा पुरस्ताद्रामावतारमाह—स त्वमिति । हे जगतां वर ! प्रजासु वित्रास्यमानासु सतीषु रावणस्य वधाकाङ्क्षी सन् । स त्वमुज्जास्यमानासु प्रजासु जगतो वरेति च पाठः । आत्मना

स०—नाभ्यां नाभिप्रदेशे । अर्कसङ्काशे सवितृसमे । पद्मे कमले "अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः" "अजस्य नाभाविति यस्य नाभेरभूच्छुतेः पुष्करं लोकसारम् । तस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे । यन्नाभिपद्मादहमाविरासम्" इत्यादिश्रुतिस्मृतयोऽत्र भवन्ति । त्वःोत्पादिते साक्षाल्लक्ष्मीरूपे मामप्युत्पाद्य प्राजापत्यं प्रजापतिविहितं सृष्ट्यादिरूपं कर्म सर्वमेतदादिकम् मयि निवेशितम् । त्वमिमां धुरमुद्वहेति स्थापितम् । प्रजापतिना स्वेनैव कर्तव्यं कर्म प्राजापत्यं कर्म ज्येष्ठतनुत्वान्मयि निवेशितमिति वा । "प्रजानां पालनाद्विष्णुः प्रजापतिरितीरितः" इत्यादेः ॥ ७ ॥

स्वातन्त्र्येण स्वयमेव पुरा दश वर्षसहस्राणि दश वर्षशतानि च, वासस्य नियतिं वासस्य नियमं कृत्वा । वासस्य नियममिति च पाठः । मानुषेषु मनोऽदधा इति श्लोकद्वयमेकान्वम् ॥ ११ ॥ १२ ॥ स त्वमिति । स त्वमुपेन्द्रो भूत्वा यतमानस्त्वम्, मनोमयः पुत्रः इच्छाकृतदशरथपुत्रभावः । स त्वं पूर्णायुरसि, सङ्कल्पितकालस्य निवृत्तत्वादिति भावः । अतो मत्समीपमुपवर्तितुं प्राप्तुमयं कालः समयः ॥ १३ ॥ यदीति । उपासितुं रक्षितुम् । तव

स त्वं मनोमयः पुत्रः पूर्णायुर्मानुषेष्विह । कालोऽयं ते नरश्रेष्ठ समीपमुपवर्तितुम् ॥ १३ ॥ यदि भूयो महाराज प्रजा इच्छस्युपासितुम् । वस वा वीर भद्रं त एवमाह पितामहः ॥ १४ ॥ अथवा विजिगीषा ते सुरलोकाय राघव । सनाथा विष्णुना देवा भवन्तु विगतज्वराः ॥१५॥ श्रुत्वा पितामहेनोक्तं वाक्यं कालसमीरितम् । राघवः प्रहसन् वाक्यं सर्वसंहारमब्रवीत् ॥ १६ ॥ श्रुत्वा मे देवदेवस्य वाक्यं परममद्भुतम् । प्रीतिर्हि महती जाता तवागमनसंभवा ॥ १७ ॥ त्रयाणामपि लोकानां कार्यार्थं मम संभवः । भद्रं तेऽस्तु गमिष्यामि यत एवाहमागतः ॥ १८ ॥ हृद्गतो ह्यसि संप्राप्तो न मे तत्र विचारणा । मया हि सर्वकृत्येषु देवानां वशवर्तिना । स्थातव्यं सर्व संहार यथा ह्याह पितामहः ॥ १९ ॥ इत्यार्षे वाल्मी० श्रीमदुत्तरश्रीरामायणे चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

स्वतन्त्रत्वादिति भावः ॥ १४ ॥ अथवेति । भूलोकं विहाय स्वर्गलोकाय विजिगीषा चेत्तदा विष्णुना पुनर्विष्णुत्वं प्राप्तेन त्वया देवाः समाथाः सन्तो विगतज्वराः भवन्तु । भवदागमनमेव समस्तदेवसुखकरं स्यादिति भावः ॥ १५ ॥ श्रुत्वेति । प्रहसन्निति । स्वयमेवोद्युक्तस्य पितामहोक्त्या प्रहासः । सर्वसंहारं रुद्रम् ॥ १६ ॥ श्रुत्वेति । तवागमनसंभवा प्रीतिर्महती जायत इति योज्यम् ॥ १७ ॥ एवं पितामहसन्देशं श्रुत्वा प्रतिसन्देशमाह—त्रयाणामित्यादि । यत एवाहमागतः तदेव स्थानं गमिष्यामि ॥ १८ ॥ हृदिति । हृद्गतो मम संप्राप्तः । मम हृदि यद्वर्तते तदेव पितामहेन प्रेपितमित्यर्थः । अत्र गमने विषये मे विचारणा नास्ति । ब्रह्मयाच्ञयैव ममात्रावतरणमित्याह—मया हीति । देवानां वशवर्तिना भक्तपरतन्त्रेण मया, पितामहो देवेष्वन्यतमः यथाऽऽह, तथा मया सर्वकृत्येषु स्थितिगमनादिषु स्थातव्यम्, तन्नातिक्रमणीयमित्यर्थः । अनेन ब्रह्मणः सृज्यत्वकथनात्परतत्त्वशङ्का निवृत्ता ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

तथेत्यादि (संवदतोः हरिहरयोः)॥ १ ॥ स इति। पुरा मेऽर्थोऽतिवर्तते इति। यावन्मे प्रयोजनमतिक्रामति ततः पूर्वमेव रामं शीघ्रं दर्शयेत्यर्थः ॥ २ ॥ ३ ॥ किं कार्यमिति। किं कार्यं किं कर्तव्यम्? को वाऽर्थः किं प्रयोजनम्? अहमस्मिन् काले किं करोमि? वर्तमानसामीप्ये भविष्यति लट्।

तथा तयोः संवदतोर्दुर्वासा भगवानृषिः। रामस्य दर्शनाकांक्षी राजद्वारमुपागमत् ॥१॥ सोऽभिगम्य तु सौमित्रिमुवाच ऋषिसत्तमः। रामं दर्शय मे शीघ्रं पुरा मेऽर्थोऽतिवर्तते ॥ २ ॥ मुनेस्तु भाषितं श्रुत्वा लक्ष्मणः परवीरहा। अभिवाद्य महात्मानं वाक्यमेतदुवाच ह ॥ ३ ॥ किं कार्यं ब्रूहि भगवन् को वाऽर्थः किं करोम्यहम्। व्यग्रो हि राघवो ब्रह्मन् मुहूर्तं प्रतिपाल्यताम् ॥ ४ ॥ तच्छ्रुत्वा ऋषिशार्दूलः क्रोधेन कलुषीकृतः। उवाच लक्ष्मणं वाक्यं निर्दहन्निव चक्षुषा ॥ ५ ॥ अस्मिन् क्षणे मां सौमित्रे रामाय प्रतिवेदय। अस्मिन् क्षणे मां सौमित्रे न निवेदयसे यदि ॥ ६ ॥ विषयं त्वां पुरं चैव शपिष्ये राघवं तथा। भरतं चैव सौमित्रे युष्माकं या च सन्ततिः ॥ ७ ॥ न हि शक्ष्याम्यहं भूयो मन्युं धारयितुं हृदि। तच्छ्रुत्वा घोरसङ्काशं वाक्यं तस्य महात्मनः। चिन्तयामास मनसा तस्य वाक्यस्य निश्चयम् ॥८॥ एकस्य मरणं मेऽस्तु मा भूत् सर्वविनाशनम्। इति बुद्ध्या विनिश्चित्य राघवाय न्यवेदयत् ९

किं करिष्ये ॥ ४ ॥ ५ ॥ अस्मिन्निति। मां राघवाय निवेदयेति न निवेदयसि यदि तर्हि शपिष्य इति ॥ ६–१२ ॥

स०—स्वभावकोपनस्य पुरत एतच्चातुरी नाभूत्फलपर्यवसायिनीत्याह—तदिति ॥ ५ ॥ राघवं प्रतिवेदय बुद्ध्यर्थकत्वाद्द्विकर्मकता। ज्ञापय कीदृशं माम् आदौ विषयं देशं प्रासम्। अनन्तरं पुरम् तदनन्तरं त्वां प्रासम्। अत्यावश्यककार्याभावे इयानायासः कुतो भवेत्। मया नादर्शि दाशरथिश्चेन्मनोरथस्तव क इत्यतो वक्ति रामायेति। रामाय शपिष्ये। नञा निर्दिष्टमनित्यमिति लिपृलुपवपृशवित्यनिङ्कृस्यापि शपेरिट्। "श्लाघह्नुङ्—" इत्यादिना चतुर्थी। रामाय प्रतिवेदय। यदि न प्रतिवेदयेस्तर्हि विषयादिकं शप इत्यर्थ इति यथाक्रमं व्याकुर्वन्नागोजिभट्टस्यक्तैतत्संसार इति पाणिनीयप्रवीणैर्बहुमाननीयः ॥६॥७॥ सर्वविनाशनं रामनाश एव सर्वनाश इति भावः। विनिश्चित्य निर्धार्य। अत्र लक्ष्मणस्य सन्निधिगमनं रामस्य तापसागतिविज्ञापनम् पाद्मे च "तस्य शापभयाद्विप्रं राघवाय न्यवेदयत्। तत्रैवान्तर्दधे कालो राघवोऽपि विनिर्गतः ॥" इति श्रूयते। श्रीमदाचार्यैस्तु "इति मत्वा ददौ मार्गं स तु दुर्वाससे तदा" इति प्रोक्तम्। तत्कथमिति चेत्? रामायणपाद्मवचसामसांवलिस्येन "यद्यत्र प्रविशेत्कश्चिद्धन्मि त्वाम्" इत्यादिवादानुकूल्याच्च मार्गं ददावित्यस्य रामदर्शनोपायं ददावित्यर्थोपपत्तेः। अन्यथा "यद्यत्र प्रविशेत्कश्चित्स मे वध्यो भविष्यति" इति स्फुटमुक्तेर्दुर्वाससोऽपि पराक्करणप्रसङ्गात्। कल्पभेदेन लक्ष्मणगमनपरमितरद्वाक्यं वाक्यं चाचार्याणां कल्पान्तरविवक्षयेति महामार्गेणाविरोधोपपत्तिर्वाऽनुसन्धेया ॥ ९ ॥

अथेत्यादि । वर्षसहस्रस्येति । अनशननियमोपगृहीतवर्षसहस्रस्येत्यर्थः । यथासिद्धं यथोपपन्नम् ॥ १३ ॥ तच्छ्रुत्वेति । राघवः प्रीतमानस इति । मुनिकोपः परिहृत इति प्राप्तसन्तोष इत्यर्थः ॥ १४–१७ ॥ तत इति । ततोऽनन्तरम्, कालवाक्यानि बुद्ध्या विनिश्चित्य सभ्रातृपुत्रभृत्यवर्गस्य मम

लक्ष्मणस्य वचः श्रुत्वा रामः कालं विसृज्य च । निस्सृत्य त्वरितं राजा अत्रेः पुत्रं ददर्श ह ॥ १० ॥ सोऽभिवाद्य महात्मानं ज्वलन्तमिव तेजसा । किं कार्यमिति काकुत्स्थः कृताञ्जलिरभाषत ॥ ११ ॥ तद्वाक्यं राघवेणोक्तं श्रुत्वा मुनिवरः प्रभुम् । प्रत्याह रामं दुर्वासाः श्रूयतां धर्मवत्सल ॥ १२ ॥ अद्य वर्षसहस्रस्य समाप्तिस्तपसो मम । सोऽहं भोजनमिच्छामि यथासिद्धं तवानघ ॥ १३ ॥ तच्छ्रुत्वा वचनं राजा राघवः प्रीतमानसः । भोजनं मुनिमुख्याय यथासिद्धमुपाहरत् ॥ १४ ॥ स तु भुक्त्वा मुनिश्रेष्ठस्तदन्नममृतोपमम् । साधु रामेति संभाष्य स्वमाश्रममुपागमत् ॥ १५ ॥ तस्मिन् गते मुनिवरे स्वाश्रमं लक्ष्मणाग्रजः । संस्मृत्य कालवाक्यानि ततो दुःखमुपागमत् ॥ १६ ॥ दुःखेन च सुसन्तप्तः स्मृत्वा तद् घोरदर्शनम् । अवाङ्मुखो दीनमना व्याहर्तुं न शशाक ह ॥ १७ ॥ ततो बुद्ध्या विनिश्चित्य कालवाक्यानि राघवः । नैतदस्तीति निश्चित्य तूष्णीमासीन्महायशाः ॥ १८ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

सर्वोपसंहारकालः प्राप्तः उचित एवेति निश्चित्य, सामान्यतो नैतदस्तीति, एतन्मम भ्रातृभृत्यादिपरिकरजातं सर्वमपि नास्तीति चोक्त्वा तूष्णीमासीत् । लक्ष्मणस्यापराधं नोद्भावितवानित्यर्थः ॥१८॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटा० उत्तरश्रीरामा० पञ्चोत्तरशततमः सर्गः ॥१०५॥

स०–कालवाक्यानि द्वन्द्वे कश्चिदविपश्चिदायातश्चेत्पश्चिमां दशां यापनीय इत्यादीनि । अत्यन्तबन्धुनोत्कटसंकटनिविष्टेनान्तः प्रविष्टं विना मारणं न स्थेयं नच मारणं विहितमिति दुःखमुपागमत् । यः कश्चिद्यथा घोरदर्शनं किञ्चित्प्राप्युदञ्चितं विचिन्त्य यथा दुःखेन सन्तप्तो भवति तथा कालवाक्यानि स्वलोकगमनविषयाणि संस्मृत्य । ततस्तदनन्तरम् । अदुःखं सुखम् उपागमत् तद्घोरदर्शनं भ्रातृमारणरूपं स्मृत्वा दुःखेन च सन्तप्तोऽभूदिति वाऽर्थः ॥ १६ ॥

अवाङ्मुखमित्यादि । आप्लुतं राहुग्रस्तम् । हृष्ट इति । सुमन्त्रवाक्यतः पूर्वमेव रामेण स्वपरित्यागस्यावगतत्वादविषाद इत्यर्थः ॥ १ ॥ नेति । तदेव दर्शयति पूर्वैत्यादि । पूर्वनिर्माणेन प्राग्भावीयकर्मणा बद्धा कल्पिता प्रथा । ईदृशीति । " संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् " इत्यु

अवाङ्मुखमथो दीनं दृष्ट्वा सोममिवाप्लुतम् । राघवं लक्ष्मणो वाक्यं हृष्टो मधुरमब्रवीत् ॥ १ ॥ न सन्तापं महाबाहो मदर्थं कर्तुमर्हसि । पूर्वनिर्माणबद्धा हि कालस्य गतिरीदृशी ॥ २ ॥ जहि मां सौम्य विस्रब्धं प्रतिज्ञां परिपालय । हीनप्रतिज्ञाः काकुत्स्थ प्रयान्ति नरकं नराः ॥३॥ यदि प्रीतिर्महाराज यद्यनुग्राह्यता मयि । जहि मां निर्विशङ्कस्त्वं धर्मं वर्धय राघव ॥ ४ ॥ लक्ष्मणेन तथोक्तस्तु रामः प्रचलितेन्द्रियः । मन्त्रिणः समुपानीय तथैव च पुरोधसम् ॥ ५ ॥ अब्रवीच्च तदा वृत्तं तेषां मध्ये स राघवः । दुर्वासोभिगमं चैव प्रतिज्ञां तापसस्य च ॥ ६ ॥ तच्छ्रुत्वा मन्त्रिणः सर्वे सोपाध्यायाः समासत । वसिष्ठस्तु महातेजा वाक्यमेतदुवाच ह ॥ ७ ॥ दृष्टमेतन्महाबाहो क्षयं ते रोमहर्षणम् । लक्ष्मणेन वियोगश्च तव राम महायशः ॥८॥ त्यजैनं बलवान् कालो मा प्रतिज्ञां वृथा कृथाः । विनष्टायां प्रतिज्ञायां धर्मोऽपि च लयं व्रजेत् ॥ ९ ॥ ततो धर्मे विनष्टे तु त्रैलोक्यं सचराचरम् । सदेवर्षिगणं सर्वं विनश्येत्तु न संशयः ॥ १० ॥ स त्वं पुरुषशार्दूल त्रैलोक्यस्याभिपालनात् । लक्ष्मणेन विना चाद्य जगत् स्वस्थं कुरुष्व ह ॥ ११ ॥ तेषां तत्समवेतानां वाक्यं धर्मार्थसंहितम् । श्रुत्वा परिषदो मध्ये रामो लक्ष्मणमब्रवीत् ॥१२॥ विसर्जये त्वां सौमित्रे मा भूद्धर्मविपर्ययः । त्यागो वधो वा विहितः साधूनां ह्युभयं समम् ॥ १३ ॥

पदिष्टन्यायवतीत्यर्थः ॥ २–४ ॥ लक्ष्मणेनेति । प्रचलितेन्द्रियः त्यक्तावाङ्मुखमौनतया प्रवृत्तवागादीन्द्रियः ॥ ९–१० ॥ स त्वमिति । अभिपालनात्

स०—तवातिप्रेमधामत्वान्मोघा भवतु प्रतिज्ञेत्यतो विज्ञापयति—हीनप्रतिज्ञा इति ॥ ३ ॥ यदि महाराज तव प्रीतिर्मयि यदि चानुग्राह्यता तर्हि निर्विशङ्कं मां जहि । धर्मं प्रतिज्ञापरिपालनायातं वर्धय । लोके स्वानुजमपि कृतप्रतिज्ञापरिपालनकृतेऽवधीद्राम इति कीर्तिमुपार्जयेति भावः ॥ ४ ॥

हेतौ पञ्चमी । अभिपालनार्थमित्यर्थः ॥ ११–१३ ॥ रामेणेति । रामेण भाषितः, इत्युक्तरीत्येति शेषः ॥ १४ ॥ स इति । सर्वस्रोतांसि सर्वेन्द्रियाणि ॥ १५ ॥ अनिश्वसन्तमिति । युक्तं योगयुक्तम्, अभ्यकिरन् ॥ १६ ॥ अदृश्यमिति । अदृश्यं यथा तथा ॥ १७ ॥ तत इति । चतुर्थो भागश्चतुर्भागः । शेषसुपर्णविष्वक्सेनविष्णुरूपेण चतुर्विभागो विष्णुस्तत्र शेषरूपश्चतुर्थांशो लक्ष्मणः । सुपर्णभूतो भरतः । विष्वक्सेनरूपः शत्रुघ्न इति रह



रामेण भाषिते वाक्ये बाष्पव्याकुलितेन्द्रियः । लक्ष्मणस्त्वरितं प्रायात् स्वगृहं न विवेश ह ॥१४॥ स गत्वा सरयूतीरमुपस्पृश्य कृताञ्जलिः । निगृह्य सर्वस्रोतांसि निश्वासं न मुमोच ह ॥ १५ ॥ अनिश्वसन्तं युक्तं तं सशक्राः साप्सरोगणाः । देवाः सर्षिगणाः सर्वे पुष्पैरभ्यकिरंस्तदा ॥ १६ ॥ अदृश्यं सर्वमनुजैः सशरीरं महाबलम् । प्रगृह्य लक्ष्मणं शक्रस्त्रिदिवं संविवेश ह ॥ १७ ॥ ततो विष्णोश्चतुर्भागमागतं सुरसत्तमाः । दृष्ट्वा प्रमुदिताः सर्वेऽपूजयन् समहर्षयः ॥ १८ ॥ इत्यार्षे वाल्मीकीये आदिकाव्ये श्रीमदुत्तरश्रीरामायणे षडुत्तरशततमः सर्गः ॥ १०६ ॥

विसृज्य लक्ष्मणं रामो दुःखशोकसमन्वितः । पुरोधसं मन्त्रिणश्च नैगमांश्चेदमब्रवीत् ॥ १ ॥ अद्य राज्येऽभिषेक्ष्यामि भरतं धर्मवत्सलम् । अयोध्यायाः पतिं वीरं ततो यास्याम्यहं वनम् ॥ २ ॥ प्रवेशयत संभारान् मा भूत् कालस्य पर्ययः । अद्यैवाहं गमिष्यामि लक्ष्मणेन गतां गतिम् ॥ ३ ॥ तच्छ्रुत्वा राघवेणोक्तं सर्वाः प्रकृतयो भृशम् । मूर्धभिः प्रणता भूमौ गतसत्त्वा इवाभवन् ॥ ४ ॥ भरतश्च विसंज्ञोऽभूच्छ्रुत्वा रामस्य भाषितम् । राज्यं विगर्हयामास राघवं चेदमब्रवीत् ॥५॥ सत्येनाहं शपे राजन् स्वर्गलोके न चैव हि । न कामये यथा राज्यं त्वां विना रघुनन्दन ॥६॥

स्यार्थः । अत एव पुराणान्तरेषु शेषावतारो लक्ष्मण इति प्रसिद्धिः । अनन्तगरुडविष्वक्सेनविष्णुरूपेणात्मानं चतुर्धा व्यूह्य वर्तते सर्वेश्वर इति ज्ञेयम् ॥ १८ ॥ इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षडुत्तरशततमः सर्गः ॥ १०६ ॥



विसृज्येत्यादि ॥ १ ॥ अद्येति । भरतमयोध्याधिपतिमभिषेक्ष्यामीति मनोरथं करोमि । ततो वनं यास्यामि, महाप्रस्थानविधिनेति शेषः ॥ २ ॥ प्रवेशयतेति । सम्भारानिति । भरताभिषेकार्थानित्यर्थः ॥ ३ ॥ तदिति । सर्वाः प्रकृतयः सुमन्त्रादयः ॥ ४ ॥ ५ ॥ सत्येनेति । स्वर्गलोके न चेत्यादि ।

